# .. adiparva Kumbhaghonam Edition ..

## ॥ १ आदिपर्व ॥

१. आदिपर्व

---

अध्यय००१
॥ श्रीः ॥
१.१. अध्यायः १

(अनुक्रमणिकापर्व ॥ १ ॥)
Mahabharata - Adi Parva - Chapter Topics
आदौ मङ्गलाचरणं ॥ १ ॥
नैमिशारण्ये दीर्घसत्रे शौनकादीन्प्रति सौतेरागमनम् ॥ २ ॥
तत्र शौनकादिभिः सौतिं प्रति भारतकथनचोदना ॥ ३ ॥
सौतिना श्रीमन्नारायणनमस्कारपूर्वकं व्यासस्य भारतनिर्माणकथनम् ॥ ४ ॥
पर्वानुक्रमणिका ॥ ५ ॥

Mahabharata - Adi Parva - Chapter Text

१-१-० (०)
॥ श्रीवेदव्यासाय नमः ॥ १-१-०क्ष् (०)
नारायणं नमस्कृत्य नरं चैव नरोत्तमम् ।
देवीं सरस्वतीं चैव(व्यासं) ततो जयमुदीरयेत् ॥ १-१-१ (१)
ग्नारायणं सुरगुरुं जगदेकनाथं'
भक्तप्रियं सकललोकनमस्कृतं च ।
त्रैगुण्यवर्जितमजं विभुमाद्यमीशं
वन्दे भवघ्नममरासुरसिद्धवन्द्यम्'॥ १-१-२ (२)
ग्नमो धर्माय महते नमः कृष्णाय वेधसे ।
ब्राह्मणेभ्यो नमस्कृत्य धर्मान्वक्ष्यामि शाश्वतान्'॥ १-१-३ (३)
ॐ नमो भगवते वासुदेवाय ।
ॐ नमः पितामहाय । ॐ नमः प्रजापतिभ्यः ।
ॐ नमः कृष्णद्वैपायनाय ।

ॐ नमः सर्वविघ्नविनायकेभ्यः ॥ १-१-४ (४)
रोमहर्षणपुत्र उग्रश्रवाः सौतिः पौराणिको
नैमिशारण्ये शौनकस्य कुलपतेर्द्वादशवार्षिके सत्रे १-१-५ (५)
सुखासीनानभ्यगच्छद्ब्रह्मर्षीन्संशितव्रतान् ।
विनयावनतो भूत्वा कदाचित्सूतनन्दनः ॥ १-१-६ (६)
तमाश्रममनुप्राप्य नैमिशारण्यवासिनः ।
ग्उवाच तानृषीन्सर्वान्धन्यो वोऽस्म्यद्यदर्शनात् १-१-७ (७)
वेद वैयासिकीः सर्वाः कथा धर्मार्थैसंहिताः ।
वक्ष्यामि वो द्विजश्रेष्ठाः शृण्वन्त्वद्य तपोधनाः १-१-८ (८)
तस्य तद्वचनं श्रुत्वा नैमिशारण्यवासिनः ।
चित्रा श्रोतुं कथास्तत्र परिव्रुस्तपस्विनः ॥ १-१-९ (९)
अभिवाद्य मुनींस्तांस्तु सर्वानेव कुताञ्जलिः ।
अपृच्छत्स तपोवृद्धिं सद्भिश्चैवाभिपूजितः ॥ १-१-१० (१०)
अथ तेषूपविष्टेषु सर्वेष्वेव तपस्विषु ।
निर्दिष्टमासनं भेजे विनयाद्रौमहर्षणिः ॥ १-१-११ (११)
सुखासीनं ततस्तं तु विश्रान्तमुपलक्ष्य च ।
अथापृच्छदृषिस्तत्र कश्चित्प्रस्तावयन्कथाः ॥ १-१-१२ (१२)
कुत आगम्यते सौते क्वचायं विहृतस्त्वया ।
कालः कमलपत्राक्ष शंसैतत्पृच्छतो मम ॥ १-१-१३ (१३)
एवं पृष्टोऽब्रवीत्सम्यग्यथावद्रौमहर्षणिः ।
वाक्यं वचनसंपन्नस्तेषां च चरिताश्रयम् ॥ १-१-१४ (१४)
तस्मिन्सदसि विस्तीर्णे मुनीनां भावितात्मनाम्। १-१-१५ (१५)
सौतिरुवाच ।
जनमेजयस्य राजर्षेः सर्पसत्रे महात्मनः ॥ १-१-१५क्ष् (१)
समीपे पार्थिवेन्द्रस्य सम्यक्पारिक्षितस्य च ।
कृष्णद्वैपायनप्रोक्ताः सुपुण्या विविधाः कथाः १-१-१६ (१६)
कथिताश्चापि विधिवद्या वैशंपायनेन वै ।
श्रुत्वाऽहं ता विचित्रार्था महाभारतसंश्रिताः ॥ १-१-१७ (१७)
वहूनि संपरिक्रम्य तीर्थान्यायतनानि च ।
समन्तपञ्चकं नाम पुण्यं द्विजनिषेवितम् ॥ १-१-१८ (१८)
गतवानस्मि तं देशं युद्धं यत्राभवत्पुरा ।
कुरूणां पाण्डवानां च सर्वेषां चहीक्षिताम् ॥ १-१-१९ (१९)
दिदृक्षुरागतस्तस्मात्समीपं भावतामिह ।
आयुष्मन्तः सर्व एव ब्रह्मभाता हि मे मताः ॥
अस्मिन्यज्ञे महाभङ्गाः सूर्यपावकवर्चसः ॥ १-१-२० (२०)
कृताभिषेकाः शुचयः कृतजप्या हुताग्नयः ।

भवन्त आसते स्वस्था ब्रवीमि किमहं द्विजाः  १-१-२१ (२१)
पुराणसंहिताः पुण्याः कथा धर्मार्थसंश्रिताः ।
इतिवृत्तं नरेन्द्राणामृषीणां च महात्मनाम् ॥१-१-२२ (२२)
ऋषय ऊचुः।१-१-२३क्ष् (२)
द्वैपायनेन यत्प्रोक्तं पुराणं परमर्षिणा ।
सुरैर्ब्रह्मर्षिभिश्चैव श्रुत्वा यदभिपूजितम् ॥१-१-२३ (२३)
तस्याख्यानवरिष्ठस्य विचित्रपदपर्वणः ।
सूक्ष्मार्थन्याययुक्तस्य वेदार्थैर्भूषितस्य च ॥१-१-२४ (२४)
भारतस्येतिहासस्य पुण्यां ग्रन्थार्थसंयुताम् ।
संस्कारोपगतां ब्राह्मीं नानाशास्त्रोपबृंहिताम् ॥१-१-२५ (२५)
जनमेजयस्य यां राज्ञो वैशंपायन उक्तवान् ।
यथावत्स ऋषिः पृष्टः सत्रे द्वैपायनाज्ञया ॥१-१-२६ (२६)
वेदैश्चतुर्भिः सयुक्तां व्यासस्याद्भुतकर्मणः ।
संहितां श्रोतुमिच्छामः पुण्यां पापभयापहाम् ॥१-१-२७ (२७)
सौतिरुवाच।१-१-२८क्ष् (३)
आद्यं पुरुषमीशानं पुरुहूतं पुरुष्टुतम् ।
ऋतमेकाक्षरं ब्रह्म व्यक्ताव्यक्तं सनातनम् ॥१-१-२८ (२८)
असच्च सच्चैव च यद्विश्वं सदसतः परम्
परावराणां स्रष्टारं पुराणं परमव्ययम् ॥ १-१-२९ (२९)
मङ्गल्यं मङ्गलं विष्णुं वरेण्यमनघं शुचिम् ।
नमस्कृत्य हृषीकेशं चराचरगुरुं हरिम् ॥१-१-३० (३०)
महर्षेः पूजितस्येह सर्वलोकैर्महात्मनः ।
प्रवक्ष्यामि मतं पुण्यं व्यासस्याद्भुतकर्मणः ॥१-१-३१ (३१)
ग्नमो भगवते तस्मै व्यासायामिततेजसे ।
यस्य प्रसादाद्वक्ष्यामि नारायणकथामिमाम् ॥१-१-३२ (३२)
सर्वाश्रमाभिशमनं सर्वतीर्थावगाहनम् ।
न तथा फलद सूते नारायणकथा यथा ॥१-१-३३ (३३)
नास्ति नारायणसमं न भूतं न भविष्यति ।
एतेन सत्यवाक्येन सर्वार्थान्साधयाम्यहम्'॥१-१-३४ (३४)
आचख्युः कवयः केचित्संप्रत्याचक्षते परे ।
आख्यास्यन्ति तथैवान्य इतिहासमिमं भुवि ॥१-१-३५ (३५)
इदं तु त्रिषु लोकेषु महज्ज्ञानं प्रतिष्ठितम् ।
विस्तरैश्च समासैश्च धार्यते यद्द्विजातिभिः ॥१-१-३६ (३६)
अलङ्कृतं शुभैः शब्दैः समयैर्दिव्यधनुषैः ।
छन्दोवृत्तैश्च विविधैरन्वितं विदुषांप्रियम् ॥१-१-३७ (३७)
तपसा ब्रह्मचर्येण व्यस्य वेदं सनातनम् ।

इतिहासमिमं चक्रे पुण्यं सत्यवतीसुतः ॥ १-१-३८ (३८)
ग्पुण्ये हिमवतः पादे मेध्ये गिरिगुहालये ।
विशोध्य देहं धर्मात्मा दर्भसंस्तरमाश्रितः ॥ १-१-३९ (३९)
शुचिः सनियमो व्यासः शान्तात्मातपसि स्थितः
भारतस्येतिहासस्य धर्मेणान्वीक्ष्य तां गतिम् ॥ १-१-४० (४०)
प्रविश्य योगं ज्ञानेन सोऽपश्यत्सर्वमन्ततः ॥ १-१-४१ (४१)
निष्प्रभेऽस्मिन्निरालोके सर्वतस्तमसा वृते ।
बृहदण्डमभूदेकं प्रजानां बीजमव्ययम् ॥ १-१-४२ (४२)
युगस्यादिनिमित्तं तन्महद्दिव्यं प्रचक्षत ।
व्यस्मिंस्तच्छ्रूयते सत्यंज्योतिर्ब्रह्म सनातनम् ॥ १-१-४३ (४३)
अद्भुतं चाप्यचिन्त्यं च सर्वत्र समतां मतम् ।
अव्यक्तं कारणं सूक्ष्मं यत्तत्सदसदात्मकम् ॥ १-१-४४ (४४)
यस्मिन्पितामहो जज्ञे प्रभुरेकः प्रजापतिः ।
ब्रह्मा सुरगुरुः स्थाणुर्मनुः कः परमेष्ठ्यथ ॥ १-१-४५ (४५)
प्राचेतसस्तथा दक्षो दक्षपुत्राश्च सप्तवै ।
ततः प्रजानां पतयः प्राभवन्नेकविंशतिः ॥ १-१-४६ (४६)
पुरुषश्चाप्रमेयात्मा यं सर्वऋषयो विदु ।
विश्वेदेवास्तथाऽऽदित्या वसवोऽथाश्विनावपि ॥ १-१-४७ (४७)
यक्षाः साध्याः पिशाचाश्च गुह्यकाः पितरस्तथा ।
ततः प्रसूता विद्वांसः शिष्टा ब्रह्मर्षिसत्तमाः ॥ १-१-४८ (४८)
महर्षयश्च बहवः सर्वैः समुदिता गुणैः ।
आतो द्यौः पृथिवी वायुरन्तरिक्षं दिशस्तया ॥ १-१-४९ (४९)
संवत्सरर्तवो मासाः पक्षाहोरात्रयः क्रमात् ।
यच्चान्यदपि तत्सर्वं संभूतं लोकसाक्षिकम् ॥ १-१-५० (५०)
यदिदं दृश्यते किंचिद्भूतं स्थावरजङ्गमम् ।
पुनःसंक्षिप्यते सर्वं जगत्प्राप्ते युगक्षये ॥ १-१-५१ (५१)
यथर्तुष्वृतुलिङ्गानि नानारूपाणि पर्यये ।
दृश्यन्ते तानि तान्येव तथा भावा युगादिषु ॥ १-१-५२ (५२)
एवमेतदनाद्यन्तं भूतसंघातकारकम् ।
अनादिनिधनं लोके चक्रं संपरिवर्तते ॥ १-१-५३ (५३)
त्रयस्त्रिंशत्सहस्राणि त्रयस्त्रिंशच्छतानि च ।
त्रयस्त्रिंशच्च देवनां सृष्टिः संक्षेपलक्षणा ॥ १-१-५४ (५४)
दिवः पुत्रो बृहद्भानुश्चक्षुरात्मा विभावसुः ।
सविता स ऋचीकोऽर्को भानुराशावहो रविः ॥ १-१-५५ (५५)
पुत्रा विवस्वतः सर्वे मनुस्तेषां तथाऽवरः ।
देवभ्राट् तनयस्तस्य सुभ्राडिति ततः स्मृतः ॥ १-१-५६ (५६)

सुभ्राजस्तु त्रयः पुत्राः प्रजावन्तो बहुश्रुताः ।
दशज्योतिः शतज्योतिः सहस्रज्योतिरेव च ॥१-१-५७ (५७)
दशपुत्रसहस्राणि दशज्योतेर्महात्मनः ।
ततो दशगुणाश्चान्ये शतज्योतेरिहात्मजाः ॥१-१-५८ (५८)
भूयस्ततो दशगुणाः सहस्रज्योतिषः सुताः ।
तेभ्योऽयं कुरुवंशश्च यदूनां भरतस्य च ॥१-१-५९ (५९)
ययातीक्ष्वाकुवंशश्च राजर्षीणां च सर्वशः ।
संभूता बहवो वंशा भूतसर्गाः सुविस्तराः ॥१-१-६० (६०)
भूतस्थानानि सर्वाणि रहस्यं त्रिविधं च यत् ।
वेदा योगः सविज्ञानो धर्मोऽर्थः काम एव च ॥१-१-६१ (६१)
धर्मार्थकामयुक्तानि शास्त्राणि विविधानि च ।
लोकयात्राविधान च सर्व तद्दृष्टवानृषिः ॥१-१-६२ (६२)
ग्नीतिर्भरतवंशस्य विस्तारश्चैव सर्वशः।'
इतिहासाः सहव्याख्या विविधाश्रुतयोऽपि च ॥ १-१-६३ (६३)
इह सर्वमनुक्रान्तमुक्तं ग्रन्थस्य लक्षणम् ।
ग्संक्षेपेणेतिहासस्य ततो वक्ष्यति विस्तरम् ॥' १-१-६४ (६४)
विस्तीर्यैतन्महज्ज्ञानमृषिः संक्षिप्य चाब्रवीत् ।
इष्टं हि विदुषां लोके समासव्यासधारणम् ॥१-१-६५ (६५)
मन्वादि भारतं केचिदास्तीकादि तथाऽपरे ।
तथोपरिचराद्यन्ये विप्राः सम्यगधीयिरे ॥१-१-६६ (६६)
विविधं संहिताज्ञानं दीपयन्ति मनीषिणः ।
व्याख्यातुं कुशलाः केचिद्ग्रन्थान्धारयितुं परे ॥१-१-६७ (६७)
तपसा ब्रह्मचर्येण व्यस्य वेदं सनातनम् ।
इतिहासमिमं चक्रे पुण्यं सत्यवतीत्सुतः ॥१-१-६८ (६८)
पराशरात्मजो विद्वान्ब्रह्मर्षिः संशितव्रतः ।
मातुर्नियोगाद्धर्मात्मा गाङ्गेयस्य च धीमतः ॥१-१-६९ (६९)
क्षेत्रे विचित्रवीर्यस्य कृष्णद्वैपायनः पुरा ।
त्रीनग्नीनिव कौरव्याञ्जनयामास वीर्यवान् ॥१-१-७० (७०)
उत्पाद्य धृतराष्ट्रं च पाण्डुं विदुरमेव च ।
जगाम तपसे धीमान्पुनरेवाश्रमं प्रति ॥१-१-७१ (७१)
तेषु जातेषु वृद्धेषु गतेषु परमां गतिम् ।
अब्रवीद्भारतं लोके मानुषेऽस्मिन्महानृषिः ॥१-१-७२ (७२)
जनमेजयेन पृष्टः सन्ब्राह्मणैश्च सहस्रशः ।
शशास शिष्यमासीनं वैशंपायनमन्तिके ॥१-१-७३ (७३)
स सदस्यैः सहासीनं श्रावयामास भारतम् ।
कर्मान्तरेषु यज्ञस्य चोद्यमानः पुनः पुनः ॥१-१-७४ (७४)

विस्तारं कुरुवंशस्य गान्धार्या धर्मशीलताम् ।
क्षत्तुः प्रज्ञां धृतिं कुन्त्याः सम्यग्द्वैपायनोब्रवीत् ॥ १-१-७५ (७५)
वासुदेवस्य माहात्म्यं पाण्डवानां च सत्यताम् ।
दुर्वृत्तं धार्तराष्ट्राणामुक्तवान्भगवानृषिः ॥ १-१-७६ (७६)
इदं शतसहस्रं तु श्लोकानां पुण्यकर्मणाम् ।
उपाख्यानैः सह ज्ञेयं श्राव्यं भारतमुत्तमम् ॥ १-१-७७ (७७)
चतुर्विंशतिसाहस्रीं चक्रे भारतसंहिताम् ।
उपाख्यानैर्विना तावद्भारतं प्रोच्यते बुधैः ॥ १-१-७८ (७८)
ततोऽध्यर्धशतं भूयः संक्षेपं कृतवानृषिः ।
अनुक्रमणिकाध्यायं वृत्तान्तं सर्वपर्वणाम् ॥ १-१-७९ (७९)
तस्याख्यानवरिष्ठस्य कृत्वा द्वैपायनः प्रभुः ।
कथमध्यापयानीह शिष्यानित्यन्वचिन्तयत् ॥ १-१-८० (८०)
तस्य तच्चिन्तितं ज्ञात्वा ऋषेर्द्वैपायनस्य च ।
तत्राजगाम भगवान्ब्रह्मा लोकगुरुः स्वयम् ॥ १-१-८१ (८१)
प्रीत्यर्थं तस्य चैवर्षेर्लोकानां हितकाम्यया ।
तं दृष्ट्वा विस्मितो भूत्वा प्राञ्जलिः प्रणतः स्थितः ॥ १-१-८२ (८२)
आसनं कल्पयामास सर्वैर्मुनिगणैर्वृतः ॥ १-१-८३ (८३)
हिरण्यमर्भमासीनं तस्मिंस्तु परमासने ।
परिवृत्यासनभ्याशे वासवेयः स्थितोऽभवत् ॥ १-१-८४ (८४)
अनुज्ञातोऽथ कृष्णस्तु ब्रह्मणा परमेष्ठिना ।
निषसादासनाभ्याशे प्रीयमाणः शुचिस्मितः ॥ १-१-८५ (८५)
उवाच स महातेजा ब्रह्माणं परमेष्ठिनम् ।
कृतं मयेदं भगवन्काव्यं परमपूजितम् ॥ १-१-८६ (८६)
ब्रह्मन्वेदरहस्य च यच्चान्यत्स्थापितं मया ।
साङ्गोपनिषदां चैव वेदानां विस्तरक्रिया ॥ १-१-८७ (८७)
इतिहासपुरापानामुन्मेषं निमिषं च यत् ।
भूतं भव्यं भविष्यच्च त्रिविधं कालसंज्ञितम् ॥ १-१-८८ (८८)
जरामृत्युभयव्याधिभावाभावविनिश्चयः ।
विविधस्य च धर्मस्य ह्याश्रमाणां च लक्षणम् ॥ १-१-८९ (८९)
चातुर्वर्ण्यविधानं च पुराणानां च कृत्स्नशः ।
तपसो ब्रह्मचर्यस्य पृथिव्याश्चन्द्रसूर्ययोः ॥ १-१-९० (९०)
ग्रहनक्षत्रताराणां प्रमाणं च युगैः सह ।
ऋचो यजूंषि सामानि वेदाध्यात्मं तथैव च ॥ १-१-९१ (९१)
न्यायशिक्षा चिकित्सा च दानं पाशुपतं तथा ।
इति नैकाश्रयं जन्म दिव्यमानुषसंज्ञितम् ॥ १-१-९२ (९२)
तीर्थानां चैव पुण्यानां देशानां चैव कीर्तनम् ।

नदीनां पर्वतानां च वनानां सागरस्य च ॥ १-१-९३ (९३)
पुराणां चैव दिव्यानां कल्पानां युद्धकौशलम् ।
वाक्यजातिविशेषाश्च लोकयात्राक्रमश्च यः ॥ १-१-९४ (९४)
यच्चापि सर्वगं वस्तु तच्चैव प्रतिपादितम् ।
परं न लेखकः कश्चिदेतस्य भुवि विद्यते ॥ १-१-९५ (९५)
ब्रह्मोवाच। १-१-९६क्ष् (४)
तपोविशिष्टदपि वै वसिष्ठान्मुनिपुंगवात् ।
मन्ये श्रेष्ठव्यं त्वां वै रहस्यज्ञानवेदनात् ॥ १-१-९६ (९६)
जन्मप्रभृति सत्यां ते वेद्मि गां ब्रह्मवादिनीम् ।
त्वयाच काव्यमित्युक्तं तस्मात्काव्यं भविष्यति ॥ १-१-९७ (९७)
अस्य काव्यस्य कवयो न समर्था विशेषणे ।
विशेषणे गृहस्थस्य शेषास्त्रय इवाश्रमाः ॥ १-१-९८ (९८)
ग्जडान्धबधिरोन्मत्तं तमोभूतं जगद्भवेत् ।
यदि ज्ञानहुताशेन त्वया नोज्ज्वलियं भवेत् ॥ १-१-९९ (९९)
तमसान्धस्य लोकस्य वेष्टितस्य स्वकर्मभिः ।
ज्ञानाञ्जनशलाकाभिर्बुद्धिनेत्रोत्सवः कृतः'॥ १-१-१०० (१००)
धर्मार्थकाममोक्षार्थैः समासव्यासकीर्तनैः ।
त्वया भारतसूर्येण नृणां विनिहतं तमः ॥ १-१-१०१ (१०१)
पुराणपूर्णचन्द्रेण श्रुतिज्योत्स्नाप्रकाशिना ।
नृणां कुमुदसौम्यानां कृतं बुद्धिप्रसादनम् ॥ १-१-१०२ (१०२)
इतिहासप्रदीपेन मोहावरणघातिना ।
लोकगर्भगृहं कृत्स्नं यथावत्संप्रकाशितम् ॥ १-१-१०३ (१०३)
संग्रहाध्यायबीजो वै पौलोमास्तीकमूलवान् ।
संभवस्कन्धविस्तारः सभापर्वविटङ्कवान् ॥ १-१-१०४ (१०४)
आरण्यपर्वरूपाढ्यो विराटोद्योगसारवान् ।
भीष्मपर्वमहाशाखो द्रोणपर्वपलाशवान् ॥ १-१-१०५ (१०५)
कर्णपर्वसितैः पुष्पैः शल्यपर्वसुगन्धिभिः ।
स्त्रीपर्वैषीकविश्रामः शान्तिपर्वमहाफलः ॥ १-१-१०६ (१०६)
अश्वमेधामृतसस्त्वाश्रमस्थानसंश्रयः ।
मौसलश्रुतिसंक्षेपः शिष्टद्विजनिषेवितः ॥ १-१-१०७ (१०७)
सर्वेषां कविमुख्यानामुपजीव्यो भविष्यति ।
पर्जन्यइव भूतानामक्षयो भारद्रुमः ॥ १-१-१०८ (१०८)
काव्यस्य लेखनार्थाय गणेशः स्मर्यतां मुने। १-१-१०९ (१०९)
सौतिरुवाच। १-१-११०क्ष् (५)
एवमाभाष्य तं ब्रह्मा जगाम स्वं निवेशनम् ।
भगवान्स जगत्स्रष्टा ऋषिदेवगणैः सह ॥ १-१-११० (११०)

ततः सस्मार हेरम्बं व्यासः सत्यवतीसुतः ॥ १-१-१११ (१११)
स्मृतमात्रो गणेशानो भक्तचिन्तितपूरकः ।
तत्राजगाम विघ्नेशो वेदव्यासो यतः स्थितः ॥ १-१-११२ (११२)
पूजितश्चोपविष्टश्च व्यासेनोक्तस्तदानघ ।
लेखको भारतस्यास्य भव त्वं गणनायक ॥
मयैव प्रोच्यमानस्य मनसा कल्पितस्य च ॥ १-१-११३ (११३)
श्रुत्वैतत्प्राह विघ्नेशो यदि मे लेखनी क्षणम् ।
लिखतो नावतिष्ठेत तदा स्यां लेखको ह्यहम् ॥ १-१-११४ (११४)
व्यासोऽप्युवाच तं देवमबुद्ध्वा मा लिख क्वचित् ।
ओमित्युक्त्वा गणेशोपि बभूव किल लेखकः ॥ १-१-११५ (११५)
ग्रन्थग्रन्थिं तदा चक्रे मुनिर्गूढं कुतूहलात् ।
यस्मिन्प्रतिज्ञया प्राह मुनिर्द्वैपायनस्त्विदम् ॥ १-१-११६ (११६)
अष्टौ श्लोकसहस्राणि अष्टौ श्लोकशतानि च ।
अहं वेद्मि शुको वेत्ति संजयो वेत्ति वा न वा ॥ १-१-११७ (११७)
तच्छ्लोककूटमद्यापि ग्रथितं सुदृढं मुने ।
भेत्तुं न शक्यतेऽर्थस्यं गूढत्वात्प्रश्रितस्य च ॥ १-१-११८ (११८)
सर्वज्ञोपि गणेशो यत्क्षणमास्ते विचारयन् ।
तावच्चकार व्यासोपि श्लोकानन्यान्बहूनपि ॥ १-१-११९ (११९)
तस्य वृक्षस्य वक्ष्यामि शाखापुष्पफलोदयम् ।
स्वादुमेध्यरसोपेतमच्छेद्यमरमैरपि ॥ १-१-१२० (१२०)
अनुक्रमणिकाध्यायं वृत्तान्तं सर्वपर्वणाम् ।
इदं द्वैपायनः पूर्वं पुत्रमध्यापयच्छुकम् ॥ १-१-१२१ (१२१)
ततोऽन्येभ्योऽनुरूपेभ्यः शिष्येभ्यः प्रददौ प्रभु
षष्टिं शतसहस्राणि चकारान्यां स संहिताम् ।
त्रिंशच्छतसहस्रं च देवलोके प्रतिष्ठितम् ॥ १-१-१२२ (१२२)
पित्र्ये पञ्चदश प्रोक्तं रक्षोयक्षे चतुर्दश ।
एकं शतसहस्रं तु मानुषेषु प्रतिष्ठितम् ॥ १-१-१२३ (१२३)
नारदोऽश्रावयद्देवानसितो देवलः पितृन् ।
गन्धर्वयक्षरक्षांसि श्रावयामास वै शुकः ॥ १-१-१२४ (१२४)
ग्वैशंपायनविप्रर्षिः श्रावयामास पार्थिवम् ।
पारिक्षितं महात्मानं नाम्ना तु जनमेजयम्'॥ १-१-१२५ (१२५)
अस्मिंस्तु मानुषे लोके वैशंपायन उक्तवान् ।
शिष्यो व्यासस्य धर्मात्मा सर्ववेदविदां वरः ॥ १-१-१२६ (१२६)
एकं शतसहस्रं तु मयोक्तं वै निबोधत ॥ १-१-१२७ (१२७)
दुर्योधनो मन्युमयो महाद्रुमः
कर्णः स्कन्धः शकुनिस्तस्य शाखाः ।

दुश्शासनः पुष्पफले समृद्धे
मूलं राजा धृतराष्ट्रोऽमनीषि। १-१-१२८ (१२८)
युधिष्ठिरे धर्ममयो महाद्रुमः
स्कन्धोऽर्जुनो भीमसेनोऽस्य शाखाः ।
माद्रीसुतौ पुष्पफले समृद्धे
मूलं कृष्णो ब्रह्म च ब्राह्मणाश्च ॥ १-१-१२९ (१२९)
पाण्डुर्जित्वा बहून्देशान्युधा विक्रमणेन च ।
अरण्ये मृगयाशीलो न्यवसत्सजनस्तथा ॥१-१-१३० (१३०)
मृगव्यवायनिधनात्कृच्छ्रां प्राप स आपदम् ।
जन्मप्रभृति पार्थानां तत्राचारविधिक्रमः ॥१-१-१३१ (१३१)
मात्रोरभ्युपपत्तिश्च धर्मोपनिषदं प्रति ।
धर्मानिलेन्द्रांस्ताभिः साऽऽजुहाव सुतवाञ्छया ॥१-१-१३२ (१३२)
ग्ततो धर्मोपनिषदं भूत्वा भर्तुः प्रिया पृथा ।
धर्मानिलेन्द्रांस्ताभिः साऽऽजुहाव सुतवाञ्छया ॥१-१-१३३ (१३३)
तद्दत्तोपनिषन्माद्री चाश्विनावाजुहाव च ।
जाताः पार्थास्ततः सर्वे कुन्त्या माद्र्याश्च मन्त्रतः।'
तापसैः सह संवृद्धा मातृभ्यां परिरक्षिताः ॥ १-१-१३४ (१३४)
मेध्यारण्येषु पुण्येषु महतामाश्रमेषु च ।
ग्तेषु जातेषु सर्वेषु पाण्डवेषु महात्मसु ॥१-१-१३५ (१३५)
माद्र्या तु सह संगम्य ऋषिशापप्रभावतः ।
मृतः पाण्डुर्महापुण्ये शतशृङ्गे महागिरौ ॥' १-१-१३६ (१३६)
ऋषिभिश्च समानीता धार्तराष्ट्रान्प्रति स्वयम् ।
शिशवश्चाभिरूपाश्च जटिला ब्रह्मचारिणः ॥१-१-१३७ (१३७)
पुत्राश्च भ्रातरश्चेमे शिष्याश्च सुहृदश्च वः ।
पाण्डवा एत इत्युक्त्वा मुनयोऽन्तर्हितास्ततः ॥१-१-१३८ (१३८)
तांस्तैर्निवेदितान्दृष्ट्वा पाण्डवान्कौरवास्तदा ।
शिष्टाश्च वर्णाः पौरा ये ते हर्षाच्चुक्रुशुर्भृशम् ॥१-१-१३९ (१३९)
आहुः केचिन्न तस्यैते तस्यैत इति चापरे ।
यदा चिरमृतः पाण्डुः कथं तस्येतदि चापरे ॥१-१-१४० (१४०)
स्वागतं सर्वथा दिष्ट्या पाण्डोः पश्याम सन्ततिम् ।
उच्यतां स्वागतमिति वाचोऽश्रूयन्त सर्वशः ॥१-१-१४१ (१४१)
तस्मिन्नुपरते शब्दे दिशः सर्वा निनादयन् ।
अन्तर्हितानां भूतानां निःस्वनस्तुमुलीऽभवत् ॥१-१-१४२ (१४२)
पुष्पवृष्टिः शुभा गन्धाः शङ्खदुन्दुभिनिःस्वनाः ।
आसन्प्रवेशे पार्थानां तदद्भुतमिवाभवत् ॥१-१-१४३ (१४३)
तत्प्रीत्या चैव सर्वेषां पौराणां हर्षसंभवः ।

शब्द आसीन्महांस्तत्र दिवस्पृक्कीर्तिवर्धनः ॥ १-१-१४४ (१४४)
तेऽधीत्य निखिलान्वेदाञ्शास्त्राणि विविधानि च ।
न्यवसन्पाण्डवास्तत्र पूजिता अकुतोभयाः ॥ १-१-१४५ (१४५)
युधिष्ठिरस्य शौचेन प्रीताः प्रकृतयोऽभवन् ।
धृत्या च भीमसेनस्य विक्रमेणार्जुनस्य च ॥ १-१-१४६ (१४६)
गुरुशुश्रूषया कुन्त्या यमयोर्विनयेन च ।
तुतोष लोकः सकलस्तेषां शौर्यगुणेन च ॥ १-१-१४७ (१४७)
समवाये ततो राज्ञां कन्यां भर्तृस्वयंवराम् ।
प्राप्तवानर्जुनः कृष्णां कृत्वा कर्म सुदुष्करम् ॥ १-१-१४८ (१४८)
ततः प्रभृति लोकेऽस्मिन्पूज्यः सर्वधनुष्मताम् ।
आदित्य इव दुष्प्रेक्ष्यः समरेष्वपि चाभवत् ॥ १-१-१४९ (१४९)
स सर्वान्पार्थिवाञ्जित्वा सर्वांश्च महतो गणान् ।
आजहारार्जुनो राज्ञो राजसूयं महाक्रतुम् ॥ १-१-१५० (१५०)
अन्नवान्दक्षिणावांश्च सर्वैः समुदितो गुणैः ।
युधिष्ठिरेण संप्राप्तो राजसूयो महाक्रतुः ॥ १-१-१५१ (१५१)
सुनयाद्वासुदेवस्य भीमार्जुनबलेन च ।
घातयित्वा जरासन्धं चैद्यं च बलगर्वितम् ॥ १-१-१५२ (१५२)
दुर्योधनं समागच्छन्नर्हणानि ततस्ततः ।
मणिकाञ्चनरत्नानि गोहस्त्यश्वधनानि च ॥ १-१-१५३ (१५३)
विचित्राणि च वासांसि प्रावारावरणानि च ।
कम्बलाजिनरत्नानि राङ्कवास्तरणानि च ॥ १-१-१५४ (१५४)
समृद्धां तां तथा दृष्ट्वा पाण्डवानां तदा श्रियम् ।
ईर्ष्यासमुत्थः सुमहांस्तस्य मन्युरजायत ॥ १-१-१५५ (१५५)
विमानप्रतिमां तत्र मयेन सुकृतां सभाम् ।
पाण्डवानामुपहृतां स दृष्ट्वा पर्यतप्यत ॥ १-१-१५६ (१५६)
तत्रावहसितश्चासीत्प्रस्कन्दन्निव संभ्रमात् ।
प्रत्यक्षं वासुदेवस्य भीमेनानभिजातवत् ॥ १-१-१५७ (१५७)
स भोगान्विविधान्भुञ्जन्रत्नानि विविधानि च ।
कथितो धृतराष्ट्रस्य विवर्णो हरिणः कृशः ॥ १-१-१५८ (१५८)
अन्वजानात्ततो द्यूतं धृतराष्ट्रः सुतप्रियः ।
तच्छ्रुत्वा वासुदेवस्य कोपः समभवन्महान् ॥ १-१-१५९ (१५९)
नातिप्रीतमनाश्चासीद्विवादांश्चान्वमोदत ।
द्यूतादीननयान्घोरान्विविधांश्चाप्युपैक्षत ॥ १-१-१६० (१६०)
निरस्य विदुरं भीष्मं द्रोणं शारद्वतं कृपम् ।
विग्रहे तुमुले तस्मिन्दहन्क्षत्रं परस्परम् ॥ १-१-१६१ (१६१)
जयत्सु पाण्डुपुत्रेषु श्रुत्वा सुमहदप्रियम् ।

दुर्योधनमतं ज्ञात्वा कर्णस्य शकुनेस्तथा ॥ १-१-१६२ (१६२)
धृतराष्ट्रश्चिरं ध्यात्वा संजयं वाक्यमब्रवीत् ।
शृणु संजय सर्वं मे नचासूयितुमर्हसि ॥ १-१-१६३ (१६३)
श्रुतवानसि मेधावी बुद्धिमान्प्राज्ञसंमतः ।
न विग्रहे मम मतिर्न च प्रीये कुलक्षये ॥ १-१-१६४ (१६४)
न मे विशेषः पुत्रेषु स्वेषु पाम्डुसुतेषु वा ।
वृद्धं मामभ्यसूयन्ति पुत्रा मन्युपरायणाः ॥ १-१-१६५ (१६५)
अहं त्वचक्षुः कार्पण्यात्पुत्रप्रीत्या सहामि तत् ।
मुह्यन्तं चानुमुह्यामि दुर्योधनमचेतनम् ॥ १-१-१६६ (१६६)
राजसूये श्रियं दृष्ट्वा पाण्डवस्य महौजसः ।
तच्चावहसनं प्राप्य सभारोहणदर्शने ॥ १-१-१६७ (१६७)
अमर्षितः स्वयं जेतुमशक्तः पाण्डवान्रणे ।
निरुत्साहश्च संप्राप्तुं सुश्रियं क्षत्रियोऽपि सन् ॥ १-१-१६८ (१६८)
गान्धारराजसहितश्छद्मद्यूतममन्त्रयत् ।
तत्र यद्यद्यथा ज्ञातं मयां संजय तच्छृणु ॥ १-१-१६९ (१६९)
श्रुत्वा तु मम वाक्यानि बुद्धियुक्तानि तत्त्वतः ।
ततो ज्ञास्यसि मां सौते प्रज्ञाटचक्षुषमित्युत ॥ १-१-१७० (१७०)
यदाऽश्रौषं धनुरायम्य चित्रं
विद्धं लक्ष्यं पातितं वै पृथिव्याम् ।
कृष्णां हृतां प्रेक्षतां सर्वराज्ञां
तदा नाशंसे विजयाय संजय ॥ १-१-१७१ (१७१)
यदाऽश्रौषं द्वारकायां सुभद्रां
प्रसह्योढां माधवीमर्जुनेन ।
इन्द्रप्रस्थं वृष्णिवीरौ च यातौ
तदा नाशंसे विजयाय संजय ॥ १-१-१७२ (१७२)
यदाऽश्रौषं देवराजं प्रवृष्टं
शरैर्दिव्यैर्वारितं चार्जुनेन ।
अग्निं तथा तर्पितं खाण्डवे च
तदा नाशंसे विजयाय संजय ॥ १-१-१७३ (१७३)
यदाऽश्रौषं जातुषाद्वेश्मनस्ता-
न्मुक्तान्पार्थान्पञ्च कुन्त्या समेतान् ।
युक्तं चैषां विदुरं स्वार्थसिद्ध्यै
तदा नाशंसे विजयाय संजय ॥ १-१-१७४ (१७४)
यदाऽश्रौषं द्रौपदीं रङ्गमध्ये
लक्ष्यं भित्त्वा निर्जितामर्जुनेन ।
शूरान्पञ्चालान्पाण्डवेयांश्च युक्तां-

स्तदा नाशंसे विजयाय संजय ॥ १-१-१७५ (१७५)
यदाऽश्रौषं मागधानां वरिष्ठं
जरासन्धं क्ष्वमध्ये ज्वलन्तम् ।
दोर्भ्यां हतं भीमसेनेन गत्वा
तदा नाशंसे विजयाय संजय ॥ १-१-१७६ (१७६)
यदाऽश्रौषं दिग्जये पाण्डुपुत्रै-
र्वशीकृतान्भूमिपालान्प्रसह्य ।
महाक्रतुं राजसूयं कृतं च
तदा नाशंसे विजयाय संजय ॥ १-१-१७७ (१७७)
यदाऽश्रौषं द्रौपदीमश्रुकण्ठीं
सभां नीतां दुःखितामेकवस्त्राम् ।
रजस्वलां नाथवतीमनाथव-
त्तदा नाशंसे विजयाय संजय ॥ १-१-१७८ (१७८)
यदाऽश्रौषं वाससां तत्र राशिं
समाक्षिपत्कितवो मन्दबुद्धिः ।
दुःशासनो गतवान्नैवं चान्तं
तदा नाशंसे विजयाय संजय ॥ १-१-१७९ (१७९)
यदाऽश्रौषं हृतराज्यं युधिष्ठिरं
पराजितं सौबलेनाक्षवत्याम् ।
अन्वागतं भ्रातृभिरप्रमेयै-
स्तदा नाशंसे विजयाय संजय ॥ १-१-१८० (१८०)
यदाश्रौषं विविधास्तत्र चेष्टा
धर्मात्मनां प्रस्थितानां वनाय ।
ज्येष्ठप्रीत्या क्लिश्यतां पाण्डवानां
तदा नाशंसे विजयाय संजय ॥ १-१-१८१ (१८१)
यदाऽश्रौषं स्नातकानां सहस्रै-
रन्वागतं धर्मराजं वनस्थम् ।
भिक्षाभुजां ब्राह्मणानां महात्मनां
तदा नाशंसे विजयाय संजय ॥ १-१-१८२ (१८२)
ग्यदाऽश्रौषं वनवासेन पार्था-
न्समागतान्महर्षिभिः पुराणैः ।
उपास्यमानान्सगणैर्जातसख्यां-
स्तदा नाशंसे विजयाय संजर्य ॥' १-१-१८४ (१८३)
यदाश्रौषं त्रिदिवस्थं धनंजयं
शक्रात्साक्षाद्दिव्यमस्त्रं यथावत् ।
अधीयानं शंसितं सत्यसन्धं

तदा नाशंसे विजयाय संजय ॥ १-१-१८५ (१८४)
यदाऽश्रोषं कालकेयास्ततस्ते
पौलोमानो वरदानाच्च दृप्ताः ।
देवैरजेया निर्जिताश्चार्जुनेन
तदा नाशंसे विजयाय संजय ॥ १-१-१८६ (१८५)
यदाऽश्रौषमसुराणां वधार्थे
किरीटिनं यान्तममित्रकर्शनम् ।
कृतार्थं चाप्यागतं शक्रलोका-
त्तदा नाशंसे विजयाय संजय ॥ १-१-१८७ (१८६)
ग्यदाऽश्रौषं तीर्थयात्राप्रवृत्तं
पाण्डोः सुतं सहितं लोमशेन ।
बृहदश्वादक्षहृदयं च प्राप्तं
तदा नाशंसे विजयाय संजय ॥' १-१-१८८ (१८७)
यदाऽश्रौषं वैश्रवणेन सार्धं
समागतं भीमन्यांश्च पार्थान् ।
तस्मिन्देशे मानुषाणामगम्ये
तदा नाशंसि विजयाय संजया ॥ १-१-१८९ (१८८)
यदाऽश्रौषं घोषयात्रागतानां
बन्धं गन्धर्वैर्मोक्षणं चार्जुनेन ।
स्वेषां सुतानां कर्णबुद्धौ रतानां
तदा नाशंसे विजयाय संजय ॥ १-१-१९० (१८९)
यदाऽश्रौषं यक्षरूपेण धर्मं
समागतं धर्मराजेन सूत ।
प्रश्नान्कांश्चिद्विब्रुवाणं च सम्यक्
तदा नाशंसे विजयाय संजय ॥ १-१-१९१ (१९०)
यदाऽश्रौषं न विदुर्मामकास्तान्
प्रच्छन्नरूपान्वसतः पाण्डवेयान् ।
विराटराष्ट्रे सह कृष्णया च
तदा नाशंसे विजयाय संजय ॥ १-१-१९२ (१९१)
ग्यदाऽश्रौषं कीचकानां वरिष्ठं
निषूदितं भ्रातृशतेन सार्धम् ।
द्रौपद्यर्थे भीमसेनेन सङ्ख्ये
तदा नाशंसे विजयाय संजय ॥' १-१-१९३ (१९२)
यदाऽश्रौषं मामकानां वरिष्ठा-
न्धनंजयेनैकरथेन भग्नान् ।
विराटराष्ट्रे वसता महात्मना

तदा नाशंसे विजयाय संजय ॥ १-१-१९४ (१९३)
यदाऽश्रौषं सत्कृतं मत्स्यराज्ञा
सुतां दत्तामुत्तरामर्जुनाय ।
तां चार्जुनः प्रत्यगृह्णात्सुतार्थे
तदा नाशंसे विजयाय संजय ॥ १-१-१९५ (१९४)
यदाऽश्रौषं निर्जितस्याधनस्य
प्रव्राजितस्य स्वजनात्प्रच्युतस्य ।
अक्षौहिणीः सप्त युधिष्ठिरस्य
तदा नाशंसे विजयाय संजय ॥१९६ ॥ १-१-१९६ (१९५)
यदाऽश्रौषं माधवं वासुदेवं
सर्वात्मना पाण्डवार्थे निविष्टम् ।
यस्येमां गां विक्रममेकमाहु-
स्तदा नाशंसे विजयाय संजय ॥ १-१-१९७ (१९६)
यदाऽश्रौषं नरनारायणौ तौ
कृष्णार्जुनौ वदतो नारदस्य ।
अहं द्रष्टा ब्रह्मलोके च सम्यक्
तदा नाशंसे विजयाय संजय ॥ १-१-१९८ (१९७)
यदाऽश्रौषं लोकहिताय कृष्णं
शमार्थिनमुपयातं कुरूणाम् ।
शमं कुर्वाणमकृतार्थं च यातं
तदा नाशंसे विजयाय संजय ॥१९९ ॥ १-१-१९९ (१९८)
यदाऽश्रौषं कर्णदुर्योधनाभ्यां
बुद्धिं कृतां निग्रहे केशवस्य ।
तं चात्मानं बहुधा दर्शयानं
तदा नाशंसे विजयाय संजय ॥ १-१-२०० (१९९)
यदाऽश्रौषं वासुदेवे प्रयाते
रथस्यैकामग्रतस्तिष्ठमानाम् ।
आर्तां पृथां सान्त्वितां केशवेन
तदा नाशंसे विजयाय संजय ॥ १-१-२०१ (२००)
यदाऽश्रौषं मन्त्रिणं वासुदेवं
तथा भीष्मं शान्तनवं च तेषाम् ।
भारद्वाजं चाशिषोऽनुब्रुवाणं
तदा नाशंसे विजयाय संजय ॥ १-१-२०२ (२०१)
यदा कर्णो भीष्ममुवाच वाक्यं
नाहं योत्स्ये युध्यमाने त्वयीति ।
हित्वा सेनामपचक्राम चापि

तदा नाशंसे विजयाय संजय ॥ १-१-२०३ (२०२)
यदाऽश्रौषं वासुदेवार्जुनौ तौ
तथा धनुर्गाण्डिवमप्रमेयम् ।
त्रीण्युग्रवीर्याणि समागतानि
तदा नाशंसे विजयाय संजय ॥ १-१-२०४ (२०३)
यदाऽश्रौषं कश्मलेनाभिपन्ने
रथोपस्थे सीदमानेऽर्जुने वै ।
कृष्णं लोकान्दर्शयानं शरीरे
तदा नाशंसे विजयाय संजय ॥ १-१-२०५ (२०४)
यदाऽश्रौषं भीष्ममित्रकर्शनं
निघ्नन्तमाजावयुतं रथानाम् ।
नैषां कश्चिद्वध्यते ख्यातरूप-
स्तदा नाशंसे विजयाय संजय ॥ १-१-२०६ (२०५)
यदाऽश्रौषं चापगेयेन सङ्ख्ये
स्वयं मृत्युं विहितं धार्मिकेण ।
तच्चाकार्षुः पाण्डवेयाः प्रहृष्टा-
स्तदा नाशंसे विजयाय संजय ॥ १-१-२०७ (२०६)
यदाऽश्रौषं भीष्ममत्यन्तशूरं
हतं पार्थेनाहवेष्वप्रधृष्यम् ।
शिखण्डिनं पुरतः स्थापयित्वा
तदा नाशंसे विजयाय संजय ॥ १-१-२०८ (२०७)
यदाऽश्रौषं शरतल्पे शयानं
वृद्धं वीरं सादितं चित्रपुङ्खैः ।
भीष्मं कृत्वा सोमकानल्पशेषां-
स्तदा नाशंसे विजयाय संजय ॥ १-१-२०९ (२०८)
यदाऽश्रौषं शान्तनवे शयाने
पानीयार्थे चोदितेनार्जुनेन ।
भूमिं भित्त्वा तर्पितं तत्र भीष्मं
तदा नाशंसे विजयाय संजय ॥ १-१-२१० (२०९)
यदाश्रौषं शुक्रसूर्यौ च युक्तौ
कौन्तेयानामनुलोमौ जयाय ।
नित्यं चास्माञ्श्वापदा भीषयन्ति
तदा नाशंसे विजयाय संजय ॥ १-१-२११ (२१०)
यदा द्रोणो विविधानस्त्रमार्गा-
न्निदर्शयन्समरे चित्रयोधी ।
न पाण्डवाञ्श्रेष्ठतरान्निहन्ति

तदा नाशंसे विजयायं संजय ॥ १-१-२१२ (२११)
यदाऽश्रौषं चास्मदीयान्महारथा-
न्व्यवस्थितानर्जुनस्यान्तकाय ।
संशप्तकान्निहतानर्जुनेन
तदा नाशंसे विजयाय संजय ॥ १-१-२१३ (२१२)
यदाऽश्रौषं व्यूहमभेद्यमन्यै-
र्भारद्वाजेनात्तशस्त्रेण गुप्तम् ।
भित्त्वा सौभद्रं वीरमेकं प्रविष्टं
तदा नाशंसे विजयाय संजय ॥ १-१-२१४ (२१३)
यदाऽभिमन्युं परिवार्य बालं
सर्वे हत्त्वा हृष्टरूपा बभूवुः ।
महारथाः पार्थमशक्नुवन्त-
स्तदा नाशंसे विजयाय संजय ॥ १-१-२१५ (२१४)
यदाऽश्रौषमभिमन्युं निहत्य
हर्षान्मूढान्क्रोशतो धार्तराष्ट्रान् ।
क्रोधादुक्तं सैन्धवे चार्जुनेन
तदा नाशंसे विजयाय संजय ॥ १-१-२१६ (२१५)
यदाऽश्रौषं सैन्धवार्थे प्रतिज्ञां
प्रतिज्ञातां तद्वधायार्जुनेन ।
सत्यां तीर्णां शत्रुमध्ये च तेन
तदा नाशंसे विजयाय संजय ॥ १-१-२१७ (२१६)
यदाऽश्रौषं श्रान्तहये धनंजये
मुक्त्वा हयान्पाययित्वोपवृत्तान् ।
पुनर्युक्त्वा वासुदेवं प्रयातं
तदा नाशंसे विजयाय संजय ॥ १-१-२१८ (२१७)
यदाऽश्रौषं वाहनेष्वक्षमेषु
रथोपस्थे तिष्ठता पाण्डवेन ।
सर्वान्योधान्वारितानर्जुनेन
तदा नाशंसे विजयाय संजय ॥ १-१-२१९ (२१८)
यदाऽश्रौषं नागबलैः सुदुःसहं
द्रोणानीकं युयुधानं प्रमथ्य ।
यातं वार्ष्णेयं यत्र तौ कृष्णपार्थौ
तदा नाशंसे विजयाय संजय ॥ १-१-२२० (२१९)
यदाऽश्रौषं कर्णमासाद्य मुक्तं
वधाद्भीमं कुत्सयित्वा वचोभिः ।
धनुष्कोट्याऽऽतुद्य कर्णेन वीरं

तदा नाशंसे विजयाय संजय ॥ १-१-२२१ (२२०)
यदा द्रोणः कृतवर्मा कृपश्च
कर्णो द्रौणिर्मद्रराजश्च शूरः ।
अमर्षयन्सैन्धवं वध्यमानं
तदा नाशंसे विजयाय संजय ॥ १-१-२२२ (२२१)
यदाऽश्रौषं देवराजेन दत्तां
दिव्यां शक्तिं व्यंसितां माधवेन ।
घटोत्कचे राक्षसे घोररूपे
तदा नाशंसे विजयाय संजय ॥ १-१-२२३ (२२२)
यदाऽश्रौषं कर्णघटोत्कचाभ्यां
युद्धे मुक्तां सूतपुत्रेण शक्तिम् ।
यया वध्यः समरे सव्यसाची
तदा नाशंसे विजयाय संजय ॥ १-१-२२४ (२२३)
यदाऽश्रौषं द्रोणमाचार्यमेकं
धृष्टद्युम्नेनाभ्यतिक्रम्य धर्मम् ।
रथोपस्थे प्रायगतं विशस्तं
तदा नाशंसे विजयाय संजय ॥ १-१-२२५ (२२४)
यदाऽश्रौषं द्रौणिना द्वैरथस्थं
माद्रीसुतं नकुलं लोकमध्ये ।
समं युद्धे मण्डलेभ्यश्चरन्तं
तदा नाशंसे विजयाय संजय ॥ १-१-२२६ (२२५)
यदा द्रोणे निहते द्रोणपुत्रो
नारायणं दिव्यमस्त्रं विकुर्वन् ।
नैषामन्तं गतवान्पाण्डवानां
तदा नाशंसे विजयाय संजय ॥ १-१-२२७ (२२६)
यदाऽश्रौषं भीमसेनेन पीतं
रक्तं भ्रातुर्युधि दुःशासनस्य ।
निवारितं नान्यतमेन भीमं
तदा नाशंसे विजयाय संजय ॥ १-१-२२८ (२२७)
यदाऽश्रौषं कर्णमत्यन्तशूरं
हतं पार्थेनाहवेष्वप्रधृष्यम् ।
तस्मिन्भ्रातॄणां विग्रहे देवगुह्ये
तदा नाशंसे विजयाय संजय ॥ १-१-२२९ (२२८)
यदाऽश्रौषं द्रोणपुत्रं च शूरं
दुःशासनं कृतवर्माणमुग्रम् ।
युधिष्ठिरं धर्मराजं जयन्तं

तदा नाशंसे विजयाय संजय ॥ १-१-२३० (२२९)
यदाऽश्रौषं निहतं मद्रराजं
रणे शूरं धर्मराजेन सूत ।
सदा सङ्ग्रामे स्प्रधते यस्तु कृष्णं
तदा नाशंसे विजयाय संजय ॥ १-१-२३१ (२३०)
यदाऽश्रौषं कलहद्यूतमूलं
मायाबलं सौबलं पाण्डवेन ।
हतं सङ्ग्रामे सहदेवेन पापं
तदा नाशंसे विजयाय संजय ॥ १-१-२३२ (२३१)
यदाऽश्रौषं श्रान्तमेकं शयानं
ह्रदं गत्वा स्तम्भयित्वा तदम्भः ।
दुर्योधनं विरथं भग्नशक्तिं
तदा नाशंसे विजयाय संजय ॥ १-१-२३३ (२३२)
यदाऽश्रौषं पाण्डवांस्तिष्ठमानान्
गत्वा ह्रदे वासुदेवेन सार्धम् ।
अमर्षणं धर्षयतः सुतं मे
तदा नाशंसे विजयाय संजय ॥ १-१-२३४ (२३३)
यदाऽश्रौषं विविधांश्चित्रमार्गान्
गदायुद्धे मण्डलशश्चरन्तम् ।
मिथ्या हतं वासुदेवस्य बुद्ध्या
तदा नाशंसे विजयाय संजय ॥ १-१-२३५ (२३४)
यदाऽश्रौषं द्रोणपुत्रादिभिस्तै-
र्हतान्पञ्चालान्द्रौपदेयांश्च सुप्तान् ।
कृतं बीभत्समयशस्यं च कर्म
तदा नाशंसे विजयाय संजय ॥ १-१-२३६ (२३५)
यदाऽश्रौषं भीमसेनानुयाते-
नाश्वत्थाम्ना परमास्त्रं प्रयुक्तम् ।
क्रुद्धेनैषीकमवधीद्येन गर्भं
तदा नाशंसे विजयाय संजय ॥ १-१-२३७ (२३६)
यदाऽश्रौषं ब्रह्मशिरोऽर्जुनेन
स्वस्तीत्युक्त्वाऽस्त्रमस्त्रेण शान्तम् ।
अश्वत्थाम्ना मणिरत्नं च दत्तं
तदा नाशंसे विजयाय संजय ॥ १-१-२३८ (२३७)
यदाऽश्रौषं द्रोणपुत्रेण गर्भे
वैराट्या वै पात्यमाने महास्त्रैः ।
संजीवयामीति हरेः प्रतिज्ञां

तदा नाशंसे विजयाय संजय ॥ १-१-२३९ (२३८)
द्वैपायनः केशवो द्रोणपुत्रं
परस्पेरणाभिशापैः शशाप ।
बुद्ध्वा चाहं बुद्धिहीनोऽद्य सूत
संतप्ये वै पुत्रपौत्रैश्च हीनः ॥ १-१-२४० (२३९)
शोच्या गान्धारी पुत्रपौत्रैर्विहीना
तथा वध्वा पितृभिर्भ्रातृभिश्च ।
कृतं कार्यं दुष्करं पाण्डवेयैः
प्राप्तं राज्यमसपत्नं पुनस्तैः ॥ १-१-२४१ (२४०)
कष्टं युद्धे दश शेषाः श्रुता मे
त्रयोऽस्माकं पाण्डवानां च सप्त ।
द्व्यूना विंशतिराहताऽक्षौहिणीनां
तस्मिन्सङ्ग्रामे भैरवे क्षत्रियाणाम् ॥ १-१-२४२ (२४१)
तमस्त्वतीव विस्तीर्णं मोह आविशतीव माम् ।
संज्ञां नोपलभे सूत मनो विह्वलतीव मे ॥१-१-२४३ (२४२)
सौतिरुवाच।१-१-२४४क्ष् (६)
इत्युक्त्वा धृतराष्ट्रोऽथ विलप्य बहु दुःखितः ।
मूर्च्छितः पुनराश्वस्तः संजयं वाक्यमब्रवीत् ॥१-१-२४४ (२४३)
धृतराष्ट्र उवाच।१-१-२४५क्ष् (७)
संजयैवं गते प्राणांस्त्यक्तुमिच्छामि मा चिरम् ।
स्तोकं ह्यपि न पश्यामि फलं जीवितधारणे ॥१-१-२४५ (२४४)
सौतिरुवाच।१-१-२४६क्ष् (८)
तं तथा वादिनं दीनं विलपन्तं महीपतिम् ।
निःश्वसन्तं यथा नागं मुह्यमानं पुनः पुनः ॥१-१-२४६ (२४५)
गावल्गणिरिदं धीमान्महार्थं वाक्यमब्रवीत्। १-१-२४७ (२४६)
संजय उवाच ।
श्रुतवानसि वै राजन्महोत्साहान्महाबलान् ॥ १-१-२४७क्ष् (९)
द्वैपायनस्य वदतो नारदस्य च धीमतः ।
महत्सु राजवंशेषु गुणैः समुदितेषु च ॥१-१-२४८ (२४७)
जातान्दिव्यास्त्रविदुषः शक्रप्रतिमतेजसः ।
धर्मेण पृथिवीं जित्वा यज्ञैरिष्ट्वाप्तदक्षिणैः ॥१-१-२४९ (२४८)
अस्मिँल्लोके यशः प्राप्य ततः कालवशं गतान् ।
शैब्यं महारथं वीरं सृंजयं जयतां वरम् ॥१-१-२५० (२४९)
सुहोत्रं रन्तिदेवं च काक्षीवन्तमतौशिजम् ।
बाह्लीकं दमनं चैद्यं शर्यातिमजितं नलम् ॥१-१-२५१ (२५०)
विश्वामित्रममित्रघ्नमम्बरीषं महाबलम् ।

मरुत्तं मनुमिक्ष्वाकुं गयं भरतमेव च ॥ १-१-२५२ (२५१)
रामं दाशरथिं चैव शशबिन्दुं भगीरथम् ।
कृतवीर्यं महाभागं तथैव जनमेजयम् ॥ १-१-२५३ (२५२)
ययातिं शुभकर्माणं देवैर्यो याजितः स्वयम् ।
ग्चैत्ययूपाङ्किता भूमिर्यस्येयं सवनाकरा ॥ १-१-२५४ (२५३)
इति राज्ञां चतुर्विंशन्नारदेन सुरर्षिणा ।
पुत्रशोकाभितप्ताय पुरा श्वैत्याय कीर्तितम् ॥ १-१-२५५ (२५४)
तेभ्यश्चान्ये गताः पूर्वं राजानो बलवत्तराः ।
महारथा महात्मानः सर्वैः समुदिता गुणैः ॥ १-१-२५६ (२५५)
पूरुः कुरुर्यदुः शूरो विष्वगश्वो महाद्युतिः ।
अणुहो युवनाश्वश्च ककुत्स्थो विक्रमी रघुः ॥ १-१-२५७ (२५६)
विजयो वीतिहोत्रोऽह्गो भवः श्वेतो बृहद्गुरुः ।
उशीनरः शतरथः कङ्को दुलिदुहो द्रुमः ॥ १-१-२५८ (२५७)
दम्भोद्भवः परो वेनः सगरः संकृतिर्निमिः ।
अजेयः परशुः पुण्ड्रः शंभुर्देवावृधोऽनघः ॥ १-१-२५९ (२५८)
देवाह्वयः सुप्रतिमः सुप्रतीको बृहद्रथः ।
महोत्साहो विनीतात्मा सुक्रतुर्नैषधो नलः ॥ १-१-२६० (२५९)
सत्यव्रतः शान्तभयः सुमित्रः सुबलः प्रभुः ।
जानुजङ्घोऽनरण्योऽर्कः प्रियभृत्यः शुचिव्रतः ॥ १-१-२६१ (२६०)
बलबन्धुर्निरामर्दः केतुशृङ्गो बृहद्बलः ।
धृष्टकेतुर्बृहत्केतुर्दीप्तकेतुर्निरामयः ॥ १-१-२६२ (२६१)
अविक्षिच्चपलो धूर्तः कृतबन्धुर्दृढेषुधिः ।
महापुराणसंभाव्यः प्रत्यङ्गः परहा श्रुतिः ॥ १-१-२६३ (२६२)
एते चान्ये च राजानः शतशोऽथ सहस्रशः ।
श्रूयन्ते शतशश्चान्ये सङ्ख्याताश्चैव पद्मशः ॥ १-१-२६४ (२६३)
हित्वा सुविपुलान्भोगान्बुद्धिमन्तो महाबलाः ।
राजानो निधनं प्राप्तास्तव पुत्रैर्महत्तरः ॥ १-१-२६५ (२६४)
येषां दिव्यानि कर्माणि विक्रमस्त्याग एव च ।
माहात्म्यमपि चास्तिक्यं सत्यं शौचं दयाऽर्जवम् ॥ १-१-२६६ (२६५)
विद्वद्भिः कथ्यते लोके पुराणैः कविसत्तमैः ।
सर्वर्द्धिगुणसंपन्नास्ते चापि निधनं गताः ॥ १-१-२६७ (२६६)
तव पुत्रा दुरात्मानः प्रतप्ताश्चैव मन्युना ।
लुब्धा दुर्वृत्तभूयिष्ठा न ताञ्छोचितुमर्हसि ॥ १-१-२६८ (२६७)
श्रुतवानसि मेधावी बुद्धिमान्प्राज्ञसंमतः ।
येषां शास्त्रानुगा बुद्धिर्न ते मुह्यन्ति भारत ॥ १-१-२६९ (२६८)
निग्रहानुग्रहौ चापि विदितौ ते नराधिप ।

नात्यन्तमेवानुवृत्तिः कार्या ते पुत्ररक्षणे ॥ १-१-२७० (२६९)
भवितव्यं तथा तच्च नानुशोचितुमर्हसि ।
दैवं पुरुषकारेण को निवर्तितुमर्हति ॥ १-१-२७१ (२७०)
विधातृविहितं मार्गं न कश्चिदतिवर्तते ।
कालमूलमिदं सर्वं भावाभावौ सुखासुखे ॥ १-१-२७२ (२७१)
कालः सृजति भूतानि कालः संहरते प्रजाः ।
संहरन्तं प्रजाः कालं कालः शमयते पुनः ॥ १-१-२७३ (२७२)
कालो विकुरुते भावान्सर्वांल्लोके शुभाशुभान् ।
कालः संक्षिपते सर्वाः प्रजा विसृजते पुनः ॥ १-१-२७४ (२७३)
कालः सुप्तेषु जागर्ति कालो हि दुरतिक्रमः ।
कालः सर्वेषु भूतेषु चरत्यविधतः समः ॥ १-१-२७५ (२७४)
अतीतानागता भावा ये च वर्तन्ति सांप्रतम् ।
तान्कालनिर्मितान्बुद्ध्वा न संज्ञां हातुमर्हसि ॥ १-१-२७६ (२७५)
सौतिरुवाच। १-१-२७७क्ष् (१०)
इत्येवं पुत्रशोकार्तं धृतराष्ट्रं जनेश्वरम् ।
आश्वास्य स्वस्थमकरोत्सूतो गावल्गणिस्तदा ॥ १-१-२७७ (२७६)
धृतराष्ट्रोऽपि तच्छ्रुत्वा धृतिमेव समाश्रयत् ।
दिष्ट्येदमागतमिति मत्त्वा स प्राज्ञसत्तमः ॥ १-१-२७८ (२७७)
लोकानां च हितार्थाय कारुण्यान्मुनिसत्तमः ।
अत्रोपनिषदं पुण्यां कृष्णद्वैपायनोऽब्रवीत् ॥ १-१-२७९ (२७८)
विद्वद्भिः कथ्यते लोके पुराणे कविसत्तमैः ।
भारताध्ययनं पुण्यमपि पादमधीयतः ।
श्रद्दधानस्य पूयन्ते सर्वपापान्यशेषतः ॥ १-१-२८० (२७९)
देवा देवर्षयो ह्यत्र तथा ब्रह्मर्षयोऽमलाः ।
कीर्त्यन्ते शुभकर्माणस्तथा यक्षा महोरगाः ॥ १-१-२८१ (२८०)
भगवान्वासुदेवश्च कीर्त्यतेऽत्र सनातनः ।
स हि सत्यमृतं चैव पवित्रं पुण्यमेव च ॥ १-१-२८२ (२८१)
शाश्वतं ब्रह्म परमं ध्रुवं ज्योतिः सनातनम् ।
यस्य दिव्यानि कर्माणि कथन्ति मनीषिणः ॥ १-१-२८३ (२८२)
असत्सत्सदसच्चैव यस्माद्विश्वं प्रवर्तते ।
सन्ततिश्च प्रवृत्तिश्च जन्ममृत्युपुनर्भवाः ॥ १-१-२८४ (२८३)
अध्यात्मं श्रूयते यत्र पञ्चभूतगुणात्मकम् ।
अव्यक्तादि परं यच्च स एव परिगीयते ॥ १-१-२८५ (२८४)
यं ध्यायन्ति सदा मुक्ता ध्यानयोगबलान्विताः ।
प्रतिबिम्बमिवादर्शे पश्यन्त्यात्मन्यवस्थितम् ॥ १-१-२८६ (२८५)
श्रद्दधानः सदा युक्तः सदा धर्मपरायणः ।

आसेवन्निममध्यायं नरः पापात्प्रमुच्यते ॥१-१-२८७ (२८६)
अनुक्रमणिकाध्यायं भारतस्येममादितः ।
आस्तिकः सततं शृण्वन्न कृच्छ्रेष्ववसीदति ॥१-१-२८८ (२८७)
उभे सन्ध्ये जपन्किंचित्सद्यो मुच्येत किल्बिषात् ।
अनुक्रमण्या यावत्स्यादह्नारात्र्या च संचितम् ॥१-१-२८९ (२८८)
भारतस्य वपुर्ह्येतत्सत्यं चामृतमेव च ।
नवनीतं यथा दध्नो द्विपदां ब्राह्मणो यथा ॥१-१-२९० (२८९)
आरण्यकं च वेदेभ्य ओषधिभ्योऽमृतं यथा ।
ह्रदानामुदधिः श्रेष्ठो गौर्वरिष्ठा चतुष्पदाम् ॥१-१-२९१ (२९०)
यथैतानीतिहासानां तथा भारतमुच्यते ।
यश्चैनं श्रावयेच्छ्राद्धे ब्राह्मणान्पादमन्ततः ॥१-१-२९२ (२९१)
अक्षय्यमन्नपानं वै पितृंस्तस्योपतिष्ठते ।
इतिहासपुराणाभ्यां वेदं समुपबृंहयेत् ॥१-१-२९३ (२९२)
बिभेत्यल्पश्रुताद्वेदो मामयं प्रतरिष्यति ।
कार्ष्णं वेदमिमं विद्वाञ्श्रावयित्वार्थमश्नुते ॥१-१-२९४ (२९३)
भ्रूणहत्यादिकं चापि पापं जह्यादसंशयम् ।
य इमं शुचिरध्यायं पठेत्पर्वणि पर्वणि ॥१-१-२९५ (२९४)
अधीतं भारतं तेन कृत्स्नं स्यादिति मे मतिः ।
यश्चैनं शृणुयान्नित्यमार्षं श्रद्धासमन्वितः ॥१-१-२९६ (२९५)
स दीर्घमायुः कीर्तिं च स्वर्गतिं चाप्नुयान्नरः ।
एकतश्चतुरो वेदा भारतं चैतदेकतः ॥१-१-२९७ (२९६)
पुरा किल सुरैः सर्वैः समेत्य तुलया धृतम् ।
चतुर्भ्यः सरहस्येभ्यो वेदेभ्यो ह्यधिकं यदा ॥१-१-२९८ (२९७)
तदाप्रभृति लोकेऽस्मिन्महाभारतमुच्यते ।
महत्त्वे च गुरुत्वे च ध्रियमाणं यतोऽधिकम् ॥१-१-२९९ (२९८)
महत्त्वाद्भारवत्त्वाच्च महाभारतमुच्यते ।
निरुक्तमस्य यो वेद सर्वपापैः प्रमुच्यते ॥१-१-३०० (२९९)
तपो नकल्कोऽध्ययनं नकल्कः
स्वाभाविको वेदविधिर्नकल्कः ।
प्रसह्य वित्ताहरणं नकल्क-
स्तान्येव भावोपहतानि कल्कः ॥ १-१-३०१ (३००)

इति श्रीमन्माहाभारते आदिपर्वणि अनुक्रमणिकापर्वणि प्रथमोऽध्यायः
॥१ ॥ ॥ अनुक्रमणिकापर्व समाप्तम् ॥
Mahabharata - Adi Parva - Chapter Footnotes

१-१-१ श्रीलक्ष्मीनृसिंहाय नमः ॥
श्रीहयग्रीवाय नमः ॥
श्रीवेदव्यासाय नमः ॥
इह खलु भगवान्पाराशर्यः परमकारुणिको म्दमतीननुग्रहीतुं चतुर्दशविद्यास्थानान्येकत्र दिदर्शयिषुर्महाभारताख्यमितिहासं प्रणेष्यन्प्रारिप्सितस्य निष्प्रत्यूहारिपूरणाय प्रचयगमनाय च मङ्गलं रचयन् शिष्यशिक्षायै लोकरूपेम निबघ्नन्नर्यात्तत्र प्रेक्षावत्प्रवृत्त्यङ्गमभिधेयादि दर्शयति ॥
नारायणमिति ॥
नरोत्तमं पुरुषोत्तमं नारायणं नरं देवी सरस्वतीं (व्यासं) चैव नमस्कृत्य जयं भारताख्यमितिहासं उदीरयेत् ॥
१-१-२ लक्षालङ्कारव्याख्यानरीत्यायमाद्यः श्लोकः ॥
१-१-३ कतिपयकोशरीत्यायस्पद्यः ॥
३ ॥
१-१-५ रोमहर्षणपुत्रः रोमाणि हर्षयाञ्चके श्रोतॄणा यः स्वभाषितैः ।कर्मणा प्रथितस्तेन रोमहर्षणसंज्ञया। इति कौर्मे निरुक्तार्थनाम्नः पुत्रः। अग्रश्रवाः उग्रस्य नृसिंहस्य श्रवः श्रवणं यस्य सः। पौराणिकः पुराणे कृतश्रमः। नैमिशारण्ये वायवीये। एतन्मनोमयं चक्रं मया सृष्टं विसृज्यते। यत्रास्य शीर्यते नेमिः स देशस्तपसः शुभः। इत्युक्त्वा सूर्यसंकाशं चक्रं सृष्ट्वा मनोमयम्। प्रणिपत्य महादेवं विससर्ज पितामहः। तेपि हृष्टतरा विप्राः प्रणम्य जगतां प्रभुम्। प्रययुस्तस्य चक्रस्य यत्र नेमिर्व्यशीर्यत। तद्वनं तेन विख्यातं नैमिशं मुनिपूजितम्। इति उक्तरूपे। नैमिषेति पाठे तु वाराहे। एवं कृत्वा ततो देवो मुनि गौरमुखं तदा। उवाच निमिषेणेदं निहतं दानवं बलं। अरण्येऽस्मिंस्ततस्त्वेतन्नैमिषारण्यसंज्ञितं। इति निर्वचनं द्रष्टव्यं। शुनकस्य मुनेरपत्यं शौनकः। कुलपतेः। एको दशसहस्राणि योऽन्नदानादिना भरेत्। स वै कुलपतिः इत्युक्तलक्षणस्य। सत्रे ये यजमानास्तएव ऋत्विजो यस्मिन्बहुकर्तृके क्रतौ स सत्रसंज्ञ तस्मिन् ॥
५ ॥
१-१-७ नैमिशारण्यवासिनः तान्सर्वानृषीनुवाचेत्यन्वयः ॥
७ ॥
१-१-८ अहं तपोधनाः सिकीः सर्वाः कथा वेद जानामि ॥
८ ॥
१-१-११ निर्दिष्टं इहोपविश्यतामिति दर्शितम् ॥

११ ॥
१-१-१२ प्रस्तावयन् उपोद्घातयन् ॥
१२ ॥
१-१-१३ विहृतः नीतः ॥
१३ ॥
१-१-१४ तेषां मुनीनां चादन्येषां राजादीनां च यानि चरितानि तेषामाश्रयभूतम् । भावितात्मनां शोधितचित्तानाम् ॥
१४ ॥
१-१-१८ समन्तपञ्चकं समन्तात् पञ्चकं परशुरामकृतह्रदपञ्चकं यस्मिंस्तत् । स्यमन्तपञ्चकमित्यपि पाठो दृश्यते ॥
१८ ॥
१-१-२१ ब्रवीमि किमहं द्विजाः अहं च पुराणादिष्वन्यतमं किं ब्रवीमि तदाज्ञापयतेति शेषः ॥
२१ ॥
१-१-२५ संस्कारोपगतां पदादिव्युत्पत्तिमतीम् । ब्राह्मो वाचं। ब्राह्मी तु भारती भाषेत्यमरः ॥
२५ ॥
१-१-२८ मङ्गलाचरणपूर्वकं मुनिभिः प्रार्थितमर्थं वक्तुं प्रतिजानीते आद्यमित्यदिचतुर्भिः । हरिं नमस्कृत्य महर्षेर्मतं प्रवक्ष्यामीत्यन्वयः। पुरुहूतं पुरुभिर्बहुभिर्होतृभिः हूतं आहूतं। पुरुभिः सामगैः स्तुतं। ऋतं सत्यं। एकश्चासावक्षरश्च तं। एकं अद्वितीयं समाधिकरहितमिति वा। अक्षरं नाशरहितं। व्यख्यव्यक्तं रामकृष्णादिरूपेण दृश्यं। ज्ञानानन्दादिरूपेण मन्देरदृश्यं ॥
२८ ॥
१-१-३० मङ्गल्यं मङ्गलप्रदं ॥
३० ॥
१-१-३६ ज्ञानं ज्ञानसाधनं इदं भारत त्रिषु लोकेषु प्रतिष्ठितम् ॥
३६ ॥
१-१-३७ समयैः संकेतैः । छन्दोवृत्तैः त्रिष्टुबादिछन्दोन्तीतैरिन्द्रवज्रादिभिर्वृत्तैः ॥
३७ ॥
१-१-४५ यस्मिन् ब्रह्माण्डे ॥
४५ ॥
१-१-५२ प्रतिकल्पं सृष्टेः समाननामरूपत्वमाह यथेति ॥

५२ ॥
१-१-५३ कल्पानामानन्त्यमाह एवमिति ॥
५३ ॥
१-१-५४ एवं जडसृष्टिमुक्त्वा चेतनसृष्टिमाह त्रयन्त्रिंशदिति ॥
५४ ॥
१-१-६१ भूतस्थानानि नृणां वासस्थानानि नगरादीनि ॥
६१ ॥
१-१-६४ इह सर्वमनुकान्तं अनुकमेण उक्तं ॥
६४ ॥
१-१-६५ समासः सङ्क्षेपः । व्यासो विस्तारः ॥
६५ ॥
१-१-६६ भारतारम्भे मतभेदमाह मन्वादीति । मन्वादि मनुर्मन्त्रः नारायणं नमस्कृत्येति। ॐ नमो भगवते वासुदेवायेति वा तदादि। प्रस्तीकं आस्तीकचरितं तदादि। उपरिचरो वसुः तच्चरितादि वा ॥
६६ ॥
१-१-६७ बह्वर्थत्वाद्विविधं संहिताज्ञानं दीपयन्ति प्रकाशयन्ति ॥
६७ ॥
१-१-६९ महुः सत्यवत्याः । गाङ्गेयस्य भीष्मस्य ॥
६९ ॥
१-१-७० क्षत्र भार्यासु अम्बिकादिषु ॥
७० ॥
१-१-७१ परमां गतिं मृत्युं ॥
७१ ॥
१-१-७३ शशासं त्वममन् भारतं श्रावयेत्याज्ञापितवान् ॥
७३ ॥
१-१-८४ वसोः अपत्यं स्त्री वास्त्री तस्याः अपत्यं वासवेयो व्यासः ॥
८४ ॥
१-१-८५ कृष्णो व्यासः ॥
८५ ॥
१-१-९८ विशेषणे अतिशायने ॥
९८ ॥
१-१-१०४ विटङ्काः पक्ष्युपवेशनस्थानानि ॥
१०४ ॥
१-१-१०५ सारो मज्जा ॥
१०५ ॥

१-१-१०६ विश्रामः छाया ॥
१०६ ॥
१-१-१०८ आश्रमस्थानसंश्रयः आश्रमवासिकस्यण्डिलः
। मौसलश्रुतिसंक्षेपः मौसलादिग्रन्थः श्रुतिस्थानीयदीर्घशाखान्तः
॥
१०८ ॥
१-१-११२ यतः यत्र देशे ॥
११२ ॥
१-१-११५ अबुद्ध्वा अर्थमिति शेषः । ओमित्यङ्गीकारे ॥
११५ ॥
१-१-११६ अन्थग्रन्थिं ग्रन्थे दुर्भेद्यस्थानं ॥
११६ ॥
१-१-१३१ कृच्छ्रां आपदं व्यवायकाले मरिष्यसीत्येवं शापरूपां
। तत्र आपदि एवं सत्यामपि पार्थानां पाण्डवानां जन्मप्रभृति
आचारविधिक्रमः अभूदिति शेषः ॥
१३१ ॥
१-१-१३२ आचारविधिक्रममेवाह । मात्रोरिति। मात्रोः
कुन्तीमाद्योः। धर्मोपनिषदं प्रति आपदि अपत्यार्थे विशिष्टः
पुमान्प्रार्थनीय इत्येवरूपं धर्मरहस्यं प्रति। अभ्युपपत्तिः
अङ्गीकारः ॥
१३२ ॥
१-१-१३७ धार्तराष्ट्रान्धृतराष्ट्रसंबन्धिगृहान् ॥
१३७ ॥
१-१-१४२ अन्तर्हितानां भूतानां निःस्वनः पाण्डुपुत्रा एवैते इत्येवंरूपा
अशरीरवाक् ॥
१४२ ॥
१-१-१४८ भर्तारं स्वयमेव वृणुत इति भर्तृस्वयंवरां ॥
१४८ ॥
१-१-१५० राज्ञो युधिष्ठिरस्य ॥
१५० ॥
१-१-१५७ अनभिजातवत् ग्रामीणवत् ॥
१५७ ॥
१-१-१६० धृतराष्ट्रो यद्विवादानन्वमोदत यच्चानयानुपैक्षत
तस्माद्वासुदेवस्य कोपः समभवत् ॥
१६० ॥
१-१-१६१ दहन् अदहत् ॥

१६१ ॥
१-१-१७३ प्रवृष्टं वर्षणे प्रवृत्तं ॥
१७३ ॥
१-१-१८१ चेष्टाः बाहुवीक्षणाद्याः ॥
१८१ ॥
१-१-१८२ स्नातकानां समापितविद्याव्रतानां ब्राह्मणानां ॥
१८२ ॥
१-१-१८५ शंसितं प्रशस्यं ॥
१८५ ॥
१-१-१९७ इमां गां पृथिवीं यस्य वासुदेवस्य एकं विक्रमं पदमात्रमाहुः ॥
१९७ ॥
१-१-१९८ यौ नरनारायणौ ब्रह्मलोके अहं द्रष्टा अद्राक्षं तौ
कृष्णार्जुनौ अर्जुनकृष्णौ इति वदतो नारदस्य नारदात् ॥
१९८ ॥
१-१-२०० बहुधा विश्वरूपत्वेन ॥
२०० ॥
१-१-२०२ तेषां पाण्डवानां ॥
२०२ ॥
१-१-२०९ सोमकानेव अल्पशेषान्कृत्वा ॥
२०९ ॥
१-१-२१० चोदितमर्जुनं च । गां भित्त्वाम्बो वारुणेनाददाने इति पाठान्तरं ॥
२१० ॥
१-१-२२३ व्यंसितां व्यर्थीकृतां ॥
२२३ ॥
१-१-२३७ क्रुद्धेनैषीकं चावधीद्यन्न गर्भं इति पाठान्तरम् ॥
१-१-२८० पूयन्ते नश्यन्ति ॥
२८० ॥
१-१-२९४ कार्ष्णं कृष्णेन व्यासेन प्रोक्तं ॥
२९४ ॥
१-१-३०१ ननु वेदेभ्यः कथमिदमधिकं अत्र युद्धप्रधानानां
कर्मणां बन्धनहेतूनां कथनादुपनिषदि तावन्मोक्षसाधनानां
धर्माणां ब्रह्मणश्च प्रतिपादनादिति चेत्तत्राह । तप
इति। तपः कृच्छ्रचान्द्रायणादि नकल्कः पापनाशकं। स्वाभाविकः
स्वस्ववर्णाश्रमादिपुरस्कारेण विहितः। वेदविधिः वेदोक्तो विधिः
सन्ध्योपासनादिः। प्रसह्य प्रकर्षेण सोढ्वा क्षुधादिदुःखमपि
सोढ्वा। वित्तस्य आहरणं शिलोञ्छादिना अर्जनं। तान्येव

तपआदीन्येव भावेन फलानुसन्धानेन उपहतानि प्रतिषिद्धानि। कल्कः पापहेतुः। तथाचात्रापि मोक्षधर्मादिषु तत्रतत्र निष्कामकर्मणां प्रतिपादनं ब्रह्मनिरूपणं चास्त्येव। अतो वेदादप्युत्तमं भारतं ॥
३०१ ॥
इति टिप्पणे प्रथमोऽध्यायः ॥
१ ॥

---

अध्यय००२
॥ श्रीः ॥
१.२. अध्यायः २

(अथ पर्वसंग्रहपर्व ॥ २ ॥)
Mahabharata - Adi Parva - Chapter Topics
समन्तपञ्चकाख्यानं ॥ १ ॥
अक्षौहिण्यादिपरिमाण ॥ २ ॥
आदिपर्वादिसर्वपर्वणां संक्षेपेण वृत्तान्तकथनं ॥ ३ ॥
नारतश्रवणफलकथनं ॥ ४ ॥

Mahabharata - Adi Parva - Chapter Text

१-२-० (३०१)
ऋषय ऊचुः। १-२-०क्ष् (११)
समन्तपञ्चकमिति यदुक्तं सूतनन्दन ।
एतत्सर्वं यथातत्त्वं श्रोतुमिच्छामहे वयम् ॥ १-२-१ (३०२)
सौतिरुवाच। १-२-२क्ष् (१२)
शृणुध्वं मम भो विप्रा ब्रुवतश्च कथाः शुभाः ।
समन्तपञ्चकाख्यं च श्रोतुमर्हथ सत्तमाः ॥ १-२-२ (३०३)
त्रेताद्वापरयोः सन्धौ रामः शस्त्रभृतां वरः ।
असकृत्पार्थिवं क्षत्रं जघानामर्षचोदितः ॥ १-२-३ (३०४)
स सर्वं क्षत्रमुत्साद्य स्ववीर्येणानलद्युतिः ।
समन्तपञ्चके पञ्च चकार रुधिरह्रदान् ॥ १-२-४ (३०५)
स तेषु रुधिराम्भःसु ह्रदेषु क्रोधमूर्च्छितः ।
पितॄन्संतर्पयामास रुधिरेणेति नः श्रुतम् ॥ १-२-५ (३०६)
अथर्चीकादयोऽभ्येत्य पितरो राममब्रुवन् ।
राम राम महाभाग प्रीताः स्म तव भार्गव ॥ १-२-६ (३०७)
अनया पितृभक्त्या च विक्रमेण तव प्रभो ।
वरं वृणीष्व भद्रं ते यमिच्छसि महाद्युते ॥ १-२-७ (३०८)

राम उवाच। १-२-८क्ष् (१३)
यदि मे पितरः प्रीता यद्यनुग्राह्यता मयि ।
यच्च रोषाभिभूतेन क्षत्रमुत्सादितं मया ॥ १-२-८ (३०९)
अतश्च पापान्मुच्येऽहमेष मे प्रार्थितो वरः ।
ह्रदाश्च तीर्थभूता मे भवेयुर्भुवि विश्रुताः ॥ १-२-९ (३१०)
एवं भविष्यतीत्येवं पितरस्तमथाब्रुवन् ।
तं क्षमस्वेति निषिषिधुस्ततः स विरराम ह ॥ १-२-१० (३११)
तेषां समीपे यो देशो ह्रदानां रुधिराम्भसाम् ।
समन्तपञ्चकमिति पुण्यं तत्परिकीर्तितम् ॥ १-२-११ (३१२)
येन लिङ्गेन यो देशो युक्तः समुपलक्ष्यते ।
तेनैव नाम्ना तं देशं वाच्यमाहुर्मनीषिणः ॥ १-२-१२ (३१३)
अन्तरे चैव संप्राप्ते कलिद्वापरयोरभूत् ।
समन्तपञ्चके युद्धं कुरुपाण्डवसेनयोः ॥ १-२-१३ (३१४)
तस्मिन्परमधर्मिष्ठे देशे भूदोषवर्जिते ।
अष्टादश समाजग्मुरक्षौहिण्यो युयुत्सया ॥ १-२-१४ (३१५)
समेत्य तं द्विजास्ताश्च तत्रैव निधं गताः ।
एतन्नामाभिनिर्वृत्तं तस्य देशस्य वै द्विजाः ॥ १-२-१५ (३१६)
पुण्यश्च रमणीयश्च स देशो वः प्रकीर्तितः ।
तदेतत्कथितं सर्वं मया ब्राह्मणसत्तमाः ॥
यथा देशः स विख्यातस्त्रिषु लोकेषु सुव्रताः ॥ १-२-१६ (३१७)
ऋषय ऊचुः। १-२-१७क्ष् (१४)
अक्षौहिण्य इति प्रोक्तं यत्त्वया सूतनन्दन ।
एतदिच्छामहे श्रोतुं सर्वमेव यथातथम् ॥ १-२-१७ (३१८)
अक्षौहिण्याः परीमाणं नराश्वरथदन्तिनाम् ।
यथावच्चैव नो ब्रूहि सर्वं हि विदितं तव ॥ १-२-१८ (३१९)
सौतिरुवाच। १-२-१९क्ष् (१५)
एको रथो गजश्चैको नराः पञ्च पदातयः ।
त्रयश्च तुरगास्तज्ज्ञैः पत्तिरित्यभिधीयते ॥ १-२-१९ (३२०)
पत्तिं तु त्रिगुणामेतामाहुः सेनामुखं बुधाः ।
त्रीणि सेनामुखान्येको गुल्म इत्यभिधीयते ॥ १-२-२० (३२१)
त्रयो गुल्मा गणो नाम वाहिनी तु गणास्त्रयः ।
स्मृतास्तिस्रस्तु वाहिन्यः पृतनेति विचक्षणैः ॥ १-२-२१ (३२२)
चमूस्तु पृतनास्तिस्रस्तिस्रश्चम्वस्त्वनीकिनी ।
अनीकिनीं दशगुणां प्राहुरक्षौहिणीं बुधाः ॥ १-२-२२ (३२३)
अक्षौहिण्याः प्रसंख्याता रथानां द्विजसत्तमाः ।
संख्यागणिततत्त्वज्ञैः सहस्राण्येकविंशतिः ॥ १-२-२३ (३२४)

शतान्युपरि चैवाष्टौ तथा भूयश्च सप्ततिः ।
गजानां च परीमाणमेतदेव विनिर्दिशेत् ॥ १-२-२४ (३२५)
ज्ञेयं शतसहस्रं तु सहस्राणि नवैव तु ।
नराणामपि पञ्चाशच्छतानि त्रीणि चानघाः ॥ १-२-२५ (३२६)
पञ्च षष्टिसहस्राणि तथाश्वानां शतानि च ।
दशोत्तराणि षट् प्राहुर्यथावदिह संख्यया ॥ १-२-२६ (३२७)
एतामक्षौहिणीं प्राहुः संख्यातत्त्वविदो जनाः ।
यां वः कथितवानस्मि विस्तरेण तपोधनाः ॥ १-२-२७ (३२८)
एतया संख्यया ह्यासन्कुरुपाण्डवसेनयोः ।
अक्षौहिण्यो द्विजश्रेष्ठाः पिण्डिताष्टादशैव तु ॥ १-२-२८ (३२९)
समेतास्तत्र वै देशे तत्रैव निधं गताः ।
कौरवान्कारणं कृत्वा कालेनाद्भुतकर्मणा ॥ १-२-२९ (३३०)
अहानि युयुधे भीष्मो दशैव परमास्त्रवित् ।
अहानि पञ्च द्रोणस्तु ररक्ष कुरुवाहिनीम् ॥ १-२-३० (३३१)
अहनी युयुधे द्वे तु कर्णः परबलार्दनः ।
शल्योऽर्धदिवसं चैव गदायुद्धमतः परम् ॥ १-२-३१ (३३२)
तस्यैव दिवसस्यान्ते द्रौणिहार्दिक्यगौतमाः ।
प्रसुप्तं निशि विश्वस्तं जघ्नुर्यौधिष्ठिरं बलम् ॥ १-२-३२ (३३३)
यत्तु शौनक सत्रे ते भारताख्यानमुत्तमम् ।
जनमेजयस्य तत्सत्रे व्यासशिष्येण धीमता ॥ १-२-३३ (३३४)
कथितं विस्तरार्थं च यशो वीर्यं महीक्षिताम् ।
पौष्यं तत्र च पौलोममास्तीकं चादितः स्मृतम् ॥ १-२-३४ (३३५)
विचित्रार्थपदाख्यानमनेकसमयान्वितम् ।
प्रतिपन्नं नरैः प्राज्ञैर्वैराग्यमिव मोक्षिभिः ॥ १-२-३५ (३३६)
आत्मेव वेदितव्येषु प्रियेष्विव हि जीवितम् ।
इतिहासः प्रधानार्थः श्रेष्ठः सर्वागमेष्वयम् ॥ १-२-३६ (३३७)
अनाश्रित्येदमाख्यानं कथा भुवि न विद्यते ।
आहारमनपाश्रित्य शरीरस्येव धारणम् ॥ १-२-३७ (३३८)
तदेतद्भारतं नाम कविभिस्तूपजीव्यते ।
उदयतेप्सुभिर्भृत्यैरभिजात इवेश्वरः ॥ १-२-३८ (३३९)
इतिहासोत्तमे यस्मिन्नर्पिता बुद्धिरुत्तमा ।
स्वरव्यञ्जनयोः कृत्स्ना लोकवेदाश्रयेव वाक् ॥ १-२-३९ (३४०)
तस्य प्रज्ञाभिपन्नस्य विचित्रपदपर्वणः ।
सूक्ष्मार्थन्याययुक्तस्य वेदार्थैर्भूषितस्य च ॥ १-२-४० (३४१)
भारतस्येतिहासस्य श्रूयतां पर्वसंग्रहः ।
पर्वानुक्रमणी पूर्वं द्वितीयः पर्वसंग्रहः ॥ १-२-४१ (३४२)

पौष्यं पौलोममास्तीकमादिरंशावतारणम् ।
ततः संभवपर्वोक्तमद्भुतं रोमहर्षणम् ॥ १-२-४२ (३४३)
दाहो जतुगृहस्यात्र हैडिम्बं पर्व चोच्यते ।
ततो बकवधः पर्व पर्व चैत्ररथं ततः ॥ १-२-४३ (३४४)
ततः स्वयंवरो देव्याः पाञ्चाल्याः पर्व चोच्यते ।
क्षात्रधर्मेण निर्जित्य ततो वैवाहिकं स्मृतम् ॥ १-२-४४ (३४५)
विदुरागमनं पर्व राज्यलाभस्तथैव च ।
अर्जुनस्य वने वासः सुभद्राहरणं ततः ॥ १-२-४५ (३४६)
सुभद्राहरणादूर्ध्वं ज्ञेया हरणहारिका ।
ततः खाण्डवदाहाख्यं तत्रैव मयदर्शनम् ॥ १-२-४६ (३४७)
सभापर्व ततः प्रोक्तं मन्त्रपर्व ततः परम् ।
जरासन्धवधः पर्व पर्व दिग्विजयं तथा ॥ १-२-४७ (३४८)
पर्व दिग्विजयादूर्ध्वं राजसूयिकमुच्यते ।
ततश्चार्घाभिहरणं शिशुपालवधस्ततः ॥ १-२-४८ (३४९)
द्यूतपर्व ततः प्रोक्तमनुद्यूतमः परम् ।
तत आरण्यकं पर्व किर्मीरवध एवच ॥ १-२-४९ (३५०)
अर्जुनस्याभिगमनं पर्व ज्ञेयमतः परम् ।
ईश्वरार्जुनयोर्युद्धं पर्व कैरातसंज्ञितम् ॥ १-२-५० (३५१)
इन्द्रलोकाभिगमनं पर्व ज्ञेयमतः परम् ।
नलोपाख्यानमपि च धार्मिकं करुणोदयम् ॥ १-२-५१ (३५२)
तीर्थयात्रा ततः पर्व कुरुराजस्य धीमतः ।
जटासुरवधः पर्व यक्षयुद्धमतः परम् ॥ १-२-५२ (३५३)
निवातकवचैर्युद्धं पर्व चाजगरं ततः ।
मार्कण्डेयसमास्या च पर्वानन्तरमुच्यते ॥ १-२-५३ (३५४)
संवादश्च ततः पर्व द्रौपदीसत्यभामयोः ।
घोषयात्रा ततः पर्व ततः प्रायोपवेशनेम् ।
मन्त्रस्य निश्चयं चैव मृगस्वप्नोद्भवं ततः ॥ १-२-५४ (३५५)
व्रीहिद्रौणिकमाख्यानमैन्द्रद्युम्नं तथैव च ।
द्रौपदीहरणं पर्व जयद्रथविमोक्षणम् ॥ १-२-५५ (३५६)
रामोपाख्यानमत्रैव पर्व ज्ञेयमतः परम् ।
पतिव्रताया माहात्म्यं सावित्र्याश्चैवमद्भुतम् ॥ १-२-५६ (३५७)
कुण्डलाहरणं पर्व ततः परमिहोच्यते ।
आरणेयं ततः पर्व वैराटं तदनन्तरम् ॥
पाण्डवानां प्रवेशश्च समयस्य च पालनम् ॥ १-२-५७ (३५८)
कीचकानां वधः पर्व पर्व ग्रोग्रहणं ततः ।
अभिमन्योश्च वैराट्याः पर्व वैवाहिकं स्मृतम् ॥ १-२-५८ (३५९)

उद्योगपर्व विज्ञेयमत ऊर्ध्वं महाद्भुतम् ।
ततः संजययानाख्यं पर्व ज्ञेयमतः परम् ॥ १-२-५९ (३६०)
प्रजागरं तथा पर्व धृतराष्ट्रस्य चिन्तया ।
पर्व सानत्सुजातं वै गुह्यमध्यात्मदर्शनम् ॥ १-२-६० (३६१)
यानसन्धिस्ततः पर्व भगवद्यानमेव च ।
मातलीयमुपाख्यानं चरितं गालवस्य च ॥ १-२-६१ (३६२)
सावित्रं वामदेव्यं च वैन्योपाख्यानमेव च ।
जामदग्न्यमुपाख्यानं पर्व षोडशराजकम् ॥ १-२-६२ (३६३)
सभाप्रवेशः कृष्णस्य विदुलापुत्रशासनम् ।
उद्योगः सैन्यनिर्याणं विश्वोपाख्यानमेव च ॥ १-२-६३ (३६४)
ज्ञेयं विवादपर्वात्र कर्णस्यापि महात्मनः ।
ग्मन्त्रस्य निश्चयं कृत्वा कार्यस्य समनन्तरम् ॥ १-२-६४ (३६५)
श्वेतस्य वासुदेवेन चित्रं बहुकथाश्रयम्।'
निर्याणं च ततः पर्व कुरुपाण्डवसेनयोः ॥ १-२-६५ (३६६)
रथातिरथसंख्या च पर्वोक्तं तदनन्तरम् ।
उलूकदूतागमनं पर्वामर्षविवर्धनम् ॥ १-२-६६ (३६७)
अम्बोपाख्यानमत्रैव पर्व ज्ञेयमतः परम् ॥
भीष्माभिषेचनं पर्व ततश्चाद्भुतमुच्यते ॥ १-२-६७ (३६८)
जम्बूखम्डविनिर्माणं पर्वोक्तं तदनन्तरम् ॥
भूमिपर्व ततः प्रोक्तं द्वीपविस्तारकीर्तनम् ॥ १-२-६८ (३६९)
गदिव्यं चक्षुर्ददौ यत्र संजयाय महामुनिः।'
पर्वोक्तं भगवद्गीता पर्व भीष्मवधस्ततः ।
द्रोणाभिषेचनं पर्व संशप्तकवधस्ततः ॥ १-२-६९ (३७०)
अभिमन्युवधः पर्व प्रतिज्ञा पर्व चोच्यते ।
जयद्रथवधः पर्व घटोत्कचवधस्ततः ॥ १-२-७० (३७१)
ततो द्रोणवधः पर्व विज्ञेयं लोमहर्षणम् ।
मोक्षो नारायणास्त्रस्य पर्वानन्तरमुच्यते ॥ १-२-७१ (३७२)
कर्णपर्व ततो ज्ञेयं शल्यपर्व ततः परम् ।
ह्रदप्रवेशनं पर्व गदायुद्धमतः परम् ॥ १-२-७२ (३७३)
सारस्वतं ततः पर्व तीर्थवंशानुकीर्तनम् ।
अत ऊर्ध्वं सुबीभत्सं पर्व सौप्तिकमुच्यते ॥ १-२-७३ (३७४)
ऐषीकं पर्व चोद्दिष्टमत ऊर्ध्वं सुदारुणम् ।
जलप्रदानिकं पर्व स्त्रीविलापस्ततः परम् ॥ १-२-७४ (३७५)
श्राद्धपर्व ततो ज्ञेयं कुरूणामौर्ध्वदेहिकम् ।
चार्वाकनिग्रहः पर्व रक्षसो ब्रह्मरूपिणः ॥ १-२-७५ (३७६)
आभिषेचनिकं पर्व धर्मराजसर्य धीमतः ।

प्रविभागो गृहाणां च पर्वोक्तं तदनन्तरम् ॥ १-२-७६ (३७७)
शान्तिपर्व ततो यत्र राजधर्मानुशासनम् ।
आपद्धर्मश्च पर्वोक्तं मोक्षधर्मस्ततः परम् ॥ १-२-७७ (३७८)
शुकप्रश्नाभिगमनं ब्रह्मप्रश्नानुशासनम् ।
प्रादुर्भावश्च दुर्वासःसंवादश्चैव मायया ॥ १-२-७८ (३७९)
ततः पर्व परिज्ञेयमानुशासनिकं परम् ।
स्वर्गारोहणिकं चैव ततो भीष्मस्य धीमतः ॥ १-२-७९ (३८०)
ततोऽश्वमेधिकं पर्व सर्वपापप्रणाशनम् ।
अनुगीता ततः पर्व ज्ञेयमध्यात्मवाचकम् ॥ १-२-८० (३८१)
पर्व चाश्रमवासाख्यं पुत्रदर्शनमेव च ।
नारदागमनं पर्व ततः परमिहोच्यते ॥ १-२-८१ (३८२)
मौसलं पर्व चोद्दिष्टं ततो घोरं सुदारुणम् ।
महाप्रस्थानिकं पर्व स्वर्गारोहणिकं ततः ॥ १-२-८२ (३८३)
हरिवंशस्ततः पर्व पुराणं खिलसंज्ञितम् ।
विष्णुपर्व शिशोश्चर्या विष्णोः कंसवधस्तथा ॥ १-२-८३ (३८४)
भविष्यं पर्व चाप्युक्तं खिलेष्वेवाद्भुतं महत् ।
एतत्पर्वशतं पूर्णं व्यासेनोक्तं महात्मना ॥ १-२-८४ (३८५)
यथावत्सूतपुत्रेण रौमहर्षणिना ततः ।
उक्तानि नैमिशारण्ये पर्वाण्यष्टादशैव तु ॥ १-२-८५ (३८६)
समासो भारतस्यायमत्रोक्तः पर्वसंग्रहः ।
पौष्यं पौलोममास्तीकमादिरंशावतारणम् ॥ १-२-८६ (३८७)
संभवो जतुवेश्माख्यं हिडिम्बबकयोर्वधः ।
तथा चैत्ररथं देव्याः पाञ्चाल्याश्च स्वयंवरः ॥ १-२-८७ (३८८)
क्षात्रधर्मेण निर्जित्य ततो वैवाहिकं स्मृतम् ।
विदुरागमनं चैव राज्यलाभस्तथैव च ॥ १-२-८८ (३८९)
वनवासोऽर्जुनस्यापि सुभद्राहरणं ततः ।
हरणाहरणं चैव दहनं खाण्डवस्य च ॥ १-२-८९ (३९०)
मयस्य दर्शनं चैव आदिपर्वणि कथ्यते ।
पौष्ये पर्वणि माहात्म्यमुत्तङ्कस्योपवर्णितम् ॥ १-२-९० (३९१)
पौलोमे भृगुवंशस्य विस्तारः परिकीर्तितः ।
आस्तीके सर्वनागानां गरुडस्य च संभवः ॥ १-२-९१ (३९२)
क्षीरोदमथं चैव जन्मोच्चैःश्रवसस्तथा ।
यजतः सर्पसत्रेण राज्ञः पारिक्षितस्य च ॥ १-२-९२ (३९३)
कथेयमभिनिर्वृत्ता भारतानां महात्मनाम् ।
विविधाः संभवा राज्ञामुक्ताः संभवपर्वणि ॥ १-२-९३ (३९४)
अन्येषां चैव शूराणामृषेर्द्वैपायनस्य च ।

अंशावतरणं चात्र देवानां परिकीर्तितम् ॥१-२-९४ (३९५)
दैत्यानां दानवानां च यक्षाणां च महौजसाम् ।
नागानामथ सर्पाणां गन्धर्वाणां पतत्रिणाम् ॥१-२-९५ (३९६)
अन्येषां चैव भूतानां विविधानां समुद्भवः ।
महर्षेराश्रमपदे कण्वस्य च तपस्विनः ॥१-२-९६ (३९७)
शकुन्तलायां दुष्यन्ताद्भरतश्चापि जज्ञिवान् ।
यस्य लोकेषु नाम्नेदं प्रथितं भारतं कुलम् ॥१-२-९७ (३९८)
वसूनां पुनरुत्पत्तिर्भागीरथ्यां महात्मनाम् ।
शन्तनोर्वेश्मनि पुनस्तेषां चारोहणं दिवि ॥१-२-९८ (३९९)
तेजोंशानां च संपातो भीष्मस्याप्यत्र संभवः ।
राज्यान्निवर्तनं तस्य ब्रह्मचर्यव्रते स्थितिः ॥१-२-९९ (४००)
प्रतिज्ञापालनं चैव रक्षा चित्राङ्गदस्य च ।
हते चित्राङ्गदे चैव रक्षा भ्रातुर्यवीयसः ॥१-२-१०० (४०१)
विचित्रवीर्यस्य तथा राज्ये संप्रतिपादनम् ।
धर्मस्य नृषु संभूतिरणीमाण्डव्यशापजा ॥१-२-१०१ (४०२)
कृष्णद्वैपायनाच्चैव प्रसूतिर्वरदानजा ।
धृतराष्ट्रस्य पाण्डोश्च पाण्डवानां च संभवः ॥१-२-१०२ (४०३)
वारणावतयात्रा च मन्त्रो दुर्योधनस्य च ।
कूटस्य धार्तराष्ट्रेण प्रेषणं पाण्डवान्प्रति ॥१-२-१०३ (४०४)
हितोपदेशश्च पथि धर्मराजस्य धीमतः ।
विदुरेण कृतो यत्र हितार्थं म्लेच्छभाषया ॥१-२-१०४ (४०५)
विदुरस्य च वाक्येन सुरुङ्गोपक्रमक्रिया ।
निषाद्याः पञ्चपुत्रायाः सुप्ताया जतुवेश्मनि ॥१-२-१०५ (४०६)
पुरोचनस्य चात्रैव दहनं संप्रकीर्तितम् ।
पाण्डवानां वने घोरे हिडिम्बायाश्च दर्शनम् ॥१-२-१०६ (४०७)
तत्रैव च हिडिम्बस्य वधो भीमान्महाबलात् ।
घटोत्कचस्य चोत्पत्तिरत्रैव परिकीर्तिता ॥१-२-१०७ (४०८)
महर्षेर्दर्शनं चैव व्यासस्यामिततेजसः ।
तदाज्ञयैकचक्रायां ब्राह्मणस्य निवेशने ॥१-२-१०८ (४०९)
अज्ञातचर्यया वासो यत्र तेषां प्रकीर्तितः ।
बकस्य निधनं चैव नागराणां च विस्मयः ॥१-२-१०९ (४१०)
संभवश्चैव कृष्णाया धृष्टद्युम्नस्य चैव ह ।
ब्राह्मणात्समुपश्रुत्य व्यासवाक्यप्रचोदिताः ॥१-२-११० (४११)
द्रौपदीं प्रार्थयन्तस्ते स्वयंवरदिदृक्षया ।
पञ्चालानभितो जग्मुर्यत्र कौतूहलान्विताः ॥१-२-१११ (४१२)
अङ्गारपर्णं निर्जित्य गङ्गाकूलेऽर्जुनस्तदा ।

सख्यं कृत्वा ततस्तेन तस्मादेव च शुश्रुवे ॥ १-२-११२ (४१३)
तापत्यमथ वासिष्ठमौर्वं चाख्यानमुत्तमम् ।
भ्रातृभिः सहितः सर्वैः पञ्चालानभितो ययौ ॥ १-२-११३ (४१४)
पाञ्चालनगरे चापि लक्ष्यं भित्त्वा धनञ्जयः ।
द्रौपदीं लब्धवानत्र मध्ये सर्वमहीक्षिताम् ॥ १-२-११४ (४१५)
भीमसेनार्जुनौ यत्र संरब्धान्पृथिवीपतीन् ।
शल्यकर्णौ च तरसा जितवन्तौ महामृधे ॥ १-२-११५ (४१६)
दृष्ट्वा तयोश्च तद्वीर्यमप्रमेयममानुषम् ।
शङ्कमानौ पाण्डवांस्तान् रामकृष्णौ महामती ॥ १-२-११६ (४१७)
जग्मतुस्तैः समागन्तुं शालां भार्गववेश्मनि ।
पञ्चानामेकपत्नीत्वे विमर्शो द्रुपदस्य च ॥ १-२-११७ (४१८)
पञ्चेन्द्राणामुपाख्यानमत्रैवाद्भुतमुच्यते ।
द्रौपद्या देवविहीतो विवाहश्चाप्यमानुषः ॥ १-२-११८ (४१९)
क्षत्तुश्च धार्तराष्ट्रेण प्रेषणं पाण्डवान्प्रति ।
विदुरस्य च संप्राप्तिर्दर्शनं केशवस्य च ॥ १-२-११९ (४२०)
खाण्डवप्रस्थवासश्च तथा राज्यार्धसर्जनम् ।
नारदस्याज्ञया चैव द्रौपद्याः समयक्रिया ॥ १-२-१२० (४२१)
सुन्दोपसुन्दयोस्तद्वदाख्यानं परिकीर्तितम् ।
अनन्तरं च द्रौपद्या सहासीनं युधिष्ठिरम् ॥ १-२-१२१ (४२२)
अनु प्रविश्य विप्रार्थे फाल्गुनो गृह्य चायुधम् ।
मोक्षयित्वा गृहं गत्वा विप्रार्थं कृतनिश्चयः ॥ १-२-१२२ (४२३)
समयं पालयन्वीरो वनं यत्र जगाम ह ।
पार्थस्य वनवासे च उलूप्या पथि सङ्गमः ॥ १-२-१२३ (४२४)
पुण्यतीर्थानुसंयानं बभ्रुवाहनजन्म च ।
तत्रैव मोक्षयामास पञ्च सोऽप्सरसः शुभाः ॥ १-२-१२४ (४२५)
शापाद्ग्राहत्वमापन्ना ब्राह्मणस्य तपस्विनः ।
प्रभासतीर्थे पार्थेन कृष्णस्य च समागमः ॥ १-२-१२५ (४२६)
द्वारकायां सुभद्रा च कामयानेन कामिनी ।
वासुदेवस्यानुमते प्राप्ता चैव किरीटिना ॥ १-२-१२६ (४२७)
गृहीत्वा हरणं प्राप्ते कृष्णे देवकिनन्दने ।
अभिमन्योः सुभद्रायां जन्म चोत्तमतेजसः ॥ १-२-१२७ (४२८)
द्रौपद्यास्तनयानां च संभवोऽनुप्रकीर्तितः ।
विहारार्थं च गतयोः कृष्णयोर्यमुनामनु ॥ १-२-१२८ (४२९)
संप्राप्तिश्चक्रधनुषोः खाण्डवस्य च दाहनम् ।
मयस्य मोक्षो ज्वलनाद्भुजङ्गस्य च मोक्षणम् ॥ १-२-१२९ (४३०)
महर्षेर्मन्दपालस्य शार्ङ्ग्यां तनयसंभवः ।

इत्येतदादिपर्वोक्तं प्रथमं बहु विस्तरम् ॥ १-२-१३० (४३१)
अध्यायानां शते द्वे तु संख्याते परमर्षिणा ।
सप्तविंशतिरध्याया व्यासेनोत्तमतेजसा ॥ १-२-१३१ (४३२)
अष्टौ श्लोकसहस्राणि अष्टौ श्लोकशतानि च ।
श्लोकाश्च चतुराशीतिर्मुनिनोक्ता महात्मना ॥ १-२-१३२ (४३३)
द्वितीयं तु सभापर्व बहुवृत्तान्तमुच्यते ।
सभाक्रिया पाण्डवानां किङ्कराणां च दर्शनम्। १-२-१३३ (४३४)
लोकपालसभाख्यानं नारदाद्देवदर्शिनः ।
राजसूयस्य चारम्भो जरासन्धवधस्तथा ॥ १-२-१३४ (४३५)
गिरिव्रजे निरुद्धानां राज्ञां कृष्णेन मोक्षणम् ।
तथा दिग्विजयोऽत्रैव पाम्डवानां प्रकीर्तितः ॥ १-२-१३५ (४३६)
राज्ञामागमनं चैव सार्हणानां महक्रतौ ।
राजसूयेऽर्घसंवादे शिशुपालवधस्तथा ॥ १-२-१३६ (४३७)
यज्ञे विभूतिं तां दृष्ट्वा दुःखामर्षान्वितस्य च ।
दुर्योधनस्यावहासो भीमेन च सभातले ॥ १-२-१३७ (४३८)
यत्रास्य मन्युरुद्भूतो येन द्यूतमकारयत् ।
यत्र धर्मसुतं द्यूते शकुनिः कितवोऽजयत् ॥ १-२-१३८ (४३९)
यत्र द्यूतार्णवे मग्नां द्रौपदीं नौरिवार्णवात् ।
धृतराष्ट्रो महाप्राज्ञः स्नुषां परमदुःखिताम् ॥ १-२-१३९ (४४०)
तारयामास तांस्तीर्णाञ्ज्ञात्वा दुर्योधनो नृपः ।
पुनरेव ततो द्यूते समाह्वयत पाण्डवान् ॥ १-२-१४० (४४१)
जित्वा स वनवासाय प्रेषयामास तांस्ततः ।
एतत्सर्वं सभापर्व समाख्यातं महात्मना ॥ १-२-१४१ (४४२)
अध्यायाः सप्ततिर्ज्ञेयास्तथा चाष्टौ प्रसंख्यया ।
श्लोकानां द्वे सहस्रे तु पञ्च श्लोकशतानि च ॥ १-२-१४२ (४४३)
श्लोकाश्चैकादश ज्ञेयाः पर्वण्यस्मिन्द्विजोत्तमाः ।
अतः परं तृतीयं तु ज्ञेयमारण्यकं महत् ॥ १-२-१४३ (४४४)
वनवासं प्रयातेषु पाण्डवेषु महात्मसु ।
पौरानुगमनं चैव धर्मपुत्रस्य धीमतः ॥ १-२-१४४ (४४५)
अन्नौषधीनां च कृते पाण्डवेन महात्मना ।
द्विजानां भरणार्थं च कृतमाराधनं रवेः ॥ १-२-१४५ (४४६)
धौम्योपदेशात्तिग्मांशुप्रसादादन्नसंभः ।
हितं च ब्रुवतः क्षत्तुः परित्यागोऽम्बिकासुतात् ॥ १-२-१४६ (४४७)
त्यक्तस्य पाण्डुपुत्राणां समीपगमनं तथा ।
पुनरागमनं चैव धृतराष्ट्रस्य शासनात् ॥ १-२-१४७ (४४८)
कर्णप्रोत्साहनाच्चैव धार्तराष्ट्रस्य दुर्मतेः ।

वनस्थान्पाण्डवान्हन्तुं मन्त्रो दुर्योधनस्यच ॥ १-२-१४८ (४४९)
तं दुष्टभावं विज्ञाय व्यासस्यागमनं द्रुतम् ।
निर्याणप्रतिषेधश्च सुरभ्याख्यानमेव च ॥ १-२-१४९ (४५०)
मैत्रेयागमनं चात्र राज्ञश्चैवानुशासनम् ।
शापोत्सर्गश्च तेनैव राज्ञो दुर्योधनस्य च ॥ १-२-१५० (४५१)
किर्मीरस्य वधश्चात्र भीमसेनेन संयुगे ।
वृष्णीनामागमश्चात्र पाञ्चालानां च सर्वशः ॥ १-२-१५१ (४५२)
श्रुत्वा शकुनिना द्यूते निकृत्या निर्जितांश्च तान् ।
क्रुद्धस्यानुप्रशमनं हरेश्चैव किरीटिना ॥ १-२-१५२ (४५३)
परिदेवनं च पाञ्चाल्या वासुदेवस्य सन्निधौ ।
आश्वासनं च कृष्णेन दुःखार्तायाः प्रकीर्तितम् ॥ १-२-१५३ (४५४)
तथा सौभवधाख्यानमत्रैवोक्तं महर्षिणा ।
सुभद्रायाः सपुत्रायाः कृष्णेन द्वारकां पुरीम् ॥ १-२-१५४ (४५५)
नयनं द्रौपदेयानां धृष्टद्युम्नेन चैव ह ।
प्रवेशः पाण्डवेयानां रम्ये द्वैतवने ततः ॥ १-२-१५५ (४५६)
धर्मराजस्य चात्रैव संवादः कृष्णया सह ।
संवादश्च तथा राज्ञा भीमस्यापि प्रकीर्तितः ॥ १-२-१५६ (४५७)
समीपं पाण्डुपुत्राणां व्यासस्यागमनं तथा ।
प्रतिश्रुत्याथ विद्याया दानं राज्ञो महर्षिणा ॥ १-२-१५७ (४५८)
गमनं काम्यके चापि व्यासे प्रतिगते ततः ।
अस्त्रहेतोर्विवासश्च पार्थस्यामिततेजसः ॥ १-२-१५८ (४५९)
महादेवेन युद्धं च किरातवपुषा सह ।
दर्शनं लोकपालानामस्त्रप्राप्तिस्तथैव च ॥ १-२-१५९ (४६०)
महेन्द्रलोकगमनमस्त्रार्थे च किरीटिनः ।
यत्र चिन्ता समुत्पन्ना धृतराष्ट्रस्य भूयसी ॥ १-२-१६० (४६१)
दर्शनं बृहदश्वस्य महर्षेर्भावितात्मनः ।
युधिष्ठिरस्य चार्तस्य व्यसने परिदेवनम् ॥ १-२-१६१ (४६२)
नलोपाख्यानमत्रैव धर्मिष्ठं करुणोदयम् ।
दमयन्त्याः स्थितिर्यत्र नलस्य चरितं तथा ॥ १-२-१६२ (४६३)
तथाक्षहृदयप्राप्तिस्तस्मादेव महर्षितः ।
लोमशस्यागमस्तत्र स्वर्गात्पाण्डुसुतान्प्रति ॥ १-२-१६३ (४६४)
वनवासगतानां च पाण्डवानां महात्मनाम् ।
स्वर्गे प्रवृत्तिराख्याता लोमशेनार्जुनस्य वै ॥ १-२-१६४ (४६५)
संदेशादर्जुनस्यात्र तीर्थाभिगमनक्रिया ।
तीर्थानां च फलप्राप्तिः पुण्यत्वं चापि कीर्तितम् ॥ १-२-१६५ (४६६)
पुलस्त्यतीर्थयात्रा च नारदेन महर्षिणा ।

तीर्थयात्रा च तत्रैव पाण्डवानां महात्मनां ॥१-२-१६६ (४६७)
तथा यज्ञविभूतिश्च गयस्यात्र प्रकीर्तिता ॥ १-२-१६७ (४६८)
आगस्त्यमपि चाख्यानं यत्र वातापिभक्षणम् ।
लोपामुद्राभिपमनमपत्यार्थमृषेस्तथा ॥१-२-१६८ (४६९)
ऋश्यशृङ्गस्य चरितं कौमारब्रह्मचारिणः ।
जामदग्न्यस्य रामस्य चरितं भूरितेजसः ॥१-२-१६९ (४७०)
कार्तवीर्यवधो यत्र हैहयानां च वर्ण्यते ।
प्रभासतीर्थे पाण्डूनां वृष्णिभिश्च समागमः ॥१-२-१७० (४७१)
सौकन्यमपि चाख्यानं च्यवनो यत्र भार्गवः ।
शर्यातियज्ञे नासत्यौ कृतवान्सोमपीथिनौ ॥१-२-१७१ (४७२)
ताभ्यां च यत्र स मुनिर्यौवनं प्रतिपादितः ।
मान्धातुश्चाप्युपाख्यानं राज्ञोऽत्रैवप्रकीर्तितं ॥१-२-१७२ (४७३)
जन्तूपाख्यानमत्रैव यत्र पुत्रेण सोमकः ।
पुत्रार्थमयजद्राजा लेभे पुत्रशतं च सः ॥१-२-१७३ (४७४)
ततः श्येनकपोतीयमुपाख्यानमनुत्तमम् ।
इन्द्राग्नी यत्र धर्मश्चाप्यजिज्ञासञ्शिबिं नृपम् ॥१-२-१७४ (४७५)
अष्टावक्रीयमत्रैव विवादो यत्र बन्दिना ।
अष्टावक्रस्य विप्रर्षेर्जनकस्याध्वरेऽभवत् ॥१-२-१७५ (४७६)
नैयायिकानां मुख्येन वरुणस्यात्मजेन च ।
पराजितो यत्र बन्दी विवादेन महात्मना ॥१-२-१७६ (४७७)
विजित्य सागरं प्राप्तं पितरं लब्धवानृषिः ।
यवक्रीतस्य चाख्यानं रैभ्यस्य च महात्मनः ।
गन्धमादनयात्रा च वासो नारायणाश्रमे ॥ १-२-१७७ (४७८)
नियुक्तो भीमसेनश्च द्रौपद्या गन्धमादने ।
व्रजन्पथि महाबाहुर्दृष्टवान्पवनात्मजम् ॥१-२-१७८ (४७९)
कदलीषण्डमध्यस्थं हनूमन्तं महाबलम् ।
यत्र मन्दारपुष्पार्थे नलिनीं तामधर्षयत् ॥१-२-१७९ (४८०)
यत्रास्य युद्धमभवत्सुमहद्राक्षसैः सह ।
यक्षैश्चैव महावीर्यैर्मणिमत्प्रमुखैस्तथा ॥१-२-१८० (४८१)
जटासुरस्य च वधो राक्षसस्य वृकोदरात् ।
वृषपर्वणो राजर्षेस्ततोऽभिगमनं स्मृतम् ॥१-२-१८१ (४८२)
आर्ष्टिषेणाश्रमे चैषां गमनं वास एव च ।
प्रोत्साहनं च पाञ्चाल्या भीमस्यात्र महात्मनः ॥१-२-१८२ (४८३)
कैलासारोहणं प्रोक्तं यत्र यक्षैर्बलोत्कटैः ।
युद्धमासीन्महाघोरं मणिमत्प्रमुखैः सह ॥१-२-१८३ (४८४)
समागमश्च पाण्डूनां यत्र वैश्रवणेन च ।

समागमश्चार्जुनस्य तत्रैव भ्रातृभिः सह ॥१-२-१८४ (४८५)
अवाप्य दिव्यान्यस्त्राणि गुर्वर्थं सव्यसाचिना ।
निवातकवचैर्युद्धं हिरण्यपुरवासिभिः ॥१-२-१८५ (४८६)
निवातकवचैर्घोरैर्दानवैः सुरशत्रुभिः ।
पौलोमैः कालकेयैश्च यत्र युद्धं किरीटिनः ॥१-२-१८६ (४८७)
वधश्चैषां समाख्यातो राज्ञस्तेनैव धीमता ।
अस्त्रसंदर्शनारम्भो धर्मराजस्य सन्निधौ ॥१-२-१८७ (४८८)
पार्थस्य प्रतिषेधश्च नारदेन सुरर्षिणा ।
अवरोहणं पुनश्चैव पाण्डूनां गन्धमादनात् ॥१-२-१८८ (४८९)
भीमस्य ग्रहणं चात्र पर्वताभोगवर्ष्मणा ।
भुजगेन्द्रेण बलिना तस्मिन्सुगहने वने ॥१-२-१८९ (४९०)
अमोक्षयद्यत्र चैनं प्रश्नानुक्त्वा युधिष्ठिरः ।
काम्यकागमनं चैव पुनस्तेषां महात्मनाम् ॥१-२-१९० (४९१)
तत्रस्थांश्च पुनर्द्रष्टुं पाण्डवान्परुषर्षभान् ।
वासुदेवस्यागमनमत्रैव परिकीर्तितम् ॥१-२-१९१ (४९२)
मार्कण्डेयसमास्यायामुपाख्यानानि सर्वशः ।
पृथोर्वैन्यस्य यत्रोक्तमाख्यानं परमर्षिणा ॥१-२-१९२ (४९३)
संवादश्च सरस्वत्यास्तार्क्ष्यर्षेः सुमहात्मनः ।
मत्स्योपाख्यानमत्रैव प्रोच्यते तदनन्तरम् ॥१-२-१९३ (४९४)
मार्कण्डेयसमास्या च पुराणं परिकीर्त्यते ।
ऐन्द्रद्युम्नामुपाख्यानं तथैवाङ्गिरसं स्मृतम् ॥१-२-१९४ (४९५)
पतिव्रतायाश्चाख्यानं तथैवाङ्गिरसं स्मृतम् ।
द्रौपद्याः कीर्तितश्चात्र संवादः सत्यभामया ॥१-२-१९५ (४९६)
पुनर्द्वैतवनं चैव पाण्डवाः समुपागताः ।
घोषयात्रा च गन्धर्वैर्यत्र बद्धः सुयोधनः ॥१-२-१९६ (४९७)
ह्रियमाणस्तु मन्दात्मा मोक्षितोऽसौ किरीटिना ।
धर्मराजस्य चात्रैव मृगस्वप्ननिदर्शनात् ॥१-२-१९७ (४९८)
काम्यके काननश्रेष्ठे पुनर्गमनमुच्यते ।
व्रीहिद्रौणिकमाख्यानमत्रैव बहुविस्तरम् ॥१-२-१९८ (४९९)
दुर्वाससोऽप्युपाख्यानमत्रैव परिकीर्तितम् ।
जयद्रथेनापहारो द्रौपद्याश्चाश्रमान्तरात् ॥१-२-१९९ (५००)
यत्रैनमन्वयाद्भीमो वायुवेगसमो जवे ।
चक्रे चैनं पञ्चशिखं यत्र भीमो महाबलः ॥१-२-२०० (५०१)
रामायणमुपाख्यानमत्रैव बहुविस्तरम् ।
यत्र रामेण विक्रम्य निहतो रावणो युधि ॥१-२-२०१ (५०२)
सावित्र्याश्चाप्युपाख्यानमत्रैव परिकीर्तितम् ।

कर्णस्य परिमोक्षोऽत्र कुण्डलाभ्यां पुरंदरात् ॥१-२-२०२ (५०३)
यत्रास्य शक्तिं तुष्टोऽसावदादेकवधाय च ।
आरणेयमुपाख्यानं यत्र धर्मोऽन्वशात्सुतम् ॥१-२-२०३ (५०४)
जग्मुर्लब्धवरा यत्र पाण्डवाः पश्चिमां दिशम् ।
एतदारण्यकं पर्व तृतीयं परिकीर्तितम् ॥१-२-२०४ (५०५)
अत्राध्यायशते द्वे तु संख्यया परिकीर्तिते ।
एकोनसप्ततिश्चैव तथाऽध्यायाः प्रकीर्तिताः ॥१-२-२०५ (५०६)
एकादश सहस्राणि श्लोकानां षट् शतानि च ।
चतुःषष्टिस्तथा श्लोकाः पर्वण्यस्मिन्प्रकीर्तिताः ॥१-२-२०६ (५०७)
अतः परं निबोधेदं वैराटं पर्व विस्तरम् ।
विराटनगरे गत्वा श्मशाने विपुलां शमीम् ॥१-२-२०७ (५०८)
दृष्ट्वा संनिदधुस्तत्र पाण्डवा ह्यायुधान्युत ।
यत्र प्रविश्य नगरं छद्मना न्यवसंस्तु ते ॥१-२-२०८ (५०९)
पाञ्चालीं प्रार्थयानस्य कामोपहतचेतसः ।
दुष्टात्मनो वधो यत्र कीचकस्य वृकोदरात् ॥१-२-२०९ (५१०)
पाण्डवान्वेषणार्थं च राज्ञो दुर्योधनस्य च ।
चाराः प्रस्थापिताश्चात्र निपुणाः सर्वतोदिशं ॥१-२-२१० (५११)
न च प्रवृत्तिस्तैर्लब्धा पाण्डवानां महात्मनाम् ।
गोग्रहश्च विराटस्य त्रिगर्तैः प्रथमं कृतः ॥१-२-२११ (५१२)
यत्रास्य युद्धं सुमहत्तैरासील्लोमहर्षणम् ।
ह्रियमाणश्च यत्रासौ भीमसेनेन मोक्षितः ॥१-२-२१२ (५१३)
गोधनं च विराटस्य मोक्षितं यत्र पाण्डवैः ।
अनन्तरं च कुरुभिस्तस्य गोग्रहणं कृतम् ॥१-२-२१३ (५१४)
समस्ता यत्र पार्थेन निर्जिताः कुरवो युधि ।
प्रत्याहृतं गोधनं च विक्रमेण किरीटिना ॥१-२-२१४ (५१५)
विराटेनोत्तरा दत्ता स्नुषा यत्र किरीटिनः ।
अभिमन्युं समुद्दिश्य सौभद्रमरिघातिनम् ॥१-२-२१५ (५१६)
चतुर्थमेतद्विपुलं वैराटं पर्व वर्णितम् ।
अत्रापि परिसंख्याता अध्यायाः परमर्षिणा ॥१-२-२१६ (५१७)
सप्तषष्टिरथो पूर्णाः श्लोकानामपि मे शृणु ।
श्लोकानां द्वे सहस्रे तु श्लोकाः पञ्चाशदेव तु ॥१-२-२१७ (५१८)
उक्तानि वेदविदुषा पर्वण्यस्मिन्महर्षिणा ।
उद्योगपर्व विज्ञेयं पञ्चमं शृण्वतः परम् ॥१-२-२१८ (५१९)
उपप्लाव्ये निविष्टेषु पाण्डवेषु जिगीषया ।
दुर्योधनोऽर्जुनश्चैव वासुदेवमुपस्थितौ ॥१-२-२१९ (५२०)
साहाय्यमस्मिन्समरे भवान्नौ कर्तुमर्हति ।

इत्युक्ते वचने कृष्णो यत्रोवाच महामतिः ॥ १-२-२२० (५२१)
अयुध्यमानमात्मानं मन्त्रिणं पुरुषर्षभौ ।
अक्षौहिणीं वा सैन्यस्य कस्य किं वा ददाम्यहम् ॥ १-२-२२१ (५२२)
वव्रे दुर्योधनः सैन्यं मन्दात्मा यत्र दुर्मतिः ।
अयुध्यभानं सचिवं वव्रे कृष्मं धनंजयः ॥ १-२-२२२ (५२३)
मद्रराजं व राजानमायान्तं पाण्डवान्प्रति ।
उपहारैर्वञ्चायत्वा वर्त्मन्येव सुयोधनः ॥ १-२-२२३ (५२४)
वरदं तं वरं वव्रे साहाय्यं क्रियतां मम ।
शल्यस्तस्मै प्रतिश्रुत्य जगामोद्दिश्य पाण्डवान् ॥ १-२-२२४ (५२५)
शान्तिपूर्वं चाकथयद्यत्रेन्द्रविजयं नृपः ।
पुरोहितप्रेषणं च पाण्डवैः कौरवान्प्रति ॥ १-२-२२५ (५२६)
वैचित्रवीर्यस्य वचः समादाय पुरोधसः ।
तथेन्द्रविजयं चापि यानं चैव पुरोधसः ॥ १-२-२२६ (५२७)
संजयं प्रेषयामास शमार्थी पाण्डवान्प्रति ।
यत्र दूतं महाराजो धृतराष्ट्रः प्रतापवान् ॥ १-२-२२७ (५२८)
श्रुत्वा च पाण्डवान्यत्र वासुदेवपुरोगमान् ।
प्रजागरः संप्रजज्ञे धृतराष्ट्रस्य चिन्तया ॥ १-२-२२८ (५२९)
विदुरो यत्र वाक्यानि विचित्राणि हितानि च ।
श्रावयामास राजानं धृतराष्ट्रं मनीषिणम् ॥ १-२-२२९ (५३०)
तथा सनत्सुजातेन यत्राध्यात्ममनुत्तमम् ।
मनस्तापान्वितो राजा श्रावितः शोकलालसः ॥ १-२-२३० (५३१)
प्रभाते राजसमितौ संजयो यत्र वा विभो ।
ऐकात्म्यं वासुदेवस्य प्रोक्तवानर्जुनस्य च ॥ १-२-२३१ (५३२)
यत्र कृष्णो दयापन्नः सन्धिमिच्छन्महामतिः ।
स्वयमागाच्छणं कर्तुं नगरं नागसाह्वयम् ॥ १-२-२३२ (५३३)
प्रत्याख्यानं च कृष्णस्य राज्ञा दुर्योधनेन वै ।
शमार्थे याचमानस्य पक्षयोरुभयोर्हितम् ॥ १-२-२३३ (५३४)
दम्भोद्भवस्य चाख्यानमत्रैव परिकीर्तितम् ।
वरान्वेषणमत्रैव मातलेश्च महात्मनः ॥ १-२-२३४ (५३५)
महर्षेश्चापि चरितं कथितं गालवस्य वै ।
विदुलायाश्च पुत्रस्य प्रोक्तं चाप्यनुशासनम् ॥ १-२-२३५ (५३६)
कर्णदुर्योधनादीनां दुष्टं विज्ञाय मन्त्रितम् ।
योगेश्वरत्पं कृष्णेन यत्र राज्ञां प्रदर्शितम् ॥ १-२-२३६ (५३७)
रथमारोप्य कृष्णेन यत्र कर्णोऽनुमन्त्रितः ।
उपायपूर्वं शौटीर्यात्प्रत्याख्यातश्च तेन सः ॥ १-२-२३७ (५३८)
आगम्य हास्तिनपुरादुपप्लाव्यमरिंदमः ।

पाण्डवानां यथावृत्तं सर्वमाख्यातवान्हरिः ॥१-२-२३८ (५३९)
ते तस्य वचनं श्रुत्वा मन्त्रयित्वा च यद्धितम् ।
साङ्ग्रामिकं ततः सर्वं सज्जं चक्रुः परंतपाः ॥१-२-२३९ (५४०)
ततो युद्धाय निर्याता नराश्वरथदन्तिनः ।
नगराद्धास्तिनपुराद्बलसंख्यानमेवच ॥१-२-२४० (५४१)
यत्र राज्ञा ह्युलूकस्य प्रेषणं पाम्डवान्प्रति ।
श्वोभाविनि महायुद्धे दौत्येन कृतवान्प्रभुः ॥१-२-२४१ (५४२)
रथातिरथसंख्यानमम्बोपाख्यानमेव च ।
एतत्सुबहुवृत्तान्तं पञ्चमं पर्व भारते ॥१-२-२४२ (५४३)
उद्योगपर्व निर्दिष्टं सन्धिविग्रहमिश्रितम् ।
अध्यायानां शतं प्रोक्तं षडशीतिर्महर्षिणा ॥१-२-२४३ (५४४)
श्लोकानां षट् सहस्राणि तावन्त्येव शतानि च ।
श्लोकाश्च नवतिः प्रोक्तास्तथैवाष्टौ महात्मना ॥१-२-२४४ (५४५)
व्यासेनोदारमतिना पर्वण्यस्मिंस्तपोधनाः ।
अतः परं विचित्रार्थं भीष्मपर्व प्रचक्षते ॥१-२-२४५ (५४६)
जम्बूखण्डविनिर्माणं यत्रोक्तं संजयेन ह ।
यत्र यौधिष्ठिरं सैन्यं विषादमगमत्परम् ॥१-२-२४६ (५४७)
यत्र युद्धमभूद्धोरं दसाहानि सुदारुणम् ।
कश्मलं यत्र पार्थस्य वासुदेवो महामतिः ॥१-२-२४७ (५४८)
मोहजं नाशयामास हेतुभिर्मोक्षदर्शिभिः ।
समीक्ष्यादोक्षजः क्षिप्रं युधिष्ठिरहिते रतः ॥१-२-२४८ (५४९)
रथादाप्लुत्य वेगेन स्वयं कृष्ण उदारधीः ।
प्रतोदपाणिराधावद्भीष्मं हन्तुं व्यपेतभीः ॥१-२-२४९ (५५०)
वाक्यप्रतोदाभिहतो यत्र कृष्णेन पाण्डवः ।
गाण्डीवधन्वा समरे सर्वशस्त्रभृतां वरः ॥१-२-२५० (५५१)
शिखण्डिनं पुरस्कृत्य यत्र पार्थो महाधनुः ।
विनिघ्नन्निशितैर्बाणै रथाद्भीष्ममपातयत् ॥१-२-२५१ (५५२)
शरतल्पगतश्चैव भीष्मो यत्र बभूव ह ।
षष्ठमेतत्समाख्यातं भारते पर्व विस्तृतम् ॥१-२-२५२ (५५३)
अध्यायानां शतं प्रोक्तं तथा सप्तदशापरे ।
पञ्च श्लोकसहस्राणि संख्ययाष्टौ शतानि च ॥१-२-२५३ (५५४)
श्लोकाश्च चतुराशीतिरस्मिन्पर्वणि कीर्तिताः ।
व्यासेन वेदविदुषा संख्याता भीष्मपर्वणि ॥१-२-२५४ (५५५)
द्रोणपर्व ततश्चित्रं बहुवृत्तान्तमुच्यते ।
सैनापत्येऽभिषिक्तोऽथ यत्राचार्यः प्रतापवान् ॥१-२-२५५ (५५६)
दुर्योधनस्य प्रीत्यर्थं प्रतिजज्ञे महास्त्रवित् ।

ग्रहणं धर्मराजस्य पाण्डुपुत्रस्य धीमतः ॥१-२-२५६ (५५७)
यत्र संशप्तकाः पार्थमपनिन्यू रणाजिरात् ।
भगदत्तो महाराजो यत्र शक्रसमो युधि ॥१-२-२५७ (५५८)
सुप्रतीकेन नागेन स हि शान्तः किरीटिना ।
यत्राभिमन्युं बहवो जघ्नुरेकं महारथाः ॥१-२-२५८ (५५९)
जयद्रथमुखा बालं शूरमप्राप्तयौवनम् ।
हतेऽभिमन्यौ क्रुद्धेन यत्र पार्थेन संयुगे ॥१-२-२५९ (५६०)
अक्षौहिणीः सप्त हत्वा हतो राजा जयद्रथः ।
यत्र भीमो महाबाहुः सात्यकिश्च महारथः ॥१-२-२६० (५६१)
अन्वेषणार्थं पार्थस्य युधिष्ठिरनृपाज्ञया ।
प्रविष्टौ भारतीं सेनामप्रधृष्यां सुरैरपि ॥१-२-२६१ (५६२)
संशप्तकावशेषं च कृतं निःशेषमाहवे ।
संशप्तकानां वीराणां कोट्यो नव महात्मनाम् ॥१-२-२६२ (५६३)
किरीटिनाभिनिष्क्रम्य प्रापिता यमसादनम् ।
धृतराष्ट्रस्य पुत्राश्च तथा पाषाणयोधिनः ॥१-२-२६३ (५६४)
नारायणाश्च गोपालाः समरे चित्रयोधिनः ।
अलम्बुषः श्रुतायुश्च जलसन्धश्च वीर्यवान् ॥१-२-२६४ (५६५)
सौमदत्तिर्विराटश्च द्रुपदश्च महारथः ।
घटोत्कचादयश्चान्ये निहता द्रोणपर्वणि ॥१-२-२६५ (५६६)
अश्वत्थामापि चात्रैव द्रोणे युधि निपातिते ।
अस्त्रं प्रादुश्चकारोग्रं नारायणममर्षितः ॥१-२-२६६ (५६७)
आग्नेयं कीर्त्यते यत्र रुद्रमाहात्म्यमुत्तमम् ।
व्यासस्य चाप्यागमनं माहात्म्यं कृष्णपार्थयोः ॥१-२-२६७ (५६८)
सप्तमं भारते पर्व महदेतदुदाहृतम् ।
यत्र ते पृथिवीपालाः प्रायशो निधनं गताः ॥१-२-२६८ (५६९)
द्रोणपर्वणि ये शऊरा निर्दिष्टाः पुरुषर्षभाः ।
अत्राध्यायशतं प्रोक्तं तथाध्यायाश्च सप्ततिः ॥१-२-२६९ (५७०)
अष्टौ श्लोकसहस्राणि तथा नव शतानि च ।
श्लोका नव तथैवात्र संख्यातास्तत्त्वदर्शिना ॥१-२-२७० (५७१)
पाराशर्येण मुनिनां संचिन्त्य द्रोणपर्वणि ।
अतः परं कर्णपर्व प्रोच्यते परमाद्भुतम् ॥१-२-२७१ (५७२)
सारथ्ये विनियोगश्च मद्रराजस्य धीमतः ।
आख्यातं यत्र पौरामं त्रिपुरस्य निपातनम् ॥१-२-२७२ (५७३)
प्रयाणे परुषश्चात्र संवादः कर्णशल्ययोः ।
हंसकाकीयमाख्यानं तत्रैवाक्षेपसंहितम् ॥१-२-२७३ (५७४)
वधः पाण्ड्यस्य च तथा अश्वत्थाम्ना महात्मना ।

दण्डसेनस्य च ततो दण्डस्य च वधस्तथा ॥१-२-२७४ (५७५)
द्वैरथे यत्र कर्णेन धर्मराजो युधिष्टिरः ।
संशयं गमितो युद्धे मिषतां सर्वधन्विनाम् ॥१-२-२७५ (५७६)
अन्योन्यं प्रति च क्रोधो युधिष्ठिरकिरीटिनोः ।
यत्रैवानुनयः प्रोक्तो माधवेनार्जुनस्य हि ॥१-२-२७६ (५७७)
प्रतिज्ञापूर्वकं चापि वक्षो दुःशासनस्य च ।
भित्त्वा वृकोदरो रक्तं पीतवान्यत्र संयुगे ॥१-२-२७७ (५७८)
द्वैरथे यत्र पार्थेन हतः कर्णो महारथः ।
अष्टमं पर्व निर्दिष्टमेतद्भारतचिन्तकैः ॥१-२-२७८ (५७९)
एकोनसप्ततिः प्रोक्ता अध्यायाः कर्णपर्वणि ।
चत्वार्येव सहस्राणि नव श्लोकशतानि च ॥१-२-२७९ (५८०)
चतुःषष्टिस्तथा श्लोकाः पर्वण्यस्मिन्प्रकीर्तिताः ।
अतः परं विचित्रार्थं शल्यपर्व प्रकीर्तितम् ॥१-२-२८० (५८१)
हतप्रवीरे सैन्ये तु नेता मद्रेश्वरोऽभवत् ।
यत्र कौमारमाख्यानमभिषेकस्य कर्म च ॥१-२-२८१ (५८२)
वृत्तानि चाथ युद्धानि कीर्त्यन्ते यत्र भागशः ।
विनाशः कुरुमुख्यानां शल्यपर्वणि कीर्त्यते ॥१-२-२८२ (५८३)
शल्यस्य निधनं चात्र धर्मराजान्महात्मनः ।
शकुनेश्च वधोऽत्रैव सहदेवेन संयुगे ॥१-२-२८३ (५८४)
सैन्ये च हतभूयिष्ठे किंचिच्छिष्टे सुयोधनः ।
ह्रदं प्रविश्य यत्रासौ संस्तभ्यापोव्यवस्थितः ॥१-२-२८४ (५८५)
प्रवृत्तिस्तत्र चाख्याता यत्र भीमस्य लुब्धकैः ।
क्षेपयुक्तैर्वचोभिश्च धर्मराजस्य धीमतः ॥१-२-२८५ (५८६)
ह्रदात्समुत्थितो यत्र धार्तराष्ट्रोऽत्यमर्षणः ।
भीमेन गदया युद्धं यत्रासौ कृतवान्सह ॥१-२-२८६ (५८७)
समवाये च युद्धस्य रामस्यागमनं स्मृतम् ।
सरस्वत्याश्च तीर्थानां पुण्यता परिकीर्तिता ॥१-२-२८७ (५८८)
गदायुद्धं च तुमुलमत्रैव परिकीर्तितम् ।
दुर्योधनस्य राज्ञोऽथ यत्र भीमेन संयुगे ॥१-२-२८८ (५८९)
ऊरू भग्नौ प्रसह्याजौ गदया भीमवेगया ।
नवमं पर्व निर्दिष्टमेतदद्भुतमर्थवत् ॥१-२-२८९ (५९०)
एकोनषष्टिरध्यायाः पर्वण्यत्र प्रकीर्तिताः ।
संख्याता बहुवृत्तान्ताः श्लोकसंख्याऽत्र कथ्यते ॥१-२-२९० (५९१)
त्रीणि श्लोकसहस्राणि द्वे शते विंशतिस्तथा ।
मुनिना संप्रणीतानि कौरवाणां यशोभृता ॥१-२-२९१ (५९२)
अतः परं प्रवक्ष्यामि सौप्तिकं पर्व दारुणम् ।

भग्नोरुं यत्र राजानं दुर्योधनममर्षणम् ॥१-२-२९२ (५९३)
अपयातेषु पार्थेषु त्रयस्तेऽभ्याययू रथाः ।
कृतवर्मा कृपो द्रौणिः सायाह्ने रुधिरोक्षितम् ॥१-२-२९३ (५९४)
समेत्य ददृशुर्भूमौ पतितं रणमूर्धनि ।
प्रतिजज्ञे दृढक्रोधो द्रौणिर्यत्र महारथः ॥१-२-२९४ (५९५)
अहत्वा सर्वपाञ्चालान्धृष्टद्युम्नपुरोगमान् ।
पाण्डवांश्च सहामात्यान्न विमोक्ष्यामि दंशनं ॥१-२-२९५ (५९६)
यत्रैवमुक्त्वा राजानमपक्रम्य त्रयो रथाः ।
सूर्यास्तमनवेलायामासेदुस्ते महद्वनम् ॥१-२-२९६ (५९७)
न्यग्रोधस्याथ महतो यत्राधस्ताद्व्यवस्थिताः ।
ततः काकान्बहून्रात्रौ दृष्ट्वोलूकेन हिंसितान् ॥१-२-२९७ (५९८)
द्रौणिः क्रोधसमाविष्टः पितुर्वधमनुस्मरन् ।
पाञ्चालानां प्रसुप्तानां वधं प्रति मनो दधे ॥१-२-२९८ (५९९)
गत्वा च शिबिरद्वारि दुर्दर्शं तत्र राक्षसम् ।
घोररूपमपश्यत्स दिवामावृत्य धिष्ठिरम् ॥१-२-२९९ (६००)
तेन व्याघातमस्त्राणां क्रियमाणमवेक्ष्य च ।
द्रौणिर्यत्र विरूपाक्षं रुद्रमाराध्य सत्वरः ॥१-२-३०० (६०१)
प्रसुप्तान्निशि विश्वस्तान्धृष्टद्युम्नपुरोगमान् ।
पाञ्चालान्सपरीवारान्द्रौपदेयांश्च सर्वशः ॥१-२-३०१ (६०२)
कृतवर्मणा च सहितः कृपेण च निजघ्निवान् ।
यत्रामुच्यन्त ते पार्थाः पञ्च कृष्णबलाश्रयात् ॥१-२-३०२ (६०३)
सात्यकिश्च महेष्वासः शेषाश्च निधनं गताः ।
पाञ्चालानां प्रसुप्तानां यत्र द्रोणसुताद्वधः ॥१-२-३०३ (६०४)
धृष्टद्युम्नस्य सूतेन पाण्डवेषु निवेदितः ।
द्रौपदी पुत्रशोकार्ता पितृभ्रातृवधार्दिता ॥१-२-३०४ (६०५)
कृतानशनसंकल्पा यत्र भर्तृनुपाविशत् ।
द्रौपदीवचनाद्यत्र भीमो भीमपराक्रमः ॥१-२-३०५ (६०६)
प्रियं तस्याश्चिकीर्षन्वै गदामादाय वीर्यवान् ।
अन्वधावत्सुसंक्रुद्धो भारद्वाजं गुरोः सुतम् ॥१-२-३०६ (६०७)
भीमसेनभयाद्यत्र दैवेनाभिप्रचोदितः ।
अपाण्डवायेति रुषा द्रौणिरस्त्रमवासडदत् ॥१-२-३०७ (६०८)
मैवमित्यब्रवीत्कृष्णः शमयंस्तस्य तद्वचः ।
यत्रास्त्रमस्त्रेण च तच्छमयामास फाल्गुनः ॥१-२-३०८ (६०९)
द्रौणेश्च द्रोहबुद्धित्वं वीक्ष्य पापात्मनस्तदा ।
द्रौणिद्वैपायनादीनां शापाश्चान्योन्यकारिताः ॥१-२-३०९ (६१०)
मणिं तथा समादाय द्रोणपुत्रान्महारथात् ।

पाण्डवाः प्रददुर्हृष्टा द्रौपद्यै जितकाशिनः ॥ १-२-३१० (६११)
एतद्वै दशमं पर्व सौप्तिकं समुदाहृतम् ।
अष्टादशास्मिन्नध्यायाः पर्वम्युक्ता महात्मना ॥ १-२-३११ (६१२)
श्लोकानां कथितान्यत्र शतान्यष्टौ प्रसंख्यया ।
श्लोकाश्च सप्ततिः प्रोक्ता मुनिना ब्रह्मवादिना ॥ १-२-३१२ (६१३)
सौप्तिकैषीकसंबन्धे पर्वण्युत्तमतेजसी ।
अत ऊर्ध्वमिदं प्राहुः स्त्रीपर्व करुणोदयम् ॥ १-२-३१३ (६१४)
पुत्रशोकाभिसंतप्तः प्रज्ञाचक्षुर्नराधिपः ।
कृष्णोपनीतां यत्रासावायसीं प्रतिमां दृढां ॥ १-२-३१४ (६१५)
भीमसेनद्रोहबुद्धिर्धृतराष्ट्रो बभञ्जह ।
तथा शोकाभितप्तस्य धृतराष्ट्रस्य धीमतः ॥ १-२-३१५ (६१६)
संसारदहनं बुद्ध्या हेतुभिर्मोक्षदर्शनैः ।
विदुरेण च यत्रास्य राज्ञ आश्वासनं कृतम् ॥ १-२-३१६ (६१७)
धृतराष्ट्रस्य चात्रैव कौरवायोधनं तथा ।
सान्तःपुरस्य गमनं शोकार्तस्य प्रकीर्तितम् ॥ १-२-३१७ (६१८)
विलापो वीरपत्नीनां यत्रातिकरुणः स्मृतः ।
क्रोधावेशः प्रमोहश्च गान्धारीधृतराष्ट्रयोः ॥ १-२-३१८ (६१९)
यत्र तान्क्षत्रियाः शूरान्सङ्ग्रामेष्वनिवर्तिनः ।
पुत्रान्भ्रातृन्पितॄंश्चैव ददृशुर्निहतान्रणे ॥ १-२-३१९ (६२०)
पुत्रपौत्रवधार्तायास्तथात्रैव प्रकीर्तिता ।
गान्धार्याश्चापि कृष्णेन क्रोधोपशमनक्रिया ॥ १-२-३२० (६२१)
यत्र राजा महाप्राज्ञः सर्वधर्मभृतां वरः ।
राज्ञांतानि शरीराणि दाहयामास शास्त्रतः ॥ १-२-३२१ (६२२)
तोयकर्मणि चारब्धे राज्ञामुदकदानिके ।
गूढोत्पन्नस्य चाख्यानं कर्णस्य पृथयात्मनः ॥ १-२-३२२ (६२३)
सुतस्यैतदिह प्रोक्तं व्यासेन परमर्षिणा ।
एतदेकादशं पर्व शोकवैक्लव्यकारणम् ॥ १-२-३२३ (६२४)
प्रणीतं सज्जनमनोवैक्लव्याश्रुप्रवर्तकम् ।
सप्तविंशतिरध्यायाः पर्वण्यस्मिन्प्रकीर्तिताः ॥ १-२-३२४ (६२५)
श्लोकसप्तशती चापि पञ्चसप्ततिसंयुता ।
संख्यया भारताख्यानमुक्तं व्यासेन धीमता ॥ १-२-३२५ (६२६)
अतः परं शान्तिपर्व द्वादशं बुद्धिवर्धनम् ।
यत्र निर्वेदमापन्नो धर्मराजो युधिष्ठिरः ॥ १-२-३२६ (६२७)
घातयित्वा पितॄन्भ्रातॄन्पुत्रान्संबन्धिमातुलान् ।
शान्तिपर्वणि धर्माश्च व्याख्याताःशारतल्पिकाः ॥ १-२-३२७ (६२८)
राजभिर्वेदितव्यास्ते सम्यग्ज्ञानबुभुत्सुभिः ।

आपद्धर्माश्च तत्रैव कालहेतुप्रदर्शिनः ॥ १-२-३२८ (६२९)
यान्बुद्ध्वा पुरुषः सम्यक्सर्वज्ञत्वमवाप्नुयात् ।
मोक्षधर्माश्च कथिता विचित्रा बहुविस्तराः ॥ १-२-३२९ (६३०)
द्वादशं पर्व निर्दिष्टमेतत्प्राज्ञजनप्रियम् ।
अत्र पर्वणि विज्ञेयमध्यायानां शतत्रयम् ॥ १-२-३३० (६३१)
विंशच्चैव तथाध्याया नव चैव तपोधाः ।
चतुर्दशसहस्राणि तथा सप्तशतानि च ॥ १-२-३३१ (६३२)
सप्तश्लोकास्तथैवात्र पञ्चविंशतिसंख्यया ।
अत ऊर्ध्वं च विज्ञेयमनुशासनमुत्तमम् ॥ १-२-३३२ (६३३)
यत्र प्रकृतिमापन्नः श्रुत्वा धर्मविनिश्चयम् ।
भीष्माद्भागीरथीपुत्रात्कुरुराजो युधिष्ठिरः ॥ १-२-३३३ (६३४)
व्यवहारोऽत्र कार्त्स्न्येन धर्मार्थीयः प्रकीर्तितः ।
विविधानां च दानानां फलयोगाः प्रकीर्तिताः ॥ १-२-३३४ (६३५)
तथा पात्रविशेषाश्च दानानां च परो विधिः ।
आचारविधियोगश्च सत्यस्य च परा गतिः ॥ १-२-३३५ (६३६)
महाभाग्यं गवां चैव ब्राह्मणानां तथैव च ।
रहस्यं चैव धर्माणां देशकालोपसंहितम् ॥ १-२-३३६ (६३७)
एतत्सुबहुवृत्तान्तमुत्तमं चानुशासनम् ।
भीष्मस्यात्रैव संप्राप्तिः स्वर्गस्य परिकीर्तिता ॥ १-२-३३७ (६३८)
एतत्त्रयोदशं पर्व धर्मनिश्चयकारकम् ।
अध्यायानां शतं त्वत्र षट्चत्वारिंशदेव तु ॥ १-२-३३८ (६३९)
श्लोकानां तु सहस्राणि प्रोक्तान्यष्टौ प्रसंख्यया ।
ततोऽश्वमेधिकं नाम पर्व प्रोक्तं चतुर्दशम् ॥ १-२-३३९ (६४०)
तत्संवर्तमरुत्तीयं यत्राख्यानमनुत्तमम् ।
सुवर्णकोशसंप्राप्तिर्जन्म चोक्तं परीक्षितः ॥ १-२-३४० (६४१)
दग्धस्यास्त्राग्निना पूर्वं कृष्णात्संजीवनं पुनः ।
चर्यायां हयमुत्सृष्टं पाण्डवस्यानुगच्छतः ॥ १-२-३४१ (६४२)
तत्र तत्र च युद्धानि राजपुत्रैरमर्षणैः ।
चित्राङ्गदायाः पुत्रेण स्वपुत्रेण धनंजयः ॥ १-२-३४२ (६४३)
सङ्ग्रामे बभ्रुवाहेन संशयं चात्र जग्मिवान् ।
सुदर्शनं तथाऽऽख्यानं वैष्णवं धर्ममेव च ।
अश्वमेधे महायज्ञे नकुलाख्यानमेव च ॥ १-२-३४३ (६४४)
इत्याश्वमेधिकं पर्व प्रोक्तमेतन्महाद्भुतम् ।
अध्यायानां शतं चैव त्रयोऽध्यायाश्च कीर्तिताः ॥ १-२-३४४ (६४५)
त्रीणि श्लोकसहस्राणि तावन्त्येव शतानि च ।
विंशतिश्च तथा श्लोकाः संख्यातास्तत्त्वदर्शिना ॥ १-२-३४५ (६४६)

ततस्त्वाश्रमवासाख्यं पर्व पञ्चदशं स्मृतम् ।
यत्र राज्यं समुत्सृज्य गान्धार्या सहितो नृपः ॥१-२-३४६ (६४७)
धृतराष्ट्रोऽश्रमपदं विदुरश्च जगाम ह ।
यं दृष्ट्वा प्रस्थितं साध्वी पृथाप्यनुययौ तदा ॥१-२-३४७ (६४८)
पुत्रराज्यं परित्यज्य गुरुशुश्रूषणे रता ।
यत्र राजा हतान्पुत्रान्पौत्रानन्यांश्च पार्थिवान् ॥१-२-३४८ (६४९)
लाकान्तरगतान्वीरानपश्यत्पुनरागतान् ।
ऋषेः प्रसादात्कृष्णस्य दृष्ट्वाश्चर्यमनुत्तमम् ॥१-२-३४९ (६५०)
त्यक्त्वा शोकं सदारश्च सिद्धिं परमिकां गतः ।
यत्र धर्मं समाश्रित्य विदुरः सुगतिं गतः ॥१-२-३५० (६५१)
संजयश्च सहामात्यो विद्वान्गावल्गणिर्वशी ।
ददर्श नारदं यत्र धर्मराजो युधिष्ठिरः ॥१-२-३५१ (६५२)
नारदाच्चैव शुश्राव वृष्णीनां कदनं महत् ।
एतदाश्रमवासाख्यं पर्वोक्तं महदद्भुतम् ॥१-२-३५२ (६५३)
द्विचत्वारिंशदध्यायाः पर्वैतदभिसङ्ख्यया ।
सहस्रमेकं श्लोकानां पञ्चश्लोकशतानि च ॥१-२-३५३ (६५४)
षडेव च तथा श्लोकाः संख्यातास्तत्त्वदर्शिना ।
अतः परं निबोधेदं मौसलं पर्व दारुणम् ॥१-२-३५४ (६५५)
यत्र ते पुरुषव्याघ्राः शस्त्रस्पर्शहता युधि ।
ब्रह्मदण्डविनिष्पिष्टाः समीपे लवणाम्भसः ॥१-२-३५५ (६५६)
आपाने पानकलिता दैवेनाभिप्रचोदिताः ।
एरकारूपिभिर्वज्रैर्निजघ्नुरितरेतरम् ॥१-२-३५६ (६५७)
यत्र सर्वक्षयं कृत्वा तावुभौ रामकेशवौ ।
नातिचक्रामतुः कालं प्राप्तं सर्वहरं महत् ॥१-२-३५७ (६५८)
यत्रार्जुनो द्वारवतीमेत्य वृष्णिविनाकृताम् ।
दृष्ट्वा विपादमगमत्परां चार्तिं नरर्षभः ॥१-२-३५८ (६५९)
स संस्कृत्य नरश्रेष्ठं मातुलं शौरिमात्मनः ।
ददर्श यदुवीराणामापाने वैशसं महत् ॥१-२-३५९ (६६०)
शरीरं वासुदेवस्य रामस्य च महात्मनः ।
संस्कारं लम्भयामास वृष्णीनां च प्रधानतः ॥१-२-३६० (६६१)
सवृद्धबालमादाय द्वारवत्यास्ततो जनम् ।
ददर्शापदि कष्टायां गाण्डीवस्य पराभवम् ॥१-२-३६१ (६६२)
सर्वेषां चैव दिव्यानामस्त्राणामप्रसन्नताम् ।
नाशं वृष्णिकलत्राणां प्रभावानामनित्यताम् ॥१-२-३६२ (६६३)
दृष्ट्वा निर्वेदमापन्नो व्यासवाक्यप्रचोदितः ।
धर्मराजं समासाद्य संन्यासं समरोचयत् ॥१-२-३६३ (६६४)

इत्येतन्मौसलं पर्व षोडशं परिकीर्तितम् ।
अध्यायाष्टौ समाख्याताः श्लोकानां च शतत्रयम् ॥ १-२-३६४ (६६५)
श्लोकानां विंशतिश्चैव संख्याता तत्त्वदर्शिना ।
महाप्रस्थानिकं तस्मादूर्ध्वं सप्तदशं स्मृतम् ॥ १-२-३६५ (६६६)
यत्र राज्यं परित्यज्य पाण्डवाः पुरुषर्षभाः ।
द्रौपद्या सहिता देव्या महाप्रस्थानमास्थिताः ॥ १-२-३६६ (६६७)
यत्र तेऽग्निं ददृशिरे लौहित्यं प्राप्य सागरम् ।
यत्राग्निना चोदितश्च पार्थस्तस्मै महात्मने ॥ १-२-३६७ (६६८)
ददौ संपूज्य तद्दिव्यं गाण्डीवं धनुरुत्तमम् ।
यत्र भ्रातॄन्निपतितान्द्रौपदीं च युधिष्ठिरः ॥ १-२-३६८ (६६९)
दृष्ट्वा हित्वा जगामैव सर्वाननवलोकयन् ।
एतत्सप्तदशं पर्व महाप्रस्थानिकं स्मृतम् ॥ १-२-३६९ (६७०)
यत्राध्यायास्त्रयः प्रोक्ताः श्लोकानां च शतत्रयम् ।
विंशतिश्च तथा श्लोकाः संख्यातास्तत्त्वदर्शिना ॥ १-२-३७० (६७१)
स्वर्गपर्व ततो ज्ञेयं दिव्यं यत्तदमानुषम् ।
प्राप्तं दैवरथं स्वर्गान्निष्टवान्यत्र धर्मराट् ॥ १-२-३७१ (६७२)
आरोढुं सुमहाप्राज्ञ आनृशंस्याच्छुना विना ।
तामस्याविचलां ज्ञात्वा स्थितिं धर्मे महात्मनः ॥ १-२-३७२ (६७३)
श्वरूपं यत्र तत्त्यक्त्वा धर्मेणासौ समन्वितः ।
स्वर्गं प्राप्तःसच तथा यातनाविपुला भृशम् ॥ १-२-३७३ (६७४)
देवदूतेन नरकं यत्र व्याजेन दर्शितम् ।
शुश्राव यत्र धर्मात्मा भ्रातॄणां करुणागिरः ॥ १-२-३७४ (६७५)
निदेशे वर्तमानानां देशे तत्रैव वर्तताम् ।
अनुदर्शितश्च धर्मेण देवराज्ञा च पाण्डवः ॥ १-२-३७५ (६७६)
आप्लुत्याकाशगङ्गायां देहं त्यक्त्वा स मानुषम् ।
स्वधर्मनिर्जितं स्थानं स्वर्गे प्राप्य स धर्मराट् ॥ १-२-३७६ (६७७)
मुमुदे पूजितः सर्वैः सेन्द्रैः सुरगणैः सह ।
एतदष्टादशं पर्व प्रोक्तं व्यासेन धीमता ॥ १-२-३७७ (६७८)
अध्यायाः पञ्च संख्याताः पर्वम्यस्मिन्महात्मना ।
श्लोकानां द्वे शते चैव प्रसंख्याते तपोधाः ॥ १-२-३७८ (६७९)
नव श्लोकास्तथैवान्ये संख्याताः परमर्षिणा ।
अष्टादशैवमेतानि पर्वाण्येतान्यशेषतः ॥ १-२-३७९ (६८०)
खिलेषु हरिवंशश्च भविष्यं च प्रकीर्तितम् ।
दश श्लोकसहस्राणि विंशच्छ्लोकशतानि च ॥ १-२-३८० (६८१)
खिलेषु हरिवंशे च संख्यातानि महर्षिणा ।
एतत्सर्वं समाख्यातं भारते पर्वसंग्रहः ॥ १-२-३८१ (६८२)

अष्टादश समाजग्मुरक्षौहिण्यो युयुत्सया ।
तन्महादारुणं युद्धमहान्यष्टादशाभवत् ॥ १-२-३८२ (६८३)
यो विद्याच्चतुरो वेदान्साङ्गोपनिषदो द्विजः ।
न चाख्यानमिदं विद्यान्नैव स स्याद्विचक्षणः ॥ १-२-३८३ (६८४)
अर्थशास्त्रमिदं प्रोक्तं धर्मशास्त्रमिदं महत् ।
कामशास्त्रमिदं प्रोक्तं व्यासेनामितबुद्धिना ॥ १-२-३८४ (६८५)
श्रुत्वा त्विदमुपाख्यानं श्राव्यमन्यन्न रोचते ।
पुंस्कोकिलगिरं श्रुत्वा रूक्षा ध्वाङ्क्षस्य वागिव ॥ १-२-३८५ (६८६)
इतिहासोत्तमादस्माज्जायन्ते कविबुद्धयः ।
पञ्चभ्य इव् भूतेभ्यो लोकसंविधयस्त्रयः ॥ १-२-३८६ (६८७)
अस्याख्यानस्य विषये पुराणं वर्तते द्विजाः ।
अन्तरिक्षस्य विषये प्रजा इव चतुर्विधाः ॥ १-२-३८७ (६८८)
क्रियागुणानां सर्वेषामिदमाख्यानमाश्रयः ।
इन्द्रियाणां समस्तानां चित्रा इव मनः क्रियाः ॥ १-२-३८८ (६८९)
अनाश्रित्यैतदाख्यानं कथा भुवि न विद्यते ।
आहारमनपाश्रित्य शरीरस्येव धारणम् ॥ १-२-३८९ (६९०)
इदं कविवरैः सर्वैराख्यानमुपजीव्यते ।
उदयप्रेप्सुभिर्भृत्यैरभिजात इवेश्वरः ॥ १-२-३९० (६९१)
अस्य काव्यस्य कवयो न समर्था विशेषणे ।
साधोरिव गृहस्थस्य शेषास्त्रय इवाश्रमाः ॥ १-२-३९१ (६९२)
धर्मे मतिर्भवतु वः सततोत्थितानां
स ह्येक एव परलोकगतस्य बन्धुः ।
अर्थाः स्त्रियश्च निपुणैरपि सेव्यमाना
नैवाप्तभावमुपयान्ति न च स्थिरत्वम् ॥ १-२-३९२ (६९३)
द्वैपायनौष्ठपुटनिःसृतमप्रमेयं
पुण्यं पवित्रमथ पापहरं शिवं च ।
यो भारतं समधिगच्छति वाच्यमानं
किं तस्य पुष्करजलैरभिषेचनेन ॥ १-२-३९३ (६९४)
यदह्ना कुरुते पाप ब्राह्मणस्त्विन्द्रियैश्चरन् ।
महाभारतमाख्याय सन्ध्यां मुच्यति पश्चिमाम् ॥ १-२-३९४ (६९५)
यद्रात्रौ कुरुते पापं कर्मणा मनसा गिरा ।
महाभारतमाख्याय पूर्वां सन्ध्यां प्रमुच्यते ॥ १-२-३९५ (६९६)
यो गोशतं कनकशृङ्गमयं ददाति
विप्राय वेदविदुषे च बहुश्रुताय ।
पुण्यां च भारतकथां शृणुयाच्च नित्यं
तुल्यं फलं भवति तस्य च तस्य चैव ॥ १-२-३९६ (६९७)

आख्यानं तदिदमनुत्तमं महार्थं
विज्ञेयं महदिह पर्वसंग्रहेण ।
श्रुत्वादौ भवति नृणां सुखावगाहं
विस्तीर्णं लवणजलं यथा प्लवेन ॥ १-२-३९७ (६९८)

इति श्रीमन्महाभारते आदिपर्वणि पर्वसंग्रहपर्वणि द्वितीयोऽध्यायः
॥ २ ॥ ॥ समाप्तं पर्वसंग्रहपर्व ॥

Mahabharata - Adi Parva - Chapter Footnotes

१-२-३ क्षत्र क्षत्रियजातिं । अमर्षः स्वपितुः क्षत्रियेण
हतत्वाज्जातस्य क्रोधस्यासहनं तेन चोदितः प्रेरितः ॥
१-२-१० निषिषिधुः निषिद्धवन्तः । अक्षराधिक्यमार्षं ॥
१-२-१४ भूदोषाः निम्नोन्नतत्वकण्टकित्वादयः ॥
१-२-१९ पदातय इति रथादिगतानां नराण व्युदासः ॥
१-२-२३-२६ अक्षौहिण्याः २१८७० रथाः । २१८७१ गजाः । १०९३५०
पदातयः । ६५६१० हयाः । ।
१-२-२८ पिण्डिता एकीभूताः ॥
१-२-३२ हार्दिक्यः कृतवर्मा गौतमः कृपः ॥
१-२-३३ ते तव सत्रे यद्भारताख्यानं मत्तः प्रवृत्तं
तज्जनमेजयस्य सत्रे व्यासशिष्येण कथितमित्युत्तरेण संबन्धः ॥
१-२-३४ तत्र भारते ॥
१-२-३५ प्रतिपन्नं शरणीकृतं ॥
१-२-३८ अभिजातः कुलीनः ॥
१-२-४६ हरणं दायः पारिबर्हमिति यावत् तस्य हारिका समानयनं ॥
१-२-४९ अनुद्यूतं पुनर्द्यूतं ॥
१-२-५० अभिगमनं तपसे गमनं ॥
१-२-५३ समास्या सहावस्थानं ॥
१-२-५७ प्रवेशः विराटनगरे । समयस्य संकेतस्य नियमस्य वा ॥
१-२-७० प्रतिज्ञा जयद्रथवधार्थं ॥
१-२-७२ ह्रदप्रवेशनं दुर्योधनस्य ॥
१-२-८३ अन्यत्र कथितस्यावशिष्टं यत्पुनः प्रक्रम्य कथ्यते तत्
खिलं प्रोच्यते । हरिवंशश्च तादृशः ॥
१-२-९० माहात्म्यमुत्तङ्कस्य उदङ्कस्येत्यपि पाठः ॥
१-२-११७ भार्गवः कुलालः ॥
१-२-१३८ कितवो द्यूतकारकः ॥
१-२-१५० शत्रुस्तव ऊरू भेत्स्यतीतिशापोत्सर्गः ॥

१-२-२२० नौ आवयोर्मध्ये ममैव साहाय्यं कर्तुमर्हतीति प्रत्येकं प्रार्थना ज्ञेया ॥
१-२-२३१ ऐकात्म्यं एकचित्तत्वं ॥
१-२-२३७ शौटीर्यात् गर्वात् ॥
१-२-२५५ आचार्यः द्रोणाचार्यः ॥
१-२-२८७ समवाये समये ॥
१-२-३१६ संसारदहनं निरूप्येतिशेषः ॥
१-२-३१७ आयोधनं युद्धस्थानं ॥
१-२-३१९ क्षत्रियाः क्षत्रियस्त्रियः ॥
१-२-३२७ शराएव तल्पो यस्य सः शरतल्पो भीष्मः तेन प्रोक्ताः ।शरतल्पे भवा वा तत्रस्थेन व्याख्यातत्वात् ॥
१-२-३४३ सुदर्शनं तथाख्यानमित्यत्र मृगदर्श तथाचैवेति-मणिदर्शनं तथाचैवेत्यपि पाठो दृश्यते ॥
१-२-३४७ धृतराष्ट्रः आश्रमपदमिति च्छेदः सन्धिरार्षः ॥
१-२-३५५ ब्रह्मदण्डः ब्राह्मणशापः ॥
१-२-३५६ आपाने पानगोष्ठ्यां पानेन कलिताः विवशीकृताः ।एरकाः तृणविशेषाः ॥
१-२-३५७ नातिचक्रामतुः कालं समर्थावपि मर्यादां नोल्लङ्घितवन्तावित्यर्थः ॥
१-२-३५९ वैशसं परस्परं विशसनं ॥
१-२-३७२ अस्य अविचलामितिच्छेदः ॥
१-२-३८७ विषये देशे अन्तरित्यर्थः ।पुराणं अष्टादशभेदं पाद्मादि ॥
१-२-३९४ संध्यां संध्यायां ॥
द्वितीयोऽध्यायः ॥
२ ॥

---

अध्यय००३
॥ श्रीः ॥
१.३. अध्यायः ३

(अथ पौष्यपर्व ॥ ३ ॥)
Mahabharata - Adi Parva - Chapter Topics
जनमेजयं प्रति सरमाख्यदवेशुनीशापः ॥ १ ॥
शापनिवारणार्थमृषेः सोमश्रवसः पौरोहित्येन वरणम् ॥ २ ॥
आरुण्युपमन्युबैदाख्यानां धौम्यशिष्याणामुपाख्यानम् ॥ ३ ॥
बैदशिष्यस्योत्तङ्कस्योपाख्यानम् ॥ ४ ॥
पौष्यस्य राज्ञ उपाख्यानम् ॥ ५ ॥

१-३-० (६९९)
सौतिरुवाच। १-३-०क्ष् (१६)
जनमेजयः पारिक्षितः सह भ्रातृभिः कुरुक्षेत्रे दीर्घसत्रमुपास्ते ।
तस्य भ्रातरस्त्रयः श्रुतसेन उग्रसेनो भीमसेन इति ।
तेषु तत्सत्रमुपासीनेष्वभ्यागच्छत्सारमेयः ॥ १-३-१ (७००)
जनमेजयस्य भ्रातृभिरभिहतो रोरूयमाणो मातुः समीपमुपागच्छत् ॥
१-३-२ (७०१)
तं माता रोरूयमाणमुवाच ।
किं रोदिषि केनास्यभिहत इति ॥ १-३-३ (७०२)
स एवमुक्तो मातरं प्रत्युवाच जनमेजयस्य भ्रातृभिरभिहतोऽस्मीति
॥ १-३-४ (७०३)
तं माता प्रत्युवाच व्यक्तं त्वया तत्रापराद्धं येनास्यभिहत इति ॥
१-३-५ (७०४)
स तां पुनरुवाच नापराध्यामि किंचिन्नावेक्षे हवींषि नावलिह इति ॥
१-३-६ (७०५)
तच्छ्रुत्वा तस्य माता सरमा पुत्रदुःखार्ता तत्सत्रमुपागच्छद्यत्र
स जनमेजयः सह भ्रातृभिर्दीर्घसत्रमुपास्ते ॥ १-३-७ (७०६)
स तया क्रुद्धया तत्रोक्तोऽयं मे पुत्रो न किंचिदपराध्यति नावेक्षते
हवींषि नावलेढि किमर्थमभिहत इति ॥ १-३-८ (७०७)
न किंचिदुक्तवन्तस्ते सा तानुवाच यस्मादयमभिहतोऽनपकारी
तस्माददृष्टं त्वां भयमागमिष्यतीति ॥ १-३-९ (७०८)
जनमेजय एवमुक्तो देवशुन्या सरमया भृशं संभ्रान्तो
विषण्णश्चासीत् ॥ १-३-१० (७०९)
स तस्मिन्सत्रे समाप्ते हास्तिनपुरं प्रत्येत्य
पुरोहितमनुरूपमन्विच्छमानः परं यत्नमकरोद्यो मे पापकृत्यां
शमयेदिति ॥ १-३-११ (७१०)
स कदाचिन्मृगयां गतः पारिक्षितो जनमेजयः कस्मिंश्चित्स्वविषय
आश्रममपश्यत् ॥ १-३-१२ (७११)
तत्र कश्चिदृपिरासाञ्चक्रे श्रुतश्रवा नाम ।
तस्य तपस्यभिरतः पुत्र आस्ते सोमश्रवा नाम ॥ १-३-१३ (७१२)
तस्य तं पुत्रमभिगम्य जनमेजयः पारिक्षितः पौरोहित्याय वव्रे ॥
१-३-१४ (७१३)
स नमस्कृत्य तमृषिमुवाच भगवन्नयं तव पुत्रो मम

पुरोहितोऽस्त्विति ॥ १-३-१५ (७१४)
स एवमुक्तः प्रत्युवाच जनमेजयं भो जनमेजय पुत्रोऽयं मम
सर्प्यां जातो महातपस्वी स्वाध्यायसंपन्नो मत्तपोवीर्यसंभृतो
मच्छुक्रं पीतवत्यास्तस्याः कुक्षौ जातः ॥ १-३-१६ (७१५)
समर्थोऽयं भवतः सर्वाः पापकृत्याः शमयितुमन्तरेण
महादेवकृत्याम् ॥ १-३-१७ (७१६)
अस्य त्वेकमुपांशुव्रतं यदेनं कश्चिद्ब्राह्मणः
कंचिदर्थमभियाचेत्तं तस्मै दद्यादयं यद्येतदुत्सहसे ततो
नयस्वैनमिति ॥ १-३-१८ (७१७)
तेनैवमुक्तो जनमेजयस्तं प्रत्युवाच भगवंस्तत्तथा भविष्यतीति ॥
१-३-१९ (७१८)
स तं पुरोहितमुपादायोपावृत्तो भ्रातॄनुवाच मयाऽयं वृत
उपाध्यायो यदयं ब्रूयात्तत्कार्यमविचारयद्भिर्भवद्भिरिति ।
तेनैवमुक्ता भ्रातरस्तस्य तथा चक्रुः ।
स तथा भ्रातॄन्संदिश्य तक्षशिलां प्रत्यभिप्रतस्थे तं च
देशं वशे स्थापयामास ॥ १-३-२० (७१९)
एतस्मिन्नन्तरे कश्चिदृषिर्धौम्यो नामापोदस्तस्य शिष्यास्त्रयो
बभूवुः ॥ १-३-२१ (७२०)
उपमन्युरारुणिर्बैदश्चेति स एकं शिष्यंमारुणिं पाञ्चाल्यं
प्रेषयामास गच्छ केदारखण्डं बधानेति ॥ १-३-२२ (७२१)
स उपाध्यायेन संदिष्ट आरुणिः पाञ्चाल्यस्तत्र गत्वा तत्केदारखण्डं
बद्धुं नाशकत् ।
स क्लिश्यमानोऽपश्यदुपायं भवत्वेवं करिष्यामीति ॥१-३-२३ (७२२)
स तत्र संविवेश केदारखण्डे शयाने व तथा तस्मिंस्तदुदकं
तस्थौ ॥ १-३-२४ (७२३)
ततः कदाचिदुपाध्याय आपोदो धौम्यः शिष्यावपृच्छत् क्व आरुणिः
पाञ्चाल्यो गत इति ॥ १-३-२५ (७२४)
तौ तं प्रत्यूचतुर्भगवंस्त्वयैव प्रेषितो गच्छ केदारखण्डं बधानेति ।
स एवमुक्तस्तौ शिष्यौ प्रत्युवाच तस्मात्तत्र सर्वे गच्छामो यत्र
स गत इति ॥१-३-२६ (७२५)
स तत्र गत्वा तस्याह्वानाय शब्दं चकारः ।
भो आरुणे पाञ्चाल्य क्वासि वत्सैहीति ॥१-३-२७ (७२६)
स तच्छ्रुत्वा आरुणिरुपाध्यायवाक्यं
तस्मात्केदारखण्डात्सहसोत्थायतमुपाध्यायमुपतस्थे ॥ १-३-२८ (७२७)
प्रोवाच चैनमयमस्म्यत्र केदारखण्डे निःसरमाणमुदकमवारणीयं
संरोद्धुं संविष्टो भगवच्छब्दं श्रुत्वैव सहसा विदार्य

केदारखण्डं भवन्तमुपस्थितः ॥ १-३-२९ (७२८)
तदभिवादये भगवन्तमाज्ञापयतु भवान्कमर्थं करवाणीति ॥
१-३-३० (७२९)
स एवमुक्त उपाध्यायः प्रत्युवाच यस्माद्भवान्केदारखण्डं
विदार्योत्थितस्तस्मादुद्दालक एवनाम्ना
भवान्भविष्यतीत्युपाध्यायेनानुगृहीतः ॥ १-३-३१ (७३०)
यस्माच्च त्वया मद्वचनमनुष्ठितं तस्माच्छ्रेयोऽवाप्स्यसि ।
सर्वे च ते वेदाः प्रतिभास्यन्ति सर्वाणि च धर्मशास्त्राणीति
॥१-३-३२ (७३१)
स एवमुक्त उपाध्यायेनेष्टं देशं जगाम ॥ १-३-३३ (७३२)
अथापरः शिष्यस्तस्यैवापोदस्य धौम्यस्योपमन्युर्नाम ।
तं चोपाध्यायः प्रेषयामास वत्सोपमन्यो गा रक्षस्वेति ॥१-३-३४ (७३३)
स उपाध्यायवचनादरक्षद्गाः स चाहनि गा रक्षित्वा दिवसक्षये
गुरुगृहमागम्योपाध्यायस्याग्रतः स्थित्वा नमश्चक्रे ॥ १-३-३५ (७३४)
तमुपाध्यायः पीवानमपश्यदुवाच चैनं वत्सोपमन्यो केन वृत्तिं
कल्पयसि पीवानसि दृढमिति ॥ १-३-३६ (७३५)
स उपाध्यायं प्रत्युवाच भो भैक्ष्येण वृत्तिं कल्पयामीति
तमुपाध्यायः प्रत्युवाच ॥ १-३-३७ (७३६)
मय्यनिवेद्य बैक्ष्यं नीपयोक्तव्यमिति ।
स तथेत्युक्तो भैक्ष्यं चरित्वोणध्यायन्यवेदयत् ॥१-३-३८ (७३७)
स तस्मादुपाध्यायः सर्वमेव भैक्ष्यमगृह्णात् ।
स तथेत्युक्तः पुनररक्षद्गा अहनि रक्षित्वा निशामुखे गुरुकुलमागम्य
गुरोरग्रतःस्थित्वा नमश्चक्रे ॥१-३-३९ (७३८)
तमुपाध्यायस्तथापि पीवानमेव दृष्ट्वोवाच ।
वत्सोपमन्यो सर्वमशेषतस्ते भैक्ष्यं गृह्णामि केनेदानीं वृत्तिं
कल्पयसीति ॥१-३-४० (७३९)
स एवमुक्त उपाध्यायं प्रत्युवाच ।
भगवते निवेद्य पूर्वमपरं चरामि तेन वृत्तिं कल्पयामीति
तमुपाध्यायः प्रत्युवाच ॥१-३-४१ (७४०)
नैषा न्याय्या गुरुवृत्तिरन्येषामपि भैक्ष्योपजीविनां वृत्त्युपरोधं
करोषि इत्येवं वर्तमानो लुब्धोऽसीति ॥ १-३-४२ (७४१)
स तथेत्युक्त्वा गा अरक्षद्रक्षित्वाच
पुनरुपाध्यायगृहमागम्योपाध्यायस्याग्रतः स्थित्वा नमश्चक्रे ॥
१-३-४३ (७४२)
तमुपाध्यायस्तथापि पीवानमेव दृष्ट्वा पुनरुवाच ।
वत्सोपमन्यो अहं ते सर्वं भैक्ष्यं गृह्णामि न चान्यच्चरसि

पीवानसि भृशं केन वृत्तिं कल्पयसीति ॥१-३-४४ (७४३)
स एवमुक्तस्तमुपाध्यायं प्रत्युवाच ।
भो एतासां गवां पयसा वृत्तिं कल्पयामीति ।
तमुवाचोपाध्यायो नैतन्न्याय्यं पय उपयोक्तुं भवतो मया
नाभ्यनुज्ञातमिति ॥ १-३-४५ (७४४)
स तथेति प्रतिज्ञाय गा रक्षित्वा पुनरुपाध्यायगृहमेत्य गुरोरग्रतः
स्थित्वा नमश्चक्रे ॥ १-३-४६ (७४५)
तमुपाध्यायः पीवानमेव दृष्ट्वोवाच ।
वत्सोपमन्यो भैक्ष्यं नाश्नासि न चान्यच्चरसि पयो न पिबसि
पीवानसि भृशं केनेदानीं वृत्तिं कल्पयसीति ॥१-३-४७ (७४६)
स एवमुक्त उपाध्यायं प्रत्युवाच ।
भोः फेनं पिबापि यमिमे वत्सा मातृणां स्तनात्पिबन्त उद्गिरन्ति
॥१-३-४८ (७४७)
तमुपाध्यायः प्रत्युवाच ।
एते त्वदनुकम्पया गुणवन्तो वत्साः प्रभूततरं फेनमुद्गिरन्ति ।
तदेषामपि वत्सानां वृत्त्युपरोधं करोष्येवं वर्तमानः ।
फेनमपि भवान्न पातुमर्हतीति स तथेति प्रतिश्रुत्य निराहारः
पुनररक्षद्गाः ॥ १-३-४९ (७४८)
तथा प्रतिषिद्धो भैक्ष्यं नाश्नाति नचान्यच्चरति पयो न पिबति
फेनं नोपयुङ्क्ते स कदाचिदरण्ये क्षुधार्तोऽर्कपत्राण्यभक्षयत् ॥
१-३-५० (७४९)
स तैरर्कपत्रैर्भक्षितैः
क्षारतिक्तकटुरूक्षैस्तीक्ष्णविपाकैश्चक्षुष्युपहतोऽन्धो बभूव ।
ततः सोऽन्धोऽपि चङ्क्रम्यमाणः कूपेऽपतत् ॥१-३-५१ (७५०)
अथ तस्मिन्ननागच्छति सूर्ये चास्ताचलावलम्बिनि उपाध्यायः
शिष्यानवोचत् ॥ १-३-५२ (७५१)
मयोपमन्युः सर्वतः प्रतिषिद्धः स नियतं कुपितस्ततो नागच्छति
चिरगतस्त्विति ।
ततोऽन्वेष्य इत्येवमुक्त्वा शिष्यैः सार्धमरण्यं गत्वा तस्याह्वानाय
शब्दं चकार भो उपमन्यो क्वासि वत्सैहीति ॥१-३-५३ (७५२)
स उपाध्यायस्य आह्वानवचनं श्रुत्वा प्रत्युवाचोच्चैरयमस्मिन्कूपे
पतितोऽहमिति ।
तमुपाध्यायः प्रत्युवाच कथं त्वमस्मिन्कूपे पतित इति ॥१-३-५४ (७५३)
स उपाध्यायं प्रत्युवाच अर्कपत्राणि
भक्षयित्वान्धीभूतोस्म्यतश्चङ्क्रम्यमाणः कूपे पतित इति ।
तमुपाध्यायः प्रत्युवाच ॥१-३-५५ (७५४)

अश्विनौ स्तुहि तौ देवभिषजौ त्वां चक्षुष्मन्तं कर्ताराविति ।
स एवमुक्त उपाध्यायेनोपमन्युः स्तोतुमुपचक्रमे देवावश्विनौ
वाग्भिर्ऋग्भिः ॥ १-३-५६ (७५५)
प्रपूर्वगौ पूर्वजौ चित्रभानू
गिरा वां शंसामि तपसा ह्यनन्तौ ।
दिव्यौ सुपर्णौ विरजौ विमाना-
वधिक्षिपन्तौ भुवनानि विश्वा ॥ १-३-५७ (७५६)
हिरण्मयौ शकुनी सांपरायौ
नासत्यदस्रौ सुनसौ वैजयन्तौ ।
शुक्लं वयन्तौ तरसा सुवेमा-
वधिव्ययन्तावसितं विवस्वतः ॥ १-३-५८ (७५७)
ग्रस्तां सुपर्णस्य बलेन वर्तिका-
ममुञ्चतामश्विनौ सौभगाय ।
तावत्सुवृत्तावनमं तमाय या-
वसत्तमा गा अरुणा उदावहत् ॥ १-३-५९ (७५८)
षष्टिश्च गावस्त्रिशताश्च धेनव
एकं वत्सं सुवते तं दुहन्ति ।
नानागोष्ठा विहिता एकदोहना-
स्तावश्विनौ दुहतो घर्ममुक्थ्यम् ॥ १-३-६० (७५९)
एकां नाभिं सप्त सथा अराः श्रिताः
प्रधिष्वन्या विंशतिरर्पिता अराः ।
अनेमि चक्रं परिवर्ततेऽजरं
मायाऽश्विनौ समनक्ति चर्षणी ॥ १-३-६१ (७६०)
एकं चक्रं वर्तते द्वादशारं
षण्णाभिमेकाक्षममृतस्य धारणम् ।
यस्मिन्देवा अधि विश्वे विषक्ता-
स्तावश्विनौ मुञ्चतो मा विषीदतम् ॥ १-३-६२ (७६१)
अश्विनाविन्दुममृतं वृत्तभूयौ
तिरोधत्तामश्विनौ दासपत्नी ।
हित्वा गिरिमश्विनौ गामुदाचरन्तौ
तद्वृष्टिमह्नात्प्रस्थितौ बलस्य ॥ १-३-६३ (७६२)
युवां दिशो जनयथो दशाग्रे
समानं मूर्ध्नि रथयानं वियन्ति ।
तासां यातमृषयोऽनुप्रयान्ति
देवा मनुष्याः क्षितिमाचरन्ति ॥ १-३-६४ (७६३)
युवां वर्णान्विकुरुथो विश्वरूपां-

स्तेऽधिक्षियन्ते भुवनानि विश्वा ।
ते भानवोऽप्यनुसृताश्चरन्ति
देवा मनुष्याः क्षितिमाचरन्ति ॥ १-३-६५ (७६४)
तौ नासत्यावश्विनौ वां महेऽहं
स्रजं च यां बिभृथः पुष्करस्य ।
तौ नासत्वावमृतावृतावृधा-
वृते देवास्तत्प्रपदे न सूते ॥ १-३-६६ (७६५)
मुखेन गर्भं लभतां युवानौ
गतासुरेतत्प्रपदेन सूते ।
सद्यो जातो मातरमत्ति गर्भ-
स्तावश्विनौ मुञ्चथौ जीवसे गाम् ॥ १-३-६७ (७६६)
स्तोतुं न शक्नोमि गुणैर्भवन्तौ
चक्षुर्विहीनः पथि संप्रमोहः ।
दुर्गेऽहमस्मिन्पतितोऽस्मि कूपे
युवां शरण्यौ शरणं प्रपद्ये ॥ १-३-६८ (७६७)
सौतिरुवाच। १-३-६९क्ष् (१७)
एवमृग्भिश्चान्यैरस्तुवत् ।
इत्येवं तेनाभिष्टुतावश्विनावाजग्मतुराहतुश्चैं प्रीतौ स्व एष
तेऽपूपोशानैनमिति ॥१-३-६९ (७६८)
स एवमुक्तः प्रत्युवाच नानृतमूचतुर्भगवन्तौ
नत्वहमेतमपूपमुपयोक्तुमुत्सहे गुरवेऽनिवेद्येति ॥ १-३-७० (७६९)
ततस्तमश्विनावूचतुः ।
आवाभ्यां पुरस्ताद्भवत उपाध्यायेनैवमेवाभिष्टुताभ्यामपूपोदत्त
उपयुक्तः स तेनानिवेद्य गुरवे त्वमपि तथैव कुरुष्व यथा
कृतमुपाध्यायेनेति ॥१-३-७१ (७७०)
स एवमुक्तः प्रत्युवाच एतत्प्रत्यनुनये भवन्तावश्विनौ
नोत्सहेऽहमनिवेद्य गुरवेऽपूपमुपयोक्तुमिति ॥ १-३-७२ (७७१)
तमश्विनावाहतुः प्रीतौ स्वस्तवानया गुरुभक्त्या ।
उपाध्यायस्य ते कार्ष्णायसा दन्ता भवतोऽपि हिरण्मया भविष्यन्ति
चक्षुष्मांश्च भविष्यसि श्रेयश्चावाप्स्यसीति ॥१-३-७३ (७७२)
स एवमुक्तोऽश्विभ्यां लब्धचक्षुरुपाध्यायसकाशमागम्याभ्यवादयत् ॥
१-३-७४ (७७३)
आचचक्षे च स चास्य प्रीतिमान्बभूव ॥ १-३-७५ (७७४)
आह चैनं यथाऽश्विनावाहतुस्तथा त्वं श्रेयोऽवाप्स्यसीति ॥ १-३-७६ (७७५)
सर्वे च ते वेदाःप्रतिभास्यन्ति सर्वाणि च धर्मशास्त्राणीति ।
एषा तस्यापि परीक्षोपमन्न्योः ॥१-३-७७ (७७६)

अथापरः शिष्यस्तस्यैवापोदस्य धौम्यस्य बैदो नाम तमुपाध्यायः
समादिदेश वत्स बैद इहास्यतां तावन्मम गृहे कंचित्कालं
शुश्रूषुणा च भवितव्यं श्रेयस्ते भविष्यतीति ॥ १-३-७८ (७७७)
स तथेत्युक्त्वा गुरुकुले दीर्घकालं गुरुशुश्रूषणपरोऽवसत् ।
गौरिव नित्यं गुरुणा धूर्षु नियोज्यमानः
शीतोष्णक्षुत्तृष्णादुःखसहः सर्वत्राप्रतिकूलस्तस्य महतात्कालेन
गुरुः परितोषं जगाम ॥१-३-७९ (७७८)
तत्परितोषाच्च श्रेयः सर्वज्ञतां चावाप ।
एषा तस्यापि परीक्षा बैदस्य ॥१-३-८० (७७९)
स उपाध्यायेनानुज्ञातः समावृत्तस्तस्माद्गुरुकुलवासाद्गृहाश्रमं
प्रत्यपद्यत ।
तस्यापि स्वगृहे वसतस्त्रयः शिष्या बभूवुः स शिष्यान्न
किंचिदुवाच कर्म वा क्रियतां गुरुशुश्रूषा वेति ।
दुःखाभिज्ञो हि गुरुकुलवासस्य शिष्यान्परिक्लेशेन योजयितुं नेयेष ॥
१-३-८१ (७८०)
अथ कस्मिंश्चित्काले बैदं ब्राह्मणं जनमेजयः पौष्यश्च
क्षत्रियावुपेत्योपाध्यायं वरयाञ्चक्रतुः ॥ १-३-८२ (७८१)
स कदाचिद्याज्यकार्येणाभिप्रस्थित उत्तङ्कनामानं शिष्यं नियोजयामास
॥ १-३-८३ (७८२)
भोयत्किंचिदस्मद्गृहे परिहीयते तदिच्छाम्यहमपरिहीयमानं भवता
क्रियमाणमिति स एवं प्रतिसंदिश्योत्तङ्कं बैदः प्रवासं जगाम ॥
१-३-८४ (७८३)
अथोत्तङ्कः शुश्रूषुर्गुरुनियोगमनुतिष्ठमानो गुरुकुले वसति स्म ।
स तत्र वसमान उपाध्यायस्त्रीभिः सहिताभिराहूयोक्तः ॥१-३-८५ (७८४)
उपाध्यायानी ते ऋतुमती उपाध्यायश्च प्रोषितोऽस्या
यथाऽयमृतुर्वन्ध्यो न भवति तथा क्रियतामेषा विषीदतीति ॥
१-३-८६ (७८५)
एवमुक्तस्ताः स्त्रियः प्रत्युवाच ।
न मया स्त्रीणां वचनादिदमकार्यं करणीयम् ।
न ह्यहमुपाध्यायेन संदिष्टोऽकार्यमपि त्वया कार्यमिति ॥ १-३-८७ (७८६)
तस्य पुनरुपाध्यायः कालान्तरेण गृहमाजगाम तस्मात्प्रवासात् ।
स तु तद्वृत्तं तस्याशेषमुपलभ्य प्रीतिमानभूत् ॥१-३-८८ (७८७)
उवाच चैनं वत्सोत्तङ्कं किं ते प्रियं करवाणीति ।
धर्मतो हि शुश्रूषितोऽस्मि भवता तेन प्रीतिः परस्परेण नौ
संवृद्धा तदनुजाने भवन्तं सर्वानेव कामानवाप्स्यसि गम्यतामिति
॥१-३-८९ (७८८)

स एवमुक्तः प्रत्युवाच किं ते प्रियं करवाणीति एवं ह्याहुः ॥ १-३-९० (७८९)
यश्चाधर्मेण वै ब्रूयाद्यश्चाधर्मेण पृच्छति ।
तयोरन्यतरः प्रैति विद्वेषं चाधिगच्छति ॥१-३-९१ (७९०)
सोहमनुज्ञातो भवता इच्छामीष्टं गुर्वर्थमुपहर्तुमिति ।
तेनैवमुक्त उपाध्यायः प्रत्युवाच वत्सोत्तङ्क उष्यतां तावदिति
॥१-३-९२ (७९१)
स कदाचित्तमुपाध्यायमाहोत्तङ्क आज्ञापयतु भवान्किं ते
प्रियमुपाहरामि गुर्वर्थमिति ॥ १-३-९३ (७९२)
तमुपाध्यायः प्रत्युवाच वत्सोत्तङ्क बहुशो मां चोदयसि
गुर्वर्थमुपाहरामीति तद्गच्छैनां प्रविश्योपाध्यायानीं पृच्छ
किमुपाहरामीति एषा यद्ब्रवीति तदुपाहरस्वेति ॥ १-३-९४ (७९३)
स एवमुक्त
उपाध्यायेनोपाध्यायानीमपृच्छद्भवत्युपाध्यायेनास्म्यनुज्ञातो गृहं
गन्तुमिच्छामीष्टं ते गुर्वर्थमुपहृत्यानृणो गन्तुं तदाज्ञापयतु
भवती किमुपाहरामि गुर्वर्थमिति ॥ १-३-९५ (७९४)
सैवमुक्तोपाध्यायानी तमुत्तङ्कं प्रत्युवाच गच्छ पौष्यं प्रति
राजानं कुण्डले भिक्षितुं तस्य क्षत्रियया पिनद्धे ॥ १-३-९६ (७९५)
आनयस्वेतश्चतुर्थेऽहनि पुण्यकर्म भविता ताभ्यामाबद्धाभ्यां
शोभमाना ब्राह्मणान्परिवेष्टुमिच्छामि ।
तत्संपादयस्व एवं हि कुर्वतः श्रेयो भविताऽन्यथा कुतः श्रेय
इति ॥१-३-९७ (७९६)
स एवमुक्तस्तयोपाध्यायान्या प्रातिष्ठतोत्तङ्कः स पथि
गच्छन्नपश्यदृषभमतिप्रमाणं तमधिरूढं च
पुरुषमतिप्रमाणमेव स पुरुष उत्तङ्कमभ्यभाषत ॥ १-३-९८
(७९७)
भोउत्तङ्कैतत्पुरीषमस्य ऋषभस्य भक्षयस्वेति स एवमुक्तो
नैच्छत् ॥ १-३-९९ (७९८)
तमाह पुरुषो भूयो भक्षयस्वोत्तङ्क मा विचारयोपाध्यायेनापि ते
भक्षितं पूर्वमिति ॥ १-३-१०० (७९९)
स एवमुक्तो बाढमित्युक्त्वा तदा तद्वृषभस्य मूत्रं पुरीषं च
भक्षयित्वोत्तङ्कः संभ्रमाढुत्थित एवापोऽनुस्पृश्य प्रतस्थे ॥
१-३-१०१ (८००)
यत्र स क्षत्रियः पौष्यस्तमुपेत्यासीनमपश्यदुत्तङ्कः ।
स उत्तङ्कस्तमुपेत्याशीर्भिरभिनन्द्योवाच ॥१-३-१०२ (८०१)
अर्थी भवन्तमुपागतोऽस्मीति स एनमभिवाद्योवाच ।
भगवन्पौष्यः खल्वहं किं करवाणीति ॥१-३-१०३ (८०२)

स तमुवाच गुर्वर्थं कुण्डलयोरर्थेनाभ्यागतोऽस्मि ।
ये वै ते क्षत्रिया पिनद्धे कुण्डले ते भवान्दातुमर्हतीति ॥ १-३-१०४ (८०३)
तं प्रत्युवाच पौष्यः प्रविश्यान्तःपुरं क्षत्रिया याच्यतामिति ।
स तेनैवमुक्तः प्रविश्यान्तःपुरं क्षत्रियां नापश्यत् ॥ १-३-१०५ (८०४)
स पौष्यं पुनरुवाच न युक्तं भवताऽहमनृतेनोपचरितुं न हि
तेऽन्तःपुरे क्षत्रिया सन्निहिता नैनां पश्यामि ॥ १-३-१०६ (८०५)
स एवमुक्तः पौष्यः क्षणमात्रं विमृश्योत्तङ्कं प्रत्युवाच ।
नियतं भवानुच्छिष्टः स्मर तावन्न हि सा क्षत्रिया
उच्छिष्टेनाशुचिना शक्या द्रष्टुं पतिव्रतात्वात्सैषा
नाशुचेर्दर्शनमुपैतीति ॥ १-३-१०७ (८०६)
अथैवमुक्त उत्तङ्कः स्मृत्वोवाचास्ति खलु मया तु भक्षितं
नोपस्पृष्टमागच्छतेति ।
तं पौष्यः प्रत्युवाच एष ते व्यतिक्रमो नोत्थितेनोपस्पृष्टं
भवति शीघ्रमागच्छतेति ॥ १-३-१०८ (८०७)
अथोत्तङ्कस्तं तथेत्युक्त्वा प्राङ्मुख
उपावेश्य सुप्रक्षालितपाणिपादवदनो
निःशब्दाभिरफेनाभिरनुष्णाभिर्हृद्गताभिरद्भिस्त्रिः पीत्वा
द्विः परिमृज्य खान्यद्भिरुपस्पृश्य चान्तःपुरं प्रविवेश ॥
१-३-१०९ (८०८)
ततस्तां क्षत्रियामपश्यत्सा च दृष्ट्वैवोत्तङ्कं
प्रत्युत्थायाभिवाद्योवाच स्वागतं ते भगवन्नाज्ञापय किं करवाणीति ॥
१-३-११० (८०९)
स तामुवाचैते कुण्डले गुर्वर्थं मे भिक्षिते दातुमर्हसीति ।
सा प्रीता तेन तस्य सद्भावेन पात्रमयमनतिक्रमणीयश्चेति मत्वा ते
कुण्डले अवमुच्यास्मै प्रायच्छदाह चैनमेते कुण्डले तक्षको नागराजः
सुभृशं प्रार्थयत्यप्रमत्तो नेतुमर्हसीति ॥ १-३-१११ (८१०)
स एवमुक्तस्तां क्षत्रियां प्रत्युवाच भवती सुनिर्वृता भवतु ।
न मां शक्तस्तक्षको नागराजो धर्षयितुमिति ॥ १-३-११२ (८११)
स एवमुक्त्वा तां क्षत्रियामामन्त्र्य पौष्यसकाशमागच्छत् ।
आह चैनं भोः पौष्य प्रीतोऽस्मीति तमुत्तङ्कं पौष्यः प्रत्युवाच
॥ १-३-११३ (८१२)
भगवंश्चिरेण पात्रमासाद्यते भवांश्च गुणवानतिथिस्तदिच्छे
श्राद्धं कर्तुं क्रियतां क्षण इति ॥ १-३-११४ (८१३)
तमुत्तङ्कः प्रत्युवाच कृतक्षण एवास्मि शीघ्रमिच्छामि
यथोपपन्नमन्नमुपस्कृतं भवतेति स तथेत्युक्त्वा
यथोपपन्नेनान्नेनैनं भोजयामास ॥ १-३-११५ (८१४)

अथोत्तङ्कः सकेशं शीतमन्नं दृष्ट्वा अशुच्येतदिति मत्वा तं पौष्यमुवाच ।
यस्मान्मे अशुच्यन्नं ददासि तस्मादन्धो भविष्यसीति ॥१-३-११६ (८१५)
तं पौष्यः प्रत्युवाच ।
यस्मात्त्वमदुष्टमन्नंदूषयसि तस्मादनपत्यो भविष्यसीति तमुत्तङ्कः प्रत्युवाच ॥१-३-११७ (८१६)
न युक्तं भवताऽन्नमशुचि दत्त्वा प्रतिशापं दातुं तस्मादन्नमेव प्रत्यक्षीकुरु ।
ततः पौष्यस्तदन्नमशुचि दृष्ट्वा तस्याशुचिभावमपरोक्षयामास ॥१-३-११८ (८१७)
अथ तदन्नं मुक्तकेश्या स्त्रियोपहृतमनुष्णं सकेशं चाशुच्येतदिति मत्वा तमृषिमुत्तङ्कं प्रसादयामास ॥ १-३-११९ (८१८)
भघवन्नेतदज्ञानादन्नं सकेशमुपाहृतं शीतं च ।
तत्क्षामये भवन्तं न भवेयमन्ध इति ।
तमुत्तङ्कः प्रत्युवाच ॥ १-३-१२० (८१९)
न मृषा ब्रवीमि भूत्वा त्वमन्धो नचिरादनन्धो भविष्यसीति ।
ममापि शापो भवता दत्तो न भवेदिति ॥१-३-१२१ (८२०)
तं पौष्यः प्रत्युवाच न चाहं शक्तः शापं प्रत्यादातुं न हि मे मन्युरद्याप्युपशमं गच्छति किं चैतद्भवता न ज्ञायते ।
यथा ॥१-३-१२२ (८२१)
नवनीतं हृदयं ब्राह्मणस्य
वाचि क्षुरो निहितस्तीक्ष्णधारः ।
तदुभयमेतद्विपरीतं क्षत्रियस्य
वाङ्नवनीतं हृदयं तीक्ष्णधारम् ॥इति॥ १-३-१२३ (८२२)
तदेवंगते न शक्तोऽहं तीक्ष्णहृदयत्वात्तं शापमन्यथाकर्तुं गम्यतामिति ।
तमुत्तङ्कः प्रत्युवाच ॥१-३-१२४ (८२३)
भवताऽहमन्नस्याशुचिभावमालक्ष्य प्रत्यनुनीतः ।
प्राक् च तेऽभिहितं यस्माददुष्टमन्नं दूषयसि तस्मादनपत्यो भविष्यसीति ।
दुष्टे चान्ने नैष मम शापो भविष्यतीति ॥ १-३-१२५ (८२४)
साधयामस्तावदित्युक्त्वा प्रातिष्ठतोत्तङ्कस्ते कुण्डले गृहीत्वा ।
सोऽपश्यदथ पथि नग्नं क्षपणकमागच्छन्तं मुहुर्मुहुर्दृश्यमानमदृश्यमानं च ॥१-३-१२६ (८२५)
अथोत्तङ्कस्ते कुण्डले संन्यस्य भूमावुदकार्थं प्रचक्रमे ।

एतस्मिन्नन्तरे स क्षपणकस्त्वरमाण उपसृत्य ते कुण्डले गृहीत्वा प्राद्रवत् ॥१-३-१२७ (८२६)
तमुत्तङ्कोऽभिसृत्य कृतोदककार्यः शुचिः प्रयतो नमो देवेभ्यो गुरुभ्यश्च कृत्वा महता जवेन तमन्वयात् ॥ १-३-१२८ (८२७)
तस्य तक्षको दृढमासन्नः सतं जग्राह ।
गृहीतमात्रः स तद्रूपं विहाय तक्षकस्वरूपं कृत्वा सहसा धरण्यां विवृतं महाबिलं प्रविवेश ॥१-३-१२९ (८२८)
प्रविश्य च नागलोकं स्वभवनमगच्छत् ।
अथोत्तङ्कस्तस्याः क्षत्रियाया वचः स्मृत्वा तं तक्षकमन्वगच्छत् ॥१-३-१३० (८२९)
स तद्बिलं दण्डकाष्ठेन चखान न चाशकत् ।
तं क्लिश्यमानमिन्द्रोऽपश्यत्स वज्रं प्रेषयामास ।
गच्छास्य ब्राह्मणस्य साहाय्यं कुरुष्वेति ॥ १-३-१३१ (८३०)
अथ वज्रं दण्डकाष्ठमनुप्रविश्य तद्बिलमदारयत् ॥ १-३-१३२ (८३१)
तमुत्तङ्कोऽनुविवेश तेनैव बिलेन प्रविश्य च तं नागलोकमपर्यन्तमनेकविधप्रासादहर्म्यवलभीनिर्यूहशत-संकुलमुच्चावचक्रीडाश्चर्यस्थानावकीर्णमपश्यत् ॥ १-३-१३३ (८३२)
स तत्र नागांस्तानस्तुवदेभिः श्लोकैः ।
य ऐरावतराजानः सर्पाः समितिशोभाः ।
क्षरन्त इव जीमूताः सविद्युत्पवनेरिताः ॥ १-३-१३४ (८३३)
सुरूपा बहुरूपाश्च तथा कल्माषकुण्डलाः ।
आदित्यवन्नाकपृष्ठे रेजुरैरावतोद्भवाः ॥१-३-१३५ (८३४)
बहूनि नागवेश्मानि गङ्गायास्तीर उत्तरे ।
तत्रस्थानपि संस्तौमि महतः पन्नगानहम् ॥१-३-१३६ (८३५)
इच्छेत्कोऽर्कांशुसेनायां चर्तुमैरावतं विना ।
शतान्यशीतिरष्टौ च सहस्राणि च विंशतिः ॥१-३-१३७ (८३६)
सर्पाणां प्रग्रहा यान्ति धृतराष्ट्रो यदैजति ।
ये चैनमुपसर्पन्ति ये च दूरपथं गताः ॥१-३-१३८ (८३७)
अहमैरावतज्येष्ठभ्रातृभ्योऽकरवं नमः ।
यस्य वासः कुरुक्षेत्रे खाण्डवे चाभवत्पुरा ॥१-३-१३९ (८३८)
तं नागराजमस्तौषं कुण्डलार्थाय तक्षकम् ।
तक्षकश्चाश्वसेनश्च नित्यं सहचरावुभौ ॥१-३-१४० (८३९)
कुरुक्षेत्रं च वसतां नदीमिक्षुमतीमनु ।
जघन्यजस्तक्षकस्य श्रुतसेनेति यः सुतः ॥१-३-१४१ (८४०)
अवसद्यो महद्द्युम्नि प्रार्थयन्नागमुख्यताम् ।
करवाणि सदा चाहं नमस्तस्मै महात्मने ॥१-३-१४२ (८४१)

सौतिरुवाच। १-३-१४३क्ष् (१८)
एवं स्तुत्वा स विप्रर्षिरुत्तङ्को भुजगोत्तमान् ।
नैव ते कुण्डले लेभे ततश्चिन्तामुपागमत् ॥१-३-१४३ (८४२)
एवं स्तुवन्नपि नागान्यदा ते कुण्डले नालभत्तदाऽपश्यत्स्त्रियौ तन्त्रे
अधिरोप्य सुवेमे पटं वयन्त्यौ ।
तस्मिंस्तन्त्रे कृष्णाः सिताश्च तन्तवश्चक्रं चापश्यद्द्वादशारं
षड्भिः कुमारैः परिवर्त्यमानं पुरुषं चापश्यदश्वं च
दर्शनीयम् ॥१-३-१४४ (८४३)
स तान्सर्वांस्तुष्टाव एभिर्मन्त्रवादश्लोकैः ॥ १-३-१४५ (८४४)
त्रीण्यर्पितान्यत्र शतानि मध्ये
षष्टिश्च नित्यं चरति ध्रुवेऽस्मिन् ।
चक्रे चतुर्विंशतिपर्वयोगे
षड्वै कुमाराः परिवर्तयन्ति ॥ १-३-१४६ (८४५)
तन्त्रं चेदं विश्वरूपे युवत्यौ
वयतस्तन्तून्सततं वर्तयन्त्यौ ।
कृष्णान्सितांश्चैव विवर्तयन्त्यौ
भूतान्यजस्रं भुवनानि चैव ॥ १-३-१४७ (८४६)
वज्रस्य भर्ता भुवनस्य गोप्ता
वृत्रस्य हन्ता नमुचेर्निहन्ता ।
कृष्णे वसानो वसने महात्मा
सत्यानृते यो विविनक्ति लोके ॥ १-३-१४८ (८४७)
यो वाजिनं गर्भमपां पुराणं
वैश्वानरं वाहनमभ्युपैति ।
नमोऽस्तु तस्मै जगदीश्वराय
लोकत्रयेशाय पुरंदराय ॥ १-३-१४९ (८४८)
ततः स एनं पुरुषः प्राह प्रीतोऽस्मि तेऽहसनेन स्तोत्रेण किं ते
प्रियं करवाणीति ।
स तमुवाच नागा मे वशमीयुरिति ॥१-३-१५० (८४९)
स चैनं पुरुषः पुनरुवाच एतमश्वमपाने धमस्वेति ॥ १-३-१५१ (८५०)
ततोऽश्वस्यापानमधमत्ततोऽश्वाद्धम्यमानात्सर्वस्रोतोभ्यः
पावकार्चिषः सधूमा निष्पेतुः ॥ १-३-१५२ (८५१)
ताभिर्नागलोक उपधूपितेऽथ
संभ्रान्तस्तक्षकोऽग्नेस्तेजोभयाद्विषण्णः कुण्डले गृहीत्वा सहसा
भवनान्निष्क्रम्योत्तङ्कमुवाच ॥ १-३-१५३ (८५२)
इमे कुण्डले गृह्णातु भवानिति ।
स ते प्रतिजग्राहोत्तङ्कः प्रतिगृह्य च कुण्डलेऽचिन्तयत्

॥ १-३-१५४ (८५३)
अद्य तत्पुण्यकमुपाध्यायान्या दूरं चाहमभ्यागतः स कथं
संभावयेयमिति ॥ १-३-१५५ (८५४)
तत एनं चिन्तयानमेव स पुरुष उवाच ।
उत्तङ्क एनमेवाश्वमधिरोह त्वां क्षणेनैवोपाध्यायकुलं
प्रापयिष्यतीति ॥ १-३-१५६ (८५५)
स तथेन्युक्त्वा तमश्वमधिरुह्य प्रत्याजगामोपाध्यायकुलं ।
उपाध्यायानी च स्नाता केशानावापयन्त्युपविष्टोत्तङ्को नागच्छतीति
शापायास्य मनो दधे ॥ १-३-१५७ (८५६)
अथैतस्मिन्नन्तरे स उत्तङ्कः प्रविश्य उपाध्यायकुलं
उपाध्यायानीमभ्यवादयत्ते चास्यै कुण्डले प्रायच्छत्सा चैनं
प्रत्युवाच ॥ १-३-१५८ (८५७)
उत्तङ्क देशे कालेऽभ्यागतः स्वागतं ते वत्स ग्इदानीं यद्यनागतोसि
कोपितया मया शप्तो भविष्यसि' श्रेयस्तवोपस्थितं सिद्धिमाप्नुहीति ॥
१-३-१५९ (८५८)
अथोत्तङ्क उपाध्यायमभ्यवादयत् ।
तमुपाध्यायः प्रत्युवाच वत्सोत्तङ्क स्वागतं ते किं चिरं कृतमिति
॥ १-३-१६० (८५९)
तमुत्तङ्क उपाध्यायं प्रत्युवाच ।
भोस्तक्षकेण मे नागराजेन विघ्नः कृतोऽस्मिन्कर्मणि तेनास्मि नागलोकं
गतः ॥ १-३-१६१ (८६०)
तत्र च मया दृष्टे स्त्रियौ तन्त्रेऽधिरोप्य पटं वयन्त्यौ
तस्मिंश्च कृष्णाः सिताश्च तन्तवः ।
किं तत् ॥ १-३-१६२ (८६१)
तत्र च मया चक्रं दृष्टं द्वादशारं षट्चैनं कुमाराः
परिवर्तयन्ति तदपि किं ।
पुरुषश्चापि मया दृष्टः स चापि कः ।
अश्वश्चातिप्रमाणो दृष्टः स चापि कः ॥ १-३-१६३ (८६२)
पथि गच्छता च मया ऋषभो दृष्टस्तं च
पुरुषोऽधिरूढस्तेनास्मि सोपचारमुक्त उत्तङ्कास्य ऋषभस्य पुरीषं
भक्षय उपाध्यायेनापि ते भक्षितमिति ॥ १-३-१६४ (८६३)
ततस्तस्य वचनान्मया तदृषभस्य पुरीषमुपयुक्तं स चापि कः ।
तदेतद्भवतोपदिष्टमिच्छेयं श्रोतुं किं तदिति ।
स तेनैवमुक्त उपाध्यायः प्रत्युवाच ॥ १-३-१६५ (८६४)
ये ते स्त्रियौ धाता विधाता च ये च ते कृष्णाः सितास्तन्तवस्ते रात्र्यहनी ।
यदपि तच्चक्रं द्वादशारं षड्कुमाराः परिवर्तयन्ति तेपि

षडृतवः द्वादशारा द्वादश मासाः संवत्सरश्चक्रम् ॥१-३-१६६
(८६५)
यः पुरुषःस पर्जन्यः योऽश्वः सोऽग्निः य ऋषभस्त्वया पथि
गच्छता दृष्टः स ऐरावतो नागराट् ॥ १-३-१६७ (८६६)
यश्चैनमधिरूढः पुरुषः स चेन्द्रः यदपि ते भक्षितं तस्य
ऋषभस्य पुरीषं तदमृतं तेन खल्वसि तस्मिन्नागभवने न
व्यापन्नस्त्वम् ॥ १-३-१६८ (८६७)
स हि भगवानिन्द्रो मम सखा त्वदनुक्रोशादिममनुग्रहं कृतवान् ।
तस्मात्कुण्डले गृहीत्वा पुनरागतोऽसि ॥१-३-१६९ (८६८)
तत्सौम्य गम्यतामनुजाने भवन्तं श्रेयोऽवाप्स्यसीति ।
स उपाध्यायेनानुज्ञातो भगवानुत्तङ्कः क्रुद्धस्तक्षकं
प्रतिचिकीर्षमाणो हास्तिनपुरं प्रतस्थे ॥१-३-१७० (८६९)
स हास्तिनपुरं प्राप्य नचिराद्विप्रसत्तमः ।
समागच्छत राजानमुत्तङ्को जनमेजयम् ॥१-३-१७१ (८७०)
पुरा तक्षशिलासंस्थं निवृत्तमपराजितम् ।
सम्यग्विजयिनं दृष्ट्वा समन्तान्मन्त्रिभिर्वृतम् ॥१-३-१७२ (८७१)
तस्मै जयाशिषः पूर्वं यथान्यायं प्रयुज्य सः ।
उवाचैनं वचः काले शब्दसंपन्नया गिरा ॥१-३-१७३ (८७२)
उत्तङ्क उवाच।१-३-१७४क्ष् (१९)
अन्यस्मिन्करणीये तु कार्ये पार्थिवसत्तम ।
अर्चयित्वा यथान्यायं प्रत्युवाच द्विजोत्तमम् ॥१-३-१७४ (८७३)
सौतिरुवाच।१-३-१७५क्ष् (२०)
एवमुक्तस्तु विप्रेण स राजा जनमेजयः ।
अर्चयित्वा यथान्यायं प्रत्युवाच द्विजोत्तमम् ॥१-३-१७५ (८७४)
जनमेजय उवाच।१-३-१७६क्ष् (२१)
आसां प्रजानां परिपालनेन
स्वं क्षत्रधर्मं परिपालयामि ।
प्रब्रूहि मे किं करणीयमद्य
येनासि कार्येण समागतस्त्वम् ॥ १-३-१७६ (८७५)
सौतिरुवाच।१-३-१७७क्ष् (२२)
स एवमुक्तस्तु नृपोत्तमेन
द्विजोत्तमः पुण्यकृतां वरिष्ठः ।
उवाच राजानमदीनसत्वं
स्वमेव कार्यं नृपते कुरुष्व ॥ १-३-१७७ (८७६)
उत्तङ्क उवाच।१-३-१७८क्ष् (२३)
तक्षकेण महीन्द्रेन्द्र येन ते हिंसितः पिता ।

तस्मै प्रतिकुरुष्व त्वं पन्नगाय दुरात्मने ॥ १-३-१७८ (८७७)
कार्यकालं हि मन्येऽहं विधिदृष्टस्य कर्मणः ।
तद्गच्छापचितिं राजन्पितुस्तस्य महात्मनः ॥ १-३-१७९ (८७८)
तेन ह्यनपराधी स दष्टो दुष्टान्तरात्मना ।
पञ्चत्वमगमद्राजा वज्राहत इव द्रुमः ॥ १-३-१८० (८७९)
बलदर्पसमुत्सिक्तस्तक्षकः पन्नगाधमः ।
अकार्यं कृतवान्पापो योऽदशत्पितरं तव ॥ १-३-१८१ (८८०)
राजर्षिवंशगोप्तारममरप्रतिमं नृपम् ।
यियासुं काश्यपं चैव न्यवर्तयत पापकृत् ॥ १-३-१८२ (८८१)
होतुमर्हसि तं पापं ज्वलिते हव्यवाहने ।
सर्पसत्रे महाराज त्वरितं तद्विधीयताम् ॥ १-३-१८३ (८८२)
एवं पितुश्चापचितिं कृतवांस्त्वं भविष्यसि ।
मम प्रियं च सुमहत्कृतं राजन् भविष्यति ॥ १-३-१८४ (८८३)
कर्मणः पृथिवीपाल मम येन दुरात्मना ।
विघ्नः कृतो महाराज गुर्वर्थं चरतोऽनघ ॥ १-३-१८५ (८८४)
सौतिरुवाच। १-३-१८६क्ष् (२४)
एतच्छ्रुत्वा तु नृपतिस्तक्षकाय चुकोप ह ।
उत्तङ्कवाक्यहविषा दीप्तोऽग्निर्हविषा यथा ॥ १-३-१८६ (८८५)
अपृच्छत्स तदा राजा मन्त्रिणः स्वान्सुदुःखितः ।
उत्तङ्कस्यैव सांनिध्ये पितुः स्वर्गगतिं प्रति ॥ १-३-१८७ (८८६)
तदैव हि स राजेन्द्रो दुःखशोकाप्लुतोऽभवत् ।
यदैव वृत्तं पितरमुत्तङ्कादशृणोत्तदा ॥ ॥ १-३-१८८ (८८७)

इति श्रीमन्महाभारते आदिपर्वणि पौष्यपर्वमि तृतीयोऽध्यायः ॥ ३
॥ ॥ समाप्तं च पौष्यपर्व ॥

Mahabharata - Adi Parva - Chapter Footnotes

१-३-१ परिक्षितोऽपत्य पुमान्पारिक्षितः । सरमायाः देवशुन्याः
अपत्यं पुमान्सारमेयः ॥
१-३-९ अदृष्टं अतर्कितं ॥
१-३-१० संभ्रान्तः संतप्त इति पाठान्तरं ॥
१-३-११ पापकृत्यां शापरूपां बलायुः-प्राणनिकृन्तनीं देवतां
। शमयेदक्रोधनां कुर्यात्। १-३-१८ उपांशुव्रतं गूढव्रतं। ।
१-३-२० तक्षशिलां देशविशेषं जेतुमिति शेषः ॥
१-३-२१ अपोत्तीत्यपोदः अब्भक्षः तस्यापत्यमापोदः ॥
१-३-२२ केदारो महाक्षेत्रान्तर्गतं चतुरस्रं तस्य खण्डो

जलनिरोधभित्तिः तं ॥
१-३-३६ पीवानं पुष्टं ।वृत्तिं जीविकां ॥
१-३-४२ वृत्त्युपरोधं वृत्तिप्रतिबन्धं ॥
१-३-४४ चरसि भक्षयसि ॥
१-३-५१ तीक्ष्णविपाकैः पाककाले उदरेऽग्निज्वालोत्थापकैः ॥
१-३-५६ कर्ताराविति लुडन्तं ॥
१-३-५७ प्रपूर्वगाविति ।अस्य श्लोकस्यानन्वयादुत्तरश्लोकस्थं संबोधनमिह योज्यम्। हे नासत्यदस्रौ गिरा वाण्या। वां युवां शंसामि स्तौमि। व्यवहिताश्चेति गतिसंज्ञत्वात्प्रशंसामीति वाऽन्वयः। किंभूतौ वां। प्रपूर्वगौ प्रकर्षेणान्यदेवताभ्यः पूर्वं यज्ञं गच्छन्तौ। पूर्वजौ अश्वजात्यां हि पूर्वं मुखसंयोगः ततः संयोगाद्गर्भोत्पत्तिरिति तत्र गर्भोत्पत्तेः पूर्वं मुखयोहगमात्राज्जातौ। चित्रभानू अग्नितुल्यौ। तपसा सामर्थ्येन। अनन्तौ अनन्तरूपधरौ। दिव्यौ दिवः द्योतमानात्सूर्याद्भवौ। सुपर्णौ शोभनगमनौ। विरजौ विगतरजोगुणौ। विश्वा विश्वानि। भुवनानि अधि। विमानौ स्वविमानौ। क्षिपन्तौ प्रेरयन्तौ ॥
१-३-५८ हिरण्मयाविति ।किंभूतौ विमानौ। हिरण्मयौ सुवर्णमयौ। शकुनी। लुप्तोपममेतत्। शीघ्रगामित्वात्पक्षिणाविव। यद्वा पदद्वयमप्यश्विनोरेव विशेषणं। हिरण्मयौ सुवर्णालङ्कृतौ। शकुनी आरोग्यकरणेन शकुं शक्तिं नयतः प्रापयत इति शकुनी। सांपरायौ संपरायः परलोकस्तस्मै हितौ। यद्वा सांपरायामापदि अयः प्राप्तिर्ययोस्तौ। भक्तानामापदि तद्रक्षणायागच्छन्तौ। नासत्यदस्रौ। नासत्यौ असत्यरहितौ। नासापुटजातौ वा। दस्रौ दर्शनीयौ। सुसौ सुनासिकौ। विशेषेण जयन्तौ विजयन्तौ। विजयन्तावेव वैजयन्तौ। विवस्वतः सूर्यस्य तरसा बलेन असितं श्यामकुष्ठं अधिव्ययन्तौ निराकुर्वन्तौ। शुक्लं दीप्तियुक्तं वर्म चक्षुर्वा। वयन्तौ कुर्वन्तौ। सूर्यस्य पितृत्वात् तद्बलेन युवयोरेतत्सामर्थ्यं युज्यत इति स्तुतिः। सुवेमौ। लुप्तोपममेतत्। यथा वेमधारिणौ तन्तुवायौ पटादसितकेशादि दूरीकुरुतः शुक्लं च तन्तुं वयतस्तथेत्यर्थः ॥
१-३-५९ ग्रस्तामिति ।हे अश्विनौ। सुपर्णस्य लुप्तोपममेतत्। सुपर्णतुल्यपराक्रमस्य गतेर्वा वृकस्य बलेन ग्रस्तां अभिभूतां। वर्तिकां वर्तिकाख्यां पक्षिणीं। तस्याः सौभगाय जीवनरूपसुखाय। अमुञ्चतां भवन्ताविति शेषः। आस्नो

वृकस्येत्यस्यामृचि इयं कथा प्रसिद्धा। अहं तौ युवां तावत्
कात्स्न्र्येन अनमं नमस्कृतवानस्मि। तौ कौ। यौ प्रति। सुष्टु
वर्तत इति सुवृत् सोमयागकर्ता। तमाय तमु ग्लानाविति धातोः
ग्लानये। असत्तमाः असमीचीना अपि गाः उदावहत् प्रार्थनाविषयत्वेन
प्रापयामास। गोविषयप्रार्थनां कृतवानित्यर्थः। किंभूतौ
यौ। अरुणा अरुणौ। डादेशश्छान्दसः। लुप्तोपममेतत्। सोमयागे
हि प्रातरनुवाकादावश्विनोः स्तुतत्वात् यथा दिनारम्भे अरुणस्तथा
सोमयागारम्भे युवामित्यर्थः। अत्रायमाशयः। सोमयागे इन्द्रादिषु
देवताभूतेषु सत्स्वपि असमीचीनगोरक्षणस्यानन्यसाध्यत्वज्ञानेन
यजमानेन भवन्तावेव प्रार्थितावित्यहमपि युवामेव स्तौमीति ॥
१-३-६० षष्टिश्च गाव इति । ज्योतिष्टोमे सन्त्युपसदस्तिस्रः। ताश्च
सत्रेऽधिका भवन्ति। उपसत्सु च प्रवर्ग्य उक्तः। तत्र
महावीराख्यपात्रेषु तप्ते घृते दुग्धं प्रक्षिप्यते तदर्था
चास्ति धेनुः। ततो घृतं दुग्धं च मिश्रमश्विभ्यां
हूयते। एवं सति यदा गवामयनादिसत्रेषु संवत्सरमुपसदः
क्रियन्ते तत्र घर्मे सर्वोत्कृष्टे अश्विनावेव यष्टव्याविति
स्तुतिरत्र क्रियते। तावश्विनावनममिति गतेन संबन्धः। तौ कौ
यत्तदोर्नित्यसंबन्धाद्यौ तं घर्मं दुहतः साधयतः। प्रसिद्धोपि
घर्मो भवतोर्भवति। भवतोरेव देवतात्वादित्याशयः। तं कं
यत्तदोर्नित्यसंबन्धाद्यं घर्मं त्रिशताः षष्टिश्च धेनवो
दुग्धदात्र्यो गावः। घर्मे दुग्धरहितानां गवामनुपयोगात्। एकं
वत्सं वत्सरं। अत्यन्तसंयोगे द्वितीया। वत्सरावधीत्यर्थः। सुवते
साधयन्ति। घृतेन। दुहन्ति दुग्धेन साधयन्ति। यज्ञादौ
सावनः स्मृत इति वाक्यादत्र सावनवर्षग्रहणेन
षष्ट्यधिकशतत्रयदिनानि भवन्ति। तेन तावत्य एव
गावः घृतदुग्धाभ्यां घर्मं साधयन्तीत्यर्थः। कथंभूता
गावः। नानागोष्ठाः लुप्तोपममेतत्। दिनानां गोष्ठोपमाया विवक्षितत्वात्
नानागोष्ठनिष्ठा इत्यर्तः। एकदोहना विहिताः एकोऽध्वर्युर्दोहनकर्ता
यासामेवंभूताः श्रुतावुक्ता इत्यर्थः। किंभूत घर्मं उक्थ्यं
प्रशस्यम् ॥
१-३-६१-६२ एकां नाभिमिति । सूर्यरथचालकत्वेनाश्विनावत्र
स्तूयेते। श्लोकद्वयस्यैकान्वयः। हे अश्विनौ युवां। विषीदतं
विषीदन्तं। छान्दसो नुमभावः। मां मुञ्चतः। लकारव्यत्ययेन
मुञ्चतमित्याशंसा। तौ कौ। यावश्विनौ। चर्षणी लुप्तोपमं
चैतत्। चर्षणिशब्दो निघण्टुषु मनुष्यपर्यायः
पठितः। मनुष्याविवेत्यर्थः। सूर्यरथचालकत्वेन

अश्विनोः शोभां वक्तुं सूर्यरथसंबन्धिचक्रद्वयगतिं
वर्णयति पादत्रिकद्वयेन। एकपदमावृत्य योज्यं। एकं चक्रं
ईदृशं परिवर्तते भ्रमति। अन्यदेकं चक्रं ईदृशं वर्तते
चलतीत्यर्थः। कीदृशमेकं चक्रं आद्यस्य एकां नाभिं सप्तशताः
सप्तशतसङ्ख्याः अराः अन्याश्च विंशतिसङ्ख्या अराः श्रिताः
संलग्नाः। चक्रमध्यस्थनाभौ विंशत्यधिकसप्तशतसंख्याः अराः
तिर्यक् संलग्ना इत्यर्थः। किंभूता अराः। प्रधिषु बाह्यचक्रावयवेषु
अर्पिता अधिनिवेशिता इत्यर्थः। कीदृशमन्यच्चक्रं
द्वादशारं षण्णाभि। पुंस्त्वं छान्दसम्। कीदृशं
प्रथमचक्रं। अनेमि चलनेमिरहितमित्यर्थः। अजरं न
जीर्यत इत्यजरम्। जीर्णं न भवतीत्यर्थः। एकं चक्रं
मध्यशङ्कुनिहितपाशवत्स्वस्थल एव परिभ्रमत्। द्वितीयं तु
समन्ततश्चरतीत्याशयः। द्वितीयचक्रविशेषणमेकाक्षमिति। एकं
उत्कृष्टोऽक्षोऽस्य अतिदृढ इत्यर्थः। अमृतस्य स्वर्गस्य
धारणं रक्षणसाधनम्। यस्मिन्स्वचक्रे विश्वे सवे देवाः
अधिविषक्ताः। प्राधान्याद्देवग्रहणम्। तेन तदुपलक्षिताः सर्वे जीवा
इत्यर्थः। सर्वेषां सूर्यचक्रनियोगोदितत्वादित्यर्थः। अत्र "पञ्चारे
चक्रे" इत्यादिश्रुतयो मानम् ॥
१-३-६३ अश्विनाविति । हे अश्विनौ दासपत्नी। सुपांसुलुगिति
लुप्त सप्तमीबहुवचनत्वेन दासपत्नीषु अप्सु। इन्दुं अमृतं
सोमाख्यममृतं। तिरोधत्तां कृतवन्तौ। किंभूतावश्विनौ
वृत्तभूयौ भूयोवृत्तौ नानाकर्माणावित्यर्थः। हित्वेति। अश्विनौ यत्
यदा गिरिं मे हित्वा त्यक्त्वा गां भुवं उदाचरन्तौ गच्छन्तौ। तत्
तदा बलस्य प्राणिनां सामर्थ्यस्य संबन्धिनीं तज्जनिकां वृष्टिं
प्रति। अह्नात शीघ्रम्। अह्नादिति सुबन्तप्रतिरूपकमव्ययं। प्रस्थितौ
कृतप्रस्थानौ भवथः। सुमेरोः सकाशाद्भुवमागत्य
प्राणिनामन्नादिद्वारेण बलजनिकां वृष्टिं कुरुथ इत्यर्थः ॥
१-३-६४ युवामिति । हे अश्विनौ युवां अग्रे प्रथमं समानं
सम्यक् आनः आगतं गमन यस्मिन्कर्मणि तथा। सोमयागे प्रथमं
गच्छन्ताविति यावत् दश दिशो जनयथः। दिक्षब्देन इन्द्रादयो
दिक्पाला लक्ष्यन्ते। जनिः प्रादुर्भावार्थः। सोमयागे प्रथमगामित्वेन
इन्द्रादिदेवताप्रादुर्भावकत्वं। अथ तदनन्तरं याः दिशः दिग्देवता
मूर्ध्नि यागस्य मूर्ध्नि प्रधाने वियन्ति संबन्ध्यन्ते। तासां
दिग्देवतानां यातं यानमनु पश्चात् ऋषयः प्रयान्ति मूर्ध्नीति
पूर्वेणान्वयः। अतएव युवयोः देवा मनुष्याश्च क्षितिमैश्वर्यं
ऐश्वर्य युक्तां स्तुतिमाचरन्ति कुर्वन्ति ॥

१-३-६५ युवां वर्णानिति त इति तच्छब्दात् यच्छब्दो द्रष्टव्यः ।हे अश्विनौ युवां वर्णान्नानावर्णान् विश्वरूपान् सृष्ट्यादिहेतुत्वेन अनेकरूपान् यानभानून् विकुरुथः विशेषेण कुरुथः सूर्यरथप्रकाशयितृत्वादित्याशयः। ते भानवः सूर्यकिरणाः विश्वा विश्वानि सर्वाणि भुवनानि अधिक्षियन्ते आवृण्वन्ति। त एव भानवोऽनुसृताश्चरन्त्यपि विचरन्ति चेत्यर्थः। अतएव देवा मनुष्याश्च युवयोः क्षिति स्तुतिमाचरन्तीति पूर्ववदर्थः ॥
१-३-६६ तौ नासत्याविति हे नासत्यावश्विनौ अहं तौ वां युवां महे पूजयामि ।मनसा पूजयामीत्यर्थः। यां छान्दसत्वेन जात्यभिप्रायेणैकवचनम्। ये। पुष्करस्य जात्यभिप्रायैकवचनं। पुष्कराणां पद्मानां स्रजं जात्येकवचनेन स्रजौ माले बिभृथो धारयथः। तौ प्रसिद्धौ अमृतौ नास्ति मृतं मरणं ययोस्तौ तथोक्तौ ऋतावृधौ ऋतं सत्यं यज्ञमुदकं वा वर्धयत इति तथा तौ नासत्यौ ऋते विना देवा इन्द्रादयः पदे स्थाने सोमयागादौ तद्देवसंबन्धित्वेन प्रसिद्धं हविः न प्रसूते वचनव्यत्ययेन न प्राप्नुवन्ति। सोमयागे अश्विनोः प्रथमगामित्वेन तौ विना देवाः स्वांशं न स्वीकुर्वन्तीत्यर्थः ॥
१-३-६७ मुखेन गर्भमिति ।हे अश्विनौ तौ युवां जीवसे जीवितु। असेन्प्रत्ययान्तमेतत्। गां दृष्टिं मुञ्चथः लकारव्यत्ययेन मुञ्चतमित्याशंसा। तौ कौ यौ मुखेन कृत्वा युवानौ तरुणावेव गर्भं भावप्रधानो निर्देशः। गर्भत्वं लभतां अलभतां। बहुलं छन्दसीत्यडभावः। ननु नवमासगर्भधारणाभावे कथमाकस्मिकोत्पत्तिः कथं च स्तन्यपानाद्यभावे आकस्मिकं तारुण्यमित्यत आह। गतासुरित्यादि। गता असवः प्राणा यस्येति गतासुर्मनुष्यादिः। एतत् छान्दसो लिङ्गव्यत्ययः। एनं गर्भं। प्रपदेन प्रकृष्टेन पदेन गमनेन नवमासरूपेण प्रसूते जातः उत्पन्नः स गर्भः सद्यः तत्काले जननीं अत्ति पिबति। मनुष्यदेहे एतदुचितम्। अश्विनोस्तु मरणधर्मत्वाभावान्नैवमित्याशयः ॥
१-३-७७ एषा तस्येति सूतवाक्यं ॥
१-३-७९ गौर्बलीवर्दः ॥
१-३-८१ नेयेष न कामितवान् ॥
१-३-८३ नियोजयामास अग्निशुश्रूषादतविति शेषः ॥
१-३-८४ परिहीयते न्यूनं भवति ॥
१-३-९० आहुः वृद्धा इति शेषः ॥
१-३-९१ ब्रूयात् अध्यायपयेत् ।पृच्छति अधीते। अधर्मेण गुरुदक्षिणादिव्यतिरेकेण ॥

१-३-९६ पिनद्धे धृते ॥
१-३-१०१ अनुपस्पृश्य अनाचम्य ॥
१-३-१०६ अनृतेनोपचरितुं वञ्चयितुं ॥
१-३-१२७ उदकार्थं शौचाचमनादि कर्तुं ॥
१-३-१२९ दृढमासन्नः अत्यन्तसन्निहितः ॥
१-३-१३५ कल्माषकुण्डलाः चित्रकुण्डलाः ॥
१-३-१३७ अर्कांशुसेनायां सेनावह्नुःसहरश्मिजाले ॥
१-३-१४२ महद्द्युग्नि तीर्थविशेषे ॥
१-३-१४५ मन्त्रवादश्लोकैः मन्त्रस्वरूपश्लोकैः ॥
१-३-१४६ त्रीण्यर्पितानीति
। मन्त्रलिङ्गमात्रावगमात्तुष्टाव। विशेषशानं तु तस्य
गुरुमुखादेव भविष्यति। अत्र चक्रे। नित्यं चरति भ्रमति। ध्रुवे
प्रवाहरूपेण नित्ये कालरूपे। शतानि षष्टिश्च अहोरात्राणामिति
शेषः। चतुर्विंशतिपर्वणां शुक्लकृष्णपक्षरूपाणां योगो
युस्मिन्तथाभूते। मध्येऽर्पितानि। यच्च षड्कुमाराः ऋतवः
परिवर्तयन्ति ॥
१-३-१४७ तन्त्रं चेदमिति । तन्त्रं आतानवितानरूपं
तन्तुसमुदायं। विश्वरूपे समयभेदेन स्त्रीपुरुषादिरूपे। युवत्यौ
धाताविघातारौ। वयतः रचनां कुरतः। संवत्सररूपं
पटमितिशेषः। वर्तयन्त्यौ संचारयन्त्यौ। भूतानि च
परिवर्तयन्त्यौ वयत इति पूर्वेणान्वयः ॥
१-३-१४८ भर्ता धारकः ॥
१-३-१४९ अपां गर्भं अड्ग्यो जातं । पुराणं आदिसर्गभवं। वैश्वानरं
अग्निरूपमश्व। वाजिन वाहनं अभ्युपैति। तस्मै नम इत्यन्वयः ॥
१-३-१५२ स्नोतोभ्यः शरीररन्ध्रेभ्यः ॥
१-३-१५७ आवापयन्ती वेणीरूपेण केशानां संग्रथनं कारयन्ती ॥
१-३-१५९ त्वं मनागसि न शप्तः इति पाठे स्वलकालनिमित्तं न शप्तोसि
। यदि क्षमं नागतः स्याः शप्तः स्या इत्यर्थः ॥
१-३-१६८ न व्यापन्नो न मृतः ॥
१-३-१८२ कश्यप इत्यपि पाठो दृश्यते ॥
॥
तृतीयोऽध्यायः ॥
३ ॥

---

अध्यय००४
॥ श्रीः ॥
१.४. अध्यायः ४

(अथ पौलोमपर्व ॥ ४ ॥)

Mahabharata - Adi Parva - Chapter Topics

सौतिशौनकसंवादमुखेन कथोपोद्धातः ॥ १ ॥

रोमहर्षणपुत्र उग्रश्रवाः सौतिः पौराणिको नैमिशारण्ये शौनकस्य कुलपतेर्द्वादशवार्षिके सत्रे ऋषीनभ्यागतानुपतस्थे ॥ १-४-१ (८८८)
पौराणिकः पुराणे कृतश्रमः स कृताञ्जलिस्तानुवाच ।
ग्मयोत्तङ्कस्य चरितमशेषमुक्तं जनमेजयस्य सार्पसत्रे निमित्तान्तरमिदमपि ।'
किं भवन्तः श्रोतुमिच्छन्ति किमहं ब्रवाणीति ॥ १-४-२ (८८९)
तमृषय ऊचुः । १-४-३क्ष् (२५)
परं रौमहर्षणे प्रवक्ष्यामस्त्वां नः प्रतिवक्ष्यसि वचः
शुश्रूषतां कथायोगं नः कथायोगे ॥ १-४-३ (८९०)
तत्र भगवान् कुलपतिस्तु शौनकोऽग्निशरणमध्यास्ते ।
ग्दीर्घसत्रत्वात्सर्वाः कथाः श्रोतुं कालोस्ति ॥' १-४-४ (८९१)
यौऽसौ दिव्याः कथा वेद देवतासुरसंश्रिताः ।
मनुष्योरगगन्धर्वकथा वेद च सर्वशः ॥ १-४-५ (८९२)
स चाप्यस्मिन्मशे सौते विद्वान्कुलपतिर्दिवजः ।
दक्षो धृतव्रतो धीमाञ्शास्त्रे चारण्यके गुरुः ॥ १-४-६ (८९३)
सत्यवादी शमपरस्तपस्वी नियतव्रतः ।
सर्वेषामेव नो मान्यः स तावत्प्रतिपाल्यताम् ॥ १-४-७ (८९४)
तस्मिन्नध्यासति गुरावासनं परमार्चितम् ।
ततो वक्ष्यसि यत्त्वां स प्रक्ष्यति द्विजसत्तमः ॥ १-४-८ (८९५)
सौतिरुवाच । १-४-९क्ष् (२६)
एवमस्तु गुरौ तस्मिन्नुपविष्टे महात्मनि ।
तेन पृष्टः कथाः पुण्या वक्ष्यामि विविधाश्रयाः ॥ १-४-९ (८९६)
सोऽथ विप्रर्षभः सर्वं कृत्वा कार्यं यथाविधि ।
देवान्वाग्भिः पितॄनद्भिस्तर्पयित्वाऽऽजगाम ह ॥ १-४-१० (८९७)
यत्र ब्रह्मर्षयः सिद्धाः सुखासीना धृतव्रताः ।
यज्ञायतनमाश्रित्य सूतपुत्रपुरस्पराः ॥ १-४-११ (८९८)
ऋत्विक्ष्वथ सदस्येषु स वै गृहपतिस्तदा ।
उपविष्टेषूपविष्टः शौनकोऽथाब्रवीदिदम् ॥ ॥ १-४-१२ (८९९)

इति श्रीमन्महाभारते आदिपर्वणि पौलोमपर्वणि चतुर्थोऽध्यायः ॥ ४ ॥

१-४-७ प्रतिपाल्यतां प्रतीक्ष्यतां ॥
१-४-१० वाग्भिः ब्रह्मयज्ञीयाभिः ॥
चतुर्थोऽध्यायः ॥
४ ॥

---

अध्यय००५
॥ श्रीः ॥
१.५. अध्यायः ५

Mahabharata - Adi Parva - Chapter Topics
भृगुवंशकथनम् ॥ १ ॥
पौलोमोपाख्यानम् ॥ २ ॥
पुलोमापहारः ॥ ३ ॥
पुलोमाग्निसंवादः ॥ ४ ॥

Mahabharata - Adi Parva - Chapter Text

१-५-० (९००)
शौनक उवाच। १-५-०क्ष् (२७)
पुराणमखिलं तात पिता तेऽधीतवान्पुरा ।
ग्भारताध्ययनं सर्वं कृष्णद्वैपायनात्तदा।'
कच्चित्त्वमपि तत्सर्वमधीषे रौमहर्षणे ॥ १-५-१ (९०१)
पुराणे हि कथा दिव्या आदिवंशाश्च धीमताम् ।
कथ्यन्ते ये पुराऽस्माभिः श्रुतपूर्वाः पितुस्तव ॥ १-५-२ (९०२)
तत्र वंशमहं पूर्वं श्रोतुमिच्छामि भार्गवम् ।
कथयस्व कथामेतां कल्याः स्मः श्रवणे तव ॥ १-५-३ (९०३)
सौतिरुवाच। १-५-४क्ष् (२८)
यदधीतं पुरा सम्यग्द्विजश्रेष्ठैर्महात्मभिः ।
वैशंपायनविप्राग्र्यैस्तैश्चापि कथितं यथा ॥ १-५-४ (९०४)
यदधीतं च पित्रा मे सम्यक्कैव ततो मया ।
तावच्छृणुष्व यो देवैः सेन्द्रैः सर्षिमरुद्गणैः ॥ १-५-५ (९०५)
पूजितः प्रवरो वंशो भार्गवो भृगुनन्दन ।
इमं वंशमहं पूर्वं भार्गवं ते महामुने ॥ १-५-६ (९०६)
निगदामि यथायुक्तं पुराणाश्रयसंयुतम् ।

भृगुर्महर्षिर्भगवान्ब्रह्मणा वै स्वयंभुवा ॥ १-५-७ (९०७)
वरुणस्य क्रतौ जातः पावकादिति नः श्रुतम् ।
भृगोः सुदयितः पुत्रश्च्यवनो नाम भार्गवः ॥ १-५-८ (९०८)
च्यवनस्य च दायादः प्रमतिर्नाम धार्मिकः ।
प्रमतेरप्यभूत्पुत्रो घृताच्यां रुरुरित्युत ॥ १-५-९ (९०९)
रुरोरपि सुतो जज्ञे शुनको वेदपारगः ।
प्रमद्वरायां धर्मात्मा तव पूर्वपितामहः ॥ १-५-१० (९१०)
तपस्वी च यशस्वी च श्रुतवान्ब्रह्मवित्तमः ।
धार्मिकः सत्यवादी च नियतो नियताशनः ॥ १-५-११ (९११)
शौनक उवाच। १-५-१२क्ष् (२९)
सूतपुत्र यथा तस्य भार्गवस्य महात्मनः ।
च्यवनत्वं परिख्यातं तन्ममाचक्ष्व पृच्छतः ॥ १-५-१२ (९१२)
सौतिरुवाच। १-५-१३क्ष् (३०)
भृगोः सुदयिता भार्या पुलोमेत्यभिविश्रुता ।
तस्यां समभवद्गर्भो भृगुवीर्यसमुद्भवः ॥ १-५-१३ (९१३)
तस्मिन्गर्भेऽथ संभूते पुलोमायां भृगूद्वह ।
समये समशीलिन्यां धर्मपत्न्यां यशस्विनः ॥ १-५-१४ (९१४)
अभिषेकाय निष्क्रान्ते भृगौ धर्मभृतां वरे ।
आश्रमं तस्य रक्षोऽथ पुलोमाऽभ्याजगाम ह ॥ १-५-१५ (९१५)
तं प्रविश्याश्रमं दृष्ट्वा भृगोर्भार्यामनिन्दिताम् ।
हृच्छयेन समाविष्टो विचेताः समपद्यत ॥ १-५-१६ (९१६)
अभ्यागतं तु तद्रक्षः पुलोमा चारुदर्शना ।
न्यमन्त्रयत वन्येन फलमूलादिना तदा ॥ १-५-१७ (९१७)
तां तु रक्षस्तदा ब्रह्मन्हृच्छयेनाभिपीडितम् ।
दृष्ट्वा हृष्टमभूद्राजञ्जिहीर्षुस्तामनिन्दिताम् ॥ १-५-१८ (९१८)
जातमित्यब्रवीत्कार्यं जिहीर्षुर्मुदितः शुभाम् ।
सा हि पूर्वं वृता तेन पुलोम्ना तु शुचिस्मिता ॥ १-५-१९ (९१९)
तां तु प्रादात्पिता पश्चाद्भृगवे शास्त्रवत्तदा ।
तस्य तत्किल्बिषं नित्यं हृदि वर्तति भार्गव ॥ १-५-२० (९२०)
इदमन्तरमित्येवं हर्तुं चक्रे मनस्तदा ।
अथाग्निशरणेऽपश्यज्ज्वलन्तं जातवेदसम् ॥ १-५-२१ (९२१)
तमपृच्छत्ततो रक्षः पावकं ज्वलितं तदा ।
शंस मे कस्य भार्येयमग्ने पृच्छे ऋतेन वै ॥ १-५-२२ (९२२)
मुखं त्वमसि देवानां वद पावक पृच्छते ।
मया ह्रीयं वृता पूर्वं भार्यार्थे वरवर्णिनी ॥ १-५-२३ (९२३)
पश्चादिमां पिता प्रादाद्भृगवेऽनृतकारकः ।

सेयं यदि वरारोहा भृगोर्भार्या रहोगता ॥ १-५-२४ (९२४)
तथा सत्यं समाख्याहि जिहीर्षाम्याश्रमादिमाम् ।
स मन्युस्तत्र हृदयं प्रदहन्निव तिष्ठति ॥ १-५-२५ (९२५)
मत्पूर्वभार्यां यदिमां भृगुराप सुमध्यमाम् ।
ग्असंमतमिदं मेऽद्य हरिष्याम्याश्रमादिमाम्' ॥ १-५-२६ (९२६)
सौतिरुवाच । १-५-२७क्ष् (३१)
एवं रक्षस्तमामन्त्र्य ज्वलितं जातवेदसम् ।
शङ्कमानं भृगोर्भार्यां पुनःपुनरपृच्छत ॥ १-५-२७ (९२७)
त्वमग्ने सर्वभूतानामन्तश्चरसि नित्यदा ।
साक्षिवत्पुण्यपापेषु सत्यं ब्रूहि कवे वचः ॥ १-५-२८ (९२८)
मत्पूर्वभार्याऽपहृता भृगुणाऽनृतकारिणा ।
सेयं यदि तथा मे त्वं सत्यमाख्यातुमर्हसि ॥ १-५-२९ (९२९)
श्रुत्वा त्वत्तो भृगोर्भार्यां हरिष्याम्याश्रमादिमाम् ।
जातवेदः पश्यतस्ते वद सत्यां गिरं मम ॥ १-५-३० (९३०)
सौतिरुवाच । १-५-३१क्ष् (३२)
तस्यैतद्वचनं श्रुत्वा सप्तार्चिर्दुःखितोऽभवत् ।
ग्सत्यं वदामि यदि मे शापः स्याद्ब्रह्मवित्तमात् ॥ १-५-३१ (९३१)
असत्यं चेदहं ब्रूयां पतिष्ये नरकान्ध्रुवम् ।'
भीतोऽनृताच्च शापाच्च भृगोरित्यब्रवीच्छनैः ॥ १-५-३२ (९३२)
त्वया वृता पुलोमेयं पूर्वं दानवनन्दन ।
किं त्वियं विधिना पूर्वं मन्त्रवन्न वृता त्वया ॥ १-५-३३ (९३३)
पित्रा तु भृगवे दत्ता पुलोमेयं यशस्विनी ।
ददाति न पिता तुभ्यं वरलोभान्महायशाः ॥ १-५-३४ (९३४)
अथेमां वेददृष्टेन कर्मणा विधिपूर्वकम् ।
भार्यामृषिर्भृगुः प्राप मां पुरस्कृत्य दानव ॥ १-५-३५ (९३५)
सेयमित्यवगच्छामि नानृतं वक्तुमुत्सहे ।
नानृतं हि सदा लोके पूज्यते दानवोत्तम ॥ ॥ १-५-३६ (९३६)

इति श्रीमन्महाभारते आदिपर्वणि पौलोमपर्वणि पञ्चमोऽध्यायः ॥ ५ ॥
Mahabharata - Adi Parva - Chapter Footnotes

१-५-३ कल्याः समर्थाः । तव त्वत्तः श्रोतुमिति संबन्धः ॥
१-५-७ यथायुक्तं कथायुक्तं इत्यपि पाठः । पुराणस्य आश्रयः
उपोद्घातःतत्संयुतं ॥
१-५-१९ बाल्ये किल रुदतीं कन्यां रोदनानिवृत्त्यर्थं भीषयितुं
पित्रोक्तं रे रक्ष एनां गृहाणेति । तावतैव गृहे सन्निहितेन

रक्षसा वृता ममेयं भार्येति ॥
१-५-२७ शङ्कमानं छलवचनेन पूर्वं मह्यं दत्ता पश्चाद्विधिपूर्वकं भृगवे दत्ताऽतो मम वा भृगोर्वा भार्येति सन्दिहानम् ॥
१-५-२८ कवे सर्वज्ञ ॥
पञ्चमोऽध्यायः ॥
५ ॥

---

अध्यय००६
॥ श्रीः ॥
१.६. अध्यायः ६

Mahabharata - Adi Parva - Chapter Topics
च्यवनोत्पत्ती रक्षोविनाशश्च ॥ १ ॥
अग्नेर्भृगुशापः ॥ २ ॥

Mahabharata - Adi Parva - Chapter Text

१-६-० (९३७)
सौतिरुवाच। १-६-०क्ष् (३३)
अग्नेरथ वचः श्रुत्वा तद्रक्षः प्रजहार ताम् ।
ब्रह्मन्वराहरूपेण मनोमारुतरंहसा ॥ १-६-१ (९३८)
ततः स गर्भो निवसन्कुक्षौ भृगुकुलोद्वह ।
रोषान्मातुश्च्युतः कुक्षेश्च्यवनस्तेन सोऽभवत् ॥ १-६-२ (९३९)
तं दृष्ट्वा मातुरुदराच्च्युतमादित्यवर्चसम् ।
तद्रक्षो भस्मसाद्भूतं पपात परिमुच्य ताम् ॥ १-६-३ (९४०)
सा तमादाय सुश्रोणी ससार भृगुनन्दनम् ।
च्यवनं भार्गवं पुत्रं पुलोमा दुःखमूर्च्छिता ॥ १-६-४ (९४१)
तां ददर्श स्वयं ब्रह्मा सर्वलोकपितामहः ।
रुदतीं बाष्पपूर्णाक्षीं भृगोर्भार्यामनिन्दिताम् ॥ १-६-५ (९४२)
सान्त्वयामास भगवान्वधूं ब्रह्मा पितामहः ।
अश्रुबिन्दूद्भवा तस्याः प्रावर्तत महानदी ॥ १-६-६ (९४३)
आवर्तन्ती सृतिं तस्या भृगोः पत्न्यास्तपस्विनः ।
तस्या मार्गं सृतवतीं दृष्ट्वा तु सरितं तदा ॥ १-६-७ (९४४)
नाम तस्यास्तदा नद्याश्चक्रे लोकपितामहः ।
वधूसरेति भगवांश्च्यवनस्याश्रमं प्रति ॥ १-६-८ (९४५)
स एवं च्यवनो जज्ञे भृगोः पुत्रः प्रतापवान् ।

तं ददर्श पिता तत्र च्यवनं तां च भामिनीम् ।
स पुलोमां ततो भार्यां पप्रच्छ कुपितो भृगुः ॥ १-६-९ (९४६)
भृगुरुवाच। १-६-१०क्ष् (३४)
केनासि रक्षसे तस्मै कथिता त्वं जिहीर्षवे ।
न हि त्वा वेद तद्रक्षो मद्भार्यां चारुहासिनीम् ॥ १-६-१० (९४७)
तत्त्वमाख्याहि तं ह्यद्य शप्तुमिच्छाम्यहं रुषा ।
बिभेति को न शापान्मे कस्य चायं व्यतिक्रमः ॥ १-६-११ (९४८)
पुलोमोवाच। १-६-१२क्ष् (३५)
अग्निना भगवंस्तस्मै रक्षसेऽहं निवेदिता ।
ततो मामनयद्रक्षः क्रोशन्तीं कुररीमिव ॥ १-६-१२ (९४९)
साऽहं तव सुतस्यास्य तेजसा परिमोक्षिता ।
भस्मीभूतं च तद्रक्षो मामुत्सृज्य पपात वै ॥ १-६-१३ (९५०)
सौतिरुवाच। १-६-१४क्ष् (३६)
इति श्रुत्वा पुलोमाया भृगुः परममन्युमान् ।
शशापाग्निमतिक्रुद्धः सर्वभक्षो भविष्यसि ॥ ॥ १-६-१४ (९५१)

इति श्रीमन्महाभारते आदिपर्वणि पौलोमपर्वणि षष्ठोऽध्यायः ॥ ६ ॥
Mahabharata - Adi Parva - Chapter Footnotes

१-६-२ तेन च्युतत्वेन हेतुना ॥
२ ॥
१-६-७ आवर्तन्ती सृतिं तस्याः । सृतिं मार्गं। अनुवर्त्म सृता
तस्या इति पाठान्तरं ॥
७ ॥
षष्ठोऽध्यायः ॥
६ ॥

---

अध्यय००७
॥ श्रीः ॥
१.७. अध्यायः ७

Mahabharata - Adi Parva - Chapter Topics
क्रोधेनाग्निकृत आत्मोपसंहारः ॥ १ ॥
ब्रह्मोक्तसान्त्ववचनेनाग्नेः संतोषः ॥ २ ॥

Mahabharata - Adi Parva - Chapter Text

१-७-० (९५२)
सौतिरुवाच। १-७-०क्ष् (३७)
शप्तस्तु भृगुणा वह्निः क्रुद्धो वाक्यमथाब्रवीत् ।
किमिदं साहसं ब्रह्मन्कृतवानसि मां प्रति ॥ १-७-१ (९५३)
धर्मे प्रयतमानस्य सत्यं च वदतः समम् ।
पृष्टो यदब्रवं सत्यं व्यभिचारोऽत्र को मम ॥ १-७-२ (९५४)
पृष्टो हिसाक्षीयः साक्ष्यं जानानोऽप्यन्यथा वदेत् ।
स पूर्वानात्मनः सप्त कुले हन्यात्तथाऽपरान् ॥ १-७-३ (९५५)
यश्च कार्यार्थतत्त्वज्ञो जानानोऽपि न भाषते ।
सोऽपि तेनैव पापेन लिप्यते नात्र संशयः ॥ १-७-४ (९५६)
शक्तोऽहमपि शप्तुं त्वां मान्यास्तु ब्राह्मणा मम ।
जानतोऽपि च ते ब्रह्मन्कथयिष्ये निबोध तत् ॥ १-७-५ (९५७)
योगेन बहुधाऽऽत्मानं कृत्वा तिष्ठामि मूर्तिषु ।
अग्निहोत्रेषु सत्रेषु क्रियासु च मखेषु च ॥ १-७-६ (९५८)
वेदोक्तेन विधानेन मयि यद्धूयते हविः ।
देवताः पितरश्चैव तेन तृप्ता भवन्ति वै ॥ १-७-७ (९५९)
आपो देवगणाः सर्वे आपः पितृगणास्तथा ।
दर्शश्च पौर्णमासश्च देवानां पितृभिः सह ॥ १-७-८ (९६०)
देवताः पितरस्तस्मात्पितरश्चापि देवताः ।
एकीभूताश्च दृश्यन्ते पृथक्त्वेन च पर्वसु ॥ १-७-९ (९६१)
देवताः पितरश्चैव भुञ्जते मयि यद्धुतम् ।
देवतानां पितॄणां च मुखमेतदहं स्मृतम् ॥ १-७-१० (९६२)
अमावास्यां हि पितरः पौर्णमास्यां हि देवताः ।
मन्मुखेनैव हूयन्ते भुञ्जते च हुतं हविः ॥ १-७-११ (९६३)
सर्वभक्षः कथं त्वेषां भविष्यामि मुखं त्वहम्। १-७-१२ (९६४)
सौतिरुवाच ।
चिन्तयित्वा ततो वह्निश्चक्रे संहारमात्मनः ॥ १-७-१२क्ष् (३८)
द्विजानामग्निहोत्रेषु यज्ञसत्रक्रियासु च ।
निरोंकारवषट्काराः स्वधास्वाहाविवर्जिताः ॥ १-७-१३ (९६५)
विनाऽग्निना प्रजाः सर्वास्तत आसन्सुदुःखिताः ।
अथर्षयः समुद्विग्ना देवान् गत्वाब्रुवन्वचः ॥ १-७-१४ (९६६)
अग्निनाशात्क्रियाभ्रंशाद्भ्रान्ता लोकास्त्रयोऽनघाः ।
विधध्वमत्र यत्कार्यं न स्यात्कालात्ययो यथा ॥ १-७-१५ (९६७)
अथर्षयश्च देवाश्च ब्रह्माणमुपगम्य तु ।
अग्नेरावेदयञ्शापं क्रियासंहारमेव च ॥ १-७-१६ (९६८)
भृगुणा वै महाभाग शप्तोऽग्निः कारणान्तरे ।

कथं देवमुखो भूत्वा यज्ञभागाग्रभुक् तथा ॥ १-७-१७ (९६९)
हुतभुक्सर्वलोकेषु सर्वभक्षत्वमेष्यति। १-७-१८ (९७०)
सौतिरुवाच ।
श्रुत्वा तु तद्वचस्तेषामग्निमाहूय विश्वकृत् ॥ १-७-१८क्ष् (३९)
उवाच वचनं श्लक्ष्णं भूतभावनमव्ययम् ।
लोकानामिह सर्वेषां त्वं कर्ता चान्त एव च ॥ १-७-१९ (९७१)
त्वं धारयसि लोकांस्त्रीन्क्रियाणां च प्रवर्तकः ।
स तथा कुरु लोकेश नोच्छिद्येरन्यथा क्रियाः ॥ १-७-२० (९७२)
कस्मादेवं विमूढस्त्वमीश्वरः सन् हुताशेन ।
त्वं पवित्रं सदा लोके सर्वभूतगतिश्च ह ॥ १-७-२१ (९७३)
न त्वं सर्वशरीरेण सर्वभक्षत्वमेष्यसि ।
अपाने ह्यर्चिषो यास्ते सर्वं भक्ष्यन्ति ताः शिखिन् ॥ १-७-२२ (९७४)
क्रव्यादा च तनुर्या ते सा सर्वं भक्षयिष्यति ।
यथा सूर्यांशुभिः स्पृष्टं सर्वं शुचि विभाव्यते ॥ १-७-२३ (९७५)
तथा त्वदर्चिर्निर्दग्धं सर्वं शुचि भविष्यति ।
त्वमग्ने परमं तेजः स्वप्रभावाद्विनिर्गतम् ॥ १-७-२४ (९७६)
स्वतेजसैव तं शापं कुरु सत्यमृषेर्विभो ।
देवानां चात्मनो भागं गृहाण त्वं मुखे हुतम् ॥ १-७-२५ (९७७)
सौतिरुवाच। १-७-२६क्ष् (४०)
एवमस्त्विति तं वह्निः प्रत्युवाच पितामहम् ।
जगाम शासनं कर्तुं देवस्य परमेष्ठिनः ॥ १-७-२६ (९७८)
देवर्षयश्च मुदितास्ततो जग्मुर्यथागतम् ।
ऋषयश्च यथा पूर्वं क्रियाः सर्वाः प्रचक्रिरे ॥ १-७-२७ (९७९)
दिवि देवा मुमुदिरे भूतसङ्घाश्च लौकिकाः ।
अग्निश्च परमां प्रीतिमवाप हतकल्मषः ॥ १-७-२८ (९८०)
एवं स भगवाञ्छापं लेभेऽग्निर्भृगुतः पुरा ।
एवमेष पुरा वृत्त इतिहासोऽग्निशापजः ।
पुलोम्नश्च विनाशोऽयं च्यवनस्य च संभवः ॥ ॥ १-७-२९ (९८१)

इति श्रीमन्महाभारते आदिपर्वणि पौलोमपर्वणि सप्तमोऽध्यायः ॥ ७ ॥

Mahabharata - Adi Parva - Chapter Footnotes

१-७-२ समं पक्षपातहीनां । व्यभिचारः अपराधः ॥
२ ॥
१-७-८ आपः सोमाज्य प्रभृतयोग्नौ हूयमाना देवपितृरूपाः । अग्नौ हुता आप एव देवताशरीररूपेण परिणमन्त इत्यर्थः ॥

१-७-९ देवादिभावस्यापि कर्मप्राप्यत्वाद्देवानां पितॄणां च मिथो भेदो नास्त्येव तुल्यहेतुकत्वादित्याह देवता इति ॥
१-७-११ अमावास्यां अमावास्यायां ।हूयन्ते इज्यन्ते ॥
१-७-१२ संहारं तिरोभावं ॥
१-७-२२ भक्ष्यन्ति भक्षयिष्यन्ति ॥
१-७-२३ क्रव्यादा मांसभक्षिणी ॥
१-७-२४ स्वप्रभावात् अग्निप्रेरणया ।तस्य वागधिष्ठातृत्वात्तत्प्रेरणयैव विनिर्गतं शापं ॥
२४ ॥
सप्तमोऽध्यायः ॥
७ ॥

---

अध्यय००८
॥ श्रीः ॥
१.८. अध्यायः ८

Mahabharata - Adi Parva - Chapter Topics
रुरुचरितं ॥ १ ॥
मेन्कात्मजायाः प्रमद्वरायाः रुरुणा सह विवाहप्रसङ्गः ॥ २ ॥
प्रमद्वरायाः सर्पदंशेन रुरोर्दुःखम् ॥ ३ ॥

Mahabharata - Adi Parva - Chapter Text

१-८-० (९८२)
सौतिरुवाच।१-८-०क्ष् (४१)
स चापि च्यवनो ब्रह्मन्भार्गवोऽजनयत्सुतम् ।
सुकन्यायां महात्मानं प्रमतिं दीप्ततेजसम् ॥१-८-१ (९८३)
प्रमतिस्तु रुरुं नाम घृताच्यां समजीजनत् ।
रुरुः प्रमद्वरायां तु शुनकं समजीजनम् ॥१-८-२ (९८४)
शुनकस्तु महासत्वः सर्वभार्गवनन्दनः ।
जातस्तपसि तीव्रे च स्थितः स्थिरयशास्ततः ॥१-८-३ (९८५)
तस्य ब्रह्मन्रुरोः सर्वं चरितं भूरितेजसः ।
विस्तरेण प्रवक्ष्यामि तच्छृणु त्वमशेषतः ॥१-८-४ (९८६)
ऋषिरासीन्महान्पूर्वं तपोविद्यासमन्वितः ।
स्थूलकेश इति ख्यातः सर्वभूतहिते रतः ॥१-८-५ (९८७)
एतस्मिन्नेव काले तु मेनकायां प्रजज्ञिवान् ।
गन्धर्वराजो विप्रर्षे विश्वावसुरिति स्मृतः ॥१-८-६ (९८८)

अप्सरा मेनका तस्य तं गर्भं भृगुनन्दन ।
उत्ससर्ज यथाकालं स्थूलकेशाश्रमं प्रति ॥१-८-७ (९८९)
उत्सृज्य चैव तं गर्भं नद्यास्तीरे जगाम सा ।
अप्सरा मेनका ब्रह्मन्निर्दया निरपत्रपा ॥१-८-८ (९९०)
कन्याममरगर्भाभां ज्वलन्तीमिव च श्रिया ।
तां ददर्श समुत्सृष्टां नदीतीरे महानृषिः ॥१-८-९ (९९१)
स्थूलकेशः स तेजस्वी विजने बन्धुवर्जिताम् ।
स तां दृष्ट्वा तदा कन्यां स्थूलकेशो महाद्विजः ॥१-८-१० (९९२)
जग्राह च मुनिश्रेष्ठः कृपाविष्टः पुपोष च ।
ववृधे सा वरारोहा तस्याश्रमपदे शुभे ॥१-८-११ (९९३)
जातकाद्याः क्रियाश्चास्या विधिपूर्वं यथाक्रमम् ।
स्थूलकेशो महाभागश्चकार सुमहानृषिः ॥१-८-१२ (९९४)
प्रमदाभ्यो वरा सा तु सत्त्वरूपगुणान्विता ।
ततः प्रमद्वरेत्यस्या नाम चक्रे महानृषिः ॥१-८-१३ (९९५)
तामाश्रमपदे तस्य रुरुर्दृष्ट्वा प्रमद्वराम् ।
बभूव किल धर्मात्मा मदनोपहतस्तदा ॥१-८-१४ (९९६)
पितरं सखिभिः सोऽथ श्रावयामास भार्गवम् ।
प्रमतिश्चाभ्ययाचत्तां स्थूलकेशं यशस्विनम् ॥१-८-१५ (९९७)
ततः प्रादात्पिता कन्यां रुरवे तां प्रमद्वराम् ।
विवाहं स्थापयित्वाग्रे नक्षत्रे भगदैवते ॥१-८-१६ (९९८)
ततः कतिपयाहस्य विवाहे समुपस्थिते ।
सखीभिः क्रीडती सार्धं सा कन्यावरवर्णिनी ॥१-८-१७ (९९९)
नापश्यत्संप्रसुप्तं वै भुजंगं तिर्यगायतम् ।
पदा चैनं समाक्रामन्मुमूर्षुः कालचोदिता ॥१-८-१८ (१०००)
स तस्याः संप्रमत्तायाश्चोदितः कालधर्मणा ।
विषोपलिप्तान्दशनान्भृशमङ्गे न्यपातयत् ॥१-८-१९ (१००१)
सा दष्टा तेन सर्पेण पपात सहसा भुवि ।
विवर्णा विगतश्रीका भ्रष्टाभरणचेतना ॥१-८-२० (१००२)
निरानन्दकरी तेषां बन्धूनां मुक्तमूर्धजा ।
व्यसुरप्रेक्षणीया सा प्रेक्षणीयतमाऽभवत् ॥१-८-२१ (१००३)
प्रसुप्तेवाभवच्चापि भुवि सर्पविषार्दिता ।
भूयो मनोहरतरा बभूव तनुमध्यमा ॥१-८-२२ (१००४)
ददर्श तां पिता चैव ये चैवान्ये तपस्विनः ।
विचेष्टमानां पतितां भूतले पद्मवर्चसम् ॥१-८-२३ (१००५)
ततः सर्वे द्विजतराः समाजग्मुः कृपान्विताः ।
स्वस्त्यात्रेयो महाजानुः कुशिकः शङ्खमेखलः ॥१-८-२४ (१००६)

उद्दालकः कठश्चैव श्वेतश्चैव महायशाः ।
भरद्वाजः कौणकुत्स्य आर्ष्टिषेणोऽथ गौतमः ॥ १-८-२५ (१००७)
प्रमतिः सह पुत्रेण तथान्ये वनवासिनः ।
तां ते कन्यां व्यसुं दृष्ट्वा भुजंगस्य विषार्दिताम् ॥ १-८-२६ (१००८)
रुरुदुः कृपयाऽविष्टा रुरुस्त्वार्तो बहिर्ययौ ।
ते च सर्वे द्विजश्रेष्ठास्तत्रैवोपाविशंस्तदा ॥ ॥ १-८-२७ (१००९)

इति श्रीमन्महाभारते आदिपर्वणि पौलोमपर्वणि अष्टमोऽध्यायः ॥ ८ ॥
Mahabharata - Adi Parva - Chapter Footnotes

१-८-३ शुनकस्तु शौनकस्त्वमिति पाठान्तरम् ॥
१-८-६ प्रजज्ञिवान् उत्पादितवान् ॥
१-८-१७ कतिपयाहस्य कतिपयाहस्सु इति पाठान्तरं । कतिपयाहस्सु हतेष्वित्यर्थः ॥
१-८-१९ कालधर्मणा मृत्युना ॥
अष्टमोऽध्यायः ॥
८ ॥

---

अध्यय००९
॥ श्रीः ॥
१.९. अध्यायः ९

Mahabharata - Adi Parva - Chapter Topics
देवदूतवचनेन रुरुकृतस्वार्धायुः प्रदानेन प्रमद्वराजीवनं तया सह रुरोर्विवाहश्च ॥ १ ॥

Mahabharata - Adi Parva - Chapter Text

१-९-० (१०१०)
सौतिरुवाच । १-९-०क्ष् (४२)
तेषु तत्रोपविष्टेषु ब्राह्मणेषु महात्मसु ।
रुरुश्चुक्रोश गहनं वनं गत्वाऽतिदुःखितः ॥ १-९-१ (१०११)
शोकेनाभिहतः सोऽथ विलपन्करुणं बहु ।
अब्रवीद्वचनं शोचन्प्रियां स्मृत्वा प्रमद्वराम् ॥ १-९-२ (१०१२)
शेते सा भुवि तन्वङ्गी मम शोकविवर्धिनी ।
ग्प्राणानपहरन्तीव पूर्णचन्द्रनिभानना ॥ १-९-३ (१०१३)
यदि पीनायतश्रोणी पद्मपत्रनिभेक्षणा ।

मुमूर्षुरपि मे प्राणानादायाशु गमिष्यति ॥१-९-४ (१०१४)
पितृमातृसखीनां च लुप्तपिण्डस्य तस्य मे।'
बान्धवानां च सर्वेषां किं नु दुःखमतःपरम् ॥ १-९-५ (१०१५)
यदि दत्तं तपस्तप्तं गुरवो वा मया यदि ।
सम्यगाराधितास्तेन संजीवतु मम प्रिया ॥१-९-६ (१०१६)
यथा च जन्मप्रभृति यतात्माऽहं धृतव्रतः ।
प्रमद्वरा तथाद्यैषा समुत्तिष्ठतु भामिनी ॥१-९-७ (१०१७)
१एवं लालप्यतस्तस्य भार्यार्थे दुःखितस्य च ।
देवदूतस्तदाऽभ्येत्य वाक्यमाह रुरुं वने ॥ｃ १-९-८ (१०१८)
ƒकृष्णे विष्णौ हृषीकेशे लोकेशेऽसुरविद्विषि ।
यदि मे निश्चला भक्तिर्मम जीवतु सा प्रिया ॥१-९-९ (१०१९)
विलप्यमाने तु रुरौ सर्वे देवाः कृपान्विताः ।
दूतं प्रस्थापयामासुः संदिश्यास्य हितं वचः ॥१-९-१० (१०२०)
स दूतस्त्वरितोऽभ्येत्य देवानां प्रियकृच्छुचिः ।
उवाच देववचनं रुरुमाभाष्य दुःखितम् ॥१-९-११ (१०२१)
देवैः सर्वैरहं ब्रह्मन्प्रेषितोऽस्मि तवान्तिकम् ।
त्वद्धितं त्वद्धितैरुक्तं शृणु वाक्यं द्विजोत्तम ॥' १-९-१२ (१०२२)
अभिधत्से ह यद्वाचा रुरो दुःखान्न तन्मृषा ।
न तु मर्त्यस्य धर्मात्मन्नायुरस्ति गतायुषः ॥१-९-१३ (१०२३)
गतायुरेषा कृपणा गन्धर्वाप्सरसोः सुता ।
तस्माच्छोके मनस्तात मा कृथास्त्वं कथंचन ॥१-९-१४ (१०२४)
उपायश्चात्र विहितः पूर्वं देवैर्महात्मभिः ।
तं यदीच्छसि कर्तुं त्वं प्राप्स्यसीह प्रमद्वराम् ॥१-९-१५ (१०२५)
रुरुरुवाच।१-९-१६क्ष् (४३)
क उपायः कृतो देवैर्ब्रूहि तत्त्वेन खेचर ।
करिष्येऽहं तथा श्रुत्वा त्रातुमर्हति मां भवान् ॥१-९-१६ (१०२६)
देवेदूत उवाच।१-९-१७क्ष् (४४)
आयुषोऽर्धं प्रयच्छ त्वं कन्यायै भृगुनन्दन ।
एवमुत्थास्यति रुरो तव भार्या प्रयद्वरा ॥१-९-१७ (१०२७)
रुरुरुवाच।१-९-१८क्ष् (४५)
आयुषोऽर्धं प्रयच्छामि कन्यायै खेचरोत्तम ।
शृङ्गाररूपाभरणा समुत्तिष्ठतु मे प्रिया ॥१-९-१८ (१०२८)
सौतिरुवाच।१-९-१९क्ष् (४६)
ततो गन्धर्वराजश्च देवदूतश्च सत्तमौ ।
धर्मराजमुपेत्येदं वचनं प्रत्यभाषताम् ॥१-९-१९ (१०२९)
धर्मराजायुषोऽर्धेन रुरोर्भार्या प्रमद्वरा ।

समुत्तिष्ठतु कल्याणी मृतैवं यदि मन्यसे ॥ १-९-२० (१०३०)
धर्मराज उवाच। १-९-२१क्ष् (४७)
प्रमद्वरा रुरोर्भार्या देवदूत यदीच्छसि ।
उत्तिष्ठत्वायुषोऽर्धेन रुरोरेव समन्विता ॥ १-९-२१ (१०३१)
सौतिरुवाच। १-९-२२क्ष् (४८)
एवमुक्ते ततः कन्या सोदतिष्ठत्प्रमद्वरा ।
रुरोस्तस्यायुषोऽर्धेन सुप्तेव वरवर्णिनी ॥ १-९-२२ (१०३२)
एतद्दृष्टं भविष्ये हि रुरोरुत्तमतेजसः ।
आयुषोऽतिप्रवृद्धस्य भार्यार्थेऽर्धमलुप्यत ॥ १-९-२३ (१०३३)
तत इष्टेऽहनि तयोः पितरौ चक्रतुर्मुदा ।
विवाहं तौ च रेमाते परस्परहितैषिणौ ॥ १-९-२४ (१०३४)
स लब्ध्वा दुर्लभां भार्यां पद्मकिञ्जल्कसुप्रभाम् ।
व्रतं चक्रे विनाशाय जिह्मगानां धृतव्रतः ॥ १-९-२५ (१०३५)
स दृष्ट्वा जिह्मगान्सर्वांस्तीव्रकोपसमन्वितः ।
अभिहन्ति यथासत्त्वं गृह्य प्रहरणं सदा ॥ १-९-२६ (१०३६)
स कदाचिद्वनं विप्रो रुरुरभ्यागमन्महत् ।
शयानं तत्र चापश्यड्डुण्डुभं वयसान्वितम् ॥ १-९-२७ (१०३७)
तत उद्यम्य दम्डं स कालदण्डोपमं तदा ।
जिघांसुः कुपितो विप्रस्तमुवाचाथ डुण्डुभः ॥ १-९-२८ (१०३८)
नापराध्यामि ते किंचिदहमद्य तपोधन ।
संरम्भाच्च किमर्थं मामभिहंसि रुषान्वितः ॥ ॥ १-९-२९ (१०३९)

इति श्रीमन्महाभारते आदिपर्वाणि पौलोमपर्वणि नवमोऽध्यायः ॥ ९ ॥
Mahabharata - Adi Parva - Chapter Footnotes

१-९-१३ गतायुषः आयुर्नास्ति पुनर्न भवतीत्यर्थः ॥
१-९-२३ भविष्ये जातके ॥
१-९-२५ जिह्मगानां सर्पाणां ॥
१-९-२७ डुण्डुभं जलसर्पं ॥
नवमोऽध्यायः ॥
९ ॥

---

अध्यय०१०
॥ श्रीः ॥
१.१०. अध्यायः १०

Mahabharata - Adi Parva - Chapter Topics

रुरुडुण्डुभसंवादः ॥ १ ॥

Mahabharata - Adi Parva - Chapter Text

१-१०-० (१०४०)
रुरुरुवाच। १-१०-०क्ष् (४९)
मम प्राणसमा भार्या दष्टासीद्भुजगेन ह ।
तत्र मे समयो घोर आत्मनोरग वै कृतः ॥ १-१०-१ (१०४१)
भुजंगं वै सदा हन्यां यं यं पश्येयमित्युत ।
ततोऽहं त्वां जिघांसामि जीवितेनाद्य मोक्ष्यसे ॥ १-१०-२ (१०४२)
डुण्डुभ उवाच। १-१०-३क्ष् (५०)
अन्ये ते भुजगा ब्रह्मन्ये दशन्तीह मानवान् ।
डुण्डुभानहिगन्धेन न त्वं हिंसितुमर्हसि ॥ १-१०-३ (१०४३)
एकानर्थान्पृथग्धर्मानेकदुःखान्पृथक्सुखान् ।
डुण्डुभान्धर्मविद्भूत्वा न त्वं हिंसितुमर्हसि ॥ १-१०-४ (१०४४)
सौतिरुवाच। १-१०-५क्ष् (५१)
इति श्रुत्वा वचस्तस्य डुण्डुभस्य रुरुस्तदा ।
नावधीद्भयसंविग्नमृषिं मत्त्वाऽथ डुण्डुभम् ॥ १-१०-५ (१०४५)
उवाच चैनं भगवान्रुरुः संशमयन्निव ।
केन त्वं भुजग ब्रूहि कोऽसीमां विक्रियां गतः ॥ १-१०-६ (१०४६)
डुण्डुभ उवाच। १-१०-७क्ष् (५२)
अहं पुरा रुरो नाम्ना ऋषिरासं सहस्रपात् ।
सोऽहं शापेन विप्रस्य भुजगत्वमुपागतः ॥ १-१०-७ (१०४७)
रुरुरुवाच। १-१०-८क्ष् (५३)
किमर्थं शप्तवान्क्रुद्धो द्विजस्त्वां भुजगोत्तम ।
कियन्तं चैव कालं ते वपुरेतद्भविष्यसि ॥ ॥ १-१०-८ (१०४८)

इति श्रीमन्महाभारते आदिपर्वणि पौलोमपर्वणि दशमोऽध्यायः ॥ १० ॥

Mahabharata - Adi Parva - Chapter Footnotes

१-१०-३ अहिगन्धेन सर्पसादृश्यमात्रेण ॥
१-१०-४ एकानर्थान् एकः समानः अनर्थः जनकर्तृकहिंसादिरूपो येषां तान् । पृथक् सर्पजात्युचितप्राणहरणादिविलक्षणो धर्मो लक्षणं येषां ते। एकं तुल्यं बिलेशयत्वादिरूपं दुःखं येषां तान्। पृथक् हविर्भागादिभ्यो भिन्नं भेकभक्षणादि सुखं येषां तान्। धर्मवित् कृतापराधस्यैव दण्डो नत्वन्यस्येति धर्मस्तज्ज्ञः ॥

दशमोऽध्यायः ॥
१० ॥

---

अध्यय०११
॥ श्रीः ॥
१.११. अध्यायः ११

Mahabharata - Adi Parva - Chapter Topics
डुण्डुभचरितम् ॥ १ ॥

Mahabharata - Adi Parva - Chapter Text

१-११-० (१०४९)
डुण्डुभ उवाच। १-११-०क्ष् (५४)
सखा बभूव मे पूर्वं खगमो नाम वै द्विजः ।
भृशं संशितवाक्तात तपोबलसमन्वितः ॥ १-११-१ (१०५०)
स मया क्रीडता बाल्ये कृत्वा तार्णं भुजंगमम् ।
अग्निहोत्रे प्रसक्तस्तु भीषितः प्रमुमोह वै ॥ १-११-२ (१०५१)
लब्ध्वा स च पुनः संज्ञां मामुवाच तपोधनः ।
नर्दहन्निव कोपेन सत्यवाक्संशितव्रतः ॥ १-११-३ (१०५२)
यथावीर्यस्त्वया सर्पः कृतोऽयं मद्विभीषया ।
तथावीर्यो भुजंगस्त्वं मम शापाद्भविष्यसि ॥ १-११-४ (१०५३)
तस्याहं तपसो वीर्यं जानन्नासं तपोधन ।
भृशमुद्विग्नहृदयस्तमवोचमहं तदा ॥ १-११-५ (१०५४)
प्रणतः संभ्रमाच्चैव प्राञ्जलिः पुरतः स्थितः ।
सखेति हसतेदं ते नर्मार्थं वै कृतं मया ॥ १-११-६ (१०५५)
क्षन्तुमर्हसि मे ब्रह्मञ्शापोऽयं विनिवर्त्यताम् ।
सोऽथ मामब्रवीद्दृष्ट्वा भृशमुद्विग्नचेतसम् ॥ १-११-७ (१०५६)
मुहुरुष्णं विनिःश्वस्य सुसंभ्रान्तस्तपोधनः ।
नानृतं वै मया प्रोक्तं भवितेदं कथंचन ॥ १-११-८ (१०५७)
यत्तु वक्ष्यामि ते वाक्यं शृणु तन्मे तपोधन ।
श्रुत्वा च हृदि ते वाक्यमिदमस्तु सदाऽनघ ॥ १-११-९ (१०५८)
उत्पत्स्यति रुरुर्नाम प्रमतेरात्मजः शुचिः ।
तं दृष्ट्वा शापमोक्षस्ते भविता नचिरादिव ।
ग्एवमुक्तस्तु तेनाहमुरगत्वमवाप्तवान् ॥' १-११-१० (१०५९)
स त्वं रुरुरिति ख्यातः प्रमतेरात्मजोऽपि च ।
स्वरूपं प्रतिपद्याहमद्य वक्ष्यामि ते हितम् ॥ १-११-११ (१०६०)

सौतिरुवाच। १-११-१२क्ष् (५५)
स डौण्डुभं परित्यज्य रूपं विप्रर्षभस्तदा ।
स्वरूपं भास्वरं भूयः प्रतिपेदे महायशाः ॥ १-११-१२ (१०६१)
इदं चोवाच वचनं रुरुमप्रतिमौजसम् ।
अहिंसा परमो धर्मः सर्वप्राणभृतां वर ॥ १-११-१३ (१०६२)
तस्मात्प्राणभृतः सर्वान्न हिंस्याद्ब्राह्मणः क्वचित् ।
ब्राह्मणः सौम्य एवेह भवतीति परा श्रुतिः ॥ १-११-१४ (१०६३)
वेदवेदाङ्गविन्नाम सर्वभूताभयप्रदः ।
अहिंसा सत्यवचनं क्षमा चेति विनिश्चितम् ॥ १-११-१५ (१०६४)
ब्राह्मणस्य परो धर्मो वेदानां धारणापि च ।
क्षत्रियस्य हि यो धर्मः स नेहेष्येत वै तव ॥ १-११-१६ (१०६५)
दण्डधारणमुग्रत्वं प्रजानां परिपालनम् ।
तदिदं क्षत्रियस्यासीत्कर्म वै शृणु मे रुरो ॥ १-११-१७ (१०६६)
जनमेजयस्य यज्ञेऽस्मिन्सर्पाणां हिंसनं पुरा ।
परित्राणं च भीतानां सर्पाणां ब्राह्मणादपि ॥ १-११-१८ (१०६७)
तपोवीर्यबलोपेताद्वेदवेदाङ्गपारगात् ।
आस्तीकाद्द्विजमुख्याद्वै सर्पसत्रे द्विजोत्तम ॥ ॥ १-११-१९ (१०६८)

इति श्रीमन्महाभारते आदिपर्वणि पौलोमपर्वणि एकादशोऽध्यायः ॥ ११ ॥

Mahabharata - Adi Parva - Chapter Footnotes

१-११-१ संशितवाक् तीक्ष्णवचनः ॥
१-११-२ तार्णं तृणमयम् ॥
१-११-१४ सौम्यः अतीक्ष्णस्वभावः ॥
१-११-१८ परित्राणं दृष्टमिति शेषः ॥
एकादशोऽध्यायः ॥
११ ॥

---

अध्यय०१२
॥ श्रीः ॥
१.१२. अध्यायः १२

Mahabharata - Adi Parva - Chapter Topics

जनमेजयसर्पसत्रप्रस्तावः ॥ १ ॥

Mahabharata - Adi Parva - Chapter Text

१-१२-० (१०६९)
रुरुरुवाच। १-१२-०क्ष् (५६)
कथं हिंसितवान्सर्पान्स राजा जनमेजयः ।
सर्पा वा हिंसितास्तत्र किमर्थं द्विजसत्तम ॥ १-१२-१ (१०७०)
किमर्थं मोक्षिताश्चैव पन्नगास्तेन धीमता ।
आस्तीकेन द्विजश्रेष्ठ श्रोतुमिच्छाम्यशेषतः ॥ १-१२-२ (१०७१)
ऋषिरुवाच। १-१२-३क्ष् (५७)
श्रोष्यसि त्वं रुरो सर्वमास्तीकचरितं महत् ।
ब्राह्मणानां कथयतां त्वरावान्गमने ह्यहम् ॥ १-१२-३ (१०७२)
सौतिरुवाच। १-१२-४क्ष् (५८)
ग्इत्युक्त्वान्तर्हिते योगात्तस्मिन्नृषिवरे प्रभौ ।
संभ्रमाविष्टहृदयो रुरुर्मेने तदद्भुतम् ॥' १-१२-४ (१०७३)
बलं परममास्थाय पर्यधावत्समन्ततः ।
तमृषिं नष्टमन्विच्छन्संश्रान्तो न्यपतद्भुवि ॥ १-१२-५ (१०७४)
स मोहे परमं गत्वा नष्टसंज्ञ इवाभवत् ।
तदृषेर्वचनं तथ्यं चिन्तयानः पुनःपुनः ॥ १-१२-६ (१०७५)
लब्धसंज्ञो रुरुश्चायात्तदाचख्यौ पितुस्तदा ।
गपित्रे तु सर्वमाख्याय डुण्डुभस्य वचोऽर्थवत् ॥ १-१२-७ (१०७६)
अपृच्छत्पितरं भूयः सोस्तीकस्य वचस्तदा ।
आख्यापयत्तदाऽऽख्यानं डुण्डुभेनाथ कीर्तितम् ॥ १-१२-८ (१०७७)
तत्कीर्त्यमानं भगवञ्श्रोतुमिच्छामि तत्त्वतः।'
पिता चास्य तदाख्यानं पृष्टः सर्वं न्यवेदयत् ॥ ॥ १-१२-९ (१०७८)

इति श्रीमन्महाभारते आदिपर्वणि पौलोमपर्वणि द्वादशोऽध्यायः ॥ १२ ॥
॥ समाप्तं पौलोमपर्व ॥
Mahabharata - Adi Parva - Chapter Footnotes

१-१२-५ नष्टं अन्तर्हितं ॥
द्वादशोऽध्यायः ॥
१२ ॥

---

अध्यय०१३
॥ श्रीः ॥
१.१३. अध्यायः १३

(अथास्तीकपर्व ॥ ५ ॥)
Mahabharata - Adi Parva - Chapter Topics

आस्तीकजरत्कार्वोराख्यानं ॥ १ ॥
जरत्कारोस्तत्पितॄणां च संवादः ॥ २ ॥

Mahabharata - Adi Parva - Chapter Text

१-१३-० (१०७९)
शौनक उवाच। १-१३-०क्ष् (५९)
किमर्थं राजशार्दूलः स राजा जनमेजयः ।
सर्पसत्रेण सर्पाणां गतोऽन्तं तद्वदस्व मे ॥ १-१३-१ (१०८०)
निखिलेन यथातत्त्वं सौते सर्वमशेषतः ।
आस्तीकश्च द्विजश्रेष्ठः किमर्थं जपतां वरः ॥ १-१३-२ (१०८१)
मोक्षयामास भुजगान्प्रदीप्ताद्वसुरेतसः ।
कस्य पुत्रः स राजासीत्सर्पसत्रं य आहरत् ॥ १-१३-३ (१०८२)
स च द्विजातिप्रवरः कस्य पुत्रोऽभिधत्स्व मे। १-१३-४ (१०८३)
सौतिरुवाच ।
महदाक्यानमास्तीकं यथैतत्प्रोच्यते द्विज ॥ १-१३-४क्ष् (६०)
सर्वमेतदशेषेण शृणु मे वदतां वर। १-१३-५ (१०८४)
शौनक उवाच ।
श्रोतुमिच्छाम्यशेषेण कथामेतां मनोरमाम् ॥ १-१३-५क्ष् (६१)
आस्तीकस्य पुराणर्षेर्ब्राह्मणस्य यशस्विनः। १-१३-६ (१०८५)
सौतिरुवाच ।
इतिहासमिमं विप्राः पुराणं परिचक्षते ॥ १-१३-६क्ष् (६२)
कृष्णद्वैपायनप्रोक्तं नैमिषारण्यवासिषु ।
पूर्वं प्रचोदितः सूतः पिता मे लोमहर्षणः ॥ १-१३-७ (१०८६)
शिष्यो व्यासस्य मेधावी ब्राह्मणेष्विदमुक्तवान् ।
तस्मादहमुपश्रुत्य प्रवक्ष्यामि यथातथम् ॥ १-१३-८ (१०८७)
इदमास्तीकमाख्यानं तुभ्यं शौनक पृच्छते ।
कथयिष्याम्यशेषेण सर्वपापप्रणाशनम् ॥ १-१३-९ (१०८८)
आस्तीकस्य पिता ह्यासीत्प्रजापतिसमः प्रभुः ।
ब्रह्मचारी यताहारस्तपस्युग्रे रतः सदा ॥ १-१३-१० (१०८९)
जरत्कारुरिति ख्यात ऊर्ध्वरेता महातपाः ।
यायावराणां प्रवरो धर्मज्ञः संशितव्रतः ॥ १-१३-११ (१०९०)
स कदाचिन्महाभागस्तपोबलसमन्वितः ।
चचार पृथिवीं सर्वां यत्रसायंगृहो मुनिः ॥ १-१३-१२ (१०९१)
तीर्थेषु च समाप्लावं कुर्वन्नटति सर्वशः ।
चरन्दीक्षां महातेजा दुश्चरामकृतात्मभिः ॥ १-१३-१३ (१०९२)

वायुभक्षो निराहारः शुष्यन्ननिमिषो मुनिः ।
इतस्ततः परिचरन्दीप्तपावकसप्रभः ॥ १-१३-१४ (१०९३)
अटमानः कदाचित्स्वान्स ददर्श पितामहान् ।
लम्बमानान्महागर्ते पादैरूर्ध्वैरवाङ्मुखान् ॥ १-१३-१५ (१०९४)
तानब्रवीत्स दृष्ट्वै जरत्कारुः पितामहान् ।
के भवन्तोऽवलम्बन्ते गर्ते ह्यस्मिन्नधोमुखाः ॥ १-१३-१६ (१०९५)
वीरणस्तम्भके लग्नाः सर्वतः परिभक्षिते ।
मूषकेन निगूढेन गर्तेऽस्मिन्नित्यवासिना ॥ १-१३-१७ (१०९६)
पितर ऊचुः। १-१३-१८क्ष् (६३)
यायावरा नाम वयमृषयः संशितव्रताः ।
संतानप्रक्षयाद्ब्रह्मन्नधो गच्छाम मेदिनीम् ॥ १-१३-१८ (१०९७)
अस्माकं संततिस्त्वेको जरत्कारुरिति स्मृतः ।
मन्दभाग्योऽल्पभाग्यानां तप एकं समास्थितः ॥ १-१३-१९ (१०९८)
न स पुत्राञ्जनयितुं दारान्मूढश्चिकीर्षति ।
तेन लम्बामहे गर्ते संतानस्य क्षयादिह ॥ १-१३-२० (१०९९)
अनाथास्तेन नाथेन यथा दुष्कृतिनस्तथा ।
ग्येषां तु संततिर्नास्ति मर्त्यलोके सुखावहा ॥ १-१३-२१ (११००)
न ते लभन्ते वसतिं स्वर्गे पुण्यकृतोऽपि हि।'
कस्त्वं बन्धुरिवास्माकमनुशोचसि सत्तम ॥ १-१३-२२ (११०१)
ज्ञातुमिच्छामहे ब्रह्मन्को भवानिह नः स्थितः ।
किमर्थं चैव नः शोच्याननुशोचसि सत्तम ॥ १-१३-२३ (११०२)
जरत्कारुरुवाच। १-१३-२४क्ष् (६४)
मम पूर्वे भवन्तो वै पितरः सपितामहाः ।
ब्रूत किं करवाण्यद्य जरत्कारुरहं स्वयम् ॥ १-१३-२४ (११०३)
पितर ऊचुः। १-१३-२५क्ष् (६५)
यतस्व यत्नवांस्तात संतानाय कुलस्य नः ।
आत्मनोऽर्थेऽस्मदर्थे च धर्म इत्येव वा विभो ॥ १-१३-२५ (११०४)
न हि धर्मफलैस्तात न तपोऽभिः सुसंचितैः ।
तां गतिं प्राप्नुवन्तीह पुत्रिणो यां व्रजन्ति वै ॥ १-१३-२६ (११०५)
तद्दारग्रहणे यत्नं संतत्यां च मनः कुरु ।
पुत्रकास्मन्नियोगात्त्वमेतन्नः परमं हितम् ॥ १-१३-२७ (११०६)
जरत्कारुरुवाच। १-१३-२८क्ष् (६६)
न दारान्वै करिष्येऽहं न धनं जीवितार्थतः ।
भवतां तु हितार्थाय करिष्ये दारसंग्रहम् ॥ १-१३-२८ (११०७)
समयेन च कर्ताऽहमनेन विधिपूर्वकम् ।
तथा यद्युपलप्स्यामि करिष्ये नान्यथा ह्यहम् ॥ १-१३-२९ (११०८)

सनाम्नी या भवित्री मे दित्सिता चैव बन्धुभिः ।
भैक्ष्यवत्तामहं कन्यामुपयंस्ये विधानतः ॥ १-१३-३० (११०९)
दरिद्राय हि मे भार्यां को दास्यति विशेषतः ।
प्रतिग्रहीष्ये भिक्षां तु यदि कश्चित्प्रदास्यति ॥ १-१३-३१ (१११०)
एवं दारक्रियाहेतोः प्रयतिष्ये पितामहाः ।
अनेन विधिना शश्वन्न करिष्येऽहमन्यथा ॥ १-१३-३२ (११११)
तत्र चोत्पत्स्यते जन्तुर्भवतां तारणाय वै ।
शाश्वतं स्थानमासाद्य मोदन्तां पितरो मम ॥ ॥ १-१३-३३ (१११२)

इति श्रीमन्महाभारते आदिपर्वणि आस्तीकपर्वणि त्रयोदशोऽध्यायः ॥ १३ ॥
Mahabharata - Adi Parva - Chapter Footnotes

१-१३-११ यायावराणां ग्रामैकरात्रवासिनां गृहस्थानां ॥
१-१३-१२ सायंकालस्तत्रैव गृहमस्येति यत्रसायंगृहः ॥
१-१३-३० उपयंस्येपरिणेष्ये ॥
३० ॥
त्रयोदशोऽध्यायः ॥
१३ ॥

---

अध्यय०१४
॥ श्रीः ॥
१.१४. अध्यायः १४

Mahabharata - Adi Parva - Chapter Topics
वासुकिभगिन्या जरत्कारोर्विवाहः ॥ १ ॥

Mahabharata - Adi Parva - Chapter Text

१-१४-० (१११३)
सौतिरुवाच। १-१४-०क्ष् (६७)
ततो निवेशाय तदा स विप्रः संशितव्रतः ।
महीं चचार दारार्थी न च दारानविन्दत ॥ १-१४-१ (१११४)
स कदाचिद्वनं गत्वा विप्रः पितृवचः स्मरन् ।
चुक्रोश कन्याभिक्षार्थी तिस्रो वाचः शनैरिव ॥ १-१४-२ (१११५)
तं वासुकिः प्रत्यगृह्णादुद्यम्य भगिनीं तदा ।
न स तां प्रतिजग्राह न सनाम्नीति चिन्तयन् ॥ १-१४-३ (१११६)
सनाम्नीं चोद्यतां भार्यां गृह्णीयामिति तस्य हि ।

मनो निविष्टमभवज्जरत्कारोर्महात्मनः ॥१-१४-४ (१११७)
तमुवाच महाप्राज्ञो जरत्कारुर्महातपाः ।
किंनाम्नी भगिनीयं ते ब्रूहि सत्यं भुजंगम ॥१-१४-५ (१११८)
वासुकिरुवाच।१-१४-६क्ष् (६८)
जरत्कारो जरत्कारुः स्वसेयमनुजा मम ।
प्रतिगृह्णीष्व भार्यार्थे मया दत्तां सुमध्यमाम् ।
त्वदर्थं रक्षिता पूर्वं प्रतीच्छेमां द्विजोत्तम ॥ १-१४-६ (१११९)
सौतिरुवाच।१-१४-७क्ष् (६९)
एवमुक्त्वा ततः प्रादाद्भार्यार्थे वरवर्णिनीम् ।
स च तां प्रतिजग्राह विधिदृष्टेन कर्मणा ॥ ॥१-१४-७ (११२०)

इति श्रीमन्महाभारते आदिपर्वणि आस्तीकपर्वणि चतुर्दशोऽध्यायः ॥१४ ॥
Mahabharata - Adi Parva - Chapter Footnotes

१-१४-१ निवेशाय दारसंग्रहाय ॥
चतुर्दशोऽध्यायः ॥
१४ ॥

---

अध्यय०१५
॥ श्रीः ॥
१.१५. अध्यायः १५

Mahabharata - Adi Parva - Chapter Topics
आस्तीकोत्पत्तिः ॥ १ ॥
संक्षेपेण सर्पमोचनवृत्तान्तश्च ॥ २ ॥

Mahabharata - Adi Parva - Chapter Text

१-१५-० (११२१)
सौतिरुवाच।१-१५-०क्ष् (७०)
मात्रा हि भुजगाः शप्ताः पूर्वं ब्रह्मविदां वर ।
जनमेजयस्य वो यज्ञे धक्ष्यत्यनिलसारथिः ॥१-१५-१ (११२२)
तस्य शापस्य शान्त्यर्थं प्रददौ पन्नगोत्तमः ।
स्वसारमृषये तस्मै सुव्रताय महात्मने ॥१-१५-२ (११२३)
स च तां प्रतिजग्राह विधिदृष्टेन कर्मणा ।
आस्तीको नाम पुत्रश्च तस्यां जज्ञे महामनाः ॥१-१५-३ (११२४)
तपस्वी च महात्मा च वेदवेदाङ्गपारगः ।

समः सर्वस्य लोकस्य पितृमातृभयापहः ॥ १-१५-४ (११२५)
अथ दीर्घस्य कालस्य पाण्डवेयो नराधिपः ।
आजहार महायज्ञं सर्पसत्रमिति श्रुतिः ॥ १-१५-५ (११२६)
तस्मिन्प्रवृत्ते सत्रे तु सर्पाणामन्तकाय वै ।
मोचयामास ताञ्शापादास्तीकः सुमहातपाः ॥ १-१५-६ (११२७)
भ्रातॄंश्च मातुलांश्चैव तथैवान्यान्स पन्नगान् ।
पितॄंश्च तारयामास संतत्या तपसा तथा ॥ १-१५-७ (११२८)
व्रतैश्च विविधैर्ब्रह्मन्स्वाध्यायैश्चानृणोऽभवत् ।
देवांश्च तर्पयामास यज्ञैर्विविधदक्षिणैः ॥ १-१५-८ (११२९)
ऋषींश्च ब्रह्मचर्येम सन्तत्या च पितामहान् ।
अपहृत्य गुरं भारं पितॄणां संशितव्रतः ॥ १-१५-९ (११३०)
जरत्कारुर्गतः स्वर्गं सहितः स्वैः पितामहैः ।
आस्तीकं च सुतं प्राप्य धर्मं चानुत्तमं मुनिः ॥ १-१५-१० (११३१)
जरत्कारुः सुमहता कालेन स्वर्गमेयिवान् ।
एतदाख्यानमास्तीकं यथावत्कथितं मया ।
प्रब्रूहि भृगुशार्दूल किमन्यत्कथयामि ते ॥ ॥ १-१५-११ (११३२)

इति श्रीमन्महाभारते आदिपर्वणि आस्तीकपर्वणि पञ्चदशोऽध्यायः ॥ १५ ॥

---

अध्यय०१६
॥ श्रीः ॥
१.१६. अध्यायः १६

Mahabharata - Adi Parva - Chapter Topics
आस्तीकाख्यानविस्तरः ॥ १ ॥
कद्रूविनतयोः कश्यपाद्वरलाभः ॥ २ ॥
कद्रवाः सर्पोत्पत्तिर्विनताया अरुणोत्पत्तिश्च ॥ ३ ॥

Mahabharata - Adi Parva - Chapter Text

१-१६-० (११३३)
शौनक उवाच। १-१६-०क्ष् (७१)
सौते त्वं कथयस्वेमां विस्तरेण कथां पुनः ।
आस्तीकस्य कवेःसाधोः शुश्रूषा परमा हिनः ॥ १-१६-१ (११३४)
मधुरं कथ्यते सौम्य श्लक्ष्णाक्षरपदं त्वया ।
प्रीयामहे भृशं तात पितेवेदं प्रभाषसे ॥ १-१६-२ (११३५)

अस्मच्छुश्रूषणे नित्यं पिता हि निरतस्तव ।
आचष्टैतद्यथाऽऽख्यानं पिता तेत्वं तथा वद ॥ १-१६-३ (११३६)
सौतिरुवाच। १-१६-४क्ष् (७२)
आयुष्मन्निदमाख्यानमास्तीकं कथयामि ते ।
यथाश्रुतं कथयतः सकाशाद्वै पितुर्मया ॥ १-१६-४ (११३७)
पुरा देवयुगे ब्रह्मन्प्रजापतिसुते शुभे ।
आस्तां भगिन्यौ रूपेण समुपेतेऽद्भुतेऽनघ ॥ १-१६-५ (११३८)
ते भार्ये कश्यपस्यास्तां कद्रूश्च विनता च ह ।
प्रादात्ताभ्यां वरं प्रीतः प्रजापतिसमः पतिः ॥ १-१६-६ (११३९)
कश्यपो धर्मपत्नीभ्यां मुदा परमया युतः ।
वरातिसर्गं श्रुत्वैवं कश्यपादुत्तमं च ते ॥ १-१६-७ (११४०)
हर्षादप्रतिमां प्रीतिं प्रापतुः स्म वरस्त्रियौ ।
वव्रे कद्रूः सुतान्नागान्सहस्रं तुल्यवर्चसः ॥ १-१६-८ (११४१)
द्वौ पुत्रौ विनता वव्रे कद्रूपुत्राधिकौ बले ।
तेजसा वपुषा चैव विक्रमेणाधिकौ च तौ ॥ १-१६-९ (११४२)
तस्यै भर्ता वरं प्रादादीदृसौ ते भविष्यतः ।
एवमस्त्विति तं चाह कश्यपं विनता तदा ॥ १-१६-१० (११४३)
यथावत्प्रार्थितं लब्ध्वा वरं तुष्टाभवत्तदा ।
कृतकृत्या तु विनता लब्ध्वा वीर्याधिकौ सुतौ ॥ १-१६-११ (११४४)
कद्रूश्च लब्ध्वा पुत्राणां सहस्रं तुल्यवर्चसाम् ।
धार्यौ प्रयत्नतो गर्भावित्युक्त्वा स महातपाः ॥ १-१६-१२ (११४५)
ते भार्ये वरसंतुष्टे कश्यपो वनमाविशत्। १-१६-१३ (११४६)
सौतुरिवाच ।
कालेन महता कद्रूरण्डानां दशतीर्दश ॥ १-१६-१३क्ष् (७३)
जनयामास विप्रेन्द्र द्वे चाण्डे विनता तदा ।
तयोरण्डानि निदधुः प्रहृष्टाः परिचारिकाः ॥ १-१६-१४ (११४७)
सोपस्वेदेषु भाण्डेषु पञ्चवर्षशतानि च ।
ततः पञ्चशते काले कद्रूपुत्रा विनिःसृताः ॥ १-१६-१५ (११४८)
अण्डाभ्यां विनतायास्तु मिथुनं न व्यदृश्यत ।
ततः पुत्रार्थिनी देवी व्रीडिता च तपस्विनी ॥ १-१६-१६ (११४९)
अण्डं बिभेद विनता तत्र पुत्रमपश्यत ।
पूर्वार्धकायसंपन्नमितरेणाप्रकाशता ॥ १-१६-१७ (११५०)
स पुत्रः क्रोधसंरब्धः शशापैनामिति श्रुतिः ।
योऽहमेवं कृतो मातस्त्वया लोभपरीतया ॥ १-१६-१८ (११५१)
शरीरेणासमग्रेण तस्माद्दासी भविष्यसि ।
पञ्च वर्षशतान्यस्या यया विस्पर्धसे सह ॥ १-१६-१९ (११५२)

एष च त्वां सुतो मातर्दासीत्वान्मोचयिष्यति ।
यद्येनमपि मातस्त्वं मामिवाण्डविभेदनात् ॥ १-१६-२० (११५३)
न करिष्यस्यनङ्गं वा व्यङ्गं वापि तपस्विनम् ।
प्रतिपालयितव्यस्ते जन्मकालोऽस्य धीरया ॥ १-१६-२१ (११५४)
विशिष्टं बलमीप्सन्त्या पञ्चवर्षशतात्परः ।
एवं शप्त्वा ततः पुत्रो विनतामन्तरिक्षगः ॥ १-१६-२२ (११५५)
अरुणोऽदृश्यत ब्रह्मन्प्रभातसमये तदा ।
ग्उद्यन्नथ सहस्रांशुर्दृष्ट्वा तमरुणं प्रभुः ॥ १-१६-२३ (११५६)
स्वतेजसा प्रज्वलन्तमात्मनः समतेजसम् ।
सारथ्ये कल्पयामास प्रीयमाणस्तमोनुदः ॥ १-१६-२४ (११५७)
सोऽपि तं रथमारुह्य भानोरमिततेजसः ।
सर्वलोकप्रदीपस्य ह्यमरोऽप्यरुणोऽभवत् ॥' १-१६-२५ (११५८)
गरुडोऽपि यथाकालं जज्ञे पन्नगभोजनः ।
स जातमात्रो विनतां परित्यज्य खमाविशत् ॥ १-१६-२६ (११५९)
आदास्यन्नात्मनो भोज्यमन्नं विहितमस्य यत् ।
विधात्रा भृगुशार्दूल क्षुधितः पतगेश्वरः ॥ ॥ १-१६-२७ (११६०)

इति श्रीमन्महाभारते आदिपर्वाणि आस्तीकपर्वणि षोडशोऽध्यायः ॥ १६ ॥

Mahabharata - Adi Parva - Chapter Footnotes

१-१६-१५ सोपस्वेदेषु ऊष्मवत्सु ॥
षोडशोऽध्यायः ॥
१६ ॥

---

अध्यय०१७
॥ श्रीः ॥
१.१७. अध्यायः १७

Mahabharata - Adi Parva - Chapter Topics
अमृतमथनविषये भगवदाज्ञया देवानां विचारः ॥ १ ॥

Mahabharata - Adi Parva - Chapter Text

१-१७-० (११६१)
सौतिरुवाच। १-१७-०क्ष् (७४)
एतस्मिन्नेव काले तु भगिन्यौ ते तपोधन ।
अपश्यतां समायान्तमुच्चैः श्रवसमन्तिकात् ॥ १-१७-१ (११६२)

यं तु देवगणाः सर्वे हृष्टरूपमपूजयन् ।
मथ्यमानेऽमृते जातमश्वरत्नमनुत्तमम् ॥ १-१७-२ (११६३)
अमोघबलमश्वानामुत्तमं जविनां वरम् ।
श्रीमन्तमजरं दिव्यं सर्वलक्षणपूजितम् ॥ १-१७-३ (११६४)
शौनक उवाच। १-१७-४क्ष् (७५)
कथं तदमृतं देवैर्मथितं क्व च शंस मे ।
ग्कारणं चात्र मथने संजातममृतात्परम् ॥'
यत्र जज्ञे महावीर्यः सोऽश्वराजो महाद्युतिः ॥ १-१७-४ (११६५)
सौतिरुवाच। १-१७-५क्ष् (७६)
ज्वलन्तमचलं मेरुं तेजोराशिमनुत्तमम् ।
आक्षिपन्तं प्रभां भानोः स्वशृङ्गैः काञ्चनोज्ज्वलैः ॥ १-१७-५ (११६६)
कनकाभरणं चित्रं देवगन्धर्वसेवितम् ।
अप्रमेयमनाधृष्यमधर्मबहुलैर्जनैः ॥ १-१७-६ (११६७)
व्यालैरावारितं घोरैर्दिव्यौषधिविदीपितम् ।
नाकमावृत्य तिष्ठन्तमुच्छ्रयेण महागिरिम् ॥ १-१७-७ (११६८)
अगम्यं मनसाप्यन्यैर्नदीवृक्षसमन्वितम् ।
नानापतगसङ्घैश्च नादितं सुमनोहरैः ॥ १-१७-८ (११६९)
तस्य शृङ्गमुपारुह्य बहुरत्नाचितं शुभम् ।
अनन्तकल्पमद्वन्द्वं सुराः सर्वे महौजसः ॥ १-१७-९ (११७०)
ते मन्त्रयितुमारब्धास्तत्रासीना दिवौकसः ।
अमृताय समागम्य तपोनियमसंयुताः ॥ १-१७-१० (११७१)
तत्र नारायणो देवो ब्रह्माणमिदमब्रवीत् ।
चिन्तयत्सु सुरेष्वेवं मन्त्रयत्सु च सर्वशः ॥ १-१७-११ (११७२)
देवैरसुरसङ्घैश्च मथ्यतां कलशोदधिः ।
भविष्यत्यमृतं तत्र मथ्यमाने महोदधौ ॥ १-१७-१२ (११७३)
सर्वौषधीः समावाप्य सर्वरत्नानि चैव ह ।
मन्थध्वयुदधिं देवा वेत्स्यध्वममृतं ततः ॥ ॥ १-१७-१३ (११७४)

इति श्रीमन्महाभारते आदिपर्वणि आस्तीकपर्वणि सप्तदशोऽध्यायः ॥ १७ ॥
Mahabharata - Adi Parva - Chapter Footnotes

१-१७-९ अनन्तकल्पं अनन्तो विष्णुराकाशो वात तत ईषन्न्यूनम् ॥
१-१७-१३ वेत्स्यध्वं लप्स्यध्वम् ॥
सप्तदशोऽध्यायः ॥
१७ ॥

---

अध्यय०१८

॥ श्रीः ॥

## १.१८. अध्यायः १८

Mahabharata - Adi Parva - Chapter Topics

मोहितैर्दैत्यैर्मोहिन्या अमृतकलशदानम् ॥ १ ॥

Mahabharata - Adi Parva - Chapter Text

१-१८-० (११७५)
सौतिरुवाच। १-१८-०क्ष् (७७)
ततोऽभ्रशिखराकारैर्गिरिशृङ्गैरलंकृतम् ।
मन्दरं पर्वतवरं लताजालसमाकुलम् ॥ १-१८-१ (११७६)
नानाविहंगसंघुष्टं नानादंष्ट्रिसमाकुलम् ।
किंनरैरप्सरोभिश्च देवैरपि च सेवितम् ॥ १-१८-२ (११७७)
एकादश सहस्राणि योजनानां समुच्छ्रितम् ।
अधोभूमेः सहस्रेषु तावत्स्वेव प्रतिष्ठितम् ॥ १-१८-३ (११७८)
तमुद्धर्तुमशक्ता वै सर्वे देवगणास्तदा ।
विष्णुमासीनमभ्येत्य ब्रह्माणं चेदमब्रुवन् ॥ १-१८-४ (११७९)
भवन्तावत्र कुरुतां बुद्धिं नैःश्रेयसीं पराम् ।
मन्दरोद्धरणे यत्नः क्रियतां च हिताय नः ॥ १-१८-५ (११८०)
सौतिरुवाच। १-१८-६क्ष् (७८)
तथेति चाब्रवीद्विष्णुर्ब्रह्मणा सह भार्गव ।
अचोदयदमेयात्मा फणीन्द्रं पद्मलोचनः ॥ १-१८-६ (११८१)
ततोऽनन्तः समुत्थाय ब्रह्मणा परिचोदितः ।
नारायणेन चाप्युक्तस्तस्मिन्कर्मणि वीर्यवान् ॥ १-१८-७ (११८२)
अथ पर्वतराजानं तमनन्तो महाबलः ।
उज्जहार बलाद्ब्रह्मन्सवनं सवनौकसम् ॥ १-१८-८ (११८३)
ततस्तेन सुराः सार्धं समुद्रमुपतस्थिरे ।
तमूचुरमृतस्यार्थे निर्मथिष्यामहे जलम् ॥ १-१८-९ (११८४)
अपांपतिरथोवाच ममाप्यंशो भवेत्ततः ।
सोढाऽस्मि विपुलं मर्दं मन्दरभ्रमणादिति ॥ १-१८-१० (११८५)
ऊचुश्च कूर्मराजानमकूपारे सुरासुराः ।
अधिष्ठानं गिरेरस्य भवान्भवितुमर्हति ॥ १-१८-११ (११८६)
कूर्मेण तु तथेत्युक्त्वा पृष्ठमस्य समर्पितम् ।
तं शैलं तस्य पृष्ठस्थं वज्रेणेन्द्रोऽभ्यपीडयत् ॥ १-१८-१२ (११८७)
मन्थानं मन्दरं कृत्वा तथा योक्त्रं च वासुकिम् ।

देवा मथितुमारब्धाः समुद्रं निधिमम्भसाम् ।
अमृतार्थे पुरा ब्रह्मस्तथैवासुरदानवाः ॥ १-१८-१३ (११८८)
एकमन्तमुपाश्लिष्टा नागराज्ञो महासुराः ॥ १-१८-१४ (११८९)
विबुधाः सहिताः सर्वे यतः पुच्छं ततः स्थिताः ।
अनन्तो भगवान्देवो यतो नारायणः स्थितः ॥ १-१८-१५ (११९०)
ग्वासुकेरग्रमाश्लिष्टा नागराज्ञो महासुराः।'
शिर उत्क्षिप्य नागस्य पुनः पुनरवाक्षिपन् ॥ १-१८-१६ (११९१)
वासुकेरथ नागस्य सहसा क्षिप्यतोऽसुरैः ।
सधूमाः सार्चिषो वाता निष्पेतुरसकृन्मुखात् ॥ १-१८-१७ (११९२)
ग्वासुकेर्मथ्यमानस्य निःसृतेन विषेण च ।
अभवन्मिश्रितं तोयं तदा भार्गवनन्दन ॥ १-१८-१८ (११९३)
मथनान्मन्दरेणाथ देवदानवबाहुभिः ।
विषं तीक्ष्णं समुद्भूतं हालाहलमिति श्रुतम् ॥ १-१८-१९ (११९४)
देवाश्च दानवाश्चैव दग्धाश्चैव विषेण ह ।
अपाक्रामंस्ततो भीता विषादमगमंस्तदा ॥ १-१८-२० (११९५)
ब्रह्माणमब्रुवन्देवाः समेत्य मुनिपुंगवैः ।
मथ्यमानेऽमृते जातं विषं कालानलप्रभम् ॥ १-१८-२१ (११९६)
तेनैव तापिता लोकास्तस्य प्रतिकुरुष्वह ।
एवमुक्तस्तदा ब्रह्मा दध्यौ लोकेश्वरं हरम् ॥ १-१८-२२ (११९७)
त्र्यक्षं त्रिशूलिनं रुद्रं देवदेवमुमापतिम् ।
तदाऽथ चिन्तितो देवस्तज्ज्ञात्वा द्रुतमाययौ ॥ १-१८-२३ (११९८)
तस्याथ देवस्तत्सर्वमाचचक्षे प्रजापतिः ।
तच्छ्रुत्वा दवेदेवेशो लोकस्यास्य हितेप्सया ॥ १-१८-२४ (११९९)
अपिबत्तद्विषं रुद्रः कालानलसमप्रभम् ।
कण्ठे स्थापितवान्देवो लोकानां हितकाम्यया ॥ १-१८-२५ (१२००)
यस्मात्तु नीलता कण्ठे नीलकण्ठस्ततः स्मृतः ।
पीतमात्रे विषे तत्र रुद्रेणामिततेजसा ॥ १-१८-२६ (१२०१)
देवाः प्रीताः पुनर्जग्मुश्चक्रुर्वै कर्म तत्तथा ।
मथ्यमानेऽमृतस्यार्थे भूयो वै देवदानवैः ॥ १-१८-२७ (१२०२)
वासुकेरथ नागस्य सहसा क्षिप्यतोऽसुरैः ।
सधूमाः सार्चिषो वाता निष्पेतुरसकृन्मुखात् ॥' १-१८-२८ (१२०३)
ते धूमसङ्घाः संभूता मेघसङ्घाः सविद्युतः ।
अभ्यवर्षन्सुरगणाञ्श्रमसंतापकर्शितान् ॥ १-१८-२९ (१२०४)
तस्माच्च गिरिकूटाग्रात्प्रच्युताः पुष्पवृष्टयः ।
सुरासुरगणान्सर्वान्समन्तात्समवाकिरन् ॥ १-१८-३० (१२०५)
बभूवात्र महान्नादो महामेघरवोपमः ।

उदधेर्मथ्यमानस्य मन्दरेण सुरासुरैः ॥१-१८-३१ (१२०६)
तत्र नानाजलचरा विनिष्पिष्टा महाद्रिणा ।
विलयं समुपाजग्मुः शतशो लवणाम्भसि ॥१-१८-३२ (१२०७)
वारुणानि च भूतानि विविधानि महीधरः ।
पातालतलवासीनि विलयं समुपानयत् ॥१-१८-३३ (१२०८)
तस्मिंश्च भ्राम्यमाणेऽद्रौ संघृष्यन्तः परस्परम् ।
न्यपतन्पतगोपेताः पर्वताग्रान्महाद्रुमाः ॥१-१८-३४ (१२०९)
तेषां संघर्षजश्चाग्निरर्चिर्भिः प्रज्वलन्मुहुः ।
विद्युद्भिरिव नीलाभ्रमावृणोन्मन्दरं गिरिम् ॥१-१८-३५ (१२१०)
ददाह कुञ्जरांस्तत्र सिंहांश्चैव विनिर्गतान् ।
विगतासूनि सर्वाणि सत्त्वानि विविधानि च ॥१-१८-३६ (१२११)
तमग्निममरश्रेष्ठः प्रदहन्तमितस्ततः ।
वारिणा मेघजेनेन्द्रः शमयामास सर्वशः ॥१-१८-३७ (१२१२)
ततो नानाविधास्तत्र सुस्रुवुः सागराम्भसि ।
महाद्रुमाणां निर्यासा बहवश्चौषधीरसाः ॥१-१८-३८ (१२१३)
तेषाममृतवीर्याणां रसानां पयसैव च ।
अमरत्वं सुरा जग्मुः काञ्चनस्य च निःस्रवात् ॥१-१८-३९ (१२१४)
ततस्तस्य समुद्रस्य तज्जातमुदकं पयः ।
रसोत्तमैर्विमिश्रं च ततः क्षीरादभूद्घृतम् ॥१-१८-४० (१२१५)
ततो ब्रह्माणमासीनं देवा वरदमब्रुवन् ।
श्रान्ताः स्म सुभृशं ब्रह्मन्नोद्भवत्यमृतं च तत् ॥१-१८-४१ (१२१६)
ऋते नारायणं देवं सर्वेऽन्ये देवदानवाः ।
चिरारब्धमिदं चापि सागरस्यापि मन्थनम् ॥१-१८-४२ (१२१७)
ग्लानिरस्मान्समाविष्टा न चात्रामृतमत्थितम्। १-१८-४३ (१२१८)
सौतिरुवाच ।
देवानां वचनं श्रुत्वा ब्रह्मा लोकपितामहः'॥ १-१८-४३क्ष् (७९)
ततो नारायणं देवं वचनं चेदमब्रवीत् ।
विधत्स्वैषां बलं विष्णो भवानत्र परायणम् ॥१-१८-४४ (१२१९)
विष्णुरुवाच। १-१८-४५क्ष् (८०)
बलं ददामि सर्वेषां कर्मैतद्ये समास्थिताः ।
क्षोभ्यतां कलशः सर्वैर्मन्दरः परिवर्त्यताम् ॥१-१८-४५ (१२२०)
सौतिरुवाच। १-१८-४६क्ष् (८१)
नारायणवचः श्रुत्वा बलिनस्ते महोदधेः ।
तत्पयः सहिता भूयश्चक्रिरे भृशमाकुलम् ॥१-१८-४६ (१२२१)
ग्तत्र पूर्वं विषं जातं तद्ब्रह्मवचनाच्छिवः ।
प्राग्रसल्लोकरक्षार्थं ततो ज्येष्ठा समुत्थिता ।

कृष्णरूपधरा देवी सर्वाभरणभूषिता ॥' १-१८-४७ (१२२२)
ततः शतसहस्रांशुर्मथ्यमानात्तु सागरात् ।
प्रसन्नात्मा समुत्पन्नः सोमः शीतांशुरुज्ज्वलः ॥१-१८-४८ (१२२३)
श्रीरनन्तरमुत्पन्ना घृतात्पाण्डुरवासिनी ।
सुरा देवी समुत्पन्ना तुरगः पाण्डुरस्तथा ॥१-१८-४९ (१२२४)
कौस्तुभस्तु मणिर्दिव्य उत्पन्नो घृतसंभवः ।
मरीचिविकचः श्रीमान्नारायणउरोगतः ॥१-१८-५० (१२२५)
श्रीः सुरा चैव सोमश्च तुरगश्च मनोजवः ।
ग्पारिजातश्च तत्रैव सुरभिश्च महामुने ।
जज्ञाते तौ तदा ब्रह्मन्सर्वकामफलप्रदौ ॥ १-१८-५१ (१२२६)
ततो जज्ञे महाकायश्चतुर्दन्तो महागजः ।
कपिला कामवृक्षश्च कौस्तुभश्चाप्सरोगणः।'
यतो देवास्ततो जग्मुरादित्यपथमाश्रिताः ॥ १-१८-५२ (१२२७)
धन्वन्तरिस्ततो देवो वपुष्मानुदतिष्ठत ।
श्वेतं कमण्डलुं बिभ्रदमृतं यत्र तिष्ठति ॥१-१८-५३ (१२२८)
एतदत्यद्भुतं दृष्ट्वा दानवानां समुत्थितः ।
अमृतार्थे महान्नादो ममेदमिति जल्पताम् ॥१-१८-५४ (१२२९)
ततो नारायणो मायां मोहिनीं समुपाश्रितः ।
स्त्रीरूपमद्भुतं कृत्वा दानवानभिसंश्रितः ॥१-१८-५५ (१२३०)
ततस्तदमृतं तस्यै ददुस्ते मूढचेतसः ।
स्त्रियै दानवदैतेयाः सर्वे तद्गतमानसाः ॥१-१८-५६ (१२३१)
ग्सा तु नारायणी माया धारयन्ती कमण्डलुम् ।
आस्यमानेषु दैत्येषु पङ्क्त्या च प्रति दानवैः ॥१-१८-५७ (१२३२)
देवानपाययद्देवी न दैत्यांस्ते च चुक्रुशुः ॥ ॥ १-१८-५८ (१२३३)

इति श्रीमन्महाबारते आदिपर्वणि आस्तीकपर्वणि अष्टादशोऽध्यायः ॥१८ ॥
Mahabharata - Adi Parva - Chapter Footnotes

१-१८-११ अकूपारे समुद्रसमीपे ।अधिष्ठानं आधारः ॥
१-१८-१२ तु तथेत्युक्ते पृष्ठे त्वस्य समर्पितः ।सशैलस्तस्य चाग्रं वै वज्रेणेन्द्रोऽभ्यपीडयत्।इति पाठान्तरं ॥
१-१८-१३ योक्त्रं मन्थनरज्जुम् ॥
१-१८-१४ एकमन्तं एकं प्रदेशं मुखभागम् ॥
१-१८-३३ वारुणानि वरुणलोकस्थानि आप्यांशप्रधानशरीराणि ॥
१-१८-४० लवणाम्भसि कुतो दुग्धमित्यत आह ।तत इति।ततः तेषां निःस्रवं प्राप्य।समुद्रस्य तत्क्षारं उदकं पयः क्षीरं जातम् ॥

१-१८-५० मरीचिविकचः रश्मिभिरुज्ज्वलः ।नारायणउरोगत इत्यसन्धिरार्षः ॥
१-१८-५५ अभिसंश्रितः संमुखः स्थितः मोहनार्थमिति शेषः ॥
अष्टादशोऽध्यायः ॥
१८ ॥

---

अध्यय०१९
॥ श्रीः ॥
१.१९. अध्यायः १९

Mahabharata - Adi Parva - Chapter Topics
देवानाममृतपानं ॥ १ ॥
देवरूपेणामृतं पिबतो राहोः शिरश्छेदनं ॥ २ ॥
देवदैत्ययोर्युद्धं ।तत्र दैत्यपराजयः ॥ ३ ॥

Mahabharata - Adi Parva - Chapter Text

१-१९-० (१२३४)
सौतिरुवाच। १-१९-०क्ष् (८२)
अथावरणमुख्यानि नानाप्रहरणानि च ।
प्रगृह्याभ्यद्रवन्देवान्सहिता दैत्यदानवाः ॥ १-१९-१ (१२३५)
ततस्तदमृतं देवो विष्णुरादाय वीर्यवान् ।
जहार दानवेन्द्रेभ्यो नरेण सहितः प्रभुः ॥ १-१९-२ (१२३६)
ततो देवगणाः सर्वे पपुस्तदमृतं तदा ।
विष्णोः सकाशात्संप्राप्य संभ्रमे तुमुले सति ॥ १-१९-३ (१२३७)
ग्पाययत्यमृतं देवान्हरौ बाहुबलान्नरः ।
निरोधयति चापेन दूरीकृत्य धनुर्धरान् ।
ये येऽमृतं पिबन्ति स्म ते ते युद्ध्यन्ति दानवैः;'॥ १-१९-४ (१२३८)
ततः पिबत्सु तत्कालं देवेष्वमृतमीप्सितम् ।
राहुर्विबुधरूपेण दानवः प्रापिबत्तदा ॥ १-१९-५ (१२३९)
तस्य कण्ठमनुप्राप्ते दानवस्यामृते तदा ।
आख्यातं चन्द्रसूर्याभ्यां सुराणां हितकाम्यया ॥ १-१९-६ (१२४०)
ततो भगवता तस्य शिरश्छिन्नमलंकृतम् ।
चक्रायुधेन चक्रेण पिबतोऽमृतमोजसा ॥ १-१९-७ (१२४१)
तच्छैलशृङ्गप्रङ्गिमं दानवस्य शिरो महत् ।
ग्चक्रेणोत्कृत्तमपतच्चालयद्वसुधातलम् ॥' १-१९-८ (१२४२)
चक्रच्छिन्नं खमुत्पत्य ननादातिभयंकरम् ।

तत्कबन्धं पपातास्य विस्फुरद्धरणीतले ॥ १-१९-९ (१२४३)
गत्रयोदश सहस्राणि चतुरश्रं समन्ततः ।
सपर्वतवनद्वीपां दैत्यस्याकम्पयन्महीम् ॥ १-१९-१० (१२४४)
ततो वैरविनिर्बन्धः कृतो राहुमुखेन वै ।
शाश्वतश्चन्द्रसूर्याभ्यां ग्रसत्यद्यापि चैव तौ ॥ १-१९-११ (१२४५)
विहाय भगवांश्चापि स्त्रीरूपमतुलं हरिः ।
नानाप्रहरणैर्भीमैर्दानवान्तमकम्पयत् ॥ १-१९-१२ (१२४६)
ततः प्रवृत्तः संग्रामः समीपे लवणाम्भसः ।
सुराणामसुराणां च सर्वघोरतरो महान् ॥ १-१९-१३ (१२४७)
प्रासाश्च विपुलास्तीक्ष्णा न्यपतन्त सहस्रशः ।
तोमराश्च सुतीक्ष्णाग्राः शस्त्राणि विविधानि च ॥ १-१९-१४ (१२४८)
ततोऽसुराश्चक्रभिन्ना वमन्तो रुधिरं बहु ।
असिशक्तिगदारुग्णा निपेतुर्धरणीतले ॥ १-१९-१५ (१२४९)
छिन्नानि पट्टिशैश्चैव शिरांसि युधि दारुणैः ।
तप्तकाञ्चनमालीनि निपेतुरनिशं तदा ॥ १-१९-१६ (१२५०)
रुधिरेणानुलिप्ताङ्गा निहताश्च महासुराः ।
अद्रीणामिव कूटानि धातुरक्तानि शेरते ॥ १-१९-१७ (१२५१)
आहाकारः समभवत्तत्र तत्र सहस्रशः ।
अन्योन्यंछिन्दतां शस्त्रैरादित्ये लोहितायति ॥ १-१९-१८ (१२५२)
परिघैरायसैस्तीक्ष्णैः सन्निकर्षे च मुष्टिभिः ।
निघ्नतां समरेऽन्योन्यं शब्दो दिवमिवास्पृशत् ॥ १-१९-१९ (१२५३)
छिन्धिभिन्धि प्रधाव त्वं पातयाभिसरेति च ।
व्यश्रूयन्त महाघोराः शब्दास्तत्र समन्ततः ॥ १-१९-२० (१२५४)
एवं सुतुमुले युद्धे वर्तमाने महाभये ।
नरनारायणौ देवौ समाजग्मतुराहवम् ॥ १-१९-२१ (१२५५)
तत्र दिव्यं धनुर्दृष्ट्वा नरस्य भगवानपि ।
चिन्तयामास तच्चक्रं विष्णुर्दानवसूदनम् ॥ १-१९-२२ (१२५६)
ततोऽम्बराच्चिन्तितमात्रमागतं
महाप्रभं चक्रममित्रतापनम् ।
विभावसोस्तुल्यमकुण्ठमण्डलं
सुदर्शनं संयति भीमदर्शनम् ॥ १-१९-२३ (१२५७)
तदागतं ज्वलितहुताशनप्रभं
भयंकरं करिकरबाहुरच्युतः ।
मुमोच वै प्रबलवदुग्रवेगवा-
न्महाप्रभं परनगरावदारणम् ॥ १-१९-२४ (१२५८)
तदन्तकज्वलनसमानवर्चसं

पुनःपुनर्न्यपतत वेगवत्तदा ।
विदारयद्दितिदनुजान्सहस्रशः
करेरितं पुरुषवरेण संयुगे ॥ १-१९-२५ (१२५९)
दहत्क्वचिज्ज्वलन इवावलेलिह-
त्प्रसह्य तानसुरगणान्न्यकृन्तत ।
प्रवेरितं वियति मुहुः क्षितौ तथा
पपौ रणे रुधिरमथो पिशाचवत् ॥ १-१९-२६ (१२६०)
तथाऽसुरा गिरिभिरदीनचेतसो
मुहुर्मुहुः सुरगणमार्दयंस्तदा ।
महाबला विगलितमेघवर्चसः
सहस्रशो गगनमभिप्रपद्यह ॥ १-१९-२७ (१२६१)
अथाम्बराद्भयजननाः प्रपेदिरे
सपादपा बहुविधमेघरूपिणः ।
महाद्रयः परिगलिताग्रसानवः
परस्परं द्रुतमभिहत्य सस्वनाः ॥ १-१९-२८ (१२६२)
ततो मही प्रविचलिता सकानना
महाद्रिपाताभिहता समन्ततः ।
परस्परं भृशमभिगर्जतां मुहू
रणाजिरे भृशमभिसंप्रवर्तिते ॥ १-१९-२९ (१२६३)
नरस्ततो वरकनकाग्रभूषणै-
र्महेषुभिर्गगनपथं समावृणोत् ।
विदारयन्गिरिशिखराणि पत्रिभि-
र्महाभयेऽसुरगणविग्रहे तदा ॥ १-१९-३० (१२६४)
ततो महीं लवणजलं च सागरं
महासुराः प्रविविशुरर्दिताः सुरैः ।
वियद्गतं ज्वलितहुताशनप्रभं
सुदर्शनं परिकुपितं निशाम्य ते ॥ १-१९-३१ (१२६५)
ततः सुरैर्विजयमवाप्य मन्दरः
स्वमेव देशं गमितः सुपूजितः ।
विनाद्य खं दिवमपि चैव सर्वश-
स्ततो गताः सलिलधरा यथागतम् ॥ १-१९-३२ (१२६६)
ततोऽमृतं सुनिहितमेव चक्रिरे
सुराः पुरां मुदमभिगम्य पुष्कलाम् ।
ददो च तं निधिममृतस्य रक्षितुं
किरीटिने बलभिदथामरैः सह ॥ ॥ १-१९-३३ (१२६७)

इति श्रीमन्महाभारते आदिपर्वणि आस्तीकपर्वणि एकोनविंशोऽध्यायः ॥ १९ ॥
Mahabharata - Adi Parva - Chapter Footnotes

१-१९-१ आवरणमुख्यानि कवचाग्र्याणि ॥
१-१९-३ संभ्रमे उभयेषाममृतादरे सति ।सङ्ग्रामे इति पाठान्तरं ॥
१-१९-२६ प्रवेरितं प्रेरितं ॥
१-१९-२७ विगलितमेघाः रिक्तमेघाः ॥
१-१९-३२ सलिलधराः अमृतभृतो देवाः ॥
१-१९-३३ किरीटिने नराय ॥
एकोनविंशोऽध्यायः ॥
१९ ॥

---

अध्यय०२०
॥ श्रीः ॥
१.२०. अध्यायः २०

Mahabharata - Adi Parva - Chapter Topics
कद्रूविनतयोः पणबन्धः ॥ १ ॥
सर्पाणां कद्रूशापः ॥ २ ॥
ब्रह्मणा कश्यपाय विषहरविद्यादानं ॥ ३ ॥

Mahabharata - Adi Parva - Chapter Text

१-२०-० (१२६८)
सौतिरुवाच। १-२०-०क्ष् (८३)
एतत्ते कथितं सर्वममृतं मथितं यथा ।
यत्र सोऽश्वः समुत्पन्नः श्रीमानतुलविक्रमः ॥ १-२०-१ (१२६९)
तं निशाम्य तदा कद्रूर्विनतामिदमब्रवीत् ।
उच्चैःश्रवा हि किंवर्णो भद्रे प्रब्रूहि मा चिरम् ॥ १-२०-२ (१२७०)
विनतोवाच। १-२०-३क्ष् (८४)
श्वेत एवाश्वराजोऽयं किं वा त्वं मन्यसे शुभे ।
ब्रूहि वर्णं त्वमप्यस्य ततोऽत्र विपणावहे ॥ १-२०-३ (१२७१)
कद्रूरुवाच। १-२०-४क्ष् (८५)
कृष्णवालमहं मन्ये हयमेनं शुचिस्मिते ।
एहि सार्धं मया दीव्य दासीभावाय भामिनि ॥ १-२०-४ (१२७२)
सौतिरुवाच। १-२०-५क्ष् (८६)
एवं ते समयं कृत्वा दासीभावाय वै मिथः ।

जग्मतुः स्वगृहानेव श्वो द्रक्ष्याव इति स्म ह ॥ १-२०-५ (१२७३)
ततः पुत्रसहस्रं तु कद्रूर्जिह्मं चिकीर्षती ।
आज्ञापयामास तदा वाला भूत्वाऽञ्जनप्रभाः ॥ १-२०-६ (१२७४)
आविशध्वं हयं क्षिप्रं दासी न स्यामहं यथा ।
नावपद्यन्त ये वाक्यं ताञ्शशाप भुजंगमान् ॥ १-२०-७ (१२७५)
सर्पसत्रे वर्तमाने पावको वः प्रधक्ष्यति ।
जनमेजयस्य राजर्षेः पाण्डवेयस्य धीमतः ॥ १-२०-८ (१२७६)
शापमेनं तु शुश्राव स्वयमेव पितामहः ।
अतिक्रूरं समुत्सृष्टं कद्रवा दैवादतीव हि ॥ १-२०-९ (१२७७)
सार्धं देवगणैः सर्वैर्वाचं तामन्वमोदत ।
बहुत्वं प्रेक्ष्य सर्पाणां प्रजानां हितकाम्यया ॥ १-२०-१० (१२७८)
तिग्मवीर्यविषा ह्येते दन्दशूका महाबलाः ।
तेषां तीक्ष्णविषत्वाद्धि प्रजानां च हिताय च ॥ १-२०-११ (१२७९)
युक्तं मात्रा कृतं तेषां परपीडोपसर्पिणाम् ।
अन्येषामपि सत्त्वानां नित्यं दोषपरास्तु ये ॥ १-२०-१२ (१२८०)
तेषां प्राणान्तिको दण्डो दैवेन विनिपात्यते ।
एवं संभाष्य देवस्तु पूज्य कद्रूं च तां तदा ॥ १-२०-१३ (१२८१)
आहूय कश्यपं देव इदं वचनमब्रवीत् ।
यदेते दन्दशूकाश्च सर्पा जातास्त्वयानघ ॥ १-२०-१४ (१२८२)
विषोल्बणा महाभोगा मात्रा शप्ताः परंतप ।
तत्र मन्युस्त्वया तात न कर्तव्यः कथंचन ॥ १-२०-१५ (१२८३)
दृष्टं पुरातनं ह्येतद्यज्ञे सर्पविनाशनम् ।
इत्युक्त्वा सृष्टिकृद्देवस्तं प्रसाद्य प्रजापतिम् ।
प्रादाद्विषहरीं विद्यां कश्यपाय महात्मने ॥ १-२०-१६ (१२८४)
गएवं शप्तेषु नागेषु कद्रवातु द्विजसत्तम ।
अद्विग्नः शापतस्तस्याः कद्रूं कर्कोटकोऽब्रवीत् ॥ १-२०-१७ (१२८५)
मातरं परमप्रीतस्तथा भुजगसत्तमः ।
आविश्य वाजिनं मुख्यं बालो भूत्वाञ्जनप्रभः ॥ १-२०-१८ (१२८६)
दर्शयिष्यामि तत्राहमात्मानं काममाश्वस ।
एवमस्त्विति सा पुत्रं प्रत्युवाच यशस्विनी'॥ ॥ १-२०-१९ (१२८७)

इति श्रीमन्महाभारते आदिपर्वणि आस्तीकपर्वणि विंशोऽध्यायः ॥ २० ॥

Mahabharata - Adi Parva - Chapter Footnotes

१-२०-३ विपणावहे पणं कुर्वहे ॥
१-२०-६ जिह्मं कौटिल्यं ।वालाः लोमानि ॥

१-२०-७ नावपद्यन्त नानुमोदितवन्तः ॥
विंशोऽध्यायः ॥
२० ॥

---

अध्यय०२१
॥ श्रीः ॥
१.२१. अध्यायः २१

Mahabharata - Adi Parva - Chapter Topics
उच्चैःश्रवसो दर्शार्थं कद्रूविनतयोर्गमनम् ॥ १ ॥

Mahabharata - Adi Parva - Chapter Text

१-२१-० (१२८८)
सौतिरुवाच। १-२१-०क्ष् (८७)
ततो रजन्यां व्युष्टायां प्रभातेऽभ्युदिते रवौ ।
कद्रूश्च विनता चैव भगिन्यौ ते तपोधन ॥ १-२१-१ (१२८९)
अमर्षिते सुसंरब्धे दास्ये कृतपणे तदा ।
ग्स्मगरस्य परं पारं वेलावनविभूषितम्।'
जग्मतुस्तुरगं द्रष्टुमुच्चैःश्रवसमन्तिकात् ॥ १-२१-२ (१२९०)
ददृशातेऽथ ते तत्र समुद्रं निधिमम्भसाम् ।
महान्तमुदकागाधं क्षोभ्यमाणं महास्वनम् ॥ १-२१-३ (१२९१)
तिमिंगिलझषाकीर्णं मकरैरावृतं तथा ।
सत्वैश्च बहुसाहस्रैर्नानारूपैः समावृतम् ॥ १-२१-४ (१२९२)
भीषणैर्विकृतैरन्यैर्घोरैर्जलचरैस्तथा ।
उग्रैर्नित्यमनाधृष्यं कूर्मग्राहसमाकुलम् ॥ १-२१-५ (१२९३)
आकरं सर्वरत्नानामालयं वरुणस्य च ।
नागानामालयं रम्यमुत्तमं सरितां पतिम् ॥ १-२१-६ (१२९४)
पातालज्वलनावासमसुराणां च बान्धवम् ।
भयंकरं च सत्त्वानां पयसां निधिमर्णवम् ॥ १-२१-७ (१२९५)
शुभं दिव्यममर्त्यानाममृतस्याकरं परम् ।
अप्रमेयमचिन्त्यं च सुपुण्यजलमद्भुतम् ॥ १-२१-८ (१२९६)
घोरं जलचरारावरौद्रं भैरवनिःस्वनम् ।
गम्भीरावर्तकलिलं सर्वभूतभयंकरम् ॥ १-२१-९ (१२९७)
वेलादोलानिलचलं क्षोभोद्वेगसमुच्छ्रितम् ।
वीचीहस्तैः प्रचलितैर्नृत्यन्तमिव सर्वतः ॥ १-२१-१० (१२९८)
चन्द्रवृद्धिक्षयवशादुद्वृत्तोर्मिसमाकुलम् ।

पाञ्चजन्यस्य जननं रत्नाकरमनुत्तमम् ॥ १-२१-११ (१२९९)
गां विन्दता भगवता गोविन्देनामितौजसा ।
वराहरूपिणा चान्तर्विक्षोभितजलाविलम् ॥ १-२१-१२ (१३००)
ब्रह्मर्षिणा व्रतवता वर्षाणां शतमत्रिणा ।
अनासादितगाधं च पातालतलमव्ययम् ॥ १-२१-१३ (१३०१)
अध्यात्मयोगनिद्रां च पद्मनाभस्य सेवतः ।
युगादिकालशयनं विष्णोरमिततेजसः ॥ १-२१-१४ (१३०२)
वज्रपातनसंत्रस्तमैनाकस्याभयप्रदम् ।
डिम्बाहवार्दितानां च असुराणां परायणम् ॥ १-२१-१५ (१३०३)
बडवामुखदीप्ताग्नेस्तोयहव्यप्रदं शिवम् ।
अगाधपारं विस्तीर्णमप्रमेयं सरित्पतिम् ॥ १-२१-१६ (१३०४)
महानदीभिर्बह्वीभिः स्पर्धयेव सहस्रशः ।
अभिसार्यमाणमनिशं ददृशाते महार्णवम् ।
आपूर्यमाणमत्यर्थं नृत्यमानमिवोर्मिभिः ॥ १-२१-१७ (१३०५)
गम्भीरं तिमिमकरोग्रसंकुलं तं
गर्जन्तं जलचररावरौद्रनादैः ।
विस्तीर्णं ददृशतुरम्बरप्रकाशं
तेऽगाधं निधिमुरुमम्भसामनन्तम् ॥ ॥ १-२१-१८ (१३०६)

इति श्रीमन्महाभारते आदिपर्वणि आस्तीकपर्वणि एकविंशतितमोऽध्यायः
॥ २१ ॥
Mahabharata - Adi Parva - Chapter Footnotes

१-२१-३ क्षोभ्यमाणं मकरादिभिः ॥
१-२१-७ पातालज्वलनो बडवाग्निः ॥
१-२१-१२ गां पृथ्वीं विन्दता लम्बमानेन ॥
१-२१-१५ डिम्बो भयवतामाक्रन्दस्तद्वति आहवे ॥
१-२१-१८ ते कद्रूविनते ॥
एकविंशतितमोऽध्यायः ॥
२१ ॥

---

अध्यय०२२
॥ श्रीः ॥
१.२२. अध्यायः २२

Mahabharata - Adi Parva - Chapter Topics
सर्पैर्मातृवचनादुच्चैःश्रवःपुच्छवेष्टनम् ॥ १ ॥

१-२२-० (१३०७)
सौतिरुवाच। १-२२-०क्ष् (८८)
नागाश्च संविदं कृत्वा कर्तव्यमिति तद्वचः ।
निःस्नेहा वै दहेन्माता असंप्राप्तमनोरथा ॥ १-२२-१ (१३०८)
प्रसन्ना मोक्षयेदस्मांस्तस्माच्छापाच्च भामिनी ।
कृष्णं पुच्छं करिष्यामस्तुरगस्य न संशयः ॥ १-२२-२ (१३०९)
ग्इति निश्चित्य ते तस्य कृष्णा वाला इव स्थिताः।'
एतस्मिन्नन्तरे ते तु सपत्न्यौ पणिते तदा ॥ १-२२-३ (१३१०)
ततस्ते पणितं कृत्वा भगिन्यौ द्विजसत्तम ।
जग्मतुः परया प्रीत्या परं पारं महोदधेः ॥ १-२२-४ (१३११)
कद्रूश्च विनता चैव दाक्षायण्यौ विहायसा ।
आलोकयन्त्यावक्षोभ्यं समुद्रं निधिमम्भसाम् ॥ १-२२-५ (१३१२)
वायुनाऽतीव सहसा क्षोभ्यमाणं महास्वनम् ।
तिमिंगिलसमाकीर्णं मकरैरावृतं तथा ॥ १-२२-६ (१३१३)
संयुतं बहुसाहस्रैः सत्वैर्नानाविधैरपि ।
घोरर्घोरमनाधृष्यं गम्भीरमतिभैरवम् ॥ १-२२-७ (१३१४)
आकरं सर्वरत्नानामालयं वरुणस्य च ।
नागानामालयं चापि सुरम्यं सरितां पतिम् ॥ १-२२-८ (१३१५)
पातालज्वलनावासमसुराणां तथालयम् ।
भयंकराणां सत्त्वानां पयसो निधिमव्ययम् ॥ १-२२-९ (१३१६)
शुभ्रं दिव्यममर्त्यानाममृतस्याकरं परम् ।
अप्रमेयमचिन्त्यं च सुपुम्यजलसंमितम् ॥ १-२२-१० (१३१७)
महानदीभिर्बह्वीभिस्तत्र तत्र सहस्रशः ।
आपूर्यमाणमत्यर्थं नृत्यन्तमिव चोर्मिभिः ॥ १-२२-११ (१३१८)
इत्येवं तरलतरोर्मिसंकुलं ते
गम्भीरं विकसितमम्बरप्रकाशम् ।
पातालज्वलनशिखाविदीपिताङ्गं
गर्जन्तं द्रुतमभिजग्मतुस्ततस्ते ॥ ॥ १-२२-१२ (१३१९)

इति श्रीमन्महाभारते आदिपर्वणि आस्तीकपर्वणि द्वाविंशोऽध्यायः ॥ २२ ॥



१-२२-१ संविदं मिथ आलोचनम् ॥

१-२२-३ पणिते पणं कृत वत्यौ ॥
३ ॥
द्वाविंशोऽध्यायः ॥
२२ ॥

---

अध्यय०२३
॥ श्रीः ॥
१.२३. अध्यायः २३

Mahabharata - Adi Parva - Chapter Topics
गरुडोत्पत्तिः ॥ १ ॥
देवकृतस्तुत्या गरुडकृतं स्वतेजस्संहरणम् ॥ २ ॥

Mahabharata - Adi Parva - Chapter Text

१-२३-० (१३२०)
सौतिरुवाच। १-२३-०क्ष् (८९)
तं समुद्रमतिक्रम्य कद्रूर्विनतया सह ।
न्यपतत्तुरगाभ्याशे न चिरादिव शीघ्रगा ॥ १-२३-१ (१३२१)
ततस्ते तं हयश्रेष्ठं ददृशाते महाजवम् ।
शशाङ्ककिरणप्रख्यं कालवालमुभे तदा ॥ १-२३-२ (१३२२)
निशाम्य च बहून्वालान्कृष्णान्पुच्छसमाश्रितान् ।
विषण्णरूपां विनतां कद्रूर्दास्ये न्ययोजयत् ॥ १-२३-३ (१३२३)
ततः सा विनता तस्मिन्पणितेन पराजिता ।
अभवद्दुःखसंतप्ता दासीभावं समास्थिता ॥ १-२३-४ (१३२४)
एतस्मिन्नन्तरे चापि गरुडः काल आगते ।
विना मात्रा महातेजा विदार्याण्डमजायत ॥ १-२३-५ (१३२५)
महासत्त्वबलोपेतः सर्वा विद्योतयन्दिशः ।
कामरूपः कामगमः कामवीर्यो विहंगमः ॥ १-२३-६ (१३२६)
अग्निराशिरिवोद्भासन्समिद्धोऽतिभयंकरः ।
विद्युद्विस्पष्टपिङ्गाक्षो युगान्ताग्निसमप्रभः ॥ १-२३-७ (१३२७)
प्रवृद्धः सहसा पक्षी महाकायो नभोगतः ।
घोरो घोरस्वनो रौद्रो वह्निरौर्व इवापरः ॥ १-२३-८ (१३२८)
तं दृष्ट्वा शरणं जग्मुर्देवाः सर्वे विभावसुम् ।
प्रमिपत्याब्रुवंश्चैनमासीनं विश्वरूपिणम् ॥ १-२३-९ (१३२९)
अग्ने मा त्वं प्रवर्धिष्ठाः कच्चिन्नो न दिधक्षसि ।
असौ हि राशिः सुमहान्समिद्धस्तव सर्पति ॥ १-२३-१० (१३३०)

अग्निरुवाच। १-२३-११क्ष् (९०)
नैतदेवं यथा यूयं मन्यध्वमसुरार्दनाः ।
गरुडो बलवानेष मम तुल्यश्च तेजसा ॥ १-२३-११ (१३३१)
जातः परमतेजस्वी विनतानन्दवर्धनः ।
तेजोराशिमिमं दृष्ट्वा युष्मान्मोहः समाविशत् ॥ १-२३-१२ (१३३२)
नागक्षयकरश्चै काश्यपेयो महाबलः ।
देवानां च हिते युक्तस्त्वहितो दैत्यरक्षसाम् ॥ १-२३-१३ (१३३३)
न भीः कार्या कथं चात्र पश्यध्वं सहिता मया। १-२३-१४ (१३३४)
सौतिरुवाच ।
एवमुक्तास्तदा गत्वा गरुडं वाग्भिरस्तुवन् ॥ १-२३-१४क्ष् (९१)
ते दूरादभ्युपेत्यैनं देवाः सर्षिगणास्तदा। १-२३-१५ (१३३५)
देवा ऊचुः ।
त्वमृषिस्त्वं महाभागस्त्वं देवः पतगेश्वरः ॥ १-२३-१५क्ष् (९२)
त्वं प्रभुस्तपनः सूर्यः परमेष्ठी प्रजापतिः ।
त्वमिन्द्रस्त्वं हयमुखस्त्वं शर्वस्त्वं जगत्पतिः ॥ १-२३-१६ (१३३६)
त्वं मुखं पद्मजो विप्रस्त्वमग्निः पवनस्तथा ।
त्वं हि धाता विधाता च त्वं विष्णुः सुरसत्तमः ॥ १-२३-१७ (१३३७)
त्वं महानभिभूः शश्वदमृतं त्वं महद्यशः ।
त्वं प्रभास्त्वमभिप्रेतं त्वं नस्त्राणमनुत्तमम् ॥ १-२३-१८ (१३३८)
ग्त्वं गतिः सततं त्वत्तः कथं नः प्राप्नुयाद्भयम्।'
बलोर्मिमान्साधुरदीनसत्त्वः
समृद्धिमान्दुर्विषहस्त्वमेव ।
त्वत्तः सृतं सर्वमहीनकीर्ते
ह्यनागतं चोपगतं च सर्वम् ॥ १-२३-१९ (१३३९)
त्वमुत्तमः सर्वमिदं चराचरं
गभस्तिभिर्भानुरिवावभाससे ।
समाक्षिपन्भानुमतः प्रभां मुहु-
स्त्वमन्तकः सर्वमिदं ध्रुवाध्रुवम् ॥ १-२३-२० (१३४०)
दिवाकरः परिकुपितो यथा दहे-
त्प्रजास्तथा दहसि हुताशनप्रभ ।
भयंकरः प्रलय इवाग्निरुत्थितो
विनाशयन्युगपरिवर्तनान्तकृत् ॥ १-२३-२१ (१३४१)
खगेश्वरं शरणमुपागता वयं
महौजसं ज्वलनसमानवर्चसम् ।
तडित्प्रभं वितिमिरमभ्रगोचरं
महाबलं गरुडमुपेत्य खेचरम् ॥ १-२३-२२ (१३४२)

परावरं वरदमजय्यविक्रमं
तवौजस सर्वमिदं प्रतापितम् ।
जगत्प्रभो तप्तसुवर्णवर्चसा
त्वं पाहि सर्वांश्च सुरान्महात्मनः ॥ १-२३-२३ (१३४३)
भयान्विता नभसि विमानगामिनो
विमानिता विपथगतिं प्रयान्ति ते ।
ऋषेः सुतस्त्वमसि दयावतः प्रभो
महात्मनः खगवर कश्यपस्य ह ॥ १-२३-२४ (१३४४)
स मा क्रुधः कुरु जगतो दयां परां
त्वमीश्वरः प्रशममुपैहि पाहि नः ।
महाशनिस्फुरितसमस्वनेन ते
दिशोऽम्बरं त्रिदिवमियं च मेदिनी ॥ १-२३-२५ (१३४५)
चलन्ति नः खग हृदयानि चानिशं
निगृह्यतां वपुरिदमग्निसन्निभम् ।
तव द्युतिं कुपितकृतान्तसन्निभां
निशाम्य नश्चलति मनोऽव्यवस्थितम् ।
प्रसीद नः पतगते प्रयाचतां
शिवश्च नो भव भगवन्सुखावहः ॥ १-२३-२६ (१३४६)
सौतिरुवाच। १-२३-२७क्ष् (९३)
एवं स्तुतः सुपर्णस्तु देवैः सर्षिगणैस्तदा ।
तेजसः प्रतिसंहारमात्मनः स चकार ह ॥ ॥ १-२३-२७ (१३४७)

इति श्रीमन्महाभारते आदिपर्वणि आस्तीकपर्वणि त्रयोविंशोऽध्यायः ॥ २३ ॥
Mahabharata - Adi Parva - Chapter Footnotes

१-२३-२ शशाङ्ककिरणवत्प्रख्या दीप्तिर्यस्य तं तादृशमपि
कालवालं कृष्णकेशम् ॥
१-२३-८ और्वो वडवाग्निः ॥
१-२३-९ विभावसुं अग्निम् ॥
१-२३-१० अग्ने मात्वमिति देवानां भ्रमवर्णनं अग्निगरुडयोरति
सादृश्यकथनार्थम् ॥
१-२३-२५ चलन्तीत्युत्तरादपकृष्यते ॥
१-२३-२६ निगृत्यतां संक्षिप्यताम् ॥
त्रयोविंशोऽध्यायः ॥
२३ ॥

---

अध्यय०२४

॥ श्रीः ॥
१.२४. अध्यायः २४

Mahabharata - Adi Parva - Chapter Topics
राहुणा कृतोपद्रवस्य सूर्यस्य क्रोधः ॥ १ ॥
ब्रह्माज्ञयाऽरुणस्य सूर्यसारथ्यकरणम् ॥ २ ॥

Mahabharata - Adi Parva - Chapter Text

१-२४-० (१३४८)
सौतिरुवाच। १-२४-०क्ष् (९४)
स श्रुत्वाऽथात्मनो देहं सुपर्णः प्रेक्ष्य च स्वयम् ।
शरीरप्रतिसंहारमात्मनः संप्रचक्रमे ॥ १-२४-१ (१३४९)
सुपर्ण उवाच। १-२४-२क्ष् (९५)
न मे सर्वाणि भूतानि विभियुर्देहदर्शनात् ।
भीमरूपात्समुद्विग्नास्तस्मात्तेजस्तु संहरे ॥ १-२४-२ (१३५०)
सौतिरुवाच। १-२४-३क्ष् (९६)
ततः कामगमः पक्षी कामवीर्यो विहंगमः ।
अरुणं चात्मनः पृष्ठमारोप्य स पितुर्गृहात् ॥ १-२४-३ (१३५१)
मातुरन्तिकमागच्छत्परं तीरं महोदधेः ।
तत्रारुणश्च निक्षिप्तो पुरोदेशे महाद्युतेः ॥ १-२४-४ (१३५२)
सूर्यस्तेजोभिरत्युग्रैर्लोकान्दग्धुमना यदा। १-२४-५ (१३५३)
रुरुरुवाच ।
किमर्थं भगवान्सूर्यो लोकान्दग्धुमनास्तदा ॥ १-२४-५क्ष् (९७)
किमस्तापहृतं देवैर्येनमं मन्युराविशत्। १-२४-६ (१३५४)
प्रमतिरुवाच ।
चन्द्रार्काभ्यां यदा राहुराख्यातो ह्यमृतं पिबन् ॥ १-२४-६क्ष् (९८)
वैरानुबन्धं कृतवांश्चन्द्रादित्यौ तदाऽनघ ।
बाध्यमानं ग्रहेणाथ ह्यादित्यं मन्युराविशत् ॥ १-२४-७ (१३५५)
सुरार्थाय समुत्पन्नो रोषो राहोस्तु मां प्रति ।
बह्वनर्थकरं पापमेकोऽहं समवाप्नुयाम् ॥ १-२४-८ (१३५६)
सहाय एव कार्येषु न च कृच्छ्रेषु दृश्यते ।
पश्यन्ति ग्रस्यमानं मां सहन्ते वै दिवौकसः ॥ १-२४-९ (१३५७)
तस्माल्लोकविनाशार्थं ह्यवतिष्ठे न संशयः ।
एवं कृतमतिः सूर्यो ह्यस्तमभ्यगमद्गिरिम् ॥ १-२४-१० (१३५८)
तस्माल्लोकविनाशाय संतापयत भास्करः ।

ततो देवानुपागम्य प्रोचुरेवं महर्षयः ॥१-२४-११ (१३५९)
आद्यार्धरात्रसमये सर्वलोकभयावहः ।
उत्पत्स्यते महान्दाहस्त्रैलोक्यस्य विनाशनः ॥१-२४-१२ (१३६०)
ततो देवाः सर्षिगणा उपगम्य पितामहम् ।
अब्रुवन्किमिवेहाद्य महद्दाहकृतं भयम् ॥१-२४-१३ (१३६१)
न तावद्दृश्यते सूर्यः क्षयोऽयं प्रतिभाति च ।
उदिते भगवन्भानौ कथमेतद्भविष्यति ॥१-२४-१४ (१३६२)
पितामह उवाच।१-२४-१५क्ष् (९९)
एष लोकविनाशाय रविरुद्यन्तुमुद्यतः ।
दृश्यन्नेव हि लोकान्स भस्मराशीकरिष्यति ॥१-२४-१५ (१३६३)
तस्य प्रतिविधानं च विहितं पूर्वमेव हि ।
कश्यपस्य सुतो धीमानरुणेत्यभिविश्रुतः ॥१-२४-१६ (१३६४)
महाकायो महातेजाः स स्थास्यति पुरो रवेः ।
करिष्यति च सारथ्यं तेजश्चास्य हरिष्यति ॥१-२४-१७ (१३६५)
लोकानां स्वस्ति चैवं स्यादृषीणां च दिवौकसाम्। १-२४-१८ (१३६६)
प्रमतिरुवाच ।
ततः पितामहाज्ञातः सर्वं चक्रे तदाऽरुणः ॥ १-२४-१८क्ष् (१००)
उदितश्चैव सविता ह्यरुणेन समावृतः ।
एतत्ते सर्वमाख्यातं यत्सूर्यं मन्युराविशत् ॥१-२४-१९ (१३६७)
अरुणश्च यथैवास्य सारथ्यमकरोत्प्रभुः ।
भूय एवापरं प्रश्नं शृणु पूर्वमुदाहृतम् ॥ ॥१-२४-२० (१३६८)

इति श्रीमन्महाभारते आदिपर्वणि आस्तीकपर्वणि चतुर्विंशोऽध्यायः ॥२४ ॥
Mahabharata - Adi Parva - Chapter Footnotes

१-२४-२ समुद्विग्नाः समुद्विग्नानि ॥
१-२४-७ चन्द्रादित्यौ प्रतीति शेषः ॥
१-२४-१२ किमुत सूर्ये उदिते इति शेः ॥
चतुर्विंशोऽध्यायः ॥
२४ ॥

---

अध्यय०२५
॥ श्रीः ॥
१.२५. अध्यायः २५

Mahabharata - Adi Parva - Chapter Topics
विनतया कद्रूवहनं गरुडेन सर्पवहनं च ॥१ ॥

सूर्यातपतप्तस्वपुत्ररक्षार्थं कद्रूकृत इन्द्रस्तवः ॥२ ॥

Mahabharata - Adi Parva - Chapter Text

१-२५-० (१३६९)
सौतिरुवाच। १-२५-०क्ष् (१०१)
ततः कामगमः पक्षी महावीर्यो महाबलः ।
मातुरन्तिकमागच्छत्परं पारं महोदधेः ॥ १-२५-१ (१३७०)
यत्र सा विनता तस्मिन्पणितेन पराजिता ।
अतीव दुःखसंतप्ता दासीभावमुपागता ॥ १-२५-२ (१३७१)
ततः कदाचिद्विनतां प्रणतां पुत्रसन्निधौ ।
काले चाहूय वचनं कद्रूरिदमभाषत ॥ १-२५-३ (१३७२)
नागानामालयं भद्रे सुरम्यं चारुदर्शनम् ।
समुद्रकुक्षावेकान्ते तत्र मां विनते नय ॥ १-२५-४ (१३७३)
सौतिरुवाच। १-२५-५क्ष् (१०२)
ततः सुपर्णमाता तामवहत्सर्पमातरम् ।
पन्नगान्गारुडश्चापि मातुर्वचनचोदितः ॥ १-२५-५ (१३७४)
स सूर्यमभितो याति वैनतेयो विहंगमः ।
सूर्यरश्मिप्रतप्ताश्च मूर्च्छिताः पन्नगाऽभवन् ॥ १-२५-६ (१३७५)
तदवस्थान्सुतान्दृष्ट्वा कद्रूः शक्रमथास्तुवत् ।
नमस्ते सर्वदेवेश नमस्ते बलसूदन ॥ १-२५-७ (१३७६)
नमुचिघ्न नमस्तेऽस्तु सहस्राक्ष शचीपते ।
सर्पाणां सूर्यतप्तानां वारिणा त्वं प्लवो भव ॥ १-२५-८ (१३७७)
त्वमेव परमं त्राणमस्माकममरोत्तम ।
ईशो असि पवः स्रष्टुं त्वमनल्पं पुरंदर ॥ १-२५-९ (१३७८)
त्वमेव मेघस्त्वं वायुस्त्वमग्निर्विद्युतोऽम्बरे ।
त्वमभ्रगणविक्षेप्ता त्वामेवाहुर्महाघनम् ॥ १-२५-१० (१३७९)
त्वं वज्रमतुलं घोरं घोषवांस्त्वं बलाहकः ।
स्रष्टा त्वमेव लोकानां संहर्ता चापराजितः ॥ १-२५-११ (१३८०)
त्वं ज्योतिः सर्वभूतानां त्वमादित्यो विभावसुः ।
त्वं महद्भूतमाश्चर्यं त्वं राजा त्वं सुरोत्तमः ॥ १-२५-१२ (१३८१)
त्वं विष्णुस्त्वं सहस्राक्षस्त्वं देवस्त्वं परायणम् ।
त्वं सर्वममृतं देव त्वं सोमः परमार्चितः ॥ १-२५-१३ (१३८२)
त्वं मुहूर्तस्तिथिस्त्वं च त्वं लवस्त्वं पुनः क्षणः ।
शुक्लस्त्वं बहुलस्त्वं च कला काष्ठा त्रुटिस्तथा ।
संवत्सरर्तवो मासा रजन्यश्च दिनानि च ॥ १-२५-१४ (१३८३)

त्वमुत्तमा सगिरिवना वसुंधरा
सभास्करं वितिमिरमम्बरं तथा ।
मदोदधिः सतिमितिमिङ्गिलस्तथा
महोर्मिमान्बहुमकरो झषाकुलः ॥ १-२५-१५ (१३८४)
महायशास्त्वमिति सदाऽभिपूज्यसे
मनीषिभिर्मुदितमना महर्षिभिः ।
अभिष्टुतः पिबसि च सोममध्वरे
कषड्कृतान्यपि च हवींषि भूतये ॥ १-२५-१६ (१३८५)
त्वं विप्रैः सततमिहेज्यसे फलार्थं
वेदाङ्गेष्वतुलबलौघ गीयसे च ।
त्वद्धेतोर्यजनपरायणा द्विजेन्द्रा
वेदाङ्गान्यभिगमयन्ति सर्वयत्नैः ॥ ॥ १-२५-१७ (१३८६)

इति श्रीमन्महाभारते आदिपर्वणि आस्तीकपर्वणि पञ्चविंशोऽध्यायः ॥ २५ ॥

Mahabharata - Adi Parva - Chapter Footnotes

१-२५-६ अभितः संमुखम् ॥
१-२५-१४ बहुलः कृष्णपक्षः ॥
पञ्चविंशोऽध्यायः ॥
२५ ॥

---

अध्यय०२६
॥ श्रीः ॥
१.२६. अध्यायः २६

Mahabharata - Adi Parva - Chapter Topics

स्तुत्या तुष्टेन इन्द्रेण कृतं जलवर्षणम् ॥ १ ॥

Mahabharata - Adi Parva - Chapter Text

१-२६-० (१३८७)
सौतिरुवाच। १-२६-०क्ष् (१०३)
एवं स्तुतस्तदा कद्रवा भगवान्हरिवाहनः ।
नीलजीमूतसंघातैः सर्वमम्बरमावृणोत् ॥ १-२६-१ (१३८८)
मेघानाज्ञापयामास वर्षध्वममृतं शुभम् ।
ते मेघा मुमुचुस्तोयं प्रभूतं विद्युदुज्ज्वलाः ॥ १-२६-२ (१३८९)
परस्परमिवात्यर्थं गर्जन्तः सततं दिवि ।

संवर्तितमिवाकाशं जलदैः सुमहाद्भुतैः ॥ १-२६-३ (१३९०)
सृजद्भिरतुलं तोयमजस्रं सुमहारवैः ।
संप्रनृत्तमिवाकाशं धारोर्मिभिरनेकशः ॥ १-२६-४ (१३९१)
मेघस्तनितनिर्घोषैर्विद्युत्पवनकम्पितैः ।
तैर्मेघैः सततासारं वर्षद्भिरनिशं तदा ॥ १-२६-५ (१३९२)
नष्टचन्द्रार्ककिरणमम्बरं समपद्यत ।
नागानामुत्तमो हर्षस्तथा वर्षति वासवे ॥ १-२६-६ (१३९३)
आपूर्यत मही चापि सलिलेन समन्ततः ।
रसातलमनुप्राप्तं शीतलं विमलं जलम्। १-२६-७ (१३९४)
तदा भूरभवच्छन्ना जलोर्मिभिरनेकशः ।
रामणीयकमागच्छन्मात्रा सह भुजंगमाः ॥ ॥ १-२६-८ (१३९५)

इति श्रीमन्महाभारते आदिपर्वणि पौलोमपर्वणि षड्विंशोऽध्यायः ॥ २६ ॥
Mahabharata - Adi Parva - Chapter Footnotes

१-२६-३ संवर्तः कल्पान्तः संजातोस्मिन्निति संवर्तितम् ॥
१-२६-८ रामणीयकं रमणकसंज्ञं द्वीपम् ॥
षड्विंशोऽध्यायः ॥
२६ ॥

---

अध्यय०२७
॥ श्रीः ॥
१.२७. अध्यायः २७

Mahabharata - Adi Parva - Chapter Topics
गरुडस्य विनतां प्रति दास्यकारणप्रश्नः ॥ १ ॥
सर्पैः दास्यमोचनोपायकथनम् ॥ २ ॥

Mahabharata - Adi Parva - Chapter Text

१-२७-० (१३९६)
सौतिरुवाच। १-२७-०क्ष् (१०४)
संप्रहृष्टास्ततो नागा जलधाराप्लुतास्तदा ।
सुपर्णेनोह्यमानास्ते जग्मुस्तं द्वीपमाशु वै ॥ १-२७-१ (१३९७)
तं द्वीपं मकरावासं विहितं विश्वकर्मणा ।
तत्र ते लवणं घोरं ददृशुः पूर्वमागताः ॥ १-२७-२ (१३९८)
सुपर्णसहिताः सर्पाः काननं च मनोरमम् ।

सागराम्बुपरिक्षिप्तं पक्षिसङ्घनिजादितम् ॥ १-२७-३ (१३९९)
विचित्रफलपुष्पाभिर्वनराजिभिरावृतम् ।
भवनैरावृतं रम्यैस्तथा पद्माकरैरपि ॥ १-२७-४ (१४००)
प्रसन्नसलिलैश्चापि ह्रदैर्दिव्यैर्विभूषितम् ।
दिव्यगन्धवहैः पुण्यैर्मारुतैरुपवीजितम् ॥ १-२७-५ (१४०१)
उत्पतद्भिरिवाकाशं वृक्षैर्मलयजैरपि ।
शोभितं पुष्पवर्षाणि मुञ्चद्भिर्मारुतोद्धतैः ॥ १-२७-६ (१४०२)
वायुविक्षिप्तकुसुमैस्तथाऽन्यैरपि पादपैः ।
किरद्भिरिव तत्रस्थान्नागान्पुष्पाम्बुवृष्टिभिः ॥ १-२७-७ (१४०३)
मनःसंहर्षजं दिव्यं गन्धर्वाप्सरसां प्रियम् ।
मत्तभ्रमरसंघुष्टं मनोज्ञाकृतिदर्शनम् ॥ १-२७-८ (१४०४)
रमणीयं शिवं पुण्यं सर्वैर्जनमनोहरैः ।
नानापक्षिरुतं रम्यं कद्रूपुत्रप्रहर्षणम् ॥ १-२७-९ (१४०५)
तत्ते वनं समासाद्य विजह्रुः पन्नगास्तदा ।
अब्रुवंश्च महावीर्यं सुपर्णं पतगेश्वरम् ॥ १-२७-१० (१४०६)
वहास्मानपरं द्वीपं सुरम्यं विमलोदकम् ।
त्वं हि देशान्बहून्रम्यान्व्रजन्पश्यसि खेचर ॥ १-२७-११ (१४०७)
सौतिरुवाच। १-२७-१२क्ष् (१०५)
स विचिन्त्याब्रवीत्पक्षी मातरं विनतो तदा ।
किं कारणं मया मातः कर्तव्यं सर्पभाषितम् ॥ १-२७-१२ (१४०८)
विनतोवाच। १-२७-१३क्ष् (१०६)
दासीभूतास्मि दुर्योगात्सपत्न्याः पतगोत्तम ।
पणं वितथमास्थाय सर्पैरुपधिना कृतम् ॥ १-२७-१३ (१४०९)
सौतिरुवाच। १-२७-१४क्ष् (१०७)
तस्मिंस्तु कथिते मात्रा कारणे गगनेतरः ।
उवाच वचनं सर्पांस्तेन दुःखेन दुःखितः ॥ १-२७-१४ (१४१०)
किमाहृत्य विदित्वा वा किं वा कृत्वेह पौरुषम् ।
दास्याद्वो विप्रमुच्येयं तथ्यं वदत लेलिहाः ॥ १-२७-१५ (१४११)
सौतिरुवाच। १-२७-१६क्ष् (१०८)
श्रुत्वा समब्रुवन्सर्पा आहरामृतमोजसा ।
ततो दास्याद्विप्रमोक्षो भविता तव खेचर ॥ ॥ १-२७-१६ (१४१२)

इति श्रीमन्महाभारते आदिपर्वणि आस्तीकपर्वणि सप्तविंशोऽध्यायः ॥ २७ ॥

Mahabharata - Adi Parva - Chapter Footnotes

१-२७-२ लवणं लवणासुरं पूर्वं ददृशुः ॥

१-२७-८ मनःसंहर्षजं मनसः संहर्षाय जातम् ॥
१-२७-१५ लेलिहाः भोसर्पाः ॥
सप्तविंशोऽध्यायः ॥
२७ ॥

---

अध्यय०२८
॥ श्रीः ॥
१.२८. अध्यायः २८

Mahabharata - Adi Parva - Chapter Topics
अमृताहरणार्थं गच्छतो गरुडस्य मक्ष्ययाचनम् ॥ १ ॥
ब्राह्मणवर्जं समुद्रकुक्षिस्थनिषादभक्षणे विनताया अनुज्ञा ॥ २ ॥

Mahabharata - Adi Parva - Chapter Text

१-२८-० (१४१३)
सौतिरुवाच। १-२८-०क्ष् (१०९)
इत्युक्तो गरुडः सर्पैस्ततो मातरमब्रवीत् ।
गच्छाम्यमृतमाहर्तुं भक्ष्यमिच्छामि वेदितुम् ॥ १-२८-१ (१४१४)
विनतोवाच। १-२८-२क्ष् (११०)
समुद्रकुक्षावेकान्ते निषादालयमुत्तमम् ।
ग्भवनानि निषादानां तत्र सन्ति द्विजोत्तम ॥ १-२८-२ (१४१५)
पापिनां नष्टलोकानां निर्घृणानां दुरात्मनाम्’।
निषादानां सहस्राणि तान्भुक्त्वाऽमृतमानय ॥ १-२८-३ (१४१६)
न च ते ब्राह्मणं हन्तुं कार्या बुद्धिः कथंचन ।
अवध्यः सर्वभूतानां ब्राह्मणो ह्यनलोपमः ॥ १-२८-४ (१४१७)
अग्निरर्को विषं शस्त्रं विप्रो भवति कोपितः ।
गुरुर्हि सर्वभूतानां ब्राह्मणः परिकीर्तितः ॥ १-२८-५ (१४१८)
एवमादिस्वरूपैस्तु सतां वै ब्राह्मणो मतः ।
स ते तात न हन्तव्यः संक्रुद्धेनापि सर्वथा ॥ १-२८-६ (१४१९)
ब्राह्मणानामभिद्रोहो न कर्तव्यः कथंचन ।
न ह्येवमग्निर्नादित्यो भस्म कुर्यात्तथानघ ॥ १-२८-७ (१४२०)
यथा कुर्यादभिक्रुद्धो ब्राह्मणः संशितव्रतः ।
तदेतैर्विविधैर्लिङ्गैस्त्वं विद्यास्तं द्विजोत्तमम् ॥ १-२८-८ (१४२१)
भूतानामग्रभूर्विप्रो वर्णश्रेष्ठः पिता गुरुः। १-२८-९ (१४२२)
गरुड उवाच ।
किंरूपो ब्राह्मणो मातः किंशीलः किंपराक्रमः ॥ १-२८-९क्ष् (१११)

किंस्विदग्निनिभो भाति किंस्वित्सौम्यप्रदर्शनः ।
यथाहमभिजानीयां ब्राह्मणं लक्षणैः शुभैः ॥१-२८-१० (१४२३)
तन्मे कारणतो मातः पृच्छतो वक्तुमर्हसि। १-२८-११ (१४२४)
विनतोवाच ।
यस्ते कण्ठमनुप्राप्तो निगीर्णं बडिशं यथा ॥ १-२८-११क्ष् (११२)
दहेदङ्गारवत्पुत्रं तं विद्याद्ब्राह्मणर्षभम् ।
विप्रस्त्वया न हन्तव्यः संक्रुद्धेनापि सर्वदा ॥१-२८-१२ (१४२५)
प्रोवाच चैन विनता पुत्रहार्दादिदं वचः ।
जठरे न च जीर्येद्यस्तं जानीहि द्विजोत्तमम् ॥१-२८-१३ (१४२६)
पुनः प्रोवाच विनता पुत्रहार्दादिदं वचः ।
जानन्त्यप्यतुलं वीर्यमाशीर्वादपरायणा ॥१-२८-१४ (१४२७)
प्रीता परमदुःखार्ता नागैर्विप्रकृता सती। १-२८-१५ (१४२८)
विनतोवाच ।
पक्षौ ते मारुतः पातु चन्द्रसूर्यौ च पृष्ठतः ॥ १-२८-१५क्ष् (११३)
शिरश्च पातु वह्निस्ते वसवः सर्वतस्तनुम् ।
गविष्णुः सर्वगतः सर्वमङ्गानि तव चैव ह।'
अहं च ते सदा पुत्र शान्तिस्वस्तिपरायणा ॥ १-२८-१६ (१४२९)
इहासीना भविष्यामि स्वस्तिकारे रता सदा ।
अरिष्टं व्रज पन्थानं पुत्र कार्यार्थसिद्धये ॥१-२८-१७ (१४३०)
सौतिरुवाच।१-२८-१८क्ष् (११४)
ततः स मातुर्वचनं निशम्य
वितत्य पक्षौ नभ उत्पपात ।
ततो निषादान्बलवानुपागतो
बुभुक्षितः काल इवान्तकोऽपरः ॥ १-२८-१८ (१४३१)
स तान्निषादानुपसंहरंस्तदा
रजः समुद्धूय नभःस्पृशं महत् ।
समुद्रकुक्षौ च विशोषयन्पयः
समीपजान्भूधरजान्विचालयन् ॥ १-२८-१९ (१४३२)
ततः स चक्रे महदाननं तदा
निषादमार्गं प्रतिरुध्य पक्षिराट् ।
ततो निषादास्त्वरिताः प्रवव्रजु-
र्यतो मुखं तस्य भुजंगभोजिनः ॥ १-२८-२० (१४३३)
तदाननं विवृतमतिप्रमाणव-
त्समभ्ययुर्गगनमिवार्दिताः खगाः ।
सहस्रशः पवनजोविमोहिता
यथा ऽनिलप्रचलितपादपे वने ॥ १-२८-२१ (१४३४)

ततः खगो वदनममित्रतापनः
समाहरत्परिचपलो मत्बलाः ।
निषूदयन्बहुविधमत्स्यजीविनो
बभुक्षितो गगनचरेश्वरस्तदा ॥ ॥ १-२८-२२ (१४३५)

इति श्रीमन्महाभारते आदिपर्वणि आस्तीकपर्वणि अष्टाविंशोऽध्यायः ॥ २८ ॥
Mahabharata - Adi Parva - Chapter Footnotes

१-२८-१८ काले समये ॥
१-२८-१९ भूधरजान् पर्वतजान्वृक्षान् ॥
१-२८-२२ परिचपलः तेषां ग्रहणाय सर्वतो भ्रमन् ॥
अष्टाविंशोऽध्यायः ॥
२८ ॥

---

अध्यय०२९
॥ श्रीः ॥
१.२९. अध्यायः २९

Mahabharata - Adi Parva - Chapter Topics
कण्ठं दहतो ब्राह्मणस्य विषादीसहितस्य परित्राणम् ॥ १ ॥
गरुडस्य कश्यपेन संवादः ॥ २ ॥
गजकच्छपपूर्ववृत्तान्तकथनम् ॥ ३ ॥
कश्यपाज्ञया गरुडस्य गजकच्छपग्रहणम् ॥ ४ ॥
रोहिणवृक्षशाखाभङ्गः ॥ ५ ॥

Mahabharata - Adi Parva - Chapter Text

१-२९-० (१४३६)
सौतिरुवाच। १-२९-०क्ष् (११५)
तस्य कण्ठमनुप्राप्तो ब्राह्मणः सह भार्यया ।
दहन्दीप्त इवाङ्गारस्तमुवाचान्तरिक्षगः ॥ १-२९-१ (१४३७)
द्विजोत्तम विनिर्गच्छ तूर्णमास्यादपावृतात् ।
न हि मे ब्राह्मणो वध्यः पापेष्वपि रतः सदा ॥ १-२९-२ (१४३८)
सौतिरुवाच। १-२९-३क्ष् (११६)
ब्रुवाणमेवं गरुडं ब्राह्मणः प्रत्यभाषत ।
निषादी मम भार्येयं निर्गच्छतु मया सह ॥ १-२९-३ (१४३९)
गरुड उवाच। १-२९-४क्ष् (११७)

एतामपि निषादीं त्वं परिगृह्याशु निष्पत ।
तूर्णं संभावयात्मानमजीर्णं मम तेजसा ॥ १-२९-४ (१४४०)
सौतिरुवाच। १-२९-५क्ष् (११८)
ततः स विप्रो निष्क्रान्तो निषादीसहितस्तदा ।
वर्धयित्वा च गरुडमिष्टं देशं जगाम ह ॥ १-२९-५ (१४४१)
सहभार्ये विनिष्क्रान्ते तस्मिन्विप्रे स पक्षिराट् ।
वितत्य पक्षावाकाशमुत्पपात मनोजवः ॥ १-२९-६ (१४४२)
ततोऽपश्यत्स्वपितरं पृष्टश्चाख्यातवान्पितुः ।
यथान्यायममेयात्मा तं चोवाच महानृषिः ॥ १-२९-७ (१४४३)
कश्यप उवाच। १-२९-८क्ष् (११९)
कच्चिद्वः कुशलं नित्यं भोजने बहुलं सुत ।
कच्चिच्च मानुषे लोके तवान्नं विद्यते बहु ॥
ग्क्व गन्तास्यतिवेगेन मम त्वं वक्तुमर्हसि ॥' १-२९-८ (१४४४)
गरुड उवाच। १-२९-९क्ष् (१२०)
माता मे कुशला शश्वत्तथा भ्राता तथा ह्यहम् ।
न हि मे कुशलं तात भोजने बहुले सदा ॥ १-२९-९ (१४४५)
अहं हि सर्पैः प्रहितः सोममाहर्तुमुत्तमम् ।
महातुर्दास्यविमोक्षार्थमाहरिष्ये तमद्य वै ॥ १-२९-१० (१४४६)
मात्रा चात्र समादिष्टो निषादान्भक्षयेति ह ।
न च मे तृप्तिरभवद्भक्षयित्वा सहस्रशः ॥ १-२९-११ (१४४७)
तस्माद्भक्ष्यं त्वमपरं भगवन्प्रदिशस्व मे ।
यद्भुक्त्वाऽमृतमाहर्तुं समर्तः स्यामहं प्रभो ॥ १-२९-१२ (१४४८)
क्षुत्पिपासाविघातार्थं भक्ष्यमाख्यातु मे भवान्। १-२९-१३ (१४४९)
कश्यप उवाच ।
इदं सरो महापुण्यं देवलोकेऽपि विश्रुतम् ॥ १-२९-१३क्ष् (१२१)
यत्र कूर्माग्रजं हस्ती सदा कर्षत्यवाङ्मुखः ।
तयोर्जन्मान्तरे वैरं संप्रवक्ष्याम्यसोषतः ॥ १-२९-१४ (१४५०)
तन्मे तत्त्वं निबोधस्य यत्प्रमाणौ च तावुभौ ।
ग्शृणु त्वं वत्स भद्रं ते कथां वैराग्यवर्धिनीम् ॥ १-२९-१५ (१४५१)
पित्रोरर्थविभागे वै समुत्पन्नां पुराण्डज।'
आसीद्विभावसुर्नाम महर्षिः कोपनो भृशम् ॥ १-२९-१६ (१४५२)
भ्राता तस्यानुजश्चासीत्सुप्रतीको महातपाः ।
स नेच्छति धनं भ्रात्रा सहैकस्थं महामुनिः ॥ १-२९-१७ (१४५३)
विभागं कीर्तयत्येव सुप्रतीको हि नित्यशः ।
अथाब्रवीच्च तं भ्राता सुप्रतीकं विभावसुः ॥ १-२९-१८ (१४५४)
ग्विभागे बहवो दोषा भविष्यन्ति महातपः।'

विभागं बहवो मोहात्कर्तुमिच्छन्ति नित्यशः ।
ततो विभक्तास्त्वन्योन्यं नाद्रियन्तेऽर्थमोहिताः ॥ १-२९-१९ (१४५५)
ततः स्वार्थपरान्मूढान्पृथग्भूतान्स्वकैर्धनैः ।
विदित्वा भेदयन्त्येतानमित्रा मित्ररूपिणः ॥१-२९-२० (१४५६)
विदित्वा चापरे भिन्नानन्तरेषु पतन्त्यथ ।
भिन्नानामतुलो नाशः क्षिप्रमेव प्रवर्तते ॥१-२९-२१ (१४५७)
तस्माद्विभागं भ्रातॄणां न प्रशंसन्ति साधवः ।
गएवमुक्तः सुप्रतीको भागं कीर्तयतेऽनिशम् ॥१-२९-२२ (१४५८)
एवं निर्बध्यमानस्तु शशापैनं विभावसुः।'
गुरुशास्त्रेऽनिबद्धानामन्योन्येनाभिशङ्किनाम् ॥ १-२९-२३ (१४५९)
नियन्तु न हि शक्यस्त्वं भेदतो धनमिच्छसि ।
यस्मात्तस्मात्सुप्रतीक हस्तित्वं समवाप्स्यसि ॥१-२९-२४ (१४६०)
कश्यप उवाच। १-२९-२५क्ष् (१२२)
शप्तस्त्वेवं सुप्रतीको विभावसुमथाब्रवीत् ।
त्वमप्यन्तर्जलचरः कच्छपः संभविष्यसि ॥१-२९-२५ (१४६१)
एवमन्योन्यशापात्तौ सुप्रतीकविभावसू ।
गजकच्छपतां प्राप्तावर्थार्थं मूढचेतसौ ॥१-२९-२६ (१४६२)
रोषदोषानुषङ्गेण तिर्यग्योनिगतावपि ।
परस्परद्वेषरतौ प्रमाणबलदर्पितौ ॥१-२९-२७ (१४६३)
सरस्यस्मिन्महाकायौ पूर्ववैरानुसारिणौ ।
तयोरन्यतरः श्रीमान्समुपैति महागजः ॥१-२९-२८ (१४६४)
यस्य बृंहितशब्देन कूर्मोऽप्यन्तर्जलेशयः ।
उत्थितोऽसौ महाकायः कृत्स्नं विक्षोभयन्सरः ॥१-२९-२९ (१४६५)
तं दृष्ट्वाऽऽवेष्टितकरः पतत्येष गजो जलम् ।
दन्तहस्ताग्रलाङ्गूलपादवेगेन वीर्यवान् ॥१-२९-३० (१४६६)
विक्षोभयंस्ततो नागः सरो बहुझषाकुलम् ।
कूर्मोऽप्यभ्युद्यतशिरा युद्धायाभ्येति वीर्यवान् ॥१-२९-३१ (१४६७)
षडुच्छ्रितो योजनानि गजस्तद्द्विगुणायतः ।
कूर्मस्त्रियोजनोत्सेधो दशयोजनमण्डलः ॥१-२९-३२ (१४६८)
तावुभौ युद्धसंमत्तौ परस्परवधैषिणौ ।
उपयुज्याशु कर्मेदं साधये हितमात्मनः ॥१-२९-३३ (१४६९)
महाभ्रघनसंकाशं तं भुक्त्वामृतमानय ।
महागिरिसमप्रख्यं घोररूपं च हस्तिनम् ॥१-२९-३४ (१४७०)
सौतिरुवाच। १-२९-३५क्ष् (१२३)
इत्युक्त्वा गरुडं सोऽथ माङ्गल्यमकरोत्तदा ।
युध्यतः सह देवैस्ते युद्धे भवतु मङ्गलम् ॥१-२९-३५ (१४७१)

पूर्णकुम्भो द्विजा गावो यच्चान्यत्किंचिदुत्तमम् ।
शुभं स्वस्त्ययनं चापि भविष्यति तवाण्डजा ॥ १-२९-३६ (१४७२)
युध्यमानस्य सङ्ग्रामे देवैः सार्धं महाबल ।
ऋचो यजूंषि सामानि पवित्राणि हवींषि च ॥ १-२९-३७ (१४७३)
रहस्यानि च सर्वाणि सर्वे वेदाश्च ते बलम् ।
ग्वर्धयिष्यन्ति समरे भविष्यति खगोत्तम।'
इत्युक्तो गरुडः पित्रा गतस्तं ह्रदमन्तिकात् ॥ १-२९-३८ (१४७४)
अपश्यन्निर्मलजलं नानापक्षिसमाकुलम् ।
स तत्स्मृत्वा पितुर्वाक्यं भीमवेगोऽन्तरिक्षगः ॥ १-२९-३९ (१४७५)
नखेन गजमेकेन कूर्ममेकेन चाक्षिपत् ।
सधुत्पपात चाकाशं तत उच्चैर्विहङ्गमः ॥ १-२९-४० (१४७६)
सोऽलम्बं तीर्थणासाद्य देववृक्षानुपागमत् ।
ते भीताः समकम्पन्त तस्य पक्षानिलाहताः ॥ १-२९-४१ (१४७७)
न नो भञ्ज्यादिति तदा दिव्याः कनकशाखिनः ।
प्रचलाङ्गान्स तान्दृष्ट्वा मनोरथफलद्रुमान् ॥ १-२९-४२ (१४७८)
अन्यानतुलरूपाङ्गानुपचक्राम खेचरः ।
काञ्चनै राजतैश्चैव फलैर्वैदूर्यशाखिनः ।
सागराम्बुपरिक्षिप्तान्भ्राजमानान्महाद्रुमान् ॥ १-२९-४३ (१४७९)
ग्तेषां मध्ये महानासीत्पादपः सुमनोहरः ।
सहस्रयोजनोत्सेधो बहुशाखासमन्वितः ॥ १-२९-४४ (१४८०)
खगानामालयो दिव्यो नाम्ना रौहिणपादपः ।
यस्य छायां समाश्रित्य सद्यो भवति निर्वृतः;॥ १-२९-४५ (१४८१)
तमुवाच खगश्रेष्ठं तत्र रौहिणपादपः ।
अतिप्रवृद्धः समुहानापतन्तं मनोजवम् ॥ १-२९-४६ (१४८२)
रौहिण उवाच। १-२९-४७क्ष् (१२४)
यैषा मम महाशाखा शतयोजनमायता ।
एतामास्थाय शाखां त्वं खादेमौ गजकच्छपौ ॥ १-२९-४७ (१४८३)
सौतिरुवाच। १-२९-४८क्ष् (१२५)
ततो द्रुमं पतगसहस्रसेवितं
महीधरप्रतिमवपुः प्रकम्पयन् ।
खगोत्तमो द्रुतमभिपत्य वेगवा-
न्बभञ्ज तामविरलपत्रसंचयाम् ॥ ॥ १-२९-४८ (१४८४)

इति श्रीमन्महाभारते आदिपर्वणि आस्तीकपर्वणि एकोनत्रिंशोऽध्यायः ॥ २९ ॥

१-२९-४ संभावय संजीवय ॥
१-२९-७ ततोऽपश्यत्स्वपितरं काश्यपं दीप्ततेजसम् । तं श्रेष्ठं पततां श्रेष्ठो ब्रह्म ब्रह्मविदां वरम्। पृष्टश्च पित्रा बलवान्वैनतेयः प्रतापदान्। इति पाठान्तरम् ॥
७ ॥
१-२९-९ भोजने बहुले मम कुशलं न हि ॥
१-२९-१० सोमं अमृतम् ॥
१-२९-१४ कूर्माग्रजं कूर्मभूतं ज्येष्ठभ्रातरम् ॥
१-२९-२१ अन्तरेषु छिद्रेषु ॥
१-२९-३० आवेष्टितकरः कुण्डलीकृतशुण्डादण्डः ॥
१-२९-३३ उपयुज्य भुक्त्वा ॥
१-२९-३८ भविष्यति समरे ॥
एकोनत्रिंशोऽध्यायः ॥
२९ ॥

---

अध्यय०३०
॥ श्रीः ॥
१.३०. अध्यायः ३०

Mahabharata - Adi Parva - Chapter Topics
भग्नशाखाया अधोभागे लम्बमानवालखिल्यरक्षणार्थं मुखेन शाखाग्रहणम् ॥ १ ॥
कश्यपाज्ञया हिमालयं गत्वा तत्र शाखां परित्यज्य तत्रैव स्थित्वा गजकच्छपभक्षणम् ॥ २ ॥
उत्पातान्दृष्ट्वा देवैः कृतोऽमृतरक्षणोपायः ॥ ३ ॥

Mahabharata - Adi Parva - Chapter Text

१-३०-० (१४८५)
सौतिरुवाच। १-३०-०क्ष् (१२६)
स्पष्टमात्रा तु पद्भ्यां सा गरुडेन बलीयसा ।
अभज्यत तरोः शाखा भग्नां चैकामधारयत् ॥ १-३०-१ (१४८६)
तां भङ्क्त्वा स महाशाखां स्मयमानो विलोकयन् ।
अथात्रं लम्बतोऽपश्यद्वालखिल्यानधोमुखान् ॥ १-३०-२ (१४८७)
ऋषयो ह्यत्र लम्बन्ते न हन्यामिति तानृषीन् ।
तपोरतांल्लम्बमानान्ब्रह्मर्षीनभिवीक्ष्य सः ॥ १-३०-३ (१४८८)
हन्यादेतान्संपतन्ती शाखेत्यथ विचिन्त्य सः ।

नखैर्दृढतरं वीरः संगृह्य गजकच्छपौ ॥ १-३०-४ (१४८९)
स तद्विनाशसंत्रासादभिपत्य स्वगाधिपः ।
शाखामास्येन जग्राह तेषामेवान्ववेक्षया ॥ १-३०-५ (१४९०)
अतिदैवं तु तत्तस्य कर्म दृष्ट्वा महर्षयः ।
विस्मयोत्कम्पहृदया नाम चक्रुर्महाखगे ॥ १-३०-६ (१४९१)
गुरुं भारं समासाद्योड्डीन एष विहङ्गमः ।
गरुडस्तु खगश्रेष्ठस्तस्मात्पन्नगभोजनः ॥ १-३०-७ (१४९२)
ततः शनैः पर्यपतत्पक्षैः शैलान्प्रकम्पयन् ।
एवं सोऽभ्यपतद्देशान्बहून्सगजकच्छपः ॥ १-३०-८ (१४९३)
दयार्थं वालखिल्यानां न च स्थानमविन्दत ।
स गत्वा पर्वतश्रेष्ठं गन्धमादनमञ्जसा ॥ १-३०-९ (१४९४)
ददर्श कश्यपं तत्र पितरं तपसि स्थितम् ।
ददर्श तं पिता चापि दिव्यरूपं विहङ्गमम् ॥ १-३०-१० (१४९५)
तेजोवीर्यबलोपेतं मनोमारुतरंहसम् ।
शैलशृङ्गप्रतीकाशं ब्रह्मदण्डमिवोद्यतम् ॥ १-३०-११ (१४९६)
अचिन्त्यमनभिध्येयं सर्वभूतभयंकरम् ।
महावीर्यधरं रौद्रं साक्षादग्निमिवोद्यतम् ॥ १-३०-१२ (१४९७)
अप्रधृष्यमजेयं च देवदानवराक्षसैः ।
भेत्तारं गिरिशृङ्गाणां समुद्रजलशोषणम् ॥ १-३०-१३ (१४९८)
लोकसंलोडनं घोरं कृतान्तसमदर्शनम् ।
तमागतमभिप्रेक्ष्य भगवान्कश्यपस्तदा ।
विदित्वा चास्यं संकल्पमिदं वचनमब्रवीत् ॥ १-३०-१४ (१४९९)
कश्यप उवाच। १-३०-१५क्ष् (१२७)
पुत्र मा साहसं कार्षीर्मा सद्यो लप्स्यसे व्यथाम् ।
मा त्वां दहेयुः संक्रुद्धा वालखिल्या मरीचिपाः ॥ १-३०-१५ (१५००)
सौतिरुवाच। १-३०-१६क्ष् (१२८)
ततः प्रसादयामास कश्यपः पुत्रकारणात् ।
वालखिल्यान्महाभागांस्तपसा हतकल्मषान् ॥ १-३०-१६ (१५०१)
कश्यप उवाच। १-३०-१७क्ष् (१२९)
प्रजाहितार्थमारम्भो गरुडस्य तपोधनाः ।
चिकीर्षति महत्कर्म तदनुज्ञातुमर्हथ ॥ १-३०-१७ (१५०२)
सौतिरुवाच। १-३०-१८क्ष् (१३०)
एवमुक्ता भगवता मुनयस्ते समभ्ययुः ।
मुक्त्वा शाखां गिरिं पुण्यं हिमवन्त तपोऽर्थिनः ॥ १-३०-१८ (१५०३)
ततस्तेष्वपयातेषु पितरं विनतासुतः ।
शाखाव्याक्षिप्तवदनः पर्यपृच्छत कश्यपम् ॥ १-३०-१९ (१५०४)

भगवन्क्व विमुञ्चामि तरोः शाखामिमामहम् ।
वर्जितं मानुषैर्देशमाख्यातु भगवान्मम ॥ १-३०-२० (१५०५)
सौतिरुवाच। १-३०-२१क्ष् (१३१)
ततो निःपुरुषं शैलं हिमसंरुद्धकन्दरम् ।
अगम्यं मनसाप्यन्यैस्तस्याचख्यौ स कश्यपः ॥ १-३०-२१ (१५०६)
तं पर्वतं महाकुक्षिमुद्दिश्य स महाखगः ।
जवेनाभ्यपतत्तार्क्ष्यः सशाखागजकच्छपः ॥ १-३०-२२ (१५०७)
न तां वध्री परिणहेच्छतचर्मा महातनुम् ।
शाखिनो महतीं शाखां यां प्रगृह्य ययौ खगः ॥ १-३०-२३ (१५०८)
स ततः शतसाहस्रं योजनान्तरमागतः ।
कालेन नातिमहता गरुडः पतगेश्वरः ॥ १-३०-२४ (१५०९)
स तं गत्वा क्षणेनैव पर्वतं वचनात्पितुः ।
अमुञ्चन्महतीं शाखां सस्वनं तत्र खेचरः ॥ १-३०-२५ (१५१०)
पक्षानिलहतश्चास्य प्राकम्पत स शैलराट् ।
मुमोच पुष्पवर्षं च समागलितपादप ॥ १-३०-२६ (१५११)
शृङ्गाणि च व्यशीर्यन्त गिरेस्तस्य समन्ततः ।
मणिकाञ्चनचित्राणि शोभयन्ति महागिरिम् ॥ १-३०-२७ (१५१२)
शाखिनो बहवश्चापि शाखयाऽभिहतास्तया ।
काञ्चनैः कुसुमैर्भान्ति विद्युत्वन्त इवाम्बुदाः ॥ १-३०-२८ (१५१३)
ते हेमविकचा भूमौ युताः पर्वतधातुभिः ।
व्यराजञ्छाखिनस्तत्र सूर्यांशुप्रतिरञ्जिताः ॥ १-३०-२९ (१५१४)
ततस्तस्य गिरेः शृङ्गमास्थाय स खगोत्तमः ।
भक्षयामास गरुडस्तावुभौ गजकच्छपौ ॥ १-३०-३० (१५१५)
तावुभौ भक्षयित्वा तु स तार्क्ष्यः कूर्मकुञ्जरौ ।
ततः पर्वतकूटाग्रादुत्पपात महाजवः ॥ १-३०-३१ (१५१६)
प्रावर्तन्ताथ देवानामुत्पाता भयशंसिनः ।
इन्द्रस्य वज्रं दयितं प्रजज्वाल भयात्ततः ॥ १-३०-३२ (१५१७)
सधूमा न्यपतत्सार्चिर्दिवोल्का नभसश्च्युता ।
तथा वसूनां रुद्राणामादित्यानां च सर्वशः ॥ १-३०-३३ (१५१८)
साध्यानां मरुतां चैव ये चान्ये देवतागणाः ।
स्वं स्वं प्रहरणं तेषां परस्परमुपाद्रवत् ॥ १-३०-३४ (१५१९)
अभूतपूर्वं संग्रामे तदा देवासुरेऽपि च ।
ववुर्वाताः सनिर्घाताः पेतुरुल्काः सहस्रशः ॥ १-३०-३५ (१५२०)
निरभ्रमेव चाकाशं प्रजगर्ज महास्वनम् ।
देवानामपि यो देवः सोऽप्यवर्षत शोणितम् ॥ १-३०-३६ (१५२१)
मम्लुर्माल्यानि देवानां नेशुस्तेजांसि चैव हि ।

उत्पातमेघा रौद्राश्च ववृषुः शोणितं बहु ॥१-३०-३७ (१५२२)
रजांसि मुकुटान्येषामुत्थितानि व्यधर्षयन् ।
ततस्त्राससमुद्विग्नः सह देवैः शतक्रतुः ।
उत्पातान्दारुणान्पश्यन्नित्युवाच बृहस्पतिम् ॥ १-३०-३८ (१५२३)
किमर्थं भगवन्घोरा उत्पाताः सहसोत्थिताः ।
न च शत्रुं प्रपश्यामि युधि यो नः प्रधर्षयेत् ॥१-३०-३९ (१५२४)
बृहस्पतिरुवाच।१-३०-४०क्ष् (१३२)
तवापराधाद्देवेन्द्र प्रमादाच्च शतक्रतो ।
तपसा वालखिल्यानां महर्षीणां महात्मनाम् ॥१-३०-४० (१५२५)
कश्यपस्य मुनेः पुत्रो विनतायाश्च खेचरः ।
हर्तुं सोममभिप्राप्तो बलवान्कामरूपधृक् ॥१-३०-४१ (१५२६)
समर्थो बलिनां श्रेष्ठो हर्तुं सोमं विहंगमः ।
सर्वं संभावयाम्यस्मिन्नसाध्यमपि साधयेत् ॥१-३०-४२ (१५२७)
सौतिरुवाच।१-३०-४३क्ष् (१३३)
श्रुत्वैतद्वचनं शक्रः प्रोवाचामृतरक्षिणः ।
महावीर्यबलः पक्षी हर्तुं सोममिहोद्यतः ॥१-३०-४३ (१५२८)
युष्मान्संबोधयाम्येष ग्गृहीत्वावरणायुधान् ।
परिवार्यामृतं सर्वे यूयं मद्वचनादिह ॥१-३०-४४ (१५२९)
रक्षध्वं विबुधा वीरा' यथा न स हरेद्बलात् ।
अतुलं हि बलं तस्य बृहस्पतिरुवाच ह ॥१-३०-४५ (१५३०)
सौतिरुवाच।१-३०-४६क्ष् (१३४)
तच्छ्रुत्वा विबुधा वाक्यं विस्मिता यत्नमास्थिताः ।
परिवार्यामृतं तस्थूर्वज्री चेन्द्रः प्रतापवान् ॥१-३०-४६ (१५३१)
धारयन्तो विचित्राणि काञ्चनानि मनस्विनः ।
कवचानि महार्हाणि वैदूर्यविकृतानि च ॥१-३०-४७ (१५३२)
चर्माण्यपि च गात्रेषु भानुमन्ति दृढानि च ।
विविधानि च शस्त्राणि घोररूपाण्यनेकशः ॥१-३०-४८ (१५३३)
शिततीक्ष्णाग्रधाराणि समुद्यम्य सुरोत्तमः ।
सविस्फुलिङ्गज्वालानि सधूमानि च सर्वशः ॥१-३०-४९ (१५३४)
चक्राणि परघांश्चैव त्रिशूलानि परश्वधान् ।
शक्तीश्च विविधास्तीक्ष्णाः करवालांश्च निर्मलान् ।
स्वदेहरूपाण्यादाय गदाश्चोग्रप्रदर्शनाः ॥ १-३०-५० (१५३५)
तैः शस्त्रैर्भानुमद्भिस्ते दिव्याभरणभूषिताः ।
भानुमन्तः सुरगणास्तस्थुर्विगतकल्मषाः ॥१-३०-५१ (१५३६)
अनुपमबलवीर्यतेजसो
धृतमनसः परिरक्षणेऽमृतस्य ।

असुरपुरविदारणाः सुरा
ज्वलनसमिद्धवपुःप्रकाशिनः ॥ १-३०-५२ (१५३७)
इति समरवरं सुराः स्थितास्ते
परिघसहस्रशतैः समाकुलम् ।
विगलितमिव चाम्बरान्तरं
तपनमरीचिविकाशितं बभासे ॥ ॥ १-३०-५३ (१५३८)

इति श्रीमन्महाभारते आदिपर्वणि आस्तीकपर्वणि त्रिंशोऽध्यायः ॥ ३० ॥
Mahabharata - Adi Parva - Chapter Footnotes

१-३०-६ अतिदैवं देवैरपि कर्तुमशक्यम् ॥
१-३०-७ गुरुशब्दपूर्वाड्डीङ्विहायसागतावित्यस्माड्डुः आदेरकारश्च
पृषोदरादित्वात् गरुडशब्दो निष्पन्न इत्यर्थः ॥
१-३०-१८ शाखां मुक्त्वा गिरिं समभ्ययुरिति संबन्धः ॥
१-३०-१९ शाखया मुखस्थया व्याक्षिप्तं वदनं वचनक्रियायस्य स तथा ॥
१-३०-२३ शतचर्मा शतगोचर्मणा कृता । वध्री रज्जुः। न परिणहेत्
परितो न बध्नीयात् ॥
१-३०-२९ विकचाः हेमवदुज्ज्वलाः ॥
१-३०-३३ दिवा अह्नि ॥
१-३०-३६ देवानां देवः पर्जन्यः ॥
१-३०-४२ अन्येषामसाध्यमप्ययं साधयेत् ॥
१-३०-४८ भानुमन्ति दीप्तिमन्ति ॥
१-३०-५० स्वदेहरूपाणि स्वदेहानुरूपाणि ॥
१-३०-५२ ज्वलनवत्समिद्धैर्दीप्यमानैर्वपुर्भिः प्रकाशिनः ॥
त्रिंशोऽध्यायः ॥
३० ॥

---

अध्यय०३१
॥ श्रीः ॥
१.३१. अध्यायः ३१

Mahabharata - Adi Parva - Chapter Topics
वालखिल्यतपसा गरुडोत्पत्तिकथनपूर्वकं तस्य
पक्षीन्द्रत्वेऽभिषेचनम् ॥ १ ॥

Mahabharata - Adi Parva - Chapter Text

१-३१-० (१५३९)
शौनक उवाच। १-३१-०क्ष् (१३५)
कोऽपराधो महेन्द्रस्य कः प्रमादश्च सूतज ।
तपसा वालखिल्यानां संभूतो गरुडः कथम् ॥ १-३१-१ (१५४०)
कश्यपस्य द्विजातेश्च कथं वै पक्षिराट् सुतः ।
अधृष्टः सर्वभूतानामवध्यस्चाभवत्कथम् ॥ १-३१-२ (१५४१)
कथं च कामचारी स कामवीर्यश्च खेचरः ।
एतदिच्छाम्यहं श्रोतुं पुराणे यदि पठ्यते ॥ १-३१-३ (१५४२)
सौतिरुवाच। १-३१-४क्ष् (१३६)
विषयोऽयं पुराणस्य यन्मां त्वं परिपृच्छसि ।
शृणु मे वदतः सर्वमेतत्संक्षेपतों द्विज ॥ १-३१-४ (१५४३)
यजतः पुत्रकामस्य कश्यपस्य प्रजापतेः ।
साहाय्यमृषयो देवा गन्धर्वाश्च ददुः किल ॥ १-३१-५ (१५४४)
तत्रेध्मानयने शक्रो नियुक्तः कश्यपेन ह ।
मुनयो वालखिल्याश्च ये चान्ये देवतागणाः ॥ १-३१-६ (१५४५)
शक्रस्तु वीर्यसदृशमिध्यभारं गिरिप्रभम् ।
समुद्यम्यानयामास नातिकृच्छ्रादिव प्रभुः ॥ १-३१-७ (१५४६)
अथापश्यदृषीन्ह्रस्वानङ्गुष्ठोदरवर्ष्मणः ।
पलाशवर्तिकामेकां वहतः संहतान्पथि ॥ १-३१-८ (१५४७)
प्रलीनान्स्वेष्विवाङ्गेषु निराहारांस्तपोधनान् ।
क्लिश्यमानान्मन्दबलान्गोष्पदे संप्लुतोदके ॥ १-३१-९ (१५४८)
तान्सर्वान्विस्मयाविष्टो वीर्योन्मत्तः पुरन्दरः ।
अपहास्याभ्यगाच्छीघ्रं लम्बयित्वाऽवमन्य च ॥ १-३१-१० (१५४९)
तेऽथ रोषसमाविष्टाः सुभृशं जातमन्यवः ।
आरेभिरे महत्कर्म तदा शक्रभयंकरम् ॥ १-३१-११ (१५५०)
जुहुवुस्ते सुतपसो विधिवज्जातवेदसम् ।
मन्त्रैरुच्चावचैर्विप्रा येन कामेन तच्छृणु ॥ १-३१-१२ (१५५१)
कामवीर्यः कामगमो देवराजभयप्रदः ।
इन्द्रोऽन्यः सर्वदेवानां भवेदिति यतव्रताः ॥ १-३१-१३ (१५५२)
इन्द्राच्छतगुणः शौर्ये वीर्ये चैव मनोजवः ।
तपसो नः फलेनाद्य दारुणः संभवित्विति ॥ १-३१-१४ (१५५३)
तद्बुद्ध्वा भृशसंतप्तो देवराजः शतक्रतुः ।
जगाम शरणं तत्र कश्यपं संशितव्रतम् ॥ १-३१-१५ (१५५४)
तच्छ्रुत्वा देवराजस्य कश्यपोऽथ प्रजापतिः ।
वालखिल्यानुपागम्य कर्मसिद्धिमपृच्छत ॥ १-३१-१६ (१५५५)
ग्कश्यप उवाच। १-३१-१७क्ष् (१३७)

केन कामेन चारब्धं भवद्भिर्होमकर्म च ।
याथातथ्येन मे ब्रूत श्रोतुं कौतूहलं हि मे ॥ १-३१-१७ (१५५६)
वालखिल्या ऊचुः। १-३१-१८क्ष् (१३८)
अवज्ञाताः सुरेन्द्रेण मूढेनाकृतबुद्धिना ।
ऐश्वर्यमदमत्तेन सदाचारान्निरस्यता ॥ १-३१-१८ (१५५७)
तद्विघातार्थमारम्भो विधिवत्तस्य कश्यप ॥ १-३१-१९ (१५५८)
सौतिरुवाच।' १-३१-२०क्ष् (१३९)
एवमस्त्विति तं चापि प्रत्यूचुः सत्यवादिनः ।
तान्कश्यप उवाचेदं सान्त्वपूर्वं प्रजापतिः ॥ १-३१-२० (१५५९)
अयमिन्द्रस्त्रिभुवने नियोगाद्ब्रह्मणः कृतः ।
इन्द्रार्थे च भवन्तोऽपि यत्नवन्तस्तपोधनाः ॥ १-३१-२१ (१५६०)
न मिथ्या ब्रह्मणो वाक्यं कर्तुमर्हथ सत्तमाः ।
भवतां हि न मिथ्याऽयं संकल्पो वै चिकीर्षितः ॥ १-३१-२२ (१५६१)
भवत्वेष पतत्रीणामिन्द्रोऽतिबलसत्त्ववान् ।
प्रसादः क्रियतामस्य देवराजस्य याचतः ॥ १-३१-२३ (१५६२)
सौतिरुवाच। १-३१-२४क्ष् (१४०)
एवमुक्ताः कश्यपेन वालखिल्यास्तपोधनाः ।
प्रत्यूचुरभिसंपूज्य मुनिश्रेष्ठं प्रजापतिम् ॥ १-३१-२४ (१५६३)
वालखिल्या ऊचुः। १-३१-२५क्ष् (१४१)
इन्द्रार्थोऽयं समारम्भः सर्वेषां नः प्रजापते ।
अपत्यार्थं समारम्भो भवतश्चायमीप्सितः ॥ १-३१-२५ (१५६४)
तदिदं सफलं कर्म त्वयैव प्रतिगृह्यताम् ।
तथा चैवं विधत्स्वात्र यथा श्रेयोऽनुपश्यसि ॥ १-३१-२६ (१५६५)
सौतिरुवाच। १-३१-२७क्ष् (१४२)
एतस्मिन्नेव काले तु देवी दाक्षायणी शुभा ।
विनता नाम कल्याणी पुत्रकामा यशस्विनी ॥ १-३१-२७ (१५६६)
तपस्तप्त्वा व्रतपरा स्नाता पुंसवने शुचिः ।
उपचक्राम भर्तारं तामुवाचाथ कश्यपः ॥ १-३१-२८ (१५६७)
आरम्भः सफलो देवि भविता यस्त्वयेप्सितः ।
जनयिष्यसि पुत्रौ द्वौ वीरौ त्रिभुवनेश्वरौ ॥ १-३१-२९ (१५६८)
तपसा वालखिल्यानां मम संकल्पतस्तथा ।
भविष्यतो महाभागौ पुत्रौ त्रैलोक्यपूजितौ ॥ १-३१-३० (१५६९)
उवाच चैनां भगवान्कश्यपः पुनरेव ह ।
धार्यतामप्रमादेन गर्भोऽयं सुमहोदयः ॥ १-३१-३१ (१५७०)
एकः सर्वपतत्रीणामिन्द्रत्वं कारयिष्यति ।
लोकसंभावितो वीरः कामरूपो विहङ्गमः ॥ १-३१-३२ (१५७१)

सौतिरुवाच। १-३१-३३क्ष् (१४३)
शतक्रतुमथोवाच प्रीयमाणः प्रजापतिः ।
त्वत्सहायौ महावीर्यौ भ्रातरौ ते भविष्यतः ॥ १-३१-३३ (१५७२)
नैताभ्यां भविता दोषः सकाशात्ते पुरंदर ।
व्येतु ते शक्र संतापस्त्वमेवेन्द्रो भविष्यसि ॥ १-३१-३४ (१५७३)
न चाप्येवं त्वया भूयः क्षेप्तव्या ब्रह्मवादिनः ।
न चावमान्या दर्पात्ते वाग्वज्रा भृशकोपनाः ॥ १-३१-३५ (१५७४)
सौतिरुवाच। १-३१-३६क्ष् (१४४)
एवमुक्तो जगामेन्द्रो निर्विशङ्कस्त्रिविष्टपम् ।
विनता चापि सिद्धार्था बभूव मुदिता तथा ॥ १-३१-३६ (१५७५)
जनयामास पुत्रौ द्वावरुणं गरुडं तथा ।
विकलाङ्गोऽरुणस्तत्र भास्करस्य पुरःसरः ॥ १-३१-३७ (१५७६)
पतत्त्रीणां च गरुडमिन्द्रत्वेनाभ्यषिञ्चत ।
तस्यैतत्कर्म सुमहच्छ्रूयतां भृगुनन्दन ॥ ॥ १-३१-३८ (१५७७)

इति श्रीमन्महाभारते आदिपर्वणि आस्तीकपर्वणि एकत्रिंशोऽध्यायः ॥ ३१ ॥
Mahabharata - Adi Parva - Chapter Footnotes

१-३१-८ अङ्गुष्ठोदरप्रमाणं वर्ष्म शरीरं येषां तान् । वर्तिकां
यष्टिम् ॥
१-३१-९ स्वेष्वङ्गेषु प्रलीनानिव अतिकृशानित्यर्थः । क्लिश्यमानान्
गोष्पदमात्रेति जले मज्जनेनेत्यर्थः ॥
१-३१-११ जातमन्यवः दीनाः । मन्युर्दैन्ये क्रतौ क्रुधीति कोशः ॥
१-३१-१४ दारुणः इन्द्रं प्रत्येव ॥
१-३१-१६ कर्मसिद्धिमपृच्छत सिद्ध वः कर्मेत्यपृच्छत् ॥
१-३१-२० एवमस्तु सिद्धमस्तु ॥
१-३१-२८ पुंसवने ऋतुकाले ॥
१-३१-३२ कारयिष्यति स्वार्थे णिच् ॥
एकत्रिंशोऽध्यायः ॥
३१ ॥

---

अध्यय०३२
॥ श्रीः ॥
१.३२. अध्यायः ३२

Mahabharata - Adi Parva - Chapter Topics
देवगरुडयुद्धं तत्र देवानां पराजयः ॥ १ ॥

१-३२-० (१५७८)
सौतिरुवाच। १-३२-०क्ष् (१४५)
ग्ततस्तस्माद्गिरिवरात्समुदीर्णमहाबलः।'
गरुडः पक्षिराट् तूर्णं संप्राप्तो विबुधान्प्रति ॥ १-३२-१ (१५७९)
तं दृष्ट्वातिबलं चैव प्राकम्पन्त सुरास्ततः ।
परस्परं च प्रत्यघ्नन्सर्वप्रहरणान्युत ॥१-३२-२ (१५८०)
तत्र चासीदमेयात्मा विद्युदग्निसमप्रभः ।
भौमनः सुमहावीर्यः सोमस्य परिरक्षिता ॥१-३२-३ (१५८१)
स तेन पतगेन्द्रेण पक्षतुण्डनखैः क्षतः ।
मुहूर्तमतुलं युद्धं कृत्वा विनिहतो युधि ॥१-३२-४ (१५८२)
रजश्चोद्धूय सुमहत्पक्षवातेन खेचरः ।
कृत्वा लोकान्निरालोकांस्तेन देवानवाकिरत् ॥१-३२-५ (१५८३)
तेनावकीर्णा रजसा देवा मोहमुपागमन् ।
न चैवं ददृशुश्छन्ना रजसाऽमृतरक्षिणः ॥१-३२-६ (१५८४)
एवं संलोडयामास गरुडस्त्रिदिवालयम् ।
पक्षतुण्डप्रहारैस्तु देवान्स विददार ह ॥१-३२-७ (१५८५)
ततो देवः सहस्राक्षस्तूर्णं वायुमचोदयत् ।
विक्षिपेमां रजोवृष्टिं तवेदं कर्म मारुत ॥१-३२-८ (१५८६)
सौतिरुवाच। १-३२-९क्ष् (१४६)
अथ वायुरपोवाह तद्रजस्तरसा बली ।
ततो वितिमिरे जाते देवाः शकुनिमार्दयन् ॥१-३२-९ (१५८७)
ननादोच्चैः स बलवान्महामेघ इवाम्बरे ।
वध्यमानः सुरगणैः सर्वभूतानि भीषयन् ॥१-३२-१० (१५८८)
उत्पपात महावीर्यः पक्षिराट् परवीरहा ।
समुत्पत्यान्तरिक्षस्थं देवानामुपरि स्थितम् ॥१-३२-११ (१५८९)
वर्मिमो विबुधाः सर्वे नानाशस्त्रैरवाकिरन् ।
पट्टिशैः परिघैः शूलैर्गदाभिश्च सवासवाः ॥१-३२-१२ (१५९०)
क्षुरप्रैर्ज्वलितैश्चापि चक्रैरादित्यरूपिभिः ।
नानाशस्त्रविसर्गैस्तैर्वध्यमानः समन्ततः ॥१-३२-१३ (१५९१)
कुर्वन्सुतुमुलं युद्धं पक्षिराण्ण व्यकम्पत ।
निर्दहन्निव चाकाशे वैनतेयः प्रतापवान् ।
पक्षाभ्यामुरसा चैव समन्ताद्व्यक्षिपत्सुरान् ॥ १-३२-१४ (१५९२)
ते विक्षिप्तास्ततो देवा दुद्रुवुर्गरुडार्दिताः ।

नखतुण्डक्षताश्चैव सुस्रुवुः शोणितं बहु ॥ १-३२-१५ (१५९३)
साध्याः प्राचीं सगन्धर्वा वसवो दक्षिणां दिशम् ।
प्रजग्मुः सहिता रुद्राः पतगेन्द्रप्रधर्षिताः ॥ १-३२-१६ (१५९४)
दिशं प्रतीचीमादित्या नासत्यावुत्तरां दिशम् ।
मुहुर्मुहुः प्रेक्षमाणा युध्यमानं महौजसः ॥ १-३२-१७ (१५९५)
अश्वक्रन्देन वीरेण रेणुकेन च पक्षिराट् ।
क्रथनेन च शूरेण तपनेन च खेचरः ॥ १-३२-१८ (१५९६)
उलूकश्वसनाभ्यां च निमेषेण च पक्षिराट् ।
प्ररुजेन च संग्रामं चकार पुलिनेन च ॥ १-३२-१९ (१५९७)
तान्पक्षनखतुण्डाग्रैरभिनद्विनतासुतः ।
युगान्तकाले संक्रुद्धः पिनाकीव परंतप ॥ १-३२-२० (१५९८)
महाबला महोत्साहास्तेन ते बहुधा क्षताः ।
रेजुरभ्रघनप्रख्या रुधिरौघप्रवर्षिणः ॥ १-३२-२१ (१५९९)
तान्कृत्वा पतगश्रेष्ठः सर्वानुत्क्रान्तजीवितान् ।
अतिक्रान्तोऽमृतस्यार्थे सर्वतोऽग्निमपश्यत ॥ १-३२-२२ (१६००)
आवृण्वानं महाज्वालमर्चिर्भिः सर्वतोऽम्बरम् ।
दहन्तमिव तीक्ष्णांशुं चण्डवायुसमीरितम् ॥ १-३२-२३ (१६०१)
ग्नभः स्पृशन्तं ज्वालाभिः सर्वभूतभयंकरम्।'
ततो नवत्या नवतीर्मुखानां
कृत्वा महात्मा गरुडस्तरस्वी ।
नदीः समापीय मुखैस्ततस्तैः
सुशीघ्रमागम्य पुनर्जवेन ॥ १-३२-२४ (१६०२)
ज्वलन्तमग्निं तममित्रतापनः
समास्तरत्पत्ररथो नदीभिः ।
ततः प्रचक्रे वपुरन्यदल्पं
प्रवेष्टुकामोऽग्निमभिप्रशाम्य ॥ ॥ १-३२-२५ (१६०३)

इति श्रीमन्महाभारते आदिपर्वणि आस्तीकपर्वणि द्वात्रिंशोऽध्यायः ॥ ३२ ॥

Mahabharata - Adi Parva - Chapter Footnotes

१-३२-३ भौमनः विश्वकर्मा ॥
१-३२-४ विनिहतः मृतकल्पः कृतः ॥
१-३२-९ अपोवाह अपसारितवान् ॥
१-३२-२४ नवत्याः नवतीः शताधिकाष्टसाहस्रीः ॥
१-३२-२५ समास्तरत् आच्छादितवान् शामितवानित्यर्थः ॥
द्वात्रिंशोऽध्यायः ॥

अध्यय०३३
॥ श्रीः ॥
१.३३. अध्यायः ३३

Mahabharata - Adi Parva - Chapter Topics
अमृतसमीपे गरुडस्य गमनम् ॥ १ ॥
अमृतं गृहीत्वा गच्छतो गरुडस्य विष्णुदर्शनम् ॥ २ ॥
विष्णुगरुडयोः परस्परं वरदानम् ॥ ३ ॥
गरुडस्य सुपर्णनामप्राप्तिः ॥ ४ ॥

Mahabharata - Adi Parva - Chapter Text

१-३३-० (१६०४)
सौतिरुवाच। १-३३-०क्ष् (१४७)
जाम्बूनदमयो भूत्वा मरीचिनिकरोज्ज्वलः ।
प्रविवेश बलात्पक्षी वारिवेग इवार्णवम् ॥ १-३३-१ (१६०५)
स चक्रं क्षुरपर्यन्तमपश्यदमृतान्तिके ।
परिभ्रमन्तमनिशं तीक्ष्णधारमयस्मयम् ॥ १-३३-२ (१६०६)
ज्वलनार्कप्रभं घोरं छेदनं सोमहारिणाम् ।
घोररूपं तदत्यर्थं यन्त्रं देवैः सुनिर्मितम् ॥ १-३३-३ (१६०७)
तस्यान्तरं स दृष्ट्वै पर्यवर्तत खेचरः ।
अरान्तरेणाभ्यपतत्संक्षिप्याङ्गं क्षणेन ह ॥ १-३३-४ (१६०८)
अधश्चक्रस्य चैवात्र दीप्तानलसमद्युती ।
विद्युज्जिह्वौ महावीर्यौ दीप्तास्यौ दीप्तलोचनौ ॥ १-३३-५ (१६०९)
चक्षुर्विषौ महाघोरौ नित्यं क्रुद्धौ तरस्विनौ ।
अमृतस्यैव रक्षार्थं ददर्श भुजगोत्तमौ ॥ १-३३-६ (१६१०)
सदा संरब्धनयनौ सदा चानिमिषेक्षणौ ।
तयोरेकोऽपि यं पश्येत्स तूर्णं भस्मसाद्भवेत् ॥ १-३३-७ (१६११)
ग्तौ दृष्ट्वा सहसा खेदं जगाम विनतात्मजः ।
कथमेतौ महावीर्यौ जेतव्यौ हरिभोजिनौ ॥ १-३३-८ (१६१२)
इति संचिन्त्य गरुडस्तयोस्तूर्णं निराकरः।'
तयोश्चक्षूंषि रजसा सुपर्णः सहसाऽऽवृणोत् ।
ताभ्यामदृष्टरूपोऽसौ सर्वतः समताडयत् ॥ १-३३-९ (१६१३)
तयोरङ्गे समाक्रम्य वैनतेयोऽन्तरिक्षगः ।
आच्छिनत्तरसा मध्ये सोममभ्यद्रवत्ततः ॥ १-३३-१० (१६१४)

समुत्पाट्यामृतं तत्र वैनतेयस्ततो बली ।
उत्पपात जवेनैव यन्त्रमुन्मथ्य वीर्यवान् ॥ १-३३-११ (१६१५)
अपीत्वैवामृतं पक्षी परिगृह्याशु निःसृतः ।
आगच्छदपरिश्रान्त आवार्यार्कप्रभां ततः ॥ १-३३-१२ (१६१६)
विष्णुना च तदाकाशे वैनतेयः समेयिवान् ।
तस्य नारायणस्तुष्टस्तेनालौल्येन कर्मणा ॥ १-३३-१३ (१६१७)
तमुवाचाव्ययो देवो वरदोऽस्मीति खेचरम् ।
स वव्रे तव तिष्ठेयमुपरीत्यन्तरिक्षगः ॥ १-३३-१४ (१६१८)
उवाच चैनं भूयोऽपि नारायणमिदं वचः ।
अजरश्चामरश्च स्याममृतेन विनाऽप्यहम् ॥ १-३३-१५ (१६१९)
सौतिरुवाच। १-३३-१६क्ष् (१४८)
एवमस्त्विति तं विष्णुरुवाच विनतासुतम् ।
प्रतिगृह्य वनौ तौ च गरुडो विष्णुमब्रवीत् ॥ १-३३-१६ (१६२०)
भवतेपि वरं दद्यां वृणोतु भगवानपि ।
तं वव्रे वाहनं विष्णुर्गरुत्मन्तं महाबलम् ॥ १-३३-१७ (१६२१)
ध्वजं च चक्रे भगवानुपरि स्थास्यसीति तम् ।
एवमस्त्विति तं देवमुक्त्वा नारायणं खगः ॥ १-३३-१८ (१६२२)
वव्राज तरसा वेगाद्वायुं स्पर्धन्महाजवः ।
तं व्रजन्तं खगश्रेष्ठं वज्रेणेन्द्रोऽभ्यताडयत् ॥ १-३३-१९ (१६२३)
हरन्तममृतं रोषाद्गरुडं पक्षिणां वरम् ।
तमुवाचेन्द्रमाक्रन्दे गरुडः पततां वरः ॥ १-३३-२० (१६२४)
प्रहसञ्श्लक्ष्णया वाचा तथा वज्रसमाहतः ।
ऋषेर्मानं करिष्यामि वज्रं यस्यास्थिसंभवम् ॥ १-३३-२१ (१६२५)
वज्रस्य च करिष्यामि तवैव च शतक्रतो ।
एतत्पत्रं त्यजाम्येकं यस्यान्तं नोपलप्स्यसे ॥ १-३३-२२ (१६२६)
न च वज्रनिपातेन रुजा मेऽस्तीह काचन ।
एवमुक्त्वा ततः पुत्रमुत्ससर्ज स पक्षिराट् ॥ १-३३-२३ (१६२७)
तदुत्सृष्टमभिप्रेक्ष्य तस्य पर्णमनुत्तमम् ।
हृष्टानि सर्धभूतानि नाम चक्रुर्गरुत्मतः ॥ १-३३-२४ (१६२८)
सुरूपं पत्रमालक्ष्य सुपर्णोऽयं भवत्विति ।
तद्दृष्ट्वा महदाश्चर्यं सहस्राक्षः पुरंदरः ।
खगो महदिदं भूतमिति मत्वाऽभ्यभाषत ॥ १-३३-२५ (१६२९)
बलं विज्ञातुमिच्छामि यत्ते परमनुत्तमम् ।
सख्यं चानन्तमिच्छामि त्वया सह खगोत्तम ॥ ॥ १-३३-२६ (१६३०)

इति श्रीमन्महाभारते आदिपर्वणि आस्तीपर्वणि त्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥

१-३३-४ संक्षिप्य अणुतरं कृत्वा ॥
१-३३-१० तयोः अङ्गे देहौ आच्छिनत् खण्डशः कृतवान् ॥
१-३३-११ यन्त्रमुन्मथ्य अमृतं अमृतकुम्भं समुत्पाद्य
उत्पपातेत्यन्वयः ॥
१-३३-१२ आवार्य वारयित्वा तिरस्कृत्येत्यर्थः ॥
१-३३-१३ अलौल्येन अमृतपानलोभराहित्येन ॥
१-३३-१४ उपरि ध्वजे इत्यर्थः ॥
१-३३-१९ स्पर्धावानिवाचरतीति स्पर्धन् ॥
१-३३-२० आक्रन्दे कलकले ॥
१-३३-२१ ऋषेः दधीचेः ॥
त्रयस्त्रिंशोऽध्यायः ॥
३३ ॥

---

अध्यय०३४
॥ श्रीः ॥
१.३४. अध्यायः ३४

Mahabharata - Adi Parva - Chapter Topics
इन्द्रस्य गरुडसख्यलाभः ॥ १ ॥
इन्द्राद्गरुडस्य वरलाभः ॥ २ ॥
विनताया दास्यमोचनम् ॥ ३ ॥
सर्पाणां द्विजिह्वत्वप्राप्तिः ॥ ४ ॥

Mahabharata - Adi Parva - Chapter Text

१-३४-० (१६३१)
सौतिरुवाच। १-३४-०क्ष् (१४९)
‘इत्येवमुक्तो गरुडः प्रत्युवाच शचीपतिम्’। १-३४-१ (१६३२)
गरुड उवाच ।
सख्यं मेऽस्तु त्वया देव यथेच्छसि पुरंदर ।
बलं तु मम जानीहि महच्चासह्यमेव च ॥ १-३४-१क्ष् (१५०)
कामं नैतत्प्रशंसन्ति सन्तः स्वबलसंस्तवम् ।
‘अनिमित्तं सुरश्रेष्ठ सद्यः प्राप्नोति गर्हणाम् ॥ १-३४-२ (१६३३)
गुणसंकीर्तनं चापि पृष्टेनान्येन गोपते ।
वक्तव्यं न तु वक्तव्यं स्वयमेव शतक्रतो ॥’ १-३४-३ (१६३४)

सखेति कृत्वा तु सखे पृष्टो वक्ष्याम्यहं त्वया ।
न ह्यात्मस्तवसंयुक्तं वक्तव्यमनिमित्ततः ॥ १-३४-४ (१६३५)
सपर्वतवनामुर्वीं ससागरजलामिमाम् ।
वहे पक्षेण वै शक्र त्वामप्यत्रावलम्बिनम् ॥ १-३४-५ (१६३६)
सर्वान्संपिण्डितान्वापि लोकान्सस्थाणुजङ्गमान् ।
वहेयमपरिश्रान्तो विद्धीदं मे महद्बलम् ॥ १-३४-६ (१६३७)
सौतिरुवाच। १-३४-७क्ष् (१५१)
इत्युक्तवचनं वीरं किरीटी श्रीमतां वरः ।
आह शौनक देवेन्द्रः सर्वलोकहितः प्रभुः ॥ १-३४-७ (१६३८)
एवमेव यथात्थ त्वं सर्वं संभाव्यते त्वयि ।
संगृह्यतामिदानीं मे सख्यमत्यन्तमुत्तमम् ॥ १-३४-८ (१६३९)
न कार्यं यदि सोमेन मम सोमः प्रदीयताम् ।
अस्मांस्ते हि प्रबाधेयुर्येभ्यो दद्याद्भवानिमम् ॥ १-३४-९ (१६४०)
गरुड उवाच। १-३४-१०क्ष् (१५२)
किंचित्कारणमुद्दिश्य सोमोऽयं नीयते मया ।
न दास्यामि समापातुं सोमं कस्मैचिदप्यहम् ॥ १-३४-१० (१६४१)
यत्रेमं तु सहस्राक्ष निक्षिपेयमहं स्वयम् ।
त्वमादाय ततस्तूर्णं हरेथास्त्रिदिवेश्वर ॥ १-३४-११ (१६४२)
शक्र उवाच। १-३४-१२क्ष् (१५३)
वाक्येनानेन तुष्टोऽहं यत्त्वयोक्तमिहाण्डज ।
यमिच्छसि वरं मत्तस्तं गृहाण खगोत्तम ॥ १-३४-१२ (१६४३)
सौतिरुवाच। १-३४-१३क्ष् (१५४)
इत्युक्तः प्रत्युवाचेदं कद्रूपुत्राननुस्मरन् ।
भवेयुर्भुजगाः शक्र मम भक्ष्या महाबलाः ॥ १-३४-१३ (१६४४)
गरुड उवाच। १-३४-१४क्ष् (१५५)
ईशोऽहमपि सर्वस्य करिष्यामि तु तेऽर्थिताम् ।
भवेयुर्भुजगाः शक्र मम भक्ष्या महाबलाः ॥ १-३४-१४ (१६४५)
सौतिरुवाच। १-३४-१५क्ष् (१५६)
तथेत्युक्त्वाऽन्वगच्छत्तं ततो दानवसूदनः ।
देवदेवं महात्मानं योगिनामीश्वरं हरिम् ॥ १-३४-१५ (१६४६)
स चान्वमोदत्तं चार्थं यथोक्तं गरुडेन वै ।
इदं भूयो वचः प्राह भगवांस्त्रिदशेश्वरः ॥ १-३४-१६ (१६४७)
हरिष्यामि विनिक्षिप्तं सोममित्यनुभाष्य तम् ।
आजगाम ततस्तूर्णं सुपर्णो मातुरन्तिकम् ॥ १-३४-१७ (१६४८)
गविनयावनतो भूत्वा वचनं चेदमब्रवीत् ।
इदमानीतममृतं देवानां भवनान्मया ॥ १-३४-१८ (१६४९)

प्रशाधि किमितो मातः करिष्यामि शुभव्रते। १-३४-१९ (१६५०)
विनतोवाच ।
परितुष्टाऽहमेतेन कर्मणा तव पुत्रक ॥ १-३४-१९क्ष् (१५७)
अजरश्चाभरश्चैव देवानां सुप्रियो भव। १-३४-२० (१६५१)
सौतिरुवाच।'
अथ सर्पानुवाचेदं सर्वान्परमहृष्टवत्। १-३४-२०क्ष् (१५८)
गरुड उवाच ।
इदमानीतममृतं निक्षेप्स्यामि कुशेषु वः ॥ १-३४-२०क्ष् (१५९)
स्नाता मङ्गलसंयुक्तास्ततः प्राश्नीत पन्नगाः ।
भवद्भिरिदमासीनैर्यदुक्तं तद्वचस्तदा ॥ १-३४-२१ (१६५२)
अदासी चैव मातेयमद्यप्रभृति चास्तु मे ।
यथोक्तं भवतामेतद्वचो मे प्रतिपादितम् ॥ १-३४-२२ (१६५३)
सौतिरुवाच। १-३४-२३क्ष् (१६०)
ततः स्नातुं गताः सर्पाः प्रत्युक्त्वा तं तथेत्युत ।
शक्रोऽप्यमृतमाक्षिप्य जगाम त्रिदिवं पुनः ॥ १-३४-२३ (१६५४)
अथागतास्तमुद्देशं सर्पाः सोमार्थिनस्तदा ।
स्नाताश्च कृतजप्याश्च प्रहृष्टाः कृतमङ्गलाः ॥ १-३४-२४ (१६५५)
ग्परस्परकृतद्वेषाः सोमप्राशनकर्मणि ।
अहं पूर्वमहं पूर्वमित्युक्त्वा ते समाद्रवन् ॥' १-३४-२५ (१६५६)
यत्रैतदमृतं चापि स्थापितं कुशसंस्तरे ।
तद्विज्ञाय हृतं सर्पाः प्रतिमायाकृतं च तत् ॥ १-३४-२६ (१६५७)
सोमस्थानमिदं चेति दर्भांस्ते लिलिहुस्तदा ।
ततो द्विधा कृता जिह्वाः सर्पाणां तेन कर्मणा ॥ १-३४-२७ (१६५८)
अभवंश्चामृतस्पर्शाद्दर्भास्तेऽथ पवित्रिणः ।
ग्नागाश्च वञ्चिता भूत्वा विसृज्य विनतां ततः ।
विषादमगमंस्तीव्रं गरुडस्य बलात्प्रभो ॥' १-३४-२८ (१६५९)
एवं तदमृतं तेन हृतमाहृतमेव च ।
द्विजिह्वाश्च कृताः सर्पा गरुडेन महात्मना ॥ १-३४-२९ (१६६०)
ततः सुपर्णः परमप्रहर्षवा-
न्विहृत्य मात्रा सह तत्र कानने ।
भुजंगभक्षः परमार्चितः खगै-
रहीनकीर्तिर्विनतामनन्दयत् ॥ १-३४-३० (१६६१)
इमां कथां यः शृणुयान्नरः सदा
पठेत वा द्विजगणमुख्यसंसदि ।
असंशयं त्रिदिवमियात्स पुण्यभा-
ङ्महात्मनः पतगपतेः प्रकीर्तनात् ॥ ॥ १-३४-३१ (१६६२)

इति श्रीमन्महाभारते आदिपर्वणि आस्तीकपर्वणि चतुस्त्रिंशोऽध्यायः ॥ ३४ ॥

Mahabharata - Adi Parva - Chapter Footnotes

१-३४-६ संपिण्डितान् एकीकृतान् । स्थाणु स्थावरम् ॥
१-३४-७ किरीटी इन्द्रः ॥
१-३४-१३ उपधिकृतं छलकृतम् ॥
१-३४-१४ ईशः समर्थः । अर्थितां अन्यस्मै अमृतं न देयमित्यर्थेप्सुताम् ॥
१-३४-१७ अनुभाष्य हे गरुडेति संबोध्य ॥
१-३४-२० इदं वः युष्माकममृतं न तु मम ॥
१-३४-२६ प्रतिमायाकृतं यथा दास्यं मायाकृतं तथा अमृतदानमपि
इतरेण कृतमित्यर्थः ॥
चतुस्त्रिंशोऽध्यायः ॥
३४ ॥

---

अध्यय०३५
॥ श्रीः ॥
१.३५. अध्यायः ३५

Mahabharata - Adi Parva - Chapter Topics

सर्पनामकथनम् ॥ १ ॥

Mahabharata - Adi Parva - Chapter Text

१-३५-० (१६६३)
शौनक उवाच। १-३५-०क्ष् (१६१)
भुजङ्गमानां शापस्य मात्रा चैव सुतेन च ।
विनतायास्त्वया प्रोक्तं कारणं सूतनन्दन ॥ १-३५-१ (१६६४)
वरप्रदानं भर्त्रा च कद्रूविनतयोस्तथा ।
नामनी चैव ते प्रोक्ते पक्षिणोर्वैनतेययोः ॥ १-३५-२ (१६६५)
पन्नगानां तु नामानि न कीतर्यसि सूतज ।
प्राधान्येनापि नामानि श्रोतुमिच्छामहे वयम् ॥ १-३५-३ (१६६६)
सौतिरुवाच। १-३५-४क्ष् (१६२)
बहुत्वान्नामधेयानि पन्नगानां तपोधन ।
न कीर्तयिष्ये सर्वेषां प्राधान्येन तु मे शृणु ॥ १-३५-४ (१६६७)
शेषः प्रथमतो जातो वासुकिस्तदनन्तरम् ।
ऐरावतस्तक्षकश्च कर्कोटकधनञ्जयौ ॥ १-३५-५ (१६६८)

कालियो मणिनागश्च नागश्चापूरणस्तथा ।
नागस्तथा पिञ्जरक एलापत्रोऽथ वामनः ॥ १-३५-६ (१६६९)
नीलानीलौ तथा नागौ कल्माषशबलौ तथा ।
आर्यकश्चोग्रकश्चैव नागः कलशपोतकः ॥ १-३५-७ (१६७०)
सुमनाख्यो दधिमुखस्तथा विमलपिण्डकः ।
आप्तः कोटरकश्चैव शङ्खो वालिशिखस्तथा ॥ १-३५-८ (१६७१)
निष्टानको हेमगुहो नहुषः पिङ्गलस्तथा ।
बाह्यकर्णो हस्तिपदस्तथा मुद्गरपिण्डकः ॥ १-३५-९ (१६७२)
कम्बलाश्वतरौ चापि नागः कालीयकस्तथा ।
वृत्तसंवर्तकौ नागौ द्वौ च पद्माविति श्रुतौ ॥ १-३५-१० (१६७३)
नागः शङ्खमुखश्चैव तथा कूष्माण्डकोऽपरः ।
क्षेमकश्च तथा नागो नागः पिण्डारकस्तथा ॥ १-३५-११ (१६७४)
करवीरः पुष्पदंष्ट्रो बिल्वको बिल्वपाण्डुरः ।
मूषकादः शङ्खशिराः पूर्णभद्रो हरिद्रकः ॥ १-३५-१२ (१६७५)
अपराजितो ज्योतिकश्च पन्नगः श्रीवहस्तथा ।
कौरव्यो धृतराष्ट्रश्च शङ्खपिण्डश्च वीर्यवान् ॥ १-३५-१३ (१६७६)
विरजाश्च सुबाहुश्च शालिपिण्डश्च वीर्यवान् ।
हस्तिपिण्डः पिठरकः सुमुखः कौणपाशनः ॥ १-३५-१४ (१६७७)
कुठरः कुञ्जरश्चैव तथा नागः प्रभाकरः ।
कुमुदः कुमुदाक्षश्च तित्तिरिर्हलिकस्तथा ॥ १-३५-१५ (१६७८)
कर्दमश्च महानागो नागश्च बहुमूलकः ।
कर्कराकर्करौ नागौ कुण्डोदरमहोदरौ ॥ १-३५-१६ (१६७९)
एते प्राधान्यतो नागाः कीर्तिता द्विजसत्तम ।
बहुत्वान्नामधेयानामितरे नानुकीर्तिताः ॥ १-३५-१७ (१६८०)
एतेषां प्रसवो यश्च प्रसवस्य च संततिः ।
असङ्ख्येयेति मत्त्वा तान्न ब्रवीमि तपोधन ॥ १-३५-१८ (१६८१)
बहूनीह सहस्राणि प्रयुतान्यर्बुदानि च ।
अशक्यान्येव सङ्ख्यातुं पन्नगानां तपोधन ॥ ॥ १-३५-१९ (१६८२)

इति श्रीमन्महाभारते आदिपर्वणि आस्तीकपर्वणि पञ्चत्रिंशोऽध्यायः ॥ ३५ ॥

Mahabharata - Adi Parva - Chapter Footnotes

१-३५-१ भुजङ्गमानां मात्रा शापो दत्तस्तस्य कारणं अवज्ञया
मातुराज्ञाकारित्वं । विनतायाः सुतेन अरुणेन शापो दत्तस्तस्य कारणं
सपत्नीर्ष्या ॥
पञ्चत्रिंशोऽध्यायः ॥

अध्यय०३६
॥ श्रीः ॥
१.३६. अध्यायः ३६

Mahabharata - Adi Parva - Chapter Topics
शेषस्य ब्रह्मणो वरलाभः पृथ्वीधारणाज्ञा च ॥ १ ॥

Mahabharata - Adi Parva - Chapter Text

१-३६-० (१६८३)
शौन उवाच। १-३६-०क्ष् (१६३)
आख्याता भुजगास्तात वीर्यवन्तो दुरासदाः ।
शापं तं तेऽभिविज्ञाय कृतवन्तः किमुत्तरम् ॥ १-३६-१ (१६८४)
सौतिरुवाच। १-३६-२क्ष् (१६४)
तेषां तु भगवाञ्छेषः कद्रूं त्यक्त्वा महायशाः ।
उग्रं तपः समातस्थे वायुभक्षो यतव्रतः ॥ १-३६-२ (१६८५)
गन्धमादनमासाद्य बदर्यां च तपोरतः ।
गोकर्णे पुष्करारण्ये तथा हिमवतस्तटे ॥ १-३६-३ (१६८६)
तेषु तेषु च पुण्येषु तीर्थेष्वायतनेषु च ।
एकान्तशीलो नियतः सततं विजितेन्द्रियः ॥ १-३६-४ (१६८७)
तप्यमानं तपो घोरं तं ददर्श पितामहः ।
संशुष्कमांसत्वक्स्नायुं जटाचीरधरं मुनिम् ॥ १-३६-५ (१६८८)
तमब्रवीत्सत्यधृतिं तप्यमानं पितामहः ।
किमिदं कुरुषे शेष प्रजानां स्वस्ति वै कुरु ॥ १-३६-६ (१६८९)
त्वं हि तीव्रेण तपसा प्रजास्तापयसेऽनघ ।
ब्रूहि कामं च मे शेष यस्ते हृदि व्यवस्थितः ॥ १-३६-७ (१६९०)
शेष उवाच। १-३६-८क्ष् (१६५)
सोदर्या मम सर्वे हि भ्रातरो मन्दचेतसः ।
सह तैर्नोत्सहे वस्तुं तद्भवाननुमन्यताम् ॥ १-३६-८ (१६९१)
अभ्यसूयन्ति सततं परस्परममित्रवत् ।
ततोऽहं तप आतिष्ठे नैतन्पश्येयमित्युत ॥ १-३६-९ (१६९२)
न मर्षयन्ति ससुतां सततं विनतां च ते ।
अस्माकं चापरो भ्राता वैनतेयोऽन्तरिक्षगः ॥ १-३६-१० (१६९३)
तं च द्विषन्ति सततं स चापि बलवत्तरः ।
वरप्रदानात्स पितुः कश्यपस्य महात्मनः ॥ १-३६-११ (१६९४)

सोऽहं तपः समास्थाय मोक्ष्यामीदं कलेवरम् ।
कथं मे प्रेत्यभावेऽपि न तैः स्यात्सह सङ्गमः ॥१-३६-१२ (१६९५)
तमेवं वादिनं शेषं पितामह उवाच ह ।
जानामि शेष सर्वेषां भ्रातॄणां ते विचेष्टितम् ॥१-३६-१३ (१६९६)
मातुश्चाप्यपराधाद्वै भ्रातॄणां ते महद्भयम् ।
कृतोऽत्र परिहारश्च पूर्वमेव भुजङ्गम ॥१-३६-१४ (१६९७)
भ्रातॄणां तव सर्वेषां न शोकं कर्तुमर्हसि ।
वृणीष्व च वरं मत्तः शेष यत्तेऽभिकाङ्क्षितम् ॥१-३६-१५ (१६९८)
दास्यामि हि वरं तेऽद्य प्रीतिर्मे परमा त्वयि ।
दिष्ट्या बुद्धिश्च ते धर्मे निविष्टा पन्नगोत्तम ।
भूयो भूयश्च ते बुद्धिर्धर्मे भवतु सुस्थिरा ॥ १-३६-१६ (१६९९)
शेष उवाच। १-३६-१६क्ष् (१६६)
एष एव वरो देव काङ्क्षितो मे पितामह ।
धर्मे मे रमतां बुद्धिः शमे तपसि चेश्वर ॥१-३६-१७ (१७००)
ब्रह्मोवाच। १-३६-१८क्ष् (१६७)
प्रीतोऽस्म्यनेन ते शेष दमेन च शमेन च ।
त्वया त्विदं वचः कार्यं मन्नियोगात्प्रजाहितम् ॥१-३६-१८ (१७०१)
इमां महीं शैलवनोपपन्नां
ससागरग्रामविहारपत्तनाम्
त्वं शेष सम्यक् चलितां यथाव-
त्संगृह्य तिष्ठस्व यथाऽचला स्यात् ॥ १-३६-१९ (१७०२)
शेष उवाच। १-३६-२०क्ष् (१६८)
यथाऽऽह देवो वरदः प्रजापति-
र्महीपतिर्भूतपतिर्जगत्पतिः ।
तथा महीं धारयिताऽस्मि निश्चलां
प्रयच्छतां मे विवरं प्रजापते ॥ १-३६-२० (१७०३)
ब्रह्मोवाच। १-३६-२१क्ष् (१६९)
अधो महीं गच्छ भुजङ्गमोत्तम
स्वयं तवैषा विवरं प्रदास्यति ।
इमां धरां धारयता त्वया हि मे
महत्प्रियं शेष कृतं भविष्यति ॥ १-३६-२१ (१७०४)
सौतिरुवाच। १-३६-२२क्ष् (१७०)
तथैव कृत्वा विवरं प्रविश्य स
प्रभुर्भुवो भुजगवराग्रजः स्थितः ।
बिभर्ति देवीं शिरसा महीमिमां
समुद्रनेमिं परिगृह्य सर्वतः ॥ १-३६-२२ (१७०५)

ब्रह्मोवाच। १-३६-२३क्ष् (१७१)
शेषोऽसि नागोत्तम धर्मदेवो
महीमिमां धारयसे यदेकः ।
अनन्तभोगैः परिगृह्य सर्वां
यथाहमेवं बलभिद्यथा वा ॥ १-३६-२३ (१७०६)
सौतिरुवाच। १-३६-२४क्ष् (१७२)
अधो भूमौ वसत्येवं नागोऽनन्तः प्रतापवान् ।
धारयन्वसुधामेकः शासनाद्ब्रह्मणो विभोः ॥ १-३६-२४ (१७०७)
सुपर्णं च सहायं वै भगवानमरोत्तमः ।
प्रादादनन्ताय तदा वैनतेयं पितामहः ॥ १-३६-२५ (१७०८)
ग्अनन्तेऽभिप्रयाते तु वासुकिः स महाबलः ।
अभ्यषिच्यत नागैस्तु दैवतैरिव वासवः ॥' ॥ १-३६-२६ (१७०९)

इति श्रीमन्महाभारते आदिपर्वणि आस्तीकपर्वणि षट्त्रिंशोऽध्यायः ॥ ३७ ॥
Mahabharata - Adi Parva - Chapter Footnotes

१-३६-१ उत्तरं अनन्तरम् ॥
१-३६-२३ अनन्तभोगैः अनन्तफणाभिः ॥
षट्त्रिंशोऽध्यायः ॥
३६ ॥

---

अध्यय०३७
॥ श्रीः ॥
१.३७. अध्यायः ३७

Mahabharata - Adi Parva - Chapter Topics
मातृशापपरिहारार्थं सर्पाणां मन्त्रालोचनम् ॥ १ ॥

Mahabharata - Adi Parva - Chapter Text

१-३७-० (१७१०)
सौतिरुवाच। १-३७-०क्ष् (१७३)
मातुः सकाशात्तं शापं श्रुत्वा वै पन्नगोत्तमः ।
वासुकिश्चिन्तयामास शापोऽयं न भवेत्कथम् ॥ १-३७-१ (१७११)
ततः स मन्त्रयामास भ्रातृभिः सह सर्वशः ।
ऐरावतप्रभृतिभिः सर्वैर्धर्मपरायणैः ॥ १-३७-२ (१७१२)
वासुकिरुवाच। १-३७-३क्ष् (१७४)

अयं शापो यथोद्दिष्टो विदितं वस्तथाऽनघाः ।
तस्य शापस्य मोक्षार्थं मन्त्रयित्वा यतामहे ॥ १-३७-३ (१७१३)
सर्वेषामेव शापानां प्रतिघातो हि विद्यते ।
न तु मात्राऽभिशप्तानां मोक्षः क्वचन विद्यते ॥ १-३७-४ (१७१४)
अव्ययस्याप्रमेयस्य सत्यस्य च तथाग्रतः ।
शप्ता इत्येव मे श्रुत्वा जायते हृदि वेपथुः ॥ १-३७-५ (१७१५)
नूनं सर्वविनाशोऽयमस्माकं समुपागतः ।
ग्शापः सृष्टो महाघोरो मात्रा खल्वविनीतया ।
न ह्येतां सोऽव्ययो देवः शपन्तीं प्रत्यषेधयत् ॥ १-३७-६ (१७१६)
तस्मात्संमन्त्रयामोऽद्य भुजङ्गानामनामयम् ।
यथा भवेद्धि सर्वेषां मा नः कालोऽत्यगादयम् ॥ १-३७-७ (१७१७)
सर्व एव हि नस्तावद्बुद्धिमन्तो विचक्षणाः ।
अपि मन्त्रयमाणा हि हेतुं पश्याम मोक्षणे ॥ १-३७-८ (१७१८)
यथा नष्टं पुरा देवा गूढमग्निं गुहागतम् ।
यथा स यज्ञो न भवेद्यथा वाऽपि पराभवः ।
जनमेजयस्य सर्पाणां विनाशकरणाय वै ॥ १-३७-९ (१७१९)
सौतिरुवाच। १-३७-१०क्ष् (१७५)
तथेत्युक्त्वा ततः सर्वे काद्रवेयाः समागताः ।
समयं चक्रिरे तत्र मन्त्रबुद्धिविशारदाः ॥ १-३७-१० (१७२०)
एके तत्राब्रुवन्नागा वयं भूत्वा द्विजर्षभाः ।
जनमेजयं तु भिक्षामो यज्ञस्ते न भवेदिति ॥ १-३७-११ (१७२१)
अपरे त्वब्रुवन्नागास्तत्र पण्डितमानिनः ।
मन्त्रिणोऽस्य वयं सर्वे भविष्यामः सुसंमताः ॥ १-३७-१२ (१७२२)
स नः प्रक्ष्यति सर्वेषु कार्येष्वर्थविनिश्चयम् ।
तत्र बुद्धिं प्रदास्यामो यथा यज्ञो निवर्त्स्यति ॥ १-३७-१३ (१७२३)
स नो बहुमतान्राजा बुद्ध्या बुद्धिमतां वरः ।
यज्ञार्थं प्रक्ष्यति व्यक्तं नेति वक्ष्यामहे वयम् ॥ १-३७-१४ (१७२४)
दर्शयन्तो बहून्दोषान्प्रेत्य चेह च दारुणान् ।
हेतुभिः कारणैश्चैव यथा यज्ञो भवेन्न सः ॥ १-३७-१५ (१७२५)
अथवा य उपाध्यायः क्रतोस्तस्य भविष्यति ।
सर्पसत्रविधानज्ञो राजकार्यहिते रतः ॥ १-३७-१६ (१७२६)
तं गत्वा दशतां कश्चिद्भुजङ्गः स मरिष्यति ।
तस्मिन्मृते यज्ञकारे क्रतुः स न भविष्यति ॥ १-३७-१७ (१७२७)
ये चान्ये सर्पसत्रज्ञा भविष्यन्त्यस्य चर्त्विजः ।
तांश्च सर्वान्दशिष्यामः कृतमेवं भविष्यति ॥ १-३७-१८ (१७२८)
अपरे त्वब्रुवन्नागा धर्मात्मानो दयालवः ।

अबुद्धिरेषा भवतां ब्रह्महत्या न शोभनम् ॥ १-३७-१९ (१७२९)
सम्यक्सद्धर्ममूला वै व्यसने शान्तिरुत्तमा ।
अधर्मोत्तरता नाम कृत्स्नं व्यापादयेज्जगत् ॥ १-३७-२० (१७३०)
अपरे त्वब्रुवन्नागाः समिद्धं जातवेदसम् ।
वर्षैर्निर्वापयिष्यामो मेघा भूत्वा सविद्युतः ॥ १-३७-२१ (१७३१)
स्रुग्भाण्डं निशि गत्वा च अपरे भुजगोत्तमाः ।
प्रमत्तानां हरन्त्वाशु विघ्न एवं भविष्यति ॥ १-३७-२२ (१७३२)
यज्ञे वा भुजगास्तस्मिञ्शतशोऽथ सहस्रशः ।
जनान्दशन्तु वै सर्वे नैवं त्रासो भविष्यति ॥ १-३७-२३ (१७३३)
अथवा संस्कृतं भोज्यं दूषयन्तु भुजङ्गमाः ।
स्वेन मूत्रपुरीषेण सर्वभोज्यविनाशिना ॥ १-३७-२४ (१७३४)
अपरे त्वब्रुवंस्तत्र ऋत्विजोऽस्य भवामहे ।
यज्ञविघ्नं करिष्यामो दक्षिणा दीयतामिति ॥ १-३७-२५ (१७३५)
वश्यतां च गतोऽसौ नः करिष्यति यथेप्सितम् ।
अपरे त्वब्रुवंस्तत्र जले प्रक्रीडितं नृपम् ॥ १-३७-२६ (१७३६)
गृहमानीय बध्नीमः क्रतुरेवं भवेन्न सः ।
अपरे त्वब्रुवंस्तत्र नागाः पण्डितमानिनः ॥ १-३७-२७ (१७३७)
दशामस्तं प्रगृह्याशु कृतपेवं भविष्यति ।
छिन्नं मूलमनर्थानां मृते तस्मिन्भविष्यति ॥ १-३७-२८ (१७३८)
एषा नो नैष्ठिकी बुद्धिः सर्वेषामीक्षणश्रवः ।
अथ यन्मन्यसे राजन्द्रुतं तत्संविधीयताम् ॥ १-३७-२९ (१७३९)
इत्युक्त्वा समुदैक्षन्त वासुकिं पन्नगोत्तमम् ।
वासुकिश्चापि संचिन्त्य तानुवाच भुजङ्गमान् ॥ १-३७-३० (१७४०)
नैषा वो नैष्ठिकी बुद्धिर्मता कर्तुं भुजङ्गमाः ।
सर्वेषामेव मे बुद्धिः पन्नगानां न रोचते ॥ १-३७-३१ (१७४१)
किं तत्र संविधातव्यं भवतां स्याद्धितं तु यत् ।
श्रेयः प्रसादनं मन्ये कश्यपश्य महात्मनः ॥ १-३७-३२ (१७४२)
ज्ञातिवर्गस्य सौहार्दादात्मनश्च भुजङ्गमाः ।
न च जानाति मे बुद्धिः किंचित्कर्तुं वचो हिवः ॥ १-३७-३३ (१७४३)
मया हीदं विधातव्यं भवतां यद्धितं भवेत् ।
अनेनाहं भृशं तप्ये गुणदोषौ मदाश्रयौ ॥ ॥ १-३७-३४ (१७४४)

इति श्रीमन्महाभारते आदिपर्वणि आस्तीकपर्वणि सप्तत्रिंशोऽध्यायः ॥ ३७ ॥

Mahabharata - Adi Parva - Chapter Footnotes

१-३७-५ सत्यस्य सत्यलोकाधिपतेर्ब्रह्मणः ॥

१-३७-१० मन्त्रबुद्धिविशारदाः नीतिनिश्चयनिपुणाः ॥
१-३७-१३ निवर्त्स्यति निवृत्तो भविष्यति ॥
१-३७-१८ कृतं प्रतिकृतम् ॥
१-३७-२० व्यसने आपदि शान्तिः आपन्नाशः । सद्धर्ममूला सतां धर्मो देवब्राह्मणप्रार्थना तन्मूला ॥
१-३७-२९ नैष्ठिकी आत्यन्तिकी । ईक्षणमेव श्रवः श्रोत्रं यस्य स तथाभूत हे वासुके ॥
१-३७-३१ ज्ञातिरक्षानाशनिमित्तौ गुणदोषौ मदाश्रयौ ज्येष्ठत्वान्ममेत्यर्थः ॥
सप्तत्रिंशोऽध्यायः ॥
३७ ॥

---

अध्यय०३८
॥ श्रीः ॥
१.३८. अध्यायः ३८

Mahabharata - Adi Parva - Chapter Topics
एलापत्रभाषणम् ॥ १ ॥
देवब्रह्मसंवादमुखेनास्तीकोत्पत्तिकथनम् ॥ २ ॥

Mahabharata - Adi Parva - Chapter Text

१-३८-० (१७४५)
सौतिरुवाच। १-३८-०क्ष् (१७६)
सर्पाणां तु वचः श्रुत्वा सर्वेषामिति चेति च ।
वासुकेश्च वचः श्रुत्वा एलापत्रोऽब्रवीदिदम् ॥ १-३८-१ (१७४६)
ग्प्रागेव दर्शिता बुद्धिर्मयैषा भुजगोत्तमाः ।
हेयेति यदि वो बुद्धिस्तवापि च तथा प्रभो ॥ १-३८-२ (१७४७)
अस्तु कामं मभाद्यापि बुद्धिः स्मरणमागता ।
तां शृणुध्वं प्रवक्ष्यामि याथातथ्येन पन्नगाः ॥' १-३८-३ (१७४८)
न स यज्ञो न भविता न स राजा तथाविधः ।
जनमेजयः पाण्डवेयो यतोऽस्माकं महद्भयम् ॥ १-३८-४ (१७४९)
दैवेनोपहतो राजन्यो भवेदिह पूरुषः ।
स दैवमेवाश्रयेत नान्यत्तत्र परायणम् ॥ १-३८-५ (१७५०)
तदिदं चैवमस्माकं भयं पन्नगसत्तमाः ।
दैवमेवाश्रयामोऽत्र शृणुध्वं च वचो मम ॥ १-३८-६ (१७५१)
अहं शापे समुत्सृष्टे समश्रौषं वचस्तदा ।

मातुरुत्सङ्गमारूढो भयात्पन्नगसत्तमाः ।
देवानां पन्नगश्रेष्ठास्तीक्ष्णास्तीक्ष्ण इति प्रभो ॥ १-३८-७ (१७५२)
ग्शापदुःखाग्नितप्तानां पन्नगानामनामयम् ।
कृपया परयाऽऽविष्टाः प्रार्थयन्तो दिवौकसः ॥' १-३८-८ (१७५३)
देवा ऊचुः। १-३८-९क्ष् (१७७)
का हि लब्ध्वा प्रियान्पुत्राञ्शपेदेवं पितामह ।
ऋते कद्रूं तीक्ष्णरूपां देवदेव तवाग्रतः ॥ १-३८-९ (१७५४)
तथेति च वचस्तस्यास्त्वयाप्युक्तं पितामह ।
इच्छाम एतद्विज्ञातुं कारणं यन्न वारिता ॥ १-३८-१० (१७५५)
ब्रह्मोवाच। १-३८-११क्ष् (१७८)
बहवः पन्नगास्तीक्ष्णा घोररूपा विषोल्बणाः ।
प्रजानां हितकामोऽहं न च वारितवांस्तदा ॥ १-३८-११ (१७५६)
ये दन्दशूकाः क्षुद्राश्च पापाचारा विषोल्बणाः ।
तेषां विनाशो भविता न तु ये धर्मचारिणः ॥ १-३८-१२ (१७५७)
यन्निमित्तं च भविता मोक्षस्तेषां महाभयात् ।
पन्नगानां निबोधध्वं तस्मिन्काले समागते ॥ १-३८-१३ (१७५८)
यायावरकुले धीमान्भविष्यति महानृषिः ।
जरत्कारुरिति ख्यातस्तपस्वी नियतेन्द्रियः ॥ १-३८-१४ (१७५९)
तस्य पुत्रो जरत्कारोर्भविष्यति तपोधनः ।
आस्तीको नाम यज्ञं स प्रतिषेत्स्यति तं तदा ।
तत्र मोक्ष्यन्ति भुजगा ये भविष्यन्ति धार्मिकाः ॥ १-३८-१५ (१७६०)
देवा ऊचुः। १-३८-१६क्ष् (१७९)
स मुनिप्रवरो ब्रह्मञ्जरत्कारुर्महातपाः ।
कस्यां पुत्रं महात्मानं जनयिष्यति वीर्यवान् ॥ १-३८-१६ (१७६१)
ब्रह्मोवाच। १-३८-१७क्ष् (१८०)
ग्वासुकेर्भगिनी कन्या समुत्पन्ना सुशोभना ।
तस्मै दास्यति तां कन्यां वासुकिर्भुजगोत्तमः ॥ १-३८-१७ (१७६२)
तस्यां जनयिता पुत्रं वेदवेदाङ्गपारगम्।'
सनामायां सनामा स कन्यायां द्विजसत्तमः ॥ १-३८-१८ (१७६३)
एलापत्र उवाच। १-३८-१९क्ष् (१८१)
एवमस्त्विति तं देवाः पितामहमथाब्रुवन् ।
उत्क्वैवं वचनं देवान्विरिञ्चिस्त्रिदिवं ययौ ॥ १-३८-१९ (१७६४)
सोऽहमेवं प्रपश्यामि वासुके भगिनी तव ।
जरत्कारुरिति ख्याता तां तस्मै प्रतिपादय ॥ १-३८-२० (१७६५)
भैक्षवद्भिक्षमाणाय नागानां भयशान्तये ।
ऋषये सुव्रतायैनामेष मोक्षः श्रुतो मया ॥ ॥ १-३८-२१ (१७६६)

इति श्रीमन्महाभारते आदिपर्वणि आस्तीकपर्वणि अष्टत्रिंशोऽध्यायः ॥ ३८ ॥
Mahabharata - Adi Parva - Chapter Footnotes

१-३८-१ इतिचेतिचेति तत्तद्वचनाभिनयप्रदर्शनम् ॥
१-३८-४ न भवितेति न भवितैवेत्यर्थः ।न तथाविधः यस्य
राष्ट्रमृत्विजः स्वरूप वा द्रष्टुं शक्यं तादृशो न भवति
मन्त्रवीर्यसंपन्नत्वात् ॥
१-३८-७ तीक्ष्णास्तीक्ष्णाः अत्यन्तं तीक्ष्णाः स्त्रिय इति शेषः ॥
१-३८-१२ दन्दशूकाः दंशनशीलाः ।क्षुद्राः अल्पेपि निमित्ते प्राणग्राहकाः ॥
अष्टत्रिंशोऽध्यायः ॥
३८ ॥

---

अध्यय०३९
॥ श्रीः ॥
१.३९. अध्यायः ३९

Mahabharata - Adi Parva - Chapter Topics
एलापत्रोपदेशेन वासुकिभगिन्या जरत्कार्वा रक्षणम् ॥ १ ॥

Mahabharata - Adi Parva - Chapter Text

१-३९-० (१७६७)
सौतिरुवाच। १-३९-०क्ष् (१८२)
एलापत्रवचः श्रुत्वा ते नागा द्विजसत्तम ।
सर्वे प्रहृष्टमनसः साधुसाध्वित्यपूजयन् ॥ १-३९-१ (१७६८)
ततःप्रभृति तां कन्यां वासुकिः पर्यरक्षत ।
जरत्कारुं स्वसारं वै परं हर्षमवाप च ॥ १-३९-२ (१७६९)
ततो नातिमहान्कालः समतीत इवाभवत् ।
अथ देवासुराः ग्सर्वे ममन्थुर्वरुणालयम् ॥ १-३९-३ (१७७०)
तत्र नेत्रमभून्नागो वासुकिर्बलिनां वरः ।
समाप्यैव च तत्कर्म पितामहमुपागमन् ॥ १-३९-४ (१७७१)
देवा वासुकिना सार्धं पितामहमथाब्रुवन् ।
भगवञ्शापभीतोऽयं वासुकिस्तप्यते भृशम् ॥ १-३९-५ (१७७२)
अस्यैतन्मानसं शल्यं समुद्धर्तुं त्वमर्हसि ।
जनन्याः शापजं देव ज्ञातीनां हितमिच्छतः ॥ १-३९-६ (१७७३)
हितो ह्ययं सदास्मकं प्रियकारी च नागराट् ।

प्रसादं कुरु देवेश शमयास्य मनोज्वरम् ॥ १-३९-७ (१७७४)
ब्रह्मोवाच। १-३९-८क्ष् (१८३)
मयैव तद्वितीर्णं वै वचनं मनसाऽमराः ।
एलापत्रेण नागेन यदस्याभिहितं पुरा ॥ १-३९-८ (१७७५)
तत्करोत्वेष नागेन्द्रः प्राप्तकालं वचः स्वयम् ।
विनशिष्यन्ति ये पापा न तु ये धर्मचारिणः ॥ १-३९-९ (१७७६)
उत्पन्नः स जरत्कारुस्तपस्युग्रे रतो द्विजः ।
तस्यैष भगिनीं काले जरत्कारुं प्रयच्छतु ॥ १-३९-१० (१७७७)
एलापत्रेण यत्प्रोक्तं वचनं भुजगेन ह ।
पन्नगानां हितं देवास्तत्तथा न तदन्यथा ॥ १-३९-११ (१७७८)
सौतिरुवाच। १-३९-१२क्ष् (१८४)
एतच्छ्रुत्वा तु नागेन्द्रः पितामहवचस्तदा ।
संदिश्य पन्नगान्सर्वान्वासुकिः शापमोहितः ॥ १-३९-१२ (१७७९)
स्वसारमुद्यम्य तदा जरत्कारुमृषिं प्रति ।
सर्पान्बहूञ्जरत्कारौ नित्ययुक्तान्समादधत् ॥ १-३९-१३ (१७८०)
जरत्कारुर्यदा भार्यामिच्छेद्वरयितुं प्रभुः ।
शीघ्रमेत्य तदाऽऽख्येयं तन्नः श्रेयो भविष्यति ॥ ॥ १-३९-१४ (१७८१)

इति श्रीमनमहाभारते आदिपर्वणि आस्तीकपर्वणि
एकोनचत्वारिंशोऽध्यायः ॥ ३९ ॥
Mahabharata - Adi Parva - Chapter Footnotes

१-३९-४ नेत्रं रज्जुः ॥
१-३९-१३ जरत्कारौ जरत्कारुऋषिनिमित्तं ।तदन्वेषणायेत्यर्थः ॥
एकोनचत्वारिंशोऽध्यायः ॥
३९ ॥

---

अध्यय०४०
॥ श्रीः ॥
१.४०. अध्यायः ४०

Mahabharata - Adi Parva - Chapter Topics
जरत्कारुनामव्युत्पत्तिकथनम् ॥ १ ॥
शौनकस्य सौतिं प्रति आस्तीकोत्पत्तिप्रश्नः ॥ २ ॥
प्रसङ्गेन परीक्षिन्मृगयाकथनम् ॥ ३ ॥
परीक्षिता शमीकस्कन्धे मृतसर्पनिधानम् ॥ ४ ॥

१-४०-० (१७८२)
शौनक उवाच। १-४०-०क्ष् (१८५)
जरत्कारुरिति ख्यातो यस्त्वया सूतनन्दन ।
इच्छामि तदहं श्रोतुं ऋषेस्तस्य महात्मनः ॥ १-४०-१ (१७८३)
किं कारणं जरत्कारोर्नामैतत्प्रथितं भुवि ।
जरत्कारुनिरुक्तिं त्वं यथावद्वक्तुमर्हसि ॥ १-४०-२ (१७८४)
सौतिरुवाच। १-४०-३क्ष् (१८६)
जरेति क्षयमाहुर्वै दारुणं कारुसंज्ञितम् ।
शरीरं कारु तस्यासीत्तत्स धीमाञ्शनैःशनैः ॥ १-४०-३ (१७८५)
क्षपयामास तीव्रेण तपसेत्यत उच्यते ।
जरत्कारुरिति ब्रह्मन्वासुकेर्भगिनी तथा ॥ १-४०-४ (१७८६)
एवमुक्तस्तु धर्मात्मा शौनकः प्राहसत्तदा ।
उग्रश्रवसमामन्त्र्य उपपन्नमिति ब्रुवन् ॥ १-४०-५ (१७८७)
शौनक उवाच। १-४०-६क्ष् (१८७)
उक्तं नाम यथा पूर्वं सर्वं तच्छ्रुतवानहम् ।
यथा तु जातो ह्यास्तीक एतदिच्छामि वेदितुम् ।
तच्छ्रुत्वा वचनं तस्य सौतिः प्रोवाच शास्त्रतः ॥ १-४०-६ (१७८८)
सौतिरुवाच। १-४०-७क्ष् (१८८)
संदिश्य पन्नगान्सर्वान्वासुकिः सुसमाहितः ।
स्वसारमुद्यम्य तदा जरत्कारुमृषिं प्रति ॥ १-४०-७ (१७८९)
अथ कालस्य महतः स मुनिः संशितव्रतः ।
तपस्यभिरतो धीमान्स दारान्नाभ्यकाङ्क्षत ॥ १-४०-८ (१७९०)
स तूर्ध्वरेतास्तपसि प्रसक्तः
स्वाध्यायवान्वीतभयः कृतात्मा ।
चचार सर्वां पृथिवीं महात्मा
न चापि दारान्मनसाध्यकाङ्क्षत् ॥ १-४०-९ (१७९१)
ततोऽपरस्मिन्संप्राप्ते काले कस्मिंश्चिदेव तु ।
परिक्षिन्नाम राजासीद्ब्रह्मन्कौरववंशजः ॥ १-४०-१० (१७९२)
यथा पाण्डुर्महाबाहुर्धनुर्धरवरो युधि ।
बभूव मृगयाशीलः पुरास्य प्रपितामहः ॥ १-४०-११ (१७९३)
ग्तथा विख्यातवाँल्लोके परीक्षिदभिमन्युजः।'
मृगान्विध्यन्वराहांश्च तरक्षून्महिषांस्तथा ।
अन्यांश्च विविधान्वन्यांश्चचार पृथिवीपतिः ॥ १-४०-१२ (१७९४)
स कदाचिन्मृगं विद्ध्वा बाणेनानतपर्वणा ।

पृष्ठतो धनुरादाय ससार गहने वने ॥१-४०-१३ (१७९५)
यथैव भगवान्रुद्रो विद्धवा यज्ञमृगं दिवि ।
अन्वगच्छद्धनुष्पाणिः पर्यन्वेष्टुमितस्ततः ॥१-४०-१४ (१७९६)
न हि तेन मृगो विद्धो जीवन्गच्छति वै वने ।
पूर्वरूपं तु तत्तूर्णं तस्यासीत्स्वर्गतिं प्रति ॥१-४०-१५ (१७९७)
परिक्षितो नरेन्द्रस्य विद्धो यन्नष्टवान्मृगः ।
दूरं चापहृतस्तेन मृगेण स महीपतिः ॥१-४०-१६ (१७९८)
परिश्रान्तः पिपासार्त आससाद मुनिं वने ।
गवां प्रचारेष्वासीनं वत्सानां मुखनिःसृतम् ॥१-४०-१७ (१७९९)
भूयिष्ठमुपयुञ्जानं फेनमापिबतां पयः ।
तमभिद्रुत्य वेगेन स राजा संशितव्रतम् ॥१-४०-१८ (१८००)
अपृच्छद्धनुरुद्यम्य तं मुनिं क्षुच्छ्रमान्वितः ।
भोभो ब्रह्मन्नहं राजा परीक्षिदभिमन्युजः ॥१-४०-१९ (१८०१)
मया विद्धो मृगो नष्टः कच्चित्तं दृष्टवानसि ।
स मुनिस्तं तु नोवाच किंचिन्मौनव्रते स्थितः ॥१-४०-२० (१८०२)
तस्य स्कन्धे मृतं सर्पं क्रुद्धो राजा समासजत् ।
समुत्क्षिप्य धनुष्कोट्या स चैनं समुपैक्षत ॥१-४०-२१ (१८०३)
न स किंचिदुवाचैनं शुभं वा यदि वाऽशुभम् ।
स राजा क्रोधमुत्सृज्य व्यथितस्तं तथागतम् ।
दृष्ट्वा जगाम नगरमृषिस्त्वासीत्तथैव सः ॥ १-४०-२२ (१८०४)
न हि तं राजशार्दूलं क्षमाशीलो महामुनिः ।
स्वधर्मनिरतं भूपं समाक्षिप्तोऽप्यधर्षयत् ॥१-४०-२३ (१८०५)
न हि तं राजशार्दूलस्तथा धर्मपरायणम् ।
जानाति भरतश्रेष्ठस्तत एनमधर्षयत् ॥१-४०-२४ (१८०६)
तरुणस्तस्य पुत्रोऽभूत्तिग्मतेजा महातपाः ।
शृङ्गी नाम महाक्रोधो दुष्पसादोमहाव्रतः ॥१-४०-२५ (१८०७)
स देवं परमासीनं सर्वभूतहिते रतम् ।
ब्रह्माणमुपतस्थे वै काले काले सुंसयतः ॥१-४०-२६ (१८०८)
सतेन समनुज्ञातो ब्रह्मणा गृहमेयिवान् ।
सख्योक्तः क्रीडमानेन स तत्र हसता किल ॥१-४०-२७ (१८०९)
संरम्भात्कोपनोऽतीव विषकल्पो मुनेः सुतः ।
उद्दिश्य पितरं तस्य यच्छ्रुत्वा रोषमाहरत् ।
ऋषिपुत्रेण नर्मार्थे कृशेन द्विजसत्तम ॥ १-४०-२८ (१८१०)
कृश उवाच।१-४०-२९क्ष् (१८९)
तेजस्विनस्तव पिता तथैव च तपस्विनः ।
शवं स्कन्धेन वहति मा शृङ्गिन्गर्वितो भव ॥१-४०-२९ (१८११)

व्याहरत्स्वृषिपुत्रेषु मा स्म किंचिद्वचो वद ।
अस्मद्विधेषु सिद्धेषु ब्रह्मवित्सु तपस्विषु ॥ १-४०-३० (१८१२)
क्व ते पुरुषमानित्वं क्व ते वाचस्तथाविधाः ।
दर्पजाः पितरं द्रष्टा यस्त्वं शवधरं तथा ॥ १-४०-३१ (१८१३)
पित्रा च तव तत्कर्म नानुरूपमिवात्मनः ।
कृतं मुनिजनश्रेष्ठ येनाहं भृशदुःखितः ॥ ॥ १-४०-३२ (१८१४)

इति श्रीमन्महाभारते आदिपर्वणि आस्तीकपर्वणि चत्वारिंशोऽध्यायः ॥ ४० ॥
Mahabharata - Adi Parva - Chapter Footnotes

१-४०-३ कारु कामाद्युपद्रवमूलत्वाद्दारुणं शरीरं जरयति क्षपयतीति
जरत्कारुरिति निर्वचनम् ॥
१-४०-४ तथा तादृस्येव ॥
१-४०-५ प्राहसत् अतिजीर्णयोरपि ब्रह्मचर्यविनाशः प्रसक्त
इत्याश्चर्यं मत्वेति भावः । आमन्त्र्य हेउग्रश्रव इति
संबोध्य। उपपन्नं युक्तं यत्तुल्यवयोरूपयोर्विवाह इति भावः ॥
१-४०-१५ तत् मृगस्यादर्शनं । पूर्वरूपं कारणम् ॥
१-४०-१७ प्रचारेषु गोष्ठेषु ॥
१-४०-१८ उपयुञ्जानं भक्षयन्तम् । पयः आपिबतां वत्सानामिति
पूर्वेणान्वयः ॥
१-४०-२१ समासजत् आरोपयामास ॥
चत्वारिंशोऽध्यायः ॥
४० ॥

---

अध्यय०४१
॥ श्रीः ॥
१.४१. अध्यायः ४१

Mahabharata - Adi Parva - Chapter Topics
मुनिपुत्राच्छृङ्गिणः परीक्षितः शापः ॥ १ ॥

Mahabharata - Adi Parva - Chapter Text

१-४१-० (१८१५)
सौतिरुवाच। १-४१-०क्ष् (१९०)
एवमुक्तः स तेजस्वी शृङ्गी कोपसमन्वितः ।
मृतधारं गुरुं श्रुत्वा पर्यतप्यत मन्युना ॥ १-४१-१ (१८१६)

स त कृशमक्षिप्रेक्ष्य सूनृतां वाचमुत्सृजन् ।
अपृच्छत्तं कथं तातः ग्सर्वभूतहिते रतः ॥ १-४१-२ (१८१७)
अनन्यचेताः सततं विष्णुं दवेमतोषयत् ।
वन्यान्नभोजी सततं मुनिर्मौनव्रते स्थितः ।
एवंभूतः स तेजस्वी' स मेऽद्य मृतधारकः ॥ १-४१-३ (१८१८)
कृश उवाच। १-४१-४क्ष् (१९१)
राज्ञा परिक्षिता तात मृगयां परिधावता ।
अवसक्तः पितुस्तेऽद्य मृतः स्कन्धे भुजङ्गमः ॥ १-४१-४ (१८१९)
शृङ्ग्युवाच। १-४१-५क्ष् (१९२)
किं मे पित्रा कृतं तस्य राज्ञोऽनिष्टं दुरात्मनः ।
ब्रूहि तत्कृश तत्त्वेन पश्य मे तपसो बलम् ॥ १-४१-५ (१८२०)
कृश उवाच। १-४१-६क्ष् (१९३)
स राजा मृगयां यातः परिक्षिदभिमन्युजः ।
ससार मृगमेकाकी विद्ध्वा बाणेन शीघ्रगम् ॥ १-४१-६ (१८२१)
न चापश्यन्मृगं राजा चरंस्तस्मिन्महावने ।
पितरं ते स दृष्ट्वैव पप्रच्छानभिभाषिणम् ॥ १-४१-७ (१८२२)
तं स्थाणुभूतं तिष्ठन्तं क्षुत्पिपासाश्रमातुरः ।
पुनःपुनर्मृगं नष्टं प्रपच्छ पितरं तव ॥ १-४१-८ (१८२३)
स च मौनव्रतोपेतो नैव तं प्रत्यभाषत ।
तस्य राजा धनुष्कोट्या सर्पं स्कन्धे समासजत् ॥ १-४१-९ (१८२४)
शृङ्गिंस्तव पिता सोऽपि तथैवास्ते यतव्रतः ।
सोऽपि राजा स्वनगरं प्रस्थितो गजसाह्वयम् ॥ १-४१-१० (१८२५)
सौतिरुवाच। १-४१-११क्ष् (१९४)
श्रुत्वैवमृषिपुत्रस्तु शवं स्कन्धे प्रतिष्ठितम् ।
कोपसंरक्तनयनः प्रज्वलन्निव मन्युना ॥ १-४१-११ (१८२६)
आविष्टः स हि कोपेन शशाप नृपतिं तदा ।
वार्युपस्पृश्य तेजस्वी क्रोधवेगबलात्कृतः ॥ १-४१-१२ (१८२७)
शृङ्ग्युवाच। १-४१-१३क्ष् (१९५)
योऽसौ वृद्धस्य तातस्य तथा कृच्छ्रगतस्य ह ।
स्कन्धे मृतं समास्राक्षीत्पन्नगं राजकिल्विषी ॥ १-४१-१३ (१८२८)
तं पापमतिसंक्रुद्धस्तक्षकः पन्नगेश्वरः ।
आशीविषस्तिग्मतेजा मद्वाक्यबलचोदितः ॥ १-४१-१४ (१८२९)
सप्तरात्रादितो नेता यमस्य सदनं प्रति ।
द्विजानामवमन्तारं कुरूणामयशस्करम् ॥ १-४१-१५ (१८३०)
सौतिरुवाच। १-४१-१६क्ष् (१९६)
इति शप्त्वातिसंक्रुद्धः शृङ्गी पितरमभ्यगात् ।

आसीनं ग्रोव्रजे तस्मिन्वहन्तं शवपन्नगम् ॥ १-४१-१६ (१८३१)
स तमलक्ष्य पितरं शृङ्गी स्कन्धगतेन वै ।
शवेन भुजगेनासीद्भूयः क्रोधसमाकुलः ॥ १-४१-१७ (१८३२)
दुःखाच्चाश्रूणि मुमुचे पितरं चेदमब्रवीत् ।
श्रुत्वेमां धर्षणां तात तव तेन दुरात्मना ॥ १-४१-१८ (१८३३)
राज्ञा परिक्षिता कोपादशपं तमहं नृपम् ।
यथार्हति स एवोग्रं शापं कुरुकुलाधमः ।
सप्तमेऽहनि तं पापं तक्षकः पन्नगोत्तमः ॥ १-४१-१९ (१८३४)
वैवस्वतस्य सदनं नेता परमदारुणम्। १-४१-२० (१८३५)
सौतिरुवाच ।
तमब्रवीत्पिता ब्रह्मंस्तथा कोपसमन्वितम् ॥ १-४१-२०क्ष् (१९७)
शमीक उवाच। १-४१-२१क्ष् (१९८)
न मे प्रियं कृतं तात नैष धर्मस्तपस्विनाम् ।
वयं तस्य नरेन्द्रस्य विषये निवसामहे ॥ १-४१-२१ (१८३६)
न्यायतो रक्षितास्तेन तस्य पापं न रोचये ।
सर्वथा वर्तमानस्य राज्ञो ह्यस्मद्विधैः सदा ॥ १-४१-२२ (१८३७)
क्षन्तव्यं पुत्र धर्मो हि हतो हन्ति न संशयः ।
यदि राजा न संरक्षेत्पीडा नः परमा भवेत् ॥ १-४१-२३ (१८३८)
न शक्नुयाम चरितुं धर्मं पुत्र यथासुखम् ।
रक्षमाणा वयं तात राजभिर्धर्मदृष्टिभिः ॥ १-४१-२४ (१८३९)
चरामो विपुलं धर्मं तेषां भागोऽस्ति धर्मतः ।
सर्वथा वर्तमानस्य राज्ञः क्षन्तव्यमेव हि ॥ १-४१-२५ (१८४०)
परिक्षित्तु विशेषेण यथाऽस्य प्रपितामहः ।
रक्षत्यस्मांस्तथा राज्ञा रक्षितव्याः प्रजा विभो ॥ १-४१-२६ (१८४१)
अराजके जनपदे दोषा जायन्ति वै सदा ।
उद्वृत्तं सततं लोकं राजा दण्डेन शास्ति वै ॥ १-४१-२७ (१८४२)
दण्डात्प्रतिभयं भूयः शान्तिरुत्पद्यते तदा ।
नोद्विग्नश्चरते धर्मं नोद्विग्नश्चरते क्रियाम् ॥ १-४१-२८ (१८४३)
राज्ञा प्रतिष्ठितो धर्मो धर्मात्स्वर्गः प्रतिष्ठितः ।
राज्ञो यज्ञक्रियाः सर्वा यज्ञाद्देवाः प्रतिष्ठिताः ॥ १-४१-२९ (१८४४)
देवाद्वृष्टिः प्रवर्तेत वृष्टेरोषधयः स्मृताः ।
ओषधिभ्यो मनुष्याणां धारयन्सततं हितम् ॥ १-४१-३० (१८४५)
मनुष्याणां च यो धाता राजा राज्यकरः पुनः ।
दशश्रोत्रियसमो राजा इत्येवं मनुरब्रवीत् ॥ १-४१-३१ (१८४६)
तेनेह क्षुधितेनैत्य श्रान्तेन मृगलिप्सुना ।
अजानता कृतं मन्ये व्रतमेतदिदं मम ॥ १-४१-३२ (१८४७)

कस्मादिदं त्वया बाल्यात्सहसा दुष्कृतं कृतम् ।
न ह्यर्हति नृपः शापमस्मत्तः पुत्र सर्वथा ॥ ॥१-४१-३३ (१८४८)

इति श्रीमन्महाभारते आदिपर्वणि आस्तीकपर्वणि एकचत्वारिंशोऽध्यायः
॥ ४१ ॥
Mahabharata - Adi Parva - Chapter Footnotes

१-४१-१० गजसाह्वयं हस्तिनपुरम् ॥
१-४१-१३ कृच्छ्रगतस्य मौनव्रतधरस्य ।राजा चासौ किल्बिषी
च राजकिल्बिषी ॥
१-४१-२१ विषये देशे ॥
१-४१-२२ पापं द्रोहम् ॥
१-४१-२७ दोषाः दस्युपीडादयः ॥
१-४१-३० मनुष्याणां हितं धारयन् कुर्वन् ॥
१-४१-३१ धाता पोषकः ॥
१-४१-३२ व्रतमजानतेति संबन्धः ॥
एकचत्वारिंशोऽध्यायः ॥
४१ ॥

---

अध्यय०४२
॥ श्रीः ॥
१.४२. अध्यायः ४२

Mahabharata - Adi Parva - Chapter Topics
शृङ्गिशमीकसवादः ॥ १ ॥
शमीकप्रेषितेन गौरमुखाख्यशिष्येण सह परिक्षित्संवादः ॥ २ ॥
मन्त्रिभिः सह राज्ञं विचारः ॥ ३ ॥
तक्षककाश्यपसंवादः ॥ ४ ॥

Mahabharata - Adi Parva - Chapter Text

१-४२-० (१८४९)
शृङ्ग्युवाच।१-४२-०क्ष् (१९९)
यद्येतत्साहसं तात यदि वा दुष्कृतं कृतम् ।
प्रियं वाप्यप्रियं वा ते वागुक्ता न मृषा भवेत् ॥१-४२-१ (१८५०)
नैवान्यथेदं भविता पितरेष ब्रवीमि ते ।
नाहं मृषा ब्रवीम्येवं स्वैरेष्वपि कुतः शपन् ॥१-४२-२ (१८५१)

शमीक उवाच। १-४२-३क्ष् (२००)
जानाम्युग्रप्रभावं त्वां तात सत्यगिरं तथा ।
नानृतं चोक्तपूर्वं ते नैतन्मिथ्या भविष्यति ॥ १-४२-३ (१८५२)
पित्रा पुत्रो वयस्थोऽपि सततं वाच्य एव तु ।
यथा स्याद्गुणसंयुक्तः प्राप्नुयाच्च महद्यशः ॥ १-४२-४ (१८५३)
किं पुनर्बाल एव त्वं तपसा भावितः सदा ।
वर्धते चेत्प्रभवतां कोपोऽतीव महात्मनाम् ॥ १-४२-५ (१८५४)
ग्उत्सीदेयुरिमे लोकाः क्षणा चास्य प्रतिक्रिया।'
सोऽहं पश्यामि वक्तव्यं त्वयि धर्मभृतां वर ।
पुत्रत्वं बालतां चैव तवावेक्ष्य च साहसम् ॥ १-४२-६ (१८५५)
स त्वं शमपरो भूत्वा वन्यमाहारमाचरन् ।
चर क्रोधमिमं हित्वा नैवं धर्मं प्रहास्यसि ॥ १-४२-७ (१८५६)
क्रोधो हि धर्मं हरति यतीनां दुःखसंचितम् ।
ततो धर्मविहीनानां गतिरिष्टा न विद्यते ॥ १-४२-८ (१८५७)
शम एव यतीनां हि क्षमिणां सिद्धिकारकः ।
क्षमावतामयं लोकः परश्चैव क्षमावताम् ॥ १-४२-९ (१८५८)
तस्माच्चरेथाः सततं क्षमाशीलो जितेन्द्रियः ।
क्षमया प्राप्स्यसे लोकान्ब्रह्मणः समनन्तरान् ॥ १-४२-१० (१८५९)
मया तु शममास्थाय यच्छक्यं कर्तुमद्य वै ।
तत्करिष्याम्यहं तात प्रेपयिष्ये नृपाय वै ॥ १-४२-११ (१८६०)
मम पुत्रेण शप्तोऽसि बालेनाकृतबुद्धिना ।
ममेमां धर्षणां त्वत्तः प्रेक्ष्य राजन्नमर्षिणा ॥ १-४२-१२ (१८६१)
सौतिरुवाच। १-४२-१३क्ष् (२०१)
एवमादिश्य शिष्यं स प्रेषयामास सुव्रतः ।
परिक्षिते नृपतये दयापन्नो महातपाः ॥ १-४२-१३ (१८६२)
संदिश्य कुशलप्रश्नं कार्यवृत्तान्तमेव च ।
शिष्यं गौरमुखं नाम शीलवन्तं समाहितम् ॥ १-४२-१४ (१८६३)
सोऽभिगम्य ततः शीघ्रं नरेन्द्रं कुरुवर्धनम् ।
विवेश भवनं राज्ञः पूर्वं द्वास्थैर्निवेदितः ॥ १-४२-१५ (१८६४)
पूजितस्तु नरेन्द्रेण द्विजो गौरमुखस्तदा ।
आचख्यौ च परिश्रान्तो राज्ञः सर्वमशेषतः ॥ १-४२-१६ (१८६५)
शमीकवचनं घोरं यथोक्तं मन्त्रिसन्निधौ ।
शमीको नाम राजेन्द्र वर्तते विषये तव ॥ १-४२-१७ (१८६६)
ऋषिः परमधर्मात्मा दान्तः शान्तो महातपाः ।
तस्य त्वया नरव्याघ्र सर्पः प्राणैर्वियोजितः ॥ १-४२-१८ (१८६७)
अवसक्तो धनुष्कोट्या स्कन्धे मौनान्वितस्य च ।

क्षान्तवांस्तव तत्कर्म पुत्रस्तस्य न चक्षमे ॥ १-४२-१९ (१८६८)
तेन शप्तोऽसि राजेन्द्र पितुरज्ञातमद्य वै ।
तक्षकः सप्तरात्रेण मृत्युस्तव भविष्यति ॥ १-४२-२० (१८६९)
तत्र रक्षां कुरुष्वेति पुनः पुनरथाब्रवीत् ।
तदन्यथा न शक्यं च कर्तुं केनचिदप्युत ॥ १-४२-२१ (१८७०)
न हि शक्नोति संयन्तुं पुत्रं कोपसमन्वितम् ।
ततोऽहं प्रेषितस्तेन तव राजन्हितार्थिना ॥ १-४२-२२ (१८७१)
सातिरुवाच। १-४२-२३क्ष् (२०२)
इति श्रुत्वा वचो घोरं स राजा कुरुनन्दनः ।
पर्यतप्यत तत्पापं कृत्वा राजा महातपाः ॥ १-४२-२३ (१८७२)
तं च मौनव्रतं श्रुत्वा वने मुनिवरं तदा ।
भूय एवाभवद्राजा शोकसंतप्तमानसः ॥ १-४२-२४ (१८७३)
अनुक्रोशात्मतां तस्य शमीकस्यावधार्य च ।
पर्यतप्यत भूयोपि कृत्वा तत्किल्बिषं मुनेः ॥ १-४२-२५ (१८७४)
न हि मृत्युं तथा राजा श्रुत्वा वै सोऽन्वतप्यत ।
अशोचदमरप्रख्यो यथा कृत्वेह कर्म तत् ॥ १-४२-२६ (१८७५)
ततस्तं प्रेषयामास राजा गौरमुखं तदा ।
भूयः प्रसादं भगवान्करोत्विह ममेति वै ॥ १-४२-२७ (१८७६)
ग्श्रुत्वा तु वचनं राज्ञो मुनिर्गौरमुखस्तदा ।
समनुज्ञाप्य वेगेन प्रजगामाश्रमं गुरोः ॥' १-४२-२८ (१८७७)
तस्मिंश्च गतमात्रेऽथ राजा गौरमुखे तदा ।
मन्त्रिभिर्मन्त्रयामास सह संविग्नमानसः ॥ १-४२-२९ (१८७८)
संमन्त्र्य मन्त्रिभिश्चैव स तथा मन्त्रतत्त्ववित् ।
प्रासादं कारयामास एकस्तम्भं सुरक्षितम् ॥ १-४२-३० (१८७९)
रक्षां च विदधे तत्र भिषजश्चौषधानि च ।
ब्राह्मणान्मन्त्रसिद्धांश्च सर्वतो वै न्ययोजयत् ॥ १-४२-३१ (१८८०)
राजकार्याणि तत्रस्थः सर्वाण्येवाकरोच्च सः ।
मन्त्रिभिः सह धर्मज्ञः समन्तात्परिरक्षितः ॥ १-४२-३२ (१८८१)
न चैनं कश्चिदारूढं लभते राजसत्तमम् ।
वातोऽपि निश्चरंस्तत्र प्रवेशे विनिवार्यते ॥ १-४२-३३ (१८८२)
प्राप्ते च दिवसे तस्मिन्सप्तमे द्विजसत्तमः ।
काश्यपोऽभ्यागमद्विद्वांस्तं राजानं चिकित्सितुम् ॥ १-४२-३४ (१८८३)
श्रुतं हि तेन तदभूद्यथा तं राजसत्तमम् ।
तक्षकः पन्नगश्रेष्ठो नेष्यते यमसादनम् ॥ १-४२-३५ (१८८४)
तं दष्टं पन्नगेन्द्रेण करिष्येऽहमपज्वरम् ।
तत्र मेऽर्थश्च धर्मश्च भवितेति विचिन्तयन् ॥ १-४२-३६ (१८८५)

तं ददर्श स नागेन्द्रस्तक्षकः काश्यपं पथि ।
गच्छन्तमेकमनसं द्विजो भूत्वा वयोऽतिगः ॥१-४२-३७ (१८८६)
तमब्रवीत्पन्नगेन्द्रः काश्यपं मुनिपुंगवम् ।
क्व भवांस्त्वरितो याति किंच कार्यं चिकीर्षति ॥१-४२-३८ (१८८७)
काश्यप उवाच।१-४२-३९क्ष् (२०३)
नृपं कुरुकुलोत्पन्नं परिक्षितमरिंदमम् ।
तक्षकः पन्नगश्रेष्ठस्तेजसाऽध्य प्रधक्ष्यति ॥१-४२-३९ (१८८८)
तं दष्टं पन्नगेन्द्रेण तेनाग्निसमतेजसम् ।
पाण्डवानां कुलकरं राजानममितौजसम्।१-४२-४ओच् गच्छामित्वरितं
सौम्य सद्यः कर्तुमपज्वरम् ॥ १-४२-४० (१८८९)
गविज्ञातविषविद्योऽहं ब्राह्मणो लोकपूजितः ।
अस्मद्गुरुकटाक्षेण कल्योऽहं विषनाशने ॥' १-४२-४१ (१८९०)
तक्षक उवाच।१-४२-४२क्ष् (२०४)
अहं स तक्षको ब्रह्मंस्तं धक्ष्यामि महीपतिम् ।
निवर्तस्व न शक्तस्त्वं मया दष्टं चिकित्सितुम् ॥१-४२-४२ (१८९१)
काश्यप उवाच।१-४२-४३क्ष् (२०५)
अहं तं नृपतिं गत्वा त्वया दष्टमपज्वरम् ।
करिष्यामीति मे बुद्धिर्विद्याबलसमन्विता ॥ ॥१-४२-४३ (१८९२)

इति श्रीमन्महाभारते आदिपर्वणि आस्तीकपर्वणि द्विचत्वारिंशोऽध्यायः
॥ ४२ ॥
Mahabharata - Adi Parva - Chapter Footnotes

१-४२-२ स्वैरेष्वपि परिहासादिष्वपि ॥
१-४२-४ वयस्थोऽपि प्रौढोपि ।वाच्यः शास्यः ॥
१-४२-५ प्रभवतां योगैश्वर्यवताम् ॥
१-४२-८ यतीनां आमुष्मिकहितार्थं यतमानानाम् ॥
१-४२-१० समनन्तरान् प्रत्यासन्नान् ॥
१-४२-११ संदेशहरमिति शेषः ॥
१-४२-१९ न चक्षमे न क्षान्तवान् ॥
१-४२-२३ पापं कृत्वैव पर्यतप्यत नतु मृत्युं श्रुत्वा ॥
१-४२-३३ आरूढं प्रासादारूढम् ॥
१-४२-४३ नृपतिं गत्वा नृपतिं नागेति पाठान्तरम् ॥
द्विचत्वारिंशोऽध्यायः ॥
४२ ॥

---

अध्यय०४३

॥ श्रीः ॥
१.४३. अध्यायः ४३

Mahabharata - Adi Parva - Chapter Topics
स्वदष्टन्यग्रोधोज्जीवनेन परीक्षितस्य काश्यपस्य धनं दत्वा तक्षकेण कृतं परावर्तनं परीक्षिद्दंशश्च ॥१ ॥

Mahabharata - Adi Parva - Chapter Text

१-४३-० (१८९३)
तक्षक उवाच। १-४३-०क्ष् (२०६)
यदि दष्टं मयेह त्वं शक्तः किंचिच्चिकित्सितुम् ।
ततो वृक्षं मया दष्टमिमं जीवय काश्यप ॥१-४३-१ (१८९४)
परं मन्त्रबलं यत्ते तद्दर्शय यतस्व च ।
न्यग्रोधमेनं धक्ष्यामि पश्यतस्ते द्विजोत्तम ॥१-४३-२ (१८९५)
काश्यप उवाच। १-४३-३क्ष् (२०७)
दश नागेन्द्र वृक्षं त्वं यद्येतदभिमन्यसे ।
अहमेनं त्वया दष्टं जीवयिष्ये भुजंगम ।
ग्पश्य मन्त्रबलं मेऽद्य न्यग्रोधं दश पन्नग ॥' १-४३-३ (१८९६)
सौतिरुवाच। १-४३-४क्ष् (२०८)
एवमुक्तः स नागेन्द्रः काश्यपेन महात्मना ।
अदशद्वृक्षमभ्येत्य न्यग्रोधं पन्नगोत्तमः ॥१-४३-४ (१८९७)
स वृक्षस्तेन दष्टस्तु पन्नगेन महात्मना ।
आशीविषविषोपेतः प्रजज्वाल समन्ततः ॥१-४३-५ (१८९८)
तं दग्ध्वा स नगं नागः काश्यपं पुनरब्रवीत् ।
कुरु यत्नं द्विजश्रेष्ठ जीवयैव वनस्पतिम् ॥१-४३-६ (१८९९)
सौतिरुवाच। १-४३-७क्ष् (२०९)
भस्मीभूतं ततो वृक्षं पन्नगेन्द्रस्य तेजसा ।
भस्म सर्वं समाहृत्य काश्यपो वाक्यमब्रवीत् ॥१-४३-७ (१९००)
विद्याबलं पन्नगेन्द्र पश्य मेऽद्य वनस्पतौ ।
अहं संजीवयाम्येनं पश्यतस्ते भुजंगम ॥१-४३-८ (१९०१)
ततः स भगवान्विद्वान्काश्यपो द्विजसत्तमः ।
भस्मराशीकृतं वृक्षं विद्यया समजीवयत् ॥१-४३-९ (१९०२)
अङ्कुरं कृतवांस्तत्र ततः पर्णद्वयान्वितम् ।
पलाशिनं शाखिनं च तथा विटपिनं पुनः ॥१-४३-१० (१९०३)
तं दृष्ट्वा जीवितं वृक्षं काश्यपेन महात्मना ।

उवाच तक्षको ब्रह्मन्नैतदत्यद्भुतं त्वयि ॥ १-४३-११ (१९०४)
द्विजेन्द्र यद्विषं हन्या मम वा मद्विधस्य वा ।
कं त्वमर्थमभिप्रेप्सुर्यासि तत्र तपोधन ॥ १-४३-१२ (१९०५)
यत्तेऽभिलषितं प्राप्तं फलं तस्मान्नृपोत्तमात् ।
अहमेव प्रदास्यामि तत्ते यद्यपि दुर्लभम् ॥ १-४३-१३ (१९०६)
विप्रशापाभिभूते च क्षीणायुषि नराधिपे ।
घटमानस्य ते विप्र सिद्धिः संशयिता भवेत् ॥ १-४३-१४ (१९०७)
ततो यशः प्रदीप्तं ते त्रिषु लोकेषु विश्रुतम् ।
निरंशुरिव घर्मांशुरन्तर्धानमितो व्रजेत् ॥ १-४३-१५ (१९०८)
काश्यप उवाच। १-४३-१६क्ष् (२१०)
धनार्थी याम्यहं तत्र तन्मे देहि भुजंगम ।
ततोऽहं विनिवर्तिष्ये स्वापतेयं प्रगृह्य वै ॥ १-४३-१६ (१९०९)
तक्षक उवाच। १-४३-१७क्ष् (२११)
यावद्धनं प्रार्थयसे तस्माद्राज्ञस्ततोऽधिकम् ।
अहमेव प्रदास्यामि निवर्तस्व द्विजोत्तम ॥ १-४३-१७ (१९१०)
सौतिरुवाच। १-४३-१८क्ष् (२१२)
तक्षकस्य वचः श्रुत्वा काश्यपो द्विजसत्तमः ।
प्रदध्यौ सुमहातेजाराजानं प्रति बुद्धिमान् ॥ १-४३-१८ (१९११)
दिव्यज्ञानः स तेजस्वी ज्ञात्वा तं नृपतिं तदा ।
क्षीणायुषं पाण्डवेयमपावर्तत काश्यपः ॥ १-४३-१९ (१९१२)
लब्ध्वा वित्तं मुनिवरस्तक्षकाद्यावदीप्सितम् ।
निवृत्ते काश्यपे तस्मिन्समयेन महात्मनि ॥ १-४३-२० (१९१३)
जगाम तक्षकस्तूर्णं नगरं नागसाह्वयम् ।
अथ शुश्राव गच्छन्स तक्षको जगतीपतिम् ॥ १-४३-२१ (१९१४)
मन्त्रैर्विषहरैर्दिव्यै रक्ष्यमाणं प्रयत्नतः। १-४३-२२ (१९१५)
सौतिरुवाच ।
स चिन्तयामास तदा मायायोगेन पार्थिवः ॥ १-४३-२२क्ष् (२१३)
मया वञ्चयितव्योऽसौ क उपायो भवेदिति ।
ततस्तापसरूपेण प्राहिणोत्स भुजंगमान् ॥ १-४३-२३ (१९१६)
फलपत्रोदकं गृह्य राज्ञे नागोऽथ तक्षकः। १-४३-२४ (१९१७)
तक्षक उवाच ।
गच्छध्वं यूयमव्यग्रा राजानं कार्यवत्तया ॥ १-४३-२४क्ष् (२१४)
फलपत्रोदकं नागाः प्रतिग्राहयितुं नृपम्। १-४३-२५ (१९१८)
सौतिरुवाच ।
ते तक्षकसमादिष्टास्तथा चक्रुर्भुजङ्गमाः ॥ १-४३-२५क्ष् (२१५)
उपनिन्युस्तथा राज्ञे दर्भानम्भः फलानि च ।

तच्च सर्वं स राजेन्द्रः प्रतिजग्राह वीर्यवान् ॥ १-४३-२६ (१९१९)
कृत्वा तेषां च कार्याणि गम्यतामित्युवाच तान् ।
गतेषु तेषु नागेषु तापसच्छद्मरूपिषु ॥ १-४३-२७ (१९२०)
अमात्यान्सुहृदश्चैव प्रोवाच स नराधिपः ।
भक्षयन्तु भवन्तो वै स्वादूनीमानि सर्वशः ॥ १-४३-२८ (१९२१)
तापसैरुपनीतानि फलानि सहिता मया ।
ततो राजा ससचिवः फलान्यादातुमैच्छत ॥ १-४३-२९ (१९२२)
विधिना संप्रयुक्तो वै ऋषिवाक्येन तेन तु ।
यस्मिन्नेव फले नागस्तमेवाभक्षयत्स्वयम् ॥ १-४३-३० (१९२३)
ततो भक्षयतस्तस्य फलात्कृमिरभूदणुः ।
ह्रस्वकः कृष्णनयनस्ताम्रवर्णोऽथ शौनक ॥ १-४३-३१ (१९२४)
स तं गृह्य नृपश्रेष्ठः सचिवानिदमब्रवीत् ।
अस्तमभ्येति सविता विषादद्य न मे भयम् ॥ १-४३-३२ (१९२५)
सत्यवागस्तु स मुनिः कृमिर्मां दशतामयम् ।
तक्षको नाम भूत्वा वै तथा परिहृतं भवेत् ॥ १-४३-३३ (१९२६)
ते चैनमन्ववर्तन्त मन्त्रिणः कालचोदिताः ।
एवमुक्त्वा स राजेन्द्रो ग्रीवायां सन्निवेश्यह ॥ १-४३-३४ (१९२७)
कृमिकं प्राहसत्तूर्णं मुमूर्षुर्नष्टचेतनः ।
प्रहसन्नेव भोगेन तक्षकेणाभिवेष्टितः ॥ १-४३-३५ (१९२८)
तस्मात्फलाद्विनिष्क्रम्य यत्तद्राज्ञे निवेदितम् ।
वेष्टयित्वा च भोगेन विनद्य च महास्वनम् ।
अदशत्पृथिवीपालं तक्षकः पन्नगेश्वरः ॥ ॥ १-४३-३६ (१९२९)

इति श्रीमन्महाभारते आदिपर्वणि आस्तीकपर्वणि त्रिचत्वारिंशोऽध्यायः ॥ ४३ ॥

Mahabharata - Adi Parva - Chapter Footnotes

१-४३-३ दश दंशं कुरु ॥
१-४३-६ नग वृक्षम् ॥
१-४३-१३ यत् फलं प्राप्तुमभिलषितं तत् इत्यन्वयः ॥
१-४३-१४ घटमानस्य सज्जमानस्य ॥
१-४३-१६ स्वापतेयं धनम् ॥
१-४३-२२ तत्रागतैर्विषहरैरिति पाठान्तरम् ॥
१-४३-३१ यज्जग्राह फलं राजा तत्र क्रिमिरभूदणुः इति पाठान्तरम् ॥
१-४३-३३ क्रिमिको मां दशत्वयं इति पाठान्तरम् ॥
त्रिचत्वारिशोऽध्यायः ॥

अध्यय०४४
॥ श्रीः ॥
१.४४. अध्यायः ४४

Mahabharata - Adi Parva - Chapter Topics
परीक्षिन्मरणोत्तरं तत्पुत्रस्य जनमेजयस्य राज्याभिषेकः ॥१ ॥
वपुष्टमाविवाहः ॥२ ॥

Mahabharata - Adi Parva - Chapter Text

१-४४-० (१९३०)
सौतिरुवाच।१-४४-०क्ष् (२१६)
तं तथा मन्त्रिणो दृष्ट्वा भोगेन परिवेष्टितम् ।
विषण्णवदनाः सर्वे रुरुदुर्भृशदुःखिताः ॥१-४४-१ (१९३१)
तं तु नागं ततो दृष्ट्वा मन्त्रिणस्ते प्रदुद्रुवुः ।
अपश्यन्त तथा यान्तमाकाशे नागमद्भुतम् ॥१-४४-२ (१९३२)
सीमन्तमिव कुर्वाणं नभसः पद्मवर्चसम् ।
तक्षकं पन्नगश्रेष्ठं भृशं शोकपरायणाः ॥१-४४-३ (१९३३)
ततस्तु ते तद्गृहमग्निना वृतं
प्रदीप्यमानं विषजेन भोगिनः ।
भयात्परित्यज्य दिशः प्रपेदिरे
पपात तच्चाशनिताडितं यथा ॥ १-४४-४ (१९३४)
ततो नृपे तक्षकतेजसाहते
प्रयुज्य सर्वाः परलोकसत्क्रियाः ।
शुचिर्द्विजो राजपुरोहितस्तदा
तथैव ते तस्य नृपस्य मन्त्रिणः ॥ १-४४-५ (१९३५)
नृपं शिशुं तस्य सुतं प्रचक्रिरे
समेत्य सर्वे पुरवासिनो जनाः ।
नृपं यमाहुस्तममित्रघातिनं
कुरुप्रवीरं जनमेजयं जनाः ॥ १-४४-६ (१९३६)
स बाल एवार्यमतिर्नृपोत्तमः
सहैव तैर्मन्त्रिपुरोहितैस्तदा ।
शशास राज्यं कुरुपुंगवाग्रजो
यथाऽस्य वीरः प्रपितामहस्तथा ॥ १-४४-७ (१९३७)
ततस्तु राजानममित्रतापनं

समीक्ष्य ते तस्य नृपस्य मन्त्रिणः ।
सुवर्णवर्माणमुपेत्य काशिप
वपुष्टमार्थं वरयांप्रचक्रमुः ॥ १-४४-८ (१९३८)
ततः स राजा प्रददौ वपुष्टमां
कुरुप्रवीराय परीक्ष्य धर्मतः ।
स चापि तां प्राप्य मुदा युतोऽभव-
न्न चान्यनारीषु मनो दधे क्वचित् ॥ १-४४-९ (१९३९)
सरःसु फुल्लेषु वनेषु चैव
प्रसन्नचेता विजहार वीर्यवान् ।
तथा स राजन्यवरो विजह्रिवान्
यथोर्वशीं प्राप्य पुरा पुरूरवाः ॥ १-४४-१० (१९४०)
वपुष्टमा चापि वरं पतिव्रता
प्रतीतरूपा समवाप्य भूपतिम् ।
भावेन रामा रमयांबभूव तं
विहारकालेष्ववरोधसुन्दरी ॥ ॥ १-४४-११ (१९४१)

इति श्रीमन्महाभारते आदिपर्वणि आस्तीकपर्वणि
चतुश्चत्वारिंशोऽध्यायः ॥ ४४ ॥
Mahabharata - Adi Parva - Chapter Footnotes

१-४४-२ दह्यमानं ततो दृष्ट्वा इति पाठान्तरम् ॥
१-४४-७ प्रपितामहो युधिष्ठिरः ॥
१-४४-८ वपुष्टमा काशिराजकन्या ॥
१-४४-११ वरं वरणीयम् ।प्रतीतरूपा हृष्टरूपा ॥
चतुश्चत्वारिंशोऽध्यायः ॥
४४ ॥

---

अध्यय०४५
॥ श्रीः ॥
१.४५. अध्यायः ४५

Mahabharata - Adi Parva - Chapter Topics
जरत्कारोः स्वपितॄणां दर्शनं तद्भाषणं च ॥१ ॥

Mahabharata - Adi Parva - Chapter Text

१-४५-० (१९४२)

सौतिरुवाच। १-४५-०क्ष् (२१७)
एतस्मिन्नेव काले तु जरत्कारुर्महातपाः ।
चचार पृथिवीं कृत्स्नां यत्रसायंगृहो मुनिः ॥ १-४५-१ (१९४३)
चरन्दीक्षां महातेजा दुश्चरामकृतात्मभिः ।
तीर्थेष्वाप्लवनं कुर्वन्पुण्येषु विचचार ह ॥ १-४५-२ (१९४४)
वायुभक्षो निराहारः शुष्यन्नहरहर्मुनिः ।
स ददर्श पितॄन्गर्ते लम्बमानानधोमुखान् ॥ १-४५-३ (१९४५)
एकतन्त्ववशिष्टं वै वीरणस्तम्बमाश्रितान् ।
तं तन्तुं च शनैराखुमाददानं बिलेशयम् ॥ १-४५-४ (१९४६)
निराहारान्कृशान्दीनान्गर्ते स्वत्राणमिच्छतः ।
उपसृत्य स तान्दीनान्दीनरूपोऽभ्यभाषत ॥ १-४५-५ (१९४७)
के भवन्तोऽवलम्बन्ते वीरमस्तम्बमाश्रिताः ।
दुर्बलं खादितैर्मूलैराखुना बिलवासिना ॥ १-४५-६ (१९४८)
वीरणस्तम्बके मूलं यदप्येकमिह स्थितम् ।
तदप्ययं शनैराखुरादत्ते दशनैः शितैः ॥ १-४५-७ (१९४९)
छेत्स्यतेऽल्पावशिष्टत्वादेतदप्यचिरादिव ।
ततस्तु पतितारोऽत्र गर्ते व्यक्तमधोमुखाः ॥ १-४५-८ (१९५०)
अत्र मे दुःखमुत्पन्नं दृष्ट्वा युष्मानधोमुखान् ।
कृच्छ्रामापदमापन्नान्प्रियं किं करवाणि वः ॥ १-४५-९ (१९५१)
तपसोऽस्य चतुर्थेन तृतीयेनाथ वा पुनः ।
अर्धेन वापि निस्तर्तुमापदं ब्रूत मा चिरम् ॥ १-४५-१० (१९५२)
अथवापि समग्रेण तरन्तु तपसा मम ।
भवन्तः सर्व एवेह काममेवं विधीयताम् ॥ १-४५-११ (१९५३)
पितर ऊचुः। १-४५-१२क्ष् (२१८)
कुतो भवान्ब्रह्मचारी यो नस्त्रातुमिहेच्छसि ।
न तु विप्राग्र्य तपसा शक्यमेतद्व्यपोहितुम् ॥ १-४५-१२ (१९५४)
अस्ति नस्तात तपसः फलं प्रवदतां वर ।
संतानप्रक्षयाद्ब्रह्मन्पतामो निरयेऽशुचौ ॥ १-४५-१३ (१९५५)
सन्तानं हि परो धर्म एवमाह पितामहः ।
लम्बतामिह नस्तात न ज्ञानं प्रतिभाति वै ॥ १-४५-१४ (१९५६)
येन त्वां नाभिजानीमो लोके विख्यातपौरुषम् ।
वृद्धो भवान्महाभागोयोनः शोच्यान्सुदुःखितान ॥ १-४५-१५ (१९५७)
शोचते चैव कारुण्याच्छृणु ये वै वयं द्विज ।
यायावरा नाम वयमृषयः संशितव्रताः ॥ १-४५-१६ (१९५८)
लोकात्पुम्यादिह भ्रष्टाः सन्तानप्रक्षयान्मुने ।
प्रणष्टं नस्तपस्तीव्रं न हि नस्तन्तुरस्ति वै ॥ १-४५-१७ (१९५९)

अस्तित्वेकोऽद्य नस्तन्तुः सोऽपि नास्ति यथा तथा ।
मन्दभाग्योऽल्पभाग्यानां तप एकं समास्थितः ॥१-४५-१८ (१९६०)
जरत्कारुरिति ख्यातो वेदवेदाङ्गपारगः ।
नियतात्मा महात्मा च सुव्रतः सुमहातपाः ॥१-४५-१९ (१९६१)
तेन स्म तपसो लोभात्कृच्छ्रमापादिता वयम् ।
न तस्य भार्या पुत्रो वा बान्धवो वाऽस्ति कश्चन ॥१-४५-२० (१९६२)
तस्माल्लम्बामहे गर्ते नष्टसंज्ञा ह्यनाथवत् ।
स वक्तव्यस्त्वया दृष्टो ह्यस्माकं नाथवत्तया ॥१-४५-२१ (१९६३)
पितरस्तेऽवलम्बन्ते गर्ते दीना अधोमुखाः ।
साधु दारान्कुरुष्वेति प्रजायस्वेति चाभि भोः ॥१-४५-२२ (१९६४)
कुलतन्तुर्हि नः शिष्टः स एकैकस्तपोधन ।
यं तु पश्यसि नो ब्रह्मन्वीरणस्तम्बमाश्रयम् ॥१-४५-२३ (१९६५)
एषोऽस्माकं कुलस्तम्ब आस्ते स्वकुलवर्धनः ।
यानि पश्यसि वै ब्रह्मन्मूलानीहास्य वीरुधः ॥१-४५-२४ (१९६६)
एते नस्तन्तवस्तात कालेन परिभक्षिताः ।
यत्त्वेतत्पश्यसि ब्रह्मन्मूलमस्यार्धभक्षितम् ॥१-४५-२५ (१९६७)
यत्र लम्बामहे गर्ते सोऽप्येकस्तप आस्थितः ।
यमाखुं पश्यसि ब्रह्मन्काल एष महाबलः ॥१-४५-२६ (१९६८)
स तं तपोरतं मन्दं शनैः क्षपयते तुदन् ।
जरत्कारुं तपोलुब्धं मन्दात्मानमचेतसम् ॥१-४५-२७ (१९६९)
न हि नस्तत्तपस्तस्य तारयिष्यति सत्तम ।
छिन्नमूलान्परिभ्रष्टान्कालोपहतचेतसः ॥१-४५-२८ (१९७०)
अधः प्रविष्टान्पश्यास्मान्यथा दुष्कृतिनस्तथा ।
अस्मासु पतितेष्वत्र सह सर्वैः सबान्धवैः ॥१-४५-२९ (१९७१)
छिन्नः कालेन सोऽप्यत्र गन्ता वै नरकं ततः ।
तपो वाऽप्यथ चा यज्ञो यच्चान्यत्पावनं महत् ॥१-४५-३० (१९७२)
तत्सर्वं न समं तात संतत्येति सतां मतम् ।
स तात दृष्ट्वा ब्रूयास्तं जरत्कारुं तपोधन ॥१-४५-३१ (१९७३)
यथा दृष्टमिदं चात्र त्वयाऽऽख्येयमशेषतः ।
यथा दारान्प्रकुर्यात्स पुत्रानुत्पादयेद्यथा ॥१-४५-३२ (१९७४)
वा ब्रह्मंस्त्वया वाच्यः सोऽस्माकं नाथवत्तया ।
बान्धवानां हितस्येह यथा चात्मकुलं तथा ॥१-४५-३३ (१९७५)
कस्त्वं बन्धुमिवास्माकमनुशोचसि सत्तम ।
श्रोतुमिच्छाम सर्वेषां को भवानिह तिष्ठति ॥ ॥१-४५-३४ (१९७६)

इति श्रीमन्महाभारते आदिपर्वणि आस्तीकपर्वणि

पञ्चचत्वारिंशोऽध्यायः ॥ ४५ ॥

Mahabharata - Adi Parva - Chapter Footnotes

१-४५-५ स्वत्राणं स्वरक्षाम् ॥
१-४५-८ पतितारः पतिष्यथा ॥
१-४५-१२ एतत् अस्मदीयं कृच्छ्रं व्यपोहितुं अपनेतुम् ॥
पञ्चचत्वारिंशोऽध्यायः ॥
४५ ॥

---

अध्यय०४६
॥ श्रीः ॥
१.४६. अध्यायः ४६

Mahabharata - Adi Parva - Chapter Topics

जरत्कारोः स्वपितृसंवादानन्तरं दारान्वेषणम् ॥ १ ॥

Mahabharata - Adi Parva - Chapter Text

१-४६-० (१९७७)
सौतिरुवाच। १-४६-०क्ष् (२१९)
एतच्छ्रुत्वा जरत्कारुर्भृशं शोकपरायणः ।
उवाच तान्पितॄन्दुःखाद्बाष्पसंदिग्धया गिरा ॥ १-४६-१ (१९७८)
जरत्कारुरुवाच। १-४६-२क्ष् (२२०)
मम पूर्वे भवन्तो वै पितरः सपितामहाः ।
तद्ब्रूत यन्मया कार्यं भवतां प्रियकाम्यया ॥ १-४६-२ (१९७९)
अहमेव जरत्कारुः किल्बिषी भवतां सुतः ।
ते दण्डं धारयत मे दुष्कृतेरकृतात्मनः ॥ १-४६-३ (१९८०)
पितर ऊचुः। १-४६-४क्ष् (२२१)
पुत्र दिष्ट्याऽसि संप्राप्त इमं देशं यदृच्छया ।
किमर्थं च त्वया ब्रह्मन्न कृतो दारसङ्ग्रहः ॥ १-४६-४ (१९८१)
जरत्कारुरुवाच। १-४६-५क्ष् (२२२)
ममायं पितरो नित्यं हृद्यर्थः परिवर्तते ।
ऊर्ध्वरेताः शरीरं वै प्रापयेयममुत्र वै ॥ १-४६-५ (१९८२)
न दारान्वै करिष्येऽहमिति मे भावितं मनः ।
एवं दृष्ट्वा तु भवतः शकुन्तानिव लम्बतः ॥ १-४६-६ (१९८३)
मया निवर्तिता बुद्धिर्ब्रह्मचर्यात्पितामहाः ।
करिष्ये वः प्रियं कामं निवेक्ष्येऽहमसंशयम् ॥ १-४६-७ (१९८४)

सनाम्नीं यद्यहं कन्यामुपलप्स्ये कदाचन ।
भविष्यति च या काचिद्भैक्ष्यवत्स्वयमुद्यता ॥१-४६-८ (१९८५)
प्रतिग्रहीता तामस्मि न भरेयं च यामहम् ।
एवंविधमहं कुर्यां निवेशं प्राप्नुयां यदि ।
अन्यथा न करिष्येऽहं सत्यमेतत्पितामहाः ॥ १-४६-९ (१९८६)
तत्र चोत्पत्स्यते जन्तुर्भवतां तारणाय वै ।
शाश्वताश्चाव्ययाश्चैव तिष्ठन्तु पितरो मम ॥१-४६-१० (१९८७)
सौतिरुवाच।१-४६-११क्ष् (२२३)
एवमुक्त्वा तु स पितॄंश्चचार पृथिवीं मुनिः ।
न च स्म लभते भार्यां वृद्धोऽयमिति शानक ॥१-४६-११ (१९८८)
यदा निर्वेदमापन्नः पितृभिश्चोदिस्तथा ।
तदाऽरण्यं स गत्वोच्चैश्चुक्रोश भृशदुःखितः ॥१-४६-१२ (१९८९)
सत्वरण्यगतः प्राज्ञः पितॄणा हितकाम्यया ।
उवाच कन्यां याचामि तिस्रो वाचः शनैरिमाः ॥१-४६-१३ (१९९०)
यानि भूतानि सन्तीह स्थावराणि चराणि च ।
अन्तर्हितानि वा यानि तानि शृण्वन्तु मे वचः ॥१-४६-१४ (१९९१)
उग्रे तपसि वर्तन्तं पितरश्चोदयन्ति माम् ।
निविशस्वेति दुःखार्ताः सन्तानस्य चिकीर्षया ॥१-४६-१५ (१९९२)
निवेशायाखिलां भूमिं कन्याभैक्ष्यं चरामि भोः ।
दरिद्रो दुःखशीलश्च पितृभिः सन्नियोजितः ॥१-४६-१६ (१९९३)
यस्य कन्याऽस्ति भूतस्य ये मयेह प्रकीर्तिताः ।
ते मे कन्यां प्रयच्छन्तु चरतः सर्वतोदिशम् ॥१-४६-१७ (१९९४)
मम कन्या सनाम्नी या भैक्ष्यवच्चोदिता भवेत् ।
भरेयं चैव यां नाहं तां मे कन्यां प्रयच्छत ॥१-४६-१८ (१९९५)
ततस्ते पन्नगा ये वै जरत्कारौ समाहिताः ।
तामादाय प्रवृत्तिं ते वासुकेः प्रत्यवेदयन् ॥१-४६-१९ (१९९६)
तेषां श्रुत्वा स नागेन्द्रस्तां कन्यां समलङ्कृताम् ।
प्रगृह्यारण्यमगमत्समीपं तस्य पन्नगः ॥१-४६-२० (१९९७)
तत्र तां भैक्ष्यवत्कन्यां प्रादात्तस्मै महात्मने ।
नागेन्द्रो वासुकिर्ब्रह्मन्न स तां प्रत्यगृह्णत ॥१-४६-२१ (१९९८)
असनामेति वै मत्वा भरणे चाविचारिते ।
मोक्षभावे स्थितश्चापि मन्दीभूतः परिग्रहे ॥१-४६-२२ (१९९९)
ततो नाम स कन्यायाः पप्रच्छ भृगुनन्दन ।
वासुकिं भरणं चास्या न कुर्यामित्युवाच ह ॥ ॥१-४६-२३ (२०००)

इति श्रीमन्महाभारते आदिपर्वणि आस्तीकपर्वणि षट्चत्वारिंशोऽध्यायः

॥ ४६ ॥

Mahabharata - Adi Parva - Chapter Footnotes

१-४६-७ निवेक्ष्ये निवेशं विवाहं करिष्ये ॥
१-४६-९ न भरेयं धारणपोषणे न कुर्याम् ॥
१-४६-१९ जरत्कारौ जरत्कारोरन्वेषणे ।समाहिताः यत्ताः ॥
षट्चत्वारिंशोऽध्यायः ॥
४६ ॥

---

अध्यय०४७
॥ श्रीः ॥
१.४७. अध्यायः ४७

Mahabharata - Adi Parva - Chapter Topics
जरत्कारोरुद्वाहः ॥ १ ॥
तस्यां गर्भसंभवः ॥ २ ॥
समयोल्लङ्घनेन क्रुद्धस्य मुनेः तपोर्थं गमनम् ॥ ३ ॥

Mahabharata - Adi Parva - Chapter Text

१-४७-० (२००१)
सौतिरुवाच।१-४७-०क्ष् (२२४)
वासुकिस्त्वब्रवीद्वाक्यं जरत्कारुमृषिं तदा ।
सनाम्नी तव कन्येयं स्वसा मे तपसान्विता ॥१-४७-१ (२००२)
भरिष्यामि च ते भार्यां प्रतीच्छेमां द्विजोत्तम ।
रक्षणं च करिष्येऽस्याः सर्वशक्त्या तपोधन ।
त्वदर्थं रक्ष्यते चैषा मया मुनिवरोत्तम ॥ १-४७-२ (२००३)
जरत्कारुरुवाच।१-४७-३क्ष् (२२५)
न भरिष्येऽहमेतां वै एष मे समयः कृतः ।
अप्रियं च न कर्तव्यं कृते चैनां त्यजाम्यहम् ॥१-४७-३ (२००४)
सौतिरुवाच।१-४७-४क्ष् (२२६)
प्रतिश्रुते तु नागेन भरिष्ये भगिनीमिति ।
जरत्कारुस्तदा वेश्म भुजगस्य जगाम ह ॥१-४७-४ (२००५)
तत्र मन्त्रविदां श्रेष्ठस्तपोवृद्धो महाव्रतः ।
जग्राह पाणिं धर्मात्मा विधिमन्त्रपुरस्कृतम् ॥१-४७-५ (२००६)
ततो वासगृहं रम्यं पन्नगेन्द्रस्य संमतम् ।
जगाम भार्यामादाय स्तूयमानो महर्षिभिः ॥१-४७-६ (२००७)

शयनं तत्र संक्लृप्तं स्पर्ध्यास्तरणसंवृतम् ।
तत्र भार्यासहायो वै जरत्कारुरुवास ह ॥१-४७-७ (२००८)
स तत्र समयं चक्रे भार्यया सह सत्तमः ।
विप्रियं मे न कर्तव्यं न च वाच्यं कदाचन ॥१-४७-८ (२००९)
त्यजेयं विप्रिये च त्वां कृते वासं च ते गृहे ।
एतद्गृहाण वचनं मया यत्समुदीरितम् ॥१-४७-९ (२०१०)
ततः परमसंविग्ना स्वसा नागपतेस्तदा ।
अतिदुःखान्विता वाक्यं तमुवाचैवमस्त्विति ॥१-४७-१० (२०११)
तथैव सा च भर्तारं दुःखशीलमुपचारत् ।
उपायैः श्वेतकाकीयैः प्रियकामा यशस्विनी ॥१-४७-११ (२०१२)
ऋतुकाले ततः स्नाता कदाचिद्वासुकेः स्वसा ।
भर्तारं वै यथान्यायमुपतस्थे महामुनिम् ॥१-४७-१२ (२०१३)
तत्र तस्याः समभवद्गर्भो ज्वलनसन्निभः ।
अतीव तेजसा युक्तो वैश्वानरसमद्युतिः ॥१-४७-१३ (२०१४)
शुक्लपक्षे यथा सोमो व्यवर्धत तथैव सः ।
ततः कतिपयाहस्तु जरत्कारुर्महायशाः ॥१-४७-१४ (२०१५)
उत्सङ्गेऽस्याः शिरः कृत्वा सुष्वाप परिखिन्नवत् ।
तस्मिंश्च सुप्ते विप्रेन्द्रे सवितास्तमियाद्गिरिम् ॥१-४७-१५ (२०१६)
अह्नः परिक्षये ब्रह्मंस्ततः साऽचिन्तयत्तदा ।
वासुकेर्भगिनी भीता धर्मलोपान्मनस्विनी ॥१-४७-१६ (२०१७)
किं नु मे सुकृतं भूयाद्भर्तुरुत्थापनं न वा ।
दुःखशीलो हि धर्मात्मा कथं नास्यापराध्नुयाम् ॥१-४७-१७ (२०१८)
कोपो वा धर्मशीलस्य धर्मलोपोऽथवा पुनः ।
धर्मलोपो गरीयान्वै स्यादित्यत्राकरोन्मतिम् ॥१-४७-१८ (२०१९)
उत्थापयिष्ये यद्येनं ध्रुवं कोपं करिष्यति ।
धर्मलोपो भवेदस्य सन्ध्यातिक्रमणे ध्रुवम् ॥१-४७-१९ (२०२०)
इति निश्चित्य मनसा जरत्कारुर्भुजंगमा ।
तमृषिं दीप्ततपसं शयानमनलोपमम् ॥१-४७-२० (२०२१)
उवाचेदं वचः श्लक्ष्णं ततो मधुरभाषिणी ।
उत्तिष्ठ त्वं महाभाग सूर्योऽस्तमुपगच्छति ॥१-४७-२१ (२०२२)
सन्ध्यामुपास्स्व भगवन्नपः स्पृष्ट्वा यतव्रतः ।
प्रादुष्कृताग्निहोत्रोऽयं मुहूर्तो रम्यदारुणः ॥१-४७-२२ (२०२३)
सन्ध्या प्रवर्तते चेयं पश्चिमायां दिशि प्रभो ।
एवमुक्तः स भगवाञ्जरत्कारुर्महातपाः ॥१-४७-२३ (२०२४)
भार्यां प्रस्फुरमाणौष्ठ इदं वचनमब्रवीत् ।
अवमानः प्रयुक्तोऽयं त्वया मम भुजंगमे ॥१-४७-२४ (२०२५)

समीपे ते न वत्स्यामि गमिष्यामि यथागतम् ।
शक्तिरस्ति न वामोरु मयि सुप्ते विभावसोः ॥ १-४७-२५ (२०२६)
अस्तं गन्तुं यथाकालमिति मे हृदि वर्तते ।
न चाप्यवमतस्येह वासो रोचेत कस्यचित् ॥ १-४७-२६ (२०२७)
किं पुनर्धर्मशीलस्य मम वा मद्विधस्य वा ।
एवमुक्ता जरत्कारुर्भर्त्रा हृदयकम्पनम् ॥ १-४७-२७ (२०२८)
अब्रवीद्भगिनी तत्र वासुकेः सन्निवेशने ।
नावमानात्कृतवती तवाहं विप्रे बोधनम् ॥ १-४७-२८ (२०२९)
धर्मलोपो न ते विप्र स्यादित्येतन्मया कृतम् ।
उवाच भार्यामित्युक्तो जरत्कारुर्महातपाः ॥ १-४७-२९ (२०३०)
ऋषिः कोपसमाविष्टस्त्यक्तुकामो भुजंगमाम् ।
न मे वागनृतं प्राह गमिष्येऽहं भुजंगमे ॥ १-४७-३० (२०३१)
समयो ह्येष मे पूर्वं त्वया सह मिथः कृतः ।
सुखमस्म्युषितो भद्रे ब्रूयास्त्वं भ्रातरं शुभे ॥ १-४७-३१ (२०३२)
इतो मयि गते भीरु गतः स भगवानिति ।
त्वं चापि मयि निष्क्रान्ते न शोकं कर्तुमर्हसि ॥ १-४७-३२ (२०३३)
इत्युक्ता साऽनवद्याङ्गी प्रत्युवाच मुनिं तदा ।
जरत्कारुं जरत्कारुश्चिन्ताशोकपरायणा ॥ १-४७-३३ (२०३४)
बाष्पगद्गदया वाचा मुखेन परिशुष्यता ।
कृताञ्जलिर्वरारोहा पर्यश्रुनयना ततः ॥ १-४७-३४ (२०३५)
धैर्यमालम्ब्य वामोरूर्हृदयेन प्रवेपता ।
न मामर्हसि धर्मज्ञ परित्यक्तुमनागसम् ॥ १-४७-३५ (२०३६)
धर्मे स्थितां स्थितो धर्मे सदा प्रियहिते रताम् ।
प्रदाने कारणं यच्च मम तुभ्यं द्विजोत्तम ॥ १-४७-३६ (२०३७)
तदलब्धवतीं मन्दां किं मां वक्ष्यति वासुकिः ।
मातृशापाभिभूतानां ज्ञातीनां मम सत्तम ॥ १-४७-३७ (२०३८)
अपत्यमीप्सितं त्वत्तस्तच्च तावन्न दृश्यते ।
त्वत्तो ह्यपत्यलाभेन ज्ञातीनां मे शिवं भवेत् ॥ १-४७-३८ (२०३९)
संप्रयोगो भवेन्नायां मम मोघस्त्वया द्विज ।
ज्ञातीनां हितमिच्छन्ती भगवंस्त्वां प्रसादये ॥ १-४७-३९ (२०४०)
इममव्यक्तरूपं मे गर्भमाधाय सत्तम ।
कथं त्यक्त्वा महात्मा सन्गन्तुमिच्छस्यनागसम् ॥ १-४७-४० (२०४१)
एवमुक्तस्तु स मुनिर्भार्यां वचनमब्रवीत् ।
यद्युक्तमनुरूपं च जरत्कारुं तपोधनः ॥ १-४७-४१ (२०४२)
अस्त्ययं सुभगे गर्भस्तव वैश्वानरोपमः ।
ऋषिः परमधर्मात्मा वेदवेदाङ्गपारगः ॥ १-४७-४२ (२०४३)

एवमुक्त्वा स धर्मात्मा जरत्कारुर्महानृषिः ।
उग्राय तपसे भूयो जगाम कृतनिश्चयः ॥ ॥ १-४७-४३ (२०४४)

इति श्रीमन्महाभारते आदिपर्वणि आस्तीकपर्वणि सप्तचत्वारिंशोऽध्यायः
॥ ४७ ॥
Mahabharata - Adi Parva - Chapter Footnotes

१-४७-७ स्पर्ध्यं बहुमूल्यम् ॥
१-४७-९ विप्रिये कृते त्वां तव गृहे वासं च त्यजेयम् ॥
१-४७-११ श्वतकाकीयैः अनुकूलैः ॥
१-४७-१५ उत्सङ्गे अङ्के ॥
१-४७-१८ कोपो वा गरीयान्धर्मलोपो वा गरीयानिति कोदिद्वयमुपन्यस्य
धर्मलोपमेव गुरुकरोति । कोपो वेति ॥
१-४७-२२ प्रादुष्कृतः उद्धृतः अग्निहोत्रोऽग्निः यस्मिन्सः
। धर्मसाधनत्वाद्रम्यः। भूतादिप्रचाराद्दारुणः ॥
१-४७-२५ विभावसोः सूर्यस्य ॥
१-४७-३९ संप्रयोगः संबन्ध । मोघो निष्फलः ॥
सप्तचत्वारिंशोऽध्यायः ॥
४७ ॥

---

अध्यय०४८
॥ श्रीः ॥
१.४८. अध्यायः ४८

Mahabharata - Adi Parva - Chapter Topics
वासुकेः तद्भगिन्याश्च संवादः ॥ १ ॥
आस्तीकोत्पत्तिः ॥ २ ॥
तन्नामनिर्वचनम् ॥ ३ ॥

Mahabharata - Adi Parva - Chapter Text

१-४८-० (२०४५)
सौतिरुवाच। १-४८-०क्ष् (२२७)
गतमात्रं तु भर्तारं जरत्कारुरवेदयत् ।
भ्रातुः सकाशमागत्य यथातथ्यं तपोधन ॥ १-४८-१ (२०४६)
ततः स भुजगश्रेष्ठः श्रुत्वा सुमहदप्रियम् ।
उवाच भगिनीं दीनां तदा दीनतरः स्वयम् ॥ १-४८-२ (२०४७)

वासुकिरुवाच। १-४८-३क्ष् (२२८)
जानासि भद्रे यत्कार्यं प्रदाने कारणं च यत् ।
पन्नगानां हितार्थाय पुत्रस्ते स्यात्ततो यदि ॥ १-४८-३ (२०४८)
स सर्पसत्रात्किल नो मोक्षयिष्यति वीर्यवान् ।
एवं पितामहः पूर्वमुक्तवांस्तु सुरैः सह ॥ १-४८-४ (२०४९)
अप्यस्ति गर्भः सुभगे तस्मात्ते मुनिसत्तमात् ।
न चेच्छाम्यफलं तस्य दारकर्म मनीषिणः ॥ १-४८-५ (२०५०)
कामं च मम न न्याय्यं प्रष्टुं त्वां कार्यमीदृशम् ।
किंतु कार्यगरीयस्त्वात्ततस्त्वाऽहमचूचुदम् ॥ १-४८-६ (२०५१)
दुर्वार्यतां विदित्वा च भर्तुस्तेऽतितपस्विनः ।
नैनमन्वागमिष्यामि कदाचिद्धि शपेत्स माम् ॥ १-४८-७ (२०५२)
आचक्ष्व भद्रे भर्तुः स्वं सर्वमेव विचेष्टितम् ।
उद्धरस्व च शल्यं मे घोरं हृदि चिरस्थितम् ॥ १-४८-८ (२०५३)
जरत्कारुस्ततो वाक्यमित्युक्ता प्रत्यभाषत ।
आश्वासयन्ती सन्तप्तं वासुकिं पन्नगेश्वरम् ॥ १-४८-९ (२०५४)
जरत्कारुरुवाच। १-४८-१०क्ष् (२२९)
पृष्टो मयाऽपत्यहेतोः स महात्मा महातपाः ।
अस्तीत्युत्तरमुद्दिश्य ममेदं गतवांश्च सः ॥ १-४८-१० (२०५५)
स्वैरेष्वपि न तेनाहं स्मरामि वितथं वचः ।
उक्तपूर्वं कुतो राजन्सांपराये स वक्ष्यति ॥ १-४८-११ (२०५६)
न संतापस्त्वया कार्यः कार्यं प्रति भुजंगमे ।
उत्पत्स्यति च ते पुत्रो ज्वलनार्कसमप्रभः ॥ १-४८-१२ (२०५७)
इत्युक्त्वा स हि मां भ्रातर्गतो भर्ता तपोधनः ।
तस्माद्व्येतु परं दुःखं तवेदं मनसि स्थितम् ॥ १-४८-१३ (२०५८)
सौतिरुवाच। १-४८-१४क्ष् (२३०)
एतच्छ्रुत्वा स नागेन्द्रो वासुकिः परया मुदा ।
एवमस्त्विति तद्वाक्यं भगिन्याः प्रत्यगृह्णत ॥ १-४८-१४ (२०५९)
सान्त्वमानार्थदानैश्च पूजया चारुरूपया ।
सोदर्यां पूजयामास स्वसारं पन्नगोत्तमः ॥ १-४८-१५ (२०६०)
ततः प्रववृधे गर्भो महातेजा महाप्रभः ।
यथा मोमो द्विजश्रेष्ठ शुक्लपक्षोदितो दिवि ॥ १-४८-१६ (२०६१)
अथ काले तु सा ब्रह्मन्प्रजज्ञे भुजगस्वसा ।
कुमारं देवगर्भाभं पितृमातृभयापहम् ॥ १-४८-१७ (२०६२)
ववृधे स तु तत्रैव नागराजनिवेशने ।
वेदांश्चाधिजगे साङ्गान्भार्गवच्यवनात्मजात् ॥ १-४८-१८ (२०६३)
चीर्णव्रतो बाल एव बुद्धिसत्त्वगुणान्वितः ।

नाम चास्याभवत्ख्यातं लोकेष्वास्तीक इत्युत ॥१-४८-१९ (२०६४)
अस्तीत्युक्त्वा गतो यस्मात्पिता गर्भस्थमेव तम् ।
वनं तस्मादिदं तस्य नामास्तीकेति विश्रुतम् ॥१-४८-२० (२०६५)
स बाल एव तत्रस्थश्चरन्नमितबुद्धिमान् ।
गृहे पन्नगराजस्य प्रयत्नात्परिरक्षितः ॥१-४८-२१ (२०६६)
भगवानिव देवेशः शूलपाणिर्हिरण्मयः ।
विवर्धमानः सर्वांस्तान्पन्नगानभ्यहर्षयत् ॥ ॥१-४८-२२ (२०६७)

इति श्रीमन्महाभारते आदिपर्वणि आस्तीकपर्वणि अष्टचत्वारिंशोऽध्यायः
॥ ४८ ॥
Mahabharata - Adi Parva - Chapter Footnotes

१-४८-६ अचूचुदं कार्यसिद्धिं वक्तुं प्रेरितवान् ॥
१-४८-१० ममेदं कार्यमुद्दिश्य अस्तीत्युत्तरं दत्तवानिति शेषः ॥
१-४८-११ वितथं अनृतं तेन उक्तपूर्वं न स्मरामि ।सांपराये संकटे ॥
१-४८-१७ प्रजज्ञे जनयामास ॥
१-४८-२२ हिरण्मयः दीप्तिमान् ॥
अष्टचत्वारिंशोऽध्यायः ॥
४८ ॥

---

अध्यय०४९
॥ श्रीः ॥
१.४९. अध्यायः ४९

Mahabharata - Adi Parva - Chapter Topics
जनमेजयमन्त्रिसंवादमुखेन पुनः परीक्षिच्चरितकथनम् ॥१ ॥

Mahabharata - Adi Parva - Chapter Text

१-४९-० (२०६८)
शौनक उवाच।१-४९-०क्ष् (२३१)
यदपृच्छत्तदा राजा मन्त्रिणो जनमेजयः ।
पितुः स्वर्गगतिं तन्मे विस्तरेण पुनर्वद ॥१-४९-१ (२०६९)
सौतिरुवाच।१-४९-२क्ष् (२३२)
शृणु ब्रह्मन्यथाऽपृच्छन्मन्त्रिणो नृपतिस्तदा ।
यथा चाख्यातवन्तस्ते निधनं तत्परिक्षितः ॥१-४९-२ (२०७०)
जनमेजय उवाच।१-४९-३क्ष् (२३३)

जानन्ति स्म भवन्तस्तद्यथावृत्तं पितुर्मम ।
आसीद्यथा स निधनं गतः काले महायशाः ॥ १-४९-३ (२०७१)
श्रुत्वा भवत्सकाशाद्धि पितुर्वृत्तमशेषतः ।
कल्याणं प्रतिपत्स्यामि विपरीतं न जातुचित् ॥ १-४९-४ (२०७२)
सौतिरुवाच। १-४९-५क्ष् (२३४)
मन्त्रिणोऽथाब्रुवन्वाक्यं पृष्टास्तेन महात्मना ।
सर्वे धर्मविदः प्राज्ञा राजानं जनमेजयम् ॥ १-४९-५ (२०७३)
मन्त्रिण ऊचुः। १-४९-६क्ष् (२३५)
शृणु पार्थिव यद्ब्रूषे पितुस्तव महात्मनः ।
चरितं पार्थिवेन्द्रस्य यथा निष्ठां गतश्च सः ॥ १-४९-६ (२०७४)
धर्मात्मा च महात्मा च प्रजापालः पिता तव ।
आसीदिहायथा वृत्तः स महात्मा शृणुष्व तत् ॥ १-४९-७ (२०७५)
चातुर्वर्ण्यं स्वधर्मस्थं स कृत्वा पर्यरक्षत ।
धर्मतो धर्मविद्राजा धर्मो विग्रहवानिव ॥ १-४९-८ (२०७६)
ररक्ष पृथिवीं देवीं श्रीमानतुलविक्रमः ।
द्वेष्टारस्तस्य नैवासन्स च द्वेष्टि न कंचन ॥ १-४९-९ (२०७७)
समः सर्वेषु भूतेषु प्रजापतिरिवाभवत् ।
ब्राह्मणाः क्षत्रिया वैश्याः शूद्राश्चैव स्वकर्मसु ॥ १-४९-१० (२०७८)
स्थितः सुमनसो राजंस्तेन राज्ञा स्वधिष्ठिताः ।
विधवानाथविकलान्कृपणांश्च बभार सः ॥ १-४९-११ (२०७९)
सुदर्शः सर्वभूतानामासीत्सोम इवापरः ।
तुष्टपुष्टजनः श्रीमान्सत्यवाग्दृढविक्रमः ॥ १-४९-१२ (२०८०)
धनुर्वेदे तु शिष्योऽभून्नृपः शारद्वतस्य सः ।
गोविन्दस्य प्रियश्चासीत्पिता ते जनमेजय ॥ १-४९-१३ (२०८१)
लोकस्य चैव सर्वस्य प्रिय आसीन्महायशाः ।
परिक्षीणेषु कुरुषु सोत्तरायामजीजनत् ॥ १-४९-१४ (२०८२)
परिक्षिदभवत्तेन सौभद्रस्यात्मजो बली ।
राजधर्मार्थकुशलो युक्तः सर्वगुणैर्वृतः ॥ १-४९-१५ (२०८३)
जितेन्द्रियश्चात्मवांश्च मेधावी धर्मसेविता ।
षड्वर्गजिन्महाबुद्धिर्नीतिशास्त्रविदुत्तमः ॥ १-४९-१६ (२०८४)
प्रजा इमास्तव पिता षष्टिवर्षाण्यपालयत् ।
ततो दिष्टान्तमापन्नः सर्वेषां दुःखमावहन् ॥ १-४९-१७ (२०८५)
ततस्त्वं पुरुषश्रेष्ठ धर्मेण प्रतिपेदिवान् ।
इदं वर्षसहस्राणि राज्यं कुरुकुलागतम् ।
बाल एवाभिषिक्तस्त्वं सर्वभूतानुपालकः ॥ १-४९-१८ (२०८६)
जनमेजय उवाच। १-४९-१९क्ष् (२३६)

नास्मिन्कुले जातु बभूव राजा
यो न प्रजानां प्रियकृत्प्रियश्च ।
विशेषतः प्रेक्ष्य पितामहानां
वृत्तं महद्वृत्तपरायणानाम् ॥ १-४९-१९ (२०८७)
कथं निधनमापन्नः पिता मम तथाविधः ।
आचक्षध्वं यथावन्मे श्रोतुमिच्छामि तत्त्वतः ॥ १-४९-२० (२०८८)
सौतिरुवाच। १-४९-२१क्ष् (२३७)
एवं संचोदिता राज्ञा मन्त्रिणस्ते नराधिपम् ।
ऊचुः सर्वे यथावृत्तं राज्ञः प्रियहितैषिणः ॥ १-४९-२१ (२०८९)
मन्त्रिण ऊचुः। १-४९-२२क्ष् (२३८)
स राजा पृथिवीपालः सर्वशस्त्रभृतां वरः ।
बभूव मृगयाशीलस्तव राजन्पिता सदा ॥ १-४९-२२ (२०९०)
यथा पाण्डुर्महाबाहुर्धनुर्धरवरो युधि ।
अस्मास्वासज्य सर्वाणि राजकार्याण्यशेषतः ॥ १-४९-२३ (२०९१)
स कदाचिद्वनगतो मृगं विव्याध पत्रिणा ।
विद्ध्वा चान्वसरत्तूर्णं तं मृगं गहने वने ॥ १-४९-२४ (२०९२)
पदातिर्बद्धनिस्त्रिंशस्ततायुधकलापवान् ।
न चाससाद गहने मृगं नष्टं पिता तव ॥ १-४९-२५ (२०९३)
परिश्रान्तो वयस्थश्च षष्टिवर्षो जरान्वितः ।
क्षुधितः स महारण्ये ददर्श मुनिसत्तमम् ॥ १-४९-२६ (२०९४)
स तं पप्रच्छ राजेन्द्रो मुनिं मौनव्रते स्थितम् ।
न च किंचिदुवाचेदं पृष्टोऽपि समुनिस्तदा ॥ १-४९-२७ (२०९५)
ततो राजा क्षुच्छ्रमार्तस्तं मुनिं स्थाणुवत्स्थितम् ।
मौनव्रतधरं शान्तं सद्यो मन्युवशं गतः ॥ १-४९-२८ (२०९६)
न बुबोध च तं राजा मौनव्रतधरं मुनिम् ।
स तं क्रोधसमाविष्टो धर्षयामास ते पिता ॥ १-४९-२९ (२०९७)
मृतं सर्पं धनुष्कोट्या समुत्क्षिप्य धरातलात् ।
तस्य शुद्धात्मनः प्रादात्स्कन्धे भरतसत्तम ॥ १-४९-३० (२०९८)
न चोवाच स मेधावी तमथो साध्वसाधु वा ।
तस्थौ तथैव चाक्रुद्धः सर्पं स्कन्धेन धारयन् ॥ ॥ १-४९-३१ (२०९९)

इति श्रीमन्महाभारते आदिपर्वणि आस्तीकपर्वणि
एकोनपञ्चाशत्तमोऽध्यायः ॥ ४९ ॥

Mahabharata - Adi Parva - Chapter Footnotes

१-४९-४ कल्याणं सर्वलोकहितं चेत्प्रतिपत्स्यामि प्रतीकारं करिष्यामि ॥

१-४९-६ ब्रूषे पृच्छसि ।निष्ठां समाप्तिम् ॥
१-४९-११ स्वधिष्ठिताः सुष्ठुपालिताः ॥
१-४९-१३ शारद्वतस्य कृपाचार्यस्य ॥
१-४९-१४ सोत्तरायमिति पादपूरणार्थः सन्धिः ।अजीजनज्जातः ॥
१-४९-१७ षष्टिवर्षाणि जन्मतः षष्टिपर्वपर्यन्तं न तु राज्यलाभात् ॥
१-४९-१८ वर्षसहस्राणि चिरकालमित्यर्थः ।पालयितुमिति शेषः ॥
१-४९-२० आचक्षध्वं भ्वादेराकृतिगणत्वाच्छपो न लुक् ॥
१-४९-२६ वयस्थो वृद्धः ॥
एकोनपञ्चाशत्तमोऽध्यायः ॥
४९ ॥

---

अध्यय०५०
॥ श्रीः ॥
१.५०. अध्यायः ५०

Mahabharata - Adi Parva - Chapter Topics
शून्यारण्ये वृत्तस्य
काश्यपतक्षकवृत्तान्तस्योपलब्धिप्रकारकथनम् ॥१ ॥

Mahabharata - Adi Parva - Chapter Text

१-५०-० (२१००)
मन्त्रिण ऊचुः।१-५०-०क्ष् (२३९)
ततः स राजा राजेन्द्र स्कन्धे तस्य भुजंगमम् ।
मुनेः क्षुत्क्षाम आसज्य स्वपुरं प्रययौ पुनः ॥१-५०-१ (२१०१)
ऋषेस्तस्य तु पुत्रोऽभूद्गवि जातो महायशाः ।
शृङ्गी नाम महातेजास्तिग्मवीर्योऽतिकोपनः ॥१-५०-२ (२१०२)
ब्रह्माणं समुपागम्य मुनिः पूजां चकार ह ।
सोऽनुज्ञातस्ततस्तत्र शृङ्गी शुश्राव तं तदा ॥१-५०-३ (२१०३)
सख्युः सकाशात्पितरं पित्रा ते धर्षितं पुरा ।
मृतं सर्पं समासक्तं स्थाणुभूतस्य तस्य तम् ॥१-५०-४ (२१०४)
वहन्तं राजशार्दूल स्कन्धेनानपकारिणम् ।
तपस्विनमतीवाथ तं मुनिप्रवरं नृप ॥१-५०-५ (२१०५)
जितेन्द्रियं विशुद्धं च स्थितं कर्मण्यथाद्भुतम् ।
तपसा द्योतितात्मानं स्वेष्वङ्गेषु यतं तदा ॥१-५०-६ (२१०६)
शुभाचारं शुभकथं सुस्थितं तमलोलुपम् ।
अक्षुद्रमनसूयं च वृद्धं मौनव्रते स्थितम् ।

शरण्यं सर्वभूतानां पित्रा विनिकृतं तव ॥ १-५०-७ (२१०७)
शशापाथ महातेजाः पितरं ते रुषान्वितः ।
ऋषेः पुत्रो महातेजा बालोऽपि स्थविरद्युतिः ॥१-५०-८ (२१०८)
स क्षिप्रमुदकं स्पृष्ट्वा रोषादिदमुवाच ह ।
पितरं तेऽभिसन्धाय तेजसा प्रज्वलन्निव ॥१-५०-९ (२१०९)
अनागसि गुरौ यो मे मृतं सर्पवासृजत् ।
तं नागस्तक्षकः क्रुद्धस्तेजसा प्रदहिष्यति ॥१-५०-१० (२११०)
आशीविषस्तिग्मतेजा मद्वाक्यबलचोदितः ।
सप्तरात्रादितः पापं पश्य मे तपसो बलम् ॥१-५०-११ (२१११)
इत्युक्त्वा प्रययौ तत्र पिता यत्राऽस्य सोऽभवत् ।
दृष्ट्वा च पितरं तस्मै तं शापं प्रत्यवेदयत् ॥१-५०-१२ (२११२)
स चापि मुनिशार्दूलः प्रेरयामास ते पितुः ।
शिष्यं गौरमुखं नाम शीलवन्तं गुणान्वितम् ॥१-५०-१३ (२११३)
आचख्यौं सत्त्व विश्रान्तो राज्ञः सर्वमशेषतः ।
शप्तोऽसि मम पुत्रेण यत्तो भव महीपते ॥१-५०-१४ (२११४)
तक्षकस्त्वां महाराज तेजसाऽसौ दहिष्यति ।
श्रुत्वा च तद्वचो घोरं पिता ते जनमेजय ॥१-५०-१५ (२११५)
यत्तोऽभवत्परित्रस्तस्तक्षकात्पन्नगोत्तमात् ।
ततस्तस्मिंस्तु दिवसे सप्तमे समुपस्थिते ॥१-५०-१६ (२११६)
राज्ञः समीपं ब्रह्मर्षिः काश्यपो गन्तुमैच्छत ।
तं ददर्शाथ नागेन्द्रस्तक्षकः काश्यपं तदा ॥१-५०-१७ (२११७)
तमब्रवीत्पन्नगेन्द्रः काश्यपं त्वरितं द्विजम् ।
क्व भवांस्त्वरितो याति किं च कार्यं चिकीर्षति ॥१-५०-१८ (२११८)
काश्यप उवाच।१-५०-१९क्ष् (२४०)
यत्र राजा कुरुश्रेष्ठः परिक्षिन्नाम वै द्विज ।
तक्षकेण भुजंगेन धक्ष्यते किल सोऽद्य वै ॥१-५०-१९ (२११९)
गच्छाम्यहं तं त्वरितः सद्यः कर्तुमपज्वरम् ।
मयाऽभिपन्नं तं चापि न सर्पो धर्षयिष्यति ॥१-५०-२० (२१२०)
तक्षक उवाच।१-५०-२१क्ष् (२४१)
किमर्थं तं मया दष्टं संजीवयितुमिच्छसि ।
अहं त तक्षको ब्रह्मन्पश्य मे वीर्यमद्भुतम् ॥१-५०-२१ (२१२१)
न शक्तस्त्वं मया दष्टं तं संजीवयितुं नृपम्। १-५०-२२ (२१२२)
मन्त्रिण ऊचुः ।
इत्युक्त्वा तक्षकस्तत्र सोऽदशद्वै वनस्पतिम् ॥ १-५०-२३क्ष् (२४२)
स दष्टमात्रो नागेन भस्मीभूतोऽभवन्नगः ।
काश्यपश्च ततो राजन्नजीवयत तं नगम् ॥१-५०-२३ (२१२३)

ततस्तं लोभयामास कामं ब्रूहीति तक्षकः ।
स एवमुक्तस्तं प्राह काश्यपस्तक्षकं पुनः ॥१-५०-२४ (२१२४)
धनलिप्सुरहं तत्र यामीत्युक्तश्च तेन सः ।
तमुवाच महात्मानं तक्षकः श्लक्ष्णया गिरा ॥१-५०-२५ (२१२५)
यावद्धनं प्रार्थयसे राज्ञस्तस्मात्ततोऽधिकम् ।
गृहाण मत्त एव त्वं सन्निवर्तस्व चानघ ॥१-५०-२६ (२१२६)
स एवमुक्तो नागेन काश्यपो द्विपदां वरः ।
लब्ध्वा वित्तं निववृते तक्षकाद्यावदीप्सितम् ॥१-५०-२७ (२१२७)
तस्मिन्प्रतिगते विप्रे छद्मनोपेत्य तक्षकः ।
तं नृपं नृपतिश्रेष्ठं पितरं धार्मिकं तव ॥१-५०-२८ (२१२८)
प्रासादस्थं यत्तमपि दग्धवान्विषवह्निना ।
ततस्त्वं पुरुषव्याघ्र विजयायाभिषेचितः ॥१-५०-२९ (२१२९)
एतद्दृष्टं श्रुतं चापि यथावन्नृपसत्तम ।
अस्माभिर्निखिलं सर्वं कथितं तेऽतिदारुणम् ॥१-५०-३० (२१३०)
श्रुत्वा चैतं नरश्रेष्ठ पार्थिवस्य पराभवम् ।
अस्य चर्षेरुदङ्कस्य विधत्स्व यदनन्तरम् ॥१-५०-३१ (२१३१)
सौतिरुवाच।१-५०-३२क्ष् (२४३)
एतस्मिन्नेव काले तु स राजा जनमेजयः ।
उवाच मन्त्रिणः सर्वानिदं वाक्यमरिदमः ॥१-५०-३२ (२१३२)
जनमेजय उवाच।१-५०-३३क्ष् (२४४)
अथ तत्कथितं केन यद्वृत्तं तद्वनस्पतौ ।
आश्चर्यभूतं लोकस्य भस्मराशीकृतं तदा ॥१-५०-३३ (२१३३)
यद्वृक्षं जीवयामास काश्यपस्तक्षकेण वै ।
नूनं मन्त्रैर्हतविषो न प्रणश्येत काश्यपात् ॥१-५०-३४ (२१३४)
चिन्तयामास पापात्मा मनसा पन्नगाधमः ।
दष्टं यदि मया विप्रः पार्थिवं जीवयिष्यति ॥१-५०-३५ (२१३५)
तक्षकः संहतविषो लोके यास्यति हास्यताम् ।
विचिन्त्यैवं कृता तेन ध्रुवं तुष्टिर्द्विजस्य वै ॥१-५०-३६ (२१३६)
भविष्यति ह्युपायेन यस्य दास्यामि यातनाम् ।
एकं तु श्रोतुमिच्छामि तद्वृत्तं निर्जने वने ॥१-५०-३७ (२१३७)
संवादं पन्नगेन्द्रस्य काश्यपस्य च कस्तदा ।
श्रुतवान्दृष्टवांश्चापि भवत्सु कथमागतम् ।
श्रुत्वा तस्य विधास्येऽहं पन्नगान्तकरीं मतिम् ॥ १-५०-३८ (२१३८)
मन्त्रिण ऊचुः।१-५०-३९क्ष् (२४५)
शृणु राजन्यथास्माकं येन तत्कथितं पुरा ।
समागतं द्विजेन्द्रस्य पन्नगेन्द्रस्य चाध्वनि ॥१-५०-३९ (२१३९)

तस्मिन्वृक्षे नरः कश्चिदिन्धनार्थाय पार्थिव ।
विचिन्वन्पूर्वमारूढः शुष्कशाखावनस्पतौ ॥१-५०-४० (२१४०)
न बुध्येतामुभौ तौ च नगस्थं पन्नगद्विजौ ।
सह तेनैव वृक्षेण भस्मीभूतोऽभवन्नृप ॥१-५०-४१ (२१४१)
द्विजप्रभावाद्राजेन्द्र व्यजीवत्स वनस्पतिः ।
तेनागम्य द्विजश्रेष्ठ पुंसाऽस्मासु निवेदितम् ॥१-५०-४२ (२१४२)
यथा वृत्तं तु तत्सर्वं तक्षकस्य द्विजस्य च ।
एतत्ते कथितं राजन्यथादृष्टं श्रुतं च यत् ।
श्रुत्वा च नृपशार्दूल विधत्स्व यदनन्तरम् ॥ १-५०-४३ (२१४३)
सौतिरुवाच।१-५०-४४क्ष् (२४६)
मन्त्रिणां तु वचः श्रुत्वा स राजा जनमेजयः ।
पर्यतप्यत दुःखार्तः प्रत्यपिंषत्करं करे ॥१-५०-४४ (२१४४)
निःश्वासमुष्णमसकृद्दीर्घं राजीवलोचनः ।
मुमोचाश्रूणि च तदा नेत्राभ्यां प्ररुदन्नृपः ॥१-५०-४५ (२१४५)
उवाच च महीपालो दुःखशोकसमन्वितः ।
दुर्धरं बाष्पमुत्सृज्य स्पृष्ट्वा चापो यथाविधि ॥१-५०-४६ (२१४६)
मुहूर्तमिव च ध्यात्वा निश्चित्य मनसा नृपः ।
अमर्षी मन्त्रिणः सर्वानिदं वचनमब्रवीत् ॥१-५०-४७ (२१४७)
जनमेजय उवाच।१-५०-४८क्ष् (२४७)
श्रुत्वैतद्भवतां वाक्यं पितुर्मे स्वर्गतिं प्रति ।
निश्चितेयं मम मतिर्या च तां मे निबोधत ।
अनन्तरं च मन्येऽहं तक्षकाय दुरात्मने ॥ १-५०-४८ (२१४८)
प्रतिकर्तव्यमित्येवं येन मे हिंसितः पिता ।
शृङ्गिणं हेतुमात्रं यः कृत्वा दग्ध्वा च पार्थिवम् ॥१-५०-४९ (२१४९)
इयं दुरात्मता तस्य काश्यपं यो न्यवर्तयत् ।
यद्यागच्छेत्स वै विप्रो ननु जीवेत्पिता मम ॥१-५०-५० (२१५०)
परिहीयेत किं तस्य यदि जीवेत्स पार्थिवः ।
काश्यपस्य प्रसादेन मन्त्रिणां विनयेन च ॥१-५०-५१ (२१५१)
स तु वारितवान्मोहात्काश्यपं द्विजसत्तमम् ।
संजिजीवयिषुं प्राप्तं राजानमपराजितम् ॥१-५०-५२ (२१५२)
महानतिक्रमो ह्येष तक्षकस्य दुरात्मनः ।
द्विजस्य योऽददद्द्रव्यं मा नृपं जीवयेदिति ॥१-५०-५३ (२१५३)
उत्तङ्कस्य प्रियं कर्तुमात्मनश्च महत्प्रियम् ।
भवतां चैव सर्वेषां गच्छाम्यपचितिं पितुः ॥ ॥१-५०-५४ (२१५४)

इति श्रीमन्महाभारते आदिपर्वणि आस्तीकपर्वणि पञ्चाशत्तमोऽध्यायः

॥ ५० ॥

Mahabharata - Adi Parva - Chapter Footnotes

१-५०-६ अङ्गेषु बागादिषु यतं नियतं शमदमवन्तमित्यर्थः ॥
१-५०-७ अक्षुद्रं गम्भीरं । तव पित्रा विनिकृतमपकृतम् ॥
१-५०-२० अभिपन्नं त्रातं धर्षयिष्यत्यमिभविष्यति ॥
१-५०-२४ कामं काम्यमानमर्थम् ॥
१-५०-२७ द्विपदा पुस्त्राणाम् ॥
१-५०-३६ संहतविषः सम्या हतं नष्टं विषं यस्य स तथा संहृतविष इति पाठे स्पष्टोथः ॥
१-५०-३९ समागणं समागमं भावे निष्ठा ॥
१-५०-४४ करं कर निधाय प्रत्यपिंषत् ॥
१-५०-५२ मोहान्मदीयसमर्थ्याज्ञानात् ॥
१-५०-५४ अपचितिं वैरनिर्यातनम् ॥
पञ्चाशत्तमोऽध्यायः ॥
५० ॥

---

अध्यय०५१

॥ श्रीः ॥

१.५१. अध्यायः ५१

Mahabharata - Adi Parva - Chapter Topics

जनमेजयस्य सर्पसत्रप्रतिज्ञा ॥ १ ॥
यज्ञसामग्रीसंपादनम् ॥ २ ॥
दीक्षाग्रहणम् ॥ ३ ॥

Mahabharata - Adi Parva - Chapter Text

१-५१-० (२१५५)
सौतिरुवाच। १-५१-०क्ष् (२४८)
एवमुक्त्वा ततः श्रीमान्मन्त्रिभिश्चानुमीदितः ।
आरुरोह प्रतिज्ञां स सर्पसत्राय पार्थिवः ॥ १-५१-१ (२१५६)
ब्रह्मन्भरतशार्दूलो राजा पारिक्षितस्तदा ।
पुरोहितमथाहूय ऋत्विजो वसुधाधिपः ॥ १-५१-२ (२१५७)
अब्रवीद्वाक्यसंपन्नः कार्यसंपत्करं वचः ।
यो मे हिंसितवांस्तातं तक्षकः स दुरात्मवान् ॥ १-५१-३ (२१५८)
प्रतिकुर्यां यथा तस्य तद्भवन्तो ब्रुवन्तु मे ।

अपि तत्कर्म विदितं भवतां येन पन्नगम् ॥ १-५१-४ (२१५९)
तक्षकं संप्रदीप्तेऽग्नौ प्रक्षिपेयं सबान्धवम् ।
यथा तेन पिता मह्यं पूर्वं दग्धो विषाग्निना ॥
तथाऽहमपि तं पापं दग्धुमिच्छामि पन्नगम् ॥ १-५१-५ (२१६०)
ऋत्विज ऊचुः। १-५१-६क्ष् (२४९)
अस्ति राजन्महात्सत्रं त्वदर्थं देवनिर्मितम् ।
सर्वसत्रमिति ख्यातं पुराणे परिपद्यते ॥ १-५१-६ (२१६१)
आहर्ता तस्य सत्रस्य त्वन्नान्योऽस्ति नराधिप ।
इति पौराणिकाः प्राहुरस्माकं चास्ति स क्रतुः ॥ १-५१-७ (२१६२)
एवमुक्तः स राजर्षिर्मेने दग्धं हि तक्षकम् ।
हुताशनमुखे दीप्ते प्रविष्टमिति सत्तम ॥ १-५१-८ (२१६३)
ततोऽब्रवीन्मन्त्रविदस्तान्राजा ब्राह्मणांस्तदा ।
आहरिष्यामि तत्सत्रं संभाराः संभ्रियन्तु मे ॥ १-५१-९ (२१६४)
सौतिरुवाच। १-५१-१०क्ष् (२५०)
ततस्त ऋत्विजस्तस्य शास्त्रतो द्विजसत्तम ।
तं देशं मापयामासुर्यज्ञायतनकारणात् ॥ १-५१-१० (२१६५)
यथावद्वेदविद्वांसः सर्वे बुद्धेः परंगताः ।
ऋद्ध्या परमया युक्तमिष्टं द्विजगणैर्युतम् ॥ १-५१-११ (२१६६)
प्रभूतधनधान्याढ्यमृत्विग्भिः सुनिषेवितम् ।
निर्माय चापि विधिवद्यज्ञायतनमीप्सितम् ॥ १-५१-१२ (२१६७)
राजानं दीक्षयामासुः सर्पसत्राप्तये तदा ।
इदं चासीत्तत्र पूर्वं सर्पसत्रे भविष्यति ॥ १-५१-१३ (२१६८)
निमित्तं महदुत्पन्नं यज्ञविघ्नकरं तदा ।
यज्ञस्यायतने तस्मिन्क्रियमाणे वचोऽब्रवीत् ॥ १-५१-१४ (२१६९)
स्थपतिर्बुद्धिसंपन्नो वास्तुविद्याविशारदः ।
इत्यब्रवीत्सूत्रधारः सूतः पौराणिकस्तदा ॥ १-५१-१५ (२१७०)
यस्मिन्देशे च काले च मापनेयं प्रवर्तिता ।
ब्राह्मणं कारणं कृत्वा नायं संस्थास्यते क्रतुः ॥ १-५१-१६ (२१७१)
एतच्छ्रुत्वा तु राजासौ प्राग्दीक्षाकालमब्रवीत् ।
क्षत्तारं न हि मे कश्चिदज्ञातः प्रविशेदिति ॥ ॥ १-५१-१७ (२१७२)

इति श्रीमन्महाभारते आदिपर्वणि आस्तीकपर्वणि
एकपञ्चाशत्तमोऽध्यायः ॥ ५१ ॥
Mahabharata - Adi Parva - Chapter Footnotes

१-५१-५ मह्यं मम ॥

१-५१-७ त्वत् त्वत्तो नान्योस्ति ॥
१-५१-९ आहरिष्यामि करिष्यामि । संभ्रियन्तु संभ्रियन्ताम् ॥
१-५१-१३ भविष्यति भाविनि ॥
१-५१-१५ सूतो जात्या पौराणिकः शिल्पागमवेत्ता ॥
१-५१-१६ नायं संस्थास्यते न समाप्स्यते ॥
१-५१-१७ दीक्षाकालस्य प्रागिति प्राग्दी क्षाकालं क्षत्तारं द्वास्थम् ॥
एकपञ्चाशत्तमोऽध्यायः ॥
५१ ॥

---

अध्यय०५२
॥ श्रीः ॥
१.५२. अध्यायः ५२

Mahabharata - Adi Parva - Chapter Topics
अग्नौ सर्पपतनम् ॥ १ ॥

Mahabharata - Adi Parva - Chapter Text

१-५२-० (२१७३)
सौतिरुवाच। १-५२-०क्ष् (२५१)
ततः कर्म प्रववृते सर्पसत्रविधानतः ।
पर्यक्रामंश्च विदिवत्स्वे स्वे कर्मणि याजकाः ॥ १-५२-१ (२१७४)
प्रावृत्य कृष्णवासांसि धूम्रसंरक्तलोचनाः ।
जुहुवुर्मन्त्रवच्चैव समिद्धं जातवेदसम् ॥ १-५२-२ (२१७५)
कम्पयन्तश्च सर्वेषामुरगाणां मनांसि च ।
सर्पानाजुहुवुस्तत्र सर्वानग्निमुखे तदा ॥ १-५२-३ (२१७६)
ततः सर्पाः समापेतुः प्रदीप्ते हव्यवाहने ।
विचेष्टमानाः कृपणमाह्वयन्तः परस्परम् ॥ १-५२-४ (२१७७)
विस्फुरन्तः श्वसन्तश्च वेष्टयन्तः परस्परम् ।
पुच्छैः शिरोभिश्च भृशं चित्रभानुं प्रपेदिरे ॥ १-५२-५ (२१७८)
श्वेताः कृष्णाश्च नीलाश्च स्थविराः शिशवस्तथा ।
नदन्तो विविधान्नादान्पेतुर्दीप्ते विभावसौ ॥ १-५२-६ (२१७९)
क्रोशयोजनमात्रा हि गोकर्णस्य प्रमाणतः ।
पतन्त्यजस्रं वेगेन वह्नावग्निमतां वर ॥ १-५२-७ (२१८०)
एवं शतसहस्राणि प्रयुतान्यर्बुदानि च ।
अवशानि विनष्टानि पन्नगानां तु तत्र वै ॥ १-५२-८ (२१८१)
तुरगा इव तत्रान्ये हस्तिहस्ता इवापरे ।

मत्ता इव च मातङ्गा महाकाया महाबलाः ॥१-५२-९ (२१८२)
उच्चावचाश्च बहवो नानावर्णा विषोल्बणाः ।
घोराश्च परिघप्रख्या दन्दशूका महाबलाः ।
प्रपेतुरग्नावुरगा मातृवाग्दण्डपीडिताः ॥ ॥ १-५२-१० (२१८३)

इति श्रीमन्माहाभारते आदिपर्वणि आस्तीकपर्वणि
द्विपञ्चाशत्तमोऽध्यायः ॥५२ ॥
Mahabharata - Adi Parva - Chapter Footnotes

१-५२-१ पर्यक्रामन् पराक्रान्तवन्तः ॥
१-५२-२ मन्त्रवन्मन्त्रयुक्तं यथा स्यात्तथा ॥
१-५२-३ आजुहुवुः आहूतवन्तः ॥
१-५२-५ चित्रभानुमग्निम् ॥
१-५२-७ प्रमाणतः प्रमाणं प्राप्य ॥
द्विपञ्चाशत्तमोऽध्यायः ॥
५२ ॥

---

अध्यय०५३
॥ श्रीः ॥
१.५३. अध्यायः ५३

Mahabharata - Adi Parva - Chapter Topics
ऋत्विगादिनामकथनम् ॥१ ॥
इन्द्रकृतं तक्षकाश्वासनम् ॥२ ॥
वासुकेः स्वभगिन्या संवादः ॥३ ॥

Mahabharata - Adi Parva - Chapter Text

१-५३-० (२१८४)
शौनक उवाच। १-५३-०क्ष् (२५२)
सर्पसत्रे तदा राज्ञः पाण्डवेयस्य धीमतः ।
जनमेजयस्य के त्वासन्नृत्विजः परमर्षयः ॥१-५३-१ (२१८५)
के सदस्या बभूवुश्च सर्पसत्रे सुदारुणे ।
विषादजननेऽत्यर्थं पन्नगानां महाभय ॥१-५३-२ (२१८६)
सर्वं विस्तरशस्तात भवाञ्छंसितुमर्हति ।
सर्पसत्रविधानज्ञविज्ञेयाः के च सूतज ॥१-५३-३ (२१८७)
सौतिरुवाच। १-५३-४क्ष् (२५३)

हन्त ते कथयिष्यामि नामानीह मनीषिणाम् ।
ये ऋत्विजः सदस्याश्च तस्यासन्नृपतेस्तदा ॥ १-५३-४ (२१८८)
तत्र होता बभूवाथ ब्राह्मणश्चण्डभार्गवः ।
च्यवनस्यान्वये ख्यातो जातो वेदविदां वरः ॥ १-५३-५ (२१८९)
उद्गाता ब्राह्मणो वृद्धो विद्वान्कौत्सोऽथ जैमिनिः ।
ब्रह्माऽभवच्छार्ङ्गरवोऽथाध्वर्युश्चापि पिङ्गलः ॥ १-५३-६ (२१९०)
सदस्यश्चाभवद्व्यासः पुत्रशिष्यसहायवान् ।
उद्दालकः प्रमतकः श्वेतकेतुश्च पिङ्गलः ॥ १-५३-७ (२१९१)
असितो देवलश्चैव नारदः पर्वतस्तथा ।
आत्रेयः कुम्डजठरौ द्विजः कालघटस्तथा ॥ १-५३-८ (२१९२)
वात्स्यः श्रुतश्रवा वृद्धो जपस्वाध्यायशीलवान् ।
कोहलो देवशर्मा च मौद्गल्यः समसौरभः ॥ १-५३-९ (२१९३)
एते चान्ये च बहवो ब्राह्मणा वेदपारगाः ।
सदस्याश्चाभवंस्तत्र सत्रे पारिक्षितस्य ह ॥ १-५३-१० (२१९४)
जुह्वत्स्वृत्विक्ष्वथ तदा सर्पसत्रे महाक्रतौ ।
अहयः प्रापतंस्तत्र घोराः प्राणिभयावहाः ॥ १-५३-११ (२१९५)
वसामेदोवहाः कुल्या नागानां संप्रवर्तिताः ।
ववौ गन्धश्च तुमुलो दह्यतामनिशं तदा ॥ १-५३-१२ (२१९६)
पततां चैव नागानां धिष्ठितानां तथाम्बरे ।
अश्रूयतानिशं शब्दः पच्यतां चाग्निना भृशम् ॥ १-५३-१३ (२१९७)
तक्षकस्तु स नागेन्द्रः पुरंदरनिवेशनम् ।
गतः श्रुत्वैव राजानं दीक्षितं जनमेजयम् ॥ १-५३-१४ (२१९८)
ततः सर्वं यथावृत्तमाख्याय भुजगोत्तमः ।
अगच्छच्छरणं भीत आगस्कृत्वा पुरंदरम् ॥ १-५३-१५ (२१९९)
तमिन्द्रः प्राह सुप्रीतो न तवास्तीह तक्षक ।
भयं नागेन्द्र तस्माद्वै सर्पसत्रात्कदाचन ॥ १-५३-१६ (२२००)
प्रसादितो मया पूर्वं तवार्थाय पितामहः ।
तस्मात्तव भयं नास्ति व्येतु तेनसो ज्वरः ॥ १-५३-१७ (२२०१)
सौतिरुवाच। १-५३-१८क्ष् (२५४)
एवमाश्वासितस्तेन ततः स भुजगोत्तमः ।
उवास भवने तस्मिञ्शक्रस्य मुदितः सुखी ॥ १-५३-१८ (२२०२)
अजस्रं निपतत्स्वग्नौ नागेषु भृशदुःखितः ।
अल्पशेषपरीवारो वासुकिः पर्यतप्यत ॥ १-५३-१९ (२२०३)
कश्मलं चाविशद्घोरं वासुकिं पन्नगोत्तमम् ।
स घूर्णमानहृदयो भगिनीमिदमब्रवीत् ॥ १-५३-२० (२२०४)
दह्यन्तेऽङ्गानि मे भद्रे न दिशः प्रतिभान्ति माम् ।

सीदामीव च संमोहाद्धूर्णतीव च मे मनः ॥ १-५३-२१ (२२०५)
दृष्टिर्भ्राम्यति मेऽतीव हृदयं दीर्यतीव च ।
पतिष्याम्यवशोऽद्याहं तस्मिन्दीप्ते विभावसौ ॥ १-५३-२२ (२२०६)
पारिक्षितस्य यज्ञोऽसौ वर्ततेऽस्मज्जिघांसया ।
व्यक्तं मयाऽभिगन्तव्यं प्रेतराजनिवेशनम् ॥ १-५३-२३ (२२०७)
अयं स कालः संप्राप्तो यदर्थमसि मे स्वसः ।
जरत्करौ(पुरा)मयादत्तात्रायस्वास्मान्सबान्धवान् ॥ १-५३-२४ (२२०८)
आस्तीकः किल यज्ञं तं वर्तन्तं भुजगोत्तमे ।
प्रतिषेत्स्यति मां पूर्वं स्वयमाह पितामहः ॥ १-५३-२५ (२२०९)
तद्वत्से ब्रूहि वत्सं स्वं कुमारं वृद्धसंमतम् ।
ममाद्य त्वं सभृत्यस्य मोक्षार्थं वेदवित्तमम् ॥ ॥ १-५३-२६ (२२१०)

इति श्रीमन्महाभारते आदिपर्वणि आस्तीकपर्वणि
त्रिपञ्चाशत्तमोऽध्यायः ॥ ५३ ॥
Mahabharata - Adi Parva - Chapter Footnotes

१-५३-२ सदस्या उपद्रष्टारः ॥
१-५३-३ विधानज्ञेषु विज्ञेयाः श्रेष्ठाः ॥
१-५३-१३ पच्यतां पच्यमानानाम् ॥
१-५३-१५ आगः अपराधं कृत्वा ॥
त्रिपञ्चाशत्तमोऽध्यायः ॥
५३ ॥

---

अध्यय०५४
॥ श्रीः ॥
१.५४. अध्यायः ५४

Mahabharata - Adi Parva - Chapter Topics
आस्तीकस्य स्वमात्रा सवादः । वासुकेराश्वासनं च ॥ १ ॥
आस्तीकस्य सर्पसत्रं प्रति गमनम् ॥ २ ॥

Mahabharata - Adi Parva - Chapter Text

१-५४-० (२२११)
सौतिरुवाच। १-५४-०क्ष् (२५५)
तत आहूय पुत्रं स्वं जरत्कारुर्भुजंगमा ।
वासुकेर्नागराजस्य वचनादिदमब्रवीत् ॥ १-५४-१ (२२१२)

अहं तव पितुः पुत्र भ्रात्रा दत्ता निमित्ततः ।
कालः स चायं संप्राप्तस्तत्कुरुष्व यथातथम् ॥१-५४-२ (२२१३)
आस्तीक उवाच।१-५४-३क्ष् (२५६)
किंनिमित्तं मम पितुर्दत्ता त्वं मातुलेन मे ।
तन्ममाचक्ष्व तत्त्वेन श्रुत्वा कर्ताऽस्मि तत्तथा ॥१-५४-३ (२२१४)
सौतिरुवाच।१-५४-४क्ष् (२५७)
तत आचष्ट सा तस्मै बान्धवानां हितैषिणी ।
भगिनी नागराजस्य जरत्कारुरविक्लबा ॥१-५४-४ (२२१५)
जरत्कारुरुवाच।१-५४-५क्ष् (२५८)
पन्नगानामशेषाणां माता कद्रूरिति श्रुता ।
तया शप्ता रुषितया सुता यस्मान्निबोध तत् ॥१-५४-५ (२२१६)
उच्चैः श्रवाः सोऽश्वराजो यन्मिथ्या न कृतो मम ।
विनतार्थाय पणिते दासभावाय पुत्रकाः ॥१-५४-६ (२२१७)
जनमेजयस्य वो यज्ञे धक्ष्यत्यनिलसारथिः ।
तत्र पञ्चत्वमापन्नाः प्रेतलोकं गमिष्यथ ॥१-५४-७ (२२१८)
तां च शप्तवतीं देवः साक्षाल्लोकपितामहः ।
एवमस्त्विति तद्वाक्यं प्रोवाचानु मुमोद च ॥१-५४-८ (२२१९)
वासुकिश्चापि तच्छ्रुत्वा पितामहवचस्तदा ।
अमृते मथिते तात देवाञ्छरणमीयिवान् ॥१-५४-९ (२२२०)
सिद्धार्थाश्च सुराः सर्वे प्राप्यामृतमनुत्तमम् ।
भ्रातरं मे पुरस्कृत्य पितामहमुपागमन् ॥१-५४-१० (२२२१)
ते तं प्रसादयामासुः सुराः सर्वेऽब्जसंभवम् ।
राज्ञा वासुकिना सार्धं शापोऽसौन भवेदिति ॥१-५४-११ (२२२२)
देवा ऊचुः।१-५४-१२क्ष् (२५९)
वासुकिर्नागराजोऽयं दुःखितो ज्ञातिकारणात् ।
अभिशापः स मातुस्तु भगवन्न भवेत्कथम् ॥१-५४-१२ (२२२३)
ब्रह्मोवाच।१-५४-१३क्ष् (२६०)
जरत्कारुर्जरत्कारुं यां भार्यां समवाप्स्यति ।
तत्र जातो द्विजः शापान्मोक्षयिष्यति पन्नगान् ॥१-५४-१३ (२२२४)
एतच्छ्रुत्वा तु वचनं वासुकिः पन्नगोत्तमः ।
प्रादान्मामरप्रख्य तव पित्रे महात्मने ॥१-५४-१४ (२२२५)
प्रागेवानागते काले तस्मात्त्व मय्यजायथाः ।
अयं स कालः संप्राप्तो भयान्नस्त्रातुमर्हसि ॥१-५४-१५ (२२२६)
भ्रातरं चापि मे तस्मात्त्रातुमर्हसि पावकात् ।
न मोघं तु कृतं तत्स्याद्यदहं तव धीमते ।
पित्रे दत्ता विमोक्षार्थं कथं वा पुत्र मन्यसे ॥ १-५४-१६ (२२२७)

सौतिरुवाच। १-५४-१७क्ष् (२६१)
एवमुक्तस्तथेत्युक्त्वा सास्तीको मातरं तदा ।
अब्रवीद्दुःखसंतप्तं वासुकिं जीवयन्निव ॥ १-५४-१७ (२२२८)
अहं त्वां मोक्षयिष्यामि वासुके पन्नगोत्तम ।
तस्माच्छापान्महासत्त्व सत्यमेतद्ब्रवीमि ते ॥ १-५४-१८ (२२२९)
भव स्वस्थमना नाग न हि ते विद्यते भयम् ।
प्रयतिष्ये तथा राजन्यथा श्रेयो भविष्यति ॥ १-५४-१९ (२२३०)
न मे वागनृतं प्राह स्वैरेष्वपि कुतोऽन्यथा ।
तं वै नृपवरं गत्वा दीक्षितं जनमेजयम् ॥ १-५४-२० (२२३१)
वाग्भिर्मङ्गलयुक्ताभिस्तोषयिष्येऽद्य मातुल ।
यथा स यज्ञो नृपतेर्निवर्त्स्यति सत्तम ॥ १-५४-२१ (२२३२)
स संभावय नागेन्द्र मयि सर्वं महामते ।
न ते मयि मनो जातु मिथ्या भवितुमर्हति ॥ १-५४-२२ (२२३३)
वासुकिरुवाच। १-५४-२३क्ष् (२६२)
आस्तीक परिघूर्णामि हृदयं मे विदीर्यते ।
दिशो न प्रतिजानामि ब्रह्मदण्डनिपीडितः ॥ १-५४-२३ (२२३४)
आस्तीक उवाच। १-५४-२४क्ष् (२६३)
न सन्तापस्त्वया कार्यः कथंचित्पन्नगोत्तम ।
प्रदीप्ताग्नेः समुत्पन्नं नाशयिष्यामि ते भयम् ॥ १-५४-२४ (२२३५)
ब्रह्मदण्डं महाघोरं कालाग्निसमतेजसम् ।
नाशयिष्यामि माऽत्र त्वं भयंकार्षीः कथंचन ॥ १-५४-२५ (२२३६)
सौतिरुवाच। १-५४-२६क्ष् (२६४)
ततः स वासुकेर्घोरमपनीय मनोज्वरम् ।
आधाय चात्मनोऽङ्गेषु जगाम त्वरितो भृशम् ॥ १-५४-२६ (२२३७)
जनमेजयस्य तं यज्ञं सर्वैः समुदितं गुणैः ।
मोक्षाय भुजगेन्द्राणामास्तीको द्विजसत्तमः ॥ १-५४-२७ (२२३८)
स गत्वाऽपश्यदास्तीको यज्ञायतनमुत्तमम् ।
वृतं सदस्यैर्बहुभिः सूर्यवह्निसमप्रभैः ॥ १-५४-२८ (२२३९)
स तत्र वारितो द्वास्थैः प्रविशन्द्विजसत्तमः ।
अभितुष्टाव तं यज्ञं प्रवेशार्थी परंतपः ॥ १-५४-२९ (२२४०)
स प्राप्य यज्ञायतनं वरिष्ठं
द्विजोत्तमः पुण्यकृतां वरिष्ठः ।
तुष्टाव राजानमनन्तकीर्ति-
मृत्विक्सदस्यांश्च तथैव चाग्निम् ॥ ॥ १-५४-३० (२२४१)

इति श्रीमन्महाभारते आदिपर्वणि आस्तीकपर्वणि

चतुःपञ्चाशत्तमोऽध्यायः ॥ ५४ ॥

Mahabharata - Adi Parva - Chapter Footnotes

१-५४-४ आचष्ट व्यक्तं कथितवती ।अविक्लबा अनाकुला ॥
१-५४-१२ अभिशापः शापः ॥
१-५४-१७ आस्तीक इति पादपूरणार्थः सुलोपः ॥
१-५४-२२ मयि अयमस्मान्मोचयिष्यत्येवरूपो मनःसंकल्पो जातु कदापि मिथ्याऽन्यथा न ॥
१-५४-२३ ब्रह्म वेदः मातृदेवो भवेति मातुराज्ञाकरत्वविधानपरस्तदन्यथाकरणप्रयुक्तो दण्डो मातृशापरूपो ब्रह्मदण्डः ॥
१-५४-२६ वासुकेश्चिन्ताज्वरं स्वयं गृहीत्वेत्यर्थः ॥
चतुःपञ्चाशत्तमोऽध्यायः ॥
५४ ॥

---

अध्यय०५५
॥ श्रीः ॥
१.५५. अध्यायः ५५

Mahabharata - Adi Parva - Chapter Topics

आस्तीककृता जनमेजययज्ञप्रशंसा ॥१ ॥

Mahabharata - Adi Parva - Chapter Text

१-५५-० (२२४२)
आस्तीक उवाच।१-५५-०क्ष् (२६५)
सोमस्य यज्ञो वरुणस्य यज्ञः
प्रजापतेर्यज्ञ आसीत्प्रयागे ।
तथा यज्ञोऽयं तव भारताग्र्य
पारिक्षित स्वस्ति नोऽस्तु प्रियेभ्यः ॥ १-५५-१ (२२४३)
शक्रस्य यज्ञः शतसङ्ख्य उक्त-
स्तथापरं तुल्यसङ्ख्यं शतं वै ।
तथा यज्ञोऽयं तव भारताग्र्य
पारिक्षित स्वस्ति नोऽस्तु प्रियेभ्यः ॥ १-५५-२ (२२४४)
यमस्य यज्ञो हरिमेधसश्च
यथा यज्ञो रन्तिदेवस्य राज्ञः ।
तथा यज्ञोऽयं तव भारताग्र्य

पारिक्षित स्वस्ति नोऽस्तु प्रियेभ्यः ॥ १-५५-३ (२२४५)
गयस्य यज्ञः शशबिन्दोश्च राज्ञो
यज्ञसल्तथा वैश्रवणस्य राज्ञः ।
तथा यज्ञोऽयं तव भारताग्र्य
पारिक्षित स्वस्ति नोऽस्तु प्रियेभ्यः ॥ १-५५-४ (२२४६)
नृगस्य यज्ञस्त्वजमीढस्य चासी-
द्यथा यज्ञो दाशरथेश्च राज्ञः ।
तथा यज्ञोऽयं तव भारताग्र्य
पारिक्षित स्वस्ति नोऽस्तु प्रियेभ्यः ॥ १-५५-५ (२२४७)
यज्ञः श्रुतो दिवि देवस्य सूनो-
र्युधिष्ठिरस्याजमीढस्य राज्ञः ।
तथा यज्ञोऽयं तव भारताग्र्य
पारिक्षित स्वस्ति नोऽस्तु प्रियेभ्यः ॥ १-५५-६ (२२४८)
कृष्णस्य यज्ञः सत्यवत्याः सुतस्य
स्वयं च कर्म प्रचकार यत्र ।
तथा यज्ञोऽयं तव भारताग्र्य
पारिक्षित स्वस्ति नोऽस्तु प्रियेभ्यः ॥ १-५५-७ (२२४९)
इमे च ते सूर्यसमानवर्चसः
समासते वृत्रहणः क्रतुं यथा ।
नैषां ज्ञातुं विद्यते ज्ञानमद्य
दत्तं येभ्यो न प्रणश्येत्कदाचित् ॥ १-५५-८ (२२५०)
ऋत्विक्समो नास्ति लोकेषु चैव
द्वैपायनेनेति विनिश्चितं मे ।
एतस्य शिष्या हि क्षितिं संचरन्ति
सर्वर्त्विजः कर्मसु स्वेषु दक्षाः ॥ १-५५-९ (२२५१)
विभावसुश्चित्रभानुर्महात्मा
हिरण्यरेता हुतभुक्कृष्णवर्त्मा ।
प्रदक्षिमावर्तशिखः प्रदीप्तो
हव्यं तवेदं हुतभुग्वष्टि देवः ॥ १-५५-१० (२२५२)
नैह त्वदन्यो विद्यते जीवलोके
समो नृपः पालयिता प्रजानाम् ।
धृत्या च ते प्रतीमनाः सदाहं
त्वं वा वरुणो धर्मराजो यमो वा ॥ १-५५-११ (२२५३)
शक्रः साक्षाद्वज्रपाणिर्यथेह
त्राता लोकेऽस्मिंस्त्वं तथेह प्रजानाम् ।
मतस्त्वं नः पुरुषेन्द्रेह लोके

न च त्वदन्यो भूपतिरस्ति जज्ञे ॥ १-५५-१२ (२२५४)
खट्वाङ्गनाभगदिलीपकल्प
ययातिमान्धातृसमप्रभाव ।
आदित्यतेजःप्रतिमानतेजा
भीष्मो यथा राजसि सुव्रतस्त्वम् ॥ १-५५-१३ (२२५५)
वाल्मीकिवत्ते निभृतं स्ववीर्यं
वसिष्ठवत्ते नियतश्च कोपः ।
प्रभुत्वमिन्द्रत्वसमं मतं मे
द्युतिश्च नारायणवद्विभाति ॥ १-५५-१४ (२२५६)
यमो यथा धर्मविनिश्चयज्ञः
कृष्णो यथा सर्वगुणोपपन्नः ।
श्रियां निवासोऽसि यथा वसूनां
निधानभूतोऽसि तथा क्रतूनाम् ॥ १-५५-१५ (२२५७)
दम्भोद्भवेनासि समो बलेन
रामो यथा शस्त्रविदस्त्रविच्च ।
और्वत्रिताभ्यामसि तुल्यतेजा
दुष्प्रेक्षणीयोऽसि भगीरथेन ॥ १-५५-१६ (२२५८)
सौतिरुवाच। १-५५-१७क्ष् (२६६)
एवं स्तुताः सर्व एव प्रसन्ना
राजा सदस्या ऋत्विजो हव्यवाहः ।
तेषां दृष्ट्वा भावितानीङ्गितानि
प्रोवाच राजा जनमेजयोऽथ ॥ ॥ १-५५-१७ (२२५९)

इति श्रीमन्महाभारते आदिपर्वणि आस्तीकपर्वणि
पञ्चपञ्चाशत्तमोऽध्यायः ॥ ५५ ॥
Mahabharata - Adi Parva - Chapter Footnotes

१-५५-६ देवस्य धर्मराजस्य ॥
१-५५-८ ज्ञानशब्दः कर्मव्युत्पन्नो ज्ञेयवचनः अद्य संप्रति
ज्ञातुं ज्ञेयं न विद्यते सर्वस्य ज्ञातत्वादित्यर्थः ॥
१-५५-१० अग्निं स्तौति विभावसुरिति । वष्टि कामयते ॥
१-५५-१२ न च त्वदन्यस्त्राता भूपतिरस्ति इदानीं न च जज्ञे प्रागपि ॥
१-५५-१४ निभृतं गुप्तं । नियतो निगृहीतः ॥
१-५५-१५ वसवोऽष्टौ तत्संबन्धिनीनां श्रियाम् ॥
१-५५-१६ रामो भार्गवः और्वत्रितावृषी ॥
१-५५-१७ भावितानि मनसि संकल्पितानि । भारतस्त्विङ्गितानीति पाठे

भारतो राजा भरतवंशजत्वात् ॥
पञ्चपञ्चाशत्तमोऽध्यायः ॥
५५ ॥

---

अध्यय०५६
॥ श्रीः ॥
१.५६. अध्यायः ५६

Mahabharata - Adi Parva - Chapter Topics
प्रशंसया तुष्टस्य जनमेजयस्य ऋत्विग्भिः संवादः ॥ १ ॥
ऋत्विगाह्वानेन सतक्षकस्येन्द्रस्यागमनम् ॥ २ ॥
भयेनेन्द्रे पलायितेऽग्निसमीपे तक्षकागमनम् ॥ ३ ॥
आस्तीकस्य यज्ञसमाप्तिवरयाचनम् ॥ ४ ॥

Mahabharata - Adi Parva - Chapter Text

१-५६-० (२२६०)
जनमेजय उवाच। १-५६-०क्ष् (२६७)
बालोऽप्ययं स्थविर इवावभाषते
नायं बालः स्थविरोऽयं मतो मे ।
इच्छाम्यहं वरमस्मै प्रदातुं
तन्मे विप्राः संविदध्वं यथावत् ॥ १-५६-१ (२२६१)
सदस्या ऊचुः। १-५६-२क्ष् (२६८)
बालोऽपि विप्रो मान्य एवेह राज्ञा
ग्यश्चाविद्वान्यश्च विद्वान्यथावत् ।
प्रसादयैनं त्वरितो नरेन्द्र
द्विजातिवर्यं सकलार्थसिद्धये।'
सर्वान्कामांस्त्वत्त एवार्हतेऽद्य
यथा च नस्तक्षक एति शीघ्रम् ॥ १-५६-२ (२२६२)
सौतिरुवाच। १-५६-३क्ष् (२६९)
व्याहर्तुकामे वरदे नृपे द्विजं
वरं वृणीष्वेति ततोऽभ्युवाच ।
होता वाक्यं नातिहृष्टान्तरात्मा
कर्मण्यस्मिंस्तक्षको नैति तावत् ॥ १-५६-३ (२२६३)
जनमेजय उवाच। १-५६-४क्ष् (२७०)
यथा चेदं कर्म समाप्यते मे
यथा च वै तक्षक एति शीघ्रम् ।

तथा भवन्तः प्रयतन्तु सर्वे
परं शक्त्या स हि मे विद्विषाणः ॥ १-५६-४ (२२६४)
ऋत्विज ऊचुः।१-५६-५क्ष् (२७१)
यथा शस्त्राणि नः प्राहुर्यथा शंसति पावकः ।
इन्द्रस्य भवने राजंस्तक्षको भयपीडितः ॥१-५६-५ (२२६५)
यथा सूतो लोहिताक्षो महात्मा
पौराणिको वेदितवान्पुरस्तात् ।
स राजानं प्राह पृष्टस्तदानीं
यथाहुर्विप्रास्तद्वदेतन्नृदेव ॥ १-५६-६ (२२६६)
पुराणमागम्य ततो ब्रवीम्यहं
दत्तं तस्मै वरमिन्द्रेण राजन् ।
वसेह त्वं मत्सकाशे सुगुप्तो
न पावकस्त्वां प्रदहिष्यतीति ॥ १-५६-७ (२२६७)
एतच्छ्रुत्वा दीक्षितस्तप्यमान
आस्ते होतारं चोदयन्कर्म काले ।
ग्इन्द्रेण सार्धं तक्षकं पातयध्वं
विभावसौ न विमुच्येत नागः।'
होता च यत्तोऽस्याजुहावाथ मन्त्रै-
रथो महेन्द्रः स्वयमाजगाम ॥ १-५६-८ (२२६८)
ग्आयातु चेन्द्रोऽपि सतक्षकः पते-
द्विभावसौ नागराजेन तूर्णम् ।
जम्भस्य हन्तेति जुहाव होता
तदा जगामाहिदत्ताभयः प्रभुः ॥' १-५६-९ (२२६९)
विमानमारुह्य महानुभावः
सर्वैर्देवैः परिसंस्तूयमानः ।
बलाहकैश्चाप्यनुगम्यमानो
विद्याधरैरप्सरसां गणैश्च
ग्नागस्य नाशो मम चैव नाशो
भविष्यतीत्येव विचिन्तयानः ॥' १-५६-१० (२२७०)
तस्योत्तरीये निहितः स नागो
भयोद्विग्नः शर्म नैवाभ्यगच्छत् ।
ततो राजा मन्त्रविदोऽब्रवीत्पुनः
क्रुद्धो वाक्यं तक्षकस्यान्तमिच्छन् ॥ १-५६-११ (२२७१)
जनमेजय उवाच।१-५६-१२क्ष् (२७२)
इन्द्रस्य भवने विप्रा यदि नागः स तक्षकः ।
तमिन्द्रेणैव सहितं पातयध्यं विभावसौ ॥१-५६-१२ (२२७२)

सौतिरुवाच।१-५६-१३क्ष् (२७३)
जनमेजयेन राज्ञा तु नोदितस्तक्षकं प्रति ।
होता जुहाव तत्रस्थं तक्षकं पन्नगं तथा ॥१-५६-१३ (२२७३)
हूयमाने तथा चैव तक्षकः सपुरन्दरः ।
आकाशे ददृशे तत्र क्षणेन व्यथितस्तदा ॥१-५६-१४ (२२७४)
पुरन्दरस्तु तं यज्ञं दृष्ट्वोरुभयमाविशत् ।
हित्वा तु तक्षकं त्रस्तः स्वमेव भवनं ययौ ॥१-५६-१५ (२२७५)
इन्द्रे गते तु राजेन्द्र तक्षको भयमोहितः ।
मन्त्रशक्त्या पावकार्चिस्समीपमवशो गतः ।
ग्तं दृष्ट्वा ऋत्विजस्तत्र वचनं चेदमब्रुवन्'॥ १-५६-१६ (२२७६)
ऋत्विज ऊचुः।१-५६-१७क्ष् (२७४)
अयमायाति तूर्णं स तक्षकस्ते वशं नृप ।
श्रूयतेऽस्य महान्नादो नदतो भैरवं रवम् ॥१-५६-१७ (२२७७)
नूनं मुक्तो वज्रभृता स नागो
भ्रष्टो नाकान्मन्त्रवित्रस्तकायः ।
घूर्णन्नाकाशे नष्टसंज्ञोऽभ्युपैति
तीव्रान्निश्वासान्निश्वसन्पन्नगेन्द्रः ॥ १-५६-१८ (२२७८)
वर्तते तव राजेन्द्र कर्मैतद्विधिवत्प्रभो ।
अस्मै तु द्विजमुख्याय वरं त्वं दातुमर्हसि ॥१-५६-१९ (२२७९)
जनमेजय उवाच।१-५६-२०क्ष् (२७५)
बालाभिरूपस्य तवाप्रमेय
वरं प्रयच्छामि यथानुरूपम् ।
वृणीष्व यत्तेऽभिमतं हृदि स्थितं
तत्ते प्रदास्याम्यपि चेददेयम् ॥ १-५६-२० (२२८०)
सौतिरुवाच।१-५६-२१क्ष् (२७६)
पतिष्यमाणे नागेन्द्रे तक्षके जातवेदसि ।
इदमन्तरमित्येवं तदास्तीकोऽभ्यचोदयत् ॥१-५६-२१ (२२८१)
आस्तीक उवाच।१-५६-२२क्ष् (२७७)
वरं ददासि चेन्मह्यं वृणोमि जनमेजय ।
सत्रं ते विरमत्वेतन्न पतेयुरिहोरगाः ॥१-५६-२२ (२२८२)
एवमुक्तस्तदा तेन ब्रह्मन्पारिक्षितस्तु सः ।
नातिहृष्टमनाश्चेदमास्तीकं वाक्यमब्रवीत् ॥१-५६-२३ (२२८३)
सुवर्णं रजतं गाश्च यच्चान्यन्मन्यसे विभो ।
तत्ते दद्यां वरं विप्र न निवर्तेत्क्रतुर्मम ॥१-५६-२४ (२२८४)
आस्तीक उवाच।१-५६-२५क्ष् (२७८)
सुवर्णं रजतं गाश्च न त्वां राजन्वृणोम्यहम् ।

सत्रं ते विरमत्वेतत्स्वस्ति मातृकुलस्य नः ॥१-५६-२५ (२२८५)
सौतिरुवाच।१-५६-२६क्ष् (२७९)
आस्तीकेनैवमुक्तस्तु राजा पारिक्षितस्तदा ।
पुनःपुनरुवाचेदमास्तीकं वदतां वरः ॥१-५६-२६ (२२८६)
अन्यं वरय भद्रं ते वरं द्विज्वरोत्तम ।
अयाचत न चाप्यन्यं वरं स भृगुनन्दन ॥१-५६-२७ (२२८७)
ततो वेदविदस्तात सदस्याः सर्व एव तम् ।
राजानमूचुः सहिता लभतां ब्राह्मणो वरम् ॥ ॥१-५६-२८ (२२८८)

इति श्रीमन्महाभारते आदिपर्वणि आस्तीकपर्वणि
षट्पञ्चाशत्तमोऽध्यायः ॥५६ ॥
Mahabharata - Adi Parva - Chapter Footnotes

१-५६-१ संविदध्वमैकमत्यं कुरुध्वम् ।संवदध्वमित्यपि पाठः ॥
१-५६-४ विद्विषाणः विद्वेषं कृतवान् ।लिटः कान्च।अभ्यासलोप आर्षः ॥
१-५६-५ शस्त्राणि शंसनमन्त्रदेवताः ॥
१-५६-७ पुराणं पूर्वकल्पीयवृत्तान्तम् ।आगम्य ज्ञात्वा ॥
१-५६-१५ भयं आविशत् प्राप्तवान् ॥
१-५६-२० हे बाल ॥
षट्पञ्चाशत्तमोऽध्यायः ॥
५६ ॥

---

अध्यय०५७
॥श्रीः ॥
१.५७. अध्यायः ५७

Mahabharata - Adi Parva - Chapter Topics
सर्पसत्रे हतानां नागानां नामकथनम् ॥१ ।
Mahabharata - Adi Parva - Chapter Text

१-५७-० (२२८९)
शौनक उवाच।१-५७-०क्ष् (२८०)
ये सर्पाः सर्पसत्रेऽस्मिन्पतिता हव्यवाहने ।
तेषां नामानि सर्वेषां श्रोतुमिच्छामि सूतज ॥१-५७-१ (२२९०)
सौतिरुवाच।१-५७-२क्ष् (२८१)
सहस्राणि बहून्यस्मिन्प्रयुतान्यर्बुदानि च ।
न शक्यं परिसंख्यातुं बहुत्वाद्द्विजसत्तम ॥१-५७-२ (२२९१)

यथास्मृति तु नामानि पन्नगानां निबोध मे ।
उच्यमानानि मुख्यानां हुतानां जातवेदसि ॥ १-५७-३ (२२९२)
वासुकेः कुलजातांस्तु प्राधान्येन निबोध मे ।
नीलरक्तान्सितान्घोरान्महाकायान्विषोल्बणान् ॥ १-५७-४ (२२९३)
अवशान्मातृवाग्दण्डपीडितान्कृपणान्हूतान् ।
कोटिशो मानसः पूर्णः शलः पालो हलीमकः ॥ १-५७-५ (२२९४)
पिच्छलः कौणपश्चक्रः कालवेगः प्रकालनः ।
हिरण्यबाहुः शरणः कक्षकः कालदन्तकः ॥ १-५७-६ (२२९५)
एते वासुकिजा नागाः प्रविष्टा हव्यवाहने ।
अन्ये च बहवो विप्र तथा वै कुलसंभवाः ।
प्रदीप्ताग्नौ हुताःसर्वे घोररूपा महाबलाः ॥ १-५७-७ (२२९६)
तक्षकस्य कुले जातान्प्रवक्ष्यामि निबोध तान् ।
पुच्छाण्डको मण्डलकः पिण्डसेक्ता रभेणकः ॥ १-५७-८ (२२९७)
उच्छिखः शरभो भङ्गो बिल्वतेजा विरोहणः ।
शिली शलकरो मूकः सुकुमारः प्रवेपनः ॥ १-५७-९ (२२९८)
मुद्गरः शिशुरोमा च सुरोमा च महाहनुः ।
एते तक्षकजा नागाः प्रविष्टा हव्यवाहनम् ॥ १-५७-१० (२२९९)
पारावतः पारियात्रः पाण्डरो हरिणः कृशः ।
विहङ्गः शरभो मोदः प्रमोदः संहतापनः ॥ १-५७-११ (२३००)
ऐरावतकुलादेते प्रविष्टा हव्यवाहनम् ।
कौरव्यकुलजान्नागाञ्शृणु मे त्वं द्विजोत्तम ॥ १-५७-१२ (२३०१)
एरकः कुण्डलो वेणी वेणीस्कन्धः कुमारकः ।
बाहुकः शृङ्गबेरश्च धूर्तकः प्रातरातकौ ॥ १-५७-१३ (२३०२)
कौरव्यकुलजास्त्वेते प्रविष्टा हव्यवाहनम् ।
धृतराष्ट्रकुले जाताञ्शृणु नागान्यथातथम् ॥ १-५७-१४ (२३०३)
कीर्त्यमानान्मया ब्रह्मन्वातवेगान्विषोल्बणान् ।
शङ्कुकर्णः पिठरकः कुठारमुखसेचकौ ॥ १-५७-१५ (२३०४)
पूर्णाङ्गदः पूर्णमुखः प्रहासः शकुनिर्दरिः ।
अमाहठः कामठकः सुषेणो मानसोऽव्ययः ॥ १-५७-१६ (२३०५)
ग्अष्टावक्रः कोमलकः श्वसनो मौनवेपगः।'
भैरवो मुण्डवेदाङ्गः पिशङ्गश्चोदपारकः ।
ऋषभो वेगवान्नागः पिण्डारकमहाहनू ॥ १-५७-१७ (२३०६)
रक्ताङ्गः सर्वसारङ्गः समृद्धपटवासकौ ।
वराहको वीरणकः सुचित्रश्चित्रवेगिकः ॥ १-५७-१८ (२३०७)
पराशरस्तरुणको मणिः स्कन्धस्तथाऽऽरुणिः ।
इति नागा मया ब्रह्मन्कीर्तिताः कीर्तिवर्धनाः ॥ १-५७-१९ (२३०८)

प्राधान्येन बहुत्वात्तु न सर्वे परिकीर्तिताः ।
एतेषां प्रसवो यश्च प्रसवस्य च सन्ततिः ॥१-५७-२० (२३०९)
न शक्यं परिसंख्यातुं ये दीप्तं पावकं गताः ।
गद्विशीर्षाः पञ्चशीर्षाश्च सप्तशीर्षास्तथाऽपरे ।
दशशीर्षाः शतशीर्षास्तथान्ये बहुशीर्षकाः'॥ १-५७-२१ (२३१०)
कालानलविषा घोरा हुताः शतसहस्रशः ।
महाकाया महावेगाः शैलशृङ्गसमुच्छ्रयाः ॥१-५७-२२ (२३११)
योजनायामविस्तारा द्वियोजनसमायताः ।
कामरूपाः कामबला दीप्तानलविषोल्बणाः ॥१-५७-२३ (२३१२)
दग्धास्तत्र महासत्रे ब्रह्मदण्डनिपाडिताः ॥ ॥ १-५७-२४ (२३१३)

इति श्रीमन्महाभारते आदिपर्वणि आस्तीकपर्वणि
सप्तपञ्चाशत्तमोऽध्यायः ॥५७ ॥
Mahabharata - Adi Parva - Chapter Footnotes

१-५७-२३ योजनायमविस्तारा अपि मन्त्रसामर्थ्यात्स्वल्पप्रमाणाः
अगस्त्यकरगतसमुद्रवद्वह्नौ प्रवेशयोग्या भवन्ति ॥
सप्तपञ्चाशत्तमोऽध्यायः ॥
५७ ॥

---

अध्यय०५८
॥ श्रीः ॥
१.५८. अध्यायः ५८

Mahabharata - Adi Parva - Chapter Topics
आस्तीकवरप्रदानेन यज्ञसमाप्तिः ॥१ ॥
प्रत्यागतस्यास्तीकस्य सर्पेभ्यो वरलाभः ॥२ ॥

Mahabharata - Adi Parva - Chapter Text

१-५८-० (२३१४)
सौतिरुवाच।१-५८-०क्ष् (२८२)
इदमत्यद्भुतं चान्यदास्तीकस्यानुशुश्रुम ।
तथा वरैश्छन्द्यमाने राज्ञा पारिक्षितेन हि ॥१-५८-१ (२३१५)
इन्द्रहस्ताच्च्युतो नागः ख एव यदतिष्ठत ।
ततश्चिन्तापरो राजा बभूव जनमेजयः ॥१-५८-२ (२३१६)
हूयमाने भृशं दीप्ते विधिवद्वसुरेतसि ।

न स्म स प्रापतद्वह्नौ तक्षको भयपीडितः ॥१-५८-३ (२३१७)
शौनक उवाच।१-५८-४क्ष् (२८३)
किं सूत तेषां विप्राणां मन्त्रग्रामो मनीषिणाम् ।
न प्रत्यभात्तदाऽग्नौ यत्स पपात न तक्षकः ॥१-५८-४ (२३१८)
सौतिरुवाच।१-५८-५क्ष् (२८४)
तमिन्द्रहस्ताद्वित्रस्तं विसंज्ञं पन्नगोत्तमम् ।
आस्तीकस्तिष्ठ तिष्ठेति वाचस्तिस्रोऽभ्युदैरयत् ॥१-५८-५ (२३१९)
वितस्थे सोऽन्तरिक्षे च हृदयेन विदूयता ।
यथा तिष्ठति वै कश्चित्खं च गां चान्तरा नरः ॥१-५८-६ (२३२०)
ततो राजाब्रवीद्वाक्यं सदस्यैश्चोदितो भृशम् ।
काममेतद्भवत्वेवं यथास्तीकस्य भाषितम् ॥१-५८-७ (२३२१)
समाप्यतामिदं कर्म पन्नगाः सन्त्वनामयाः ।
प्रीयतामयमास्तीकः सत्यं सूतवचोऽस्तु तत् ॥१-५८-८ (२३२२)
ततो हलहलाशब्दः प्रीतिजः समजायत ।
आस्तीकस्य वरे दत्ते तथैवोपरराम च ॥१-५८-९ (२३२३)
स यज्ञः पाण्डवेयस्य राज्ञः पारिक्षितस्य ह ।
प्रीतिमांश्चाभवद्राजा भारतो जनमेजयः ॥१-५८-१० (२३२४)
ऋत्विग्भ्यः ससदस्येभ्यो ये तत्रासन्समागताः ।
तेभ्यश्च प्रददौ वित्तं शतशोऽथ सहस्रशः ॥१-५८-११ (२३२५)
लोहिताक्षाय सूताय तथा स्थपतये विभुः ।
येनोक्तं तस्य तत्राग्रे सर्पसत्रनिवर्तने ॥१-५८-१२ (२३२६)
निमित्तं ब्राह्मण इति तस्मै वित्तं ददौ बहु ।
दत्त्वा द्रव्यं यथान्यायं भोजनाच्छादनान्वितम् ॥१-५८-१३ (२३२७)
प्रीतस्तस्मै नरपतिरप्रमेयपराक्रमः ।
ततश्चकारावभृथं विधिदृष्टेन कर्मणा ॥१-५८-१४ (२३२८)
आस्तीकं प्रेषयामास गृहानेव सुसंस्कृतम् ।
राजा प्रीतमनाः प्रीतं कृतकृत्यं मनीषिणम् ॥१-५८-१५ (२३२९)
पुनरागमनं कार्यमिति चैनं वचोऽब्रवीत् ।
भविष्यसि सदस्यो मे वाजिमेधे महाक्रतौ ॥१-५८-१६ (२३३०)
तथेत्युक्त्वा प्रदुद्राव तदास्तीको मुदा युतः ।
कृत्वा स्वकार्यमतुलं तोषयित्वा च पार्थिवम् ॥१-५८-१७ (२३३१)
स गत्वा परमप्रीतो मातुलं मातरं च ताम् ।
अभिगम्योपसंगृह्य तथा वृत्तं न्यवेदयत् ॥१-५८-१८ (२३३२)
सौतिरुवाच।१-५८-१९क्ष् (२८५)
एतच्छ्रुत्वा प्रीयमाणाः समेता
ये तत्रासन्पन्नगा वीतमोहाः ।

आस्तीके वै प्रीतिमन्तो बभूवु-
रूचुश्चैनं वरमिष्टं वृमीष्व ॥ १-५८-१९ (२३३३)
भूयोभूयः सर्वशस्तेऽब्रुवंस्तं
किं ते प्रियं करवामाद्य विद्वन् ।
प्रीता वयं मोक्षिताश्चैव सर्वे
कामं किं ते करवामाद्य वत्स ॥ १-५८-२० (२३३४)
आस्तीक उवाच। १-५८-२१क्ष् (२८६)
सायं प्रातर्ये प्रसन्नात्मरूपा
लोके विप्रा मानवा ये परेऽपि ।
धर्माख्यानं ये पठेयुर्ममेदं
तेषां युष्मन्नैव किंचिद्भयं स्यात् ॥ १-५८-२१ (२३३५)
तैश्चाप्युक्तो भागिनेयः प्रसन्नै-
रेतत्सत्यं काममेवं वरं ते ।
प्रीत्या युक्ताः कामितं सर्वशस्ते
कर्तारः स्म प्रवणा भागिनेय ॥ १-५८-२२ (२३३६)
असितं चार्तिमन्तं च सुनीथं चापि यः स्मरेत् ।
दिवा वा यदि वा रात्रौ नास्य सर्पभयं भवेत् ॥ १-५८-२३ (२३३७)
यो जरत्कारुणा जातो जरत्कारौ महावशाः ।
आस्तीकः सर्पसत्रे वः पन्नगान्योऽभ्यरक्षत ।
तं स्मरन्तं महाभागा न मां हिंसितुमर्हथ ॥ १-५८-२४ (२३३८)
सर्पापसर्प भद्रं ते गच्छ सर्प महाविष ।
जनेमेजयस्य यज्ञान्ते आस्तीकवचनं स्मर ॥ १-५८-२५ (२३३९)
आस्तीकस्य वचः श्रुत्वा यः सर्पो न निवर्तते ।
शतधा भिद्यते मूर्धा शिंशवृक्षफलं यथा ॥ १-५८-२६ (२३४०)
सौतिरुवाच। १-५८-२७क्ष् (२८७)
स एवमुक्तस्तु तदा द्विजेन्द्रः
समागतैस्तैर्भुजगेन्द्रमुख्यैः ।
संप्राप्य प्रीतिं विपुलां महात्मा
ततो मनो गमनायाथ दध्रे ॥ १-५८-२७ (२३४१)
ग्इत्येवं नागराजोऽथ नागानां मध्यगस्तदा ।
उक्त्वा सहैव तैः सर्पैः स्वमेव भवनं ययौ ॥' १-५८-२८ (२३४२)
मोक्षयित्वा तु भुजगान्सर्पसत्राद्द्विजोत्तमः ।
जगाम काले धर्मात्मा दिष्टान्तं पुत्रपौत्रवान् ॥ १-५८-२९ (२३४३)
इत्याख्यानं मयास्तीकं यथावत्तव कीर्तितम् ।
यत्कीर्तयित्वा सर्पेभ्यो न भयं विद्यते क्वचित् ॥ १-५८-३० (२३४४)
सौतिरुवाच। १-५८-३१क्ष् (२८८)

यथा कथितवान्ब्रह्मन्प्रमतिः पूर्वजस्तव ।
पुत्राय रुरवे प्रीतः पृच्छते भार्गवोत्तम ॥१-५८-३१ (२३४५)
यद्वाक्यं श्रुतवांश्चाहं तथा च कथितं मया ।
आस्तीकस्य कवेर्विप्र श्रीमच्चरितमादितः ॥१-५८-३२ (२३४६)
यन्मां त्वं पृष्टवान्ब्रह्मञ्श्रुत्वा डुण्डुभभाषितम् ।
व्येतु ते सुमहद्ब्रह्मन्कौतूहलमरिन्दम ॥१-५८-३३ (२३४७)
श्रुत्वा धर्मिष्ठमाख्यानमास्तीकं पुण्यवर्धनम् ।
ग्सर्वपापविनिर्मुक्तो दीर्घमायुरवाप्नुयात् ॥' ॥ १-५८-३४ (२३४८)

इति श्रीमन्महाभारते आदिपर्वणि आस्तीकपर्वणि
अष्टपञ्चाशत्तमोऽध्यायः ॥५८ ॥ ॥समाप्तं चास्तीकपर्व ॥
Mahabharata - Adi Parva - Chapter Footnotes

१-५८-६ स्वं च गांचान्तराद्यावापृथिव्योर्मध्ये अन्तरिक्ष इत्यर्थः ॥
१-५८-१२ स यज्ञ उपरराममेति पूर्वेणान्वयः ॥
१-५८-१४ अवभृथं यज्ञसमाप्तिं ॥
१-५८-१५ सुसंस्कृतं वस्त्रालङ्करणादिभिः शोभितम् ॥
१-५८-२२ प्रवणा नम्राः ॥
१-५८-२९ दिष्टान्तं मरणम् ॥
अष्टपञ्चाशत्तमोऽध्यायः ॥
५८ ॥

---

अध्यय०५९
॥ श्रीः ॥
१.५९. अध्यायः ५९

(अथांशावतरणपर्व ॥ ६ ॥)
Mahabharata - Adi Parva - Chapter Topics
सौतेर्भारतकथनप्रतिज्ञा ॥ १ ॥

Mahabharata - Adi Parva - Chapter Text

१-५९-० (२३४९)
शौनक उवाच। १-५९-०क्ष् (२८९)
भृगुवंशात्प्रभृत्येव त्वया मे कीर्तितं महत् ।
आख्यानमखिलं तात सौते प्रीतोऽस्मितेन ते ॥१-५९-१ (२३५०)
प्रक्ष्यामि चैव भूयस्त्वां यथावत्सूतनन्दन ।

याः कथा व्याससंपन्नास्ताश्च भूयो विचक्ष्व मे ॥ १-५९-२ (२३५१)
तस्मिन्परमदुष्पारे सर्पसत्रे महात्मनाम् ।
कर्मान्तरेषु यज्ञस्य सदस्यानां तथाऽध्वरे ॥ १-५९-३ (२३५२)
या बभूवुः कथाश्चित्रा येष्वर्थेषु यथातथम् ।
त्वत्त इच्छामहे श्रोतुं सौते त्वं वै प्रचक्ष्व नः ॥ १-५९-४ (२३५३)
सौतिरुवाच। १-५९-५क्ष् (२९०)
कर्मान्तरेष्वकथयन्द्विजा वेदाश्रयाः कथाः ।
व्यासस्त्वकथयच्चित्रमाख्यानं भारतं महत् ॥ १-५९-५ (२३५४)
शौनक उवाच। १-५९-६क्ष् (२९१)
महाभारतमाख्यानं पाण्डवानां यशस्करम् ।
जनमेजयेन पृष्टः सन्कृष्णद्वैपायनस्तदा ॥ १-५९-६ (२३५५)
श्रावयामास विधिवत्तदा कर्मान्तरे तु सः ।
तामहं विधिवत्पुण्यां श्रोतुमिच्छामि वै कथाम् ॥ १-५९-७ (२३५६)
मनःसागरसंभूतां महर्षेर्भावितात्मनः ।
कथयस्व सतां श्रेष्ठ सर्वरत्नमयीमिमाम् ॥ १-५९-८ (२३५७)
सौतिरुवाच। १-५९-९क्ष् (२९२)
हन्त ते कथयिष्यामि महदाख्यानमुत्तमम् ।
कृष्णद्वैपायनमतं महाभारतमादितः ॥ १-५९-९ (२३५८)
शृणु सर्वमशेषेण कथ्यमानं मया द्विज ।
शंसितुं तन्महान्हर्षो ममापीह प्रवर्तते ॥ ॥ १-५९-१० (२३५९)

इति श्रीमन्महाभारते आदिपर्वणि अंशावतरणपर्वणि
एकोनषष्टितमोऽध्यायः ॥ ५९ ॥

---

अध्यय०६०
॥ श्रीः ॥
१.६०. अध्यायः ६०

Mahabharata - Adi Parva - Chapter Topics
भारतकथानुबन्धः ॥ १ ॥

Mahabharata - Adi Parva - Chapter Text

१-६०-० (२३६०)
सौतिरुवाच। १-६०-०क्ष् (२९३)
श्रुत्वा तु सर्पसत्राय दीक्षितं जनमेजयम् ।
अभ्यगच्छदृषिर्विद्वान्कृष्णद्वैपायनस्तदा ॥ १-६०-१ (२३६१)

जनयामास यं काली शक्तेः पुत्रात्पराशरात् ।
कन्यैव यमुनाद्वीपे पाण्डवानां पितामहम् ॥ १-६०-२ (२३६२)
जातमात्रश्च यः सद्य इष्ट्या देहमवीवृधत् ।
वेदांश्चाधिजगे साङ्गन्सेतिहासान्महायशाः ॥ १-६०-३ (२३६३)
यं नाति तपसा कश्चिन्न वेदाध्ययनेन च ।
न व्रतैर्नोपवासैश्च न प्रसूत्या न मन्युना ॥ १-६०-४ (२३६४)
विव्यासैकं चतुर्धा यो वेदं वेदविदां वरः ।
परावरज्ञो ब्रह्मर्षिः कविः सत्यव्रतः शुचिः ॥ १-६०-५ (२३६५)
यः पाण्डुं धृतराष्ट्रं च विदुरं चाप्यजीजनत् ।
शन्तनोः संततिं तन्वन्पुण्यकीर्तिर्महायशाः ॥ १-६०-६ (२३६६)
जनमेजयस्य राजर्षेः स महात्मा सदस्तथा ।
विवेश सहितः शिष्यैर्वेदवेदाङ्गपारगैः ॥ १-६०-७ (२३६७)
तत्र राजानमासीनं ददर्श जनमेजयम् ।
वृतं सदस्यैर्बहुभिर्देवैरिव पुरन्दरम् ॥ १-६०-८ (२३६८)
तथा मूर्धाभिषिक्तैश्च नानाजनपदेश्वरैः ।
ऋत्विग्भिर्ब्रह्मकल्पैश्च कुशलैर्यज्ञसंस्तरे ॥ १-६०-९ (२३६९)
जनमेजयस्तु राजर्षिर्दृष्ट्वा तमृषिमागतम् ।
सगणोऽभ्युद्ययौ तूर्णं प्रीत्या भरतसत्तमः ॥ १-६०-१० (२३७०)
काञ्चनं विष्टरं तस्मै सदस्यानुमतः प्रभुः ।
आसनं कल्पयामास यथा शक्रो बृहस्पतेः ॥ १-६०-११ (२३७१)
तत्रोपविष्टं वरदं देवर्षिगणपूजितम् ।
पूजयामास राजेन्द्रः शास्त्रदृष्टेन कर्मणा ॥ १-६०-१२ (२३७२)
पाद्यमाचमनीयं च अर्घ्यं गां च विधानतः ।
पितामहाय कृष्णाय तदर्हाय न्यवेदयत् ॥ १-६०-१३ (२३७३)
प्रतिगृह्य तु तां पूजां पाम्डवाज्जनमेजयात् ।
गां चैव समनुज्ञाय व्यासः प्रीतोऽभवत्तदा ॥ १-६०-१४ (२३७४)
तथा च पूजयित्वा तं प्रणयात्प्रतितामहम् ।
उपोपविश्य प्रीतात्मा पर्यपृच्छदनामयम् ॥ १-६०-१५ (२३७५)
भगवानापि तं दृष्ट्वा कुशलं प्रतिवेद्य च ।
सदस्यैः पूजितः सर्वैः सदस्यान्प्रत्यपूजयत् ॥ १-६०-१६ (२३७६)
ततस्तु सहितः सर्वैः सदस्यैर्जनमेजयः ।
इदं पश्चाद्द्विजश्रेष्ठं पर्यपृच्छत्कृताञ्जलिः ॥ १-६०-१७ (२३७७)
जनमेजय उवाच। १-६०-१८क्ष् (२९४)
कुरूणां पाण्डवानां च भवान्प्रत्यक्षदर्शिवान् ।
तेषां चरितमिच्छामि कथ्यमानं त्वया द्विज ॥ १-६०-१८ (२३७८)
कथं समभवद्भेदस्तेषामक्लिष्टकर्मणाम् ।

तच्च युद्धं कथं वृत्तं भूतान्तकरणं महत् ॥ १-६०-१९ (२३७९)
पितामहानां सर्वेषां दैवेनाविष्टचेतसाम् ।
कात्स्न्येनैतन्ममाचक्ष्व यथा वृत्तं द्विजोत्तम ।
ग्इच्छामि तत्त्वतः श्रोतुं भगवन्कुशलो ह्यसि'॥ १-६०-२० (२३८०)
सौतिरुवाच। १-६०-२१क्ष् (२९५)
तस्य तद्वचनं श्रुत्वा कृष्णद्वैपायनस्तदा ।
शशास शिष्यमासीनं वैशंपायनमन्तिके ॥ १-६०-२१ (२३८१)
व्यास उवाच। १-६०-२२क्ष् (२९६)
कुरूणां पाण्डवानां च यथा भेदोऽभवत्पुरा ।
तदस्मै सर्वमाचक्ष्व यन्मत्तः श्रुतवानसि ॥ १-६०-२२ (२३८२)
गुरोर्वचनमाज्ञाय स तु विप्रर्षभस्तदा ।
आचचक्षे ततः सर्वमितिहासं पुरातनम् ॥ १-६०-२३ (२३८३)
राज्ञे तस्मै सदस्येभ्यः पार्थिवेभ्यश्च सर्वशः ।
भेदं सर्वविनाशं च कुरुपाण्डवयोस्तदा ॥ ॥ १-६०-२४ (२३८४)

इति श्रीमन्महाभारते आदिपर्वणि अंशावतरणपर्वणि
षष्टितमोऽध्यायः ॥ ६० ॥
Mahabharata - Adi Parva - Chapter Footnotes

१-६०-२ काली सत्यवती ॥
१-६०-३ इष्ट्या इच्छया देहं सद्योऽवीवृधत् वर्धितवान् ॥
१-६०-४ यं व्यासम् । तपआदिना कश्चिन्नाति नात्येति नातिशेते ॥
१-६०-१५ उपोपविश्य समीपे उपविश्य ॥
१-६०-१६ प्रतिवेद्य प्रतिख्याप्य । अत्र पूजा स्तुतिरेव ॥
१-६०-१७ इदं वक्ष्यमाणम् ॥
१-६०-१८ प्रत्यक्षदर्शिवान् प्रत्यक्षदर्शी ॥
१-६०-१९ भेदो वैरम् ॥
१-६०-२० पितामहानां प्रपितामहानाम् ॥
षष्टितमोऽध्यायः ॥
६० ॥

---

अध्यय०६१
॥ श्रीः ॥
१.६१. अध्यायः ६१

Mahabharata - Adi Parva - Chapter Topics
वैशंपायनेन जनमेजयाय संक्षिप्य भारतकथाकथनम् ॥ १ ॥

१-६१-० (२३८५)
वैशंपायन उवाच। १-६१-०क्ष् (२९७)
ग्शृणु राजन्यथा वीरा भ्रातरः पञ्च पाण्डवाः ।
विरोधमन्वगच्छन्त धार्तराष्ट्रैर्दुरात्मभिः ॥' १-६१-१ (२३८६)
गुरवे प्राङ्नमस्कृत्य मनोबुद्धिसमाधिभिः ।
संपूज्य च द्विजान्सर्वांस्तथान्यान्विदुषो जनान् ॥ १-६१-२ (२३८७)
महर्षेर्विश्रुतस्येह सर्वलोकेषु धीमतः ।
प्रवक्ष्यामि मतं कृत्स्नं व्यासस्यामिततेजसः ॥ १-६१-३ (२३८८)
श्रोतुं पात्रं च राजंस्त्वं प्राप्येमां भारतीं कथाम् ।
गुरोर्वक्त्रपरिस्पन्दो मनः प्रोत्साहतीव मे ॥ १-६१-४ (२३८९)
शृणु राजन्यथा भेदः कुरुपाण्डवयोरभूत् ।
राज्यार्थे द्यूतसंभूतो वनवासस्तथैव च ॥ १-६१-५ (२३९०)
यथा च युद्धमभवत्पृथिवीक्षयकारकम् ।
तत्तेऽहं कथयिष्यामि पृच्छते भरतर्षभ ॥ १-६१-६ (२३९१)
मृते पितरि ते वीरा वनादेत्य स्वमन्दिरम् ।
नचिरादेव विद्वांसो वेदे धनुषि चाभवन् ॥ १-६१-७ (२३९२)
तांस्तथा सत्ववीर्यौजःसंपन्नान्पौरसंमतान् ।
नामृष्यन्कुरवो दृष्ट्वा पाण्डवाञ्श्रीयशोभृतः ॥ १-६१-८ (२३९३)
ततो दुर्योधनः क्रूरः कर्णश्च सहसौबलः ।
तेषां निग्रहनिर्वासान्विविधांस्ते समारभन् ॥ १-६१-९ (२३९४)
ततो दुर्योधनः क्रूरः कुलिङ्गस्य मते स्थितः ।
पाम्डवान्विविधोपायै राज्यहेतोरपीडयत् ॥ १-६१-१० (२३९५)
ददावथ विषं पापो भीमाय धृतराष्ट्रजः ।
जरयामास तद्वीरः सहान्नेन वृकोदरः ॥ १-६१-११ (२३९६)
प्रमाणकोट्यां संसुप्तं पुनर्बद्ध्वा वृकोदरम् ।
तोयेषु भीमं गङ्गायाः प्रक्षिप्य पुरमाव्रजत् ॥ १-६१-१२ (२३९७)
यदा विबुद्धः कौन्तेयस्तदा संछिद्य बन्धनम् ।
उदतिष्ठन्महाबाहुर्भीमसेनो गतव्यथः ॥ १-६१-१३ (२३९८)
आशीविषैः कृष्णसर्पैः सुप्तं चैनमदंशयत् ।
सर्वेष्वेवाङ्गदेशेषु न ममार स शत्रुहा ॥ १-६१-१४ (२३९९)
तेषां तु विप्रकारेषु तेषु तेषु महामतिः ।
मोक्षणे प्रतिकारे च विदुरोऽवहितोऽभवत् ॥ १-६१-१५ (२४००)
स्वर्गस्थो जीवलोकस्य यथा शक्रः सुखावहः ।

पाण्डवानां तथा नित्यं विदुरोऽपि सुखावहः ॥१-६१-१६ (२४०१)
यदा तु विविधोपायैः संवृतैर्विवृतैरपि ।
नाशकद्विनिहन्तुं तान्दैवभाव्यर्थरक्षितान् ॥१-६१-१७ (२४०२)
ततः संमन्त्र्य सचिवैर्वृषदुःशासनादिभिः ।
धृतराष्ट्रमनुज्ञाप्य जातुषं गृहमादिशत् ॥१-६१-१८ (२४०३)
'तत्र तान्वासयामास पाण्डवानमितौजसः।'
सुतप्रियैषी तान्राजा पाण्डवानम्बिकासुतः ।
ततो विवासयामास राज्यभोगबुभुक्षया ॥ १-६१-१९ (२४०४)
ते प्रातिष्ठन्त सहिता नगरान्नागसाह्वयात् ।
प्रस्थाने चाभवन्मन्त्री क्षत्ता तेषां महात्मनाम् ॥१-६१-२० (२४०५)
तेन मुक्ता जतुगृहान्निशीथे प्राद्रवन्वनम् ।
ततः संप्राप्य कौन्तेया नगरं वारणावतम् ॥१-६१-२१ (२४०६)
न्यवसन्त महात्मानो मात्रा सह परन्तपाः ।
धृतराष्ट्रेण चाज्ञप्ता उषिता जातुषे गृहे ॥१-६१-२२ (२४०७)
पुरोचनाद्रक्षमाणाः संवत्सरमतन्द्रिताः ।
सुरुङ्गां कारयित्वा तु विदुरेण प्रचोदिताः ॥१-६१-२३ (२४०८)
आदीप्य जातुषं वेश्म दग्ध्वा चैव पुरोचनम् ।
प्राद्रवन्भयसंविग्ना मात्रा सह पन्तपाः ॥१-६१-२४ (२४०९)
ददृशुर्दारुमं रक्षो हिडिम्बं वननिर्झरे ।
हत्वा च तं राक्षसेन्द्रं भीताः समवबोधनात् ॥१-६१-२५ (२४१०)
निशि संप्राद्रवन्पार्था धार्तराष्ट्रभयार्दिताः ।
प्राप्ता हिडिम्बा भीमेन यत्र जातो घटोत्कचः ॥१-६१-२६ (२४११)
एकचक्रां ततो हत्वा पाण्डवाः संशितव्रताः ।
वेदाध्ययनसंपन्नास्तेऽभवन्ब्रह्मचारिणः ॥१-६१-२७ (२४१२)
ते तत्र नियताः कालं कंचिदूषुर्नरर्षभाः ।
मात्रा सहैकचक्रायां ब्राह्मणस्य निवेशने ॥१-६१-२८ (२४१३)
तत्रासमाद क्षुधितं पुरुषादं वृकोदरः ।
भीमसेनो महाबाहुर्बकं नाम महाबलम् ॥१-६१-२९ (२४१४)
तं चापि पुरुषव्याघ्रो बाहुवीर्येण पाण्डवः ।
निहत्य तरसा वीरो नागरान्पर्यसान्त्वयत् ॥१-६१-३० (२४१५)
ततस्ते शुश्रुवुः कृष्णां पञ्चालेषु स्वयंवराम् ।
श्रुत्वा चैवाभ्यगच्छत गत्वा चैवालभन्त ताम् ॥१-६१-३१ (२४१६)
ते तत्र द्रौपदीं लब्ध्वा परिसंवत्सरोषिताः ।
विदिता हास्तिनपुरं प्रत्याजग्मुररिन्दमाः ॥१-६१-३२ (२४१७)
ते उक्ता धृतराष्ट्रेण राज्ञा शान्तनवेन च ।
भ्रातृभिर्विग्रहस्तात कथं वो न भवेदिति ॥१-६१-३३ (२४१८)

अस्माभिः खाण्डवप्रस्थे युष्मद्वासोऽनुचिन्तितः ।
तस्माज्जनपदोपेतं सुविभक्तमहापथम् ॥१-६१-३४ (२४१९)
वासाय स्वाण्डवप्रस्थं व्रजध्वं गतमत्सराः ।
तयोस्ते वचनाज्जग्मुः सह सर्वैः सुहृज्जनैः ॥१-६१-३५ (२४२०)
नगरं खाण्डवप्रस्थं रत्नान्यादाय सर्वशः ।
तत्र ते न्यवसन्पार्थाः संवत्सरगणांन्बहून् ॥१-६१-३६ (२४२१)
वशे शस्त्रप्रतापेन कुर्वन्तोऽन्यान्महीभृतः ।
एवं धर्मप्रधानास्ते सत्यव्रतपरायणाः ॥१-६१-३७ (२४२२)
अप्रमत्तोत्थिताः क्षान्ताः प्रतपन्तोऽहितान्बहून् ।
अजयद्भीमसेनस्तु दिशं प्राचीं महायशाः ॥१-६१-३८ (२४२३)
उदीचीमर्जुनो वीरः प्रतीचीं नकुलस्तथा ।
दक्षिणां सहदेवस्तु विजिग्ये परवीरहा ॥१-६१-३९ (२४२४)
एवं चक्रुरिमां सर्वे वशे कृत्स्नां वसुन्धराम् ।
पञ्चभिः सूर्यसङ्काशैः सूर्येण च विराजता ॥१-६१-४० (२४२५)
षट्सूर्येवाभवत्पृथ्वी पाण्डवैः सत्यविक्रमैः ।
ततो निमित्ते कस्मिंश्चिद्धर्मराजो युधिष्ठिरः ॥१-६१-४१ (२४२६)
वनं प्रस्थापयामास तेजस्वी सत्यविक्रमः ।
प्राणेभ्योऽपि प्रियतरं भ्रातरं सव्यसाचिनम् ॥१-६१-४२ (२४२७)
अर्जुनं पुरुषव्याघ्रं स्थिरात्मानं गुणैर्युतम् ।
स वै संवत्सरं पूर्णं मासं चैकं वने वसन् ॥१-६१-४३ (२४२८)
ग्तीर्थयात्रां च कृतवान्नागकन्यामवाप च ।
पाण्ड्यस्य तनयां लब्ध्वा तत्र ताभ्यांसहोषितः'॥१-६१-४४ (२४२९)
ततोऽगच्छद्धृषीकेशं द्वारवत्यां कदाचन ।
लब्धवांस्तत्र बीभत्सुर्भार्यां राजीवलोचनाम् ॥१-६१-४५ (२४३०)
अनुजां वासुदेवस्य सुभद्रां भद्रभाषिणीम् ।
सा शचीव महेन्द्रेण श्रीः कृष्णेनेव सङ्गता ॥१-६१-४६ (२४३१)
सुभद्रा युयुजे प्रीत्या पाण्डवेनार्जुनेन ह ।
अतर्पयच्च कौन्तेयः खाण्डवे हव्यवाहनम् ॥१-६१-४७ (२४३२)
बीभत्सुर्वासुदेवेन सहितो नृपस्तम ।
नातिभारो हि पार्थस्य केशवेन सहाभवत् ॥१-६१-४८ (२४३३)
व्यवसायसहायस्य विष्णोः शत्रुवधेष्विव ।
पार्थायाग्निर्ददौ चापि गाण्डीवं धनुरुत्तमम् ॥१-६१-४९ (२४३४)
इषुधी चाक्षयैर्बाणै रथं च कपिलक्षणम् ।
मोक्षयामास बीभत्सुर्मयं यत्र महासुरम् ॥१-६१-५० (२४३५)
स चकार सभां दिव्यां सर्वरत्नसमाचिताम् ।
तस्यां दुर्योधनो मन्दो लोभं चक्रे सुदुर्मतिः ॥१-६१-५१ (२४३६)

ततोऽक्षैर्वञ्चयित्वा च सौबलेन युधिष्ठिरम् ।
वनं प्रस्थापयामास सप्तवर्षाणि पञ्च च ॥ १-६१-५२ (२४३७)
अज्ञातमेकं राष्ट्रे च ततो वर्षं त्रयोदशम् ।
ततश्चतुर्दशे वर्षे याचमानाः स्वकं वसु ॥ १-६१-५३ (२४३८)
नालभन्त महाराज ततो युद्धमवर्तत ।
ततस्ते क्षत्रमुत्साद्य हत्वा दुर्योधनं नृपम् ॥ १-६१-५४ (२४३९)
राज्यं विहतभूयिष्ठं प्रत्यपद्यन्त पाण्डवाः ।
इष्ट्वा क्रतूंश्च विविधानश्वमेधादिकान्बहून् ॥ १-६१-५५ (२४४०)
धृतराष्ट्रे गते स्वर्गं विदुरे पञ्चतां गते ।
गमयित्वा क्रियां स्वर्ग्यां राज्ञाममिततेजसाम् ॥ १-६१-५६ (२४४१)
स्वं धाम याते वार्ष्णेये कृष्णदारान्प्ररक्ष्य च ।
महाप्रस्थानिकं कृत्वा गताः स्वर्गमनुत्तमम्'॥ १-६१-५७ (२४४२)
एवमेतत्पुरावृत्तं तेषामक्लिष्टकर्मणाम् ।
भेदो राज्यविनाशश्च जयश्च जयतांवर ॥ ॥ १-६१-५८ (२४४३)

इति श्रीमन्महाभारते आदिपर्वणि अंशावतरणपर्वणि
एकषष्टितमोऽध्यायः ॥ ६१ ॥

Mahabharata - Adi Parva - Chapter Footnotes

१-६१-४ प्रोत्साहतीव प्रोत्साहयतीव । परिस्पन्दमुदुत्साहयतीव मे इति
पाठेगुरोर्वक्त्रपरिस्पन्दस्त्वं कथां कथयेत्याज्ञावचनं तज्जन्या
मुत्प्रीतिः सा प्रोत्साहयती ॥
४ ॥
१-६१-७ नचिरात् शीघ्र । विद्वांसोऽमवन् ॥
१-६१-१२ प्रमाणकोट्यां गङ्गायास्तीर्थविशेषे । वृकनामा बहुभ
क्षोऽग्निरुदरे यस्य स वृकोदरः ॥
१-६१-१७ संवृतैर्गुप्तैः । विवृतै
प्रकाशैः। दैवभाव्यर्थरक्षितान् दैवेनादृष्टेन भावी
कुरुक्षयपाण्ड वराज्यलाभादिरर्थस्तस्मै रक्षितान् ॥
१-६१-१८ वृषः कर्णः जातुषं लाक्षामयम् ॥
१-६१-२० अभवन्मित्रमित्यपि पाठः । क्षत्ता विदुरः ॥
१-६१-२१ तेन क्षत्तुर्मन्त्रणेन ॥
१-६१-३१ स्वयं वृणुते इति स्वयंवरा ताम् ॥
१-६१-३३ शान्तनवेन भीष्मेण ॥
१-६१-३६ आदाय भागश इत्यपि पाठः ॥
१-६१-४८ नातीति खाण्डवदाह इति शेषः ॥

१-६१-४९ व्यवसायो बुद्धिः ॥
१-६१-५० बाणैर्युक्ताविति शेषः । कपिलक्षणं वानरध्वजं। यत्र खाण्डवदाहे ॥
एकषष्टितमोऽध्यायः ॥
६१ ॥

---

अध्यय०६२
॥ श्रीः ॥
१.६२. अध्यायः ६२

Mahabharata - Adi Parva - Chapter Topics
भारतप्रशंसा ॥ १ ॥
तच्छ्रवणादिफलकथनम् ॥ २ ॥

Mahabharata - Adi Parva - Chapter Text

१-६२-० (२४४४)
जनमेजय उवाच। १-६२-०क्ष् (२९८)
कथितं वै समासेन त्वया सर्वं द्विजोत्तम ।
महाभारतमाख्यानं कुरूणां चरितं महत् ॥ १-६२-१ (२४४५)
कथां त्वनघ चित्रार्थां कथयस्व तपोधन ।
विस्तरश्रवणे जातं कौतूहलमतीव मे ॥ १-६२-२ (२४४६)
स भवान्विस्तरेणेमां पुनराख्यातुमर्हति ।
न हि तृप्यामि पूर्वेषां शृण्वानश्चरितं महत् ॥ १-६२-३ (२४४७)
न तत्कारणमल्पं वै धर्मज्ञा यत्र पाण्डवाः ।
अवध्यान्सर्वशो जघ्नुः प्रशस्यन्ते च मानवैः ॥ १-६२-४ (२४४८)
किमर्थं ते नरव्याघ्राः शक्ताः सन्तो ह्यनागसः ।
प्रयुज्यमानान्संक्लेशान्क्षान्तवन्तो दुरात्मनाम् ॥ १-६२-५ (२४४९)
कथं नागायुतप्राणो बाहुशाली वृकोदरः ।
परिक्लिश्यन्नपि क्रोधं धृतवान्वै द्विजोत्तम ॥ १-६२-६ (२४५०)
कथं सा द्रौपदी कृष्णा क्लिश्यमाना दुरात्मभिः ।
शक्ता सती धार्तराष्ट्रान्नादहत्क्रोधचक्षुषा ॥ १-६२-७ (२४५१)
कथं व्यसनिनं द्यूते पार्थौ माद्रीसुतौ तदा ।
अन्वयुस्ते नरव्याघ्रा बाध्यमाना दुरात्मभिः ॥ १-६२-८ (२४५२)
कथं धर्मभृतां श्रेष्ठः सुतो धर्मस्य धर्मवित् ।
अनर्हः परमं क्लेशं सोढवान्स युधिष्ठिरः ॥ १-६२-९ (२४५३)
कथं च बहुलाः सेनाः पाण्डवः कृष्णसारथिः ।

अस्यन्नेकोऽनयत्सर्वाः पितृलोकं धनंजयः ॥१-६२-१० (२४५४)
एतदाचक्ष्व मे सर्वं यथावृत्तं तपोधन ।
यद्यच्च कृतवन्तस्ते तत्रतत्र महारथाः ॥१-६२-११ (२४५५)
वैशंपायन उवाच।१-६२-१२क्ष् (२९९)
क्षणं कुरु महाराज विपुलोऽयमनुक्रमः ।
पुण्याख्यानस्य वक्तव्यः कृष्णद्वैपायनेरितः ॥१-६२-१२ (२४५६)
महर्षेः सर्वलोकेषु पूजितस्य महात्मनः ।
प्रवक्ष्यामि मतं कृत्स्नं व्यासस्यामिततेजसः ॥१-६२-१३ (२४५७)
इदं शतसहस्रं हि श्लोकानां पुण्यकर्मणाम् ।
सत्यवत्यात्मजेनेह व्याख्यातममितौजसा ॥१-६२-१४ (२४५८)
ग्उपाख्यानैः सह ज्ञेयं श्राव्यं भारतमुत्तमम् ।
संक्षेपेण तु वक्ष्यामि सर्वमेतन्नराधिप ॥१-६२-१५ (२४५९)
अध्यायानां सहस्रे द्वे पर्वणां शतमेव च ।
श्लोकानां तु सहस्राणि नवतिश्च दशैव च ।
ततोऽष्टादशभिः पर्वैः संगृहीतं महर्षिणा'॥ १-६२-१६ (२४६०)
य इदं श्रावयेद्विद्वान्ये चेदं शृणुयुर्नराः ।
ते ब्रह्मणः स्थानमेत्य प्राप्नुयुर्देवतुल्यताम् ॥१-६२-१७ (२४६१)
इदं हि वेदैः समितं पवित्रमपि चोत्तमम् ।
श्राव्याणामुत्तमं चेदं पुराणमृषिसंस्तुतम् ॥१-६२-१८ (२४६२)
अस्मिन्नर्थश्च कामश्च निखिलेनोपदेक्ष्यते ।
इतिहासे महापुण्ये बुद्धिश्च परिनैष्ठिकी ॥१-६२-१९ (२४६३)
अक्षुद्रान्दानशीलांश्च सत्यशीलाननास्तिकान् ।
कार्ष्णं वेदमिमं विद्वाञ्छ्रावयित्वाऽर्थमश्नुते ॥१-६२-२० (२४६४)
भ्रूणहत्याकृतं चापि पापं जह्यादसंशयम् ।
इतिहासमिमं श्रुत्वा पुरुषोऽपि सुदारुणः ॥१-६२-२१ (२४६५)
मुच्यते सर्वपापेभ्यो राहुणा चन्द्रमा यथा ।
जयो नामेतिहासोऽयं श्रोतव्यो विजिगीषुणा ॥१-६२-२२ (२४६६)
महीं विजयते राजा शत्रूंश्चापि पराजयेत् ।
इदं पुंसवनं श्रेष्ठमिदं स्वस्त्ययनं महत् ॥१-६२-२३ (२४६७)
महिषीयुवराजाभ्यां श्रोतव्यं बहुशस्तथा ।
वीरं जनयते पुत्रं कन्यां वा राज्यभागिनीम् ॥१-६२-२४ (२४६८)
धर्मशास्त्रमिदं पुण्यमर्थशास्त्रमिदं परम् ।
मोक्षशास्त्रमिदं प्रोक्तं व्यासेनामितबुद्धिना ॥१-६२-२५ (२४६९)
ग्धर्मे चार्थे च कामे च मोक्षे च भरतर्षभ ।
यदिहास्ति तदन्यत्र यन्नेहास्ति न कुत्रचित् ।
इदं हि ब्राह्मणैर्लोके आख्यातं ब्राह्मणेष्विह'॥ १-६२-२६ (२४७०)

संप्रत्याचक्षते चेदं तथा श्रोष्यन्ति चापरे ।
पुत्राः शुश्रूषवः सन्ति प्रेष्याश्च प्रियकारिणः ॥ १-६२-२७ (२४७१)
भरतानां महज्जन्म शृण्वतामनसूयताम् ।
नास्ति व्याधिभयं तेषां परलोकभयं कुतः ॥ १-६२-२८ (२४७२)
शरीरेण कृतं पापं वाचा च मनसैव च ।
सर्वं संत्यजति क्षिप्रं य इदं शृणुयान्नरः ॥ १-६२-२९ (२४७३)
धन्यं यशस्यमायुष्यं पुण्यं स्वर्ग्यं तथैव च ।
कृष्णद्वैपायनेनेदं कृतं पुण्यचिकीर्षुणा ॥ १-६२-३० (२४७४)
कीर्तिं प्रथयता लोके पाण्डवानां महात्मनाम् ।
अन्येषां क्षत्रियाणां च भूरिद्रविणतेजसाम् ॥ १-६२-३१ (२४७५)
सर्वविद्यावदातानां लोके प्रथितकर्मणाम् ।
य इदं मानवो लोके पुण्यार्थे ब्राह्मणाञ्छुचीन् ॥ १-६२-३२ (२४७६)
श्रावयेत महापुण्यं तस्य धर्मः सनातनः ।
कुरूणां प्रथितं वंशं कीर्तयन्सततं शुचिः ॥ १-६२-३३ (२४७७)
वंशमाप्नोति विपुलं लोके पूज्यतमो भवेत् ।
योऽधीते भारतं पुम्यं ब्राह्मणो नियतव्रतः ॥ १-६२-३४ (२४७८)
चतुरो वार्षिकान्मासान्सर्वपापैः प्रमुच्यते ।
विज्ञेयः स च वेदानां पारगो भारतं पठन् ॥ १-६२-३५ (२४७९)
देवा राजर्षयो ह्यत्र पुण्या ब्रह्मर्षयस्तथा ।
कीर्त्यन्ते धूतपाप्मानः कीर्त्यते केशवस्तथा ॥ १-६२-३६ (२४८०)
भगवांश्चापि देवेशो यत्र देवी च कीर्त्यते ।
अनेकजननो यत्र कार्तिकेयस्य संभवः ॥ १-६२-३७ (२४८१)
ब्राह्मणानां गवां चैव माहात्म्यं यत्र कीर्त्यते ।
सर्वश्रुतिसमूहोऽयं श्रोतव्यो धर्मबुद्धिभिः ॥ १-६२-३८ (२४८२)
य इदं श्रावयेद्विद्वान्ब्राह्मणानिह पर्वसु ।
धूतपाप्मा जितस्वर्गो ब्रह्म गच्छति शाश्वतम् ॥ १-६२-३९ (२४८३)
श्रावयेद्ब्राह्मणाञ्श्राद्धे यश्चेमं पादमन्ततः ।
अक्षय्यं तस्य तच्छ्राद्धमुपावर्तेत्पितॄनिह ॥ १-६२-४० (२४८४)
अह्ना यदेनः क्रियते इन्द्रियैर्मनसाऽपि वा ।
ज्ञानादज्ञानतो वापि प्रकरोति नरश्च यत् ॥ १-६२-४१ (२४८५)
तन्महाभारताख्यानं श्रुत्वैव प्रविलीयते ।
भरतानां महज्जन्म महाभारतमुच्यते ॥ १-६२-४२ (२४८६)
निरुक्तमस्य यो वेद सर्वपापैः प्रमुच्यते ।
भरतानां महज्जन्म महाभारतमुच्यते ॥ १-६२-४३ (२४८७)
महतो ह्येनसो मर्त्यान्मोचयेदनुकीर्तितः ।
त्रिभिर्वर्षैर्महाभागः कृष्णद्वैपायनोऽब्रवीत् ॥ १-६२-४४ (२४८८)

नित्योत्थितः शुचिः शक्तो महाभारतमादितः ।
तपोनियममास्थाय कृतमेतन्महर्षिणा ॥ १-६२-४५ (२४८९)
तस्मान्नियमसंयुक्तैः श्रोतव्यं ब्राह्मणैरिदम् ।
कृष्णप्रोक्तामिमां पुण्यां भारतीमुत्तमां कथाम् ॥ १-६२-४६ (२४९०)
श्रावयिष्यन्ति ये विप्रा ये च श्रोष्यन्ति मानवाः ।
सर्वथा वर्तमाना वै न ते शोच्याः कृताकृतैः ॥ १-६२-४७ (२४९१)
नरेण धर्मकामेन सर्वः श्रोतव्य इत्यपि ।
निखिलेनेतिहासोऽयं ततः सिद्धिमवाप्नुयात् ॥ १-६२-४८ (२४९२)
न तां स्वर्गगतिं प्राप्य तुष्टिं प्राप्नोति मानवः ।
यां श्रुत्वैवं महापुण्यमितिहासमुपाश्नुते ॥ १-६२-४९ (२४९३)
शृण्वञ्श्राद्धः पुण्यशीलः श्रावयंश्चेदमद्भुतम् ।
नरः फलमवाप्नोति राजसूयाश्वमेधयोः ॥ १-६२-५० (२४९४)
यथा समुद्रो भगवान्यथा मेरुर्महागिरिः ।
उभौ ख्यातौ रत्ननिधी तथा भारतमुच्यते ॥ १-६२-५१ (२४९५)
इदं हि वेदैः समितं पवित्रमपि चोत्तमम् ।
श्राव्यं श्रुतिसुखं चैव पावनं शीलवर्धनम् ॥ १-६२-५२ (२४९६)
य इदं भारतं राजन्वाचकाय प्रयच्छति ।
तेन सर्वा मही दत्ता भवेत्सागरमेखला ॥ १-६२-५३ (२४९७)
पारिक्षित कथां दिव्यां पुण्याय विजयाय च ।
कथ्यमानां मया कृत्स्नां शृणु हर्षकरीमिमाम् ॥ १-६२-५४ (२४९८)
त्रिभिर्वर्षैः सदोत्थायी कृष्णद्वैपायनो मुनिः ।
महाभारतमाख्यानं कृतवानिदमद्भुतम् ॥ १-६२-५५ (२४९९)
शृणु कीर्तयतस्तन्म इतिहासं पुरातनम् ॥ ॥ १-६२-५६ (२५००)

इति श्रीमन्महाभारते आदिपर्वणि अंशावतरणपर्वणि
द्विषष्टितमोऽध्यायः ॥ ६२ ॥

Mahabharata - Adi Parva - Chapter Footnotes

१-६२-४ अवध्यान् भीष्मद्रोणादीन् ॥
१-६२-६ क्रोधं धृतवान् निरुद्धवान् ॥
१-६२-१० अस्यन् शरान् क्षिपन् स कथं क्लेशं सोढवानित्यनुषज्ज्यते ॥
१-६२-१८ ऋषिभिर्मन्त्रैस्तद्द्रष्टृभिर्वा संस्तुतं समं स्तुतं वा ॥
१-६२-१९ परिनैष्ठिकी परिनिष्ठा मोक्षस्तदुचिता ॥
१-६२-२० अनास्तिकान् नास्तिका न भवन्तीत्यनास्तिकास्तान् ॥
१-६२-२३ पुंसवनं पुमांसः सूयन्तेऽस्मिन् श्रुते ॥
१-६२-२४ महिषी पट्टराज्ञी ॥

१-६२-४७ सर्वथा साधुनाऽसाधुना वा वर्त्मना वर्तमाना अपि
कृताकृतैः क्रमेण पापपुण्यैस्ते न शोच्याः ।एतच्छ्रवणादेव
सर्वप्रत्यवायपरिहारो भवतीति भावः ॥
१-६२-४९ स्वर्गादप्येतच्छ्रवणं सुखकरं मुक्तिहेतुत्वादिति भावः ॥
१-६२-५० श्राद्धः श्रद्धावान् ॥
१-६२-५२ श्राव्यमर्थतो रम्यम् ॥
१-६२-५५ सदोत्थायी सदोद्युक्तः ॥
द्विषष्टितमोऽध्यायः ॥
६२ ॥

---

अध्यय०६३
॥ श्रीः ॥
१.६३. अध्यायः ६३

Mahabharata - Adi Parva - Chapter Topics
पूरुवंशकथनम् ॥ १ ॥

Mahabharata - Adi Parva - Chapter Text

१-६३-० (२५०१)
वैशंपायन उवाच। १-६३-०क्ष् (३००)
पूरोर्वंशमहं धन्यं राज्ञाममिततेजसाम् ।
प्रवक्ष्यामि पितॄणां ते तेषां नामानि मे शृमु ॥ १-६३-१ (२५०२)
अव्यक्तप्रभवो ब्रह्मा शाश्वतो नित्य अव्ययः ।
तस्मान्मरीचिः संजज्ञे दक्षश्चैव प्रजापतिः ॥ १-६३-२ (२५०३)
अङ्गुष्ठाद्दक्षमसृजच्चक्षुर्भ्यां च मरीचिनम् ।
मरीचेः कश्यपः पुत्रो दक्षस्य दुहिताऽऽदितिः ॥ १-६३-३ (२५०४)
अदित्यां कश्यपाद्विवस्थान् ।
विवस्वतो मनुर्मनोरिला ॥ १-६३-४ (२५०५)
इलायाः पुरूरवाः ।
पुरूरवस आयुः ।
आयुषो नहुषः ।
नहुषस्य ययातिः ॥ १-६३-५ (२५०६)
ययातेर्द्वे भार्ये बभूवतुः ।
उशनसो दुहिता देवयानी वृषपर्वणश्च दुहिता शर्मिष्ठा नाम
॥ १-६३-६ (२५०७)
तत्रानुवंशो भवति ।

यदुं च तुर्वसुं चैव देवयानी व्यजायत ।
द्रुह्युं चानुं च पूरुं च शर्मिष्ठा वार्षपर्वणी ॥ १-६३-७ (२५०८)
तत्र यदोर्यादवाः ।
पूरोः पौरवाः ।
पूरोर्भार्या कौसल्या बभूव ।
तस्यामस्य जज्ञे जनमेजयः ॥ १-६३-८ (२५०९)
स त्रीन्हयमेधानाजहार ।
विश्वजिता चेष्ट्वा वनं प्रविवेश ॥ १-६३-९ (२५१०)
जनमेजयस्तु सुनन्दां नामोपयेमे मागधीं ।
तस्यामस्य जज्ञे प्राचीन्वान् ॥ १-६३-१० (२५११)
यः प्राचीं दिशं जिगाय ।
यावत्सूर्योदयात् तत्तस्य प्राचीनत्वम् ॥ १-६३-११ (२५१२)
प्राचीन्वांस्तु खल्वाश्मकीमुपयेमे यादवीम् ।
तस्यामस्य जज्ञे शस्यातिः ॥ १-६३-१२ (२५१३)
शय्यातिस्तु त्रिशङ्कोर्दुहितरं वराङ्गीं नामोपयेमे तस्यामस्य
जज्ञेऽहंयातिः ॥ १-६३-१३ (२५१४)
अहंयातिस्तु खलु कृतवीर्यदुहितरं भानुमतीं नामोपयेमे ।
तस्यामस्य जज्ञे सार्वभौमः ॥ १-६३-१४ (२५१५)
सार्वभौमस्तु खलु जित्वाऽऽजहार कैकयीं सुन्दरां नाम तामुपयेमे ।
तस्यामस्य जज्ञे जयत्सेनः ॥ १-६३-१५ (२५१६)
जयत्सेनस्तु खलु वैदर्भीमुपयेमे सुश्रवां नाम ।
तस्यामस्य जज्ञेऽपराचीनः ॥ १-६३-१६ (२५१७)
अपराचीनस्तु खलु वैदर्भीमपरामुपयेमे मर्यादां नाम ।
तस्यामस्य जज्ञेऽरिहः ॥ १-६३-१७ (२५१८)
अरिहः खल्वाङ्गीमुपेयेमे ।
तस्यामस्य जज्ञे महाभौमः ॥ १-६३-१८ (२५१९)
महाभौमस्तु खलु प्रसेनजिद्दुहितरमुपयेमे सुयज्ञां नाम ।
तस्यामस्य जज्ञे अयुतानायी ॥ १-६३-१९ (२५२०)
यः पुरुषमेधे पुरुषाणामयुतमानयत्तत्तस्यायुतानायित्वम् ॥ १-६३-२० (२५२१)
अयुतानायी तु खलु पृथुश्रवसो दुहितरमुपयेमे भासां नाम ।
तस्यामस्य जज्ञेऽक्रोधनः ॥ १-६३-२१ (२५२२)
अक्रोधनस्तु खलु कालिङ्गीं कण्डूं नामोपयेमे ।
तस्यामस्य जज्ञे देवातिथिः ॥ १-६३-२२ (२५२३)
देवातिथिस्तु खलु वैदर्भीमुपयेमे मर्यादां नाम तस्यामस्य जज्ञे
ऋचः ॥ १-६३-२३ (२५२४)
ऋचस्तु खलु वामदेव्यामङ्गराजकन्यायामृक्षं पुत्रमजीजनत् ॥

१-६३-२४ (२५२५)
ऋक्षस्तु खलु तक्षकदुहितरं ज्वलन्तीं नामोपयेमे ।
तस्यामन्त्यनारमुत्पादयामास ॥ १-६३-२५ (२५२६)
अन्त्यनारस्तु खलु सरस्वत्यां द्वादशवार्षिकं सत्रमाजहार ।
तमुदवसाने सरस्वत्यभिगम्य भर्तारं वरयामास ॥ १-६३-२६ (२५२७)
तस्यां पुत्रं जनयामास त्रस्नुं नाम ।
अत्रानुवंशो भवति ॥ १-६३-२७ (२५२८)
त्रस्नुं सरस्वती पुत्रमन्त्यनारादजीजनत् ।
इलिलं जनयामास कालिन्द्यांत्रस्नुरात्मजम् ॥ १-६३-२८ (२५२९)
इलिलस्तु रथन्तर्यां दुष्यन्तादीन्पञ्च पुत्रानजीजनत् ॥ १-६३-२९ (२५३०)
दुष्यन्तस्तु लाक्षीं नाम भागीरथीमुपयेमे तस्यामस्य जज्ञे
जनमेजयः ॥ १-६३-३० (२५३१)
सएव दुष्यन्तो विश्वामित्रदुहितरं शकुन्तलां नामोपयेमे ।
तस्यामस्य जज्ञे भरतः ॥ १-६३-३१ (२५३२)
तत्रेमौ श्लोकौ भवतः ।
माता भस्त्रा पितुः पुत्रो यस्माज्जातः स एव सः ।
भरस्व पुत्रं दौष्यन्तिं सत्यमाह शकुन्तला ॥ १-६३-३२ (२५३३)
रेतोधाः पुत्र उन्नयति नरदेव यमक्षयात् ।
त्वं चास्य धाता गर्भस्य सत्यमाह शकुन्तला ॥ १-६३-३३ (२५३४)
ततोऽस्य भरतत्वम् ।
भरतस्तु खलु काशेयीं सार्वसेनीमुपयेमे सुनन्दां नाम ।
तस्यामस्य जज्ञे भुमन्युः ॥ १-६३-३४ (२५३५)
भुमन्युस्तु खलु दाशार्हीमुपयेमे सुवर्णां नाम ।
तस्यामस्य जज्ञे सुहोत्रः ॥ १-६३-३५ (२५३६)
सुहोत्रस्तु खल्वैक्ष्वाकीमुपयेमे जयन्तीं नाम ।
तस्यामस्य जज्ञे हस्ती ।
य इदं पुरं निर्मापयामास ॥ १-६३-३६ (२५३७)
तस्माद्धास्तिनपुरत्वम् ।
हस्ती खलु त्रैगर्तीमुपयेमे यशोदां नाम तस्यामस्य जज्ञे विकुञ्जतः
॥ १-६३-३७ (२५३८)
विकुञ्जनस्तु खलु दाशार्हीमुपयेमे सुन्दरां नाम ।
तस्यामस्य जज्ञेऽजमीढः ॥ १-६३-३८ (२५३९)
अजमीढस्य तु चतुर्विंशतिपुत्रशतं बभूव ।
कैकय्यां नागायां गान्धार्यां विमलायामृक्षायामिति ॥ १-६३-३९ (२५४०)
पृथग्वंशकर्तारो नृपतयः ।
तत्र अजमीढादृक्षायां संवरणो जज्ञे स वंशकरः ॥ १-६३-४० (२५४१)

सवरणस्तु वैवस्वतीं तपतीं नामोपयेमे ।
तस्यामस्य जज्ञे कुरुः ॥१-६३-४१ (२५४२)
कुरुस्तु खलु दाशार्हीमुपयेमे शुभाङ्गीं नाम ।
तस्यामस्य जज्ञे विदूरथः ॥१-६३-४२ (२५४३)
विदूरथस्तु खलु मागधीमुपयेमे संप्रियां नाम ।
तस्यामस्य जज्ञेऽनश्वान् ॥१-६३-४३ (२५४४)
अनश्वांस्तु खलु मागधीमुपयेमेऽमृतां नाम ।
तस्यामस्य जज्ञे परिक्षित् ॥१-६३-४४ (२५४५)
परिक्षित्खलु बाहुकामुपयेमे सुवेषां नाम ।
तस्यामस्य जज्ञे भीमसेनः ॥१-६३-४५ (२५४६)
भीमसेनस्तु खलु कैकयीमुपयेमे सुकुमारीं नाम ।
तस्यामस्य जज्ञे परिश्रवाः ॥१-६३-४६ (२५४७)
यमाहुः प्रतीप इति ।
प्रतीपस्तु खलु शैब्यामुपयेमे सुनन्दीं नाम ।
तस्यां त्रीन्पुत्रानुत्पादयामास देवापिं शन्तनुं बाह्लीकं चेति ॥
१-६३-४७ (२५४८)
देवापिस्तु खलु बाल एवारण्यं प्रविवेश ।
शन्तनुस्तु महीपालोऽभवत् ॥१-६३-४८ (२५४९)
तत्र श्लोको भवति ।
यं यं कराभ्यां स्पृशति जीर्णं स सुखमश्नुते ।
पुनर्युवा च भवति तस्मात्तं शन्तनुं विदुः ॥ १-६३-४९ (२५५०)
तदस्य शन्तनुत्वं ।
शन्तनुस्तु खलु गङ्गां भागीरथीमुपयेमे तस्यामस्य जज्ञे देवव्रतः ।
यमाहुर्भीष्म इति ॥ १-६३-५० (२५५१)
भीष्मस्तु खलु पितुः प्रियचिकीर्षया सत्यवतीमानयामास मातरं ।
यामाहुः कालीति ॥१-६३-५१ (२५५२)
तस्यां पूर्वं पुराशरात्कन्यागर्भो द्वैपायनः ।
तस्यामेव शन्तनोर्द्वौ पुत्रौ बभूवतुः चित्राङ्गदो विचित्रवीर्यश्च
॥१-६३-५२ (२५५३)
चित्राङ्गदस्तु प्राप्तराज्य एव गन्धर्वेण निहतः ।
ततो विचित्रवीर्यो राजा बभूव ॥१-६३-५३ (२५५४)
विचित्रवीर्यस्तु खलुकाशिराजस्य सुते अम्बिकाम्बालिके उदवहत् ।
विचित्रवीर्योऽनुत्पन्नापत्य एव विदेहत्वं प्राप्तः ॥१-६३-५४ (२५५५)
ततः सत्यवती चिन्तयामास कथं नु खलु शन्तनोः पिण्डविच्छेदो
न स्यादिति ॥ १-६३-५५ (२५५६)
साथ द्वैपायनं चिन्तयामास सोऽग्रतः स्थितः किं करवाणीति ।

तं सत्यवत्युवाच भ्राता तेऽनपत्य एव स्वर्गतः
तस्यार्थेऽपत्यमुत्पादयेति ॥१-६३-५६ (२५५७)
स परमित्युवाच स तत्र त्रीन्पुत्रानुत्पादयामास धृतराष्ट्रं पाण्डुं
विदुरं चेति ॥ १-६३-५७ (२५५८)
धृतराष्ट्रात्पुत्रशतं बभूव गान्धार्यां वरदानाद्द्वैपायनस्य
तेषां च धार्तराष्ट्राणां चत्वारः प्रधानाः दुर्योधनो दुश्शासनो
विकर्णश्चित्रसेनश्चेति ॥ १-६३-५८ (२५५९)
पाण्डोस्तु कुन्ती माद्रीति स्त्रीरत्ने बभूवतुः ।
स मृगयां चरन्मैथुनगतमृषिं मृगचारिणं बाणेन जघान
॥१-६३-५९ (२५६०)
स बाणविद्ध उवाच पाण्डुम् ।
अत्र श्लोको भवति ॥१-६३-६० (२५६१)
योऽकृतार्थं हि मां ग्रूर बाणेनाघ्ना मृगव्रतम् ।
त्वामप्येतादृशो भावः क्षिप्रमेवागमिष्यति ॥१-६३-६१ (२५६२)
इति मृगव्रतचारिणा ऋषिणा शप्तः ।
स विषण्णरूपः पाण्डुस्तं शापं परिहरन्नोपसर्पति भार्ये ॥१-६३-६२
(२५६३)
कदाचित्स आह ।
स्वचापल्यादिदं प्राप्तवानहम् ।
पुराणेषु पठ्यमानं शृणोमि नानपत्यस्य लोकाः सन्तीति ॥ १-६३-६३ (२५६४)
सा त्वं मदर्थे पुत्रानुत्पादयेति कुन्तीमुवाच ॥ १-६३-६४ (२५६५)
सा कुन्ती पुत्रानुत्पादयामास धर्माद्युधिष्ठिरं
मारुताद्भीमसेनमिन्द्रादर्जुनमिति ।
स हृष्टरूपः पाण्डुरुवाच ।
इयं ते सपत्नी भवति माद्र्यनपत्या व्रीडिता साध्वी
अस्यामपत्यमुत्पाद्यतामिति ॥ १-६३-६५ (२५६६)
सा कुन्ती तस्यै माद्र्यै तथेति व्रतमादिदेश ।
ततस्तस्यां नकुलसहदेवौ यमावश्विभ्यां जज्ञाते ॥१-६३-६६ (२५६७)
माद्रीं तु खलु स्वलङ्कृतां दृष्ट्वा पाण्डुर्भावं चक्रे ।
स तां प्राप्यैव विदेहत्वं प्राप्तः ॥१-६३-६७ (२५६८)
ततस्तेन सह चितामन्वारुरोह माद्री ।
कुन्तीं चोवाच यमयोरार्ययाऽप्रमत्तया भवितव्यमिति ॥१-६३-६८ (२५६९)
ततः पञ्चपाण्डवान्सह कुन्त्या हास्तिनपुरं नयन्ति स्म तपस्विनः ॥
१-६३-६९ (२५७०)
तत्र भीष्माय धृतराष्ट्रविदुरयोः पाण्डोः स्वर्गगमनं याथातथ्यं
निवेदयन्तिस्म तपस्विनः ॥ १-६३-७० (२५७१)

पाण्डवान्सह कुन्त्या जतुगृहे दाहयितुकामो धृतराष्ट्रात्मजोऽभूत् ॥
१-६३-७१ (२५७२)
तांश्च विदुरो मोक्षयामास ।
ततो भीमो हिडिम्बं हत्वा पुत्रमुत्पादयामास हिडिम्बायां घटोत्कचं
नाम ॥ १-६३-७२ (२५७३)
ततश्चैकचक्रां जग्मुः कुशलिनः ।
ततः पाञ्चालविषयं गत्वा स्वयंवरे द्रौपदीं लब्ध्वाऽर्धराज्यं
प्राप्येन्द्रप्रस्थनिवासिनस्तस्यां पुत्रानुत्पादयामासुर्द्रौपद्याम्
॥ १-६३-७३ (२५७४)
प्रतिविन्ध्यां युधिष्ठिरः ।
सुतसोमं वृकोदरः ।
श्रुतकीर्तिमर्जुनः ।
शतानीकं नकुलः ।
श्रुतसेनं सहदेव इति ॥ १-६३-७४ (२५७५)
शैव्यस्य कन्यां देवकीं नामोपयेमे युधिष्ठिरः ।
तस्यां पुत्रं जनयामास यौधेयं नाम ॥ १-६३-७५ (२५७६)
भीमसेनस्तु वाराणस्यां काशिराजकन्यां जलन्धरां नामोपयेमे स्वयंवरस्थां ।
तस्यामस्य जज्ञे शर्वत्रातः ॥ १-६३-७६ (२५७७)
अर्जुनस्तु खलु द्वारवतीं गत्वा भगवतो वासुदेवस्य भगिनीं सुभद्रां
नामोदवहद्भार्यां ।
तस्यामभिमन्युं नाम पुत्रं जनयामास ॥ १-६३-७७ (२५७८)
नकुलस्तु खलु चैद्यां रेणुमतीं नामोदवहत् ।
तस्यां पुत्रं जनयामास निरमित्रं नाम ॥ १-६३-७८ (२५७९)
सहदेवस्तु खलु माद्रीमेव स्वयंवरे विजयां नामोदवहद्भार्याम् ।
तस्यां पुत्रं जनयामास सुहोत्रं नाम ॥ १-६३-७९ (२५८०)
भीमसेनश्च पूर्वमेव हिडिम्बायां राक्षस्यां पुत्रमुत्पादयामास
घटोत्कचं नाम ।
अर्जुनस्तु नागकन्यायामुलूप्यामिरावन्तं नाम पुत्रं जनयामास ॥ १-६३-८०
(२५८१)
ततो मणलूरुपतिकन्यायां चित्राङ्गदायामर्जुनः पुत्रमुत्पादयामास
बभ्रुवाहनं नाम ।
एते त्रयोदश पुत्राः पाण्डवानाम् ॥ १-६३-८१ (२५८२)
विराटस्य दुहितरमुत्तरां नामाभिमन्युरुपेयेमे ।
तस्यामस्य परासुर्गर्भोऽजायत ॥ १-६३-८२ (२५८३)
तमुत्सङ्गे प्रतिजग्राह पृथा नियोगात्पुरुषोत्तमस्य ।
षाण्मासिकं गर्भमहं जीवयामि पादस्पर्शादिति वासुदेव उवाच

॥ १-६३-८३ (२५८४)
अहं जीवयामि कुमारमनन्तवीर्यं जात एवायमजायत ।
अभिमन्योः सत्येन चेयं पृथिवी धारयत्विति वासुदेवस्य
पादस्पर्शात्सजीवोऽजायत ।
नाम तस्याकरोत्सुभद्रा ॥ १-६३-८४ (२५८५)
परिक्षीणे कुले जात उत्तरायां परंतपः ।
परिक्षिदभवत्तस्मात्सौभद्रात्तु यशस्विनः ॥ १-६३-८५ (२५८६)
परीक्षित्तु खलु भद्रवतीं नामोपयेमे ।
तस्यां तत्र भवाञ्जनमेजयः ॥ १-६३-८६ (२५८७)
जनमेजयात्तु भवतः खलु वपुष्टमायां पुत्रौ द्वौ शतानीकः
शङ्कुकर्णश्च ॥ १-६३-८७ (२५८८)
शतानीकस्तु खलु वैदेहीमुपयेमे ।
तस्यामस्य जज्ञे पुत्रोऽश्वमेधदत्तः ॥ १-६३-८८ (२५८९)
इत्येष पूरोर्वंशस्तु पाण्डवानां च कीर्तितः ।
पूरोर्वंशमिमं श्रुत्वा सर्वपापैः प्रमुच्यते ॥ ॥ १-६३-८९ (२५९०)

इति श्रीमन्महाभारते आदिपर्वणि अंशावतरणपर्वणि
त्रिषष्टितमोऽध्यायः ॥ ६३ ॥
Mahabharata - Adi Parva - Chapter Footnotes

१-६३-३२ भस्त्रा चर्मकोशः तत्र निहितं बीजं यथा तदीयं न
भवति एवं मातापि भस्त्रेव । येन हेतुना यो जातः स एव सः। कार्यस्य
कारणानन्यत्वात् ॥
१-६३-३३ पुत्रः रेतोधाः रेतोधातारं पितरं उन्नयति ऊर्ध्वं नयति
। यमक्षयात् नरकात् ॥

---

अध्यय०६४
॥ श्रीः ॥
१.६४. अध्यायः ६४

Mahabharata - Adi Parva - Chapter Topics
उपरिचरराजोपाख्यानम् ॥ १ ॥
इन्द्रध्वजोत्सववृत्तान्तः ॥ २ ॥
गिरिकाया उत्पत्तिः । उपरिचरस्य तया विवाहश्च ॥ ३ ॥
मृगयार्थं गतेनोपरिचरेण स्वपत्नीस्मरणात्स्कन्नस्य श्येनद्वारा
प्रेषितस्य रेतसो यमुनाजले पतनम् ॥ ४ ॥
ब्रह्मशापान्मत्स्यभावं प्राप्तयाऽद्रिकया तद्रेतःपानम् ॥ ५ ॥

तदुदरे मिथुनोत्पत्तिः ॥ ६ ॥
तत्र पुत्रस्य उपरिचरवसुना ग्रहणम् । कन्याया दाशगृहे स्थितिः ॥ ७ ॥
नावं वाहयमानायां सत्यवतीनाम्न्यां दाशकन्यायां
पराशराद्द्वैपायनस्योत्पत्तिः । तस्य व्यासनामप्राप्तिश्च ॥ ८ ॥
पाठान्तरे पराशरसत्यवतीविवाहादि ॥ ९ ॥
भीष्मादीनां संक्षेपतो जन्मवृत्तान्तकथनम् ॥ १० ॥

Mahabharata - Adi Parva - Chapter Text

१-६४-० (२५९१)
वैशंपायन उवाच। १-६४-०क्ष् (३०१)
राजोपरिचरो नाम धर्मनित्यो महीपतिः ।
बभूव मृगयाशीलः शश्वत्स्वाध्यायवाञ्छुचिः ॥ १-६४-१ (२५९२)
स चेदिविषयं रम्यं वसुः पौरवनन्दनः ।
इन्द्रोपदेशाज्जग्राह रमणीयं महीपतिः ॥ १-६४-२ (२५९३)
तमाश्रमे न्यस्तशस्त्रं निवसन्तं तपोनिधिम् ।
देवाः शक्रपुरोगा वै राजानमुपतस्थिरे ॥ १-६४-३ (२५९४)
इन्द्रत्वमर्हो राजायं तपसेत्यनुचिन्त्य वै ।
तं सान्त्वेन नृपं साक्षात्तपसः संन्यवर्तयन् ॥ १-६४-४ (२५९५)
देवा ऊचुः। १-६४-५क्ष् (३०२)
न संकीर्येत धर्मोऽयं पृथिव्यां पृथिवीपते ।
त्वया हि धर्मो विधृतः कृत्स्नं धारयते जगत् ॥ १-६४-५ (२५९६)
इन्द्र उवाच। १-६४-६क्ष् (३०३)
ग्देवानहं पालयिता पालय त्वं हि मानुषान्।'
लोके धर्मं पालय त्वं नित्ययुक्तः समाहितः ।
धर्मयुक्तस्ततो लोकान्पुण्यान्प्राप्स्यसि शाश्वतान् ॥ १-६४-६ (२५९७)
दिविष्ठस्य भुविष्ठस्त्वं सखाभूतो मम प्रियः ।
ऊधः पृथिव्या यो देशस्तमावस नराधिप ॥ १-६४-७ (२५९८)
पशव्यश्चैव पुण्यश्च प्रभूतधनधान्यवान् ।
स्वारक्ष्यश्चैव सौम्यश्च भोग्यैर्भूमिगुणैर्युतः ॥ १-६४-८ (२५९९)
अर्थवानेष देशो हि धनरत्नादिभिर्युतः ।
वसुपूर्णा च वसुधा वस चेदिषु चेदिप ॥ १-६४-९ (२६००)
धर्मशीला जनपदाः सुसंतोषाश्च साधवः ।
न च मिथ्या प्रलापोऽत्र स्वैरेष्वपि कुतोऽन्यथा ॥ १-६४-१० (२६०१)
न च पित्रा विभज्यन्ते पुत्रा गुरुहिते रताः ।
युञ्जते धुरि नो गाश्च कृशान्संधुक्षयन्ति च ॥ १-६४-११ (२६०२)

सर्वे वर्णाः स्वधर्मस्थाः सदा चेदिषु मानद ।
न तेऽस्त्यविदितं किंचित्त्रिषु लोकेषु यद्भवेत् ॥ १-६४-१२ (२६०३)
दैवोपभोग्यं दिव्यं त्वामाकाशे स्फाटिकं महत् ।
आकाशगं त्वां मद्दत्तं विमानमुपपत्स्यते ॥ १-६४-१३ (२६०४)
त्वमेकः सर्वमर्त्येषु विमानवरमास्थितः ।
चरिष्यस्युपरिस्थो हि देवो विग्रहवानिव ॥ १-६४-१४ (२६०५)
ददामि ते वैजयन्तीं मालामम्लानपङ्कजाम् ।
धारयिष्यति सङ्ग्रामे या त्वां शस्त्रैरविक्षतम् ॥ १-६४-१५ (२६०६)
लक्षणं चैतदेवेह भविता ते नराधिप ।
इन्द्रमालेति विख्यातं धन्यमप्रतिमं महत् ॥ १-६४-१६ (२६०७)
यष्टिं च वैणवीं तस्मै ददौ वृत्रनिषूदनः ।
इष्टप्रदानमुद्दिश्य शिष्टानां प्रतिपालिनीम् ॥ १-६४-१७ (२६०८)
ग्एवं संसान्त्व्य नृपतिं तपसः संन्यवर्तयत् ।
प्रययौ दैवतैः सार्धं कृत्वा कार्यं दिवौकसाम् ॥ १-६४-१८ (२६०९)
ततस्तु राजा चेदीनामिन्द्राभरणभूषितः ।
इन्द्रदत्तं विमानं तदास्थाय प्रययौ पुरीम् ॥' १-६४-१९ (२६१०)
तस्याः शक्रस्य पूजार्थं भूमौ भूमिपतिस्तदा ।
प्रवेशं कारयामास सर्वोत्सववरं तदा ॥ १-६४-२० (२६११)
ग्मार्गशीर्षे महाराज पूर्वपक्षे महामखम् ।
ततःप्रभृति चाद्यापि यष्टेः क्षितिपसत्तमैः ॥' १-६४-२१ (२६१२)
प्रवेशः क्रियते राजन्यथा तेन प्रवर्तितः ।
अपरेद्युस्ततस्तस्याः क्रियतेऽत्युच्छ्रयो नृपैः ॥ १-६४-२२ (२६१३)
अलङ्कृताया पिटकैर्गन्धमाल्यैश्च भूषणैः ।
ग्माल्यदामपरिक्षिप्तां द्वात्रिंशत्किष्कुसंमिताम् ॥ १-६४-२३ (२६१४)
उद्धृत्य पिटके चापि द्वादशारत्निकोच्छ्रये ।
महारजनवासांसि परिक्षिप्य ध्वजोत्तमम् ॥ १-६४-२४ (२६१५)
वासोभिरन्नपानैश्च पूजितैर्ब्राह्मणर्षभैः ।
पुण्याहं वाचयित्वाथ ध्वज उच्छ्रियते तदा ॥ १-६४-२५ (२६१६)
शङ्खभेरीमृदङ्गैश्च संनादः क्रियते तदा'।
भगवान्पूज्यते चात्र यष्टिरूपेण वासवः ॥ १-६४-२६ (२६१७)
स्वयमेव गृहीतेन वसोः प्रीत्या महात्मनः ।
ग्माणिभद्रादयो यक्षाः पूज्यन्ते दैवतैः सह ॥ १-६४-२७ (२६१८)
नानाविधानि दानानि दत्त्वार्थिभ्यः सुहृज्जनैः ।
अलङ्कृत्वा माल्यदामैर्वस्त्रैर्नानाविधैस्तथा ॥ १-६४-२८ (२६१९)
दृतिभिः सजलैः सर्वैः क्रीडित्वा नृपशासनात् ।
सभाजयित्वा राजानं कृत्वा नर्माश्रयाः कथाः ॥ १-६४-२९ (२६२०)

रमन्ते नागराः सर्वे तथा जानपदैः सह ।
सूताश्च मागधाश्चैव रमन्ते नटनर्तकाः ॥१-६४-३० (२६२१)
प्रीत्या तु नृपशार्दूल सर्वे चक्रुर्महोत्सवम् ।
सान्तःपुरः सहामात्यः सर्वाभरणभूषितः ॥१-६४-३१ (२६२२)
महारजनवासांसि वसित्वा चेदिराट् तदा ।
जातिहिङ्गुलकेनाक्तः सदारो मुमुदे तदा ॥१-६४-३२ (२६२३)
एवं जानपदाः सर्वे चक्रुरिन्द्रमहं वसुः ॥'
यथा चेदिपतिः प्रीतश्चकारेन्द्रमहं वसुः ॥' १-६४-३३ (२६२४)
एतां पूजां महेन्द्रस्तु दृष्ट्वा वसुकृतां शुभाम् ।
ग्हरिभिर्वाजिभिर्युक्तमन्तरिक्षगतं रथम् ॥१-६४-३४ (२६२५)
आस्थाय सह शच्या च वृतो ह्यप्सरसां गणैः।'
वसुना राजमुख्येन समागम्याब्रवीद्वचः ॥ १-६४-३५ (२६२६)
ये पूजयिष्यन्ति च मुदा यथा चेदिपतिर्नृपः ।
कारयिष्यन्ति च मुदा यथा चेदिपतिर्नृपः ॥१-६४-३६ (२६२७)
तेषां श्रीर्विजयश्चैव सराष्ट्राणां भविष्यति ।
तथा स्फीतो जनपदो मुदितश्च भविष्यति ॥१-६४-३७ (२६२८)
गनिरीतिकानि सस्यानि भवन्ति बहुधा नृप ।
राक्षसाश्च पिशाचाश्च न लुम्पन्ते कथंचन ॥१-६४-३८ (२६२९)
वैशंपायन उवाच।' १-६४-३९क्ष् (३०४)
एवं महात्मना तेन महेन्द्रेण नराधिप ।
वसुः प्रीत्या मघवता महाराजोऽभिसत्कृतः ।
एवं कृत्वा महेन्द्रस्तु जगाम स्वं निवेशनम् ॥ १-६४-३९ (२६३०)
उत्सवं कारयिष्यन्ति सदा शक्रस्य ये नराः ।
भूमिरत्नादिभिर्दानैस्तथा पूज्या भवन्ति ते ।
वरदानमहायज्ञैस्तथा शक्रोत्सवेन च ॥ १-६४-४० (२६३१)
संपूजितो मघवता वसुश्चेदीश्वरो नृपः ।
पालयामास धर्मेण चेदिस्थः पृथिवीमिमाम् ॥१-६४-४१ (२६३२)
इन्द्रपीत्या चेदिपतिश्चकारेन्द्रमहं वसुः ।
पुत्राश्चास्य महावीर्याः पञ्चासन्नमितौजसः ॥१-६४-४२ (२६३३)
नानाराज्येषु च सुतान्स सम्राडभ्यषेचयत् ।
महारथो मागधानां विश्रुतो यो बृहद्रथः ॥१-६४-४३ (२६३४)
प्रत्यग्रहः कुशाम्बश्च यमाहुर्मणिवाहनम् ।
मत्सिल्लश्च यदुश्चैव राजन्यश्चापराजितः ॥१-६४-४४ (२६३५)
एते तस्य सुता राजन्राजर्षेर्भूरितेजसः ।
न्यवेशयन्नामभिः स्वैस्ते देशांश्च पुराणि च ॥१-६४-४५ (२६३६)
वासवाः पञ्च राजानः पृथग्वंशाश्च शास्वताः ।

वसन्तमिन्द्रप्रासादे आकाशे स्फाटिके च तम् ॥१-६४-४६ (२६३७)
उपतस्थुर्महात्मानं गन्धर्वाप्सरसो नृपम् ।
राजोपरिचरेत्येवं नाम तस्याथ विश्रुतम् ॥१-६४-४७ (२६३८)
पुरोपवाहिनीं तस्य नदीं शुक्तमतीं गिरिः ।
अरौत्सीच्चेतनायुक्तः कामात्कोलाहलः किल ॥१-६४-४८ (२६३९)
गिरिं कोलाहलं तं तु पदा वसुरताडयत् ।
निश्चक्राम ततस्तेन प्रहारविवरेण सा ॥१-६४-४९ (२६४०)
तस्यां नद्यां स जनयन्मिथुनं पर्वतः स्वयम् ।
तस्माद्विमोक्षणात्प्रीता नदी राज्ञे न्यवेदयत् ॥१-६४-५० (२६४१)
`महिषी भविता कन्या पुमान्सेनापतिर्भवेत् ।
शुक्तिमत्या वचःश्रुत्वा दृष्ट्वा तौ राजसत्तमः'॥१-६४-५१ (२६४२)
यः पुमानभवत्तत्र तं स राजर्षिसत्तमः ।
वसुर्वसुप्रदश्चक्रे सेनापतिमरिन्दमः ॥१-६४-५२ (२६४३)
चकार पत्नीं कन्यां तु तथा तां गिरिकां नृपः ।
वसोः पत्नी तु गिरिका कामकालं न्यवेदयत् ॥१-६४-५३ (२६४४)
ऋतुकालमनुप्राप्ता स्नाता पुंसवने शुचिः ।
तदहः पितरश्चैनपूचुर्जहि मृगानिति ॥१-६४-५४ (२६४५)
तं राजसत्तमं प्रीतास्तदा मतिमतां वरः ।
स पितॄणां नियोगेन तामतिक्रम्य पार्थिवः ॥१-६४-५५ (२६४६)
चकार मृगयां कामी गिरिकामेव संस्मरन् ।
अतीव रूपसंपन्नां साक्षाच्छ्रियमिवापराम् ॥१-६४-५६ (२६४७)
अशोकैश्चम्पकैश्चूतैरनेकैरतिमुक्तकैः ।
पुन्नागैः कर्णिकारैश्च बकुलैर्दिव्यपाटलैः ॥१-६४-५७ (२६४८)
पनसैर्नारिकेलैश्च चन्दनैश्चार्जुनैस्तथा ।
एतै रम्यैर्महावृक्षैः पुण्यैः स्वादुफलैर्युतम् ॥१-६४-५८ (२६४९)
कोकिलाकुलसन्नादं मत्तभ्रमरनादितम् ।
वसन्तकाले तत्पश्यन्वनं चैत्ररथोपमम् ॥१-६४-५९ (२६५०)
मन्मथाभिपरीतात्मा नापश्यद्गिरिकां तदा ।
अपश्यन्कामसंतप्तश्चरमाणो यदृच्छया ॥१-६४-६० (२६५१)
पुष्पसंछन्नशाखाग्रं पल्लवैरुपशोभितम् ।
अशोकस्तबकैश्छन्नं रमणीयमपश्यत ॥१-६४-६१ (२६५२)
अधस्यात्तस्य छायायां सुखासीनो नराधिपः ।
मधुगन्धैश्च संयुक्तं पुष्पगन्धमनोहरम् ॥१-६४-६२ (२६५३)
वायुना प्रेर्यमाणस्तु धूम्राय मुदमन्वगात् ।
`भार्यां चिन्तयमानस्य मन्मथाग्निरवर्धत।'
तस्य रेतः प्रचस्कन्द चरतो गहने वने ॥ १-६४-६३ (२६५४)

स्कन्नमात्रं च तद्रेतो वृक्षपत्रेण भूमिपः ।
प्रतिजग्राह मिथ्या मे न पतेद्रेत इत्युत ॥ १-६४-६४ (२६५५)
ग्अङ्गुलीयेन शुक्लस्य रक्षां च विदधे नृपः ।
अशोकस्तबकै रक्तैः पल्लवैश्चाप्यबन्धयत् ॥' १-६४-६५ (२६५६)
इदं मिथ्या परिस्कन्नं रेतो मे न भवेदिति ।
ऋतुश्च तस्याः पत्न्या मे न मोघः स्यादिति प्रभुः ॥ १-६४-६६ (२६५७)
संचिन्त्यैवं तदा राजा विचार्य च पुनःपुनः ।
अमोघत्वं च विज्ञाय रेतसो राजसत्तमः ॥ १-६४-६७ (२६५८)
शुक्रप्रस्थापने कालं महिष्या प्रसमीक्ष्य वै ।
अभिमन्त्र्याथ तच्छुक्रमारात्तिष्ठन्तमाशुगम् ॥ १-६४-६८ (२६५९)
सूक्ष्मधर्मार्थतत्त्वज्ञो गत्वा श्येनं ततोऽब्रवीत् ।
मत्प्रियार्थमिदं सौम्य शुक्रं मम गृहं नय ॥ १-६४-६९ (२६६०)
गिरिकायाः प्रयच्छाशु तस्या ह्यार्तवमद्य वै। १-६४-७० (२६६१)
वैशंपायन उवाच ।
गृहीत्वा तत्तदा श्येनस्तूर्णमुत्पत्य वेगवान् ॥ १-६४-७०क्ष् (३०५)
जवं परममास्थाय प्रदुद्राव विहंगमः ।
तमपश्यदथायान्तं श्येनं श्येनस्तथाऽपरः ॥ १-६४-७१ (२६६२)
अभ्यद्रवच्च तं सद्यो दृष्ट्वैवामिषशङ्कया ।
तुण्डयुद्धमथाकाशे तावुभौ संप्रचक्रतुः ॥ १-६४-७२ (२६६३)
युद्ध्यतोरपतद्रेतस्तच्चापि यमुनाम्भसि ।
तत्राद्रिकेति विख्याता ब्रह्मशापाद्वराप्सरा ॥ १-६४-७३ (२६६४)
मीनभावमनुप्राप्ता बभूव यमुनाचरी ।
श्येनपादपरिभ्रष्टं तद्वीर्यमथ वासवम् ॥ १-६४-७४ (२६६५)
जग्राह तरसोपेत्य साऽद्रिका मत्स्यरूपिणी ।
कदाचिदपि मत्सीं तां बबन्धुर्मत्स्यजीविनः ॥ १-६४-७५ (२६६६)
मासे च दशमे प्राप्ते तदा भरतसत्तम ॥
उज्जह्रुरुदरात्तस्याः स्त्रीं पुमांसं च मानुषौ ॥ १-६४-७६ (२६६७)
आश्चर्यभूतं तद्गत्वा राज्ञेऽथ प्रत्यवेदयन् ।
काये मत्स्या इमौ राजन्संभूतौ मानुषाविति ॥ १-६४-७७ (२६६८)
तयोः पुमांसं जग्राह राजोपरिचरस्तदा ।
स मत्स्यो नाम राजासीद्धार्मिकः सत्यसङ्गरः ॥ १-६४-७८ (२६६९)
साऽप्सरा मुक्तशापा च क्षणेन समपद्यत ।
या पुरोक्ता भगवता तिर्यग्योनिगता शुभा ॥ १-६४-७९ (२६७०)
मानुषौ जनयित्वा त्वं शापमोक्षमवाप्स्यसि ।
ततः साजनयित्वा तौ विशस्ता मत्स्यघातिभिः ॥ १-६४-८० (२६७१)
संत्यज्य मत्स्यरूपं सा दिव्यं रूपमवाप्य च ।

सिद्धर्षिचारणपथं जगामाथ वराप्सराः ॥ १-६४-८१ (२६७२)
सा कन्या दुहिता तस्या मत्स्या मत्स्यसगन्धिनी ।
राज्ञा दत्ता च दाशाय कन्येयं ते भवत्विति ॥ १-६४-८२ (२६७३)
रूपसत्वसमायुक्ता सर्वैः समुदिता गुणैः ।
सा तु सत्यवती नाम मत्स्यघात्यभिसंश्रयात् ॥ १-६४-८३ (२६७४)
आसीत्सा मत्स्यगन्धैव कंचित्कालं शुचिस्मिता ।
शुश्रूषार्थं पितुर्नावं वाहयन्तीं जले च ताम् ॥ १-६४-८४ (२६७५)
तीर्थयात्रां परिक्रामन्नपश्यद्वै पराशरः ।
अतीव रूपसंपन्नां सिद्धानामपि काङ्क्षिताम् ॥ १-६४-८५ (२६७६)
दृष्ट्वैव स च तां धीमांश्चकमे चारुहासिनीम् ।
दिव्यां तां वासवीं कन्यां रम्भोरूं मुनिपुङ्गवः ॥ १-६४-८६ (२६७७)
संभवं चिन्तयित्वा तां ज्ञात्वा प्रोवाच शक्तिजः ।
क्व कर्णधारो नौर्येन नीयते ब्रूहि भामिनि ॥ १-६४-८७ (२६७८)
मत्स्यगन्धोवाच। १-६४-८८क्ष् (३०६)
अनपत्यस्य दाशस्य सुता तत्प्रियकाम्यया ।
सहस्रजनसंपन्ना नौर्मया वाह्यते द्विज ॥ १-६४-८८ (२६७९)
पराशर उवाच। १-६४-८९क्ष् (३०७)
शोभनं वासवि शुभे किं चिरायसि वाह्यताम् ।
कलशं भविता भद्रे सहस्रार्धेन संमितम् ॥ १-६४-८९ (२६८०)
अहं शेषो भिविष्यामि नीयतामचिरेण वै। १-६४-९० (२६८१)
वैशंपायन उवाच ।
मत्स्यगन्धा तथेत्युक्त्वा नावं वाहयतां जले ॥ १-६४-९०क्ष् (३०८)
वीक्षमाणं मुनिं दृष्ट्वा प्रोवाचेदं वचस्तदा ।
मत्स्यगन्धेति मामाहुर्दाशराजसुतां जनाः ॥ १-६४-९१ (२६८२)
जन्म शोकाभितप्तायाः कथं ज्ञास्यसि कथ्यताम्। १-६४-९२ (२६८३)
पराशर उवाच ।
दिव्यज्ञानेन दृष्टं हि दृष्टमात्रेण ते वपुः ॥ १-६४-९२क्ष् (३०९)
प्रणयग्रहणार्थाय वक्ष्येव वासवि तच्छृणु ।
बर्हिषद इति ख्याताः पितरः सोमपास्तुते ॥ १-६४-९३ (२६८४)
तेषां त्वं मानसी कन्या अच्छोदा नाम विश्रुता ।
अच्छोदं नाम तद्दिव्यं सरो यस्मात्समुत्थितम् ॥ १-६४-९४ (२६८५)
त्वया न दृष्टपूर्वास्तु पितरस्ते कदाचन ।
संभूता मनसा तेषां पितॄन्स्वान्नाभिजानती ॥ १-६४-९५ (२६८६)
सा त्वन्यं पितरं वव्रे स्वानतिक्रम्य तान्पितॄन् ।
नाम्ना वसुरिति ख्यातं मनुपुत्रं दिवि स्थितम् ॥ १-६४-९६ (२६८७)
अद्रिकाऽप्सरसा युक्तं विमाने दिवि विष्ठितम् ।

सा तेन व्यभिचारेण मनसा कामचारिणी ॥ १-६४-९७ (२६८८)
पितरं प्रार्थयित्वाऽन्यं योगाद्भ्रष्टा पपात सा ।
अपश्यत्पतमाना सा विमानत्रयमन्तिकात् ॥ १-६४-९८ (२६८९)
त्रसरेणुप्रमाणांस्तांस्तत्रापश्यत्स्वकान्पितॄन् ।
सुसूक्ष्मानपरिव्यक्तानङ्गैरङ्गेष्विवाहितान् ॥ १-६४-९९ (२६९०)
तातेति तानुवाचार्ता पतन्ती सा ह्यधोमुखी ।
तैरुक्ता सा तु माभैषीस्तेन सा संस्थिता दिवि ॥ १-६४-१०० (२६९१)
ततः प्रसादयामास स्वान्पितॄन्दीनया गिरा ।
तामूचुः पितरः कन्यां भ्रष्टैश्वर्यां व्यतिक्रमात् ॥ १-६४-१०१ (२६९२)
भ्रष्टैश्वर्या स्वदोषेण पतसि त्वं शुचिस्मिते ।
यैरारभन्ते कर्माणि शरीरैरिह देवताः ॥ १-६४-१०२ (२६९३)
तैरेव तत्कर्मफलं प्राप्नुवन्ति स्म देवताः ।
मनुष्यास्त्वन्यदेहेन शुभाशुभमिति स्थितिः ॥ १-६४-१०३ (२६९४)
सद्यः फलन्ति कर्माणि देवत्वे प्रेत्य मानुषे ।
तस्मात्त्वं पतसे पुत्रि प्रेत्यत्वं प्राप्स्यसे फलम् ॥ १-६४-१०४ (२६९५)
पितृहीना तु कन्या त्वं वसोर्हि त्वं सुता मता ।
मत्स्ययोनौ समुत्पन्ना सुताराज्ञो भविष्यसि ॥ १-६४-१०५ (२६९६)
अद्रिका मत्स्यरूपाऽभूद्गङ्गायमनुसङ्गमे ।
पराशरस्य दायादं त्वं पुत्रं जनयिष्यसि ॥ १-६४-१०६ (२६९७)
यो वेदमेकं ब्रह्मर्षिश्चतुर्धा विबजिष्यति ।
महाभिषक्सुतस्यैव शन्तनोः कीर्तिवर्धनम् ॥ १-६४-१०७ (२६९८)
ज्येष्ठं चित्राङ्गदं वीरं चित्रवीरं च विश्रुतम् ।
एतान्सूत्वा सुपुत्रांस्त्वं पुनरेव गमिष्यसि ॥ १-६४-१०८ (२६९९)
व्यतिक्रमात्पितॄणां च प्राप्स्यसे जन्म कुत्सितम् ।
अस्यैव राज्ञस्त्वं कन्या ह्यद्रिकायां भविष्यसि ॥ १-६४-१०९ (२७००)
अष्टाविंशे भवित्री त्वं द्वापरे मत्स्ययोनिजा ।
एवमुक्ता पुरा तैस्त्वं जाता सत्यवती शुभा ॥ १-६४-११० (२७०१)
अद्रिकेत्यभिविख्याता ब्रह्मशापाद्वराप्सरा ।
मीनभावमनुप्राप्ता त्वं जनित्वा गता दिवम् ॥ १-६४-१११ (२७०२)
तस्यां जातासि सा कन्या राज्ञो वीर्येण चैवहि ।
तस्माद्वासवि भद्रं ते याचे वंशकरं सुतम् ॥ १-६४-११२ (२७०३)
संगमं मम कल्याणि कुरुष्वेत्यभ्यभाषत ॥ १-६४-११३ (२७०४)
वैशंपायन उवाच। १-६४-११४क्ष् (३१०)
विस्मयाविष्टसर्वाङ्गी जातिस्मरणतां गता ।
साब्रवीत्पश्य भगवन्परपारे स्थितानृषीन् ॥ १-६४-११४ (२७०५)
आवयोर्दृष्टयोरेभिः कथं नु स्यात्समागमः ।

एवं तयोक्तो भगवान्नीहारमसृजत्प्रभुः ॥१-६४-११५ (२७०६)
येन देशः स सर्वस्तु तमोभूत इवाभवत् ।
दृष्ट्वा सृष्टं तु नीहारं ततस्तं परमर्षिणा ॥१-६४-११६ (२७०७)
विस्मिता साभवत्कन्या व्रीडिता च तपस्विनी। १-६४-११७ (२७०८)
सत्यवत्युवाच ।
विद्धि मां भगवन्कन्यां सदा पितृवशानुगाम् ॥ १-६४-११७क्ष् (३११)
त्वत्संयोगाच्च दुष्येत कन्याभावो ममाऽनघ ।
कन्यात्वे दूषिते वापि कथं शक्ष्ये द्विजोत्तम ॥१-६४-११८ (२७०९)
गृह गन्तुमुषे चाहं धीमन्न स्थातुमुत्सहे ।
एतत्संचिन्त्य भगवन्विधत्स्व यदनन्तरम् ॥१-६४-११९ (२७१०)
वैशंपायन उवाच।१-६४-११९क्ष् (३१२)
एवमुक्तवतीं तीं तु प्रीतिमानुषिसत्तमः ।
उवाच मत्प्रियं कृत्वा कन्यैव त्वं भविष्यति ॥१-६४-१२० (२७११)
वृणीष्व च वरं भीरुं यं त्वमिच्छसि भामिनि ।
वृथा हि न प्रसादो मे भूतपूर्वः शुचिस्मिते ॥१-६४-१२१ (२७१२)
एवमुक्ता वरं वव्रे गात्रसौगन्ध्यमुत्तमम् ।
सचास्यै भगवान्प्रादान्मनः काङ्क्षितं प्रभुः ॥१-६४-१२२ (२७१३)
ततो लब्धवरा प्रीता स्त्रीभावगुणभूषिता ।
जगाम सह संसर्गमृषिणाऽद्भुतकर्मणा ॥१-६४-१२३ (२७१४)
तेन गन्धवतीत्येवं नामास्याः प्रथितं भुवि ।
तस्यास्तु योजनाद्गन्धमाजिघ्रन्त नरा भुवि ॥१-६४-१२४ (२७१५)
तस्या योजनगन्धेति ततो नामापरं स्मृतम् ।
इति सत्यवती हृष्टा लब्ध्वा वरमनुत्तमम् ॥१-६४-१२५ (२७१६)
पराशरेण संयुक्ता सद्यो गर्भं सुषाव सा ।
जज्ञे च यमुनाद्वीपे पाराशर्यः स वीर्यवान् ॥१-६४-१२६ (२७१७)
स मातरमनुज्ञाप्य तपस्येव मनो दधे ।
स्मृतोऽहं दर्शयिष्यामि कृत्येष्विति च सोऽब्रवीत् ॥१-६४-१२७ (२७१८)
एवं द्वैपायनो जज्ञे सत्यवत्यां पराशरात् ।
न्यस्तोद्वीपे यद्बालस्तस्माद्द्वैपायनःस्मृतः ॥१-६४-१२८ (२७१९)
पादापसारिणं धर्मं स तु विद्वान्युगे युगे ।
आयुः शक्तिं च मर्त्यानां युगावस्थामवेक्ष्यच ॥१-६४-१२९ (२७२०)
ब्रह्मणो ब्राह्मणानां च तथानुग्रहकाङ्क्षया ।
विव्यास वेदान्यस्मत्स तस्माद्व्यास इति स्मृतः ॥१-६४-१३० (२७२१)
वेदानध्यापयामास महाभारतपञ्चमान् ।
सुमन्तुं जैमिनिं पैलं शुकं चैव स्वमात्मजम् ॥१-६४-१३१ (२७२२)
प्रभुर्वरिष्ठो वरदो वैशंपायनमेव च ।

संहितास्तैः पृथक्त्वेन भारतस्य प्रकाशिताः ॥ १-६४अ-१अ
श्ततो रम्ये वनोद्देशे दिव्यास्तरणसंयुते। १-६४अ-१ब्
वीरासनमुपास्थाय योगी ध्यानपरोऽभवत्॥ १-६४अ-२अ
श्वेतपट्टगृहे रम्ये पर्यङ्के सोत्तरच्छदे। १-६४अ-२ब्
तूर्ष्णीभूतां तदा कन्यां ज्वलन्तीं योगतेजसा॥ १-६४अ-३अ
दृष्ट्वा तां तु समाधाय विचार्य च पुनः पुनः। १-६४अ-३ब्
स चिन्तयामास मुनिः किं कृतं सुकृतं भवेत्॥ १-६४अ-४अ
शिष्टानां तु समाचारः शिष्टाचार इति स्मृतः। १-६४अ-४ब्
श्रुतिस्मृतिविदो विप्रा धर्मज्ञा ज्ञानिनः स्मृताः॥ १-६४अ-५अ
धर्मज्ञैर्विहितो धर्मः श्रौतः स्मार्तो द्विधा द्विजैः। १-६४अ-५ब्
दानाग्निहोत्रमिज्या च श्रौतस्यैतद्धि लक्षणम्॥ १-६४अ-६अ
स्मार्तो वर्णाश्रमाचारो यमैश्च नियमैर्युतः। १-६४अ-६ब्
धर्मे तु धारणे धातुः सहत्वे चापि पठ्यते॥ १-६४अ-७अ
तत्रेष्टफलभाग्धर्म आचार्यैरुपदिश्यते। १-६४अ-७ब्
अनिष्टफलभाक्रेति तैरधर्मोऽपि भाष्यते॥ १-६४अ-८अ
तस्मादिष्टफलार्थाय धर्ममेव समाश्रयेत्। १-६४अ-८ब् ब्राह्मो
दैवस्तथैवार्षः प्राजापत्यश्च धार्मिकः॥ १-६४अ-९अ
विवाहा ब्राह्मणानां तु गान्धर्वो नैव धार्मिकः। १-६४अ-९ब्
त्रिवर्णेतरजातीनां गान्धर्वासुरराक्षसाः॥ १-६४अ-१०अ पैशाचो
नैव कर्तव्यः पैशाचश्चाष्टमोऽधमः। १-६४अ-१०ब्
सामर्षां व्यङ्गिकां कन्यां मातुश्च कुलजां तथा॥ १-६४अ-११अ
वृद्धां प्रव्राजितां वन्ध्यां पतितां च रजस्वलाम्। १-६४अ-११ब्
अपस्मारकुले जातां पिङ्गलांकुष्ठिनीं व्रणीम्॥ १-६४अ-१२अ न
चास्नातां स्त्रियं गच्छेदिति धर्मानुशासनम्। १-६४अ-१२ब्
पिता पितामहो भ्राता माता मातुल एव च॥ १-६४अ-१३अ
उपाध्यायर्त्विजश्चैव कन्यादाने प्रभूत्तमाः। १-६४अ-१३ब्
एतैर्दत्तां निषेवेत नादत्तामाददीत च॥ १-६४अ-१४अ इत्येव
ऋषयः प्राहुर्विवाहे धर्मवित्तमाः। १-६४अ-१४ब् अस्या नास्ति
पिता भ्राता माता मातुल एव च॥ १-६४अ-१५अ गान्धर्वेण
विवाहेन न स्पृशामि यदृच्छया। १-६४अ-१५ब् क्रियाहीनं
तु गान्धर्वं न कर्तव्यमनापदि॥ १-६४अ-१६अ यदस्यां जायते
पुत्रो वेदव्यासो भवेदृषिः। १-६४अ-१६ब् क्रियाहीनः कथं विप्रो
भवेदृषिरुदारधीः॥ १-६४अ-१७क्ष् वैशंपायन उवाच। १-६४अ-१७अ
एवं चिन्तयतो भावं महर्षेर्भावितात्मनः। १-६४अ-१७ब् ज्ञात्वा
चैवाभ्यवर्तन्त पितरो बर्हिषस्तदा॥ १-६४अ-१८अ तस्मिन्क्षणे
ब्रह्मपुत्रो वसिष्ठोऽपि समेयिवान्। १-६४अ-१८ब् पूर्वं स्वागतमित्युक्त्वा

वसिष्ठः प्रत्यभाषत॥ १-६४अ-१९क्ष् पितृगणा ऊचुः। १-६४अ-१९अ
अस्माकं मानसीं कन्यामस्मच्छापेन वासवीम्। १-६४अ-१९ब्
यदिचच्छशि पुत्रार्थं कन्यां गृह्णीष्वमा चिरम्॥ १-६४अ-२०अ
पितॄणां वचनं श्रुत्वा वसिष्ठः प्रत्यभाषत। १-६४अ-२०ब्
महर्षीणां वचः सत्यं पुराणेपि मया श्रुतम्॥ १-६४अ-२१अ
पराशरो ब्रह्मचारी प्रजार्थी मम वंशधृत्। १-६४अ-२१ब्
एवं संभाषमाणे तु वसिष्ठे पितृभिः सह॥ १-६४अ-२२अ
ऋषयोऽभ्यागमंस्तत्र नैमिशारण्यवासिनः। १-६४अ-२२ब्
विवाहं द्रष्टुमिच्छन्तः शक्तिपुत्रस्य धीमतः॥ १-६४अ-२३अ
अरुन्धती महाभागा अदृश्यन्त्या सहैव सा। १-६४अ-२३ब्
विश्वकर्मकृतां दिव्यां पर्णशालां प्रविश्य सा॥ १-६४अ-२४अ
वैवाहिकांस्तु संभारान्संकल्प्य च यथाक्रमम्। १-६४अ-२४ब्
अरुन्धती सत्यवतीं वधूं संगृह्य पाणिना॥ १-६४अ-२५अ
भद्रासने प्रतिष्ठाप्य इन्द्राणीं समकल्पयत्। १-६४अ-२५ब्
आपूर्यमाणपक्षे तु वैशाखे सोमदैवते॥ १-६४अ-२६अ
शुभग्रहे त्रयोदश्यां मुहूर्ते मैत्र आगते। १-६४अ-२६ब्
विवाहकाल इत्युक्त्वा वसिष्ठो मुनिभिः सह॥ १-६४अ-२७अ
यमुनाद्वीपमासाद्य शिष्यैश्च मुनिपङ्क्तिभिः। १-६४अ-२७ब्
स्थण्डिलं चतुरश्रं च गोमयेनोपलिप्य च॥ १-६४अ-२८अ
अक्षतैः फलपुष्पैश्च स्वस्तिकैराम्रपल्लवैः। १-६४अ-२८ब्
जलपूर्णघटैश्चैव सर्वतः परिशोभितम्॥ १-६४अ-२९अ
तस्य मध्ये प्रतिष्ठाप्य बृस्यां मुनिवरं तदा। १-६४अ-२९ब्
सिद्धार्थयवकल्कैश्च स्नातं सर्वौषधैरपि॥ १-६४अ-३०अ
कृत्वार्जुनानि वस्त्राणि परिधाप्य महामुनिम्। १-६४अ-३०ब् वाचयित्वा तु पुण्याहमक्षतैस्तु समर्चितः॥ १-६४अ-३१अ गन्धानुलिप्तः स्रग्वी च सप्रतोदो वधूगृहे। १-६४अ-३१ब् अपदातिस्ततो गत्वा वधूज्ञातिभिरर्चितः॥ १-६४अ-३२अ स्नातामहतसंवीतां गन्धलिप्तां स्रगुज्ज्वलाम्। १-६४अ-३२ब् वधूं मङ्गलसंयुक्तामिषुहस्तां समीक्ष्य च॥ १-६४अ-३३अ उवाच वचनं काले कालज्ञः सर्वधर्मवित्। १-६४अ-३३ब् प्रतिग्रहो दातृवशः श्रुतमेवं मया पुरा॥ १-६४अ-३४अ यथा वक्ष्यन्ति पितरस्तत्करिष्यामहे वयम्। १-६४अ-३४क्ष् वैशंपायन उवाच। १-६४अ-३४ब् तद्धर्मिष्ठं यशस्यं च वचनं सत्यवादिनः॥ १-६४अ-३५अ श्रुत्वा तु पितरः सर्वे निःसङ्गा निष्परिग्रहाः। १-६४अ-३५ब् वसुं परमधर्मिष्ठमानीयेदं वचोऽब्रुवन्॥ १-६४अ-३६अ मत्स्ययोनौ समुत्पन्ना तव पुत्री विशेषतः। १-६४अ-३६ब् पराशराय मुनये

दातुमर्हसि धर्मतः॥ १-६४अ-३७क्ष् वसुरुवाच। १-६४अ-३७अ सत्यं मम सुता सा हि दाशराजेन वर्धिता। १-६४अ-३७ब् अहं प्रभुः प्रदाने तु प्रजापालः प्रजार्थिनाम्॥ १-६४अ-३८क्ष् पितर ऊचुः। १-६४अ-३८अ निराशिषो वयं सर्वे निःसङ्गा निष्परिग्रहाः। १-६४अ-३८ब् कन्यादानेन संबन्धो दक्षिणाबन्ध उच्यते॥ १-६४अ-३९अ कर्मभूमिस्तु मानुष्यं भोगभूमिस्त्रिविष्टपम्। १-६४अ-३९ब् इह पुण्यकृतो यान्ति स्वर्गलोकं न संशयः॥ १-६४अ-४०अ इह लोके दुष्कृतिनो नरकं यान्ति निर्घृणाः। १-६४अ-४०ब् दक्षिणाबन्ध इत्युक्ते उभे सुकृतदुष्कृते॥ १-६४अ-४१अ दक्षिणाबन्धसंयुक्ता योगिनः प्रपतन्ति ते। १-६४अ-४१ब् तस्मान्नो मानसीं कन्यां योगाद्भ्रष्टां विशापते॥ १-६४अ-४२अ सुतात्वं तव संप्राप्तां सतीं भिक्षां ददस्व वै। १-६४अ-४२ब् इत्युक्त्वा पितरः सर्वे क्षणादन्तर्हितास्तदा॥ १-६४अ-४३क्ष् वैशंपायन उवाच। १-६४अ-४३अ याज्ञवल्क्यं समाहूय विवाहाचार्यमित्युत। १-६४अ-४३ब् वसुं चापि समाहूय वसिष्ठो मुनिभिः सह॥ १-६४अ-४४अ विवाहं कारयामास विधिदृष्टेन कर्मणा। १-६४अ-४४क्ष् वसुरुवाच। १-६४अ-४४ब् पराशर महाप्राज्ञ तव दास्याम्यहं सुताम्॥ १-६४अ-४५अ प्रतीच्छ चैनां भद्रं ते पाणिं गृह्णीष्व पाणिना। १-६४अ-४५क्ष् वैशंपायन उवाच। १-६४अ-४५ब् वसोस्तु वचनं श्रुत्वा याज्ञवल्क्यमते स्थितः॥ १-६४अ-४६अ कृतकौतुकमङ्गल्यः पाणिना पाणिमस्पृशत्। १-६४अ-४६ब् प्रभूताज्येन हविषा हुत्वा मन्त्रैर्हुताशनम्॥ १-६४अ-४७अ त्रिरग्निं तु परिक्रम्य समभ्यर्च्य हुताशनम्। १-६४अ-४७ब् महर्षीन्याज्ञवल्क्यादीन्दक्षिणाभिः प्रतर्प्यच॥ १-६४अ-४८अ लब्धानुज्ञोऽभिवाद्याशु प्रदक्षिणमथाकरोत्। १-६४अ-४८ब् पराशरे कृतोद्वाहे देवाः सर्षिगणास्तदा॥ १-६४अ-४९अ हृष्टा जग्मुः क्षणादेव वेदव्यासो भवत्विति। १-६४अ-४९ब् एवं सत्यवती हृष्टा पूजां लब्ध्वा यथेष्टतः॥ १-६४अ-५०अ पराशरेण संयुक्ता सद्यो गर्भं सुषाव सा। १-६४अ-५०ब् जज्ञे च यमुनाद्वीपे पाराशर्यः स वीर्यवान्॥ १-६४अ-५१अ जातमात्रः स ववृधे सप्तवर्षोऽभवत्तदा। १-६४अ-५१ब् स्नात्वाभिवाद्य पितरं तस्थौ व्यासः समाहितः॥ १-६४अ-५२अ स्वस्तीति वचनं चोक्त्वा ददौ कलशमुत्तमम्। १-६४अ-५२ब् गृहीत्वा कलशं प्राप्ते तस्थौ व्यासः समाहितः॥ १-६४अ-५३अ ततो दाशभयात्पत्नी स्नात्वा कन्या बभूव सा। १-६४अ-५३ब् अभिवाद्य मुनेः पादौ पुत्रं जग्राह पाणिना॥ १-६४अ-५४अ स्पृष्टमात्रे तु निर्भर्त्स्य मातरं वाक्यमब्रवीत्। १-६४अ-५४ब्

मम पित्रा तु संस्पर्शान्मातस्त्वमभवः शुचिः॥ १-६४अ-५५अ अद्य दाशसुता कन्या न स्पृशेर्मामनिन्दिते। १-६४अ-५५क्ष् वैशंपायन उवाच। १-६४अ-५५ब् व्यासस्य वचनं श्रुत्वा बाष्पपूर्णमुखी तदा॥ १-६४अ-५६अ मनुष्यभावात्सा योषित्पपात मुनिपादयोः। १-६४अ-५६ब् महाप्रसादो भगवान्पुत्रं प्रोवाच धर्मवित्॥ १-६४अ-५७अ मा त्वमेवंविधं कार्षीर्नैतद्धर्म्यं मतं हि नः। १-६४अ-५७ब् दूष्यौ न मातापितरौ तथा पूर्वोपकारिणौ॥ १-६४अ-५८अ धारणाद्दुःखसहनात्तयोर्माता गरीयसी। १-६४अ-५८ब् बीजक्षेत्रसमायोगे सस्यं जायेत लौकिकम्॥ १-६४अ-५९अ जायते च सुतस्तद्वत्पुरुषस्त्रीसमागमे। १-६४अ-५९ब् मृगीणां पक्षिणां चैव अप्सराणां तथैव च॥ १-६४अ-६०अ शूद्रयोन्यां च जायन्ते मुनयो वेदपारगाः। १-६४अ-६०ब् ऋष्यशृङ्गो मृगीपुत्रः कण्वो बर्हिसुतस्तथा॥ १-६४अ-६१अ अगस्त्यश्च वसिष्ठश्च उर्वश्यां जनितावुभौ। १-६४अ-६१ब् सोमश्रवास्तु सर्प्यां तु अश्विनावश्विसंभवौ॥ १-६४अ-६२अ स्कन्दः स्कन्नेन शुक्लेन जातः शरवणे पुरा। १-६४अ-६२ब् एवमेव च देवानामृषीमां चैव संभवः॥ १-६४अ-६३अ लोकवेदप्रवृत्तिर्हि न मीमांस्या बुधैः सदा। १-६४अ-६३ब् वेदव्यास इति प्रोक्तः पुराणे च स्वयंभुवा॥ १-६४अ-६४अ धर्मनेता महर्षीणां मनुष्याणां त्वमेव च। १-६४अ-६४ब् तस्मात्पुत्र न दूष्येत वासवी योगचारिणी॥ १-६४अ-६५अ मत्प्रीत्यर्थं महाप्राज्ञ सस्नेहं वक्तुमर्हसि। १-६४अ-६५ब् प्रजाहितार्थं संभूतो विष्णोर्भागो महानृषिः॥ १-६४अ-६६अ तस्मात्स्वमातरं स्नेहात्प्रबवीहि तपोधन। १-६४अ-६६क्ष् वैशंपायन उवाच। १-६४अ-६६ब् गुरोर्वचनमाज्ञाय व्यासः प्रीतोऽभवत्तदा॥ १-६४अ-६७अ चिन्तयित्वा लोकवृत्तं मातुरङ्कमथाविशत्। १-६४अ-६७ब् पुत्रस्पर्शात्तु लोकेषु नान्यत्सुखमतीव हि॥ १-६४अ-६८अ व्यासं कमलपत्राक्षं परिष्वज्याश्ववर्तयत्। १-६४अ-६८ब् स्तन्यासारैः क्लिद्यमाना पुत्रमाघ्राय मूर्धनि॥ १-६४अ-६९क्ष् वासव्युवाच। १-६४अ-६९अ पुत्रलाभात्परं लोके नास्तीह प्रसवार्थिनाम्। १-६४अ-६९ब् दुर्लभं चेति मन्येऽहं मया प्राप्तं महत्तपः॥ १-६४अ-७०अ महता तपसा तात महायोगबलेन च। १-६४अ-७०ब् मया त्वं हि महाप्राज्ञ लब्धोऽमृतमिवामरैः॥ १-६४अ-७१अ तस्मात्त्वं मामृषेः पुत्र त्यक्तुं नार्हसि सांप्रतम्। १-६४अ-७१क्ष् वैशंपायन उवाच। १-६४अ-७१ब् एवमुक्तस्ततः स्नेहाद्व्यासो मातरमब्रवीत्॥ १-६४अ-७२अ त्वया स्पृष्टः परिष्वक्तो मूर्ध्नि चाघ्रायितो मुहुः। १-६४अ-७२ब् एतावन्मात्रया

प्रीतो भविष्येषु नृपात्मजे॥ १-६४अ-७३अ स्मृतोऽहं
दर्शयिष्यामि कृत्येष्विति च सोऽब्रवीत्। १-६४अ-७३ब्
स मातरमनुज्ञाप्य तपस्येव मनो दधे॥ १-६४अ-७४अ
ततः कन्यामनुज्ञाय पुनः कन्या भवत्विति। १-६४अ-७४ब्
पराशरोऽपि भगवान्पुत्रेण सहितो ययौ॥ १-६४अ-७५अ
गत्वाश्रमपदं पुम्यमदृश्यन्त्या पराशरः। १-६४अ-७५ब्
जातकर्मादिसंस्कारं कारयामास धर्मतः॥ १-६४अ-७६अ कृतोपनयनो
व्यासो याज्ञवल्क्येन भारत। १-६४अ-७६ब् वेदानधिजगौ
साङ्गानोङ्कारेण त्रिमात्रया॥ १-६४अ-७७अ गुरवे दक्षिणां
दत्त्वा तपः कर्तुं प्रचक्रमे। १-६४अ-७७ब् एवं द्वैपायनो
जज्ञे सत्यवत्यां पराशरात्॥ १-६४अ-७८अ द्वीप न्यस्तः स
यद्बालस्तस्माद्द्वैपायनोऽभवत्। १-६४अ-७८ब् पादापसारिणं धर्मं
विद्वान्स तु युगे युगे॥ १-६४अ-७९अ आयुः शक्तिं च मर्त्यानां
युगाद्युगमवेक्ष्य च। १-६४अ-७९ब् ब्रह्मर्षिर्ब्राह्मणानां च
तथाऽनुग्रहकाङ्क्षया॥ १-६४अ-८०अ विव्यास वेदान्यस्माच्च वेदव्यास
इति स्मृतः। १-६४अ-८०ब् ततः स महर्षिर्विद्वाञ्शिष्यानाहूय
धर्मतः॥ १-६४अ-८१अ सुमन्तुं जैमिनिं पैलं शुकं चैव
स्वमात्मजम्। १-६४अ-८१ब् प्रभुर्वरिष्ठो वरदो वैशंपायनमेव
च॥ १-६४अ-८२अ वेदानध्यापयामास महाभारतपञ्चमान्। १-६४अ-८२ब्
संहितास्तैः पृथक्त्वेन भारतस्य प्रकीर्तिता॥ १-६४अ-८३अ
ततः सत्यवती हृष्टा जगाम स्वं निवेशनम्। १-६४अ-८३ब्
तस्यास्तु योजनाद्गन्धमाजिघ्रन्ति नरा भुवि॥ १-६४अ-८४अ
दाशराजस्तु तद्गन्धमाजिघ्रन्प्रीतिमावहत्। १-६४अ-८४क्ष्
दाशराज उवाच। १-६४अ-८४ब् त्वामाहुर्मत्स्यगन्धेति कथं बाले
सुगन्धता॥ १-६४अ-८५अ अपास्य मत्स्यगन्धत्वं केन दत्ता सुगन्धता
१-६४अ-८५क्ष् सत्यवत्युवाच। १-६४अ-८५ब् शक्ते- पुत्रो महाप्राज्ञः
पराशर इति श्रुतः॥ १-६४अ-८६अ नावं वाहयमानाया मम दृष्ट्वां
सुशिक्षितम्। १-६४अ-८६ब् उपास्य मत्स्यगन्धत्वं योजनाद्गन्धतां
ददौ॥ १-६४अ-८७अ ऋषेः प्रसादं दृष्ट्वा तु जनाः
प्रीतिमुपागमन्। १-६४अ-८७ब् एवं लब्धो मया गन्धो न रोषं
कर्तुमर्हसि॥ १-६४अ-८८अ दाशराजस्तु तद्वाक्यं प्रशशंस ननन्द
च। १-६४अ-८८ब् एतत्पवित्रं पुण्यं च व्याससमवमुत्तमम्। १-६४अ-८८च्
इतिहासमिमं श्रुत्वा प्रजावन्तो भवन्ति च॥ १-६४-१३२ (२७२३)
तथा भीष्मः शान्तनवो गङ्गायाममितद्युतिः ।
वसुर्वीर्यात्समभवन्महावीर्यो महायशाः ॥ १-६४-१३३ (२७२४)
वैदार्थविच्च भगवानृषिर्विप्रो महायशाः ।

शूले प्रोतः पुराणर्षिरचोरश्चोरशङ्कया ॥१-६४-१३४ (२७२५)
अणीमाण्डव्य इत्येवं विख्यातः स महायशाः ।
स धर्ममाहूय पुरा महर्षिरिदमुक्तवान् ॥१-६४-१३५ (२७२६)
इषीकया मया बाल्याद्विद्धा ह्येका शकुन्तिका ।
तत्किल्बिषं स्मरे धर्म नान्यत्पापमहं स्मरे ॥१-६४-१३६ (२७२७)
तन्मे सहस्रममितं कस्मान्नेहाजयत्तपः ।
गरीयान्ब्राह्मणवधः सर्वभूतवधाद्यतः ॥१-६४-१३७ (२७२८)
तस्मात्त्वं किल्बिषादस्माच्छूद्रयोनौ जनिष्यसि। १-६४-१३८ (२७२९)
वैशंपायन उवाच ।
तेन शापेन धर्मोऽपि शूद्रयोनावजायत ॥ १-६४-१३८क्ष् (३१३)
विद्वान्विदुररूपेण धार्मिकः किल्बिषात्ततः ।
संजयो मुनिकल्पस्तु जज्ञे सूतो गवल्गणात् ॥१-६४-१३९ (२७३०)
सूर्याच्च कुन्तिकन्यायां जज्ञे कर्णो महाबलः ।
सहजं कवचं बिभ्रत्कुण्डलोद्योतिताननः ॥१-६४-१४० (२७३१)
अनुग्रहार्थं लोकानां विष्णुर्लोकनमस्कृतः ।
वसुदेवात्तु देवक्यां प्रादुर्भूतो महायशाः ॥१-६४-१४१ (२७३२)
अनादिनिधनो देवः स कर्ता जगतः प्रभुः ।
अव्यक्तमक्षरं ब्रह्म प्रधानं त्रिगुणात्मकम् ॥१-६४-१४२ (२७३३)
आत्मानमव्ययं चैव प्रकृतिं प्रभवं प्रभुम् ।
पुरुषं विश्वकर्माणं सत्वयोगं ध्रुवाक्षरम् ॥१-६४-१४३ (२७३४)
अनन्तमचलं देवं हंसं नारायणं प्रभुम् ।
धातारमजमव्यक्तं यमाहुः परमव्ययम् ॥१-६४-१४४ (२७३५)
कैवल्यं निर्गुणं विश्वमनादिमजमव्ययम् ।
पुरुषः स विभुः कर्ता सर्वभूतपितामहः ॥१-६४-१४५ (२७३६)
धर्मसंस्थापनार्थाय प्रजज्ञेऽन्धकवृष्णिषु ।
अस्त्रज्ञौ तु महावीर्यौ सर्वशास्त्रविशारदौ ॥१-६४-१४६ (२७३७)
सात्यकिः कृतवर्मा च नारायणमनुव्रतौ ।
सत्यकाद्धृदिकाच्चैव जज्ञातेऽस्त्रविशारदौ ॥१-६४-१४७ (२७३८)
भरद्वाजस्य च स्कन्नं द्रोण्यां शुक्रमवर्धत ।
सहर्षेरुग्रतपसस्तस्माद्द्रोणो व्यजायत ॥१-६४-१४८ (२७३९)
गौतमान्मिथुनं जज्ञे शरस्तम्बाच्छरद्वतः ।
अश्वत्थाम्नश्च जननी कृपश्चैव महाबलः ॥१-६४-१४९ (२७४०)
अश्वत्थामा ततो जज्ञे द्रोणादेव महाबलः ।
तथैव धृष्टद्युम्नोऽपि साक्षादग्निसमद्युतिः ॥१-६४-१५० (२७४१)
वैताने कर्मणि तते पावकात्समजायत ।
वीरो द्रोणविनाशाय धनुरादाय वीर्यवान् ॥१-६४-१५१ (२७४२)

तथैव वेद्यां कृष्णापि जज्ञे तेजस्विनी शुभा ।
विभ्राजमाना वपुषा बिभ्रती रूपमुत्तमम् ॥१-६४-१५२ (२७४३)
प्रह्लादशिष्यो नग्नजित्सुबलश्चाभवत्ततः ।
तस्य प्रजा धर्महन्त्री जज्ञे देवप्रकोपनात् ॥१-६४-१५३ (२७४४)
गान्धारराजपुत्रोऽभूच्छकुनिः सौबलस्तथा ।
दुर्योधनस्य जननी जज्ञातेऽर्थविशारदौ ॥१-६४-१५४ (२७४५)
कृष्णद्वैपायनाज्जज्ञे धृतराष्ट्रो जनेश्वरः ।
क्षेत्रे विचित्रवीर्यस्य पाण्डुश्चैव महाबलः ॥१-६४-१५५ (२७४६)
धर्मार्थकुशलो धीमान्मेधावी धूतकल्मषः ।
विदुरः शूद्रयोनौ तु जज्ञे द्वैपायनादपि ॥१-६४-१५६ (२७४७)
पाण्डोस्तु जज्ञिरे पञ्च पुत्रा देवसमाः पृथक् ।
द्वयोः स्त्रियोर्गुणज्येष्ठस्तेषामासीद्युधिष्ठिरः ॥१-६४-१५७ (२७४८)
धर्माद्युधिष्ठिरो जज्ञे मारुताच्च वृकोदरः ।
इन्द्राद्धनंजयः श्रीमान्सर्वशस्त्रभृतां वरः ॥१-६४-१५८ (२७४९)
जज्ञाते रूपसंपन्नावश्विभ्यां च यमावपि ।
नकुलः सहदेवश्च गुरुशुश्रूषणे रतौ ॥१-६४-१५९ (२७५०)
तथा पुत्रशतं जज्ञे धृतराष्ट्रस्य धीमतः ।
दुर्योधनप्रभृतयो युयुत्सुः करणस्तथा ॥१-६४-१६० (२७५१)
ततो दुःशासनश्चैव दुःसहश्चापि भारत ।
दुर्मर्षणो विकर्णश्च चित्रसेनो विविंशतिः ॥१-६४-१६१ (२७५२)
जयः सत्यव्रतश्चैव पुरुमित्रश्च भारत ।
वैश्यापुत्रो युयुत्सुश्च एकादश महारथाः ॥१-६४-१६२ (२७५३)
अभिमन्युः सुभद्रायामर्जुनादभ्यजायत ।
स्वस्रीयो वासुदेवस्य पौत्रः पाण्डोर्महात्मनः ॥१-६४-१६३ (२७५४)
पाण्डवेभ्यो हि पाञ्चाल्यां द्रौपद्यां पञ्च जज्ञिरे ।
कुमारा रूपसंपन्नाः सर्वशास्त्रविशारदाः ॥१-६४-१६४ (२७५५)
प्रतिविन्ध्यो युधिष्ठिरात्सुतसोमो वृकोदरात् ।
अर्जुनाच्छ्रुतकीर्तिस्तु शतानीकस्तु नाकुलिः ॥१-६४-१६५ (२७५६)
तथैव सहदेवाच्च श्रुतसेनः प्रतापवान् ।
हिडिम्बायां च भीमेन वने जज्ञे घटोत्कचः ॥१-६४-१६६ (२७५७)
शिखण्डी द्रुपदाज्जज्ञे कन्या पुत्रत्वभागता ।
यां यक्षः पुरुषं चक्रे स्थूमः प्रियचिकीर्षया ॥१-६४-१६७ (२७५८)
कुरूणां विग्रहे तस्मिन्समागच्छन्बहून्यथ ।
राज्ञां शतसहस्राणि योत्स्यमानानि संयुगे ॥१-६४-१६८ (२७५९)
तेषामपरिमेयानां नामधेयानि सर्वशः ।
न शक्यानि समाख्यातुं वर्षाणामयुतैरपि ।

एते तु कीर्तिता मुख्या यैराख्यानमिदं ततम् ॥ ॥ १-६४-१६९ (२७६०)

इति श्रीमन्महाभारते आदिपर्वणि अंशावतरणपर्वणि
चतुःषष्टितमोऽध्यायः ॥ ६४ ॥



१-६४-१ रञ्जकत्वाद्राजा ।महीपतिः पृथ्वीपालकः ॥
१-६४-२ वसुः उपरिचरः ॥
१-६४-४ साक्षात्प्रत्यक्षभूय ॥
१-६४-५ न संकीर्येत निर्नायकत्वात् ॥
१-६४-८ पशव्यः पशुभ्यो हितः ॥
१-६४-११ गाः बलीवर्दान् ।वृषभान्कृशान्न धुरि युञ्जते
प्रत्युत संधुक्षयन्ति पुष्टान्कुर्वन्ति। अन्ये तु गाः स्त्रीगवीः
तासामप्यान्ध्रादिदुर्देशेषु धुरि योजनं दृष्टं तदिह नास्तीत्याहुः ॥
१-६४-१२ न त इति ।आत्मज्ञानात्सर्वज्ञो भविष्यसीत्यर्थः ॥
१-६४-१३ उपपत्स्यते उपस्थास्यते ॥
१-६४-१५ वैजयन्तीं विजयहेतुं ।अविक्षतमेव धारयिष्यति
पालयिष्यति नतु विक्षतम् ॥
१-६४-१६ लक्षणं चिह्नम् ॥
१-६४-१७ इष्टप्रदानं प्रीतिदायमुद्दिश्य यष्टिं ददौ ॥
१-६४-२० शक्रस्य पूजार्थं तस्या यष्टेः प्रवेशं स्थापनम् ॥
१-६४-२३ पिटकैः मञ्जूषारूपैर्वस्त्रमयैः कोशैः ॥
१-६४-४६ वासवाः वसुपुत्राः ॥
१-६४-४८ पुरोपवाहिनीं पुरसमीपे वहन्तीं ॥
१-६४-५० नदी राज्ञे न्यवेदयन्मिथुनमित्यनुषज्यते ॥
१-६४-५४ तदहस्तस्मिन् दिने ॥
१-६४-६३ वायुना कामोद्दीपकेन ।धूम्रं मलिनं रतिकर्म
तदर्थं। मुदं स्त्रीविषयां प्रीतिमनुसृत्य तामेन मनसाऽगात्। तया
सह मानसं सुरतमकरोदित्यर्थः। प्रचस्कन्द पपात ॥
१-६४-६४ मिथ्या प्रसवशून्यत्वेनालीकप्रायम् ॥
१-६४-६८ अभिमन्त्र्य पुत्रोत्पत्तिलिङ्गैर्मन्त्रैः स्पृष्ट्वा ॥
१-६४-७० आर्तवमृतुकालीनं स्नानम् ॥
१-६४-७३ युध्यतोः सतोः ॥
१-६४-७६ मासे दशमे प्राप्ते बबन्धुरिति संबन्धः ।उज्जह्नुः
उद्धृतवन्तः ॥
१-६४-७७ काये देहे ।मत्स्याः मत्स्ययोषायाः ॥

१-६४-११५ नीहारं धूमिकाम् ॥
१-६४-११९ स्थातुं जीवितुं नोत्सहे कन्यात्वदूषणादित्यर्थः ॥
१-६४-१२८ द्वीपमेवाऽयनं न्यासस्थानं यस्य द्वीपायनः स्वार्थे
तद्धितः द्वीपायन एव द्वैपायन इति नाम निर्वक्ति न्यस्त इति ॥
१-६४-१२५ पादापसारिणं युगेयुगे पादशः १-६४-८८
तमश्लोकपूर्वार्धात्परं ‘इति सत्यवती हृष्टा’ इत्यादि ‘भारतस्य
प्रकाशिताः’ इत्यन्तसार्धश्लोकसप्तकस्थाने इमे कुण्डलिताः श्लोकाः
केषुचित्कोशेषूपलभ्यन्ते। १-६४-१३३ वसुवीर्यात् वस्वंशात्। ।
१-६४-१३६ शकुन्तिका मक्षिका ॥
१-६४-१४० कुन्तिभोजस्य कन्यायां कुन्त्याम् ॥
१-६४-१६७ स्थूणो नाम्ना ॥
चतुःषष्ठितमोऽध्यायः ॥
६४ ॥

---

अध्यय०६५
॥ श्रीः ॥
१.६५. अध्यायः ६५

Mahabharata - Adi Parva - Chapter Topics
विस्तरश्रवणेच्छया जनमेजयस्य प्रश्नः ॥ १ ॥
परशुरामेण लोके निःक्षत्रिये कृते ब्राह्मणेभ्यः क्षत्रस्य
पुनरुत्पत्तिः ॥ २ ॥
तत्कालस्य धर्मभूयिष्ठत्वम् ॥ ३ ॥
देवैर्निर्जितानां दानवानां भूमावुत्पत्तिः ॥ ४ ॥
तद्भूरिभारार्तया पृथ्व्या प्रार्थितस्य ब्रह्मणो
देवान्प्रत्यंशावतरणाज्ञापनम् ॥ ५ ॥
अवतारार्थं इन्द्रेण नारायणप्रार्थना ॥ ६ ॥

Mahabharata - Adi Parva - Chapter Text

१-६५-० (२७६१)
जनमेजय उवाच। १-६५-०क्ष् (३१४)
य एते कीर्तिता ब्रह्मन्ये चान्ये नानुकीर्तिताः ।
सम्यक्ताञ्श्रोतुमिच्छामि राज्ञश्चान्यान्सहस्रशः ॥ १ ॥ १-६५-१ (२७६२)
यदर्थमिह संभूता देवकल्पा महारथाः ।
भुवि तन्मे महाभाग सम्यगाख्यातुमर्हसि ॥ १-६५-२ (२७६३)
वैशम्पायन उवाच। १-६५-३क्ष् (३१५)

रहस्यं खल्विदं राजन्देवानामिति नः श्रुतम् ।
तत्तु ते कथयिष्यामि नमस्कृत्वा स्वयंभुवे ॥ १-६५-३ (२७६४)
त्रिःसप्तकृत्वः पृथिवीं कृत्वा निःक्षित्रयां पुरा ।
जामदग्न्यस्तपस्तेपे महेन्द्रे पर्वतोत्तमे ॥ १-६५-४ (२७६५)
तदा निःक्षत्रिये लोके भार्गवेण कृते सति ।
ब्राह्मणान्क्षत्रिया राजन्सुतार्थिन्योऽभिचक्रमुः ॥ १-६५-५ (२७६६)
ताभिः सह समापेतुर्ब्राह्मणाः संशितव्रताः ।
ऋतावृतौ नरव्याघ्र न कामान्नानृतौ तथा ॥ १-६५-६ (२७६७)
तेभ्यश्च तेभिरे गर्भं क्षत्रियास्ताः सहस्रशः ।
ततः सुषुविरे राजन्क्षत्रियान्वीर्यवत्तरान् ॥ १-६५-७ (२७६८)
कुमारांश्च कुमारीश्च पुनः क्षत्राभिवृद्धये ।
एवं तद्ब्राह्मणैः क्षत्रं क्षत्रियासु तपस्विभिः ॥ १-६५-८ (२७६९)
जातं वृद्धं च धर्मेण सुदीर्गेणायुषान्वितम् ।
चत्वारोऽपि ततो वर्णा बभूवुर्ब्राह्मणोत्तराः ॥ १-६५-९ (२७७०)
अभ्यगच्छन्नृतौ नारीं न कामान्नानृतौ तथा ।
तथैवान्यानि भूतानि तिर्यग्योनिगतान्यपि ॥ १-६५-१० (२७७१)
ऋतौ दारांश्च गच्छन्ति तत्तथा भरतर्षभ ।
ततोऽवर्धन्त धर्मेण सहस्रशतजीविनः ॥ १-६५-११ (२७७२)
ताः प्रजाः पृथिवीपाल धर्मव्रतपरायणाः ।
आधिभिर्व्याधिभिश्चैव विमुक्ताः सर्वशो नराः ॥ १-६५-१२ (२७७३)
अथेमां सागरोपान्तां गां गजेन्द्रगताखिलाम् ।
अध्यतिष्ठत्पुनः क्षत्रं सशैलवनपत्तनाम् ॥ १-६५-१३ (२७७४)
प्रशासति पुनः क्षत्रे धर्मेणेमां वसुन्धराम् ।
ब्राह्मणाद्यास्ततो वर्णा लेभिरे मुदमुत्तमाम् ॥ १-६५-१४ (२७७५)
कामक्रोधोद्भवान्दोषान्निरस्य च नराधिपाः ।
धर्मेण दण्डं दण्डेषु प्रणयन्तोऽन्वपालयन् ॥ १-६५-१५ (२७७६)
तथा धर्मपरे क्षत्रे सहस्राक्षः शतक्रतुः ।
स्वादु देशे च काले च ववर्षाप्याययन्प्रजाः ॥ १-६५-१६ (२७७७)
न बाल एव म्रियते तदा कश्चिज्जनाधिप ।
न च स्त्रियं प्रजानाति कश्चिदप्राप्तयौवनाम् ॥ १-६५-१७ (२७७८)
एवमायुष्मतीभिस्तु प्रजाभिर्भरतर्षभ ।
इयं सागरपर्यन्ता ससापूर्यत मेदिनी ॥ १-६५-१८ (२७७९)
ईजिरे च महायज्ञैः क्षत्रिया बहुदक्षिणैः ।
साङ्गोपनिषदान्वेदान्विप्राश्चाधीयते तदा ॥ १-६५-१९ (२७८०)
न च विक्रीणते ब्रहम ब्राह्मणाश्च तदा नृप ।
न च शूद्रसमभ्याशे वेदानुच्चारयन्त्युत ॥ १-६५-२० (२७८१)

कारयन्तः कृषिं गोभिस्तथा वैश्याः क्षिताविह ।
युञ्जते धुरि नो गाश्च कृशाङ्गांश्चाप्यजीवयन् ॥१-६५-२१ (२७८२)
फेनपांश्च तथा वत्सान्न दुहन्ति स्म मानवाः ।
न कूटमानैर्वणिजः पण्यं विक्रीणते तदा ॥१-६५-२२ (२७८३)
कर्माणि च नरव्याघ्र धर्मोपेतानि मानवाः ।
धर्ममेवानुपश्यन्तश्चक्रुर्धर्मपरायणाः ॥१-६५-२३ (२७८४)
स्वकर्मनिरताश्चासन्सर्वे वर्णा नराधिप ।
एवं तदा नरव्याघ्र धर्मो न ह्रसते क्वचित् ॥१-६५-२४ (२७८५)
काले गावः प्रसूयन्ते नार्यश्च भरतर्षभ ।
भवन्त्यृतुषु वृक्षाणां पुष्पाणि च फलानि च ॥१-६५-२५ (२७८६)
एवं कृतयुगे सम्यग्वर्तमाने तदा नृप ।
आपूर्यत मही कृत्स्ना प्राणिभिर्बहुभिर्भृशम् ॥१-६५-२६ (२७८७)
एवं समुदिते लोके मानुषे भरतर्षभ ।
असुरा जज्ञिरे क्षेत्रे राज्ञां तु मनुजेश्वर ॥१-६५-२७ (२७८८)
आदित्यैर्हि तदा दैत्या बहुशो निर्जिता युधि ।
ऐश्वर्याद्भ्रंशिताः स्वर्गात्संबभूवुः क्षिताविह ॥१-६५-२८ (२७८९)
इह देवत्वमिच्छन्तो मानुषेषु तपस्विनः ।
जज्ञिरे भुवि भूतेषु तेषु तेष्वसुरा विभो ॥१-६५-२९ (२७९०)
गोष्वश्वेषु च राजेन्द्र खरोष्ट्रमहिषेषु च ।
क्रव्यात्सु चैव भूतेषु गजेषु च मृगेषु च ॥१-६५-३० (२७९१)
जातैरिह महीपाल जायमानैश्च तैर्मही ।
न शशाकात्मनात्मानमियं धारयितुं धरा ॥१-६५-३१ (२७९२)
अथ जाता महीपालाः केचिद्बहुमदान्विताः ।
दितेः पुत्रा दनोश्चैव तदा लोकादिह च्युताः ॥१-६५-३२ (२७९३)
वीर्यवन्तोऽवलिप्तास्ते नानारूपधरा महीम् ।
इमां सागरपर्यन्तां परीयुररिमर्दनाः ॥१-६५-३३ (२७९४)
ब्राह्मणान्क्षत्रियान्वैश्याञ्शूद्रांश्चैवाप्यपीडयन् ।
अन्यानि चैव सत्वानि पीडयामासुरोजसा ॥१-६५-३४ (२७९५)
त्रासयन्तोऽभिनिघ्नन्तः सर्वभूतगणांश्च ते ।
विचेरुः सर्वशो राजन्महीं शतसहस्रशः ॥१-६५-३५ (२७९६)
आश्रमस्थान्महर्षींश्च धर्षयन्तस्ततस्ततः ।
अब्रह्मण्या वीर्यमदा मत्ता मदबलेन च ॥१-६५-३६ (२७९७)
एवं वीर्यबलोत्सिक्तैर्भूरियं तैर्महासुरैः ।
पीड्यमाना मही राजन्ब्रह्माणमुपचक्रमे ॥१-६५-३७ (२७९८)
न ह्यमी भूतसत्वौघाः पन्नगाः सनगां महीम् ।
तदा धारयितुं शेकुराक्रान्तां दानवैर्बलात् ॥१-६५-३८ (२७९९)

ततो मही महीपाल भारार्ता भयपीडिता ।
जगाम शरणं देवं सर्वभूतपितामहम् ॥ १-६५-३९ (२८००)
सा संवृतं महाभागैर्देवद्विजमहर्षिभिः ।
ददर्श देवं ब्रह्माणं लोककर्तारमव्ययम् ॥ १-६५-४० (२८०१)
गन्धर्वैरप्सरोभिश्च बन्दिकर्मसु निष्ठितैः ।
वन्द्यमानं मुदोपतैर्ववन्दे चैनमेत्य सा ॥ १-६५-४१ (२८०२)
अथ विज्ञापयामास भूमिस्तं शरणार्थिनी ।
सन्निधौ लोकपालानां सर्वेषामेव भारत ॥ १-६५-४२ (२८०३)
तत्प्रधानात्मनस्तस्य भूमेः कृत्यं स्वयंभुवः ।
पूर्वमेवाभवद्राजन्विदितं परमेष्ठिनः ॥ १-६५-४३ (२८०४)
स्रष्टा हि जगतः कस्मान्न संबुध्येत भारत ।
ससुरासुरलोकानामशेषेण मनोगतम् ॥ १-६५-४४ (२८०५)
तामुवाच महाराज भूमिं भूमिपतिः प्रभुः ।
प्रभवः सर्वभूतानामीशः शंभुः प्रजापतिः ॥ १-६५-४५ (२८०६)
ब्रह्मोवाच। १-६५-४६क्ष् (३१६)
यदर्थमभिसंप्राप्ता मत्सकाशं वसुन्धरे ।
तदर्थं सन्नियोक्ष्यामि सर्वानेव दिवौकसः ॥ १-६५-४६ (२८०७)
ग्उत्तिष्ठ गच्छ वसुधे स्वस्थानमिति साऽगमत्।' १-६५-४७ (२८०८)
वैशंपायन उवाच ।
इत्युक्त्वा स महीं देवो ब्रह्मा राजन्विसृज्य च ।
आदिदेश तदा सर्वान्विबुधान्भूतकृत्स्वयम् ॥ १-६५-४७क्ष् (३१७)
अस्या भूमेर्निरसितुं भारं भागैः पृथक्पृथक् ।
अस्यामेव प्रसूयध्वं तिरोधायेति चाब्रवीत् ॥ १-६५-४८ (२८०९)
तथैव च समानीय गन्धर्वाप्सरसां गणान् ।
उवाच भगवान्सर्वानिदं वचनमर्थवत् ॥ १-६५-४९ (२८१०)
ब्रह्मोवाच। १-६५-५०क्ष् (३१८)
स्वैः स्वैरंशैः प्रसूयध्वं यथेष्टं मानेषेषु च। १-६५-५० (२८११)
वैशम्पायन उवाच ।
अथ शक्रादयः सर्वे श्रुत्वा सुरगुरोर्वचः ।
तथ्यमर्थ्यं च पथ्यं च तस्य ते जगृहुस्तदा ॥ १-६५-५०क्ष् (३१९)
अथ ते सर्वशोंशैः स्वैर्गन्तुं भूमिं कृतक्षणाः ।
नारायणममित्रघ्नं वैकुण्ठमुपचक्रमुः ॥ १-६५-५१ (२८१२)
यः स चक्रगदापाणिः पीतवासाः शितिप्रभः ।
पद्मनाभः सुरारिघ्नः पृथुचार्वञ्चितेक्षणः ॥ १-६५-५२ (२८१३)
प्रजापतिपतिर्देवः सुरनाथो महाबलः ।
श्रीवत्साङ्को हृषीकेशः सर्वदैवतपूजितः ॥ १-६५-५३ (२८१४)

तं भुवः शोधनायेन्द्र उवाच पुरुषोत्तमम् ।
अंशेनावतरेत्येवं तथेत्याह च तं हरिः ॥ ॥ १-६५-५४ (२८१५)

इति श्रीमन्महाभारते आदिपर्वणि अंशावतरणपर्वणि
पञ्चषष्टितमोऽध्यायः ॥ ६५ ॥ ॥ समाप्तमंशावतरणपर्व ॥
Mahabharata - Adi Parva - Chapter Footnotes

१-६५-४ त्रिःसप्तकृत्वा एकविंशतिवारान् ॥
१-६५-१३ हे गजेन्द्रगत हे गजेन्द्रगमन ॥
१-६५-२० ब्रह्म वेदं न विक्रीणते भृतकाध्यापनं न कुर्वत इत्यर्थः ॥
१-६५-२१ वैश्याः स्वयं धुरि गा बलीवर्दान् न युञ्जते ॥
१-६५-२२ फेनपान् अतृणादानभिलक्ष्य न दुहन्ति धेनूरिति शेषः
। कूटमानैः कपटतुलाप्रस्थादिभिः ॥
१-६५-२९ देवत्वं राजत्वम् ॥
१-६५-३६ मही उपचक्रमे गन्तुमिति शेषः ॥
१-६५-४८ तिरोधाय स्वंस्वं रूपं प्रच्छाद्य ॥
१-६५-५४ शोधनाय कण्टकभूतखलोन्मूलनाय ॥
पञ्चषष्टितमोऽध्यायः ॥
६५ ॥

---

अध्ययः०६६
॥ श्रीः ॥
१.६६. अध्यायः ६६

(अथ संभवपर्व ॥ ७ ॥)
Mahabharata - Adi Parva - Chapter Topics
अदित्यादिदक्षकन्यावंशकथनम् ॥ १ ॥

Mahabharata - Adi Parva - Chapter Text

१-६६-० (२८१६)
वैशंपायन उवाच। १-६६-०क्ष् (३२०)
अथ नारायणेनेन्द्रश्चकार सह संविदम् ।
अवतर्तुं महीं स्वर्गादंशतः महितः सुरैः ॥ १-६६-१ (२८१७)
आदिश्य च स्वयं शक्रः सर्वानेव दिवौकसः ।
निर्जगाम पुनस्तस्मात्क्षयान्नारायणस्य ह ॥ १-६६-२ (२८१८)
तेऽमरारिविनाशाय सर्वलोकहिताय च ।

अवतेरुः क्रमेणैव महीं स्वर्गाद्दिवौकसः ॥१-६६-३ (२८१९)
ततो ब्रह्मर्षिवंशेषु पार्थिवर्षिकुलेषु च ।
जज्ञिरे राजशार्दूल यथाकामं दिवौकसः ॥१-६६-४ (२८२०)
दानवान्राक्षसांश्चैव गन्धर्वान्पन्नगांस्तथा ।
पुरुषादानि चान्यानि जघ्नुः सत्वान्यनेकशः ॥१-६६-५ (२८२१)
दानवा राक्षसाश्चैव गन्धर्वाः पन्नगास्तथा ।
न तान्बलस्थान्बाल्येऽपि जघ्नुर्भरतसत्तम ॥१-६६-६ (२८२२)
जनमेजय उवाच।१-६६-७क्ष् (३२१)
देवदानवसङ्घानां गन्धर्वाप्सरसां तथा ।
मानवानां च सर्वेषां तथा वै यक्षरक्षसाम् ॥१-६६-७ (२८२३)
श्रोतुमिच्छामि तत्त्वेन संभवं कृत्स्नमादितः ।
प्राणिनां चैव सर्वेषां संभवं वक्तुमर्हसि ॥१-६६-८ (२८२४)
वैशम्पायन उवाच।१-६६-९क्ष् (३२२)
हन्त ते कथयिष्यामि नमस्कृत्य स्वयंभुवे ।
सुरादीनामहं सम्यग्लोकानां प्रभवाप्ययम् ॥१-६६-९ (२८२५)
ब्रह्मणो मानसाः पुत्रा विदिताः षण्महर्षयः ।
मरीचिरत्र्यङ्गिरसौ पुलस्त्यः पुलहः क्रतुः ॥१-६६-१० (२८२६)
मरीचेः कश्यपः पुत्रः कश्यपात्तु इमाः प्रजाः ।
प्रजज्ञिरे महाभागा दक्षकन्यास्त्रयोदश ॥१-६६-११ (२८२७)
अदितिर्दितिर्दनुः काला दनायुः सिंहिका तथा ।
क्रोधा प्राधा च विश्वा च विनता कपिला मुनिः ॥१-६६-१२ (२८२८)
कद्रूश्च मनुजव्याघ्र दक्षकन्यैव भारत ।
एतासां वीर्यसंपन्नं पुत्रपौत्रमनन्तकम् ॥१-६६-१३ (२८२९)
अदित्यां द्वादशादित्याः संभूता भुवनेश्वराः ।
ये राजन्नामतस्तांस्ते कीर्तयिष्यामि भारत ॥१-६६-१४ (२८३०)
धाता मित्रोऽर्यमा शक्रो वरुणस्त्वंश एव च ।
भगो विवस्वान्पूषा च सविता दशमस्तथा ॥१-६६-१५ (२८३१)
एकादशस्तथा त्वष्टा द्वादशो विष्णुरुच्यते ।
जघन्यजस्तु सर्वेषामादित्यानां गुणाधिकः ॥१-६६-१६ (२८३२)
एक एव दितेः पुत्रो हिरण्यकशिपुः स्मृतः ।
नाम्ना ख्यातास्तु तस्येमे पञ्च पुत्रा महात्मनः ॥१-६६-१७ (२८३३)
प्रह्लादः पूर्वजस्तेषां संह्लादस्तदनन्तरम् ।
अनुह्लादस्तृतीयोऽभूत्तस्माच्च शिबिबाष्कलौ ॥१-६६-१८ (२८३४)
प्रह्लादस्य त्रयः पुत्राः ख्याताः सर्वत्र भारत ।
विरोचनश्च कुम्भश्च निकुम्भश्चेति भारत ॥१-६६-१९ (२८३५)
विरोचनस्य पुत्रोऽभूद्बलिरेकः प्रतापवान् ।

बलेश्च प्रथितः पुत्रो बाणो नाम महासुरः ॥ १-६६-२० (२८३६)
रुद्रस्यानुचरः श्रीमान्महाकालेति यं विदुः ।
चत्वारिंशद्दनोः पुत्राः ख्याताः सर्वत्र भारत ॥ १-६६-२१ (२८३७)
तेषां प्रथमजो राजा विप्रचित्तिर्महायशाः ।
शम्बरो नमुचिश्चैव पुलोमा चेति विश्रुतः ॥ १-६६-२२ (२८३८)
असिलोमा च केशी च दुर्जयश्चैव दानवः ।
अयःशिरा अश्वशिरा अश्वशङ्कुश्च वीर्यवान् ॥ १-६६-२३ (२८३९)
तथा गगनमूर्धा च वेगवान्केतुमांश्च सः ।
स्वर्भानुरश्वोऽश्वपतिर्वृषपर्वाऽजकस्तथा ॥ १-६६-२४ (२८४०)
अश्वग्रीवश्च सूक्ष्मश्च तुहुण्डश्च महाबलः ।
इषुपादेकचक्रश्च विरूपाक्षहराहरौ ॥ १-६६-२५ (२८४१)
निचन्द्रश्च निकुम्भश्च कुपटः कपटस्तथा ।
शरभः शलभश्चैव सूर्याचन्द्रमसौ तथा ।
एते ख्याता दनोर्वंशे दानवाः परिकीर्तिताः ॥ १-६६-२६ (२८४२)
अन्यौ तु खलु देवानां सूर्याचन्द्रमसौ स्मृतौ ।
अन्यौ दानवमुख्यानां सूर्याचन्द्रमसौ तथा ॥ १-६६-२७ (२८४३)
इमे च वंशाः प्रथिताः सत्ववन्तो महाबलाः ।
दनुपुत्रा महाराज दश दानववंशजाः ॥ १-६६-२८ (२८४४)
एकाक्षो मृतपो वीरः प्रलम्बनरकावपि ।
वातापिः शत्रुतपनः शठश्चैव महासुरः ॥ १-६६-२९ (२८४५)
गविष्ठश्च वनायुश्च दीर्घजिह्वश्च दानवः ।
असङ्ख्येयाः स्मृतास्तेषां पुत्राः पौत्राश्च भारत ॥ १-६६-३० (२८४६)
सिंहिका सुषुवे पुत्रं राहुं चन्द्रार्कमर्दनम् ।
सुचन्द्रं चन्द्रहर्तारं तथा चन्द्रप्रमर्दनम् ॥ १-६६-३१ (२८४७)
क्रूरस्वभावं क्रूरायाः पुत्रपौत्रमनन्तकम् ।
गणः क्रोधवशो नाम क्रूरकर्माऽरिमर्दनः ॥ १-६६-३२ (२८४८)
दनायुषः पुनः पुत्राश्चत्वारोऽसुरपुंगवाः ।
विक्षरो बलवीरौ च वृत्रश्चैव महासुरः ॥ १-६६-३३ (२८४९)
कालायाः प्रथिताः पुत्राः कालकल्पाः प्रहारिणः ।
प्रविख्याता महावीर्या दानवेषु परन्तपाः ॥ १-६६-३४ (२८५०)
विनाशनश्च क्रोधश्च क्रोधहन्ता तथैव च ।
क्रोधशत्रुस्तथैवान्ये कालकेया इति श्रुताः ॥ १-६६-३५ (२८५१)
असुराणामुपाध्यायः शक्रस्त्वषिसुतोऽभवत् ।
ख्याताश्चोशनसः पुत्राश्चत्वारोऽसुरयाजकाः ॥ १-६६-३६ (२८५२)
त्वष्टा धरस्तथात्रिश्च द्वावन्यौ रौद्रकर्मिणौ ।
तेजसा सूर्यसंकाशा ब्रह्मलोकपरायणाः ॥ १-६६-३७ (२८५३)

इत्येष वंशप्रभवः कथितस्ते तरस्विनाम् ।
असुराणां सुराणां च पुराणे संश्रुतो मया ॥१-६६-३८ (२८५४)
एतेषां यदपत्यं तु न शक्यं तदशेषतः ॥
प्रसंख्यातुं महीपाल गुणभूतमनन्तकम् ॥१-६६-३९ (२८५५)
ताक्ष्यश्चारिष्टनेमिश्च तथैव गरुडारुणौ ।
आरुणिर्वारुणिश्चैव वैनतेयाः प्रकीर्तिताः ॥१-६६-४० (२८५६)
शेषोऽनन्तो वासुकिश्च तक्षकश्च भुजङ्गमः ।
कूर्मश्च कुलिकश्चैव काद्रवेयाः प्रकीर्तिताः ॥१-६६-४१ (२८५७)
भीमसेनोग्रसेनौ च सुपर्णो वरुणस्तथा ।
गोपतिर्धृतराष्ट्रश्च सूर्यवर्चाश्च सप्तमः ॥१-६६-४२ (२८५८)
सत्यवागर्कपर्णश्च प्रयुतश्चापि विश्रुतः ।
भीमश्चित्ररथश्चैव विख्यातः सर्वविद्वशी ॥१-६६-४३ (२८५९)
तथा शालिशिरा राजन्पर्जन्यश्च चतुर्दशः ।
कलिः पञ्चदशस्तेषां नारदश्चैव षोडशः ॥
इत्येते देवगन्धर्वा मौनेयाः परिकीर्तिताः ॥ १-६६-४४ (२८६०)
अथ प्रभूतान्यन्यानि कीर्तयिष्यामि भारत ।
अनवद्यां मनुं वंशामसुरां मार्गणप्रियाम् ॥१-६६-४५ (२८६१)
अरूपां सुभगां भासीमिति प्राधा व्यजायत ।
सिद्धः पूर्णश्च बर्हिश्च पूर्णायुश्च महायशाः ॥१-६६-४६ (२८६२)
ब्रह्मचारी रतिगुणः सुपर्णश्चैव सप्तमः ।
विश्वावसुश्च भानुश्च सुचन्द्रो दशमस्तथा ॥१-६६-४७ (२८६३)
इत्येते देवगन्धर्वाः प्राधेयाः परिकीर्तिताः ।
इमं त्वप्सरसां वंशं विदितं पुण्यलक्षणम् ॥१-६६-४८ (२८६४)
अरिष्टाऽसूत सुभगा देवी देवर्षितः पुरा ।
अलम्बुषा मिश्रकेशी विद्युत्पर्णा तिलोत्तमा ॥१-६६-४९ (२८६५)
अरुणा रक्षिता चैव रम्बा तद्वन्मनोरमा ।
केशिनी च सुबाहुश्च सुरता सुरजा तथा ॥१-६६-५० (२८६६)
सुप्रिया चातिबाहुश्च विख्यातौ च हाहा हूहूः ।
तुम्बुरुश्चेति चत्वारः स्मृता गन्धर्वसत्तमाः ॥१-६६-५१ (२८६७)
अमृतं ब्राह्मणा गावो गन्धर्वाप्सरसस्तथा ।
अपत्यं कपिलायास्तु पुराणे परिकीर्तितम् ॥१-६६-५२ (२८६८)
इति ते सर्वभूतानां संभवः कथितो मया ।
यथावत्संपरिख्यातो गन्धर्वाप्सरसां तथा ॥१-६६-५३ (२८६९)
भुजंगानां सुपर्णानां रुद्राणां मरुतां तथा ।
गवां च ब्राह्मणानां च श्रीमतां पुण्यकर्मणाम् ॥१-६६-५४ (२८७०)
आयुष्यश्चैव पुण्यश्च धन्यः श्रुतिसुखावहः ।

श्रोतव्यश्चैव सततं श्राव्यश्चैवानसूयता ॥१-६६-५५ (२८७१)
इमं तु वंशं नियमेन यः पठे-
न्महात्मनां ब्राह्मणदेवसन्निधौ ।
अपत्यलाभं लभते स पुष्कलं
श्रियं यशः प्रेत्य च शोभनां गतिम् ॥ ॥ १-६६-५६ (२८७२)

इति श्रीमन्महाभारते आदिपर्वणि संभवपर्वणि षट्षष्टितमोऽध्यायः
॥ ६६ ॥
Mahabharata - Adi Parva - Chapter Footnotes

१-६६-२ क्षयात् स्थानात् ॥
१-६६-१६ जघन्यजः पश्चाज्जातः ॥
१-६६-३२ क्रूरायाः क्रोधायाः ॥
१-६६-३९ गुणभूतप्रधानरूपम् ॥
षट्षष्टितमोऽध्यायः ॥
६६ ॥

---

अध्यय०६७
॥ श्रीः ॥
१.६७. अध्यायः ६७

Mahabharata - Adi Parva - Chapter Topics
ऋष्यादिवंशकथनम् ॥ १ ॥

Mahabharata - Adi Parva - Chapter Text

१-६७-० (२८७३)
वैशंपायन उवाच। १-६७-०क्ष् (३२३)
ब्रह्मणो मानसाः पुत्रा विदिताः षण्महर्षयः ।
एकादश सुताः स्थाणोः ख्याताः परमतेजसः ॥ १-६७-१ (२८७४)
मृगव्याधश्च सर्पश्च निर्ऋतिश्च महायशाः ।
अजैकपादहिर्बुध्न्यः पिनाकी च परन्तपः ॥ १-६७-२ (२८७५)
दहनोऽथेश्वरश्चैव कपाली च महाद्युतिः ।
स्थाणुर्भगश्च भगवान् रुद्रा एकादश स्मृताः ॥ १-६७-३ (२८७६)
मरीचिरङ्गिरा अत्रिः पुलस्त्यः पुलहः क्रतुः ।
षडेते ब्रह्मणः पुत्रा वीर्यवन्तो महर्षयः ॥ १-६७-४ (२८७७)
त्रयस्त्वङ्गिरसः पुत्रा लोके सर्वत्र विश्रुताः ।

बृहस्पतिरुतथ्यश्च संवर्तश्च धृतव्रताः ॥ १-६७-५ (२८७८)
अत्रेस्तु बहवः पुत्राः श्रूयन्ते मनुजाधिप ।
सर्वे वेदविदः सिद्धाः शान्तात्मानो महर्षयः ॥ १-६७-६ (२८७९)
राक्षसाश्च पुलस्त्यस्य वानराः किन्नरास्तथा ।
यक्षाश्च मनुजव्याघ्र पुत्रास्तस्य च धीमतः ॥ १-६७-७ (२८८०)
पुलहस्य सुता राजञ्शरभाश्च प्रकीर्तिताः ।
सिंहाः किपुरुषा व्याघ्रा ऋक्षा ईहामृगास्तथा ॥ १-६७-८ (२८८१)
क्रतोः क्रतुसमाः पुत्राः पतङ्गसहचारिणः ।
विश्रुतास्त्रिषु लोकेषु सत्यव्रतपरायणाः ॥ १-६७-९ (२८८२)
दक्षस्त्वजायताङ्गुष्ठाद्दक्षिणाद्भगवानृषिः ।
ब्रह्मणः पृथिवीपाल शान्तात्मा सुमहातपाः ॥ १-६७-१० (२८८३)
वामादजायताङ्गुष्ठाद्भार्या तस्य महात्मनः ।
तस्यां पञ्चाशतं कन्याः स एवाजनयन्मुनिः ॥ १-६७-११ (२८८४)
ताः सर्वास्त्वनवद्याङ्ग्यः कन्याः कमललोचनाः ।
पुत्रिकाः स्थापयामास नष्टपुत्रः प्रजापतिः ॥ १-६७-१२ (२८८५)
ददौ स दश धर्माय सप्तविंशतिमिन्दवे ।
दिव्येन विधिना राजन्कश्यपाय त्रयोदश ॥ १-६७-१३ (२८८६)
नामतो धर्मपत्न्यस्ताः कीर्त्यमाना निबोध मे ।
कीर्तिर्लक्ष्मीर्धृतिर्मेधा पुष्टिः श्रद्धा क्रिया तथा ॥ १-६७-१४ (२८८७)
बुद्धिर्लज्जा मतिश्चैव पत्न्यो धर्मस्य ता दश ।
द्वाराण्येतानि धर्मस्य विहितानि स्वयंभुवा ॥ १-६७-१५ (२८८८)
सप्तविंशतिः सोमस्य पत्न्यो लोकस्य विश्रुताः ।
कालस्य नयने युक्ताः सोमपत्न्याः शुचिव्रताः ॥ १-६७-१६ (२८८९)
सर्वा नक्षत्रयोगिन्यो लोकयात्राविधानतः ।
पैतामहो मुनिर्देवस्तस्य पुत्रः प्रजापतिः ।
तस्याष्टौ वसवः पुत्रास्तेषां वक्ष्यामि विस्तरम् ॥ १-६७-१७ (२८९०)
धरो ध्रुवश्च सोमश्च अहश्चैवानिलोऽनलः ।
प्रत्यूषश्च प्रभासश्च वसवोऽष्टौ प्रकीर्तिताः ॥ १-६७-१८ (२८९१)
धूम्रायास्तु धरः पुत्रो ब्रह्मविद्यो ध्रुवस्तथा ।
चन्द्रमास्तु मनस्विन्याः श्वासायाः श्वसनस्तथा ॥ १-६७-१९ (२८९२)
रतायाश्चाप्यहः पुत्रः शाण्डिल्याश्च हुताशनः ।
प्रत्यूषश्च प्रभासश्च प्रभातायाः सुतौ स्मृतौ ॥ १-६७-२० (२८९३)
धरस्य पुत्रो द्रविणो हुतहव्यवहस्तथा ।
‘आपस्य पुत्रो वैतण्ड्यः श्रमः शान्तोमुनिस्तथा’।
ध्रुवस्य पुत्रो भगवान्कालो लोकप्रकालनः ॥ १-६७-२१ (२८९४)
सोमस्य तु सुतो वर्चा वर्चस्वी येन जायते ।

मनोहरायाः शिशिरः प्राणोऽथ रमणस्तथा ॥ १-६७-२२ (२८९५)
अह्नः सुतस्तथा ज्योतिः शमः शान्तस्तथा मुनिः ।
अग्नेः पुत्रः कुमारस्तु श्रीमाञ्छरवणालयः ॥ १-६७-२३ (२८९६)
तस्य शाखो विशाखश्च नैगमेयश्च पृष्ठजः ।
कृत्तिकाभ्युपपत्तेश्च कार्तिकेय इति स्मृतः ॥ १-६७-२४ (२८९७)
अनिलस्य शिवा भार्या तस्याः पुत्रो मनोजवः ।
अविज्ञातगतिश्चैव द्वौ पुत्रावनिलस्य तु ॥ १-६७-२५ (२८९८)
प्रत्यूषस्य विदुः पुत्रमृषिं नाम्नाऽथ देवलम् ।
द्वौ पुत्रौ देवलस्यापि क्षमावन्तौ मनीषिणौ ।
बृहस्पतेस्तु भगिनी वरस्त्री ब्रह्मवादिनी ॥ १-६७-२६ (२८९९)
योगसिद्धा जगत्कृत्स्नमसक्ता विचचार ह ।
प्रभासस्य तु भार्या सा वसूनामष्टमस्य ह ॥ १-६७-२७ (२९००)
विश्वकर्मा महाभागो जज्ञे शिल्पप्रजापतिः ।
कर्ता शिल्पसहस्राणां त्रिदशानां च वर्धकिः ॥ १-६७-२८ (२९०१)
भूषणानां च सर्वेषां कर्ता शिल्पवतां वरः ।
यो दिव्यानि विमानानि त्रिदशानां चकारह ॥ १-६७-२९ (२९०२)
मनुष्याश्चोपजीवन्ति यस्य शिल्पं महात्मनः ।
पूजयन्ति च यं नित्यं विश्वकर्माणमव्ययम् ॥ १-६७-३० (२९०३)
स्तनं तु दक्षिणं भित्त्वा ब्रह्मणो नरविग्रहः ।
निःसृतो भगवान्धर्मः सर्वलोकसुखावहः ॥ १-६७-३१ (२९०४)
त्रयस्तस्य वराः पुत्राः सर्वभूतमनोहराः ।
शमः कामश्च हर्षश्च तेजसा लोकधारिणः ॥ १-६७-३२ (२९०५)
कामस्य तु रतिर्भार्या शमस्य प्राप्तिरङ्गना ।
नन्दा तु भार्या हर्षस्य यासु लोकाः प्रतिष्ठिताः ॥ १-६७-३३ (२९०६)
मरीचेः कश्यपः पुत्रः कश्यपस्य सुरासुराः ।
जज्ञिरे नृपशार्दूल लोकानां प्रभवस्तु सः ॥ १-६७-३४ (२९०७)
त्वाष्ट्री तु सवितुर्भार्या वडवारूपधारिणी ।
असूयत महाभागा सान्तरिक्षेऽश्विनावुभौ ॥ १-६७-३५ (२९०८)
द्वादशैवादितेः पुत्राः शक्रमुख्या नराधिप ।
तेषामवरजो विष्णुर्यत्र लोकाः प्रतिष्ठिताः ॥ १-६७-३६ (२९०९)
त्रयस्त्रिंशत यत्येते देवास्तेषामहं तव ।
अन्वयं संप्रवक्ष्यामि पक्षैश्च कुलतो गणान् ॥ १-६७-३७ (२९१०)
रुद्राणामपरः पक्षः साध्यानां मरुतां तथा ।
वसूनां भार्गवं विद्याद्विश्वेदेवांस्तथैव च ॥ १-६७-३८ (२९११)
वैनतेयस्तु गरुडो बलवानरुणस्तथा ।
बृहस्पतिश्च भगवानादित्येष्वेव गण्यते ॥ १-६७-३९ (२९१२)

अश्विनौ गुह्यकान्विद्धि सर्वौषध्यस्तथा पशून् ।
एते देवगणा राजन्कीर्तितास्तेऽनुपूर्वशः ॥ १-६७-४० (२९१३)
यान्कीर्तयित्वा मनुजः सर्वपापैः प्रमुच्यते ।
ब्रह्मणो हृदयं भित्त्वा निःसृतो भगवान्भृगुः ॥ १-६७-४१ (२९१४)
भृगोः पुत्रः कविर्विद्वाञ्छुक्रः कविसुतो ग्रहः ।
त्रैलोक्यप्राणयात्रार्थं वर्षावर्षे भयाभये ।
स्वयंभुवा नियुक्तः सन्भुवनं परिधावति ॥ १-६७-४२ (२९१५)
योगाचार्यो महाबुद्धिर्दैत्यानामभवद्गुरुः ।
सुराणां चापि मेधावी ब्रह्मचारी यतव्रतः ॥ १-६७-४३ (२९१६)
तस्मिन्नियुक्ते विधिना योगक्षेमाय भार्गवे ।
अन्यमुत्पादयामास पुत्रं भृगुरनिन्दितम् ॥ १-६७-४४ (२९१७)
च्यवनं दीप्ततपसं धर्मात्मानं यशस्विनम् ।
यः स रोषाच्च्युतो गर्भान्मातुर्मोक्षाय भारत ॥ १-६७-४५ (२९१८)
आरुषी तु मनोः कन्या तस्य पत्नी मनीषिणः ।
और्वस्तस्यां समभवदूरुं भित्त्वा महायशाः ॥ १-६७-४६ (२९१९)
महातेजा महावीर्यो बाल एव गुणैर्युतः ।
ऋचीकस्तस्य पुत्रस्तु जमदग्निस्ततोऽभवत् ॥ १-६७-४७ (२९२०)
जमदग्नेस्तु चत्वार आसन्पुत्रा महात्मनः ।
रामस्तेषां जघन्योऽभूदजघन्यैर्गुणैर्युतः ।
सर्वशस्त्रेषु कुशलः क्षत्रियान्तकरो वशी ॥ १-६७-४८ (२९२१)
और्वस्यासीत्पुत्रशतं जमदग्निपुरोगमम् ।
तेषां पुत्रसहस्राणि बभूवुर्भुवि विस्तरः ॥ १-६७-४९ (२९२२)
द्वौ पुत्रो ब्रह्मणस्त्वन्यौ ययोस्तिष्ठति लक्षणम् ।
लोके धाता विधाता च यौ स्थितौ मनुना सह ॥ १-६७-५० (२९२३)
तयोरेव स्वसा देवी लक्ष्मीः पद्मगृहा शुभा ।
तस्यास्तु मानसाः पुत्रास्तुरगा व्योमचारिणः ॥ १-६७-५१ (२९२४)
वरुणस्य भार्या या ज्येष्ठा शुक्राद्देवी व्यजायत ।
तस्याः पुत्रं बलं विद्धि सुरां च सुरनन्दिनीम् ॥ १-६७-५२ (२९२५)
प्रजानामन्नकामानामन्योन्यपरिभक्षणात् ।
अधर्मस्तत्र संजातः सर्वभूतविनाशकः ॥ १-६७-५३ (२९२६)
तस्यापि निर्ऋतिर्भार्या नैर्ऋता येन राक्षसाः ।
घोरास्तस्यास्त्रयः पुत्राः पापकर्मरताः सदा ॥ १-६७-५४ (२९२७)
भयो महाभयश्चैव मृत्युर्भूतान्तकस्तथा ।
न तस्य भार्या पुत्रो वा कश्चिदस्त्यन्तको हि सः ॥ १-६७-५५ (२९२८)
काकीं श्येनीं तथा भासीं धृतराष्ट्रीं तथा शुकीम् ।
ताम्रा तु सुषुवे देवी पञ्चैता लोकविश्रुताः ॥ १-६७-५६ (२९२९)

उलूकान्सुषुवे काकी श्येनी श्येनान्व्यजायत ।
भासी भासानजनयद्गृध्रांश्चैव जनाधिप ॥१-६७-५७ (२९३०)
धृतराष्ट्री तु हंसांश्च कलहंसांश्च सर्वशः ।
चक्रवाकांश्च भद्रा तु जनयामास सैव तु ॥१-६७-५८ (२९३१)
शुकी च जनयामास शुकानेव यशस्विनी ।
कल्याणगुणसंपन्ना सर्वलक्षणपूजिता ॥१-६७-५९ (२९३२)
नव क्रोधवशा नारीः प्रजज्ञे क्रोधसंभवाः ।
मृगी च मृगमन्दा च हरी भद्रमना अपि ॥१-६७-६० (२९३३)
मातङ्गी त्वथ शार्दूली श्वेता सुरभिरेव च ।
सर्वलक्षणसंपन्ना सुरसा चैव भामिनी ॥१-६७-६१ (२९३४)
अपत्यं तु मृगाः सर्वे मृग्या नरवरोत्तम ।
ऋक्षाश्च मृगमन्दायाः सृमराश्च परंतप ॥१-६७-६२ (२९३५)
ततस्त्वैरावतं नागं जज्ञे भद्रमनाः सुतम् ।
ऐरावतः सुतस्तस्या देवनागो महागजः ॥१-६७-६३ (२९३६)
हर्याश्च हरयोऽपत्यं वानराश्च तरस्विनः ।
गोलाङ्गूलांश्च भद्रं ते हर्याः पुत्रान्प्रचक्षते ॥१-६७-६४ (२९३७)
प्रजज्ञे त्वथ शार्दूली सिंहान्व्याघ्राननेकशः ।
द्वीपिनश्च महासत्वान्सर्वानेव न सशंयः ॥१-६७-६५ (२९३८)
मातङ्ग्यपि च मातङ्गानपत्यानि नराधिप ।
दिशां गजं तु श्वेताख्यं श्वेताऽजनयदाशुगम् ॥१-६७-६६ (२९३९)
तथा दुहितरौ राजन्सुरभिर्वै व्यजायत ।
रोहिणी चैव भद्रं ते गन्धर्वी तु यशस्विनी ॥१-६७-६७ (२९४०)
विमलामपि भद्रं ते अनलामपि भारत ।
रोहिण्यां जज्ञिरे गावो गन्धर्व्यां वाजिनः सुताः ॥१-६७-६८ (२९४१)
ऽइरायाः कन्यका जातास्तिस्रः कमललोचनाः ।
वनस्पतीनां वृक्षाणां वीरुधां चैव मातरः ॥१-६७-६९ (२९४२)
लतारुहे च द्वे प्रोक्ते वीरुधां चैव ताः स्मृताः ।
गृह्णन्ति ये विना पुष्पं फलानि तरवः पृथक् ॥१-६७-७० (२९४३)
लतासुतास्ते विज्ञेयास्तानेवाहुर्वनस्पतीन् ।
पुष्पैः फलग्रहान्वृक्षान्नुहायाः प्रसवं विदुः ॥१-६७-७१ (२९४४)
लतागुल्मानि वृक्षाश्च त्वक्सारतृणजन्तवः ।
वीरुधो याः प्रजास्तस्यास्तत्र वंशः समाप्यते ॥१-६७-७२ (२९४५)
सप्तपिम्डफलान्वृक्षाननलापि व्यजायत ॥ १-६७-७३ (२९४६)
अनलायाः शुकी पुत्री कंकस्तु सुरसासुतः ।
अरुणस्य भार्या श्येनी तु वीर्यवन्तौ महाबलौ ॥१-६७-७४ (२९४७)
संपातिं जनयामास वीर्यवन्तं जटायुषम् ।

सुरसाऽजनयन्नागान्कद्रूः पुत्रांस्तु पन्नगान् ॥१-६७-७५ (२९४८)
द्वौ पुत्रौ विनतायास्तु विख्यातौ गरुडारुणौ ।
इत्येष सर्वभूतानां महतां मनुजाधिप ।
प्रभवः कीर्तितः सम्यङ्मया मतिमतां वर ॥ १-६७-७६ (२९४९)
यं श्रुत्वा पुरुषः सम्यङ्मुक्तो भवति पाप्मनः ।
सर्वज्ञतां च लभते रतिमग्र्यां च विन्दति ॥ ॥१-६७-७७ (२९५०)

इति श्रीमन्महाभारते आदिपर्वणि संभवपर्वणि
सप्तषष्टितमोऽध्यायः ॥६७ ॥

Mahabharata - Adi Parva - Chapter Footnotes

१-६७-१ ब्रह्मण इति षण्महर्षयः स्थाणुश्च सप्तम इति बोध्यम्
।तत्रादौ स्थाणुसंततिमेवाह एकादशेति।एकादश तथा रुद्राः
स्थाणोश्चैव हि मानसाः इति पाठान्तरम्।अत्र स्थिरत्वात्स्थाणुर्ब्रह्मा ॥
१-६७-५ बृहस्पतिरुचथ्यश्चेति पाठान्तरम् ॥
१-६७-८ ईहामृगाः वृकाः ॥
१-६७-९ पतङ्गसहचारिणः सूर्यसहचरा वालखिल्याः ॥
१-६७-१६ नयने ज्ञापने ॥
१-६७-१७ नक्षत्रयोगिन्यो नक्षत्रनामयुक्ताः ।विधानतः
विधानार्थमभवन्।पैतामहो देवो धर्मः पितामहस्तनाज्जातत्वात्।तस्य
पितामहस्य पुत्रो दक्षः तदङ्गुष्ठाज्जातत्वात्।तस्य संबन्धिनी
वसुनाम्नी कन्या तस्यां धर्माद्वसवोष्टौ जाता इत्यर्थः।वसोस्तु वसवः
पुत्रा इत्यन्यत्रोक्तेः ॥
१-६७-१९ धूम्राय इति वसोरेव धूम्रादीनि नामान्तराणि कल्पभेदात् ।अन्या
एता न दक्षकन्या इति वा ॥
१-६७-२४ कृत्तिकानां षण्णां मातृत्वेनाभ्युपपत्तेरङ्गीकारात् ॥
१-६७-३५ बडवा अश्वा अन्तरिक्षे अश्विनावसूत नासिकायां शुक्रप्रक्षेपात् ॥
१-६७-३७ त्रयस्त्रिंशत् अष्टौ वसव एकादश रुद्रा द्वादशादित्याः
प्रजापतिश्च वषट्कारश्च ॥
१-६७-४३ योगाचार्य इति ।चापी व्यस्तौ।सुराणामपि च गुरुरिति
संबन्धः।देवानां गुरुरेव योगाचार्यो योगबलेन कायद्वयं कृत्वा
दैत्यानामप्याचार्योऽभवदित्यर्थः ॥
१-६७-७३ पिण्डफलान्सप्त ।खर्जूरतालहिंताला ताली खर्जूरिका
तथा।गुवाकानारिकेलश्च सप्त पिण्डफला द्रुमाः इत्युक्तरूपान्।इह
पुराणान्तरविरोधो नामभेदात्कल्पभेदाद्वापनेयः ॥
सप्तषष्टितमोऽध्यायः ॥

अध्यय०६८
॥ श्रीः ॥
१.६८. अध्यायः ६८

Mahabharata - Adi Parva - Chapter Topics
जरासन्धादीनां संभवः ॥ १ ॥
द्रोणादीनां संभवः ॥ २ ॥
धृतराष्ट्रादीनां संभवः ॥ ३ ॥
दुर्योधनादीनां संभवः ॥ ४ ॥
युधिष्ठिरादीनां संभवः ॥ ५ ॥
धृष्टद्युम्नादीनां संभवः ॥ ६ ॥
पृथाचरित्रं । कर्णोत्पत्तिश्च ॥ ७ ॥
बलरामादीनां संभवः ॥ ८ ॥
द्रौपदीसंभवः ॥ ९ ॥
कुन्तीमाद्र्योः संभवः ॥ १० ॥

Mahabharata - Adi Parva - Chapter Text

१-६८-० (२९५१)
जनमेजय उवाच। १-६८-०क्ष् (३२४)
देवानां दानवानां च गन्धर्वोरगरक्षसाम् ।
सिंहव्याघ्रमृगाणां च पन्नगानां पतत्त्रिणाम् ॥ १-६८-१ (२९५२)
अन्येषां चैव भूतानां संभवं भगवन्नहम् ।
श्रोतुमिच्छामि तत्त्वेन मानुषेषु महात्मनाम् ।
जन्म कर्म च भूतानामेतेषामनुपूर्वशः ॥ १-६८-२ (२९५३)
वैशंपायन उवाच। १-६८-३क्ष् (३२५)
मानुषेषु मनुष्येन्द्र संभूता ये दिवौकसः ।
प्रथमं दानवाश्चैव तांस्ते वक्ष्यामि सर्वशः ॥ १-६८-३ (२९५४)
विप्रचित्तिरिति ख्यातो य आसीद्दानवर्षभः ।
जरासन्ध इति ख्यातः स आसीन्मनुजर्षभः ॥ १-६८-४ (२९५५)
दितेः पुत्रस्तु यो राजन्हिरण्यकशिपुः स्मृतः ।
स जज्ञे मानुषे लोके शिशुपालो नरर्षभः ॥ १-६८-५ (२९५६)
संह्लाद इति विख्यातः प्रह्लादस्यानुजस्तु यः ।
स शल्य इति विख्यातो जज्ञे वाहीकपुङ्गवः ॥ १-६८-६ (२९५७)
अनुह्लादस्तु तेजस्वी योऽभूत्ख्यातो जघन्यजः ।

धृष्टकेतुरिति ख्यातः स बभूव नरेश्वरः ॥ १-६८-७ (२९५८)
यस्तु राजञ्शिबिर्नाम दैतेयः परिकीर्तितः ।
द्रुम इत्यभिविख्यातः स आसीद्भुवि पार्थिवः ॥ १-६८-८ (२९५९)
बाष्कलो नाम यस्तेषामासीदसुरसत्तमः ।
भगदत्त इति ख्यातः सं जज्ञे पुरुषर्षभः ॥ १-६८-९ (२९६०)
अयःशिरा अश्वशिरा अयःशङ्कुश्च वीर्यवान् ।
तथा गगनमूर्धा च वेगवांश्चात्र पञ्चमः ॥ १-६८-१० (२९६१)
पञ्चैते जज्ञिरे राजन्वीर्यवन्तो महासुराः ।
केकयेषु महात्मानः पार्थिवर्षभसत्तमाः ।
केतुमानिति विख्यातो यस्ततोऽन्यःप्रतापवान् ॥ १-६८-११ (२९६२)
अमितौजा इति ख्यातः सोग्रकर्मा नराधिपः ।
स्वर्भानुरिति विख्यातः श्रीमान्यस्तु महासुरः ॥ १-६८-१२ (२९६३)
उग्रसेन इति ख्यात उग्रकर्मा नराधिपः ।
यस्त्वश्व इति विख्यातः श्रीमानासीन्महासुरः ॥ १-६८-१३ (२९६४)
अशोको नाम राजाऽभून्महावीर्योऽपराजितः ।
तस्मादवरजो यस्तु राजन्नश्वपतिः स्मृतः ॥ १-६८-१४ (२९६५)
दैतेयः सोऽभवद्राजा हार्दिक्यो मनुजर्षभः ।
वृषपर्वेति विख्यातः श्रीमान्यस्तु महासुरः ॥ १-६८-१५ (२९६६)
दीर्घप्रज्ञ इति ख्यातः पृथिव्यां सोऽभवन्नृपः ।
अजकस्त्ववरो राजन्य आसीद्वृषपर्वणः ॥ १-६८-१६ (२९६७)
स शाल्व इति विख्यातः पृथिव्यामभवन्नृपः ।
अश्वग्रीव इति ख्यातः सत्ववान्यो महासुरः ॥ १-६८-१७ (२९६८)
रोचमान इति ख्यातः पृथिव्यां कोऽभवन्नृपः ।
सूक्ष्मस्तु मतिमान्राजन्कीर्तिमान्यः प्रकीर्तितः ॥ १-६८-१८ (२९६९)
बृहद्रथ इति ख्यातः क्षितावासीत्स पार्थिवः ।
तुहुण्ड इति विख्यातो य आसीदसुरोत्तमः ॥ १-६८-१९ (२९७०)
सेनाबिन्दुरिति ख्यातः स बूभव नराधिपः ।
इषुमान्नाम यस्तेषामसुराणां बलाधिकः ॥ १-६८-२० (२९७१)
नग्नजिन्नाम राजासीद्भुवि विख्यातविक्रमः ।
एकचक्र इति ख्यात आसीद्यस्तु महासुरः ॥ १-६८-२१ (२९७२)
प्रतिविन्ध्य इति ख्यातो बभूव प्रथितः क्षितौ ।
विरूपाक्षस्तु दैतेयश्चित्रयोधी महासुरः ॥ १-६८-२२ (२९७३)
चित्रधर्मेति विख्यातः क्षितावासीत्स पार्थिवः ।
हरस्त्वरिहरो वीर आसीद्यो दानवोत्तमः ॥ १-६८-२३ (२९७४)
सुबाहुरिति विख्यातः श्रीमानासीत्स पार्थिवः ।
अहरस्तु महातेजाः शत्रुपक्षक्षयंकरः ॥ १-६८-२४ (२९७५)

बाह्लिको नाम राजा स बभूव प्रथितः क्षितौ ।
निचन्द्रश्चन्द्रवक्त्रस्तु य आसीदसुरोत्तमः ॥ १-६८-२५ (२९७६)
मुञ्जकेश इति ख्यातः श्रीमानासीत्स पार्थिवः ।
निकुम्भस्त्वजितः संख्ये महामतिरजायत ॥ १-६८-२६ (२९७७)
भूमौ भूमिपतिश्रेष्ठो देवाधिप इति स्मृतः ।
शरभो नाम यस्तेषां दैतेयानां महासुरः ॥ १-६८-२७ (२९७८)
पौरवो नाम राजर्षिः स बभूव नरोत्तमः ।
कुपटस्तु महावीर्यः श्रीमान्राजन्महासुरः ॥ १-६८-२८ (२९७९)
सुपार्श्व इति विख्यातः क्षितौ जज्ञे महीपतिः ।
कपटस्तु राजन्राजर्षिः क्षितौ जज्ञे महासुरः ॥ १-६८-२९ (२९८०)
पार्वतेय इति ख्यातः काञ्चनाचलसन्निभः ।
द्वितीयः शलभस्तेषामसुराणां बभूव ह ॥ १-६८-३० (२९८१)
प्रह्लादो नाम बाह्लीकः स बभूव नराधिपः ।
चन्द्रस्तु दितिजश्रेष्ठो लोके ताराधिपोपमः ॥ १-६८-३१ (२९८२)
चन्द्रवर्मेति विख्यातः काम्बोजानां नराधिपः ।
अर्क इत्यभिविख्यातो यस्तु दानवपुङ्गवः ॥ १-६८-३२ (२९८३)
ऋषिको नाम राजर्षिर्बभूव नृपसत्तमः ।
मृतपा इति विख्यातो य आसीदसुरोत्तमः ॥ १-६८-३३ (२९८४)
पश्चिमानूपकं विद्धि तं नृपं नृपसत्तम ।
गविष्ठस्तु महातेजा यः प्रख्यातो महासुरः ॥ १-६८-३४ (२९८५)
द्रुमसेन इति ख्यातः पृथिव्यां सोऽभवन्नृपः ।
मयूर इति विख्यातः श्रीमान्यस्तु महासुरः ॥ १-६८-३५ (२९८६)
स विश्व इति विख्यातो बभूव पृथिवीपतिः ।
सुपर्ण इति विख्यातस्तस्मादवरजस्तु यः ॥ १-६८-३६ (२९८७)
कालकीर्तिरिति ख्यातः पृथिव्यां सोऽभवन्नृपः ।
चन्द्रहन्तेति यस्तेषां कीर्तितः प्रवरोऽसुरः ॥ १-६८-३७ (२९८८)
शुनको नाम राजर्षिः स बभूव नराधिपः ।
विनाशनस्तु चन्द्रस्य य आख्यातो महासुरः ॥ १-६८-३८ (२९८९)
जानकिर्नाम विख्यातः सोऽभवन्मनुजाधिपः ।
दीर्घजिह्वस्तु कौरव्य य उक्तो दानवर्षभः ॥ १-६८-३९ (२९९०)
काशिराजः स विख्यातः पृथिव्यां पृथिवीपते ।
ग्रहं तु सुषुवे यं तु सिंहिकार्केन्दुमर्दनम् ।
स क्राथ इति विख्यातो बभूव मनुजाधिपः ॥ १-६८-४० (२९९१)
दनायुषस्तु पुत्राणां चतुर्णां प्रवरोऽसुरः ।
विक्षरो नाम तेजस्वी वसुमित्रो नृपः स्मृतः ॥ १-६८-४१ (२९९२)
द्वितीयो विक्षराद्यस्तु नराधिप महासुरः ।

पाण्ड्यराष्ट्राधिप इति विख्यातः सोऽभवन्नृपः ॥१-६८-४२ (२९९३)
बली वीर इति ख्यातो यस्त्वासीदसुरोत्तमः ।
पौण्ड्रमात्स्यक इत्येवं बभूव स नराधिपः ॥१-६८-४३ (२९९४)
वृत्र इत्यभिविख्यातो यस्तु राजन्महासुरः ।
मणिमान्नाम राजर्षिः स बभूव नराधिपः ॥१-६८-४४ (२९९५)
क्रोधहन्तेति यस्तस्य बभूवावरजोऽसुरः ।
दण्ड इत्यभिविख्यातः स आसीन्नृपतिः क्षितौ ॥१-६८-४५ (२९९६)
क्रोधवर्धन इत्येवं यस्त्वन्यः परिकीर्तितः ।
दण्डधार इति ख्यातः सोऽभवन्मनुजर्षभः ॥१-६८-४६ (२९९७)
कालेयानां तु ये पुत्रास्तेषामष्टौ नराधिपाः ।
जज्ञिरे राजशार्दूल शार्दूलसमविक्रमाः ॥१-६८-४७ (२९९८)
मगधेषु जयत्सेनस्तेषामासीत्स पार्थिवः ।
अष्टानां प्रवरस्तेषां कालेयानां महासुरः ॥१-६८-४८ (२९९९)
द्वितीयस्तु ततस्तेषां श्रीमान्हरिहयोपमः ।
अपराजित इत्येवं स बभूव नराधिपः ॥१-६८-४९ (३०००)
तृतीयस्तु महातेजा महामायो महासुरः ।
निषादाधिपतिर्जज्ञे भुवि भीमपराक्रमः ॥१-६८-५० (३००१)
तेषामन्यतमो यस्तु चतुर्थः परिकीर्तितः ।
श्रेणिमानिति विख्यातः क्षितौ राजर्षिसत्तमः ॥१-६८-५१ (३००२)
पञ्चमस्त्वभवत्तेषां प्रवरो यो महासुरः ।
महौजा इति विख्यातो बभूवेह परन्दपः ॥१-६८-५२ (३००३)
षष्ठस्तु मतिमान्यो वै तेषामासीन्महासुरः ।
अभीरुरिति विख्यातः क्षितौ राजर्षिसत्तमः ॥१-६८-५३ (३००४)
समुद्रसेनस्तु नृपस्तेषामेवाभवद्गणात् ।
विश्रुतः सागरान्तायां क्षितौ धर्मार्थतत्त्ववित् ॥१-६८-५४ (३००५)
बृहन्नामाष्टमस्तेषां कालेयानां नराधिप ।
बभूव राजा धर्मात्मा सर्वभूतहिते रतः ॥१-६८-५५ (३००६)
कुक्षिस्तु राजन्विख्यातो दानवानां महाबलः ।
पार्वतीय इति ख्यातः काञ्चनाचलसन्निभः ॥१-६८-५६ (३००७)
क्रथनश्च महावीर्यः श्रीमान्राजा महासुरः ।
सूर्याक्ष इति विख्यातः क्षितौ जज्ञे महीपतिः ॥१-६८-५७ (३००८)
असुराणां तु यः सकूर्यः श्रीमांश्चैव महासुरः ।
दरदो नाम बाह्लीको वरः सर्वमहीक्षिताम् ॥१-६८-५८ (३००९)
गणः क्रोधवशो नाम यस्ते राजन्प्रकीर्तितः ।
ततः संजज्ञिरे वीराः क्षिताविह नराधिपाः ॥१-६८-५९ (३०१०)
मद्रकः कर्णवेष्टश्च सिद्धार्थः कीटकस्तथा ।

सुवीरश्च सुबाहुश्च महावीरोऽथ बाह्लिकः ॥ १-६८-६० (३०११)
क्रथो विचित्रः सुरथः श्रीमान्नीलश्च भूमिपः ।
चीरवासाश्च कौरव्य भूमिपालश्च नामतः ॥ १-६८-६१ (३०१२)
दन्तवक्त्रश्च नामासीद्दुर्जयश्चैव दानवः ।
रुक्मी च नृपशार्दूलो राजा च जनमेजयः ॥ १-६८-६२ (३०१३)
आषाढो वायुवेगश्च भूरितेजास्तथैव च ।
एकलव्यः सुमित्रश्च वाटधानोऽथ गोमुखः ॥ १-६८-६३ (३०१४)
कारूषकाश्च राजानः क्षेमधूर्तिस्तथैव च ।
श्रुतायुरुद्वहश्चैव बृहत्सेनस्तथैव च ॥ १-६८-६४ (३०१५)
क्षेमोग्रतीर्थः कुहरः कलिङ्गेषु नराधिपः ।
मतिमांश्च मनुष्येन्द्र ईश्वरश्चेति विश्रुतः ॥ १-६८-६५ (३०१६)
गणात्क्रोधवशादेष राजपूगोऽभवत्क्षितौ ।
जातः पुरा महाभागो महाकीर्तिर्महाबलः ॥ १-६८-६६ (३०१७)
कालनेमिरिति ख्यातो दानवानां महाबलः ।
स कंस इति विख्यात उग्रसेनसुतो बली ॥ १-६८-६७ (३०१८)
यस्त्वासीद्देवको नाम देवराजसमद्युतिः ।
स गन्धर्वपतिर्मुख्यः क्षितौ जज्ञे नराधिपः ॥ १-६८-६८ (३०१९)
बृहस्पतेर्बृहत्कीर्तेर्देवर्षेर्विद्धि भारत ।
अशाद्द्रोणं समुत्पन्नं भारद्वाजमयोनिजम् ॥ १-६८-६९ (३०२०)
धन्विनां नृपशार्दूल यः सर्वास्त्रविदुत्तमः ।
महाकीर्तिर्महातेजाः स जज्ञे मनुजेश्वर ॥ १-६८-७० (३०२१)
धनुर्वेदे च वेदे च यं तं वेदविदो विदुः ।
वरिष्ठं चित्रकर्माणं द्रोणं स्वकुलवर्धनम् ॥ १-६८-७१ (३०२२)
महादेवान्तकाभ्यां च कामात्क्रोधाच्च भारत ।
एकत्वमुपसंपद्य जज्ञे शूरः परन्तपः ॥ १-६८-७२ (३०२३)
अश्वत्थामा महावीर्यः शत्रुपक्षभयावहः ।
वीरः कमलपत्राक्षः क्षितावासीन्नराधिपः ॥ १-६८-७३ (३०२४)
जज्ञिरे वसवस्त्वष्टौ गङ्गायां शन्तनोः सुताः ।
वसिष्ठस्य च शापेन नियोगाद्वासवस्य च ॥ १-६८-७४ (३०२५)
तेषामवरजो भीष्मः कुरूणामभयङ्करः ।
मतिमान्वेदविद्वाग्मी शत्रुपक्षक्षयङ्करः ॥ १-६८-७५ (३०२६)
जामदग्न्येन रामेण सर्वास्त्रविदुषां वरः ।
योऽप्युध्यत महातेजा भार्गवेण महात्मना ॥ १-६८-७६ (३०२७)
यस्तु राजन्कृपो नाम ब्रह्मर्षिरभवत्क्षितौ ।
रुद्राणां तु गणाद्विद्धि संभूतमतिपौरुषम् ॥ १-६८-७७ (३०२८)
शकुनिर्नाम यस्त्वासीद्राजा लोके महारथः ।

द्वापरं विद्धि तं राजन्संभूतमरिमर्दनम् ॥१-६८-७८ (३०२९)
सात्यकिः सत्यसन्धश्च योऽसौ वृष्णिकुलोद्वहः ।
पक्षात्स जज्ञे मरुतां देवानामरिमर्दनः ॥१-६८-७९ (३०३०)
द्रुपदश्चैव राजर्षिस्तत एवाभवद्गणात् ।
मानुषे नृप लोकेऽस्मिन्सर्वशस्त्रभृतां वरः ॥१-६८-८० (३०३१)
ततश्च कृतवर्माणं विद्धि राजञ्जनाधिपम् ।
तमप्रतिमकर्माणं क्षत्रियर्षभसत्तमम् ॥१-६८-८१ (३०३२)
मरुतां तु गणाद्विद्धि संजातमरिमर्दनम् ।
विराटं नाम राजानं परराष्ट्रप्रतापनम् ॥१-६८-८२ (३०३३)
अरिष्टायास्तु यः पुत्रो हंस इत्यभिविश्रुतः ।
स गन्धर्वपतिर्जज्ञे कुरुवंशविवर्धनः ॥१-६८-८३ (३०३४)
धृतराष्ट्र इति ख्यातः कृष्णद्वैपायनात्मजः ।
दीर्घबाहुर्महातेजाः प्रज्ञाचक्षुर्नराधिपः ॥
मातुर्दोषादृषेः कोपादन्ध एव व्यजायत ॥ १-६८-८४ (३०३५)
ग्मरुतां तु गणाद्वीरः सर्वशस्त्रभृतां वरः ।
पाण्डुर्जज्ञे महाबाहुस्तव पूर्वपितामहः।'
तस्यैवावरजो भ्राता महासत्वो महाबलः ॥ १-६८-८५ (३०३६)
धर्मात्तु सुमहाभागं पुत्रं पुत्रवतां वरम् ।
विदुरं विद्धि तं लोके जातं बुद्धिमतां वरम् ॥१-६८-८६ (३०३७)
कलेरंशस्तु संजज्ञे भुवि दुर्योधनो नृपः ।
दुर्बद्धिर्दुर्मतिश्चैव कुरूणामयशस्करः ॥१-६८-८७ (३०३८)
जगतो यस्तु सर्वस्य विद्विष्टः कलिपूरुषः ।
यः सर्वां घातयामास पृथिवीं पृथिवीपते ॥१-६८-८८ (३०३९)
उद्दीपितं येन वैरं भूतान्तकरणं महत् ।
पौलस्त्या भ्रातरश्चास्य जज्ञिरे मनुजेष्विह ॥१-६८-८९ (३०४०)
शतं दुःशासनादीनां सर्वेषां क्रूरकर्मणाम् ।
दुर्मुखो दुःसहश्चैव ये चान्ये नानुकीर्तिताः ॥१-६८-९० (३०४१)
दुर्योधनसहायास्ते पौलस्त्या भरतर्षभ ।
वैश्यापुत्रो युयुत्सुश्च धार्तराष्ट्रः शताधिकः ॥१-६८-९१ (३०४२)
जनमेजय उवाच।१-६८-९२क्ष् (३२६)
ज्येष्ठानुज्येष्ठतामेषां नामधेयानि वा विभो ।
धृतराष्ट्रस्य पुत्राणामानुपूर्व्येण कीर्तय ॥१-६८-९२ (३०४३)
वैशंपायन उवाच।१-६८-९३क्ष् (३२७)
दुर्योधनो युयुत्सुश्च राजन्दुःशासनस्तथा ।
दुःसहो दुःशलश्चैव दुर्मुखश्च तथापरः ॥१-६८-९३ (३०४४)
विविंशतिर्विकर्णश्च जलसन्धः सुलोचनः ।

विन्दानुविन्दौ दुर्धर्षः सुबाहुर्दुष्प्रधर्षणः ॥ १-६८-९४ (३०४५)
दुर्मर्षणो दुर्मुखश्च दुष्कर्णः कर्ण एव च ।
चत्रोपचित्रौ चित्राक्षश्चारुचित्राङ्गदश्च ह ॥ १-६८-९५ (३०४६)
दुर्मदो दुष्प्रहर्षश्च विवित्सुर्विकटः समः ।
ऊर्णनाभः पद्मनाभस्तथा नन्दोपनन्दकौ ॥ १-६८-९६ (३०४७)
सेनापतिः सुषेणश्च कुण्डोदरमहोदरौ ।
चित्रबाहुश्चित्रवर्मा सुवर्मा दुर्विरोचनः ॥ १-६८-९७ (३०४८)
अयोबाहुर्महाबाहुश्चित्रचापसुकुण्डलौ ।
भीमवेगो भीमबलो बलाकी भीमविक्रमः ॥ १-६८-९८ (३०४९)
उग्रायुधो भीमशरः कनकायुर्दृढायुधः ।
दृढवर्मा दृढक्षत्रः सोमकीर्तिरनूदरः ॥ १-६८-९९ (३०५०)
जरासन्धो दृढसन्धः सत्यसन्धः सहस्रवाक् ।
उग्रश्रवा उग्रसेनः क्षेममूर्तिस्तथैव च ॥ १-६८-१०० (३०५१)
अपराजितः पण्डितको विशालाक्षो दुराधनः ॥ १-६८-१०१ (३०५२)
दृढहस्तः सुहस्तश्च वातवेगसुवर्चसौ ।
आदित्यकेतुर्बह्वाशी नागदत्तानुयायिनौ ॥ १-६८-१०२ (३०५३)
कवाची निषङ्गी दण्डी दण्डधारो धनुर्ग्रहः ।
उग्रो भीमरथो वीरो वीरबाहुरलोलुपः ॥ १-६८-१०३ (३०५४)
अभयो रौद्रकर्मा च तथा दृढरथश्च यः ।
अनाधृष्यः कुम्डभेदी विरावी दीर्घलोचनः ॥ १-६८-१०४ (३०५५)
दीर्घबाहुर्महाबाहुर्व्यूढोरुः कनकाङ्गदः ।
कुण्डजश्चित्रकश्चैव दुःशला च शताधिका ॥ १-६८-१०५ (३०५६)
वैश्यापुत्रो युयुत्सुश्च धार्तराष्ट्रः शताधिकः ।
एतदेकशतं राजन्कन्या चैका प्रकीर्तिता ॥ १-६८-१०६ (३०५७)
नामधेयानुपूर्व्या च ज्येष्ठानुज्येष्ठतां विदुः ।
सर्वे त्वतिरथाः शूराः सर्वे युद्धविशारदाः ॥ १-६८-१०७ (३०५८)
सर्वे वेदविदश्चैव राजञ्शास्त्रे च परागाः ।
सर्वे सङ्ग्रामविद्यासु विद्याभिजनशोभिनः ॥ १-६८-१०८ (३०५९)
सर्वेषामनुरूपाश्च कृता दारा महीपते ।
दुःशलां समये राजसिन्धुराजाय कौरवः ॥ १-६८-१०९ (३०६०)
जयद्रथाय प्रददौ सौबलानुमते तदा ।
धर्मस्यांशं तु राजानं विद्धि राजन्युधिष्ठिरम् ॥ १-६८-११० (३०६१)
भीमसेनं तु वातस्य देवराजस्य चार्जुनम् ।
अश्विनोस्तु तथैवांशौ रूपेणाप्रतिमौ भुवि ॥ १-६८-१११ (३०६२)
नकुलः सहदेवश्च सर्वभूतमनोहरौ ।
स्युवर्चा इति ख्यातः सोमपुत्रः प्रतापवान् ॥ १-६८-११२ (३०६३)

सोऽभिमन्युर्बृहत्कीर्तिरर्जुनस्य सुतोऽभवत् ।
यस्यावतरणे राजन्सुरान्सोमोऽब्रवीदिदम् ॥ १-६८-११३ (३०६४)
नाहं दद्यां प्रियं पुत्रं मम प्राणैर्गरीयसम् ।
समयः क्रियतामेष न शक्यमतिवर्तितुम् ॥ १-६८-११४ (३०६५)
सुरकार्यं हि नः कार्यमसुराणां क्षितौ वधः ।
तत्र यास्यत्ययं वर्चा न च स्थास्यति वै चिरम् ॥ १-६८-११५ (३०६६)
ऐन्द्रिर्नरस्तु भविता यस्य नारायणः सखा ।
सोर्जुनेत्यभिविख्यातः पाण्डोः पुत्रः प्रतापवान् ॥ १-६८-११६ (३०६७)
तस्यायं भविता पुत्रो बालो भुवि महारथः ।
ततः षोडशवर्षाणि स्थास्यत्यमरसत्तमाः ॥ १-६८-११७ (३०६८)
अस्य षोडशवर्षस्य स सङ्ग्रामो भविष्यति ।
यत्रांशा वः करिष्यन्ति कर्म वीरनिषूदनम् ॥ १-६८-११८ (३०६९)
नरनारायणाभ्यां तु स सङ्ग्रामो विनाकृतः ।
चक्रव्यूहं समास्थाय योधयिष्यन्ति वःसुराः ॥ १-६८-११९ (३०७०)
विमुखाञ्छात्रवान्सर्वान्कारयिष्यति मे सुतः ।
बालः प्रविश्य च व्यूहमभेद्यं विचरिष्यति ॥ १-६८-१२० (३०७१)
महारथानां वीराणां कदनं च करिष्यति ।
सर्वेषामेव शत्रूणां चतुर्थांशं नयिष्यति ॥ १-६८-१२१ (३०७२)
दिनार्धेन महाबाहुः प्रेतराजपुरं प्रति ।
ततो महारथैर्वीरैः समेत्य बहुशो रणे ॥ १-६८-१२२ (३०७३)
दिनक्षये महाबाहुर्मया भूयः समेष्यति ।
एकं वंशकरं पुत्रं वीरं वै जनयिष्यति ॥ १-६८-१२३ (३०७४)
प्रनष्टं भारतं वंशं स भूयो धारयिष्यति। १-६८-१२४ (३०७५)
वैशंपायन उवाच ।
एतत्सोमवचः श्रुत्वा तथास्त्विति दिवौकसः ॥ १-६८-१२४क्ष् (३२८)
प्रत्यूचुः सहिताः सर्वे ताराधिपमपूजयन् ।
एवं ते कथितं राजंस्तव जन्म पितुः पितुः ॥ १-६८-१२५ (३०७६)
अग्नेर्भागं तु विद्धि त्वं धृष्टद्युम्नं महारथण् ।
शिखण्डिनमथो राजंस्त्रीपूर्वं विद्धि राक्षसम् ॥ १-६८-१२६ (३०७७)
द्रौपदेयाश्च ये पञ्च बभूवुर्भरतर्षभ ।
विश्वान्देवगणान्विद्धि संजातान्भरतर्षभ ॥ १-६८-१२७ (३०७८)
प्रतिविन्ध्यः सुतसोमः श्रुतकीर्तिस्तथापरः ।
नाकुलिस्तु शतानीकः श्रुतसेनश्च वीर्यवान् ॥ १-६८-१२८ (३०७९)
शूरो नाम यदुश्रेष्ठो वसुदेवपिताऽभवत् ।
तस्य कन्या पृथा नाम रूपेणासदृशी भुवि। १-६८-१२९ (३०८०)
पितुः स्वस्रीयपुत्राय सोऽनपत्याय वीर्यवान् ।

अग्रमग्रे प्रतिज्ञाय स्वस्यापत्यस्य वै तदा ॥ १-६८-१३० (३०८१)
अग्रजातेति तां कन्यां शूरोऽनुग्रहकाङ्क्षया ।
अददत्कुन्तिभोजाय स तां दुहितरं तदा ॥ १-६८-१३१ (३०८२)
सा नियुक्ता पितुर्गेहे ब्राह्मणातिथिपूजने ।
उग्रं पर्यचरद्घोरं ब्राह्मणं संशितव्रतम् ॥ १-६८-१३२ (३०८३)
निकूढनिश्चयं धर्मे यं तं दुर्वाससं विदुः ।
समुग्रं शंसितात्मानं सर्वयत्नैरतोषयत् ॥ १-६८-१३३ (३०८४)
तुष्टोऽभिचारसंयुक्तमाचचक्षे यथाविधि ।
उवाच चैनां भगवान्प्रीतोऽस्मि सुभगे तव ॥ १-६८-१३४ (३०८५)
यं यं देवं त्वमेतेन मन्त्रेणावाहयिष्यसि ।
तस्य तस्य प्रसादात्त्वं देवि पुत्राञ्जनिष्यसि ॥ १-६८-१३५ (३०८६)
एवमुक्ता च सा बाला तदा कौतूहलान्विता ।
कन्या सती देवमर्कमाजुहाव यशस्विनी ॥ १-६८-१३६ (३०८७)
प्रकाशकर्ता भगवांस्तस्यां गर्भं दधौ तदा ।
अजीजनत्सुतं चास्यां सर्वशस्त्रभृतांवरम् ॥ १-६८-१३७ (३०८८)
सकुण्डलं सकवचं देवगर्भं श्रियान्वितम् ।
दिवाकरसमं दीप्त्या चारुसर्वाङ्गभूषितम् ॥ १-६८-१३८ (३०८९)
निगूहमाना जातं वै बन्धुपक्षभयात्तदा ।
उत्ससर्ज जले कुन्ती तं कुमारं यशस्विनम् ॥ १-६८-१३९ (३०९०)
तमुत्सृष्टं जले गर्भं राधाभर्ता महायशाः ।
राधायाः कल्पयामास पुत्रं सोऽधिरथस्तदा ॥ १-६८-१४० (३०९१)
चक्रतुर्नामधेयं च तस्य बालस्य तावुभौ ।
दंपती वसुषेणेति दिक्षु सर्वासु विश्रुतम् ॥ १-६८-१४१ (३०९२)
संवर्धमानो बलवान्सर्वास्त्रेषूत्तमोऽभवत् ।
वेदाङ्गानि च सर्वाणि जजाप जपतां वरः ॥ १-६८-१४२ (३०९३)
यस्मिन्काले जपन्नास्ते धीमान्सत्यपराक्रमः ।
नादेयं ब्राह्मणेष्वासीत्तस्मिन्काले महात्मनः ॥ १-६८-१४३ (३०९४)
तमिन्द्रो ब्राह्मणो भूत्वा पुत्रार्थे भूतभावनः ।
ययाचे कुण्डले वीरं कवचं च सहाङ्गजम् ॥ १-६८-१४४ (३०९५)
उत्कृत्य कर्णो ह्यददत्कवचं कुण्डले तथा ॥
शक्तिं शक्रो ददौ तस्मै विस्मितश्चेदमब्रवीत् ॥ १-६८-१४५ (३०९६)
देवासुरमनुष्याणां गन्धर्वोरगरक्षसाम् ।
यस्मिन्क्षेप्स्यसि दुर्धर्ष स एको न भविष्यति ॥ १-६८-१४६ (३०९७)
वैशंपायन उवाच। १-६८-१४७क्ष् (३२९)
पुरा नाम च तस्यासीद्वसुषेण इति क्षितौ ।
ततो वैकर्तनः कर्णः कर्मणा तेन सोऽभवत् ॥ १-६८-१४७ (३०९८)

आमुक्तकवचो वीरो यस्तु जज्ञे महायशाः ।
स कर्ण इति विख्यातः पृथायाः प्रथमः सुतः ॥ १-६८-१४८ (३०९९)
स तु सूतकुले वीरो ववृधे राजसत्तम ।
कर्णं नरवरश्रेष्ठं सर्वशस्त्रभृतां वरम् ॥ १-६८-१४९ (३१००)
दुर्योधनस्य सचिवं मित्रं शत्रुविनाशनम् ।
दिवाकरस्य तं विद्धि राजन्नंशमनुत्तमम् ॥ १-६८-१५० (३१०१)
यस्तु नारायणो नाम देवदेवः सनातनः ।
तस्यांशो मानुषेष्वासीद्वासुदेवः प्रतापवान् ॥ १-६८-१५१ (३१०२)
शेषस्यांशश्च नागस्य बलदेवो महाबलः ।
सनत्कुमारं प्रद्युम्नं विद्धि राजन्महौजसम् ॥ १-६८-१५२ (३१०३)
एवमन्ये मनुष्येन्द्रा बहवोंशा दिवौकसाम् ।
जज्ञिरे वसुदेवस्य कुले कुलविवर्धनाः ॥ १-६८-१५३ (३१०४)
गणस्त्वप्सरसां यो वै मया राजन्प्रकीर्तितः ।
तस्य भागः क्षितौ जज्ञे नियोगाद्वासवस्य ह ॥ १-६८-१५४ (३१०५)
तानि षोडशदेवीनां सहस्राणि नराधिप ।
बभूवुर्मानुषे लोके वासुदेवपरिग्रहः ॥ १-६८-१५५ (३१०६)
श्रियस्तु भागः संजज्ञे रत्यर्थं पृथिवीतले ।
श्भीष्मकस्य कुले साध्वी रुक्मिणी नाम नामतः ॥ १-६८-१५६ (३१०७)
द्रौपदी त्वथ संजज्ञे शची भागादनिन्दिता ह
द्रुपदस्य कुले जाता वेदिमध्यादनिन्दिता ॥ १-६८-१५७ (३१०८)
नातिह्रस्वा न महती नीलोत्पलसुगन्धिनी ।
पद्मायताक्षी सुश्रोणी स्वसिताञ्चितमूर्धजा ॥ १-६८-१५८ (३१०९)
सर्वलक्षणसंपन्ना वैदूर्यमणिसंनिभा ।
पञ्चानां पुरुषेन्द्राणां चित्तप्रमथनी रहः ॥ १-६८-१५९ (३११०)
सिद्धिर्धृतिश्च ये देव्यौ पञ्चानां मातरौ तु ते ।
कुन्ती माद्री च जज्ञाते मतिस्तु कुबलात्मजा ॥ १-६८-१६० (३१११)
इति देवासुराणां ते गन्धर्वाप्सरसां तथा ।
अंशावतरणं राजन्राक्षसानां च कीर्तितम् ॥ १-६८-१६१ (३११२)
ये पृथिव्यां समुद्भूता राजानो युद्धदुर्मदाः ।
महात्मानो यदूनां च ये जाता विपुले कुले ॥ १-६८-१६२ (३११३)
ब्राह्मणाः क्षत्रिया वैश्या मया ते परिकीर्तिताः ।
धन्यं यशस्यं पुत्रीयमायुष्यं विजयावहम् ॥ १-६८-१६३ (३११४)
इदमंशावतरणं श्रोतव्यमनसूयता ।
अंशावतरणं श्रुत्वा देवगन्धर्वरक्षसाम् ॥ १-६८-१६४ (३११५)
प्रभवाप्ययवित्प्राज्ञो न कृच्छ्रेष्ववसीदति ॥ ॥ १-६८-१६५ (३११६)

इति श्रीमन्महाभारते आदिपर्वणि संभवपर्वणि
अष्टषष्टितमोऽध्यायः ॥ ६८ ॥
Mahabharata - Adi Parva - Chapter Footnotes

कुण्डलितोयं पाठः क्वचिन्न दृश्यते ।

---

अध्यय०६९
॥ श्रीः ॥
१.६९. अध्यायः ६९

Mahabharata - Adi Parva - Chapter Topics
कुरुवंशकथनम् ॥ १ ॥
संक्षेपेण ययात्युपाख्यानम् ॥ २ ॥

Mahabharata - Adi Parva - Chapter Text

१-६९-० (३११७)
जनमेजय उवाच। १-६९-०क्ष् (३३०)
त्वत्तः श्रुतमिदं ब्रह्मन्देवदानवरक्षसाम् ।
अंशावतरणं सम्यग्गन्धर्वाप्सरसां तथा ॥ १-६९-१ (३११८)
इमं तु भूय इच्छामि कुरूणां वंशमादितः ।
कथ्यमानं त्वया विप्र विप्रर्षिगणसन्निधौ ॥ १-६९-२ (३११९)
वैशंपायन उवाच। १-६९-३क्ष् (३३१)
धर्मार्थकामसहितं राजर्षीणां प्रकीर्तितम् ।
पवित्रं कीर्त्यमानं मे निबोधेदं मनीषिणाम् ॥ १-६९-३ (३१२०)
प्रजापतेस्तु दक्षस्य मनोर्वैवस्वतस्य च ।
भरतस्य कुरोः पूरोराजमीढस्य चानघ ॥ १-६९-४ (३१२१)
यादवानामिमं वंशं कौरवाणां च सर्वशः ।
तथैव भरतानां च पुण्यं स्वस्त्ययनं महत् ॥ १-६९-५ (३१२२)
धन्यं यशस्यमायुष्यं कीर्तयिष्यामि तेऽनघ ।
तेजोभिरुदिताः सर्वे महर्षिसमतेजसः ॥ १-६९-६ (३१२३)
दश प्राचेतसः पुत्राः सन्तः पुण्यजनाः स्मृताः ।
मुखजेनाग्निना यैस्ते पूर्वं दग्धा महौजसः ॥ १-६९-७ (३१२४)
तेभ्यः प्राचेतसो जज्ञे दक्षो दक्षादिमाः प्रजाः ।
संभूताः पुरुषव्याघ्र स हि लोकपितामहः ॥ १-६९-८ (३१२५)
वीरिण्या सह सङ्गम्य दक्षः प्राचेतसो मुनिः ।
आत्मतुल्यानजनयत्सहस्रं संशितव्रतान् ॥ १-६९-९ (३१२६)

सहस्रसङ्ख्यानसंभूतान्दक्षपुत्रांश्च नारदः ।
मोक्षमध्यापयामास साङ्ख्यज्ञानमनुत्तमम् ॥ १-६९-१० (३१२७)
ग्नाशार्थं योजयामास दिगन्तज्ञानकर्मसु'।
ततः पञ्चाशतं कन्या पुत्रिका अभिसन्दधे ।
प्रजापतिः प्रजा दक्षः सिसृक्षुर्जनमेजय ॥ १-६९-११ (३१२८)
ददौ दश स धर्माय कश्यपाय त्रयोदश ।
कालस्य नयने युक्ताः सप्तविंशतिमिन्दवे ॥ १-६९-१२ (३१२९)
त्रयोदशानां पत्नीनां या तु दाक्षायणी वरा ।
मारीचः कश्यपस्त्वस्यामादित्यान्समजीजनत् ॥ १-६९-१३ (३१३०)
इन्द्रादीन्वीर्यसंपन्नान्विवस्वन्तमथापि च ।
विवस्वतः सुतो जज्ञे यमो वैवस्वतः प्रभुः ॥ १-६९-१४ (३१३१)
ग्मार्ताण्डस्य यमी चापि सुता राजन्नजायत'।
मार्तण्डस्य मनुर्धीमानजायत सुतः प्रभुः ॥ १-६९-१५ (३१३२)
धर्मात्मा स मनुर्धीमान्यत्र वंशः प्रतिष्ठितः ।
मनोर्वंशो मानवानां ततोऽयं प्रथितोऽभवत् ॥ १-६९-१६ (३१३३)
ब्रह्मक्षत्रादयस्तस्मान्मनोर्जातास्तु मानवाः ।
ततोऽभवन्महाराज ब्रह्म क्षत्रेण सङ्गतम् ॥ १-६९-१७ (३१३४)
ब्राह्मणा मानवास्तेषां साङ्गं वेदमदारयन् ।
वेनं धृष्णुं नरिष्यन्तं नाभागेक्ष्वाकुमेव च ॥ १-६९-१८ (३१३५)
कारूषमथ शर्यातिं तथा चैवाष्टमीमिलाम् ।
पृष्टध्रं नवमं प्राहुः क्षत्रधर्मपरायणम् ॥ १-६९-१९ (३१३६)
नाभागारिष्टदशमान्मनोः पुत्रान्प्रचक्षते ।
पञ्चाशत्तु मनोः पुत्रास्तथैवान्येऽभवन्क्षितौ ॥ १-६९-२० (३१३७)
अन्योन्यभेदात्ते सर्वे विनेशुरिति नः श्रुतम् ।
पुरूरवास्ततो विद्वानिलायां समपद्यत ॥ १-६९-२१ (३१३८)
सा वै तस्याभवन्माता पिता चैवेति नः श्रुतम् ।
त्रयोदश समुद्रस्य द्वीपानश्नन्पुरूरवाः ॥ १-६९-२२ (३१३९)
अमानुषैर्वृतः सत्वैर्मानुषः सन्महायशाः ।
विप्रैः स विग्रहं चक्रे वीर्योन्मत्तः पुरूरवाः ॥ १-६९-२३ (३१४०)
जहार च स विप्राणां रत्नान्युत्क्रोशतामपि ।
सनत्कुमारस्तं राजन्ब्रह्मलोकादुपेत्य ह ॥ १-६९-२४ (३१४१)
अनुदर्शं ततश्चक्रे प्रत्यगृह्णान्न चाप्यसौ ।
ततो महर्षिभिः क्रुद्धैः सद्यः शप्तो व्यनश्यत ॥ १-६९-२५ (३१४२)
लोभान्वितो बलमदान्नष्टसंज्ञो नराधिपः ।
स हि गन्धर्वलोकस्थानुर्वश्या सहितो विराट् ॥ १-६९-२६ (३१४३)
आनिनाय क्रियार्थेऽग्नीन्यथावद्विहितांस्त्रिधा ।

षट् सुता जज्ञिरे चैलादायुर्धीमानमावसुः ॥ १-६९-२७ (३१४४)
दृढायुश्च वनायुश्च शतायुश्चोर्वशीसुताः ।
नहुषं वृद्धशर्माणं रजिं गयमनेनसम् ॥ १-६९-२८ (३१४५)
स्वर्भानवी सुतानेतानायोः पुत्रान्प्रचक्षते ।
आयुषो नहुषः पुत्रो धीमान्सत्यपराक्रमः ॥ १-६९-२९ (३१४६)
राज्यं शशास सुमहद्धर्मेण पृथिवीपते ।
पितॄन्देवानृषीन्विप्रान्गन्धर्वोरगराक्षसान् ॥ १-६९-३० (३१४७)
नहुषः पालयामास ब्रह्मक्षत्रमथो विशः ।
स हत्वा दस्युसंघातानृषीन्करमदापयत् ॥ १-६९-३१ (३१४८)
पशुवच्चैव तान्पृष्ठे वाहयामास वीर्यवान् ।
कारयामास चेन्द्रत्वमभिभूय दिवौकसः ॥ १-६९-३२ (३१४९)
तेजसा तपसा चैव विक्रमेणौजसा तथा ।
गविश्लिष्टो नहुषः शप्तः सद्यो ह्यजगरोऽभवत्'।
यतिं ययातिं संयातिमायातिमयतिं ध्रुवम् ॥ १-६९-३३ (३१५०)
नहुषो जनयामास षट् सुतान्प्रियवादिनः ।
यतिस्तु योगमास्थाय ब्रह्मीभूतोऽभवन्मुनिः ॥ १-६९-३४ (३१५१)
ययातिर्नाहुषः सम्राडासीत्सत्यपराक्रमः ।
स पालयामास महीमीजे च बहुभिर्मखैः ॥ १-६९-३५ (३१५२)
अतिभक्त्या पितॄनर्चन्देवांश्च प्रयतः सदा ।
अन्वगृह्णात्प्रजाः सर्वा ययातिरपराजितः ॥ १-६९-३६ (३१५३)
तस्य पुत्रा महेष्वासाः सर्वैः समुदिता गुणैः ।
देवयान्यां महाराज शर्मिष्ठायां च जज्ञिरे ॥ १-६९-३७ (३१५४)
देवयान्यामजायेतां यदुस्तुर्वसुरेव च ।
द्रुह्युश्चानुश्च पूरुश्च शर्मिष्ठायां च जज्ञिरे ॥ १-६९-३८ (३१५५)
स शाश्वतीः समा राजन्प्रजा धर्मेण पालयन् ।
जरामार्च्छन्महाघोरां नाहुषो रूपनाशिनीम् ॥ १-६९-३९ (३१५६)
जराऽभिभूतः पुत्रान्स राजा वचनमब्रवीत् ।
यदुं पूरुं तुर्वसुं च द्रुह्युं चानुं च भारत ॥ १-६९-४० (३१५७)
यौवनेन चरन्कामान्युवा युवतिभिः सह ।
बिहर्तुमहमिच्छामि साह्यं कुरुत पुत्रकाः ॥ १-६९-४१ (३१५८)
तं पुत्रो दैवयानेयः पूर्वजो वाक्यमब्रवीत् ।
किं कार्यं भवतः कार्यमस्माकं यौवनेन ते ॥ १-६९-४२ (३१५९)
ययातिरब्रवीत्तं वै जरा मे प्रतिगृह्यताम् ।
यौवनेन त्वदीयेन चरेयं विषयानहम् ॥ १-६९-४३ (३१६०)
यजतो दीर्घसत्रैर्मे शापाच्चोशनसो मुनेः ।
कामार्थः परिहीणोऽयं तप्येयं तेन पुत्रकाः ॥ १-६९-४४ (३१६१)

मामकेन शरीरेण राज्यमेकः प्रशास्तु वः ।
अहं तन्वाऽभिनवया युवा काममवाप्नुयाम् ॥१-६९-४५ (३१६२)
वैशंपायन उवाच।१-६९-४६क्ष् (३३२)
ते न तस्य प्रत्यगृह्णन्यदुप्रभृतयो जराम् ।
तमब्रवीत्ततः पूरुः कनीयान्सत्यविक्रमः ॥१-६९-४६ (३१६३)
राजंश्चराभिनवया तन्वा यौवनगोचरः ।
अहं जरां समादाय राज्ये स्थास्यामि तेऽज्ञया ॥१-६९-४७ (३१६४)
एवमुक्तः स राजर्षिस्तपोवीर्यसमाश्रयात् ।
संचारयामास जरां तदा पुत्रे महात्मनि ॥१-६९-४८ (३१६५)
पौरवेणाथ वयसा राजा यौवनमास्थितः ।
यायातेनापि वयसा राज्यं पूरुरकारयत् ॥१-६९-४९ (३१६६)
ततो वर्षसहस्राणि ययातिरपराजितः ।
स्थितः स नृपशार्दूलः शार्दूलसमविक्रमः ॥१-६९-५० (३१६७)
ययातिरपि पत्नीभ्यां दीर्घकालं विहृत्य च ।
विश्वाच्या सहितो रेमे पुनश्चैत्ररथे वने ॥१-६९-५१ (३१६८)
नाध्यगच्छत्तदा तृप्तिं कामानां स महायशाः ।
अवेत्य मनसा राजन्निमां गाथां तदा जगौ ॥१-६९-५२ (३१६९)
न जातु कामः कामानामुपभोगेन शाम्यति ।
हविषा कृष्णवर्त्मेव भूय एवाभिवर्धते ॥१-६९-५३ (३१७०)
यत्पृथिव्यां व्रीहियवं हिरण्यं पशवः स्त्रियः ।
नालमेकस्य तत्सर्वमिति मत्वा शमं व्रजेत् ॥१-६९-५४ (३१७१)
यदा न कुरुते पापं सर्वभूतेषु कर्हिचित् ।
कर्मणा मनसा वाचा ब्रह्म संपद्यते तदा ॥१-६९-५५ (३१७२)
न बिभेति यदा चायं यदा चास्मान्न बिभ्यति ।
यदा नेच्छति न द्वेष्टि ब्रह्म संपद्यते तदा ॥१-६९-५६ (३१७३)
इत्यवेक्ष्य महाप्राज्ञः कामानां फल्गुतां नृप ।
समाधाय मनो बुद्ध्या प्रत्यगृह्णाज्जरां सुतात् ॥१-६९-५७ (३१७४)
ग्ततो वर्षसहस्रान्ते ययातिरपराजितः।'
दत्वा च यौवनं राजा पूरुं राज्येऽभिषिच्य च ।
अतृप्त एव कामानां पूरुं पुत्रमुवाच ह ॥ १-६९-५८ (३१७५)
त्वया दायादवानस्मि त्वं मे वंशकरः सुतः ।
पौरवो वंश इति ते ख्यातिं लोके गमिष्यति ॥१-६९-५९ (३१७६)
वैशंपायन उवाच।१-६९-६०क्ष् (३३३)
ततः स नृपशार्दूल पूरुं राज्येऽभिषिच्य च ।
ततः सुचरितं कृत्वा भृगुतुङ्गे महातपाः ॥१-६९-६० (३१७७)
कालेन महता पश्चात्कालधर्ममुपेयिवान् ।

कारयित्वा त्वनशनं सदारः स्वर्गमाप्तवान् ॥ ॥१-६९-६१ (३१७८)

इति श्रीमन्महाभारते आदिपर्वणि संभवपर्वणि
एकोनसप्ततितमोऽध्यायः ॥ ६९ ॥

Mahabharata - Adi Parva - Chapter Footnotes

१-६९-७ प्राचेतसः प्राचे देशाय यज्ञक्रियया अतति सततं
गच्छतीति प्राचेताः तस्य प्राचेतसः प्राचीनबर्हिषः ।पुण्यजनाः
पुण्योत्पादकास्तपः शीला इत्यर्थः। यैस्ते महौजसो महाप्रभावा
वृक्षौषधयो दग्धाः ॥
१-६९-९ वीरिण्या वीरणपुत्र्या ॥
१-६९-१० मोक्षं मोक्षहेतुं ।सांख्यज्ञानं विवेकजं विज्ञानम् ॥
१-६९-१५ यमी यमुना ॥
१-६९-२१ अन्योन्यभेदात्परस्परवैरात् ॥
१-६९-२२ मातैव लब्धपुंभावा राज्य दानात्पिताप्यभूत् ।मुख्यः पिता
तु बुध एव ॥
१-६९-२५ अनुदश दर्शो दर्शनं स पश्चाद्यस्य स
श्रुतियुक्त्युपदेशोऽनुदर्शस्तं तत स्तदुपदेशमित्यर्थः ॥
१-६९-२६ विराड्विराजमानः ॥
१-६९-२७ त्रिधा गार्हपत्यदक्षिणाग्न्याहवनीयभेदेन ।आयुःशब्दः
उक रान्तः सान्तश्च ॥
१-६९-४२ कार्यं प्रयोजनम् ।कार्यं कर्तव्यम् ॥
१-६९-४४ व्रतनिर्बन्धाच्छुक्रशापाच्च कामरूपः पुरुषार्थो हीनः ॥
१-६९-४७ तेज्ञया तव आज्ञया ।पूर्वरूपमाकारलोपो वार्षः ॥
१-६९-५२ कामामां कामभोगेन ।अवेत्य कामसेवया तृप्त्यभावं ज्ञात्वा ॥
१-६९-५३ हविषा समिदाज्यादिना ॥
१-६९-५४ एकस्य कामिनः सर्वं नालमपर्याप्तम् ।शमं कामशान्तिम् ॥
१-६९-५९ दायादवान् पुत्रवान् ॥
१-६९-६१ कारयित्वा कृत्वा ॥
एकोनसप्ततितमोऽध्यायः ॥
६९ ॥

---

अध्यय०७०
॥ श्रीः ॥
१.७०. अध्यायः ७०

Mahabharata - Adi Parva - Chapter Topics

ययात्युपाख्यानारम्भः ॥ १ ॥
सञ्जीवनीविद्यालाभार्थं देवैः शुक्रसमीपे कचस्य प्रेषणम् ॥ २ ॥
कचस्य शिष्यत्वेनाङ्गीकारः ॥ ३ ॥
दैत्यैर्हतस्य कचस्योज्जीवनम् ॥ ४ ॥
दैत्यैर्भस्मीकृत्य तन्मिश्रितसुराद्वारा स्वकुक्षिं प्रापितस्य कचस्य शुक्रेण विद्यादानपूर्वकमुज्जीवनम् ॥ ५ ॥
शुक्रेण सुरापाननिषेधः ॥ ६ ॥

Mahabharata - Adi Parva - Chapter Text

१-७०-० (३१७९)
जनमेजय उवाच। १-७०-०क्ष् (३३४)
ययातिः पूर्वजोऽस्माकं दशमो यः प्रजापतेः ।
कथं स शुक्रतनयां लेभे परमदुर्लभाम् ॥ १-७०-१ (३१८०)
एतदिच्छाम्यहं श्रोतुं विस्तरेण तपोधन ।
आनुपूर्व्या च मे शंस राज्ञो वंशकरान्पृथक् ॥ १-७०-२ (३१८१)
वैशंपायन उवाच। १-७०-३क्ष् (३३५)
ययातिरासीन्नृपतिर्देवराजसमद्युतिः ।
तं शुक्रवृषपर्वाणौ वव्राते वै यथा पुरा ॥ १-७०-३ (३१८२)
तत्तेऽहं संप्रवक्ष्यामि पृच्छते जनमेजय ।
देवयान्याश्च संयोगं ययातेर्नाहुषस्य च ॥ १-७०-४ (३१८३)
सुराणामसुराणां च समजायत वै मिथः ।
ऐश्वर्यं प्रति संघर्षस्त्रैलोक्ये सचराचरे ॥ १-७०-५ (३१८४)
जिगीषया ततो देवा वव्रिरेऽङ्गिरसं मुनिम् ।
पौरोहित्येन याज्यार्थे काव्यं तूशनसं परे ॥ १-७०-६ (३१८५)
ब्राह्मणौ तावुभौ नित्यमन्योन्यस्पर्धिनौ भृशम् ।
तत्र देवा निजघ्नुर्यान्दानवान्युधि संगतान् ॥ १-७०-७ (३१८६)
तान्पुनर्जीवयामास काव्यो विद्याबलाश्रयात् ।
ततस्ते पुनरुत्थाय योधयांचक्रिरे सुरान् ॥ १-७०-८ (३१८७)
असुरास्तु निजघ्नुर्यान्सुरान्समरमूर्धनि ।
न तान्सञ्जीवयामास बृहस्पतिरुदारधीः ॥ १-७०-९ (३१८८)
न हि वेद स तां विद्यां यां काव्योवेत्ति वीर्यवान् ।
सञ्जीविनीं ततो देवा विषादमगमन्परम् ॥ १-७०-१० (३१८९)
ते तु देवा भयोद्विग्नाः काव्यादुशनसस्तदा ।
ऊचुः कचमुपागम्य ज्येष्ठं पुत्रं बृहस्पतेः ॥ १-७०-११ (३१९०)
भजमानान्भजस्वास्मान्कुरु नः साह्यमुत्तमम् ।

या सा विद्या निवसति ब्राह्मणेऽमिततेजसि ॥ १-७०-१२ (३१९१)
शुक्रे तामाहर क्षिप्रं भागभाङ्नो भविष्यसि ।
वृषपर्वसमीपे हि शक्यो द्रष्टुं त्वया द्विजः ॥ १-७०-१३ (३१९२)
रक्षते दानवांस्तत्र न स रक्षत्यदानवान् ।
तमाराधयितुं शक्तो भवान्पूर्ववयाः कविम् ॥ १-७०-१४ (३१९३)
देवयानीं च दयितां सुतां तस्य महात्मनः ।
त्वमाराधयितुं शक्तो नान्यः कश्चन विद्यते ॥ १-७०-१५ (३१९४)
शीलदाक्षिण्यमाधुर्यैराचारेण दमेन च ।
देवयान्यां हि तुष्टायां विद्यां तां प्राप्स्यसि ध्रुवम् ॥ १-७०-१६ (३१९५)
वैशंपायन उवाच। १-७०-१७क्ष् (३३६)
तथेत्युक्त्वा ततः प्रायाद्बृहस्पतिसुतः कचः ।
तदाऽभिपूजितो देवैः समीपे वृषपर्वणः ॥ १-७०-१७ (३१९६)
स गत्वा त्वरितो राजन्देवैः संप्रेषितः कचः ।
असुरेन्द्रपुरे शुक्रं दृष्ट्वा वाक्यमुवाच ह ॥ १-७०-१८ (३१९७)
ऋषेरङ्गिरसः पौत्रं पुत्रं साक्षाद्बृहस्पतेः ।
नाम्ना कच इति ख्यातं शिष्यं गृह्णात् मां भवान् ॥ १-७०-१९ (३१९८)
ब्रह्मचर्यं चरिष्यामि त्वय्यहं परमं गुरौ ।
अनुमन्यस्व मां ब्रह्मन्सहस्रं परिवत्सरान् ॥ १-७०-२० (३१९९)
शुक्र उवाच। १-७०-२१क्ष् (३३७)
कच सुस्वागतं तेऽस्तु प्रतिगृह्णामि ते वचः ।
अर्चयिष्येऽहमर्च्यं त्वामर्चितोऽस्तु बृहस्पतिः ॥ १-७०-२१ (३२००)
वैशंपायन उवाच। १-७०-२२क्ष् (३३८)
कचस्तु तं तथेत्युक्त्वा प्रतिजग्राह तद्व्रतम् ।
आदिष्टं कविपुत्रेण शुक्रेणोशनसा स्वयम् ॥ १-७०-२२ (३२०१)
व्रतस्य प्राप्तकालं स यथोक्तं प्रत्यगृह्णत ।
आराधयन्नुपाध्यायं देवयानीं च भारत ॥ १-७०-२३ (३२०२)
नित्यमाराधयिष्यंस्तां युवा यौवनगां मुनिः ।
गायन्नृत्यन्वादयंश्च देवयानीमतोषयत् ॥ १-७०-२४ (३२०३)
स शीलयन्देवयानीं कन्यां संप्राप्तयौवनाम् ।
पुष्पैः फलैः प्रेषणैश्च तोषयामास भारत ॥ १-७०-२५ (३२०४)
देवयान्यपि तं विप्रं नियमव्रतधारिणम् ।
गायन्ती च ललन्ती च रहः पर्यचरत्तथा ॥ १-७०-२६ (३२०५)
ग्गायन्तं चैव शुल्कं च दातारं प्रियवादिनम् ।
नार्यो नरं कामयन्ते रूपिणं स्रग्विणं तथा ॥' १-७०-२७ (३२०६)
पञ्चवर्षशतान्येवं कचस्य चरतो व्रतम् ।
तत्रातीयुरथो बुद्ध्वा दानवास्तं ततः कचम् ॥ १-७०-२८ (३२०७)

गा रक्षन्तं वने दृष्ट्वा रहस्येकममर्षिताः ।
जघ्नुर्बृहस्पतेर्द्वेषाद्विद्यारक्षार्थमेव च ॥ १-७०-२९ (३२०८)
हत्वा शालावृकेभ्यश्च प्रायच्छँल्लवशः कृतम् ।
ततो गावो निवृत्तास्ता अगोपाः स्वं निवेशनम् ॥ १-७०-३० (३२०९)
सा दृष्ट्वा रहिता गाश्च कचेनाभ्यागता वनात् ।
उवाच वचनं काले देवयान्यथ भारत ॥ १-७०-३१ (३२१०)
देवयान्युवाच। १-७०-३२क्ष् (३३९)
आहुतं चाग्निहोत्रं ते सूर्यश्चास्तं गतः प्रभो ।
अगोपाश्चागता गावः कचस्तात न दृश्यते ॥ १-७०-३२ (३२११)
व्यक्तं हतो मृतो वापि कचस्तात भविष्यति ।
तं विना न च जीवेयमिति सत्यं ब्रवीमि ते ॥ १-७०-३३ (३२१२)
शुक्र उवाच। १-७०-३४क्ष् (३४०)
अयमेहीति संशब्द्य मृतं संजीवयाम्यहम्। १-७०-३४ (३२१३)
वैशंपायन उवाच ।
ततः संजीविनीं विद्यां प्रयुज्य कचमाह्वयत् ॥ १-७०-३४क्ष् (३४१)
भित्त्वा भित्त्वा शरीराणि वृकाणां स विनिर्गतः ।
आहूतः प्रादुरभवत्कचो हृष्टोऽथ विद्यया ॥ १-७०-३५ (३२१४)
कस्माच्चिरायितोऽसीति पृष्टस्तामाह भार्गवीम्। १-७०-३६ (३२१५)
कच उवाच ।
समिधश्च कुशादीनि काष्ठभारं च भामिनि ॥ १-७०-३६क्ष् (३४२)
गृहीत्वा श्रमभारार्तो वटवृक्षं समाश्रितः ।
गावश्च सहिताः सर्वा वृक्षच्छायामुपाश्रिताः ॥ १-७०-३७ (३२१६)
असुरास्तत्र मां दृष्ट्वा कस्त्वमित्यभ्यचोदयन् ।
बृहस्पतिसुतश्चाहं कच इत्यभिविश्रुतः ॥ १-७०-३८ (३२१७)
इत्युक्तमात्रे मां हत्वा पेषीकृत्वा तु दानवाः ।
दत्त्वा शालावृकेभ्यस्तु सुखं जग्मुः स्वमालयं ॥ १-७०-३९ (३२१८)
आहूतो विद्यया भद्रे भार्गवेण महात्मना ।
त्वत्समीपमिहायातः कथंचित्प्राप्तजीवितः ॥ १-७०-४० (३२१९)
हतोऽहमिति चाचख्यौ पृष्टो ब्राह्मणकन्यया ।
स पुनर्देवयान्योक्तः पुष्पाण्याहर मे द्विज ॥ १-७०-४१ (३२२०)
वनं ययौ कचो विप्रो ददृशुर्दानवाश्च तम् ।
पुनस्तं पेषयित्वा तु समुद्राम्भस्यमिश्रयन् ॥ १-७०-४२ (३२२१)
चिरं गतं पुनः कन्या पित्रे तं संन्यवेदयत् ।
विप्रेण पुनराहूतो विद्यया गुरुदेहजः ।
पुनरावृत्य तद्वृत्तं न्यवेदयत तद्यथा ॥ १-७०-४३ (३२२२)
ततस्तृतीयं हत्वा तं दग्ध्वा कृत्वा च चूर्णशः ।

प्रायच्छन्ब्राह्मणायैव सुरायामसुरास्तथा ॥ १-७०-४४ (३२२३)
ग्अपिबत्सुरया सार्धं कचभस्म भृगूद्वहः ।
सा सायन्तनवेलायामगोपा गाः समागताः ॥ १-७०-४५ (३२२४)
देवयानी शङ्कमाना दृष्ट्वा पितरमब्रवीत्।'
पुष्पाहारः प्रेषणकृत्कचस्तात न दृश्यते ॥ १-७०-४६ (३२२५)
व्यक्तं हतो मृतो वापि कचस्तात भविष्यति ।
तं विना न च जीवेयं कचं सत्यं ब्रवीमि ते ॥ १-७०-४७ (३२२६)
ग्वैशंपायन उवाच। १-७०-४८क्ष् (३४३)
श्रुत्वा पुत्रीवचः काव्यो मन्त्रेणाहूतवान्कचम् ।
ज्ञात्वा बहिष्ठमज्ञात्वा स्वकुक्षिस्थं कचं नृप'॥ १-७०-४८ (३२२७)
शुक्र उवाच। १-७०-४९क्ष् (३४४)
बृहस्पतेः सुतः पुत्रि कचः प्रेतगतिं गतः ।
विद्यया जीवितोऽप्येवं हन्यते करवाम किम् ॥ १-७०-४९ (३२२८)
मैवं शुचो मा रुद देवयानि
न त्वादृशी मर्त्यमनुप्रशोचते ।
यस्यास्तव ब्रह्म च ब्राह्मणाश्च
सेन्द्रा देवा वसवोऽथाश्विनौ च ॥ १-७०-५० (३२२९)
सुरद्विषश्चैव जगच्च सर्व-
मुपस्थाने सन्नमन्ति प्रभावात् ।
अशक्योऽसौ जीवयितुं द्विजातिः
संजीवितो वध्यते चैव भूयः ॥ १-७०-५१ (३२३०)
देवयान्युवाच। १-७०-५२क्ष् (३४५)
यस्याङ्गिरा वृद्धतमः पितामहो
बृहस्पतिश्चापि पिता तपोनिधिः ।
ऋषेः पुत्रं तमथो वापि पौत्रं
कथं न शोचेयमहं न रुद्याम् ॥ १-७०-५२ (३२३१)
स ब्रह्मचारी च तपोधनश्च
सदोत्थितः कर्मसु चैव दक्षः ।
कचस्य मार्गं प्रतिपत्स्ये न भोक्ष्ये
प्रियो हि मे तात कचोऽभिरूपः ॥ १-७०-५३ (३२३२)
शुक्र उवाच। १-७०-५४क्ष् (३४६)
असंशयं मामसुरा द्विषन्ति
ये शिष्यं मेऽनागसं सूदयन्ति ।
अब्राह्मणं कर्तुमिच्छित रौद्रा-
स्ते मां यथा व्यभिचरन्ति नित्यम् ।
अप्यस्य पापस्य भवेदिहान्तः

कं ब्रह्महत्या न दहेदपीन्द्रम् ॥ १-७०-५४ (३२३३)
ग्वैशंपायन उवाच। १-७०-५५क्ष् (३४७)
संचोदितो देवयान्या महर्षिः पुनराह्वयत् ।
संरम्भेणैव काव्यो हि बृहस्पतिसुतं कचम् ॥ १-७०-५५ (३२३४)
कचोऽपि राजन्स महानुभावो
विद्याबलाल्लब्धमतिर्महात्मा।'
गुरोर्हि भीतो विद्यया चोपहूतः ।
शनैर्वाक्यं जठरे व्याजहार ॥ १-७०-५६ (३२३५)
ग्प्रसीद भगवन्मह्यं कचोऽहमभिवादये ।
यथा बहुमतः पुत्रस्तथा मन्यतु मां भवान् ॥' १-७०-५७ (३२३६)
वैशंपायन उवाच। १-७०-५८क्ष् (३४८)
तमब्रवीत्केन पथोपनीत-
स्त्वं चोदरे तिष्ठसि ब्रूहि विप्र ।
अस्मिन्मुहूर्ते ह्यसुरान्विनाश्य
गच्छामि देवानहमद्य विप्र ॥ १-७०-५८ (३२३७)
कच उवाच। १-७०-५९क्ष् (३४९)
तव प्रसादान्न जहाति मां स्मृतिः
स्मरामि सर्वं यच्च यथा च वृत्तम् ।
नत्वेवं स्यात्तपसः संक्षयो मे
ततः क्लेशं घोरमिमं सहामि ॥ १-७०-५९ (३२३८)
असुरैः सुरायां भवतोऽस्मि दत्तो
हत्वा दग्ध्वा चूर्णयित्वा च काव्य ।
ब्राह्मीं मायां चासुरीं विप्र मायां
त्वयि स्थिते कथमेवातिवर्तेत् ॥ १-७०-६० (३२३९)
शुक्र उवाच। १-७०-६१क्ष् (३५०)
किं ते प्रियं करवाण्यद्य वत्से
वधेन मे जीवितं स्यात्कचस्य ।
नान्यत्र कुक्षेर्मम भेदनेन
दृश्येत्कचो मद्गतो देवयानि ॥ १-७०-६१ (३२४०)
देवयान्युवाच। १-७०-६२क्ष् (३५१)
द्वौ मां शोकावग्निकल्पौ दहेतां
कचस्य नाशस्तव चैवोपघातः ।
कचस्य नाशे मम शर्म नास्ति
तवोपघाते जीवितुं नास्मि शक्ता ॥ १-७०-६२ (३२४१)
शुक्र उवाच। १-७०-६३क्ष् (३५२)
संसिद्धरूपोऽसि बृहस्पतेः सुत

यत्त्वां भक्तं भजते देवयानी ।
विद्यामिमां प्राप्नुहि जीवनीं त्वं
न चेदिन्द्रः कचरूपी त्वमद्य ॥ १-७०-६३ (३२४२)
न निवर्तेत्पुनर्जीवन्कश्चिदन्यो ममोदरात् ।
ब्राह्मणं वर्जयित्वैकं तस्माद्विद्यामवाप्नुहि ॥१-७०-६४ (३२४३)
पुत्रो भूत्वा भावय भावितो मा-
मस्मद्देहादुपनिष्क्रम्य तात ।
समीक्षेथा धर्मवतीमवेक्षां
गुरोः सकाशात्प्राप्य विद्यां सविद्यः ॥ १-७०-६५ (३२४४)
वैशंपायन उवाच।१-७०-६६क्ष् (३५३)
गुरोः सकाशात्समवाप्य विद्यां
भित्त्वा कुक्षिं निर्विचक्राम विप्रः ।
कचोऽभिरूपस्तत्क्षणाद्ब्राह्मणस्य
शुक्लात्यये पौर्णमास्यामिवेन्दुः ॥ १-७०-६६ (३२४५)
दृष्ट्वा च तं पतितं ब्रह्मराशि-
मुत्थापयामास मृतं कचोऽपि ।
विद्यां सिद्धां तामवाप्याभिवाद्य
ततः कचस्तं गुरुमित्युवाच ॥ १-७०-६७ (३२४६)
यः श्रोत्रयोरमृतं सन्निषिञ्चे-
द्विद्यामविद्यस्य यथा त्वमार्यः ।
तं मन्येऽहं पितरं मातरं च
तस्मै न द्रुह्येत्कृतमस्य जानन् ॥ १-७०-६८ (३२४७)
ऋतस्य दातारमनुत्तमस्य
निधिं निधीनामपि लब्धविद्याः ।
ये नाद्रियन्ते गुरुमर्चनीयं
पापाँल्लोकांस्ते व्रजन्त्यप्रतिष्ठाः ॥ १-७०-६९ (३२४८)
वैशंपायन उवाच।१-७०-७०क्ष् (३५४)
सुरापानाद्वञ्चनां प्राप्य विद्वा-
न्संज्ञानाशं चैव महातिघोरम् ।
दृष्ट्वा कचं चापि तथाभिरूपं
पीतं तदा सुरया मोहितेन ॥ १-७०-७० (३२४९)
समन्युरुत्थाय महानुभाव-
स्तदोशना विप्रहितं चिकीर्षुः ।
सुरापानं प्रति संजातमन्युः
काव्यः स्वयं वाक्यमिदं जगाद ॥ १-७०-७१ (३२५०)
यो ब्राह्मणोऽद्यप्रभृतीह कश्चि-

न्मोहात्सुरां पास्यति मन्दबुद्धिः ।
अपेतधर्मा ब्रह्महा चैव स स्या-
दस्मिंल्लोके गर्हितः स्यात्परे च ॥ १-७०-७२ (३२५१)
मया चैतां विप्रधर्मोक्तिसीमां
मर्यादां वै स्थापितां सर्वलोके ।
सन्तो विप्राः शुश्रुवांसो गुरूणां
देवा लोकाश्चोपशृण्वन्तु सर्वे ॥ १-७०-७३ (३२५२)
वैशंपायन उवाच। १-७०-७४क्ष् (३५५)
इतीदमुक्त्वा स महानुभाव-
स्तपोनिधीनां निधिरप्रमेयः ।
तान्दानवान्दैवविमूढबुद्धी-
निदं समाहूय वचोऽभ्युवाच ॥ १-७०-७४ (३२५३)
आचक्षे वो दानवा बालिशाः स्थ
सिद्धः कचो वत्स्यति मत्सकाशे ।
सञ्जीविनीं प्राप्य विद्यां महात्मा
तुल्यप्रभावो ब्राह्मणो ब्रह्मभूतः ॥ १-७०-७५ (३२५४)
ग्योऽकार्षीद्दुष्करं कर्म देवानां कारणात्कचः ।
न तत्किर्तिर्जरां गच्छेद्याज्ञीयश्च भविष्यति ॥ १-७०-७६ (३२५५)
वैशंपायन उवाच।' १-७०-७७क्ष् (३५६)
एतावदुक्त्वा वचनं विरराम स भार्गवः ।
दानवा विस्मयाविष्टाः प्रययुः स्वं निवेशनम् ॥ १-७०-७७ (३२५६)
गुरोरुष्य सकाशे तु दश वर्षशतानि सः ।
अनुज्ञातः कचो गन्तुमियेष त्रिदशालयम् ॥ ॥ १-७०-७८ (३२५७)

इति श्रीमन्महाभारते आदिपर्वणि संभवपर्वणि सप्ततितमोऽध्यायः ॥ ७० ॥

Mahabharata - Adi Parva - Chapter Footnotes

१-७०-३ विप्रदानवौ वव्राते जामातृत्वेनेति शेषः ॥
१-७०-२५ प्रेषणैः प्रेष्यत्वादिभिः ॥
१-७०-३१ उवाच शुक्रं प्रति ॥
१-७०-३९ पेषः पिष्टम् । पिष्टीकृत्येत्यर्थः ॥
१-७०-४३ गुरुदेहजः कचः । आवृत्य आगत्य। तद्वृत्तमसुरचेष्टितम् ॥
१-७०-४४ ब्राह्मणाय शुक्राय ॥
१-७०-५० मर्त्यं त्वं तु मत्प्रभावादमरकल्पासि । ब्रह्म वेदः तस्य नमनं स्वार्थप्रकाशेन ॥
१-७०-६० चाद्वैवीं मायां । मायात्रयविदि त्वयि सति को देवोऽसुरो

ब्राह्मणो वाऽतिक्रामेदतस्त्वदुदरभेदनं मम दुःसाध्यमेवेति भावः ॥
१-७०-६५ भावय जीवय भावितो मया जीवितः । कृतघ्नो मा भूरिति भावः ॥
१-७०-६६ शुक्लस्याह्नो रवेर्वा अत्यये शुक्लात्यये ॥
१-७०-६९ ऋतस्य वेदस्य । निधीनां विद्यानां निधिमाश्रयम्। प्रतिष्ठा
विद्याफलं तच्छून्या अप्रतिष्ठाः ॥
सप्ततितमोऽध्यायः ॥
७० ॥

---

अध्यय०७१
॥ श्रीः ॥
१.७१. अध्यायः ७१

Mahabharata - Adi Parva - Chapter Topics
स्वपाणिग्रहणार्थं प्रार्थितवत्या देवयान्या कचस्य विवादः ॥ १ ॥
कचदेवयान्योः परस्परशापदानम् ॥ २ ॥

Mahabharata - Adi Parva - Chapter Text

१-७१-० (३२५८)
वैशंपायन उवाच। १-७१-०क्ष् (३५७)
समावृतव्रतं तं तु विसृष्टं गुरुणा कचम् ।
प्रस्थितं त्रिदशावासं देवयान्यब्रवीदिदम् ॥ १-७१-१ (३२५९)
ऋषेरङ्गिरसः पौत्र वृत्तेनाभिजनेन च ।
भ्राजसे विद्यया चैव तपसा च दमेन च ॥ १-७१-२ (३२६०)
ऋषिर्यथाङ्गिरा मान्यः पितुर्मम महायशाः ।
तथा प्रान्यश्च पूज्यश्च मम भूयो बृहस्पतिः ॥ १-७१-३ (३२६१)
एवं ज्ञात्वा विजानीहि यद्ब्रवीमि तपोधन ।
व्रतस्थे नियमोपेते यथा वर्ताम्यहं त्वयि ॥ १-७१-४ (३२६२)
स समावृतविद्यो मां भक्तां भजितुमर्हसि ।
गृहाण पाणिं विधिवन्मम मन्त्रपुरस्कृतम् ॥
कच उवाच। १-७१-५ (३२६३)
पूज्यो मान्यश्च भगवान्यथा तव पिता मम ।
तथा त्वमनवद्याङ्गि पूजनीयतरा मम ॥ १-७१-६ (३२६४)
प्राणेभ्योऽपि प्रियतरा भार्गवस्य महात्मनः ।
त्वं भत्रे धर्मतः पूज्या गुरुपुत्री सदा मम ॥ १-७१-७ (३२६५)
यथा मम गुरुर्नित्यं मान्यः शुक्रः पिता तव ।
देवयानि तथैव त्वं नैवं मां वक्तुमर्हसि ॥ १-७१-८ (३२६६)

देवयान्युवाच। १-७१-९क्ष् (३५८)
गुरुपुत्रस्य पुत्रो वै न त्वं पुत्रश्च मे पितुः ।
तस्मात्पूज्यश्च मान्यश्च ममापि त्वं द्विजोत्तम ॥ १-७१-९ (३२६७)
असुरैर्हन्यमाने च कच त्वयि पुनःपुनः ।
तदाप्रभृति या प्रीतिस्तां त्वमद्य स्मरस्व मे ॥ १-७१-१० (३२६८)
सौहार्दे चानुरागे च वेत्थ मे भक्तिमुत्तमाम् ।
न मामर्हसि धर्मज्ञ त्यक्तुं भक्तामनागसम् ॥ १-७१-११ (३२६९)
कच उवाच। १-७१-१२क्ष् (३५९)
अनियोज्ये नियोक्तुं मां देवयानि न चार्हसि ।
प्रसीद सुभ्रु त्वं मह्यं गुरोर्गुरुतरा शुभे ॥ १-७१-१२ (३२७०)
यत्रोषितं विशालाक्षि त्वया चन्द्रनिभानने ।
तत्राहमुषितो भद्रे कुक्षौ काव्यस्य भामिनि ॥ १-७१-१३ (३२७१)
भगिनी धर्मतो मे त्वं मैवं वोचः सुमध्यमे ।
सुखमस्म्युषितो भद्रे न मन्युर्विद्यते मम ॥ १-७१-१४ (३२७२)
आपृच्छे त्वां गमिष्यामि शिवमाशंस मे पथि ।
अविरोधेन धर्मस्य स्मर्तव्योऽस्मि कथान्तरे ।
अप्रमत्तोत्थिता नित्यमाराधय गुरुं मम ॥ १-७१-१५ (३२७३)
देवयान्युवाच। १-७१-१६क्ष् (३६०)
यदि मां धर्मकामार्थे प्रत्याख्यास्यसि याचितः ।
ततः कच न ते विद्या सिद्धिमेषा गमिष्यति ॥ १-७१-१६ (३२७४)
कच उवाच। १-७१-१७क्ष् (३६१)
गुरुपुत्रीति कृत्वाऽहं प्रत्याचक्षे न दोषतः ।
गुरुणा चाननुज्ञातः काममेवं शपस्व माम् ॥ १-७१-१७ (३२७५)
आर्षं धर्मं ब्रुवाणोऽहं देवयानि यथा त्वया ।
शप्तो ह्यनर्हः शापस्य कामतोऽद्य न धर्मतः ॥ १-७१-१८ (३२७६)
तस्माद्भवत्या यः कामो न तथा स भविष्यति ।
ऋषिपुत्रो न ते कश्चिज्जातु पाणिं ग्रहीष्यति ॥ १-७१-१९ (३२७७)
फलिष्यति न ते विद्या यत्त्वं मामात्थ तत्तथा ।
अध्यापयिष्यामि तु यं तस्य विद्या फलिष्यति ॥ १-७१-२० (३२७८)
वैशंपायन उवाच। १-७१-२१क्ष् (३६२)
एवमुक्त्वा द्विजश्रेष्ठो देवयानीं कचस्तदा ।
त्रिदशेशालयं शीघ्रं जगाम द्विजसत्तमः ॥ १-७१-२१ (३२७९)
तमागतमभिप्रेक्ष्य देवा इन्द्रपुरोगमाः ।
बृहस्पतिं सभाज्येदं कचं वचनमब्रुवन् ॥ १-७१-२२ (३२८०)
देवा ऊचुः। १-७१-२३क्ष् (३६३)
यत्त्वयास्मद्धितं कर्म कृतं वै परमाद्भुतम् ।

न ते यशः प्रणशिता भागभाक्व भविष्यसि ॥ ॥१-७१-२३ (३२८१)

इति श्रीमन्महाभारते आदिपर्वणि संभवपर्वणि एकसप्ततितमोऽध्यायः
॥ ७१ ॥
Mahabharata - Adi Parva - Chapter Footnotes

१-७१-१ समावृतव्रतं समाप्तव्रतम् ॥
१-७१-९ गुरुः पुत्रो यस्य अङ्गिरसः पुत्रः पौत्रः ॥
१-७१-१५ उत्थिता अनलसा ॥
१-७१-१७ अननुज्ञातस्त्वदुक्तकार्ये ॥
१-७१-२३ प्रणशिता प्रणङ्क्ष्यति ॥
एकसप्ततितमोऽध्यायः ॥
७१ ॥

---

अध्यय०७२
॥ श्रीः ॥
१.७२. अध्यायः ७२

Mahabharata - Adi Parva - Chapter Topics
स्वर्गप्रत्यागतात्कचात्संजीविन्यध्ययनेन देवानां कृतार्थता ॥ १ ॥
शुक्रवृषपर्वणोर्विरोधोत्पादनार्थमिन्द्रकृतं कन्यानां
वस्त्रमिश्रणम् ॥ २ ॥
वस्त्रमिश्रणेन शर्मिष्ठादेवयान्योर्विरोधः ॥ ३ ॥
शर्मिष्ठया कूपे प्रक्षिप्ताया देवयान्या ययातिना कूपादुद्धरणम् ॥ ४ ॥
शुक्रस्य कूपसमीपागमनं देवयानीसान्त्वनं च ॥ ५ ॥

Mahabharata - Adi Parva - Chapter Text

१-७२-० (३२८२)
वैशंपायन उवाच। १-७२-०क्ष् (३६४)
कृतविद्ये कचे प्राप्ते हृष्टरूपा दिवौकसः ।
कचादधीत्य तां विद्यां कृतार्था भरतर्षभ ॥ १-७२-१ (३२८३)
सर्व एव समागम्य शतक्रतुमथाब्रुवन् ।
कालस्ते विक्रमस्याद्य जहि शत्रून्पुरन्दर ॥ १-७२-२ (३२८४)
वैशंपायन उवाच। १-७२-३क्ष् (३६५)
एवमुक्तस्तु सहितैस्त्रिदशैर्मघवांस्तदा ।
तथेत्युक्त्वा प्रचक्राम सोऽपश्यत वने स्त्रियः ॥ १-७२-३ (३२८५)

क्रीडन्तीनां तु कन्यानां वने चैत्ररथोपमे ।
वायुभूतः स वस्त्राणि सर्वाण्येव व्यमिश्रयत् ॥१-७२-४ (३२८६)
ततो जलात्समुत्तीर्य कन्यास्ताः सहितास्तदा ।
वस्त्राणि जगृहुस्तानि यथाऽऽसन्नान्यनेकशः ॥१-७२-५ (३२८७)
तत्र वासो देवयानयाः शर्मिष्ठा जगृहे तदा ।
व्यतिमिश्रमजानन्ती दुहिता वृषपर्वणः ॥१-७२-६ (३२८८)
ततस्तयोर्मिथस्तत्र विरोधः समजायत ।
देवयान्याश्च राजेन्द्र शर्मिष्ठायाश्च तत्कृते ॥१-७२-७ (३२८९)
देवयान्युवाच।१-७२-८क्ष् (३६६)
कस्माद्गृह्णासि मे वस्त्रं शिष्या भूत्वा ममासुरि ।
समुदाचारहीनाया न ते साधु भविष्यति ॥१-७२-८ (३२९०)
सर्मिष्ठोवाच।१-७२-९क्ष् (३६७)
आसीनं च शयानं च पिता ते पितरं मम ।
स्तौतिबन्दीव चाभीक्ष्णं नीचैः स्थित्वा विनीतवत् ॥१-७२-९ (३२९१)
याचतस्त्वं हि दुहिता स्तुवतः प्रतिगृह्णतः ।
सुताहं स्तूयमानस्य ददतोऽप्रतिगृह्णतः ॥१-७२-१० (३२९२)
आदुन्वस्व विदुन्वस्व द्रुह्य कुप्यस्व याचकि ।
अनायुधा सायुधाया रिक्ता क्षुभ्यसि भिक्षुकि ॥१-७२-११ (३२९३)
लप्स्यसे प्रतियोद्धारं न हि त्वां गणयाम्यहम् ।
ग्प्रतिकूलं वदसि चेदितःप्रभृति याचकि ॥' १-७२-१२ (३२९४)
वैशंपायन उवाच।१-७२-१३क्ष् (३६८)
समुच्छ्रयं देवयानीं गतां सक्तां च वाससि ।
शर्मिष्ठा प्राक्षिपत्कूपे ततः स्वपुरमागमत् ।
हतेयमिति विज्ञाय शर्मिष्ठा पापनिश्चया ॥ १-७२-१३ (३२९५)
अनवेक्ष्य ययौ वेश्म क्रोधवेगपरायणा ।
ग्प्रविश्य स्वगृहं स्वस्था धर्ममासुरमास्थिता।'
अथ तं देशमभ्यागाद्ययातिर्नहुषात्मजः ॥ १-७२-१४ (३२९६)
श्रान्तयुग्यः श्रान्तहयो मृगलिप्सुः पिपासितः ।
स नाहुषः प्रेक्षमाण उदपानं गतोदकम् ॥१-७२-१५ (३२९७)
ददर्श राजा तां तत्र कन्यामग्निशिखामिव ।
तामपृच्छत्स दृष्ट्वैव कन्याममरवर्णिनीम् ॥१-७२-१६ (३२९८)
सान्त्वयित्वा नृपश्रेष्ठः साम्ना परमवल्गुना ।
का त्वं ताम्रनखी श्यामा सुमृष्टमणिकुण्डला ॥१-७२-१७ (३२९९)
दीर्घं ध्यायसि चात्यर्थं कस्माच्छ्वसिषि चातुरा ।
कथं च पतिताऽस्यस्मिन्कूपे वीरुत्तृणावृते ॥१-७२-१८ (३३००)
दुहिता चैव कस्य त्वं वद सत्यं सुमध्यमे। १-७२-१९ (३३०१)

देवयान्युवाच ।
योऽसौ देवैर्हतान्दैत्यानुत्थापयति विद्यया ॥ १-७२-२०क्ष् (३६९)
तस्य शुक्रस्य कन्याहं स मां नूनं न बुध्यते ।
एष मे दक्षिणो राजन्पाणिस्ताम्रनखाङ्गुलिः ॥१-७२-२० (३३०२)
समुद्धर गृहीत्वा मां कुलीनस्त्वं हि मे मतः ।
जानामि हि त्वां संशान्तं वीर्यवन्तं यशस्विनम् ॥१-७२-२१ (३३०३)
तस्मान्मां पतितामस्मात्कूपादुद्धर्तुमर्हसि। १-७२-२२ (३३०४)
वैशंपायन उवाच ।
तामथो ब्राह्मणीं कन्यां विज्ञायनहुषात्मजः ॥ १-७२-२२क्ष् (३७०)
गृहीत्वा दक्षिणे पाणावुज्जहार ततोऽवटात् ।
उद्धृत्य चैनां तरसा तस्मात्कूपान्नराधिपः ॥१-७२-२३ (३३०५)
ग्ययातिरुवाच।१-७२-२४क्ष् (३७१)
गच्छ भद्रे यथाकामं न भयं विद्यते तव ।
इत्युच्यमाना नृपतिं देवयानीदमुत्तरम् ॥१-७२-२४ (३३०६)
उवाच मामुपादाय गच्छ शीघ्रं प्रियो हि मे ।
गृहीताहं त्वया पाणौ तस्माद्भर्ता भविष्यसि ॥१-७२-२५ (३३०७)
इत्येवमुक्तो नृपतिराह क्षत्रकुलोद्भवः ।
त्वं भद्रे ब्राह्मणी तस्मान्मया नार्हसि सङ्गमम् ॥१-७२-२६ (३३०८)
सर्वलोकगुरुः काव्यस्त्वं तस्य दुहिता शुभे ।
तस्मादपि भयं मेऽद्य ततः कल्याणि नार्हसि ॥१-७२-२७ (३३०९)
देवयान्युवाच।१-७२-२८क्ष् (३७२)
यदि मद्वचनान्नाद्य मां नेच्छसि नराधिप ।
त्वामेव वरये पित्रा तस्माल्लप्स्यसि गच्छ हि ॥१-७२-२८ (३३१०)
वैशंपायन उवाच।१-७२-२९क्ष् (३७३)
आमन्त्रयित्वा सुश्रोणीं ययातिः स्वपुरं ययौ ।
गते तु नाहुषे तस्मिन्देवयान्यप्यनिन्दिता ॥१-७२-२९ (३३११)
क्वचिद्गत्वा च रुदती वृक्षमाश्रित्य धिष्ठिता ।
ततश्चिरायमाणायां दुहितर्यथ भार्गवः ॥१-७२-३० (३३१२)
संस्मृत्योवाच धात्रीं तां दुहितुः स्नेहविक्लवः ।
धात्रि त्वमानय क्षिप्रं देवयानीं समुध्यमाम् ॥१-७२-३१ (३३१३)
इत्युक्तमात्रे सा धात्री त्वरिताऽऽनयितुं गता ।
यत्रयत्र सशीभिः सा गता पदममार्गत ॥१-७२-३२ (३३१४)
सा ददर्श तथा दीनां श्रमार्तां रुदतीं स्थिताम् ।
वृत्तान्तं किमिदं भद्रे शीघ्रं वद पिताह्वयत् ॥१-७२-३३ (३३१५)
एवमुक्ताह धात्रीं तां शर्मिष्ठावृजिनं कृतम् ।
उवाच शोकसंतप्ता घूर्णिकामागतां पुरः'॥१-७२-३४ (३३१६)

देवयान्युवाच। १-७२-३५क्ष् (३७४)
त्वरितं घूर्णिके गच्छ शीघ्रमाचक्ष्व मे पितुः ॥ १-७२-३५ (३३१७)
नेदानीं संप्रवेक्ष्यामि नगरं वृषपर्वणः। १-७२-३६ (३३१८)
वैशंपायन उवाच ।
सा तत्र त्वरितं गत्वा घूर्णिकाऽसुरमन्दिरम् ॥ १-७२-३६क्ष् (३७५)
दृष्ट्वा काव्यमुवाचेदं संभ्रमाविष्टचेतना ।
आचचक्षे महाप्राज्ञं देवयानीं वने हताम् ॥१-७२-३७ (३३१९)
शर्मिष्ठया महाभाग दुहित्रा वृषपर्वणः ।
श्रुत्वा दुहितरं काव्यस्तत्र शर्मिष्ठया हताम् ॥१-७२-३८ (३३२०)
त्वरया निर्ययौ दुःखान्मार्गमाणः सुतां वने ।
दृष्ट्वा दुहितरं काव्यो देवयानीं ततो वने ॥१-७२-३९ (३३२१)
बाहुभ्यां संपरिष्वज्य दुःखितो वाक्यमब्रवीत् ।
आत्मदोषैर्नियच्छन्ति सर्वे दुःखसुखे जनाः ॥१-७२-४० (३३२२)
मन्ये दुश्चरितं तेऽस्ति यस्येयं निष्कृतिः कृता। १-७२-४१ (३३२३)
देवयान्युवाच ।
निष्कृतिर्मेऽस्तु वा मास्तु शृणुष्वावहितो मम ॥ १-७२-४१क्ष् (३७६)
शर्मिष्ठया यदुक्ताऽस्मि दुहित्रा वृषपर्वणः ॥
सत्यं किलैतत्सा प्राह दैत्यानामसि गायनः ॥१-७२-४२ (३३२४)
एवं हि मे कथयति शर्मिष्ठा वार्षपर्वणी ।
वचनं तीक्ष्णपरुषं क्रोधरक्तेक्षणा भृशम् ॥१-७२-४३ (३३२५)
स्तुवतो दुहिता नित्यं याचतः प्रतिगृह्णतः ।
अहं तु स्तूयमानस्य ददतोऽप्रतिगृह्णतः ॥१-७२-४४ (३३२६)
इदं मामाह शर्मिष्ठा दुहिता वृषपर्वणः ।
क्रोधसंरक्तनयना दर्पपूर्णा पुनः पुनः ॥१-७२-४५ (३३२७)
यद्यह स्तुवतस्तात दुहिता प्रतिगृह्णतः ।
प्रसादयिष्ये शर्मिष्ठामित्युक्ता तु सखी मया ॥१-७२-४६ (३३२८)
ग्उक्ताप्येवं भृशं मां सा निगृह्य विजने वने ।
कूपे प्रक्षेपयामास प्रक्षिप्य गृहमागमत् ॥' १-७२-४७ (३३२९)
शुक्र उवाच। १-७२-४८क्ष् (३७७)
स्तुवतो दुहिता न त्वं याचतः प्रतिगृह्णतः ।
अस्तोतुः स्तूयमानस्य दुहिता देवयान्यसि ॥१-७२-४८ (३३३०)
वृषपर्वैव तद्वेद शक्रो राजा च नाहुषः ।
अचिन्त्यं ब्रह्म निर्द्वन्द्वमैश्वरं हि बलं मम ॥१-७२-४९ (३३३१)
ग्जानामि जीविनीं विद्यां लोकेस्मिञ्शाश्वतीं ध्रुवम् ।
मृतः संजीवते जन्तुर्यया कमललोचने ॥१-७२-५० (३३३२)
कत्थनं स्वगुणानां च कृत्वा तप्यति सज्जनः ।

ततो वक्तुमशक्तोऽस्मित्वं मे जानासि यद्बलम् ॥१-७२-५१ (३३३३)
तसमादुत्तिष्ठ गच्छामः स्वगृहं कुलनन्दिनि ।
क्षमां कृत्वा विशालाक्षि क्षमासारा हि साधवः'॥१-७२-५२ (३३३४)
यच्च किंचित्सर्वगतं भूमौ वा यदि वा दिवि ।
तस्याहमीश्वरो नित्यं तुष्टेनोक्तः स्वयंभुवा ॥१-७२-५३ (३३३५)
अहं जलं विमुञ्चामि प्रजानां हितकाम्यया ।
पुष्णाम्यौषधयः सर्वा इति सत्यं ब्रवीमि ते ॥१-७२-५४ (३३३६)
वैशंपायन उवाच।१-७२-५५क्ष् (३७८)
एवं विषादमापन्नां मन्युना संप्रपीडिताम् ।
वचनैर्मधुरैः श्लक्ष्णैः सान्त्वयामास तां पिता ॥ ॥१-७२-५५ (३३३७)

इति श्रीमन्महाभारते आदिपर्वणि संभवपर्वणि द्विसप्ततितमोऽध्यायः
॥ ७२ ॥
Mahabharata - Adi Parva - Chapter Footnotes

१-७२-३ प्रचक्राम भूतलं प्रतीति शेषः ॥
१-७२-८ समुदाचारः सदाचारः ॥
१-७२-११ आदुन्वस्व आभिमुख्येन वक्षस्ताडनादिना संतापं प्राप्नुहि
।विदुन्वस्व पांसुषु लुण्ठनादिना।द्रुह्य द्रोहं चिरकालिकं क्रोधं
कुरु।कुप्यस्व सद्यः परानिष्टफलो यत्नः कोपस्तं कुरु।रिक्ता
दरिद्रा ॥
१-७२-१२ प्रतियोद्धारं प्रहर्तारम् ॥
१-७२-१५ युग्या रथवाहकाः ।हयाः केवलाश्वाः।उदकं
पीयतेस्मादित्युदपानं कूपः ॥
१-७२-२३ अवटाद्गर्तात् ॥
१-७२-३४ घूर्णिकां दासीम् ॥
१-७२-३७ हतां ताडिताम् ॥
१-७२-४० नियच्छन्ति प्रयच्छन्ति प्राप्नुवन्तीति भावः ॥
१-७२-४१ एतदेवाह मन्ये इति ।निष्कृतिः फलभोगेन निरसनम् ॥
१-७२-४५ इदं पूर्वोक्तम् ॥
१-७२-४९ नाहुषो ययातिः ।मम ऐश्वरं निर्द्वन्द्वमप्रतिपक्षं बलमस्ति ॥
द्विसप्ततितमोऽध्यायः ॥
७२ ॥

---

अध्यय०७३
॥ श्रीः ॥
१.७३. अध्यायः ७३

Mahabharata - Adi Parva - Chapter Topics
शुक्रदेवयानीसंवादः ॥ १ ॥

Mahabharata - Adi Parva - Chapter Text

१-७३-० (३३३८)
शुक्र उवाच। १-७३-०क्ष् (३७९)
यः परेषां नरो नित्यमतिवादांस्तितिक्षते ।
देवयानि विजानीहि तेन सर्वमिदं जितम् ॥ १-७३-१ (३३३९)
यः समुत्पतितं क्रोधं निगृह्णाति इयं यथा ।
स यन्तेत्युच्यते सद्भिर्न यो रश्मिषु लम्बते ॥ १-७३-२ (३३४०)
यः समुत्पतितं क्रोधमक्रोधेन निरस्यति ।
देवयानि विजानीहि तेन सर्वमिदं जितम् ॥ १-७३-३ (३३४१)
यः समुत्पतितं क्रोधं क्षमयेह निरस्यति ।
यथोरगस्त्वचं जीर्णां स वै पुरुष उच्यते ॥ १-७३-४ (३३४२)
यः संधारयते मन्युं योऽतिवादांस्तितिक्षते ।
यश्च तप्तो न तपति दृढं सोऽर्थस्य भाजनम् ॥ १-७३-५ (३३४३)
यो यजेदपरिश्रान्तो मासिमासि शतं समाः ।
न क्रुद्ध्येद्यश्च सर्वस्य तयोरक्रोधनोऽधिकः ॥ १-७३-६ (३३४४)
ग्तस्मादक्रोधनः श्रेष्ठः कामक्रोधौ विगर्हितौ ।
क्रुद्धस्य निष्फलान्येव दानयज्ञतपांसि च ॥ १-७३-७ (३३४५)
तस्मादक्रोधने यज्ञतपोदानफलं महत् ।
भवेदसंशयं भद्रे नेतरस्मिन्कदाचन ॥ १-७३-८ (३३४६)
न यतिर्न तपस्वी च न यज्वा न च धर्मभाक् ।
क्रोधस्य यो वशं गच्छेत्तस्य लोकद्वयं न च ॥ १-७३-९ (३३४७)
पुत्रो भृत्यः सुहृद्भ्राता भार्या धर्मश्च सत्यता ।
तस्यैतान्यपयास्यन्ति क्रोधशीलस्य निश्चितम् ॥ १-७३-१० (३३४८)
यत्कुमाराः कुमार्यश्च वैरं कुर्युरचेतसः ।
न तत्प्राज्ञोऽनुकुर्वीत न विदुस्ते बलाबलम् ॥ १-७३-११ (३३४९)
देवयान्युवाच। १-७३-१२क्ष् (३८०)
वेदाहं तात बालाऽपि धर्माणां यदिहान्तरम् ।
अक्रोधे चातिवादे च वेद चापि बलाबलम् ॥ १-७३-१२ (३३५०)
ग्स्ववृत्तिमननुष्ठाय धर्ममुत्सृज्य तत्त्वतः।'
शिष्यस्याशिष्यवृत्तेस्तु न क्षन्तव्यं बुभूषता ॥ १-७३-१३ (३३५१)
ग्प्रेष्यः शिष्यः स्ववृत्तिं हि विसृज्य विफलं गतः।'

तस्मात्संकीर्णवृत्तेषु वासो मम न रोचते ॥ १-७३-१४ (३३५२)
पुमांसो ये हि निन्दन्ति वृत्तेनाभिजनेन च ।
न तेषु निवसेत्प्राज्ञः श्रेयोऽर्थी पापबुद्धिषु ॥ १-७३-१५ (३३५३)
ये त्वेनमभिजानन्ति वृत्तेनाभिजनेन वा ।
तेषु साधुषु वस्तव्यं स वासः श्रेष्ठ उच्यते ॥ १-७३-१६ (३३५४)
ग्सुयन्त्रितपरा नित्यं विहीनाश्च धनैर्वराः ।
दुर्वृत्ताः पापकर्माणश्चण्डाला धनिनोपि च ॥ १-७३-१७ (३३५५)
नैव जात्या हि चण्डालाः स्वकर्मविहितैर्विना ।
धनाभिजनविद्यासु सक्ताश्चण्डालधर्मिणः ॥ १-७३-१८ (३३५६)
अकारणाश्च द्वेष्यन्ति परिवादं वदन्ति ते ।
साधोस्तत्र न वासोस्ति पापिभिः पापतां व्रजेत् ॥ १-७३-१९ (३३५७)
सुकृते दुष्कृते वापि यत्र सज्जति यो नरः ।
ध्रुवं रतिर्भवेत्तस्य तस्माद्द्वेषं न रोचयेत् ॥' १-७३-२० (३३५८)
वाग्दुरुक्तं महाघोरं दुहितुर्वृषपर्वणः ।
मम मथ्नाति हृदयमग्निकाम इवारणिम् ॥ १-७३-२१ (३३५९)
न ह्यतो दुष्करतरं मन्ये लोकेष्वपि त्रिषु ।
यः सपत्नश्रियं दीप्तां हीनश्रीः पर्युपासते ॥ १-७३-२२ (३३६०)
मरणं शोभनं तस्य इति विद्वज्जना विदुः ।
ग्अवमानमवाप्नोति शनैर्नीचसमागमात् ॥ १-७३-२३ (३३६१)
अतिवादा वक्त्रतो निःसरन्ति
यैराहतः शोचति रात्र्यहानि ।
परस्य वै मर्मसु ते पतन्ति
तस्माद्धीरो नैव मुच्येत्परेषु ॥ १-७३-२४ (३३६२)
निरोहेदायुधैश्छिन्नं संरोहेद्दग्धमाग्निना ।
वाक्क्षतं च न संरोहेदाशरीरं शरीरिणाम् ॥ १-७३-२५ (३३६३)
संरोहित शरैर्विद्धं नवं परशुना हतम् ।
वाचा दुरुक्तं बीभत्सं न संरोहेत वाक्क्षतम्'॥ ॥ १-७३-२६ (३३६४)

इति श्रीमन्महाभारते आदिपर्वणि संभवपर्वणि त्रिसप्ततितमोऽध्यायः
॥ ७३ ॥

Mahabharata - Adi Parva - Chapter Footnotes

१-७३-२ रश्मिषु क्रोधफलभूतास्वापत्सु । पक्षे स्पष्टोऽर्थः ॥
१-७३-३ अक्रोधेन क्रोधविरोधिना सहनेन ॥
त्रिसप्ततितमोऽध्यायः ॥
७३ ॥

अध्यय०७४
॥ श्रीः ॥
१.७४. अध्यायः ७४

Mahabharata - Adi Parva - Chapter Topics
शुक्रवृषपर्वणोः संवादः ॥ १ ॥
शुक्रकोपशान्तये वृषपर्वनियोगात् शर्मिष्ठया
देवयानीदास्याङ्गीकारः ॥ २ ॥
प्रसन्नया देवयान्या सह शुक्रस्य पुरप्रवेशनम् ॥ ३ ॥

Mahabharata - Adi Parva - Chapter Text

१-७४-० (३३६५)
वैशंपायन उवाच। १-७४-०क्ष् (३८१)
ततः काव्यो भृगुश्रेष्ठः समन्युरुपगम्य ह ।
वृषपर्वाणमासीनमित्युवाचाविचारयन् ॥ १-७४-१ (३३६६)
नाधर्मश्चरितो राजन्सद्यः फलति गौरिव ।
शनैरावर्त्यमानो हि कर्तुर्मूलानि कृन्तति ॥ १-७४-२ (३३६७)
पुत्रेषु वा नप्तृषु वा न चेदात्मनि पश्यति ।
फलत्येव ध्रुवं पायं गुरुभुक्तमिवोदरे ॥ १-७४-३ (३३६८)
ग्अधीयानं हितं राजन्क्षमावन्तं जितेन्द्रियम्।'
यदघातयथा विप्रं कचमाङ्गिरसं तदा ।
अपापशीलं धर्मज्ञं शुश्रूषुं मद्गृहे रतम् ॥ १-७४-४ (३३६९)
ग्शर्मिष्ठया देवयानी क्रूरमुक्ता बहु प्रभो ।
विप्रकृत्य च संरम्भात्कूपे क्षिप्ता मनस्विनी ॥ १-७४-५ (३३७०)
सा न कल्पेत वासाय तयाहं रहितः कथम् ।
वसेयमिह तस्मात्ते त्यजामि विषयं नृप ॥' १-७४-६ (३३७१)
वधादनर्हतस्तस्य वधाच्च दुहितुर्मम ।
वषपर्वन्निबोधेयं त्यक्ष्यामि त्वां सबान्धवम् ।
स्थातुं त्वद्विषये राजन्न शक्ष्यामि त्वया सह ॥ १-७४-७ (३३७२)
ग्मा शोच वृषपर्वंस्त्वं मा क्रुध्यस्व विशांपते ।
स्थातुं ते विषये राजन्न शक्ष्यामि तया विना ।
अस्या गतिर्गतिर्मह्यं प्रियमस्याः प्रियं मम ॥ १-७४-८ (३३७३)
वृषपर्वोवाच। १-७४-९क्ष् (३८२)
यदि ब्रह्मन्घातयामि यदि वा क्रोशयाम्यहम् ।
शर्मिष्ठया देवयानीं तेन गच्छाम्यसद्गतिम् ॥ १-७४-९ (३३७४)

शुक्र उवाच।' १-७४-१०क्ष् (३८३)
अहो मामभिजानासि दैत्य मिथ्याप्रलापिनम् ।
यथेममात्मनो दोषं न नियच्छस्युपेक्षसे ॥ १-७४-१० (३३७५)
वृषपर्वोवाच। १-७४-११क्ष् (३८४)
नाधर्मं न मृषावादं त्वयि जानामि भार्गव ।
त्वयि धर्मश्च सत्यं च तत्प्रसीदतु नो भवान् ॥ १-७४-११ (३३७६)
यद्यस्मानपहाय त्वमितो गच्छसि भार्गव ।
समुद्रं संप्रवेक्ष्यामि पूर्वं मद्बान्धवैः सह ॥ १-७४-१२ (३३७७)
पातालमथवा चाग्निं नान्यदस्ति परायणम् ।
यद्येव देवान्गाच्छेस्त्वं मां च त्यक्त्वा ग्रहाधिप ।
सर्वत्यागं ततः कृत्वा प्रविशामि हुताशनम्'॥ १-७४-१३ (३३७८)
शुक्र उवाच। १-७४-१४क्ष् (३८५)
समुद्रं प्रविशध्वं वा दिशो वा द्रवतासुराः ।
दुहितुर्नाप्रियं सोढुं शक्तोऽहं दयिता हि मे ॥ १-७४-१४ (३३७९)
प्रसाद्यतां देवयानी जीवितं यत्र मे स्थितम् ।
योगक्षेमकरस्तेऽहमिन्द्रस्येव बृहस्पतिः ॥ १-७४-१५ (३३८०)
वृषपर्वोवाच। १-७४-१६क्ष् (३८६)
यत्किंचिदसुरेन्द्राणां विद्यते वसु भार्गव ।
भुवि हस्तिगवाश्वं च तस्य त्वं मम चेश्वरः ॥ १-७४-१६ (३३८१)
शुक्र उवाच। १-७४-१७क्ष् (३८७)
यत्किंचिदस्ति द्रविणं दैत्येन्द्राणां महासुर ।
तस्येश्वरोस्मि यद्येषा देवयानी प्रसाद्यताम् ॥ १-७४-१७ (३३८२)
वैशंपायन उवाच। १-७४-१८क्ष् (३८८)
एवमुक्तस्तथेत्याह वृषपर्वा महाकविम् ।
देवयान्यन्तिकं गत्वा तमर्थं प्राह भार्गवः ॥ १-७४-१८ (३३८३)
देवयान्युवाच। १-७४-१९क्ष् (३८९)
यदि त्वमीश्वरस्तात राज्ञो वित्तस्य भार्गव ।
नाभिजानामि तत्तेऽहं राजा तु वदतु स्वयम् ॥ १-७४-१९ (३३८४)
ग्वैशंपायन उवाच। १-७४-२०क्ष् (३९०)
शुक्रस्य वचनं श्रुत्वा वृषपर्वा सबान्धवः ।
देवयानि प्रसीदेति पपात भुवि पादयोः ॥ १-७४-२० (३३८५)
वृषपर्वोवाच। १-७४-२१क्ष् (३९१)
स्तुत्यो वन्द्यश्च सततं मया तातश्च ते शुभे।'
यं काममभिकामाऽसि देवयानि शुचिस्मिते ।
तत्तेऽहं संप्रदास्यामि यदि वापि हि दुर्लभम् ॥ १-७४-२१ (३३८६)
देवयान्युवाच। १-७४-२२क्ष् (३९२)

दासीं कन्यासहस्रेण शर्मिष्ठामभिकामये ।
अनु मां तत्र गच्छेत्सा यत्र दद्याच्च मे पिता ॥ १-७४-२२ (३३८७)
वृषपर्वोवाच। १-७४-२३क्ष् (३९३)
उत्तिष्ठ त्वं गच्छ धात्रि शर्मिष्ठां शीघ्रमानय ।
यं च कामयते कामं देवयानी करोतु तम् ॥ १-७४-२३ (३३८८)
ग्त्यजेदेकं कुलस्यार्थे ग्रामार्थे च कुलं त्यजेत् ।
ग्रामं जनपदस्यार्थे आत्मार्थे पृथिवीं त्यजेत्' ॥ १-७४-२४ (३३८९)
वैशंपायन उवाच। १-७४-२५क्ष् (३९४)
ततो धात्री तत्र गत्वा शर्मिष्ठां वाक्यमब्रवीत् ।
उत्तिष्ठ भद्रे शर्मिष्ठे ज्ञातीनां सुखमावह ॥ १-७४-२५ (३३९०)
त्यजति ब्राह्मणः शिष्यान्देवयान्या प्रचोदितः ।
सायं कामयते कां स कार्योऽद्य त्वयाऽनघे ॥ १-७४-२६ (३३९१)
शर्मिष्ठोवाच। १-७४-२७क्ष् (३९५)
यं सा कामयते कां करवाण्यहमद्य तम् ।
यद्येवमाह्वयेच्छुक्रो देवयानीकृते हि माम् ।
मद्दोषान्मागमच्छुक्रो देवयानी च मत्कृते ॥ १-७४-२७ (३३९२)
वैशंपायन उवाच। १-७४-२८क्ष् (३९६)
ततः कन्यासहस्रेण वृता शिबिकया तदा ।
पितुर्नियोगात्त्वरिता निश्चक्राम पुरोत्तमात् ॥ १-७४-२८ (३३९३)
शर्मिष्ठोवाच। १-७४-२९क्ष् (३९७)
अहं दासीसहस्रेण दासी ते परिचारिका ।
अनु त्वां तत्र यास्यामि यत्र दास्यति ते पिता ॥ १-७४-२९ (३३९४)
देवयान्युवाच। १-७४-३०क्ष् (३९८)
स्तुवतो दुहिताऽहं ते याचतः प्रतिगृह्णतः ।
स्तूयमानस्य दुहिता कथं दासी भविष्यसि ॥ १-७४-३० (३३९५)
शर्मिष्ठोवाच। १-७४-३१क्ष् (३९९)
येनकेनचिदार्तानां ज्ञातीनां सुखमावहेत् ।
अतस्त्वामनुयास्यामि तत्र दास्यति ते पिता ॥ १-७४-३१ (३३९६)
वैशंपायन उवाच। १-७४-३२क्ष् (४००)
प्रतिश्रुते दासभावे दुहित्रा वृषपर्वणः ।
देवयानी नृपश्रेष्ठ पितरं वाक्यमब्रवीत् ॥ १-७४-३२ (३३९७)
देवयान्युवाच। १-७४-३३क्ष् (४०१)
प्रविशामि पुरं तात तुष्टाऽस्मि द्विजसत्तम ।
अमोघं तव विज्ञानमस्ति विद्याबलं च ते ॥ १-७४-३३ (३३९८)
वैशंपायन उवाच। १-७४-३४क्ष् (४०२)
एवमुक्तो दुहित्रा स द्विजश्रेष्ठो महायशाः ।

प्रविवेश पुरं हृष्टः पूजितः सर्वदानैवः ॥ ॥१-७४-३४ (३३९९)

इति श्रीमन्महाभारते आदिपर्वणि संभवपर्वणि
चतुःसप्ततितमोऽध्यायः ॥ ७४ ॥

---

अध्यय०७५
॥ श्रीः ॥
१.७५. अध्यायः ७५

Mahabharata - Adi Parva - Chapter Topics
मृगयार्थं गतस्य ययातेः पुनर्देवयानीसमागमः ॥ १ ॥
शुक्राज्ञया तयोर्विवाहः ॥ २ ॥
देवयानीशर्मिष्ठायां सह ययातेः स्वपुरप्रवेशः ॥ ३ ॥

Mahabharata - Adi Parva - Chapter Text

१-७५-० (३४००)
वैशंपायन उवाच। १-७५-०क्ष् (४०३)
अथ दीर्घस्य कालस्य देवयानी नृपोत्तम ।
वनं तदेव निर्याता क्रीडार्थं वरवर्णिनी ॥ १-७५-१ (३४०१)
तेन दासीसहस्रेण सार्धं शर्मिष्ठया तदा ।
तमेव देशं संप्राप्ता यथाकामं चचार सा ॥ १-७५-२ (३४०२)
ताभिः सखीभिः सहिता सर्वाभिर्मुदिता भृशम् ।
क्रीडन्त्योऽभिरताः सर्वाः पिबन्त्यो मधुमाधवीं ॥ १-७५-३ (३४०३)
खादन्त्यो विविधान्भक्ष्यान्विदशन्त्यः फलानि च ।
पुनश्च नाहुषो राजा मृगलिप्सुर्यदृच्छया ॥ १-७५-४ (३४०४)
तमेव देशं संप्राप्तो जलार्थी श्रमकर्शितः ।
ददर्श देवयानीं स शर्मिष्ठां ताश्च योषितः ॥ १-७५-५ (३४०५)
पिबन्तीर्ललमानाश्च दिव्याभरणभूषिताः ।
आसनप्रवरे दिव्ये सर्वरत्नविभूषिते ।
उपविष्टां च ददृशे देवयानीं शुचिस्मिताम् ॥ १-७५-६ (३४०६)
रूपेणाप्रतिमां तासां स्त्रीणां मध्ये वराङ्गनम् ।
ग्आसनाच्च ततः किंचिद्विहीनां हेमभीषिताम् ॥ १-७५-७ (३४०७)
असुरेन्द्रसुतां चापि निषण्णां चारुहासिनीम् ।
ददर्श पादौ विप्रायाः संवहन्तीमनिन्दिताम् ॥ १-७५-८ (३४०८)
गायन्त्योऽथ प्रनृत्यन्त्यो वादयन्त्योऽथ भारत ।
दृष्ट्वा ययातिमतुलं लज्जयाऽवनताः स्थिताः ॥' १-७५-९ (३४०९)

ययातिरुवाच। १-७५-१०क्ष् (४०४)
द्वाभ्यां कन्यासहस्राभ्यां द्वे कन्ये परिवारिते ।
गोत्रे च नामनी चैव द्वयोः पृच्छाम्यहं शुभे। १-७५-१० (३४१०)
देवयान्युवाच। १-७५-११क्ष् (४०५)
आख्यास्याम्यहमादत्स्व वचनं मे नराधिप ।
शुक्रो नामासुरगुरुः सुतां जानीहि तस्य माम् ॥ १-७५-११ (३४११)
इयं च मे सखी दासी यत्राहं तत्र गामिनी ।
दुहिता दानवेन्द्रस्य शर्मिष्ठा वृषपर्वणः ॥ १-७५-१२ (३४१२)
ययातिरुवाच। १-७५-१३क्ष् (४०६)
कथं तु ते सखी दासी कन्येयं वरवर्णिनी ।
असुरेन्द्रसुता सुभ्रूः परं कौतूहलं हि मे ॥ १-७५-१३ (३४१३)
ग्नैव देवी न गन्धर्वी न यक्षी न च किन्नरी ।
नैवंरूपा मया नारी दृष्टपूर्वा महीतले ॥ १-७५-१४ (३४१४)
श्रीरिवायतपद्माक्षी सर्वलक्षणशोभना ।
असुरेन्द्रसुता कन्या सर्वालङ्कारभूषिता ॥ १-७५-१५ (३४१५)
दैवेनोपहता सुभ्रूरुताहो तपसापि वा ।
अन्यथैषाऽनवद्याङ्गी दासी नेह भविष्यति ॥ १-७५-१६ (३४१६)
अस्या रूपेण ते रूपं न किंचित्सदृशं भवेत् ।
पुरा दुश्चरितेनेयं तव दासी भवत्यहो ॥' १-७५-१७ (३४१७)
देवयान्युवाच। १-७५-१८क्ष् (४०७)
सर्व एव नरश्रेष्ठ विधानमनुवर्तते ।
विधानविहितं मत्वा मा विचित्राः कथाःकृथाः ॥ १-७५-१८ (३४१८)
राजवद्रूपवेषौ ते ब्राह्मीं वाचं बिभर्षि च ।
को नाम त्वं कुतश्चासि कस्य पुत्रश्च शस मे ॥ १-७५-१९ (३४१९)
ययातिरुवाच। १-७५-२०क्ष् (४०८)
ब्रहमचर्येण वेदो मे कृत्स्नः श्रुतिपथं गतः ।
राजाहं राजपुत्रश्च ययातिरिति विश्रुतः ॥ १-७५-२० (३४२०)
देवयान्युवाच। १-७५-२१क्ष् (४०९)
केनास्यर्थेन नृपते इमं देशमुपागतः ।
जिघृक्षुर्वारिजं किंचिदथवा मृगलिप्सया ॥ १-७५-२१ (३४२१)
ययातिरुवाच। १-७५-२२क्ष् (४१०)
मृगलिप्सुरहं भद्रे पानीयार्थमुपागतः ।
बहुधाऽप्यनुयुक्तोऽस्मि तदनुज्ञातुमर्हसि ॥ १-७५-२२ (३४२२)
देवयान्युवाच। १-७५-२३क्ष् (४११)
द्वाभ्यां कन्यासहस्राभ्यां दास्या शर्मिष्ठया सह ।
त्वदधीनाऽस्मि भद्रं ते सखा भर्ता च मे भव ॥ १-७५-२३ (३४२३)

ग्वैशंपायन उवाच। १-७५-२४क्ष् (४१२)
असुरेन्द्रसुतामीक्ष्य तस्यां सक्तेन चेतसा ।
शर्मिष्ठा महिषी मह्यमिति मत्वा वचोऽब्रवीत्'॥ १-७५-२४ (३४२४)
ययातिरुवाच। १-७५-२५क्ष् (४१३)
विद्धयौशनसि भद्रं ते न त्वामर्होऽस्मि भामिनि ।
अविवाह्या हि राजानो देवयानि पितुस्तव ॥ १-७५-२५ (३४२५)
ग्परभार्या स्वसा श्रेष्ठा सगोत्रा पतिता स्नुषा ।
अवरा भिक्षुकाऽस्वस्था अगम्याः कीर्तिता बुधैः ॥ १-७५-२६ (३४२६)
देवयान्युवाच। १-७५-२७क्ष् (४१४)
संसृष्टं ब्रह्मणा क्षत्रं क्षत्रेण ब्रह्म संहितम् ।
ग्अन्यत्वमस्ति न तयोरेकान्ततरमास्थिते।'
ऋषिश्चाप्यृषिपुत्रश्च नाहुषाङ्ग वहस्व माम् ॥ १-७५-२७ (३४२७)
ययातिरुवाच। १-७५-२८क्ष् (४१५)
एकदेहोद्भवा वर्णाश्चत्वारोऽपि वराङ्गने ।
पृथग्धर्माः पृथक्शौचास्तेषां तु ब्राह्मणो वरः ॥ १-७५-२८ (३४२८)
देवयान्युवाच। १-७५-२९क्ष् (४१६)
पाणि धर्मो नाहुषाऽयं न पुंभिः सेवितः पुरा ।
तं मे त्वमग्रहीरग्रे वृणोमि त्वामहं ततः ॥ १-७५-२९ (३४२९)
कथं नु मे मनस्विन्याः पाणिमन्यः पुमान्स्पृशेत् ।
गृहीतमृषिपुत्रेण स्वयं वाप्यृषिणा त्वया ॥ १-७५-३० (३४३०)
ययातिरुवाच। १-७५-३१क्ष् (४१७)
क्रुद्धादाशीविषात्सर्पाज्ज्वलनात्सर्वतोमुखात् ।
दुराधर्षतरो विप्रो ज्ञेयः पुंसा विजानता ॥ १-७५-३१ (३४३१)
देवयान्युवाच। १-७५-३२क्ष् (४१८)
कथमाशीविषात्सर्पाज्ज्वलनात्सर्वतोमुखात् ।
दुराधर्षतरो विप्र इत्यात्थ पुरुषर्षभ ॥ १-७५-३२ (३४३२)
ययातिरुवाच। १-७५-३३क्ष् (४१९)
एकमाशीविषो हन्ति शस्त्रेणैकश्च वध्यते ।
हन्ति विप्रः सराष्ट्राणि पुराण्यपि हि कोपितः ॥ १-७५-३३ (३४३३)
दुराधर्षतरो विप्रस्तस्माद्भीरु मतो मम ।
अतोऽदत्तां च पित्रा त्वां भद्रे न विवहाम्यहम् ॥ १-७५-३४ (३४३४)
देवयान्युवाच। १-७५-३५क्ष् (४२०)
दत्तां वहस्व तन्मा त्वं पित्रा राजन्वृतो मया ।
आयचतो भयं नास्ति दत्तां च प्रतिगृह्णतः ॥ १-७५-३५ (३४३५)
गतिष्ठ राजन्मुहूर्तं च प्रेषयिष्याम्यहं पितुः ।
गच्छ त्वं धात्रिके शीघ्रं ब्रह्मकल्पमिहानय ।

स्वयंवरे वृतं शीघ्रं निवेदय च नाहुषम्'॥ १-७५-३६ (३४३६)
वैशंपायन उवाच। १-७५-३७क्ष् (४२१)
त्वरितं देवयान्याथ संदिष्टं पितुरात्मनः ।
सर्वं निवेदयामास धात्री तस्मै यथातथम् ॥ १-७५-३७ (३४३७)
श्रुत्वैव च स राजानं दर्शयामास भार्गवः ।
दृष्ट्वैव चागतं शुक्रं ययातिः पृथिवीपतिः ।
ववन्दे ब्राह्मणं काव्यं प्राञ्जलिः प्रणतः स्थितः ॥ १-७५-३८ (३४३८)
देवयान्युवाच। १-७५-३९क्ष् (४२२)
राजायं नाहुषस्तात दुर्गमे पाणिमग्रहीत् ।
नान्यपूर्वगृहीतं मे तेनाहमभया कृता ।
नमस्ते देहि मामस्मै लोके नान्यं पतिं वृणे ॥ १-७५-३९ (३४३९)
शुक्र उवाच। १-७५-४०क्ष् (४२३)
अन्यो धर्मः प्रियस्त्वन्यो वृतस्ते नाहुषः पतिः ।
कचशापात्त्वया पूर्वं नान्यद्भवितुमर्हति ॥ १-७५-४० (३४४०)
वृतोऽनया पतिर्वीर सुतया त्वं ममेष्टया ।
स्वयं ग्रहे महान्दोषो ब्राह्मण्या वर्णसंकरात् ।
गृहाणेमां मया दत्तां महिषीं नहुषात्मज ॥ १-७५-४१ (३४४१)
ययातिरुवाच। १-७५-४२क्ष् (४२४)
अधर्मो न स्पृशेदेष महान्मामिह भार्गव ।
वर्णसंकरजो ब्रह्मन्निति त्वां प्रवृणोम्यहम् ॥ १-७५-४२ (३४४२)
शुक्र उवाच। १-७५-४३क्ष् (४२५)
अधर्मात्त्वां विमुञ्चामि शृणु त्वं वरमीप्सितम् ।
अस्मिन्विवाहे मा म्लासीरहं पापं नुदामि ते ॥ १-७५-४३ (३४४३)
वहस्व भार्यां धर्मेण देवयानीं सुमध्यमाम् ।
अनया सह संप्रीतिमतुलां समवाप्नुहि ॥ १-७५-४४ (३४४४)
इयं चापि कुमारी ते शर्मिष्ठा वार्षपर्वणी ।
संपूज्या सततं राजन्मा चैनां शयने ह्वयेः ॥ १-७५-४५ (३४४५)
रहस्येनां समाहूय न वदेर्न च संस्पृशेः ।
वहस्व भार्यां भद्रं ते यथा काममवाप्स्यसि ॥ १-७५-४६ (३४४६)
वैशंपायन उवाच। १-७५-४७क्ष् (४२६)
एवमुक्तो ययातिस्तु शुक्रं कृत्वा प्रदक्षिणम् ।
शास्त्रोक्तविधिना राजा विवाहमकरोच्छुभम् ॥ १-७५-४७ (३४४७)
लब्ध्वा शुक्रान्महद्वित्तं देवयानीं तदोत्तमाम् ।
द्विसहस्रेण कन्यानां तथा शर्मिष्ठया सह ॥ १-७५-४८ (३४४८)
संपूजितश्च शुक्रेण दैत्यैश्च नृपसत्तमः ।
जगाम स्वपुरं हृष्टोऽनुज्ञातोऽथ महात्मना ॥ ॥ १-७५-४९ (३४४९)

इति श्रीमन्महाभारते आदिपर्वणि संभवपर्वणि
पञ्चसप्ततितमोऽध्यायः ॥ ७५ ॥
Mahabharata - Adi Parva - Chapter Footnotes

१-७५-३ मधुमाधवीं मधुवृक्षमदिराम् ॥
१-७५-१८ विधानं दैवं अनुवर्तते अनुसृत्यास्ति ॥
१-७५-२१ अर्थेन कार्येण । वारिजं मीनं पद्मादि वा ॥
१-७५-२२ अनुयुक्तोस्मि पलायिते मृगे श्रान्तोस्मि ॥
१-७५-२७ संसृष्टं उच्छिन्नस्य क्षत्रस्य ब्राह्मणवीर्यादेव
पुनरुद्भवाद्ब्रह्मणा क्षत्रं संसृष्टम् । क्षत्रियकन्यासु
लोपामुद्रादिषु ब्राह्मणानामुत्पत्तिदर्शनात्क्षत्रेण ब्रह्म संहितं
मिश्रम् ॥
१-७५-२८ एकस्येश्वरस्य देहो देहावयवाः मुखबाहूरुपादास्तदुद्भवाः ॥
१-७५-३५ मा मां भयं क्षत्रियेण ब्राह्मणीपरिणयनदोषजम् ॥
१-७५-३९ दुर्गमे संकटे ॥
१-७५-४३ ईप्सितं वरं च वृणीष्वेत्युक्तोऽपीदानीं न वृतवान्
पश्चात्त्वन्यत्र जरासंक्रमणसामर्थ्यरूपः शुक्रेणैव
स्वप्रतिज्ञासिद्धये दत्त इति ध्येयम् ॥
पञ्चसप्ततितमोऽध्यायः ॥
७५ ॥

---

अध्यय०७६
॥ श्रीः ॥
१.७६. अध्यायः ७६

Mahabharata - Adi Parva - Chapter Topics
देवयान्याः पुत्रोत्पत्तिः ॥ १ ॥
अशोकवनिकायां शर्मिष्ठाया ययातिसमागमात्पुत्रोत्पत्तिः ॥ २ ॥

Mahabharata - Adi Parva - Chapter Text

१-७६-० (३४५०)
वैशंपायन उवाच। १-७६-०क्ष् (४२७)
ययातिः स्वपुरं प्राप्य महेन्द्रपुरसंनिभम् ।
प्रविश्यान्तःपुरं तत्र देवयानीं न्यवेशयत् ॥ १-७६-१ (३४५१)
देवयान्याश्चानुमते सुतां तां वृषपर्वणः ।

अशोकवनिकाभ्याशे गृहं कृत्वा न्यवेशयत् ॥१-७६-२ (३४५२)
वृतां दासीसहस्रेण शर्मिष्ठां वार्षपर्वणीम् ।
वासोभरन्नपानैश्च संविभज्य सुसत्कृताम् ॥१-७६-३ (३४५३)
देवयान्या तु सहितः स नृपो नहुषात्मजः ।
ग्प्रीत्या परमया युक्तो मुमुदे शाश्वतीः समाः ॥१-७६-४ (३४५४)
अशोकवनिकामध्ये देवयानी समागता ।
शर्मिष्ठया सा क्रीडित्वा रमणीये मनोरमे ॥१-७६-५ (३४५५)
तत्रैव तां तु निर्दिश्य राज्ञा सह ययौ गृहम् ।
एवमेव सह प्रीत्या बहु कालं मुमोद च ॥' १-७६-६ (३४५६)
विजहार बहूनब्दान्देववन्मुदितः सुखी ॥ १-७६-७ (३४५७)
ऋतुकाले तु संप्राप्ते देवयानी वराङ्गना ।
लेभे गर्भं प्रथमतः कुमारं च व्यजायत ॥१-७६-८ (३४५८)
गते वर्षसहस्रे तु शर्मिष्ठा वार्षपर्वणी ।
ददर्श यौवनं प्राप्ता ऋतुं सा चान्वचिन्तयत् ॥१-७६-९ (३४५९)
ग्शुद्धा स्नाता तु शर्मिष्ठा सर्वालङ्कारशोभिता ।
अशोकशाखामालम्ब्य सुपुष्पस्तबकैर्वृताम् ॥१-७६-१० (३४६०)
आदर्शे मुखमुद्वीक्ष्य भर्तुर्दर्शनलालसा ।
शोकमोहसमाविष्टा वचनं चेदमब्रवीत् ॥१-७६-११ (३४६१)
अशोक शोकापनुद शोकोपहतचेतसाम् ।
त्वन्नामानं कुरुष्वाद्य प्रियसंदर्शनेन माम् ।
एवमुक्तवती सा तु शर्मिष्ठा पुनरब्रवीत् ॥' १-७६-१२ (३४६२)
ऋतुकालश्च संप्राप्तो न च मेऽस्ति वृतः पतिः ।
किं प्राप्तं किं नु कर्तव्यं किं वा कृत्वा सुखं भवेत् ॥१-७६-१३ (३४६३)
देवयानी प्रजाताऽसौ वृथाऽहं प्राप्तयौवना ।
यथा तया वृतो भर्ता तथैवाहं वृणोमि तम् ॥१-७६-१४ (३४६४)
राज्ञा पुत्रफलं देयमिति मे निश्चिता मतिः ।
अपीदानीं स धर्मात्मा ईयान्मे दर्शनं रहः ॥१-७६-१५ (३४६५)
ग्केशैर्बध्या तु राजानं याचेऽहं सदृशं पतिम् ।
स्पृहेदिदं देवयानी पुत्रमीक्ष्य पुनःपुनः ।
क्रीडन्नन्तःपुरे तस्याः क्वचित्क्षणमवाप्य च ॥ १-७६-१६ (३४६६)
वैशंपायन उवाच।' १-७६-१७क्ष् (४२८)
अथ निष्क्रम्य राजाऽसौ तस्मिन्काले यदृच्छया ।
अशोकवनिकाभ्याशे शर्मिष्ठां प्राप तिष्ठतीम् ॥१-७६-१७ (३४६७)
तमेकं रहिते दृष्ट्वा शर्मिष्ठा चारुहासिनी ।
प्रत्युद्गम्याञ्जलिं कृत्वा राजानं वाक्यमब्रवीत् ॥१-७६-१८ (३४६८)
शर्मिष्ठोवाच।१-७६-१९क्ष् (४२९)

सोमस्येन्द्रस्य विष्णोर्वा यमस्य वरुणस्य वा ।
तव वा नाहुष गृहे कः स्त्रियं द्रष्टुमर्हति ॥१-७६-१९ (३४६९)
रूपाभिजनशीलैर्हि त्वं राजन्वेत्थ मां सदा ।
सा त्वां याचे प्रसाद्याहमृतुं देहि नराधिप ॥१-७६-२० (३४७०)
ययातिरुवाच।१-७६-२१क्ष् (४३०)
वेद्मि त्वां शीलसंपन्नां दैत्यकन्यामनिन्दिताम् ।
रूपं च ते न पश्यामि सूच्यग्रमपि निन्दितम् ॥१-७६-२१ (३४७१)
ग्तदाप्रभृति दृष्ट्वा त्वां स्मराम्यनिशमुत्तमे'।
अब्रवीदुशना काव्यो देवयानीं यदाऽवहम् ।
नेयमाह्वयितव्या ते शयने वार्षपर्वणी ॥ १-७६-२२ (३४७२)
ग्देवयान्याः प्रियं कृत्वा शर्मिष्ठामपि पोषय ॥' १-७६-२३ (३४७३)
शर्मिष्ठोवाच।१-७६-२४क्ष् (४३१)
न नर्मयुक्तमनृतं हिनस्ति
न स्त्रीषु राजन्न विवाहकाले ।
प्राणात्यये सर्वधनापहारे
पञ्चानृतान्याहुरपातकानि ॥ १-७६-२४ (३४७४)
पृष्टं तु साक्ष्ये प्रवदन्तमन्यथा
वदन्ति मिथ्या पतितं नरेन्द्र ।
एकार्थतायां तु समाहितायां
मिथ्या वदन्तं ह्यनृतं हिनस्ति ॥ १-७६-२५ (३४७५)
ग्अनृतं नानृतं स्त्रीषु परिहासविवाहयोः ।
आत्मप्राणार्थघाते च तदेवोत्तमतां व्रजेत् ॥' १-७६-२६ (३४७६)
ययातिरुवाच।१-७६-२७क्ष् (४३२)
राजा प्रमाणं भूतानां स नश्येत मृषा वदन् ।
अर्थकृच्छ्रमपि प्राप्य न मिथ्या कर्तुमुत्सहे ॥१-७६-२७ (३४७७)
शर्मिष्ठोवाच।१-७६-२८क्ष् (४३३)
समावेतौ मतो राजन्पतिः सख्याश्च यः पतिः ।
समं विवाहमित्याहुः सख्या मेऽसि वृतः पतिः ॥१-७६-२८ (३४७८)
ग्सह दत्तास्मि काव्येन देवयान्या मनीषिणा ।
पूज्या पोषयितव्येति न मृषा कर्तुमर्हसि ॥' १-७६-२९ (३४७९)
सुवर्णमणिमुक्तानि वस्त्राण्याभरणानि च ।
याचितॄणां ददासि त्वं गोभूम्यादीनि यानि च ॥१-७६-३० (३४८०)
बहिःस्थं दानमित्युक्तं न शरीराश्रितं नृप ।
दुष्करं पुत्रदानं च आत्मदानं च दुष्करम् ॥१-७६-३१ (३४८१)
शरीरदानात्तत्सर्वं दत्तं भवति मारिष ।
यस्य यस्य यथा कामस्तस्य तस्य ददाम्यहम् ॥१-७६-३२ (३४८२)

इत्युक्त्वा नगरे राजंस्त्रिकालं घोषितं त्वया ।
त्वयोक्तमनृतं राजन्वृथा घोषितमेव वा ।
तत्सत्यं कुरु राजेन्द्र यथा वैश्रवणस्तथा ॥ १-७६-३३ (३४८३)
ययातिरुवाच। १-७६-३४क्ष् (४३४)
दातव्यं याचमानेभ्य इति मे व्रतमाहितम् ।
त्वं च याचसि मां कामं ब्रूहि किं करवाणि ते ॥ १-७६-३४ (३४८४)
ग्धनं वा यदि वा किंचिद्राज्यं वाऽपि शुचिस्मिते।' १-७६-३५ (३४८५)
शर्मिष्ठोवाच ।
अधर्मात्पाहि मां राजन्धर्मं च प्रतिपादय ॥ १-७६-३५क्ष् (४३५)
ग्नान्यं वृणे पुत्रकामा पुत्रात्परतरं न च।'
त्वत्तोऽपत्यवती लोके चरेयं धर्ममुत्तमम् ॥ १-७६-३६ (३४८६)
त्रय एवाधना राजन्भार्या दासस्तथा सुतः ।
यत्ते समधिगच्छन्ति यस्यैते तस्य तद्धनम् ॥ १-७६-३७ (३४८७)
ग्पुत्रार्थं भर्तृपोषार्थं स्त्रियः सृष्टाः स्वयंभुवा ।
अपतिर्वापि या कन्या अनपत्या च या भवेत् ।
तासां जन्म वृथा लोके गतिस्तासां न विद्यते ॥' १-७६-३८ (३४८८)
देवयान्या भुजिष्याऽस्मि वश्या च तव भार्गवी ।
सा चाहं च त्वया राजन्भजनीये भजस्व माम् ॥ १-७६-३९ (३४८९)
वैशंपायन उवाच। १-७६-४०क्ष् (४३६)
एवमुक्तस्तु राजा स तथ्यमित्यभिजज्ञिवान् ।
पूजयामास शर्मिष्ठां धर्मं च प्रत्यपादयत् ॥ १-७६-४० (३४९०)
स समागम्य शर्मिष्ठां यथा काममवाप्य च ।
अन्योन्यं चाभिसंपूज्य जग्मतुस्तौ यथागतम् ॥ १-७६-४१ (३४९१)
तस्मिन्समागमे सुभ्रूः शर्मिष्ठा चारुहासिनी ।
लेभे गर्भं प्रथमतस्तस्मान्नृपतिसत्तमात् ॥ १-७६-४२ (३४९२)
प्रयज्ञे च ततः काले राजन्राजीवलोचना ।
कुमारं देवगर्भाभं राजीवनिभलोचनम् ॥ ॥ १-७६-४३ (३४९३)

इति श्रीमन्महाभारते आदिपर्वणि संभवपर्वणि षट्सप्ततितमोऽध्यायः
॥ ७६ ॥

---

अध्यय०७७
॥ श्रीः ॥
१.७७. अध्यायः ७७

Mahabharata - Adi Parva - Chapter Topics
शर्मिष्ठापुत्रदर्शनेन देवयान्याः शर्मिष्ठया सह संवादः ॥ १ ॥

देवयानीशर्मिष्ठयोः पुत्रान्तरोत्पत्तिः ॥ २ ॥
शर्मिष्ठापुत्रान्ययातिजाञ्ज्ञात्वा कुपितायाः देवयान्याः शुक्रसमीपे गमनम् ॥ ३ ॥
ययातेः शुक्रशापाज्जराप्राप्तिः ॥ ४ ॥
तस्या अन्यस्मिन्संक्रमणरूपवरप्राप्तिः ॥ ५ ॥

Mahabharata - Adi Parva - Chapter Text

१-७७-० (३४९४)
वैशंपायन उवाच। १-७७-०क्ष् (४३७)
ग्तस्मिन्नक्षत्रसंयोगे शुक्ले पुण्यर्क्षगेन्दुना ।
स राजा मुमुदे सम्राट् तया शर्मिष्ठया सह ॥ १-७७-१ (३४९५)
प्रजानां श्रीरिवाभ्याशे शर्मिष्ठा ह्यभवद्वधूः ।
पन्नगीवोग्ररूपा वै देवयानी ममाप्यभूत् ॥ १-७७-२ (३४९६)
पर्जन्य इव सस्यानां देवानाममृतं यथा ।
तद्वन्ममापि संभूता शर्मिष्ठा वार्षपर्वणी ।
इत्येवं मनसा ज्ञात्वा देवयानीमवर्जयत् ॥' १-७७-३ (३४९७)
श्रुत्वा कुमारं जातं तु देवयानी शुचिस्मिता ।
चिन्तयामास दुःखार्ता शर्मिष्ठां प्रति भारत ॥ १-७७-४ (३४९८)
अभिगम्य च शर्मिष्ठां देवयान्यब्रवीदिदम्। १-७७-५ (३४९९)
देवयान्युवाच ।
किमिदं वृजिनं सुभ्रु कृतं वै कामलुब्धया ॥ १-७७-५क्ष् (४३८)
शर्मिष्ठोवाच। १-७७-६क्ष् (४३९)
ऋषिरभ्यागतः कश्चिद्धर्मात्मा वेदपारगः ।
स मया वरदः कामं याचितो धर्मसंहितम् ॥ १-७७-६ (३५००)
ग्अपत्यार्थे स तु मया वृतो वै चारुहासिनि'।
नाहमन्यायतः काममाचरामि शुचिस्मिते ।
तस्मादृषेर्ममापत्यमिति सत्यं ब्रवीमि ते ॥ १-७७-७ (३५०१)
देवयान्युवाच। १-७७-८क्ष् (४४०)
शोभनं भीरु यद्येवमथ स ज्ञायते द्विजः ।
गोत्रनामाभिजनतो वेत्तुमिच्छामि तं द्विजम् ॥ १-७७-८ (३५०२)
शर्मिष्ठोवाच। १-७७-९क्ष् (४४१)
तपसा तेजसा चैव दीप्यमानं यथा रविम् ।
तं दृष्ट्वा मम संप्रष्टुं शक्तिर्नासीच्छुचिस्मिते ॥ १-७७-९ (३५०३)
देवयान्युवाच। १-७७-१०क्ष् (४४२)
यद्येतदेवं शर्मिष्ठे न मन्युर्विद्यते मम ।

अपत्यं यदि ते लब्धं ज्येष्ठाच्छ्रेष्ठाच्च वै द्विजात् ॥१-७७-१० (३५०४)
वैशंपायन उवाच।१-७७-११क्ष् (४४३)
अन्योन्यमेवमुक्त्वा तु संप्रहस्य च ते मिथः ।
जगाम भार्गवी वेश्म तथ्यमित्यवजग्मुषी ॥१-७७-११ (३५०५)
ययातिर्देवयान्यां तु पुत्रावजनयन्नृपः ।
यदुं च तुर्वसुं चैव शक्रविष्णू इवापरौ ॥१-७७-१२ (३५०६)
ग्तस्मिन्काले तु राजर्षिर्ययातिः पृथिवीपतिः ।
माध्वीकरससंयुक्तां मदिरां मदवर्धनीम् ॥१-७७-१३ (३५०७)
पाययामास शुक्रस्य तनयां रक्तपिङ्गलाम् ।
पीत्वा पीत्वा च मदिरां देवयानी मुमोह सा ॥१-७७-१४ (३५०८)
रुदती गायमाना च नृत्यन्ती च मुहुर्मुहुः ।
बहु प्रलपती देवी राजानमिदमब्रवीत् ॥१-७७-१५ (३५०९)
राजवद्रूपवेषौ ते किमर्थं त्वमिहागतः ।
केन कार्येण संप्राप्तो निर्जनं गहनं वनम् ॥१-७७-१६ (३५१०)
द्विजश्रेष्ठ नृपश्रेष्ठो ययातिश्चोग्रदर्शनः ।
तस्मादितः पलायस्व हितमिच्छसि चेद्द्विज ॥१-७७-१७ (३५११)
इत्येवं प्रलपन्तीं तां देवयानीं तु नाहुषः ।
भर्त्सयामास वचनैरनर्हां पापवर्धनीम् ॥१-७७-१८ (३५१२)
ततो वर्षवरान्मूकान्व्यङ्गान्वृद्धांश्च पङ्गुकान् ।
रक्षणे देवयान्याः स पोषणे च शशास तान् ॥१-७७-१९ (३५१३)
ततस्तु नाहुषो राजा शर्मिष्ठां प्राप्य बुद्धिमान् ।
रेमे च सुचिरं कालं तया शर्मिष्ठया सह ॥' १-७७-२० (३५१४)
तस्मादेव तु राजर्षेः शर्मिष्ठा वार्षपर्वणी ।
द्रुह्युं चानुं च पूरुं च त्रीन्कुमारानजीजनत् ॥१-७७-२१ (३५१५)
ततः काले तु कस्मिंश्चिद्देवयानी शुचिस्मिता ।
ययातिसहिता राजञ्जगाम रहितं वनम् ॥१-७७-२२ (३५१६)
ददर्श च तदा तत्र कुमारान्देवरूपिणः ।
क्रीडमानान्सुविश्रब्धान्विस्मिता चेदमब्रवीत् ॥१-७७-२३ (३५१७)
देवयान्युवाच।१-७७-२४क्ष् (४४४)
ग्कस्यैते दारका राजन्देवपुत्रोपमाः शुभाः ।
वर्चसा रूपतश्चैव सदृशा मे मतास्तव ॥१-७७-२४ (३५१८)
वैशंपायन उवाच।१-७७-२५क्ष् (४४५)
एवं पृष्ट्वा तु राजानं कुमारान्पर्यपृच्छत ॥ १-७७-२५ (३५१९)
तस्मिन्काले तु तच्छ्रुत्वा धात्री तेषां वचोऽब्रवीत् ।
किं न ब्रूत कुमारा वः पितरं वै द्विजर्षभम् ॥१-७७-२६ (३५२०)
कुमारा ऊचुः।१-७७-२७क्ष् (४४६)

ऋषिश्च ब्राह्मणश्चैव द्विजातिश्चैव नः पिता ।
शर्मिष्ठा नानृतं ब्रूते देवयानि क्षमस्व नः ॥' १-७७-२७ (३५२१)
देवयान्युवाच। १-७७-२८क्ष् (४४७)
किंनामधेयगोत्रो वः पुत्रका ब्राह्मणः पिता ।
प्रब्रूत तत्त्वतः क्षिप्रं कश्चासौ क्व च वर्तते ॥ १-७७-२८ (३५२२)
प्रब्रूत मे यथा तथ्यं श्रोतुमिच्छामि तं ह्यहम् ।
एवमुक्ताः कुमारस्ते देवयान्या सुमध्यया ॥ १-७७-२९ (३५२३)
तेऽदर्शयन्प्रदेशिन्या तमेव नृपसत्तमम् ।
शर्मिष्ठां मातरं चैव तथाऽऽचख्युश्च दारकाः ॥ १-७७-३० (३५२४)
वैशंपायन उवाच। १-७७-३१क्ष् (४४८)
इत्युक्त्वा सहितास्ते तु राजानमुपचक्रमुः ।
नाभ्यनन्दत तान्राजा देवयान्यास्तदान्तिके ॥ १-७७-३१ (३५२५)
रुदन्तस्तेऽथ शर्मिष्ठामभ्ययुर्बालकास्ततः ।
ग्अविब्रुवन्ती किंचिच्च राजानं चारुलोचना ॥ १-७७-३२ (३५२६)
नातिदूराच्च राजानं सा चातिष्ठदवाङ्मुखी ।
श्रुत्वा तेषां तु बालानां सव्रीड इव पार्थिवः ॥ १-७७-३३ (३५२७)
प्रतिवक्तुमशक्तोऽभूत्तूष्णींभूतोऽभवन्नृपः ।
दृष्ट्वा तु तेषां बालानां प्रणयं पार्थिवं प्रति ॥ १-७७-३४ (३५२८)
बुद्ध्वा तु तत्त्वतो देवी शर्मिष्ठापिदमब्रवीत् ।
अभ्यागच्छति मां कश्चिदृषिरित्येवमब्रवीः ॥ १-७७-३५ (३५२९)
ययातिमेवं राजानं त्वं गोपायसि भामिनि ।
पूर्वमेव मया प्रोक्तं त्वया तु वृजिनं कृतम् ॥ १-७७-३६ (३५३०)
मदधीना सती कस्मादकार्षीर्विप्रियं मम ।
तमेवाऽऽसुरधर्मं त्वमास्थिता न बिभेषि मे ॥' १-७७-३७ (३५३१)
शर्मिष्ठोवाच। १-७७-३८क्ष् (४४९)
यदुक्तमृषिरित्येव तत्सत्यं चारुहासिनि ।
न्यायतो धर्मतश्चैव चरन्ती न बिभेमि ते ॥ १-७७-३८ (३५३२)
यदा त्वया वृतो भर्ता वृत एव तदा मया ।
सखीभर्ता हि धर्मेण भर्ता भवति शोभने ॥ १-७७-३९ (३५३३)
पूज्यासि मम मान्या च ज्येष्ठा च ब्राह्मणी ह्यसि ।
त्वत्तोपि मे पूज्यतमो राजर्षिः किं न वेत्थ तत् ॥ १-७७-४० (३५३४)
ग्त्वत्पित्रा मम गुरुणा सह दत्ते उभे शुभे ।
ततो भर्ता च पूज्यश्च पोष्यां पोषयतीह माम् ॥ १-७७-४१ (३५३५)
वैशंपायन उवाच। १-७७-४२क्ष् (४५०)
श्रुत्वा तस्यास्ततो वाक्यं देवयान्यब्रवीदिदम् ।
रमस्वेह यथाकामं देव्या शर्मिष्ठया सह ॥ १-७७-४२ (३५३६)

राजन्नाद्येह वत्स्यामि विप्रियं मे कृतं त्वया ।
इति जज्वाल कोपेन देवयानी ततो भृशम् ॥ १-७७-४३ (३५३७)
निर्दहन्तीव सव्रीडां शर्मिष्ठां समुदीक्ष्य च ।
अपविध्य च सर्वाणि भूषणान्यसितेक्षणा ॥' १-७७-४४ (३५३८)
सहसोत्पतितां श्यामां दृष्ट्वा तां साश्रुलोचनाम् ।
तूर्णं सकाशं काव्यस्य प्रस्थितां व्यथितस्तदा ॥ १-७७-४५ (३५३९)
अनुवव्राज संभ्रान्तः पृष्ठतः सान्त्वयन्नृपः ।
न्यवर्तत नचैव स्म क्रोधसंरक्तलोचना ॥ १-७७-४६ (३५४०)
अविब्रुवन्ती किंचित्सा राजानं साश्रुलोचना ।
अचिरादेव संप्राप्ता काव्यस्योशनसोऽन्तिकम् ॥ १-७७-४७ (३५४१)
सा तु दृष्ट्वै पितरमभिवाद्याग्रतः स्थिता ।
अनन्तरं यायातिस्तु पूजयामास भार्गवम् ॥ १-७७-४८ (३५४२)
देवयान्युवाच। १-७७-४९क्ष् (४५१)
अधर्मेण जितो धर्मः प्रवृत्तमधरोत्तरम् ।
शर्मिष्ठयाऽतिवृत्ताऽस्मि दुहित्रा वृषपर्वणः ॥ १-७७-४९ (३५४३)
त्रयोऽस्यां जनिताः पुत्रा राज्ञाऽनेन ययातिना ।
दुर्भगाया मम द्वौ तु पुत्रौ तात ब्रवीमि ते ॥ १-७७-५० (३५४४)
धर्मज्ञ इति विख्यात एष राजा भृगूद्वह ।
अतिक्रान्तश्च मर्यादां काव्यैतत्कथयामि ते ॥ १-७७-५१ (३५४५)
शुक्र उवाच। १-७७-५२क्ष् (४५२)
धर्मज्ञः सन्महाराज योऽधर्ममकृथाः प्रियम् ।
तस्माज्जरा त्वामचिराद्धर्षयिष्यति दुर्जया ॥ १-७७-५२ (३५४६)
ययातिरुवाच। १-७७-५३क्ष् (४५३)
ऋतुं वै याचमानाया भगवन्नान्यचेतसा ।
दुहितुर्दानवेन्द्रस्य धर्म्यमेतत्कृतं मया ॥ १-७७-५३ (३५४७)
ऋतुं वै याचमानाया न ददाति पुमानृतुम् ।
भ्रूणहेत्युच्यते ब्रह्मन् स इह ब्रह्मवादिभिः ॥ १-७७-५४ (३५४८)
अभिकामां स्त्रियं यश्च गम्यां रहसि याचितः ।
नोपैति स च धर्मेषु भ्रूणहेत्युच्यते बुधैः ॥ १-७७-५५ (३५४९)
ग्यद्यद्वृणोति मां कश्चित्तत्तद्देयमिति व्रतम् ।
त्वया च सापि दत्ता मे नान्यं नाथमिहेच्छति'॥ १-७७-५६ (३५५०)
इत्येतानि समीक्ष्याहं कारणानि भृगूद्वह ।
अधर्मभयसंविग्नः शर्मिष्ठामुपजग्मिवान् ।
ग्मत्वैतन्मे धर्म इति कृतं ब्रह्मन्क्षमस्व माम् ॥' १-७७-५७ (३५५१)
शुक्र उवाच। १-७७-५८क्ष् (४५४)
नन्वहं प्रत्यवेक्ष्यस्ते मदधीनोऽसि पार्थिव ।

मिथ्याचारस्य धर्मेषु चौर्यं भवति नाहुष ॥१-७७-५८ (३५५२)
वैशंपायन उवाच।१-७७-५९क्ष् (४५५)
क्रुद्धेनोशनसा शप्तो ययातिर्नाहुषस्तदा ।
पूर्वं वयः परित्यज्य जरां सद्योऽन्वपद्यत ॥१-७७-५९ (३५५३)
ययातिरुवाच।१-७७-६०क्ष् (४५६)
अतृप्तो यौवनस्याहं देवयान्यां भृगूद्वह ।
प्रसादं कुरु मे ब्रह्मञ्जरेयं न विशेच्च माम् ॥१-७७-६० (३५५४)
शुक्र उवाच।१-७७-६१क्ष् (४५७)
नाहं मृषा ब्रवीम्येतज्जरां प्राप्तोऽसि भूमिप ।
जरां त्वेतां त्वमन्यस्मिन्संक्रामय यदीच्छसि ॥१-७७-६१ (३५५५)
ययातिरुवाच।१-७७-६२क्ष् (४५८)
राज्यभाक्स भवेद्ब्रह्मन्पुण्यभाक्कीर्तिभाक्तथा ।
यो मे दद्याद्वयः पुत्रस्तद्भवाननुमन्यताम् ॥१-७७-६२ (३५५६)
शुक्र उवाच।१-७७-६३क्ष् (४५९)
संक्रामयिष्यसि जरां येथेष्टं नहुषात्मज ।
मामनुध्याय भावेन न च पापमवाप्स्यसि ॥१-७७-६३ (३५५७)
वयो दास्यति ते पुत्रो यः स राजा भविष्यति ।
आयुष्मान्कीर्तिमांश्चैव बह्वपत्यस्तथैव च ॥ ॥१-७७-६४ (३५५८)

इति श्रीमन्महाभारते आदिपर्वणि संभवपर्वणि
सप्तसप्ततितमोऽध्यायः ॥७७ ॥
Mahabharata - Adi Parva - Chapter Footnotes

१-७७-४९ अधरोत्तरं नीचस्याभिवृद्धिरुत्तमस्य
ह्रासः ।अतिवृत्तास्मि राज्ञः
सकाशादपत्यत्रयाधिगमनेतिक्रान्तोल्लङ्घिताऽस्मि ॥
१-७७-५२ अधर्ममेव प्रियमकृथाः ॥
१-७७-५३ नान्यचेतसा न कामलोभेन ॥
१-७७-५८ प्रत्यवेक्ष्यः अस्मिन्मकर्मणि मदाज्ञापि त्वया प्रार्थनीयेति भावः ॥
१-७७-६२ ज्येष्ठस्य राज्याप्रदानजं पापम् ॥
सप्तसप्ततितमोऽध्यायः ॥
७७ ॥

---

अध्यय०७८
॥ श्रीः ॥
१.७८. अध्यायः ७८

Mahabharata - Adi Parva - Chapter Topics
स्वजरामनङ्गीकुर्वतां यदुप्रभृतीनां ययातिना शापः ॥ १ ॥
तामङ्गीकुर्वतः पूरोर्वरदानम् ॥ २ ॥

Mahabharata - Adi Parva - Chapter Text

१-७८-० (३५५९)
वैशंपायन उवाच। १-७८-०क्ष् (४६०)
जरां प्राप्य ययातिस्तु स्वपुरं प्राप्य चैव हि ।
पुत्रं ज्येष्ठं वरिष्ठं च यदुमित्यब्रवीद्वचः ॥ १-७८-१ (३५६०)
ययातिरुवाच। १-७८-२क्ष् (४६१)
जरावली च मां तात पलितानि च पर्यगुः ।
काव्यस्योशनसः शापान्न च तृप्तोऽस्मि यौवने ॥ १-७८-२ (३५६१)
त्वं यदो प्रतिपद्यस्व पाप्मानं जरया सह ।
यौवनेन त्वदीयेन चरेयं विषयानहम् ॥ १-७८-३ (३५६२)
पूर्णे वर्षसहस्रे तु पुनस्ते यौवनं त्वहम् ।
दत्त्वा स्वं प्रतिपत्स्यामि पाप्मानं जरया सह ॥ १-७८-४ (३५६३)
यदुरुवाच। १-७८-५क्ष् (४६२)
जरायां बहवो दोषाः पानभोजनकारिताः ।
तस्माज्जरां न ते राजन्ग्रहीष्य इति मे मतिः ॥ १-७८-५ (३५६४)
सितश्मश्रुर्निरानन्दो जरया शिथिलीकृतः ।
वलीसङ्गतगात्रस्तु दुर्दर्शो दुर्बलः कृशः ॥ १-७८-६ (३५६५)
अशक्तः कार्यकरणे परिभूतः स यौवतैः ।
सहोपजीविभिश्चैव तां जरां नाभिकामये ॥ १-७८-७ (३५६६)
सन्ति ते बहवः पुत्रा मत्तः प्रियतरा नृप ।
जरां ग्रहीतुं धर्मज्ञ तस्मादन्यं वृणीष्व वै ॥ १-७८-८ (३५६७)
ययातिरुवाच। १-७८-९क्ष् (४६३)
यत्त्वं मे हृदयाज्जातो वयः स्वं न प्रयच्छसि ।
तस्मादराज्यभाक्तात प्रजा तव भविष्यति ॥ १-७८-९ (३५६८)
ग्प्रत्याख्यातस्तु राजा स तुर्वसुं प्रत्युवाच ह।'
तुर्वसो प्रतिपद्यस्व पाप्मानं जरया सह ।
यौवनेन चरेयं वै विषयांस्तव पुत्रक ॥ १-७८-१० (३५६९)
पूर्णे वर्षसहस्रे तु पुनर्दास्यामि यौवनम् ।
स्वं चैव प्रतिपत्स्यामि पाप्मानं जरया सह ॥ १-७८-११ (३५७०)
तुर्वसुरुवाच। १-७८-१२क्ष् (४६४)
न कामये जरां तात कामभोगप्रणाशिनीम् ।

बलरूपान्तकरणीं बुद्धिप्राणप्रणाशिनीम् ॥ १-७८-१२ (३५७१)
ययातिरुवाच। १-७८-१३क्ष् (४६५)
यत्त्वं मे हृदयाज्जातो वयः स्वं न प्रयच्छसि ।
तस्मात्प्रजा समुच्छेदं तुर्वसो तव यास्यति ॥ १-७८-१३ (३५७२)
संकीर्णाचारधर्मेषु प्रतिलोमचरेषु च ।
पिशिताशिषु चान्त्येषु मूढ राजा भविष्यसि ॥ १-७८-१४ (३५७३)
गुरुदारप्रसक्तेषु तिर्यग्योनिगतेषु च ।
पशुधर्मेषु पापेषु म्लेच्छेषु त्वं भविष्यसि ॥ १-७८-१५ (३५७४)
वैशंपायन उवाच। १-७८-१६क्ष् (४६६)
एवं स तुर्वसुं शप्त्वा ययातिः सुतमात्मनः ।
शर्मिष्ठायाः सुतं द्रुह्युमिदं वचनमब्रवीत् ॥ १-७८-१६ (३५७५)
ययातिरुवाच। १-७८-१७क्ष् (४६७)
द्रुह्यो त्वं प्रतिपद्यस्व वर्णरूपविनाशिनीम् ।
जरां वर्षसहस्रं मे यौवनं स्वं ददस्व च ॥ १-७८-१७ (३५७६)
पूर्णे वर्षसहस्रे तु पुनर्दास्यामि यौवनम् ।
स्वं चादास्यामि भूयोऽहं पाप्मानं जरया सह ॥ १-७८-१८ (३५७७)
द्रुह्युरुवाच। १-७८-१९क्ष् (४६८)
न गजं न रथं नाश्वं जीर्णो भुङ्क्ते न च स्त्रियम् ।
वाग्भङ्गश्चास्य भवति तां जरां नाभिकामये ॥ १-७८-१९ (३५७८)
ययातिरुवाच। १-७८-२०क्ष् (४६९)
यत्त्वं मे हृदयाज्जातो वयः स्वं न प्रयच्छसि ।
तस्माद्द्रुह्यो प्रियः कामो न ते संपत्स्यते क्वचित् ॥ १-७८-२० (३५७९)
यत्राश्वरथमुख्यानामश्वानां स्याद्गतं न च ।
हस्तिनां पीठकानां च गर्दभानां तथैव च ॥ १-७८-२१ (३५८०)
बस्तानां च गवां चैव शिबिकायास्तथैव च ।
उडुपप्लवसंतारो यत्र नित्यं भविष्यति। १-७८-२२ (३५८१)
ययातिरुवाच। १-७८-२३क्ष् (४७०)
अनो त्वं प्रतिपद्यस्व पाप्मानं जरया सह ।
एकं वर्षसहस्रं तु चरेयं यौवनेन ते ॥ १-७८-२३ (३५८२)
अनुरुवाच। १-७८-२४क्ष् (४७१)
जीर्णः शिशुवदादत्ते कालेऽन्नमशुचिर्यथा ।
न जुहोति च कालेऽग्निं तां जरां नाभिकामये ॥ १-७८-२४ (३५८३)
ययातिरुवाच। १-७८-२५क्ष् (४७२)
यत्त्वं मे हृदयाज्जातो वयः स्वं न प्रयच्छसि ।
जरादोषस्त्वया प्रोक्तस्तस्मात्त्वं प्रतिलप्स्यसे ॥ १-७८-२५ (३५८४)
प्रजाश्च यौवनप्राप्ता विनशिष्यन्त्यनो तव ।

अग्निप्रस्कन्दनपरस्त्वं चाप्येवं भविष्यसि ॥ १-७८-२६ (३५८५)
वैशंपायन उवाच। १-७८-२७क्ष् (४७३)
प्रत्याख्यातश्चतुर्भिश्च शप्त्वा तान्यदुपूर्वकान् ।
पूरोः सकाशमगमन्मत्त्वा पूरुमलङ्घनम् ॥ १-७८-२७ (३५८६)
ययातिरुवाच। १-७८-२८क्ष् (४७४)
पूरो त्वं मे प्रियः पुत्रस्त्वं वरीयान्भविष्यसि ।
जरा वली च मांतात पलितानि च पर्यगुः ॥ १-७८-२८ (३५८७)
काव्यस्योशनसः शापान्न च तृप्तोऽस्मि यौवने ।
पूरो त्वं प्रतिपद्यस्व पाप्मानं जरया सह ।
कंचित्कालं चरेयं वै विषयान्वयसातव ॥ १-७८-२९ (३५८८)
पूर्णे वर्षसहस्रे तु पुनर्दास्यामि यौवनम् ।
स्वं चैव प्रतिपत्स्यामि पाप्मानं जरया सह ॥ १-७८-३० (३५८९)
वैशंपायन उवाच। १-७८-३१क्ष् (४७५)
एवमुक्तः प्रत्युवाच पूरुः पितरमञ्जसा ।
यदात्थ मां महाराज तत्करिष्यामि ते वचः ॥ १-७८-३१ (३५९०)
ग्गुरोर्वै वचनं पुण्यं स्वर्ग्यमायुष्करं नृणाम् ।
गुरुप्रसादात्त्रैलोक्यमन्वशासच्छतक्रतुः ॥ १-७८-३२ (३५९१)
गुरोरनुमतं प्राप्य सर्वान्कामानमाप्नुयात् ।
यावदिच्छसि तावच्च धारयिष्यामि ते जराम्'॥ १-७८-३३ (३५९२)
प्रतिपत्स्यामि ते राजन्पाप्मानं जरया सह ।
गृहाण यौवनं मत्तश्चर कामान्यथेप्सितान् ॥ १-७८-३४ (३५९३)
जरयाहं प्रतिच्छन्नो वयोरूपधरस्तव ।
यौवनं भवते दत्त्वा चरिष्यामि यथात्थमाम् ॥ १-७८-३५ (३५९४)
ययातिरुवाच। १-७८-३६क्ष् (४७६)
पूरो प्रीतोऽस्मि ते वत्स प्रीतश्चेदं ददामि ते ।
सर्वकामसमृद्धा ते प्रजा राज्ये भविष्यति ॥ १-७८-३६ (३५९५)
वैशंपायन उवाच। १-७८-३७क्ष् (४७७)
एवमुक्त्वा ययातिस्तु स्मृत्वा काव्यं महातपाः ।
संक्रामयामास जरां तदा पूरौ महात्मनि ॥ ॥ १-७८-३७ (३५९६)

इति श्रीमन्महाभारते आदिपर्वणि संभवपर्वणि
अष्टसप्ततितमोऽध्यायः ॥ ७८ ॥

Mahabharata - Adi Parva - Chapter Footnotes

१-७८-२ वली त्वचःसंवलनम् । पलितानि केशरोम्णां शौक्ल्यम्। पर्यगुः परितः शरीरे गतानि प्राप्तानियौवने यौवनसाध्ये कामभोगे ॥

१-७८-३ पाप्मानं भोगसामर्थ्येऽपि तदिच्छारूपं चित्तस्य दौस्थ्यम्
। चरेयं भुञ्जीय ॥
१-७८-५ दोषाः कफाद्याधिक्याद्वमनादयः ॥
१-७८-१५ तिर्यग्योनीनामिव गतं प्रकाशं मैथुनाद्याचरणं येप तेषु ॥
१-७८-२१ पीठकानां राजयोग्यानां नरयानविशेषाणां तखतरावा इति
म्लेच्छेषु प्रसिद्धानाम् ॥
१-७८-२६ अग्निप्रस्कन्दनं श्रौतस्मार्ताद्यग्निसाध्यकर्मत्यागस्तत्परः ॥
१-७८-२८ वरीयान्स्वभ्रातृभ्यो महान् । जरो देहेन्द्रियशक्तिघातः ॥
१-७८-३१ अञ्जसा आर्जवेन ॥
१-७८-३४ यथेप्सितान् यावज्जीवम् ॥
अष्टसप्ततितमोऽध्यायः ॥
७८ ॥

---

अध्यय०७९
॥ श्रीः ॥
१.७९. अध्यायः ७९

Mahabharata - Adi Parva - Chapter Topics
विषयानुभवेन ययातेर्वैराग्यप्राप्तिः ॥ १ ॥
पूरोः ययातिना यौवनप्रत्यर्पणम् ॥ २ ॥
तस्य राज्याभिषेकः ॥ ३ ॥
ययातेर्वनं प्रति गमनम् ॥ ४ ॥
यदुप्रभृतीनां वंशकथनम् ॥ ५ ॥

Mahabharata - Adi Parva - Chapter Text

१-७९-० (३५९७)
वैशंपायन उवाच। १-७९-०क्ष् (४७८)
पौरवेणाथ वयसा ययातिर्नहुषात्मजः ।
ग्रूपयौवनसंपन्नः कुमारः समपद्यत।'
प्रीतियुक्तो नृपश्रेष्ठश्चरा विषयान्प्रियान् ॥ १-७९-१ (३५९८)
यथाकामं यथोत्साहं यथाकालं यथासुखम् ।
धर्माविरुद्धं राजेन्द्रो यथा भवति सोऽन्वभूत् ॥ १-७९-२ (३५९९)
देवानतर्पयद्यज्ञैः श्राद्धैस्तद्वित्पितॄनपि ।
दीनाननुग्रहैरिष्टैः कामैश्च द्विजसत्तमान् ॥ १-७९-३ (३६००)
अतिथीनन्नपानैश्च विशश्च परिपालनैः ।
आनृशंस्येन शूद्रांश्च दस्यून्सन्निग्रहेण च ॥ १-७९-४ (३६०१)

धर्मेण च प्रजाः सर्वा यथावदनुरञ्जयन् ।
ययातिः पालयामास साक्षादिन्द्र इवापरः ॥ १-७९-५ (३६०२)
स राजा सिंहविक्रान्तो युवा विषयगोचरः ।
अविरोधेन धर्मस्य चचार सुखमुत्तमम् ॥ १-७९-६ (३६०३)
स संप्राप्य शुभान्कामांस्तृप्तः खिन्नश्च पार्थिवः ।
कालं वर्षसहस्रान्तं सस्मार मनुजाधिपः ॥ १-७९-७ (३६०४)
परिसंख्याय कालज्ञः कलाः काष्ठाश्च वीर्यवान् ।
यौवनं प्राप्य राजर्षिः सहस्रपरिवत्सरान् ॥ १-७९-८ (३६०५)
विश्वाच्या सहितो रेमे व्यभ्राजन्नन्दने वने ।
अलकायां स कालं तु मेरुशृङ्गे तथोत्तरे ॥ १-७९-९ (३६०६)
यदा स पश्यते कालं धर्मात्मा तं महीपतिः ।
पूर्णं मत्वा ततः कालं पूरुं पुत्रमुवाच ह ॥ १-७९-१० (३६०७)
यथाकामं यथोत्साहं यथाकालमरिन्दम ।
सेविता विषयाः पुत्र यौवनेन मया तव ॥ १-७९-११ (३६०८)
न जातु कामः कामानामुपभोगेन शाम्यति ।
हविषा कृष्णवर्त्मेव भूय एवाभिवर्धते ॥ १-७९-१२ (३६०९)
यत्पृथिव्यां व्रीहियवं हिरण्यं पशवः स्त्रियः ।
एकस्यापि न पर्याप्तं तस्मात्तृष्णां परित्यजेत् ॥ १-७९-१३ (३६१०)
या दुस्त्यजा दुर्मतिभिर्या न जीर्यति जीर्यतः ।
योऽसौ प्राणान्तिको रोगस्तांतृष्णां त्यजतः सुखम् ॥ १-७९-१४ (३६११)
पूर्णं वर्षसहस्रं मे विषयासक्तचेतसः ।
तथाप्यनुदिनं तृष्णा ममैतेष्वभिजायते ॥ १-७९-१५ (३६१२)
तस्मादेनामहं त्यक्त्वा ब्रह्मण्याधाय मानसम् ।
निर्द्वन्द्वो निर्ममो भूत्वा चरिष्यामि मृगैः सह ॥ १-७९-१६ (३६१३)
पूरो प्रीतोऽस्मि भद्रं ते गृहाणेदं स्वयौवनम् ।
राज्यं चेदं गृहाण त्वं ग्यावदिच्छसि यौवनम् ।
तावद्दीर्घायुषा भुङ्क्ष्व' त्वं हि मे प्रियकृत्सुतः ॥ १-७९-१७ (३६१४)
वैशंपायन उवाच।' १-७९-१८क्ष् (४७९)
प्रतिपेदे जरां राजा ययातिर्नाहुषस्तदा ।
यौवनं प्रतिपेदे च पूरुः स्वं पुनरात्मवान् ॥ १-७९-१८ (३६१५)
अभिषेक्तुकामं नृपतिं पूरुं पुत्रं कनीयसम् ।
ब्राह्मणप्रमुखा वर्णा इदं वचनमब्रुवन् ॥ १-७९-१९ (३६१६)
कथं शुक्रस्य नप्तारं देवयान्याः सुतं प्रभो ।
ज्येष्ठं यदुमतिक्रम्य राज्यं पूरोः प्रयच्छसि ॥ १-७९-२० (३६१७)
यदुर्ज्येष्ठस्तव सुतो जातस्तमनु तुर्वसुः ।
शर्मिष्ठायाः सुतो द्रुह्युस्ततोऽनुः पूरुरेव च ॥ १-७९-२१ (३६१८)

कथं ज्येष्ठानतिक्रम्य कनीयान्राज्यमर्हति ।
एतत्संबोधयामस्त्वां धर्मं त्वं प्रतिपालय ॥१-७९-२२ (३६१९)
ययातिरुवाच।१-७९-२३क्ष् (४८०)
ब्राह्मणप्रमुखा वर्णाः सर्वे शृण्वन्तु मे वचः ।
ज्येष्ठं प्रति यथा राज्यं न देयं मे कथंचन ॥१-७९-२३ (३६२०)
मम ज्येष्ठेन यदुना नियोगो नानुपालितः ।
प्रतिकूलः पितुर्यश्च न स पुत्रः सतां मतः ॥१-७९-२४ (३६२१)
मातापित्रोर्वचनकृद्धितः पथ्यश्च यः सुतः ।
स पुत्रः पुत्रवद्यश्च वर्तते पितृमातृषु ॥१-७९-२५ (३६२२)
ग्पुदिति नरकस्याख्या दुःखं च नरकं विदुः ।
पुतस्त्राणात्ततः पुत्त्रमिहेच्छन्ति परत्र च ॥१-७९-२६ (३६२३)
आत्मनः सदृशः पुत्रः पितृदेवर्षिपूजने ।
यो बहूनां गुणकरः स पुत्रो ज्येष्ठ उच्यते ॥१-७९-२७ (३६२४)
मूकोऽन्धो बधिरः श्वित्री स्वधर्मं नानुतिष्ठति ।
चोरः किल्बिषिकः पुत्रो ज्येष्ठो न ज्येष्ठ उच्यते ॥१-७९-२८ (३६२५)
ज्येष्ठांशहारी गुणकृदिह लोके परत्र च ।
श्रेयान्पुत्रो गुणोपेतः स पुत्रो नेतरो वृथा ।
वदन्ति धर्मं धर्मज्ञाः पितॄणां पुत्रकारणात् ॥ १-७९-२९ (३६२६)
वेदोक्तं संभवं मह्यमनेन हृदयोद्भवम् ।
तस्य जातमिदं कृत्स्नमात्मा पुत्र इति श्रुतिः'॥१-७९-३० (३६२७)
यदुनाऽहमवज्ञातस्तथा तुर्वसुनापि च ।
द्रुह्युना चानुना चैव मय्यवज्ञ कृता भृशम् ॥१-७९-३१ (३६२८)
पूरुणा तु कृतं वाक्यं मानितं च विशेषतः ।
कनीयान्मम दायादो धृता येन जरा मम ॥१-७९-३२ (३६२९)
मम कामः स च कृतः पूरुणा मित्ररूपिणा ।
शुक्रेण च वरोदत्तः काव्येनोशनसा स्वयम् ॥१-७९-३३ (३६३०)
पुत्रो यस्त्वाऽनुवर्तेत स राजा पृथिवीपतिः ।
ग्यो वानुवर्ती पुत्राणां स पुत्रो दायभाग्भवेत्'॥१-७९-३४ (३६३१)
भवतोऽनुनयाम्येवं पूरू राज्येऽभिषिच्यताम्। १-७९-३५ (३६३२)
प्रकृतय ऊचुः ।
यः पुत्रो गुणसंपन्नो मातापित्रोर्हितः सदा ॥ १-७९-३६क्ष् (४८१)
सर्वमर्हति कल्याणं कनीयानपि सत्तमः ।
ग्वेद धमार्थशास्त्रेषु मुनिभिः कथितं पुरा'॥१-७९-३६ (३६३३)
अर्हः पूरुरिदं राज्यं यः सुतः प्रियकृत्तव ।
वरदानेन शुक्रस्य न शक्यं वक्तुमुत्तरम् ॥१-७९-३७ (३६३४)
वैशंपायन उवाच।१-७९-३८क्ष् (४८२)

पौरजानपदैस्तुष्टैरित्युक्तो नाहुषस्तदा ।
अभ्यषिञ्चत्ततः पूरुं राज्ये स्वे सुतमात्मनः ॥ १-७९-३८ (३६३५)
ग्यदुं च तुर्वसुं चोभौ द्रुह्युं चैव सहानुजम् ।
अन्तेषु स विनिक्षिप्य नाहुषः स्वात्मजान्सुतान्'॥ १-७९-३९ (३६३६)
दत्त्वा च पूरवे राज्यं वनवासाय दीक्षितः ।
पुरात्स निर्ययौ राजा ब्राह्मणैस्तापसैः सह ॥ १-७९-४० (३६३७)
ग्देवयान्या च सहितः शर्मिष्ठया च भारत ।
अकरोत्स वने राजा सभार्यस्तप उत्तमम्'॥ १-७९-४१ (३६३८)
यदोस्तु यादवा जातास्तुर्वसोर्यवनाः स्मृताः ।
द्रुह्योः सुतास्तु वै भोजा अनोस्तु म्लेच्छजातयः ॥ १-७९-४२ (३६३९)
पूरोस्तु पौरवो वंशो यत्र जातोऽसि पार्थिव ।
इदं वर्षसहस्राणि राज्यं कारयितुं वशी ॥ ॥ १-७९-४३ (३६४०)

इति श्रीमन्महाभारते आदिपर्वणि संभवपर्वणि ऊनाशीतितमोऽध्यायः ॥ ७९ ॥
Mahabharata - Adi Parva - Chapter Footnotes

१-७९-१ चचार बुभोज ॥
१-७९-६ विषया दिव्यगन्धादयो गोचरे वशे यस्य स विषयगोचरः ॥
१-७९-१९ कनीयसं कनीयांसम् ॥

---

अध्यय०८०
॥ श्रीः ॥
१.८०. अध्यायः ८०

॥ उत्तरयायातारम्भः ॥
Mahabharata - Adi Parva - Chapter Topics
ययातेः स्वर्गगमनम् ॥ १ ॥

Mahabharata - Adi Parva - Chapter Text

१-८०-० (३६४१)
वैशंपायन उवाच। १-८०-०क्ष् (४८३)
एवं स नाहुषो राजा ययातिः पुत्रमीप्सितम् ।
राज्येऽभिषिच्य मुदितो वानप्रस्थोऽभवन्मुनिः ॥ १-८०-१ (३६४२)
उषित्वा च वने वासं ब्राह्मणैः संशितव्रतः ।
फलमूलाशनो दान्तस्ततः स्वर्गमितो गतः ॥ १-८०-२ (३६४३)
स गतः स्वर्निवासं तं निवसन्मुदितः सुखी ।

कालेन नातिमहता पुनः शक्रेण पातितः ॥१-८०-३ (३६४४)
ग्साधुभिः संगतिं लब्ध्वा पुनः स्वर्गमुपेयिवान्। १-८०-४ (३६४५)
जनमेजय उवाच ।
स्वर्गतश्च पुनर्ब्रह्मन्निवसन्देववेश्मनि ।
कालेन नातिमहता कथं शक्रेण पातितः'॥ १-८०-४क्ष् (४८४)
निपतन्प्रच्युतः स्वर्गादप्राप्तो मेदिनीतलम् ।
स्थित आसीदन्तरिक्षे स तदेति श्रुतं मया ॥१-८०-५ (३६४६)
तत एव पुनश्चापि गतः स्वर्गमिति श्रुतम् ।
राज्ञा वसुमता सार्धमष्टकेन च वीर्यवान् ॥१-८०-६ (३६४७)
प्रतर्दनेन शिविना समेत्य किल संसदि ।
कर्मणा केन स दिवं पुनः प्राप्तो महीपतिः ॥१-८०-७ (३६४८)
सर्वमेतदशेषेण श्रोतुमिच्छामि तत्त्वतः ।
कथ्यमानं त्वया विप्र विप्रर्षिगणसंनिधौ ॥१-८०-८ (३६४९)
देवराजसमो ह्यासीद्ययातिः पृथिवीपतिः ।
वर्धनः कुरुवंशस्य विभावसुसमद्युतिः ॥१-८०-९ (३६५०)
तस्य विस्तीर्णयशसः सत्यकीर्तेर्महात्मनः ।
चरितं श्रोतुमिच्छामि दिवि चेह च सर्वशः ॥१-८०-१० (३६५१)
वैशंपायन उवाच।१-८०-११क्ष् (४८५)
हन्त ते कथयिष्यामि ययातेरुत्तरां कथाम् ।
दिवि चेह च पुण्यार्थां सर्वपापप्रणाशिनीम् ॥१-८०-११ (३६५२)
ययातिर्नाहुषो राजा पूरुं पुत्रं कनीयसम् ।
राज्येऽभिषिच्य मुदितः प्रावव्राज वनं तदा ॥१-८०-१२ (३६५३)
अन्त्युषे स विनिक्षिप्य पुत्रान्यदुपुरोगमान् ।
फलमूलाशनो राजा वने संन्यवसच्चिरम् ॥१-८०-१३ (३६५४)
शंसितात्मा जितक्रोधस्तर्पयन्पितृदेवताः ।
अग्नींश्च विधिवज्जुह्वन्वानप्रस्थविधानतः ॥१-८०-१४ (३६५५)
अथितीन्पूजयामास वन्येन हविषा विभुः ।
शिलोञ्छवृत्तिमास्थाय शेषान्नकृतभोजनः ॥१-८०-१५ (३६५६)
पूर्णं वर्षसहस्रं च एवंवृत्तिरभून्नृपः ।
अब्भक्षः शरदस्त्रिंशदासीन्नियतवाङ्मनाः ॥१-८०-१६ (३६५७)
ततश्च वायुभक्षोऽभूत्संवत्सरमतन्द्रितः ।
तथा पञ्चाग्निमध्ये च तपस्तेपे स वत्सरम् ॥१-८०-१७ (३६५८)
एकपादः स्तितश्चासीत्षण्मासाननिलाशनः ।
पुण्यकीर्तिस्ततः स्वर्गे जगामावृत्य रोदसी ॥ ॥१-८०-१८ (३६५९)

इति श्रीमन्महाभारते आदिपर्वणि संभवपर्वणि अशीतितमोऽध्यायः ॥८० ॥

Mahabharata - Adi Parva - Chapter Footnotes

१-८०-१३ अन्त्येषु म्लेच्छेषु ॥
१-८०-१७ पञ्चाग्नयश्चत्वारोऽग्नयः पञ्चमः सूर्यः ॥
१-८०-१८ आवृत्य व्याप्य । रोदसी द्यावभूमी। पृथिव्यामिव स्वर्गेपि मुख्योऽभूदित्यर्थः ॥
अशीतितमोऽध्यायः ॥
८० ॥

---

अध्यय०८१
॥ श्रीः ॥
१.८१. अध्यायः ८१

Mahabharata - Adi Parva - Chapter Topics
इन्द्रययातिसंवादः ॥ १ ॥

Mahabharata - Adi Parva - Chapter Text

१-८१-० (३६६०)
वैशंपायन उवाच। १-८१-०क्ष् (४८६)
स्वर्गतः स तु राजेन्द्रो निवसन्देववेश्मनि ।
पूजितस्त्रिदशैः साध्यैर्मरुद्भिर्वसुभिस्तथा ॥ १-८१-१ (३६६१)
देवलोकं ब्रह्मलोकं संचरन्पुण्यकृद्वशी ।
अवसत्पृथिवीपालो दीर्घकालमिति श्रुतिः ॥ १-८१-२ (३६६२)
स कदाचिन्नृपश्रेष्ठो ययातिः शक्रमागमत् ।
कथान्ते तत्र शक्रेण स पृष्टः पृथिवीपतिः ॥ १-८१-३ (३६६३)
शक्र उवाच। १-८१-४क्ष् (४८७)
यदा स पूरुस्तव रूपेण राज-
ञ्जरां गृहीत्वा प्रचचार भूमौ ।
तदा च राज्यं संप्रदायैव तस्मै
त्वया किमुक्तः कथयेह सत्यम् ॥ १-८१-४ (३६६४)
ययातिरुवाच। १-८१-५क्ष् (४८८)
गङ्गायमुनयोर्मध्ये कृत्स्नोयं विषयस्तव ।
मध्ये पृथिव्यास्त्वं राजा भ्रातरोऽन्त्याधिपास्तव ॥ १-८१-५ (३६६५)
ग्न च कुर्यान्नरो दैन्यं शाठ्यं क्रोधं तथैव च ।
जैह्ययं च मत्सरं वैरं सर्वत्रेदं न कारयेत् ॥ १-८१-६ (३६६६)
मातरं पितरं ज्येष्ठं विद्वांसं च तपोधनम् ।

क्षमावन्तं च राजेन्द्र नावमन्येत बुद्धिमान् ॥१-८१-७ (३६६७)
ळशक्तस्तु क्षमते नित्यमशक्तः क्रुध्यते नरः ।
दुर्जनः सुजनं द्वेष्टि दुर्बलो बलवत्तरम् ॥१-८१-८ (३६६८)
रूपवन्तमरूपी च धनवन्तं च निर्धनः ।
अकर्मी कर्मिणं द्वेष्टि धार्मिकं च नधार्मिकः ॥१-८१-९ (३६६९)
निर्गुणो गुणवन्तं च पुत्रैतत्कलिलक्षणम् ।
विपरीतं च राजेन्द्र एतेषु कृतलक्षणम् ॥१-८१-१० (३६७०)
ब्राह्मणो वाथ वा राजा वैश्यो वा शूद्र एव वा ।
प्रशस्तेषु प्रसक्ताश्चेत्प्रशस्यन्ते यशस्विनः ॥१-८१-११ (३६७१)
तस्मात्प्रशस्ते राजेन्द्र नरः सक्तमना भवेत् ।
अलोकज्ञा ह्यप्रशस्ता भ्रातरस्ते ह्यबुद्धयः ॥१-८१-१२ (३६७२)
अन्त्याधिपतयः सर्वे ह्यभवन्गुरुशासनात्। १-८१-१३ (३६७३)
इन्द्र उवाच ।
त्वं हि धर्मविदो राजन्कत्थसे धर्मसुत्तमम् ।
कथयस्व पुनर्मेऽद्य लोकवृत्तान्तमुत्तमम् ॥ १-८१-१३क्ष् (४८९)
ययातिरुवाच' १-८१-१४क्ष् (४९०)
अक्रोधनः क्रोधनेभ्यो विशिष्ट-
स्तथा तितिक्षुरतितिक्षोर्विशिष्टः ।
अमानुषेभ्यो मानुषाश्च प्रधाना
विद्वांस्तथैवाविदुषः प्रधानः ॥ १-८१-१४ (३६७४)
आक्रुश्यमानो नाकोशेन्मन्युरेव तितिक्षतः ।
आक्रोष्टारं निर्दहति सुकृतं चास्य विन्दति ॥१-८१-१५ (३६७५)
नारुन्तुदः स्यान्न नृशंसवादी
न हीनतः परमभ्याददीत ।
ययाऽस्य वाचा पर उद्विजेत
न तां वदेद्रुशतीं पापलोक्याम् ॥ १-८१-१६ (३६७६)
अरुन्तुदं पुरुषं तीक्ष्णवाचं
वाक्कण्टकैर्वितुदन्तं मनुष्यन् ।
विद्यादलक्ष्मीकतमं जनानां
मुखे निबद्धां निर्ऋतिं वहन्तम् ॥ १-८१-१७ (३६७७)
सद्भिः पुरस्तादभिपूजितः स्या-
त्सद्भिस्तथा पृष्ठतो रक्षितः स्यात् ।
सदाऽसतामतिवादांस्तितिक्षे-
त्सतां वृत्तं चाददीतार्यवृत्तः ॥ १-८१-१८ (३६७८)
वाक्सायका वदनान्निष्पतन्ति
यैराहतः शोचति रात्र्यहानि ।

परस्य ये मर्मसु संपतन्ति
तान्पण्डितो नावसृजेत्परेषु ॥ १-८१-१९ (३६७९)
नहीदृशं संवननं त्रिषु लोकेषु विद्यते ।
दया मैत्री च भूतेषु दानं च मधुरा च वाक् ॥१-८१-२० (३६८०)
तस्मात्सान्त्वं सदा वाच्यं न वाच्यं परुषं क्वचित् ।
पूज्यान्संपूजयेद्दद्यान्न च याचेत्कदाचन ॥ ॥१-८१-२१ (३६८१)

इति श्रीमन्महाभारते आदिपर्वणि संभवपर्वणि एकाशीतितमोऽध्यायः ॥ ८१ ॥
Mahabharata - Adi Parva - Chapter Footnotes

१-८१-१६ अस्य आक्रोष्टुः सुकृतं तितिक्षुर्विन्दति ।रुशतीं अकल्याणी ॥
१-८१-१७ निर्ऋतिं दुर्देवताम् ॥
१-८१-२० संवननं वशीकरणम् ॥
एकाशीतितमोऽध्यायः ॥
८१ ॥

---

अध्यय०८२
॥ श्रीः ॥
१.८२. अध्यायः ८२

Mahabharata - Adi Parva - Chapter Topics
स्वर्गतो ययातेः पतनं ।अष्टकप्रश्नश्च ॥१ ॥

Mahabharata - Adi Parva - Chapter Text

१-८२-० (३६८२)
इन्द्र उवाच।१-८२-०क्ष् (४९१)
सर्वाणि कर्माणि समाप्य राजन्
गृहं परित्यज्य वनं गतोऽसि ।
तत्त्वां पृच्छामि नहुषस्य पुत्र
केनासि तुल्यस्तपसा ययाते ॥ १-८२-१ (३६८३)
ययातिरुवाच।१-८२-२क्ष् (४९२)
नाहं देवमनुष्येषु गन्धर्वेषु महर्षिषु ।
आत्मनस्तपसा तुल्यं कंचित्पश्यामि वासव ॥१-८२-२ (३६८४)
इन्द्र उवाच।१-८२-३क्ष् (४९३)
यदाऽवमंस्थाः सदृशः श्रेयसश्च
अल्पीयसश्चाविदितप्रभावः ।

तस्माल्लोकास्त्वन्तवन्तस्तवे मे
क्षीणे पुण्ये पतिताऽस्यद्य राजन् ॥ १-८२-३ (३६८५)
ययातिरुवाच।१-८२-४क्ष् (४९४)
सुरर्षिगन्धर्वनरावमाना-
त्क्षयं गता मे यदि शक्रलोकाः ।
इच्छाम्यहं सुरलोकाद्विहीनः
सतां मध्ये पतितुं देवराज ॥ १-८२-४ (३६८६)
इन्द्र उवाच।१-८२-५क्ष् (४९५)
सतां सकाशे पतिताऽसि राजं-
श्च्युतः प्रतिष्ठां यत्र लब्धासि भूयः ।
एतद्विदित्वा च पुनर्ययाते
त्वं माऽवमंस्थाः सदृशः श्रेयसश्च ॥ १-८२-५ (३६८७)
वैशंपायन उवाच।१-८२-६क्ष् (४९६)
ततः प्रहायामरराजजुष्टा-
न्पुण्याँल्लोकान्पतमानं ययातिम् ।
संप्रेक्ष्य राजर्षिवरोऽष्टकस्त-
मुवाच सद्धर्मविधानगोप्ता ॥ १-८२-६ (३६८८)
अष्टक उवाच।१-८२-७क्ष् (४९७)
कस्त्वं युवा वासवतुल्यरूपः
स्वतेजसा दीप्यमानो यथाऽग्निः ।
पतस्युदीर्णाम्बुधरान्धकारा-
त्खात्खेचराणां प्रवरो यथाऽर्कः ॥ १-८२-७ (३६८९)
दृष्टवा च त्वां सूर्यपथात्पतन्तं
वैश्वानरार्कद्युतिमप्रमेयम् ।
किं नु स्विदेतत्पततीति सर्वे
वितर्कयन्तः परिमोहिताः स्मः ॥ १-८२-८ (३६९०)
दृष्टवा च त्वां धिष्ठितं देवमार्गे
शक्रार्कविष्णुप्रतिमप्रभावम् ।
अभ्युद्गतास्त्वां वयमद्य सर्वे
तत्त्वं प्रपाते तव जिज्ञासमानाः ॥ १-८२-९ (३६९१)
न चापि त्वां धृष्णुमः प्रष्टुमग्रे
न च त्वमस्मान्पृच्छसि ये वयं स्मः ।
तत्त्वां पृच्छामि स्पृहणीयरूप
कस्य त्वं वा किंनिमित्तं त्वमागाः ॥ १-८२-१० (३६९२)
भयं तु ते व्येतु विषादमोहौ
त्यजाशु चैवेन्द्रसमप्रभाव ।

त्वां वर्तमानं हि सतां सकाशे
नालं प्रसोढुं बलहाऽपि शक्रः ॥ १-८२-११ (३६९३)
सन्तः प्रतिष्ठा हि सुखच्युतानां
सतां सदैवामरराजकल्प ।
ते सङ्गताः स्थावरजङ्गमेशाः
प्रतिष्ठितस्त्वं सदृशेषु सत्सु ॥ १-८२-१२ (३६९४)
प्रभुरग्निः प्रतपने भूमिरावपने प्रभुः ।
प्रभुः सूर्यः प्रकाशित्वे सतां चाभ्यागतः प्रभुः ॥ ॥ १-८२-१३ (३६९५)

इति श्रीमन्महाभारते आदिपर्वणि संभवपर्वणि द्व्यशीतितमोऽध्यायः
॥ ८२ ॥
Mahabharata - Adi Parva - Chapter Footnotes

१-८२-३ अवमंस्थाः सर्वेभ्य आत्मन आधिक्योक्त्या । सदृशः सदृशान् ॥
१-८२-५ यत्र पतिता प्रतिष्ठां लब्धासि लप्स्यसि ॥
१-८२-१० धुष्णुमः प्रगल्भामहे ॥
१-८२-१३ आवपने संग्रहे बीजावापे वा ॥
द्व्यशीतितमोऽध्यायः ॥
८२ ॥

---

अध्यय०८३
॥ श्रीः ॥
१.८३. अध्यायः ८३

Mahabharata - Adi Parva - Chapter Topics
ययातेः स्वनामकथनपूर्वकं अष्टकेन सह संवादः ॥ १ ॥
तत्र ययातिना स्वस्य स्वर्गादधःपतनकारणकथनम् ॥ २ ॥

Mahabharata - Adi Parva - Chapter Text

१-८३-० (३६९६)
ययातिरुवाच । १-८३-०क्ष् (४९८)
अहं ययातिर्नहुषस्य पुत्रः
पूरोः पिता सर्वभूतावमानात् ।
प्रभ्रंशितः सुरसिद्धर्षिलोका-
त्परिच्युतः प्रपताम्यल्पपुण्यः ॥ १-८३-१ (३६९७)
अहं हि पूर्वो वयसा भवद्भ्य-

स्तेनाभिवादं भवतां न प्रयुञ्जे ।
यो विद्यया तपसा जन्मना वा
वृद्धः स पूज्यो भवति द्विजानाम् ॥ १-८३-२ (३६९८)
अष्टक उवाच। १-८३-३क्ष् (४९९)
अवादीस्त्वं वयसा यः प्रवृद्धः
स वै राजन्नाभ्यधिकः कथ्यते च ।
यो विद्यया तपसा संप्रवृद्धः
स एव पूज्यो भवति द्विजानाम् ॥ १-८३-३ (३६९९)
ययातिरुवाच। १-८३-४क्ष् (५००)
प्रतिकूलं कर्मणां पापमाहु-
स्तद्वर्ततेऽप्रवणे पापलोक्यम् ।
सन्तोऽसतां नानुवर्तन्ति चैत-
द्यथा चैषामनुकूलास्तथाऽऽसन् ॥ १-८३-४ (३७००)
अभूद्धनं मे विपुलं गतं त-
द्विचेष्टमानो नाधिगन्ता तदस्मि ।
एवं प्रधार्यात्महिते निविष्टो
यो वर्तते स विजानाति जीवः ॥ १-८३-५ (३७०१)
महाधनो यो यजते सुयज्ञै-
र्यः सर्वविद्यासु विनीतबुद्धिः ।
वेदानधीत्य तपसा योज्य देहं
दिवं स यायात्पुरुषो वीतमोहः ॥ १-८३-६ (३७०२)
न जातु हृष्येन्महता धनेन
वेदानधीयीतानहंकृतः स्यात् ।
नानाभावा बहवो जीवलोके
दैवाधीना नष्टचेष्टाधिकाराः ।
तत्तत्प्राप्य न विहन्येत धीरो
दिष्टं बलीय इति मत्वाऽऽत्मबुद्ध्या ॥ १-८३-७ (३७०३)
सुखं हि जन्तुर्यदि वाऽपि दुःखं
दैवाधीनं विन्दते नात्मशक्त्या ।
तस्माद्दिष्टं बलवन्मन्यमानो
न संज्वरेन्नापि हृष्येत्कथंचित् ॥ १-८३-८ (३७०४)
दुःखैर्न तप्येन्न सुखैः प्रहृष्ये-
त्समेन वर्तेत सदैव धीरः ।
दिष्टं बलीय इति मन्यमानो
न संज्वरेन्नापि हृष्येत्कथंचित् ॥ १-८३-९ (३७०५)
भये न मुह्याम्यष्टकाहं कदाचि-

त्सन्तापो मे मानसो नास्ति कश्चित् ।
धाता यथा मां विदधीत लोके
ध्रुवं तथाऽहं भवितेति मत्वा ॥ १-८३-१० (३७०६)
संस्वेदजा अण्डजाश्चोद्भिदश्च
सरीसृपाः कृमयोऽथाप्सु मत्स्याः ।
तथाश्मनस्तृणकाष्ठं च सर्वे
दिष्टक्षये स्वां प्रकृतिं भजन्ति ॥ १-८३-११ (३७०७)
अनित्यतां सुखदुःखस्य बुद्ध्वा
कस्मात्संतापमष्टकाहं भजेयम् ।
किं कुर्यां वै किं च कृत्वा न तप्ये
तस्मात्सन्तापं वर्जयाम्यप्रमत्तः ॥ १-८३-१२ (३७०८)
वैशंपायन उवाच। १-८३-१३क्ष् (५०१)
एवं ब्रुवाणं नृपतिं ययाति-
मथाष्टकः पुनरेवान्वपृच्छत् ।
मातामहं सर्वगुणोपपन्नं
तत्रस्थितं स्वर्गलोके यथावत् ॥ १-८३-१३ (३७०९)
अष्टक उवाच। १-८३-१४क्ष् (५०२)
ये ये लोकाः पार्थिवेन्द्रप्रधाना-
स्त्वया भुक्ता यं च कालं यथावत् ।
तान्मे राजन्ब्रूहि सर्वान्यथाव-
त्क्षेत्रज्ञवद्भाषसे त्वं हि धर्मान् ॥ १-८३-१४ (३७१०)
ययातिरुवाच। १-८३-१५क्ष् (५०३)
राजाऽहमासमिह सार्वभौम-
स्ततो लोकान्महतश्चाजयं वै ।
तत्रावसं वर्षसहस्रमात्रं
ततो लोकं परमस्म्यभ्युपेतः ॥ १-८३-१५ (३७११)
ततः पुरीं पुरुहूतस्य रम्यां
सहस्रद्वारां शतयोजनायताम् ।
अध्यावसं वर्षसहस्रमात्रं
ततो लोकं परमस्म्यभ्युपेतः ॥ १-८३-१६ (३७१२)
ततो दिव्यमजरं प्राप्य लोकं
प्रजापतेर्लोकपतेर्दुरापम् ।
तत्रावसं वर्षसहस्रमात्रं
ततो लोकं परमस्म्यभ्युपेतः ॥ १-८३-१७ (३७१३)
स देवदेवस्य निवेशने च
विहृत्य लोकानवसं यथेष्टम् ।

संपूज्यमानस्त्रिदशैः समस्तै-
स्तुल्यप्रभावद्युतिरीश्वराणाम् ॥ १-८३-१८ (३७१४)
तथाऽऽवसं नन्दने कामरूपी
संवत्सराणामयुतं शतानाम् ।
सहाप्सरोभिर्विहरन्पुण्यगन्धा-
न्पश्यन्नगान्पुष्पितांश्चारुरूपान् ॥ १-८३-१९ (३७१५)
तत्र स्थितं मां देव सुखेषु सक्तं
कालेऽतीते महति ततोऽतिमात्रम् ।
दूतो देवानामब्रवीदुग्ररूपो
ध्वंसेत्युच्चैस्त्रिः प्लुतेन स्वरेण ॥ १-८३-२० (३७१६)
एतावन्मे विदितं राजसिंह
ततो भ्रष्टोऽहं नन्दनात्क्षीणपुण्यः ।
वाचोऽश्रौषं चान्तरिक्षे सुराणां
सानुक्रोंशाः शोचतां मां नरेन्द्र ॥ १-८३-२१ (३७१७)
अहो कष्टं क्षीणपुण्यो ययातिः
पतत्यसौ पुण्यकृत्पुण्यकीर्तिः ।
तानब्रुवं पतमानस्ततोऽहं
सतां मध्ये निपतेयं कथं नु ॥ १-८३-२२ (३७१८)
तैराख्याता भवतां यज्ञभूमिः
समीक्ष्य चेमां त्वरितमुपागतोऽस्मि ।
हविर्गन्धं देशिकं यज्ञभूमे-
र्धूमापाङ्गं प्रतिगृह्य प्रतीतः ॥ ॥ १-८३-२३ (३७१९)

इति श्रीमन्महाभारते आदिपर्वणि संभवपर्वणि त्र्यशीतितमोऽध्यायः
॥ ८३ ॥

Mahabharata - Adi Parva - Chapter Footnotes

१-८३-२ ययातिरपनीततपोविद्यागर्वत्वाद्वयोज्यैष्ठ्यमेव पुरस्कृत्याह
। अहं हीति। तदेवोपपादयत्युत्तरार्धेन ॥
१-८३-३ तदसहमानोऽष्टक आह । अवादीरिति। त्वं च
विद्यातपःसंप्रवृद्ध इति भावः ॥
१-८३-४ विद्यातपसोः श्रैष्ठ्ये अष्टकेन स्तुते तत्र स्वानुभूतं
विघ्नं दर्शयन्ययातिरुवाच । प्रतिकूलमिति। कर्मणां पुण्यानां
प्रतिकूलं नाशकं पापं गर्वस्तच्चाप्रवणेऽनम्रे दर्पवति
वर्तते। पापलोक्यं नरकप्रदम्। एतत्पापमसतां संबन्धि सन्तो
नानुवर्तन्ते इदानीमपि। किंच प्राञ्चोपि सन्तो यथैषां कर्मणामनुकूला

उपबृंहकाः स्युस्तथा तेन प्रकारेण दम्भदर्पादिराहित्येन आसन्। अहं त्वत द्विधत्वात्स्वर्गादिन्द्रेण च्यावित इत्याशयः ॥
१-८३-५ तद्दम्भादिराहित्येन प्रसिद्धं धनं पुण्यं मे मम विपुलं यदभूत्तद्गतं नष्टं दर्पादित्यर्थः । पुनरिदानीं तच्चेष्टमानोऽपि तत्पुनर्नाधिगन्तास्मि। एवं प्रधार्य मामिकां गतिं ज्ञात्वा य आत्महिते निविष्टो यो वर्तते स धीरो जानाति नान्य इत्यर्थः ॥
१-८३-७ एतदेवाह । न जात्विति धनेन तपसा तर्हि त्वमे कुतोऽहंकारं कृतवानित्यत आह। नानेति। जीवलोकेऽस्मिन् जीवा नानाभावाः पृथक्स्वभावाः केचिद्धर्मरुचयः केचिद्विपरीताः। यतो दैवाधीनाः। अतएव नष्टा वृथाभूता चेष्टा उद्योगोऽधिकारः सामर्थ्यं च येषां ते तथा। दृष्टा इति शेषः। मूढानां पुण्ये पण्डितानां पापे च प्रवृत्तिकरं दैवमेव बलवदित्यर्थः। एवं विद्वांस्तत्तप्राप्य तत्सुखं दुःखं वा प्राप्य न विहन्येत। हर्षविषादाभ्यामात्मानं न हिंस्यादित्यर्थः ॥
१-८३-८ एतदेव विवृणोति । सुखं हीति द्वाभ्याम् ॥
१-८३-१० भयं तु ते व्येतु विषादमोहाविति यदष्टकेनोक्तं तत्रोत्तरमाह । भये इति। धाता दिष्टं ॥
१-८३-११ अहमिवान्येऽपि दिष्टाधीना एवेत्याह । संस्वेदजा इति। एतेपि दिष्टक्षये पुण्यपापानुभवानन्तरम्। स्वां प्रकृतिं स्वकर्मशेषानुगुणां योनिं भजन्ति प्राप्नुवन्ति ॥
१-८३-१२ अहं तु दिष्टक्षयाभावात्प्राप्तेपि दुःखे न तप्ये इत्याह । अनित्यतामिति ॥
१-८३-१४ क्षेत्रज्ञवत् ज्ञानिवत् ॥
१-८३-२३ तैरिति । देशिकमुपदेष्टारमिव स्थितं। हविषां गन्धो यत्र तं धूमापाङ्गं धूमप्रान्तं प्रतिगृह्य आघ्राय प्रतीतः जातप्रत्ययः ॥
त्र्यशीतितमोऽध्यायः ॥
८३ ॥

---

अध्यय०८४
॥ श्रीः ॥
१.८४. अध्यायः ८४

Mahabharata - Adi Parva - Chapter Topics
मृतस्य स्वर्गादिभोगानन्तरं पुनर्जननप्रकारकथनम् ॥१ ॥

Mahabharata - Adi Parva - Chapter Text

१-८४-० (३७२०)
अष्टक उवाच। १-८४-०क्ष् (५०४)
यदाऽवसो नन्दने कामरूपी
संवत्सराणामयुतं शतानाम् ।
किं कारणं कार्तयुगप्रधान
हित्वा च त्वं वसुधामन्वपद्यः ॥ १-८४-१ (३७२१)
ययातिरुवाच। १-८४-२क्ष् (५०५)
ज्ञातिः सुहृत्स्वजनो वा यथेह
क्षीणे वित्ते त्यज्यते मानवैर्हि ।
तथा तत्र क्षीणपुण्यं मनुष्यं
त्यजन्ति सद्यः सेश्वरा देवसङ्घाः ॥ १-८४-२ (३७२२)
अष्टक उवाच। १-८४-३क्ष् (५०६)
तस्मिन्कथं क्षीणपुण्या भवन्ति
संमुह्यते मेऽत्र मनोऽतिमात्रम् ।
किं वा विशिष्टाः कस्य धामोपयान्ति
तद्वै ब्रूहि क्षेत्रवित्त्वं मतो मे ॥ १-८४-३ (३७२३)
ययातिरुवाच। १-८४-४क्ष् (५०७)
इमं भौमं नरकं ते पतन्ति
ललाप्यमाना नरदेव सर्वे ।
ते कङ्कगोमायुबलाशनार्थे
क्षीणे पुण्ये बहुधा प्रव्रजन्ति ॥ १-८४-४ (३७२४)
तस्मादेतद्वर्जनीयं नरेन्द्र
दुष्टं लोके गर्हणीयं च कर्म ।
आख्यातं ते पार्थिव सर्वमेव
भूयश्चेदानीं वद किं ते वदामि ॥ १-८४-५ (३७२५)
अष्टक उवाच। १-८४-६क्ष् (५०८)
यदा तु तान्वितुदन्ते वयांसि
तथा गृध्राः शितिकण्ठाः पतङ्गाः ।
कथं भवन्ति कथमाभवन्ति
न भौममन्यं नरकं शृणोमि ॥ १-८४-६ (३७२६)
ययातिरुवाच। १-८४-७क्ष् (५०९)
ऊर्ध्वं देहात्कर्मणो जृम्भमाणा-
द्व्यक्तं पृथिव्यामनुसंचरन्ति ।
इमं भौमं नरकं ते पतन्ति
नावेक्षन्ते वर्षपूगाननेकान् ॥ १-८४-७ (३७२७)

षष्टिं सहस्राणि पतन्ति व्योम्नि
तथा अशीतिं परिवत्सराणि ।
तान्वै तुदन्ति पततः प्रपातं
भीमा भौमा राक्षसास्तीक्ष्णदंष्ट्राः ॥ १-८४-८ (३७२८)
अष्टक उवाच। १-८४-९क्ष् (५१०)
यदेनसस्ते पततस्तुदन्ति
भीमा भौमा राक्षसास्तीक्ष्णदंष्ट्राः ।
कथं भवन्ति कथमाभवन्ति
कथंभूता गर्भभूता भवन्ति ॥ १-८४-९ (३७२९)
ययातिरुवाच। १-८४-१०क्ष् (५११)
अस्रं रेतः पुष्पफलानुपृक्त-
मन्वेति तद्वै पुरुषेण सृष्टम् ।
स वै तस्या रज आपद्यते वै
स गर्भभूतः समुपैति तत्र ॥ १-८४-१० (३७३०)
वनस्पतीनोषधीश्चाविशन्ति
आपो वायुं पृथिवीं चान्तरिक्षम् ।
चतुष्पदं द्विपदं चाति सर्व-
मेवंभूता गर्भभूता भवन्ति ॥ १-८४-११ (३७३१)
अष्टक उवाच। १-८४-१२क्ष् (५१२)
अन्यद्वपुर्विदधातीह गर्भ-
मुताहोस्वित्स्वेन कायेन याति ।
आपद्यमानो नरयोनिमेता-
माचक्ष्व मे संशयात्प्रब्रवीमि ॥ १-८४-१२ (३७३२)
शरीरदेहातिसमुच्छ्रयं च
चक्षुःश्रोत्रे लभते केन संज्ञाम् ।
एतत्तत्त्वं सर्वमाचक्ष्व पृष्टः
क्षेत्रज्ञं त्वां तात मन्याम सर्वे ॥ १-८४-१३ (३७३३)
ययातिरुवाच। १-८४-१४क्ष् (५१३)
वायुः समुत्कर्षति गर्भयोनि-
मृतौ रेतः पुष्पफलानुपृक्तम् ।
स तत्र तन्मात्रकृताधिकारः
क्रमेण संवर्धयतीह गर्भम् ॥ १-८४-१४ (३७३४)
स जायमानो विगृहीतमात्रः
संज्ञामधिष्ठाय ततो मनुष्यः ।
स श्रोत्राभ्यां वेदयतीह शब्दं
स वै रूपं पश्यति चक्षुषा च ॥ १-८४-१५ (३७३५)

घ्राणेन गन्धं जिह्वयाऽथो रसं च
त्वचा स्पर्शं मनसा वेदभावम् ।
इत्यष्टकेहोपहितं हि विद्धि
महात्मनः प्राणभृतः शरीरे ॥ १-८४-१६ (३७३६)
अष्टक उवाच। १-८४-१७क्ष् (५१४)
यः संस्थितः पुरुषो दह्यते वा
निखन्यते वापि निकृष्यते वा ।
अभावभूतः स विनाशमेत्य
केनात्मानं चेतयते परस्तात् ॥ १-८४-१७ (३७३७)
ययातिरुवाच। १-८४-१८क्ष् (५१५)
हित्वा सोऽसून्सुप्तवन्निष्टनित्वा
पुरोधाय सुकृतं दुष्कृतं वा ।
अन्यां योनिं पवनाग्रानुसारी
हित्वा देहं भजते राजसिंह ॥ १-८४-१८ (३७३८)
पुण्यां योनिं पुण्यकृतो व्रजन्ति
पापां योनिं पापकृतो व्रजन्ति ।
कीटाः पतङ्गाश्च भवन्ति पापा
न मे विवक्षास्ति महानुभाव ॥ १-८४-१९ (३७३९)
चतुष्पदा द्विपदाः षट्पदाश्च
तथाभूता गर्भभूता भवन्ति ।
आख्यातमेतन्निखिलेन सर्वं
भूयस्तु किं पृच्छसि राजसिंह ॥ १-८४-२० (३७४०)
अष्टक उवाच। १-८४-२१क्ष् (५१६)
किंस्वित्कृत्वा लभते तात लोका-
न्मर्त्यः श्रेष्ठांस्तपसा विद्यया च ।
तन्मे पृष्टः शंस सर्वं यथाव-
च्छुभाँल्लोकान्येन गच्छेत्क्रमेण ॥ १-८४-२१ (३७४१)
ययातिरुवाच। १-८४-२२क्ष् (५१७)
तपश्च दानं च शमो दमश्च
ह्रीरार्जवं सर्वभूतानुकम्पा ।
स्वर्गस्य लोकस्य वदन्ति सन्तो
द्वाराणि सप्तैव महान्ति पुंसाम् ।
नश्यन्ति मानेन तमोऽभिभूताः
पुंसः सदैवेति वदन्ति सन्तः ॥ १-८४-२२ (३७४२)
अधीयानः पण्डितंमन्यमानो
यो विद्यया हन्ति यशः परेषाम् ।

तस्यान्तवन्तश्च भवन्ति लोका
न चास्य तद्ब्रह्म फलं ददाति ॥ १-८४-२३ (३७४३)
चत्वारि कर्माण्यभयङ्कराणि
भयं प्रयच्छन्त्ययथाकृतानि ।
मानाग्निहोत्रमुत मानमौनं
मानेनाधीतमुत मानयज्ञः ॥ १-८४-२४ (३७४४)
न मानमान्यो मुदमाददीत
न सन्तापं प्राप्नुयाच्चावमानात् ।
सन्तः सतः पूजयन्तीह लोके
नासाधवः साधुबुद्धिं लभन्ते ॥ १-८४-२५ (३७४५)
इति दद्यामिति यज इत्यदीय इति व्रतम् ।
इत्येतानि भयान्याहुस्तानि वर्ज्यानि सर्वशः ॥१-८४-२६ (३७४६)
ये चाश्रयं वेदयन्ते पुराणं
मनीषिणो मानसमार्गरुद्धम् ।
तन्निःश्रेयस्तेन संयोगमेत्य
परां शान्तिं प्रत्युः प्रेत्य चेह ॥ ॥ १-८४-२७ (३७४७)

इति श्रीमन्महाभारते आदिपर्वणि संभवपर्वणि
चतुरशीतितमोऽध्यायः ॥८४ ॥
Mahabharata - Adi Parva - Chapter Footnotes

१-८४-१ कार्तयुगप्रधाना कृतयुगे भवाः कार्तयुगा
अत्यन्तनिष्पापास्तेषां मुख्यतमेत्यर्थः ॥
१-८४-३ तत्र क्षीणपुण्याः कथं किंप्रकारा भवन्ति ।ततश्च
किंविशिष्टाः कीदृसाः सन्तः कस्य धाम स्थानं यान्ति कं लोकं
यान्तीत्यर्थः ॥
१-८४-४ तत्र कस्य धामेत्यस्योत्तरं इमं भौममिति ।पुण्ये क्षीणे
सति नरकं नरकोपमं बौमं भूसम्बन्धिनं इमं लोकं प्रति
पतन्ति।कथं भवन्तीत्यस्योत्तरं ते कङ्केति।कङ्काश्च
गोमायवश्च तेषां बलं सङ्घः तस्या शनार्थे
अशनविषयीभूतैतद्देहरक्षणार्थे बहुधा प्रव्रजन्ति पर्यटन्ति ॥
१-८४-५ तस्मादेतत्काम्यकर्म दुष्टं विषिद्धं गर्हणीयम् ॥
१-८४-६ ननु कङ्कादिभक्षितस्य कथं स्वरूपसत्ता कथं वा
शरीरान्तरेणाविर्भाव इति देहात्मवादमाश्रित्य शङ्कते ।भौमो
नरकश्च क इति पृच्छति च।यदा तु तानिति ॥
१-८४-७ ऊर्ध्वं देहात् देहक्षयानन्तरम् ।जृम्भमाणात्प्रबुद्धात्कर्मणो

हेतोः व्यक्तं स्थूलं शरीरं अनु अनुप्रविश्य जीवाः संचरन्ति कर्मफलानि भुञ्जते इति यत् तदेव भौमो नरकः। कुतोऽस्य नरकत्वमत आह। नावेक्षन्ते वर्षपूगाननेकान् यस्मादत्र पतिता गतं वयो न बुध्यन्ते कर्मभूमिं प्राप्यापि स्वहिताय न यतन्तेऽत इत्यर्थः। एतेन कङ्कादिभक्षितस्यापि सत्वं देहयोगश्चास्तीत्युक्तम् ॥
१-८४-८ षष्टिं सहस्राण्यशीतिं च सहस्राणि परिवत्सराणि व्योम्नि स्वर्गे स्थित्वा पतन्ति ।दारादयो भौमा राक्षसाः। पातं भूमिस्थितिं प्रपततः अनुभवतः ॥
१-८४-९ यत् यान् एनसः पापाद्धेतोः पततः स्वर्गाद्धवमानान् ते राक्षसास्तुदन्ति ते पुरुषाः कथं भवन्ति प्रपातभ्रष्टा इव कथं न शीर्यन्ते ।कथं वा आभवन्ति इन्द्रियादिमन्तो भवन्ति। कथं वा गर्भत्वं प्राप्नुवन्तीति प्रश्नत्रयम् ॥
१-८४-१० रेतः कर्तृ ।अस्रं स्त्रीरजः कर्मभूतं अन्वेति। तद्द्वयं पुष्पफलादिभावेनानुपृक्तं कललादिरूपं भवति। तत् आहारादिवत्कथं न जीर्यत इत्यत आह। पुरुषेणेति। ईश्वरेणेत्यर्थः। रजः तदुपलक्षितान् धातून्। समुपैति दुःखादीनीति शेषः ॥
१-८४-११ मात्रुदरपर्यन्तं प्रवेशक्रममाह ।वनस्पतीति ॥
१-८४-१२ नरयोनिमापद्यमानो जीवः स्वेन कायेन जैवेनैव रूपेण गर्भं मातुरुदरं याति उत तत्र प्रवेष्टुमन्यद्वपुर्विदधाति ॥
१-८४-१३ शरीरदेहातिसमुच्छ्रयं मातुः शरीरे गर्भदेहस्यातिसमुच्छ्रयं वृद्धिम् ।चक्षुःश्रोत्रे इतीन्द्रियमात्रोपलक्षणम् ॥
१-८४-१४ देहसमुच्छ्रयक्रममाह ।वायुरिति। ऋतौ तत्काले वायुः गर्भयोनिं अस्रं प्रति रेतः समुत्कर्षति प्रापयति। ततश्च पुष्पफलानुपृक्तं कललादिरूपगर्भं सएव तत्र गर्भाशये क्रमेण संवर्धयति। कथंभूतः तन्मात्रे वृद्धिमात्रएव कृताधिकारः समर्थः ॥
१-८४-१५ स जीवः विगृहीता मात्रा सूक्ष्मशरीरं येन सः ॥
१-८४-१६ श्रोत्रादिकं इत्युपहितं संबद्धं विद्धि ॥
१-८४-१७ देहात्मवादेन पुनः शङ्कते ।यः संस्थित इति। परस्तात् आत्मानं केन कारणेन चेतयते जानाति। देहातिरिक्तजीवाभावादिति बावः ॥
१-८४-१८ जीवो देहाद्भिन्नः पूर्वदेहं त्यक्त्वा सूक्ष्मदेहेन देहान्तरं प्राप्नोतीत्याह ।हित्वेति। पवनाग्रानुसारी आतिवाहिकपवनानुसारी ॥
१-८४-१९ कर्मानुसारेण योनिप्राप्तिमाह ।पुण्यामिति ॥
१-८४-२१ किंस्वित्कृत्वेति सामान्यप्रश्नः ।तपसा विद्ययेति विशेषप्रश्नः। चो वार्थे ॥

१-८४-२२ पुंसः पुमांसः ॥
१-८४-२३ दर्पवता कृतमध्ययनादि न मोक्षोपयोगि नापि स्वर्गदं प्रत्युत भयावहमित्याह द्वाभ्याम् । अधीयान इति ॥
१-८४-२५ अतो मानापमानादिद्वन्द्वसहिष्णुर्भवेदित्याह । न मानमान्य इति ॥
१-८४-२६ इति दद्यामिति दाम्भिकस्य स्वधर्मप्रकाशनाभिनयः ॥
१-८४-२७ मानसमार्गरुद्धं ध्यानविषयीभूतं । वेदयन्ते जानन्ति। तद्वेदनं निःश्रेयः सुखसाधनम् ॥
चतुरशीतितमोऽध्यायः ॥
८४ ॥

---

अध्यय०८५
॥ श्रीः ॥
१.८५. अध्यायः ८५

Mahabharata - Adi Parva - Chapter Topics
ब्रह्मचर्याद्याश्रमविषयकाष्टकययातिप्रश्नप्रतिवचनम् ॥१ ॥

Mahabharata - Adi Parva - Chapter Text

१-८५-० (३७४८)
अष्टक उवाच। १-८५-०क्ष् (५१८)
चरन्गृहस्थः कथमेति धर्मा-
न्कथं भिक्षुः कथमाचार्यकर्मा ।
वानप्रस्थः सत्पथे सन्निविष्टो
बहून्यस्मिन्संप्रति वेदयन्ति ॥ १-८५-१ (३७४९)
ययातिरुवाच। १-८५-२क्ष् (५१९)
आहूताध्यायी गुरुकर्मस्वचोद्यः
पूर्वोत्थायी चरमं चोपशायी ।
मृदुर्दान्तो धृतिमानप्रमत्तः
स्वाध्याशीलः सिध्यति ब्रह्मचारी ॥ १-८५-२ (३७५०)
धर्मागतं प्राप्य धनं यजेत
दद्यात्सदैवातिथीन्भोजयेच्च ।
अनाददानश्च परैरदत्तं
सैषा गृहस्थोपनिषत्पुराणी ॥ १-८५-३ (३७५१)
स्ववीर्यजीवी वृजिनान्निवृत्तो
दाता परेभ्यो न परोपतापी ।
तादृङ्मुनिः सिद्धिमुपैति मुख्यां

वसन्नरण्ये नियताहारचेष्टः ॥ १-८५-४ (३७५२)
अशिल्पजीवी गुणवांश्चैव नित्यं
जितेन्द्रियः सर्वतो विप्रयुक्तः ।
अनोकशायी लघुरल्पप्रसार-
श्चरन्देशानेकचरः स भिक्षुः ॥ १-८५-५ (३७५३)
रात्र्या यया वाऽभिजिताश्च लोका
भवन्ति कामाभिजिताः सुखाश्च ।
तामेव रात्रिं प्रयतेत विद्वा-
नरण्यसंस्थो भवितुं यतात्मा ॥ १-८५-६ (३७५४)
दशैव पूर्वान्दश चापरांश्च
ज्ञातीनथात्मानमथैकविंशम् ।
अरण्यवासी सुकृते दधाति
विमुच्यारण्ये स्वशरीरधातून् ॥ १-८५-७ (३७५५)
अष्टक उवाच। १-८५-८क्ष् (५२०)
कतिस्विदेव मुनयः कति मौनानि चाप्युत ।
भवन्तीति तदाचक्ष्व श्रोतुमिच्छामहे वयम् ॥ १-८५-८ (३७५६)
ययातिरुवाच। १-८५-९क्ष् (५२१)
अरण्ये वसतो यस्य ग्रामो भवति पृष्ठतः ।
ग्रामे वा वसतोऽरण्यं स मुनिः स्याज्जनाधिप ॥ १-८५-९ (३७५७)
अष्टक उवाच। १-८५-१०क्ष् (५२२)
कथंस्विद्वसतोऽरण्ये ग्रामो भवति पृष्ठतः ।
ग्रामे वा वसतोऽरण्यं कथं भवति पृष्ठतः ॥ १-८५-१० (३७५८)
ययातिरुवाच। १-८५-११क्ष् (५२३)
न ग्राम्यमुपयुञ्जीत य आरण्यो मुनिर्भवेत् ।
तथास्य वसतोऽरण्ये ग्रामो भवति पृष्ठतः ॥ १-८५-११ (३७५९)
अनग्निरनिकेतश्चाप्यगोत्रचरणो मुनिः ।
कौपीनाच्छादनं यावत्तावदिच्छेच्च चीवरम् ॥ १-८५-१२ (३७६०)
यावत्प्राणाभिसन्धानं तावदिच्छेच्च भोजनम् ।
तथाऽस्य वसतो ग्रामेऽरण्यं भवति पृष्ठतः ॥ १-८५-१३ (३७६१)
यस्तु कामान्परित्यज्य त्यक्तकर्मा जितेन्द्रियः ।
आतिष्ठेच्च मुनिर्मौनं स लोके सिद्धिमाप्नुयात् ॥ १-८५-१४ (३७६२)
धौतदन्तं कृत्तनखं सदा स्नातमलङ्कृतम् ।
असितं सितकर्माणं कस्तमर्हति नार्चितुम् ॥ १-८५-१५ (३७६३)
तपसा कर्शितः क्षामः क्षीणमांसास्थिशोणितः ।
स च लोकमिमं जित्वा लोकं विजयते परम् ॥ १-८५-१६ (३७६४)
यदा भवति निर्द्वन्द्वो मुनिर्मौनं समास्थितः ।

अथ लोकमिमं जित्वा लोकं विजयते परम् ॥१-८५-१७ (३७६५)
आस्येन तु यदाऽहारं गोवन्मृगयते मुनिः ।
अथास्य लोकः सर्वोऽयं सोऽमृतत्वाय कल्पते ॥१-८५-१८ (३७६६)
सामान्यधर्मः सर्वेषां क्रोधो लोभो द्रुहाऽक्षमा ।
विहाय मत्सरं शाठ्यं दर्पं दम्भं च पैशुनम् ।
क्रोधं लोभं ममत्वं च यस्य नास्ति स धर्मवित् ॥ १-८५-१९ (३७६७)
अष्टक उवाच।१-८५-२०क्ष् (५२४)
नित्याशनो ब्रह्मचारी गृहस्थो वनगो मुनिः ।
नाधर्ममशनात्प्राप्येत्कथं ब्रूहीह पृच्छते ॥१-८५-२० (३७६८)
ययातिरुवाच।१-८५-२१क्ष् (५२५)
अष्टौ ग्रासा मुनेः प्रोक्ताः षोडशारण्यवासिनः ।
द्वात्रिंशत्तु गृहस्थस्य अमितं ब्रह्मचारिणः ॥१-८५-२१ (३७६९)
इत्येवं कारणैर्ज्ञेयमष्टकैतच्छुभाशुभम् ॥ ॥ १-८५-२२ (३७७०)

इति श्रीमन्महाभारते आदिपर्वणि संभवपर्वणि
पञ्चाशीतितमोऽध्यायः ॥८५ ॥

Mahabharata - Adi Parva - Chapter Footnotes

१-८५-१ अस्मिन्धर्मे विषये बहूनि प्राप्तिद्वाराणि वेदयन्ति वैदिकाः ॥
१-८५-४ स्ववीर्यजीवी स्वप्रयत्नलब्धजीविकः ॥
१-८५-५ अनोकशायी यत्र क्वचनशायी ।लघुः परिग्रहशून्यः ॥
१-८५-६ तामेव रात्रिं तदैव सर्वपरिग्रहं संन्यस्य अरण्यसंस्थो भवितुं प्रयतेत ॥
१-८५-८ संन्यासः कतिधेति पृच्छति ।कतिस्विदिति ॥
१-८५-९ संन्यासं चतुष्प्रकारमभिप्रेत्य प्रथमं कुटीचकबहूदकरूपं भेदद्वयमाह ।अरण्येति ॥
१-८५-१० ग्रामारण्ययोः पृष्ठतःकरणं कथमिति पृच्छति ।कथमिति ॥
१-८५-११ कुटीचकं विशिनष्टि ।न ग्राम्यमिति ॥
१-८५-१२ बहूदकं विशिनष्टि ।अनग्निरिति ॥
१-८५-१४ हंसपरमहंसौ प्रस्तौति ।यस्त्विति ॥
१-८५-१५ धौतदन्तं शुद्धाहारम् ।कृत्तनखं त्यक्तहिंसासाधनम्।सदा स्नातं नित्यं शुद्धचित्तम्।अलंकृतं शमादिना।असितं बन्धरहितम्।सितकर्माणं शुद्धकर्माणम् ॥
१-८५-१८ आस्यस्य यावदपेक्षितं तावदेव मृगयते नतु परदिनार्थणार्जयतीत्यर्थः ॥
पञ्चाशीतितमोऽध्यायः ॥

अध्यय०८६
॥ श्रीः ॥
१.८६. अध्यायः ८६

Mahabharata - Adi Parva - Chapter Topics
स्वर्गाच्च्युतस्य ययातेरष्टकादियज्ञभूमिं प्रत्यागमननिमित्तकथनम्
॥ १ ॥
अष्टकप्रतर्दनयोर्ययातिना संवादः ॥ २ ॥

Mahabharata - Adi Parva - Chapter Text

१-८६-० (३७७१)
अष्टक उवाच। १-८६-०क्ष् (५२६)
कतरस्त्वनयोः पूर्वं देवानामेति साम्यताम् ।
उभयोर्धावतो राजन्सूर्याचन्द्रमसोरिव ॥ १-८६-१ (३७७२)
ययातिरुवाच। १-८६-२क्ष् (५२७)
अनिकेतो गृहस्थेषु कामवृत्तेषु संयतः ।
ग्राम एव वसन्भिक्षुस्तयोः पूर्वतरं गतः ॥ १-८६-२ (३७७३)
अप्राप्य दीर्घमायुस्तु यः प्राप्तो विकृतिं चरेत् ।
तप्यते यदि तत्कृत्वा चरेत्सोऽन्यत्तपस्ततः ॥ १-८६-३ (३७७४)
पापानां कर्मणां नित्यं बिभीयाद्यस्तु मानवः ।
सुखमप्याचरन्नित्यं सोऽत्यन्तं सुखमेधते ॥ १-८६-४ (३७७५)
यद्वै नृशंसं तदसत्यमाहु-
र्यः सेवते धर्ममनर्थबुद्धिः ।
अस्वोऽप्यनीशश्च तथैव राजं-
स्तदार्जवं स समाधिस्तदार्यम् ॥ १-८६-५ (३७७६)
अष्टक उवाच। १-८६-६क्ष् (५२८)
केनासि हूतः प्रहितोऽसि राज-
न्युवा स्रग्वी दर्शनीयः सुवर्चाः ।
कुतश्च आयातः कतरस्यां दिशि त्व-
मुताहोस्वित्पार्थिवं स्थानमस्ति ॥ १-८६-६ (३७७७)
ययातिरुवाच। १-८६-७क्ष् (५२९)
इमं भौमं नरकं क्षीणपुण्यः
प्रवेष्टुमुर्वीं गगनाद्विप्रहीणः ।
गविद्वांश्चैवं मतिमानार्यबुद्धि-

र्ममाभवत्कर्मलोक्यं च सर्वम्'।
उक्त्वाऽहं वः प्रपतिष्याम्यनन्तरं
त्वरन्ति मां लोकपा ब्राह्मणा ये ॥ १-८६-७ (३७७८)
सतां सकाशे तु वृतः प्रपात-
स्ते सङ्गता गुणवन्तश्च सर्वे ।
शक्राच्च लब्धो हि वरो मयैष
पतिष्यता भूमितलं नरेन्द्र ॥ १-८६-८ (३७७९)
अष्टक उवाच।१-८६-९क्ष् (५३०)
पृच्छामि त्वां मा प्रपत प्रपातं
यदि लोकाः पार्थिव सन्ति मेऽत्र ।
यद्यन्तरिक्षे यदि वा दिवि स्थिताः
क्षेत्रज्ञं त्वां तस्य धर्मस्य मन्ये ॥ १-८६-९ (३७८०)
ययातिरुवाच।१-८६-१०क्ष् (५३१)
यावत्पृथिव्यां विहितं गवाश्वं
सहारण्यैः पशुभिः पार्वतैश्च ।
तावल्लोका दिवि ते संस्थिता वै
तथा विजानीहि नरेन्द्रसिंह ॥ १-८६-१० (३७८१)
अष्टक उवाच।१-८६-११क्ष् (५३२)
तांस्ते ददामि मा प्रपत प्रपातं
ये मे लोका दिवि राजेन्द्र सन्ति ।
यद्यन्तरिक्षे यदि वा दिवि श्रिता-
स्तानाक्रम क्षिप्रमपेतमोहः ॥ १-८६-११ (३७८२)
ययातिरुवाच।१-८६-१२क्ष् (५३३)
नास्मद्विधोऽब्राह्मणो ब्रह्मविच्च
प्रतिग्रहे वर्तते राजमुख्य ।
यथा प्रदेयं सततं द्विजेभ्य-
स्तथाऽददं पूर्वमहं नरेन्द्र ॥ १-८६-१२ (३७८३)
नाब्राह्मणः कृपणो जातु जीवे-
द्या चाप्यस्याऽब्राह्मणी वीरपत्नी ।
सोऽहं नैवाकृतपूर्वं चरेयं
विधित्समानः किमु तत्र साधुः ॥ १-८६-१३ (३७८४)
प्रतर्दन उवाच।१-८६-१४क्ष् (५३४)
पृच्छामि त्वां स्पृहणीयरूप
प्रतर्दनोऽहं यदि मे सन्ति लोकाः ।
यद्यन्तरिक्षे यदि वा दिवि श्रिताः
क्षेत्रज्ञं त्वां तस्य धर्मस्य मन्ये ॥ १-८६-१४ (३७८५)

ययातिरुवाच। १-८६-१५क्ष् (५३५)
सन्ति लोका बहवस्ते नरेन्द्र
अप्येकैकः सप्तसप्ताप्यहानि ।
मधुच्युतो घृतपृक्ता विशोका-
स्ते नान्तवन्तः प्रतिपालयन्ति ॥ १-८६-१५ (३७८६)
प्रतर्दन उवाच। १-८६-१६क्ष् (५३६)
तांस्ते ददानि मा प्रपत प्रपातं
ये मे लोकास्तव ते वै भवन्तु ।
यद्यन्तरिक्षे यदि वा दिवि श्रिता-
स्तानाक्रम क्षिप्रमपेतमोहः ॥ १-८६-१६ (३७८७)
ययातिरुवाच। १-८६-१७क्ष् (५३७)
न तुल्यतेजाः सुकृतं कामयेत
योगक्षेमं पार्थिव पार्थिवः सन् ।
दैवादेशादापदं प्राप्य विद्वां-
श्चरेन्नृशंसं न हि जातु राजा ॥ १-८६-१७ (३७८८)
धर्म्यं मार्गं यतमानो यशस्यं
कुर्यान्नृपो धर्ममवेक्षमाणः ।
न मद्विधो धर्मबुद्धिः प्रजान-
न्कुर्यादेवं कृपणं मां यथाऽत्थ ॥ १-८६-१८ (३७८९)
कुर्यादपूर्वं न कृतं यदन्यै-
र्विधित्समानः किमु तत्र साधु ।
ग्धर्माधर्मौ सुविनिश्चित्य सम्य-
क्कार्याकार्येष्वप्रमत्तश्चरेद्यः ॥ १-८६-१९ (३७९०)
स वै धीमान्सत्यसन्धः कृतात्मा
राजा भवेल्लोकपालो महिम्ना ।
यदा भवेत्संशयो धर्मकार्ये
कामार्थौ वा यत्र विन्दन्ति सम्यक् ॥ १-८६-२० (३७९१)
कार्यं तत्र प्रथमं धर्मकार्यं
यन्नो विरुध्यादर्थकामौ स धर्मः १-८६-२१ (३७९२)
वैशंपायन उवाच।'
ब्रुवाणमेवं नृपतिं ययातिं
नृपोत्तमो वसुमानब्रवीत्तम् ॥ ॥ १-८६-२१क्ष् (५३८)

इति श्रीमन्महाभारते आदिपर्वणि संभवपर्वणि षडशीतितमोऽध्यायः
॥ ८६ ॥

१-८६-१ अनयोः कुटीचकबहूदकयोः ॥
१-८६-२ गृहस्थेषु शरीरस्थेष्विन्द्रियेषु ॥
१-८६-३ दीर्घमायुः प्राप्तः सिद्धिमप्राप्य यो विकृतिं पापं चरेत् ।तत्कृत्वा तप्येत यदि सोन्यत्तपः प्रायश्चित्तं चरेत् ॥
१-८६-४ कर्मणां सकाशात् बिभीयात् ।सुखं यथेच्छम् ॥
१-८६-५ नृशंसं हिंस्रं यत्कर्म तदसत्यं असत्संबन्धि ।अनर्थबुद्धिः फलेच्छारहितः।अनीशः ईशत्वबुद्धिरहितः ॥
१-८६-६ केन कतरस्यां दिशि प्रहिहितोसीत्यन्वयः ॥
१-८६-७ विप्रहीणश्च्युतः ।उक्त्वा आपृच्छ्य।वो युष्मान्।ब्राह्मणाः ब्रह्मनियुक्ताः ॥
१-८६-१२ अब्राह्मणः ब्राह्मणेतरः ब्राह्मणस्यैव भिक्षावृत्तित्वात् ।ब्रह्मविद्वेदार्थवेत्।न वर्तते न प्रवर्तते।प्रत्युत पूर्वमददमेव ॥
१-८६-१३ कृपणो याचकः ।या चाप्यस्य क्षत्रियस्य अब्राह्मणी क्षत्रिया सापि कृपणा नजीवेत्।तद्विधित्समानः कर्तुमिच्छुः तत्र तदा किमु साधुः स्यां अपितु नैवेत्यर्थः ॥
१-८६-१५ प्रत्येकं सप्तसप्ताप्यहानि सेविताः सन्तो नान्तवन्तः ।मधुच्युतः सुखस्रवः।घृतपृक्तास्तेजोयुक्ताः।ते त्वां प्रतिपालयन्ति प्रतीक्षन्ते ॥
१-८६-१७ नृशंसं निन्द्यं ॥
१-८६-१९ अन्यै राजभिर्यत्प्रतिग्रहाख्यं न कृतं तदपूर्वम् ॥
षडशीतितमोऽध्यायः ॥
८६ ॥

---

अध्यय०८७
॥ श्रीः ॥
१.८७. अध्यायः ८७

Mahabharata - Adi Parva - Chapter Topics
वसुमतः शिबेश्च ययातिना संवादः ॥ १ ॥
पुनरष्टकययातिसंवादः ॥ २ ॥
तत्रागतया माधव्या स्वपुत्रान्प्रति यया तेर्मातामहत्वकथनम् ॥ ३ ॥
तद्वचनेन ययातेरष्टकादिदत्तपुण्यस्वीकारपूर्वकमष्टकादिभिः सह स्वर्गगमनम् ॥ ४ ॥
ययातिना मार्गे अष्टकादीन्प्रति विस्तरेण स्ववृत्तान्तकथनम् ॥ ५ ॥
ययात्युपाख्यानश्रवणादिफलकथनम् ॥ ६ ॥

१-८७-० (३७९३)
वसुमानुवाच। १-८७-०क्ष् (५३९)
पृच्छामि त्वां वसुमानौषदश्वि-
र्यद्यस्ति लोको दिवि मे नरेन्द्र ।
यद्यन्तरिक्षे प्रथितो महात्मन्
क्षेत्रज्ञं त्वां तस्य धर्मस्य मन्ये ॥ १-८७-१ (३७९४)
ययातिरुवाच। १-८७-२क्ष् (५४०)
यदन्तरिक्षं पृथिवी दिशश्च
यत्तेजसा तपते भानुमांश्च ।
लोकास्तावन्तो दिवि संस्थिता वै
तेनान्तवन्तः प्रतिपालयन्ति ॥ १-८७-२ (३७९५)
वसुमानुवाच। १-८७-३क्ष् (५४१)
तांस्ते ददानि मा प्रपत प्रपातं
ये मे लोकास्तव ते वै भवन्तु ।
क्रीणीष्वैतांस्तृणकेनापि राज-
न्प्रतिग्रहस्ते यदि धीमन्प्रदुष्टः ॥ १-८७-३ (३७९६)
ययातिरुवाच। १-८७-४क्ष् (५४२)
न मिथ्याऽहं विक्रयं वै स्मरामि
वृथा गृहीतं शिशुकाच्छङ्कमानः ।
कुर्यां न चैवाकृतपूर्वमन्यै-
र्विधित्समानः किमु तत्र साधुः ॥ १-८७-४ (३७९७)
वसुमानुवाच। १-८७-५क्ष् (५४३)
तांस्त्वं लोकान्प्रतिपद्यस्व राज-
न्मया दत्तान्यदि नेष्टः क्रयस्ते ।
अहं न तान्वै प्रतिगन्ता नरेन्द्र
सर्वे लोकास्तव ते वै भवन्तु ॥ १-८७-५ (३७९८)
शिबिरुवाच। १-८७-६क्ष् (५४४)
पृच्छामि त्वां शिबिरौशीनरोऽहं
ममापि लोका यदि सन्तीह तात ।
यद्यन्तरिक्षे यदि वा दिवि श्रिताः
क्षेत्रज्ञं त्वां तस्य धर्मस्य मन्ये ॥ १-८७-६ (३७९९)
ययातिरुवाच। १-८७-७क्ष् (५४५)
यत्त्वं वाचा हृदयेनापि साधू-

न्परीप्समानान्नावमंस्था नरेन्द्र ।
तेनानन्ता दिवि लोकाः श्रितास्ते
विद्युद्रूपाः स्वनवन्तो महान्तः ॥ १-८७-७ (३८००)
शिबिरुवाच। १-८७-८क्ष् (५४६)
तांस्त्वं लोकान्प्रतिपद्यस्व राज-
न्मया दत्तान्यदि नेष्टः क्रयस्ते ।
न चाहं तान्प्रतिपत्स्ये ह दत्त्वा
यत्र गत्वा नानुशोचन्ति धीराः ॥ १-८७-८ (३८०१)
ययातिरुवाच। १-८७-९क्ष् (५४७)
यथा त्वमिन्द्रप्रतिमप्रभाव-
स्ते चाप्यनन्ता नरदेव लोकाः ।
तथाऽद्य लोके न रमेऽन्यदत्ते
तस्माच्छिबे नाभिनन्दामि दायम् ॥ १-८७-९ (३८०२)
अष्टक उवाच। १-८७-१०क्ष् (५४८)
न चेदेकैकशो राजँल्लोकान्नः प्रतिनन्दसि ।
सर्वे प्रदाय भवते गन्तारो नरकं वयम् ॥ १-८७-१० (३८०३)
ययातिरुवाच। १-८७-११क्ष् (५४९)
यदर्होऽहं तद्यतध्वं सन्तः सत्याभिनन्दिनः ।
अहं तन्नाभिजानामि यत्कृतं न मया पुरा ॥ १-८७-११ (३८०४)
अष्टक उवाच। १-८७-१२क्ष् (५५०)
कस्यैते प्रतिदृश्यन्ते रथाः पञ्च हिरण्मयाः ।
यानारुह्य नरो लोकानभिवाञ्छति शाश्वतान् ॥ १-८७-१२ (३८०५)
ययातिरुवाच। १-८७-१३क्ष् (५५१)
युष्मानेते वहिष्यन्ति रथाः पञ्च हिरण्मयाः ।
उच्चैः सन्तः प्रकाशन्ते ज्वलन्तोऽग्निशिखा इव ॥ १-८७-१३ (३८०६)
ग्वैशंपायन उवाच। १-८७-१४क्ष् (५५२)
अश्वमेधे महायज्ञे स्वयंभुविहिते पुरा ।
हयस्य यानि चाङ्गानि संनिकृत्य यथाक्रमम् ॥ १-८७-१४ (३८०७)
होताऽध्वर्युरथोद्गाता ब्रह्मणा सह भारत ।
अग्नौ प्रास्यन्ति विधिवत्समस्ताः षोडशर्त्विजः ॥ १-८७-१५ (३८०८)
धूमगन्धं च पापिष्ठा ये जिघ्रन्ति नरा भुवि ।
विमुक्तपापाः पूतास्ते तत्क्षणेनाभवन्नराः ॥ १-८७-१६ (३८०९)
एतस्मिन्नन्तरे चैव माधवी सा तपोधना ।
मृगचर्मपरीताङ्गी परिधाय मृगत्वचम् ॥ १-८७-१७ (३८१०)
मृगैः परिचरन्ती सा मृगाहारविचेष्टिता ।
यज्ञवाटं मृगगणैः प्रविश्य भृशविस्मिता ॥ १-८७-१८ (३८११)

आघ्रायन्ती धूमगन्धं मृगैरेव चचार सा ।
यज्ञवाटमटन्ती सा पुत्रांस्तानपराजितान् ॥ १-८७-१९ (३८१२)
पश्यन्ती यज्ञमाहात्म्यं मुदं लेभे च माधवी ।
असंस्पृशन्तं वसुधां ययातिं नाहुषं यदा ॥ १-८७-२० (३८१३)
दिविष्ठं प्राप्तमाज्ञाय ववन्दे पितरं तदा ।
तदा वसुमनापृच्छन्मातरं वै तपस्विनीम् ॥ १-८७-२१ (३८१४)
भवत्या यत्कृतमिदं वन्दनं पादयोरिह ।
कोयं देवोपमो राजा याऽभिवन्दसि मे वद ॥ १-८७-२२ (३८१५)
माधव्युवाच। १-८७-२३क्ष् (५५३)
शृणुध्वं सहिताः पुत्रा नाहुषोयं पिता मम ।
ययातिर्मम पुत्राणां मातामह इति स्मृतः ॥ १-८७-२३ (३८१६)
पूरुं मे भ्रातरं राज्ये समावेश्य दिवं गतः ।
केन वा कारणेनैवमिह प्राप्तो महायशाः ॥ १-८७-२४ (३८१७)
वैशंपायन उवाच। १-८७-२५क्ष् (५५४)
तस्यास्तद्वचनं श्रुत्वा स्वर्गाद्भ्रष्टेति चाब्रवीत् ।
सा पुत्रस्य वचः श्रुत्वा संभ्रमाविष्टचेतना ॥ १-८७-२५ (३८१८)
माधवी पितरं प्राह दौहित्रपरिवारितम् ।
तपसा निर्जिताँल्लोकान्प्रतिगृह्णीष्व मामकान् ॥ १-८७-२६ (३८१९)
पुत्राणामिव पौत्राणां धर्मादधिगतं धनम् ।
स्वार्थणेव वदन्तीह ऋषयो धर्मपाठकाः ।
तस्माद्दानेन तपसा चास्माकं दिवमाव्रज ॥ १-८७-२७ (३८२०)
ययातिरुवाच। १-८७-२८क्ष् (५५५)
यदि धर्मफलं ह्येतच्छोभनं भविता तव ।
दुहित्रा चैव दौहित्रैस्तारितोऽहं महात्मभिः ॥ १-८७-२८ (३८२१)
तस्मात्पवित्रं दौहित्रमद्यप्रभृति पैतृके ।
त्रीणि श्राद्धे पवित्राणि दौहित्रः कुतपस्तिलाः ॥ १-८७-२९ (३८२२)
त्रीणि चात्र प्रशंसन्ति शौचमक्रोधमत्वराम् ।
भोक्तारः परिवेष्टारः श्रावितारः पवित्रकाः ॥ १-८७-३० (३८२३)
दिवसस्याष्टमे भागे मन्दीभवति भास्करे ।
स कालः कुतपो नाम पितॄणां दत्तमक्षयम् ॥ १-८७-३१ (३८२४)
तिलाः पिशाचाद्रक्षन्ति दर्भा रक्षन्ति राक्षसात् ।
रक्षन्ति श्रोत्रियाः पङ्क्तिं यतिभिर्भुक्तमक्षयम् ॥ १-८७-३२ (३८२५)
लब्ध्वा पात्रं तु विद्वांसं श्रोत्रियं सुव्रतं शुचिम् ।
स कालः कालतो दत्तं नान्यथा काल इष्यते ॥ १-८७-३३ (३८२६)
वैशंपायन उवाच। १-८७-३४क्ष् (५५६)
एवमुक्त्वा ययातिस्तु पुनः प्रोवाच बुद्धिमान् ।

सर्वे ह्यवभृथस्नातास्त्वरध्वं कार्यगौरवात् ॥' १-८७-३४ (३८२७)
अष्टक उवाच। १-८७-३५क्ष् (५५७)
आतिष्ठ स्वरथं राजन्विक्रमस्व विहायसम् ।
वयमप्यनुयास्यामो यदा कालो भविष्यति ॥ १-८७-३५ (३८२८)
ययातिरुवाच। १-८७-३६क्ष् (५५८)
सर्वैरिदानीं गन्तव्यं सह स्वर्गजितो वयम् ।
एष नो विरजाः पन्था दृश्यते देवसद्मनः ॥ १-८७-३६ (३८२९)
वैशंपायन उवाच। १-८७-३७क्ष् (५५९)
ग्अष्टकश्च शिबिश्चैव काशेयश्च प्रतर्दनः ।
ऐक्ष्वाकवो वसुमनाश्चत्वारो भूमिपास्तदा ।
सर्वे ह्यवभृथस्नाताः स्वर्गताः साधवः सह ॥' १-८७-३७ (३८३०)
तेऽधिरुह्य रथान्सर्वे प्रयाता नृपस्तमाः ।
आक्रमन्तो दिवं भाभिर्धर्मेणावृत्य रोदसी ॥ १-८७-३८ (३८३१)
अष्टक उवाच। १-८७-३९क्ष् (५६०)
अहं मन्ये पूर्वमेकोऽस्मि गन्ता
सखा चेन्द्रः सर्वथा मे महात्मा ।
कस्मादेवं शिबिरौशीनरोऽय-
मेकोऽत्यगात्सर्ववेगेन वाहान् ॥ १-८७-३९ (३८३२)
ययातिरुवाच। १-८७-४०क्ष् (५६१)
अददद्याचमानाय यावद्वित्तमविन्दत ।
उशीनरस्य पुत्रोऽयं तस्माच्छ्रेष्ठोहि वः शिबिः ॥ १-८७-४० (३८३३)
दानं तपः संत्यमथाऽपि धर्मो
ह्रीः श्रीः क्षमा सौम्यमथो विधित्सा ।
राजन्नेतान्यप्रमेयाणि राज्ञः
शिबेः स्थितान्यप्रतिमस्य बुद्ध्या ॥ १-८७-४१ (३८३४)
एवं वृत्तो ह्रीनिषेवश्च यस्मा-
त्तस्माच्छिबिरत्यगाद्वै रथेन। १-८७-४२ (३८३५)
वैशंपायन उवाच ।
अथाष्टकः पुनरेवान्वपृच्छ-
न्मातामहं कौतुकेनेन्द्रकल्पम् ॥ १-८७-४२क्ष् (५६२)
पृच्छामि त्वां नृपते ब्रूहि सत्यं
कुतश्च कश्चासि सुतश्च कस्य ।
कृतं त्वया यद्धि न तस्य कर्ता
लोके त्वदन्यः क्षत्रियो ब्राह्मणो वा ॥ १-८७-४३ (३८३६)
ययातिरुवाच। १-८७-४४क्ष् (५६३)
ययातिरस्मि नहुषस्य पुत्रः

पूरोः पिता सार्वबौमस्त्विहासम् ।
गुह्यं चार्थं मामकेभ्यो ब्रवीमि
मातामहोऽहं भवतां प्रकाशम् ॥ १-८७-४४ (३८३७)
सर्वामिमां पृथिवीं निर्जिगाय
दत्त्वा प्रतस्थे विपिनं ब्राह्मणेभ्यः ।
मेध्यानश्वानेकशतान्सुरूपां-
स्तदा देवाः पुण्यभाजो भवन्ति ॥ १-८७-४५ (३८३८)
अदामहं पृथिवीं ब्राह्मणेभ्यः
पूर्णामिमामखिलां वाहनेन ।
गोभिः सुवर्णेन धनैश्च मुख्यै-
स्तदाऽददं गाः शथमर्बुदानि ॥ १-८७-४६ (३८३९)
सत्येन मे द्यौश्च वसुन्धरा च
तथैवाग्निज्वर्लते मानुषेषु ।
न मे वृथा व्याहृतमेव वाक्यं
सत्यं हि सन्तः प्रतिपूजयन्ति ॥ १-८७-४७ (३८४०)
यदष्टक प्रब्रवीमीह सत्यं
प्रतर्दनं चौषदश्विं तथैव ।
सर्वे च लोका मुनयश्च देवाः
सत्येन पूज्या इति मे मनोगतम् ॥ १-८७-४८ (३८४१)
यो नः स्वर्गजितः सर्वान्यथावृत्तं निवेदयेत् ।
अनसूयुर्द्विजाग्र्येभ्यः स लभेन्नः सलोकताम् ॥१-८७-४९ (३८४२)
वैशंपायन उवाच।१-८७-५०क्ष् (५६४)
एवं राजा स महात्मा ह्यतीव
स्वैर्दौहित्रैस्तारितोऽमित्रसाह ।
त्यक्त्वा महीं परमोदारकर्मा
स्वर्गं गतः कर्मभिर्व्याप्य पृथ्वीम् ॥ ॥ १-८७-५० (३८४३)

इति श्रीमन्महाभारते आदिपर्वणि संभवपर्वणि सप्ताशीतितमोऽध्यायः
॥ ८७ ॥

Mahabharata - Adi Parva - Chapter Footnotes

१-८७-२ यत् यत् तपते प्रकाशयति ॥
१-८७-४ शिशुकात् शैशवमारभ्य ॥
१-८७-७ परीप्समानान् याचकान् ।नावमंस्था नावमानं
कृतवानसि। स्वनवन्तः संगीतादिध्वनियुक्ताः ॥
१-८७-१० गन्तारो मृत्वा प्राप्स्यामः ।नरकं भूलोकम् ॥

१-८७-११ यतध्वं कर्तुम् । नाभिजानामि नाङ्गीकरोमि ॥
१-८७-१३ प्रकाशन्ते दृश्यन्ते । ज्वलन्तो दीप्यमानाः ॥
१-८७-१४ अकृतहोमसमाप्तीनामवभृथायोगात् होमोपि समापित इत्याह । अश्वमेध इति। पुरा स्वयंभुविहिते कर्तव्यतया विहिते अश्वमेधे अष्टकादिभिः क्रियमाणे ॥
१-८७-४१ सौम्यमक्रूरत्वम् । विधित्सा पालनेच्छा ॥
१-८७-४२ सत्यमेव श्रेयःसाधनमिति विधातुं पूर्वोक्तप्रश्नोत्तरे अनुवदति । अथाष्टक इत्यादिना ॥
१-८७-४४ प्रकाशं प्रागुक्तमपि स्पष्टतरम् ॥
१-८७-४५ एवं कृते सति पुण्यभाजः सन्तः देवा भवन्ति ॥
सप्ताशीतितमोऽध्यायः ॥
८७ ॥

---

अध्यय०८८
॥ श्रीः ॥
१.८८. अध्यायः ८८

Mahabharata - Adi Parva - Chapter Topics
पूरुवंशकथनम् ॥ १ ॥

Mahabharata - Adi Parva - Chapter Text

१-८८-० (३८४४)
जनमेजय उवाच। १-८८-०क्ष् (५६५)
पुत्रं ययातेः प्रबूहि पूरुं धर्मभृतां वरम् ।
आनुपूर्व्येण ये चान्ये पूरोर्वंशविवर्धनाः ॥ १-८८-१ (३८४५)
विस्तरेण पुनर्ब्रूहि दौष्यन्तेर्जनमेजयात् ।
संबभूव यथा राजा भरतो द्विजसत्तम ॥ १-८८-२ (३८४६)
वैशंपायन उवाच। १-८८-३क्ष् (५६६)
पूरुर्नृपतिशार्दूलो यथैवास्य पिता नृप ।
धर्मनित्यः स्थितो राज्ये शक्रतुल्यपराक्रमः ॥ १-८८-३ (३८४७)
प्रवीरेश्वररौद्राश्वास्त्रयः पुत्रा महारथाः ।
पूरोः पौष्ट्यामजायन्त प्रवीरो वंशकृत्ततः ॥ १-८८-४ (३८४८)
मनस्युरभवत्तस्माच्छूरसेनीसुतः प्रभुः ।
पृथिव्याश्चतुरन्ताया गोप्ता राजीवलोचनः ॥ १-८८-५ (३८४९)
शक्तः संहननो वाग्मी सौवीरीतनयास्त्रयः ।
मनस्योरभवन्पुत्राः शूराः सर्वे महारथाः ॥ १-८८-६ (३८५०)

अन्वग्भानुप्रभृतयो मिश्रकेश्यां मनस्विनः ।
रौद्राश्वस्य महेष्वासा दशाप्सरसि सूनवः ॥ १-८८-७ (३८५१)
यज्वानो जज्ञिरे शूराः प्रजावन्तो बहुश्रुताः ।
सर्वे सर्वास्त्रविद्वासः सर्वे धर्मपरायणाः ॥ १-८८-८ (३८५२)
ऋचेयुरथ कक्षेयुः कृकणेयुश्च वीर्यवान् ।
स्थण्डिलेयुर्वनेयुश्च जलेयुश्च महायशाः ॥ १-८८-९ (३८५३)
तेजेयुर्बलावान्धीमान्सत्येयुश्चन्द्रविक्रमः ।
धर्मेयुः सन्नतेयुश्च दशमो देवविक्रमः ॥ १-८८-१० (३८५४)
अनाधृष्टिरभूत्तेषां विद्वान्भुवि तथैकराट् ।
ऋचेयुरथ विक्रान्तो देवानामिव वासवः ॥ १-८८-११ (३८५५)
अनाधृष्टिसुतस्त्वासीद्राजसूयाश्वमेधकृत् ।
मतिनार इति ख्यातो राजा परमधार्मिकः ॥ १-८८-१२ (३८५६)
मतिनारसुता राजंश्चत्वारोऽमितविक्रमाः ।
तंसुर्महानतिरथो द्रुह्युश्चाप्रतिमद्युतिः ॥ १-८८-१३ (३८५७)
तेषां तंसुर्महावीर्यः पौरवं वंशमुद्वहन् ।
आजहार यशो दीप्तं जिगाय च वसुंधराम् ॥ १-८८-१४ (३८५८)
ईलिनं तु सुतं तंसुर्जनयामास वीर्यवान् ।
सोऽपि कृत्स्नामिमां भूमिं विजिग्ये जयतां वरः ॥ १-८८-१५ (३८५९)
रथन्तर्यां सुतान्पञ्च पञ्चभूतोपमांस्ततः ।
ईलिनो जनयामास दुष्यन्तप्रभृतीन्नृपान् ॥ १-८८-१६ (३८६०)
दुष्यन्तं शूरभीमौ च प्रवसुं वसुमेव च ।
तेषां श्रेष्ठोऽभवद्राजा दुष्यन्तो दुर्जयो युधि ॥ १-८८-१७ (३८६१)
दुष्यन्ताल्लक्षणायां तु जज्ञे वै जनमेजयः ।
शकुन्तलायां भरतो दौष्यन्तिरभवत्सुतः ॥ १-८८-१८ (३८६२)
तस्माद्भरतवंशस्य विप्रतस्थे महद्यशः ॥ ॥ १-८८-१९ (३८६३)

इति श्रीमन्महाभारते आदिपर्वणि संभवपर्वणि अष्टाशीतितमोऽध्यायः ॥ ८८ ॥

---

अध्यय०८९
॥ श्रीः ॥
१.८९. अध्यायः ८९

Mahabharata - Adi Parva - Chapter Topics
शकुन्तलोपाख्यानारम्भः ॥ १ ॥

Mahabharata - Adi Parva - Chapter Text

१-८९-० (३८६४)
जनमेजय उवाच। १-८९-०क्ष् (५६७)
भगवन्विस्तरेणेह भरतस्य महात्मनः ।
जन्म कर्म च सुश्रूषोस्तन्मे शंसितुमर्हसि ॥ १-८९-१ (३८६५)
वैशंपायन उवाच। १-८९-२क्ष् (५६८)
पौरवाणां वंशकरो दुष्यन्तो नाम वीर्यवान् ।
पृथिव्याश्चतुरन्ताया गोप्ता भरतसत्तम ॥ १-८९-२ (३८६६)
चतुर्भागं भुवः कृत्स्नं यो भुङ्क्ते मनुजेश्वरः ।
समुद्रावरणांश्चापि देशान्स समितिंजयः ॥ १-८९-३ (३८६७)
आम्लेच्छावधिकान्सर्वान्स भुङ्क्ते रिपुमर्दनः ।
रत्नाकरसमुद्रान्तांश्चातुर्वर्ण्यजनावृतान् ॥ १-८९-४ (३८६८)
न वर्णसङ्करकरो न कृष्याकरकृज्जनः ।
न पापकृत्कश्चिदासीत्तस्मिन्राजनि शासति ॥ १-८९-५ (३८६९)
धर्मे रतिं सेवमाना धर्मार्थावभिपेदिरे ।
तदा नरा नरव्याघ्र तस्मिञ्जनपदेश्वरे ॥ १-८९-६ (३८७०)
नासीच्चोरभयं तात न क्षुधाभयमण्वपि ।
नासीद्व्याधिभयं चापि तस्मिञ्जनपदेश्वरे ॥ १-८९-७ (३८७१)
स्वधर्मै रेमिरे वर्णा दैवे कर्मणि निःस्पृहाः ।
तमाश्रित्य महीपालमासंश्चैवाकुतोभयाः ॥ १-८९-८ (३८७२)
कालवर्षी च पर्जन्यः सस्यानि रसवन्ति च ।
सर्वरत्नसमृद्धा च मही पशुमती तथा ॥ १-८९-९ (३८७३)
स्वकर्मनिरता विप्रा नानृतं तेषु विद्यते ।
स चाद्भुतमहावीर्यो वज्रसंहननो युवा ॥ १-८९-१० (३८७४)
उद्यम्य मन्दरं दोर्भ्यां वहेत्सवनकाननम् ।
चतुष्पथगदायुद्धे सर्वप्रहरणेषु च ॥ १-८९-११ (३८७५)
नागपृष्ठेऽश्वपृष्ठे च बभूव परिनिष्ठतः ।
बले विष्णुसमश्चासीत्तेजसा भास्करोपमः ॥ १-८९-१२ (३८७६)
अक्षोभ्यत्वेऽर्णवसमः सहिष्णुत्वे धरासमः ।
संमतः स महीपालः प्रसन्नपुरराष्ट्रवान् ॥ १-८९-१३ (३८७७)
भूयो धर्मपरैर्भावैर्मुदितं जनमादिशत् ॥ ॥ १-८९-१४ (३८७८)

इति श्रीमन्महाभारते आदिपर्वणि संभवपर्वणि एकोननवतितमोऽध्यायः ॥ ८९ ॥

१-८९-५ न कृष्याकरकृत् कृषिकृन्न भुवोऽकृष्टपच्यत्वात्
।आकरः सुवर्णादिधातूत्पत्तिस्थानं तत्रापि यत्नं न करोति पृथिव्या
रत्नैर्धातुभिश्च पूर्णत्वात् ॥
१-८९-८ दैवे कर्मणि वृष्ट्याद्यर्थे कारीर्यादिकाम्यकर्मणि ॥
१-८९-९ तदेवाह कालेति ॥
१-८९-१० वज्रसंहननो दृढदेहः ॥
१-८९-११ सवनकाननं वनं जलमुपवनं वा ॥
१-८९-१४ आदिशत् शशास ॥
एकोननवतितमोऽध्यायः ॥
८९ ॥

---

अध्यय०९०
॥ श्रीः ॥
१.९०. अध्यायः ९०

Mahabharata - Adi Parva - Chapter Topics
मृगयार्थं दुष्यन्तस्यारण्यगमनम् ॥ १ ॥

Mahabharata - Adi Parva - Chapter Text

१-९०-० (३८७९)
जनमेजय उवाच। १-९०-०क्ष् (५६९)
संभवं भरतस्याहं चरितं च महामतेः ।
शकुन्तलायाश्चोत्पत्तिं श्रोतुमिच्छामि तत्त्वतः ॥ १-९०-१ (३८८०)
दुष्यन्तेन च वीरेण यथा प्राप्ता शकुन्तला ।
तं वै पुरुषसिंहस्य भगवन्विस्तरं त्वहम् ॥ १-९०-२ (३८८१)
श्रोतुमिच्छामि तत्त्वज्ञ सर्वं मतिमतां वर। १-९०-३ (३८८२)
वैशंपायन उवाच ।
स कदाचिन्महाबाहुः प्रभूतबलवाहनः ॥ १-९०-३क्ष् (५७०)
वनं जगाम गहनं हयनागशतैर्वृतः ।
बलेन चतुरङ्गेण वृतः परमवल्गुना ॥ १-९०-४ (३८८३)
खड्गशक्तिधरैर्वीरैर्गदामुसलपाणिभिः ।
प्रासतोमरहस्तैश्च ययौ योधशतैर्वृतः ॥ १-९०-५ (३८८४)
सिंहनादैश्च योधानां शङ्खदुनदुभिनिःस्वनैः ।
रथनेमिस्वनैश्चैव सनागवरबृंहितैः ॥ १-९०-६ (३८८५)
नानायुधधरैश्चापि नानावेषधरैस्तथा ।
ह्रेषितस्वनमिश्रैश्च क्ष्वेडितास्फोटितस्वनैः ॥ १-९०-७ (३८८६)

आसीत्किलकिलाशब्दस्तस्मिन्गच्छति पार्थिवे ।
प्रासादवरशृङ्गस्थाः परया नृपशोभया ॥ १-९०-८ (३८८७)
ददृशुस्तं स्त्रियस्तत्र शूरमात्मयशस्करम् ।
शक्रोपमममित्रघ्नं परवारणवारणम् ॥ १-९०-९ (३८८८)
पश्यन्तः स्त्रीगणास्तत्र वज्रपाणिं स्म मेनिरे ।
अयं स पुरुषव्याघ्रो रणे वसुपराक्रमः ॥ १-९०-१० (३८८९)
यस्य बाहुबलं प्राप्य न भवन्त्यसुहृद्गणाः ।
इति वाचो ब्रुवन्त्यस्ताः स्त्रियः प्रेम्णा नराधिपं ॥ १-९०-११ (३८९०)
तुष्टुवुः पुष्पवृष्टीश्च ससृजुस्तस्य मूर्धनि ।
तत्रतत्र च विप्रेन्द्रैः स्तूयमानः समन्ततः ॥ १-९०-१२ (३८९१)
निर्ययौ परमप्रीत्या वनं मृगजिघांसया ।
तं देवराजप्रतिमं मत्तवारणधूर्गतम् ॥ १-९०-१३ (३८९२)
द्विजक्षत्रियविट्शूद्रा निर्यान्तमनुजग्मिरे ।
ददृशुर्वर्धमानास्ते आशीर्भिश्च जयेन च ॥ १-९०-१४ (३८९३)
सुदूरमनुजग्मुस्तं पौरजानपदास्तथा ।
न्यवर्तन्त ततः पश्चादनुज्ञाता नृपेण ह ॥ १-९०-१५ (३८९४)
सुपर्णप्रतिमेनाथ रथेन वसुधाधिपः ।
महीमापूरयामास घोषेण त्रिदिवं तथा ॥ १-९०-१६ (३८९५)
स गच्छन्ददृशे धीमान्नन्दनप्रतिमं वनम् ।
बिल्वार्कखदिराकीर्णं कपित्थधवसंकुलम् ॥ १-९०-१७ (३८९६)
विषमं पर्वतस्रस्तै रश्मभिश्च समावृतम् ।
निर्जलं निर्मनुष्यं च बहुयोजनमायतम् ॥ १-९०-१८ (३८९७)
मृगसिंहैर्वृतं घोरैरन्यैश्चापि वनेचरैः ।
तद्वनं मनुजव्याघ्रः सभृत्यबलवाहनः ॥ १-९०-१९ (३८९८)
लोडयामास दुष्यन्तः सूदयन्विविधान्मृगान् ।
बाणगोचरसंप्राप्तांस्तत्र व्याघ्रगणान्बहून् ॥ १-९०-२० (३८९९)
पातयामास दुष्यन्तो निर्बिभेद च सायकैः ।
दूरस्थान्सायकैः कांश्चिदभिनत्स नराधिपः ॥ १-९०-२१ (३९००)
अभ्याशमागतांश्चान्यान्खड्गेन निरकृन्तत ।
कांश्चिदेणान्समाजघ्ने शक्त्या शक्तिमतां वरः ॥ १-९०-२२ (३९०१)
गदामण्डलतत्त्वज्ञश्चचारामितविक्रमः ।
तोमरैरसिभिश्चापि गदामुसलकम्पनैः ॥ १-९०-२३ (३९०२)
चचार स विनिघ्नन्वै वन्यांस्तत्र मृगद्विजान् ।
राज्ञा चाद्भुतवीर्येण योधैश्च समरप्रियैः ॥ १-९०-२४ (३९०३)
लोड्यमानं महारण्यं तत्यजुः स्म मृगाधिपाः ।
तत्र विद्रुतयूथानि हतयूथपतीनि च ॥ १-९०-२५ (३९०४)

मृगयूथान्यथौत्सुक्याच्छब्दं चक्रुस्ततस्ततः ।
शुष्काश्चापि नदीर्गत्वा जलनैराश्यकर्शिताः ॥ १-९०-२६ (३९०५)
व्यायामक्लान्तहृदयाः पतन्ति स्म विचेतसः ।
क्षुत्पिपासापरीताश्च श्रान्ताश्च पतिता भुवि ॥ १-९०-२७ (३९०६)
केचित्तत्र नरव्याघ्रैरभक्ष्यन्त बुभुक्षितैः ।
केचिदग्निमथोत्पाद्य संसाध्य च वनेचराः ॥ १-९०-२८ (३९०७)
भक्षयन्ति स्म मांसानि प्रकुट्य विधिवत्तदा ।
तत्र केचिद्गजा मत्ता बलिनः शस्त्रविक्षताः ॥ १-९०-२९ (३९०८)
संकोच्याग्रकरान्भीताः प्राद्रवन्ति स्म वेगिताः ।
शकृन्मूत्रं सृजन्तश्च क्षरन्तः शोणितं बहु ॥ १-९०-३० (३९०९)
वन्या गजवरास्तत्र ममृदुर्मनुजान्बहून् ।
तद्वनं बलमेघेन शरधारेण संवृतम् ।
व्यरोचत मृगाकीर्णं राज्ञा हतमृगाधिपम् ॥ ॥ १-९०-३१ (३९१०)

इति श्रीमन्महाभारते आदिपर्वणि संभवपर्वणि नवतितमोऽध्यायः ॥ ९० ॥
Mahabharata - Adi Parva - Chapter Footnotes

१-९०-९ परवारणवारणं शत्रगजानां निवारकम् ॥
१-९०-१३ धर्गतं स्कन्धारूढम् ॥
१-९०-२८ संसाध्य पाकादिना संस्कृत्य ॥
१-९०-२९ प्रकुट्य चूर्णीकृत्य । गजा वनगजाः ॥
नवतितमोऽध्यायः ॥
९० ॥

---

अध्यय०९१
॥ श्रीः ॥
१.९१. अध्यायः ९१

Mahabharata - Adi Parva - Chapter Topics
मृगयाप्रसङ्गेन दुष्यन्तस्य कण्वाश्रमगमनम् ॥ १ ॥

Mahabharata - Adi Parva - Chapter Text

१-९१-० (३९११)
वैशंपायन उवाच । १-९१-०क्ष् (५७१)
ततो मृगसहस्राणि हत्वा सबलवाहनः ।
तत्र मेघघनप्रख्यं सिद्धचारणसेवितम् ॥ १-९१-१ (३९१२)

वनमालोकयामास नगराद्योजनद्वये ।
मृगाननुचरन्वन्याञ्श्रमेण परिपीडितः ॥ १-९१-२ (३९१३)
मृगाननुचरन्राजा वेगेनाश्वानचोदयत् ।
राजा मृगप्रसङ्गेन वनमन्यद्विवेश ह ॥ १-९१-३ (३९१४)
एक एवोत्तमबलः क्षुत्पिपासाश्रमान्वितः ।
स वनस्यान्तमासाद्य महच्छून्यं समासदत् ॥ १-९१-४ (३९१५)
तच्चाप्यतीत्य नृपतिरुत्तमाश्रमसंयुतम् ।
मनःप्रह्लादजननं दृष्टिकान्तमतीव च ॥ १-९१-५ (३९१६)
सीतमारुतसंयुक्तं जगामान्यन्महद्वनम् ।
पुष्पितैः पादपैः कीर्णमतीव सुखशाद्वलम् ॥ १-९१-६ (३९१७)
विपुलं मधुरारावैर्नादितं विहगैस्तथा ।
पुंस्कोकिलनिनादैश्च झिल्लीकगणनादितम् ॥ १-९१-७ (३९१८)
प्रवृद्धविटपैर्वृक्षैः सुखच्छायैः समावृतम् ।
षट्पदाघूर्णिततलं लक्ष्म्या परमया युतम् ॥ १-९१-८ (३९१९)
नापुष्पः पादपः कश्चिन्नाफलो नापि कण्टकी ।
षट्पदैर्नाप्यपाकीर्णस्तस्मिन्वै काननेऽभवत् ॥ १-९१-९ (३९२०)
विगहैर्नादितं पुष्पैरलङ्कृतमतीव च ।
सर्वर्तुकुसुमैर्वृक्षैः सुखच्छायैः समावृतम् ॥ १-९१-१० (३९२१)
मनोरमं सहेष्वासो विवेश वनमुत्तमम् ।
मारुता कलितास्तत्र द्रुमाः कुसुमशाखिनः ॥ १-९१-११ (३९२२)
पुष्पवृष्टिं विचित्रां तु व्यसजंस्ते पुनः पुनः ।
दिवस्पृशोऽथ संघुष्टाः पक्षिभिर्मधुरस्वनैः ॥ १-९१-१२ (३९२३)
विरेजुः पादपास्तत्र विचित्रकुसुमाम्बराः ।
तेषां तत्र प्रवालेषु पुष्पभारावनामिषु ॥ १-९१-१३ (३९२४)
रुवन्ति रावान्मधुरान्षट्पदा मधुलिप्सवः ।
तत्र प्रदेशांश्च बहून्कुसुमोत्करमण्डितान् ॥ १-९१-१४ (३९२५)
लतागृहपरिक्षिप्तान्मनसः प्रीतिवर्धनान् ।
संपश्यन्सुमहातेजा बभूव मुदितस्तदा ॥ १-९१-१५ (३९२६)
परस्पराश्लिष्टशाखैः पादपैः कुसुमान्वितैः ।
अशोभत वनं तत्तु महेन्द्रध्वजसन्निभैः ॥ १-९१-१६ (३९२७)
सिद्धचारणसङ्घैश्च गन्धर्वाप्सरसां गणैः ।
सेवितं वनमत्यर्थं मत्तवानरकिन्नरैः ॥ १-९१-१७ (३९२८)
सुखः शीतः सुगन्धी च पुष्परेणुवहोऽनिलः ।
परिक्रामन्वने वृक्षानुपैतीव रिरंसया ॥ १-९१-१८ (३९२९)
एवंगुणसमायुक्तं ददर्श स वनं नृपः ।
नदीकच्छोद्भं कान्तमुच्छ्रितध्वजसन्निभम् ॥ १-९१-१९ (३९३०)

प्रेक्षमाणो वनं तत्तु सुप्रहृष्टविहङ्गमम् ।
आश्रमप्रवरं रम्यं ददर्श च मनोरमम् ॥ १-९१-२० (३९३१)
नानावृक्षसमाकीर्णं संप्रज्वलितपावकम् ।
तं तदाऽप्रतिमं श्रीमानाश्रमं प्रत्यपूजयत् ॥ १-९१-२१ (३९३२)
यतिभिर्वालखिल्यैश्च वृतं मुनिगणान्वितम् ।
अग्न्यगारैश्च बहुभिः पुष्पसंस्तरसंस्तृतम् ॥ १-९१-२२ (३९३३)
महाकच्छैर्बृहद्भिश्च विभ्राजितमतीव च ।
मालिनीमभितो राजन्नदीं पुण्यां सुखोदकाम् ॥ १-९१-२३ (३९३४)
नैकपक्षिगणाकीर्णां तपोवनमनोरमाम् ।
तत्रव्यालमृगान्सैम्यान्पश्यन्प्रीतिमवाप सः ॥ १-९१-२४ (३९३५)
तं चाप्रतिरथः श्रीमानाश्रमं प्रत्यपद्यत ।
देवलोकप्रतीकाशं सर्वतः सुमनोहरम् ॥ १-९१-२५ (३९३६)
नदीं चाश्रमसंश्लिष्टां पुण्यतोयां ददर्श सः ।
सर्वप्राणभृतां तत्र जननीमिव धिष्ठिताम् ॥ १-९१-२६ (३९३७)
सचक्रवाकपुलिनां पुष्पफेनप्रवाहिनीम् ।
सकिन्नरगणावासां वारनर्क्षनिषेविताम् ॥ १-९१-२७ (३९३८)
पुण्यस्वाध्यायसंघुष्टा पुलिनैरुपशोभिताम् ।
मत्तवारणशार्दूलभुजगेन्द्रनिषेविताम् ॥ १-९१-२८ (३९३९)
तस्यास्तीरे भगवतः काश्यपस्य महात्मनः ।
आश्रमप्रवरं रम्यं महर्षिगणसेवितम् ॥ १-९१-२९ (३९४०)
नदीमाश्रमसंबद्धां दृष्ट्वाश्रमपदं तथा ।
चकाराभिप्रवेशाय मतिं स नृपतिस्तदा ॥ १-९१-३० (३९४१)
अलङ्कृतं द्वीपवत्या मालिन्या रम्यतीरया ।
नरनारायणस्थानं गङ्गयेवोपशोभितम् ॥ १-९१-३१ (३९४२)
मत्तबर्हिणसंघुष्टं प्रविवेश महद्वनम् ।
तत्स चैत्ररथप्रख्यं समुपेत्य नरर्षभः ॥ १-९१-३२ (३९४३)
अतीव गुणसंपन्नमनिर्देश्यं च वर्चसा ।
महर्षिं काश्यपं द्रष्टुमथ कण्वं तपोधनम् ॥ १-९१-३३ (३९४४)
ध्वजिनीमश्वसंबाधां पदातिगजसङ्कुलाम् ।
अवस्थाप्य वनद्वारि सेनामिदमुवाच सः ॥ १-९१-३४ (३९४५)
मुनिं विरजसं द्रष्टुं गमिष्यामि तपोधनम् ।
काश्यपं स्थीयतामत्र यावदागमनं मम ॥ १-९१-३५ (३९४६)
तद्वनं नन्दनप्रख्यमासाद्य मनुजेश्वरः ॥
क्षुत्पिपासे जहौ राजा मुदं चावाप पुष्कलाम् ॥ १-९१-३६ (३९४७)
सामात्यो राजलिङ्गानि सोपनीय नराधिपः ।
पुरोहितसहायश्च जगामाश्रममुत्तमम् ॥ १-९१-३७ (३९४८)

दिदृक्षुस्तत्र तमृषिं तपोराशिमथाव्ययम् ।
ब्रह्मलोकप्रतीकाशमाश्रमं सोऽभिवीक्ष्य ह ।
षट्पदोद्गीतसंघुष्टं नानाद्विजगणायुतम् ॥ १-९१-३८ (३९४९)
विस्मयोत्फुल्लनयनो राजा प्रीतो बभूवह ।
ऋचो बह्वचमुख्यैश्च प्रेर्यमाणाः पदक्रमैः ।
शुश्राव मनुजव्याघ्रो विततेष्विह कर्मसु ॥ १-९१-३९ (३९५०)
यज्ञविद्याङ्गविद्भिश्च यजुर्विद्भिश्च शोभितम् ।
मधुरैः सामगीतैश्च ऋषिभिर्नियतव्रतैः ॥ १-९१-४० (३९५१)
भारुण्डसामगीताभिरथर्वशिरसोद्गतैः ।
यतात्मभिः सुनियतैः शुशुभे स तदाश्रमः ॥ १-९१-४१ (३९५२)
अथर्ववेदप्रवराः पूगयज्ञियसामगाः ।
संहितामीरयन्ति स्म पदक्रमयुतां तु ते ॥ १-९१-४२ (३९५३)
शब्दसंस्कारसंयुक्तब्रुवद्भिश्चापरैर्द्विजैः ।
नादितः स बभौ श्रीमान्ब्रह्मलोक इवापरः ॥ १-९१-४३ (३९५४)
यज्ञसंस्तरविद्भिश्च क्रमशिक्षाविशारदैः ।
न्यायतत्त्वात्मविज्ञानसंपन्नैर्वेदपारगैः ॥ १-९१-४४ (३९५५)
नानावाक्यसमाहारसमवायविशारदैः ।
विशेषकार्यविद्भिश्च मोक्षधर्मपरायणैः ॥ १-९१-४५ (३९५६)
स्तापनाक्षेपसिद्धान्तपरमार्थज्ञतां गतैः ।
शब्दच्छन्दोनिरुक्तज्ञैः कालज्ञानविशारदैः ॥ १-९१-४६ (३९५७)
द्रव्यकर्मगुणज्ञैश्च कार्यकारणवेदिभिः ।
पक्षिवानररुतज्ञैश्च व्यासग्रन्थसमाश्रितैः ॥ १-९१-४७ (३९५८)
नानाशास्त्रेषु मुख्यैश्च शुश्राव स्वनमीरितम् ।
लोकायतिकमुख्यैश्च समन्तादनुनादितम् ॥ १-९१-४८ (३९५९)
तत्रतत्र च विप्रेन्द्रान्नियतान्संशितव्रतान् ।
जपहोमपरान्विप्रान्ददर्श परवीरहा ॥ १-९१-४९ (३९६०)
आसनानि विचित्राणि रुचिराणि महीपतिः ।
प्रयत्नोपहितानि स्म दृष्ट्वा विस्मयमागमत् ॥ १-९१-५० (३९६१)
देवतायतनानां च प्रेक्ष्य पूजां कृतां द्विजैः ।
ब्रह्मलोकस्थमात्मानं मेने स नृपसत्तमः ॥ १-९१-५१ (३९६२)
स काश्यपतपोगुप्तमाश्रमप्रवरं शुभम् ।
नातृप्यत्प्रेक्षमाणो वै तपोवनगुणैर्युतम् ॥ १-९१-५२ (३९६३)
स काश्यपस्यायतनं महाव्रतै-
र्वृतं समान्तादृषिभिस्तपोधनैः ।
विवेश सामात्यपुरोहितोऽरिहा
विविक्तमत्यर्थमनोहरं शुभम् ॥ ॥ १-९१-५३ (३९६४)

इति श्रीमन्महाभारते आदिपर्वणि संभवपर्वणि एकनवतितमोऽध्यायः
॥ ९१ ॥
Mahabharata - Adi Parva - Chapter Footnotes

१-९१-४ शून्यं वृक्षादिरहितमूषरम् ॥
१-९१-१८ रिरंसया रमयितुमिच्छया ॥
१-९१-१९ नदीकच्छोद्भवं कच्छः सजलोऽनूपप्रदेशः ॥
१-९१-२९ काश्यपस्य कश्यपगोत्रस्य कण्वस्य ॥
१-९१-३९ विततेषु वैतानिकेषु इष्टिपशुसोमादिषु प्रवर्तमानेषु ॥
१-९१-४० यज्ञविद्यायामङ्गभूतानि कल्पसूत्रादीनि ॥
१-९१-४१ भारुण्डसामानि पूगयज्ञियसामानि च साम्नामवान्तरभेदाः ॥
१-९१-४६ स्थापनं प्रथमं स्वसिद्धान्तव्यवस्था ततस्तत्र शङ्काऽऽक्षेपः तस्याः परिहारः सिद्धान्तस्तैर्या परमार्थज्ञता तां गतैः ॥
१-९१-४८ लोके एव आयतन्ते ते लोकायतिकाः तेषु लोकरञ्जनपरेषु मुख्यैः ॥
एकनवतितमोऽध्यायः ॥
९१ ॥

---

अध्यय०९२
॥ श्रीः ॥
१.९२. अध्यायः ९२

Mahabharata - Adi Parva - Chapter Topics
कण्वाश्रमे दुष्यन्तशकुन्तलासंवादः ॥ १ ॥
शकुन्तलायाः स्वजन्मवृत्तान्तकथनारम्भः ॥ २ ॥

Mahabharata - Adi Parva - Chapter Text

१-९२-० (३९६५)
वैशंपायन उवाच। १-९२-०क्ष् (५७२)
ततो गच्छन्महाबाहुरेकोऽमात्यान्विसृज्य तान् ।
नापश्यच्चाश्रमे तस्मिंस्तमृषिं संशितव्रतम् ॥ १-९२-१ (३९६६)
सोऽपश्यमानस्तमृषिं शून्यं दृष्ट्वा तथाऽऽश्रमम् ।
उवाच क इहेत्युच्चैर्वनं सन्नादयन्निव ॥ १-९२-२ (३९६७)
श्रुत्वाऽथ तस्य तं शब्दं कन्या श्रीरिव रूपिणी ।
निश्चक्रामाश्रमात्तस्मात्तापसीवेषधारिणी ॥ १-९२-३ (३९६८)

सा तं दृष्ट्वैव राजानं दुष्यन्तमसितेक्षणा ।
ग्सुप्रीताऽभ्यागतं तं तु पूज्यं प्राप्तमथेश्वरम् ॥ १-९२-४ (३९६९)
रूपयौवनसंपन्ना शीलाचारवती शुभा ।
सा तमायतपद्माक्षं व्यूढोरस्कं महाभुजम् ॥ १-९२-५ (३९७०)
सिंहस्कन्धं दीर्घबाहुं सर्वलक्षणपूजितम् ।
स्पृष्टं मधुरया वाचा साऽब्रवीज्जनमेजया ॥' १-९२-६ (३९७१)
स्वागतं त इति क्षिप्रमुवाच प्रतिपूज्य च ।
आसनेनार्चयित्वा च पाद्येनार्घ्येण चैव हि ॥ १-९२-७ (३९७२)
पप्रच्छानामयं राजन्कुशलं च नराधिपम् ।
यथावदर्चयित्वाऽथ पृष्ट्वा चानामयं तदा ॥ १-९२-८ (३९७३)
उवाच स्मयमानेव किं कार्यं क्रियतामिति ।
ग्आश्रमस्याभिगमने किं त्वं कार्यं चिकीर्षसि ॥ १-९२-९ (३९७४)
कस्त्वमद्येह संप्राप्तो महर्षेराश्रमं शुभम् ।'
तामब्रवीत्ततो राजा कन्यां मधुरभाषिणीम् ॥ १-९२-१० (३९७५)
दृष्ट्वा सर्वानवद्याङ्गीं यथावत्प्रतिपूजितः ।
ग्राजर्षेस्तस्य पुत्रोऽहमिलिनस्य महात्मनः ॥ १-९२-११ (३९७६)
दुष्यन्त इति मे नाम सत्यं पुष्करलोचने ।'
आगतोऽहं महाभागमृषिं कण्वमुपासितुम् ॥ १-९२-१२ (३९७७)
क्व गतो भगवान्भद्रे गन्ममाचक्ष्व शोभने। १-९२-१३ (३९७८)
शकुन्तलोवाच ।
गतः पिता मे भगवान्फलान्याहर्तुमाश्रमात् ।
मुहूर्तं संप्रतीक्षस्व द्रष्टास्येनमुपागतम् ॥ १-९२-१३क्ष् (५७३)
वैशंपायन उवाच। १-९२-१४क्ष् (५७४)
अपश्यमानस्तमृषिं तथा चोक्तस्तया च सः ।
तां दृष्ट्वा च वरारोहां श्रीमतीं चारुहासिनीम् ॥ १-९२-१४ (३९७९)
विभ्राजमानां वपुषा तपसा च दमेन च ।
रूपयौवनसंपन्नामित्युवाच महीपतिः ॥ १-९२-१५ (३९८०)
का त्वं कस्यासि सुश्रोणि किमर्थं चागता वनम् ।
एवंरूपगुणोपेता कुतस्त्वमसि शोभने ॥ १-९२-१६ (३९८१)
दर्शनादेव हि शुभे त्वया मेऽपहृतं मनः ।
इच्छामि त्वामहं ज्ञातुं तन्ममाचक्ष्व शोभने ॥ १-९२-१७ (३९८२)
ग्स्थितोस्म्यमितसौभाग्ये विवक्षुश्चास्मि किंचन ।
शृणु मे नागनासोरु वचनं मत्तकाशिनि ॥ १-९२-१८ (३९८३)
राजर्षेरन्वये जातः पूरोरस्मि विशेषतः ।
वृण्वे त्वामद्य सुश्रोणि दुष्यन्तो वरवर्णिनि ॥ १-९२-१९ (३९८४)
न मेऽन्यत्र क्षत्रियाया मनो जातु प्रवर्तते ।

ऋषिपुत्रीषु चान्यासु नावरासु परासु च ॥१-९२-२० (३९८५)
तस्मात्प्रणिहितात्मानं विद्धि मां कलभाषिणि ।
यस्यां मे त्वयि भावोऽस्ति क्षत्रिया ह्यसि का वदा ॥१-९२-२१ (३९८६)
न हि मे भीरु विप्रायां मनः प्रसहते गतिम् ।
भजे त्वामायतापाङ्गे भक्तं भजितुमर्हसि ।
भुङ्क्ष राज्यं विशालाक्षि बुद्धिं मात्वन्यथा कृथाः'॥ १-९२-२२ (३९८७)
एवमुक्ता तु सा कन्या तेन राज्ञा तमाश्रमे ।
उवाच हसती वाक्यमिदं सुमधुराक्षरम् ॥१-९२-२३ (३९८८)
कण्वस्याहं भगवतो दुष्यन्त दुहिता मता ।
तपस्विनो धृतिमतो धर्मज्ञस्य महात्मनः ॥१-९२-२४ (३९८९)
ग्अस्वतन्त्रास्मि राजेन्द्र काश्यपो मे गुरुः पिता ।
तमेव प्रार्थय स्वार्थं नायुक्तं कर्तुमर्हसि ॥' १-९२-२५ (३९९०)
दुष्यन्त उवाच।१-९२-२६क्ष् (५७५)
ऊर्ध्वरेता महाभागे भगवाँल्लोकपूजितः ।
चलेद्धि वृत्ताद्धर्मोपि न चलेत्संशितव्रतः ॥१-९२-२६ (३९९१)
कथं त्वं तस्य दुहिता संभूता वरवर्णिनी ।
संशयो मे महानत्र तन्मे छेत्तुमिहार्हसि ॥१-९२-२७ (३९९२)
शकुन्तलोवाच।१-९२-२८क्ष् (५७६)
यथाऽयमागमो मह्यं यथा चेदमभूत्पुरा ।
ग्अन्यथा सन्तमात्मानमन्यथा सत्सु भाषते ॥१-९२-२८ (३९९३)
स पापेनावृतो मूर्खस्तेन आत्मापहारकः।'
शृणु राजन्यथातत्त्वं यथाऽस्मि दुहिता मुनेः ॥ १-९२-२९ (३९९४)
ऋषिः कश्चिदिहागम्य मम जन्माभ्यचोदयत् ।
ग्ऊर्ध्वरेता यथासि त्वं कुतस्त्वेयं शकुन्तला ॥१-९२-३० (३९९५)
पुत्री त्वत्तः कथं जाता तत्त्वं मे ब्रूहि काश्यप।'
तस्मै प्रोवाच भगवान्यथा तच्छृणु पार्थिवा ॥ १-९२-३१ (३९९६)
कण्व उवाच।१-९२-३२क्ष् (५७७)
तप्यमानः किल पुरा विश्वामित्रो महत्तपः ।
सुभृशं तापयामास शक्रं सुरगणेश्वरम् ॥१-९२-३२ (३९९७)
तपसा दीप्तवीर्योऽयं स्थानान्मां च्यावयेदिति ।
भीतः पुरन्दरस्तस्मान्मेनकामिदमब्रवीत् ॥१-९२-३३ (३९९८)
गुणैरप्सरसां दिव्यैर्मेनके त्वं विशिष्यसे ।
श्रेयो मे कुरु कल्याणि यत्त्वां वक्ष्यामि तच्छृणु ॥१-९२-३४ (३९९९)
असावादित्यशङ्काशो विश्वामित्रो महातपाः ।
तप्यमानस्तपो घोरं मम कम्पयते मनः ॥१-९२-३५ (४०००)
मेनके तव भारोऽयं विश्वामित्रः सुमध्यमे ।

शंसितात्मा सुदुर्धर्ष उग्रे तपसि वर्तते ॥१-९२-३६ (४००१)
स मां न च्यावयेत्स्थानात्तं वै गत्वा प्रलोभय ।
चर तस्य तपोविघ्नं कुरु मे प्रियमुत्तमम् ॥१-९२-३७ (४००२)
रूपयौवनमाधुर्यचेष्टितस्मितभाषणैः ।
लोभयित्वा वरारोहे तपसस्तं निवर्तय ॥१-९२-३८ (४००३)
मेनकोवाच।१-९२-३९क्ष् (५७८)
महातेजाः स भगवांस्तथैव च महातपाः ।
कोपनश्च तथा ह्येनं जानाति भगवानपि ॥१-९२-३९ (४००४)
तेजस्तपसश्चैव कोपस्य च महात्मनः ।
त्वमप्युद्विजसे यस्य नोद्विजेयमहं कथम् ॥१-९२-४० (४००५)
महाभागं वसिष्ठं यः पुत्रैरिष्टैर्व्ययोजयत् ।
क्षत्रजातश्च यः पूर्वमभवद्ब्राह्मणो बलात् ॥१-९२-४१ (४००६)
शौचार्थं यो नदीं चक्रे दुर्गमां बहुभिर्जलैः ।
यां तां पुण्यतमां लोके कौशिकीति विदुर्जनाः ॥१-९२-४२ (४००७)
बभार यत्रास्य पुरा काले दुर्गे महात्मनः ।
दारान्मतङ्गो धर्मात्मा राजर्षिर्व्याधतां गतः ॥१-९२-४३ (४००८)
अतीतकाले दुर्भिक्षे अभ्येत्य पुनराक्षमम् ।
मुनिः पारेति नद्या वै नाम चक्रे तदा प्रभुः ॥१-९२-४४ (४००९)
मतङ्गं याजयाञ्चक्रे यत्र प्रीतमनाः स्वयम् ।
त्वं च सोमं भयाद्यस्य गतः पातुं सुरेश्वर ॥१-९२-४५ (४०१०)
चकारान्यं च लोकं वै क्रुद्धो नक्षत्रसंपदा ।
प्रतिश्रवणपूर्वाणि नक्षत्राणि चकार यः ।
गुरुशापहतस्यापि त्रिशङ्कोः शरणं ददौ ॥ १-९२-४६ (४०११)
ब्रह्मर्षिशापं राजर्षिः कथं मोक्ष्यति कौशिकः ।
अवमत्य तदा देवैर्यज्ञाङ्गं तद्विनाशितम् ॥१-९२-४७ (४०१२)
अन्यानि च महातेजा यज्ञाङ्गान्यसृजत्प्रभुः ।
निनाय च तदा स्वर्गं त्रिशङ्कुं स महातपाः ॥१-९२-४८ (४०१३)
एतानि यस्य कर्माणि तस्याहं भृशमुद्विजे ।
यथाऽसौ न दहेत्क्रुद्धस्तथाऽऽज्ञापय मां विभो ॥१-९२-४९ (४०१४)
तेजसा निर्दहेल्लोकान्कम्पयेद्धरणीं पदा ।
संक्षिपेच्च महामेरुं तूर्णमावर्तयेद्दिशः ॥१-९२-५० (४०१५)
तादृशं तपसा युक्तं प्रदीप्तमिव पावकम् ।
कथमस्मद्विधा नारी जितेन्द्रियमभिस्पृशेत् ॥१-९२-५१ (४०१६)
हुताशनमुखं दीप्तं सूर्यचन्द्राक्षितारकम् ।
कालजिह्वं सुरश्रेष्ठ कथमस्मद्विधा स्पृशेत् ॥१-९२-५२ (४०१७)
यमश्च सोमश्च महर्षयश्च

साध्या विश्वे वालस्विल्याश्च सर्वे ।
एतेऽपि यस्योद्विजन्ते प्रभावा-
त्तस्मात्कस्मान्मादृशी नोद्विजेत ॥ १-९२-५३ (४०१८)
त्वयैवमुक्ता च कथं समीप-
मृषेर्न गच्छेयमहं सुरेन्द्र ।
रक्षां च मे चिन्तय देवराज
यथा त्वदर्थं रक्षिताऽहं चरेयम् ॥ १-९२-५४ (४०१९)
कामं तु मे मारुतस्तत्र वासः
प्रक्रीडिताया विवृणोतु देव ।
भवेच्च मे मन्मथस्तत्र कार्ये
सहायभूतस्तु तव प्रसादात् ॥ १-९२-५५ (४०२०)
वनाच्च वायुः सुरभिः प्रवाया-
त्तस्मिन्काले तमृषिं लोभयन्त्याः ।
तथेत्युक्त्वा विहिते चैव तस्मिं-
स्ततो ययौ साऽऽश्रमं कौशिकस्य ॥ ॥ १-९२-५६ (४०२१)

इति श्रीमन्महाभारते आदिपर्वणि संभवपर्वणि द्विनवतितमोऽध्यायः
॥ ९२ ॥
Mahabharata - Adi Parva - Chapter Footnotes

१-९२-२३ हसती हसन्ती ॥
१-९२-३० अभ्यचोदयत् पृष्टवान् ॥
१-९२-४३ बभार पोषितवान् । मतङ्गस्त्रिशङ्कुः ॥
१-९२-४४ आश्रममभ्येत्य तपस्तप्त्वेति शेषः । नद्याः कौशिक्याः ॥
१-९२-४९ तस्य तस्मात् ॥
१-९२-५० आवर्तयेदेकीकुर्यात् ॥
१-९२-५२ सूर्यचन्द्रावेवाक्ष्णोः संबन्धिनी तारके यस्य तावपि
भ्रूभङ्गमात्रेण स्रष्टुं समर्थ इत्यर्थः ॥
१-९२-५५ प्रक्रीडितायाः प्रकृष्टं क्रीडितं यस्याः । विवृणोतु अपसारयतु ॥
द्विनवतितमोऽध्यायः ॥
९२ ॥

---

अध्यय०९३
॥ श्रीः ॥
१.९३. अध्यायः ९३

Mahabharata - Adi Parva - Chapter Topics

विश्वामित्रान्मेनकायां शकुन्तलाया जन्मकथनम् ॥ १ ॥

Mahabharata - Adi Parva - Chapter Text

१-९३-० (४०२२)
कण्व उवाच। १-९३-०क्ष् (५७९)
एवमुक्तस्तया शक्रः संदिदेश सदागतिम् ।
प्रातिष्ठत तदा काले मेनका वायुना सह ॥ १-९३-१ (४०२३)
अथापश्यद्वरारोहा तपसा दग्धकिल्बिषम् ।
मिश्वामित्रं तप्यमानं मेनका भीरुराश्रमे ॥ १-९३-२ (४०२४)
अभिवाद्य ततः सा तं प्राक्रीडदृषिसन्निधौ ।
अपोवाह च वासोऽस्या मारुतः शशिसंनिभम् ॥ १-९३-३ (४०२५)
सागच्छत्त्वरिता भूमिं वासस्तदभिलिप्सती ।
कुत्सयन्तीव सव्रीडं मारुतं वरवर्णिनी ॥ १-९३-४ (४०२६)
पश्यतस्तस्य राजर्षेरप्यग्निसमतेजसः ।
विश्वामित्रस्ततस्तां तु विषमस्थामनिन्दिताम् ॥ १-९३-५ (४०२७)
गृद्धां वाससि संभ्रान्तां मेनकां मुनिसत्तमः ।
अनिर्देश्यवयोरूपामपश्यद्विवृतां तदा ॥ १-९३-६ (४०२८)
तस्या रूपगुणान्दृष्ट्वा स तु विप्रर्षभस्तदा ।
चकार भावं संसर्गे तया कामवशं गतः ॥ १-९३-७ (४०२९)
न्यमन्त्रयत चाप्येनां सा चाप्यैच्छदनिन्दिता ।
तौ तत्र सुचिरं कालमुभौ व्यवहरतां तदा ॥ १-९३-८ (४०३०)
रममाणौ यथाकामं यतैकदिवसं तथा ।
ग्एवं वर्षसहस्राणामतीतं नान्वचिन्तयत् ॥ १-९३-९ (४०३१)
कामक्रोधावजितवान्मुनिर्नित्यं समाहितः ।
चिरार्जितस्य तपसः क्षयं स कृतवान्मुनिः ॥ १-९३-१० (४०३२)
तपसः संक्षयादेव मुनिर्मोहं समाविशत् ।
मोहाभिभूतः क्रोधात्मा ग्रसन्मूलफलान्मुनिः ॥ १-९३-११ (४०३३)
पादैर्जलरवं कृत्वा अन्तर्द्वीपे कुटीं गतः ।
मेनका गन्तुकामा तु शुश्राव जलनिस्वनम् ॥ १-९३-१२ (४०३४)
तपसा दीप्तवीर्योऽसावाकाशादेति याति च ।
अद्य संज्ञां विजानामि ययाऽद्य तपसः क्षयः ॥ १-९३-१३ (४०३५)
गन्तुं न युक्तमित्युक्त्वा ऋतुस्नाताथ मेनका ।
कामरागाभिभूतस्य मुनेः पार्स्वं जगाम ह ॥' १-९३-१४ (४०३६)
जनयामास स मुनिर्मेनकायां शकुन्तलाम् ।
प्रस्थे हिमवतो रम्ये मालिनीमभितो नदीम् ॥ १-९३-१५ (४०३७)

ग्देवगर्भोपमां बालां सर्वाभरणभूषिताम् ।
शयानां शयने रम्ये मेनका वाक्यमब्रवीत् ॥ १-९३-१६ (४०३८)
महर्षेरुग्रतपसस्तेजस्त्वमसि भामिनि ।
तस्मात्स्वर्गं गमिष्यामि देवकार्यार्थमागता ॥' १-९३-१७ (४०३९)
जातमुत्सृज्य तं गर्भं मेनका मालिनीमनु ।
कृतकार्या ततस्तूर्णमगच्छच्छक्रसंसदम् ॥ १-९३-१८ (४०४०)
तं वने विजने गर्भं सिंहव्याघ्रसमाकुले ।
दृष्ट्वा शयानं शकुनाः समन्तात्पर्यवारयन् ।
नेमां हिंस्युर्वने बालां क्रव्यादा मांसगृद्धिनः ॥ १-९३-१९ (४०४१)
पर्यरक्षन्त तां तत्र शकुन्ता मेनकात्मजाम् ।
उपस्प्रष्टुं गतश्चाहमपश्यं शयितामिमाम् ॥ १-९३-२० (४०४२)
निर्जने विपिने रम्ये शकुन्तैः परिवारिताम् ।
ग्मां दृष्ट्वैवाभ्यपद्यन्त पादयोः पतिता द्विजाः ।
अब्रुञ्शकुनाः सर्वे कलं मधुरभाषिणः ॥ १-९३-२१ (४०४३)
विश्वामित्रसुतां ब्रह्मन्न्यासभूतां भरस्व वै ।
कामक्रोधावजितवान्सखा ते कौशिकीं गतः ॥ १-९३-२२ (४०४४)
तस्मात्पोषय तत्पुत्रीं दयावानिति तेऽब्रुवन् ।
सर्वभूतरुतज्ञोऽहं दयावान्सर्वजन्तुषु ॥' १-९३-२३ (४०४५)
आनयित्वा ततश्चैनां दुहितृत्वे न्यवेशयम् ॥ १-९३-२४ (४०४६)
शरीरकृत्प्राणदाता यस्य चान्नानि भुञ्जते ।
क्रमेणैते त्रयोऽप्युक्ताः पितरो धर्मशासने ॥ १-९३-२५ (४०४७)
निर्जने तु वने यस्माच्छकुन्तैः परिवारिता ।
शकुन्तलेति नामास्याः कृतं चापि ततो मया ॥ १-९३-२६ (४०४८)
एवं दुहितरं विद्धि मम विप्र शकुन्तलाम् ।
शकुन्तला च पितरं मन्यते मामनिन्दिता ॥ १-९३-२७ (४०४९)
शकुन्तलोवाच। १-९३-२८क्ष् (५८०)
एतदाचष्ट पृष्टः सन्मम जन्म महर्षये ।
सुतां कण्वस्य मामेवं विद्धि त्वं मनुजाधिप ॥ १-९३-२८ (४०५०)
कण्वं हि पितरं मन्ये पितरं स्वमजानती ।
इति ते कथितं राजन्यथावृत्तं श्रुतं मया ॥ ॥ १-९३-२९ (४०५१)

इति श्रीमन्महाभारते आदिपर्वणि संभवपर्वणि त्रिनवतितमोऽध्यायः ॥ ९३ ॥

Mahabharata - Adi Parva - Chapter Footnotes

१-९३-१ सदागतिम् वायुम् ॥

१-९३-६ गृद्धां सक्ताम् । विवृतामनाच्छादिताम् ॥
१-९३-८ न्यमन्त्रयत एहीत्याकारितवान् । व्यहरतां विहारं चक्रतुः ॥
१-९३-२० उपस्प्रष्टुं आचमनादिकं कर्तुम् ॥
१-९३-२५ शरीरकृन्निषेक्ता । प्राणदाताऽभयप्रदः ॥
त्रिनवतितमोऽध्यायः ॥
९३ ॥

---

अध्यय०९४
॥ श्रीः ॥
१.९४. अध्यायः ९४

Mahabharata - Adi Parva - Chapter Topics
समयबन्धपूर्वकं गान्धर्वेण विवाहेन शकुन्तलापाणिग्रहणम् ॥ १ ॥
कण्वस्य स्वाश्रमं प्रति प्रत्यागमनम् ॥ २ ॥
कण्वशकुन्तलासंवादः ॥ ३ ॥
कण्वाच्छकुन्तलाया वरलाभः ॥ ४ ॥

Mahabharata - Adi Parva - Chapter Text

१-९४-० (४०५२)
दुष्यन्त उवाच। १-९४-०क्ष् (५८१)
सुव्यक्तं राजपुत्री त्वं यथा कल्याणि भाषसे ।
भार्या मे भव सुश्रोणि ब्रूहि किं करवाणि ते ॥ १-९४-१ (४०५३)
सुवर्णमालां वासांसि कुण्डले परिहाटके ।
नानापत्तनजे शुभ्रे मणिरत्ने च शोभने ॥ १-९४-२ (४०५४)
आहरामि तवाद्याहं निष्कादीन्यजिनानि च ।
सर्वं राज्यं तवाद्यास्तु भार्या मे भव शोभने ॥ १-९४-३ (४०५५)
गान्धर्वेण च मां भीरु विवाहेनैहि सुन्दरि ।
विवाहानां हि रम्भोरु गान्धर्वः श्रेष्ठ उच्यते ॥ १-९४-४ (४०५६)
शकुन्तलोवाच। १-९४-५क्ष् (५८२)
फलाहारो गतो राजन्पिता मे इत आश्रमात् ।
मुहूर्तं संप्रतीक्षस्व स मां तुभ्यं प्रदास्यति ॥ १-९४-५ (४०५७)
गपिता हि मे प्रभुर्नित्यं दैवतं परमं मम ।
यस्मै मां दास्यति पिता स मे भर्ता भविष्यति ॥ १-९४-६ (४०५८)
पिता रक्षति कौमारे भर्ता रक्षति यौवने ।
पुत्रस्तु स्थाविरे भावे न स्त्री स्वातन्त्र्यमर्हति ॥ १-९४-७ (४०५९)
समन्यमाना राजेन्द्र पितरं मे तपस्विनम् ।

अधर्मेण हि धर्मिष्ठ कथं वरमुपास्महे ॥ १-९४-८ (४०६०)
दुष्यन्त उवाच। १-९४-९क्ष् (५८३)
मामैवं वद कल्याणि तपोराशिं दमात्मकम्। १-९४-९ (४०६१)
शकुन्तलोवाच ।
मन्युप्रहरणा विप्रा न विप्राः शस्त्रपाणयः ॥ १-९४-९क्ष् (५८४)
मन्युना घ्नन्ति ते शत्रून्वज्रेणेन्द्र इवासुरान् ।
अग्निर्दहति तेजोभिः सूर्यो दहति रश्मिभिः ॥ १-९४-१० (४०६२)
राजा दहति दण्डेन ब्राह्मणो मन्युना दहेत् ।
क्रोधिता मन्युना घ्नन्ति वज्रपाणिरिवासुरान् ॥ १-९४-११ (४०६३)
दुष्यन्त उवाच। १-९४-१२क्ष् (५८५)
जाने भद्रे महर्षिं तं तस्य मन्युर्न विद्यते।'
इच्छामि त्वां वरारोहे भजमानामनिन्दिते ।
त्वदर्थं मां स्थितं विद्धि त्वद्गतं हि मनो मम ॥ १-९४-१२ (४०६४)
आत्मनो बन्धुरात्मैव गतिरात्मैव चात्मनः ।
आत्मनैवात्मनो दानं कर्तुमर्हसि धर्मतः ॥ १-९४-१३ (४०६५)
अष्टावेव समासेन विवाहा धर्मतः स्मृताः ।
ब्राह्मो दैवस्तथैवार्षः प्राजापत्यस्तथाऽऽसुरः ॥ १-९४-१४ (४०६६)
गान्धर्वो राक्षसश्चैव पैशाचश्चाष्टमः स्मृतः ।
तेषां धर्म्यान्यथापूर्वं मनुः स्वायंभुवोऽब्रवीत् ॥ १-९४-१५ (४०६७)
प्रशस्तांश्चतुरः पूर्वान्ब्राह्मणस्योपधारय ।
षडानुपूर्व्या क्षत्रस्य विद्धि धर्म्याननिन्दिते ॥ १-९४-१६ (४०६८)
राज्ञां तु राक्षसोऽप्युक्तो विट्शूद्रेष्वासुरः स्मृतः ।
पञ्चानां तु त्रयो धर्म्या अधर्म्यौ द्वौ स्मृताविह ॥ १-९४-१७ (४०६९)
पैशाच आसुरश्चैव न कर्तव्यौ कदाचन ।
अनेन विधिना कार्यो धर्मस्यैषा गतिः स्मृता ॥ १-९४-१८ (४०७०)
गान्धर्वराक्षसौ क्षत्रे धर्म्यौ तौ मा विशङ्किथाः ।
पृथग्वा यदि वा मिश्रौ कर्तव्यौ नात्र संशयः ॥ १-९४-१९ (४०७१)
सा त्वं मम सकामस्य सकामा वरवर्णिनी ।
गान्धर्वेण विवाहेन भार्या भवितुमर्हसि ॥ १-९४-२० (४०७२)
शकुन्तलोवाच। १-९४-२१क्ष् (५८६)
यदि धर्मपथस्त्वेव यदि चात्मा प्रभुर्मम ।
प्रदाने पौरवश्रेष्ठ शृणु मे समयं प्रभो ॥ १-९४-२१ (४०७३)
सत्यं मे प्रतिजानीहि यथा वक्ष्याम्यहं रहः ।
मयि जायेत यः पुत्रः स भवेत्त्वदनन्तरः ॥ १-९४-२२ (४०७४)
युवराजो महाराज सत्यमेतद्ब्रवीमि ते ।
यद्येतदेवं दुष्यन्त अस्तु मे सङ्गमस्त्वया ॥ १-९४-२३ (४०७५)

वैशंपायन उवाच। १-९४-२४क्ष् (५८७)
ग्तस्यास्तु सर्वं संश्रुत्य यथोक्तं स विशांपतिः ।
दुष्यन्तः पुनरेवाह यद्यदिच्छसि तद्वद ॥ १-९४-२४ (४०७६)
शकुन्तलोवाच। १-९४-२५क्ष् (५८८)
ख्यातो लोकप्रवादोयं विवाह इति शास्त्रतः ।
वैवाहिकीं क्रियां सन्तः प्रशंसन्ति प्रजाहिताम् ॥ १-९४-२५ (४०७७)
लोकप्रवादशान्त्यर्थं विवाहं विधिना कुरु ।
सन्त्यत्र यज्ञपात्राणि दर्भाः सुमनसोऽक्षताः ॥ १-९४-२६ (४०७८)
यथा युक्तो विवाहः स्यात्तथा युक्ता प्रजा भवेत् ।
तस्मादाज्यं हविर्लाजाः सिकता ब्राह्मणास्तव ॥ १-९४-२७ (४०७९)
वैवाहिकानि चान्यानि समस्तानीह पार्थिव ।
दुरुक्तमपि राजेन्द्र क्षन्तव्यं धर्मकारणात् ॥ १-९४-२८ (४०८०)
वैशंपायन उवाच।' १-९४-२९क्ष् (५८९)
एवमस्त्विति तां राजा प्रत्युवाचाविचारयन् ।
अपि च त्वां हि नेष्यामि नगरं स्वं शुचिस्मिते ॥ १-९४-२९ (४०८१)
यथा त्वमर्हा सुश्रोणि मन्यसे तद्ब्रवीमि ते ।
एवमुक्त्वा स राजर्षिस्तामनिन्दितगामिनीम् ॥ १-९४-३० (४०८२)
ग्पुरोहितं समाहूय वचनं युक्तमब्रवीत् ।
राजपुत्र्या यदुक्तं वै न वृथा कर्तुमुत्सहे ॥ १-९४-३१ (४०८३)
क्रियाहीनो हि न भवेन्मम पुत्रो महाद्युतिः ।
तथा कुरुष्व शास्त्रोक्तं विवाहं मा चिरंकुरु ॥ १-९४-३२ (४०८४)
एवमुक्तो नृपतिना द्विजः परमयन्त्रितः ।
शोभनं राजराजेति विधिना कृतवान्द्विजः ॥ १-९४-३३ (४०८५)
शासनाद्विप्रमुख्यस्य कृतकौतुकमङ्गलः।'
जग्राह विधिवत्पाणावुवास च तया सह ॥ १-९४-३४ (४०८६)
विश्वास्य चैनां स प्रायादब्रवीच्च पुनः पुनः ।
प्रेषयिष्ये तवार्थाय वाहिनीं चतुरङ्गिणीम् ॥ १-९४-३५ (४०८७)
ग्त्रैविद्यवृद्धैः सहितां नानाराजजनैः सह ।
शिबिकासहस्रैः सहिता वयमायान्ति बान्धवाः ॥ १-९४-३६ (४०८८)
मूकाश्चैव किराताश्च कुब्जा वामनकैः सह ।
सहिताः कञ्चुकिवरैर्वाहिनी सूतमागधैः ॥ १-९४-३७ (४०८९)
शङ्खदुन्दुभिनिर्घोषैर्वनं च समुपैष्यति ।
तथा त्वामानयिष्यामि नगरं स्वं शुचिस्मिते ॥ १-९४-३८ (४०९०)
अन्यथा त्वां न नेष्यामि स्वनिवेशमसत्कृताम् ।
सर्वमङ्गलसत्कारैः सुभ्रु सत्यं करोमि ते ॥ १-९४-३९ (४०९१)
वैशंपायन उवाच। १-९४-४०क्ष् (५९०)

एवमुक्त्वा स राजर्षिस्तामनिन्दितगामिनीम् ।
परिष्वज्य च बाहुभ्यां स्मितपूर्वमुदैक्षत ॥ १-९४-४० (४०९२)
प्रदक्षिणीकृतां देवीं पुनस्तां परिषस्वजे ।
शकुन्तला सा सुमुखी पपात नृपपादयोः ॥ १-९४-४१ (४०९३)
तां देवीं पुनरुत्थाप्य मा शुचेति पुनः पुनः ।
शपेयं सुकृतेनैव प्रापयिष्ये नृपात्मजे ॥' १-९४-४२ (४०९४)
इति तस्याः प्रतिश्रुत्य स नृपो जनमेजय ।
मनसा चिन्तयन्प्रायात्काश्यपं प्रति पार्थिव ॥ १-९४-४३ (४०९५)
भगवांस्तपसा युक्तः श्रुत्वा किं नु करिष्यति ।
तं न प्रसाद्यागतोऽहं प्रसीदेति द्विजोत्तमम् ।
एवं संचिन्तयन्नेव प्रविवेश स्वकं पुरम् ॥ १-९४-४४ (४०९६)
ततो मुहूर्ते याते तु कण्वोऽप्याश्रममागमत् ।
शकुन्तला च पितरं ह्रिया नोपजगाम तम् ॥ १-९४-४५ (४०९७)
ग्शङ्कितेव च विप्रर्षिमुपचक्राम सा शनैः ।
ततोऽस्य भारं जग्राह आसनं चाप्यकल्पयत् ॥ १-९४-४६ (४०९८)
प्राक्षालयच्च सा पादौ काश्यपस्य महात्मनः ।
न चैनं लज्जयाऽशक्नोदक्षिभ्यामभिवीक्षितुम् ॥ १-९४-४७ (४०९९)
शकुन्तला च सव्रीडा तमृषिं नाभ्यभाषत ।
तस्मात्स्वधर्मात्स्खलिता भीता सा भरतर्षभ ॥ १-९४-४८ (४१००)
अभवद्दोषदर्शित्वाद्ब्रह्मचारिण्ययन्त्रिता ।
स तदा व्रीडितां दृष्ट्वा ऋषिस्तां प्रत्यभाषत ॥ १-९४-४९ (४१०१)
कण्व उवाच। १-९५-५०क्ष् (५९१)
सव्रीडैव च दीर्घायुः पुरेव भविता न च ।
वृत्तं कथय रम्भोरु मा त्रासं च प्रकल्पय ॥ १-९४-५० (४१०२)
वैशंपायन उवाच। १-९४-५१क्ष् (५९२)
ततः प्रक्षाल्य पादौ सा विश्रान्तं पुनरब्रवीत् ।
निधाय कामं तस्यर्षेः कन्दानि च फलानि च ॥ १-९४-५१ (४१०३)
ततः संवाह्य पादौ सा विश्रान्तं वेदिमध्यमा ।
शकुन्तला पौरवाणां दुष्यन्तं जग्मुषी पतिम् ॥ १-९४-५२ (४१०४)
ततः कृच्छ्रादतिशुभा सव्रीडा श्रमती तदा ।
सगद्गदमुवाचेदं काश्यपं सा शुचिस्मिता ॥ १-९४-५३ (४१०५)
शकुन्तलोवाच। १-९४-५४क्ष् (५९३)
राजा ताताजगामेह दुष्यन्त इलिलात्मजः ।
मया पतिर्वृतो योऽसौ दैवयोगादिहागतः ॥ १-९४-५४ (४१०६)
तस्य तात प्रसीद त्वं भर्ता मे सुमहायशाः ।
अतः सर्वं तु यद्वृत्तं दिव्यज्ञानेन पश्यसि ॥ १-९४-५५ (४१०७)

अभयं क्षत्रियकुले प्रसादं कर्तुमर्हसि। १-९४-५६ (४१०८)
वैशंपायन उवाच ।
चक्षुषा स तु दिव्येन सर्वं विज्ञाय काश्यपः ॥ १-९४-५६क्ष् (५९४)
ततो धर्मिष्ठतां मत्वा धर्मे चास्खलितं मनः ।
उवाच भगवान्प्रीतस्तद्वृत्तं सुमहातपाः ॥१-९४-५७ (४१०९)
कण्व उवाच।१-९४-५८क्ष् (५९५)
एवमेतन्मया ज्ञातं दृष्टं दिव्येन चक्षुषा ।
त्वयाऽद्य राजान्वयया मामनादृत्य यत्कृतम्'॥१-९४-५८ (४११०)
पुंसा सह समायोगो न स धर्मोपघातकः ।
न भयं विद्यते भद्रे मा शुचः सुकृतं कृतम् ॥१-९४-५९ (४१११)
क्षत्रियस्य तु गान्धर्वो विवाहः श्रेष्ठ उच्यते ।
सकामायाः सकामेन निमन्त्रः श्रेष्ठ उच्यते ॥१-९४-६० (४११२)
गकिं पुनर्विधिवत्कृत्वा सुप्रजस्त्वमवाप्स्यसि।'
धर्मात्मा च महात्मा च दुष्यन्तः पुरुषोत्तमः ॥ १-९४-६१ (४११३)
अभ्यागच्छत्पतिर्यस्त्वां भजमानां शकुन्तले ।
महात्मा जनिता लोके पुत्रस्तव महायशाः ॥१-९४-६२ (४११४)
स च सर्वां समुद्रान्तां कृत्स्नां भोक्ष्यति मेदिनीम् ।
परं चाभिप्रयातस्य चक्रं तस्य महात्मनः ॥१-९४-६३ (४११५)
भविष्यत्यप्रतिहतं सततं चक्रवर्तिनः ।
प्रसन्न एव तस्याहं त्वकृते वरवर्णिनि ॥१-९४-६४ (४११६)
ऋतवो बहवस्ते वै गता व्यर्थाः शुचिस्मिते ।
सार्थकं सांप्रतं ह्येतन्न च पाप्मास्ति तेऽनघे ।
गृहाण च वरं मत्तस्तत्कृते यदभीप्सितम् ॥ १-९४-६५ (४११७)
शकुन्तलोवाच।१-९४-६६क्ष् (५९६)
मया पतिर्वृतो योऽसौ दुष्यन्तः पुरुषोत्तमः ।
मम चैव पतिर्दृष्टो देवतानां समक्षतः ।
तस्मै ससचिवाय त्वं प्रसादं कर्तुमर्हसि ॥ १-९४-६६ (४११८)
वैशंपायन उवाच।१-९४-६७क्ष् (५९७)
इत्येवमुक्त्वा मनसा प्रणिधाय मनस्विनी ।
ततो धर्मिष्ठतां वव्रे राज्ये चास्खलनं तथा ॥१-९४-६७ (४११९)
शकुन्तलां पौरवाणां दुष्यन्तहितकाम्यया ।
गएवमस्त्विति तां प्राह कण्वो धर्मभृतां वरः ॥१-९४-६८ (४१२०)
पस्पर्श चापि पाणिभ्यां सुतां श्रीमिवरूपिणीम् ॥ १-९४-६९ (४१२१)
कण्व उवाच।१-९४-७०क्ष् (५९८)
अद्यप्रभृति देवी त्वं दुष्यन्तस्य महात्मनः ।
पतिव्रतानां या वृत्तिस्तां वृत्तिमनुपालय ॥१-९४-७० (४१२२)

वैशंपायन उवाच।१-९४-७१क्ष् (५९९)
इत्येवमुक्त्वा धर्मात्मा तां विशुद्ध्यर्थमस्पृशत् ।
स्पृष्टमात्रे शरीरे तु परं हर्षमवाप सा ॥' ॥ १-९४-७१ (४१२३)

इति श्रीमन्महाभारते आदिपर्वणि संभवपर्वणि
चतुर्नवतितमोऽध्यायः ॥ ९४ ॥
Mahabharata - Adi Parva - Chapter Footnotes

१-९४-४ गान्धर्वो वरवध्वोरैकमत्येन कृतः ॥
१-९४-५ फलाहारः फळन्याहर्तुं गतः ॥
१-९४-१७ पञ्चानां ब्राह्मादीनां त्रयो ब्राह्मदैवप्राजापत्या धर्म्याः
।द्वावर्षासुरो कन्याशुल्कग्रहणादधर्म्यौ ॥
१-९४-१८ तयोरप्यासुरः पैशाचवदत्यन्तं हेय इत्याह ।पैशाच इति ॥
१-९४-१९ परिशेषाद्गन्धर्वराक्षसौ क्षत्रियस्य धर्म्यावित्याह
गान्धर्वेति ॥
१-९४-४२ शपेयं शपथं कुर्याम् ॥
चतुर्नवतितमोऽध्यायः ॥
९४ ॥

---

अध्यय०९५
॥ श्रीः ॥
१.९५. अध्यायः ९५

Mahabharata - Adi Parva - Chapter Topics
शकुन्तलायाः पुत्रोत्पत्तिः ॥ १ ॥
तस्य सर्वदमनेतिनामप्राप्तिः ॥ २ ॥

Mahabharata - Adi Parva - Chapter Text

१-९५-० (४१२४)
वैशंपायन उवाच।१-९५-०क्ष् (६००)
प्रतिज्ञाय च दुष्यन्ते प्रतियाते दिने दिने ।
ग्गर्भश्च ववृधे तस्यां राजपुत्र्यां महात्मनः ॥' १-९५-१ (४१२५)
शकुन्तला चिन्तयन्ती राजानं कार्यगौरवात् ।
दिवारात्रमनिद्रैव स्नानभोजनवर्जिता ॥१-९५-२ (४१२६)
राजप्रेषणिका विप्राश्चतुरङ्गबलान्विताः ।
अद्य श्वो वा परश्वो वा समायान्तीति निस्चिता ॥१-९५-३ (४१२७)

दिनान्पक्षानृतून्मासानयनानि च सर्वशः ।
गण्यमानानि वर्षाणि व्यतीयुस्त्रीणि भारत ॥१-९५-४ (४१२८)
त्रिषु वर्षेषु पूर्णेषु ऋषेर्वचनगौरवात् ।
ऋषिपत्न्यः सुबहुशो हेतुमद्वाक्यमब्रुवन् ॥१-९५-५ (४१२९)
ऋषिपत्न्य ऊचुः।१-९५-६क्ष् (६०१)
शृणु भद्रे लोकवृत्तं श्रुत्वा यद्रोचते तव ।
तत्कुरुष्व हितं देवि नावमान्यं गुरोर्वचः ॥१-९५-६ (४१३०)
देवानां दैवतं विष्णुर्विप्राणामग्निर्ब्रह्म च ।
नारीणां दैवतं भर्ता लोकानां ब्राह्मणो गुरुः ॥१-९५-७ (४१३१)
सूतिकाले प्रसूष्वेति भगवांस्ते पिताऽब्रवीत् ।
करिष्यामीति कर्तव्यं तदा ते सुकृतं भवेत् ॥१-९५-८ (४१३२)
वैशंपायन उवाच।१-९५-९क्ष् (६०२)
पत्नीनां वचनं श्रुत्वा साधु साध्वित्यचिन्तयत्।'
गर्भं सुषाव वामोरूः कुमारममितौजसम् ॥ १-९५-९ (४१३३)
त्रिषु वर्षेषु पूर्णेषु प्राजायत शकुन्तला ।
रूपौदार्यगुणोपेतं दौष्यन्तिं जनमेजय ॥१-९५-१० (४१३४)
ग्जाते' तस्मिन्नन्तरिक्षात्पुष्पवृष्टिः पपात ह ।
देवदुन्दुभयो नेदुर्ननृतुश्चाप्सरोगणाः ॥१-९५-११ (४१३५)
गायद्भिर्मधुरं तत्र देवैः शक्रोऽभ्युवाच ह ।
शकुन्तले तव सुतश्चक्रवर्ती भविष्यति ॥१-९५-१२ (४१३६)
बलं तेजश्च रूपं च न समं भुवि केनचित् ।
आहर्ता वाजिमेधस्य शतसङ्ख्यस्य पौरवः ॥१-९५-१३ (४१३७)
अनेकारपि साहस्रै राजसूयादिभिर्मखैः ।
स्वार्थं ब्राह्मणसात्कृत्वा दक्षिणाममितां ददत् ॥१-९५-१४ (४१३८)
देवतानां वचः श्रुत्वा कण्वाश्रमनिवासिनः ।
सभाजयन्तः कण्वस्य सुतां सर्वे महर्षयः ॥१-९५-१५ (४१३९)
शकुन्तला च तच्छ्रुत्वा परं हर्षमवाप सा ।
द्विजानाहूय मुनिभिः सत्कृत्य च महायशाः।' १-९५-१६ (४१४०)
जातकर्मादिसंस्कारं कण्वः पुण्यवतां वरः ।
तस्याथ कारयामास वर्धमानस्य चासकृत् ॥१-९५-१७ (४१४१)
यथाविधि यथान्यायं क्रियाः सर्वास्त्वकारयत् ।
दन्तैः शुक्लैः शिखरिभिःसिंहसंहननोऽभवत् ॥१-९५-१८ (४१४२)
चक्राङ्कितकरः श्रीमान्स्वयं विष्णुरिवापरः ।
ग्चतुष्किष्कुर्महातेजा महामूर्धा महाबलः ॥' १-९५-१९ (४१४३)
कुमारो देवगर्भाभः स तत्राशु व्यवर्धत ।
ग्ऋषेर्भयात्तु दुष्यन्तः स्मरन्नैवाह्वयत्तदा ॥१-९५-२० (४१४४)

गते काले तु महति न सस्मार तपोधनाम्।'
षड्वर्षेषु ततो बालः कण्वाश्रमपदं प्रति ॥ १-९५-२१ (४१४५)
व्याघ्रान्सिंहान्वराहांश्च वृकांश्च महिषांस्तथा ।
ग्ऋक्षांश्चाभ्यहनद्बालान्पड्ङ्यामाश्रमपीडकान् ॥१-९५-२२ (४१४६)
बलाङ्कुजाभ्यां संगृह्य बलवान्संनियम्य च।'
बद्ध्वा वृक्षेषु दौष्यन्तिराश्रमस्य समन्ततः ॥ १-९५-२३ (४१४७)
आरुरोह द्रुमांश्चैव क्रीडन्स्म परिधावति ।
ग्वनं च लोडयामास सिंहव्याघ्रगणैर्वृतम् ॥१-९५-२४ (४१४८)
ततश्च राक्षसान्सर्वान्पिशाचांश्च रिपून्रणे ।
मुष्टियुद्धेन तान्हत्वा ऋषीनाराधयत्तदा ॥१-९५-२५ (४१४९)
कश्चिद्दितिसुतस्तं तु हन्तुकामो महाबलः ।
वध्यमानांस्तु दैतेयानमर्षी तं समभ्ययात् ॥१-९५-२६ (४१५०)
तमागतं प्रहस्यैव बाहुभ्यां परिगृह्य च ।
दृढं चाबध्य बाहुभ्यां पीडयामास तं तदा ॥१-९५-२७ (४१५१)
मर्दितो न शशाकास्मान्मोचितुं बलवत्तया ।
प्राक्रोशद्भैरवं तत्र द्वारेभ्यो निःसृतं त्वसृक् ॥१-९५-२८ (४१५२)
तेन शब्देन वित्रस्ता मृगाः सिंहादयो गणाः ।
सुस्रुवुश्च शकृन्मूत्रमाश्रमस्थाश्च सुस्रुवुः ॥१-९५-२९ (४१५३)
निरसुं जानुभिः कृत्वा विससर्ज च सोऽपतत् ।
तद्दृष्ट्वा विस्मयं जग्मुः कुमारस्य विचेष्टितम् ॥१-९५-३० (४१५४)
नित्यकालं वध्यमाना दैतेया राक्षसैः सह ।
कुमारस्य भयादेव नैव जग्मुस्तदाश्रमम् ॥' १-९५-३१ (४१५५)
ततोऽस्य नाम चक्रुस्ते कण्वाश्रमनिवासिनः ।
कण्वेन सहिताः सर्वे दृष्ट्वा कर्मातिमानुषम् ॥१-९५-३२ (४१५६)
अस्त्वयं सर्वदमनः सर्वं हि दमयत्यसौ ।
स सर्वदमनो नाम कुमारः समपद्यत ॥१-९५-३३ (४१५७)
विक्रमेणौजसा चैव बलेन च समन्वितः ।
ग्अप्रेषयति दुष्यन्ते महिष्यास्तनयस्य च ॥१-९५-३४ (४१५८)
पाण्डुभावपरीताङ्गीं चिन्तया समभिप्लुताम् ।
लम्बालकां कृशां दीनां तथा मलिनवाससम् ॥१-९५-३५ (४१५९)
ग्शकुन्तलां च संप्रेक्ष्य प्रदध्यौ स मुनिस्तदा ।
शास्त्राणि सर्ववेदाश्च द्वादशाब्दस्य चाभवन्'॥ ॥१-९५-३६ (४१६०)

इति श्रीमन्महाभारते आदिपर्वणि संभवपर्वणि
पञ्चनवतितमोऽध्यायः ॥९५ ॥

---

अध्यय०९६

॥ श्रीः ॥
१.९६. अध्यायः ९६

Mahabharata - Adi Parva - Chapter Topics
शकुन्तलाया दुष्यन्तं प्रति प्रेषयितुं कण्वकृत उपदेशः ॥ १ ॥
हास्तिनपुरगमनविषयेकण्वशकुन्तलासर्वदमनानां विवादः ॥ २ ॥
कण्वेन स्वशिष्यद्वारा शकुन्तलासर्वदमनयोर्हास्तिनपुरप्रेषणम् ॥ ३ ॥
पुरप्रवेशान्निर्विण्णैः शिष्यैः कण्वाश्रमं प्रति निवर्तनम् ॥ ४ ॥

Mahabharata - Adi Parva - Chapter Text

१-९६-० (४१६१)
वैशंपायन उवाच। १-९६-०क्ष् (६०३)
तं कुमारमृषिर्दृष्ट्वा कर्म चास्यातिमानुषम् ।
समयो यौवराज्याय इत्यनुध्याय स द्विजः ॥ १-९६-१ (४१६२)
ग्शकुन्तलां समाहूय कण्वो वचनमब्रवीत्। १-९६-२ (४१६३)
कण्व उवाच ।
शृणु भद्रे मम सुते मम वाक्यं शुचिस्मिते ॥ १-९६-२क्ष् (६०४)
पतिव्रतानां नारीणां विशिष्टमिति चोच्यते ।
पतिशुश्रूषणं पूर्वं मनोवाक्कायचेष्टितैः ॥ १-९६-३ (४१६४)
अनुज्ञाता मया पूर्वं पूजयैतद्व्रतं तव ।
एतेनैव च वृत्तेन पुण्याँल्लोकानवाप्य च ॥ १-९६-४ (४१६५)
तस्यान्ते मानुषे लोके विशिष्टां तप्स्यसे श्रियम् ।
तस्माद्भद्रेऽद्य यातव्यं समीपं पौरवस्य ह ॥ १-९६-५ (४१६६)
स्वयं नायाति मत्वा ते गतं कालं शुचिस्मिते ।
गत्वाऽऽराधय राजानं दुष्यन्तं हितकाम्यया ॥ १-९६-६ (४१६७)
दौष्यन्तिं यौवराज्यस्थं दृष्ट्वा प्रीतिमवाप्स्यसि ।
देवतानां गुरूणां च क्षत्रियाणां च भामिनि ॥ १-९६-७ (४१६८)
भर्तॄणां च विशेषेम हितं संगमनं भवेत् ।
तस्मात्पुत्रि कुमारेण गन्तव्यं मत्प्रियेप्सया ॥ १-९६-८ (४१६९)
प्रतिवाक्यं न दद्यास्त्वं शपिता मम पादयोः ॥ १-९६-९ (४१७०)
वैशंपायन उवाच। १-९६-१०क्ष् (६०५)
एवमुक्त्वा सुतां तत्र पौत्रं कण्वोऽभ्यभाषत ।
परिष्वज्य च बाहुभ्यां मूर्ध्न्युपाघ्राय पौरवम् ॥ १-९६-१० (४१७१)
सोमवंशोद्भवो राजा दुष्यन्त इति विश्रुतः ।
तस्याग्रमहिषी चैषा तव माता शुचिव्रता ॥ १-९६-११ (४१७२)

गन्तुकामा भर्तृपार्श्वं त्वया सह सुमध्यमा ।
गत्वाऽभिवाद्य राजनं यौवराज्यमवाप्स्यसि ॥ १-९६-१२ (४१७३)
स पिता तव राजेन्द्रस्तस्य त्वं वशगो भव ।
पितृपैतामहं राज्यमातिष्ठस्व स्वभावतः ॥ १-९६-१३ (४१७४)
तस्मिन्काले स्वराज्यस्थो मामनुस्मर पौरव ॥ १-९६-१४ (४१७५)
वैशंपायन उवाच। १-९६-१५क्ष् (६०६)
अभिवाद्य मुनेः पादौ पौरवो वाक्यमब्रवीत् ।
त्वं पिता मम विप्रर्षे त्वं माता त्वं गतिश्च मे ॥ १-९६-१५ (४१७६)
न चान्यं पितरं मन्ये त्वामृते तु महातपः ।
तव शुश्रूषणं पुण्यमिह लोके परत्र च ॥ १-९६-१६ (४१७७)
शकुन्तला भर्तृकामा स्वयं यातु यथेष्टतः ।
अहं सुश्रूषणपरः पादमूले वसामि वः ॥ १-९६-१७ (४१७८)
क्रीडां व्यालमृगैः सार्धं करिष्ये न पुरा यथा ।
त्वच्छासनपरो नित्यं स्वाध्यायं च करोम्यहम् ॥ १-९६-१८ (४१७९)
एवमुक्त्वा तु संश्लिष्य पादौ कण्वस्य तिष्ठतः ।
तस्य तद्वचनं श्रुत्वा प्ररुरोद शकुन्तला ॥ १-९६-१९ (४१८०)
स्नेहात्पितुश्च पुत्रस्य हर्षशोकसमन्विता ।
निशाम्य रुदतीमार्तां दौष्यन्तिर्वाक्यमब्रवीत् ॥ १-९६-२० (४१८१)
श्रुत्वा भगवतो वाक्यं किं रोदिषि शकुन्तले ।
गन्तव्यं काल्य उत्थाय भर्तृप्रीतिस्ववास्ति चेत् ॥ १-९६-२१ (४१८२)
शकुन्तलोवाच। १-९६-२२क्ष् (६०७)
एकस्तु कुरुते पापं फलं भुङ्क्ते महाजनः ।
मया निवारितो नित्यं न करोषि वचो मम ॥ १-९६-२२ (४१८३)
निःसृतान्कुञ्जरान्नित्यं बाहुभ्यां संप्रमथ्य वै ।
वनं च लोडयन्नित्यं सिंहव्याघ्रगणैर्वृतम् ॥ १-९६-२३ (४१८४)
एवंविधानि चान्यानि कृत्वा वै पुरुनन्दन ।
रुषितो भगवांस्तात तस्मादावां विवासितौ ॥ १-९६-२४ (४१८५)
नाहं गच्छामि दुष्यन्तं नास्मि पुत्र हितैषिणी ।
पादमूले वसिष्यामि महर्षेर्भावितात्मनः ॥ १-९६-२५ (४१८६)
वैशंपायन उवाच। १-९६-२६क्ष् (६०८)
एवमुक्त्वा तु रुदती पपात मुनिपादयोः ।
एवं विलपतीं कण्वश्चानुनीय च हेतुभिः ।
पुनः प्रोवाच भगवानानृशंस्याद्धितं वचः ॥ १-९६-२६ (४१८७)
कण्व उवाच। १-९६-२७क्ष् (६०९)
शकुन्तले शृणुष्वेदं हितं पथ्यं च भामिनि ।
पतिव्रताभावगुणान्हित्वा साध्यं न किंचन ॥ १-९६-२७ (४१८८)

प्रतिव्रतानां देवा वै तुष्टाः सर्वरप्रदाः ।
प्रसादं च करिष्यन्ति आपदो मोक्षयन्ति च ॥१-९६-२८ (४१८९)
पतिप्रसादात्पुण्यं च प्राप्नुवन्ति न चाशुभम् ।
तस्माद्गत्वा तु राजानमाराधय शुचिस्मिते ॥१-९६-२९ (४१९०)
वैशंपायन उवाच।१-९६-३०क्ष् (६१०)
शकुन्तलां तथोक्त्वा वै शाकुन्तलमथाब्रवीत् ।
दौहित्रो मम पौत्रस्त्वमिलिलस्य महात्मनः ॥१-९६-३० (४१९१)
शृणुष्व वचनं सत्यं प्रब्रवीमि तवानघ ।
मनसा भर्तृकामा वै वाग्भिरुक्त्वा पृथग्विधम् ॥१-९६-३१ (४१९२)
गन्तुं नेच्छति कल्याणी तस्मात्तात वहस्व वै ।
शक्तस्त्वं प्रतिगन्तुं च मुनिभिः सह पौरव ॥' १-९६-३२ (४१९३)
इत्युक्त्वा सर्वदमनं कण्वः शिष्यानथाब्रवीत् ।
शकुन्तलामिमां शीग्रं सपुत्रामाश्रमादितः ॥१-९६-३३ (४१९४)
भर्तुः प्रापयताभ्याशं सर्वलक्षणपूजिताम् ।
नारीणां चिरवासो हि बान्धवेषु न रोचते ॥१-९६-३४ (४१९५)
कीर्तिचारित्रधर्म्नस्तस्मान्नयत मा चिरम् ॥ १-९६-३५ (४१९६)
ग्वैशंपायन उवाच।१-९६-३६क्ष् (६११)
धर्माभिपूजितं पुत्रं काश्यपेन निशाम्य तु ।
काश्यपात्प्राप्य चानुज्ञां मुमुदे च शकुन्तला ॥१-९६-३६ (४१९७)
कण्वस्य वचनं श्रुत्वा प्रतिगच्छेति चासकृत् ।
तथेत्युक्त्वा तु कण्वं च मातरं पौरवोऽब्रवीत् ।
किं चिरायसि मातस्त्वं गमिष्यामो नृपालयम् ॥ १-९६-३७ (४१९८)
एवमुक्त्वा तु तां देवीं दुष्यन्तस्य महात्मनः ।
अभिवाद्य मुनेः पादौ गन्तुमैच्छत्स पौरवः ॥१-९६-३८ (४१९९)
शकुन्तला च पितरमभिवाद्य कृताञ्जलिः ।
प्रदक्षिणीकृत्य तदा पितरं वाक्यमब्रवीत् ॥१-९६-३९ (४२००)
अज्ञानान्मे पिता चेति दुरुक्तं वापि चानृतम् ।
अकार्यं वाप्यनिष्टं वा क्षन्तुमर्हति तद्भवान् ॥१-९६-४० (४२०१)
एवमुक्तो नतशिरा मुनिर्नोवाच किंचन ।
मनुष्यभावात्कण्वोऽपि मुनिरश्रूण्यवर्तयत् ॥१-९६-४१ (४२०२)
अब्भक्षान्वायुभक्षांश्च शीर्णपर्णाशनान्मुनीन् ।
फलमूलाशिनो दान्तान्कृशान्धमनिसंततान् ॥१-९६-४२ (४२०३)
व्रतिनो जटिलान्मुण्डान्वल्कलाजिनसंवृतान् ।
समाहूय मुनिः कण्वः कारुण्यादिदमब्रवीत् ॥१-९६-४३ (४२०४)
मया तु लालिता नित्यं मम पुत्री यशस्विनी ।
वने जाता विवृद्धा च न च जानाति किंचन ॥१-९६-४४ (४२०५)

आश्रमात्तु पथा सर्वैर्नीयतां क्षत्रियालयम् ।
द्वितीययोजने विप्राः प्रतिष्ठानं प्रतिष्ठितम् ॥ १-९६-४५ (४२०६)
प्रतिष्ठाने पुरे राजा शाकुन्तलपितामहः ।
अध्युवास चिरं कालमुर्वश्या सहितः पुरा ॥ १-९६-४६ (४२०७)
अनूपजाङ्गलयुतं धनधान्यसमाकुलम् ।
प्रतिष्ठितं पुरवरं गङ्गायामुनसङ्गमे ॥ १-९६-४७ (४२०८)
तत्र सङ्गममासाद्य स्नात्वा हुतहुताशनाः ।
शाकमूलफलाहारा निवर्तध्वं तपोधनाः ।
अन्यथा तु भवेद्विप्रा अध्वनो गमने श्रमः ॥' १-९६-४८ (४२०९)
तथेत्युक्त्वा च ते सर्वे प्रातिष्ठन्त महौजसः ।
ग्शकुन्तलां पुरस्कृत्य दुष्यन्तस्य पुरं प्रति ॥ १-९६-४९ (४२१०)
गृहीत्वा चामरप्रख्यं पुत्रं कमललोचनम् ।
आजग्मुश्च पुरं रम्यं दुष्यन्ताध्युषितं वनात् ॥ १-९६-५० (४२११)
शकुन्तलां समादाय मुनयो धर्मवत्सलाः ।
ते वनानि नदीः शैलान्गिरिप्रस्रवणानि च ॥ १-९६-५१ (४२१२)
कन्दराणि नितम्बांश्च राष्ट्राणि नगराणि च ।
आश्रमाणि च पुण्यानि गत्वा चैव गतश्रमाः ॥ १-९६-५२ (४२१३)
शनैर्मध्याह्नवेलायां प्रतिष्ठानं समाययुः ।
तां पुरीं पुरुहूतेन ऐलस्यार्थे विनिर्मिताम् ॥ १-९६-५३ (४२१४)
परिघाट्टालकैर्मुख्यैरुपकल्पशतैरपि ।
शतघ्नीचक्रयन्त्रैश्च गुप्तामन्यैर्दुरासदाम् ॥ १-९६-५४ (४२१५)
हर्म्यप्रसादसंबाधां नानापण्यविभूषिताम् ।
मण्टपैः ससभै रम्यैः प्रपाभिश्च समावृताम् ॥ १-९६-५५ (४२१६)
राजमार्गेण महता सुविभक्तेन शोभिताम् ।
कैलासशिखराकारैर्गोपुरैः समलङ्कृताम् ॥ १-९६-५६ (४२१७)
द्वारतोरणनिर्यूहैर्मङ्गलैरुपशोभिताम् ।
उद्यानाम्रवणोपेतां महतीं सालमेखलाम् ॥ १-९६-५७ (४२१८)
सर्वपुष्करिणीभिश्च उद्यानैश्च समावृताम् ।
वर्णाश्रमैः स्वधर्मस्थैर्नित्योत्सवसमाहितैः ॥ १-९६-५८ (४२१९)
धनधान्यसमृद्धैश्च संतुष्टै रत्नपूजितैः ।
कृतयज्ञैश्च विद्वद्भिरग्निहोत्रपरैः सदा ॥ १-९६-५९ (४२२०)
वर्जिता कार्यकरणैर्दानशीलैर्दयापरैः ।
अधर्मभीरुभिः सर्वैः स्वर्गलोकजिगीषुभिः ॥ १-९६-६० (४२२१)
एवंविधजनोपेतमिन्द्रलोकमिवापरम् ।
तस्मिन्नगरमध्ये तु राजवेश्म प्रतिष्ठितम् ॥ १-९६-६१ (४२२२)
इन्द्रसद्मप्रतीकाशं संपूर्णं वित्तसंचयैः ।

तस्य मध्ये सभा दिव्या नानारत्नविभूषिता ॥१-९६-६२ (४२२३)
तस्यां सभायां राजर्षिः सर्वालङ्कारभूषितः ।
ब्राह्मणैः क्षत्रियैश्चापि मन्त्रिभिश्चापि संवृतः ॥१-९६-६३ (४२२४)
संस्तूयमानो राजेन्द्रः सूतमागधबन्दिभिः ।
कार्यार्थिषु तदाऽभ्येत्य कृत्वा कार्यं गतेषु सः ॥१-९६-६४ (४२२५)
सुखासीनोऽभवद्राजा तस्मिन्काले महर्षयः ।
शकुन्तानां स्वनं श्रुत्वा निमित्तज्ञास्त्वलक्षयन् ॥१-९६-६५ (४२२६)
शकुन्तले निमित्तानि शोभनानि भवन्ति नः ।
कार्यसिद्धिं वदन्त्येते ध्रुवं राज्ञी भविष्यसि ।
अस्मिंस्तु दिवसे पुत्रो युवराजो भविष्यति ॥ १-९६-६६ (४२२७)
वैशंपायन उवाच।१-९६-६७क्ष् (६१२)
वर्धमानपुरद्वारं तूर्यघोषनिनादितम् ।
शकुन्तलां पुरस्कृत्य विविशुस्ते महर्षयः ॥१-९६-६७ (४२२८)
प्रविशन्तं नृपसुतं प्रशशंसुश्च वीक्षकाः ।
वर्धमानपुरद्वारं प्रविशन्नेव पौरवः ॥१-९६-६८ (४२२९)
इन्द्रलोकस्थमात्मानं मेने हर्षसमन्वितः ॥ १-९६-६९ (४२३०)
ततो वै नागराः सर्वे समाहूय परस्परम् ।
द्रष्टुकामा नृपसुतं समपद्यन्त भारत ॥१-९६-७० (४२३१)
नागरा ऊचुः।१-९६-७१क्ष् (६१३)
देवतेव जनस्याग्रे भ्राजते श्रीरिवागता ।
जयन्तेनेव पौलोमी इन्द्रलोकादिहागता ॥१-९६-७१ (४२३२)
इति ब्रुवन्तस्ते सर्वे महर्षीनिदमब्रुवन् ।
अभिवादयन्तः सहिता महर्षीन्देववर्चसः ॥१-९६-७२ (४२३३)
अद्य नः सफलं जन्म कृतार्थाश्च ततो वयम् ।
एवं ये स्म प्रपश्यामो महर्षीन्सूर्यवर्चसः ॥१-९६-७३ (४२३४)
वैशंपायन उवाच।१-९६-७४क्ष् (६१४)
इत्युक्त्वा सहिताः केचिदन्वगच्छन्त पौरवम् ।
हैमवत्याः सुतमिव कुमारं पुष्करेक्षणम् ॥१-९६-७४ (४२३५)
ये केचिदब्रुवन्मूढाः शाकुन्तलदिदृक्षवः ।
कृष्णाजिनेन संछन्नाननिच्छन्तो ह्यवेक्षितुम् ॥१-९६-७५ (४२३६)
पिशाचा इव दृश्यन्ते नागराणां विरूपिणः ।
विना सन्ध्यां पिशाचास्ते प्रविशन्ति पुरोत्तमम् ॥१-९६-७६ (४२३७)
क्षुत्पिपासार्दितान्दीनान्वल्कलाजिनवाससः ।
त्वगस्थिभूतान्निर्मांसान्धमनीसन्ततानपि ॥१-९६-७७ (४२३८)
पिङ्गलाक्षान्पिङ्गजटान्दीर्घदन्तान्निरूदरान् ।
विशीर्षकानूर्ध्वहस्तान्दृष्ट्वा हास्यन्ति नागराः ॥१-९६-७८ (४२३९)

एवमुक्तवतां तेषां गिरं श्रुत्वा महर्षयः ।
अन्योन्यं ते समाहूय इदं वचनमब्रुवन् ॥ १-९६-७९ (४२४०)
उक्तं भगवता वाक्यं न कृतं सत्यवादिना ।
पुरप्रवेशनं नात्र कर्तव्यमिति शासनम् ॥ १-९६-८० (४२४१)
किं कारणं प्रवेक्ष्यामो नगरं दुर्जनैर्वृतम् ।
त्यक्तसङ्गस्य च मुनेर्नगरे किं प्रयोजनम् ॥ १-९६-८१ (४२४२)
गमिष्यामो वनं तस्माद्गङ्गायामुनसङ्गमम् ।
एवमुक्त्वा मुनिगणाः प्रतिजग्मुर्यथागतम् ॥ ॥ १-९६-८२ (४२४३)

इति श्रीमन्महाभारते आदिपर्वणि संभवपर्वणि षण्णवतितमोऽध्यायः
॥ ९६ ॥
Mahabharata - Adi Parva - Chapter Footnotes

१-९६-१० पुत्र्याः पुत्रः पौत्रः दौहित्र इत्यर्थः ॥

---

अध्यय०९७
॥ श्रीः ॥
१.९७. अध्यायः ९७

Mahabharata - Adi Parva - Chapter Topics
सपुत्रायाः शकुन्तलाया दुष्यन्तसमीपगमनं ॥ १ ॥
तयोः संवादश्च ॥ २ ॥

Mahabharata - Adi Parva - Chapter Text

१-९७-० (४२४४)
वैशंपायन उवाच। १-९७-०क्ष् (६१५)
गतान्मुनिगणान्दृष्ट्वा पुत्रं संगृह्य पाणिना ।
मातापितृभ्यां रहिता यथा शोचन्ति दारकाः ॥ १-९७-१ (४२४५)
तथा शोकपरीताङ्गी धृतिमालम्ब्य दुःखिता ।
गतेषु तेषु विप्रेषु राजमार्गेण भामिनी ॥ १-९७-२ (४२४६)
पुत्रेणैव सहायेन सा जगाम शनैः शनैः ।
अदृष्टपूर्वान्पश्यन्वै राजमार्गेण पौरवः ॥ १-९७-३ (४२४७)
हर्म्यप्रसादचैत्यांश्च सभा दिव्या विचित्रिताः ।
कौतूहलसमाविष्टो दृष्ट्वा विस्मयमागतः ॥ १-९७-४ (४२४८)
सर्वे ब्रुवन्ति तां दृष्ट्वा पद्महीनामिव श्रियम् ।

गत्या च संहीसदृशीं कोकिलेन स्वरे समाम् ॥१-९७-५ (४२४९)
मुखेन चन्द्रसदृशीं श्रिया पद्मालयासमाम् ।
स्मितेन कुन्दसदृशीं पद्मगर्भसमत्वचम् ॥१-९७-६ (४२५०)
पद्मपत्रविशालाक्षीं तप्तजाम्बूनदप्रभाम् ।
करान्तमितमध्यैषा सुकेशी संहतस्तनी ॥१-९७-७ (४२५१)
जघनं सुविशालं वै ऊरू करिकरोपमौ ।
रक्ततुङ्गतलौ पादौ धरण्यां सुप्रतिष्ठितौ ॥१-९७-८ (४२५२)
एवं रूपसमायुक्ता स्वर्गलोकादिवागता ।
इति स्म सर्वेऽमन्यन्त दुष्यन्तनगरे जनाः ॥१-९७-९ (४२५३)
पुनः पुनरवोचंस्ते शाकुन्तलगुणानपि ।
सिंहेक्षणः सिंहदंष्ट्रः सिंहस्कन्धो महाभुजः ॥१-९७-१० (४२५४)
सिंहोरस्कः सिंहबलः सिंहविक्रान्तगाम्ययम् ।
पृथ्वंसः पृथुवक्षाश्च छत्राकारशिरा महान् ॥१-९७-११ (४२५५)
पाणिपादतले रक्तो रक्तास्यो दुन्दुभिस्वनः ।
राजलक्षणयुक्तश्च राजश्रीश्चास्य लक्ष्यते ॥१-९७-१२ (४२५६)
आकारेण च रूपेण शरीरेणापि तेजसा ।
दुष्यन्तेन समो ह्येष कस्य पुत्रो भविष्यति ॥१-९७-१३ (४२५७)
एवं ब्रुवन्तस्ते सर्वे प्रशशंसुः सहस्रशः ।
युक्तिवादानवोचन्त सर्वाः प्राणभृतः स्त्रियः ॥१-९७-१४ (४२५८)
बान्धवा इव सस्नेहा अनुजग्मुः शकुन्तलाम् ।
पौराणां तद्वचः श्रुत्वा तूष्णींभूता शकुन्तला ॥१-९७-१५ (४२५९)
वेश्मद्वारं समासाद्य विह्वला सा नृपात्मजा ।
चिन्तयामास सहसा कार्यगौरवकारणात् ॥१-९७-१६ (४२६०)
लज्जया च परीताङ्गी राजन्राजसमक्षतः ।
अघृणा किं नु वक्ष्यामि दुष्यन्तं मम कारणात् ॥१-९७-१७ (४२६१)
एवमुक्त्वा तु कृपणा चिन्तयन्ती शकुन्तला।'
अभिसृत्य च राजानं वेदिता सा प्रवेशिता ॥ १-९७-१८ (४२६२)
सह तेन कुमारेण तरुणादित्यवर्चसा ।
गसिंहासनस्थं राजानं महेन्द्रसदृशद्युतिम् ॥१-९७-१९ (४२६३)
शकुन्तला नतशिराः परं हर्षमवाप्य च।'
पूजयित्वा यथान्यायमब्रवीत्तं शकुन्तला ॥ १-९७-२० (४२६४)
गअभिवादय राजानं पितरं ते दृढव्रतम् ।
एवमुक्त्वा सुतं तत्र लज्जानतमुखी स्थिता ॥१-९७-२१ (४२६५)
स्तम्भमालिङ्ग्य राजानं प्रसीदस्वेत्युवाच सा ।
शाकुन्तलोपि राजानमभिवाद्य कृताञ्जलिः ॥१-९७-२२ (४२६६)
हर्षेणोत्फुल्लनयनो राजानं चान्ववैक्षत ।

दुष्यन्तो धर्मबुद्ध्या तु चिन्तयन्नेव सोब्रवीत् ॥१-९७-२३ (४२६७)
किमागमनकार्यं ते ब्रूहि त्वं वरवर्णिनि ।
करिष्यामि न संदेहः सपुत्राया विशेषतः ॥१-९७-२४ (४२६८)
शकुन्तलोवाच।१-९७-२५क्ष् (६१६)
प्रसीदस्व महाराज वक्ष्यामि पुरुषोत्तम ।
एष पुत्रो हि ते राजन्मय्युत्पन्नः परंतप ॥१-९७-२५ (४२६९)
तस्मात्पुत्रस्त्वया राजन्यौवराज्येऽभिषिच्यताम् ।
यथोक्तमाश्रमे तस्मिन्वर्तस्व पुरुषोत्तम ॥१-९७-२६ (४२७०)
मया समागमे पूर्वं कृतः स समयस्त्वया ।
तत्त्वं स्मर महाबाहो कण्वाश्रमपदं प्रति ॥१-९७-२७ (४२७१)
वैशंपायन उवाच।१-९७-२८क्ष् (६१७)
तस्योपभोगसक्तस्य स्त्रीषु चान्यासु भारत ।
शकुन्तला सपुत्रा च मनस्यन्तरधीयत ॥१-९७-२८ (४२७२)
स धारयन्मनस्येनां सपुत्रां सस्मितां तदा ।
तदोपगृह्य मनसा चिरं सुखमवाप सः ॥१-९७-२९ (४२७३)
सोऽथ श्रुत्वापि तद्वाक्यं तस्या राजा स्मरन्नपि ।
अब्रवीन्न स्मरामीति त्वया भद्रे समागमम् ॥१-९७-३० (४२७४)
मैथुनं च वृथा नाहं गच्छेयमिति मे मतिः ।
नाभिजानामि कल्याणि त्वया सह समागमम्'॥१-९७-३१ (४२७५)
धर्मार्थकामसंबन्धं न स्मरामि त्वया सह ।
गच्छ वा तिष्ठ वा कामं यद्वापीच्छसि तत्कुरु ॥ ॥१-९७-३२ (४२७६)

इति श्रीमन्महाभारते आदिपर्वणि संभवपर्वणि सप्तनवतितमोऽध्यायः
॥९७ ॥

---

अध्यय०९८
॥ श्रीः ॥
१.९८. अध्यायः ९८

Mahabharata - Adi Parva - Chapter Topics
शकुन्तलायाः स्वपाणिग्रहणमनङ्गीकुर्वता दुष्यन्तेन सह विवादः ॥१ ॥

Mahabharata - Adi Parva - Chapter Text

एवमुक्ता वरारोहा व्रीडितेव मनस्विनी ।
विसंज्ञेव च दुःखेन तस्थौ स्थूणेव निश्चला ॥१-९८-१ (४२७७)
संरम्भामर्षताम्राक्षी स्फुरमाणोष्ठसंपुटा ।

कटाक्षैर्निर्दहन्तीव तिर्यग्राजानमैक्षत ॥ १-९८-२ (४२७८)
आकारं गूहमाना च मन्युना च समीरितम् ।
तपसा संभृतं तेजो धारयामास वै तदा ॥ १-९८-३ (४२७९)
सा मुहूर्तमिव ध्यात्वा दुःखामर्षसमन्विता ।
भर्तारमभिसंप्रेक्ष्य यथान्यायं वचोऽब्रवीत् ॥ १-९८-४ (४२८०)
जानन्नपि महाराज कस्मादेवं प्रभाषसे ।
न जानामीति निःशङ्कं यथान्यः प्राकृतस्तथा ॥ १-९८-५ (४२८१)
तस्य ते हृदयं वेद सत्यस्यैवानृतस्य च ।
साक्षिणं बत कल्याणमात्मानमवमन्यसे ॥ १-९८-६ (४२८२)
योऽन्यथा सन्तमात्मानन्यथा प्रतिपद्यते ।
किं तेन न कृतं पापं चोरेणात्मापहारिणा ॥ १-९८-७ (४२८३)
एकोऽहमस्मीति च मन्यसे त्वं
न हृच्छयं वेत्सि मुनिं पुराणम् ।
यो वेदिता कर्मणः पापकस्य
तस्यान्तिके त्वं वृजिनं करोषि ॥ १-९८-८ (४२८४)
'धर्म एव हि साधूनां सर्वेषां हितकारणम् ।
नित्यं मिथ्याविहीनानां न च दुःखावहो भवेत्'॥ १-९८-९ (४२८५)
मन्यते पापकं कृत्वा न कश्चिद्वेत्ति मामिति ।
विदन्ति चैनं देवाश्च यश्चैवान्तरपूरुषः ॥ १-९८-१० (४२८६)
आदित्यचन्द्रावनिलोऽनलश्च
द्यौर्भूमिरापो हृदयं यमश्च ।
अहश्च रात्रिश्च उभे च सन्ध्ये
धर्मश्च जानाति नरस्य वृत्तम् ॥ १-९८-११ (४२८७)
यमो वैवस्वतस्तस्य निर्यातयति दुष्कृतम् ।
हृदि स्थितः कर्मसाक्षी क्षेत्रज्ञो यस्य तुष्यति ॥ १-९८-१२ (४२८८)
न तुष्यति च यस्यैष पुरुषस्य दुरात्मनः ।
तं यमः पापकर्माणं निर्भर्त्सयति दुष्कृतम् ॥ १-९८-१३ (४२८९)
योऽवमत्यात्मनात्मानमन्यथा प्रतिपद्यते ।
न तस्य देवाः श्रेयांसो यस्यात्मापि न कारणम् ॥ १-९८-१४ (४२९०)
स्वयं प्राप्तेति मामेवं मावमंस्था पतिव्रताम् ।
अर्चार्हां नार्चयसि मां स्वयं भार्यामुपस्थिताम् ॥ १-९८-१५ (४२९१)
किमर्थं मां प्राकृतवदुपप्रेक्षसि संसदि ।
नखल्वहमिदं शून्ये रौमि किं न शृणोषि मे ॥ १-९८-१६ (४२९२)
यदि मे याचमानाया वचनं न करिष्यसि ।
दुष्यन्त शतधा त्वद्य मूर्धा ते विफलिष्यति ॥ १-९८-१७ (४२९३)
जायां पतिः संप्रविश्य यदस्यां जायते पुनः ।

जायायास्तद्धि जायात्वं पौराणाः कवयो विदुः ॥१-९८-१८ (४२९४)
यदागमवतः पुंसस्तदपत्यं प्रजायते ।
तत्तारयति संतत्या पूर्वप्रेतान्पितामहान् ॥१-९८-१९ (४२९५)
पुन्नाम्नो नरकाद्यस्मात्पितरं त्रायते सुतः ।
तस्मात्पुत्र इति प्रोक्तः पूर्वमेव स्वयंभुवा ॥१-९८-२० (४२९६)
ग्पुत्रेण लोकाञ्जयन्ति पौत्रेणानन्त्यमश्नुते ।
अथ पौत्रस्य पुत्रेण मोदन्ते प्रपितामहाः ॥' १-९८-२१ (४२९७)
सा भार्या या गृहे दक्षा सा भार्या या प्रजावती ।
सा भार्या या पतिप्राणा सा भार्या या पतिव्रता ॥१-९८-२२ (४२९८)
अर्धं भार्या मनुष्यस्य भार्या श्रेष्ठतमः सखा ।
भार्या मूलं त्रिवर्गस्य यः सभार्यः स बन्धुमान् ॥१-९८-२३ (४२९९)
भार्यावन्तः क्रियावन्तः सभार्या गृहमेधिनः ।
भार्यावन्तः प्रमोदन्ते भार्यावन्तः श्रियावृताः ॥१-९८-२४ (४३००)
सखायः प्रविविक्तेषु भवन्त्येताः प्रियंवदाः ।
पितरो धर्मकार्येषु भवन्त्यार्तस्य मातरः ॥१-९८-२५ (४३०१)
कान्तारेष्वपि विश्रामो जनस्याध्वनि कस्य वै ।
यः सदारः स विश्वास्यस्तस्माद्दाराः परा गतिः। १-९८-२६ (४३०२)
संसरन्तमभिप्रेतं विषमेष्वेकपातिनम् ।
भार्यैवान्वेति भर्तारं सततं या पतिव्रता ॥१-९८-२७ (४३०३)
प्रथमं संस्थिता भार्या पतिं प्रेत्य प्रतीक्षते ।
पूर्वप्रेतं तु भर्तारं पश्चात्साप्यनुगच्छति ॥१-९८-२८ (४३०४)
एतस्मात्कारणाद्राजन्पाणिग्रहणमिष्यते ।
यदाप्नोति पतिर्भार्यामिह लोके परत्र च ॥१-९८-२९ (४३०५)
ग्पोषणार्थं शरीरस्य पाथेयं स्वर्गतस्य वै।'
आत्माऽऽत्मनैव जनितः पुत्र इत्युच्यते बुधैः ॥ १-९८-३० (४३०६)
तस्माद्भार्यां पतिः पश्येन्मातृवत्पुत्रमातरम् ।
ग्अन्तरात्मैव सर्वस्य पुत्रो नामोच्यते सदा ॥१-९८-३१ (४३०७)
गती रूपं च चेष्टा च आवर्ता लक्षणानि च ।
पितॄणां यानि दृश्यन्ते पुत्राणां सन्ति तानि च ॥१-९८-३२ (४३०८)
तेषां शीलगुणाचारास्तत्संपर्काच्छुभाशुभात्।'
भार्यायां जनितं पुत्रमादर्शे स्वमिवाननम् ॥ १-९८-३३ (४३०९)
जनिता मोदते प्रेक्ष्य स्वर्गं प्राप्येव पुण्यकृत् ।
ग्पतिव्रतारूपधराः परबीजस्य संग्रहात् ॥१-९८-३४ (४३१०)
कुलं विनाश्य भर्तॄणां नरकं यान्ति दारुणम् ।
परेण जनिताः पुत्राः स्वभार्यायां यथेष्टतः ॥१-९८-३५ (४३११)
मम पुत्रा इति मतास्ते पुत्रा अपि शत्रवः ।

द्विषन्ति प्रतिकुर्वन्ति न ते वचनंकारिणः ॥१-९८-३६ (४३१२)
द्वेष्टि तांश्च पिता चापि स्वबीजे न तथा नृप ।
न द्वेष्टि पितरं पुत्रो जनितारमथापि वा ॥१-९८-३७ (४३१३)
न द्वेष्टि जनिता पुत्रं तस्मादात्मा सुतो भवेत्।'
दह्यमाना मनोदुःखैर्व्याधिभिस्तुमुलैर्जनः ॥ १-९८-३८ (४३१४)
ह्लादन्ते स्वेषु दारेषु घर्मार्ताः सलिलेष्विव ।
ग्विप्रवासकृशा दीना नरा मलिनवाससः ॥१-९८-३९ (४३१५)
तेऽपि स्वदारांस्तुष्यन्ति दरिद्रा धनलाभवत्।'
अप्रियोक्तोपि दाराणां न ब्रूयादप्रियं बुधः ॥ १-९८-४० (४३१६)
रतिं प्रीतिं च धर्मं च तदायत्तमवेक्ष्य च ।
ग्आत्मनोऽर्धमिति श्रौतं सा रक्षति धनं प्रजाः ॥१-९८-४१ (४३१७)
शरीरं लोकयात्रां वै धर्मं स्वर्गमृषीन्पितॄन्।'
आत्मनो जन्मनः क्षेत्रं पुण्या रामाः सनातनाः ॥ १-९८-४२ (४३१८)
ऋषीणामपि का शक्तिः स्रष्टुं रामामृते प्रजा-।
ग्देवानामपि का शक्तिः कर्तुं संभवमात्मनः ॥१-९८-४३ (४३१९)
पण्डितस्यापि लोकेषु स्त्रीषु सृष्टिः प्रतिष्ठिता ।
ऋषिभ्यो ह्यषयः केचिच्चण्डालीष्वपि जज्ञिरे'॥१-९८-४४ (४३२०)
परिसृत्य यथा सूनुर्धरणीरेणुकुण्ठितः ।
पितुरालिङ्गतेऽङ्गानि किमस्त्यभ्यधिकं ततः ॥१-९८-४५ (४३२१)
स त्वं सूनुमनुप्राप्तं साभिलाषं मनस्विनम् ।
प्रेक्षमाणं कटाक्षेण किमर्थमवमन्यसे ॥१-९८-४६ (४३२२)
अण्डानि बिभ्रति स्वानि न त्यजन्ति पिपीलिकाः ।
किं पुनस्त्वं न मन्येथाः सर्वथा पुत्रमीदृशम् ॥१-९८-४७ (४३२३)
न भरेथाः कथं नु त्वं मयि जातं स्वमात्मजम् ।
ग्ममाण्डानीति वर्ध्दे कोकिलाण्डानि वायसाः ॥१-९८-४८ (४३२४)
किं पुनस्त्वं न मन्येथाः सर्वज्ञः पुत्रमीदृशम् ।
मलयाच्चन्दनं जातमतिशीतं वदन्ति वै ॥१-९८-४९ (४३२५)
शिशोरालिङ्गनं तस्माच्चन्दनादधिकं भवेत्।'
न वाससां न रामाणां नापां स्पर्शस्तथाविधः ॥ १-९८-५० (४३२६)
शिशुनालिङ्ग्यमानस्य स्पर्शः सूनोर्यथा सुखः ।
पुत्रस्पर्शात्प्रियतरः स्पर्शो लोके न विद्यते ॥१-९८-५१ (४३२७)
स्पृशतु त्वां समालिङ्ग्य पुत्रोऽयं प्रियदर्शनः ।
ब्राह्मणो द्विपदां श्रेष्ठो गौर्वरिष्ठा चतुष्पदाम् ॥१-९८-५२ (४३२८)
मुरुर्गरीयसां श्रेष्ठः पुत्रः स्पर्शवतां वरः ॥
त्रिषु वर्षेषु पूर्णेषु प्रजातोऽयमरिन्दमः ॥१-९८-५३ (४३२९)
ग्अद्यायं मन्नियोगात्तु तवाह्वानं प्रतीक्षते ।

कुमारो राजशार्दूल तव शोकप्रणाशनः ॥' १-९८-५४ (४३३०)
आहर्ता वाजिमेधस्य शतसङ्ख्यस्य पौरवः ।
ग्राजसूयादिकानन्यान्क्रतूनमितदक्षिणान् ॥ १-९८-५५ (४३३१)
इति गौरन्तरिक्षे मां सूतके ह्यवदत्पुरा ।
हन्त स्वमङ्कमारोप्य स्नेहाद्ग्रामान्तरं गताः ॥ १-९८-५६ (४३३२)
मूर्ध्नि पुत्रानुपाघ्राय प्रतिनन्दन्ति मानवाः ।
वेदेष्वपि वदन्तीमं मन्त्रग्रामं द्विजातयः ॥ १-९८-५७ (४३३३)
जातकर्मणि पुत्राणां तवापि विदितं ध्रुवम् ।
अङ्गादङ्गात्संभवसि हृदयादधिजायसे ॥ १-९८-५८ (४३३४)
आत्मा वै पुत्रनामासि स जीव शरदः शतम् ।
उपजिघ्रन्ति पितरो मन्त्रेणानेन मूर्धनि ॥ १-९८-५९ (४३३५)
पोषणं त्वदधीनं मे सन्तानमपि चाक्षयम् ।
तस्मात्त्वं जीव मे पुत्र स सुखी शरदां शतम् ॥ १-९८-६० (४३३६)
एको भूत्वा द्विधा भूत इति वादः प्रवर्तते ।
त्वदङ्गेभ्यः प्रसूतोऽयं पुरुषात्पुरुषः परः ॥ १-९८-६१ (४३३७)
सरसीवामलेऽऽत्मानं द्वितीयं पश्य ते सुतम् ।
ग्सरसीवामले सोमं प्रेक्षात्मानं त्वमात्मनि'॥ १-९८-६२ (४३३८)
यथाचाहवनीयोऽग्निर्वर्हपत्यात्प्रणीयते ।
एवं त्वत्तः प्रणीतोऽयं त्वमेकः सन्द्विधा कृतः ॥ १-९८-६३ (४३३९)
मृगापकृष्टेन हि वै मृगयां परिधावता ।
अहमासादिता राजन्कुमारी पितुराश्रमे ॥ १-९८-६४ (४३४०)
उर्वशी पूर्वचित्तिश्च सहजन्या च मेनका ।
विश्वाची च घृताची च षडेवाप्सरसां वराः ॥ १-९८-६५ (४३४१)
तासां वै मेनका नाम ब्रह्मयोनिर्वराप्सराः ।
दिवः संप्राप्य जगतीं विश्वामित्रादजीजनत् ॥ १-९८-६६ (४३४२)
ग्श्रीमानृषिर्धर्मपरो वैश्वानर इवापरः ।
ब्रह्मयोनिः कुशो नाम विश्वामित्रपितामहः ॥ १-९८-६७ (४३४३)
कुशस्य पुत्रो बलवान्कुशनाभश्च धार्मिकः ।
गाधिस्तस्य सुतो राजन्विश्वामित्रस्तु गाधिजः ॥ १-९८-६८ (४३४४)
एवंविधो मम पिता मेनका जननी वरा।'
सा मां हिमवतः पृष्ठे सुषुवे मेनकाऽप्सराः ॥ १-९८-६९ (४३४५)
परित्यज्य च मां याता परात्मजमिवासती ।
ग्पक्षिणः पुम्यवन्तस्ते सहिता धर्मतस्तदा ॥ १-९८-७० (४३४६)
पक्षैस्तैरभिगुप्ता च तस्मादस्मि शकुन्तला ।
ततोऽहमृषिणा दृष्टा काश्यपेन महात्मना ॥ १-९८-७१ (४३४७)
जलार्थमग्निहोत्रस्य गतं दृष्ट्वा तु पक्षिणः ।

न्यासभूतामिव मुनेः प्रददुर्मां दयावतः ॥ १-९८-७२ (४३४८)
कण्वस्त्वालोक्य मां प्रीतो हसन्तीति हविर्भुजः ।
स माऽरणिमिवादाय स्वमाश्रममुपागमत् ॥ १-९८-७३ (४३४९)
सा वै संभाविता राजन्ननुक्रोशान्महर्षिणा ।
तेनैव स्वसुतेवाहं राजन्वै वरवर्णिनी ॥ १-९८-७४ (४३५०)
विश्वामित्रसुता चाहं वर्धिता मुनिना नृप ।
यौवने वर्तमानां च दृष्टवानसि मां नृप ॥ १-९८-७५ (४३५१)
आश्रमे पर्णशालायां कुमारीं विजने तदा ।
धात्रा प्रचोदितां शून्ये पित्रा विरहितां मिथः ॥ १-९८-७६ (४३५२)
वाग्भिस्त्वं सूनृताभिर्मामपत्यार्थमचूचुदः ।
अकार्षीस्त्वाश्रमे वासं धर्मकामार्थनिश्चितम् ॥ १-९८-७७ (४३५३)
गान्धर्वेण विवाहेन विधिना पाणिमग्रहीः ।
साऽहं कुलं च शीलं च सत्यवादित्वमात्मनः ॥ १-९८-७८ (४३५४)
स्वधर्मं च पुरस्कृत्य त्वामद्य शरणं गता ।
तस्मान्नार्हसि संश्रुत्य तथेति वितथं वचः ॥ १-९८-७९ (४३५५)
स्वधर्मं पृष्ठतः कृत्वा परित्यक्तुमुपस्थिताम् ।
त्वन्नाथां लोकनाथस्त्वं नार्हसि त्वमनागसम्'॥ १-९८-८० (४३५६)
किं नु कर्माशुभं पूर्वं कृतवत्यस्मि पार्थिव ।
यदहं बान्धवैस्त्यक्ता बाल्ये संप्रति वै त्वया ॥ १-९८-८१ (४३५७)
कामं त्वया परित्यक्ता गमिष्याम्यहमाश्रमम् ।
इमं बालं तु संत्युक्तं नार्हस्यात्मजमात्मना ॥ १-९८-८२ (४३५८)
दुष्यन्त उवाच। १-९८-८३क्ष् (६१८)
न पुत्रमभिजानामि त्वयि जातं शकुन्तले ।
असत्वचना नार्यः कस्ते श्रद्धास्यते वचः ॥ १-९८-८३ (४३५९)
ग्अश्रद्धेयमिदं वाक्यं कथयन्ती न लज्जसे ।
विशेषतो मत्सकाशे दुष्टतापसि गम्यताम्'॥ १-९८-८४ (४३६०)
क्व महर्षिस्तपस्युग्रः क्वाप्सराः सा च मेनका ।
क्व च त्वमेवं कृपणा तापसीवेषधारिणी ॥ १-९८-८५ (४३६१)
अतिकायश्च पुत्रस्ते बालोऽतिबलवानयम् ।
कथमल्पेन कालेन सालस्कन्ध इवोद्गतः ॥ १-९८-८६ (४३६२)
सुनिकृष्टा च योनिस्ते पुंश्चली प्रतिभासि मे ।
यदृच्छया कामरागाज्जाता मेनकया ह्यसि ॥ १-९८-८७ (४३६३)
सर्वमेव परोक्षं मे यत्त्वं वदसि तापसि ।
ग्सर्वा वामाः स्त्रियो लोके सर्वाः कामपरायणाः ॥ १-९८-८८ (४३६४)
सर्वाः स्त्रियः परवशाः सर्वाः क्रोधसमाकुलाः ।
असत्योक्ताः स्त्रियः सर्वा न कण्वं वक्तुमर्हसि'॥ १-९८-८९ (४३६५)

मेनका निरनुक्रोशा वर्धकी जननी तव ।
यया हिमवतः पादे निर्माल्यवदुपेक्षिता ॥ १-९८-१० (४३६६)
स चापि निरनुक्रोशः क्षत्रयोनिः पिता तव ।
विश्वामित्रो ब्राह्मणत्वे लुब्धः कामपरायणः ॥ १-९८-११ (४३६७)
सुषाव सुरनारी मां विश्वामित्राद्यथेष्टतः ।
अहो जानामि ते जन्म कुत्सितं कुलटे जनैः ॥ १-९८-१२ (४३६८)
मेनकाऽप्सरसां श्रेष्ठा महर्षिश्चापि ते पिता ।
तयोरपत्यं कस्मात्त्वं पुंश्चलीवाभिभाषसे ॥ १-९८-१३ (४३६९)
जातिश्चापि निकृष्टो ते कुलीनेति विजल्पसे ।
जनयित्वा त्वमुत्सृष्टा कोकिलेन परैर्भृता ॥ १-९८-१४ (४३७०)
अरिष्टैरिव दुर्बद्धिः कण्वो वर्धयिता पिता ।
अश्रद्धेयमिदं वाक्यं यत्त्वं जल्पसि तापसि ॥ १-९८-१५ (४३७१)
ब्रुवन्ती राजसान्निध्ये गम्यतां यत्र चेच्छसि ।
ग्सुवर्णमणिमुक्तानि वस्त्राण्याभरणानि च ॥ १-९८-१६ (४३७२)
यदिहेच्छसि भोगार्थं तापसि प्रतिगृह्यताम् ।
नाहं त्वां द्रष्टुमिच्छामि यथेष्टं गम्यतामितः'॥ ॥ १-९८-१७ (४३७३)

इति श्रीमन्महाभारते आदिपर्वणि संभवपर्वणि अष्टनवतितमोऽध्यायः
॥ ९८ ॥

---

अध्यय०९९
॥ श्रीः ॥
१.९९. अध्यायः ९९

Mahabharata - Adi Parva - Chapter Topics
दुष्यन्तशकुन्तलाविवादः ॥ १ ॥

Mahabharata - Adi Parva - Chapter Text

१-९९-० (४३७४)
शकुन्तलोवाच। १-९९-०क्ष् (६१९)
राजन्सर्षपमात्राणि परच्छिद्राणि पश्यसि ।
आत्मनो बिल्वमात्राणि पश्यन्नपि न पश्यसि ॥ १-९९-१ (४३७५)
मेनका त्रिदशेष्वेव त्रिदशाश्चानु मेनकाम् ।
ममैवोद्रिच्यते जन्म दुष्यन्त तव जन्मतः ॥ १-९९-२ (४३७६)
क्षितौ चरसि राजंस्त्वमन्तरिक्षे चराम्यहम् ।
आवयोरन्तरं पश्य मेरुसर्षपयोरिव ॥ १-९९-३ (४३७७)

महेन्द्रस्य कुबेरस्य यमस्य वरुणस्य च ।
भवनान्यनुसंयामि प्रभावं पश्य मे नृप ॥१-९९-४ (४३७८)
ग्पुरा नरवरः पुत्र उर्वश्यां जनितस्तदा ।
आयुर्नाम महाराज तव पूर्वपितामहः ॥१-९९-५ (४३७९)
महर्षयश्च बहवः क्षत्रियाश्च परन्तपाः ।
अप्सरःसु ऋषीणां च मातृदोषो न विद्यते ॥' १-९९-६ (४३८०)
सत्यश्चापि प्रवादोऽयं प्रवक्ष्यामि च ते नृप ।
निदर्शनार्थं न द्वेषाच्छ्रुत्वा तत्क्षन्तुमर्हसि ॥१-९९-७ (४३८१)
विरूपो यावदादर्शे नात्मनो वीक्षते मुखम् ।
मन्यते तावदात्मानमन्येभ्यो रूपवत्तरम् ॥१-९९-८ (४३८२)
यदा तु रूपमादर्शे विरूपं सोऽभिवीक्षते ।
तदा ह्रीमांस्तु जानीयादन्तरं नेतरं जनम् ॥१-९९-९ (४३८३)
अतीव रूपसंपन्नो न कंचिदवमन्यते ।
अतीव जल्पन्दुर्वाचो भवतीह विहेतुकः ॥१-९९-१० (४३८४)
ग्पांसुपातेन हृष्यन्ति कुञ्जरा मदशालिनः ।
तथा परिवदन्नन्यान्हृष्टो भवति दुर्मतिः ॥१-९९-११ (४३८५)
सत्यधर्मच्युतात्पुंसः क्रुद्धादाशीविषादिव ।
सुनास्तिकोप्युद्विजते जनः किं पुनरास्तिकः ॥१-९९-१२ (४३८६)
स्वयमुत्पाद्य पुत्रं वै सदृशं योऽवमन्यते ।
तस्य देवाः श्रियं घ्नन्ति तत्रैनं कलिराविशेत् ॥१-९९-१३ (४३८७)
अभव्येऽप्यनृतेऽशुद्धे नास्तिके पापकर्मणि ।
दुराचारे कलिर्ह्याशु न कलिर्धर्मचारिषु ॥' १-९९-१४ (४३८८)
मूर्खो हि जल्पतां पुंसां श्रुत्वा वाचः शुभाशुभाः ।
अशुभं वाक्यमादत्ते पुरीषमिव सूकरः ॥१-९९-१५ (४३८९)
प्राज्ञस्तु जल्पतां पुंसां श्रुत्वा वाचः शुभाशुभाः ।
गुणवद्वाक्यमादत्ते हंसः क्षीरमिवाम्भसि ॥१-९९-१६ (४३९०)
ग्आत्मनो दुष्टभावत्वं जानन्नीचोऽप्रसन्नधीः ।
परेषामपि जानाति स्वधर्मसदृशान्गुणान् ॥१-९९-१७ (४३९१)
दह्यमानास्तु तीव्रेण नीचाः परयशोग्निना ।
अशक्तास्तद्गतिं गन्तुं ततो निन्दां प्रकुर्वते ॥' १-९९-१८ (४३९२)
अन्यान्परिवदन्साधुर्यथा हि परितप्यते ।
तथा परिवदन्नन्यान्हृष्टो भवति दुर्जनः ॥१-९९-१९ (४३९३)
ग्अपवादरता मूर्खा भवन्ति हि विशेषतः ।
नापवादरताः सन्तो भवन्ति स्म विशेषतः ॥' १-९९-२० (४३९४)
अभिवाद्य यथा वृद्धान्साधुर्गच्छति निर्वृतिम् ।
एवं सज्जनमाक्रुश्य मूर्खो भवति निर्वृतः ॥१-९९-२१ (४३९५)

सुखं जीवन्त्यदोषज्ञा मूर्खा दोषानुदर्शिनः ।
यथा वाच्याः परैः सन्तः परानाहुस्तथाविधान् ॥१-९९-२२ (४३९६)
अतो हास्यतरं लोके किंचिदन्यन्न विद्यते ।
यदि दुर्जन इत्याहुः सज्जनं दुर्जनाः स्वयम् ॥१-९९-२३ (४३९७)
ग्दारुणाल्लोकसंक्लेशाद्दुःखमाप्नोत्यसंशयम् ॥'
कुलवंशप्रतिष्ठां हि पितरः पुत्रमब्रुवन् ॥ १-९९-२४ (४३९८)
उत्तमं सर्वधर्माणां तस्मात्पुत्रं तु न त्यजेत् ।
स्वपत्नीप्रभवाँल्लब्धान्कृतान्समयवर्धितान् ॥१-९९-२५ (४३९९)
क्रीतान्कन्यासु चोत्पन्नान्पुत्रान्वै मनुरब्रवीत् ।
ग्ते च षड्बन्धुदायादाः षडदायादबान्धवाः ॥१-९९-२६ (४४००)
धर्मकृत्यवहा नृणां मनसः प्रीतिवर्धनाः ।
त्रायन्ते नरकाज्जाताः पुत्रा धर्मप्लवाः पितॄन् ॥१-९९-२७ (४४०१)
स त्वं नृपतिशार्दूल न पुत्रं त्यक्तुमर्हसि ।
तस्मात्पुत्रं च सत्यं च पालयस्व महीपते ॥१-९९-२८ (४४०२)
उभयं पालयस्वैतन्नानृतं वक्तुमर्हसि।'
आत्मानं सत्यधर्मौ च पालयेथा महीपते ।
नरेन्द्रसिंह कपटं न हि वोढुं त्वमर्हसि ॥ १-९९-२९ (४४०३)
वरं कूपशताद्वापी वरं वापीशतात्क्रतुः ।
वरं क्रतुशतात्पुत्रः सत्यं पुत्रशताद्वरम् ॥१-९९-३० (४४०४)
अश्वमेधसहस्रं च सत्यं च तुलया धृतम् ।
अश्वमेधसहस्राद्धि सत्यमेव विशिष्यते ॥१-९९-३१ (४४०५)
सर्ववेदाधिगमनं सर्वतीर्थावगाहनम् ।
सत्यस्यैव च राजेन्द्र कलां नार्हति षोडशीम् ॥१-९९-३२ (४४०६)
नास्ति सत्यसमो धर्मो न सत्याद्विद्यते परम् ।
न हि तीव्रतरं पापमनृतादिह विद्यते ॥१-९९-३३ (४४०७)
राजन्सत्यं परो धर्मः सत्याच्च समयः परः ।
मात्याक्षीः समयं राजन्सत्यं सङ्गतमस्तु ते ॥१-९९-३४ (४४०८)
ग्यः पापो न विजानीयात्कर्म कृत्वा नराधिप ।
न हि तादृक्परं पापमनृतादिह विद्यते ॥१-९९-३५ (४४०९)
यस्य ते हृदयं वेद सत्यस्यैवानृतस्य च ।
कल्याणावेक्षणं तस्मात्कर्तुमर्हसि धर्मतः ॥१-९९-३६ (४४१०)
यो न कामान्न च क्रोधान्न द्रोहादतिवर्तते ।
अमित्रं वापि मित्रं वा स एवोत्तमपूरुषः ॥' १-९९-३७ (४४११)
अनृतश्चेत्प्रसङ्गस्ते श्रद्दधासि न चेत्स्वयम् ।
आश्रमं गन्तुमिच्छामि त्वादृशो नास्ति सङ्गतं ॥१-९९-३८ (४४१२)
ग्पुत्रत्वे शङ्कमानस्य त्वं बुद्ध्या निश्चयं कुरु ।

गतिः स्वरः स्मृतिः सत्वं शीलं विद्या च विक्रमः ॥१-९९-३९ (४४१३)
धृष्णुप्रकृतिभावौ च आवर्ता रोमराजयः ।
समा यस्य यदा स्युस्ते तस्य पुत्रो न संशयः ॥१-९९-४० (४४१४)
सादृश्येनोद्धृतं बिम्बं तव देहाद्विशांपते ।
तातेति भाषमाणं वै मा स्म राजन्वृथा कृथाः ॥१-९९-४१ (४४१५)
ऋते च गर्दभीक्षीरात्पयः पास्यति मे सुतः।'
ऋतेपि त्वां च दुष्यन्त शैलराजावतंसिकाम् ।
चतुरन्तामिमामुर्वीं पुत्रो मे पालयिष्यति ॥ १-९९-४२ (४४१६)
ग्शकुन्तले तव सुतश्चक्रवर्ती भविष्यति ।
एवमुक्तं महेन्द्रेण भविष्यति न चान्यथा ॥१-९९-४३ (४४१७)
साक्षित्वे बहवो ह्युक्ता देवदूतादयो मया ।
न ब्रुवन्ति तथा सत्यमुताहो नानृतं किल ॥१-९९-४४ (४४१८)
असाक्षिणी मन्दबाग्या गमिष्यामि यथागतम् ॥' १-९९-४५ (४४१९)
वैशंपायन उवाच।१-९९-४६क्ष् (६२०)
एतावदुक्त्वा वचनं प्रातिष्ठत शकुन्तला ।
ग्तस्याः क्रोधसमुत्थोग्निः सधूमो मूर्ध्न्यदृश्यत ॥१-९९-४६ (४४२०)
संनियम्यात्मनोऽङ्गेषु ततः क्रोधाग्निमात्मजम् ।
प्रस्थितैवानवद्याङ्गी सह पुत्रेण वै वनम्'॥ ॥१-९९-४७ (४४२१)

इति श्रीमन्महाभारते आदिपर्वणि संभवपर्वणि एकोनशततमोऽध्यायः ॥९९ ॥

---

अध्यय१००
॥ श्रीः ॥
१.१००. अध्यायः १००

Mahabharata - Adi Parva - Chapter Topics
आकाशवाणीश्रवणानन्तरं सपुत्रायाः शकुन्तलाया राज्ञाङ्गीकारः ॥१ ॥
भरतेतिनामकरणपूर्वकं पुत्रस्य राज्येऽभिषेकः ॥२ ॥

Mahabharata - Adi Parva - Chapter Text

१-१००-० (४४२२)
वैशंपायन उवाच।१-१००-०क्ष् (६२१)
अथान्तरिक्षे दुष्यन्तं वागुवाचाशरीरिणी ।
ऋत्विक्पुरोहिताचार्यैर्मन्त्रिभिश्चाभिसंवृतम् ॥१-१००-१ (४४२३)
माता भस्त्रा पितुः पुत्रो यस्माज्जातः स एव सः ।

भरस्व पुत्रं दौष्यन्तिं सत्यमाह शकुन्तला ॥ १-१००-२ (४४२४)
ग्सर्वेभ्यो ह्यङ्गमङ्गेभ्यः साक्षादुत्पद्यते सुतः ।
आत्मा चैव सुतो नाम तेनैव तव पौरव ॥ १-१००-३ (४४२५)
आहितं ह्यात्मनाऽऽत्मानं परिरक्ष इमं सुतम् ।
अनन्यां त्वं प्रतीक्षस्व मावमंस्थाः शकुन्तलाम् ॥ १-१००-४ (४४२६)
स्त्रियः पवित्रमतुलमेतद्दुष्यन्त धर्मतः ।
मासि मासि रजो ह्यासां दुरितान्यपकर्षति ॥ १-१००-५ (४४२७)
ततः सर्वाणि भूतानि व्याजह्रस्तं समन्ततः। १-१००-६ (४४२८)
देवा ऊचुः ।
आहितस्त्वत्तनोरेष मावमंस्थाः शकुन्तलाम्'॥ १-१००-६क्ष् (६२२)
रेतोधाः पुत्र उन्नयति नरदेव यमक्षयात् ।
त्वं चास्य धाता गर्भस्य सत्यमाह शकुन्तला ॥ १-१००-७ (४४२९)
ग्पतिर्जायां प्रविशति स तस्यां जायते पुनः ।
अन्योन्यप्रकृतिर्ह्येषा मावमंस्थाः शकुन्तलाम् ॥' १-१००-८ (४४३०)
जाया जनयते पुत्रमात्मनोऽङ्गाद्द्विधा कृतम् ।
तस्माद्भरस्व दुष्यन्त पुत्रं शाकुन्तलं नृप ॥ १-१००-९ (४४३१)
सुभूतिरेषा न त्याज्या जीवितं जीवयात्मजम् ।
शाकुन्तलं महात्मानं दुष्यन्त भर पौरवम् ॥ १-१००-१० (४४३२)
भर्तव्योऽयं त्वया यस्मादस्माकं वचनादपि ।
तस्माद्भवत्वयं नाम्ना भरतो नाम ते सुतः ॥ १-१००-११ (४४३३)
ग्भरताद्भारती कीर्तिर्येनेदं भारतं कुलम् ।
अपरे ये च पूर्वे च भारता इति तेऽभवन् ॥ १-१००-१२ (४४३४)
वैशंपायन उवाच। १-१००-१३क्ष् (६२३)
एवमुक्त्वा ततो देवा ऋषयश्च तपोधनाः ।
पतिव्रतेति संहृष्टाः पुष्पवृष्टिं ववर्षिरे ॥' १-१००-१३ (४४३५)
तच्छ्रुत्वा पौरवो वाक्यं व्याहृतं वे दिवौकसाम् ।
गसिंहासनात्समुत्थाय प्रणम्य च दिवौकसः ॥' १-१००-१४ (४४३६)
पुरोहितममात्यांश्च संप्रहृष्टोऽब्रवीदिदम् ।
शृण्वन्त्वेतद्भवन्तोऽपि देवदूतस्य भाषितम् ॥ १-१००-१५ (४४३७)
ग्शृण्वन्तु देवतानां च महर्षीणां च भाषितम्'।
अहमप्येवमेवैनं जानामि सुतमात्मजम् ॥ १-१००-१६ (४४३८)
यद्यहं वचनादस्या गृह्णीयामिममात्मजम् ।
भवेद्धि शङ्का लोकस्य नैवं शुद्धो भवेदयम् ॥ १-१००-१७ (४४३९)
वैशंपायन उवाच। १-१००-१८क्ष् (६२४)
तां विशोध्य तदा राजा देवैः सह महर्षिभिः ।
हृष्टः प्रमुदितश्चापि प्रतिजग्राह तं सुतम् ॥ १-१००-१८ (४४४०)

ततस्तस्य तदा राजा पितृकर्माणि सर्वशः ।
कारयामास मुदितः प्रीतिमानात्मजस्य ह ।
मूर्ध्नि चैनं समाघ्राय सस्नेहं परिषस्वजे ॥ १-१००-१९ (४४४१)
सभाज्यमानो विप्रैश्च स्तूयमानश्च बन्दिभिः ।
मुदं स परमां लेभे पुत्रस्पर्शनजां नृपः ॥ १-१००-२० (४४४२)
स्वां चैव भार्यां धर्मज्ञः पूजयामास धर्मतः ।
अब्रवीच्चैव तां राजा सान्त्वपूर्वमिदं वचः ॥ १-१००-२१ (४४४३)
लोकस्यायं परोक्षस्तु संबन्धो नौ पुराऽभवत् ।
कृतो लोकसमक्षोऽद्य संबन्धो वै पुनः कृतः ॥ १-१००-२२ (४४४४)
तस्मादेतन्मया तस्य तन्निमित्तं प्रभाषितम् ॥ १-१००-२३ (४४४५)
शङ्केत वाऽयं लोकोऽथ स्त्रीभावान्मयि संगतम् ।
तस्मादेतन्मया चापि तच्छुद्ध्यर्थं विचारितम् ॥ १-१००-२४ (४४४६)
ग्ब्राह्मणाः क्षत्रिया वैश्याः शूद्राश्चैव पृथग्विधाः ।
त्वां देवि वूजयिष्यन्ति निर्विशङ्कां पतिव्रताम्'॥ १-१००-२५ (४४४७)
पुत्रश्चायं वृतो राज्ये त्वमग्रमहिषी भव ॥ १-१००-२६ (४४४८)
यच्च कोपनयात्यर्थं त्वयोक्तोऽस्म्यप्रियं प्रिये ।
प्रणयिन्या विशालाक्षितत्क्षान्तं ते मया शुभे ॥ १-१००-२७ (४४४९)
ग्अनृतं वाप्यनिष्टं वा दुरुक्तं वातिदुष्कृतम् ।
त्वयाप्येवं विशालाक्षि क्षन्तव्यं मम दुर्वचः ।
क्षान्त्या पतिकृते नार्यः पातिव्रत्यं व्रजन्ति ताः ॥ १-१००-२८ (४४५०)
एवमुक्त्वा तु राजर्षिस्तामनिन्दितगामिनीम् ।
अन्तःपुरं प्रवेश्याथ दुष्यन्तो महिषीं प्रियाम् ॥ १-१००-२९ (४४५१)
वासोभिरन्नपानैश्च पूजयित्वा तु भारत ।
ग्स मातरमुपस्थाय रथन्तर्यामभाषत ॥ १-१००-३० (४४५२)
मम पुत्रो वने जातस्तव शोकप्रणशनः ।
ऋणादद्य विमुक्तोऽहं तव पौत्रेण शोभने ॥ १-१००-३१ (४४५३)
विश्वामित्रसुता चेयं कण्वेन च विवर्धिता ।
स्नुषा तव महाभागे प्रसीदस्व शकुन्तलाम् ॥ १-१००-३२ (४४५४)
पुत्रस्य वचनं श्रुत्वा पौत्रं सा परिषस्वजे ।
पादयोः पतितां तत्र रथन्तर्या शकुन्तलाम् ॥ १-१००-३३ (४४५५)
परिष्वज्य च बाहुभ्यां हर्षादश्रुण्यवर्तयत् ।
उवाच वचनं सत्यं लक्षये लक्षणानि च ॥ १-१००-३४ (४४५६)
तव पुत्रो विशालाक्षि चक्रवर्ती भविष्यति ।
तव भर्ता विशालाक्षि त्रैलोक्यविजयी भवेत् ॥ १-१००-३५ (४४५७)
दिव्यान्भोगाननुप्राप्ता भव त्वं वरवर्णिनि ।
एवमुक्ता रथ्तर्या परं हर्षमवाप सा ॥ १-१००-३६ (४४५८)

शकुन्तलां तदा राजा शास्त्रोक्तेनैव कर्मणा ।
ततोऽग्रमहिषीं कृत्वा सर्वाभरणभूषिताम् ॥ १-१००-३७ (४४५९)
ब्राह्मणेभ्यो धनं दत्त्वा सैनिकानां च भूपतिः ।
दौष्यन्तिं च ततो राजा पुत्रं शाकुन्तलं तदा'॥ १-१००-३८ (४४६०)
भरतं नामतः कृत्वा यौवराज्येऽभ्यषेचयत् ।
ग्भरते भारमावेश्य कृतकृत्योऽभवन्नृपः ॥ १-१००-३९ (४४६१)
ततो वर्षशतं पूर्णं राज्यं कृत्वा नराधिपः ।
गत्वा वनानि दुष्यन्तः स्वर्गलोकमुपेयिवान् ॥' ॥ १-१००-४० (४४६२)

इति श्रीमन्महाभारते आदिपर्वणि संभवपर्वणि शततमोऽध्यायः ॥ १०० ॥

---

अध्यय१०१
॥ श्रीः ॥
१.१०१. अध्यायः १०१

Mahabharata - Adi Parva - Chapter Topics
भरतचरित्रकथनम् ॥ १ ॥
तद्वंशकथनं च ॥ २ ॥

Mahabharata - Adi Parva - Chapter Text

१-१०१-० (४४६३)
ग्वैशंपायन उवाच। १-१०१-०क्ष् (६२५)
दुष्यन्ताद्भरतो राज्यं यथान्यायमवाप सः।'
तस्य तत्प्रथितं कर्म प्रावर्तत महात्मनः ॥ १-१०१-१ (४४६४)
भास्वरं दिव्यमजितं लोकसंनादनं महत् ।
स विजित्य महीपालांश्चकार वशवर्तिनः ॥ १-१०१-२ (४४६५)
चचार च सतां धर्मं प्राप्य चानुत्तमं यशः ।
स राजा चक्रवर्त्यासीत्सार्वभौमः प्रतापवान् ॥ १-१०१-३ (४४६६)
ईजे च बहुभिर्यज्ञैर्यथा शक्रो मरुत्पतिः ।
याजयामास तं कण्वो दक्षवद्भूरिदक्षिणम् ॥ १-१०१-४ (४४६७)
श्रीमद्गोविततं नाम वाजिमेधमवाप सः ।
यस्मिन्सहस्रं पद्मानां कण्वाय भरतो ददौ ॥ १-१०१-५ (४४६८)
सोऽश्वमेधशतैरीजे यमुनामनु तीरगः ।
त्रिशतैश्च सरस्वत्यां गङ्गामनु चतुःशतैः ॥ १-१०१-६ (४४६९)
दौष्यन्तिर्भरतो यज्ञैरीजे शाकुन्तलो नृपः ।

तस्माद्भरतवंशस्य विप्रतस्थे महद्यशः ॥ १-१०१-७ (४४७०)
भरतस्य वरस्त्रीषु पुत्राः संजज्ञिरे पृथक् ।
नाभ्यनन्दत्तदा राजा नानुरूपा ममेति तान् ॥ १-१०१-८ (४४७१)
ततस्तान्मातरः क्रुद्धाः पुत्रान्निन्युर्यमक्षयम् ।
ततस्तस्य नरेन्द्रस्य वितथं पुत्रजन्म तत् ॥ १-१०१-९ (४४७२)
ततो महद्भिः क्रतुभिरीजानो भरतस्तदा ।
लेभे पुत्रं भरद्वाजाद्भुमन्युं नाम भारत ॥ १-१०१-१० (४४७३)
ततः पुत्रिणमात्मानं ज्ञात्वा पौरवनन्दनः ।
भुमन्युं भरतश्रेष्ठ यौवराज्येऽभ्यषेचयत् ॥ १-१०१-११ (४४७४)
ततो दिविरथो नाम भुमन्योरभवत्सुतः ।
सुहोत्रश्च सुहोता च सुहविः सुयजुस्तथा ॥ १-१०१-१२ (४४७५)
पुष्करिण्यामृचीकश्च भुमन्योरभवन्सुताः ।
तेषां ज्येष्ठः सुहोत्रस्तु राज्यमाप महीक्षिताम् ॥ १-१०१-१३ (४४७६)
राजसूयाश्वमेधाद्यैः सोऽयजद्बहुभिः सवैः ।
सुहोत्रः पृथिवीं कृत्स्नां बुभुजे सागराम्बराम् ॥ १-१०१-१४ (४४७७)
पूर्णां हस्तिगवाश्वैश्च बहुरत्नसमाकुलाम् ।
ममज्जेव मही तस्य भूरिभारावपीडिता ॥ १-१०१-१५ (४४७८)
हस्त्यश्वरथसंपूर्णा मनुष्यकलिला भृशम् ।
सुहोत्रे राजनि तदा धर्मतः शासति प्रजाः ॥ १-१०१-१६ (४४७९)
चैत्ययूपाङ्किता चासीद्भूमिः शतसहस्रशः ।
प्रवृद्धजनसस्या च सर्वदैव व्यरोचत ॥ १-१०१-१७ (४४८०)
ऐक्ष्वाकी जनयामास सुहोत्रात्पृथिवीपतेः ।
अजमीढं सुमीढं च पुरुमीढं च भारत ॥ १-१०१-१८ (४४८१)
अजमीढो वरस्तेषां तस्मिन्वंशः प्रतिष्ठितः ।
षट् पुत्रान्सोप्यजनयत्तिसृषु स्त्रीषु भारत ॥ १-१०१-१९ (४४८२)
ऋक्षं धूमिन्यथो नीली दुष्यन्तपरमेष्ठइनौ ।
केशिन्यजनयज्जह्नुं सुतौ च जनरूषिणौ ॥ १-१०१-२० (४४८३)
विदुः संवरणं वीरमृक्षाद्राथन्तरीसुतम् ।
तथेमे सर्वपञ्चाला दुष्यन्तपरमेष्ठिनोः ।
अन्वयाः कुशिका राजञ्जन्होरमिततेजसः ॥ १-१०१-२१ (४४८४)
जनरूषणयोर्ज्येष्ठमृक्षमाहुर्जनाधिपम् ।
ऋक्षात्संवरणो जज्ञे राजन्वंशकरस्तव ॥ १-१०१-२२ (४४८५)
आर्क्षे संवरणे राजन्प्रशासति वसुन्धराम् ।
संक्षयः सुमहानासीत्प्रजानामिति नः श्रुतम् ॥ १-१०१-२३ (४४८६)
व्यशीर्यत ततो राष्ट्रं क्षयैर्नानाविधैस्तदा ।
क्षुन्मृत्युभ्यामनावृष्ट्या व्याधिभिश्च समाहतम् ॥ १-१०१-२४ (४४८७)

अभ्यघ्नन्भारतांश्चैव सपत्नानां बलानि च ।
चालयन्वसुधां चेमां बलेन चतुरङ्गिणा ॥ १-१०१-२५ (४४८८)
अभ्ययात्तं च पाञ्चल्यो विजित्य तरसा महीम् ।
अक्षौहिणीभिर्दशभिः स एनं समरेऽजयत् ॥ १-१०१-२६ (४४८९)
ततः सदारः सामात्यः सपुत्रः ससुहृज्जनः ।
राजा संवरणस्तस्मात्पलायत महाभयात् ॥ १-१०१-२७ (४४९०)
ग्ते प्रतीचीं पराभूताः प्रपन्ना भारता दिशम्'।
सिन्धोर्नदस्य महतो निकुञ्जे न्यवसंस्तदा ।
नदीविपयपर्यन्ते पर्वतस्य समीपतः ॥ १-१०१-२८ (४४९१)
तत्रावसन्बहून्कालान्भारता दुर्गमाश्रिताः ।
तेषां निवसतां तत्र सहस्रं परिवत्सरान् ॥ १-१०१-२९ (४४९२)
अथाभ्यगच्छद्भरतान्वसिष्ठो भगवानृषिः ।
तमागतं प्रयत्नेन प्रत्युद्गम्याभिवाद्य च ॥ १-१०१-३० (४४९३)
अर्घ्यमभ्याहरंस्तस्मै ते सर्वे भारतास्तदा ।
निवेद्य सर्वमृषये सत्कारेण सुवर्चसे ॥ १-१०१-३१ (४४९४)
तमासने चोपविष्टं राजा वव्रे स्वयं तदा ।
पुरोहितो भवान्नोऽस्तु राज्याय प्रयतेमहि ॥ १-१०१-३२ (४४९५)
ओमित्येवं वसिष्ठोऽपि भारतान्प्रत्यपद्यत ।
अथाभ्यषिञ्चत्साम्राज्ये सर्वक्षत्रस्य पौरवम् ॥ १-१०१-३३ (४४९६)
विषाणभूतं सर्वस्यां पृथिव्यामिति नः श्रुतम् ।
भरताध्युषितं पूर्वं सोऽध्यतिष्ठत्पुरोतोतमम् ॥ १-१०१-३४ (४४९७)
पुनर्बलिभृतश्चैव चक्रे सर्वमहीक्षितः ।
ततः स पृथिवीं प्राप्य पुनरीजे महाबलः ॥ १-१०१-३५ (४४९८)
आजमीढो महायज्ञैर्बहुभिर्भूरिदक्षिणैः ।
ततः संवरणात्सौरी तपती सुषुवे कुरुम् ॥ १-१०१-३६ (४४९९)
राजत्वे तं प्रजाः सर्वा धर्मज्ञ इति वव्रिरे ।
ग्महिम्ना तस्य कुरवो लेभिरे प्रत्ययं भृशम्।'
तस्य नाम्नाऽभिविख्यातं पृथिव्यां कुरुजाङ्गलं ॥ १-१०१-३७ (४५००)
कुरुक्षेत्रं स तपसा पुण्यं चक्रे महातपाः ।
अश्ववन्तमभिष्यन्तं तथा चैत्ररथं मुनिम् ॥ १-१०१-३८ (४५०१)
जनमेजयं च विख्यातं पुत्रांश्चास्यानुशुश्रुम ।
पञ्चैतान्वाहिनी पुत्रान्व्यजायत मनस्विनी ॥ १-१०१-३९ (४५०२)
अविक्षितः परिक्षित्तु शबलाश्वस्तु वीर्यवान् ।
आदिराजो विराजश्च शाल्मलिश्च महाबलः ॥ १-१०१-४० (४५०३)
उच्चैःश्रवा भङ्गकारो जितारिश्चाष्टमः स्मृतः ।
एतेषामन्ववाये तु ख्यातास्ते कर्मजैर्गुणैः ।

जनमेजयादयः सप्त तथैवान्ये महारथाः ॥ १-१०१-४१ (४५०४)
परीक्षितोऽभवन्पुत्राः सर्वे धर्मार्थकोविदाः ।
कक्षसेनोग्रसेनौ तु चित्रसेनश्च वीर्यवान् ॥१-१०१-४२ (४५०५)
इन्द्रसेनः सुषेणश्च भीमसेनश्च नामतः ।
जनमेजयस्य तनया भुवि ख्याता महाबलाः ॥१-१०१-४३ (४५०६)
धृतराष्ट्रः प्रथमजः पाण्डुर्बाह्लीक एव च ।
निषधश्च महातेजास्तथा जाम्बूनदो बली ॥१-१०१-४४ (४५०७)
कुण्डोदरः पदातिश्च वसातिश्चाष्टमः स्मृतः ।
सर्वे धर्मार्थकुशलाः सर्वभूतहिते रताः ॥१-१०१-४५ (४५०८)
धृतराष्ट्रोऽथ राजासीत्तस्य पुत्रोऽथ कुण्डिकः ।
हस्ती वितर्कः क्राथश्च कुण्डिनश्चापि पञ्चमः ॥१-१०१-४६ (४५०९)
हविश्रवास्तथेन्द्राभो भुमन्युश्चापराजितः ।
धृतराष्ट्रसुतानां तु त्रीनेतान्प्रथितान्भुवि ॥१-१०१-४७ (४५१०)
प्रतीपं धर्मनेत्रं च सुनेत्रं चापि भारत ।
प्रतीपः प्रथितस्तेषां बभूवाप्रतिमो भुवि ॥१-१०१-४८ (४५११)
प्रतीपस्य त्रयः पुत्रा जज्ञिरे भरतर्षभ ।
देवापिः शन्तनुश्चैव बाह्लीकश्च महारथः ॥१-१०१-४९ (४५१२)
देवापिस्तु प्रवव्राज तेषां धर्महितेप्सया ।
शन्तनुश्च महीं लेभे बाह्लीकश्च महारथः ॥१-१०१-५० (४५१३)
भरतस्यान्वयास्त्वेते देवकल्पा महारथाः ।
बभूवुर्ब्रह्मकल्पाश्च बहवो राजसत्तमाः ॥१-१०१-५१ (४५१४)
एवंविधा महाभागा देवरूपाः प्रहारिणः ।
अन्ववाये महाराज ऐलवंशविवर्धनाः ॥१-१०१-५२ (४५१५)
ग्गङ्गातीरं समागम्य दीक्षितो जनमेजय ।
अश्वमेधसहस्राणि वाजपेयशतानि च ॥१-१०१-५३ (४५१६)
पुनरीजे महायज्ञैः समाप्तवरदक्षिणैः ।
अग्निष्टोमातिरात्राणामुक्थानां सोमवत्पुनः ॥१-१०१-५४ (४५१७)
वाजपेयेष्टिसत्राणां सहस्रैश्च सुसंभृतैः ।
दृष्ट्वा शाकुन्तलो राजा तर्पयित्वा द्विजान्धनैः ॥१-१०१-५५ (४५१८)
पुनः सहस्रं पद्मानां कण्वाय भरतो ददौ ।
जम्बूनदस्य शुद्धस्य कनकस्य महायशाः ॥१-१०१-५६ (४५१९)
यस्य यूपाः शतव्यामाः परिणाहेऽथ काञ्चनाः ।
सहस्रव्याममुद्बद्धाः सेन्द्रैर्देवैः समुच्छ्रिताः ॥१-१०१-५७ (४५२०)
स्वलङ्कृता भ्राजमानाः सर्वरत्नैर्मनोरमैः ।
हिरण्यं द्विरदानश्वान्महिषोष्ट्रगजाविकम् ॥१-१०१-५८ (४५२१)
दासीदासं धनं धान्यं गाः सुशीलाः सवत्सकाः ।

भूमिं यूपसहस्राङ्कां कण्वाय बहुदक्षिणाम् ॥ १-१०१-५९ (४५२२)
बहूनां ब्रह्मकल्पानां धनं दत्त्वा क्रतून्बहून् ।
ग्रामान्गृहाणि शुभ्राणि कोटिशोथाददत्तदा ॥ १-१०१-६० (४५२३)
भरताद्भारती कीर्तिर्येनेदं भारतं कुलम् ।'
भरतस्यान्वये जाता देवकल्पा महारथाः ॥ १-१०१-६१ (४५२४)
बहवो ब्रह्मकल्पाश्च बभूवुः क्षत्रसत्तमाः ।
तेषामपरिमेयानि नामधेयानि सन्त्युत ॥ १-१०१-६२ (४५२५)
तेषां कुले यथा मुख्यान्कीर्तयिष्यामि भारत ।
महाभागान्देवकल्पान्सत्यार्जवपरायणान् ॥ ॥ १-१०१-६३ (४५२६)

इति श्रीमन्महाभारते आदिपर्वणि संभवपर्वणि
एकोत्तरशततमोऽध्यायः ॥ १०१ ॥
Mahabharata - Adi Parva - Chapter Footnotes

१-१०१-९ वितथं विगतस्तथाभावो जनकसादृश्यं यत्र तत्तादृशं
पुत्रजन्म ॥
१-१०१-२३ आर्क्षी ऋक्षपुत्रे ॥
१-१०१-२४ क्षयैर्नाशहेतुभिः क्षुत्प्रभृतिभिः ॥
१-१०१-२६ अभ्ययात्तं संवरणम् । एनं संवरणमेव ॥
१-१०१-३५ बलिभृतः करदान् ॥
१-१०१-३६ सौरी सूर्यकन्या ॥
१-१०१-४० अश्ववत एवाविक्षिदिति संज्ञान्तरम् ॥
एकोत्तरशत्ततमोऽध्यायः ॥
१०१ ॥

---

अध्यय१०२
॥ श्रीः ॥
१.१०२. अध्यायः १०२

Mahabharata - Adi Parva - Chapter Topics
महाभिषगुपाख्यानम् ॥ १ ॥
महाभिषग्गङ्गयोः शापः ॥ २ ॥
अष्टवसूनां गङ्गायाश्च संवादः ॥ ३ ॥

Mahabharata - Adi Parva - Chapter Text

१-१०२-० (४५२७)

वैशंपायन उवाच। १-१०२-०क्ष् (६२६)
इक्ष्वाकुवंशप्रभो राजासीत्पृथिवीपतिः ।
महाभिषगिति ख्यातः सत्यवाक्सत्यविक्रमः ॥ १-१०२-१ (४५२८)
सोऽश्वमेधसहस्रेण राजसूयशतेन च ।
तोषयामास देवेशं स्वर्गं लेभे ततः प्रभुः ॥ १-१०२-२ (४५२९)
ततः कदाचिद्ब्रह्माणमुपासांचक्रिरे सुराः ।
तत्र राजर्षयो ह्यासन्स च राजा महाभिषक् ॥ १-१०२-३ (४५३०)
अथ गङ्गा सरिच्छ्रेष्ठा समुपायात्पितामहम् ।
तस्या वासः समुद्धूतं मारुतेन शशिप्रभम् ॥ १-१०२-४ (४५३१)
ततोऽभवन्सुरगणाः सहसाऽवाङ्मुखास्तदा ।
महाभिषक्तु राजर्षिरशङ्को दृष्टवान्नदीम् ॥ १-१०२-५ (४५३२)
सोपध्यातो भगवता ब्रह्मणा तु महाभिषक् ।
उक्तश्च जातो मर्त्येषु पुनर्लोकानवाप्स्यसि ॥ १-१०२-६ (४५३३)
यया हृतमनाश्चासि गङ्गया त्वं हि दुर्मते ।
सा ते वै मानुषे लोके विप्रियाण्याचरिष्यति ॥ १-१०२-७ (४५३४)
यदा ते भविता मन्युस्तदा शापाद्विमोक्ष्यते। १-१०२-८ (४५३५)
वैशंपायन उवाच ।
स चिन्तयित्वा नृपतिर्नृपानन्यांस्तपोधनान् ॥ १-१०२-८क्ष् (६२७)
प्रतीपं रोचयामास पितरं भूरितेजसम् ।
सा महाभिषजं दृष्ट्वा नदी दैर्याच्च्युतं नृपम् ॥ १-१०२-९ (४५३६)
तमेव मनसा ध्यायन्त्युपावृत्ता सरिद्वरा ।
सा तु विध्वस्तवपुषः कश्मलाभिहतान्नृप ॥ १-१०२-१० (४५३७)
ददर्श पथि गच्छन्ती वसून्देवान्दिवौकसः ।
तथारूपांश्च तान्दृष्ट्वा प्रपच्छ सरितां वरा ॥ १-१०२-११ (४५३८)
किमिदं नष्टरूपाः स्थ कच्चित्क्षेमं दिवौकसाम् ।
तामूचुर्वसवो देवाः शप्ताः स्मो वै महानदि ॥ १-१०२-१२ (४५३९)
अल्पेऽपराधे संरम्भाद्वसिष्ठेन महात्मना ।
विमूढा हि वयं सर्वे प्रच्छन्नमृषिसत्तमम् ॥ १-१०२-१३ (४५४०)
सन्ध्यां वसिष्ठमासीनं तमत्यभिसृताः पुरा ।
तेन कोपाद्वयं शप्ता योनौ संभवतेति ह ॥ १-१०२-१४ (४५४१)
न तच्छक्यं निवर्तयितुं यदुक्तं ब्रह्मवादिना ।
त्वमस्मान्मानुषी भूत्वा सूष्व पुत्रान्वसून्भुवि ॥ १-१०२-१५ (४५४२)
न मानुषीणां जठरं प्रविशेम वयं शुभे ।
इत्युक्ता तैश्च वसुभिस्तथेत्युक्त्वाऽब्रवीदिदम् ॥ १-१०२-१६ (४५४३)
गङ्गोवाच। १-१०२-१७क्ष् (६२८)
मर्त्येषु पुरुषश्रेष्ठः को वः कर्ता भविष्यति। १-१०२-१७ (४५४४)

वसव ऊचुः ।
प्रतीपस्य सुतो राजा शान्तनुर्लोकविश्रुतः ।
भविता मानुषे लोके स नः कर्ता भविष्यति ॥ १-१०२-१७क्ष् (६२९)
गङ्गोवाच। १-१०२-१८क्ष् (६३०)
ममाप्येवं मतं देवा यथा मां वदथानघाः ।
प्रियं तस्य करिष्यामि युष्माकं चेतदीप्सितम् ॥ १-१०२-१८ (४५४५)
वसव ऊचुः। १-१०२-१९क्ष् (६३१)
जातान्कुमारान्स्वानप्सु प्रक्षेप्तुं वै त्वमर्हसि ।
यथा नचिरकालं नो निष्कृतिः स्यात्त्रिलोकगे ॥ १-१०२-१९ (४५४६)
जिघृक्षवो वयं सर्वे सुरभिं मन्दबुद्धयः ।
शप्ता ब्रह्मर्षिणा तेन तांस्त्वं मोचय चाशु नः ॥ १-१०२-२० (४५४७)
गङ्गोवाच। १-१०२-२१क्ष् (६३२)
एवमेतत्करिष्यामि पुत्रस्तस्य विधीयताम् ।
नास्य मोघः सङ्गमः स्यात्पुत्रहेतोर्मया सह ॥ १-१०२-२१ (४५४८)
वसव ऊचुः। १-१०२-२२क्ष् (६३३)
तुरीयार्धं प्रदास्यामो वीर्यस्यैकैकशो वयम् ।
तेन वीर्येण पुत्रस्ते भविता तस्य चेप्सितः ॥ १-१०२-२२ (४५४९)
न संपत्स्यति मर्त्येषु पुनस्तस्य तु सन्ततिः ।
तस्मादपुत्रः पुत्रस्ते भविष्यति स वीर्यवान् ॥ १-१०२-२३ (४५५०)
एवं ते समयं कृत्वा गङ्गया वसवः सह ।
जग्मुः संहृष्टमनसो यथासंकल्पमञ्जसा ॥ ॥ १-१०२-२४ (४५५१)

इति श्रीमन्महाभारते आदिप्रवमि संभवपर्वणि
द्व्यधिकशततमोऽध्यायः ॥ १०२ ॥
Mahabharata - Adi Parva - Chapter Footnotes

१-१०२-६ अपध्यातः शप्तः ॥
१-१०२-१० विध्वस्तवपुषो दिवश्च्युतत्वात् ॥
१-१०२-१४ अत्यभिसृता अतिक्रान्तवन्तः । वक्ष्यमाणेन
तद्धेनुहरणेनेति शेषः ॥
१-१०२-१९ नचिरकालं शीघ्रम् । नोऽस्माकम् ॥
१-१०२-२२ तुरीयार्धमष्टमांशम् ॥
द्व्यधिकशततमोऽध्यायः ॥
१०२ ॥

---

अध्यय१०३
॥ श्रीः ॥

## १.१०३. अध्यायः १०३

Mahabharata - Adi Parva - Chapter Topics

प्रतीपेन गङ्गायाः स्नुषात्वेन परिग्रहः ॥ १ ॥

शान्तनूत्पत्तिः ॥ २ ॥

तस्य राज्येऽभिषेकः ॥ ३ ॥

मृगयार्थं गतस्य शान्त नोर्गङ्गया संवादः ॥ ४ ॥

Mahabharata - Adi Parva - Chapter Text

१-१०३-० (४५५२)
वैशंपायन उवाच। १-१०३-०क्ष् (६३४)
ततः प्रतीपो राजाऽऽसीत्सर्वभूतहितः सदा ।
निषसाद समा बह्वीर्गङ्गाद्वारगतो जपन् ॥ १-१०३-१ (४५५३)
तस्य रूपगुणोपेता गङ्गा स्त्रीरूपधारिणी ।
उत्तीर्य सलिलात्तस्माल्लोभनीयतमाकृतिः ॥ १-१०३-२ (४५५४)
अधीयानस्य राजर्षेर्दिव्यरूपा मनस्विनी ।
दक्षिणं शालसङ्काशमूरुं भेजे शुभानना ॥ १-१०३-३ (४५५५)
प्रतीपस्तु महीपालस्तामुवाच यशस्विनीम् ।
ग्वाक्यं वाक्यविदां श्रेष्ठो धर्मनिश्चयतत्त्ववित्।'
करोमि किं ते कल्याणि प्रियं यत्तेऽभिकाङ्क्षितम् ॥ १-१०३-४ (४५५६)
स्त्र्युवाच। १-१०३-५क्ष् (६३५)
त्वामहं कामये राजन्भजमानां भजस्व माम् ।
त्यागः कामवतीनां हि स्त्रीणां सद्भिर्विगर्हितः ॥ १-१०३-५ (४५५७)
प्रतीप उवाच। १-१०३-६क्ष् (६३६)
नाहं परस्त्रियं कामाद्गच्छेदं वरवर्णिनि ।
न चासवर्णां कल्याणि धर्म्यमेतद्धि मे व्रतम् ॥ १-१०३-६ (४५५८)
ग्यः स्वदारान्परित्यज्य पारक्यां सेवते स्त्रियम् ।
निरयान्नैव मुच्यते यावदाभूतसंप्लवम् ॥' १-१०३-७ (४५५९)
स्त्र्युवाच। १-१०३-८क्ष् (६३७)
नाश्रेयस्यस्मि नागम्या न वक्तव्या च कर्हिचित् ।
भजन्तीं भज मां राजन्दिव्यां कन्यां वरस्त्रियम् ॥ १-१०३-८ (४५६०)
प्रतीप उवाच। १-१०३-९क्ष् (६३८)
त्वया निवृत्तमेतत्तु यन्मां चोदयसि प्रियम् ।
अन्यथा प्रतिपन्नं मां नाशयेद्धर्मविप्लवः ॥ १-१०३-९ (४५६१)
प्राप्य दक्षिणमूरुं मे त्वमाश्लिष्टा वराङ्गने ।

अपत्यानां स्नुषाणां च भीरु विद्ध्येतदासनम् ॥ १-१०३-१० (४५६२)
सव्योरुः कामिनीभोग्यस्त्वया स च विवर्जितः ।
तस्मादहं नाचरिष्ये त्वयि कामं वराङ्गने ॥ १-१०३-११ (४५६३)
स्नुषा मे भव सुश्रोणि पुत्रार्थं त्वां वृणोम्यहम् ।
स्नुषापक्षं हि वामोरु त्वमागम्य समाश्रिता ॥ १-१०३-१२ (४५६४)
स्त्र्युवाच। १-१०३-१३क्ष् (६३९)
एवमप्यस्तु धर्मज्ञ संयुज्येयं सुतेन ते ।
त्वद्भक्त्या तु भजिष्यामि प्रख्यातं भारतं कुलम् ॥ १-१०३-१३ (४५६५)
पृथिव्यां पार्थिवा ये च तेषां यूयं परायणम् ।
गुणा न हि मया शक्या वक्तुं वर्षशतैरपि ॥ १-१०३-१४ (४५६६)
कुलस्य ये वः प्रथितास्तत्साधुत्वमथोत्तमम् ।
समयेनेह धर्मज्ञ आचरेयं च यद्विभो ॥ १-१०३-१५ (४५६७)
तत्सर्वमेव पुत्रस्ते न मीमांसेत कर्हिचित् ।
एवं वसन्ती पुत्रे ते वर्धयिष्याम्यहं रतिम् ॥ १-१०३-१६ (४५६८)
पुत्रैः पुण्यैः प्रियैश्चैव स्वर्गं प्राप्स्यति ते सुतः। १-१०३-१७ (४५६९)
वैशंपायन उवाच ।
तथेत्युक्त्वा तु सा राजंस्तत्रैवान्तरधीयत ।
ग्अदृश्या राजसिंहस्य पश्यतः साऽभवत्तदा ॥' १-१०३-१७क्ष् (६४०)
पुत्रजन्म प्रतीक्षन्वै स राजा तदधारयत् ।
एतस्मिन्नेव काले तु प्रतीपः क्षत्रियर्षभः ॥ १-१०३-१८ (४५७०)
तपस्तेपे सुतस्यार्थे सभार्यः कुरुनन्दन ।
ग्प्रतीपस्य तु भार्यायां गर्भः श्रीमानवर्धत ॥ १-१०३-१९ (४५७१)
श्रिया परमया युक्तः शरच्छुक्ले यथा शशी ।
ततस्तु दशमे मासि प्राजायत रविप्रभम् ॥ १-१०३-२० (४५७२)
कुमारं देवगर्भाभं प्रतीपमहिषी तदा।'
तयोः समभवत्पुत्रो वृद्धयोः स महाभिषक् ॥ १-१०३-२१ (४५७३)
शान्तस्य जज्ञे सन्तानस्तस्मादासीत्स शान्तनुः ।
ग्तस्य जातस्य कृत्यानि प्रतीपोऽकारयत्प्रभुः ॥ १-१०३-२२ (४५७४)
जातकर्मादि विप्रेण वेदोक्तैः कर्मभिस्तदा ।
नामकर्म च विप्रास्तु चक्रुः परमसत्कृतम् ॥ १-१०३-२३ (४५७५)
शान्तनोरवनीपाल वेदोक्तैः कर्मभिस्तदा ।
ततः संवर्धितो राजा शान्तनुर्लोकधार्मिकः ॥ १-१०३-२४ (४५७६)
स तु लेभे परां निष्ठां प्राप्य धर्मभृतां वरः ।
धनुर्वेदे च वेदे च गतिं स परमा गतः ॥ १-१०३-२५ (४५७७)
यौवनं चापि संप्राप्तः कुमारो वदतां वरः।'
संस्मरंश्चाक्षयाँल्लोकान्विजातान्स्वेन कर्मणा ॥ १-१०३-२६ (४५७८)

पुण्यकर्मकृदेवासीच्छान्तनुः कुरुसत्तमः ।
प्रतीपः शान्तनुं पुत्रं यौवनस्थं ततोऽन्वशात् ॥ १-१०३-२७ (४५७९)
पुरा स्त्री मां समभ्यागाच्छान्तनो भूतये तव ।
त्वामाव्रजेद्यदि रहः सा पुत्र वरवर्णिनी ॥ १-१०३-२८ (४५८०)
कामयानाऽभिरूपाढ्या दिव्यस्त्री पुत्रकाम्यया ।
सा त्वया नानुयोक्तव्या कासि कस्यासि चाङ्गने ॥ १-१०३-२९ (४५८१)
यच्च कुर्यान्न तत्कर्म सा प्रष्टव्या त्वयाऽनघ ।
सन्नियोगाद्भजन्तीं तां भजेथा इत्युवाच तम् ॥ १-१०३-३० (४५८२)
एवं संदिश्य तनयं प्रतीपः शान्तनुं तदा ।
स्वे च राज्येऽभिषिच्यैनं वनं राजा विवेश ह ॥ १-१०३-३१ (४५८३)
स राजा शान्तनुर्धीमान्देवराजसमद्युतिः ।
ग्बभूव सर्वलोकस्य सत्यवागिति संमतः ॥ १-१०३-३२ (४५८४)
पीनस्कन्धो महाबाहुर्मत्तवारणविक्रमः ।
अन्वितः परिपूर्णार्थैः सर्वैर्नृपतिलक्षणैः ॥ १-१०३-३३ (४५८५)
अमात्यलक्षणोपेतः क्षत्रधर्मविशेषवित् ।
वशे चक्रे महीमेको विजित्य वसुधाधिपान् ॥ १-१०३-३४ (४५८६)
वेदानागमयत्कृत्स्नान्राजधर्मांश्च सर्वशः ।
ईजे च बहुभिः सत्रैः क्रतुभिर्भूरिदक्षिणैः ॥ १-१०३-३५ (४५८७)
तर्पयामास विप्रांश्च वेदाध्ययनकोविदान् ।
रत्नैरुच्चावचैर्गोभिर्ग्रामैरश्वैर्धनैरपि ॥ १-१०३-३६ (४५८८)
वयोरूपेण संपन्नः पौरुषेण बलेन च ।
ऐश्वर्येण प्रतापेन विक्रमेण धनेन च ॥ १-१०३-३७ (४५८९)
वर्तमानश्च सत्येन सर्वधर्मविशारदः ।
तं महीपं महीपाला राजराजमकुर्वत ॥ १-१०३-३८ (४५९०)
वीतशोकभयाबाधाः सुखस्वप्नप्रबोधाः ।
श्रिया भरतशार्दूल समपद्यन्त भूमिपाः ॥ १-१०३-३९ (४५९१)
नियमैः सर्ववर्णानां ब्रह्मोत्तरमवर्तत ।
ब्राह्मणाभिमुखं क्षत्रं क्षत्रियाभिमुखा विशः ॥ १-१०३-४० (४५९२)
ब्रह्मक्षत्रानुकूलांश्च शूद्राः पर्यचरन्विशः ।
एवं पशुवराहाणां तथैव मृगपक्षिणाम् ॥ १-१०३-४१ (४५९३)
शान्तनावथ राज्यस्थे नावर्तत वृथा वधः ।
असुखानामनाथानां तिर्यग्योनिषु वर्तताम् ॥ १-१०३-४२ (४५९४)
स एव राजा सर्वेषां भूतानामभवत्पिता ।
स हस्तिनाम्नि धर्मात्मा विहरन्कुरुनन्दनः ॥ १-१०३-४३ (४५९५)
तेजसा सूर्यकल्पोऽभूद्वायुना च समो बले ।
अन्तकप्रतिमः कोपे क्षमया पृथिवीसमः ॥ १-१०३-४४ (४५९६)

बभूव राजा सुमतिः प्रजानां सत्यविक्रमः ।
स वनेषु च रम्येषु शैलप्रस्रवणेषु च ॥' १-१०३-४५ (४५९७)
चचार मृगयाशीलः शान्तनुर्वनगोचरः ।
स मृगान्महिषांश्चैव विनिघ्नन्राजसत्तमः ॥ १-१०३-४६ (४५९८)
गङ्गामनु चचारैकः सिद्धचारणसेविताम् ।
स कदाचिन्महाराज ददर्श परमां स्त्रियम् ॥ १-१०३-४७ (४५९९)
जाज्वल्यमानां वपुषा साक्षाच्छ्रियमिवापराम् ।
सर्वानवद्यां सुदतीं दिव्याभरणभूषिताम् ॥ १-१०३-४८ (४६००)
सूक्ष्माम्बरधरामेकां पद्मोदरसमप्रभाम् ।
ग्स्नातगात्रां धौतवस्त्रां गङ्गातीररुहे वने ॥ १-१०३-४९ (४६०१)
प्रकीर्णकेशीं पाणिभ्यां संस्पृशन्तीं शिरोरुहान् ।
रूपेण वयसा कान्त्या शरीरावयवैस्तथा ॥ १-१०३-५० (४६०२)
हावभावविलासैश्च लोचनाञ्चलविक्रियैः ।
श्रोणीभारेण मध्येन स्तनाभ्यामुरसा दृशा ॥ १-१०३-५१ (४६०३)
कवरीभरेण पादाभ्यामिङ्गितेन स्मितेन च ।
कोकिलालापसंल्लापैर्न्यक्कुर्वन्तीं त्रिलोकगाम् ॥ १-१०३-५२ (४६०४)
वाणीं च गिरिजां लक्ष्मीं योषितोन्याः सुराङ्गनाः ।
सा च शान्तनुमब्यागादलक्ष्मीमपकर्षती ॥' १-१०३-५३ (४६०५)
तां दृष्ट्वा हृष्टरोमाऽभूद्विस्मितो रूपसंपदा ।
पिबन्निव च नेत्राभ्यां नातृप्यत नराधिपः ॥ १-१०३-५४ (४६०६)
सा च दृष्टवैव राजानं विचरन्तं महाद्युतिम् ।
स्नेहादागतसौहार्दा नातृप्यत विलासिनी ॥ १-१०३-५५ (४६०७)
ग्गङ्गा कामेन राजानं प्रेक्षमाणा विलासिनी ।
चञ्चूर्यताग्रतस्तस्य किन्नरीवाप्सरोपमा ॥ १-१०३-५६ (४६०८)
दृष्ट्वा प्रहृष्टरूपोऽभूद्दर्शनादेव शान्तनुः ।
रूपेणातीत्य तिष्ठन्तीं सर्वा राजन्ययोषितः ॥' १-१०३-५७ (४६०९)
तामुवाच ततो राजा सान्त्वयञ्श्लक्ष्णया गिरा ।
देवी वा दानवी वा त्वं गन्धर्वी चाथवाऽप्सराः ॥ १-१०३-५८ (४६१०)
यक्षी वा पन्नगी वाऽपि मानुषी वा सुमध्यमे ।
ग्याऽसि काऽसि सुरप्रख्ये महिषी मे भवानघे ॥ १-१०३-५९ (४६११)
त्वां गता हि मम प्रामा वसु यन्मेऽस्ति किंचन ।'
याचे त्वां सुरगर्भाभे भार्या मे भव शोभने ॥ ॥ १-१०३-६० (४६१२)

इति श्रीमन्महाभारते आदिपर्वणि संभवपर्वणि
त्र्यधिकशततमोऽध्यायः ॥ १०३ ॥

१-१०३-१ तत इति ॥
१-१०३-८ दिव्यां दिवि भवाम् ॥
१-१०३-९ निवृत्तं निरस्तम् ॥
१-१०३-१० आश्लिष्टा संगता ॥
१-१०३-१५ समयेन नियमेन ॥
१-१०३-१६ न मीमांसेत न विचारयेत् ॥
१-१०३-२२ शान्तस्योपरतस्य वंशस्य संतानो विस्तार इति शान्ततनुः
। तकारलोपेन शान्तनुरिति नाम ॥
१-१०३-२६ संस्मरन्निति व्यवहितमपि ज्ञानबलेन जानातीत्यर्थः ॥
१-१०३-२९ नानुयोक्तव्या न प्रष्टव्या ॥
त्र्यधिकशततमोऽध्यायः ॥
१०३ ॥

---

अध्यय१०४
॥ श्रीः ॥
१.१०४. अध्यायः १०४

Mahabharata - Adi Parva - Chapter Topics
समयबन्धपूर्वकं गङ्गाशान्तन्वोर्विवाहः ॥ १ ॥

Mahabharata - Adi Parva - Chapter Text

१-१०४-० (४६१३)
वैशंपायन उवाच। १-१०४-०क्ष् (६४१)
एतच्छ्रुत्वा वचो राज्ञः सस्मितं मृदु वल्गु च ।
यशस्विनी च साऽगच्छच्छान्तनोर्भूतये तदा ॥ १-१०४-१ (४६१४)
सा तु दृष्ट्वा नृपश्रेष्ठं चरन्तं तीरमाश्रितम् ।
वसूनां समयं स्मृत्वाऽथाभ्यगच्छदनिन्दिता ॥ १-१०४-२ (४६१५)
प्रजार्थिनी राजपुत्रं शान्तनुं पृथिवीपतिम् ।
प्रतीपवचनं चापि संस्मृत्यैव स्वयं नृपम् ॥ १-१०४-३ (४६१६)
कालोऽयमिति मत्वा सा वसूनां शापचोदिता ।
उवाच चैव राज्ञः सा ह्लादयन्ती मनो गिरा ॥ १-१०४-४ (४६१७)
गङ्गोवाच। १-१०४-५क्ष् (६४२)
भविष्यामि महीपाल महिषी ते वशानुगा ।
न तु त्वं वा द्वितीयो वा ज्ञातुमिच्छेत्कथंचन ॥ १-१०४-५ (४६१८)
यत्तु कुर्यामहं राजञ्शुभं वा यदि वाऽशुभम् ।

न तद्वारयितव्याऽस्मि न वक्तव्या तथाऽप्रियम् ॥१-१०४-६ (४६१९)
एवं हि वर्तमानेऽहं त्वयि वत्स्यामि पार्थिव ।
वारिता विप्रियं चोक्ता त्यजेयं त्वामसंशयम् ॥१-१०४-७ (४६२०)
एष मे समयो राजन्भज मां त्वं यथेप्सितम् ।
अनुनीताऽस्मि ते पित्रा भर्ता मे त्वं भव प्रभो ॥१-१०४-८ (४६२१)
वैशंपायन उवाच। १-१०४-९क्ष् (६४३)
तथेति सा यदा तूक्ता तदा भरतसत्तम ।
प्रहर्षमतुलं लेभे प्राप्य तं पार्थिवोत्तमम् ॥१-१०४-९ (४६२२)
प्रतिज्ञाय तु तत्तस्यास्तथेति मनुजाधिपः ।
रथमारोप्य तां देवीं जगाम स तया सह ॥१-१०४-१० (४६२३)
सा च शान्तनुमभ्यागात्साक्षाल्लक्ष्मीरिवापरा ।
आसाद्य शान्तनुस्तां च बुभुजे कामतो वशी ॥१-१०४-११ (४६२४)
न प्रष्टव्येति मन्वानो न स तां किंचिदूचिवान् ।
स तस्याः शीलवृत्तेन रूपौदार्यगुणेन च ॥१-१०४-१२ (४६२५)
उपचारेण च रहस्तुतोष जगतीपतिः ।
स राजा परमप्रीतः परमस्त्रीप्रलालितः ॥१-१०४-१३ (४६२६)
दिव्यरूपा हि सा देवी गङ्गा त्रिपथगामिनी ।
मानुषं विग्रहं कृत्वा श्रीमन्तं वरवर्णिनी ॥१-१०४-१४ (४६२७)
भाग्योपनतकामस्य भार्या चोपनताऽभवत् ।
शन्तनोर्नृपसिंहस्य देवराजसमद्युतेः ॥१-१०४-१५ (४६२८)
संभोगस्नेहचातुर्यैर्हावलास्यैर्मनोहरैः ।
राजानं रमयामास यथा रज्येत स प्रभुः ॥१-१०४-१६ (४६२९)
स राजा रतिसक्तोऽभूदुत्तमस्त्रीगुणैर्हृतः ॥ ॥ १-१०४-१७ (४६३०)

इति श्रीमन्महाभारते आदिपर्वणि संभवपर्वणि
चतुरधिकशततमोऽध्यायः ॥१०४ ॥

---

अध्यय१०५
॥ श्रीः ॥
१.१०५. अध्यायः १०५

Mahabharata - Adi Parva - Chapter Topics
गङ्गया जातमात्रस्य पुत्रसप्तकस्य हननम् ॥१ ॥
अष्टमपुत्रहननोद्युक्तां स्वभार्यां प्रति शांन्तनुप्रश्नाः ॥२ ॥
पूर्ववृत्तकथनपूर्वकं गङ्गायाः प्रतिवचनम् ॥३ ॥

Mahabharata - Adi Parva - Chapter Text

१-१०५-० (४६३१)
वैशंपायन उवाच। १-१०५-०क्ष् (६४४)
संवत्सरानृतून्मासान्बुबुधे न बहून्गतान् ।
रममाणस्तया सार्धं यथाकामं नरेश्वरः ॥ १-१०५-१ (४६३२)
ग्दिविष्ठान्मानुषांश्चैव भोगान्भुङ्क्ते स वै नृपः।'
आसाद्य शान्तनुः श्रीमान्मुमुदे योषितां वराम् ॥ १-१०५-२ (४६३३)
ऋतुकाले तु सा देवी दिव्यं गर्भमधारयत् ।
अष्टावजनयत्पुत्रांस्तस्मादमरसन्निभान् ॥ १-१०५-३ (४६३४)
जातं जातं च सा पुत्रं क्षिपत्यम्भ्यसि भारत ।
सूतके कण्ठमाक्रम्य तान्निनाय यमक्षयम् ॥ १-१०५-४ (४६३५)
प्रीणाम्यहं त्वामित्युक्त्वा गङ्गास्रोतस्यमज्जयत् ।
तस्य तन्न प्रियं राज्ञः शान्तनोरभवत्तदा ॥ १-१०५-५ (४६३६)
न च तां किंचनोवाच त्यागाद्भीतो महीपतिः ।
ग्अमीमांस्या कर्मयोनिरागमश्चेति शान्तनुः ॥ १-१०५-६ (४६३७)
स्मरन्पितृवचश्चैव नापृच्छत्पुत्रकिल्बिषम् ।
जाताञ्जातांश्च वै हन्ति सा स्त्री सप्त वरान्सुतान् ॥ १-१०५-७ (४६३८)
शान्तनुर्धर्मभङ्गाच्च नापृच्छत्तां कथंचन ।
अष्टमं तु जिघांसन्त्यां चुक्षुभे शान्तनोर्धृतिः ॥' १-१०५-८ (४६३९)
अथैनामष्टमे पुत्रे जाते प्रहसतीमिव ।
उवाच राजा दुःखार्तः परीप्सन्पुत्रमात्मनः ॥ १-१०५-९ (४६४०)
ग्आलभन्तीं तदा दृष्ट्वा तां स कौरवनन्दनः ।
अब्रवीद्भरतश्रेष्ठो वाक्यं परमदुःखितः ॥' १-१०५-१० (४६४१)
मावधीः कस्य काऽसीति किं हिनत्सि सुतानिति ।
पुत्रघ्नि सुमहत्पापं संप्राप्तं ते सुगर्हितम् ॥ १-१०५-११ (४६४२)
गङ्गोवाच। १-१०५-१२क्ष् (६४५)
पुत्रकाम न ते हन्मि पुत्रं पुत्रवतां वर ।
जीर्णस्तु मम वासोऽयं यथा स समयः कृतः ॥ १-१०५-१२ (४६४३)
अहं गङ्गा जह्नुसुता महर्षिगणसेविता ।
देवकार्यार्थसिद्ध्यर्थमुषिताऽहं त्वया सह ॥ १-१०५-१३ (४६४४)
इमेऽष्टौ वसवो देवा महाभागा महौजसः ।
वसिष्ठशापदोषेण मानुषत्वमुपागताः ॥ १-१०५-१४ (४६४५)
तेषां जनयिता नान्यस्त्वदृते भुवि विद्यते ।
मद्विधा मानुषी धात्री लोके नास्तीह काचन ॥ १-१०५-१५ (४६४६)
तस्मात्तज्जननीहेतोर्मानुषत्वमुपागता ।
जनयित्वा वसूनष्टौ जिता लोकास्त्वयाऽक्षयाः ॥ १-१०५-१६ (४६४७)

देवानां समयस्त्वेष वसूनां संश्रुतो मया ।
जातं जातं मोक्षयिष्ये जन्मतो मानुषादिति ॥ १-१०५-१७ (४६४८)
तत्ते शापाद्विनिर्मुक्ता आपवस्य महात्मनः ।
स्वस्ति तेस्तु गमिष्यामि पुत्रं पाहि महाव्रतम् ॥ १-१०५-१८ (४६४९)
ग्अयं तव सुतस्तेषां वीर्येण कुलनन्दनः ।
संभूतोतिजनं कर्म करिष्यति न संशयः ॥' १-१०५-१९ (४६५०)
एष पर्यायवासो मे वसूनां सन्निधौ कृतः ।
मत्प्रसूतिं विजानीहि गङ्गादत्तमिमं सुतम् ॥ ॥ १-१०५-२० (४६५१)

इति श्रीमन्महाभारते आदिपर्वणि संभवपर्वणि
पञ्चाधिकशततमोऽध्यायः ॥ १०५ ॥
Mahabharata - Adi Parva - Chapter Footnotes

१-१०५-११ तेत्वया ॥
१-१०५-१५ धात्री गर्भधारिणी ॥
१-१०५-१७ संश्रुतोऽङ्गीकृतः ॥
१-१०५-१८ आपवस्य वसिष्ठस्य ॥
पञ्चाधिकशततमोऽध्यायः ॥
१०५ ॥

---

अध्यय१०६
॥ श्रीः ॥
१.१०६. अध्यायः १०६

Mahabharata - Adi Parva - Chapter Topics
स्वगोहर्तॄणां वसूनां वसिष्ठेन शापः ॥ १ ॥
पुनस्तत्प्रार्थनया तुष्टने वसिष्टेन शापसंकोचः ॥ २ ॥
गङ्गाया भीष्मेण सह स्वलोकगमनम् ॥ ३ ॥

Mahabharata - Adi Parva - Chapter Text

१-१०६-० (४६५२)
शान्तनुरुवाच। १-१०६-०क्ष् (६४६)
आपवो नाम कोन्वेष वसूनां किं च दुष्कृतम् ।
ग्शशाप यस्मात्कल्याणि स वसूंश्चारुदर्शने।'
यस्याभिशापात्ते सर्वे मानुषीं योनिमागताः ॥ १-१०६-१ (४६५३)
अनेन च कुमारेण त्वया दत्तेन किं कृतम् ।

यस्य चैव कृतेनायं मानुषेषु निवत्स्यति ॥ १-१०६-२ (४६५४)
ईशा वै सर्वलोकस्य वसवस्ते च वै कथम् ।
मानुषेषूदपद्यन्त तन्ममाचक्ष्व जाह्नवि ॥ १-१०६-३ (४६५५)
वैशंपायन उवाच। १-१०६-४क्ष् (६४७)
एवमुक्ता तदा गङ्गा राजानमिदमब्रवीत् ।
भर्तारं जाह्नवी देवी शान्तनुं पुरुषर्षभ ॥ १-१०६-४ (४६५६)
गङ्गोवाच। १-१०६-५क्ष् (६४८)
यं लेभे वरुणः पुत्रं पुरा भरतसत्तम ।
वसिष्ठनामा स मुनिः ख्यात आपव इत्युत ॥ १-१०६-५ (४६५७)
तस्याश्रमपदं पुण्यं मृगपक्षिसमन्वितम् ।
मेरोः पार्श्वे नगेन्द्रस्य सर्वर्तुकुसुमावृतम् ॥ १-१०६-६ (४६५८)
स वारुणिस्तपस्तेपे तस्मिन्भरतसत्तम ।
वने पुण्यकृतां श्रेष्ठः स्वादुमूलफलोदके ॥ १-१०६-७ (४६५९)
दक्षस्य दुहिता या तु सुरभीत्यभिशब्दिता ।
गां प्रजाता तु सा देवी कश्यपाद्भरतर्षभ ॥ १-१०६-८ (४६६०)
अनुग्रहार्थं जगतः सर्वकामदुहां वराम् ।
तां लेभे गां तु धर्मात्मा होमधेनुं स वारुणिः ॥ १-१०६-९ (४६६१)
सा तस्मिंस्तापसारण्ये वसन्ती मुनिसेविते ।
चचार पुण्ये रम्ये च गौरपेतभया तदा ॥ १-१०६-१० (४६६२)
अथ तद्वनमाजग्मुः कदाचिद्भरतर्षभ ।
पृथ्वाद्या वसवः सर्वे देवा देवर्षिसेवितम् ॥ १-१०६-११ (४६६३)
ते सदारा वनं तच्च व्यचरन्त समन्ततः ।
रेमिरे रमणीयेषु पर्वतेषु वनेषु च ॥ १-१०६-१२ (४६६४)
तत्रैकस्याथ भार्या तु वसोर्वासवविक्रम ।
संचरन्ती वने तस्मिन्गां ददर्श सुमध्यमा ॥ १-१०६-१३ (४६६५)
नन्दिनीं नाम राजेन्द्र सर्वकामधुगुत्तमाम् ।
सा विस्मयसमाविष्टा शीलद्रविणसंपदा ॥ १-१०६-१४ (४६६६)
द्यवे वै दर्शयामास तां गां गोवृषभेक्षण ।
आपीनां च सुदोग्ध्रीं च सुवालधिखुरां शुभां ॥ १-१०६-१५ (४६६७)
उपपन्नां गुणैः सर्वैः शीलेनानुत्तमेन च ।
एवंगुणसमायुक्तां वसवे वसुनन्दिनी ॥ १-१०६-१६ (४६६८)
दर्शयामास राजेन्द्र पुरा पौरवनन्दन ।
द्यौस्तदा तां तु दृष्ट्वैव गां गजेन्द्रेन्द्रविक्रम ॥ १-१०६-१७ (४६६९)
उवाच राजंस्तां देवीं तस्या रूपगुणान्वदन् ।
एषा गौरुत्तमा देवी वारुणेरसितेक्षणा ॥ १-१०६-१८ (४६७०)
ऋषेस्तस्य वरारोहे यस्येदं वनमुत्तमम् ।

अस्याः क्षीरं पिबेन्मर्त्यः स्वादु यो वै सुमध्यमे ॥ १-१०६-१९ (४६७१)
दशवर्षसहस्राणि स जीवेत्स्थिरयौवनः। १-१०६-२० (४६७२)
वैशंपायन उवाच ।
एतच्छ्रुत्वा तु सा देवी नृपोत्तम सुमध्यमा ॥ १-१०६-२०क्ष् (६४९)
तमुवाचानवद्याङ्गी भर्तारं दीप्ततेजसम् ।
अस्ति मे मानुषे लोके नरदेवात्मजा सखी ॥ १-१०६-२१ (४६७३)
नाम्नाजितवती नाम रूपयौवनशालिनी ।
उशीनरस्य राजर्षेः सत्यसन्धस्य धीमतः ॥ १-१०६-२२ (४६७४)
दुहिता प्रथिता लोके मानुषे रूपसंपदा ।
तस्या हेतोर्महाभाग सवत्सां गां ममेप्सिताम् ॥ १-१०६-२३ (४६७५)
आनयस्वामरश्रेष्ठ त्वरितं पुण्यवर्धन ।
यावदस्याः पयः पीत्वा सा सखी मम मानद ॥ १-१०६-२४ (४६७६)
मानुषेषु भवत्वेका जरारोगविवर्जिता ।
एतन्मम महाभाग कर्तुमर्हस्यनिन्दित ॥ १-१०६-२५ (४६७७)
प्रियात्प्रियतरं ह्यस्मान्नास्ति मेऽन्यत्कथंचन ।
एतच्छ्रुत्वा वचस्तस्या देव्याः प्रियचिकीर्षया ॥ १-१०६-२६ (४६७८)
पृथ्वाद्यैर्भ्रातृभिः सार्धं द्यौस्तदा तां जहार गाम् ।
तया कमलपत्राक्ष्या नियुक्तो द्यौस्तदा नृप ॥ १-१०६-२७ (४६७९)
ऋषेस्तस्य तपस्तीव्रं न शशाक निरीक्षितुम् ।
हृता गौः सा तदा तेन प्रपातस्तु न तर्कितः ॥ १-१०६-२८ (४६८०)
अथाश्रमपदं प्राप्तः फलान्यादाय वारुणिः ।
न चापश्यत्स गां तत्र सवत्सां काननोत्तमे ॥ १-१०६-२९ (४६८१)
ततः स मृगयामास वने तस्मिंस्तपोधनः ।
नाध्यागमच्च मृगयंस्तां गां मुनिरुदारधीः ॥ १-१०६-३० (४६८२)
ज्ञात्वा तथाऽपनीतां तां वसुभिर्दिव्यदर्शनः ।
ययौ क्रोधवशं सद्यः शशाप च वसूंस्तदा ॥ १-१०६-३१ (४६८३)
यस्मान्मे वसवो जह्रुर्गां वै दोग्ध्रीं सुवालधिम् ।
तस्मात्सर्वे जनिष्यन्ति मानुषेषु न संशयः ॥ १-१०६-३२ (४६८४)
एवं शशाप भगवान्वसूंस्तान्भरतर्षभ ।
वशं क्रोधस्य संप्राप्त आपवो मुनिसत्तमः ॥ १-१०६-३३ (४६८५)
शप्त्वा च तान्महाभागस्तपस्येव मनो दधे ।
एवं स शप्तवान्राजन्वसूनष्टौ तपोधनः ॥ १-१०६-३४ (४६८६)
महाप्रभावो ब्रह्मर्षिर्देवान्क्रोधसमन्वितः ।
ग्एवं शप्तास्ततस्तेन मुनिना यामुनेन वै ॥ १-१०६-३५ (४६८७)
अष्टौ समस्ता वसवो दिवो दोषेण सत्तम।'
अथाश्रमपदं प्राप्तास्ते वै भूयो महात्मनः ॥ १-१०६-३६ (४६८८)

शप्ताः स्म इति जानन्त ऋषिं तमुपचक्रमुः ।
प्रसादयन्तस्तमृषिं वसवः पार्थिवर्षभ ॥ १-१०६-३७ (४६८९)
लेभिरे न च तस्मात्ते प्रसादमृषिसत्तमात् ।
आपवात्पुरुषव्याघ्र सर्वधर्मविशारदात् ॥ १-१०६-३८ (४६९०)
उवाच च स धर्मात्मा शप्ता यूयं धरादयः ।
अनुसंवत्सरात्सर्वे शापमोक्षमवाप्स्यथ ॥ १-१०६-३९ (४६९१)
अयं तु यत्कृते यूयं मया शप्ताः स वत्स्यति ।
द्यौस्तदा मानुषे लोके दीर्घकालं स्वकर्मणः ॥ १-१०६-४० (४६९२)
नानृतं तच्चिकीर्षामि क्रुद्धो युष्मान्यदब्रुवम् ।
न प्रजास्यति चाप्येष मानुषेषु महामनाः ॥ १-१०६-४१ (४६९३)
भविष्यति च धर्मात्मा सर्वशास्त्रविशारदः ।
पितुः प्रियहिते युक्तः स्त्रीभोगान्वर्जयिष्यति ॥ १-१०६-४२ (४६९४)
एवमुक्त्वा वसून्सर्वान्सजगाम महानृषिः ।
ततो मामुपजग्मुस्ते समेता वसवस्तदा ॥ १-१०६-४३ (४६९५)
अयाचन्त च मां राजन्वरं तच्च मया कृतम् ।
जाताञ्जातान्प्रक्षिपास्मान्स्वयं गङ्गे त्वमम्भसि ॥ १-१०६-४४ (४६९६)
एवं तेषामहं सम्यक् शप्तानां राजसत्तम ।
मोक्षार्थं मानुषाल्लोकाद्यथावत्कृतवत्यहम् ॥ १-१०६-४५ (४६९७)
अयं शापादृषेस्तस्य एक एव नृपोत्तम ।
द्यौ राजन्मानुषे लोके चिरं वत्स्यति भारत ॥ १-१०६-४६ (४६९८)
अयं कुमारः पुत्रस्ते विवृद्धः पुनरेष्यति ।
अहं च ते भविष्यामि आह्वानोपगता नृप ॥ १-१०६-४७ (४६९९)
वैशंपायन उवाच। १-१०६-४८क्ष् (६५०)
एतदाख्याय सा देवी तत्रैवान्तरधीयत ।
आदाय च कुमारं तं जगामाथ यथेप्सितम् ॥ १-१०६-४८ (४७००)
स तु देवव्रतो नाम गाङ्गेय इति चाभवत् ।
द्युनामा शान्तनोः पुत्रः शान्तनोरधिको गुणैः ॥ १-१०६-४९ (४७०१)
शान्तनुश्चापि शोकार्तो जगाम स्वपुरं ततः ।
तस्याहं कीर्तयिष्यामि शान्तनोरधिकान्गुणान् ॥ १-१०६-५० (४७०२)
महाभाग्यं च नृपतेर्भारतस्य महात्मनः ।
यस्येतिहासो द्युतिमान्महाभारतमुच्यते ॥ ॥ १-१०६-५१ (४७०३)

इति श्रीमन्महाभारते आदिपर्वणि संभवपर्वणि
षडधिकशततमोऽध्यायः ॥ १०६ ॥

Mahabharata - Adi Parva - Chapter Footnotes

१-१०६-८ गां प्रजाता नन्दिनीं जनितवती ॥
१-१०६-१५ द्यवे द्युसंज्ञाय वसवे ।वालधिः पुच्छम् ॥
१-१०६-१६ वसुनन्दिनी वसुप्रिया ॥
१-१०६-२८ प्रपातो वसिष्ठशापरूपः ॥
१-१०६-४१ न प्रजास्यत्यात्मनः प्रजेच्छां न करिष्यति ।क्यजन्तोयम् ॥
षडधिकशततमोऽध्यायः ॥
१०६ ॥

---

अध्यय१०७
॥ श्रीः ॥
१.१०७. अध्यायः १०७

Mahabharata - Adi Parva - Chapter Topics
शान्तनुभीष्मयोश्चरितम् ॥ १ ॥
शान्तनोः पुनर्गङ्गादर्शनं तया सह संवादश्च ॥ २ ॥
गङ्गादत्तेन भीष्मेण सह शान्तनोः स्वपुरप्रवेशः ॥ ३ ॥
भीष्मस्य यौवराज्येभिषेकः ॥ ४ ॥
शान्तनुभावं ज्ञात्वा दाशाशयानुसारेण प्रतिज्ञापूर्वकं भीष्मेण दाशकन्यानयनम् ॥ ५ ॥
तुष्टेन शान्तनुना भीष्माय स्वच्छन्दमरणवरदानम् ॥ ६ ॥

Mahabharata - Adi Parva - Chapter Text

१-१०७-० (४७०४)
वैशंपायन उवाच। १-१०७-०क्ष् (६५१)
स राजा शान्तनुर्धीमान्देवराजर्षिसत्कृतः ।
धर्मात्मा सर्वलोकेषु सत्यवागिति विश्रुतः ॥ १-१०७-१ (४७०५)
शान्तनोः कीर्तयिष्यामि सर्वानेव गुणानहम् ।
दमो दानं क्षमा बुद्धिर्ह्रीर्धृतिस्तेज उत्तमम् ।
नित्यान्यासन्महासत्वे शान्तनौ पुरुषर्षभे ॥ १-१०७-२ (४७०६)
एवं स गुणसंपन्नो धर्मार्थकुशलो नृपः ।
आसीद्भरतवंशस्य गोप्ता सर्वजनस्य च ॥ १-१०७-३ (४७०७)
कम्बुग्रीवः पृथुव्यंसो मत्तवारणविक्रमः ।
अन्वितः परिपूर्णार्थैः सर्वैर्नृपतिलक्षणैः ॥ १-१०७-४ (४७०८)
तस्य कीर्तिमतो वृत्तमवेक्ष्य सततं नराः ।
धर्म एव परः कामादर्थाच्चेति व्यवस्थितः ॥ १-१०७-५ (४७०९)
एवमासीन्महासत्वः शान्तनुर्भरतर्षभ ।

न चास्य सदृशः कश्चिद्धर्मतः पार्थिवोऽभवत् ॥ १-१०७-६ (४७१०)
वर्तमानं हि धर्मेषु सर्वधर्मभृतां वरम् ।
तं महीपा महीपालं राजराज्येऽभ्यषेचयन् ॥ १-१०७-७ (४७११)
वीतशोकभयाबाधाः सुखस्वप्ननिबोधनाः ।
पतिं भारतगोप्तारं समपद्यन्त भूमिपाः ॥ १-१०७-८ (४७१२)
तेन कीर्तिमता शिष्टाः शक्रप्रतिमतेजसा ।
यज्ञदानक्रियाशीलाः समपद्यन्त भूमिपाः ॥ १-१०७-९ (४७१३)
शान्तनुप्रमुखैर्गुप्ते लोके नृपतिभिस्तदा ।
नियमात्सर्ववर्णानां धर्मोत्तरमवर्तत ॥ १-१०७-१० (४७१४)
ब्रह्म पर्यचरत्क्षत्रं विशः क्षत्रमनुव्रताः ।
ब्रह्मक्षत्रानुरक्ताश्च शूद्राः पर्यचरन्विशः ॥ १-१०७-११ (४७१५)
स हास्तिनपुरे रम्ये कुरूणां पुटभेदने ।
वसन्सागरपर्यन्तामन्वशासद्वसुन्धराम् ॥ १-१०७-१२ (४७१६)
स देवराजसदृशो धर्मज्ञः सत्यवागृजुः ।
दानधर्मतपोयोगाच्छ्रिया परमया युतः ॥ १-१०७-१३ (४७१७)
अरागद्वेषसंयुक्तः सोमवत्प्रियदर्शनः ॥
तेजसा सूर्यकल्पोऽभूद्वायुवेगसमो जवे ।
अन्तकप्रतिमः कोपे क्षमया पृथिवीसमः ॥ १-१०७-१४ (४७१८)
वधः पशुवराहाणां तथैव मृगपक्षिणाम् ।
शान्तनौ पृथिवीपाले नावर्तत तथा नृप ॥ १-१०७-१५ (४७१९)
ब्रह्मधर्मोत्तरे राज्ये शान्तनुर्विनयात्मवान् ।
समं शशास भूतानि कामरागविवर्जितः ॥ १-१०७-१६ (४७२०)
ग्चकोरनेत्रस्ताम्रास्यः सिंहर्षभगतिर्युवा ।
गुणैरनुपमैर्युक्तः समस्तैराभिगामिकैः ।
गम्भीरः सत्वसंपन्नः पूर्णचन्द्रनिभाननः ॥' १-१०७-१७ (४७२१)
देवर्षिपितृयज्ञार्थमारभ्यन्त तदा क्रियाः ।
न चाधर्मेण केषांचित्प्राणिनामभवद्वधः ॥ १-१०७-१८ (४७२२)
असुखानामनाथानां तिर्यग्योनिषु वर्तताम् ।
स एव राजा सर्वेषां भूतानामभवत्पिता ॥ १-१०७-१९ (४७२३)
तस्मिन्कुरुपतिश्रेष्ठे राजराजेश्वरे सति ।
श्रिता वागभवत्सत्यं दानधर्माश्रितं मनः ॥ १-१०७-२० (४७२४)
ग्यज्ञार्थं पशवः सृष्टाः संतानार्थं च मैथुनम् ।'
स समाः षोडशाष्टौ च चतस्रोऽष्टौ तथाऽपराः ।
रतिमप्राप्नुवन्स्त्रीषु बभूव वनगोचरः ॥ १-१०७-२१ (४७२५)
तथारूपस्तथाचारस्तथावृत्तस्तथाश्रुतः ।
गाङ्गेयस्तस्य पुत्रोऽभून्नाम्ना देवव्रतो वसुः ॥ १-१०७-२२ (४७२६)

सर्वास्त्रेषु स निष्णातः पार्थिवेष्वितरेषु च ।
महाबलो महासत्वो महावीर्यो महारथः ॥ १-१०७-२३ (४७२७)
स कदाचिन्मृगं विद्धवा गङ्गामनुसरन्नदीम् ।
भागीरथीमल्पजलां शान्तनुर्दृष्टवान्नृपः ॥ १-१०७-२४ (४७२८)
तां दृष्ट्वा चिन्तयामास शान्तनुः पुरुषर्षभः ।
स्यन्दते किं न्वियं नाद्य सरिच्छ्रेष्ठा यथा पुरा ॥ १-१०७-२५ (४७२९)
ततो निमित्तमन्विच्छन्ददर्श स महामनाः ।
कुमारं रूपसंपन्नं बृहन्तं चारुदर्शनम् ॥ १-१०७-२६ (४७३०)
दिव्यमस्त्रं विकुर्वाणं यथा देवं पुरन्दरम् ।
कृत्स्नां गङ्गां समावृत्य शरैस्तीक्ष्णैरवस्थितम् ॥ १-१०७-२७ (४७३१)
तां शरैराचितां दृष्ट्वा नदीं गङ्गां तदन्तिके ।
अभवद्विस्मितो राजा दृष्ट्वा कर्मातिमानुषम् ॥ १-१०७-२८ (४७३२)
जातमात्रं पुरा दृष्टं तं पुत्रं शान्तनुस्तदा ।
नोपलेभे स्मृतिं धीमानभिज्ञातुं तमात्मजम् ॥ १-१०७-२९ (४७३३)
स तु तं पितरं दृष्ट्वा मोहयामास मायया ।
संमोह्य तु ततः क्षिप्रं तत्रैवान्तरधीयत ॥ १-१०७-३० (४७३४)
तदद्भुतं ततो दृष्ट्वा तत्र राजा स शान्तनुः ।
सङ्कमानः सुतं गङ्गामब्रवीद्दर्शयेति ह ॥ १-१०७-३१ (४७३५)
दर्शयामास तं गङ्गा बिभ्रती रूपमुत्तमम् ।
गृहीत्वा दक्षिणे पाणौ तं कुमारमलङ्कृतम् ॥ १-१०७-३२ (४७३६)
अलङ्कृतामाभरणैर्विरजोम्बरधारिणीम् ।
दृष्टपूर्वामपि स तां नाभ्यजानात्स शान्तनुः ॥ १-१०७-३३ (४७३७)
गङ्गोवाच। १-१०७-३४क्ष् (६५२)
यं पुत्रमष्टमं राजंस्त्वं पुरा मय्यविन्दथाः ।
स चायं पुरुषव्याघ्र सर्वास्त्रविदनुत्तमः ॥ १-१०७-३४ (४७३८)
गृहाणेमं महाराज मया संवर्धितं सुतम् ।
आदाय पुरुषव्याघ्र नयस्वैनं गृहं विभो ॥ १-१०७-३५ (४७३९)
वेदानधिजगे साङ्गान्वसिष्ठादेष वीर्यवान् ।
कृतास्त्रः परमेष्वासो देवराजसमो युधि ॥ १-१०७-३६ (४७४०)
सुराणां संमतो नित्यमसुराणां च भारत ।
उशा वेद यच्छास्त्रमयं तद्वेद सर्वशः ॥ १-१०७-३७ (४७४१)
तथैवाङ्गिरसः पुत्रः सुरसुरनमस्कृतः ।
यद्वेद शास्त्रं तच्चापि कृत्स्नमस्मिन्प्रतिष्ठितम् ॥ १-१०७-३८ (४७४२)
तव पुत्रे महाबाहौ साङ्गोपाङ्गं महात्मनि ।
ऋषिः परैरनाधृष्यो जामदग्न्यः प्रतापवान् ॥ १-१०७-३९ (४७४३)
यदस्त्रं वेद राभश्च तदेतस्मिन्प्रतिष्ठितम् ।

महेष्वासमिमं राजन्राजधर्मार्थकोविदम् ॥ १-१०७-४० (४७४४)
मया दत्तं निजं पुत्रं वीरं वीर गृहं नय। १-१०७-४१ (४७४५)
वैशंपायन उवाच ।
ग्इत्युक्त्वा सा महाभागा तत्रैवान्तरधीयत।'
तयैवं समनुज्ञातः पुत्रमादाय शान्तनुः ॥ १-१०७-४१क्ष् (६५३)
भ्राजमानं यथाऽदित्यमाययौ स्वपुरं प्रति ।
पौरवस्तु पुरीं गत्वा पुरन्दरपुरोपमाम् ॥ १-१०७-४२ (४७४६)
सर्वकामसमृद्धार्थं मेने सोत्मानमात्मना ।
पौरवेषु ततः पुत्रं राज्यार्थमभयप्रदम् ॥ १-१०७-४३ (४७४७)
गुणवन्तं महात्मानं यौवराज्येऽभ्यषेचयत् ।
पौरवाञ्शान्तनोः पुत्रः पितरं च महायशाः ॥ १-१०७-४४ (४७४८)
राष्ट्रं च रञ्जयामास वृत्तेन भरतर्षभ ।
स तथा सह पुत्रेण रममाणो महीपतिः ॥ १-१०७-४५ (४७४९)
वर्तयामास वर्षाणि चत्वार्यमितविक्रमः ।
स कदाचिद्वनं यातो यमुनामभितो नदीम् ॥ १-१०७-४६ (४७५०)
महीपतिरनिर्देश्यमाजिघ्रद्गन्धमुत्तमम् ।
तस्य प्रभवमन्विच्छन्विचचार समन्ततः ॥ १-१०७-४७ (४७५१)
स ददर्श तदा कन्यां दाशानां देवरूपिणीम् ।
तामपृच्छत्स दृष्ट्वैव कन्यामसितलोचनाम् ॥ १-१०७-४८ (४७५२)
कस्य त्वमसि का चासि किं च भीरु चिकीर्षसि ।
साऽब्रवीद्दाशकन्याऽस्मि धर्मार्थं वाहये तरिम् ॥ १-१०७-४९ (४७५३)
पितुर्नियोगाद्भद्रं ते दाशराज्ञो महात्मनः ।
रूपमाधुर्यगन्धैस्तां संयुक्तां देवरूपिणीम् ॥ १-१०७-५० (४७५४)
समीक्ष्य राजा दाशेयीं कामयामास शान्तनुः ।
स गत्वा पितरं तस्या वरयामास तां तदा ॥ १-१०७-५१ (४७५५)
पर्यपृच्छत्ततस्तस्याः पितरं सोत्मकारणात् ।
स च तं प्रत्युवाचेदं दाशराजो महीपतिम् ॥ १-१०७-५२ (४७५६)
जातमात्रैव मे देया वराय वरवर्णिनी ।
हृदि कामस्तु मे कश्चित्तं निबोध जनेश्वर ॥ १-१०७-५३ (४७५७)
यदीमां धर्मपत्नीं त्वं मत्तः प्रार्थयसेऽनघ ।
सत्यवागसि सत्येन समयं कुरु मे ततः ॥ १-१०७-५४ (४७५८)
समयेन प्रदद्यां ते कन्यामहमिमां नृप ।
न हि मे त्वत्समः कश्चिद्वरो जातु भविष्यति ॥ १-१०७-५५ (४७५९)
शान्तनुरुवाच। १-१०७-५६क्ष् (६५४)
श्रुत्वा तव वरं दाश व्यवस्येयमहं तव ।
दातव्यं चेत्प्रदास्यामि न त्वदेयं कथंचन ॥ १-१०७-५६ (४७६०)

दाश उवाच। १-१०७-५७क्ष् (६५५)
अस्यां जायेत यः पुत्रः स राजा पृथिवीपते ।
त्वदूर्ध्वमभिषेक्तव्यो नान्यः कश्चन पार्थिव ॥ १-१०७-५७ (४७६१)
वैशंपायन उवाच। १-१०७-५८क्ष् (६५६)
नाकामयत तं दातुं वरं दाशाय शान्तनुः ।
शरीरजेन तीव्रेण दह्यमानोऽपि भारत ॥ १-१०७-५८ (४७६२)
स चिन्तयन्नेव तदा दाशकन्यां महीपतिः ।
प्रत्ययाद्धास्तिनपुरं कामोपहतचेतनः ॥ १-१०७-५९ (४७६३)
ततः कदाचिच्छोचन्तं शान्तनुं ध्यानमास्थितम् ।
पुत्रो देवव्रतोऽभ्येत्य पितरं वाक्यमब्रवीत् ॥ १-१०७-६० (४७६४)
सर्वतो भवतः क्षेमं विधेयाः सर्वपार्थिवाः ।
तत्किमर्थमिहाभीक्ष्णं परिशोचसि दुःखितः ॥ १-१०७-६१ (४७६५)
ध्यायन्निव च मां राजन्नाभिभाषसि किंचन ।
न चाश्वेन विनिर्यासि विवर्णो हरिणः कृशः ॥ १-१०७-६२ (४७६६)
व्याधिमिच्छामि ते ज्ञातुं प्रतिकुर्यां हि तत्र वै। १-१०७-६३ (४७६७)
ग्वैशंपायन उवाच ।
स तं काममवाच्यं वै दाशकन्यां प्रतीदृशम् ॥ १-१०७-६३क्ष् (६५७)
विवर्तुं नाशकत्तस्मै पिता पुत्रस्य शान्तनुः।'
एवमुक्तः स पुत्रेण शान्तनुः प्रत्यभाषत ॥ १-१०७-६४ (४७६८)
असंशयं ध्यानपरो यथा वत्स तथा शृणु ।
अपत्यं नस्त्वमेवैकः कुले महति भारत ॥ १-१०७-६५ (४७६९)
शस्त्रनित्यश्च सततं पौरुषे पर्यवस्थितः ।
अनित्यतां च लोकानामनुशोचामि पुत्रक ॥ १-१०७-६६ (४७७०)
कथंचित्तव गाङ्गेय विपत्तौ नास्ति नः कुलम् ।
असंशयं त्वमेवैकः शतादपि वरः सुतः ॥ १-१०७-६७ (४७७१)
न चाप्यहं वृथा भूयो दारान्कर्तुमिहोत्सहे ।
संतानस्याविनाशाय कामये भद्रमस्तु ते ॥ १-१०७-६८ (४७७२)
अनपत्यतैकपुत्रत्वमित्याहुर्धर्मवादिनः ।
ग्चक्षुरेकं च पुत्रश्च अस्ति नास्ति च भारत ।
चक्षुर्नाशे तनोर्नाशः पुत्रनाशे कुलक्षयः ॥' १-१०७-६९ (४७७३)
अग्निहोत्रं त्रयी विद्या यज्ञाश्च सहदक्षिणाः ।
सर्वाण्येतान्यपत्यस्य कलां नार्हन्ति षोडशीम् ॥ १-१०७-७० (४७७४)
एवमेतन्मनुष्येषु तच्च सर्वं प्रजास्विति ।
यदपत्यं महाप्राज्ञ तत्र मे नास्ति संशयः ॥ १-१०७-७१ (४७७५)
गअपत्येनानृणो लोके पितॄणां नास्ति संशयः।'
एषा त्रयी पुराणानां देवतानां च शाश्वती ॥ १-१०७-७२ (४७७६)

ग्अपत्यं कर्म विद्या च त्रीणि ज्योतींषि भारत ॥' १-१०७-७३ (४७७७)
त्वं च शूरः सदाऽमर्षी शस्त्रनित्यश्च भारत ।
नान्यत्र युद्धात्तस्मात्ते निधनं विद्यते क्वचित् ॥ १-१०७-७४ (४७७८)
सोऽस्मि संशयमापन्नस्त्वयि शान्ते कथं भवेत् ।
इति ते कारणं तात दुःखस्योक्तमशेषतः ॥ १-१०७-७५ (४७७९)
वैशंपायन उवाच। १-१०७-७६क्ष् (६५८)
ततस्तत्कारणं राज्ञो ज्ञात्वा सर्वमशेषतः ।
देवव्रतो महाबुद्धिः प्रज्ञया चान्वचिन्तयत् ॥ १-१०७-७६ (४७८०)
अपत्यफलसंयुक्तमेतच्छ्रुत्वा पितुर्वचः ।
सूतं भूयोऽपि संतप्त आह्वयामास वै पितुः ॥ १-१०७-७७ (४७८१)
सूतस्तु कुरुमुख्यस्य उपयातस्तदाज्ञया ।
तमुवाच महाप्राज्ञो भीष्मो वै सारथिं पितुः ॥ १-१०७-७८ (४७८२)
त्वं सारथे पितुर्मह्यं सखासि रथधूर्गतः ।
अपि जानासि यदि वै कस्यां भावो नृपस्य तु ॥ १-१०७-७९ (४७८३)
तदाचक्ष्व भवान्पृष्टः करिष्ये न तदन्यथा। १-१०७-८० (४७८४)
सूत उवाच ।
दाशकन्या कुरुश्रेष्ठ तत्र भावः पितुर्गतः ॥ १-१०७-८०क्ष् (६५९)
वृतः स नरदेवेन तदा वचनमब्रवीत् ।
योऽस्यां पुमान्भवेज्जातः स राजा त्वदनन्तरम् ॥ १-१०७-८१ (४७८५)
नाकामयत तं दातुं पिता तव वरं तदा ।
स चापि निश्चयस्तस्य न च दद्यां ततोऽन्यथा ॥ १-१०७-८२ (४७८६)
एतत्ते कथितं वीर कुरुष्व यदनन्तरम्। १-१०७-८३ (४७८७)
वैशंपायन उवाच ।
ततः स पितुराज्ञाय मतं सम्यगवेक्ष्य च ।
ज्ञात्वा च मानसं पुत्रः प्रययौ यमुनां प्रति ॥ १-१०७-८३क्ष् (६६०)
क्षत्रियैः सह धर्मात्मा पुराणैर्धर्मचारिभिः ।
उच्चैश्श्रवसमागम्य कन्यां वव्रे पितुः स्वयम्'॥ १-१०७-८४ (४७८८)
तं दाशः प्रतिजग्राह विधिवत्प्रतिपूज्य च ।
अब्रवीच्चैनमासीनं राजसंसदि भारत ॥ १-१०७-८५ (४७८९)
ग्राज्यशुल्का प्रदातव्या कन्येयं याचतां वर ।
अपत्यं यद्भवेदस्याः स राजाऽस्तु पितुः परम् ॥' १-१०७-८६ (४७९०)
त्वमेवात्र महाबाहो शान्तनोर्वंशवर्धनः ।
पुत्रः शस्त्रभृतां श्रेष्ठः किं नु वक्ष्यामि ते वचः ॥ १-१०७-८७
(४७९१)
ग्कुमारिकायाः शुल्कार्थं किंचिद्वक्ष्यामि भारत।'
कोहि संबन्धखं श्लाघ्यमीप्सितं यौनमीदृशम् ।

अतिक्रामन्न तप्येत साक्षादपि शतक्रतुः ॥ १-१०७-८८ (४७९२)
अपत्यं चैतदार्यस्य यो युष्माकं समो गुणैः ।
यस्य शुक्रात्सत्यवती संभूता वरवर्णिनी ॥१-१०७-८९ (४७९३)
तेन मे बहुशस्तात पिता ते परिकीर्तितः ।
अर्हः सत्यवतीं वोढुं धर्मज्ञः स नराधिपः ॥१-१०७-९० (४७९४)
'इयं सत्यवती देवी पितरं तेऽब्रवीत्तथा ।
अर्थितश्चापिराजर्षिः प्रत्याख्यातः पुरा मया'॥१-१०७-९१ (४७९५)
कन्यापितृत्वात्किंचित्तु वक्ष्यामि त्वां नराधिप ।
बलवत्सपत्नतामत्र दोषं पश्यामि केवलम् ॥१-१०७-९२ (४७९६)
'भूयांसं त्वयि पश्यामि तद्दोषमपराजित।'
यस्य हि त्वं सपत्नः स्या गन्धर्वस्यासुरस्य वा ॥ १-१०७-९३ (४७९७)
न स जातु चिरं जीवेत्त्वयि क्रुद्धे परन्तप ।
एतावानत्र दोषो हि नान्यः कश्चन पार्थिव ॥१-१०७-९४ (४७९८)
एतज्जानीहि भद्रं ते दानादाने परन्तप ॥ १-१०७-९५ (४७९९)
वैशंपायन उवाच।१-१०७-९६क्ष् (६६१)
एवमुक्तस्तु गाङ्गेयस्तद्युक्तं प्रत्यभाषत ।
शृण्वतां भूमिपालानां पितुरर्थाय भारत ॥१-१०७-९६ (४८००)
'इदं वचनमाधत्स्व नास्ति वक्तास्य मत्समः ।
अन्यो जातो न जनिता न च कश्चन संप्रति'॥१-१०७-९७ (४८०१)
एवमेतत्करिष्यामि यथा त्वमनुभाषसे ।
योऽस्यां जनिष्यते पुत्रः स नो राजा भविष्यति ॥१-१०७-९८ (४८०२)
इत्युक्तः पुनरेव स्म तं दाशः प्रत्यभाषत ।
चिकीर्षुर्दुष्करं कर्म राज्यार्थे भरतर्षभ ॥१-१०७-९९ (४८०३)
त्वमेव नाथः संप्राप्तः शान्तनोरमितद्युते ।
कन्यायाश्चैव धर्मात्मन्प्रभुर्दानाय चेश्वरः ॥१-१०७-१०० (४८०४)
इदं तु वचनं सौम्य कार्यं चैव निबोध मे ।
कौमारिकाणां शीलेन वक्ष्याम्यहमरिन्दम ॥१-१०७-१०१ (४८०५)
यत्त्वया सत्यवत्यर्थे सत्यधर्मपरायण ।
राजमध्ये प्रतिज्ञातमनुरूपं तवैव तत् ॥१-१०७-१०२ (४८०६)
नान्यथा तन्महाबाहो संशयोऽत्र न कश्चन ।
तवापत्यं भवेद्यत्तु तत्र नः संशयो महान् ॥१-१०७-१०३ (४८०७)
वैशंपायन उवाच।१-१०७-१०४क्ष् (६६२)
तस्यैतन्मतमाज्ञाय सत्यधर्मपरायणः ।
प्रत्यजानात्तदा राजन्पितुः प्रियचिकीर्षया ॥१-१०७-१०४ (४८०८)
गाङ्गेय उवाच।१-१०७-१०५क्ष् (६६३)
'उच्चैश्श्रवः समाधत्स्व प्रतिज्ञां जनसंसदि ।

ऋषयो वाथ वा देवा भूतान्यन्तर्हितानि च ॥१-१०७-१०५ (४८०९)
यानि यानीह शृण्वन्तु नास्ति वक्तास्य मत्समः।'
दाशराज निबोधेदं वचनं मे नृपोत्तम ॥ १-१०७-१०६ (४८१०)
शृण्वतां भूमिपालानां यद्ब्रवीमि पितुः कृते ।
राज्यं तावत्पूर्वमेव मया त्यक्तं नराधिपाः ॥१-१०७-१०७ (४८११)
अपत्यहेतोरपि च करिष्येऽद्य विनिश्चयम् ।
अद्यप्रभृति मे दाश ब्रह्मचर्यं भविष्यति ॥१-१०७-१०८ (४८१२)
अपुत्रस्यापि मे लोका भविष्यन्त्यक्षया दिवि ।
'न हि जन्मप्रभृत्युक्तं मया किंचिदिहानृतम् ॥१-१०७-१०९ (४८१३)
यावत्प्राणा ध्रियन्ते वै मम देहं समाश्रिताः ।
तावन्न जनयिष्यामि पित्रे कन्यां प्रयच्छ मे ॥१-१०७-११० (४८१४)
परित्यजाम्यहं राज्यं मैथुनं चापि सर्वशः ।
ऊर्ध्वरेता भविष्यामि दाश सत्यं ब्रवीमि ते ॥' १-१०७-१११ (४८१५)
वैशंपायन उवाच।१-१०७-११२क्ष् (६६४)
तस्य तद्वचनं श्रुत्वा संप्रहृष्टतनूरुहः ।
ददानीत्येव तं दाशो धर्मात्मा प्रत्यभाषत ॥१-१०७-११२ (४८१६)
ततोन्तरिक्षेऽप्सरसो देवाः सर्षिगणास्तदा ।
'तद्दृष्टा दुष्करं कर्म प्रशशंसुश्च पार्थिवाः ॥' १-१०७-११३ (४८१७)
अभ्यवर्षन्त कुसुमैर्भीष्मोऽयमिति चाब्रुवन् ।
ततः स पितुरर्थाय तामुवाच यशस्विनीम् ॥१-१०७-११४ (४८१८)
अधिरोह रथं मातर्गच्छावः स्वगृहानिति ।
एवमुक्त्वा तु भीष्मस्तां रथमारोप्य भामिनीं ॥१-१०७-११५ (४८१९)
आगम्य हास्तिनपुरं शान्तनोः संन्यवेदयत् ।
तस्य तद्दुष्करं कर्म प्रशशंसुर्नराधिपाः ॥१-१०७-११६ (४८२०)
समेताश्च पृथक्चैव भीष्मोयमिति चाब्रुवन् ।
तच्छ्रुत्वा दुष्करं कर्म कृतं भीष्मेण शान्तनुः ॥१-१०७-११७ (४८२१)
बभूव दुःखितो राजा चिररात्राय भारत ।
स तेन कर्मणा सूनोः प्रीतस्तस्मै वरं ददौ ॥' १-१०७-११८ (४८२२)
स्वच्छन्दमरणं तुष्टो ददौ तस्मै महात्मने ।
न ते मृत्युः प्रभविता यावज्जीवितुमिच्छसि ॥१-१०७-११९ (४८२३)
त्वत्तो ह्यनुज्ञां संप्राप्य मृत्युः प्रभविताऽनघ ॥ १-१०७-१२० (४८२४)

इति श्रीमन्महाभारते आदिपर्वणि संभवपर्वणि
सप्ताधिकशततमोऽध्यायः ॥१०७ ॥
Mahabharata - Adi Parva - Chapter Footnotes

१-१०७-१२ पुटभेदने पत्तने ॥
१-१०७-१६ ब्रह्मधर्मोत्तरे अहिंसाधर्मप्रधाने ॥
१-१०७-२० वाक् सत्यं श्रिताभवत् ॥
१-१०७-३६ अधिजगे अधीतवान् ॥
१-१०७-४९ तरिं नावम् ॥
१-१०७-५६ व्यवस्येयं विनिश्चिनुयम् ॥
१-१०७-५८ शरीरजेन कामेन ॥
१-१०७-६२ हरिणः पाण्डुगात्रः ॥
१-१०७-७२ पुराणानां पुरातनानाम् ॥
१-१०७-९५ दाने वसुवचनं अदाने बलवत्सपत्नता अत्र कारणमिति शेषः ॥
सप्तोत्तरशततमोऽध्यायः ॥
१०७ ॥

---

अध्यय१०८
॥ श्रीः ॥
१.१०८. अध्यायः १०८

Mahabharata - Adi Parva - Chapter Topics
शान्तनुसत्यवतीविवाहः ॥ १ ॥
चित्राङ्गदविचित्रवीर्ययोरुत्पत्तिः ॥ २ ॥
शान्तनुमरणम् ॥ ३ ॥
चित्राङ्गदमरणम् ॥ ४ ॥
विचित्रवीर्यस्य राज्येऽभिषेकः ॥ ५ ॥

Mahabharata - Adi Parva - Chapter Text

१-१०८-० (४८२५)
वैशंपायन उवाच। १-१०८-०क्ष् (६६५)
ग्चेदिराजसुतां ज्ञात्वा दाशराजेन वर्धिताम् ।
विवाहं कारयामास शास्त्रदृष्टेन कर्मणा ॥' १-१०८-१ (४८२६)
ततो विवाहे निर्वृत्ते स राजा शान्तनुर्नृपः ।
तां कन्यां रूपसंपन्नां स्वगृहे संन्यवेशयत् ॥ १-१०८-२ (४८२७)
ततः शान्तनवो धीमान्सत्यवत्यामजायत ।
वीरश्चित्राङ्गदो नाम वीर्यवान्पुरुषेश्वरः ॥ १-१०८-३ (४८२८)
अथापरं महेष्वासं सत्यवत्यां सुतं प्रभुः ।
विचित्रवीर्यं राजानं जनयामास वीर्यवान् ॥ १-१०८-४ (४८२९)
अप्राप्तवति तस्मिंस्तु यौवनं पुरुषर्षभे ।

स राजा शान्तनुर्धीमान्कालधर्ममुपेयिवान् ॥ १-१०८-५ (४८३०)
स्वर्गते शान्तनौ भीष्मश्चित्राङ्गदमरिन्दनम् ।
स्थापयामास वै राज्ये सत्यवत्या मते स्थितः ॥ १-१०८-६ (४८३१)
स तु चित्राङ्गदः शौर्यात्सर्वांश्चिक्षेप पार्थिवान् ।
मनुष्यं न हि मेन स कंचित्सदृशमात्मनः ॥ १-१०८-७ (४८३२)
तं क्षिपन्तं सुरांश्चैव मनुष्यानसुरांस्तथा ।
गन्धर्वराजो बलवांस्तुल्यनामाऽभ्ययात्तदा ॥ १-१०८-८ (४८३३)
गन्धर्व उवाच । १-१०८-९क्ष् (६६६)
ग्त्वं वै सदृशनामासि युद्धं देहि नृपात्मज ।
नाम वाऽन्यत्प्रगृह्णीष्व यदि युद्धं न दास्यसि ॥ १-१०८-९ (४८३४)
त्वयाहं युद्धमिच्छामि त्वत्सकाशं तु नामतः ।
आगतोस्मि वृथाऽऽभाष्य न गच्छेन्नाम ते मम ॥ १-१०८-१० (४८३५)
इत्युक्त्वा गर्जमानौ तौ हिरण्वत्यास्तटं गतौ'।
तेनास्य सुमहद्युद्धं कुरुक्षेत्रे बभूव ह ॥ १-१०८-११ (४८३६)
तयोर्बलवतोस्तत्र गन्धर्वकुरुमुख्ययोः ।
नद्यास्तीरे हिरण्वत्याः समास्तिस्रोऽभवद्रणः ॥ १-१०८-१२ (४८३७)
तस्मिन्विमर्दे तुमुले शस्त्रवर्षसमाकुले ।
मायाधिकोऽवधीद्वीरं गन्धर्वः कुरुसत्तमम् ॥ १-१०८-१३ (४८३८)
स हत्वा तु नरश्रेष्ठं चित्राङ्गदमरिन्दमम् ।
अन्ताय कृत्वा गन्धर्वो दिवमाचक्रमे ततः ॥ १-१०८-१४ (४८३९)
तस्मिन्पुरुषशार्दूले निहते भूरितेजसि ।
भीष्मः शान्तनवो राजा प्रेतकार्याण्यकारयत् ॥ १-१०८-१५ (४८४०)
विचित्रवीर्यं च तदा बालमप्राप्तयौवनम् ।
कुरुराज्ये महाबाहुरभ्यषिञ्चदनन्तरम् ॥ १-१०८-१६ (४८४१)
विचित्रवीर्यः स तदा भीष्मस्य वचने स्थितः ।
अन्वशासन्महाराज पितृपैतामहं पदम् ॥ १-१०८-१७ (४८४२)
स धर्मशास्त्रकुशलं भीष्मं शान्तनवं नृपः ।
पूजयामास धर्मेण स चैनं प्रत्यपालयत् ॥ ॥ १-१०८-१८ (४८४३)

इति श्रीमन्महाभारते आदिपर्वणि संभवपर्वणि
अष्टाधिकशततमोऽध्यायः ॥ १०८ ॥

---

अध्यय१०९
॥ श्रीः ॥
१.१०९. अध्यायः १०९

भीष्मस्य काशिपतिकन्याहरणार्थं वाराणसीगमनम् ॥ १ ॥
कन्यां हृतवता भीष्मेण युद्धे राज्ञां पराजयः ॥ २ ॥
मध्येमार्गं साल्वपराजयः ॥ ३ ॥
विचित्रवीर्यविवाहोपक्रमे तमनिच्छन्त्या ज्येष्ठाया अम्बयाः साल्वं प्रति गमनम् ॥ ४ ॥
तेन प्रत्याख्यातायाः पुनर्भीष्मं प्राप्ताय अम्बायाः भीष्मेण निराकरणम् ॥ ५ ॥
भीष्मजिघांसया तपस्यन्त्या अम्बायाः प्रसन्नात्कुमारान्मालाप्राप्तिः ॥ ६ ॥

Mahabharata - Adi Parva - Chapter Text

१-१०९-० (४८४४)
वैशंपायन उवाच। १-१०९-०क्ष् (६६७)
हते चित्राङ्गदे भीष्मो बाले भ्रातरि कौरव ।
पालयामास तद्राज्यं सत्यवत्या मते स्थितः ॥ १-१०९-१ (४८४५)
ग्तथा विचित्रवीर्यं तु वर्तमानं सुखेऽतुले।'
संप्राप्तयौवनं दृष्ट्वा भ्रातरं धीमतां वरः ।
भीष्मो विचित्रवीर्यस्य विवाहायाकरोन्मतिम् ॥ १-१०९-२ (४८४६)
अथ काशिपतेर्भीष्मः कन्यास्तिस्रोऽप्सरोपमाः ।
शुश्राव सहिता राजन्वृण्वाना वै स्वयंवरम् ॥ १-१०९-३ (४८४७)
ततः स रथिनां श्रेष्ठो रथेनैकेन शत्रुजित् ।
जगामानुमते मातुः पुरीं वाराणसीं प्रभुः ॥ १-१०९-४ (४८४८)
तत्र राज्ञः समुदितान्सर्वतः समुपागतान् ।
ददर्श कन्यास्ताश्चै भीष्मः शान्तनुनन्दनः ॥ १-१०९-५ (४८४९)
ग्तासां कामेन संमत्ताः सहिताः काशिकोसलाः ।
वङ्गाः पुण्ड्राः कलिङ्गाश्च ते जग्मुस्तां पुरीं प्रति ॥' १-१०९-६ (४८५०)
कीर्त्यमानेषु राज्ञां तु तदा नामसु सर्वशः ।
एकाकिनं तदा भीष्मं वृद्धं शान्तनुनन्दनम् ॥ १-१०९-७ (४८५१)
सोद्विग्ना इव तं दृष्ट्वा कन्याः परमशोभनाः ।
अपाक्रामन्त ताः सर्वा वृद्ध इत्येव चिन्तया ॥ १-१०९-८ (४८५२)
वृद्धः परमधर्मात्मा वलीपलितधारणः ।
किंकारणमिहायातो निर्लज्जो भरतर्षभः ॥ १-१०९-९ (४८५३)
मिथ्याप्रतिज्ञो लोकेषु किं वदिष्यति भारत ।
ब्रह्मचारीति भीष्मो हि वृथैव प्रथितो भुवि ॥ १-१०९-१० (४८५४)
इत्येवं प्रबुवन्तस्ते हसन्ति स्म नृपाधमाः। १-१०९-११ (४८५५)
वैशंपायन उवाच ।

क्षत्रियाणां वचः श्रुत्वा भीष्मश्चुक्रोध भारत ॥ १-१०९-११क्ष् (६६८)
भीष्मस्तदा स्वयं कन्या वरयामास ताः प्रभुः ।
उवाच च महीपालान्राजञ्जलदनिःस्वनः ॥१-१०९-१२ (४८५६)
रथमारोप्य ताः कन्या भीष्मः प्रहरतां वरः ।
आहूय दानं कन्यानां गुणवद्भ्यः स्मृतं बुधैः ॥१-१०९-१३ (४८५७)
अलङ्कृत्य यथाशक्ति प्रदाय च धनान्यपि ।
प्रयच्छन्त्यपरे कन्यां मिथुनेन गवामपि ॥१-१०९-१४ (४८५८)
वित्तेन कथितेनान्ये बलेनान्येऽनुमान्य च ।
प्रमत्तामुपयन्त्यन्ये स्वयमन्ये च विन्दते ॥१-१०९-१५ (४८५९)
आर्षं विधिं पुरस्कृत्य दारान्विन्दन्ति चापरे ।
अष्टमं तमथो वित्त विवाहं कविभिर्वृतम् ॥१-१०९-१६ (४८६०)
स्वयंवरं तु राजन्याः प्रशंसन्त्युपयान्ति च ।
प्रमथ्य तु हृतामाहुर्ज्यायसीं धर्मवादिनः ॥१-१०९-१७ (४८६१)
ता इमाः पृथिवीपाला जिहीर्षामि बलादितः ।
ते यतध्वं परं शक्त्या विजयायेतराय वा ॥१-१०९-१८ (४८६२)
स्थितोऽहं पृथिवीपाला युद्धाय कृतनिश्चयः। १-१०९-१९ (४८६३)
वैशंपायन उवाच ।
एवमुक्त्वा महीपालान्काशिराजं च वीर्यवान् ॥ १-१०९-१९क्ष् (६६९)
सर्वाः कन्याः स कौरव्यो रथमारोप्य च स्वकम् ।
आमन्त्र्य च स तान्प्रायाच्छीघ्रं कन्याः प्रगृह्य ताः ॥१-१०९-२० (४८६४)
ततस्ते पार्थिवाः सर्वे समुत्पेतुरमर्षिताः ।
संस्पृशन्तः स्वकान्बाहून्दशन्तो दशनच्छदान् ॥१-१०९-२१ (४८६५)
तेषामाभरणान्याशु त्वरितानां विमुञ्चताम् ।
आमुञ्चतां च वर्माणि संभ्रमः सुमहानभूत् ॥१-१०९-२२ (४८६६)
ताराणामिव संपातो बभूव जनमेजय ।
भूषणानां च सर्वेषां कवचानां च सर्वशः ॥१-१०९-२३ (४८६७)
सवर्मभिर्भूषणैश्च प्रकीर्यद्भिरितस्ततः ।
सक्रोधामर्षजिह्मभ्रूकषायीकृतलोचनाः ॥१-१०९-२४ (४८६८)
सूतोपक्लृप्तान् रुचिरान्सदश्वैरुपकल्पितान् ।
रथानास्थाय ते वीराः सर्वप्रहरणान्विताः ॥१-१०९-२५ (४८६९)
प्रयान्तमथ कौरव्यमनुसस्रुरुदायुधाः ।
ततः समभवद्युद्धं तेषां तस्य च भारत ।
एकस्य च बहूनां च तुमुलं रोमहर्षणम् ॥ १-१०९-२६ (४८७०)
ते त्विषून्दशसाहस्रांस्तस्मिन्युगपदाक्षिपन् ।
अप्राप्तांश्चैव तानाशु भीष्मः सर्वांस्तथाऽन्तरा ॥१-१०९-२७ (४८७१)
अच्छिनच्छरवर्षेण महता लोमवाहिना ।

ततस्ते पार्थिवाः सर्वे सर्वतः परिवार्य तम् ॥ १-१०९-२८ (४८७२)
ववृषुः शरवर्षेण वर्षेणवाद्रिमम्बुदाः ।
स तं बाणमयं वर्षं शरैरावार्य सर्वतः ॥ १-१०९-२९ (४८७३)
ततः सर्वान्महीपालान्पर्यविध्यत्त्रिभिस्त्रिभिः ।
एकैकस्तु ततो भीष्मं राजन्विव्याध पञ्चभिः ॥ १-१०९-३० (४८७४)
स च तान्प्रतिविव्याध द्वाभ्यां द्वाभ्यां पराक्रमन् ।
तद्युद्धमासीत्तुमुलं घोरं देवासुरोपमम् ॥ १-१०९-३१ (४८७५)
पश्यतां लोकवीराणां शरशक्तिसमाकुलम् ।
स धनूंषि ध्वजाग्राणि वर्माणि च शिरांसि ॥ १-१०९-३२ (४८७६)
चिच्छेद समरे भीष्मः शतशोथ सहस्रशः ।
तस्यातिपुरुषं कर्म लाघवं रथचारिणः ॥ १-१०९-३३ (४८७७)
रक्षणं चात्मनः संख्ये शत्रवोऽप्यभ्यपूजयन् ।
ग्अक्षतः क्षपयित्वान्यानसङ्ख्येयपराक्रमः ॥ १-१०९-३४ (४८७८)
आनिनाय स काश्यस्य सुताः सागरगासुतः।'
तान्विनिर्जित्य तु रणे सर्वशस्त्रभृतां वरः ॥ १-१०९-३५ (४८७९)
कन्याभिः सहितः प्रायाद्भारतो भारतान्प्रति ।
ततस्तं पृष्ठतो राजञ्शाल्वराजो महारथः ॥ १-१०९-३६ (४८८०)
अभ्यगच्छदमेयात्मा भीष्मं शान्तनवं रणे ।
वारणं जघने भिन्दन्दन्ताभ्यामपरो यथा ॥ १-१०९-३७ (४८८१)
वासितामनुसंप्राप्तो यूथपो बलिनां वरः ।
स्त्रीकामस्तिष्ठतिष्ठेति भीष्ममाह स पार्थिवः ॥ १-१०९-३८ (४८८२)
साल्वराजो महाबाहुरमर्षेण प्रचोदितः ।
ततः स पुरुषव्याघ्रो भीष्मः परबलार्दनः ॥ १-१०९-३९ (४८८३)
तद्वाक्याकुलितः क्रोधाद्विधूमोग्निरिव ज्वलन् ।
विततेषुधनुष्पाणिर्विकुञ्चितललाटभृत् ॥ १-१०९-४० (४८८४)
क्षत्रधर्मं समास्थाय व्यपेतभयसंभ्रमः ।
निवर्तयामास रथं साल्वं प्रति महारथः ॥ १-१०९-४१ (४८८५)
निवर्तमानं तं दृष्ट्वा राजानः सर्व एव ते ।
प्रेक्षकाः समपद्यन्त भीष्मसाल्वसमागमे ॥ १-१०९-४२ (४८८६)
तौ वृषाविव नर्दन्तौ बलिनौ वासितान्तरे ।
अन्योन्यमभिवर्तेतां बलविक्रमशालिनौ ॥ १-१०९-४३ (४८८७)
ततो भीष्मं शान्तनवं शरैः शतसहस्रशः ।
साल्वराजो नरश्रेष्ठः समवाकिरदाशुगैः ॥ १-१०९-४४ (४८८८)
पूर्वमभ्यर्दितं दृष्ट्वा भीष्मं साल्वेन ते नृपाः ।
विस्मिताः समपद्यन्त साधुसाध्विति चाब्रुवन् ॥ १-१०९-४५ (४८८९)
लाघवं तस्य ते दृष्ट्वा समरे सर्वपार्थिवाः ।

अपूजयन्त संहृष्टा वाग्भिः साल्वं नराधिपम् ॥ १-१०९-४६ (४८९०)
क्षत्रियाणां ततो वाचः श्रुत्वा परपुञ्जयः ।
क्रुद्धः शान्तनवो भीष्मस्तिष्ठतिष्ठेत्यभाषत ॥ १-१०९-४७ (४८९१)
सारथिं चाब्रवीत्क्रुद्धो याहि यत्रैष पार्थिवः ।
यावदेनं निहन्म्यद्य भुजङ्गमिव पक्षिराट् ॥ १-१०९-४८ (४८९२)
ततोऽस्त्रं वारुणं सम्यग्योजयामास कौरवः ।
तेनाश्वांश्चतुरोऽमृद्नात्साल्वराजस्य भूपते ॥ १-१०९-४९ (४८९३)
अस्त्रैरस्त्राणि संवार्य साल्वराजस्य कौरवः ।
भीष्मो नृपतिशार्दूल न्यवधीत्तस्य सारथिम् ॥ १-१०९-५० (४८९४)
अस्त्रेण चास्याथैन्द्रेण न्यवधीत्तुरगोत्तमान् ।
कन्याहेतोर्नरश्रेष्ठ भीष्मः शान्तनवस्तदा ॥ १-१०९-५१ (४८९५)
जित्वा विसर्जयामास जीवन्तं नृपसत्तमम् ।
ततः साल्वः स्वनगरं प्रययौ भरतर्षभ ॥ १-१०९-५२ (४८९६)
स्वराज्यमन्वशाच्चैव धर्मेण नृपतिस्तदा ।
राजानो ये च तत्रासन्स्वयंवरदिदृक्षवः ॥ १-१०९-५३ (४८९७)
स्वान्येव तेऽपि राष्ट्राणि जग्मुः परपुरञ्जयाः ।
एवं विजित्य ताः कन्या भीष्मः प्रहरतां वरः ॥ १-१०९-५४ (४८९८)
प्रययौ हास्तिनपुरं यत्र राजा स कौरवः ।
विचित्रवीर्यो धर्मात्मा प्रशास्ति वसुधामिमाम् ॥ १-१०९-५५ (४८९९)
यथा पितास्य कौरव्यः शान्तनुर्नृपसत्तमः ।
सोऽचिरेणैव कालेन अत्यक्रामन्नराधिप ॥ १-१०९-५६ (४९००)
वनानि सरितश्चैव शैलांश्च विनिधान्द्रुमान् ।
अक्षतः क्षपयित्वाऽरीन्सङ्ख्येऽसङ्ख्येयविक्रमः ॥ १-१०९-५७ (४९०१)
आनयामास काश्यस्य सुताः सागरगासुतः ।
स्नुषा इव स धर्मात्मा भगिनीरिव चानुजाः ॥ १-१०९-५८ (४९०२)
यथा दुहितश्चैव परिगृह्य ययौ कुरून् ।
आनिन्ये स महाबाहुर्भ्रातुः प्रियचिकीर्षया ॥ १-१०९-५९ (४९०३)
ताः सर्वगुणसंपन्ना भ्राता भ्रात्रे यवीयसे ।
भीष्मो विचित्रवीर्याय प्रददौ विक्रमाहृताः ॥ १-१०९-६० (४९०४)
एवं धर्मेण धर्मज्ञः कृत्वा कर्मातिमानुषम् ।
भ्रातुर्विचित्रवीर्यस्य विवाहायोपचक्रमे ॥ १-१०९-६१ (४९०५)
सत्यवत्या सह मिथः कृत्वा निश्चयमात्मवान् ।
विवाहं कारयिष्यन्तं भीष्मं काशिपतेः सुता ।
ज्येष्ठा तासामिदं वाक्यमब्रवीद्धसती तदा ॥ १-१०९-६२ (४९०६)
मया सौभपतिः पूर्वं मनसा हि वृतः पतिः ।
तेन चास्मि वृता पूर्वमेष कामश्च मे पितुः ॥ १-१०९-६३ (४९०७)

मया वरयितव्योऽभूत्साल्वस्तस्मिन्स्वयंवरे ।
एतद्विज्ञाय धर्मज्ञ धर्मतत्त्वं समाचर ॥ १-१०९-६४ (४९०८)
एवमुक्तस्तया भीष्मः कन्यया विप्रसंसदि ।
चिन्तामभ्यगमद्वीरो युक्तां तस्यैव कर्मणः ॥ १-१०९-६५ (४९०९)
ग्अन्यसक्ता त्वियं कन्या ज्येष्ठा त्वम्बा मया जिता ।
वाचा दत्ता मनोदत्ता कृतमङ्गलवाचना ॥ १-१०९-६६ (४९१०)
निर्दिष्टा तु परस्यैव सा त्याज्या परचिन्तिनी ।
इत्युक्त्वा चानुमान्यैव भ्रातरं स्ववशानुगम् ॥' १-१०९-६७ (४९११)
विनिश्चित्य स धर्मज्ञो ब्राह्मणैर्वेदपारगैः ।
अनुजज्ञे तदा ज्येष्ठामम्बां काशिपतेः सुताम् ॥ १-१०९-६८ (४९१२)
अम्बिकाम्बालिके भार्ये प्रादाद्भ्रात्रे यवीयसे ।
भीष्मो विचित्रवीर्याय विधिदृष्टेन कर्मणा ॥ १-१०९-६९ (४९१३)
तयोः पाणी गृहीत्वा तु रूपयौवनदर्पितः ।
विचित्रवीर्यो धर्मात्मा नाम्बामैच्छत्कथंचन ॥ १-१०९-७० (४९१४)
ग्अम्बामन्यस्य कीर्त्यन्तीमब्रवीच्चारुदर्शनाम्। १-१०९-७१ (४९१५)
विचित्रवीर्य उवाच ।
पापस्य फलमेवैष कामोऽसाधुर्निरर्थकः ।
परतन्त्रोपभोगो मामार्य नाऽऽयोक्तुमर्हसि ॥ १-१०९-७१क्ष् (६७०)
भीष्म उवाच। १-१०९-७२क्ष् (६७१)
प्रातिष्ठच्छान्तनोर्वंशस्तात यस्य त्वमन्वयः ।
अकामवृत्तो धर्मात्मन्साधु मन्ये मतं तव ॥ १-१०९-७२ (४९१६)
इत्युक्त्वाम्बां समालोक्य विधिवद्वाक्यमब्रवीत् ।
विसृष्टा ह्यसि गच्छ त्वं यथाकाममनिन्दिते ॥ १-१०९-७३ (४९१७)
नानियोज्ये समर्थोऽहं नियोक्तुं भ्रातरं प्रियम् ।
अन्यबावगतां चापि को नारीं वासयेद्गृहे ॥ १-१०९-७४ (४९१८)
अतस्त्वां न नियोक्ष्यामि अन्यकामासि गम्यताम् ।
अहमप्यूर्ध्वरेता वै निवृत्तो दारकर्मणि ॥ १-१०९-७५ (४९१९)
न संबन्धस्तदावाभ्यां भविता वै कथंचन। १-१०९-७६ (४९२०)
वैशंपायन उवाच ।
इत्युक्ता सा गता तत्र सखीभिः परिवारिता ॥ १-१०९-७६क्ष् (६७२)
निर्दिष्टा हि शनै राजन्साल्वराजपुरं प्रति ।
अथाम्बा साल्वमागम्य साऽब्रवीत्प्रतिपूज्य तं ॥ १-१०९-७७ (४९२१)
पुरा निर्दिष्टभावा त्वामागतास्मि वरानन ।
देवव्रतं समुत्सृज्य सानुजं भरतर्षभम् ॥ १-१०९-७८ (४९२२)
प्रतिगृह्णीष्व भद्रं ते विधिवन्मां समुद्यताम् ॥ १-१०९-७९ (४९२३)
वैशंपायन उवाच। १-१०९-८०क्ष् (६७३)

तयैवमुक्तः साल्वोपि प्रहसन्निदमब्रवीत् ।
निर्जिताऽसीह भीष्मेण मां विनिर्जित्य राजसु ॥ १-१०९-८० (४९२४)
अन्येन निर्जितां भद्रे विसृष्टां तेन चालयात् ।
न गृह्णामि वरारोहे तत्र चैव तु गम्यताम् ॥ १-१०९-८१ (४९२५)
वैशंपायन उवाच। १-१०९-८२क्ष् (६७४)
इत्युक्ता सा समागम्य कुरुराज्यमनुत्तमम् ।
अम्बाब्रवीत्ततो भीष्मं त्वयाऽहं सहसा हृता ॥ १-१०९-८२ (४९२६)
क्षत्रधर्ममवेक्षस्व त्वं भर्ता मम धर्मतः ।
यां यः स्वयंवरे कन्यां निर्जयेच्छौर्यसंपदा ॥ १-१०९-८३ (४९२७)
राज्ञः सर्वान्विनिर्जित्य स तामुद्वाहयेद्ध्रुवम् ।
अतस्त्वमेव भर्ता मे त्वयाऽहं निर्जिता यतः ॥ १-१०९-८४ (४९२८)
तस्माद्वहस्व मां भीष्म निर्जितां संसदि त्वया ।
ऊर्ध्वरेता ह्यहमिति प्रत्युवाच पुनःपुनः ॥ १-१०९-८५ (४९२९)
भीष्मं सा चाब्रवीदम्बा यथाजैषीस्तथा कुरु ।
एवमन्वगमद्भीष्मं षट्समाः पुष्करेक्षणा ॥ १-१०९-८६ (४९३०)
ऊर्ध्वरेतास्त्वहं भद्रे विवाहविमुखोऽभवम् ।
तमेव साल्वं गच्छ त्वं यः पुरा मनसा वृतः ॥ १-१०९-८७ (४९३१)
अन्यसक्तं किमर्थं त्वमात्मानमवदः पुरा ।
अन्यसक्तां वधूं कन्यां वासयेत्स्वगृहे न हि ॥ १-१०९-८८ (४९३२)
नाहमुद्वाहयिष्ये त्वां मम भ्रात्रे यवीयसे ।
विचित्रवीर्याय शुभे यथेष्टं गम्यतामिति ॥ १-१०९-८९ (४९३३)
भूयः साल्वं समभ्येत्य राजन्गृह्णीष्व मामिति ।
नाहं गृह्णाम्यन्यजितामिति साल्वनिराकृता ॥ १-१०९-९० (४९३४)
ऊर्ध्वरेतास्त्वहमिति भीष्मेण च निराकृता ।
अम्बा भीष्मं पुनः साल्वं भीष्मं साल्वं पुनः पुनः ॥ १-१०९-९१ (४९३५)
गमनागमनेनैवमनैषीत्षट् समा नृप ।
अश्रुभिर्भूमिमुक्षन्ती शोचन्ती सा मनस्विनी ॥ १-१०९-९२ (४९३६)
पीनोन्नतकुचद्वन्द्वा विशालजघनेक्षणा ।
श्रोणीभरालसगमा राकाचन्द्रनिभानना ॥ १-१०९-९३ (४९३७)
वर्षत्कादम्बिनीमूर्ध्नि स्फुरन्ती चञ्चलेव सा ।
सा ततो द्वादश समा बाहुदामभितो नदीम् ।
पार्श्वे हिमवतो रम्ये तपो घोरं समाददे ॥ १-१०९-९४ (४९३८)
संक्षिप्तकरणा तत्र तप आस्थाय सुव्रता ।
पादाङ्गुष्ठेन साऽतिष्ठदकम्पन्त ततः सुराः ॥ १-१०९-९५ (४९३९)
तस्यास्तत्तु तपो दृष्ट्वा सुराणां क्षोभकारकम् ।
विस्मितश्चैव हृष्टश्च तस्यानुग्रहबुद्धिमान् ॥ १-१०९-९६ (४९४०)

अनन्तसेनो भगवान्कुमारो वरदः प्रभुः ।
मानयन्राजपुत्रीं तां ददौ तस्यै शुभां स्रजम् ॥१-१०९-९७ (४९४१)
एषा पुष्करिणी दिव्या यथावत्समुपस्थिता ।
अम्बे त्वच्छोकशमनी माला भुवि भविष्यति ॥१-१०९-९८ (४९४२)
एतां चैव मया दत्तां मालां यो धारयिष्यति ।
सोऽस्य भीष्मस्य निधने कारणं वै भविष्यति ॥ ॥१-१०९-९९ (४९४३)

इति श्रीमन्महाभारते आदिपर्वणि संभवपर्वणि
नवाधिकशततमोऽध्यायः ॥१०९ ॥
Mahabharata - Adi Parva - Chapter Footnotes

१-१०९-१३ आहूयेति ब्राह्मः ॥
१-१०९-१४ मिथुनेन गृहीतेनेत्यार्षः ॥
१-१०९-१५ वित्तेनेत्यासुरः ।बलेनेति राक्षसः।अनुमान्येति
गान्धर्वः।प्रमत्तामिति पैशाचः।स्वयमन्ये इति प्राजापत्यः ॥
१-१०९-१६ आर्षं विधिं यज्ञम् ।तेन दैव उक्तः।अष्टमं राक्षसं
विवाहम् ॥
१-१०९-१७ प्रशंसति ।स्वयंवरमिति ॥
१-१०९-२४ प्रकीर्यद्भिर्भऊषणैरुपलक्षिता अनुसस्रुरिति तृतीयेनान्वयः ॥
१-१०९-४३ वृषौ रेतःसेककामौ गजौ गोवृषावेव वा
तत्साहचर्याद्वासिता पुष्पिणी गौस्तदन्तरे वन्निमित्तम् ॥
१-१०९-५२ जीवन्तं प्राणमात्रावशेषितम् ॥
१-१०९-५८ काश्यस्य काशिराजस्य ।अनुजाः कनिष्ठाः ॥
१-१०९-७१ अम्बां दृष्ट्वेति शेषः ।अब्रवीत् भीष्ममिति शेषः ॥
नवाधिकशततमः ॥
१०९ ॥

---

अध्यय११०
॥ श्रीः ॥
१.११०. अध्यायः ११०

Mahabharata - Adi Parva - Chapter Topics
संग्रहेण अम्बाचरित्रकथनम् ॥१ ॥

Mahabharata - Adi Parva - Chapter Text

१-११०-० (४९४४)

अम्बोवाच। १-११०-०क्ष् (६७५)
अन्यपूर्वेति मां साल्वो नाभिनन्दति बालिशः ।
साहं धर्माच्च कामाच्च विहीना शोकधारिणी ॥१-११०-१ (४९४५)
अपतिः क्षत्रियान्सर्वानाक्रन्दामि समन्ततः ।
इयं वः क्षत्रिया माला या भीष्मं निहनिष्यति ॥१-११०-२ (४९४६)
अहं च भार्या तस्य स्यां यो भीष्मं घातयिष्यति ।
तस्याश्चङ्क्रम्यमाणायाः समाः पञ्च गताः पराः ॥१-११०-३ (४९४७)
नाभवच्छरणं कश्चित्क्षत्रियो भीष्मजाड्ययात् ।
अगच्छत्सोमकं साऽम्बा पाञ्चालेषु यशस्विनम् ॥१-११०-४ (४९४८)
सत्यसन्धं महेष्वासं सत्यधर्मपरायणम् ।
सा सभाद्वारमागम्य पाञ्चालैरभिरक्षितम् ॥१-११०-५ (४९४९)
पाञ्चालराजमाक्रन्दत्प्रगृह्य सुभुजा भुजौ ।
भीष्मेण हन्यमानां मां मज्जन्तीमिव च ह्रदे ॥१-११०-६ (४९५०)
यज्ञसेनाभिधावेह पाणिमालम्ब्य चोद्धर ।
तेन मे सर्वधर्माश्च रतिभोगाश्च केवलाः ॥१-११०-७ (४९५१)
उभौ च लोकौ कीर्तिश्च समूलौ सफलौ हृतौ ।
क्रक्रक्रन्त्येवं न विन्दामि राजन्यं शरणं क्वचित् ॥१-११०-८ (४९५२)
किं नु निःक्षत्रियो लोको यत्रानाथोऽवसीदति ।
समागम्य तु राजानो मयोक्ता राजसत्तमाः ॥१-११०-९ (४९५३)
शृण्वन्तु सर्वे राजानो मयोक्तं राजसत्तमाः ।
इक्ष्वाकूणां तु ये वृद्धाः पाञ्चालानां च ये वराः ॥१-११०-१० (४९५४)
त्वत्प्रसादाद्विवाहेऽस्मिन्मा धर्मो मा पराजयेत् ।
प्रसीद यज्ञसेनेह गतिर्मे भव सोमक ॥१-११०-११ (४९५५)
यज्ञसेन उवाच। १-११०-१२क्ष् (६७६)
जानामि त्वां बोधयामि राजपुत्रि विशेषतः ।
यथाशक्ति यथाधर्मं बलं संधारयाम्यहम् ॥१-११०-१२ (४९५६)
अन्यस्मात्पार्थिवाद्यत्ते भयं स्यात्पार्थिवात्मजे ।
तस्यापनयने हेतुं संविधातुमहं प्रभुः ॥१-११०-१३ (४९५७)
नहि शान्तनवस्याहं महास्त्रस्य प्रहारिणः ।
ईश्वरः क्षत्रियाणां हि बलं धर्मोऽनुवर्तते ॥१-११०-१४ (४९५८)
सा साधु व्रज कल्याणि न मां भीष्मो दहेद्बलात् ।
न प्रत्यगृह्णंस्ते सर्वे किमित्येव न वेद्म्यहम् ॥१-११०-१५ (४९५९)
न हि भीष्मादहं धर्मं शक्तो दातुं कथंचन। १-११०-१६ (४९६०)
वैशंपायन उवाच ।
इत्युक्ता स्रजमासज्य द्वारि राज्ञो व्यपाद्रवत् ॥ १-११०-१६क्ष् (६७७)
व्युदस्तां सर्वलोकेषु तपसा संशितव्रताम् ।

तामन्वगच्छद्द्रुपदः सान्त्वं जल्पन्पुनः पुनः ॥ १-११०-१७ (४९६१)
स्रजं गृहाण कल्याणि न नो वैरं प्रसञ्जय ॥ १-११०-१८ (४९६२)
अम्बोवाच। १-११०-१९क्ष् (६७८)
एवमेव त्वया कार्यमिति स्म प्रतिकाङ्क्षते ।
न तु तस्यान्यथा भावो दैवमेतदमानुषम् ॥ १-११०-१९ (४९६३)
यश्चैनां स्रजमादाय स्वयं वै प्रतिमोक्षते ।
स भीष्मं समरे हन्ता मम धर्मप्रणाशनम् ॥ १-११०-२० (४९६४)
वैशंपायन उवाच। १-११०-२१क्ष् (६७९)
तां स्रजं द्रुपदो राजा कंचित्कालं ररक्ष सः ।
ततो विस्रम्भमास्थाय तूष्णीमेतामुपैक्षत ॥ १-११०-२१ (४९६५)
तां शिखण्डिन्यबध्नात्तु बाला पितुरवज्ञया ।
तां पिता त्वत्यजच्छीघ्रं त्रस्तो भीष्मस्य किल्बिषात् ॥ १-११०-२२ (४९६६)
इषीकं ब्राह्मणं भीता साभ्यगच्छत्तपस्विनम् ।
गङ्गाद्वारि तपस्यन्तं तुष्टिहेतोस्तपस्विनी ॥ १-११०-२३ (४९६७)
उपचाराभितुष्टस्तामब्रवीदृषिसत्तमः ।
गङ्गाद्वारे विभजनं भविता नचिरादिव ॥ १-११०-२४ (४९६८)
तत्र गन्धर्वराजानं तुम्बुरुं प्रियदर्शनम् ।
आराधयितुमीहस्व सम्यक्परिचरस्व तम् ॥ १-११०-२५ (४९६९)
अहमप्यत्र साचिव्यं कर्तास्मि तव शोभने ।
तं तदाचर भद्रं ते स ते श्रेयो विधास्यति ॥ १-११०-२६ (४९७०)
ततो विभजनं तत्र गन्धर्वाणामवर्तत ।
तत्र द्वाववशिष्येतां गन्धर्वावमितौ जसौ ॥ १-११०-२७ (४९७१)
तयोरेकः समीक्ष्यैनां स्त्रीबुभूषुरुवाच ह ।
इदं गृह्णीष्व पुंलिङ्गं वृणे स्त्रीलिङ्गमेव ते ॥ १-११०-२८ (४९७२)
नियमं चक्रतुस्तत्र स्त्री पुमांश्चैव तावुभौ ।
ततः पुमान्समभवच्छिखण्डी परवीरहा ॥ १-११०-२९ (४९७३)
स्त्री भूत्वा ह्यपचक्राम स गन्धर्वो मुदान्वितः ।
लब्ध्वा तु महतीं प्रीतिं याज्ञसेनिर्महायशाः ॥ १-११०-३० (४९७४)
ततो बुद्बुदकं गत्वा पुनरस्त्राणि सोऽकरोत् ।
तत्र चास्त्राणि दिव्यानि कृत्वा स सुमहाद्युतिः ॥ १-११०-३१ (४९७५)
स्वदेशमभिसंपदे पाञ्चालं कुरुनन्दन ।
सोऽभिवाद्य पितुः पादौ महेष्वासः कृताञ्जलिः ॥ १-११०-३२ (४९७६)
उवाच भवता भीष्मान्न भेतव्यं कथंचन ॥ ॥ १-११०-३३ (४९७७)

इति श्रीमन्महाभारते आदिपर्वणि संभवपर्वणि
दशाधिकशततमोऽध्यायः ॥ ११० ॥

१-११०-१० पाञ्चालानां च ये वराः ते राजानः मयोक्ता इति पूर्वेण संबन्धः ॥
१-११०-१४ ईश्वरो नहि ॥
१-११०-१६ भीष्मात् भीष्ममपेक्ष्य ॥
१-११०-२४ विभजनं उत्सवविशेषः ॥
दशाधिकशततमोऽध्यायः ॥
११० ॥

---

अध्यय१११
॥ श्रीः ॥
१.१११. अध्यायः १११

Mahabharata - Adi Parva - Chapter Topics
विचित्रवीर्यस्य अम्बिकाम्बालिकाश्यां विवाहः ॥ १ ॥
विचित्रवीर्यमरणम् ॥ २ ॥

Mahabharata - Adi Parva - Chapter Text

१-१११-० (४९७८)
वैशंपायन उवाच। १-१११-०क्ष् (६८०)
अम्बायां निर्गतायां तु भीष्मः शान्तनवस्तदा ।
न्यायेन कारयामास राज्ञो वैवाहिकीं क्रियाम् ॥ १-१११-१ (४९७९)
अम्बिकाम्बालिके चैव परिणीयाग्निसंनिधौ ।
ग्तयोः पाणी गृहीत्वा तु कौरव्यो रूपदर्पितः।'
विचित्रवीर्यो धर्मात्मा कामात्मा समपद्यत ॥ १-१११-२ (४९८०)
ते चापि बृहतीश्यामे नीलकुञ्चितमूर्धजे ।
रक्ततुङ्गनखोपेते पीनश्रोणिपयोधरे ॥ १-१११-३ (४९८१)
आत्मनः प्रतिरूपोऽसौ लब्धः पतिरिति स्थिते ।
विचित्रवीर्यं कल्याण्यौ पूजयामासतुः शुभे ॥ १-१११-४ (४९८२)
ग्अन्योन्यं प्रति सक्ते च एकभावे इव स्थिते।'
स चाश्विरूपसदृशो देवतुल्यपराक्रमः ।
सर्वासामेव नारीणां चित्तप्रमथनो रहः ॥ १-१११-५ (४९८३)
ताभ्यां सह समाः सप्त विहरन्पृथिवीपतिः ।
विचित्रवीर्यस्तरुणो यक्ष्मणा समगृह्यत ॥ १-१११-६ (४९८४)
सुहृदां यतमानानामाप्तैः सह चिकित्सकैः ।

जगामास्तमिवादित्यः कौरव्यो यमसादनम् ॥१-१११-७ (४९८५)
धर्मात्मा स तु गाङ्गेयः चिन्ताशोकपरायणः ।
प्रेतकार्याणि सर्वाणि तस्य सम्यगकारयत् ॥१-१११-८ (४९८६)
१-१११-९ (४९८७)
राज्ञो विचित्रवीर्यस्य सत्यवत्या मते स्थितः ।
ऋत्विग्बिः सहितो भीष्मः सर्वैश्च कुरुपुङ्गवैः ॥
Mahabharata - Adi Parva - Chapter Footnotes

१-१११-३ बृहतीश्यामे बृहतीपुष्पद्रक्तश्यामे ॥
१-१११-४ प्रतिरूपः अनुरूपः ॥
एकादशाधिकशततमोऽध्यायः ॥
१११ ॥

---

अध्यय११२
॥ श्रीः ॥
१.११२. अध्यायः ११२

Mahabharata - Adi Parva - Chapter Topics
विचित्रवीर्यभार्ययोरम्बिकाम्बालिकयोः पुत्रोत्पादनाय सत्यवत्या नियुक्तेन भीष्मेण तदनङ्गीकारः ॥१ ॥

Mahabharata - Adi Parva - Chapter Text

१-११२-० (४९८८)
वैशंपायन उवाच।१-११२-०क्ष् (६८१)
ततः सत्यवती दीना कृपणा पुत्रगृद्धिनी ।
पुत्रस्य कृत्वा कार्याणि स्नुषाभ्यां सह भारत ॥१-११२-१ (४९८९)
समाश्वास्य स्नुषे ते च भर्तृशोकनिपीडिते ।
धर्मं च पितृवंशं च मातृवंशं च भामिनी ।
प्रसमीक्ष्य महाभागा गाङ्गेयं वाक्यमब्रवीत् ॥ १-११२-२ (४९९०)
ग्दुःखार्दिता तु सा देवी मज्जन्ती शोकसागरे ।
शन्तनोर्धर्मनित्यस्य कौरव्यस्य यशस्विनः।'
त्वयि पिण्डश्च कीर्तिश्च संतानश्च प्रतिष्ठितः ॥ १-११२-३ (४९९१)
ग्भ्राता विचित्रवीर्यस्ते भूतानामन्तमेयिवान्।'
यथाकर्म शुभं कृत्वा स्वर्गोपगमनं ध्रुवम् ।
यथा चायुर्ध्रुवं सत्ये त्वयि धर्मस्तथा ध्रुवः ॥ १-११२-४ (४९९२)
वेत्थ धर्मांश्च धर्मज्ञ समासेनेतरेण च ।

विविधास्त्वं श्रुतीर्वेत्थ वेदाङ्गानि च सर्वशः ॥१-११२-५ (४९९३)
व्यवस्थानं च ते धर्मे कुलाचारं च लक्षये ।
प्रतिपत्तिं च कृच्छ्रेषु शुक्राङ्गिरसयोरिव ॥१-११२-६ (४९९४)
तस्मात्सुभृशमाश्वस्य त्वयि धर्मभृतां वर ।
कार्ये त्वां विनियोक्ष्यामि तच्छ्रुत्वा कर्तुमर्हसि ॥१-११२-७ (४९९५)
मम पुत्रस्तव भ्राता वीर्यवान्सुप्रियश्च ते ।
बाल एव गतः स्वर्गमपुत्रः पुरुषर्षभ ॥१-११२-८ (४९९६)
इमे महिष्यौ भ्रातुस्ते काशिराजसुते शुभे ।
रूपयौवनसंपन्ने पुत्रकामे च भारत ॥१-११२-९ (४९९७)
तयोरुत्पादयापत्यं सन्तानाय कुलस्य नः ।
मन्नियोगान्महाबाहो धर्मं कर्तुमिहार्हसि ॥१-११२-१० (४९९८)
राज्ये चैवाभिषिच्यस्व भारताननुशाधि च ।
दारांश्च कुरु धर्मेण मा निमज्जीः पितामहान् ॥१-११२-११ (४९९९)
वैशंपायन उवाच। १-११२-१२क्ष् (६८२)
तथोच्यमानो मात्रा स सुहृद्भिश्च परन्तपः ।
इत्युवाचाथ धर्मात्मा धर्म्यमेवोत्तरं वचः ॥१-११२-१२ (५०००)
असंशयं परो धर्मस्त्वया मातरुदाहृतः ।
त्वमपत्यं प्रति च मे प्रतिज्ञां वेत्थ वै परां ॥१-११२-१३ (५००१)
जानासि च यथावृत्तं शुल्कहेतोस्त्वदन्तरे ।
स सत्यवति सत्यं ते प्रतिजानाम्यहं पुनः ॥१-११२-१४ (५००२)
परित्यजेयं त्रैलोक्यं राज्यं देवेषु वा पुनः ।
यद्वाऽप्यधिकमेताभ्यां न तु सत्यं कथंचन ॥१-११२-१५ (५००३)
त्यजेच्च पृथिवी गन्धमापश्च रसमात्मनः ।
ज्योतिस्तथा त्यजेद्रूपं वायुः स्पर्शगुणं त्यजेत् ॥१-११२-१६ (५००४)
प्रभां समुत्सृजेदर्को धूमकेतुस्तथोष्मताम् ।
त्यजेच्छब्दं तथाऽऽकाशं सोमः शीतांशुतां त्यजेत् ॥१-११२-१७ (५००५)
विक्रमं वृत्रहा जह्याद्धर्मं जह्याच्च धर्मराट् ।
न त्वहं सत्यमुत्स्रष्टुं व्यवसेयं कथंचन ॥१-११२-१८ (५००६)
ग्तन्न जात्वन्यथा कुर्यां लोकानामपि संक्षये ।
अमरत्वस्य वा हेतोस्त्रैलोक्यस्य धनस्य च ॥' १-११२-१९ (५००७)
एवमुक्ता तु पुत्रेण भूरिद्रविणतेजसा ।
माता सत्यवती भीष्ममुवाच तदनन्तरम् ॥१-११२-२० (५००८)
जानामि ते स्थितिं सत्ये परां सत्यपराक्रम ।
इच्छन्सृजेथास्त्रींल्लोकानन्यांस्त्वं स्वेन तेजसा ॥१-११२-२१ (५००९)
जानामि चैवं सत्यं तन्मदर्थे यच्च भाषितम् ।
आपद्धर्मं त्वमावेक्ष्य वह पैतामहीं धुरम् ॥१-११२-२२ (५०१०)

यथा ते कुलतन्तुश्च धर्मश्च न पराभवेत् ।
सुहृदश्च प्रहृष्येरंस्तथा कुरु परन्तप ॥ १-११२-२३ (५०११)
ग्आत्मनश्च हितं तात प्रियं च मम भारत।'
लालप्यमानां तामेवं कृपणां पुत्रगृद्धिनीम् ।
धर्मादपेतं ब्रुवतीं भीष्मो भूयोऽब्रवीदिदम् ॥ १-११२-२४ (५०१२)
राज्ञि धर्मानवेक्षस्व मा नः सर्वान्व्यनीनशः ।
सत्याच्च्युतिः क्षत्रियस्य न धर्मेषु प्रशस्यते ॥ १-११२-२५ (५०१३)
शान्तनोरपि संतानं यथा स्यादक्षयं भुवि ।
तत्ते धर्मं प्रवक्ष्यामि क्षात्रं राज्ञि सनातनम् ॥ १-११२-२६ (५०१४)
श्रुत्वा तं प्रतिपद्यस्व प्राज्ञैः सह पुरोहितैः ।
आपद्धर्मार्थकुशलैर्लोकतन्त्रमवेक्ष्य च ॥ ॥ १-११२-२७ (५०१५)

इति श्रीमन्महाभारते आदिपर्वणि संभवपर्वणि
द्वादशाधिकशततमोऽध्यायः ॥ ११२ ॥
Mahabharata - Adi Parva - Chapter Footnotes

१-११२-११ अभिषिच्यस्व अभिषेचय ।आत्मानमिति शेषः। कुरु
अङ्गीकुरु। मा निमज्जीर्मा निमज्जय ॥
१-११२-१४ त्वदन्तरेत्वन्निमित्तम् ॥
१-११२-२० भूरिद्रविणतेजसा बहुबलोत्साहवता ॥
द्वादशाधिकशततमोऽध्यायः ॥
११२ ॥

---

अध्यय११३
॥ श्रीः ॥
१.११३. अध्यायः ११३

Mahabharata - Adi Parva - Chapter Topics
दीर्घतमसो ऋषेरुपाख्यानम् ॥ १ ॥

Mahabharata - Adi Parva - Chapter Text

१-११३-० (५०१६)
भीष्म उवाच। १-११३-०क्ष् (६८३)
जामदग्न्येन रामेण पितुर्वधममृष्यता ।
राजा परशुना पूर्वं हैहयाधिपतिर्हतः ॥ १-११३-१ (५०१७)
शतानि दशबाहूनां निकृत्तान्यर्जुनस्य वै ।

लोकस्याचरितो धर्मस्तेनाति किल दुश्चरः ॥ १-११३-२ (५०१८)
पुनश्च धनुरादाय महास्त्राणि प्रमुञ्चता ।
निर्दग्धं क्षत्रमसकृद्रथेन जयता महीम् ॥ १-११३-३ (५०१९)
एवमुच्चावचैरस्त्रैर्भार्गवेण महात्मना ।
त्रिःसप्तकृत्वः पृथिवी कृता निःक्षत्रिया पुरा ॥ १-११३-४ (५०२०)
एवं निःक्षत्रिये लोके कृते तेन महर्षिणा ।
ततः संभूय सर्वाभिः क्षत्रियाभिः समन्ततः ॥ १-११३-५ (५०२१)
उत्पादितान्यपत्यानि ब्राह्मणैर्वेदपारगैः ।
पाणिग्राहस्य तनय इति वेदेषु निश्चितम् ॥ १-११३-६ (५०२२)
धर्मं मनसि संस्थाप्य ब्राह्मणांस्ताः समभ्ययुः ।
लोकेऽप्याचरितो दृष्टः क्षत्रियाणां पुनर्भवः ॥ १-११३-७ (५०२३)
ततः पुनः समुदितं क्षत्रं समभवत्तदा ।
इमं चैवात्र वक्ष्येऽहमितिहासं पुरातनम् ॥ १-११३-८ (५०२४)
अथोचथ्य इति ख्यात आसीद्धीमानृषिः पुरा ।
ममता नाम तस्यासीद्भार्या परमसंमता ॥ १-११३-९ (५०२५)
उचथ्यस्य यवीयांस्तु पुरोधास्त्रिदिवौकसाम् ।
बृहस्पतिर्बृहत्तेजा ममतामन्वपद्यत ॥ १-११३-१० (५०२६)
उवाच ममता तं तु देवरं वदतां वरम् ।
अन्तर्वत्नी त्वहं भ्रात्रा ज्येष्ठेनारम्यतामिति ॥ १-११३-११ (५०२७)
अयं च मे महाभाग कुक्षावेव बृहस्पते ।
औचथ्यो देवमत्रापि षडङ्गं प्रत्यधीयत ॥ १-११३-१२ (५०२८)
अमोघरेतास्त्वं चापि द्वयोर्नास्त्यत्र संभवः ।
तस्मादेवं गते त्वद्य उपारमितुमर्हसि ॥ १-११३-१३ (५०२९)
वैशंपायन उवाच। १-११३-१४क्ष् (६८४)
एवमुक्तस्तदा सम्यक् बृहस्पतिरुदारधीः ।
कामात्मानं तदात्मानं न शशाक नियच्छितुम् ॥ १-११३-१४ (५०३०)
स बभूव ततः कामी तया सार्धमकामया ।
उत्सृजन्तं तु तं रेतः स गर्भस्थोऽभ्यभाषत ॥ १-११३-१५ (५०३१)
भोस्तात मा गमः कामं द्वयोर्नास्तीह संभवः ।
अल्पावकाशो भगवन्पूर्वं चाहमिहागतः ॥ १-११३-१६ (५०३२)
अमोघरेताश्च भवान्न पीडां कर्तुमर्हति ।
अश्रुत्वैव तु तद्वाक्यं गर्भस्थस्य बृहस्पतिः ॥ १-११३-१७ (५०३३)
जगाम मैथुनायैव ममतां चारुलोचनाम् ।
शुक्रोत्सर्गं ततो बुद्ध्वा तस्या गर्भगतो मुनिः ॥ १-११३-१८ (५०३४)
पद्भ्यामारोधयन्मार्गं शुक्रस्य च बृहस्पतेः ।
स्थानमप्राप्तमथ तच्छुक्रं प्रतिहतं तदा ॥ १-११३-१९ (५०३५)

पपात सहसा भूमौ ततः क्रुद्धो बृहस्पतिः ।
तं दृष्ट्वा पतितं शुक्रं शशाप स रुषान्वितः ॥ १-११३-२० (५०३६)
उचथ्यपुत्रं गर्भस्थं निर्भर्त्स्य भगवानृषिः ।
यन्मां त्वमीदृशे काले सर्वभूतेप्सिते सति ॥ १-११३-२१ (५०३७)
एवमात्थ वचस्तस्मात्तमो दीर्घं प्रवेक्ष्यसि ।
स वै दीर्घतमा नाम शापादृषिरजायत ॥ १-११३-२२ (५०३८)
बृहस्पतेर्बृहत्कीर्तेर्बृहस्पतिरिवौजसा ।
जात्यन्धो वेदवित्प्राज्ञः पत्नीं लेभे स विद्यया ॥ १-११३-२३ (५०३९)
तरुणीं रुपसंपन्नां प्रद्वेषीं नाम ब्राह्मणीम् ।
स पुत्राञ्जनयामास गौतमादीन्महायशाः ॥ १-११३-२४ (५०४०)
ऋषेरुचथ्यस्य तदा सन्तानकुलवृद्धये ।
धर्मात्मा च महात्मा च वेदवेदाङ्गपारगः ॥ १-११३-२५ (५०४१)
गोधर्मं सौरभेयाच्च सोऽधीत्य निखिलं मुनिः ।
प्रावर्तत तदा कर्तुं श्रद्धावांस्तमशङ्कया ॥ १-११३-२६ (५०४२)
ततो वितथमर्यादं तं दृष्ट्वा मुनिसत्तमाः ।
क्रुद्धा मोहाभिभूतास्ते सर्वे तत्राश्रमौकसः ॥ १-११३-२७ (५०४३)
अहोऽयं भिन्नमर्यादो नाश्रमे वस्तुमर्हति ।
तस्मादेनं वयं सर्वे पापात्मानं त्यजामहे ॥ १-११३-२८ (५०४४)
इत्यन्योन्यं समाभाष्य ते दीर्घतमसं मुनिम् ।
पुत्रलाभाच्च सा पत्नी न तुतोष पतिं तदा ॥ १-११३-२९ (५०४५)
प्रद्विषन्तीं पतिर्भार्यां किं मां द्वेक्षीति चाब्रवीत्। १-११३-३० (५०४६)
प्रद्वेष्युवाच ।
भार्याया भरणाद्भर्ता पालनाच्च पतिः स्मृतः ॥ १-११३-३०क्ष् (६८५)
अहं त्वद्भरणाशक्ता जात्यन्धं ससुतं तदा ।
नित्यकालं श्रमेणार्ता न भरेयं महातपः ॥ १-११३-३१ (५०४७)
भीष्म उवाच। १-११३-३२क्ष् (६८६)
तस्मास्तद्वचनं श्रुत्वा ऋषिः कोपसमन्वितः ।
प्रत्युवाच ततः पत्नीं प्रद्वेषीं ससुतां तदा ॥ १-११३-३२ (५०४८)
नीयतां क्षत्रियकुले धनार्थश्च भविष्यति। १-११३-३३ (५०४९)
प्रद्वेष्युवाच ।
त्वया दत्तं धनं विप्र नेच्छेयं दुःखकारणम् ॥ १-११३-३३क्ष् (६८७)
यथेष्टं कुरु विप्रेन्द्र न भेरयं पुरा यथा। १-११३-३४ (५०५०)
दीर्घतमा उवाच ।
अद्यप्रभृति मर्यादा मया लोके प्रतिष्ठिता ॥ १-११३-३४क्ष् (६८८)
एक एव पतिर्नार्या यावज्जीवं परायणम् ।
मृते जीवति वा तस्मिन्नापरं प्राप्नुयान्नरम् ॥ १-११३-३५ (५०५१)

अभिगम्य परं नारी पतिष्यति न संशयः ।
अपतीनां तु नारीणामद्यप्रभृति पातकम् ॥ १-११३-३६ (५०५२)
यद्यस्ति चेद्धनं सर्वं वृथाभोगा भवन्तु ताः ।
अकीर्तिः परिवादाश्च नित्यं तासां भवन्तु वै ॥ १-११३-३७ (५०५३)
इति तद्वचनं श्रुत्वा ब्राह्मणी भृशकोपिता ।
गङ्गायां नीयतामेष पुत्रा इत्येवमब्रवीत् ॥ १-११३-३८ (५०५४)
लोभमोहाभिभूतास्ते पुत्रास्तं गौतमादयः ।
वद्ध्वोडुपे परिक्षिप्य गङ्गायां समवासृजन् ॥ १-११३-३९ (५०५५)
कस्मादन्धश्च वृद्धश्च भर्तव्योऽयमिति स्म ते ।
चिन्तयित्वा ततः क्रूराः प्रतिजग्मुरथो गृहान् ॥ १-११३-४० (५०५६)
सोऽनुस्रोतस्तदा विप्रः प्लवमानो यदृच्छया ।
जगाम सुबहून्देशानन्धस्तेनोडुपेन ह ॥ १-११३-४१ (५०५७)
तं तु राजा बलिर्नाम सर्वधर्मविदां वरः ।
अपश्यन्मज्जनगतः स्रोतसाऽभ्याशमागतम् ॥ १-११३-४२ (५०५८)
जग्राह चैनं धर्मात्मा बलिः सत्यपराक्रमः ।
ज्ञात्वा चैवं स वव्रेऽथ पुत्रार्थे भरतर्षभ ॥ १-११३-४३ (५०५९)
ग्तं पूजयित्वा राजर्षिर्विश्रान्तं मुनिमब्रवीत्।'
सन्तानार्थं महाभाग भार्यासु मम मानद ।
पुत्रान्धर्मार्थकुशलानुत्पादयितुमर्हसि ॥ १-११३-४४ (५०६०)
भीष्म उवाच। १-११३-४५क्ष् (६८९)
एवमुक्तः स तेजस्वी तं तथेत्युक्तवानृषिः ।
तस्मैस राजा स्वां भार्यां सुदेष्णां प्राहिणोत्तदा ॥ १-११३-४६ (५०६१)
अन्धं वृद्धं च तं मत्वा न सा देवी जगाम ह ।
स्वां तु धात्रेयिकां तस्मै वृद्धाय प्राहिणोत्तदा ॥ १-११३-४६ (५०६२)
तस्यां काक्षीवदादीन्स शूद्रयोनावृषिस्तदा ।
जनयामास धर्मात्मा पुत्रानेकादशैव तु ॥ १-११३-४७ (५०६३)
काक्षीवदादीन्पुत्रांस्तान्दृष्ट्वा सर्वानधीयतः ।
उवाच तमृषिं राजा ममेम इति भारत ॥ १-११३-४८ (५०६४)
नेत्युवाच महर्षिस्तं ममेम इति चाब्रवीत् ।
शूद्रयोनौ मया हीमे जाताः काक्षीवदादयः ॥ १-११३-४९ (५०६५)
अन्धं वृद्धं च मां दृष्ट्वा सुदेष्णा महिषी तव ।
अवमन्य ददौ मूढा शूद्रां धात्रेयिकां मम ॥ १-११३-५० (५०६६)
भीष्म उवाच। १-११३-५१क्ष् (६९०)
ततः प्रसादयामास पुनस्तमृषिसत्तमम् ।
बलिः सुदेष्णां स्वां भार्यां तस्मै स प्राहिणोत्पुनः ॥ १-११३-५१ (५०६७)
तां स दीर्घतमाङ्गेषु स्पृष्ट्वा देवीमथाब्रवीत् ।

भविष्यन्ति कुमारास्ते तेजसाऽऽदित्यवर्चसः ॥ १-११३-५२ (५०६८)
अङ्गो वङ्गः कलिङ्गश्च पुण्ड्रः सुह्मश्च ते सुताः ।
तेषां देशाः समाख्याताः स्वनामकथिता भुवि ॥ १-११३-५३ (५०६९)
अङ्गस्याङ्गोऽभवद्देशो वङ्गो वङ्गस्य च स्मृतः ।
कलिङ्गविषयश्चैव कलिङ्गस्य च स स्मृतः ॥ १-११३-५४ (५०७०)
पुण्ड्रस्य पुण्ड्राः प्रख्याताः सुह्माः सुह्मस्य च स्मृताः ।
एवं बलेः पुरा वंशः प्रख्यातो वै महर्षिजः ॥ १-११३-५५ (५०७१)
एवमन्ये महेष्वासा ब्राह्मणैः क्षत्रिया भुवि ।
जाताः परमधर्मज्ञा वीर्यवन्तो महाबलाः ।
एतच्छ्रुत्वा त्वमप्यत्र मातः कुरु यथेप्सितम् ॥ ॥ १-११३-५६ (५०७२)

इति श्रीमन्महाभारते आदिपर्वणि संभवपर्वणि
त्रयोदशाधिकशततमोऽध्यायः ॥ ११३ ॥

Mahabharata - Adi Parva - Chapter Footnotes

१-११३-१० अन्वपद्यत उपगतवान् ॥
१-११३-११ आरम्यतामुपरम्यताम् ॥
१-११३-१४ आत्मानं चित्तम् । नियच्छितुं नियन्तुम् ॥
१-११३-१६ कामं मैथुनं मा गमः ॥
१-११३-२० तं शशापेति संबन्धः ॥
१-११३-२२ दीर्घं तमः अन्धत्वम् ॥
१-११३-२५ सम्यक् तानं विस्तारो यस्य तस्य कुलस्य वृद्धये
विस्तीर्णस्यापि वृद्धये इत्यर्थः ॥
१-११३-२६ गोधर्मं प्रकाशमैथुनम् । सौरभेयात्
कामधेनुपुत्रादधीत्याधिगम्य ॥
१-११३-२७ मोहाभिभूतत्वमपापे पापदर्शित्वात् ॥
१-११३-२९ समाभा य क्रुद्धा इति पूर्वेणान्वयः ॥
१-११३-३० द्वेक्षि द्वेषं करोषि । पतिः
पालनादुपसर्गेभ्यः। भरणादन्नादिना भर्ता च ॥
१-११३-३१ अहं तु प्रत्युत त्वद्भरणाशक्ता सती न भरेयम् । तदा
तदेव। लुप्तोपमा। पूर्ववदित्यर्थः ॥
१-११३-३३ धनमर्थश्चोपभोगादिः ॥
१-११३-३४ न भरेयं यथा पुरा भर्त्रन्तरं करिष्यामीत्याशयः ॥
१-११३-४२ मज्जनगतः स्नानार्थं गतः । स्रोतसा प्रवाहेण। अभ्याशं
समीपम् ॥
१-११३-४६ धात्रेयिकां दासीम् ॥

१-११३-५२ अङ्गेषु स्पृष्ट्वा स्वरूपज्ञानार्थमिति भावः ।संधिरार्षः ॥
१-११३-५६ यथेप्सितं ब्राह्मणेभ्यो वंशवृद्धिमित्यर्थः ॥
त्रयोदशाधिकशततमोऽध्यायः ॥
११३ ॥

---

अध्यय११४
॥ श्रीः ॥
१.११४. अध्यायः ११४

Mahabharata - Adi Parva - Chapter Topics
सत्यवत्या स्वस्मिन्कन्यात्वावस्थायां व्यासोत्पत्तिकथनम् ॥ १ ॥
स्मरणमात्रादागतेन व्यासेन सह सत्यवत्याः संवादः ॥ २ ॥
व्यासेन अम्बिकाम्बालिकलोः पुत्रोत्पादनाङ्गीकारः ॥ ३ ॥

Mahabharata - Adi Parva - Chapter Text

१-११४-० (५०७३)
भीष्म उवाच। १-११४-०क्ष् (६९१)
पुनर्भरतवंशस्य हेतुं सन्तानवृद्धये ।
वक्ष्यामि नियतं मातस्तन्मे निगदतः शृणु ॥ १-११४-१ (५०७४)
ब्राह्मणो गुणवान्कश्चिद्धनेनोपनिमन्त्र्यताम् ।
विचित्रवीर्यक्षेत्रेषु यः समुत्पादयेत्प्रजाः ॥ १-११४-२ (५०७५)
ग्वैशंपायन उवाच। १-११४-३क्ष् (६९२)
भीष्मस्य तु वचः श्रुत्वा धर्महेत्वर्थसंहितम् ।
माता सत्यवती भीष्मं पुनरेवाभ्यभाषत ॥ १-११४-३ (५०७६)
औचथ्यमधिकृत्येदमङ्गं च यदुदाहृतम् ।
पौराणी श्रुतिरित्येषा प्राप्तकालमिदं कुरु ॥ १-११४-४ (५०७७)
त्वं हि पुत्र कुलस्यास्य ज्येष्ठः श्रेष्ठश्च भारत ।
यथा च ते पितुर्वाक्यं मम कार्यं तथाऽनघ ॥ १-११४-५ (५०७८)
मम पुत्रस्तव भ्राता यवीयान्सुप्रियश्च ते ।
बाल एव गतः स्वर्गं भारतो भरतर्षभ ॥ १-११४-६ (५०७९)
इमे महिष्यौ तस्येह काशिराजसुते उभे ।
रूपयौवनसंपन्ने पुत्रकामे च भारत ॥ १-११४-७ (५०८०)
धर्म्यमेतत्परं ज्ञात्वा सन्तानाय कुलस्य च ।
आभ्यां मम नियोगात्तु धर्मं चरितुमर्हसि ॥ १-११४-८ (५०८१)
भीष्म उवाच। १-११४-९क्ष् (६९३)
असंशयं परो धर्मस्त्वयाः मातः प्रकीर्तितः ।

त्वमप्येतां प्रतिज्ञां तु वेत्थ या मयि वर्तते ॥ १-११४-९ (५०८२)
अमरत्वस्य वा हेतोस्त्रैलोक्यसदनस्य वा ।
उत्सृजेयमहं प्राणान्न तु सत्यं कथंचन ॥ १-११४-१० (५०८३)
सत्यवत्युवाच। १-११४-११क्ष् (६९४)
जानामि त्वयि धर्मज्ञ सत्यं सत्यपराक्रम ।
इच्छंस्त्वमिह लोकांस्त्रीन्सृजेरन्यानरिन्दम ॥ १-११४-११ (५०८४)
यथा तु नः कुलं चैव धर्मश्च न पराभवेत् ।
सुहृदश्च प्रहृष्टाः स्युस्तथा त्वं कर्तुमर्हसि ॥ १-११४-१२ (५०८५)
भीष्म उवाच। १-११४-१३क्ष् (६९५)
त्वमेव कुलवृद्धासि गौरवं तु परं त्वयि ।
सोपायं कुलसन्ताने वक्तुमर्हसि नः परम् ॥ १-११४-१३ (५०८६)
स्त्रियो हि परमं गुह्यं धारयन्ति सदा कुले ।
पुरुषांश्चैव मायाभिर्बह्वीभिरुपगृह्णते ॥ १-११४-१४ (५०८७)
सा सत्यवति संपश्य धर्मं सत्यपरायणे ।
यथा न जह्यां सत्यं च न सीदेच्च कुलं हि नः ॥' १-११४-१५ (५०८८)
वैशंपायन उवाच। १-११४-१६क्ष् (६९६)
ततः सत्यवती भीष्मं वाचा संसज्जमानया ।
विहसन्तीव सव्रीडमिदं वचनमब्रवीत् ॥ १-११४-१६ (५०८९)
सत्यमेतन्महाबाहो यथा वदसि भारत ।
विश्वासात्ते प्रवक्ष्यामि सन्तानाय कुलस्य नः ॥ १-११४-१७ (५०९०)
न ते शक्यमनाख्यातुमापद्धर्मं तथाविधम् ।
त्वमेव नः कुले धर्मस्त्वं सत्यं त्वं परा गतिः ॥ १-११४-१८ (५०९१)
ग्यत्त्वं वक्ष्यसि तत्कार्यमस्माभिरिति मे मतिः।'
तस्मान्निशम्य सत्यं मे कुरुष्व यदनन्तरम् ।
ग्शृणु भीष्म वचो मह्यं धर्मार्थसहितं हितम् ॥ १-११४-१९ (५०९२)
न च विस्रम्भकथितं भवान्सूचितुमर्हति ।
यस्तु राजा वसुर्नाम श्रुतस्ते भरतर्षभ ॥ १-११४-२० (५०९३)
तस्य शुक्लादहं मत्स्या धृता कुक्षौ पुरा किल ।
मातरं मे जलाद्धृत्वा दाशः परमधर्मवित् ॥ १-११४-२१ (५०९४)
मां तु स्वगृहमानीय दुहितृत्वेऽभ्यकल्पयत् ।
धर्मयुक्तः स धर्मेण पिता चासीत्ततो मम ॥' १-११४-२२ (५०९५)
धर्मयुक्तस्य धर्मार्थं पितुरासीत्तरी मम ।
सा कदाचिदहं तत्र गता प्रथमयौवनम् ॥ १-११४-२३ (५०९६)
अथ धर्मविदां श्रेष्ठः परमर्षिः पराशरः ।
आजगाम तरीं धीमांस्तरिष्यन्यमुनां नदीम् ॥ १-११४-२४ (५०९७)
स तार्यमाणो यमुनां मामुपेत्याब्रवीत्तदा ।

सान्त्वपूर्वं मुनिश्रेष्ठः कामार्तो मधुरं वचः ।
उक्त्वा जन्म कुलं मह्यं नासि दाशसुतेति च ॥ १-११४-२५ (५०९८)
तमहं शापभीता च पितुर्भीता च भारत ।
वरैरसुलभैरुक्ता न प्रत्याख्यातुमुत्सहे ॥१-११४-२६ (५०९९)
ग्प्रेक्ष्य तांस्तु महाभागान्पारावारे ऋषीन्स्थितान् ।
यमुनातीरविन्यस्तान्प्रदीप्तानिव पावकान् ॥१-११४-२७ (५१००)
पुरस्तादरुणश्चैव तरुणः संप्रकाशते ।
येनैषा ताम्रवस्त्रेव द्यौः कृता प्रविजृम्भिता ॥१-११४-२८ (५१०१)
उक्तमात्रो मया तत्र नीहारमसृजत्प्रभुः ।
पराशरः सत्यधृतिर्द्वीपे च यमुनाम्भसि ॥' १-११४-२९ (५१०२)
अभिभूय स मां बालां तेजसा वशमानयत् ।
तमसा लोकमावृत्य नौगतामेव भारत ॥१-११४-३० (५१०३)
मत्स्यगन्धो महानासीत्पुरा मम जुगुप्सितः ।
तमपास्य शुभं गन्धमिमं प्रादात्स मे मुनिः ॥१-११४-३१ (५१०४)
ततो मामाह स मुनिर्गर्भमुत्सृज्य मामकम् ।
द्वीपेऽस्या एव सरितः कन्यैव त्वं भविष्यसि ॥१-११४-३२ (५१०५)
कन्यात्वं च ददौ प्रीतः पुनर्विद्वांस्तपोधनः ।
तस्य वीर्यमहं दृष्ट्वा तथा युक्तं महात्मनः ॥१-११४-३३ (५१०६)
विस्मिता व्यथिता चैव प्रादामात्मानमेव च ।
ततस्तदा महात्मा स कन्यायां मयि भारत ।
प्रहृष्टोऽजनयत्पुत्रं द्वीप एव पराशरः ॥' १-११४-३४ (५१०७)
पाराशर्यो महायोगी स बभूव महानृषिः ।
कन्यापुत्रो मम पुरा द्वैपायन इति श्रुतः ॥१-११४-३५ (५१०८)
यो व्यस्य वेदांश्चतुरस्तपसा भगवानृषिः ।
लोके व्यासत्वमापेदे कार्ष्ण्यात्कृष्णत्वमेव च ॥१-११४-३६ (५१०९)
सत्यवादी शमपरस्तपस्वी दग्धकिल्बिषः ।
सद्योत्पन्नः स तु महान्सह पित्रा ततो गतः ॥१-११४-३७ (५११०)
स नियुक्तो मया व्यक्तं त्वया चाप्रतिमद्युतिः ।
भ्रातुः क्षेत्रेषु कल्याणमपत्यं जनयिष्यति ॥१-११४-३८ (५१११)
स हि मामुक्तवांस्तत्र स्मरेः कृच्छ्रेषु मामिति ।
तं स्मरिष्ये महाबाहो यदि भीष्म त्वमिच्छसि ॥१-११४-३९ (५११२)
तव ह्यनुमते भीष्म नियतं स महातपाः ।
विचित्रवीर्यक्षेत्रेषु पुत्रानुत्पादयिष्यति ॥१-११४-४० (५११३)
वैशंपायन उवाच।१-११४-४१क्ष् (६९७)
महर्षेः कीर्तने तस्य भीष्मः प्राञ्जलिरब्रवीत् ।
ग्देशकालौ च जानासि क्रियतामर्थसिद्धये।' १-११४-४१ (५११४)

धर्ममर्थं च कामं च त्रीनेतान्योनुपश्यति ॥ १-११४-४१क्ष् (६९८)
अर्थमर्थानुबन्धं च धर्मं धर्मानुबन्धनम् ।
कामं कामानुबन्धं च विपरीतान्पृथक्पृथक् ॥ १-११४-४२ (५११५)
यो विचिन्त्य धिया धीरो व्यवस्यति स बुद्धिमान् ।
तदिदं धर्मयुक्तं च हितं चैव कुलस्य नः ॥ १-११४-४३ (५११६)
उक्तं भवत्या यच्छ्रेयस्तन्मह्यं रोचते भृशम्। १-११४-४४ (५११७)
वैशंपायन उवाच ।
ततस्तस्मिन्प्रतिज्ञाते भीष्मेण कुरुनन्दन ॥ १-११४-४४क्ष् (६९९)
कृष्णद्वैपायनं काली चिन्तयामास वै मुनिम् ।
स वेदान्विब्रुवन्धीमान्मातुर्विज्ञाय चिन्तितम् ॥ १-११४-४५ (५११८)
प्रादुर्बभूवाविदितः क्षणेन कुरुनन्दन ।
तस्मै पूजां ततः कृत्वा सुताय विधिपूर्वकम् ॥ १-११४-४६ (५११९)
परिष्वज्य च बाहुभ्यां प्रस्रवैरभ्यषिञ्चत ।
मुमोच बाष्पं दाशेयी पुत्रं दृष्ट्वा चिरस्य तु ॥ १-११४-४७ (५१२०)
तामद्भिः परिषिच्यार्तां महर्षिरभिवाद्य च ।
मातरं पूर्वजः पुत्रो व्यासो वचनमब्रवीत् ॥ १-११४-४८ (५१२१)
भवत्या यदभिप्रेतं तदहं कर्तुमागतः ।
शाधि मां धर्मतत्त्वज्ञे करवाणि प्रियं तव ॥ १-११४-४९ (५१२२)
तस्मै पूजां ततोऽकार्षीत्पुरोधाः परमर्षये ।
स च तां प्रतिजग्राह विधिमन्मन्त्रपूर्वकम् ॥ १-११४-५० (५१२३)
पूजितो मन्त्रपूर्वं तु विधिवत्प्रीतिमाप सः ।
तमासनगतं माता पृष्ट्वा कुशलमव्ययम् ॥ १-११४-५१ (५१२४)
सत्यवत्यथ वीक्ष्यैनमुवाचेदमनन्तरम् ।
मातापित्रोः प्रजायन्ते पुत्राः साधारणाः कवे ॥ १-११४-५२ (५१२५)
तेषां पिता यथा स्वीमी तथा माता न संशयः ।
विधानविहितः स त्वं यथा मे प्रथमः सुतः ॥ १-११४-५३ (५१२६)
विचित्रवीर्यो ब्रह्मर्षे तथा मेऽवरजः सुतः ।
यथैव पितृतो भीष्मस्तथा त्वमपि मातृतः ॥ १-११४-५४ (५१२७)
भ्राता विचित्रवीर्यस्य यथा वा पुत्र मन्यसे ।
अयं शान्तनवः सत्यं पालयन्सत्यविक्रमः ॥ १-११४-५५ (५१२८)
बुद्धिं न कुरुतेऽपत्ये तथा राज्याऽनुशासने ।
स त्वं व्यपेक्षया भ्रातुः सन्तानाय कुलस्य च ॥ १-११४-५६ (५१२९)
भीष्मस्य चास्य वचनान्नियोगाच्च ममानघ ।
अनुक्रोशाच्च भूतानां सर्वेषां रक्षणाय च ॥ १-११४-५७ (५१३०)
आनृशंस्याच्च यद्ब्रूयां तच्छ्रुत्वा कर्तुमर्हसि ।
यवीयसस्व भ्रातुर्भार्ये सुरसुतोपमे ॥ १-११४-५८ (५१३१)

रूपयौवनसंपन्ने पुत्रकामे च धर्मतः ।
तयोरुत्पादयापत्यं समर्थो ह्यसि पुत्रक ॥१-११४-५९ (५१३२)
अनुरूपं कुलस्यास्य संतत्याः प्रसवस्य च। १-११४-६० (५१३३)
व्यास उवाच ।
वेत्थ धर्मं सत्यवति परं चापरमेव च ॥ १-११४-६०क्ष् (७००)
तथा तव महाप्राज्ञे धर्मे प्रणिहिता मतिः ।
तस्मादहं त्वन्नियोगाद्धर्ममुद्दिश्य कारणम् ॥१-११४-६१ (५१३४)
ईप्सितं ते करिष्यामि दृष्टं ह्येतत्सनातनम् ।
भ्रातुः पुत्रान्प्रदास्यामि मित्रावरुणयोः समान् ॥१-११४-६२ (५१३५)
व्रतं चरेतां ते देव्यौ निर्दिष्टमिह यन्मया ।
संवत्सरं यथान्यायं ततः शुद्धे भविष्यतः ॥१-११४-६३ (५१३६)
नहि मामव्रतोपेता उपेयात्काचिदङ्गना। १-११४-६४ (५१३७)
सत्यवत्युवाच ।
सद्यो यथा प्रपद्येते देव्यौ गर्भं तथा कुरु ॥ १-११४-६४क्ष् (७०१)
अराजकेषु राष्ट्रेषु प्रजाऽनाथा विनश्यति ।
नश्यन्ति च क्रियाः सर्वा नास्ति वृष्टिर्न देवता ॥१-११४-६५ (५१३८)
कथं चाराजकं राष्ट्रं शक्यं धारयितुं प्रभो ।
तस्माद्गर्भं समाधत्स्व भीष्मः संवर्धयिष्यति ॥१-११४-६६ (५१३९)
व्यास उवाच।१-११४-६७क्ष् (७०२)
यदि पुत्रः प्रदातव्यो मया भ्रातुरकालिकः ।
विरूपतां मे सहतां तयोरेतत्परं व्रतम् ॥१-११४-६७ (५१४०)
यदि मे सहते गन्धं रूपं वेषं तथा वपुः ।
अद्यैव गर्भं कौसल्या विशिष्टं प्रतिपद्यताम् ॥१-११४-६८ (५१४१)
ग्तस्यापि च शतं पुत्रा भवितारो न संशयः ।
गोप्तारः कुरुवंशस्य भवत्याः शोकनाशनाः ॥' १-११४-६९ (५१४२)
वैशंपायन उवाच।१-११४-७०क्ष् (७०३)
एवमुक्त्वा महातेजा व्यासः सत्यवतीं तदा ।
शयने सा च कौसल्या शुचिवस्त्रा ह्यलङ्कृता ॥१-११४-७० (५१४३)
समागमनमाकाङ्क्षेदिति सोऽन्तर्हितो मुनिः ।
ततोऽभिगम्य सा देवी स्नुषां रहसि संगताम् ॥१-११४-७१ (५१४४)
धर्म्यमर्थसमायुक्तमुवाच वचनं हितम् ।
कौसल्ये धर्मतन्त्रं त्वां यद्ब्रवीमि निबोध तत् ॥१-११४-७२ (५१४५)
भरतानां समुच्छेदो व्यक्तं मद्भाग्यसंक्षयात् ।
व्यथितां मां च संप्रेक्ष्य पितृवंशं च पीडितम् ॥१-११४-७३ (५१४६)
भीष्मो बुद्धिमदान्मह्यं कुलस्यास्य विवृद्धये ।
सा च बुद्धिस्त्वय्यधीना पुत्रि प्रापय मां तथा ॥१-११४-७४ (५१४७)

नष्टं च भारतं वंशं पुनरेव समुद्धर ।
पुत्रं जनय सुश्रोणि देवराजसमप्रभम् ॥ १-११४-७५ (५१४८)
स हि राज्यधुरं गुर्वीमुद्वक्ष्यति कुलस्य नः ।
गएवमुक्त्वा तु सा देवी स्नुषां सत्यवती तदा ॥' १-११४-७६ (५१४९)
सा धर्मतोऽनुनीयैनां कथंचिद्धर्मचारिणीम् ।
भोजयामास विप्रांश्च देवर्षीनतिथींस्तथा ॥ ॥ १-११४-७७ (५१५०)

इति श्रीमन्महाभारते आदिपर्वणि संभवपर्वणि
चतुर्दशाधिकशततमोऽध्यायः ॥ ११४ ॥
Mahabharata - Adi Parva - Chapter Footnotes

१-११४-१६ संसज्जमानया स्खलनवत्या ॥
१-११४-१७ विश्वासादन्तरङ्गत्वबुद्धेः । संतानाय विस्ताराय ॥
१-११४-१८ आपद्धर्ममवेक्ष्येति शेषः ॥
१-११४-३८ व्यक्तं निःसंशयम् ॥
१-११४-४२ अनुबध्यतेऽनेनेत्यनुबन्धः फलं ॥
१-११४-४५ काली सत्यवती ॥
१-११४-४७ प्रस्रवैः स्नेहस्रुतस्तनैः ॥
१-११४-५३ विधानविहितः पूर्वपुण्यप्रसूतः ॥
१-११४-५६ व्यपेक्षया स्नेहानुबन्धेन ॥
१-११४-५८ आनृशंस्यादनैष्ठुर्यात् ॥
१-११४-६३ देव्यौ राजभार्ये ॥
१-११४-७४ यथा भीष्मेणोक्तं तथा मां प्रापय इष्टार्थेन योजय ॥
१-११४-७६ उद्वक्ष्यति धुरं धुर उद्वहनंम करिष्यति ॥
चतुर्दशाधिकशततमोऽध्यायः ॥
११४ ॥

---

अध्यय११५
॥ श्रीः ॥
१.११५. अध्यायः ११५

Mahabharata - Adi Parva - Chapter Topics
अम्बिकायां व्यासाद्धृतराष्ट्रस्योत्पत्तिः ॥ १ ॥
अम्बालिकायां पाण्डोरुत्पत्तिः ॥ २ ॥
अम्बिकादास्यां विदुरस्योत्पत्तिः ॥ ३ ॥

Mahabharata - Adi Parva - Chapter Text

१-११५-० (५१५१)
वैशंपायन उवाच। १-११५-०क्ष् (७०४)
ततः सत्यवती काले वधूं स्नातामृतौ तदा ।
संवेशयन्ती शयने शनैर्वचनमब्रवीत् ॥ १-११५-१ (५१५२)
कौसल्ये देवरस्तेऽस्ति सोऽद्य त्वाऽनुप्रवेक्ष्यति ।
अप्रमत्ता प्रतीक्षैनं निशीथे ह्यागमिष्यति ॥ १-११५-२ (५१५३)
श्वश्र्वास्तद्वचनं श्रुत्वा शयाना शयने शुभे ।
साऽचिन्तयत्तदा भीष्ममन्यांश्च कुरुपुङ्गवान् ॥ १-११५-३ (५१५४)
ग्ततः सुप्तजनप्रायेऽर्धरात्रे भगवानृषिः ।
दीप्यमानेषु दीपेषु शरणं प्रविवेश ह ॥ १-११५-४ (५१५५)
ततोऽम्बिकायां प्रथमं नियुक्तः सत्यवागृषिः ।
जगाम तस्याः शयनं विपुले तपसि स्थितः ॥ १-११५-५ (५१५६)
तं समीक्ष्य तु कौसल्या दुष्प्रेक्षमतथोचिता ।
विरूप इति वित्रस्ता संकुच्यासीन्निमीलिता ॥ १-११५-६ (५१५७)
विरूपो हि जटी चापि दुर्वर्णः परुषः कृशः ।
सुगन्धेतरगन्धश्च सर्वथा दुष्प्रधर्षणः ॥' १-११५-७ (५१५८)
तस्य कृष्णस्य कपिलां जटां दीप्ते च लोचने ।
बभ्रूणि चैव श्मश्रूमि दृष्ट्वा देवी न्यमीलयत् ॥ १-११५-८ (५१५९)
संभूव तया सार्धं मातुः प्रियचिकीर्षया ।
भयात्काशिसुता तं तु नाशक्नोदभिवीक्षितुम् ॥ १-११५-९ (५१६०)
ततो निष्क्रान्तमागम्य माता पुत्रमुवाच ह ।
अप्यस्यां गुणवान्पुत्र राजपुत्रो भविष्यति ॥ १-११५-१० (५१६१)
निशम्य तद्वचो मातुर्व्यासः सत्यवतीसुतः ।
ग्प्रोवाचातीन्द्रियज्ञानो विधिना संप्रचोदितः ॥' १-११५-११ (५१६२)
नागायुतसमप्राणो विद्वान्राजर्षिसत्तमः ।
महाभागो महावीर्यो महाबुद्धिर्भविष्यति ॥ १-११५-१२ (५१६३)
तस्य चापि शतं पुत्रा भविष्यन्ति महात्मनः ।
किंतु मातुः स वैगुण्यादन्ध एव भविष्यति ॥ १-११५-१३ (५१६४)
तस्य तद्वचनं श्रुत्वा माता पुत्रमथाऽब्रवीत् ।
नान्धः कुरूणां नृपतिरनुरूपस्तपोधन ॥ १-११५-१४ (५१६५)
ज्ञातिवंशस्य गोप्तारं पितॄणां वंशवर्धनम् ।
ग्अपरस्यामपि पुनर्मम शोकविनाशनम् ॥ १-११५-१५ (५१६६)
तस्मादवरजं पुत्रं जनयान्यं नराधिपम् ।
भ्रातुर्भार्याऽवरा चेयं रूपयौवनशालिनी ॥ १-११५-१६ (५१६७)
अस्यामुत्पादयाऽपत्यं मन्नियोगाद्गुणाधिकम् ।'

द्वितीयं कुरुवंशस्य राजानं दातुमर्हसि ॥ १-११५-१७ (५१६८)
स तथेति प्रतिज्ञाय निश्चक्राम महायशाः ।
साऽपि कालेन कौसल्या सुषुवेऽन्धं तमात्मजम् ॥१-११५-१८ (५१६९)
पुनरेव तु सा देवी परिभाष्य स्नुषां ततः ।
ऋषिमावाहयत्सत्या यथापूर्वमरिन्दम ॥१-११५-१९ (५१७०)
ग्अम्बालिकां समाहूय तस्यां सत्यवती सुतम् ।
भूयो नियोजयामास सन्तानाय कुलस्य वै ॥१-११५-२० (५१७१)
विषण्णाम्बालिका साध्वी निषण्णा शयनोत्तमे ।
कोन्वेष्यतीति ध्यायन्ती नियतां संप्रतीक्षते'॥१-११५-२१ (५१७२)
ततस्तेनैव विधिना महर्षिस्तामपद्यत ।
अम्बालिकामथाऽभ्यागादृषिं दृष्ट्वा च साऽपि तम् ॥१-११५-२२ (५१७३)
विवर्णा पाण्डुसंकाशा समपद्यत भारत ।
तां भीतां पाण्डुसंकाशां विषण्णां प्रेक्ष्य भारत ॥१-११५-२३ (५१७४)
व्यासः सत्यवतीपुत्र इदं वचनमब्रवीत् ।
यस्मात्पाण्डुत्वमापन्ना विरूपं प्रेक्ष्य मामिह ॥१-११५-२४ (५१७५)
तस्मादेष सुतस्ते वै पाण्डुरेव भविष्यति ।
नाम चास्यैतदेवेह भविष्यति शुभानने ॥१-११५-२५ (५१७६)
इत्युक्त्वा स निराक्रामद्भगवानृषिसत्तमः ।
ततो निष्क्रान्तमालोक्य सत्या पुत्रमथाऽब्रवीत् ॥१-११५-२६ (५१७७)
ग्कुमारो ब्रूहि मे पुत्र अप्यत्र भविता शुभः।'
शशंस स पुनर्मात्रे तस्य बालस्य पाण्डुताम् ॥ १-११५-२७ (५१७८)
ग्भविष्यति सुविक्रान्तः कुमारो दिक्षु विश्रुतः ।
पाण्डुत्वं वर्णतस्तस्य मातृदोषाद्भविष्यति ॥१-११५-२८ (५१७९)
तस्य पुत्रा महेष्वासा भविष्यन्तीह पञ्च वै ।
इत्युक्त्वा मातरं तत्र सोऽभिवाद्य जगाम ह ॥' १-११५-२९ (५१८०)
तं माता पुनरेवान्यमेकं पुत्रमयाचत ।
तथेति च महर्षिस्तां मातरं प्रत्यभाषत ॥१-११५-३० (५१८१)
ततः कुमारं सा देवी प्राप्तकालमजीजनत् ।
पाण्डुलक्षणसंपन्नं दीप्यमानमिव श्रिया ॥१-११५-३१ (५१८२)
यस्य पुत्रा महेष्वासा जज्ञिरे पञ्च पाण्डवाः ।
ग्तयोर्जन्मक्रियाः सर्वा यथावदनुपूर्वशः ॥१-११५-३२ (५१८३)
कारयामास वै भीष्मो ब्राह्मणैर्वेदपारगैः ।
अन्धं दृष्ट्वाऽम्बिकापुत्रं जातं सत्यवती सुतम् ॥१-११५-३३ (५१८४)
कौसल्यार्थे समाहूय पुत्रमन्यमयाचत ।
अन्धोयमन्यमिच्छामि कौसल्यातनयं शुभम् ॥१-११५-३४ (५१८५)
एवमुक्तो महर्षिस्तां मातरं प्रत्यभाषत ।

नियता यदि कौसल्या भविष्यति पुनःशुभा ॥ १-११५-३५ (५१८६)
भविष्यति कुमारोऽस्या धर्मशास्त्रार्थतत्ववित् ।
तां समाधाय वै भूयः स्नुषां सत्यवती पुनः ॥' १-११५-३६ (५१८७)
ऋतुकाले ततो ज्येष्ठां वधूं तस्मै न्ययोजयत् ।
सा तु रूपं च गन्धं च महर्षेः प्रविचिन्त्य तं ॥ १-११५-३७ (५१८८)
नाकरोद्वचनं देव्या भयात्सुरसुतोपमा ।
ततःस्वैर्भूषणैर्दासीं भूषयित्वाऽप्सरोपमाम् ॥ १-११५-३८ (५१८९)
प्रेषयामास कृष्णाय ततः काशिपतेः सुता ।
सा तं त्वृषिमनुप्राप्तं प्रत्युद्गम्याभिवाद्य च ॥ १-११५-३९ (५१९०)
संविवेशाभ्यनुज्ञाता सत्कृत्योपचचार ह ।
ग्वाग्भावोपप्रदानेन गात्रसंस्पर्शनेन च ॥' १-११५-४० (५१९१)
कामोपभोगेन रहस्तस्यां तुष्टिमगादृषिः ।
तया सहोषितो राजन्महर्षिः संशितव्रतः ॥ १-११५-४१ (५१९२)
उत्तिष्ठन्नब्रवीदेनामभुजिष्या भविष्यसि ।
अयं च ते शुभे गर्भः श्रेयानुदरमागतः ।
धर्मात्मा भविता लोके सर्वबुद्धिमतां वरः ॥ १-११५-४२ (५१९३)
स जज्ञे विदुरो नाम कृष्णद्वैपायनात्मजः ।
धृतराष्ट्रस्य वै भ्राता पाण्डोश्चैव महात्मनः ॥ १-११५-४३ (५१९४)
धर्मो विदुररूपेण शापात्तस्य महात्मनः ।
माण्डव्यस्यार्थतत्त्वज्ञः कामक्रोधविवर्जितः ॥ १-११५-४४ (५१९५)
कृष्णद्वैपायनोऽप्येतत्सत्यवत्यै न्यवेदयत् ।
प्रलम्भमात्मनश्चैव शूद्रायाः पुत्रजन्म च ॥ १-११५-४५ (५१९६)
स धर्मस्यानृणो भूत्वा पुनर्मात्रा समेत्य च ।
तस्यै गर्भं समावेद्य तत्रैवान्तरधीयत ॥ १-११५-४६ (५१९७)
एते विचित्रवीर्यस्य क्षेत्रे द्वैपायनादपि ।
जज्ञिरे देवगर्भाभाः कुरुवंशविवर्धनाः ॥ ॥ १-११५-४७ (५१९८)

इति श्रीमन्महाभारते आदिपर्वणि संभवपर्वणि
पञ्चादशाधिकशततमोऽध्यायः ॥ ११५ ॥

Mahabharata - Adi Parva - Chapter Footnotes

१-११५-४२ अभुजिष्या अदासी ॥
१-११५-४५ प्रलम्भमात्मस्थोने दासीनियोजनम् ॥
पञ्चादशाधिकशततमोऽध्यायः ॥
११५ ॥

---

अध्यय११६

॥ श्रीः ॥
१.११६. अध्यायः ११६

Mahabharata - Adi Parva - Chapter Topics
माण्डव्योपाख्यानम् ॥ १ ॥
राजाज्ञया माण्डव्यस्य शूलारोपणम् ॥ २ ॥

Mahabharata - Adi Parva - Chapter Text

१-११६-० (५१९९)
जनमेजय उवाच। १-११६-०क्ष् (७०५)
किं कृतं कर्म धर्मेण येन शापमुपेयिवान् ।
कस्य शापाच्च ब्रह्मर्षेः शूद्रयोनावजायत ॥ १-११६-१ (५२००)
वैशंपायन उवाच। १-११६-२क्ष् (७०६)
बभूव ब्राह्मणः कश्चिन्माण्डव्य इति विश्रुतः ।
धृतिमान्सर्वधर्मज्ञः सत्ये तपसि च स्थितः ॥ १-११६-२ (५२०१)
ग्स तीर्थयात्रां विचरन्नाजगाम यदृच्छया ।
संनिकृष्टानि तीर्थानि ग्रामाणां यानि कानि च ।
तत्राश्रमपदं कृत्वा वसति स्म महामुनिः ॥' १-११६-३ (५२०२)
स आश्रमपदद्वारि वृक्षमूले महातपाः ।
ऊर्ध्वबाहुर्महायोगी तस्थौ मौनव्रतान्वितः ॥ १-११६-४ (५२०३)
तस्य कालेन महता तस्मिंस्तपसि वर्ततः ।
तमाश्रममनुप्राप्ता दस्यवो लोप्त्रहारिणः ॥ १-११६-५ (५२०४)
अनुसार्यमाणा बहुभी रक्षिभिर्भरतर्षभ ।
ग्तामेव वसतिं जग्मुस्ते ग्रामाल्लोप्त्रहारिणः ॥ १-११६-६ (५२०५)
यस्मिन्नावसथे शेते स मुनिः संशितव्रतः।'
ते तस्यावसथे लोप्त्रं दस्यवः कुरुसत्तम ॥ १-११६-७ (५२०६)
निधाय च भयाल्लीनास्तत्रैवानागते बले ।
तेषु लीनेष्वथो शीघ्रं ततस्तद्रक्षिणां बलम् ॥ १-११६-८ (५२०७)
आजगाम ततोऽपश्यंस्तमृषिं तस्करानुगाः ।
तमपृच्छंस्ततो राजंस्तथावृत्तं तपोधनम् ॥ १-११६-९ (५२०८)
कतरेण पथा याता दस्यवो द्विजसत्तम ।
तेन गच्छामहे ब्रह्मन्यथा शीघ्रतरं वयम् ॥ १-११६-१० (५२०९)
तथा तु रक्षिमां तेषां ब्रुवतां स तपोधनः ।
न किंचिद्वचनं राजन्नब्रवीत्साध्वसाधु वा ॥ १-११६-११ (५२१०)
ततस्ते राजपुरुषा विचिन्वानास्तमाश्रमम् ।

ददृशुस्तत्र लीनांस्तांश्चोरांस्तद्द्रव्यमेव च ॥ १-११६-१२ (५२११)
ततः शङ्का समभवद्रक्षिणां तं मुनिं प्रति ।
संयम्यैनं ततो राज्ञे दस्यूंश्चैव न्यवेदयन् ॥ १-११६-१३ (५२१२)
तं राजा सह तैश्चोरैरन्वशाद्वध्यतामिति ।
स रक्षिभिस्तैरज्ञातः शूले प्रोतो महातपाः ॥ १-११६-१४ (५२१३)
ततस्ते शूलमारोप्य तं मुनिं रक्षिणस्तदा ।
प्रतिजग्मुर्महीपालं धनान्यादाय तान्यथ ॥ १-११६-१५ (५२१४)
शूलस्थः स तु धर्मात्मा कालेन महता ततः ।
निराहारोऽपि विप्रर्षिर्मरणं नाभ्यपद्यत ॥ १-११६-१६ (५२१५)
धारयामास च प्राणानृषींश्च समुपानयत् ।
शूलाग्रे तप्यमानेन तपस्तेन महात्मना ॥ १-११६-१७ (५२१६)
सन्तापं परमं जग्मुर्मुनयस्तपसाऽन्विताः ।
ते रात्रौ शकुना भूत्वा सन्निपत्त्य तु भारत ।
दर्शन्तो यथाशक्ति तमपृच्छन्द्विजोत्तमम् ॥ १-११६-१८ (५२१७)
श्रोतुमिच्छामहे ब्रह्मन्किं पापं कृतवानसि ।
येनेह समनुप्राप्तं शूले दुःखभयं महत् ॥ ॥ १-११६-१९ (५२१८)

इति श्रीमन्महाभारते आदिपर्वणि संभवपर्वणि
षोडशाधिकशततमोऽध्यायः ॥ ११६ ॥
Mahabharata - Adi Parva - Chapter Footnotes

१-११६-१ कस्य कीदृशस्य ॥
१-११६-६ लोप्त्रं लुप्यत इति व्युत्पत्त्या चोरापहृतं धनम् ॥
१-११६-८ बले राजसैन्ये ॥
१-११६-१३ संयम्य चोरवन्निगृह्य ॥
१-११६-१४ प्रोतोऽर्पितः ॥
१-११६-१७ समुपानयात् स्वसमीपमिति शेषः ॥
१-११६-१८ दर्शयन्तः स्वानि रूपामि प्रकाशयन्तः ॥
षोडशाधिकशततमोऽध्यायः ॥
११६ ॥

---

अध्यय११७
॥ श्रीः ॥
१.११७. अध्यायः ११७

Mahabharata - Adi Parva - Chapter Topics
माण्डव्यं ऋषिं ज्ञात्वा भीतेन राज्ञा तस्य शूलाद्विमोक्षणम् ॥ १ ॥

अणीमाण्डव्यस्य यमेन विवादः ॥ २ ॥
माण्डव्यं न यमस्य शापः ॥ ३ ॥

Mahabharata - Adi Parva - Chapter Text

१-११७-० (५२१९)
वैशंपायन उवाच। १-११७-०क्ष् (७०७)
ततः स मुनिशार्दूलस्तानुवाच तपोधनान् ।
दोषतः कं गमिष्यामि न हि मेऽन्योपराध्यति ॥ १-११७-१ (५२२०)
तं दृष्ट्वा रक्षिणस्तत्र तथा बहुतिथेऽहनि ।
न्यवेदयंस्तथा राज्ञे यथावृत्तं नराधिप ॥ १-११७-२ (५२२१)
राजा च तमृषिं श्रुत्वा निष्क्रम्य सह मन्त्रिभिः ।
प्रसादयामास तदा शूलस्थमृषिसत्तमम् ॥ १-११७-३ (५२२२)
प्रजोवाच। १-११७-४क्ष् (७०८)
यन्मयाऽपकृतं मोहादज्ञानादृषिसत्तम ।
प्रसादये त्वां तत्राहं न मे त्वं क्रोद्धुमर्हसि ॥ १-११७-४ (५२२३)
वैशंपायन उवाच। १-११७-५क्ष् (७०९)
एवमुक्तस्ततो राज्ञा प्रसादमकरोन्मुनिः ।
कृतप्रसादं राजा तं ततः समवतारयत् ॥ १-११७-५ (५२२४)
अवतार्य च शूलाग्रात्तच्छूलं निश्चकर्ष ह ।
अशक्नुवंश्च निष्क्रष्टुं शूलं मूले स चिच्छिदे ॥ १-११७-६ (५२२५)
स तथान्तर्गतेनैव शूलेन व्यचरन्मुनिः ।
कण्ठपार्श्वान्तरस्थेन शङ्कुना मुनिराचत् ।
पुष्पभाजनधारी स्यादिति चिन्तापरोऽभवत् ॥' १-११७-७ (५२२६)
स चातितपसा लोकान्विजिग्ये दुर्लभान्परैः ॥ १-११७-८ (५२२७)
अणीमाण्डव्य इति च ततो लोकेषु गीयते ।
स गत्वा सदनं विप्रो धर्मस्य परमार्थवित् ॥ १-११७-९ (५२२८)
आसनस्थं ततो धर्मं दृष्ट्वोपालभत प्रभुम् ।
किं नु तद्दुष्कृतं कर्म मया कृतमजानता ॥ १-११७-१० (५२२९)
यस्येयं फलनिर्वृत्तिरीदृश्यासादिता मया ।
शीघ्रमाचक्ष्व मे तत्त्वं पश्य मे तपसो बलम् ॥ १-११७-११ (५२३०)
धर्म उवाच। १-११७-१२क्ष् (७१०)
पतङ्गिकानां पुच्छेषु त्वयेषीका प्रवेशिता ।
कर्मणस्तस्य ते प्राप्तं फलमेतत्तपोधन ॥ १-११७-१२ (५२३१)
स्वल्पमेव यथा दत्तं दानं बहुगुणं भवेत् ।
अधर्म एवं विप्रर्षे बहुदुःखफलप्रदः ॥ १-११७-१३ (५२३२)

अणीमाण्डव्य उवाच। १-११७-१४क्ष् (७११)
कस्मिन्काले मया तत्तु कृतं ब्रूहि यथातथम् ।
तेनोक्तं धर्मराजेन बालभावे त्वया कृतम् ॥ १-११७-१४ (५२३३)
अणीमाण्डव्य उवाच। १-११७-१५क्ष् (७१२)
बालो हि द्वादशाद्वर्षाज्जन्मतो यत्करिष्यति ।
न भविष्यत्यधर्मोऽत्र न प्रज्ञास्यति वै दिशः ॥ १-११७-१५ (५२३४)
अल्पेऽपराधेऽपि महान्मम दण्डस्त्वया धृतः ।
गरीयान्ब्राह्मणवधः सर्वभूतवधादपि ॥ १-११७-१६ (५२३५)
शूद्रयोनावतो धर्म मानुषः संभविष्यसि ।
मर्यादां स्थापयाम्यद्य लोके कर्मफलोदयाम् ॥ १-११७-१७ (५२३६)
आ चतुर्दशकाद्वर्षान्न भविष्यति पातकम् ।
परतः कुर्वतामेव दोष एव भविष्यति ॥ १-११७-१८ (५२३७)
वैशंपायन उवाच। १-११७-१९क्ष् (७१३)
एतेन त्वपराधेन शापात्तस्य महात्मनः ।
धर्मो विदुररूपेण शूद्रयोनावजायत ॥ १-११७-१९ (५२३८)
धर्मे चार्थे च कुशलो लोभक्रोधविवर्जितः ।
दीर्घदर्शी शमपरः कुरूणां च हिते रतः ॥ ॥ १-११७-२० (५२३९)

इति श्रीमन्महाभारते आदिपर्वणि संभवपर्वणि
सप्तदशाधिकशततमोऽध्यायः ॥ ११७ ॥
Mahabharata - Adi Parva - Chapter Footnotes

१-११७-१ दोषतः कंगमिष्यामि न कमपि दोषिणं कथयामि
। स्वकृतमे भुञ्जे इत्यर्थः ॥
१-११७-९ अणी शूलाग्रं तद्युक्तो माण्डव्यः ॥
१-११७-१० उपालभत गर्हितवान् ॥
१-११७-१५ दिशो देशनाः धर्मशास्त्राणि यतो न प्रज्ञास्यति बालत्वात् ॥
१-११७-१६ ब्राह्मणवधो ब्राह्मणपीडनम् ॥
१-११७-२० दीर्घदर्शी सर्वकालपरामर्शी । शमपरो निर्वैरः ॥
सप्तदशाधिकशततमोऽध्यायः ॥
११७ ॥

---

अध्यय११८
॥ श्रीः ॥
१.११८. अध्यायः ११८

Mahabharata - Adi Parva - Chapter Topics

कंचित्कालं भीष्मेण राज्यपरिपालनानन्तरं पाण्डो राज्येऽभिषेकः ॥ १ ॥

Mahabharata - Adi Parva - Chapter Text

१-११८-० (५२४०)
वैशंपायन उवाच। १-११८-०क्ष् (७१४)
ग्धृतराष्ट्रे च पाण्डौ च विदुरे च महात्मनि।ʼ
एषु त्रिषु कुमारेषु जातेषु कुरुजाङ्गलम् ।
कुरवोऽथ कुरुक्षेत्रं त्रयमेतदवर्धत ॥ १-११८-१ (५२४१)
ऊर्ध्वसस्याऽभवद्भूमिः सस्यानि फलवन्ति च ।
यथर्तुवर्षी पर्जन्यो बहुपुष्पफला द्रुमाः ॥ १-११८-२ (५२४२)
वाहनानि प्रहृष्टानि मुदिता मृगपक्षिणः ।
गन्धवन्ति च माल्यानि रसवन्ति फलानि च ॥ १-११८-३ (५२४३)
वणिग्भिश्चान्वकीर्यन्त नगराण्यथ शिल्पिभिः ।
शूराश्च कृतविद्याश्च सन्तश्च सुखिनोऽभवन् ॥ १-११८-४ (५२४४)
नाभवन्दस्यवः केचिन्नाधर्मरुचयो जनाः ।
प्रदेशेष्वपि राष्ट्राणां कृतं युगमवर्तत ॥ १-११८-५ (५२४५)
धर्मक्रिया यज्ञशीलाः सत्यव्रतपरायणाः ।
अन्योन्यप्रीतिसंयुक्ता व्यवर्धन्त प्रजास्तदा ॥ १-११८-६ (५२४६)
मानक्रोधविहीनाश्च नरा लोभविवर्जिताः ।
अन्योन्यमभ्यनन्दन्त धर्मोत्तरमवर्तत ॥ १-११८-७ (५२४७)
तन्महोदधिवत्पूर्णं नगरं वै व्यरोचत ।
द्वारतोरणनिर्यूहैर्युक्तमभ्रचयोपमैः ॥ १-११८-८ (५२४८)
प्रसादशतसंबाधं महेन्द्रपुरसन्निभम् ।
नदीषु वनखण्डेषु वापीपल्वलसानुषु ।
काननेषु च रम्येषु विजह्रुर्मुदिता जनाः ॥ १-११८-९ (५२४९)
उत्तरैः कुरुभिः सार्धं दक्षिणाः कुरवस्तथा ।
विस्पर्धमाना व्यचरंस्तथा देवर्षिचारणैः ॥ १-११८-१० (५२५०)
नाभवत्कृपणः कश्चिन्नाभवन्विधवाः स्त्रियः ।
तस्मिञ्जनपदे रम्ये कुरुभिर्बहुलीकृते ॥ १-११८-११ (५२५१)
कूपारामसभावाप्यो ब्राह्मणावसथास्तथा ।
बभूवुः सर्वर्द्धियुतास्तस्मिन्राष्ट्रे सदोत्सवाः ॥ १-११८-१२ (५२५२)
भीष्मेण धर्मतो राजन्सर्वतः परिरक्षिते ।
बभूव रमणीयश्च चैत्ययूपशताङ्कितः ॥ १-११८-१३ (५२५३)
स देशः परराष्ट्राणि विमृज्याभिप्रवर्धितः ।
भीष्मेण विहितं राष्ट्रे धर्मचक्रमवर्तत ॥ १-११८-१४ (५२५४)

क्रियमाणेषु कृत्येषु कुमाराणां महात्मनाम् ।
पौरजानपदाः सर्वे बभूवुः परमोत्सुकाः ॥ १-११८-१५ (५२५५)
गृहेषु कुरुमुख्यानां पौराणां च नराधिप ।
दीयतां भुज्यतां चेति वाचोऽश्रूयन्त सर्वशः ॥ १-११८-१६ (५२५६)
धृतराष्ट्रश्च पाण्डुश्च विदुरश्च महामतिः ।
जन्मप्रभृति भीष्मेण पुत्रवत्परिपालिताः ॥ १-११८-१७ (५२५७)
संस्कारैः संस्कृतास्ते तु व्रताध्ययनसंयुताः ।
श्रमव्यायामकुशलाः समपद्यन्त यौवनम् ॥ १-११८-१८ (५२५८)
धनुर्वेदे च वेदे च गदायुद्धेऽसिचर्मणि ।
तथैव गजशिक्षायां नीतिशास्त्रेषु पारगाः ॥ १-११८-१९ (५२५९)
इतिहासपुराणेषु नानाशिक्षासु बोधिताः ।
वेदवेदाङ्गतत्त्वज्ञाः सर्वत्र कृतनिश्चयाः ॥ १-११८-२० (५२६०)
ग्वैदिकाध्ययने युक्तो नीतिशास्त्रेषु पारगः ।
भीष्मेण राजा कौरव्यो धृतराष्ट्रोऽभिषेचितः ॥ १-११८-२१ (५२६१)
धनुर्वेदेऽश्वपृष्ठे च गदायुद्धेऽसिचर्मणि ।
तथैव गजशिक्षायामस्त्रेषु विविधेषु च ॥ १-११८-२२ (५२६२)
अर्थधर्मप्रधानासु विद्यासु विविधासु च ।
गतः पारं यदा पाण्डुस्तदा सेनापतिः कृतः ॥' १-११८-२३ (५२६३)
पाण्डुर्धनुषि विक्रान्तो नरेष्वभ्यधिकोऽभवत् ।
अन्येभ्यो बलवानासीद्धृतराष्ट्रो महीपतिः ॥ १-११८-२४ (५२६४)
अमात्यो मनुजेन्द्रस्य बाल एव यशस्विनः ।
भीष्मेण सर्वधर्माणां प्रणेता विदुरः कृतः ॥ १-११८-२५ (५२६५)
ग्सर्वशास्त्रार्थतत्त्वज्ञो बुद्धिमेधापटुर्युवा ।
भावेनागमयुक्तेन सर्वं वेदयते जगत् ॥' १-११८-२६ (५२६६)
त्रिषु लोकेषु न त्वासीत्कश्चिद्विदुरसंमितः ।
धर्मनित्यस्तथा राजन्धर्मे च परमं गतः ॥ १-११८-२७ (५२६७)
प्रनष्टं शान्तनोर्वंशं समीक्ष्य पुनरुद्धृतम् ।
ततो निर्वचनं लोके सर्वराष्ट्रेष्ववर्तत ॥ १-११८-२८ (५२६८)
वीरसूनां काशिसुते देशानां कुरुजाङ्गलम् ।
सर्वध्रमविदां भीष्मः पुराणां गजसाह्वयम् ॥ १-११८-२९ (५२६९)
धृतराष्ट्रस्त्वचक्षुष्ट्वाद्राज्यं न प्रत्यपद्यत ।
पारसवत्वाद्विदुरो राजा पाण्डुर्बभूव ह ॥ १-११८-३० (५२७०)
ग्अथ शुश्राव विप्रेभ्यः कुन्तिभोजमहीपतेः ।
रूपयौवनसंपन्नां सुतां सागरगासुतः ॥ १-११८-३१ (५२७१)
सुबलस्य च कल्याणीं गान्धाराधिपतेः सुताम् ।
सुतां च मद्रराजस्य रूपेणाप्रतिमां भुवि ॥' १-११८-३२ (५२७२)

कदाचिदथ गाङ्गेयः सर्वनीतिमतां वरः ।
विदुरं धर्मतत्त्वज्ञं वाक्यमाह यथोचितम् ॥ ॥ १-११८-३३ (५२७३)

इति श्रीमन्महाभारते आदिपर्वणि संभवपर्वणि
अष्टादशाधिकशततमोऽध्यायः ॥ ११८ ॥
Mahabharata - Adi Parva - Chapter Footnotes

१-११८-२ ऊर्ध्वसस्या प्रचुरसस्या ॥
१-११८-१८ श्रमः शास्त्राभ्यासः । व्यायामो बाहुयुद्धाद्यभ्यासः ॥
१-११८-२८ निर्वचनं प्रशंसा ॥
१-११८-३० पारसवत्वाच्छूद्रायां ब्राह्मणाज्जातत्वात् ॥
अष्टादशाधिकशततमोऽध्यायः ॥
११८ ॥

---

अध्यय११९
॥ श्रीः ॥
१.११९. अध्यायः ११९

Mahabharata - Adi Parva - Chapter Topics
धृतराष्ट्रविवाहार्थं भीष्मविदुरसंवादः ॥ १ ॥
धृतराष्ट्रस्य गान्धार्या विवाहः ॥ २ ॥

Mahabharata - Adi Parva - Chapter Text

१-११९-० (५२७४)
भीष्म उवाच । १-११९-०क्ष् (७१५)
गुणैः समुदितं सम्यगिदं नः प्रथितं कुलम् ।
अत्यन्यान्पृथिवीपालान्पृथिव्यामधिराज्यभाक् ॥ १-११९-१ (५२७५)
रक्षितं राजभिः पूर्वं धर्मविद्भिर्महात्मभिः ।
नोत्सादमगमच्चेदं कदाचिदिह नः कुलम् ॥ १-११९-२ (५२७६)
मया च सत्यवत्या च कृष्णेन च महात्मना ।
समवस्थापित भूयो युष्मासु कुलतन्तुषु ॥ १-११९-३ (५२७७)
तच्चैतद्वर्धते भूयः कुलं सागरवद्यथा ।
तथा मया विधातव्यं त्वया चैव न संशयः ॥ १-११९-४ (५२७८)
श्रूयते यादवी कन्या स्वनुरूपा कुलस्य नः ।
सुबलस्यात्मजा चैव तथा मद्रेश्वरस्य च ॥ १-११९-५ (५२७९)
कुलीना रूपवत्यश्च ताः कन्याः पुत्र सर्वशः ।

उचिताश्चैव संबन्धे तेऽस्माकं क्षत्रियर्षभाः ॥ १-११९-६ (५२८०)
मन्ये वरयितव्यास्ता इत्यहं धीमतां वर ।
सन्तानार्थं कुलस्यास्य यद्वा विदुर मन्यसे ॥ १-११९-७ (५२८१)
विदुर उवाच। १-११९-८क्ष् (७१६)
भवान्पिता भावन्माता भवान्नः परमो गुरुः ।
तस्मात्स्वयं कुलस्यास्य विचार्य कुरु यद्धितम् ॥ १-११९-८ (५२८२)
वैशंपायन उवाच। १-११९-९क्ष् (७१७)
अथ शुश्राव विप्रेभ्यो गान्धारीं सुबलात्मजाम् ।
आराध्य वरदं देवं भगनेत्रहरं हरम् ॥ १-११९-९ (५२८३)
गान्धारी किल पुत्राणां शतं लेभे वरं शुभा ।
इति शुश्राव तत्त्वेन भीष्मः कुरुपितामहः ॥ १-११९-१० (५२८४)
ततो गान्धारराजस्य प्रेषयामास भारत ।
अचक्षुरिति तत्रासीत्सुबलस्य विचारणा ॥ १-११९-११ (५२८५)
कुलं ख्यातिं च वृत्तं च बुद्ध्या तु प्रसमीक्ष्य सः ।
ददै तां धृतराष्ट्राय गान्धारीं धर्मचारिणीम् ॥ १-११९-१२ (५२८६)
गान्धारी त्वथ शुश्राव धृतराष्ट्रमचक्षुषम् ।
आत्मानं दिप्सितं चास्मै पित्रा मात्रा च भारत ॥ १-११९-१३ (५२८७)
ततः सा पटमादाय कृत्वा बहुगुणं तदा ।
बबन्ध नेत्रे स्वे राजन्पतिव्रतपरायणा ॥ १-११९-१४ (५२८८)
नाभ्यसूयां पतिमहमित्येवं कृतनिश्चया ।
ततो गान्धारराजस्य पुत्रः शकुनिरभ्ययात् ॥ १-११९-१५ (५२८९)
स्वसारं परया लक्ष्म्या युक्तामादाय कौरवान् ।
तां तदा धृतराष्ट्राय ददौ परमसत्कृताम् ।
भीष्मस्यानुमते चैव विवाहं समकारयत् ॥ १-११९-१६ (५२९०)
दत्त्वा स भगिनीं वीरो यथार्हं च परिच्छदम् ।
पुनरायात्स्वनगरं भीष्मेण प्रतिपूजितः ॥ १-११९-१७ (५२९१)
गान्धार्यपि वरारोहा शीलाचारविचिषेटितैः ।
तुष्टिं कुरूणां सर्वेषां जनयामास भारत ॥ १-११९-१८ (५२९२)
ग्गान्धारी सा पतिं दृष्ट्वा प्रज्ञाचक्षुषमीश्वरम् ।
अतिचाराद्भृशं भीता भर्तुः सा समचिन्तयत् ॥ १-११९-१९ (५२९३)
सा दृष्टिविनिवृत्त्या हि भर्तुश्च समतां ययौ ।
नहि सूक्ष्मेप्यतीचारे भर्तुः सा ववृते तदा ॥ १-११९-२० (५२९४)
वृत्तेनाराध्य तान्सर्वान्गुरून्पतिपरायणा ।
वाचापि पुरुषानन्यान्सुव्रता नान्वकीर्तयत् ॥ १-११९-२१ (५२९५)
तस्याः सहोदरीः कन्याः पुनरेव ददौ दश ।
गान्धारराजः सुबलो भीष्मेण च वृतस्तदा ॥ १-११९-२२ (५२९६)

सत्यव्रतां सत्यसेनां सुदेष्णां चापि संहिताम् ।
तेजश्श्रवां सुश्रवां च तथैव निकृतिं शुभाम् ॥ १-११९-२३ (५२९७)
शंभ्वठां च दशार्णां च गान्धारीर्दश विश्रुताः ।
एकाह्ना प्रतिजग्राह धृतराष्ट्रो जनेश्वरः ॥ १-११९-२४ (५२९८)
ततः शान्तनवो भीष्मो धानुष्कस्तास्ततस्ततः ।
अददाद्धृतराष्ट्रस्य राजपुत्रीः परश्शतम् ॥' ॥ १-११९-२५ (५२९९)

इति श्रीमन्महाभारते आदिपर्वणि संभवपर्वणि
एकोनविंशत्यधिकशततमोऽध्यायः ॥ ११९ ॥
Mahabharata - Adi Parva - Chapter Footnotes

१-११९-५ यादवी यादवस्य कुन्तिभोजस्य अपत्यम् ॥
१-११९-११ प्रेषयामास दूतमिति शेषः ॥
१-११९-१३ दित्सितं दातुमिष्टम् ॥
१-११९-१४ बहुगुणं बहुधागुणितम् ॥
१-११९-१५ नाभ्यसूयां पत्युरभिभवं न कुर्याम् ॥
एकोनविंशत्यधिकशततमोऽध्यायः ॥
११९ ॥

---

अध्यय१२०
॥ श्रीः ॥
१.१२०. अध्यायः १२०

Mahabharata - Adi Parva - Chapter Topics
पृथाया बाल्यचरित्रकथनम् ॥ १ ॥
तस्या दुर्वाससो मन्त्रप्राप्तिः ॥ २ ॥
मन्त्रप्रभावजिज्ञासयाऽऽहूतात्सूर्यात्कुन्त्यां कर्णस्योत्पत्तिः ॥ ३ ॥
लोकभयात्कुन्त्या यमुनायां विसृष्टस्य राधाभर्त्रा स्वीकारो वसुषेणेति
नामकरमं च ॥ ४ ॥
संग्रहेण कर्णचरित्रकथनम् ॥ ५ ॥

Mahabharata - Adi Parva - Chapter Text

१-१२०-० (५३००)
वैशंपायन उवाच। १-१२०-०क्ष् (७१८)
शूरो नाम यदुश्रेष्ठो वसुदेवपिताऽभवत् ।
तस्य कन्या पृथा नाम रूपेणाप्रतिमा भुवि ॥ १-१२०-१ (५३०१)

पितृष्वस्रीयाय स तामनपत्याय भारत ।
अग्र्यमग्रे प्रतिज्ञाय स्वस्यापत्यं स सत्यवाक् ॥१-१२०-२ (५३०२)
अग्रजामथ तां कन्यां शूरोऽनुग्रहकाङ्क्षिणे ।
प्रददौ कुन्तिभोजाय सखा सख्ये महात्मने ॥१-१२०-३ (५३०३)
नियुक्ता सा पितुर्गेहे ब्राह्मणातिथिपूजने ।
उग्रं पर्यचरत्तत्र ब्राह्मणं संशितव्रतम् ॥१-१२०-४ (५३०४)
निगूढनिश्चयं धर्मे यं तं दुर्वाससं विदुः ।
तमुग्रं संशितात्मानं सर्वयत्नैरतोषयत् ॥१-१२०-५ (५३०५)
ग्दध्याज्यकादिभिर्नित्यं व्यञ्जनैः प्रत्यहं शुभा ।
सहस्रसङ्ख्यैर्योगीन्द्रमुपचारदनुत्तमा ॥१-१२०-६ (५३०६)
दुर्वासा वत्सरस्यान्ते ददौ मन्त्रमनुत्तमम्'।
यशस्विन्यै पृथायै तदापद्धर्मान्ववेक्षया ।
अभिचाराभिसंयुक्तमब्रवीच्चैव तां मुनिः ॥ १-१२०-७ (५३०७)
यं यं देवं त्वमेतेन मन्त्रेणावाहयिष्यसि ।
तस्य तस्य प्रभावेण तव पुत्रो भविष्यति ॥१-१२०-८ (५३०८)
तथोक्ता सा तु विप्रेण कुन्ती कौतूहलान्विता ।
कन्या सती देवमर्कमाजुहाव यशस्विनी ॥१-१२०-९ (५३०९)
ततो घनान्तरं कृत्वा स्वमार्गं तपनस्तदा ।
उपतस्थे स तां कन्यां पृथां पृथुललोचनाम् ॥१-१२०-१० (५३१०)
सा ददर्श तमायान्तं भास्करं लोकभावनम् ।
विस्मिता चानवद्याङ्गी दृष्ट्वा तन्महदद्भुतम् ॥१-१२०-११ (५३११)
ग्साब्रवीद्भगवन्कस्त्वमाविर्भूतो ममाग्रतः। १-१२०-१२ (५३१२)
आदित्य उवाच ।
आहूतोपस्थितं भद्रे ऋषिमन्त्रेण चोदितम् ।
विद्धि मां पुत्रलाभाय देवमर्कं शुचिस्मिते ॥ १-१२०-१२क्ष् (७१९)
पुत्रस्ते निर्मितः सुभ्रु शृणु महादृक्छुभानने ।
आदित्ये कुण्डले बिभ्रत्कवचं चैव मामकम् ॥१-१२०-१३ (५३१३)
शस्त्रास्त्राणामभेद्यश्च भविष्यति शुचिस्मिते ।
नास्य किंचिददेयं च ब्राह्मणेभ्यो भविष्यति ॥१-१२०-१४ (५३१४)
चोद्यमानो मया चापि न क्षमं चिन्तयिष्यति ।
दास्यत्येव हि विप्रेभ्यो मानी चैव भविष्यति ॥१-१२०-१५ (५३१५)
वैशंपायन उवाच।१-१२०-१६क्ष् (७२०)
एवमुक्ता ततः कुन्ती गोपतिं प्रत्युवाच ह ।
कन्या पितृसा चाहं पुरुषार्थो न चैव मे ॥' १-१२०-१६ (५३१६)
कश्चिन्मे ब्राह्मणः प्रादाद्वरं विद्यां च शत्रुहन् ।
तद्विजिज्ञासयाऽऽह्वानं कृतवत्यस्मि ते विभो ॥१-१२०-१७ (५३१७)

एतस्मिन्नपराधे त्वां शिरसाऽहं प्रसादये ।
योषितो हि सदा रक्ष्यास्त्वपराधेऽपि नित्यशः ॥ १-१२०-१८ (५३१८)
सूर्य उवाच। १-१२०-१९क्ष् (७२१)
वेदाहं सर्वमेवैतद्यद्दुर्वासा वरं ददौ ।
संत्यज्य भयमेवेह क्रियतां सङ्गमो मम ॥ १-१२०-१९ (५३१९)
अमोघं दर्शनं मह्यमाहूतश्चास्मि ते शुभे ।
वृथाऽऽह्वानेऽपि ते भीरु दोषः स्यान्नात्र संशयः ॥ १-१२०-२० (५३२०)
ग्यद्येवं मन्यसे भीरु किमाह्वयसि भास्करम् ।
यदि मामवजानासि ऋषिः स न भविष्यति ॥ १-१२०-२१ (५३२१)
मन्त्रदानेन यस्मात्त्वमवलेपेन दर्पिता ।
कुलं च तेऽद्य धक्ष्यामि क्रोधदीप्तेन चक्षुषा'॥ १-१२०-२२ (५३२२)
वैशंपायन उवाच। १-१२०-२३क्ष् (७२२)
एवमुक्ता बहुविधं सान्त्वपूर्वं विवस्वता ।
सा तु नैच्छद्वरारोहा कन्याहमिति भारत ॥ १-१२०-२३ (५३२३)
बन्धुपक्षभयाद्भीता लज्जया च यशस्विनी ।
तामर्कः पुनरेवेदब्रवीद्भरतर्षभ ॥ १-१२०-२४ (५३२४)
मत्प्रसादान्न ते राज्ञि भविता दोष इत्युत ॥ १-१२०-२५ (५३२५)
ग्कुन्त्युवाच। १-१२०-२६क्ष् (७२३)
प्रसीद भगवन्मह्यमवलेपो हि नास्ति मे ।
त्वयैव परिहार्यं स्यात्कन्याभावस्य दूषणम् ॥ १-१२०-२६ (५३२६)
आदित्य उवाच। १-१२०-२७क्ष् (७२४)
व्यपयातु भयं तेऽद्य कुमारं प्रसमीक्षसे ।
मया त्वं चाप्यनुज्ञाता पुनः कन्या भविष्यसि ॥ १-१२०-२७ (५३२७)
वैशंपायन उवाच। १-१२०-२८क्ष् (७२५)
एवमुक्ता ततः कुन्ती संप्रहृष्टतनूरुहा ।
सङ्गताऽभूत्तदा सुभ्रूरादित्येन महात्मना ॥ १-१२०-२८ (५३२८)
प्रकाशकर्मा तपनः कन्यागर्भं ददौ पुनः।'
तत्र वीरः समभवत्सर्वशस्त्रभृतां वरः ॥ १-१२०-२९ (५३२९)
आमुक्तकवचः श्रीमान्देवगर्भः श्रियान्वितः ।
सहजं कवचं बिभ्रत्कुण्डलोद्द्योतिताननः ॥ १-१२०-३० (५३३०)
अजायत सुतः कर्णः सर्वलोकेषु विश्रुतः ।
प्रादाच्च तस्यै कन्यात्वं पुनः स परमद्युतिः ॥ १-१२०-३१ (५३३१)
दत्त्वा च तपतां श्रेष्ठो दिवमाचक्रमे ततः ।
दृष्ट्वा कुमारं जातं सा वार्ष्णेयी दीनमानसा ॥ १-१२०-३२ (५३३२)
एकाग्रं चिन्तयामास किं कृत्वा सुकृतं भवेत् ।
गूहमानापचारं सा बन्धुपक्षभयात्तदा ॥ १-१२०-३३ (५३३३)

मञ्जूषां रत्नसंपूर्णां कृत्वा बालसमाश्रिताम् ।
उत्ससर्ज कुमारं तं जले कुन्ती महाबलम् ॥ १-१२०-३४ (५३३४)
तमुत्सृष्टं जले गर्भं राधाभर्ता महायशाः ।
पुत्रत्वे कल्पयामास सभार्यः सूतनन्दनः ॥ १-१२०-३५ (५३३५)
नामधेयं च चक्राते तस्य बालस्य तावुभौ ।
वसुना सह जातोऽयं वसुषेणो भवत्विति ॥ १-१२०-३६ (५३३६)
स वर्धमानो बलवान्सर्वास्त्रेषूद्यतोऽभवत् ।
आपृष्ठतापादादित्यमुपातिष्ठत वीर्यवान् ॥ १-१२०-३७ (५३३७)
तस्मिन्काले तु जपतस्तस्य वीरस्य धीमतः ।
नादेयं ब्राह्मणेष्वासीत्किंचिद्वसु महीतले ॥ १-१२०-३८ (५३३८)
ग्ततः काले तु कस्मिंश्चित्स्वप्नान्ते कर्णमब्रवीत् ।
आदित्यो ब्राह्मणो भूत्वा शृणु वीर वचो मम ॥ १-१२०-३९ (५३३९)
प्रभातायां रजन्यां त्वामागमिष्यति वासवः ।
न तस्य भिक्षा दातव्या विप्ररूपी भविष्यति ॥ १-१२०-४० (५३४०)
निश्चयोऽस्यापहर्तुं ते कवचं कुण्डले तथा ।
अतस्त्वां बोधयाम्येष स्मर्तासि वचनं मम ॥ १-१२०-४१ (५३४१)
कर्ण उवाच। १-१२०-४२क्ष् (७२६)
शक्रो मां विप्ररूपेण यदि वै याचते द्विज ।
कथं तस्मै न दास्यामि यथा चास्म्यवबोधितः ॥ १-१२०-४२ (५३४२)
विप्राः पूज्यास्तु देवानां सततं प्रियमिच्छताम् ।
तं देवदेवं जानन्वै न शक्तोऽस्म्यवमन्त्रणे ॥ १-१२०-४३ (५३४३)
सूर्य उवाच। १-१२०-४४क्ष् (७२७)
यद्येवं शृणु मे वीर वरं ते सोऽपि दास्यति ।
शक्तिं त्वमपि याचेथाः सर्वशत्रुविबाधिनीम् ॥ १-१२०-४४ (५३४४)
वैशंपायन उवाच। १-१२०-४५क्ष् (७२८)
एवमुक्त्वा द्विजः स्वप्ने तत्रैवान्तरधीयत ।
कर्णः प्रबुद्धस्तं स्वप्नं चिन्तयानोऽभवत्तदा ॥ १-१२०-४५ (५३४५)
तमिन्द्रो ब्राह्मणो भूत्वा पुत्रार्थं भूतभावनः ।
कुण्डले प्रार्थयामास कवचं च महाद्युतिः ॥ १-१२०-४६ (५३४६)
उत्कृत्याविमनाः स्वाङ्गात्कवचं रुधिरस्रवम् ।
कर्णौ पार्श्वे च द्वे छित्त्वा प्रायच्छत्स कृताञ्जलिः ॥ १-१२०-४७ (५३४७)
प्रतिगृह्य तु देवेशस्तुष्टस्तेनास्य कर्मणा ।
अहो साहसमित्याह मनसा वासवो हसन् ॥ १-१२०-४८ (५३४८)
देवदानवयक्षाणां गन्धर्वोरगरक्षसाम् ।
न तं पश्यामि यो ह्येतत्कर्म कर्ता भविष्यति ॥ १-१२०-४९ (५३४९)
प्रीतोऽस्मि कर्मणा तेन वरं ब्रूहि यदिच्छसि। १-१२०-५० (५३५०)

कर्ण उवाच ।
इच्छामि भगवद्दत्तां शक्तिं शत्रुनिबर्हणीम् ॥ १-१२०-५०क्ष् (७२९)
वैशंपायन उवाच। १-१२०-५१क्ष् (७३०)
शक्तिं तस्मै ददौ शक्रो विस्मयाद्वाक्यमब्रवीत् ।
देवदानवयक्षाणां गन्धर्वोरगरक्षसाम् ॥ १-१२०-५१ (५३५१)
यस्मै क्षेप्स्यसि रुष्टः सन्सोऽनया न भविष्यति ।
हत्वैकं समरे शत्रुं ततो मामागमिष्यति ।
इत्युक्त्वान्तर्दधे शक्रो वरं दत्त्वा तु तस्य वै ॥ १-१२०-५२ (५३५२)
प्राङ्नाम तस्य कथितं वसुषेण इति क्षितौ ।
कर्णो वैकर्तनश्चैव कर्मणा तेन सोऽभवत् ॥ ॥ १-१२०-५३ (५३५३)

इति श्रीमन्महाभारते आदिपर्वणि संभवपर्वणि
विंशत्यधिकशततमोऽध्यायः ॥ १२० ॥
Mahabharata - Adi Parva - Chapter Footnotes

१-१२०-२ अग्र्यं प्रथमम् । अग्रे जन्मतः पूर्वं प्रतिज्ञाय मया
प्रथममपत्यं तुभ्यं देयमिति प्रतिश्रुत्य ॥
१-१२०-७ अभिचारो वश्याकर्षणादिदृष्टफलं तद्युक्तम् ॥
१-१२०-३६ वसुना कवचकुण्डलादिद्रव्येण बद्ध इति वसुषेणः ॥
१-१२०-३७ आपृष्ठतापात् मध्याह्नात्परत इत्यर्थः ॥
१-१२०-५३ सहजकवचकर्तनात् कर्णः विशेषतः कर्तनेन वैकर्तनः
। स्वार्थे तद्धितः ॥
विंशत्यधिकशततमोऽध्यायः ॥
१२० ॥

---

अध्यय१२१
॥ श्रीः ॥
१.१२१. अध्यायः १२१

Mahabharata - Adi Parva - Chapter Topics
पाण्डोः कुन्त्या विवाहः ॥ १ ॥

Mahabharata - Adi Parva - Chapter Text

१-१२१-० (५३५४)
वैशंपायन उवाच। १-१२१-०क्ष् (७३१)
सत्वरूपगुणोपेता धर्मारामा महाव्रता ।

दुहिता कुन्तिभोजस्य पृथा पृथुललोचना ॥ १-१२१-१ (५३५५)
तां तु तेजस्विनीं कन्यां रूपयौवनशालिनीम् ।
व्यावृण्वन्पार्थिवाः केचिदतीव स्त्रीगुणैर्युताम् ॥ १-१२१-२ (५३५६)
ततः सा कुन्तिभोजेन राज्ञाहूय नराधिपान् ।
पित्रा स्वयंवरे दत्ता दुहिता राजसत्तम ॥ १-१२१-३ (५३५७)
ततः सा रङ्गमध्यस्थं तेषां राज्ञां मनस्विनी ।
ददर्श राजशार्दूलं पाण्डुं भरतसत्तमम् ॥ १-१२१-४ (५३५८)
सिंहदर्पं महोरस्कं वृषभाक्षं महाबलम् ।
आदित्यमिव सर्वेषां राज्ञां प्रच्छाद्य वै प्रभाः ॥ १-१२१-५ (५३५९)
तिष्ठन्तं राजसमितौ पुरन्दरमिवापरम् ।
तं दृष्ट्वा साऽनवद्याङ्गी कुन्तिभोजसुता शुभा ॥ १-१२१-६ (५३६०)
पाण्डुं नरवरं रङ्गे हृदयेनाकुलाऽभवत् ।
ततः कामपरीताङ्गी सकृत्प्रचलमानसा ॥ १-१२१-७ (५३६१)
व्रीडमान स्रजं कुन्ती राज्ञः स्कन्धे समासजत् ।
तं निशम्य वृतं पाण्डुं कुन्त्या सर्वे नराधिपाः ॥ १-१२१-८ (५३६२)
यथागतं समाजग्मुर्गजैरश्वै रथैस्तथा ।
ततस्तस्याः पिता राजन्विवाहमकरोत्प्रभुः ॥ १-१२१-९ (५३६३)
स तया कुन्तिभोजस्य दुहित्रा कुरुनन्दनः ।
युयुजेऽमितसौभाग्यः पौलोम्या मघवानिव ॥ १-१२१-१० (५३६४)
कुन्त्याः पाण्डोश्च राजेन्द्र कुन्तिभोजो महीपतिः ।
कृत्वोद्वाहं तदा तं तु नानावसुभिरर्चितम् ।
स्वपुरं प्रेषयामास स राजा कुरुसत्तम ॥ १-१२१-११ (५३६५)
ततो बलेन महता नानाध्वजपताकिना ।
स्तूयमानः स चाशीर्भिर्ब्राह्मणैश्च महर्षिभिः ॥ १-१२१-१२ (५३६६)
संप्राप्य नगरं राजा पाण्डुः कौरवनन्दनः ।
न्यवेशत तां भार्यां कुन्तीं स्वभवने प्रभुः ॥ ॥ १-१२१-१३ (५३६७)

इति श्रीमन्महाभारते आदिपर्वणि संभवपर्वणि
एकविंशत्यधिकशततमोऽध्यायः ॥ १२१ ॥

---

अध्यय१२२
॥ श्रीः ॥
१.१२२. अध्यायः १२२

Mahabharata - Adi Parva - Chapter Topics
पाण्डोर्माद्र्या विवाहः । दिग्विजयश्च ॥ १ ॥

१-१२२-० (५३६८)
वैशंपायन उवाच। १-१२२-०क्ष् (७३२)
ततः शान्तनवो भीष्मो राज्ञः पाण्डोर्यशस्विनः ।
विवाहस्यापरस्यार्थे चकार मतिमान्मतिम् ॥ १-१२२-१ (५३६९)
सोऽमात्यैः स्थविरैः सार्धं ब्राह्मणैश्च महर्षिभिः ।
बलेन चतुरङ्गेण ययौ मद्रपतेः पुरम् ॥ १-१२२-२ (५३७०)
तमागतमभिश्रुत्य भीष्मं वाहीकपुङ्गवः ।
प्रत्युद्गम्यार्चयित्वा च पुरं प्रावेशयन्नृपः ॥ १-१२२-३ (५३७१)
दत्त्वा तस्यासनं शुभ्रं पाद्यमर्घ्यं तथैव च ।
मधुपर्कं च मद्रेशः पप्रच्छागमनेऽर्थिताम् ॥ १-१२२-४ (५३७२)
तं भीष्मः प्रत्युवाचेदं मद्रराजं कुरूद्वहः ।
आगतं मां विजानीहि कन्यार्थिनमरिन्दम ॥ १-१२२-५ (५३७३)
श्रूयते भवतः साध्वी स्वसा माद्री यशस्विनी ।
तामहं वरयिष्यामि पाण्डोरर्थे यशस्विनीम् ॥ १-१२२-६ (५३७४)
युक्तरूपो हि संबन्धे त्वं नो राजन्वयं तव ।
एतत्संचिन्त्य मद्रेश गृहाणास्मान्यथाविधि ॥ १-१२२-७ (५३७५)
तमेवंवादिनं भीष्मं प्रत्यभाषत मद्रपः ।
न हि मेऽन्यो वरस्त्वत्तः श्रेयानिति मतिर्मम ॥ १-१२२-८ (५३७६)
पूर्वैः प्रवर्तितं किंचित्कुलेऽस्मिन्नृपसत्तमैः ।
साधु वा यदि वाऽसाधु तन्नातिक्रान्तुमुत्सहे ॥ १-१२२-९ (५३७७)
व्यक्तं तद्भवतश्चापि विदितं नात्र संशयः ।
न च युक्तं तथा वक्तुं भवान्देहीति सत्तम ॥ १-१२२-१० (५३७८)
कुलधर्मः स नो वीर प्रमाणं परमं च तत् ।
तेन त्वां न ब्रवीम्येतदसंदिग्धं वचोऽरिहन् ॥ १-१२२-११ (५३७९)
तं भीष्मः प्रत्युवाचेदं मद्रराजं जनाधिपः ।
धर्म एष परो राजन्स्वयमुक्तः स्वयंभुवा ॥ १-१२२-१२ (५३८०)
नात्र कश्चन दोषोऽस्ति पूर्वैर्विधिरयं कृतः ।
विदितेयं च ते शल्य मर्यादा साधुसंमता ॥ १-१२२-१३ (५३८१)
इत्युक्त्वा स महातेजाः शातकुम्भं कृताकृतम् ।
रत्नानि च विचित्राणि शल्यायादात्सहस्रशः ॥ १-१२२-१४ (५३८२)
गजानश्वान्रथांश्चैव वासांस्याभरणानि च ।
मणिमुक्ताप्रवालं च गाङ्गेयो व्यसृजच्छुभम् ॥ १-१२२-१५ (५३८३)
तत्प्रगृह्य धनं सर्वं शल्यः संप्रतीमानसः ।
ददौ तां समलङ्कृत्य स्वसारं कौरवर्षभे ॥ १-१२२-१६ (५३८४)

स तां माद्रीमुपादाय भीष्मः सागरगासुतः ।
आजगाम पुरीं धीमान्प्रविष्टो गजसाह्वयम् ॥ १-१२२-१७ (५३८५)
तत इष्टेऽहनि प्राप्ते मुहूर्ते साधुसंमते ।
गविवाहं कारायामास भीष्मः पाण्डोर्महात्मनः।'
जग्राह विधिवत्पाणिं माद्र्याः पाण्डुर्नराधिपः ॥ १-१२२-१८ (५३८६)
ततो विवाहे निर्वृत्ते स राजा कुरुनन्दनः ।
स्थापयामास तां भार्यां शुभे वेश्मनि भामिनीं ॥ १-१२२-१९ (५३८७)
स ताभ्यां व्यचरत्सार्धं भार्याभ्यां राजसत्तमः ।
कुन्त्या माद्र्या च राजेन्द्रो यथाकामं यथासुखम् ॥ १-१२२-२० (५३८८)
ततः स कौरवो राजा विहृत्य त्रिदशा निशाः ।
जिगीषया महीं पाण्डुर्निरक्रामत्पुरात्प्रभो ॥ १-१२२-२१ (५३८९)
स भीष्मप्रमुखान्वृद्धानभिवाद्य प्रणम्य च ।
धृतराष्ट्रं च कौरव्यं तथान्यान्कुरुसत्तमान् ।
आमन्त्र्य प्रययौ राजा तैश्चैवाप्यनुमोजितः ॥ १-१२२-२२ (५३९०)
मङ्गलाचारयुक्ताभिराशीर्भिरभिनन्दितः ।
गजवाजिरथौघेन बलेन महताऽगमत् ॥ १-१२२-२३ (५३९१)
स राजा देवगर्भाभो विजिगीषुर्वसुन्धराम् ।
हृष्टपुष्टबलैः प्रायात्पाण्डुः शत्रूननेकशः ॥ १-१२२-२४ (५३९२)
पूर्वमागस्कृतो गत्वा दशार्णाः समरे जिताः ।
पाण्डुना नरसिंहेन कौरवाणां यशोभृता ॥ १-१२२-२५ (५३९३)
ततः सेनामुपादाय पाण्डुर्नानाविधध्वजाम् ।
प्रभूतहस्त्यश्वयुतां पदातिरथसंकुलाम् ॥ १-१२२-२६ (५३९४)
आगस्कारी महीपानां बहूनां बलदर्पितः ।
गोप्ता मगधराष्ट्रस्य दीर्घो राजगृहे हतः ॥ १-१२२-२७ (५३९५)
ततः कोशं समादाय वाहनानि च भूरिशः ।
पाण्डुना मिथिलां गत्वा विदेहाः समरे जिताः ॥ १-१२२-२८ (५३९६)
तथा काशिषु सुह्मेषु पुण्ड्रेषु च नरर्षभ ।
स्वबाहुबलवीर्येण कुरूणामकरोद्यशः ॥ १-१२२-२९ (५३९७)
तं शरौघमहाज्वालं शस्त्रार्चिषमरिन्दमम् ।
पाण्डुपावकमासाद्य व्यवह्यन्त नराधिपाः ॥ १-१२२-३० (५३९८)
ते ससेनाः ससेनेन विध्वंसितबला नृपाः ।
पाण्डुना वशगाः कृत्वा कुरुकर्मसु योजिताः ॥ १-१२२-३१ (५३९९)
तेन ते निर्जिताः सर्वे पृथिव्यां सर्वपार्थिवाः ।
तमेकं मेनिरे शूरं देवेष्विव पुरन्दरम् ॥ १-१२२-३२ (५४००)
तं कृताञ्जलयः सर्वे प्रणता वसुधाधिपाः ।
उपाजग्मुर्धनं गृह्य रत्नानि विविधानि च ॥ १-१२२-३३ (५४०१)

मणिमुक्ताप्रवालं च सुवर्णं रजतं बहु ।
गोरत्नान्यश्वरत्नानि रथरत्नानि कुञ्जरान् ॥१-१२२-३४ (५४०२)
खरोष्ट्रमहिषांश्चैव यच्च किंचिदजाविकम् ।
कम्लाजिनरत्नानि राङ्कवास्तरणानि च ।
तत्सर्वं प्रतिजग्राह राजा नागपुराधिपः ॥ १-१२२-३५ (५४०३)
तदादाय ययौ पाण्डुः पुनर्मुदितवाहनः ।
हर्षयिष्यन्स्वराष्ट्राणि पुरं च गजसाह्वयम् ॥१-१२२-३६ (५४०४)
शान्तनो राजसिंहस्य भरतस्य च धीमतः ।
प्रनष्टः कीर्तिजः शब्दः पाण्डुना पुनराहृतः ॥१-१२२-३७ (५४०५)
ये पुरा कुरुराष्ट्राणि जह्रुः कुरुधनानि च ।
ते नागपुरसिंहेन पाण्डुना करदीकृताः ॥१-१२२-३८ (५४०६)
इत्यभाषन्त राजानो राजामात्याश्च सङ्गताः ।
प्रतीतमनसो हृष्टाः पौरजानपदैः सह ॥१-१२२-३९ (५४०७)
प्रत्युद्ययुश्च तं प्राप्तं सर्वे भीष्मपुरोगमाः ।
ते नदूरमिवाध्वानं गत्वा नागपुरालयाः ॥१-१२२-४० (५४०८)
आवृतं ददृशुर्हृष्टा लोकं बहुविधैर्धनैः ।
नानायानसमानीतै रत्नैरुच्चावचैस्तदा ॥१-१२२-४१ (५४०९)
हस्त्यश्वरथरत्नैश्च गोभिरुष्ट्रैस्तथाऽऽविभिः ।
नान्तं ददृशुरासाद्य भीष्मेण सह कौरवाः ॥१-१२२-४२ (५४१०)
सोऽभिवाद्य पितुः पादौ कौसल्यानन्दवर्धनः ।
यथाऽर्हं मानयामास पौरजानपदानपि ॥१-१२२-४३ (५४११)
प्रमृद्य परराष्ट्राणि कृतार्थं पुनरागतम् ।
पुत्रमाश्लिष्य भीष्मस्तु हर्षादश्रूण्यवर्तयत् ॥१-१२२-४४ (५४१२)
स तूर्यशतशङ्खानां भेरीणां च महास्वनैः ।
हर्षयन्सर्वशः पौरान्विवेश गजसाह्वयम् ॥ ॥१-१२२-४५ (५४१३)

इति श्रीमन्महाभारते आदिपर्वणि संभवपर्वणि
द्वाविंशत्यधिकशततमोऽध्यायः ॥१२२ ॥
Mahabharata - Adi Parva - Chapter Footnotes

१-१२२-८ मे वरः मम जामाता ॥
१-१२२-१४ शातकुम्भं काञ्चनम् ।कृताकृतं घटितमघटितं च ॥
१-१२२-१५ व्यसृदत् प्रादात् ॥
१-१२२-२१ त्रिदशाः त्रिंशत् ॥
१-१२२-४० नदूरमिव अदूरमिव ।जयोत्साहेन मार्गश्रमाभावात् ॥
द्वाविंशत्यधिकशततमोऽध्यायः ॥

अध्यय१२३
॥ श्रीः ॥
१.१२३. अध्यायः १२३

Mahabharata - Adi Parva - Chapter Topics
सभार्यस्य पाण्डोर्मृगयार्थं वनगमनम् ॥ १ ॥
तत्र मृगरूपस्य मृग्या मैथुनं चरतः किन्दमस्य मुनेर्हननम् ॥ २ ॥
मैथुनकाले त्वं मरिष्यसीति किन्दमेन पाण्डुं प्रति शापः ॥ ३ ॥

Mahabharata - Adi Parva - Chapter Text

१-१२३-० (५४१४)
वैशंपायन उवाच। १-१२३-०क्ष् (७३३)
धृतराष्ट्राभ्यनुज्ञातः स्वबाहुविजितं धनम् ।
भीष्माय सत्यवत्यै च मात्रे चोपजहार सः ॥ १-१२३-१ (५४१५)
विदुराय च वै पाण्डुः प्रेषयामास तद्धनम् ।
सुहृदश्चापि धर्मात्मा धनेन समतर्पयत् ॥ १-१२३-२ (५४१६)
ततः सत्यवतीं भीष्मं कौसल्यां च यशस्विनीम् ।
शुभैः पाण्डुर्जितैरर्थैस्तोषयामास भारत ॥ १-१२३-३ (५४१७)
ननन्द माता कौसल्या तमप्रतिमतेजसम् ।
जयन्तमिव पौलोमी परिष्वज्य नर्षभम् ॥ १-१२३-४ (५४१८)
तस्य वीरस्य विक्रान्तैः सहस्रशतदक्षिणैः ।
अश्वमेधशतैरीजे धृतराष्ट्रो महामखैः ॥ १-१२३-५ (५४१९)
संप्रयुक्तस्तु कुन्त्या च माद्रया च भरतर्षभ ।
जिततन्द्रिस्तदा पाण्डुर्बभूव वनगोचरः ॥ १-१२३-६ (५४२०)
हित्वा प्रासादनिलयं शुभानि शयनानि च ।
अरण्यनित्यः सततं बभूव मृगयापरः ॥ १-१२३-७ (५४२१)
स चरन्दक्षिणं पार्श्वं रम्यं हिमवतो गिरः ।
उवास गिरिपृष्ठेषु महाशालवनेषु च ॥ १-१२३-८ (५४२२)
रराज कुन्त्या माद्रया च पाण्डुः सह वने चरन् ।
करेण्वोरिव मध्यस्थः श्रीमान्पौरन्दरो गजः ॥ १-१२३-९ (५४२३)
भारतं सह भार्याभ्यां खड्गबाणधनुर्धरम् ।
विचित्रकवचं वीरं परमास्त्रविदं नृपम् ।
देवोऽयमित्यमन्यन्त चरन्तं वनवासिनः ॥ १-१२३-१० (५४२४)
तस्य कामांश्च भोगांश्च नरा नित्यमतन्द्रिताः ।

उपजह्रुर्वनान्तेषु धृतराष्ट्रेण चोदिताः ॥ १-१२३-११ (५४२५)
तदासाद्य महारण्यं मृगव्यालनिषेवितम् ।
तत्र मैथुनकालस्थं ददर्श मृगयूथपम् ॥ १-१२३-१२ (५४२६)
ततस्तं च मृगीं चैव रुक्मपुङ्खैः सुपत्रिभिः ।
निर्बिभेद शरैस्तीक्ष्णैः पाण्डुः पञ्चभिराशुगैः ॥ १-१२३-१३ (५४२७)
स च राजन्महातेजा ऋषिपुत्रस्तपोधनः ।
भार्यया सह तेजस्वी मृगरूपेण सङ्गतः ॥ १-१२३-१४ (५४२८)
स संयुक्तस्तया मृग्या मानुषीं वाचमीरयन् ।
क्षणेन पतितो भूमौ विललापातुरो मृगः ॥ १-१२३-१५ (५४२९)
मृग उवाच। १-१२३-१६क्ष् (७३४)
काममन्युवशं प्राप्ता बुद्ध्यन्तरगता अपि ।
वर्जयन्ति नृशंसानि पापेष्वपि रता नराः ॥ १-१२३-१६ (५४३०)
न विधिं ग्रसते प्रज्ञा प्रज्ञां तु ग्रसते विधिः ।
विधिपर्यागतानर्थान्प्रज्ञावान्प्रतिपद्यते ॥ १-१२३-१७ (५४३१)
शस्वद्धर्मात्मनां मुख्ये कुले जातस्य भारत ।
कामलोभाभिभूतस्य कथं ते चलिता मतिः ॥ १-१२३-१८ (५४३२)
पाण्डुरुवाच। १-१२३-१९क्ष् (७३५)
शत्रूणां या वधे वृत्तिः सा मृगाणां वधे स्मृता ।
राज्ञां मृग न मां मोहात्त्वं गर्हयितुमर्हसि ॥ १-१२३-१९ (५४३३)
अच्छद्मनाऽमायया च मृगाणां वध इष्यते ।
स एव धर्मो राज्ञां तु तद्धि त्वं किं नु गर्हसे ॥ १-१२३-२० (५४३४)
अगस्त्यः सत्रमासीनश्चकार मृगयामृषिः ।
आरण्यान्सर्वदैवत्यान्मृगान्प्रोक्ष्य महावने ॥ १-१२३-२१ (५४३५)
प्रमाणदृष्टधर्मेण कथमस्मान्विगर्हसे ।
अगस्त्यस्याभिचारेण युष्माकं विहितो वधः ॥ १-१२३-२२ (५४३६)
न रिपून्वै समुद्दिश्य विमुञ्चन्ति नराः शरान् ।
रन्ध्र एषां विशेषेण वधकालः प्रशस्यते ॥ १-१२३-२३ (५४३७)
प्रमत्तमप्रमत्तं वा विवृतं घ्नन्ति चौजसा ।
उपायैर्विविधैस्तीक्ष्णैः कस्मान्मृग विगर्हसे ॥ १-१२३-२४ (५४३८)
मृग उवाच। १-१२३-२५क्ष् (७३६)
नाहं घ्नन्तं मृगन्राजन्विगर्हे चात्मकारणात् ।
मैथुनं तु प्रतीक्ष्यं मे त्वयेहाद्यानृशंस्यतः ॥ १-१२३-२५ (५४३९)
सर्वभूतहिते काले सर्वभूतेप्सिते तथा ।
को हि विद्वान्मृगं हन्याच्चरन्तं मैथुनं वने ॥ १-१२३-२६ (५४४०)
अस्यां मृग्यां च राजेन्द्र हर्षान्मैथुनमाचरम् ।
पुरुषार्थफलं कर्तुं तत्त्वया विफलीकृतम् ॥ १-१२३-२७ (५४४१)

पौरवाणां महाराज तेषामक्लिष्टकर्मणाम् ।
वंशे जातस्य कौरव्य नानुरूपमिदं तव ॥ १-१२३-२८ (५४४२)
नृशंसं कर्म सुमहत्सर्वलोकविगर्हितम् ।
अस्वर्ग्यमयशस्यं चाप्यधर्मिष्ठं च भारत ॥ १-१२३-२९ (५४४३)
स्त्रीभोगानां विशेषज्ञः शास्त्रधर्मार्थतत्त्ववित् ।
नार्हस्त्वं सुरसङ्काश कर्तुमस्वर्ग्यमीदृशम् ॥ १-१२३-३० (५४४४)
त्वया नृशंसकर्तारः पापाचाराश्च मानवाः ।
निग्राह्याः पार्थिवश्रेष्ठ त्रिवर्गपरिवर्जिताः ॥ १-१२३-३१ (५४४५)
किं कृतं ते नरश्रेष्ठ मामिहानागसं घ्नतः ।
मुनिं मूलफलाहारं मृगवेषधरं नृप ॥ १-१२३-३२ (५४४६)
वसमानमरण्येषु नित्यं शमपरायणम् ।
त्वयाऽहं हिंसितो यस्मात्तस्मात्त्वामप्यनागसः ॥ १-१२३-३३ (५४४७)
द्वयोर्नृशंसकर्तारमवशं काममोहितम् ।
जीवितान्तकरो भावो मैथुने समुपैष्यति ॥ १-१२३-३४ (५४४८)
अहं हि किंदमो नाम तपसा भावितो मुनिः ।
व्यपत्रपन्मनुष्याणां मृग्यां मैथुनमाचरम् ॥ १-१२३-३५ (५४४९)
मृगो भत्वा मृगैः सार्धं चरामि गहने वने ।
न तु ते ब्रह्महत्येयं भविष्यत्यविजानतः ॥ १-१२३-३६ (५४५०)
मृगरूपधरं हत्वा मामेवं काममोहितम् ।
अस्य तु त्वं फलं मूढ प्राप्स्यसीदृशमेव हि ॥ १-१२३-३७ (५४५१)
प्रियया सह संवासं प्राप्य कामविमोहितः ।
त्वमप्यस्यामवस्थायां प्रेतलोकं गमिष्यसि ॥ १-१२३-३८ (५४५२)
अन्तकाले हि संवासं यया गन्तासि कान्तया ।
प्रेतराजपुरं प्राप्तं सर्वभूतदुरत्ययम् ।
भक्त्या मतिमतां श्रेष्ठ सैव त्वाऽनुगमिष्यति ॥ १-१२३-३९ (५४५३)
वर्तमानः सुखे दुःखं यथाऽहं प्रापितस्त्वया ।
तथा त्वां च सुखं प्राप्तं दुःखमभ्यागमिष्यति ॥ १-१२३-४० (५४५४)
वैशंपायन उवाच। १-१२३-४१क्ष् (७३७)
एवमुक्त्वा सुदुःखार्तो जीवितात्स व्यमुच्यत ।
मृगः पाण्डुश्च दुःखार्तः क्षणेन समपद्यत ॥ ॥ १-१२३-४१ (५४५५)

इति श्रीमन्महाभारते आदिपर्वणि संभवपर्वणि
त्रयोविंशत्यधिकशततमोऽध्यायः ॥ १२३ ॥
Mahabharata - Adi Parva - Chapter Footnotes

१-१२३-२३ रन्ध्रे विशस्त्रत्वव्यसनाक्रान्तत्वादिसमये शरान्न

विमुञ्चन्तीति संबन्धः । किंत्वेषां शत्रूणां वधकालः सर्वलोकप्रसिद्धः सङ्ग्राम आभिमुख्यादिमान्स एव प्रशश्यतेऽन्यो निन्द्यत इत्यर्थः ॥
१-१२३-२४ प्रमत्तमसावधानम् ॥
१-१२३-३२ ते त्वया ॥
१-१२३-३४ द्वयोः स्त्रीपुंसयोर्नृशंसं निन्द्यं मैथुनासक्तयोर्वधस्तस्य कर्तारम् ॥
१-१२३-३९ प्राप्तं त्वा त्वाम् ॥
त्रयोविंशत्यधिकशततमोऽध्यायः ॥
१२३ ॥

---

अध्यय१२४
॥ श्रीः ॥
१.१२४. अध्यायः १२४

Mahabharata - Adi Parva - Chapter Topics
किन्दमशापात्खिन्नस्य पाण्डोः पत्नीभ्यां वने वासः ॥ १ ॥
पाण्डोः शतशृङ्गे तपश्चरणम् ॥ २ ॥

Mahabharata - Adi Parva - Chapter Text

१-१२४-० (५४५६)
वैशंपायन उवाच। १-१२४-०क्ष् (७३८)
तं व्यतीतमुपक्रम्य राजा स्वमिव बान्धवम् ।
सभार्यः शोकदुःखार्तः पर्यदेवयदातुरः ॥ १-१२४-१ (५४५७)
पाण्डुरुवाच। १-१२४-२क्ष् (७३९)
सतामपि कुले जाताः कर्मणा बत दुर्गतिम् ।
प्राप्नुवन्त्यकृतात्मानः कामजालविमोहिताः ॥ १-१२४-२ (५४५८)
शश्वद्धर्मात्मना जातो बाल एव पिता मम ।
जीवितान्तमनुप्राप्तः कामात्मैवेति नः श्रुतम् ॥ १-१२४-३ (५४५९)
तस्य कामात्मनः क्षेत्रे राज्ञः संयतवागृषिः ।
कृष्णद्वैपायनः साक्षाद्भगवान्मामजीजनत् ॥ १-१२४-४ (५४६०)
तस्याद्य व्यसने बुद्धिः संजातेयं ममाधमा ।
त्यक्तस्य देवैरनयान्मृगयां परिधावतः ॥ १-१२४-५ (५४६१)
मोक्षमेव व्यवस्यामि बन्धो हि व्यसनं महत् ।
सुवृत्तिमनुवर्तिष्ये तामहं पितुरव्ययाम् ॥ १-१२४-६ (५४६२)
अतीव तपसात्मानं योजयिष्याम्यसंशयम् ।

तस्मादेकाहमेकाहमेकैकस्मिन्वनस्पतौ ॥१-१२४-७ (५४६३)
चरन्भैक्षं मुनिर्मुण्डश्चरिष्याम्याश्रमानिमान् ।
पांसुना समवच्छन्नः शून्यागारकृतालयः ॥१-१२४-८ (५४६४)
वृक्षमूलनिकेतो वा त्यक्तसर्वप्रियाप्रियः ।
न शोचन्न प्रहृष्यंश्च तुल्यनिन्दात्मसंस्तुतिः ॥१-१२४-९ (५४६५)
निराशीर्निर्नमस्कारो निर्द्वन्द्वो निष्परिग्रहः ।
न चाप्यवहसन्कंचिन्न कुर्वन्भ्रुकुटीं क्वचित् ॥१-१२४-१० (५४६६)
प्रसन्नवदनो नित्यं सर्वभूतहिते रतः ।
जङ्गमाजङ्गमं सर्वमविहिंसंश्चतुर्विधम् ॥१-१२४-११ (५४६७)
स्वासु प्रजास्विव सदा समः प्राणभृतः प्रति ।
एककालं चरन्भैक्षं कुलानि दश पञ्च च ॥१-१२४-१२ (५४६८)
असंभवे वा भैक्षस्य चरन्ननशनान्यपि ।
अल्पमल्पं च भुञ्जानः पूर्वालाभे न जातुचित् ॥१-१२४-१३ (५४६९)
अन्यान्यपि चरँल्लोभादलाभे सप्त पूरयन् ।
अलाभे यदि वा लाभे समदर्शी महातपाः ॥१-१२४-१४ (५४७०)
वास्यैकं तक्षतो बाहुं चन्दनेनैकमुक्षतः ।
नाकल्याणं न कल्याणं चिन्तयन्नुभयोस्तयोः ॥१-१२४-१५ (५४७१)
न जिजीविषुवत्किंचिन्न मुमूर्षुवदाचरन् ।
जीवितं मरणं चैव नाभिन्दन्न च द्विषन् ॥१-१२४-१६ (५४७२)
याः काश्चिज्जीवता शक्याः कर्तुमभ्युदयक्रियाः ।
ताः सर्वाः समतिक्रम्य निमेषादिव्यवस्थितः ॥१-१२४-१७ (५४७३)
तासु चाप्यनवस्थासु त्यक्तसर्वेन्द्रियक्रियः ।
संपरित्यक्तधर्मार्थः सुनिर्णिक्तात्मकल्मषः ॥१-१२४-१८ (५४७४)
निर्मुक्तः सर्वपापेभ्यो व्यतीतः सर्ववागुराः ।
न वशे कस्यचित्तिष्ठन्सधर्मा मातरिश्वनः ॥१-१२४-१९ (५४७५)
एतया सततं वृत्त्या चरन्नेवंप्रकारया ।
देहं संस्थापयिष्यामि निर्भयं मार्गमास्थितः ॥१-१२४-२० (५४७६)
नाहं सुकृपणे मार्गे स्ववीर्यक्षयशोचिते ।
स्वधर्मात्सततापेते चरेयं वीर्यवर्जितः ॥१-१२४-२१ (५४७७)
सत्कृतोऽसत्कृतो वाऽपि योऽन्यां कृपणचक्षुषा ।
उपैति वृत्तिं कामात्मा स शुनां वर्तते पथि ॥१-१२४-२२ (५४७८)
वैशंपायन उवाच।१-१२४-२३क्ष् (७४०)
एवमुक्त्वा सुदुःखार्तो निःश्वासपरमो नृपः ।
अवेक्षमाणः कुन्तीं च माद्रीं च समभाषत ॥१-१२४-२३ (५४७९)
कौसल्या विदुरः क्षत्ता राजा च सह बन्धुभिः ।
आर्या सत्यवती भीष्मस्ते च राजपुरोहिताः ॥१-१२४-२४ (५४८०)

ब्राह्मणाश्च महात्मानः सोमपाः संशितव्रताः ।
पौरवृद्धाश्च ये तत्र निवसन्त्यस्मदाश्रयाः ।
प्रसाद्य सर्वे वक्तव्याः पाण्डुः प्रव्राजितो वने ॥ १-१२४-२५ (५४८१)
निशम्य वचनं भर्तुस्त्यागधर्मकृतात्मनः ।
तत्समं वचनं कुन्ती माद्री च समभाषताम् ॥१-१२४-२६ (५४८२)
अन्येऽपि ह्याश्रमाः सन्ति ये शक्या भरतर्षभ ।
ग्आवाभ्यां सह वस्तुं वै धर्ममाश्रित्य चिन्त्यताम्।'
आवाभ्यां धर्मपत्नीभ्यां सह तप्तुं तपो महत् ॥ १-१२४-२७ (५४८३)
शरीरस्यापि मोक्षाय धर्मं प्राप्य महाफलम् ।
त्वमेव भविता भर्ता स्वर्गस्यापि न संशयः ॥१-१२४-२८ (५४८४)
प्रणिधायेन्द्रियग्रामं भर्तृलोकपरायणे ।
त्यक्त्वा कामसुखे ह्यावां तप्स्यवो विपुलं तपः ॥१-१२४-२९ (५४८५)
यदि चावां महाप्राज्ञ त्यक्ष्यसि त्वं विशांपते ।
अद्यैवावां प्रहास्यावो जीवितं नात्र संशयः ॥१-१२४-३० (५४८६)
पाण्डुरुवाच।१-१२४-३१क्ष् (७४१)
यदि व्यवसितं ह्येतद्युवयोर्धर्मसंहितम् ।
स्ववृत्तिमनुवर्तिष्ये तामहं पितुरव्ययाम् ॥१-१२४-३१ (५४८७)
त्यक्त्वा ग्राम्यसुखाहारं तप्यमानो महत्तपः ।
वल्कली फलमूलाशी चरिष्यामि महावने ॥१-१२४-३२ (५४८८)
अग्नौ जुह्वन्नुभौ कालावुभौ कालावुपस्पृशन् ।
कृशः परिमिताहारश्चीरचर्मजटाधरः ॥१-१२४-३३ (५४८९)
शीतवातातपसहः क्षुत्पिपासानवेक्षकः ।
तपसा दुश्चरेणेदं शरीरमुपशोषयन् ॥१-१२४-३४ (५४९०)
एकान्तशीली विमृशन्पक्वापक्वेन वर्तयन् ।
पितृन्देवांश्च वन्येन वाग्भिरद्भिश्च तर्पयन् ॥१-१२४-३५ (५४९१)
वानप्रस्थजनस्यापि दर्शनं कुलवासिनः ।
नाप्रियाण्याचरिष्यामि किं पुनर्ग्रामवासिनाम् ॥१-१२४-३६ (५४९२)
एवमारण्यशास्त्राणामुग्रमुग्रतरं विधिम् ।
काङ्क्षमाणोऽहमास्थास्ये देहस्यास्याऽऽसमापनात् ॥१-१२४-३७ (५४९३)
वैशंपायन उवाच।१-१२४-३८क्ष् (७४२)
इत्येवमुक्त्वा भार्ये ते राजा कौरवनन्दनः ।
ततश्चूडामणिं निष्कमङ्गदे कुण्डलानि च ॥१-१२४-३८ (५४९४)
वासांसि च महार्हाणि स्त्रीणामाभरणानि च ।
ग्वाहनानि च मुख्यानि शस्त्राणि कवचानि च ॥१-१२४-३९ (५४९५)
हेमभाण्डानि दिव्यानि पर्यङ्कास्तरणानि च ।
मणिमुक्ताप्रवालानि रत्नानि विविधानि च ॥' १-१२४-४० (५४९६)

प्रदाय सर्वं विप्रेभ्यः पाण्डुर्भृत्यानभाषत ।
गत्वा नागपुरं वाच्यं पाण्डुः प्रव्राजितो वने ।
अर्थं कामं सुखं चैव रतिं च परमात्मिकाम् ॥ १-१२४-४१ (५४९७)
प्रतस्थे सर्वमुत्सृज्य सभार्यः कुरुनन्दनः ।
ततस्तस्यानुयातारस्ते चैव परिचारकाः ॥ १-१२४-४२ (५४९८)
श्रुत्वा भरतसिंहस्य विविधाः करुणा गिरः ।
भममार्तस्वरं कृत्वा हाहेति परिचुक्रुशुः ॥ १-१२४-४३ (५४९९)
उष्णमश्रु विमुञ्चन्तस्तं विहाय महीपतिम् ।
ययुर्नागपुरं तूर्णं सर्वमादाय तद्धनम् ॥ १-१२४-४४ (५५००)
ते गत्वा नगरं राज्ञो यथावृत्तं महात्मनः ।
कथयांचक्रिरे राज्ञस्तद्धनं विविधं ददुः ॥ १-१२४-४५ (५५०१)
श्रुत्वा तेभ्यस्ततः सर्वं यथावृत्तं महावने ।
धृतराष्ट्रो नरश्रेष्ठः पाण्डुमेवान्वशोचत ॥ १-१२४-४६ (५५०२)
न शय्यासनभोगेषु रतिं विन्दति कर्हिचित् ।
भ्रातृशोकसमाविष्टस्तमेवार्थं विचिन्तयन् ॥ १-१२४-४७ (५५०३)
राजपुत्रस्तु कौरव्य पाण्डुर्मूलफलाशनः ।
जगाम सह पत्नीभ्यां ततो नागशतं गिरिम् ॥ १-१२४-४८ (५५०४)
स चैत्ररथमासाद्य कालकूटमतीत्य च ।
हिमवन्तमतिक्रम्य प्रययौ गन्धमादनम् ॥ १-१२४-४९ (५५०५)
रक्ष्यमाणो महाभूतैः सिद्धैश्च परमर्षिभिः ।
उवास स महाराज समेषु विषमेषु च ॥ १-१२४-५० (५५०६)
इन्द्रद्युम्नसरः प्राप्य हंसकूटमतीत्य च ।
शतशृङ्गे महाराज तापसः समतप्यत ॥ ॥ १-१२४-५१ (५५०७)

इति श्रीमन्महाभारते आदिपर्वणि संभवपर्वणि
चतुर्विंशत्यधिकशततमोऽध्यायः ॥ १२४ ॥
Mahabharata - Adi Parva - Chapter Footnotes

१-१२४-१ व्यतीतं मारितम् ॥
१-१२४-५ देवैस्त्यक्तस्य अपुत्रतया स्वर्गमनानर्हत्वात् ॥
१-१२४-६ मोक्षं मोक्षमार्गं व्यवस्यामि निश्चिनोमि श्रेयस्करत्वेन
। तत्र हि पुत्राद्यनपेक्षा दृष्टा। इष्टमेवैतज्जातमित्याह
बन्धो हीति। बन्धः पुत्रैषणादिः। सुवृत्तिं ब्रह्मचर्याख्यां
वृत्तिम्। पितुर्व्यासस्य ॥
१-१२४-१० निराशीर्निर्नमस्कारः । आशिषं नमस्कारं वा
नेच्छामीत्यर्थः। निर्द्वन्द्वः सुखदुःखादिहीनः। निष्परिग्रहः

कन्थापादुकादिहीनः ॥
१-१२४-११ चतुर्विधं जरायुजादिकम् ॥
१-१२४-१२ कुलानि गृहाणि ॥
१-१२४-१५ वास्या वास्येन काष्ठतक्षणेन ॥
१-१२४-१७ अभ्युदयक्रियाः इष्टसाधनक्रियाः । निमेषादिव्यवस्थितः जीवनसाधनकर्मसु व्यवस्थितः ॥
१-१२४-१८ अनवस्थासु प्रवाहरूपासु तासु जीवनसाधनक्रियासु ॥
१-१२४-२० संस्थापयिष्यामि नाशयिष्यामि । निर्भयं मार्गं संसारभयरहितम् ॥
१-१२४-२५ प्रव्राजितः संन्यासं प्राप्तः ॥
१-१२४-२६ त्यागधर्मः संन्यासः ॥
१-१२४-३५ विमृशन् हिंसादिदोषम् ॥
१-१२४-३८ निष्कं ग्रैवेयकम् ॥
चतुर्विंशत्यधिकशततमोऽध्यायः ॥
१२४ ॥

---

अध्यय१२५
॥ श्रीः ॥
१.१२५. अध्यायः १२५

Mahabharata - Adi Parva - Chapter Topics
ब्रह्मलोकं जिगमिषोः पाण्डोः तव पुत्रा भविष्यन्तीत्युक्त्वा ऋषिभिः प्रतिनिवर्तनम् ॥ १ ॥

Mahabharata - Adi Parva - Chapter Text

१-१२५-० (५५०८)
वैशंपायन उवाच। १-१२५-०क्ष् (७४३)
तत्रापि तपसि श्रेष्ठे वर्तमानः स वीर्यवान् ।
सिद्धचारणसङ्घानां बभूव प्रियदर्शनः ॥ १-१२५-१ (५५०९)
सुश्रूषुरनहंवादी संयतात्मा जितेन्द्रियः ।
स्वर्गं गन्तुं पराक्रान्तः स्वेन वीर्येण भारत ॥ १-१२५-२ (५५१०)
केषांचिदभवद्भ्राता केषांचिदभवत्सखा ।
ऋषयस्त्वपरे चैनं पुत्रवत्पर्यपालयन् ॥ १-१२५-३ (५५११)
स तु कालेन महता प्राप्य निष्कल्मषं तपः ।
ब्रह्मर्षिसदृशः पाण्डुर्बभूव भरतर्षभ ॥ १-१२५-४ (५५१२)
अमावास्यां तु सहिता ऋषयः संशितव्रताः ।

ब्रह्माणं द्रष्टुकामास्ते संप्रतस्थुर्महर्षयः ॥१-१२५-५ (५५१३)
संप्रयातानृषीन्दृष्ट्वा पाण्डुर्वचनमब्रवीत् ।
भवन्तः क्व गमिष्यन्ति ब्रूत मे वदतां वराः ॥१-१२५-६ (५५१४)
ऋषय ऊचुः।१-१२५-७क्ष् (७४४)
समावायो महानद्य ब्रह्मलोके महात्मनाम् ।
देवानां च ऋषीणां च पितॄणां च महात्मनाम् ।
वयं तत्र गमिष्यामो द्रष्टुकामाः स्वयंभुवम् ॥ १-१२५-७ (५५१५)
वैशंपायन उवाच।१-१२५-८क्ष् (७४५)
पाण्डुरुत्थाय सहसा गन्तुकामो महर्षिभिः ।
स्वर्गपारं तितीर्षुः स शतशृङ्गादुदङ्मुखः ॥१-१२५-८ (५५१६)
प्रतस्थे सह पत्नीभ्यामब्रुवंस्तं च तापसाः ।
उपर्युपरि गच्छन्तः शैलराजमुदङ्मुखाः ॥१-१२५-९ (५५१७)
दृष्टवन्तो गिरौ रम्ये दुर्गान्देशान्बहून्वयम् ।
विमानशतसंबाधां गीतस्वरनिनादिताम् ॥१-१२५-१० (५५१८)
आक्रीडभूमिं देवानां गन्धर्वाप्सरसां तथा ।
उद्यानानि कुबेरस्य समानि विषमाणि च ॥१-१२५-११ (५५१९)
महानदीनितम्बांश्च गहनान्गिरिगह्वरान् ।
सन्ति नित्यहिमा देशा निर्वृक्षमृगपक्षिणः ॥१-१२५-१२ (५५२०)
सन्ति क्वचिन्महादर्यो दुर्गाः काश्चिद्दुरासदाः ।
नातिक्रामेत पक्षी यान्कुत एवेतरे मृगाः ॥१-१२५-१३ (५५२१)
वायुरेको हि यात्यत्र सिद्धाश्च परमर्षयः ।
गच्छन्त्यौ शैलराजेऽस्मिन्राजपुत्र्यौ कथं न्विमे ॥१-१२५-१४ (५५२२)
न सीदेतामदुःखार्हे मा गमो भरतर्षभ। १-१२५-१५ (५५२३)
पाण्डुरुवाच ।
अप्रजस्य महाभागा न द्वारं परिचक्षते ॥ १-१२५-१५क्ष् (७४६)
स्वर्गे तेनाभितप्तोऽहमप्रजस्तु ब्रवीमि वः ।
सोऽहमुग्रेण तपसा सभार्यस्त्यक्तजीवितः ॥१-१२५-१६ (५५२४)
अनपत्योऽपि विन्देयं स्वर्गमुग्रेण कर्मणा। १-१२५-१७ (५५२५)
ऋषय ऊचुः ।
अस्ति वै तव धर्मात्मन्विद्म देवोपम शुभम् ॥ १-१२५-१७क्ष् (७४७)
अपत्यमनघं राजन्वयं दिव्येन चक्षुषा ।
दैवोद्दिष्टं नरव्याघ्र कर्मणेहोपपादय ॥१-१२५-१८ (५५२६)
अक्लिष्टं फलमव्यग्रो विन्दते बुद्धिमान्नरः ।
तस्मिन्दृष्टे फले राजन्प्रयत्नं कर्तुमर्हसि ॥१-१२५-१९ (५५२७)
अपत्यं गुणसंपन्नं लब्धा प्रीतिकरं ह्यसि। १-१२५-२० (५५२८)
वैशंपायन उवाच ।

तच्छ्रुत्वा तापसवचः पाण्डुस्चिन्तापरोऽभवत् ॥ १-१२५-२०क्ष् (७४८)
आत्मनो मृगशापेन जानन्नुपहतां क्रियाम् ॥ ॥ १-१२५-२१ (५५२९)

इति श्रीमन्महाभारते आदिपर्वणि संभवपर्वणि संभवपर्वणि
पञ्चविंशत्यधिकशततमोऽध्यायः ॥ १२५ ॥
Mahabharata - Adi Parva - Chapter Footnotes

१-१२५-५ अमावास्यां प्राप्य ॥
१-१२५-१० विमानशतेन संबाधं संकटं यस्यां सा ॥
१-१२५-१९ अव्यग्रो विन्दतेऽतो व्यग्रो माभूरित्यर्थः ॥
१-१२५-२० लभते इति लब्धा तादृशोऽसि लप्स्यसीत्यर्थः ॥
पञ्चविंशत्यधिकशततमोऽध्यायः ॥
१२५ ॥

---

अध्यय१२६
॥ श्रीः ॥
१.१२६. अध्यायः १२६

Mahabharata - Adi Parva - Chapter Topics
विदुरस्य विवाहः पुत्रोत्पत्तिश्च ॥ १ ॥
व्यासस्य वरेण गान्धार्यां धृतराष्ट्राद्गर्भोत्पत्तिः ॥ २ ॥
पाण्डोः पुत्रोत्पत्तौ चिन्ता ॥ ३ ॥

Mahabharata - Adi Parva - Chapter Text

१-१२६-० (५५३०)
वैशंपायन उवाच। १-१२६-०क्ष् (७४९)
अथ पारसवीं कन्यां देवकस्य महीपतेः ।
रूपयौवनसंपन्नां स सुश्रावापगासुतः ॥ १-१२६-१ (५५३१)
ततस्तु वरयित्वा तामानीय भरतर्षभः ।
विवाहं कारयामास विदुरस्य महामतेः ॥ १-१२६-२ (५५३२)
तस्यां चोत्पादयामास विदुरः कुरुनन्दन ।
पुत्रान्विनयसंपन्नानात्मनः सदृशान्गुणैः ॥ १-१२६-३ (५५३३)
ततः पुत्रशतं जज्ञे गान्धार्यां जनमेजय ।
धृतराष्ट्रस्य वैश्यायामेकश्चापि शतात्परः ॥ १-१२६-४ (५५३४)
पाण्डोः कुन्त्यां च माद्र्यां च पुत्राः पञ्च महारथाः ।
देवेभ्यः समपद्यन्त सन्तानाय कुलस्य वै ॥ १-१२६-५ (५५३५)

जनमेजय उवाच। १-१२६-६क्ष् (७५०)
कथं पुत्रशतं जज्ञे गान्धार्यां द्विजसत्तम ।
कियता चैव कालेन तेषामायुश्च किं परम् ॥ १-१२६-६ (५५३६)
कथं चैकः स वैश्यायां धृतराष्ट्रसुतोऽभवत् ।
कथं च सदृशीं भार्यां गान्धारीं धर्मचारिणीम् ॥ १-१२६-७ (५५३७)
आनुकूल्ये वर्तमानां धृतराष्ट्रोऽत्यवर्तत ।
कथं च शप्तस्य सतः पाण्डोस्तेन महात्मना ॥ १-१२६-८ (५५३८)
समुत्पन्ना दैवतेभ्यः पुत्राः पञ्च महारथाः ।
एतद्विद्वन्यथान्यायं विस्तरेण तपोधन ॥ १-१२६-९ (५५३९)
कथयस्व न मे तृप्तिः कथ्यमानेषु बन्धुषु। १-१२६-१० (५५४०)
वैशंपायन उवाच ।
ऋषिं बुभुक्षितं श्रान्तं द्वैपायनमुपस्थितम् ॥ १-१२६-१०क्ष् (७५१)
तोषयामास गान्धारी व्यासस्तस्यै वरं ददौ ।
सा वव्रे सदृशं भर्तुः पुत्राणां शतमात्मनः ॥ १-१२६-११ (५५४१)
ततः कालेन सा गर्भमगृह्णाज्ज्ञानचक्षुषः ॥ १-१२६-१२ (५५४२)
गान्धार्यामाहिते गर्भे पाण्डुरम्बालिकासुतः ।
अगच्छत्परमं दुःखमपत्यार्थमरिन्दम ॥ १-१२६-१३ (५५४३)
गर्भिण्यामथ गान्धार्यां पाण्डुः परमदुःखितः ।
मृगाभिशापादात्मानं शोचन्नुपरतक्रियः ॥ १-१२६-१४ (५५४४)
स गत्वा तपसा सिद्धिं विश्वामित्रो यथा भुवि ।
देहान्यासे कृतमना इदं वचनमब्रवीत् ॥ १-१२६-१५ (५५४५)
पाण्डुरुवाच। १-१२६-१६क्ष् (७५२)
चतुर्भिर्ऋणवानित्थं जायते मनुजो भुवि ।
पितृदेवमनुष्याणामृषीणामथ भामिनि ॥ १-१२६-१६ (५५४६)
एतेभ्यस्तु यथाकालं यो न मुच्येत धर्मवित् ।
न तस्य लोकाः सन्तीति तता लोकविदो विदुः ॥ १-१२६-१७ (५५४७)
यज्ञेन देवान्प्रीणाति स्वाध्यायात्तपसा ऋषीन् ।
पुत्रैः श्राद्धैरपि पितॄनानृशंस्येन मानवान् ॥ १-१२६-१८ (५५४८)
ऋषिदेवमनुष्याणामृणान्मुक्तोऽस्मि धर्मतः ।
पितॄणां तु न मुक्तोऽस्मि तच्च तेभ्यो विशिष्यते ॥ १-१२६-१९ (५५४९)
देहनाशे भवेन्नाशः पितॄणामेष निश्चयः ।
इतरेषां त्रयाणां तु नाशे ह्यात्मा विनश्यति ॥ १-१२६-२० (५५५०)
इह तस्मात्प्रजालाभे प्रयतन्ते द्विजोत्तमाः ।
यथैवाहं पितुः क्षेत्रे सृष्टस्तेन महात्मना ॥ १-१२६-२१ (५५५१)
तथैवास्मिन्मम क्षेत्रे कथं सृज्येत वै प्रजा। १-१२६-२२ (५५५२)
वैशंपायन उवाच ।

स समानीय कुन्तीं च माद्रीं च भरतर्षभः ॥ १-१२६-२२क्ष् (७५३)
आचष्ट पुत्रलाभस्य व्युष्टिं सर्वक्रियाधिकाम् ।
उत्तमादवराः पुंसः काङ्क्षन्तो पुत्रमापदि ॥१-१२६-२३ (५५५३)
अपत्यं धर्मफलदं श्रेष्ठादिच्छन्ति साधवः ।
अनुनीय तु ते सम्यङ्महाब्राह्मणसंसदि ।
ब्राह्मणं गुणवन्तं हि चिन्तयामास धर्मवित् ॥ १-१२६-२४ (५५५४)
सोऽब्रवीद्द्विजने कुन्तीं धर्मपत्नीं यशस्विनीम् ।
अपत्योत्पादने यत्नमापदि त्वं समर्थय ॥१-१२६-२५ (५५५५)
अपत्यं नाम लोकेषु प्रतिष्ठा धर्मसंहिता ।
इति कुन्ति विदुर्धीराः शाश्वतं धर्मवादिनः ॥१-१२६-२६ (५५५६)
इष्टं दत्तं तपस्तप्तं नियमश्च स्वनुष्ठितः ।
सर्वमेवानपत्यस्य न पावनमिहोच्यते ॥१-१२६-२७ (५५५७)
सोऽहमेवं विदित्वैतत्प्रपश्यामि शुचिस्मिते ।
अनपत्यः शुभाँल्लोकान्नप्राप्स्यामीति चिन्तयन् ॥१-१२६-२८ (५५५८)
ग्अनपत्यो हि मरणं कामये नैव जीवितम्।'
मृगाभिशापं जानासि विजने मम केवलम् ।
नृशंसकर्मणा कृत्स्नं यथा ह्युपहतं तथा ॥ १-१२६-२९ (५५५९)
इमे वै बन्धुदायादाः षट् पुत्रा धर्मदर्शने ।
षडेवाबन्धुदायादाः पुत्रास्ताञ्छृणु मे पृथे ॥१-१२६-३० (५५६०)
स्वयंजातः प्रणीतश्च परिक्रीतश्च यः सुतः ।
पौनर्भवश्च कानीनः स्वैरिण्यां यश्च जायते ॥१-१२६-३१ (५५६१)
दत्तः क्रीतः कृत्रिमश्च उपगच्छेत्स्वयं च यः ।
सहोढो ज्ञातिरेताश्च हीनयोनिधृतश्च यः ॥१-१२६-३२ (५५६२)
पूर्वपूर्वतमाभावं मत्त्वा लिप्सेत वै सुतम् ।
उत्तमाद्देवरात्पुंसः काङ्क्षन्ते पुत्रमापदि ॥१-१२६-३३ (५५६३)
अपत्यं धर्मफलदं श्रेष्ठं विन्दन्ति मानवाः ।
आत्मशुक्रादपि पृथे मनुः स्वायंभुवोऽब्रवीत् ॥१-१२६-३४ (५५६४)
तस्मात्प्रहेष्याम्यद्य त्वां हीनः प्रजननात्स्वयम् ॥ १-१२६-३५ (५५६५)
सदृशाच्छ्रेयसो वा त्वं विद्ध्यपत्यं यशस्विनि ।
शृणु कुन्ति कथामेतां शारदण्डायिनीं प्रति ॥१-१२६-३६ (५५६६)
ग्या हि ते भगिनी साध्वी श्रुतसेना यशस्विनी ।
अवाह तां तु कैकेयः शारदाण्डायनिर्महान् ॥' १-१२६-३७ (५५६७)
सा वीरपत्नी गुरुणा नियुक्ता पुत्रजन्मनि ।
पुष्पेण प्रयता स्नाता निशि कुन्ति चतुष्पथे ॥१-१२६-३८ (५५६८)
वरयित्वा द्विजं सिद्धं हुत्वा पुंसवनेऽनलम् ।
कर्मण्यवसिते तस्मिन्सा तेनैव सहावसत् ॥१-१२६-३९ (५५६९)

तत्र त्रीञ्जनयामास दुर्जयादीन्महारथान् ।
तथा त्वमपि कल्याणि ब्राह्मणात्तपसाधिकात् ।
मन्नियोगाद्यत क्षिप्रमपत्योत्पादनं प्रति ॥ ॥ १-१२६-४० (५५७०)

इति श्रीमन्महाभारते आदिपर्वणि संभवपर्वणि
षड्विंशत्यधिकशततमोऽध्यायः ॥ १२६ ॥
Mahabharata - Adi Parva - Chapter Footnotes

१-१२६-२६ धर्मसंहिता धर्ममयी ॥
१-१२६-३० धर्मदर्शने धर्मशास्त्रे उक्ता इति शेषः
। बन्धुदायादारिक्थहराः। अबन्धुदायादास्तदन्ये ॥
१-१२६-३५ प्रहेष्यामि गतिवृद्धिकर्मणो हिनोते रूपम् । अद्येति
क्षिप्रवचनसंयोगाल्लृट्। त्वां शरणं गतोऽस्मि वर्धयामि वेति
चार्थः ॥
१-१२६-३६ विद्धि लभस्व । शारदण्डायनेर्भार्याम् ॥
१-१२६-३८ गुरुणा भर्त्रा । पुष्पेण आर्तवेन निमित्तेन स्नाता ॥
१-१२६-४० यत यतस्व ॥
षड्विंशत्यधिकशततमोऽध्यायः ॥
१२६ ॥

---

अध्यय१२७
॥ श्रीः ॥
१.१२७. अध्यायः १२७

Mahabharata - Adi Parva - Chapter Topics
कुन्त्या पाण्डुं प्रति व्युषिताश्वकथाकथनम् ॥ १ ॥

Mahabharata - Adi Parva - Chapter Text

१-१२७-० (५५७१)
वैशंपायन उवाच। १-१२७-०क्ष् (७५४)
एवमुक्ता महाराज कुन्ती पाण्डुमभाषत ।
कुरूणामृषभं वीरं तदा भूमिपतिं पतिम् ॥ १-१२७-१ (५५७२)
कुन्त्युवाच। १-१२७-२क्ष् (७५५)
न मामर्हसि धर्मज्ञ वक्तुमेवं कथंचन ।
धर्मपत्नीमभिरतां त्वयि राजीवलोचने ॥ १-१२७-२ (५५७३)
त्वमेव तु महाबाहो मय्यपत्यानि भारत ।

वीर वीर्योपपन्नानि धर्मतो जनयिष्यसि ॥१-१२७-३ (५५७४)
स्वर्गं मनुजशार्दूल गच्छेयं सहिता त्वया ।
अपत्याय च मां गच्छ त्वमेव कुरुनन्दन ॥१-१२७-४ (५५७५)
न ह्यहं मनसाप्यन्यं गच्छेयं त्वदृते नरम् ।
त्वत्तः प्रति विशिष्टश्च कोऽन्योऽस्ति भुवि मानवः ॥१-१२७-५ (५५७६)
इमां च तावद्धर्मात्मन्पौराणीं शृणु मे कथाम् ।
परिश्रुतां विशालाक्ष कीर्तयिष्यामि यामहम् ॥१-१२७-६ (५५७७)
व्युषइताश्व इति ख्यातो बभूव किल पार्थिवः ।
पुरा परमधर्मिष्ठः पूरोर्वंशविवर्धनः ॥१-१२७-७ (५५७८)
तस्मिंश्च यजमाने वै धर्मात्मनि महाभुजे ।
उपागमंस्ततो देवाः सेन्द्रा देवर्षिभिः सह ॥१-१२७-८ (५५७९)
अमाद्यदिन्द्रः सोमेन दक्षिणाभिर्द्विजातयः ।
व्युषिताश्वस्य राजर्षेस्ततो यज्ञे महात्मनः ॥१-१२७-९ (५५८०)
देवा ब्रह्मर्षयश्चैव चक्रुः कर्म स्वयं तदा ।
व्युषिताश्वस्ततो राजन्नति मर्त्यान्व्यरोचत ॥१-१२७-१० (५५८१)
सर्वभूतान्प्रति यथा तपनः शिशिरात्यये ।
स विजित्य गृहीत्वा च नृपतीन्राजसत्तमः ॥१-१२७-११ (५५८२)
प्राच्यानुदिच्यान्पाश्चात्यान्दाक्षिणात्यानकालयत् ।
अश्वमेधे महायज्ञे व्युषिताश्वः प्रतापवान् ॥१-१२७-१२ (५५८३)
बभूव स हि राजेन्द्रो दशनागबलान्वितः ।
अप्यत्र गाथां गायन्ति ये पुराणविदो जनाः ॥१-१२७-१३ (५५८४)
व्युषिताश्वे यशोवृद्धे मनुष्येन्द्रे कुरूत्तम ।
व्युषिताश्वः समुद्रान्तां विजित्येमां वसुन्धराम् ॥१-१२७-१४ (५५८५)
अपालयत्सर्ववर्णान्पिता पुत्रानिवौरसान् ।
यजमानो महायज्ञैर्ब्राह्मणेभ्यो धनं ददौ ॥१-१२७-१५ (५५८६)
अनन्तरत्नान्यादाय स जहार महाक्रतून् ।
सुषाव च बहून्सोमान्सोमसंस्थास्ततान च ॥१-१२७-१६ (५५८७)
आसीत्काक्षीवती चास्य भार्या परमसंमता ।
भद्रा नाम मनुष्येन्द्र रूपेणासदृशी भुवि ॥१-१२७-१७ (५५८८)
कामयामासतुस्तौ च परस्परमिति श्रुतम् ।
स तस्यां कामसंपन्नो यक्ष्मणा समपद्यत ॥१-१२७-१८ (५५८९)
तेनाचिरेण कालेन जगामास्तमिवांशुमान् ।
तस्मिन्प्रेते मनुष्येन्द्रे भार्याऽस्य भृशदुःखिता ॥१-१२७-१९ (५५९०)
अपुत्रा पुरुषव्याघ्र विललापेति नः श्रुतम् ।
भद्रा परमदुःखार्ता तन्निबोध जनाधिप ॥१-१२७-२० (५५९१)
भद्रोवाच।१-१२७-२१क्ष् (७५६)

नारी परमधर्मज्ञ सर्वा भर्तृविनाकृता ।
पतिं विना जीवति या न सा जीवति दुःखिता ॥ १-१२७-२१ (५५९२)
पतिं विना मृतं श्रेयो नार्याः क्षत्रियपुंगव ॥
त्वद्गतिं गन्तुमिच्छामि प्रसीदस्वनयस्वमाम् ॥ १-१२७-२२ (५५९३)
त्वया हीना क्षणमपि नाहं जीवितुमुत्सहे ।
प्रसादं कुरु मे राजन्नितस्तूर्णं नयस्व माम् ॥ १-१२७-२३ (५५९४)
पृष्ठतोऽनुगमिष्यामि समेषु विषमेषु च ।
त्वामहं नरशार्दूल गच्छन्तमनिवर्तितुम् ॥ १-१२७-२४ (५५९५)
छायेवानुगता राजन्सततं वशवर्तिनी ।
भविष्यामि नरव्याघ्र नित्यं प्रियहिते रता ॥ १-१२७-२५ (५५९६)
अद्यप्रभृति मां राजन्कष्टा हृदयशोषणाः ।
आधयोऽभिभविष्यन्ति त्वामृते पुष्करेक्षण ॥ १-१२७-२६ (५५९७)
अभाग्यया मया नूनं वियुक्ताः सहचारिणः ।
तेन मे विप्रयोगोऽयमुपपन्नस्त्वया सह ॥ १-१२७-२७ (५५९८)
विप्रयुक्ता तु या पत्या मुहूर्तमपि जीवति ।
दुःखं जीवति सा पापा नरकस्थेव पार्थिव ॥ १-१२७-२८ (५५९९)
संयुक्ता विप्रयुक्ताश्च पूर्वदेहे कृता मया ।
तदिदं कर्मभिः पापैः पूर्वदेहेषु संचितम् ॥ १-१२७-२९ (५६००)
दुःखं मामनुसंप्राप्तं राजंस्त्वद्विप्रयोगजम् ।
अद्यप्रभृत्यहं राजन्कुशसंस्तरशायिनी ।
भविष्याम्यसुखाविष्टा त्वद्दर्शनपरायणा ॥ १-१२७-३० (५६०१)
दर्शयस्व नरव्याघ्र शाधि मामसुखान्विताम् ।
कृपणां चाथ करुणं विलपत्नीं नरेश्वर ॥ १-१२७-३१ (५६०२)
कन्त्युवाच। १-१२७-३२क्ष् (७५७)
एवं बहुविधं तस्यां विलपन्त्यां पुनःपुनः ।
तं शवं संपरिष्वज्य वाक्किलाऽन्तर्हिताऽब्रवीत् ॥ १-१२७-३२ (५६०३)
उत्तिष्ठ भद्रे गच्छ त्वं ददानीह वरं तव ।
जनयिष्याम्यपत्यानि त्वय्यहं चारुहासिनि ॥ १-१२७-३३ (५६०४)
आत्मकीये वरारोहे शयनीये चतुर्दशीम् ।
अष्टमीं वा ऋतुस्नाता संविशेथा मया सह ॥ १-१२७-३४ (५६०५)
एवमुक्ता तु सा देवी तथा चक्रे पतिव्रता ।
यथोक्तमेव तद्वाक्यं भद्रा पुत्रार्थिनी तदा ॥ १-१२७-३५ (५६०६)
सा तेन सुषुवे देवी शवेन भरतर्षभ ।
त्रीञ्शाल्वांश्चतुरो मद्रान्सुतान्भरतसत्तम ॥ १-१२७-३६ (५६०७)
तथा त्वमपि मय्येवं मनसा भरतर्षभ ।
शक्तो जनयितुं पुत्रांस्तपोयोगबलान्वितः ॥ ॥ १-१२७-३७ (५६०८)

इति श्रीमन्महाभारते आदिपर्वणि संभवपर्वणि
सप्तविंशत्यधिकशततमोऽध्यायः ॥ १२७ ॥
Mahabharata - Adi Parva - Chapter Footnotes

१-१२७-१२ अकालयद्वशीकृतवान् ॥
१-१२७-१६ जहार आहृतवान् चकारेत्यर्थः । सोमसंस्थाः
अग्निष्टोमात्यग्निष्टोमादयः सप्त ॥
१-१२७-२२ मृतं मरा ॥
१-१२७-३२ शवं प्रेवशरीरं संपरिष्वज्य विलपन्त्यामित्यन्वयः ॥
सप्तविंशत्यधिकशततमोऽध्यायः ॥
१२७ ॥

---

अध्यय१२८
॥ श्रीः ॥
१.१२८. अध्यायः १२८

Mahabharata - Adi Parva - Chapter Topics
उद्दालककथा ॥ १ ॥
उद्दालकपुत्रेण श्वेतकेतुना कृता स्त्रीपुरुषमर्यादा ॥ २ ॥
गुणाधिकात् द्विजातेः पुत्रोत्पादनार्थं प्रति पाण्डोराज्ञा ॥ ३ ॥
कुन्त्या दुर्वाससः स्वस्य मन्त्रप्राप्तिकथनम् ॥ ४ ॥

Mahabharata - Adi Parva - Chapter Text

१-१२८-० (५६०९)
वैशंपायन उवाच। १-१२८-०क्ष् (७५८)
एवमुक्तस्तया राजा तां देवीं पुनरब्रवीत् ।
धर्मविद्धर्मसंयुक्तमिदं वचनमुत्तमम् ॥ १-१२८-१ (५६१०)
पाण्डुरुवाच। १-१२८-२क्ष् (७५९)
एवमेतत्पुरा कुन्ति व्युषिताश्वश्चकार ह ।
यथा त्वयोक्तं कल्याणि स ह्यासीदमरोपमः ॥ १-१२८-२ (५६११)
अथ त्विदं प्रवक्ष्यामि धर्मतत्त्वं निबोध मे ।
पुराणमृषिभिर्दृष्टं धर्मविद्भिर्महात्मभिः ॥ १-१२८-३ (५६१२)
अनावृताः किल पुरा स्त्रिय आसन्वरानने ।
कामचारविहारिण्यः स्वतन्त्राश्चारुहासिनि ॥ १-१२८-४ (५६१३)
तासां व्युच्चरमाणानां कौमारात्सुभगे पतीन् ।

नाधर्मोऽभूद्वरारोहे स हि धर्मः पुराऽभवत् ॥१-१२८-५ (५६१४)
तं चैव धर्मं पौराणं तिर्यग्योनिगताः प्रजाः ।
अद्याप्यनुविधीयन्ते कामक्रोधविवर्जिताः ॥१-१२८-६ (५६१५)
प्रमाणदृष्टो धर्मोऽयं पूज्यते च महर्षिभिः ।
उत्तरेषु च रम्भोरु कुरुष्वद्यापि पूज्यते ।
स्त्रीणामनुग्रहकरः स हि धर्मः सनातनः ॥ १-१२८-७ (५६१६)
ग्नाग्निस्तृप्यति काष्ठानां नापगानां महोदधिः ।
नान्तकः सर्वभूतानां न पुंसां वामलोचनाः ॥१-१२८-८ (५६१७)
एवं तृष्णा तु नारीणां पुरुषं पुरुषं प्रति ।
अगम्यागमनं स्त्रीणां नास्ति नित्यं शुचिस्मिते ॥१-१२८-९ (५६१८)
पुत्रं वा किल पौत्रं वा कासांचिद्भ्रातरं तथा ।
रहसीह नरं दृष्ट्वा योनिरुत्क्लिद्यते तदा ॥१-१२८-१० (५६१९)
एतत्स्वाभाविकं स्त्रीणां न निमित्तकृतं शुभे।'
अस्मिंस्तु लोके नचिरान्मर्यादेयं शुचिस्मिते ॥ १-१२८-११ (५६२०)
स्थापिता येन यस्माच्च तन्मे विस्तरतः शृणु ।
बभूवोद्दालको नाम महर्षिरिति नः श्रुतम् ॥१-१२८-१२ (५६२१)
श्वेतकेतुरिति ख्यातः पुत्रस्तस्याभवन्मुनिः ।
मर्यादेयं कृता तेन धर्म्या वै श्वेतकेतुना ॥१-१२८-१३ (५६२२)
कोपात्कमलपत्राक्षि यदर्थं तन्निबोध मे ॥ १-१२८-१४ (५६२३)
ग्श्वेतकेतोः पिता देवि तप उग्रं समास्थितः ।
ग्रीष्मे पञ्चतपा भूत्वा वर्षास्वाकाशगोऽभवत् ॥१-१२८-१५ (५६२४)
शिशइरे सलिलस्थायी सह पत्न्या महातपाः ।
उद्दालकं तपस्यन्तं नियमेन समाहितम् ॥१-१२८-१६ (५६२५)
तस्य पुत्रः श्वेतकेतुः परिचर्यां चकार ह ।
अभ्यागच्छद्द्विजः कश्चिद्वलीपलितसंततः ॥१-१२८-१७ (५६२६)
तं दृष्ट्वैव मुनिः प्रीतः पूजयामास शास्त्रतः ।
स्वागतेन च पाद्येन मृदुवाक्यैश्च भारत ॥१-१२८-१८ (५६२७)
शाकमूलफलाद्यैश्च वन्यैरन्यैरपूजयत् ।
क्षुत्पिपासाश्रमेणार्तः पूजितश्च महर्षिणा ॥१-१२८-१९ (५६२८)
विश्रान्तो मुनिमासाद्य पर्यपृच्छद्द्विजस्तदा ।
उद्दालक महर्षे त्वं सत्यं मे ब्रूहि माऽनृतम् ॥१-१२८-२० (५६२९)
ऋषिपुत्रः कुमारोऽयं दर्शनीयो विशेषतः ।
तव पुत्रमिमं मन्ये कृतकृत्योऽसि तद्वद ॥१-१२८-२१ (५६३०)
उद्दालक उवाच।१-१२८-२२क्ष् (७६०)
मम पत्नी महाप्राज्ञ कुशिकस्य सुता मता ।
मामेवानुगता पत्नी मम नित्यमनुव्रता ॥१-१२८-२२ (५६३१)

अरुन्धतीव पत्नीनां तपसा कर्शितस्तनी ।
अस्यां जातः श्वेतकेतुर्मम पुत्रो महातपाः ॥१-१२८-२३ (५६३२)
वेदवेदाङ्गविद्विप्र मच्छासनपरायणः ।
लोकज्ञः सर्वलोकेषु विश्रुतः सत्यवाग्घृणी ॥१-१२८-२४ (५६३३)
ब्राह्मण उवाच।१-१२८-२५क्ष् (७६१)
अपुत्री भार्यया चार्थी वृद्धोऽहं मन्दचाक्षुषः ।
पित्र्यादृणादनिर्मुक्तः पूर्वमेवाकृतस्त्रियः ॥१-१२८-२५ (५६३४)
प्रजारणिस्तु पत्नी ते कुलशीलसमन्विता ।
सदृशी मम गोत्रेण वहाम्येनां क्षमस्व मे ॥१-१२८-२६ (५६३५)
पाण्डुरुवाच।१-१२८-२७क्ष् (७६२)
इत्युक्त्वा मृगशावाक्षीं चीरकृष्णाजिनाम्बराम् ।
यष्ट्याधारः स्रस्तगात्रो मन्दचक्षुरबुद्धिमान् ॥१-१२८-२७ (५६३६)
स्वव्यापाराक्षमां श्रेष्ठमचित्तामात्मनि द्विजः।'
श्वेतकेतोः किल पुरा समक्षं मातरं पितुः ॥ १-१२८-२८ (५६३७)
जग्राह ब्राह्मणः पापौ गच्छाव इति चाब्रवीत् ।
ऋषिपुत्रस्तदा कोपं चकारामर्षितस्तदा ॥१-१२८-२९ (५६३८)
मातरं तां तथा दृष्ट्वा नीयमानां बलादिव ।
ग्तपसा दीप्तवीर्यो हि श्वेतकेतुर्न चक्षमे ॥१-१२८-३० (५६३९)
संगृह्य मातरं हस्ते श्वेतकेतुरभाषत ।
दुर्ब्राह्मण विमुञ्च त्वं मातरं मे पतिव्रताम् ॥१-१२८-३१ (५६४०)
स्वयं पिता मे ब्रह्मर्षिः क्षमावान्ब्रह्मवित्तमः ।
शापानुग्रहयोः शक्तः तूष्णींभूतो महाव्रतः ॥१-१२८-३२ (५६४१)
तस्य पत्नी दमोपेता मम माता विशेषतः ।
पतिव्रतां तपोवृद्धां साध्वाचारैरलङ्कृताम् ॥१-१२८-३३ (५६४२)
अप्रमादेन ते ब्रह्मन्मातृभूतां विमुञ्च वै ॥ १-१२८-३४ (५६४३)
एवमुक्त्वा तु याचन्तं विमुञ्चेति मुहुर्मुहुः ।
प्रत्यवोचदि्द्वजो राजन्नप्रगल्भमिदं वचः ॥१-१२८-३५ (५६४४)
ब्राह्मण उवाच।१-१२८-३६क्ष् (७६३)
अपत्यार्थी श्वेतकेतो वृद्धोऽहं मन्दचाक्षुषः ।
पिता ते ऋणनिर्मुक्तस्त्वया पुत्रेण काश्यप ॥१-१२८-३६ (५६४५)
ऋणादहमनिर्मुक्तो वृद्धोऽहं विगतस्पृहः ।
मम को दास्यति सुतां कन्यां संप्राप्तयौवनाम् ॥१-१२८-३७ (५६४६)
प्रजारणिमिमां पत्नीं विमुञ्च त्वं महातपः ।
एकया प्रजया प्रीतो मातरं ते ददाम्यहम् ॥१-१२८-३८ (५६४७)
एवमुक्तः श्वेतकेतुर्लज्जया क्रोधमेयिवान्।'
क्रुद्धं तं तु पिता दृष्ट्वा श्वेतकेतुमुवाच ह ॥ १-१२८-३९ (५६४८)

मा तात कोपं कार्षीस्त्वमेष धर्मः सनातनः ।
अनावृता हि सर्वेषां वर्णानामङ्गना भुवि ॥१-१२८-४० (५६४९)
यथा गावः स्थिताः पुत्र स्वेस्वे वर्णे तथा प्रजाः ।
ग्तथैव च कुटुम्बेषु न प्रमाद्यन्ति कर्हिचित् ॥१-१२८-४१ (५६५०)
ऋतुकाले तु संप्राप्ते भर्तारं न जहुस्तदा।'
ऋषिपुत्रोऽथ तं धर्मं श्वेतकेतुर्न चक्षमे ॥ १-१२८-४२ (५६५१)
चकार चैव मर्यादामिमां स्त्रीपुंसयोर्भुवि ।
मानुषेषु महाभागे न त्वेवान्येषु जन्तुषु ॥१-१२८-४३ (५६५२)
तदाप्रभृति मर्यादा स्थितेयमिति नः श्रुतम् ।
व्युच्चरन्त्याः पतिं नार्या अद्यप्रभृति पातकम् ॥१-१२८-४४ (५६५३)
भ्रूणहत्यासमं घोरं भविष्यत्यसुखावहम् ।
ग्अद्याप्यनुविधीयन्ते कामक्रोधविवर्जिताः ॥१-१२८-४५ (५६५४)
उत्तरेषु महाभागे कुरुष्वेवं यशस्विनि ।
पुराणदृष्टो धर्मोऽयं पूज्यते च महर्षिभिः ॥' १-१२८-४६ (५६५५)
भार्यां तथा व्युच्चरतः कौमारब्रह्मचारिणीम् ।
पतिव्रतामेतदेव भविता पातकं भुवि ॥१-१२८-४७ (५६५६)
नियुक्ता पतिना भार्या यद्यपत्यस्य कारणात् ।
न कुर्यात्तत्तथा भीरु सैनः सुमहदाप्नुयात् ।
इति तेन पुरा भीरु मर्यादा स्थापिता बलात् ॥ १-१२८-४८ (५६५७)
उद्दालकस्य पुत्रेण धर्म्या वै श्वेतकेतुना ।
सौदासेन च रम्भोरु नियुक्ता पुत्रजन्मनि ॥१-१२८-४९ (५६५८)
मदयन्ती जगामर्षिं वसिष्ठमिति नः श्रुतम् ।
तस्माल्लेभे च सा पुत्रमश्मकं नाम भामिनी ॥१-१२८-५० (५६५९)
एवं कृतवती सापि भर्तुः प्रियचिकीर्षया ।
अस्माकमपि ते जन्म विदितं कमलेक्षणे ॥१-१२८-५१ (५६६०)
कृष्णद्वैपायनाद्भीरु कुरूणां वंशवृद्धये ।
अत एतानि सर्वाणि कारणानि समीक्ष्य वै ॥१-१२८-५२ (५६६१)
ममैतद्वचनं धर्म्यं कर्तुमर्हस्यनिन्दिते ।
ऋतावृतौ राजपुत्रि स्त्रिया भर्ता पतिव्रते ॥१-१२८-५३ (५६६२)
नातिवर्तव्य इत्येवं धर्मं धर्मविदो विदुः ।
शेषेष्वन्येषु कालेषु स्वातन्त्र्यं स्त्री किलार्हति ॥१-१२८-५४ (५६६३)
धर्ममेवं जनाः सन्तः पुराणं परिचक्षते ।
भर्ता भार्यां राजपुत्रि धर्म्यं वाऽधर्म्यमेव वा ॥१-१२८-५५ (५६६४)
यद्ब्रूयात्तत्तथा कार्यमिति वेदविदो विदुः ।
विशेषतः पुत्रगृद्धी हीनः प्रजननात्स्वयम् ॥१-१२८-५६ (५६६५)
यथाऽहमनवद्याङ्गि पुत्रदर्शनलालसः ।

अयं रक्ताङ्गुलिनखः पद्मपत्रनिभः शुभे ॥ १-१२८-५७ (५६६६)
प्रसादनार्थं सुश्रोणि शिरस्यभ्युद्यतोऽञ्जलिः ।
मन्नियोगात्सुकेशान्ते द्विजातेस्तपसाऽधिकात् ॥ १-१२८-५८ (५६६७)
पुत्रान्गुणसमायुक्तानुत्पादयितुमर्हसि ।
त्वत्कृतेऽहं पृथुश्रोणि गच्छेयं पुत्रिणां गतिम् ॥ १-१२८-५९ (५६६८)
वैशंपायन उवाच। १-१२८-६०क्ष् (७६४)
एवमुक्ता ततः कुन्ती पाण्डुं परपुरञ्जयम् ।
प्रत्युवाच वरारोहा भर्तुः प्रियहिते रता ॥ १-१२८-६० (५६६९)
ग्अधर्मः सुमहानेषु स्त्रीणां भरतसत्तम ।
यत्प्रसादयते भर्ता प्रसाद्यः क्षत्रियर्षभ ।
शृणु चेदं महाबाहो मम प्रीतिकरं चः ॥' १-१२८-६१ (५६७०)
पितृवेश्मन्यहं बाला नियुक्ताऽतिथिपूजने ।
उग्रं पर्यचरं तत्र ब्राह्मणं संशितव्रतम् ॥ १-१२८-६२ (५६७१)
निगूढनिश्चयं धर्मे यं तं दुर्वाससं विदुः ।
तमहं संशितात्मानं सर्वयत्नैरतोषयम् ॥ १-१२८-६३ (५६७२)
स मेऽभिचारसंयुक्तमाचष्ट भगवान्वरम् ।
मन्त्रं त्विमं च मे प्रादादब्रवीच्चैव मामिदम् ॥ १-१२८-६४ (५६७३)
यं यं देवं त्वमेतेन मन्त्रेणावाहयिष्यसि ।
अकामो वा सकामो वा वशं ते समुपैष्यति ॥ १-१२८-६५ (५६७४)
तस्य तस्य प्रसादात्ते राज्ञि पुत्रो भविष्यति ।
इत्युक्ताऽहं तदा तेन पितृवेश्मनि भारत ॥ १-१२८-६६ (५६७५)
ब्राह्मणस्य वचस्तथ्यं तस्य कालोऽयमागतः ।
अनुज्ञाता त्वया देवमाह्वयेयमहं नृप ॥ १-१२८-६७ (५६७६)
ग्यां मे विद्यां महाराज अददात्स महायशाः ।
तयाऽऽहूतः सुरः पुत्रं प्रदास्यति सुरोपमम् ।
अनपत्यकृतं यस्ते शोकं वीर विनेष्यति ॥' ॥ १-१२८-६८ (५६७७)

इति श्रीमन्महाभारते आदिपर्वणि संभवपर्वणि
अष्टाविंशत्यधिकशततमोऽध्यायः ॥ १२८ ॥

Mahabharata - Adi Parva - Chapter Footnotes

१-१२८-४ अनावृताः सर्वैर्द्रष्टुं योग्याः । कामचारो रतिसुखं
तदर्थं विहारिण्यः पर्यटनशीलाः। स्वतन्त्रा भर्त्रादिभिरनिवार्याः ॥
१-१२८-५ पतीन्व्युच्चरमाणानां व्यभिचरन्तीनाम् ॥
१-१२८-६ अनुविधीयन्ते अनुसार्यन्ते ईश्वरेण ॥
१-१२८-११ नचिरादल्पकालतः ॥

१-१२८-५५ पुराणं युगान्तरीयम् ॥
१-१२८-५९ त्वत्कृते त्वया ॥
१-१२८-६४ अभिचारो देवताकर्षणशक्तिः ॥
अष्टविंशत्यधिकशततमोऽध्यायः ॥
१२८ ॥

---

अध्यय१२९
॥ श्रीः ॥
१.१२९. अध्यायः १२९

Mahabharata - Adi Parva - Chapter Topics
धर्मात्कुन्त्यां युधिष्ठिरोत्पत्तिः ॥ १ ॥
कुन्त्याः पुत्रोत्पत्तिश्रवणेन दुःखितया गान्धार्या
घातितात्स्वोदरान्मांसपेशीजननम् ॥ २ ॥
मांसपेशीं एकोत्तरशतधा विभज्य पृथक्पृथक्कुण्डेषु निधाय
रक्षणम् ॥ ३ ॥
वने स्थितस्य पाण्डोः कुन्त्यां वायोर्भीमसेन्नोत्पत्तिः ॥ ४ ॥
मातुरङ्कात्पतितेन भीमेन शैलशिलासंचूर्णनम् ॥ ५ ॥
दुर्योधनोत्पत्तिः ॥ ६ ॥
ततो मासेन धृतराष्ट्रस्य पुत्रशतोत्पत्तिः । दुःशलाजननं च ॥ ७ ॥

Mahabharata - Adi Parva - Chapter Text

१-१२९-० (५६७८)
ग्कुन्त्युवाच। १-१२९-०क्ष् (७६५)
अपत्यकाम एवं स्यान्ममापत्यं भवेदिति ।
विप्रं वा गुणसंपन्नं सर्वभूतहिते रतम् ॥ १-१२९-१ (५६७९)
अनुजानीहि भद्रं ते दैवतं हि पतिः स्त्रियः ।
यं त्वं वक्ष्यसि धर्मज्ञ देवं ब्राह्मणमेव च ॥ १-१२९-२ (५६८०)
यथोद्दिष्टं त्वया वीर तत्कर्तास्मि महाभुज ।
देवात्पुत्रफलं सद्यो विप्रात्कालान्तरे भवेत् ॥ १-१२९-३ (५६८१)
आवाहयामि कं देवं कदा वा भरतर्षभ ।
त्वत्त आज्ञां प्रतीक्षन्तीं विद्ध्यस्मिन्कर्मणीप्सिते ॥ १-१२९-४ (५६८२)
पाण्डुरुवाच। १-१२९-५क्ष् (७६६)
धन्योऽजस्म्यनुगृहीतोऽस्मि त्वं नो धात्री कुलस्य हि ।
नमो महर्षये तस्मै येन दत्तो वरस्तव ॥ १-१२९-५ (५६८३)
न चाधर्मेण धर्मज्ञे शक्याः पालयितुं प्रजाः ।

तस्मात्त्वं पुत्रलाभाय सन्तानाय ममैव च ॥ १-१२९-६ (५६८४)
प्रवरं सर्वदेवानां धर्ममावाहयाबले। १-१२९-७ (५६८५)
वैशंपायन उवाच ।
पाण्डुना समनुज्ञाता भारतेन यशस्विना ।
मतिं चक्रे महाराज धर्मस्यावाहने तदा ॥' १-१२९-७क्ष् (७६७)
पाण्डुरुवाच। १-१२९-८क्ष् (७६८)
अद्यैव त्वं वरारोहे प्रयतस्व यथाविधि ।
धार्मिकश्च कुरूणां हि भविष्यति न संशयः ॥ १-१२९-८ (५६८६)
दत्तस्य तस्य धर्मेण नाधर्मे रंस्यते मनः ।
धर्मादिकं हि धर्मज्ञे धर्मान्तं धर्ममध्यमम् ॥ १-१२९-९ (५६८७)
अपत्यमिष्टं लोकेषु यशःकीर्तिविवर्धनम् ।
तस्माद्धर्मं पुरस्कृत्य नियता त्वं शुचिस्मिते ॥ १-१२९-१० (५६८८)
आकाराचारसंपन्ना भजस्वाराधय स्वयम् ॥ १-१२९-११ (५६८९)
वैशंपायन उवाच। १-१२९-१२क्ष् (७६९)
सा तथोक्ता तथेत्युक्त्वा तेन भर्त्रा वराङ्गना ।
अभिवाद्याभ्यनुज्ञाता प्रदक्षिणमथाकरोत् ॥ १-१२९-१२ (५६९०)
संवत्सरोषिते गर्भे गान्धार्या जनमेजय ।
आजुबहाव ततो धर्मं कुन्ती गर्भार्थमच्युतम् ॥ १-१२९-१३ (५६९१)
सा बलिं त्वरिता देवी धर्मायोपजहार ह ।
जजाप विधिवज्जप्यं दत्तं दुर्वाससा पुरा ॥ १-१२९-१४ (५६९२)
'जानन्ती धर्ममग्र्यं वै धर्मं वशमुपानयत् ।
आहूतो नियमात्कुन्त्या सर्वभूतनमस्कृतः ॥' १-१२९-१५ (५६९३)
आजगाम ततो देवीं धर्मो मन्त्रबलात्ततः ।
विमाने सूर्यसङ्काशे कुन्ती यत्र जपस्थिता ॥ १-१२९-१६ (५६९४)
'ददृशे भगवान्धर्मः सन्तानार्थाय पाण्डवे।'
विहस्य तां ततो ब्रूयाः कुन्ति किं ते ददाम्यहम् ।
सा तं विहस्यमानापि पुत्रं देह्यब्रवीदिदम् ॥ १-१२९-१७ (५६९५)
'तस्मिन्बहुमृगेऽरण्ये शतशृङ्गे नगोत्तमे ।
पाण्डोरर्थे महाभागा कुन्ती धर्ममुपागमत् ॥ १-१२९-१८ (५६९६)
ऋतुकाले शुचिः स्नाता शुक्लवस्त्रा यशस्विनी ।
शय्यां जग्राह सुश्रोणी सह धर्मेण सुव्रता ॥' १-१२९-१९ (५६९७)
धर्मेण सह संगम्य योगमूर्तिधरेण सा ।
लेभे पुत्रं महाबाहुं सर्वप्राणभृतां वरम् ॥ १-१२९-२० (५६९८)
ऐन्द्रे चन्द्रमसा युक्ते मुहूर्तेऽभिजितेऽष्टमे ।
दिवा मध्यगते सूर्ये तिथौ पूर्णे हि पूजिते ॥ १-१२९-२१ (५६९९)
समृद्धयसशं कुन्ती सुषाव प्रवरं सुतम् ।

जातमात्रे सुते तस्मिन्वागुवाचाशरीरिणी ॥ १-१२९-२२ (५७००)
एष धर्मभृतां श्रेष्ठो भविष्यति नरोत्तमः ।
विक्रान्तः सत्यवाक्चैव राजा पृथ्व्यां भविष्यति ॥ १-१२९-२३ (५७०१)
युधिष्ठिर इति ख्यातः पाण्डोः प्रथमजः सुतः ।
भविता प्रथितो राजा त्रिषु लोकेषु विश्रुतः ।
यशसा तेजसा चैव वृत्तेन च समन्वितः ॥ १-१२९-२४ (५७०२)
संवत्सरे द्वितीये तु गान्धार्या उदरं महत् ।
न च प्राजायत तदा ततस्तां दुःखमाविशत् ॥ १-१२९-२५ (५७०३)
श्रुत्वा कुन्तीसुतं जातं बालार्कसमतेजसम् ।
उदस्यात्मनः स्थैर्यमुपालभ्य च सौबली ॥ १-१२९-२६ (५७०४)
कौरवस्यापरिज्ञातं यत्नेन महता स्वयम् ।
उदरं घातयामास गान्धारी शोकमूर्छिता ॥ १-१२९-२७ (५७०५)
ततो जज्ञे मांसपेशी लोहाष्ठीलेव संहता ।
द्विवर्षसंभृता कुक्षौ तामुत्स्रष्टुं प्रचक्रमे ॥ १-१२९-२८ (५७०६)
अथ द्वैपायनो ज्ञात्वा त्वरितः समुपागमत् ।
तां स मांसमयीं पेशीं ददर्श जपतां वरः ॥ १-१२९-२९ (५७०७)
ततोऽवदत्सौबलेयीं किमिदं ते चिकीर्षितम् ।
सा चात्मनो मतं सर्वं शशंस परमर्षये ॥ १-१२९-३० (५७०८)
गान्धार्युवाच। १-१२९-३१क्ष् (७७०)
ज्येष्ठं कुन्तीसुतं जातं श्रुत्वा रविसमप्रभम् ।
दुःखेन परमेणेदमुदरं घातितं मया ॥ १-१२९-३१ (५७०९)
शतं च किल पुत्राणां वितीर्णं मे त्वया पुरा ।
इयं च मे मांसपेशी जाता पुत्रशताय वै ॥ १-१२९-३२ (५७१०)
व्यास उवाच। १-१२९-३३क्ष् (७७१)
एवमेतत्सौबलेयि नैतज्जात्वन्यथा भवेत् ।
वितथं नोक्तपूर्वं मे स्वैरेष्वपि कुतोऽन्यथा ॥ १-१२९-३३ (५७११)
घृतपूर्णं कुण्डशतं क्षिप्रमेव विधीयताम् ।
सुगुप्तेषु च देशेषु रक्षा चैव विधीयताम् ॥ १-१२९-३४ (५७१२)
शीताभिरद्भिरष्ठीलामिमां च परिषिञ्चय ॥ १-१२९-३५ (५७१३)
वैशंपायन उवाच। १-१२९-३६क्ष् (७७२)
सा सिच्यमाना ह्यष्ठीला ह्यभवच्छतधा तदा ।
अङ्गुष्ठपर्वभात्राणां गर्भाणां तत्क्षणं तथा ॥ १-१२९-३६ (५७१४)
एकाधिकशतं पूर्णं यथायोगं विशांपते ।
ततः कुण्डशतं तत्र आनाय्य तु महानृषिः ॥ १-१२९-३७ (५७१५)
मांसपेश्यास्तदा राजन्क्रमशः कालपर्ययात् ।
ततस्तांस्तेषु कुण्डेषु गर्भान्सर्वान्समादधत् ॥ १-१२९-३८ (५७१६)

स्वनुगुप्तेषु देशेषु रक्षां चैषां व्यधापयत् ।
शशास चैव कृष्णो वै गर्भाणां रक्षणं तथा ॥ १-१२९-३९ (५७१७)
उवाच चैनां भगवान्कालेनैतावता पुनः ।
स्फुटमानेषु कुण्डेषु जाताञ्जानीहि शोभने ॥ १-१२९-४० (५७१८)
उद्घाटनीयान्येतानि कुण्डानीति च सौबलीम् ।
इत्युक्त्वा भगवान्व्यासस्तथा प्रतिविधाय च ॥ १-१२९-४१ (५७१९)
जगाम तपसे धीमान्हिमवन्तं शिलोच्चयम् ।
अह्नोत्तराः कुमारस्ते कुण्डेभ्यस्तु समुत्थिताः ॥ १-१२९-४२ (५७२०)
तेनैवैषां क्रमेणासीज्ज्योष्ठानुज्येष्ठता तदा ।
जन्मतश्च प्रमाणेन ज्येष्ठः कुन्तीसुतोऽभवत् ॥ १-१२९-४३ (५७२१)
धार्मिकं च सुतं दृष्ट्वा पाण्डुः कुन्तीमथाऽब्रवीत् ।
प्राहुः क्षत्रं बलज्येष्ठं बलज्येष्ठं सुतं वृणु ॥ १-१२९-४४ (५७२२)
ततः कुन्तीमभिक्रम्य शशासातीव भारत ।
वायुमावाहयस्वेति स देवो बलवत्तरः ॥ १-१२९-४५ (५७२३)
अश्वमेधः क्रतुश्रेष्ठो ज्योतिःश्रेष्ठो दिवाकरः ।
ब्राह्मणो द्विपदां श्रेष्ठो देवश्रेष्ठश्च मारुतः ॥ १-१२९-४६ (५७२४)
मारुतं मरुतां श्रेष्ठं सर्वप्राणिभिरीडितम् ।
आवाहय त्वं नियमात्पुत्रार्थं वरवर्णिनि ॥ १-१२९-४७ (५७२५)
स नो यं दास्यति सुतं स प्राणबलवान्नृषु ।
भविष्यति वरारोहे बलज्येष्ठा हि भूमिपाः ॥ १-१२९-४८ (५७२६)
वैशंपायन उवाच। १-१२९-४९क्ष् (७७३)
तथोक्तवति सा काले वायुमेवाजुहाव ह ।
द्वितीयेनोपहारेण तेनोक्तविधिना पुनः ॥ १-१२९-४९ (५७२७)
तैरेव नियमैः स्थित्वा मन्त्रग्राममुदैरयत् ।
आजगाम ततो वायुः किं करोमीति चाब्रवीत् ॥ १-१२९-५० (५७२८)
लज्जान्विता ततः कुन्ती पुत्रमैच्छन्महाबलम् ।
तथास्त्विति च तां वायुः समालभ्य दिवं गतः ॥ १-१२९-५१ (५७२९)
तस्यां जज्ञे महावीर्यो भीमो भीमपराक्रमः ।
तमप्यतिबलं जातं वागुवाचाशरीरिणी ॥ १-१२९-५२ (५७३०)
सर्वेषां बलिनां श्रेष्ठो जातोऽयमिति भारत ।
जातमात्रे कुमारे तु सर्वलोकस्य पार्थिवाः ॥ १-१२९-५३ (५७३१)
मूत्रं प्रसुस्रुवुः सर्वे व्यथां चापि प्रपेदिरे ।
वाहनानि व्यशीर्यन्त व्यमुञ्चन्नश्रुबिन्दवः ॥ १-१२९-५४ (५७३२)
यथाऽनिलः समुद्भूतः समर्थः कम्पने भुवः ।
तथा ह्युपचिताङ्गो वै भीमो भीमपराक्रमः ॥ १-१२९-५५ (५७३३)
इदं चाद्भुतमत्रासीज्जातमात्रे वृकोदरे ।

यदर्कात्पतितो मातुः शिलां गात्रैरचूर्णयत् ॥ १-१२९-५६ (५७३४)
कुन्ती तु सह पुत्रेण याता सुरुचिरं सरः ।
स्नात्वा च सुतमादाय दशमेऽहनि यादवी ॥ १-१२९-५७ (५७३५)
दैवतान्यर्चयिष्यन्ती निर्जगामाश्रमात्पृथा ।
शैलाभ्याशेन गच्छन्त्यास्तदा भरतसत्तम ॥ १-१२९-५८ (५७३६)
निश्चक्राम महाव्याघ्रो जिघांसुर्गिरिगह्वरात् ।
तमापतन्तं शार्दूलं विकृष्य धनुरुत्तमम् ॥ १-१२९-५९ (५७३७)
निर्बिभेद शरैः पाण्डुस्त्रिभिस्तिरदशविक्रमः ।
नादेन महता तां तु पूरयन्तं गिरेर्गुहाम् ॥ १-१२९-६० (५७३८)
दृष्ट्वा शैलमुपारोढुमैच्छत्कुन्ती भयात्तदा ।
त्रासात्तस्याः सुतस्त्वङ्कात्पपात भरतर्षभ ॥ १-१२९-६१ (५७३९)
पर्वतस्योपरिस्थायामधस्तादपतच्छिशुः ।
स शिलां चूर्णयामास वज्रवद्वज्रिचोदितः ॥ १-१२९-६२ (५७४०)
पुत्रस्नेहात्ततः पाण्डुरभ्यधावद्गिरेस्तटम् ।
पतता तेन शतधा शिला गात्रैर्विचूर्णिता ॥ १-१२९-६३ (५७४१)
शिलां च चूर्णितां दृष्ट्वा परं विस्मयमागमत् ।
स तु जन्मनि भीमस्य विनदन्तं विनादितम् ॥ १-१२९-६४ (५७४२)
ददर्श गिरिशृङ्गस्थं व्याघ्रं व्याघ्रपराक्रमः ।
दारसंरक्षणार्थाय पुत्रसंरक्षणाय च ॥ १-१२९-६५ (५७४३)
सदा बाणधनुष्पाणिरभवत्कुरुनन्दनः ।
मघे चन्द्रमसा युक्ते सिंहे चाभ्युदिते गुरौ ॥ १-१२९-६६ (५७४४)
दिवा मध्यगते सूर्ये तिथौ पुण्ये त्रयोदशे ।
पित्र्ये मुहूर्ते सा कुन्ती सुषुवे भीममच्युतम् ॥ १-१२९-६७ (५७४५)
यस्मिन्नहनि भमस्तु जज्ञे भीमपराक्रमः ।
तामेव रात्रिं पूर्वां तु जज्ञे दुर्योधनो नृपः ॥ १-१२९-६८ (५७४६)
स जातमात्र एवाथ धृतराष्ट्रसुतो नृप ।
रासभारावसदृशं रुराव च ननाद च ॥ १-१२९-६९ (५७४७)
तं खराः प्रत्यभाषन्त गृध्रगोमायुवायसाः ।
क्रव्यादाः प्राणदन्घोराः शिवाश्चाशिवनिस्वनाः ॥ १-१२९-७० (५७४८)
वाताश्च प्रववुश्चापि दिग्दाहश्चाभवत्तदा ।
ततस्तु भीतवद्राजा धृतराष्ट्रोऽब्रवीदिदम् ॥ १-१२९-७१ (५७४९)
समानीय बहून्विप्रान्भीष्मं विदुरमेव च ।
अन्यांश्च सुहृदो राजन्कुरून्सर्वांस्तथैव च ॥ १-१२९-७२ (५७५०)
युधिष्ठिरो राजपुत्रो ज्येष्ठो नः कुलवर्धनः ।
प्राप्तः स्वगुणतो राज्यं न तस्मिन्वाच्यमस्तिनः ॥ १-१२९-७३ (५७५१)
अयं त्वनन्तरस्तस्मादपि राजा भविष्यति ।

एतद्विब्रूत मे तथ्यं यदत्र भविता ध्रुवम् ॥ १-१२९-७४ (५७५२)
ग्अस्मिञ्जाते निमित्तानि शंसन्ती हाशिवं महत् ।
अतो ब्रवीमि विदुर द्रुतं मां भयमाविशत् ॥' १-१२९-७५ (५७५३)
वाक्यस्यैतस्य निधेन दिक्षु सर्वासु भारत ।
क्रव्यादाः प्राणदन्घोराः शिवाश्चाशिवनिस्वनाः ॥ १-१२९-७६ (५७५४)
लक्षयित्वा निमित्तानि तानि घोराणि सर्वशः ।
तेऽब्रुवन्ब्राह्मणा राजन्विदुरश्च महामतिः ॥ १-१२९-७७ (५७५५)
यथेमानि निमित्तानि घोराणि मनुजाधिप ।
उत्थितानि सुते जाते ज्येष्ठे ते पुरुषर्षभ ॥ १-१२९-७८ (५७५६)
व्यक्तं कुलान्तकरणो भवितैष सुतस्तव ।
तस्य शान्तिः परित्यागे गुप्तावपनयो महान् ॥ १-१२९-७९ (५७५७)
ग्एष दुर्योधनो राजा मधुपिङ्गललोचनः ।
न केवलं कुलस्यान्तं क्षत्रियान्तं करिष्यति ॥' १-१२९-८० (५७५८)
शतमेकोनमप्यस्तु पुत्राणां ते महीपते ।
त्यजैनमेकं शान्तिं चेत्कुलस्येच्छसि भारत ॥ १-१२९-८१ (५७५९)
एकेन कुरु वै क्षेमं कुलस्य जगतस्तथा ।
त्यजेदेकं कुलस्यार्थे ग्रामस्यार्थे कुलं त्यजेत् ॥ १-१२९-८२ (५७६०)
ग्रामं जनपदस्यार्थे आत्मार्थे पृथिवीं त्यजेत् ।
स तथा विदुरेणोक्तस्तैश्च सर्वैर्द्विजोत्तमैः ॥ १-१२९-८३ (५७६१)
न चकार तथा राजा पुत्रस्नेहसमन्वितः ।
ततः पुत्रशतं पूर्णं धृतराष्ट्रस्य पार्थिव ॥ १-१२९-८४ (५७६२)
अह्नांशतेन संजज्ञे कन्या चैका शताधिका ।
गान्धार्यां क्लिश्यमानायामुदरेण विवर्धता ॥ १-१२९-८५ (५७६३)
ग्वैश्या सा त्वम्बिकापुत्रं कन्या परिचचार ह ।
तया समभवद्राजा धृतराष्ट्रो यदृच्छया ॥' १-१२९-८६ (५७६४)
तस्मिन्संवत्सरे राजन्धृतराष्ट्रान्महायशाः ।
जज्ञे धीमांस्ततस्तस्यां युयुत्सुः करमो नृप ।
एवं पुत्रशतं जज्ञे धृतराष्ट्रस्य धीमतः ॥ १-१२९-८७ (५७६५)
महारथानां वीराणां कन्या चैका शताधिका ।
युयुत्सुश्च महातेजा वैश्यापुत्रः प्रतापवान् ॥ ॥ १-१२९-८८ (५७६६)

इति श्रीमन्महाभारते आदिपर्वणि संभवपर्वणि
एकोनत्रिंशदधिकशततमोऽध्यायः ॥ १२९ ॥

Mahabharata - Adi Parva - Chapter Footnotes

१-१२९-२१ ऐन्द्रे ज्येष्ठानक्षत्रे ।अष्टमे अभिजितेऽभिजिति

त्रिंशन्मुहूर्तस्याह्नोऽष्टमे मुहूर्ते। दिवा शुक्लपक्षे। मध्यगते तुलायनगते। तिथौ पूर्णे पूर्णायां पञ्चम्याम्। अयं योगः प्रायेणास्विनशुक्लपञ्चम्याम् ॥
१-१२९-२८ लोहाष्ठीला लोहपिण्डिका ॥
१-१२९-६२ वज्रवद्वज्रिचोदितः वज्रिचोदितवज्रवदित्यर्थः ॥
१-१२९-६४ विनादितं नादं । विनन्दं कुर्वाणम् ॥
१-१२९-६९ रुराव च ननाद च व्यक्तमव्यक्तं च शब्दं खरसदृशमेवाकरोत् ॥
१-१२९-८७ करण इव करणः क्षत्रियाद्वैश्यायां जातत्वान्न तु वैश्याच्छूद्रायाम् ॥
एकोनत्रिंशदधिकशततमोऽध्यायः ॥
१२९ ॥

---

अध्यय१३०
॥ श्रीः ॥
१.१३०. अध्यायः १३०

Mahabharata - Adi Parva - Chapter Topics
दुःशलाजननप्रकारकथनम् ॥ १ ॥

Mahabharata - Adi Parva - Chapter Text

१-१३०-० (५७६७)
जनमेजय उवाच। १-१३०-०क्ष् (७७४)
धृतराष्ट्रस्य पुत्राणामादितः कथितं त्वया ।
ऋषेः प्रसादात्तु शतं न च कन्या प्रकीर्तिता ॥ १-१३०-१ (५७६८)
वैश्यापुत्रो युयुत्सुश्च कन्या चैका शताधिका ।
गान्धारराजदुहिता शतपुत्रेति चानघ ॥ १-१३०-२ (५७६९)
उक्ता महर्षिणा तेन व्यासेनामिततेजसा ।
कथं त्विदानीं भगवन्कन्यां त्वं तु ब्रवीषि मे ॥ १-१३०-३ (५७७०)
यदि भागशतं पेशी कृता तेन महर्षिणा ।
न प्रजास्यति चेद्भूयः सौबलेयी कथंचन ॥ १-१३०-४ (५७७१)
कथं तु संभवस्तस्या दुःशलाया वदस्व मे ।
यथावदिह विप्रर्षे परं मेऽत्र कुतूहलम् ॥ १-१३०-५ (५७७२)
वैशंपायन उवाच। १-१३०-६क्ष् (७७५)
साध्वयं प्रश्न उद्दिष्टः पाण्डवेय ब्रवीमि ते ।
तां मांसपेशीं भगवान्स्वयमेव महातपाः ॥ १-१३०-६ (५७७३)

शीताभिरद्भिरासिच्य भागं भागमकल्पयत् ।
यो यथा कल्पितो भागस्तंत धात्र्या तथा नृप ॥ १-१३०-७ (५७७४)
घृतपूर्णेषु कुण्डेषु एकैकं प्राक्षिपत्तदा ।
एतस्मिन्नन्तरे साध्वी गान्धारी सुदृढव्रता ॥ १-१३०-८ (५७७५)
दुहितुः स्नेहसंयोगमनुध्याय वराङ्गना ।
ग्नाब्रवीत्तमृषिं किंचिद्गौरवाच्च यशस्विनी।'
मनसा चिन्तयद्देवी एतत्पुत्रशतं मम ॥ १-१३०-९ (५७७६)
भविष्यति न संदेहो न ब्रवीत्यन्यथा मुनिः ।
ममेयं परमा तुष्टिर्दुहिता मे भवेद्यदि ॥ १-१३०-१० (५७७७)
एका शताधिका बाला भविष्यति कनीयसी ।
ततो दौहित्रजाल्लोकादबाह्योऽसौ पतिर्मम ॥ १-१३०-११ (५७७८)
अधिका किल नारीणां प्रीतिर्जामातृजा भवेत् ।
यदि नाम ममापि स्याद्दुहितैका शताधिका ॥ १-१३०-१२ (५७७९)
कृतकृत्या भवेयं वै पुत्रदौहित्रसंवृता ।
यदि सत्यं तपस्तप्तं दत्तं वाऽप्यथवा हुतम् ॥ १-१३०-१३ (५७८०)
गुरवस्तोषिता वापि तथाऽस्तु दुहिता मम ।
एतस्मिन्नेव काले तु कृष्णद्वैपायनः स्वयम् ॥ १-१३०-१४ (५७८१)
व्यभजत्स तदा पेशीं भगवानृषिसत्तमः ।
ग्गण्यमानेषु कुण्डेषु शते पूर्णे महात्मना ॥ १-१३०-१५ (५७८२)
अभवच्चापरं खण्डं वामहस्ते तदा किल।'
गणयित्वा शतं पूर्णमंशानामाह सौबलीम् ॥ १-१३०-१६ (५७८३)
व्यास उवाच। १-१३०-१७क्ष् (७७६)
पूर्णं पुत्रशतं त्वेतन्न मिथ्या वागुदाहृता ।
दैवयोगाच्च भागैकः परिशिष्टः शतात्परः ॥ १-१३०-१७ (५७८४)
एषा ते सुभगा कन्या भविष्यति यतेप्सिता। १-१३०-१८ (५७८५)
वैशंपायन उवाच ।
ततोऽन्यं घृतकुम्भं च समानाय्य महातपाः ॥ १-१३०-१८क्ष् (७७७)
तं चापि प्राक्षिपत्तत्र कन्याभागं तपोधनः ।
ग्संभूता चैव कालेन सर्वेषां च यवीयसी ॥ १-१३०-१९ (५७८६)
ऐतत्ते कथितं राजन्दुःशलाजन्म भारत ।
ब्रूहि राजेन्द्र किं भूयो वर्तयिष्यामि तेऽनघ ॥ ॥ १-१३०-२० (५७८७)

इति श्रीमन्महाभारते आदिपर्वणि संभवपर्वणि
त्रिंशदधिकशततमोऽध्यायः ॥ १३० ॥
Mahabharata - Adi Parva - Chapter Footnotes

१-१३०-४ न प्रजास्यति प्रजामात्मनो नेच्छति ॥
त्रिंशदधिकशततमोऽध्यायः ॥
१३० ॥

---

अध्यय१३१
॥ श्रीः ॥
१.१३१. अध्यायः १३१

Mahabharata - Adi Parva - Chapter Topics
दुर्योधनादीनां नामकथनम् ॥ १ ॥
दुःशलाविवाहः ॥ २ ॥

Mahabharata - Adi Parva - Chapter Text

१-१३१-० (५७८८)
जनमेजय उवाच। १-१३१-०क्ष् (७७८)
ज्येष्ठाऽनुज्येष्ठतां तेषां नामानि च पृथक्पृथक् ।
धृतराष्ट्रस्य पुत्राणामानुपूर्व्यात्प्रकीर्तय ॥ १-१३१-१ (५७८९)
वैशंपायन उवाच। १-१३१-२क्ष् (७७९)
दुर्योधनो युयुत्सुश्च राजन्दुःशासनस्तथा ।
दुःसहो दुःशलश्चैव जलसन्धः समः सहः ॥ १-१३१-२ (५७९०)
विन्दानुविन्दौ दुर्धर्षः सुबाहुर्दुष्प्रधर्षणः ।
दुर्मर्षणो दुर्मुखश्च दुष्कर्णः कर्ण एव च ॥ १-१३१-३ (५७९१)
विविंशतिर्विकर्णश्च शलः सत्वः सुलोचनः ।
चित्रोपचित्रौ चित्राक्षश्चारुचित्रः शरासनः ॥ १-१३१-४ (५७९२)
दुर्मदो दुर्विगाहश्च विवित्सुर्विकटाननः ।
ऊर्णनाभः सुनाभश्च तथा नन्दोपनन्दकौ ॥ १-१३१-५ (५७९३)
चित्रबाणश्चित्रवर्मा सुवर्मा दुर्विमोचनः ।
अयोबाहुर्महाबाहुश्चित्राङ्गश्चित्रकुण्डलः ॥ १-१३१-६ (५७९४)
भीमवेगो भीमबलो बलाकी बलवर्धनः ।
उग्रायुधः सुषेणश्च कुण्डधारो महोदरः ॥ १-१३१-७ (५७९५)
चित्रायुधो निषङ्गी च पाशी वृन्दारकस्तथा ।
दृढवर्मा दृढक्षत्रः सोमकीर्तिरनूदरः ॥ १-१३१-८ (५७९६)
दृढसन्धो जरासन्धः सत्यसन्धः सदः सुवाक् ।
उग्रश्रवा उग्रसेनः सेनानीर्दुष्पराजयः ॥ १-१३१-९ (५७९७)
अपराजितः कुण्डशायी विशालाक्षो दुराधरः ।
दृढहस्तः सुहस्तश्च वातवेगसुवर्चसौ ॥ १-१३१-१० (५७९८)

आदित्यकेतुर्बह्वाशी नागदत्तोऽग्रयाय्यपि ।
कवची क्रथनः कुण्डी कुण्डधारो धनुर्धरः ॥ १-१३१-११ (५७९९)
उग्रभीमरथौ वीरौ वीरबाहुरलोलुपः ।
अभयो रौद्रकर्मा च तथा दृढरथाश्रयः ॥ १-१३१-१२ (५८००)
अनाधृष्यः कुण्डभेदी विरावी चित्रकुण्डलः ।
प्रमथश्च प्रमाथी च दीर्घरोमश्च वीर्यवान् ॥ १-१३१-१३ (५८०१)
दीर्घबाहुर्महाबाहुर्व्यूढोराः कनकध्वजः ।
कुण्डाशी विराजाश्चैव दुःशला च शताधिका ॥ १-१३१-१४ (५८०२)
इति पुत्रशतं राजन्कन्या चैव शताधिका ।
नामधेयानुपूर्व्येण विद्धि जन्मक्रमं नृप ॥ १-१३१-१५ (५८०३)
सर्वे त्वतिरथाः शूराः सर्वे युद्धविशारदाः ।
सर्वे वेदविदश्चैव सर्वे सर्वास्त्रकोविदाः ॥ १-१३१-१६ (५८०४)
सर्वेषामनुरूपाश्च कृता दारा महीपते ।
धृतराष्ट्रेण समये परीक्ष्य विविवन्नृप ॥ १-१३१-१७ (५८०५)
दुःशलां चापि समये धृतराष्ट्रो नराधिपः ।
जयद्रथाय प्रददौ विधिना भरतर्षभ ॥ १-१३१-१८ (५८०६)
ग्इति पुत्रशतं राजन्युयुत्सुश्च शताधिकः ।
कन्यका दुःशला चैव यथावत्कीर्तितं मया'॥ ॥ १-१३१-१९ (५८०७)

इति श्रीमन्महाभारते आदिपर्वणि संभवपर्वणि
एकत्रिंशदधिकशततमोऽध्यायः ॥ १३१ ॥

---

अध्यय१३२
॥ श्रीः ॥
१.१३२. अध्यायः १३२

Mahabharata - Adi Parva - Chapter Topics
कुन्त्यां इन्द्रादर्जुनोत्पत्तिः ॥ १ ॥
तद्वेलायां आकाशवाण्यादि ॥ २ ॥

Mahabharata - Adi Parva - Chapter Text

१-१३२-० (५८०८)
वैशंपायन उवाच। १-१३२-०क्ष् (७८०)
जाते बलवतां श्रेष्ठे पाण्डुश्चिन्तापरोऽभवत् ।
कथमन्यो मम सुतो लोके श्रेष्ठो भवेदिति ॥ १-१३२-१ (५८०९)
दैवे पुरुषकारे च लोकोऽयं संप्रतिष्ठितः ।

तत्र दैवं तु विधिना कालयुक्तेन लभ्यते ॥ १-१३२-२ (५८१०)
इन्द्रो हि राजा देवानां प्रधान इति नः श्रुतम् ।
अप्रमेयबलोत्साहो वीर्यवानमितद्युतिः ॥ १-१३२-३ (५८११)
तं तोषयित्वा तपसा पुत्रं लप्स्ये महाबलम् ।
यं दास्यति स मे पुत्रं स वीरयान्भविष्यति ॥ १-१३२-४ (५८१२)
अमानुषान्मानुषांश्च संग्रामे स हनिष्यति ।
कर्मणा मनसा वाचा तस्मात्तप्स्ये महत्तपः ॥ १-१३२-५ (५८१३)
ततः पाण्डुर्महाराजो मन्त्रयित्वा महर्षिभिः ।
दिदेश कुन्त्याः कौरव्यो व्रतं सांवत्सरं शुभम् ॥ १-१३२-६ (५८१४)
आत्मना च महाबाहुरेकपादस्थितोऽभवत् ।
उग्रं स तप आस्थाय परमेण समाधिना ॥ १-१३२-७ (५८१५)
आरिराधयिषुर्देवं त्रिदशानां तमीश्वरम् ।
सूर्येण सह धर्मात्मा पर्यतप्यत भारत ॥ १-१३२-८ (५८१६)
तं तु कालेन महता वासवः प्रत्यपद्यत। १-१३२-९ (५८१७)
शक्र उवाच ।
पुत्रं तव प्रदास्यामि त्रिषु लोकेषु विश्रुतम् ॥ १-१३२-९क्ष् (७८१)
ब्राह्मणानां गवां चैव सुहृदां चार्थसाधकम् ।
दुर्हृदां शोकजननं सर्वबान्धवनन्दनम् ॥ १-१३२-१० (५८१८)
सुतं तेऽग्र्यं प्रदास्यामि सर्वामित्रविनाशनम् ।
इत्युक्तः कारैवो राजा वासवेन महात्मना ॥ १-१३२-११ (५८१९)
उवाच कुन्तीं धर्मात्मा देवराजवचः स्मरन् ।
उदर्कस्तव कल्याणि तुष्टो देवगणेश्वरः ॥ १-१३२-१२ (५८२०)
दातुमिच्छति ते पुत्रं यथा संकल्पितं त्वया ।
अतिमानुषकर्माणं यशस्विनमरिन्दमम् ॥ १-१३२-१३ (५८२१)
नीतिमन्तं महात्मानमादित्यसमतेजसम् ।
दुराधर्षं क्रियावन्तमतीवाद्भुतदर्शनम् ॥ १-१३२-१४ (५८२२)
पुत्रं जनय सुश्रोणि धाम क्षत्रियतेजसाम् ।
लब्धः प्रसादो देवेन्द्रात्तमाह्वय शुचिस्मिते ॥ १-१३२-१५ (५८२३)
वैशंपायन उवाच। १-१३२-१६क्ष् (७८२)
एवमुक्ता ततः शक्रमाजुहाव यशस्विनी ।
अथाजगाम देवेन्द्रो जनयामास चार्जुनम् ॥ १-१३२-१६ (५८२४)
ग्उत्तराभ्यां तु पूर्वाभ्यां फल्गुनीभ्यां ततो दिवा ।
जातस्तु फाल्गुने मासि तेनासौ फल्गुनःस्मृतः' ॥ १-१३२-१७ (५८२५)
जातमात्रे कुमारे तु ग्सर्वभूतप्रहर्षिणी ।
सूतके वर्तमानां तां' वागुवाचाशरीरिणी ।
महागम्भीरनिर्घोषा नभो नादयती तदा ॥ १-१३२-१८ (५८२६)

शृण्वतां सर्वभूतानां तेषां चाश्रमवासिनाम् ।
कुन्तीमाभाष्य विस्पष्टमुवाचेदं शुचिस्मिताम् ॥ १-१३२-१९ (५८२७)
कार्तवीर्यसमः कुन्ति शिवतुल्यपराक्रमः ।
एष शक्र इवाजय्यो यशस्ते प्रथयिष्यति ॥ १-१३२-२० (५८२८)
अदित्या विष्णुना प्रीतिर्यथाऽभूदभिवर्धिता ।
तथा विष्णुसमः प्रीतिं वर्धयिष्यति तेऽर्जुनः ॥ १-१३२-२१ (५८२९)
एष मद्रान्वशे कृत्वा कुरूंश्च सह सोमकैः ।
चेदिकाशिकरूषांश्च कुरुलक्ष्मीं वहिष्यति ॥ १-१३२-२२ (५८३०)
एतस्य भुजवीर्येण खाण्डवे हव्यवाहनः ।
मेदसा सर्वभूतानां तृप्तिं यास्यति वै पराम् ॥ १-१३२-२३ (५८३१)
ग्रामणीश्च महीपालानेष जित्वा महाबलः ।
भ्रातृभिः सहितो वीरस्त्रीन्मेधानाहरिष्यति ॥ १-१३२-२४ (५८३२)
जामदग्न्यसमः कुन्ति विष्णुतुल्यपराक्रमः ।
एष वीर्यवतां श्रेष्ठो भविष्यति महायशाः ॥ १-१३२-२५ (५८३३)
एष युद्धे महादेवं तोषयिष्यति शङ्करम् ।
अस्त्रं पाशुपतं नाम तस्मात्तुष्टादवाप्स्यति ॥ १-१३२-२६ (५८३४)
निवातकवचा नाम दैत्या विबुधविद्विषः ।
शक्राज्ञया महाबाहुस्तान्वधिष्यति ते सुतः ॥ १-१३२-२७ (५८३५)
तथा दिव्यानि चास्त्राणि निखिलेनाहरिष्यति ।
विप्रनष्टां श्रियं चायमाहर्ता पुरुषर्षभः ॥ १-१३२-२८ (५८३६)
एतामत्यद्भुतां वाचं कुन्ती शुश्राव सूतके ।
वाचमुच्चरितामुच्चैस्तां निशम्य तपस्विनाम् ॥ १-१३२-२९ (५८३७)
बभूव पमो हर्षः शतशृङ्गनिवासिनाम् ।
तथा देवमहर्षीणां सेन्द्राणां च दिवौकसाम् ॥ १-१३२-३० (५८३८)
आकाशे दुन्दुभीनां च बभूव तुमुलः स्वनः ।
उदतिष्ठन्महाघोरः पुष्पवृष्टिभिरावृतः ॥ १-१३२-३१ (५८३९)
समवेत्य च देवानां गणाः पार्थमपूजयन् ।
काद्रवेया वैनतेया गन्धर्वाप्सरसस्तथा ।
प्रजानां पतयः सर्वे सप्त चैव महर्षयः ॥ १-१३२-३२ (५८४०)
भरद्वाजः खस्यपो गौतमश्च
विश्वामित्रो जमदग्निर्वसिष्ठः ।
यश्चोदितो भास्करेऽभूत्प्रनष्टे
सोऽप्यत्रात्रिर्भगवानाजगाम ॥ १-१३२-३३ (५८४१)
मरीचिरङ्गिराश्चैव पुलस्त्यः पुलहः क्रतुः ।
दक्षः प्रजापतिश्चैव गन्धर्वाप्सरसस्तथा ॥ १-१३२-३४ (५८४२)
दिव्यमाल्याम्बरधराः सर्वालङ्कारभूषिताः ।

उपगायन्ति बीभत्सुं नृत्यन्तेऽप्सरसां गणाः ॥ १-१३२-३५ (५८४३)
तथा महर्षयश्चापि जेपुस्तत्र समन्ततः ।
गन्धर्वैः सहितः श्रीमान्प्रागायत च तुम्बुरुः ॥ १-१३२-३६ (५८४४)
भीमसेनोग्रसेनौ च ऊर्णायुरनघस्तथा ।
गोपतिर्धृतराष्ट्रश्च सूर्यवर्चास्तथाष्टमः ॥ १-१३२-३७ (५८४५)
युगपस्तृणपः कार्ष्णिर्नन्दिश्चित्ररथस्तथा ।
त्रयोदशः शालिशिराः पर्जन्यश्च चतुर्दशः ॥ १-१३२-३८ (५८४६)
कलिः पञ्चदशश्चैव नारदश्चात्र षोडशः ।
ऋत्वा बृहत्त्वा बृहकः करालश्च महामनाः ॥ १-१३२-३९ (५८४७)
ब्रह्मचारी बहुगुणः सुवर्णश्चेति विश्रुतः ।
विश्वावसुर्भुमन्युश्च सुचन्द्रश्च शरुस्तथा ॥ १-१३२-४० (५८४८)
गीतमाधुर्यसंपन्नौ विख्यातौ च हहाहुहू ।
इत्येते देवगन्धर्वा जग्मुस्तत्र नराधिप ॥ १-१३२-४१ (५८४९)
तथैवाप्सरसो हृष्टाः सर्वालङ्कारभूषिताः ।
ननृतुर्वै महाभागा जगुश्चायतलोचनाः ॥ १-१३२-४२ (५८५०)
अनूचानाऽनवद्या च गुणमुख्या गुणावरा ।
अद्रिका च तथा सोमा मिश्रकेशी त्वलम्बुषा ॥ १-१३२-४३ (५८५१)
मरीचिः शुचिका चैव विद्युत्पर्णा तिलोत्तमा ।
अम्बिका लक्षणा क्षेमा देवी रम्भा मनोरमा ॥ १-१३२-४४ (५८५२)
असिता च सुबाहुश्च सुप्रिया च वपुस्तथा ।
पुण्डरीका सुगन्धा च सुरसा च प्रमाथिनी ॥ १-१३२-४५ (५८५३)
काम्या शारद्वती चैव ननृतुस्तत्र संघशः ।
मेनका सहजन्या च कर्णिका पुञ्जिकस्थला ॥ १-१३२-४६ (५८५४)
ऋतुस्थला घृताची च विश्वाची पूर्वचित्त्यपि ।
उम्लोचेति च विख्याता प्रम्लोचेति च ता दश ॥ १-१३२-४७ (५८५५)
उर्वश्येकादशी तासां जगुश्चायतलोचनाः ।
धाताऽर्यमा च मित्रश्च वरुणोंऽशो भगस्तथा ॥ १-१३२-४८ (५८५६)
इन्द्रो विवस्वान्पूषा च पर्जन्यो दशमः स्मृतः ।
ततस्त्वष्टा ततो विष्णुरजघन्यो जघन्यजः ॥ १-१३२-४९ (५८५७)
इत्येते द्वादशादित्या ज्वलन्तः सूर्यवर्चसः ॥ १-१३२-५० (५८५८)
मृगव्याधश्च सर्पश्च निर्ऋतिश्च महायशाः ।
अजैकपादहिर्बुध्न्यः पिनाकी च परंतप ॥ १-१३२-५१ (५८५९)
दहनोऽथेश्वरश्चैव कपाली च विशांपते ।
स्थाणुर्भगश्च भगवान्रुद्रास्तत्रावतस्थिरे ॥ १-१३२-५२ (५८६०)
अश्विनौ वसवश्चाष्टौ मरुतश्च महाबलाः ।
विश्वेदेवास्तथा साध्यास्तत्रासन्परितः स्थिताः ॥ १-१३२-५३ (५८६१)

कर्कोटकोऽथ सर्पश्च वासुकिश्च भुजङ्गमः ।
कच्छपश्चाथ कुण्डश्च तक्षकश्च महोरगः ॥ १-१३२-५४ (५८६२)
आययुस्तपसा युक्ता महाक्रोधा महाबलाः ।
एते चान्ये च बहवस्तत्र नागा व्यवस्थिताः ॥ १-१३२-५५ (५८६३)
तार्क्ष्यश्चारिष्टनेमिश्च गरुडश्चासितध्वजः ।
अरुणश्चारुणिश्चैव वैनतेया व्यवस्थिताः ॥ १-१३२-५६ (५८६४)
तांश्च देवगणान्सर्वांस्तपःसिद्धा महर्षयः ।
विमानगिर्यग्रगतान्ददृशुर्नेतरे जनाः ॥ १-१३२-५७ (५८६५)
तद्दृष्ट्वा महदाश्चर्यं विस्मिता मुनिसत्तमाः ।
अधिकां स्म ततो वृत्तिमवर्तन्पाण्डवं प्रति ॥ १-१३२-५८ (५८६६)
पाण्डुः प्रीतेन मनसा देवतादीनपूजयत् ।
पाण्डुना पूजिता देवाः प्रत्यूचुर्नरसत्तमम् ॥ १-१३२-५९ (५८६७)
प्रादुर्बूतो ह्ययं धर्मो देवतानां प्रसादतः ।
मातरिश्वा ह्ययं भीमो बलवानरिमर्दनः ॥ १-१३२-६० (५८६८)
साक्षादिन्द्रः स्वयं जातः प्रसादाच्च शतक्रतोः ।
पितृत्वाद्देवतानां हि नास्ति पुण्यतरस्त्वया ॥ १-१३२-६१ (५८६९)
पितॄणामृणनिर्मुक्तः स्वर्गं प्राप्स्यसि पुण्यभाक् ।
इत्युक्त्वा देवताः सर्वा विप्रजग्मुर्यथागतम् ॥ १-१३२-६२ (५८७०)
पाण्डुस्तु पुनरेवैनां पुत्रलोभान्महायशाः ।
प्रादिशद्दर्शनीयार्थी कुन्ती त्वेनमथाब्रवीत् ॥ १-१३२-६३ (५८७१)
नातश्चतुर्थं प्रसवमापस्त्वपि वदन्त्युत ।
अतःपरं स्वैरिणी स्याद्बन्धकी पञ्चमे भवेत् ॥ १-१३२-६४ (५८७२)
स त्वं विद्वन्धर्ममिममधिगम्य कथं नु माम् ।
अपत्यार्थं समुत्क्रम्य प्रमादादिव भाषसे ॥ ॥ १-१३२-६५ (५८७३)

इति श्रीमन्महाभारते आदिपर्वणि संभवपर्वणि
द्वात्रिंशदधिकशततमोऽध्यायः ॥ १३२ ॥
Mahabharata - Adi Parva - Chapter Footnotes

१-१३२-८ सूर्येण सह उदयादस्तमयावधि ॥
द्वात्रिंशदधिकशततमोऽध्यायः ॥
१३२ ॥

---

अध्यय१३३
॥ श्रीः ॥
१.१३३. अध्यायः १३३

Mahabharata - Adi Parva - Chapter Topics
अश्विभ्यां माद्र्यां नकुलसहदेवयोरुत्पत्तिः ॥ १ ॥
युधिष्ठिरादीनां नामकरणम् ॥ २ ॥
वसुदेवप्रेषितेन पुरोहितेन पाण्डवानामुपनयनादिसंस्कारकरणम् ॥ ३ ॥
पाण्डवानां शुक्राद्धनुर्वेदशिक्षणम् ॥ ४ ॥

Mahabharata - Adi Parva - Chapter Text

१-१३३-० (५८७४)
वैशंपायन उवाच। १-१३३-०क्ष् (७८३)
कुन्तीपुत्रेषु जातेषु धृतराष्ट्रात्मजेषु च ।
मद्रराजसुता पाण्डुं रहो वचनमब्रवीत् ॥ १-१३३-१ (५८७५)
न मेऽस्ति त्वयि सन्तापो विगुणेऽपि परन्तप ।
नावरत्वे वरार्हायाः स्थित्वा चानघ नित्यदा ॥ १-१३३-२ (५८७६)
गान्धार्याश्चैव नृपते जातं पुत्रशतं तथा ।
श्रुत्वा न मे तथा दुःखमभवत्कुरुनन्दन ॥ १-१३३-३ (५८७७)
इदं तु मे महद्दुःखं तुल्यतायामपुत्रता ।
दिष्ट्या त्विदानीं भर्तुर्मे कुन्त्यामप्यस्ति सन्ततिः ॥ १-१३३-४ (५८७८)
यदि त्वपत्यसन्तानं कुन्तिराजसुता मयि ।
कुर्यादनुग्रहो मे स्यात्तव चापि हितं भवेत् ॥ १-१३३-५ (५८७९)
संरम्भो हि सपत्नीत्वाद्वक्तुं कुन्तिसुतां प्रति ।
यदि तु त्वं प्रसन्नो मे स्वयमेनां प्रचोदय ॥ १-१३३-६ (५८८०)
पाण्डुरुवाच। १-१३३-७क्ष् (७८४)
ममाप्येष सदा माद्रि हृद्यर्थः परिवर्तते ।
न तु त्वां प्रसहे वक्तुमिष्टानिष्टविवक्षया ॥ १-१३३-७ (५८८१)
तव त्विदं मतं मत्वा प्रयतिष्याम्यतः परम् ।
मन्ये ध्रुवं मयोक्ता सा वचनं प्रतिपत्स्यते ॥ १-१३३-८ (५८८२)
वैशंपायन उवाच। १-१३३-९क्ष् (७८५)
ततः कुन्तीं पुनः पाण्डुर्विविक्त इदमब्रवीत् ।
‘अनुगृह्णीष्व कल्याणि मद्रराजसुतामपि।’
कुलस्य मम सन्तानं लोकस्य च कुरु प्रियम् ॥ १-१३३-९ (५८८३)
मम चापिण्डनाशाय पूर्वेषां च महात्मनाम् ।
मत्प्रियार्थं च कल्याणि कुरु कल्याणमुत्तमम् ॥ १-१३३-१० (५८८४)
यशसोऽर्थाय चैव त्वं कुरु कर्म सुदुष्करम् ।
प्राप्याधिपत्यमिन्द्रेण यज्ञैरिष्टं यशोऽर्थिना ॥ १-१३३-११ (५८८५)
तथा मन्त्रविदो विप्रास्तपस्तप्त्वा सुदुष्करम् ।

गुरूनभ्युपगच्छन्ति यशसोऽर्थाय भामिनि ॥ १-१३३-१२ (५८८६)
तथा राजर्षयः सर्वे ब्राह्मणाश्च तपोधनाः ।
चक्रुरुच्चावचं कर्म यशसोऽर्थाय दुष्करम् ॥ १-१३३-१३ (५८८७)
सा त्वं माद्रीं प्लवेनैव तारयैनामनिन्दिते ।
अपत्यसंविधानेन परां कीर्तिमवाप्नुहि ॥ १-१३३-१४ (५८८८)
'कुन्त्युवाच। १-१३३-१५क्ष् (७८६)
धर्मं वै धर्मशास्त्रोक्तं यथा वदसि तत्तथा ।
तस्मादनुग्रहं तस्याः करोमि कुरुनन्दन ॥' १-१३३-१५ (५८८९)
वैशंपायन उवाच। १-१३३-१६क्ष् (७८७)
एवमुक्ताऽब्रवीन्माद्रीं सकृच्चिन्तय दैवतम् ।
तस्मात्ते भविताऽपत्यमनुरूपमसंशयम् ॥ १-१३३-१६ (५८९०)
'ततो मन्त्रे कृते तस्मिन्विधिदृष्टेन कर्मणा ।
ततो राजसुता स्नाता शयने संविवेश ह ॥' १-१३३-१७ (५८९१)
ततो माद्री विचार्यैका जगाम मनसाऽश्विनौ ।
तावागम्य सुतौ तस्यां जनयामासतुर्यमौ ।
नकुलं सहदेवं च रूपेणाप्रतिमौ भुवि ॥ १-१३३-१८ (५८९२)
तथैव तावपि यमौ वागुवाचाशरीरिणी ।
'धर्मतो भक्तितश्चैव शीलतो विनयैस्तथा ॥ १-१३३-१९ (५८९३)
सत्वरूपगुणोपेतौ भवतोऽत्यश्विनाविति ।
मासते तेजसाऽत्यर्थं रूपद्रविणसंपदा ॥ १-१३३-२० (५८९४)
नामानि चक्रिरे तेषां शतशृङ्गनिवासिनः ।
भक्त्या च कर्मणा चैव तथाऽऽशीर्भिर्विशांपते ॥ १-१३३-२१ (५८९५)
ज्येष्ठं युधिष्ठिरेत्येवं भीमसेनेति मध्यमम् ।
अर्जुनेति तृतीयं च कुन्तीपुत्रानकल्पयन् ॥ १-१३३-२२ (५८९६)
पूर्वजं नकुलेत्येवं सहदेवेति चापरम् ।
माद्रीपुत्रावकथयंस्ते विप्राः प्रीतमानसाः ॥ १-१३३-२३ (५८९७)
अनुसंवत्सरं जाता अपि ते कुरुसत्तमाः ।
पाण्डुपुत्रा व्यराजन्त पञ्चसंवत्सरा इव ॥ १-१३३-२४ (५८९८)
महासत्त्वा महावीर्या महाबलपराक्रमाः ।
पाण्डुर्दृष्ट्वा सुतांस्तांस्तु देवरूपान्महौजसः ॥ १-१३३-२५ (५८९९)
मुदं परमिकां लेभे ननन्द च नराधिपः ।
ऋषीणामपि सर्वेषां शतशृङ्गनिवासिनाम् ॥ १-१३३-२६ (५९००)
प्रिया बभूवुस्तासां च तथैव मुनियोषिताम् ।
कुन्तीमथ पुनः पाण्डुर्माद्र्यर्थे समचोदयत् ॥ १-१३३-२७ (५९०१)
तमुवाच पृथा राजन् रहस्युक्ता तदा सती ।
उक्ता सक्वदद्वन्द्वमेषा लेभे तेनास्मि वञ्चिता ॥ १-१३३-२८ (५९०२)

बिभेम्यस्याः परिभवात्कुस्त्रीणां गतिरिदृशी ।
नाज्ञासिषमहं मूढा द्वन्द्वाह्वाने फलद्वयम् ॥ १-१३३-२९ (५९०३)
तस्मान्नाहं नियोक्तव्या त्वयैषोऽस्तु वरो मम ।
एवं पाण्डोः सुताः पञ्च देवदत्ता महाबलाः ॥ १-१३३-३० (५९०४)
संभूताः कीर्तिमन्तश्च कुरुवंशविवर्धनाः ।
शुभलक्षणसंपन्नाः सोमवत्प्रियदर्शनाः ॥ १-१३३-३१ (५९०५)
सिंहदर्पा महेष्वासाः सिंहविक्रान्तगामिनः ।
सिंहग्रीवा मनुष्येन्द्रा ववृधुर्देवविक्रमाः ॥ १-१३३-३२ (५९०६)
विवर्धमानास्ते तत्र पुण्ये हैमवते गिरौ ।
विस्मयं जनयामासुर्महर्षीणां समेयुषाम् ॥ १-१३३-३३ (५९०७)
ग्जातमात्रानुपादाय शतशृङ्गनिवासिनः ।
पाण्डोः पुत्रानमन्यन्त तापसाः स्वानिवात्मजान् ॥ १-१३३-३४ (५९०८)
वैशंपायन उवाच। १-१३३-३५क्ष् (७८८)
ततस्तु वृष्णयः सर्वे वसुदेवपुरोगमाः ॥ १-१३३-३५ (५९०९)
पाण्डुः शापभयाद्भीतः शतशृङ्गमुपेयिवान् ।
तत्रैव मुनिभिः सार्धं तापसोऽभूत्तपस्विभिः ॥ १-१३३-३६ (५९१०)
शाकमूलफलाहारस्तपस्वी नियतेन्द्रियः ।
योगध्यानपरो राजा बभूवेति च वादकाः ॥ १-१३३-३७ (५९११)
प्रबुवन्ति स्म बहवस्तच्छ्रुत्वा शोककर्शिताः ।
पाण्डोः प्रीतिसमायुक्ताः कदा श्रोष्याम संकथाः ॥ १-१३३-३८ (५९१२)
इत्येवं कथयन्तस्ते वृष्णयः सह बान्धवैः ।
पाण्डोः पुत्रागमं श्रुत्वा सर्वे हर्षसमन्विताः ॥ १-१३३-३९ (५९१३)
सभाजयन्तस्तेऽन्योन्यं वसुदेवं वचोऽब्रुवन् ।
न भवेरन्क्रियाहीनाः पाण्डुपुत्रा महाबलाः ॥ १-१३३-४० (५९१४)
पाण्डोः प्रियहितान्वेषी प्रेषय त्वं पुरोहितम् ।
वसुदेवस्तथेत्युक्त्वा विससर्ज पुरोहितम् ॥ १-१३३-४१ (५९१५)
युक्तानि च कुमाराणां पारबर्हाण्यनेकशः ।
कुन्तीं माद्रीं च संदिश्य दासीदासपरिच्छदम् ॥ १-१३३-४२ (५९१६)
गावो हिरण्यं रौप्यं च प्रेषयामास भारत ।
तानि सर्वाणि संगृह्य प्रययौ स पुरोहितः ॥ १-१३३-४३ (५९१७)
तमागतं द्विजश्रेष्टं काश्यपं वै पुरोहितम् ।
पूजयामास विधिवत्पाण्डुः परपुरञ्जयः ॥ १-१३३-४४ (५९१८)
पृथा माद्री च संहृष्टे वसुदेवं प्रशंसताम् ।
ततः पाण्डुः क्रियाः सर्वाः पाण्डवानामकारयत् ॥ १-१३३-४५ (५९१९)
गर्भाधानादिकृत्यानि चौलोपनयनानि च ।
काश्यपः कृतवान्सर्वमुपाकर्म च भारत ॥ १-१३३-४६ (५९२०)

चौलोपनयनादूर्ध्वमृषभाक्षा यशस्विनः ।
वैदिकाध्ययने सर्वे समपद्यन्त पारगाः ॥१-१३३-४७ (५९२१)
शर्यातेः प्रथमः पुत्रः शुक्रो नाम परन्तपः ।
येन सागरपर्यन्ता धुषा निर्जिता मही ॥१-१३३-४८ (५९२२)
अश्वमेधशतैरिष्ट्वा स महात्मा महामखैः ।
आराध्य देवताः सर्वाः पितॄनपि महामतिः ॥१-१३३-४९ (५९२३)
शतशृह्गे तपस्तेपे शाकमूलफलाशनः ।
तेनोपकरणश्रेष्ठैः शिक्षया चोपबृंहिताः ॥१-१३३-५० (५९२४)
तत्प्रसादाद्धनुर्वेदे समपद्यन्त पारगाः ।
गदायां पारगो भीमस्तोमरेषु युधिष्ठिरः ॥१-१३३-५१ (५९२५)
असिचर्मणि निष्णातौ यमौ सत्त्ववतां वरौ ।
धनुर्वेदे गतः पारं सव्यसाची परन्तपः ॥१-१३३-५२ (५९२६)
शुक्रेण समनुज्ञातो मत्समोऽयमिति प्रभो ।
अनुज्ञाय ततो राजा शक्तिं खङ्गं ततः शरान् ॥१-१३३-५३ (५९२७)
धनुश्च दमतां श्रेष्ठस्तालमात्रं महाप्रभम् ।
विपाठक्षुरनाराचान्गृध्रपक्षैरलङ्कृतान् ॥१-१३३-५४ (५९२८)
ददौ पार्थाय संहृष्टो महोरगसमप्रभान् ।
अवाप्य सर्वशस्त्राणि मुदितो वासवात्मजः ॥१-१३३-५५ (५९२९)
मेने सर्वान्महीपालानपर्याप्तान्स्वतेजसः ॥ १-१३३-५६ (५९३०)
एकवर्षान्तरास्त्वेवं परस्परमरिन्दमाः ।
अन्ववर्तन्त पार्थाश्च माद्रीपुत्रौ तथैव च ॥' १-१३३-५७ (५९३१)
ते च पञ्च शतं चैव कुरुवंशविवर्धनाः ।
सर्वे ववृधिरेऽल्पेन कालेनाप्स्विव पङ्कजाः ॥ ॥१-१३३-५८ (५९३२)

इति श्रीमन्महाभारते आदिपर्वणि संभवपर्वणि
त्रयस्त्रिंशदधिकशततमोऽध्यायः ॥१३३ ॥
Mahabharata - Adi Parva - Chapter Footnotes

१-१३३-२ विगुणे प्रजोत्पादनानधिकृते ।अवरत्वे
कनिष्ठात्वे।वरार्हायाः कृन्त्या अपेक्षया ॥
१-१३३-६ संरम्भोऽभिमानः ॥
१-१३३-७ इष्टमनिष्टं वा वक्ष्यसीति संदेहेन ॥
१-१३३-८ प्रतिपत्स्यते अङ्गीकरिष्यति ॥
१-१३३-९ सतानमविच्छेदम् ॥
१-१३३-१० मम पूर्वेषां चापिण्डनाशाय पिण्डविनाशाभावाय ।बहुषु
पुत्रेषु कस्यचिदपि पुत्रस्य संततेरविच्छेदसंभवादित्यर्थः ॥

१-१३३-११ यशस इति कृतकृत्या अपि यशोर्थं देवगुर्वाद्याराधनं कुर्वन्तीत्यर्थः ॥
१-१३३-२० अत्यश्विनौ अश्विभ्यामधिकौ ॥
१-१३३-२४ अनुसंवत्सरं संवत्सरमनु पश्चाज्जाता अपि देवताभावात्सर्वे पञ्चसंवत्सरा इवादृश्यन्तेत्यर्थः ॥
त्रयस्त्रिंशदधिकशततमोऽध्यायः ॥
१३३ ॥

---

अध्यय१३४
॥ श्रीः ॥
१.१३४. अध्यायः १३४

Mahabharata - Adi Parva - Chapter Topics
पाण्डवानामायुष्यकथनम् ॥ १ ॥
माद्र्या मैथुनप्रवृत्तस्य पाण्डोर्मरणम् ॥ २ ॥
पाण्डवप्रलापः ॥ ३ ॥
माद्र्याः सहगमनम् ॥ ४ ॥
मृतस्य पाण्डोर्दहनादिसंस्कारः ॥ ५ ॥

Mahabharata - Adi Parva - Chapter Text

१-१३४-० (५९३३)
ग्जनमेजय उवाच। १-१३४-०क्ष् (७८९)
कस्मिन्वयसि संप्राप्ताः पाण्डवा गजसाह्वयम् ।
समपद्यन्त देवेभ्यस्तेषामायुश्च किं परम् ॥ १-१३४-१ (५९३४)
वैशंपायन उवाच। १-१३४-२क्ष् (७९०)
पाण्डवानामिहायुष्यं शृणु कौरवनन्दन ।
जगाम हास्तिनपुरं षोडशाब्दो युधिष्ठिरः ॥ १-१३४-२ (५९३५)
भीमसेनः पञ्चदशो बीभत्सुर्वै चतुर्दशः ।
त्रयोदशाब्दौ च यमौ जग्मतुर्नागसाह्वयम् ॥ १-१३४-३ (५९३६)
तत्र त्रयोदशाब्दानि धार्तराष्ट्रैः सहोषिताः ।
षण्मासाञ्जातुषगृहान्मुक्ता जातो घटोत्कचः ॥ १-१३४-४ (५९३७)
षण्मासानेकचक्रायां वर्षं पाञ्चालके गृहे ।
धार्तराष्ट्रैः सहोषित्वा पञ्च वर्षाणि भारत ॥ १-१३४-५ (५९३८)
इन्द्रप्रस्थे वसन्तस्ते त्रीणि वर्षाणि विंशतिम् ।
द्वादशाब्दानथैकं च बभूवुर्द्यूतनिर्जिताः ॥ १-१३४-६ (५९३९)
भुक्त्वा षट्त्रिंशतं राजन्सागरान्तां वसुन्धराम् ।

मासैः षड्भिर्महात्मानः सर्वे कृष्णपरायणाः ॥ १-१३४-७ (५९४०)
राज्ये परीक्षितं स्थाप्य दिष्टां गतिमवाप्नुवन् ।
एवं युधिष्ठिरस्यासीदायुरष्टोत्तरं शतम् ॥ १-१३४-८ (५९४१)
अर्जुनात्केशवो ज्येष्ठस्त्रिभिर्मासैर्महाद्युतिः ।
कृष्णात्संकर्षणो ज्येष्ठस्त्रिभिर्मासैर्महाबलः ॥ १-१३४-९ (५९४२)
पाण्डुः पञ्चमहातेजास्तान्पश्यन्पर्वते सुतान् ।
रेमे स काश्यपयुतः पत्नीभ्यां सुभृशं तदा ॥ १-१३४-१० (५९४३)
सुपुष्पितवने काले प्रवृत्ते मधुमाधवे ।
पूर्णे चतुर्दशे वर्षे फल्गुनस्य च धीमतः ॥ १-१३४-११ (५९४४)
यस्मिन्नृक्षे समुत्पन्नः पार्थस्तस्य च धीमतः ।
तस्मिन्नुत्तरफल्गुन्यां प्रवृत्ते स्वस्तिवाचने ॥ १-१३४-१२ (५९४५)
रक्षणे विस्मृता कुन्ती व्यग्रा ब्राह्मणभोजने ।
पुरोहितेन सहितान्ब्राह्मणान्पर्यवेषयत् ॥' १-१३४-१३ (५९४६)
वैशंपायन उवाच। १-१३४-१४क्ष् (७९१)
दर्शनीयांस्ततः पुत्रान्पाण्डुः पञ्च महावने ।
तान्पश्यन्पर्वते रम्ये स्वबाहुबलमाश्रितः ॥ १-१३४-१४ (५९४७)
सुपुष्पितवने काले कदाचिन्मधुमाधवे ।
भूतसंमोहने राजा सभार्यो व्यचरद्वनम् ॥ १-१३४-१५ (५९४८)
पलाशैस्तिलकैश्चूतैश्चम्पकैः पारिभद्रकैः ।
अन्यैश्च बहुभिर्वृक्षैः फलपुष्पसमृद्धिभिः ॥ १-१३४-१६ (५९४९)
जलस्थानैश्च विविधैः पद्मिनीभिश्च शोभितम् ।
पाण्डोर्वनं तत्संप्रेक्ष्य प्रजज्ञे हृदि मन्मथः ॥ १-१३४-१७ (५९५०)
प्रहृष्टमनसं तत्र विचरन्तं यथाऽमरम् ।
तं माद्र्यनुजगामैका वसनं बिभ्रती शुभम् ॥ १-१३४-१८ (५९५१)
समीक्षमाणः स तु तां वयःस्थां तनुवाससम् ।
तस्य कामः प्रवृते गहनेऽग्निरिवोद्गतः ॥ १-१३४-१९ (५९५२)
रहस्येकां तु तां दृष्ट्वा राजा राजीवलोचनाम् ।
न शशाक नियन्तुं तं कामं कामवशीकृतः ॥ १-१३४-२० (५९५३)
ग्अथ सोऽष्टादशे वर्षे ऋतौ माद्रमलङ्कृताम् ।
आजुहाव ततः पाण्डुः परीतात्मा यशस्विनीम् ॥' १-१३४-२१ (५९५४)
तत एनां बलाद्राजा निजग्राह रहोगताम् ।
वार्यमाणस्तया देव्या विस्फुरन्त्या यथाबलम् ॥ १-१३४-२२ (५९५५)
स तु कामपरीतात्मा तं शापं नान्वबुध्यत ।
माद्रीं मैथुनधर्मेण सोऽन्वगच्छद्बलादिव ॥ १-१३४-२३ (५९५६)
जीवितान्ताय कौरव्य मन्मथस्य वशं गतः ।
शापजं भयमुत्सृज्य विधिना संप्रचोदितः ॥ १-१३४-२४ (५९५७)

तस्य कामात्मनो बुद्धिः साक्षात्कालेन मोहिता ।
संप्रमथ्येन्द्रियग्रामं प्रनष्टा सह चेतसा ॥ १-१३४-२५ (५९५८)
स तया सह संगम्य भार्यया कुरुनन्दनः ।
पाण्डुः परमधर्मात्मा युयुजे कालधर्मणा ॥ १-१३४-२६ (५९५९)
ततो माद्री समालिङ्ग्य राजानं गतचेतसम् ।
मुमोच दुःखजं शब्दं पुनः पुनरतीव हि ॥ १-१३४-२७ (५९६०)
सह पुत्रैस्ततः कुन्ती माद्रीपुत्रौ च पाण्डवौ ।
आजग्मुः सहितास्तत्र यत्र राजा तथागतः ॥ १-१३४-२८ (५९६१)
ततो माद्र्यब्रवीद्राजन्नार्ता कुन्तीमिदं वचः ।
एकैव त्वमिहागच्छ तिष्ठन्त्वत्रैव दारकाः ॥ १-१३४-२९ (५९६२)
तच्छ्रुत्वा वचनं तस्यास्तत्रैवाधाय दरकान् ।
हताअमिति विक्रुश्य सहसैवाजगाम सा ॥ १-१३४-३० (५९६३)
दृष्ट्वा पाण्डुं च माद्रीं च शयानौ धरणीतले ।
कुन्ती शोकपरीताङ्गी विललाप सुदुःखिता ॥ १-१३४-३१ (५९६४)
रक्ष्यमाणो मया नित्यं वीरः सततमात्मवान् ।
कथं त्वामत्यतिक्रान्तः शापं जानन्वनौकसः ॥ १-१३४-३२ (५९६५)
ननु नाम त्वया माद्रि रक्षितव्यो नराधिपः ।
सा कथं लोभितवती विजने त्वं नराधिपम् ॥ १-१३४-३३ (५९६६)
कथं दीनस्य सततं त्वामासाद्य रहोगताम् ।
तं विचिन्तयतः शापं प्रहर्षः समजायत ॥ १-१३४-३४ (५९६७)
धन्या त्वमसि बाह्लीकि मत्तो भाग्यतरा तथा ।
दृष्टवत्यसि यद्वक्त्रं प्रहृष्टस्य महीपतेः ॥ १-१३४-३५ (५९६८)
माद्र्युवाच। १-१३४-३६क्ष् (७९२)
विलपन्त्या मया देवि वार्यमाणेन चासकृत् ।
आत्मा न वारितोऽनेन सत्यं दिष्टं चिकीर्षुणा ॥ १-१३४-३६ (५९६९)
ग्वैशंपायान उवाच। १-१३४-३७क्ष् (७९३)
तस्यास्तद्वचनं श्रुत्वा कुन्ती शोकाग्निदीपिता ।
पपात सहसा भूमौ छिन्नमूल इव द्रुमः ॥ १-१३४-३७ (५९७०)
निश्चेष्टा पतिता भूमौ मोहेन न चचाल सा ।
तस्मिन्क्षणे कृतस्नानमहताम्बरसंवृतम् ॥ १-१३४-३८ (५९७१)
अलङ्कारकृतं पाण्डुं शयानं शयने शुभे ।
कुन्तीमुत्थाप्य माद्री तु मोहेनाविष्टचेतनाम् ॥ १-१३४-३९ (५९७२)
आर्ये एहीति तां कुन्तीं दर्शयामास कौरव ।
पादयोः पतिता कुन्ती पुनरुत्थाय भूमिपम् ॥ १-१३४-४० (५९७३)
रक्तचन्दनदिग्धाङ्गं महारजनवाससम् ।
सस्मितेन च वक्त्रेण वदन्तमिव भारतम् ॥ १-१३४-४१ (५९७४)

परिरभ्य ततो मोहाद्विललापाकुलेन्द्रिया ।
माद्री चापि समालिङ्ग्य राजानं विललाप सा ॥ १-१३४-४२ (५९७५)
तं तथा शायिनं पुत्रा ऋषयः सह चारणैः ।
अभ्येत्य सहिताः सर्वे शोकादश्रूण्यवर्तयन् ॥ १-१३४-४३ (५९७६)
अस्तं गतमिवादित्यं संशुष्कमिव सागरम् ।
दृष्ट्वा पाण्डुं नरव्याघ्रं शोचन्ति स्म महर्षयः ॥ १-१३४-४४ (५९७७)
समानशोका ऋषयः पाण्डवाश्च बभूविरे ।
ते समाश्वासिते विप्रैर्विलेपतुरनिन्दिते ॥ १-१३४-४५ (५९७८)
कुन्त्युवाच। १-१३४-४६क्ष् (७९४)
हा राजन्कस्य नो हित्वा गच्छसि त्रिदशालयम् ।
हा राजन्मम मन्दायाः कथं माद्रीं समेत्य वै ॥ १-१३४-४६ (५९७९)
निधनं प्राप्तवान्राजन्मद्भाग्यपरिसंक्षयात् ।
युधिष्ठिरं भीमसेनमर्जुनं च यमावुभौ ॥ १-१३४-४७ (५९८०)
कस्य हित्वा प्रियान्पुत्रान्प्रयातोऽसि विशांपते ।
नूनं त्वां त्रिदशा देवाः प्रतिनन्दन्ति भारत ॥ १-१३४-४८ (५९८१)
यतो हि तप उग्रं वै चरितं ब्रह्मसंसदि ।
आवाभ्यां सहितो राजन्गमिष्यसि दिवं शुभम् ॥ १-१३४-४९ (५९८२)
आजमीढाजमीढानां कर्मणा चरतां गतिम् ।
ननु नाम सहावाभ्यां गमिष्यामीति यत्त्वया ॥ १-१३४-५० (५९८३)
प्रतिज्ञाता कुरुश्रेष्ठ यदाऽस्मि वनमागता ।
आवाभ्यां चैव सहितो गमिष्यसि विशांपते ।
मुहूर्तं क्षम्यतां राजन्द्रक्ष्येऽहं च मुखं तव ॥ १-१३४-५१ (५९८४)
वैशंपायन उवाच। १-१३४-५२क्ष् (७९५)
विलपित्वा भृशं चैव निःसंज्ञे पतिते भुवि ।
यथा हते मृगे मृग्यौ लुब्धैर्वनगते तथा ॥ १-१३४-५२ (५९८५)
युधिष्ठिरमुखाः सर्वे पाण्डवा वेदपरागाः ।
तेऽभ्यागत्य पितुर्मूले निःसंज्ञाः पतिता भुवि ॥ १-१३४-५३ (५९८६)
पाण्डोः पादौ परिष्वज्य विलपन्ति स्म पाण्डवाः ।
हा विनष्टाः स्म तातेति हा अनाथा भवामहे ॥ १-१३४-५४ (५९८७)
त्वद्विहीना महाप्राज्ञ कथं जीवाम बालकाः ।
लोकनाथस्य पुत्राः स्मो न सनाथा भवामहे ॥ १-१३४-५५ (५९८८)
क्षणेनैव महाराज अहो लोकस्य चित्रता ।
नास्मद्विधा राजपुत्रा अधन्याः सन्ति भारत ॥ १-१३४-५६ (५९८९)
त्वद्विनाशाच्च राजेन्द्र राज्यप्रस्खलनात्तदा ।
पाण्डवाश्च वयं सर्वे प्राप्ताः स्म व्यसनं महत् ॥ १-१३४-५७ (५९९०)
किं करिष्यामहे राजन्कर्तव्यं च प्रसीदताम्। १-१३४-५८ (५९९१)

भीमसेन उवाच ।
हित्वा राज्यं च भोगांश्च शतशृङ्गनिवासिना ॥ १-१३४-५८क्ष् (७९६)
त्वया लब्धाः स्म राजेन्द्र महता तपसा वयम् ।
हित्वा मानं वनं गत्वा स्वयमाहृत्य भक्षणम् ॥ १-१३४-५९ (५९९२)
शाकमूलफलैर्वन्यैर्भरणं वै त्वया कृतम् ।
पुत्रानुत्पाद्य पितरो यमिच्छित महातम्नः ॥ १-१३४-६० (५९९३)
त्रिवर्गफलमिच्छन्तस्तस्य कालोऽयमागतः ।
अभुक्त्वैव फलं राजन्गन्तुं नार्हसि भारत ॥ १-१३४-६१ (५९९४)
इत्येवमुक्त्वा पितरं भीमोऽपि विललाप ॥ १-१३४-६२ (५९९५)
अर्जुन उवाच। १-१३४-६३क्ष् (७९७)
प्रनष्टं भारतं वंशं पाण्डुना पुनरुद्धृतम् ।
तस्मिंस्तदा वनगते नष्टं राज्यमराजकम् ॥ १-१३४-६३ (५९९६)
पुनर्निःसारितं क्षत्रं पाण्डुपुत्रैश्च पञ्चभिः ।
एतच्छ्रुत्वाऽनुमोदित्वा गन्तुमर्हसि शङ्कर ॥ १-१३४-६४ (५९९७)
इत्येवमुक्त्वा पितरं विललाप धनञ्जयः। १-१३४-६५ (५९९८)
यमावूचतुः ।
दुःसहं च तपः कृत्वा लब्ध्वा नो भरतर्षभ ॥ १-१३४-६५क्ष् (७९८)
पुत्रलाभस्य महतः शुश्रूषादिफलं त्वया ।
न चावाप्तं किंचिदेव पुरा दशरथो यथा ॥ १-१३४-६६ (५९९९)
एवमुक्त्वा यमौ चापि विलेपतुरथातुरौ ॥' १-१३४-६७ (६०००)
कुन्त्युवाच। १-१३४-६८क्ष् (७९९)
अहं ज्येष्ठा धर्मपत्नी ज्येष्ठं धर्मफलं मम ।
अवश्यं भाविनो भावान्मा मां माद्रि निवर्तय ॥ १-१३४-६८ (६००१)
अन्विष्यामीह भर्तारमहं प्रेतवशं गतम् ।
उत्तिष्ठ त्वं विसृज्यैनमिमान्रक्षस्व दारकान् ॥ १-१३४-६९ (६००२)
ग्अवाप्य पुत्रांल्लब्धार्थान्वीरपत्नीत्वमर्थये। १-१३४-७० (६००३)
वैशंपायन उवाच ।
मद्रराजसुता कुन्तीमिदं वचनमब्रवीत् ॥' १-१३४-७०क्ष् (८००)
अहमेवानुयास्यामि भर्तारमपलापिनम् ।
न हि तृप्ताऽस्मि कामानां ज्येष्ठा मामनुमन्यताम् ॥ १-१३४-७१ (६००४)
मां चाभिगम्य क्षीणोऽयं कामाद्भरतसत्तमः ।
समुच्छिद्यामि तत्कामं कथं नु यमसादने ॥ १-१३४-७२ (६००५)
ग्मम हतोर्हि राजाऽयं दिवं राजर्पिसत्तमः ।
न चैव तादृशी बुद्धिर्बान्धवाश्च न तादृशाः ॥ १-१३४-७३ (६००६)
न चोत्सहे धारयितुं प्राणान्भर्त्रा विना कृता ।
तस्मात्तमनुयास्यामि यान्तं वैवस्वतक्षयम् ॥ १-१३४-७४ (६००७)

वर्तेयं न समां वृत्तिं जात्वहं न सुतेषु ते ।
तथाहि वर्तमानां मामधर्मः संस्पृशेन्महान् ॥ १-१३४-७५ (६००८)
तस्मान्मे सुतयोर्देवि वर्तितव्यं स्वपुत्रवत् ।
अन्वेष्यामि च भर्तारं व्रजन्तं यमसादनम् ॥' १-१३४-७६ (६००९)
मां हि कामयमानोऽयं राजा प्रेतवशं गतः ।
राज्ञः शरीरेण सह मामपीदं कलेवरम् ॥ १-१३४-७७ (६०१०)
दग्धव्यं सुप्रतिच्छन्नं त्वेतदार्ये प्रियं कुरु ।
दारकेष्वप्रमत्ता त्वं भवेश्चाभिहिता मया ।
अतोऽहं न प्रपश्यामि संदेष्टव्यं हितं तव ॥ १-१३४-७८ (६०११)
ग्वैशंपायन उवाच। १-१३४-७९क्ष् (८०१)
ऋषयस्तान्समाश्वास्य पाण्डवान्सत्यविक्रमान् ।
ऊचुः कुन्तीं च माद्रीं च समाश्वास्य तपस्विनः ॥ १-१३४-७९ (६०१२)
सुभगे बालपुत्रा तु न मर्तव्यं तथंचन ।
पाण्डवांश्चापि नेष्यामः कुरुराष्ट्रं परन्तपान् ॥ १-१३४-८० (६०१३)
अधर्मेष्वर्थजातेषु धृतराष्ट्रश्च लोभवान् ।
स कदाचिन्न वर्तेत पाण्डवेषु यथाविधि ॥ १-१३४-८१ (६०१४)
कुन्त्याश्च वृष्णयो नाथाः कुन्तिभोजस्तथैव च ।
माद्र्याश्च बलिनांश्रेष्ठः शल्यो भ्राता महारथः ॥ १-१३४-८२ (६०१५)
भर्त्रा तु मरणं सार्धं फलवन्नात्र संशयः ।
युवाभ्यां दुष्करं चैतद्वदन्ति द्विजपुङ्गवाः ॥ १-१३४-८३ (६०१६)
मृते भर्तरि साध्वी स्त्री ब्रह्मचर्यव्रते स्थिता ।
यमैश्च नियमैः पूता मनोवाक्कायजैः शुभा ॥ १-१३४-८४ (६०१७)
भर्तारं चिन्तयन्ती सा भर्तारं निस्तरेच्छुभा ।
तारितश्चापि भर्ता स्यादात्मा पुत्रस्तथैव च ॥ १-१३४-८५ (६०१८)
तस्माज्जीवितमेवैतद्युवयोर्विद्म शोभनम् ॥ १-१३४-८६ (६०१९)
कुन्त्युवाच। १-१३४-८७क्ष् (८०२)
यथा पाण्डोस्तु निर्देशस्तथा विप्रगणस्य च ।
आज्ञा शिरसि निक्षिप्ता करिष्यामि च तत्तथा ॥ १-१३४-८७ (६०२०)
यदाहुर्भगवन्तोऽपि तन्मन्ये शोभनं परम् ।
भर्तुश्च मम पुत्राणामात्मनश्च न संशयः ॥ १-१३४-८८ (६०२१)
माद्र्युवाच। १-१३४-८९क्ष् (८०३)
कुन्ती समर्था पुत्राणां योगक्षेमस्य धारणे ।
अस्या हि न समा बुद्ध्या यद्यपि स्यादरुन्धती ॥ १-१३४-८९ (६०२२)
कुन्त्याश्च वृष्णयो नाथाः कुन्तिभोजस्तथैव च ।
नाहं त्वमिव पुत्राणां समर्था धारणे तथा ॥ १-१३४-९० (६०२३)
साऽहं भर्तारमन्विष्ये संतृप्ता नापि भोगतः ।

भर्तृलोकस्य तु ज्येष्ठा देवी मामनुमन्यताम् ॥१-१३४-९१ (६०२४)
धर्मज्ञस्य कृतज्ञस्य सत्यसन्धस्य धीमतः ।
पादौ परिचरिष्यामि तथार्याऽद्यानुमन्यताम् ॥१-१३४-९२ (६०२५)
वैशंपायन उवाच।१-१३४-९३क्ष् (८०४)
एवमुक्त्वा तदा राजन्मद्रराजसुता शुभा ।
ददौ कुन्त्यै यमौ माद्री शिरसाऽभिप्रणम्य च ॥१-१३४-९३ (६०२६)
अभिवाद्य महर्षीन्सा परिष्वज्य च पाण्डवान् ।
मूर्ध्न्युपाघ्राय बहुशः पार्थानात्मसुतौ तदा ॥१-१३४-९४ (६०२७)
हस्ते युधिष्ठिरं गृह्य माद्री वाक्यमभाषत ।
कुन्ती माता अहं धात्री युष्माकं तु पिता मृतः ॥१-१३४-९५ (६०२८)
युधिष्ठिरः पिता ज्येष्ठश्चतुर्णां धर्मतः सदा ।
वृद्धाद्युपासनासक्ताः सत्यधर्मपरायणाः ॥१-१३४-९६ (६०२९)
तादृशा न विनश्यन्ति नैव यान्ति पराभवम् ।
तस्मात्सर्वे कुरुध्वं वै गुरुवृत्तिमतन्द्रिताः ॥१-१३४-९७ (६०३०)
वैशंपायन उवाच।१-१३४-९८क्ष् (८०५)
ऋषीणां च पृथायाश्च नमस्कृत्य पुनःपुनः ।
आयासकृपणा माद्री प्रत्युवाच पृथां तदा ॥१-१३४-९८ (६०३१)
माद्र्युवाच।१-१३४-९९क्ष् (८०६)
ऋषीणां संनिधावेषां यथा वागभ्युदीरिता ।
दिदृक्षमाणायाः स्वर्गं न ममैषा वृथा भवेत् ॥१-१३४-९९ (६०३२)
धन्या त्वमसि वार्ष्णेयि नास्ति स्त्री सदृशी त्वया ।
वीर्यं तेजश्च योगं च माहात्म्यं च यशस्विनाम् ॥१-१३४-१०० (६०३३)
कुन्ति द्रक्ष्यसि पुत्राणां पञ्चानाममितौजसाम् ।
आर्या चाप्यभिवाद्या च मम पूज्या च सर्वतः ॥१-१३४-१०१ (६०३४)
ज्येष्ठा वरिष्ठा त्वं देवि भूषिता स्वगुणैः शुभैः ।
अभ्यनुज्ञातुमिच्छामि त्वया यावनन्दिनि ॥१-१३४-१०२ (६०३५)
धर्मं स्वर्गं च कीर्तिं च त्वत्कृतेऽहमवाप्नुयाम् ।
यथा तथा विधत्स्वेह मा च कार्षीर्विचारणां ॥१-१३४-१०३ (६०३६)
वैशंपायन उवाच।१-१३४-१०४क्ष् (८०७)
बाष्पसंदिग्धया वाचा कुन्त्युवाच यशस्विनी ।
अनुज्ञाताऽसि कल्याणि त्रिदिवे सङ्गमोऽस्तु ते ॥१-१३४-१०४ (६०३७)
भर्त्रा सह विशालिक्षि क्षिप्रमद्यैव भामिनि ।
संगतास्वर्गलोके त्वं रमेथाः शाश्वतीः समाः ॥१-१३४-१०५ (६०३८)
वैशंपायन उवाच।१-१३४-१०६क्ष् (८०८)
ततः पुरोहितः स्नात्वा प्रेतकर्मणि पारगः ।
हिरण्यशकलानाज्यं तिलं दधि च तण्डुलान् ॥१-१३४-१०६ (६०३९)

उदकुम्भांश्च परशुं समानीय तपस्विभिः ।
अश्वमेधाग्निमाहृत्य यथान्यायं समन्ततः ॥ १-१३४-१०७ (६०४०)
काश्यपः कारयामास पाण्डोः प्रेतस्य तां क्रियाम् ।
पुरोहितोक्तविधिना पाण्डोः पुत्रो युधिष्ठिरः ॥ १-१३४-१०८ (६०४१)
तेनाग्निनाऽदहत्पाण्डुं कृत्वा चापि क्रियास्तदा ।
रुदञ्छोकाभिसंतप्तः पपात भुवि पाण्डवः ॥ १-१३४-१०९ (६०४२)
ऋषीन्पुत्रान्पृथां चैव विसृज्य च नृपात्मज।'
नमस्कृत्य चिताग्निस्थं धर्मपत्नी नरर्षभम् ॥ १-१३४-११० (६०४३)
मद्रराजसुता तूर्णमन्वारोहद्यशस्विनी ॥ १-१३४-१११ (६०४४)
ग्अहताम्बरसंवीतो भ्रातृभिः सहितोऽनघः ।
उदकं कृतवांस्तत्र पुरोहितमते स्थितः ॥ १-१३४-११२ (६०४५)
अर्हतस्तस्य कृत्यानि शतशृङ्गनिवासिनः ।
तापसा विधिवच्चक्रुश्चारणा ऋषिभिः सह ॥ ॥ १-१३४-११३ (६०४६)

इति श्रीमन्महाभारते आदिपर्वणि संभवपर्वणि
चतुस्त्रिंशदधिकशततमोऽध्यायः ॥ १३४ ॥
Mahabharata - Adi Parva - Chapter Footnotes

१-१३४-१५ मधुभाधवे चैत्रवैशाखयोः संधौ तदात्मके वसन्ते ॥
१-१३४-१९ वयः स्थां युवतीम् । तनुवाससं सूक्ष्मवस्त्रां
किंचिद्विवृताङ्गामित्यर्थः ॥
१-१३४-२३ कामपरीतात्मा कामेन व्याप्तचित्तः ॥
१-१३४-२५ बुद्दिर्भयनिश्चयः । चेतसा विचारेण ॥
१-१३४-२६ कालधर्मणा मृत्युना ॥
१-१३४-२८ तथागतः मृतः ॥
१-१३४-३२ त्वामत्यतिक्रान्तो बलादाक्रान्तवान्
। शोकाकुलत्वाददतिशब्दस्याभ्यासः ॥
१-१३४-३४ प्रहर्षः कामः ॥
१-१३४-३६ आत्मा चित्तम् । दिष्टं शापजं दुरदृष्टम् ॥
१-१३४-६९ प्रेतवशं प्रेतराजवशम् । अन्विष्याम्यनुगमिष्यामि ॥
चतुस्त्रिंशदधिकशततमोऽध्यायः ॥
१३४ ॥

---

अध्यय१३५
॥ श्रीः ॥
१.१३५. अध्यायः १३५

पाण्डवैः सह ऋषीणां हस्तिनापुरगमनम् ॥ १ ॥
पाण्डुवृत्तान्तकथनपूर्वकं पाण्डवान्भीष्माय समर्प्य ऋषीणां प्रतिनिवर्तनम् ॥ २ ॥

Mahabharata - Adi Parva - Chapter Text

१-१३५-० (६०४७)
वैशंपायन उवाच। १-१३५-०क्ष् (८०९)
पाण्डोरुपरमं दृष्ट्वा देवकल्पा महर्षयः ।
ततो मन्त्रविदः सर्वे मन्त्रयांचक्रिरे मिथः ॥ १-१३५-१ (६०४८)
तापसा ऊचुः। १-१३५-२क्ष् (८१०)
हित्वा राज्यं च राष्ट्रं च स महात्मा महायशाः ।
अस्मिंस्थाने तपस्तप्त्वा तापसाञ्शरणं गतः ॥ १-१३५-२ (६०४९)
स जातमात्रान्पुत्रांश्च दारांश्च भवतामिह ।
प्रादायोपनिधिं राजा पाण्डुः स्वर्गमितो गतः ॥ १-१३५-३ (६०५०)
तस्येमानात्मजान्देहं भार्यां च सुमहात्मनः ।
स्वराष्ट्रं गृह्य गच्छामो धर्म एष हि नः स्मृतः ॥ १-१३५-४ (६०५१)
वैशंपायन उवाच। १-१३५-५क्ष् (८११)
ते परस्परमामन्त्र्य देवकल्पा महर्षयः ।
पाण्डोः पुत्रान्पुरस्कृत्य नगरं नागसाह्वयम् ॥ १-१३५-५ (६०५२)
उदारमनसः सिद्धा गमने चक्रिरे मनः ।
भीष्माय पण्डवान्दातुं धृतराष्ट्राय चैव हि ॥ १-१३५-६ (६०५३)
तस्मिन्नेव क्षणे सर्वे तानादाय प्रतस्थिरे ।
पाण्डोर्दारांश्च पुत्रांश्च शरीरे ते च तापसाः ॥ १-१३५-७ (६०५४)
सुखिनी सा पुरा भूत्वा सततं पुत्रवत्सला ।
प्रपन्ना दीर्घमध्वानं संक्षिप्तं तदमन्यत ॥ १-१३५-८ (६०५५)
सा त्वदीर्घेण कालेन संप्राप्ता कुरुजाङ्गलम् ।
वर्धमानपुरद्वारमाससाद यशस्विनी ॥ १-१३५-९ (६०५६)
द्वारिणं तापसा ऊचू राजानं च प्रकाशय ।
ते तु गत्वा क्षणेनैव सभायां विनिवेदिताः ॥ १-१३५-१० (६०५७)
तं चारणसहस्राणां मुनीनामागमं तदा ।
श्रुत्वा नागपुरे नृणां विस्मयः समपद्यत ॥ १-१३५-११ (६०५८)
मुहूर्तोदित आदित्ये सर्वे बालपुरस्कृताः ।
सदारास्तापसान्द्रष्टुं निर्ययुः पुरवासिनः ॥ १-१३५-१२ (६०५९)
स्त्रीसङ्घाः क्षत्रसङ्घाश्च यानसङ्घसमास्थिताः ।

ब्राह्मणैः सह निर्जग्मुर्ब्राह्मणानां च योषितः ॥ १-१३५-१३ (६०६०)
तथा विट्शूद्रसङ्घानां महान्यतिकरोऽभवत् ।
न कश्चिदकरोदीर्ष्यामभवन्धर्मबुद्धयः ॥ १-१३५-१४ (६०६१)
तथा भीष्मः शान्तनवः सोमदत्तो ऽथ बाह्लिकः ।
प्रज्ञाचक्षुश्च राजर्षिः क्षत्ता च विदुरः स्वयम् ॥ १-१३५-१५ (६०६२)
सा च सत्यवती देवी कौसल्या च यशस्विनी ।
राजदारैः परिवृता गान्धारी चापि निर्ययौ ॥ १-१३५-१६ (६०६३)
धृतराष्ट्रस्य दायादा दुर्योधनपुरोगमाः ।
भूषिता भूषणैश्चित्रैः शतसङ्ख्या विनिर्ययुः ॥ १-१३५-१७ (६०६४)
तान्महर्षिगणान्दृष्ट्वा शिरोभिरभिवाद्य च ।
उपोपविविशुः सर्वे कौरव्याः सपुरोहिताः ॥ १-१३५-१८ (६०६५)
तथैव शिरसा भूमावभिवाद्य प्रणम्य च ।
उपोपविविशुः सर्वे पौरजानपदा अपि ॥ १-१३५-१९ (६०६६)
तमकूजमभिज्ञाय जनौघं सर्वशस्तदा ।
पूजयित्वा यथान्यायं पाद्येनार्घ्येण च प्रभो ॥ १-१३५-२० (६०६७)
भीष्मो राज्यं च राष्ट्रं च महर्षिभ्यो न्यवेदयत् ।
तेषामथो वृद्धतमः प्रत्युत्थाय जटाजिनी ।
ऋषीणां मतमाज्ञाय महर्षिरिदमब्रवीत् ॥ १-१३५-२१ (६०६८)
यः स कौरव्यदायादः पाण्डुर्नाम नराधिपः ।
कामभोगान्परित्यज्य शतशृङ्गमितो गतः ॥ १-१३५-२२ (६०६९)
ग्राजा भोगान्परित्यज्य तपस्वी संबभूव ह ।
स यथोक्तं तपस्तेपे पत्रमूलफलाशनः ॥ १-१३५-२३ (६०७०)
पत्नीभ्यां सह धर्मात्मा संचित्कालमतन्द्रितः ।
तेन वृत्तसमाचारैस्तपसा च तपस्विनः ॥ १-१३५-२४ (६०७१)
तोषितास्तापसास्तत्र शतशृङ्गनिवासिनः ।
स्वर्गलोकं गन्तुकामं तापसाः संनिवार्य तम् ॥ १-१३५-२५ (६०७२)
उद्यन्तं सह पत्नीभ्यां विप्रा वचनमब्रुवन् ।
अनपत्यस्य राजेन्द्र पुण्या लोका न सन्ति ते ॥ १-१३५-२६ (६०७३)
तस्माद्धर्मं च वायुं च महेन्द्रं च तथाऽश्विनौ ।
आराधयस्व राजेन्द्र पत्नीभ्यां सह देवताः ॥ १-१३५-२७ (६०७४)
प्रीताः पुत्रान्प्रदास्यन्ति ऋणमुक्तो भविष्यसि ।
तपसा दिव्यचक्षुष्ट्वात्पश्यामस्ते तथा सुतान् ॥ १-१३५-२८ (६०७५)
अस्माकं वचनं श्रुत्वा देवानाराधयत्तदा।'
ब्रह्मचर्यव्रतस्थस्य तस्य दिव्येन हेतुना ॥ १-१३५-२९ (६०७६)
साक्षाद्धर्मादयं पुत्रस्तत्र जातो युधिष्ठिरः ।
तथैनं बलिनां श्रेष्ठं तस्य राज्ञो महात्मनः ॥ १-१३५-३० (६०७७)

मातरिश्वा ददौ पुत्रं भीमं नाम महाबलम् ।
पुरन्दरादयं जज्ञे कुन्त्यां सत्यपराक्रमः ॥ १-१३५-३१ (६०७८)
ग्अस्मिञ्जाते महेष्वासे पृथामिन्द्रस्तदाऽब्रवीत् ।
मत्प्रसादादयं जातः कुन्ति सत्यपराक्रमः ॥ १-१३५-३२ (६०७९)
अजेयानपि जेताऽरीन्देवतादीन्न संशयः।'
यस्य कीर्तिर्महेष्वासान्सर्वानभिभविष्यति ॥ १-१३५-३३ (६०८०)
ग्युधिष्ठिरो राजसूयं भ्रातृवीर्यादवाप्स्यति ।
एष जेता मनुष्यांश्च सर्वान्गान्धर्वराक्षसान् ॥ १-१३५-३४ (६०८१)
एष दुर्योधनादीनां कौरवाणां च जेष्यति ।
वीरस्यैतस्य विक्रान्तैर्धर्मपुत्रो युधिष्ठिरः ॥ १-१३५-३५ (६०८२)
यक्ष्यते राजसूयाद्यैर्धर्म एव परः सदा।'
यौ तु माद्री महेष्वासावसूत पुरुषोत्तमौ ॥ १-१३५-३६ (६०८३)
अश्विभ्यां पुरुषव्याघ्राविमौ तावपि तिष्ठतः ।
ग्नकुलः सहदेवश्च तावप्यमिततेजसौ ॥' १-१३५-३७ (६०८४)
चरता धर्मनित्येन वनवासं यशस्विना ।
एष पैतामहो वंशः पाण्डुना पुनरुद्धृतः ॥ १-१३५-३८ (६०८५)
पुत्राणां जन्म वृद्धिं च वैदिकाध्ययनानि च ।
पश्यन्तः सततं पाण्डोः परां प्रीतिमवाप्स्यथ ॥ १-१३५-३९ (६०८६)
वर्तमानः सतां वृत्ते पुत्रलाभमवाप च ।
पितृलोकं गतः पाण्डुरितः सप्तदशेऽहनि ॥ १-१३५-४० (६०८७)
तं चितागतमाज्ञाय वैश्वानरमुखे हुतम् ।
प्रविष्टा पावकं माद्री हित्वा जीवितमात्मनः ॥ १-१३५-४१ (६०८८)
सा गता सह तेनैव पतिलोकमनुव्रता ।
तस्यास्तस्य च यत्कार्यं क्रियतां तदनन्तरम् ॥' १-१३५-४२ (६०८९)
पृथां च शरणं प्राप्तां पाण्डवांश्च यशस्विनः ।
यथावदनुमन्यन्तां धर्मो ह्येष सनातनः ॥ १-१३५-४३ (६०९०)
इमे तयोः शरीरे द्वे पुत्राश्चेमे तयोर्वराः ।
क्रियाभिरनुगृह्यन्तां सह मात्रा परंतपाः ॥ १-१३५-४४ (६०९१)
प्रेतकार्ये निवृत्ते तु पितृमेधं महायशाः ।
लभतां सर्वधर्मज्ञः पाण्डुः कुरुकुलोद्वहः ॥ १-१३५-४५ (६०९२)
वैशंपायन उवाच। १-१३५-४६क्ष् (८१२)
एवमुक्त्वा कुरून्सर्वान्कुरूणामेव पश्यताम् ।
क्षणेनान्तर्हिताः सर्वे तापसा गुह्यकैः सह ॥ १-१३५-४६ (६०९३)
गन्धर्वनगराकारं तथैवान्तर्हितं पुनः ।
ऋषिसिद्धगणं दृष्ट्वा विस्मयं ते परं ययुः ॥ ॥ १-१३५-४७ (६०९४)

इति श्रीमन्महाभारते आदिपर्वणि संभवपर्वणि
पञ्चत्रिंशदधिकशततमोऽध्यायः ॥ १३५ ॥
Mahabharata - Adi Parva - Chapter Footnotes

१-१३५-४ देहं देहयोरस्थीनि ॥
१-१३५-८ तद्गमनं संक्षिप्तममन्यत मुनीनां योगप्रभावात्
स्वदेशगमनौत्कण्ठ्याद्वा ॥
१-१३५-९ वर्धमानपुरद्वारं मुख्यद्वारम् ॥
१-१३५-११ आरण्यानां सहस्रसंख्यानां मुनीनां चेति योज्यम् ॥
१-१३५-१४ व्यतिकरः संघर्षः ॥
१-१३५-२० अकूजं निःशब्दम् ॥
१-१३५-४५ प्रेतकार्ये सपण्डीकरणान्ते । पितृमेधं
यज्ञविशेषम्। वृषोत्सर्गादिकं वा ॥
१-१३५-४७ गन्धर्वनगरं खपुरम् ॥
पञ्चत्रिंशदधिकशततमोऽध्यायः ॥
१३५ ॥

---

अध्यय१३६
॥ श्रीः ॥
१.१३६. अध्यायः १३६

Mahabharata - Adi Parva - Chapter Topics
पाण्डोरस्थिसंस्काराद्यन्त्येष्टिविधिः ॥ १ ॥

Mahabharata - Adi Parva - Chapter Text

१-१३६-० (६०९५)
धृतराष्ट्र उवाच। १-१३६-०क्ष् (८१३)
पाण्डोर्विदुर सर्वाणि प्रेतकार्याणि कारय ।
राजवद्राजसिंहस्य माद्र्याश्चैव विशेषतः ॥ १-१३६-१ (६०९६)
पशून्वासांसि रत्नानि धनानि विविधानि च ।
पाण्डोः प्रयच्छ माद्र्याश्च येभ्यो यावच्च वाञ्छितम् ॥ १-१३६-२ (६०९७)
यथा च कुन्ती सत्कारं कुर्यान्माद्र्यास्तथा कुरु ।
यथा न वायुर्नादित्यः पश्येतां तां सुसंवृताम् ॥ १-१३६-३ (६०९८)
न शोच्यः पाण्डुरनघः प्रशस्यः स नराधिपः ।
यस्य पञ्च सुता वीरा जाताः सुरसुतोपमाः ॥ १-१३६-४ (६०९९)
वैशंपायन उवाच। १-१३६-५क्ष् (८१४)

विदुरस्तं तथेत्युक्त्वा भीष्मेण सह भारत ।
पाण्डुं संस्कारयामास देशे परमपूजिते ॥ १-१३६-५ (६१००)
ततस्तु नगरात्तूर्णमाज्यगन्धपुरस्कृताः ।
निर्हृताः पावका दीप्ताः पाण्डो राजन्पुरोहितैः ॥ १-१३६-६ (६१०१)
अथैनामार्तवैः पुष्पैर्गन्धैश्च विविधैर्वरैः ।
शिबिकां तामलङ्कृत्य वाससाऽऽच्छाद्य सर्वशः ॥ १-१३६-७ (६१०२)
तां तथा शोभितां माल्यैर्वासोभिश्च महाधनैः ।
अमात्या ज्ञातयश्चैनं सुहृदश्चोपतस्थिरे ॥ १-१३६-८ (६१०३)
नृसिंहं नरयुक्तेन परमालङ्कृतेन तम् ।
अवहन् यानमुख्येन सह माद्र्या सुसंवृतम् ॥ १-१३६-९ (६१०४)
पाण्डुरेणातपत्रेण चामरव्यजनेन च ।
सर्ववादित्रनादैश्च समलञ्चक्रिरे ततः ॥ १-१३६-१० (६१०५)
रत्नानि चाप्युपादाय बहूनि शतशो नराः ।
प्रददुः काङ्क्षमाणेभ्यः पाण्डोस्तस्यौर्ध्वदेहिके ॥ १-१३६-११ (६१०६)
अथ च्छत्राणि शुभ्राणि चामराणि बृहन्ति च ।
आजह्रुः कौरवस्यार्थे वासांसि रुचिराणि च ॥ १-१३६-१२ (६१०७)
याजकैः शुक्लवासोभिर्हूयमाना हुताशनाः ।
अगच्छन्नग्रतस्तस्य दीप्यमानाः स्वलङ्कृताः ॥ १-१३६-१३ (६१०८)
ब्राह्मणाः क्षत्रिया वैश्याः शूद्राश्चैव सहस्रशः ।
रुदन्तः शोकसंतप्ता अनुजग्मुर्नराधिपम् ॥ १-१३६-१४ (६१०९)
अयमस्मानपाहाय दुःखे चाधाय शाश्वते ।
कृत्वा चास्माननाथांश्च क्व यास्यति नराधिपः ॥ १-१३६-१५ (६११०)
क्रोशन्तः पाण्डवाः सर्वे भीष्मो विदुर एव च ।
ग्बाह्लीकः सोमदत्तश्च तथा भूरिश्रवा नृपः ॥ १-१३६-१६ (६१११)
अन्योन्यं वै समाश्लिष्य अनुजग्मुः सहस्रशः।
रमणीये वनोद्देशे गङ्गातीरे समे शुभे ॥ १-१३६-१७ (६११२)
न्यासयामासुरथ तां शिबिकां सत्यवादिनः ।
सभार्यस्य नृसिंहस्य पाण्डोरक्लिष्टकर्मणः ॥ १-१३६-१८ (६११३)
ततस्तस्य शरीरं तु सर्वगन्धाधिवासितम् ।
शुचिकालीयकादिग्धं दिव्यचन्दनरूषितम् ॥ १-१३६-१९ (६११४)
पर्यषिञ्चञ्जलेनाशु शातकुम्भमयैर्घटैः ।
चन्दनेन च शुक्लेन सर्वतः समलेपयन् ॥ १-१३६-२० (६११५)
कालागुरुविमिश्रेण तथा तुङ्गरसेन च ।
अथैनं देशजैः शुक्लैर्वासोभिः समयोजयन् ॥ १-१३६-२१ (६११६)
संछन्नः स तु वासोभिर्जीवन्निव नराधिपः ।
शुशुभे स नव्याघ्रो महार्हशयनोचितः ॥ १-१३६-२२ (६११७)

ग्हयमेधाग्निना सर्वे याजकाः सपुरोहिताः ।
वेदोक्तेन विधानेन क्रियांचक्रुः समन्त्रकम् ॥' १-१३६-२३ (६११८)
याजकैरभ्यनुज्ञाते प्रेतकर्मण्यनिष्ठिते ।
घृतावसिक्तं राजानं सह माद्र्या स्वलङ्कृतम् ॥ १-१३६-२४ (६११९)
तुङ्गपद्मकमिश्रेण चन्दनेन सुगन्धिना ।
ग्सरलं देवदारुं च गुग्गुलं लाक्षया सह ॥ १-१३६-२५ (६१२०)
हरिचन्दनकाष्ठैश्च हरिबेरैरुशीरकैः।'
अन्यैश्च विविधैर्गन्धैर्विधिना समदाहयन् ॥ १-१३६-२६ (६१२१)
ततस्तयोः शरीरे द्वे दृष्ट्वा मोहवशं गता ।
हाहा पुत्रेति कौसल्या पपात सहसा भुवि ॥ १-१३६-२७ (६१२२)
तां प्रेक्ष्य पतितामार्तां पौरजानपदो जनः ।
रुरोद दुःखसंतप्तो राजभक्त्या कृपाऽन्वितः ॥ १-१३६-२८ (६१२३)
कुन्त्याश्चैवार्तनादेन सर्वाणि च विचुक्रुशुः ।
मानुषैः सह भूतानि तिर्यग्योनिगतान्यपि ॥ १-१३६-२९ (६१२४)
तथा भीष्मः शान्तनवो विदुरश्च महामतिः ।
सर्वशः कौरवाश्चैव प्राणदन्भृशदुःखिताः ॥ १-१३६-३० (६१२५)
ततो भीष्मोऽथ विदुरो राजा च सह पाण्डवैः ।
उदकं चक्रिरे तस्य सर्वाश्च कुरुयोषितः ॥ १-१३६-३१ (६१२६)
चुक्रुशुः पाण्डवाः सर्वे भीष्मः शान्तनवस्तथा ।
विदुरो ज्ञातयश्चैव चक्रुश्चाप्युदकक्रियाः ॥ १-१३६-३२ (६१२७)
कृतोदकांस्तानादाय पाण्डवाञ्छोककर्शितान् ।
सर्वाः प्रकृतयो राजञ्शोचमाना न्यवारयन् ॥ १-१३६-३३ (६१२८)
यथैव पाण्डवा भूमौ सुषुपुः सह बान्धवैः ।
तथैव नागरा राजञ्शिश्यिरे ब्राह्मणादयः ॥ १-१३६-३४ (६१२९)
तद्गतानन्दमस्वस्थमाकुमारमहृष्टवत् ।
बभूव पाण्डवैः सार्धं नगरं द्वादश क्षपाः ॥ ॥ १-१३६-३५ (६१३०)

इति श्रीमन्महाभारते आदिपर्वणि संभवपर्वणि
षट्त्रिंशदधिकशततमोऽध्यायः ॥ १३६ ॥
Mahabharata - Adi Parva - Chapter Footnotes

१-१३६-१९ कालीयकादिग्धं कृष्णागुरुलिप्तम् ॥
१-१३६-२५ तुङ्गपद्मकौ गन्धद्रव्यविशेषौ ॥
षट्त्रिंशदधिकशततमोऽध्यायः ॥
१३६ ॥

---

अध्यय१३७

॥ श्रीः ॥
१.१३७. अध्यायः १३७

Mahabharata - Adi Parva - Chapter Topics
पाण्डोः श्राद्धदानम् ॥ १ ॥
कुमाराणां क्रीडावर्णनम् ॥ २ ॥
क्रीडायां भीमेन दुर्योधनादीनां पराभवः ॥ ३ ॥
दुर्योधनेन प्रमाणकोट्यां पातनं, सर्पैर्दंशनं,
विषमिश्रभक्ष्यदानम् ॥ ४ ॥

Mahabharata - Adi Parva - Chapter Text

१-१३७-० (६१३१)
वैशंपायन उवाच। १-१३७-०क्ष् (८१५)
ततः क्षत्ता च भीष्मश्च व्यासो राजा च बन्धुभिः ।
ददुः श्राद्धं तदा पाण्डोः स्वधामृतमयं तदा ॥ १-१३७-१ (६१३२)
ग्पुरोहितसहायास्ते यथान्यायमकुर्वत।'
कुरूंश्च विप्रमुख्यांश्च भोजयित्वा सहस्रशः ।
रत्नौघान्द्विजमुख्येभ्यो दत्त्वा ग्रामवरांस्तथा ॥ १-१३७-२ (६१३३)
कृतशौचांस्ततस्तांस्तु पाण्डवान्भरतर्षभान् ।
आदाय विविशुः सर्वे पुरं वारणसाह्वयम् ॥ १-१३७-३ (६१३४)
सततं स्मानुशोचन्तस्तमेव भरतर्षभम् ।
पौरजानपदाः सर्वे मृतं स्वमिव बान्धवम् ॥ १-१३७-४ (६१३५)
श्राद्धावसाने तु तदा दृष्ट्वा तं दुःखितं जनम् ।
संमूढां दुःखशोकार्तां व्यासो मातरमब्रवीत् ॥ १-१३७-५ (६१३६)
अतिक्रान्तसुखाः कालाः पर्युपस्थितदारुणाः ।
श्वःश्वः पापिष्ठदिवसाः पृथिवी गतयौवना ॥ १-१३७-६ (६१३७)
बहुमायासमाकीर्णो नानादोषसमाकुलः ।
लुप्तधर्मक्रियाचारो घोरः कालो भविष्यति ॥ १-१३७-७ (६१३८)
कुरूणामनयाच्चापि पृथिवी न भविष्यति ।
गच्छ त्वं योगमास्थाय युक्ता वस तपोवने ॥ १-१३७-८ (६१३९)
माद्राक्षीस्त्वं कुलस्यास्य घोरं संक्षयमात्मनः ।
तथेति समनुज्ञाय सा प्रविश्याब्रवीत्स्नुषाम् ॥ १-१३७-९ (६१४०)
अम्बिक तव पौत्रस्य दुर्नयात्किल भारताः ।
सानुबन्धा विनङ्क्ष्यन्ति पौराश्चैवेति नः श्रुतम् ॥ १-१३७-१० (६१४१)
तत्कौसल्यामिमामार्तां पुत्रशोकाभिपीडिताम् ।

वनमादाय भद्रं ते गच्छावो यदि मन्यसे ॥ १-१३७-११ (६१४२)
तथेत्युक्ता त्वम्बिकया भीष्ममामन्त्र्य सुव्रता ।
वनं ययौ सत्यवती स्नुषाभ्यां सह भारत ॥ १-१३७-१२ (६१४३)
ताः सुघोरं तपस्तप्त्वा देव्यो भरतसत्तम ॥
देहं त्यक्त्वा महाराज गतिमिष्टां ययुस्तदा ॥ १-१३७-१३ (६१४४)
वैशंपायन उवाच। १-१३७-१४क्ष् (८१६)
अथाप्तवन्तो वेदोक्तान्संस्कारान्पाण्डवास्तदा ।
संव्यवर्धन्त भोगांस्ते भुञ्जानाः पितृवेश्मनि ॥ १-१३७-१४ (६१४५)
धार्तराष्ट्रैश्च सहिताः क्रीडन्तो मुदिताः सुखम् ।
बालक्रीडासु सर्वासु विशिष्टास्तेजसाऽभवन् ॥ १-१३७-१५ (६१४६)
जवे लक्ष्याभिहरणे भोज्ये पांसुविकर्षणे ।
धार्तराष्ट्रान्भीमसेनः सर्वान्स परिमर्दति ॥ १-१३७-१६ (६१४७)
हर्षात्प्रक्रीडमानांस्तान् गृह्य राजन्निलीयते ।
शिरःसु विनिगृह्यैतान्योजयामास पाण्डवैः ॥ १-१३७-१७ (६१४८)
शतमेकोत्तरं तेषां कुमाराणां महौजसाम् ।
एक एव निगृह्णाति नातिकृच्छ्राद्वृकोदरः ॥ १-१३७-१८ (६१४९)
कचेषु च निगृह्यैनान्विनिहत्य बलाद्बली ।
चकर्ष क्रोशतो भूमौ घृष्टजानुशिरोंसकान् ॥ १-१३७-१९ (६१५०)
दश बालाञ्जले क्रीडन्भुजाभ्यां परिगृह्य सः ।
आस्ते स्म सलिले मग्नो मृतकल्पान्विमुञ्चति ॥ १-१३७-२० (६१५१)
फलानि वृक्षमारुह्य विचिन्वन्ति च ये तदा ।
तदा पादप्रहारेण भीमः कम्पयते द्रुमान् ॥ १-१३७-२१ (६१५२)
प्रहारवेगाभिहता द्रुमा व्याघूर्णितास्ततः ।
सफलाः प्रपतन्ति स्म द्रुमात्त्रस्ताः कुमारकाः ॥ १-१३७-२२ (६१५३)
ग्केचिद्भग्नशिरोरस्काः केचिद्भग्नकटीमुखाः ।
निपेतुर्भ्रातरः सर्वे भीमसेनभुजार्दिताः ॥' १-१३७-२३ (६१५४)
न ते नियुद्धे न जवे न योग्यासु कदाचन ।
कुमारा उत्तरं चक्रुः स्पर्धमाना वृकोदरम् ॥ १-१३७-२४ (६१५५)
एवं स धार्तराष्ट्रांश्च स्पर्धमानो वृकोदरः ।
अप्रियेऽतिष्ठदत्यन्तं बाल्यान्न द्रोहचेतसा ॥ १-१३७-२५ (६१५६)
ततो बलमतिख्यातं धार्तराष्ट्रः प्रतापवान् ।
भीमसेनस्य तज्ज्ञात्वा दुष्टभावमदर्शयत् ॥ १-१३७-२६ (६१५७)
तस्य धर्मादपेतस्य पापानि परिपश्यतः ।
मोहादैश्वर्यलोभाच्च पापा मतिरजायत ॥ १-१३७-२७ (६१५८)
अयं बलवतां श्रेष्ठः कुन्तीपुत्रो वृकोदरः ।
मध्यमः कुन्तिपुत्राणां निकृत्या सन्निगृह्यतां ॥ १-१३७-२८ (६१५९)

प्राणवान्विक्रमी चैव शौर्येण महताऽन्वितः ।
स्पर्धते चापि सहितानस्मानेको वृकोदरः ॥ १-१३७-२९ (६१६०)
तं तु सुप्तं पुरोद्याने गङ्गायां प्रक्षिपामहे ।
अथ तस्मादवरजं श्रेष्ठं चैव युधिष्ठिरम् ॥ १-१३७-३० (६१६१)
प्रसह्य बन्धने बद्ध्वा प्रशासिष्ये वसुन्धराम् ।
एवं स निश्चयं पापः कृत्वा दुर्योधनस्तदा ।
नित्यमेवान्तरप्रेक्षी भीमस्यासीन्महात्मनः ॥ १-१३७-३१ (६१६२)
ततो जलविहारार्थं कारयामास भारत ।
चैलकम्बलवेश्मानि विचित्राणि महान्ति च ॥ १-१३७-३२ (६१६३)
सर्वकामैः सुपूर्णानि पताकोच्छ्रायवन्ति च ।
तत्र संजनयामास नानागाराण्यनेकशः ॥ १-१३७-३३ (६१६४)
उदकक्रीडनं नाम कारयामास भारत ।
प्रमाणकोट्यां तं देशं स्थलं किंचिदुपेत्यह ॥ १-१३७-३४ (६१६५)
ग्क्रीडावसाने ते सर्वे शुचिवस्त्राः स्वलङ्कृताः ।
सर्वकामसमृद्धं तदन्नं बुभुजिरे शनैः ॥ १-१३७-३५ (६१६६)
दिवसान्ते परिश्रान्ता विहृत्य च कुरूद्वहाः ।
विहारावसथेष्वेव वीरा वासमरोचयन् ॥ १-१३७-३६ (६१६७)
खिन्नस्तु बलवान्भीमो व्यायामाभ्यधिकस्तदा ।
वाहयित्वा कुमारांस्ताञ्जलक्रीडागतान्विभुः ॥ १-१३७-३७ (६१६८)
प्रमाणकोट्यां वासार्थं सुष्वापारुह्य तत्स्थलम् ।
शीतं वासं समासाद्य शान्तो मदविमोहितः ॥ १-१३७-३८ (६१६९)
निश्चेष्टः पाण्डवो राजन्सुष्वाप मृतवत्क्षितौ ।
ततो बद्ध्वा लतापाशैर्भीमं दुर्योधनः शनैः ॥ १-१३७-३९ (६१७०)
प्रमाणकोट्यां संसुप्तं गङ्गायां प्राक्षिपज्जले ।
ततः प्रबुद्धः कौन्तेयः सर्वान्संछिद्य बन्धनान् ॥ १-१३७-४० (६१७१)
उदतिष्ठद्बलाड्ढ्यो भीमः प्रहरतां वरः ।
स विमुक्तो महातेजा नाज्ञासीत्तेन तत्कृतम् ॥ १-१३७-४१ (६१७२)
पुनर्निद्रावशं प्राप्तस्तत्रैव प्रास्वपद्बली ।
अर्धरात्र्यां व्यतीतायामुत्तस्थुः कुरुपाण्जवाः ।
दुर्योधनस्तु कौन्तेयं दृष्ट्वा निर्वेदमभ्यगात् ॥ १-१३७-४२ (६१७३)
सुप्तं चापि पुनः सर्पैस्तीक्ष्णदंष्ट्रैर्महाविषैः ।
कुपितैर्दंशयामास सर्वेष्वेवाङ्गसन्धिषु ॥ १-१३७-४३ (६१७४)
दंष्ट्राश्च दंष्ट्रिणां मर्मस्वपि तेन निपातिताः ।
त्वचं न चास्य बिभिदुः सारत्वात्पृथुपक्षसः ॥ १-१३७-४४ (६१७५)
प्रबुद्धो भीसेनस्तान्सर्वान्सर्पानपोथयत् ।
सारथिं चास्य दयितमपहस्तेन जघ्निवान् ॥ १-१३७-४५ (६१७६)

तथान्यदिवसे राजन्हन्तुकामोऽत्यमर्षणः ।
वलनेन सहामन्त्र्य सौबलस्य मते स्थितः ॥ १-१३७-४६ (६१७७)
भोजने भीमसेनस्य ततः प्राक्षेपयद्विषम् ।
कालकूटं विषं तीक्ष्णं संभृतं रोमहर्षणम् ॥ १-१३७-४७ (६१७८)
तच्चापि भुक्त्वाऽजरदॉयदविकारो वृकोदरः ।
विकारं नाभ्यजनयत्सुतीक्ष्णमपि तद्विषम् ॥ १-१३७-४८ (६१७९)
भीमसंहननो भीमस्त्समादजरयद्विषम् ।
ततोऽन्यदिवसे राजन्हन्तुकामो वृकोदरम् ॥ १-१३७-४९ (६१८०)
सौबलेन सहायेन धार्तराष्ट्रोऽभ्यचिन्तयत् ।
चिन्तयन्नालभन्निद्रां दिवारात्रमतन्द्रितः ॥ १-१३७-५० (६१८१)
एवं दुर्योधनः कर्णः शकुनिश्चापि सौबलः ।
अनेकैरप्युपायैस्ताञ्जिघांसन्ति स्म पाण्डवान् ॥ १-१३७-५१ (६१८२)
वैश्या पुत्रस्तदाचष्ट पार्थानां हितकाम्यया ।
पाण्डवा ह्यपि तत्सर्वं प्रत्यजानन्नरिन्दमाः ।
उद्भावनमकुर्वन्तो विदुरस्य मते स्थिताः ॥' ॥ १-१३७-५२ (६१८३)

इति श्रीमन्महाभारते आदिपर्वणि संभवपर्वणि
सप्तत्रिंशदधिकशततमोऽध्यायः ॥ १३७ ॥
Mahabharata - Adi Parva - Chapter Footnotes

१-१३७-६ श्वःश्वः पूर्वपूर्वदिनापेक्षया उत्तरमुत्तरं पापिष्ठण्
। गतयौवना सम्यक्फलसून्या ॥
१-१३७-८ योगं चित्तवृत्तिनिरोधं प्रयाणोद्योगंवा । युक्ता समाहिता ॥
१-१३७-२४ योग्यासु क्रियास्विति शेषः । उत्तरमुत्कर्षम् ॥
१-१३७-२८ निकृत्या कपटेन ॥
१-१३७-२९ प्राणवान् बलवान् ॥
१-१३७-३१ प्रसह्य बलात्कारेण ॥
१-१३७-३४ प्रमाणकोट्यां गङ्गायां प्रदेशविशेषे । स्थलं
किंचिदर्धं जलेऽर्धं स्थले च क्रीडागारम् ॥
१-१३७-४६ वलनेन तन्नामकेन सहचरेण ॥
सप्तत्रिंशदधिकशततमोऽध्यायः ॥
१३७ ॥

---

अध्यय१३८
॥ श्रीः ॥
१.१३८. अध्यायः १३८

Mahabharata - Adi Parva - Chapter Topics
पुनर्भीमाय विषमिश्रभक्ष्यदानम् ॥ १ ॥
शूलकीलितायां शमाणकोट्यां पुनर्भीमसेनस्य पातनम् ॥ २ ॥
पाताललोकं प्राप्तस्य भीमस्य वासुकिदत्तरसपानम् ॥ ३ ॥

Mahabharata - Adi Parva - Chapter Text

१-१३८-० (६१८४)
ग्वैशंपायन उवाच। १-१३८-०क्ष् (८१७)
ततस्ते मन्त्रयामासुर्दुर्योधनपुरोगमाः ।
प्राणवान्विक्रमी चापि शौर्ये च महति स्थितः ॥ १-१३८-१ (६१८५)
स्पर्धते चापि सततमस्मानेव वृकोदरः ।
तं तु सुप्तं पुरोद्याने जले शूले क्षिपामहे ॥ १-१३८-२ (६१८६)
ततो जलविहारार्थं कारयामास भारत ।
प्रमाणकोट्यामुद्देशे स्थलं किंचिदुपेत्य ह ॥' १-१३८-३ (६१८७)
भक्ष्यं भोज्यं च पेयं च चोष्यं लेह्यमथापि च ।
उपपादितं नरैस्तत्र कुशलैः सूदकर्मणि ॥ १-१३८-४ (६१८८)
न्यवेदयंस्तत्पुरुषा धार्तराष्ट्राय वै तदा ।
ततो दुर्योधनस्तत्र पाण्डवानाह दुर्मतिः ॥ १-१३८-५ (६१८९)
गङ्गां चैवानुयास्याम उद्यानवनशोभिताम् ।
सहिता भ्रातरः सर्वे जलक्रीडामवाप्नुमः ॥ १-१३८-६ (६१९०)
एवमस्त्विति तं चापि प्रत्युवाच युधिष्ठिरः ।
ते रथैर्नगराकारैर्देशजैश्च गजोत्तमैः ॥ १-१३८-७ (६१९१)
निर्ययुर्नगराच्छूराः कौरवाः पाण्डवैः सह ।
उद्यानवनमासाद्य विसृज्य च महाजनम् ॥ १-१३८-८ (६१९२)
विशन्ति स्म तदा वीराः सिंहा इव गिरेर्गुहाम् ।
उद्यानमभिपश्यन्तो भ्रातरः सर्व एव ते ॥ १-१३८-९ (६१९३)
उपस्थानगृहैः शुभ्रैर्वलभीभिश्च शोभितम् ।
गवाक्षकैस्तथा जालैर्यन्त्रैः सांचारिकैरपि ॥ १-१३८-१० (६१९४)
संमार्जितं सौधकारैश्चित्रकारैश्च चित्रितम् ।
दीर्घिकाभिश्च पूर्णाभिस्तथा पुष्करिणीषु च ॥ १-१३८-११ (६१९५)
जलं तच्छुशुभे च्छन्नं फुल्लैर्जलरुहैस्तथा ।
उपच्छन्ना वसुमती तथा पुष्पैर्यथर्तुकैः ॥ १-१३८-१२ (६१९६)
तत्रोपविष्टास्ते सर्वे पाण्डवाः कौरवाश्च ह ।
उपच्छन्नान्बहून्कामांस्ते भुञ्जन्ति ततस्ततः ॥ १-१३८-१३ (६१९७)
अथोद्यानवरे तस्मिंस्तथा क्रीडागताश्चते ।

परस्परस्य वक्त्रेषु ददुर्भक्ष्यांस्ततस्ततः ॥१-१३८-१४ (६१९८)
ततो दुर्योधनः पापस्तद्भक्ष्ये कालकूटकम् ।
विषं प्रक्षेपयामास भीमसेनजिघांसया ॥१-१३८-१५ (६१९९)
स्वयमुत्थाय चैवाथ हृदयेन क्षुरोपमः ।
स वाचाऽमृतकल्पश्च भ्रातृवच्च सुहृद्यथा ॥१-१३८-१६ (६२००)
स्वयं प्रक्षिपते भक्ष्यं बहु भीमस्य पाकृत् ।
प्रभक्षितं च भीमेन तं वै दोषमजानता ॥१-१३८-१७ (६२०१)
ततो दुर्योधनस्तत्र हृदयेन हसन्निव ।
कृतकृत्यमीवात्मानं मन्यते पुरुषाधमः ॥१-१३८-१८ (६२०२)
ततस्ते सहिताः सर्वे जलक्रीडामकुर्वत ।
पाण्डवा धार्तराष्ट्राश्च तदा मुदितमानसाः ॥१-१३८-१९ (६२०३)
विहारावसथेष्वेव वीरा वासमरोचयन् ।
भीमस्तु बलवान्भुक्त्वा व्यायामाभ्यधिकं जले ॥१-१३८-२० (६२०४)
वाहयित्वा कुमारांस्ताञ्जलक्रीडागतांस्तदा ।
प्रमाणकोट्यां वासार्थी सुष्वापावाप्य तत्स्थलम् ॥१-१३८-२१ (६२०५)
शीतं वातं समासाद्य श्रान्तो मदविमोहितः ।
विषेण च परीताङ्गो निश्चेष्टः पाण्डुनन्दनः ॥१-१३८-२२ (६२०६)
ततो बद्ध्वा लतापाशैर्भीमं दुर्योधनः स्वयम् ।
ग्शूलान्यप्सु निखायाशु प्रादेशाभ्यन्तराणि च ॥१-१३८-२३ (६२०७)
लतापाशैर्दृढं बद्धं स्थलाज्जलमपातयत् ।
सशेषत्वान्न संप्राप्तो जले शूलिनि पाण्डवः ॥१-१३८-२४ (६२०८)
पपात यत्र तत्रास्य शूलं नासीद्यदृच्छया।'
स निःसंज्ञो जलस्यान्तमवाग्वै पाण्डवोऽविशत् ।
आक्रामन्नागभवने तदा नागकुमारकान् ॥ १-१३८-२५ (६२०९)
ततः समेत्य बहुभिस्तदा नागैर्महाविषैः ।
अदश्यत भृशं भीमो महादंष्ट्रैर्विषोल्बणैः ॥१-१३८-२६ (६२१०)
ततोऽस्य दश्यमानस्य तद्विषं कालकूटकम् ।
हतं सर्पविषेणैव स्थावरं जङ्गमेन तु ॥१-१३८-२७ (६२११)
दंष्ट्राश्च दंष्ट्रिणां तेषां मर्मस्वपि निपातिताः ।
त्वचं नैवास्य बिभिदुः सारत्वात्पृथुवक्षसः ॥१-१३८-२८ (६२१२)
ततः प्रबुद्धः कौन्तेयः सर्वं संछिद्य बन्धनम् ।
पोथयामास तान्सर्पान्केचिद्भीताः प्रदुद्रुवुः ॥१-१३८-२९ (६२१३)
हतावशेषा भीमेन सर्वे वासुकिमभ्ययुः ।
ऊचुश्च सर्पराजानं वासुकिं वासवोपमम् ॥१-१३८-३० (६२१४)
अयं नरो वै नागरेन्द्र ह्यप्सु बद्ध्वा प्रवेशितः ।
यथा च नो मतिर्वीर विषपीतो भविष्यति ॥१-१३८-३१ (६२१५)

निश्चेष्टोऽस्माननुप्राप्तः स च दष्टोऽन्वबुध्यत ।
ससंज्ञश्चापि संवृत्तश्छित्त्वा बन्धनमाशु नः ॥ १-१३८-३२ (६२१६)
पोथयन्तं महाबाहुं त्वं वै तं ज्ञातुमर्हसि ।
ततो वासुकिरभ्येत्य नागैरनुगतस्तदा ॥ १-१३८-३३ (६२१७)
पश्यति स्म महाबाहुं भीमं भीमपराक्रमम् ।
आर्यकेण च दृष्टः स पृथाया आर्यकेम च ॥ १-१३८-३४ (६२१८)
तदा दौहित्रदौहित्रः परिष्वक्तः सुपीडितम् ।
सुप्रीतश्चाभवत्तस्य वासुकिः स महायशाः ॥ १-१३८-३५ (६२१९)
अब्रवीत्तं च नागेन्द्रः किमस्य क्रियतां प्रियम् ।
धनौघो रत्ननिचयो वसु चास्य प्रदीयताम् ॥ १-१३८-३६ (६२२०)
एवमुक्तस्तदा नागो वासुकिं प्रत्यभाषत ।
यदि नागेन्द्र तुष्टोऽसि किमस्य धनसंचयैः ॥ १-१३८-३७ (६२२१)
रसं पिबेत्कुमारोऽयं त्वयि प्रीते महाबलः ।
बलं नागसहस्रस्य यस्मिन्कुण्डे प्रतिष्ठितम् ॥ १-१३८-३८ (६२२२)
यावत्पिबति बालोऽयं तावदस्मै प्रदीयताम् ।
एवमस्त्विति तं नागं वासुकिः प्रत्यभाषत ॥ १-१३८-३९ (६२२३)
ततो भीमस्तदा नागैः कृतस्वस्त्ययनः शुचिः ।
प्राङ्मुखश्चोपविष्टश्च रसं पिबति पाण्डवः ॥ १-१३८-४० (६२२४)
एकोच्छ्वासात्ततः कुण्डं पिबति स्म महाबलः ।
एवमष्टौ स कुण्डानि ह्यपिबत्पाण्डुनन्दनः ॥ १-१३८-४१ (६२२५)
ततस्तु शयने दिव्ये नागदत्ते महाभुजः ।
अशेत भीमसेनस्तु यथासुखमरिंदमः ॥ ॥ १-१३८-४२ (६२२६)

इति श्रीमन्महाभारते आदिपर्वणि संभवपर्वणि
अष्टत्रिंशदधिकशततमोऽध्यायः ॥ १३८ ॥

Mahabharata - Adi Parva - Chapter Footnotes

१-१३८-१० उपस्थानगृहैः यत्र राजानं कार्यिणः
शूराश्चोपतिष्ठन्ति तैर्गृहैः । वलभीभिरुभयतो नमत्पक्षाभिः
स्तम्भशालाभिः। यन्त्रैर्जलयन्त्रैः शतधारादिभिः। यतो
युगपच्छतं धारा उच्छलन्त्यो नीहारीभूय भवनोदरं
व्याप्नुवन्ति। सांचारिकैः संचारयोग्यैः ॥
१-१३८-११ दीर्घिकाभिः कुल्याभिः ॥
१-१३८-१३ उपच्छन्नानुपागतान् ॥
१-१३८-३१ विषपीतः पीतविषः ॥
१-१३८-३४ आर्यकेण नागराजेन । पृथाया आयकेण

मातामहेन। कुन्तिभोजद्वारायं संबन्ध इति गम्यते ॥
१-१३८-३५ दौहित्रदौहित्र इति त्वार्यकनागस्य दौहित्रः
शूरस्तद्दौहित्रो भीम इत्यविरुद्धमेतत् । अन्ये तु शूरमातामह
एवोपचारात कुन्तीमातामहोऽपीत्याहुः ॥
१-१३८-३८ रसं साधितपारदम् ॥
अष्टत्रिंशदधिकशततमोऽध्यायः ॥
१३८ ॥

---

अध्यय१३९
॥ श्रीः ॥
१.१३९. अध्यायः १३९

Mahabharata - Adi Parva - Chapter Topics
भीममनागतं दृष्ट्वा खिन्नायाः कुन्त्या विदुरेण संवादः ॥ १ ॥
रसपानेन नागायुतबलवता भीमेन हस्तिनापुरप्रत्यागमनम् ॥ २ ॥
भीष्मेण धनुर्वेदशिक्षणार्थं कुमाराणां कृपाय निवेदनम् ॥ ३ ॥

Mahabharata - Adi Parva - Chapter Text

१-१३९-० (६२२७)
वैशंपायन उवाच। १-१३९-०क्ष् (८१८)
ग्दुर्योधनस्तु पापात्मा भीममाशीविषह्रदे ।
प्रक्षिप्य कृतकृत्यं स्वमात्मानं मन्यते तदा ॥ १-१३९-१ (६२२८)
प्रभातायां रजन्यां च प्रविवेश पुरं ततः ।
ब्रुवाणो भीमसेनस्तु यातो ह्यग्रत एव नः ॥' १-१३९-२ (६२२९)
युधिष्ठिरस्तु धर्मात्मा ह्यविदन्पापमात्मनि ।
स्वेनानुमानेन परं साधुं समनुपश्यति ॥ १-१३९-३ (६२३०)
सोऽभ्युपेत्य तदा पार्थो मातरं भ्रातृवत्सलः ।
अभिवाद्याब्रवीत्कुन्तीमम्ब भीम इहागतः ॥ १-१३९-४ (६२३१)
क्व गतो भविता मातर्नेह पश्यामि तं शुभे ।
उद्यानानि वनं चैव विचितानि समन्ततः ॥ १-१३९-५ (६२३२)
तदर्थं न च तं वीरं दृष्टवन्तो वृकोदरम् ।
मन्यमानास्ततः सर्वे यातो नः पूर्वमेव सः ॥ १-१३९-६ (६२३३)
आगताः स्म महाभागे व्याकुलेनान्तरात्मना ।
इहागम्य क्व नु गतस्त्वया वा प्रेषितः क्व नु ॥ १-१३९-७ (६२३४)
कथयस्व महाबाहुं भीमसेनं यशस्विनि ।
नहि मे शुध्यते भावस्तं वीरं प्रति शोभने ॥ १-१३९-८ (६२३५)

यतः प्रसुप्तं मन्येऽहं भीम् नेति हतस्तु सः ।
इत्युक्ता च ततः कुन्ती धर्मराजेन धीमता ॥ १-१३९-९ (६२३६)
हाहेति कृत्वा संभ्रान्ता प्रत्युवाच युधिष्ठिरम् ।
न पुत्र भीमं पश्यामि न मामभ्येत्यसाविति ॥ १-१३९-१० (६२३७)
शीघ्रमन्वेषणे यत्नं कुरु तस्यानुजैः सह ।
द्रुतं गत्वा पुरोद्यानं विचिन्वन्तिस्म पाण्डवाः ॥ १-१३९-११ (६२३८)
भीमभीमेति ते वाचा पाण्डवाः समुदैरयन् ।
विचिन्वन्तोऽथ ते सर्वे न स्म पश्यन्ति भ्रातरम् ॥ १-१३९-१२ (६२३९)
आगताः स्वगृहं भूय इदमूचुः पृथां तदा ।
न दृश्यते महाबाहुरम्ब भीमो वने चितः ॥ १-१३९-१३ (६२४०)
विचितानि च सर्वाणि ह्युद्यानानि नदीस्तथा। १-१३९-१४ (६२४१)
वैशंपायन उवाच ।
ततो विदुरमानाय्य कुन्ती सा स्वं निवेशनम् ॥ १-१३९-१४क्ष् (८१९)
उवाच बलवान्क्षत्तर्भीमसेनो न दृश्यते ॥ १-१३९-१५ (६२४२)
उद्यानान्निर्गताः सर्वे भ्रातरो भ्रातृभिः सह ।
तत्रैकस्तु महाबाहुर्भीमो नाभ्येति मामिह ॥ १-१३९-१६ (६२४३)
न च प्रीणयते चक्षुः सदा दुर्योधनस्य सः ।
क्रूरोऽसौ दुर्मतिः क्षुद्रो राज्यलुब्धोऽनपत्रपः ॥ १-१३९-१७ (६२४४)
निहन्यादपि तं वीरं जातमन्युः सुयोधनः ।
तेन मे व्याकुलं चित्तं हृदयं दह्यतीव च ॥ १-१३९-१८ (६२४५)
विदुर उवाच। १-१३९-१९क्ष् (८२०)
मैवं वदस्व कल्याणि शेषसंरक्षणं कुरु ।
प्रत्यादिष्टो हि दुष्टात्मा शेषेऽपि प्रहरेत्तव ॥ १-१३९-१९ (६२४६)
दीर्घायुषस्तव सुता यथोवाच महामुनिः ।
आगमिष्यति ते पुत्रः प्रीतिं चोत्पादयिष्यति ॥ १-१३९-२० (६२४७)
वैशंपायन उवाच। १-१३९-२१क्ष् (८२१)
एवमुक्त्वा ययौ विद्वान्विदुरः स्वं निवेशनम् ।
कुन्ती चिन्तापरा भूत्वा सहासीना सुतैर्गृहे ॥ १-१३९-२१ (६२४८)
ततोऽष्टमे तु दिवसे प्रत्यबुध्यत पाण्डवः ।
तस्मिंस्तदा रसे जीर्णे सोऽप्रमेयबलो बली ॥ १-१३९-२२ (६२४९)
तं दृष्ट्वा प्रतिबुध्यन्तं पाण्डवं ते भुजङ्गमाः ।
सान्त्वयामासुरव्यग्रा वचनं चेदमब्रुवन् ॥ १-१३९-२३ (६२५०)
यत्ते पीतो महाबाहो रसोऽयं वीर्यसंभृतः ।
तस्मान्नागायुतबलो रणेऽधृष्यो भविष्यसि ॥ १-१३९-२४ (६२५१)
गच्छाद्य त्वं च स्वगृहं स्नातो दिव्यैरिमैर्जलैः ।
भ्रातरस्तेऽनुतप्यन्ति त्वां विना कुरुपुङ्गव ॥ १-१३९-२५ (६२५२)

ततः स्नातो महाबाहुः शुचिशुक्लाम्बरस्रजः ।
ततो नागस्य भवने कृतकौतुकमङ्गलः ॥ १-१३९-२६ (६२५३)
ओषधीभिर्विषघ्नीभिः सुरभीभिर्विशेषतः ।
भुक्तवान्परमान्नं च नागैर्दत्तं महाबलः ॥ १-१३९-२७ (६२५४)
पूजितो भुजगैर्वीर आशीर्भिश्चाभिनन्दितः ।
दिव्याभरणसंछन्नो नागानामन्त्र्य पाण्डवाः ॥ १-१३९-२८ (६२५५)
उदतिष्ठत्प्रहृष्टात्मा नागलोकादरिन्दमः ।
उत्क्षिप्य च तदा नागैर्जलाज्जलरुहेक्षणः ॥ १-१३९-२९ (६२५६)
तस्मिन्नेव वनोद्देशे स्थापितः कुरुनन्दनः ।
ते चान्तर्दधिरे नागाः पाण्डवस्यैव पश्यतः ॥ १-१३९-३० (६२५७)
तत उत्थाय कौन्तेयो भीमसेनो महाबलः ।
आजगाम महाबाहुर्मातुरन्तिकमञ्जसा ॥ १-१३९-३१ (६२५८)
ततोऽभिवाद्य जननीं ज्येष्ठं भ्रातरमेव च ।
कनीयसः समाघ्राय शिरस्स्वरिविमर्दनः ॥ १-१३९-३२ (६२५९)
तैश्चापि संपरिष्वक्तः सह मात्रा नरर्षभैः ।
अन्योन्यगतसौहार्दाद्दिष्ट्या दिष्ट्येति चाब्रुवन् ॥ १-१३९-३३ (६२६०)
ततस्तत्सर्वमाचष्ट दुर्योधनविचेष्टितम् ।
भ्रातॄणां भीमसेनश्च महाबलपराक्रमः ॥ १-१३९-३४ (६२६१)
नागलोके च यद्वृत्तं गुणदोषमशेषतः ।
तच्च सर्वमशेषेण कथयामास पाण्डवः ॥ १-१३९-३५ (६२६२)
ततो युधिष्ठिरो राजा भीममाह वचोऽर्थवत् ।
तूर्ष्णीं भव न ते जल्प्यमिदं कार्यं कथंचन ॥ १-१३९-३६ (६२६३)
इतःप्रभृति कौन्तेयं रक्षतान्योन्यमादृताः ।
एवमुक्त्वा महाबाहुर्धर्मराजो युधिष्ठिरः ॥ १-१३९-३७ (६२६४)
भ्रातृभिः सहितः सर्वैरप्रमत्तोऽभवत्तदा ।
यदा त्ववगतास्ते वै पाण्डवास्तस्य कर्म तत् ॥ १-१३९-३८ (६२६५)
नत्वेव बहुलं चक्रुः प्रयता मन्त्ररक्षणे ।
धर्मात्मा विदुरस्तेषां प्रददौ मतिमान्मतिम् ॥ १-१३९-३९ (६२६६)
दुर्योधनोऽपि तं दृष्ट्वा पाण्डवं पुनरागतम् ।
निश्वसंश्चिन्तयंश्चैवमहन्यहनि तप्यते ॥ १-१३९-४० (६२६७)
कुमारान्क्रीडमानांस्तान्दृष्ट्वा राजातिदुर्मदान् ।
गुरुं शिक्षार्थमन्विष्य गौतमं तान्न्यवेदयत् ॥ १-१३९-४१ (६२६८)
शरस्तम्बे समुद्भूतं वेदशास्त्रार्थपारगम् ।
ग्राज्ञा निवेदितास्तस्मै ते च सर्वे च निष्ठिताः।'
अधिजग्मुश्च कुरवो धनुर्वेदं कृपात्तु ते ॥ ॥ १-१३९-४२ (६२६९)

इति श्रीमन्महाभारते आदिपर्वणि संभवपर्वणि
ऊनचत्वारिंशदधिकशततमोऽध्यायः ॥ १३९ ॥
Mahabharata - Adi Parva - Chapter Footnotes

१-१३९-८ भावश्चित्तं न शुध्यते जीवतीति न मनुते ॥
१-१३९-१९ प्रत्यादिष्टः कुतो भीमं हतवानसीत्युपालब्धः ॥
१-१३९-४१ तान्कुरुबालकान् न्यवेदयत् ॥
ऊनचत्वारिंशदधिकशततमोऽध्यायः ॥
१३९ ॥

---

अध्यय१४०
॥ श्रीः ॥
१.१४०. अध्यायः १४०

Mahabharata - Adi Parva - Chapter Topics
कृपद्रोणाश्वत्थामाचार्याणामुत्पत्तिः ॥ १ ॥
द्रोणाचार्यस्य परशुरामादस्त्रलाभः ॥ २ ॥

Mahabharata - Adi Parva - Chapter Text

१-१४०-० (६२७०)
जनमेजय उवाच। १-१४०-०क्ष् (८२२)
कृपस्यापि मम ब्रह्मन्संभवं वक्तुमर्हसि ।
शरस्तम्बात्कथं जज्ञे कथं वाऽस्त्राण्यवाप्तवान् ॥ १-१४०-१ (६२७१)
वैशंपायन उवाच। १-१४०-२क्ष् (८२३)
महर्षेर्गौतमस्यासीच्छरद्वान्नाम गौतमः ।
पुत्रः किल महाराज जातः सहशरैर्विभो ॥ १-१४०-२ (६२७२)
न तस्य वेदाध्ययने तथा बुद्धिरजायत ।
यथास्य बुद्धिरभवद्धनुर्वेदे परन्तप ॥ १-१४०-३ (६२७३)
अधिजग्मुर्यथा वेदास्तपसा ब्रह्मचारिणः ।
तथा स तपसोपेतः सर्वाण्यस्त्राण्यवाप ह ॥ १-१४०-४ (६२७४)
धनुर्वेदपरत्वाच्च तपसा विपुलेन च ।
भृशं सन्तापयामास देवराजं स गौतमः ॥ १-१४०-५ (६२७५)
ततो जालवतीं नाम देवकन्यां सुरेश्वरः ।
प्राहिणोत्तपसो विघ्नं कुरु तस्येति कौरव ॥ १-१४०-६ (६२७६)
सा हि गत्वाऽऽश्रमं तस्य रमणीयं शरद्वतः ।
धनुर्बाणधरं बाला लोभयामास गौतमम् ॥ १-१४०-७ (६२७७)

तामेकवसनां दृष्ट्वा गौतमोऽप्सरसं वने ।
लोकेऽप्रतिमसंस्थानां प्रोत्फुल्लनयनोऽभवत् ॥ १-१४०-८ (६२७८)
धनुश्च हि शरास्तस्य कराभ्यामपतन्भुवि ।
वेपथुश्चास्य सहसा शरीरे समजायत ॥ १-१४०-९ (६२७९)
स तु ज्ञानगरीयस्त्वात्तपसश्च समर्थनात् ।
अवतस्थे महाप्राज्ञो धैर्येण परमेण ह ॥ १-१४०-१० (६२८०)
यस्तस्य सहसा राजन्विकारः समदृश्यत ।
तेन सुस्राव रेतोऽस्य स च तन्नान्वबुध्यत ॥ १-१४०-११ (६२८१)
धनुश्च सशरं त्यक्त्वा तथा कृष्णाजिनानि च ।
स विहायाश्रमं तं च तां चैवाप्सरसं मुनिः ॥ १-१४०-१२ (६२८२)
जगाम रेतस्तत्तस्य शरस्तम्बे पपात च ।
शरस्तम्बे च पतितं द्विधा तदभवन्नृप ॥ १-१४०-१३ (६२८३)
तस्याथ मिथुं जज्ञे गौतमस्य शरद्वतः ।
ग्महर्षेर्गौतमस्यास्य ह्याश्रमस्य समीपतः ॥'
मृगयां चरतो राज्ञः शान्तनोस्तु यदृच्छया ॥ १-१४०-१४ (६२८४)
कश्चित्सेनाचरोऽरण्ये मिथुनं तदपश्यत ।
धनुश्च सशरं दृष्ट्वा तथा कृष्णाजिनानि च ॥ १-१४०-१५ (६२८५)
ज्ञात्वा द्विजस्य चापत्ये धनुर्वेदान्तगस्य ह ।
स राज्ञे दर्शयामास मिथुनं सशरं धनुः ॥ १-१४०-१६ (६२८६)
स तदादाय मिथुनं राजा च कृपयान्वितः ।
आजगाम गृहानेव मम पुत्राविति ब्रुवन् ॥ १-१४०-१७ (६२८७)
ततः संवर्धयामास संस्कारैश्चाप्ययोजयत् ।
प्रातिपेयो नरश्रेष्ठो मिथुनं गौतमस्य तत् ॥ १-१४०-१८ (६२८८)
कृपया यन्मया बालाविमौ संवर्धिताविति ।
तस्मात्तयोर्नाम चक्रे तदेव स महीपतिः ।
ग्तस्मात्कृप इति ख्यातः कृपी कन्या च साऽभवत् ॥' १-१४०-१९ (६२८९)
पितापि गौतमस्तत्र तपसा तावविन्दित ।
आगत्य तस्मै गोत्रादि सर्वमाख्यातवांस्तदा ॥ १-१४०-२० (६२९०)
ग्कृपोऽपि च तदा राजन्धनुर्वेदपरोऽभवत् ।'
चतुर्विधं धनुर्वेदं शास्त्राणि विविधानि च ॥ १-१४०-२१ (६२९१)
निखिलेनास्य तत्सर्वं गुह्यमाख्यातवान्पिता ।
सोऽचिरेणैव कालेन परमाचार्यतां गतः ॥ १-१४०-२२ (६२९२)
कृपमाहूय गाङ्गेयस्तव शिष्या इति ब्रुवन् ।
पौत्रान्परिसमाधाय कृपमाराधयत्तदा ॥ १-१४०-२३ (६२९३)
ततोऽधिजग्मुः सर्वे ते धनुर्वेदं महारथाः ।
धृतराष्ट्रात्मजाश्चैव पाण्डवाः सह यादवैः ॥ १-१४०-२४ (६२९४)

वृष्णयश्च नृपाश्चान्ये नानादेशसमागताः ।
ग्कृपमाचार्यमासाद्य परमास्त्रज्ञतां गतः।' १-१४०-२५ (६२९५)
वैशंपायन उवाच ।
विशेषार्थी ततो भीष्मः पौत्राणां विनयेप्सया ॥ १-१४०-२५क्ष् (८२४)
इष्वस्त्रज्ञान्पर्यपृच्छदाचार्यान्वीर्यसंमतान् ।
नाल्पधीर्नामहाभागस्तथा नानस्त्रकोविदः ॥ १-१४०-२६ (६२९६)
नादेवसत्वो विनयेत्कुरूनस्त्रे महावलान् ।
इति संचिन्त्य गाङ्गेयस्तदा भरतसत्तमः ॥ १-१४०-२७ (६२९७)
द्रोणाय वेदविदुषे भारद्वाजाय धमते ।
पाण्डवान्कौरवांश्चैव ददौ शिष्यान्नरर्षभ ॥ १-१४०-२८ (६२९८)
शास्त्रतः पूजितश्चैव सम्यक्तेन महात्मना ।
स भीष्मेण महाभागस्तुष्टोऽस्त्रविदुषां वरः ॥ १-१४०-२९ (६२९९)
प्रतिजग्राह तान्सर्वाञ्शिष्यत्वेन महायशाः ।
शिक्षयामास च द्रोणो धनुर्वेदमशेषतः ॥ १-१४०-३० (६३००)
तेऽचिरेणैव कालेन सर्वशस्त्रविशारदाः ।
बभूवुः कौरवा राजन्पाण्डवाश्चामितौजसः ॥ १-१४०-३१ (६३०१)
जनमेजय उवाच। १-१४०-३२क्ष् (८२५)
कथं समभवद्द्रोणः कथं चास्त्राण्यवाप्तवान् ।
कथं चागात्कुरून्ब्रह्मन्कस्य पुत्रः स वीर्यवान् ॥ १-१४०-३२ (६३०२)
कथं चास्य सुतो जातः सोश्वत्थामाऽस्त्रवित्तमः ।
एतदिच्छाम्यहं श्रोतुं विस्तरेण प्रकीर्तय ॥ १-१४०-३३ (६३०३)
वैशंपायन उवाच। १-१४०-३४क्ष् (८२६)
गङ्गाद्वारं प्रति महान्बभूव भगवानृषिः ।
भरद्वाज इति ख्यातः सततं संशितव्रतः ॥ १-१४०-३४ (६३०४)
सोऽभिषेक्तुं गतो गङ्गां पूर्वमेवागतां सतीम् ।
महर्षिभिर्भरद्वाजो हविर्धाने चरन्पुरा ॥ १-१४०-३५ (६३०५)
ददर्शाप्सरसं साक्षाद्धृताचीमाप्लुतामृषिः ।
रूपयौवनसंपन्नां मददृप्तां मदालसाम् ॥ १-१४०-३६ (६३०६)
तस्या वायुर्नदीतीर वसनं पर्यवर्तत ।
व्यपकृष्टाम्बरां दृष्ट्वा तामृषिश्चकमे ततः ॥ १-१४०-३७ (६३०७)
तत्र संसक्तमनसो भरद्वाजस्य धीमतः ।
हृष्टस्य रेतश्चस्कन्द तदृषिर्द्रोण आदधे ॥ १-१४०-३८ (६३०८)
ततः समभवद्द्रोणः कलशे तस्य धीमतः ।
अध्यगीष्ट स वेदांश्च वेदाङ्गानि च सर्वशः ॥ १-१४०-३९ (६३०९)
अग्नेरस्त्रमुपादाय यदृषिर्वेद काश्यपः ।
अध्यगच्छद्भरद्वाजस्तदस्त्रं देवकार्यतः ॥ १-१४०-४० (६३१०)

अग्निवेश्यं महाभागं भरद्वाजः प्रतापवान् ।
प्रत्यपादयदाग्नेयमस्त्रमस्त्रविदां वरः ॥ १-१४०-४१ (६३११)
ग्कनिष्ठजातं स मुनिर्भ्राता भ्रातरमन्तिके ।
अग्निवेश्यस्तथा द्रोणं तदा भरतसत्तम।'
भारद्वाजं तदाग्नेयं महास्त्रं प्रत्यपादयत् ॥ १-१४०-४२ (६३१२)
भरद्वाजसखा चासीत्पृषतो नाम पार्थिवः ।
तस्यापि द्रुपदो नाम तथा समभवत्सुतः ॥ १-१४०-४३ (६३१३)
स नित्यमाश्रमं गत्वा द्रोणेन सह पार्थिवः ।
चिक्रीडाध्ययनं चैव चकार क्षत्रियर्षभः ॥ १-१४०-४४ (६३१४)
ततो व्यतीते पृषते स राजा द्रुपदोऽभवत् ।
पञ्चालेषु महाबाहुरुत्तरेषु नरेश्वरः ॥ १-१४०-४५ (६३१५)
भरद्वाजोऽपि भगवानारुरोह दिवं तदा ।
तत्रैव च वसन्द्रोणस्तपस्तेपे महातपाः ॥ १-१४०-४६ (६३१६)
वेदवेदाङ्गविद्वान्स तपसा दग्धकिल्बिषः ।
ततः पितृनियुक्तात्मा पुत्रलोभान्महायशाः ॥ १-१४०-४७ (६३१७)
शारद्वतीं ततो भार्यां कृपीं द्रोणोऽन्वविन्दत ।
अग्निहोत्रे च धर्मे च दमे च सतत रताम् ॥ १-१४०-४८ (६३१८)
अलभद्गौतमी पुत्रमश्वत्थामानमेव च ।
स जातमात्रो व्यनदद्यथैवोच्चैःश्रवा हयः ॥ १-१४०-४९ (६३१९)
तच्छ्रुत्वान्तर्हितं भूतमन्तरिक्षस्थमब्रवीत् ।
अश्वस्येवास्य यत्स्थाम नदतः प्रदिशो गतम् ॥ १-१४०-५० (६३२०)
अश्वत्थामैव बालोऽयं तस्मान्नाम्ना भविष्यति ।
सुतेन तेन सुप्रीतो भारद्वाजस्ततोऽभवत् ॥ १-१४०-५१ (६३२१)
तत्रैव च वसन्धीमान्धनुर्वेदपरोऽभवत् ।
स शुश्राव महात्मानं जामदग्न्यं परंतपम् ॥ १-१४०-५२ (६३२२)
सर्वज्ञानविदं विप्रं सर्वशस्त्रभृतां वरम् ।
ब्राह्मणेभ्यस्तदा राजन्दित्सन्तं वसु सर्वशः ॥ १-१४०-५३ (६३२३)
स रामस्य धनुर्वेदं दिव्यान्यस्त्राणि चैव ह ।
श्रउत्वा तेषु मनश्चक्रे नीतिशास्त्रे तथैव च ॥ १-१४०-५४ (६३२४)
ततः स व्रतिभिः शिष्यैस्तपोयुक्तैर्महातपाः ।
वृतः प्रायान्महावाहुर्महेन्द्रं पर्वतोत्तमम् ॥ १-१४०-५५ (६३२५)
ततो महेन्द्रमासाद्य भारद्वाजो महातपाः ।
क्षत्रघ्नं तममित्रघ्नमपश्यद्भृगुनन्दनम् ॥ १-१४०-५६ (६३२६)
ततो द्रोणो वृतः शिष्यैरुपगम्य भृगूद्वहम् ।
आचख्यावात्मनो नाम जन्म चाङ्गिरसः कुले ॥ १-१४०-५७ (६३२७)
निवेद्य शिरसा भूमौ पादौ चैवाभ्यवादयत् ।

ततस्तं सर्वमुत्सृज्य वनं जिगमिषुं तदा ॥ १-१४०-५८ (६३२८)
जामदग्न्यं महात्मानं भारद्वाजोऽब्रवीदिदम् ।
भरद्वाजात्समुत्पन्नं तथा त्वं मामयोनिजम् ॥ १-१४०-५९ (६३२९)
आगतं वित्तकामं मां विद्धि द्रोणं द्विजोत्तम ।
तमब्रवीन्महात्मा स सर्वक्षत्रियमर्दनः ॥ १-१४०-६० (६३३०)
स्वागतं ते द्विजश्रेष्ठ यदिच्छसि वदस्व मे ।
एवमुक्तस्तु रामेण भारद्वाजोऽब्रवीद्वचः ॥ १-१४०-६१ (६३३१)
रामं प्रहरतां श्रेष्ठं दित्सन्तं विविधं वसु ।
अहं धनमनन्तं हि प्रार्थये विपुलव्रत ॥ १-१४०-६२ (६३३२)
राम उवाच। १-१४०-६३क्ष् (८२७)
हिरण्यं मम यच्चान्यद्वसु किंचिदिह स्थितम् ।
ब्राह्मणेभ्यो मया दत्तं सर्वमेतत्तपोधन ॥ १-१४०-६३ (६३३३)
तथैवेयं धरा देवी सागरान्ता सपत्तना ।
कश्यपाय मया दत्ता कृत्स्ना नगरमालिनी ॥ १-१४०-६४ (६३३४)
शरीरमात्रमेवाद्य ममेदमवशेषितम् ।
अस्त्राणि च महार्हाणि शस्त्राणि विविधानि च ॥ १-१४०-६५ (६३३५)
अस्त्राणि वा शरीरं वा ब्रह्मञ्शस्त्राणि वा पुनः ।
वृणीष्व किं प्रयच्छामि तुभ्यं द्रोण वदाशु तत् ॥ १-१४०-६६ (६३३६)
द्रोण उवाच। १-१४०-६७क्ष् (८२८)
अस्त्राणि मे समग्राणि ससंहाराणि भार्गव ।
स प्रयोगरहस्यानि दातुमर्हस्यशेषतः ॥ १-१४०-६७ (६३३७)
ग्एतद्वसु वसूनां हि सर्वेषां विप्रसत्तम।'
तथेत्युक्त्वा ततस्तस्मै प्रादादस्त्राणि भार्गवः ।
सरहस्यव्रतं चैव धनुर्वेदमशेषतः ॥ १-१४०-६८ (६३३८)
प्रतिगृह्य तु तत्सर्वं कृतास्त्रे द्विजसत्तमः ।
प्रियं सखायं सुप्रीतो जगाम द्रुपदं प्रति ॥ ॥ १-१४०-६९ (६३३९)

इति श्रीमन्महाभारते आदिपर्वणि संभवपर्वणि
चत्वारिंशदधिकशततमोऽध्यायः ॥ १४० ॥
Mahabharata - Adi Parva - Chapter Footnotes

१-१४०-२ गौतमो गौत्रतः ॥
१-१४०-१० समर्थनात्सामर्थ्यात् ॥
१-१४०-१८ प्रातिपेयः प्रतीपपुत्रः ॥
१-१४०-१९ संवर्धिताविति आलोच्येति शेषः ॥
१-१४०-२५ विनयेप्सया शिक्षेच्छया ॥

१-१४०-२७ अदेवसत्वः नास्ति देवस्येव सत्वं सामर्थ्यं यस्य सः ॥
१-१४०-३८ द्रोणे द्रोण कलशाख्ये यज्ञियपात्रविशेषे ॥
१-१४०-५० स्थामशब्दः सकारस्य तत्कारादेशेऽश्वत्थामेति ॥
चत्वारिंशदधिकशततमोऽध्यायः ॥
१४० ॥

---

अध्यय१४१
॥ श्रीः ॥
१.१४१. अध्यायः १४१

Mahabharata - Adi Parva - Chapter Topics
द्रुपदसमीपं गत्वा तेन सह स्वस्य सखित्वं कथयतो द्रोणस्य
द्रुपदकृतं भर्त्सनम् ॥ १ ॥
तेन कुपितस्य द्रोणस्य हास्तिन पुरगमनम् ॥ २ ॥
क्रीडाकाले कूपपतितयोर्विदाकन्दुकयोरुद्धरणे अशक्नुवतां कुमाराणां
द्रोणकृतोऽधिक्षेपः ॥ ३ ॥
द्रोणेन वीटामुद्रिकयोः कूपादुद्धारः ॥ ४ ॥
द्रोणवृत्तान्तश्रवणेन भीष्मेण स्वगृहनिवासार्थं द्रोणं प्रति
प्रार्थनम् ॥ ५ ॥

Mahabharata - Adi Parva - Chapter Text

१-१४१-० (६३४०)
वैशंपायन उवाच। १-१४१-०क्ष् (८२९)
ततो द्रुपदमासाद्य भारद्वाजः प्रतापवान् ।
अब्रवीत्पार्थिवं राजन्सखायं विद्धि मामिह ॥ १-१४१-१ (६३४१)
इत्येवमुक्तः सख्या स प्रीतिपूर्वं जनेश्वरः ।
भारद्वाजेन पाञ्चाल्यो नामृष्यत वचोऽस्य तत् ॥ १-१४१-२ (६३४२)
स क्रोधामर्षजिह्मभ्रूः कषायीकृतलोचनः ।
ऐश्वर्यमदसंपन्नो द्रोणं राजाऽब्रवीदिदम् ॥ १-१४१-३ (६३४३)
द्रुपद उवाच। १-१४१-४क्ष् (८३०)
अकृतेयं तव प्रज्ञा ब्रह्मन्नातिसमञ्जसा ।
यन्मां ब्रवीषि प्रसभं सखा तेऽहमिति द्विज ॥ १-१४१-४ (६३४४)
न हि राज्ञामुदीर्णानामेवंभूतैर्नरैः क्वचित् ।
सख्यं भवति मन्दात्मञ्श्रिया हीनैर्धनच्युतैः ॥ १-१४१-५ (६३४५)
सौहृदान्यपि जीर्यन्ते कालेन परिजीर्यतः ।
सौहृदं मे त्वया ह्यासीत्पूर्वं सामर्थ्यबन्धनम् ॥ १-१४१-६ (६३४६)

न सख्यमजरं लोके हृदि तिष्ठति कस्यचित् ।
कामश्चैतन्नाशयति क्रोधो वैनं रहत्युत ॥ १-१४१-७ (६३४७)
मैवं जीर्णमुपास्स्व त्वं सख्यं भवदुपाधिकृत् ।
आसीत्सख्यं द्विजश्रेष्ठ त्वया मेऽर्थनिबन्धनम् ॥ १-१४१-८ (६३४८)
न दरिद्रो वसुमतो नाविद्वान्विदुषः सखा ।
न शूरस्य सखा क्लीबः सखिपूर्वं किमिष्यते ॥ १-१४१-९ (६३४९)
ययोरेव समं वित्तं ययोरेव समं श्रुतम् ।
तयोर्विवाहः सख्यं च न तु पुष्टविपुष्टयोः ॥ १-१४१-१० (६३५०)
नाश्रोत्रियः श्रोत्रियस्य नारथी रथिनः सखा ।
नाराजा पार्थिवस्यापि सखिपूर्वं किमिष्यते ॥ १-१४१-११ (६३५१)
वैशंपायन उवाच। १-१४१-१२क्ष् (८३१)
द्रुपदेनैवमुक्तस्तु भारद्वाजः प्रतापवान् ।
मुहूर्तं चिन्तयित्वा तु मन्युनाऽभिपरिप्लुतः ॥ १-१४१-१२ (६३५२)
स विनिश्चित्य मनसा पाञ्चाल्यं प्रतिबुद्धिमान् ।
गशिष्यैः परिवृतः श्रीमान्पुत्रेण सहितस्तथा ॥' १-१४१-१३ (६३५३)
जगाम कुरुमुख्यानां नागरं नागसाह्वयम् ।
तां प्रतिज्ञां प्रतिज्ञाय यां कर्ता नचिरादिव ॥ १-१४१-१४ (६३५४)
स नागपुरमागम्य गौतमस्य निवेशने ।
भारद्वाजोऽवसत्तत्र प्रच्छन्नं द्विजसत्तमः ॥ १-१४१-१५ (६३५५)
ततोऽस्य तनुजः पार्थान्कृपस्यानन्तरं प्रभुः ।
अस्त्राणि शिक्षयामास नाबुध्यन्त च तं जनाः ॥ १-१४१-१६ (६३५६)
एवं स तत्र गूढात्मा कंचित्कालमुवास ह ।
कुमारास्त्वथ निष्क्रम्य समेता गजसाह्वयात् ॥ १-१४१-१७ (६३५७)
क्रीडन्तो वीटया तत्र वीराः पर्यचरन्मुदा ।
गतेषां संक्रीडमानानामुदपानेऽङ्गुलीयकम् ॥ १-१४१-१८ (६३५८)
पपात धर्मपुत्रस्य वीटा तत्रैव चापतत् ।
गर्ताम्बुना प्रतिच्छन्नं तारारूपमिवाम्बरे ॥ १-१४१-१९ (६३५९)
दृष्ट्वा चैते कुमाराश्च तं यत्नात्पर्यवारयन्।'
ततस्ते यत्नमातिष्ठन्वीटामुद्धर्तुमादृताः ।
न च ते प्रत्ययद्यन्त कर्म वीटोपलब्धये ॥ १-१४१-२० (६३६०)
ततोऽन्योन्यमवैक्षन्त व्रीडयावनताननाः ।
तस्या योगमविदन्तो भृशं चोत्कण्ठिताभवन् ॥ १-१४१-२१ (६३६१)
तेऽपश्यन्ब्राह्मणं श्याममापन्नं पलितं कृशम् ।
कृत्यवन्तमदूरस्थमग्निहोत्रपुरस्कृतम् ॥ १-१४१-२२ (६३६२)
ते तं दृष्ट्वा महातमानमुपगम्य कुमारकाः ।
भग्नोत्साहक्रियात्मानो ब्राह्मणं पर्यवारयन् ॥ १-१४१-२३ (६३६३)

अथ द्रोणः कुमारांस्तान्दृष्ट्वा कत्यवशस्तदा ।
प्रहस्य मन्दं पैशल्यादभ्यभाषत वीर्यवान् ॥ १-१४१-२४ (६३६४)
अहो वो धिग्बलं क्षात्रं धिगेतां वः कृतास्त्रताम् ।
भरतस्यान्वये जाता ये वीटां नाधिगच्छत ॥ १-१४१-२५ (६३६५)
वीटां च मुद्रिकां चैव ह्यहमेतदपि द्वयम् ।
उद्धरेयमिषीकाभिर्भोजनं मे प्रदीयताम् ॥ १-१४१-२६ (६३६६)
ततोऽब्रवीत्तदा द्रोणं कुन्तीपुत्रो युधिष्ठिरः ।
कृपस्यानुमते ब्रह्मन्भिक्षामाप्नुहि शाश्वतीम् ॥ १-१४१-२७ (६३६७)
एवमुक्तः प्रत्युवाच प्रहस्य भरतानिदम्। १-१४१-२८ (६३६८)
द्रोण उवाच ।
एषा मुष्टिरिषीकाणां मयाऽस्त्रेणाभिमन्त्रिता ॥ १-१४१-२८क्ष् (८३२)
अस्या वीर्यं निरीक्षध्वं यदन्येषु न विद्यते ।
वेत्स्यामीषिकया वीटां तामिषीकां तथाऽन्यया ॥ १-१४१-२९ (६३६९)
तामन्यया समायोगे वीटाया ग्रहणं मम। १-१४१-३० (६३७०)
वैशंपायन उवाच ।
ततो यथोक्तं द्रोणेन तत्सर्वं कृतमञ्जसा ॥ १-१४१-३०क्ष् (८३३)
तदवेक्ष्य कुमारास्ते विस्मयोत्फुल्ललोचनाः ।
आश्चर्यमिदमत्यन्तमिति मत्वा वचोऽब्रुवन् ॥ १-१४१-३१ (६३७१)
मुद्रिकामपि विप्रर्षे शीघ्रमेतां समुद्धरथ १-१४१-३२ (६३७२)
वैशंपायन उवाच ।
ततः शरं समादाय धनुश्चापि महायशाः ॥ १-१४१-३२क्ष् (८३४)
शरेण विद्ध्वा मुद्रां तामूर्ध्वमावाहयत्प्रभुः ।
स शरं समुपादाय कूपादङ्गुलिवेष्टनम् ॥ १-१४१-३३ (६३७३)
ददौ ततः कुमाराणां विस्मितानामविस्मितः ।
मुद्रिकामुद्धृतां दृष्ट्वा तमाहुस्ते कुमारकाः ॥ १-१४१-३४ (६३७४)
अभिवन्दामहे ब्रह्मन्नैतदन्येषु विद्यते ।
कोऽसि कस्यासि जानीमो वयं किं करवामहे ॥ १-१४१-३५ (६३७५)
वैशंपायन उवाच। १-१४१-३६क्ष् (८३५)
एवमुक्तस्ततो द्रोणः प्रत्युवाच कुमारकान् ।
आचक्षध्वं च भीष्माय रूपेण च गुणैश्च माम् ॥ १-१४१-३६ (६३७६)
स एव सुमहातेजाः सांप्रतं प्रतिपत्स्यते। १-१४१-३७ (६३७७)
वैशंपायन उवाच ।
तथेत्युक्त्वा च गत्वा च भीष्ममूचुः कुमारकाः ॥ १-१४१-३७क्ष् (८३६)
ब्राह्मणस्य वचः कृत्स्नं तच्च कर्म तथाविधम् ।
भीष्मः श्रुत्वा कुमाराणां द्रोणं तं प्रत्यजानत ॥ १-१४१-३८ (६३७८)
युक्तरूपः स हि गुरुरित्येवमनुचिन्त्य च ।

अथैनमानीय तदा स्वयमेव सुसत्कृतम् ॥ १-१४१-३९ (६३७९)
परिपप्रच्छ निपुणं भीष्मः शस्त्रभृतां वरः ।
हेतुमागमने तच्च द्रोणः सर्वं न्यवेदयत् ॥ १-१४१-४० (६३८०)
द्रोण उवाच। १-१४१-४१क्ष् (८३७)
महर्षेरग्निवेश्यस्य सकाशमहमच्युत ।
अस्त्रार्थमगमं पूर्वं धनुर्वेदजिघृक्षया ॥ १-१४१-४१ (६३८१)
ब्रह्मचारी विनीतात्मा जटिलो बहुलाः समाः ।
अवसं सुचिरं तत्र गुरुशुश्रूषणे रतः ॥ १-१४१-४२ (६३८२)
पाञ्चाल्यो राजपुत्रश्च यज्ञसेनो महाबलः ।
इष्वस्त्रहेतोर्न्यवसत्तस्मिन्नेव गुरौ प्रभुः ॥ १-१४१-४३ (६३८३)
स मे तत्र सखा चासीदुपकारी प्रियश्च मे ।
तेनाहं सह संगम्य वर्तयन्सुचिरं प्रभो ॥ १-१४१-४४ (६३८४)
बाल्यात्प्रभृति कौरव्य सहाध्ययनमेव च ।
स मे सखा सदा तत्र प्रियवादी प्रियंकरः ॥ १-१४१-४५ (६३८५)
अब्रवीदिति मां भीष्म वचनं प्रीतिवर्धनम् ।
अहं प्रियतमः पुत्रः पितुर्द्रोण महात्मनः ॥ १-१४१-४६ (६३८६)
अभिषेक्ष्यति मां राज्ये स पाञ्चाल्यो यदा तदा ।
तद्भोज्यं भवता राज्यमर्धं सत्येन ते शपे ॥ १-१४१-४७ (६३८७)
मम भोगाश्च वित्तं च त्वदधीनं सुखानि च ।
एवमुक्त्वाऽथ वव्राज कृतास्त्रः पूजितो मया ॥ १-१४१-४८ (६३८८)
तच्च वाक्यमहं नित्यं मनसा धारयंस्तदा ।
सोऽहं पितृनियोगेन पुत्रलोभाद्यशस्विनीम् ॥ १-१४१-४९ (६३८९)
शारद्वतीं महाप्रज्ञामुपयेमे महाव्रताम् ।
अग्निहोत्रे च सत्रे च दमे च सततं रताम् ॥ १-१४१-५० (६३९०)
लेभे च गौतमी पुत्रमश्वत्थामानमौरसम् ।
भीमविक्रमकर्माणमादित्यसमतेजसम् ॥ १-१४१-५१ (६३९१)
पुत्रेण तेन प्रीतोऽहं भरद्वाजो मया यथा ।
गोक्षीरं पिबतो दृष्ट्वा धनिनस्तत्र पुत्रकान् ।
अश्वत्थामारुदद्बालस्तन्मे संदेहयद्दिशः ॥ १-१४१-५२ (६३९२)
न स्नातकोऽवसीदेत वर्तमानः स्वकर्मसु ।
इति संचिन्त्य मनसा तं देशं बहुशो भ्रमन् ॥ १-१४१-५३ (६३९३)
विशुद्धमिच्छन्गाङ्गेय धर्मोपेतं प्रतिग्रहम् ।
अन्तादन्तं परिक्रम्य नाध्यगच्छं पयस्विनीम् ॥ १-१४१-५४ (६३९४)
यवपिष्टोदकेनैनं लोभयेयं कुमारकम् ।
पीत्वा पिष्टरसं बालः क्षीरं पीतं मयाऽपि च ॥ १-१४१-५५ (६३९५)
ननर्तोत्थाय कौरव्य हृष्टो बाल्याद्विमोहितः ।

तं दृष्ट्वा नृत्यमानं तु बालैः परिवृतं सुतम् ॥ १-१४१-५६ (६३९६)
हास्यतामुपसंप्राप्तं कश्मलं तत्र मेऽभवत् ।
द्रोणं धिगस्त्वधनिनं यो धनं नाधिगच्छति ॥ १-१४१-५७ (६३९७)
पिष्टोदकं सुतो यस्य पीत्वा क्षीरस्य तृष्णया ।
नृत्यतिस्म मुदाविष्टः क्षीरं पीतं मयाऽप्युत ॥ १-१४१-५८ (६३९८)
इति संभाषतां वाचं श्रुत्वा मे बुद्धिरच्यवत् ।
आत्मानं चात्मना गर्हन्मनसेदं व्यचिन्तयम् ॥ १-१४१-५९ (६३९९)
अपि चाहं पुरा विप्रैर्वर्जितो गर्हितो वसे ।
परोपसेवां पापिष्ठां न च कुर्यां धनेप्सया ॥ १-१४१-६० (६४००)
इति मत्वा प्रियं पुत्रं भीष्मादाय ततो ह्यहम् ।
पूर्वस्नेहानुरागित्वात्सदारः सौमकिं गतः ॥ १-१४१-६१ (६४०१)
अभिषिक्तं तु श्रुत्वैव कृतार्थोऽस्मीति चिन्तयन् ।
प्रियं सखायं सुप्रीतो राज्यस्थं समुपागमम् ॥ १-१४१-६२ (६४०२)
संस्मरन्सङ्गमं चैव वचनं चैव तस्य तत् ।
ततो द्रुपदमागम्य सखइपूर्वमहं प्रभो ॥ १-१४१-६३ (६४०३)
अब्रुवं पुरुषव्याघ्र सखायं विद्धि मामिति ।
उपस्थितस्तु द्रुपदं सखिवच्चास्मि सङ्गतः ॥ १-१४१-६४ (६४०४)
स मां निराकारमिव प्रहसन्निदमब्रवीत् ।
अकृतेयं तव प्रज्ञा ब्रह्मन्नातिसमञ्जसा ॥ १-१४१-६५ (६४०५)
यदात्थ मां त्वं प्रसभं सखा तेऽहमिति द्विज ।
संगतनीह जीर्यन्ति कालेन परिजीर्यतः ॥ १-१४१-६६ (६४०६)
सौहृदं मे त्वया ह्यासीत्पूर्वं सामर्थ्यबन्धनम् ।
नाश्रोत्रियः श्रोत्रियस्य नारथी रथिनः सखा ॥ १-१४१-६७ (६४०७)
साम्याद्धि सख्यं भवति वैषम्यान्नोपपद्यते ।
न सख्यमजरं लोके विद्यते जातु कस्यचित् ॥ १-१४१-६८ (६४०८)
कामो वैनं विहरति क्रोधो वैनं रहत्युत ।
मैवं जीर्णमुपास्स्व त्वं सख्यं भवदुपाधिकृत् ॥ १-१४१-६९ (६४०९)
आसीत्सख्यं द्विजश्रेष्ठ त्वया मेऽर्थनिबन्धनम् ।
नह्यनाढ्यः सखाऽऽढ्यस्य नाविद्वान्विदुषः सखा ॥ १-१४१-७० (६४१०)
न शूरस्य सखा क्लीबः सखिपूर्वं किमिष्यते ।
न हि राज्ञामुदीर्णानामेवं भूतैर्नरैः क्वचित् ॥ १-१४१-७१ (६४११)
सख्यं भवति मन्दात्मञ्छ्रिया हीनैर्धनच्युतैः ।
नाश्रोत्रियः श्रोत्रियस्य नारथी रथिनः सखा ॥ १-१४१-७२ (६४१२)
नाराजा पार्थिवस्यापि सखिपूर्वं किमिष्यते ।
अहं त्वया न जानामि राज्यार्थे संविदं कृताम् ॥ १-१४१-७३ (६४१३)
एकरात्रं तु ते ब्रह्मन्कामं दास्यामि भोजनम् ।

एवमुक्तस्त्वहं तेन सदारः प्रस्थितस्तदा ॥ १-१४१-७४ (६४१४)
तां प्रतिज्ञां प्रतिज्ञाय यां कर्ताऽस्म्यचिरादिव ।
द्रुपदेनैवमुक्तोऽहं मन्युनाऽभिपरिप्लुतः ॥ १-१४१-७५ (६४१५)
अभ्यागच्छं कुरून्भीष्म शिष्यैरर्थी गुणान्वितैः ।
ततोऽहं भवतः कामं संवर्धयितुमागतः ॥ १-१४१-७६ (६४१६)
इदं नागपुरं रम्यं ब्रूहि किं करवाणि ते। १-१४१-७७ (६४१७)
वैशंपायन उवाच ।
एवमुक्तस्तदा भीष्मो भारद्वाजमभाषत ॥ १-१४१-७७क्ष् (८३८)
भीष्म उवाच। १-१४१-७८क्ष् (८३९)
अपज्यं क्रियतां चापं साध्वस्त्रं प्रतिपादय ।
भुङ्क्ष भोगान्भृशं प्रीतः पूज्यमानः कुरुक्षये ॥ १-१४१-७८ (६४१८)
कुरूणामस्ति यद्वित्तं राज्यं चेदं सराष्ट्रकम् ।
त्वमेव परमो राजा सर्वे वाक्यकरास्तव ॥ १-१४१-७९ (६४१९)
१-१४१-८० (६४२०)
यच्च ते प्रार्थितं ब्रह्मन्कृतं तदिति चिन्त्यताम् ।
दिष्ट्या प्राप्तोऽसि विप्रर्षे महान्मेऽनुग्रहः कृतः ॥
Mahabharata - Adi Parva - Chapter Footnotes

१-१४१-४ अकृता असंस्कृता ॥
१-१४१-७ रहति सख्याच्च्यावयति ॥
१-१४१-१३ प्रतिबुद्धिमान् प्रतीवपुद्धिमान् ॥
१-१४१-१८ वीटया कन्दुकेन ॥
१-१४१-२४ पैशल्यात् कौशल्यात् ॥
१-१४१-२७ गौतमीं च महातेजा भिक्षामश्नीत माचिरम् इति पाठान्तरम् ॥
१-१४१-५२ दिशः संदेहयत् दिङ्मोहमनयत् । अडभाव आर्षः ॥
१-१४१-५३ स्नातको यः कश्चिदल्पगोधनः स्वधर्मलोपान्नावसीदेताततो
बहुगोधनवतो ब्राह्मणस्य प्रतिग्रहमिच्छन् ॥
१-१४१-५४ अन्तादन्तं देशाद्देशम् ॥
१-१४१-६० वसे उपवसे ॥
१-१४१-७८ अधिज्यं कुरुवीराणां इति पाठान्तरम् । कुरुक्षये कुरुगृहे ॥
एकचत्वारिंशदधिकशततमोऽध्यायः ॥
१४१ ॥

---

अध्यय१४२
॥ श्रीः ॥
१.१४२. अध्यायः १४२

Mahabharata - Adi Parva - Chapter Topics

द्रोणेनास्त्रशिक्षायां कुरुपाण्डवानां शिष्यत्वेनाङ्गीकारः ॥ १ ॥
विद्याभ्याससमाप्त्यनन्तरं बहुशः परीक्षितस्यार्जुनस्य द्रोणाचार्याद्विशेषशिक्षाप्राप्तिः ॥ २ ॥
मृण्मयद्रोणप्रतिमाराधनेन एकलव्यस्य धनुर्वेदप्रतिभानं ॥ ३ ॥
मृगयार्थं गतेषु कुरुपाण्डवेषु एकलव्येन बाणैः शुनो मुखपूरणम् ॥ ४ ॥
अर्जुनप्रार्थनया द्रोणेनैकलव्यं प्रतिगम्य गुरुदक्षिणात्वेन दक्षिणाङ्गुष्ठ याचनम् ॥ ५ ॥
एकलव्येन दक्षिणाङ्गुष्ठस्य छित्वा दानम् ॥ ६ ॥
द्रोणेन शिष्यपरीक्षा ॥ ७ ॥
शिष्यपरीक्षायां युधिष्ठिरा दीनां निराकरणम् ॥ ८ ॥

Mahabharata - Adi Parva - Chapter Text

१-१४२-० (६४२१)
ग्वैशंपायन उवाच। १-१४२-०क्ष् (८४०)
प्रतिजग्राह तं भीष्मो गुरुं पाण्डुसुतैः सह ।
पौत्रानादाय तान्सर्वान्वसूनि विविधानि च ॥ १-१४२-१ (६४२२)
शिष्य इति ददौ राजन्द्रोणाय विधिपूर्वकम् ।
तदा द्रोणोऽब्रवीद्वाक्यं भीष्मं बुद्धिमतां वरम् ॥ १-१४२-२ (६४२३)
कृपस्तिष्ठति चाचार्यः शस्त्रज्ञः प्राज्ञसंमतः ।
मयि तिष्ठति चेद्विप्रो वैमनस्यं गमिष्यति ॥ १-१४२-३ (६४२४)
युष्मान्किंचिच्च याचित्वा धनं संगृह्य हर्षितः ।
स्वमाश्रमपदं राजन्गमिष्यामि यथागतम् ॥ १-१४२-४ (६४२५)
एवमुक्ते तु विप्रेन्द्रं भीष्मः प्रहरतां वरः ।
अब्रवीद्द्रोणमाचार्यमुख्यं शस्त्रविदां वरम् ॥ १-१४२-५ (६४२६)
कृपस्तिष्ठतु पूज्यश्च भर्तव्यश्च मया सदा ।
त्वं गुरुर्भव पौत्राणामाचार्यस्त्वं मतो मम ।
प्रतिगृह्णीष्व पुत्रांस्त्वमस्त्रज्ञान्कुरु वै सदा ॥' १-१४२-६ (६४२७)
वैशंपायन उवाच। १-१४२-७क्ष् (८४१)
ततः संपूजितो द्रोणो भीष्मेण द्विपदां वरः ।
विशश्राम महातेजाः पूजितः कुरुवेश्मनि ॥ १-१४२-७ (६४२८)
विश्रान्तेऽथ गुरौ तस्मिन्पौत्रानादाय कौरवान् ।
शिष्यत्वेन ददौ भीष्मो वसूनि विविधानि च ॥ १-१४२-८ (६४२९)
गृहं च सुपरिच्छन्नं धनधान्यसमाकुलम् ।

भारद्वाजाय सुप्रीतः प्रत्यपादयत प्रभुः ॥ १-१४२-९ (६४३०)
स ताञ्शिष्यान्महेष्वासः प्रतिजग्राह कौरवान् ।
पाण्डवान्धार्तराष्ट्रांश्च द्रोणो मुदितमानसः ॥ १-१४२-१० (६४३१)
प्रतिगृह्य च तान्सर्वान्द्रोणो वचनमब्रवीत् ।
रहस्येकः प्रतीतात्मा कृतोपसदनांस्तथा ॥ १-१४२-११ (६४३२)
द्रोण उवाच। १-१४२-१२क्ष् (८४२)
कार्यं मे काङ्क्षितं किंचिद्धृदि संपरिवर्तते ।
कृतास्त्रैस्तत्प्रदेयं मे तदेतद्वदतानघाः ॥ १-१४२-१२ (६४३३)
वैशंपायन उवाच। १-१४२-१३क्ष् (८४३)
तच्छ्रुत्वा कौरवेयास्ते तूष्णीमासन्विशांपते ।
अर्जुनस्तु ततः सर्वं प्रतिजज्ञे परन्तप ॥ १-१४२-१३ (६४३४)
ततोऽर्जुनं तदा मूर्ध्नि समाघ्राय पुनः पुनः ।
प्रीतिपूर्वं परिष्वज्य प्ररुरोद मुदा तदा ॥ १-१४२-१४ (६४३५)
ग्अश्वत्थामानमाहूय द्रोणो वचनमब्रवीत् ।
सखायं विद्धि ते पार्थं मया दत्तः प्रगृह्यताम् ॥ १-१४२-१५ (६४३६)
साधुसाध्विति तं पार्थः परिष्वज्येदमब्रवीत् ।
अद्यप्रभृति विप्रेन्द्र परवानस्मि धर्मतः ॥ १-१४२-१६ (६४३७)
शिष्योऽहं त्वत्प्रसादेन जीवामि द्विजसत्तम ।
इत्युक्त्वा तु तदा पार्थः पादौ जग्राह पाण्डवः'॥ १-१४२-१७ (६४३८)
ततो द्रोणः पाण्डुपुत्रानस्त्राणि विविधानि च ।
ग्राहयामास दिव्यानि मानुषाणि च वीर्यवान् ॥ १-१४२-१८ (६४३९)
राजपुत्रास्तथा चान्ये समेत्य भरतर्षभ ।
अभिजग्मुस्ततो द्रोणमस्त्रार्थे द्विजसत्तमम् ॥ १-१४२-१९ (६४४०)
वृष्णयश्चान्धकाश्चैव नानादेश्याश्च पार्थिवाः ।
सूतपुत्रश्च राधेयो गुरुं द्रोणमियात्तदा ॥ १-१४२-२० (६४४१)
स्पर्धमानस्तु पार्थेन सूतपुत्रोऽत्यमर्षणः ।
दुर्योधनं समाश्रित्य सोऽवमन्यत पाण्डवान् ॥ १-१४२-२१ (६४४२)
अभ्ययात्स ततो द्रोणं धनुर्वेदचिकीर्षया ।
शिक्षाभुजवलोद्योगैस्तेषु सर्वेषु पाण्डवः ॥ १-१४२-२२ (६४४३)
अस्त्रविद्यानुरागाच्च विशिष्टोऽभवदर्जुनः ।
तुल्येष्वस्त्रप्रयोगेषु लाघवे सौष्टवेषु च ॥ १-१४२-२३ (६४४४)
सर्वेषामेव शिष्याणां बभूवाभ्यधिकोऽर्जुनः ।
ऐन्द्रिमप्रतिमं द्रोण उपदेशेष्वमन्यत ॥ १-१४२-२४ (६४४५)
एवं सर्वकुमाराणामिष्वस्त्रं प्रत्यपादयत् ।
कमण्डलुं च सर्वेषां प्रायच्छच्चिरकारणात् ॥ १-१४२-२५ (६४४६)
पुत्राय च ददौ कुम्भमविलम्बनकारणात् ।

यावत्ते नोपगच्छ्ेत तावदस्मै परां क्रियाम् ॥१-१४२-२६ (६४४७)
द्रोण आचष्ट पुत्राय कर्म तज्जिष्णुरौहत ।
ततः स वारुणास्त्रेण पूरयित्वा कमण्डलुम् ॥१-१४२-२७ (६४४८)
सममाचार्यपुत्रेण गुरुमभ्येति फाल्गुनः ।
आचार्यपुत्रात्तस्मात्तु विशेषोपचयेऽपृथक् ॥१-१४२-२८ (६४४९)
न व्यहीयत मेधावी पार्थोऽप्यस्त्रविदां वरः ।
अर्जुनः परमं यत्नमातिष्ठद्गुरुपूजने ॥१-१४२-२९ (६४५०)
अस्त्रे च परमं योगं प्रियो द्रोणस्य चाभवत् ।
तं दृष्ट्वा नित्यमुद्युक्तमिष्वस्त्रं प्रति फाल्गुनम् ॥१-१४२-३० (६४५१)
आहूय वचनं द्रोणो रहः सूदमभाषत ।
अन्धकारेऽर्जुनायान्नं न देयं ते कदाचन ।
न चाख्येयमिदं चापि मद्वाक्यं विजयेत्वया ॥ १-१४२-३१ (६४५२)
ततः कदाचिद्भुञ्जाने प्रववौ वायुरर्जुने ।
तेन तत्र प्रदीपः स दीप्यमानो विलोपितः ॥१-१४२-३२ (६४५३)
भुक्त एव तु कौन्तेयो नास्यादन्यत्र वर्तते ।
हस्तस्तेजस्विनस्तस्य अनुग्रहणकारणात् ॥१-१४२-३३ (६४५४)
तदभ्यासकृतं मत्वा रात्रावपि स पाण्डवः ।
योग्यां चक्रे महाबाहुर्धनुषा पाण्डुनन्दनः ॥१-१४२-३४ (६४५५)
तस्य ज्यातलनिर्घोषं द्रोणः शुश्राव भारत ।
उपेत्य चैनमुत्थाय परिष्वज्येदमब्रवीत् ॥१-१४२-३५ (६४५६)
द्रोण उवाच।१-१४२-३६क्ष् (८४४)
प्रयतिष्ये तथा कर्तुं यथा नान्यो धनुर्धरः ।
त्वत्समो भविता लोके सत्यमेतद्ब्रवीमि ते ॥१-१४२-३६ (६४५७)
वैशंपायन उवाच।१-१४२-३७क्ष् (८४५)
ततो द्रोणोऽर्जुनं भूयो हयेषु च गजेषु च ।
रथेषु भूमावपि च रणशिक्षामशिक्षयत् ॥१-१४२-३७ (६४५८)
गदायुद्धेऽसिचर्यायां तोमरप्रासशक्तिषु ।
द्रोणः संकीर्णयुद्धे च शिक्षयामास कौरवान् ॥१-१४२-३८ (६४५९)
तस्य तत्कौशलं श्रुत्वा धनुर्वेदजिघृक्षवः ।
सजानो राजपुत्राश्च समाजग्मुः सहस्रशः ॥१-१४२-३९ (६४६०)
ग्तान्सर्वाञ्शिक्षयामास द्रोणः शस्त्रभृतां वरः।'
ततो निषादराजस्य हिरण्यधनुषः सुतः ।
एकलव्यो महाराज द्रोणमभ्याजगाम ह ॥ १-१४२-४० (६४६१)
न स तं प्रतिजग्राह नैषादिरिति चिन्तयन् ।
शिष्यं धनुषि धर्मज्ञस्तेषामेवान्ववेक्षया ॥१-१४२-४१ (६४६२)
ग्द्रोण उवाच।१-१४२-४२क्ष् (८४६)

शिष्योऽसि मम नैषादे प्रयोगे बलत्तरः ।
निवर्तस्व गृहानेव अनुज्ञातोऽसि नित्यशः ॥१-१४२-४२ (६४६३)
वैशंपायन उवाच।' १-१४२-४३क्ष् (८४७)
स तु द्रोणस्य शिरसा पादौ गृह्य परन्तपः ।
अरण्यमनुसंप्राप्य कृत्वा द्रोणं महीमयम् ॥१-१४२-४३ (६४६४)
तस्मिन्नाचार्यवृत्तिं च परमामास्थितस्तदा ।
इष्वस्त्रे योगमातस्थे परं नियममास्थितः ॥१-१४२-४४ (६४६५)
परया श्रद्धयोपेतो योगेन परमेण च ।
विमोक्षादानसन्धाने लघुत्वं परमाप सः ॥१-१४२-४५ (६४६६)
ग्लाघवं चास्त्रयोगं च नचिरात्प्रत्यपद्यत।'
अथ द्रोणाभ्यनुज्ञाताः कदाचित्कुरुपाण्डवाः ।
रथैर्विनिर्ययुः सर्वे मृगयामरिमर्दनाः ॥ १-१४२-४६ (६४६७)
तत्रोपकरणं गृह्य नरः कश्चिद्यदृच्छया ।
राजन्ननुजगामैकः श्वानमादाय पाण्डवान् ॥१-१४२-४७ (६४६८)
तेषां विचरतां तत्र तत्तत्कर्मचिकीर्षया ।
श्वाचरन्स पथा क्रीडन्नैषादिं प्रति जग्मिवान् ॥१-१४२-४८ (६४६९)
स कृष्णमलदिग्धाङ्गं कृष्णाजिनजटाघरम् ।
नैषादिं श्वा समालक्ष्य भषंस्तस्थौ तदन्तिके ॥१-१४२-४९ (६४७०)
तदा तस्याथ भषतः शुनः सप्त शरान्मुखे ।
लाघवं दर्शन्नस्त्रे मुमोच युगपद्यथा ॥१-१४२-५० (६४७१)
स तु श्वा शरपूर्णास्यः पाण्डवानाजगाम ह ।
तं दृष्ट्वा पाण्डवा वीराः परं विस्मयमागताः ॥१-१४२-५१ (६४७२)
लाघवं शब्धवेधित्वं दृष्ट्वा तत्परमं तदा ।
प्रेक्ष्य तं व्रीडिताश्चासन्प्रशशंसुश्च सर्वशः ॥१-१४२-५२ (६४७३)
तं ततोऽन्वेषमाणास्ते वने वननिवासिनम् ।
ददृशुः पाण्डवा राजन्नस्यन्तमनिशं शरान् ॥१-१४२-५३ (६४७४)
न चैनमभ्यजानंस्ते तदा विकृतदर्शनम् ।
तथैनं परिपप्रच्छुः को भवान्कस्य वेत्युत ॥१-१४२-५४ (६४७५)
एकलव्य उवाच।१-१४२-५५क्ष् (८४८)
निषादाधिपतेर्वीरा हिरण्यधनुषः सुतम् ।
द्रोणशिष्यं च मां वित्त धुर्वेदकृतश्रमम् ॥१-१४२-५५ (६४७६)
वैशंपायन उवाच।१-१४२-५६क्ष् (८४९)
ते तमाज्ञाय तत्त्वेन पुनरागम्य पाण्डवाः ।
यथा वृत्तं वने सर्वं द्रोणायाचख्युरद्भुतम् ॥१-१४२-५६ (६४७७)
कौन्तेयस्त्वर्जुनो राजन्नेकलव्यमनुस्मरन् ।
रहो द्रोणं समासाद्य प्रणयादिदमब्रवीत् ॥१-१४२-५७ (६४७८)

नन्वहं परिरभ्यैकः प्रीतिपूर्वमिदं वचः ।
भवतोक्तो न मे शिष्यस्त्वद्विशिष्टो भविष्यति ॥१-१४२-५८ (६४७९)
अथ कस्मान्मद्विशिष्टो लोकादपि च वीर्यवान् ।
अन्योऽस्ति भवतः शिष्यो निषादाधिपतेः सुतः। १-१४२-५९ (६४८०)
वैशंपायन उवाच।१-१४२-६०क्ष् (८५०)
मुहूर्तमिव तं द्रोणश्चिन्तयित्वा विनिश्चयम् ।
सव्यसाचिनमादाय नैषादिं प्रति जग्मिवान् ॥१-१४२-६० (६४८१)
ददर्श मलदिग्धाङ्गं जटिलं चीरवाससम् ।
एकलव्यं धनुष्पाणिमस्यन्तमनिशं शरान् ॥१-१४२-६१ (६४८२)
एकलव्यस्तु तं दृष्ट्वा द्रोणमायान्तमन्तिकात् ।
अभिगम्योपसंगृह्य जगाम शिरसा महीम् ॥१-१४२-६२ (६४८३)
पूजयित्वा ततो द्रोणं विधिवत्स निषादजः ।
निवेद्य शिष्यमात्मानं तस्थौ प्राञ्जलिरग्रतः ॥१-१४२-६३ (६४८४)
ततो द्रोणोऽब्रवीद्राजन्नेकलव्यमिदं वचः ।
यदि शिष्योऽसि मे वीर वेतनं दीयतां मम ॥१-१४२-६४ (६४८५)
एकलव्यस्तु तच्छ्रुत्वा प्रीयमाणोऽब्रवीदिदम् ।
किं प्रयच्छामि भगवन्नाज्ञापयतु मां गुरुः ॥१-१४२-६५ (६४८६)
न हि किंचिददेयं मे गुरवे ब्रह्मवित्तम। १-१४२-६६ (६४८७)
वैशंपायन उवाच ।
तमब्रवीत्त्वयाङ्गुष्ठो दक्षिणो दीयतामिति ॥ १-१४२-६६क्ष् (८५१)
एकलव्यस्तु तच्छ्रुत्वा वचो द्रोणस्य दारुणम् ।
प्रतिज्ञामात्मनो रक्षन्सत्ये च नियतः सदा ॥१-१४२-६७ (६४८८)
तथैव हृष्टवदनस्तथैवादीनमानसः ।
छित्त्वाऽविचार्य तं प्रादाद्द्रोणायाङ्गुष्ठमात्मनः ॥१-१४२-६८ (६४८९)
ततः शरं तु नैषादिरङ्गुलीभिर्व्यकर्षत ।
न तथा च स शीघ्रोऽभूद्यथा पूर्वं नराधिप ॥१-१४२-६९ (६४९०)
ततोऽर्जुनः प्रीतमना बभूव विगतज्वरः ।
द्रोणश्च सत्यवागासीन्नान्योऽभिभविताऽर्जुनं ॥१-१४२-७० (६४९१)
द्रोणस्य तु तदा शिष्यौ गदायोग्यौ बभूवतुः ।
दुर्योधनश्च भीमश्च सदा संरब्धणानसौ ॥१-१४२-७१ (६४९२)
अश्वत्थामा रहस्येषु सर्वेष्वभ्यधिकोऽभवत् ।
तथाऽतिपुरुषानन्यान्त्सारुकौ यमजावुभौ ॥१-१४२-७२ (६४९३)
युधिष्ठिरो रथश्रेष्ठः सर्वत्र तु धनञ्जयः ।
प्रथितः सागरान्तायां रथयूथपयूथपः ॥१-१४२-७३ (६४९४)
बुद्धियोगबलोत्साहः सर्वास्त्रेषु च निष्ठितः ।
अस्त्रे गुर्वनुरागे च विशिष्टोऽभवदर्जुनः ॥१-१४२-७४ (६४९५)

तुल्येष्वस्त्रोपदेशेषु सौष्ठवेन च वीर्यवान् ।
एकः सर्वकुमाराणां बभूवातिरथोऽर्जुनः ॥ १-१४२-७५ (६४९६)
प्राणाधिकं भीमसेनं कृतविद्यं धनञ्जयम् ।
धार्तराष्ट्रा दुरात्मानो नामृष्यन्त परस्परम् ॥ १-१४२-७६ (६४९७)
तांस्तु सर्वान्समानीय सर्वविद्यास्त्रशिक्षितान् ।
द्रोणः प्रहरणज्ञाने जिज्ञासुः पुरुषर्षभः ॥ १-१४२-७७ (६४९८)
कृत्रिमं भासमारोप्य वृक्षाग्रे शिल्पिभिः कृतम् ।
अविज्ञातं कुमाराणां लक्ष्यभूतमुपादिशत् ॥ १-१४२-७८ (६४९९)
द्रोण उवाच। १-१४२-७९क्ष् (८५२)
शीघ्रं भन्तः सर्वेऽपि धनूंष्यादाय सर्वशः ।
भासमेतं समुद्दिश्य तिष्ठध्वं सन्धितेषतः ॥ १-१४२-७९ (६५००)
मद्वाक्यसमकालं तु शिरोऽस्य विनिपात्यताम् ।
एकैकशो नियोक्ष्यामि तथा कुरुत पुत्रकाः ॥ १-१४२-८० (६५०१)
वैशंपायन उवाच। १-१४२-८१क्ष् (८५३)
ततो युधिष्ठिरं पूर्वमुवाचाङ्गिरसां वरः ।
संधत्स्व बामं दुर्धर्ष मद्वाक्यान्ते विमुञ्चतम् ॥ १-१४२-८१ (६५०२)
ततो युधिष्ठिरः पूर्वं धनुर्गृह्य परन्तपः ।
तस्थौ भासं समुद्दिश्य गुरुवाक्यप्रचोदितः ॥ १-१४२-८२ (६५०३)
ततो विततधन्वानं द्रोणस्तं कुरुनन्दनम् ।
स मुहूर्तादुवाचेदं वचनं भरतर्षभ ॥ १-१४२-८३ (६५०४)
पश्यसि त्वं द्रुमाग्रस्थं भासं नरवरात्मज ।
पश्यामीत्येवमाचार्यं प्रत्युवाच युधिष्ठिरः ॥ १-१४२-८४ (६५०५)
स मुहूर्तादिव पुनर्द्रोणस्तं प्रत्यभाषत ।
अथ वृक्षमिमं मां वा भ्रातॄन्वाऽपि प्रपश्यसि ॥ १-१४२-८५ (६५०६)
तमुवाच स कौन्तेयः पश्याम्येनं नवस्पतिम् ।
भन्तं च तथा भ्रातॄन्भासं चेति पुनःपुनः ॥ १-१४२-८६ (६५०७)
तमुवाचापसर्पेति द्रोणोऽप्रीतमना इव ।
नैतच्छक्यं त्वया वेद्धुं लक्ष्यमित्येव कुत्सयन् ॥ १-१४२-८७ (६५०८)
ततो दुर्योधनादींस्तान्धार्तराष्ट्रान्महायशाः ।
तेनैव क्रमयोगेन जिज्ञासुः पर्यपृच्छत ॥ १-१४२-८८ (६५०९)
अन्यांश्च शिष्यान्भीमादीन्राज्ञश्चैवान्यदेशजान् ।
यदा च सर्वे तत्सर्वं पश्याम इति कुत्सिताः ॥ ॥ १-१४२-८९ (६५१०)

इति श्रीमन्महाभारते आदिपर्वणि संभवपर्वणि
द्विचत्वारिंशदधिकशततमोऽध्यायः ॥ १४२ ॥

Mahabharata - Adi Parva - Chapter Footnotes

१-१४२-१२ यत्प्रदेयं मे इति पाठान्तरम् ॥
१-१४२-२२ द्रोणमभ्ययात् द्रोणतुल्योऽभवत् ॥
१-१४२-२७ औहत तर्कितवान् ॥
१-१४२-२८ अपृथक् सहैवास्ते ॥
१-१४२-२९ अतो न व्यहीयत न विहीनोऽभूत् ॥
१-१४२-३० योगमैकाग्र्यम् ॥
१-१४२-३३ अनुग्रहणमभ्यासः ॥
१-१४२-३४ योग्यामभ्यासम् ॥
१-१४२-३५ उत्थायोपेत्येति क्रमः ॥
१-१४२-४१ तेषामन्ववेक्षया तेभ्योऽधिको माभूदिति बुद्ध्या ॥
१-१४२-४३ महीमयं मृण्मयम् ॥
१-१४२-४४ इष्वस्त्रे इषुप्रयोगे योगमैकाग्र्यम् ॥
१-१४२-४५ लघुत्वं शीघ्रप्रयोक्तृत्वम् ॥
१-१४२-६४ वेतनं गुरुदक्षिणारूपम् ॥
१-१४२-७० नाधिकोऽन्योऽर्जुनादभूत इति पाठान्तरम् ॥
१-१४२-७१ गदायोग्यौ गदायुद्धेऽभ्यासवन्तौ ॥
१-१४२-७२ त्सारुकौ खड्गयुद्धे कुशलौ ॥
१-१४२-७९ भासं पक्षिविशेषम् ॥
द्विचत्वारिंशदधिकशततमोऽध्यायः ॥
१४२ ॥

---

अध्यय१४३
॥ श्रीः ॥
१.१४३. अध्यायः १४३

Mahabharata - Adi Parva - Chapter Topics
अर्जुनेन लक्ष्यभूतभासच्छेदः ॥ १ ॥
स्नानार्थं गङ्गामवतीर्णस्य द्रोणस्य ग्राहेण जङ्घायां ग्रहणम् ॥ २ ॥
अर्जुनेन ग्राहहननम् ॥ ३ ॥
अर्जुनस्य ब्रह्मशिरोस्त्रलाभः ॥ ४ ॥

Mahabharata - Adi Parva - Chapter Text

१-१४३-० (६५११)
वैशंपायन उवाच। १-१४३-०क्ष् (८५४)
ततो धनञ्जयं द्रोणः स्मयमानोऽभ्यभाषत ।

त्वयेदानीं प्रहर्तव्यमेतल्लक्ष्यं विलोक्यताम् ॥१-१४३-१ (६५१२)
मद्वाक्यसमकालं ते मोक्तव्योऽत्र भवेच्छरः ।
वितत्य कार्मुकं पुत्र तिष्ठ तावन्मुहूर्तकम् ॥१-१४३-२ (६५१३)
एवमुक्तः सव्यसाची मण्डलीकृतकार्मुकः ।
तस्थौ भासं समुद्दिश्य गुरुवाक्यप्रचोदितः ॥१-१४३-३ (६५१४)
मुहूर्तादिव तं द्रोणस्तथैव समभाषत ।
पश्यस्येनं स्थितं भासं द्रुमं मामपि चार्जुन ॥१-१४३-४ (६५१५)
पश्याम्येकं भासमिति द्रोणं पार्थोऽभ्यभाषत ।
न तु वृक्षं भवन्तं वा पश्यामीति च भारत ॥१-१४३-५ (६५१६)
ततः प्रीतमना द्रोणो मुहूर्तादिव तं पुनः ।
प्रत्यभाषत दुर्धर्षः पाण्डवानां महारथम् ॥१-१४३-६ (६५१७)
भासं पश्यसि यद्येनं तथा ब्रूहि पुनर्वचः ।
शिरः पश्यामि भासस्य न गात्रमिति सोऽब्रवीत् ॥१-१४३-७ (६५१८)
अर्जुनेनैवमुक्तस्तु द्रोणो हृष्टतनूरुहः ।
मुञ्चस्वेत्यब्रवीत्पार्थं स मुमोचाविचारयन् ॥१-१४३-८ (६५१९)
ततस्तस्य गस्थस्य क्षुरेण निशितेन च ।
शिर उत्कृत्य तरसा पातयामास पाण्डवः ॥१-१४३-९ (६५२०)
तस्मिन्कर्मणि संसिद्धे पर्यष्वजत पाण्डवम् ।
मेने च द्रुपदं सङ्ख्ये सानुबन्धं पराजितम् ॥१-१४३-१० (६५२१)
कस्य चित्त्वथ कालस्य सशिष्योऽङ्गिरसां वरः ।
जगाम गङ्गामभितो मज्जितुं भरतर्षभ ॥१-१४३-११ (६५२२)
अवगाढमथो द्रोणं सलिले सलिलेचरः ।
ग्राहो जग्राह बलवाञ्जङ्घान्ते कालचोदितः ॥१-१४३-१२ (६५२३)
स समर्थोऽपि मोक्षाय शिष्यान्सर्वानचोदयत् ।
ग्राहं हत्वा तु मोक्ष्यध्वं मामिति त्वरयन्निव ॥१-१४३-१३ (६५२४)
तद्वाक्यसमकालं तु बीभत्सुर्निशितैः शरैः ।
अवार्यैः पञ्चभिर्ग्राहं मग्नमम्भस्यताडयत् ॥१-१४३-१४ (६५२५)
इतरे त्वथ संमूढास्तत्रपत्र प्रपेदिरे ।
तं तु दृष्ट्वा क्रियोपेतं द्रोणोऽमन्यत पाण्डवम् ॥१-१४३-१५ (६५२६)
विशिष्टं सर्वशिष्येभ्यः प्रीतिमांश्चाभवत्तदा ।
स पार्थबाणैर्बहुधा खण्डशः परिकल्पितः ॥१-१४३-१६ (६५२७)
ग्राहः पञ्चत्वमापेदे जङ्घां त्यक्त्वा महात्मनः ।
गसर्वक्रियाभ्यनुज्ञानात्तथा शिष्यान्समानयत् ॥१-१४३-१७ (६५२८)
दुर्योधनं चित्रसेनं दुःशासनविविंशती ।
अर्जुनं च समानीय ह्यश्वत्थामानमेव च ॥१-१४३-१८ (६५२९)
शिशुकं मृण्मयं कृत्वा द्रोणो गङ्गाजले ततः ।

शिष्याणां पश्यतां चैव क्षिपति स्म महाभुजः ॥ १-१४३-१९ (६५३०)
चक्षुषी वाससा चैव बद्ध्वा प्रादाच्छरासनम् ।
शिशुकं विद्ध्यतेमं वै जलस्थं बद्धचक्षुषः ॥ १-१४३-२० (६५३१)
तत्क्षणेनैव बीभत्सुरावापैर्दशभिर्वशी ।
पञ्चकैरनुविव्याध मग्नं शिशुकमम्भसि ॥ १-१४३-२१ (६५३२)
ताः स दृष्ट्वा क्रियाः सर्वा द्रोणोऽमन्यत पाण्डवम् ।
विशिष्टं सर्वशिष्येभ्यः प्रीतिमांश्चाभवत्तदा।'
तथाब्रवीन्महात्मानं भारद्वाजो महारथम् ॥ १-१४३-२२ (६५३३)
गृहाणेदं महाबाहो विशिष्टमतिदुर्धरम् ।
अस्त्रं ब्रह्मशिरो नाम सप्रयोगनिवर्तनम् ॥ १-१४३-२३ (६५३४)
न च ते मानुषेष्वेतत्प्रयोक्तव्यं कथंचन ।
जगद्विनिर्दहेदेतदल्पतेजसि पातितम् ॥ १-१४३-२४ (६५३५)
असामान्यमिदं तात लोकेष्वस्त्रं निगद्यते ।
तद्धारयेथाः प्रयतः शृणु चेदं वचो मम ॥ १-१४३-२५ (६५३६)
बाधेतामानुषः शत्रुर्यदि त्वां वीर कश्चन ।
तद्वधाय प्रयुञ्जीथास्तदस्त्रमिदमाहवे ॥ १-१४३-२६ (६५३७)
तथेति संप्रतिश्रुत्य बीभत्सुः स कृताञ्जलिः ।
जग्राह परमास्त्रं तदाह चैनं पुनर्गुरुः ।
भविता त्वत्समो नान्यः पुमाँल्लोके धनुर्धरः ॥ ॥ १-१४३-२७ (६५३८)

इति श्रीमन्महाभारते आदिपर्वणि संभवपर्वणि
त्रिचत्वारिंशदधिकशततमोऽध्यायः ॥ १४३ ॥
Mahabharata - Adi Parva - Chapter Footnotes

१-१४३-१२ अवगाढं जलावगाहिनम् ॥
१-१४३-१३ मोक्ष्यध्वं मोचयध्वम् ॥
त्रिचत्वारिंशदधिकशततमोऽध्यायः ॥
१४३ ॥

---

अध्यय१४४
॥ श्रीः ॥
१.१४४. अध्यायः १४४

Mahabharata - Adi Parva - Chapter Topics
कुमाराणां अस्त्रशिक्षापरीक्षार्थं रङ्गनिर्माणम् ॥ १ ॥
शिक्षादर्शनार्थं भीष्मादीनां प्रेक्षागारप्रवेशः ॥ २ ॥
युधिष्ठिरादीनां परीक्षा ॥ ३ ॥

भीमदुर्योधनयोः गदायुद्धपरीक्षा ॥ ४ ॥

Mahabharata - Adi Parva - Chapter Text

१-१४४-० (६५३९)
वैशंपायन उवाच। १-१४४-०क्ष् (८५५)
कृतास्त्रान्धार्तराष्ट्रांश्च पाण्डुपुत्रांश्च भारत ।
दृष्ट्वा द्रोणोऽब्रवीद्राजन्धृतराष्ट्रं जनेश्वरम् ॥ १-१४४-१ (६५४०)
कृपस्य सोमदत्तस्य वाह्लीकस्य च धीमतः ।
गाङ्गेयस्य च सान्निध्ये व्यासस्य विदुरस्य च ॥ १-१४४-२ (६५४१)
राजन्संप्राप्तविद्यास्ते कुमाराः कुरुसत्तम ।
ते दर्शयेयुः स्वां शिक्षां राजन्ननुमते तव ॥ १-१४४-३ (६५४२)
ततोऽब्रवीन्महाराजः प्रहृष्टेनान्तरात्मना। १-१४४-४ (६५४३)
धृतराष्ट्र उवाच ।
भारद्वाज महत्कर्म कृतं ते द्विजसत्तम ॥ १-१४४-४क्ष् (८५६)
यदानुमन्यसे कालं यस्मिन्देशे यथायथा ।
तथातथा विधानाय स्वयमाज्ञापयस्व माम् ॥ १-१४४-५ (६५४४)
स्पृहयाम्यद्य निर्वेदान्पुरुषाणां सचक्षुषाम् ।
अस्त्रहेतोः पराक्रान्तान्ये मे द्रक्ष्यन्ति पुत्रकान् ॥ १-१४४-६ (६५४५)
क्षत्तर्यद्गुरुराचार्यो ब्रवीति कुरु तत्तथा ।
न हीदृशं प्रियं मन्ये भविता धर्मवत्सल ॥ १-१४४-७ (६५४६)
ततो राजानमामन्त्र्य विदुरानुमतोपि हि ।
भारद्वाजो महाप्राज्ञो मापयामास मेदिनीम् ॥ १-१४४-८ (६५४७)
समामवृक्षां निर्गुलमामुदक्प्रवणसंस्थिताम् ।
तस्यां भूमौ बलिं चक्रे तिथौ नक्षत्रपूजिते ॥ १-१४४-९ (६५४८)
अवघुष्टं पुरं चापि तदर्थं भरतर्षभ ।
रङ्गभूमौ सुविपुलं शास्त्रदृष्टं यथाविधि ॥ १-१४४-१० (६५४९)
प्रेक्षागारं सुविहितं चक्रुस्ते तस्य शिल्पिनः ।
रक्षां सर्वायुधोपेतां स्त्रीणां चैव नरर्षभ ॥ १-१४४-११ (६५५०)
मञ्चांश्च कारयामासुर्यत्र जानपदा जनाः ।
विपुलानुच्छ्रयोपेताञ्शिबिकाश्च महाधनाः ॥ १-१४४-१२ (६५५१)
तस्मिंस्ततोऽहनि प्राप्ते राजा ससचिवस्तदा ।
ग्सान्तःपुरः सहामात्यो व्यासस्यानुमते तदा।'
भीष्मं प्रमुखतः कृत्वा कृपं चाचार्यसत्तमम् ॥ १-१४४-१३ (६५५२)
ग्बाह्लीकं सोमदत्तं च भूरिश्रवसमेव च ।
कुरूनन्यांश्च सचिवानादाय नगराद्बहिः ॥ १-१४४-१४ (६५५३)

रङ्गभूमिं समासाद्य ब्राह्मणैः सहितो नृपः ॥' १-१४४-१५ (६५५४)
मुक्ताजालपरिक्षिप्तं वैदूर्यममिशोभितम् ।
शातकुम्भमयं दिव्यं प्रेक्षागारमुपागमत् ॥ १-१४४-१६ (६५५५)
गान्धारी च महाभागा कुन्ती च जयतां वर ।
स्त्रियश्च राज्ञः सर्वास्ताः सप्रेष्याः सपरिच्छदाः ॥ १-१४४-१७ (६५५६)
हर्षादारुरुहुर्मञ्चान्मेरुं देवस्त्रियो यथा ।
ब्राह्मणक्षत्रियाद्यं च चातुर्वर्ण्यं पुराद्द्रुतम् ॥ १-१४४-१८ (६५५७)
दर्शनेप्सुः समभ्यागात्कुमाराणां कृतास्त्रताम् ।
क्षणेनैकस्थतां तत्र दर्शनेप्सुर्जगाम ह ॥ १-१४४-१९ (६५५८)
प्रवादितैश्च वादित्रैर्जनकौतूहलेन च ।
महार्णव इव क्षुब्धः समाजः सोऽभवत्तदा ॥ १-१४४-२० (६५५९)
ततः शुक्लाम्बरधरः शुक्लयज्ञोपवीतवान् ।
शुक्लकेशः सितश्मश्रुः शुक्लाल्यानुलेपनः ॥ १-१४४-२१ (६५६०)
रङ्गमध्यं तदाचार्यः सपुत्रः प्रविवेश ह ।
नभो जलधरैर्हीनं साङ्गारक इवांशुमान् ॥ १-१४४-२२ (६५६१)
व्यासस्यानुमते चक्रे बलिं बलवतां वरः ।
ब्राह्मणांस्तु सुमन्त्रज्ञान्कारयामास मङ्गलम् ॥ १-१४४-२३ (६५६२)
ग्सुवर्णमणिरत्नानि वस्त्राणि विविधानि च ।
प्रददौ दक्षिणां राजा द्रोणाय च कृपाय च ॥' १-१४४-२४ (६५६३)
सुखपुण्याहघोषस्य पुण्यस्य समनन्तरम् ।
विविशुर्विविधं गृह्य शस्त्रोपकरणं नराः ॥ १-१४४-२५ (६५६४)
ततो बद्धाङ्गुलित्राणा बद्धकक्ष्या महारथाः ।
बद्धतूणाः सधनुषो विविशुर्भरतर्षभाः ॥ १-१४४-२६ (६५६५)
ग्रङ्गमध्ये स्थितं द्रोणमभिवाद्य नरर्षभाः ।
चक्रुः पूजां यथान्यायं द्रोणस्य च कृपस्य च ॥ १-१४४-२७ (६५६६)
आशीर्भिश्च प्रयुक्ताभिः सर्वे संहृष्टमानसाः ।
अभिवाद्य पुनः शस्त्रान्बलिपुष्पैः समर्चितान् ॥ १-१४४-२८ (६५६७)
रक्तचन्दनसंमिश्रैः स्वयमर्चन्ति कौरवाः ।
रक्तचन्दनदिग्धाश्च रक्तमाल्यानुधारिणः ॥ १-१४४-२९ (६५६८)
सर्वे रक्तपताकाश्च सर्वे रक्तान्तलोचनाः ।
द्रोणेन समनुज्ञाता गृह्य शस्त्रं परन्तपाः ॥ १-१४४-३० (६५६९)
धनूंषि पूर्व संगृह्य तप्तकाञ्चनभूषिताः ।
सज्यानि विविधाकाराः शरैः सन्धाय कौरवा ॥ १-१४४-३१ (६५७०)
ज्याघोषं तलघोषं च कृत्वा भूतान्यमोहयन् ॥' १-१४४-३२ (६५७१)
अनुज्येष्ठं च ते तत्र युधिष्ठिरपुनरोगमाः ।
चक्रुरस्त्रं महावीर्याः कुमाराः परमाद्भुतम् ॥ १-१४४-३३ (६५७२)

ग्केषांचित्तत्र माल्येषु शरा निपतिता नृप ।
केषांचित्पुष्पमुकुटे निपतन्ति स्म सायकाः ॥ १-१४४-३४ (६५७३)
केचिल्लक्ष्याणि विविधैर्बाणैराहितलक्षणैः ।
बिभिदुर्लाघवोत्सृष्टैर्गुरूणि च लघूनि च ॥' १-१४४-३५ (६५७४)
केचिच्छराक्षेपभयाच्छिरांस्यवननामिरे ।
मनुजा धृष्टमपरे वीक्षाञ्चक्रुः सुविस्मिताः ॥ १-१४४-३६ (६५७५)
ते स्म लक्ष्याणि बिभिदुर्बाणैर्नामाङ्कशोभितैः ।
विविधैर्लाघवोत्सृष्टैरुह्यन्तो वाजिभिर्द्रुतम् ॥ १-१४४-३७ (६५७६)
तत्कुमारबलं तत्र गृहीतशरकार्मुकम् ।
गन्धर्वनगराकारं प्रेक्ष्य ते विस्मिताभवन् ॥ १-१४४-३८ (६५७७)
सहसा चुक्रुशुश्चान्ये नराः शतसहस्रशः ।
विस्मयोत्फुल्लनयनाः साधुसाध्विति भारत ॥ १-१४४-३९ (६५७८)
कृत्वा धनुषि ते मार्गान्रथचर्यासु चासकृत् ।
गजपृष्ठेऽश्वपृष्ठे च नियुद्धे च महाबलाः ॥ १-१४४-४० (६५७९)
गृहीतखड्गचर्माणस्ततो भूयः प्रहारिणः ।
त्सरुमार्गान्यथोद्दिष्टांश्चेरुः सर्वासु भूमिषु ॥ १-१४४-४१ (६५८०)
लाघवं सौष्ठवं शोभां स्थिरत्वं दृढमुष्टिताम् ।
ददृशुस्तत्र सर्वेषां प्रयोगं खड्गचर्मणोः ॥ १-१४४-४२ (६५८१)
अथ तौ नित्यसंहृष्टौ सुयोधनवृकोदरौ ।
अवतीर्णौ गदाहस्तावेकशृङ्गाविवाचलौ ॥ १-१४४-४३ (६५८२)
बद्धकक्ष्यौ महाबाहू पौरुषे पर्यवस्थितौ ।
बृंहन्तौ वासिताहेतोः समदाविव कुञ्जरौ ॥ १-१४४-४४ (६५८३)
तौ प्रदक्षिणसव्यानि मण्डलानि महाबलौ ।
चेरतुर्मण्डलगतौ समदाविव कुञ्जरौ ॥ १-१४४-४५ (६५८४)
विदुरो धृतराष्ट्राय गान्धार्याः पाण्डवारणिः ।
न्यवेदयेतां तत्सर्वं कुमाराणां विचेष्टितम् ॥ ॥ १-१४४-४६ (६५८५)

इति श्रीमन्महाभारते आदिपर्वणि संभवपर्वणि
चतुश्चत्वारिंशदधिकशततमोऽध्यायः ॥ १४४ ॥

Mahabharata - Adi Parva - Chapter Footnotes

१-१४४-१९ दर्शनेप्सुः जन इति शेषः ॥
१-१४४-२२ अंशुमान् चन्द्रः ॥
१-१४४-३८ गन्धर्वनगराकारमद्भुतरूपम् ॥
१-१४४-४३ संहृष्टौ परस्परं जेतुं सकामौ ॥
१-१४४-४४ बृंहन्तौ शब्दं कुर्वाणौ । वासिता हस्तिनी ॥

१-१४४-४५ मण्डलगताबलातचक्रवद्भ्राम्यमाणगदापरिवेषान्तर्गतौ ॥
१-१४४-४६ पाण्डवारणिः कुन्ती ॥
चतुश्चत्वारिंशदधिकशततमोऽध्यायः ॥
१४४ ॥

---

अध्यय१४५
॥ श्रीः ॥
१.१४५. अध्यायः १४५

Mahabharata - Adi Parva - Chapter Topics
अर्जुनस्य परीक्षा ॥ १ ॥
कर्णस्य रङ्गप्रवेशः ॥ २ ॥

Mahabharata - Adi Parva - Chapter Text

१-१४५-० (६५८६)
वैशंपायन उवाच। १-१४५-०क्ष् (८५७)
कुरुराजे हि रङ्गस्थे भीमे च बलिनां वरे ।
पक्षपातकृतस्नेहः स द्विधेवाभवज्जनः ॥ १-१४५-१ (६५८७)
जय हे कुरुराजेति जय हे भीम इत्युत ।
पुरुषाणां सुविपुलाः प्रणादाः सहसोत्थिताः ॥ १-१४५-२ (६५८८)
ततः क्षुब्धार्णवनिभं रङ्गमालोक्य बुद्धिमान् ।
भारद्वाजः प्रियं पुत्रमश्वत्थामानमब्रवीत् ॥ १-१४५-३ (६५८९)
वारयैतौ महावीर्यौ कृतयोग्यावुभावपि ।
मा भूद्रङ्गप्रकोपोऽयं भीमदुर्योधनोद्भवः ॥ १-१४५-४ (६५९०)
वैशंपायन उवाच। १-१४५-५क्ष् (८५८)
ग्तत उत्थाय वेगेन अश्वत्थामा न्यवारयत् ।
गुरोराज्ञा भीम इति गान्धारे गुरुशासनम् ।
अलं शिक्षाकृतं वेगमलं साहसमित्युत ॥' १-१४५-५ (६५९१)
ततस्तावुद्यतगतौ गुरुपुत्रेण वारितौ ।
युगान्तानिलसंक्षुब्धौ महावेलाविवार्णवौ ॥ १-१४५-६ (६५९२)
ततो रङ्गाङ्गणगतो द्रोणो वचनमब्रवीत् ।
निवार्य वादित्रगणं महामेघनिभस्वनम् ॥ १-१४५-७ (६५९३)
यो मे पुत्रात्प्रियतरः सर्वशस्त्रविशारदः ।
ऐन्द्रिरिन्द्रानुजसमः स पार्थो दृश्यतामिति ॥ १-१४५-८ (६५९४)
आचार्यवचनेनाथ कृतस्वस्त्ययनो युवा ।
बद्धगोधाङ्गुलित्राणः पूर्णतूणः सकार्मुकः ॥ १-१४५-९ (६५९५)

काञ्चनं कवचं बिभ्रत्प्रत्यदृश्य फाल्गुनः ।
सार्कः सेन्द्रायुधतडित्ससन्ध्य इव तोयदः ॥ १-१४५-१० (६५९६)
ततः सर्वस्य रङ्गस्य समुत्पिञ्जलकोऽभवत् ।
प्रावाद्यन्त च वाद्यानि सशङ्खानि समन्ततः ॥ १-१४५-११ (६५९७)
प्रेक्षका ऊचुः। १-१४५-१२क्ष् (८५९)
एष कुन्तीसुतः श्रीमानेष मध्यमपाण्डवः ।
एष पुत्रो महेन्द्रस्य कुरूणामेष रक्षिता ॥ १-१४५-१२ (६५९८)
एषोऽस्त्रविदुषां श्रेष्ठ एष धर्मभृतां वरः ।
एष शीलवतां चापि शीलज्ञाननिधिः परः ॥ १-१४५-१३ (६५९९)
वैशंपायन उवाच। १-१४५-१४क्ष् (८६०)
इत्येवं तुमुला वाचः शुश्रुवुः प्रेक्षकेरिताः ।
कुन्त्याः प्रस्रवसंयुक्तैरस्रैः क्लिन्नमुरोऽभवत् ॥ १-१४५-१४ (६६००)
तेन शब्देन महता पूर्णश्रुतिरथाब्रवीत् ।
धृतराष्ट्रो नरश्रेष्ठो विदुरं हृष्टमानसः ॥ १-१४५-१५ (६६०१)
क्षत्तः क्षुब्धार्णवनिभः किमेष सुमहास्वनः ।
सहसैवोत्थितो रङ्गे भिन्दन्निव नभस्तलम् ॥ १-१४५-१६ (६६०२)
विदुर उवाच। १-१४५-१७क्ष् (८६१)
एष पार्थो महाराज फाल्गुनः पाण्डुनन्दनः ।
अवतीर्णः सकवचस्तत्रैव सुमिहास्वनः ॥ १-१४५-१७ (६६०३)
धृतराष्ट्र उवाच। १-१४५-१८क्ष् (८६२)
धन्योऽस्म्यनुगृहीतोऽस्मि रक्षितोऽस्मि महामते ।
पृथारणिसमुद्भूतैस्त्रिभिः पाण्डववह्निभिः ॥ १-१४५-१८ (६६०४)
वैशंपायन उवाच। १-१४५-१९क्ष् (८६३)
तस्मिन्प्रमुदिते रङ्गे कथंचित्प्रत्युपस्थिते ।
दर्शयामास बीभत्सुराचार्यायास्त्रलाघवम् ॥ १-१४५-१९ (६६०५)
आग्नेयेनासृजद्वह्निं वारुणेनासृजत्पयः ।
वायव्येनासृजद्वह्निं पार्जन्येनासृजद्धनान् ॥ १-१४५-२० (६६०६)
भौमेन प्रासृजद्भूमिं पार्वतेनासृजद्गिरीन् ।
अन्तर्धानेन चास्त्रेण पुनरन्तर्हितोऽभवत् ॥ १-१४५-२१ (६६०७)
क्षणात्प्रांशुः क्षणाद्ध्रस्वः क्षणाच्च रथधूर्गतः ।
क्षणेन रथमध्यस्थः क्षणेनावतरन्महीम् ॥ १-१४५-२२ (६६०८)
सुकुमारं च सूक्ष्मं च गुरु चापि गुरुप्रियः ।
सौष्ठवेनाभिसंयुक्तः सोऽविध्यद्विविधैः शरैः ॥ १-१४५-२३ (६६०९)
भ्रमतश्च वराहस्य लोहस्य प्रमुखे समम् ।
पञ्चबाणानसंक्तान्संमुमोचैकबाणवत् ॥ १-१४५-२४ (६६१०)
गव्ये विषाणकोशे च चले रज्ज्ववलम्बिनि ।

निचखान महावीर्यः सायकानेकविंशतिम् ॥ १-१४५-२५ (६६११)
इत्येवमादि सुमहत्खड्गे धनुषि चानघ ।
गदायां शस्त्रकुशलो मण्डलानि ह्यदर्शयत् ॥ १-१४५-२६ (६६१२)
ततः समाप्तभूयिष्ठे तस्मिन्कर्मणि भारत ।
मन्दीभूते समाजे च वादित्रस्य च निःस्वने ॥ १-१४५-२७ (६६१३)
द्वारदेशात्समुद्भूतो माहात्म्यबलसूचकः ।
वज्रनिष्पेषसदृशः शुश्रुवे भुजनिःस्वनः ॥ १-१४५-२८ (६६१४)
दीर्यन्ते किं नु गिरयः किंस्विद्भूमिर्विदीर्यते ।
किंस्विदापूर्यते व्योम जलधाराघनैर्घनैः ॥ १-१४५-२९ (६६१५)
रङ्गस्यैवं मतिरभूत्क्षणेन वसुधाधिप ।
द्वारं चाभिमुखाः सर्वे बभूवुः प्रेक्षकास्तदा ॥ १-१४५-३० (६६१६)
पञ्चभिर्भ्रातृभिः पार्थैर्द्रोणः परिवृतो वभौ ।
पञ्चतारेण संयुक्तः सावित्रेणेव चन्द्रमाः ॥ १-१४५-३१ (६६१७)
अश्वत्थाम्ना च सहितं भ्रातॄणां शतमूर्जितम् ।
दुर्योधनममित्रघ्नमुत्थितं पर्यवारयत् ॥ १-१४५-३२ (६६१८)
स तैस्तदा भ्रातृभिरुद्यतायुधै-
र्गदाग्रपाणिः समवस्थितैर्वृतः ।
बभौ यथा दानवसंक्षये पुरा
पुनन्दरो देवगणैः समावृतः ॥ ॥ १-१४५-३३ (६६१९)

इति श्रीमन्महाभारते आदिपर्वणि संभवपर्वणि
पञ्चचत्वारिंशदधिकशततमोऽध्यायः ॥ १४५ ॥
Mahabharata - Adi Parva - Chapter Footnotes

१-१४५-४ कृतयोग्यौ सुशिक्षितौ ॥
१-१४५-१० तूणकार्मुककवचानां तत्प्रभाजालस्यार्जुनस्य च
क्रमादर्केन्द्रायुधतडित्संध्यातोयदैरुपमा ॥
१-१४५-११ समुत्पिञ्जलक उत्फुल्लता ॥
१-१४५-१४ अस्रैः प्रेमाश्रुभिः ॥
१-१४५-२३ सुकुमारं पूर्णघटकुक्कुटाण्डादीनि लक्ष्याण्यविचाल्याविध्यत्
। सूक्ष्मं गुञ्जादि लक्ष्यं, गुरु घनावयवं च सोऽविध्यत् ॥
१-१४५-२५ भूताश्वेभवराहाणां सिंहर्क्षकपिसंमुखान्
। बाणान्सप्तासमायुक्तान्स मुमोचैकबाणवत्। इति घपाठः। गव्ये
गोसंबन्धिनि ॥
१-१४५-३१ सावित्रेण हस्तनक्षत्रेण ॥
१-१४५-३३ गदा अग्रं आलम्बनं यस्य तादृशः पाणिर्यस्य स गादाग्रपाणिः ॥

पञ्चचत्वारिंशदधिकशततमोऽध्यायः ॥
१४५ ॥

---

अध्यय१४६
॥ श्रीः ॥
१.१४६. अध्यायः १४६

Mahabharata - Adi Parva - Chapter Topics
कर्णस्य परीक्षा ॥ १ ॥
कर्णार्जुनयोर्युद्धप्रसङ्गः ॥ २ ॥
कृपेण कर्णस्याधिक्षेपः, कर्णस्य दुर्योधनेन राज्याभिषेचनं च ॥ ३ ॥

Mahabharata - Adi Parva - Chapter Text

१-१४६-० (६६२०)
वैशंपायन उवाच। १-१४६-०क्ष् (८६४)
एतस्मिन्नेव काले तु तस्मिञ्जनसमागमे।
दत्तेऽवकाशे पुरुषैर्विस्मयोत्फुल्ललोचनः ।
विवेश रङ्गं विस्तीर्णं कर्णः परपुरञ्जयः ॥ १-१४६-१ (६६२१)
सहजं कवचं बिभ्रत्कुण्डलोद्द्योतिताननः ।
स धनुर्बद्धनिस्त्रिंशः पादचारीव पर्वतः ॥ १-१४६-२ (६६२२)
कन्यागर्भः पृथुयशाः पृथायाः पृथुलोचनः ।
तीक्ष्णांशोर्भास्करस्यांशः कर्णोऽरिगणसूदनः ॥ १-१४६-३ (६६२३)
सिंहर्षभगजेन्द्राणां बलवीर्यपराक्रमः ।
दीप्तिकान्तिद्युतिगुणैः सूर्येन्दुज्वलनोपमः ॥ १-१४६-४ (६६२४)
प्रांशुः कनकतालाभः सिंहसंहननो युवा ।
असङ्ख्येयगुणः श्रीमान्भास्करस्यात्मसंभवः ॥ १-१४६-५ (६६२५)
स निरीक्ष्य महाबाहुः सर्वतो रङ्गमण्डलम् ।
प्रणामं द्रोणकृपयोर्नात्यादृतमिवाकरोत् ॥ १-१४६-६ (६६२६)
स समाजजनः सर्वो निश्चलः स्थिरलोचनः ।
कोऽयमित्यागतक्षोभः कौतूहलपरोऽभवत् ॥ १-१४६-७ (६६२७)
सोऽब्रवीन्मेघगम्भीरस्वरेण वदतां वरः ।
भ्राता भ्रातरमज्ञातं सावित्रः पाकशासनिम् ॥ १-१४६-८ (६६२८)
पार्थ यत्ते कृतं कर्म विशेषवदहं ततः ।
करिष्ये पश्यतां नॄणां माऽऽत्मना विस्मयं गमः ॥ १-१४६-९ (६६२९)
असमाप्ते ततस्तस्य वचने वदतां वर ।
यन्त्रोत्क्षिप्त इवोत्तस्थौ क्षिप्रं वै सर्वतो जनः ॥ १-१४६-१० (६६३०)

प्रीतिश्च मनुजव्याघ्र दुर्योधनमुपाविशत् ।
ह्रीश्च क्रोधश्च बीभत्सुं क्षणेनान्वाविवेश ह ॥ १-१४६-११ (६६३१)
ततो द्रोणाभ्यनुज्ञातः कर्णः प्रियरणः सदा ।
यत्कृतं तत्र पार्थेन तच्चकार महाबलः ॥ १-१४६-१२ (६६३२)
अथ दुर्योधनस्तत्र भ्रातृभिः सह भारत ।
कर्णं परिष्वज्य मुदा ततो वचनमब्रवीत् ॥ १-१४६-१३ (६६३३)
स्वागतं ते महाबाहो दिष्ट्या प्राप्तोऽसि मानद ।
अहं च कुरुराज्यं च यथेष्टमुपभुज्यताम् ॥ १-१४६-१४ (६६३४)
कर्ण उवाच। १-१४६-१५क्ष् (८६५)
कृतं सर्वमहं मन्ये सखित्वं च त्वया वृणे ।
द्वन्द्वयुद्धं च पार्थेन कर्तुमिच्छाम्यहं प्रभो ॥ १-१४६-१५ (६६३५)
ग्वैशंपायन उवाच। १-१४६-१६क्ष् (८६६)
एवमुक्तस्तु कर्णेन राजन्दुर्योधनस्तदा ।
कर्णं दीर्घाञ्चितभुजं परिष्वज्येदमब्रवीत् ॥' १-१४६-१६ (६६३६)
भुङ्क्ष्व भोगान्मया सार्धं बन्धूनां प्रियकृद्भव ।
दुर्हृदां कुरु सर्वेषां मूर्ध्नि पादमरिन्दम ॥ १-१४६-१७ (६६३७)
वैशंपायन उवाच। १-१४६-१८क्ष् (८६७)
ततः क्षिप्तमिवात्मानं मत्वा पार्थोऽभ्यभाषत ।
कर्णं भ्रातृसमूहस्य मध्येऽचलमिव स्थितम् ॥ १-१४६-१८ (६६३८)
अर्जुन उवाच। १-१४६-१९क्ष् (८६८)
अनाहूतोपसृष्टानामनाहूतोपजल्पिनाम् ।
ये लोकास्तान्हतः कर्ण मया त्वं प्रतिपत्स्यसे ॥ १-१४६-१९ (६६३९)
कर्ण उवाच। १-१४६-२०क्ष् (८६९)
रङ्गोऽयं सर्वसामान्यः किमत्र तव फाल्गुन ।
वीर्यश्रेष्ठाश्च राजानो बलं धर्मोऽनुवर्तते ॥ १-१४६-२० (६६४०)
किं क्षेपैर्दुर्बलायासैः शरैः कथय भारत ।
गुरोः समक्षं यावत्ते हराम्यद्य शिरः शरैः ॥ १-१४६-२१ (६६४१)
वैशंपायन उवाच। १-१४६-२२क्ष् (८७०)
ततो द्रोणाभ्यनुज्ञातः पार्तः परपुरञ्जयः ।
भ्रातृभिस्त्वरयाश्लिष्टो रणायोपजगाम तम् ॥ १-१४६-२२ (६६४२)
ततो दुर्योधनेनापि स भ्रात्रा समरोद्यतः ।
परिष्वक्तः स्थितः कर्णः प्रगृह्य सशरं धनुः ॥ १-१४६-२३ (६६४३)
ततः सविद्युत्स्तनितैः सेन्द्रायुधपुरोगमैः ।
आवृतं गगनं मेघैर्बलाकापङ्क्तिहासिभिः ॥ १-१४६-२४ (६६४४)
ततः स्नेहाद्धरिहयं दृष्ट्वा रङ्गावलोकिनम् ।
भास्करोऽप्यनयन्नाशं समीपोपगतान्घनान् ॥ १-१४६-२५ (६६४५)

मेघच्छायोपगूढस्तु ततोऽदृश्यत फाल्गुनः ।
सूर्यातपपरिक्षिप्तः कर्णोऽपि समदृश्यत ॥ १-१४६-२६ (६६४६)
धार्तराष्ट्रा यतः कर्णस्तस्मिन्देशे व्यवस्थिताः ।
भारद्वाजः कृपो भीष्मो यतः पार्थस्ततोऽभवन् ॥ १-१४६-२७ (६६४७)
द्विधा रङ्गः समभवत्स्त्रीणां द्वैधमजायत ।
कुन्तिभोजसुता मोहं विज्ञातार्था जगाम ह ॥ १-१४६-२८ (६६४८)
तां तथा मोहमापन्नां विदुरः सर्वधर्मवित् ।
कुन्तीमाश्वासयामास प्रेष्याभिश्चन्दनोदकैः ॥ १-१४६-२९ (६६४९)
ततः प्रत्यागतप्राणा तावुभौ परिदंशितौ ।
पुत्रौ दृष्ट्वा सुसंभ्रान्ता नान्वपद्यत किंचन ॥ १-१४६-३० (६६५०)
तावुद्यतमहाचापौ कृपः शारद्वतोऽब्रवीत् ।
द्वन्द्वयुद्धसमाचारे कुशलः सर्वधर्मवित् ॥ १-१४६-३१ (६६५१)
अयं पृथायास्तनयः कनीयान्पाण्डुनन्दनः ।
कौरवो भवता सार्धं द्वन्द्वयुद्धं करिष्यति ॥ १-१४६-३२ (६६५२)
त्वमप्येवं महाबाहो मातरं पितरं कुलम् ।
कथयस्व नरेन्द्राणां येषां त्वं कुलभूषणम् ॥ १-१४६-३३ (६६५३)
ततो विदित्वा पार्थस्त्वां प्रतियोत्स्यति वा न वा ।
वृथाकुलसमाचारैर्न युध्यन्ते नृपात्मजाः ॥ १-१४६-३४ (६६५४)
वैशंपायन उवाच। १-१४६-३५क्ष् (८७१)
एवमुक्तस्य कर्णस्य व्रीडावनतमाननम् ।
बभौ वर्षाम्बुविक्लिन्नं पद्ममागलितं यथा ॥ १-१४६-३५ (६६५५)
दुर्योधन उवाच। १-१४६-३६क्ष् (८७२)
आचार्य त्रिविधा योनी राज्ञां शास्त्रविनिश्चये ।
सत्कुलीनश्च शूरश्च यश्च सेनां प्रकर्षति ॥ १-१४६-३६ (६६५६)
' अद्भ्योऽग्निर्ब्रह्मतः क्षत्रमश्मनो लोहमुत्थितम् ।
तेषां सर्वत्रगं तेजः स्वासु योनिषु शाम्यति ॥' १-१४६-३७ (६६५७)
यद्ययं फाल्गुनो युद्धे नाराज्ञा योद्धुमिच्छति ।
तस्मादेषोऽङ्गविषये मया राज्येऽभिषिच्यते ॥ १-१४६-३८ (६६५८)
वैशंपायन उवाच। १-१४६-३९क्ष् (८७३)
' ततो राजानमामन्त्र्य गाङ्गेयं च पितामहम् ।
अभिषेकस्य संभारान्समानीय द्विजातिभिः ॥ १-१४६-३९ (६६५९)
गोसहस्रायुतं दत्त्वा युक्तानां पुण्यकर्मणाम् ।
अर्होऽयमङ्गराज्यस्य इति वाच्य द्विजातिभिः'॥ १-१४६-४० (६६६०)
ततस्तस्मिन्क्षणे कर्णः सलाजकुसुमैर्घटैः ।
काञ्चनैः काञ्चने पीठे मन्त्रविद्भिर्महारथः ॥ १-१४६-४१ (६६६१)
अभिषिक्तोऽङ्गराजे स श्रिया युक्तो महाबलः ।

ग्स मौलिहारकेयूरः सहस्ताभरणाङ्गदः ॥१-१४६-४२ (६६६२)
राजलिङ्गैस्तथाऽन्यैश्च भूषितो भूषणैः शुभैः।'
सच्छत्रवालव्यजनो जयशब्दोत्तरेण च ॥ १-१४६-४३ (६६६३)
उवाच कौरवं राजन्वचनं स वृषस्तदा ।
अस्य राज्यप्रदानस्य सदृशं किं ददानि ते ॥१-१४६-४४ (६६६४)
प्रब्रूहि राजशार्दूल कर्ता ह्यस्मि तथा नृप ।
अत्यन्तं सख्यमिच्छामीत्याह तं स सुयोधनः ॥१-१४६-४५ (६६६५)
एवमुक्तस्ततः कर्णस्तथेति प्रत्युवाच तम् ।
हर्षाच्चोभौ समाश्लिष्य परां मुदमवापतुः ॥ ॥१-१४६-४६ (६६६६)

इति श्रीमन्महाभारते आदिपर्वणि संभवपर्वणि
षट्चत्वारिंशदधिकशततमोऽध्यायः ॥१४६ ॥
Mahabharata - Adi Parva - Chapter Footnotes

१-१४६-१ दत्तावकाश इति चपाठः ॥
१-१४६-६ नामपूर्वमथाकरोत् इति पाठान्तरम् ॥
१-१४६-२६ सूर्यातपपरिवक्त इति डपाठः ॥
१-१४६-२८ विज्ञातार्था कर्णस्य स्वपुत्रत्वज्ञानवती ।हेतुगर्भमेतत् ॥
१-१४६-३४ वृथाकुलसमाचारैः अज्ञातकुलाचारैः ॥
१-१४६-४० वाच्य वाचयित्वा ॥
षट्चत्वारिंशदधिकशततमोऽध्यायझ ॥
१४६ ॥

---

अध्यय१४७
॥ श्रीः ॥
१.१४७. अध्यायः १४७

Mahabharata - Adi Parva - Chapter Topics
कर्णपितुरधिरथस्य रङ्गप्रवेशः ॥१ ॥
भीमेन कर्णस्याधिक्षेपः ॥२ ॥
सर्वेषां रङ्गान्निष्क्रमणम् ॥३ ॥

Mahabharata - Adi Parva - Chapter Text

१-१४७-० (६६६७)
वैशंपायन उवाच।१-१४७-०क्ष् (८७४)
ततः स्रस्तोत्तरपटः सप्रस्वेदः सवेपथुः ।

विवेशाधिरथो रङ्गं यष्टिप्राणो ह्वयन्निव ॥१-१४७-१ (६६६८)
तमालोक्य धनुस्त्यक्त्वा पितृगौरवयन्त्रितः ।
कर्णोऽभिषेकार्द्रशिराः शिरसा समवन्दत ॥१-१४७-२ (६६६९)
ततः पादाववच्छाद्य पटान्तेन ससंभ्रमः ।
पुत्रेति परिपूर्णार्थमब्रवीद्रथसारथिम् ॥१-१४७-३ (६६७०)
परिष्वज्य च तस्याथ मूर्धानं स्नेहविक्लवः ।
अङ्गराज्याभिषेकार्द्रमश्रुभिः सिषिचे पुनः ॥१-१४७-४ (६६७१)
तं दृष्ट्वा सूतपुत्रोऽयमिति संचिन्त्य पाण्डवः ।
भीमसेनस्तदा वाक्यमब्रवीत्प्रहसन्निव ॥१-१४७-५ (६६७२)
न त्वमर्हसि पार्थेन सूतपुत्र रणे वधम् ।
कुलस्य सदृशस्तूर्णं प्रतोदो गृह्यतां त्वया ॥१-१४७-६ (६६७३)
अङ्गराज्यं च नार्हस्त्वमुपभोक्तुं नराधम ।
श्वा हुताशसमीपस्थं पुरोडाशमिवाध्वरे ॥१-१४७-७ (६६७४)
वैशंपायन उवाच।१-१४७-८क्ष् (८७५)
एवमुक्तस्ततः कर्णः किंचित्प्रस्फुरिताधरः ।
गगनस्थं विनिःश्वस्य दिवाकरमुदैक्षत ॥१-१४७-८ (६६७५)
ततो दुर्योधनः कोपादुत्पपात महाबलः ।
भ्रातृपद्मवनात्तस्मान्मदोत्कट इव द्विपः ॥१-१४७-९ (६६७६)
सोऽब्रवीद्भीमकर्माणं भीमसेनमवस्थितम् ।
वृकोदर न युक्तं ते वचनं वक्तुमीदृशम् ॥१-१४७-१० (६६७७)
क्षत्रियाणां बलं ज्यष्ठं योक्तव्यं क्षत्रबन्धुना ।
शूराणां च नदीनां च प्रभवो दुर्विभावनः ॥१-१४७-११ (६६७८)
सलिलादुत्थितो वह्निर्येन व्याप्तं चराचरम् ।
दधीचस्यास्थितो वज्रं कृतं दानवसूदनम् ॥१-१४७-१२ (६६७९)
आग्नेयः कृत्तिकापुत्रो रौद्रो गाङ्गेय इत्यपि ।
श्रूयते भगवान्देवः सर्वगुह्यमयो गुहः ॥१-१४७-१३ (६६८०)
क्षत्रियेभ्यश्च ये जाता ब्राह्मणास्ते च ते श्रुताः ।
विश्वामित्रप्रभृतयः प्राप्ता ब्रह्मत्वमव्ययम् ॥१-१४७-१४ (६६८१)
आचार्यः कलशाज्जातो द्रोणः शस्त्रभृतां वरः ।
गौतमस्यान्ववाये च शरस्तम्बाच्च गौतमः ॥१-१४७-१५ (६६८२)
भवतां च यथा जन्म तदप्यागमितं मया ।
सकुण्डलं सकवचं सर्वलक्षणलक्षितम् ।
कथमादित्यसदृशं मृगी व्याघ्रं जनिष्यति ॥ १-१४७-१६ (६६८३)
पृथिवीराज्यमर्होऽयं नाङ्गराज्यं नरेश्वरः ।
अनेन बाहुवीर्येण मया चाज्ञानुवर्तिना ॥१-१४७-१७ (६६८४)
यस्य वा मनुजस्येदं न क्षान्तं मद्विचेष्टितम् ।

रथमारुह्य पद्भ्यां स विनामयतु कार्मुकम् ॥१-१४७-१८ (६६८५)
ततः सर्वस्य रङ्गस्य हाहाकारो महानभूत् ।
साधुवादानुसंबद्धः सूर्यश्चास्तमुपागमत् ॥१-१४७-१९ (६६८६)
ततो दुर्योधनः कर्णमालम्ब्याग्रकरे नृपः ।
दीपिकाभिः कृतालोकस्तस्माद्रङ्गाद्विनिर्ययौ ॥१-१४७-२० (६६८७)
पाण्डवाश्च सहद्रोणाः सकृपाश्च विशांपते ।
भीष्मेण सहिताः सर्वे ययुः स्वं स्वं निवेशनम् ॥१-१४७-२१ (६६८८)
अर्जुनेति जनः कश्चित्कश्चित्कर्णेति भारत ।
कश्चिद्दुर्योधनेत्येवं ब्रुवन्तः प्रस्थितास्तदा ॥१-१४७-२२ (६६८९)
कुन्त्याश्च प्रत्यभिज्ञाय दिव्यलक्षणसूचितम् ।
पुत्रमङ्गेश्वरं स्नेहाच्छन्ना प्रीतिरजायत ॥१-१४७-२३ (६६९०)
दुर्योधनस्यापि तदा कर्णमासाद्य पार्थिव ।
भयमर्जुनसंजातं क्षिप्रमन्तरधीयत ॥१-१४७-२४ (६६९१)
स चापि वीरः कृतशस्त्रनिश्रमः
परेण साम्नाऽभ्यवदत्सुयोधनम् ।
युधिष्ठिरस्याप्यभवत्तदा मति-
र्न कर्णतुल्योऽस्ति धनुर्धरः क्षितौ ॥ ॥ १-१४७-२५ (६६९२)

इति श्रीमन्महाभारते आदिप्रवणि संभवपर्वणि
सप्तचत्वारिंशदधिकशततमोऽध्यायः ॥१४७ ॥
Mahabharata - Adi Parva - Chapter Footnotes

१-१४७-१८ यस्य येन न क्षान्तं न सोढम् ॥
१-१४७-२५ निश्रमो नितरां श्रमः ॥
सप्तचत्वारिंशदधिकशततमोऽध्यायः ॥
१४७ ॥

---

अध्यय१४८
॥ श्रीः ॥
१.१४८. अध्यायः १४८

Mahabharata - Adi Parva - Chapter Topics
गुरुदक्षिणात्वेन जीवतो द्रुपदस्य ग्रहणे द्रोणेनाज्ञापिते तदर्थं
तेन सह सर्वशिष्याणां पाञ्चालपुरगमनम् ॥१ ॥
द्रुपदग्रहणाय पाण्डववर्जं गतानां कौरवाणां तेन पराजयः ॥२ ॥
तदनन्तरं गतेषु पाण्डवेषु अर्जुनेन द्रुपदग्रहणम् ॥३ ॥
जीवग्राहं गृहीत्वा भीमार्जुनाभ्यां समर्पितेन द्रुपदेन द्रोणस्य

संवादः ॥ ४ ॥
द्रोणेनार्धराज्यापहारेण मुक्तस्य द्रुपदस्य पुत्रोत्पादनार्थं प्रयत्नः ॥ ५ ॥

Mahabharata - Adi Parva - Chapter Text

१-१४८-० (६६९३)
वैशंपायन उवाच। १-१४८-०क्ष् (८७६)
पाण्डवान्धार्तराष्ट्रांश्च कृतास्त्रान्प्रसमीक्ष्य सः ।
गुर्वर्थं दक्षिणां काले प्राप्तेऽमन्यत वै गुरुः ॥ १-१४८-१ (६६९४)
ग्अस्त्रशिक्षामनुज्ञातान्रङ्गद्वारमुपागतान् ।
भारद्वाजस्ततस्तांस्तु सर्वानेवाभ्यभाषत ॥ १-१४८-२ (६६९५)
इच्छामि दत्तां सहितां मह्यं परमदक्षिणाम् ।
एवमुक्तास्ततः सर्वे शिष्या द्रोणमथाब्रुवन् ।
भगवन्किं प्रयच्छाम आज्ञापयतु नो गुरुः ॥' १-१४८-३ (६६९६)
ततः शिष्यान्समाहूय आचार्योऽर्थमचोदयत् ।
द्रोणः सर्वानशेषेण दक्षिणार्थं महीपते ॥ १-१४८-४ (६६९७)
पञ्चालराजं द्रुपदं गृहित्वा रणमूर्धनि ।
पर्यानयत भद्रं वः सा स्यात्परमदक्षिणा ॥ १-१४८-५ (६६९८)
तथेत्युक्त्वा तु ते सर्वे रथैस्तूर्णं प्रहारिणः ।
आचार्यधनदानार्थं द्रोणेन सहिता ययुः ॥ १-१४८-६ (६६९९)
ततोऽभिजग्मुः पञ्चालान्निघ्नन्तस्ते नरर्षभाः ।
ममृदुस्तस्य नगरं द्रुपदस्य महौजसः ॥ १-१४८-७ (६७००)
दुर्योधनश्च कर्णश्च युयुत्सुश्च महाबलः ।
दुःशासनो विकर्णश्च जलसन्धः सुलोचनः ॥ १-१४८-८ (६७०१)
एते चान्ये च बहवः कुमारा बहुविक्रमाः ।
अहं पूर्वमहं पूर्वमित्येवं क्षत्रियर्षभाः ॥ १-१४८-९ (६७०२)
ततो वरराथारूढाः कुमाराः सादिभिः सह ।
प्रविश्य नगरं सर्वे राजमार्गमुपाययुः ॥ १-१४८-१० (६७०३)
तस्मिन्काले तु पाञ्चालः श्रुत्वा दृष्ट्वा महद्बलम् ।
भ्रातृभिः सहितो राजंस्त्वरया निर्ययौ गृहात् ॥ १-१४८-११ (६७०४)
ततस्तु कृतसन्नाहा यज्ञसेनसहोदराः ।
शरवर्षाणि मुञ्चन्तः प्रणेदुः सर्व एव ते ॥ १-१४८-१२ (६७०५)
ततो रथेन शुभ्रेण समासाद्य तु कौरवान् ।
यज्ञसेनः शरान्घोरान्ववर्ष युधि दुर्जयः ॥ १-१४८-१३ (६७०६)
पूर्वमेव तु संमन्त्र्य पार्थो द्रोणमथाऽब्रवीत् ।
दर्पोद्रिकात्कुमाराणामाचार्यं द्विजसत्तमम् ॥ १-१४८-१४ (६७०७)

एषां पराक्रमस्यान्ते वयं कुर्याम साहसम् ।
एतैरशक्यः पाञ्चालो ग्रहीतुं रणमूर्धनि ॥ १-१४८-१५ (६७०८)
एवमुक्त्वा तु कौन्तेयो भ्रातृभिः सहितोऽनघः ।
अर्धक्रोशे तु नगरादतिष्ठद्बहिरेव सः ॥ १-१४८-१६ (६७०९)
द्रुपदः कौरवान्दृष्ट्वा प्राधावत समन्ततः ।
शरजालेन महता मोहयन्कौरवीं चमूम् ॥ १-१४८-१७ (६७१०)
तमुद्यतं रथेनैकमाशुकारिणमाहवे ।
अनेकमिव सन्त्रासान्मेनिरे तत्र कौरवाः ॥ १-१४८-१८ (६७११)
द्रुपदस्य शरा घोरा विचेरुः सर्वतोदिशम् ।
ततः शङ्खाश्च भेर्यश्च मृदङ्गाश्च सहस्रशः ॥ १-१४८-१९ (६७१२)
प्रावाद्यन्त महाराज पञ्चालानां निवेशने ।
सिंहनादश्च संजज्ञे पञ्चालानां महात्मनाम् ॥ १-१४८-२० (६७१३)
धनुर्ज्यातलशब्दश्च संस्पृश्य गगनं महान् ।
दुर्योधनो विकर्णश्च सुबाहुर्दीर्घलोचनः ॥ १-१४८-२१ (६७१४)
दुःशाशनश्च संक्रुद्धः शरवर्षैरवाकिरन् ।
सोऽतिविद्धो महेष्वासः पार्षतो युधि दुर्जयः ॥ १-१४८-२२ (६७१५)
व्यधमत्तान्यनीकानि तत्क्षणादेव भारत ।
दुर्योधनं विकर्णं च कर्णं चापि महाबलम् ॥ १-१४८-२३ (६७१६)
नानानृपसुतान्वीरान्सैन्यानि विविधानि च ।
अलातचक्रवत्सर्वं चरन्बाणैरतर्पयत् ॥ १-१४८-२४ (६७१७)
ततस्तु नागराः सर्वे मुसलैर्यष्टिभिस्तदा ।
अभ्यवर्षन्त कौरव्यान्वर्षमाणा घा इव ॥ १-१४८-२५ (६७१८)
सबालवृद्धाः काम्पिल्याः कौरवानभ्ययुस्तदा ।
श्रुत्वा सुतुमुलं युद्धं कौरवानेव भारत ॥ १-१४८-२६ (६७१९)
द्रवन्तिस्म नदन्तिस्म क्रोशन्तः पाण्डवान्प्रति ।
पाडवास्तु स्वनं श्रुत्वा आर्तानां रोमहर्षणम् ॥ १-१४८-२७ (६७२०)
अभिवाद्य ततो द्रोणं रथानारुरुहुस्तदा ।
युधिष्ठिरं निवार्याशु मा युध्यस्वेति पाण्डवम् ॥ १-१४८-२८ (६७२१)
माद्रेयौ चक्ररक्षौ तु फाल्गुनश्च तदाऽकरोत् ।
सेनाग्रगो भीमसेनस्तदाभूद्गदया सह ॥ १-१४८-२९ (६७२२)
तदा शत्रुस्वनं श्रुत्वा भ्रातृभिः सहितोऽनघः ।
आयाज्जवेन कौन्तेयो रथेनानादयन्दिशः ॥ १-१४८-३० (६७२३)
पञ्चालानां ततः सेनामुद्धूतार्णवनिःस्वनाम् ।
भीमसेनो महाबाहुर्दण्डपाणिरिवान्तकः ॥ १-१४८-३१ (६७२४)
प्रविवेश महासेनां मकरः सागरं यथा ।
ग्चतुरङ्गबलाकीर्णे ततस्तस्मिन्रणोत्सवे ॥' १-१४८-३२ (६७२५)

स्वयमभ्यद्रवद्भीमो नागानीकं गदाधरः ॥ १-१४८-३३ (६७२६)
स युद्धकुशलः पार्थो बाहुवीर्येण चातुलः ।
अहनत्कुञ्जरानीकं गदया कालरूपधृक् ॥१-१४८-३४ (६७२७)
ते गजा गिरिसङ्काशाः क्षरन्तो रुधिरं बहु ।
भीमसेनस्य गदया भिन्नमस्तकपिण्डकाः ॥१-१४८-३५ (६७२८)
पतन्ति द्विरदा भूमौ वज्रघातादिवाचलाः ।
गजानश्वान्रथांश्चैव पातयामास पाण्डवः ॥१-१४८-३६ (६७२९)
पदातींश्च रथांश्चैव न्यवधीदर्जुनाग्रजः ।
गोपाल इव दण्डेन यथा पशुगणान्वने ॥१-१४८-३७ (६७३०)
चालयन्रथनागांश्च संचचाल वृकोदरः ।
भारद्वाजप्रियं कर्तुमुद्यतः फाल्गुनस्तदा ॥१-१४८-३८ (६७३१)
पार्षतं शरजालेन क्षिपन्नागात्स पाण्डवः ।
हयौघांश्च रथौघांश्च गजौघांश्च समन्ततः ॥१-१४८-३९ (६७३२)
पातयन्समरे राजन्युगान्ताग्निरिव ज्वलन् ।
ततस्ते हन्यमाना वै पञ्चालाः सृञ्जयास्तथा ॥१-१४८-४० (६७३३)
शरैर्नानाविधैस्तूर्णं पार्थं संछाद्य सर्वशः ।
सिंहनादं मुखैः कृत्वा समयुध्यन्त पाण्डवम् ॥१-१४८-४१ (६७३४)
तद्युद्धमभवद्धोरं समुहाङ्गुतदर्शनम् ।
सिंहनादस्वनं श्रुत्वा नामृष्यत्पाकशासनिः ॥१-१४८-४२ (६७३५)
ततः किरीटी सहसा पञ्चालान्समरेऽद्रवत् ।
छादयन्निषुजालेन महता मोहयन्निव ॥१-१४८-४३ (६७३६)
शीघ्रमभ्यस्यतो बाणान्संदधानस्य चानिशम् ।
नान्तरं ददृशे किंचित्कौन्तेयस्य यशस्विनः ॥१-१४८-४४ (६७३७)
ग्न दिशो नान्तरिक्षं च तदा नैव च मेदिनी ।
अदृश्यत महाराज तत्र किंचिन्न सङ्गरे ॥१-१४८-४५ (६७३८)
पाञ्चालानां कुरूणां च साधुसाध्विति निस्वनः ।
तत्र तूर्यनिनादश्च शङ्खानां च महास्वनः ॥' १-१४८-४६ (६७३९)
सिंहनादश्च संजज्ञे साधुशब्देन मिश्रितः ।
ततः पाञ्चालराजस्तु तथा सत्यजिता सह ॥१-१४८-४७ (६७४०)
त्वरमाणोऽभिदुद्राव महेन्द्रं शम्बरो यथा ।
महता शरवर्षेण पार्थः पाञ्चालमावृणोत् ॥१-१४८-४८ (६७४१)
ततो हलहलाशब्द आसीत्पाञ्चालके बले ।
जिवृक्षति महासिंहे गजानामिव यूथपम् ॥१-१४८-४९ (६७४२)
दृष्ट्वा पार्थं तदायान्तं सत्यजित्सत्यविक्रमः ।
पाञ्चालं वै परिप्रेप्सुर्धनञ्जयमदुद्रुवत् ॥१-१४८-५० (६७४३)
ततस्त्वर्जुनपाञ्चालौ युद्धाय समुपागतौ ।

व्यक्षोभयेतां तौ सैन्यमिन्द्रवैरोचनाविव ॥१-१४८-५१ (६७४४)
ततः सत्यजितं पार्थो दशभिर्मर्मभेदिभिः ।
विव्याध बवलद्गाढं तदद्भुतमिवाभवत् ॥१-१४८-५२ (६७४५)
ततः शरशतैः पार्थं पाञ्चालः शीघ्रमार्दयत् ।
पार्थस्तु शरवर्षेण च्छाद्यमानो महारथः ॥१-१४८-५३ (६७४६)
वेगं चक्रे महावेगो धनुर्ज्यामवमृज्य च ।
ततः सत्यजितश्चापं छित्वा राजानमभ्ययात् ॥१-१४८-५४ (६७४७)
अथान्यद्धनुरादाय सत्यजिद्वेगवत्तरम् ।
साश्वं ससूतं सरथं पार्थं विव्याध सत्वरः ॥१-१४८-५५ (६७४८)
स तं न ममृषे पार्थः पाञ्चालेनार्दितो युधि ।
ततस्तस्य विनाशार्थं सत्वरं व्यसृजच्छरान् ॥१-१४८-५६ (६७४९)
हयान्ध्वजं धनुर्मुष्टिमुभौ तौ पार्ष्णिसारथी ।
स तथा भिद्यमानेषु कार्मुकेषु पुनः पुनः ॥१-१४८-५७ (६७५०)
हयेषु विनिकृत्तेषु विमुखोऽभवदाहवे ।
स सत्यजितमालेक्य तथा विमुखमाहवे ॥१-१४८-५८ (६७५१)
वेगेन महता राजन्नभ्यधावत पार्षतम् ।
तदा चक्रे महद्युद्धमर्जुनो जयतां वरः ॥१-१४८-५९ (६७५२)
तस्य पार्थो धनुश्छित्त्वा ध्वजं चोर्व्यामपातयत् ।
पञ्चभिस्तस्य विव्याध हयान्सूतं च सायकैः ॥१-१४८-६० (६७५३)
तत उत्सृज्य तच्चापमाददानः शरावरम् ।
खड्गमुद्धृत्य कौन्तेयः सिंहनादमथाकरोत् ॥१-१४८-६१ (६७५४)
पाञ्चालस्य रथस्येषामाप्लुत्य सहसाऽपतत् ।
पाञ्चालरथमास्थाय अवित्रस्तो धनञ्जयः ॥१-१४८-६२ (६७५५)
विक्षोभ्याम्भोनिधिंतार्क्ष्यस्तंनागमिव सोऽग्रहीत् ।
ततस्तु सर्वपाञ्चाला विद्रवन्ति दिशो दश ॥१-१४८-६३ (६७५६)
दर्शयन्सर्वसैन्यानां स बाह्वोर्बलमात्मनः ।
सिंहनादस्वनं कृत्वा निर्जगाम धनञ्जयः ॥१-१४८-६४ (६७५७)
आयान्तमर्जुनं दृष्ट्वा कुमाराः सहितास्तदा ।
ममृदुस्तस्य नगरं द्रुपदस्य महात्मनः ॥१-१४८-६५ (६७५८)
अर्जुन उवाच।१-१४८-६६क्ष् (८७७)
संबन्धी कुरुवीराणां द्रुपदो राजसत्तमः ।
मा वधीस्तद्बलं भीम गुरुदानं प्रदीयताम् ॥१-१४८-६६ (६७५९)
वैशंपायन उवाच।१-१४८-६७क्ष् (८७८)
भीमसेनस्तदा राजन्नर्जुनेन निवारितः ।
अतृप्तो युद्धधर्मेषु न्यवर्तत महाबलः ॥१-१४८-६७ (६७६०)
ते यज्ञसेनं द्रुपदं गृहीत्वा रणमूर्धनि ।

उपाजग्मुः सहामात्यं द्रोणाय भरतर्षभ ॥ १-१४८-६८ (६७६१)
भग्नदर्पं हृतधनं तं तथा वशमागतम् ।
स वैरं मनसा ध्यात्वा द्रोणो द्रुपदमब्रवीत् ॥ १-१४८-६९ (६७६२)
विमृज्य तरसा राष्ट्रं पुरं ते मृदितं मया ।
प्राप्य जीवन्रिपुवशं सखिपूर्वं किमिष्यते ॥ १-१४८-७० (६७६३)
एवमुक्त्वा प्रहस्यैनं किंचित्स पुनरब्रवीत् ।
मा भैः प्राणभयाद्वीर क्षमिणो ब्राह्मणा वयम् ॥ १-१४८-७१ (६७६४)
आश्रमे क्रीडितं यत्तु त्वया बाल्ये मया सह ।
तेन संवर्धितः स्नेहः प्रीतिश्च क्षत्रियर्षभ ॥ १-१४८-७२ (६७६५)
प्रार्थयेयं त्वया सख्यं पुनरेव जनाधिप ।
वरं ददामि ते राजन्राज्यस्यार्धमवाप्नुहि ॥ १-१४८-७३ (६७६६)
अराजा किल नो राज्ञः सखा भवितुमर्हति ।
अतः प्रयतितं राज्ये यज्ञसेन मया तव ॥ १-१४८-७४ (६७६७)
राजासि दक्षिणे कूले भागीरथ्याहमुत्तरे ।
सखायं मां विजानीहि पाञ्चाल यदि मन्यसे ॥ १-१४८-७५ (६७६८)
द्रुपद उवाच। १-१४८-७६क्ष् (८७९)
अनाश्चर्यमिदं ब्रह्मन्विक्रान्तेषु महात्मसु ।
प्रीये त्वयाऽहं त्वत्तश्च प्रीतिमिच्छामि शाश्वतीम् ॥ १-१४८-७६ (६७६९)
वैशंपायन उवाच। १-१४८-७७क्ष् (८८०)
एवमुक्तः स तं द्रोणो मोक्षयामास भारत ।
सत्कृत्य चैनं प्रीतात्मा राज्यार्धं प्रत्यपादयत् ॥ १-१४८-७७ (६७७०)
माकन्दीमथ गङ्गायास्तीरे जनपदायुताम् ।
सोऽध्यावसद्दीनमनाः काम्पिल्यं च पुरोत्तमम् ॥ १-१४८-७८ (६७७१)
दक्षिणांश्चापि पञ्चालान्यावच्चर्मण्वती नदी ।
द्रोणेन चैवं द्रुपदः परिभूयाथ पालितः ॥ १-१४८-७९ (६७७२)
क्षात्रेण च बलेनास्य नापश्यत्स पराजयम् ।
हीनं विदित्वा चात्मानं ब्राह्मेण स बलेनतु ॥ १-१४८-८० (६७७३)
पुत्रजन्म परीप्सन्वै पृथिवीमन्वसंचरत् ।
अहिच्छत्रं च विषयं द्रोणः समभिपद्यत ॥ १-१४८-८१ (६७७४)
एवं राजन्नहिच्छत्रा पुरीजनपदायुता ।
युधि निर्जित्य पार्थेन द्रोणाय प्रतिपादिता ॥ ॥ १-१४८-८२ (६७७५)

इति श्रीमन्महाभारते आदिपर्वणि संभवपर्वणि
अष्टचत्वारिंशदधिकशततमोऽध्यायः ॥ १४८ ॥

Mahabharata - Adi Parva - Chapter Footnotes

१-१४८-६१ शरावरं चर्म ॥
१-१४८-६२ ईषा रथस्य युगचक्रसंलग्नं महादारु ॥
१-१४८-७० प्राप्य जीवन्नृप वशामिति ङपाठः ॥
अष्टचत्वारिंशदधिकशततमोऽध्यायः ॥
१४८ ॥

---

अध्यय१४९
॥ श्रीः ॥
१.१४९. अध्यायः १४९

Mahabharata - Adi Parva - Chapter Topics
द्रुपदस्य याजोपयाजसमीपगमनम् ॥ १ ॥
उपयाजेन द्रोणविनाशकपुत्रोत्पादनार्थं याजनाय प्रार्थिते याजनस्य प्रत्याख्यानम् ॥ २ ॥
याजेनाङ्गीकारे यजनारम्भः ॥ ३ ॥
अपत्यप्रदहविःप्राशनार्थं द्रुपदपत्न्या आह्वाने गर्वात्तया विलम्बनम् ॥ ४ ॥
क्रुद्धाभ्यां याजोपयाजाभ्यां अग्नौ हविषो होमेनाग्निकुण्डाद्धृष्टद्युम्नस्योत्पत्तिः ॥ ५ ॥
द्वितीयहविषो होमेन पाञ्चाल्या उत्पत्तिः ॥ ६ ॥
तयोर्नामकरणम् ॥ ७ ॥
द्रोणाद्धृष्टद्युम्नस्यास्त्रशिक्षणम् ॥ ८ ॥

Mahabharata - Adi Parva - Chapter Text

१-१४९-० (६७७६)
ग्वैशंपायन उवाच। १-१४९-०क्ष् (८८१)
द्रोणेन वैरं द्रुपदो न सुष्वाप स्मरंस्तदा ।
क्षात्रेण वै बलेनास्य नाऽशशंसे पराजयम् ॥ १-१४९-१ (६७७७)
हीनं विदित्वा चात्मानं ब्राह्मेणापि बलेन च ।
द्रुपदोऽमर्षणाद्राजा कर्मसिद्धान्द्विजोत्तमान् ॥ १-१४९-२ (६७७८)
अन्विच्छन्परिचक्राम ब्राह्मणावसथान्बहून् ।
नास्ति श्रेष्ठं ममापत्यं धिग्बन्धूनिति च ब्रुवन् ॥ १-१४९-३ (६७७९)
निश्वासपरमो ह्यासीद्द्रोणं प्रतिचिकीर्षया ।
न सन्ति मम मित्राणि लोकेऽस्मिन्नास्ति वीर्यवान् ॥ १-१४९-४ (६७८०)
पुत्रजन्म परीप्सन्वै पृथिवीमन्वयादिमाम् ।
प्रभावशिक्षाविनयाद्द्रोणस्यास्त्रबलेन च ॥ १-१४९-५ (६७८१)
कर्तुं प्रयतमानो वै न शशाक पराजयम् ।

अभितः सोऽथ कल्माषीं गङ्गातीरे परिभ्रमन् ॥ १-१४९-६ (६७८२)
ब्राह्मणावसथं पुण्यमाससाद महीपतिः ।
तत्र नास्नातकः कश्चिन्न चासीदव्रतो द्विजः ॥ १-१४९-७ (६७८३)
तथैव तौ महाभागौ सोऽपश्यच्छंसितव्रतौ ।
याजोपयाजौ ब्रह्मर्षी भ्रातरौ पृषतात्मजः ॥ १-१४९-८ (६७८४)
संहिताध्ययने युक्तौ गोत्रतश्चापि काश्यपौ ।
अरण्ये युक्तरूपौ तौ ब्राह्मणावृषिसत्तमौ ॥ १-१४९-९ (६७८५)
स उपामन्त्रयामास सर्वकामैरतन्द्रितः ।
बुद्ध्वा तयोर्बलं बुद्धिं कनीयांसमुपह्वरे ॥ १-१४९-१० (६७८६)
प्रपेदे छन्दयन्कामैरुपयाजं धृतव्रतम् ।
गुरुशुश्रूषणे युक्तः प्रियकृत्सर्वकामदम् ॥ १-१४९-११ (६७८७)
पाद्येनासनदानेन तथाऽर्घ्येण फलैश्च तम् ।
अर्हयित्वा यथान्यायमुपयाजोऽब्रवीत्ततः ॥ १-१४९-१२ (६७८८)
येन कार्यविशेषेण त्वमस्मानभिकाङ्क्षसे ।
कृतश्चायं समुद्योगस्तद्ब्रवीतु भवानिति ॥ १-१४९-१३ (६७८९)
वैशंपायन उवाच। १-१४९-१४क्ष् (८८२)
स बुद्ध्वा प्रीतिसंयुक्तमृषीणामुत्तमं तदा ।
उवाच छन्दयन्कामैर्द्रुपदः स तपस्विनम् ॥ १-१४९-१४ (६७९०)
येन मे कर्मणा ब्रह्मन्पुत्रः स्याद्द्रोणमृत्येव ।
उपयाज चरस्वैतत्प्रदास्यामि धनं तव ॥ १-१४९-१५ (६७९१)
उपयाज उवाच। १-१४९-१६क्ष् (८८३)
नाहं फलार्थी द्रुपद योऽर्थी स्यात्तत्र गम्यताम्। १-१४९-१६ (६७९२)
वैशंपायन उवाच ।
प्रत्याख्यातस्तु तेनैवं स वै सज्जनसंनिधौ ॥ १-१४९-१६क्ष् (८८४)
आराधयिष्यन्द्रुपदः स तं पर्यचरत्तदा ।
ततः संवत्सरस्यान्ते द्रुपदं द्विजसत्तमः ॥ १-१४९-१७ (६७९३)
उपयाजोऽब्रवीद्वाक्यं काले मधुरया गिरा ।
ज्येष्ठो भ्राता न मेऽत्याक्षीद्विचरन्विजने वने ॥ १-१४९-१८ (६७९४)
अपरिज्ञातशौचायां भूमौ निपतितं फलम् ।
तदपश्यमहं भ्रातुरसांप्रतमनुव्रजन् ॥ १-१४९-१९ (६७९५)
विमर्शं हि फलादाने नायं कुर्यात्कथंचन ।
नापश्यत्फलं दृष्ट्वा दोषांस्तस्याऽऽनुबन्धिकान् ॥ १-१४९-२० (६७९६)
विविनक्ति न शौचार्थी सोऽन्यत्रापि कथं भवेत् ।
संहिताध्ययनस्यान्ते पञ्चयज्ञान्निरूप्य च ॥ १-१४९-२१ (६७९७)
भैक्षमुञ्छेन सहितं भुञ्जानस्तु तदा तदा ।
कीर्तयत्येव राजर्षे भोजनस्य रसं पुनः ॥ १-१४९-२२ (६७९८)

संहिताध्ययनं कुर्वन्वने गुरुकुले वसन् ।
भैक्षमुच्छिष्टमन्येषां भुङ्क्ते स्म सततं तथा ॥ १-१४९-२३ (६७९९)
कीर्तयन्गुणमन्नानामथ प्रीतो मुहुर्मुहुः ।
एवं फलार्थिनस्तस्मान्मन्येऽहं तर्कचक्षुषा ॥ १-१४९-२४ (६८००)
तं वै गच्छेह नृपते त्वां स संयाजयिष्यति ॥ १-१४९-२५ (६८०१)
वैशंपायन उवाच। १-१४९-२६क्ष् (८८५)
उपयाजवचः श्रुत्वा याजस्याश्रममभ्यगात् ।
जुगुप्समानो नृपतिर्मनसेदं विचिन्तयन् ॥ १-१४९-२६ (६८०२)
भृशं संपूज्य पूजार्हमृषिं याजमुवाच ह ।
गोशतानि ददान्यष्टौ याज याजय मां विभो ॥ १-१४९-२७ (६८०३)
द्रोणवैरान्तरे तप्तं विषण्णं शरणागतम् ।
ब्रह्मबन्धुप्रणिहितं न क्षत्रं क्षत्रियो जयेत् ॥ १-१४९-२८ (६८०४)
तस्माद्द्रोणभयार्तं मां भवांस्त्रातुमिहार्हति ।
येन मे कर्मणा ब्रह्मन्पुत्रः स्याद्द्रोणमृत्यवे ॥ १-१४९-२९ (६८०५)
अर्जुनस्यापि वै भार्या भवेद्या वरवर्णिनी ।
स हि ब्रह्मविदां श्रेष्ठो ब्राह्मे क्षात्रेऽप्यनुत्तमः ॥ १-१४९-३० (६८०६)
ततो द्रोणस्तु माऽजैषीत्सखिविग्रहकारणात् ।
क्षत्रियो नास्ति तुल्योऽस्य पृथिव्यां कश्चिदग्रणीः ॥ १-१४९-३१ (६८०७)
भारताचार्यमुख्यस्य भारद्वाजस्य धीमतः ।
द्रोणस्य शरजालानि रिपुदेहहराणि च ॥ १-१४९-३२ (६८०८)
षडरत्नि धनुश्चास्य खड्गमप्रतिम तथा ।
स हि ब्राह्मणवेषेण क्षात्रं वेगमसंशयम् ॥ १-१४९-३३ (६८०९)
प्रतिहन्ति महेष्वासो भारद्वाजो महामनाः ।
कार्तवीर्यसमो ह्येष खट्वाङ्गप्रतिमो रणे ॥ १-१४९-३४ (६८१०)
क्षत्रोच्छेदाय विहितो जामदग्न्य इवास्थितः ॥ १-१४९-३५ (६८११)
सहितं क्षत्रवेगेन ब्रह्मवेगेन सांप्रतम् ।
उपपन्नं हि मन्येऽहं भारद्वाजं यशस्विनम् ॥ १-१४९-३६ (६८१२)
नेषवस्तमपाकुर्युर्न च प्रासा न चासयः ।
ब्राह्मं तस्य महातेजो मन्त्राहुतिहुतं यथा ॥ १-१४९-३७ (६८१३)
तस्य ह्यस्त्रबलं घोरमप्रसह्यं परैर्भुवि ।
शत्रून्समेत्य जयति क्षत्रं ब्रह्मपुरस्कृतम् ॥ १-१४९-३८ (६८१४)
ब्रह्मक्षत्रे च सहिते ब्रह्मतेजो विशिष्यते ।
सोऽहं क्षत्रबलाद्धीनो ब्रह्मतेजः प्रपेदिवान् ॥ १-१४९-३९ (६८१५)
द्रोणाद्विशिष्टमासाद्य भवन्तं ब्रह्मवित्तमम् ।
द्रोणान्तकमहं पुत्रं लभेयं युधि दुर्जयम् ॥ १-१४९-४० (६८१६)
द्रोणमृत्युर्यथा मेऽद्य पुत्रो जायेत वीर्यवान् ।

तत्कर्म कुरु मे याज निर्वपाम्यर्बुद्धं गवाम् ॥१-१४९-४१ (६८१७)
वैशंपायन उवाच।१-१४९-४२क्ष् (८८६)
तथेत्युक्त्वा तुं तं याजो यज्ञार्थमुपकल्पयन् ।
गुर्वर्थ इति चाकाममुपयाजमचोदयत् ॥१-१४९-४२ (६८१८)
द्रुपदं च महाराजमिदं वचनमब्रवीत् ।
मा भैस्त्वं संप्रदास्यामि कर्मणा भवतः सुतम् ॥१-१४९-४३ (६८१९)
क्षिप्रमुत्तिष्ठ चाव्यग्रः संभारानुपकल्पय। १-१४९-४४ (६८२०)
वैशंपायन उवाच ।
एवमुक्त्वा प्रतिज्ञाय कर्म चास्याददे मुनिः ॥ १-१४९-४४क्ष् (८८७)
ब्राह्मणो द्विपदां श्रेष्ठो यथाविधि कथाक्रमम् ।
याजो द्रोणविनाशाय याजयामास तं नृपम् ॥१-१४९-४५ (६८२१)
गुर्वर्थेऽयोजयत्कर्म याजस्यापि समीपतः ।
ततस्तस्य नरेन्द्रस्य उपयाजो महातपाः ॥१-१४९-४६ (६८२२)
आचव्यौ कर्म वैतानं तथा पुत्रफलाय वै ।
इह पुत्रो महावीर्यो महातेजा महाबलः ।
इष्यते यद्विधो राजन्भविता स तथाविधः ॥ १-१४९-४७ (६८२३)
वैशंपायन उवाच।१-१४९-४८क्ष् (८८८)
भारद्वाजस्य हन्तारं सोऽभिसन्धाय पार्थिवः ।
आजहेऽथ तदा राजन्द्रुपदः कर्म सिद्धये ॥१-१४९-४८ (६८२४)
ब्राह्मणो द्विपदां श्रेष्ठो जुहाव च यथाविधि ।
कौसवी नाम तस्यासीद्या वै तां पुत्रगृद्धिनः ॥१-१४९-४९ (६८२५)
सौत्रामणिं तथा पत्नीं ततः कालेऽभ्ययात्तदा ।
याजस्तु सवनस्यान्ते देवीमाह्वापयत्तदा ॥१-१४९-५० (६८२६)
प्रेहि मां राज्ञि पृषति मिथुनं त्वामुपस्थितम् ।
कुमारश्च कुमारी च पितृवंशविवृद्धये ॥१-१४९-५१ (६८२७)
पृषत्युवाच।१-१४९-५२क्ष् (८८९)
नालिप्तं वै मम मुखं पुण्यान्गान्धान्बिभर्मि च ।
न पत्नी तेऽस्मि सूत्यर्थे तिष्ठ याज मम प्रिये ॥१-१४९-५२ (६८२८)
याज उवाच।१-१४९-५३क्ष् (८९०)
याजेन श्रपितं हव्यमुपयाजेन मन्त्रितम् ।
कथं कामं न संदध्यात्पृषति प्रेहि तिष्ठ वा ॥१-१४९-५३ (६८२९)
वैशंपायन उवाच।१-१४९-५४क्ष् (८९१)
एवमुक्त्वा तु याजेन हुते हविषि संस्कृते ।
उत्तस्थौ पावकात्तस्मात्कुमारो देवसंनिभः ॥१-१४९-५४ (६८३०)
ज्वालावर्णो घोररूपः किरीटी वर्म धारयन् ।
वीरः सखङ्गः सशरो धनुष्मान्स नदन्मुहुः ॥१-१४९-५५ (६८३१)

सोऽभ्यरोहद्रथवरं तेन च प्रययौ तदा ।
जातमात्रे कुमारे च वाक्किलान्तर्हिताब्रवीत् ॥१-१४९-५६ (६८३२)
एष शिष्यश्च मृत्युश्च भारद्वाजस्य जायते ।
भयापहो राजपुत्रः पाञ्चालानां यशस्करः ॥१-१४९-५७ (६८३३)
राज्ञः शोकापहो जात एष द्रोणवधाय हि ।
इत्यवोचन्महद्भूतमदृश्यं खेचरं तदा ॥१-१४९-५८ (६८३४)
ततः प्रणेदुः पाञ्चालाः प्रहृष्टाः साधुसाध्विति ।
द्वितीयायां च होत्रायां हुते हविषि मन्त्रिते ॥१-१४९-५९ (६८३५)
कुमारी चापि पाञ्चाली वेदिमध्यात्समुत्थिता ।
प्रत्याख्याते पृषत्या च याजके भरतर्षभ ॥१-१४९-६० (६८३६)
पुनः कुमारी पाञ्चाली सुभगा वेदिमध्यगा ।
अन्तर्वेद्यां समुद्भूता कन्या सा सुमनोहरा ॥१-१४९-६१ (६८३७)
श्यामा पद्मपलाशाक्षी नीलकुञ्चितमूर्धजा ।
मानुषं विग्रहं कृत्वा साक्षाच्छ्रीरिव वर्णिनी ॥१-१४९-६२ (६८३८)
ताम्रतुङ्गनखी सुभ्रूश्चारुपीनपयोधरा ।
नीलोत्पलसमो गन्धो यस्याः क्रोशात्प्रधावति ॥१-१४९-६३ (६८३९)
या बिभर्ति परं रूपं यस्या नास्त्युपमा भुवि ।
देवदानवयक्षाणामीप्सिता वरवर्णिनी ॥१-१४९-६४ (६८४०)
तां चापि जातां सुश्रोणीं वागुवाचाशरीरिणी ।
सर्वयोषिद्वरा कृष्णा क्षयं क्षत्रस्य नेष्यति ॥१-१४९-६५ (६८४१)
सुरकार्यमियं काले करिष्यति सुमध्यमा ।
अस्या हेतोः क्षत्रियाणां महदुत्पत्स्यते भयम् ॥१-१४९-६६ (६८४२)
तच्छ्रुत्वा सर्वपाञ्चालाः प्रणेदुः सिंहसङ्घवत् ।
न चैनान्हर्षसंपन्नानियं सेहे वसुन्धरा ॥१-१४९-६७ (६८४३)
तथा तु मिथुनं जज्ञे द्रुपदस्य महात्मनः ।
कुमारश्च कुमारी च मनोज्ञौ तौ नरर्षभौ ॥१-१४९-६८ (६८४४)
श्रिया परमया युक्तौ क्षात्रेण वपुषा तथा ।
तौ दृष्ट्वा पृषती याजं प्रपेदे सा सुतार्थिनी ॥१-१४९-६९ (६८४५)
न वै मदन्यां जननीं जानीयातामिमाविति ।
तथेत्युवाच तां याजो राज्ञः प्रियचिकीर्षया ॥१-१४९-७० (६८४६)
तयोस्तु नामनी चक्रुर्द्विजाः संपूर्णमानसाः ।
धृष्टत्वादप्रधृष्यत्वात् द्युम्नाद्युत्संभवादपि ॥१-१४९-७१ (६८४७)
धृष्टद्युम्नः कुमारोऽयं द्रुपदसय भवत्विति ।
कृष्णेत्येवाभवत्कन्या कृष्णा भूत्सा हि वर्णतः ॥१-१४९-७२ (६८४८)
तथा तन्मिथुनं जज्ञे द्रुपदस्य महामखे ।
वैदिकाध्ययने पारं धृष्टद्युम्नो गतस्तदा ॥१-१४९-७३ (६८४९)

धृष्टद्युम्नं तु पाञ्चाल्यमानीय स्वं निवेशनम् ।
उपाकरोदस्त्रहेतोर्भारद्वाजः प्रतापवान् ॥ १-१४९-७४ (६८५०)
अमोक्षणीयं दैवं हि भावि मत्वा महामतिः ।
तथा तत्कृतवान्द्रोण आत्मकीर्त्यनुरक्षणात् ॥ १-१४९-७५ (६८५१)
सर्वास्त्राणि स तु क्षिप्रमाप्तवान्परया धिया ॥ ॥ १-१४९-७६ (६८५२)

इति श्रीमन्महाभारते आदिपर्वणि संभवपर्वणि
ऊनपञ्चाशदधिकशततमोऽध्यायः ॥ १४९ ॥
Mahabharata - Adi Parva - Chapter Footnotes

१-१४९-६३ क्रोशात् क्रोशमभिव्याप्य ॥
१-१४९-७१ द्युम्नाद्युत्संभवात् हिरण्यादिभिः सह जातत्वात् ॥
ऊनपञ्चाशदधिकशततमोऽध्यायः ॥
१४९ ॥

---

अध्यय१५०
॥ श्रीः ॥
१.१५०. अध्यायः १५०

Mahabharata - Adi Parva - Chapter Topics
द्रुपदोत्पत्तिः ॥ १ ॥

Mahabharata - Adi Parva - Chapter Text

१-१५०-० (६८५३)
जनमेजय उवाच। १-१५०-०क्ष् (८९२)
द्रुपदस्यापि विप्रर्षे श्रोतुमिच्छामि संभवम् ।
कथं चापि समुत्पन्नः कथमस्त्राण्यवाप्तवान् ॥' १-१५०-१ (६८५४)
एतदिच्छामि भगवंस्त्वत्तः श्रोतुं द्विजोत्तम ।
कौतूहलं जन्मसु मे कीर्त्यमानेष्वनेकशः ॥ १-१५०-२ (६८५५)
वैशंपायन उवाच। १-१५०-३क्ष् (८९३)
राजा बभूव पाञ्चालः पुत्रार्थी पुत्रकारणात् ।
वनं गतो महाराजस्तपस्तेपे सुदारुणम् ॥ १-१५०-३ (६८५६)
आराधयन्प्रयत्नेन महर्षीन्संशितव्रतान् ।
तस्य संतप्यमानस्य वने मृगगणायुते ॥ १-१५०-४ (६८५७)
कालस्तु सुमहान्राजन्नत्ययात्सुतकारणात् ।
स तु राजा महातेजास्तपस्तीव्रं समाददे ॥ १-१५०-५ (६८५८)

कंचित्कालं वायुभक्षो निराहारस्तथैव च ।
तथैव तु महाबाहोर्वर्तमानस्य भारत ॥ १-१५०-६ (६८५९)
कालस्तस्य महाराज यातो वै नृपसत्तम ।
ततो नातिचिरात्काले वसन्ते कामदीपने ॥ १-१५०-७ (६८६०)
फुल्लाशोकवने चैव प्राणिनां सुमनोहरे ।
नद्यास्तीरं ततो गत्वा गङ्गायाः पद्मलोचनः ॥ १-१५०-८ (६८६१)
नियमस्थश्च राजासीत्तदा भरतसत्तम ।
ततो नातिचिरात्काले वनं तन्मनुजेश्वर ॥ १-१५०-९ (६८६२)
संप्राप्ता ह्यप्सरा राजन्मेनकेत्यभिविश्रुता ।
पुष्पद्रुमान्सज्जमाना राज्ञो दर्शनमागमत् ॥ १-१५०-१० (६८६३)
न ददर्श तु सा राजंस्तत्र स्थानगतं नृपम् ।
दृष्ट्वा चाप्सरसं तां तु शुक्रं राज्ञोऽपतद्भुवि ॥ १-१५०-११ (६८६४)
ततः स राजा राजेन्द्र लज्जया नृपतिः स्वयम् ।
पद्भ्यामाक्रमतायुष्मंस्ततस्तु द्रुपदोऽभवत् ॥ १-१५०-१२ (६८६५)
ततस्तु तपसा तस्य राजर्षेर्भावितात्मनः ।
पुत्रः समभवच्छीघ्रं पदोस्तस्य क्रमेण तु ॥ १-१५०-१३ (६८६६)
तेनास्य ऋषयः सर्वे समागम्य तपोधनाः ।
नाम चुक्रुर्हि विद्वांसो द्रुपदोऽस्त्विति भारत ॥ १-१५०-१४ (६८६७)
स तस्यैवाश्रमे राजन्भरद्वाजस्य भारत ।
ववृधे सुमुखं तत्र कामैः सर्वैर्नृपोत्तम ॥ १-१५०-१५ (६८६८)
पाञ्चालोऽपि हि राजेन्द्र स्वराज्यं गतवान्प्रभुः ।
भरद्वाजस्य विद्यार्थं सुतं दत्वा महात्मनः ॥ १-१५०-१६ (६८६९)
स कुमारस्ततो राजन्द्रोणेन सहितो वने ।
वेदांश्चाधिजगे साङ्गान्धनुर्वेदांश्च भारत ॥ १-१५०-१७ (६८७०)
परया स मुदा युक्तो विचचार वने सुखम् ।
तस्यैवं वर्तमानस्य वने वनचरैः सह ॥ १-१५०-१८ (६८७१)
कालेनातिचिराद्राजन्पिता स्वर्गमुपेयिवान् ।
स समागम्य पाञ्चालैः पाञ्चालेष्वभिषेचितः ॥ १-१५०-१९ (६८७२)
प्राप्तश्च राज्यं राजेन्द्र सुहृदां प्रीतिवर्धनः ।
राज्यं ररक्ष धर्मेण यथा चेन्द्रस्त्रिविष्टपम् ॥ १-१५०-२० (६८७३)
एतन्मया ते राजेन्द्र यथावत्परिकीर्तितम् ।
द्रुपदस्य च राजर्षेर्धृष्टद्युम्नस्य जन्म च ॥ ॥ १-१५०-२१ (६८७४)

इति श्रीमन्महाभारते आदिपर्वणि संभवपर्वणि
पञ्चाशदधिकशततमोऽध्यायः ॥ १५० ॥

---

अध्यय१५१

॥ श्रीः ॥

१.१५१. अध्यायः १५१

Mahabharata - Adi Parva - Chapter Topics

यौवराज्ये युधिष्ठिरस्याभिषेकः ॥ १ ॥
भीमसेनस्य बलरामाद्गदायुद्धशिक्षणम् ॥ २ ॥
द्रोणेनार्जुनस्य ब्रह्मशिरोस्त्रविषये नियमकथनम् ॥ ३ ॥
भीमार्जुनदिग्विजयेन धृतराष्ट्रचिन्ता ॥ ४ ॥

Mahabharata - Adi Parva - Chapter Text

१-१५१-० (६८७५)
वैशंपायन उवाच। १-१५१-०क्ष् (८९४)
ग्धृतराष्ट्रस्तु राजन्द्रे यदा कौरवनन्दनम् ।
युधिष्ठिरं विजानन्वै समर्थं राज्यरक्षणे ॥ १-१५१-१ (६८७६)
यौवराज्याभिषेकार्थममन्त्रयत मन्त्रिभिः ।
ते तु बुद्धवान्वतप्यन्त धृतराष्ट्रात्मजास्तदा ॥ १-१५१-२ (६८७७)
ततः संवत्सरस्यान्ते यौवराज्याय पार्थिव ।
स्थापितो धृतराष्ट्रेण पाण्डुपुत्रो युधिष्ठिरः ॥ १-१५१-३ (६८७८)
ततोऽदीर्घेण कालेन कुन्तीपुत्रो युधिष्ठिरः ।
पितुरन्तर्दधे कीर्तिं शीलवृत्तसमाधिभिः ॥ १-१५१-४ (६८७९)
असियुद्धे गदायुद्धे रथयुद्धे च पाण्डवः ।
संकर्षणादशिक्षद्वै शश्वच्छिक्षां वृकोदरः ॥ १-१५१-५ (६८८०)
समाप्तशिक्षो भीमस्तु द्युमत्सेनसमो बले ।
पराक्रमेण संपन्नो भ्रातॄणामचरद्वशे ॥ १-१५१-६ (६८८१)
प्रगाढदृढमुष्टित्वे लाघवे वेधने तथा ।
क्षुरनाराचभल्लानां विपाठानां च तत्त्ववित् ॥ १-१५१-७ (६८८२)
ऋजुवक्रविशालानां प्रयोक्ता फाल्गुनोऽभवत् ।
लाघवे सौष्ठवे चैव नान्यः कश्चन विद्यते ॥ १-१५१-८ (६८८३)
बीभत्सुसदृशो लोक इति द्रोणो व्यवस्थितः ।
ततोऽब्रवीद्गुडाकेशं द्रोणः कौरवसंसदि ॥ १-१५१-९ (६८८४)
अगस्त्यस्य धनुर्वेदे शिष्यो मम गुरुः पुरा ।
अग्निवेश्य इति ख्यातस्तस्य शिष्योऽस्मि भारत ॥ १-१५१-१० (६८८५)
तीर्थात्तीर्थं गमयितुमहमेतत्समुद्यतः ।
तपसा यन्मया प्राप्तममोघमशनिप्रभम् ॥ १-१५१-११ (६८८६)
अस्त्रं ब्रह्मशिरो नाम यद्दहेत्पृथिवीमपि ।

ददता गुरुणा चोक्तं न मनुष्येष्विदंत्वया ॥ १-१५१-१२ (६८८७)
भारद्वाज विमोक्तव्यमल्पवीर्येषु संयुगे ।
यद्यदन्तर्हितं भूतं किंचिद्युद्धयेत्त्वया सह ॥ १-१५१-१३ (६८८८)
महातेजस्त्वमेतेन हन्याः शस्त्रेण संयुगे ।
त्वया प्राप्तमिदं वीर दिव्यं नान्योऽर्हति त्विदम् ॥ १-१५१-१४ (६८८९)
समयस्तु त्वया रक्ष्यो मुनिसृष्टो विशांपते ।
आचार्यदक्षिणां देहि ज्ञातिग्रामस्य पश्यतः ॥ १-१५१-१५ (६८९०)
ददानीति प्रतिज्ञाते फाल्गुनेनाब्रवीद्गुरुः ।
युद्धेऽहं प्रतियोद्धव्यो युध्यमानस्त्वयाऽनघ ॥ १-१५१-१६ (६८९१)
तथेति च प्रतिज्ञाय द्रोणाय कुरुपुङ्गवः ।
उपसंगृह्य चरणावुपतस्थे विनीतवत् ॥ १-१५१-१७ (६८९२)
द्रोणो जगाद वचनं समालिङ्ग्य तु फाल्गुनम् ।
यन्मयोक्तं पुरा पार्थ तव लोके नरं क्वचित् ॥ १-१५१-१८ (६८९३)
सदृशं कारये नैव सर्वप्रहरणे युधि ।
तत्कृतं च मया सम्यक्तव तुल्यो न वर्तते ॥ १-१५१-१९ (६८९४)
देवा युधि न शक्तास्त्वां योद्धुं दैत्या न दानवाः ।
नाहं त्वत्तो विशिष्टोऽस्मि किं पुनर्मानवा रणे ॥ १-१५१-२० (६८९५)
एकस्तवाधिको लोके यो हि वृष्णिकुलोद्भवः ।
कृष्णः कमलपत्राक्षः कंसकालियसूदनः ॥ १-१५१-२१ (६८९६)
स जेता सर्वलोकानां सर्वप्रहरणायुधः ।
नैतावता ते पार्थाहं भवाम्यनृतवागिह ॥ १-१५१-२२ (६८९७)
तदधीनं जगत्सर्वं तत्प्रलीनं तदुद्भवम् ।
तत्पदं न विजानन्ति ब्रह्मेशानादयोऽपि वा ॥ १-१५१-२३ (६८९८)
तन्नाभिप्रभवो ब्रह्मा सर्वभूतानि निर्ममे ।
स एव कर्ता भोक्ता च संहर्ता च जगन्मयम् ॥ १-१५१-२४ (६८९९)
स एव भूतं भव्यं च भवच्च पुरुषः परः ।
नित्यः सर्वगतः स्थाणुरचलोऽयं सनातनः ॥ १-१५१-२५ (६९००)
प्रादुर्भवति योगात्मा पालनार्थं स लीलया ।
तत्तुल्यो हि न जायेत न जातो न जनिष्यते ॥ १-१५१-२६ (६९०१)
स हि मातुलजोऽभूत्ते चराचरगुरुः पिता ।
को हि तं जेतुमीहेत जानन्नात्महितं नरः ॥ १-१५१-२७ (६९०२)
श्यालश्च ते सखा चासौ तस्य त्वं प्राणवल्लभः ।
स्नेहमभ्यधिकं तस्य तव सख्यमवस्थितम् ॥ १-१५१-२८ (६९०३)
न तेन भवतो युद्धं भविता नर्मतोऽपि वा ।
अपिचार्थे तव पुरा शक्रेण किल चोदितः ॥ १-१५१-२९ (६९०४)
गोकुले वर्धमानस्तु नन्दगोपस्य कारणात् ।

ममांशः पाण्डवो लोके पृथिव्यां पुरुषोत्तमः ॥ १-१५१-३० (६९०५)
कौन्तेयावरजः श्रीमानर्जुनो नाम वीर्यवान् ।
भुवो भारापहरणे साहाय्यं ते करिष्यति ॥ १-१५१-३१ (६९०६)
तदर्थमभयं देहि पाहि चास्मत्कृते प्रभो ।
इत्युक्तः पुण्डरीकाक्षस्तदा शक्रेण फल्गुन ॥ १-१५१-३२ (६९०७)
तमुवाच ततः श्रीमाञ्शङ्खचक्रगदाधरः ।
जानामि पाण्डवे वंशे जातं पार्थं पितृष्वसुः ॥ १-१५१-३३ (६९०८)
पुत्रं परमधर्मिष्ठं सर्वशस्त्रभृतां वरम् ।
पालयामि त्वदंशं तं सर्वलोकमहाभुजम् ॥ १-१५१-३४ (६९०९)
आवयोः सख्यसदृशं न च लोके भविष्यति ।
यस्तद्भक्तः समद्भक्तो यस्तं द्वेष्टि स मामपि ॥ १-१५१-३५ (६९१०)
यन्मे वित्तं तु तत्तस्य तं विनाहं न जीवये ।
इति पार्थ पुरा शक्रमाह सर्वेश्वरो हरिः ॥ १-१५१-३६ (६९११)
तस्मात्तवापि सदृशस्तं विनाभ्यधिकः पुमान् ।
न चेह भविता लोके तमेव शरणं व्रज ॥ १-१५१-३७ (६९१२)
शरण्यः सर्वभूतानां देवदेवो जनार्दनः ॥' १-१५१-३८ (६९१३)
वैशंपायन उवाच। १-१५१-३९क्ष् (८९५)
तथेति च प्रतिज्ञाय द्रोणाय कुरुपुङ्गवः ।
उपसंगृह्य चरणौ युधिष्ठिरवशोऽभवत् ॥ १-१५१-३९ (६९१४)
स्वभावादगमच्छब्दो महीं सागरमेखलाम् ।
अर्जुनस्य समो लोके नास्ति कश्चिद्धनुर्धरः ॥ १-१५१-४० (६९१५)
गदायुद्धेऽसियुद्धे च रथयुद्धे च पाण्डवः ।
पारगश्च धनुर्युद्धे बभूवाथ धनञ्जयः ॥ १-१५१-४१ (६९१६)
नीतिमान्सकलां नीतिं विबुधाधिपतेस्तदा ।
'अस्त्रे शस्त्रे च शास्त्रे च रथनागाश्वकर्मणि।'
अवाप्य सहदेवोऽपि भ्रातॄणां ववृते वशे ॥ १-१५१-४२ (६९१७)
द्रोणेनैवं विनीतश्च भ्रातॄणां नकुलः प्रियः ।
चित्रयोधी समाख्यातो बभूवातिरथोदितः ॥ १-१५१-४३ (६९१८)
त्रिवर्षकृतयज्ञस्तु गन्धर्वाणामुपप्लवे ।
अर्जुनप्रमुखैः पार्थैः सौवीरः समरे हतः ॥ १-१५१-४४ (६९१९)
न शशाक वशे कर्तुं यं पाण्डुरपि वीर्यवान् ।
सोऽर्जुनेन वशं नीतो राजासीद्यवनाधिपः ॥ १-१५१-४५ (६९२०)
अतीव बलसंपन्नः सदा मानि कुरून्प्रति ।
विपुलो नाम सौवीरः शस्तः पार्थेन धीमता ॥ १-१५१-४६ (६९२१)
दत्तामित्र इति ख्यातं सङ्ग्रामे कृतनिश्चयम् ।
सुमित्रं नाम सौवीरमर्जुनोऽदमयच्छरैः ॥ १-१५१-४७ (६९२२)

भीमसेनसहायश्च रथानामयुतं च सः ।
अर्जुनः समरे प्राच्यान्सर्वानेकरथोऽजयत् ॥ १-१५१-४८ (६९२३)
तथैवैकरथो गत्वा दक्षिणामजयद्दिशम् ।
धनौघं प्रापयामास कुरुराष्ट्रं धनञ्जयः ॥ १-१५१-४९ (६९२४)
ग्यतः पञ्चदशे वर्षे सर्वमेतच्चकार सः ।
तं दृष्ट्वा धार्तराष्ट्राणां ततो भयमजायत ॥ १-१५१-५० (६९२५)
यः सर्वान्धृतराष्ट्रस्य पुत्रान्विप्रचकार ह ।
भीमसेनो महाबाहुर्बलाद्बलवतां वरः ॥ १-१५१-५१ (६९२६)
अदुष्टभावं तं दोषैर्जगृहुर्दोषबुद्धयः ।
धार्तराष्ट्रास्तथा सर्वे भयाद्भीमस्य कर्मणा ॥ १-१५१-५२ (६९२७)
तं दृष्ट्वा कर्मभिः पार्थान्सर्वानागतलक्षणान् ।
बलाद्बहुगुणांस्तेभ्यो बिभियुर्दोषबुद्धयः ॥' १-१५१-५३ (६९२८)
एवं सर्वे महात्मानः पाण्डवा मनुजोत्तमाः ।
परराष्ट्राणि निर्जित्य स्वराष्ट्रं ववृधुः पुरा ॥ १-१५१-५४ (६९२९)
ततो बलमतिख्यातं विज्ञाय दृढधन्विनाम् ।
दूषितः सहसा भावो धृतराष्ट्रस्य पाण्डुषु ।
स चिन्तापरमो राजा न निद्रामलभन्निशि ॥ ॥ १-१५१-५५ (६९३०)

इति श्रीमन्महाभारते आदिपर्वणि संभवपर्वणि
एकपञ्चाशदधिकशततमोऽध्यायः ॥ १५१ ॥

Mahabharata - Adi Parva - Chapter Footnotes

१-१५१-९ गुडाका निद्रा तस्या ईशमर्जुनं जितनिद्रं, गुडा स्नुही तद्वत्केशा यस्य ॥
१-१५१-११ तीर्थात्पात्रान्तरं गमयितुं संप्रदायाविच्छेदार्थमित्यर्थः ॥
१-१५१-१४ त्वया ग्राहान्मां मोचयता प्राप्तं प्रागेव ॥
१-१५१-२८ तस्य त्वयीति शेषः । तव तस्मिन्निति शेषः ॥
१-१५१-३५ तस्य मम च ॥
१-१५१-४२ विबुधाधिपतेरुद्भवात् ॥
१-१५१-४३ विनीतः शिक्षितः । अतिरथेषूदितः ख्यातः ॥
१-१५१-४४ गन्धर्वोपप्लवेऽपि यस्य सौवीरस्य यज्ञो न विप्लुत इत्ययोध्यत्वमुक्तम् ॥
१-१५१-४६ शस्तो हिंसितः ॥
१-१५१-५३ बिभियुः बिभ्युः ॥
१-१५१-५४ ववृधुर्वर्धितवन्तः ॥
एकपञ्चाशदधिकशततमोऽध्यायः ॥

अध्ययः१५२
॥ श्रीः ॥
१.१५२. अध्यायः १५२

Mahabharata - Adi Parva - Chapter Topics
युधिष्ठिरः साम्राज्येऽभिषेक्तव्य इति पौरवार्तां श्रुत्वा व्यथितस्य दुर्योधनस्य पित्रा संवादः ॥ १ ॥

Mahabharata - Adi Parva - Chapter Text

१-१५२-० (६९३१)
वैशंपायन उवाच। १-१५२-०क्ष् (८९६)
प्राणाधिकं भीमसेनं कृतविद्यं धनञ्जयम् ।
दुर्योधनो लक्षयित्वा पर्यतप्यत दुर्मनाः ॥ १-१५२-१ (६९३२)
ततो वैकर्तनः कर्णः शकुनिश्चापि सौबलः ।
अनेकैरभ्युपायैस्ते जिघांसन्ति स्म पाण्डवान् ॥ १-१५२-२ (६९३३)
पाण्डवा अपि तत्सर्वं प्रतिचक्रुर्यथाबलम् ।
उद्भावनमकुर्वन्तो विदुरस्य मते स्थिताः ॥ १-१५२-३ (६९३४)
गुणैः समुदितान्दृष्ट्वा पौराः पाण्डुसुतांस्तदा ।
कथयाञ्चक्रिरे तेषां गुणान्संसत्सु भारत ॥ १-१५२-४ (६९३५)
राज्यप्राप्तिं च संप्राप्तं ज्येष्ठं पाण्डुसुतं तदा ।
कथयन्ति स्म संभूय चत्वरेषु सभासु च ॥ १-१५२-५ (६९३६)
प्रज्ञाचक्षुरचक्षुष्ट्वाद्धृतराष्ट्रो जनेश्वरः ।
राज्यं न प्राप्तवान्पूर्वं स कथं नृपतिर्भवेत् ॥ १-१५२-६ (६९३७)
तथा शान्तनवो भीष्मः सत्यसन्धो महाव्रतः ।
प्रत्याख्याय पुरा राज्यं न स जातु ग्रहीष्यति ॥ १-१५२-७ (६९३८)
ते वयं पाण्डवज्येष्ठं तरुणं वृद्धशीलिनम् ।
अभिषिञ्चाम साध्वद्य सत्यकारुण्यवेदिनम् ॥ १-१५२-८ (६९३९)
स हि भीष्मं शान्तनवं धृतराष्ट्रं च धर्मवित् ।
सपुत्रं विविधैर्भोगैर्योजयिष्यति पूजयन् ॥ १-१५२-९ (६९४०)
वैशंपायन उवाच। १-१५२-१०क्ष् (८९७)
तेषां दुर्योधनः श्रुत्वा तानि वाक्यानि जल्पताम् ।
युधिष्ठिरानुरक्तानां पर्यतप्यत दुर्मतिः ॥ १-१५२-१० (६९४१)
स तप्यमानो दुष्टात्मा तेषां वाचो न चक्षमे ।
ईर्ष्यया चापि संतप्तो धृतराष्ट्रमुपागमत् ॥ १-१५२-११ (६९४२)

ततो विरहितं दृष्ट्वा पितरं प्रतिपूज्य सः ।
पौरानुरागसंतप्तः पश्चादिदमभाषत ॥१-१५२-१२ (६९४३)
श्रुता मे जल्पतां तात पौराणामशिवा गिरः ।
त्वामनादृत्य भीष्मं च पतिमिच्छन्ति पाण्डवम् ॥१-१५२-१३ (६९४४)
मतमेतच्च भीष्मस्य न स राज्यं बुभुक्षति ।
अस्माकं तु परां पीडां चिकीर्षन्ति पुरे जनाः ॥१-१५२-१४ (६९४५)
पितृतः प्राप्तवान्राज्यं पाण्डुरात्मगुणैः पुरा ।
त्वमन्धगुणसंयोगात्प्राप्तं राज्यं न लब्धवान् ॥१-१५२-१५ (६९४६)
स एष पाण्डोर्दायाद्यं यदि प्राप्नोति पाण्डवः ।
तस्य पुत्रो ध्रुवं प्राप्तस्तस्य तस्यापि चापरः ॥१-१५२-१६ (६९४७)
ते वयं राजवंशेन हीनाः सह सुतैरपि ।
अवज्ञाता भविष्यामो लोकस्य जगतीपते ॥१-१५२-१७ (६९४८)
सततं निरयं प्राप्ताः परपिण्डोपजीविनः ।
न भवेम यथा राजंस्तथा नीतिर्विधीयताम् ॥१-१५२-१८ (६९४९)
यदि त्वं हि पुरा राजन्निदं राज्यमवाप्तवान् ।
ध्रुवं प्राप्स्याम च वयं राज्यमप्यवशे जने ॥१-१५२-१९ (६९५०)
ग्वैशंपायन उवाच।१-१५२-२०क्ष् (८९८)
धृतराष्ट्रस्तु पुत्रस्य श्रुत्वा वचनमीदृशम् ।
मुहूर्तमिव संचिन्त्य दुर्योधनमथाब्रवीत् ॥१-१५२-२० (६९५१)
धर्मनित्यस्तथा पाण्डुः सुप्रीतो मयि कौरवः ।
सर्वेषु ज्ञातिषु तथा मदीयेषु विशेषतः ॥१-१५२-२१ (६९५२)
नात्र किंचन जानाति भोजनादि चिकीर्षितम् ।
निवेदयति तत्सर्वं मयि धर्मभृतां वरः ॥१-१५२-२२ (६९५३)
तस्य पुत्रो यथा पाण्डुस्तथा धर्मपरः सदा ।
गुणावाँल्लोकविख्यातो नगरे च प्रतिष्ठितः ॥१-१५२-२३ (६९५४)
स कथं शक्यतेऽस्माभिरपाक्रष्टुं नरर्षभः ।
राज्यमेष हि नः प्राप्तः ससहयो विशेषतः ॥१-१५२-२४ (६९५५)
भृता हि पाण्डुनाऽमात्या बलं च सततं मतम् ।
धृताः पुत्राश्च पौत्राश्च तेषामपि विशेषतः ॥१-१५२-२५ (६९५६)
ते तथा संस्तुतास्तात विषये पाण्डुना नराः ।
कथं युधिष्ठिरस्यार्थे न नो हन्युः सबान्धवान् ॥१-१५२-२६ (६९५७)
नैते विषयमिच्छेयुर्धर्मत्यागे विशेषतः ।
ते वयं कौरवेन्द्राणामेतेषां च महात्मनाम् ॥१-१५२-२७ (६९५८)
कथं न वाच्यतां तात गच्छेम जगतस्तथा ॥ १-१५२-२८ (६९५९)
दुर्योधन उवाच।१-१५२-२९क्ष् (८९९)
मध्यस्थः सततं भीष्मो द्रोणपुत्रो मयि स्थितः ।

यतः पुतस्ततो द्रोणो भविता नात्र संशयः ॥ १-१५२-२९ (६९६०)
कृपः शारद्वतश्चैव यत एव वयं ततः ।
बागिनेयं ततो द्रौणिं न त्यक्ष्यति कथंचन ॥ १-१५२-३० (६९६१)
क्षत्ता तु बन्धुरस्माकं प्रच्छन्नस्तु ततः परैः ।
न चैकः स समर्थोऽस्मान्पाण्डवार्थे प्रबाधितुम् ॥ १-१५२-३१ (६९६२)
सुविस्रब्धान्पाण्डुसुतान्सह मात्रा विवासय ।
वारणावतमद्यैव नात्र दोषो भविष्यति ॥ १-१५२-३२ (६९६३)
विनिद्राकरणं घोरं हृदि शल्यमिवार्पितम् ।
शोपकपावकमुद्धूतं कर्मणानेन नाशय ॥' ॥ १-१५२-३३ (६९६४)

इति श्रीमन्महाभारते आदिपर्वणि संभवपर्वणि
द्विपञ्चाशदधिकशततमोऽध्यायः ॥ १५२ ॥

---

अध्यय१५३
॥ श्रीः ॥
१.१५३. अध्यायः १५३

Mahabharata - Adi Parva - Chapter Topics
धृतराष्ट्रादीनां कणिकेन दुर्नीत्युपदेशः ॥ १ ॥
जम्बुकोपाख्यानम् ॥ २ ॥

Mahabharata - Adi Parva - Chapter Text

१-१५३-० (६९६५)
वैशंपायन उवाच। १-१५३-०क्ष् (९००)
श्रुत्वा पाण्डुसुतान्वीरान्बलोद्रिक्तान्महौजसः ।
धृतराष्ट्रो महीपालश्चिन्तामगमदातुरः ॥ १-१५३-१ (६९६६)
तत आहूय मन्त्रज्ञं राजशास्त्रार्थवित्तमम् ।
कणिकं मन्त्रिणां श्रेष्ठं धृतराष्ट्रोऽब्रवीद्वचः ॥ १-१५३-२ (६९६७)
उत्सक्ताः पाण्डवा नित्यं तेभ्योऽसूये द्विजोत्तम ।
तत्र मे निश्चिततमं सन्धिविग्रहकारणम् ।
कणिक त्वं ममाचक्ष्व करिष्ये वचनं तव ॥ १-१५३-३ (६९६८)
वैशंपायन उवाच। १-१५३-४क्ष् (९०१)
ग्दुर्योधनोऽथ शकुनिः कर्णदुःशासनावपि ।
कणिकं ह्युपसंगृह्य मन्त्रिणं सौबलस्य च ॥ १-१५३-४ (६९६९)
पप्रच्छुर्भरतश्रेष्ठ पाण्डवान्प्रति नैकधा ।
प्रबुद्धाः पाण्डवा नित्यं सर्वे तेभ्यस्त्रसामहे ॥ १-१५३-५ (६९७०)

अनूनं सर्वपक्षाणां यद्भवेत्क्षेमकारकम् ।
भारद्वाज तदाचक्ष्व करिष्यामः कथं वयम् ॥ १-१५३-६ (६९७१)
वैशंपायन उवाच।' १-१५३-७क्ष् (९०२)
स प्रसन्नमनास्तेन परिपृष्टो द्विजोत्तमः ।
उवाच वचनं तीक्ष्णं राजशास्त्रार्थदर्शनम् ॥ १-१५३-७ (६९७२)
कणिक उवाच। १-१५३-८क्ष् (९०३)
शृणु राजन्निदं तत्र प्रोच्यमानं मयानघ ।
न मेऽभ्यसूया कर्तव्या श्रुत्वैतत्कुरुसत्तम ॥ १-१५३-८ (६९७३)
नित्यमुद्यतदण्डः स्यान्नित्यं विवृतपौरुषः ।
अच्छिद्रश्छिद्रदर्शी स्यात्परेषां विवरानुगः ॥ १-१५३-९ (६९७४)
नित्यमुद्यतदण्डाद्धि भृशमुद्विजते जनः ।
तस्मात्सर्वाणि कार्याणि दण्डेनैव विधारयेत् ॥ १-१५३-१० (६९७५)
नास्य च्छिद्रं परः पश्येच्छिद्रेण परमन्वियात् ।
गूहेत्कूर्म इवाङ्गानि रक्षेद्विवरमात्मनः ॥ १-१५३-११ (६९७६)
'नित्यं च ब्राह्मणाः पूज्या नृपेण हितमिच्छता ।
सृष्टो नृपो हि विप्रामां पालने दुष्टनिग्रहे ॥ १-१५३-१२ (६९७७)
उभाब्यां वर्धते धर्मो धर्मवृद्ध्या जितावुभौ ।
लोकश्चायं परश्चैव ततो धर्मं समाचरेत् ॥ १-१५३-१३ (६९७८)
कृतापराधं पुरुषं दृष्ट्वा यः क्षमते नृपः ।
तेनावमानमाप्नोति पापं चेह परत्र च ॥ १-१५३-१४ (६९७९)
यो विभूतिमवाप्योच्चै राज्ञो विकुरुतेऽधमः ।
तमानयित्वा हत्वा च दद्याद्धीनाय तद्धनम् ॥ १-१५३-१५ (६९८०)
नो चेद्धुरि नियुक्ता ये स्थास्यन्ति वशमात्मनः ।
राजा नियुञ्ज्यात्पुरुषानाप्तान्धर्मार्थकोविदान् ॥ १-१५३-१६ (६९८१)
ये नियुक्तास्तथा केचिद्राष्ट्रं वा यदि वा पुरम् ।
ग्रामं जनपदं वापि बाधेयुर्यदि वा न वा ॥ १-१५३-१७ (६९८२)
परीक्षणार्थं विसृजेदानतांश्छन्नरूपिणः ।
परीक्ष्य पापकं जह्याद्धनमादाय सर्वशः ॥' १-१५३-१८ (६९८३)
नासम्यक्कृत्यकारी स्यादुपक्रम्य कदाचन ।
कण्टको ह्यपि दुश्छिन्न आस्रावं जनयेच्चिरम् ॥ १-१५३-१९ (६९८४)
वधमेव प्रशंसन्ति शत्रूणामपकारिणाम् ।
सुविदीर्णं सुविक्रान्तं सुयुद्धं सुपलायितम् ॥ १-१५३-२० (६९८५)
आपद्यापदि काले कुर्वीत न विचारयेत् ।
नावज्ञेयो रिपुस्तात दुर्बलोऽपि कथं चन ॥ १-१५३-२१ (६९८६)
अल्पोऽप्यग्निर्वनं कृत्स्नं दहत्याश्रयसंश्रयात् ।
अन्धः स्यादन्धवेलायां बाधिर्यमपि चाश्रयेत् ॥ १-१५३-२२ (६९८७)

कुर्यात्तृणमयं चापं शयीत मृगशायिकाम् ।
सान्त्वादिभिरुपायैस्तु हन्याच्छत्रुं वशे स्थितं ॥ १-१५३-२३ (६९८८)
दया न तस्मिन्कर्तव्या शरणागत इत्युत ।
निरुद्विग्नो हि भवति न हताज्जायते भयम् ॥ १-१५३-२४ (६९८९)
हन्यादमित्रं दानेन तथा पूर्वापकारिणम् ।
हन्यात्त्रीन्पञ्च सप्तेति परपक्षस्य सर्वशः ॥ १-१५३-२५ (६९९०)
मूलमेवादितश्छिन्द्यात्परपक्षस्य नित्यशः ।
ततः सहायांस्तत्पक्षान्सर्वांश्च तदनन्तरम् ॥ १-१५३-२६ (६९९१)
छिन्नमूले ह्यधिष्ठाने सर्वे तज्जीविनो हताः ।
कथं नु शाखास्तिष्ठेरंश्छिन्नमूले वनस्पतौ ॥ १-१५३-२७ (६९९२)
एकाग्रः स्यादविवृतो नित्यं विवरदर्शकः ।
राजन्नित्यं सपत्नेषु नित्योद्विग्नः समाचरेत् ॥ १-१५३-२८ (६९९३)
अग्न्याधानेन यज्ञेन काषायेण जटाजिनैः ।
लोकान्विश्वासयित्वैव ततो लुम्पेद्यथा वृकः ॥ १-१५३-२९ (६९९४)
अङ्कुशं शोचमित्याहुरर्थानामुपधारणे ।
आनाम्य फलितां शाखां पक्वं पक्वं प्रशातयेत् ॥ १-१५३-३० (६९९५)
फलार्थोऽयं समारम्भो लोके पुंसां विपश्चिताम् ।
वहेदमित्रं स्कन्धेन यावत्कालस्य पर्ययः ॥ १-१५३-३१ (६९९६)
ततः प्रत्यागते काले भिन्द्याद्घटमिवाश्मनि ।
अमित्रो न विमोक्तव्यः कृपणं बह्वपि ब्रुवन् ॥ १-१५३-३२ (६९९७)
कृपा न तस्मिन्कर्तव्या हन्यादेवापकारिणम् ।
हन्यादमित्रं सान्त्वेन तथा दानेन वा पुनः ॥ १-१५३-३३ (६९९८)
तथैव भेददण्डाभ्यां सर्वोपायैः प्रशातयेत्। १-१५३-३४ (६९९९)
धृतराष्ट्र उवाच ।
कथं सान्त्वेन दानेन भेदैर्दण्डेन वा पुनः ॥ १-१५३-३४क्ष् (९०४)
अमित्रः शक्यते हन्तुं तन्मे ब्रूहि यथातथम्। १-१५३-३५ (७०००)
कणिक उवाच ।
शृणु राजन्यथा वृत्तं वने निवसतः पुरा ॥ १-१५३-३५क्ष् (९०५)
जम्बुकस्य महाराज नीतिशास्त्रार्थदर्शिनः ।
अथ कश्चित्कृतप्रज्ञः शृगालः स्वार्थपण्डितः ॥ १-१५३-३६ (७००१)
सखिभिर्न्यवसत्सार्धं व्याघ्राखुवृकबभ्रुभिः ।
तेऽपश्यन्विपिने तस्मिन्बलिनं मृगयूथपम् ॥ १-१५३-३७ (७००२)
अशक्ता ग्रहणे तस्य ततो मन्त्रममन्त्रयन्। १-१५३-३८ (७००३)
जम्बुक उवाच ।
असकृद्यतितो ह्येष हन्तुं व्याघ्र वने त्वया ॥ १-१५३-३८क्ष् (९०६)
युवा वै जवसंपन्नो बुद्धिशाली न शक्यते ।

मूषिकोऽस्य शयानस्य चरणौ भक्षयत्वयम् ॥१-१५३-३९ (७००४)
अथैनं भक्षितैः पादैर्व्याघ्रो गृह्णातु वै ततः ।
ततो वै भक्षयिष्यामः सर्वे मुदितमानसाः ॥१-१५३-४० (७००५)
जम्बुकस्य तु तद्वाक्यं तथा चक्रुः समाहिताः ।
मूषिकाभक्षितैः पादैर्मृगं व्याघ्रोऽवधीत्तदा ॥१-१५३-४१ (७००६)
दृष्ट्वैवाचेष्टमानं तु भूमौ मृगकलेवरम् ।
स्नात्वाऽऽगच्छत भद्रं वोरक्षामीत्याह जम्बुकः ॥१-१५३-४२ (७००७)
शृगालवचनात्तेऽपि गताः सर्वे नदीं ततः ।
स चिन्तापरमो भूत्वा तस्थौ तत्रैव जम्बुकः ॥१-१५३-४३ (७००८)
अथाजगाम पूर्वं तु स्नात्वा व्याघ्रो महाबलः ।
ददर्श जम्बुकं चैव चिन्ताकुलितमानसम् ॥१-१५३-४४ (७००९)
व्याघ्र उवाच।१-१५३-४५क्ष् (९०७)
किं शोचसि महाप्राज्ञ त्वं नो बुद्धिमतां वरः ।
अशित्वा पिशितान्यद्य विहरिष्यामहे वयम् ॥१-१५३-४५ (७०१०)
जम्बुक उवाच।१-१५३-४६क्ष् (९०८)
शृणु मे त्वं महाबाहो यद्वाक्यं मूषिकोऽब्रवीत् ।
धिग्बलं मृगराजस्य मयाद्यायं मृगो हतः ॥१-१५३-४६ (७०११)
मद्बाहुबलमाश्रित्य तृप्तिमद्य गमिष्यति ।
तस्यैवं गर्जितं श्रुत्वा ततो भक्ष्यं न रोचये ॥१-१५३-४७ (७०१२)
व्याघ्र उवाच।१-१५३-४८क्ष् (९०९)
ब्रवीति यदि स ह्येवं काले ह्यस्मि प्रबोधितः ।
स्वबाहुबलमाश्रित्य हनिष्येऽहं वनेचरान् ॥१-१५३-४८ (७०१३)
खादिष्ये तत्र मांसानि इत्युक्त्वा प्रस्थितोवनम् ।
एतस्मिन्नेव काले तु मूषिकोऽप्याजगाम ह ॥१-१५३-४९ (७०१४)
तमागतमभिप्रेक्ष्य शृगालोऽप्यब्रवीद्वचः ।
शृणु मीषिक भद्रं ते नकुलो यदिहाब्रवीत् ॥१-१५३-५० (७०१५)
मृगमांसं न खादेयं गरमेतन्न रोचते ।
मूषिकं भक्षयिष्यामि तद्भवाननुमन्यताम् ॥१-१५३-५१ (७०१६)
तच्छ्रुत्वा मूषिको वाक्यं संत्रस्तः प्रगतो बिलम् ।
ततः स्नात्वा स वै तत्र आजगाम वृको नपृ ॥१-१५३-५२ (७०१७)
तमागतमिदं वाक्यमब्रवीज्जम्बुकस्तदा ।
मृगराजो हि संक्रुद्धो न ते साधु भविष्यति ॥१-१५३-५३ (७०१८)
सकलत्रस्त्विहायाति कुरुष्व यदनन्तरम् ।
एवं संचोदितस्तेन जम्बुकेन तदा वृकः ॥१-१५३-५४ (७०१९)
ततोऽवलुम्पनं कृत्वा प्रयातः पिशिताशनः ।
एतस्मिन्नेव काले तु नकुलोऽप्याजगाम ह ॥१-१५३-५५ (७०२०)

तमुवाच महाराज नकुलं जम्बुको वने ।
स्वबाहुबलमाश्रित्य निर्जितास्तेऽन्यतो गताः ॥१-१५३-५६ (७०२१)
मम दत्वा नियुद्धं त्वं भुङ्क्ष्व मांसं यथेप्सितम्। १-१५३-५७ (७०२२)
नकुल उवाच ।
मृगराजो वृकश्चैव बुद्धिमानपि मूषिकः ॥ १-१५३-५७क्ष् (९१०)
निर्जिता यत्त्वया वीरास्तस्माद्वीरतरो भवान् ।
न त्वयाप्युत्सहे योद्धुमित्युक्त्वा सोऽप्युपागमत् ॥१-१५३-५८ (७०२३)
कणिक उवाच।१-१५३-५९क्ष् (९११)
एवं तेषु प्रयातेषु जम्बुको हृष्टमानसः ।
खादति स्म तदा मांसमेकः सन्मन्त्रनिश्चयात् ।
एवं समाचरन्नित्यं सुखमेधेत भूपतिः ॥ १-१५३-५९ (७०२४)
भयेन भेदयेद्भीरुं शूरमञ्जलिकर्मणा ।
लुब्धमर्थप्रदानेन समं न्यूनं तथौजसा ॥१-१५३-६० (७०२५)
एवं ते कथितं राजन् शृणु चाप्यपरं तथा ॥ १-१५३-६१ (७०२६)
पुत्रः सखा वा भ्राता वा पिता वा यदि वा गुरुः ।
रिपुस्यानेषु वर्तन्तो हन्तव्या भूतिमिच्छता ॥१-१५३-६२ (७०२७)
शपथेनाप्यरिं हन्यादर्थदानेन वा पुनः ।
विषेण मायया वापि नोपेक्षेते कथंचन ।
उभौ चेत्संशयोपेतौ श्रद्धवांस्तत्र वर्धते ॥ १-१५३-६३ (७०२८)
गुरोरप्यवलिप्तस्य कार्याकार्यमजानतः ।
उत्पथं प्रतिपन्नस्य न्याय्यं भवति शासनम् ॥१-१५३-६४ (७०२९)
क्रुद्धोऽप्यक्रुद्धरूपः स्यात्स्मितपूर्वाभिभाषिता ।
ग्न चैनं क्रोधसंदीप्तं विद्यात्कश्चित्कथंचन।'
न चाप्यन्यमपध्वंसेत्कदाचित्कोपसंयुतः ॥ १-१५३-६५ (७०३०)
प्रहरिष्यन्प्रियं ब्रूयात्प्रहरन्नपि भारत ।
प्रहृत्य च प्रियं ब्रूयाच्छोचन्निव रुदन्निव ॥१-१५३-६६ (७०३१)
आश्वासयेच्चापि परं सान्त्वधर्मार्थवृत्तिभिः ।
अथ तं प्रहरेत्काले तथा विचलितं पथि ॥१-१५३-६७ (७०३२)
अपि घोरापराधस्य धर्ममाश्रित्य तिष्ठतः ।
स हि प्रच्छाद्यते दोषः शैलो मेघैरिवासितैः ॥१-१५३-६८ (७०३३)
यः स्यादनुप्राप्तवधस्तस्यागारं प्रदीपयेत् ।
अधनान्नास्तिकांश्चोरान्विषकर्मसु योजयेत् ॥१-१५३-६९ (७०३४)
प्रत्युत्थानासनाद्येन संप्रदानेन केनचित् ।
अतिविश्रब्धघाती स्यात्तीक्ष्णंदष्ट्रो निमग्नकः ॥१-१५३-७० (७०३५)
अशङ्कितेभ्यः शङ्केत शङ्कितेभ्यश्च सर्वशः ।
अशङ्क्याद्भयमुत्पन्नमपि मूलं निकृन्तति ॥१-१५३-७१ (७०३६)

न विश्वसेदविश्वस्ते विश्वस्ते नातिविश्वसेत् ।
विश्वासाद्भयमुत्पन्नं मूलान्यपि निकृन्तति ॥ १-१५३-७२ (७०३७)
चारः सुविहितः कार्य आत्मनश्च परस्य वा ।
पाषण्डांस्तापसादींश्च परराष्ट्रेषु योजयेत् ॥ १-१५३-७३ (७०३८)
उद्यानेषु विहारेषु देवतायतनेषु च ।
पानागारेषु रथ्यासु सर्वतीर्थेषु चाप्यथ ॥ १-१५३-७४ (७०३९)
चत्वरेषु च कूपेषु पर्वतेषु वनेषु च ।
समवायेषु सर्वेषु सरित्सु च विचारयेत् ॥ १-१५३-७५ (७०४०)
वाचा भृशं विनीतः स्याद्धृदयेन तथा क्षुरः ।
स्मितपूर्वाभिभाषी स्यात्सृष्टो रौद्रस्य कर्मणः ॥ १-१५३-७६ (७०४१)
अञ्जलिः शपथः सान्त्वं शिरसा पादवन्दनम् ।
आशाकरणमित्येवं कर्तव्यं भूतिमिच्छता ॥ १-१५३-७७ (७०४२)
सुपुष्पितः स्यादफलः फलवान्स्याद्दुरारुहः ।
आमः स्यात्पक्वसङ्काशो नच जीर्येत कर्हिचित् ॥ १-१५३-७८ (७०४३)
त्रिवर्गे त्रिविधा पीडा ह्यनुबन्धास्तथैव च ।
अनुबन्धाः शुभा ज्ञेयाः पीडास्तु परिवर्जयेत् ॥ १-१५३-७९ (७०४४)
धर्मं विचरतः पीडा सापि द्वाभ्यां नियच्छति ।
अर्थं चाप्यर्थलुब्धस्य कामं चातिप्रवर्तिनः ॥ १-१५३-८० (७०४५)
अगर्वितात्मा युक्तश्च सान्त्वयुक्तोऽनसूयिता ।
अवेक्षितार्थः शुद्धात्मा मन्त्रयीत द्विजैः सहा ॥ १-१५३-८१ (७०४६)
कर्मणा येन केनैव मृदुना दारुणेन च ।
उद्धरेद्दीनमात्मानं समर्थो धर्ममाचरेत् ॥ १-१५३-८२ (७०४७)
न संशयमनारुह्य नरो भद्राणि पश्यति ।
संशयं पुनरारुह्य यदि जीवति पश्यति ॥ १-१५३-८३ (७०४८)
यस्य बुद्धिः परिभवेत्तमतीतेन सान्त्वयेत् ।
अनागतेन दुर्बुद्धिं प्रत्युत्पन्नेन पण्डितम् ॥ १-१५३-८४ (७०४९)
योऽरिणा सह सन्धाय शयीत कृतकृत्यवत् ।
स वृक्षाग्रे यथा सुप्तः पतितः प्रतिबुध्यते ॥ १-१५३-८५ (७०५०)
मन्त्रसंवरणे यत्नः सदा कार्योऽनसूयता ।
आकारमभिरक्षेत चारेणाप्यनुपालितः ॥ १-१५३-८६ (७०५१)
ग्न रात्रौ मन्त्रयेद्विद्वान्न च कैश्चिदुपासितः ।
प्रासादाग्रे शिलाग्रे वा विशाले विजनेपि वा ॥ १-१५३-८७ (७०५२)
समन्तात्तत्र पश्यद्भिः सहाप्तैरेव मन्त्रयेत् ।
नैव संवेशयेत्तत्र मन्त्रवेश्मनि शारिकाम् ॥ १-१५३-८८ (७०५३)
शुकान्वा शारिका वापि बालमूर्खजडानपि ।
प्रविष्टानपि निर्वास्य मन्त्रयेद्धार्मिकैर्द्विजैः ॥ १-१५३-८९ (७०५४)

नीतिज्ञैर्न्यायशास्त्रज्ञैरितिहासे सुनिष्ठितैः ।
रक्षां मन्त्रस्य निश्छिद्रां मन्त्रान्ते निश्चयेत्स्वयम् ॥१-१५३-९० (७०५५)
वीरोपवर्णितात्तस्माद्धर्मार्थाभ्यामथात्मना ।
एकेन वाथ विप्रेण ज्ञातबुद्धिर्विनिश्चयेत् ॥१-१५३-९१ (७०५६)
तृतीयेन न चान्येन व्रजेन्निश्चयमात्मवान् ।
षट्कर्णश्छिद्यते मन्त्र इति नीतिषु पठ्यते ॥१-१५३-९२ (७०५७)
निःसृतो नाशयेन्मन्त्रो हस्तप्राप्तामपि श्रियम् ।
स्वमतं च परेषां च विचार्य च पुनःपुनः ।
गुणवद्वाक्यमादद्यान्नैव तृप्येद्विचक्षणः ॥' १-१५३-९३ (७०५८)
नाच्छित्वा परमर्माणि नाकृत्वा कर्म दारुणम् ।
नाहत्वा मत्स्यघातीव प्राप्नोति महतीं श्रियम् ॥१-१५३-९४ (७०५९)
कर्शितं व्याधितं क्लिन्नमपानीयमघासकम् ।
परिविश्वस्तमन्दं च प्रहर्तव्यमरेर्बलम् ॥१-१५३-९५ (७०६०)
नार्थिकोऽर्थिनमभ्येति कृतार्थे नास्ति सङ्गतम् ।
तस्मात्सर्वाणि साध्यानि सावशेषाणि कारयेत् ॥१-१५३-९६ (७०६१)
संग्रहे विग्रहे चैव यत्नः कार्योऽनसूयता ।
उत्साहश्चापि यत्नेन कर्तव्यो भूतिमिच्छता ॥१-१५३-९७ (७०६२)
नास्य कृत्यानि बुध्येरन्मित्राणि रिपवस्तथा ।
आरब्धान्येव पश्येरन्सुपर्यवसितान्यपि ॥१-१५३-९८ (७०६३)
भीतवत्संविधातव्यं यावद्भयमनागतम् ।
आगतं तु भयं दृष्ट्वा प्रहर्तव्यमभीतवत् ॥१-१५३-९९ (७०६४)
दैवेनोपहतं शत्रुमनुगृह्णाति यो नरः ।
स मृत्युमुपगृह्णाति गर्भमश्वतरी यथा ॥१-१५३-१०० (७०६५)
अनागतं हि बुध्येत यच्च कार्यं पुरः स्थितम् ।
न तु बुद्धिक्षयात्किंचिदतिक्रामेत्प्रयोजनम् ॥१-१५३-१०१ (७०६६)
उत्साहश्चापि यत्नेन कर्तव्यो भूतिमिच्छता ।
विभज्य देशकालौ च दैवं धर्मादयस्त्रयः ।
नैःश्रेयसौ तु तौ ज्ञेयौ देशकालाविति स्थितिः ॥ १-१५३-१०२ (७०६७)
तालवत्कुरुते मूलं बालः शत्रुरुपेक्षितः ।
गहनेऽग्निरिवोत्सृष्टः क्षिप्रं संजायते महान् ॥१-१५३-१०३ (७०६८)
अग्निस्तोकमिवात्मानं सन्धुक्षयति यो नरः ।
स वर्धमानो ग्रसते महान्तमपि संचयम् ॥१-१५३-१०४ (७०६९)
ग्आदावेव ददानीति प्रियं ब्रूयान्निरर्थकम् ॥' १-१५३-१०५ (७०७०)
आशां कालवतीं कुर्यात्कालं विघ्नेन योजयेत् ।
विघ्नं निमित्ततो ब्रूयान्निमित्तं वाऽपि हेतुतः ॥१-१५३-१०६ (७०७१)
क्षुरो भूत्वा हरेत्प्राणान्निशितः कालसाधनः ।

प्रतिच्छन्नो लोमहारी द्विषतां परिकर्तनः ॥ १-१५३-१०७ (७०७२)
पाण्डवेषु यथान्यायमन्येषु च कुरूद्वह ।
वर्तमानो न मज्जेस्त्वं तथा कृत्यं समाचर ॥ १-१५३-१०८ (७०७३)
सर्वकल्याणसंपन्नो विशिष्ट इति निश्चयः ।
तस्मात्त्वं पाण्डुपुत्रेभ्यो रक्षात्मानं नराधिप ॥ १-१५३-१०९ (७०७४)
भ्रातृव्या बलवन्तस्ते पाण्डुपुत्रा नराधिप ।
पश्चात्तापो यथा न स्यात्तथा नीतिर्विधीयताम् ॥ १-१५३-११० (७०७५)
वैशंपायन उवाच। १-१५३-१११क्ष् (९१२)
एवमुक्त्वा संप्रतस्थे कणिकः स्वगृहं ततः ।
धृतराष्ट्रोऽपि कौरव्यः शोकार्तः समपद्यत ॥ ॥ १-१५३-१११ (७०७६)

इति श्रीमन्महाभारते आदिपर्वणि संभवपर्वणि
त्रिपञ्चाशदधिकशततमोऽध्यायः ॥ १५३ ॥ ॥ समाप्तं च
संभवपर्व ॥

Mahabharata - Adi Parva - Chapter Footnotes

१-१५३-१३ उभाभ्यां ब्राह्मणरक्षणदुष्टनिग्रहाभ्याम् । जितौ संपादितौ
भवेतामिति शेषः ॥
१-१५३-१५ हीनाय दरिद्राय ॥
१-१५३-२० उपसंहरति वधमिति । कथं वधः कर्तव्यं इत्याह
सुविदीर्णमिति। सुविक्रान्तमपि शत्रुं। काले आपद्यापन्नमालभ्य सुविदीर्णं
विनष्टं कुर्वीत। तथा सुयुद्धमपि शत्रुमापदि काले सुपलायितं
कुर्वीति ॥
१-१५३-२२ आश्रयसंश्रयात् आश्रयबलात् ॥
१-१५३-२३ तृणमयं तृणवन्निष्प्रयोजनम् । क्षात्रं धर्मं त्यक्त्वा
शत्रुगृहे भिक्षाभुगपि स्यादित्यर्थः। मृगशायिकां मृगहन्तुः
शय्याम्। यथा व्याधो मृगान्विश्वासयितुं मृषा निद्राति विश्वस्तेषु
च तेषु प्रहरत्येवं स हन्तुमेवाकारं गोपयतीत्यर्थः। उपायैः
वशे स्थितं शत्रुमिति संबन्धः ॥
१-१५३-२५ त्रीन् ऐश्वर्यमन्त्रोत्साहान् । तथा पञ्च अमात्यराष्ट्रदुर्गाणि
कोशो दण्डश्च पञ्चम इत्युक्तान्। दण्डोत्र सैन्यं। सप्त
स्वाम्यमात्यसुहृत्कोशराष्ट्रदुर्बलानि येत्युक्तानि ॥
१-१५३-३० शौचमग्न्याधानादि । अत्र दृष्टान्तः आनाम्येति आनामयित्वा ॥
१-१५३-३७ बभ्रुर्नकुलः । मृगयूथपं महान्तं हरिणम् ॥
१-१५३-४१ मूषिकेण आईषद्भक्षितैः ॥
१-१५३-४६ मृगराजस्य व्याघ्रस्य ॥

१-१५३-५१ गरं मूषिकदष्टत्वाद्विषभूतम् ॥
१-१५३-५५ अवलुम्पनं गात्रसंकोचनम् ॥
१-१५३-६३ संशयोपेतौ संशयविषयौ ।श्रद्धावान्
मदुक्तादरवान्। श्रद्दधानस्तु बध्यत इति ङ पाठः ॥
१-१५३-६५ अपध्वंसेत् कुत्सयेत् ॥
१-१५३-६९ अनुप्राप्तबधः शीघ्रं हन्तुमिष्टः अधना दरिद्राः नास्तिकाः
परलोकश्रद्धारहिताः ॥
१-१५३-७० निमग्नकः नम्रशिराः तीक्ष्णदंष्ट्रः व्याघ्र इव
।तीक्ष्णदंष्ट्र इवोरत इति क ङ पाठः ॥
१-१५३-७३ सुविहितः सम्यक् परीक्षितः ॥
१-१५३-७६ सृष्टो रौद्राय कर्मण इति क घ पाठः ॥
१-१५३-७९ अनुबन्धः फलम् ॥
१-१५३-८० धर्ममत्यन्तं विचरतः पुंसो द्वाभ्यामर्थकामाभ्यां
धनव्ययब्रह्मचर्योपक्षिप्ताभ्यां पीडा चित्तवैकल्यं भवति
।सापि पुंसः पीडा धर्मं नियच्छति निगृह्णाति। एवमर्थं
चाप्यर्थलुब्धस्य कामं चातिप्रवर्तिन इति व्याख्येयं ॥
१-१५३-८३ उद्देश्यसन्देहेपि नीतिरवश्यमनुसरणीयेत्याह ।न
संशयमिति। असंशयमथारुह्येति क घ ट पाठः ॥
१-१५३-८४ परिभवेत् शोकेन ।तमतीतेन
नलरामाद्याख्यानेन। दुर्बुद्धिं। लोभाद्युपहतबुद्धिम्। अनागतेन
कालान्तरे तव श्रेयो भविष्यतीत्याशाप्रदर्शनेन। पण्डितं
प्रत्युत्पन्नेन वर्तमानेन धनादिना सान्त्वयेत् ॥
१-१५३-८६ मन्त्रसंवरणं मन्त्रगूहनम् ॥
१-१५३-९५ अघासकं अनाहारम् ॥
१-१५३-९६ संगतं सख्यम् ॥
१-१५३-९८ आरब्धान्यपि सुपर्यवसितानि संपन्नान्येव पश्येरन् ॥
१-१५३-९९ संविधातव्यं प्रतिकर्तव्यम् ॥
१-१५३-१०२ देशाद्यनुगुण उत्साहोऽपि कर्तव्यो नत्वलसो भवेत् ।दैवं
प्राक्तनं कर्म। ये धर्मादयस्त्रयस्तांश्च विभज्य तेषां मध्ये
नैःश्रेयसौ श्रेयोहेतू इति स्थितिर्निश्चयः ॥
१-१५३-१०३ बालः अल्पोपि ।बलवत्कुरुते रूपं बाल्यादिति क ङ ट पाठः ॥
१-१५३-१०४ आत्मानं सधुक्षयति सहायादिना वर्धयति
।संचयमिन्धनानां पक्षे शत्रूणाम् ॥
१-१५३-१०६ हेतुतः हेत्वन्तरेण ॥
१-१५३-१११ तदा सपुत्रो राजा च शोकार्त इति ङ पुस्तकपाठः ॥
त्रिपञ्चाशदधिकशततमोऽध्यायः ॥

अध्यय१५४
॥ श्रीः ॥
१.१५४. अध्यायः १५४

(अथ जतुगृहपर्व ॥ ८ ॥)
Mahabharata - Adi Parva - Chapter Topics
संग्रहेण जतुगृहदाहकथनम् ॥ १ ॥
पुनर्विस्तरेण जतुगृहदाहकथनारम्भः ॥ २ ॥
दुर्योधनधृतराष्ट्रसंवादः ॥ ३ ॥

Mahabharata - Adi Parva - Chapter Text

१-१५३४-० (७०७७)
वैशंपायन उवाच। १-१५३४-०क्ष् (९१३)
कणिकस्य मतं श्रुत्वा कार्त्स्न्येन भरतर्षभ ।
दुर्योधनश्च कर्णश्च शकुनिश्चापि सौबलः ।
दुशासनचतुर्थास्ते मन्त्रयामासुरेकदा ॥ १-१५४-१ (७०७८)
ते कौरव्यमनुज्ञाप्य धृतराष्ट्रं नराधिपम् ।
दहने तु सपुत्रायाः कुन्त्या बुद्धिमकारयन् ॥ १-१५४-२ (७०७९)
तेषामिङ्गितभावज्ञो विदुरस्तत्त्वदर्शिवान् ।
आकारेण च तं मन्त्रं बुबुधे दुष्टचेतसाम् ॥ १-१५४-३ (७०८०)
ततो विदितवेद्यात्मा पाण्डवानां हिते रतः ।
पलायने मतिं चक्रे कुन्त्याः पुत्रैः सहानघः ॥ १-१५४-४ (७०८१)
ततो वातसहां नावं यन्त्रयुक्तां पताकिनीम् ।
ऊर्मिक्षमां दृढां कृत्वा कुन्तीमिदमुवाच ह ॥ १-१५४-५ (७०८२)
एष जातः कुलस्यास्य कीर्तिवंशप्रणाशनः ।
धृतराष्ट्रः परीतात्मा धर्मं त्यजति शाश्वतम् ॥ १-१५४-६ (७०८३)
इयं वारिपथे युक्ता तरङ्गपवनक्षमा ।
नौर्यया मृत्युपाशात्त्वं सपुत्रा मोक्ष्यसे शुभे ॥ १-१५४-७ (७०८४)
तच्छ्रुत्वा व्यथिता कुन्ती पुत्रैः सह यशस्विनी ।
नावमारुह्य गङ्गायां प्रययौ भरतर्षभ ॥ १-१५४-८ (७०८५)
ततो विदुरवाक्येन नावं विक्षिप्य पाण्डवाः ।
धनं चादाय तैर्दत्तमरिष्टं प्राविशन्वनम् ॥ १-१५४-९ (७०८६)
निषादी पञ्चपुत्रा तु जातेषु तत्र वेश्मनि ।
कारणाभ्यागता दग्धा सह पुत्रैरनागसा ॥ १-१५४-१० (७०८७)

स च म्लेच्छाधमः पापो दग्धस्तत्र पुरोचनः ।
वञ्चिताश्च दुरात्मानो धार्तराष्ट्राः सहानुगाः ॥ १-१५४-११ (७०८८)
अविज्ञाता महात्मनो जनानामक्षतास्तथा ।
जनन्या सह कौन्तेया मुक्ता विदुरमन्त्रिताः ॥ १-१५४-१२ (७०८९)
ततस्तस्मिन्पुरे लोका नगरे वारणावते ।
दृष्ट्वा जतुगृहं दग्धमन्वशोचन्त दुःखिताः ॥ १-१५४-१३ (७०९०)
प्रेषयामासू राजानं यथावृत्तं निवेदितुम् ।
संवृतस्ते महान्कामः पाण्डवान्दग्धवानसि ॥ १-१५४-१४ (७०९१)
सकामो भव कौरव्य भुङ्क्ष्व राज्यं सपुत्रकः ।
तच्छ्रुत्वा धृतराष्ट्रस्तु सहपुत्रेण शोचयन् ॥ १-१५४-१५ (७०९२)
प्रेतकार्याणि च तथा चकार सह बान्धवैः ।
पाण्डवानां तथा क्षत्ता भीष्मश्च कुरुसत्तमः ॥ १-१५४-१६ (७०९३)
जनमेजय उवाच। १-१५४-१७क्ष् (९१४)
पुनर्विस्तरशः श्रोतुमिच्छामि द्विजसत्तम ।
दाहं जतुगृहस्यैव पाण्डवानां च मोक्षणम् ॥ १-१५४-१७ (७०९४)
सुनृशंसमिदं कर्म तेषां क्रूरोपसंहितम् ।
कीर्तयस्व यथावृत्तं परं कौतूहलं मम ॥ १-१५४-१८ (७०९५)
वैशंपायन उवाच। १-१५४-१९क्ष् (९१५)
शृणु विस्तरशो राजन्वदतो मे परन्तप ।
दाहं जतुगृहस्यैतत्पाण्डवानां च मोक्षणम् ॥ १-१५४-१९ (७०९६)
वैशंपायन उवाच। १-१५४-२०क्ष् (९१६)
ततो दुर्योधनो राजा धृतराष्ट्रमभाषत ।
पाण्डवेभ्यो भयं नः स्यात्तान्विवासयतां भवान् ।
निपुणेनाभ्युपायेन नगरं वारणावतम् ॥ १-१५४-२० (७०९७)
धृतराष्ट्रस्तु पुत्रेण श्रुत्वा वचनमीरितम् ।
मुहूर्तमिव संचिन्त्य दुर्योधनमथाब्रवीत् ॥ १-१५४-२१ (७०९८)
धर्मनित्यः सदा पाण्डुस्तथा धर्मपरायणः ।
सर्वेषु ज्ञातिषु तथा मयि त्वासीद्विशेषतः ॥ १-१५४-२२ (७०९९)
नासौ किंचिद्विजानाति भोजनादिचिकीर्षितम् ।
निवेदयति नित्यं हि मम राज्यं धृतव्रतः ॥ १-१५४-२३ (७१००)
तस्य पुत्रो यथा पाण्डुस्तथा धर्मपरायणः ।
गुणवान्लोकविख्यातः पौरवाणां सुसंमतः ॥ १-१५४-२४ (७१०१)
स कथं शक्यतेऽस्माभिरपाकर्तुं बलादितः ।
पितृपैतामाहाद्राज्यात्ससहायो विशेषतः ॥ १-१५४-२५ (७१०२)
भृता हि पाण्डुनाऽमात्या बलं च सततं भृतम् ।
भृताः पुत्राश्च पौत्राश्च तेषामपि विशेषतः ॥ १-१५४-२६ (७१०३)

ते पुरा सत्कृतास्तात पाण्डुना नागरा जनाः ।
कथं युधिष्ठिरस्यार्थे न नो हन्युः सबान्धवान् ॥ १-१५४-२७ (७१०४)
दुर्योधन उवाच। १-१५४-२८क्ष् (९१७)
एवमेतन्मया तात भावितं दोषमात्मनि ।
दृष्ट्वा प्रकृतयः सर्वा अर्थमानेन पूजिताः ॥ १-१५४-२८ (७१०५)
ध्रुवमस्मत्सहायास्ते भविष्यन्ति प्रधानतः ।
अर्थवर्गः सहामात्यो मत्संस्थोऽद्य महीपते ॥ १-१५४-२९ (७१०६)
स भवान्पाण्डवानाशु विवासयितुमर्हति ।
मृदुनैवाभ्युपायेन नगरं वारणावतम् ॥ १-१५४-३० (७१०७)
यदा प्रतिष्ठितं राज्यं मयि राजन्भविष्यति ।
तदा कुन्ती सहापत्या पुनरेष्यति भारत ॥ १-१५४-३१ (७१०८)
धृतराष्ट्र उवाच। १-१५४-३२क्ष् (९१८)
दुर्योधन ममाप्येतद्धृदि संपरिवर्तते ।
अभिप्रायस्य पापत्वान्नैवं तु विवृणोम्यहम् ॥ १-१५४-३२ (७१०९)
न च भीष्मो न च द्रोणो न च क्षत्ता न गौतमः ।
विवास्यमानान्कौन्तेयाननुमंस्यन्ति कर्हिचित् ॥ १-१५४-३३ (७११०)
समा हि कौरवेयाणां वयं ते चैव पुत्रक ।
नैते विषममिच्छेयुर्धर्मयुक्ता मनस्विनः ॥ १-१५४-३४ (७१११)
ते वयं कौरवेयाणामेतेषां च महात्मनाम् ।
कथं न वध्यतां तात गच्छाम जगतस्तथा ॥ १-१५४-३५ (७११२)
दुर्योधन उवाच। १-१५४-३६क्ष् (९१९)
मध्यस्थः सततं भीष्मो द्रोणपुत्रो मयि स्थितः ।
यतः पुत्रस्ततो द्रोणो भविता नात्र संशयः ॥ १-१५४-३६ (७११३)
कृपः शारद्वतश्चैव यत एतौ ततो भवेत् ।
द्रोणं च भागिनेयं च न स त्यक्ष्यति कर्हिचित् ॥ १-१५४-३७ (७११४)
क्षत्ताऽर्थबद्धस्त्वस्माकं प्रच्छन्नं संयतः परैः ।
न चैकः स समर्थोऽस्मान्पाम्डवार्थेऽधिबाधितुम् ॥ १-१५४-३८ (७११५)
सुविस्रब्धः पाण्डुपुत्रान्सह मात्रा प्रवासय ।
वारणावतमद्यैव यथा यान्ति यथा कुरु ॥ १-१५४-३९ (७११६)
विनिद्रकरणं घोरं हृदि शल्यमिवार्पितम् ।
शोकपावकमुद्भूतं कर्मणैतेन नाशय ॥ ॥ १-१५४-४० (७११७)

इति श्रीमन्महाभारते आदिपर्वणि जतुगृहपर्वणि
चतुःपञ्चाशदधिकशततमोऽध्यायः ॥ १५४ ॥
Mahabharata - Adi Parva - Chapter Footnotes

१-१५४-२ अनुज्ञाप्य पृष्ट्वा ॥
१-१५४-३ इङ्गितं चेष्टितं तेन भावं चित्ताभिप्रायं जानातीति इङ्गितभावज्ञः ॥
१-१५४-४ विदितवेद्यो ज्ञाततत्त्व आत्मा चित्तं यस्य ॥
१-१५४-५ यन्त्रयुक्तां यन्त्रं महत्यपि वाते जलाशये नौकास्तम्भकं लोहलङ्गलमयम् ॥
१-१५४-९ अरिष्टं निर्विघ्नम् ॥
१-१५४-१८ क्रूरेण कणिकेनोपसंहितमुपदिष्टम् ॥
चतुःपञ्चाशदधिकशततमोऽध्यायः ॥
१५४ ॥

---

अध्यय१५५
॥ श्रीः ॥
१.१५५. अध्यायः १५५

Mahabharata - Adi Parva - Chapter Topics
दुर्योधनेन दानादिना प्रकृतिवशीकरणम् ॥ १ ॥
पाण्डवानां वारणावतयात्रार्थं धृतराष्ट्रानुज्ञा ॥ २ ॥

Mahabharata - Adi Parva - Chapter Text

१-१५५-० (७११८)
वैशंपायन उवाच। १-१५५-०क्ष् (९२०)
ततो दुर्योधनो राजा सर्वास्तु प्रकृतीः शनैः ।
अर्थमानप्रदानाभ्यां संजहार सहानुजः ।
ग्युयुत्सुमपनीयैकं धार्तराष्ट्रं सहोदरम् ॥' १-१५५-१ (७११९)
धृतराष्ट्रप्रयुक्तास्तु केचित्कुशलमन्त्रिणः ।
कथयाञ्चक्रिरे रम्यं नगरं वारणावतम् ॥ १-१५५-२ (७१२०)
अयं समाजः सुमहान्रमणीयतमो भुवि ।
उपस्थितः पशुपतेर्नगरे वारणावते ॥ १-१५५-३ (७१२१)
सर्वरत्नसमाकीर्णे पुण्यदेशे मनोरमे ।
इत्येवं धृतराष्ट्रस्य वचनाच्चक्रिरे कथाः ॥ १-१५५-४ (७१२२)
कथ्यमाने तथा रम्ये नगरे वारणावते ।
गमने पाण्डुपुत्राणां जज्ञे तत्र मतिर्नृप ॥ १-१५५-५ (७१२३)
यदा त्वमन्यत नृपो जातकौतूहला इति ।
उवाचैतानेत्य तदा पाण्डवानम्बिकासुतः ॥ १-१५५-६ (७१२४)
गअधीतानि च शास्त्राणि युष्माभिरिह कृत्स्नशः ।

अस्त्राणि च तथा द्रोणाद्गौतमाच्च शरद्वतः ॥ १-१५५-७ (७१२५)
कृतकृत्या भवन्तस्तु सर्वविद्याविशारदाः ।
सोऽहमेवं गते ताताश्चिन्तयामि समन्ततः ।
रक्षणे व्यवहारे च राज्यस्य सततं हिते ॥' १-१५५-८ (७१२६)
ममैते पुरुषा नित्यं कथयन्ति पुनःपुनः ।
रमणीयतमं लोके नगरं वारणावतम् ॥ १-१५५-९ (७१२७)
ते ताता यदि मन्यध्वमुत्सवं वारणावते ।
सगणाः सान्वयाश्चैव विहरध्वं यथाऽमराः ॥ १-१५५-१० (७१२८)
ब्राह्मणेभ्यश्च रत्नानि गायनेभ्यश्च सर्वशः ।
प्रयच्छध्वं यथाकामं देवा इव सुवर्चसः ॥ १-१५५-११ (७१२९)
कंचित्कालं विहृत्यैवमनुभूय परां मुदम् ।
इदं वै हास्तिनपुरं सुखिनः पुनरेष्यथ ॥ १-१५५-१२ (७१३०)
गनिवसध्वं च तत्रैव संरक्षणपरायणाः ।
वैलक्षण्यं न वै तत्र भविष्यति परंतपाः ॥' १-१५५-१३ (७१३१)
वैशंपायन उवाच। १-१५५-१४क्ष् (९२१)
धृतराष्ट्रस्य तं काममनुबुध्य युधिष्ठिरः ।
आत्मनश्चासहायत्वं तथेति प्रत्युवाच तम् ॥ १-१५५-१४ (७१३२)
ततो भीष्मं शान्तनवं विदुरं च महामतिम् ।
द्रोणं च बाह्लिकं चैव सोमदत्तं च कौरवम् ॥ १-१५५-१५ (७१३३)
कृपमाचार्यपुत्रं च भूरिश्रवसमेव च ।
मान्यानन्यानमात्यांश्च ब्राह्मणांश्च तपोधनान् ॥ १-१५५-१६ (७१३४)
पुरोहितांश्च पौत्रांश्च गान्धारीं च यशस्विनीम् ।
गसर्वा मातॄरुपस्पृष्ट्वा विदुरस्य च योषितः।'
युधिष्ठिरः शनैर्दीन उवाचेदं वचस्तदा ॥ १-१५५-१७ (७१३५)
रमणीये जनाकीर्णे नगरे वारणावते ।
सगणास्तत्र यास्यामो धृतराष्ट्रस्य शासनात् ॥ १-१५५-१८ (७१३६)
प्रसन्नमनसः सर्वे पुण्या वाचो विमुञ्चत ।
आशीर्भिर्बृंहितानस्मान्न पापं प्रसहिष्यते ॥ १-१५५-१९ (७१३७)
वैशंपायन उवाच। १-१५५-२०क्ष् (९२२)
एवमुक्तास्तु ते सर्वे पाण्डुपुत्रेण कौरवाः ।
प्रसन्नवदना भूत्वा तेऽन्ववर्तन्त पाण्डवान् ॥ १-१५५-२० (७१३८)
स्वस्त्यस्तु वः पथि सदा भूतेभ्यश्चैव सर्वशः ।
मा च वोस्त्वशुभं किंचित्सर्वशः पाण्डुनन्दनाः ॥ १-१५५-२१ (७१३९)
ततः कृतस्वस्त्ययना राज्यलाभाय पार्थिवाः ।
कृत्वा सर्वाणि कार्याणि प्रययुर्वारणावतम् ॥ ॥ १-१५५-२२ (७१४०)

इति श्रीमन्महाभारते आदिपर्वणि जतुगृहपर्वणि
पञ्चपञ्चाशदधिकशततमोऽध्यायः ॥ १५५ ॥

---

अध्ययः१५६
॥ श्रीः ॥
१.१५६. अध्यायः १५६

Mahabharata - Adi Parva - Chapter Topics
दुर्योधनादेशात् पुरोचनेन वारणावते जतुगृहनिर्माणम् ॥ १ ॥

Mahabharata - Adi Parva - Chapter Text

१-१५६-० (७१४१)
वैशंपायन उवाच। १-१५६-०क्ष् (९२३)
धृतराष्ट्रप्रयुक्तेषु पाण्डुपुत्रेषु भारत ।
दुर्योधनः परं हर्षमगच्छत्स दुरात्मवान् ॥ १-१५६-१ (७१४२)
ग्ततः सुबलपुत्रश्च कर्णदुर्योधनावपि ।
दहने सह पुत्रायाः कुन्त्या मतिमकुर्वत ।
मन्त्रयित्वा स तैः सार्धं दुरात्मा धृतराष्ट्रजः ॥' १-१५६-२ (७१४३)
स पुरोचनमेकान्तमानीय भरतर्षभ ।
गृहीत्वा दक्षिणे पाणौ सचिवं वाक्यमब्रवीत् ॥ १-१५६-३ (७१४४)
ममेयं वसुसंपूर्णा पुरोचन वसुन्धरा ।
यथैव भविता तात तथा त्वं द्रष्टुमर्हसि ॥ १-१५६-४ (७१४५)
न हि मे कश्चिदन्योऽस्ति विश्वासिकतरस्त्वया ।
सहायो येन सन्धाय मन्त्रयेयं यथा त्वया ॥ १-१५६-५ (७१४६)
संरक्ष तात मन्त्रं च सपत्नांश्च ममोद्धर ।
निपुणेनाभ्युपायेन यद्ब्रवीमि तथा कुरु ॥ १-१५६-६ (७१४७)
पाण्डवा धृतराष्ट्रेण प्रेषिता वारणावतम् ।
उत्सवे विहरिष्यन्ति धृतराष्ट्रस्य शासनात् ॥ १-१५६-७ (७१४८)
स त्वं रासभयुक्तेन स्यन्दनेनाशुगामिना ।
वारणावतमद्यैव यथा यासि तथा कुरु ॥ १-१५६-८ (७१४९)
तत्र गत्वा चतुःशालं गृहं परमसंवृतम् ।
नगरोपान्तमाश्रित्य कारयेथा महाधनम् ॥ १-१५६-९ (७१५०)
शणसर्जरसादीनि यानि द्रव्याणि कानिचित् ।
आग्नेयान्युत सन्तीह तानि तत्र प्रदापय ॥ १-१५६-१० (७१५१)
ग्बल्वजेन च संमिश्रं मधूच्छिष्टेन चैव हि।'
सर्पिस्तैलवसाभिश्च लाक्षया चाप्यनल्पया ।

मृत्तिकां मिश्रयित्वा त्वं लेपं कुड्येषु दापय ॥ १-१५६-११ (७१५२)
शणं तैलं घृतं चैव जतु दारूणि चैव हि ।
तस्मिन्वेश्मनि सर्वाणि निक्षिपेथाः समन्ततः ॥ १-१५६-१२ (७१५३)
ग्लाक्षाशममधूच्छिष्टवेष्टितानि मृदापि च ।
लेपयित्वा गुरूण्याशु दारुयन्त्राणि दापय ॥' १-१५६-१३ (७१५४)
यथा च तन्न पश्येरन्परीक्षन्तोऽपि पाण्डवाः ।
आग्नेयमिति तत्कार्यमपि चान्येऽपि मानवाः ॥ १-१५६-१४ (७१५५)
वेश्मन्येवं कृते तत्र कृत्वा तान्परमार्चितान् ।
वासयेथाः पाण्डवेयान्कुन्तीं च ससुहृज्जनाम् ॥ १-१५६-१५ (७१५६)
आसनानि च दिव्यानि यानानि शयनानि न ।
निघातव्यानि पाण्डूनां यथा तुष्येच्च मे पिता ॥ १-१५६-१६ (७१५७)
यथा च तन्न जानन्ति नगरे वारणावते ।
ग्यथा रमेरन्विस्रब्धा नगरे वारणावते।'
तथा सर्वं विधातव्यं यावत्कालस्य पर्ययः ॥ १-१५६-१७ (७१५८)
ज्ञात्वा च तान्सुविश्वस्ताञ्शयानानकुतोभयान् ।
अग्निस्त्वया ततो देयो द्वारतस्तस्य वेश्मनः ॥ १-१५६-१८ (७१५९)
दग्धानेवं स्वके गेहे दाहिताः पाण्डवा इति ।
न गर्हयेयुरस्मान्वै पाण्डवार्थाय कर्हिचित् ॥ १-१५६-१९ (७१६०)
स तथेति प्रतिज्ञाय कौरवाय पुरोचनः ।
प्रायाद्रासभयुक्तेन स्यन्दनेनाशुगामिना ॥ १-१५६-२० (७१६१)
स गत्वा त्वरितं राजन्दुर्योधनमते स्थितः ।
यथोक्तं राजपुत्रेण सर्वं चक्रे पुरोचनः ॥ १-१५६-२१ (७१६२)
ग्तेषां तु पाण्डवेयानां गृहं रौद्रमकल्पयत् ॥' ॥ १-१५६-२२ (७१६३)

इति श्रीमन्महाभारते आदिपर्वणि जतुगृहपर्वणि
षट्पञ्चाशदधिकशततमोऽध्यायः ॥ १५६ ॥

Mahabharata - Adi Parva - Chapter Footnotes

१-१५६-६ उद्धर उन्मूलय ॥
१-१५६-१० आग्नेयान्यग्निसंदीपकानि ॥
षट्पञ्चाशदधिकशततमोऽध्यायः ॥
१५६ ॥

---

अध्यय१५७
॥ श्रीः ॥
१.१५७. अध्यायः १५७

हास्तिनपुरं त्यक्त्वा वारणावतं गच्छता युधिष्ठिरेण अनुगच्छथां
पौराणां निवर्तनम् ॥ १ ॥
म्लेच्छभाषया युधिष्ठिरं प्रति विदुरस्योपदेशः ॥ २ ॥

Mahabharata - Adi Parva - Chapter Text

१-१५७-० (७१६४)
वैशंपायन उवाच। १-१५७-०क्ष् (९२४)
पाण्डवास्तु रथान्युक्तान्सदश्वैरनिलोपमैः ।
आरोहमाणा भीष्मस्य पादौ जगृहुरार्तवत् ॥ १-१५७-१ (७१६५)
राज्ञश्च धृतराष्ट्रस्य द्रोणस्य च महात्मनः ।
अन्येषां चैव वृद्धानां कृपस्य विदुरस्य च ॥ १-१५७-२ (७१६६)
एवं सर्वान्कुरून्वृद्धानभिवाद्य यतव्रताः ।
समालिङ्ग्य समानान्वै बालैश्चाप्यभिवादिताः ॥ १-१५७-३ (७१६७)
सर्वा मातॄस्तथाऽऽपृच्छ्य कृत्वा चैव प्रदक्षिणम् ।
प्रकृतीरपि सर्वाश्च प्रययुर्वारणावतम् ॥ १-१५७-४ (७१६८)
विदुरश्च महाप्राज्ञस्तथाऽन्ये कुरुपुङ्गवाः ।
पौराश्च पुरुषव्याघ्रानन्वीयुः शोककर्शिताः ॥ १-१५७-५ (७१६९)
तत्र केचिद्ब्रुवन्ति स्म ब्राह्मणा निर्भयास्तदा ।
दीनान्दृष्ट्वा पाण्डुसुतानतीव भृशदुःखिताः ॥ १-१५७-६ (७१७०)
विषमं पश्यते राजा सर्वथा स सुमन्दधीः ।
कौरव्यो धृतराष्ट्रस्तु न च धर्मं प्रपश्यति ॥ १-१५७-७ (७१७१)
न हि पापमपापात्मा रोचयिष्यति पाण्डवः ।
भीमो वा बलिनां श्रेष्ठः कौन्तेयो वा धनञ्जयः ॥ १-१५७-८ (७१७२)
कुत एव महात्मानौ माद्रीपुत्रौ करिष्यतः ।
तान्राज्यं पितृतः प्राप्तान्धृतराष्ट्रो न मृष्यति ॥ १-१५७-९ (७१७३)
अधर्म्यमिदमत्यन्तं कथं भीष्मोऽनुमन्यते ।
विवास्यमानानस्थाने नगरे योऽभिमन्यते ॥ १-१५७-१० (७१७४)
पितेव हि नृपोऽस्माकमभूच्छान्तनवः पुरा ।
विचित्रवीर्यो राजर्षिः पाण्डुश्च कुरुनन्दनः ॥ १-१५७-११ (७१७५)
स तस्मिन्पुरुषव्याघ्रे देवभावं गते सति ।
राजपुत्रानिमान्बालान्धृतराष्ट्रो न मृष्यति ॥ १-१५७-१२ (७१७६)
वयमेतदनिच्छन्तः सर्व एव पुरोत्तमात् ।
गृहान्विहाय गच्छामो यत्र गन्ता युधिष्ठिरः ॥ १-१५७-१३ (७१७७)
वैशंपायन उवाच। १-१५७-१४क्ष् (९२५)

तांस्तथा वादिनः पौरान्दुःकितान्दुःखकर्शितः ।
उवाच मनसा ध्यात्वा धर्मराजो युधिष्ठिरः ॥ १-१५७-१४ (७१७८)
पिता मान्यो गुरुः श्रेष्ठो यदाह पृथिवीपतिः ।
अशङ्कमानैस्तत्कार्यमस्माभिरिति नो व्रतम् ॥ १-१५७-१५ (७१७९)
भवन्तः सुहृदोऽस्माकं यात कृत्वा प्रदक्षिणम् ।
प्रतिनन्द्य तथाऽऽशीर्भिर्निवर्तध्वं यथागृहम् ॥ १-१५७-१६ (७१८०)
यदा तु कार्यमस्माकं भवद्भिरुपपत्स्यते ।
तदा करिष्यथास्माकं प्रियाणि च हितानि च ॥ १-१५७-१७ (७१८१)
एवमुक्तास्तदा पौराः कृत्वा चापि प्रदक्षिणम् ।
आशीर्भिश्चाभिनन्द्यैताञ्जग्मुर्नगरमेव हि ॥ १-१५७-१८ (७१८२)
पौरेषु विनिवृत्तेषु विदुरः सर्वधर्मवित् ।
बोधयन्पाण्डवश्रेष्ठमिदंवचनमब्रवीत् ॥ १-१५७-१९ (७१८३)
प्राज्ञः प्राज्ञं प्रलापज्ञः प्रलापज्ञमिदं वचः ।
यो जानाति परप्रज्ञां नीतिशास्त्रानुसारिणीम् ।
विज्ञायेह तथा कुर्यादापदं निस्तरेद्यथा ॥ १-१५७-२० (७१८४)
अलोहं निशितं शस्त्रं शरीरपरिकर्तनम् ।
यो वेत्ति न तु तं घ्नन्ति प्रतिघातविदं द्विषः ॥ १-१५७-२१ (७१८५)
कक्षघ्नः शिशिरघ्नश्च महाकक्षे बिलौकसः ।
न दहेदिति चात्मानं यो रक्षति स जीवति ॥ १-१५७-२२ (७१८६)
नाचक्षुर्वेत्ति पन्थानं नाचक्षुर्विन्दते दिशः ।
नाधृतिर्भूतिमाप्नोति बुध्यस्वैवं प्रबोधितः ॥ १-१५७-२३ (७१८७)
अनाप्तैर्दत्तमादत्ते नरः शस्त्रमलोहजम् ।
श्वाविच्छरणमासाद्य प्रमुच्येत हुताशनात् ॥ १-१५७-२४ (७१८८)
चरन्मार्गान्विजानाति नक्षत्रैर्विन्दते दिशः ।
आत्मना चात्मनः पञ्च पीडयन्नानुपीड्यते ॥ १-१५७-२५ (७१८९)
एवमुक्तः प्रत्युवाच धर्मराजो युधिष्ठिरः ।
विदुरं विदुषां श्रेष्ठं ज्ञातमित्येव पाण्डवः ॥ १-१५७-२६ (७१९०)
अनुशिक्ष्यानुगम्यैतान्कृत्वा चैव प्रदक्षिणम् ।
पाण्डवानभ्यनुज्ञाय विदुरः प्रययौ गृहान् ॥ १-१५७-२७ (७१९१)
निवृत्ते विदुरे चापि भीष्मे पौरजने तथा ।
अजातशत्रुमासाद्य कुन्ती वचनमब्रवीत् ॥ १-१५७-२८ (७१९२)
क्षत्ता यदब्रवीद्वाक्यं जनमध्येऽब्रुवन्निव ।
त्वया च स तथेत्युक्तो जानीमो न च तद्वयम् ॥ १-१५७-२९ (७१९३)
यदीदं शक्यमस्माभिर्ज्ञातुं नैव च दोषवत् ।
श्रोतुमिच्छामि तत्सर्वं संवादं तव तस्य च ॥ १-१५७-३० (७१९४)
युधिष्ठिर उवाच। १-१५७-३१क्ष् (९२६)

विषादग्नेश्च बोद्धव्यमिति मां विदुरोऽब्रवीत् ।
पन्थानो वेदितव्याश्च नक्षत्रैश्च तथा दिशः ।
ग्कुड्याश्चविदिताःकार्याःस्याच्छुद्धिरितिचाब्रवीत् ॥ १-१५७-३१ (७१९५)
जितेन्द्रियश्च वसुधां प्राप्स्यतीति च मेऽब्रवीत् ।
विज्ञातमिति तत्सर्वं प्रत्युक्तो विदुरो मया ॥१-१५७-३२ (७१९६)
वैशंपायन उवाच।१-१५७-३३क्ष् (९२७)
अष्टमेऽहनि रोहिण्यां प्रयाताः फाल्गुनस्य ते ।
वारणावतमासाद्य ददृशुर्नागरं जनम् ॥ ॥१-१५७-३३ (७१९७)

इति श्रीमन्महाभारते आदिपर्वणि जतुगृहपर्वणि
सप्तपञ्चादशदधिकशततमोऽध्यायः ॥१५७ ॥
Mahabharata - Adi Parva - Chapter Footnotes

१-१५७-१० अस्थाने अयुक्तम् योऽभिमन्यते स भीष्मः कथमनुमन्यत इत्यर्थः ॥
१-१५७-२० प्राज्ञः ऊहापोहसमर्थः ।प्रलापज्ञः अनर्थवचनाभासाभिज्ञः।युधिष्ठिरमप्येतादृशम्।वचनमेवाह। इदमिति।इदं प्रलापात्मकं मम वचो यो जानाति सः परस्य शत्रोः प्रज्ञां स्वबाधार्थं नीत्या प्रयुक्तां विज्ञाय तथा कुर्यात्।यथा स्वयमापदं निस्तरेदित्यन्वयः ॥
१-१५७-२१ प्रलापाकारवचनमेवाह ।अलोहमिति।अलोहमग्निमयं शस्त्रमिव शस्त्रं घातकं तस्य प्रतिघातविदं द्विषो न घ्नन्ति।प्रतिघातकृतमिति पाठे प्रतिघाताय कृतमित्यर्थः ॥
१-१५७-२२ अग्निकृते भये ज्ञातेऽपि कथं प्रतीकारस्तत्राह ।कक्षघ्न इति।कक्षस्तृणेन्धनं हन्तीति तथा।शिशिरं शीतं हन्तीति तथाविधोऽपि अग्निः महाकक्षे अरण्ये दह्यमानेऽपि बिलौकसो मूषिकादीन्न दहति इत्थमात्मानं यो रक्षति स जीवति।तथा बिलेष्वाविश्यागाराद्रक्षणीय इत्यर्थः ॥
१-१५७-२३ ततश्च बिलनिर्गमानन्तरमरण्यगमन्प्रकारमुपदिशति ।नाचक्षुरिति।अचक्षुः पूर्वं वर्त्मदर्शनविहीनः पन्थानं रात्रौ न वेत्ति।तथा अचक्षुः विज्ञानविहीनः दिशो न विन्दते न प्रत्यभिजानाति।अतः पूर्वमेव वर्त्मदिशौ द्रष्टव्ये इति भावः।कथमस्माकं बिलप्रवेशनिर्गमाविति चेत्तत्राह।नाधृतिरिति।दुःखे धैर्यरहितो भूतिमैश्वर्यं जीवनं वा न विन्दति।विपदि धैर्यमेव कार्यमित्यर्थः ॥
१-१५७-२४ किंच यत्पुरोचनादिभिः कर्तव्यं तत्स्वयमेव

कार्यमित्याह ।अनाप्तैरिति। अनाप्तैः पुरोचनादिभिर्दत्तं
दातुमारब्धं यदलोहजं शस्त्रं तत्स्वयमादत्ते स्वीकरोति तान्हत्वा
आत्मानं रक्षति। पुरोचनादिषु जीवत्सु अनु सारादिशङ्का स्यादिति
भावः। शरणं सुरङ्गाम् ॥
१-१५७-२५ आत्मना सह पञ्च इन्द्रियाणि ।आहाराद्यभावेन पीडयम् अनु
पश्चात् न पीड्यते भवानिति शेषः। यद्वा। नाचक्षुरित्युक्तस्यैव
विवरणं। चरन्मार्गानिति। विश्वासार्थं षड्दग्धव्या
इत्याह। आत्मनेति। लुप्तोपममेतत्। त्वत्सदृशेन सह आत्मनः तव
सदृशान्पञ्च नानुपीड्यते भवानिति शेषः ॥
१-१५७-२९ अब्रुवन्निव व्यक्तां वाचमकुर्वन्निव ॥
सप्तपञ्चाशदधिकशततमोऽध्यायः ॥
१५७ ॥

---

अध्यय१५८
॥ श्रीः ॥
१.१५८. अध्यायः १५८

Mahabharata - Adi Parva - Chapter Topics
पाण्डवानां वारणावतप्रवेशः ॥१ ॥

Mahabharata - Adi Parva - Chapter Text

१-१५८-० (७१९८)
वैशंपायन उवाच। १-१५८-०क्ष् (९२८)
ततः सर्वाः प्रकृतयो नगराद्वारणावतात् ।
सर्वमङ्गलसंयुक्ता यथाशास्त्रमतन्द्रिताः ॥१-१५८-१ (७१९९)
श्रुत्वाऽगतान्पाण्डुपुत्रान्नानायानैः सहस्रशः ।
अभिजग्मुर्नरश्रेष्ठाञ्श्रुत्वैव परया मुदा ॥१-१५८-२ (७२००)
ते समासाद्य कौन्तेयान्वारणावतका जनाः ।
कृत्वा जयाशिषः सर्वे परिवार्योपतस्थिरे ॥१-१५८-३ (७२०१)
तैर्वृतः पुरुषव्याघ्रो धर्मराजो युधिष्ठिरः ।
विबभौ देवसङ्काशो वज्रपाणिरिवामरैः ॥१-१५८-४ (७२०२)
सत्कृतास्चैव पौरैस्ते पौरान्सत्कृत्य चानघ ।
अलङ्कृतं जनाकीर्णं विविशुर्वारणावतम् ॥१-१५८-५ (७२०३)
ते प्रविश्य पुरीं वीरास्तूर्णं जग्मुरथो गृहान् ।
ब्राह्मणानां महीपाल रतानां स्वेषु कर्मसु ॥१-१५८-६ (७२०४)
नगराधिकृतानां च गृहाणि रथिनां वराः ।

उपतस्थुर्नरश्रेष्ठा वैश्यशूद्रगृहाण्यपि ॥ १-१५८-७ (७२०५)
अर्चिताश्च नरैः पौरैः पाण्डवा भरतर्षभ ।
जग्मुरावसथं पश्चात्पुरोचनपुरःसराः ॥ १-१५८-८ (७२०६)
तेभ्यो भक्ष्याणि पानानि शयनानि शुभानि च ।
आसनानि च मुख्यानि प्रददौ स पुरोचनः ॥ १-१५८-९ (७२०७)
तत्र ते सत्कृतास्तेन सुमहार्हपरिच्छदाः ।
उपास्यमानाः पुरुषैरूषुः पुरनिवासिभिः ॥ १-१५८-१० (७२०८)
दशरात्रोषितानां तु तत्र तेषां पुरोचनः ।
निवेदयामास गृहं शिवाख्यमशिवं तदा ॥ १-१५८-११ (७२०९)
तत्र ते पुरुषव्याघ्रा विविशुः सपरिच्छदाः ।
पुरोचनस्य वचनात्कैलासमिव गुह्यकाः ॥ १-१५८-१२ (७२१०)
तच्चागारमभिप्रेक्ष्य सर्वधर्मभृतां वरः ।
उवाचाग्नेयमित्येवं भीमसेनं युधिष्ठिरः ॥ १-१५८-१३ (७२११)
जिघ्राणोऽस्य वसागन्धं सर्पिर्जतुविमिश्रितम् ।
कृतं हि व्यक्तमाग्नेयमिदं वेश्म परन्तप ॥ १-१५८-१४ (७२१२)
शणसर्जरसं व्यक्तमानीय गृहकर्मणि ।
मुञ्जबल्वजवंशादिद्रव्यं सर्वं घृतोक्षितम् ॥ १-१५८-१५ (७२१३)
ग्तृणबल्वजकार्पासवंशदारुकटान्यपि ।
आग्नेयान्यत्र क्षिप्तानि परितो वेश्मनस्तथा ॥' १-१५८-१६ (७२१४)
शिल्पिभिः सुकृतं ह्याप्तैर्विनीतैर्वेश्मकर्मणि ।
विश्वस्तं मामयं पापो दग्धुकामः पुरोचनः ॥ १-१५८-१७ (७२१५)
तथा हि वर्तते मन्दः सुयोधनवशे स्थितः ।
इमां तु तां महाबुद्धिर्विदुरो दृष्टवांस्तथा ॥ १-१५८-१८ (७२१६)
आपदं तेन मां पार्थ स संबोधितवान्पुरा ।
ते वयं बोधितास्तेन नित्यमस्मद्धितैषिणा ॥ १-१५८-१९ (७२१७)
पित्रा कनीयसा स्नेहाद्बुद्धिमन्तो शिवं गृहम् ।
अनार्यैः सुकृतं गूढैर्दुर्योधनवशानुगैः ॥ १-१५८-२० (७२१८)
भीमसेन उवाच। १-१५८-२१क्ष् (९२९)
यदीदं गृहामाग्नेयं विहितं मन्यते भवान् ।
तत्रैव साधु गच्छामो यत्र पूर्वोषिता वयम् ॥ १-१५८-२१ (७२१९)
ग्दर्शयित्वा पृथग्गन्तुं न कार्यं प्रतिभाति मे ।
अशुभं वा शुभं वा स्यात्तैर्वसाम सहैव तु ॥ १-१५८-२२ (७२२०)
अद्यप्रभृति चास्मासु गतेषु भयविह्वलः ।
रूढमूलो भवेद्राज्ये धार्तराष्ट्रो जनेश्वरः ॥ १-१५८-२३ (७२२१)
तदीयं तु भवेद्राज्यं तदीयाश्च जना इमे ।
तस्मात्सहैव वत्स्यामो गलन्यस्तपदा वयम् ॥ १-१५८-२४ (७२२२)

अस्माकं कालमासाद्य राज्यमाच्छिद्य शत्रुतः ।
अर्थं पैतृकमस्माकं सुखं भोक्ष्याम शाश्वतम् ॥१-१५८-२५ (७२२३)
धृतराष्ट्रवचोऽस्माभिः किमर्थमनुपाल्यते ।
तेभ्यो भित्त्वाऽन्यथागन्तुं दौर्बल्यं ते कुतो नृप ॥१-१५८-२६ (७२२४)
आपत्सु रक्षिताऽस्माकं विदुरोऽस्ति महामतिः ।
मध्यस्थ एव गाङ्गेयो राज्यभोगपराङ्मुखः ॥१-१५८-२७ (७२२५)
बाह्लीकप्रमुखा वृद्धा मध्यस्था एव सर्वदा ।
अस्मदीयो भवेद्द्रोणः फल्गुनप्रेमसंयुतः ॥१-१५८-२८ (७२२६)
तस्मात्सहैव वस्तव्यं न गन्तव्यं कथं नृप ।
अथवास्मासु ते कुर्युः किमशक्ताः पराक्रमैः ॥१-१५८-२९ (७२२७)
क्षुद्राः कपटिनो धूर्ता जाग्रत्सु मनुजेश्वर ।
किं न कुर्युः पुरा मह्यं किं न दत्तं महाविषम् ॥१-१५८-३० (७२२८)
आशीविषैर्महाघोरैः सर्पैस्तैः किं न दंशितः ।
प्रमाणकोट्यां संगृह्य निद्रापरवशे मयि ॥१-१५८-३१ (७२२९)
सर्पैर्दृष्टिविषैर्घोरैर्गङ्गायां शूलसन्ततौ ।
किं तैर्न पातितो भूप तदा किं मृतवानहम् ॥१-१५८-३२ (७२३०)
आपत्सु तासु घोरासु दुष्प्रयुक्तासु पापिभिः ।
अस्मानरक्षद्यो देवो जगद्यस्य वशे स्थितम् ॥१-१५८-३३ (७२३१)
चराचरात्मकं सोऽद्य यातः कुत्र नृपोत्तम ।
यावत्सोढव्यमस्माभिस्तावत्सोढास्मि यत्नतः ॥१-१५८-३४ (७२३२)
यदा न शक्ष्यतेऽस्माभिस्तदा पश्याम नो हितम् ।
किं द्रष्टव्यमिहास्माभिर्विगृह्य तरसा बलात् ॥१-१५८-३५ (७२३३)
सान्त्ववादेन दानेन भेदेनापि यतामहे ।
अर्धराज्यस्य संप्राप्त्यै ततो दण्डः प्रशस्यते ॥१-१५८-३६ (७२३४)
तस्मात्सहैव वस्तव्यं तन्मनोर्पितशल्यवत् ।
दर्शयित्वा पृथक् क्वापि न गन्तव्यं सुभीतवत् ॥' १-१५८-३७ (७२३५)
युधिष्ठिर उवाच।१-१५८-३८क्ष् (९३०)
इह यत्तैर्निराकारैर्वस्तव्यमिति रोचये ।
अप्रमत्तैर्विचिन्वद्भिर्गतिमिष्टां ध्रुवामितः ॥१-१५८-३८ (७२३६)
यदि विन्देत चाकारमस्माकं स पुरोचनः ।
क्षिप्रकारी ततो भूत्वा प्रसह्यापि दहेत्ततः ॥१-१५८-३९ (७२३७)
नायं बिभेत्युपक्रोशादधर्माद्वा पुरोचनः ।
तथा हि वर्तते मन्दः सुयोधनवशे स्थितः ॥१-१५८-४० (७२३८)
अपि चायं प्रदग्धेषु भीष्मोऽस्मासु पितामहः ।
कोपं कुर्यात्किमर्थं वा कौरवान्कोपयीत सः ॥१-१५८-४१ (७२३९)
अथवापीह दग्धेषु भीष्मोऽस्माकं पितामहः ।

धर्म इत्येव कुप्येरन्ये चान्ये कुरुपुङ्गवाः ॥१-१५८-४२ (७२४०)
ग्उपपन्नं तु दग्धेषु कुलवंशानुकीर्तिताः ।
कुप्येरन्यदि धर्मज्ञास्तथान्ये कुरुपुङ्गवाः ॥' १-१५८-४३ (७२४१)
वयं तु यदि दाहस्य बिभ्यतः प्रद्रवेमहि ।
स्पशैर्नो घातयेत्सर्वान्राज्यलुब्धः सुयोधनः ॥१-१५८-४४ (७२४२)
अपदस्थान्पदे तिष्ठन्नपक्षान्पक्षसंस्थितः ।
हीनकोशान्महाकोशः प्रयोगैर्घातयेद्ध्रुवम् ॥१-१५८-४५ (७२४३)
तदस्माभिरिमं पापं तं च पापं सुयोधनम् ।
वञ्चयद्भिर्निवस्तव्यं छन्नं वीर क्वचित्क्वचित् ॥१-१५८-४६ (७२४४)
ते वयं मृगयाशीलाश्चराम वसुधामिमाम् ।
तथा नो विदिता मार्गा भविष्यन्ति पलायतां ॥१-१५८-४७ (७२४५)
भौमं च बिलमद्यैव करवाम सुसंवृतम् ।
गूढोच्छ्वसान्न नस्तत्र हुताशः संप्रधक्ष्यति ॥१-१५८-४८ (७२४६)
द्रवतोऽत्र यथा चास्मान्न बुध्येत पुरोचनः ।
पौरो वापि जनः कश्चित्तथा कार्यमतन्द्रितैः ॥ ॥१-१५८-४९ (७२४७)

इति श्रीमन्महाभारते आदिपर्वणि जतुगृहपर्वणि
अष्टपञ्चाशदधिकशततमोऽध्यायः ॥१५८ ॥
Mahabharata - Adi Parva - Chapter Footnotes

१-१५८-२२ दर्शयित्वा विरोधमिति शेषः ॥
१-१५८-२९ न गन्तव्यं हास्तिनपुरमिति शेषः ॥
१-१५८-४० उपक्रोशाद्गर्हातः ॥
१-१५८-४१ अयं भीष्म इति संबन्धः ॥
१-१५८-४२ दग्धेष्वस्मास्वग्निदेषु कोपोऽधर्म इत्येव कारणं कृत्वा
भीष्मोऽन्ये च कुप्येरन् ॥
१-१५८-४४ दाहस्य दाहात् । स्पशैश्चारैः ॥
१-१५८-४९ अत्र बिले ॥
अष्टपञ्चाशदधिकशततमोऽध्यायः ॥
१५८ ॥

---

अध्यय१५९
॥ श्रीः ॥
१.१५९. अध्यायः १५९

Mahabharata - Adi Parva - Chapter Topics
खनकेन सुरङ्गकरणम् ॥१ ॥

१-१५९-० (७२४८)
वैशंपायन उवाच। १-१५९-०क्ष् (९३१)
विदुरस्य सुहृत्कश्चित्खनकः कुशलः क्वचित् ।
विविक्ते पाण्डवान्राजन्निदं वचनमब्रवीत् ॥ १-१५९-१ (७२४९)
प्रहितो विदुरेणास्मि खनकः कुशलो ह्यहम् ।
पाण्डवानां प्रियं कार्यमिति किं करवाणि वः ॥ १-१५९-२ (७२५०)
प्रच्छन्नं विदुरेणोक्तं प्रियं यन्म्लेच्छभाषया ।
त्वया च तत्तथेत्युक्तमेतद्विश्वासकारणम् ॥ १-१५९-३ (७२५१)
कृष्णपक्षे चतुर्दश्यां रात्रावस्यां पुरोचनः ।
भवनस्य तव द्वारि प्रदास्यति हुताशनम् ॥ १-१५९-४ (७२५२)
मात्रा सह प्रदग्धव्याः पाण्डवाः पुरुषर्षभाः ।
इति व्यवसितं तस्य धार्तराष्ट्रस्य दुर्मतेः ॥ १-१५९-५ (७२५३)
वैशंपायन उवाच। १-१५९-६क्ष् (९३२)
उवाच तं सत्यधृतिः कुन्तीपुत्रो युधिष्ठिरः ।
अभिजानामि सौम्य त्वां सुहृदं विदुरस्य वै ॥ १-१५९-६ (७२५४)
शुचिमाप्तं प्रियं चैव सदा च दृढभक्तिकम् ।
न विद्यते कवेः किंचिदविज्ञातं प्रयोजनम् ॥ १-१५९-७ (७२५५)
यथा तस्य तथा नस्त्वं निर्विशेषा वयं त्वयि ।
भवतश्च यथा तस्य पालयास्मान्यथा कविः ॥ १-१५९-८ (७२५६)
इदं शरणमाग्नेयं मदर्थमिति मे मतिः ।
पुरोचनेन विहितं धार्तराष्ट्रस्य शासनात् ॥ १-१५९-९ (७२५७)
स पापः कोशवांश्चैव ससहायश्च दुर्मतिः ।
अस्मानपि च पापात्मा नित्यकालं प्रबाधते ॥ १-१५९-१० (७२५८)
स भवान्मोक्षयत्वस्मान्यत्नेनास्माद्धुताशनात् ।
अस्मास्विह हि दग्धेषु सकामः स्यात्सुयोधनः ॥ १-१५९-११ (७२५९)
समृद्धमायुधागारमिदं तस्य दुरात्मनः ।
वप्रान्तं निष्प्रतीकारमाश्रित्येदं कृतं महत् ॥ १-१५९-१२ (७२६०)
इदं तदशुभं नूनं तस्य कर्म चिकीर्षितम् ।
प्रागेव विदुरो वेद तेनास्मानन्वबोधयत् ॥ १-१५९-१३ (७२६१)
सेयमापदनुप्राप्ता क्षत्ता यां दृष्टवान्पुरा ।
पुरोचनस्याविदितानस्मांस्त्वं प्रतिमोचय ॥ १-१५९-१४ (७२६२)
वैशंपायन उवाच। १-१५९-१५क्ष् (९३३)
स तथेति प्रतिश्रुत्य खनको यत्नमास्थितः ।

परिखामुत्किरन्नाम चकार च महाबिलम् ॥१-१५९-१५ (७२६३)
चक्रे च वेश्मनस्तस्य मध्ये नातिमहद्बिलम् ।
कपाटयुक्तमज्ञातं समं भूम्याश्च भारत ॥१-१५९-१६ (७२६४)
पुरोचनभयादेव व्यदधात्संवृतं मुखम् ।
स तस्य तु गृहद्वारि वसत्यशुभधीः सदा ।
तत्र ते सायुधाः सर्वे वसन्ति स्म क्षपां नृप ॥ १-१५९-१७ (७२६५)
दिवा चरन्ति मृगयां पाण्डवेया वनाद्वनम् ।
विश्वस्तवदविश्वस्ता वञ्चयन्तः पुरोचनम् ॥१-१५९-१८ (७२६६)
अतुष्टास्तुष्टवद्राजन्नूषुः परमविस्मिताः ॥ १-१५९-१९ (७२६७)
न चैनानन्वबुध्यन्त नरा नगरवासिनः ।
अन्यत्र विदुरामात्यात्तस्मात्खनकसत्तमात् ॥ ॥१-१५९-२० (७२६८)

इति श्रीमन्महाभारते आदिपर्वणि जतुगृहपर्वणि
ऊनषष्ट्यधिकशततमोऽध्यायः ॥१५९ ॥
Mahabharata - Adi Parva - Chapter Footnotes

१-१५९-४ आर्द्रायां च पुरोचनः ।भवनस्य निशि द्वारि इति ङ।पाठः ॥
१-१५९-७ कवेः सर्वज्ञस्य क्रान्तदर्शिनो वा ॥
१-१५९-८ यथा वयं तस्य तथा भवतश्च ॥
१-१५९-९ शरणं गृहम् ॥
१-१५९-१२ वप्रान्तं प्राकारमूलम् ।निष्प्रतीकारं
बहिर्निर्गमनप्रकारशून्यम् ॥
१-१५९-१४ अस्मांस्त्वं विप्रवासय इति ङ ।पाठः ॥
१-१५९-१५ परिखा प्राकारपरिधिभूतो गर्तस्ताम् ।नाम
प्रसिद्धण्।उत्किरन्परिखापरिष्कारव्याजेन बिलान्मृदमुत्किरन् बहिः
क्षिपन् महाबिलं सुरङ्गाख्यं चकार ॥
१-१५९-१६ नातिमहामुखं इति ङ ।पाठः ॥
ऊनषष्ट्यधिकशततमोऽध्यायः ॥
१५९ ॥

---

अध्यय१६०
॥श्रीः ॥
१.१६०. अध्यायः १६०

Mahabharata - Adi Parva - Chapter Topics
रात्रौ कुन्त्या अन्नादिना ब्राह्मणपूजनम् ॥१ ॥
भीमेन जतुगृहस्यादीपनम् ॥२ ॥

तस्य कुन्तीं भ्रातॄंश्चादाय सुरङ्गाद्द्वारा बहिर्निर्गमनम् ॥ ३ ॥

Mahabharata - Adi Parva - Chapter Text

१-१६०-० (७२६९)
वैशंपायन उवाच। १-१६०-०क्ष् (९३४)
तांस्तु दृष्ट्वा सुमनसः परिसंवत्सरोषितान् ।
विश्वस्तानिव संलक्ष्य हर्षं चक्रे पुरोचनः ॥ १-१६०-१ (७२७०)
ग्स तु संचिन्तयामास प्रहृष्टेनान्तरात्मना ।
प्राप्तकालमिदं मन्ये पाण्डवानां विनाशने ॥ १-१६०-२ (७२७१)
तमस्यान्तर्गतं भावं विज्ञाय कुरुपुङ्गवः ।
चिन्तयामास मतिमान्धर्मपुत्रो युधिष्ठिरः ॥' १-१६०-३ (७२७२)
पुरोचने तथा हृष्टे कौन्तेयोऽथ युधिष्ठिरः ।
भीमसेनार्जुनौ चोभौ यमौ प्रोवाच धर्मवित् ॥ १-१६०-४ (७२७३)
अस्मानयं सुविश्वस्तान्वेत्ति पापः पुरोचनः ।
वञ्चितोऽयं नृशंसात्मा कालं मन्ये पलायने ॥ १-१६०-५ (७२७४)
आयुधागारमादीप्य दग्ध्वा चैव पुरोचनम् ।
षट्प्राणिनो निधायेह द्रवामोऽनभिलक्षिताः ॥ १-१६०-६ (७२७५)
वैशंपायन उवाच। १-१६०-७क्ष् (९३५)
अथ दानापदेशेन कुन्ती ब्राह्मणभोजनम् ।
चक्रे निशि महाराज आजग्मुस्तत्र योषितः ॥ १-१६०-७ (७२७६)
ता विहृत्य यथाकामं भुक्त्वा पीत्वा च भारत ।
जग्मुर्निशिं गृहानेव समनुज्ञाप्य माधवीम् ॥ १-१६०-८ (७२७७)
ग्पुरोचनप्रणिहिता पृथां या सेवते सदा ।
निषादी दुष्टहृदया नित्यमन्तरचारिणी ॥ १-१६०-९ (७२७८)
निषादी पञ्चपुत्रा सा तस्मिन्भोज्ये यदृच्छया ।
पुराभ्यासकृतस्नेहा सखी कुन्त्याः सुतैः सह ॥ १-१६०-१० (७२७९)
आनीय मधुमूलानि फलानि विविधानि च ।
अन्नार्थिनी समभ्यागात्सपुत्रा कालचोदिता ।
सुपापा पञ्चपुत्रा च सा पृथायाः सखी मता ॥' १-१६०-११ (७२८०)
सा पीत्वा मदिरां मत्ता सपुत्रा मदविह्वला ।
सह सर्वैः सुतै राजंस्तस्मिन्नेव निवेशने ॥ १-१६०-१२ (७२८१)
सुष्वाप विगतज्ञाना मृतकल्पा नराधिप ।
अथ प्रवाते तुमुले निशि सुप्ते जने तदा ॥ १-१६०-१३ (७२८२)
तदुपादीपयद्भीमः शेते यत्र पुरोचनः ।
ततो जतुगृहद्वारं दीपयामास पाण्डवः ॥ १-१६०-१४ (७२८३)

समन्ततो ददौ पश्चादग्निं तत्र निवेशने ।
ग्पूर्वमेव गृहं शोध्य भीमसेनो महामतिः ॥ १-१६०-१५ (७२८४)
पाण्डवैः सहितां कुन्तीं प्रावेशयत तद्बिलम् ।
दत्त्वाग्निं सहसा भीमो गृहे तत्परितः सुधीः ॥ १-१६०-१६ (७२८५)
गृहस्थं द्रविणं गृह्य निर्जगाम बिलेन सः।'
ज्ञात्वा तु तद्गृहं सर्वमादीप्तं पाण्डुनन्दनाः ॥ १-१६०-१७ (७२८६)
सुरङ्गां विविशुस्तूर्णं मात्रा सार्धमरिन्दमाः ।
ततः प्रतापः सुमहाञ्छब्दश्चैव विभावसोः ॥ १-१६०-१८ (७२८७)
प्रादुरासीत्तदा तेन बुबुधे स जनव्रजः ।
तदवेक्ष्य गृहं दीप्तमाहुः पौराः कृशाननाः ॥ १-१६०-१९ (७२८८)
दुर्योधनप्रयुक्तेन पापेनाकृतबुद्धिना ।
गृहमात्मविनाशाय कारितं दाहितं च तत् ॥ १-१६०-२० (७२८९)
अहो धिग्धृतराष्ट्रस्य बुद्धिर्नातिसमञ्जसा ।
यः शुचीन्पाण्डुदायादान्दाहयामास शत्रुवत् ॥ १-१६०-२१ (७२९०)
दिष्ट्या त्विदानीं पापात्मादग्ध्वा दग्धः पुरोचनः ।
अनागसः सुविश्वस्तान्यो ददाह नरोत्तमान् ॥ १-१६०-२२ (७२९१)
वैशंपायन उवाच। १-१६०-२३क्ष् (९३६)
एवं ते विलपन्ति स्म वारणावतका जनाः ।
परिवार्य गृहं तच्च तस्थू रात्रौ समन्ततः ॥ १-१६०-२३ (७२९२)
पाण्डवाश्चापि ते सर्वे सह मात्रा सुदुःखिताः ।
बिलेन तेन निर्गत्य जग्मुर्द्रुतमलक्षिताः ॥ १-१६०-२४ (७२९३)
तेन निद्रोपरोधेन साध्वसेन च पाण्डवाः ।
न शेकुः सहसा गन्तुं सह मात्रा परन्तपाः ॥ १-१६०-२५ (७२९४)
भीमसेनस्तु राजेन्द्र भीमवेगपराक्रमः ।
जगाम भ्रातॄनादाय सर्वान्मातरमेव च ॥ १-१६०-२६ (७२९५)
स्कन्धमारोप्य जननीं यमावङ्केन वीर्यवान् ।
पार्थौ गृहीत्वा पाणिभ्यां भ्रातरौ सुमहाबलः ॥ १-१६०-२७ (७२९६)
उरसा पादपान्भञ्जन्महीं पद्भ्यां विदारयन् ।
स जगामाशु तेजस्वी वातरंहा वृकोदरः ॥ ॥ १-१६०-२८ (७२९७)

इति श्रीमन्महाभारते आदिपर्वणि जतुगृहपर्वणि
षष्ट्यधिकशततमोऽध्यायः ॥ १६० ॥

Mahabharata - Adi Parva - Chapter Footnotes

१-१६०-६ जातुषागारमिति ङ । पाठः ॥
षष्ट्यधिकशततमोऽध्यायः ॥

अध्यय१६१
॥ श्रीः ॥
१.१६१. अध्यायः १६१

Mahabharata - Adi Parva - Chapter Topics
पाण्डवानां विदुरप्रेषितदूतदर्शितनौकया गङ्गोत्तरणम् ॥ १ ॥

Mahabharata - Adi Parva - Chapter Text

१-१६१-० (७२९८)
वैशंपायन उवाच। १-१६१-०क्ष् (९३७)
एतस्मिन्नेव काले तु यथासंप्रत्ययं कविः ।
विदुरः प्रेषयामास तद्वनं पुरुषं शुचिम् ॥ १-१६१-१ (७२९९)
ग्आत्मनः पाण्डवानां च विश्वास्यं ज्ञातपूर्वकम् ।
गङ्गासंतरणार्थाय ज्ञाताभिज्ञानवाचिकम् ॥' १-१६१-२ (७३००)
स गत्वा तु यथोद्देशं पाण्डवान्ददृशे वने ।
जनन्या सह कौरव्याननयज्जाह्नवीतटम् ॥ १-१६१-३ (७३०१)
विदितं तन्महाबुद्धेर्विदुरस्य महात्मनः ।
ततस्त्रस्यापि चारेण चेष्टितं पापचेतसः ॥ १-१६१-४ (७३०२)
ततः प्रवासितो विद्वान्विदुरेण नरस्तदा ।
पार्थानां दर्शयामास मनोमारुतगामिनीम् ॥ १-१६१-५ (७३०३)
सर्ववातसहां नावं यन्त्रयुक्तां पताकिनीम् ।
शिवे भागीरथीतीरे नरैर्विस्रम्भिभिः कृताम् ॥ १-१६१-६ (७३०४)
ततः पुनरथोवाच ज्ञापकं पूर्वचोदितम् ।
युधिष्ठिर निबोधेयं संज्ञार्थं वचनं कवेः ॥ १-१६१-७ (७३०५)
कक्षघ्नः शिशिरघ्नश्च महाकक्षे बिलौकसः ।
न हन्तीत्येवमात्मानं यो रक्षति स जीवति ।
ग्बोद्धव्यमिति यत्प्राह विदुरस्तदिदं तथा ॥' १-१६१-८ (७३०६)
तेन मां प्रेषितं विद्धि विश्वस्तं संज्ञयाऽनया ।
भूयश्चैवाह मां क्षत्ता विदुरः सर्वतोऽर्थवित् ।
ग्अधिक्षिपन्धार्तराष्ट्रं सभ्रातृकमुदारधीः ॥' १-१६१-९ (७३०७)
कर्णं दुर्योधनं चैव भ्रातृभिः सहितं रणे ।
शकुनिं चैव कौन्तेय विजेताऽसि न संशयः ॥ १-१६१-१० (७३०८)
ग्वैशंपायन उवाच। १-१६१-११क्ष् (९३८)
पाण्डवाश्चापि गत्वाथ गङ्गायास्तीरमुत्तमम् ।

निषादाधिपतिं वीरं दाशं परमधार्मिकम् ॥ १-१६१-११ (७३०९)
दीपिकाभिः कृतालोकं मार्गमाणं च पाण्डवान् ।
ददृशुः पाण्डवेयास्ते नाविकं त्वरयाऽन्वितम् ॥ १-१६१-१२ (७३१०)
निषादस्तत्र कौन्तेयानभिज्ञानं न्यवेदयत् ।
विदुरस्य महाबुद्धेर्म्लेच्छभाषादि यत्तदा ॥ १-१६१-१३ (७३११)
नाविक उवाच। १-१६१-१४क्ष् (९३९)
विदुरेणास्मि सन्दिष्टो दत्त्वा बहु धनं महत् ।
गङ्गातीरे निविष्टस्त्वं पाण्डवांस्तारयेति ह ॥ १-१६१-१४ (७३१२)
सोऽहं चतुर्दशीमद्य गङ्गाया अविदूरतः ।
चारेरन्वेषयाम्यस्मिन्वने मृगगणान्विते ॥ १-१६१-१५ (७३१३)
प्रभवन्तोऽथ भद्रं वो नावमारुह्य गम्यताम् ।
युक्तारित्रपताकां च निश्छिद्रां मन्दिरोपमाम् ॥' १-१६१-१६ (७३१४)
इयं वारिपथे युक्ता नौरप्सु सुखगामिनी ।
मोचयिष्यति वः सर्वानस्माद्देशान्न संशयः ॥ १-१६१-१७ (७३१५)
वैशंपायन उवाच। १-१६१-१८क्ष् (९४०)
अथ तान्व्यथितान्दृष्ट्वा सह मात्रा नरोत्तमान् ।
नावमारोप्य गङ्गायां प्रस्थितानब्रवीत्पुनः ॥ १-१६१-१८ (७३१६)
विदुरो मूर्ध्न्युपाघ्राय परिष्वज्य वचो मुहुः ।
अरिष्टं गच्छताव्यग्राः पन्थानमिति चाब्रवीत् ॥ १-१६१-१९ (७३१७)
इत्युक्त्वा स तु तान्वीरान्पुमान्विदुरचोदितः ।
तारयामास राजेन्द्र गङ्गां नावा नरर्षभान् ॥ १-१६१-२० (७३१८)
तारयित्वा ततो गङ्गां पारं प्राप्तांश्च सर्वशः ।
जयाशिषः प्रयुज्याथ यथागतमगाद्धि सः ॥ १-१६१-२१ (७३१९)
पाण्डवाश्च महात्मानः प्रतिसन्दिश्य वै कवेः ।
गङ्गामुत्तीर्य वेगेन जग्मुर्गूढमलक्षिताः ॥ १-१६१-२२ (७३२०)
ग्ततस्ते तत्र तीर्त्वा तु गङ्गामुत्तुङ्गवीचिकाम् ।
जवेन प्रययुर्वीरा दक्षिणां दिशमास्थिताः ॥ १-१६१-२३ (७३२१)
विज्ञाय निशि पन्थानं नक्षत्रैर्दक्षिणामुखाः ।
वनाद्वनान्तरं राजन्गहनं प्रतिपेदिरे ॥ १-१६१-२४ (७३२२)
श्रान्तास्ततः पिपासार्ताः क्षुधिता भयकातराः ।
पुनरूचुर्महावीर्यं भीमसेनमिदं वचः ॥ १-१६१-२५ (७३२३)
इतः कष्टतरं किं नु यद्वयं गहने वने ।
दिशश्च न प्रजानीमो गन्तुं चैतेन शक्नुमः ।
तं च पापं न जानीमो दग्धो वाथ पुरोचनः ॥ १-१६१-२६ (७३२४)
कथं नु विप्रमुच्येम भयादस्मादलक्षिताः ।
शीघ्रमस्मानुपादाय तथैव व्रज भारत ॥ १-१६१-२७ (७३२५)

त्वं हि नो बलवानेको यथा सततगस्तथा ।
इत्युक्तो धर्मराजेन भीमसेनो महाबलः ।
आदाय कुन्तीं भ्रातॄंश्च जगामाशु स पावनिः'॥ ॥ १-१६१-२८ (७३२६)

इति श्रीमन्महाभारते आदिपर्वणि जतुगृहपर्वणि
एकषष्ट्यधिकशततमोऽध्यायः ॥१६१ ॥

---

अध्यय१६२
॥ श्रीः ॥
१.१६२. अध्यायः १६२

Mahabharata - Adi Parva - Chapter Topics
पौरैः प्रातर्जतुगृहसमीपमागत्य पुरोचनसहितानां पाण्डवानां दाहं
निश्चित्य धृतराष्ट्राय दूतमुखेन पाण्डवृत्तान्तनिवेदनम् ॥१ ॥
तच्छ्रवणेन ज्ञातिभिः सह धृतराष्ट्रेण कुन्त्यादीनां उदकदानम् ॥२ ॥
भीष्मविदुरयोः संवादः ॥३ ॥

Mahabharata - Adi Parva - Chapter Text

१-१६२-० (७३२७)
वैशंपायन उवाच।१-१६२-०क्ष् (९४१)
अथ रात्र्यां व्यतीतायामशेषो नागरो जनः ।
तत्राजगाम त्वरितो दिदृक्षुः पाण्डुनन्दनान् ॥१-१६२-१ (७३२८)
निर्वापयन्तो ज्वलनं ते जना ददृशुस्ततः ।
जातुषं तद्गृहं दग्धममात्यं च पुरोचनम् ॥१-१६२-२ (७३२९)
नूनं दुर्योधनेनेदं विहितं पापकर्मणा ।
पाण्डवानां विनाशायेत्येवं ते चुक्रुशुर्जनाः ॥१-१६२-३ (७३३०)
विदिते धृतराष्ट्रस्य धार्तराष्ट्रो न संशयः ।
दग्धवान्पाण्डुदायादान्न ह्येतत्प्रतिषिद्धवान् ॥१-१६२-४ (७३३१)
नूनं शान्तनवोऽपीह न धर्मनुवर्तते ।
द्रोणश्च विदुरश्चैव कृपश्चान्ये च कौरवाः ॥१-१६२-५ (७३३२)
ग्नावेक्षन्ते ह तं धर्मं धर्मात्मानोऽप्यहो विधेः ।
श्रुतवन्तोऽपि विद्वांसो धनवद्वशगा अहो ॥१-१६२-६ (७३३३)
साधूननाथान्धर्मिष्ठात्सत्यव्रतपरायणान् ।
नावेक्षन्ते महान्तोऽपि दैवं तेषां परायणम् ॥१-१६२-७ (७३३४)
ते वयं धृतराष्ट्राय प्रेषयामो दुरात्मने ।
संवृत्तस्ते परः कामः पाण्डवान्दग्धवानसि ॥१-१६२-८ (७३३५)

ततो व्यपोहमानास्ते पाण्डवार्थे हुताशनम् ।
निषादीं ददृशुर्दग्धां पञ्चपुत्रामनागसम् ॥ १-१६२-९ (७३३६)
इतः पश्यत कुन्तीयं दग्धा शेते तपस्विनी ।
पुत्रैः सहैव वार्ष्णेयी हन्तेत्याहुः स्म नागराः ॥ १-१६२-१० (७३३७)
खनकेन तु तेनैव वेश्म शोधयता बिलम् ।
पांसुभिः पिहितं तच्च पुरुषैस्तैर्न लक्षितम् ॥ १-१६२-११ (७३३८)
ततस्ते प्रेषयामासुर्धृतराष्ट्राय नागराः ।
पाण्डवानग्निना दग्धानमात्यं च पुरोचनम् ॥ १-१६२-१२ (७३३९)
श्रुत्वा तु धृतराष्ट्रस्तद्राजा सुमहदप्रियम् ।
विनाशं पाण्डुपुत्राणां विललाप सुदुःखितः ॥ १-१६२-१३ (७३४०)
अन्तर्हृष्टमनाश्चासौ बहिर्दुःखसमन्वितः ।
अन्तःशीतो बहिश्चोष्णो ग्रीष्मेऽगाधह्रदोयथा ॥ १-१६२-१४ (७३४१)
धृतराष्ट्र उवाच। १-१६२-१५क्ष् (९४२)
अद्य पाण्डुर्मृतो राजा मम भ्राता महायशाः ।
तेषु वीरेषु दग्धेषु मात्रा सह विशेषतः ॥ १-१६२-१५ (७३४२)
गच्छन्तु पुरुषाः शीघ्रं नगरं वारणावतम् ।
सत्कारयन्तु तान्वीरान्कुन्तीं राजसुतां च ताम् ॥ १-१६२-१६ (७३४३)
ये च तत्र मृतास्तेषां सुहृदः सन्ति तानपि ।
कारयन्तु च कुल्यानि शुभ्राणि च बृहन्ति च ॥ १-१६२-१७ (७३४४)
मम दग्धा महात्मानः कुलवंशविवर्धनाः ॥ १-१६२-१८ (७३४५)
एवं गते मया शक्यं यद्यत्कारयितुं हितम् ।
पाण्डवानां च कुन्त्याश्च तत्सर्वं क्रियतां धनैः ॥ १-१६२-१९ (७३४६)
ग्वैशंपायन उवाच। १-१६२-२०क्ष् (९४३)
समेताश्च ततः सर्वे भीष्मेण सह कौरवाः ।
धृतराष्ट्रः सपुत्रश्च गङ्गामभिमुखा ययुः ॥ १-१६२-२० (७३४७)
एकवस्त्रा निरानन्दा निराभरणवेष्टनः ।
उदकं कर्तुकामा वै पाण्डवानां महात्मनाम् ॥' १-१६२-२१ (७३४८)
एवं गत्वा ततश्चक्रे ज्ञातिभिः परिवारितः ।
उदकं पाण्डुपुत्राणां धृतराष्ट्रोऽम्बिकासुतः ॥ १-१६२-२२ (७३४९)
रुरुदुः सहिताः सर्वे भृशं शोकपरायणाः ।
हा युधिष्ठिर कौरव्य हा भीम इति चापरे ॥ १-१६२-२३ (७३५०)
हा फल्गुनेति चाप्यन्ये हा यमाविति चापरे ।
कुन्तीमार्ताश्च शोचन्त उदकं चक्रिरे जनाः ॥ १-१६२-२४ (७३५१)
अन्ये पौरजनाश्चैवमन्वशोचन्त पाण्डवान् ।
विदुरस्त्वल्पशश्चक्रे शोकं वेद परं हि सः ॥ १-१६२-२५ (७३५२)
विदुरो धृतराष्ट्रस्य जानन्सर्वं मनोगतम् ।

तेनायं विधिना सृष्टः कुटिलः कपटाशयः ॥ १-१६२-२६ (७३५३)
इत्येवं चिन्तयन्राजन्विदुरो विदुषां वरः ।
लोकानां दर्शयन्दुःखं दुःखितैः सह बान्धवैः ॥ १-१६२-२७ (७३५४)
मनसाऽचिन्तयत्पार्थान्क्रियद्दूरं गता इति ।
सहिताः पाण्डवाः पुत्रा इति चिन्तापरोऽभवत् ॥ १-१६२-२८ (७३५५)
ततः प्रव्यथितो भीष्मः पाण्डुराजसुतान्मृतान् ।
सह मात्रेति तच्छ्रुत्वा विललाप रुरोद च ॥ १-१६२-२९ (७३५६)
भीष्म उवाच। १-१६२-३०क्ष् (९४४)
हा युधिष्ठिर हा भीम हा धनञ्जय हा यमौ ।
हा पृथे सह पुत्रैस्त्वमेकरात्रेण स्वर्गता ॥ १-१६२-३० (७३५७)
मात्रा सह कुमारास्ते सर्वे तत्रैव संस्थिताः ।
न हि तौ नोत्सहेयातां भीमसेनधनञ्जयौ ॥ १-१६२-३१ (७३५८)
तरसा वेगितात्मानौ निर्भेत्तुमपि मन्दरम् ।
परासुत्वं न पश्यामि पृथायाः सह पाण्डवैः ॥ १-१६२-३२ (७३५९)
सर्वथा विकृतं तत्तु यदि ते निधनं गताः ।
धर्मराजः स निर्दिष्टो ननु विप्रैर्युधिष्ठिरः ॥ १-१६२-३३ (७३६०)
पृथिव्यां च रथिश्रेष्ठो भविता स धनञ्जयः ।
सत्यव्रतो धर्मदत्तः सत्यवाक्छुभलक्षणः ॥ १-१६२-३४ (७३६१)
कथं कालवशं प्राप्तः पाण्डवेयो युधिष्ठिरः ।
आत्मानमुपमां कृत्वा परेषां वर्तते तु यः ॥ १-१६२-३५ (७३६२)
मात्रा सहैव कौरव्यः कथं कालवशं गतः ।
पालितः सुचिरं कालं फलकाले यथा द्रुमः ॥ १-१६२-३६ (७३६३)
भग्नः स्याद्वायुवेगेन तथा राजा युधिष्ठिरः ।
यौवराज्येऽभिषिक्तेन पितुर्येनाहृतं यशः ॥ १-१६२-३७ (७३६४)
आत्मनश्च पितुश्चैव सत्यधर्मप्रवृत्तिभिः ।
यच्च सा वनवासेन तन्माता दुःखभागिनी ॥ १-१६२-३८ (७३६५)
कालेन सह संमग्नो धिक्कृतान्तमनर्थकम् ।
यच्च सा वनवासेन तन्माता दुःखभागिनी ॥ १-१६२-३९ (७३६६)
पुत्रगृध्नुतया कुन्ती न भर्तारं मृतात्वनु ।
अल्पकालं कुले जाता भर्तुः प्रीतिमवाप या ॥ १-१६२-४० (७३६७)
दग्धाऽद्य सह पुत्रैः सा असंपूर्णमनोरा ।
मृतो भीम इति श्रुत्वा मनो न श्रद्दधाति मे ॥ १-१६२-४१ (७३६८)
एतच्च चिन्तयानस्य व्यथितं बहुधा मनः ।
अवधूय च मे देहं हृदयेन विदीर्यते ॥ १-१६२-४२ (७३६९)
पीनस्कन्धश्चारुबाहुर्मेरुकूटसमो युवा ।
मृतो भीम इति श्रुत्वा मनो न श्रद्दधाति मे ॥ १-१६२-४३ (७३७०)

अतित्यागी च योधी च क्षिप्रहस्तो दृढायुधः ।
प्रपत्तिमाँल्लब्धलक्षो रथयानविशारदः ॥ १-१६२-४४ (७३७१)
दूरपाती त्वसंभ्रान्तो महावीर्यो महास्त्रवान् ।
अदीनात्मा नरश्रेष्ठः श्रेष्ठः सर्वधनुष्मताम् ॥ १-१६२-४५ (७३७२)
येन प्राच्याश्च सौवीरा दाक्षिणात्याश्च निर्जिताः ।
ख्यापितं येन शूरेण त्रिषु लोकेषु पौरुषम् ॥ १-१६२-४६ (७३७३)
यस्मिञ्जाते विशोकाऽभूत्कुन्ती पाण्डुश्च वीर्यवान् ।
पुरन्दरसमो जिष्णुः कथं कालवशं गतः ॥ १-१६२-४७ (७३७४)
कथं तावृषभष्कन्धौ सिंहविक्रान्तगामिनौ ।
मर्त्यधर्ममनुप्राप्तौ यमावरिनिवर्हणौ ॥ १-१६२-४८ (७३७५)
वत्सा गताः क्व मां वृद्धं विहाय भृशमातुरम् ।
हा स्नुषे मम वार्ष्णेयि निधाय हृदि मे शुचम् ॥ १-१६२-४९ (७३७६)
वारणावतयात्रायां के स्युर्वै शकुनाः पथि ।
एवमल्पायुषो लोके भविष्यन्ति पृथासुताः ॥ १-१६२-५० (७३७७)
संशप्ता इति कैर्यूयं वत्सान्दर्शय मे पृथे ।
ममैव नाथा मन्नाथा मम नेत्राणि पाण्डवाः ॥ १-१६२-५१ (७३७८)
हा पाण्डवा मे हे वत्सा हा सिंहशिशवो मम ।
मातङ्गा हा ममोत्तुङ्गा हा ममानन्दवर्धनाः ॥ १-१६२-५२ (७३७९)
मम हीनस्य युष्माभिः सर्वलोकास्तमोवृताः ।
कदा द्रष्टाऽस्मि कौन्तेयांस्तरुणादित्यवर्चसः ॥ १-१६२-५३ (७३८०)
अदृष्ट्वा वो महाबाहून्पुत्रवन्मम नन्दनाः ।
क्व गतिर्मे क्व गच्छामि कुतो द्रक्ष्यामि मे शिशून् ॥ १-१६२-५४ (७३८१)
हा युधिष्ठिर हा भीम हा हा फल्गुन हा यमौ ।
मा गच्छत निवर्तध्वं मयि कोपं विमुञ्चत ॥ १-१६२-५५ (७३८२)
वैशंपायन उवाच। १-१६२-५६क्ष् (९४५)
श्रुत्वा तत्क्रन्दितं तस्य तिलोदं च प्रसिञ्चतः ।
देशं कालं समाज्ञाय विदुरः प्रत्यभाषत ॥ १-१६२-५६ (७३८३)
मा शोचीस्त्वं नरव्याघ्र जहि शोकं महाधृते ।
न तेषां विद्यते मृत्युः प्राप्तकालं कृतं मया ॥ १-१६२-५७ (७३८४)
एतच्च तेभ्य उदकं विप्रसिञ्च न भारत ।
क्षत्तेदमब्रवीद्भीष्मं कौरवाणामशृण्वताम् ॥ १-१६२-५८ (७३८५)
क्षत्तारमुपसंगम्य बाष्पोत्पीडकलस्वरः ।
मन्दंमन्दमुवाचेदं विदुरं संगमे नृप ॥ १-१६२-५९ (७३८६)
भीष्म उवाच। १-१६२-६०क्ष् (९४६)
कथं ते तात जीवन्ति पाण्डोः पुत्रा महाबलाः ।
कथमस्मत्कृते पक्षः पाण्डोर्न हि निपातितः ॥ १-१६२-६० (७३८७)

कथं मत्प्रमुखाः सर्वे प्रमुक्ता महतो भयात् ।
जननी गरुडेनेव कुरवस्ते समुद्धृताः ॥ १-१६२-६१ (७३८८)
वैशंपायन उवाच। १-१६२-६२क्ष् (९४७)
एवमुक्तस्तु कौरव्य कौरवाणामशृण्वताम् ।
आचचक्षे स धर्मात्मा भीष्मायाद्भुतकर्मणे ॥ १-१६२-६२ (७३८९)
विदुर उवाच। १-१६२-६३क्ष् (९४८)
धृतराष्ट्रस्य शकुने राज्ञो दुर्योधनस्य च ।
विनाशे पाण्डुपुत्राणां कृतो मतिविनिश्चयः ॥ १-१६२-६३ (७३९०)
तत्राहमपि च ज्ञात्वा तस्य पापस्य निश्चयम् ।
तं जिघांसुरहं चापि तेषामनुमते स्थितः ॥ १-१६२-६४ (७३९१)
ततो जतुगृहं गत्वा दहनेऽस्मिन्नियोजिते ।
पृथायाश्च सपुत्राया धार्तराष्ट्रस्य शासनात् ॥ १-१६२-६५ (७३९२)
ततः खनकमाहूय सुरङ्गं वै बिलं तदा ।
सुगूढं कारयित्वा ते कुन्त्या पाण्डुसुतास्तदा ॥ १-१६२-६६ (७३९३)
निष्कामिता मया पूर्वं मा स्म शोके मनः कृथाः ।
ततस्तु नावमारोप्य सहपुत्रां पृथामहम् ॥ १-१६२-६७ (७३९४)
दत्त्वाऽभयं सपुत्रायै कुन्त्यै गृहमदाहयम् ।
तस्मात्ते मा स्म भूद्दुःखं मुक्ताः पापात्तु पाण्डवाः ॥ १-१६२-६८ (७३९५)
निर्गताः पाण्डवा राजन्मात्रा सह परन्तपाः ।
अग्निहादान्महाघोरान्मया तस्मादुपायतः ॥ १-१६२-६९ (७३९६)
मा स्म शोकमिमं कार्षीर्जीवन्त्येव च पाण्डवाः ।
प्रच्छन्ना विचरिष्यन्ति यावत्कालस्य पर्ययः ॥ १-१६२-७० (७३९७)
तस्मिन्युधिष्ठिरं काले द्रक्ष्यन्ति भुवि मानवाः ।
विमलं कृष्णपक्षान्ते जगच्चन्द्रमिवोदितम् ॥ १-१६२-७१ (७३९८)
न तस्य नाशं पश्यामि यस्य भ्राता धनञ्जयः ।
भीमसेनश्च दुर्धर्षौ माद्रीपुत्रौ च तौ यमौ ॥ १-१६२-७२ (७३९९)
वैशंपायन उवाच। १-१६२-७३क्ष् (९४९)
ततः संहृष्टसर्वाङ्गो भीष्मो विदुरमब्रवीत् ।
दिष्ट्यादिष्ट्येति संहृष्टः पूजयानो महामतिम् ॥ १-१६२-७३ (७४००)
भीष्म उवाच। १-१६२-७४क्ष् (९५०)
युक्तं चैवानुरूपं च कृतं तात शुभं त्वया ।
वयं विमोक्षिता दुःखात्पाण्डुपक्षो न नाशितः ॥ १-१६२-७४ (७४०१)
वैशंपायन उवाच। १-१६२-७५क्ष् (९५१)
एवमुक्त्वा विवेशाथ पुरं जनशताकुलम् ।
कुरुभिः सहितो राजन्नागरैश्च पितामहः ॥ १-१६२-७५ (७४०२)
अथाम्बिकेयः सामात्यः सकर्णः सहसौबलः ।

सात्मजः पार्थनाशस्य स्मरंस्तथ्यं जर्ष च ॥ १-१६२-७६ (७४०३)
भीष्मश्च राजन्दुर्धर्षो विदुरश्च महामतिः ।
जहृषाते स्मरन्तौ तौ जातुषाग्नेर्विमोचनम् ॥ १-१६२-७७ (७४०४)
सत्यशीलगुणाचारै रागैर्जानपदोद्भवैः ।
द्रोणादयश्च धर्मैस्तु तेषां तान्मोचितान्विदुः ॥ १-१६२-७८ (७४०५)
शौर्यलावण्यमाहात्म्यै रूपैः प्राणबलैरपि ।
स्वस्थान्पार्थानमन्यन्त पौरजानपदास्तथा ॥ १-१६२-७९ (७४०६)
अन्ये जनाः प्राकृताश्च स्त्रियश्च बहुलास्तदा ।
शङ्कमाना वदन्ति स्म दग्धा जीवन्ति वा न वा ॥ ॥ १-१६२-८० (७४०७)

इति श्रीमन्महाभारते आदिपर्वणि जतुगृहपर्वणि
द्विषष्ट्यधिकशततमोऽध्यायः ॥ १६२ ॥
Mahabharata - Adi Parva - Chapter Footnotes

१-१६२-१७ कुल्यानि अस्थीनि कारयन्तु संस्कारयन्तु । कुल्यानि चैत्यानीत्यन्ये ॥
१-१६२-२५ विदुरस्त्वन्यथा चक्र इति घ । पाठः ॥
द्विषष्ट्यधिकशततमोऽध्यायः ॥
१६२ ॥

---

अध्यय१६३
॥ श्रीः ॥
१.१६३. अध्यायः १६३

Mahabharata - Adi Parva - Chapter Topics
तृषार्तान् मातरं भ्रांतॄश्च न्यग्रोधमूले स्थापयित्वा जलानयनाय
भीमस्य गमनम् ॥ १ ॥
जलमानीयागतस्य भूमौ सुप्तान्मात्रादीन्पश्यतो भीमस्य प्रलापः ॥ २ ॥

Mahabharata - Adi Parva - Chapter Text

१-१६३-० (७४०८)
वैशंपायन उवाच। १-१६३-०क्ष् (९५२)
तेन विक्रममाणेन ऊरुवेगसमीरितम् ।
वनं सवृक्षविटपं व्याघूर्णितमिवाभवत् ॥ १-१६३-१ (७४०९)
जङ्घावातो ववौ चास्य शुचिशुक्रागमे यथा ।
आवर्जितालतावृक्षं मार्गं चक्रे महाबलः ॥ १-१६३-२ (७४१०)
स मृद्नन्पुष्पितांश्चैव फलितांश्च वनस्पतीन् ।

अवरुज्य ययौ गुल्मान्पथस्तस्य समीपजान् ॥ १-१६३-३ (७४११)
स रोषित इव क्रुद्धो वने भञ्जन्महाद्रुमान् ।
त्रिप्रस्रुतमदः शुष्मी षष्टिवर्षो मतङ्गराट् ॥ १-१६३-४ (७४१२)
गच्छतस्तस्य वेगेन तार्क्ष्यमारुतरंहसः ।
भीमस्य पाण्डुपुत्राणां मूर्च्छेव समजायत ॥ १-१६३-५ (७४१३)
असकृच्चापि सतीर्य दूरपारं भुजप्लवैः ।
पथि प्रच्छन्नमासेदुर्धार्तराष्ट्रभयात्तदा ॥ १-१६३-६ (७४१४)
कृच्छ्रेण मातरं चैव सुकुमारीं यशस्विनीम् ।
अवहत्स तु पृष्ठेन रोधःसु विषमेषु च ॥ १-१६३-७ (७४१५)
अगमच्च वनोद्देशमल्पमूलफलोदकम् ।
क्रूरपक्षिमृगं घोरं सायाह्ने भरतर्षभ ॥ १-१६३-८ (७४१६)
घोरा समभवत्सन्ध्या दारुणा मृगपक्षिणः ।
अप्रकाशा दिशः सर्वा वातैरासन्ननार्तवैः ॥ १-१६३-९ (७४१७)
शीर्णपर्णफलै राजन्बहुगुल्मक्षुपद्रुमैः ।
भग्नावभुग्नभूयिष्ठैर्नानाद्रुमसमाकुलैः ॥ १-१६३-१० (७४१८)
ते श्रमेण च कौरव्यास्तृष्णया च प्रपीडिताः ।
नाशक्नुवंस्तदा गन्तुं निद्रया च प्रवृद्धया ॥ १-१६३-११ (७४१९)
न्यविशन्ति हि ते सर्वे निरास्वादे महावने ।
ग्रात्र्यामेव गतास्तूर्णं चतुर्विंशतियोजनम् ।'
ततस्तृषा परिक्लन्ता कुन्ती वचनमब्रवीत् ॥ १-१६३-१२ (७४२०)
माता सती पाण्डवानां पञ्चानां मध्यतः स्थिता ।
तृष्णया हि परीताऽहमनाथेव महावने ॥ १-१६३-१३ (७४२१)
ग्इतः परं तु शक्ताहं गन्तुं च न पदात्पदम् ।
शयिष्ये वृक्षमूलेऽत्र धार्तराष्ट्रा हरन्तु माम् ॥ १-१६३-१४ (७४२२)
शृणु भीम वचो मह्यं तव बाहुबलात्पुरः ।
स्थातुं न शक्ताः कौरव्याः किं बिभेषि पृथासुत ॥ १-१६३-१५ (७४२३)
अन्यो रथो न मेऽस्तीह भीमसेनादृते भुवि ।
धार्तराष्ट्राद्वृथा भीरुर्न मां स्वप्तुमिहेच्छसि ॥ १-१६३-१६ (७४२४)
वैशंपायन उवाच। १-१६३-१७क्ष् (९५३)
भीमपृष्ठस्थिता चेत्थं दूयमानेन चेतसा ।
निश्यध्वनि रुदन्ती सा निद्रावशमुपागता ॥' १-१६३-१७ (७४२५)
तच्छ्रुत्वा भीमसेनस्य मातृस्नेहात्प्रजल्पितम् ।
कारुण्येन मनस्तप्तं गमनायोपचक्रमे ॥ १-१६३-१८ (७४२६)
ततो भीमो वनं घोरं प्रविश्य विजनं महत् ।
न्यग्रोधं विपुलच्छायं रमणीयं ददर्श ह ॥ १-१६३-१९ (७४२७)
तत्र निक्षिप्य तान्सर्वानुवाच भरतर्षभः ।

पानीयं मृगयामीह तावद्विश्रम्यतामिह ॥ १-१६३-२० (७४२८)
एते रुवन्ति मधुरं सारसा जलचारिणः ।
ध्रुवमत्र जलस्थानं महच्चेति मतिर्मम ॥ १-१६३-२१ (७४२९)
अनुज्ञातः स गच्छेति भ्रात्रा ज्येष्ठेन भारत ।
जगाम तत्र यत्र स्म सारसा जलचारिणः ॥ १-१६३-२२ (७४३०)
ग्अपश्यत्पद्मिनीखण्डमण्डितं स सरोवरम् ।'
स तत्र पीत्वा पानीयं स्नात्वा च भरतर्षभ ॥ १-१६३-२३ (७४३१)
तेषामर्थे च जग्राह भ्रातॄणां भ्रातृवत्सलः ।
उत्तरीयेण पानीयमानयामास भारत ॥ १-१६३-२४ (७४३२)
ग्पङ्कजानामनेकैश्च पत्रैर्बध्वा पृथक्पृथक् ।'
गव्यूतिमात्रादागत्य त्वरितो मातरं प्रति ।
शोकदुःखपरीतात्मा निशश्वासोरगो यथा ॥ १-१६३-२५ (७४३३)
स सुप्तां मातरं ग्भ्रातॄन्निद्राविद्रावितौजसः ।
महारौद्रे वने घोरे वृक्षमूले सुशीतले ॥ १-१६३-२६ (७४३४)
विक्षिप्तकरपादांश्च दीर्घोच्छ्वासान्महाबलान् ।
ऊर्ध्ववक्त्रान्महाकायान्पञ्चेन्द्रानिव भूपते ॥ १-१६३-२७ (७४३५)
अज्ञातवृक्षनित्यस्थप्रेतराक्षससाध्वसान् ।
दृष्ट्वा वै भृशशोकार्तो बिललापानिलात्मजः ॥' १-१६३-२८ (७४३६)
भृशं शोकपरीत्मा विललाप वृकोदरः ॥ १-१६३-२९ (७४३७)
अतः कष्टतरं किं नु द्रष्टव्यं हि भविष्यति ।
यत्पश्यामि महीसुप्तान्भ्रातॄनद्य सुमन्दभाक् ॥ १-१६३-३० (७४३८)
शयनेषु परार्ध्येषु ये पुरा वारणावते ।
नाधिजग्मुस्तदा निद्रां तेऽद्य सुप्ता महीतले ॥ १-१६३-३१ (७४३९)
स्वसारं वसुदेवस्य शत्रुसङ्घावमर्दिनः ।
कुन्तिराजसुतां कुन्तीं सर्वलक्षणपूजिताम् ॥ १-१६३-३२ (७४४०)
स्नुषां विचित्रवीर्यस्य भार्यां पाण्डोर्महात्मनः ।
तथैव चास्मज्जननीं पुण्डरीकोदरप्रभाम् ॥ १-१६३-३३ (७४४१)
सुकुमारतरामेनां महार्हशयनोचिताम् ।
शयानां पश्यताऽद्येह पृथिव्यामतथोचिताम् ॥ १-१६३-३४ (७४४२)
धर्मादिन्द्राच्च वाताच्च सुपुवे या सुतानिमान् ।
सेयं भूमौ परिश्रान्ता शेषे प्रासादशायिनी ॥ १-१६३-३५ (७४४३)
किं नु दुःखतरं शक्यं मया द्रष्टुमतः परम् ।
योऽहमद्य नरव्याघ्रान्सुप्तान्पश्यामि भूतले ॥ १-१६३-३६ (७४४४)
त्रिषु लोकेषु यो राज्यं धर्मनित्योऽर्हते नृपः ।
सोऽयं भूमौ परिश्रान्तः शेते प्राकृतवत्कथम् ॥ १-१६३-३७ (७४४५)
अयं नीलाम्बुदश्यामो नरेष्वप्रतिमोऽर्जुनः ।

शेते प्राकृतवद्भूमौ ततो दुःखतरं नु किम् ॥ १-१६३-३८ (७४४६)
अश्विनाविव देवानां याविमौ रूपसंपदा ।
तौ प्राकृतवदद्येमौ प्रसुप्तौ धरणीतले ॥ १-१६३-३९ (७४४७)
ज्ञातयो यस्य नै स्युर्विषमाः कुलपांसनाः ।
स जीवेत सुखं लोके ग्रामद्रुम इवैकजः ॥ १-१६३-४० (७४४८)
एको वृक्षो हि यो ग्रामे भवेत्पर्णफलान्वितः ।
चैत्यो भवति निर्ज्ञातिरध्वनीनैश्च पूजितः ॥ १-१६३-४१ (७४४९)
येषां च बहवः शूरा ज्ञातयो धर्ममाश्रिताः ।
ते जीवन्ति सुखं लोके भवन्ति च निरामयाः ॥ १-१६३-४२ (७४५०)
बलवन्तः समृद्धार्था मित्रबान्धवनन्दनाः ।
जीवन्त्यन्योन्यमाश्रित्य द्रुमाः काननजा इव ॥ १-१६३-४३ (७४५१)
वयं तु धृतराष्ट्रेण दुष्पुत्रेण दुरात्मना ।
ग्राज्यलुब्धेन मूर्खेण दुर्मन्त्रिसहितेन वै ॥ १-१६३-४४ (७४५२)
दुष्टेनाधर्मशीलेन स्वार्थनिष्ठैकबुद्धिना।'
विवासिता न दग्धाश्च क्षत्तुर्बुद्धिपराक्रमात् ॥ १-१६३-४५ (७४५३)
तस्मान्मुक्ता वयं दाहादिमं वृक्षमुपाश्रिताः ।
कां दिशं प्रतिपत्स्यामः प्राप्ताः क्लेशमनुत्तमम् ॥ १-१६३-४६ (७४५४)
सकामो भव दुर्बुद्धे धार्तराष्ट्राल्पदर्शन ।
नूनं देवाः प्रसन्नास्ते नानुज्ञां मे युधिष्ठिरः ॥ १-१६३-४७ (७४५५)
प्रयच्छति वधे तुभ्यं तेन जीवसि दुर्मते ।
नन्वद्य ससुतामात्यं सकर्णानुजसौबलम् ॥ १-१६३-४८ (७४५६)
गत्वा क्रोधसमाविष्टः प्रेषयिष्ये यमक्षयम् ।
किं नु शक्यं मया कर्तुं यत्तेन क्रुध्यते नृपः ॥ १-१६३-४९ (७४५७)
धर्मात्मा पाण्डवश्रेष्ठः पापाचार युधिष्ठिरः ।
एवमुक्त्वा महाबाहुः क्रोधसन्दीप्तमानसः ॥ १-१६३-५० (७४५८)
करं करेण निष्पिष्य निःश्वसन्दीनमानसः ।
पुनर्दीनमना भूत्वा शान्तार्चिरिव पावकः ॥ १-१६३-५१ (७४५९)
भ्रातॄन्महीतले सुप्तानवैक्षत वृकोदरः ।
विश्वस्तानिव संविष्टान्पृथग्जनसमानिव ॥ १-१६३-५२ (७४६०)
नातिदूरेण नगरं वनादस्माद्धि लक्षये ।
जागर्तव्ये स्वपन्तीमे हन्त जागर्म्यहंस्वयम् ॥ १-१६३-५३ (७४६१)
प्राश्यन्तीमे जलं पश्चात्प्रतिबुद्धा जितक्लमाः ।
इति भीमो व्यवस्यैव जजागार स्वयं तदा ॥ ॥ १-१६३-५४ (७४६२)

इति श्रीमन्महाभारते आदिपर्वणि जतुगृहपर्वणि
त्रिषष्ट्यधिकशततमोऽध्यायः ॥ १६३ ॥ ॥ समाप्तं जतुर्गृहपर्व

॥
Mahabharata - Adi Parva - Chapter Footnotes

१-१६३-२ शुचिशुक्रागमे ज्येष्ठाषाढयोः समये ।आवर्जिताः समीकृता लता वृक्षाश्च यस्मिन् ॥
१-१६३-३ अवरुज्य भङ्क्त्वा ॥
१-१६३-४ रोषितो रोषं प्रापितः ।त्रिषु गण्डकर्णमूलगुह्यदेशेषु प्रस्रुतो मदो यस्य सः।शुष्मी तेजस्वी ॥
१-१६३-९ अनार्तवैरनृतुभवैरुत्पातरूपैरित्यर्थः ॥
१-१६३-१२ तृषा तृष्णया ॥
१-१६३-३० मुमन्दभागतिमन्दभाग्यः ॥
१-१६३-४० एकज एक एव जातोऽसहायः ॥
१-१६३-४३ बान्धवानां नन्दनाः सुखदाः ॥
१-१६३-४८ तुभ्यं तव ॥
त्रिषष्ट्यधिकशततमोऽध्यायः ॥
१६३ ॥

---

अध्यय१६४
॥ श्रीः ॥
१.१६४. अध्यायः १६४

(अथ हिडिम्बवधपर्व ॥ ९ ॥)
Mahabharata - Adi Parva - Chapter Topics
हिडिम्बप्रेरितायाः तद्भगिन्या हिडिम्बायाः पाण्डवसमीपगमनम् ॥ १ ॥
भीमं दृष्ट्वा कामार्ताया हिडिम्बायाः भीमं प्रति वाक्यम् ॥ २ ॥
भीमहिडिम्बासंवादः ॥ ३ ॥

Mahabharata - Adi Parva - Chapter Text

१-१६४-० (७४६३)
वैशंपायन उवाच।१-१६४-०क्ष् (९५४)
तत्र तेषु शयानेषु हिडिम्बो नाम राक्षसः ।
अविदूरे वनात्तस्माच्छालवृक्षं समाश्रितः ॥१-१६४-१ (७४६४)
क्रूरो मानुषमांसादो महावीर्यपराक्रमः ।
प्रावृड्जलधरश्यामः पिङ्गाक्षो दारुणाकृतिः ॥१-१६४-२ (७४६५)
दष्ट्राकरालवदनः करालो भीमदर्शनः ।
लम्बस्फिग्लम्बजठरो रक्तश्मश्रुशिरोरुहः ॥१-१६४-३ (७४६६)

महावृक्षगलस्कन्धः शङ्कुकर्णो विभीषणः ।
यदृच्छया तानपश्यत्पाण्डुपुत्रान्महारथान् ॥ १-१६४-४ (७४६७)
विरूपरूपः पिङ्गाक्षः करालो घोरदर्शनः ।
पिशितेप्सुः क्षुधार्तश्च जिघ्रन्गान्धं यदृच्छया ॥ १-१६४-५ (७४६८)
ऊर्ध्वाङ्गुलिः स कण्डूयन्धुन्वन्रूक्षाञ्शिरोरुहान् ।
जृम्भमाणो महावक्त्रः पुनःपुनरवेक्ष्य च ॥ १-१६४-६ (७४६९)
हृष्टो मानुषमांसस्य महाकायो महाबलः ।
आघ्राय मानुषं गन्धं भगिनीमिदमब्रवीत् ॥ १-१६४-७ (७४७०)
उपपन्नं चिरस्याद्य भक्ष्यं मम मनःप्रियम् ।
जिघ्रतः प्रस्रुता स्नेहाज्जिह्वा पर्येति मे मुखात् ॥ १-१६४-८ (७४७१)
अष्टौ दंष्ट्राः सुतीक्ष्णाग्राश्चिरस्यापातदुःसहाः ।
देहेषु मज्जयिष्यामि स्निग्धेषु पिशितेषु च ॥ १-१६४-९ (७४७२)
आक्रम्य मानुषं कण्ठमाच्छिद्य धमनीमपि ।
उष्णं नवं प्रपास्यामि फेनलिं रुधिरं बहु ॥ १-१६४-१० (७४७३)
गच्छ जानीहि के त्वेते शेरते वनमाश्रिताः ।
मानुषो बलवान्गान्धो घ्राणं तर्पयतीव मे ॥ १-१६४-११ (७४७४)
हत्वैतान्मानुषान्सर्वानानयस्व ममान्तिकम् ।
अस्मद्विषयसुप्तेभ्यो नैतेभ्यो भयमस्ति ते ॥ १-१६४-१२ (७४७५)
एषामुत्कृत्य मांसानि मानुषाणां यथेष्टतः ।
भक्षयिष्याव सहितौ कुरु पूर्णं वचो मम ॥ १-१६४-१३ (७४७६)
भक्षयित्वा च मांसानि मानुषाणां प्रकामतः ।
नृत्याव सहितावावां दत्ततालावनेकशः ॥ १-१६४-१४ (७४७७)
वैशंपायन उवाच। १-१६४-१५क्ष् (९५५)
एवमुक्ता हिडिम्बा तु हिडिम्बेन महावने ।
भ्रातुर्वचनमाज्ञाय त्वरमाणेव राक्षसी ॥ १-१६४-१५ (७४७८)
ग्आप्लुत्याप्लुत्य च तरूनगच्छत्पाण्डवान्प्रति।'
जगाम तत्र यत्र स्म शेरते पाण्डवा वने ॥ १-१६४-१६ (७४७९)
ददर्श तत्र सा गत्वा पाण्डवान्पृथया सह ।
शयानान्भीमसेनं च जाग्रतं त्वपराजितम् ॥ १-१६४-१७ (७४८०)
ग्उपास्यमानान्भीमेन रूपयौवनशालिनः ।
सुकुमारांश्च पार्थान्सा व्यायामेन च कर्शितान् ॥ १-१६४-१८ (७४८१)
दुःखेन संप्रयुक्तांश्च सहज्येष्ठान्प्रमाथिनः ।
रौद्री सती राजपुत्रं दर्शनीयप्रदर्शनम् ॥' १-१६४-१९ (७४८२)
दृष्ट्वैव भीमसेनं सा सालस्कन्धमिवोद्यतम् ।
राक्षसी कामयामास रूपेणाप्रतिमं भुवि ॥ १-१६४-२० (७४८३)
ग्अन्तर्गतेन मनसा चिन्तयामास राक्षसी'।

अयं श्यामो महाबाहुः सिंहस्कन्धो महाद्युतिः ॥१-१६४-२१ (७४८४)
कम्बुग्रीवः पुष्कराक्षो भर्ता युक्तो भवेन्मम ।
नाहं भ्रातृवचो जातु कुर्यां क्रूरमसांप्रतम् ॥१-१६४-२२ (७४८५)
पतिस्नेहोऽतिबलवान्न तथा भ्रातृसौहृदम् ।
मुहूर्तमिव तृप्तिश्च भवेद्भ्रातुर्ममैव च ॥१-१६४-२३ (७४८६)
हतैरेतैरहत्वा तु मोदिष्ये शाश्वतीः समाः ।
गनिश्चित्येत्थं हिडिम्बा सा भीमं दृष्ट्वा महाभुजं ॥१-१६४-२४ (७४८७)
उत्सृज्य राक्षसं रूपं मानुषं रूपमास्थिता।
सा कामरूपिणी रूपं कृत्वा मदनमोहिता ॥ १-१६४-२५ (७४८८)
उपतस्थे महात्मानं भीमसेनमनिन्दिता ।
गइङ्गिताकारकुशला सोपासर्पच्छनैः शनैः ॥१-१६४-२६ (७४८९)
विनम्यमानेव लता दिव्याभरणभूषिता ।
शनैः शनैश्च तां भीमः समीपमुपसर्पतीम् ॥१-१६४-२७ (७४९०)
हर्षमाणां तदा पश्यत्तन्वीं पीनपयोधराम् ।
चन्द्राननां पद्मनेत्रां नीलकुञ्चितमूर्धजाम् ॥१-१६४-२८ (७४९१)
कृष्णां सुपाण्डुरैर्दन्तैर्बिम्बोष्ठीं चारुदर्शनाम् ।
दृष्ट्वा तां रूपसंपन्नां भीमो विस्मयमागतः ॥१-१६४-२९ (७४९२)
उपचारगुणैर्युक्तां ललितैर्हाससंमितैः ।
समीपमुपसंप्राप्य भीमं साथ वरानता ॥१-१६४-३० (७४९३)
वचो वचनवेलायां भीमं प्रोवाच भामिनी।
लज्जया नम्यमानेव सर्वाभरणभूषिता ॥ १-१६४-३१ (७४९४)
स्मितपूर्वमिदं वाक्यं भीमसेनमथाब्रवीत् ।
कुतस्त्वमसि संप्राप्तः कश्चासि पुरुषर्षभ ॥१-१६४-३२ (७४९५)
क इमे शेरते चेह पुरुषा देवरूपिणः ।
केयं वै बृहती श्यामा सुकुमारी तवानघ ॥१-१६४-३३ (७४९६)
शेते वनमिदं प्राप्य विश्वस्ता स्वगृहे यथा ।
नेदं जानीथ गहनं वनं राक्षससेवितम् ॥१-१६४-३४ (७४९७)
वसति ह्यत्र पापात्मा हिडिम्बो नाम राक्षसः ॥ १-१६४-३५ (७४९८)
तेनाहं प्रेषिता भ्रात्रा दुष्टभावेन रक्षसा ।
बिभक्षयिषता मांसं युष्माकममरोपमाः ॥१-१६४-३६ (७४९९)
साऽहं त्वमभिसंप्रेक्ष्य देवगर्भसमप्रभम् ।
नान्यं भर्तारमिच्छामि सत्यमेतद्ब्रवीमि ते ॥१-१६४-३७ (७५००)
एतद्विज्ञाय धर्मज्ञ युक्तं मयि समाचर ।
कामोपहतचित्तां हि भजमानां भजस्व माम् ॥१-१६४-३८ (७५०१)
त्रास्यामि त्वां महाबाहो राक्षसात्पुरुषादकात् ।
वत्स्यावो गिरिदुर्गेषु भर्ता भव ममानघ ॥१-१६४-३९ (७५०२)

गइच्छामि वीर भद्रं ते मा मे प्राणान्विहासिषः ।
त्वया ह्यहं परित्यक्ता न जीवेयमरिन्दम ॥' १-१६४-४० (७५०३)
अन्तरिक्षचरी ह्यस्मि कामतो विचरामि च ।
अतुलामाप्नुहि प्रीतिं तत्र तत्र मया सह ॥ १-१६४-४१ (७५०४)
भीमसेन उवाच। १-१६४-४२क्ष् (९५६)
गएष ज्येष्ठो मम भ्राता मान्यः परमको गुरुः ।
अनिविष्टो हि तन्नाहं परिविद्यां कथंचन ॥' १-१६४-४२ (७५०५)
मातरं भ्रातरं ज्येष्ठं कनिष्ठानपरानपि ।
परित्यजेत कोन्वद्य प्रभवन्निह राक्षसि ॥ १-१६४-४३ (७५०६)
को हि सुप्तानिमान्भ्रातॄन्दत्त्वा राक्षसभोजनम् ।
मातरं च नरो गच्छेत्कामार्त इव मद्विधः ॥ १-१६४-४४ (७५०७)
राक्षस्युवाच। १-१६४-४५क्ष् (९५७)
गएकं त्वां मोक्षयिष्यामि सह मात्रा परन्तप ।
सोदरानुत्सृजैनांस्त्वमारोह जघनं मम ॥ १-१६४-४५ (७५०८)
भीम उवाच। १-१६४-४६क्ष् (९५८)
नाहं जीवितुमाशंसे भ्रातॄनुत्सृज्य राक्षसि ।
यथाश्रद्धं व्रजैका हि विप्रियं मे प्रभाषसे ॥ १-१६४-४६ (७५०९)
राक्षस्युवाच।' १-१६४-४७क्ष् (९५९)
यत्ते प्रियं तत्करिष्ये सर्वानेतान्प्रबोधय ।
मोक्षयिष्याम्यहं कामं राक्षसात्पुरुषादकात् ॥ १-१६४-४७ (७५१०)
भीमसेन उवाच। १-१६४-४८क्ष् (९६०)
सुखसुप्तान्वने भ्रातॄन्मातरं चैव राक्षसि ।
न भयाद्बोधयिष्यामि भ्रातुस्तव दुरात्मनः ॥ १-१६४-४८ (७५११)
न हि मे राक्षसा भीरु सोढुं शक्ताः पराक्रमम् ।
न मनुष्या न गन्धर्वा न यक्षाश्चारुलोचने ॥ १-१६४-४९ (७५१२)
गच्छ वा तिष्ठ वा भद्रे यद्वा पीच्छसि तत्कुरु ।
तं वा प्रेषय तन्वङ्गि भ्रातरं पुरुषादकम् ॥ ॥ १-१६४-५० (७५१३)

इति श्रीमन्महाभारते आदिपर्वणि हिडिम्बवधपर्वणि
चतुःषष्ट्यधिकशततमोऽध्यायः ॥ १६४ ॥
Mahabharata - Adi Parva - Chapter Footnotes

१-१६४-४ यदृच्छया सालवृक्षं समाश्रित इत्यन्वयः ॥
१-१६४-१० धमनीं नाडीम् ॥
१-१६४-२१ श्यामः तरुणः ॥
१-१६४-३६ बिभक्षयिषता भक्षयितुमिच्छता ॥

चतुःषष्ट्यधिकशततमोऽध्यायः ॥
१६४ ॥

---

अध्यय१६५
॥ श्रीः ॥
१.१६५. अध्यायः १६५

Mahabharata - Adi Parva - Chapter Topics
पाण्डवान्प्रति प्रेषितया हिडिम्बया विलम्बिते हिडिम्बस्य तत्रागमनम् ॥ १ ॥
भीमहिडिम्बयोर्युद्धम् ॥ २ ॥
कुन्त्यादीनां प्रबोधः ॥ ३ ॥

Mahabharata - Adi Parva - Chapter Text

१-१६५-० (७५१४)
वैशंपायन उवाच। १-१६५-०क्ष् (९६१)
तां विदित्वा चिरगतां हिडिम्बो राक्षसेश्वरः ।
अवतीर्य द्रुमात्तस्मादाजगामाशु पाण्डवान् ॥ १-१६५-१ (७५१५)
लोहिताक्षो महाबाहुरूर्ध्वकेशो महाननः ।
मेघसङ्घातवर्ष्मा च तीक्ष्णदंष्ट्रो भयानकः ॥ १-१६५-२ (७५१६)
तलं तलेन संहत्य बाहू विक्षिप्य चासकृत् ।
उद्वृत्तनेत्रः संक्रुद्धो दन्तान्दन्तेषु निष्कुषन् ॥ १-१६५-३ (७५१७)
कोऽद्य मे भोक्तुकामस्य विघ्नं चरति दुर्मतिः ।
न बिभेति हिडिम्बी च प्रेषिता किमनागता ॥ १-१६५-४ (७५१८)
वैशंपायन उवाच। १-१६५-५क्ष् (९६२)
तमापतन्तं दृष्ट्वै तथा विकृतदर्शनम् ।
हिडिम्बोवाच वित्रस्ता भीमसेनमिदं वचः ॥ १-१६५-५ (७५१९)
आपतत्येष दुष्टात्मा संक्रुद्धः पुरुषादकः ।
साऽहं त्वां भ्रातृभिः सार्धं यद्ब्रवीमि तथा कुरु ॥ १-१६५-६ (७५२०)
अहं कामगमा वीर रक्षोबलसमन्विता ।
आरुहेमां मम श्रोणिं नेष्यामि त्वां विहायसा ॥ १-१६५-७ (७५२१)
प्रबोधयैतान्संसुप्तान्मातरं च परन्तप ।
सर्वानेव गमिष्याभि गृहीत्वा वो विहायसा ॥ १-१६५-८ (७५२२)
भीम उवाच। १-१६५-९क्ष् (९६३)
मा भैस्त्वं पृथुसुश्रोणि नैष कश्चिन्मयि स्थिते ।
अहमेनं हनिष्यामि पश्यन्त्यास्ते सुमध्यमे ॥ १-१६५-९ (७५२३)
नायं प्रतिबलो भीरु राक्षसापसदो मम ।

सोढुं युधि परिस्पन्दमथवा सर्वराक्षसाः ॥ १-१६५-१० (७५२४)
पश्य बाहू सुवृत्तौ मे हस्तिहस्तनिभाविमौ ।
ऊरू परिघसङ्काशौ संहतं चाप्युरो महत् ॥ १-१६५-११ (७५२५)
विक्रमं मे यथेन्द्रस्य साऽद्य द्रक्ष्यसि शोभने ।
माऽवमंस्थाः पृथुश्रोणि मत्वा मामिह मानुषम् ॥ १-१६५-१२ (७५२६)
हिडिम्बोवाच। १-१६५-१३क्ष् (९६४)
नावमन्ये नरव्याघ्र त्वामहं देवरूपिणम् ।
दृष्टप्रभावस्तु मया मानुषेष्वेव राक्षसः ॥ १-१६५-१३ (७५२७)
वैशंपायन उवाच। १-१६५-१४क्ष् (९६५)
तथा संजल्पतस्तस्य भीमसेनस्य भारत ।
वाचः शुश्राव ताः क्रुद्धो राक्षसः पुरुषादकः ॥ १-१६५-१४ (७५२८)
अवेक्षमाणस्तस्याश्च हिडिम्बो मानुषं वपुः ।
स्रग्दामपूरितशिखां समग्रेन्दुनिभाननाम् ॥ १-१६५-१५ (७५२९)
सुभ्रूनासाक्षिकेशान्तां सुकुमारनखत्वचम् ।
सर्वाभरणसंयुक्तां सुसूक्ष्माम्बरधारिणीम् ॥ १-१६५-१६ (७५३०)
तां तथा मानुषं रूपं बिभ्रतीं सुमनोहरम् ।
पुंस्कामां शङ्कमानश्च चुक्रोध पुरुषादकः ॥ १-१६५-१७ (७५३१)
संक्रुद्धो राक्षसस्तस्या भगिन्याः कुरुसत्तम ।
उत्फाल्य विपुले नेत्रे ततस्तामिदमब्रवीत् ॥ १-१६५-१८ (७५३२)
को हि मे भोक्तुकामस्य विघ्नं चरति दुर्मतिः ।
न बिभेषि हिडिम्बे किं मत्कोपाद्विप्रमोहिता ॥ १-१६५-१९ (७५३३)
धिक्त्वामसति पुंस्कामे मम विप्रियकारिणि ।
पूर्वेषां राक्षसेन्द्राणां सर्वेषामयशस्करि ॥ १-१६५-२० (७५३४)
यानिमानाश्रिताऽकार्षीर्विप्रियं समुहन्मम ।
एष तानद्य वै सर्वान्हनिष्यामि त्वया सह ॥ १-१६५-२१ (७५३५)
वैशंपायन उवाच। १-१६५-२२क्ष् (९६६)
एवमुक्त्वा हिडिम्बां स हिडिम्बो लोहितेक्षणः ।
वधायाभिपपातैनान्दन्तैर्दन्तानुपस्पृशन् ॥ १-१६५-२२ (७५३६)
गर्जन्तमेवं विजने भीमसेनोऽभिवीक्ष्य तम् ।
रक्षन्प्रबोधं भ्रातॄणां मातुश्च परवीरहा ॥ १-१६५-२३ (७५३७)
तमापतान्तं संप्रेक्ष्य भीमः प्रहरतां वरः ।
भर्त्सयामास तेजस्वी तिष्ठतिष्ठेति चाब्रवीत् ॥ १-१६५-२४ (७५३८)
वैशंपायन उवाच। १-१६५-२५क्ष् (९६७)
भीमसेनस्तु तं दृष्ट्वा राक्षसं प्रहसन्निव ।
भगिनीं प्रति सङ्क्रुद्धमिदं वचनमब्रवीत् ॥ १-१६५-२५ (७५३९)
किं ते हिडिम्ब एतैर्वा सुखसुप्तैः प्रबोधितैः ।

मामासादय दुर्बुद्धे तरसा त्वं नराशन ॥ १-१६५-२६ (७५४०)
मय्येव प्रहरैहि त्वं न स्त्रियं हन्तुमर्हसि ।
विशेषतोऽनपकृते परेणापकृते सति ॥ १-१६५-२७ (७५४१)
न हीयं स्ववशा बाला कामयत्यद्य मामिह ।
चोदितैषा ह्यनङ्गेन शरीरान्तरचारिणा ॥ १-१६५-२८ (७५४२)
भगिनी तव दुर्वृत्त रक्षसां वै यशोहर ।
त्वन्नियोगेन चैवेयं रूपं मम समीक्ष्य च ॥ १-१६५-२९ (७५४३)
कामयत्यद्य मां भीरुस्तव नैषापराध्यति ।
अनङ्गेन कृते दोषे नेमां गर्हितुमर्हसि ॥ १-१६५-३० (७५४४)
मयि तिष्ठति दुष्टात्मन्न स्त्रियं हन्तुमर्हसि ।
संगच्छस्व मया सार्धमेकेनैको नराशन ॥ १-१६५-३१ (७५४५)
अहमेको गमिष्यामि त्वामद्य यमसादनम् ।
अद्य मद्बलनिष्पिष्टं शिरो राक्षस दीर्यताम् ।
कुञ्जरस्येव पादेन विनिष्पिष्टं बलीयसाः ॥ १-१६५-३२ (७५४६)
अद्य गात्राणि ते कङ्काः श्येना गोमायवस्तथा ।
कर्षन्तु भुवि संहृष्टा निहतस्य मया मृधे ॥ १-१६५-३३ (७५४७)
क्षणेनाद्य करिष्येऽहमिदं वनमराक्षसम् ।
पुरा यद्दूषितं नित्यं त्वया भक्षयता नरान् ॥ १-१६५-३४ (७५४८)
अद्य त्वां भगिनी रक्षः कृष्यमाणं मयाऽसकृत् ।
द्रक्ष्यत्यद्रिप्रतीकाशं सिंहेनेव महाद्विपम् ॥ १-१६५-३५ (७५४९)
निराबाधास्त्वयि हते मया राक्षसपांसन ।
वनमेतच्चरिष्यन्ति पुरुषा वनचारिणः ॥ १-१६५-३६ (७५५०)
हिडिम्ब उवाच। १-१६५-३७क्ष् (९६८)
गर्जितेन वृथा किं ते कत्थितेन च मानुष ।
कृत्वैतत्कर्मणा सर्वं कत्थेया मा चिरं कृथाः ॥ १-१६५-३७ (७५५१)
बलिनं मन्यसे यच्चाप्यात्मानं सपराक्रमम् ।
ज्ञास्यस्यद्य समागम्य मयात्मानं बलाधिकम् ॥ १-१६५-३८ (७५५२)
न तावदेतान्हिंसिष्ये स्वपन्त्वेते यथासुखम् ।
एष त्वामेव दुर्बुद्धे निहन्म्यद्याप्रियंवदम् ॥ १-१६५-३९ (७५५३)
पीत्वा तवासृग्गात्रेभ्यस्ततः पश्चादिमानपि ।
हनिष्यामि ततः पश्चादिमां विप्रियकारिणीम् ॥ १-१६५-४० (७५५४)
वैशंपायन उवाच। १-१६५-४१क्ष् (९६९)
एवमुक्त्वा ततो बाहुं प्रगृह्य पुरुषादकः ।
अभ्यद्रवत संक्रुद्धो भीमसेनमरिन्दमम् ॥ १-१६५-४१ (७५५५)
तस्याभिद्रवतस्तूर्णं भीमो भीमपराक्रमः ।
वेगेन प्रहितं बाहुं निजग्राह हसन्निव ॥ १-१६५-४२ (७५५६)

निगृह्य तं बलाद्भीमो विस्फुरन्तं चकर्ष ह ।
तस्माद्देशाद्धनूंष्यष्टौ सिंहः क्षुद्रमृगं यथा ॥ १-१६५-४३ (७५५७)
ततः स राक्षसः क्रुद्धः पाण्डवेन बलार्दितः ।
भीमसेनं समालिङ्ग्य व्यनदद्भैरवं रवम् ॥ १-१६५-४४ (७५५८)
पुनर्भीमो बलादेनं विचकर्ष महाबलः ।
मा शब्दः सुखसुप्तानां भ्रातॄणां मे भवेदिति ॥ १-१६५-४५ (७५५९)
ग्हस्ते गृहीत्वा तद्रक्षो दूरमन्यत्र नीतवान् ।
पृच्छे गृहीत्वा तुण्डेन गरुडः पन्नगं यथा ॥' १-१६५-४६ (७५६०)
अन्योन्यं तौ समासाद्य विचकर्षतुरोजसा ।
हिडिम्बो भीमसेनश्च विक्रमं चक्रतुः परम् ॥ १-१६५-४७ (७५६१)
बभञ्जतुस्तदा वृक्षाँल्लताश्चाकर्षतुस्तदा ।
मत्ताविव चं संरब्धौ वारणौ षष्टिहायनौ ॥ १-१६५-४८ (७५६२)
ग्पादपानुद्धरन्तौ तावूरुवेगेन वेगितौ ।
स्फोटयन्तौ लताजालान्यूरुभ्यां गृह्य सर्वशः ॥ १-१६५-४९ (७५६३)
वित्रासयन्तौ तौ शब्दैः सर्वतो मृगपक्षिणः ।
बलेन बलिनौ मत्तावन्योन्यवधकाङ्क्षिणौ ॥ १-१६५-५० (७५६४)
भीमराक्षसयोर्युद्धं तदाऽवर्तत दारुणम् ।
पुरा देवासुरे युद्धे वृत्रवासवयोरिव ॥ १-१६५-५१ (७५६५)
भङ्क्त्वा वृक्षान्महाशाखांस्ताडयामासतुः क्रुधा ।
सालतालतमालाम्रवटार्जुनविभीतकान् ॥ १-१६५-५२ (७५६६)
न्यग्रोधप्लक्षखर्जूरपनसानश्मकण्टकान् ।
एतानन्यान्महावृक्षानुत्खाय तरसाऽखिलान् ॥ १-१६५-५३ (७५६७)
उत्क्षिप्यान्योन्यरोषेण ताडयामासतू रणे ।
यदाऽभवद्वनं सर्वं निर्वृक्षं वृक्षसङ्कुलम् ॥ १-१६५-५४ (७५६८)
तदा शिलाश्च कुञ्जांश्च वृक्षान्कण्टकिनस्तथा ।
ततस्तौ गिरिशृङ्गाणि पर्वतांश्चाभ्रलेलिहान् ॥ १-१६५-५५ (७५६९)
शैलांश्च गण्डपाषाणानुत्खायादाय वैरिणौ ।
चिक्षेपतुरुपर्याजावन्योन्यं विजयेषिणौ ॥ १-१६५-५६ (७५७०)
तद्वनं परितः पञ्चयोजनं निर्महीरुहम् ।
निर्लतागुल्मपाषाणं निर्मृगं चक्रतुर्भृशम् ॥ १-१६५-५७ (७५७१)
तयोर्युद्धेन राजेन्द्र तद्वनं भीमरक्षसोः ।
मुहूर्तेनाभवत्कूमर्पृष्ठवच्छ्लक्ष्णमव्ययम् ॥ १-१६५-५८ (७५७२)
ऊरुबाहुपरिक्लेशात्कर्षन्तावितरेतरम् ।
उत्कर्षन्तौ विकर्षन्तौ प्रकर्षन्तौ परस्परम् ॥ १-१६५-५९ (७५७३)
तौ स्वनेन विना राजन्गार्जन्तौ च परस्परम् ।
पाषाणसंघट्टनिभैः प्रहारैरभिजघ्नतुः ॥ १-१६५-६० (७५७४)

अन्योन्यं च समालिङ्ग्य विकर्षन्तौ परस्परम् ।
बाहुयुद्धमभूद्धोरं बलिवासवयोरिव ।
युद्धसंरम्भनिर्गच्छत्फूत्काररवनिस्वनम् ॥' १-१६५-६१ (७५७५)
तयोः शब्देन महता विबुद्धास्ते नरर्षभाः ।
सह मात्रा च ददृशुर्हिडिम्बामग्रतःस्थिताम् ॥ ॥ १-१६५-६२ (७५७६)

इति श्रीमन्महाभारते आदिपर्वणि हिडिम्बवधपर्वणि
पञ्चषष्ट्यधिकशततमोऽध्यायः ॥ १६५ ॥
Mahabharata - Adi Parva - Chapter Footnotes

१-१६५-२ मेघसंघातवर्ष्मा अतिकृष्णशरीरः ॥
१-१६५-३२ गमिष्यामि गमयिष्यामि ॥
१-१६५-५४ निर्वृक्षं अकण्टकवृक्षरहितम् ॥
पञ्चषष्ट्यधिकशततमोऽध्यायः ॥
१६५ ॥

---

अध्यय१६६
॥ श्रीः ॥
१.१६६. अध्यायः १६६

Mahabharata - Adi Parva - Chapter Topics
कुन्तीहिडिम्बासंवादः ॥ १ ॥
हिडिम्बावार्तया भीमं हिडिम्बेन युद्ध्यमानं ज्ञातवतां कुन्त्यादीनां
तत्र गमनम् ॥ २ ॥
हिडिम्बवधः ॥ ३ ॥

Mahabharata - Adi Parva - Chapter Text

१-१६६-० (७५७७)
वैशंपायन उवाच। १-१६६-०क्ष् (९७०)
प्रबुद्धास्ते हिडिम्बाया रूपं दृष्ट्वातिमानुषम् ।
विस्मिताः पुरुषव्याघ्रा बभूवुः पृथया सह ॥ १-१६६-१ (७५७८)
ततः कुन्ती समीक्ष्यैनां विस्मिता रूपसंपदा ।
उवाच मधुरं वाक्यं सान्त्वपूर्वमिदं शैनः ॥ १-१६६-२ (७५७९)
कस्य त्वं सुरगर्भाभे कावाऽसि वरवर्णिनि ।
केन कार्येण संप्राप्ता कुतश्चागमनं तव ॥ १-१६६-३ (७५८०)
यदि वाऽस्य वनस्य त्वं देवता यदि वाऽप्सराः ।

आचक्ष्व मम तत्सर्वं किमर्थं चेह तिष्ठसि ॥१-१६६-४ (७५८१)
हिडिम्बोवाच।१-१६६-५क्ष् (९७१)
यदेतत्पश्यसि वनं नीलमेघनिंभं महत् ।
निवासो राक्षसस्यैष हिडिम्बस्य ममैव च ॥१-१६६-५ (७५८२)
तस्य मां राक्षसेन्द्रस्य भगिनीं विद्धि भामिनि ।
भ्रात्रा संप्रेषितामार्ये त्वां सपुत्रां जिघांसता ॥१-१६६-६ (७५८३)
क्रूरबुद्धेरहं तस्य वचनादागता त्विह ।
अद्राक्षं नवहेमाभं तव पुत्रं महाबलम् ॥१-१६६-७ (७५८४)
ततोऽहं सर्वभूतानां भावे विचरता शुभे ।
चोदिता तव पुत्रार्थं मन्मथेन वशानुगा ॥१-१६६-८ (७५८५)
ततो वृतो मया भर्ता तव पुत्रो महाबलः ।
अपनेतुं च यतितो न चैव शकितो मया ॥१-१६६-९ (७५८६)
चिरायमाणां मां ज्ञात्वा ततः स पुरुषादकः ।
स्वयमेवागतो हन्तुमिमान्सर्वांस्तवात्मजान् ॥१-१६६-१० (७५८७)
स तेन मम कान्तेन तव पुत्रेण धीमता ।
बलादितो विनिष्पिष्य व्यपनीतो महात्मना ॥१-१६६-११ (७५८८)
विकर्षन्तौ महावेगौ गर्जमानौ परस्परम् ।
पश्यैवं युधि विक्रान्तावेतौ च नरराक्षसौ ॥१-१६६-१२ (७५८९)
वैशंपायन उवाच।१-१६६-१३क्ष् (९७२)
तस्याः श्रुत्वैव वचनमुत्पपात युधिष्ठिरः ।
अर्जुनो नकुलश्चैव सहदेवश्च वीर्यवान् ॥१-१६६-१३ (७५९०)
तौ ते ददृशुरासक्तौ विकर्षन्तौ परस्परम् ।
काङ्क्षमाणौ जयं चैव सिंहाविव बलोत्कटौ ॥१-१६६-१४ (७५९१)
अथान्योन्यं समाश्लिष्य विकर्षन्तौ पुनःपुनः ।
दावाग्निधूमसदृशं चक्रतुः पार्थिवं रजः ॥१-१६६-१५ (७५९२)
वसुधारेणुसंवीतौ वसुधाधरसन्निभौ ।
बभ्राजतुर्यथा शैलौ नीहारेणाभिसंवृतौ ॥१-१६६-१६ (७५९३)
राक्षसेन तदा भीमं क्लिश्यमानं निरीक्ष्य च ।
उवाचेदं वचः पार्थः प्रहसञ्छनकैरिव ॥१-१६६-१७ (७५९४)
भीम माभैर्महाबाहो न त्वां बुध्यामहे वयम् ।
समेतं भीमरूपेण रक्षसा श्रमकर्शिताः ॥१-१६६-१८ (७५९५)
साहाय्येऽस्मि स्थितः पार्थ पातयिष्यामि राक्षसम् ।
नकुलः सहदेवश्च मातरं गोपयिष्यतः ॥१-१६६-१९ (७५९६)
भीम उवाच।१-१६६-२०क्ष् (९७३)
उदासीनो निरीक्षस्व न कार्यः संभ्रमस्त्वया ।
न जात्वयं पुनर्जीवेन्मद्बाह्वन्तरमागतः ॥१-१६६-२० (७५९७)

ग्भुजयोरन्तरं प्राप्तो भीमसेनस्य राक्षसः ।
अमृत्वा पार्थवीर्येण मृतो मा भूदिति ध्वनिः ॥१-१६६-२१ (७५९८)
अयमस्मांस्तु नो हन्याज्जातु पार्थ राक्षसः ।
जीवन्तं न प्रमोक्ष्यामि मा भैषीर्भरतर्षभ ॥' १-१६६-२२ (७५९९)
अर्जुन उवाच। १-१६६-२३क्ष् (९७४)
ग्पूर्वरात्रे प्रयुक्तोऽसि भीम क्रूरेण रक्षसा ।
क्षपा व्युष्टा न चेदानीं समाप्तोसीन्महारणः ॥' १-१६६-२३ (७६००)
किमेनन चिरं भीम जीवता पापरक्षसा ।
गन्तव्ये न चिरं स्थातुमिह शक्यमरिन्दम ॥१-१६६-२४ (७६०१)
पुरा संरज्यते प्राची पुरा सन्ध्या प्रवर्तते ।
रौद्रे मुहूर्ते रक्षांसि प्रबलानि भवन्त्युत ॥१-१६६-२५ (७६०२)
त्वरस्व भीम मा क्रीड जहि रक्षो विभीषणम् ।
पुरा विकुरुते मायां भुजयोः सारमर्पय ॥१-१६६-२६ (७६०३)
ग्माहात्म्यमात्मनो वेत्थ नराणां हितकाम्यया ।
रक्षो जहि यथा शक्रः पुरा वृत्रं महाबलम् ॥१-१६६-२७ (७६०४)
अथवा मन्यसे भारं त्वमिमं राक्षसं युधि ।
आतिष्ठे तव साहाय्यं शीघ्रमेव तु हन्यताम् ॥१-१६६-२८ (७६०५)
अथवा त्वहमेवैनं हनिष्यामि वृकोदर ।
कृतकर्मा परिश्रान्तः साधु तावदुपारम ॥' १-१६६-२९ (७६०६)
वैशंपायन उवाच। १-१६६-३०क्ष् (९७५)
अर्जुनेनैवमुक्तस्तु भीमो रोषाज्ज्वलन्निव ।
बलमाहारयामास यद्वायोर्जगतः क्षये ॥१-१६६-३० (७६०७)
ततस्तस्याम्बुदाभस्य भीमो रोषात्तु रक्षसः ।
अत्क्षिप्याभ्रामयद्देहं तूर्णं शतगुणं तदा ॥१-१६६-३१ (७६०८)
ग्इति चोवाच संक्रुद्धो भ्रामयन्राक्षसीं तनुम् ।
भीमसेनो महाबाहुरभिगर्जन्मुहुर्मुहुः ॥' १-१६६-३२ (७६०९)
भीम उवाच। १-१६६-३३क्ष् (९७६)
नरमांसैर्वृथा पुष्टो वृथा वृद्धो वृथामतिः ।
वृथामरणमर्हस्त्वं वृथाद्य न भविष्यसि ॥१-१६६-३३ (७६१०)
क्षेममद्य करिष्यामि यथा वनमकण्टकम् ।
न पुनर्मानुषान्हत्वा भक्षयिष्यसि राक्षस ॥१-१६६-३४ (७६११)
वैशंपायन उवाच। १-१६६-३५क्ष् (९७७)
इत्युक्त्वा भीमसेनस्तं निष्पिष्य धरणीतले ।
बाहुभ्यामवपीड्याशु पशुमारममारयत् ॥१-१६६-३५ (७६१२)
स मार्यमाणो भीमेन ननाद विपुलं स्वनम् ।
पूरयंस्तद्वनं सर्वं जलार्द्रे इव दुन्दुभिः ॥१-१६६-३६ (७६१३)

बाहुभ्यां योक्त्रयित्वा तं बलवान्पाण्डुनन्दनः ।
ग्समुद्भ्राम्य शिरश्चास्य सग्रीवं तदपाहरत् ॥ १-१६६-३७ (७६१४)
ततो भित्त्वा शिरश्चास्य सग्रीवं तदुदाक्षिपत् ।
तस्य निष्कर्णनयनं निर्जिह्वं रुधिरोक्षितम् ॥ १-१६६-३८ (७६१५)
प्राविद्धं भीमसेनेन शिरो विदशनं बभौ ।
प्रसारितभुजोद्धृष्टो भिन्नमांसत्वगन्तरः ॥ १-१६६-३९ (७६१६)
कबन्धभूतस्तत्रासीद्दनुर्वज्रहतो तथा ।
हिडिम्बं निहतं दृष्ट्वा संहृष्टास्ते तरस्विनः ॥ १-१६६-४० (७६१७)
हिडिम्बा सा च संप्रेक्ष्य निहतं राक्षसं रणे ।
अदृश्याश्चैव ये स्वस्स्थाः समेताः सर्षिचारणाः ॥ १-१६६-४१ (७६१८)
पूजयन्ति स्म तं हृष्टाः साधुसाध्विति पाण्डवम् ।
भ्रातरश्चापि संहृष्टा युधिष्ठिरपुरोगमाः ॥ १-१६६-४२ (७६१९)
अपूजयन्नरव्याघ्रं भीमसेनमरिन्दमम् ।'
अभिपूज्य महात्मानं भीमं भीमपराक्रमम् ।
पुनरेवार्जुनो वाक्यमुवाचेदं वृकोदरम् ॥ १-१६६-४३ (७६२०)
अदूरे नगरं मन्ये वनादस्मादहं विभो ।
शीघ्रं गच्छाम भद्रं ते न नो विद्यात्सुयोधनः ॥ १-१६६-४४ (७६२१)
ततः सर्वे तथेत्युक्त्वा मात्रा सह महारथाः ।
प्रययुः पुरुषव्याघ्रा हिडिम्बा चैव राक्षसी ॥ ॥ १-१६६-४५ (७६२२)

इति श्रीमन्महाभारते आदिपर्वणि हिडिम्बवधपर्वमि
षट्षष्ट्यधिकशततमोऽध्यायः ॥ १६६ ॥
Mahabharata - Adi Parva - Chapter Footnotes

१-१६६-८ भावे चित्ते ॥
१-१६६-११ व्यपनीतो दूरे नीतः ॥
१-१६६-२१ इतिध्वनिर्माभूदिति संबन्धः ॥
१-१६६-२४ गन्तव्ये सति चिरं स्थातुं न शक्यम् ॥
१-१६६-२८ अथवेति द्वयं प्रोत्साहनार्थं ॥
१-१६६-३३ वृथामरणं स्वर्गाद्यप्रयोजकं मरणम् ॥
षट्षष्ट्यधिकशततमोऽध्यायः ॥
१६६ ॥

---

अध्यय१६७
॥ श्रीः ॥
१.१६७. अध्यायः १६७

Mahabharata - Adi Parva - Chapter Topics
हिडिम्बावधे प्रवृत्तस्य भीमस्य युधिष्ठिरकृतं निवारणं ॥ १ ॥
हिडिम्बया स्वस्य धर्मज्ञत्वस्य भविष्यज्ज्ञत्वस्य च प्रकटनम् ॥ २ ॥
हिडिम्बाया धर्मिष्ठतां ज्ञात्वा तदङ्गीकरणे भीमं प्रति कुन्त्या आज्ञा ॥ ३ ॥

Mahabharata - Adi Parva - Chapter Text

१-१६७-० (७६२३)
वैशंपायन उवाच। १-१६७-०क्ष् (९७८)
सा तानेवापतत्तूर्णं भगिनी तस्य रक्षसः ।
अब्रुवाणा हिडिम्बा तु राक्षसी पाण्डवान्प्रति ॥ १-१६७-१ (७६२४)
अभिवाद्य ततः कुन्तीं धर्मराजं च पाण्डवम् ।
अभिपूज्य ततः सर्वान्भीमसेनमभाषत ॥ १-१६७-२ (७६२५)
अहं ते दर्शादेव मन्मथस्य वशं गता ।
क्रूरं भ्रातृवचो हित्वा सा त्वामेवानिरुन्धती ॥ १-१६७-३ (७६२६)
राक्षसे रौद्रसङ्काशे तवापश्यं विचेष्टितम् ।
अहं शुश्रूषुरिच्छेयं तव गात्रं निषेवितुम् ॥' १-१६७-४ (७६२७)
भीमसेन उवाच। १-१६७-५क्ष् (९७९)
स्मरन्ति वैरं रक्षांसि मायामाश्रित्य मोहिनीम् ।
हिडिम्बे व्रज पन्थानं त्वमिमं भ्रातृसेवितम् ॥ १-१६७-५ (७६२८)
युधिष्ठिर उवाच। १-१६७-६क्ष् (९८०)
क्रुद्धोऽपि पुरुषव्याघ्र भीम मा स्म स्त्रियं वधीः ।
शरीरगुप्त्यभ्यधिकं धर्मं गोपाय पाण्डव ॥ १-१६७-६ (७६२९)
वधाभिप्रायमायान्तमवधीस्त्वं महाबलम् ।
रक्षसस्तस्य भगिनी किं नः क्रुद्धा करिष्यति ॥ १-१६७-७ (७६३०)
वैशंपायन उवाच। १-१६७-८क्ष् (९८१)
हिडिम्बा तु ततः कुन्तीमभिवाद्य कृताञ्जलिः ।
युधिष्ठिरं तु कौन्तेयमिदं वचनमब्रवीत् ॥ १-१६७-८ (७६३१)
आर्ये जानासि यद्दुःखमिह स्त्रीणामनङ्गजम् ।
तदिदं मामनुप्राप्तं भीमसेनकृते शुभे ॥ १-१६७-९ (७६३२)
सोढं तत्परमं दुःखं मया कालप्रतीक्षया ।
सोऽयमभ्यागतः कालो भविता मे सुखोदयः ॥ १-१६७-१० (७६३३)
मया ह्युत्सृज्य सुहृदः स्वधर्मं स्वजनं तथा ।
वृतोऽयं पुरुषव्याघ्रस्तव पुत्रः पतिः शुभे ॥ १-१६७-११ (७६३४)
वीरेणाऽहं तथाऽनेन त्वया चापि यशस्विनी ।

प्रत्याख्याता न जीवामि सत्यमेतद्ब्रवीमि ते ॥ १-१६७-१२ (७६३५)
यदर्हसि कृपां कर्तुं मयि त्वं वरवर्णिनि ।
मत्वा मूढेति तन्मां त्वं भक्ता वाऽनुगतेति वा ॥ १-१६७-१३ (७६३६)
भर्त्राऽनेन महाभागे संयोजय सुतेन ह ।
समुपादाय गच्छेयं यथेष्टं देवरूपिणम् ।
पुनश्चैवानयिष्यामि विस्रम्भं कुरु मे शुभे ॥ १-१६७-१४ (७६३७)
ग्अहं हि समये लप्स्ये प्राग्भ्रातुरपर्वजनात् ।
ततः सोऽभ्यपतद्रात्रौ भीमसेनजिघांसया ॥ १-१६७-१५ (७६३८)
यथायथा विक्रमते यथारिमधितिष्ठति ।
तथातथा समासाद्य पाण्डवं काममोहिता ॥ १-१६७-१६ (७६३९)
न यातुधान्यहं त्वार्ये न चास्मि रजनीचरी ।
ईशा रक्षस्स्वसा ह्यस्मि राज्ञि सालकटङ्कटी ॥ १-१६७-१७ (७६४०)
पुत्रेण तव संयुक्ता युवतिर्देववर्णिनी ।
सर्वान्वोऽहमुपस्थास्ये पुरस्कृत्य वृकोदरम् ॥ १-१६७-१८ (७६४१)
अप्रमत्ता प्रमत्तेषु शुश्रूषुरसकृत्त्वहम् ।'
वृजिने तारयिष्यामि दासीवच्च नरर्षभाः ॥ १-१६७-१९ (७६४२)
पृष्ठेन वो वहिष्यामि विमानं सुकृतानिव ।
यूयं प्रसादं कुरुत भीमसेनो भजेत माम् ॥ १-१६७-२० (७६४३)
ग्एवं ब्रुवन्ती ह तथा प्रत्याख्याता क्रियां प्रति ।
भूम्यां दुष्कृतिनो लोकान्गमिष्येऽहं न संशयः ॥ १-१६७-२१ (७६४४)
अहं हि मनसा ध्यात्वा सर्वं वेत्स्यामि सर्वदा ।'
आपन्निस्तरणे प्राणान्धारयिष्ये न केनचित् ॥ १-१६७-२२ (७६४५)
सर्वमावृत्य कर्तव्यं धर्मं समनुपश्यता ।
आपत्सु यो धारयति स वै धर्मविदुत्तमः ॥ १-१६७-२३ (७६४६)
व्यसनं ह्येव धर्मस्य धर्मिणामापदुच्यते ।
पुम्यात्प्राणान्धारयति पुण्यं वै प्राणधारणम् ॥ १-१६७-२४ (७६४७)
येन केनाचरेद्धर्मं तस्मिन्गर्हा न विद्यते ।
ग्महतोऽत्र स्त्रियं कामाद्बाधितां त्राहि मामपि ॥ १-१६७-२५ (७६४८)
धर्मार्थकाममोक्षेषु दयां कुर्वन्ति साधवः ।
तत्तु धर्ममिति प्राहुर्मुनयो धर्मवत्सलाः ॥ १-१६७-२६ (७६४९)
दिव्यज्ञानेन जानामि व्यतीतानागतानहम् ।
तस्माद्वक्ष्यामि वः श्रेय आसन्नं सर उत्तमम् ॥ १-१६७-२७ (७६५०)
अद्यासाद्य सरः स्नात्वा विश्रम्य च वनस्पतौ ।
श्वः प्रभाते महद्भूतं प्रादुर्भूतं जगत्पतिम् ॥ १-१६७-२८ (७६५१)
व्यासं कमलपत्राक्षं दृष्ट्वा शोकं विहास्यथ ।
धार्तराष्ट्राद्विवासं च दहनं वारणावते ॥ १-१६७-२९ (७६५२)

त्राणं च विदुरात्तुभ्यं विदितं ज्ञानचक्षुषा ।
आवासे शालिहोत्रस्य स वो वासं विधास्यति ॥ १-१६७-३० (७६५३)
वर्षवातातपसहो ह्ययं पुण्यो वनस्पतिः ।
पीतमात्रे तु पानीये क्षुत्पिपासे विनश्यतः ॥ १-१६७-३१ (७६५४)
तपसा शालिहोत्रेण सरो वृक्षश्च निर्मितः ।
कादम्बाः सारसा हंसाः कुरर्यः कुररैः सह ॥ १-१६७-३२ (७६५५)
रुवन्ति मधुरं गीतं गान्धर्वस्वनमिश्रितम्। १-१६७-३३ (७६५६)
वैशंपायन उवाच ।
तस्यास्तद्वचनं श्रुत्वा कुन्ती वचनमब्रवीत् ॥ १-१६७-३३क्ष् (९८२)
युधिष्ठिरं महाप्राज्ञं सर्वधर्मविशारदम्। १-१६७-३४ (७६५७)
कुन्त्युवाच ।
त्वं हि धर्मभृतां श्रेष्ठो मयोक्तं शृणु भारत ॥ १-१६७-३४क्ष् (९८३)
राक्षस्येषा हि वाक्येन धर्मं वदति साधु वै ।
भावेन दुष्टा भीमं वै किं करिष्यति राक्षसी ॥ १-१६७-३५ (७६५८)
भजतां पाण्डवं वीरमपत्यार्थं यदीच्छसि।' १-१६७-३६ (७६५९)
युधिष्ठिर उवाच ।
एवमेतद्यथाऽऽत्थ त्वं हिडिम्बे नात्र संशयः ॥ १-१६७-३६क्ष् (९८४)
स्थातव्यं तु त्वया धर्मे यथा ब्रूयां सुमध्यमे ।
गनित्यं कृताह्निका स्नाता कृतशौचा सुरूपिणी ॥' १-१६७-३७ (७६६०)
स्नातं कृताह्निकं भद्रे कृतकौतुकमङ्गलम् ।
भीमसेनं भजेथास्त्वमुदिते वै दिवाकरे ॥ १-१६७-३८ (७६६१)
अहस्सु विहरानेन यथाकामं मनोजवा ।
अयं त्वानयितव्यस्ते भीमसेनः सदा निशि ॥ १-१६७-३९ (७६६२)
प्राक्सन्ध्यातो विमोक्तव्यो रक्षितव्यश्च नित्यशः ।
एवं रमस्व भीमेन यावद्गर्भस्य वेदनम् ॥ १-१६७-४० (७६६३)
एष ते समयो भद्रे शुश्रूषा चाप्रमत्तया ।
नित्यानुकूलया भूत्वा कर्तव्यं शोभनं त्वया ॥ ॥ १-१६७-४१ (७६६४)

इति श्रीमन्महाभारते आदिपर्वणि हिडिम्बवधपर्वणि
सप्तषष्ट्यधिकशततमोऽध्यायः ॥ १६७ ॥
Mahabharata - Adi Parva - Chapter Footnotes

१-१६७-५ भ्रातृसेवितं पन्थानं मृत्युम् ॥
सप्तषष्ट्यधिकशततमोऽध्यायः ॥
१६७ ॥

---

अध्यय१६८

॥ श्रीः ॥

## १.१६८. अध्यायः १६८

Mahabharata - Adi Parva - Chapter Topics

हिडिम्बया सह पाण्डवानां शालिहोत्रसरोगमनम् ॥ १ ॥
शालिहोत्रेण तेषामातिथ्यकरणम् ॥ २ ॥
समयकरणपूर्वकं भीमेन हिडिम्ब्याः परिग्रहः ॥ ३ ॥
रमणीयेषु प्रदेशेषु भीमेन सह क्रीडित्वा सायाह्ने शालिहोत्राश्रमं प्रति हिडिम्ब्या निवर्तनम् ॥ ४ ॥
तत्र व्यासागमनम् ॥ ५ ॥
व्यासेन कुन्त्या आश्वासनम् ॥ ६ ॥
व्यासस्य प्रतिनिवर्तनम् ॥ ७ ॥

Mahabharata - Adi Parva - Chapter Text

१-१६८-० (७६६५)
वैशंपायन उवाच। १-१६८-०क्ष् (९८५)
युधिष्ठिरवचः श्रुत्वा कुन्तीमङ्केऽधिरोप्य सा ।
भीमार्जुनान्तरगता यमाभ्यां च पुरस्कृता ॥ १-१६८-१ (७६६६)
तिर्यग्युधिष्ठिरे याति हिडिम्बा भीमगामिनी ।
शालिहोत्रसरो रम्यमाससाद जलार्थिनी ॥ १-१६८-२ (७६६७)
वनस्पतितलं गत्वा परिमृज्य गृहं यथा ।
पाण्डवानां च वासं सा कृत्वा पर्णमयं तथा ॥ १-१६८-३ (७६६८)
आत्मनश्च तथा कुन्त्या एकोद्देशे चकार सा ।
पाण्डवास्तु ततः स्नात्वा शुद्धाः सन्ध्यामुपास्य च ॥ १-१६८-४ (७६६९)
तृषिताः क्षुत्पिपासार्ता जलमात्रेण वर्तयन् ।
शालिहोत्रस्ततो ज्ञात्वा क्षुधार्तान्पाण्डवांस्तदा ॥ १-१६८-५ (७६७०)
मनसा चिन्तयामास पानीयं भोजनं महत् ।
ततस्ते पाण्डवाः सर्वे विश्रान्ताः पृथया सह ॥ १-१६८-६ (७६७१)
यथा जतुगृहे वृत्तं राक्षसेन कृतं च यत् ।
कृत्वा कथा बहुविधाः कथान्ते पाण्डुनन्दनम् ॥ १-१६८-७ (७६७२)
कुन्ती राजसुता वाक्यं भीमसेनमथाब्रवीत् ।
यथा पाण्डुस्तथा मान्यस्तव ज्येष्ठो युधिष्ठिरः ॥ १-१६८-८ (७६७३)
अहं धर्मविदाऽनेन मान्या गुरुतरा तव ।
तस्मात्पाण्डुहितार्थं मे युवराज हितं कुरु ॥ १-१६८-९ (७६७४)
निकृता धार्तराष्ट्रेण पापेनाकृतबुद्धिना ।

दुष्कृतस्य प्रतीकारं न पश्यामि वृकोदर ॥ १-१६८-१० (७६७५)
तस्मात्कतिपयाहेन योगक्षेमं भविष्यति ।
क्षेमं दुर्गमिमं वासं वत्स्याम हि यथा वयम् ॥ १-१६८-११ (७६७६)
इदमन्यन्महद्दुःखं धर्मकृच्छ्रं वृकोदर ।
दृष्ट्वैव त्वां महाप्राज्ञ अनङ्गाभिप्रचोदिता ॥ १-१६८-१२ (७६७७)
युधिष्ठिरं च मां चैव वरयामास धर्मतः ।
धर्मार्थं देहि पुत्रं त्वं स नः श्रेयः करिष्यति ॥ १-१६८-१३ (७६७८)
प्रतिवाक्यं तु नेच्छामि आवयोर्वचनं कुरु। १-१६८-१४ (७६७९)
वैशंपायन उवाच ।
तथेति तत्प्रतिज्ञाय भीमसेनोऽब्रवीदिदम् ॥ १-१६८-१४क्ष् (९८६)
शासनं ते करिष्यामि वेदशासनमित्यपि ।
समक्षं भ्रातृमध्ये तु तां चोवाच स राक्षसीम् ॥ १-१६८-१५ (७६८०)
शृणु राक्षसि सत्येन समयं ते वदाम्यहम्।
यावत्कालेन भवति पुत्रस्योत्पादनं शुभे ॥ १-१६८-१६ (७६८१)
तावत्कालं चरिष्यामि त्वया सह सुमध्यमे ।
ग्विशेषतो मत्सकाशे मा प्रकाशय नीचताम् ॥ १-१६८-१७ (७६८२)
उत्तमस्त्रीगुणोपेता भजेथा वरवर्णिनि। १-१६८-१८ (७६८३)
वैशंपायन उवाच ।
सा तथेति प्रतिज्ञाय हिडिम्बा राक्षसी तथा ॥ १-१६८-१८क्ष् (९८७)
गताऽहनि निवेशेषु भोज्यं राजार्हमानयत् ।
सा कदाचिद्विहारार्थं हिडिम्बा कामरूपिणी ॥ १-१६८-१९ (७६८४)
भीमसेनमुपादाय ऊर्ध्वमाचक्रमं तदा ।
शैलशृङ्गेषु रम्येषु देवतायतनेषु च ॥ १-१६८-२० (७६८५)
मृगपक्षिविघुष्टेषु रमणीयेषु सर्वेषु ।
कृत्वा सा परमं रूपं सर्वाभरणभूषिता ॥ १-१६८-२१ (७६८६)
संजल्पन्ती सुमधुरं रमयामास पाण्डवम् ।
तथैव वनदुर्गेषु पर्वतद्रुमसानुषु ॥ १-१६८-२२ (७६८७)
सरस्तु रमणीयेषु पद्मोत्पलवनेषु च ।
नदीद्वीपप्रदेशेषु वैडूर्यसिकतेषु च ॥ १-१६८-२३ (७६८८)
देवारण्येषु पुण्येषु तथा पर्वतसानुषु ।
सुतीर्थवनतोयासु तथा गिरिनदीषु च ॥ १-१६८-२४ (७६८९)
सागरस्य प्रदेशेषु भणिहेमयुतेषु च ।
गुह्यकानां निवासेषु कुलपर्वतसानुषु ॥ १-१६८-२५ (७६९०)
सर्वर्तुफलवृक्षेषु मानसेषु वनेषु च ।
बिभ्रती परमं रूपं रमयामास पाण्डवम् ॥ १-१६८-२६ (७६९१)
ग्यथा सुमोदते स्वर्गे सुकृत्यप्सरसा सह ।

सुतरां परमप्रीतस्तथा रेमे महाद्युतिः ॥ १-१६८-२७ (७६९२)
शुभं हि जघनं तस्याः सवर्णमणिमेखलम् ।
न ततर्प तदा मृद्नन्भीमसेनो मुहुर्मुहुः ॥' १-१६८-२८ (७६९३)
रमयन्ती ततो भीमं तत्रतत्र मनोजवा ।
सा रेमे तेन संहर्षात्तृप्यन्ती च मुहुर्मुहुः ॥ १-१६८-२९ (७६९४)
अहस्सु रमयन्ती सा निशाकालेषु पाण्डवम् ।
आनीय वै स्वके गेहे दर्शयामास मातरम् ॥ १-१६८-३० (७६९५)
भ्रातृभिः सहितो नित्यं स्वपते पाण्डवस्तथा ।
कुन्त्याः परिचरन्ती सा तस्याः पार्श्वेवसन्निशां ॥ १-१६८-३१ (७६९६)
कामांश्च मुखवासादीनानयिष्यति भोजनम् ।
तस्यां रात्र्यां व्यतीतायामाजगाम महाव्रतः ॥ १-१६८-३२ (७६९७)
पाराशर्यो महाप्राज्ञो दिव्यदर्शी महातपाः ।
तेऽभिवाद्य महात्मानं कृष्णद्वैपायनं शुभम् ।
तस्थुः प्राञ्जलयः सर्वे सस्नुषा चैव माधवी ॥ १-१६८-३३ (७६९८)
श्रीव्यास उवाच। १-१६८-३४क्ष् (९८८)
मयेदं मनसा पूर्वं विदितं भरतर्षभाः ।
यथा स्थितैरधर्मेण धार्तराष्ट्रैर्विवासिताः ॥ १-१६८-३४ (७६९९)
तद्विदित्वाऽस्मि संप्राप्तश्चिकीर्षुं परं हितम् ।
न विषादो हि वः कार्यः सर्वमेतत्सुखाय वः ॥ १-१६८-३५ (७७००)
सुहृद्वियोजनं कर्म पुराकृतमरिन्दमाः ।
तस्य सिद्धिरियं प्राप्ता मा शोचत परन्तपाः ॥ १-१६८-३६ (७७०१)
समाप्ते दुष्कृते चैव यूयं ते वै न संशयः ।
स्वराष्ट्रे विहरिष्यन्तो भविष्यथ सबान्धवाः ॥ १-१६८-३७ (७७०२)
दीनतो बालतश्चैव स्नेहं कुर्वन्ति बान्धवाः ।
तस्मादभ्यधिकः स्नेहो युष्मासु मम संप्रति ॥ १-१६८-३८ (७७०३)
स्नेहपूर्वं चिकीर्षामि हितं यत्तन्निबोधत ।
वसतेह प्रतिच्छन्ना ममागमनकाङ्क्षिणः ॥ १-१६८-३९ (७७०४)
एतद्वै शालिहोत्रस्य तपसा निर्मितं सरः ।
रमणीयमिदं तोयं क्षुत्पिपासाश्रमापहम् ॥ १-१६८-४० (७७०५)
कार्यार्थिनस्तु षण्मासान्विहरध्वं यथासुखम् ॥ १-१६८-४१ (७७०६)
वैशंपायन उवाच। १-१६८-४२क्ष् (९८९)
एवं स तान्समाश्वास्य व्यासः पार्थानरिन्दमान् ।
स्नेहाच्च संपरिष्वज्य कुन्तीमाश्वासयत्प्रभुः ॥ १-१६८-४२ (७७०७)
स्नुषे मा रोद मा रोदेत्येवं व्यासोऽब्रवीद्वचः ।
जीवपुत्रे सुतस्तेऽयं धर्मनित्यो युधिष्ठिरः ॥ १-१६८-४३ (७७०८)
पृथिव्यां पार्थइवान्सर्वान्प्रशासिष्यति धर्मराट् ।

धर्मेण जित्वा पृथिवीमखिलां धर्मकृद्वशी ॥ १-१६८-४४ (७७०९)
स्थापयित्वा वशे सर्वां सपर्वतवनां शुभाम् ।
भीमसेनार्जुनबलाद्भोक्ष्यत्ययमसंशयम् ॥ १-१६८-४५ (७७१०)
पुत्रास्तव च माद्र्याश्च पञ्चैते लोकविश्रुताः ।
स्वराष्ट्रे विहरिष्यन्ति सुखं सुमनसस्तदा ॥ १-१६८-४६ (७७११)
यक्ष्यन्ति च नरव्याघ्रा विजित्य पृथिवीमिमाम् ।
राजसूयाश्वमेधाद्यैः क्रतुभिर्भूरिदक्षिणैः ॥ १-१६८-४७ (७७१२)
अनुगृह्य सुहृद्वर्गं धनेन च सुखेन च ।
पितृपैतामहं राज्यमहारिष्यन्ति ते सुताः ॥ १-१६८-४८ (७७१३)
स्नुषा कमलपत्राक्षी नाम्ना कमलपालिका ।
वशवर्तिनी तु भीमस्य पुत्रमेषा जनिष्यति ॥ १-१६८-४९ (७७१४)
तेन पुत्रेण कृच्छ्रेषु भविष्यथ च तारिताः ।
इह मासं प्रतीक्षध्वमागमिष्याम्यहं पुनः ॥ १-१६८-५० (७७१५)
देशकालौ विदित्वैवं यास्यध्वं परमां मुदम् ॥ १-१६८-५१ (७७१६)
वैशंपायन उवाच। १-१६८-५२क्ष् (९९०)
स तैः प्राञ्जलिभिः सर्वैस्तथेत्युक्तो जनाधिप ।
जगाम भगवान्व्यासो यथागतमृषिः प्रभुः ॥ ॥ १-१६८-५२ (७७१७)

इति श्रीमन्महाभारते आदिपर्वणि हिडिम्बवधपर्वणि
अष्टषष्ट्यधिकशततमोऽध्यायः ॥ १६८ ॥
Mahabharata - Adi Parva - Chapter Footnotes

१-१६८-३८ दीनतो बालत इति द्वयं भावप्रधानम् ॥
अष्टषष्ट्युत्तरशततमोऽध्यायः ॥
१६८ ॥

---

अध्यय१६९
॥ श्रीः ॥
१.१६९. अध्यायः १६९

Mahabharata - Adi Parva - Chapter Topics
घटोत्कचोत्पत्तिः ॥ १ ॥
स्मृतिमात्रादागच्छाव इत्युक्त्वा हिडिम्बाघटोत्कचयोर्गमनम् ॥ २ ॥

Mahabharata - Adi Parva - Chapter Text

१-१६९-० (७७१८)

वैशंपायन उवाच। १-१६९-०क्ष् (९९१)
गते भगवति व्यासे पाण्डवा विगतज्वराः ।
ऊषुस्तत्र च षण्मासान्वटवृक्षे यथासुखम् ॥ १-१६९-१ (७७१९)
शाकमूलफलाहारास्तपः कुर्वन्ति पाण्डवाः ।
अनुज्ञाता महाराज ततः कमलपालिका ॥ १-१६९-२ (७७२०)
रमयन्ती सदा भीमं तत्रतत्र मनोजवा ।
दिव्याभरणवस्त्रा हि दिव्यस्रगनुलेपना ॥ १-१६९-३ (७७२१)
एवं भ्रातॄन्सप्त मासान्हिडिम्बाऽवासयद्वने ।
पाण्डवान्भीमसेनार्थे राक्षसी कामरूपिणी ॥ १-१६९-४ (७७२२)
सुखं स विहरन्भीमस्तत्कालं पर्यणामयत् ।
ततोऽलभत सा गर्भं राक्षसी कामरूपिणी ॥ १-१६९-५ (७७२३)
अतृप्ता भीमसेनेन सप्तमासोपसंगता।'
प्रजज्ञे राक्षसी पुत्रं भीमसेनान्महाबलात् ॥ १-१६९-६ (७७२४)
विरूपाक्षं महावक्त्रं शङ्कुकर्णं विभीषणम् ।
भीमरूपं सुताम्राक्षं तीक्ष्णदंष्ट्रं महारथम् ॥ १-१६९-७ (७७२५)
महेष्वासं महावीर्यं महासत्वं महाजवम् ।
महाकायं महाकालं महाग्रीवं महाभुजम् ॥ १-१६९-८ (७७२६)
अमानुषं मानुषजं भीमवेगमरिन्दमम् ।
पिशाचकानतीत्यान्यान्बभूवाति स मानुषान् ॥ १-१६९-९ (७७२७)
बालोऽपि विक्रमं प्राप्तो मानुषेषु विशांपते ।
सर्वास्त्रेषु वरो वीरः प्रकामभवद्बली ॥ १-१६९-१० (७७२८)
सद्यो हि गर्भं राक्षस्यो लभन्ते प्रसवन्ति च ।
कामरूपधराश्चैव भवन्ति बहुरूपिकाः ॥ १-१६९-११ (७७२९)
प्रणम्य विकचः पादावगृह्णात्स पितुस्तदा ।
मातुश्च परमेष्वासस्तौ च नामास्य चक्रतुः ॥ १-१६९-१२ (७७३०)
घटोहास्योत्कच इति माता तं प्रत्यभाषत ।
अभवत्तेन नामास्य घटोत्कच इति स्म ह ॥ १-१६९-१३ (७७३१)
अनुरक्तश्च तानासीत्पाण्डवान्स घटोत्कचः ।
तेषां च दयितो नित्यमात्मनित्यो बभूव ह ॥ १-१६९-१४ (७७३२)
घटोत्कचो महाकायः पाण्डवान्पृथया सह ।
अभिवाद्य यथान्यायमब्रवीच्च प्रभाष्य तान् ॥ १-१६९-१५ (७७३३)
किं करोम्यहमार्याणां निःशङ्कं वदतानघाः ।
तं ब्रुवन्तं भैमसेनिं कुन्ती वचनमब्रवीत् ॥ १-१६९-१६ (७७३४)
त्वं कुरूणां कुले जातः साक्षाद्भीमसमो ह्यसि ।
ज्येष्ठः पुत्रोसि पञ्चानां साहाय्यं कुरु पुत्रक ॥ १-१६९-१७ (७७३५)
वैशंपायन उवाच। १-१६९-१८क्ष् (९९२)

पृथयाप्येवमुक्तस्तु प्रणम्यैव वचोऽब्रवीत् ।
यथा हि रावणो लोके इन्द्रजिच्च महाबलः ।
वर्ष्मवीर्यसमो लोके विशिष्टश्चाभवं नृषु ॥ १-१६९-१८ (७७३६)
कृत्यकाल उपस्थास्ये पितॄनिति घटोत्कचः ।
आमन्त्र्य रक्षसां श्रेष्ठः प्रतस्थे चोत्तरां दिशम् ॥१-१६९-१९ (७७३७)
स हि सृष्टो भगवता शक्तिहेतोर्महात्मना ।
वर्णस्याप्रतिवीर्यस्य प्रतियोद्धा महारथः ॥१-१६९-२० (७७३८)
ग्भीम उवाच।१-१६९-२१क्ष् (९९३)
सह वासो मया जीर्णस्त्वया कमलपालिके ।
पुनर्द्रक्ष्यसि राज्यस्थानित्यभाषत तां तदा ॥१-१६९-२१ (७७३९)
हिडिम्बोवाच।१-१६९-२२क्ष् (९९४)
पदा मां संस्मरेः कान्त रिरंसू रहसि प्रभो ।
तदा तव वशं भूय आगन्तास्म्याशु भारत ॥१-१६९-२२ (७७४०)
इत्युक्त्वा सा जगामाशु भावमासज्य पाण्डवे ।
हिडिम्बा समयं स्मृत्वा स्वां गतिं प्रत्यपद्यत ॥ ॥१-१६९-२३ (७७४१)

इति श्रीमन्महाभारते आदिपर्वणि हिडिम्बवधपर्वणि
ऊनसप्तत्युत्तरशततमोऽध्यायः ॥१६९ ॥
Mahabharata - Adi Parva - Chapter Footnotes

१-१६९-१२ विकचः केशहीनः ॥
१-१६९-१३ घटोहं घटवद्वितर्क्यं आस्यं तदुपलक्षितं
शिरः यस्य स घटोहास्यः सचासावुत्कचश्च घटोहास्योत्कचः
।घटोऽहमुत्कचोऽस्मीति मातरं सोऽभ्यभाषत इति घ ङ।पाठः ॥
१३ ॥
१-१६९-१४ आत्मनिलः स्ववशः ॥
ऊनसप्तत्युत्तरशततमोऽध्यायः ॥
१६९ ॥

---

अध्यय१७०
॥ श्रीः ॥
१.१७०. अध्यायः १७०

Mahabharata - Adi Parva - Chapter Topics
वने चरतां पाण्डवानां व्यासेन सान्त्वनं एकचक्रानगर्यां
ब्राह्मणगृहे स्थापनं च ॥१ ॥

१-१७०-० (७७४२)
ग्वैशंपायन उवाच। १-१७०-०क्ष् (९९५)
ततस्ते पाण्डवाः सर्वे शालिहोत्राश्रमे तदा ।
पूजितास्तेन वन्येन तमामन्त्र्य महामुनिम् ॥ १-१७०-१ (७७४३)
जटाः कृत्वाऽऽत्मनः सर्वे वल्कलाजिनवाससः ।
कुन्त्या सह महात्मानो बिभ्रतस्तापसं वपुः ॥ १-१७०-२ (७७४४)
ब्राह्मं वेदमधीयाना वेदाङ्गानि च सर्वशः ।
नीतिशास्त्रं च धर्मज्ञा न्यायज्ञानं च पाण्डवाः ॥ १-१७०-३ (७७४५)
शालिहोत्रप्रसादेन लब्ध्वा प्रीतिमवाप्य च।'
ते वनेन वनं गत्वा घ्नन्तो मृगगणान्बहून् ।
अपक्रम्य ययू राजंस्त्वरमाणा महारथाः ॥ १-१७०-४ (७७४६)
मत्स्यांस्त्रिगर्तान्पाञ्चालान्कीचकानन्तरेण च ।
रमणीयान्वनोद्देशान्प्रेक्षमाणाः सरांसि च ॥ १-१७०-५ (७७४७)
क्वचिद्वहन्तो जननीं त्वरमाणा महारथाः ।
ग्क्वचिच्छ्रान्ताश्च कान्तारे क्वचित्तिष्ठन्ति हर्षिताः'॥ १-१७०-६ (७७४८)
क्वचिच्छन्देन गच्छन्तस्ते जग्मुः प्रसभं पुनः ।
पथि द्वैपायन सर्वे ददृशुः स्वपितामहम् ॥ १-१७०-७ (७७४९)
तेऽभिवाद्य महात्मानं कृष्णद्वैपायनं तदा ।
तस्थुः प्राञ्जलयः सर्वे सह मात्रा परन्तपाः ॥ १-१७०-८ (७७५०)
व्यास उवाच। १-१७०-९क्ष् (९९६)
तदाश्रमान्निर्गमनं मया ज्ञातं नरर्षभाः ।
घटोत्कचस्य चोत्पत्तिं ज्ञात्वा प्रीतिरवर्धत ॥ १-१७०-९ (७७५१)
इदं नगरमभ्याशे रमणीयं निरामयम् ।
वसतेह प्रतिच्छन्ना ममागमनकाङ्क्षिणः ॥ १-१७०-१० (७७५२)
वैशंपायन उवाच। १-१७०-११क्ष् (९९७)
एवं स तान्समाश्वास्य व्यासः पार्तानरिन्दमान् ।
एकचक्रामभिगतां कुन्तीमाश्वासयत्प्रभुः ॥ १-१७०-११ (७७५३)
श्रीव्यास उवाच। १-१७०-१२क्ष् (९९८)
कुर्यान्न केवलं धर्मं दुष्कृतं च तथान नरः ।
सुकृतं दुष्कृतं लोके न कर्ता नास्ति कश्चन ॥ १-१७०-१२ (७७५४)
अवश्यं लभते कर्ता फलं वै पुण्यपापयोः ।
दुष्कृतस्य फलेनैव प्राप्तं व्यसनमुत्तमम् ॥ १-१७०-१३ (७७५५)
तस्मान्माधवि मानार्हे मा च शोके मनः कृथाः। १-१७०-१४ (७७५६)
वैशंपायन उवाच ।

एवमुक्त्वा निवेश्यैनान्ब्राह्मणस्य निवेशने ॥ १-१७०-१४क्ष् (९९९)
जगाम भगवान्व्यासो यताकाममृषिः प्रभुः ॥ ॥ १-१७०-१५ (७७५७)

इति श्रीमन्महाभारते आदिपर्वणि हिडिम्बवधपर्वणि
सप्तत्यधिकशततमोऽध्यायः ॥ १७० ॥ ॥ समाप्तं हिडिम्बवधपर्व ॥

---

अध्यय१७१
॥ श्रीः ॥
१.१७१. अध्यायः १७१

(अथ बकवधपर्व ॥ १० ॥)
Mahabharata - Adi Parva - Chapter Topics
एकचक्रायां भिक्षामटतः पाण्डवान्दृष्ट्वा पौराणां वितर्कः ॥ १ ॥
कुम्भकाराङ्गीमस्य महत्तरपात्रलाभः ॥ २ ॥
सभार्यस्य तद्गृहस्वामिनो ब्राह्मणस्य क्रन्दितं श्रुतवत्याः कुन्त्याः
भीमानुमत्या ब्राह्मणान्तर्गृहप्रवेशः ॥ ३ ॥
ब्राह्मणप्रलापः ॥ ४ ॥

Mahabharata - Adi Parva - Chapter Text

१-१७१-० (७७५८)
जनमेजय उवाच। १-१७१-०क्ष् (१०००)
एकचक्रां गतास्ते तु कुन्तीपुत्रा महारथाः ।
अत ऊर्ध्वं द्विजश्रेष्ठ किमकुर्वत पाण्डवाः ॥ १-१७१-१ (७७५९)
वैशंपायन उवाच। १-१७१-२क्ष् (१००१)
एकचक्रां गतास्ते तु कन्तीपुत्रा महारथाः ।
ऊषुर्नातिचिरं कालं ब्राह्मणस्य निवेशने ॥ १-१७१-२ (७७६०)
रमणीयानि पश्यन्तो वनानि विविधानि च ।
पार्थिवानपि चोद्देशान्सरितश्च सरांसि च ॥ १-१७१-३ (७७६१)
चेरुर्भैश्रं तदा ते तु सर्व एव विशांपते ।
ग्युधिष्ठिरं च कुन्तीं च चिन्तयन्त उपासते ॥ १-१७१-४ (७७६२)
भैक्षं चरन्तस्तु तदा जटिला ब्रह्मचारिणः ।
बभूवुर्नागराणां च गुणैः संप्रियदर्शनाः ॥ १-१७१-५ (७७६३)
नागरा ऊचुः। १-१७१-६क्ष् (१००२)
दर्शनीया द्विजाः शुभ्रा देवगर्भोपमाः शुभाः ।
भैक्षानर्हाश्च राज्यार्हाः सुकुमारास्तपस्विनः ॥ १-१७१-६ (७७६४)

नैते यथार्थतो विप्राः सुकुमारास्तपस्विनः ।
चरन्ति भूमौ प्रच्छन्नाः कस्माच्चित्कारणादिह ॥ १-१७१-७ (७७६५)
सर्वलक्षणसंपन्ना भैक्षं नार्हन्ति नित्यशः ।
कार्यार्थिनश्चरन्तीति तर्कयन्त इति ब्रुवन् ॥ १-१७१-८ (७७६६)
बन्धूनामागमान्नित्यमुपचारैस्तु नागराः ।
भाजनानि च पूर्णानि भक्ष्यभोज्यैरकारयन् ॥ १-१७१-९ (७७६७)
मौनव्रतेन संयुक्ता भैक्षं गृह्णन्ति पाण्डवाः ।
माता चिरगतान्ज्ञात्वा शोचन्ती पाण्डवान्प्रति ॥ १-१७१-१० (७७६८)
दुःखाश्रुपूर्णनयना लिखन्त्यास्ते महीतलम् ।
भिक्षित्वा द्विजगेहेषु चिन्तयन्तश्च मातरम् ॥ १-१७१-११ (७७६९)
त्वरमाणा निवर्तन्ते मातृगौरवयन्त्रिताः ।
मात्रे निवेदयन्ति स्म कुन्त्यै भैक्षं दिवानिशम् ॥ १-१७१-१२ (७७७०)
सर्वं संपूर्णभैक्षान्नं मातृदत्तं पृथक्पृथक् ।
विभज्याभुञ्जतेष्टं ते यथाभागं पृथक्पृथक् ॥ १-१७१-१३ (७७७१)
अर्धं स्म भुञ्जते पञ्च सह मात्रा परन्तपाः ।
अर्धं सर्वस्य भैक्षस्य भीमो भुङ्क्ते महाबलः ॥ १-१७१-१४ (७७७२)
स नाशितश्च भवति कल्याणान्नभुजिः पुरा ।
स वैवर्ण्यं च कार्श्यं च जगामातृप्तिकारितम् ॥ १-१७१-१५ (७७७३)
आज्यबिन्दुर्यथा वह्नौ महति ज्वलिते भवेत् ।
तथार्धभागं भीमस्य भिक्षान्नस्य नरोत्तम ॥ १-१७१-१६ (७७७४)
तथैव वसतां तत्र तेषां राजन्महात्मनाम् ।
अतिचक्राम सुमहान्कालोऽथ भरतर्षभ ॥ १-१७१-१७ (७७७५)
भीमोऽपि क्रीडयित्वाथ मिथो ब्राह्मणबन्धुषु ।
कुम्भकारेण संबन्धाल्लेभे पात्रं महत्तरम् ॥ १-१७१-१८ (७७७६)
कुम्भकारोऽददात्पात्रं महत्कृत्वातिमात्रकम् ।
प्रहसन्भीमसेनाय विस्मितस्तस्य कर्मणा ॥ १-१७१-१९ (७७७७)
तस्याद्भुतं कर्म कुर्वन्मृद्भारं महदाददे ।
मृद्भारैः शतसाहस्रैः कुम्भकारमतोषयत् ॥ १-१७१-२० (७७७८)
चक्रे चक्रे च मृद्भाण्डान्सततं भैक्षमाचरन् ।
तदादायागतं दृष्ट्वा हसन्ति प्रहसन्ति च ॥ १-१७१-२१ (७७७९)
भक्ष्यभोज्यानि विविधान्यादाय प्रक्षिपन्ति च ।
एवमेव सदा भुक्त्वा मात्रे वदति वै रहः ।
न चाशितोऽस्मि भवति कल्याणान्नभृतः पुरा ॥' १-१७१-२२ (७७८०)
ततः कदाचिद्भैक्षाय गतास्ते पुरुषर्षभाः ।
संगत्य भीमसेनस्तु तत्रास्ते पृथया सह ॥ १-१७१-२३ (७७८१)
अथार्तिजं महाशब्दं ब्राह्मणस्य निवेशने ।

भृशमुत्पतितं घोरं कुन्ती शुश्राव भारत ॥ १-१७१-२४ (७७८२)
रोरुयमाणांस्तान्दृष्ट्वा परिदेवयतश्च सा ।
कारुण्यात्साधुभावाच्च कुन्ती राजन्न चक्षमे ॥ १-१७१-२५ (७७८३)
मथ्यमानेव दुःखेन हृदयेन पृथा तदा ।
उवाच भीमं कल्याणी कृपान्वितमिदं वचः ॥ १-१७१-२६ (७७८४)
वसामः सुसुखं पुत्र ब्राह्मणस्य निवेशने ।
अज्ञाता धार्तराष्ट्रस्य सत्कृतां वीतमन्यवः ॥ १-१७१-२७ (७७८५)
सा चिन्तये सदा पुत्र ब्राह्मणस्यास्य किं न्वहम् ॥
कदा प्रियं करिष्यामि यत्कुर्युरुषिताः सुखम् ॥ १-१७१-२८ (७७८६)
एतावान्पुरुषस्तात कृतं यस्मिन्न नश्यति ।
यावच्च कुर्यादन्योऽस्य कुर्यादभ्यधिकं ततः ॥ १-१७१-२९ (७७८७)
तदिदं ब्राह्मणस्यास्य दुःखमापतितं ध्रुवम् ।
न तत्र यदि साहाय्यं कुर्याम सुकृतं भवेत् ॥ १-१७१-३० (७७८८)
भीमसेन उवाच। १-१७१-३१क्ष् (१००३)
ज्ञायतामस्य यद्दुःखं यतश्चैव समुत्थितम् ।
विदित्वा व्यवसिष्यामि यद्यपि स्यात्सुदुष्करम् ॥ १-१७१-३१ (७७८९)
वैशंपायन उवाच। १-१७१-३२क्ष् (१००४)
एवं तौ कथयन्तौ च भूयः सुश्रुवतुः स्वनम् ।
आर्तिजं तस्य विप्रस्य सभार्यस्य विशांपते ॥ १-१७१-३२ (७७९०)
अन्तःपुरं ततस्तस्य ब्राह्मणस्य महात्मनः ।
विवेश त्वरिता कुन्ती बद्धवत्सेव सौरभी ॥ १-१७१-३३ (७७९१)
ततस्तं ब्राह्मणं तत्र भार्यया च सुतेन च ।
दुहित्रा चैव सहितं ददर्श विकृताननम् ॥ १-१७१-३४ (७७९२)
ब्राह्मण उवाच। १-१७१-३५क्ष् (१००५)
धिगिदं जीवितं लोके गतसारमनर्थकम् ।
दुःखमूलं पराधीनं भृशमप्रियभागि च ॥ १-१७१-३५ (७७९३)
जीविते परमं दुःखं जीविते परमो ज्वरः ।
जीविते वर्तमानस्य द्वन्द्वानामागमो ध्रुवः ॥ १-१७१-३६ (७७९४)
आत्मा ह्येको हि धर्मार्थौ कामं चैव निषेवते ।
एतैश्च विप्रयोगोऽपि दुःखं परमनन्तकम् ॥ १-१७१-३७ (७७९५)
आहुः केचित्परं मोक्षं स च नास्ति कथंचन ।
अर्थप्राप्तौ तु नरकः कृत्स्न एवोपपद्यते ॥ १-१७१-३८ (७७९६)
अर्थेप्सुता परं दुःखमर्थप्राप्तौ ततोऽधिकम् ।
जातस्नेहस्य चार्थेषु विप्रयोगे महत्तरम् ॥ १-१७१-३९ (७७९७)
ग्यावन्तो यस्य संयोगा द्रव्यैरिष्टैर्भवन्त्युत ।
तावन्तोऽस्य निख्यन्ते हृदये शोकशङ्कवः ॥ १-१७१-४० (७७९८)

तदिदं जीवितं प्राप्य अल्पकालं महाभयम् ।
त्यागो हि न मया प्राप्तो भार्यया सहितेन च ॥' १-१७१-४१ (७७९९)
न हि योगं प्रपश्यामि येन मुच्येयमापदः ।
पुत्रदारेण वा सार्धं प्राद्रवेयमनामयम् ॥ १-१७१-४२ (७८००)
यतितं वै मया पूर्वं वेत्थ ब्राह्मणि तत्तथा ।
क्षेमं यतस्ततो गन्तुं त्वया तु मम न श्रुतम् ॥ १-१७१-४३ (७८०१)
इह जाता विवृद्धाऽस्मि पिता माता ममेति वै ।
उक्तवत्यसि दुर्मेधे याच्यमाना मयाऽसकृत् ॥ १-१७१-४४ (७८०२)
स्वर्गतोऽपि पिता वृद्धस्तथा माता चिरं तव ।
बन्धवा भूतपूर्वाश्च तत्र वासे तु का रतिः ॥ १-१७१-४५ (७८०३)
'न भोजनं विरुद्धं स्यान्न स्त्रीदेशो निबन्धनः ।
सुदूरमपि तं देशं व्रजेद्गरुडहंसवत् ॥' १-१७१-४६ (७८०४)
सोऽयं ते बन्धुकामाया अशृण्वन्त्या वचो मम ।
बन्धुप्रणाशः संप्राप्तो भृशं दुःखकरो मम ॥ १-१७१-४७ (७८०५)
अथवा मद्विनाशो यं न हि शक्ष्यामि कंचन ।
परित्यक्तुमहं बन्धुं स्वयं जीवन्नृशंसवत् ॥ १-१७१-४८ (७८०६)
सहधर्मचरीं दान्तां नित्यं मातृसमां मम ।
सखायं विहितां देवैर्नित्यं परमिकां गतिम् ॥ १-१७१-४९ (७८०७)
पित्रा मात्रा च विहितां सदा गार्हस्थ्यभागिनीम् ।
वरयित्वा यथान्यायं मन्त्रवत्परिणीय च ॥ १-१७१-५० (७८०८)
कुलीनां शीलसंपन्नामपत्यजननीमपि ।
त्वामहं जीवितस्यार्थे साध्वीमनपकारिणीम् ॥ १-१७१-५१ (७८०९)
परित्यक्तुं न शक्ष्यामि भार्यां नित्यमनुव्रताम् ।
कुत एव परित्यक्तुं सुतां शक्ष्याम्यहं स्वयम् ॥ १-१७१-५२ (७८१०)
बालामप्राप्तवयसमजातव्यञ्जनाकृतिम् ।
भर्तुरर्थाय निक्षिप्तां न्यासं धात्रा महात्मना ॥ १-१७१-५३ (७८११)
यया दौहित्रजाँल्लोकानाशंसे पितृभिः सह ।
स्वयमुत्पाद्य तां बालां कथमुत्स्रष्टुमुत्सहे ॥ १-१७१-५४ (७८१२)
मन्यन्ते केचिदधिकं स्नेहं पुत्रे पितुर्नराः ।
कन्यायां केचिदपरे मम तुल्यावुभौ स्मृतौ ॥ १-१७१-५५ (७८१३)
यस्यां लोकाः प्रसूतिश्च स्थिता नित्यमथो सुखम् ।
अपापां तामहं बालां कथमुत्स्रष्टुमुत्सहे ॥ १-१७१-५६ (७८१४)
'कुत एव परित्यक्तुं सुतं शक्ष्याम्यहं स्वयम् ।
प्रार्थयेयं परां प्रीतिं यस्मिन्स्वर्गफलानि च ॥ १-१७१-५७ (७८१५)
यस्य जातस्य पितरो मुखं दृष्ट्वा दिवं गताः ।
अहं मुक्तः पितृऋणाद्यस्य जातस्य तेजसा ॥ १-१७१-५८ (७८१६)

दयितं मे कथं बालमहं त्यक्तुमिहोत्सहे ।
तमहं ज्येष्ठपुत्रं मे कुलनिर्हारकं विभुम् ॥ १-१७१-५९ (७८१७)
मम पिण्डोदकनिधिं कथं त्यक्ष्यामि पुत्रकम् ।
त्यागोऽयं मम संप्राप्तो ममन्वा मे सुतस्य वा ॥ १-१७१-६० (७८१८)
तव वा तव पुत्र्या वा अत्र वासस्य तत्फलम् ।
न शृणोषि वचो मह्यं तत्फलं भुङ्क्ष्व भामिनि ॥ १-१७१-६१ (७८१९)
अथवाहं न शक्ष्यामि स्वयं मर्तुं सुतं मम ।
एकं त्यक्तुं न शक्नोति भवतीं च सुतामपि ॥ १-१७१-६२ (७८२०)
अथ मद्रक्षणार्थं वा न हि शक्ष्यामि कंचन ।
परित्यक्तुमहं बन्धुं स्वयं जीवन्नृशंसवत् ॥ १-१७१-६३ (७८२१)
आत्मानमपि चोत्सृज्य गते प्रेतवशं मयि।'
त्यक्ता ह्येते मया व्यक्तं नेह शक्ष्यन्ति जीवितुम् ॥ १-१७१-६४ (७८२२)
एषां चान्यतमत्यागो नृशंसो गर्हितो बुधैः ।
आत्मत्यागे कृते चेमे मरिष्यन्ति मया विना ॥ १-१७१-६५ (७८२३)
स कृच्छ्रामहमापन्नो न शक्तस्तर्तुमापदम् ।
अहो धिक्कां गतिं त्वद्य गमिष्यामि सबान्धवः ।
सर्वैः सह मृतं श्रेयो न च मे जीवितुं क्षमम् ॥ ॥ १-१७१-६६ (७८२४)

इति श्रीमन्महाभारते आदिपर्वणि बकवचपर्वणि
एकसप्तत्यधिकशततमोऽध्यायः ॥ १७१ ॥
Mahabharata - Adi Parva - Chapter Footnotes

१-१७१-४२ योगमुपायम् ॥
एकसप्तत्यधिकशततमोऽध्यायः ॥
१७१ ॥

---

अध्यय१७२
॥ श्रीः ॥
१.१७२. अध्यायः १७२

Mahabharata - Adi Parva - Chapter Topics
ब्राह्मण प्रति तत्पत्नीवाक्यम् ॥ १ ॥

Mahabharata - Adi Parva - Chapter Text

१-१७२-० (७८२५)
ब्राह्मण्युवाच। १-१७२-०क्ष् (१००६)

न सन्तापस्त्वया कार्यः प्राकृतेनेव कर्हिचित् ।
न हि सन्तापकालोऽयं वैद्यस्य तव विद्यते ॥ १-१७२-१ (७८२६)
अवश्यं निधनं सर्वैर्गन्तव्यमिह मानवैः ।
अवश्यभाविन्यर्थे वै संतापो नेह विद्यते ॥ १-१७२-२ (७८२७)
भार्या पुत्रोऽथ दुहिता सर्वमात्मार्थमिष्यते ।
व्यथां जहि सुबुद्ध्या त्वं स्वयं यास्यामि तत्र च ॥ १-१७२-३ (७८२८)
एतद्धि परमं नार्याः कार्यं लोके सनातनम् ।
प्राणानपि परित्यज्य यद्भर्तुर्हितमाचरेत् ॥ १-१७२-४ (७८२९)
तच्च तत्र कृतं कर्म तवापीदं सुखावहम् ।
भवत्यमुत्र चाक्षय्यं लोकेऽस्मिंश्च यशस्करम् ॥ १-१७२-५ (७८३०)
एष चैव गुरुर्धर्मो यं प्रवक्ष्याम्यहं तव ।
अर्थश्च तव धर्मश्च भूयानत्र प्रदृश्यते ॥ १-१७२-६ (७८३१)
यदर्थमिष्यते भार्या प्राप्तः सोऽर्थस्त्वया मयि ।
कन्या चैका कुमारश्च कृताहमनृणा त्वया ॥ १-१७२-७ (७८३२)
समर्थः पोषणे चासि सुतयो रक्षणे तथा ।
न त्वहं सुतयोः शक्ता तथा रक्षणपोषणे ॥ १-१७२-८ (७८३३)
मम हि त्वद्विहीनायाः सर्वप्राणधनेश्वर ।
कथं स्यातां सुतौ बालौ भरेयं च कथं त्वहम् ॥ १-१७२-९ (७८३४)
कथं हि विधवाऽनाथा बालपुत्रा विना त्वया ।
मिथुनं जीवयिष्यामि स्थिता साधुगते पथि ॥ १-१७२-१० (७८३५)
अहं कृतावलेपैश्च प्रार्थ्यमानामिमां सुताम् ।
अयुक्तैस्तव संबन्धे कथं शक्ष्यामि रक्षितुम् ॥ १-१७२-११ (७८३६)
उत्सृष्टमामिषं भूमौ प्रार्थयन्ति यथा खगाः ।
प्रार्थयन्ति जनाः सर्वे पतिहीनां तथा स्त्रियम् ॥ १-१७२-१२ (७८३७)
साऽहं विचाल्यमाना वै प्रार्थ्यमाना दुरात्मभिः ।
स्थातुं पथि न शक्ष्यामि सज्जनेष्टे द्विजोत्तम ॥ १-१७२-१३ (७८३८)
ग्स्त्रीजन्म गर्हितं नाथ लोके दुष्टजनाकुले ।
मातापित्रोर्वशे कन्या प्रौढा भर्तृवशे तथा ॥ १-१७२-१४ (७८३९)
अभावे चानयोः पुत्रे खतन्त्रा स्त्री विगर्हिता ॥ १-१७२-१५ (७८४०)
अनाथत्वं स्त्रियो द्वारं दुष्टानां विवृतं हि तत् ।
वस्त्रखण्डं घृताक्तं हि यथा संकृष्यते श्वभिः ॥' १-१७२-१६ (७८४१)
कथं तव कुलस्यैकमिमं बालमनागसम् ।
पितृपैतामहे मार्गे नियोक्तुमहमुत्सहे ॥ १-१७२-१७ (७८४२)
कथं शक्ष्यामि बालेऽस्मिन्गुणानाधातुमीप्सितान् ।
अनाथे सर्वतो लुप्ते यथा त्वं धर्मदर्शिवान् ॥ १-१७२-१८ (७८४३)
इमामपि च ते बालामनाथां परिभूय माम् ।

अनर्हाः प्रार्थयिष्यन्ति शूद्रा वेदश्रुतिं यथा ॥ १-१७२-१९ (७८४४)
तां चेदहं न दित्सेयं सद्गुणैरुपबृंहिताम् ।
प्रमथ्यैनां हरेयुस्ते हविर्ध्वाङ्क्षा इवाध्वरात् ॥ १-१७२-२० (७८४५)
संप्रेक्षमाणा पुत्रीं ते नानुरूपमिवात्मनः ।
अनर्हवशमापन्नामिमां चापि सुतां तव ॥ १-१७२-२१ (७८४६)
अवज्ञाता च लोकेषु तथान्मानमजानती ।
अवलिप्तैरैर्ब्रह्मन्मरिष्यामि न संशयः ॥ १-१७२-२२ (७८४७)
तौ च हीनौ मया बालौ त्वया चैव तथात्मजौ ।
विनश्येतां न सन्देहो मत्स्याविव जलक्षये ॥ १-१७२-२३ (७८४८)
त्रितयं सर्वथाप्येवं विनशिष्यत्यसंशयम् ।
त्वया विहीनं तस्मात्त्वं मां परित्यक्तुमर्हसि ॥ १-१७२-२४ (७८४९)
व्युष्टिरेषा परा स्त्रीणां पूर्वं भर्तुः परा गतिः ।
ननु ब्रह्मन्सपुत्राणामिति धर्मविदो विदुः ॥ १-१७२-२५ (७८५०)
ग्अनिष्टमिह पुत्राणां विषये परिवर्तितुम् ।
हरिद्राञ्जनपुष्पादिसौमङ्गल्ययुता सती ॥ १-१७२-२६ (७८५१)
मरणं याति या भर्तुस्तद्दत्तजलपायिनी ।
भर्तृपादार्पितमनाः सा याति गिरिजापदम् ॥ १-१७२-२७ (७८५२)
गिराजायाः सखी भूत्वा मोदते नगकन्यया ।
मितं ददाति हि पिता मितं माता मितं सुतः ॥ १-१७२-२८ (७८५३)
अमितस्य हि दातारं का पतिं नाभिनन्दति ।
आश्रमाश्चाग्निसंस्कारा जपहोमव्रतानि च ॥ १-१७२-२९ (७८५४)
स्त्रीणां नैते विधातव्या विना पतिमनिन्दितम् ।
क्षमा शौचमनाहारमेतावद्विहितं स्त्रियाः ॥' १-१७२-३० (७८५५)
परित्यक्तः सुतश्चायं दुहितेयं तथा मया ।
बान्धवाश्च परित्यक्तास्त्वदर्थं जीवितं च मे ॥ १-१७२-३१ (७८५६)
यज्ञैस्तपोभिर्नियमैर्दानैश्च विविधैस्तथा ।
विशिष्यते स्त्रिया भर्तुर्नित्यं प्रियहिते स्थितिः ॥ १-१७२-३२ (७८५७)
तदिदं यच्चिकीर्षामि धर्मं परमसंमतम् ।
इष्टं चैव हितं चैव तव चैव कुलस्य च ॥ १-१७२-३३ (७८५८)
इष्टानि चाप्यपत्यानि द्रव्याणि सुहृदः प्रियाः ।
आपद्धर्मप्रमोक्षाय भार्या चापि सतां मतम् ॥ १-१७२-३४ (७८५९)
आपदर्थे धनं रक्षेद्दारान्रक्षेद्धनैरपि ।
आत्मानं सततं रक्षेद्दारैरपि धनैरपि ॥ १-१७२-३५ (७८६०)
दृष्टादृष्टफलार्थं हि भार्या पुत्रो धनं गृहम् ।
सर्वमेतद्विधातव्यं बुधानामेष निश्चयः ॥ १-१७२-३६ (७८६१)
एकतो वा कुलं कृत्स्नमात्मा वा कुलवर्धनः ।

ग्उभयोः कोधिको विद्वन्नात्मा चैवाधिकः कुलात् ॥ १-१७२-३७ (७८६२)
आत्मनो विद्यमानत्वाद्भुवनानि चतुर्दश ।
विद्यन्ते द्विजशार्दूल आतमा रक्ष्यस्ततस्त्वया ॥ १-१७२-३८ (७८६३)
आत्मन्यविद्यमाने चेदस्य नास्तीह किंचन ।
एतज्जगदिदं सर्वमात्मना न समं किल ॥' १-१७२-३९ (७८६४)
स कुरुष्व मया कार्यं तारयात्मानमात्मना ।
अनुजानीही मामार्य सुतौ मे परिपालय ॥ १-१७२-४० (७८६५)
अवध्याः स्त्रिय इत्याहुर्धर्मज्ञा धर्मनिश्चये ।
धर्मज्ञान्राक्षसानाहुर्न हन्यात्स च मामपि ॥ १-१७२-४१ (७८६६)
निःसंशयं वधः पुंसां स्त्रीणां संशयितो वधः ।
अतो मामेव धर्मज्ञ प्रस्थापयितुमर्हसि ॥ १-१७२-४२ (७८६७)
भुक्तं प्रियाण्यवाप्तानि धर्मश्च चरितो मया ।
ग्त्वच्छुश्रूषणसंभूता कीर्तिश्चाप्यतुला मम।'
त्वत्प्रसूतिः प्रिया प्राप्ता न मां तप्स्यत्यजीवितं ॥ १-१७२-४३ (७८६८)
जातपुत्रा च वृद्धा च प्रियकामा च ते सदा ।
समीक्ष्यैतदहं सर्वं व्यवसायं करोम्यतः ॥ १-१७२-४४ (७८६९)
उत्सृज्यापि हि मामार्य प्राप्स्यस्यन्यामपि स्त्रियम् ।
ततः प्रतिष्ठितो धर्मो भविष्यति पुनस्तव ॥ १-१७२-४५ (७८७०)
न चाप्यधर्मः कल्याण बहुपत्नीकता नृणाम् ।
स्त्रीणामधर्मः सुमहान्भर्तुः पूर्वस्य लङ्घने ॥ १-१७२-४६ (७८७१)
एतत्सर्वं समीक्ष्य त्वमात्मत्यागं च गर्हितम् ।
आत्मानं तारयाद्याशु कुलं चेमौ च दारकौ ॥ १-१७२-४७ (७८७२)
वैशंपायन उवाच। १-१७२-४८क्ष् (१००७)
एवमुक्तस्तया भर्ता तां समालिङ्ग्य भारत ।
मुमोच बाष्पं शनकैः सभार्यो भृशदुःखितः ॥ १-१७२-४८ (७८७३)
ग्मैवं वद त्वं कल्याणि तिष्ठ चेह सुमध्यमे ।
न तु भार्यां त्यजेत्प्राज्ञः पुत्रान्वापि कदाचन ॥ १-१७२-४९ (७८७४)
विशेषतः स्त्रियं रक्षेत्पुरुषो बुद्धिमानिह ।
त्यक्त्वा तु पुरुषो जीवेन्न हातव्यानिमान्सदा ।
न वेत्ति कामं धर्मं च अर्थं मोक्षं च तत्त्वतः ॥' ॥ १-१७२-५०
(७८७५)

इति श्रीमन्महाभारते आदिपर्वणि बकवधपर्वणि
द्विसप्तत्यधिकशततमोऽध्यायः ॥ १७२ ॥

Mahabharata - Adi Parva - Chapter Footnotes

१-१७२-१ वैद्यस्य विद्यावनः ॥
१-१७२-२५ परा व्युष्टिर्महद्भाग्यम् ॥
१-१७२-४३ त्वत् त्वत्तः प्रसूतिः संततिः । अजीवितम् मरणं ॥
द्विसप्तत्यधिकशततमोऽध्यायः ॥
१७२ ॥

---

अध्यय१७३
॥ श्रीः ॥
१.१७३. अध्यायः १७३

Mahabharata - Adi Parva - Chapter Topics
ब्राह्मणं प्रति तत्कन्यावाक्यम् ॥ १ ॥
बालस्य पुत्रस्य वचनेन पित्रोः किंचिद्धर्षसमये कुन्त्यास्तत्समीपे गमनम् ॥ २ ॥

Mahabharata - Adi Parva - Chapter Text

१-१७३-० (७८७६)
वैशंपायन उवाच। १-१७३-०क्ष् (१००८)
तयोर्दुःखितयोर्वाक्यमतिमात्रं निशम्य तु ।
ततो दुःखपरीताङ्गी कन्या तावभ्यभाषत ॥ १-१७३-१ (७८७७)
किमेवं भृशदुःखार्तौ रोरूयेतामनाथवत् ।
ममापि श्रूयतां वाक्यं श्रुत्वा च क्रियतां क्षमम् ॥ १-१७३-२ (७८७८)
धर्मतोऽहं परित्याज्या युवयोर्नात्र संशयः ।
त्यक्तव्यां मां परित्यज्य त्राहि सर्वं मयैकया ॥ १-१७३-३ (७८७९)
इत्यर्थमिष्यतेऽपत्यं तारयिष्यति मामिति ।
अस्मिन्नुपस्थिते काले तरध्वं प्लववन्मया ॥ १-१७३-४ (७८८०)
इह वा तारयेद्दुर्गादुत वा प्रेत्य भारत ।
सर्वथा तारयेत्पुत्रः पुत्र इत्युच्यते बुधैः ॥ १-१७३-५ (७८८१)
आकाङ्क्षन्ते च दौहित्रान्मयि नित्यं पितामहाः ।
तत्स्वयं वै परित्रास्ये रक्षन्ती जीवितं पितुः ॥ १-१७३-६ (७८८२)
भ्राता च मम बालोऽयं गते लोकममुं त्वयि ।
अचिरेणैव कालेन विनश्येत न संशयः ॥ १-१७३-७ (७८८३)
तातेपि हि गते स्वर्गं विनष्टे च ममानुजे ।
पिण्डः पितॄणां व्युच्छिद्येत्तत्तेषां विप्रियं भवेत् ॥ १-१७३-८ (७८८४)
पित्रा त्यक्ता तथा मात्रा भ्रात्रा चाहमसंशयम् ।
दुःखाद्दुःखतरं प्राप्य म्रियेयमतथोचिताम् ॥ १-१७३-९ (७८८५)

त्वयि त्वरोगे निर्मुक्तो माता भ्राता च मे शिशुः ।
सन्तानश्चैव पिण्डश्च प्रतिष्ठास्यत्यसंशयम् ॥ १-१७३-१० (७८८६)
आत्मा पुत्रः सखी भार्या कृच्छ्रं तु दुहिता किल ।
स कृच्छ्रान्मोचयात्मानं मां च धर्मे नियोजया ॥ १-१७३-११ (७८८७)
अनाथा कृपणा बाला यत्र क्वचन गामिनी ।
भविष्यामि त्वया तात विहीना कृपणा सदा ॥ १-१७३-१२ (७८८८)
अथवाहं करिष्यामि कुलस्यास्य विमोचनम् ।
फलसंस्था भविष्यामि कृत्वा कर्म सुदुष्करम् ॥ १-१७३-१३ (७८८९)
अथवा यास्यसे तत्र त्यक्त्वा मां द्विजसत्तम ।
पीडिताऽहं भविष्यामि तदवेक्षस्व मामपि ॥ १-१७३-१४ (७८९०)
तदस्मदर्थं धर्मार्थं प्रसवार्थं च सत्तम ।
आत्मानं परिरक्षस्व त्यक्तव्यां मां च संत्यज ॥ १-१७३-१५ (७८९१)
अवश्यकरणीये च मा त्वां कालोत्यगादयम् ।
किं त्वतः परमं दुःखं यद्वयं स्वर्गते त्वयि ॥ १-१७३-१६ (७८९२)
याचमानाः परादन्नं परिधावेमहि श्ववत् ।
त्वयि त्वरोगे निर्मुक्ते क्लेशादस्मात्सबान्धवे ।
अमृतेव सती लोके भविष्यामि सुखान्विता ॥ १-१७३-१७ (७८९३)
इतः प्रदाने देवाश्च पितरश्चेति नः श्रुतम् ।
त्वया दत्तेन तोयेन भविष्यति हिताय वै ॥ १-१७३-१८ (७८९४)
ग्इत्येतदुभयं तात निशाम्य तव यद्धितम् ।
तद्भवस्य तथाम्बाया हितं स्वस्य सुतस्य च ॥ १-१७३-१९ (७८९५)
मातापित्रोश्च पुत्रास्तु भवितारो गुणान्विताः ।
न तु पुत्रस्य पितरो पुनर्जातु भविष्यतः ॥' १-१७३-२० (७८९६)
वैशंपायन उवाच। १-१७३-२१क्ष् (१००९)
एवं बहुविधं तस्या निशम्य परिदेवितम् ।
पिता माता च सा चैव कन्या प्ररुरुदुस्त्रयः ॥ १-१७३-२१ (७८९७)
ततः प्ररुदितान्सर्वान्निशम्याथ सुतस्तदा ।
उत्फुल्लनयनो बालः कलमव्यक्तमब्रवीत् ॥ १-१७३-२२ (७८९८)
मा पिता रुद मा मातर्मा स्वसस्त्विति चाब्रवीत् ।
प्रहसन्निव सर्वांस्तानेकैकमनुसर्पति ॥ १-१७३-२३ (७८९९)
ततः स तृणमादाय प्रहृष्टः पुनरब्रवीत् ।
अनेनाहं हनिष्यामि राक्षसं पुरुषादकम् ॥ १-१७३-२४ (७९००)
वैशंपायन उवाच। १-१७३-२५क्ष् (१०१०)
तथापि तेषां दुःखेन परीतानां निशम्य तत् ।
बालस्य वाक्यमव्यक्तं हर्षः समभवन्महान् ॥ १-१७३-२५ (७९०१)
अयं काल इति ज्ञात्वा कुन्ती समुपसृत्य तान् ।

गतासूनमृतेनेव जीवयन्तीदमब्रवीत् ॥ ॥१-१७३-२६ (७९०२)

इति श्रीमन्महाभारते आदिपर्वणि बकवधपर्वणि
त्रिसप्तत्यधिकशततमोऽध्यायः ॥१७३ ॥
Mahabharata - Adi Parva - Chapter Footnotes

१-१७३-१५ प्रसवार्थं वंशार्थम् ॥
१-१७३-१७ अमृतेव जीवन्तीव ।इह लोके कीर्तेः सत्त्वात् ॥
१-१७३-१८ इतः प्रदाने अस्मिन् राक्षसाहाराय कन्यादाने दुर्दानत्वात्
पितुर्दुर्मरणाच्च कन्याया देवाश्च पितरश्च हिताय नेति
श्रुतं यद्यपि तथापि त्वया दत्तेनः तोयेन तव मम च हिताय ते
भविष्यन्तीत्यर्थः ॥
१-१७३-२२ कलं मधुरा ॥
त्रिसप्तत्यधिकशततमोऽध्यायः ॥
१७३ ॥

---

अध्यय१७४
॥ श्रीः ॥
१.१७४. अध्यायः १७४

Mahabharata - Adi Parva - Chapter Topics
कुन्त्या रोदनकारणप्रश्ने ब्राह्मणेन बकवृत्तान्तकथनम् ॥१ ॥

Mahabharata - Adi Parva - Chapter Text

१-१७४-० (७९०३)
कुन्त्युवाच।१-१७४-०क्ष् (१०११)
कुतोमूलमिदं दुःखं ज्ञातुमिच्छामि तत्त्वतः ।
विदित्वाप्यपकर्षेयं शक्यं चेदपकर्षितुम् ॥१-१७४-१ (७९०४)
ब्राह्मण उवाच।१-१७४-२क्ष् (१०१२)
उपपन्नं सतामेतद्यद्ब्रवीपि तपोधने ।
न तु दुःखमिदं शक्यं मानुषेण व्यपोहितुम् ॥१-१७४-२ (७९०५)
गतथापि तत्त्वमाख्यास्ये दुःखस्यैतस्य संभवम् ।
शक्यं वा यदि वाऽशक्यं शृणु भद्रे यथातथम् ॥१-१७४-३ (७९०६)
समीपे नगरस्यास्य वको वसति राक्षसः ।
इतो गव्यूतिमात्रे ऽस्ति यमुनागह्वरे गुहा ॥१-१७४-४ (७९०७)
तस्यां घोरः स वसति जिघांसुः पुरुषादकः ।

बकाभिधानो दुष्टात्मा राक्षसानां कुलाधमः ॥१-१७४-५ (७९०८)
ईशो जनपदस्यास्य पुरस्य च महाबलः ।
पुष्टो मानुषमांसेन दुर्बुद्धिः पुरुषादकः ॥१-१७४-६ (७९०९)
प्रबलः कामरूपी च राक्षसस्तु महाबलः ।
तेनोपसृष्टा नगरी वर्षमद्य त्रयोदशम् ॥१-१७४-७ (७९१०)
तत्कृते परचक्राच्च भूतेभ्यश्च न नो भयम् ।
पुरुषादेन रौद्रेण भक्ष्यमाणा दुरात्मना ॥१-१७४-८ (७९११)
अनाथा नगरी नाथं त्रातारं नाधिगच्छति ।
गुहायां च वसंस्तत्र बाधते सततं जनम् ॥१-१७४-९ (७९१२)
स्त्रियो बालांश्च वृद्धांश्च यूनश्चापि दुरात्मवान् ।
अत्र मन्त्रैश्च होमैश्च भोजनैश्च स राक्षसः ॥१-१७४-१० (७९१३)
ईडितो द्विजमुख्यैश्च पूजितश्च दुरात्मवान् ।
यदा च सकलानेवं प्रसूदयति राक्षसः ॥१-१७४-११ (७९१४)
अथैनं ब्राह्मणाः सर्वे समये समयोजयन् ।
मा स्म कामाद्वधी रक्षो दास्यामस्ते सदा वयं ॥१-१७४-१२ (७९१५)
पर्यायेण यथाकाममिह मांसोदनं प्रभो ।
अन्नं मांससमायुक्तं तिलचूर्णसमन्वितम् ॥१-१७४-१३ (७९१६)
सर्पिषा च समायुक्तं व्यञ्जनैश्च समन्वितम् ।
सूपांस्त्रीन्सतिलान्पिण्डाँल्लाजापूपसुरासवान् ॥१-१७४-१४ (७९१७)
शृताशृतान्पानकुम्भान्स्थूलमांसं शृताशृतम् ।
वनमाहिषवाराहभाल्लूकं च शृताशृतम् ॥१-१७४-१५ (७९१८)
सर्पिःकुम्भांश्च विविधान्दधिकुम्भांस्तथा बहून् ।
सद्यःसिद्धसमायुक्तं तिलचूर्णैः समाकुलम् ॥१-१७४-१६ (७९१९)
कुलाच्च पुरुषं चैकं बलीवर्दौ च कालकौ ।
प्राप्स्यसि त्वमसंक्रुद्धो रक्षोभागं प्रकल्पितम् ॥१-१७४-१७ (७९२०)
तिष्ठेह समयेऽस्माकमित्ययाचन्त तं द्विजाः ।
बाढमित्येव तद्रक्षस्तद्वचः प्रत्यगृह्णत ॥१-१७४-१८ (७९२१)
परचक्राटवीकेभ्यो रक्षणं स करोति च ।
तस्मिन्भागे सुनिर्दिष्टे स्थितः स समये बली ॥१-१७४-१९ (७९२२)
एकैकं चैव पुरुषं संप्रयच्छन्ति वेतनम् ।
स वारो बहुभिर्वर्षैर्भवत्यसुकरो नरैः ॥१-१७४-२० (७९२३)
तद्विमोक्षाय ये केचिद्यतन्ते पुरुषाः क्वचित् ।
सपुत्रदारांस्तान्हत्वा तद्रक्षो भक्षयत्युत ॥' १-१७४-२१ (७९२४)
वेत्रकीयगृहे राजा नायं नयमिहास्थितः ।
उपायं तं न कुरुते यत्नादपि स मन्दधीः ।
अनामयं जनस्यास्य येन स्याददद्य शाश्वतम् ॥ १-१७४-२२ (७९२५)

एतदर्हा वचं नूनं वसामो दुर्बलस्य ये ।
विषये नित्यवास्तव्याः कुराजानमुपाश्रिताः ॥१-१७४-२३ (७९२६)
ब्राह्मणाः कस्य वक्तव्याः कस्य वाच्छन्दचारिणः ।
गुणैरेते हि वत्स्यन्ति कामगाः पक्षिणो यथा ॥१-१७४-२४ (७९२७)
राजानं प्रथमं विन्देत्ततो भार्यां ततो धनम् ।
ागराजन्यसति लोकेऽस्मिन्कुतो भार्या कुतो धनम् ।
वयस्य संचयेनास्य ज्ञातीन्पुत्रांश्च तारयेत् ॥ १-१७४-२५ (७९२८)
विपीरतं मया चेदं त्रयं सर्वमुपार्जितम् ।
तदिमामापदं प्राप्य भृशं तप्यामहे वयम् ॥१-१७४-२६ (७९२९)
सोऽयमस्माननुप्राप्तो वारः कुलविनाशनः ।
भोजनं पुरुषश्चैकः प्रदेयं वेतनं मया ॥१-१७४-२७ (७९३०)
न च मे विद्यते वित्तं संक्रेतुं पुरुषं क्वचित् ।
सुहृज्जनं प्रदातुं च न शक्ष्यामि कदाचन ॥१-१७४-२८ (७९३१)
गतिं चान्यां न पश्यामि तस्मान्मोक्षाय रक्षसः ।
सोऽहं दुःखार्णवे मग्नो महत्यसुकरे भृशम् ॥१-१७४-२९ (७९३२)
सहैवैतैर्गमिष्यामि बान्धवैरद्य राक्षसम् ।
ततो नः सहितान्क्षुद्रः सर्वानेवोपभोक्ष्यति ॥१-१७४-३० (७९३३)
ादुःखमूलमिदं भद्रे मयोक्तं प्रश्नतोऽनघे ॥' ॥ १-१७४-३१ (७९३४)

इति श्रीमन्महाभारते आदिप्रवणि बकवधपर्वणि
चतुःसप्तत्यधिकशततमोऽध्यायः ॥१७४ ॥
Mahabharata - Adi Parva - Chapter Footnotes

१-१७४-२२ वेत्रकीयगृहे स्थानविशेषे ।इतोऽदूरे
राजास्त्ययमिह नगरे नयं न आस्थितः। अस्य नगरस्यावेक्षां
न करोतीत्यर्थः। स्वयं राक्षसं हन्तुमशक्तत्वात्। नायं
नायमिहास्थित इति खपुस्तकपाठः। नायं नायं बलिं पुनः पुनः
प्रापय्येत्यर्थः। उपायमप्यन्यद्द्वारा न कुरुते यतो मन्दधीः ॥
१-१७४-२३ एतदर्हाः एतस्य दुःखस्य योग्याः ॥
चतुःसप्तत्यधिकशततमोऽध्यायः ॥
१७४ ॥

---

अध्यय१७५
॥ श्रीः ॥
१.१७५. अध्यायः १७५

Mahabharata - Adi Parva - Chapter Topics

१-१७५-० (७९३५)
कुन्त्युवाच। १-१७५-०क्ष् (१०१३)
न विषादस्त्वया कार्यो भयादस्मात्कथंचन ।
उपायः परिदृष्टोऽत्र तस्मान्मोक्षाय रक्षसः ॥ १-१७५-१ (७९३६)
ग्नैव स्वयं सपुत्रस्य गमनं तत्र रोचये।'
एकस्तव सुतो बालः कन्या चैका तपस्विनी ।
न चैतयोस्तथा पत्न्या गमनं तव रोचये ॥ १-१७५-२ (७९३७)
मम पञ्च सुता ब्रह्मंस्तेषामेको गमिष्यति ।
त्वदर्थं बलिमादाय तस्य पापस्य रक्षसः ॥ १-१७५-३ (७९३८)
ब्राह्मण उवाच। १-१७५-४क्ष् (१०१४)
नाहमेतत्करिष्यामि जीवितार्थी कथंचन ।
ब्राह्मणस्यातिथेश्चैव स्वार्थे प्राणान्वियोजयन् ॥ १-१७५-४ (७९३९)
न त्वेतदकुलीनासु नाधर्मिष्ठासु विद्यते ।
यद्ब्राह्मणार्थे विसृजेदात्मानमपि चात्मजम् ॥ १-१७५-५ (७९४०)
आत्मनस्तु वधः श्रेयो बोद्धव्यमिति रोचते ।
ब्रह्मवध्याऽऽत्मवध्या वा श्रेयानात्मवधो मम ॥ १-१७५-६ (७९४१)
ब्रह्मवध्या परं पापं निष्कृतिर्नात्र विद्यते ।
अबुद्धिपूर्वं कृत्वापि प्रत्यवायो हि विद्यते ॥ १-१७५-७ (७९४२)
न त्वहं वधमाकाङ्क्षे स्वयमेवात्मनः शुभे ।
परैः कृते वधे पापं न किंचिन्मयि विद्यते ॥ १-१७५-८ (७९४३)
अभिसंधौ कृते तस्मिन्ब्राह्मणस्य वधे मया ।
निष्कृतिं न प्रपश्यामि नृशंसं क्षुद्रमेव च ॥ १-१७५-९ (७९४४)
आगतस्य गृहं त्यागस्तथैव शरणार्थिनः ।
याचमानस्य च वधो नृशंसो गर्हितो बुधैः ॥ १-१७५-१० (७९४५)
कुर्यान्न निन्दितं कर्म न नृशंसं कथंचन ।
इति पूर्वे महात्मान आपद्धर्मविदो विदुः ॥ १-१७५-११ (७९४६)
श्रेयांस्तु सहदारस्य विनाशोऽद्य मम स्वयम् ।
ब्राह्मणस्य वधं नाहमनुमंस्ये कदाचन ॥ १-१७५-१२ (७९४७)
कुन्त्युवाच। १-१७५-१३क्ष् (१०१५)
ममाप्येषा मतिर्ब्रह्मन्विप्रा रक्ष्या इति स्थिरा ।
न चाप्यनिष्टः पुत्रो मे यदि पुत्रशतं भवेत् ॥ १-१७५-१३ (७९४८)
न चासौ राक्षसः शक्तो मम पुत्रविनाशने ।

वीर्यमन्मन्त्रसिद्धश्च तेजस्वी च सुतो मम ॥ १-१७५-१४ (७९४९)
राक्षसाय च तत्सर्वं प्रापयिष्यति भोजनम् ।
मोक्षयिष्यति चात्मानमिति मे निश्चिता मतिः ॥ १-१७५-१५ (७९५०)
समागताश्च वीरेण दृष्टपूर्वाश्च राक्षसाः ।
बलवन्तो महाकाया निहताश्चाप्यनेकशः ॥ १-१७५-१६ (७९५१)
न त्विदं केषुचिद्ब्रह्मान्व्याहर्तव्यं कथंचन ।
विद्यार्थिनो हि मे पुत्रान्विप्रकुर्युः कुतूहलात् ॥ १-१७५-१७ (७९५२)
गुरुणा चाननुज्ञातो ग्राहयेद्यः सुतो मम ।
न स कुर्यात्तथा कार्यं विद्ययेति सतां मतम् ॥ १-१७५-१८ (७९५३)
वैशंपायन उवाच। १-१७५-१९क्ष् (१०१६)
एवमुक्तस्तु पृथया स विप्रो भार्यया सह ।
हृष्टः संपूजयामास तद्वाक्यममृतोपमम् ॥ १-१७५-१९ (७९५४)
ततः कुन्ती च विप्रश्च सहितावनिलात्मजम् ।
तमब्रूतां कुरुष्वेति स तथेत्यब्रवीच्च तौ ॥ ॥ १-१७५-२० (७९५५)

इति श्रीमन्महाभारते आदिपर्वणि पञ्चसप्तत्यधिकशततमोऽध्यायः
॥ १७५ ॥
Mahabharata - Adi Parva - Chapter Footnotes

१-१७५-९ अभिसन्धौ अभिप्राये ॥
१-१७५-१७ विप्रकुर्युर्वाधेरन् ॥
पञ्चसप्तत्यधिकशततमोऽध्यायः ॥
१७५ ॥

---

अध्यय१७६
॥ श्रीः ॥
१.१७६. अध्यायः १७६

Mahabharata - Adi Parva - Chapter Topics
भिक्षाटनार्थं गतानां युधिष्ठिरादीनां गृहं प्रत्यागमनम् ॥ १ ॥
भीमो बकं प्रति प्रेष्यत इति ज्ञातवतो युधिष्ठिरस्य संतापः ॥ २ ॥
भीमसेनप्रभावकथनेन कुन्त्या कृतं युधिष्ठिराश्वासनम् ॥ ३ ॥

Mahabharata - Adi Parva - Chapter Text

१-१७६-० (७९५६)
वैशंपायन उवाच। १-१७६-०क्ष् (१०१७)

करिष्य इति भीमेन प्रतिज्ञातेऽथ भारत ।
आजग्मुस्ते ततः सर्वे भैक्षमादाय पाण्डवाः ॥ १-१७६-१ (७९५७)
ग्भीमसेनं ततो दृष्ट्वा आपूर्णवदनं तथा ।
बुबोध धर्मराजस्तु हृषितं भीममच्युतम् ॥ १-१७६-२ (७९५८)
तोषस्य कारणं यत्तु मनसाऽचिन्तयद्गुरुः ।
स समीक्ष्य तदा राजन्योद्धुकामं युधिष्ठिरः ॥' १-१७६-३ (७९५९)
आकारेणैव तं ज्ञात्वा पाण्डुपुत्रो युधिष्ठिरः ।
रहः समुपविश्यैकस्ततः पप्रच्छ मातरम् ॥ १-१७६-४ (७९६०)
किं चिकीर्षत्ययं कर्म भीमो भमपराक्रमः ।
भवत्यनुमते कच्चित्स्वयं वा कर्तुमिच्छति ॥ १-१७६-५ (७९६१)
कुन्त्युवाच। १-१७६-६क्ष् (१०१८)
ममैव वचनादेष करिष्यति परन्तपः ।
ब्राह्मणार्थे महत्कृत्यं मोक्षाय नगरस्य च ॥ १-१७६-६ (७९६२)
ग्बकाय कल्पितं पुत्र महान्तं बलिमुत्तमम् ।
भीमो भुनक्तु सुस्पष्टमप्येकाहं तपःसुतः ॥' १-१७६-७ (७९६३)
युधिष्ठिर उवाच। १-१७६-८क्ष् (१०१९)
किमिदं साहसं तीक्ष्णं भवत्या दुष्करं कृतम् ।
परित्यागं हि पुत्रस्य न प्रशंसन्ति साधवः ॥ १-१७६-८ (७९६४)
कथं परसुतस्यार्थे स्वसुतं त्यक्तुमिच्छसि ।
लोकवेदविरुद्धं हि पुत्रत्यागात्कृतं त्वया ॥ १-१७६-९ (७९६५)
यस्य बाहू समाश्रित्य सुखं सर्वे शयामहे ।
राज्यं चापहृतं क्षुद्रैराजिहीर्षामहे पुनः ॥ १-१७६-१० (७९६६)
यस्य दुर्योधनो वीर्यं चिन्तयन्नमितौजसः ।
न शेते रजनीः सर्वा दुःखाच्छकुनिना सह ॥ १-१७६-११ (७९६७)
यस्य वीरस्य वीर्येण मुक्ता जतुगृहाद्वयम् ।
अन्येभ्यश्चैव पापेभ्यो निहतश्च पुरोचनः ॥ १-१७६-१२ (७९६८)
यस्य वीर्यं समाश्रित्य वसुपूर्णां वसुन्धराम् ।
इमां मन्यामहे प्राप्तां निहत्य धृतराष्ट्रजान् ॥ १-१७६-१३ (७९६९)
तस्य व्यवसितस्त्यागो बुद्धिमास्थाय कां त्वया ।
कच्चिन्नु दुःखैर्बुद्धिस्ते विलुप्ता गतचेतसः ॥ १-१७६-१४ (७९७०)
कुन्त्युवाच। १-१७६-१५क्ष् (१०२०)
युधिष्ठिर न संतापस्त्वया कार्यो वृकोदरे ।
न चायं बुद्धिदौर्बल्याद्व्यवसायः कृतो मया ॥ १-१७६-१५ (७९७१)
ग्न च शोकेन बुद्धिः सा विलुप्ता गतचेकसः।'
इह विप्रस्य भवने वयं पुत्र सुखोषिताः ।
अज्ञाता धार्तराष्ट्राणां सत्कृता वीतमन्यवः ॥ १-१७६-१६ (७९७२)

तस्य प्रतिक्रिया पार्थ मयेयं प्रसमीक्षिता ।
एतावानेव पुरुषः कृतं यस्मिन्न नश्यति ॥ १-१७६-१७ (७९७३)
यावच्च कुर्यादन्योऽस्य कुर्याद्बहुगुमं ततः ।
ग्ब्राह्मणार्थे महान्धर्मो जानामीत्थं वृकोदरे ॥' १-१७६-१८ (७९७४)
दृष्ट्वा भीमस्य विक्रान्तं तदा जतुगृहे महत् ।
हिडिम्बस्य वधाच्चैवं विश्वासो मे वृकोदरे ॥ १-१७६-१९ (७९७५)
बाह्वोर्बलं हि भीमस्य नागायुतसमं महत् ।
येन यूयं गजप्रख्या निर्व्यूढा वारणावतात् ॥ १-१७६-२० (७९७६)
वृकोदरेण सदृशो बलेनान्यो न विद्यते ।
यो व्यतीयाद्युधि श्रेष्ठमपि वज्रधरं स्वयम् ॥ १-१७६-२१ (७९७७)
जातमात्रः पुरा चैव ममाङ्कात्पतितो गिरौ ।
शरीरगौरवादस्य शिला गात्रैर्विचूर्णिता ॥ १-१७६-२२ (७९७८)
तदहं प्रज्ञया ज्ञात्वा बलं भीमस्य पाण्डव ।
प्रतिकार्ये च विप्रस्य ततः कृतवती मतिम् ॥ १-१७६-२३ (७९७९)
नेदं लोभान्न चाज्ञानान्न च मोहाद्विनिश्चितम् ।
बुद्धिपूर्वं तु धर्मस्य व्यवसायः कृतो मया ॥ १-१७६-२४ (७९८०)
अर्थौ द्वावपि निष्पन्नौ युधिष्ठिर भविष्यतः ।
प्रतीकारश्च वासस्य धर्मश्च चरितो महान् ॥ १-१७६-२५ (७९८१)
यो ब्राह्मणस्य साहाय्यं कुर्यादर्थेषु कर्हिचित् ।
क्षत्रियः स शुभाँल्लोकानाप्नुयादिति मे मतिः ॥ १-१७६-२६ (७९८२)
क्षत्रियस्यैव कुर्वाणः क्षत्रियो वधमोक्षणम् ।
विपुलां कीर्तिमाप्नोति लोकेऽस्मिंश्च परत्र च ॥ १-१७६-२७ (७९८३)
वैश्यस्यार्थे च साहाय्यं कुर्वाणः क्षत्रियो भुवि ।
स सर्वेष्वपि लोकेषु प्रजा रञ्जयते ध्रुवम् ॥ १-१७६-२८ (७९८४)
शूद्रं तु मोचयेद्राजा शरणार्थिनमागतम् ।
प्राप्नोतीह कुले जन्म सद्द्रव्ये राजपूजिते ॥ १-१७६-२९ (७९८५)
एवं मां भगवान्व्यासः पुरा पौरवनन्दन ।
प्रोवाचासुकरप्रज्ञस्तस्मादेवं चिकीर्षितम् ॥ ॥ १-१७६-३० (७९८६)

इति श्रीमन्महाभारते आदिपर्वणि बकवधपर्वणि
षट्सप्तत्यधिकशततमोऽध्यायः ॥ १७६ ॥
Mahabharata - Adi Parva - Chapter Footnotes

१-१७६-६ मोक्षाय बकभयादिति शेषः ॥
१-१७६-२५ प्रतीकारः प्रत्युपकारः ॥
षट्सप्तत्यधिकशततमोऽध्यायः ॥

अध्यय१७७
॥ श्रीः ॥
१.१७७. अध्यायः १७७

Mahabharata - Adi Parva - Chapter Topics
परेद्युः प्रातः ब्राह्मणेन दत्तमन्नं भुक्त्वा बकाय प्रापणीयं
अन्नादिपूर्णं शकटमारुह्य बकवंन प्रति भीमस्य गमनम् ॥ १ ॥
तत्र भीमेन शकटस्तान्नभोजनम् ॥ २ ॥
अन्नं भुञ्जानं भीमं दृष्ट्वा क्रुद्धेन बकेन सह भीमस्य युद्धम् ॥ ३ ॥
बकवधः ॥ ४ ॥

Mahabharata - Adi Parva - Chapter Text

१-१७७-० (७९८७)
युधिष्ठिर उवाच। १-१७७-०क्ष् (१०२१)
उपपन्नमिदं मातस्त्वया यद्बुद्धिपूर्वकम् ।
आर्तस्य ब्राह्मणस्यैतदनुक्रोशादिदं कृतम् ॥ १-१७७-१ (७९८८)
ध्रुवमेष्यति भीमोऽयं निहत्य पुरुषादकम् ।
सर्वथा ब्राह्मणस्यार्थे यदनुक्रोशवत्यसि ॥ १-१७७-२ (७९८९)
यथा त्विदं न विन्देयुर्नरा नगरवासिनः ।
तथाऽयं ब्राह्मणो वाच्यः परिग्राह्यश्च यत्नतः ॥ १-१७७-३ (७९९०)
वैशंपायन उवाच। १-१७७-४क्ष् (१०२२)
ग्युधिष्ठिरेण संमन्त्र्य ब्राह्मणार्थमरिन्दम ।
कुन्ती प्रविश्य तान्सर्वान्मन्त्रयामास भारत ॥ १-१७७-४ (७९९१)
अथ रात्र्यां व्यतीतायां भीमसेनो महाबलः ।
ब्राह्मणं समुपागम्य वचश्चेदमुवाच ह ॥ १-१७७-५ (७९९२)
आपदस्त्वां विमोक्ष्येऽहं सपुत्रं ब्राह्मण प्रियम् ।
मा भैषी राक्षसात्तस्मान्मां ददातु बलिं भवान् ॥ १-१७७-६ (७९९३)
इद मामशितं कर्तुं प्रयतस्व सकृद्गृहे ।
आथात्मानं प्रादास्यामि तस्मै घोराय रक्षसे ॥ १-१७७-७ (७९९४)
त्वरध्वं किं विलम्बध्वे मा चिरं कुरुतानघाः ।
व्यवस्येयं मनः प्राणैर्युष्मान्रक्षितुमद्य वै ॥ १-१७७-८ (७९९५)
वैशंपायन उवाच। १-१७७-९क्ष् (१०२३)
एवमुक्तः स भीमेन ब्राह्मणो भरतर्षभ ।
सुहृदां तत्समाख्याय ददावन्नं सुसंस्कृतम् ॥ १-१७७-९ (७९९६)

पिशितोदनमाजह्रुरथास्मै पुरवासिनः ।
सघृतं सोपदंशं च सूपैर्नानाविधैः सह ॥ १-१७७-१० (७९९७)
तदाऽशित्वा भीमसेनो मांसानि विविधानि च ।
मोदकानि च मुख्यानि चित्रोदनचयान्बहून् ॥ १-१७७-११ (७९९८)
ततोऽपिबद्दधिघटान्सुबहून्द्रोणसंमितान् ।
तस्य भुक्तवतः पौरा यथावत्समुपार्जितान् ॥ १-१७७-१२ (७९९९)
उपजह्रुर्भृतं भागं समृद्धमनसस्तदा ।
ततो रात्र्यां व्यतीतायां सव्यञ्जनदधिप्लुतम् ॥ १-१७७-१३ (८०००)
समारुह्यान्नसंपूर्णं शकटं स वृकोदरः ।
प्रययौ तूर्यनिर्घोषैः पौरैश्च परिवारितः ॥ १-१७७-१४ (८००१)
आत्मानमेषोऽन्नभूतो राक्षसाय प्रदास्यति ।
तरुणोऽप्रतिरूपश्च दृढ औदरिको युवा ॥ १-१७७-१५ (८००२)
वाग्भिरेवंप्रकाराभिः स्तूयमानो वृकोदरः ।
चुचोद स बलीवर्दौ युक्तौ सर्वाङ्गकालकौ ॥ १-१७७-१६ (८००३)
वादित्राणां प्रवादेन ततस्तं पुरुषादकम् ।
अभ्यगच्छत्सुसंहृष्टः सर्वत्र मनुजैर्वृतः ॥ १-१७७-१७ (८००४)
संप्राप्य स च तं देशमेकाकी समुपाययौ ।
पुरुषादभयाद्भीतस्तत्रैवासीज्जनव्रजः ॥ १-१७७-१८ (८००५)
स गत्वा दूरमध्वानं दक्षिणामभितो दिशम् ।
यतोपदिष्टमुद्देशे ददर्श विपुलं द्रुमम् ॥ १-१७७-१९ (८००६)
केशमज्जास्थिमेदोभिर्बाहूरुचरणैरपि ।
आर्द्रैः शुष्कैश्च संकीर्णमभितोऽथ वनस्पतिम् ॥ १-१७७-२० (८००७)
गृध्रकङ्कबलच्छन्नं गोमायुगणसेवितम् ।
उग्रगन्धमचक्षुष्यं श्मशानमिव दारुणम् ॥ १-१७७-२१ (८००८)
तं प्रविश्य महावृक्षं चिन्तयामास वीर्यवान् ।
यावन्न पश्यते रक्षो बकाभिख्यं बलोत्तरम् ॥ १-१७७-२२ (८००९)
आचितं विविधैर्भोज्यैरन्नैरुच्चावचैरिदम् ।
शकटं सूपसंपूर्णं यावद्द्रक्ष्यति राक्षसः ॥ १-१७७-२३ (८०१०)
तावदेवेह भोक्ष्येऽहं दुर्लभं हि पुनर्भवेत् ।
विप्रकीर्येत सर्वं हि प्रयुद्धे मयि रक्षसा ॥ १-१७७-२४ (८०११)
अभोज्यं हि शवस्पर्शे निगृहीते बके भवेत् ।
स त्वेवं भीमकर्मा तु भीमसेनोऽभिलक्ष्य च ॥ १-१७७-२५ (८०१२)
उपविश्य विविक्तेऽन्नं भुङ्क्ते स्म परमं परः ।
तं ततः सर्वतोऽपश्यन्द्रुमानारुह्य नागराः ॥ १-१७७-२६ (८०१३)
नारक्षो बलिमश्नीयादेवं बहु च मानवाः ।
भुङ्क्ते ब्राह्मणरूपेण बकोऽयमिति चाब्रुवन् ॥ १-१७७-२७ (८०१४)

स तं हसति तेजस्वी तदन्नमुपभुज्य च।'
आसाद्य तु वनं तस्य रक्षसः पाण्डवो बली ।
आजुहाव ततो नाम्ना तदन्नमुपपादयन् ॥ १-१७७-२८ (८०१५)
ततः स राक्षसः क्रुद्धो भीमस्य वचनात्तदा ।
आजगाम सुसंक्रुद्धो यत्र भीमो व्यवस्थितः ॥१-१७७-२९ (८०१६)
महाकायो महावेगो दारयन्निव मेदिनीम् ।
लोहिताक्षः करालश्च लोहितश्मश्रुमूर्धजः ॥१-१७७-३० (८०१७)
आकर्णाद्भिन्नवक्त्रश्च शङ्कुकर्णो विभीषणः ।
त्रिशिखां भ्रुकुटिं कृत्वा संदश्य दशनच्छदम् ॥१-१७७-३१ (८०१८)
भुञ्जानमन्नं तं दृष्ट्वा भीमसेनं स राक्षसः ।
विवृत्य नयने क्रुद्ध इदं वचनमब्रवीत् ॥१-१७७-३२ (८०१९)
कोऽयमन्नमिदं भुङ्क्ते मदर्थमुपकल्पितम् ।
पश्यतो मम दुर्बुद्धिर्यियासुर्यमसादनम् ॥१-१७७-३३ (८०२०)
भीमसेनस्ततः श्रुत्वा प्रहसन्निव भारत ।
राक्षसं तमनादृत्य भुङ्क्त एव पराङ्मुखः ॥१-१७७-३४ (८०२१)
रवं स भैरवं कृत्वा समुद्यम्य करावुभौ ।
अभ्यद्रवद्भीमसेनं जिङांसुः पुरुषादकः ॥१-१७७-३५ (८०२२)
तथापि परिभूयैनं प्रेक्षमाणो वृकोदरः ।
राक्षसं भुङ्क्त एवान्नं पाण्डवः परवीरहा ॥१-१७७-३६ (८०२३)
अमर्षेण तु संपूर्णः कुन्तीपुत्रं वृकोदरम् ।
जघान पृष्ठे पाणिभ्यामुभाभ्यां पृष्ठतः स्थितः ॥१-१७७-३७ (८०२४)
तथा बलवता भीमः पाणिभ्यां भृशमाहतः ।
नैवावलोकयामास राक्षसं भुङ्क्त एव सः ॥१-१७७-३८ (८०२५)
ततः स भूयः संक्रुद्धो वृक्षमादाय राक्षसः ।
ताडयिष्यंस्तदा भीमं पुनरभ्यद्रवद्बली ॥१-१७७-३९ (८०२६)
क्षिप्तं क्रुद्धेन तं वृक्षं प्रतिजग्राह वीर्यवान् ।
सव्येन पाणिना भीमो दक्षिणेनाप्यभुङ्क्त ह ॥१-१७७-४० (८०२७)
'शकटान्नं ततो भुक्त्वा रक्षसः पाणिना सह ।
गृह्णन्नेव तदा वृक्षं निःशेषं पर्वतोपमम् ॥१-१७७-४१ (८०२८)
भीमसेनो हसन्नेव भुक्त्वा त्यक्त्वा च राक्षसम् ।
पीत्वा दधिघटान्पूर्णान्घृतकुम्भाञ्शतं शतम् ॥१-१७७-४२ (८०२९)
वार्युपस्पृश्य संहृष्टस्तस्थौ गिरिरिवापरः ।
भ्रामयन्तं महावृक्षमायान्तं भीमदर्शनम् ॥१-१७७-४३ (८०३०)
दृष्ट्वोत्थायाहवे वीरः सिंहनादं व्यनादयत् ।
भुजवेगं तथाऽऽस्फोटं क्ष्वेलितं च महास्वनम् ॥१-१७७-४४ (८०३१)
कृत्वाऽऽह्वयत संक्रुद्धो भीमसेनोऽथ राक्षसम् ।

उवाचाशनिशब्देन ध्वनिना भीषयन्निव ॥ १-१७७-४५ (८०३२)
भीम उवाच। १-१७७-४६क्ष् (१०२४)
बहुकालं सुपुष्टं ते शरीरं राक्षसाधम ।
द्विपच्चतुष्पन्मांसैश्च बहुभिश्चौदनैरपि ॥ १-१७७-४६ (८०३३)
मद्बाहुबलमाश्रित्य न त्वं भूयस्त्वशिष्यसि ।
अद्य मद्बाहुनिष्पिष्टो गमिष्यसि यमालयम् ॥ १-१७७-४७ (८०३४)
अद्यप्रभृति स्वप्स्यन्ति वेत्रकीयनिवासिनः ।
निरुद्विग्नाः पुरस्यास्य कण्टके सूद्धृते मया ॥ १-१७७-४८ (८०३५)
अद्य युद्धे शरीरं ते कङ्कगोमायुवायसाः ।
मया हतस्य खादन्तु विकर्षन्तु च भूतले ॥ १-१७७-४९ (८०३६)
वैशंपायन उवाच। १-१७७-५०क्ष् (१०२५)
एवमुक्त्वा सुसंक्रुद्धः पार्थो बकजिघांसया ।
उपाधावद्बकश्चापि पार्थं पार्थिवसत्तम ॥ १-१७७-५० (८०३७)
महाकायो महावेगो दारयन्निव मेदिनीम् ।
पिशङ्गरूपः पिङ्गाक्षो भीमसेनमभिद्रवत् ॥ १-१७७-५१ (८०३८)
त्रिशिखां भ्रुकुटीं कृत्वा संदश्य दशनच्छदम् ।
भृशं स भूयः संक्रुद्धो वृक्षमादाय राक्षसः ॥ १-१७७-५२ (८०३९)
ताडयिष्यंस्तदा भीमं तरसाऽभ्यद्रवद्बली ।
क्रुद्धेनाभिहतं वृक्षं प्रतिजग्राह लीलया ॥ १-१७७-५३ (८०४०)
सव्येन पाणिना भीमः प्रहसन्निव भारत ।
ततः स पुनरुद्यम्य वृक्षान्बहुविधान्बली ॥ १-१७७-५४ (८०४१)
प्राहिणोद्भीमसेनाय बकोऽपि बलवान्रणे ।
सर्वानपोहयद्वृक्षान्स्वस्य हस्तस्य शाखया ॥ १-१७७-५५ (८०४२)
तद्वृक्षयुद्धमभवद्वृक्षषण्डविनाशनम् ॥
महत्सुघोरं राजेन्द्र बकपाण्डवयोस्तदा ॥ १-१७७-५६ (८०४३)
नाम विश्राव्य स बकः समभिद्रुत्य पाण्डवम् ।
समयुध्यत तीव्रेण वेगेन पुरुषादकः ॥ १-१७७-५७ (८०४४)
तयोर्वेगेन महता पृथिवी समकम्पत ।
पादपांश्च महामात्रांश्चूर्णयामासतुः क्षणात् ॥ १-१७७-५८ (८०४५)
द्रुतमागत्य पाणिभ्यां गृहीत्वा चैनमाक्षिपत् ।
आक्षिप्तो भीमसेनश्च पुनरेवोत्थितो हसन् ॥ १-१७७-५९ (८०४६)
आलिङ्ग्यापि बकं भीमो न्यहनद्वसुधातले ।
भीमो विसर्जयित्वैनं समाश्वसिहि राक्षस ॥ १-१७७-६० (८०४७)
इत्युक्त्वा पुनरास्फोट्य उत्तिष्ठेति च सोऽब्रवीत् ।
समुत्पत्य ततः क्रुद्धो रूपं कृत्वा महत्तरम् ॥ १-१७७-६१ (८०४८)
विरूपः सहसा तस्थौ२ तर्जयित्वा वृकोदरम् ।

अहसद्भीमसेनोऽपि राक्षसं भीमदर्शनम् ॥ १-१७७-६२ (८०४९)
असौ गृहीत्वा पाणिभ्यां पृष्ठतश्च व्यवस्थितः ।
जानुभ्यां पीडयित्वाथ पातयामास भूतले ॥ १-१७७-६३ (८०५०)
पुनः क्रुद्धो विसृज्यैनं राक्षसं क्रोधजीवितम् ।
स्वां कटीमीषदुन्नम्य बाहू तस्य परामृशत् ॥ १-१७७-६४ (८०५१)
तस्य बाहू समादाय त्वरमाणो वृकोदरः ।
उत्क्षिप्य चावधूयैनं पातयन्बलवान्भुवि ॥ १-१७७-६५ (८०५२)
तं तु वामेन पादेन क्रुद्धो भीमपराक्रमः ।
उरस्येनं समाजघ्ने भीमस्तु पतितं भुवि ॥ १-१७७-६६ (८०५३)
व्यात्ताननेन घोरेण लम्बजिह्वेन रक्षसा ।
तेनाभिद्रुत्य भीमेन भीमो मूर्ध्नि समाहतः ॥ १-१७७-६७ (८०५४)
एवं निहन्यमानः स राक्षसेन बलीयसा ।
रोषेण महताऽऽविष्टो भीमो भीमपराक्रमः ॥ १-१७७-६८ (८०५५)
गृहीत्वा मध्यमुत्क्षिप्य बली जग्राह राक्षसम् ।
तावन्योन्यं पीडयन्तौ पुरुषादवृकोदरौ ॥ १-१७७-६९ (८०५६)
मत्ताविव महानागावन्योन्यं विचकर्षतुः ॥ १-१७७-७० (८०५७)
बाहुविक्षेपशब्दैश्च भीमराक्षसयोस्तदा ।
वेत्रकीयपुरी सर्वा वित्रस्ता समपद्यत ॥' १-१७७-७१ (८०५८)
तयोर्वेगेन महता तत्र भूमिरकम्पत ।
पादपान्वीरुधश्चैव चूर्णयामासतू रयात् ॥ १-१७७-७२ (८०५९)
समागतौ च तौ वीरावन्योन्यवधकाङ्क्षिणौ ।
गिरिभिर्गिरिशृङ्गैश्च पाषाणैः पर्वतच्युतैः ॥ १-१७७-७३ (८०६०)
अन्योन्यं ताडयन्तौ तौ चूर्णयामासतुस्तदा ।
आयामविस्तराभ्यां च परितो योजनद्वयम् ॥ १-१७७-७४ (८०६१)
निर्महीरुहपाषाणतृणकुञ्जलतावलिम् ।
चक्रतुर्युद्धदुर्मत्तौ कूर्मपृष्ठोपमां महीम् ॥ १-१७७-७५ (८०६२)
मुहूर्तमेवं संयुध्य समं रक्षःकुरूद्वहौ ।
ततो रक्षोविनाशाय मतिं कृत्वा कुरूत्तमः ॥ १-१७७-७६ (८०६३)
दन्तान्कटकटीकृत्य दष्ट्वा च दशनच्छदम् ।
नेत्रे संवृत्य विकटं तिर्यक्प्रैक्षत राक्षसम् ॥ १-१७७-७७ (८०६४)
अथ तं लोलयित्वा तु भीमसेनो महाबलः ।
अगृह्णात्परिरभ्यैनं बाहुभ्यां परिरभ्य च ॥ १-१७७-७८ (८०६५)
जानुभ्यां पार्श्वयोः कुक्षौ पृष्ठे वक्षसि जघ्निवान् ।
भग्नोरुबाहुहृच्चैव विस्रंसद्देहबन्धनः ॥ १-१७७-७९ (८०६६)
प्रस्वेददीर्घनिश्वासो निर्यञ्जीवाक्षितारकः ।
अजाण्डास्फोटनं कुर्वन्नाक्रोशंश्च श्वसञ्छनैः ॥ १-१७७-८० (८०६७)

भूमौ निपत्य विलुठन्दण्डाहत इवोरगः ।
विस्फुरन्तं महाकायं परितो विचकर्ष ह ॥१-१७७-८१ (८०६८)
विकृष्यमाणो वेगेन पाण्डवेन बलीयसा ।
समयुज्यत तीव्रेण श्रमेण पुरुषादकः ॥' १-१७७-८२ (८०६९)
हीयमानबलं रक्षः समीक्ष्य पुरुषर्षभः ।
निष्पिष्य भूमौ जानुभ्यां समाजघ्ने वृकोदरः ॥१-१७७-८३ (८०७०)
ततो ऽस्य जानुना पृष्ठमवपीड्य बलादिव ।
बाहुना परिजग्राह दक्षिणेन शिरोधराम् ॥१-१७७-८४ (८०७१)
सव्येन च कटीदेशे गृह्य वाससि पाण्डवः ।
जानुन्यारोप्य तत्पृष्ठं महाशब्दं बभञ्ज ह ॥१-१७७-८५ (८०७२)
ततोऽस्य रुधिरं वक्त्रात्प्रादुरासीद्विशांपते ।
भज्यमानस्य भीमेन तस्य घोरस्य रक्षसः ॥ ॥१-१७७-८६ (८०७३)

इति श्रीमन्महाभारते आदिपर्वणि बकवधपर्वणि
सप्तसप्तत्यधिकशततमोऽध्यायः ॥१७७ ॥
Mahabharata - Adi Parva - Chapter Footnotes

१-१७७-३१ त्रिशिखां त्रिरेखाम् ॥
सप्तसप्तत्यधिकशततमोऽध्यायः ॥
१७७ ॥

---

अध्यय१७८
॥ श्रीः ॥
१.१७८. अध्यायः १७८

Mahabharata - Adi Parva - Chapter Topics
बकवधानन्तरं समागतानां तत्परिवाराणां भीमेन समयकरणम् ॥१ ॥
नगरद्वारदेशे बकशरीरं निधाय ब्राह्मणगृहमा गत्य भीमेन
कुन्त्यादीन्प्रति बकवृत्तान्तकथनम् ॥२ ॥
मृतबकदर्शार्थं पौराणां गमनम् ॥३ ॥
ब्रह्ममहोत्सवकरणम् ॥४ ॥
बकवधेन पौराणां भीमसेवनम् ॥५ ॥

Mahabharata - Adi Parva - Chapter Text

१-१७८-० (८०७४)
वैशंपायन उवाच।१-१७८-०क्ष् (१०२६)

ततः स भग्नपार्श्वाङ्गो नदित्वा भैरवं रवम् ।
शैलराजप्रतीकाशो गतासुरभवद्बकः ॥ १-१७८-१ (८०७५)
तेन शब्देन वित्रस्तो जनस्तस्याथ रक्षसः ।
निष्पपात गृहाद्राजन्सहैव परिचारिभिः ॥ १-१७८-२ (८०७६)
ग्बकानुजस्तदा राजन्भीमं शरणमेयिवान् ।
ततस्तु निहतं दृष्ट्वा राक्षसेन्द्रं महाबलम् ।
राक्षसाः परमत्रस्ता भीमं शरणमाययुः ॥' १-१७८-३ (८०७७)
तान्भीतान्विगतज्ञानान्भीमः प्रहरतां वरः ।
सांत्वयामास बलवान्समये च न्यवेशयत् ॥ १-१७८-४ (८०७८)
न हिंस्या मानुषा भूयो युष्माभिरिति कर्हिचित् ।
हिंसतां हि वधः शीघ्रमेवमेव भवेदिति ॥ १-१७८-५ (८०७९)
तस्य तद्वचनं श्रुत्वा तानि रक्षांसि भारत ।
एवमस्त्विति तं प्राहुर्जगृहुः समयं च तम् ॥ १-१७८-६ (८०८०)
ग्सगणस्तु बकभ्राता प्राणमत्पाण्डवं तदा।'
ततः प्रभृति रक्षांसि तत्र सौम्यानि भारत ।
नगरे प्रत्यदृश्यन्त नरैर्नगरवासिभिः ॥ १-१७८-७ (८०८१)
ततो भीमस्तमादाय गतासुं पुरुषादकम् ।
ग्निष्क्रर्णनेत्रं निर्जिह्वं निःसंज्ञं कण्ठपीडनात् ।
कुर्वन्बहुविधां चेष्टां पुरद्वारमकर्षत ॥ १-१७८-८ (८०८२)
द्वारदेशे विनिक्षिप्य पुरमागात्स मारुतिः ।
स एव राक्षसो नूनं पुनरायाति नः पुरीम् ॥ १-१७८-९ (८०८३)
सबालवृद्धाः पुरुषा इति भीताः प्रदुद्रुवुः ।
ततो भीमो बकं हत्वा गत्वा ब्राह्मणवेश्म तत् ॥ १-१७८-१० (८०८४)
बलीवर्दौ च शकटं ब्राह्मणाय न्यवेदयत् ।
तूष्णीमन्तर्गृहं गच्छेत्यभिधाय द्विजोत्तमम् ॥ १-१७८-११ (८०८५)
मातृभ्रातृसमक्षं च गत्वा शयनमेव च ।
आचचक्षेऽथ तत्सर्वं रात्रौ युद्धमभूद्यथा ॥' १-१७८-१२ (८०८६)
ततो नरा विनिष्क्रान्ता नगरात्कल्यमेव तु ।
ददृशुर्निहतं भूमौ राक्षसं रुधिरोक्षितम् ॥ १-१७८-१३ (८०८७)
तमद्रिकूटसदृशं विनिकीर्णं भयानकम् ।
दृष्ट्वा संहृष्टरोमाणो बभूवुस्तत्र नागराः ॥ १-१७८-१४ (८०८८)
एकचक्रां ततो गत्वा प्रवृत्तिं प्रददुः पुरे ।
ततः सहस्रशो राजन्नरा नगरवासिनः ॥ १-१७८-१५ (८०८९)
तत्राजग्मुर्बकं द्रष्टुं सस्त्रीवृद्धकुमारकाः ।
ततस्ते विस्मिताः सर्वे कर्म दृष्ट्वाऽतिमानुषम् ।
दैवतान्यर्चयाञ्चक्रुः प्रार्थितानि पुरा भयात् ॥ १-१७८-१६ (८०९०)

ततः प्रगणयामासुः कस्य वारोऽद्य भोजने ।
ज्ञात्वा चागम्य तं विप्रं पप्रच्छुः सर्व एव ते ॥ १-१७८-१७ (८०९१)
एवं पृष्टः स बहुशो रक्षमाणश्च पाण्डवान् ।
उवाच नागरान्सर्वानिदं विप्रर्षभस्तदा ॥ १-१७८-१८ (८०९२)
ब्राह्मण उवाच। १-१७९-१९क्ष् (१०२७)
आज्ञापितं मामशने रुदन्तं सह बन्धुभिः ।
ददर्श ब्राह्मणः कश्चिन्मन्त्रसिद्धो महामनाः ॥ १-१७८-१९ (८०९३)
परिपृच्छ्य स मां पूर्वं परिक्लेशं पुरस्य च ।
अब्रवीद्ब्राह्मणश्रेष्ठो विश्वास्य प्रहसन्निव ॥ १-१७८-२० (८०९४)
प्रापयिष्याम्यहं तस्मा अन्नमेतद्दुरात्मने ।
मन्निमित्तं भयं चापि न कार्यमिति चाब्रवीत् ॥ १-१७८-२१ (८०९५)
स तदन्नमुपादाय गतो बकवनं प्रति ।
तेन नूनं भवेदेतत्कर्म लोकहितं कृतम् ॥ १-१७८-२२ (८०९६)
ततस्ते ब्राह्मणाः सर्वे क्षत्रियाश्च सुविस्मिताः ।
वैश्याः शूद्राश्च मुदिताश्चक्रुर्ब्रह्ममहं तदा ॥ १-१७८-२३ (८०९७)
ततो जानपदाः सर्वे आजग्मुर्नगरं प्रति ।
तमद्भुततमं द्रष्टुं पार्थास्तत्रैव चावसन् ॥ १-१७८-२४ (८०९८)
वेत्रकीयगृहे सर्वे परिवार्य वृकोदरम् ।
विस्मयादभ्यगच्छन्त भीमं भीमपराक्रमम् ॥ १-१७८-२५ (८०९९)
न वै न संभवेत्सर्वं ब्राह्मणेषु महात्मसु ।
इति सत्कृत्य तं पौराः परिवव्रुः समन्ततः ॥ १-१७८-२६ (८१००)
अयं त्राता हि खेदानां पितेव परमार्थतः ।
अस्य शुश्रूषवः पादौ परिचर्य उपास्महे ॥ १-१७८-२७ (८१०१)
पशुमद्दधिमनच्चास्य वारं भक्तमुपाहरन् ।
तस्मिन्हते ते पुरुषा भीताः समनुबोधनाः ॥ १-१७८-२८ (८१०२)
ततः संप्राद्रवन्पार्थाः सह मात्रा परन्तपाः ।
आगच्छन्नेकचक्रां ते गाण्डवाः संशितव्रताः ॥ १-१७८-२९ (८१०३)
वैदिकाध्ययने युक्ता जटिला ब्रह्मचारिणः ।
अवसंस्ते च तत्रापि ब्राह्मणस्य निवेशने ।
मात्रर सहैकचक्रायां दीर्घकालं सहोषिताः ॥ ॥ १-१७८-३० (८१०४)

इति श्रीमन्महाभारते आदिपर्वणि बकवधपर्वणि
अष्टसप्तत्यधिकशततमोऽध्यायः ॥ १७८ ॥ ॥ समाप्तं च
बकवधपर्व ॥

Mahabharata - Adi Parva - Chapter Footnotes

१-१७८-१३ कल्यं प्रातःकाले ॥
१-१७८-१९ आज्ञापितं राजकीयैरिति शेषः ।अशने राक्षसस्य भोजनार्थम् ॥
अष्टसप्तत्यधिकशततमोऽध्यायः ॥
१७८ ॥

---

अध्यय१७९
॥ श्रीः ॥
१.१७९. अध्यायः १७९

(अथ चैत्ररथपर्व ॥ ११ ॥)
Mahabharata - Adi Parva - Chapter Topics
ब्राह्मणगृहे प्रतिश्रयार्थमागतस्य कस्यचिद्ब्राह्मणस्य मुखात्
पाण्डवानां द्रौपदीस्वयंवरश्रवणम् ॥ १ ॥
पाण्डवकृतधृष्टद्युम्नद्रौपदीसंभवप्रश्नस्य
ब्राह्मणेनोत्तरकथनम् ॥ २ ॥

Mahabharata - Adi Parva - Chapter Text

१-१७९-० (८१०५)
जनमेजय उवाच। १-१७९-०क्ष् (१०२८)
ते तथा पुरुषव्याघ्रा निहत्य बकराक्षसम् ।
अत ऊर्ध्वं ततो ब्रह्मन्किमकुर्वत पाण्डवाः ॥ १-१७९-१ (८१०६)
वैशंपायन उवाच। १-१७९-२क्ष् (१०२९)
तत्रैव न्यवसन्राजन्निहत्य बकराक्षसम् ।
अधीयानाः परं ब्रह्म ब्राह्मणस्य निवेशने ॥ १-१७९-२ (८१०७)
ततः कतिपयाहस्य ब्राह्मणः संशितव्रतः ।
प्रतिश्रयार्थी तद्वेश्म ब्राह्मणस्याजगाम ह ॥ १-१७९-३ (८१०८)
स म्यक् पूजयित्वा तं विप्रं विप्रर्षभस्तदा ।
ददौ प्रतिश्रयं तस्मै सदा सर्वातिथिव्रतः ॥ १-१७९-४ (८१०९)
ततस्ते पाण्डवाः सर्वे सह कुन्त्या नरर्षभाः ।
उपासाञ्चक्रिरे विप्रं कथयन्तं कथाः शुभाः ॥ १-१७९-५ (८११०)
कथयामास देशांश्च तीर्थानि सरितस्तथा ।
राज्ञश्च विविधाश्चर्यान्देशांश्चैव पुराणि च ॥ १-१७९-६ (८१११)
स तत्राकथयद्विप्रः कथान्ते जनमेजय ।
पञ्चालेष्वद्भुताकारं याज्ञसेन्याः स्वयंवरम् ॥ १-१७९-७ (८११२)
धृष्टद्युम्नस्य चोत्पत्तिमुत्पत्तिं च शिखण्डिनः ।
अयोनिजत्वं कृष्णाया द्रुपदस्य महामखे ॥ १-१७९-८ (८११३)

तदद्भुततमं श्रुत्वा लोके तस्य महात्मनः ।
विस्तरेणैव पप्रच्छुः कथां ते पुरुषर्षभाः ॥ १-१७९-९ (८११४)
पाण्डवा ऊचुः। १-१७९-१०क्ष् (१०३०)
कथं द्रुपदपुत्रस्य धृष्टद्युम्नस्य पावकात् ।
वेदीमध्याच्च कृष्णायाः संभवः कथमद्भुतः ॥ १-१७९-१० (८११५)
कथं द्रोणान्महेष्वासात्सर्वाण्यस्त्राण्यशिक्षत ।
'धृष्टद्युम्नो महेष्वासः कथं द्रोणस्य मृत्युदः।'
कथं विप्र सखायौ तौ भिन्नौ कस्य कृतेन वा ॥ १-१७९-११ (८११६)
वैशंपायन उवाच। १-१७९-१२क्ष् (१०३१)
एवं तैश्चोदितो राजन्स विप्रः पुरुषर्षभैः ।
कथयामास तत्सर्वं द्रौपदीसंभवं तदा ॥ ॥ १-१७९-१२ (८११७)

इति श्रीमन्महाभारते आदिपर्वणि चैत्ररथपर्वणि
ऊनाशीत्यधिकशततमोऽध्यायः ॥ १७९ ॥
Mahabharata - Adi Parva - Chapter Footnotes

१-१७९-७ याज्ञसेन्याः द्रौपद्याः ॥
७ ॥
ऊनाशीत्यधिकशततमोऽध्यायः ॥
१७९ ॥

---

अध्यय१८०
॥ श्रीः ॥
१.१८०. अध्यायः १८०

Mahabharata - Adi Parva - Chapter Topics
धृष्टद्युम्नाद्युत्पत्तिकथनार्थं द्रोणद्रुपदयोरुत्पत्तिकथनपूर्वकं
द्रुपदवृत्तान्तकथनम् ॥ १ ॥

Mahabharata - Adi Parva - Chapter Text

१-१८०-० (८११८)
ब्राह्मण उवाच। १-१८०-०क्ष् (१०३२)
गङ्गाद्वारं प्रति महान्बभूवर्षिर्महातपाः ।
भरद्वाजो महाप्राज्ञः सततं संशितव्रतः ॥ १-१८०-१ (८११९)
सोऽभिषेक्तुं गतो गङ्गां पूर्वमेवागतां सतीम् ।
ददर्शाप्सरसं तत्र घृताचीमाप्लुतामृषिः ॥ १-१८०-२ (८१२०)

तस्या वायुर्नदीतीरे वसनं व्यहरत्तदा ।
अपकृष्टाम्बरां दृष्ट्वा तामृषिश्चकमे तदा ॥ १-१८०-३ (८१२१)
तस्यां संसक्तमनसः कौमारब्रह्मचारिणः ।
चिरस्य रेतश्चस्कन्द तदृषिर्द्रोण आदधे ॥ १-१८०-४ (८१२२)
ततः समभवद्द्रोणः कुमारस्तस्य धीमतः ।
अध्यगीष्ट स वेदांश्च वेदाङ्गानि च सर्वशः ॥ १-१८०-५ (८१२३)
भरद्वाजस्य तु सखा पृषतो नाम पार्थिवः ।
तस्यापि द्रुपदो नाम तदा समभवत्सुतः ॥ १-१८०-६ (८१२४)
स नित्यमाश्रमं गत्वा द्रोणेन सह पार्षतः ।
चिक्रीडाध्ययनं चैव चकार क्षत्रियर्षभः ॥ १-१८०-७ (८१२५)
ततस्तु पृषतेऽतीते स राजा द्रुपदोऽभवत् ।
द्रोणोऽपि रामं शुश्राव दित्सन्तं वसु सर्वशः ॥ १-१८०-८ (८१२६)
वनं तु प्रस्थितं रामं भरद्वाजसुतोऽब्रवीत् ।
आगतं वित्तकामं मां विद्धि द्रोणं द्विजोत्तम ॥ १-१८०-९ (८१२७)
राम उवाच। १-१८०-१०क्ष् (१०३३)
शरीरमात्रमेवाद्य मया समवशेषितम् ।
अस्त्राणि वा शरीरं वा ब्रह्मन्नेकतमं वृणु ॥ १-१८०-१० (८१२८)
द्रोण उवाच। १-१८०-११क्ष् (१०३४)
अस्त्राणि चैव सर्वाणि तेषां संहारमेव च ।
प्रयोगं चैव सर्वेषां दातुमर्हति मे भवान् ॥ १-१८०-११ (८१२९)
ब्राह्मण उवाच। १-१८०-१२क्ष् (१०३५)
तथेत्युक्त्वा ततस्तस्मै प्रददौ भृगुनन्दनः ।
प्रतिगृह्य तदा द्रोणः कृतकृत्योऽभवत्तदा ॥ १-१८०-१२ (८१३०)
संप्रहृष्टमना द्रोणो रामात्परमसम्मतम् ।
ब्रह्मास्त्रं समनुज्ञाप्य नरेष्वभ्यधिकोऽभवत् ॥ १-१८०-१३ (८१३१)
ततो द्रुपदमासाद्य भारद्वाजः प्रतापवान् ।
अब्रवीत्पुरुषव्याघ्रः सखायं विद्धि मामिति ॥ १-१८०-१४ (८१३२)
द्रुपद उवाच। १-१८०-१५क्ष् (१०३६)
नाश्रोत्रियः श्रोत्रियस्य नारथी रथिनः सखा ।
नाराजा पार्थिवस्यापि सखिपूर्वं किमिष्यते ॥ १-१८०-१५ (८१३३)
ब्राह्मण उवाच। १-१८०-१६क्ष् (१०३७)
स विनिश्चित्य मनसा पाञ्चाल्यं प्रति बुद्धिमान् ।
जगाम कुरुमुख्यानां नगरं नागसाह्वयम् ॥ १-१८०-१६ (८१३४)
तस्मै पौत्रान्समादाय वसूनि विविधानि च ।
प्राप्ताय प्रददौ भीष्मः शिष्यान्द्रोणाय धीमते ॥ १-१८०-१७ (८१३५)
द्रोणः शिष्यांस्ततः पार्थानिदं वचनमब्रवीत् ।

समानीय तु ताञ्शिष्यान्द्रुपदस्यासुखाय वै ॥१-१८०-१८ (८१३६)
आचार्यवेतनं किंचिद्धृदि यद्वर्तते मम ।
कृतास्त्रैस्तत्प्रदेयं स्यात्तदृतं वदतानघाः ।
सोऽर्जुनप्रमुखैरुक्तस्तथाऽस्त्विति गुरुस्तदा ॥ १-१८०-१९ (८१३७)
यदा च पाण्डवाः सर्वे कृतास्त्राः कृतनिश्चयाः ।
ततो द्रोणोऽब्रवीद्भूयो वेतनार्थमिदं वचः ॥१-१८०-२० (८१३८)
पार्षतो द्रुपदो नाम छत्रवत्यां नरेश्वरः ।
तस्मादाकृष्य तद्राज्यं मम शीघ्रं प्रदीयताम् ॥१-१८०-२१ (८१३९)
ग्धार्तराष्ट्राश्च ते भीताः पाञ्चालान्पाण्डवादयः ।
धार्तराष्ट्रैश्च सहिताः पुनर्द्रोणेन चोदिताः ॥१-१८०-२२ (८१४०)
यज्ञसेनेन संगम्य कर्णदुर्योधनादयः ।
निर्जिताः संन्यवर्तन्त तथा ते क्षत्रियर्षभाः ॥' १-१८०-२३ (८१४१)
ततः पाण्डुसुताः पञ्च निर्जित्य द्रुपदं युधि ।
द्रोणाय दर्शयामासुर्बद्ध्वा ससचिवं तदा ॥१-१८०-२४ (८१४२)
ग्महेन्द्र इव दुर्धर्षो महेन्द्र इव दानवम् ।
महेन्द्रपुत्रः पाञ्चालं जितवानर्जुनस्तदा ॥१-१८०-२५ (८१४३)
तद्दृष्ट्वा तु महावीर्यं फल्गुनस्य महौजसः ।
व्यस्मयन्त जनाः सर्वे यज्ञसेनस्य बान्धवाः। १-१८०-२६ (८१४४)
द्रोण उवाच। १-१८०-२७क्ष् (१०३८)
प्रार्थयामि त्वया सख्यं पुनरेव नराधिप ।
अराजा किल नो राज्ञः सखा भवितुमर्हति ॥१-१८०-२७ (८१४५)
अतः प्रयतितं राज्ये यज्ञसेन त्वया सह ।
राजाऽसि दक्षिणे कूले भागीरथ्याहमुत्तरे ॥१-१८०-२८ (८१४६)
ब्राह्मण उवाच। १-१८०-२९क्ष् (१०३९)
एवमुक्तो हि पाञ्चाल्यो भारद्वाजेन धीमता ।
उवाचास्त्रविदां श्रेष्ठं द्रोणं ब्राह्मणसत्तमम् ॥१-१८०-२९ (८१४७)
एवं भवतु भद्रं ते भारद्वाज महामते ।
सख्यं तदेव भवतु शश्वद्यदभिमन्यसे ॥१-१८०-३० (८१४८)
एवमन्योन्यमुक्त्वा तौ कृत्वा सख्यमनुत्तमम् ।
जग्मतुर्द्रोणपाञ्चाल्यौ यथागतमरिन्दमौ ॥१-१८०-३१ (८१४९)
असत्कारः स तु महान्मुहूर्तमपि तस्य तु ।
नापैति हृदयाद्राज्ञो दुर्मनाः स कृशोऽभवत् ॥ ॥१-१८०-३२ (८१५०)

इति श्रीमन्महाभारते आदिपर्वणि चैत्ररथपर्वणि
अशीत्यधिकशततमोऽध्यायः ॥१८० ॥

Mahabharata - Adi Parva - Chapter Footnotes

१-१८०-१० एकतममेकतरम् ॥
१-१८०-१३ समनुज्ञाप्य निशम्य ।प्राप्येत्यपि पठन्ति ॥
१-१८०-२१ छत्रवत्यामहिच्छत्रे ॥
१-१८०-२८ भागीरथ्याहमिति संधिरार्षः ॥
अशीत्यधिकशततमोऽध्यायः ॥
१८० ॥

---

अध्यय१८१
॥ श्रीः ॥
१.१८१. अध्यायः १८१

Mahabharata - Adi Parva - Chapter Topics
द्रोणहन्तृपुत्रोत्पादनेच्छया याजकान्वेषणार्थमतटो द्रुपदस्य
उपयाजवचनेन याजसमीपगमनम् ॥ १ ॥
पुत्रार्थं यज्ञे आरब्धे
अग्निकुण्डाद्धृष्टद्युम्नस्योत्पत्तिस्तच्चरितमाकाशवाणी च ॥ २ ॥
पाञ्चाल्या उत्पत्तिः ॥ ३ ॥
तयोर्नामकरणम् ॥ ४ ॥
द्रोणेन धृष्टद्युम्नस्यास्त्रशिक्षणम् ॥ ५ ॥

Mahabharata - Adi Parva - Chapter Text

१-१८१-० (८१५१)
ब्राह्मण उवाच। १-१८१-०क्ष् (१०४०)
अमर्षी द्रुपदो राजा कर्मसिद्धान्द्विजर्षभान् ।
अन्विच्छन्परिचक्राम ब्राह्मणावसथान्बहून् ॥ १-१८१-१ (८१५२)
पुत्रजन्म परीप्सन्वै शोकोपहतचेतनः ।
ग्द्रोणेन वैरं द्रुपदो न सुष्वाप स्मरन्सदा।'
नास्ति श्रेष्ठमपत्यं म इति नित्यमचिन्तयत् ॥ १-१८१-२ (८१५३)
जातान्पुत्रान्स निर्वेदाद्धिग्बन्धूनिति चाब्रवीत् ।
निःश्वासपरमश्चासीद्द्रोणं प्रतिचिकीर्षया ॥ १-१८१-३ (८१५४)
प्रभावं विनयं शिक्षां द्रोणस्य चरितानि च ।
क्षात्रेण च बलेनास्य चिन्तयन्नाध्यगच्छत ॥ १-१८१-४ (८१५५)
प्रतिकर्तुं नृपश्रेष्ठो यतमानोऽपि भारत ।
अभितः सोऽथ कल्माषीं गङ्गाकूले परिभ्रमन् ॥ १-१८१-५ (८१५६)
ब्राह्मणावसथं पुम्यमाससाद महीपतिः ।

तत्र नास्नातकः कश्चिन्न चासीदव्रती द्विजः ॥१-१८१-६ (८१५७)
अधीयानौ महाभागौ सोऽपश्यत्संशितव्रतौ ।
याजोपयाजौ ब्रह्मर्षी शाम्यन्तौ परमेष्ठिनौ ॥१-१८१-७ (८१५८)
संहिताध्ययने युक्तौ गोत्रतश्चापि काश्यपौ ।
तारणेयौ युक्तरूपौ ब्राह्मणावृषिसत्तमौ ॥१-१८१-८ (८१५९)
स तावामन्त्रयामास सर्वकामैरतन्द्रितः ।
बुद्ध्वा बलं तयोस्तत्र कनीयांसमुपह्वरे ॥१-१८१-९ (८१६०)
प्रपेदे च्छन्दयन्कामैरुपयाजं धृतव्रतम् ।
पादशुश्रूषणे युक्तः प्रियवाक्सर्वकामदः ॥१-१८१-१० (८१६१)
अर्चयित्वा यथान्यायमुपयाजमुवाच सः ।
येन मे कर्मणा ब्रह्मन्पुत्रः स्याद्द्रोणमृत्यवे ॥१-१८१-११ (८१६२)
ग्अर्जुनस्य भवेद्भार्या भवेद्या वरवर्णिनी।'
उपयाज कृते तस्मिन् गवां दाताऽस्मि तेऽर्बुदं ॥ १-१८१-१२ (८१६३)
यद्वा तेऽन्यद्द्विजश्रेष्ठ मनसः सुप्रियं भवेत् ।
सर्वं तत्ते प्रदाताऽहं न हि मेऽत्रास्ति संशयः ॥१-१८१-१३ (८१६४)
इत्युक्तो नाहमित्येवं तमृषिः प्रत्यभाषत ।
आराधयिष्यन्द्रुपदः स तं पर्यचरत्पुनः ॥१-१८१-१४ (८१६५)
ततः संवत्सरस्यान्ते द्रुपदं स द्विजोत्तमः ।
उपयाजोऽब्रवीत्काले राजन्मधुरया गिरा ॥१-१८१-१५ (८१६६)
ज्येष्ठो भ्राता ममागृह्णाद्विचरन् गहने वने ।
अपरिज्ञातशौचायां भूमौ निपतितं फलम् ॥१-१८१-१६ (८१६७)
तदपश्यमहं भ्रातुरसाम्प्रतमनुव्रजन् ।
विमर्शं संकरादाने नायं कुर्यात्कदाचन ॥१-१८१-१७ (८१६८)
दृष्ट्वा फलस्य नापश्यद्दोषान्पापानुबन्धकान् ।
विविनक्ति न शौचं यः सोऽन्यत्रापि कथं भवेत् ॥१-१८१-१८ (८१६९)
संहिताध्ययनं कुर्वन्वसन्गुरुकुले च यः ।
भैक्षमुत्सृष्टमन्येषां भुङ्क्ते स्म च यदा तदा ॥१-१८१-१९ (८१७०)
कीर्तयन्गुणमन्नानामघृणी च पुनः पुनः ।
तं वै फलार्थिनं मन्ये भ्रातरं तर्कचक्षुषा ॥१-१८१-२० (८१७१)
तं वै गच्छस्व नृपते स त्वां संयाजयिष्यति ।
जुगुप्समानो नृपतिर्मनसेदं विचिन्तयन् ॥१-१८१-२१ (८१७२)
उपयाजवचः श्रुत्वा याजस्याश्रममभ्यगात् ।
अभिसम्पूज्य पूजार्हमथ याजमुवाच ह ॥१-१८१-२२ (८१७३)
अयुतानि ददान्यष्टौ गवां याजय मां विभो ।
द्रोणवैराभिसन्तप्तं प्रह्लादयितुमर्हसि ॥१-१८१-२३ (८१७४)
स हि ब्रह्मविदां श्रेष्ठो ब्रह्मास्त्रे चाप्यनुत्तमः ।

तस्माद्द्रोणः पराजैष्ट मां वै स सखिविग्रहे ॥१-१८१-२४ (८१७५)
क्षत्रियो नास्ति तस्यास्यां पृथिव्यां कश्चिदग्रणीः ।
कौरवाचार्यमुख्यस्य भारद्वाजस्य धीमतः ॥१-१८१-२५ (८१७६)
द्रोणस्य शरजालानि प्राणिदेहहराणि च ।
षडरत्नि धनुश्चास्य दृश्यते परमं महत् ॥१-१८१-२६ (८१७७)
स हि ब्राह्मणवेषेण क्षात्रं वेगमशंसयम् ।
प्रतिहन्ति महेष्वासो भारद्वाजो महामनाः ॥१-१८१-२७ (८१७८)
क्षत्रोच्छेदाय विहितो जामदग्न्य इवास्थितः ।
तस्य ह्यस्त्रबलं घोरमप्रधृष्यं नरैर्भुवि ॥१-१८१-२८ (८१७९)
ब्राह्मं सन्धारयंस्तेजो हुताहुतिरिवानलः ।
समेत्य स दहत्याजौ क्षात्रधर्मपुरःसरः ॥१-१८१-२९ (८१८०)
ब्रह्मक्षत्रे च विहिते ब्राह्मं तेजो विशिष्यते ।
सोऽहं क्षात्राद्बलाद्धीनो ब्राह्मं तेजः प्रपेदिवान् ॥१-१८१-३० (८१८१)
द्रोणाद्विशिष्टमासाद्य भवन्तं ब्रह्मवित्तमम् ।
द्रोणान्तकमहं पुत्रं लभेयं युधि दुर्जयम् ॥१-१८१-३१ (८१८२)
तत्कर्म कुरु मे मे याज वितराम्यर्बुदं गवाम् ।
तथेत्युक्त्वा तु तं याजो याज्यार्थमुपकल्पयत् ॥१-१८१-३२ (८१८३)
गुर्वर्थ इति चाकाममुपयाजमचोदयत् ।
याजो द्रोणविनाशाय प्रतिजज्ञे तथा च सः ॥१-१८१-३३ (८१८४)
ततस्तस्य नरेन्द्रस्य उपयाजो महातपाः ।
आचख्यौ कर्म वैतानं तदा पुत्रफलाय वै ॥१-१८१-३४ (८१८५)
स च पुत्रो महावीर्यो महातेजा महाबलः ।
इष्यते यद्विधो राजन्भविता ते तथाविधः ॥१-१८१-३५ (८१८६)
भारद्वाजस्य हन्तारं सोऽभिसन्धाय भूपतिः ।
आजह्वे तत्तथा सर्वं द्रुपदः कर्मसिद्धये ॥१-१८१-३६ (८१८७)
याजस्तु हवनस्यान्ते देवीमाज्ञापयत्तदा ।
प्रेहि मां राज्ञि पृषति मिथुनं त्वामुपस्थितम् ॥१-१८१-३७ (८१८८)
राज्ञ्युवाच।१-१८१-३८क्ष् (१०४१)
अवलिप्तं मुखं ब्रह्मन्दिव्यान्गन्धान्बिभर्मि च ।
सूतार्थे नोपलब्धाऽस्मि तिष्ठ याज मम प्रिये ॥१-१८१-३८ (८१८९)
याज उवाच।१-१८१-३९क्ष् (१०४२)
याजेन श्रपितं हव्यमुपयाजाभिमन्त्रितम् ।
कथं कामं न सन्दध्यात्सा त्वं विप्रेहि तिष्ठ वा ॥१-१८१-३९ (८१९०)
ब्राह्मण उवाच।१-१८१-४०क्ष् (१०४३)
एवमुक्त्वा तु याजेन हुते हविषि संस्कृते ।
उत्तस्थौ पावकात्तस्मात्कुमारो देवसन्निभिः ॥१-१८१-४० (८१९१)

ज्वालावर्णो घोररूपः किरीटी वर्म चोत्तमम् ।
बिभ्रत्सखड्गः सशरो धनुष्मान्विनदन्मुहुः ॥ १-१८१-४१ (८१९२)
सोऽध्यारोदद्रथवरं तेन च प्रययौ तदा ।
ततः प्रणेदुः पञ्चालाः प्रहृष्टाः साधुसाध्विति ॥ १-१८१-४२ (८१९३)
हर्षाविष्टांस्ततश्चैतान्नेयं सेहे वसुन्धरा ।
भयापहो राजपुत्रः पञ्चालानां यशस्करः ॥ १-१८१-४३ (८१९४)
राज्ञः शोकापहो जात एष द्रोणवधाय वै ।
इत्युवाच महद्भूतमदृश्यं खेचरं तदा ॥ १-१८१-४४ (८१९५)
कुमारी चापि पाञ्चाली वेदीमध्यात्समुत्थिता ।
सुभगा दर्शनीयाङ्गी स्वसितायतलोचना ॥ १-१८१-४५ (८१९६)
श्यामा पद्मपलाशाक्षी नीलकुञ्चितमूर्धजा ।
ताम्रतुङ्गनखी सुभ्रूश्चारुपीनपयोधरा ॥ १-१८१-४६ (८१९७)
मानुषं विग्रहं कृत्वा साक्षादमरवर्णिनी ।
नीलोत्पलसमो गन्धो यस्याः क्रोशात्प्रधावति ॥ १-१८१-४७ (८१९८)
या बिभर्ति परं रूपं यस्या नास्त्युपमा भुवि ।
देवदानवयक्षाणामीप्सितां देवरूपिणीम् ॥ १-१८१-४८ (८१९९)
गसदृशी पाण्डुपुत्रस्य अर्जुनस्येति भारत ।
ऊचुः प्रहृष्टमनसो राजभक्तिपुरस्कृताः ॥' १-१८१-४९ (८२००)
तां चापि जातां सुश्रोणीं वागुवाचाशरीरिणी ।
सर्वयोषिद्वरा कृष्णा निनीषुः क्षत्रियान्क्षयम् ॥ १-१८१-५० (८२०१)
सुरकार्यमियं काले करिष्यति सुमध्यमा ।
अस्या हेतोः कौरवाणां महदुत्पत्स्यते भयम् ॥ १-१८१-५१ (८२०२)
तच्छ्रुत्वा सर्वपञ्चालाः प्रणेदुः सिंहसङ्घवत् ।
न चैतान्हर्षसम्पूर्णानियं सेहे वसुन्धरा ॥ १-१८१-५२ (८२०३)
गपाञ्चालराजस्तां दृष्ट्वा हर्षादश्रूण्यवर्तयत् ।
परिष्वज्य च तां कृष्णां स्नुषा पाण्डोरिति ब्रुवन् ।
अङ्कमारोप्य पाञ्चालीं राजा हर्षमवाप सः ॥' १-१८१-५३ (८२०४)
तौ दृष्ट्वा पार्षती याजं प्रपेदे वै सुतार्थिनी ।
न वै मदन्यां जननीं जानीयातामिमाविति ॥ १-१८१-५४ (८२०५)
तथेत्युवाच तां याजो राज्ञः प्रियचिकीर्षया ।
तयोश्च नामनी चक्रुर्द्विजाः सम्पूर्णमानसाः ॥ १-१८१-५५ (८२०६)
धृष्टत्वादत्यमर्षित्वाद्द्युम्नाद्युत्संभवादपि ।
धृष्टद्युम्नः कुमारोऽयं द्रुपदस्य भवत्विति ॥ १-१८१-५६ (८२०७)
कृष्णेत्येवाब्रुवकन्कृष्णां कृष्णा ऽभूत्सा हि वर्णतः ।
तथा तन्मिथुनं जज्ञे द्रुपदस्य महामखे ॥ १-१८१-५७ (८२०८)
गवैदिकाध्ययने पारं धृष्टद्युम्नो गतः परम् ॥' १-१८१-५८ (८२०९)

धृष्टद्युम्नं तु पाञ्चाल्यमानीय स्वं निवेशनम् ।
उपाकरोदस्त्रहेतोर्भारद्वाजः प्रतापवान् ॥ १-१८१-५९ (८२१०)
अमोक्षणीयं दैवं हि भावि मत्वा महामतिः ।
तथा तत्कृतवान्द्रोण आत्मकीर्त्यनुरक्षणात् ॥ ॥ १-१८१-६० (८२११)

इति श्रीमन्महाभारते आदिपर्वणि चैत्ररथपर्वमि
एकाशीत्यधिकशततमोऽध्यायः ॥ १८१ ॥
Mahabharata - Adi Parva - Chapter Footnotes

१-१८१-७ परमे ब्रह्मणि वेदे वा स्थातुं शीलं ययोस्तौ ॥
१-१८१-८ तारणेयौ कुमारीप्रभवौ सूर्यभक्तौ वा ॥
१-१८१-१७ संकरादाने दोषयुक्तवस्त्वादाने ॥
१-१८१-१९ उत्सृष्टं उच्छिष्टम् ॥
१-१८१-२० अघृणी लज्जाहीनः ॥
१-१८१-२१ इदं याजचरितं जुगुप्समानो निन्दन् । विचिन्तयन् स्वकार्यं चेति शेषः ॥
१-१८१-२३ अष्टावयुतानि ददानि । रिक्तपाणिर्न पश्येत राजानं देवतां गुरुमिति स्मृतेरुपायनमात्रमेतत् न दक्षिणा अर्बुदप्रतिज्ञानात् ॥
१-१८१-२४ पराजैष्ट पराजितवान् ॥
१-१८१-२५ तस्य तस्मात् । अग्रणीः श्रेष्ठः ॥
१-१८१-५६ धृष्टत्वात् प्रगल्भत्वात् । अत्यन्तममर्षः शत्रुत्कर्षासहिष्णुत्वं तद्वत्त्वात्। द्युम्नं वित्तं तच्च राज्ञां बलमेव कवचकुण्डलादिकं वा सहोत्पन्नं तदादिर्यस्य शस्त्रास्त्रशौर्योत्साहादेस्तद्द्युम्नादि तस्योत्संभवादुत्कर्षेणोत्पत्तेश्च ॥
एकाशीत्यधिकशततमोऽध्यायः ॥
१८१ ॥

---

अध्यय१८२
॥ श्रीः ॥
१.१८२. अध्यायः १८२

Mahabharata - Adi Parva - Chapter Topics
जनवार्तया दुर्योधनेन पाण्डवानां दाहं, स्वपुरोहितवचनेन नाशराहित्यं च, ज्ञातवता तेषां जीवने सन्दिहानेन द्रुपदेन उद्घोषितस्य पुत्रीस्वयंवरस्य कुन्तींप्रति ब्राह्मणेन कथनम् ॥ १ ॥
युष्मासु तत्रागतेष्वीश्वरेच्छया त्वत्पुत्राणामन्यतमं पाञ्चाली

वृणुयादपीत्युक्तवता ब्राह्मणेन सह पाण्डवानां पाञ्चालनगरं प्रति गमनम् ॥ २ ॥

Mahabharata - Adi Parva - Chapter Text

१-१८२-० (८२१२)
ग्ब्राह्मण उवाच। १-१८२-०क्ष् (१०४४)
श्रुत्वा जतुगृहे वृत्तं ब्राह्मणाः संशितव्रताः ।
पाञ्चालराजं द्रुपदमिदं वचनमब्रुवन् ॥ १-१८२-१ (८२१३)
धार्तराष्ट्राः सहामात्या मन्त्रयित्वा परस्परम् ।
पाण्डवानां विनाशाय मतिं चक्रुः सुदुष्कराम् ॥ १-१८२-२ (८२१४)
दुर्योधनेन प्रहितः पुरोचन इति श्रुतः ।
वारणावतमासाद्य कृत्वा जतुगृहं महत् ॥ १-१८२-३ (८२१५)
तस्मिन्गृहे सुविस्रब्धान्पाण्डवान्पृथया सह ।
अर्धरात्रे महाराज दग्धवानतिदुर्मतिः ॥ १-१८२-४ (८२१६)
तेनाग्निना स्वयं चापि दग्धः क्षुद्रो नृशंसवत् ।
एतच्छ्रुत्वा सुसंहृष्टो धृतराष्ट्रः सबान्धवः ॥ १-१८२-५ (८२१७)
अल्पशोकः प्रहृष्टात्मा शशास विदुरं तदा ।
पाण्डवानां महाप्राज्ञ कुरु पिण्डोदकक्रियाम् ॥ १-१८२-६ (८२१८)
अहो विधिवशादेव गतास्ते यमसादनम् ।
इत्युक्त्वा प्रारदत्तत्र धृतराष्ट्रः सबान्धवः ॥ १-१८२-७ (८२१९)
श्रुत्वा भीष्मेण विदुरः कृतवानौर्ध्वदेहिकम् ।
पाण्डवानां विनाशाय कृतं कर्म दुरात्मना ॥ १-१८२-८ (८२२०)
एतत्कार्यस्य कर्ता तु न दृष्टो न श्रुतः पुरा ।
एतद्वृत्तं महाभाग पाण्डवान्प्रति नः श्रुतम् ॥ १-१८२-९ (८२२१)
ब्राह्मण उवाच। १-१८२-१०क्ष् (१०४५)
श्रुत्वा तु वचनं तेषां यज्ञसेनो महामतिः ।
यथा तज्जनकः शोचेदौरसस्य विनाशे ॥ १-१८२-१० (८२२२)
तथाऽतप्यत वै राजा पाण्डवानां विनाशने ।
समाहूय प्रकृतयः सहिताः सर्वनागरैः ॥ १-१८२-११ (८२२३)
कारुण्यादेव पाञ्चालः प्रोवाचेदं वचस्तदा। १-१८२-१२ (८२२४)
द्रुपद उवाच ।
अहो रूपमहो धैर्यमहो वीर्यमहो बलम् ॥ १-१८२-१२क्ष् (१०४६)
चिन्तयामि दिवारात्रमर्जुनं प्रति बान्धवाः ।
भ्रातृभिः सहितो मात्रा सोऽदह्यत हुताशने ॥ १-१८२-१३ (८२२५)
किमाश्चर्यमितो लोके कालो हि दुरतिक्रमः ।

मिथ्याप्रतिज्ञो लोकेषु किं करिष्यामि सांप्रतं ॥ १-१८२-१४ (८२२६)
अन्तर्गतेन दुःखेन दह्यमानो दिवानिशम् ।
याजोपयाजौ सत्कृत्य याचितौ तौ मयाऽनघौ ॥ १-१८२-१५ (८२२७)
भारद्वाजस्य हन्तारं देवीं चाप्यर्जुनस्य वै ।
लोकस्तद्वेद यच्चापि तथा याजेन मे श्रुतम् ॥ १-१८२-१६ (८२२८)
याजेन पुत्रकामीयं हुत्वा चोत्पादिताविमौ ।
धृष्टद्युम्नश्च कृष्णा च मम तुष्टिकरावुभौ ॥ १-१८२-१७ (८२२९)
किं करिष्यामि ते नष्टाः पाण्डवाः पृथया सह। १-१८२-१८ (८२३०)
ब्राह्मण उवाच ।
इत्येवमुक्त्वा पाञ्चालः शुशोच परमातुरः ॥ १-१८२-१८क्ष् (१०४७)
दृष्ट्वा शोचन्तमत्यर्थं पाञ्चालमिदमब्रवीत् ।
पुरोधाः सत्वसंपन्नः सम्यग्विद्याविशेषवित् ॥ १-१८२-१९ (८२३१)
वृद्धानुशासने सक्ताः पाण्डवा धर्मचारिणः ।
तादृशा न विनश्यन्ति नैव यान्ति पराभवम् ॥ १-१८२-२० (८२३२)
मया दृष्टमिदं सत्यं शृणु त्वं मनुजाधिप ।
ब्राह्मणैः कथितं सत्यं वेदेषु च मया श्रुतम् ॥ १-१८२-२१ (८२३३)
बृहस्पतिमतेनाथ पौलोम्या च पुरा श्रुतम् ।
नष्ट इन्द्रो बिसग्रन्थ्यामुपश्रुत्या हि दर्शितः ॥ १-१८२-२२ (८२३४)
उपश्रुतिर्महाराज पाण्डवार्थे मया श्रुता ।
यत्रकुत्रापि जीवन्ति पाण्डवास्ते न संशयः ॥ १-१८२-२३ (८२३५)
मया दृष्टानि लिङ्गानि इहैवैष्यन्ति पाण्डवाः ।
यन्निमित्तमिहायान्ति तच्छ्रुणुष्व नराधिप ॥ १-१८२-२४ (८२३६)
स्वयंवरः क्षत्रियाणां कन्यादाने प्रदर्शितः ।
स्वयंवरस्तु नगरे घुष्यतां राजसत्तम ॥ १-१८२-२५ (८२३७)
यत्र वा निवसन्तस्ते पाण्डवाः पृथया सह ।
दूरस्था वा समीपस्था स्वर्गस्था वाऽपि पाण्डवाः ॥ १-१८२-२६ (८२३८)
श्रुत्वा स्वयंवरं राजन्समेष्यन्ति न संशयः ।
तस्मात्स्वयंवरो राजन्घुष्यतां मा चिरं कृथाः ॥ १-१८२-२७ (८२३९)
ब्राह्मण उवाच। १-१८२-२८क्ष् (१०४८)
श्रुत्वा पुरोहितेनोक्तं पाञ्चालः प्रीतिमांस्तदा ।
घोषयामास नगरे द्रौपद्यास्तु स्वयंवरम् ॥ १-१८२-२८ (८२४०)
पुष्यमासे तु रोहिण्यां शुक्लपक्षे शुभे तिथौ ।
दिवसैः पञ्चसप्तत्या भविष्यति न संशयः ॥ १-१८२-२९ (८२४१)
देवगन्धर्वयक्षाश्च ऋषयश्च तपोधनाः ।
स्वयंवरं द्रष्टुकामा गच्छन्त्येव न संशयः ॥ १-१८२-३० (८२४२)
तव पुत्रा महात्मानो दर्शनीयो विशेषतः ।

यदृच्छया सा पाञ्चाली गच्छेद्वान्यतमं पतिम् ॥१-१८२-३१ (८२४३)
को हि जानाति लोकेषु प्रजापतिमतं शुभण् ।
तस्मात्सपुत्रा गच्छेथा यदि ब्राह्मणि रोचते ॥१-१८२-३२ (८२४४)
नित्यकालं सुभिक्षास्ते पाञ्चालास्तु तपोधने ।
यज्ञसेनस्तु राजा स ब्रह्मण्यः सत्यसङ्गरः ॥१-१८२-३३ (८२४५)
ब्रह्मण्या नागराः सर्वे ब्राह्मणाश्चातिथिप्रियाः ।
नित्यकालं प्रदास्यन्ति आमन्त्रणमयाचितम् ॥१-१८२-३४ (८२४६)
अहं च तत्र गच्छामि ममैभिः सह शिष्यकैः ।
एकसार्थाः प्रयाताः स्मो ब्राह्मण्या यदि रोचते ॥१-१८२-३५ (८२४७)
एतावदुक्त्वा वचनं ब्राह्मणो विरराम ह ॥ ॥१-१८२-३६क्ष् (१०४९)

इति श्रीमन्महाभारते आदिपर्वणि चैत्ररथपर्वणि
द्व्यशीत्यधिकशततमोऽध्यायः ॥१८२ ॥
Mahabharata - Adi Parva - Chapter Footnotes

१-१८२-९ एतत्कार्यस्य एतादृशकार्यस्य ॥
१-१८२-२१ दृष्टं ऊहितम् ॥
द्व्यशीत्यधिकशततमोऽध्यायः ॥
१८२ ॥

---

अध्यय१८३
॥ श्रीः ॥
१.१८३. अध्यायः १८३

Mahabharata - Adi Parva - Chapter Topics
पाण्डवानां द्रुपदनगरप्रथानम् ॥१ ॥

Mahabharata - Adi Parva - Chapter Text

१-१८३-० (८२४८)
वैशंपायन उवाच।१-१८३-०क्ष् (१०५०)
एतच्छ्रुत्वा ततः सर्वे पाण्डवा भरतर्षभ ।
मनसा द्रौपदीं जग्मुरनङ्गशरपीडिताः ॥' १-१८३-१ (८२४९)
ततस्तां रजनीं राजञ्छल्यविद्धा इवाभवन् ।
सर्वे चास्वस्थमनसो बभूवुस्ते महाबलाः ॥१-१८३-२ (८२५०)
ततः कुन्ती सुतान्दृष्ट्वा सर्वांस्तद्गतचेतसः ।
युधिष्ठिरमुवाचेदं वचनं सत्यवादिनी ॥१-१८३-३ (८२५१)

चिररात्रोषिताः स्मेह ब्राह्मणस्य निवेशने ।
रममाणाः पुरे रम्ये लब्धभैक्षा महात्मनः ॥ १-१८३-४ (८२५२)
यानीह रमणीयानि वनान्युपवनानि च ।
सर्वाणि तानि दृष्टानि पुनःपुनररिन्दम ॥ १-१८३-५ (८२५३)
पुनर्दृष्टानि तानीह प्रीणयन्ति न नस्तथा ।
भैक्षं च न तथा वीर लभ्यते कुरुनन्दन ॥ १-१८३-६ (८२५४)
ते वयं साधु पञ्चालान्गच्छाम यदि मन्यसे ।
अपूर्वदर्शनं वीर रमणीयं भविष्यति ॥ १-१८३-७ (८२५५)
सुभिक्षाश्चैव पञ्चालाः श्रूयन्ते शत्रुकर्शन ।
यज्ञसेनश्च राजाऽसौ ब्रह्मण्य इति सुश्रुम ॥ १-१८३-८ (८२५६)
एकत्र चिरवासश्च क्षमो न च मतो मम ।
ते तत्र साधु गच्छामो यदि त्वं पुत्र मन्यसे ॥ १-१८३-९ (८२५७)
युधिष्ठिर उवाच। १-१८३-१०क्ष् (१०५१)
भवत्या यन्मतं कार्यं तदस्माकं परं हितम् ।
अनुजांस्तु न जानामि गच्छेयुर्नेति वा पुनः ॥ १-१८३-१० (८२५८)
वैशंपायन उवाच। १-१८३-११क्ष् (१०५२)
ततः कुन्ती भीमसेनमर्जुनं यमजौ तथा ।
उवाच गमनं ते च तथेत्येवाब्रुवंस्तदा ॥ १-१८३-११ (८२५९)
तत आमन्त्र्य तं विप्रं कुन्ती राजसुतैः सह ।
प्रतस्थे नगरीं रम्यां द्रुपदस्य महात्मनः ॥ ॥ १-१८३-१२ (८२६०)

इति श्रीमन्महाभारते आदिपर्वणि चैत्ररथपर्वणि
त्र्यशीत्यधिकशततमोऽध्यायः ॥ १८३ ॥

---

अध्यय१८४
॥ श्रीः ॥
१.१८४. अध्यायः १८४

Mahabharata - Adi Parva - Chapter Topics
प्रस्थानसमयागते व्यासेन पाण्डवान्प्रति
द्रौपदीवृत्तान्तकथनपूर्वकं भविष्यद्द्रौपदीलाभकथनम् ॥ १ ॥
व्यासस्य प्रतिनिवर्तनम् ॥ २ ॥

Mahabharata - Adi Parva - Chapter Text

१-१८४-० (८२६१)
वैशंपायन उवाच। १-१८४-०क्ष् (१०५३)

वसत्सु तेषु प्रच्छन्नं पाण्डवेषु महात्मसु ।
आजगामाथ तान्द्रष्टुं व्यासः सत्यवतीसुतः ॥ १-१८४-१ (८२६२)
तमागतमभिप्रेक्ष्य प्रत्युद्गम्य परन्तपाः ।
प्रणिपत्याभिवाद्यैनं तस्थुः प्राञ्जलयस्तदा ॥ १-१८४-२ (८२६३)
समनुज्ञाप्य तान्सर्वानासीनान्मुनिरब्रवीत् ।
प्रच्छन्नं पूजितः पार्थैः प्रीतिपूर्वमिदं वचः ॥ १-१८४-३ (८२६४)
अपि धर्मेण वर्तध्वं शास्त्रेण च परन्तपाः ।
अपि विप्रेषु पूजा वः पूजार्हेषु न हीयते ॥ १-१८४-४ (८२६५)
अथ धर्मार्थवद्वाक्यमुक्त्वा स भगवानृषिः ।
विचित्राश्च कथास्तास्ताः पुनरेवेदमब्रवीत् ॥ १-१८४-५ (८२६६)
आसीत्तपोवने काचिदृषेः कन्या महात्मनः ।
विलग्नमध्या सुश्रोणी सुभ्रूः सर्वगुणान्विता ॥ १-१८४-६ (८२६७)
कर्मभिः स्वकृतैः सा तु दुर्भगा समपद्यत ।
नाध्यगच्छत्पतिं सा तु कन्या रूपवती सती ॥ १-१८४-७ (८२६८)
तपस्तप्तुमथारेभे पत्यर्थमसुखा ततः ।
तोषयामास तपसा सा किलोग्रेण शङ्करम् ॥ १-१८४-८ (८२६९)
तस्याः स भगवांस्तुष्टस्तामुवाच यशस्विनीम् ।
वरं वरय भद्रं ते वरदोऽस्मीति शङ्करः ॥ १-१८४-९ (८२७०)
अथेश्वरमुवाचेदमात्मनः सा वचो हितम् ।
पतिं सर्वगुणोपेतमिच्छामीति पुनःपुनः ॥ १-१८४-१० (८२७१)
तामथ प्रत्युवाचेदमीशानो वदतां वरः ।
पञ्च ते पतयो भद्रे भविष्यन्तीति भारताः ॥ १-१८४-११ (८२७२)
एवमुक्ता ततः कन्या देवं वरदमब्रवीत् ।
एकमिच्छाम्यहं देव त्वत्प्रसादात्पतिं प्रभो ॥ १-१८४-१२ (८२७३)
पुनरेवाब्रवीद्देव इदं वचनमुत्तमम् ।
पञ्चकृत्वस्त्वया ह्युक्तः पतिं देहीत्यहं पुनः ॥ १-१८४-१३ (८२७४)
देहमन्यं गतायास्ते यथोक्तं तद्भविष्यति। १-१८४-१४ (८२७५)
व्यास उवाच ।
द्रुपदस्य कुले जज्ञे सा कन्या देवरूपिणी ॥ १-१८४-१४क्ष् (१०५४)
निर्दिष्टा भवतां पत्नी कृष्णा पार्षत्यनिन्दिता ।
पाञ्चालनगरे तस्मान्निवसध्वं महाबलाः ।
सुखिनस्तामनुप्राप्य भविष्यथ न संशयः ॥ १-१८४-१५ (८२७६)
एवमुक्त्वा महाभागः पाण्डवान्स पितामहः ।
पार्थानामन्त्र्य कुन्तीं च प्रातिष्ठत महातपाः ॥ ॥ १-१८४-१६ (८२७७)

इति श्रीमन्महाभारते आदिपर्वणि चैत्ररथपर्वणि

चतुरशीत्यधिकशततमोऽध्यायः ॥ १८४ ॥
Mahabharata - Adi Parva - Chapter Footnotes

१-१८४-६ विलग्नमध्या विलग्नं समदेशे शयने भूतलास्पृष्टं
मध्यं शरीरमध्यभागो यस्याः सा कृशमध्येति यावत् ॥
चतुरशीत्यधिकशततमोऽध्यायः ॥
१८४ ॥

---

अध्यय१८५
॥ श्रीः ॥
१.१८५. अध्यायः १८५

Mahabharata - Adi Parva - Chapter Topics
पाञ्चालनगरं गच्छतां पाण्डवानां मार्गे ब्राह्मणैः सह संवादः ॥ १ ॥

Mahabharata - Adi Parva - Chapter Text

१-१८५-० (८२७८)
वैशंपायन उवाच। १-१८५-०क्ष् (१०५५)
गते भगवति व्यासे पाण्डवा हृष्टमानसाः ।
ग्ते प्रयाता नरव्याघ्रा मात्रा सह परन्तपाः ॥ १-१८५-१ (८२७९)
ब्राह्मणान्गच्छतो पश्यन्पाञ्चालान्सगणान्पथि ।
अथ ते ब्राह्मणा ऊचुः पाण्डवान्ब्रह्मचारिणः ॥ १-१८५-२ (८२८०)
क्व भवन्तो गमिष्यन्ति कुतो वाऽऽगच्छथेति ह। १-१८५-३ (८२८१)
युधिष्ठिर उवाच ।
प्रयातानेकचक्रायाः सोदर्यान्देवदर्शिनः ॥ १-१८४-३क्ष् (१०५६)
भवन्तो नोऽभिजानन्तु सहितान्ब्रह्मचारिणः ।
गच्छतो नस्तु पाञ्चालान्द्रुपदस्य पुरं प्रति ॥ १-१८५-४ (८२८२)
इच्छामो भवतो ज्ञातुं परं कौतूहलं हि नः ॥ १-१८५-५ (८२८३)
ब्राह्मणा ऊचुः। १-१८५-६क्ष् (१०५७)
एते सार्धं प्रयाताः स्मो वयमप्यत्र गामिनः ।
तत्राप्यद्भुतसङ्काश उत्सवो भविता महान् ॥ १-१८५-६ (८२८४)
ततस्तु यज्ञसेनस्य द्रुपदस्य महात्मनः ।
यासावयोनिजा कन्या स्थास्यते सा स्वयंवरे ॥ १-१८५-७ (८२८५)
दर्शनीयाऽनवद्याङ्गी सुकुमारी यशस्विनी ।
धृष्टद्युम्नस्य भगिनी द्रोणशत्रोः प्रतापिनः ॥ १-१८५-८ (८२८६)
जातो यः पावकाच्छूरः सशरः सशरासनः ।

सुसमिद्धान्महाभागः सोमकानां महारथः ॥१-१८५-९ (८२८७)
यस्मिन्संजायमाने हि वागुवाचाशरीरिणी ।
एष मृत्युश्च शिष्यश्च भारद्वाजस्य जायते ॥१-१८५-१० (८२८८)
स्वसा तस्य तु वेद्याश्च जाता तस्मिन्महामखे ।
स्त्रीरत्नमसितापाङ्गी श्यामा नीलोत्पलद्युतिः ॥१-१८५-११ (८२८९)
तां यज्ञसेनस्य सुतां द्रौपदीं परमां स्त्रियम् ।
गच्छामस्तत्र वै द्रष्टुं तं चैवास्याः स्वयंवरम् ॥१-१८५-१२ (८२९०)
राजानो राजपुत्राश्च यज्वानो भूरिदक्षिणाः ।
स्वाध्यायवन्तः शुचयो महात्मानो धृतव्रताः ॥१-१८५-१३ (८२९१)
तरुणा दर्शनीयाश्च बलवन्तो दुरासदाः ।
महारथाः कृतास्त्राश्च समेष्यन्तीह भूमिपाः ॥१-१८५-१४ (८२९२)
ते तत्र विविधं दानं विजयार्थं नरेश्वराः ।
प्रदास्यन्ति धनं गाश्च भक्ष्यभोज्यानि सर्वशः ॥१-१८५-१५ (८२९३)
प्रतिलप्स्यामहे सर्वं दृष्ट्वा कृष्णां स्वयंवरे ।
यं च सा क्षत्रियं रङ्गे कुमारी वरयिष्यति ॥१-१८५-१६ (८२९४)
तदा वैतालिकाश्चैव नर्तकाः सूतमागधाः ।
निबोधकाश्च देशेभ्यः समेष्यन्ति महाबलाः ॥१-१८५-१७ (८२९५)
एतत्कौतूहलं तत्र दृष्ट्वा वै प्रतिगृह्य च ।
सहास्माभिर्महात्मानो मात्रा सह निवत्स्यथ ॥१-१८५-१८ (८२९६)
दर्शनीयांश्च वः सर्वानेकरूपानवस्थितान् ।
समीक्ष्य कृष्मा वरयेत्संगत्यान्यतमं पतिम् ॥१-१८५-१९ (८२९७)
अयमेकश्च वो भ्राता दर्शनीयो महाभुजः ।
नियुध्यमानो विजयेत्संगत्य द्रविणं महत् ॥१-१८५-२० (८२९८)
युधिष्ठिर उवाच। १-१८५-२१क्ष् (१०५८)
परमं भो गमिष्यामो द्रष्टुं तत्र स्वयंवरम् ।
द्रौपदीं यज्ञसेनस्य कन्यां तस्यास्तथोत्सवम् ॥' ॥ १-१८५-२१ (८२९९)

इति श्रीमन्महाभारते आदिपर्वणि चैत्ररथपर्वणि
पञ्चाशीत्यधिकशततमोऽध्यायः ॥१८५ ॥

---

अध्यय१८६
॥ श्रीः ॥
१.१८६. अध्यायः १८६

Mahabharata - Adi Parva - Chapter Topics
अर्धरात्रे पाण्डवानां गङ्गातीरगमनम् ॥१ ॥
तत्र स्त्रीभिः सह जलक्रीडां कुर्वता चित्ररथेन गन्धर्वेण सह

अर्जुनस्य युद्धम् ॥ २ ॥
आग्नेयास्त्रेण दग्धादधःपतितस्य तस्यार्जुनेन ग्रहणं ॥ ३ ॥
गन्धर्वपत्न्या प्रार्थितस्य युधिष्ठिरस्याज्ञया गन्धर्वमोचनम् ॥ ४ ॥
गन्धर्वप्रार्थनया आग्नेयास्त्रपरिवर्तनेन
तस्माद्गान्धर्वास्त्रग्रहणानुमोदनम् ॥ ५ ॥
गन्धर्वेण पाण्डवानां पुरोहितसंपादनोपदेशः ॥ ६ ॥

Mahabharata - Adi Parva - Chapter Text

१-१८६-० (८३००)
वैशंपायन उवाच। १-१८६-०क्ष् (१०५९)
ते प्रतस्थुः पुरस्कृत्य मातरं पुरुषर्षभाः ।
समैरुदङ्मुखैर्मार्गैर्यथोद्दिष्टं च भारत ॥ १-१८६-१ (८३०१)
अहोरात्रेणाभ्यगच्छन्पाञ्चालनगरं प्रति ।
अभ्याजग्मुर्लोकनदीं गङ्गां भागीरथीं प्रति ॥ १-१८६-२ (८३०२)
चन्द्रास्तमयवेलायामर्धरात्रसमागमे ।
वारि चैवानुमज्जन्तस्तीर्थं सोमाश्रयायणम्। १-१८६-३ (८३०३)
आसेदुः पुरुषव्याघ्रा गङ्गायां पाण्डुनन्दनाः ॥
उल्मुकं तु समुद्यम्य तेषामग्रे धनञ्जयः। १-१८६-४ (८३०४)
प्रकाशार्थं ययौ तत्र रक्षार्थं च महारथः ॥
तत्र गङ्गाजले रम्ये विविक्ते क्रीडयन् स्त्रियः। १-१८६-५ (८३०५)
शब्दं तेषां स शुश्राव नदीं समुपसर्पताम् ।
तेन शब्देन चाविष्टश्चुक्रोध बलवद्बली ॥ १-१८६-६ (८३०६)
स दृष्ट्वा पाण्डवांस्तत्र सह मात्रा परन्तपान् ।
विष्फारयन्धनुर्घोरमिदं वचनमब्रवीत् ॥ १-१८६-७ (८३०७)
सन्ध्या संरज्यते घोरा पूर्वरात्रागमेषु या ।
अशीतिभिर्लवैर्हीनं तन्मुहूर्तं प्रचक्षते ॥ १-१८६-८ (८३०८)
विहितं कामचाराणां यक्षगन्धर्वरक्षसाम् ।
शेषमन्यन्मनुष्याणां कर्मचारेषु वै स्मृतम् ॥ १-१८६-९ (८३०९)
लोभात्प्रचारं चरतस्तासु वेलासु वै नरान् ।
उपक्रान्ता निगृह्णीमो राक्षसैः सह बालिशान् ॥ १-१८६-१० (८३१०)
अतो रात्रौ प्राप्नुवतो जलं ब्रह्मविदो जनाः ।
गर्हयन्ति नरान्सर्वान्बलस्थान्नृपतीनपि ॥ १-१८६-११ (८३११)
आराच्च तिष्ठतास्माकं समीपं नोपसर्पत ।
कस्मान्मां नाभिजानीत प्राप्तं भागीरथीजलम् ॥ १-१८६-१२ (८३१२)
अङ्गारपर्णं गन्धर्वं वित्त मां स्वबलाश्रयम् ।

अहं हि मानी चेर्ष्युश्च कुबेरस्य प्रियः सखा ॥ १-१८६-१३ (८३१३)
अङ्गारपर्णमित्येवं ख्यातं चेदं वनं मम ।
अनुगङ्गं चरन्कामांश्चित्रं यत्र रमाम्यहम् ॥ १-१८६-१४ (८३१४)
न कौणपाः शृङ्गिणो वा न देवा न च मानुषाः ।
कुबेरस्य यथोष्णीषं किं मां समुपसर्पथ ॥ १-१८६-१५ (८३१५)
अर्जुन उवाच। १-१८६-१६क्ष् (१०६०)
समुद्रे हिमवत्पार्श्वे नद्यामस्यां च दुर्मते ।
रात्रावहनि सन्ध्यायां कस्य क्लृप्तः परिग्रहः ॥ १-१८६-१६ (८३१६)
भुक्तो वाऽप्यथ वाऽभुक्तो रात्रावहनि खेचर ।
न कालनियमो ह्यस्ति गङ्गां प्राप्य सरिद्वरां ॥ १-१८६-१७ (८३१७)
वयं च शक्तिसम्पन्ना अकाले त्वामधृष्णुम ।
अशक्ता हि रणे क्रूर युष्मानर्चन्ति मानवाः ॥ १-१८६-१८ (८३१८)
पुरा हिमवतश्चैषा हेमशृङ्गाद्विनिःसृता ।
गङ्गा गत्वा समुद्राम्भः सप्तधा समपद्यत ॥ १-१८६-१९ (८३१९)
गङ्गां च यमुनां चैव प्लक्षजातां सरस्वतीम् ।
रथस्थां सरयूं चैव गोमतीं गण्डकीं तथा ॥ १-१८६-२० (८३२०)
अपर्युषितपापास्ते नदीः सप्त पिबन्ति ये ।
इयं भूत्वा चैकवप्रा शुचिराकाशगा पुनः ॥ १-१८६-२१ (८३२१)
देवेषु गङ्गा गन्धर्व प्राप्नोत्यलकनन्दताम् ।
तथा पितॄन्वैतरणी दुस्तरा पापकर्मभिः ।
गङ्गा भवति वै प्राप्य कृष्णद्वैपायनोऽब्रवीत् ॥ १-१८६-२२ (८३२२)
असम्बाधा देवनदी स्वर्गसंपादनी शुभा ।
कथमिच्छसि तां रोद्धुं नैष धर्मः सनातनः ॥ १-१८६-२३ (८३२३)
अनिवार्यमसम्बाधं तव वाचा कथं वयम् ।
न स्पृशेम यथाकामं पुण्यं भागीरथीजलम् ॥ १-१८६-२४ (८३२४)
वैशंपायन उवाच। १-१८६-२५क्ष् (१०६१)
अङ्गारपर्णस्तच्छ्रुत्वा क्रुद्ध आनाम्य कार्मुकम् ।
मुमोच बाणान्निशितानहीनाशीविषानिव ॥ १-१८६-२५ (८३२५)
उल्मुकं भ्रामयंस्तूर्णं पाण्डवश्चर्म चोत्तरम् ।
व्यपोहत शरांस्तस्य सर्वानेव धनञ्जयः ॥ १-१८६-२६ (८३२६)
अर्जुन उवाच। १-१८६-२७क्ष् (१०६२)
बिभीषिका वै गन्धर्व नास्त्रज्ञेषु प्रयुज्यते ।
अस्त्रज्ञेषु प्रयुक्तेयं फेनवत्प्रविलीयते ॥ १-१८६-२७ (८३२७)
मानुषानति गन्धर्वान्सर्वान् गन्धर्व लक्षये ।
तस्मादस्त्रेण दिव्येन योत्स्येऽहं न तु मायया ॥ १-१८६-२८ (८३२८)
पुराऽस्त्रमिमाग्नेयं प्रादात्किल बृहस्पतिः ।

भरद्वाजाय गन्धर्व गुरुर्मान्यः शतक्रतोः ॥ १-१८६-२९ (८३२९)
भरद्वजादग्निवेश्य अग्निवेश्याद्गुरुर्मम ।
साध्विदं मह्यमददद्द्रोणो ब्राह्मणसत्तमः ॥ १-१८६-३० (८३३०)
वैशंपायन उवाच। १-१८६-३१क्ष् (१०६३)
इत्युक्त्वा पाण्डवः क्रुद्धो गन्धर्वाय मुमोच ह ।
प्रदीप्तमस्त्रमाग्नेयं ददाहास्य रथं तु तत् ॥ १-१८६-३१ (८३३१)
विरथं विप्लुतं तं तु स गन्धर्वं महाबलः ।
अस्त्रतेजःप्रमूढं च प्रपतन्तमवाङ्मुखम् ॥ १-१८६-३२ (८३३२)
शिरोरुहेषु जग्राह माल्यवत्सु धनञ्जयः ।
भ्रातॄन्प्रति चकर्षाथ सोऽस्त्रपातादचेतसम् ॥ १-१८६-३३ (८३३३)
युधिष्ठिरं तस्य भार्या प्रपेदे शरणार्थिनी ।
नाम्ना कुम्भीनसी नाम पतित्राणमभीप्सती ॥ १-१८६-३४ (८३३४)
गन्धर्व्युवाच। १-१८६-३५क्ष् (१०६४)
त्रायस्व मां महाभाग पतिं चेमं विमुञ्च मे ।
गन्धर्वी शरणं प्राप्ता नाम्ना कुम्भीनसी प्रभो ॥ १-१८६-३५ (८३३५)
युधिष्ठिर उवाच। १-१८६-३६क्ष् (१०६५)
युद्धे जितं यशोहीनं स्त्रीनाथमपराक्रमम् ।
को निहन्याद्रिपुं तात मुञ्चेमं रिपुसूदन ॥ १-१८६-३६ (८३३६)
अर्जुन उवाच। १-१८६-३७क्ष् (१०६६)
जीवितं प्रतिपद्यस्व गच्छ गन्धर्व मा शुचः ।
प्रदिशत्यभयं तेऽद्य कुरुराजो युधिष्ठिरः ॥ १-१८६-३७ (८३३७)
गन्धर्व उवाच। १-१८६-३८क्ष् (१०६७)
जितोऽहं पूर्वकं नाम मुञ्चाम्यङ्गारपर्णताम् ।
यशोहीनं न च श्लाघ्यं स्वं नाम जनसंसदि ॥ १-१८६-३८ (८३३८)
साध्विमं लब्धवाँल्लाभं योऽहं दिव्यास्त्रधारिणम् ।
गान्धर्व्या माययेच्छामि संयोजयितुमर्जुनम् ॥ १-१८६-३९ (८३३९)
अस्त्राग्निना विचित्रोऽयं दग्धो मे रथ उत्तमः ।
सोऽहं चित्ररथो भूत्वा नाम्ना दग्धरथोऽभवं ॥ १-१८६-४० (८३४०)
संभृता चैव विद्येयं तपसेह मया पुरा ।
निवेदयिष्ये तामद्य प्राणदाय महात्मने ॥ १-१८६-४१ (८३४१)
संस्तम्भयित्वा तरसा जितं शरणमागतम् ।
यो रिपुं योजयेत्प्राणैः कल्याणं किं न सोऽर्हति ॥ १-१८६-४२ (८३४२)
चाक्षुषी नाम विद्येयं यां सोमाय ददौ मनुः ।
ददौ स विश्वावसवे मम विश्वावसुर्ददौ ॥ १-१८६-४३ (८३४३)
सेयं कापुरुषं प्राप्ता गुरुदत्ता प्रणश्यति ।
आगमोऽस्या मया प्रोक्तो वीर्यं प्रतिनिबोध मे ॥ १-१८६-४४ (८३४४)

यच्चक्षुषा द्रष्टुमिच्छेत्रिषु लोकेषु किंचन ।
तत्पश्येद्यादृशं चेच्छेत्तादृशं द्रष्टुमर्हति ॥ १-१८६-४५ (८३४५)
एकपादेन षण्मासान्स्थितो विद्यां लभेदिमाम् ।
अनुनेष्याम्यहं विद्यां स्वयं तुभ्यं व्रते कृते ॥ १-१८६-४६ (८३४६)
विद्यया ह्यनया राजन्वयं नृभ्यो विशेषिताः ।
अविशिष्टाश्च देवानामनुभावप्रदर्शिनः ॥ १-१८६-४७ (८३४७)
गन्धर्वजानामश्वानामहं पुरुषसत्तम ।
भ्रातृभ्यस्तव तुभ्यं च पृथग्दाता शतं शतं ॥ १-१८६-४८ (८३४८)
देवगन्धर्ववाहास्ते दिव्यवर्णा मनोजवाः ।
क्षीणाक्षीणा भवन्त्येते न हीयन्ते च रंहसः ॥ १-१८६-४९ (८३४९)
पुरा कृतं महेन्द्रस्य वज्रं वृत्रनिबर्हणम् ।
दशधा शतधा चैव तच्छीर्णं वृत्रमूर्धनि ॥ १-१८६-५० (८३५०)
ततो भागीकृतो देवैर्वज्रभाग उपास्यते ।
लोके यशोधनं किंचित्सैव वज्रतनुः स्मृता ॥ १-१८६-५१ (८३५१)
वज्रपाणिर्ब्राह्मणः स्यात्क्षत्रं वज्ररथं स्मृतम् ।
वैश्या वै दानवज्राश्च कर्मवज्रा यवीयसः ॥ १-१८६-५२ (८३५२)
क्षत्रवज्रस्य भागेन अवध्या वाजिनः स्मृताः ।
रथाङ्गं वडबा सूते शूराश्चाश्वेषु ये मताः ॥ १-१८६-५३ (८३५३)
कामवर्णाः कामजवाः कामतः समुपस्थिताः ।
इति गन्धर्वजाः कामं पूरयिष्यन्ति मे हयाः ॥ १-१८६-५४ (८३५४)
अर्जुन उवाच। १-१८६-५५क्ष् (१०६८)
यदि प्रीतेन मे दत्तं संशये जीवितस्य वा ।
विद्याधं श्रुतं वाऽपि न तद्गन्धर्व रोचये ॥ १-१८६-५५ (८३५५)
गन्धर्व उवाच। १-१८६-५६क्ष् (१०६९)
संयोगो वै प्रीतिकरो महत्सु प्रतिदृश्यते ।
जीवितस्य प्रदानेन प्रीतो विद्यां ददामि ते ॥ १-१८६-५६ (८३५६)
त्वत्तोऽप्यहं ग्रहीष्यामि अस्त्रमाग्नेयमुत्तमम् ।
तथैव योग्यं बीभत्सो चिराय भरतर्षभ ॥ १-१८६-५७ (८३५७)
अर्जुन उवाच। १-१८६-५८क्ष् (१०७०)
त्वत्तोऽस्त्रेण वृणोम्यश्वान्संयोगः शास्वतोऽस्तुनौ ।
सखे तद्ब्रूहि गन्धर्व युष्मभ्यो यद्भयं भवेत् ॥ १-१८६-५८ (८३५८)
कारणं ब्रूहि गन्धर्व किं तद्येन स्म धर्षिताः ।
यान्तो वेदविदः सर्वे सन्तो रात्रावरिन्दमाः ॥ १-१८६-५९ (८३५९)
गन्धर्व उवाच। १-१८६-६०क्ष् (१०७१)
अनग्नयोऽनाहुतयो न च विप्रपुरस्कृताः ।
यूयं ततो धर्षिताः स्थ मया वै पाण्डुनन्दनाः ॥ १-१८६-६० (८३६०)

ग्यक्षराक्षसगन्धर्वपिशाचपतगोरगाः ।
धर्षन्ति नरव्याघ्र न ब्राह्मणपुरस्कृतान् ॥ १-१८६-६१ (८३६१)
जानतापि मया तस्मात्तेजश्चाभिजनं च वः ।
इयमग्निमतां श्रेष्ठ धर्षिता वै पुरागतिः ॥ १-१८६-६२ (८३६२)
को हि वस्त्रिषु लोकेषु न वेद भरतर्षभ ।
स्वैर्गुणैर्विस्तृतं श्रीमद्यशोऽग्र्यं भूरिवर्चसाम्'॥ १-१८६-६३ (८३६३)
यक्षराक्षसगन्धर्वाः पिशाचोरगदानवाः ।
विस्तरं कुरुवंशस्य धीमन्तः कथयन्ति ते ॥ १-१८६-६४ (८३६४)
नारदप्रभृतीनां तु देवर्षीणां मया श्रुतम् ।
गुणान्कथयतां वीर पूर्वेषां तव धीमताम् ॥ १-१८६-६५ (८३६५)
स्वयं चापि मया दृष्टश्चरता सागराम्बराम् ।
इमां वसुमतीं कृत्स्नां प्रभावः सुकुलस्य ते ॥ १-१८६-६६ (८३६६)
वेदे धनुषि चाचार्यमभिजानामि तेऽर्जुन ।
विश्रुतं त्रिषु लोकेषु भारद्वाजं यशस्विनम् ॥ १-१८६-६७ (८३६७)
ग्सर्ववेदविदां श्रेष्ठं सर्वशस्त्रभृतां वरम् ।
द्रोणमिष्वस्त्रकुशलं धनुष्यङ्गिरसां वरम् ॥' १-१८६-६८ (८३६८)
धर्मं वायुं च शक्रं च विजानाम्यश्विनौ तथा ।
पाण्डुं च कुरुशार्दूल षडेतान्कुरुवर्धनान् ।
पितॄनेतानहं पार्थ देवमानुषसत्तमान् ॥ १-१८६-६९ (८३६९)
दिव्यात्मानो महात्मानः सर्वशस्त्रभृतां वराः ।
भवन्तो भ्रातरः शूराः सर्वे सुचरितव्रताः ॥ १-१८६-७० (८३७०)
उत्तमां च मनोबुद्धिं भवतां भावितात्मनाम् ।
जानन्नपि च वः पार्थ कृतवानिह धर्षणाम् ॥ १-१८६-७१ (८३७१)
स्त्रीसकाशे च कौरव्य न पुमान्क्षन्तुमर्हति ।
धर्षणामात्मनः पश्यन्बाहुद्रविणमाश्रितः ॥ १-१८६-७२ (८३७२)
नक्तं च बलमस्माकं भूय एवाभिवर्धते ।
यतस्ततो मां कौन्तेय सदारं मन्युराविशत् ॥ १-१८६-७३ (८३७३)
सोऽहं त्वयेह विजितः सङ्ख्ये तापत्यवर्धन ।
येन तेनेह विधिना कीर्त्यमानं निबोध मे ॥ १-१८६-७४ (८३७४)
ब्रह्मचर्यं परो धर्मः स चापि नियतस्त्वयि ।
यस्मात्तस्मादहं पार्थ रणे ऽस्मि विजितस्त्वया ॥ १-१८६-७५ (८३७५)
यस्तु स्यात्क्षत्रियः कश्चित्कामवृत्तः परन्तप ।
नक्तं च युधि युध्येत न स जीवेत्कथंचन ॥ १-१८६-७६ (८३७६)
यस्तु स्यात्कामवृत्तोऽपि पार्थ ब्रह्मपुरस्कृतः ।
जयेन्नक्तञ्चरान्सर्वान्स पुरोहितधूर्गतः ॥ १-१८६-७७ (८३७७)
तस्मात्तापत्य यत्किंचिन्नृणां श्रेय इहेप्सितम् ।

तस्मिन्कर्मणि योक्तव्या दान्तात्मानः पुरोहिताः ॥ १-१८६-७८ (८३७८)
वेदे षडङ्गे निरताः शुचयः सत्यवादिनः ।
धर्मात्यागः कृतात्मानः स्युर्नृपाणां पुरोहिताः ॥ १-१८६-७९ (८३७९)
जयश्च नियतो राज्ञः स्वर्गश्च तदनन्तरम् ।
यस्य स्याद्धर्मविद्वाग्मी पुरोधाः शीलवाञ्शुचिः ॥ १-१८६-८० (८३८०)
लाभं लब्धुमलब्धं वा लब्धं वा परिरक्षितुम् ।
पुरोहितं प्रकुर्वीत राजा गुणसमन्वितम् ॥ १-१८६-८१ (८३८१)
पुरोहितमते तिष्ठेद्य इच्छेद्भूतिमात्मनः ।
प्राप्तुं वसुमतीं सर्वां सर्वशः सागराम्बराम् ॥ १-१८६-८२ (८३८२)
न हि केवलशौर्येण तापत्याभिजनेन च ।
जयेदब्राह्मणः कश्चिद्भूमिं भूमिपतिः क्वचित् ॥ १-१८६-८३ (८३८३)
तस्मादेवं विजानीहि कुरूणां वंशवर्धन ।
ब्राह्मणप्रमुखं राज्यं शक्यं पालयितुं चिरम् ॥ ॥ १-१८६-८४ (८३८४)

इति श्रीमन्महाभारते आदिपर्वणि चैत्ररथपर्वणि
षडशीत्यधिकशततमोऽध्यायः ॥ १८६ ॥
Mahabharata - Adi Parva - Chapter Footnotes

१-१८६-३ सोमाश्रयश्चन्द्रधरो रुद्रस्तस्य स्थानं सोमाश्रयायणम् ॥
१-१८६-८ पूर्वरात्रागमेषु पश्चिमायां दिशि अर्धास्तमितार्कमण्डलरूपा
या संध्या संरज्यते रक्ता भवति तस्यां मुहूर्तं
प्रस्थानकालमशीतिभिर्लवैर्निमेषार्धैर्हीनं प्रचक्षते ॥
१-१८६-९ तदेव मुहूर्तं यक्षादीनां कर्मचारेषु
विहितमन्यन्मनुष्याणां कर्मचारेषु स्मृतमित्यन्वयः
। संध्यायामशीतिलवोपरि रात्रौ यक्षादीनामेव संचारकालः
अन्यदहर्मनुष्याणामित्यर्थः ॥
१-१८६-१५ शृङ्गिणः अभिचारिकाः ॥
१-१८६-२१ एकवप्रा एकमाकाशरूपं वप्रं यस्याः सा ॥
१-१८६-३६ स्त्री नाथो रक्षिता यस्य तम् ॥
१-१८६-३८ अङ्गारवद्भास्वरं दुःस्पर्शं च पर्णं वाहनं रथो
यस्य सोऽङ्गारपर्णस्तस्य भावस्तत्ताम् ॥
१-१८६-४१ क्षीणाश्चाऽक्षीणाश्च क्षीणाक्षीणाः वृद्धास्तरुणा वा एते
न भवन्ति रंहसो वेगाच्च न हीयन्ते इति नकारानुषङ्गेण योज्यम्
। क्षीणे क्षीणे इति घ। पाठः ॥
१-१८६-५१ तस्य भागः पृथग्भूतः सर्वैर्भूतैदपास्यते इति ङ
। पाठः ॥

१-१८६-५२ वज्रपाणिः पाणिः वज्रं यस्य स ।एवमेव वज्ररथमित्यपि ॥
१-१८६-५३ रथाङ्गं च तथा सूतो धनुश्च भरतर्षभ इति ङ
।पाठः ॥
१-१८६-५७ तथैव सख्यं बीभत्सो इति ङ ।पाठः ॥
१-१८६-५८ अस्त्रेणास्त्रं वृणे त्वत्तः यद्भयं त्यजेत् इति ङ ।पाठः ॥
१-१८६-६० अनग्नयो दारहीनत्वात् ।अनाहुतयः
समावृतत्वात्।आश्रमविशेषहीनो ब्राह्मणो धर्षणीय इत्यर्थः ॥
१-१८६-७६ कायवृद्यः कृतदारः ॥
१-१८६-८१ लाभं लब्धव्यं धनं ।अलब्धस्य च लाभाय लब्धस्य
परिरक्षणे इति ङ।पाठः ॥
षडशीत्यधिकशततमोऽध्यायः ॥
१८६ ॥

---

अध्यय१८७
॥ श्रीः ॥
१.१८७. अध्यायः १८७

Mahabharata - Adi Parva - Chapter Topics
सूर्यकन्यायाः तपत्या उपाख्यानम्--स्वभक्ताय संवरणाय स्वकन्यां
दातुं सवितुर्निश्चयः ॥ १ ॥
मृगयार्थं गतस्य संवरणस्य गिरौ तपतीदर्शनेन कामोत्पत्तिः ॥ २ ॥
राजनि तया सह भाषितुं प्रवृत्ते तप्त्या अन्तर्धानम् ॥ ३ ॥

Mahabharata - Adi Parva - Chapter Text

१-१८७-० (८३८५)
अर्जुन उवाच।१-१८७-०क्ष् (१०७२)
तापत्य इति यद्वाक्यमुक्तवानसि मामिह ।
तदहं ज्ञातुमिच्छामि तापत्यार्थं विनिश्चितम् ॥१-१८७-१ (८३८६)
तपती नाम का चैषा तापत्या यत्कृते वयम् ।
कौन्तेया हि वयं साधो तत्त्वमिच्छामि वेदितुम् ॥१-१८७-२ (८३८७)
वैशंपायन उवाच।१-१८७-३क्ष् (१०७३)
एवमुक्तः स गन्धर्वः कुन्तीपुत्रं धनञ्जयम् ।
विश्रुतं त्रिषु लोकेषु श्रावयामास वै कथाम् ॥१-१८७-३ (८३८८)
हन्त ते कथयिष्यामि कथामेतां मनोरमाम् ।
यथावदखिलां पार्थ सर्वबुद्धिमतां वर ॥१-१८७-४ (८३८९)
उक्तवानस्मि येन त्वां तापत्य इति यद्वचः ।

तत्तेऽहं कथयिष्यामि शृणुष्वैकमना भव ॥ १-१८७-५ (८३९०)
य एष दिवि धिष्ण्येन नाकं व्याप्नोति तेजसा ।
एतस्य तपती नाम बभूव सदृशी सुता ॥ १-१८७-६ (८३९१)
विवस्वतो वै देवस्य सावित्र्यवरजा विभो ।
विश्रुता त्रिषु लोकेषु तपती तपसा युता ॥ १-१८७-७ (८३९२)
न देवी नासुरी चैव न यक्षी न च राक्षसी ।
नाप्सरा न च गन्धर्वी तथा रूपेण काचन ॥ १-१८७-८ (८३९३)
सुविभक्तानवद्याङ्गी स्वसितायतलोचना ।
स्वाचारा चैव साध्वी च सुवेषा चैव भामिनी ॥ १-१८७-९ (८३९४)
त तस्याः सदृशं कंचित्त्रिषु लोकेषु भारत ।
भर्तारं सविता मेने रूपशीलगुणश्रुतैः ॥ १-१८७-१० (८३९५)
संप्राप्तयौवनां पश्यन्देयां दुहितरं तु ताम् ।
ग्द्यष्टवर्षां तु तां श्यामां सविता रूपशालिनीम् ।'
नोपलेभे ततः शान्तिं संप्रदानं विचिन्तयन् ॥ १-१८७-११ (८३९६)
अथर्क्षपुत्रः क्रान्तेय कुरूणामृषभो बली ।
सूर्यमाराधयामास नृपः संवरणस्तदा ॥ १-१८७-१२ (८३९७)
अर्घ्यमाल्योपहाराद्यैर्गन्धैश्च नियतः शुचिः ।
नियमैरुपवासैश्च तपोभिर्विविधैरपि ॥ १-१८७-१३ (८३९८)
सुश्रूषुरनहंवादी शुचिः पौरवनन्दन ।
अंशुमन्तं समुद्यन्तं पूजयामास भक्तिमान् ॥ १-१८७-१४ (८३९९)
ततः कृतज्ञं धर्मज्ञं रूपेणासदृशं भुवि ।
तपत्याः सदृशं मेने सूर्यः संवरणं पतिम् ॥ १-१८७-१५ (८४००)
दातुमैच्छत्ततः कन्यां तस्मै संवरणाय ताम् ।
नृपोत्तमाय कौरव्य विश्रुताभिजनाय च ॥ १-१८७-१६ (८४०१)
यथा हि दिवि दीप्तांशुः प्रभासयति तेजसा ।
तथा भुवि महिपालो दीप्त्या संवरणोऽभवत् ॥ १-१८७-१७ (८४०२)
यथाऽर्चयन्ति चादित्यमुद्यन्तं ब्रह्मवादिनः ।
तथा संवरणं पार्थ ब्राह्मणावरजाः प्रजाः ॥ १-१८७-१८ (८४०३)
स सोममति कान्तत्वादादित्यमति तेजसा ।
बभूव नृपतिः श्रीमान्सुहृदां दुर्हृदामपि ॥ १-१८७-१९ (८४०४)
एवंगुणस्य नृपतेस्तथावृत्तस्य कौरव ।
तस्मै दातुं मनश्चक्रे तपतीं तपनः स्वयम् ॥ १-१८७-२० (८४०५)
स कदाचिदथो राजा श्रीमानमितविक्रमः ।
चचार मृगयां पार्थ पर्वतोपवने किल ॥ १-१८७-२१ (८४०६)
चरतो मृगयां तस्य क्षुत्पिपासासमन्वितः ।
ममार राज्ञः कौन्तेय गिरावप्रतिमो हयः ॥ १-१८७-२२ (८४०७)

स मृताश्वश्चरन्पार्थ पद्भ्यामेव गिरौ नृपः ।
ददर्शासदृशीं लोके कन्यामायतलोचनाम् ॥ १-१८७-२३ (८४०८)
स एव एकामासाद्य कन्यां परबलार्दनः ।
तस्थौ नृपतिशार्दूलः पश्यन्नविचलेक्षणः ॥ १-१८७-२४ (८४०९)
स हि तां तर्कयामास रूपतो नृपतिः श्रियम् ।
पुनः संतर्कयामास रवेर्भ्रष्टामिव प्रभाम् ॥ १-१८७-२५ (८४१०)
वपुषा वर्चसा चैव शिखामिव विभावसोः ।
प्रसन्नत्वेन कान्त्या च चन्द्ररेखामिवामलाम् ॥ १-१८७-२६ (८४११)
गिरिपृष्ठे तु सा यस्मिन्स्थिता स्वसितलोचना ।
विभ्राजमाना शुशुभे प्रतिमेव हिरण्मयी ॥ १-१८७-२७ (८४१२)
तस्या रूपेण स गिरिर्वेषेण च विशेषतः ।
ससवृक्षक्षुपलतो हिरण्मय इवाभवत् ॥ १-१८७-२८ (८४१३)
अवमेने च तां दृष्ट्वा सर्वलोकेषु योषितः ।
अवाप्तं चात्मनो मेने स राजा चक्षुषः फलं ॥ १-१८७-२९ (८४१४)
जन्मप्रभृति यत्किंचिद्दृष्टवान्स महीपतिः ।
रूपं न सदृशं तस्यास्तर्कयामास किंचन ॥ १-१८७-३० (८४१५)
तया बद्धमनश्चक्षुः पाशैर्गुणमयैस्तदा ।
न चचाल ततो देशाद्बुबुधे न च किंचन ॥ १-१८७-३१ (८४१६)
अस्या नूनं विशालाक्ष्याः सदेवासुरमानुषम् ।
लोकं निर्मथ्य धात्रेदं रूपमाविष्कृतं कृतम् ॥ १-१८७-३२ (८४१७)
एवं संतर्कयामास रूपद्रविणसंपदा ।
कन्यामसदृशीं लोके नृपः संवरणस्तदा ॥ १-१८७-३३ (८४१८)
तां च दृष्ट्वैव कल्याणीं कल्याणाभिजनो नृपः ।
जगाम मनसा चिन्तां कामबाणेन पीडितः ॥ १-१८७-३४ (८४१९)
दह्यमानः स तीव्रेण नृपतिर्मन्मथाग्निना ।
अप्रगल्भां प्रगल्भस्तां तदोवाच मनोहराम् ॥ १-१८७-३५ (८४२०)
काऽसि कस्यासि रम्भोरु किमर्थं चेह तिष्ठसि ।
कथं च निर्जनेऽरण्ये चरस्येका शुचिस्मिते ॥ १-१८७-३६ (८४२१)
त्वं हि सर्वानवद्याङ्गी सर्वाभरणभूषिता ।
विभूषणमिवैतेषां भूषणानामभीप्सितम् ॥ १-१८७-३७ (८४२२)
न देवीं नासुरीं चैव न यक्षीं न च राक्षसीम् ।
न च भोगवतीं मन्ये न गन्धर्वीं न मानुषीम् ॥ १-१८७-३८ (८४२३)
या हि दृष्टा मया काश्चिच्छ्रुता वाऽपि वराङ्गनाः ।
न तासां सदृशीं मन्ये त्वामहं मत्तकाशिनि ॥ १-१८७-३९ (८४२४)
दृष्ट्वैव चारुवदने चन्द्रात्कान्ततरं तव ।
वदनं पद्मपत्राक्षं मां मथ्नातीव मन्मथः ॥ १-१८७-४० (८४२५)

एवं तां स महीपालो बभाषे न तु सा तदा ।
कामार्तं निर्जनेऽरण्ये प्रत्यबाषथ किंचन ॥ १-१८७-४१ (८४२६)
ततो लालप्यमानस्य पार्थिवस्यायतेक्षणा ।
सौदामिनीव चाभ्रेषु तत्रैवान्तरधीयत ॥ १-१८७-४२ (८४२७)
तामन्वेष्टुं स नृपतिः परिचक्राम सर्वतः ।
वनं वनजपत्राक्षीं भ्रमन्नुन्मत्तवत्तदा ॥ १-१८७-४३ (८४२८)
अपश्यमानः स तु तां बहु तत्र विलप्य च ।
निश्चेष्टः पार्थिवश्रेष्ठो मुहूर्तं स व्यतिष्ठत ॥ ॥ १-१८७-४४ (८४२९)

इति श्रीमन्महाभारते आदिपर्वणि चैत्ररथपर्वणि
सप्ताशीत्यधिकशततमोऽध्यायः ॥ १८७ ॥
Mahabharata - Adi Parva - Chapter Footnotes

१-१८७-१ यत् यस्मात् तत् तस्मात् । तापत्यार्थं तापत्यशब्दार्थम् ॥
सप्ताशीत्यधिकशततमोऽध्यायः ॥
१८७ ॥

---

अध्यय१८८
॥ श्रीः ॥
१.१८८. अध्यायः १८८

Mahabharata - Adi Parva - Chapter Topics
भूतले पतितं राजानं दृष्ट्वा तत्समीपे तपत्या आगमनम् ॥ १ ॥
तयोः संवादः ॥ २ ॥

Mahabharata - Adi Parva - Chapter Text

१-१८८-० (८४३०)
गन्धर्व उवाच। १-१८८-०क्ष् (१०७४)
अथ तस्यामदृश्यायां नृपतिः काममोहितः ।
पातनः शत्रुसङ्घानां पपात धरणीतले ॥ १-१८८-१ (८४३१)
तस्मिन्निपतिते भूमावथ सा चारुहासिनी ।
पुनः पीनायतश्रोणी दर्शयामास तं नृपम् ॥ १-१८८-२ (८४३२)
अथाबभाषे कल्याणी वाचा मधुरया नृपम् ।
तं कुरूणां कुलकरं कामाभिहतचेतसम् ॥ १-१८८-३ (८४३३)
उवाच मधुरं वाक्यं तपती हसतीव सा ।
उत्तिष्ठोत्तिष्ठ भद्रं ते न त्वमर्हस्यरिन्दम ॥ १-१८८-४ (८४३४)

मोहं नृपतिशार्दूल गन्तुमाविष्कृतः क्षितौ ।
एवमुक्तोऽथ नृपतिर्वाचा मधुरया तदा ॥ १-१८८-५ (८४३५)
ददर्श विपुलश्रोणीं तामेवाभिमुखे स्थिताम् ।
अथ तामसितापाङ्गीमाबभाषे स पार्थिवः ॥ १-१८८-६ (८४३६)
मन्मथाग्निपरीतात्मा सन्दिग्धाक्षरया गिरा ।
साधु त्वमसितापाङ्गि कामार्तं मत्तकाशिनि ॥ १-१८८-७ (८४३७)
भजस्व भजमानं मां प्राणा हि प्रजहन्ति माम् ।
त्वदर्थं हि विशालाक्षि मामयं निशितैः शरैः ॥ १-१८८-८ (८४३८)
कामः कमलगर्भाभे प्रतिविध्यन्न शाम्यति ।
दष्टमेवमनाक्रन्दे भद्रे काममहाहिना ॥ १-१८८-९ (८४३९)
सा त्वं पीनायतश्रोणी मामाप्नुहि वरानने ।
त्वदधीना हि मे प्राणाः किन्नरोद्गीतभाषिणि ॥ १-१८८-१० (८४४०)
चारुसर्वानवद्याङ्गि पद्मेन्दुप्रतिमानने ।
न ह्यहं त्वदृते भीरु शक्ष्यामि खलु जीवितुम् ॥ १-१८८-११ (८४४१)
कामः कमलपत्राक्षि प्रतिविध्यति मामयम् ।
तस्मात्कुरु विशालाक्षि मय्यनुक्रोशमङ्गने ॥ १-१८८-१२ (८४४२)
भक्तं मामसितापाङ्गि न परित्यक्तुमर्हसि ।
त्वं हि मां प्रीतियोगेन त्रातुमर्हसि भामिनि ॥ १-१८८-१३ (८४४३)
त्वद्दर्शनकृतस्नेहं मनश्चलति मे भृशम् ।
न त्वां दृष्ट्वा पुनश्चान्यां द्रष्टुं कल्याणि रोचते ॥ १-१८८-१४ (८४४४)
प्रसीद वशगोऽहं ते भक्तं मां भज भामिनि ।
दृष्ट्वैव त्वां वरारोहे मन्मथो भृशमङ्गने ॥ १-१८८-१५ (८४४५)
अन्तर्गतं विशालाक्षि विध्यति स्म पतत्रिभिः ।
मन्मथाग्निसमुद्भूतं दाहं कमललोचने ॥ १-१८८-१६ (८४४६)
प्रीतिसंयोगयुक्ताभिरद्भिः प्रह्लादयस्व मे ।
पुष्पायुधं दुराधर्षं प्रचण्डशरकार्मुकम् ॥ १-१८८-१७ (८४४७)
त्वद्दर्शनसमुद्भूतं विध्यन्तं दुःसहैः शरैः ।
उपशामय कल्याणि आत्मदानेन भामिनि ॥ १-१८८-१८ (८४४८)
गान्धर्वेण विवाहेन मामुपैहि वराङ्गने ।
विवाहानां हि रम्भोरु गान्धर्वः श्रेष्ठ उच्यते ॥ १-१८८-१९ (८४४९)
तपत्युवाच। १-१८८-२०क्ष् (१०७५)
नाहमीशाऽऽत्मनो राजन्कन्या पितृमती ह्यहम् ।
मयि चेदस्ति ते प्रीतिर्याचस्व पितरं मम ॥ १-१८८-२० (८४५०)
यथा हि ते मया प्राणाः संभृताश्च नरेश्वर ।
दर्शनादेव भूयस्त्वं तथा प्राणान्ममाहरः ॥ १-१८८-२१ (८४५१)
न चाहमीशा देहस्य तस्मान्नृपतिसत्तम ।

समीपं नोपगच्छामि न स्वतन्त्रा हि योषितः ॥१-१८८-२२ (८४५२)
का हि सर्वेषु लोकेषु विश्रुताभिजनं नृपम् ।
कन्या नाभिलषेन्नाथं भार्तारं भक्तवत्सलम् ॥१-१८८-२३ (८४५३)
तस्मादेवं गते काले याचस्व पितरं मम ।
आदित्यं प्रणिपातेन तपसा नियमेन च ॥१-१८८-२४ (८४५४)
स चेत्कामयते दातुं तव मामरिसूदन ।
भविष्याम्यद्य ते राजन्सततं वशवर्तिनी ॥१-१८८-२५ (८४५५)
अहं हि तपती नाम सावित्र्यवरजा सुता ।
अस्य लोकप्रदीपस्य सवितुः क्षत्रियर्षभ ॥ ॥१-१८८-२६ (८४५६)

इति श्रीमन्महाभारते आदिपर्वणि चैत्ररथपर्वणि
अष्टाशीत्यधिकशततमोऽध्यायः ॥१८८ ॥
Mahabharata - Adi Parva - Chapter Footnotes

१-१८८-८ प्रजहन्ति प्रजहति ॥
१-१८८-९ अनाक्रन्दे अत्रातरि काले ॥
अष्टाशीत्यधिकशततमोऽध्यायः ॥
१८८ ॥

---

अध्यय१८९
॥ श्रीः ॥
१.१८९. अध्यायः १८९

Mahabharata - Adi Parva - Chapter Topics
पुनरन्तर्हितायां तपत्यां मोहितस्य संवरणस्य समीपे
अमात्यादीनामागमनं ॥१ ॥
अमात्येनाश्वासितस्य राज्ञः सूर्योपासनसमये वसिष्ठस्यागमनं ॥२ ॥
सूर्यसमीपं गत्वा वसिष्ठेनादित्यस्तुतिकरणं ॥३ ॥
स्तुत्या तुष्टेन सूर्येण संवरणार्थं वसिष्ठाय तपतीदानं ॥४ ॥
तस्मिन्नेव तपतीसंवरणयोर्विवाहः ॥५ ॥
तया सह तत्रैव रममाणस्य संवरणस्य राज्ये
द्वादशवार्षिक्यनावृष्टिः ॥६ ॥
वसिष्ठेनानावृष्टिनिवर्तनं ॥७ ॥
तपत्युपाख्यानोपसंहारः ॥८ ॥

Mahabharata - Adi Parva - Chapter Text

१-१८९-० (८४५७)
गन्धर्व उवाच। १-१८९-०क्ष् (१०७६)
एवमुक्त्वा ततस्तूर्णं जगामोर्ध्वमनिन्दिता ।
ग्तपतीतपतीत्येव विललापातुरो नृपः ॥ १-१८९-१ (८४५८)
प्रास्स्वलच्चासकृद्राजा पुनरुत्थाय धावति ।
धावमानस्तु तपतीमदृष्ट्वैव महीपतिः।'
स तु राजा पुनर्भूमौ तत्रैव निपपात ह ॥ १-१८९-२ (८४५९)
अन्वेषमाणः सबलस्तं राजानं नृपोत्तमम् ।
अमात्यः सानुयात्रश्च तं ददर्श महावने ॥ १-१८९-३ (८४६०)
क्षितौ निपतितं काले शक्रध्वजमिवोच्छ्रितम् ।
त हि दृष्ट्वा महेष्वासं निरस्तं पतितं भुवि ॥ १-१८९-४ (८४६१)
बभूव सोऽस्य सचिवः संप्रदीप्त इवाग्निना ।
त्वरया चोपसङ्गम्य स्नेहादागतसंभ्रमः ॥ १-१८९-५ (८४६२)
तं समुत्थापयामास नृपतिं काममोहितम् ।
भूतलाद्भूमिपालेशं पितेव पतितं सुतम् ॥ १-१८९-६ (८४६३)
प्रज्ञया वयसा चैव वृद्धः कीर्त्या नयेन च ।
अमात्यस्तं समुत्थाप्य बभूव विगतज्वरः ॥ १-१८९-७ (८४६४)
उवाच चैनं कल्याण्या वाचा मधुरयोत्थिम् ।
मा भैर्मनुजशार्दूल भद्रमस्तु तवानघ ॥ १-१८९-८ (८४६५)
क्षुत्पिपासापरिश्रान्तं तर्कयामास वै नृपम् ।
पतितं पातनं सङ्ख्ये शात्रवाणां महीतले ॥ १-१८९-९ (८४६६)
वारिणा च सुशीतेन शिरस्तस्याभ्यषेचयत् ।
अस्पृशन्मुकुटं राज्ञः पुण्डरीकसुगन्धिना ॥ १-१८९-१० (८४६७)
ततः प्रत्यागतप्राणस्तद्बलं बलवान्नृपः ।
सर्वं विसर्जयामास तमेकं सचिवं विना ॥ १-१८९-११ (८४६८)
ततस्तस्याज्ञया राज्ञो विप्रतस्थे महद्बलम् ।
स तु राजा गिरिप्रस्थे तस्मिन्पुनरुपाविशत् ॥ १-१८९-१२ (८४६९)
ततस्तस्मिन् गिरिवरे शुचिर्भूत्वा कृताञ्जलिः ।
आरिराधयिषुः सूर्यं तस्थावूर्ध्वमुखः क्षितौ ॥ १-१८९-१३ (८४७०)
जगाम मनसा चैव वसिष्ठमृषिसत्तमम् ।
पुरोहितममित्रघ्नं तदा संवरणो नृपः ॥ १-१८९-१४ (८४७१)
नक्तन्दिनमथैकत्र स्थिते तस्मिञ्जनाधिपे ।
अथाजगाम विप्रर्षिस्तदा द्वादशमेऽहनि ॥ १-१८९-१५ (८४७२)
स विदित्वैव नृपतिं तपत्या हृतमानसम् ।
दिव्येन विधिना ज्ञात्वा भावितात्मा महानृपिः ॥ १-१८९-१६ (८४७३)
तथा तु नियतात्मानं तं नृपं मुनिसत्तमः ।

आबभाषे स धर्मात्मा तस्यैवार्थचिकीर्षया ॥ १-१८९-१७ (८४७४)
स तस्य मनुजेन्द्रस्य पश्यतो भगवानृषिः ।
ऊर्ध्वमाचक्रमे द्रष्टुं भास्करं भास्करद्युतिः ॥ १-१८९-१८ (८४७५)
ग्योजनानां तु नियुतं क्षणाद्गत्वा तपोधनः।'
सहस्रांशुं ततो विप्रः कृताञ्जलिरुपस्थितः ।
वसिष्ठोहमिति प्रीत्या स चात्मानं न्यवेदयत् ॥ १-१८९-१९ (८४७६)
तमुवाच महातेजा विवस्वान्मुनिसत्तमम् ।
महर्षे स्वागतं तेऽस्तु कथयस्व यथेप्सितम् ॥ १-१८९-२० (८४७७)
यदिच्छसि महाभाग मत्तः प्रवदतां वर ।
तत्ते दद्यामभिप्रेतं यद्यपि स्यात्सुदुर्लभम् ॥ १-१८९-२१ (८४७८)
एवमुक्तः स तेनर्षिर्वसिष्ठः संस्तुवन्गिरा ।
प्रणिपत्य विवस्वन्तं भानुमन्तमथाब्रवीत् ॥ १-१८९-२२ (८४७९)
ग्योजनानां चतुष्षष्टिं निमेषात्त्रिशतं तथा ।
अश्वैर्गच्छति नित्यं यस्तत्पार्श्वस्थोऽब्रवीदिदम् ॥ १-१८९-२३ (८४८०)
वसिष्ठ उवाच। १-१८९-२४क्ष् (१०७७)
अजाय लोकत्रयपावनाय
भूतात्मने गोपतये वृषाय ।
सूर्याय सर्गप्रलयालयाय
नमो महाकारुणिकोत्तमाय ॥ १-१८९-२४ (८४८१)
विवस्वते ज्ञानभृतेऽन्तरात्मने
जगत्प्रदीपाय जगद्धितैषिणे ।
स्वयंभुवे दीप्तसहस्रचक्षुषे
सुरोत्तमायामिततेजसे नमः ॥ १-१८९-२५ (८४८२)
नमः सवित्रे जगदेकचक्षुषे
जगत्प्रसूतिस्थितिनाशहेतवे ।
त्रयीमयाय त्रिगुणात्मधारिणे
विरिञ्चनारायणशङ्करात्मने ॥ १-१८९-२६ (८४८३)
सूर्य उवाच। १-१८९-२७क्ष् (१०७८)
संस्तुतो वरदः सोऽहं वरं वरय सुव्रत ।
स्तुतिस्त्वयोक्ता भक्तानां जप्येयं वरदोस्म्यहम्'॥ १-१८९-२७ (८४८४)
वसिष्ठ उवाच। १-१८९-२८क्ष् (१०७९)
यैषा ते तपती नाम साविञ्यवरजा सुता ।
तां त्वां संवरणस्यार्थे वरयामि विभावसो ॥ १-१८९-२८ (८४८५)
स हि राजा बृहत्कीर्तिर्धर्मार्थविदुदारधीः ।
युक्तः संवरणो भर्ता दुहितुस्ते विहङ्गम ॥ १-१८९-२९ (८४८६)
गन्धर्व उवाच। १-१८९-३०क्ष् (१०८०)

इत्युक्तः स तदा तेन ददानीत्येव निश्चितः ।
प्रत्यभाषत तं विप्रं प्रतीनन्द्य दिवाकरः ॥ १-१८९-३० (८४८७)
वरः संवरणो राज्ञां त्वमृषीणां वरो मुने ।
तपती योषितां श्रेष्ठा किमन्यत्रापवर्जनात् ॥ १-१८९-३१ (८४८८)
ततः सर्वानवद्याङ्गीं तपतीं तपनः स्वयम् ।
ददौ संवरणस्यार्थे वसिष्ठाय महात्मने ॥ १-१८९-३२ (८४८९)
प्रतिजग्राह तां कन्यां महर्षिस्तपतीं तदा ।
वसिष्ठोऽथ विसृष्टस्तु पुनरेवाजगाम ह ॥ १-१८९-३३ (८४९०)
यत्र विख्यातकीर्तिः स कुरूणामृषभोऽभवत् ।
स राजा मन्मथाविष्टस्तद्गतेनान्तरात्मना ॥ १-१८९-३४ (८४९१)
दृष्ट्वा च देवकन्यां तां तपतीं चारुहासिनीम् ।
वसिष्ठेन सहायान्तीं संहृष्टोऽभ्यधिकं बभौ ॥ १-१८९-३५ (८४९२)
रुरुचे साऽधिकं सुभ्रूरापतन्ती नभस्तलात् ।
सौदामनीव विभ्रष्टा द्योतयन्ती दिशस्त्विषा ॥ १-१८९-३६ (८४९३)
कृच्छ्राद्द्वादशरात्रे तु तस्य राज्ञः समाहिते ।
आजगाम विशुद्धात्मा वसिष्ठो भगवानृषिः ॥ १-१८९-३७ (८४९४)
तपसाऽऽराध्य वरदं देवं गोपतिमीश्वरम् ।
लेभे संवरणो भार्यां वसिष्ठस्यैव तेजसा ॥ १-१८९-३८ (८४९५)
ततस्तस्मिन्गिरिश्रेष्ठे देवगन्धर्वसेविते ।
जग्राह विधिवत्पाणिं तपत्याः स नरर्षभः ॥ १-१८९-३९ (८४९६)
वसिष्ठेनाभ्यनुज्ञातस्तस्मिन्नेव धराधरे ।
सोऽकामयत राजर्षिर्विहर्तुं सह भार्यया ॥ १-१८९-४० (८४९७)
ततः पुरे च राष्ट्रे च वनेषूपवनेषु च ।
आदिदेश महीपालस्तमेव सचिवं तदा ॥ १-१८९-४१ (८४९८)
नृपतिं त्वभ्यनुज्ञाप्य वसिष्ठोऽथापचक्रमे ।
सोऽथ राजा गिरौ तस्मिन्विजहारामरो यथा ॥ १-१८९-४२ (८४९९)
ततो द्वादशवर्षाणि काननेषु वनेषु च ।
रेमे तस्मिन्गिरौ राजा तयैव सह भार्यया ॥ १-१८९-४३ (८५००)
तस्य राज्ञः पुरे तस्मिन्समा द्वादश सत्तम ।
न ववर्ष सहस्राक्षो राष्ट्रे चैवास्य भारत ॥ १-१८९-४४ (८५०१)
ततस्तस्यामनावृष्ट्यां प्रवृत्तायामरिन्दम ।
प्रजाः क्षयमुपाजग्मुः सर्वाः सस्थाणुजङ्गमाः ॥ १-१८९-४५ (८५०२)
तस्मिंस्तथाविधे काले वर्तमाने सुदारुणे ।
नावश्यायः पपातोर्व्यां ततः सस्यानि नाऽरुहन् ॥ १-१८९-४६ (८५०३)
ततो विभ्रान्तमनसो जनाः क्षुद्भयपीडिताः ।
गृहाणि संपरित्यज्य बभ्रमुः प्रदिशो दिशः ॥ १-१८९-४७ (८५०४)

ततस्तस्मिन्पुरे राष्ट्रे त्यक्तदारपरिग्रहाः ।
परस्परममर्यादाः क्षुधार्ता जघ्निरे जनाः ॥१-१८९-४८ (८५०५)
तत्क्षुधार्तैर्निरानन्दैः शवभूतैस्तथा नरैः ।
अभवत्प्रेतराजस्य पुरं प्रेतैरिवावृतम् ॥१-१८९-४९ (८५०६)
ततस्तत्तादृशं दृष्ट्वा स एव भगवानृषिः ।
अभ्याद्रवत धर्मात्मा वसिष्ठो मुनिसत्तमः ॥१-१८९-५० (८५०७)
तं च पार्थिवशार्दूलमानयामास तत्पुरम् ।
तपत्या सहितं राजन्वर्षे द्वादशमे गते ।
ततः प्रवृष्टस्तत्रासीद्यथापूर्वं सुरारिहा ॥ १-१८९-५१ (८५०८)
तस्मिन्नृपतिशार्दूले प्रविष्टे नगरं पुनः ।
प्रववर्ष सहस्राक्षः सस्यानि जनयन्प्रभुः ॥१-१८९-५२ (८५०९)
ततः सराष्ट्रं मुमुदे तत्पुरं परया मुदा ।
तेन पार्थिवमुख्येन भावितं भावितात्मना ॥१-१८९-५३ (८५१०)
ततो द्वादश वर्षाणि पुनरीजे नराधिपः ।
तपत्या सहितः पत्न्या यथा शच्या मरुत्पतिः ॥१-१८९-५४ (८५११)
गन्धर्व उवाच।१-१८९-५५क्ष् (१०८१)
एवमासीन्महाभागा तपती नाम पौर्विकी ।
तव वैवस्वती पार्थ तापत्यस्त्वं यया मतः ॥१-१८९-५५ (८५१२)
तस्यां संजनयामास कुरुं संवरणो नृपः ।
तपत्यां तपतां श्रेष्ठ तापत्यस्त्वं ततोऽर्जुन ॥ ॥१-१८९-५६ (८५१३)

इति श्रीमन्महाभारते आदिपर्वणि चैत्ररथपर्वणि
एकोननवत्यधिकशततमोऽध्यायः ॥१८९ ॥
Mahabharata - Adi Parva - Chapter Footnotes

१-१८९-१० मुकुटं तत्स्थानं ललाटम् ॥
१-१८९-१५ द्वादशमे द्वादशसंख्यया मिते ॥
१-१८९-१६ दिव्येन विधिना योगबलेन ॥
एकोननवत्यधिकशततमोऽध्यायः ॥
१८९ ॥

---

अध्यय१९०
॥ श्रीः ॥
१.१९०. अध्यायः १९०

Mahabharata - Adi Parva - Chapter Topics
गन्धर्वेण वसिष्ठमाहात्म्यकथनपूर्वकं पाण्डवानां

पुरोहितसंग्रहणोपदेशः ॥ १ ॥

Mahabharata - Adi Parva - Chapter Text

१-१९०-० (८५१४)
वैशंपायन उवाच। १-१९०-०क्ष् (१०८२)
स गन्धर्ववचः श्रुत्वा तत्तदा भरतर्षभ ।
अर्जुनः परया भक्त्या पूर्णचन्द्र इवाबभौ ॥ १-१९०-१ (८५१५)
उवाच च महेष्वासो गन्धर्वं कुरुसत्तमः ।
जातकौतूहलोऽतीव वसिष्ठस्य तपोबलात् ॥ १-१९०-२ (८५१६)
वसिष्ठ इति तस्यैतदृषेर्नाम त्वयेरितम् ।
एतदिच्छाम्यहं श्रोतुं यथावत्तद्वदस्व मे ॥ १-१९०-३ (८५१७)
य एष गन्धर्वपते पूर्वेषां नः पुरोहितः ।
आसीदेतन्ममाचक्ष्व क एष भगवानृषिः ॥ १-१९०-४ (८५१८)
गन्धर्व उवाच। १-१९०-५क्ष् (१०८३)
ब्रह्मणो मानसः पुत्रो वसिष्ठोऽरुन्धतीपतिः ।
तपसा निर्जितौ शश्वदजेयावमरैरपि ॥ १-१९०-५ (८५१९)
कामक्रोधावुभौ यस्य चरणौ समुवाहतुः ।
इन्द्रियाणां वशकरो वशिष्ठ इति चोच्यते ॥ १-१९०-६ (८५२०)
ग्यथा कामश्च क्रोधश्च निर्जितावजितौ नरैः ।
जितारयो जिता लोकाः पन्थानश्च जिता दिशः ॥' १-१९०-७ (८५२१)
यस्तु नोच्छेदनं चक्रे कुशिकानामुदारधीः ।
विश्वामित्रापराधेन धारयन्मन्युमुत्तमम् ॥ १-१९०-८ (८५२२)
पुत्रव्यसनसंतप्तः शक्तिमानप्यशक्तवत् ।
विश्वामित्रविनाशाय न चक्रे कर्म दारुणम् ॥ १-१९०-९ (८५२३)
मृतांश्च पुनराहर्तुं शक्तः पुत्रान्यमक्षयात् ।
कृतान्तं नातिचक्राम वेलामिव महोदधिः ॥ १-१९०-१० (८५२४)
यं प्राप्य विजितात्मानं महात्मानं नराधिपाः ।
इक्ष्वाकवो महीपाला लेभिरे पृथिवीमिमाम् ॥ १-१९०-११ (८५२५)
पुरोहितमिमं प्राप्य वसिष्ठमृषिसत्तमम् ।
ईजिरे क्रतुभिश्चैव नृपास्ते कुरुनन्दन ॥ १-१९०-१२ (८५२६)
स हि तान्याजयामास सर्वान्नृपतिसत्तमान् ।
ब्रह्मर्षिः पाण्डवश्रेष्ठ बृहस्पतिरिवामरान् ॥ १-१९०-१३ (८५२७)
तस्माद्धर्मप्रधानात्मा वेदधर्मविदीप्सितः ।
ब्राह्मणो गुणवान्कश्चित्पुरोधाः प्रतिदृश्यताम् ॥ १-१९०-१४ (८५२८)
क्षत्रियेणाभिजातेन पृथिवीं जेतुमिच्छता ।

पूर्वं पुरोहितः कार्यः पार्थ राज्याभिवृद्धये ॥ १-१९०-१५ (८५२९)
महीं जिगीषता राज्ञा ब्रह्म कार्यं पुरःस्कृतम् ।
तस्मात्पुरोहितः कश्चिद्गुणवान्विजितेन्द्रियः ।
विद्वान्भवतु वो विप्रो धर्मकामार्थतत्त्ववित् ॥ ॥ १-१९०-१६ (८५३०)

इति श्रीमन्महाभारते आदिपर्वमि चैत्ररथपर्वणि
नवत्यधिकशततमोऽध्यायः ॥ १९० ॥
Mahabharata - Adi Parva - Chapter Footnotes

१-१९०-२ तपोबलात् तपोबलं श्रुत्वा ॥
१-१९०-७ जितारयः जिता अस्य इति च्छेदः ॥
१-१९०-८ अपराधेन पुत्रशतवधरूपेण ॥
नवत्यधिकशततमोऽध्यायः ॥
१९० ॥

---

अध्यय१९१
॥ श्रीः ॥
१.१९१. अध्यायः १९१

Mahabharata - Adi Parva - Chapter Topics
वसिष्ठोपाख्याने---विश्वामित्रस्य वसिष्ठाश्रमाभिगमनं ॥ १ ॥
वसिष्ठेन विश्वामित्रस्यातिथ्यकरणं ॥ २ ॥
विश्वामित्रेण वसिष्ठधेनुयाचनं ॥ ३ ॥
वसिष्ठेनादत्ताया धेनोः विश्वामित्रेण बलात्कारेण हरणं ॥ ४ ॥
कुपितया नन्दिन्या सृष्टैः म्लेच्छाद्यैः विश्वामित्रपराजयः ॥ ५ ॥
विश्वामित्रस्य तपसा ब्राह्मण्यप्राप्तिः ॥ ६ ॥

Mahabharata - Adi Parva - Chapter Text

१-१९१-० (८५३१)
अर्जुन उवाच। १-१९१-०क्ष् (१०८४)
किंनिमित्तमभूद्वैरं विश्वामित्रवसिष्ठयोः ।
वसतोराश्रमे दिव्ये शंस नः सर्वमेव तत् ॥ १-१९१-१ (८५३२)
गन्धर्व उवाच। १-१९१-२क्ष् (१०८५)
इदं वासिष्ठमाख्यानं पुराणं परिचक्षते ।
पार्थ सर्वेषु लोकेषु यथावत्तन्निबोध मे ॥ १-१९१-२ (८५३३)
कान्यकुब्जे महानासीत्पार्थिवो भरतर्षभ ।

गाधीति विश्रुतो लोके कुशिकस्यात्मसंभवः ॥१-१९१-३ (८५३४)
तस्य धर्मात्मनः पुत्रः समृद्धबलवाहनः ।
विश्वामित्र इति ख्यतो बभूव रिपुमर्दनः ॥१-१९१-४ (८५३५)
स चचार सहामात्यो मृगयां गहने वने ।
मृगान्विध्यन्वराहांश्च रम्येषु मरुधन्वसु ॥१-१९१-५ (८५३६)
व्यायामकर्शितः सोऽथ मृगलिप्सुः पिपासितः ।
आजगाम नरश्रेष्ठ वसिष्ठस्याश्रमं प्रति ॥१-१९१-६ (८५३७)
तमागतमभिप्रेक्ष्य वसिष्ठः श्रेष्ठभागृषिः ।
विश्वामित्रं नरश्रेष्ठं प्रतिजग्राह पूजया ॥१-१९१-७ (८५३८)
पाद्यार्घ्याचमनीचैस्तं स्वागतेन च भारत ।
तथैव परिजग्राह वन्येन हविषा तदा ॥१-१९१-८ (८५३९)
तस्याथ कामधुग्धेनुर्वसिष्ठस्य महात्मनः ।
उक्ता कामान्प्रयच्छेति सा कामान्दुदुहे ततः ॥१-१९१-९ (८५४०)
ग्बाष्पाढ्यस्योदनस्यैव राशयः पर्वतोपमाः ।
निष्ठानानि च सूपांश्च दधिकुल्यास्तथैव च ॥१-१९१-१० (८५४१)
कूपांश्च घृतसंपूर्णान्गौड्यान्नानि सहस्रशः ।
इक्षून्मधूनि लाजांश्च मैरेयांश्च वरासवान् ॥' १-१९१-११ (८५४२)
ग्राम्यारण्याश्चौषधीश्च दुदुहे पय एव च ।
षड्रसं चामृतनिभं रसायनमनुत्तमम् ॥१-१९१-१२ (८५४३)
भोजनीयानि पेयानि भक्ष्याणि विविधानि च ।
लेह्यान्यमृतकल्पानि चोष्याणि च तथार्जुना ॥१-१९१-१३ (८५४४)
रत्नानि च महार्हाणि वासांसि विविधानि च ।
तैः कामैः सर्वसंपूर्णैः पूजितश्च महिपतिः ॥१-१९१-१४ (८५४५)
सामात्यः सबलश्चैव तुतोष स भृशं तदा ।
षडुन्नतां सुपार्श्वोरुं पृथुपञ्चसमावृताम् ॥१-१९१-१५ (८५४६)
मण्डूकनेत्रां स्वाकारां पीनोधसमनिन्दिताम् ।
सुवालधिं शङ्कुकर्णां चारुशृङ्गां मनोरमाम् ॥१-१९१-१६ (८५४७)
पुष्टायतशिरोग्रीवां विस्मितः सोऽभिवीक्ष्यताम् ।
अभिनन्द्य स तां राजा नन्दिनीं गाधिनन्दनः ॥१-१९१-१७ (८५४८)
अब्रवीच्च भृशं तुष्टः स राजा तमृषिं तदा ।
अर्बुदेन गवां ब्रह्मन्मम राज्येन वा पुनः ॥१-१९१-१८ (८५४९)
नन्दिनीं संप्रयच्छस्व भुङ्क्ष्व राज्यं महामुने। १-१९१-१९ (८५५०)
वसिष्ठ उवाच ।
देवतातिथिपित्रर्थं याज्यार्थं च पयस्विनी ॥ १-१९१-१९क्ष् (१०८६)
अदेया नन्दिनीयं वै राज्येनापि तवानघ। १-१९१-२० (८५५१)
विश्वामित्र उवाच ।

ग्रत्नं हि भगवन्नेतद्रत्नहारी च पार्थिवः।'
क्षत्रियोऽहं भवान्विप्रस्तपःस्वाध्यायसाधनः ॥ १-१९१-२०क्ष् (१०८७)
ब्राह्मेषु कुतो वीर्यं प्रशान्तेषु धृतात्मसु ।
अर्बुदेन गवां यस्त्वं न ददासि ममेप्सितम् ॥ १-१९१-२१ (८५५२)
स्वधर्मं न प्रहास्यामि नेष्यामि च बलेन गाम्। १-१९१-२२ (८५५३)
वसिष्ठ उवाच ।
बलस्थश्चासि राजा च बाहुवीर्यश्च क्षत्रियः ॥ १-१९१-२२क्ष् (१०८८)
यथेच्छसि तथा क्षिप्रं कुरु मा त्वं विचारय। १-१९१-२३ (८५५४)
गन्धर्व उवाच ।
एवमुक्तस्तथा पार्थ विश्वामित्रो बलादिव ॥ १-१९१-२३क्ष् (१०८९)
हंसचन्द्रप्रतीकाशां नन्दिनीं तां जहार गाम् ।
ग्सा तदा ह्रियमाणा च विश्वामित्रबलैर्बलात्।'
कशादण्डप्रणुदिता काल्यमाना इतस्ततः ॥ १-१९१-२४ (८५५५)
हंभायमाना कल्याणी वसिष्ठस्याथ नन्दिनी ।
आगम्याभिमुखी पार्थ तस्थौ भगवदुन्मुखी ॥ १-१९१-२५ (८५५६)
भृशं च ताड्यमाना वै न जगामाश्रमात्ततः। १-१९१-२६ (८५५७)
वसिष्ठ उवाच ।
शृणोमि ते रवं भद्रे विनदन्त्याः पुनः पुनः ॥ १-१९१-२६क्ष् (१०९०)
ह्रियसे त्वं बलाद्भद्रे विश्वामित्रेण नन्दिनि ।
किं कर्तव्यं मया तत्र क्षमावान्ब्राह्मणो ह्यहम्। १-१९१-२७ (८५५८)
गन्धर्व उवाच। १-१९१-२८क्ष् (१०९१)
सा भयान्नन्दिनी तेषां बलानां भरतर्षभ ।
विश्वामित्रभयोद्विग्ना वसिष्ठं समुपागमत् ॥ १-१९१-२८ (८५५९)
गौरुवाच। १-१९१-२९क्ष् (१०९२)
कशाग्रदण्डाभिहतां क्रोशन्तीं मामनाथवत् ।
विश्वामित्रबलैर्घोरैर्भगवन् किमुपेक्षसे ॥ १-१९१-२९ (८५६०)
गन्धर्व उवाच। १-१९१-३०क्ष् (१०९३)
एवं तस्यां तदा पार्थ धर्षितायां महामुनिः ।
न चुक्षुभे तदा धैर्यान्न चचाल धृतव्रतः ॥ १-१९१-३० (८५६१)
वसिष्ठ उवाच। १-१९१-३१क्ष् (१०९४)
क्षत्रियाणां बलं तेजो ब्राह्मणानां क्षमा बलम् ।
क्षमा मां भजते यस्माद्गम्यतां यदि रोचते ॥ १-१९१-३१ (८५६२)
नन्दिन्युवाच। १-१९१-३२क्ष् (१०९५)
किं नु त्यक्ताऽस्मि भगवन्यदेवं त्वं प्रभाषसे ।
अत्यक्ताऽहं त्वया ब्रह्मन्नेतुं शक्या न वै बलात् ॥ १-१९१-३२ (८५६३)
वसिष्ठ उवाच। १-१९१-३३क्ष् (१०९६)

न त्वां त्यजामि कल्याणि स्थीयतां यदि शक्यते ।
दृढेन दाम्ना बद्धवैष वत्सस्ते ह्रियते बलात् ॥ १-१९१-३३ (८५६४)
गन्धर्व उवाच। १-१९१-३४क्ष् (१०९७)
स्थीयतामिति तच्छ्रुत्वा वसिष्ठस्य पयस्विनी ।
ऊर्ध्वाञ्चितशिरोग्रीवा प्रबभौ रौद्रदर्शना ॥ १-१९१-३४ (८५६५)
क्रोधरक्तेक्षणा सा गौर्हंभारवघनस्वना ।
विश्वामित्रस्य तत्सैन्यं व्यद्रावयत सर्वशः ॥ १-१९१-३५ (८५६६)
कशाग्रदण्डाभिहता काल्यमाना ततस्ततः ।
क्रोधरक्तेक्षणा क्रोधं भूय एव समाददे ॥ १-१९१-३६ (८५६७)
आदित्य इव मध्याह्ने क्रोधदीप्तवपुर्बभौ ।
अङ्गारवर्षं मुञ्चन्ती मुहुर्वालधितो महत् ॥ १-१९१-३७ (८५६८)
असृजत्पह्लवान्पुच्छात्प्रस्रवाद्द्राविडाञ्छकान् ।
योनिदेशाच्च यवानाञ्शकृतः शबरान्बहून् ॥ १-१९१-३८ (८५६९)
मूत्रतश्चासृजत्कांश्चिच्छबरांश्चैव पार्श्वतः ।
पौण्ड्रान्किरातान्यवनान्सिंहलान्बर्बरान्खसान् ॥ १-१९१-३९ (८५७०)
चिबुकांश्च पुलिन्दांश्च चीनान्हूणान्सकेरलान् ।
ससर्ज फेनतः सा गौर्म्लेच्छान्बहुविधानपि ॥ १-१९१-४० (८५७१)
तैर्विसृष्टैर्महासैन्यैर्नानाम्लेच्छगणैस्तदा ।
नानावरणसंछन्नैर्नानायुधधरैस्तथा ॥ १-१९१-४१ (८५७२)
अवाकीर्यत संरब्धैर्विश्वामित्रस्य पश्यतः ।
एकैकश्च तदा योधः पञ्चभिः सप्तभिर्वृतः ॥ १-१९१-४२ (८५७३)
अस्त्रवर्षेण महता वध्यमानं बलं तदा ।
प्रभग्नं सर्वतस्त्रस्तं विश्वामित्रस्य पश्यतः ॥ १-१९१-४३ (८५७४)
ग्तस्य तच्चतुरङ्गं वै बलं परमदुःसहम् ।
प्रभग्नं सर्वतो घोरं पयस्विन्या विनिर्जितम् ॥' १-१९१-४४ (८५७५)
न च प्राणैर्वियुज्यन्ते केचित्तत्रास्य सैनिकाः ।
विश्वामित्रस्य संक्रुद्धैर्वासिष्ठैर्भरतर्षभ ॥ १-१९१-४५ (८५७६)
सा गौस्तत्सकलं सैन्यं कालयामास दूरतः ।
विश्वामित्रस्य तत्सैन्यं काल्यमानं त्रियोजनम् ॥ १-१९१-४६ (८५७७)
क्रोशमानं भयोद्विग्नं त्रातारं नाध्यगच्छत ।
गविश्वामित्रस्ततो दृष्ट्वा क्रोधाविष्टः स रोदसी ॥ १-१९१-४७ (८५७८)
ववर्ष शरवर्षाणि वसिष्ठे मुनिसत्तमे ।
घोररूपांश्च नाराचान्क्षुरान्भल्लान्महामुनिः ॥ १-१९१-४८ (८५७९)
विश्वामित्रप्रयुक्तांस्तान्वैणवेन व्यमोचयत् ।
वसिष्ठस्य तदा दृष्ट्वा कर्मकौशलमाहवे ॥ १-१९१-४९ (८५८०)
विश्वामित्रोऽपि कोपेन भूयः शत्रुनिपातनः ।

दिव्यास्त्रवर्षं तस्मै स प्राहिणोन्मुनये रुषा ॥ १-१९१-५० (८५८१)
आग्नेयं वारुणं चैन्द्रं याम्यं वायव्यमेव च ।
विससर्ज महाभागे वसिष्ठे ब्रह्मणः सुते ॥ १-१९१-५१ (८५८२)
अस्त्राणि सर्वतो ज्वालां विसृजन्ति प्रपेदिरे ।
युगान्तसमये घोराः पतङ्गस्येव रश्मयः ॥ १-१९१-५२ (८५८३)
वसिष्ठोऽपि महातेजा ब्रह्मशक्तिप्रयुक्तया ।
यष्ट्या निवारयामास सर्वाण्यस्त्राणि स स्मयन् ॥ १-१९१-५३ (८५८४)
ततस्ते भस्मसाद्भूताः पतन्ति स्म महीतले ।
अपोह्य दिव्यान्यस्त्राणि वसिष्ठो वाक्यमब्रवीत् ॥ १-१९१-५४ (८५८५)
निर्जितोऽसि महाराज दुरात्मन्गाधिनन्दन ।
यदि तेऽस्ति परं शौर्यं तद्दर्शय मयि स्थिते ॥ १-१९१-५५ (८५८६)
गन्धर्व उवाच। १-१९१-५६क्ष् (१०९८)
विश्वामित्रस्तथा चोक्तो वसिष्ठेन नराधिपः ।
नोवाच किंचिद्व्रीडाढ्यो विद्रावितमहाबलः'॥ १-१९१-५६ (८५८७)
दृष्ट्वा तन्महदाश्चर्यं ब्रह्मतेजोभवं तदा ।
विश्वामित्रः क्षत्रभावान्निर्विण्णो वाक्यमब्रवीत् ।
धिग्बलं क्षत्रियबलं ब्रह्मतेजोबलं बलम् ॥ १-१९१-५७ (८५८८)
बलाबले विनिश्चित्य तप एव परं बलम्। १-१९१-५८ (८५८९)
गन्धर्व उवाच ।
स राज्यं स्फीतमुत्सृज्य तां च दीप्तां नृपश्रियम् ॥ १-१९१-५८क्ष् (१०९९)
भोगांश्च पृष्ठतः कृत्वा तपस्येव मनो दधे ।
स गत्वा तपसा सिद्धिं लोकान्विष्टभ्य तेजसा ॥ १-१९१-५९ (८५९०)
ततापु सर्वान्दीप्तौजा ब्राह्मणत्वमवाप्तवान् ।
अपिबच्च ततः सोममिन्द्रेण सह कौशिकः ॥ १-१९१-६० (८५९१)
गएवंवीर्यस्तु राजर्षिर्विप्रर्षिः संबभूव ह'॥ ॥ १-१९१-६१ (८५९२)

इति श्रीमन्महाभारते आदिपर्वणि चैत्ररथपर्वमि
एकनवत्यधिकशततमोऽध्यायः ॥ १९१ ॥
Mahabharata - Adi Parva - Chapter Footnotes

१-१९१-५ मरुधन्वसु मरुसंज्ञकेष्वल्पजलप्रदेशेषु ॥
१-१९१-३८ पह्लवादयो म्लेच्छविशेषाः ॥
एकनवत्यधिकशततमोऽध्यायः ॥
१९१ ॥

---

अध्यय१९२
॥ श्रीः ॥

१.१९२. अध्यायः १९२

Mahabharata - Adi Parva - Chapter Topics

कल्माषपादराजोपाख्याने---वसिष्ठपुत्रेण शक्तिना कल्माषपादं प्रति शापदानं ॥ १ ॥
पुनरन्येन ब्राह्मणेन च कल्माषपादंप्रति शापदानं ॥ २ ॥
राक्षसाविष्टेन कल्माषपादेन वसिष्ठपुत्राणां भक्षणं ॥ ३ ॥
पुत्रशोकाभिसंतप्तेन वसिष्ठेन प्राणत्यागार्थं अनेकधा प्रयतनम् ॥ ४ ॥

Mahabharata - Adi Parva - Chapter Text

१-१९२-० (८५९३)
्अर्जुन उवाच। १-१९२-०क्ष् (११००)
ऋष्योस्तु यत्कृते वैरं विश्वामित्रवसिष्ठयोः ।
बभूव गन्धर्वपते शंस तत्सर्वमेव मे ॥ १-१९२-१ (८५९४)
माहात्म्यं च वसिष्ठस्य ब्राह्मण्यं ब्रह्मतेजसः ।
विश्वामित्रस्य च तथा क्षत्रस्य च महात्मनः ॥ १-१९२-२ (८५९५)
न शृण्वानस्त्वहं तृप्तिमुपगच्छामि खेचर ।
आख्याहि गन्धर्वपते शंस तत्सर्वमेव मे ॥ १-१९२-३ (८५९६)
माहात्म्यं च वसिष्ठस्य विश्वामित्रस्य भाषते ॥ १-१९२-४ (८५९७)
गन्धर्व उवाच। १-१९२-५क्ष् (११०१)
इदं वासिष्ठमाख्यानं पुराणं पुण्यमुत्तमम् ।
पार्थ सर्वेषु लोकेषु विश्रुतं तन्निबोध मे ॥' १-१९२-५ (८५९८)
कल्माषपाद इत्येवं लोके राजा बभूव ह ।
इक्ष्वाकुवंशजः पार्थ तेजसाऽसदृशो भुवि ॥ १-१९२-६ (८५९९)
स कदाचिद्वनं राजा मृगयां निर्ययौ पुरात् ।
मृगान्विध्यन्वराहांश्च चचार रिपुमर्दनः ॥ १-१९२-७ (८६००)
तस्मिन्वने महाघोरे खड्गांश्च बहुशोऽहनत् ।
हत्वा च सुचिरं श्रान्तो राजा निववृते ततः ॥ १-१९२-८ (८६०१)
अकामयत्तं याज्यार्थे विश्वामित्रः प्रतापवान् ।
स तु राजा महात्मानं वासिष्ठमृषिसत्तमम् ॥ १-१९२-९ (८६०२)
तृषार्तश्च क्षुधार्तश्च एकायनगतः पथि ।
अपश्यदजितः सङ्ख्ये मुनिं प्रतिमुखागतम् ॥ १-१९२-१० (८६०३)
शक्तिं नाम महाभागं वसिष्ठकुलवर्धनम् ।
ज्येष्ठं पुत्रं पुत्रशताद्वसिष्ठस्य महात्मनः ॥ १-१९२-११ (८६०४)
अपगच्छ पथोऽस्माकमित्येवं पार्थिवोऽब्रवीत् ।

तथा ऋषिरुवाचैनं सान्त्वयञ्श्लक्ष्णया गिरा ॥१-१९२-१२ (८६०५)
मम पन्था महाराज धर्म एष सनातनः ।
ग्वृद्धभीरुनृपस्नातस्त्रीरोगिवरचक्रिणाम् ॥१-१९२-१३ (८६०६)
पन्था देयो नृपैस्तेषामन्यैस्तैस्तस्य भूपतेः।'
राज्ञा सर्वेषा धर्मेषु देयः पन्था द्विजातये ॥ १-१९२-१४ (८६०७)
एवं परस्परं तौ तु पथोऽर्थं वाक्यमूचतुः ।
अपसर्पापसर्पेति वागुत्तरमकुर्वताम् ॥१-१९२-१५ (८६०८)
ऋषिस्तु नापचक्राम तस्मिन्धर्मपथे स्थितः ।
ग्अपि राजा मुनेर्मार्गात्क्रोधान्नापजगाम ह ॥' १-१९२-१६ (८६०९)
अमुञ्चन्तं तु पन्थानं तमृषिं नृपसत्तमः ।
जगाम कशया मोहात्तदा राक्षसन्मुनिम् ॥१-१९२-१७ (८६१०)
कशाप्रहाराभिहतस्ततः स मुनिसत्तमः ।
तं शशाप नृपश्रेष्ठं वासिष्ठः क्रोधमूर्च्छितः ॥१-१९२-१८ (८६११)
हंसि राक्षसवद्यस्माद्राजापशद तापसम् ।
तस्मात्त्वमद्यप्रभृति पुरुषादो भविष्यसि ॥१-१९२-१९ (८६१२)
मनुष्यपिशिते सक्तश्चरिष्यसि महीमिमाम् ।
गच्छ राजाधमेत्युक्तः शक्तिना वीर्यशक्तिना ॥१-१९२-२० (८६१३)
ततो याज्यनिमित्तं तु विश्वामित्रवसिष्ठयोः ।
वैरमासीत्तदा तं तु विश्वामित्रोऽन्वपद्यत ॥१-१९२-२१ (८६१४)
तयोर्विवदतोरेवं समीपमुपचक्रमे ।
ऋषिरुग्रतपाः पार्थ विश्वामित्रः प्रतापवान् ॥१-१९२-२२ (८६१५)
ततः स बुबुधे पश्चात्तमृषिं नृपसत्तमः ।
ऋषेः पुत्रं वसिष्ठस्य वसिष्ठमिव तेजसा ॥१-१९२-२३ (८६१६)
अन्तर्धाय ततोऽत्मानं विश्वामित्रोऽपि भारत ।
तावुभावतिचक्राम चिकीर्षन्नात्मनः प्रियम् ॥१-१९२-२४ (८६१७)
स तु शप्तस्तदा तेन शक्तिना वै नृपोत्तमः ।
जगाम शरणं शक्तिं प्रसादयितुमर्हयन् ॥१-१९२-२५ (८६१८)
तस्य भावं विदित्वा स नृपतेः कुरुसत्तम ।
विश्वामित्रस्ततो रक्ष आदिदेश नृपं प्रति ॥१-१९२-२६ (८६१९)
शापात्तस्य तु विप्रर्षेर्विश्वामित्रस्य चाज्ञया ।
राक्षसः किङ्करो नाम विवेश नृपतिं तदा ॥१-१९२-२७ (८६२०)
रक्षसा तं गृहीतं तु विदित्वा मुनिसत्तमः ।
विश्वामित्रोऽप्यपाक्रामत्तस्माद्देशादरिन्दम ॥१-१९२-२८ (८६२१)
ततः स नृपतिर्विद्वान्रक्षन्नात्मानमात्मना ।
बलवत्पीड्यमानोऽपि रक्षसान्तर्गतेन ह ॥१-१९२-२९ (८६२२)
ददर्शाथ द्विजः कश्चिद्राजानं प्रस्थितं वनम् ।

अयाचत क्षुधापन्नः समांसं भोजनं तदा ॥ १-१९२-३० (८६२३)
तमुवाचाथ राजर्षिर्द्विजं मित्रसहस्तदा ।
आस्स्व ब्रह्मंस्त्वमत्रैव मुहूर्तं प्रतिपालयन् ॥ १-१९२-३१ (८६२४)
निवृत्तः प्रतिदास्यामि भोजनं ते यथेप्सितम् ।
इत्युक्त्वा प्रययौ राजा तस्थौ च द्विजसत्तमः ॥ १-१९२-३२ (८६२५)
ततो राजा परिक्रम्य यथाकामं यथासुखम् ।
निवृत्तोऽन्तःपुरं पार्थ प्रविवेश महामनाः ॥ १-१९२-३३ (८६२६)
ग्अन्तर्गतस्तदा राजा श्रुत्वा ब्राह्मणभाषितम् ।
सोऽन्तःपुरं प्रविश्याथ न सस्मार नराधिपः ॥' १-१९२-३४ (८६२७)
ततोऽर्धरात्र उत्थाय सूदमानाय्य सत्वरम् ।
उवाच राजा संस्मृत्य ब्राह्मणस्य प्रतिश्रुतम् ॥ १-१९२-३५ (८६२८)
गच्छामुष्मिन्वनोद्देशे ब्राह्मणो मां प्रतीक्षते ।
अन्नार्थी तं त्वमन्नेन समांसेनोपपादय ॥ १-१९२-३६ (८६२९)
गन्धर्व उवाच। १-१९२-३७क्ष् (११०२)
एवमुक्तस्ततः सूदः सोऽनासाद्यामिषं क्वचित् ।
निवेदयामास तदा तस्मै राज्ञे व्यथान्वितः ॥ १-१९२-३७ (८६३०)
राजा तु रक्षसाविष्टः सूदमाह गतव्यथः ।
अप्येनं नरमांसेन भोजयेति पुनः पुनः ॥ १-१९२-३८ (८६३१)
तथेत्युक्त्वा ततः सूदः संस्थानं वध्यघातिनाम् ।
गत्वाऽऽजहार त्वरितो नरमांसमपेतभीः ॥ १-१९२-३९ (८६३२)
एतत्संस्कृत्य विधिवदन्नोपहितमाशु वै ।
तस्मै प्रादाद्ब्राह्मणाय क्षुधिताय तपस्विने ॥ १-१९२-४० (८६३३)
स सिद्धचक्षुषा दृष्ट्वा तदन्नं द्विजसत्तमः ।
अभोज्यमिदमित्याह क्रोधपर्याकुलेक्षणः ॥ १-१९२-४१ (८६३४)
ब्राह्मण उवाच। १-१९२-४२क्ष् (११०३)
यस्मादभोज्यमन्नं मे ददाति स नृपाधमः ॥ १-१९२-४२ (८६३५)
सक्तो मानुषमांसेषु यथोक्तः शक्तिना पुरा ।
उद्वेजनीयो भूतानां चरिष्यति महीमिमाम् ॥ १-१९२-४३ (८६३६)
गन्धर्व उवाच। १-१९२-४४क्ष् (११०४)
द्विरनुव्याहृते राज्ञः स शापो बलवानभूत् ।
रक्षोबलसमाविष्टो विसंज्ञश्चाभवन्नृपः ॥ १-१९२-४४ (८६३७)
ततः स नृपतिश्रेष्ठो रक्षसापहृतेन्द्रियः ।
उवाच शक्तिं तं दृष्ट्वा न चिरादिव भारत ॥ १-१९२-४५ (८६३८)
यस्मादसदृशः शापः प्रयुक्तोऽयं मयि त्वया ।
तस्मात्त्वत्तः प्रवर्तिष्ये खादितुं पुरुषानहम् ॥ १-१९२-४६ (८६३९)
एवमुक्त्वा ततः सद्यस्तं प्राणैर्विप्रयोज्य च ।

शक्तिं तं भक्षयामास व्याघ्रः पशुमिवेप्सितम् ॥ १-१९२-४७ (८६४०)
शक्तिनं तु मृतं दृष्ट्वा विश्वामित्रः पुनःपुनः ।
वसिष्ठस्यैव पुत्रेषु तद्रक्षः संदिदेश ह ॥ १-१९२-४८ (८६४१)
स ताञ्शक्त्यवरान्पुत्रान्वसिष्ठस्य महात्मनः ।
भक्षयामास संक्रुद्धः सिंहः क्षुद्रमृगानिव ॥ १-१९२-४९ (८६४२)
वसिष्ठो घातिताञ्श्रुत्वा विश्वामित्रेण तान्सुतान् ।
धारयामास तं शोकं महाद्रिरिव मेदिनीम् ॥ १-१९२-५० (८६४३)
चक्रे चात्मविनाशाय बुद्धिं स मुनिसत्तमः ।
न त्वेव कौशिकोच्छेदं मेने मतिमतां वरः ॥ १-१९२-५१ (८६४४)
स मेरुकूटादात्मानं मुमोच भगवानृषिः ।
गिरेस्तस्य शिलायां तु तूलराशाविवापतत् ॥ १-१९२-५२ (८६४५)
न ममार च पातेन स यदा तेन पाण्डव ।
तदाग्निमिद्धं भगवान्संविवेश महावने ॥ १-१९२-५३ (८६४६)
तं तदा सुसमिद्धोऽपि न ददाह हुताशनः ।
दीप्यमानोऽप्यमित्रघ्न शीतोऽग्निरभवत्ततः ॥ १-१९२-५४ (८६४७)
स समुद्रमभिप्रेक्ष्य शोकाविष्टो महामुनिः ।
बद्ध्वा कण्ठे शिलां गुर्वीं निपपात तदाम्भसि ॥ १-१९२-५५ (८६४८)
स समुद्रोर्मिवेगेन स्थले न्यस्तो महामुनिः ।
न ममार यदा विप्रः कथंचित्संशितव्रतः ।
जगाम स ततः खिन्नः पुनरेवाश्रमं प्रति ॥ ॥ १-१९२-५६ (८६४९)

इति श्रीमन्महाभारते आदिपर्वणि चैत्ररथपर्वणि
द्विनवत्यधिकशततमोऽध्यायः ॥ १९२ ॥
Mahabharata - Adi Parva - Chapter Footnotes

१-१९२-९ याज्यार्थे अयं मम याज्यो भवत्वित्येतदर्थम् ॥
१-१९२-१० एकायनगतः अतिसंकुचितमार्गे गतः ॥
१-१९२-५२ मुमोच पातयामास ।आत्मानं देहम् ॥
द्विनवत्यधिकशततमोऽध्यायः ॥
१९२ ॥

---

अध्यय१९३
॥ श्रीः ॥
१.१९३. अध्यायः १९३

Mahabharata - Adi Parva - Chapter Topics
पूर्वोपायैरपि दुस्त्यजप्राणस्य वसिष्ठस्य पुनर्गङ्गापतनादिनापि

प्राणत्यागासंभवे आश्रमं प्रत्यागमनम् ॥ १ ॥
तत्र शक्तिभार्यामदृश्यन्तीनाम्नी गर्भवतीं ज्ञात्वा
आत्मघातान्निवर्तनं ॥ २ ॥
अदृश्यन्त्या सह गच्छन्तं वसिष्ठं भक्षयितुमागतस्य
कल्माषपादस्य वसिष्ठेन शापान्मोक्षणं ॥ ३ ॥
सौदासपत्न्या वसिष्ठाद्गर्भसंभवः ॥ ४ ॥
अश्मकनामकपुत्रोत्पत्तिः ॥ ५ ॥

Mahabharata - Adi Parva - Chapter Text

१-१९३-० (८६५०)
गन्धर्व उवाच। १-१९३-०क्ष् (११०५)
ततो दृष्ट्वाश्रमपदं रहितं तैः सुतैर्मुनिः ।
निर्जगाम सुदुःखार्तः पुनरप्याश्रमात्ततः ॥ १-१९३-१ (८६५१)
सोऽपश्यत्सरितं पूर्णां प्रावृट्काले नवाम्भसा ।
वृक्षान्बहुविधान्पार्थ हरन्तीं तीरजान्बहून् ॥ १-१९३-२ (८६५२)
अथ चिन्तां समापेदे पुनः कौरवनन्दन ।
अम्भस्यस्या निमज्जेयमिति दुःखसमन्वितः ॥ १-१९३-३ (८६५३)
ततः पाशैस्तदात्मानं गाढं बद्ध्वा महामुनिः ।
तस्या जले महानद्या निममज्ज सुदुःखितः ॥ १-१९३-४ (८६५४)
अथ च्छित्त्वा नदी पाशांस्तस्यारिबलसूदन ।
स्थलस्थं तमृषिं कृत्वा विपाशं समवासृजत् ॥ १-१९३-५ (८६५५)
उत्ततार ततः पाशैर्विमुक्तः स महानृषिः ।
विपाशेति च नामास्या नद्याश्चक्रे महानृषिः ॥ १-१९३-६ (८६५६)
ग्सा विपाशेति विख्याता नदी लोकेषु भारत ।
ऋषेस्तस्य नरव्याघ्र वचनात्सत्यवादिनः ।
उत्तीर्य च तदा राजन्दुःखितो भगवानृषिः ॥' १-१९३-७ (८६५७)
शोके बुद्धिं तदा चक्रे न चैकत्र व्यतिष्ठत ।
सोऽगच्छत्पर्वतांश्चैव सरितश्च सरांसि च ॥ १-१९३-८ (८६५८)
दृष्ट्वा स पुनरेवर्षिर्नदीं हैमवतीं तदा ।
चण्डग्राहवतीं भीमां तस्याः स्रोतस्यपातयत् ॥ १-१९३-९ (८६५९)
सा तमग्निसं विप्रमनुचिन्त्य सरिद्वरा ।
शतधा विद्रुता तस्माच्छतद्रुरिति विश्रुता ॥ १-१९३-१० (८६६०)
ततः स्थलगतं दृष्ट्वा तत्राप्यात्मानमात्मना ।
मर्तुं न शक्यमित्युक्त्वा पुवरेवाश्रमं ययौ ॥ १-१९३-११ (८६६१)
स गत्वा विविधाञ्शैलान्देशान्बहुविधांस्तथा ।

अदृशन्त्याख्यया वध्वाथाश्रमेनुसृतोऽभवत् ॥ १-१९३-१२ (८६६२)
अथ शुश्राव संगत्या वेदाध्ययननिःस्वनम् ।
पृष्ठतः परिपूर्णार्थं षड्भिरङ्गैरलङ्कृतम् ॥ १-१९३-१३ (८६६३)
अनुव्रजति कोन्वेष मामित्येवाथ सोऽब्रवीत् ।
अदृश्यन्त्येवमुक्ता वै तं स्नुषा प्रत्यभाषत ॥ १-१९३-१४ (८६६४)
शक्तोभार्या महाभाग तपोयुक्ता तपस्विनम् ।
अहमेकाकिनी चापि त्वया गच्छामि नापरः ॥ १-१९३-१५ (८६६५)
वसिष्ठ उवाच। १-१९३-१६क्ष् (११०६)
पुत्रि कस्यैष साङ्गस्य वेदस्याध्ययनस्वनः ।
पुरा साङ्गस्य वेदस्य शक्तेरिव मया श्रुतः ॥ १-१९३-१६ (८६६६)
अदृश्यन्त्युवाच। १-१९३-१७क्ष् (११०७)
अयं कुक्षौ समुत्पन्नः शक्तेर्गर्भः सुतस्य ते ।
समा द्वादश तस्येह वेदानभ्यस्यतो मुने ॥ १-१९३-१७ (८६६७)
गन्धर्व उवाच। १-१९३-१८क्ष् (११०८)
एवमुक्तस्तया हृष्टो वसिष्ठः श्रेष्ठभागृषिः ।
अस्ति सन्तानमित्युक्त्वा मृत्योः पार्थ न्यवर्तत ॥ १-१९३-१८ (८६६८)
ततः प्रतिनिवृत्तः स तया वध्वा सहानघ ।
कल्माषपादमासीनं ददर्श विजने वने ॥ १-१९३-१९ (८६६९)
स तु दृष्ट्वैव तं राजा क्रुद्ध उत्थाय भारत ।
आविष्टो रक्षसोग्रेण इयेषात्तुं तदा मुनिम् ॥ १-१९३-२० (८६७०)
अदृश्यन्ती तु तं दृष्ट्वा क्रूरकर्माणमग्रतः ।
भयसंविग्नया वाचा वसिष्ठमिदमब्रवीत् ॥ १-१९३-२१ (८६७१)
असौ मृत्युरिवोग्रेण दण्डेन भगवन्नितः ।
प्रगृहीतेन काष्ठेन राक्षसोऽभ्येति दारुणः ॥ १-१९३-२२ (८६७२)
तं निवारयितुं शक्तो नान्योऽस्ति भुवि कश्चन ।
स्वदृतेऽद्य महाभाग सर्ववेदविदां वर ॥ १-१९३-२३ (८६७३)
पाहि मां भगवन्पापादस्माद्दारुणदर्शनात् ।
राक्षसोऽयमिहात्तुं वै नूनमावां समीहते ॥ १-१९३-२४ (८६७४)
वसिष्ठ उवाच। १-१९३-२५क्ष् (११०९)
माभैः पुत्रि न भेतव्यं राक्षसात्तु कथंचन ।
नैतद्रक्षो भयं यस्मात्पश्यसि त्वमुपस्थितम् ॥ १-१९३-२५ (८६७५)
राजा कल्माषपादोऽयं वीर्यवान्प्रथितो भुवि ।
स एषोऽस्मिन्वनोद्देशे निवसत्यतिभीषणः ॥ १-१९३-२६ (८६७६)
गन्धर्व उवाच। १-१९३-२७क्ष् (१११०)
तमापतन्तं संप्रेक्ष्य वसिष्ठो भगवानृषिः ।
वारयामास तेजस्वी हुङ्कारेणैव भारत ॥ १-१९३-२७ (८६७७)

मन्त्रपूतेन च पुनः स तमभ्युक्ष्य वारिणा ।
मोक्षयामास वै शापात्तस्माद्योगान्नराधिपम् ॥ १-१९३-२८ (८६७८)
स हि द्वादश वर्षाणि वासिष्ठस्यैव तेजसा ।
ग्रस्त आसीद्ग्रहेणेव पर्वकाले दिवाकरः ॥ १-१९३-२९ (८६७९)
रक्षसा विप्रमुक्तोऽथ स नृपस्तद्वनं महत् ।
तेजसा रञ्जयामास न्ध्याभ्रमिव भास्करः ॥ १-१९३-३० (८६८०)
प्रतिलभ्य ततः संज्ञामभिवाद्य कृताञ्जलिः ।
उवाच नृपतिः काले वसिष्ठमृषिसत्तमम् ॥ १-१९३-३१ (८६८१)
सौदासोऽहं महाभाग याज्यस्ते मुनिसत्तम ।
अस्मिन्काले यदिष्टं ते ब्रूहि किं करवाणि ते ॥ १-१९३-३२ (८६८२)
वसिष्ठ उवाच। १-९३-३३क्ष् (१११११)
वृत्तमेतद्यथाकालं गच्छ राज्यं प्रशाधि वै ।
ब्राह्मणं तु मनुष्येन्द्र माऽवमंस्थाः कदाचन ॥ १-१९३-३३ (८६८३)
राजोवाच। १-१९३-३४क्ष् (१११२)
नावमंस्ये महाभाग कदाचिद्ब्राह्मणर्षभान् ।
त्वन्निदेशे स्थितः सम्यक् पूजयिष्याम्यहं द्विजान् ॥ १-१९३-३४ (८६८४)
इक्ष्वाकूणां च येनाहमनृणः स्यां द्विजोत्तम ।
तत्त्वत्तः प्राप्तुमिच्छामि सर्ववेदविदां वर ॥ १-१९३-३५ (८६८५)
अपत्यायेप्सिताय त्वं महिषीं गन्तुमर्हसि ।
शीलरूपगुणोपेतामिक्ष्वाकुकुलवृद्धये ॥ १-१९३-३६ (८६८६)
गन्धर्व उवाच। १-१९३-३७क्ष् (१११३)
ददानीत्येव तं तत्र राजानं प्रत्युवाच ह ।
वसिष्ठः परमेष्वासं सत्यसन्धो द्विजोत्तमः ॥ १-१९३-३७ (८६८७)
ततः प्रतिययौ काले वसिष्ठः सह तेन वै ।
ख्यातां पुरीमिमां लोकेष्वयोध्यां मनुजेश्वर ॥ १-१९३-३८ (८६८८)
तं प्रजाः प्रतिमोदन्त्यः सर्वाः प्रत्युद्गतास्तदा ।
विपाप्मानं महात्मानं दिवौकस इवेश्वरम् ॥ १-१९३-३९ (८६८९)
सुचिराय मनुष्येन्द्रो नगरीं पुण्यलक्षणाम् ।
विवेश सहितस्तेन वसिष्ठेन महर्षिणा ॥ १-१९३-४० (८६९०)
ददृशुस्तं महीपालमयोध्यावासिनो जनाः ।
पुरोहितेन सहितं दिवाकरमिवोदितम् ॥ १-१९३-४१ (८६९१)
स च तां पूरयामास लक्ष्म्या लक्ष्मीवतां वरः ।
अयोध्यां व्योम शीतांशुः शरत्काल इवोदितः ॥ १-१९३-४२ (८६९२)
संसक्तिमृष्टपन्थानं पताकाध्वजशोभितम् ।
मनः प्रह्लादयामास तस्य तत्पुरमुत्तमम् ॥ १-१९३-४३ (८६९३)
तुष्टपुष्टजनाकीर्णा सा पुरी कुरुनन्दन ।

अशोभत तदा तेन शक्रेणेवामरावती ॥१-१९३-४४ (८६९४)
ततः प्रविष्टे राजर्षौ तस्मिंस्तत्पुरमुत्तमम् ।
राज्ञस्तस्याज्ञया देवी वसिष्ठमुपचक्रमे ॥१-१९३-४५ (८६९५)
ऋतावथ महर्षिस्तु संबभूव तया सह ।
देव्या दिव्येन विधिना वसिष्ठः श्रेष्ठभागृषिः ॥१-१९३-४६ (८६९६)
ततस्तस्यां समुत्पन्ने गर्भे स मुनिसत्तमः ।
राज्ञाभिवादितस्तेन जगाम मुनिराश्रमम् ॥१-१९३-४७ (८६९७)
दीर्घकालेन सा गर्भं सुषुवे न तु तं यदा ।
तदा देव्यश्मना कुक्षिं निर्बिभेद यशस्विनी ॥१-१९३-४८ (८६९८)
ततो द्वादशमे वर्षे स जज्ञे पुरुषर्षभः ।
अश्मको नाम राजर्षिः पौदन्यं यो न्यवेशयत् ॥ ॥१-१९३-४९ (८६९९)

इति श्रीमन्महाभारते आदिपर्वणि चैत्ररथपर्वणि
त्रिनवत्यधिकशततमोऽध्यायः ॥१९३ ॥
Mahabharata - Adi Parva - Chapter Footnotes

१-१९३-१२ वध्वा स्नुषया ॥
१-१९३-४८ निष्पिपेष मनस्विनीति ङ ।पाठः ॥
त्रिनवत्यधिकशततमोऽध्यायः ॥
१९३ ॥

---

अध्यय१९४
॥ श्रीः ॥
१.१९४. अध्यायः १९४

Mahabharata - Adi Parva - Chapter Topics
पराशरोत्पत्तिः ॥१ ॥
पितरं कल्माषपादभक्षितं ज्ञात्वा क्रुद्धेन पराशरेण लोकविनाशाय यतनम् ॥२ ॥
कर्तवीर्यार्जुन वंश्यैः क्षत्रियैः धनार्थं भृगुवंश्यानां ब्राह्मणानां हननम् ॥३ ॥
क्षत्रियभीत्या कयाचिद्ब्राह्मण्या ऊरौ गर्भं धृतं हन्तुं क्षत्रियाणामुद्यमः ॥४ ॥
ऊरुं भित्वा निर्गतस्य बालकस्य तेजसान्धीभूतानां क्षत्रियाणां ब्राह्मणींप्रति शरणगमनम् ॥५ ॥

Mahabharata - Adi Parva - Chapter Text

१-१९५-० (८७००)
गन्धर्व उवाच।१-१९५-०क्ष् (१११४)
आश्रमस्था ततः पुत्रमदृश्यन्ती व्यजायत ।
शक्तेः कुलकरं राजन् द्वितीयमिव शक्तिनम् ॥१-१९४-१ (८७०१)
जातकर्मादिकास्तस्य क्रियाः स मुनिसत्तमः ।
पौत्रस्य भरतश्रेष्ठ चकार भगवान्स्वयम् ॥१-१९४-२ (८७०२)
परासुः स यतस्तेन वसिष्ठः स्थापितो मुनिः ।
गर्भस्थेन ततो लोके पराशर इति स्मृतः ॥१-१९४-३ (८७०३)
अमन्यत स धर्मात्मा वसिष्ठं पितरं मुनिः ।
जन्मप्रभृति तस्मिंस्तु पितरीवान्ववर्तत ॥१-१९४-४ (८७०४)
स तात इति विप्रर्षि वसिष्ठं प्रत्यभाषत ।
मातुः समक्षं कौन्तेय अदृश्यन्त्याः परन्तप ॥१-१९४-५ (८७०५)
तातेति परिपूर्णार्थं तस्य तन्मधुरं वचः ।
अदृश्यन्त्यश्रुपूर्णाक्षी शृण्वती तमुवाच ह ॥१-१९४-६ (८७०६)
मा तात ताततातेति ब्रूह्येनं पितरं पितुः ।
रक्षसा भक्षितस्तात तव तातो वनान्तरे ॥१-१९४-७ (८७०७)
मन्यसे यं तु तातेति नैष तातस्तवानघ ।
आर्य एष पिता तस्य पितुस्तव यशस्विनः ॥१-१९४-८ (८७०८)
स एवमुक्तो दुःखार्तः सत्यवागृषिसत्तमः ।
सर्वलोकविनाशाय मतिं चक्रे महामनाः ॥१-१९४-९ (८७०९)
तं तथा निश्चितात्मानं स महात्मा महातपाः ।
ऋषिर्ब्रह्मविदां श्रेष्ठो मैत्रावरुणिरन्त्यधीः ॥१-१९४-१० (८७१०)
वसिष्ठो वारयामास हेतुना येन तच्छृणु। १-१९४-११ (८७११)
वसिष्ठ उवाच ।
कृतवीर्य इति ख्यातो बभूव पृथिवीपतिः ॥ १-१९४-११क्ष् (१११५)
याज्यो वेदविदां लोके भृगूणां पार्थिवर्षभः ।
स तानग्रभुजस्तात धान्येन च धनेन च ॥१-१९४-१२ (८७१२)
सोमान्ते तर्पयामास विपुलेन विशांपतिः ।
तस्मिन्नृपतिशार्दूले स्वर्यातेऽथ कथंचन ॥१-१९४-१३ (८७१३)
बभूव तत्कुलेयानां द्रव्यकार्यमुपस्थितम् ।
भृगूणां तु धनं ज्ञात्वा राजानः सर्व एव ते ॥१-१९४-१४ (८७१४)
याचिष्णवोऽभिजग्मुस्तांस्ततो भार्गवसत्तमान् ।
भूमौ तु निददुः केचिद्भृगवो धनमक्षयम् ॥१-१९४-१५ (८७१५)
ददुः केचिद्द्विजातिभ्यो ज्ञात्वा क्षत्रियतो भयम् ।
भृहवस्तु ददुः केचित्तेषां वित्तं यथेप्सितम् ॥१-१९४-१६ (८७१६)

क्षत्रियाणां तदा तात कारणान्तरदर्शनात् ।
ततो महीतलं तात क्षत्रियेण यदृच्छया ॥ १-१९४-१७ (८७१७)
खनताऽधिगतं वित्तं केनचिद्भृगुवेश्मनि ।
तद्वित्तं ददृशुः सर्वे समेताः क्षत्रियर्षभाः ॥ १-१९४-१८ (८७१८)
अवमन्य ततः क्रोधाद्भृगूंस्तांश्छरणगतान् ।
निजघ्नुः परमेष्वासाः सर्वांस्तान्निशितैः शरैः ॥ १-१९४-१९ (८७१९)
आगर्भादवकृन्तन्तश्चेरुः सर्वां वसुन्धराम् ।
तत उच्छिद्यमानेषु भृगुष्वेवं भयात्तदा ॥ १-१९४-२० (८७२०)
भृगुपत्न्यो गिरिं दुर्गं हिमवन्तं प्रपेदिरे ।
तासामन्यतमा गर्भं भयाद्दध्रे महौजसम् ॥ १-१९४-२१ (८७२१)
ऊरुणैकेन वाभोरूर्भर्तुः कुलविवृद्धये ।
तं गर्भमुपलभ्याशु ब्राह्मण्येका भयार्दिता ॥ १-१९४-२२ (८७२२)
गत्वा वै कथयामास क्षत्रियाणामुपह्वरे ।
ततस्ते क्षत्रिया जग्मुस्तं गर्भं हन्तुमुद्यताः ॥ १-१९४-२३ (८७२३)
ददृशुर्ब्राह्मणीं तेऽथ दीप्यमानां स्वतेजसा ।
अथ गर्भः स भित्त्वोरुं ब्राह्मण्या निर्जगाम ह ॥ १-१९४-२४ (८७२४)
मुष्णन्दृष्टीः क्षत्रियाणां मध्याह्न इव भास्करः ।
ततश्चक्षुर्विहीनास्ते गिरिदुर्गेषु बभ्रमुः ॥ १-१९४-२५ (८७२५)
ततस्ते मोघसङ्कल्पा भयार्ताः क्षत्रियाः पुनः ।
ब्राह्मणीं शरमं जग्मुर्दृष्ट्यर्थं तामनिन्दिताम् ॥ १-१९४-२६ (८७२६)
ऊचुश्चैनां महाभागां क्षत्रियास्ते विचेतसः ।
ज्योतिःप्रहीणा दुःखार्ताः शान्तार्चिष इवाग्नयः ॥ १-१९४-२७ (८७२७)
भगवत्याः प्रसादेन गच्छेत्क्षत्रमनामयम् ।
उपारम्य च गच्छेम सहिताः पापकर्मणः ॥ १-१९४-२८ (८७२८)
सपुत्रा त्वं प्रसादं नः कर्तुमर्हसि शोभने ।
पुनर्दृष्टिप्रदानेन राज्ञः संत्रातुमर्हसि ॥ ॥ १-१९४-२९ (८७२९)

इति श्रीमन्महाभारते आदिप्रवणि चैत्ररथपर्वणि
चतुर्नवत्यधिकशततमोऽध्यायः ॥ १९४ ॥

Mahabharata - Adi Parva - Chapter Footnotes

१-१९४-१० अन्त्यधीः अन्ते सिद्धान्ते साध्वी अन्त्या धीर्यस्य सोन्त्यधीः ॥
चतुर्नवत्यधिकशततमोऽध्यायः ॥
१९४ ॥

---

अध्यय१९५
॥ श्रीः ॥

## १.१९५. अध्यायः १९५

Mahabharata - Adi Parva - Chapter Topics

ब्राह्मणीवाक्येन और्वंप्रति शरणागतानां क्षत्रियाणां चक्षुःप्राप्तिः ॥ १ ॥
लोकविनाशार्थं तपस्यत और्वस्य तत्पितृकृततपोनिवारणम् ॥ २ ॥

Mahabharata - Adi Parva - Chapter Text

१-१९५-० (८७३०)
ब्राह्मण्युवाच। १-१९५-०क्ष् (१११६)
नाहं गृह्णामि वस्ताता दृष्टीर्नास्मि रुषान्विता ।
अयं तु भार्गवो नूनमूरुजः कुपितोऽद्य वः ॥ १-१९५-१ (८७३१)
तेन चक्षूंषि वस्ताता व्यक्तं कोपान्महात्मना ।
स्मरता निहतान्बन्धूनादत्तानि न संशयः ॥ १-१९५-२ (८७३२)
गर्भानपि यदा यूयं भृगूणां घ्नत पुत्रकाः ।
तदायमूरुणा गर्भो मया वर्षशतं धृतः ॥ १-१९५-३ (८७३३)
षडङ्गश्चाखिलो वेद इमं गर्भस्थमेव ह ।
विवेश भृगुवंशस्य भूयः प्रियचिकीर्षया ॥ १-१९५-४ (८७३४)
सोऽयं पितृवधाद्व्यक्तं क्रोधाद्वो हन्तुमिच्छति ।
तेजसा तस्य दिव्येन चक्षूंषि मुषितानि वः ॥ १-१९५-५ (८७३५)
तमेव यूयं याचध्वमौर्वं मम सुतोत्तमम् ।
अयं वः प्रणिपातेन तुष्टो दृष्टीः प्रदास्यति ॥ १-१९५-६ (८७३६)
वसिष्ठ उवाच। १-१९५-७क्ष् (१११७)
एवमुक्तास्ततः सर्वे राजानस्ते तमूरुजम् ।
ऊचुः प्रसीदेति तदा प्रसादं च चकार सः ॥ १-१९५-७ (८७३७)
अनेनैव च विख्यातो नाम्ना लोकेषु सत्तमः ।
स और्व इति विप्रर्षिरूरुं भित्त्वा व्यजायत ॥ १-१९५-८ (८७३८)
चक्षूंषि प्रतिलभ्याथ प्रतिजग्मुस्ततो नृपाः ।
भार्गवस्तु मुनिर्मेने सर्वलोकपराभवम् ॥ १-१९५-९ (८७३९)
स चक्रे तात लोकानां विनाशाय मतिं तदा ।
सर्वेषामेव कार्त्स्न्येन मनः प्रवणमात्मनः ॥ १-१९५-१० (८७४०)
इच्छन्नपचितिं कर्तुं भृगूणां भृगुनन्दनः ।
सर्वलोकविनाशाय तपसा महतैधितः ॥ १-१९५-११ (८७४१)
तापयामास ताँल्लोकान्सदेवासुरमानुषान् ।
तपसोग्रेण महता नन्दयिष्यन्पितामहान् ॥ १-१९५-१२ (८७४२)
ततस्तं पितरस्तात विज्ञाय कुलनन्दनम् ।

पितृलोकादुपागम्य सर्व ऊचुरिदं वचः ॥ १-१९५-१३ (८७४३)
औौर्व दृष्टः प्रभावस्ते तपसोग्रस्य पुत्रक ।
प्रसादं कुरु लोकानां नियच्छ क्रोधमात्मनः ॥ १-१९५-१४ (८७४४)
नानीशैर्हि तदा तात भृगुभिर्भावितात्मभिः ।
वधो ह्युपेक्षितः सर्वैः क्षत्रियाणां विहिंसताम् ॥ १-१९५-१५ (८७४५)
आयुषा विप्रकृष्टेन यदा नः खेद आविशत् ।
तदाऽस्माभिर्वधस्तात क्षत्रियैरीप्सितः स्वयम् ॥ १-१९५-१६ (८७४६)
निखातं यच्च वै वित्तं केनचिद्भृगुवेश्मनि ।
वैरायैव तदा न्यस्तं क्षत्रियान्कोपयिष्णुभिः ॥ १-१९५-१७ (८७४७)
किं हि वित्तेन नः कार्यं स्वर्गेप्सूनां द्विजोत्तम ।
यदस्माकं धनाध्यक्षः प्रभूतं धनमाहरत् ॥ १-१९५-१८ (८७४८)
यदा तु मृत्युरादातुं न नः शक्नोति सर्वशः ।
तदाऽस्माभिरयं दृष्ट उपायस्तात संमतः ॥ १-१९५-१९ (८७४९)
आत्महा च पुमांस्तात न लोकाँल्लभते शुभान् ।
ततोऽस्माभिः समीक्ष्यैवं नात्मनात्मा निपातितः ॥ १-१९५-२० (८७५०)
न चैतन्नः प्रियं तात यदिदं कर्तुमिच्छसि ।
नियच्छेदं मनः पापात्सर्वलोकपराभवात् ॥ १-१९५-२१ (८७५१)
मा वधीः क्षत्रियांस्तात न लोकान्सप्त पुत्रक ।
दूषयन्तं तपस्तेजः क्रोधमुत्पतितं जहि ॥ ॥ १-१९५-२२ (८७५२)

इति श्रीमन्महाभारते आदिपर्वणि चैत्ररथपर्वणि
पञ्चनवत्यधिकशततमोऽध्यायः ॥ १९५ ॥
Mahabharata - Adi Parva - Chapter Footnotes

१-१९५-२० आत्महेति एतेन भृगुपतनादिना मरणं ब्राह्मणेतरविषयं
दर्शितम् ॥
१-१९५-२२ मावधीरिति क्षत्रियान् तदनियन्तृत्वेनानपराधिनः
। सप्तलोकान् भूरादींश्च मावधीः किंतु तपःसंभृतं तेजो
दूषयन्तं क्रोधं जहि ॥
पञ्चनवत्यधिकशततमोऽध्यायः ॥
१९५ ॥

---

अध्यय१९६
॥ श्रीः ॥
१.१९६. अध्यायः १९६

Mahabharata - Adi Parva - Chapter Topics

पितॄणां निदेशेन और्वस्य समुद्रे क्रोधत्यागः ॥१ ॥

Mahabharata - Adi Parva - Chapter Text

१-१९६-० (८७५३)
और्व उवाच।१-१९६-०क्ष् (१११८)
उक्तवानस्मि यां क्रोधात्प्रतिज्ञां पितरस्तदा ।
सर्वलोकविनाशाय न सा मे वितथा भवेत् ॥१-१९६-१ (८७५४)
वृथारोषप्रतिज्ञो वै नाहं जीवितुमुत्सहे ।
अनिस्तीर्णो हि मां रोषो दहेदग्निररिवारणिम् ॥१-१९६-२ (८७५५)
यो हि कारणतः क्रोधं संजातं क्षन्तुमर्हति ।
नालं स मनुजः सम्यक् त्रिवर्गं परिरक्षितुम् ॥१-१९६-३ (८७५६)
अशिष्टानां नियन्ता हि शिष्टानां परिरक्षिता ।
स्थाने रोषः प्रयुक्तः स्यान्नृपैः सर्वजिगीषुभिः ॥१-१९६-४ (८७५७)
अश्रौषमहमूरुस्थो गर्भशय्यागतस्तदा ।
आरावं मातृवर्गस्य भृगूणां क्षत्रियैर्वधे ॥१-१९६-५ (८७५८)
सामरैर्हि यदा लोके भृगूणां क्षत्रियाधमैः ।
आगर्भोत्सादनं क्षान्तं तदा मां मन्युराविशत् ॥१-१९६-६ (८७५९)
प्रकीर्णकेशाः किल मे मातरः पितरस्तथा ।
भयात्सर्वेषु लोकेषु नाधिजग्मुः परायणम् ॥१-१९६-७ (८७६०)
तान्भृगूणां यदा दारान्कश्चिन्नाभ्युपपद्यत ।
माता तदा दधारेयमूरुणैकेन मां शुभा ॥१-१९६-८ (८७६१)
प्रतिषेद्धा हि पापस्य यदा लोकेषु विद्यते ।
तदा सर्वेषु लोकेषु पापकृन्नोपपद्यते ॥१-१९६-९ (८७६२)
यदा तु प्रतिषेद्धारं पापो न लभते क्वचित् ।
तिष्ठन्ति बहवो लोकास्तदा पापेषु कर्मसु ॥१-१९६-१० (८७६३)
जानन्नपि च यः पापं शक्तिमान्न नियच्छति ।
ईशः सन्सोऽपि तेनैव कर्मणा संप्रयुज्यते ॥१-१९६-११ (८७६४)
राजभिश्चेश्वरैश्चैव यदि वै पितरो मम ।
शक्तैर्न शकितास्त्रातुमिष्टं मत्वेह जीवितम् ॥१-१९६-१२ (८७६५)
अत एषामहं क्रुद्धो लोकानामीश्वरो ह्यहम् ।
भवतां च वचो नालमहं समभिवर्तितुम् ॥१-१९६-१३ (८७६६)
ममापि चेद्भवेदेवमीश्वरस्य सतो महत् ।
उपेक्षमाणस्य पुनर्लोकानां किल्बिषाद्भयम् ॥१-१९६-१४ (८७६७)
यश्चायं मन्युजो मेऽग्निर्लोकानादातुमिच्छति ।
दहेदेष च मामेव निगृहीतः स्वतेजसा ॥१-१९६-१५ (८७६८)

भवतां च विजानामि सर्वलोकहितेप्सुताम् ।
तस्माद्विधद्ध्वं यच्छ्रेयो लोकानां मम चेश्वराः ॥ १-१९६-१६ (८७६९)
पितर ऊचुः। १-१९६-१७क्ष् (१११९)
य एष मन्युजस्तेऽग्निर्लोकानादातुमिच्छति ।
अप्सु तं मुञ्च भद्रं ते लोका ह्यप्सु प्रतिष्ठिताः ॥ १-१९६-१७ (८७७०)
आपोमयाः सर्वरसाः सर्वमापोमयं जगत् ।
तस्मादप्सु विमुञ्चेमं क्रोधाग्निं द्विजसत्तम ॥ १-१९६-१८ (८७७१)
अयं तिष्ठतु ते विप्र यदीच्छसि महोदधौ ।
मन्युजोऽग्निर्दहन्नापो लोका ह्यापोमयाः स्मृताः ॥ १-१९६-१९ (८७७२)
एवं प्रतिज्ञा सत्येयं तवानघ भविष्यति ।
न चैवं सामरा लोका गमिष्यन्ति पराभवम् ॥ १-१९६-२० (८७७३)
वसिष्ठ उवाच। १-१९६-२१क्ष् (११२०)
ततस्तं क्रोधजं तात और्वोऽग्निं वरुणालये ।
उत्ससर्ज स चैवाप उपयुङ्क्ते महोदधौ ॥ १-१९६-२१ (८७७४)
महद्धयशिरो भूत्वा यत्तद्वेदविदो विदुः ।
तमग्निमुद्गिरद्वक्त्रात्पिबत्यापो महोदधौ ॥ १-१९६-२२ (८७७५)
तस्मात्त्वमपि भद्रं ते न लोकान्हन्तुमर्हसि ।
पराशरं पराँल्लोकाञ्जानञ्ज्ञानवतां वर ॥ ॥ १-१९६-२३ (८७७६)

इति श्रीमन्महाभारते आदिपर्वणि चैत्ररथपर्वणि
षण्णवत्यधिकशततमोऽध्यायः ॥ १९६ ॥
Mahabharata - Adi Parva - Chapter Footnotes

१-१९६-२ अनिस्तीर्णोऽकृतकार्यः ॥
१-१९६-८ तद्गगूणां राजा कश्चिन्नाभ्युपपद्यते इति ङ । पाठः ॥
१-१९६-२१ उपयुङ्क्ते भक्षयति ॥
१-१९६-२२ हयशिरः वडवामुखम् ॥
षण्णवत्यधिकशततमोऽध्यायः ॥
१९६ ॥

---

अध्यय१९७
॥ श्रीः ॥
१.१९७. अध्यायः १९७

Mahabharata - Adi Parva - Chapter Topics
वसिष्ठवाक्येन लोकविनाशान्निवृत्तेन पराशरेण राक्षसनाशार्थं
यज्ञारम्भः ॥ १ ॥

पुलस्त्यप्रार्थनया पराशरेण यज्ञसमापनम् ॥ २ ॥

Mahabharata - Adi Parva - Chapter Text

१-१९७-० (८७७७)
गन्धर्व उवाच। १-१९७-०क्ष् (११२१)
एवमुक्तः स विप्रर्षिर्वसिष्ठेन महात्मना ।
न्ययच्छदात्मनः क्रोधं सर्वलोकपराभवात् ॥ १-१९७-१ (८७७८)
ईजे च स महातेजाः सर्ववेदविदां वरः ।
ऋषी राक्षससत्रेण शाक्तेयोऽथ पराशरः ॥ १-१९७-२ (८७७९)
ततो वृद्धांश्च बालांश्च राक्षसान्स महामुनिः ।
ददाह वितते यज्ञे शक्तेर्वधमनुस्मरन् ॥ १-१९७-३ (८७८०)
न हि तं वारयामास वसिष्ठो रक्षसां वधात् ।
द्वितीयामस्य मां भाङ्क्षं प्रतिज्ञामिति निश्चयात् ॥ १-१९७-४ (८७८१)
त्रयाणां पावकानां च सत्रे तस्मिन्महामुनिः ।
आसीत्पुरस्ताद्दीप्तानां चतुर्थ इव पावकः ॥ १-१९७-५ (८७८२)
तेन यज्ञेन शुभ्रेण हूयमानेन शक्तितः ।
तद्विदीपितमाकाशं सूर्येणेव घनात्यये ॥ १-१९७-६ (८७८३)
तं वसिष्ठादयः सर्वे मुनयस्तत्र मेनिरे ।
तेजसा दीप्यमानं वै द्वितीयमिव भास्करम् ॥ १-१९७-७ (८७८४)
ततः परमदुष्प्रापमन्यैर्ऋषिरुधारधीः ।
समापिपयिषुः सत्रं तमत्रिः समुपागमत् ॥ १-१९७-८ (८७८५)
तथा पुलस्त्यः पुलहः क्रतुश्चैव महाक्रतुः ।
तत्राजग्मुरमित्रघ्न रक्षसां जीवितेप्सया ॥ १-१९७-९ (८७८६)
पुलस्त्यस्तु वधात्तेषां रक्षसां भरतर्षभ ।
उवाचेदं वचः पार्थ पराशरमरिन्दमम् ॥ १-१९७-१० (८७८७)
कच्चित्तातापविघ्नं ते कच्चिन्नन्दसि पुत्रक ।
अजानतामदोषाणां सर्वेषां रक्षसां वधात् ॥ १-१९७-११ (८७८८)
प्रजोच्छेदमिमं मह्यं न हि कर्तु त्वमर्हसि ।
नैष तात द्विजातीनां धर्मो दृष्टस्तपस्विनाम् ॥ १-१९७-१२ (८७८९)
शम एव परो धर्मस्तमाचर पराशर ।
अधर्मिष्ठं वरिष्ठः सन्कुरुषे त्वं पराशर ॥ १-१९७-१३ (८७९०)
शक्तिं चापि हि धर्मज्ञं नातिक्रान्तुमिहार्हसि ।
प्रजायाश्च ममोच्छेदं न चैवं कर्तुमर्हसि ॥ १-१९७-१४ (८७९१)
शापाद्धि शक्तेर्वासिष्ठ तदा तदुपपादितम् ।
आत्मजेन स दोषेण शक्तिर्नीत इतो दिवम् ॥ १-१९७-१५ (८७९२)

न हि तं राक्षसः कश्चिच्छक्तो भक्षयितुं मुने ।
ग्वासिष्ठो भक्षितश्चासीत्कौशिकोत्सृष्टरक्षसा ।
शापं न कुर्वन्ति तदा न च त्राणपरायणाः ॥ १-१९७-१६ (८७९३)
क्षमावन्तोऽदहन्देहं देहमन्यद्भवत्विति।'
आत्मनैवात्मनस्तेन दृष्टो मृत्युस्तदाऽभवत् ॥ १-१९७-१७ (८७९४)
निमित्तभूतस्तत्रासीद्विश्वामित्रः पराशर ।
राजा कल्माषपादश्च दिवमारुह्य मोदते ॥ १-१९७-१८ (८७९५)
ये च शक्त्यवराः पुत्रा वसिष्ठस्य महामुने ।
ते च सर्वे मुदा युक्ता मोदन्ते सहिताः सुरैः ॥ १-१९७-१९ (८७९६)
सर्वमेतद्वसिष्ठस्य विदितं वै महामुने ।
रक्षसां च समुच्छेद एष तात तपस्विनाम् ॥ १-१९७-२० (८७९७)
निमित्तभूतस्त्वं चात्र क्रतौ वासिष्ठनन्दन ।
तत्सत्रं मुञ्च भद्रं ते समाप्तमिदमस्तु ते ॥ १-१९७-२१ (८७९८)
गन्धर्व उवाच। १-१९७-२२क्ष् (११२२)
एवमुक्तः पुलस्त्येन वसिष्ठेन च धीमता ।
तदा समापयामास सत्रं शाक्तो महामुनिः ॥ १-१९७-२२ (८७९९)
सर्वराक्षससत्राय संभृतं पावकं तदा ।
उत्तरे हिमवत्पार्श्वे उत्ससर्ज महावने ॥ १-१९७-२३ (८८००)
स तत्राद्यापि रक्षांसि वृक्षानश्मन एव च ।
भक्षयन्दृश्यते वह्निः सदा पर्वणि पर्वणि ॥ ॥ १-१९७-२४ (८८०१)

इति श्रीमन्महाभारते आदिपर्वणि चैत्ररथपर्वणि
सप्तनवत्यधिकशततमोऽध्यायः ॥ १९७ ॥
Mahabharata - Adi Parva - Chapter Footnotes

१-१९७-४ माभाङ्क्षे न नाशयेयम् ॥
१-१९७-१२ मद्यं मम ॥
सप्तनवत्यधिकशततमोऽध्यायः ॥
१९७ ॥

---

अध्यय१९८
॥ श्रीः ॥
१.१९८. अध्यायः १९८

Mahabharata - Adi Parva - Chapter Topics
सौदासभार्यायां वसिष्ठेन पुत्रोत्पादनकारणं
पृष्टवन्तमर्जुनंप्रति पुनः कल्माषपादकथाकथनम् ॥ १ ॥

मैथुनधर्मस्य ब्राह्मं भक्षितवतः सौदासस्य ब्राह्मण्या शापः ॥ २ ॥

Mahabharata - Adi Parva - Chapter Text

१-१९८-० (८८०२)
ग्गन्धर्व उवाच। १-१९८-०क्ष् (११२३)
पुनश्चैव महातेजा विश्वामित्रजिघांसया ।
अग्निं संभृतवान्घोरं शाक्तेयः सुमहातपाः ॥ १-१९८-१ (८८०३)
वासिष्ठसंभृतश्चाग्निर्विश्वामित्रहितैषिणा ।
तेजसा वह्नितुल्येन ग्रस्तः स्कन्देन धीमता ॥' १-१९८-२ (८८०४)
अर्जुन उवाच। १-१९८-३क्ष् (११२४)
राज्ञा कल्माषपादेन गुरौ ब्रह्मविदां वरे ।
कारणं किं पुरस्कृत्य भार्या वै सन्नियोजिता ॥ १-१९८-३ (८८०५)
जानता वै परं धर्मं वसिष्ठेन महात्मना ।
अगम्यागमनं कस्मात्कृतं तेन महर्षिणा ॥ १-१९८-४ (८८०६)
अधर्मिष्ठं वसिष्ठेन कृतं चापि पुरा सखे ।
एतन्मे संशयं सर्वं छेत्तुमर्हसि पृच्छतः ॥ १-१९८-५ (८८०७)
गन्धर्व उवाच। १-१९८-६क्ष् (११२५)
धनञ्जय निबोधेयं यन्मां त्वं परिपृच्छसि ।
वसिष्ठं प्रति दुर्धर्ष तथा मित्रसहं नृपम् ॥ १-१९८-६ (८८०८)
कथितं ते मया सर्वं यथा शप्तः स पार्थिवः ।
शक्तिना भरतश्रेष्ठ वासिष्ठेन महात्मना ॥ १-१९८-७ (८८०९)
स तु शापवशं प्राप्तः क्रोधपर्याकुलेक्षणः ।
निर्जगाम पुराद्राजा सहदारः परन्तपः ॥ १-१९८-८ (८८१०)
अरण्यं निर्जनं गत्वा सदारः परिचक्रमे ।
नानामृगगणाकीर्णं नानासत्वसमाकुलम् ॥ १-१९८-९ (८८११)
नानागुल्मलताच्छन्नं नानाद्रुमसमावृतम् ।
अरण्यं घोरसन्नादं शापग्रस्तः परिभ्रमन् ॥ १-१९८-१० (८८१२)
स कदाचित्क्षुधाविष्टो मृगयन्भक्ष्यमात्मनः ।
ददर्श सुपरिक्लिष्टः कस्मिंश्चिन्निर्जने वने ॥ १-१९८-११ (८८१३)
ब्राह्मणं ब्राह्मणीं चैव मिथुनायोपसंगतौ ।
तौ तं वीक्ष्य सुवित्रस्तावकृतार्थौ प्रधावितौ ॥ १-१९८-१२ (८८१४)
तयोः प्रद्रवतोर्विप्रं जग्राह नृपतिर्बलात् ।
दृष्ट्वा गृहीतं भर्तारमथ ब्राह्मण्यभाषत ॥ १-१९८-१३ (८८१५)
शृणु राजन्मम वचो यत्त्वां वक्ष्यामि सुव्रत ।
आदित्यवंशप्रभवस्त्वं हि लोके परिश्रुतः ॥ १-१९८-१४ (८८१६)

अप्रमत्तः स्थि धर्मे गुरुशुश्रूषणे रतः ।
शापोपहत दुर्धर्ष न पापं कर्तुमर्हसि ॥ १-१९८-१५ (८८१७)
ऋतुकाले तु संप्राप्ते भर्तृव्यसनकर्शिता ।
अकृतार्था ह्यहं भर्त्रा प्रसवार्थं समागता ॥ १-१९८-१६ (८८१८)
प्रसीद नृपतिश्रेष्ठ भर्ताऽयं मे विसृज्यताम् ।
एवं विक्रोशमानायास्तस्यास्तु न नृशंसवत् ॥ १-१९८-१७ (८८१९)
भर्तारं भक्षयामास व्याघ्रो मृगमिवेप्सितम् ।
तस्याः क्रोधाभिभूताया यान्यश्रूण्यपतन्भुवि ॥ १-१९८-१८ (८८२०)
सोऽग्निः समभवद्दीप्तस्तं च देशं व्यदीपयत् ।
ततः सा शोकसंतप्ता भर्तृव्यसनकर्शिता ॥ १-१९८-१९ (८८२१)
कल्माषपादं राजर्षिमशपद्ब्राह्मणी रुषा ।
यस्मान्ममाकृतार्थायास्त्वया क्षुद्र नृशंसवत् ॥ १-१९८-२० (८८२२)
प्रेक्षन्त्या भक्षितो मेऽद्य प्रियो भर्ता महायशाः ।
तस्मात्त्वमपि दुर्बुद्धे मच्छापपरिविक्षतः ॥ १-१९८-२१ (८८२३)
पत्नीमृतावनुप्राप्य सद्यस्त्यक्ष्यसि जीवितम् ।
ग्तेन प्रसाद्यमाना सा प्रसादमकरोत्तदा।'
यस्य चर्षेर्वसिष्ठस्य त्वया पुत्रा विनाशिताः ॥ १-१९८-२२ (८८२४)
तेन संगम्य ते भार्या तनयं जनयिष्यति ।
सते वंशकरः पुत्रो भविष्यति नृपाधम ॥ १-१९८-२३ (८८२५)
एवं शप्त्वा तु राजानं सा तमाङ्गिरसी शुभा ।
तस्यैव सन्निधौ दीप्तं प्रविवेश हुताशनम् ॥ १-१९८-२४ (८८२६)
वसिष्ठश्च महाभागः सर्वमेतदवैक्षत ।
ज्ञानयोगेन महता तपसा च परन्तप ॥ १-१९८-२५ (८८२७)
मुक्तशापश्च राजर्षिः कालेन महता ततः ।
ऋतुकालेऽभिपतितो मदयन्त्या निवारितः ॥ १-१९८-२६ (८८२८)
न हि सस्मार स नृपस्तं शापं काममोहितः ।
देव्याः सोऽथ वचः श्रुत्वा संभ्रान्तो नृपसत्तमः ॥ १-१९८-२७ (८८२९)
तं शापमनुसंस्मृत्य पर्यतप्यद्भृशं तदा ।
एतस्मात्कारणाद्राजा वसिष्ठं सन्ययोजयत् ।
स्वदारेषु नरश्रेष्ठ शापदोषसमन्वितः ॥ ॥ १-१९८-२८ (८८३०)

इति श्रीमन्महाभारते आदिपर्वणि चैत्ररथपर्वणि
अष्टनवत्यधिकशततमोऽध्यायः ॥ १९८ ॥

---

अध्यय१९९
॥ श्रीः ॥
१.१९९. अध्यायः १९९

Mahabharata - Adi Parva - Chapter Topics

अर्जुनेन अनुरूपपुरोहितसंपादनं पृष्टेन गन्धर्वेण
धौम्यवरणाक्ष्यनुज्ञा ॥ १ ॥
गन्धर्वाय आग्नेयास्त्रदानम् ॥ २ ॥
उत्को चतीर्थे पाण्डवैः धौम्यस्य पौरोहित्ये वरणम् ॥ ३ ॥

Mahabharata - Adi Parva - Chapter Text

१-१९९-० (८८३१)
अर्जुन उवाच। १-१९९-०क्ष् (११२६)
अस्माकमनुरूपो वै यः स्याद्गन्धर्व वेदवित् ।
पुरोहितस्तमाचक्ष्व सर्वं हि विदितं तव ॥ १-१९९-१ (८८३२)
गन्धर्व उवाच। १-१९९-२क्ष् (११२७)
यवीयान्देवलस्यैष वने भ्राता तपस्यति ।
धौम्य उत्कोचके तीर्थे तं वृणुध्वं यीच्छथ ॥ १-१९९-२ (८८३३)
वैशंपायन उवाच। १-१९९-३क्ष् (११२८)
ततोऽर्जुनोऽस्त्रमाग्नेयं प्रददौ तद्यथाविधि ।
गन्धर्वाय ग्स च प्रीतो वचनं चेदमब्रवीत् ॥ १-१९९-३ (८८३४)
मयि सन्ति हयश्रेष्ठास्तव दास्यामि वै सखे ।
उपकारकृतं मित्रं प्रतिकारेण योजये ॥ १-१९९-४ (८८३५)
गृह्णीष्व चाक्षुषीं विद्यामिमां भरतसत्तम ।
एवमुक्तोऽर्जुनः' प्रीतो वचनं चेदमब्रवीत् ॥ १-१९९-५ (८८३६)
त्वय्येव तावत्तिष्ठन्तु हया गन्धर्वसत्तम ।
कार्यकाले ग्रहीष्यामः स्वस्ति तेऽस्त्विति चाब्रवीत् ॥ १-१९९-६ (८८३७)
तेऽन्योन्यमभिसंपूज्य गन्धर्वः पाण्डवाश्च ह ।
रम्याद्भागीरथीतीराद्यथाकामं प्रतस्थिरे ॥ १-१९९-७ (८८३८)
तत उत्कोचकं तीर्थं गत्वा धौम्याश्रमं तु ते ।
तं वव्रुः पाण्डवा धौम्यं पौरोहित्याय भारत ॥ १-१९९-८ (८८३९)
तान्धौम्यः प्रतिजग्राह सर्ववेदविदां वरः ।
वन्येन फलमूलेन पौरोहित्येन चैव ह ॥ १-१९९-९ (८८४०)
ते समाशंसिरे लब्धां श्रियं राज्यं च पाण्डवाः ।
ब्राह्मणं तं पुरस्कृत्य पाञ्चालीं च स्वयंवरे ॥ १-१९९-१० (८८४१)
पुरोहितेन तेनाथ गुरुणा संगतास्तदा ।
नाथवन्तमिवात्मानं मेनिरे भरतर्षभाः ॥ १-१९९-११ (८८४२)
स हि वेदार्थतत्त्वज्ञस्तेषां गुरुरुदारधीः ।

वेदविच्चैव वाग्मी च धौम्यः श्रीमान्द्विजोत्तमः ॥१-१९९-१२ (८८४३)
तेजसा चैव बुद्ध्या च रूपेण यशसा श्रिया ।
मन्त्रैश्च विविधैर्धौम्यस्तुल्य आसीद्बृहस्पतेः ॥१-१९९-१३ (८८४४)
स चापि विप्रस्तान्मेने स्वभावाभ्यधिकान्भुवि ।
तेन धर्मविदा पार्था योज्या सर्वविदा वृताः ॥१-१९९-१४ (८८४५)
मेनिरे सहिता वीराः प्राप्तं राज्यं च पाण्डवाः ।
बुद्धिवीर्यबलोत्साहैर्युक्ता देवा इवापरे ॥१-१९९-१५ (८८४६)
कृतस्वस्त्ययनास्तेन ततस्ते मनुजाधिपाः ।
मेनिरे सहिता गन्तुं पाञ्चाल्यास्तं स्वयंवरम् ॥ ॥१-१९९-१६ (८८४७)

इति श्रीमन्महाभारते आदिपर्वणि चैत्ररथपर्वणि
एकोनद्विशततमोऽध्यायः ॥१९९ ॥ ॥समाप्तं चैत्ररथपर्व ॥

---

अध्यय२००
॥श्रीः ॥
१.२००. अध्यायः २००

(अथ स्वयंवरपर्व ॥१२ ॥)
Mahabharata - Adi Parva - Chapter Topics
मध्येमार्गं आगतस्य व्यासस्य आज्ञया पाण्डवानां द्रुपदपुरप्रवेशः ॥१ ॥
तेषां कुम्भकारगृहे वासः, भैक्षवृत्तिश्च ॥२ ॥
द्रौपद्याः स्वयंवरनिर्माणकारणकथनं ॥३ ॥
द्रुपदेन कृतां स्वयंवरघोषणां श्रुतवतां क्षत्रियादीनां आगमनं
॥४ ॥
सर्वेषां उचिते स्थाने उपवेशनं पाण्डवानां ब्राह्मणमध्ये उपवेशनं
॥५ ॥
मङ्गलस्नातायाः स्वलङ्कृताया द्रौपद्या रङ्गमध्ये आगमनं ॥६ ॥
धृष्टद्युम्नेन लक्ष्यवेधपणकथनम् ॥७ ॥

Mahabharata - Adi Parva - Chapter Text

१-२००-० (८८४८)
वैशंपायन उवाच।१-२००-०क्ष् (११२९)
ततस्ते नरशार्दूला भ्रातरः पञ्च पाण्डवाः ।
तं ब्राह्मणं पुरस्कृत्य पाञ्चाल्याश्च स्वयंवरम् ।
प्रययुर्द्रौपदीं द्रष्टुं तं च देशं महोत्सवम् ॥ १-२००-१ (८८४९)
ततस्ते तं महात्मानं शुद्धात्मानमकल्मषम् ।

ददृशुः पाण्डवा वीराः पथि द्वैपायनं तदा ॥१-२००-२ (८८५०)
तस्मै यथावत्सत्कारं कृत्वा तेन च सत्कृताः ।
कथान्ते चाभ्यनुज्ञाताः प्रययुर्द्रुपदक्षयम् ॥१-२००-३ (८८५१)
पश्यन्तो रमणीयानि वनानि च सरांसि च ।
तत्रतत्र वसन्तश्च शनैर्जग्मुर्महराथाः ॥१-२००-४ (८८५२)
स्वाध्यायवन्तः शुचयो मधुराः प्रियवादिनः ।
आनुपूर्व्येण संप्राप्ताः पाञ्चालान्पाण्डुनन्दनाः ॥१-२००-५ (८८५३)
ते तु दृष्ट्वा पुरं तच्च स्कन्धावारं च पाण्डवाः ।
कुम्भकारस्य शालायां निवासं चक्रिरे तदा ॥१-२००-६ (८८५४)
तत्र भैक्षं समाजह्रुर्ब्राह्मणीं वृत्तिमाश्रिताः ।
तान्संप्राप्तांस्तथा वीराञ्जज्ञिरे न नराः क्वचित् ॥१-२००-७ (८८५५)
ग्यज्ञसेनस्तु पाञ्चालो भीष्मद्रोमकृतागसम् ।
ज्ञात्वाऽऽत्मानं तदारेभे त्राणायात्मक्रियां क्षमां ॥१-२००-८ (८८५६)
अवाप्य धृष्टद्युम्नं हि न स द्रोणमचिन्तयत् ।
स तु वैरप्रसङ्गाच्च भीष्माद्भयमचिन्तयत् ॥१-२००-९ (८८५७)
कन्यादानात्तु शरणं सोऽमन्यत महीपतिः।'
यज्ञसेनस्य कामस्तु पाण्डवाय किरीटिने ॥ १-२००-१० (८८५८)
दास्यामि कृष्मामिति वै न चैनं विवृणोति सः ।
ग्जामातृबलसंयोगं मेने हि बलवत्तरम् ॥' १-२००-११ (८८५९)
सोऽन्वेषमाणः कौन्तेयान्पाञ्चालो जनमेजय ।
दृढं धनुरथानम्यं कारयामास भारत ॥१-२००-१२ (८८६०)
ग्वैयाघ्रपद्यस्योग्रं वै सृञ्जयस्य महीपतिः ।
तद्धनुः किन्धुरं नाम देवदत्तमुपानयत् ॥१-२००-१३ (८८६१)
आयसी तस्य च ज्याऽऽसीत्प्रतिबद्धा महाबला ।
न तु ज्यां प्रसहेदन्यस्तद्धनुःप्रवरं महत् ॥१-२००-१४ (८८६२)
शङ्करेण वरं दत्तं प्रीतेन च महात्मना ।
तन्निष्फलं स्यान्न तु मे इति प्रामाण्यमागतः ॥१-२००-१५ (८८६३)
मया कर्तव्यमधुना दुष्करं लक्ष्यवेधनम् ।
इति निश्चित्य मनसा कारितं लक्ष्यमुत्तमम् ॥' १-२००-१६ (८८६४)
यन्त्रं वैहायसं चापि कारयामास कृत्रिमम् ।
तेन यन्त्रेण सहितं राजँल्लक्ष्यं च काञ्चनम् ॥१-२००-१७ (८८६५)
द्रुपद उवाच।१-२००-१८क्ष् (११३०)
इदं सज्यं धनुः कृत्वा सज्जैरेभिश्च सायकैः ।
अतीत्य लक्ष्य यो वेद्धा स लब्धा मत्सुतामिति ॥१-२००-१८ (८८६६)
वैशंपायन उवाच।१-२००-१९क्ष् (११३१)
इति स द्रुपदो राजा स्वयंवरमघोषयत् ।

तच्छ्रुत्वा पार्थिवाः सर्वे समीयुस्तत्र भारत ॥१-२००-१९ (८८६७)
ऋषयश्च महात्मानः स्वयंवरदिदृक्षवः ।
दुर्योधनपुरोगाश्च सकर्णाः कुरवो नृप ॥१-२००-२० (८८६८)
ग्यादवा वासुदेवेन सार्धमन्धकवृष्णयः।'
ततोऽर्चिता राजगुणा द्रुपदेन महात्मना ॥ १-२००-२१ (८८६९)
उपोपविष्टा मञ्चेषु द्रष्टुकामाः स्वयंवरम् ।
ग्ब्राह्मणाश्च महाभागा देशेभ्यः समुपागमन् ॥१-२००-२२ (८८७०)
ब्राह्मणैरेव सहिताः पाण्डवाः समुपाविशन् ।
त्रयस्त्रिंशत्सुराः सर्वे विमानैर्व्योम्न्यवस्थिताः ॥१-२००-२३ (८८७१)
ततः पौरजनाः सर्वे सागरोद्धूतनिःस्वनाः ।
शिंशुमारशिरः प्राप्य न्यविशंस्ते स्म पार्थिवाः ॥१-२००-२४ (८८७२)
प्रागुत्तरेण नगराद्भूमिभागे समे शुभे ।
समाजवाटः शुशुभे भवनैः सर्वतो वृतः ॥१-२००-२५ (८८७३)
प्राकारपरिखोपेतो द्वारतोरणमण्डितः ।
वितानेन विचित्रेण सर्वतः समलङ्कृतः ॥१-२००-२६ (८८७४)
तूर्यौघशतसङ्कीर्णः परार्ध्यागुरुधूपितः ।
चन्दनोदकसिक्तश्च माल्यदामोपशोभितः ॥१-२००-२७ (८८७५)
कैलासशिखरप्रख्यैर्नभस्तलविलेखिभिः ।
सर्वतः संवृतः शुभ्रैः प्रासादैः सुकृतोच्छ्रयै ॥१-२००-२८ (८८७६)
सुवर्णजालसंवीतैर्मणिकुट्टिमभूषणैः ।
सुखारोहणसोपानैर्महासनपरिच्छदैः ॥१-२००-२९ (८८७७)
स्रग्दामसमवच्छन्नैरगुरूत्तमवासितैः ।
हंसांशुवर्णैर्बहुभिरायोजनसुगन्धिभिः ॥१-२००-३० (८८७८)
असंबाधशतद्वारैः शयनासनशोभितैः ।
बहुधातुपिनद्धाङ्गैर्हिमवच्छिखरैरिव ॥१-२००-३१ (८८७९)
तत्र नानाप्रकारेषु विमानेषु स्वलङ्कृताः ।
स्पर्धमानास्तदाऽन्योन्यं निषेदुः सर्वपार्थिवाः ॥१-२००-३२ (८८८०)
तत्रोपविष्टान्ददृशुर्महासत्वान्पृथग्जनाः ।
राजसिंहान्महाभागान्कृष्णागुरुविभूषितान् ॥१-२००-३३ (८८८१)
महाप्रसादान्ब्राह्मण्यान्स्वराष्ट्रपरिरक्षिणः ।
प्रियान्सर्वस्य लोकस्य सुकृतैः कर्मभिः शुभैः ॥१-२००-३४ (८८८२)
मञ्चेषु च परार्ध्येषु पौरजानपदा जनाः ।
कृष्णादर्शनसिद्ध्यर्थं सर्वतः समुपाविशन् ॥१-२००-३५ (८८८३)
ब्राह्मणैस्ते च सहिताः पाण्डवाः समुपाविशन् ।
ऋद्धिं पञ्चालराजस्य पश्यन्तस्तामनुत्तमाम् ॥१-२००-३६ (८८८४)
ततः समाजो ववृधे स राजन्दिवसान्बहून् ।

रत्नप्रदानबहुलः शोभितो नटनर्तकैः ॥१-२००-३७ (८८८५)
वर्तमाने समाजे तु रमणीयेऽह्नि षोडशे ।
ग्मैत्रे मुहूर्ते तस्याश्च राजदाराः पुराविदः ।
पुत्रवत्यः सुवसनाः प्रतिकर्मोपचक्रमुः ॥ १-२००-३८ (८८८६)
वैडूर्यमयपीठे तु निविष्टां द्रौपदीं तदा ।
सतूर्यं स्नापयाञ्चक्रुः स्वर्णकुम्भस्थितैर्जलैः ॥१-२००-३९ (८८८७)
तां निवृत्ताभिषेकां च दुकूलद्वयधारिणीम् ।
निन्युर्मणिस्तम्भवतीं वेदिं वै सुपरिष्कृताम् ॥१-२००-४० (८८८८)
निवेश्य प्राङ्मुखीं हृष्टां विस्मिताक्ष्यः प्रसाधिकाः ।
केनालङ्करणेनेमामित्यन्योन्यं व्यलोकयन् ॥१-२००-४१ (८८८९)
धूपोष्मणा च केशानामार्द्रभावं व्यपोहयन् ।
बबन्धुरस्या धम्मिल्लं माल्यैः सुरभिगन्धिभिः ॥१-२००-४२ (८८९०)
दूर्वामधूकरचितं माल्यं तस्या ददुः करे ।
चक्रुश्च कृष्णागरुणा पत्रसङ्गं कुचद्वये ॥१-२००-४३ (८८९१)
रेजे सा चक्रवाकाङ्का स्वर्णदीर्घा सरिद्वरा ।
अलकैः कुटिलैस्तस्या मुखं विकसितं बभौ ॥१-२००-४४ (८८९२)
आसक्तभृङ्गं कुसुमं शशिम्बिम्बं जिगाय तत् ।
कालाञ्जनं नयनयोराचारार्थं समादधुः ॥१-२००-४५ (८८९३)
भूषणं रत्नखचितैरलंचक्रुर्यथोचितम् ।
माता च तस्याः पृषती हरितालमनश्शिलाम् ॥१-२००-४६ (८८९४)
अङ्गुलीभ्यामुपादाय तिलकं विदधे मुखे ।
अलङ्कृतां वधूं दृष्ट्वा योषितो मुदमाययुः ॥१-२००-४७ (८८९५)
माता न मुमुदे तस्याः पतिः कीदृग्भविष्यति ।
सौविदल्लाः समागम्य द्रुपदस्याज्ञया ततः ॥१-२००-४८ (८८९६)
एनामारोपयामासुः करिणीं कुचभूषिताम् ।
ततोऽवाद्यन्त वाद्यानि मङ्गलानि दिवि स्पृशन् ॥१-२००-४९ (८८९७)
विलासिनीजनाश्चापि प्रवरं करिणीशतम् ।
माङ्गल्यगीतं गायन्त्यः पार्स्वयोरुभयोर्ययुः ॥१-२००-५० (८८९८)
जनापसरणे व्यग्राः प्रतिहार्यः पुरा ययुः ।
कोलाहलो महानासीत्तस्मिन्पुरवरे तदा ॥१-२००-५१ (८८९९)
धृष्टद्युम्नो ययावग्रे हयमारुह्य भारत ।
द्रुपदो रङ्गदेशे तु बलेन महता युतः ॥१-२००-५२ (८९००)
तस्थौ व्यूह्य महानीकं पालितं दृढधन्विभिः।'
आप्लुताङ्गीं सुवसनां सर्वाभरणभूषिताम् ॥ १-२००-५३ (८९०१)
मालां च समुपादाय काञ्चनीं समलङ्कृताम् ।
ग्आगतां ददृशुः सर्वे रङ्गभूमिमलङ्कृताम् ॥' १-२००-५४ (८९०२)

अवतीर्णा ततो रङ्गं द्रौपदी भरतर्षभ ।
ग्तस्थौ प्रमुदितान्सर्वान्नृपतीन्रङ्गमण्डले ।
प्रेक्षन्ती व्रीडितापाङ्गी द्रष्टृणां सुमनोहरा ॥' १-२००-५५ (८९०३)
पुरोहितः सोमकानां मन्त्रविद्ब्राह्मणः शुचिः ।
परिस्तीर्य जुहावाग्निमाज्येन विधिवत्तदा ॥ १-२००-५६ (८९०४)
संतर्पयित्वा ज्वलनं ब्राह्मणान्स्वस्ति वाच्य च ।
वारयामास सर्वाणि वादित्राणि समन्ततः ॥ १-२००-५७ (८९०५)
निःशब्दे तु कृते तस्मिन्धृष्टद्युम्नो विशांपते ।
कृष्णामादाय विधिवन्मेघदुन्दुभिनिःस्वनः ॥ १-२००-५८ (८९०६)
रङ्गमध्यं गतस्तत्र मेघगम्भीरया गिरा ।
वाक्यमुच्चैर्जगादेदं श्लक्ष्णमर्थवदुत्तमम् ॥ १-२००-५९ (८९०७)
इदं धनुर्लक्ष्यमिमे च बाणाः
शृण्वन्तु मे भूपतयः समेताः ।
छिद्रेण यन्त्रस्य मसर्पयध्वं
शरैः शितैर्व्योमचरैर्दशार्धैः ॥ १-२००-६० (८९०८)
एतन्महत्कर्म करोति यो वै
कुलेन रूपेण बलेन युक्तः ।
तस्याद्य भार्या भगिनी ममेयं
कृष्णा भवित्री न मृषा ब्रवीमि ॥ १-२००-६१ (८९०९)
तानेवमुक्त्वा द्रुपदस्य पुत्रः
पश्चादिदं तां भगिनीमुवाच ।
नाम्ना च गोत्रेण च कर्मणा च
संकीर्तयन्भूमिपतीन्समेतान् ॥ ॥ १-२००-६२ (८९१०)

इति श्रीमन्महाभारते आदिपर्वणि स्वयंवरपर्वणि द्विशततमोऽध्यायः
॥ २०० ॥

Mahabharata - Adi Parva - Chapter Footnotes

१-२००-७ जज्ञिरे ज्ञातवन्तः ॥
१-२००-१७ वैहायसमन्तरिक्षगतम् ॥
१-२००-२४ शिंशुमारो जलजन्तुस्तदाकारस्तारासमूहात्मको विष्णुस्तस्य शिरःप्रदेशे ऐशान्यां दिशि ।अतएव सा अपराजितादिक् तां दिशं प्राप्य न्यविशन् ॥
१-२००-२५ तामेव दिशमात्र प्रागिति ॥
द्विशततमोऽध्यायः ॥
२०० ॥

अध्यय२०१
॥ श्रीः ॥
१.२०१. अध्यायः २०१

Mahabharata - Adi Parva - Chapter Topics
रङ्गे आगतानां राज्ञां नामकथनम् ॥ १ ॥

Mahabharata - Adi Parva - Chapter Text

१-२०१-० (८९११)
धृष्टद्युम्न उवाच। १-२०१-०क्ष् (११३२)
दुर्योधनो दुर्विषहो दुर्मुखो दुष्प्रधर्षणः ।
विविंशतिर्विकर्णश्च सहो दुःशासनस्तथा ॥ १-२०१-१ (८९१२)
युयुत्सुर्वायुवेगश्च भीमवेगरवस्तथा ।
उग्रायुधो बलाकी च करकायुर्विरोचनः ॥ १-२०१-२ (८९१३)
कुण्डकश्चित्रसेनश्च सुवर्चाः कनकध्वजः ।
नन्दको बाहुशाली च तुहुण्डो विकटस्तथा ॥ १-२०१-३ (८९१४)
एते चान्ये च बहवो धार्तराष्ट्रा महाबलाः ।
कर्णेन सहिता वीरास्त्वदर्थं समुपागताः ॥ १-२०१-४ (८९१५)
असङ्ख्याता महात्मानः पार्थिवाः क्षत्रियर्षभाः ।
शकुनिः सौबलश्चैव वृषकोऽथ बृहद्बलः ॥ १-२०१-५ (८९१६)
एते गान्धारराजस्य सुताः सर्वे समागताः ।
अश्वत्थामा च भोजश्च सर्वशस्त्रभृतां वरौ ॥ १-२०१-६ (८९१७)
समवेतौ महात्मानौ त्वदर्थे समलङ्कृतौ ।
बृहन्तो मणिमांश्चैव दण्डधारश्च पार्थिवः ॥ १-२०१-७ (८९१८)
सहदेवजयत्सेनौ मेघसन्धिश्च पार्थिवः ।
विराटः सह पुत्राभ्यां शङ्खेनैवोत्तरेण च ॥ १-२०१-८ (८९१९)
वार्धक्षेमिः सुशर्मा च सेनाबिन्दुश्च पार्थिवः ।
सुकेतुः सह पुत्रेण सुनाम्ना च सुवर्चसा ॥ १-२०१-९ (८९२०)
सुचित्रः सुकुमारश्च वृकः सत्यधृतिस्तथा ।
सूर्यध्वजो रोचमानो नीलश्चित्रायुधस्तथा ॥ १-२०१-१० (८९२१)
अंशुमांश्चेकितानश्च श्रेणिमांश्च महाबलः ।
समुद्रसेनपुत्रश्च चन्द्रसेनः प्रतापवान् ॥ १-२०१-११ (८९२२)
जलसन्धः पितापुत्रौ विदण्डो दण्ड एव च ।
पौण्ड्रको वासुदेवश्च भगदत्तश्च वीर्यवान् ॥ १-२०१-१२ (८९२३)
कलिङ्गस्ताम्रलिप्तश्च पत्तनाधिपतिस्तथा ।

मद्रराजस्तथा शल्यः सहपुत्रो महारथः ॥ १-२०१-१३ (८९२४)
रुक्माङ्गदेन वीरेण तथा रुक्मरथेन च ।
कौरव्यः सोमदत्तश्च पुत्रश्चास्य महारथः ॥ १-२०१-१४ (८९२५)
समवेतास्त्रयः शूरा भूरिर्भूरिश्रवाः शलः ।
सुदक्षिणश्च काम्भोजो दृढधन्वा च पौरवः ॥ १-२०१-१५ (८९२६)
बृहद्बलः सुषेणश्च शिबिरौशीनस्तथा ।
पटच्चरनिहन्ता च कारूषाधिपतिस्तथा ॥ १-२०१-१६ (८९२७)
सङ्कर्षणो वासुदेवो रौक्मिणेयश्च वीर्यवान् ।
साम्बश्च चारुदेष्णश्च प्राद्युम्निः सगदस्तथा ॥ १-२०१-१७ (८९२८)
अक्रूरः सात्यकिश्चैव उद्धवश्च महामतिः ।
कृतवर्मा च हार्दिक्यः पृथुर्विपृथुरेव च ॥ १-२०१-१८ (८९२९)
विदूरथश्च कङ्कश्च शङ्कुश्च सगवेषणः ।
आशावहोऽनिरुद्धश्च समीकः सारिमेजयः ॥ १-२०१-१९ (८९३०)
वीरो वातपतिश्चैव झिल्लीपिण्डारकस्तथा ।
उशीनरश्च विक्रान्तो वृष्णयस्ते प्रकीर्तिताः ॥ १-२०१-२० (८९३१)
भगीरथो बृहत्क्षत्रः सैन्धवश्च जयद्रथः ।
बृहद्रथो बाह्लिकश्च श्रुतायुश्च महारथः ॥ १-२०१-२१ (८९३२)
उलूकः कैतवो राजा चित्राङ्गदशुभाङ्गदौ ।
वत्सराजश्च मतिमान्कोसलाधिपतिस्तथा ॥ १-२०१-२२ (८९३३)
शिशुपालश्च विक्रान्तो जरासन्धस्तथैव च ।
एते चान्ये च बहवो नानाजनपदेश्वराः ॥ १-२०१-२३ (८९३४)
त्वदर्थमागता भद्रे क्षत्रियाः प्रथिता भुवि ।
एते भेत्स्यन्ति विक्रान्तास्त्वदर्थे लक्ष्यमुत्तमम् ।
विध्यते य इदं लक्ष्यं वरयेथाः शुभेऽद्य तम् ॥ ॥ १-२०१-२४ (८९३५)

इति श्रीमन्महाभारते आदिपर्वणि स्वयंवरपर्वणि
एकाधिकद्विशततमोऽध्यायः ॥ २०१ ॥

---

अध्यय२०२
॥ श्रीः ॥
१.२०२. अध्यायः २०२

Mahabharata - Adi Parva - Chapter Topics
ब्राह्मणमध्यस्थान्पाण्डवान्विज्ञाय श्रीकृष्णेन बलरामाय कथनं ॥ १ ॥
धनुर्दर्शनेनैव केषांचिद्राज्ञां धनुःपूरणे निरशत ॥ २ ॥
शिशुपालादीनां धनुःपूरणे भङ्गः ॥ ३ ॥
अर्जुनस्य धनुःपूरणे एषणा ॥ ४ ॥

१-२०२-० (८९३६)
वैशंपायन उवाच। १-२०२-०क्ष् (११३३)
तेऽलङ्कृताः कुण्डलिनो युवानः
परस्परं स्पर्धमाना नरेन्द्राः ।
अस्त्रं बलं चात्मनि मन्यमानाः
सर्वे समुत्पेतुरुदायुधास्ते ॥ १-२०२-१ (८९३७)
रूपेण वीर्येण कुले चैव
शीलेन वित्तेन च यौवनेन ।
समिद्धदर्पा मदवेगभिन्ना
मत्ता यथा हैमवता गजेन्द्राः ॥ १-२०२-२ (८९३८)
परस्परं स्पर्धया प्रेक्षमाणाः
सङ्कल्पजेनाभिपरिप्लुताङ्गाः ।
कृष्णा ममैवेत्यभिभाषमाणा
नृपाः समुत्पेतुरथासनेभ्यः ॥ १-२०२-३ (८९३९)
ते क्षत्रिया रङ्गगताः समेता
जिगीषमाणा द्रुपदात्मजां ताम् ।
चकाशिरे पर्वतराजकन्या-
मुमां यथा देवगणाः समेताः ॥ १-२०२-४ (८९४०)
कन्दर्पबाणाभिनिपीडिताङ्गां
कृष्णागतैस्ते हृदयैर्नरेन्द्राः ।
रङ्गावतीर्णा द्रुपदात्मजार्थं
द्वेषं प्रचक्रुः सुहृदोऽपि तत्र ॥ १-२०२-५ (८९४१)
अथाययुर्देवगणा विमानै
रुद्रादित्या वसवोऽथाश्विनौ च ।
साध्याश्च सर्वे मरुतस्तथैव
यमं पुरस्कृत्य धनेश्वरं च ॥ १-२०२-६ (८९४२)
दैत्याः सुपर्णाश्च महोरगाश्च
देवर्षयो गुह्यकाश्चारणाश्च ।
विश्वावसुर्नारदपर्वतौ च
गन्धर्वमुख्याः सहसाऽप्सरोभिः ॥ १-२०२-७ (८९४३)
हलायुधस्तत्र जनार्दनश्च
वृष्ण्यन्धकाश्चैव यताप्रधानम् ।
प्रेक्षां स्म चक्रुर्यदुपुङ्गवास्ते

स्थिताश्च कृष्णस्य मते महान्तः ॥ १-२०२-८ (८९४४)
दृष्ट्वा तु तान्मत्तगजेन्द्ररूपा-
न्पञ्चाभिपद्मानिव वारणेन्द्रान् ।
भस्मावृताङ्गानिव हव्यवाहान्
कृष्णः प्रदध्यौ यदुवीरमुख्यः ॥ १-२०२-९ (८९४५)
शशंस रामाय युधिष्ठिरं स
भीमं सजिष्णुं च यमौ च वीरौ ।
शनैःशनैस्तान्प्रसमीक्ष्य रामो
जनार्दनं प्रीतमना ददर्श ह ॥ १-२०२-१० (८९४६)
अन्ये तु वीरा नृपपुत्रपौत्राः
कृष्णागतैर्नत्रमनःस्वभावैः ।
व्यायच्छमाना ददृशुर्न तान्वै
सन्दष्टदन्तच्छदताम्रनेत्राः ॥ १-२०२-११ (८९४७)
तथैव पार्थाः पृथुबाहवस्ते
वीरौ यमौ चैव महानुभावौ ।
तां द्रौपदीं प्रेक्ष्य तदा स्म सर्वे
कन्दर्पबाणाभिहता बभूवुः ॥ १-२०२-१२ (८९४८)
देवर्षिगन्धर्वसमाकुलं त-
त्सुपर्णनागासुरसिद्धजुष्टम् ।
दिव्येन गन्धेन समाकुलं च
दिव्यैश्च पुष्पैरवकीर्यमाणम् ॥ १-२०२-१३ (८९४९)
महास्वनैर्दुन्दुभिनादितैश्च
बभूव तत्सङ्कुलमन्तरिक्षम् ।
विमानसंबाधमभूत्समन्ता-
त्सवेणुवीणापणवानुनादम् ॥ १-२०२-१४ (८९५०)
ग्समाजवाटोपरि संस्थितानां
मेघैः समन्तादिव गर्जमानैः।'
ततस्तु ते राजगणाः क्रमेण
कृष्णानिमित्तं कृतविक्रमाश्च ।
सकर्णदुर्योधनशाल्वशल्य-
द्रौणायनिक्राथसुनीथवक्राः ॥ १-२०२-१५ (८९५१)
कलिङ्गवङ्गाधिपपाण्ड्यपौण्ड्रा
विदेहराजो यवनाधिपश्च ।
अन्ये च नानानृपपुत्रपौत्रा
राष्ट्राधिपाः पङ्कजपत्रनेत्राः ॥ १-२०२-१६ (८९५२)
किरीटहाराङ्गदचक्रवालै-

र्विभूषिताङ्गाः पृथुबाहवस्ते ।
अनुक्रमं विक्रमसत्वयुक्ता
बलेन वीर्येण च नर्दमानाः ॥ १-२०२-१७ (८९५३)
तत्कार्मुकं संहननोपपन्नं
सज्यं न शेकुर्मनसाऽपि कर्तुम् ।
ते विक्रमन्तः स्फुरता दृढेन
विक्षिप्यमाणा धनुषा नरेन्द्राः ॥ १-२०२-१८ (८९५४)
विचेष्टमाना धरणीतलस्था
यथाबलं शैक्ष्यगुणक्रमाश्च ।
गतौजसः स्नस्तकिरीटहारा
विनिःश्वसन्तः शमयांबभूवुः ॥ १-२०२-१९ (८९५५)
हहाकृतं तद्धनुषा दृढेन
विस्रस्तहाराङ्गदचक्रवालम् ।
कृष्णानिमित्तं विनिवृत्तकामं
राज्ञां तदा मण्डलमार्तमासीत् ॥ १-२०२-२० (८९५६)
ग्एवं तेषु निवृत्तेषु क्षत्रियेषु समन्ततः ।
चेदीनामधिपो वीरो बलवानन्तकोपमः ॥१-२०२-२१ (८९५७)
दमघोषात्मजो धीमाञ्शिशुपालो महाद्युतिः ।
धनुषोऽभ्याशमागम्य तस्थौ राज्ञां समक्षतः ॥१-२०२-२२ (८९५८)
तदप्यारोप्यमाणं तु माषमात्रेऽभ्यताडयत् ।
धनुषा पीड्यमानस्तु जानुभ्यामगमन्महीम् ॥१-२०२-२३ (८९५९)
तत उत्थाय राजा स स्वराष्ट्राण्यभिजग्मिवान् ।
ततो राजा जरासन्धो महावीर्यो महाबलः ॥१-२०२-२४ (८९६०)
कम्बुग्रीवः पृथुव्यंसो मत्तवारणविक्रमः ।
मत्तवारणताम्राक्षो मत्तवारणवेगवान् ॥१-२०२-२५ (८९६१)
धनुषोऽभ्याशमागत्य तस्थौ गिरिरिवाचलः ।
धनुरारोप्यमाणं तु सर्षमात्रेऽभ्यताडयत् ॥१-२०२-२६ (८९६२)
ततः शल्यो महावीर्यो मद्रराजो महाबलः ।
धनुरारोप्यमाणं तु मुद्गमात्रेऽभ्यताडयत् ॥१-२०२-२७ (८९६३)
तदैवागात्स्वयं राज्यं पश्चादनवलोकयन् ।
इदं धनुर्वरं कोऽद्य सज्यं कुर्वीत पार्थिवः ॥१-२०२-२८ (८९६४)
इति निश्चित्य मनसा भूय एव स्थितस्तदा ।
ततो दुर्योधनो राजा धार्तराष्ट्रः परन्तपः ॥१-२०२-२९ (८९६५)
मानी दृढास्त्रसंपन्नः सर्वैश्च नृपलक्षणैः ।
उत्थितः सहसा तत्र भ्रातृमध्ये महाबलः ॥१-२०२-३० (८९६६)
विलोक्य द्रौपदीं हृष्टो धनुषोऽभ्याशमागमत् ।

स बभौ धनुरादाय शक्रश्चापधरो यथा ॥ १-२०२-३१ (८९६७)
धनुरारोपयामास तिलमात्रेऽभ्यताडयत् ।
आरोप्यमाणं तद्राजा धनुषा बलिना तदा ॥ १-२०२-३२ (८९६८)
उत्तानशय्यमपतदङ्गुल्यन्तरताडितः ।
स ययौ ताडितस्तेन व्रीडन्निव नराधिपः ॥ १-२०२-३३ (८९६९)
ततो वैकर्तनः कर्णो वृषा वै सूतनन्दनः ।
धनुरभ्याशमागम्य तोलयामास तद्धनुः ॥ १-२०२-३४ (८९७०)
तं चाप्यारोप्यमाणं तद्रोममात्रेऽभ्यताडयत् ।
त्रैलोक्यविजयी कर्णः सत्वे त्रैलोक्यविश्रुतः ॥ १-२०२-३५ (८९७१)
धनुषा सोऽपि निर्धूत इति सर्वे भयाकुलाः ।
एवं कर्णे विनिर्धूते धनुषा च नृपोत्तमाः ॥ १-२०२-३६ (८९७२)
चक्षुर्भिरपि नापश्यन्विनम्रमुखपङ्कजाः ।
दृष्ट्वा कर्णं विनिर्धूतं लोके वीरा नृपोत्तमाः ॥ १-२०२-३७ (८९७३)
निराशा धनुरुद्धारे द्रौपदीसंगमेऽपि च ॥ १-२०२-३८ (८९७४)
तस्मिंस्तु संभ्रान्तजने समाजे
निक्षिप्तवादेषु जनाधिपेषु ।
कुन्तीसुतो जिष्णुरियेष कर्तुं
सज्यं धनुस्तत्सशरं च वीरः ॥ १-२०२-३९ (८९७५)
ततो वरिष्ठः सुरदानवाना-
मुदरधीर्वृष्णिकुलप्रवीरः ।
जहर्ष रामेण स पीड्य हस्तं
हस्तंगतां पाण्डुसुतस्य मत्वा ॥ १-२०२-४० (८९७६)
न जज्ञिरेऽन्ये नृपविप्रमुख्याः
संछन्नरूपानथ पाण्डुपुत्रान् ।
विना हि लोके च यदुप्रवीरौ
धौम्यं हि धर्मं सह सोदरांश्च ॥ ॥ १-२०२-४१ (८९७७)

इति श्रीमन्महाभारते आदिपर्वणि स्वयंवरपर्वणि
द्व्यधिकद्विशततमोऽध्यायः ॥ २०२ ॥
Mahabharata - Adi Parva - Chapter Footnotes

१-२०२-३ संकल्पजेन कामेन ॥
१-२०२-९ अभितः पद्मा लक्ष्मीर्येषां तान्सर्वाङ्गसुन्दरानित्यर्थः ॥
द्व्यधिकद्विशततमोऽध्यायः ॥
२०२ ॥

---

अध्यय२०३

॥ श्रीः ॥

१.२०३. अध्यायः २०३

Mahabharata - Adi Parva - Chapter Topics

धनुरारोपणार्थमुत्थितमर्जुनंप्रति ब्राह्मणानां शुभाशंसनम् ॥ १ ॥
अर्जुनेन धनुरारोपणपूर्वकं लक्ष्यवेधः ॥ २ ॥
द्रौपद्या अर्जुनकण्ठे मालाप्रक्षेपः ॥ ३ ॥

Mahabharata - Adi Parva - Chapter Text

१-२०३-० (८९७८)
वैशंपायन उवाच। १-२०३-०क्ष् (११३४)
यदा निवृत्ता राजानो धनुषः सज्यकर्मणः ।
अथोदतिष्ठद्विप्राणां मध्याज्जिष्णुरुदारधीः ॥ १-२०३-१ (८९७९)
उदक्रोशन्विप्रमुख्या विधुन्वन्तोऽजिनानि च ।
दृष्ट्वा संप्रस्थितं पार्थमिन्द्रकेतुसमप्रभम् ॥ १-२०३-२ (८९८०)
केचिदासन्विमनसः केचिदासन्मुदान्विताः ।
आहुः परस्परं केचिन्निपुणा बुद्धिजीविनः ॥ १-२०३-३ (८९८१)
यत्कर्णशल्यप्रमुखैः क्षत्रियैर्लोकविश्रुतैः ।
नानतं बलवद्भिर्हि धनुर्वेदपरायणैः ॥ १-२०३-४ (८९८२)
तत्कथं त्वकृतास्त्रेण प्राणतो दुर्बलीयसा ।
वटुमात्रेण शक्यं हि सज्यं कर्तुं धनुर्द्विजाः ॥ १-२०३-५ (८९८३)
अवहास्या भविष्यन्ति ब्राह्मणाः सर्वराजसु ।
कर्मण्यस्मिन्नसंसिद्धे चापलादपरीक्षिते ॥ १-२०३-६ (८९८४)
यद्येष दर्पाद्धर्षाद्वाप्यथ ब्राह्मणचापलात् ।
प्रस्थितो धनुरायन्तुं वार्यतां साधु मा गमत् ॥ १-२०३-७ (८९८५)
नावहास्या भविष्यामो न च लाघवमास्थिताः ।
न च विद्विष्टतां लोके गमिष्यामो महीक्षिताम् ॥ १-२०३-८ (८९८६)
केचिदाहुर्युवा श्रीमान्नागराजकरोपमः ।
पीनस्कन्धोरुबाहुश्च धैर्येण हिमवानिव ॥ १-२०३-९ (८९८७)
सिंहखेलगतिः श्रीमान्मत्तनागेन्द्रविक्रमः ।
संभाव्यमस्मिन्कर्मेदमुत्साहाच्चानुमीयते ॥ १-२०३-१० (८९८८)
शक्तिरस्य महोत्साहा न ह्यशक्तः स्वयं व्रजेत् ।
न च तद्विद्यते किंचित्कर्म लोकेषु यद्भवेत् ॥ १-२०३-११ (८९८९)
ब्राह्मणानामसाध्यं च नृषु संस्थानचारिषु ।
अब्भक्षा वायुभक्षाश्च फलाहारा दृढव्रताः ॥ १-२०३-१२ (८९९०)

दुर्बला अपि विप्रा हि बलीयांसः स्वेतजसा ।
ब्राह्मणो नावमन्तव्यः सदसद्वा समाचरन् ॥१-२०३-१३ (८९९१)
सुखं दुःखं महद्ध्रस्वं कर्म यत्समुपागतम् ।
जामदग्न्येन रामेण निर्जिताः क्षत्रिया युधि ॥१-२०३-१४ (८९९२)
पीतः समुद्रोऽगस्त्येन अगाधो ब्रह्मतेजसा ।
तस्माद्ब्रुवन्तु सर्वेऽत्र वटुरेष धनुर्महान् ॥१-२०३-१५ (८९९३)
आरोपयतु शीघ्रं वै तथेत्यूचुर्द्विजर्षभाः। १-२०३-१६ (८९९४)
वैशंपायन उवाच ।
एवं तेषां विलपतां विप्राणां विविधा गिरः ॥ १-२०३-१६क्ष् (११३५)
अर्जुनो धनुषोऽभ्याशे तस्थौ गिरिरिवाचलः ।
ग्अर्जुनः पाण्डवश्रेष्ठो धृष्टद्युम्नमथाब्रवीत् ॥१-२०३-१७ (८९९५)
एतद्धनुर्ब्राह्मणानां सज्यं कर्तुमलं तु किम्। १-२०३-१८ (८९९६)
वैशंपायन उवाच ।
तस्य तद्वचनं श्रुत्वा धृष्टद्युम्नोऽब्रवीद्वचः ॥ १-२०३-१८क्ष् (११३६)
ब्राह्मणो वाथ राजन्यो वैश्यो वा शूद्र एव वा ।
एतेषां यो धनुःश्रेष्ठं सज्यं कुर्याद्द्विजोत्तम ॥१-२०३-१९ (८९९७)
तस्मै प्रदेया भगिनी सत्यमुक्तं मया वचः ॥ १-२०३-२० (८९९८)
वैशंपायन उवाच। १-२०३-२१क्ष् (११३७)
ततः पश्चान्महातेजाः पाण्डवो रणदुर्जयः।'
स तद्धनुः परिक्रम्य प्रदक्षिणमथाकरोत् ॥ १-२०३-२१ (८९९९)
प्रणम्य शिरसा देवमीनं वरदं प्रभुम् ।
कृष्णं च मनसा कृत्वा जगृहे चार्जुनो धनुः ॥१-२०३-२२ (९०००)
यत्पार्थिवै रुक्मसुनीथवक्रै
राधेयदुर्योधनशल्यसाल्वैः ।
तदा धनुर्वेदपरैर्नृसिंहैः
कृतं न सज्यं महतोऽपि यत्नात् ॥ १-२०३-२३ (९००१)
तदर्जुनो वीर्यवतां सदर्प-
स्तदैन्द्रिरिन्द्रावरजप्रभावः ।
सज्यं च चक्रे निमिषान्तरेण
शरांश्च जग्राह दशार्दसङ्ख्यान् ॥ १-२०३-२४ (९००२)
विव्याध लक्ष्यं निपपात तच्च
छिद्रेण भूमौ सहसातिविद्धम् ।
ततोऽन्तरिक्षे च बभूव नादः
समाजमध्ये च महान्निनादः ॥ १-२०३-२५ (९००३)
पुष्पाणि दिव्यानि ववर्ष देवः
पार्थस्य मूर्ध्नि द्विषतां निहन्तुः ॥ १-२०३-२६ (९००४)

चेलानि विव्यधुस्तत्र ब्राह्मणाश्च सहस्रशः ।
विलक्षितास्ततश्चक्रुर्हाहाकारांश्च सर्वशः ।
न्यपतंश्चात्र नभसः समन्तात्पुष्पवृष्टयः ॥ १-२०३-२७ (९००५)
शताङ्गानि च तूर्याणि वादकाः समवादयन् ।
सूतमागधसङ्घाश्चाप्यस्तुवंस्तत्र सुस्वराः ॥१-२०३-२८ (९००६)
तं दृष्ट्वा द्रुपदः प्रीतो बभूव रिपुसूदनः ।
सह सैन्यैश्च पार्थस्य साहाय्यार्थमियेष सः ॥१-२०३-२९ (९००७)
तस्मिंस्तु शब्दे महति प्रवृद्धे
युधिष्ठिरो धर्मभृतां वरिष्ठः ।
आवासमेवोपजगाम शीघ्रं
सार्धं यमाभ्यां पुरुषोत्तमाभ्याम् ॥ १-२०३-३० (९००८)
विद्धं तु लक्ष्यं प्रसमीक्ष्य कृष्णा
पार्थं च शक्रप्रतिमं निरीक्ष्य ।
ग्स्वभ्यस्तरूपापि नवेव नित्यं
विनापि हासं हसतीव कन्या ॥ १-२०३-३१ (९००९)
मदादृतेऽपि स्खलतीव भावै-
र्वाचा विना व्याहरतीव दृष्ट्या ।
आदाय शुक्लं वरमाल्यदाम
जगाम कुन्तीसुतमुत्स्मयन्ती ॥ १-२०३-३२ (९०१०)
गत्वा च पश्चात्प्रसमीक्ष्य कृष्णा
पार्थस्य वक्षस्यविशङ्कमाना ।
क्षिप्त्वा स्रजं पार्थिववीरमध्ये
वराय वव्रे द्विजसङ्घमध्ये ॥ १-२०३-३३ (९०११)
शचीव देवेन्द्रमथाग्निदेवं
स्वाहेव लक्ष्मीश्च यथा मुकुन्दम् ।
उषेव सूर्यं मदनं रतीव
महेश्वरं पर्वतराजपुत्री ॥' १-२०३-३४ (९०१२)
स तामुपादाय विजित्य रङ्गे
द्विजातिभिस्तैरभिपूज्यमानः ।
रङ्गान्निरक्रामदचिन्त्यकर्मा
पत्न्या तया चाप्यनुगम्यमानः ॥ ॥ १-२०३-३५ (९०१३)

इति श्रीमन्महाभारते आदिपर्वणि स्वयंवरपर्वणि
त्र्यधिकद्विशततमोऽध्यायः ॥ २०३ ॥
Mahabharata - Adi Parva - Chapter Footnotes

१-२०३-२९ साहाय्यार्थं द्रौपद्यलाभात्
क्षुब्धैर्नृपान्तरैर्युद्धप्रसक्तौ सत्याम् ॥
त्र्यधिकद्विशततमोऽध्यायः ॥
२०३ ॥

---

अध्यय२०४
॥ श्रीः ॥
१.२०४. अध्यायः २०४

Mahabharata - Adi Parva - Chapter Topics
क्रोधाद्राजसु द्रुपदहननार्थमागतेषु राजसंमुखे भीमार्जुनयोः
सज्जीभूय स्थितयोः सतोः कृष्णबलरामयोः संवादः ॥ १ ॥

Mahabharata - Adi Parva - Chapter Text

१-२०४-० (९०१४)
वैशंपायन उवाच। १-२०४-०क्ष् (११३८)
तस्मै दित्सति कन्यां तु ब्राह्मणाय तदा नृपे ।
कोप आसीन्महीपानामालोक्यान्योन्यमन्तिकात् ॥ १-२०४-१ (९०१५)
ग्ऊचुः सर्वे समागम्य परस्परहितैषिणः ।
वयं सर्वे समाहूता द्रुपदेन दुरात्मना ।
संहत्य चाभ्यगच्छाम स्वयंवरदिदृक्षया ॥' १-२०४-२ (९०१६)
अस्मानयमतिक्रम्य तृणीकृत्य च संगतान् ।
दातुमिच्छति विप्राय द्रौपदीं योषितां वराम् ॥ १-२०४-३ (९०१७)
अवरोप्येह वृक्षस्तु फलकाले निपात्यते ।
निहन्मैनं दुरात्मानं योयमस्मान्न मन्यते ॥ १-२०४-४ (९०१८)
न ह्यर्हत्येष संमानं नापि वृद्धक्रमं गुणैः ।
हन्मैनं सह पुत्रेण दुराचारं नृपद्विषम् ॥ १-२०४-५ (९०१९)
अयं हि सर्वानाहूय सत्कृत्य च नराधिपान् ।
गुणवद्भोजयित्वान्नं ततः पश्चान्न मन्यते ॥ १-२०४-६ (९०२०)
अस्मिन्राजसमवाये देवानामिव सन्नये ।
किमयं सदृशं कंचिन्नृपतिं नैव दृष्टवान् ॥ १-२०४-७ (९०२१)
न च विप्रेष्वधीकारो विद्यते वरणं प्रति ।
स्वयंवरः क्षत्रियाणामितीयं प्रथिता श्रुतिः ॥ १-२०४-८ (९०२२)
अथवा यदि कन्येयं न च कंचिद्बुभूषति ।
अग्नावेनां परिक्षिप्य याम राष्ट्राणि पार्थिवाः ॥ १-२०४-९ (९०२३)
ब्राह्मणो यदि चापल्याल्लोभाद्वा कृतवानिदम् ।

विप्रियं पार्थिवेन्द्राणां नैष वध्यः कथंचन ॥१-२०४-१० (९०२४)
ब्राह्मणार्थं हि नो राज्यं जीवितं हि वसूनि च ।
पुत्रपौत्रं च यच्चान्यदस्माकं विद्यते धनम् ॥१-२०४-११ (९०२५)
अवमानभयाच्चैव स्वधर्मस्य च रक्षणात् ।
स्वयंवराणामन्येषां मा भूदेवंविधा गतिः ॥१-२०४-१२ (९०२६)
इत्युक्त्वा राजशार्दूला रुष्टाः परिघबाहवः ।
द्रुपदं तु जिघांसन्तः सायुधाः समुपाद्रवन् ॥१-२०४-१३ (९०२७)
तान्गृहीतशरावापान्क्रुद्धानापततो बहून् ।
द्रुपदो वीक्ष्य संग्रासाद्ब्राह्मणाञ्छरणं गतः ॥१-२०४-१४ (९०२८)
ग्न भयान्नापि कार्पण्यान्न प्राणपरिरक्षणात् ।
जगाम द्रुपदो विप्राञ्शमार्थी प्रत्यपद्यत ॥' १-२०४-१५ (९०२९)
वेगेनापततस्तांस्तु प्रभिन्नानिव वारणान् ।
पाण्डुपुत्रौ महेष्वासौ प्रतियातावरिन्दमौ ॥१-२०४-१६ (९०३०)
ततः समुत्पेतुरुदायुधास्ते
महीक्षितो बद्धगोधाङ्गुलित्राः ।
जिघांसमानाः कुरुराजपुत्रा-
वमर्षयन्तोऽर्जुनभीमसेनौ ॥ १-२०४-१७ (९०३१)
ततस्तु भीमोऽद्भुतभीमकर्मा
महाबलो वज्रसमानसारः ।
उत्पाट्य दोर्भ्यां द्रुममेकवीरो
निष्पत्रयामास यथा गजेन्द्रः ॥ १-२०४-१८ (९०३२)
तं वृक्षमादाय रिपुप्रमाथी
दण्डीव दण्डं पितृराज उग्रम् ।
तस्थौ समीपे पुरुषर्षभस्य
पार्थस्य पार्थः पृथुदीर्घबाहुः ॥ १-२०४-१९ (९०३३)
तत्प्रेक्ष्य कर्मातिमनुष्यबुद्धि-
र्जिष्णुः स हि भ्रातुरचिन्त्यकर्मा ।
विसिष्मिये चापि भयं विहाय
तस्थौ धनुर्गृह्य महेन्द्रकर्मा ॥ १-२०४-२० (९०३४)
तत्प्रेक्ष्य कर्मातिमनुष्यबुद्धि-
र्जिष्णोः सहभ्रातुरचिन्त्यकर्मा ।
दामोदरो भ्रातरमुग्रवीर्यं
हलायुधं वाक्यमिदं बभाषे ॥ १-२०४-२१ (९०३५)
य एष सिंहर्षभखेलगामी
मदद्धनुः कर्षति तालमात्रम् ।
एषोऽर्जुनो नात्र विचार्यमस्ति

यद्यस्मि संकर्षण वासुदेवः ॥ १-२०४-२२ (९०३६)
यस्त्वेष वृक्षं तरसाऽवभज्य
राज्ञां निकारे सहसा प्रवृत्तः ।
वृकोदरान्नान्य इहैतदद्य
कर्तुं समर्थः समरे पृथिव्याम् ॥ १-२०४-२३ (९०३७)
योऽसौ पुरस्तात्कमलायताक्षो
महातनुः सिंहगतिर्विनीतः ।
गौरः प्रलम्बोज्ज्वलचारुघोणो
विनिःसृतः सोऽप्युत धर्मपुत्रः ॥ १-२०४-२४ (९०३८)
यौ तौ कुमाराविव कार्तिकेयौ
द्वावाश्विनेयाविति मे वितर्कः ।
मुक्ता हि तस्माज्जतुवेश्मदाहा-
न्मया श्रुताः पाण्डुसुताः पृथा च ॥ १-२०४-२५ (९०३९)
वैशंपायन उवाच। १-२०४-२६क्ष् (११३९)
तमब्रवीन्निर्जलतोयदाभो
हलायुधोऽनन्तरजं प्रतीतः ।
प्रीतोऽस्मि दृष्ट्वा हि पितृष्वसारं
पृथां विमुक्तां सह कौरवाग्र्यैः ॥ ॥ १-२०४-२६ (९०४०)

इति श्रीमन्महाभारते आदिपर्वणि स्वयंवरपर्वणि
चतुरधिकद्विशततमोऽध्यायः ॥ २०४ ॥

---

अध्यय२०५
॥ श्रीः ॥
१.२०५. अध्यायः २०५

Mahabharata - Adi Parva - Chapter Topics
अर्जुनेन कर्णपराजयः ॥ १ ॥
भीमेन कर्णपराजयः ॥ २ ॥
युधिष्ठिरादिभिर्दुर्योधनादिपराजयः ॥ ३ ॥
पुनर्युद्धाय कृतनिश्चयानां राज्ञां श्रीकृष्णवाक्येन
युद्धोद्योगाद्विरम्य स्वस्वालयगमनम् ॥ ४ ॥
द्रौपद्या सह भीमार्जुनयोः कुलालगृहप्रवेशः ॥ ५ ॥

Mahabharata - Adi Parva - Chapter Text

१-२०५-० (९०४१)

वैशंपायन उवाच। १-२०५-०क्ष् (११४०)
अजिनानि विधुन्वन्तः करकाश्च द्विजर्षभाः ।
ऊचुस्ते भीर्न कर्तव्या वयं योत्स्यामहे परान् ॥ १-२०५-१ (९०४२)
तानेवं वदतो विप्रानर्जुनः प्रहसन्निव ।
उवाच प्रेक्षका भूत्वा यूयं तिष्ठत पार्श्वतः ॥ १-२०५-२ (९०४३)
अहमेनानजिह्माग्रैः शतशो विकिरञ्छरैः ।
वारयिष्यामि संक्रुद्धान्मन्त्रैराशीविषानिव ॥ १-२०५-३ (९०४४)
इति तद्धनुरानम्य शुल्कावाप्तं महाबलः ।
भ्रात्रा भीमेन सहितस्तस्थौ गिरिरिवाचलः ॥ १-२०५-४ (९०४५)
ततः कर्णमुखान्दृष्ट्वा क्षत्रियान्युद्धदुर्मदान् ।
संपेततुरभीतौ तौ गजौ प्रतिगजानिव ॥ १-२०५-५ (९०४६)
ऊचुश्च वाचः परुषास्ते राजानो युयुत्सवः ।
आहवे हि द्विजस्यापि वधो दृष्टो युयुत्सतः ॥ १-२०५-६ (९०४७)
इत्येवमुक्त्वा राजानः सहसा दुद्रुवुर्द्विजान् ।
ततः कर्णो महातेजा जिष्णुं प्रति ययौ रणे ॥ १-२०५-७ (९०४८)
युद्धार्थी वासिताहेतोर्गजः प्रतिगजं यथा ।
भीमसेनं ययौ शल्यो मद्राणामीश्वरो बली ॥ १-२०५-८ (९०४९)
दुर्योधनादयः सर्वे ब्राह्मणैः सह संगताः ।
मृदुपूर्वमयत्नेन प्रत्ययुध्यंस्तदाऽऽहवे ॥ १-२०५-९ (९०५०)
ततोऽर्जुनः प्रत्यविध्यदापतन्तं शितैः शरैः ।
कर्णं वैकर्तनं श्रीमान्विकृष्य बलवद्धनुः ॥ १-२०५-१० (९०५१)
तेषां शराणां वेगेन शितानां तिग्मतेजसाम् ।
विमुह्यमानो राधेयो यत्नात्तमनुधावति ॥ १-२०५-११ (९०५२)
तावुभावप्यनिर्देश्यौ लाघवाज्जयतां वरौ ।
अयुध्येतां सुसंरब्धावन्योन्यविजिगीषिणौ ॥ १-२०५-१२ (९०५३)
कृते प्रतिकृतं पश्य पश्य बाहुबलं च मे ।
इति शूरार्थवचनैरभाषेतां परस्परम् ॥ १-२०५-१३ (९०५४)
ततोऽर्जुनस्य भुजयोर्वीर्यमप्रतिमं भुवि ।
ज्ञात्वा वैकर्तनः कर्णः संरब्धः समयोधयत् ॥ १-२०५-१४ (९०५५)
अर्जुनेन प्रयुक्तांस्तान्बाणान्वेगवतस्तदा ।
प्रतिहत्य ननादोच्चैः सैन्यानि तदपूजयन् ॥ १-२०५-१५ (९०५६)
कर्ण उवाच। १-२०५-१६क्ष् (११४१)
तुष्यामि ते विप्रमुख्य भुजवीयर्स्य संयुगे ।
अविषादस्य चैवास्य शस्त्रास्त्रविजयस्य च ॥ १-२०५-१६ (९०५७)
किं त्वं साक्षाद्धनुर्वेदो रामो वा विप्रसत्तम ।
अथ साक्षाद्धरिहयः साक्षाद्वा विष्णुरच्युतः ॥ १-२०५-१७ (९०५८)

आत्मप्रच्छादनार्थं वै बाहुवीर्यमुपाश्रितः ।
विप्ररूपं विधायेदं मन्ये मां प्रतियुध्यसे ॥ १-२०५-१८ (९०५९)
न हि मामाहवे क्रुद्धमन्यः साक्षाच्छचीपतेः ।
पुमान्योधयितुं शक्तः पाण्डवाद्वा किरीटिनः ॥ १-२०५-१९ (९०६०)
ग्दग्धा जतुगृहे सर्वे पाण्डवाः सार्जुनास्तदा ।
विनार्जुनं वा समरे मां निहन्तुमशक्नुवन् ॥' १-२०५-२० (९०६१)
तमेवंवादिनं तत्र फाल्गुनः प्रत्यभाषत ।
नास्मि कर्ण धनुर्वेदो नास्मि रामः प्रतापवान् ॥ १-२०५-२१ (९०६२)
ब्राह्मणोऽस्मि युधां श्रेष्ठः सर्वशस्त्रभृतां वरः ।
ब्राह्मे पौरन्दरे चास्त्रे निष्ठितोगुरुशासनात् ॥ १-२०५-२२ (९०६३)
स्थितोऽस्म्यद्य रणे जेतुं त्वां वै वीर स्थिरो भव ।
गनिर्जितोऽस्मीति वा ब्रूहि ततो व्रज यथासुखम् ॥ १-२०५-२३ (९०६४)
वैशंपायन उवाच। १-२०५-२४क्ष् (११४२)
एवमुक्त्वाऽथ कर्णस्य धनुश्चिच्छेद पाण्डवः ।
ततोऽन्यद्धनुरादाय संयोद्धुं सन्दधे शरम् ॥ १-२०५-२४ (९०६५)
दृष्ट्वा तच्चापि कौन्तेयश्छित्वा तद्धनुराशुगैः ।
तथा वैकर्तनं कर्णं बिभेद समरेऽर्जुनः ॥ १-२०५-२५ (९०६६)
ततः कर्णस्तु राधेयः छिन्नछन्वा महाबलः ।
शरैरतीव विद्धाङ्गः पलायनमथाकरोत् ॥ १-२०५-२६ (९०६७)
पुनरायान्मुहूर्तेन गृहीत्वा सशरं धनुः ।
ववर्ष शरवर्षाणि पार्थे वैकर्तनस्तथा ॥ १-२०५-२७ (९०६८)
तानि वै शरजालानि कौन्तेयोऽभ्यहनच्छरैः ।
ज्ञात्वा सर्वाञ्शरान्घोरान्कर्णोऽदावदद्भुतं बहिः ॥' १-२०५-२८ (९०६९)
ब्राह्मं तेजस्तदाऽजय्यं मन्यमानो महारथः ।
अपरस्मिन्वनोद्देशे वीरौ शल्यवृकोदरौ ॥ १-२०५-२९ (९०७०)
बलिनौ युद्धसंपन्नौ विद्यया च बलेन च ।
अन्योन्यमाह्वयन्तौ तु मत्ताविव महागजौ ॥ १-२०५-३० (९०७१)
मुष्टिभिर्जानुभिश्चैव निघ्नन्तावितरेतरम् ।
प्रकर्षणाकर्षणयोरभ्याकर्षविकर्षणैः ॥ १-२०५-३१ (९०७२)
आचकर्षतुरन्योन्यं मुष्टिभिश्चापि जघ्नतुः ।
ततश्चटचटाशब्दः सुघोरो ह्यभवत्तयोः ॥ १-२०५-३२ (९०७३)
पाषाणसंपातनिभैः प्रहारैरभिजघ्नतुः ।
मुहूर्तं तौ तदाऽन्योन्यं समरे पर्यकर्षताम् ॥ १-२०५-३३ (९०७४)
ततो भीमः समुत्क्षिप्य बाहुभ्यां शल्यमाहवे ।
अपातयत्कुरुश्रेष्ठो ब्राह्मणा जहसुस्तदा ॥ १-२०५-३४ (९०७५)
तत्राश्चर्यं भीमसेनश्चकार पुरुषर्षभः ।

यच्छल्यं पातितं भूमौ नावधीद्बलिनं बली ॥ १-२०५-३५ (९०७६)
पातिते भीमसेनेन शल्ये कर्णे च शङ्किते ।
गविस्मयः परमो जज्ञे सर्वेषां पश्यतां नृणाम् ॥ १-२०५-३६ (९०७७)
ततो राजसमूहस्य पश्यतो वृक्षमारुजत् ।
ततस्तु भीमं संज्ञाभिर्वारयामास धर्मराट् ॥ १-२०५-३७ (९०७८)
आकारज्ञस्तथा भ्रातुः पाण्डवोऽपि न्यवर्तत ।
धर्मराजश्च कौरव्य दुर्योधनममर्षणम् ॥ १-२०५-३८ (९०७९)
अयोधयत्सभामध्ये पश्यतां वै महीक्षिताम् ।
ततो दुर्योधनस्तं तु ह्यवज्ञाय युधिष्ठिरम् ॥ १-२०५-३९ (९०८०)
नायोधयत्तदा तेन बलवान्वै सुयोधनः ।
एतस्मिन्नन्तरेऽविध्यद्बाणेनानतपर्वणा ॥ १-२०५-४० (९०८१)
दुर्योधनममित्रघ्नं धर्मराजो युधिष्ठिरः ।
ततो दुर्योधनः क्रुद्धो दण्डाहत इवोरगः ॥ १-२०५-४१ (९०८२)
प्रत्ययुध्यत राजानं यत्नं परममास्थितः ।
छित्त्वा राजा धनुः सज्यं धार्तराष्ट्रस्य संयुगे ॥ १-२०५-४२ (९०८३)
अभ्यवर्षच्छरौघैस्तं स हित्वा प्राद्रवद्रणम् ।
दुःशासनस्तु संक्रुद्धः सहदेवेन पार्थिव ॥ १-२०५-४३ (९०८४)
युद्ध्वा च सुचिरं कालं सहदेवेन निर्जितः ।
उत्सृज्य च धनुः सङ्ख्ये जानुभ्यामवनीं गतः ।
उत्थाय सोऽभिदुद्राव सोसिं जग्राह चर्म च ॥ १-२०५-४४ (९०८५)
विकर्णचित्रसेनाभ्यां निगृहीतश्च कौरवः ।
मा युद्धमिति कौरव्य ब्राह्मणेनाबलेन वै ॥ १-२०५-४५ (९०८६)
दुःसहो नकुलश्चोभौ युद्धं कर्तुं समुद्यतै ।
तौ दृष्ट्वा कौरवा युद्धं वाक्यमूचुर्महाबलौ ॥ १-२०५-४६ (९०८७)
निवर्तन्तां भवन्तो वै कुतो विप्रेषु क्रूरता ।
दुर्बला ब्राह्मणाश्चेमे भवन्तो वै महाबलाः ॥ १-२०५-४७ (९०८८)
द्वावत्र ब्राह्मणौ क्रूरौ वाय्विन्द्रसदृशौ बले ।
ये वा के वा नमस्तेभ्यो गच्छामः स्वपुरं वयम् ॥ १-२०५-४८ (९०८९)
एवं संभाषमाणास्ते न्यवर्तन्ताथ कौरवाः ।
जहृषुर्ब्राह्मणास्तत्र समेतास्तत्र सङ्घशः ॥ १-२०५-४९ (९०९०)
बहुशस्ते ततस्तत्र क्षत्रिया रणमूर्धनि ।
प्रेक्षमाणास्तथाऽतिष्ठन्ब्राह्मणांश्च समन्ततः ॥ १-२०५-५० (९०९१)
ब्राह्मणाश्च जयं प्राप्ताः कन्यामादाय निर्ययुः ।
विजिते भीमसेनेन शल्ये कर्णे च निर्जिते ॥ १-२०५-५१ (९०९२)
दुर्योधने चापयाते तथा दुःशासने रणात् ।'
शङ्किताः सर्वराजानः परिवव्रुर्वृकोदरम् ॥ १-२०५-५२ (९०९३)

ऊचुश्च सहितास्तत्र साध्विमौ ब्राह्मणर्षभौ ।
विज्ञायेतां क्वजन्मानौ क्वनिवासौ तथैव च ॥१-२०५-५३ (९०९४)
को हि राधासुतं कर्णं शक्तो योधयितुं रणे ।
अन्यत्र रामाद्द्रोणाद्वा पाण्डवाद्वा किरीटिनः ॥१-२०५-५४ (९०९५)
कृष्णाद्वा देवकीपुत्रात्कृपाद्वापि शरद्वतः ।
को वा दुर्योधनं शक्तः प्रतियोधयितुं रणे ॥१-२०५-५५ (९०९६)
तथैव मद्राधिपतिं शल्यं बलवतांवरम् ।
बलदेवादृते वीरात्पाण्डवाद्वा वृकोदरात् ॥१-२०५-५६ (९०९७)
वीराद्दुर्योधनाद्वाऽन्यः शक्तः पातयितुं रणे ।
क्रियतामवहारोऽस्माद्युद्धाद्ब्राह्मणसंवृतात् ॥१-२०५-५७ (९०९८)
ब्राह्मणा हि सदा रक्ष्याः सापराधाऽपिनित्यदा ।
अथैनानुपलभ्येह पुनर्योत्स्याम हृष्टवत् ॥१-२०५-५८ (९०९९)
वैशंपायन उवाच।१-२०५-५९क्ष् (११४३)
तांस्तथावादिनः सर्वान्प्रसमीक्ष्य क्षितीश्वरान् ।
अथान्यान्पुरुषांश्चापि कृत्वा तत्कर्म संयुगे ॥१-२०५-५९ (९१००)
तत्कर्म भीमस्य समीक्ष्य कृष्णः
कुन्तीसुतौ तौ परिशङ्कमानः ।
निवारयामास महीपतींस्ता-
न्धर्मेण लब्धेत्यनुनीय सर्वान् ॥ १-२०५-६० (९१०१)
एवं ते विनिवृत्तास्तु युद्धाद्युद्धविशारदाः ।
यथावासं ययुः सर्वे विस्मिता राजसत्तमाः ॥१-२०५-६१ (९१०२)
वृत्तो ब्रह्मोत्तरो रङ्गः पाञ्चाली ब्राह्मणैर्वृता ।
इति ब्रुवन्तः प्रययुर्ये तत्रासन्समागताः ॥१-२०५-६२ (९१०३)
ब्राह्मणैस्तु प्रतिच्छन्नौ रौरवाजिनवासिभिः ।
कृच्छ्रेण जग्मतुस्तौ तु भीमसेनधनञ्जयौ ॥१-२०५-६३ (९१०४)
विमुक्तौ जनसंबाधाच्छत्रुभिः परिविक्षतौ ।
कृष्णयानुगतौ तत्र नृवीरौ तौ विरेजतुः ॥१-२०५-६४ (९१०५)
पौर्णमास्यां घनैर्मुक्तौ चन्द्रसूर्याविवोदितौ ।
तेषां माता बहुविधं विनाशं पर्यचिन्तयत् ॥१-२०५-६५ (९१०६)
अनागच्छत्सु पुत्रेषु भैक्षकाले च लिङ्गिते ।
धार्तराष्ट्रैर्हताश्च स्युर्विज्ञाय कुरुपुङ्गवाः ॥१-२०५-६६ (९१०७)
मायान्वितैर्वा रक्षोभिः सुघोरैर्दृढवैरिभिः ।
विपरीतं मतं जातं व्यासस्यापि महात्मनः ॥१-२०५-६७ (९१०८)
इत्येवं चिन्तयामास सुतस्नेहावृता पृथा ।
ततः सुप्तजनप्राये दुर्दिने मेघसंप्लुते ॥१-२०५-६८ (९१०९)
महत्यथापराह्णे तु घनैः सूर्य इवावृतः ।

ब्राह्मणैः प्राविशत्तत्र जिष्णुर्भार्गववेश्म तत् ॥ ॥१-२०५-६९ (९११०)

इति श्रीमन्महाभारते आदिपर्वणि स्वयंवरपर्वणि
पञ्चाधिकद्विशततमोऽध्यायः ॥ २०५ ॥
Mahabharata - Adi Parva - Chapter Footnotes

१-२०५-१२ विजिगीषिणौ विजिगीषावन्तौ ॥
१-२०५-२९ वनोद्देशे रङ्गदृशां निवासस्थाने ॥
१-२०५-३४ समुत्क्षिप्य कूष्माण्डफलवदपातयत् ॥
१-२०५-५७ अवहारो युद्धान्निवर्तनं ॥
१-२०५-५९ संयुगे तत्कर्म कृत्वा तूर्ष्णींभूताविति शेषः ॥
१-२०५-६२ ब्रह्म ब्राह्मणजातिः उत्तरं उत्कृष्टं यस्मिन्स ब्रह्मोत्तरः ॥
१-२०५-६९ भार्गववेश्म कुलालगृहं ॥
पाञ्चाधिकद्विशततमोऽध्यायः ॥
२०५ ॥

---

अध्यय२०६
॥ श्रीः ॥
१.२०६. अध्यायः २०६

Mahabharata - Adi Parva - Chapter Topics
भीमार्जुनाश्यां द्रौपद्याः भिक्षेत्यावेदने कुन्त्या पञ्चानां सह
भोजनानुज्ञा ॥ १ ॥
पश्चात् द्रौपदीदर्शनेन चिन्तान्वितायां कुन्त्यां युधिष्ठिरार्जुनयोः
संवादः ॥ २ ॥
द्वैपायनवचःस्मरणेन सर्वेषां द्रौपदी भार्येति
युधिष्ठिरनिश्चयः ॥ ३ ॥
जनमेजयेन कृष्णस्य कार्मुकानारोपणे कारणप्रश्ने पाण्डवार्थमिति
वैशंपायनस्योत्तरम् ॥ ४ ॥
कुलालशालांप्रति श्रीकृष्णस्यागमनम् ॥ ५ ॥

Mahabharata - Adi Parva - Chapter Text

१-२०६-० (९१११)
वैशंपायन उवाच। १-२०६-०क्ष् (११४४)
गत्वा तु तां भार्गवकर्मशालां
पार्थौ पृथां प्राप्य महानुभावौ ।

तां याज्ञसेनीं परमप्रतीतौ
भिक्षेत्यथावेदयतां नराग्र्यौ ॥ १-२०६-१ (९११२)
कुटीगता सा त्वनवेक्ष्य पुत्रौ
प्रोवाच भुङ्क्तेति समेत्य सर्वे ।
पश्चाच्च कुन्ती प्रसमीक्ष्य कृष्णां
कष्टं मया भाषितमित्युवाच ॥ १-२०६-२ (९११३)
साऽधर्मभीता परिचिन्तयन्ती
तां याज्ञसेनीं परमप्रतीताम् ।
पाणौ गृहीत्वोपजगाम कुन्ती
युधिष्ठिरं वाक्यमुवाच चेदम् ॥ १-२०६-३ (९११४)
कुन्त्युवाच। १-२०६-४क्ष् (११४५)
इयं तु कन्या द्रुपदस्य राज्ञ-
स्तवानुजाभ्यां मयि संनिसृष्टा ।
यथोचितं पुत्र मयाऽपि चोक्तं
समेत्य भुङ्क्तेति नृप प्रमादात् ॥ १-२०६-४ (९११५)
मया कथं नानृतमुक्तमद्य
भवेत्कुरूणामृषभ ब्रवीहि ।
पञ्चालराजस्य सुतामधर्मो
न चोपवर्तेत न विभ्रमेच्च ॥ १-२०६-५ (९११६)
वैशंपायन उवाच। १-२०६-६क्ष् (११४६)
स एवमुक्तो मतिमान्नृवीरो
मात्रा मुहूर्तं तु विचिन्त्य राजा ।
कुन्तीं समाश्वास्य कुरुप्रवीरो
धनञ्जयं वाक्यमिदं बभाषे ॥ १-२०६-६ (९११७)
त्वया जिता फाल्गुन याज्ञसेनी
त्वयैव शोभिष्यति राजपुत्री ।
प्रज्वाल्यतामग्निरमित्रसाह
गृहाण पाणिं विधिवत्त्वमस्याः ॥ १-२०६-७ (९११८)
अर्जुन उवाच। १-२०६-८क्ष् (११४७)
मा मां नरेन्द्र त्वमधर्मभाजं
कृथा न धर्मोऽयमशिष्टदृष्टः ।
भवान्निवेश्यः प्रथमं ततोऽयं
भीमो महाबाहुरचिन्त्यकर्मा ॥ १-२०६-८ (९११९)
अहं ततो नकुलोऽनन्तरं मे
पश्चादयं सहदेवस्तरस्वी ।
वृकोदरोऽहं च यमौ च राज-

न्नियं च कन्या भवतो नियोज्याः ॥ १-२०६-९ (९११२०)
एवं गते यत्करणीयमत्र
धर्म्यं यशस्यं कुरु तद्विचिन्त्य ।
पाञ्चालराजस्य हितं च यत्स्या-
त्प्रशाधि सर्वे स्म वशे स्थितास्ते ॥ १-२०६-१० (९११२१)
वैशंपायन उवाच। १-२०६-११क्ष् (११४८)
जिष्णोर्वचनमाज्ञाय भक्तिस्नेहसमन्वितम् ।
दृष्टिं निवेशयामासुः पाञ्चाल्यां पाण्डुनन्दनाः ॥ १-२०६-११ (९११२२)
दृष्ट्वा ते तत्र पश्यन्तीं सर्वे कृष्णां यशस्विनीम् ।
संप्रेक्ष्यान्योन्यमासीना हृदयैस्तामधारयन् ॥ १-२०६-१२ (९११२३)
तेषां तु द्रौपदीं दृष्ट्वा सर्वेषाममितौजसाम् ।
संप्रमथ्येन्द्रियग्रामं प्रादुरासीन्मनोभवः ॥ १-२०६-१३ (९११२४)
काम्यं हि रूपं पाञ्चाल्या विधात्रा विहितं स्वयम् ।
बभूवाधिकमन्याभ्यः सर्वभूतमनोहरम् ॥ १-२०६-१४ (९११२५)
तेषामाकारभावज्ञः कुन्तीपुत्रो युधिष्ठिरः ।
द्वैपायनवचः कृत्स्नं सस्मार मनुजर्षभः ॥ १-२०६-१५ (९११२६)
अब्रवीत्सहितान्भ्रातॄन्मिथो भेदभयान्नृपः ।
सर्वेषां द्रौपदी भार्या भविष्यति हि नः शुभा ॥ १-२०६-१६ (९११२७)
ग्जनमेजय उवाच। १-२०६-१७क्ष् (११४९)
सताऽपि शक्तेन च केशवेन
सज्यं धनुस्तन्न कृतं किमर्थम् ।
विद्धं च लक्ष्यं न च कस्य हेतो-
राचक्ष्व तन्मे द्विपदां वरिष्ठ ॥ १-२०६-१७ (९११२८)
वैशंपायन उवाच। १-२०६-१८क्ष् (११५०)
शक्तेन कृष्णेन च कार्मुकं त-
न्नारोपितं ज्ञातुकामेन पार्थान् ।
परिश्रवादेव बभूव लोके
जीवन्ति पार्था इति निश्चयोऽस्य ॥ १-२०६-१८ (९११२९)
अन्यानशक्तान्नृपतीन्समीक्ष्य
स्वयंवरे कार्मुकेणोत्तमेन ।
धनञ्जयस्तद्धनुरेकवीरः
सज्यं करोतीत्यभिवीक्ष्य कृष्णः ॥ १-२०६-१९ (९११३०)
इति स्वयं वासुदेवो विचिन्त्य
पार्थान्विवित्सन्विविधैरुपायैः ।
न तद्धनुः सज्यमियेप कर्तुं
बभूवुरस्येष्टतमा हि पार्थाः ॥' १-२०६-२० (९११३१)

भ्रातुर्वचस्तत्प्रसमीक्ष्य सर्वे
ज्येष्ठस्य पाण्डोस्तनयास्तदानीम् ।
तमेवार्थं ध्यायमाना मनोभिः
सर्वे च ते तस्थुरदीनसत्वाः ॥ १-२०६-२१ (९१३२)
वृष्णिप्रवीरस्तु कुरुप्रवीरा-
नाशंसमानः सहरौहिणेयः ।
जगाम तां भार्गवकर्मशालां
यत्रासते ते पुरुषप्रवीराः ॥ १-२०६-२२ (९१३३)
तत्रोपविष्टं पृथुदीर्घबाहुं
ददर्श कृष्णः सहरौहिणेयः ।
अजातशत्रुं परिवार्य तांश्चा-
प्युपोपविष्टाञ्ज्वलनप्रकाशान् ॥ १-२०६-२३ (९१३४)
ततोऽब्रवीद्वासुदेवोऽभिगम्य
कुन्तीसुतं धर्मभृतां वरिष्ठम् ।
कृष्णोऽहमस्मीति निपीड्य पादौ
युधिष्ठिरस्याजमीढस्य राज्ञः ॥ १-२०६-२४ (९१३५)
तथैव तस्याप्यनु रौहिणेय-
स्तौ चापि हृष्टाः कुरवोऽभ्यनन्दन ।
पितृष्वसुश्चापि यदुप्रवीरा-
वगृह्णतां भारतमुख्य पादौ ॥ १-२०६-२५ (९१३६)
अजातशत्रुश्च कुरुप्रवीरः
पप्रच्छ कृष्णं कुशलं विलोक्य ।
कथं वयं वासुदेव त्वयेह
गूढा वसन्तो विदिताश्च सर्वे ॥ १-२०६-२६ (९१३७)
तमब्रवीद्वासुदेवः प्रहस्य
गूढोऽप्यग्निर्ज्ञायत एव राजन् ।
तं विक्रमं पाण्डवेयानतीत्य
कोऽन्यः कर्ता विद्यते मानुषेषु ॥ १-२०६-२७ (९१३८)
दिष्ट्या सर्वे पावकाद्विप्रमुक्ता
यूयं घोरात्पाण्डवाः शत्रुसाहाः ।
दिष्ट्या पापो धृतराष्ट्रस्य पुत्रः
सहामात्यो न सकामोऽभविष्यत् ॥ १-२०६-२८ (९१३९)
भद्रं वोऽस्तु निहितं यद्गुहायां
विवर्धध्वं ज्वलना इवैधमानाः ।
मा वो विद्युः पार्थिवाः केचिदेव
यास्यावहे शिबिरायैव तावत् ।

सोऽनुज्ञातः पाण्डवेनाव्ययश्रीः १-२०६-२९ (९१४०)
१-२०६-२९फ़्"
प्रायाच्छीघ्रं बलदेवेन सार्धम् ॥ ॥

इति श्रीमन्महाभारते आदिपर्वणि स्वयंवरपर्वणि
षडधिकद्विशततमोऽध्यायः ॥ २०६ ॥
Mahabharata - Adi Parva - Chapter Footnotes

१-२०६-१२ दृष्ट्वा ते तत्र तिष्ठन्ती इति ङ । पाठः ॥
१-२०६-२९ यद्भद्रं गुहायां बुद्धौ वो निहितं तद्वोस्तु ॥
षडधिकद्विशततमोऽध्यायः ॥
२०६ ॥

---

अध्यय२०७
॥ श्रीः ॥
१.२०७. अध्यायः २०७

Mahabharata - Adi Parva - Chapter Topics
पाण्डवावासे धृष्टद्युम्नस्य निलीयावस्थानम् ॥ १ ॥
भीमाद्यानीतस्य भैक्षस्य कुन्त्याज्ञया द्रौपद्या परिवेषणम् ॥ २ ॥
सर्वं पाण्डववृत्तान्तं ज्ञात्वा धृष्टद्युम्नस्य प्रतिनिवर्तनम् ॥ ३ ॥

Mahabharata - Adi Parva - Chapter Text

१-२०७-० (९१४१)
वैशंपायन उवाच। १-२०७-०क्ष् (११५१)
धृष्टद्युमनस्तु पाञ्चाल्यः पृष्ठतः कुरुनन्दनौ ।
अन्वगच्छत्तदा यान्तौ भार्गवस्य निवेशने ॥ १-२०७-१ (९१४२)
सोज्ञायमानः पुरुषानवधाय समन्ततः ।
स्वयमारान्निलीनोऽभूद्भार्गवस्य निवेशने ॥ १-२०७-२ (९१४३)
सायं च भीमस्तु रिपुप्रमाथी
जिष्णुर्यमौ चापि महानुभावौ ।
भैक्षं चरित्वा तु युधिष्ठिराय
निवेदयांचक्रुरदीनसत्वाः ॥ १-२०७-३ (९१४४)
ततस्तु कुन्ती द्रुपदात्मजां ता-
मुवाच काले वचनं वदान्या ।
ततोऽग्रमादाय कुरुष्व भद्रे

बलिं च विप्राय च देहि भिक्षाम् ॥ १-२०७-४ (९१४५)
ये चान्नमिच्छन्ति ददस्व तेभ्यः
परिश्रिता ये परितो मनुष्याः ।
ततश्च शेषं प्रविभज्य शीघ्र-
मर्धं चतुर्णां मम चात्मनश्च ॥ १-२०७-५ (९१४६)
अर्धं तु भीमाय च देहि भद्रे
य एष नागर्षभतुल्यरूपः ।
गौरो युवा संहननोपपन्न
एषो हि वीरो बहुभुक् सदैव ॥ १-२०७-६ (९१४७)
सा हृष्टरूपैव तु राजपुत्री
तस्या वचः साध्वविशङ्कमाना ।
यथावदुक्तं प्रचकार साध्वी
ते चापि सर्वे बुभुजुस्तदन्नम् ॥ १-२०७-७ (९१४८)
कुशैस्तु भूमौ शयनं चकार
माद्रीपुत्रः सहदेवस्तपस्वी ।
अथात्मकीयान्यजिनानि सर्वे
संस्तीर्य वीराः सुषुपुर्धरण्याम् ॥ १-२०७-८ (९१४९)
अगस्त्यकान्तामभितो दिशं तु
शिरांसि तेषां कुरुसत्तमानाम् ।
कुन्ती पुरस्तात्तु बभूव तेषां
पादान्तरे चाथ बभूव कृष्णा ॥ १-२०७-९ (९१५०)
अशेत भूमौ सह पाण्डुपुत्रैः
पादोपधानीव कृता कुशेषु ।
न तत्र दुःखं मनसापि तस्या
न चावमेने कुरुपुङ्गवांस्तान् ॥ १-२०७-१० (९१५१)
ते तत्र शूराः कथयांबभूवुः
कथा विचित्राः पृतनाधिकाराः ।
अस्त्राणि दिव्यानि रथांश्च नागान्
खड्गान्गदाश्चापि परश्वधांश्च ॥ १-२०७-११ (९१५२)
तेषां कथास्ताः परिकीर्त्यमानाः
पाञ्चालराजस्य सुतस्तदानीम् ।
सुश्राव कृष्णां च तदा निषण्णां
ते चापि सर्वे ददृशुर्मनुष्याः ॥ १-२०७-१२ (९१५३)
धृष्टद्युम्नो राजपुत्रस्तु सर्वं
वृत्तं तेषां कथितं चैव रात्रौ ।
सर्वं राज्ञे द्रुपदायाखिलेन

निवेदयिष्यंस्त्वरितो जगाम ॥ १-२०७-१३ (९१५४)
पाञ्चालराजस्तु विषण्णरूप-
स्तान्पाण्डवानप्रतिविन्दमानः ।
धृष्टद्युम्नं पर्यपृच्छन्महात्मा
क्व सा गता केन नीता च कृष्णा ॥ १-२०७-१४ (९१५५)
कच्चिन्न शूद्रेण न हीनजेन
वैश्येन वा करदेनोपपन्ना ।
कच्चित्पदं मूर्ध्नि न पङ्कदिग्धं
कच्चिन्न माला पतिता श्मशाने ॥ १-२०७-१५ (९१५६)
कच्चित्स वर्णप्रवरो मनुष्य
उद्रिक्तवर्णोऽप्युत एव कच्चित् ।
कच्चिन्न वामो मम मूर्ध्नि पादः
कृष्णाभिमर्शेन कृतोऽद्य पुत्र ॥ १-२०७-१६ (९१५७)
कच्चिन्न तप्स्ये परमप्रतीतः
संयुज्य पार्थेन नरर्षभेण ।
वदस्व तत्त्वेन महानुभाव
कोऽसौ विजेता दुहितुर्ममाद्य ॥ १-२०७-१७ (९१५८)
विचित्रवीर्यस्य सुतस्य कच्चि-
त्कुरुप्रवीरस्य ध्रियन्ति पुत्राः ।
कच्चित्तु पार्थेन यवीयसाऽध्य
धनुर्गृहीतं निहतं च लक्ष्यम् ॥ ॥ १-२०७-१८ (९१५९)

इति श्रीमन्महाभारते आदिपर्वणि स्वयंवरपर्वणि
सप्ताधिकद्विशततमोऽध्यायः ॥ २०७ ॥ ॥ समाप्तं स्वयंवरपर्व ॥
Mahabharata - Adi Parva - Chapter Footnotes

१-२०७-४ अग्रं प्रथममादाय बलिं कुरुष्व भिक्षां च देहि ॥
१-२०७-१८ ध्रेयन्ति जीवन्ति ॥
सप्ताधिकद्विशततमोऽध्यायः ॥
२०७ ॥

---

अध्यय२०८
॥ श्रीः ॥
१.२०८. अध्यायः २०८

(अथ वैवाहिकपर्व ॥ १३ ॥)
Mahabharata - Adi Parva - Chapter Topics

धृष्टद्युम्नवार्ता श्रुतवता द्रुपदेन तत्वविवित्सया पाण्डवान्प्रति पुरोहितप्रेषणम् ॥१ ॥

Mahabharata - Adi Parva - Chapter Text

१-२०८-० (९१६०)
वैशंपायन उवाच।१-२०८-०क्ष् (११५२)
ततस्तथोक्तः परिहृष्टरूपः
पित्रे शशंसाथ स राजपुत्रः ।
धृष्टद्युम्नः सोमकानां प्रबर्हो
वृत्तं यथा येन हृता च कृष्णा ॥ १-२०८-१ (९१६१)
धृष्टद्युम्न उवाच।१-२०८-२क्ष् (११५३)
योऽसौ युवा व्यायतलोहिताक्षः
कृष्णाजिनी देवसमानरूपः ।
यः कार्मुकाग्र्यं कृतवानधिज्यं
लक्षं च यः पातितवान्पृथिव्याम् ॥ १-२०८-२ (९१६२)
असज्जमानश्च ततस्तरस्वी
वृतो द्विजाग्र्यैरभिपूज्यमानः ।
चक्राम वज्रीव दितेः सुतेषु
सर्वैश्च देवैर्ऋषिभिश्च जुष्टः ॥ १-२०८-३ (९१६३)
कृष्मा प्रगृह्याजिनमन्वयात्तं
नागं यथा नागवधूः प्रहृष्टा ।
ग्श्यामो युवा वारणमत्तगामी
कृत्वा महत्कर्म सुदुष्करं तत् ॥ १-२०८-४ (९१६४)
यः सूतपुत्रेण चकार युद्धं
शङ्केऽर्जुनं तं त्रिदशेशवीर्यम्।'
अमृष्यमाणेषु नराधिपेषु
क्रुद्धेषु वै तत्र समापतत्सु ॥ १-२०८-५ (९१६५)
ततोऽपरः पार्थिवसङ्घमध्ये
प्रवृद्धमारुज्य महीप्ररोहम् ।
प्राकालयत्तेन स पार्थिवौघान्
भीमोऽन्तकः प्राणभृतो यथैव ॥ १-२०८-६ (९१६६)
तौ पार्थिवानां मिषतां नरेन्द्र
कृष्णामुपादाय गतौ नराग्र्यौ ।
ग्विक्षोभ्य विद्राव्य च पार्तिवांस्ता-
न्स्वतेजसा दुष्प्रतिवीक्ष्यरूपौ।'

विभ्राजमानाविव चन्द्रसूर्यौ
बाह्यां पुराद्भार्गवकर्मशालाम् ॥ १-२०८-७ (९१६७)
तत्रोपविष्टार्चिरिवानलस्य
तेषां जनित्रीति मम प्रतर्कः ।
तथाविधैरेव नरप्रवीरै-
रुपोपविष्टैस्त्रिबिरग्निकल्पैः ॥ १-२०८-८ (९१६८)
तस्यास्ततस्तावभिवाद्य पादा-
वुक्त्वा च कृष्णामभिवादयेति ।
स्थितौ च तत्रैव निवेद्य कृष्णां
भिक्षाप्रचाराय गता नराग्र्याः ॥ १-२०८-९ (९१६९)
तेषां तु भैक्षं प्रतिगृह्य कृष्णा
दत्वा बलिं ब्राह्मणसाच्च कृत्वा ।
तां चैव वृद्धां परिवेष्य तांश्च
नरप्रवीरान्स्वयमप्यभुङ्क्त ॥ १-२०८-१० (९१७०)
सुप्तास्तु ते पार्थिव सर्व एव
कृष्णा च तेषां चरणोपधाने ।
आसीत्पृथिव्यां शयनं च तेषां
दर्भाजिनाग्रास्तरणोपपन्नम् ॥ १-२०८-११ (९१७१)
ते नर्दमाना इव कालमेघाः
कथा विचित्राः कथयांबभूवुः ।
न वैश्यशूद्रौपयिकीः कथास्ता
न च द्विजानां कथयन्ति वीराः ॥ १-२०८-१२ (९१७२)
निःसंशयं क्षत्रियपुंगवास्ते
यथा हि युद्धं कथयन्ति राजन् ।
आशा हि नो व्यक्तमियं समृद्धा
मुक्तान्हि पार्थाञ्शृणुमोऽग्निदाहात् ॥ १-२०८-१३ (९१७३)
यथा हि लक्ष्यं निहतं धनुश्च
सज्यं कृतं तेन तथा प्रसह्य ।
यथा हि भाषन्ति परस्परं ते
छन्ना ध्रुवं ते प्रचरन्ति पार्थाः ॥१-२०८०१५क्ष् वैशंपायन उवाच।
१-२०८-१४ (९१७४)
ततः स राजा द्रुपदः प्रहृष्टः
पुरोहितं प्रेषायामास तेषाम् ।
विद्याम युष्मानिति भाषमाणो
महात्मानः पाण्डुसुताः स्थ कच्चित् ॥ १-२०८-१५ (९१७५)
गृहीतवाक्यो नृपतेः पुरोधा

गत्वा प्रशंसामभिधाय तेषाम् ।
वाक्यं समग्रं नृपतेर्यथाव-
दुवाच चानुक्रमविक्रमेण ॥ १-२०८-१६ (९१७६)
विज्ञातुमिच्छत्यवनीश्वरो वः
पाञ्चालराजो वरदो वरार्हाः ।
लक्ष्यस्य वेद्धारमिमं हि दृष्ट्वा
हर्षस्य नान्तं प्रतिपद्यते सः ॥ १-२०८-१७ (९१७७)
आख्यात च ज्ञातिकुलानुपूर्वी
पदं शिरःसु द्विषतां कुरुध्वम् ।
प्रह्लादयध्वं हृदयं ममेदं
पाञ्चालराजस्य च सानुगस्य ॥ १-२०८-१८ (९१७८)
पाण्डुर्हि राजा द्रुपदस्य राज्ञः
प्रियः सखा चात्मसमो बभूव ।
तस्यैष कामो दुहिता ममेयं
स्नुषा यदि स्यादिह कौरवस्य ॥ १-२०८-१९ (९१७९)
अयं हि कामो द्रुपदस्य राज्ञो
हृदि स्थितो नित्यमनिन्दिताङ्गाः ।
यदर्जुनो वै पृथुदीर्घबाहु-
र्धर्मेण विन्देत सुतां ममैताम् ॥ १-२०८-२० (९१८०)
कृतं हि तत्स्यात्सुकृतं ममेदं
यशश्च पुण्यं च हितं तदेतत् ।
अथोक्तवाक्यं हि पुरोहितं स्थितं
ततो विनीतं समुदीक्ष्य राजा ॥ १-२०८-२१ (९१८१)
समीपतो भीममिदं शशास
प्रदीयतां पाद्यमर्घ्यं तथाऽस्मै ।
मान्यः पुरोधा द्रुपदस्य राज्ञ-
स्तस्मै प्रयोज्याऽभ्यधिका हि पूजा ॥ १-२०८-२२ (९१८२)
वैशंपायन उवाच। १-२०८-२३क्ष् (११५४)
भीमस्ततस्तत्कृतवान्नरेन्द्र
तां चैव पूजां प्रतिगृह्य हर्षात् ।
सुखोपविष्टं तु पुरोहितं तदा
युधिष्ठिरो ब्राह्मणमित्युवाच ॥ १-२०८-२३ (९१८३)
पाञ्चालराजेन सुता निसृष्टा
स्वधर्मदृष्टेन यथा न कामात् ।
प्रदिष्टशुल्का द्रुपदेन राज्ञा
सा तेन वीरेण तथाऽनुवृत्ता ॥ १-२०८-२४ (९१८४)

न तत्र वर्णेषु कृता विवक्षा
न चापि शीले न कुले न गोत्रे ।
कृतेन सज्येन हि कार्मुकेण
विद्धेन लक्ष्येण हि सा विसृष्टा ॥ १-२०८-२५ (९१८५)
सेयं तथाऽनेन महात्मनेह
कृष्णा जिता पार्थिवसङ्घमध्ये ।
नैवं गते सौमकिरद्य राजा
सन्तापमर्हत्यसुखाय कर्तुम् ॥ १-२०८-२६ (९१८६)
कामश्च योऽसौ द्रुपदस्य राज्ञः
स चापि संपत्स्यति पार्थिवस्य ।
संप्राप्यरूपां हि नरेन्द्रकन्या-
मिमामहं ब्राह्मण साधु मन्ये ॥ १-२०८-२७ (९१८७)
न तद्धनुर्मन्दबलेन शक्यं
मौर्व्या समायोजयितुं तथाहि ।
न चाकृतास्त्रेण न हीनजेन
लक्ष्यं तथा पातयितुं हि शक्यम् ॥ १-२०८-२८ (९१८८)
तस्मान्न तापं दुहितुर्निमित्तं
पाञ्चालराजोऽर्हति कर्तुमद्य ।
न चापि तत्पातनमन्यथेह
कर्तुं हि शक्यं भुवि मानवेन ॥ १-२०८-२९ (९१८९)
एवं ब्रुवत्येव युधिष्ठिरे तु
पाञ्चालराजस्य समीपतोऽन्यः ।
तत्राजगामाशु नरो द्वितीयो
निवेदयिष्यन्निह सिद्धमन्नम् ॥ ॥ १-२०८-३० (९१९०)

इति श्रीमन्महाभारते आदिपर्वणि वैवाहिकपर्वणि
अष्टाधिकद्विशततमोऽध्यायः ॥ २०८ ॥
Mahabharata - Adi Parva - Chapter Footnotes

१-२०८-२७ संप्राप्यरूपासस्माकं योग्यरूपम् ॥
अष्टाधिकद्विशततमोऽध्यायः ॥
२०८ ॥

---

अध्यय२०९
॥ श्रीः ॥
१.२०९. अध्यायः २०९

Mahabharata - Adi Parva - Chapter Topics

कुन्त्या सह पाण्डवानां द्रुपदगृहगमनम् ॥ १ ॥
परीक्षणार्थं द्रुपदेन अनेकविधवस्तूपहरणम् ॥ २ ॥
द्रौपद्या सह कुन्त्या अन्तःपुरप्रवेशः ॥ ३ ॥
भोजनानन्तरं पाण्डवानां साङ्ग्रामिकवस्तुपूर्णप्रदेशे प्रवेशः ॥ ४ ॥

Mahabharata - Adi Parva - Chapter Text

१-२०९-० (९१९१)
दूत उवाच। १-२०९-०क्ष् (११५५)
जन्यार्थमन्नं द्रुपदेन राज्ञा
विवाहहेतोरुपसंस्कृतं च ।
तदाप्नुवध्वं कृतसर्वकार्याः
कृष्णा च तत्रैतु चिरं न कार्यम् ॥ १-२०९-१ (९१९२)
इमे रथाः काञ्चनपद्मचित्राः
सदश्वयुक्ता वसुधाधिपार्हाः ।
एतान्समारुह्य परैत सर्वे
पाञ्चालराजस्य निवेशनं तत् ॥ १-२०९-२ (९१९३)
वैशंपायन उवाच। १-२०९-३क्ष् (११५६)
ततः प्रयाताः कुरुपुंगवास्ते
पुरोहितं तं परियाप्य सर्वे ।
आस्थाय यानानि महान्ति तानि
कुन्ती च कृष्णा च सहैकयाने ॥ १-२०९-३ (९१९४)
ग्स्त्रीभिः सुगन्धाम्बरमाल्यदानै-
र्विभूषिता आभरणैर्विचित्रैः ।
माङ्गल्यगीतध्वनिवाद्यघोषै-
र्मनोहरैः पुण्यकृतां वरिष्ठैः ॥ १-२०९-४ (९१९५)
संगीयमानाः प्रययुः प्रहृष्टा
दीपैर्ज्वलद्भिः सहिताश्च विप्रैः ॥ १-२०९-५ (९१९६)
स वै तथोक्तस्तु युधिष्ठिरेण
पाञ्चालराजस्य पुरोहितोऽग्र्यः ।
सर्वं यथोक्तं कुरुनन्दनेन
निवेदयामास नृपाय गत्वा ॥' १-२०९-६ (९१९७)
श्रुत्वा तु वाक्यानि पुरोहितस्य
यान्युक्तवान्भारत धर्मराजः ।
जिज्ञासयैवाथ कुरूत्तमानां

द्रव्याण्यनेकान्युपसंजहार ॥ १-२०९-७ (९११८)
फलानि माल्यानि च संस्कृतानि
वर्माणि चर्माणि तथाऽऽसनानि ।
गाश्चैव राजन्नथ चैव रज्जू-
र्बीजानि चान्यानि कृषीनिमित्तम् ॥ १-२०९-८ (९११९)
अन्येषु शिल्पेषु च यान्यपि स्युः
सर्वाणि कृत्यान्यखिलेन तत्र ।
क्रीडानिमित्तान्यपि यानि तत्र
सर्वाणि तत्रोपजहार राजा ॥ १-२०९-९ (९२००)
वर्माणि चर्माणि च भानुमन्ति
खड्गा महान्तोऽश्वरथाश्च चित्राः ।
धनूंषि चाग्र्याणि शराश्च चित्राः
शक्त्यृष्टयः काञ्चनभूषणाश्च ॥ १-२०९-१० (९२०१)
प्रासा भुशुण्ड्यश्च परश्वधाश्च
सांग्रामिकं चैव तथैव सर्वम् ।
शय्यासनान्युत्तमवस्तुवन्ति
तथैव वासो विविधं च तत्र ॥ १-२०९-११ (९२०२)
कुन्ती तु कृष्णां परिगृह्य साध्वी-
मन्तःपुरं द्रुपदस्याविवेश ।
स्त्रियश्च तां कौरवराजपत्नीं
प्रत्यर्चयामासुरदीनसत्वाः ॥ १-२०९-१२ (९२०३)
तान्सिंहविक्रान्तगतीन्निरीक्ष्य
महर्षभाक्षानजिनोत्तरीयान् ।
गूढोत्तरांसान्भुजगेन्द्रभोग-
प्रलम्बबाहून्पुरुषप्रवीरान् ॥ १-२०९-१३ (९२०४)
राजा च राज्ञः सचिवाश्च सर्वे
पुत्राश्च राज्ञः सुहृदस्तथैव ।
प्रेष्याश्च सर्वे निखिलेन राज-
न्हर्षं समापेतुरतीव तत्र ॥ १-२०९-१४ (९२०५)
ते तत्र वीराः परमासनेषु
सपादपीठेष्वविशङ्कमानाः ।
यथानुपूर्व्याद्विविशुर्नराग्र्या-
स्तथा महार्हेषु न विस्मयन्तः ॥ १-२०९-१५ (९२०६)
उच्चावचं पार्थिवभोजनीयं
पात्रीषु जाम्बूनदराजतीषु ।
दासाश्च दास्यश्च सुमृष्टवेषाः

संभोजकाश्चाप्युपजह्रुरन्नम् ॥ १-२०९-१६ (९२०७)
ते तत्र भुक्त्वा पुरुषप्रवीरा
यथात्मकामं सुभृशं प्रतीताः ।
उत्क्रम्य सर्वाणि वसूनि राज-
न्सांग्रामिकं ते विविशुर्नृवीराः ॥ १-२०९-१७ (९२०८)
तल्लक्षयित्वा द्रुपदस्य पुत्रा
राजा च सर्वैः सह मन्त्रिमुख्यैः ।
समर्थयामासुरुपेत्य हृष्टाः
कुन्तीसुतान्पार्थिवराजपुत्रान् ॥ ॥ १-२०९-१८ (९२०९)

इति श्रीमन्महाभारते आदिपर्वणि वैवाहिकपर्वणि
नवाधिकद्विशततमोऽध्यायः ॥ २०९ ॥
Mahabharata - Adi Parva - Chapter Footnotes

१-२०९-१ जन्यार्थं वरपक्षीयजतार्थं ॥
१-२०९-३ परियाप्य प्रस्थाप्य ॥
१-२०९-९ कृन्तन्तीति कृत्यानि वास्यादीनि ॥
१-२०९-११ वस्तुवन्ति मतोर्मस्य वत्वमार्षम् ॥
१-२०९-१३ गूढोत्तरांसान्गूढजत्रून् गूढोन्नतांसान् इति ङ ।पाठः ॥
नवाधिकद्विशततमोऽध्यायः ॥
२०९ ॥

---

अध्यय२१०
॥ श्रीः ॥
१.२१०. अध्यायः २१०

Mahabharata - Adi Parva - Chapter Topics
द्रुपदप्रश्नानन्तरं युधिष्ठिरेण स्वेषां पाण्डवत्वकथनम् ॥ १ ॥
द्रौपद्याः पञ्चपत्नीत्वे द्रुपदस्य विवादः ॥ २ ॥
व्यासागमनम् ॥ ३ ॥

Mahabharata - Adi Parva - Chapter Text

१-२१०-० (९२१०)
वैशंपायन उवाच। १-२१०-०क्ष् (११५७)
तत आहूय पाञ्चाल्यो राजपुत्रं युधिष्ठिरम् ।
परिग्रहेण ब्राह्मेण परिगृह्य महाद्युतिः ॥ १-२१०-१ (९२११)

पर्यपृच्छददीनात्मा कुन्तीपुत्रं सुवर्चसम् ।
कथं जानीम भवतः क्षत्रियान्ब्राह्मणानुत ॥१-२१०-२ (९२१२)
वैश्यान्वा गुणसंपन्नानथ वा शूद्रयोनिजान् ।
मायामास्थाय वा सिद्धांश्चरतः सर्वतोदिशम् ॥१-२१०-३ (९२१३)
कृष्णाहेतोरनुप्राप्ता देवाः संदर्शनार्थिनः ।
ब्रवीतु नो भवान्सत्यं सन्देहो ह्यत्र नो महान् ॥१-२१०-४ (९२१४)
अपि नः संशयस्यान्ते मनः संतुष्टिमावहेत् ।
अपि नो भागधेयानि शुभानि स्युः परन्तप ॥१-२१०-५ (९२१५)
इच्छया ब्रूहि तत्सत्यं सत्यं राजसु शोभते ।
इष्टापूर्तेन च तथा वक्तव्यमनृतं न तु ॥१-२१०-६ (९२१६)
श्रुत्वा ह्यमरसङ्काश तव वाक्यमरिंदम ।
ध्रुवं विवाहकरणमास्थास्यामि विधानतः ॥१-२१०-७ (९२१७)
युधिष्ठिर उवाच।१-२१०-८क्ष् (११५८)
मा राजन्विमना भूस्त्वं पाञ्चाल्य प्रीतिरस्तु ते ।
ईप्सितस्ते ध्रुवः कामः संवृत्तोऽयमसंशयम् ॥१-२१०-८ (९२१८)
वयं हि क्षत्रिया राजन्पाण्डोः पुत्रा महात्मनः ।
ज्येष्ठं मां विद्धि कौन्तेयं भीमसेनार्जुनाविमौ ॥१-२१०-९ (९२१९)
आभ्यां तव सुता राजन्निर्जिता राजसंसदि ।
यमौ च तत्र कुन्ती च यत्र कृष्मा व्यवस्थिता ॥१-२१०-१० (९२२०)
व्येतु ते मानसं दुःखं क्षत्रियाः स्मो नरर्षभ ।
पद्मिनीव सुतेयं ते ह्रदादन्यह्रदं गता ॥१-२१०-११ (९२२१)
इति तथ्यं महाराज सर्वमेतद्ब्रवीमि ते ।
भवान्हि गुरुरस्माकं परमं च परायणम् ॥१-२१०-१२ (९२२२)
वैशंपायन उवाच।१-२१०-१३क्ष् (११५९)
ततः स द्रुपदो राजा हर्षव्याकुललोचनः ।
प्रतिवक्तुं मुदा युक्तो नाशकत्तं युधिष्टिरम् ॥१-२१०-१३ (९२२३)
यत्नेन तु स तं हर्षं सन्निगृह्य परंतपः ।
अनुरूपं तदा वाचा प्रत्युवाच युधिष्ठिरम् ॥१-२१०-१४ (९२२४)
पप्रच्छ चैनं धर्मात्मा यथा ते प्रद्रुताः पुरात् ।
स तस्मै सर्वमाचख्यावानुपूर्व्येण पाण्डवः ॥१-२१०-१५ (९२२५)
तच्छ्रुत्वा द्रुपदो राजा कुन्तीपुत्रस्य भाषितम् ।
विगर्हयामास तदा धृतराष्ट्रं नरेश्वरम् ॥१-२१०-१६ (९२२६)
आश्वासयामास च तं कुन्तीपुत्रं युधिष्ठिरम् ।
प्रतिजज्ञे च राज्याय द्रुपदो वदतां वरः ॥१-२१०-१७ (९२२७)
ततः कुन्ती च कृष्णा च भीमसेनार्जुनावपि ।
यमौ च राज्ञा संदिष्टं विविशुर्भवनं महत् ॥१-२१०-१८ (९२२८)

तत्र ते न्यवसन्राजन्यज्ञसेनेन पूजिताः ।
प्रत्याश्वस्तस्ततो राजा सह पुत्रैरुवाच तम् ॥ १-२१०-१९ (९२२९)
गृह्णातु विधिवत्पाणिमद्यायं कुरुनन्दनः ।
पुण्येऽहनि महाबाहुरर्जुनः कुरुतां क्षणम् ॥ १-२१०-२० (९२३०)
वैशंपायन उवाच। १-२१०-२१क्ष् (११६०)
तमब्रवीत्ततो राजा धर्मात्मा च युधिष्ठिरः ।
ग्ममापि दारसंबन्धः कार्यस्तावद्विशांपते ॥ १-२१०-२१ (९२३१)
तस्मात्पूर्वं मया कार्यं तद्भवाननुमन्यताम्।' १-२१०-२२ (९२३२)
द्रुपद उवाच ।
भवान्वा विधिवत्पाणिं गृह्णातु दुहितुर्मम ।
यस्य वा मन्यसे वीर तस्य कृष्णामुपादिश ॥ १-२१०-२२क्ष् (११६१)
युधिष्ठिर उवाच। १-२१०-२३क्ष् (११६२)
सर्वेषां महिषी राजन्द्रौपदी नो भविष्यति ।
एवं प्रव्याहृतं पूर्वं मम मात्रा विशांपते ॥ १-२१०-२३ (९२३३)
अहं चाप्यनिविष्टो वै भीमसेनश्च पाण्डवः ।
पार्थेन विजिता चैषा रत्नभूता सुता तव ॥ १-२१०-२४ (९२३४)
एष नः समयो राजँल्लब्धस्य सह भोजनम् ।
न च तं हातुमिच्छामः समयं राजसत्तम ॥ १-२१०-२५ (९२३५)
ग्अक्रमेण निवेशे च धर्मलोपो महान्भवेत्।'
सर्वेषां धर्मतः कृष्णा महिषी नो भविष्यति ।
आनुपूर्व्येण सर्वेषां गृह्णातु ज्वलने करान् ॥ १-२१०-२६ (९२३६)
द्रुपद उवाच। १-२१०-२७क्ष् (११६३)
एकस्य बह्व्यो विहिता महिष्यः कुरुनन्दन ।
नैकस्या बहवः पुंसः श्रूयन्ते पतयः क्वचित् ॥ १-२१०-२७ (९२३७)
ग्सोऽयं न लोके वेदे वा जातु धर्मः प्रशस्ते।'
लोकवेदविरुद्धं त्वं नाधर्मं धर्मविच्छुचिः ।
कर्तुमर्हसि कौन्तेय कस्मात्ते बुद्धिरीदृशी ॥ १-२१०-२८ (९२३८)
युधिष्ठिर उवाच। १-२१०-२९क्ष् (११६४)
सूक्ष्मो धर्मो महाराज नास्य विद्मो वयं गतिम् ।
पूर्वेषामानुपूर्व्येण यातं वर्त्माऽनुयामहे ॥ १-२१०-२९ (९२३९)
न मे वागनृतं प्राह नाधर्मे धीयते मतिः ।
एवं चैव वदत्यम्बा मम चैतन्मनोगतम् ॥ १-२१०-३० (९२४०)
ग्आश्रमे रुद्रनिर्दिष्टाद्व्यासादेतन्मया श्रुतम्।'
एष धर्मो ध्रुवो राजंश्चरैनमविचारयन् ।
मा च शङ्का तत्र ते स्यात्कथंचिदपि पार्थिव ॥ १-२१०-३१ (९२४१)
द्रुपद उवाच। १-२१०-३२क्ष् (११६५)

त्वं च कुन्ती च कौन्तय धृष्टद्युम्नश्च मे सुतः ।
कथयन्त्विति कर्तव्यं श्वः काल्ये करवामहे ॥ १-२१०-३२ (९२४२)
वैशंपायन उवाच। १-२१०-३३क्ष् (११६६)
ते समेत्य ततः सर्वे कथयन्ति स्म भारत ।
अथ द्वैपायनो राजन्नभ्यागच्छद्यदृच्छया ॥ ॥ १-२१०-३३ (९२४३)

इति श्रीमन्महाभारते आदिपर्वणि वैवाहिकपर्वणि
दशाधिकद्विशततमोऽध्यायः ॥ २१० ॥
Mahabharata - Adi Parva - Chapter Footnotes

१-२१०-१ ब्राह्मेण ब्राह्मणार्थणुचितेनाभ्युत्थानादिना परिग्रहेण आतिथ्येन ॥
१-२१०-६ इष्टापूर्तेन हेतुना । अनृतं न वक्तव्यमिति। अनृतभाषणे
इष्टापूर्ते नश्येतामित्यर्थः ॥
१-२१०-२० क्षणं देवपूजाद्युत्सवम् ॥
१-२१०-२४ अनिविष्टः अकृतविवाहः ॥
१-२१०-२५ समयो नियमः ॥
१-२१०-२६ ज्वलने ज्वलनसमीपे ॥
१-२१०-२७ पुंसः पुमां सः ॥
१-२१०-२९ यूयं च वयं च वयं । पूर्वेषां
प्रचेतःप्रभृतीनाम्। तैर्यातं वर्त्म
बहूनामेकपत्नीत्वमनुयामहे। तच्च आनुपूर्व्येणैव न त्वक्रमेण ॥
दशाधिकद्विशततमोऽध्यायः ॥
२१० ॥

---

अध्यय२११
॥ श्रीः ॥
१.२११. अध्यायः २११

Mahabharata - Adi Parva - Chapter Topics
एकस्याः बहुभार्यात्वे शङ्कमानान्द्रुपदादीन्प्रति व्यासेन
स्वस्वाभिप्रायकथनानुज्ञा ॥ १ ॥
द्रुपदादिभिः स्वस्वमते कथिते व्यासेनास्य विवाहस्य धर्म्यत्वकथनम् ॥ २ ॥

Mahabharata - Adi Parva - Chapter Text

१-२११-० (९२४४)
वैशंपायन उवाच। १-२११-०क्ष् (११६७)

ततस्ते पाण्डवाः सर्वे पाञ्चाल्यश्च महायशाः ।
प्रत्युत्थाय महात्मानं कृष्णं सर्वेऽभ्यवादयन् ॥ १-२११-१ (९२४५)
प्रतिनन्द्य स तां पूजां पृष्ट्वा कुशलमन्ततः ।
आसने काञ्चने शुद्धे निषसाद महामनाः ॥ १-२११-२ (९२४६)
अनुज्ञातास्तु ते सर्वे कृष्णेनामिततेजसा ।
आसनेषु महार्हेषु निषेदुर्द्विपदां वराः ॥ १-२११-३ (९२४७)
ततो मुहूर्तान्मधुरां वाणीमुच्चार्य पार्षतः ।
पप्रच्छ तं महात्मानं द्रौपद्यर्थं विशांपते ॥ १-२११-४ (९२४८)
कथमेका बहूनां स्यान्न च स्याद्धर्मसंकरः ।
एतन्मे भगवान्सर्वं प्रब्रवीतु यथातथम् ॥ १-२११-५ (९२४९)
व्यास उवाच। १-२११-६क्ष् (११६८)
अस्मिन्धर्मे विप्रलब्धे लोकवेदविरोधके ।
यस्य यस्य मतं यद्यच्छ्रोतुमिच्छामि तस्य तत् ॥ १-२११-६ (९२५०)
द्रुपद उवाच। १-२११-७क्ष् (११६९)
अधर्मोऽयं मम मतो विरुद्धो लोकवेदयोः ।
न ह्येका विद्यते पत्नी बहूनां द्विजसत्तम ॥ १-२११-७ (९२५१)
न चाप्याचरितः पूर्वैरयं धर्मो महात्मभिः ।
न चाप्यधर्मो विद्वद्भिश्चरितव्यः कथंचन ॥ १-२११-८ (९२५२)
ततोऽहं न करोम्येनं व्यवसायं क्रियां प्रति ।
धर्मः सदैव संदिग्धः प्रतिभाति हि मे त्वयम् ॥ १-२११-९ (९२५३)
धृष्टद्युम्न उवाच। १-२११-१०क्ष् (११७०)
यवीयसः कथं भार्यां ज्येष्ठो भ्राता द्विजर्षभ ।
ब्रह्मन्समभिवर्तेत सद्वृत्तः संस्तपोधन ॥ १-२११-१० (९२५४)
न तु धर्मस्य सूक्ष्मत्वाद्गतिं विद्मः कथंचन ।
अधर्मो धर्म इति वा व्यवसायो न शक्यते ॥ १-२११-११ (९२५५)
कर्तुमस्मद्विधैर्ब्रह्मंस्ततोऽयं न व्यवस्यते ।
पञ्चानां महिषी कृष्णा भवत्विति कथंचन ॥ १-२११-१२ (९२५६)
युधिष्ठिर उवाच। १-२११-१३क्ष् (११७१)
न मे वागनृतं प्राह नाधर्मे धीयते मतिः ।
वर्तते हि मनो मेऽत्र नैषोऽधर्मः कथंचन ॥ १-२११-१३ (९२५७)
श्रूयते हि पुराणेऽपि जटिला नाम गौतमी ।
ऋषीनध्यासितवती सप्त धर्मभृतां वरा ॥ १-२११-१४ (९२५८)
तथैव मुनिजा वार्क्षी तपोभिर्भावितात्मनः ।
संगताभूद्दश भ्रातॄनेकनाम्नः प्रचेतसः ॥ १-२११-१५ (९२५९)
गुरोर्हि वचनं प्राहुर्धर्म्यं धर्मज्ञसत्तम ।
गुरूणां चैव सर्वेषां माता परमको गुरुः ॥ १-२११-१६ (९२६०)

सा चाप्युक्तवती वाचं भैक्षवद्भुज्यतामिति ।
तस्मादेतदहं मन्ये परं धर्मं द्विजोत्तम ॥ १-२११-१७ (९२६१)
कुन्त्युवाच। १-२११-१८क्ष् (११७२)
एतमेतद्यथा प्राह धर्मचारी युधिष्ठिरः ।
भुज्यतां भ्रातृभिः सार्धमित्यर्जुनमचोदयम् ।
अनृतान्मे भयं तीव्रं मुच्येऽहमनृतात्कथम् ॥ १-२११-१८ (९२६२)
व्यास उवाच। १-२११-१९क्ष् (११७३)
अनृतान्मोक्ष्यसे भद्रे धर्मश्चैव सनातनः ।
ननु वक्ष्यामि सर्वेषां पाञ्चाल शृमु मे स्वयम् ॥ १-२११-१९ (९२६३)
यथाऽयं विहितो धर्मो यतश्चायं सनातनः ।
यथा च प्राह कौन्तेयस्तथा धर्मो न संशयः ॥ १-२११-२० (९२६४)
वैशंपायन उवाच। १-२११-२१क्ष् (११७४)
तत उत्थाय भगवान्व्यासो द्वैपायनः प्रभुः ।
करे गृहीत्वा राजानं राजवेश्म समाविशत् ॥ १-२११-२१ (९२६५)
पाण्डवाश्चापि कुन्ती च धृष्टद्युम्नश्च पार्षतः ।
विविशुस्तेऽपि तत्रैव प्रतीक्षन्ते स्म तावुभौ ॥ १-२११-२२ (९२६६)
ततो द्वैपायनस्तस्मै नरेन्द्राय महात्मने ।
आचख्यौ तद्यथा धर्मो बहूनामेकपत्निता ॥ १-२११-२३ (९२६७)
ग्यथा च ते ददुश्चैव राजपुत्र्याः पुरा वरम् ।
धर्माद्यास्तपसा तुष्टाः पञ्चपत्नीत्वमीश्वराः ॥' ॥ १-२११-२४ (९२६८)

इति श्रीमन्महाभारते आदिपर्वणि वैवाहिकपर्वणि
एकादशाधिकद्विशततमोऽध्यायः ॥ २११ ॥

---

अध्यय२१२
॥ श्रीः ॥
१.२१२. अध्यायः २१२

Mahabharata - Adi Parva - Chapter Topics
इन्द्रसेनापरनाम्न्या नालायन्या उपाख्यानारम्भः-नालायन्या स्थविरस्य
पत्युर्मौद्गल्यस्य आराधनम् ॥ १ ॥
तुष्टेन मौद्गल्येन नालायनीप्रार्थनयाऽऽत्मनः पञ्चरूपस्वीकारेण
तस्यां रमणम् ॥ २ ॥
तयोः स्वर्गादिलोकेषु नानारूपेण रमणम् ॥ ३ ॥
सैव नालायनी तव दुहिता जातेति द्रुपदं प्रति व्यासस्योक्तिः ॥ ४ ॥

Mahabharata - Adi Parva - Chapter Text

१-२१२-० (९२६९)
व्यास उवाच। १-२१२-०क्ष् (११७५)
मा भूद्राजंस्तव तापो मनस्थः
पञ्चानां भार्या दुहिता ममेति ।
मातुरेषा प्रार्थिता स्यात्तदानीं
पञ्चानां भार्या दुहिता ममेति ॥ १-२१२-१ (९२७०)
याजोपयाजौ धर्मरतौ तपोभ्यां
तौ चक्रतुः पञ्चपतित्वमस्याः ।
तत्पञ्चभिः पाण्डुसुतैरवाप्ता
भार्या कृष्णा मोदतां वै कुलं ते ॥ १-२१२-२ (९२७१)
लोके नान्यो विद्यते त्वद्विशिष्टः
सर्वारीणामप्रधृष्योऽसि राजन् ।
भूयस्त्विदं शृणु मे त्वं विशोको
यथाऽऽगतं पञ्चपत्नीत्वमस्याः ॥ १-२१२-३ (९२७२)
एषा नालायनी पूर्वं मौद्गल्यं स्थविरं पतिम् ।
आराधयामास तदा कुष्ठिनं तमनिन्दिता ॥ १-२१२-४ (९२७३)
त्वगस्थिभूतं कटुकं लोलमीर्ष्युं सुकोपनम् ।
सुगन्धेतरगन्धाढ्यं वलीपलितमूर्धजम् ॥ १-२१२-५ (९२७४)
स्थविरं विकृताकारं शीर्यमाणनखत्वचम् ।
उच्छिष्टमुपभुञ्जाना पर्युपास्ते महामुनिम् ॥ १-२१२-६ (९२७५)
ततः कदाचिदङ्गुष्ठो भुञ्जानस्य व्यशीर्यत ।
अन्नादुद्धृत्य तच्चान्नमुपभुङ्क्तेऽविशङ्किता ॥ १-२१२-७ (९२७६)
तेन तस्याः प्रसन्नेन कामव्याहारिणा तदा ।
वरं वृणीष्वेत्यसकृदुक्ता वव्रे वरं तदा ॥ १-२१२-८ (९२७७)
मौद्गल्य उवाच। १-२१२-९क्ष् (११७६)
नाहं वृद्धो न कटुको नेर्ष्यावान्नैव कोपनः ।
न च दुर्गन्धवदनो न कृशो न च लोलुपः ॥ १-२१२-९ (९२७८)
कथं त्वां रमयामीह कथं त्वां वासयाम्यहम् ।
वद कल्याणि भद्रं ते यथा त्वं मनसेच्छसि ॥ १-२१२-१० (९२७९)
व्यास उवाच। १-२१२-११क्ष् (११७७)
सा तमक्लिष्टकर्माणं वरदं सर्वकामदम् ।
भर्तारमनवद्याङ्गी प्रसन्नं प्रत्युवाच ह ॥ १-२१२-११ (९२८०)
नालायन्युवाच। १-२१२-१२क्ष् (११७८)
पञ्चधा प्रविभक्तात्मा भगवांल्लोकविश्रुतः ।
रमय त्वमचिन्त्यात्मन्पुनश्चैकत्वमागतः ॥ १-२१२-१२ (९२८१)

तां तथेत्यब्रवीद्धीमान्महर्षिर्वै महातपाः ।
स पञ्चधा तु भूत्वा तां रमयामास सर्वतः ॥ १-२१२-१३ (९२८२)
नालायनीं सुकेशान्तां मौद्गल्यश्चारुहासिनीम् ।
आश्रमेष्वधिकं चापि पूज्यमानो महर्षिभिः ॥ १-२१२-१४ (९२८३)
स चचार यथाकामं कामरूपवपुः पुनः ।
यदा ययौ दिवं चापि तत्र देवर्षिभिः सह ॥ १-२१२-१५ (९२८४)
चचार सोऽमृताहारः सुरलोके चचार ह ।
पूज्यमानस्तथा शच्या शक्रस्य भवनेष्वपि ॥ १-२१२-१६ (९२८५)
महेन्द्रसेनया सार्धं पर्यधावद्रिरंसया ।
सूर्यस्य च रथं दिव्यमारुह्य भगवान्प्रभुः ॥ १-२१२-१७ (९२८६)
पर्युपेत्य पुनर्मेरु मेरौ वासमरोचयत् ।
आकाशगङ्गामाप्लुत्य तया सह तपोधनः ॥ १-२१२-१८ (९२८७)
रश्मिजालेषु चन्द्रस्य उवाच च यथाऽनिलः ।
गिरिरूपधरो योगी स महर्षिस्तदा पुनः ॥ १-२१२-१९ (९२८८)
तत्प्रभावेन सा तस्य मध्ये जज्ञे महानदी ।
यदा पुष्पाकुलः सालः संजज्ञे भगवानृषिः ॥ १-२१२-२० (९२८९)
लतात्वमनुसंपेदे तमेवाभ्यनुवेष्टती ।
पुपोष च वपुर्यस्य तस्य तस्यानुगं पुनः ॥ १-२१२-२१ (९२९०)
सा पुपोष समं भर्त्रा स्कन्धेनापि चचार ह ।
ततस्तस्य च तस्याश्च तुल्या प्रीतिरवर्धत ॥ १-२१२-२२ (९२९१)
तथा सा भगवांस्तस्याः प्रसादादृषिसत्तमः ।
विरराम च सा चैव दैवयोगेन भामिनी ॥ १-२१२-२३ (९२९२)
स च तां तपसा देवीं रमयामास योगतः ।
एकपत्नी तथा भूत्वा सदैवाग्रे यशस्विनी ॥ १-२१२-२४ (९२९३)
अरुन्धतीव सीतेव बभूवातिपतिव्रता ।
दमयन्त्याश्च मातुः स विशेषमधिकं ययौ ॥ १-२१२-२५ (९२९४)
एतत्तथ्यं महाराज मा ते भूद्बुद्धिरन्यथा ।
सा वै नालायनी जज्ञे दैवयोगेन केनचित् ॥ १-२१२-२६ (९२९५)
राजंस्तवात्मजा कृष्णा वेद्यां तेजस्विनी शुभा ।
तस्मिंस्तस्या मनः सक्तं न चचाल कदाचन ॥ १-२१२-२७ (९२९६)
तथा प्रणिहितो ह्यात्मा तस्यास्तस्मिन्द्विजोत्तमे ॥ ॥ १-२१२-२८ (९२९७)

इति श्रीमन्महाभारते आदिपर्वणि वैवाहिकपर्वणि
द्वादशाधिकद्विशततमोऽध्यायः ॥ २१२ ॥
Mahabharata - Adi Parva - Chapter Footnotes

१-२१२-१ मातुः मात्रा ।स्यात् अभूत् ॥
१-२१२-१० कथं केन प्रकारेण ॥
१-२१२-२२ स्कन्धेन मानुषादिदेहेन ॥
द्वादशाधिकद्विशततमोऽध्यायः ॥
२१२ ॥

---

अध्यय२१३
॥ श्रीः ॥
१.२१३. अध्यायः २१३

Mahabharata - Adi Parva - Chapter Topics
कथं नालायनी मत्पुत्री जातेति व्यासं प्रति द्रुपदस्य प्रश्नः ॥ १ ॥
पुनर्नालायनीकथाकथनं ॥ २ ॥
कामोपभोगविरक्तेन मौद्गल्येन कामातृप्तायाः नालादन्याः पञ्चपतित्वशापः ॥ ३ ॥
नालायन्या रुद्रमुद्दिश्य तपःकरणम् ॥ ४ ॥
नालयन्या पतिं देहीति पञ्चकृत्वः प्रार्थितेन रुद्रेण अन्यजन्मनि पञ्च ते पतयो भविष्यन्तीति वरदानम् ॥ ५ ॥
पुनः रुद्रात नि कौत्पवरप्राप्तिः ॥ ६ ॥
त्वयि गङ्गाजलस्थायां तत्रागमिष्यन्तमिन्द्रमानयेति नालायनींप्रति रुद्रस्याज्ञापनम् ॥ ७ ॥

Mahabharata - Adi Parva - Chapter Text

१-२१३-० (९२९८)
द्रुपद उवाच।१-२१३-०क्ष् (११७९)
ब्रूहि तत्कारणं येन ब्रह्मन्नालायनी शुभा ।
जाता ममाध्वरे कृष्मा सर्ववेदविदां वर ॥१-२१३-१ (९२९९)
व्यास उवाच।१-२१३-२क्ष् (११८०)
शृणु राजन्यथा ह्यस्या दत्तो रुद्रेण वै वरः ।
यदर्थं चैव संभूता तव गेहे यशस्विनी ॥१-२१३-२ (९३००)
हन्त त कथयिष्यामि कृष्मायाः पौर्वदेहिकम् ।
इन्द्रसेनेति विख्याता पुरा नालायनी शुभा ॥१-२१३-३ (९३०१)
मौद्गल्यस्य पतिमासाद्य चचार विगतज्वरा ।
मौद्गल्यस्य महर्षेश्च रममाणस्य वै तया ॥१-२१३-४ (९३०२)
संवत्सरगणा राजन्व्यतीयुः क्षणवत्तदा ।
ततः कदाचिद्धर्मात्मा तृप्तः कामैर्व्यरज्यत ॥१-२१३-५ (९३०३)

अन्विच्छन्परमं धर्मं ब्रह्मयोगपरोऽभवत् ।
उत्ससर्ज स तां विप्रः सा तदा चापतद्भुवि ।
मौद्गल्यो राजशार्दूल तपोभिर्भावितः सदा ॥ १-२१३-६ (९३०४)
नालायन्युवाच। १-२१३-७क्ष् (११८१)
प्रसीद भगवन्मह्यं न मामुत्स्रष्टुमर्हसि ।
अवितृप्तास्मि ब्रह्मर्षे कामानां कामसेवनात् ॥ १-२१३-७ (९३०५)
मौद्गल्य उवाच। १-२१३-८क्ष् (११८२)
यस्मात्त्वं मामनिःशङ्का ह्यवक्तव्यं भाषसे ।
आचरन्ती तपोविघ्नं तस्माच्छृणु वचो मम ॥ १-२१३-८ (९३०६)
भविष्यसि नृलोके त्वं राजपुत्री यशस्विनि ।
पाञ्चालराजस्य सुता द्रुपदस्य महात्मनः ॥ १-२१३-९ (९३०७)
भवितारस्तत्र तव पतयः पञ्च विप्लुताः ।
तैः सार्धं मधुराकारैश्चिरं रतिमवाप्स्यसि ॥ १-२१३-१० (९३०८)
वैशंपायन उवाच। १-२१३-११क्ष् (११८३)
सैवं शप्ता तु विमना वनं प्रागाद्यशस्विनी ।
भोगैरतृप्ता देवेशं तपसाऽऽराधयत्तदा ॥ १-२१३-११ (९३०९)
निराशीर्मारुताहारा निराहारा तथैव च ।
अनुवर्तमाना त्वादित्यं तथा पञ्चतपाभवत् ॥ १-२१३-१२ (९३१०)
तीव्रेण तपसा तस्यास्तुष्टः पशुपतिः स्वयम् ।
वचं प्रादात्तदा रुद्रः सर्वलोकेश्वरः प्रभुः ॥ १-२१३-१३ (९३११)
भविष्यति परं जन्म भविष्यति वराङ्गना ।
भविष्यन्ति परं भद्रे पतयः पञ्च विश्रुताः ॥ १-२१३-१४ (९३१२)
महेन्द्रवपुषः सर्वे महेन्द्रसमविक्रमाः ।
तत्रस्था च महत्कर्म सुराणां त्वं करिष्यसि ॥ १-२१३-१५ (९३१३)
स्त्र्युवाच। १-२१३-१६क्ष् (११८४)
एकः खलु मया भर्ता वृतः पञ्च त्विमे कथम् ।
एको भवति नैकस्या बहवस्तद्ब्रवीहि मे ॥ १-२१३-१६ (९३१४)
महेश्वर उवाच। १-२१३-१७क्ष् (११८५)
पञ्चकृत्वस्त्वया चोक्तः पतिं देहीत्यहं पुनः ।
पञ्चते पतयो भद्रे भविष्यन्ति सुखावहाः ॥ १-२१३-१७ (९३१५)
स्त्र्युवाच। १-२१३-१८क्ष् (११८६)
धर्म एकः पतिः स्त्रीणां पूर्वमे प्रकल्पितः ।
बहुपत्नीकता पुंसो धर्मश्च बहुभिः कृतः ॥ १-२१३-१८ (९३१६)
स्त्रीधर्मः पूर्वमेवायं निर्मितो मुनिभिः सदा ।
सहधर्मचरी भर्तुरेका एकस्य चोच्यते ॥ १-२१३-१९ (९३१७)
एको हि भर्ता नारीणां कौमार इति लौकिकः ।

आपत्सु च नियोगेन भर्तुर्नार्याः परः स्मृतः ॥ १-२१३-२० (९३१८)
गच्छेत न तृतीयं तु तस्या निष्कृतिरुच्यते ।
चतुर्थे पतिता नारी पञ्चमे वर्धकी भवेत् ॥ १-२१३-२१ (९३१९)
एवं गते धर्मपथे न वृणे बहुपुंस्कताम् ।
अलोकाचरितात्तस्मात्कथं मुच्येय सङ्करात् ॥ १-२१३-२२ (९३२०)
महेश्वर उवाच। १-२१३-२३क्ष् (११८७)
अनावृताः पुरा नार्यो ह्यासञ्शुध्यन्ति चार्तवे ।
सकृदुक्तं त्वया नैतन्नाधर्मस्ते भविष्यति ॥ १-२१३-२३ (९३२१)
स्त्र्युवाच। १-२१३-२४क्ष् (११८८)
यदि मे पतयः पञ्च रतिमिच्छामि तैर्मिथः ।
कौमारं च भवेत्सर्वैः संगमे संगमे च मे ॥ १-२१३-२४ (९३२२)
पतिशुश्रूषया चैव सिद्धिः प्राप्ता मया पुरा ।
भोगेच्छा च मया प्राप्ता स च भोगश्च मे भवेत् ॥ १-२१३-२५ (९३२३)
रुद्र उवाच। १-२१३-२६क्ष् (११८९)
रतिश्च भद्रे सिद्धिश्च न भजेते परस्परम् ।
भोगानाप्स्यसि सिद्धिं च योगेन च महत्त्वताम् ॥ १-२१३-२६ (९३२४)
अन्यदेहान्तरे चैव रूपभाग्यगुणान्विता ।
पञ्चभिः प्राप्य कौमारं महाभागा भविष्यसि ॥ १-२१३-२७ (९३२५)
गच्छ गङ्गाजलस्था च नरं पश्यसि यं शुभे ।
तमानय ममाभ्याशं सुरराजं शुचिस्मिते ॥ १-२१३-२८ (९३२६)
इत्युक्ता विश्वरूपेण रुद्रं कृत्वा प्रदक्षिणम् ।
जगाम गङ्गामुद्दिश्य पुण्यां त्रिपथगां नदीम् ॥ ॥ १-२१३-२९ (९३२७)

इति श्रीमन्महाभारते आदिपर्वणि वैवाहिकपर्वणि
त्रयोदशाधिकद्विशततमोऽध्यायः ॥ २१३ ॥
Mahabharata - Adi Parva - Chapter Footnotes

१-२१३-२३ अनावृताः निरोधरहिताः ॥
त्रयोदशाधिकद्विशततमोऽध्यायः ॥
२१३ ॥

---

अध्यय२१४
॥ श्रीः ॥
१.२१४. अध्यायः २१४

Mahabharata - Adi Parva - Chapter Topics
पञ्चे उपाख्यानप्रारम्भः ॥ १ ॥

नैमिशारण्ये देवैरारब्धे सत्रे यमस्य शामित्रकर्मणि व्यापृतत्वात्
लोके प्रजाबाहुल्यं दृष्ट्वा तत्परिजिहीर्षया देवैर्ब्रह्मसमीपगमनम्
॥ २ ॥
ब्रह्माज्ञया पुनर्नैमिशारण्यं गतस्य गङ्गायां पुण्डरीकं दृष्ट्वा
तज्जिहीर्षया गतस्य इन्द्रस्य तत्र रुदन्त्याः स्त्रियाः दर्शनम् ॥ ३ ॥
तामनुगच्छतेन्द्रेण पर्वतविवरे पूर्वेषां चतुर्णां इन्द्राणां दर्शनम्
॥ ४ ॥
बलरामकेशवद्रौपद्यादीनामुत्पत्तिकथा ॥ ५ ॥
व्यासदत्तदिव्यदृष्टेर्द्रुपदस्य पाण्डवद्रौपदीपूर्वरूपदर्शनं ॥ ६ ॥
द्रौपद्या अव्यवहितपूर्वजन्मवृत्तान्तकथनम् ॥ ७ ॥

Mahabharata - Adi Parva - Chapter Text

१-२१४-० (९३२८)
व्यास उवाच। १-२१४-०क्ष् (११९०)
पुरा वै नैमिशारण्ये देवाः सत्रमुपासते ।
तत्र वैवस्वतो राजञ्शामित्रमकरोत्तदा ॥ १-२१४-१ (९३२९)
ततो यमो दीक्षितस्तत्र राज-
न्नामारयत्कंचिदपि प्रजानाम् ।
ततः प्रजास्ता बहुला बभूवुः
कालातिपातान्मरणप्रहीणाः ॥ १-२१४-२ (९३३०)
सोमश्च शक्रो वरुणः कुबेरः
साध्या रुद्रा वसवोऽथाश्विनौ च ।
प्रजापतिर्भुवनस्य प्रणेता
समाजग्मुस्तत्र देवास्तथाऽन्ये ॥ १-२१४-३ (९३३१)
ततोऽब्रुवँल्लोकगुरुं समेता
भयात्तीव्रान्मानुषाणां विवृद्ध्या ।
तस्माद्भयादुद्विजन्तः सुखेप्सवः
प्रयाम सर्वे शरणं भवन्तम् ॥ १-२१४-४ (९३३२)
पितामह उवाच। १-२१४-५क्ष् (११९१)
किं वो भयं मानुषेभ्यो यूयं सर्वे यदाऽमराः ।
मा वो मर्त्यसकाशाद्वै भयं भवितुमर्हति ॥ १-२१४-५ (९३३३)
देवा ऊचुः। १-२१४-६क्ष् (११९२)
मर्त्या अमर्त्याः संवृत्ता न विशेषोऽस्ति कश्चन ।
अविशेषादुद्विजन्तो विशेषार्थमिहागताः ॥ १-२१४-६ (९३३४)
श्रीभगवानुवाच। १-२१४-७क्ष् (११९३)

वैवस्वतो व्यापृतः सत्रहेतो-
स्तेन त्विमे न म्रियन्ते मनुष्याः ।
तस्मिन्नेकाग्रे कृतसर्वकार्ये
तत एषां भवितैवान्तकालः ॥ १-२१४-७ (९३३५)
वैवस्वतस्यैव तनुर्विभक्ता
वीर्येण युष्माकमुत प्रवृद्धा ।
सैषामन्तो भविता ह्यन्तकाले
न तत्र वीर्यं भविता नरेषु ॥ १-२१४-८ (९३३६)
व्यास उवाच। १-२१४-९क्ष् (११९४)
ततस्तु ते पूर्वजदेववाक्यं
श्रुत्वा जग्मुर्यत्र देवा यजन्ते ।
समासीनास्ते समेता महाबला
भागीरथ्यां ददृशुः पुण्डरीकम् ॥ १-२१४-९ (९३३७)
दृष्ट्वा च तद्विस्मितास्ते बभूवु-
स्तेषामिन्द्रस्तत्र शूरो जगाम ।
सोऽपश्यद्योषामथ पावकप्रभां
यत्र देवी गङ्गा सततं प्रसूता ॥ १-२१४-१० (९३३८)
सा तत्र योषा रुदती जलार्थिनी
गङ्गां देवीं व्यवगाह्य व्यतिष्ठत् ।
तस्याश्रुबिन्दुः पतितो जले य-
स्तत्पद्ममासीदथ तत्र काञ्चनम् ॥ १-२१४-११ (९३३९)
तदद्भुतं प्रेक्ष्य वज्री तदानी-
मपृच्छत्तां योषितमन्तिकाद्वै ।
का त्वं भद्रे रोदिषि कस्य हेतो-
र्वाक्यं तथ्यं कामयेऽहं ब्रवीहि ॥ १-२१४-१२ (९३४०)
स्त्र्युवाच। १-२१४-१३क्ष् (११९५)
त्वं वेत्स्यसे मामिह याऽस्मि शक्र
यदर्थं चाहं रोदिमि मन्दभाग्या ।
आगच्छ राजन्पुरतो गमिष्ये
द्रष्टाऽसि तद्रोदिमि यत्कृतेऽहम् ॥ १-२१४-१३ (९३४१)
व्यास उवाच। १-२१४-१४क्ष् (११९६)
तां गच्छन्तीमन्वगच्छत्तदानीं
सोऽपश्यदारात्तरुणं दर्शनीयम् ।
सिद्धासनस्थं युवतीसहायं
क्रीडन्तमक्षैर्गिरिराजमूर्ध्नि ॥ १-२१४-१४ (९३४२)
तमब्रवीद्देवराजो ममेदं

त्वं विद्धि विद्वन्भुवनं वशे स्थितम् ।
ईशोऽहस्मीति समन्युरब्रवी-
द्दृष्ट्वा तमक्षैः सुभृशं प्रमत्तम् ॥ १-२१४-१५ (९३४३)
क्रुद्धं च शक्रं प्रसमीक्ष्य देवो
जहाय शक्रं च शैरुदैक्षत ।
संस्तम्भितोऽभूदथ देवराज-
स्तेनेक्षितः स्थाणुरिवावतस्थे ॥ १-२१४-१६ (९३४४)
यदा तु पर्याप्तमिहास्य क्रीडया
तदा देवीं रुदतीं तामुवाच ।
आनीयतामेष यतोऽहमारा-
न्नैनं दर्पः पुनरप्याविशेत ॥ १-२१४-१७ (९३४५)
ततः शक्रः स्पृष्टमात्रस्तया तु
स्रस्तैरङ्गैः पतितोऽभूद्धरण्याम् ।
तमब्रवीद्भगवानुग्रतेजा
मैवं पुनः शक्र कृथाः कथंचित् ॥ १-२१४-१८ (९३४६)
निवर्तयैनं च महाद्रिराजं
बलं च वीर्यं च तवाप्रमेयम् ।
छिद्रस्य चैवाविश मध्यमस्य
यत्रासते त्वद्विधाः सूर्यभासः ॥ १-२१४-१९ (९३४७)
स तद्विवृत्य विवरं महागिरे-
स्तुल्यद्युतींश्चतुरोऽन्यान्ददर्श ।
स तानभिप्रेक्ष्य बभूव दुःखितः
कच्चिन्नाहं भविता वै यथेमे ॥ १-२१४-२० (९३४८)
ततो देवो गिरिशो वज्रपाणिं
विवृत्य नेत्रे कुपितोऽभ्युवाच ।
दरीमेतां प्रविश त्वं शतक्रतो
यन्मां बाल्यादवमंस्थाः पुरस्तात् ॥ १-२१४-२१ (९३४९)
उक्तस्त्वेवं विभुना देवराजः
प्रावेपताऽऽर्तो भृशमेवाभिषङ्गात् ।
स्रस्तैरङ्गैरनिलेनेव नुन्न-
मश्वत्थपत्रं गिरिराजमूर्ध्नि ॥ १-२१४-२२ (९३५०)
स प्राञ्जलिर्वै वृषवाहनेन
प्रवेपमानः सहसैवमुक्तः ।
उवाच देवं बहुरूपमुग्र-
मद्याशेषस्य भुवनस्य त्वं भवाद्यः ॥ १-२१४-२३ (९३५१)
तमब्रवीदुग्रवर्चाः प्रहस्य

नैवंशीलाः शेषमिहाप्नुवन्ति ।
एतेऽप्येवं भवितारः पुरस्ता-
त्तस्मादेतां दरीमाविश्य शेष्य ॥ १-२१४-२४ (९३५२)
एषा भार्या भविता वो न संशयो
योनिं सर्वे मानुषीमाविशध्वम् ।
तत्र यूयं कर्म कृत्वाऽविषह्यं
बहूनन्यान्निधनं प्रापयित्वा ॥ १-२१४-२५ (९३५३)
ग्अस्त्रैर्दिव्यैर्मानुषान्योधयित्वा
शूरान्सर्वानाहवे संविजित्य।'
आगन्तारः पुनरेवेन्द्रवलोकं
स्वकर्मणा पूर्वचितं महार्हम् ।
सर्वं मया भाषितमेतदेवं
कर्तव्यमन्यद्विविधार्थयुक्तम् ॥ १-२१४-२६ (९३५४)
पूर्वेन्द्रा ऊचुः।१-२१४-२७क्ष् (११९७)
गमिष्यामो मानुषं देवलोका-
द्दुराधरो विहितो यत्र मोक्षः ।
देवास्त्वस्मानादधीरञ्जनन्यां
धर्मो वायुर्मघवानश्विनौ च ॥ १-२१४-२७ (९३५५)
व्यास उवाच।१-२१४-२८क्ष् (११९८)
एतच्छ्रुत्वा वज्रपाणिर्वचस्तु
देवश्रेष्ठं पुनरेवेदमाह ।
वीर्येणाहं पुरुषं कार्यहेतो-
र्दद्यामेषां पञ्चमं मत्प्रसूतम् ॥ १-२१४-२८ (९३५६)
विश्वभुग्भूतधामा च शिबिरिन्द्रः प्रतापवान् ।
शान्तिश्चतुर्थस्तेषां वै तेजस्वी पञ्चमः स्मृतः ॥१-२१४-२९ (९३५७)
तेषां कामं भगवानुग्रधन्वा
प्रादादिष्टं सन्निसर्गाद्यथोक्तम् ।
तां चाप्येषां योषितं लोककान्तां
श्रियं भार्यां व्यदधान्मानुषेषु ॥ १-२१४-३० (९३५८)
तैरेव सार्धं तु ततः स देवो
जगाम नारायणमप्रमेयम् ।
अनन्तमव्यक्तमजं पुराणं
सनातनं विश्वमनन्तरूपम् ॥ १-२१४-३१ (९३५९)
स चापि तद्व्यदधात्सर्वमेव
ततः सर्वे संबभूवुर्धरण्यमाम् ।
ग्नरं तु देवं विबुधप्रधान-

मिन्द्राज्जिष्णुं पञ्चमं कल्पयित्वा।'
स चापि केशौ हरिरुद्बबर्ह
शुक्लमेकमपरं चापि कृष्णम् ॥ १-२१४-३२ (९३६०)
तौ चापि केशौ विशतां यदूनां
कुले स्त्रियौ देवकीं रोहिणीं च ।
तयोरेको बलदेवो बभूव
योऽसौ श्वेतस्य देवस्य केशः ।
कृष्णो द्वितीयः केशवः संबभूव
केशो योऽसौ वर्णतः कृष्ण उक्तः ॥ १-२१४-३३ (९३६१)
ये ते पूर्वं शक्ररूपा निबद्धा-
स्तस्यां दर्यां पर्वतस्योत्तरस्य ।
इहैव ते पाण्डवा वीर्यवन्तः
शक्रस्यांशः पाण्डवः सव्यसाची ॥ १-२१४-३४ (९३६२)
एवमेते पाण्डवाः संबभूवु-
र्ये ते राजन्पूर्वमिन्द्रा बभूवुः ।
लक्ष्मीश्चैषां पूर्वमेवोपदिष्टा
भार्या यैषा द्रौपदी दिव्यरूपा ॥ १-२१४-३५ (९३६३)
कथं हि स्त्री कर्मणा ते महीतला-
त्समुत्तिष्ठेदन्यतो दैवयोगात् ।
यस्या रूपं सोमसूर्यप्रकाशं
गन्धश्चास्याः कोशमात्रात्प्रवाति ॥ १-२१४-३६ (९३६४)
इदं चान्यत्प्रीतिपूर्वं नरेन्द्र
ददानि ते वरमत्यद्भुतं च ।
दिव्यं चक्षुः पश्य कुन्तीसुतांस्त्वं
पुण्यैर्दिव्यैः पूर्वदेहैरुपेतान् ॥ १-२१४-३७ (९३६५)
वैशंपायन उवाच।१-२१४-३८क्ष् (११९९)
ततो व्यासः परमोदारकर्मा
शुचिर्विप्रस्तपसा तस्य राज्ञः ।
चक्षुर्दिव्यं प्रददौ तांश्च सर्वान्
राजाऽपश्यत्पूर्वदेहैर्यथावत् ॥ १-२१४-३८ (९३६६)
ततो दिव्यान्हेमकिरीटमालिनः
शक्रप्रख्यान्पावकादित्यवर्णान् ।
बद्धापीडांश्चारुरूपांश्च यूनो
व्यूढोरस्कांस्तालमात्रान्ददर्श ॥ १-२१४-३९ (९३६७)
दिव्यैर्वस्त्रैरजोभिः सुगन्धै-
र्माल्यैश्चाग्र्यैः शोभमानानतीव ।

साक्षात्त्यक्षान्वा वसूंश्चापि रुद्रा-
नादित्यान्वा सर्वगुणोपपन्नान् ॥ १-२१४-४० (९३६८)
तान्पूर्वेन्द्रानभिवीक्ष्याभिरूपा-
ञ्शक्रात्मजं चेन्द्ररूपं निशम्य ।
प्रीतो राजा द्रुपदो विस्मितश्च
दिव्यां मायां तामवेक्ष्याप्रमेयाम् ॥ १-२१४-४१ (९३६९)
तां चैवाग्र्यां स्त्रियमतिरूपयुक्तां
दिव्यां साक्षात्सोमवह्निप्रकाशाम् ।
योग्यां तेषां रूपतेजोयशोभिः
पत्नी मत्वा हृष्टवान्पार्थिवेन्द्रः ॥ १-२१४-४२ (९३७०)
स तद्दृष्ट्वा महदाश्चर्यरूपं
जग्राह पादौ सत्यवत्याः सुतस्य ।
नैतच्चित्रं परमर्षे त्वयीति
प्रसन्नचेताः स उवाच चैनम् ॥ १-२१४-४३ (९३७१)
ग्व्यास उवाच। १-२१४-४४क्ष् (१२००)
इदं चापि पुरावृत्तं तन्निबोध च भूमिम ।
कीर्त्यमानं नृपर्षीणां पूर्वेषां दारकर्मणि ॥ १-२१४-४४ (९३७२)
नितन्तुर्नाम राजर्षिर्बभूव भुवि विश्रुतः ।
तस्य पुत्रा महेष्वासा बभूवुः पञ्च भूमिताः ॥ १-२१४-४५ (९३७३)
साल्वेयः शूरसेनश्च श्रुतसेनश्च वीर्यवान् ।
तिन्दुसारोऽतिसारश्च क्षत्रियाः क्रतुयाजिनः ॥ १-२१४-४६ (९३७४)
नातिचक्रमुरन्योन्यमन्योन्यस्य प्रियंवदाः ।
अनीर्ष्यवो धर्मविदः सौम्याश्चैव प्रियकराः ॥ १-२१४-४७ (९३७५)
एतान्नैतन्तवान्पञ्च शिबिपुत्री स्वयंवरे ।
अवाप स्वपतीन्वीरान्भौमाश्वी मनुजाधिपान् ॥ १-२१४-४८ (९३७६)
वीणेव मधुरारावा गान्धर्वस्वरमूर्च्छिता ।
उत्तमा सर्वनारीणां भौमाश्वी ह्यभवत्तदा ॥ १-२१४-४९ (९३७७)
यस्या नैतन्तवाः पञ्च पतयः क्षत्रियर्षभाः ।
बभूवुः पृथिवीपालाः सर्वैः समुदिता गुणैः ॥ १-२१४-५० (९३७८)
तेषामेकाभवद्भार्या राज्ञामौशीनरी शुभा ।
भौमाश्वी नाम भद्रं ते तथारूपगुणान्विता ॥ १-२१४-५१ (९३७९)
पञ्चभ्यः पञ्चधा पञ्च दायादान्सा व्यजायत ।
तेभ्यो नैतन्तवेभ्यस्तु राजशार्दूल वै तदा ॥ १-२१४-५२ (९३८०)
पृथगाख्याऽभवत्तेषां भ्रातॄणां पञ्चधा भुवि ।
यथावत्कीर्त्यमानांस्ताञ्छृणु मे राजसत्तम ॥ १-२१४-५३ (९३८१)
साल्वेयाः शूरसेनाश्च श्रुतसेनाश्च पार्थिवाः ।

तिन्दुसारातिसाराश्च वंशा एषां नृपोत्तम ॥१-२१४-५४ (९३८२)
एवमेकाऽभवद्भार्या भौमाश्वी भुवि विश्रुता ।
तथैव द्रुपदैषा ते सुता वै देवरूपिणी ।
पञ्चानां विहिता पत्नी कृष्णा पार्षत्यनिन्दिता'॥ १-२१४-५५ (९३८३)
व्यास उवाच।१-२१४-५६क्ष् (१२०१)
आसीत्तपोवने काचिदृषेः कन्या महात्मनः ।
नाध्यगच्छत्पतिं सा तु कन्या रूपवती सती ॥१-२१४-५६ (९३८४)
तोषयामास तपसा सा किलोग्रेण शङ्करम् ।
तामुवाचेश्वरः प्रीतो वृणु काममिति स्वयम् ॥१-२१४-५७ (९३८५)
सैवमुक्ताऽब्रवीत्कन्या देवं वरदमीश्वरम् ।
पतिं सर्वगुणोपेतमिच्छामीति पुनःपुनः ॥१-२१४-५८ (९३८६)
ददौ तस्यै स देवेशस्तं वरं प्रीतमानसः ।
पञ्च ते पतयो भद्रे भविष्यन्तीति शङ्करः ॥१-२१४-५९ (९३८७)
सा प्रसादयती देवमिदं भूयोऽभ्यभाषत ।
एकं पतिं गुणोपेतं त्वत्तोऽर्हामीति शङ्कर ॥१-२१४-६० (९३८८)
तां देवदेवः प्रीतात्मा पुनः प्राह शुभं वचः ।
पञ्चकृत्वस्त्वयोक्तोऽहं पतिं देहीति वै पुनः ॥१-२१४-६१ (९३८९)
तत्तथा भविता भद्रे वचस्तद्भद्रमस्तु ते ।
देहमन्यं गतायास्ते सर्वमेतद्भविष्यति ॥१-२१४-६२ (९३९०)
द्रुपदैषा हि सा जज्ञे सुता वै देवरूपिणी ।
पञ्चानां विहिता पत्नी कृष्णा पार्षत्यनिन्दिता ॥१-२१४-६३ (९३९१)
ग्सैव नालायनी भूत्वा रूपेणाप्रतिमा भुवि ।
मौद्गल्यं पतिमास्थाय शिवाद्वरमभीप्सती ॥१-२१४-६४ (९३९२)
एतद्देवरहस्यं ते श्रावितं राजसत्तम ।
नाख्यातव्यं कस्यचिद्वै देवगुह्यमिदं यतः ॥' १-२१४-६५ (९३९३)
स्वर्गश्रीः पाण्डवार्थं तु समुत्पन्ना महामखे ।
सेह तप्त्वा तपो घोरं दुहितृत्वं तवागता ॥१-२१४-६६ (९३९४)
सैषा देवी रुचिरा देवजुष्टा
पञ्चानामेका स्वकृतेनेह कर्मणा ।
सृष्टा स्वयं देवपत्नी स्वयंभुवा
श्रुत्वा राजन्द्रुपदेष्टं कुरुष्व ॥ ॥ १-२१४-६७ (९३९५)

इति श्रीमन्महाभारते आदिपर्वणि वैवाहिकपर्वणि
चतुर्दशाधिकद्विशततमोऽध्यायः ॥ २१४ ॥
Mahabharata - Adi Parva - Chapter Footnotes

१-२१४-१ शमिता यज्ञे पशुवधकर्ता तस्य भावः शामित्रम् ॥
१-२१४-३ यत्र प्रजापतिस्तत्र सोमादयः समाजग्मुः ॥
१-२१४-११ तस्याः अश्रुबिन्दुः । सन्धिरार्षः ॥
१-२१४-२१ ततः शीघ्रमप्रवेशाद्धेतोः ॥
१-२१४-२३ हे भव अद्य त्वमशेषस्य भुवनस्य आद्यः पतिरसि । अद्येत्यनेन मां जित्वैव नत्वन्यथेति सूचितम् ॥
१-२१४-२४ शेषं प्रसादम् ॥
१-२१४-२७ दुराधरो दुष्प्रापः ॥
१-२१४-२८ वीर्येण शुक्रद्वारा पुरुषमंशभूतं दद्याम् ॥
१-२१४-२९ तेजस्वी इन्द्रांशः ॥
१-२१४-३१ तैर्विश्वभुगादिभिः । स देवो महादेवः ॥
१-२१४-३२ व्यदधाद्विहितवान् आज्ञप्तवानित्यर्थः । उद्बबर्ह उद्धृतवान् ॥
१-२१४-३८ तस्य राज्ञः । तस्मै राज्ञे ॥
चतुर्दशाधिकद्विशततमोऽध्यायः ॥
२१४ ॥

---

अध्यय२१५
॥ श्रीः ॥
१.२१५. अध्यायः २१५

Mahabharata - Adi Parva - Chapter Topics
युधिष्ठिरादीनां क्रमेण द्रौपद्याः पाणिग्रहणम् ॥ १ ॥

Mahabharata - Adi Parva - Chapter Text

१-२१५-० (९३९६)
द्रुपद उवाच। १-२१५-०क्ष् (१२०२)
अश्रुत्वैवं वचनं ते महर्षे
मया पूर्वं यतितं संविधातुम् ।
न वै शक्यं विहितस्यापयानं
तदेवेदमुपपन्नं विधानम् ॥ १-२१५-१ (९३९७)
दिष्टस्य ग्रन्थिरनिवर्तनीयः
स्वकर्मणा विहितं तेन किंचित् ।
कृतं निमित्तमिह नैकहेतो-
स्तदेवेदमुपन्नं विधानम् ॥ १-२१५-२ (९३९८)
यथैव कृष्णोक्तवती पुरस्ता-
न्नैकान्पतीन्मे भगवान्ददातु ।

स चाप्येवं वरमित्यब्रवीत्तां
देवो हि वेत्ता परमं यदत्र ॥ १-२१५-३ (९३९९)
यदि चैवं विहितः शङ्करेण
धर्मोऽधर्मो वा नात्र ममापराधः ।
गृह्णन्त्विमे विधितत्पाणिमस्या
यथोपजोषं विहितैषां हि कृष्णा ॥ १-२१५-४ (९४००)
व्यास उवाच। १-२१५-५क्ष् (१२०३)
नायं विधिर्मानुषाणां विवाहे
देवा ह्येते द्रौपदी चापि लक्ष्मीः ।
प्राक्कर्मणः सुकृतात्पाण्डवानां
पञ्चानां भार्या देवदेवप्रसादात् ॥ १-२१५-५ (९४०१)
तेषामेवायं विहितः स्याद्विवाहो
यथा ह्येष द्रौपदीपाण्डवानाम् ।
अन्येषां नृणां योषितां च
न धर्मः स्यान्मानवोक्तो नरेन्द्र ॥ १-२१५-६ (९४०२)
वैशंपायन उवाच। १-२१५-७क्ष् (१२०४)
तत आजग्मतुस्तत्र तौ व्यासद्रुपदावुभौ ।
कुन्ती सपुत्रा यत्रास्ते धृष्टद्युम्नश्च पार्षतः ।
ततो द्वैपायनः कृष्णो युधिष्ठिरमथागमत् ॥' १-२१५-७ (९४०३)
ततोऽब्रवीद्भगवान्धर्मराज-
मद्यैव पुण्येऽहनि पाण्डवेय ।
पुण्ये पुष्ये योगमुपैति चन्द्रमाः
पाणिं कृष्णायास्त्वं गृहाणाद्य पूर्वं ॥ १-२१५-८ (९४०४)
गएवमुक्त्वा धर्मराजं भीमादीनप्यभाषत ॥ १-२१५-९ (९४०५)
क्रमेण पुरुषव्याघ्राः पाणिं गृह्णन्तु पाणिभिः ।
एवमेव मया सर्वं दृष्टमेतत्पुराऽनघाः ॥ १-२१५-१० (९४०६)
वैशंपायन उवाच। १-२१५-११क्ष् (१२०५)
ततो राजा यज्ञसेनः सपुत्रो
जन्यार्थणुक्तं बहु तत्तदग्र्यम् ।
गसमर्थयामास महानुभावो
हृष्टः सपुत्रः सहबन्धुवर्गः।'
समानयामास सुतां च कृष्णा-
माप्लाव्य रत्नैर्बहुभिर्विभूष्य ॥ १-२१५-११ (९४०७)
ततस्तु सर्वे सुहृदो नृपस्य
समाजग्मुः सहिता मन्त्रिणश्च ।
द्रष्टुं विवाहं परमप्रतीता

द्विजाश्च पौराश्च यथाप्रधानाः ॥ १-२१५-१२ (९४०८)
ततोऽस्य वेश्माग्र्यजनोपशोभितं
विस्तीर्णपद्मोत्पलभूषिताजिरम् ।
बलौघरत्नौघविचित्रमाबभौ
नभो यथा निर्मलतारकान्वितम् ॥ १-२१५-१३ (९४०९)
ततस्तु ते कौरवराजपुत्रा
विभूषिताः कुण्डलिनो युवानः ।
महार्हवस्त्राम्बरचन्दनोक्षिताः
कृताभिषेकाः कृतमङ्गलक्रियाः ॥ १-२१५-१४ (९४१०)
पुरोहितेनाग्निसमानवर्चसा
सहैव धौम्येन यताविधि प्रभो ।
क्रमेण सर्वे विविशुस्ततः सदो
महर्षभा गोष्ठमिवाभिनन्दिनः ॥ १-२१५-१५ (९४११)
ततः समाधाय स वेदपरागो
जुहाव मन्त्रैर्ज्वलितं हुताशनम् ।
युधिष्ठिरं चाप्युपनीय मन्त्रवि-
न्नियोजयामास सहैव कृष्णया ॥ १-२१५-१६ (९४१२)
प्रदक्षिणं तौ प्रगृहीतपाणी
समानयामास स वेदपरागः ।
गविप्रांश्च संतर्प्य युधिष्ठिरो धनै-
र्गोभिश्च रत्नैर्विविधैश्च पूर्वम् ॥ १-२१५-१७ (९४१३)
तदा स राजा द्रुपदस्य पुत्रिका-
पाणिं प्रजग्राह हुताशनाग्रतः ।
धौम्येन मन्त्रैर्विधिवद्धुतेऽग्नौ
सहाग्निकल्पैर्ऋषिभिः समेत्य ॥ १-२१५-१८ (९४१४)
ततोऽन्तरिक्षात्कुसुमानि पेतु-
र्ववौ च वायुः सुमनोज्ञगन्धः ।
ततोऽभ्यनुज्ञाप्य समाजशोभितं
युधिष्ठिरं राजपुरोहितस्तदा ॥ १-२१५-१९ (९४१५)
विप्रांश्च सर्वान्सुहृदश्च राज्ञः
समेत्य राजानमदीनसत्वम् ।
जगाद भूयोऽपि महानुभावो
वचोऽर्थयुक्तं मनुजेश्वरं तम् ॥ १-२१५-२० (९४१६)
गृह्णन्त्वथान्ये नरदेवकन्या-
पाणिं यथावन्नरदेवपुत्राः ।
तमभ्यनन्दद्द्रुपदस्तथा द्विजं

तथा कुरुष्वेति तमादिदेश ॥ १-२१५-२१ (९४१७)
पुरोहितस्यानुमतेन राज्ञ-
स्ते राजपुत्रा मुदिता बभूवुः ।
क्रमेण चान्ये च नराधिपात्मजा
वरस्त्रियास्ते जगृहुः करं तदा ॥' १-२१५-२२ (९४१८)
अहन्यहन्युत्तमरूपधारिणो
महारथाः कौरववंशवर्धनाः ॥ १-२१५-२३ (९४१९)
इदं च तत्राद्भुतरूपमुत्तमं
जगाद देवर्षिरतीतमानुषम् ।
महानुभावा किल सा सुमध्यमा
बभूव कन्यैव गते गतेऽहनि ॥ १-२१५-२४ (९४२०)
ग्पतिश्वशुरता ज्येष्ठे पतिदेवरताऽनुजे ।
मध्यमेषु च पाञ्चाल्यास्त्रितयं त्रितयं त्रिषु ॥' १-२१५-२५ (९४२१)
कृते विवाहे द्रुपदो धनं ददौ
महारथेभ्यो बहुरूपमुत्तमम् ।
शतं रथानां वरहेममालिनां
चतुर्युजां हेमखलीनमालिनाम् ॥ १-२१५-२६ (९४२२)
शतं गजानामपि पद्मिनां तथा
शतं गिरिणामिव हेमशृङ्गिणाम् ।
तथैव दासीशतमग्र्ययौवनं
महार्हवेषाभरणाम्बरस्रजम् ॥ १-२१५-२७ (९४२३)
पृथक्पृथग्दिव्यदृशां पुनर्ददौ
तदा धनं सौमकिरग्निसाक्षिकम् ।
तथैव वस्त्राणि विभूषणानि
प्रभावयुक्तानि महानुभावः ॥ १-२१५-२८ (९४२४)
कृते विवाहे च ततस्तु पाण्डवाः
प्रभूतरत्नामुपलभ्य तां श्रियम् ।
विजह्रुरिन्द्रप्रतिमा महाबलाः
पुरे तु पाञ्चालनृपस्य तस्य ह ॥ ॥ १-२१५-२९ (९४२५)

इति श्रीमन्महाभारते आदिपर्वणि वैवाहिकपर्वणि
पञ्चदशाधिकद्विशततमोऽध्यायः ॥ २१५ ॥
Mahabharata - Adi Parva - Chapter Footnotes

१-२१५-२६ चतुर्युजामश्वचतुष्टययुजाम् ॥
पञ्चदशाधिकद्विशततमोऽध्यायः ॥

अध्यय२१६
॥ श्रीः ॥
१.२१६. अध्यायः २१६

Mahabharata - Adi Parva - Chapter Topics
द्रौपदींप्रति कुन्त्या आशीर्वादः ॥ १ ॥
श्रीकृष्णप्रेषितालंकारादीनां पाण्डवैः स्वीकारः ॥ २ ॥

Mahabharata - Adi Parva - Chapter Text

१-२१६-० (९४२६)
वैशंपायन उवाच। १-२१६-०क्ष् (१२०६)
पाण्डवैः सह संयोगं गतस्य द्रुपदस्य ह ।
न बभूव भयं किंचिद्देवेभ्योऽपि कथंचन ॥ १-२१६-१ (९४२७)
कुन्तीमासाद्य ता नार्यो द्रुपदस्य महात्मनः ।
नाम संकीर्तयन्त्योऽस्या जग्मुः पादौ स्वमूर्धभिः ॥ १-२१६-२ (९४२८)
कृष्णा च क्षौमसंवीता कृतकौतुकमङ्गला ।
कृताभिवादना श्वश्र्वास्तस्थौ प्रह्वा कृताञ्जलिः ॥ १-२१६-३ (९४२९)
रूपलक्षणसंपन्नां शीलाचारसमन्विताम् ।
द्रौपदीमवदत्प्रेम्णा पृथाशीर्वचनं स्नुषाम् ॥ १-२१६-४ (९४३०)
यथेन्द्राणी हरिहये स्वाहा चैव विभावसौ ।
रोहिणी च यथा सोमे दमयन्ती यथा नले ॥ १-२१६-५ (९४३१)
यथा वैश्रवणे भद्रा वसिष्ठे चाप्यरुन्धती ।
यथा नारायणे लक्ष्मीस्तथा त्वं भव भर्तृषु ॥ १-२१६-६ (९४३२)
जीवसूर्वीरसूर्भद्रे बहुसौख्यसमन्विता ।
सुभगा भोगसंपन्ना यज्ञपत्नी पतिव्रता ॥ १-२१६-७ (९४३३)
अतिथीनागतान्साधून्वृद्धान्बालांस्तथा गुरून् ।
पूजयन्त्या यथान्यायं शश्वद्गच्छन्तु ते समाः ॥ १-२१६-८ (९४३४)
कुरुजाङ्गलमुख्येषु राष्ट्रेषु नगरेषु च ।
अनु त्वमभिषिच्यस्व नृपतिं धर्मवत्सला ॥ १-२१६-९ (९४३५)
पतिभिर्निर्जितामुर्वीं विक्रमेण महाबलैः ।
कुरु ब्राह्मणसात्सर्वामश्वमेधे महाक्रतौ ॥ १-२१६-१० (९४३६)
पृथिव्यां यानि रत्नानि गुणवन्ति गुणान्विते ।
तान्याप्नुहि त्वं कल्याणि सुखिनी शरदां शतं ॥ १-२१६-११ (९४३७)
यथा च त्वाऽभिनन्दामि वध्वद्य क्षौमसंवृताम् ।

तथा भूयोऽभिनन्दिष्ये जातपुत्रां गुणान्वितां ॥ १-२१६-१२ (९४३८)
वैशंपायन उवाच। १-२१६-१३क्ष् (१२०७)
ततस्तु कृतदारेभ्यः पाण्डुभ्यः प्राहिणोद्धरिः ।
वैदूर्यमणिचित्राणि हैमान्याभरणानि च ॥ १-२१६-१३ (९४३९)
वासांसि च महार्हाणि नानादेश्यानि माधवः ।
कम्बलाजिनरत्नानि स्पर्शवन्ति शुभानि च ॥ १-२१६-१४ (९४४०)
शयनासनयानानि विविधानि महान्ति च ।
वैदूर्यवज्रचित्राणि शतशो भाजनानि च ॥ १-२१६-१५ (९४४१)
रूपयौवनदाक्षिण्यैरुपेताश्च स्वलङ्कृताः ।
प्रेष्याः संप्रददौ कृष्णो नानादेश्याः स्वलङ्कृताः ॥ १-२१६-१६ (९४४२)
गजान्विनीतान्भद्रांश्च सदश्वांश्च स्वलङ्कृतान् ।
रथांश्च दान्तान्सौवर्णैः शुभ्रैः पट्टैरलङ्कृतान् ॥ १-२१६-१७ (९४४३)
कोटिशश्च सुवर्णं च तेषामकृतकं तथा ।
वीथीकृतममेयात्मा प्राहिणोन्मधुसूदनः ॥ १-२१६-१८ (९४४४)
तत्सर्वं प्रतिजग्राह धर्मराजो युधिष्ठिरः ।
मुदा परमया युक्तो गोविन्दप्रियकाम्यया ॥ ॥ १-२१६-१९ (९४४५)

इति श्रीमन्महाभारते आदिपर्वणि वैवाहिकपर्वणि
षोडशाधिकद्विशततमोऽध्यायः ॥ २१६ ॥ ॥ समाप्तं वैवाहिकपर्व ॥
Mahabharata - Adi Parva - Chapter Footnotes

१-२१६-१२ हे वधु अद्य ॥
षोडशाधिकद्विशततमोऽध्यायः ॥
२१६ ॥

---

अध्यय२१७
॥ श्रीः ॥
१.२१७. अध्यायः २१७

(अथ विदुरागमनराज्यलाभपर्व ॥ १४ ॥)
Mahabharata - Adi Parva - Chapter Topics
चारद्वारा पाण्डवविवाहादिवृत्तान्तश्रवणेन अन्यैः राजभिः
भीष्मधृतराष्ट्रादीनां धिक्कारः ॥ १ ॥
धार्तराष्ट्रैः पाण्डवान्प्रति मन्त्रालोचनं ॥ २ ॥
पाण्डवा हन्तव्या इति शकुनेरुक्तिः ॥ ३ ॥
पाण्डवानां हन्तुमशक्यत्वात्तैः सह सन्धिः कर्तव्य इति
सौमदत्तेरुक्तिः ॥ ४ ॥

१-२१७-० (९४४६)
वैशंपायन उवाच। १-२१७-०क्ष् (१२०८)
ततो राज्ञां चैरराप्तैः प्रवृत्तिरुपनीयत ।
पाण्डवैरुपसंपन्ना द्रौपदी पतिभिः शुभा ॥ १-२१७-१ (९४४७)
येन तद्धनुरादाय लक्ष्यं विद्धं महात्मना ।
सोऽर्जुनो जयतां श्रेष्ठो महाबाणधनुर्धरः ॥ १-२१७-२ (९४४८)
यः शल्यं मद्रराजं वै प्रोत्क्षिप्यापातयद्बली ।
त्रासयामास संक्रुद्धो वृक्षेण पुरुषान्रणे ॥ १-२१७-३ (९४४९)
न चास्य संभ्रमः कश्चिदासीत्तत्र महात्मनः ।
स भीमो भीमसंस्पर्शः शत्रुसेनाङ्गपातनः ॥ १-२१७-४ (९४५०)
ग्योऽसावत्यक्रमीद्युध्यन्युद्धे दुर्योधनं तथा ।
स राजा पाण्डवश्रेष्ठः पुण्यभाग्बुद्धिवर्धनः ॥ १-२१७-५ (९४५१)
दुर्योधनस्यावरजैर्यौ युध्येतां प्रतीपवत् ।
तौ यमौ वृत्तसंपन्नौ संपन्नबलविक्रमौ ॥' १-२१७-६ (९४५२)
ब्रह्मरूपधराञ्श्रुत्वा प्रशान्तान्पाण्डुनन्दनान् ।
कौन्तेयान्मनुजेन्द्राणां विस्मयः समजायत ॥ १-२१७-७ (९४५३)
ग्पौरा हि सर्वे राजन्याः समपद्यन्त विस्मिताः।'
सपुत्रा हि पुरा कुन्ती दग्धा जतुगृहे श्रुता ॥ १-२१७-८ (९४५४)
ग्सर्वभूमिपतीनां च राष्ट्राणां च यशस्विनी।'
पुनर्जातानिव च तांस्तेऽमन्यन्त नराधिपाः ॥ १-२१७-९ (९४५५)
धिगकुर्वंस्तदा भीष्मं धृतराष्ट्रं च कौरवम् ।
कर्मणाऽतिनृशंसेन पुरोचनकृतेन वै ॥ १-२१७-१० (९४५६)
धार्मिकान्वृत्तसंपन्नान्मातुः प्रियहिते रतान् ।
यदा तानीदृशान्पार्थानुत्सादयितुमिच्छति ॥ १-२१७-११ (९४५७)
ततः स्वयंवरे वृत्ते धार्तराष्ट्राश्च भारत ।
मन्त्रयन्ति ततः सर्वे कर्णसौबलदूषिताः ॥ १-२१७-१२ (९४५८)
शकुनिरुवाच। १-२१७-१३क्ष् (१२०९)
कश्चिच्छत्रुः कर्शनीयः पीडनीयस्तथाऽपरः ।
उत्सादनीयाः कौन्तेयाः सर्वक्षत्रस्य मे मताः ॥ १-२१७-१३ (९४५९)
एवं पराजिताः सर्वे यदि यूयं गमिष्यथ ।
अकृत्वा संविदं कांचिन्मनस्तप्स्यत्यसंशयम् ॥ १-२१७-१४ (९४६०)
अयं देशश्च कालश्च पाण्डवाहरणाय नः ।
न चेदेवं करिष्यध्वं लोके हास्या भविष्यथ ॥ १-२१७-१५ (९४६१)

यमेते संश्रिता वस्तुं कामयन्ते च भूमिपम् ।
सोऽल्पवीर्यबलो राजा द्रुपदो वै मतो मम ॥ १-२१७-१६ (९४६२)
यावदेतान्न जानन्ति जीवतो वृष्णिपुङ्गवाः ।
चैद्यश्च पुरुषव्याघ्रः शिशुपालः प्रतापवान् ॥ १-२१७-१७ (९४६३)
एकीभावं गतो राज्ञा द्रुपदेन महात्मना ।
दुराधर्षतरा राजन्भविष्यन्ति न संशयः ॥ १-२१७-१८ (९४६४)
यावच्चञ्चलतां सर्वे प्राप्नुवन्ति नराधिपाः ।
तावदेव व्यवस्यामः पाण्डवानां वधं प्रति ॥ १-२१७-१९ (९४६५)
मुक्ता जतुगृहाद्भीमादाशीविषमुखादिव ।
पुनस्ते यदि मुच्यन्ते महन्नो भयमागतम् ॥ १-२१७-२० (९४६६)
तेषामिहोपयातानामेषां तु चिरवासिनाम् ।
अन्तरे दुष्करं स्थातुं गजयोर्महतोरिव ॥ १-२१७-२१ (९४६७)
हनध्वं प्रगृहीतानि बलानि बलिनां वराः ।
यावन्नः कुरुसेनायां पतन्ति पतगा इव ॥ १-२१७-२२ (९४६८)
तावत्सर्वाभिसारेण पुरमेतद्विहन्यताम् ।
एतन्मम मतं चैव प्राप्तकालं नरर्षभ ॥ १-२१७-२३ (९४६९)
वैशंपायन उवाच। १-२१७-२४क्ष् (१२१०)
शकुनेर्वचनं श्रुत्वा भाषमाणस्य दुर्मतेः ।
सोमदत्तिरिदं वाक्यं जगाद परमं ततः ॥ १-२१७-२४ (९४७०)
प्रकृतीः सप्त वै ज्ञात्वा आत्मनश्च परस्य च ।
तथा देशं च कालं च षड्विधान्स नयोद्गुणान् ॥ १-२१७-२५ (९४७१)
स्थानं वृद्धिं क्षयं चैव भूमिं मित्राणि विक्रमम् ।
प्रसमीक्ष्याभियुञ्जीत परं व्यसनपीडितम् ॥ १-२१७-२६ (९४७२)
ततोऽहं पाण्डवान्मन्ये मित्रकोशसमन्वितान् ।
बलस्थान्विक्रमस्थांश्च स्वकृतैः प्रकृतिप्रियान् ॥ १-२१७-२७ (९४७३)
वपुषा हि तु भूतानां नेत्राणि हृदयानि च ।
श्रोत्रं मधुरया वाचा रमयत्यर्जुनो नृणाम् ॥ १-२१७-२८ (९४७४)
न तु केवलदैवेन प्रजा भावेन भेजिरे ।
यद्बभूव मनःकान्तं कर्मणा स चकार तत् ॥ १-२१७-२९ (९४७५)
न ह्ययुक्तं न चासक्तं नानृतं न च विप्रियम् ।
भाषितं चारुभाषस्य जज्ञे पार्थस्य भारती ॥ १-२१७-३० (९४७६)
तानेवंगुणसंपन्नान्संपन्नान्राजलक्षणैः ।
न तान्पश्यामि ये शक्ताः समुच्छेत्तुं यथा बलात् ॥ १-२१७-३१ (९४७७)
प्रभावशक्तिर्विपुला मन्त्रशक्तिश्च पुष्कला ।
तथैवोत्साहशक्तिश्च पार्थेष्वप्यधितिष्ठति ॥ १-२१७-३२ (९४७८)
मौलमित्रबलानां च कालज्ञो वै युधिष्ठिरः ।

साम्ना दानेन भेदेन दण्डेनेति युधिष्ठिरः ॥१-२१७-३३ (९४७९)
अमित्रांश्च ततो जेतुनं न रोषेणेति मे मतिः ।
परिक्रीय धनैः शत्रुं मित्राणि च बलानि च ॥१-२१७-३४ (९४८०)
मूलं च सुकृतं कृत्वा भुङ्क्ते भूमिं च पाण्डवः ।
अशक्यान्पाण्डवान्मन्ये देवैरपि सवासवैः ॥१-२१७-३५ (९४८१)
येषामर्थे सदा युक्तौ कृष्णसंकर्षणावुभौ ।
श्रेयश्च यदि मन्यद्ध्वं मन्मतं यदि वा मतम् ॥१-२१७-३६ (९४८२)
संविदं पाण्डवैः सर्वैः कृत्वा याम यथागतम् ।
गोपुराट्टालकैरुच्चैरुपतल्पशतैरपि ॥१-२१७-३७ (९४८३)
गुप्तं पुरवरश्रेष्ठमेतदद्भिश्च संवृतम् ।
तृणधान्येन्धरसैस्तथा यन्त्रायुधौषधैः ॥१-२१७-३८ (९४८४)
युक्तं बहुकवाटैश्च द्रव्यागारसुवेदिकैः ।
भीमोच्छ्रितमहाचक्रं बृहदट्टालसंवृतम् ॥१-२१७-३९ (९४८५)
दृढप्राकारनिर्यूहं शतघ्नीशतसंकुलम् ।
ऐष्टको दारवो वप्रो मानुषश्चेति यः स्मृतः ॥१-२१७-४० (९४८६)
प्राकारकर्तृभिर्वीरैर्नृगर्भस्तत्र पूजितः ।
तदेतन्नरगर्भेण पाण्डरेण विराजते ॥१-२१७-४१ (९४८७)
सालेनानेकतालेन सर्वतः संवृतं पुरम् ।
अनुरक्ताः प्रकृतयो द्रुपदस्य महात्मनः ॥१-२१७-४२ (९४८८)
दानमानार्जिताः सर्वे बाह्याभ्यन्तरगाश्च ये ।
प्रतिरुद्धानिमाञ्ज्ञात्वा राजभिर्भीमविक्रमैः ॥१-२१७-४३ (९४८९)
उपयास्यन्ति दाशार्हाः समुदग्रोच्छ्रितायुधाः ।
तस्मात्संन्धिं वयं कृत्वा धार्तराष्ट्रस्य पाण्डवैः ॥१-२१७-४४ (९४९०)
स्वराष्ट्रमेव गच्छामो यद्याप्तं वचनं मम ।
एतन्मम मतं सर्वैः क्रियतां यदि रोचते ।
एतद्धि सुकृतं मन्ये क्षेमं चापि महीभिताम् ॥ ॥ १-२१७-४५ (९४९१)

इति श्रीमन्महाभारते आदिपर्वणि विदुरागमनराज्यलाभपर्वणि
सप्तदशाधिकद्विशततमोऽध्यायः ॥ २१७ ॥

Mahabharata - Adi Parva - Chapter Footnotes

१-२१७-२९ भेजिर अर्जुनमिति शेषः ॥
सप्तदशाधिकद्विशततमोऽध्यायः ॥
२१७ ॥

---

अध्यय२१८
॥ श्रीः ॥

१.२१८. अध्यायः २१८

Mahabharata - Adi Parva - Chapter Topics

पाण्डवा हन्तव्या एवेति कर्णस्योक्तिः ॥ १ ॥
पाञ्चालनगरंप्रति युद्धार्थं दुर्योधनादीनां गमनम् ॥ २ ॥
तैः सह योद्धुं सपाण्डवस्य द्रुपदस्यागमनम् ॥ ३ ॥
कर्णजयद्रथाभ्यां सुमित्रप्रियदर्शनयोर्वधः ॥ ४ ॥
अर्जुनेन कर्णजयद्रथपुत्रयोर्वधः ॥ ५ ॥
कर्णदुर्योधनादीनां पराजयः ॥ ६ ॥
पराजितानां तेषां हास्तिनपुरगमनम् ॥ ७ ॥
कृष्णबलरामयोः पाञ्चालपुरे वासः ॥ ८ ॥

Mahabharata - Adi Parva - Chapter Text

१-२१८-० (९४९२)
वैशंपायन उवाच। १-२१८-०क्ष् (१२११)
सौमदत्तेर्वचः श्रुत्वा कर्णो वैकर्तनो वृषा ।
उवाच वचनं काले कालज्ञः सर्वकर्मणाम् ॥ १-२१८-१ (९४९३)
नीतिपूर्वमिदं सर्वमुक्तं वचनमर्थवत् ।
वचनं नाभ्यसूयामि श्रूयतां यद्वचस्त्विति ॥ १-२१८-२ (९४९४)
द्वैधीभावो न गन्तव्यः सर्वकर्मसु मानवैः ।
द्विधाभूतेन मनसा अन्यत्कर्म न सिध्यति ॥ १-२१८-३ (९४९५)
संप्रयाणासनाभ्यां तु कर्शनेन तथैव च ।
नैतच्छक्यं पुरं हर्तुमाक्रन्दश्चाप्यशोभनः ॥ १-२१८-४ (९४९६)
अवमर्दनकालोऽत्र मतश्चिन्तयतो मम ।
यावन्नो वृष्णयः पार्ष्णिं न गृह्णन्तिरणप्रियाः ॥ १-२१८-५ (९४९७)
भवन्तश्च तथा हृष्टाः स्वबाहुबलशालिनः ।
प्राकारमवमृद्नन्तु परिघाः पूरयन्त्वपि ॥ १-२१८-६ (९४९८)
प्रस्रावयन्तु सलिलं क्रियतां विषमं समम् ।
तृणकाष्ठेन महता खातमस्य प्रपूर्यताम् ॥ १-२१८-७ (९४९९)
घुष्यतां राजमार्गेषु परेषां यो हनिष्यति ।
नागमश्वं पदातिं वा दानमानं स लप्स्यति ॥ १-२१८-८ (९५००)
नागे दशसहस्राणि पञ्च चाश्वपदातिषु ।
रथे वै द्विगुणं नागाद्वसु दास्यन्ति पार्थिवाः ॥ १-२१८-९ (९५०१)
यश्च कामसुखे सक्तो बालश्च स्थविरश्च यः ।
अयुद्धमनसो ये च ते तु तिष्ठन्तु भीरवः ॥ १-२१८-१० (९५०२)

प्रदरश्च न दातव्यो न गन्तव्यमचोदितैः ।
यशो रक्षत भद्रं वो जेष्यामो वै रिपून्वयम् ॥१-२१८-११ (९५०३)
अनुलोमाश्च नो वाताः सततं मृगपक्षिणः ।
अग्नयश्च विराजन्ते शस्त्राणि कवचानि च ॥१-२१८-१२ (९५०४)
वैशंपायन उवाच।१-२१८-१३क्ष् (१२१२)
ततः कर्णवचः श्रुत्वा धार्तराष्ट्रप्रियैषिणः ।
निर्ययुः पृथिवीपालाश्चालयन्तः परान्रणे ॥१-२१८-१३ (९५०५)
न हि तेषां मनःसक्तिरिन्द्रियार्थेषु सर्वशः ।
यथा परिरपुघ्नानां प्रसभं युद्ध एव च ॥१-२१८-१४ (९५०६)
वैकर्तनपुरोव्रातः सैन्धवोर्मिमहास्वनः ।
दुःशासनमहामत्स्यो दुर्योधनमहाग्रहः ॥१-२१८-१५ (९५०७)
स राजसागरो भीमो भीमघोषप्रदर्शनः ।
अभिदुद्राव वेगेन पुरं तदपसव्यतः ॥१-२१८-१६ (९५०८)
तदनीकमनाधृष्यं शस्त्राग्निव्यालदीपितम् ।
समुत्कम्पितमाज्ञाय चुक्रुशुर्द्रुपदात्मजाः ॥१-२१८-१७ (९५०९)
ते मेघसमनिर्घोषैर्बलिनः स्यन्दनोत्तमैः ।
निर्ययुर्नगरद्वारात्त्रासयन्तः परान्र  १-२१८-१८ (९५१०)
धृष्टद्युम्नः शिखण्डी च सुमित्रः प्रियदर्शनः ।
चित्रकेतुः सुकेतुश्च ध्वजकेतुश्च वीर्यवान् ॥१-२१८-१९ (९५११)
पुत्रा द्रुपदराजस्य बलवन्तो जयैषिणः ।
द्रुपदस्य महावीर्यः पाण्डरोष्णीषकेतनः ॥१-२१८-२० (९५१२)
पाण्डरव्यजनच्छत्रः पाण्डरध्वजवाहनः ।
स पुत्रगणमध्यस्थः शुशुभे राजसत्तमः ॥१-२१८-२१ (९५१३)
चन्द्रमा ज्योतिषां मध्ये पौर्णमास्यामिवोदितः ।
अथोद्धूतपताकाग्रमजिह्मगतिमव्ययम् ॥१-२१८-२२ (९५१४)
द्रुपदानीकमायान्तं कुरुसैन्यमभिद्रवत् ।
तयोरुभयतो जज्ञे तेषां तु तुमुलः स्वनः ॥१-२१८-२३ (९५१५)
बलयोः संप्रसरतोः सरितां स्रोतसोरिव ।
प्रकीर्णरथनागाश्वैस्तान्यनीकानि सर्वशः ॥१-२१८-२४ (९५१६)
ज्योतींषईव प्रकीर्णानि सर्वतः प्रचकाशिरे ।
उत्कृष्टभेरीनिनदे संप्रवृत्ते महारवे ॥१-२१८-२५ (९५१७)
अमर्षिता महात्मानः पाण्डवा निर्ययुस्ततः ।
रथांश्च मेघनिर्घोषान्युक्तान्परमवाजिभिः ॥१-२१८-२६ (९५१८)
धून्वन्तो ध्वजिनः शुभ्रानास्थाय भरतर्षभाः ।
ततः पाण्डुसुतान्दृष्ट्वा रथस्थानात्तकार्मुकान् ॥१-२१८-२७ (९५१९)
नृपाणामभवत्कम्पो वेपथुर्हृदयेषु च ।

निर्यातिष्वथ पार्थेषु द्रोपदं तद्बलं रणे ॥ १-२१८-२८ (९५२०)
आविशत्परमो हर्षः प्रमोदश्च जयं प्रति ।
सुमुहूर्तं व्यतिकरः सैन्यानामभवद्भृशम् ॥ १-२१८-२९ (९५२१)
ततो द्वन्द्वमयुध्यन्त मृत्युं कृत्वा पुरस्कृतम् ।
जघ्नतुः समरे तस्मिन्सुमित्रप्रियदर्शनौ ॥ १-२१८-३० (९५२२)
जयद्रथश्च कर्णश्च पश्यतः सव्यसाचिनः ।
अर्जुनः प्रेक्ष्य निहतौ सौमित्रप्रियदर्शनौ ॥ १-२१८-३१ (९५२३)
जयद्रथसुतं तत्र जघान पितुरन्तिके ।
वृषसेनादवरजं सुदामानं धनंजयः ॥ १-२१८-३२ (९५२४)
कर्णपुत्रं महेष्वासं रथनीडादपातयत् ।
तौ सुतौ निहतौ दृष्ट्वा राजसिंहौ तरस्विनौ ॥ १-२१८-३३ (९५२५)
नामृष्येतां महाबाहू प्रहारमिव सद्गजौ ।
तौ जग्मतुरसंभ्रान्तौ फल्गुनस्य रथंप्रति ॥ १-२१८-३४ (९५२६)
प्रतिमुक्ततलत्राणौ शपमानौ परस्परम् ।
सन्निपातस्तयोरासीदतिघोरो महामृधे ॥ १-२१८-३५ (९५२७)
वृत्रशम्बरयोः सङ्ख्ये वज्रिणेव महारणे ।
त्रीनश्वाञ्जघ्नतुस्तस्य फल्गुनस्य नर्षभौ ॥ १-२१८-३६ (९५२८)
ततः किलिकिलाशब्दः कुरूणामभवत्तदा ।
तान्हयान्निहतान्दृष्ट्वा भीमसेनः प्रतापवान् ॥ १-२१८-३७ (९५२९)
निमेषान्तरमात्रेण रथमश्वैरयोजयत् ।
उपयातं रथं दृष्ट्वा दुर्योधनपुरःसरौ ॥ १-२१८-३८ (९५३०)
सौबलः सौमदत्तिश्च समेयातां परन्तपौ ।
तैः पञ्चभिरदीनात्मा भीमसेनो महाबलः ॥ १-२१८-३९ (९५३१)
अयुध्यत तदा वीरैरिन्द्रियार्थैरिवेश्वरः ।
तैर्निरुद्धो न संत्रासं जगाम समितिंजयः ॥ १-२१८-४० (९५३२)
पञ्चभिर्द्विरदैर्मत्तैर्निरुद्ध इव केसरी ।
तस्यैते युगपत्पञ्च पञ्चभिर्निशितैः शरैः ॥ १-२१८-४१ (९५३३)
सारथिं वाजिनश्चैव निन्युर्वैवस्वतक्षयम् ।
हताश्वात्स्यन्दनश्रेष्ठादवरुह्य महारथः ॥ १-२१८-४२ (९५३४)
चचार विविधान्मार्गानसिमुद्यम्य पाण्डवः ।
अश्वस्कन्धेषु चक्रेषु युगेष्वीषासु चैव हि ॥ १-२१८-४३ (९५३५)
व्यचरत्पातयञ्शत्रून्सुपर्ण इव भोगिनः ।
विधनुष्कं विकवचं विरथं च समीक्ष्य तम् ॥ १-२१८-४४ (९५३६)
अभिपेतुर्नव्याघ्रा अर्जुनप्रमुखा रथाः ।
धृष्टद्युम्नः शिखण्डी च यमौ च युधि दुर्जयौ ॥ १-२१८-४५ (९५३७)
तस्मिन्महारथे युद्धे प्रवृत्ते शरवृष्टिभिः ।

रथध्वजपताकाश्च सवर्मन्तरधीयत ॥१-२१८-४६ (९५३८)
तत्प्रवृत्तं चिरं कालं युद्धं सममिवाभवत् ।
रथेन तान्महाबाहुरर्जुनो व्यधमत्पुनः ॥१-२१८-४७ (९५३९)
तमापतन्तं दृष्ट्वेव महाबाहुर्धनुर्धरः ।
कर्णोऽस्त्रविदुषां श्रेष्ठो वारयामास सायकैः ॥१-२१८-४८ (९५४०)
स तेनाभिहतः पार्थो वासविर्वज्रसन्निभान् ।
त्रींञ्शरान्संदधे क्रुद्धो वधात्क्रुद्धस्य पाण्डवः ॥१-२१८-४९ (९५४१)
तैः शरैराहतं कर्णं ध्वजयष्टिमुपाश्रितम् ।
अपोवाह रथाच्चाशु सूतः परपुरंजयम् ॥१-२१८-५० (९५४२)
ततः पराजिते कर्णे धार्तराष्ट्रान्महाभयम् ।
विवेश समुदग्रांश्च पाण्डवान्प्रसमीक्ष्य तु ॥१-२१८-५१ (९५४३)
तत्प्रकम्पितमत्यर्थं तद्दृष्ट्वा सौबलो बलम् ।
गिरा मधुरया चापि समाश्वासयतासकृत् ॥१-२१८-५२ (९५४४)
धार्तराष्ट्रैस्ततः सर्वैर्दुर्योधनपुरःसरैः ।
धृतं तत्पुनरेवासीद्बलं पार्थप्रपीडितम् ॥१-२१८-५३ (९५४५)
ततो दुर्योधनं दृष्ट्वा भीमो भीमपराक्रमः ।
अक्रुध्यत्स महाबाहुरगारं जातुषं स्मरन् ॥१-२१८-५४ (९५४६)
ततः संग्रामशिरसि ददर्श विपुलद्रुमम् ।
आयामभूतं तिष्ठन्तं स्कन्धपञ्चाशदुन्नतम् ॥१-२१८-५५ (९५४७)
महास्कन्धं महोत्सेधं शक्रध्वजमिवोच्छ्रितम् ।
तमुत्पाट्य च पाणिभ्यामुद्यम्य चरणावपि ॥१-२१८-५६ (९५४८)
अभिपेदे परान्सङ्ख्ये वज्रपाणिरिवासुरान् ।
भीमसेनभयार्तानि फल्गुनाभिहतानि च ॥१-२१८-५७ (९५४९)
न शेकुस्तान्यनीकानि धार्तराष्ट्राण्युदीक्षितुम् ।
तानि संभ्रान्तयोधानि श्रान्तवाजिगजानि च ॥१-२१८-५८ (९५५०)
दिशः प्राकालयद्भीमो दिवीवाभ्राणि मारुतः ।
तान्निवृत्तान्निरानन्दान्नरवारणवाजिनः ॥१-२१८-५९ (९५५१)
नानुसस्रुर्न चाजघ्नुर्नोचुः किंचिच्च दारुणम् ।
स्वमेव शिबिरं जग्मुः क्षत्रियाः शरविक्षताः ॥१-२१८-६० (९५५२)
परेऽप्यभिययुर्हृष्टाः पुरं पौरसुखावहाः ।
मुहूर्तमभवद्युद्धं तेषां वै पाण्डवैः सह ॥१-२१८-६१ (९५५३)
यावत्तद्युद्धमभवन्महद्देवासुरोपमम् ।
तावदेवाभवच्छ्रान्तं निवृत्ता वै महारथाः ॥१-२१८-६२ (९५५४)
सुव्रतं चक्रिरे सर्वे सुवृतामब्रुवन्वधूम् ।
कृतार्थं द्रुपदं चोचुर्धृष्टद्युम्नं च पार्षतम् ॥१-२१८-६३ (९५५५)
शकुनिः सिन्धुराजश्च कर्णदुर्योधनावपि ।

तेषां तदाभवद्दुःखं हृदि वाचा तु नाब्रुवन् ॥ १-२१८-६४ (९५५६)
ततः प्रयाता राजानः सर्व एव यथागतम् ।
धार्तराष्ट्रा हि ते सर्वे गता नागपुरं तदा ॥ १-२१८-६५ (९५५७)
प्रागेव पूर्निरोधात्तु पाण्डवैरश्वसादिनः ।
प्रेषिता गच्छतारिष्टानस्मानाख्यात शौरये ॥ १-२१८-६६ (९५५८)
तेऽचिरेणैव कालेन संप्राप्ता यादवीं पुरीम् ।
ऊचुः संकर्षणोपेन्द्रौ वचनं वचनक्षमौ ॥ १-२१८-६७ (९५५९)
कुशलं पाण्डवाः सर्वानाहुः स्मान्धकवृष्णयः ।
आत्मनश्चाहतानाहुर्विमुक्ताञ्जातुषाद्गृहात् ॥ १-२१८-६८ (९५६०)
समाजे द्रौपदीं लब्धामाहू राजीवलोचनाम् ।
आत्मनः सदृशीं सर्वैः शीलवृत्तसमाधिभिः ॥ १-२१८-६९ (९५६१)
तच्छ्रुत्वा वचनं कृष्णस्तानुवाचोत्तरं वचः ।
सर्वमेतदहं जाने वधात्तस्य तु रक्षसः ॥ १-२१८-७० (९५६२)
तत उद्योजयामास माधवश्चतुरङ्गिणीम् ।
सेनामुपानयत्तूर्णं पाञ्चालनगरीं प्रति ॥ १-२१८-७१ (९५६३)
ततः संकर्षणश्चैव केशवश्च महाबलः ।
यादवैः सह सर्वैश्च पाण्डवानभिजग्मतुः ॥ १-२१८-७२ (९५६४)
पितृष्वसारं संपूज्य नत्वा चैव तु यादवीम् ।
द्रौपदीं भूषणैः शुभ्रैर्भूषयित्वा यथाविधि ॥ १-२१८-७३ (९५६५)
पाण्डवान्हर्षयित्वा तु पूजयामासतुश्च तान् ।
न्यायतः पूजितौ राज्ञा द्रुपदेन महात्मना ॥ १-२१८-७४ (९५६६)
यादवाः पूजिताः सर्वे पाण्डवैश्च महात्मभिः ।
रेमिरे पाण्डवैः सार्धं ते पाञ्चालपुरे तदा ॥ ॥ १-२१८-७५ (९५६७)

इति श्रीमन्माहाभारते आदिपर्वणि विदुरागमनराज्यलाभपर्वणि
अष्टादशाधिकद्विशततमोऽध्यायः ॥ २१८ ॥

---

अध्यय२१९
॥ श्रीः ॥
१.२१९. अध्यायः २१९

Mahabharata - Adi Parva - Chapter Topics
विदुरात् ज्ञातपाण्डववृत्तान्तेन धृतराष्ट्रेण
द्रौपद्यानयनार्थमाज्ञापनम् ॥ १ ॥
धृतराष्ट्रसमीपे कर्णदुर्योधनयोर्भाषणम् ॥ २ ॥

Mahabharata - Adi Parva - Chapter Text

१-२१९-० (९५६८)
वैशंपायन उवाच। १-२१९-०क्ष् (१२१३)
वृत्ते स्वयंवरे चैव राजानः सर्व एव ते ।
यथागतं विप्रजग्मुर्विदित्वा पाण्डवान्वृतान् ॥ १-२१९-१ (९५६९)
अथ दुर्योधनो राजा विमना भ्रातृभिः सह ।
अश्वत्थाम्ना मातुलेन कर्णेन च कृपेण च ॥ १-२१९-२ (९५७०)
विनिवृत्तो वृतं दृष्ट्वा द्रौपद्या श्वेतवाहनम् ।
तं तु दुःशासनोऽव्रीडो मन्दंमन्दमिवाब्रवीत् ॥ १-२१९-३ (९५७१)
यद्यसौ ब्राह्मणो न स्याद्विन्देत द्रौपदीं न सः ।
न हि तं तत्त्वतो राजन्वेद कश्चिद्धनंजयम् ॥ १-२१९-४ (९५७२)
दैवं च परमं मन्ये पौरुषं चाप्यनर्थकम् ।
धिगस्तु पौरुषं मन्त्रं यद्धरन्तीह पाण्डवाः ॥ १-२१९-५ (९५७३)
ग्बध्वा चक्षूंषि नः पार्था राज्ञां च द्रुपदात्मजाम् ।
उद्वाह्य राज्ञां तैर्न्यस्तो वामः पादः पृथासुतैः ॥ १-२१९-६ (९५७४)
विमुक्ताः कथमेतेन जतुवेश्मविर्भुजः ।
अस्माकं पौरुषं सत्वं बुद्धिश्चापि गता ततः ॥ १-२१९-७ (९५७५)
वयं हता मातुलाद्य विश्वस्य च पुरोचनम् ।
अदग्ध्वा पाण्डवानेतान्स्वयं दग्धो हुताशने ॥ १-२१९-८ (९५७६)
मत्तो मातुल मन्येऽहं पाण्डवा बुद्धिमत्तराः ।
तेषां नास्ति भयं मृत्योर्मुक्तानां जतुवेश्मनः ॥ १-२१९-९ (९५७७)
वैशंपावयन उवाच। १-२१९-१०क्ष् (१२१४)
एवं संभाषमाणास्ते निन्दन्तश्च पुरोचनम् ।
पञ्चपुत्रां किरातीं च विदुरं च महामतिम् ॥' १-२१९-१० (९५७८)
विविशुर्हास्तिनपुरं दीना विगतचेतसः ॥ १-२१९-११ (९५७९)
त्रस्ता विगतसंकल्पा दृष्ट्वा पार्थान्महौजसः ।
मुक्तान्हव्यभुजश्चैव संयुक्तान्द्रुपदेन च ॥ १-२१९-१२ (९५८०)
धृष्टद्युम्नं तु संचिन्त्य तथैव च शिखण्डिनम् ।
द्रुपदस्यात्मजांश्चान्यान्सर्वयुद्धविशारदान् ॥ १-२१९-१३ (९५८१)
विदुरस्त्वथ ताञ्श्रुत्वा द्रौपद्या पाण्डवान्वृतान् ।
व्रीडितान्धार्तराष्ट्रांश्च भग्नदर्पानुपागतान् ॥ १-२१९-१४ (९५८२)
ततः प्रीतमनाः क्षत्ता धृतराष्ट्रं विशांपते ।
उवाच दिष्ट्या कुरवो वर्धत इति विस्मितः ॥ १-२१९-१५ (९५८३)
वैचित्रवीर्यस्तु नृपो निशम्य विदुरस्य तत् ।
अब्रवीत्परमप्रीतो दिष्ट्या दिष्ट्येति भारत ॥ १-२१९-१६ (९५८४)
मन्यते स वृतं पुत्रं ज्येष्ठं द्रुपदकन्यया ।

दुर्योधनमविज्ञानात्प्रज्ञाचक्षुर्नरेश्वरः ॥ १-२१९-१७ (९५८५)
अथ त्वाज्ञापयामास द्रौपद्या भूषणं बहु ।
आनीयतां वै कृष्णेति पुत्रं दुर्योधनं तदा ॥ १-२१९-१८ (९५८६)
ग्अथ स्म पश्चाद्विदुर आचख्यावम्बिकात्मजम् ।
कौरव्या इति सामान्यान्न मन्येथास्तवात्मजान् ॥ १-२१९-१९ (९५८७)
वर्धन्त इति मद्वाक्याद्वर्धिताः पाण्डुनन्दनाः ।
कृष्णया संवृताः पार्था विमुक्ता राजसङ्गरात् ॥ १-२१९-२० (९५८८)
दिष्ट्या कुशलिनो राजन्पूजिता द्रुपदेन च ॥ १-२१९-२१ (९५८९)
वैशंपायन उवाच। १-२१९-२२क्ष् (१२१५)
एतच्छ्रुत्वा तु वचनं विदुरस्य नराधिपः ।
आकारच्छादनार्थाय दिष्ट्यादिष्ट्येति चाब्रवीत् ॥ १-२१९-२२ (९५९०)
धृतराष्ट्र उवाच। १-२१९-२३क्ष् (१२१६)
एवं विदुर भद्रं ते यदि जीवन्ति पाण्डवाः ।
न ममौ मे तनौ प्रीतिस्त्वद्वाक्यामृतसंभवा ॥ १-२१९-२३ (९५९१)
साध्वाचारतया तेषां संबन्धो द्रुपदेन च ।
बभूव परमश्लाघ्यो दिष्ट्यादिष्ट्येति चाब्रवीत् ॥ १-२१९-२४ (९५९२)
अन्ववाये वसोर्जातः प्रवरे मात्स्यके कुले ।
वृत्तविद्यातपोवृद्धः पार्थिवानां च संमतः ॥ १-२१९-२५ (९५९३)
पुत्राश्चास्य तथा पौत्राः सर्वे सुचरितव्रताः ।
तेषां संबन्धिनश्चान्ये बहवः सुमहाबलाः ॥ १-२१९-२६ (९५९४)
यथैव पाण्डोः पुत्रास्ते ततोऽप्यभ्यधिका मम ।
सेयमभ्यधिकान्येभ्यो वृत्तिर्विदुर मे मता ॥ १-२१९-२७ (९५९५)
या प्रीतिः पाण्डुपुत्रेषु न साऽन्यत्र ममाभिभो ।
नित्योऽयं चिन्तितः क्षत्तः सत्यं सत्येन शपे ॥ १-२१९-२८ (९५९६)
यत्ते कुशलिनो वीराः पाण्डुपुत्रा महारथाः ।
मित्रवन्तोऽभवन्पुत्रा दुर्योधनमुखास्तथा ॥ १-२१९-२९ (९५९७)
मया श्रुतं यदा वह्नेर्दग्धाः पाण्डुसुता इति ।
तदाऽदह्यं दिवारात्रं न भोक्ष्ये न स्वपामि च ॥ १-२१९-३० (९५९८)
असहायाश्चं मे पुत्रा लूनपक्षा इव द्विजाः ।
तत्त्वतः शृणु मे क्षत्तः सुसहायाः सुता मम ।
अद्य वै स्थिरसाम्राज्यमाचन्द्रार्कं ममाभवत् ॥' १-२१९-३१ (९५९९)
को हि द्रुपदमासाद्य मित्रं क्षत्तः सबान्धवम् ।
न बुभूषेद्भवेनार्थी गतश्रीरपि पार्थिवः ॥ १-२१९-३२ (९६००)
वैशंपायन उवाच। १-२१९-३३क्ष् (१२१७)
तं तथा भाषमाणं तु विदुरः प्रत्यभाषत ।
नित्यं भवतु ते बुद्धिरेषा राजञ्छतं समाः ।

इत्युक्त्वा प्रययौ राजन्विदुरः स्वं निवेशनम् ॥ १-२१९-३३ (९६०१)
ततो दुर्योधनश्चापि राधेयश्च विशांपते ।
धृतराष्ट्रमुपागम्य वचोऽब्रूतामिदं तदा ॥ १-२१९-३४ (९६०२)
सन्निधौ विदुरस्य त्वां दोषं वक्तुं न शक्नुवः ।
विविक्तमिति वक्ष्यावः किं तवेदं चिकीर्षितम् ॥ १-२१९-३५ (९६०३)
सपत्नवृद्धिं यत्तात मन्यसे वृद्धिमात्मनः ।
अभिष्टौषि च यत्क्षत्तुः समीपे द्विपदांवर ॥ १-२१९-३६ (९६०४)
अन्यस्मिन्नृप कर्तव्ये त्वमन्यत्कुरुषेऽनघ ।
तेषां बलविघातो हि कर्तव्यस्तात नित्यशः ॥ १-२१९-३७ (९६०५)
ते वयं प्राप्तकालस्य चिकीर्षां मन्त्रयामहे ।
यथा नो न ग्रसेयुस्ते सपुत्रबलबान्धवान् ॥ ॥ १-२१९-३८ (९६०६)

इति श्रीमन्महाभारते आदिपर्वमि विदुरागमनराज्यलाभपर्वणि
एकोनविंशत्यधिकद्विशततमोऽध्यायः ॥ २१९ ॥
Mahabharata - Adi Parva - Chapter Footnotes

१-२१९-३२ गतश्रीर्नष्टश्रीः को भवेन ऐश्वर्येणार्थी न
बुभूषेद्भवितुमिच्छेदपि तु सर्वोपीच्छेत् ॥
एकोनविंशत्यधिकद्विशततमोऽध्यायः ॥
२१९ ॥

---

अध्यय२२०
॥ श्रीः ॥
१.२२०. अध्यायः २२०

Mahabharata - Adi Parva - Chapter Topics
धृतराष्ट्रदुर्योधनसंवादः ॥ १ ॥

Mahabharata - Adi Parva - Chapter Text

१-२२०-० (९६०७)
ग्वैशंपायन उवाच। १-२२०-०क्ष् (१२१८)
दुर्योधनेनैवमुक्तः कर्णेन च विशांपते ।
पुत्रं च सूतपुत्रं च धृतराष्ट्रोऽब्रवीदिदम् ॥ ' १-२२०-१ (९६०८)
धृतराष्ट्र उवाच। १-२२०-२क्ष् (१२१९)
अहमप्येवमेवैतच्चिकीर्षामि यथा युवाम् ।
विवेक्तुं नाहमिच्छामि त्वाकारं विदुरं प्रति ॥ १-२२०-२ (९६०९)

ततस्तेषां गुणानेव कीर्तयामि विशेषतः ।
नावबुध्येत विदुरो ममाभिप्रायमिङ्गितैः ॥१-२२०-३ (९६१०)
यच्च त्वं मन्यसे प्राप्तं तद्ब्रवीहि सुयोधन ।
राधेय मन्यसे यच्च प्राप्तकालं वदाशु मे ॥१-२२०-४ (९६११)
दुर्योधन उवाच।१-२२०-५क्ष् (१२२०)
अद्य तान्कुशलैर्विप्रैः सुगुप्तैराप्तकारिभिः ।
कुन्तीपुत्रान्भेदयामो माद्रीपुत्रौ च पाण्डवौ ॥१-२२०-५ (९६१२)
अथवा द्रुपदो राजा महद्भिर्वित्तसंचयैः ।
पुत्राश्चास्य प्रलोभ्यन्ताममात्याश्चैव सर्वशः ॥१-२२०-६ (९६१३)
परित्यजेद्यथा राजा कुन्तीपुत्रं युधिष्ठिरम् ।
अथ तत्रैव वा तेषां निवासं रोचयन्तु ते ॥१-२२०-७ (९६१४)
इहैषां दोषवद्वासं वर्णयन्तु पृथक्पृथक् ।
ते भिद्यमानास्तत्रैव मनः कुर्वन्तु पाण्डवाः ॥१-२२०-८ (९६१५)
अथवा कुशळाः केचिदुपायनिपुणा नराः ।
इतरेतरतः पार्थान्भेदयन्त्वनुरागतः ॥१-२२०-९ (९६१६)
व्युत्थापयन्तु वा कृष्णां बहुत्वात्सुकरं हि तत् ।
अथवा पाण्डवांस्तस्यां भेदयन्तु ततश्च ताम् ॥१-२२०-१० (९६१७)
भीमसेनस्य वा राजन्नुपायकुशलैर्नरैः ।
मृत्युर्विधीयतां छन्नैः स हि तेषां बलाधिकः ॥१-२२०-११ (९६१८)
तमाश्रित्य हि कौन्तेयः पुरा चास्मान्न मन्यते ।
सहि तीक्ष्णश्च शूरश्च तेषां चैव परायणम् ॥१-२२०-१२ (९६१९)
तस्मिंस्त्वभिहते राजन्हतोत्साहा हतौजसः ।
यतिष्यन्ते न राज्याय स हि तेषां व्यपाश्रयः ॥१-२२०-१३ (९६२०)
अजेयो ह्यर्जुनः सङ्ख्ये पृष्ठगोपे वृकोदरे ।
तमृते फाल्गुनो युद्धे राधेयस्य न पादभाक् ॥१-२२०-१४ (९६२१)
ते जानानास्तु दौर्बल्यं भीमसेनमृते महत् ।
अस्मान्बलवतो ज्ञात्वा न यतिष्यन्ति दुर्बलाः ॥१-२२०-१५ (९६२२)
इहागतेषु वा तेषु निदेशवशवर्तिषु ।
प्रवर्तिष्यामहे राजन्यथाशास्त्रं निबर्हणम् ॥१-२२०-१६ (९६२३)
ग्दर्पं वा वदतां तेषां केचिदत्र मनस्विनः ।
द्रुपदस्यात्मजा राजन्प्रभिद्यन्ते ततः परैः ॥' १-२२०-१७ (९६२४)
अथवा दर्शनीयाभिः प्रमदाभिर्विलोभ्यताम् ।
एकैकस्तत्र कौन्तेयस्ततः कृष्णा विरज्यताम् ॥१-२२०-१८ (९६२५)
प्रेष्यतां चैव राधेयस्तेषामागमनाय वै ।
तैस्तैः प्रकारैः सन्नीय पात्यन्तामाप्तकारिभिः ॥१-२२०-१९ (९६२६)
एतेषामप्युपायानां यस्ते निर्दोषवान्मतः ।

तस्य यप्रोगमातिष्ठ पुरा कालोऽतिवर्तते ॥ १-२२०-२० (९६२७)
यावद्धयकृतविश्वासा द्रुपदे पार्थिवर्षभे ।
तावदेव हि ते शक्या न शक्यास्तु ततः परम् ॥ १-२२०-२१ (९६२८)
एषा मम मतिस्तात निग्रहाय प्रवर्तते ।
साध्वी वा यदि वाऽसाध्वी किं वा राधेय मन्यसे ॥ ॥ १-२२०-२२ (९६२९)

इति श्रीमन्महाभारते आदिपर्वणि विदुरागमनराज्यलाभपर्वणि
विंशत्यधिकद्विशततमोऽध्यायः ॥ २२० ॥
Mahabharata - Adi Parva - Chapter Footnotes

१-२२०-३ इङ्गितैश्चेष्टितैः ॥
विंशत्यधिकद्विशततमोऽध्यायः ॥
२२० ॥

---

अध्यय२२१
॥ श्रीः ॥
१.२२१. अध्यायः २२१

Mahabharata - Adi Parva - Chapter Topics
दुर्योधनं प्रति कर्णेनोक्तं श्रुतवतो धृतराष्ट्रस्य भीष्मादिभिः
सह मन्त्रणम् ॥ १ ॥

Mahabharata - Adi Parva - Chapter Text

१-२२१-० (९६३०)
कर्ण उवाच। १-२२१-०क्ष् (१२२१)
दुर्योधन तव प्रज्ञा न सम्यगिति मे मतिः ।
न ह्युपायेन ते शक्याः पाण्डवाः कुरुवर्धन ॥ १-२२१-१ (९६३१)
पूर्वमेव हि ते सूक्ष्मैरुपायैर्यतितास्त्वया ।
निग्रहीतुं तदा वीर न चैव शकितास्त्वया ॥ १-२२१-२ (९६३२)
इहैव वर्तमानास्ते समीपे तव पार्थिव ।
अजातपक्षाः शिशवः शकिता नैव बाधितुम् ॥ १-२२१-३ (९६३३)
जातपक्षा विदेशस्था विवृद्धाः सर्वशोऽद्य ते ।
नोपायसाध्याः कौन्तेया ममैषा मतिरच्युता ॥ १-२२१-४ (९६३४)
न च ते व्यसनैर्योक्तुं शक्या दिष्टकृतेन च ।
शकिताश्चेप्सवश्चैव पितृपैतामहं पदम् ॥ १-२२१-५ (९६३५)
परस्परेण भेदश्च नाधातुं तेषु शक्यते ।

एकस्यां ये रताः पत्न्यां न भिद्यन्ते परस्परम् ॥ १-२२१-६ (९६३६)
न चापि कृष्णा शक्येत तेभ्यो भेदयितुं परैः ।
परिद्यूनान्वृतवती किमुताद्य मृजावतः ॥ १-२२१-७ (९६३७)
ईप्सितश्च गुणः स्त्रीणामेकस्या बहुभर्तृता ।
तं च प्राप्तवती कृष्णा न सा भेदयितुं क्षमा ॥ १-२२१-८ (९६३८)
आर्यव्रतश्च पाञ्चाल्यो न स राजा धनप्रियः ।
न संत्यक्ष्यति कौन्तेयान्राज्यदानैरपि ध्रुवम् ॥ १-२२१-९ (९६३९)
तथाऽस्य पुत्रो गुणवाननुरक्तश्च पाण्डवान् ।
तस्मान्नोपायसाध्यांस्तानहं मन्ये कथंचन ॥ १-२२१-१० (९६४०)
इदं त्वद्य क्षमं कर्तुमस्माकं पुरुषर्षभ ।
यावन्न कृतमूलास्ते पाण्डवेया विशांपते ॥ १-२२१-११ (९६४१)
तावत्प्रहरणीयास्ते तत्तुभ्यं तात रोचताम् ।
अस्मत्पक्षो महान्यावद्यावत्पाञ्चालको लघुः ।
तावत्प्रहरणं तेषां क्रियतां मा विचारय ॥ १-२२१-१२ (९६४२)
वाहनानि प्रभूतानि मित्राणि च कुलानि च ।
यावन्न तेषां गान्धारे तावद्विक्रम पार्थिव ॥ १-२२१-१३ (९६४३)
यावच्च राजा पाञ्चाल्यो नोद्यमे कुरुते मनः ।
सह पुत्रैर्महावीर्यैस्तावद्विक्रम पार्थिव ॥ १-२२१-१४ (९६४४)
यावन्नायाति वार्ष्णेयः कर्षन्यादववाहिनीम् ।
राज्यार्थे पाण्डवेयानां पाञ्चाल्यसदनं प्रति ॥ १-२२१-१५ (९६४५)
वसूनि विविधान्भोगान्राज्यमेव च केवलम् ।
नात्याज्यमस्ति कृष्णस्य पाण्डवार्थे कथंचन ॥ १-२२१-१६ (९६४६)
विक्रमेण मही प्राप्ता भरतेन महात्मना ।
विक्रमेण च लोकांस्त्रीञ्जितवान्पाकशासनः ॥ १-२२१-१७ (९६४७)
विक्रमं च प्रशंसन्ति क्षत्रियस्य विशांपते ।
स्वको हि धर्मः शूराणां विक्रमः पार्थिवर्षभ ॥ १-२२१-१८ (९६४८)
ते बलेन वयं राजन्महता चतुरङ्गिणा ।
प्रमथ्य द्रुपदं शीघ्रमानयामेह पाण्डवान् ॥ १-२२१-१९ (९६४९)
न हि साम्ना न दानेन न भदेन च पाण्डवाः ।
शक्याः साधयितुं तस्माद्विक्रमेणैव ताञ्जहि ॥ १-२२१-२० (९६५०)
तान्विक्रमेण जित्वेमामखिलां भुङ्क्ष्व मेदिनीम् ।
अतो नान्यं प्रपश्यामि कार्योपायं जनाधिप ॥ १-२२१-२१ (९६५१)
वैशंपायन उवाच। १-२२१-२२क्ष् (१२२२)
श्रुत्वा तु राधेयवचो धृतराष्ट्रः प्रतापवान् ।
अभिपूज्य ततः पश्चादिदं वचनमब्रवीत् ॥ १-२२१-२२ (९६५२)
उपपन्नं महाप्राज्ञे कृतास्त्रे सूतनन्दने ।

त्वयि विक्रमसंपन्नमिदं वचनमीदृशम् ॥१-२२१-२३ (९६५३)
भूय एव तु भीष्मश्च द्रोणो विदुर एव च ।
युवां च कुरुतं बुद्धिं भवेद्या नः सुखोदया ॥१-२२१-२४ (९६५४)
तत आनाय्य तान्सर्वान्मन्त्रिणः सुमहायशाः ।
धृतराष्ट्रो महाराज मन्त्रयामास वै तदा ॥ ॥१-२२१-२५ (९६५५)

इति श्रीमन्महाभारते आदिपर्वणि विदुरागमनराज्यलाभपर्वणि
एकविंशत्यधिकद्विशततमोऽध्यायः ॥ २२१ ॥
Mahabharata - Adi Parva - Chapter Footnotes

१-२२१-७ परिद्यूनान् शोच्यान् ।मृजावतः सुवेषान् ॥
एकविंशत्यधिकद्विशततमोऽध्यायः ॥
२२१ ॥

---

अध्यय२२२
॥ श्रीः ॥
१.२२२. अध्यायः २२२

Mahabharata - Adi Parva - Chapter Topics
भीष्मेण दुर्योधनादिसमीपे पाण्डवेक्ष्योऽर्धराज्यं दातव्यमिति
स्वाबिप्रायकथनम् ॥१ ॥

Mahabharata - Adi Parva - Chapter Text

१-२२२-० (९६५६)
भीष्म उवाच।१-२२२-०क्ष् (१२२३)
न रोचते विग्रहो मे पाण्डुपुत्रैः कथंचन ।
यथैव धृतराष्ट्रो मे तथा पाण्डुरसंशयम् ॥१-२२२-१ (९६५७)
गान्धार्याश्च यथा पुत्रास्तथा कुन्तीसुता मम ।
यथा च मम ते रक्ष्या धृतराष्ट्र तथा तव ॥१-२२२-२ (९६५८)
यथा च मम राज्ञश्च तथा दुर्योधनस्य ते ।
तथा कुरूणां सर्वेषामन्येषामपि पार्थिव ॥१-२२२-३ (९६५९)
एवं गते विग्रहं तैर्न रोचे
सन्धाय वीरैर्दीयतामर्धभूमिः ।
तेषामपीदं प्रपितामहानां
राज्यं पितुश्चैव कुरूत्तमानाम् ॥ १-२२२-४ (९६६०)
दुर्योधन यथा जार्यं त्वमिदं तात पश्यसि ।

मम पैतृकमित्येवं तेऽपि पश्यन्ति पाण्डवाः ॥१-२२२-५ (९६६१)
यदि राज्यं न ते प्राप्ताः पाण्डवेया यशस्विनः ।
कुत एव तवापीदं भारतस्यापि कस्यचित् ॥१-२२२-६ (९६६२)
अधर्मेण च राज्यं त्वं प्राप्तवान्भरतर्षभ ।
तेऽपि राज्यमनुप्राप्ताः पूर्वमेवेति मे मतिः ॥१-२२२-७ (९६६३)
मधुरेणैव राज्यस्य तेषामर्धं प्रदीयताम् ।
एतद्धि पुरुषव्याघ्र हितं सर्वजनस्य च ॥१-२२२-८ (९६६४)
अतोऽन्यथा चेत्क्रियते न हितं नो भविष्यति ।
तवाप्यकीर्तिः सकला भविष्यति न संशयः ॥१-२२२-९ (९६६५)
कीर्तिरक्षणमातिष्ठ कीर्तिर्हि परमं बलम् ।
नष्टकीर्तेर्मनुष्यस्य जीवितं ह्यफळं स्मृतम् ॥१-२२२-१० (९६६६)
यावत्कीर्तिर्मनुष्यस्य न प्रणश्यति कौरव ।
तावज्जीवति गान्धरे नष्टकीर्तिस्तु नश्यति ॥१-२२२-११ (९६६७)
तमिमं समुपातिष्ठ धर्मं कुरुकुलोचितम् ।
अनुरूपं महाबाहो पूर्वेषामात्मनः कुरु ॥१-२२२-१२ (९६६८)
दिष्ट्या ध्रियन्ते पार्था हि दिष्ट्या जीवति सा पृथा ।
दिष्ट्या पुरोचनः पापो न सकामोऽत्ययं गतः ॥१-२२२-१३ (९६६९)
यदाप्रभृति दग्धास्ते कुन्तिभोजसुतासुताः ।
तदाप्रभृति गान्धारे न शक्नोम्यभिवीक्षितुम् ॥१-२२२-१४ (९६७०)
लोके प्राणभृतां किंचिच्छ्रुत्वा कुन्तीं तथागताम् ।
न चापि दोषेण तथा लोको मन्येत्पुरोचनम् ।
यथा त्वां पुरुषव्याघ्र लोको दोषेण गच्छति ॥ १-२२२-१५ (९६७१)
तदिदं जीवितं तेषां तव किल्बिषनाशनम् ।
संमन्तव्यं महाराज पाण्डवानां च दर्शनम् ॥१-२२२-१६ (९६७२)
न चापि तेषां वीराणां जीवतां कुरुनन्दन ।
पित्र्योंशः शक्य आदातुमपि वज्रभृता स्वयं ॥१-२२२-१७ (९६७३)
ते सर्वेऽवस्थिता धर्मे सर्वे चैवैकचेतसः ।
अधर्मेण निरस्ताश्च तुल्ये राज्ये विशेषतः ॥१-२२२-१८ (९६७४)
यदि धर्मस्त्वया कार्यो यदि कार्यं प्रियं च मे ।
क्षेमं च यदि कर्तव्यं तेषामर्धं प्रदीयताम् ॥ ॥१-२२२-१९ (९६७५)

इति श्रीमन्महाभारते आदिपर्वणि विदुरागमनराज्यलाभपर्वणि
द्वाविंशत्यधिकद्विशततमोऽध्यायः ॥ २२२ ॥

Mahabharata - Adi Parva - Chapter Footnotes

१-२२२-८ मधुरेण प्रीत्या ॥

१-२२२-१३ भ्रियन्ते जीवन्ति ॥
१-२२२-१५ गच्छति अवगच्छति ॥
द्वाविंशत्यधिकद्विशततमोऽध्यायः ॥
२२२ ॥

---

अध्यय२२३
॥ श्रीः ॥
१.२२३. अध्यायः २२३

Mahabharata - Adi Parva - Chapter Topics
पाण्डवाः संविभाज्या इति द्रोणवचनम् ॥ १ ॥
तद्विरोधितया कर्णेन अम्बुवीचवृत्तान्तकथनम् ॥ २ ॥
मदुक्तं न क्रियते चेत्कुरवो विनङ्क्ष्यन्तीति द्रोणेनोक्तिः ॥ ३ ॥

Mahabharata - Adi Parva - Chapter Text

१-२२३-० (९६७६)
द्रोण उवाच। १-२२३-०क्ष् (१२२४)
मन्त्राय समुपानीतैर्धृतराष्ट्र हितैर्नृप ।
धर्म्यमर्थ्यं यशस्यं च वाच्यमित्यनुशुश्रुम ॥ १-२२३-१ (९६७७)
ममाप्येषा मतिस्तात या भीष्मस्य महात्मनः ।
संविभज्यास्तु कौन्तेया धर्म एष सनातनः ॥ १-२२३-२ (९६७८)
प्रेष्यतां द्रुपदायाशु नरः कश्चित्प्रियंवदः ।
बहुलं रत्नमादाय तेषामर्थाय भारत ॥ १-२२३-३ (९६७९)
मिथः कृत्यं च तस्मै स आदाय वसु गच्छतु ।
वृद्धिं च परमां ब्रूयात्तत्संयोगोद्भवां तथा ॥ १-२२३-४ (९६८०)
संप्रीयमाणं त्वां ब्रूयाद्राजन्दुर्योधनं तथा ।
असकृद्द्रुपदे चैव धृष्टद्युम्ने च भारत ॥ १-२२३-५ (९६८१)
उचितत्वं प्रियत्वं च योगस्यापि च वर्णयेत् ।
पुनःपुनश्च कौन्येयान्माद्रीपुत्रौ च सान्त्वयन् ॥ १-२२३-६ (९६८२)
हिरण्मयानि शुभ्राणि बहून्याभरणानि च ।
वचनात्तव राजेन्द्र द्रौपद्याः संप्रयच्छतु ॥ १-२२३-७ (९६८३)
तथा द्रुपदपुत्राणां सर्वेषां भरतर्षभ ।
पाण्डवानां च सर्वेषां कुन्त्या युक्तानि यानि च ॥ १-२२३-८ (९६८४)
ग्दत्त्वा तानि महार्हाणि पाण्डवान्संप्रहर्षय।'
एवं सान्त्वसमायुक्तं द्रुपदं पाण्डवैः सह ।
उक्त्वा सोऽनन्तरं ब्रूयात्तेषामागमनं प्रति ॥ १-२२३-९ (९६८५)

अनुज्ञातेषु वीरेषु बलं गच्छतु शोभनम् ।
दुःशासनो विकर्णश्चाप्यानेतुं पाण्डवानिह ॥१-२२३-१० (९६८६)
ततस्ते पाण्डवाः श्रेष्ठाः पूज्यमानाः सदा त्वया ।
प्रकृतीनामनुमते पदे स्थास्यन्ति पैतृके ॥१-२२३-११ (९६८७)
एतत्तव महाराज तेषु पुत्रेषु चैव हि ।
वृत्तमौपयिकं मन्ये भीष्मेण सह भारत ॥१-२२३-१२ (९६८८)
कर्ण उवाच।१-२२३-१३क्ष् (१२२५)
योजितावर्थमानाभ्यां सर्वकार्येष्वनन्तरौ ।
न मन्त्रयेतां त्वच्छ्रेयः किमद्भुततरं ततः ॥१-२२३-१३ (९६८९)
दुष्टेन मनसा यो वै प्रच्छन्नेनान्तरात्मना ।
ब्रूयान्नि)श्रेयसं नाम कथं कुर्यात्सतां मतम् ॥१-२२३-१४ (९६९०)
न मित्राण्यर्थकृच्छ्रेषु श्रेयसे चेतराय वा ।
विधिपूर्वं हि सर्वस्य दुःखं वा यदि वा सुखम् ॥१-२२३-१५ (९६९१)
कृतप्रज्ञोऽकृतप्रज्ञो बालो वृद्धश्च मानवः ।
ससहायोऽसहायश्च सर्वं सर्वत्र विन्दति ॥१-२२३-१६ (९६९२)
श्रूयते हि पुरा कश्चिदम्बुवीच इतीश्वरः ।
आसीद्राजगृहे राजा मागधानां महीक्षिताम् ॥१-२२३-१७ (९६९३)
स हीनः करणैः सर्वैरुच्छ्वासपरमो नृपः ।
अमात्यसंस्थः सर्वेषु कार्येष्वेवाभवत्तदा ॥१-२२३-१८ (९६९४)
तस्यामात्यो महाकर्णिर्बभूवैकेश्वरस्तदा ।
स लब्धबलमात्मानं मन्यमानोऽवमन्यते ॥१-२२३-१९ (९६९५)
स राज्ञ उपभोग्यानि स्त्रियो रत्नधनानि च ।
आददे सर्वशो मूढ ऐश्वर्यं च स्वयं तदा ॥१-२२३-२० (९६९६)
तदादाय च लुब्धस्य लोभाल्लोभोऽभ्यवर्धत ।
तथाहि सर्वमादाय राज्यमस्य जिहीर्षति ॥१-२२३-२१ (९६९७)
हीनस्य करणैः सर्वैरच्छ्वासपरमस्य च ।
यतमानोऽपि तद्राज्यं न शशाकेति नः श्रुतं ॥१-२२३-२२ (९६९८)
किमन्यद्विहिता नूनं तस्य सा पुरुषेन्द्रता ।
यदि ते विहितं राज्यं भविष्यति विशांपते ॥१-२२३-२३ (९६९९)
मिषतः सर्वलोकस्य स्थास्यते त्वयि तद्ध्रुवम् ।
अतोऽन्यथा चेद्विहितं यतमानो न लप्स्यसे ॥१-२२३-२४ (९७००)
एवं विद्वन्नुपादत्स्व मन्त्रिणां साध्वसाधुताम् ।
दुष्टानां चैव बोद्धव्यमदुष्टानां च भाषितम् ॥१-२२३-२५ (९७०१)
द्रोण उवाच।१-२२३-२६क्ष् (१२२६)
विद्म ते भावदोषेण यदर्थमिदमुच्यते ।
दुष्ट पाण्डवहेतोस्त्वं दोषमाख्यापयस्युत ॥१-२२३-२६ (९७०२)

हितं तु परमं कर्ण ब्रवीमि कुलवर्धनम् ।
अथ त्वं मन्यसे दुष्टं ब्रूहि यत्परमं हितम् ॥१-२२३-२७ (९७०३)
अतोऽन्यथा चेत्क्रियते यद्ब्रवीमि परं हितम् ।
कुरवो वै विनङ्क्ष्यन्ति नचिरेणैव मे मतिः ॥ ॥१-२२३-२८ (९७०४)

इति श्रीमन्महाभारते आदिपर्वणि विदुरागमनराज्यलाभपर्वणि
त्रयोविंशत्यधिकद्विशततमोऽध्यायः ॥ २२३ ॥
Mahabharata - Adi Parva - Chapter Footnotes

१-२२३-४ मिथः कृत्यं सांबन्धिकं
वरपक्षीयैर्वध्वलंकारादिकन्यापक्षीयैर्वरालंकारादि ॥
१-२२३-१५ विधिपूर्वं अधृष्टकारणकम् ॥
१-२२३-१७ अम्बुवीर इति श्रुतः इति घ । पाठः। विनिन्द इति वितश्रुः
इति ङ पाठः। ईश्वरः समर्थः। राजगृहे तन्नामके नगरे ॥
त्रयोविंशत्यधिकद्विशततमोऽध्यायः ॥
२२३ ॥

---

अध्यय२२४
॥ श्रीः ॥
१.२२४. अध्यायः २२४

Mahabharata - Adi Parva - Chapter Topics
भीष्मद्रोणाभ्यामुक्तमेवावश्यं करणीयं पाण्डवा जेतुं न शक्याः
दुर्योधनादीनां वचनं मा कुरु इति धृतराष्ट्रंप्रति विदुरस्योक्तिः
॥ १ ॥

Mahabharata - Adi Parva - Chapter Text

१-२२४-० (९७०५)
विदुर उवाच। १-२२४-०क्ष् (१२२७)
राजन्निःसंशयं श्रेयो वाच्यस्त्वमसि बान्धवैः ।
न त्वशुश्रूषमाणे वै वाक्यं संप्रति तिष्ठति ॥१-२२४-१ (९७०६)
प्रियं हितं च तद्वाक्यमुक्तवान्कुरुसत्तमः ।
भीष्मः शान्तनवो राजन्प्रतिगृह्णासि तन्न च ॥१-२२४-२ (९७०७)
तथा द्रोणेन बहुधा भाषितं हितमुत्तमम् ।
तच्च राधासुतः कर्णो मन्यते न हितं तव ॥१-२२४-३ (९७०८)
चिन्तयंश्च न पश्यामि राजंस्तव सुहृत्तमम् ।

आभ्यां पुरुषसिंहाभ्यां यो वा स्यात्प्रज्ञयाधिकः ॥१-२२४-४ (९७०९)
इमौ हि वृद्धौ वयसा प्रज्ञया च श्रुतेन च ।
समौ च त्वयि राजेन्त्र तथा पाण्डुसुतेषु च ॥१-२२४-५ (९७१०)
धर्मे चानवरौ राजन्सत्यतायां च भारत ।
रामाद्दाशरथेश्चैव गयाच्चैव न संशयः ॥१-२२४-६ (९७११)
न चोक्तवन्तावश्रेयः पुरस्तादपि किंचन ।
न चाप्यपकृतं किंचिदनयोर्लक्ष्यते त्वयि ॥१-२२४-७ (९७१२)
तावुभौ पुरुषव्याघ्रावनागसि नृपे त्वयि ।
न मन्त्रयेतां त्वच्छ्रेयः कथं सत्यपराक्रमौ ॥१-२२४-८ (९७१३)
प्रज्ञावन्तौ नरश्रेष्ठावस्मिँल्लोके नराधिप ।
त्वन्निमित्तमतो नेमौ किंचिज्जिह्मं वदिष्यतः ॥१-२२४-९ (९७१४)
इति मे नैष्ठिकी बुद्धिर्वर्तते कुरुनन्दन ।
न चार्थहेतोर्धर्मज्ञौ वक्ष्यतः पक्षसंश्रितम् ॥१-२२४-१० (९७१५)
एतद्धि परमं श्रेयो मन्येऽहं तव भारत ।
दुर्योधनप्रभृतयः पुत्रा राजन्यथा तव ॥१-२२४-११ (९७१६)
तथैव पाण्डवेयास्ते पुत्रा राजन्न संशयः ।
तेषु चेदहितं किंचिन्मन्त्रयेयुरतद्विदः ॥१-२२४-१२ (९७१७)
मन्त्रिणस्ते न च श्रेयः प्रपश्यन्ति विशेषतः ।
अथ ते हृदये राजन्विशेषः स्वेषु वर्तते ।
अन्तरस्थं विवृण्वानाः श्रेयः कुर्युर्न ते ध्रुवम् ॥ १-२२४-१३ (९७१८)
एतदर्थमिमौ राजन्महात्मानौ महाद्युती ।
नोचतुर्विवृतं किंचिन्न ह्येष तव निश्चयः ॥१-२२४-१४ (९७१९)
यच्चाप्यशक्यतां तेषामाहतुः पुरुषर्षभौ ।
तत्तथा पुरुषव्याघ्र तव तद्भद्रमस्तु ते ॥१-२२४-१५ (९७२०)
कथं हि पाण्डवः श्रीमान्सव्यसाची धनञ्जयः ।
शक्यो विजेतुं संग्रामे राजन्मघवतापि हि ॥१-२२४-१६ (९७२१)
ग्भीमसेनो महाबाहुर्नागायुतबलो महान् ।
राक्षसानां भयकरो बाहुशाली महाबलः ॥१-२२४-१७ (९७२२)
हिडिम्बो निहतो येन बाहुयुद्धेन भारत ।
यो रावणसमो युद्धे तथा च बकराक्षसः ॥१-२२४-१८ (९७२३)
स युध्यमानो राजेन्द्र भीमो भीमपराक्रमः।'
कथं स्म युधि शक्येत विजेतुममरैरपि ॥ १-२२४-१९ (९७२४)
तथैव कृतिनौ युद्धे यमौ यमसुताविव ।
कथं विजेतुं शक्यौ तौ रणे जीवितुमिच्छता ॥१-२२४-२० (९७२५)
यस्मिन्धृतिरनुक्रोशः क्षमा सत्यं पराक्रमः ।
नित्यानि पाण्डवे ज्येष्ठे स जीयेत रणे कथम् ॥१-२२४-२१ (९७२६)

येषां पक्षधरो रामो येषां मन्त्री जनार्दनः ।
किं नु तैरजितं सङ्ख्ये येषां पक्षे च सात्यकिः ॥१-२२४-२२ (९७२७)
द्रुपदः श्वशुरो येषां येषां स्यालाश्च पार्षताः ।
धृष्टद्युम्नमुखा वीरा भ्रातरो द्रुपदात्मजाः ॥१-२२४-२३ (९७२८)
ग्चैद्यश्च येषां भ्राता च शिशुपालो महारथः।'
सोऽशक्यतां च विज्ञाय तेषामग्रे च भारत ।
दायाद्यतां च धर्मेण सम्यक्तेषु समाचर ॥ १-२२४-२४ (९७२९)
इदं निर्दिष्टमयशः पुरोचनकृतं महत् ।
तेषामनुग्रहेणाद्य राजन्प्रक्षालयात्मनः ॥१-२२४-२५ (९७३०)
तेषामनुग्रहश्चायं सर्वेषां चैव नः कुले ।
जीवितं च परं श्रेयः क्षत्रस्य च विवर्धनम् ॥१-२२४-२६ (९७३१)
द्रुपदोऽपि महान्राजा कृतवैरश्च नः पुरा ।
तस्य संग्रहणं राजन्स्वपक्षस्य विवर्धनम् ॥१-२२४-२७ (९७३२)
बलवन्तश्च दाशार्हा बहवश्च विशांपते ।
यतः कृष्णस्ततः सर्वे यतः कृष्णस्ततो जयः ॥१-२२४-२८ (९७३३)
यच्च साम्नैव शक्येत कार्यं साधयितुं नृप ।
को दैवशप्तस्तत्कार्यं विग्रहेण समाचरेत् ॥१-२२४-२९ (९७३४)
श्रुत्वा च जीवतः पार्थान्पौरजानपदा जनाः ।
बलवद्दर्शने हृष्टास्तेषां राजन्प्रियं कुरु ॥१-२२४-३० (९७३५)
दुर्योधनश्च कर्णश्च शकुनिश्चापि सौबलः ।
अधर्मयुक्ता दुष्प्रज्ञा बाला मैषां वचः कृथाः ॥१-२२४-३१ (९७३६)
उक्तमेतत्पुरा राजन्मया गुणवतस्तव ।
दुर्योधनापराधेन प्रजेयं वै विनङ्क्ष्यति ॥ ॥१-२२४-३२ (९७३७)

इति श्रीमन्महाभारते आदिपर्वणि विदुरागमनराज्यलाभपर्वणि
चतुर्विंशत्यधिकद्विशततमोऽध्यायः ॥२२४ ॥
Mahabharata - Adi Parva - Chapter Footnotes

१-२२४-६ अनवरौ श्रेष्ठौ ॥
१-२२४-७ अनयोः आभ्याम् ॥
१-२२४-२४ दायाद्यतां पितृधनभोजनार्हताम् ॥
चतुर्विंशत्यधिकद्विशततमोऽध्यायः ॥
२२४ ॥

---

अध्यय२२५
॥ श्रीः ॥
१.२२५. अध्यायः २२५

Mahabharata - Adi Parva - Chapter Topics
धृतराष्ट्राज्ञया विदुरस्य द्रुपदनगरगमनम् ॥ १ ॥
तत्र श्रीकृष्णादीनां समीपे धृतराष्ट्रसन्देशकथनम् ॥ २ ॥

Mahabharata - Adi Parva - Chapter Text

१-२२५-० (९७३८)
धृतराष्ट्र उवाच। १-२२५-०क्ष् (१२२८)
भीष्मः शान्तनवो विद्वान्द्रोणश्च भगवानृषिः ।
ग्हितं च परमं सत्यमब्रूतां वाक्यमुत्तमम्।'
हितं च परमं वाक्यं त्वं च सत्यं ब्रवीषि माम् ॥ १-२२५-१ (९७३९)
यथैव पाण्डोस्ते वीराः कुन्तीपुत्रा महारथाः ।
तथैव धर्मतः सर्वे मम पुत्रा न संशयः ॥ १-२२५-२ (९७४०)
यथैव मम पुत्राणामिदं राज्यं विधीयते ।
तथैव पाण्डुपुत्राणामिदं राज्यं न संशयः ॥ १-२२५-३ (९७४१)
क्षत्तरानय गच्छैतान्सह मात्रा सुसत्कृतान् ।
तया च देवरूपिण्या कृष्णया सह भारत ॥ १-२२५-४ (९७४२)
दिष्ट्या जीवन्ति ते पार्था दिष्ट्या जीवति सा पृथा ।
दिष्ट्या द्रुपदकन्यां च लब्धवन्तो महारथाः ॥ १-२२५-५ (९७४३)
दिष्ट्या वर्धामहे सर्वे दिष्ट्या शान्तः पुरोचनः ।
दिष्ट्या मम परं दुःखमपनीतं महाद्युते ॥ १-२२५-६ (९७४४)
ग्त्वमेव गत्वा विदुर तानिहानय मा चिरम्। १-२२५-७ (९७४५)
वैशंपायन उवाच ।
एवमुक्तस्ततः क्षत्ता रथमारुह्य शीघ्रगम् ।
आगात्कतिपयाहोभिः पाञ्चालान्राजधर्मवित्'॥ १-२२५-७क्ष् (१२२९)
ततो जगाम विदुरो धृतराष्ट्रस्य शासनात् ।
सकाशं यज्ञसेनस्य पाण्डवानां च भारत ॥ १-२२५-८ (९७४६)
समुपादाय रत्नानि वसूनि विविधानि च ।
द्रौपद्याः पाण्डवानां च यज्ञसेनस्य चैव ह ॥ १-२२५-९ (९७४७)
तत्र गत्वा स धर्मज्ञः सर्वशास्त्रविशारदः ।
द्रुपदं न्यायतो राजन्संयुक्तमुपतस्थिवान् ॥ १-२२५-१० (९७४८)
स चापि प्रतिजग्राह धर्मेण विदुरं ततः ।
चक्रतुश्च यथान्यायं कुशलप्रश्नसंविदम् ॥ १-२२५-११ (९७४९)
ददर्श पाण्डवांस्तत्र वासुदेवं च भारत ।
स्नेहात्परिष्वज्य स तान्पप्रच्छानामयं ततः ॥ १-२२५-१२ (९७५०)

तैश्चाप्यमितबुद्धिः स पूजितो हि यथाक्रमम् ।
वचनाद्धृतराष्ट्रस्य स्नेहयुक्तं पुनःपुनः ॥ १-२२५-१३ (९७५१)
पप्रच्छानामयं राजंस्ततस्तान्पाण्डुनन्दनान् ।
प्रददौ चापि रत्नानि विविधानि वसूनि च ॥ १-२२५-१४ (९७५२)
पाण्डवानां च कुन्त्याश्च द्रौपद्याश्च विशांपते ।
द्रुपदस्य च पुत्राणां यथा दत्तानि कौरवैः ॥ १-२२५-१५ (९७५३)
प्रोवाच चामितमतिः प्रश्रितं विनयान्वितः ।
द्रुपदं पाण्डुपुत्राणां सन्निधौ केशवस्य च ॥ १-२२५-१६ (९७५४)
विदुर उवाच। १-२२५-१७क्ष् (१२३०)
राजञ्छृणु सहामात्यः सपुत्रश्च वचो मम ।
धृतराष्ट्रः सपुत्रस्त्वां सहामात्यः सबान्धवः ॥ १-२२५-१७ (९७५५)
अब्रवीत्कुशलं राजन्प्रीयमाणः पुनःपुनः ।
प्रीतिमांस्ते दृढं चापि संबन्धेन नराधिप ॥ १-२२५-१८ (९७५६)
तथा भीष्मः शान्तनवः कौरवैः सह सर्वशः ।
कुशलं त्वां महाप्राज्ञः सर्वतः परिपृच्छति ॥ १-२२५-१९ (९७५७)
भारद्वाजो महाप्राज्ञो द्रोणः प्रियसखस्तव ।
समाश्लेषमुपेत्य त्वां कुशलं परिपृच्छति ॥ १-२२५-२० (९७५८)
धृतराष्ट्रश्च पाञ्चाल्य त्वया संबन्धमेयिवान् ।
कृतार्थं मन्यतेत्मानं तथा सर्वेऽपि कौरवाः ॥ १-२२५-२१ (९७५९)
न तथा राज्यसंप्राप्तिस्तेषां प्रीतिकरी मता ।
यथा संबन्धकं प्राप्य यज्ञसेन त्वया सह ॥ १-२२५-२२ (९७६०)
एतद्विदित्वा तु भवान्प्रस्थापयतु पाण्डवान् ।
द्रष्टुं हि पाण्डुपुत्रांश्च त्वरन्ति कुरवो भृशम् ॥ १-२२५-२३ (९७६१)
विप्रोषिता दीर्घकालमेते चापि नरर्षभाः ।
उत्सुका नगरं द्रष्टुं भविष्यन्ति तथा पृथा ॥ १-२२५-२४ (९७६२)
कृष्णामपि च पाञ्चालीं सर्वाः कुरुवरस्त्रियः ।
द्रष्टुकामाः प्रतीक्षन्ते पुरं च विषयाश्च नः ॥ १-२२५-२५ (९७६३)
स भवान्पाण्डुपुत्राणामाज्ञापयतु मा चिरम् ।
गमनं सहदाराणामेतदत्र मतं मम ॥ १-२२५-२६ (९७६४)
निसृष्टेषु त्वया राजन्पाण्डवेषु महात्मसु ।
ततोऽहं प्रेषयिष्यामि धृतराष्ट्रस्य शीघ्रगान् ।
आगमिष्यन्ति कौन्तेयाः कुन्ती च सह कृष्णया ॥ ॥ १-२२५-२७ (९७६५)

इति श्रीमन्महाभारते आदिपर्वणि विदुरागमनराज्यलाभपर्वणि
पञ्चविंशत्यधिकद्विशततमोऽध्यायः ॥ २२५ ॥

---

अध्यय२२६

॥ श्रीः ॥

१.२२६. अध्यायः २२६

Mahabharata - Adi Parva - Chapter Topics

पाण्डवानां हास्तिनपुरगमनंप्रति श्रीकृष्णद्रुपदयोरश्यनुज्ञा ॥ १ ॥
पृथाविदुरसंवादः ॥ २ ॥
प्रस्थितानां पाण्डवानां द्रुपदेन पारिबर्हदानम् ॥ ३ ॥
प्रत्युद्गमनायागतैः कौरवैः सह पाण्डवानां भीष्मादिवन्दनपुरःसरं गृहप्रवेशः ॥ ४ ॥

Mahabharata - Adi Parva - Chapter Text

१-२२६-० (९७६६)
द्रुपद उवाच। १-२२६-०क्ष् (१२३१)
एवमेतन्महाप्राज्ञ यथात्थ विदुराद्य माम् ।
ममापि परमो हर्षः संबन्धेऽस्मिन्कृते प्रभो ॥ १-२२६-१ (९७६७)
गमनं चापि युक्तं स्याद्दृढमेषां महात्मनाम् ।
न तु तावन्मया युक्तमेतद्वक्तुं स्वयं गिरा ॥ १-२२६-२ (९७६८)
यदा तु मन्यते वीरः कुन्तीपुत्रो युधिष्ठिरः ।
भीमसेनार्जुनौ चैव यमौ च पुरुषर्षभौ ॥ १-२२६-३ (९७६९)
रामकृष्णौ च धर्मज्ञौ तदा गच्छन्तु पाण्डवाः ।
एतौ हि पुरुषव्याघ्रावेषां प्रियहिते रतौ ॥ १-२२६-४ (९७७०)
युधिष्ठिर उवाच। १-२२६-५क्ष् (१२३२)
परवन्तो वयं राजंस्त्वयि सर्वे सहानुगाः ।
यथा वक्ष्यसि नः प्रीत्या तत्करिष्यामहे वयम् ॥ १-२२६-५ (९७७१)
वैशंपायन उवाच। १-२२६-६क्ष् (१२३३)
ततोऽब्रवीद्वासुदेवो गमनं रोचते मम ।
यथा वा मन्यते राजा द्रुपदः सर्वधर्मवित् ॥ १-२२६-६ (९७७२)
द्रुपद उवाच। १-२२६-७क्ष् (१२३४)
यथैव मन्यते वीरो दाशार्हः पुरुषोत्तमः ।
प्राप्तकालं महाबाहुः सा बुद्धिर्निश्चिता मम ॥ १-२२६-७ (९७७३)
यथैव हि महाभागाः कौन्तेया मम सांप्रतम् ।
तथैव वासुदेवस्य पाण्डुपुत्रा न संशयः ॥ १-२२६-८ (९७७४)
न तद्ध्यायति कौन्तेयः पाण्डुपुत्रो युधिष्ठिरः ।
यथैषां पुरुषव्याघ्रः श्रेयो ध्यायति केशवः ॥ १-२२६-९ (९७७५)
वैशंपायन उवाच। १-२२६-१०क्ष् (१२३५)

ग्पृथायास्तु ततो वेश्म प्रविवेश महामतिः ।
पादौ स्पृष्ट्वा पृथायास्तु शिरसा च महीं गतः ॥१-२२६-१० (९७७६)
दृष्ट्वा तु देवरं कुन्ती शुशोच च मुहुर्मुहुः। १-२२६-११ (९७७७)
कुन्त्युवाच ।
वैचित्रवीर्य ते पुत्राः कथंचिज्जीवितास्त्वया ॥ १-२२६-११क्ष् (१२३६)
त्वत्प्रसादाज्जतुगृहे मृताः प्रत्यागतास्तथा ।
कूर्मी चिन्तयते पुत्रान्यत्र वा तत्र संमता ॥१-२२६-१२ (९७७८)
चिन्तया वर्धिताः पुत्रा यथा कुशलिनस्तथा ।
तव पुत्रास्तु जीवन्ति त्वद्भक्त्या भरतर्षभ ॥१-२२६-१३ (९७७९)
यथा परभृतः पुत्रानरिष्टा वर्धयेत्सदा ।
तथैव पुत्रास्तु मम त्वया तात सुरक्षिताः ॥१-२२६-१४ (९७८०)
क्लेशास्तु बहवः प्राप्तास्तथा प्राणान्तिका मया ।
अतः परं न जानामि कर्तव्यं ज्ञातुमर्हसि ॥१-२२६-१५ (९७८१)
विदुर उवाच।१-२२६-१६क्ष् (१२३७)
न विनश्यन्ति लोकेषु तव पुत्रा महाबलाः ।
अचिरेणैव कालेन स्वराज्यस्था भवन्ति ते ॥१-२२६-१६ (९७८२)
बान्धवैः सहिताः सर्वे न शोकं कुरु माधवि। १-२२६-१७ (९७८३)
वैशंपायन उवाच।'
ततस्ते समनुज्ञाता द्रुपदेन महात्मना ॥ १-२२६-१७क्ष् (१२३८)
पाण्डवाश्चैव कृष्णश्च विदुरश्च महामतिः ।
आदाय द्रौपदीं कृष्णां कुन्तीं चैव यशस्विनीम् ॥१-२२६-१८ (९७८४)
सविहारं सुखं जग्मुर्नगरं नागसाह्वयम् ।
ग्सुवर्णकक्ष्याग्रैवेयान्सुवर्णाङ्कुशभूषितान् ॥१-२२६-१९ (९७८५)
जाम्बूनदपरिष्कारान्प्रभिन्नकरटामुखान् ।
अधिष्ठितान्महामात्रैः सर्वशस्त्रसमन्वितान् ॥१-२२६-२० (९७८६)
सहस्रं प्रददौ राजा गजानां वरवर्मिणाम् ।
रथानां च सहस्रं वै सुवर्णमणिचित्रितम् ॥१-२२६-२१ (९७८७)
चतुर्युजां भानुमच्च पञ्चानां प्रददौ तदा ।
सुवर्णपरिबर्हाणां वरचामरमालिनाम् ॥१-२२६-२२ (९७८८)
जात्यश्वानां च पञ्चाशत्सहस्रं प्रददौ नृपः ।
दासीनामयुतं राजा प्रददौ वरभूषणम् ।
ततः सहस्रं दासानां प्रददौ वरधन्वनाम् ॥ १-२२६-२३ (९७८९)
हैमानि शय्यासनबाजनानि
द्रव्याणि चान्यानि च गोधनानि ।
पृथक्पृथक्वैव ददौ स कोटिं
पाञ्चालराजः परमप्रहृष्टः ॥ १-२२६-२४ (९७९०)

शिबिकानां शतं पूर्णं वाहान्पञ्चशतं नरान् ॥ १-२२६-२५ (९७९१)
एवमेतानि पाञ्चालो जन्यार्थे प्रददौ धनम् ।
हरणं चापि पाञ्चाल्या ज्ञातिदेयं च सोमकः ॥ १-२२६-२६ (९७९२)
धृष्टद्युम्नो ययौ तत्र भगिनीं गृह्य भारत ।
नानद्यमानो बहुशस्तूर्यघोषैः सहस्रशः ॥' १-२२६-२७ (९७९३)
श्रुत्वा चोपस्थितान्वीरान्धृतराष्ट्रोऽम्बिकासुतः ।
प्रतिग्रहाय पाण्डूनां प्रेषयामास कौरवान् ॥ १-२२६-२८ (९७९४)
विकर्णं च महेष्वासं चित्रसेनं च भारत ।
द्रोणं च परमेष्वासं गौतमं कृपमेव च ॥ १-२२६-२९ (९७९५)
तैस्तैः परिवृताः शूरैः शोभमाना महारथाः ।
नगरं हास्तिनपुरं शनैः प्रविविशुस्तदा ॥ १-२२६-३० (९७९६)
ऽपाण्डवानागताञ्छ्रुत्वा नागरास्तु कुतूहलात् ।
मण्डयाञ्चक्रिरे तत्र नगरं नागसाह्वयम् ॥ १-२२६-३१ (९७९७)
मुक्तपुष्पावकीर्णं तु जलसिक्तं तु सर्वतः ।
धूपितं दिव्यधूपेन मङ्गलैश्चाभिसंवृतम् ॥ १-२२६-३२ (९७९८)
पताकोच्छ्रितमाल्यं च पुरमप्रतिमं बभौ ।
शङ्खभेरीनिनादैश्च नानावादित्रनिस्वनैः ॥' १-२२६-३३ (९७९९)
कौतूहलेन नगरं पूर्यमाणमिवाभवत् ।
यत्र ते पुरुषव्याघ्राः शोकदुःखसमन्विताः ॥ १-२२६-३४ (९८००)
ऽनिर्गताश्च पुरात्पूर्वं धृतराष्ट्रप्रबाधिताः ।
पुनर्निवृत्ता दिष्ट्या वै सह मात्रा परन्तपाः ॥ १-२२६-३५ (९८०१)
इत्येवमीरिता वाचो जनैः प्रियचिकीर्षुभिः।'
तत उच्चावचा वाचः प्रियाः सर्वत्र भारत ॥ १-२२६-३६ (९८०२)
उदीरितास्तदाऽशृण्वन्पाण्डवा हृदयंगमाः। १-२२६-३७ (९८०३)
पौरा ऊचुः
अयं स पुरुषव्याघ्रः पुनरायाति धर्मवित् ॥ १-२२६-३७क्ष् (१२३९)
यो नः स्वानिव दायादान्धर्मेण परिरक्षति ।
अद्य पाण्डुर्महाराजो वनादिव मनःप्रियम् ॥ १-२२६-३८ (९८०४)
आगतश्चैवमस्माकं चिकीर्षन्नात्र संशयः ।
किं न्वद्य सुकृतं कर्म सर्वेषां नः प्रियं परम् ॥ १-२२६-३९ (९८०५)
यन्नः कुन्तीसुता वीरा भर्तारः पुनरागताः ।
यदि दत्तं यदि हुतं यदि वाप्यस्ति नस्तपः ।
तेन तिष्ठन्तु नगरे पाण्डवाः शरदां शतम् ॥ १-२२६-४० (९८०६)
ततस्ते धृतराष्ट्रस्य भीष्मस्य च महात्मनः ।
अन्येषां च तदर्हाणां चक्रुः पादाभिवन्दनम् ॥ १-२२६-४१ (९८०७)
पृष्टास्तु कुशलप्रश्नं सर्वेण नगरेण ते ।

समाविशन्त वेश्मानि धृतराष्ट्रस्य शासनात् ॥ ॥१-२२६-४२ (९८०८)

इति श्रीमन्महाभारते आदिपर्वणि विदुरागमनराज्यलाभपर्वणि
षड्विंशत्यधिकद्विशततमोऽध्यायः ॥ २२६ ॥

---

अध्यय२२७
॥ श्रीः ॥
१.२२७. अध्यायः २२७

Mahabharata - Adi Parva - Chapter Topics
द्रौपद्या नमस्कृतया गान्धार्या तद्रूपदर्शनेन तस्याः
स्वपुत्रमृत्युत्ववितर्कः ॥ १ ॥
धृतराष्ट्रेण युधिष्ठिरस्य धर्मराज्येऽभिषेकः ॥ २ ॥
पाण्डवानां खाण्डवप्रस्थगमनम् ॥ ३ ॥
श्रीकृष्णचिन्तितेनेन्द्रेण विश्वकर्मणः प्रेषणम् ॥ ४ ॥
विश्वकर्मणा इन्द्रप्रस्थपुरनिर्माणम् ॥ ५ ॥
तत्रागतानां सर्वेषां विसर्जनम् ॥ ६ ॥

Mahabharata - Adi Parva - Chapter Text

१-२२७-० (९८०९)
ग्वैशंपायन उवाच।१-२२७-०क्ष् (१२४०)
दुर्योधनस्य महिषी काशिराजसुता तदा ।
धृतराष्ट्रस्य पुत्राणां वधूभिः सहिता तदा ॥ १-२२७-१ (९८१०)
पाञ्चालीं प्रतिजग्राह साध्वीं श्रियमिवापराम् ।
पूजयामास पूजार्हां शचीदेवीमिवागताम् ॥ १-२२७-२ (९८११)
ववन्दे तत्र गान्धारीं कृष्णया सह माधवी ।
आशिषश्च प्रयुक्त्वा तु पाञ्चालीं परिषस्वजे ॥ १-२२७-३ (९८१२)
परिष्वज्यैव गान्धारी कृष्णां कमललोचनाम् ।
पुत्राणां मम पाञ्चाली मृत्युरेवेत्यमन्यत ॥ १-२२७-४ (९८१३)
संचिन्त्य विदुरं प्राह युक्तितः सुबलात्मजा ।
कुन्तीं राजसुतां क्षत्तः सवधूं सपरिच्छदाम् ॥ १-२२७-५ (९८१४)
पाण्डोर्निवेशनं शीघ्रं नीयतां यदि रोचते ।
करणेन मुहूर्तेन नक्षत्रेण शुभे तिथौ ॥ १-२२७-६ (९८१५)
यथा सुखं तथा कुन्ती रंस्यते स्वगृहे सुतैः ।
तथेत्येव तदा क्षत्ता कारयामास तत्तथा ॥ १-२२७-७ (९८१६)

पूजयामासुरत्यर्थं बान्धवाः पाण्डवांस्तदा ।
नागराः श्रेणिमुख्याश्च पूजयन्ति स्म पाण्डवान् ॥ १-२२७-८ (९८१७)
भीष्मो द्रोणः कृपः कर्णो बाह्लीकः ससुतस्तदा ।
शासनाद्धृतराष्ट्रस्य अकुर्वन्नतिथिक्रियाम् ॥ १-२२७-९ (९८१८)
एवं विहरतां तेषां पाण्डवानां महात्मनाम् ।
नेता सर्वस्य कार्यस्य विदुरो राजशासनात् ॥' १-२२७-१० (९८१९)
विश्रान्तास्ते महात्मानः कंचित्कालं सकेशवाः ।
आहूता धृतराष्ट्रेण राज्ञा शान्तनवेन च ॥ १-२२७-११ (९८२०)
धृतराष्ट्र उवाच। १-२२७-१२क्ष् (१२४१)
भ्रातृभिः सह कौन्तेय निबोधेदं वचो मम ।
ग्पाण्डुना वर्धितं राज्यं पाण्डुना पालितं जगत् ॥ १-२२७-१२ (९८२१)
शासनान्मम कौन्तेय मम भ्राता महाबलः ।
कृतवान्दुष्करं कर्म नित्यमेव विशांपते ॥ १-२२७-१३ (९८२२)
तस्मात्त्वमपि कौन्तेय शासनं कुरु मा चिरम् ।
मम पुत्रा दुरात्मानः सर्वेऽहंकारसंयुताः ॥ १-२२७-१४ (९८२३)
शासनं न करिष्यन्ति मम नित्यं युधिष्ठिर ।
स्वकार्यनिरतैर्नित्यमवलिप्तैर्दुरात्मभिः ॥' १-२२७-१५ (९८२४)
पुनर्वै विग्रहो मा भूत्खाण्डवप्रस्थमाविश ।
न हि वो वसतस्तत्र कश्चिच्छक्तः प्रबाधितुम् ॥ १-२२७-१६ (९८२५)
संरक्ष्यमाणान्पार्थेन त्रिदशानिव वज्रिणा ।
अर्धराज्यं तु संप्राप्य खाण्डवप्रस्थणाविश ॥ १-२२७-१७ (९८२६)
ग्केशवो यदि मन्यते तत्कर्तव्यमसंशयम् ॥' १-२२७-१८ (९८२७)
वैशंपायन उवाच। १-२२७-१९क्ष् (१२४२)
प्रतिगृह्य तु तद्वाक्यं नृपं सर्वे प्रणम्य च ।
ग्वासुदेवेन संमन्त्र्य पाण्डवाः समुपाविशन् ॥ १-२२७-१९ (९८२८)
धृतराष्ट्र उवाच। १-२२७-२०क्ष् (१२४३)
अभिषेकस्य संभारान्क्षत्तरानय मा चिरम् ।
अभिषिक्तं करिष्यामि ह्यद्य वै कुरुनन्दनम् ॥ १-२२७-२० (९८२९)
ब्राह्मणा नैगमश्रेष्ठाः श्रेणीमुख्याश्च सर्वतः ।
आहूयन्तां प्रकृतयो बान्धवाश्च विशेषतः ॥ १-२२७-२१ (९८३०)
पुण्याहं वाच्यतां तात गोसहस्रं प्रदीयताम् ।
ग्राममुख्याश्च विप्रेभ्यो दीयन्तां बहुदक्षिणाः ॥ १-२२७-२२ (९८३१)
अङ्गदे मकुटं क्षत्तर्हस्ताभरणमानय ।
मुक्तावलीश्च हारं च निष्काणि कटकानि च ॥ १-२२७-२३ (९८३२)
कटिबन्धश्च सूत्रं च तथोदरनिबन्धनम् ।
अष्टोत्तरसहस्रं तु ब्राह्मणाधिष्ठिता गजाः ॥ १-२२७-२४ (९८३३)

जाह्नवीसलिलं शीघ्रमानीयन्तां पुरोहितैः ।
अभिषेकोदकक्लिन्नं सर्वाभरणभूषितम् ॥१-२२७-२५ (९८३४)
औपवाह्योपरिगतं दिव्यचारमरवीजितम् ।
सुवर्णमणिचित्रेण श्वेतच्छत्रेण शोभितम् ॥१-२२७-२६ (९८३५)
जयेति द्विजवाक्येनु स्तूयमानं नृपैस्तथा ।
दृष्ट्वा कुन्तीसुतं ज्येष्ठमाजमीढं युधिष्ठिरम् ॥१-२२७-२७ (९८३६)
प्रीताः प्रीतेन मनसा प्रशंसन्तु परे जनाः ।
पाण्डोः कृतोपकारस्य राज्यं दत्वा ममैव च ॥१-२२७-२८ (९८३७)
प्रतिक्रिया कृतमिदं भविष्यति न संशयः ।
भीष्मो द्रोणः कृपः क्षत्ता साधुसाध्वित्यथाब्रुवन् ॥१-२२७-२९ (९८३८)
श्रीवासुदेव उवाच।१-२२७-३०क्ष् (१२४४)
युक्तमेतन्महाभाग कौरवाणां यशस्करम् ।
शीघ्रमद्यैव राजेन्द्र त्वयोक्तं कर्तुमर्हसि ॥१-२२७-३० (९८३९)
इत्येवमुक्तो वार्ष्णेयस्त्वरयामास तत्तदा ।
तथोक्तं धृतराष्ट्रेण कारयामास केशवः ॥१-२२७-३१ (९८४०)
तस्मिन्क्षणे महाराज कृष्णद्वैपायनस्तदा ।
आगत्य कुरुभिः सर्वैः पूजितः ससुहृद्गणैः ॥१-२२७-३२ (९८४१)
मूर्धाभिषिक्तैः सहितो ब्राह्मणैर्वेदपारगैः ।
कारयामास विधिवत्केशवानुमते तदा ॥१-२२७-३३ (९८४२)
कृपो द्रोणश्च भीष्मश्च धौम्यश्च व्यासकेशवौ ।
बाह्लीकः सोमदत्तश्च चातुर्वेद्यपुरस्कृताः ॥१-२२७-३४ (९८४३)
अभिषेकं तदा चक्रुर्भद्रपीठे सुसंस्कृतम् ॥ १-२२७-३५ (९८४४)
व्यास उवाच।१-२२७-३६क्ष् (१२४५)
जित्वा तु पृथिवीं कृत्स्नां वशे कृत्वा नृपान्भवान् ।
राजसूयादिभिर्यज्ञैः क्रतुभिर्वरदक्षिणैः ॥१-२२७-३६ (९८४५)
स्नात्वा ह्यवभृथस्नानं मोदतां बान्धवैः सह ।
एवमुक्त्वा तु ते सर्वे आशीर्भिरभिपूजयन् ॥१-२२७-३७ (९८४६)
मूर्धाभिषिक्तः कौरव्यः सर्वाभरणभूषितः ।
जयेति संस्तुतो राजा प्रददौ धनमक्षयम् ॥१-२२७-३८ (९८४७)
सर्वमूर्धाभिषिक्तैश्च पूजितः कुरनन्दनः ।
औपवाह्यमथारुह्य श्वेतच्छत्रेण शोभितः ॥१-२२७-३९ (९८४८)
रराज राजाभिमतो महेन्द्र इव दैवतैः ।
ततः प्रदक्षिणीकृत्य नगरं नागसाह्वयम् ॥१-२२७-४० (९८४९)
प्रविवेश तदा राजा नागरैः पूजितो गृहम् ।
मूर्धाभिषिक्तं कौन्तेयमभ्यगच्छन्त कौरवाः ॥१-२२७-४१ (९८५०)
गान्धारिपुत्राः शोचन्तः सर्वे ते सह बान्धवैः ।

ज्ञात्वा शोकं च पुत्राणां धृतराष्ट्रोऽब्रवीदिदं ॥१-२२७-४२ (९८५१)
समक्षं वासुदेवस्य कुरूणां च समक्षतः ।
अभिषेकस्त्वया प्राप्तो दुष्प्रापो ह्यकृतात्मभिः ॥१-२२७-४३ (९८५२)
गच्छ त्वमद्यैव नृप कृतकृत्योऽसि कौरव ।
आयुः पुरूरवा राजन्नहुषेण ययातिना ॥१-२२७-४४ (९८५३)
तत्रैव निवसन्ति स्म खाण्डवे तु नृपोत्तम ।
राजधानी तु सर्वेषां पौरवाणां महाभुज ॥१-२२७-४५ (९८५४)
विनाशितं मुनिगणैर्लोभाद्बुधसुतस्य वै ।
तस्मात्त्वं खाण्डवप्रस्थं पुरं राष्ट्रं च वर्धय ॥१-२२७-४६ (९८५५)
ब्राह्मणाः क्षत्रिया वैश्याः शूद्राश्च कृतलक्षणाः ।
त्वद्भक्त्या जन्तवश्चान्ये भजन्त्येव पुरं शुभम् ॥१-२२७-४७ (९८५६)
पुरं राष्ट्रं समृद्धं वै धनधान्यसमाकुलम् ।
तस्माद्गच्छस्व कौन्तेय भ्रातृभिः सहितोऽनघ ॥१-२२७-४८ (९८५७)
वैशंपायन उवाच। १-२२७-४९क्ष् (१२४६)
प्रतिगृह्य तु तद्वाक्यं तस्मै सर्वे प्रणम्य च ।
रथैर्नागैर्हयैश्चापि सहितास्तु पदातिभिः ॥१-२२७-४९ (९८५८)
प्रतस्थिरे ततो घोषसंयुक्तैः स्यन्दनैर्वरैः ।
तान्दृष्ट्वा नागराः सर्वे भक्त्या चैव प्रतस्थिरे ॥१-२२७-५० (९८५९)
गच्छतः पाण्डवैः सार्धं दृष्ट्वा नागपुरालयात् ।
पाण्डवैः सहिता गन्तुं नार्हतेति च नागरान् ॥१-२२७-५१ (९८६०)
घोषयामास नगरे धार्तराष्ट्रः ससौबलः।'
ततस्ते पाण्डवास्तत्र गत्वा कृष्णपुरोगमाः ॥ १-२२७-५२ (९८६१)
मण्डयाञ्चक्रिरे तद्वै पुरं स्वर्गादिव च्युतम् ।
ग्वासुदेवो जगन्नाथश्चिन्तयामास वासवम् ॥१-२२७-५३ (९८६२)
महेन्द्रश्चिन्तितो राजन्विश्वकर्माणमादिशत् ।
विश्वकर्मन्महाप्राज्ञ अद्यप्रभृति तत्पुरम् ॥१-२२७-५४ (९८६३)
इन्द्रप्रस्थमिति ख्यातं दिव्यं भूम्यां भविष्यति ।
महेन्द्रशासनाद्गत्वा विश्वकर्मा तु केशवम् ॥१-२२७-५५ (९८६४)
प्रणम्य प्रणिपातार्हं किं करोमीत्यभाषत ।
वासुदेवस्तु तच्छ्रुत्वा विश्वकर्माणमूचिवान् ॥१-२२७-५६ (९८६५)
कुरुष्व कुरुराजस्य महेन्द्रपुरसन्निभम् ।
इन्द्रेण कृतनामानमिन्द्रप्रस्थं महापुरम् ॥१-२२७-५७ (९८६६)
वैशंपायन उवाच।' १-२२७-५८क्ष् (१२४७)
ततः पुण्ये शिवे देशे शान्तिं कृत्वा महारथाः ।
स्वस्तिवाच्य यथान्यायमिन्द्रप्रस्थं भवत्विति ॥१-२२७-५८ (९८६७)
तत्पुरं मापयामासुर्द्वैपायनपुरोगमाः ।

ग्ततः स विश्वकर्मा तु चकार पुरमुत्तमम् ॥' १-२२७-५९ (९८६८)
सागरप्रतिरूपाभिः परिखाभिरलङ्कृतम् ।
प्राकारेण च संपन्नं दिवमावृत्य तिष्ठता ॥१-२२७-६० (९८६९)
पाण्डुराभ्रप्रकाशेन हिमरश्मिनिभेन च ।
शुशुभे तत्पुरश्रेष्ठं नागैर्भोगवती यथा ॥१-२२७-६१ (९८७०)
द्विपक्षगरुडप्रख्यैर्द्वारैः सौधैश्च शोभितम् ।
गुप्तमभ्रचयप्रख्यैर्गोपुरैर्मन्दरोपमैः ॥१-२२७-६२ (९८७१)
विविधैरपि निर्विद्धैः शस्त्रोपेतैः सुसंवृतैः ।
शक्तिभिश्चावृतं तद्धि द्विजिह्वैरिव पन्नगैः ॥१-२२७-६३ (९८७२)
तल्पैश्चाभ्यासिकैर्युक्तं शुशुभे योधरक्षितम् ।
थीक्ष्णाङ्कुशशतघ्नीभिर्यन्त्रजालैश्च शोभितम् ॥१-२२७-६४ (९८७३)
आयसैश्च महाचक्रैः शुशुभे तत्पुरोत्तमम् ।
सुविभक्तमहारथ्यं देवताबाधवर्जितम् ॥१-२२७-६५ (९८७४)
विरोचमानं विविधैः पाण्डुरैर्भवनोत्तमैः ।
तत्त्रिविष्टपसंकाशमिन्द्रप्रस्थं व्यरोचत ॥१-२२७-६६ (९८७५)
मेघवृन्दमिवाकाशे विद्धं विद्युत्समावृतम् ।
तत्र रम्ये शिवे देशे कौरव्यस्य निवेशनम् ॥१-२२७-६७ (९८७६)
शुशुभे धनसंपूर्णं धनाध्यक्षक्षयोपमम् ।
तत्रागच्छन्द्विजा राजन्सर्ववेदविदां वराः ॥१-२२७-६८ (९८७७)
निवासं रोचयन्ति स्म सर्वभाषाविदस्तथा ।
वणिजश्चाययुस्तत्र नानादिग्भ्यो धनार्थिनः ॥१-२२७-६९ (९८७८)
सर्वशिल्पविदस्तत्र वासायाभ्यागमंस्तदा ।
उद्यानानि च रम्याणि नगरस्य समन्ततः ॥१-२२७-७० (९८७९)
आम्रैराम्रातकैर्नीपैरशोकैश्चम्पकैस्तथा ।
पुन्नागैर्नागपुष्पैश्च लकुचैः पनसैस्तथा ॥१-२२७-७१ (९८८०)
शालतालतमालैश्च बकुलैश्च सकेतकैः ।
मनोहरैः सुपुष्पैश्च फलभारावनामितैः ॥१-२२७-७२ (९८८१)
प्राचीनामलकैर्लोध्रैरङ्कोलैश्च सुपिष्पितैः ।
जम्बूभिः पाटलाभिश्च कुब्जकैरतिमुक्तकैः ॥१-२२७-७३ (९८८२)
करवीरैः पारिजातैरन्यैश्च विविधैर्द्रुमैः ।
नित्यपुष्पफलोपेतैर्नानाद्विजगणायुतैः ॥१-२२७-७४ (९८८३)
मत्तबर्हिणसंघुष्टकोकिलैश्च सदामदैः ।
गृहैरादर्शविमलैर्विविधैश्च लतागृहैः ॥१-२२७-७५ (९८८४)
मनोहरैश्चित्रगृहैस्तथाऽजगतिप्रवतैः ।
वापीभिर्विविधाभिश्च पूर्णाभिः परमाम्भसा ॥१-२२७-७६ (९८८५)
सरोभिरतिरम्यैश्च पद्मोत्पलसुगन्धिभिः ।

हंसकारण्डवयुतैश्चक्रवाकोपशोभितैः ॥१-२२७-७७ (९८८६)
रम्याश्च विविधास्तत्र पुष्करिण्यो वनावृताः ।
तडागानि च रम्याणि बृहन्ति सुबहूनि च ॥१-२२७-७८ (९८८७)
ग्नदी च नन्दिनी नाम सा पुरीमुपगूहति ।
चातुर्वर्ण्यसमाकीर्णमन्यैः शिल्पिभिरावृतम् ॥१-२२७-७९ (९८८८)
सर्वदाभिसृतं सद्भिः कारितं विश्वकर्मणा ।
उपभोगसमृद्धैश्च सर्वद्रव्यसमावृतम् ॥१-२२७-८० (९८८९)
नित्यमार्यजनोपेतं नरनारीगणैर्युतम् ।
वाजिवारणसंपूर्णं गोभिरुष्ट्रैः खरैरजैः ॥१-२२७-८१ (९८९०)
तत्त्रिविष्टपसङ्काशमिन्द्रप्रस्थं व्यरोचत ।
पुरीं सर्वगुणोपेतां निर्मितां विश्वकर्मणा ॥१-२२७-८२ (९८९१)
पौरवाणामधिपतिः कुन्तीपुत्रो युधिष्ठिरः ।
कृतमङ्गलसत्कारैर्ब्राह्मणैर्वेदपारगैः ॥१-२२७-८३ (९८९२)
द्वैपायनं पुरस्कृत्य धौम्यस्याभिमते स्थितः ।
भ्रातृभिः सहितो राजा राजमार्गमतीत्य च ॥१-२२७-८४ (९८९३)
औपवाह्यगतो राजा केशवेन सहाभिभूः ।
तोरणद्वारसुमुखं द्वात्रिंशद्द्वारसंयुतम् ॥१-२२७-८५ (९८९४)
वर्धमानपुरद्वारात्प्रविवेश महाद्युतिः ।
शङ्खदुन्दुभिनिर्घोषाः श्रूयन्ते बहवो भृशम् ॥१-२२७-८६ (९८९५)
जयेति ब्राह्मणगिरः श्रूयन्ते च सहस्रशः ।
संस्तूयमानो मुनिभिः सूतमागधबन्दिभिः ॥१-२२७-८७ (९८९६)
औपवाह्यगतो राजा राजमार्गमतीत्य च ।
कृतमङ्गलसत्कारं प्रविवेश गृहोत्तमम् ॥१-२२७-८८ (९८९७)
प्रविश्य भवनं राजा नागरैरभिसंवृतः ।
प्रहृष्टमुदितैरासीत्सत्कारैरभिपूजितः ॥१-२२७-८९ (९८९८)
पूजयामास विप्रेन्द्रान्केशेन महात्मना ।
ततस्तु राष्ट्रं नगरं नरनारीगणायुतम् ॥१-२२७-९० (९८९९)
गोधनैश्च समाकीर्णं सस्यैर्वृद्धिं तदागमत् ॥' १-२२७-९१ (९९००)
तेषां पुण्यजनोपेतं राष्ट्रमाविशतां महत् ।
पाण्डवानां महाराज शश्वत्प्रीतिरवर्धत ॥१-२२७-९२ (९९०१)
ग्सौबलेन च कर्णेन धार्तराष्ट्रैः कृपेण च।'
तथा भीष्मेण राज्ञा च धर्मप्रणयिना सदा ॥ १-२२७-९३ (९९०२)
पाण्डवाः समपद्यन्त खाण्डवप्रस्थवासिनः ।
पञ्चभिस्तैर्महेष्वासैरिन्द्रकल्पैः समावृतम् ॥१-२२७-९४ (९९०३)
शुशुभे तत्पुरश्रेष्ठं नागैर्भोगवती यथा ।
गततस्तु विश्वकर्माणं पूजयित्वा विसृज्य च ॥१-२२७-९५ (९९०४)

द्वैपायनं च संपूज्य विसृज्य च नराधिपः ।
वार्ष्णेयमब्रवीद्राजा गन्तुकामं कृतक्षणम् ॥ १-२२७-९६ (९९०५)
तव प्रसादाद्वार्ष्णेय राज्यं प्राप्तं मयाऽनघ ।
प्रसादादेव ते वीर शून्यं राष्ट्रं सुदुर्गमम् ॥ १-२२७-९७ (९९०६)
तवैव तु प्रसादेन राज्यस्थाश्च भवामहे ।
गतिस्त्वमापत्कालेऽपि पाण्डवानां च माधव ॥ १-२२७-९८ (९९०७)
ज्ञात्वा तु कृत्यं कर्तव्यं कारयस्व भवान्हि नः ।
यदिष्टमनुमन्तव्यं पाण्डवानां त्वयाऽनघ ॥ १-२२७-९९ (९९०८)
श्रीवासुदेव उवाच। १-२२७-१००क्ष् (१२४८)
त्वत्प्रभावान्महाराज्यं संप्राप्तं हि स्वधर्मतः ।
पितृपैतामहं राज्यं कथं न स्यात्तव प्रभो ॥ १-२२७-१०० (९९०९)
धार्तराष्ट्रा दुराचाराः किं करिष्यन्ति पाण्डवान् ।
यथेष्टं पालय जगच्छश्वद्धर्मधुरं वह ॥ १-२२७-१०१ (९९१०)
पुनः पुनश्च संहर्षाद्ब्राह्मणान्भर पौरव ।
अद्यैव नारदः श्रीमानागमिष्यति सत्वरः ॥ १-२२७-१०२ (९९११)
आदत्स्व तस्य वाक्यानि शासनं कुरु तस्य वै ।
एवमुक्त्वा ततः कुन्तीमभिवाद्य जनार्दनः ॥ १-२२७-१०३ (९९१२)
उवाच श्लक्ष्णया वाचा गमिष्यामि नमोस्तु ते। १-२२७-१०४ (९९१३)
कुन्त्युवाच ।
जातुषं गृहमासाद्य मया प्राप्तं यदानघ ॥ १-२२७-१०४क्ष् (१२४९)
आर्येण समभिज्ञातं त्वया वै यदुपुङ्गव ।
त्वया नाथेन गोविन्द दुःखं तीर्णं महत्तरम् ॥ १-२२७-१०५ (९९१४)
त्वं हि नाथस्त्वनाथानां दरिद्राणां विशेषतः ।
सर्वदुःखानि शाम्यन्ति तव संदर्शनान्मम ॥ १-२२७-१०६ (९९१५)
स्मरस्वैनान्महाप्राज्ञ तेन जीवन्ति पाण्डवाः ॥ १-२२७-१०७ (९९१६)
वैशंपायन उवाच। १-२२७-१०८क्ष् (१२५०)
करिष्यामीति चामन्त्र्य अभिवाद्य पितृष्वसाम् ।
गमनाय मतिं चक्रे वासुदेवः सहानुगः ॥' १-२२७-१०८ (९९१७)
तान्निवेश्य ततो वीरः सह रामेण कौरवान् ।
ययौ द्वारवतीं राजन्पाण्डवानुमते तदा ॥ ॥ १-२२७-१०९ (९९१८)

इति श्रीमन्महाभारते आदिपर्वणि विदुरागमनराज्यलाभपर्वणि
सप्तविंशत्यधिकद्विशततमोऽध्यायः ॥ २२७ ॥

---

अध्यय२२८
॥ श्रीः ॥
१.२२८. अध्यायः २२८

Mahabharata - Adi Parva - Chapter Topics
पाण्डवानां समीपे नारदागमनम् ॥ १ ॥

Mahabharata - Adi Parva - Chapter Text

१-२२८-० (९९१९)
जनमेजय उवाच। १-२२८-०क्ष् (१२५१)
एवं संप्राप्य राज्यं तदिन्द्रप्रस्थे तपोधन ।
अत ऊर्ध्वं नरव्याघ्राः किमकुर्वत पाण्डवाः ॥ १-२२८-१ (९९२०)
सर्व एव महात्मानः सर्वे मम पितामहाः ।
द्रौपदी धर्मपत्नी च कथं तानन्ववर्तत ॥ १-२२८-२ (९९२१)
कथमासुश्च कृष्णायामेकस्यां ते नरर्षभाः ।
वर्तमाना महाभागा नाभिद्यन्त परस्परम् ॥ १-२२८-३ (९९२२)
श्रोतुमिच्छाम्यहं तत्र विस्तरेण यथातथम् ।
तेषां चेष्टितमन्योन्यं युक्तानां कृष्णया सह ॥ १-२२८-४ (९९२३)
वैशंपायन उवाच। १-२२८-५क्ष् (१२५२)
धृतराष्ट्राभ्यनुज्ञाता इन्द्रप्रस्थं प्रविश्य तत् ।
रेमिरे पुरुषव्याघ्राः कृष्णया सह पाण्डवाः ॥ १-२२८-५ (९९२४)
प्राप्य राज्यं महातेजाः सत्यसन्धो युधिष्ठिरः ।
पालयामास धर्मेण पृथिवीं भ्रातृभिः सह ॥ १-२२८-६ (९९२५)
जितारयो महात्मानः सत्यधर्मपरायणाः ।
एवं पुरमिदं प्राप्य तत्रोषुः पाण्डुनन्दनाः ॥ १-२२८-७ (९९२६)
कुर्वाणाः पौरकार्याणि सर्वाणि भरतर्षभाः ।
आसांचक्रुर्महार्हेषु पार्थिवेष्वासनेषु च ॥ १-२२८-८ (९९२७)
तेषु तत्रोपविष्टेषु पाण्डवेषु महात्मसु ।
आययौ धर्मराजं तु द्रष्टुकामोऽथ नारदः ॥ १-२२८-९ (९९२८)
ग्पथा नक्षत्रजुष्टेन सुपर्णाचरितेन च ।
चन्द्रसूर्यप्रकाशेन सेवितेन महर्षिभिः ॥ १-२२८-१० (९९२९)
नभस्स्थलेन दिव्येन दुर्लभेनातपस्विनाम् ।
भूतार्चितो भूतधरां राष्ट्रमन्दिरभूषिताम् ॥ १-२२८-११ (९९३०)
अवेक्षमाणो द्युतिमानाजगाम महातपाः ।
सर्ववेदान्तगो विप्रः सर्ववेदाङ्गपारगः ॥ १-२२८-१२ (९९३१)
परेण तपसा युक्तो ब्राह्मेण तपसा वृतः ।
नये नीतौ च निरतो विश्रुतश्च महामुनिः ॥ १-२२८-१३ (९९३२)
परात्परतरं प्राप्तो धर्मान्समभिजग्मिवान् ।

भावितात्मा गतरजाः शान्तो मृदुर्ऋजुर्दिवजः ॥१-२२८-१४ (९९३३)
धर्मेणाधिगतः सर्वैर्देवदानवमानुषैः ।
क्षीणकर्मसु पापेषु भूतेषु विविधेषु च ॥१-२२८-१५ (९९३४)
सर्वथा कृतमर्यादो वेदेषु विविधेषु च ।
शतशः सोमपा यज्ञे पुण्ये पुण्यकृदग्निचित् ॥१-२२८-१६ (९९३५)
ऋक्सामयजुषां वेत्ता न्यायदृग्धर्मकोविदः ।
ऋजुरारोहबान्वृद्धो भूयिष्ठपथिकोऽनघः ॥१-२२८-१७ (९९३६)
श्लक्ष्णया शिखयोपेतः संपन्नः परमत्विषा ।
अवदाते च सूक्ष्मे च दिव्ये च रचिते शुभे ॥१-२२८-१८ (९९३७)
महेन्द्रदत्ते महती बिभ्रत्परमवाससी ।
जाम्बूनदमये दिव्ये गण्डूपदमुखे नवे ॥१-२२८-१९ (९९३८)
अग्न्यर्कसदृशे दिव्ये धारयन्कुण्डले शुभे ।
राजतच्छत्रमुच्छ्रित्य चित्रं परमवर्चसम् ॥१-२२८-२० (९९३९)
प्राप्य दुष्प्रापमन्येन ब्रह्मवर्चसमुत्तमम् ।
भवने भूमिपालस्य बृहस्पतिरिवाप्लुतः ॥१-२२८-२१ (९९४०)
संहितायां च सर्वेषां स्थितस्योपस्थितस्य च ।
द्विपदस्य च धर्मस्य क्रमधर्मस्य पारगः ॥१-२२८-२२ (९९४१)
गाधा सामानुसामज्ञः साम्नां परमवल्गुनाम् ।
आत्मनः सर्वमोक्षिभ्यः कृतिमान्कृत्यवित्सदा ॥१-२२८-२३ (९९४२)
यजुर्धर्मैर्बहुविधैर्मतो मतिमतां वरः ।
विदितार्थः समश्चैव च्छेत्ता निगमसंशयान् ॥१-२२८-२४ (९९४३)
अर्थनिर्वचने नित्यं संशयच्छिदसंशयः ।
प्रकृत्या धर्मकुशलो दाता धर्मविशारदः ॥१-२२८-२५ (९९४४)
लोपेनागमधर्मेण संक्रमेण च वृत्तिषु ।
एकशब्दांश्च नानार्थानेकार्थांश्च पृथक्कृतान् ॥१-२२८-२६ (९९४५)
पृथगर्थाभिधानांश्च प्रयोगानन्ववेक्षिता ।
प्रमाणभूतो लोकेषु सर्वाधिकरणेषु च ॥१-२२८-२७ (९९४६)
सर्ववर्णविकारेषु नित्यं कुशलपूजितः ।
स्वरेऽस्वरे च विविधे वृत्तेषु विविधेषु च ॥१-२२८-२८ (९९४७)
समस्थानेषु सर्वेषु समाम्नायेषु धातुषु ।
उद्देश्यानां समाख्याता सर्वमाख्यातमुद्दिशन् ॥१-२२८-२९ (९९४८)
अभिसन्धिषु तत्त्वज्ञः पदान्यङ्गान्यनुस्मरन् ।
कालधर्मेण निर्दिष्टं यथार्थं च विचारयन् ॥१-२२८-३० (९९४९)
चिकीर्षितं च यो वेत्ता यथा लोकेन संवृतम् ।
विभाषितं च समयं भाषितं हृदयंगमम् ॥१-२२८-३१ (९९५०)
आत्मने च परस्मै च स्वरसंस्कारयोगवित् ।

एषां स्वराणां ज्ञाता च बोद्धा प्रवचनः स्वराट् ॥१-२२८-३२ (९९५१)
विज्ञाता चोक्तवाक्यानामेकतां बहुतां तथा ।
बोद्धा हि परमार्थांश्च विविधांश्च व्यतिक्रमान् ॥१-२२८-३३ (९९५२)
अभेदतश्च बहुशो बहुशश्चापि भेदतः ।
वक्ता विविधवाक्यानां नानादेशसमीक्षिता ॥१-२२८-३४ (९९५३)
पञ्चागमांश्च विविधानादेशांश्च समीक्षिता ।
नानार्थकुशलस्तत्र तद्धितेषु च कृत्स्नशः ॥१-२२८-३५ (९९५४)
परिभूषयिता वाचां वर्णतः स्वरतोऽर्थतः ।
प्रत्ययं च समाख्याता नियतं प्रतिधातुकम् ॥१-२२८-३६ (९९५५)
पञ्च चाक्षरजातानि स्वरसंज्ञानि यानि च ।
तमागतमृषिं दृष्ट्वा प्रत्युद्गम्याभिवाद्य च ॥' १-२२८-३७ (९९५६)
आसनं रुचिरं तस्मै प्रददौ स युधिष्ठिरः ।
ग्कृष्णाजिनोत्तरे तस्मिन्नुपविष्टो महानृषिः ॥' १-२२८-३८ (९९५७)
देवर्षेरुपविष्टस्य स्वयमर्घ्यं यथाविधि ।
प्रादाद्युधिष्ठिरो धीमान्राज्यं तस्मै न्यवेदयत् ।
प्रतिगृह्य तु तां पूजामृषिः प्रीतमनास्तदा ॥ १-२२८-३९ (९९५८)
आशीर्भिर्वर्धयित्वा च तमुवाचास्यतामिति ।
निषसादाभ्यनुज्ञातस्ततो राजा युधिष्ठिरः ॥१-२२८-४० (९९५९)
प्रेषयामास कृष्णायै भगवन्तमुपस्थितम् ।
श्रुत्वैतद्द्रौपदी चापि शुचिर्भूत्वा समाहिता ॥१-२२८-४१ (९९६०)
जगाम तत्र यत्रास्ते नारदः पाण्डवैः सह ।
तस्याभिवाद्य चरणौ देवर्षेर्धर्मचारिणी ॥१-२२८-४२ (९९६१)
कृताञ्जलिः सुसंवीता स्थिताऽथ द्रुपदात्मजा ।
तस्याश्चापि स धर्मात्मा सत्यवागृषिसत्तमः ॥१-२२८-४३ (९९६२)
आशिषो विविधाः प्रोच्य राजपुत्र्यास्तु नारदः ।
गम्यतामिति होवाच भगवांस्तामनिन्दिताम् ॥१-२२८-४४ (९९६३)
गतायामथ कृष्णायां युधिष्ठिरपुरोगमान् ।
विविक्ते पाण्डवान्सर्वानुवाच भगवानृषिः ॥१-२२८-४५ (९९६४)
पाञ्चाली भवतामेका धर्मपत्नी यशस्विनी ।
यथा वो नात्र भेदः स्यात्तथा नीतिर्विधीयतां ॥१-२२८-४६ (९९६५)
सुन्दोपसुन्दौ हि पुरा भ्रातरौ सहितावुभौ ।
आस्तामवध्यावन्येषां त्रिषु लोकेषु विश्रुतौ ॥१-२२८-४७ (९९६६)
एकराज्यावेकगृहावेकशय्यासनाशनौ ।
तिलोत्तमायास्तौ हेतोरन्योन्यमभिजघ्नतुः ॥१-२२८-४८ (९९६७)
रक्ष्यतां सौहृदं तस्मादन्योन्यप्रीतिभावकम् ।
यथा वो नात्र भेदः स्यात्तत्कुरुष्व युधिष्ठिर ॥१-२२८-४९ (९९६८)

युधिष्ठिर उवाच।१-२२८-५०क्ष् (१२५३)
सुन्दोपसुन्दावसुरौ कस्य पुत्रौ महामुने ।
उत्पन्नश्च कथं भेदः कथं चान्योन्यमघ्नताम् ॥१-२२८-५० (९९६९)
अप्सरा देवकन्या वै कस्य चैषा तिलोत्तमा ।
यस्याः कामेन संमत्तौ जघ्नतुस्तौ परस्परम् ॥१-२२८-५१ (९९७०)
एतत्सर्वं यथा वृत्तं विस्तरेण तपोधन ।
श्रोतुमिच्छामहे ब्रह्मन्परं कौतूहलं हि मे ॥ ॥१-२२८-५२ (९९७१)

इति श्रीमन्महाभारते आदिपर्वणि विदुरागमनराज्यलाभपर्वणि
अष्टाविंशत्यधिकद्विशततमोऽध्यायः ॥ २२८ ॥

---

अध्यय२२९
॥ श्रीः ॥
१.२२९. अध्यायः २२९

Mahabharata - Adi Parva - Chapter Topics
सुन्दोपसुन्दकथा--सुन्दोपसुन्दयोर्ब्रह्मणो वरलाभः ॥१ ॥

Mahabharata - Adi Parva - Chapter Text

१-२२९-० (९९७२)
नारद उवाच।१-२२९-०क्ष् (१२५४)
शणु मे विस्तरेणेममितिहासं पुरातनम् ।
भ्रातृभिः सहितः पार्थ यथा वृत्तं युधिष्ठिर ॥१-२२९-१ (९९७३)
महासुरस्यान्ववाये हिरण्यकशिपोः पुरा ।
निकुम्भो नाम दैत्येन्द्रस्तेजस्वी बलवानभूत् ॥१-२२९-२ (९९७४)
तस्य पुत्रौ महावीर्यौ जातौ भीमपराक्रमौ ।
सुन्दोपसुन्दौ दैत्येन्द्रौ दारुणौ क्रूरमानसौ ॥१-२२९-३ (९९७५)
तावेकनिश्चयौ दैत्यावेककार्यार्थसंमतौ ।
निरन्तरमवर्तेतां समदुःखसुखावुभौ ॥१-२२९-४ (९९७६)
विनाऽन्योन्यं न भुञ्जाते विनाऽन्योन्यं न जल्पतः ।
अन्योन्यस्य प्रियकरावन्योन्यस्य प्रियंवदौ ॥१-२२९-५ (९९७७)
एकशीलसमाचारौ द्विधैवैकोऽभवत्कृतः ।
तौ विवृद्धौ महावीर्यौ कार्येष्वप्येकनिश्चयौ ॥१-२२९-६ (९९७८)
त्रैलोक्यविजयार्थाय समाधायैकनिश्चयम् ।
दीक्षां कृत्वा गतौ विन्ध्यं तावुग्रं तेपतुस्तपः ॥१-२२९-७ (९९७९)
तौ तु दीर्घेण कालेन तपोयुक्तौ बभूवतुः ।

क्षुत्पिपासापरिश्रान्तौ जटावल्कलधारिणौ ॥१-२२९-८ (९९८०)
मलोपचितसर्वाङ्गौ वायुभक्षौ बभूवतुः ।
आत्ममांसानि जुह्वान्तौ पादाङ्गुष्ठाग्रधिष्ठितौ ।
ऊर्ध्वबाहू चानिमिषौ दीर्घकालं धृतव्रतौ ॥ १-२२९-९ (९९८१)
तयोस्तपःप्रभावेण दीर्घकालं प्रतापितः ।
धूमं प्रमुमुचे विन्ध्यस्तद्भुतमिवाभवत् ॥१-२२९-१० (९९८२)
ततो देवा भयं जग्मुरुग्रं दृष्ट्वा तयोस्तपः ।
तपोविघातार्थमथो देवा विघ्नानि चक्रिरे ॥१-२२९-११ (९९८३)
रत्नैः प्रलोभयामासुः स्त्रीभिश्चोभौ पुनःपुनः ।
न च तौ चक्रतुर्भङ्गं व्रतस्य सुमहाव्रतौ ॥१-२२९-१२ (९९८४)
अथ मायां पुनर्देवास्तयोश्चक्रुर्महात्मनोः ।
भगिन्यो मातरो भार्यास्तयोश्चात्मजनस्तथा ॥१-२२९-१३ (९९८५)
प्रपात्यमाना विस्रस्ताः शूलहस्तेन रक्षसा ।
भ्रष्टाभरणकेशान्ता भ्रष्टाभरणवाससः ॥१-२२९-१४ (९९८६)
अभिभाष्य ततः सर्वास्तौ त्राहीति विचुक्रुशुः ।
न च तौ चक्रतुर्भङ्गं व्रतस्य सुमहाव्रतौ ॥१-२२९-१५ (९९८७)
यदा क्षोभं नोपयाति नार्तिमन्यतरस्तयोः ।
ततः स्त्रियस्ता भूतं च सर्वमन्तरधीयत ॥१-२२९-१६ (९९८८)
ततः पितामहः साक्षादभिगम्य महासुरौ ।
वरेण च्छदयामास क्वलोकहितः प्रभुः ॥१-२२९-१७ (९९८९)
ततः सुन्दोपसुन्दौ तौ भ्रातरौ दृढविक्रमौ ।
दृष्ट्वा पितामहं देवं तस्थतुः प्राञ्जली तदा ॥१-२२९-१८ (९९९०)
ऊचतुश्च प्रभुं देवं ततस्तौ सहितौ तदा ।
आवयोस्तपसाऽनेन यदि प्रीतः पितामहः ॥१-२२९-१९ (९९९१)
मायाविदावस्त्रविदौ बलिनौ कामरूपिणौ ।
उभावप्यमरौ स्यावः प्रसन्नो यदि नौ प्रभुः ॥१-२२९-२० (९९९२)
ब्रह्मोवाच।१-२२९-२१क्ष् (१२५५)
ऋतेऽमरत्वं युवयोः सर्वमुक्तं भविष्यति ।
अन्यद्वृणीतं मृत्योश्च विधानममरैः सम् ॥१-२२९-२१ (९९९३)
प्रभविष्याव इति यन्महदभ्युद्यतं तपः ।
युवयोर्हेतुनानेन नामरत्वं विधीयते ॥१-२२९-२२ (९९९४)
त्रैलोक्यविजयार्थाय भवद्भ्यामास्थितं तपः ।
हेतुनाऽनेन दैत्येन्द्रौ न वां कामं करोम्यहम् ॥१-२२९-२३ (९९९५)
सुन्दोपसुन्दावूचतुः ।
त्रिषु लोकेषु यद्भूतं किंचित्स्थावरजङ्गमम् ।
सर्वस्मान्नौ भयं न स्यादृतेऽन्योन्यं पितामह ॥ १-२२९-२४ (९९९६)

पितामह उवाच। १-२२९-२५क्ष् (१२५६)
यत्प्रार्थितं यथोक्तं च काममेतद्ददानि वाम् ।
मृत्योर्विधानमेतच्च यथावद्वा भविष्यति ॥ १-२२९-२५ (९९९७)
नारद उवाच। १-२२९-२६क्ष् (१२५७)
ततः पितामहो दत्त्वा वरमेतत्तदा तयोः ।
निवर्त्य तपसस्तौ च ब्रह्मलोकं जगाम ह ॥ १-२२९-२६ (९९९८)
लब्ध्वा वराणि दैत्येन्द्रावथ तौ भ्रातरावुभौ ।
अवध्यौ सर्वलोकस्य स्वमेव भवनं गतौ ॥ १-२२९-२७ (९९९९)
तौ तु लब्धवरौ दृष्ट्वा कृतकामौ मनस्विनौ ।
सर्वः सुहृज्जनस्ताभ्यां प्रहर्षमुपजग्मिवान् ॥ १-२२९-२८ (१००००)
ततस्तौ तु जटा भित्त्वा मौलिनौ संबभूवतुः ।
महार्हाभरणोपेतौ विरजोम्बरधारिणौ ॥ १-२२९-२९ (१०००१)
अकालकौमुदीं चैव चक्रतुः सार्वकालिकीम् ।
नित्यः प्रमुदितः सर्वस्तयोश्चैव सुहृज्जनः ॥ १-२२९-३० (१०००२)
भक्ष्यतां भुज्यतां नित्यं दीयतां रम्यतामिति ।
गीयेतां पीयतां चेति शब्दश्चासीद्गृहे गृहे ॥ १-२२९-३१ (१०००३)
तत्रतत्र महानादैरुत्कृष्टतलनादितैः ।
हृष्टं प्रमुदितं सर्वं दैत्यानामभवत्पुरम् ॥ १-२२९-३२ (१०००४)
तैस्तैर्विहारैर्बहुभिर्दैत्यानां कामरूपिणाम् ।
समाः संक्रीडतां तेषामहरेकमिवाभवत् ॥ ॥ १-२२९-३३ (१०००५)

इति श्रीमन्महाभारते आदिपर्वणि विदुरागमनराज्यलाभपर्वणि
एकोनत्रिंशदधिकद्विशततमोऽध्यायः ॥ २२९ ॥

---

अध्यय२३०
॥ श्रीः ॥
१.२३०. अध्यायः २३०

Mahabharata - Adi Parva - Chapter Topics
सुन्दोपसुन्दयोः दिग्विजयः कुरुक्षेत्रे निवासश्च ॥ १ ॥

Mahabharata - Adi Parva - Chapter Text

१-२३०-० (१०००६)
नारद उवाच। १-२३०-०क्ष् (१२५८)
उत्सवे वृत्तमात्रे तु त्रैलोक्याकाङ्क्षिणावुभौ ।
मन्त्रयित्वा ततः सेनां तावज्ञापयतां तदा ॥ १-२३०-१ (१०००७)

सुहृद्भिरप्यनुज्ञातौ दैत्यैर्वृद्धैश्च मन्त्रिभिः ।
कृत्वा प्रास्थानिकं रात्रौ मघासु ययतुस्तदा ॥ १-२३०-२ (१०००८)
गदापिट्टशधारिण्या शूलमुद्गरहस्तया ।
प्रस्थितौ सह वर्मिण्या महत्या दैत्यसेनया ॥ १-२३०-३ (१०००९)
मङ्गलैः स्तुतिभिश्चापि विजयप्रतिसंहितैः ।
चारणैः स्तूयमानौ तौ जग्मतुः परया मुदा ॥ १-२३०-४ (१००१०)
तावन्तरिक्षमुत्प्लुत्य दैत्यौ कामगमावुभौ ।
देवानामेव भवनं जग्मतुर्युद्धदुर्मदौ ॥ १-२३०-५ (१००११)
तयोरागमनं ज्ञात्वा वरदानं च तत्प्रभोः ।
हित्वा त्रिविष्टपं जग्मुर्ब्रह्मलोकं ततः सुराः ॥ १-२३०-६ (१००१२)
ताविन्द्रलोकं निर्जित्य यक्षरक्षोगणांस्तदा ।
खेचराण्यपि भूतानि जघ्नतुस्तीव्रविक्रमौ ॥ १-२३०-७ (१००१३)
अन्तर्भूमिगतान्नागाञ्जित्वा तौ च महारथौ ।
समुद्रवासिनीः सर्वा म्लेच्छजातीर्विजिग्यतुः ॥ १-२३०-८ (१००१४)
ततः सर्वां महीं जेतुमारब्धावुग्रशासनौ ।
सैनिकांश्च समाहूय सुतीक्ष्णं वाक्यमूचतुः ॥ १-२३०-९ (१००१५)
राजर्षयो महायज्ञैर्हव्यकव्यैर्द्विजातयः ।
तेजो बलं च देवानां वर्धन्ति श्रियं तथा ॥ १-२३०-१० (१००१६)
तेषामेवं प्रवृत्तानां सर्वेषामसुरद्विषाम् ।
संभूय सर्वैरस्माभिः कार्यः सर्वात्मना वधः ॥ १-२३०-११ (१००१७)
एवं सर्वान्समादिश्य पूर्वतीरे महोदधेः ।
क्रूरां मतिं समास्थाय जग्मतुः सर्वतोमुखौ ॥ १-२३०-१२ (१००१८)
यज्ञैर्यजन्ति ये केचिद्याजयन्ति च ये द्विजाः ।
तान्सर्वान्प्रसभं हत्वा बलिनौ जग्मतुस्ततः ॥ १-२३०-१३ (१००१९)
आश्रमेष्वग्निहोत्राणि मुनीनां भावितात्मनाम् ।
गृहीत्वा प्रक्षिपन्त्यप्सु विश्रब्धं सैनिकास्तयोः ॥ १-२३०-१४ (१००२०)
तपोधनैश्च ये क्रुद्धैः शापा उक्ता महात्मभिः ।
नाक्रामन्त तयोस्तेऽपि वरदाननिराकृताः ॥ १-२३०-१५ (१००२१)
नाक्रामन्त यदा शापा बाणा मुक्ताः शिलास्विव ।
नियमान्संपरित्यज्य व्यद्रवन्त द्विजातयः ॥ १-२३०-१६ (१००२२)
पृथिव्यां ये तपःसिद्धा दान्ताः शमपरायणाः ।
तयोर्भयाद्दुद्रुवुस्ते वैनतेयादिवोरगाः ॥ १-२३०-१७ (१००२३)
मथितैराश्रमैर्भग्नैर्विकीर्णकलशस्रुवैः ।
शून्यमासीज्जगत्सर्वं कालेनेव हतं तदा ॥ १-२३०-१८ (१००२४)
ततो राजन्नदृश्यद्भिर्ऋषिभिश्च महासुरौ ।
उभौ विनिश्चयं कृत्वा विकुर्वाते वधैषिणौ ॥ १-२३०-१९ (१००२५)

प्रभिन्नकरटौ मत्तौ भूत्वा कुञ्जररूपिणौ ।
संलीनमपि दुर्गेषु निन्यतुर्यमसादनम् ॥ १-२३०-२० (१००२६)
सिंहौ भूत्वा पुनर्व्याघ्रौ पुनश्चान्तर्हितावुभौ ।
तैस्तैरुपायैस्तौ क्रूरावृषीन्दृष्ट्वा निजघ्नतुः ॥ १-२३०-२१ (१००२७)
निवृत्तयज्ञस्वाध्याया प्रनष्टनृपतिद्विजा ।
उत्सन्नोत्सवयज्ञा च बभूव वसुधा तदा ॥ १-२३०-२२ (१००२८)
हाहाभूता भयार्ता च निवृत्तविपणापणा ।
निवृत्तदेवकार्या च पुण्योद्वाहविवर्जिता ॥ १-२३०-२३ (१००२९)
निवृत्तकृषिगोरक्षा विध्वस्तनगराश्रमा ।
अस्थिकङ्कालसंकीर्णा भूर्बभूवोग्रदर्शना ॥ १-२३०-२४ (१००३०)
निवृत्तपितृकार्यं च निर्वषट्कारमङ्गलम् ।
जगत्प्रतिभयाकारं दुष्प्रेक्ष्यमभवत्तदा ॥ १-२३०-२५ (१००३१)
चन्द्रादित्यौ ग्रहास्तारा नक्षत्राणि दिवौकसः ।
जग्मुर्विषादं तत्कर्म दृष्ट्वा सुन्दोपसुन्दयोः ॥ १-२३०-२६ (१००३२)
एवं सर्वा दिशो दैत्यौ जित्वा क्रूरेण कर्मणा ।
निःसपत्नौ कुरुक्षेत्रे निवेशमभिचक्रतुः ॥ ॥ १-२३०-२७ (१००३३)

इति श्रीमन्महाभारते आदिपर्वणि विदुरागमनराज्यलाभपर्वणि
त्रिंशदधिकद्विशततमोऽध्यायः ॥ २३० ॥
Mahabharata - Adi Parva - Chapter Footnotes

१-२३०-३ प्रस्थितौ सहधर्मिण्या इति ख पाठः
। जयमरणरूपतुल्यधर्म पत्येत्यर्थः। रत्नो ॥
१-२३०-१९ अदृश्यद्भिः अदृश्यैः तृतीयाचेयं सप्तम्य्र्थे
ऋषिष्वदृश्येषु सत्स्वित्यर्थः ॥
त्रिंशदधिकद्विशततमोऽध्यायः ॥
२३० ॥

---

अध्यय२३१
॥ श्रीः ॥
१.२३१. अध्यायः २३१

Mahabharata - Adi Parva - Chapter Topics
सुन्दोपसुन्दकृतोपद्रवं निवेद्य देवादिभिः प्रार्थितेन ब्रह्मणा
आज्ञप्तेन विश्वकर्मणा तिलोत्तमासृष्टिः ॥ १ ॥
तिलोत्तमया ब्रह्माज्ञास्वीकारः ॥ २ ॥

१-२३१-० (१००३४)
नारद उवाच। १-२३१-०क्ष् (१२५९)
ततो देवर्षयः सर्वे सिद्धाश्च परमर्षयः ।
जग्मुस्तदा परमार्तिं दृष्ट्वा तत्कदनं महत् ॥ १-२३१-१ (१००३५)
तेऽभिजग्मुर्जितक्रोधा जितात्मानो जितेन्द्रियाः ।
पितामहस्य भनं जगतः कृपया तदा ॥ १-२३१-२ (१००३६)
ततो ददृशुरासीनं सह देवैः पितामहम् ।
सिद्धैर्ब्रह्मर्षिभिश्चैव समन्तात्परिवारितम् ॥ १-२३१-३ (१००३७)
तत्र देवो महादेवस्तत्राग्निर्वायुना सह ।
चन्द्रादित्यौ च शक्रश्च पारमेष्ठ्यास्तथर्षयः ॥ १-२३१-४ (१००३८)
वैखानसा वालखिल्या वानप्रस्था मरीचिपाः ।
अजाश्चैवाविमूढाश्च तेजोगर्भास्तपस्विनः ॥ १-२३१-५ (१००३९)
ऋषयः सर्व एवैते पितामहमुपागमन् ।
ततोऽभिगम्य ते दीनाः सर्व एव महर्षयः ॥ १-२३१-६ (१००४०)
सुन्दोपसुन्दयौः कर्म सर्वमेव शशंसिरे ।
यथा हृतं यथा चैव कृतं येन क्रमेण च ॥ १-२३१-७ (१००४१)
न्यवेदयंस्ततः सर्वमखिलेन पितामहे ।
ततो देवगणाः सर्वे ते चैव परमर्षयः ॥ १-२३१-८ (१००४२)
तमेवार्थं पुरस्कृत्य पितामहमचोदयन् ।
ततः पितामहः श्रुत्वा सर्वेषां तद्वचस्तदा ॥ १-२३१-९ (१००४३)
मुहूर्तमिव संचिन्त्य कर्तव्यस्य च निश्चयम् ।
तयोर्वधं समुद्दिश्य विश्वकर्माणमाह्वयत् ॥ १-२३१-१० (१००४४)
दृष्ट्वा च विश्वकर्माणं व्यादिदेश पितामहः ।
सृज्यतां प्रार्थनीयैका प्रमदेति महातपाः ॥ १-२३१-११ (१००४५)
पितामहं नमस्कृत्य तद्वाक्यमभिनन्द्य च ।
निर्ममे योषितं दिव्यां चिन्तयित्वा पुनःपुनः ॥ १-२३१-१२ (१००४६)
त्रिषु लोकेषु यत्किंचिद्भूतं स्थावरजङ्गमम् ।
समानयद्दर्शनीयं तत्तदत्र स विश्ववित् ॥ १-२३१-१३ (१००४७)
कोटिशश्चैव रत्नानि तस्या गात्रे न्यवेशत् ।
तां रत्नसङ्घातमयीमसृजद्देवरूपिणीम् ॥ १-२३१-१४ (१००४८)
सा प्रयत्नेन महता निर्मिता विश्वकर्मणा ।
त्रिषु लोकेषु नारीणां रूपेणाप्रतिमाभवत् ॥ १-२३१-१५ (१००४९)
न तस्याः सूक्ष्ममप्यस्ति यद्गात्रे रूपसंपदा ।
नियुक्ता यत्र वा दृष्टिर्न सज्जति निरीक्षताम् ॥ १-२३१-१६ (१००५०)

सा विग्रहवतीव श्रीः कामरूपा वपुष्मती ।
गपितामहमुपातिष्ठत्किं करोमीति चाब्रवीत् ॥ १-२३१-१७ (१००५१)
प्रीतो भूत्वा स दृष्ट्वैव प्रीत्या चास्यै वरं ददौ ।
कान्तत्वं सर्वभूतानां साश्रियानुत्तमं वपुः ॥ १-२३१-१८ (१००५२)
सा तेन वरदानेन कर्तुश्च क्रियया तदा।'
जहार सर्वभूतानां चक्षूंषि च मनांसि च ॥ १-२३१-१९ (१००५३)
तिलंतिलं समानीय रत्नानां यद्विनिर्मिता ।
तिलोत्तमेति तत्तस्या नाम चक्रे पितामहः ॥ १-२३१-२० (१००५४)
ब्रह्माणं सा नमस्कृत्य प्राञ्जलिर्वाक्यमब्रवीत् ।
किं कार्यं मयि भूतेश येनास्म्यद्येह निर्मिता ॥ १-२३१-२१ (१००५५)
पितामह उवाच। १-२३१-२२क्ष् (१२६०)
गच्छ सुन्दोपसुन्दाभ्यामसुराभ्यां तिलोत्तमे ।
प्रार्थनीयेन रूपेण कुरु भद्रे प्रलोभनम् ॥ १-२३१-२२ (१००५६)
त्वत्कृते दर्शादेव रूपसंपत्कृतेन वै ।
विरोधः स्याद्यथा ताभ्यामन्योन्येन तथा कुरु ॥ १-२३१-२३ (१००५७)
नारद उवाच। १-२३१-२४क्ष् (१२६१)
सा तथेति प्रतिज्ञाय नमस्कृत्य पितामहम् ।
चकार मण्डलं तत्र विबुधानां प्रदक्षिणम् ॥ १-२३१-२४ (१००५८)
प्राङ्मुखो भगवानास्ते दक्षिणेन महेश्वरः ।
देवाश्चैवोत्तरेणासन्सर्वतस्त्वृषयोऽभवन् ॥ १-२३१-२५ (१००५९)
कुर्वन्त्यां तु तदा तत्र मण्डलं तत्प्रदक्षिणम् ।
इन्द्रः स्थाणुश्च भगवान्धैर्येण तु परिच्युतौ ॥ १-२३१-२६ (१००६०)
द्रष्टुकामस्य चात्यर्थं गतायां पार्श्वतस्तथा ।
अन्यदञ्चितपद्माक्षं दक्षिणं निःसृतं मुखम् ॥ १-२३१-२७ (१००६१)
पृष्ठतः परिवर्तन्त्यां पश्चिमं निःसृतं मुखम् ।
गतायां चोत्तरं पार्श्वमुत्तरं निःसृतं मुखम् ॥ १-२३१-२८ (१००६२)
महेन्द्रस्यापि नेत्राणां पृष्ठतः पार्श्वतोग्रतः ।
रक्तान्तानां विशालानां सहस्रं सर्वतोऽभवत् ॥ १-२३१-२९ (१००६३)
एवं चतुर्मुखः स्थाणुर्महादेवोऽभवत्पुरा ।
तथा सहस्रनेत्रश्च बभूव बलसूदनः ॥ १-२३१-३० (१००६४)
तथा देवनिकायानां महर्षीणां च सर्वशः ।
मुखानि चाभ्यवर्तन्त येन याति तिलोत्तमा ॥ १-२३१-३१ (१००६५)
तस्या गात्रे निपतिता दृष्टिस्तेषां महात्मनाम् ।
सर्वेषामेव भूयिष्ठमृते देवं पितामहम् ॥ १-२३१-३२ (१००६६)
गच्छन्त्यां तु तया सर्वे देवाश्च परमर्षयः ।
कृतमित्येव तत्कार्यं मेनिरे रूपसंपदा ॥ १-२३१-३३ (१००६७)

तिलोत्तमायां तस्यां तु गतायां लोकभावनः ।
ग्कृतं कार्यमिति श्रीमानब्रवीच्च पितामहः।'
सर्वान्विसर्जयामास देवानृषिगणांश्च तान् ॥ ॥ १-२३१-३४ (१००६८)

इति श्रीमन्महाभारते आदिपर्वणि विदुरागमनराज्यलाभपर्वणि
एकत्रिंशदधिकद्विशततमोऽध्यायः ॥ २३१ ॥
Mahabharata - Adi Parva - Chapter Footnotes

१-२३१-२३ ताभ्यां तयोः ॥
१-२३१-३१ देवनिकायानां देवसङ्घानां येन देशेन मार्गेण सा याति
तथा मुखान्यभ्यवर्तन्त ॥
एकत्रिंशदधिकद्विशततमोऽध्यायः ॥
२३१ ॥

---

अध्यय२३२
॥ श्रीः ॥
१.२३२. अध्यायः २३२

Mahabharata - Adi Parva - Chapter Topics
सुन्दोपसुन्दलमीपे तिलोत्तमाया आगमनम् ॥ १ ॥
तस्यां सकामयोस्तयोः परस्परं गदाप्रहारेण मरणम् ॥ २ ॥
तिलोत्तमाया ब्रह्मणा वरदानम् ॥ ३ ॥
नारदोक्तामिमां कथां श्रुतवद्भिः पाण्डवैः तत्समक्षं द्रौपदीविषये
समयकरणम् ॥ ४ ॥

Mahabharata - Adi Parva - Chapter Text

१-२३२-० (१००६९)
नारद उवाच। १-२३२-०क्ष् (१२६२)
जित्वा तु पृथिवीं दैत्यौ निःसपत्नौ गतव्यथौ ।
कृत्वा त्रैलोक्यमव्यग्रं कृतकृत्यौ बभूवतुः ॥ १-२३२-१ (१००७०)
देवगन्धर्वयक्षाणां नागपार्थिवरक्षसाम् ।
आदाय सर्वरत्नानि परां तुष्टिमुपागतौ ॥ १-२३२-२ (१००७१)
यदा न प्रतिषेद्धारस्तयोः सन्तीह केचन ॥
निरुद्योगौ तदा भूत्वा विजह्रातेऽमराविव ॥ १-२३२-३ (१००७२)
स्त्रीभिर्माल्यैश्च गन्धैश्च भक्ष्यभोज्यैः सुपुष्कलैः ।
पानैश्च विविधैर्हृद्यैः परां प्रीतिमवापतुः ॥ १-२३२-४ (१००७३)

अन्तःपुरवनोद्याने पर्वतेषु वनेषु च ।
यथेप्सितेषु देशेषु विजह्रातेऽमराविव ॥ १-२३२-५ (१००७४)
ततः कदाचिद्विन्ध्यस्य प्रस्थे समशिलातले ।
पुष्पिताग्रेषु सालेषु विहारमभिजग्मतुः ॥ १-२३२-६ (१००७५)
दिव्येषु सर्वकामेषु समानीतेषु तावुभौ ।
वरासनेषु संहृष्टौ सह स्त्रीभिर्निषीदतुः ॥ १-२३२-७ (१००७६)
ततो वादित्रनृत्ताभ्यामुपातिष्ठन्त तौ स्त्रियः ।
गीतैश्च स्तुतिसंयुक्तैः प्रीत्या समुपजग्मिरे ॥ १-२३२-८ (१००७७)
ततस्तिलोत्तमा तत्र वने पुष्पाणि चिन्वती ।
वेषं सा क्षिप्तमाधाय रक्तेनैकेन वाससा ॥ १-२३२-९ (१००७८)
नदीतीरेषु जातान्सा कर्णिकारान्प्रचिन्वती ।
शनैर्जगाम तं देशं यत्रास्तां तौ महासुरौ ॥ १-२३२-१० (१००७९)
तौ तु पीत्वा वरं पानं मदरक्तान्तलोचनौ ।
दृष्ट्वैव तां वरारोहां व्यथितौ संबभूवतुः ॥ १-२३२-११ (१००८०)
तावुत्थायासनं हित्वा जग्मतुर्यत्र सा स्थिता ।
उभौ च कामसंमत्तावुभौ प्रार्थयतश्च ताम् ॥ १-२३२-१२ (१००८१)
दक्षिणे तां करे सुभ्रूं सुन्दो जग्राह पाणिना ।
उपसुन्दोपि जग्राह वामे पाणौ तिलोत्तमाम् ॥ १-२३२-१३ (१००८२)
वरप्रदानमत्तौ तावौरसेन बलेन च ।
धनरत्नमदाभ्यां च सुरापानमदेन च ॥ १-२३२-१४ (१००८३)
सर्वैरेतैर्मदैर्मत्तावन्योन्यं भ्रुकुटीकृतौ ।
मदकामसमाविष्टौ परस्परमथोचतुः ॥ १-२३२-१५ (१००८४)
मम भार्या तव गुरुरिति सुन्दोऽभ्यभाषत ।
मम भार्या तव वधूरुपसुन्दोऽभ्यभाषत ॥ १-२३२-१६ (१००८५)
नैषा तव ममैषेति ततस्तौ मन्युराविशत् ।
तस्या रूपेण संमत्तौ विगतस्नेहसौहृदौ ॥ १-२३२-१७ (१००८६)
तस्या हेतोर्गदे भीमे संगृह्णीतामुभौ तदा ।
प्रगृह्य च गदे भीमे तस्यां तौ काममोहितौ ॥ १-२३२-१८ (१००८७)
अहंपूर्वमहंपूर्वमित्यन्योन्यं निजघ्नतुः ।
तौ गदाभिहतौ भीमौ पेततुर्धरणीतले ॥ १-२३२-१९ (१००८८)
रुधिरेणावसिक्ताङ्गौ द्वाविवार्कौ नभश्च्युतौ ।
ततस्ता विद्रुता नार्यः स च दैत्यगणस्तथा ॥ १-२३२-२० (१००८९)
पातालमगमत्सर्वो विषादभयकम्पितः ।
ततः पितामहस्तत्र सहदेवैर्महर्षिभिः ॥ १-२३२-२१ (१००९०)
आजगाम विशुद्धात्मा पूजयंश्च तिलोत्तमाम् ।
वरेण च्छन्दयामास भगवान्प्रपितामहः ॥ १-२३२-२२ (१००९१)

वरं दित्सुः स तत्रैनां प्रीतः प्राह पितामहः ।
आदित्यचरिताँल्लोकान्विचरिष्यसि भामिनि ॥ १-२३२-२३ (१००९२)
तेजसा च सुदृष्टां त्वां न करिष्यति कश्चन ।
एवं तस्यै वरं दत्वा सर्वलोकपितामहः ॥ १-२३२-२४ (१००९३)
इन्द्रे त्रैलोक्यमाधाय ब्रह्मलोकं गतः प्रभुः ।
एवं तौ सहितौ भऊत्वा सर्वार्थेष्वेकनिश्चयौ ॥ १-२३२-२५ (१००९४)
तिलोत्तमार्थं संक्रुद्धावन्योन्यमभिजघ्नतुः ।
तस्माद्ब्रवीमि वः स्नेहात्सर्वाभरतसत्तमाः ॥ १-२३२-२६ (१००९५)
यथा वो नात्र भेदः स्यात्सर्वेषां द्रौपदीकृते ।
तथा कुरुत भद्रं वो मम चेत्प्रियमिच्छथ ॥ १-२३२-२७ (१००९६)
वैशंपायन उवाच। १-२३२-२८क्ष् (१२६३)
एवमुक्ता महात्मानो नारदेन महर्षिणा ।
समयं चक्रिरे राजंस्तेऽन्योन्यवशमागताः ।
समक्षं तस्य देवर्षेर्नारदस्यामितौजसः ॥ १-२३२-२८ (१००९७)
ग्एकैकस्य गृहे कृष्णा वसेद्वर्षमकल्मषा'
द्रौपद्या नः सहासीनानन्योन्यं योऽभिदर्शयेत् ।
स नो द्वादश मासानि ब्रह्मचारी वने वसेत् ॥ १-२३२-२९ (१००९८)
कृते तु समये तस्मिन्पाण्डवैर्धर्मचारिभिः ।
नारदोऽप्यगमत्प्रीत इष्टं देशं महामुनिः ॥ १-२३२-३० (१००९९)
एवं तैः समयः पूर्वं कृतो नारदचोदितैः ।
न चाभिद्यन्त ते सर्वे तदान्योन्येन भारत ॥ १-२३२-३१ (१०१००)
ग्अभ्यनन्दन्त ते सर्वे तदान्योन्यं च पाण्डवाः ।
एतद्विस्तरशः सर्वमाख्यातं ते नराधिप ॥ १-२३२-३२ (१०१०१)
काले च तस्मिन्संपन्ने यथावज्जनमेजय ॥' ॥ १-२३२-३३ (१०१०२)

इति श्रीमन्महाभारते आदिपर्वणि विदुरागमनराज्यलाभपर्वणि
द्वात्रिंशदधिकद्विशततमोऽध्यायः ॥ २३२ ॥ ॥ समाप्तं च
विदुरागमनराज्यलाभपर्व ॥
Mahabharata - Adi Parva - Chapter Footnotes

१-२३२-२४ तेजसाऽर्कवत्परदृष्ट्यभिभावकत्वात्सुदृष्टां
सम्यग्दृष्टां न करिष्यति कश्चित् ॥
द्वात्रिंशदधिकद्विशततमोऽध्यायः ॥
२३२ ॥

---

अध्यय२३३
॥ श्रीः ॥

१.२३३. अध्यायः २३३

(अर्थार्जुनवनवासपर्व ॥ १५ ॥)
Mahabharata - Adi Parva - Chapter Topics
तस्करैः कस्यचिद्ब्राह्मणस्य गोहरणम् ॥ १ ॥
चोरितानां गवां प्रत्याजिहीर्षया धनुर्ग्रहणार्थं
द्रौपदीयुधिष्ठिराधिष्ठिते आयुधागारे अर्जुनस्य प्रवेशः ॥ २ ॥
चोरेभ्यः प्रत्याहृता गाः ब्राह्मणाय दत्त्वा यथासमयं अर्जुनस्य तीर्थयात्रा ॥ ३ ॥

Mahabharata - Adi Parva - Chapter Text

१-२३३-० (१०१०३)
वैशंपायन उवाच। १-२३३-०क्ष् (१२६४)
एवं ते समयं कृत्वा न्यवसंस्तत्र पाण्डवाः ।
वशे शस्त्रप्रतापेन कुर्वन्तोऽन्यान्महीक्षितः ॥ १-२३३-१ (१०१०४)
तेषां मनुजसिंहानां पञ्चानाममितौजसाम् ।
बभूव कृष्णा सर्वेषां पार्थानां वशवर्तिनी ॥ १-२३३-२ (१०१०५)
ते तया तैश्च सा वीरैः पतिभिः सह पञ्चभिः ।
बभूव परमप्रीता नागैरिव सरस्वती ॥ १-२३३-३ (१०१०६)
वर्तमानेषु धर्मेण पाण्डवेषु महात्मसु ।
व्यवर्धन्कुरवः सर्वे हीनदोषाः सुखान्विताः ॥ १-२३३-४ (१०१०७)
अथ दीर्घेण कालेन ब्राह्मणस्य विशांपते ।
कस्यचित्तस्करा जह्रुः केचिद्गा नृपसत्तम ॥ १-२३३-५ (१०१०८)
ह्रियमाणे धने तस्मिन्ब्राह्मणः क्रोधमूर्च्छितः ।
आगम्य खाण्डवप्रस्थमुदक्रोशत्स पाण्डवान् ॥ १-२३३-६ (१०१०९)
ह्रियते गोधनं क्षुद्रैर्नृशंसैरकृतात्मभिः ।
प्रसह्य चास्मद्विषयादभ्यधावत पाण्डवाः ॥ १-२३३-७ (१०११०)
ब्राह्मणस्य प्रशान्तस्य हविर्ध्वाङ्क्षैः प्रलुप्यते ।
शार्दूलस्य गुहां शून्यां नीचः क्रोष्टाभिमर्दति ॥ १-२३३-८ (१०१११)
अरक्षितारं राजानं बलिषड्भागहारिणम् ।
तमाहुः सर्वलोकस्य समग्रं पापचारिणम् ॥ १-२३३-९ (१०११२)
ब्राह्मणस्वे हृते चोरैर्धर्मार्थे च विलोपिते ।
रोरूयमाणे च मयि क्रियतां हस्तधारणा ॥ १-२३३-१० (१०११३)
वैशंपायन उवाच। १-२३३-११क्ष् (१२६५)
रोरूयमाणस्याभ्याशे भृशं विप्रस्य पाण्डवः ।

तानि वाक्यानि शुश्राव कुन्तीपुत्रो धनञ्जयः ॥१-२३३-११ (१०११४)
श्रुत्वैव च महाबाहुर्मा भैरित्याह तं द्विजम् ।
आयुधानि च यत्रासन्पाण्डवानां महात्मनां ॥१-२३३-१२ (१०११५)
कृष्णया सह तत्रास्ते धर्मराजो युधिष्ठिरः ।
संप्रवेशाय चाशक्तो गमनाय च पाण्डवः ॥१-२३३-१३ (१०११६)
तस्य चार्तस्य तैर्वाक्यैश्चोद्यमानः पुनःपुनः ।
आक्रन्दे तत्र कौन्तेयश्चिन्तयामास दुःखितः ॥१-२३३-१४ (१०११७)
ह्रियमाणे धने तस्मिन्ब्राह्मणस्य तपस्विनः ।
अश्रुप्रमार्जनं तस्य कर्तव्यमिति निश्चयः ॥१-२३३-१५ (१०११८)
उपरेक्षणजोऽधर्मः सुमहान्स्यान्महीपतेः ।
यद्यस्य रुदतो द्वारि न करोम्यद्य रक्षणम् ॥१-२३३-१६ (१०११९)
अनास्तिक्यं च सर्वेषामस्माकमपि रक्षणे ।
प्रतितिष्ठेत लोकेऽस्मिन्नधर्मश्चैव नो भवेत् ॥१-२३३-१७ (१०१२०)
अनापृच्छ्य तु राजानं गते मयि न संशयः ।
अजातशत्रोर्नृपतेर्मयि चैवानृतं भवेत् ॥१-२३३-१८ (१०१२१)
अनुप्रवेशे राज्ञस्तु वनवासो भवेन्मम ।
सर्वमन्यत्परिहृतं धर्षणात्तु महीपतेः ॥१-२३३-१९ (१०१२२)
अधर्मो वै महानस्तु वने वा मरणं मम ।
शरीरस्य विनाशेन धर्म एव विशिष्यते ॥१-२३३-२० (१०१२३)
एवं विनिश्चित्य ततः कुन्तीपुत्रो धनञ्जयः ।
अनुप्रविश्य राजानमापृच्छ्य च विशांपते ॥१-२३३-२१ (१०१२४)
ग्मुखमाच्छाद्य निबिडमुत्तरीयेण वाससा ।
अग्रजं चार्जुनो गेहादभिवाद्याशु निःसृतः ॥' १-२३३-२२ (१०१२५)
धनुरादाय संहृष्टो ब्राह्मणं प्रत्यभाषत ।
ब्राह्मणा गम्यतां शीघ्रं यावत्परधनैर्षिणः ॥१-२३३-२३ (१०१२६)
न दूरे ते गताः क्षुद्रास्तावद्गच्छावहे सह ।
यावन्निवर्तयाम्यद्य चोरहस्ताद्धनं तव ॥१-२३३-२४ (१०१२७)
सोऽनुसृत्य महाबाहुर्धन्वी वर्मी रथी ध्वजी ।
शरैर्विध्वस्य तांश्चोरानवजित्य च तद्धनम् ॥१-२३३-२५ (१०१२८)
ब्राह्मणं समुपाकृत्य यशः प्राप्य च पाण्डवः ।
ततस्तद्गोधनं पार्थो दत्त्वा तस्मै द्विजातये ॥१-२३३-२६ (१०१२९)
आजगाम पुरं वीरः सव्यसाची धनञ्जयः ।
सोऽभिवाद्य गुरून्सर्वान्सर्वैश्चाप्यभिनन्दितः ॥१-२३३-२७ (१०१३०)
धर्मराजमुवाचेदं व्रतमादिश मे प्रभो ।
समयः समतिक्रान्तो भवत्संदर्शने मया ॥१-२३३-२८ (१०१३१)
वनवासं गमिष्यामि समयो ह्येष नः कृतः ।

इत्युक्तो धर्मरास्तु सहसा वाक्यमप्रियम् ॥ १-२३३-२९ (१०१३२)
कथमित्यब्रवीद्वाचा शोकार्तः सज्जमानया ।
युधिष्ठिरो गुडाकेशं भ्राता भ्रातरमच्युतम् ॥ १-२३३-३० (१०१३३)
उवाच दीनो राजा च धनञ्जयमिदं वचः ।
प्रमाणमस्मि यदि ते मत्तः शृणु वचोऽनघ ॥ १-२३३-३१ (१०१३४)
अनुप्रवेशे यद्वीर कृतवांस्त्वं ममाप्रियम् ।
सर्वं तदनुजानामि व्यलीकं न च मे हृदि ॥ १-२३३-३२ (१०१३५)
गुरोरनुप्रवेशो हि नोपघातो यवीयसः ।
यवीयसोऽनुप्रवेशो ज्येष्ठस्य विधिलोपकः ॥ १-२३३-३३ (१०१३६)
निवर्तस्व महाबाहो कुरुष्व वचनं मम ।
न हि ते धर्मलोपोऽस्ति न च ते धर्षणा कृता ॥ १-२३३-३४ (१०१३७)
अर्जुन उवाच। १-२३३-३५क्ष् (१२६६)
न व्याजेन चरेद्धर्ममिति मे भवतः श्रुतम् ।
न सत्याद्विचलिष्यामि सत्येनायुधमालभे ॥ १-२३३-३५ (१०१३८)
वैशंपायन उवाच। १-२३३-३६क्ष् (१२६७)
सोऽभ्यनुज्ञाय राजानं वनचर्याय दीक्षितः ।
वने द्वादश मासांस्तु वासायानुजगाम ह ॥ ॥ १-२३३-३६ (१०१३९)

इति श्रीमन्महाभारते आदिपर्वणि अर्जुनवनवासपर्वणि
त्रयस्त्रिंशदधिकद्विशततमोऽध्यायः ॥ २३३ ॥
Mahabharata - Adi Parva - Chapter Footnotes

१-२३३-३ नागैर्गजवधूरिव इति ङ । पाठः ॥
१-२३३-१६ उपप्रेक्षणज उपेक्षाजन्यः ॥
१-२३३-१७ अनास्तिक्यमास्तिक्याभावः ॥
१-२३३-३० सज्जमानया स्खलन्त्या ॥
१-२३३-३६ मासांस्तु ब्रह्मचर्याय दीक्षितः इति ङ । पाठः ॥
त्रयस्त्रिंशदधिकद्विशततमोऽध्यायः ॥
२३३ ॥

---

अध्यय२३४
॥ श्रीः ॥
१.२३४. अध्यायः २३४

Mahabharata - Adi Parva - Chapter Topics
ब्राह्मणैः सह तीर्थान्यटतोऽर्जुनस्य स्नानार्थं गङ्गायामवतरणम् ॥ १ ॥
तत्र उलूप्या नागकन्यया गृहीतस्यार्जुनस्य नागलोकगमनम् ॥ २ ॥

संवादपूर्वकमुलूप्याः परिग्रहः ॥ ३ ॥
इरावत उत्पत्तिः ॥ ४ ॥
अर्जुनं पुनर्गङ्गाद्वारमुपनीय उलूप्या स्वलोकगमनम् ॥ ५ ॥

Mahabharata - Adi Parva - Chapter Text

१-२३४-० (१०१४०)
वैशंपायन उवाच। १-२३४-०क्ष् (१२६८)
तं प्रयान्तं महाबाहुं कौरवाणां यशस्करम् ।
अनुजग्मुर्महात्मानो ब्राह्मणा वेदपारगाः ॥ १-२३४-१ (१०१४१)
वेदवेदाङ्गविद्वासस्तथैवाध्यात्मचिन्तकाः ।
भैक्षाश्च भगवद्भक्ताः सूताः पौराणिकाश्च ये ॥ १-२३४-२ (१०१४२)
कथकाश्चापरे राजञ्श्रमणाश्च वनौकसः ।
दिव्याख्यानानि ये चापि पठन्ति मधुरं द्विजाः ॥ १-२३४-३ (१०१४३)
एतैश्चान्यैश्च बहुभिः सहायैः पाण्डुनन्दनः ।
वृतः श्लक्ष्णकथैः प्रायान्मरुद्भिरिव वासवः ॥ १-२३४-४ (१०१४४)
रमणीयानि चित्राणि वनानि च सरांसि च ।
सरितः सागरांश्चैव देशानपि च भारत ॥ १-२३४-५ (१०१४५)
पुण्यान्यपि च तीर्थानि ददर्श भरतर्षभः ।
स गङ्गाद्वारमाश्रित्य निवेशमकरोत्प्रभुः ॥ १-२३४-६ (१०१४६)
तत्र तस्याद्भुतं कर्म शृणु त्वं जनमेजय ।
कृतवान्यद्विशुद्धात्मा पाण्डूनां प्रवरो हि सः ॥ १-२३४-७ (१०१४७)
निविष्टे तत्र कौन्तेये ब्राह्मणेषु च भारत ।
अग्निहोत्राणि विप्रास्ते प्रादुश्चक्रुरनेकशः ॥ १-२३४-८ (१०१४८)
तेषु प्रबोध्यमानेषु ज्वलितेषु हुतेषु च ।
कृतपुष्पोपहारेषु तीरान्तरगतेषु च ॥ १-२३४-९ (१०१४९)
कृताभिषेकैर्विद्वद्भिर्नियतैः सत्पथे स्थितैः ।
शुशुभेऽतीव तद्राजन्गङ्गाद्वारं महात्मभिः ॥ १-२३४-१० (१०१५०)
तथा पर्याकुले तस्मिन्निवेशे पाण्डवर्षभः ।
अभिषेकाय कौन्तेयो गङ्गामवततार ह ॥ १-२३४-११ (१०१५१)
तत्राभिषेकं कृत्वा स तर्पयित्वा पितामहान् ।
उत्तितीर्षुर्जलाद्राजन्नग्निकार्यचिकीर्षया ॥ १-२३४-१२ (१०१५२)
अपकृष्टो महाबाहुर्नागराजस्य कन्यया ।
अन्तर्जले महाराज उलूप्या कामयानया ॥ १-२३४-१३ (१०१५३)
ददर्श पाण्डवस्तत्र पावकं सुसमाहितः ।
कौरव्यस्याथ नागस्य भवने परमार्चिते ॥ १-२३४-१४ (१०१५४)

तत्राग्निकार्यं कृतवान्कुन्तीपुत्रो धनञ्जयः ।
अशङ्कमानेन हुतस्तेनातुष्यद्धुताशनः ॥ १-२३४-१५ (१०१५५)
अग्निकार्यं स कृत्वा तु नागराजसुतां तदा ।
प्रसहन्निव कौन्तेय इदं वचनमब्रवीत् ॥ १-२३४-१६ (१०१५६)
किमिदं साहसं भीरु कृतवत्यसि भामिनि ।
कश्चायं सुभगे देशः का च त्वं कस्य वात्मजा ॥ १-२३४-१७ (१०१५७)
उलूप्युवाच। १-२३४-१८क्ष् (१२६९)
ऐरावतकुले जातः कौरव्यो नाम पन्नगः ।
तस्यास्मि दुहिता राजन्नुलूपी नाम पन्नगी ॥ १-२३४-१८ (१०१५८)
साऽहं त्वामभिषेकार्थमवतीर्णं समुद्गाम् ।
दृष्ट्वैव पुरुषव्याघ्र कन्दर्पेणाभिमूर्च्छिता ॥ १-२३४-१९ (१०१५९)
तां मामनङ्गग्लपितां त्वत्कृते कुरुनन्दन ।
अनन्यां नन्दयस्वाद्य प्रदानेनात्मनोऽनघ ॥ १-२३४-२० (१०१६०)
अर्जुन उवाच। १-२३४-२१क्ष् (१२७०)
ब्रह्मचर्यमिदं भद्रे मम द्वादशमासिकम् ।
धर्मराजेन चादिष्टं नाहमस्मि स्वयं वशः ॥ १-२३४-२१ (१०१६१)
तव चापि प्रियं कर्तुमिच्छामि जलचारिणि ।
अनृतं नोक्तपूर्वं च मया किंचन कर्हिचित् ॥ १-२३४-२२ (१०१६२)
कथं च नानृतं मे स्यात्तव चापि प्रियं भवेत् ।
न च पीड्येत मे धर्मस्तथा कुर्या भुजङ्गमे ॥ १-२३४-२३ (१०१६३)
उलूप्युवाच। १-२३४-२४क्ष् (१२७१)
जानाम्यहं पाण्डवेय यथा चरसि मेदिनीम् ।
यथा च ते ब्रह्मचर्यमिदमादिष्टवान्गुरुः ॥ १-२३४-२४ (१०१६४)
परस्परं वर्तमानान्द्रुपदस्यात्मजां प्रति ।
यो नोऽनुप्रविशेन्मोहात्स वै द्वादशमासिकम् ॥ १-२३४-२५ (१०१६५)
वने चरेद्ब्रह्मचर्यमिति वः समयः कृतः ।
तदिदं दौपदीहेतोरन्योन्यस्य प्रवासनम् ॥ १-२३४-२६ (१०१६६)
कृतवांस्तत्र धर्मार्थमत्र धर्मो न दुष्यति ।
परित्राणं च कर्तव्यमार्तानां पृथुलोचन ॥ १-२३४-२७ (१०१६७)
कृत्वा मम परित्राणं तव धर्मो न लुप्यते ।
यदि वाप्यस्य धर्मस्य सूक्ष्मोऽपि स्याद्व्यतिक्रमः ॥ १-२३४-२८ (१०१६८)
स च ते धर्म एव स्याद्दत्वा प्राणान्ममार्जुन ।
भक्तां च भज मां पार्थ सतामेतन्मतं प्रभो ॥ १-२३४-२९ (१०१६९)
न करिष्यसि चेदेवं मृतां मामुपधारय ।
प्राणदानान्महाबाहो चर धर्ममनुत्तमम् ॥ १-२३४-३० (१०१७०)
शरणं च प्रपन्नास्मि त्वामद्य पुरुषोत्तम ।

दीनाननाथान्कौन्तेय परिरक्षसि नित्यशः ॥ १-२३४-३१ (१०१७१)
साऽहं शरणमभ्येमि रोरवीमि च दुःखिता ।
याचे त्वां चाभिकामाहं तस्मात्कुरु मम प्रियम् ।
स त्वमात्मप्रदानेन सकामां कर्तुमर्हसि ॥ १-२३४-३२ (१०१७२)
वैशंपायन उवाच। १-२३४-३३क्ष् (१२७२)
एवमुक्तस्तु कौन्तेयः पन्नगेश्वरकन्यया ।
कृतवांस्तत्तथा सर्वं धर्ममुद्दिश्य कारणम् ॥ १-२३४-३३ (१०१७३)
स नागभवने रात्रिं तामुषित्वा प्रतापवान् ।
ग्पुत्रमुत्पादयामास स तस्यां सुमनोहरम् ॥ १-२३४-३४ (१०१७४)
इरावन्तं महाभागं महाबलपराक्रमम्।'
उदितेऽभ्युत्थितः सूर्ये कौरव्यस्य निवेशनात् ॥ १-२३४-३५ (१०१७५)
आगतस्तु पुनस्तत्र गङ्गाद्वारं तया सह ।
परित्यज्य गता साध्वी उलूपी निजमन्दिरं ॥ १-२३४-३६ (१०१७६)
दत्त्वा वरमजेयत्वं जले सर्वत्र भारत ।
साध्या जलचराः सर्वे भविष्यन्ति न संशयः ॥ ॥ १-२३४-३७ (१०१७७)

इति श्रीमन्महाभारते आदिपर्वणि अर्जुनवनवासपर्वणि
चतुस्त्रिंशदधिकद्विशततमोऽध्यायः ॥ २३४ ॥
Mahabharata - Adi Parva - Chapter Footnotes

१-२३४-३६ परिष्वज्येति ख । पाठः ॥
चतुस्त्रिंशदधिकद्विशततमोऽध्यायः ॥
२३४ ॥

---

अध्यय२३५
॥ श्रीः ॥
१.२३५. अध्यायः २३५

Mahabharata - Adi Parva - Chapter Topics
अर्जुनस्य मणलूरग्रामगमनम् ॥ १ ॥
पुत्रिकापुत्रकधर्मेण चित्राङ्गदापरिग्रहः ॥ २ ॥

Mahabharata - Adi Parva - Chapter Text

१-२३५-० (१०१७८)
वैशंपायन उवाच। १-२३५-०क्ष् (१२७३)
कथयित्वा च तत्सर्वं ब्राह्मणेभ्यः स भारत ।

प्रययौ हिमवत्पार्श्वं ततो वज्रधरात्मजः ॥ १-२३५-१ (१०१७९)
अगस्त्यवटमासाद्य वसिष्ठस्य च पर्वतम् ।
भृगुतुङ्गे च कौन्तेयः कृतवाञ्शौचमात्मनः ॥ १-२३५-२ (१०१८०)
प्रददौ गोसहस्राणि सुबहूनि च भारत ।
निवेशांश्च द्विजातिभ्यः सोऽददत्कुरुसत्तमः ॥ १-२३५-३ (१०१८१)
हिरण्यबिन्दोस्तीर्थे च स्नात्वा पुरुषसत्तमः ।
दृष्टवान्पाण्डवश्रेष्ठः पुण्यान्यायतनानि च ॥ १-२३५-४ (१०१८२)
अवतीर्य नरश्रेष्ठो ब्राह्मणैः सह भारत ।
प्राचीं दिशमभिप्रेप्सुर्जगाम भरतर्षभः ॥ १-२३५-५ (१०१८३)
आनुपूर्व्येण तीर्थानि दृष्टवान्कुरुसत्तमः ।
नदीं चोत्पलिनीं रम्यामरण्यं नैमिषं प्रति ॥ १-२३५-६ (१०१८४)
नन्दामपरनन्दां च कौशिकीं च यशस्विनीम् ।
महानदीं गयां चैव गङ्गामपि च भारत ॥ १-२३५-७ (१०१८५)
एवं तीर्थानि सर्वाणि पश्यमानस्तथाश्रमान् ।
आत्मनः पावनं कुर्वन्ब्राह्मणेभ्यो ददौ च गाः ॥ १-२३५-८ (१०१८६)
अङ्गवङ्गकलिङ्गेषु यानि तीर्थानि कानिचित् ।
जगाम तानि सर्वाणि पुण्यान्यायतनानि च ॥ १-२३५-९ (१०१८७)
दृष्ट्वा च विधिवत्तानि धनं चापि ददौ ततः ।
कलिङ्गराष्ट्रद्वारेषु ब्राह्मणाः पाण्डवानुगाः ।
अभ्यनुज्ञाय कौन्तेयमुपावर्तन्त भारत ॥ १-२३५-१० (१०१८८)
स तु तैरभ्यनुज्ञातः कुन्तीपुत्रो धनञ्जयः ।
सहायैरल्पकैः शूरः प्रययौ यत्र सागरः ॥ १-२३५-११ (१०१८९)
स कलिङ्गानतिक्रम्य देशानायतनानि च ।
हर्म्याणि रमणीयानि प्रेक्षणाणो ययौ प्रभुः ॥ १-२३५-१२ (१०१९०)
महेन्द्रपर्वतं दृष्ट्वा तापसैरुपशोभितम् ।
ग्गोदावर्यां ततः स्नात्वा तामतीत्य महाबलः ॥ १-२३५-१३ (१०१९१)
कावेरीं तां समासाद्य सङ्गमे सागरस्य च ।
स्नात्वा संपूज्य देवांश्च पितॄंश्च मुनिभिः सह'॥ १-२३५-१४ (१०१९२)
समुद्रतीरेण शनैर्मणलूरं जगाम ह ॥ १-२३५-१५ (१०१९३)
तत्र सर्वाणि तीर्थानि पुण्यान्यायतनानि च ।
अभिगम्य महाबाहुरभ्यगच्छन्महीपतिम् ॥ १-२३५-१६ (१०१९४)
मणलूरेश्वरं राजन्धर्मज्ञं चित्रवाहनम् ।
तस्य चित्राङ्गदा नाम दुहिता चारुदर्शना ॥ १-२३५-१७ (१०१९५)
तां ददर्श पुरे तस्मिन्विचरन्तीं यदृच्छया ।
दृष्ट्वा च तां वरारोहां चकमे चैत्रवाहनीम् ॥ १-२३५-१८ (१०१९६)
अभिगम्य च राजानमवदत्स्वं प्रयोजनम् ।

देहि मे खल्विमां राजन्क्षत्रियाय महात्मने ॥ १-२३५-१९ (१०१९७)
तच्छ्रुत्वा त्वब्रवीद्राजा कस्य पुत्रोऽसि नाम किम् ।
उवाच तं पाण्डवोऽहं कुन्तीपुत्रो धनञ्जयः ॥ १-२३५-२० (१०१९८)
तमुवाचाथ राजा स सान्त्वपूर्वमिदं वचः ।
राजा प्रभञ्जनो नाम कुलेऽस्मिन्संबभूव ह ॥ १-२३५-२१ (१०१९९)
अपुत्रः प्रसवेनार्थी तपस्तेपे स उत्तमम् ।
उग्रेण तपसा तेन देवदेवः पिनाकधृक् ॥ १-२३५-२२ (१०२००)
ईश्वरस्तोषितः पार्थ देवदेवः उमापतिः ।
स तस्मै भघवान्प्रादादेकैकं प्रसवं कुले ॥ १-२३५-२३ (१०२०१)
एकैकः प्रसवस्तस्माद्भवत्यस्मिन्कुले सदा ।
तेषां कुमाराः सर्वेषां पूर्वेषां मम जज्ञिरे ॥ १-२३५-२४ (१०२०२)
एका च मम कन्येयं कुलस्योत्पादनी भृशम् ।
पुत्रो ममायमिति मे भावना पुरुषर्षभ ॥ १-२३५-२५ (१०२०३)
पुत्रिकाहेतुविधिना संज्ञिता भरतर्षभ ।
तस्मादेकः सुतो योऽस्यां जायते भारत त्वया ॥ १-२३५-२६ (१०२०४)
एतच्छुल्कं भवत्वस्याः कुलकृज्जायतामिह ।
एतेन समयेनेमां प्रतिगृह्णीष्व पाण्डव ॥ १-२३५-२७ (१०२०५)
स तथेति प्रतिज्ञाय तां कन्यां प्रतिगृह्य च ।
ग्मासे त्रयोदशे पार्थः कृत्वा वैवाहिकीं क्रियाम्।'
उवास नगरे तस्मिन्मासांस्त्रीन्स तया सह ॥ ॥ १-२३५-२८ (१०२०६)

इति श्रीमन्महाभारते आदिपर्वणि अर्जुनवनवासपर्वणि
पञ्चत्रिंशदधिकद्विशततमोऽध्यायः ॥ २३५ ॥

---

अध्यय२३६
॥ श्रीः ॥
१.२३६. अध्यायः २३६

Mahabharata - Adi Parva - Chapter Topics
सौभद्रतीर्थे स्नानार्थमवतीर्णस्यार्जुनस्य ग्राहेण ग्रहणम् ॥ १ ॥
जलादुद्धरणेन ग्राहरूपं परित्यज्य नारीरूपं प्राप्तया वर्गानाम्नया
स्वप्रभृतीनां ब्राह्मणेन शापदानकथनम् ॥ २ ॥

Mahabharata - Adi Parva - Chapter Text

१-२३६-० (१०२०७)
वैशंपायन उवाच। १-२३६-०क्ष् (१२७४)

ततः समुद्रे तीर्थानि दक्षिमे भरतर्षभः ।
अभ्यगच्छत्सुपुण्यानि सोभितानि तपस्विभिः ॥ १-२३६-१ (१०२०८)
वर्जयन्ति स्म तीर्तानि तत्र पञ्च सम तापसाः ।
अवकीर्णानि यान्यासन्पुरस्तात्तु तपस्विभिः ॥ १-२३६-२ (१०२०९)
अगस्त्यतीर्थं सौभद्रं पौलोमं च सुपावनम् ।
कारन्धमं प्रसन्नं च महमेधफलं च तत् ॥ १-२३६-३ (१०२१०)
भारद्वाजस्य तीर्थं तु पापप्रशमनं महत् ।
एतानि पञ्च तीर्थानि ददर्श कुरुसत्तमः ॥ १-२३६-४ (१०२११)
विविक्तान्युपलक्ष्याथ तानि तीर्थानि पाण्डवः ।
दृष्ट्वा च वर्ज्यमानानि मुनिभिर्धर्मबुद्धिभिः ॥ १-२३६-५ (१०२१२)
तपस्विनस्ततोऽपृच्छत्प्राञ्जलिः कुरुनन्दनः ।
तीर्थानीमानि वर्ज्यन्ते किमर्थं ब्रह्मवादिभिः ॥ १-२३६-६ (१०२१३)
तापसा ऊचुः। १-२३६-७क्ष् (१२७५)
ग्राहाः पञ्च वसन्त्येषु हरन्ति च तपोधनान् ।
तत एतानि वर्ज्यन्ते तीर्थानि कुरुनन्दन ॥ १-२३६-७ (१०२१४)
वैशंपायन उवाच। १-२३६-८क्ष् (१२७६)
तेषां श्रुत्वा महाबाहुर्वार्यमाणस्तपोधनैः ।
जगाम तानि तीर्थानि द्रष्टुं पुरुषसत्तमः ॥ १-२३६-८ (१०२१५)
ततः सौभद्रमासाद्य महर्षेस्तीर्थमुत्तमम् ।
विगाह्य सहसा शूरः स्नानं चक्रे परन्तपः ॥ १-२३६-९ (१०२१६)
अथ तं पुरुषव्याघ्रमन्तर्जलचरो महान् ।
जग्राह चरणे ग्राहः कुन्तीपुत्रं धनञ्जयम् ॥ १-२३६-१० (१०२१७)
स तमादाय कौन्तेयो विस्फुरन्तं जलेचरम् ।
उदतिष्ठन्महाबाहुर्बलेन बलिनां वरः ॥ १-२३६-११ (१०२१८)
उत्कृष्ट एव ग्राहस्तु सोऽर्जुनेन यशस्विना ।
बभूव नारी कल्याणी सर्वाभरणभूषइता ॥ १-२३६-१२ (१०२१९)
दीप्यमाना श्रिया राजन्दिव्यरूपा मनोरमा ।
तदद्भुतं महद्दृष्ट्वा कुन्तीपुत्रो धनञ्जयः ॥ १-२३६-१३ (१०२२०)
तां स्त्रियं परमप्रीत इदं वचनमब्रवीत् ।
का वै त्वमसि कल्याणिकुतो वाऽसि जलेचरी ॥ १-२३६-१४ (१०२२१)
किमर्थं च महत्पापमिदं कृतवती पुरा। १-२३६-१५ (१०२२२)
वर्गोवाच ।
अप्सराऽस्मि महाबाहो देवारण्यविहारिणी ॥ १-२३६-१५क्ष् (१२७७)
इष्टा धनपतेर्नित्यं वर्गा नाम महाबल ।
मम सख्यश्चतस्रोऽन्याः सर्वाः कामगमाः शुभाः ॥ १-२३६-१६ (१०२२३)
ताभिः सार्धं प्रयाताऽस्मि लोकपालनिवेशनम् ।

ततः पश्यामहे सर्वा ब्राह्मणं संशितव्रतम् ॥ १-२३६-१७ (१०२२४)
रूपवन्तमधीयानमेकमेकान्तचारिणम् ।
तस्यैव तपसा राजंस्तद्वयं तेजसा वृतम् ॥ १-२३६-१८ (१०२२५)
आदित्य इव तं देशं इत्वं सर्व व्यकाशयत् ।
तस्य दृष्ट्वा तपस्तादृग्रूपचाद्भुतमुत्तमम् ॥ १-२३६-१९ (१०२२६)
अवतीर्णाः स्म तं देशं तपोविघ्नचिकीर्षया ।
अहं च सौरभेयी च समीची बुद्बुदा लता ॥ १-२३६-२० (१०२२७)
यौगपद्येन तं विप्रमभ्यगच्छाम भारत ।
गायन्त्योऽथहसन्त्यश्च लोभयित्वा च तं द्विजं ॥ १-२३६-२१ (१०२२८)
स च नास्मासु कृतवान्मनो वीर कथंचन ।
नाकम्पत महातेजाः स्थितस्तपसि निर्मले ॥ १-२३६-२२ (१०२२९)
सोऽशपत्कुपितोऽस्मांस्तु ब्राह्मणः क्षत्रियर्षभ ।
ग्राहभूता जले यूयं चरिष्यथ शतं समाः ॥ ॥ १-२३६-२३ (१०२३०)

इति श्रीमन्महाभारते आदिपर्वणि अर्जुनवनवासपर्वणि
षट्त्रिंशदधिकद्विशततमोऽध्यायः ॥ २३६ ॥
Mahabharata - Adi Parva - Chapter Footnotes

१-२३६-५ धर्मबुद्धिभिर्दुर्मरणज दोषं तीर्थेनाप्यविनाश्यं पश्यद्भिः ॥
१-२३६-१५ चर्चोवाच इति घ पाठः ॥
षट्त्रिंशदधिकद्विशततमोऽध्यायः ॥
२३६ ॥

---

अध्यय२३७
॥ श्रीः ॥
१.२३७. अध्यायः २३७

Mahabharata - Adi Parva - Chapter Topics
प्रसादितेन ब्राह्मणेन कृतस्य शापमोचनप्रकारस्य,
नारदनिदेशेनैतत्तीर्थागमनस्य च अर्जुनंप्रति वर्गया कथनम्
॥ १ ॥
एतत्कथां श्रुतवता अर्जुनेन ग्राहरूपाणाभवशिष्टानां
चतसृणामप्यप्सरसां तत्तत्तीर्थेभ्य उद्धरणेन तासां
स्वस्वरूपप्राप्तिः ॥ २ ॥
पुनर्मणलूरमागत्य तत्र चित्राङ्गदायां जातं बभ्रुवाहननामानं
स्वपुत्रं च स्वश्वशुरे समर्प्य अर्जुनस्य गोकर्णक्षेत्रगमनम्
॥ ३ ॥

१-२३७-० (१०२३१)
वर्गोवाच। १-२३७-०क्ष् (१२७८)
ततो वयं प्रव्यथिताः सर्वा भारतसत्तम ।
अयाम शरणं विप्रं तं तपोधनमच्युतम् ॥ १-२३७-१ (१०२३२)
रूपेण वयसा चैव कन्दर्पेण च दर्पिताः ।
अयुक्तं कृतवत्यः स्म क्षन्तुमर्हसि नो द्विज ॥ १-२३७-२ (१०२३३)
एष एव वधोऽस्माकं स्वयं प्राप्तस्तपोधन ।
यद्वयं संशितात्मानं प्रलोब्धुं त्वामिहागताः ॥ १-२३७-३ (१०२३४)
अवध्यास्तु स्त्रियः सृष्टा मन्यन्ते धर्मचारिणः ।
तस्माद्धर्मेण वर्ध त्वं नास्मन्हिंसितुमर्हसि ॥ १-२३७-४ (१०२३५)
सर्वभूतेषु धर्मज्ञ मैत्रो ब्राह्मण उच्यते ।
सत्यो भवतु कल्याण एष वादो मनीषिणाम् ॥ १-२३७-५ (१०२३६)
शरणं च प्रपन्नानां शिष्टाः कुर्वन्ति पालनम् ।
शरणं त्वां प्रपन्नाः स्म तस्मात्त्वं क्षन्तुमर्हसि ॥ १-२३७-६ (१०२३७)
वैशंपायन उवाच। १-२३७-७क्ष् (१२७९)
एवमुक्तः स धर्मात्मा ब्राह्मणः शुभकर्मकृत् ।
प्रसादं कृतवान्वीर रविसोमसमप्रभः ॥ १-२३७-७ (१०२३८)
ब्राह्मण उवाच। १-२३७-८क्ष् (१२८०)
शतं शतसहस्रं तु सर्वमक्षय्यवाचकम् ।
परिमाणं शतं त्वेतन्नेदमक्षय्यवाचकम् ॥ १-२३७-८ (१०२३९)
यदा च वो ग्राहभूता गृह्णन्तीः पुरुषाञ्जले ।
उत्कर्षति जलात्तस्मात्स्थलं पुरुषसत्तमः ॥ १-२३७-९ (१०२४०)
तदा यूयं पुनः सर्वाः स्वं रूपं प्रतिपत्स्यथ ।
अनृतं नोक्तपूर्वं मे हसतापि कदाचन ॥ १-२३७-१० (१०२४१)
तानि सर्वाणि तीर्थानि ततः प्रभृति चैव ह ।
नारीतीर्थानि नाम्नेह ख्यातिं यास्यन्ति सर्वशः ।
पुण्यानि च भविष्यन्ति पावनानि मनीषिणां ॥ १-२३७-११ (१०२४२)
वर्गोवाच। १-२३७-१२क्ष् (१२८१)
ततोऽभिवाद्य तं विप्रं कृत्वा चापि प्रदक्षिणम् ।
अचिन्तयामोऽपसृत्य तस्माद्देशात्सुदुःखिताः ॥ १-२३७-१२ (१०२४३)
क्व नु नाम वयं सर्वाः कालेनाल्पेन तं नरम् ।
समागच्छेम यो नस्तद्रूपमापादयेत्पुनः ॥ १-२३७-१३ (१०२४४)
ता वयं चिन्तयित्वैव मुहूर्तादिव भारत ।

दृष्टवत्यो महाभागं देवर्षिमुत नारदम् ॥१-२३७-१४ (१०२४५)
संप्रहृष्टाः स्म तं दृष्ट्वा देवर्षिममितद्युतिम् ।
अभिवाद्य च तं पार्थ स्थिताः स्म व्रीडिताननाः ॥१-२३७-१५ (१०२४६)
स नोऽपृच्छद्दुःखमूलमुक्तवत्यो वयं च तम् ।
श्रुत्वा तत्र यथावृत्तमिदं वचनमब्रवीत् ॥१-२३७-१६ (१०२४७)
दक्षिणे सागरानूपे पञ्च तीर्थानि सन्ति वै ।
पुण्यानि रमणीयानि तानि गच्छत मा चिरं ॥१-२३७-१७ (१०२४८)
तत्राशु पुरुषव्याघ्रः पाण्डवेयो धनञ्जयः ।
मोक्षयिष्यति शुद्धात्मा दुःखादस्मान्न संशयः ॥१-२३७-१८ (१०२४९)
ग्इत्युक्त्वा नारदः सर्वास्तत्रैवान्तरधीयत।'
तस्य सर्वा वयं वीर श्रुत्वा वाक्यमितो गताः ।
तदिदं सत्यमेवाद्य मोक्षिताहं त्वयाऽनघ ॥ १-२३७-१९ (१०२५०)
एतास्तु मम ताः सख्यश्चतस्रोऽन्या जले श्रिताः ।
कुरु कर्म शुभं वीर एताः सर्वा विमोक्षय ॥१-२३७-२० (१०२५१)
वैशंपायन उवाच।१-२३७-२१क्ष् (१२८२)
ततस्ताः पाण्डवश्रेष्ठः सर्वा एव विशांपते ।
ग्अवगाह्य च तत्तीर्थं गृहीतो ग्राहिभिस्तदा ॥१-२३७-२१ (१०२५२)
ग्राहीभिश्चोत्तताराशु तरयामास तत्क्षणात् ।
सा चाप्सरा बभूवाशु सर्वाभरणभूषिता ॥१-२३७-२२ (१०२५३)
एवं क्रमेण ताः सर्वा मोक्षयामास वीर्यवान् ॥' १-२३७-२३ (१०२५४)
उत्थाय च जलात्तस्मात्प्रतिलभ्य वपुः स्वकम् ।
तास्तदाऽप्सरसो राजन्नदृश्यन्त यथा पुरा ॥१-२३७-२४ (१०२५५)
तीर्थानि शोधयित्वा तु तथानुज्ञाय ताः प्रभुः ।
चित्राङ्गदां पुनर्द्रष्टुं मणलूरं पुनर्ययौ ॥१-२३७-२५ (१०२५६)
तस्यामजनयत्पुत्रं राजानं बभ्रुवाहनम् ।
तं दृष्ट्वा पाण्डवो राजंश्चित्रवाहनमब्रवीत् ॥१-२३७-२६ (१०२५७)
चित्राङ्गदायाः शुल्कं त्वं गृहाण बभ्रुवाहनम् ।
अनेन च भविष्यामि ऋणान्मुक्तो नराधिप ॥१-२३७-२७ (१०२५८)
चित्राङ्गदां पुनर्वाक्यमब्रवीत्पाण्डुनन्दनः ।
इहैव भव भद्रं ते वर्धेथा बभ्रुवाहनम् ॥१-२३७-२८ (१०२५९)
इन्द्रपस्थनिवासं मे त्वं तत्रागत्य रंस्यसि ।
कुन्ती युधिष्ठिरं भीमं भ्रातरौ मे कनीयसौ ॥१-२३७-२९ (१०२६०)
आगत्य तत्र पश्येथा अन्यानपि च बान्धवान् ।
बान्धवैः सहिताः सर्वैर्नन्दसे त्वमनिन्दिते ॥१-२३७-३० (१०२६१)
धर्मे स्थितः सत्यधृतिः कौन्तेयोऽथ युधिष्ठिरः ।
जित्वा तु पृथिवीं सर्वां राजसूयं करिष्यति ॥१-२३७-३१ (१०२६२)

तत्रागच्छन्ति राजानः पृथिव्यां नृपसंज्ञिताः ।
बहूनि रत्नान्यादाय आगमिष्यति ते पिता ॥ १-२३७-३२ (१०२६३)
एकसार्थं प्रयातासि चित्रवाहनसेवया ।
द्रक्ष्यामि राजसूये त्वां पुत्रं पालय मा शुचः ॥ १-२३७-३३ (१०२६४)
बभ्रुवाहननाम्ना तु मम प्राणो बहिश्चरः ।
तस्माद्भरस्व पुत्रं वै पुरुषं वंशवर्धनम् ॥ १-२३७-३४ (१०२६५)
चित्रावाहनदायादं धर्मात्पौरवनन्दनम् ।
पाण्डवानां प्रियं पुत्रं तस्मात्पालय सर्वदा ॥ १-२३७-३५ (१०२६६)
विप्रयोगेण संतापं मा कृथास्त्वमनिन्दिते ।
चित्राङ्गदामेवमुक्त्वा ग्सागरानूपमाश्रितः ॥ १-२३७-३६ (१०२६७)
स्थानं दूरं समाप्लुत्य दत्त्वा बहुधनं तदा ।
केरलान्समतिक्रम्य' गोकर्णमभितोऽगमत् ॥ १-२३७-३७ (१०२६८)
आद्यं पशुपतेः स्थानं दर्शनादेव मुक्तिदम् ।
यत्र पापोऽपि मनुजः प्राप्नोत्यभयदं पदम् ॥ ॥ १-२३७-३८ (१०२६९)

इति श्रीमन्महाभारते आदिपर्वणि अर्जुनवनवासपर्वणि
सप्तत्रिंशदधिकद्विशततमोऽध्यायः ॥ २३७ ॥
Mahabharata - Adi Parva - Chapter Footnotes

१-२३६-४ वर्ध वर्धस्व ॥
सप्तत्रिंशदधिकद्विशततमोऽध्यायः ॥
२३७ ॥

---

अध्यय२३८
॥ श्रीः ॥
१.२३८. अध्यायः २३८

Mahabharata - Adi Parva - Chapter Topics
अर्जुनस्य प्रभासतीर्थगमनम् ॥ १ ॥
तत्र स्मृतिपथागतसुभद्रारूपलावण्यादिकं चिन्तयतोऽर्जुनस्य
परिव्राजकवेषस्वीकारेण तस्या हरणे निश्चयः ॥ २ ॥
अर्जुनस्य चिन्तितज्ञानेन हसता श्रीकृष्णेन सह शायिन्या
सत्यभामया हासकारणे पृष्टे तां प्रति अर्जुनवृत्तान्तकथनम्
॥ ३ ॥
सत्यभामां शयने विहाय एकाकिना श्रीकृष्णेन प्रभासतीर्थंप्रति
प्रस्थानम् ॥ ४ ॥
चारमुखेन अर्जुनस्य तत्रागमनं श्रुत्वा कृष्णस्य तत्रागमनम् ॥ ५ ॥

अर्जुनेन संभाप्य कृष्णस्य द्वारकांप्रति पुनरागमनम् ॥ ६ ॥

Mahabharata - Adi Parva - Chapter Text

१-२३८-० (१०२७०)
वैशंपायन उवाच। १-२३८-०क्ष् (१२८३)
सोऽपरान्तेषु तीर्थानि पुण्यान्यायतनानि च ।
सर्वाण्येवानुपूर्व्येण जगामामितविक्रमः ॥ १-२३८-१ (१०२७१)
समुद्रे पश्चिमे यानि तीर्थान्यायतनानि च ।
तानि सर्वाणि गत्वा स प्रभासमुपजग्मिवान् ॥ १-२३८-२ (१०२७२)
गचिन्तयामास रात्रौ तु गदेन कथितं पुरा ।
सुभद्रायाश्च माधुर्यरूपसंपद्गुणानि च ॥ १-२३८-३ (१०२७३)
प्राप्तुमं तां चिन्तयामास कोऽत्रोपायो भवेदिति ।
वेषवैकृत्यमापन्नः परिव्राजकरूपधृत् ॥ १-२३८-४ (१०२७४)
कुकुरान्धकवृष्णीनामज्ञातो वेषधारणात् ।
भ्रममाणश्चरन्भैक्षं परिव्राजकवेषवान् ॥ १-२३८-५ (१०२७५)
येनकेनाप्युपायेन प्रविश्य च गृहं महत् ।
दृष्ट्वा सुभद्रां कृष्णस्य भगिनीमेकसुन्दरीम् ॥ १-२३८-६ (१०२७६)
वासुदेवमतं ज्ञात्वा करिष्यामि हितं शुभम् ।
एवं विनिश्चयं कृत्वा दीक्षितो वै तदाऽभवत् ॥ १-२३८-७ (१०२७७)
त्रिदण्डी मुण्डितः कुण्डी अक्षमालाङ्गुलीयकः ।
योगभारं वहन्पार्थो वटवृक्षस्य कोटरम् ॥ १-२३८-८ (१०२७८)
प्रविशंश्चैव बीभत्सुर्वृष्टिं वर्षति वासवे ।
चिन्तयामास देवेशं केशवं क्लेशनाशनम् ॥ १-२३८-९ (१०२७९)
केशवश्चिन्तितं ज्ञात्वा दिव्यज्ञानेन दृष्टवान् ।
शयानः शयने दिव्ये सत्यभामासहायवान् ॥ १-२३८-१० (१०२८०)
केशवः सहसा राजञ्जहाय च ननन्द च ।
पुनः पुनः सत्यभामा चाब्रवीत्पुरुषोत्तमम् ॥ १-२३८-११ (१०२८१)
भगवंश्चिन्तयाविष्टः शयने शयितः सुखम् ।
भवान्बहुप्रकारेण जहास च पुनः पुनः ॥ १-२३८-१२ (१०२८२)
श्रोतव्यं यदि वा कृष्ण प्रसादो यदि ते मयि ।
वक्तुमर्हसि देवेश तच्छ्रोतुं कामयाम्यहम् ॥ १-२३८-१३ (१०२८३)
श्रीभगवानुवाच। १-२३८-१४क्ष् (१२८४)
पितृष्वसुर्यः पुत्रो मे भीमसेनानुजोऽर्जुनः ।
तीर्थयात्रां गतः पार्थः कारणात्समयात्तदा ॥ १-२३८-१४ (१०२८४)
तीर्थयात्रासमाप्तौ तु निवृत्तो निशि भारतः ।

सुभध्रां चिन्तयामास रूपेणाप्रतिमां भुवि ॥ १-२३८-१५ (१०२८५)
चिन्तयेन्नेव तां भद्रां यतिरूपधरोऽर्जुनः ।
यतिरूपप्रतिच्छन्नो द्वारकां प्राप्य माधवीम् ॥ १-२३८-१६ (१०२८६)
येनकेनाप्युपायेन दृष्ट्वा तु वरवर्णिनीम् ।
वासुदेवमतं ज्ञात्वा प्रयतिष्ये मनोरथम् ॥ १-२३८-१७ (१०२८७)
एवं व्यवसितः पार्थो यतिलिङ्गेन पाण्डवः ।
छायायां वटवृक्षस्य वृष्टिं वर्षति वासवे ॥ १-२३८-१८ (१०२८८)
योगभारं वहन्नेव मानसं दुःखमाप्तवान् ।
एतदर्थं विजानीहि हसन्तं मां मुदा प्रिये ॥ १-२३८-१९ (१०२८९)
भ्रातरं तव पश्येति सत्यभामां व्यसर्जयत् ।
तत उत्थाय शयनात्प्रस्थितो मधुसूदनः ॥' १-२३८-२० (१०२९०)
प्रभासदेशं संप्राप्तं बीभत्सुमपराजितम् ।
तीर्थान्यनुचरन्तं तं शुश्राव मधुसूदनः ॥ १-२३८-२१ (१०२९१)
चाराणां चैव वचनादेकाकी स जनार्दनः ।
तत्राभ्यगच्छत्कौन्तेयं महात्मातं स माधवः ॥ १-२३८-२२ (१०२९२)
ददृशाते तदान्योन्यं प्रभासे कृष्णपाण्डवौ ॥ १-२३८-२३ (१०२९३)
तावन्योन्यं समाश्लिष्य पृष्ट्वा च कुशलं वने ।
आस्तां प्रियसखायौ तौ नरनारायणावृषी ॥ १-२३८-२४ (१०२९४)
ततोऽर्जुनं वासुदेवस्तां चर्यां पर्यपृच्छत ।
किमर्थं पाण्डवैतानि तीर्थान्यनुचरस्युत ॥ १-२३८-२५ (१०२९५)
ततोऽर्जनो यथावृत्तं सर्वमाख्यातवांस्तदा ।
श्रुत्वोवाच च वार्ष्णेय एवमेतदिति प्रभुः ॥ १-२३८-२६ (१०२९६)
तौ विहृत्य यथाकामं प्रभासे कृष्णपाण्डवौ ।
महीधरं रैवतकं वासायैवाभिजग्मतुः ॥ १-२३८-२७ (१०२९७)
पूर्वमेव तु कृष्णस्य वचनात्तं महीधरम् ।
पुरुषा मण्डयाञ्चक्रुरुपजह्रुश्च भोजनम् ॥ १-२३८-२८ (१०२९८)
प्रतिगृह्यार्जुनः सर्वमुपभुज्य च पाण्डवः ।
सहैव वासुदेवेन दृष्टवान्नटनर्तकान् ॥ १-२३८-२९ (१०२९९)
अभ्यनुज्ञाय तान्सर्वानर्चयित्वा च पाण्डवः ।
सत्कृतं शनं दिव्यमभ्यगच्छन्महामतिः ॥ १-२३८-३० (१०३००)
ततस्तत्र महाबाहुः शयानः शयने शुभे ।
तीर्थानां पल्वलानां च पर्वतानां च दर्शनम् ।
आपगानां वनानां च कथयामास सात्वते ॥ १-२३८-३१ (१०३०१)
एवं स कथयन्नेव निद्रया जनमेजय ।
कौन्तेयोऽपि हृतस्तस्मिञ्शयने स्वर्गसन्निभे ॥ १-२३८-३२ (१०३०२)
मधुरेणैव गीतेन वीणाशब्देन चैव ह ।

प्रबोध्यमानो बुबुधे स्तुतिभिर्मङ्गलैस्तता ॥१-२३८-३३ (१०३०३)
स कृत्वाऽवश्यकार्याणि वार्ष्णेयेनाभिनन्दितः ।
ग्वार्ष्णेयं समनुज्ञाप्य तत्र वासमरोचयत् ॥१-२३८-३४ (१०३०४)
तथेत्युक्त्वा वासुदेवो भोजनं वै शशास ह ।
यतिरूपधरं पार्थं विसृज्य सहसा हरिः।'
रथेन काञ्चनाङ्गेन द्वारकामभिजग्मिवान् ॥ १-२३८-३५ (१०३०५)
अलङ्कृता द्वारका तु बभूव जनमेजय ॥ १-२३८-३६ (१०३०६)
दिदृक्षन्तश्च गोविन्दं द्वारकावासिनो जनाः ।
नरेन्द्रमार्गमाजग्मुस्तूर्णं शतसहस्रशः ॥१-२३८-३७ (१०३०७)
ग्क्षणार्धमपि वार्ष्णेया गोविन्दविरहाक्षमाः ।
कौतूहलसमाविष्टा भृशमुत्प्रेक्ष्य संस्थिताः ॥' १-२३८-३८ (१०३०८)
अवलोकेषु नारीणां सहस्राणि शतानि च ।
भोजवृष्ण्यन्धकानां च समवायो महानभूत् ॥१-२३८-३९ (१०३०९)
स तथा सत्कृतः सर्वैर्भोजवृष्ण्यन्धकात्मजैः ।
अभिवाद्याभिवाद्यांश्च सर्वैश्च प्रतिनन्दितः ॥१-२३८-४० (१०३१०)
कुमारैः सर्वशो वीरः सत्कारेणाभिचोदितः ।
समानवयसः सर्वानाश्लिष्य स पुनःपुनः ॥१-२३८-४१ (१०३११)
कृष्णः स्वभवनं रम्यं प्रविवेश महाबलः ।
प्रभासादागतं देव्यः सर्वाः कृष्णमपूजयन् ॥ ॥१-२३८-४२ (१०३१२)

इति श्रीमन्महाभारते आदिपर्वणि अर्जुनवनवासपर्वणि
अष्टत्रिंशदधिकद्विशततमोऽध्यायः ॥ २३८ ॥ ॥ समाप्तं
चार्जुनवनवासपर्व ॥

Mahabharata - Adi Parva - Chapter Footnotes

१-२३८-१ अपरान्तेषु पश्चिसमुद्रतीरेषु ॥
१-२३८-३६ अलंकृता द्वारका तु बभूव जनमेजय । कुन्तीपुत्रस्य
पूजार्थमपि निष्कुटकेष्वपि ॥
इति च, ज, झ, ञ, ड, पाठः ॥
१-२३८-३७ दिदृक्षन्तश्च कौन्तेयं इति च, ज, झ, ञ, ज, पाठः ॥
१-२३८-४२ कृष्णस्य भवने रम्ये रत्नभोज्यसमावृते । उवास सह
कृष्णेन बहुलास्तत्र शर्वरीः ॥
इति च, ज, झ, ञ, ड, पाठः ॥
अष्टत्रिंशदधिकद्विशततमोऽध्यायः ॥
२३८ ॥

---

अध्यय२३९

॥ श्रीः ॥

१.२३९. अध्यायः २३९

(अथ सुभद्राहरणपर्व ॥ १६ ॥)

Mahabharata - Adi Parva - Chapter Topics

रवैतकपर्वतंप्रति उत्सवार्थं कृष्णादीनां गमनम् ॥ १ ॥
तत्र कृष्णस्य परिव्राजकरूपार्जुनदर्शनम् ॥ २ ॥
सुभद्रादर्शनेन तस्यां संजातहृच्छयस्यार्जुनस्य यतिरूपेण सुभद्राहरणे कृष्णानुज्ञालाभः ॥ ३ ॥
दूतेनिवेदितैतद्वृत्तान्तेन सपरिवारेण युधिष्ठिरेणाभ्यनुज्ञानम् ॥ ४ ॥

Mahabharata - Adi Parva - Chapter Text

१-२३९-० (१०३१३)
वैशंपायन उवाच। १-२३९-०क्ष् (१२८५)
ततः कतिपयाहस्य तस्मिन्रैवतके गिरौ ।
वृष्ण्यन्धकानामभवदुत्सवो नृपसत्तम ॥ १-२३९-१ (१०३१४)
तत्र दानं ददुर्वीरा ब्राह्मणेभ्यः सहस्रशः ।
भोजवृष्ण्यन्धकाश्चैव महे तस्य गिरेस्तदा ॥ १-२३९-२ (१०३१५)
प्रसादै रत्नचित्रैश्च गिरेस्तस्य समन्ततः ।
स देशः शोभितो राजन्कल्पवृक्षैश्च सर्वशः ॥ १-२३९-३ (१०३१६)
वादित्राणि च तत्रान्ये वादकाः समवादयन् ।
ननृतुर्नर्तकाश्चैव जगुर्गेयानि गायनाः ॥ १-२३९-४ (१०३१७)
अलङ्कृताः कुमाराश्च वृष्णीनां सुमहौजसाम् ।
यानैर्हाटकचित्रैश्च चञ्चूर्यन्ते स्म सर्वशः ॥ १-२३९-५ (१०३१८)
पौराश्च पादचारेण यानैरुच्चावचैस्तथा ।
सदाराः सानुयात्राश्च शतशोऽथ सहस्रशः ॥ १-२३९-६ (१०३१९)
ततो हलधरः क्षीबो रेवतीसहितः प्रभुः ।
अनुगम्यमानो गन्धर्वैरचरत्तत्र भारत ॥ १-२३९-७ (१०३२०)
तथैव राजा वृष्णीनामुग्रसेनः प्रतापवान् ।
अनुगीयमानो गन्धर्वैः स्त्रीसहस्रसहायवान् ॥ १-२३९-८ (१०३२१)
रौक्मिणेयश्च साम्बश्च क्षीबौ समरदुर्मदौ ।
दिव्यमाल्याम्बरधरौ विजह्रातेऽमराविव ॥ १-२३९-९ (१०३२२)
अक्रूरः सारणश्चैव गदो बभ्रुर्विदूरथः ।
निशठश्चारुदेष्णश्च पृथुर्विपृथुरेव च ॥ १-२३९-१० (१०३२३)
सत्यकः सात्यकिश्चैव भङ्गकारमहारवौ ।

हार्दिक्य उद्धवश्चैव ये चान्ये नानुकीर्तिताः ॥ १-२३९-११ (१०३२४)
एते परिवृताः स्त्रीभिर्गन्धर्वैश्च पृथक्पृथक् ।
तमुत्सवं रैवतके शोभयाञ्चक्रिरे तदा ॥ १-२३९-१२ (१०३२५)
ग्वासदेवो ययौ तत्र सह स्त्रीभिर्मुदान्वितः ।
दत्त्वा दानं द्विजातिभ्यः परिव्राजमपश्यत ॥' १-२३९-१३ (१०३२६)
चित्रकौतूहले तस्मिन्वर्तमाने महाद्भुते ।
वासुदेवश्च पार्थश्च सहितौ परिजग्मतुः ॥ १-२३९-१४ (१०३२७)
तत्र चङ्क्रममाणौ तौ वसुदेवसुतां शुभाम् ।
अलङ्कृतां सखीमध्ये भद्रां ददृशतुस्तदा ॥ १-२३९-१५ (१०३२८)
दृष्ट्वैव तामर्जुनस्य कन्दर्पः समजायत ।
तं तदैकाग्रमनसं कृष्णः पार्थमलक्षयत् ॥ १-२३९-१६ (१०३२९)
अब्रवीत्पुरुषव्याघ्रः प्रसहन्निव भारत ।
वनेचरस्य किमिदं कामेनालोड्यते मनः ॥ १-२३९-१७ (१०३३०)
ममैषा भगिनी पार्थ सारणस्य सहोदरी ।
सुभद्रा नाम भद्रं ते पितुर्मे दयिता सुता ।
यदि ते वर्तते बुद्धिर्वक्ष्यामि पितरं स्वयम् ॥ १-२३९-१८ (१०३३१)
अर्जुन उवाच। १-२३९-१९क्ष् (१२८६)
दुहिता वसुदेवस्य वासुदेवस्य च स्वसा ।
रूपेण चैषा संपन्ना कमिवैषा न मोहयेत् ॥ १-२३९-१९ (१०३३२)
कृतमेव तु कल्याणं सर्वं मम भवेद्ध्रुवम् ।
यदि स्यान्मम वार्ष्णेयी महिषीयं स्वसा तव ॥ १-२३९-२० (१०३३३)
प्राप्तौ तु क उपायः स्यात्तं ब्रवीहि जनार्दन ।
आस्थास्यामि तदा सर्वं यदि शक्यं नरेण तत् ॥ १-२३९-२१ (१०३३४)
वासुदेव उवाच। १-२३९-२२क्ष् (१२८७)
स्वयं वरः क्षत्रियाणां विवाहः पुरुषर्षभ ।
स च संशयितः पार्थ स्वभावस्यानिमित्ततः ॥ १-२३९-२२ (१०३३५)
प्रसह्य हरणं चापि क्षत्रियाणां प्रशस्यते ।
विवाहहेतुः शूराणामिति धर्मविदो विदुः ॥ १-२३९-२३ (१०३३६)
स त्वमर्जुन कल्याणीं प्रसह्य भगिनीं मम ।
ग्यतिरूपधरस्तं तु यथा कालविपाकता।'
हर स्वयंवरे ह्यस्याः को वै वेद चिकीर्षितम् ॥ १-२३९-२४ (१०३३७)
वैशंपायन उवाच। १-२३९-२५क्ष् (१२८८)
ततोऽर्जुनश्च कृष्णश्च विनिश्चित्येतिकृत्यताम् ।
शीघ्रगान्पुरुषानन्प्रेषयामासतुस्तदा ॥ १-२३९-२५ (१०३३८)
धर्मराजाय तत्सर्वमिन्द्रप्रस्थगताय वै ।
श्रुत्वैव च महाबाहुरनुजज्ञे समातृकः ॥ १-२३९-२६ (१०३३९)

ग्भीमसेनस्तु तच्छ्रुत्वा कृतकृत्यं स्म मन्यते ।
इत्येवं मनुजैरुक्तं कृष्णः श्रुत्वा महामतिः ॥ १-२३९-२७ (१०३४०)
अनुज्ञाप्य तदा पार्थं हृदि स्थाप्य चिकीर्षितम् ।
इत्येवं मनुजैः सार्धं द्वारकां समुपेयिवान् ॥ ॥ १-२३९-२८ (१०३४१)

इति श्रीमन्महाभारते आदिपर्वणि सुभद्राहरणपर्वणि
ऊनचत्वारिंशदधिकद्विशततमोऽध्यायः ॥ २३९ ॥
Mahabharata - Adi Parva - Chapter Footnotes

१-२३९-५ चञ्चूर्यन्ते देदीप्यन्ते ॥
१-२३९-७ क्षीबो मधुमत्तः ॥
१-२३९-२२ स्वभावस्यानिमित्ततः स्त्रीचित्तस्य
शौर्यपाण्डित्याद्यनपेक्षत्वात् । स्त्रियो ह्यपरीक्षितेपि पुंसि आपाततो
रमणीये सद्यः सकामा भवन्तीति भावः ॥
ऊनचत्वारिंशदधिकद्विशततमोऽध्यायः ॥
२३९ ॥

---

अध्यय२४०
॥ श्रीः ॥
१.२४०. अध्यायः २४०

Mahabharata - Adi Parva - Chapter Topics
द्वारकाया उपवने वसतः यतिरूपस्यार्जुतस्य
रैवतकपर्वतात्प्रतिनिवृत्तैर्यादवैर्दर्शनम् ॥ १ ॥
यतिनिवासविषये यादवै पृष्टे सुभद्रागृहे वसत्विति रामोक्तिः ॥ २ ॥

Mahabharata - Adi Parva - Chapter Text

१-२४०-० (१०३४२)
वैशंपायन उवाच। १-२४०-०क्ष् (१२८९)
चैराः संचारिते तस्मिन्ननुज्ञाते युधिष्ठिरे ।
वासुदेवाभ्यनुज्ञातः कथयित्वेतिकृत्यताम् ॥ १-२४०-१ (१०३४३)
कृष्णस्य मतमास्थाय प्रययौ भरतर्षभः ।
द्वारकाया उपवने तस्थौ वै कार्यसाधनः ॥ १-२४०-२ (१०३४४)
निवृत्ते ह्युत्सवे तस्मिन्गिरौ रैवतके तदा ।
वृष्णयोऽप्यगमन्सर्वे पुरीं द्वारवतीमनु ॥ १-२४०-३ (१०३४५)
चिन्तयानस्ततो भद्रामुपविष्टः शिलातले ।

रमणीये वनोद्देशे बहुपादपसंवृते ॥१-२४०-४ (१०३४६)
सालतालाश्वकर्णैश्च बकुलैरर्जुनैस्तथा ।
चम्पकाशोकपुन्नागैः केतकैः पाटलैस्तथा ॥१-२४०-५ (१०३४७)
कर्णिकारैरशोकैश्च अङ्कोलैरतिमुक्तकैः ।
एवमादिभिरन्यैश्च संवृते स शिलातले ॥१-२४०-६ (१०३४८)
पुनःपुनश्चिन्तयानः सुभद्रां भद्रभाषिणीम् ।
यदृच्छया चोपपन्नान्वृष्णिवीरान्ददर्श सः ॥१-२४०-७ (१०३४९)
बलदेवं च हार्दिक्यं साम्बं सारणमेव च ।
प्रद्युम्नं च गदं चैव चारुदेष्णं विदूरथम् ॥१-२४०-८ (१०३५०)
भानुं च हरितं चैव विपृथुं पृथुमेव च ।
तथान्यांश्च बहून्पश्यन्हृदि शोकमधारयत् ॥१-२४०-९ (१०३५१)
ततस्ते सहिताः सर्वे यतिं दृष्ट्वा समुत्सुकाः ।
वृष्णयो विनयोपेताः परिवार्योपतस्थिरे ॥१-२४०-१० (१०३५२)
ततोऽर्जुनः प्रीतमनाः स्वागतं व्याजहार सः ।
आस्यतामास्यतां सर्वै रमणीये शिलातले ॥१-२४०-११ (१०३५३)
इत्येवमुक्ता यतिना प्रीतास्ते यादवर्षभाः ।
उपोपविविशुः सर्वे ते स्वागतमिति ब्रुवन् ॥१-२४०-१२ (१०३५४)
परितः सन्निविष्टेषु वृष्णिवीरेषु पाण्डवः ।
आकारं गूहमानस्तु कुशलप्रश्नमब्रवीत् ॥१-२४०-१३ (१०३५५)
सर्वत्र कुशलं चोक्त्वा बलदेवोऽब्रवीदिदम् ।
प्रसादं कुरु मे विप्र कुतस्त्वं चागतो ह्यसि ॥१-२४०-१४ (१०३५६)
त्वया दृष्टानि पुण्यानि वद त्वं वदतांवर ।
पर्वतांश्चैव तीर्थानि वनान्यायतनानि च ॥१-२४०-१५ (१०३५७)
वैशंपायन उवाच।१-२४०-१६क्ष् (१२९०)
तीर्थानां दर्शनं चैव पर्वतानां च भारत ।
आपगानां वनानां च कथयामास ताः कथाः ॥१-२४०-१६ (१०३५८)
श्रुत्वा धर्मकथाः पुण्या वृष्णिवीरा मुदान्विताः ।
अपूजयंस्तदा भिक्षुं कथान्ते जनमेजय ॥१-२४०-१७ (१०३५९)
ततस्तु यादवाः सर्वे मन्त्रयन्ति स्म भारत ।
अयं देशातिथिः श्रीमान्यतिलिङ्गधरो द्विजः ॥१-२४०-१८ (१०३६०)
आवासं कमुपाश्रित्य वसेत निरुपद्रवः ।
इत्येवं प्रब्रुवन्तस्तु रौहिणेयं च यादवाः ॥१-२४०-१९ (१०३६१)
ददृशुः कृष्णमायान्तं सर्वे यादवनन्दनम् ।
एहि केशव तातेति रौहिणेयो वचोऽब्रवीत् ॥१-२४०-२० (१०३६२)
यतिलिङ्गधरो विद्वान्देशातिथिरयं द्विजः ।
वर्षमासनिवासार्थमागतो नः पुरं प्रति ।

स्थाने यस्मिन्निवसतु तन्मे ब्रूहि जनार्दन ॥ १-२४०-२१ (१०३६३)
श्रीकृष्ण उवाच। १-२४०-२२क्ष् (१२९१)
त्वयि स्थिते महाभाग परवानस्मि धर्मतः ।
स्वयं तु रुचिरे स्थाने वासयेर्यदुनन्दन ॥ १-२४०-२२ (१०३६४)
प्रीतः स तेन वाक्येन परिष्वज्य जनार्दनम् ।
बलदेवोऽब्रवीद्वाक्यं चिन्तयित्वा महाबलः ॥ १-२४०-२३ (१०३६५)
आरामे तु वसेद्धीमांश्चतुरो वर्षमासकान् ।
कन्यागृहे सुभद्राया भुक्त्वा भोजनमिच्छया ॥ १-२४०-२४ (१०३६६)
लतागृहेषु वसतामिति मे धीयते मतिः ।
लब्धानुज्ञास्त्वया तात मन्यन्ते सर्वयादवाः ॥ १-२४०-२५ (१०३६७)
श्रीकृष्ण उवाच। १-२४०-२६क्ष् (१२९२)
बलवान्दर्शनीयश्च वाग्मी श्रीमान्बहुश्रुतः ।
कन्यापुरसमीपे तु न युक्तमिति मे मतिः ॥ १-२४०-२६ (१०३६८)
गुरुः शास्ता च नेता च शास्त्रज्ञो धर्मवित्तमः ।
त्वयोक्तं न विरुध्येहं करिष्यामि वचस्तव ॥ १-२४०-२७ (१०३६९)
शुभाशुभस्य विज्ञाता नान्योऽस्मि भुवि कश्चन ॥ १-२४०-२८ (१०३७०)
बलदेव उवाच। १-२४०-२९क्ष् (१२९३)
अयं देशातिथिः श्रीमान्सर्वधर्मभृतां वरः ।
धृतिमान्विनयोपेतः सत्यबादी जितेन्द्रियः ॥ १-२४०-२९ (१०३७१)
यतिलिङ्गधरो ह्येष को विजानाति मानसम् ।
त्वमिमं पुण्डरीकाक्ष नीत्वा कन्यापुरं शुभम् ॥ १-२४०-३० (१०३७२)
निवेदय सुभद्रायै मद्वाक्यपरिचोदितः ।
भक्ष्यैर्भोज्यैश्च पानैश्च अन्नैरिष्टैश्च पूजय
॥ ॥ १-२४०-३१ (१०३७३)

इति श्रीमन्महाभारते आदिपर्वणि सुभद्राहरणपर्वणि
चत्वारिंशदधिकद्विशततमोऽध्यायः ॥ २४० ॥

---

अध्यय२४१
॥ श्रीः ॥
१.२४१. अध्यायः २४१

Mahabharata - Adi Parva - Chapter Topics
यतेः सुभद्रागृहे कृष्णेन स्थापनम् ॥ १ ॥
श्रुतपूर्वपार्थलक्षणदर्शनेन इमं यतिं अर्जुनं शङ्कमानायाः
सुभद्रायाः यतिंप्रति अर्जुनादिकुशलप्रश्नः ॥ २ ॥
अर्जुनेन तत्वे कथिते मोहितायां सुभद्रायां रुक्मिण्या श्वश्रूसमीपे

तद्वृत्तकथनम् ॥ ३ ॥
वासुदेवानुमत्या देवक्या सुभद्राश्वासनम् ॥ ४ ॥
गूढं सुभद्राया विवाहचिकीर्षया कृष्णेन महादेवपूजाव्याजेन
सर्वयादवैः सह अन्तर्द्वीपगमनम् ॥ ५ ॥

Mahabharata - Adi Parva - Chapter Text

१-२४१-० (१०३७४)
वैशंपायन उवाच। १-२४१-०क्ष् (१२९४)
स तथेति प्रतिज्ञाय सहितो यतिना हरिः ।
कृत्वा तु संविदं तेन प्रहृष्टः केशवोऽभवत् ॥ १-२४१-१ (१०३७५)
पर्वते तौ विहृत्यैव यथेष्टं कृष्णपाण्डवौ ।
तां पुरीं प्रविवेशाथ गृह्य हस्तेन पाण्डवम् ।
प्रविश्य च गृहं रम्यं सर्वभोगसमन्वितम् ॥ १-२४१-२ (१०३७६)
पार्थमावेदयामास रुक्मिणीसत्यभामयोः ।
हृषीकेशवचः श्रुत्वा ते उभे चोचतुर्भृशम् ॥ १-२४१-३ (१०३७७)
मनोरथो महानेष हृदि नौ परिवर्तते ।
कदा द्रक्षाव बीभत्सुं पाण्डवं पुरमागतम् ॥ १-२४१-४ (१०३७८)
इत्येवं हर्षमाणे ते वदन्त्यौ सुभृशं प्रियम् ।
रुग्मिणीसत्यभामे वै दृष्ट्वा प्रीतोऽभवद्यतिः ॥ १-२४१-५ (१०३७९)
सर्वेषां हर्षमाणानां पार्थो हर्षमुपागमत् ।
प्राप्तमज्ञातरूपेण चागतं चार्जुनं हरिः ॥ १-२४१-६ (१०३८०)
सत्कृत्य पूज्यमानं तु प्रीत्या चैव ह्यपूजयत् ।
स तं प्रियातिथिं श्रेष्ठं समीक्ष्य यतिमागतम् ॥ १-२४१-७ (१०३८१)
सोदर्यां भगिनीं कृष्णः सुभद्रामिदमब्रवीत् ।
अयं देशातिथिर्भद्रे संशितव्रतवानृषिः ॥ १-२४१-८ (१०३८२)
प्राप्नोतु सततं पूजां तव कन्यापुरे वसन् ।
आर्येण च परिज्ञातः पूजनीयो यतिस्त्वया ॥ १-२४१-९ (१०३८३)
रागाङ्गरस्व वार्ष्णेयि भक्ष्यैर्भोज्यैर्यतिं सदा ।
एष यद्यदृषिर्ब्रूयात्कार्यमेव न संशयः ॥ १-२४१-१० (१०३८४)
सखीभिः सहिता भद्रे भवास्य वशवर्तिनी ।
पुरा हि यतयो भद्रे ये भैक्षार्थमनुव्रताः ॥ १-२४१-११ (१०३८५)
ते बभूवुर्दशार्हाणां कन्यापुरनिवासिनः ।
तेभ्यो भोज्यानि भक्ष्याणि यथाकालमतन्द्रिताः ।
कन्यापुरगताः कन्याः प्रयच्छन्ति यशस्विनि ॥ १-२४१-१२ (१०३८६)
वैशंपायन उवाच। १-२४१-१३क्ष् (१२९५)

सा तथेत्यब्रवीत्कृष्णं करिष्यामि यथाऽऽथ माम् ।
तोषयिष्यामि वृत्तेन कर्मणा च द्विजर्षभम् ॥ १-२४१-१३ (१०३८७)
एवमेतेन रूपेण कंचित्कालं धनञ्जयः ।
उवास भक्ष्यैर्भोज्यैश्च भद्रया परमार्चितः ॥ १-२४१-१४ (१०३८८)
तस्य सर्वगुणोपेतां वासुदेवसहोदरीम् ।
पश्यतः सततं भद्रां प्रादुरासीन्मनोभवः ॥ १-२४१-१५ (१०३८९)
गूहयन्निव चाकारमालोक्य वरवर्णिनीम् ।
दीर्घमुष्णं विनिश्वस्य पार्थः कामवशं गतः ॥ १-२४१-१६ (१०३९०)
स कृष्णां द्रौपदीं मेने न रूपे भद्रया समाम् ।
प्राप्तां भूमान्विन्द्रसेनां साक्षाद्वा वरुणात्मजाम् ॥ १-२४१-१७ (१०३९१)
अतीतकाले संप्राप्ते सर्वास्तापि सुरस्त्रियः ।
न समा भद्रया लोके इत्येवं मन्यतेऽर्जुनः ॥ १-२४१-१८ (१०३९२)
अतीतसमये काले सोदर्याणां धनञ्जयः ।
न सस्मार सुभद्रायां कामाङ्कुशनिवारितः ॥ १-२४१-१९ (१०३९३)
क्रीडारतिपरां भद्रां सखीगणसमावृताम् ।
प्रीयते स्मार्जुनः पश्यन्स्वाहामिव विभावसुः ॥ १-२४१-२० (१०३९४)
पाण्डवस्य सुभद्रायाः सकाशे तु यशस्विनः ।
समुत्पत्तिः प्रभावश्च गदेन कथितः पुरा ॥ १-२४१-२१ (१०३९५)
श्रुत्वा चाशनिनिर्घोषं केशवेनापि धीमता ।
उपमामर्जुनं कृत्वा विस्तरः कथितः पुरा ॥ १-२४१-२२ (१०३९६)
क्रुद्धमानप्रलापश्च वृष्णीनामर्जुनं प्रति ।
पौरुषं चोपमां कृत्वा प्रावर्तत धनुष्मताम् ॥ १-२४१-२३ (१०३९७)
अन्योन्यकलहे चापि विवादे चापि वृष्णयः ।
अर्जुनोपि न मे तुल्यः कुतस्त्वमिति चाब्रुवन् ॥ १-२४१-२४ (१०३९८)
जातांश्च पुत्रान्गृह्णन्त आशिषो वृष्णयोऽब्रवन् ।
अर्जुनस्य समो वीर्ये भव तात धनुर्धरः ॥ १-२४१-२५ (१०३९९)
तस्मात्सुभद्रा चकमे पौरुषाद्भरतर्षभम् ।
सत्यसन्धस्य रूपेण चातुर्येण च मोहिता ॥ १-२४१-२६ (१०४००)
चारणातिथिसंघानां गदस्य च निशम्य सा ।
अदृष्टे कृतभावाभूत्सुभद्रा भरतर्षभे ॥ १-२४१-२७ (१०४०१)
कीर्तयन्ददृशे यो यः कथंचित्कुरुजाङ्गलम् ।
तं तमेव तदा भद्रा बीभत्सुं स्म हि पृच्छति ॥ १-२४१-२८ (१०४०२)
अभीक्ष्णश्रवणादेवमभीक्ष्णपरिपृच्छनात् ।
प्रत्यक्ष इव भद्रायाः पाण्डवः प्रत्यपद्यत ॥ १-२४१-२९ (१०४०३)
भुजौ भुजगसङ्काशौ ज्याघातेन किणीकृतौ ।
पार्थोऽयमिति पश्यन्त्या निःशंसयमजायत ॥ १-२४१-३० (१०४०४)

यथारूपं हि शुश्राव सुभद्रा भरतर्षभम् ।
तथारूपमवेक्ष्यैनं परां प्रीतिमवाप सा ॥ १-२४१-३१ (१०४०५)
सा कदाचिदुपासीनं पप्रच्छ कुरुनन्दनम् ।
कथं देशाश्च चरिता नानाजनपदाः कथम् ॥ १-२४१-३२ (१०४०६)
सरांसि सरितश्चैव वनानि च कथं यते ।
दिशः काश्च कथं प्राप्ताश्चरता भवता सदा ॥ १-२४१-३३ (१०४०७)
स तथोक्तस्तदा भद्रां बहुनर्मामृतं ब्रुवन् ।
उवाच परमप्रीतस्तथा बहुविधाः कथाः ॥ १-२४१-३४ (१०४०८)
निशण्य विविधं तस्य लोके चरितमात्मनः ।
तथा परिगतो भावः कन्यायाः समपद्यत ॥ १-२४१-३५ (१०४०९)
पर्वसन्धौ तु कस्मिंश्चित्सुभद्रा भरतर्षभम् ।
रहस्येकान्तमासाद्य हर्षमाणाऽभ्यभाषत ॥ १-२४१-३६ (१०४१०)
यतिना रचता देशान्खाण्डवप्रस्थवासिनी ।
कश्चिद्भगवता दृष्टा पृथाऽस्माकं पितृष्वसा ॥ १-२४१-३७ (१०४११)
भ्रातृभिः प्रीयते सर्वैर्दृष्टः कच्चिद्युधिष्ठिरः ।
कच्चिद्धर्मपरो भीमो धर्मराजस्य धीमतः ॥ १-२४१-३८ (१०४१२)
निवृत्तसमयः कच्चिदपराधाद्धनञ्जयः ।
नियमे कामभोगानां वर्तमानः प्रिये रतः ॥ १-२४१-३९ (१०४१३)
क्व नु पार्थश्चरत्यद्य बहिः स वसतीर्वसन् ।
सुखोचितो ह्यदुःखार्हो दीर्घबाहुररिन्दमः ॥ १-२४१-४० (१०४१४)
कच्चिच्छ्रुतो वा दृष्टो वा पार्थो भगवताऽर्जुनः ।
निशम्य वचनं तस्यास्तामुवाच हसन्निव ॥ १-२४१-४१ (१०४१५)
आर्या कुशलिनी कुन्ती सहपुत्रा सहस्नुषा ।
प्रीयते पश्यती पुत्रान्खाण्डवप्रस्थ आसते ॥ १-२४१-४२ (१०४१६)
अनुज्ञातश्च मात्रा च सोदरैश्च धनञ्जयः ।
द्वारकामावसत्येको यतिलिङ्गेन पाण्डवः ॥ १-२४१-४३ (१०४१७)
पश्यन्ती सततं कस्मान्नाभिजानासि माधवि ।
निशण्य वचनं तस्य वासुदेवसहोदरी ॥ १-२४१-४४ (१०४१८)
निश्वासबहुला तस्थौ क्षितिं विलिखती तदा ।
ततः परमसंहृष्टः सर्वशस्त्रभृतां वरः ॥ १-२४१-४५ (१०४१९)
अर्जुनोऽहमिति प्रीतस्तामुवाच धनञ्जयः ।
यथा तव गतो भावः श्रवणान्मयि भामिनि ॥ १-२४१-४६ (१०४२०)
त्वद्गतः सततं भावस्तथा तव गुणैर्मम ।
प्रशस्तेऽहनि धर्मेण भद्रे स्वयमहं वृतः ॥ १-२४१-४७ (१०४२१)
सत्यवानिव सावित्र्या भविष्यामि पतिस्तव ॥ १-२४१-४८ (१०४२२)
वैशंपायन उवाच। १-२४१-४९क्ष् (१२९६)

एवमुक्त्वा ततः पार्थः प्रविवेश लतागृहम् ।
ततः सुभद्रा ललिता लज्जाभावसमन्विता ॥ १-२४१-४९ (१०४२३)
मुमोह शयने दिव्ये शयाना न तथोचिता ।
नाकरोद्यतिपूजां सा लज्जाभावमुपेयुषी ॥ १-२४१-५० (१०४२४)
कन्यापुरे तु यद्वृत्तं ज्ञात्वा दिव्येन चक्षुषा ।
शशास रुक्मिणीं कृष्णो भोजनादि तदार्जुने ॥ १-२४१-५१ (१०४२५)
तदाप्रभृति तां भद्रां चिन्तयन्वै धनञ्जयः ।
आस्ते स्म स तदाऽऽरामे कामेन भृशपीडितः ॥ १-२४१-५२ (१०४२६)
सुभद्रा चापि न स्वस्था पार्थं प्रति बभूव सा ।
कृशा विवर्णवदना चिन्ताशोकपरायणा ॥ १-२४१-५३ (१०४२७)
निश्वासपरमा भद्रा मानसेन मनस्विनी ।
न शय्यासनभोगेषु रतिं विन्दति केनचित् ॥ १-२४१-५४ (१०४२८)
न नक्तं न दिवा शेते बभूवोन्मत्तदर्शना ।
एवं शोकपरां भद्रां देवी वाक्यमथाब्रवीत् ।
मा शोकं कुरु वार्ष्णेयि धृतिमालम्ब्य शोभने ॥ १-२४१-५५ (१०४२९)
रुक्मिण्येवं सुभद्रां तां कृष्णस्यानुमते तदा ।
रहोगत्य तदा श्वश्रूं देवकीं वाक्यमब्रवीत् ॥ १-२४१-५६ (१०४३०)
अर्जुनो यतिरूपेण ह्यागतः सुसमाहितः ।
कन्यापुरमथाविश्य पूजितो भद्रया मुदा ॥ १-२४१-५७ (१०४३१)
तं विदित्वा सुभद्रापि लज्जया परिमोहिता ।
दिवानिशं शयाना सा नाकरोद्भोजनादिकम् ॥ १-२४१-५८ (१०४३२)
एवमुक्ता तया देवी भद्रां शोकपरायणाम् ।
तत्समीपं समागत्य श्लक्ष्णं वाक्यमथाब्रवीत् ॥ १-२४१-५९ (१०४३३)
मा शोकं कुरु वार्ष्णेयि धृतिमालम्ब्य शोभने ।
राज्ञे निवेदयित्वापि वसुदेवाय धीमते ॥ १-२४१-६० (१०४३४)
कृष्णायापि तथा भद्रे प्रहर्षं कारयामि ते ।
पश्चाज्जानामि ते वार्तां मा शोकं कुरु भामिनि ॥ १-२४१-६१ (१०४३५)
एवमुक्त्वा तु सा माता भद्रायाः प्रियकारिणी ।
निवेदयामास तदा भद्रामानकदुन्दुभेः ॥ १-२४१-६२ (१०४३६)
रहस्येकासना तत्र भद्राऽस्वस्थेति चाब्रवीत् ।
आरामे तु यतिः श्रीमानर्जुनश्चेति नः श्रुतम् ॥ १-२४१-६३ (१०४३७)
अक्रूराय च कृष्माय आहुकाय च सात्यकेः ।
निवेद्यतां महाप्राज्ञ श्रोतव्यं यदि बान्धवैः ॥ १-२४१-६४ (१०४३८)
वैशंपायन उवाच। १-२४१-६५क्ष् (१२९७)
वसुदेवस्तु तच्छ्रुत्वा अक्रूराहुकयोस्तथा ।
निवेदयित्वा कृष्णेन मन्त्रयामास तैस्तदा ॥ १-२४१-६५ (१०४३९)

इदं कार्यमिदं कृत्यमिदमेवेति निश्चितः ।
अक्रूरश्चोग्रसेनश्च सात्यकिश्च गदस्तथा ॥१-२४१-६६ (१०४४०)
पृथुश्रवाश्च कृष्णश्च सहिताः शिनिना मुहुः ।
रुक्मिणी सत्यभामा च देवकी रोहिणी तथा ॥१-२४१-६७ (१०४४१)
वसुदेवेन सहिताः पुरोहितमते स्थिताः ।
विवाहं मन्त्रयामासुर्द्वादशेऽहनि भारत ॥१-२४१-६८ (१०४४२)
अज्ञातं रौहिणेयस्य उद्धवस्य च भारत ।
विवाहं तु सुभद्रायाः कर्तुकामो गदाग्रजः ॥१-२४१-६९ (१०४४३)
महादेवस्य पूजार्थं महोत्सव इति ब्रुवन् ।
चतुस्त्रिंशदहोरात्रं सुभद्रार्तिप्रशान्तये ॥१-२४१-७० (१०४४४)
नगरे घोषयास हितार्थं सव्यसाचिनः ।
इतश्चतुर्थे त्वहनि अन्तर्द्वीपं तु गम्यताम् ॥१-२४१-७१ (१०४४५)
सदारैः सानुयात्रैश्च सपुत्रैः सहबाधवैः ।
गन्तव्यं सर्ववर्मैश्च गन्तव्यं सर्वयादवैः ॥१-२४१-७२ (१०४४६)
एवमुक्तास्तु ते सर्वे तथा चक्रुश्च सर्वशः ।
ततः सर्वदशार्हाणामन्तर्द्वीपे च भारत ॥१-२४१-७३ (१०४४७)
चतुस्त्रिंशदहोरात्रं बभूव परमोत्सवः ।
कृष्णरामाहुकाक्रूरप्रद्युम्नशिनिसत्यकाः ॥१-२४१-७४ (१०४४८)
समुद्रं प्रययुर्हृष्टाः कुकुरान्धकवृष्णयः ।
युक्तयन्त्रपताकाभिर्वृष्णयो ब्राह्मणैः सह ॥१-२४१-७५ (१०४४९)
समुद्रं प्रययुर्नौभिः सर्वे पुरनिवासिनः ।
ततस्त्वरितमागत्य दाशार्हगणपूजितम् ॥१-२४१-७६ (१०४५०)
सुभद्रा पुण्डरीकाक्षमब्रवीद्यतिशासनात् ।
कृत्यवान्द्वादशाहानि स्थाता स भगवानिह ॥१-२४१-७७ (१०४५१)
तिष्ठतस्तस्य कः कुर्यादुपस्थानविधिं सदा ।
तमुवाच हृषीकेशः कस्त्वदन्यो विशेषतः ॥१-२४१-७८ (१०४५२)
तमृषिं प्रत्युपस्थातुमितो नार्हति माधवि ।
त्वमेवास्मन्मतेनाद्य महर्षेर्वशवर्तिनी ॥१-२४१-७९ (१०४५३)
कुरु सर्वाणि कार्याणि कीर्तिं धर्ममवेक्ष्य च ।
तस्य चातिथिमुख्यस्य सर्वेषां च तपस्विनाम् ॥१-२४१-८० (१०४५४)
संविधानपरा भद्रे भव त्वं वशवर्तिनी ॥ १-२४१-८१ (१०४५५)
वैशंपायन उवाच।१-२४१-८२क्ष् (१२९८)
एवमादिश्य भिक्षां च भद्रां च मधुसूदनः ।
ययौ शङ्खप्रणादेन भेरीणां निस्वनेन च ॥१-२४१-८२ (१०४५६)
ततस्तु द्वीपमासाद्य दानधर्मपरायणाः ।
उग्रसेनमुखाश्चान्ये विजहुः कुकुरान्धकाः ॥१-२४१-८३ (१०४५७)

पटहानां प्रणादैश्च भेरीणां निस्वनेन च ।
सप्तयोजनविस्तार आयतो दशयोजनम् ॥ १-२४१-८४ (१०४५८)
बभूव स महाद्वीपः सपर्वतमहावनः ।
सेतुपुष्करिणीजालैराक्रीडः सर्वसात्वताम् ॥ १-२४१-८५ (१०४५९)
वापीपल्वलसङ्घैश्च काननैश्च मनोरमैः ।
वासुदेवस्य क्रीडार्थं योग्यः सर्वप्रहर्षतः ॥ १-२४१-८६ (१०४६०)
कुकुरान्धकवृष्णीनां तथा प्रियकरस्तदा ।
बभूव परमोपेतस्त्रिविष्टप इवापरः ॥ १-२४१-८७ (१०४६१)
चतुस्त्रिंशदहोरात्रं दानधर्मपरायणाः ।
उग्रसेनमुखाः सर्वे विजहुः कुकुरान्धकाः ॥ १-२४१-८८ (१०४६२)
विचित्रमाल्याभरणाश्चित्रगन्धानुलेपनाः ।
विहाराभिगताः सर्वे यादवा हर्षसंयुताः ॥ १-२४१-८९ (१०४६३)
सुनृत्तगीतवादित्रै रममाणास्तदाऽभवन् ।
प्रतियाते दशार्हाणामृषभे शार्ङ्गधन्वनि ।
सुभद्रोद्वाहनं पार्थः प्राप्तकालममन्यत ॥ ॥ १-२४१-९० (१०४६४)

इति श्रीमन्महाभारते आदिपर्वणि सुभद्राहरणपर्वणि
एकचत्वारिंशदधिकद्विशततमोऽध्यायः ॥ २४१ ॥

---

अध्यय२४२
॥ श्रीः ॥
१.२४२. अध्यायः २४२

Mahabharata - Adi Parva - Chapter Topics
सुभद्राविवाहः ॥ १ ॥

Mahabharata - Adi Parva - Chapter Text

१-२४२-० (१०४६५)
वैशंपायन उवाच। १-२४२-०क्ष् (१२९९)
कुकुरान्धकवृष्णीनामपयानं च पाण्डवः ।
विनिश्चित्य ततः पार्थः सुभद्रामिदमब्रवीत् ॥ १-२४२-१ (१०४६६)
शृणु भद्रे यथाशास्त्रं हितार्थं मुनिभिः कृतम् ।
विवाहं बहुधा सत्सु वर्णानां धर्मसंयुतम् ॥ १-२४२-२ (१०४६७)
कन्यायास्तु पिता भ्राता माता मातुल एव वा ।
पितुः पिता पितुर्भ्राता दाने तु प्रभुतां गतः ॥ १-२४२-३ (१०४६८)
महोत्सवं पशुपतेर्द्रष्टुकामः पिता तव ।

अन्तर्द्वीपं गतो भद्रे पुत्रैः पौत्रैः सबान्धवैः ॥ १-२४२-४ (१०४६९)
मम चैव विशालाक्षि विदेशस्था हि बान्धवाः ।
तस्मात्सुभद्रे गान्धर्वो विवाहः पञ्चमः स्मृतः ॥ १-२४२-५ (१०४७०)
समागमे तु कन्यायाः क्रियाः प्रोक्ताश्चतुर्विधाः ।
तेषां प्रवृत्तिं साधूनां शृणु माधवि तद्यथा ॥ १-२४२-६ (१०४७१)
वरमाहूय विधिना पित्रा दत्ता तथार्थिने ।
सा पत्नी तु परैरुक्ता सा वश्या तु पतिव्रता ॥ १-२४२-७ (१०४७२)
भृत्यानां भरणार्थाय आत्मनः पोषणाय च ।
दाने गृहीता या नारी सा भार्येति स्मृता बुधैः ॥ १-२४२-८ (१०४७३)
धर्मतो वरयित्वा तु आनीय स्वं निवेशनम् ।
न्यायेन दत्तातारुण्ये दाराः पितृकृताः स्मृताः ॥ १-२४२-९ (१०४७४)
गान्धर्वेण विवाहेन रागात्पुत्रार्थकारणात् ।
आत्मनाऽनुगृहीता या वश्या सा तु प्रजावती ॥ १-२४२-१० (१०४७५)
जनयेद्या तु भर्तारं जाया इत्येव नामतः ।
पत्नी भार्या च दाराश्च जाया चेति चतुर्विधाः ॥ १-२४२-११ (१०४७६)
चतस्र एवाग्निसाक्ष्याः क्रियायुक्ताश्च धर्मतः ।
गान्धर्वस्तु क्रियाहीनो रागादेव प्रवर्तते ॥ १-२४२-१२ (१०४७७)
सकामायाः सकामेन निर्मन्त्रो रहसि स्मृतः ।
मयोक्तमक्रियं चापि कर्तव्यं माधवि त्वया ॥ १-२४२-१३ (१०४७८)
अयनं चैव मासश्च ऋतुः पक्षस्तथा तिथिः ।
करणं च मुहूर्तं च लग्नसंपत्तथैव च ॥ १-२४२-१४ (१०४७९)
विवाहस्य विशालाक्षि प्रशस्तं चोत्तरायणम् ।
वैशाखश्चैव मासानां पक्षाणां शुक्ल एव च ॥ १-२४२-१५ (१०४८०)
नक्षत्राणां तथा हस्तस्तृतीया च तिथिष्वपि ।
लग्नो हि मकरः श्रेष्ठः करणानां बवस्तथा ॥ १-२४२-१६ (१०४८१)
मैत्रो मुहूर्तो वैवाह्य आवयोः शुभकर्मणि ।
सर्वसंपदियं भद्रे अद्य रात्रौ भविष्यति ॥ १-२४२-१७ (१०४८२)
भगवानस्तमभ्येति आदित्यस्तपतां वरः ।
रात्रौ विवाहकालोऽयं भविष्यति न संशयः ॥ १-२४२-१८ (१०४८३)
नारायणोऽपि सर्वज्ञो नावबुध्येत विश्वकृत् ।
धर्मसङ्कटमापन्ने किं नु कृत्वा सुखं भवेत् ॥ १-२४२-१९ (१०४८४)
मनोभवेन कामेन मोहितं मां प्रलापिनम् ।
प्रतिवाक्यं च मे देवि किं न वक्ष्यसि माधवि ॥ १-२४२-२० (१०४८५)
वैशंपायन उवाच। १-२४२-२१क्ष् (१३००)
अर्जुनस्य वचः श्रुत्वा चिन्तयन्ती जनार्दनम् ।
नोवाच किंचिद्वचनं बाष्पदूषितलोचना ॥ १-२४२-२१ (१०४८६)

रागोन्मादप्रलापी सन्नर्जुनो जयतां वरः ।
चिन्तयामास पितरं प्रविश्य च लतागृहम् ॥ १-२४२-२२ (१०४८७)
चिन्तयानं तु कौन्तेयं मत्वा शच्या शचीपतिः ।
सहितो नारदाद्यैश्च मुनिभिश्च महामनाः ॥ १-२४२-२३ (१०४८८)
गन्धर्वैरप्सरोभिश्च चारणैश्चापि गुह्यकैः ।
अरुन्धत्या वसिष्ठेन ह्याजगाम कुशस्थलीम् ॥ १-२४२-२४ (१०४८९)
चिन्तितं च सुभद्रायाश्चिन्तयित्वा जनार्दनः ।
निद्रयापहृतज्ञानं रौहिणेयं विना तदा ॥ १-२४२-२५ (१०४९०)
सहाक्रूरेण शिनिना सत्यकेन गदेन च ।
वसुदेवेन देवक्या आहूकेन च धीमता ॥ १-२४२-२६ (१०४९१)
आजगाम पुरीं रात्रौ द्वारकां स्वजनैर्वृतः ।
पूजयित्वा तु देवेशो नारदादीन्महायशाः ॥ १-२४२-२७ (१०४९२)
कुशलप्रश्नमुक्त्वा तु देवेन्द्रेणाभियाचितः ।
वैवाहिकीं क्रियां कृष्णः स तथेत्येवमुक्तवान् ॥ १-२४२-२८ (१०४९३)
आहुको वसुदेवश्च सहाक्रूरः ससात्यकिः ।
अभिप्रणम्य शिरसा पाकशासनमब्रुवन् ।
देवदेव नमस्तेस्तु लोकनाथ जगत्पते ॥ १-२४२-२९ (१०४९४)
वयं धन्याः स्म सहितैर्बान्धवैः सहिताः प्रभो ।
कृतप्रसादास्तु वयं तव वाक्येन विश्वजित् ॥ १-२४२-३० (१०४९५)
वैशंपायन उवाच। १-२४२-३१क्ष् (१३०१)
एवमुक्त्वा प्रसाद्यैनं पूजयित्वा प्रयत्नतः ।
महेन्द्रशासनात्सर्वे सहिता ऋषिभिस्तदा ॥ १-२४२-३१ (१०४९६)
विवाहं कारयामासुः शक्रपुत्रस्य शास्त्रतः ।
अरुन्धती शची देवी रुग्मिणी देवकी तथा ॥ १-२४२-३२ (१०४९७)
दिव्यस्त्रीभिश्च सहिताः सुभद्रायाः शुभाः क्रियाः ।
अर्जुनेऽपि तथा सर्वाः क्रिया भद्राः प्रयोजयन् ॥ १-२४२-३३ (१०४९८)
महर्षिः काश्यपो होता सदस्या नारदादयः ।
पुण्याशिषः प्रयोक्तारः सर्वे ते हि तदार्जुने ॥ १-२४२-३४ (१०४९९)
अभिषेकं तदा कृत्वा महेन्द्रः पाकशासनिम् ।
लोकपालैस्तु सहितः सर्वदेवैरभिष्टुतः ॥ १-२४२-३५ (१०५००)
किरीटाङ्गदहाराद्यैर्हस्ताभरणकुण्डलैः ।
भूषयित्वा तदा पार्थं द्वितीयमिव वासवम् ॥ १-२४२-३६ (१०५०१)
पुत्रं परिष्वज्य तदा प्रीतिमाप पुरन्दरः ।
शछी देवी तदा भद्रामरुन्धत्यादिभिस्तथा ॥ १-२४२-३७ (१०५०२)
कारयामास वैवाह्यमङ्गलान्यादवस्त्रियः ।
सहाप्सरोभिर्मुदिता भूषयित्वा स्वभूषणैः ॥ १-२४२-३८ (१०५०३)

पौलोमीमिव मन्यन्ते सुभद्रां तत्र योषितः ।
ततो विवाहो ववृधे कृतः सर्वगुणान्वितः ॥ १-२४२-३९ (१०५०४)
तस्याः पाणिं गृहीत्वा तु मन्त्रैर्होमपुरस्कृतम् ।
सुभद्रया बभौ जिष्णुः शच्या इव शचीपतिः ॥ १-२४२-४० (१०५०५)
सा जिष्णुमधिकं भेजे सुभद्रा चारुदर्शना ।
पार्थस्य सदृशी भद्रा रूपेण वयसा तथा ॥ १-२४२-४१ (१०५०६)
सुभद्रायाश्च पार्थोऽपि सदृशो रूपलक्षणैः ।
इत्यूचुश्च तदा देवाः प्रीताः सेन्द्रपुरोगमाः ॥ १-२४२-४२ (१०५०७)
एवं निवेश्य देवास्ते गन्धर्वैः साप्सरोगणैः ।
आमन्त्र्य यादवाः सर्वे विप्रजग्मुर्यथागतम् ॥ १-२४२-४३ (१०५०८)
यादवाः पार्थमामन्त्र्य अन्तर्द्वीपं गतास्तदा ।
वासुदेवस्तदा पार्थमुवाच यदुनन्दनः ॥ १-२४२-४४ (१०५०९)
द्वाविंशद्दिवसान्पार्थ इहोष्य भरतर्षभ ।
मामकं रथमारुह्य शैब्यसुग्रीवयोजितम् ॥ १-२४२-४५ (१०५१०)
सुभद्रया सुखं पार्थ खाण्डवप्रस्थमाविश ।
यादवैः सहितः पश्चादागमिष्यामि भारत ।
यतिवेषेण नियतो वस त्वं रुक्मिणीगृहे ॥ १-२४२-४६ (१०५११)
वैशंपायन उवाच। १-२४२-४७क्ष् (१३०२)
एवमुक्त्वा प्रचक्राम अन्तर्द्वीपं जनार्दनः ।
कृतोद्वाहस्ततः पार्थः कृतकार्योऽभवत्तदा ॥ १-२४२-४७ (१०५१२)
तस्यां चोपगतो भावः पार्थस्य सुमहात्मनः ।
तस्मिन्भावः सुभद्राया अन्योन्यं समवर्धत ॥ १-२४२-४८ (१०५१३)
स तथा युयुजे वीरो भद्रया भरतर्षभः ।
अभिनिष्पन्नया रामः सीतयेव समन्वितः ॥ १-२४२-४९ (१०५१४)
अपि जिष्णुर्विजज्ञे तां ह्रीं श्रियं सन्नतिक्रियाम् ।
देवतानां वरस्त्रीणां रूपेण सदृशीं सतीम् ॥ १-२४२-५० (१०५१५)
स प्रकृत्या श्रिया दीप्त्या संदिदीपे तयाऽधिकम् ।
उद्यत्सहस्रदीप्तांशुः शरदीव दिवाकरः ॥ १-२४२-५१ (१०५१६)
सा तु तं मनुजव्याघ्रमनुरक्ता यशस्विनी ।
कन्यापुरगता भूत्वा तत्परा समपद्यत ॥ ॥ १-२४२-५२ (१०५१७)

इति श्रीमन्महाभारते आदिपर्वणि सुभद्राहरणपर्वणि
द्विचत्वारिंशदधिकद्विशततमोऽध्यायः ॥ २४२ ॥

---

अध्यय२४३
॥ श्रीः ॥
१.२४३. अध्यायः २४३

Mahabharata - Adi Parva - Chapter Topics

कृष्णरथमास्थाय सुभद्रयासह अर्जुनस्य खाण्डवप्रस्थं गन्तुं यत्नः ॥ १ ॥

Mahabharata - Adi Parva - Chapter Text

१-२४३-० (१०५१८)
वैशंपायन उवाच। १-२४३-०क्ष् (१३०३)
वृष्ण्यन्धकपुरात्तस्मादपयातुं धनञ्जयः ।
विनिश्चित्य तया सार्धं सुभद्रामिदमब्रवीत् ॥ १-२४३-१ (१०५१९)
द्विजानां गुणमुख्यानां यथार्हं प्रतिपादय ।
भोज्यैर्भक्ष्यैश्च कामैश्च स्वपुरीं प्रतियास्यताम् ॥ १-२४३-२ (१०५२०)
आत्मनश्च समुद्दिश्य महाव्रतसमापनम् ।
गच्छ भद्रे स्वयं तूर्णं महाराजनिवेशनम् ॥ १-२४३-३ (१०५२१)
तेजोबलजवोपेतैः शुक्लैर्हयवरोत्तमैः ।
वाजिभिः शैव्यसुग्रीवमेघपुष्पबलाहकैः ॥ १-२४३-४ (१०५२२)
युक्तं रथवरं तूर्णमिहानय सुसत्कृतम् ।
व्रतार्थमिति भाषित्वा सखीभिः सुभगे सह ॥ १-२४३-५ (१०५२३)
क्षिप्रमादाय पर्येहि सह सर्वायुधेन च ।
अनुकर्षान्तपताकाश्च तूणीरांश्च धनूंषि च ॥ १-२४३-६ (१०५२४)
सर्वान्रथवरे स्थाप्य सोत्सेधाश्च महागदाः ॥ १-२४३-७ (१०५२५)
वैशंपायन उवाच। १-२४३-८क्ष् (१३०४)
अर्जुनेनैवमुक्ता सा सुभद्रा भद्रभाषिणी ।
जगाम नृपतेर्वेश्म सखीभिः सहिता तदा ॥ १-२४३-८ (१०५२६)
व्रतार्थमिति तत्रस्थान्रक्षिणो वाक्यमब्रवीत् ।
रथेनानेन यास्यामि महाव्रतसमापनम् ॥ १-२४३-९ (१०५२७)
शैब्यसुग्रीवयुक्तेन सायुधेनैव शार्ङ्गिणः ।
रथेन रमणीयेन प्रयास्यामि व्रतार्थिनी ॥ १-२४३-१० (१०५२८)
सुभद्रयैवमुक्ते तु जनाः प्राञ्जलयोऽभवन् ।
योजयित्वा रथवरं कल्याणैरभिभाष्य ताम् ॥ १-२४३-११ (१०५२९)
यथोक्तं सर्वमारोप्य आयुधानि च भामिनी ।
क्षिप्रमादाय कल्याणी सुभद्राऽर्जुनमब्रवीत् ॥ १-२४३-१२ (१०५३०)
रथोऽयं रथिनां श्रेष्ठ आनीतस्तव शासनात् ।
स त्वं याहि यथाकामं कुरून्कौरवनन्दन ॥ १-२४३-१३ (१०५३१)
वैशंपायन उवाच। १-२४३-१४क्ष् (१३०५)

निवेद्य तु रथं भर्तुः सुभद्रा भद्रसंमता ।
ब्राह्मणानां तदा हृष्टा ददौ सा विविधं वसु ॥ १-२४३-१४ (१०५३२)
स्नेहवन्ति च भोज्यानि प्रददावीप्सितानि च ।
यथाकामं यथाश्रद्धं वस्त्राणि विविधानि च ॥ १-२४३-१५ (१०५३३)
तर्पिता विविधैर्भोज्यैस्तान्यवाप्य वसूनि च ।
ब्राह्मणाः स्वगृहं जग्मुः प्रयुज्य परमाशिषः ॥ १-२४३-१६ (१०५३४)
सुभद्रया तु विज्ञप्तः पूर्वमेव धनञ्जयः ।
अभीशुग्रहणे पार्थ न मेऽस्ति सदृशो भुवि ॥ १-२४३-१७ (१०५३५)
तस्मात्सा पूर्वमारुह्य रश्मीञ्जग्राह माधवी ।
सोदरा वासुदेवस्य कृतस्वस्त्ययना हयान् ॥ १-२४३-१८ (१०५३६)
व्यत्ययित्वा तु तल्लिङ्गं यतिवेषं धनञ्जयः ।
आमुच्य कवचं वीरः समुच्छ्रितमहद्धनुः ॥ १-२४३-१९ (१०५३७)
आरुरोह रथश्रेष्ठं शुक्लवासा धनञ्जयः ।
महेन्द्रदत्तं मुकुटं तथैवाभरणानि च ॥ १-२४३-२० (१०५३८)
अलङ्कृत्य तु कौन्तेयः प्रयातुमुपचक्रमे ।
ततः कन्यापुरे घोषस्तुमुलः समपद्यत ॥ १-२४३-२१ (१०५३९)
दृष्ट्वा नववरं पार्थं बाणखड्गधनुर्धरम् ।
अभीशुहस्तां सुश्रोणीमर्जुनेन रथे स्थिताम् ॥ १-२४३-२२ (१०५४०)
ऊचुः कन्यास्तदा यान्तीं वासुदेवसहोदराम् ।
सर्वकामसमृद्धा त्वं सुभद्रे भद्रभाषिणि ॥ १-२४३-२३ (१०५४१)
वासुदेवप्रियं लब्ध्वा भर्तारं वीरमर्जुनम् ।
सर्वसीमन्तिनीनां त्वां श्रेष्ठां कृष्णसहोदरीम् ॥ १-२४३-२४ (१०५४२)
मन्यामहे महाभागे सुभद्रे भद्रभाषिणि ।
यस्मात्सर्वमनुष्याणां श्रेष्ठो भर्ता तवार्जुनः ॥ १-२४३-२५ (१०५४३)
उपपन्नस्त्वया वीरः सर्वलोकमहारथः ।
हे प्रयाहि गृहान्भद्रे सुहृद्भिः संगमोऽस्तु ते ॥ १-२४३-२६ (१०५४४)
वैशंपायन उवाच। १-२४३-२७क्ष् (१३०६)
एवमुक्ता प्रहृष्टाभिः सखीभिः प्रतिनन्दिता ।
भद्रा भद्रजवोपेतानश्वान्पुनरचोदयत् ॥ १-२४३-२७ (१०५४५)
पार्श्वे चामरहस्ता सा सखी तस्याङ्गनाऽभवत् ।
ततः कन्यापुरद्वारात्सघोषादभिनिःसृतम् ॥ १-२४३-२८ (१०५४६)
ददृशुस्तं रथश्रेष्ठं जना जीमूतनिस्वनम् ।
सुभद्रासङ्गृहीतस्य रथस्य महतः स्वनम् ॥ १-२४३-२९ (१०५४७)
मेघस्वनमिवाकाशे शुश्रुवुः पुरवासिनः ।
सुभद्रया तु संपन्ने तिष्ठन्रथवरेऽर्जुनः ॥ १-२४३-३० (१०५४८)
प्रबभौ च तयोपेतः कैलास इव गङ्गया ।

पार्थः सुभद्रासहितो विरराज महारथः ॥१-२४३-३१ (१०५४९)
विराजते यथा शक्रो राजञ्शच्या समन्वितः ।
सुभद्रां प्रेक्ष्य पार्थेन ह्रियमाणां यशस्विनीम् ॥१-२४३-३२ (१०५५०)
चक्रुः किलकिलाशब्दानासाद्य बह्वो जनाः ।
दाशार्हाणां कुलस्य श्रीः सुभद्रा मद्रभाषिणी ॥१-२४३-३३ (१०५५१)
अभिकामा सकामेन पार्थेन सह गच्छति ।
अथापरे तु संक्रुद्धा गृह्णीत घ्नत माचिरम् ॥१-२४३-३४ (१०५५२)
इति संवार्य शस्त्राणि ववर्षुरभितो दिशम् ।
इति संभाषमाणानां स नादः सुमहानभूत् ॥१-२४३-३५ (१०५५३)
स तेन जनघोषेण वीरो गज इवार्दितः ।
ववर्ष शरवर्षाणि न तु कंचन रोषयत् ॥१-२४३-३६ (१०५५४)
मुमोच निशितान्बाणान्दीप्यमानान्स्वतेजसा ।
प्रासादवरसङ्घेषु हर्म्येषु भवनेषु च ॥१-२४३-३७ (१०५५५)
क्षोभयित्वा पुरश्रेष्ठं गरुत्मानिव सागरम् ।
प्रेक्षन्नैवकतद्द्वारं निर्ययौ भरतर्षभः ॥ ॥१-२४३-३८ (१०५५६)

इति श्रीमन्महाभारते आदिपर्वणि सुभद्राहरणपर्वणि
त्रिचत्वारिंशदधिकद्विशततमोऽध्यायः ॥ २४३ ॥

---

अध्यय२४४
॥ श्रीः ॥
१.२४४. अध्यायः २४४

Mahabharata - Adi Parva - Chapter Topics
द्वारकाया बहिर्निर्गच्छतोऽर्जुनस्य विपृथुना युद्धम् ॥ १ ॥
विपृथुं जित्वाऽर्जुनस्य खाण्डवप्रस्थंप्रति गमनम् ॥ २ ॥
युद्धोद्युक्तानां यादवानां बलरामवाक्यान्निवृत्तिः ॥ ३ ॥
बलस्य क्रोधः ॥ ४ ॥

Mahabharata - Adi Parva - Chapter Text

१-२४४-० (१०५५७)
वैशंपायन उवाच।१-२४४-०क्ष् (१३०७)
शासनात्पुरुषेन्द्रस्य बलेन महता बली ।
गिरौ रैवतके नित्यं बभूव विपृथुश्रवाः ॥१-२४४-१ (१०५५८)
प्रवासे वासुदेवस्य तस्मिन्हलधरोपमः ।
संबभूव तदा गोप्ता पुरस्य पुरवर्धनः ॥१-२४४-२ (१०५५९)

प्राप्य पाण्डवनिर्याणं निर्ययौ विपृथुश्रवाः ।
निशम्य पुरनिर्घोषं स्वमनीकमचोदयत् ॥१-२४४-३ (१०५६०)
सोऽभिपत्य तदाध्वानं ददर्श पुरुषर्षभम् ।
निःसृतं द्वारकाद्वारादंशुमन्तमिवाम्बिरात् ॥१-२४४-४ (१०५६१)
सविद्युतमिवाम्भोदं प्रेक्षतां तं धनुर्धरम् ।
पार्थमानर्तयोधानां विस्मयः समपद्यत ॥१-२४४-५ (१०५६२)
उदीर्णरथनागाश्वमनीकमभिवीक्ष्य तत् ।
उवाच परमप्रीता सुभद्रा भद्रभाषिणी ॥१-२४४-६ (१०५६३)
संग्रहीतुमभिप्रायो दीर्घकालकृतो मम ।
युध्यमानस्य सङ्ग्रामे रथं तव नरर्षभ ॥१-२४४-७ (१०५६४)
ओजस्तेजोद्युतिबलैरन्वितस्य महात्मनः ।
पार्थ ते सारथित्वेन भविता शिक्षितास्म्यहम् ॥१-२४४-८ (१०५६५)
एवमुक्तः प्रियां प्रीतः प्रत्युवाच नरर्षभः ।
चोदयाश्वानसंसक्तान्विशतु विपृथोर्बलम् ॥१-२४४-९ (१०५६६)
बहुभिर्युध्यमानस्य तावकान्विजिघांसतः ।
पश्य बाहुबलं भद्रे शरान्विक्षिपतो मम ॥१-२४४-१० (१०५६७)
वैशंपायन उवाच।१-२४४-११क्ष् (१३०८)
एवमुक्ता तदा भद्रा पार्थेन भरतर्षभ ।
चुचोद साश्वान्संहृष्टा ते ततो विविशुर्बलम् ॥१-२४४-११ (१०५६८)
तदाहतमहावाद्यं समुदग्रध्वजायुतम् ।
अनीकं विपृथोर्हृष्टं पार्थमेवान्ववर्तत ॥१-२४४-१२ (१०५६९)
रथैर्बहुविधाकारैः सदश्वैश्च महाजवैः ।
किरन्तः शरवर्षाणि परिवव्रुर्धनञ्जयम् ॥१-२४४-१३ (१०५७०)
तेषामस्त्राणि संवार्य दिव्यास्त्रेण महास्त्रवित् ।
आवृणोन्महदाकाशं शरैः परपुरञ्जयः ॥१-२४४-१४ (१०५७१)
तेषां बाणान्महाबाहुर्मुकुटान्यङ्गदानि च ।
चिच्छेद निशितैर्बाणैः शरांश्चैव धनूंषि च ॥१-२४४-१५ (१०५७२)
युगानीषान्वरूथानि यन्त्राणि विविधानि च ।
अजिघांसन्परान्पार्थश्चिच्छेद निशितैः शरैः ॥१-२४४-१६ (१०५७३)
विधनुष्कान्विकवचान्विरथांश्च महारथान् ।
कृत्वा पार्थः प्रियां प्रीतः प्रेक्ष्यतामित्यदर्शयत् ॥१-२४४-१७ (१०५७४)
सा दृष्ट्वा महदाश्चर्यं सुभद्रा पार्थमब्रवीत् ।
अवाप्तार्थाऽस्मि भद्रं ते याहि पार्थ यथासुखम् ॥१-२४४-१८ (१०५७५)
स सक्तं पाण्डुपुत्रेण समीक्ष्य विपृथुर्बलम् ।
त्वरमाणोऽभिसंक्रम्य स्थीयतामित्यभाषत ॥१-२४४-१९ (१०५७६)
ततः सेनापतेर्वाक्यं नात्यवर्तन्त यादवाः ।

सागरे मारुतोद्धूता वेलामिव महोर्मयः ॥ १-२४४-२० (१०५७७)
ततो रथवरात्तूर्णमवरुह्य नरर्षभः ।
अभिगम्य नरव्याघ्रं प्रहृष्टः परिषस्वजे ॥ १-२४४-२१ (१०५७८)
सोऽब्रवीत्पार्थमासाद्य दीर्घकालमिदं तव ।
निवासमभिजानामि शङ्खचक्रगदाधरात् ॥ १-२४४-२२ (१०५७९)
न मेऽस्त्यविदितं किंचिद्यद्यदाचितं त्वया ।
सुभद्रार्थं प्रलोभेन प्रीतस्तव जनार्दनः ॥ १-२४४-२३ (१०५८०)
प्राप्तस्य यतिलिङ्गेन वासितस्य धनञ्जय ।
बन्धुमानसि रामेण महेन्द्रावरजेन च ॥ १-२४४-२४ (१०५८१)
मामेव च सदाकाङ्क्षी मन्त्रिणं मधुसूदनः ।
अन्तरेण सुभद्रां च त्वां च तात धनञ्जय ॥ १-२४४-२५ (१०५८२)
इमं रथवरं दिव्यं सर्वशस्त्रसमन्वितम् ।
इदमेवानुयात्रं च निर्दिश्य गदपूर्वजः ॥ १-२४४-२६ (१०५८३)
अन्तर्द्वीपं तदा वीर गतो वृष्णिसुखावहः ।
दीर्घकालावरुद्धं त्वां संप्राप्तं प्रियया सह ॥ १-२४४-२७ (१०५८४)
पश्यन्तु भ्रातरः सर्वे वज्रपाणिमिवामराः ।
आयाते तु दशार्हाणामृषभे शार्ङ्गधन्वनि ॥ १-२४४-२८ (१०५८५)
भद्रामनुगमिष्यन्ति रत्नानि च वसूनि च ।
अरिष्टं याहि पन्थानं सुखी भव धनञ्जय ॥ १-२४४-२९ (१०५८६)
नष्टशोकैर्विशोकस्य सुहृद्भिः संगमोऽस्तु ते ॥ १-२४४-३० (१०५८७)
वैशंपायन उवाच। १-२४४-३१क्ष् (१३०९)
ततो विपृथुमामन्त्र्य पार्थः प्रीतोऽभिवाद्य च ।
कृष्णस्य मतमास्थाय कृष्णस्य रथमास्थितः ॥ १-२४४-३१ (१०५८८)
पूर्वमेव तु पार्थाय कृष्णेन विनियोजितम् ।
सर्वरत्नसुसंपूर्णं सर्वभोगसमन्वितम् ॥ १-२४४-३२ (१०५८९)
रथेन काञ्चनाङ्गेन कल्पितेन यथाविधि ।
शैब्यसुग्रीवयुक्तेन किङ्किणीजालमालिना ॥ १-२४४-३३ (१०५९०)
सर्वशस्त्रोपपन्नेन जीमूतरवनादिना ।
ज्वलनार्चिःप्रकाशेन द्विषतां हर्षनाशिना ॥ १-२४४-३४ (१०५९१)
सन्नद्धः कवची खड्गी बद्धगोधाङ्गुलित्रवान् ।
युक्तः सेनानुयात्रेण रथणारोप्य माधवीम् ।
रथेनाकाशगेनैव पययौ क़स्वपुरं प्रति ॥ १-२४४-३५ (१०५९२)
ह्रियमाणां तु तां दृष्ट्वा सुभद्रां सैनिका जनाः ।
विक्रोशन्तोऽद्रवन्सर्वे द्वारकामभितः पुरीम् ॥ १-२४४-३६ (१०५९३)
ते समासाद्य सहिताः सुधर्मामभितः सभाम् ।
सभापालस्य तत्सर्वमाचख्युः पार्थविक्रमम् ॥ १-२४४-३७ (१०५९४)

तेषां श्रुत्वा सभापालो भेरीं सान्नाहिकीं ततः ।
समाजघ्ने महाघोषां जाम्बूनदपरिष्कृताम् ॥१-२४४-३८ (१०५९५)
क्षुब्धास्तेनाथ शब्देन भोजवृष्ण्यन्धकास्तदा ।
ग्अन्तर्द्वीपात्समुत्पेतुः सहसा सहितास्तदा।'
अन्नपानमपास्याथ समापेतुः समन्ततः ॥ १-२४४-३९ (१०५९६)
तत्र जाम्बूनदाङ्गानि स्पर्ध्यास्तरणवन्ति च ।
मणिविद्रुमचित्राणि ज्वलिताग्निप्रभाणि च ॥१-२४४-४० (१०५९७)
भेजिरे पुरुषव्याघ्रा वृष्ण्यन्धकमहारथाः ।
सिंहासनानि शतशो धिष्ण्यानीव हुताशनाः ॥१-२४४-४१ (१०५९८)
तेषां समुपविष्टानां देवानामिव सन्नये ।
आचख्यौ चेष्टितं जिष्णोः सभापालः सहानुगः ॥१-२४४-४२ (१०५९९)
तच्छ्रुत्वा वृष्णिवीरास्ते मदसंरक्तलोचनाः ।
अमृष्यमाणाः पार्थस्य समुत्पेतुरहङ्कृताः ॥१-२४४-४३ (१०६००)
योजयध्वं रथानाशु प्रासानाहरतेति च ।
धनूंषि च महार्हाणि कवचानि बृहन्ति च ॥१-२४४-४४ (१०६०१)
सूतानुच्चुक्रुशुः केचिद्रथान्योजयतेति च ।
स्वयं च तुरगान्केचिदयुञ्जन्हेमभूषितान् ॥१-२४४-४५ (१०६०२)
रथेष्वानीयमानेषु कवचेषु ध्वजेषु च ।
अभिक्रन्दे नृवीराणां तदासीत्तुमुलं महत् ॥१-२४४-४६ (१०६०३)
वनमाली ततः क्षीबः कैलासशिखरोपमः ।
नीलवासा मदोत्सिक्त इदं वचनमब्रवीत् ॥१-२४४-४७ (१०६०४)
किमिदं कुरुथाप्रज्ञास्तूष्णींभूते जनार्दने ।
अस्य भावमविज्ञाय संक्रुद्धा मोघगर्जिताः ॥१-२४४-४८ (१०६०५)
एष तावदभिप्रायमाख्यातु स्वं महामतिः ।
यदस्य रुचिरं कर्तुं तत्कुरुध्वमतन्द्रिताः ॥१-२४४-४९ (१०६०६)
ततस्ते तद्वचः श्रुत्वा ग्राह्यरूपं हलायुधात् ।
तूष्णींभूतास्ततः सर्वे साधुसाध्विति चाब्रुवन् ॥१-२४४-५० (१०६०७)
समं वचो निशम्यैव बलदेवस्य धीमतः ।
पुनरेवसभामध्ये सर्वे ते समुपाविशन् ॥१-२४४-५१ (१०६०८)
ततोऽब्रवीद्वासुदेवं वचो रामः परन्तपः ।
ग्त्रैलोक्यनाथ हे कृष्ण भूतभव्यभविष्यकृत्।'
किमवागुपविष्टोऽसि प्रेक्षमाणो जनार्दन ॥ १-२४४-५२ (१०६०९)
सत्कृतस्त्वत्कृते पार्थः सर्वैरस्माभिरच्युत ।
न च सोऽर्हति तां पूजां दुर्बुद्धिः कुलपांसनः ॥१-२४४-५३ (१०६१०)
को हि तत्रैव भुक्तावान्नं भाजनं भेत्तुमर्हति ।
मन्यमानः कुले जातमात्मानं पुरुषः क्वचित् ॥१-२४४-५४ (१०६११)

इच्छन्नेव हि संबन्धं कृतं पूर्वं च मानयन् ।
को हि नाम भवेनार्थी साहसेन समाचरेत् ॥ १-२४४-५५ (१०६१२)
सोऽवमन्य तथाऽस्माकमनादृत्य च केशवम् ।
प्रसह्य हृतवानद्य सुभद्रां मृत्युमात्मनः ॥ १-२४४-५६ (१०६१३)
कथं हि शिरसो मध्ये कृतं तेन पदं मम ।
मर्षयिष्यामि गोविन्द पादस्पर्शमिवोरगः ॥ १-२४४-५७ (१०६१४)
अद्य निष्कौरवामेकः करिष्यामि वसुन्धराम् ।
न हि मे मर्षणीयोऽयमर्जुनस्य व्यतिक्रमः ॥ १-२४४-५८ (१०६१५)
तं तथा गर्जमानं तु मेघदुन्दुभिनिःस्वनम् ।
अन्वपद्यन्त ते सर्वे भोजवृष्ण्यन्धकास्तदा ॥ ॥ १-२४४-५९ (१०६१६)

इति श्रीमन्महाभारते आदिपर्वणि सुभद्राहरणपर्वणि
चतुश्चत्वारिंशदधिकद्विशततमोऽध्यायः ॥ २४४ ॥ ॥ समाप्तं
च सुभद्राहरणपर्व ॥

Mahabharata - Adi Parva - Chapter Footnotes

१-२४४-४२ सन्नये समुदाये चतुश्चत्वारिंशदधिकद्विशततमोऽध्यायः ॥
२४४ ॥
क्र २३९ तमाध्यायस्य २६ श्लोकादुपरि प्रकृतश्लोकपर्यन्तं विद्यमानानां
२४८ श्लोकानां स्थाने च, ज, झ, ञ, ड, पुस्तकेषु अधोलिखिता अष्टौ
श्लोका एव दृश्यन्ते। १-२४४अ-१क्ष् वैशंपायन उवाच। १-२४४अ-१अ
ततः संवादिते तस्मिन्ननुज्ञातो धनञ्जयः। १-२४४अ-१ब् गतां रैवतके
कन्यां विदित्वा जनमेजय। ।
१-२४४अ-२अ वासुदेवाभ्यनुज्ञातः कथयित्वेतिकृत्यताम्। १-२४४अ-२ब्
कृष्णस्य मतमादाय प्रययौ भरतर्षभः। ।
१-२४४अ-३अ रथेन काञ्चनाङ्गेन कल्पितेन यथाविधि। १-२४४अ-३ब्
शैब्यसुग्रीवयुक्तेन किङ्किणीजालमालिना। ।
१-२४४अ-४अ सर्वशस्त्रोपपन्नेन जीमूतरवनादिना। १-२४४अ-४ब्
ज्वलिताग्निप्रकाशेन द्विषतां हर्षघातिना। ।
१-२४४अ-५अ सन्नद्धः कवची खड्गी बद्धगोधाङ्गुलित्रवान्। १-२४४अ-५ब्
मृगयाव्यपदेशेन प्रययौ पुरुषर्षभः। ।
१-२४४अ-६अ सुभद्रा त्वथ शैलेन्द्रमभ्यर्च्यैव हि
रैवतम्। १-२४४अ-६ब् दैवतानि च सर्वाणि ब्राह्मणान्स्वस्तिवाच्य च। ।
१-२४४अ-७अ प्रदक्षिणं गिरेः कृत्वा प्रययौ
द्वारकां प्रति। १-२४४अ-७ब् तामभिद्रुत्य कौन्तेयः
प्रसह्यारोपयद्रथम्। १-२४४अ-७च् सुभद्रां चारुसर्वाङ्गीं

कामबाणप्रपीडितः। ।
१-२४४अ-८अ ततः स पुरुषव्याघ्रस्तामादाय शुचिस्मिताम्।१-२४४अ-८ब्
रथेन काञ्चनाङ्गेन प्रययौ स्वपुरं प्रति। ।

---

अध्यय२४५
॥ श्रीः ॥
१.२४५. अध्यायः २४५

(अथ हरणाहरणपर्व ॥१७ ॥)
Mahabharata - Adi Parva - Chapter Topics
कृष्णेन बलरामसान्त्वनम् ॥१ ॥
अर्जुनंप्रत्यानेतुं यादवानां गमनम् ॥२ ॥
विपृथुवाक्यादुर्जनं दूरगतं ज्ञात्वा तेषां प्रतिनिवर्तनम् ॥३ ॥
सुभद्रया सह अर्जुनस्य खाण्डवप्रस्थगमनम् ॥४ ॥

Mahabharata - Adi Parva - Chapter Text

१-२४५-० (१०६१७)
वैशंपायन उवाच।१-२४५-०क्ष् (१३१०)
उक्तवन्तो यथावीर्यमसकृत्सर्ववृष्णयः ।
ततोऽब्रवीद्वासुदेवो वाक्यं धर्मार्थसंयुतम् ॥१-२४५-१ (१०६१८)
ग्मयोक्तं न श्रुतं पूर्वं सहितैः सर्वयादवैः ।
अतिक्रान्तमतिक्रान्तं न निवर्तेत कर्हिचित् ।
शृणुध्वं सहिताः सर्वे मम वाक्यं सहेतुकम् ॥' १-२४५-२ (१०६१९)
नावमानं कुलस्यास्य गुडाकेशः प्रयुक्तवान् ।
संमानोऽभ्यधिकस्तेन प्रयुक्तोऽयं न संशयः ॥१-२४५-३ (१०६२०)
अर्थलुब्धान्न वः पार्थो मन्यते सात्वतान्सदा ।
स्वयंवरमनाधृष्यं मन्यते चापि पाण्डवः ॥१-२४५-४ (१०६२१)
प्रदानमपि कन्यायाः पशुवत्को नु मन्यते ।
विक्रयं चाप्यपत्यस्य कः कुर्यात्पुरुषो भुवि ॥१-२४५-५ (१०६२२)
एतान्दोषांस्तु कौन्तेयो दृष्टवानिति मे मतिः ।
ग्क्षत्रियाणां तु वीर्येण प्रशस्तं हरणं बलात्।'
अतः प्रसह्य हृतवान्कन्यां धर्मेण पाण्डवः ॥ १-२४५-६ (१०६२३)
उचितश्चैव संबन्धः सुभद्रा च शयस्विनी ।
एष चापीदृशः पार्थः प्रसह्य हृतवानतः ॥१-२४५-७ (१०६२४)
भरतस्यान्वये जातं शान्तनोश्च यशस्विनः ।

कुन्तिभोजात्मजापुत्रं का बुभूषेत नार्जुनम् ॥१-२४५-८ (१०६२५)
न तं पश्यामि यः पार्थं विजयेत रणे बलात् ।
वर्जयित्वा विरूपाक्षं भगनेत्रहरं हरम् ॥१-२४५-९ (१०६२६)
अपि सर्वेषु लोकेषु सेन्द्ररुद्रेषु मारिष ।
स च नाम रथस्तादृङ्मदीयास्ते च वाजिनः ॥१-२४५-१० (१०६२७)
ग्मम शस्त्रं विशेषेण तूणौ चाक्षयसायकौ।'
योद्धा पार्थश्च शीघ्रास्त्रः को नु तेन समो भवेत् ।
तमभिद्रुत्य सान्त्वेन परमेण धनञ्जयम् ॥ १-२४५-११ (१०६२८)
निवर्तयत संहृष्टा ममैषा परमा मतिः ।
यदि निर्जित्य वः पार्थो बलाद्गच्छेत्स्वकं पुरं ॥१-२४५-१२ (१०६२९)
प्रणश्येद्वो यशः सद्यो न तु सान्त्वे पराजयः ।
ग्पितृष्वसायाः पुत्रो मे संबन्धं नार्हति द्विषाम्।'
तच्छ्रुत्वा वासुदेवस्य तथा कर्तुं जनाधिप ॥ १-२४५-१३ (१०६३०)
ग्उद्योगं कृतवन्तस्ते भेरीं सन्नाद्य यादवाः ।
अर्जुनस्तु तदा श्रुत्वा भेरीसन्नादनं महत् ॥१-२४५-१४ (१०६३१)
कौन्तेयस्त्वरमाणस्तु सुभद्रामभ्यभाषत ।
आयान्ति वृष्णयः सर्वे ससुहृज्जनबान्धवाः ॥१-२४५-१५ (१०६३२)
त्वदर्थं योद्धुकामास्ते मदरक्तान्तलोचनाः ।
प्रमत्तानशुचीन्मूढान्सुरामत्तान्नराधमान् ॥१-२४५-१६ (१०६३३)
वमनं पानशीलांस्तान्करिष्यामि शरोत्तमैः ।
उताहो वा मदोन्मत्तान्नयिष्यामि यमक्षयम् ॥१-२४५-१७ (१०६३४)
एवमुक्त्वा प्रियां पार्थो न्यवर्तत महाबलः ।
निवर्तमानं दृष्ट्वैव सुभद्रा त्रस्ततां गता ॥१-२४५-१८ (१०६३५)
एवं मा वद पार्थेति पादयोः पतिता तदा ।
सुभद्रा तु कलिर्जाता वृष्णीनां निधाय च ॥१-२४५-१९ (१०६३६)
एवं ब्रुवन्तः पौरास्ते ह्यपवादरताः प्रभो ।
मम शोकं वर्धयन्ति तस्मान्नाशं न चिन्तये ।
परिवादभयान्मुक्ता त्वत्प्रसादाद्भवाम्यहम् ॥ १-२४५-२० (१०६३७)
वैशंपायन उवाच।१-२४५-२१क्ष् (१३११)
एवमुक्तस्ततः पार्थः प्रियया भद्रया तदा ।
गमनाय मतिं चक्रे पार्थः सत्यपराक्रमः ॥१-२४५-२१ (१०६३८)
स्तितपूर्वं तदाऽऽभाष्य परिष्वज्य प्रियां तदा ।
उत्थाप्य च पुनः पार्थो याहि याहीति चाब्रवीत् ॥१-२४५-२२ (१०६३९)
ततः सुभद्रा त्वरिता रश्मीन्संगृह्य पाणिना ।
चोदयामास जवनाञ्शीघ्रमश्वान्कृतत्वरा ॥१-२४५-२३ (१०६४०)
ततस्तु कृतसन्नाहा वृष्णिवीराः समाहिताः ।

प्रत्यानयार्थं पार्थस्य जवनैस्तुरगोत्तमैः ॥ १-२४५-२४ (१०६४१)
राजमार्गमनुप्राप्ता दृष्ट्वा पार्थस्य विक्रमम् ।
प्रासादपङ्क्तिस्तम्भेषु वेदिकासु ध्वजेषु च ॥ १-२४५-२५ (१०६४२)
अर्जुनस्य शरान्दृष्ट्वा विस्मयं परमं गताः ।
केशवस्य वचस्तथ्यं मन्यमानास्तु यादवाः ॥ १-२४५-२६ (१०६४३)
अतीत्य तं रैवतकं श्रुत्वा तु विपृथोर्वचः ।
अर्जुनेन कृतं श्रुत्वा गन्तुकामास्तु वृष्णयः ॥ १-२४५-२७ (१०६४४)
श्रुत्वा दीर्घं गतं पार्थं न्यवर्तन्त महारथाः ।
पुरोद्यानमतिक्रम्य विशालं च गिरिव्रजम् ॥ १-२४५-२८ (१०६४५)
सानुमुज्जयिनीं चैव वनान्युपवनानि च ।
पुण्येष्वानर्तराष्ट्रेषु वापीपद्मसरांसि च ॥ १-२४५-२९ (१०६४६)
प्राप्य धेनुमतीतीर्थमश्वरोधसरः प्रति ।
प्रेक्षावर्तं ततः शैलमम्बुदं च नगोत्तमम् ॥ १-२४५-३० (१०६४७)
आराच्छ्रृङ्गमथासाद्य तीर्णः करवतीं नदीम् ।
प्राप्य साल्वेयराष्ट्राणि निषधानप्यतीत्य च ॥ १-२४५-३१ (१०६४८)
देवापृथुपुरं पश्यन् सर्वतः सुसमाहितः ।
तमतीत्य महाबाहुर्देवारण्यमपश्यत ॥ १-२४५-३२ (१०६४९)
पूजयामासुरायान्तं देवारण्ये महर्षयः ।
स वनानि नदीः शैलान् गिरिप्रस्रवणानि च ॥ १-२४५-३३ (१०६५०)
अतीत्य च तदा पार्थः सुभद्रासारथिस्तदा ।
कौरवं विषयं प्राप्य विशोकः समपद्यत ॥ १-२४५-३४ (१०६५१)
सोदर्याणां महाबाहुः सिंहाशयमिवाशयम् ।
दूरादुपवनोपेतं समन्तात्सलिलावृतम् ॥ १-२४५-३५ (१०६५२)
भद्रया मुदितो जिष्णुर्ददर्श वृजिनं पुरम् ॥ ॥ १-२४५-३६ (१०६५३)

इति श्रीमन्महाभारते आदिपर्वणि हरणाहरणपर्वणि
पञ्चत्वारिंशदधिकद्विशततमोऽध्यायः ॥ २४५ ॥
Mahabharata - Adi Parva - Chapter Footnotes

१-२४५-२० तस्मात्पापं न चिन्तये ॥
पञ्चत्वारिंशदधिकद्विशततमोऽध्यायः ॥
२४५ ॥

---

अध्यय२४६
॥ श्रीः ॥
१.२४६. अध्यायः २४६

Mahabharata - Adi Parva - Chapter Topics
अर्जुनेन सुभद्रायाः गोपीवेषेण द्रौपदीसमीपप्रेषणम् ॥ १ ॥
कृतनतिं सुभद्रांप्रति पृथाद्रौपदीभ्यां आशीर्वादः ॥ २ ॥
स्वपुरं प्रविष्टेनार्जुनेन भ्रातृश्यः
स्वकृततीर्थयात्रावृत्तान्तकथनम् ॥ ३ ॥

Mahabharata - Adi Parva - Chapter Text

१-२४६-० (१०६५४)
वैशंपायन उवाच। १-२४६-०क्ष् (१३१२)
क्रोशणात्रे पुरस्यासीद्गोष्ठं पार्थस्य शोभनम् ।
तत्रापि यात्वा बीभत्सुर्निविष्टो यदुकन्यया ॥ १-२४६-१ (१०६५५)
ततः सुभद्रां सत्कृत्य पार्थो वचनमब्रवीत् ।
गोपिकानां तु वेषेण गच्छ त्वं वृजिनं पुरम् ॥ १-२४६-२ (१०६५६)
कामव्याहारिणी कृष्णा रोचतां ते वचो मम ।
दृष्ट्वा तु परुषं ब्रूयात्सह तत्र मयागताम् ॥ १-२४६-३ (१०६५७)
अन्यवेषेण तु गतां दृष्ट्वा सा त्वां प्रियं वदेत् ।
यत्तु सा प्रथमं ब्रूयान्न तस्यास्ति निवर्तनम् ॥ १-२४६-४ (१०६५८)
तस्मान्मानं च दर्पं च व्यपनीय स्वयं व्रज ।
तस्य तद्वचनं श्रुत्वा सुभद्रा प्रत्यभाषत ॥ १-२४६-५ (१०६५९)
एवमेतत्करिष्यामि यथा त्वं पार्थ भाषसे ।
सुभद्रावचनं श्रुत्वा सुप्रीतः पाकशासनिः ॥ १-२४६-६ (१०६६०)
गोपालान्स समानीय त्वरितो वाक्यमब्रवीत् ।
तरुण्यः सन्ति यावन्त्यस्ताः सर्वा व्रजयोषितः ॥ १-२४६-७ (१०६६१)
आगच्छन्तु गमिष्यन्त्या भद्रया सह सङ्गताः ।
इन्द्रप्रस्थं पुरवरं कृष्णां द्रष्टुं यशस्विनीम् ॥ १-२४६-८ (१०६६२)
एतच्छ्रुत्वा तु गोपालैरानीता व्रजयोषितः ।
ततस्ताभिः परिवृतां व्रजस्त्रीभिः समन्ततः ॥' १-२४६-९ (१०६६३)
सुभद्रां त्वरमाणश्च रक्तकौशेयवासिनीम् ।
पार्थः प्रस्थापयामास कृत्वा गोपालिकावपुः ॥ १-२४६-१० (१०६६४)
साऽधिकं तेन रूपेण शोभमाना यशस्विनी ।
ग्गोपालिकामध्यगता प्रययौ वृजिनं पुरम् ॥ १-२४६-११ (१०६६५)
त्वरिता खाण्डवप्रस्थमाससाद विवेश च।'
भवनं श्रेष्ठमासाद्य वीरपत्नी वराङ्गना ॥ १-२४६-१२ (१०६६६)
ववन्दे पृथुताम्राक्षी पृथां भद्रा पितृष्वसाम् ।
तां कुन्ती चारुसर्वाङ्गीमुपाजिघ्रत मूर्धनि ॥ १-२४६-१३ (१०६६७)

प्रीत्या परमया युक्ता आशीर्भिर्युञ्जताऽतुलाम् ।
ततोऽभिगम्य त्वरिता पूर्णेन्दुसदृशानना ॥ १-२४६-१४ (१०६६८)
ववन्दे द्रौपदीं भद्रा प्रेष्याऽहमिति चाब्रवीत् ।
प्रत्युत्थाय तदा कृष्णा स्वसारं माधवस्य च ॥ १-२४६-१५ (१०६६९)
परिष्वज्यावदत्प्रीत्या निःसपत्नोस्तु ते पतिः ।
ग्वीरसूर्भव भद्रे त्वं भव भर्तृप्रिया तथा ॥ १-२४६-१६ (१०६७०)
ओजसा निर्मिता बह्वीरुवाच परमाशिषः।'
तथैव मुदिता भद्रा तामुवाच तथास्त्विति ॥ १-२४६-१७ (१०६७१)
ग्ततः सुभद्रां वार्ष्णेयी परिष्वज्य शुभाननाम् ।
अङ्के निवेश्य मुदिता वसुदेवं प्रशस्य च ॥ १-२४६-१८ (१०६७२)
ततः किलकिलाशब्दः क्षणेन समपद्यत ।
हर्षादानर्तयोधानामासाद्य वृजिनं पुरम् ॥ १-२४६-१९ (१०६७३)
देवपुत्रप्रकाशास्ते जाम्बूनदमयध्वजाः ।
पृष्ठतोऽनुययुः पार्थं पुरुहूतमिवामराः ॥ १-२४६-२० (१०६७४)
गोभिरुष्ट्रैः सदश्वैश्च युक्तानि बहुला जनाः ।
ददृशुर्यानमुख्यानि दाशार्हपुरवासिनाम् ॥ १-२४६-२१ (१०६७५)
ततः पुरवरे यूनां पुंसां वाच उदीरिताः ।
अर्जुने प्रतियाति स्म अश्रूयन्त समन्ततः ॥ १-२४६-२२ (१०६७६)
प्रवासादागतं पार्थं दृष्ट्वा स्वमिव बान्धवम् ।
सोऽभिगम्य नरश्रेष्ठो दाशार्हशतसंवृतः। १-२४६-२३ (१०६७७)
पौरैः पुरवरं प्रीत्या परया चाभिनन्दितः ।
प्राप्य चान्तःपुरद्वारमवरुह्य नरर्षभः ॥ १-२४६-२४ (१०६७८)
ववन्दे धौम्यमासाद्य मातरं च धनञ्जयः ।
स्पृष्ट्वा च चरणौ राज्ञो भीमस्य च धनञ्जयः ॥ १-२४६-२५ (१०६७९)
यमाभ्यां वन्दितो हृष्टः सस्वजे तौ ननन्द च ।
ब्राह्मणप्रमुखान्सर्वान्भ्रातृभिः सह सङ्गतः ॥ १-२४६-२६ (१०६८०)
यथार्हं मानयामास पौरजानपदानपि ।
तत्रस्थान्यनुयातानि तीर्थान्यायतनानि च ॥ १-२४६-२७ (१०६८१)
निवेदयामास तदा राज्ञे सर्वं स्वनुष्ठितम् ।
भ्रातृभ्यश्चैव सर्वेभ्यः कथयामास भारत ॥ १-२४६-२८ (१०६८२)
श्रुत्वा सर्वं महाप्राज्ञो धर्मराजो युधिष्ठिरः ।
पुरस्तादेव तेषां तु पूजयामास चार्जुनम् ॥ १-२४६-२९ (१०६८३)
पाण्डवेन यथार्हं तु पूजार्हेण सुपूजितः ।
न्यविशच्चाभ्यनुज्ञातो राज्ञा तुष्टो यशस्विना ॥ १-२४६-३० (१०६८४)
तामदीनां सुपूजार्हां सुभद्रां प्रीतिवर्धिनीम् ।
साक्षाच्छ्रियममन्यन्त पार्थाः कृष्णसहोदराम् ॥ १-२४६-३१ (१०६८५)

गुरूणां श्वशुराणां च देवराणां तथैव च ।
सुभद्रा स्वेन वृत्तेन बभूव परमप्रिया ॥' १-२४६-३२ (१०६८६)
ततस्ते हृष्टमनसः पाण्डवेया महारथाः ।
कुन्ती च परमप्रीता कृष्णा च सततं तथा ॥ ॥ १-२४६-३३ (१०६८७)

इति श्रीमन्महाभारते आदिपर्वणि हरणाहरणपर्वणि
षट्चत्वारिंशदधिकद्विशततमोऽध्यायः ॥ २४६ ॥

---

अध्यय२४७
॥ श्रीः ॥
१.२४७. अध्यायः २४७

Mahabharata - Adi Parva - Chapter Topics
कृष्णानुमत्याऽर्जुनः सुभद्रां जहारेति पौराणामूहः ॥ १ ॥
अर्जुने इन्द्रप्रस्थं प्राप्तं ज्ञात्वा यादवैः सह श्रीकृष्णस्य
इन्द्रप्रस्थं प्रत्यागमनम् ॥ २ ॥
आगताञ्श्रीकृष्णादीञ्श्रुत्वा युधिष्ठिरस्य प्रत्युद्गमनं तेषां
सत्कारश्च ॥ ३ ॥
वैवाहिकमहोत्सवकरणम् ॥ ४ ॥
पारिबर्हदानम् ॥ ५ ॥
कंमचित्कालं तत्रोषितानां कुरुभिः पूजितानां बलरामादीनां
द्वारकांप्रति गमनम् ॥ ६ ॥
अभिमन्यूत्पत्तिः ॥ ७ ॥
द्रौपद्याः युधिष्ठिरादिश्यः पञ्चपुत्रोत्पत्तिः तेषां विद्याश्यासश्च
॥ ८ ॥

Mahabharata - Adi Parva - Chapter Text

१-२४७-० (१०६८८)
वैशंपायन उवाच। १-२४७-०क्ष् (१३१३)
अथ शुश्राव निर्वृत्ते वृष्णीनां परमोत्सवे ।
अर्जुनेन हृतां भद्रां शङ्खचक्रगदाधरः ॥ १-२४७-१ (१०६८९)
पुरस्तादेव पौराणां संशयः समजायत ।
जानता वासुदेवेन वासितो भरतर्षभः ॥ १-२४७-२ (१०६९०)
लोकस्य विदितं ह्यद्य पूर्वं विपृथुना यथा ।
सान्त्वयित्वाभ्यनुज्ञातो भद्रया सह सङ्गतः ॥ १-२४७-३ (१०६९१)

दित्सता सोदरां तस्मै पतत्त्रिवरकेतुना ।
अर्हते पार्थिवेन्द्राय पार्थायायतलोचनाम् ॥१-२४७-४ (१०६९२)
सत्कृत्य पाण्डवश्रेष्ठं प्रेषयामास चार्जुनम् ।
भद्रया सह बीभत्सुः प्रापितो वृजिनं पुरम् ॥१-२४७-५ (१०६९३)
इति पौरजनाः सर्वे वदन्ति च समन्ततः।'
श्रुत्वा तु पुण्डरीकाक्षः संप्राप्तं स्वपुरोत्तमम् ॥ १-२४७-६ (१०६९४)
अर्जुनं पाण्डवश्रेष्ठमिन्द्रप्रस्थगतं तथा ।
गयियासुः खाण्डवप्रस्थममन्त्रयत केशवः ॥१-२४७-७ (१०६९५)
पूर्वं सत्कृत्य राजानमाहुकं मधुसूदनः ।
तथा विपृथुमक्रूरं संकर्षणविडूरथौ ॥१-२४७-८ (१०६९६)
मन्त्रयामास तैः सार्धं पुरस्तादभिमानितैः ।
संकर्षणेन संमन्त्र्य ह्यनुज्ञातो महामनाः ॥१-२४७-९ (१०६९७)
संप्रीतः प्रीयमाणेन वृष्णिराज्ञा जनार्दनः ।
अभिमन्त्र्याभ्यनुज्ञातो योजयामास वाहिनीम् ॥१-२४७-१० (१०६९८)
ततस्तु यानान्यासाद्य दाशार्हाणां यशस्विनाम् ।
सिंहनादः प्रहृष्टानां क्षणेन समपद्यत ॥१-२४७-११ (१०६९९)
योजयन्तः सदश्वांस्तु यानयुग्यं रथांस्तथा ।
गजांश्च परमप्रीतः समपद्यन्त वृष्णयः ॥' १-२४७-१२ (१०७००)
वृष्ण्यन्धकमहामात्रैः सह वीरैर्महारथैः ।
भ्रातृभिश्च कुमारैश्च योधैश्च शतशो वृतः ॥१-२४७-१३ (१०७०१)
सैन्येन महता शौरिरभिगुप्तः समन्ततः ।
तत्र दानपतिः श्रीमाञ्जगाम स महायशाः ॥१-२४७-१४ (१०७०२)
अक्रूरो वृष्णिवीराणां सेनापतिररिन्दमः ।
अनाधृष्टिर्महातेजा उद्धवश्च महायशाः ॥१-२४७-१५ (१०७०३)
साक्षाद्बृहस्पतेः शिष्यो महाबुद्धिर्महामनाः ।
सत्यकः सात्यकिश्चैव कृतवर्मा च सात्वतः ॥१-२४७-१६ (१०७०४)
प्रद्युम्नश्चैव साम्बश्च निशठः शङ्कुरेव च ।
चारुदेष्णश्च विक्रान्तो झिल्ली विपृथुरेव च ॥१-२४७-१७ (१०७०५)
सारणश्च महाबाहुर्गदश्च विदुषां वरः ।
एते चान्ये च बहवो वृष्णिभोजान्धकास्तथा ॥१-२४७-१८ (१०७०६)
आजग्मः खाण्डवप्रस्थमादाय हरणं बहु ।
ग्उपहारं समादाय पृथुवृष्णिपुरोगमाः ॥१-२४७-१९ (१०७०७)
प्रययुः सिंहनादेन सुभद्रामवलोककाः ।
ते त्वदीर्घेण कालेन कृष्णेन सह यादवाः ।
पुरमासाद्य पार्थानां परां प्रीतिमवाप्नुवन् ॥' १-२४७-२० (१०७०८)
ततो युधिष्ठिरो सजा श्रुत्वा माघवमागतम् ।

प्रतिग्रहार्थं कृष्णस्य यमौ प्रास्थापयत्तदा ॥१-२४७-२१ (१०७०९)
ताभ्यां प्रतिगृहीतं तु वृष्णिचक्रं महर्द्धिमत् ।
विवेश खाण्डवप्रस्थं पताकाध्वजशोभितम् ॥१-२४७-२२ (१०७१०)
संमृष्टसिक्तपन्थानं पुष्पप्रकरशोभितम् ।
चन्दनस्य रसैः शीतैः पुम्यगन्धैर्निषेवितम् ॥१-२४७-२३ (१०७११)
दह्यताऽगुरुणा चैव देशे देशे सुगन्धिना ।
हृष्टपुष्टजनाकीर्णं वणिग्भिरुपशोभितम् ॥१-२४७-२४ (१०७१२)
प्रतिपेदे महाबाहुः सह रामेण केशवः ।
वृष्ण्यन्धकैस्तथा भोजैः समेतः पुरुषोत्तमः ॥१-२४७-२५ (१०७१३)
संपूज्यमानः पौरैश्च ब्राह्मणैश्च सहस्रशः ।
विवेश भवनं राज्ञः पुरन्दरगृहोपमम् ॥१-२४७-२६ (१०७१४)
युधिष्ठिरस्तु रामेण समागच्छद्यथाविधि ।
मूर्ध्नि केशवमाघ्राय बाहुभ्यां परिषस्वजे ॥१-२४७-२७ (१०७१५)
तं प्रीयमाणो गोविन्दो विनयेनाभिपूजयन् ।
भीमं च पुरुषव्याघ्रं विधिवत्प्रत्यपूजयत् ॥१-२४७-२८ (१०७१६)
तांश्च वृष्ण्यन्धकश्रेष्ठान्कुन्तीपुत्रो युधिष्ठिरः ।
प्रतिजग्राह सत्कारैर्यथाविधि यथागतम् ॥१-२४७-२९ (१०७१७)
गुरुवत्पूजयामास कांश्चित्कांश्चिद्वयस्यवत् ।
कांश्चिदभ्यवदत्प्रेम्णा कैश्चिदप्यभिवादितः ॥१-२४७-३० (१०७१८)
ग्ततः पृथा च पार्थाश्च मुदिताः कृष्णया सह ।
पुण्डरीकाक्षमासाद्य बभूवुर्मुदितेन्द्रियाः ॥१-२४७-३१ (१०७१९)
हर्षादभिगतौ दृष्ट्वा संकर्षणजनार्दनौ ।
बन्धुमन्तं पृथा पार्थं युधिष्ठिरममन्यत ॥१-२४७-३२ (१०७२०)
ततः सङ्कर्षणाक्रूरावप्रमेयावदीनवत् ।
भद्रवत्यै सुभद्रायै धनौघमुपजह्रतुः ॥१-२४७-३३ (१०७२१)
प्रवालानि च हाराणि भूषणानि सहस्रशः ।
कुथास्तरपरिस्तोमान्व्याघ्राजिनपुरस्कृतान् ॥१-२४७-३४ (१०७२२)
विविधैश्चैव रंत्नौगैर्दीप्तप्रभमजायत ।
शयनासनयानैश्च युधिष्ठिरनिवेशनम् ॥१-२४७-३५ (१०७२३)
ततः प्रीतिकरो यूनां विवाहपरमोत्सवः ।
भद्रवत्यै सुभद्रायै सप्तरात्रमवर्तत ॥' १-२४७-३६ (१०७२४)
तेषां ददौ हृषीकेशो जन्यार्थे धनमुत्तमम् ।
हरणं वै सुभद्राया ज्ञातिदेयं महायशाः ॥१-२४७-३७ (१०७२५)
रथानां काञ्चनाङ्गानां किङ्किणीजालमालिनाम् ।
चतुर्युजामुपेतानां सूतैः कुशलशिक्षितैः ॥१-२४७-३८ (१०७२६)
सहस्रं प्रददौ कृष्मो गवामयुतमेव च ।

श्रीमान्माथुरदेश्यानां दोग्ध्रीणां पुण्यवर्चसाम् ॥१-२४७-३९ (१०७२७)
बडवानां च शुद्धानां चन्द्रांशुसमवर्चसाम् ।
ददौ जनार्दनः प्रीत्या सहस्रं हेमभूषितम् ॥१-२४७-४० (१०७२८)
तथैवाश्वतरीणां च दान्तानां वातरंहसाम् ।
शतान्यञ्जनकेशीनां श्वेतानां पञ्चपञ्च च ॥१-२४७-४१ (१०७२९)
स्नानपानोत्सवे चैव प्रयुक्तं वयसान्वितम् ।
स्त्रीणां सहस्रं गौरीणां सुवेषाणां सुवर्चसाम् ॥१-२४७-४२ (१०७३०)
सुवर्णशतकण्ठीनामरोमाणां स्वलङ्कृताम् ।
परिचर्यासु दक्षाणां प्रददौ पुष्करेक्षणः ॥१-२४७-४३ (१०७३१)
पृष्ठ्यानामपि चाश्वानां बाह्लिकानां जनार्दनः ।
ददौ शतसहस्राख्यं कन्याधनमनुत्तमम् ॥१-२४७-४४ (१०७३२)
कृताकृतस्य मुख्यस्य कनकस्याग्निवर्चसः ।
मनुष्यभारान्दाशार्हो ददौ दश जनार्दनः ॥१-२४७-४५ (१०७३३)
गजानां तु प्रभिन्नानां त्रिधा प्रस्रवतां मदम् ।
गिरिकूटनिकाशानां समरेष्वनिवर्तिनाम् ॥१-२४७-४६ (१०७३४)
क्लृप्तानां पटुघण्टानां चारूणां हेममालिनाम् ।
हस्त्यारोहैरुपेतानां सहस्रं साहसप्रियः ॥१-२४७-४७ (१०७३५)
रामः पाणिग्रहणिकं ददौ पार्थाय लाङ्गली ।
प्रीयमाणो हलधरः संबन्धं प्रति मानयन् ॥१-२४७-४८ (१०७३६)
स महाधनरत्नौघो वस्त्रकम्बलफेनवान् ।
महागजमहाग्राहः पताकाशैवलाकुलः ॥१-२४७-४९ (१०७३७)
पाण्डुसागरमाविद्धः प्रविवेश महाधनः ।
पूर्णमापूरयंस्तेषां द्विषच्छोकावहोऽभवत् ॥१-२४७-५० (१०७३८)
प्रतिजग्राह तत्सर्वं धर्मराजो युधिष्ठिरः ।
पूजयामास तांश्चैव वृष्ण्यन्धकमहारथान् ॥१-२४७-५१ (१०७३९)
ते समेता महात्मानः कुरुवृष्ण्यन्धकोत्तमाः ।
विजह्रुरमरावासे नराः सुकृतिनो यथा ॥१-२४७-५२ (१०७४०)
तत्रतत्र महानादैरुत्कृष्टतलनादितैः ।
यथायोगं यथाप्रीति विजह्रुः कुरुवृष्णयः ॥१-२४७-५३ (१०७४१)
एवमुत्तमवीर्यास्ते विहृत्य दिवसान्बहून् ।
पूजिताः कुरुभिर्जग्मुः पुनर्द्वारवतीं प्रति ॥१-२४७-५४ (१०७४२)
रामं पुरुस्कृत्य ययुर्वृष्म्यन्धकमहारथाः ।
रत्नान्यादाय शुभ्राणि दत्तानि कुरुसत्तमैः ॥१-२४७-५५ (१०७४३)
ग्रामः सुभद्रां संपूज्य परिष्वज्य स्वसां तदा ।
न्यासेति द्रौपदीमुक्त्वा परिधाय महाबलः ॥१-२४७-५६ (१०७४४)
पितृष्वसायाश्चरणावभिवाद्य ययौ तदा ।

तस्मिन्काले पृथा प्रीता पूजयामास तं तथा ॥१-२४७-५७ (१०७४५)
स वृष्णिवीरः पार्थैश्च पौरैश्च परमार्चितः ।
ययौ द्वारवतीं रामो वृष्णिभिः सह संयुतः ॥१-२४७-५८ (१०७४६)
वासुदेवस्तु पार्थेन तत्रैव सह भारत ।
ग्चतुस्त्रिंशदहोरात्रं रममाणो महाबलः।'
उवास नगरे रम्ये शक्रप्रस्थे महात्मना ॥ १-२४७-५९ (१०७४७)
व्यचरद्यमुनातीरे मृगयां स महायशाः ।
मृगान्विध्यन्वराहांश्च रेमे सार्धं किरीटिना ॥१-२४७-६० (१०७४८)
ततः सुभद्रा सौभद्रं केशवस्य प्रिया स्वसा ।
जयन्तमिव पौलोमी ख्यातिमन्तमजीजनत् ॥१-२४७-६१ (१०७४९)
दीर्घबाहुं महोरस्कं वृषभाक्षमरिन्दमम् ।
सुभद्रा सुषुवे वीरमभिमन्युं नरर्षभम् ॥१-२४७-६२ (१०७५०)
अभीश्च मन्युमांश्चैव ततस्तमरिमर्दनम् ।
अभिमन्युरिति प्राहुरार्जुनिं पुरुषर्षभम् ॥१-२४७-६३ (१०७५१)
स सात्वत्यामतिरथः संबभूव धनञ्जयात् ।
मखे निर्मथनेनेव शमीगर्भाद्धुताशनः ॥१-२४७-६४ (१०७५२)
यस्मिञ्जाते महातेजाः कुन्तीपुत्रो युधिष्ठिरः ।
अयुतं गा द्विजातिभ्यः प्रादान्निष्कांश्च भारत ॥१-२४७-६५ (१०७५३)
दयितो वासुदेवस्य वाल्यात्प्रभृति चाभवत् ।
पितॄणां चैव सर्वेषां प्रजानामिव चन्द्रमाः ॥१-२४७-६६ (१०७५४)
जन्मप्रभृति कृष्णश्च चक्रे तस्य क्रियाः शुभाः ।
स चापि ववृधे बालः शुक्लपक्षे यथा शशी ॥१-२४७-६७ (१०७५५)
चतुष्पादं दशविधं धनुर्वेदमरिन्दमः ।
अर्जुनाद्वेद वेदज्ञः सकलं दिव्यमानुषम् ॥१-२४७-६८ (१०७५६)
विज्ञानेष्वपि चास्त्राणां सौष्ठवे च महाबलः ।
क्रियास्वपि च सर्वासु विशेषानभ्यसिक्षयत् ॥१-२४७-६९ (१०७५७)
आगमे च प्रयोगे च चक्रे तुल्यमिवात्मना ।
तुतोष पुत्रं सौभद्रं प्रेक्षणाणो धनञ्जयः ॥१-२४७-७० (१०७५८)
सर्वसंहननोपेतं सर्वलक्षणलक्षितम् ।
दुर्धर्षमृषभस्कन्धं व्यात्ताननमिवोरगम् ॥१-२४७-७१ (१०७५९)
सिंहदर्पं महेष्वासं मत्तमातङ्गविक्रमम् ।
मेघदुन्दुभिनिर्घोषं पूर्णचन्द्रनिभाननम् ॥१-२४७-७२ (१०७६०)
कृष्णस्य सदृशं शौर्ये वीर्ये रूपे तथाऽऽकृतौ ।
ददर्श पुत्रं बीभत्सुर्मघवानिव तं यथा ॥१-२४७-७३ (१०७६१)
पाञ्चाल्यपि तु पञ्चभ्यः पतिभ्यः शुभलक्षणा ।
लेभे पञ्च सुतान्वीराञ्श्रेष्ठान्पञ्चाचलानिव ॥१-२४७-७४ (१०७६२)

युधिष्ठिरात्प्रतिविन्ध्यं सुतसोमं वृकोदरात् ।
अर्जुनाच्छ्रुतकर्माणं शतानीकं च नाकुलिम् ॥ १-२४७-७५ (१०७६३)
सहदेवाच्छ्रुतसेनमेतान्पञ्च महारथान् ।
पाञ्चाली सुषुवे वीरानादित्यानदितिर्यथा ॥ १-२४७-७६ (१०७६४)
शास्त्रतः प्रतिविन्ध्यन्तमूचुर्विप्रायुधिष्ठिरम् ।
परप्रहरणज्ञाने प्रतिविन्ध्यो भत्वयम् ॥ १-२४७-७७ (१०७६५)
सुतेसोमसहस्रे तु सोमार्कसमतेजसम् ।
सुतसोमं महेष्वासं सुषुवे भीमसेनतः ॥ १-२४७-७८ (१०७६६)
श्रुतं कर्म महत्कृत्वा निवृत्तेन किरीटिना ।
जातः पुत्रस्तथेत्येवं श्रुतकर्मा ततोऽभवत् ॥ १-२४७-७९ (१०७६७)
शतानीकस्य राजर्षेः कौरव्यस्य महात्मनः ।
चक्रे पुत्रं सनामानं नकुलः कीर्तिवर्धनम् ॥ १-२४७-८० (१०७६८)
ततस्त्वजीजनत्कृष्णा नक्षत्रे वह्निदैवते ।
सहदेवात्सुतं तस्माच्छ्रुतसेनेति तं विदुः ॥ १-२४७-८१ (१०७६९)
एकवर्षान्तरास्त्वेते द्रौपदेया यशस्विनः ।
अन्वजायन्त राजेन्द्र परस्परहितैषिणः ॥ १-२४७-८२ (१०७७०)
जातकर्माण्यानुपूर्व्याच्चूडोपनयनानि च ।
चकार विधिवद्धौम्यस्तेषां भरतसत्तम ॥ १-२४७-८३ (१०७७१)
कृत्वा च वेदाध्ययनं ततः सुचरितव्रताः ।
जगृहुः सर्वमिष्वस्त्रमर्जुनाद्दिव्यमानुषम् ॥ १-२४७-८४ (१०७७२)
दिव्यगर्भोपमैः पुत्रैर्व्यूढोरस्कैर्महारथैः ।
अन्विता राजशार्दूल पाण्डवा मुदमाप्नुवन् ॥ ॥ १-२४७-८५ (१०७७३)

इति श्रीमन्महाभारते आदिपर्वणि हरणाहरणपर्वणि
सप्तचत्वारिंशदधिकद्विशततमोऽध्यायः ॥ २४७ ॥ ॥ समाप्तं च
हरणाहरणपर्व ॥

Mahabharata - Adi Parva - Chapter Footnotes

१-२४७-४३ अरोगाणां स्वलङ्कृतां इति ख । पाठः ॥
१-२४७-७४ धरा पञ्च गणानिव । इति ङ पाठः ॥
१-२४७-७७ परप्रहरणज्ञाने शत्रुकृतप्रहारवेदनायां विध्य इव
निर्विज्ञान इति प्रतिविन्ध्यः ॥
सप्तचत्वारिंशदधिकद्विशततमोऽध्यायः ॥
२४७ ॥

---

अध्यय२४८
॥ श्रीः ॥

१.२४८. अध्यायः २४८

(अथ खाण्डवदाहपर्व ॥१८ ॥)
Mahabharata - Adi Parva - Chapter Topics
युधिष्ठिरस्य राज्यपरिपालनप्रकारवर्णनम् ॥१ ॥
तत्रैव निवसता श्रीकृष्णेन सहार्जुनस्य जलक्रीडार्थं यमुनां प्रति गमनम् ॥२ ॥
सस्त्रीकयोस्तयोर्जलक्रीडावर्णनम् ॥३ ॥
ब्राह्मणरूपस्याग्नेस्तत्रागमनम् ॥४ ॥

Mahabharata - Adi Parva - Chapter Text

१-२४८-० (१०७७४)
वैशंपायन उवाच। १-२४८-०क्ष् (१३१४)
इन्द्रप्रस्थे वसन्तस्ते जघ्नुरन्यान्नराधिपान् ।
शासनाद्धृतराष्ट्रस्य राज्ञः शान्तनवस्य च ॥१-२४८-१ (१०७७५)
आश्रित्य धर्मराजानं सर्वलोकोऽवसत्सुखम् ।
पुण्यलक्षणकर्माणं स्वदेहमिव देहिनः ॥१-२४८-२ (१०७७६)
स समं धर्मकामार्थान्सिषेवे भरतर्षभ ।
त्रीनिवात्मसमान्बन्धून्नीतिमानिव मानयन् ॥१-२४८-३ (१०७७७)
तेषां समविभक्तानां क्षितौ देहवतामिव ।
बभौ धर्मार्थकामानां चतुर्थ इव पार्थिवः ॥१-२४८-४ (१०७७८)
अध्येतारं परं वेदान्प्रयोक्तारं महाध्वरे ।
रक्षितारं शुभाँल्लोकाँल्लोभिरे तं जनाधिपम् ॥१-२४८-५ (१०७७९)
अधिष्ठानवती लक्ष्मीः परायणवती मतिः ।
वर्धमानोऽखिलो धर्मस्तेनासीत्पृथिवीक्षिताम् ॥१-२४८-६ (१०७८०)
भ्रातृभिः सहितौ राजा चतुर्भिरधिकं बभौ ।
प्रयुज्यमानैर्विततो वेदैरिव महाध्वरः ॥१-२४८-७ (१०७८१)
तं तु धौम्यादयो विप्राः परिवार्योपतस्थिरे ।
बृहस्पतिसमा मुख्याः प्रजापतिमिवामराः ॥१-२४८-८ (१०७८२)
धर्मराजे ह्यतिप्रीत्या पूर्णचन्द्र इवामले ।
प्रजानां रेमिरे तुल्यं नेत्राणि हृदयानि च ॥१-२४८-९ (१०७८३)
न तु केवलदैवेन प्रजा भावेन रेमिरे ।
यद्बभूव मनःकान्तं कर्मणा स चकार तत् ॥१-२४८-१० (१०७८४)
न ह्ययुक्तं न चासत्यं नासह्यं न च वाऽप्रियम् ।
भाषितं चारुभाषस्य जज्ञे पार्थस्य धीमतः ॥१-२४८-११ (१०७८५)

स हि सर्वस्य लोकस्य हितमात्मन एव च ।
चिकीर्षन्सुमहातेजा रेमे भरतसत्तम ॥ १-२४८-१२ (१०७८६)
तथा तु मुदिताः सर्वे पाण्डवा विगतज्वराः ।
अवसन्पृथिवीपालाँस्तापयन्तः स्वतेजसा ॥ १-२४८-१३ (१०७८७)
ततः कतिपयाहस्य बीभत्सुः कृष्णमब्रवीत् ।
उष्णानि कृष्ण वर्तन्ते गच्छावो यमुनां प्रति ॥ १-२४८-१४ (१०७८८)
सुहृज्जनवृतौ तत्र विहृत्य मधुसूदन ।
सायाह्ने पुनरेष्यावो रोचतां ते जनार्दन ॥ १-२४८-१५ (१०७८९)
वासुदेव उवाच। १-२४८-१६क्ष् (१३१५)
कुन्तीमातर्ममाप्येतद्रोचते यद्वयं जले ।
सुहृज्जनवृताः पार्थ विहरेम यथासुखम् ॥ १-२४८-१६ (१०७९०)
वैशंपायन उवाच। १-२४८-१७क्ष् (१३१६)
आमन्त्र्य तौ धर्मराजमनुज्ञाप्य च भारत ।
जग्मतुः पार्थगोविन्दौ सुहृज्जनवृतौ ततः ॥ १-२४८-१७ (१०७९१)
गविहरन्खाण्डवप्रस्थे काननेषु च माधवः ।
पुष्पितोपवनां दिव्यां ददर्श यमुनां नदीम् ॥ १-२४८-१८ (१०७९२)
तस्यास्तीरे वनं दिव्यं सर्वर्तुसुमनोहरम् ।
आलयं सर्वभूतानां खाण्डवं खड्गचर्मभृत् ॥ १-२४८-१९ (१०७९३)
ददर्श कृत्स्नं तं देशं सहितः सव्यसाचिना ।
ऋक्षगोमायुशार्दूलवृककृष्णमृगान्वितम् ॥ १-२४८-२० (१०७९४)
शाखामृगगणैर्जुष्टं गजद्वीपिनिषेवितम् ।
शकबर्हिणदात्यूहहंससारसनादितम् ॥ १-२४८-२१ (१०७९५)
नानामृगसहस्रैश्च पक्षिभिश्च समावृतम् ।
मानार्हं तच्च सर्वेषां देवदानवरक्षसाम् ॥ १-२४८-२२ (१०७९६)
आलयं पन्नगेन्द्रस्य तक्षकस्य महात्मनः ।
वेणुशाल्मलिबिल्वातिमुक्तजंब्वाम्रचम्पकैः ॥ १-२४८-२३ (१०७९७)
अङ्कोलपनसाश्वत्थतालजम्बीरवञ्जुलैः ।
एकपद्मकतालैश्च शतशश्चैव रौहिणैः ॥ १-२४८-२४ (१०७९८)
नानावृक्षैः समायुक्तं नानागुल्मसमावृतम् ।
वेत्रकीचकसंयुक्तमाशीविषनिषेवितम् ॥ १-२४८-२५ (१०७९९)
विगतार्कं महाभोगविततद्रुमसङ्कटम् ।
व्यालदंष्ट्रिगणाकीर्णं वर्जितं सर्वमानुषैः ॥ १-२४८-२६ (१०८००)
रक्षसां भुजगेन्द्राणां पक्षिणां च महालयम् ।
खाण्डवं सुमहाप्राज्ञः सर्वलोकविभागवित् ॥ १-२४८-२७ (१०८०१)
दृष्टवान्सर्वलोकेश अर्जुनेन समन्वितः ।
पीताम्बरधरो देवस्तद्वनं बहुधा चरन् ॥ १-२४८-२८ (१०८०२)

सद्रुमस्य सयक्षस्य सभूतगणपक्षिणः ।
खाण्डवस्य विनाशं तं ददर्श मधुसूदनः ॥' १-२४८-२९ (१०८०३)
विहारदेशं संप्राप्य नानाद्रुममनुत्तमम् ।
गृहैरुच्चावचैर्युक्तं पुरन्दरपुरोपमम् ॥१-२४८-३० (१०८०४)
भक्ष्यैर्भोज्यैश्च पेयैश्च रसवद्भिर्महाधनैः ।
माल्यैश्च विविधैर्गन्धैस्तथा वार्ष्णेयपाण्डवौ ॥१-२४८-३१ (१०८०५)
तदा विविशतुः पूर्णं रत्नैरुच्चावचैः शुभैः ।
यथोपजोषं सर्वश्च जनश्चिक्रीड भारत ॥१-२४८-३२ (१०८०६)
स्त्रियश्च विपुलश्रोण्यश्चारुपीनपयोधराः ।
मदस्खलितगामिन्यश्चिक्रीडुर्वामलोचनाः ॥१-२४८-३३ (१०८०७)
वने काश्चिज्जले काश्चित्काश्चिद्वेश्मसु चाङ्गनाः ।
यथादेशं यथाप्रीति चिक्रीडुः पार्थकृष्णयोः ॥१-२४८-३४ (१०८०८)
वासुदेवप्रिया नित्यं सत्यभामा च भामिनी ।
द्रौपदी च सुभद्रा च वासांस्याभरणानि च ।
प्रायच्छन्त महाराज स्त्रीणां ताः स्म मदोत्कटाः ॥ १-२४८-३५ (१०८०९)
काश्चित्प्रहृष्टा ननृतुश्चुक्रुशुश्च तथा पराः ।
जहसुश्च परा नार्यः पपुश्चान्या वरासवम् ॥१-२४८-३६ (१०८१०)
रुरुधुश्चापरास्तत्र प्रजघ्नुश्च परस्परम् ।
मन्त्रयामासुरन्याश्च रहस्यानि परस्परम् ॥१-२४८-३७ (१०८११)
वेणुवीणामृदङ्गानां मनोज्ञानां च सर्वशः ।
शब्देन पूर्यते हर्म्यं तद्वनं सुमहर्द्धिमत् ॥१-२४८-३८ (१०८१२)
तस्मिंस्तदा वर्तमानो कुरुदाशार्हनन्दनौ ।
समीपं जग्मतुः कंचिदुद्देशं सुमनोहरम् ॥१-२४८-३९ (१०८१३)
तत्र गत्वा महात्मानौ कृष्णौ परपुरञ्जयौ ।
महार्हासनयो राजंस्ततस्तौ सन्निषीदतुः ॥१-२४८-४० (१०८१४)
तत्र पूर्वव्यतीतानि विक्रान्तानीतराणि च ।
बहूनि कथयित्वा तौ रेमाते पार्थमाधवौ ॥१-२४८-४१ (१०८१५)
तत्रोपविष्टौ मुदितौ नाकपृष्ठेऽश्विनाविव ।
अभ्यागच्छत्तदा विप्रो वासुदेवधनञ्जयौ ॥१-२४८-४२ (१०८१६)
बृहच्छालप्रतीकाशः प्रतप्तकनकप्रभः ।
हरिपिङ्गोज्ज्वलश्मश्रुः प्रमाणायामतः समः ॥१-२४८-४३ (१०८१७)
तरुणादित्यसङ्काशश्चीरवासा जटाधरः ।
पद्मपत्राननः पिङ्गस्तेजसा प्रज्वलन्निव ॥१-२४८-४४ (१०८१८)
जगाम तौ कृष्णपार्थौ दिधक्षुः खाण्डवं वनम् ।
उपसृष्टं तु तं कृष्णो भ्राजमानं द्विजोत्तमम् ।
अर्जनो वासुदेवश्च तूर्णमुत्पत्य तस्थतुः ॥ ॥ १-२४८-४५ (१०८१९)

इति श्रीमन्महाभारते आदिपर्वणि खाण्डवदाहपर्वणि
अष्टचत्वारिंशदधिकद्विशततमोऽध्यायः ॥ २४८ ॥
Mahabharata - Adi Parva - Chapter Footnotes

१-२४८-१४ उष्णानि निधाधदिनानि ॥
१-२४८-१६ कुन्ती माता यस्येति नेकुन्तामातर्हेऽर्जुन ॥
१-२४८-३० गृहैः मध्येयमुनं निर्मितैः क्रीडावाप्यादियुक्तैः ॥
१-२४८-३९ उद्देशं प्रदेशम् ॥
१-२४८-४३ हरिपिङ्गः नीलपीताखिलाङ्गः । ज्वलश्मश्रुः
ज्वालावत्पीतश्मश्रुः ॥
अष्टचत्वारिंशदधिकद्विशततमोऽध्यायः ॥
२४८ ॥

---

अध्यय२४९
॥ श्रीः ॥
१.२४९. अध्यायः २४९

Mahabharata - Adi Parva - Chapter Topics
खाण्डववनदहनार्थं कृष्णार्जुनौप्रति अग्नेः प्रार्थना ॥ १ ॥
जनमेजयस्य
अग्निकृतखाण्डवदाहप्रार्थनाकारणप्रश्नानुरोधेनवैशंपायनेन
श्वेतकिराजोपाख्यानकथनम् ॥ २ ॥
बहूनि वर्षाण्यविच्छिन्नं यजतः श्वेतकेर्यागेन श्रान्तैर्ऋत्विग्भिः
पुनर्याजना नङ्गीकरणम् ॥ ३ ॥
आराधितस्य शङ्करस्याज्ञया द्वादशवर्षपर्यन्तं
संतताज्यधारयाऽग्नेस्तोषणम् ॥ ४ ॥
पुनराराधितस्य शङ्करस्याज्ञया दुर्वाससः साहाय्येन यजतो राज्ञो
मखे बहुहविर्भोजनेनाग्नेर्ग्लानिः ॥ ५ ॥
तत्परिहारार्थं प्रार्थितेन ब्रह्मणा खाण्डवभक्षणविधानम् ॥ ६ ॥
खाण्डवं दग्धुं सप्तकृत्वो यतितवतोऽप्यग्नेः
तत्रत्यैर्गजादिसत्वैर्जलसेकेन निर्वापणम् ॥ ७ ॥

Mahabharata - Adi Parva - Chapter Text

१-२४९-० (१०८२०)
वैशंपायन उवाच। १-२४९-०क्ष् (१३१७)

सोऽब्रवीदर्जुनं चैव वासुदेवं च सात्वतम् ।
लोकप्रवीरौ तिष्ठन्तौ काण्डवस्य समीपतः ॥ १-२४९-१ (१०८२१)
ब्राह्मणो बहुभोक्ताऽस्मि बुञ्जेऽपरिमितं सदा ।
भिक्षे वार्ष्णेयपार्थौ वामेकां तृप्तिं प्रयच्छतम् ॥ १-२४९-२ (१०८२२)
एवमुक्तो तमब्रूतां ततस्तौ कृष्णपाण्डवौ ।
केनान्नेन भवांस्तृप्येत्तस्यान्नस्य यतावहे ॥ १-२४९-३ (१०८२३)
एवमुक्तः स भगवानब्रवीत्तावुभौ ततः ।
भाषमाणौ तदा वीरौ किमन्नं क्रियतामिति ॥ १-२४९-४ (१०८२४)
ब्राह्मण उवाच। १-२४९-५क्ष् (१३१८)
नाहमन्नं बुभुक्षे वै पावकं मां निबोधतम् ।
यदन्नमनुरूपं मे तद्युवां संप्रयच्छतम् ॥ १-२४९-५ (१०८२५)
इदमिन्द्रः सदा दावं खाण्डवं परिरक्षति ।
न च शक्नोम्यहं दग्धुं रक्ष्यमाणं महात्मना ॥ १-२४९-६ (१०८२६)
वसत्यत्र सखा तस्य तक्षकः पन्नगः सदा ।
सगणस्तत्कृते दावं परिरक्षति वज्रभृत् ॥ १-२४९-७ (१०८२७)
तत्र भूतान्यनेकानि रक्ष्यन्तेऽस्य प्रसङ्गतः ।
तं दिधक्षुर्न शक्नोमि दग्धुं शक्रस्य तेजसा ॥ १-२४९-८ (१०८२८)
स मां प्रज्वलितं दृष्ट्वा मेघाम्भोभिः प्रवर्षति ।
ततो दग्धुं न शक्नोमि दिधक्षुर्दावमीप्सितम् ॥ १-२४९-९ (१०८२९)
स युवाभ्यां सहायाभ्यामस्त्रविद्भ्यां समागतः ।
दहेयं खाण्डवं दावमेतदन्नं वृतं मया ॥ १-२४९-१० (१०८३०)
युवां ह्युदकधारास्ता भूतानि च समन्ततः ।
उत्तमास्त्रविदौ सम्यक्सर्वतो वारयिष्यथः ॥ १-२४९-११ (१०८३१)
जनमेजय उवाच। १-२४९-१२क्ष् (१३१९)
किमर्थं भगवानग्निः खाण्डवं दग्धुमिच्छति ।
रक्ष्यमाणं महेन्द्रेण नानासत्वसमायुतम् ॥ १-२४९-१२ (१०८३२)
न ह्येतत्कारणं ब्रह्मन्नल्पं संप्रतिभाति मे ।
यद्ददाह सुसंक्रुद्धः खाण्डवं हव्यवाहनः ॥ १-२४९-१३ (१०८३३)
एतद्विस्तरशो ब्रह्मन्श्रोतुमिच्छामि तत्त्वतः ।
खाण्डवस्य पुरा दाहो यथा समभवन्मुने ॥ १-२४९-१४ (१०८३४)
वैशंपायन उवाच। १-२४९-१५क्ष् (१३२०)
शृणु मे ब्रुवतो राजन्सर्वमेतद्यथातथम् ।
यन्निमित्तं ददाहाग्निः खाण्डवं पृथिवीपते ॥ १-२४९-१५ (१०८३५)
हन्त ते कथयिष्यामि पौराणीमृषिसंस्तुताम् ।
कथामिमां नरश्रेष्ठ खाण्डवस्य विनाशिनीम् ॥ १-२४९-१६ (१०८३६)
पौराणः श्रूयते राजन्राजा हरिहयोपमः ।

श्वेतकिर्नाम विख्यातो बलविक्रमसंयुतः ॥१-२४९-१७ (१०८३७)
यज्वा दानपतिर्धीमान्यथा नान्योऽस्ति कश्चन ।
ग्जग्राह दीक्षां स नृपः तदा द्वादशवार्षिकीम् ॥१-२४९-१८ (१०८३८)
तस्य सत्रे सदा तस्मिन्समागच्छन्महर्षयः ।
वेदवेदाङ्गविद्वांसो ब्राह्मणाश्च सहस्रशः ॥' १-२४९-१९ (१०८३९)
ईजे च स महायज्ञैः क्रतुभिश्चाप्तदक्षिणैः ॥ १-२४९-२० (१०८४०)
तस्य नान्याऽभवद्बुद्धिर्दिवसे दिवसे नृप ।
सत्रे क्रियासमारम्भे दानेषु विविधेषु च ॥१-२४९-२१ (१०८४१)
ऋत्विग्भिः सहितो धीमानेवमीजे स भूमिपः ।
ततस्तु ऋत्विजश्चास्य धूमव्याकुललोचनाः ॥१-२४९-२२ (१०८४२)
कालेन महता खिन्नास्तत्यजुस्ते नराधिपम् ।
ततः प्रसादयामास ऋत्विजस्तान्महीपतिः ॥१-२४९-२३ (१०८४३)
चक्षुर्विकलतां प्राप्ता न प्रपेदुश्च ते क्रतुम् ।
ततस्तेषामनुमते तद्विप्रैस्तु नराधिपः ॥१-२४९-२४ (१०८४४)
सत्रं समापयामास ऋत्विग्भिरपरैः सह ।
तस्यैवंवर्तमानस्य कदाचित्कालपर्यये ॥१-२४९-२५ (१०८४५)
सत्रमहार्तुकामस्य संवत्सरशतं किल ।
ऋत्विजो नाभ्यपद्यन्त समाहर्तुं महात्मनः ॥१-२४९-२६ (१०८४६)
स च राजाऽकरोद्यत्नं महान्तं ससुहृज्जनः ।
प्रणिपातेन सान्त्वेन दानेन च महायशाः ॥१-२४९-२७ (१०८४७)
ऋत्विजोऽनुनयामास भूयो भूयस्त्वतन्द्रितः ।
ते चास्य तमभिप्रायं न चक्रुरमितौजसः ॥१-२४९-२८ (१०८४८)
स चाश्रमस्थान्राजर्षिस्तानुवाच रुषान्वितः ।
यद्यहं पतितो विप्राः शुश्रूषायां न च स्थितः ॥१-२४९-२९ (१०८४९)
आशु त्याज्योऽस्मि युष्माभिर्ब्राह्मणैश्च जुगुप्सितः ।
तन्नार्हथ क्रतुश्रद्धां व्याघातयितुमद्य ताम् ॥१-२४९-३० (१०८५०)
अस्थाने वा परित्यागं कर्तुं मे द्विजसत्तमाः ।
प्रपन्न एव वो विप्राः प्रसादं कर्तुमर्हथ ॥१-२४९-३१ (१०८५१)
सान्त्वदानादिभिर्वाक्यैस्तत्त्वतः कार्यवत्तया ।
प्रसादयित्वा वक्ष्यामि यन्नः कार्यं द्विजोत्तमाः ॥१-२४९-३२ (१०८५२)
अथवाऽहं परित्यक्तो भवद्भिर्द्वेषकारणात् ।
ऋत्विजोऽन्यान्गमिष्यामि याजनार्थं द्विजोत्तमाः ॥१-२४९-३३ (१०८५३)
एतावदुक्त्वा वचनं विरराम स पार्थिवः ।
यदा न शेकू राजानं याजनार्थं परन्तप ॥१-२४९-३४ (१०८५४)
ततस्ते याजकाः क्रुद्धास्तमूचुर्नृपसत्तमम् ।
तव कर्माण्यजस्रं वै वर्तन्ते पार्थिवोत्तम ॥१-२४९-३५ (१०८५५)

ततो वयं परिश्रान्ताः सततं कर्मवाहिनः ।
श्रमादस्मात्परिश्रान्तान्स त्वं नस्त्यक्तुमर्हसि ॥ १-२४९-३६ (१०८५६)
बुद्धिमोहं समास्थाय त्वरासंभावितोऽनघ ।
गच्छ रुद्रसकाशं त्वं सहि त्वां याजयिष्यति ॥ १-२४९-३७ (१०८५७)
साधिक्षेपं वचः श्रुत्वा संक्रुद्धः श्वेतकिर्नृपः ।
कैलासं पर्वतं गत्वा तप उग्रं समास्थितः ॥ १-२४९-३८ (१०८५८)
आराधयन्महादेवं नियतः संशितव्रतः ।
उपवासपरो राजन्दीर्घकालमतिष्ठत ॥ १-२४९-३९ (१०८५९)
कदाचिद्द्वादशे काले कदाचिदपि षोडशे ।
आहारमकरोद्राजा मूलानि च फलानि च ॥ १-२४९-४० (१०८६०)
ऊर्ध्वबाहुस्त्वनिमिषस्तिष्ठन्स्थाणुरिवाचलः ।
षण्मासानभवद्राजा श्वेतकिः सुसमाहितः ॥ १-२४९-४१ (१०८६१)
तं तथा नृपशार्दूलं तप्यमानं महत्तपः ।
शङ्करः परमप्रीत्या दर्शयामास भारत ॥ १-२४९-४२ (१०८६२)
उवाच चैनं भगवान्स्निग्धगम्भीरया गिरा ।
प्रीतोऽस्मि नरशार्दूल तपसा ते परन्तप ॥ १-२४९-४३ (१०८६३)
वरं वृणीष्व भद्रं ते यं त्वमिच्छसि पार्थिव ।
एतच्छ्रुत्वा तु वचनं रुद्रस्यामिततेजसः ॥ १-२४९-४४ (१०८६४)
प्रणिपत्य महात्मानं राजर्षिः प्रत्यभाषत ।
यदि मे भगवान्प्रीतः सर्वलोकनमस्कृतः ॥ १-२४९-४५ (१०८६५)
स्वयं मां देवदेवेश याजयस्व सुरेश्वर ।
एतच्छ्रुत्वा तु वचनं राज्ञा तेन प्रभाषितम् ॥ १-२४९-४६ (१०८६६)
उवाच भगवान्प्रीतः स्मितपूर्वमिदं वचः ।
नास्माकमेतद्विषये वर्तते याजनं प्रति ॥ १-२४९-४७ (१०८६७)
त्वया च सुमहत्तप्तं तपो राजन्वरार्थिना ।
याजयिष्यामि राजंस्त्वां समयेन परन्तप ॥ १-२४९-४८ (१०८६८)
समा द्वादश राजेन्द्र ब्रह्मचारी समाहितः ।
सततं त्वाज्यधाराभिर्यदि तर्पयसेऽनलम् ॥ १-२४९-४९ (१०८६९)
कामं प्रार्थयसे यं त्वं मत्तः प्राप्स्यसि तं नृप ।
एवमुक्तश्च रुद्रेण श्वेतकिर्मनुजाधिपः ॥ १-२४९-५० (१०८७०)
तथा चकार तत्सर्वं यथोक्तं शूलपाणिना ।
पूर्णे तु द्वादशे वर्षे पुनरायान्महेश्वरः ॥ १-२४९-५१ (१०८७१)
दृष्टैव च स राजानं शङ्करो लोकभावनः ।
उवाच परमप्रीतः श्वेतकिं नृपसत्तमम् ॥ १-२४९-५२ (१०८७२)
तोषितोऽहं नृपश्रेष्ठ त्वयेहाद्येन कर्मणा ॥
याजनं ब्राह्मणानां तु विधिदृष्टं परन्तप ॥ १-२४९-५३ (१०८७३)

अतोऽहं त्वां स्वयं नाद्य याजयामि परन्तप ।
ममांशस्तु क्षितितले महाभागो द्विजोत्तमः ॥ १-२४९-५४ (१०८७४)
दुर्वासा इति विख्यातः स हि त्वां याजयिष्यति ।
मन्नियोगान्महातेजाः संभाराः संभ्रियन्तु ते ॥ १-२४९-५५ (१०८७५)
एतच्छ्रुत्वा तु वचनं रुद्रेण समुदाहृतम् ।
स्वपुरं पुनरागम्य संभारान्पुनरार्जयत् ॥ १-२४९-५६ (१०८७६)
ततः संभृतसंभारो भूयो रुद्रमुपागमत् ।
'उवाच च महिपालः प्राञ्जलिः प्रणतः स्थितः।'
संभृता मम संभाराः सर्वोपकरणानि च ॥ १-२४९-५७ (१०८७७)
त्वत्प्रसादानमहादेव श्वो मे दीक्षा भवेदिति ।
एतच्छ्रुत्वा तु वचनं तस्य राज्ञो महात्मनः ॥ १-२४९-५८ (१०८७८)
दुर्वाससं समाहूय रुद्रो वचनमब्रवीत् ।
एष राजा महाभागः श्वेतकिर्द्विजसत्तम ॥ १-२४९-५९ (१०८७९)
एनं याजय विप्रेन्द्र मन्नियोगेन भूमिपम् ।
बाढमित्येव वचनं रुद्रं त्वृषिरुवाच ह ॥ १-२४९-६० (१०८८०)
ततः सत्रं समभवत्तस्य राज्ञो महात्मनः ।
यथाविधि यथाकालं यथोक्तं बहुदक्षिणम् ॥ १-२४९-६१ (१०८८१)
तस्मिन्परिसमाप्ते तु राज्ञः सत्रे महात्मनः ।
दुर्वाससाऽभ्यनुज्ञाता विप्रतस्थुः स्म याजकाः ॥ १-२४९-६२ (१०८८२)
ये तत्र दीक्षिताः सर्वे सदस्याश्च महौजसः ।
सोऽपि राजन्महाभागः स्वपुरं प्राविशत्तदा ॥ १-२४९-६३ (१०८८३)
पूज्यमानो महाभागैर्ब्राह्मणैर्वेदपारगैः ।
बन्दिभिः स्तूयमानश्च नागरैश्चाभिनन्दितः ॥ १-२४९-६४ (१०८८४)
एवंवृत्तः स राजर्षिः श्वेतकिर्नृपसत्तमः ।
कालेन महता चापि ययौ स्वर्गमभिष्टुतः ॥ १-२४९-६५ (१०८८५)
ऋत्विग्भिः सहितः सर्वैः सदस्यैश्च समन्वितः ।
तस्य सत्रे पपौ वह्निर्हविर्द्वादशवत्सरान् ॥ १-२४९-६६ (१०८८६)
सततं चाज्यधाराभिरैकात्म्ये तत्र कर्मणि ।
हविषा च ततो वह्निः परां तृप्तिमगच्छत ॥ १-२४९-६७ (१०८८७)
न चैच्छत्पुनरादातुं हविरन्यस्य कस्यचित् ।
पाण्डुवर्णो विवर्णश्च न यतावत्प्रकाशते ॥ १-२४९-६८ (१०८८८)
ततो भघवतो वह्नेर्विकारः समजायत ।
तेजसा विप्रहीणश्च ग्लानिश्चैनं समाविशत् ॥ १-२४९-६९ (१०८८९)
स लक्षयित्वा चात्मानं तेजोहीनं हुताशनः ।
जगाम सदनं पुण्यं ब्रह्मणो लोकपूजितम् ॥ १-२४९-७० (१०८९०)
तत्र ब्रह्माणमासीनमिदं वचनमब्रवीत् ।

भगवन्परमा प्रीतिः कृता श्वेतकिना मम ॥ १-२४९-७१ (१०८९१)
अरुचिश्चाभवत्तीव्रा तां न शक्नोम्यपोहितुम् ।
तेजसा विप्रहीणोऽस्मि बलेन च जगत्पते ॥ १-२४९-७२ (१०८९२)
इच्छेयं त्वत्प्रसादेन स्वात्मनः प्रकृतिं स्थिराम् ।
एतच्छ्रुत्वा हुतवहाद्भगवान्सर्वलोककृत् ॥ १-२४९-७३ (१०८९३)
हव्यवाहमिदं वाक्यमुवाच प्रहसन्निव ।
त्वया द्वादश वर्षाणि वसोर्धाराहुतं हविः ॥ १-२४९-७४ (१०८९४)
उपयुक्तं महाभाग तेन त्वां ग्लानिराविशत् ।
तेजसा विप्रहीणत्वात्सहसा हव्यवाहन ॥ १-२४९-७५ (१०८९५)
मागमस्त्वं व्यथां वह्ने प्रकृतिस्थो भविष्यसि ।
अरुचिं नाशयिष्येऽहं समयं प्रतिपद्य ते ॥ १-२४९-७६ (१०८९६)
पुरा देवनियोगेन यत्त्वया भस्मसात्कृतम् ।
आलयं देवशत्रूणां सुघोरं खाण्डवं वनम् ॥ १-२४९-७७ (१०८९७)
तत्र सर्वाणि सत्वानि निवसन्ति विभावसो ।
तेषां त्वं मेदसा तृप्तः प्रकृतिस्थो भविष्यसि ॥ १-२४९-७८ (१०८९८)
गच्छ शीघ्रं प्रदग्धुं त्वं ततो मोक्ष्यसि किल्विषात् ।
एतच्छ्रुत्वा तु वचनं परमेष्ठिमुखाच्च्युतम् ॥ १-२४९-७९ (१०८९९)
उत्तमं जवमास्थाय प्रदुद्राव हुताशनः ।
आगम्य खाण्डवं दावमुत्तमं वीर्यमास्थितः ।
सहसा प्राज्वलच्चाग्निः क्रुद्धो वायुसमीरितः ॥ १-२४९-८० (१०९००)
प्रदीप्तं खाण्डवं दृष्ट्वा ये स्युस्तत्र निवासिनः ।
परमं यत्नमातिष्ठन्पावकस्य प्रशान्तये ॥ १-२४९-८१ (१०९०१)
करैस्तु करिणः शीघ्रं जलमादाय सत्वराः ।
सिषिचुः पावकं क्रुद्धाः शतशोऽथ सहस्रशः ॥ १-२४९-८२ (१०९०२)
बहुशीर्षास्ततो नागाः शिरोभिर्जलसन्ततिम् ।
मुमुचुः पावकाभ्याशे सत्वराः क्रोधमूर्च्छिताः ॥ १-२४९-८३ (१०९०३)
तथैवान्यानि सत्वानि नानाप्रहरणोद्यमैः ।
विलयं पावकं शीघ्रमनयन्भरतर्षभ ॥ १-२४९-८४ (१०९०४)
अनेन तु प्रकारेण भूयोभूयश्च प्रज्वलन् ।
सप्तकृत्वः प्रशमितः खाण्डवे हव्यवाहनः ॥ ॥ १-२४९-८५ (१०९०५)

इति श्रीमन्महाभारते आदिपर्वणि खाण्डवदाहपर्वणि
ऊनपञ्चाशदधिकद्विशततमोऽध्यायः ॥ २४९ ॥
Mahabharata - Adi Parva - Chapter Footnotes

१-२४९-२० इक्ष्वाकूणामधिरथो यज्वा विपुलदक्षिणः इति ङ ।पाठः ॥

१-२४९-३७ त्वरासंभावितः त्वरायुक्तः ॥
१-२४९-७३ प्रकृतिं स्वभावम् ॥
१-२४९-७४ वसोर्धारा पात्रविशेषः । येन हूयमानं घृतद्रव्यं संततधारारूपेण क्षरति। तेन हुतं हविरर्थाद्धृतमेव वसोर्धारां जुहोतीत्युपक्रम्य घृतस्य वा एवमेषा धारेति वाक्यशेषात् ॥
१-२४९-७५ उपयुक्तं भुक्तम् ॥
ऊनपञ्चाशदधिकद्विशततमोऽध्यायः ॥
२४९ ॥

---

अध्यय२५०
॥ श्रीः ॥
१.२५०. अध्यायः २५०

Mahabharata - Adi Parva - Chapter Topics
पुनर्निवेदितविघ्नवृत्तान्तेन ब्रह्मणा आज्ञप्तस्याग्नेः कृष्णार्जुनौप्रति आगमनम् ॥ १ ॥
वैशंपायनेन जनमेजयंप्रति खाण्डवदाहकारणकथनसमापनम् ॥ २ ॥
अर्जुनेन दिव्यानां रथाश्वधनुरादीनां याचनम् ॥ ३ ॥

Mahabharata - Adi Parva - Chapter Text

१-२५०-० (१०९०६)
वैशंपायन उवाच। १-२५०-०क्ष् (१३२१)
स तु नैराश्यमापन्नः सदा ग्लानिसमन्वितः ।
पितामहमुपागच्छत्संक्रुद्धो हव्यवाहनः ॥ १-२५०-१ (१०९०७)
तच्च सर्वं यथान्यायं ब्रह्मणे संन्यवेदयत् ।
उवाच चैवनं भगवान्मुहूर्तं स विचिन्त्य तु ॥ १-२५०-२ (१०९०८)
उपायः परिदृष्टो मे यथा त्वं धक्ष्यसेऽनघ ।
कालं च कंचित्क्षमतां ततस्तद्धक्ष्यते भवान् ॥ १-२५०-३ (१०९०९)
भविष्यतः सहायौ ते नरनारायणौ तदा ।
ताभ्यां त्वं सहितो दावं धक्ष्यसे हव्यवाहन ॥ १-२५०-४ (१०९१०)
एवमस्त्विति तं वह्निर्ब्रह्माणं प्रत्यभाषत ।
संभूतौ तौ विदित्वा तु नरनारायणावृषी ॥ १-२५०-५ (१०९११)
कालस्य महतो राजंस्तस्य वाक्यं स्वयंभुवः ।
अनुस्मृत्य जगामाथ पुनरेव पितामहम् ॥ १-२५०-६ (१०९१२)
अब्रवीच्च तदा ब्रह्मा यथा त्वं धक्ष्यसेऽनल ।
खाण्डवं दावमद्यैव मिषतोऽस्य शचीपतेः ॥ १-२५०-७ (१०९१३)

नरनारायणौ यौ तौ पूर्वदेवौ विभावसो ।
संप्राप्तौ मानुषे लोके कार्यार्थं हि दिवौकसाम् ॥ १-२५०-८ (१०९१४)
अर्जुनं वासुदेवं च यौ तौ लोकोऽभिमन्यते ।
तावेतौ सहितावेहि खाण्डवस्य समीपतः ॥ १-२५०-९ (१०९१५)
तौ त्वं याचस्व साहाय्ये दाहार्थं खाण्डवस्य च ।
ततो धक्ष्यसि तं दावं रक्षितं त्रिदशैरपि ॥ १-२५०-१० (१०९१६)
तौ तु सत्वानि सर्वाणि यत्नतो वारयिष्यतः ।
देवराजं च सहितौ तत्र मे नास्ति संशयः ॥ १-२५०-११ (१०९१७)
एतच्छ्रुत्वा तु वचनं त्वरितो हव्यवाहनः ।
कृष्णपार्थावुपागम्य यमर्थं त्वभ्यभाषत ॥ १-२५०-१२ (१०९१८)
तं ते कथितवानस्मि पूर्वमेव नृपोत्तम ।
तच्छ्रुत्वा वचनं त्वग्नेर्बीभत्सुर्जातवेदसम् ॥ १-२५०-१३ (१०९१९)
अब्रवीन्नृपशार्दूल तत्कालसदृशं वचः ।
दिधक्षुं खाण्डवं दावमकामस्य शतक्रतोः ॥ १-२५०-१४ (१०९२०)
अर्जुन उवाच। १-२५०-१५क्ष् (१३२२)
उत्तमास्त्राणि मे सन्ति दिव्यानि च बहूनि च ।
यैरहं शक्नुयां योद्धुमपि वज्रधरान्बहून् ॥ १-२५०-१५ (१०९२१)
धनुर्मे नास्ति भगवन्बाहुवीर्येण संमितम् ।
कुर्वतः समरे यत्नं वेगं यद्विषहेन्मम ॥ १-२५०-१६ (१०९२२)
शरैश्च मेऽर्थो बहुभिरक्षयैः क्षिप्रमस्यतः ।
न हि वोढुं रथः शक्तः शरान्मम यथेप्सितान् ॥ १-२५०-१७ (१०९२३)
अश्वांश्च दिव्यानिच्छेयं पाण्डुरान्वातरंहसः ।
रथं च मेघनिर्घोषं सूर्यप्रतिमतेजसम् ॥ १-२५०-१८ (१०९२४)
तथा कृष्णस्य वीर्येण नायुधं विद्यते समम् ।
येन नागान्पिशाचांश्च निहन्यान्माधवो रणे ॥ १-२५०-१९ (१०९२५)
उपायं कर्मसिद्धौ च भघवन्वक्तुमर्हसि ।
निवारयेयं येनेन्द्रं वर्षमाणं महावने ॥ १-२५०-२० (१०९२६)
पौरुषेण तु यत्कार्यं तत्कर्ताऽहं स्म पावक ।
करणानि समर्थानि भगवन्दातुमर्हसि ॥ ॥ १-२५०-२१ (१०९२७)

इति श्रीमन्महाभारते आदिपर्वणि खाण्डवदाहपर्वणि
पञ्चाशदधिकद्विशततमोऽध्यायः ॥ २५० ॥

---

अध्यय२५१
॥ श्रीः ॥
१.२५१. अध्यायः २५१

Mahabharata - Adi Parva - Chapter Topics
अग्निना वरुणात् आहृतानां रथादीनां अर्जुनाय दानम् ॥ १ ॥
अग्नेः खाण्डवदाहारम्भः ॥ २ ॥

Mahabharata - Adi Parva - Chapter Text

१-२५१-० (१०९२८)
वैशंपायन उवाच। १-२५१-०क्ष् (१३२३)
एवमुक्तः स भगवान्धूमकेतुर्हुताशनः ।
चिन्तयामास वरुणं लोकपालं दिदृक्षया ॥ १-२५१-१ (१०९२९)
आदित्यमुदके देवं निवसन्तं जलेश्वरम् ।
स च तच्चिन्तितं ज्ञात्वा दर्शयामास पावकम् ॥ १-२५१-२ (१०९३०)
तमब्रवीद्धूमकेतुः प्रतिगृह्य जलेश्वरम् ।
चतुर्थं लोकपालानां देवदेवं सनातनम् ॥ १-२५१-३ (१०९३१)
सोमेन राज्ञा यद्दत्तं धनुश्चैवेषुधी च ते ।
तत्प्रयच्छोभयं शीघ्रं रथं च कपिलक्षणम् ॥ १-२५१-४ (१०९३२)
कार्यं च सुमहत्पार्थो गाण्डीवेन करिष्यति ।
चक्रेण वासुदेवश्च तन्ममाद्य प्रदीयताम् ॥ १-२५१-५ (१०९३३)
ददानीत्येव वरुणः पावकं प्रत्यभाषत ।
तदद्भुतं महावीर्यं यशःकीर्तिविवर्धनम् ॥ १-२५१-६ (१०९३४)
सर्वशस्त्रैरनाधृष्यं सर्वशस्त्रप्रमाथि च ।
सर्वायुधमहामात्रं परसैन्यप्रधर्षणम् ॥ १-२५१-७ (१०९३५)
एकं शतसहस्रेण संमितं राष्ट्रवर्धनम् ।
चित्रमुच्चावचैर्वर्णैः शोभितं श्लक्ष्णमव्रणम् ॥ १-२५१-८ (१०९३६)
देवदानवगन्धर्वैः पूजितं शाश्वतीः समाः ।
प्रादाच्चैव धनूरत्नमक्षय्यौ च महेषुधी ॥ १-२५१-९ (१०९३७)
रथं च दिव्याश्वयुजं कपिप्रवरकेतनम् ।
उपेतं राजतैरश्वैर्गान्धर्वैर्हेममालिभिः ॥ १-२५१-१० (१०९३८)
पाण्डुराभ्रप्रतीकाशैर्मनोवायुसमैर्जवे ।
सर्वोपकरणैर्युक्तमजय्यं देवदानवैः ॥ १-२५१-११ (१०९३९)
भावुमन्तं महाघोषं सर्वरत्नमनोरमम् ।
ससर्ज यं सुतपसा भौमनो भुवनप्रभुः ॥ १-२५१-१२ (१०९४०)
प्रजापतिरनिर्देश्यं यस्य रूपं रवेरिव ।
यं स्म सोमः समारुह्य दानवानजयत्प्रभुः ॥ १-२५१-१३ (१०९४१)
नवमेघप्रतीकाशं ज्वलन्तमिव च श्रिया ।
आश्रितौ तं रथश्रेष्ठं शक्रायुधसमावुभौ ॥ १-२५१-१४ (१०९४२)

तापनीया सुरुचिरा ध्वजयष्टिरनुत्तमा ।
तस्यां तु वानरो दिव्यः सिंहशार्दूलकेतनः ॥ १-२५१-१५ (१०९४३)
ग्हनूमान्नाम तेजस्वी कामरूपी महाबलः।'
दिधक्षन्निव तत्र स्म संस्थितो मूर्ध्न्यशोभत ।
ध्वजे भूतानि तत्रासन्विविधानि महान्ति च ॥ १-२५१-१६ (१०९४४)
नादेन रिपुसैन्यानां येषां संज्ञा प्रणश्यति ।
स तं नानापताकाभिः शोभितं रथसत्तमम् ॥ १-२५१-१७ (१०९४५)
प्रदक्षिणमुपावृत्य दैवतेभ्यः प्रणम्य च ।
सन्नद्धः कवची खड्गी बद्धगोधाङ्गुलित्रकः ॥ १-२५१-१८ (१०९४६)
आरुरोह तदा पार्थो विमानं सुकृती यथा ।
तच्च दिव्यं धनुः श्रेष्ठं ब्रह्मणा निर्मितं पुरा ॥ १-२५१-१९ (१०९४७)
गाण्डीवमुपसंगृह्य बभूव मुदितोऽर्जुनः ।
हुताशनं पुरस्कृत्य ततस्तदपि वीर्यवान् ॥ १-२५१-२० (१०९४८)
जग्राह बलमास्थाय ज्यया च युयुजे धनुः ।
मौर्व्यां तु योज्यमानायां बलिना पाण्डवेन ह ॥ १-२५१-२१ (१०९४९)
येऽशृष्वन्कूजितं यत्र तेषां वै व्यथितं मनः ।
लब्ध्वा रथं धनुश्चैव तथाऽक्षय्ये महेषुधी ॥ १-२५१-२२ (१०९५०)
बभूव कल्यः कौन्तेयः प्रहृष्टः साह्यकर्मणि ।
वज्रनाभं ततश्चक्रं ददौ कृष्णाय पावकः ॥ १-२५१-२३ (१०९५१)
आग्नेयमस्त्रं दयितं स च कल्योऽभवत्तदा ।
अब्रवीत्पावकश्चैवमेतेन मधुसूदन ॥ १-२५१-२४ (१०९५२)
अमानुषानपि रणे जेष्यसि त्वमसंशयम् ।
अनेन तु मनुष्याणां देवानामपि चाहवे ॥ १-२५१-२५ (१०९५३)
रक्षःपिशाचदैत्यानां नागानां चाधिकस्तथा ।
भविष्यसि न सन्देहः प्रवरोऽपि निबर्हणे ॥ १-२५१-२६ (१०९५४)
क्षिप्तं क्षिप्तं रणे चैतत्त्वया माधव शत्रुषु ।
हत्वाऽप्रतिहतं सङ्ख्ये पाणिमेष्यति ते पुनः ॥ १-२५१-२७ (१०९५५)
वैशंपायन उवाच। १-२५१-२८क्ष् (१३२४)
वरुणश्च ददौ तस्मै गदामशनिनिःस्वनाम् ।
दैत्यान्तकरणीं घोरां नाम्ना कौमोदकीं प्रभुः ॥ १-२५१-२८ (१०९५६)
ततः पावकमब्रूतां प्रहृष्टावर्जुनाच्युतौ ।
कृतास्त्रौ शस्त्रसंपन्नौ रथिनौ ध्वजिनावपि ॥ १-२५१-२९ (१०९५७)
कल्यौ स्वो भगवन्योद्धुमपि सर्वैः सुरासुरैः ।
किं पुनर्वज्रिणैकेन पन्नगार्थे युयुत्सता ॥ १-२५१-३० (१०९५८)
अर्जुन उवाच। १-२५१-३१क्ष् (१३२५)
चक्रपाणिर्हृषीकेशो विचरन्युधि वीर्यवान् ।

चक्रेण भस्मसात्सर्वं विसृष्टेन तु वीर्यवान् ।
त्रिषु लोकेषु तन्नास्ति यन्न कुर्याज्जनार्दनः ॥ १-२५१-३१ (१०९५९)
गाण्डीवं धनुरादाय तथाऽक्षय्ये महेषुधी ।
अहमप्युत्सहे लोकान्विजेतुं युधि पावक ॥ १-२५१-३२ (१०९६०)
सर्वतः परिवार्यैवं दावमेतं महाप्रभो ।
कामं संप्रज्वलाद्यैव कल्यौ स्वः साह्यकर्मणि ॥ १-२५१-३३ (१०९६१)
ग्यदि खाण्डवमेष्यति प्रमादा-
त्सगणो वा परिरक्षितुं महेन्द्रः ।
शरताडितगात्रकुण्डलानां
कदनं द्रक्ष्यति देववाहिनीनाम् ॥' १-२५१-३४ (१०९६२)
वैशंपायन उवाच। १-२५१-३५क्ष् (१३२६)
एवमुक्तः स भगवान्दाशार्हेणार्जुनेन च ।
तैजसं रपमास्थाय दावं दग्धुं प्रचक्रमे ॥ १-२५१-३५ (१०९६३)
सर्वतः परिवार्याथ सप्तार्चिर्ज्वलनस्तथा ।
ददाह खाण्डवं दावं युगान्तमिव दर्शयन् ॥ १-२५१-३६ (१०९६४)
प्रतिगृह्य समाविश्य तद्वनं भरतर्षभ ।
मेघस्तनितनिर्घोषः सर्वभूतान्यकम्पयत् ॥ १-२५१-३७ (१०९६५)
दह्यतस्तस्य च बभौ रूपं दावस्य भारत ।
मेरोरिव नगेन्द्रस्य कीर्णस्यांशुमतोंशुभिः ॥ ॥ १-२५१-३८ (१०९६६)

इति श्रीमन्महाभारते आदिपर्वणि खाण्डवदाहपर्वणि
एकपञ्चाशदधिकद्विशततमोऽध्यायः ॥ २५१ ॥
Mahabharata - Adi Parva - Chapter Footnotes

१-२५१-२ आदित्यमदितेः पुत्रम् ॥
१-२५१-७ महामात्रं प्रधानम् ॥
१-२५१-१२ भौमनो विश्वकर्मा ॥
१-२५१-१५ सिंहशार्दूलवद्भयंकरः केतनः कायोयस्य सः ॥
१-२५१-२३ कल्यः समर्थः वज्रं वरत्रा सा नाभौ यस्य तत् ॥
१-२५१-२७ हत्वा हत्वा रिपून्सङ्ख्ये इति घ ।पात ॥
एकपञ्चाशदधिकद्विशततमोऽध्यायः ॥
२५१ ॥

---

अध्यय२५२
॥ श्रीः ॥
१.२५२. अध्यायः २५२

खाण्डवदाहं दृष्ट्वा त्रस्तैर्देवैः प्रार्थितेनेन्द्रेण जलवर्षणम् ॥१ ॥

Mahabharata - Adi Parva - Chapter Text

१-२५२-० (१०९६७)
वैशंपायन उवाच।१-२५२-०क्ष् (१३२७)
तौ रथाभ्यां रथश्रेष्ठौ दावस्योभयतः स्थितौ ।
दिक्षु सर्वासु भूतानां चक्राते कदनं महत् ॥१-२५२-१ (१०९६८)
यत्र यत्र च दृश्यन्ते प्राणिनः खाण्डवालयाः ।
पलायन्तः प्रवीरौ तौ तत्रतत्राभ्यधावताम् ॥१-२५२-२ (१०९६९)
छिद्रं न स्म प्रपश्यन्ति रथयोराशुचारिणोः ।
आविद्धावेव दृश्येते रथिनौ तौ रथोत्तमौ ॥१-२५२-३ (१०९७०)
खाण्डवे दह्यमाने तु भूतान्यथ सहस्रशः ।
उत्पेतुर्भैरवान्नादान्विनदन्तः समन्ततः ॥१-२५२-४ (१०९७१)
दग्धैकदेशा बहवो निष्टप्ताश्च तथाऽपरे ।
स्फुटिताक्षा विशीर्णाश्च विप्लुताश्च तथाऽपरे ॥१-२५२-५ (१०९७२)
समालिङ्ग्य सुतानन्ये पितॄन्भ्रातॄनथाऽपरे ।
त्यक्तुं न शेकुः स्नेहेन तत्रैव निधनं गताः ॥१-२५२-६ (१०९७३)
सन्दष्टदशनाश्चान्ये समुत्पेतुरनेकशः ।
ततस्तेऽतीव घूर्णन्तः पुनरग्नौ प्रपेदिरे ॥१-२५२-७ (१०९७४)
दग्धपक्षाक्षिचरणा विचेष्टन्तो महीतले ।
तत्रतत्र स्म दृश्यन्ते विनश्यन्तः शरीरिणः ॥१-२५२-८ (१०९७५)
जलाशयेषु तप्तेषु क्वाथ्यमानेषु वह्निना ।
गतसत्वाः स्म दृश्यन्ते कूर्ममत्स्याः समन्ततः ॥१-२५२-९ (१०९७६)
शरीरैरपरे दीप्तैर्देहवन्त इवाग्नयः ।
अदृश्यन्त वने तत्र प्राणिनः प्राणिसंक्षये ॥१-२५२-१० (१०९७७)
कांश्चिदुत्पततः पार्थः शरैः संछिद्य खण्डशः ।
पातयामास विहगान्प्रदीप्ते वसुरेतसि ॥१-२५२-११ (१०९७८)
ते शराचितसर्वाङ्गा निनदन्तो महारवान् ।
ऊर्ध्वमुत्पत्य वेगेन निपेतुः खाण्डवे पुनः ॥१-२५२-१२ (१०९७९)
शरैरभ्याहतानां च सङ्घशः स्म वनौकसाम् ।
विरावः शुश्रुवे घोरः समुद्रस्येव मथ्यतः ॥१-२५२-१३ (१०९८०)
वह्नेश्चापि प्रदीप्तस्य खमुत्पेतुर्महार्चिषः ।
जनयामासुरुद्वेगं सुमहान्तं दिवौकसाम् ॥१-२५२-१४ (१०९८१)
तेनार्चिषा सुसन्तप्ता देवाः सर्षिपुरोगमाः ।

ततो जग्मुर्महात्मानः सर्व एव दिवौकसः ।
शतक्रतुं सहस्राक्षं देवेशमसुरार्दनम् ॥ १-२५२-१५ (१०९८२)
देवा ऊचुः । १-२५२-१६क्ष् (१३२८)
किं न्विमे मानवाः सर्वे दह्यन्ते चित्रभानुना ।
कच्चिन्न संक्षयः प्राप्तो लोकानाममरेश्वर ॥ १-२५२-१६ (१०९८३)
वैशंपायन उवाच । १-२५२-१७क्ष् (१३२९)
तच्छ्रुत्वा वृत्रहा तेभ्यः स्वयमेवान्ववेक्ष्य च ।
खाण्डवस्य विमोक्षार्थं प्रययौ हरिवाहनः ॥ १-२५२-१७ (१०९८४)
महता रथबृन्देन नानारूपेण वासवः ।
आकाशं समवाकीर्य प्रववर्ष सुरेश्वरः ॥ १-२५२-१८ (१०९८५)
ततोऽक्षमात्रा व्यसृजन्धाराः शतसहस्रशः ।
चोदिता देवराजेन जलदाः खाण्डवं प्रति ॥ १-२५२-१९ (१०९८६)
असंप्राप्तास्तु ता धारास्तेजसा जातवेदसः ।
ख एव समुशुष्यन्त नकाश्चित्पावकं गताः ॥ १-२५२-२० (१०९८७)
ततो नमुचिहा क्रुद्धो भृशमर्चिष्मतस्तदा ।
पुनरेव महामेघैरम्भांसि व्यसृजद्बहु ॥ १-२५२-२१ (१०९८८)
अर्चिर्धाराभिसंबद्धं धूमविद्युत्समाकुलम् ।
बभूव तद्वनं घोरं स्तनयित्नुसमाकुलम् ॥ ॥ १-२५२-२२ (१०९८९)

इति श्रीमन्महाभारते आदिपर्वणि खाण्डवदाहपर्वणि
द्विपञ्चाशदधिकद्विशततमोऽध्यायः ॥ २५२ ॥
Mahabharata - Adi Parva - Chapter Footnotes

१-२५२-३ आविद्धावेव अलातचक्रवद्भ्रामितावेव ॥
द्विपञ्चाशदधिकद्विशततमोऽध्यायः ॥
२५२ ॥

---

अध्यय२५३
॥ श्रीः ॥
१.२५३. अध्यायः २५३

Mahabharata - Adi Parva - Chapter Topics
इन्द्राभिवृष्टस्य जलस्यार्जुनेन निवारणम् ॥ १ ॥
पुत्रं निगीर्याकाशमुत्पतन्त्याः तक्षकभार्यायाः अर्जुनेन शिरश्छेदः ॥ २ ॥
इन्द्रेण स्वकृतवायुवर्षमोहितादर्जुनात्तक्षकपुत्रस्याश्वसेनस्य
मोचनम् ॥ ३ ॥
पावकान्मुमुक्षूणां नागादीनां मारणम् ॥ ४ ॥

इन्द्रस्य कृष्णार्जुनाभ्यां युद्धम् ॥ ५ ॥

Mahabharata - Adi Parva - Chapter Text

१-२५३-० (१०९९०)
वैशंपायन उवाच। १-२५३-०क्ष् (१३३०)
तस्याथ वर्षतो वारि पाण्डवः प्रत्यवारयत् ।
शरवर्षेण बीभत्सुरुत्तमास्त्राणि दर्शयन् ॥ १-२५३-१ (१०९९१)
खाण्डवं च वनं सर्वं पाण्डवो बहुभिः शरैः ।
प्राच्छादयदमेयात्मा नीहारेणेव चन्द्रमाः ॥ १-२५३-२ (१०९९२)
न च स्म किंचिच्छक्नोति भूतं निश्चरितुं ततः ।
संछाद्यमाने खे बाणैरस्यता सव्यसाचिना ॥ १-२५३-३ (१०९९३)
तक्षकस्तु न तत्रासीन्नागराजो महाबलः ।
दह्यमाने वने तस्मिन्कुरुक्षेत्रं गतो हि सः ॥ १-२५३-४ (१०९९४)
अश्वसेनोऽभवत्तत्र तक्षकस्य सुतो बली ।
स यत्नमकरोत्तीव्रं मोक्षार्थं जातवेदसः ॥ १-२५३-५ (१०९९५)
न शशाक स निर्गन्तुं निरुद्धोऽर्जुनपत्रिभिः ।
मोक्षयामास तं माता निगीर्य भुजगात्मजा ॥ १-२५३-६ (१०९९६)
तस्य पूर्वं शिरो ग्रस्तं पुच्छमस्य निगीर्यते ।
निगीर्य सोर्ध्वमक्रामत्सुतं नागी मुमुक्षया ॥ १-२५३-७ (१०९९७)
तस्याः शरेण तीक्ष्णेन पृथुधारेण पाण्डवः ।
शिरश्चिच्छेद गच्छन्त्यास्तामपश्यच्छचीपतिः ॥ १-२५३-८ (१०९९८)
तं मुमोचयिषुर्वज्री वातवर्षेण पाण्डवम् ।
मोहयामास तत्कालमश्वसेनस्त्वमुच्यत ॥ १-२५३-९ (१०९९९)
तां च मायां तदा दृष्टा घोरां नागेन वञ्चितः ।
द्विधा त्रिधा च खगतान्प्राणिनः पाण्डवोच्छिनत् ॥ १-२५३-१० (११०००)
शशाप तं च संक्रुद्धो बीभत्सुर्जिह्मगामिनम् ।
पावको वासुदेवश्चाप्यप्रतिष्ठो भविष्यसि ॥ १-२५३-११ (११००१)
ततो जिष्णुः सहस्राक्षं खं वितत्याशुगैः शरैः ।
योधयामास संक्रुद्धो वञ्चनां तामनुस्मरन् ॥ १-२५३-१२ (११००२)
देवराजोऽपि तं दृष्ट्वा संरब्धं समरेऽर्जुनम् ।
स्वमस्त्रमसृजत्तीव्रं छादयित्वाऽखिलं नभः ॥ १-२५३-१३ (११००३)
ततो वायुर्महाघोषः क्षोभयन्सर्वसागरान् ।
वियत्स्थो जनयन्मेघाञ्जलधारासमाकुलान् ॥ १-२५३-१४ (११००४)
ततोऽशनिमुचो घोरांस्तडित्स्तनितनिःस्वनान् ।
तद्विघातार्थमसृजदर्जुनोऽप्यस्त्रमुत्तमम् ॥ १-२५३-१५ (११००५)

वायव्यमभिमन्त्र्याथ प्रतिपत्तिविशारदः ।
तेनेन्द्राशनिमेघानां वीर्यौजस्तद्विनाशितम् ॥ १-२५३-१६ (११००६)
जलधाराश्च ताः शोषं जग्मुर्नेशुश्च विद्युतः ।
क्षणेन चाभवद्व्योम संप्रशान्तरजस्तमः ॥ १-२५३-१७ (११००७)
सुखशीतानिलवहं प्रकृतिस्थार्कमण्डलम् ।
निष्प्रतीकारहृष्टश्च हुतभुग्विविधाकृतिः ॥ १-२५३-१८ (११००८)
सिच्यमानो वसौघैस्तैः प्राणिनां देहनिःसृतैः ।
प्रजज्वालाथ सोऽर्चिष्मान्स्वनादैः पूरयञ्जगत् ॥ १-२५३-१९ (११००९)
कृष्णाभ्यां रक्षितं दृष्ट्वा तं च दावमहङ्कृताः ।
खमुत्पेतुर्महाराज सुपर्णाद्याः पतत्त्रिणः ॥ १-२५३-२० (११०१०)
गरुत्मान्वज्रसदृशैः पक्षतुण्डनखैस्तथा ।
प्रहर्तुकामो न्यपतदाकाशात्कृष्णपाण्डवौ ॥ १-२५३-२१ (११०११)
तथैवोरगसङ्घाताः पाण्डवस्य समीपतः ।
उत्सृजन्तो विषं घोरं निपेतुर्ज्वलिताननाः ॥ १-२५३-२२ (११०१२)
तांश्चकर्त शरैः पार्थः सरोषाग्निसमुक्षितैः ।
विविशुश्चापि तं दीप्तं देहाभावाय पावकम् ॥ १-२५३-२३ (११०१३)
ततः सुराः सगन्धर्वा यक्षराक्षसपन्नगाः ।
उत्पेतुर्नादमतुलमुत्सृजन्तो रणार्थिनः ॥ १-२५३-२४ (११०१४)
अयःकणपचक्राश्मभुशुण्ड्युद्यतबाहवः ।
कृष्णपार्थौ जिघांसन्तः क्रोधसंमूर्च्छितौजसः ॥ १-२५३-२५ (११०१५)
तेषामतिव्याहरतां शस्त्रवर्षं प्रमुञ्चताम् ।
प्रममाथोत्तमाङ्गानि बीभत्सुर्निशितैः शरैः ॥ १-२५३-२६ (११०१६)
कृष्णश्च सुमहातेजाश्चक्रेणारिविनाशनः ।
दैत्यदानवसङ्घानां चकार कदनं महत् ॥ १-२५३-२७ (११०१७)
अथापरे शरैर्विद्धाश्चक्रवेगेरितास्तथा ।
वेलामिव समासाद्य व्यतिष्ठन्नमितौजसः ॥ १-२५३-२८ (११०१८)
ततः शक्रोऽतिसक्रुद्धस्त्रिदशानां महेश्वरः ।
पाण्डुरं गजमास्थाय तावुभौ समुपाद्रवत् ॥ १-२५३-२९ (११०१९)
वेगेनाशनिमादाय वज्रमस्त्रं च सोऽसृजत् ।
हतावेताविति प्राह सुरानसुरसूदनः ॥ १-२५३-३० (११०२०)
ततः समुद्यतां दृष्ट्वा देवेन्द्रेण महाशनिम् ।
जगृहुः सर्वशस्त्राणि स्वानि स्वानि सुरास्तथा ॥ १-२५३-३१ (११०२१)
कालदण्डं यमो राजन् गदां चैव धनेश्वरः ।
पाशांश्च तत्र वरुणो विचित्रां च तथाऽशनिम् ॥ १-२५३-३२ (११०२२)
स्कन्दः शक्तिं समादाय तस्थौ मेरुरिवाचलः ।
ओषधीर्दीप्यमानाश्च जगृहातेऽस्विनावपि ॥ १-२५३-३३ (११०२३)

जगृहे च धनुर्धाता मुसलं तु जयस्तथा ।
पर्वतं चापि जग्राह क्रुद्धस्त्वष्टा महाबलः ॥ १-२५३-३४ (११०२४)
अंशस्तु शक्तिं जग्राह मृत्युर्देवः परश्वधम् ।
प्रगृह्य परिघं घोरं विचचारार्यमा अपि ॥ १-२५३-३५ (११०२५)
मित्रश्च क्षुरपर्यन्तं चक्रमादाय तस्थिवान् ।
पूषा भगश्च संक्रुद्धः सविता च विशांपते ॥ १-२५३-३६ (११०२६)
आत्तकार्मुकनिस्त्रिंशाः कृष्णापार्थौ प्रदुद्रुवुः ।
रुद्राश्च वसवश्चैव मरुतश्च महाबलाः ॥ १-२५३-३७ (११०२७)
विश्वेदेवास्तथा साध्या दीप्यमानाः स्वतेजसा ।
एते चान्ये च बहवो देवास्तौ पुरुषोत्तमौ ॥ १-२५३-३८ (११०२८)
कृष्णपार्थौ जिघांसन्तः प्रतीयुर्विविधायुधाः ।
तत्राद्भुतान्यदृश्यन्त निमित्तानि महाहवे ॥ १-२५३-३९ (११०२९)
युगान्तसमरूपाणि भूतसंमोहनानि च ।
तथा दृष्ट्वा सुसंरब्धं शक्रं देवैः सहाच्युतौ ॥ १-२५३-४० (११०३०)
अभीतौ युधि दुर्धर्षौ तस्थतुः सज्जकार्मुकौ ।
आगच्छतस्ततो देवानुभौ युद्धविशारदौ ॥ १-२५३-४१ (११०३१)
व्यताडयेतां संक्रुद्धौ शरैर्वज्रोपमैस्तदा ।
असकृद्भग्नसंकल्पाः सुराश्च बहुशः कृताः ॥ १-२५३-४२ (११०३२)
भयाद्रणं परित्यज्य शक्रमेवाभिशिश्रियुः ।
दृष्ट्वा निवारितान्देवान्माधवेनार्जुनेन च ॥ १-२५३-४३ (११०३३)
आश्चर्यमगमंस्तत्र मुनयो नभसि स्थिताः ।
शक्रश्चापि तयोर्वीर्यमुपलभ्यासकृद्रणे ॥ १-२५३-४४ (११०३४)
बभूव परमप्रीतो भूयश्चैतावयोधयत् ।
ततोऽश्मवर्षं सुमहद्व्यसृजत्पाकशासनः ॥ १-२५३-४५ (११०३५)
भूय एव तदा वीर्यं जिज्ञासुः सव्यसाचिनः ।
तच्छैरर्जुनो वर्षं प्रतिजघ्नेऽत्यमर्षितः ॥ १-२५३-४६ (११०३६)
विफलं क्रियमाणं तत्समवेक्ष्य शतक्रतुः ।
भूयः संवर्धयामास तद्वर्षं पाकशासनः ॥ १-२५३-४७ (११०३७)
सोश्मवर्षं महावेगैरिषुभिः पाकशासनिः ।
विलयं गमयामास हर्षयन्पितरं तथा ॥ १-२५३-४८ (११०३८)
तत उत्पाट्य पाणिभ्यां मन्दराच्छिखरं महत् ।
सद्रुमं व्यसृजच्छक्रो जिघांसुः पाण्डुनन्दनम् ॥ १-२५३-४९ (११०३९)
ततोऽर्जुनो वेगवद्भिर्ज्वलिताग्रैरजिह्मगैः ।
शरैर्विध्वंसयामास गिरेः शृङ्गं सहस्रधा ॥ १-२५३-५० (११०४०)
गिरेर्विशीर्यमाणस्य तस्य रूपं तदा बभौ ।
सार्कचन्द्रग्रहस्येव नभसः परिशीर्यतः ॥ १-२५३-५१ (११०४१)

तेनाभिपतता दावं शैलेन महता भृशम् ।
शृङ्गेण निहतास्तत्र प्राणिनः खाण्डवालयाः ॥ ॥१-२५३-५२ (११०४२)

इति श्रीमन्महाभारते आदिपर्वणि खाण्डवदाहपर्वणि
त्रिपञ्चाशदधिकद्विशततमोऽध्यायः ॥ २५३ ॥ ॥ समाप्तं च
खाण्डवदाहपर्व ॥

---

अध्यय२५४
॥ श्रीः ॥
१.२५४. अध्यायः २५४

(अथ मयदर्शनपर्व ॥ १९ ॥)
Mahabharata - Adi Parva - Chapter Topics
देवेषु पराजितेषु अशरीरवाणीश्रवणेन इन्द्रस्य निवृत्तिः ॥ १ ॥
पलायमानं मयं हन्तुमुद्युक्ते श्रीकृष्णे आत्मानं शरणागतस्य
मयस्य अर्जुनेनाभयदानम् ॥ २ ॥
खाण्डवदाहेऽपि अश्वसेनादीनामदाहस्य वैशंपायनेन कथनम् ॥ ३ ॥

Mahabharata - Adi Parva - Chapter Text

१-२५४-० (११०४३)
वैशंपायन उवाच। १-२५४-०क्ष् (१३३१)
तथा शैलनिपातेन भीषिताः खाण्डवालयाः ।
दानवा राक्षसा नागास्तरक्ष्वृक्षवनौकसः ॥ १-२५४-१ (११०४४)
द्विपाः प्रभिन्नाः शार्दूलाः सिंहाः केसरिणस्तथा ।
मृगाश्च महिषाश्चैव शतशः पक्षिणस्तथा ॥ १-२५४-२ (११०४५)
समुद्विग्ना विससृपुस्तथान्या भूतजातयः ।
तं दावं समुदैक्षन्त कृष्णौ चाभ्युद्यतायुधौ ॥ १-२५४-३ (११०४६)
उत्पातनादशब्देन त्रासिता इव चाभवन् ।
ते वनं प्रसमीक्ष्याथ दह्यमानमनेकधा ॥ १-२५४-४ (११०४७)
कृष्णमभ्युद्यतास्त्रं च नादं मुमुचुरुल्बणम् ।
तेन नादेन रौद्रेण नादेन च विभावसोः ॥ १-२५४-५ (११०४८)
ररास गगनं कृत्स्नमुत्पातजलदैरिव ।
ततः कृष्णो महाबाहुः स्वतेजोभास्वरं महत् ॥ १-२५४-६ (११०४९)
चक्रं व्यसृजदत्युग्रं तेषां नाशाय केशवः ।
तेनार्ता जातयः क्षुद्राः सदानवनिशाचराः ॥ १-२५४-७ (११०५०)

निकृत्ताः शतशः सर्वा निपेतुरनलं क्षणात् ।
तत्रादृश्यन्त ते दैत्याः कृष्णचक्रविदारिताः ॥ १-२५४-८ (११०५१)
वसारुधिरसंपृक्ताः सन्ध्यायामिव तोयदाः ।
पिशाचान्पक्षिणो नागान्पशूंश्चैव सहस्रशः ॥ १-२५४-९ (११०५२)
निघ्नंश्चरति वार्ष्णेयः कालवत्तत्र भारत ।
क्षिप्तं क्षिप्तं पुनश्चक्रं कृष्णस्यामित्रघातिनः ॥ १-२५४-१० (११०५३)
छित्त्वानेकानि सत्वानि पाणिमेति पुनः पुनः ।
तथा तु निघ्नतस्तस्य पिशाचोरगराक्षसान् ॥ १-२५४-११ (११०५४)
बभूव रूपमत्युग्रं सर्वभूतात्मनस्तदा ।
समेतानां च सर्वेषां दानवानां च सर्वशः ॥ १-२५४-१२ (११०५५)
विजेता नाभवत्कश्चित्कृष्णपाण्डवयोर्मृधे ।
तयोर्बलात्परित्रातुं तं च दावं यदा सुराः ॥ १-२५४-१३ (११०५६)
नाशक्नुवञ्शमयितुं तदाऽभूवन्पराङ्मुखाः ।
शतक्रतुस्तु संप्रेक्ष्य विमुखानमरांस्तथा ॥ १-२५४-१४ (११०५७)
बभूव मुदितो राजन्प्रशंसन्केशवार्जुनौ ।
निवृत्तेष्वथ देवेषु वागुवाचाशरीरिणी ॥ १-२५४-१५ (११०५८)
शतक्रतुं समाभाष्य महागम्भीरनिःस्वना ।
न ते सखा सन्निहितस्तक्षको भुजगोत्तमः ॥ १-२५४-१६ (११०५९)
दाहकाले खाण्डवस्य कुरुक्षेत्रं गतो ह्यसौ ।
न च शक्यौ युधा जेतुं कथंचिदपि वासव ॥ १-२५४-१७ (११०६०)
वासुदेवार्जुनावेतौ निबोध वचनान्मम ।
नरनारायणावेतौ पूर्वदेवौ दिवि श्रुतौ ॥ १-२५४-१८ (११०६१)
भवानप्यभिजानाति यद्वीर्यौ यत्पराक्रमौ ।
नैतौ शक्यौ दुराधर्षौ विजेतुमजितौ युधि ॥ १-२५४-१९ (११०६२)
अपि सर्वेषु लोकेषु पुराणावृषिसत्तमौ ।
पूजनीयतमावेतावपि सर्वैः सुरासुरैः ॥ १-२५४-२० (११०६३)
यक्षराक्षसगन्धर्वनरकिन्नरपन्नगैः ।
तस्मादितः सुरैः सार्धं गन्तुमर्हसि वासव ॥ १-२५४-२१ (११०६४)
दिष्टं चाप्यनुपश्यैतत्खाण्डवस्य विनाशनम् ।
इति वाक्यमुपश्रुत्य तथ्यमित्यमरेश्वरः ॥ १-२५४-२२ (११०६५)
क्रोधामर्षौ समुत्सृज्य संप्रतस्थे दिवं तदा ।
तं प्रस्थितं महात्मानं समवेक्ष्य दिवौकसः ॥ १-२५४-२३ (११०६६)
सहिताः सेनया राजन्ननुजग्मुः पुरन्दरम् ।
देवराजं तदा यान्तं सह देवैरवेक्ष्य तु ॥ १-२५४-२४ (११०६७)
वासुदेवार्जुनौ वीरौ सिंहनादं विनेदतुः ।
देवराजे गते राजन्प्रहृष्टौ केशवार्जुनौ ॥ १-२५४-२५ (११०६८)

निर्विशङ्कं वनं वीरौ दाहयामासतुस्तदा ।
स मारुत इवाभ्राणि नाशयित्वाऽर्जुनः सुरान् ॥१-२५४-२६ (११०६९)
व्यधमच्छरसङ्घातैर्देहिनः खाण्डवालयान् ।
न च स्म किंचिच्छक्नोति भूतं निश्चरितुं ततः ॥१-२५४-२७ (११०७०)
संछिद्यमानमिषुभिरस्यता सव्यसाचिना ।
नाशक्नुवंश्च भूतानि महान्त्यपि रणेऽर्जुनम् ॥१-२५४-२८ (११०७१)
निरीक्षितुममोघास्त्रं योद्धुं चापि कुतो रणे ।
शतं चैकेन विव्याध शतेनैकं पतत्रिणाम् ॥१-२५४-२९ (११०७२)
व्यसवस्तेऽपतन्नग्नौ साक्षात्कालहता इव ।
न चालभन्त ते शर्म रोधःसु विषमेषु च ॥१-२५४-३० (११०७३)
पितृदेवनिवासेषु सन्तापश्चाप्यजायत ।
भूतसङ्घाश्च बहवो दीनाश्चक्रुर्महास्वनम् ॥१-२५४-३१ (११०७४)
रुरुदुर्वारणाश्चैव तथा मृगतरक्षवः ।
तेन शब्देन वित्रेसुर्गङ्गोदधिचरा झषाः ॥१-२५४-३२ (११०७५)
विद्याधरगणाश्चैव ये च तत्र वनौकसः ।
न त्वर्जुनं महाबाहो नापि कृष्णं जनार्दनम् ॥१-२५४-३३ (११०७६)
निरीक्षितुं वै शक्नोति कश्चिद्योद्धुं कुतः पुनः ।
एकायनगता येऽपि निष्पेतुस्तत्र केचन ॥१-२५४-३४ (११०७७)
राक्षसा दानवा नागा जघ्ने चक्रेण तान्हरिः ।
ते तु भिन्नशिरोदेहाश्चक्रवेगाद्गतासवः ॥१-२५४-३५ (११०७८)
पेतुरन्ये महाकायाः प्रदीप्ते वसुरेतसि ।
समांसरुधिरौघैश्च वसाभिश्चापि तर्पितः ॥१-२५४-३६ (११०७९)
उपर्याकाशगो भूत्वा विधूमः समपद्यत ।
दीप्ताक्षो दीप्तजिह्वश्च संप्रदीप्तमहाननः ॥१-२५४-३७ (११०८०)
दीप्तोर्ध्वकेशः पिङ्गाक्षः पिबन्प्राणभृतां वसाम् ।
तां स कृष्णार्जुनकृतां सुधां प्राप्य हुताशनः ॥१-२५४-३८ (११०८१)
बभूव मुदितस्तृप्तः परां निर्वृतिमागतः ।
तथाऽसुरं मयं नाम तक्षकस्य निवेशनात् ॥१-२५४-३९ (११०८२)
विप्रद्रवन्तं सहसा ददर्श मधुसूदनः ।
तमग्निः प्रार्थयामास दिधक्षुर्वातसारथिः ॥१-२५४-४० (११०८३)
शरीरवाञ्जटी भूत्वा नदन्निव बलाहकः ।
विज्ञाय दानवेन्द्राणां मयं वै शिल्पिनां वरम् ॥१-२५४-४१ (११०८४)
जिघांसुर्वासुदेवस्तं चक्रमुद्यम्य धिष्ठितः ।
स चक्रमुद्यतं दृष्ट्वा दिधक्षन्तं च पावकम् ॥१-२५४-४२ (११०८५)
अभिधावार्जुनेत्येवं मयस्त्राहीति चाब्रवीत् ।
तस्य भीतस्वनं श्रुत्वा मा भैरिति धनंजयः ॥१-२५४-४३ (११०८६)

प्रत्युवाच मयं पार्थो जीवयन्निव भारत ।
तं न भेतव्यमित्याह मयं पार्थो दयापरः ॥ १-२५४-४४ (११०८७)
तं पार्थेनाभये दत्ते नमुचेर्भ्रातरं मयम् ।
न हन्तुमैच्छद्दाशार्हः पावको न ददाह च ॥ १-२५४-४५ (११०८८)
तद्वनं पावको धीमान्दिनानि दश पञ्च च ।
ददाह कृष्णपार्थाभ्यां रक्षितः पाकशासनात् ॥ १-२५४-४६ (११०८९)
तस्मिन्वने दह्यमाने षडग्निर्न ददाह च ।
अश्वसेनं मयं चैव चतुरः शार्ङ्गकांस्तथा ॥ ॥ १-२५४-४७ (११०९०)

इति श्रीमन्महाभारते आदिपर्वणि मयदर्शनपर्वणि
चतुःपञ्चाशदधिकद्विशततमोऽध्यायः ॥ २५४ ॥

---

अध्यय२५५
॥ श्रीः ॥
१.२५५. अध्यायः २५५

Mahabharata - Adi Parva - Chapter Topics
शार्ङ्गकाणां मोचनकारणे जनमेजयेन पृष्टे वैशंपायनेन
मन्दपालोपाख्यानकथनारम्भः ॥ १ ॥
तपसा पितृलोकं गतस्याप्यनवाप्ततपःफळस्य मन्दपालस्य देवाज्ञया
प्रजोत्पादनार्थं पुनर्भूमावागमनम् ॥ २ ॥
तत्र शार्ङ्ग्यां जरितायां पुत्रचतुष्टयोत्पादनम् ॥ ३ ॥
सपुत्रां जरितां खाण्डवे विसृज्य लपितानाम्न्याऽन्यया शार्ङ्ग्या
संगतस्य मन्दपालस्य विप्ररूपाग्निदर्शनम् ॥ ४ ॥
तस्य खाण्डवदिधक्षां ज्ञात्वा पुत्ररक्षणार्थं स्तुतादग्नेर्वरलाभः
॥ ५ ॥

Mahabharata - Adi Parva - Chapter Text

१-२५५-० (११०९१)
जनमेजय उवाच। १-२५५-०क्ष् (१३३२)
किमर्थं शार्ङ्गकानग्निर्न ददाह तथा गते ।
तस्मिन्वने दह्यमाने ब्रह्मन्नेतत्प्रचक्ष्व मे ॥ १-२५५-१ (११०९२)
अदाहे ह्यश्वसेनस्य दानवस्य मयस्य च ।
कारणं कीर्तितं ब्रह्मञ्शार्ङ्गकाणां न कीर्तितम् ॥ १-२५५-२ (११०९३)
तदेतदद्भुतं ब्रह्मञ्शार्ङ्गकाणामनामयम् ।
कीर्तयस्वाग्निसंमर्दे कथं ते न विनाशिताः ॥ १-२५५-३ (११०९४)

वैशंपायन उवाच। १-२५५-४क्ष् (१३३३)
यदर्थं शार्ङ्गकानग्निर्न ददाह तथा गते ।
तत्ते सर्वं प्रवक्ष्यामि यथा भूतमरिन्दम ॥ १-२५५-४ (११०९५)
धर्मज्ञानां मुख्यतमस्तपस्वी संशितव्रतः ।
आसीन्महर्षिः श्रुतवान्मन्दपाल इति श्रुतः ॥ १-२५५-५ (११०९६)
स मार्गमाश्रितो राजन्नृषीणामूर्ध्वरेतसाम् ।
स्वाध्यायवान्धर्मरतस्तपस्वी विजितेन्द्रियः ॥ १-२५५-६ (११०९७)
स गत्वा तपसः पारं देहमुत्सृज्य भारत ।
जगाम पितृलोकाय न लेभे तत्र तत्फलम् ॥ १-२५५-७ (११०९८)
स लोकानफलान्दृष्ट्वा तपसा निर्जितानपि ।
पप्रच्छ धर्मराजस्य समीपस्थान्दिवौकसः ॥ १-२५५-८ (११०९९)
मन्दपाल उवाच। १-२५५-९क्ष् (१३३४)
किमर्थमावृता लोका ममैते तपसाऽर्जिताः ।
किं मया न कृतं तत्र यस्यैतत्कर्मणः फलम् ॥ १-२५५-९ (१११००)
तत्राहं तत्करिष्यामि यदर्थमिदमावृतम् ।
फलमेतस्य तपसः कथयध्वं दिवौकसः ॥ १-२५५-१० (१११०१)
देवा ऊचुः। १-२५५-११क्ष् (१३३५)
ऋणिनो मानवा ब्रह्मञ्जायन्ते येन तच्छृणु ।
क्रियाभिर्ब्रह्मचर्येण प्रजया च न संशयः ॥ १-२५५-११ (१११०२)
तदपाक्रियते सर्वं यज्ञेन तपसा सुतैः ।
तपस्वी यज्ञकृच्चासि न च ते विद्यते प्रजा ॥ १-२५५-१२ (१११०३)
त इमे प्रसवस्यार्थे तव लोकाः समावृताः ।
प्रजायस्व ततो लोकानुपभोक्ष्यसि पुष्कलान् ॥ १-२५५-१३ (१११०४)
पुन्नाम्नो नरकात्पुत्रस्त्रायते पितरं श्रुतिः ।
तस्मादपत्यसन्ताने यतस्व ब्रह्मसत्तम ॥ १-२५५-१४ (१११०५)
वैशंपायन उवाच। १-२५५-१५क्ष् (१३३६)
तच्छ्रुत्वा मन्दपालस्तु वचस्तेषां दिवौकसाम् ।
क्व नु शीघ्रमपत्यं स्याद्बहुलं चेत्यचिन्तयत् ॥ १-२५५-१५ (१११०६)
स चिन्तयन्नभ्यगच्छत्सुबहुप्रसवान्खगान् ।
शार्ङ्गिकां शार्ङ्गको भूत्वा जरितां समुपेयिवान् ॥ १-२५५-१६ (१११०७)
तस्यां पुत्रानजनयच्चतुरो ब्रह्मवादिनः ।
तानपास्य स तत्रैव जगाम लपितां प्रति ॥ १-२५५-१७ (१११०८)
बालान्स तानण्डगतान्सह मात्रा मुनिर्वने ।
तस्मिन्गते महाभागे लपितां प्रति भारत ॥ १-२५५-१८ (१११०९)
अपत्यस्नेहसंयुक्ता जरिता बह्वचिन्तयत् ।
तेन त्यक्तानसंत्याज्यानृषीनण्डगतान्वने ॥ १-२५५-१९ (११११०)

न जहौ पुत्रशोकार्ता जरिता खाण्डवे सुतान् ।
बभार चैतान्संजातान्स्ववृत्त्या स्नेहविक्लवा ॥ १-२५५-२० (११११११)
ततोऽग्निं खाण्डवं दग्धुमायान्तं दृष्टवानृषिः ।
मन्दपालश्चरंस्तस्मिन्वने लपितया सह ॥ १-२५५-२१ (११११२)
तं संकल्पं विदित्वाग्नेर्ज्ञात्वा पुत्रांश्च बालकान् ।
सोऽभितुष्टाव विप्रर्षिर्ब्राह्मणो जातवेदसम् ॥ १-२५५-२२ (११११३)
पुत्रान्प्रतिवदन्भीतो लोकपालं महौजसम्। १-२५५-२३ (११११४)
मन्दपाल उवाच ।
त्वमग्ने सर्वलोकानां मुखं त्वमसि हव्यवाट् ॥ १-२५५-२३क्ष् (१३३७)
त्वमन्तः सर्वभूतानां गूढश्चरसि पावक ।
त्वामेकमाहुः कवयस्त्वामाहुस्त्रिविधं पुनः ॥ १-२५५-२४ (११११५)
त्वामष्टधा कल्पयित्वा यज्ञवाहमकल्पयन् ।
त्वया विश्वमिदं सृष्टं वदन्ति परमर्षयः ॥ १-२५५-२५ (११११६)
त्वदृते हि जगत्कृत्स्नं सद्यो नश्येद्धुताशन ।
तुभ्यं कृत्वा नमो विप्राः स्वकर्मविजितां गतिम् ॥ १-२५५-२६ (११११७)
गच्छन्ति सह पत्नीभिः सुतैरपि च शाश्वतीम् ।
त्वामग्ने जलदानाहुः खेविषक्तान्सविद्युतः ॥ १-२५५-२७ (११११८)
दहन्ति सर्वभूतानि त्वत्तो निष्क्रम्य हेतयः ।
जातवेदस्त्वयैवेदं विश्वं सृष्टं महाद्युते ॥ १-२५५-२८ (११११९)
तवैव कर्मविहितं भूतं सर्वं चराचरम् ।
त्वयापो विहिताः पूर्वं त्वयि सर्वमिदं जगत् ॥ १-२५५-२९ (१११२०)
त्वयि हव्यं च कव्यं च यथावत्संप्रतिष्ठितम् ।
त्वमेव दहनो देव त्वं धाता त्वं बृहस्पतिः ॥ १-२५५-३० (१११२१)
त्वमश्विनौ यमौ मित्रः सोमस्त्वमसि चानिलः। १-२५५-३१ (१११२२)
वैशंपायन उवाच ।
एवं स्तुतस्तदा तेन मन्दपालेन पावकः ॥ १-२५५-३१क्ष् (१३३८)
तुतोष तस्य नृपते मुनेरमिततेजसः ।
उवाच चैनं प्रीतात्मा किमिष्टं करवाणि ते ॥ १-२५५-३२ (१११२३)
तमब्रवीन्मन्दपालः प्राञ्जलिर्हव्यवाहनम् ।
प्रदहन्खाण्डवं दावं मम पुत्रान्विसर्जय ॥ १-२५५-३३ (१११२४)
तथेति तत्प्रतिश्रुत्य भगवान्हव्यवाहनः ।
खाण्डवे तेन काले न प्रजज्वाल दिदक्षया ॥ ॥ १-२५५-३४ (१११२५)

इति श्रीमन्महाभारते आदिपर्वणि मयदर्शनपर्वणि
पञ्चपञ्चाशदधिकद्विशततमोऽध्यायः ॥ २५५ ॥
Mahabharata - Adi Parva - Chapter Footnotes

१-२५५-२३ पुत्राणां दहनाद्भीतो इति ङ । पाठः ॥
पञ्चपञ्चाशदधिकद्विशततमोऽध्यायः ॥
२५५ ॥

---

अध्यय२५६
॥ श्रीः ॥
१.२५६. अध्यायः २५६

Mahabharata - Adi Parva - Chapter Topics
प्रज्वलदग्निदर्शनेन जरितायाः स्वपुत्रैः संवादः ॥ १ ॥

Mahabharata - Adi Parva - Chapter Text

१-२५६-० (११२६)
वैशंपायन उवाच। १-२५६-०क्ष् (१३३९)
ततः प्रज्वलिते वह्नौ शार्ङ्गकास्ते सुदुःखिताः ।
व्यथिताः परमोद्विग्ना नाधिजग्मुः परायणम् ॥ १-२५६-१ (११२७)
निशाम्य पुत्रकान्बालान्माता तेषां तपस्विनी ।
जरिता शोकदुःखार्ता विललाप सुदुःखिता ॥ १-२५६-२ (११२८)
जरितोवाच। १-२५६-३क्ष् (१३४०)
अयमग्निर्दहन्कक्षमित आयाति भीषणः ।
जगत्संदीपयन्भीमो मम दुःखविवर्धनः ॥ १-२५६-३ (११२९)
इमे च मां कर्षयन्ति शिशवो मन्दचेतसः ।
अबर्हाश्चरणैर्हीनाः पूर्वेषां नः परायणाः ॥ १-२५६-४ (११३०)
त्रासयंश्चायमायाति लेलिहानो महीरुहान् ।
अजातपक्षाश्च सुता न शक्ताः सरणे मम ॥ १-२५६-५ (११३१)
आदाय च न शक्नोमि पुत्रांस्तरितुमात्मना ।
न च त्यक्तुमहं शक्ता हृदयं दूयतीव मे ॥ १-२५६-६ (११३२)
कं तु जह्यामहं पुत्रं कमादाय व्रजाम्यहम् ।
किंनु मे स्यात्कृतं कृत्वा मन्यध्वं पुत्रकाः कथम् ॥ १-२५६-७ (११३३)
चिन्तयाना विमोक्षं वो नाधिगच्छामि किंचन ।
छादयिष्यामि वो गात्रैः करिष्ये मरणं सह ॥ १-२५६-८ (११३४)
जरितारौ कुलं ह्येतज्ज्येष्ठत्वेन प्रतिष्ठितम् ।
सारिसृक्कः प्रजायेत पितॄणां कुलवर्धनः ॥ १-२५६-९ (११३५)
स्तम्बमित्रस्तपः कुर्याद्द्रोणो ब्रह्मविदां वरः ।
इत्येवमुक्त्वा प्रययौ पिता वो निर्घृणः पुरा ॥ १-२५६-१० (११३६)

कमुपादाय शक्येयं गन्तुं कष्टाऽऽपदुत्तमा ।
किं नु कृत्वा कृतं कार्यं भवेदिति च विह्वला ।
नापश्यत्स्वधिया मोक्षं स्वसुतानां तदानलात् ॥ १-२५६-११ (१११३७)
वैशंपायन उवाच। १-२५६-१२क्ष् (१३४१)
एवं ब्रुवाणां शार्ङ्गास्ते प्रत्यूचुरथ मातरम् ।
स्नेहमुत्सृज्य मातस्त्वं पत यत्र न हव्यवाट् ॥ १-२५६-१२ (१११३८)
अस्मास्विह विनष्टेषु भवितारः सुतास्तव ।
त्वयि मातर्विनष्टायां न नः स्यात्कुलसन्ततिः ॥ १-२५६-१३ (१११३९)
अन्ववेक्ष्यैतदुभयं क्षेमं स्याद्यत्कुलस्य नः ।
तद्वै कर्तुं परः कालो मातरेष भवेत्तव ॥ १-२५६-१४ (१११४०)
मा त्वं सर्वविनाशाय स्नेहं कार्षीः सुतेषु नः ।
न हीदं कर्म मोघं स्याल्लोककामस्य नः पितुः ॥ १-२५६-१५ (१११४१)
जरितोवाच। १-२५६-१६क्ष् (१३४२)
इदमाखोर्बिलं भूमौ वृक्षस्यास्य समीपतः ।
तदाविशध्वं त्वरिता वह्नेरत्र न वो भयम् ॥ १-२५६-१६ (१११४२)
ततोऽहं पांसुना छिद्रमपिधास्यामि पुत्रकाः ।
एवं प्रतिकृतं मन्ये ज्वलतः कृष्णवर्त्मनः ॥ १-२५६-१७ (१११४३)
तत एष्याम्यतीतेऽग्नौ विहन्तुं पांसुशंचयम् ।
रोचतामेष वो वादो मोक्षार्थं च हुताशनात् ॥ १-२५६-१८ (१११४४)
शार्ङ्गका ऊचुः। १-२५६-१९क्ष् (१३४३)
अबर्हान्मांसभूतान्नः क्रव्यादाखुर्विनाशयेत् ।
पश्यमाना भयमिदं प्रवेष्टुं नात्र शक्नुमः ॥ १-२५६-१९ (१११४५)
कथमग्निर्न नो धक्ष्येत्कथमाखुर्न नाशयेत् ।
कथं न स्यात्पिता मोघः कथं माता ध्रियेत नः ॥ १-२५६-२० (१११४६)
बिल आखोर्विनाशः स्यादग्नेराकाशचारिणाम् ।
अन्ववेक्ष्यैतदुभयं श्रेयान्दाहो न भक्षणम् ॥ १-२५६-२१ (१११४७)
गर्हितं मरणं नः स्यादाखुना भक्षिते बिले ।
शिष्टादिष्टः परित्यागः शरीरस्य हुताशनात् ॥ १-२५६-२२ (१११४८)
ग्अग्निदाहे तु नियतं ब्रह्मलोके ध्रुवा गतिः ॥' ॥ १-२५६-२३ (१११४९)

इति श्रीमन्महाभारते आदिपर्वणि मयदर्शनपर्वणि
षट्पञ्चाशदधिकद्विशततमोऽध्यायः ॥ २५६ ॥

Mahabharata - Adi Parva - Chapter Footnotes

१-२५६-१५ नोऽस्माकं सर्वविनाशाय सर्वेषां विनाशाय सुतेषु स्नेहं माकार्षीरिति संबन्धः ॥

१-२५६-१८ विहन्तुं दूरीकर्तुम् ।वादो वचनम् ॥
१-२५६-१९ क्रव्यादाखुर्मांसाद उन्दुरुः ।पश्यमानाः पश्यन्तः ॥
१-२५६-२० मोघो निष्फलाऽपत्योत्पत्तिः ।ध्रियेत जीवेत ॥
१-२५६-२२ शिष्टादिष्टः शिष्टैरादिष्टः ॥
षट्पञ्चाशदधिकद्विशततमोऽध्यायः ॥
२५६ ॥

---

अध्यय२५७
॥ श्रीः ॥
१.२५७. अध्यायः २५७

Mahabharata - Adi Parva - Chapter Topics
पुत्रैः सह संवादानन्तरं जरितायाः स्थानान्तरगमनम् ॥१ ॥

Mahabharata - Adi Parva - Chapter Text

१-२५७-० (११५०)
जरितोवाच।१-२५७-०क्ष् (१३४४)
अस्माद्बिलान्निष्पतितमाखुं श्येनो जहार तम् ।
क्षुद्रं पद्भ्यां गृहीत्वा च यातो नात्र भयं हि वः ॥१-२५७-१ (११५१)
शार्ङ्गका ऊचुः।१-२५७-२क्ष् (१३४५)
न हृतं तं वयं विद्मः श्येनेनाखुं कथंचन ।
अन्येऽपि भितारोऽत्र तेभ्योऽपि भमेव नः ॥१-२५७-२ (११५२)
संशयो वह्निरागच्छेद्दृष्टं वायोर्निवर्तनम् ।
मृत्युर्नो बिलवासिभ्यो बिले स्यान्नात्र संशयः ॥१-२५७-३ (११५३)
निःसंशयात्संशयितो मृत्युर्मातर्विशिष्यते ।
चर खे त्वं यथान्यायं पुत्रानाप्स्यसि शोभनान् ॥१-२५७-४ (११५४)
जरितोवाच।१-२५७-५क्ष् (१३४६)
अहं वेगेन तं यान्तमद्राक्षं पततां वरम् ।
बिलादाखुं समादाय श्येनं पुत्रा महाबलम् ॥१-२५७-५ (११५५)
तं पतन्तं महावेगा त्वरिता पृष्ठतोऽन्वगाम् ।
आशिषोऽस्य प्रयुञ्जाना हरतो मूषिकं बिलात् ॥१-२५७-६ (११५६)
यो नो द्वेष्टारमादाय श्येनराज प्रधावसि ।
भव त्वं दिवमास्थाय निरमित्रो हिरण्मयः ॥१-२५७-७ (११५७)
स यदा भक्षितस्तेन श्येनेनाखुः पतत्रिणा ।
तदाहं तमनुज्ञाप्य प्रत्युपायां पुनर्गृहम् ॥१-२५७-८ (११५८)
प्रविशध्वं बिलं पुत्रा विश्रब्धा नास्ति वो भयम् ।

श्येनेन मम पश्यन्त्या हृत आखुर्महात्मना ॥ १-२५७-९ (१११५९)
शार्ङ्गका ऊचुः। १-२५७-१०क्ष् (१३४७)
न विद्महे हृतं मातः श्येनैनाखुं कथंचन ।
अविज्ञाय न शक्यामः प्रवेष्टं विवरं भुवः ॥ १-२५७-१० (१११६०)
जरितोवाच। १-२५७-११क्ष् (१३४८)
अहं तमभिजानामि हृतं श्येनेन मूषिकम् ।
नास्ति वोऽत्र भयं पुत्राः क्रियतां वचनं मम ॥ १-२५७-११ (१११६१)
शार्ङ्गका ऊचुः। १-२५७-१२क्ष् (१३४९)
न त्वं मिथ्योपचारेण मोक्षयेथा भयाद्धि नः ।
समाकुलेषु ज्ञानेषु न बुद्धिकृतमेव तत् ॥ १-२५७-१२ (१११६२)
न चोपकृतमस्माभिर्न चास्मान्वेत्थ ये वयम् ।
पीड्यमाना बिभर्ष्यस्मान्का सती के वयं तव ॥ १-२५७-१३ (१११६३)
तरुणी दर्शीयाऽसि समर्था भर्तुरेषणे ।
अनुगच्छ पतिं मातुः पुत्रानाप्स्यसि शोमनान् ॥ १-२५७-१४ (१११६४)
वयमस्मिं समाविश्य लोकानाप्स्याम शोभनान् ।
अथास्मान्न दहेदग्निरायास्त्वं पुनरेव नः ॥ १-२५७-१५ (१११६५)
वैशंपायन उवाच। १-२५७-१६क्ष् (१३५०)
एवमुक्ता ततः शार्ङ्गी पुत्रानुत्सृज्य खाण्डवे ।
जगाम त्वरिता देशं क्षेममग्नेरनामयम् ॥ १-२५७-१६ (१११६६)
ततस्तीक्ष्णार्चिरभ्यागात्त्वरितो हव्यवाहनः ।
यत्र शार्ङ्गा वभूवुस्ते मन्दपालस्य पुत्रकाः ॥ १-२५७-१७ (१११६७)
ततस्तं ज्वलितं दृष्ट्वा ज्वलनं ते विहङ्गमाः ।
ग्व्यथिताः करुणा वाचः श्रावयामासुरन्तिकात्।'
जरितारिस्ततो वाक्यं श्रावयामास पावकम् ॥ ॥ १-२५७-१८ (१११६८)

इति श्रीमन्महाभारते आदिपर्वणि मयदर्शनपर्वणि
सप्तपञ्चाशदधिकद्विशततमोऽध्यायः ॥ २५७ ॥
Mahabharata - Adi Parva - Chapter Footnotes

१-२५७-३ वह्निरागच्छेदित्यत्र संशयो यतो वायोः सकाशाद्वह्नेति
वर्तनं दृष्टम् ॥
१-२५७-५ अहं वैश्येनमायान्तं इति ङ । पाठः ॥
सप्तपञ्चाशदधिकद्विशततमोऽध्यायः ॥
२५७ ॥

---

अध्यय२५८
॥ श्रीः ॥

१.२५८. अध्यायः २५८

Mahabharata - Adi Parva - Chapter Topics

जरितार्यादीनां चतुर्णां शार्ङ्गकाणां परस्परं संवादः ॥ १ ॥
स्तुत्या प्रसन्नेनाग्निना तेभ्योऽभयदानम् ॥ २ ॥
शार्ङ्गकाणां प्रार्थनया अग्निना मार्जाराणां दाहः ॥ ३ ॥

Mahabharata - Adi Parva - Chapter Text

१-२५८-० (१११६९)
जरितारिरुवाच। १-२५८-०क्ष् (१३५१)
पुरतः कृच्छ्रकालस्य धीमाञ्जागर्ति पुरुषः ।
स कृच्छ्रकालं संप्राप्य व्यथां नैवैति कर्हिचित् ॥ १-२५८-१ (१११७०)
यस्तु कृच्छ्रमनुप्राप्तं विचेता नावबुध्यते ।
सकृच्छ्रकाले व्यथितो न श्रेयो विन्दते महत् ॥ १-२५८-२ (१११७१)
सारिसृक्व उवाच। १-२५८-३क्ष् (१३५२)
धीरस्त्वमसि मेधावी प्राणकृच्छ्रमिदं च नः ।
प्राज्ञः शूरो बहूनां हि भवत्येको न संशयः ॥ १-२५८-३ (१११७२)
स्तम्बमित्र उवाच। १-२५८-४क्ष् (१३५३)
ज्येष्ठस्तातो भवति वै ज्येष्ठो मुञ्चति कृच्छ्रतः ।
ज्येष्ठश्चेन्न प्रजानाति नीयान्किं करिष्यति ॥ १-२५८-४ (१११७३)
द्रोण उवाच। १-२५८-५क्ष् (१३५४)
हिरण्यरेतास्त्वरितो जलन्नायाति नः क्षयम् ।
सप्तजिह्वाननः क्रूरो लिहानो विसर्पति ॥ १-२५८-५ (१११७४)
वैशंपायन उवाच। १-२५८-६क्ष् (१३५५)
एवं संभाष्य तेऽन्योन्यं मन्दपालस्य पुत्रकाः ।
तुष्टुवुः प्रयता भूत्वा यथाऽग्निं शृणु पार्थिव ॥ १-२५८-६ (१११७५)
जरितारिरुवाच। १-२५८-७क्ष् (१३५६)
आत्माऽसि वायोर्ज्वलन शरीरमसि वीरुधाम् ।
योनिरापश्च ते शुक्रं योनिस्त्वमसि चाम्भसः ॥ १-२५८-७ (१११७६)
ऊर्ध्वं चाधश्च सर्पन्ति पृष्ठतः पार्श्वतस्तथा ।
अर्चिषस्ते महावीर्य रश्मयः सवितुर्यथा ॥ १-२५८-८ (१११७७)
सारिसृक्क उवाच। १-२५८-९क्ष् (१३५७)
माता प्रणष्टा पितरं न विद्मः
पक्षा जाता नै नो धूमकेतो ।
न नस्त्राता विद्यते वै त्वदन्य-

स्तस्मादस्मांस्त्राहि बालांस्त्वमग्ने ॥ १-२५८-९ (१११७८)
यदग्ने ते शिवं रूपं ये च ते सप्त हेतयः ।
तेन नः परिपाहि त्वमार्तान्नः शरणैषिणः ॥१-२५८-१० (१११७९)
त्वमेवैकस्तपसे जप्तवेदो
नान्यस्तप्ता विद्यते गोषु देव ।
ऋषीनस्मान्बालकान्पालयस्व
परेणास्मान्प्रेहि वै हव्यवाह ॥ १-२५८-११ (१११८०)
स्तम्बमित्र उवाच।१-२५८-१२क्ष् (१३५८)
सर्वमग्ने त्वमेवैकस्त्वयि सर्वमिदं जगत् ।
त्वं धारयसि भूतानि भुवनं त्वं बिभर्षि च ॥१-२५८-१२ (१११८१)
त्वमग्निर्हव्यवाहस्त्वं त्वमेव परमं हविः ।
मनीषिणस्त्वां जानन्ति बहुधा चैकधापि च ॥१-२५८-१३ (१११८२)
सृष्टवा लोकांस्त्रीनिमान्हव्यवाह
काले प्राप्ते पचसि पुनः समिद्धः ।
त्वं सर्वस्य भुवनस्य प्रसूति-
स्त्वमेवाग्ने भवसि पुनः प्रतिष्ठा ॥ १-२५८-१४ (१११८३)
द्रोण उवाच।१-२५८-१५क्ष् (१३५९)
त्वमन्नं प्राणिभिर्भुक्तमन्तर्भूतो जगत्पते ।
नित्यप्रवृद्धः पचसि त्वयि सर्वं प्रतिष्ठितम् ॥१-२५८-१५ (१११८४)
सूर्यो भूत्वा रश्मिभिर्जातवेदो
भूमेरम्भो भूमिजातान्रसांश्च ।
विश्वानादाय पुनरुत्सृज्य काले
दृष्टवा वृष्ट्या भावयसीह शुक्र ॥ १-२५८-१६ (१११८५)
त्वत्त एताः पुनः शुक्र वीरुधो हरितच्छदाः ।
जायन्ते पुष्करिण्यश्च सुभद्रश्च महोदधिः ॥१-२५८-१७ (१११८६)
इदं वै सद्म तिग्मांशो वरुणस्य परायणम् ।
शिवस्त्राता भवास्माकं माऽस्मानद्य विनाशय ॥१-२५८-१८ (१११८७)
पिङ्गाक्ष लोहितग्रीव कृष्णवर्त्मन्हुताशन ।
परेण प्रेहि मुञ्चास्मान्सागरस्य गृहानिव ॥१-२५८-१९ (१११८८)
वैशंपायन उवाच।१-२५८-२०क्ष् (१३६०)
एवमुक्तो जातवेदा द्रोणेन ब्रह्मवादिना ।
द्रोणमाह प्रतीतात्मा मन्दपालप्रतिज्ञया ॥१-२५८-२० (१११८९)
अग्निरुवाच।१-२५८-२१क्ष् (१३६१)
ऋषिर्द्रोणस्त्वमसि वै ब्रह्मैतद्व्याहृतं
ईप्सितं ते करिष्यामि न च ते  १-२५८-२१ (१११९०)
मन्दपालेन वै यूयं मम पूर्वं निवेदिताः ।

वर्जयेः पुत्रकान्मह्यं दहन्दावमिति स्म ह ॥ १-२५८-२२ (१११९१)
तस्य तद्वचनं द्रोण त्वया यच्चेह भाषितम् ।
उभयं मे गरीयस्तु ब्रूहि किं करवाणि ते ।
भृशं प्रीतोऽस्मि भद्रं ते ब्रह्मंस्तोत्रेण सत्तम ॥ १-२५८-२३ (१११९२)
द्रोण उवाच। १-२५८-२४क्ष् (१३६२)
इमे मार्जारकाः शुक्र नित्यमुद्वेजयन्ति नः ।
एतान्कुरुष्व दग्धांस्त्वं हुताशन सबान्धवान् ॥ १-२५८-२४ (१११९३)
वैशंपायन उवाच। १-२५८-२५क्ष् (१३६३)
तथा तत्कृतवानग्निरभ्यनुज्ञाय शार्ङ्गकान् ।
ददाह खाण्डवं दावं समिद्धो जनमेजय ॥ ॥ १-२५८-२५ (१११९४)

इति श्रीमन्महाभारते आदिपर्वणि मयदर्शनपर्वणि
अष्टपञ्चाशदधिकद्विशततमोऽध्यायः ॥ २५८ ॥

---

अध्यय२५९
॥ श्रीः ॥
१.२५९. अध्यायः २५९

Mahabharata - Adi Parva - Chapter Topics
पुत्रांश्चिन्तयन्तं मन्दपालं प्रति लपितायाः सासूयवचनम् ॥ १ ॥
अग्निशान्त्यनन्तरं आत्मदिदृक्षयाऽऽगतं मन्दपालं प्रति भार्यया
पुत्रैश्च उपालम्भः ॥ २ ॥
।
Mahabharata - Adi Parva - Chapter Text

१-२५९-० (१११९५)
वैशंपायन उवाच। १-२५९-०क्ष् (१३६४)
मन्दपालोऽपि कौरव्यं चिन्तयामास पुत्रकान् ।
उक्त्वाऽपि च स तिग्मांशुं नैव शर्माधिगच्छति ॥ १-२५९-१ (१११९६)
स तप्यमानः पुत्रार्थे लपितामिदमब्रवीत् ।
कथं नु शक्ताः शरणे लपिते मम पुत्रकाः ॥ १-२५९-२ (१११९७)
वर्धमाने हुतवहे वाते चाशु प्रवायति ।
असमर्था विमोक्षाय भविष्यन्ति ममात्मजाः ॥ १-२५९-३ (१११९८)
कथं त्वशक्ता त्राणाय माता तेषां तपस्विनी ।
भविष्यति हि शोकार्ता पुत्रत्राणमपश्यती ॥ १-२५९-४ (१११९९)
कथमुड्डीयनेऽशक्तान्पतने च ममात्मजान् ।
सन्तप्यमाना बहुधा वाशमाना प्रधावती ॥ १-२५९-५ (११२००)

जरितारिः कथं पुत्रः सारिसृक्कः कथं च मे ।
स्तम्बमित्रः कथं द्रोणः कथं सा च तपस्विनी ॥ १-२५९-६ (११२०१)
लालप्यमानं तमृषइं मन्दपालं तथा वने ।
लपिता प्रत्युवाचेदं सासूयमिव भारत ॥ १-२५९-७ (११२०२)
न ते पुत्रेष्ववेक्षाऽस्ति यानृषीनुक्तवानसि ।
तेजस्विनो वीर्यवन्तो न तेषां ज्वलनाद्भयम् ॥ १-२५९-८ (११२०३)
त्वयाऽग्नौ ते परीताश्च स्वयं हि मम सन्निधौ ।
श्रुतं तथा चेति ज्वलनेन महात्मना ॥ १-२५९-९ (११२०४)
पलो न तां वाचमुक्त्वा मिथ्या करिष्यति ।
न्धुकृत्ये न तेन ते स्वस्थ मानसम् ॥ १-२५९-१० (११२०५)
तामेव तु ममामित्रां चिन्तयन्परितप्यसे ।
ध्रुवं मयि न ते स्नेहो यथा तपयं पुराऽभवत् ॥ १-२५९-११ (११२०६)
नहि पक्षवता न्याय्यं निः हेन सुहृज्जने ।
पीड्यमान उपद्रष्टुं शक्तेना मा कथंचन ॥ १-२५९-१२ (११२०७)
गच्छ त्वं जरितामेव यदर्थं परितप्यसे ।
चरिष्याम्यहमप्येका यथा पुरुषाश्रिता ॥ १-२५९-१३ (११२०८)
मन्दपाल उवाच। १-२५९-१४क्ष् (१३६५)
नाहमेवं चरे लोके यथा त्वमभिमन्यसे ।
अपत्यहेतोर्विचरे तच्च कृच्छ्रगतं मम ॥ १-२५९-१४ (११२०९)
भूतं हित्वा च भाव्यर्थे योऽवलम्बेत्स मन्दधीः ।
अवमन्येत तं लोको यथेच्छसि तथा कुरु ॥ १-२५९-१५ (११२१०)
एष हि प्रज्वलन्नग्निर्लेलिहानी महीरुहान् ।
आविग्ने हृदि सन्तापं जनयत्यशिवं मम ॥ १-२५९-१६ (११२११)
वैशंपायन उवाच। १-२५९-१७क्ष् (१३६६)
ग्भर्तुर्हि वाक्यं सा श्रुत्वा लपिता दुःखिताऽभवत् ।
सान्त्वयामास च पुनः पति पतिपरायणा ॥' १-२५९-१७ (११२१२)
तस्माद्देशादतिक्रान्ते ज्वलने जरिता पुनः ।
जगाम पुत्रकानेन जरिता पुत्रगृद्धिनी ॥ १-२५९-१८ (११२१३)
सा तान्कुशलिनः सर्वान्विमुक्ताञ्जातवेदसः ।
रोरूयमाणान्ददृशे वने पुत्रान्निरामयान् ॥ १-२५९-१९ (११२१४)
अश्रूणि मुमुचे तेषां दर्शनात्सा पुनःपुनः ।
ग्न श्रद्धेयं ततस्तेषांर्शनं वै पुनःपुनः ॥ १-२५९-२० (११२१५)
इति मत्वाऽब्रवीद्वाकजरिता पुत्रगृद्धिनी।'
एकाकशश्च पुत्रांस्तन्ञ्शमानान्वपद्यत ॥ १-२५९-२१ (११२१६)
ग्जरिता तु परिष्वज्युत्रस्नेहाच्चुचुम्ब ह ॥' १-२५९-२२ (११२१७)
ततोऽभ्यगच्छत्सहसमन्दपालोऽपि भारत ।

अथ ते सर्व एवैनं भ्यनन्दंस्तदा सुताः ॥१-२५९-२३ (११२१८)
ग्गुरुत्वान्मन्दपालस्तपसश्च विशेषतः ।
अभिवादामहे सर्वे तपक्षाः प्रसादतः ॥१-२५९-२४ (११२१९)
एवमुक्तवतां तेषां तनन्द्य महातपाः ।
परिष्वज्य ततो मू उपाघ्राय च बलकान् ।
पुत्रान्स्वयं समाहूयतः प्रोवाच गौतमः ॥' १-२५९-२५ (११२२०)
लालप्यमानमेकैकंरितां च पुनःपुनः ।
न चैवोचुस्तदा किंतमृषिं साध्वसाधु वा ॥१-२५९-२६ (११२२१)
मन्दपाल उवाच।१-२५९-२७क्ष् (१३६७)
ज्येष्ठः सुतस्ते कत कतमस्तस्य चानुजः ।
मध्यमः कतमश्चैव यान्कतमश्च ते ॥१-२५९-२७ (११२२२)
एवं ब्रुवन्तं दुःखाकं मा न प्रतिभाषसे ।
कृतवानस्मि हव्यानैव शान्तिमितो लभे ।
ग्एवमुक्त्वा तु तां मन्दपालस्तदाऽस्पृशत् ॥' १-२५९-२८ (११२२३)
जरितोवाच।१-२५९-२९क्ष् (१३६८)
किं नु ज्येष्ठेन ते किमनन्तरजेन ते ।
किं वा मध्यमजातेन किं कनिष्ठेन वा पुनः ॥१-२५९-२९ (११२२४)
यां त्वं मां सर्वतो हीनामुत्सृज्यासि गतः पुरा ।
तामेव लपितां गच्छ तरुणीं चारुहासिनीम् ॥१-२५९-३० (११२२५)
मन्दपाल उवाच।१-२५९-३१क्ष् (१३६९)
न स्त्रीणां विद्यते किंचिदमुत्र पुरुषान्तरात् ।
सापत्नकमृते लोके नान्यदर्थविनाशनम् ॥१-२५९-३१ (११२२६)
वैराग्निदीपनं चैव भृशुद्विगकारि च ।
सुव्रता चापि कल्याणी सर्वभूतेषु विश्रुता ॥१-२५९-३२ (११२२७)
अरुन्धती महात्मानं वसिष्ठं पर्यशङ्कत ।
विशुद्धभावमत्यन्तं सदा प्रियहिते रतम् ॥१-२५९-३३ (११२२८)
सप्तर्षिमध्यगं वीरमवमेने च तं मुनिम् ।
अपध्यानेन सा तेन धूमारुणसमप्रभा ।
लक्ष्याऽलक्ष्या नाभिरूपा निमित्तमिव पश्यति ॥ १-२५९-३४ (११२२९)
अपत्यहेतोः संप्राप्तं तथा त्वमपि मामिह ।
इष्टमेवं गते हि त्वं सा तथैवाद्य वर्तते ॥१-२५९-३५ (११२३०)
न हि भार्येति विश्वासः कार्यः पुंसा कथंचन ।
न हि कार्यमनुध्याति नारी पुत्रवती सती ॥१-२५९-३६ (११२३१)
वैशंपायन उवाच।१-२५९-३७क्ष् (१३७०)
ततस्ते सर्व एवैनं पुत्राः सम्यगुपासते ।
स च तानात्मजान्सर्वानाश्वासयितुमुद्यतः ॥ ॥१-२५९-३७ (११२३२)

इति श्रीमन्महाभारते आदिप्रवणि मयदर्शनपर्वणि
ऊनषष्ट्यधिकद्विशततमोऽध्यायः ॥ २५९ ॥
Mahabharata - Adi Parva - Chapter Footnotes

१-२५९- १-२५९-१० १-२५९-१२ मिति ङ । पाठः ॥
१-२५९-१३ ह्यपुरुषा तथा इति ङ । पाठः ॥
ऊनषष्ट्यधिकद्विशततमोऽध्यायः ॥
२५९ ॥

---

अध्यय२६०
॥ श्रीः ॥
१.२६०. अध्यायः २६०

Mahabharata - Adi Parva - Chapter Topics
मन्दपालस्य पुत्राश्वपूर्वकं सर्वैः सहान्यत्र गमनम् ॥ १ ॥
देवगणैः सहागतस्येन्द्रस्य कृष्णार्जुनवरदानपूर्वकं स्वलोकगमनम्
॥ २ ॥
अग्नेस्थानगमनानन्तरं कृष्णार्जुनमयानां नदीकूल उपवेशनम् ॥ ३ ॥

Mahabharata - Adi Parva - Chapter Text

१-२६०-० (११२३३)
मन्दपाल उवाच। १-२६०-०क्ष् (१३७१)
युष्माकमपवगार्थं तीं ज्वलनो मया ।
अग्निना च तथेत्येतिज्ञातं महात्मना ॥ १-२६०-१ (११२३४)
अग्नेर्वचनमाज्ञाय धर्मज्ञतां च वः ।
भवतां च परं वीर्यं नाहमिहागतः ॥ १-२६०-२ (११२३५)
न सन्तापो हि वर्त्थः पुत्रका हृदि मां प्रति ।
ऋषीन्वेद हुताशो ब्रह्म तद्विदितं च वः ॥ १-२६०-३ (११२३६)
वैशंपायन उवाच। १-२६०-४क्ष् (१३७२)
एवमाश्वासितान्पुत्रान्भार्यामादाय स द्विजः ।
मन्दपालस्ततो देशादन्यं देशं जगाम ह ॥ १-२६०-४ (११२३७)
भगवानापि तिग्मांशुः समिद्धः खाण्डवं ततः ।
ददाह सह कृष्णाभ्यां जनयञ्जगतो हितम् ॥ १-२६०-५ (११२३८)
वसामेदोवहाः कुल्यास्तत्र पीत्वा च पावकः ।
जगाम दर्शयामास चार्जुनम् ॥ १-२६०-६ (११२३९)

ततोऽन्तरिक्षाद्भगवानवतीर्य पुरन्दरः ।
मरुद्गणैर्वृतः पार्थं केशवं चेदमब्रवीत् ॥ १-२६०-७ (११२४०)
कृतं युवाभ्यां कर्मेदममरैरपि दुष्करम् ।
वरं वृणीतं तुष्टोऽस्मि दुर्लभं पुरुषेष्विह ॥ १-२६०-८ (११२४१)
पार्थस्तु वरयामास शक्रादस्त्राणि सर्वशः ।
प्रदातुं तच्च शक्रस्तु कालं चक्रे महाद्युतिः ॥ १-२६०-९ (११२४२)
यदा प्रसन्नो भगवान्महादेवो भविष्यति ।
तदातुभ्यं प्रदास्यामि पाण्डवास्त्राणि सर्वशः ॥ १-२६०-१० (११२४३)
अहमेव च तं कालं वेत्स्यामि कुरुनन्दन ।
तपसा महता चापि दास्यामि भवतोऽप्यहम् ॥ १-२६०-११ (११२४४)
आग्नेयानि च सर्वाणि वायव्यानि च सर्वशः ।
मदीयानि च सर्वाणि ग्रहीष्यसि धनञ्जय ॥ १-२६०-१२ (११२४५)
वासुदेवोऽपि जग्राह प्रीतिं पार्थेन शाश्वतीम् ।
ददौ सुरपतिश्चैव वरं कृष्णाय धीमते ॥ १-२६०-१३ (११२४६)
एवं दत्त्वा वरं ताभ्यां सह देवैर्मरुत्पतिः ।
हुताशनमनुज्ञाप्य जगामत्रिदिवं प्रभुः ॥ १-२६०-१४ (११२४७)
पावकश्च तदा दावं दग्ध्वसमृगपक्षिणम् ।
अहोभिरेकविंशद्भिर्विरराग्सुतर्पितः ॥ १-२६०-१५ (११२४८)
जग्ध्वा मांसानि पीत्वा चदांसि रुधिराणि च ।
युक्तः परमया प्रीत्या तावुत्वाच्युतार्जुनौ ॥ १-२६०-१६ (११२४९)
युवाभ्यां पुरुषाग्र्याभ्यां ततोऽस्मि यथासुखम् ।
अनुजानामि वां वीरौ चरतंत्र वाञ्छितम् ॥ १-२६०-१७ (११२५०)
ग्गाण्डिवं च धनुर्दिव्यमक्षौ च महेषुधी ।
कपिध्वजो रथश्चायं तव द महामते ॥ १-२६०-१८ (११२५१)
अनेन धनुषा चैव रथेनाने भारत ।
विजेष्यसि रणे शत्रून्सदेवामानुषान् ॥' १-२६०-१९ (११२५२)
एवं तौ समनुज्ञातौ पाववेमहात्मना ।
अर्जुनो वासुदेवश्च दानवश्चयस्तथा ॥ १-२६०-२० (११२५३)
परिक्रम्य ततः सर्वे त्रयोऽभरतर्षभ ।
रमणीये नदीकूले सहितामुपाविशंन् ॥ १-२६०-२१ (११२५४)

इति श्रीमन्महाभारते शतसाहस्त्र्यां संहितायां वैयासिक्यां आदिपर्वणि मयपर्वणि षष्ट्यधिकद्विशततमोऽध्यायः ॥ २६० ॥ ॥ समाप्तं मयदर्शनपर्वादिपर्व च॥

Mahabharata - Adi Parva - Chapter Footnotes

# ॥ २ सभापर्व ॥

२. सभापर्व

सभ-००१

॥ श्रीः ॥

२.१. अध्यायः १

Mahabharata - Sabha Parva - Chapter Topics

मयस्यार्जुनम्प्रति प्रत्युपकारप्रार्थना ॥ १.। कृष्णे उपकृते अहमुपकृत मयम्प्रति अर्जुनस्योक्तिः ॥ २.। कृष्णाज्ञय मयेन सभानिर्माणारम्भः ॥ ३.।

Mahabharata - Sabha Parva - Chapter Text

२-१-० (११२५५)
॥ श्रीवेदव्यासाय नमः ॥ २-१-०क्ष् (१३७३)
ग्नारायणं नमस्कृत्य नरं चैव नरोत्तमम् ।
देवीं सरस्वतीं चैव (व्यासं)ततो जयमुदीरयेत् ॥ २-१-१ (११२५६)
जनमेजय उवाच। २-१-२क्ष् (१३७४)
अर्जुनो जयतां श्रेष्ठो मोचयित्वा मयं तदा ।
किं चकार महातेजास्तन्मे ब्रूहि द्विजोत्तम ॥ २-१-२ (११२५७)
वैशम्पायन उवाच। २-१-३क्ष् (१३७५)
शृणु राजन्नवहितश्चरितं पूर्वकस्य ते ।
मोक्षयित्वा मयं तत्र पार्थः शस्त्रभृतां वरः ॥ २-१-३ (११२५८)
गाण्डिवं कार्मुकश्रेष्ठं तूणी चाक्षयसायकौ ।
दिव्यान्यस्त्राणि राजेन्द्र दुर्लभानि नृपैर्भुवि ॥ २-१-४ (११२५९)
रथध्वजपताकाश्च श्वेताश्वांश्च स वीर्यवान् ।
एतानि पावकात्प्राप्य मुदा परमया युतः ।
तस्थौ पार्थो महावीर्यस्तदा सह मयेन सः'॥ २-१-५ (११२६०)
ततोऽब्रवीन्मयः पार्थं वासुदेवस्य सन्निधौ ।
ग्पाण्डवेन परित्रातस्तत्कृतं प्रत्यनुस्मरन्'॥ २-१-६ (११२६१)
प्राञ्जलिः श्लक्ष्णया वाचा पूजयित्वा पुनः पुनः। २-१-७ (११२६२)

मय उवाच ।
अस्माच्च कृष्णात्सङ्क्रुद्धात्पावकाच्च दिधक्षतः ॥ २-१-७क्ष् (१३७६)
त्वया त्रातोऽस्मि कौन्तेय ब्रूहि किं करवाणि ते ।
ग्अहं हि विश्वकर्मा वै असुराणां परन्तप ॥ २-१-८ (११२६३)
तस्मात्ते विस्मयं किञ्चित्कुर्यामन्यैः सुदुष्करम् ॥ २-१-९ (११२६४)
वैशम्पायन उवाच। २-१-१०क्ष् (१३७७)
एवमुक्तो महावीर्यः पार्थो मायाविदं मयम् ।
ध्यात्वा मुहूर्तं कौन्तेयः प्रहसन्वाक्यमब्रवीत्'॥ २-१-१० (११२६५)
कृतमेव त्वया सर्वं स्वस्ति गच्छ महाऽसुर ।
प्रीतिमान्भव मे नित्यं प्रीतिमन्तो वयं च ते ॥ २-१-११ (११२६६)
प्रोपकारादर्थं हि नादास्यामीति मे व्रतम्'। २-१-१२ (११२६७)
उवाच ।
युक्तमेतत्त्वयि विभो यदात्थ पुरुषर्षभ ॥ २-१-१२क्ष् (१३७८)
प्रीतिपूर्वमहं किञ्चित्कर्तुमिच्छामि तेऽर्जुन ।
अहं हि विश्वकर्मा वै दानवानां महाकविः ॥ २-१-१३ (११२६८)
ग्सोऽहं वै त्वत्कृते किञ्चित्कर्तुमिच्छामि पाण्डव ।
ग्दानवानां पुरा पार्थ प्रासादा हि मया कृताः ॥ २-१-१४ (११२६९)
रम्याणि सुखगर्भाणि भोगाढ्यानि सहस्रशः ।
उद्यानानि च रम्याणि सरांसि विविधानि च ॥ २-१-१५ (११२७०)
विचित्राणि च वस्त्राणि कामगानि रथानि च ।
नगराणि विशालानि साट्टप्राकारवन्ति च ॥ २-१-१६ (११२७१)
वाहनानि च मुख्यानि विचित्राणि सहस्रशः ।
बिलानि रमणीयानि सुखयुक्तानि वै भृशम् ।
एते कृता मया तस्मादिच्छामि फल्गुन'॥ २-१-१७ (११२७२)
अर्जुन उवाच। २-१-१८क्ष् (१३७९)
प्राणकृच्छ्राद्विनिर्मुक्तमात्मानं मन्यसे मया ।
एवं गते न शक्ष्यामि किञ्चित्कारयितुं त्वया ॥ २-१-१८ (११२७३)
न चापि तव सङ्कल्पं मोघमिच्छामि दानव ।
कृष्णस्य क्रियतां किञ्चित्तथा प्रतिकृतं मयि ॥ २-१-१९ (११२७४)
वैशम्पायन उवाच। २-१-२०क्ष् (१३८०)
चोदितो वासुदेवस्तु मयं प्रति नरर्षभ ।
मुहूर्तमिव सन्दध्यौ किमयं चोद्यतामिति ॥ २-१-२० (११२७५)
ततो विचिन्त्य मनसा लोकनाथः प्रजापतिः ।
चोदयामास तं कृष्णः सभा वै क्रियतामिति ॥ २-१-२१ (११२७६)
यदि त्वं कर्तुकामोऽसि प्रियं शिल्पवतां वर ।
धर्मराजस्य दयितां यादृशीमिह मन्यसे ॥ २-१-२२ (११२७७)

यां क्रियां नानुकुर्युस्ते मानवाः प्रेक्ष्य विष्ठिताः ।
मनुष्यलोके सकले तादृशीं कुरु वै सभाम् ॥ २-१-२३ (११२७८)
यत्र द्दिव्यानभिप्रायान्पश्येम विहितांस्त्वया ।
आसुरान्मानुपांश्चैव तादृशीं कुरु वै सभाम् ॥ २-१-२४ (११२७९)
वैशम्पायन उवाच। २-१-२५क्ष् (१३८१)
प्रतिगृह्य तु तद्वाक्यं सम्प्रहृष्टो मयस्तदा ।
विमानप्रतिमां चक्रे पाण्डवस्य शुभां सभाम् ॥ २-१-२५ (११२८०)
ततः कृष्णश्च पार्थश्च धर्मराजे युधिष्ठिरे ।
सर्वमेतत्समावेद्य दर्शयामासतुर्मयम् ॥ २-१-२६ (११२८१)
तस्मै युधिष्ठिरः पूजां यथार्हमकरोत्तदा ।
स तु तां प्रतिजग्राह मयः सत्कृत्य भारत ॥ २-१-२७ (११२८२)
स पूर्वदेवचरितं तदा तत्र विशाम्पते ।
कथयामास दैतेयः पाण्डुपुत्रेषु भारत ॥ २-१-२८ (११२८३)
स कालं कञ्चिदाश्वस्य विश्वकर्मा विचिन्त्य तु ।
सभां प्रचक्रमे कर्तुं पाण्डवानां महात्मनाम् ॥ २-१-२९ (११२८४)
अभिप्रायेण पार्थानां कृष्णस्य च महात्मनः ।
पुण्येऽहनि महातेजाः कृतकौतुकमङ्गलः ॥ २-१-३० (११२८५)
तर्पयित्वा द्विजश्रेष्ठान्पायसेन सहस्रशः ।
धनं बहुविधं दत्त्वा तेभ्य एव च वीर्यवान् ॥ २-१-३१ (११२८६)
सर्वर्तुगुणसम्पन्नां दिव्यरूपां मनोरमाम् ।
दशकिष्कुसहस्रां तां मापयामास सर्वतः ॥ ॥ २-१-३१ (११२८७)

इति श्रीमन्महाभारते सभापर्वणि मन्त्रपर्वणि प्रथमोऽध्यायः ॥ १. ।
Mahabharata - Sabha Parva - Chapter Footnotes

२-१-१ सभाओ २-१-२८ पूर्वदेवो वृषपर्वा दानवस्तस्य चरितं
बिन्दुसरसि यज्ञकरणादि ॥

---

सभ-००२
॥ श्रीः ॥
२.२. अध्यायः २

Mahabharata - Sabha Parva - Chapter Topics
द्वारकां गच्छतः श्रीकृष्णस्य युधिष्ठरादिभिः सारत्यादिकरणम्
॥ १. । अर्धयोजनपर्यन्तं गतानां कृष्णपाण्डवानां परस्परानुज्ञया
स्वस्वपुरगमनम् ॥२. ।

वैशम्पायन उवाच ।
उषित्वा खाण्डवप्रस्थे सुखवासं जनार्दनः ।
पार्थैः प्रीतिसमायुक्तैः पूजनार्होऽभिपूजितः ॥ २-२-१ (११२८८)
गमनाय मतिं चक्रे पितुर्दर्शनलालसः ।
धर्मराजमथामन्त्र्य पृथां च पृथुलोचनः ॥ २-२-२ (११२८९)
ववन्दे चरणौ मूर्ध्ना जगद्वन्द्यः पितृष्वसुः ।
स तया मूर्ध्न्युपाघ्रातः परिष्वक्तश्च केशवः ॥ २-२-३ (११२९०)
ददर्शानन्तरं कृष्णो भगिनीं स्वां महायशाः ।
तामुपेत्य हृषीकेशः प्रीत्या बाष्पसमन्वितः ॥ २-२-४ (११२९१)
अर्थ्यं तथ्यं हितं वाक्यं लघु युक्तमनुत्तरम् ।
उवाच भगवान्भद्रां सुभद्रां भद्रभाषिणीम् ॥ २-२-५ (११२९२)
तया स्वजनगामीनि श्रावितो वचनानि सः ।
सम्पूजितश्चाप्यसकृच्छिरसा चाभिवादितः ॥ २-२-६ (११२९३)
तामनुज्ञाय वार्ष्णेयः प्रतिनन्द्य च भामिनीम् ।
ददर्शानन्तरं कृष्णां धौम्यं चापि जनार्दनः ॥ २-२-७ (११२९४)
ववन्दे च यथान्यायं धौम्यं पुरुषसत्तमः ।
द्रौपदीं सान्त्वयित्वा च सुभद्रां परिदाय च ॥ २-२-८ (११२९५)
भ्रातृनभ्यगमद्विद्वान्पार्थेन सहितो बली ।
भ्रातृभिः पञ्चभिः कृष्णो वृतः शक्र इवामरैः ॥ २-२-९ (११२९६)
यात्राकालस्य योग्यानि कर्माणि गरुडध्वजः ।
कर्तुकामः शुचिर्भूत्वा स्नातवान्समलङ्कृतः ॥ २-२-१० (११२९७)
अर्चयामास देवांश्च द्विजांश्च यदुपुङ्गवः ।
माल्यजाप्यनमस्कारैर्गन्धैरुच्चावचैरपि ॥ २-२-११ (११२९८)
स कृत्वा सर्वकार्याणि प्रतस्थे तस्थुपां वरः ।
उपेत्य स यदुश्रेष्ठो बाह्यकक्षाद्विनिर्गतः ॥ २-२-१२ (११२९९)
स्वस्ति वाच्यार्हतो विप्रान्दधिपात्रफलाक्षतैः ।
वसु प्रदाय च ततः प्रदक्षिणमथाकरोत् ॥ २-२-१३ (११३००)
काञ्चनं रथमास्थाय तार्क्ष्यकेतनमाशुगम् ।
गदाचक्रासिशार्ङ्गाद्यैरायुधैरावृतं शुभम् ॥ २-२-१४ (११३०१)
सुतिथावथ नक्षत्रे मुहूर्ते च गुणान्विते ।
प्रययौ पुण्डरीकाक्षः शैब्यसुग्रीववाहनः ॥ २-२-१५ (११३०२)
अन्वारुरोह चाप्येनं प्रेम्णा राजा युधिष्ठिरः ।
अपास्य चास्य यन्तारं दारुकं यन्तृसत्तमम् ॥ २-२-१६ (११३०३)
अभीषून्सम्प्रजग्राह स्वयं कुरुपतिस्तदा ।

उपारुह्यार्जुनश्चाऽपि चामरव्यजनं सितम् ॥ २-२-१७ (११३०४)
रुक्मदण्डं बृहद्बाहुर्विदुधाव प्रदक्षिणम् ।
तथैव भीमसेनोऽपि रथमारुह्य वीर्यवान् ॥ २-२-१८ (११३०५)
ग्छत्रं शतशलाकं च दिव्यमाल्योपशोभितम् ।
वैडूर्यमणिदण्डं च चामीकरविभूषितम्। २-२-१९ (११३०६)
दधार तरसा भीमः मुच्छत्रं शार्ङ्गधन्वने ।
भीमसेनार्जुनौ चापि यमावरिनिषूदनौ'॥ २-२-२० (११३०७)
पृष्ठतोऽनुययुः कृष्णमृत्विक्पौरजनैर्वृता ।
स तथा भ्रातृभिः सर्वैः केशवः परवीरहा ॥ २-२-२१ (११३०८)
अन्वीयमानः शुशुभे शिष्यैरिव गुरुः प्रियैः ।
ग्अभिमन्युं च सौभद्रं वृद्धैः परिवृतस्तथा ॥ २-२-२२ (११३०९)
रथमारोप्य निर्यातो धौम्यो ब्राह्मणपुङ्गवः ।
इन्द्रप्रस्थमतिक्रम्य क्रोशमात्रं महाद्युतिः'।
पार्थमामन्त्र्य गोविन्दः परिष्वज्य सुपीडितम् ॥ २-२-२३ (११३१०)
युधिष्ठरं पूजयित्वा भीमसेनं यमौ तथा ।
परिष्वक्तो भृशं तैस्तु यमाभ्यामभिवादितः ॥ २-२-२४ (११३११)
योजनार्धमथो गत्वा कृष्णः परपुरञ्जयः ।
युधिष्ठिरं समामन्त्र्य निवर्तस्वेति भारत ॥ २-२-२५ (११३१२)
ततोऽभिवाद्य गोविन्दः पादौ जग्राह धर्मवित् ।
उत्थाप्य धर्मराजस्तु मूर्ध्न्युपाघ्राय केशवम् ॥ २-२-२६ (११३१३)
पाण्डवो यादवश्रेष्ठं कृष्णं कमललोचनम् ।
गम्यतामित्यनुज्ञाप्य धर्मराजो युधिष्ठिरः ॥ २-२-२७ (११३१४)
ततस्तैः संविदं कृत्वा यथावन्मधुसूदनः ।
निवर्त्य च तथा कृच्छ्रात्पाण्डवान्सपदानुगान् ॥ २-२-२८ (११३१५)
स्वां पुरीं प्रययौ हृष्टो यथा शक्रोऽमरावतीम् ॥
लोचनैरनुजग्मुस्ते तमादृष्टिपथात्तदा ॥ २-२-२९ (११३१६)
मनोभिरनुजग्मुस्ते कृष्णं प्रीतिसमन्वयात् ।
अतृप्तमनसामेव तेषां केशवदर्शने ॥ २-२-३० (११३१७)
क्षिप्रमन्तर्दधे शौरिश्चक्षुषां प्रियदर्शनः ।
अकामा एव पार्थास्ते गोविन्दगमानसाः ॥ २-२-३१ (११३१८)
निवृत्योपययुस्तूर्णं स्वं पुरं पुरुषर्षभाः ।
स्यन्दनेनाथ कृष्णोऽपि त्वरितं द्वारकामगात् ॥ २-२-३२ (११३१९)
सात्वतेन च वीरेण पृष्ठतो यायिना तदा ।
दारुकेण च सूतेन सहितो देवकीसुतः ।
स गतो द्वारकां विष्णुर्गरुत्मानिव वेगवान् ॥ २-२-३३ (११३२०)
वैशम्पायन उवाच। २-२-३४क्ष् (१३८२)

निवृत्य धर्मराजस्तु सह भ्रातृभिरच्युतः ।
सुहृत्परिवृतो राजा प्रविवेश पुरोत्तमम् ॥ २-२-३४ (११३२१)
विसृज्य सुहृदः सर्वान्भ्रातॄन्पुत्रांश्च धर्मराट् ।
मुमोद पुरुषव्याघ्रो द्रौपद्या सहितो नृप ॥ २-२-३५ (११३२२)
केशवोपि मुदा युक्तः प्रविवेश पुरोत्तमम् ।
पूज्यमानो यदुश्रेष्ठैरुग्रसेनमुखैस्तथा ॥ २-२-३६ (११३२३)
आहुकं पितरं वृद्धं मातरं च यशस्विनीम् ।
अभिवाद्य बलं चैव स्थितः कमललोचनः ॥ २-२-३७ (११३२४)
प्रद्युम्नसाम्बनिशठांश्चरुदेष्णं गदं तथा ।
अनिरुद्धं च भानुं च परिष्वज्य जनार्दनः ॥ २-२-३८ (११३२५)
स वृद्धैरभ्यनुज्ञातो रुक्मिण्या भवनं ययौ ।
ग्स तत्र भवने दिव्ये प्रमुमोद सुखी सुखम् ॥ २-२-३९ (११३२६)
एतस्मिन्नन्तरे राजन्मयो दैत्याधिपस्तदा ।
विधिवत्कल्पयामास सभां धर्मसुताय वै ॥ ॥ २-२-४० (११३२७)

इति श्रीमन्महाभारते सभापर्वणि मन्त्रपर्वणि द्वितीयोऽध्यायः ॥ २.।

---

सभ-००३
॥ श्रीः ॥
२.३. अध्यायः ३

Mahabharata - Sabha Parva - Chapter Topics
सभानिर्माणसामग्र्यानयनाय बिन्दुसरः प्रति मयस्य गमनम्
॥१.। गदाशङ्खाभ्यां सह सामग्रीं गृहीत्वा मयस्य
खाण्डवप्रस्थागमनम् ॥ २.। भीमार्जुनयोः गदाशङ्खदानं
सभानिर्माणं च ॥ ३.।
Mahabharata - Sabha Parva - Chapter Text

वैशम्पायन उवाच ।
अथाब्रवीन्मयः पार्थमर्जुनं जयतां वरम् ।
आपृच्छे त्वां गमिष्यामि पुनरेष्यामि चाप्यहम् ॥ २-३-१ (११३२८)
ग्विश्रुतां त्रिषु लोकेषु पार्थ दिव्यां सभां तव ।
प्राणिनां विस्मयकरीं तव प्रियविवर्धिनीम् ।
पाण्डवानां च सर्वेषां करिष्यामि धनञ्जय'॥ २-३-२ (११३२९)
उत्तरेण तु कैलासं मैनाकं पर्वतं प्रति ।
यियक्षमाणेषु पुरा दानवेषु मया कृतम् ॥ २-३-३ (११३३०)

चित्रं मणिमयं भाण्डं रम्यं बिन्दुसारः प्रति ।
सभायां सत्यसन्धस्य यदासीद्वृषपर्वणः ॥ २-३-४ (११३३१)
आगमिष्यामि तद्गृह्य यदि तिष्ठति भारत ।
ततः सभां करिष्यामि पाण्डवस्य यशस्विनीम् ॥ २-३-५ (११३३२)
मनः प्रह्लादिनीं चित्रां सर्वरत्नविभूषिताम् ।
अस्ति बिन्दुसारस्युग्रा गदा च कुरुनन्दन ॥ २-३-६ (११३३३)
निहिता यौवनाश्वेन राज्ञा हत्वा रणे रिपून् ।
सुवर्णबिन्दुभिश्चित्रा गुर्वी भारसहा दृढा ॥ २-३-७ (११३३४)
सा वै शतसहस्रस्य सम्मिता शत्रुघातिनी ।
अनुरूपा च भीमस्य गाण्डीवं भवतो यथा ॥ २-३-८ (११३३५)
वारुणश्च महाशङ्खो देवदत्तः सुघोषवान् ।
सर्वमेतत्प्रदास्यामि भवते नात्र संशयः ॥ २-३-९ (११३३६)
वैशम्पायन उवाच। २-३-१०क्ष् (१३८३)
इत्युक्त्वा सोऽसुरः पार्थं प्रागुदीचीं दिशं गतः ।
अथोत्तरेण कैलासान्मैनाकं पर्वतं प्रति ॥ २-३-१० (११३३७)
हिरण्यशृङ्गः सुमहान्महामणिमयो गिरिः ।
रम्यं बिन्दुसरो नाम यत्र राजा भगीरथः ॥ २-३-११ (११३३८)
द्रष्टुं भागीरथीं गङ्गामुवास बहुलाः समाः ।
यत्रेष्टं सर्वभूतानामीश्वरेण महात्मना ॥ २-३-१२ (११३३९)
आहृताः क्रतवो मुख्याः शतं भरतसत्तम ।
यत्र यूपा मणिमयाश्चैत्याश्चापि हिरण्मयाः ॥ २-३-१३ (११३४०)
शोभार्थं विहितास्तत्र न तु दृष्टान्ततः कृताः ।
यत्रेष्ट्वा स गतः सिद्धिं सहस्राक्षः शचीपतिः ॥ २-३-१४ (११३४१)
यत्र भूतपतिः सृष्ट्वा सर्वाँल्लोकान्सनातनः ।
अपस्यते तिग्मतेजाः स्थितो भूतैः सहस्रशः ॥ २-३-१५ (११३४२)
नरनारायणौ ब्रह्मा यमः स्थाणुश्च पञ्चमः ।
उपासते यत्र परं सहस्रयुगपर्यये ॥ २-३-१६ (११३४३)
यत्रेष्टं वासुदेवेन सत्त्रैर्वर्षगणान्बहून् ।
श्रद्दधानेन सततं धर्मसम्प्रतिपत्तये ॥ २-३-१७ (११३४४)
सुवर्णमालिनो यूपाश्चैत्याश्चाप्यतिभास्वराः ।
ददौ यत्र सहस्राणि प्रयुतानि च केशवः ॥ २-३-१८ (११३४५)
तत्र गत्वा स जग्राह गदां शङ्खं च भारत ।
ग्तस्माद्गिरेरुपादाय शिलाः सुरुचिरावहाः'।
स्फाटिकं च सभाद्रव्यं यदासीद्वृषपर्वणः ॥ २-३-१९ (११३४६)
किङ्करैः सह रक्षोभिर्यदरक्षन्महद्धनम् ।
तदगृह्णान्मयस्तत्र गत्वा सर्वं महाऽसुरः ॥ २-३-२० (११३४७)

तदाहृत्य च तां चक्रे सोऽसुरोऽप्रतिमां सभाम् ।
विश्रुतां त्रिषु लोकेषु दिव्यां मणिमयीं शुभाम् ॥ २-३-२१ (११३४८)
गदां च भीमसेनाय प्रवरां प्रददौ तदा ।
देवदत्तं चार्जुनाय शङ्खप्रवरमुत्तमम् ॥ २-३-२२ (११३४९)
यस्य शङ्खस्य नादेन भूतानि प्रचकम्पिरे ।
ग्स कालं कञ्चिदाश्वस्य विश्वकर्मा विचिन्त्य च ॥ २-३-२३ (११३५०)
सभां प्रचक्रमे कर्तुं पाण्डवानां महात्मनाम् ।
अभिप्रायेण पार्थानां कृष्णस्य च महात्मनः ॥ २-३-२४ (११३५१)
सर्वर्तुगुणसम्पन्नां दिव्यरूपामलङ्कृताम् ।
तर्पयित्वा द्विजश्रेष्ठान्पायसेन सहस्रशः ।
सभा च सा महाराज शातकुम्भमयद्रुमा ॥ २-३-२५ (११३५२)
दशकिष्कुसहस्राणि समन्तादायताभवत् ।
यथा वह्नेर्यथार्कस्य सोमस्य च यथा सभा ॥ २-३-२६ (११३५३)
भ्राजमाना तथाऽत्यर्थं दधार परमं वपुः ।
अभिघ्नतीव प्रभया प्रभामर्कस्य भास्वराम् ॥ २-३-२७ (११३५४)
प्रबभौ ज्वलमानेव दिव्या दिव्येन वर्चसा ।
नवमेघप्रतीकाशा दिवमाकृत्य विष्ठिता ।
आयता विपुला रम्या विपाप्मा विगतक्लमा ॥ २-३-२८ (११३५५)
उत्तमद्रव्यसम्पन्ना रत्नप्राकारतोरणा ।
बहुचित्रा बहुधना सुकृता विश्वकर्मणा ॥ २-३-२९ (११३५६)
न दाशार्ही सुधर्मा वा ब्रह्मणो वाथ तादृशी ।
सभा रूपेण सम्पन्ना यां चक्रे मतिमान्मयः ॥ २-३-३० (११३५७)
तां स्म तत्र मयेनोक्ता रक्षन्ति च वहन्ति च ।
सभामष्टौ सहस्राणि किङ्करा नाम राक्षसाः ॥ २-३-३१ (११३५८)
अन्तरिक्षचरा घोरा महाकाया महाबलाः ।
रक्ताक्षाः पिङ्गलाक्षाश्च शुक्तिकर्णाः प्रहारिणः ॥ २-३-३२ (११३५९)
तस्यां सभायां नलिनीं चकाराप्रतिमां मयः ।
वैदूर्यपत्रविततां मणिनालमयाम्बुजाम् ॥ २-३-३३ (११३६०)
पद्मसौगन्धिकवतीं नानाद्विजगणायुताम् ।
पुष्पितैः पङ्कजैश्चित्रां कूर्मैर्मत्स्यैश्च काञ्चनैः ।
चित्रस्फटिकसोपानां निष्पङ्कसलिलां शुभाम् ॥ २-३-३४ (११३६१)
मन्दानिलसमुद्धूतां मुक्ताबिन्दुभिराचिताम् ।
महामणिशिलापट्टबद्धपर्यन्तवेदिकाम् ॥ २-३-३५ (११३६२)
मणिरत्नचितां तां तु केचिदभ्येत्य पार्थिवाः ।
दृष्ट्वापि नाभ्यजानन्त तेऽज्ञानात्प्रपतन्त्युत ॥ २-३-३६ (११३६३)
तां सभामभितो नित्यं पुष्पवन्तो महाद्रुमाः ।

आसन्नानाविधा लोलाः शीतच्छाया मनोरमाः ॥ २-३-३७ (११३६४)
काननानि सुगन्धीनि पुष्करिण्यश्च सर्वशः ।
हंसकारण्डवोपेताश्चक्रवाकोपशोभिताः ॥ २-३-३८ (११३६५)
जलजानां च पद्मानां स्थलजानां च सर्वशः ।
मारुतो गन्धमादाय पाण्डवान्स्म निषेवते ॥ २-३-३९ (११३६६)
ईदृशीं तां सभां कृत्वा मासैः परिचतुर्दशैः ।
निष्ठितां धर्मराजाय मयो राजन्न्यवेदयत् ॥ ॥ २-३-४० (११३६७)

इति श्रीमन्महाभारते सभापर्वणि तृतीयोऽध्यायः ॥ ३.।

---

सभ-००४
॥ श्रीः ॥
२.४. अध्यायः ४

Mahabharata - Sabha Parva - Chapter Topics
ब्राह्मणान्भोजयित्वा युधिष्ठिरस्य सभाप्रवेशः ॥१.। ऋषीणां क्षत्रियाणां देवगन्धर्वादीनां च तत्रोपवेशनम् ॥ २.।
Mahabharata - Sabha Parva - Chapter Text

वैशम्पायन उवाच ॥
ग्तां तु कृत्वा सभां श्रेष्ठां मयश्चार्जुनमब्रवीत् ।
भूतानां च महावीर्यो ध्वजाग्रे किङ्करो गणः ॥ २-४-१ (११३६८)
तव विष्फारघोषेण मेघवन्निनदिष्यति ।
अयं हि सूर्यसङ्काशो ज्वलनस्य रथो महान् ॥ २.। २-४-२ (११३६९)
इमे च दिविजाः श्वेता वीर्यवन्तो हयोत्तमाः ।
मायामयः कृतो ह्येष ध्वजो वानरलक्षणः ॥ २-४-३ (११३७०)
असज्जमानो वृक्षेषु धूमकेतुरिवोच्छ्रितः ।
बहुवर्णं हि लक्ष्येत ध्वजं वानरलक्षणम् ॥ २-४-४ (११३७१)
ध्वजोत्कटं ह्यनवमं युद्धे द्रक्ष्यसि विष्ठितम् ।
एव वीरः सव्यसाचिन्ध्वजस्यान्ते भविष्यति ॥ २-४-५ (११३७२)
वैशम्पायन उवाच। २-४-६क्ष् (१३८४)
इत्युक्त्वाऽऽलिङ्ग्य वीभत्सुं विसृष्टः प्रययौ मयः'। २-४-६ (११३७३)
ततः प्रवेशनं तस्यां चक्रे राजा युधिष्ठिरः ।
अयुतं भोजयित्वा तु ब्राह्मणानां नराधिपः ॥ २-४-७ (११३७४)
साज्येन पायसेनैव मधुना मिश्रितेन च ।
भक्ष्यैर्मूलैः फलैश्चैव मांसैर्वाराहहारिणैः ।

कृसरेणाथ जीवन्त्या हविष्येण च सर्वशः ॥ २-४-८ (११३७५)
मांसप्रकारैर्विविधैः खाद्यैश्चापि तथा नृप ।
चोष्यैश्च विविधै राजन्पेयैश्च बहुविस्तरैः ॥ २-४-९ (११३७६)
अहतैश्चैव वासोभिर्माल्यैरुच्चावचैरपि ।
तर्पयामास विप्रेन्द्रान्नानादिग्भ्यः समागतान् ॥ २-४-१० (११३७७)
ददौ तेभ्यः सहस्राणि गवां प्रत्येकशः पुनः ।
पुण्याहघोषस्तत्रासीद्दिवस्पृगिव भारत ॥ २-४-११ (११३७८)
वादित्रैर्विविधैर्दिव्यैर्गन्धैरुच्चावचैरपि ।
पूजयित्वा कुरुश्रेष्ठो देवतानि निवेश्य च ॥ २-४-१२ (११३७९)
तत्र मल्ला नटा झल्लाः सूता वैतालिकास्तथा ।
उपतस्थुर्महात्मानं धर्मपुत्रं युधिष्ठिरम् ॥ २-४-१३ (११३८०)
तथा स कृत्वा पूजां तां भ्रातृभिः सह पाण्डवः ।
तस्यां सभायां रम्यायां रेमे शक्रो यथा दिवि ॥ २-४-१४ (११३८१)
सभायामृषयस्तस्यां पाण्डवैः सह आसते ।
आसाञ्चक्रुर्नरेन्द्राश्च नानादेशसमागताः ॥ २-४-१५ (११३८२)
असितो देवलः सत्यः सर्पिर्माली महाशिराः ।
अर्वा वसुः सुमित्रश्च मैत्रेयः शुनको बलिः ॥ २-४-१६ (११३८३)
बको दाल्भ्यः स्थूलशिराः कृष्णद्वैपायनः शुकः ।
सुमन्तुर्जैमिनिः पैलो व्यासशिष्यास्तथा वयम् ॥ २-४-१७ (११३८४)
तित्तिरिर्याज्ञवल्क्यश्च ससुतो रोमहर्षणः ।
अप्सुहोम्यश्च धौम्यश्च अणीमाण्डव्यकौशिकौ ॥ २-४-१८ (११३८५)
दामोष्णीपस्त्रैबलीश्च पर्णादो घटजानुकः ।
मौञ्जायनो वायुभक्षः पाराशर्यश्च सारिकः ॥ २-४-१९ (११३८६)
बलिवाकः सिनीवाकः सप्तपालः कृतश्रमः ।
जातूकर्णः शिखावांश्च आलम्बः पारिजातकः ॥ २-४-२० (११३८७)
पर्वतश्च महाभागो मार्कण्डेयो महामुनिः ।
पवित्रपाणिः सावर्णो भालुकिर्गालवस्तथा ॥ २-४-२१ (११३८८)
जङ्घाबन्धुश्च रैभ्यश्च कोपवेगस्तथा भृगुः ।
हरिबभ्रुश्च कौण्डिन्यो बभ्रुमाली सनातनः ॥ २-४-२२ (११३८९)
काक्षीवानौशिजश्चैव नाचिकेतोऽथ गौतमः ।
पैङ्ग्यो वराहः शुनकः शाण्डिल्यश्च महातपाः ॥ २-४-२३ (११३९०)
कुक्कुरो वेणुजङ्घोऽथ कालापः कठ एव च ।
मुनयो धर्मविद्वांसो धृतात्मानो जितेन्द्रियाः ॥ २-४-२४ (११३९१)
एते चान्ये च बहवो वेदवेदाङ्गपारगाः ।
उपासते महात्मानं सभायामृषिसत्तमाः ॥ २-४-२५ (११३९२)
कथयन्तः कथाः पुण्या धर्मज्ञाः शुचयोऽमलाः ।

तथैव क्षत्रियश्रेष्ठा धर्मराजमुपासते ॥ २-४-२६ (११३९३)
श्रीमान्महात्मा धर्मात्मा मुञ्जकेतुर्विवर्धनः ।
सङ्ग्रामजिद्दुर्मुखश्च उग्रसेनश्च वीर्यवान्। २-४-२७ (११३९४)
कक्षसेनः क्षितिपतिः क्षेमकश्चापराजितः ।
कम्बोजराजः कमठः कम्पनश्च महाबलः ॥ २-४-२८ (११३९५)
सततं कम्पयामास यवनानेक एव यः ।
बलपौरुषसम्पन्नान्कृतास्त्रानमितौजसः ।
यथाऽसुरान्कालकेयान्देवो वज्रधरस्तथा ॥ २-४-२९ (११३९६)
जटासुरो मद्रकानां च राजा
कुन्तिः पुलिन्दश्च किरातराजः ।
तथाङ्गवाङ्गौ सहपुण्ड्रकेण
पाण्ड्योड्रराजौ च सहान्ध्रकेण ॥ २-४-३० (११३९७)
अङ्गो वङ्गः सुमित्रश्च शैब्यश्चामित्रकर्शनः ।
किरातराजः सुमना यवनाधिपतिस्तथा ॥ २-४-३१ (११३९८)
चाणूरो देवरातश्च भोजो भीमरथश्च यः ।
श्रुतायुधश्च कालिङ्गो जयसेनश्च मागधः ॥ २-४-३२ (११३९९)
सुकर्मा चेकितानश्च पुरुश्चामित्रकर्शनः ।
केतुमान्वसुदानश्च वैदेहोऽथ कृतक्षणः ॥ २-४-३३ (११४००)
सुधर्मा चानिरुद्धश्च श्रुतायुश्च महाबलः ।
अनूपराजो दुर्धर्षः क्रमजिच्च सुदर्शनः ॥ २-४-३४ (११४०१)
शिशुपालः सहसुतः करूपाधिपतिस्तथा ।
वृष्णीनां चैव दुर्धर्षाः कुमारा देवरूपिणः ॥ २-४-३५ (११४०२)
आहुको विपृथुश्चैव गदः सारण एव च ।
अक्रूरः कृतवर्मा च सत्यकश्च शिनेः सुतः ॥ २-४-३६ (११४०३)
भीष्मकोऽथाकृतिश्चैव द्युमत्सेनश्च वीर्यवान् ।
केकयाश्च महेष्वासा यज्ञसेनश्च सोमकिः ॥ २-४-३७ (११४०४)
केतुमान्वसुमांश्चैव कृतास्त्रश्च महाबलः ।
एते चान्ये च बहवः क्षत्रिया मुख्यसंमताः। २-४-३८ (११४०५)
उपासते सभायां स्म कुन्तीपुत्रं युधिष्ठिरम् ।
अर्जुनं ये व संश्रित्य राजपुत्रा महाबलाः ॥ २-४-३९ (११४०६)
अशिक्षन्त धनुर्वेदं रौरवाजिनवाससः ।
तत्रैव शिक्षिता राजन्कुमारा वृष्णिनन्दनाः। २-४-४० (११४०७)
रौक्मिणेयश्च साम्बश्च युयुधानश्च सात्यकिः ।
सुधर्मा चानिरुद्धश्च शैव्यश्च नरपुङ्गवः ॥ २-४-४१ (११४०८)
एते चान्ये च बहवो राजानः पृथिवीपते ।
धनञ्जयसखा चात्र नित्यमास्ते स्म तुम्बुरुः ॥ २-४-४२ (११४०९)

उपासते महात्मानमासीनं सप्तविंशतिः ।
चित्रसेनः सहामात्यो गन्धर्वाप्सरसस्तथा ॥ २-४-४३ (११४१०)
गीतवादित्रकुशलाः साम्यतालविशारदाः ।
प्रमाणोऽथ लये स्थाने किन्नराः कृतनिश्रमाः ॥ २-४-४४ (११४११)
सञ्चोदितास्तुम्बुरुणा गन्धर्वसहितास्तदा ।
गायन्ति दिव्यतानैस्ते यथान्यायं मनस्विनः ॥ २-४-४५ (११४१२)
पाण्डुपुत्रानृषींश्चैव रमयन्त उपासते ।
तस्यां सभायामासीनाः सुव्रताः सत्यसङ्गराः ॥ २-४-४६ (११४१३)
दिवीव देवा ब्रह्माणं युधिष्ठिरमुपासते ॥ ॥ २-४-४७ (११४१४)

इति श्रीमन्महाभारते सभापर्वणि मन्त्रपर्वणि चतुर्थोऽध्यायः ॥ ४.।
Mahabharata - Sabha Parva - Chapter Footnotes

२-४-२९ कालकेयाः कालकाया अपत्यान्यसुराः ॥

---

सभ-००५
॥ श्रीः ॥
२.५. अध्यायः ५

Mahabharata - Sabha Parva - Chapter Topics
तत्रागतेन युधिष्ठिरपूजितेन नारदेन कुशलप्रश्नव्याजेन
राजनीतिकथनम् ॥ १.।
Mahabharata - Sabha Parva - Chapter Text

वैशम्पायन उवाच ।
अथ तत्रोपविष्टेषु पाण्डवेषु महात्मसु ।
महत्सु चोपविष्टेषु गन्धर्वेषु च भारत ॥ २-५-१ (११४१५)
वेदोपनिषदां वेत्ता ऋषिः सुरगणार्चितः ।
इतिहासपुराणज्ञः क्रियाकल्पविशेषवित् ॥ २-५-२ (११४१६)
ग्स्तुतस्तोमग्रहस्तोभपदक्रमविभागवित् ।
शिक्षाक्षरविभागज्ञः पुराकल्पविशेषवित् ॥ २-५-३ (११४१७)
आदिकल्पार्थवेत्ता च कल्पसूत्रार्थतत्त्ववित् ।
ब्रह्मचर्यव्रतपर ऊहापोहविशारदः ॥ २-५-४ (११४१८)
नृत्तगान्धर्वसेवी च सर्वत्राप्रतिमस्तथा ।
अष्टादशानां विद्यानां कोशभूतो महाद्युतिः'॥ २-५-५ (११४१९)
न्यायविद्धर्मतत्त्वज्ञः षडङ्गविदनुत्तमः ।
ऐक्यसंयोगनानात्वसमवायविशारदः ॥ २-५-६ (११४२०)

वक्ता प्रगल्भो मेधावी स्मृतिमान्नयवित्कविः ।
परापरविभागज्ञः प्रमाणकृतनिश्चयः ॥ २-५-७ (११४२१)
पञ्चावयवयुक्तस्य वाक्यस्य गुणदोषवित् ।
उत्तरोत्तरवक्ता च वदतोपि बृहस्पतेः ॥ २-५-८ (११४२२)
धर्मकामार्थमोक्षेषु यथावत्कृतनिश्चयः ।
तथा भुवनकोशस्य सर्वस्यास्य महामतिः ॥ २-५-९ (११४२३)
प्रत्यक्षदर्शी लोकस्य तिर्यगूर्ध्वमधस्तथा ।
साङ्ख्ययोगविभागज्ञो निर्विवित्सुः सुरासुरान् ॥ २-५-१० (११४२४)
सन्धिविग्रहतत्त्वज्ञस्त्वनुमानविभागवित् ।
षाड्गुण्यविधियुक्तश्च सर्वशास्त्रविशारदः ॥ २-५-११ (११४२५)
युद्धगान्धर्वसेवी च सर्वत्राप्रतिघस्तथा ।
एतैश्चान्यैश्च बहुभिर्युक्तो गुणगणैर्मुनिः ॥ २-५-१२ (११४२६)
लोकाननुचरन्सर्वानागमत्तां सभां नृप ।
नारदः सुमहातेजा ऋषिभिः सहितस्तदा ॥ २-५-१३ (११४२७)
पारिजातेन राजेन्द्र पर्वतेन च धीमता ।
सुमुखेन च सौम्येन देवर्षिरमितद्युतिः ॥ २-५-१४ (११४२८)
सभास्थान्पाण्डवान्द्रष्टुं प्रीयमाणो मनोजवः ।
जयाशीर्भिस्तु तं विप्रो धर्मराजानमार्चयत् ॥ २-५-१५ (११४२९)
तमागतमृषिं दृष्ट्वा नारदं सर्वधर्मवित् ।
सहसा पाण्डवश्रेष्ठः प्रत्युत्थायानुजैः सह ॥ २-५-१६ (११४३०)
अभ्यवादयत प्रीत्या विनयावनतस्तदा ।
तदर्हमासनं तस्मै सम्प्रदाय यथाविधि ॥ २-५-१७ (११४३१)
गां चैव मधुपर्कं च सम्प्रदायार्घ्यमेव च ।
अर्चयामास रत्नैश्च सर्वकामैश्च धर्मवित् ॥ २-५-१८ (११४३२)
तुतोष च यथावच्च पूजां प्राप्य युधिष्ठिरात् ।
सोऽर्चितः पाण्डवैः सर्वैर्महर्षिर्वेदपारगः ।
धर्मकामार्थसंयुक्तं पप्रच्छेदं युधिष्ठिरम् ॥ २-५-१९ (११४३३)
नारद उवाच। २-५-२०क्ष् (१३८५)
कच्चिदर्थाश्च कल्पन्ते धर्मे च रमते मनः ।
सुखानि चानुभूयन्ते मनश्च न विहन्यते ॥ २-५-२० (११४३४)
कच्चिदाचरितां पूर्वैर्नरदेवपितामहैः ।
वर्तसे वृत्तिमक्षुद्रां धर्मार्थसहितां त्रिषु ॥ २-५-२१ (११४३५)
कच्चिदर्थेन वा धर्मं धर्मेणार्थमथापि वा ।
उभौ वा प्रीतिसारेण न कामेन प्रबाधसे ॥ २-५-२२ (११४३६)
कच्चिदर्थं च धर्मं च कामं च जयतां वर ।
विभज्य काले कालज्ञः सदा वरद सेवसे ॥ २-५-२३ (११४३७)

कच्चिद्राजगुणैः षड्भिः सप्तोपायांस्तथाऽनघ ।
बलाबलं तथा सम्यक्चतुर्दश परीक्षसे ॥ २-५-२४ (११४३८)
कच्चिदात्सानमन्वीक्ष्य परांश्च जयतां वर ।
तथा सन्धाय कर्माणि अष्टौ भारत सेवसे ॥ २-५-२५ (११४३९)
कच्चित्प्रकृतयः सप्त न लुप्ता भरतर्षभ ।
आढ्यास्तथा व्यसनिनः स्वनुरक्ताश्च सर्वशः ॥ २-५-२६ (११४४०)
कच्चिन्न कृतकैर्दूतैर्ये चाप्यपरिशङ्किताः ।
त्वत्तो वा तव चामात्यैर्भिद्यते मन्त्रितं तथा ॥ २-५-२७ (११४४१)
मित्रोदासीनशत्रूणां कच्चिद्वेत्सि चिकीर्षितम् ।
कच्चित्सन्धिं यथाकालं विग्रहं चोपसेवसे ॥ २-५-२८ (११४४२)
कच्चिद्वृत्तिमुदासीने मध्यमे चानुमन्यसे ।
कच्चिदात्मसमा वृद्धाः शुद्धाः सम्बोधनक्षमाः ॥ २-५-२९ (११४४३)
कुलीनाश्चानुरक्ताश्च कृतास्ते वीरमन्त्रिणः ।
विजयो मन्त्रमूलो हि राज्ञो भवति भारत ॥ २-५-३० (११४४४)
कच्चित्संवृतमन्त्रैस्ते अमात्यैः शास्त्रकोविदैः ।
राष्ट्रं सुरक्षितं तात शत्रुभिर्न विलुप्यते ॥ २-५-३१ (११४४५)
कच्चिन्निद्रावशं नैषि कच्चित्काले विबुद्ध्यसे ।
कच्चिच्चापररात्रेषु चिन्तयस्यर्थमर्थवित् ॥ २-५-३२ (११४४६)
कच्चिन्मन्त्रयसे नैकः कच्चिन्न बहुभिः सह ।
कच्चित्ते मन्त्रितो मन्त्रो न राष्ट्रं परिधावति ॥ २-५-३३ (११४४७)
कच्चिदर्थान्विनिश्चित्य लघुमूलान्महोदयान् ।
क्षिप्रमारभसे कर्तुं न विघ्नयसि तादृशान् ॥ २-५-३४ (११४४८)
कच्चिन्न स्रवे कर्मान्ताः परोक्षास्ते विशङ्किताः ।
सर्वे वा पुनरुत्सृष्टाः संसृष्टं चात्र कारणम् ॥ २-५-३५ (११४४९)
आप्तैरलुब्धैः क्रमिकैस्ते च कच्चिदनुष्ठिताः ।
कच्चिद्राजन्कृतान्येव कृतप्रायाणि वा पुनः ॥ २-५-३६ (११४५०)
विदुस्ते वीर कर्माणि नानवाप्तानि कानिचित् ।
कच्चित्कारणिका धर्मे सर्वशास्त्रेषु कोविदाः ।
कारयन्ति कुमारांश्च योधमुख्यांश्च सर्वशः ॥ २-५-३७ (११४५१)
कच्चित्सहस्रैर्मूर्खाणामेकं क्रीणासि पण्डितम् ।
पण्डितो ह्यर्थकृच्छ्रेषु कुर्यान्नः श्रेयसं परम् ॥ २-५-३८ (११४५२)
कच्चिद्दुर्गाणि सर्वाणि धनधान्यायुधोदकैः ।
यन्त्रैश्च परिपूर्णानि तथा शिल्पिधनुर्धरैः ॥ २-५-३९ (११४५३)
एकोप्यमात्यो मेधावी शूरो दान्तो विचक्षणः ।
राजानं राजपुत्रं वा प्रापयेन्महतीं श्रियम् ॥ २-५-४० (११४५४)
कच्चिदष्टादशान्येषु स्वपक्षे दश पञ्च च ।

त्रिभिस्त्रिभिरविज्ञातैर्वेत्सि तीर्थानि चारकैः ॥ २-५-४१ (११४५५)
कच्चिद्द्विषामविदितः प्रतिपन्नश्च सरवदा ।
नित्ययुक्तो रिपून्सर्वान्वीक्षसे रिपुसूदन ॥ २-५-४२ (११४५६)
कच्चिद्विनयसम्पन्नः कुलपुत्रो बहुश्रुतः ।
अनसूयुरनुप्रष्टा सत्कृतस्ते पुरोहितः ॥ २-५-४३ (११४५७)
कच्चिदग्निषु ते युक्तो विधिज्ञो मतिमानृजुः ।
हुतं च होष्यमाणं च काले वेदयते सदा ॥ २-५-४४ (११४५८)
कच्चिदङ्गेषु निष्णातो ज्योतिपः प्रतिपादकः ।
उत्पातेषु च सर्वेषु दैवज्ञः कुशलस्तव ॥ २-५-४५ (११४५९)
कच्चिन्मुख्या महत्स्वेव मध्यमेषु च मध्यमाः ।
जघन्याश्च जघन्येषु भृत्याः कर्मसु योजिताः ॥ २-५-४६ (११४६०)
अमात्यानुपधातीतान्पितृपैतामहाञ्शुचीन् ।
श्रेष्ठाञ्श्रेष्ठेषु कच्चित्त्वं नियोजयसि कर्मसु ॥ २-५-४७ (११४६१)
कच्चिन्नोग्रेण दण्डेन भृशमुद्विजसे प्रजाः ।
राष्ट्रं तवानुशासन्ति मन्त्रिणो भरतर्षभ ॥ २-५-४८ (११४६२)
कच्चित्त्वां नावजानन्ति याजकाः पतितं यथा ।
उग्रप्रतिग्रहीतारं कामयानमिव स्त्रियः ॥ २-५-४९ (११४६३)
कच्चिद्धृष्टश्च शूरश्च मतिमान्धृतिमाञ्शुचिः ।
कुलीनश्चानुरक्तश्च दक्षः सेनापतिस्तथा। २-५-५० (११४६४)
कच्चिद्बलस्य ते मुख्याः सर्वयुद्धविशारदाः ।
धृष्टावदाता विक्रान्तास्त्वया सत्कृत्य मानिताः ॥ २-५-५१ (११४६५)
कच्चिद्बलस्य भक्तं च वेतनं च यथोचितम् ।
सम्प्राप्तकाले दातव्यं ददासि न विकर्षसि ॥ २-५-५२ (११४६६)
कालातिक्रमणादेते भक्तवेतनयोर्भृताः ।
भर्तुः कुप्यन्ति दौर्गत्यात्सोऽनर्थः सुमहान्स्मृतः ॥ २-५-५३ (११४६७)
कच्चित्सर्वेऽनुरक्तास्त्वां कुलपुत्राः प्रधानतः ।
कच्चित्प्राणांस्तवार्थेषु सन्त्यजन्ति सदा युधि ॥ २-५-५४ (११४६८)
कच्चिन्नैको बहूनर्थान्सर्वशः साम्परायिकान् ।
अनुशास्ति यथाकामं कामात्मा शासनातिगः ॥ २-५-५५ (११४६९)
कच्चित्पुरुषकारेण पुरुषः कर्म शोभयन् ।
लभते मानमधिकं भूयो वा भक्तवेतनम् ॥ २-५-५६ (११४७०)
कच्चिद्विद्याविनीतांश्च नराञ्ज्ञानविशारदान् ।
यथार्हं गुणतश्चैव दानेनाभ्युपपद्यसे ॥ २-५-५७ (११४७१)
कच्चिद्दारान्मनुष्याणां तवार्थे मृत्युमीयुषाम् ।
व्यसनं चाभ्युपेतानां बिभर्षि भरतर्षभ ॥ २-५-५८ (११४७२)
कच्चिद्भयादुपगतं क्षीणं वा रिपुमागतम् ।

युद्धे वा विजितं पार्थ पुत्रवत्परिरक्षसि ॥ २-५-५९ (११४७३)
कच्चित्त्वमेव सर्वस्याः पृथिव्याः पृथिवीपते ।
समश्चानभिशङ्क्यश्च यथा माता यथा पिता ॥ २-५-६० (११४७४)
कच्चिद्व्यसनिनं शत्रुं निशम्य भरतर्षभ ।
अभियासि जवेनैव समीक्ष्य त्रिविधं बलम् ॥ २-५-६१ (११४७५)
यात्रामारभसे दिष्ट्या प्राप्तकालमरिन्दम ।
पार्ष्णिमूलं च विज्ञाय व्यवसायं पराजयम् ॥ २-५-६२ (११४७६)
बलस्य च महाराज दत्त्वा वेतनमग्रतः ।
कच्चिच्च बलमुख्येभ्यः परराष्ट्रे परन्तप ।
उपच्छन्नानि रत्नानि प्रयच्छसि यथार्हतः ॥ २-५-६३ (११४७७)
कच्चिदात्मानमेवाग्रे विजित्य विजितेन्द्रियः ।
पारञ्जिगीषसे पार्थ प्रमत्तानजितेन्द्रियान् ॥ २-५-६४ (११४७८)
कच्चित्ते यास्यतः शत्रून्पर्वं यान्ति स्वनुष्ठिताः ।
साम दानं च भेदश्च दण्डश्च विधिवद्गुणाः ॥ २-५-६५ (११४७९)
तांश्च विक्रमसे जेतुं जित्वा च परिरक्षसि ॥
कच्चिदष्टाङ्गसंयुक्ता चतुर्विधबला चमूः। २-५-६६ (११४८०)
बलमुख्यैः सुनीता ते द्विषतां प्रतिवर्धिनी ॥
कच्चिल्लवं च मुष्टिं च परराष्ट्रे परन्तप। २-५-६७ (११४८१)
अविहाय महाराज निहंसि समरे रिपून् ॥
कच्चित्स्वपरराष्ट्रेषु बहवोऽधिकृतास्तव। २-५-६८ (११४८२)
अर्थान्समधितिष्ठन्ति रक्षन्ति च परस्परम् ॥ २-५-६९ (११४८३)
कच्चिदभ्यवहार्याणि गात्रसंस्पर्शनानि च ।
घ्रेयाणि च महाराज रक्षन्त्यनुमतास्तव। २-५-७० (११४८४)
कच्चित्कोशश्च कोष्ठं च वाहनं द्वारमायुधम् ॥
आयश्च कृतकल्याणैस्तव भक्तैरनुष्ठितः ॥ २-५-७१ (११४८५)
कच्चिदाभ्यन्तरेभ्यश्च बाह्येभ्यश्च विशाम्पते ॥
रक्षस्यात्मानमेवाग्रे तांश्च स्वेभ्यो मिथश्च तान्। २-५-७२ (११४८६)
कच्चिन्न पाने द्यूते वा क्रीडासु प्रमदासु च ।
प्रतिजानन्ति पूर्वाह्णे व्ययं व्यसनजं तव ॥ २-५-७३ (११४८७)
कच्चिदायस्य चार्धेन चतुर्भागेन वा पुनः ।
पादभागैस्त्रिभिर्वापि व्ययः संशुद्ध्यते तव ॥ २-५-७४ (११४८८)
कच्चिज्ज्ञातीन्गुरून्वृद्धा-
न्वणिजः शिल्पिनः श्रितान् ।
अभीक्ष्णमनुगृह्णासि
धनधान्येन दुर्गतान् ॥ २-५-७५ (११४८९)
कच्चिच्चायव्यये युक्ताः सर्वे गणकलेखकाः ।

अनुतिष्ठन्ति पूर्वाह्णे नित्यमायं व्ययं तव ॥ २-५-७६ (११४९०)
कच्चिदर्थेषु सम्प्रौढान्हितकामाननुप्रियान् ।
नापकर्षसि कर्मभ्यः पूर्वमप्राप्य किल्बिषम् ॥ २-५-७७ (११४९१)
कच्चिद्विदित्वा पुरुषानुत्तमाधममध्यमान् ।
त्वं कर्मस्वनुरूपेषु नियोजयसि भारत ॥ २-५-७८ (११४९२)
कच्चिन्न लुब्धाश्चौरा वा वैरिणो वा विशाम्पते ।
अप्राप्तव्यवहारा वा तव कर्मस्वनुष्ठिताः ॥ २-५-७९ (११४९३)
कच्चिन्न चौरैर्लुब्धैर्वा कुमारैः स्त्रीबलेन वा ।
त्वया वा पीड्यते राष्ट्रं कच्चित्तुष्टाः कृषीवलाः २-५-८० (११४९४)
कच्चिद्राष्ट्रे तटाकानि पूर्णानि च बृहन्ति च ।
भागशो विनिविष्टानि न कृषिर्देवमातृका ॥ २-५-८१ (११४९५)
कच्चिन्नं भक्तं बीजं च कर्षकस्यावसीदति ।
प्रत्येकं च शतं वृद्ध्या ददास्यृणमनुग्रहम् ॥ २-५-८२ (११४९६)
कच्चित्स्वनुष्ठिता तात वार्ता ते साधुभिर्जनैः ।
वार्तायां संश्रितस्तात लोकोऽयं सुखमेधते ॥ २-५-८३ (११४९७)
कच्चिच्छूराः कृतप्रज्ञाः पञ्चपञ्च स्वनुष्ठिताः ।
क्षेमं कुर्वन्ति संहत्य राजञ्जनपदे तव ॥ २-५-८४ (११४९८)
कच्चिन्नगरगुप्त्यर्थं ग्रामा नगरवत्कृताः ।
ग्रामवच्च कृताः प्रान्तास्ते च सर्वे त्वदर्पणाः ॥ २-५-८५ (११४९९)
कच्चिद्बलेनानुगताः समानि विषमाणि च ।
पुराणि चौरान्निघ्नन्तश्चरन्ति विषये तव ॥ २-५-८६ (११५००)
कच्चित्स्त्रियः सान्त्वयसि कच्चित्ताश्च सुरक्षिताः ।
कच्चिन्न श्रद्दधास्यासां कच्चिद्गुह्यं न भाषसे ॥ २-५-८७ (११५०१)
कच्चिदात्ययिकं श्रुत्वा तदर्थमनुचिन्त्य च ।
प्रियाण्यनुभवञ्शेषे न त्वमन्तः पुरे नृप ॥ २-५-८८ (११५०२)
कच्चिद्द्वौ प्रथमौ यामौ रात्रेः सुप्त्वा विशाम्पते ।
सञ्चिन्तयसि धर्मार्थौ याम उत्थाय पश्चिमे ॥ २-५-८९ (११५०३)
कच्चिद्दर्शयसे नित्यं मनुष्यान्समलङ्कृतः ।
उत्थाय काले कालज्ञैः सह पाण्डव मन्त्रिभिः ॥ २-५-९० (११५०४)
कच्चिद्रक्ताम्बरधराः खड्गहस्ताः स्वलङ्कृताः ।
उपासते त्वामभितो रक्षणार्थमरिन्दम ॥ २-५-९१ (११५०५)
कच्चिद्दण्ड्येषु यमवत्पूज्येषु च विशाम्पते ।
परीक्ष्य वर्तसे सम्यगप्रियेषु प्रियेषु च ॥ २-५-९२ (११५०६)
कच्चिच्छारीरमाबाधमौषधैर्नियमेन वा ।
मानसं वृद्धसेवाभिः सदा पार्थापकर्षसि ॥ २-५-९३ (११५०७)
कच्चिद्वैद्याश्चिकित्सायामष्टाङ्गायां विशारदाः ।

सुहृदश्चानुरक्ताश्च शरीरे ते हिताः सदा ॥ २-५-९४ (११५०८)
कच्चिन्न लोभान्मोहाद्वा मानाद्वापि विशाम्पते ।
अर्थिप्रत्यर्थिनः प्राप्तान्नापास्यसि कथञ्चन ॥ २-५-९५ (११५०९)
कच्चिन्न लोभान्मोहाद्वा विश्रम्भात्प्रणयेन वा ।
आश्रितानां मनुष्याणां वृत्तिं त्वं संरुणात्सि वै ॥ २-५-९६ (११५१०)
कच्चित्पौरा न सहिता ये च ते राष्ट्रवासिनः ।
त्वया सह विरुध्यन्ते परैः क्रीताः कथञ्चन ॥ २-५-९७ (११५११)
कच्चिन्न दुर्बलः शत्रुर्बलेन परिपीडितः ।
मन्त्रेण बलवान्कश्चिदुभाभ्यां च कथञ्चन ॥ २-५-९८ (११५१२)
कच्चित्सर्वेऽनुरक्तास्त्वां भूमिपालाः प्रधानतः ।
कच्चित्प्राणांस्त्वदर्थेषु सन्त्यजन्ति त्वया हृताः ॥ २-५-९९ (११५१३)
कच्चित्ते सर्वविद्यासु गुणतोऽर्चा प्रवर्तते ।
ब्राह्मणानां च साधूनां तव नैः श्रेयसी शुभा ।
दक्षिणास्त्वं ददास्येषां नित्यं स्वर्गापवर्गदाः ॥ २-५-१०० (११५१४)
कच्चिद्धर्मे त्रयीमूले पूर्वैराचरिते जनैः ।
यतमानस्तथा कर्तुं तस्मिन्कर्मणि वर्तसे ॥ २-५-१०१ (११५१५)
कच्चित्तव गृहेऽन्नानि स्वादून्यश्नन्ति वै द्विजाः ।
गुणवन्ति गुणोपेतास्तवाध्यक्षं सदक्षिणम् ॥ २-५-१०२ (११५१६)
कच्चित्क्रतूनेकचित्तो वाजपेयांश्च सर्वशः ।
पौण्डरीकांश्च कार्त्स्न्येन यतसे कर्तुमात्मवान् ॥ २-५-१०३ (११५१७)
कच्चिज्ज्ञातीन्गुरून्वृद्धान्दैवतांस्तापसानपि ।
चैत्यांश्च वृक्षान्कल्याणान्ब्राह्मणांश्च नमस्यसि ॥ २-५-१०४ (११५१८)
कच्चिच्छोको न मन्युर्वा त्वया प्रोत्पाद्यतेऽनघ ।
अपि मङ्गलहस्तश्च जनः पार्श्वे न तिष्ठति ॥ २-५-१०५ (११५१९)
कच्चिदेषा च ते बुद्धिर्वृत्तिरेषा च तेऽनघ ।
आयुष्या च यशस्या च धर्मकामार्थदर्शिनी ॥ २-५-१०६ (११५२०)
एतया वर्तमानस्य बुद्ध्या राष्ट्रं न सीदति ।
विजित्य च महीं राजा सोत्यन्तं सुखमेधते ॥ २-५-१०७ (११५२१)
कच्चिदार्यो विशुद्धात्मा क्षारितश्चौरकर्मणि ।
अदृष्टशास्त्रकुशलैर्न लोभाद्वध्यते शुचि ॥ २-५-१०८ (११५२२)
दुष्टो गृहीतस्तत्कारितज्ञैर्दृष्टः सकारणः ।
कच्चिन्न मुच्यते स्तेनो द्रव्यलोभान्नरर्षभ ॥ २-५-१०९ (११५२३)
उत्पन्नानकच्चिदाढ्यस्य दरिद्रस्य च भारत ।
अर्थान्न मिथ्या पश्यन्ति तवामात्या हृता धनैः ॥ २-५-११० (११५२४)
नास्तिक्यमनृतं क्रोधं प्रमादं दीर्घसूत्रताम् ।
अदर्शनं ज्ञानवतामालस्यं पञ्चवृत्तिताम् ।

एकचिन्तनमर्थानामनर्थज्ञैश्च चिन्तनम् ॥ २-५-१११ (११५२५)
निश्चितानामनारम्भं मन्त्रस्यापरिरक्षणम् ।
मङ्गलाद्यप्रयोगं च प्रत्युत्थानं च सर्वतः ॥ २-५-११२ (११५२६)
कच्चित्त्वं वर्जयस्येतान्राजदोषांश्चतुर्दश ।
प्रायशोयैर्विनश्यन्ति कृतमूलापि पार्थिवः ॥ २-५-११३ (११५२७)
कच्चित्ते सफला वेदाः कच्चित्ते सफळं धनम् ।
कच्चित्ते सफला दाराः कच्चित्ते सफलं श्रुतम् ॥ २-५-११४ (११५२८)
युधिष्ठिर उवाच ।२-५-११५क्ष् (१३८६)
कथं वै सफला वेदाः कथं वै सफलं धनम् ।
कथं वै सफला दाराः कथं वै सफलं श्रुतम् ॥ २-५-११५ (११५२९)
नारद उवाच। २-५-११६क्ष् (१३८७)
अग्निहोत्रफला वेदा दत्तभुक्तफलं धनम् ।
रतिपुत्रफला दाराः शीलवृत्तफलं श्रुतम् ॥ २-५-११६ (११५३०)
वैशम्पायन उवाच। २-५-११७क्ष् (१३८८)
एतदाख्याय स मुनिर्नारदो वै महातपाः ।
पप्रच्छानन्तरमिदं धर्मात्मानं युधिष्ठिरम् ॥ २-५-११७ (११५३१)
नारद उवाच। २-५-११८क्ष् (१३८९)
कच्चिदभ्यागता दूराद्वणिजो लाभकारणात् ।
यथोक्तमवहार्यन्ते शुल्कं शुल्कोपजीविभिः ॥ २-५-११८ (११५३२)
कच्चित्ते पुरुषा राजन्पुरे राष्ट्रे च मानिताः ।
उपानयन्ति पण्यानि उपाधाभिरवञ्चिताः ॥ २-५-११९ (११५३३)
कच्चिच्छृणोषि वृद्धानां धर्मार्थसहिता गिरः ।
नित्यमर्थविदां तात यथाधर्मार्थदर्शिनाम् ॥ २-५-१२० (११५३४)
कच्चित्ते कृषितन्त्रेषु गोषु पुष्पफलेषु च ।
धर्मार्थं च द्विजातिभ्यो दीयेते मधुसर्पिषी ॥ २-५-१२१ (११५३५)
द्रव्योपकरणं किञ्चित्सर्वदा सर्वशिल्पिनाम् ।
चातुर्मास्यावरं सम्यङ्नियतं सम्प्रयच्छसि ॥ २-५-१२२ (११५३६)
कच्चित्कृतं विजानीषे कर्तारं च प्रशंससि ।
सतां मध्ये महाराज सत्करोषि च पूजयन् ॥ २-५-१२३ (११५३७)
कच्चित्सूत्राणि सर्वाणि गृह्णासि भरतर्षभ ।
हस्तिसूत्राश्वसूत्राणि रथसूत्राणि वा विभो ॥ २-५-१२४ (११५३८)
कच्चिदभ्यस्यते सम्यग्गृहे ते भरतर्षभ ।
धनुर्वेदस्य सूत्रं वै यन्त्रसूत्रं च नागरम् ॥ २-५-१२५ (११५३९)
कच्चिदस्त्राणि सर्वाणि ब्रह्मदण्डश्च तेऽनघ ।
विषयोगास्तथा सर्वे विदिताः शत्रुनाशनाः ॥ २-५-१२६ (११५४०)
कच्चिदग्निभयाच्चैव सर्वं व्यालभयात्तथा ।

रोगरक्षोभयाच्चैव राष्ट्रं स्वं परिरक्षशि ॥ २-५-१२७ (११५४१)
कच्चिदन्धांश्च मूकांश्च पङ्गून्व्यङ्गानबान्धवान् ।
पितेव पासि धर्मज्ञ तथा प्रव्रजितानपि ॥ २-५-१२८ (११५४२)
षडवर्था महाराज कच्चित्ते पृष्ठतः कृताः ।
निद्राऽऽलस्यं भयं क्रोधो मार्दवं दीर्घसूत्रता ॥ २-५-१२९ (११५४३)
वैशम्पायन उवाच। २-५-१३०क्ष् (१३९०)
ततः कुरूणामृषभो महात्मा
श्रुत्वा गिरो ब्राह्मणसत्तमस्य ।
प्रणम्य पादावभिवाद्य तुष्टो
राजाऽब्रवीन्नारदं देवरूपम् ॥ २-५-१३० (११५४४)
एवं करिष्यामि यथा त्वयोक्तं
प्रज्ञा हि मे भूय एवाभिवृद्धा ।
उक्त्वा तथा चैव चकार राजा
लेभे महीं सागरमेखलां च ॥ २-५-१३१ (११५४५)
नारद उवाच। २-५-१३२क्ष् (१३९१)
एवं यो वर्तते राजा चातुर्वर्ण्यस्य रक्षणे ।
स विहृत्येह सुसुखी शुक्रस्यैति सलोकताम् ॥ ॥ २-५-१३२ (११५४६)

इति श्रीमन्महाभारते सभापर्वणि पञ्चमोऽध्यायः ॥ ५.।
Mahabharata - Sabha Parva - Chapter Footnotes

२-५-२४ षड्गुणाः सन्धिविग्रहादयः ।सप्तोपायाः मन्त्रौषधेन्द्रजालसहिताः सामादयः। स वपरपक्षबलावलसहिता एतएव चतुर्दश ॥
२-५-२५ अष्टौ कर्माणि- कृषिर्वणिक्पतो दुर्ग सेतुः कुञ्जरबन्धनम् ।खन्याकरकरादानं शून्यानां च निवेशनमित्युक्तानि ॥
२-५-२६ सप्तप्रकृतयः स्वाम्यमात्यसुहृत्कोशराष्ट्रदुर्गबलाख्याः ॥
२-५-२७ कच्चिन्न तर्कैर्दूतैर्वा इति ख-पाठः ॥
२-५-२८ शुचयो जीवितक्षमाः इति ख-पाठः ॥
२-५-३५ कर्मान्ताः कृष्यादयः ॥
२-५-३७ कारणिकाः युद्धोपकरणयुक्ताः ॥
२-५-४१ मन्त्री पुरोहितश्चैव युवराजश्चमूपतिः ।पञ्चमो द्वारपालश्च षष्ठोऽन्तर्वेश इकस्तथा १, कारागाराधिकारी च द्रव्यसञ्चयकृत्तथा। कृत्याकृत्येषु चार्थानां नवमो विनियोजकः २, प्रदेष्टा नगराध्यक्षः कार्यानिर्माणकृत्तथा। धर्माध्य क्षः सभाध्यक्षो दण्डपालस्त्रिपञ्चमः ३, षोडशो दुर्गपालश्च

तथा राष्ट्रान्त पालकः अटवीपालकान्तानि तीर्थान्यष्टादशैव
तु ४, चारान्विचारयेत्तीर्थेष्वात मनश्च परस्य च
। पाखण्डादीनविज्ञातानन्योन्यमितरेष्वपि ५, मन्त्रिणं युवरा जं च
हित्वा स्वेषु पुरोहितमिति ॥
२-५-६७ अष्टाङ्गसंयुक्ता-रथा नागा हया योधाः पत्तयः कर्मकारकाः
। चारा दैशिकमुख्याश च ध्वजिन्यष्टाङ्गिका मता। चतुर्विधबला
मौलमैत्रमृत्याटविकैर्बलैर्युक्ता। बलमुख्यैः सेनापतिभिः
प्रतिवर्धिनी प्रातिकूल्येन च्छेदिनी ॥
२-५-६८ लवः सस्यच्छेदनकालः । मुष्टिः सस्यानां गोपनकालः ॥
२-५-७१ कोष्ठं धान्यस्थानम् ॥
२-५-७३ कच्चिन्नेति पानादिव्यसनजं व्ययं तव पूर्वाह्णे
धर्माचरणकाले भृत्या न प्रत इजानन्ति नावेदयन्ति ॥
२-५-७६ अनुतिष्ठन्ति निवेदयन्ति ॥
२-५-७९ अप्राप्तव्यवहारा अप्रौढाः ॥
२-५-८४ प्रतिग्रामं पञ्चपञ्चेति । तेच-प्रशास्ता समाहर्ता
संविधाता लेखकः साक्षी चे ति ॥
२-५-८८ आत्ययिकमकल्याणम् ॥
२-५-९३ आबाधं दुःखम् । नियमेन पथ्याशनादिना ॥
२-५-९४ निदानं पूर्वलिङ्गानि रूपाण्युपशयस्तथा । सम्प्राप्तिरौषधी
रोगी परिचारक एवं चेत्यष्टाङ्गानि ॥
२-५-१०२ तवाध्यक्षं त्वत्समक्षण् ॥
२-५-१०८ क्षारितः मिथ्यापवादैः पातितः ॥
२-५-११३ कृतमूलाः अपीति छेदः ॥
२-५-१२६ ब्रह्मदण्डः अभिचारः ॥

---

सभ-००६
॥ श्रीः ॥
२.६. अध्यायः ६

Mahabharata - Sabha Parva - Chapter Topics
उत्तमसभालाभगर्वितेन युधिष्ठिरेण सभाविषयकप्रश्ने नारदस्य
इन्द्रादिसभावर्ण नप्रतिज्ञानम् ॥ १.।
Mahabharata - Sabha Parva - Chapter Text

वैशमापायन उवाच ।
सम्पूज्याथाभ्यनुज्ञातो महर्षेर्वचनात्परम् ।

प्रत्युवाचानुपूर्व्येण धर्मराजो युधिष्ठिरः ॥ २-६-१ (११५४७)
भगवत्याय्यमाहैतं यथावद्धर्मनिश्चयम् ।
यथाशक्ति यथान्यायं क्रियतेऽयं विधिर्मया ॥ २-६-२ (११५४८)
राजभिर्यद्यथा कार्यं, पुरा वै तन्न संशयः ।
यथान्यायोपनीतार्थं कृतं हेतुमदर्थवत् ॥ २-६-३ (११५४९)
वयं तु सत्पथं तेषां यातुमिच्छामहे प्रभो ।
न तु शक्यं तथा गन्तुं यथा तैर्नियतात्मभिः ॥ २-६-४ (११५५०)
वैशम्पायन उवाच। २-६-५क्ष् (१३९२)
एकमुक्त्वा स धर्मात्मा वाक्यं तदभिपूज्य च ।
ग तं तु विश्रान्तमासीनं देवर्षिममितद्युतिम्'॥
मुहूर्तात्प्राप्तकालं च दृष्ट्वा लोकचरं मुनिम् ॥ २-६-५ (११५५१)
नादरदं सुस्थमासीनमुपासीनो युधिष्ठिरः ।
अपृच्छत्पाण्डवस्तत्र राजमध्ये माहद्युतिः ॥ २-६-६ (११५५२)
भवात्सञ्चरते लोकान्सदा नानाविधान्बहून् ।
ब्रह्मणा निर्मितान्पूर्वं प्रेक्षमाणो मनोजवः। २-६-७ (११५५३)
ईदृशी भविता काचिद्दृष्टपूर्वा सभा क्वचित् ।
इतो वा श्रेयसी ब्रह्मंस्तन्ममाचक्ष्व पृच्छतः ॥ २-६-८ (११५५४)
वैशम्पायन उवाच। २-६-९क्ष् (१३९३)
तच्छ्रुत्वा नारदस्तस्य धर्मराजस्य भाषितम् ।
पाण्डवं प्रत्युवाचेदं स्मयन्मधुरया गिरा ॥ २-६-९ (११५५५)
नारद उवाच। २-६-१०क्ष् (१३९४)
मानुषेषु न मे तात दृष्टपूर्वा न च श्रुता ।
सभा मणिमयी राजन्यथेयं तव भारत ॥ २-६-१० (११५५६)
सभां तु पितृराजस्य वरुणस्य च धीमतः ।
कथयिष्ये तथेन्द्रस्य कैलासनिलयस्य च ॥ २-६-११ (११५५७)
ब्रह्मणश्च सभां दिव्यां कथयिष्ये गतक्लमाम् ।
दिव्यादिव्यैरभिप्रायैरुपेतां विश्वरूपिणीम् ॥ २-६-१२ (११५५८)
देवैः पितृगणैः साध्यैर्यज्वभिर्नियतात्मभिः ।
जुष्टां मुनिगणैः शान्तैर्वेदयज्ञैः सदक्षिणैः ॥
यदि ते श्रवणे बुद्धिर्वर्तते भरतर्षभ ॥ २-६-१३ (११५५९)
नारदेनैवमुक्तस्तु धर्मराजो युधिष्ठिरः ।
प्राञ्जलिर्भ्रातृभिः सार्धं तैश्च सर्वैर्द्विजोत्तमैः ॥ २-६-१४ (११५६०)
नारदं प्रत्यवाचेदं धर्मराजो महामनाः ।
सभाः कथय ताः सर्वाः श्रोतुमिच्छामहे वयम् ॥ २-६-१५ (११५६१)
किन्द्रव्यास्ताः सभा ब्रह्मन्किंविस्ताराः किमायताः ।
पितामहं च के तस्यां सभायां पर्युपासते ॥ २-६-१६ (११५६२)

वासवं देवराजं च यमं वैवस्वतं च के ।
वरुणं च कुबेरं च सभायां पर्युपासते ॥ २-६-१७ (११५६३)
एतत्सर्वं यथान्यायं ब्रह्मर्षे वदतस्तव ।
श्रोतुमिच्छाम सहिताः परं कौतूहलं हि नः ॥ २-६-१८ (११५६४)
एवमुक्तः पाण्डवेन नारदः प्रत्यभाषत ।
क्रमेण राजन्दिव्यास्ताः श्रूयन्तामिह नः सभाः ॥ ॥ २-६-१९ (११५६५)

इति श्रीमन्महाभारते सभापर्वणि मन्त्रपर्वणि षष्ठोऽध्यायः ॥ ६.।
Mahabharata - Sabha Parva - Chapter Footnotes

२-६-११ कैलासनिलयस्य कुबेरस्य ॥

---

सभ-००७
॥ श्रीः ॥
२.७. अध्यायः ७

Mahabharata - Sabha Parva - Chapter Topics
इन्द्रसभावर्णनम् ॥ १.।
Mahabharata - Sabha Parva - Chapter Text

नारद उवाच ॥
शक्रस्य तु सभा दिव्या भास्वरा कर्मनिर्मिता ।
स्वयं शक्रेण कौरव्य निर्जितार्कसमप्रभा ॥ २-७-१ (११५६६)
विस्तीर्णा योजनशतं शतमध्यर्धमायता ।
वैहायसी कामगमा पञ्चयोजनमुच्छ्रिता। २-७-२ (११५६७)
जराशोकक्लमापेता निरातङ्का शिवा शुभा ।
वेश्मासनवती रम्या दिव्यपादपशोभिता ॥ २-७-३ (११५६८)
तस्यां देवेश्वरः पार्थ सभायां परमासने ।
आस्ते शच्या महेन्द्राण्या श्रिया लक्ष्म्या च भारत। २-७-४ (११५६९)
बिभ्रद्वपुरनिर्देश्यं किरीटी लोहिताङ्गदः ।
विरजोम्बरश्चित्रमाल्यो ह्रीकीर्तिद्युतिभिः सह ॥ २-७-५ (११५७०)
तस्यामुपासते नित्यं महात्मानं शतक्रतुम् ।
मरुतः सर्वशो राजन्सर्वे च गृहमेधिनः ॥ २-७-६ (११५७१)
सिद्धा देवर्षयश्चैव साध्या देवगणास्तथा ।
मरुत्वन्तश्च सहिता भास्वन्तो हेममालिनः ॥ २-७-७ (११५७२)
एते सानुचराः सर्वे दिव्यरूपाः स्वलङ्कृताः ।
उपासते महात्मान देवराजमरिन्दमम् ॥ २-७-८ (११५७३)

तथा देवर्षयः सर्वे पार्ते शक्रमुपासते ।
अमला धूतपाप्मानो दीप्यमाना इवाग्नयः ॥ २-७-९ (११५७४)
तेजस्विनः सोमसुतो विशोका विगतज्वराः ।
पराशरः पर्वतश्च तथा सावर्णिगालवौ ॥ २-७-१० (११५७५)
गएकतश्च द्वितश्चैव त्रितश्चैव महामतिः'।
शङ्खश्च लिखितश्चैव तथा गौरशिरा मुनिः ।
दुर्वासाः क्रोधनः श्येनस्तथा दीर्घतमा मुनिः ॥ २-७-११ (११५७६)
पवित्रपाणिः सावर्णियाज्ञवल्क्योऽथ भालुकिः ।
उद्दालकः श्वेतकेतुस्ताण्डो भाण्डायनिस्तथा ॥ २-७-१२ (११५७७)
हविष्मांश्च गरिष्ठश्च हरिश्चन्द्रश्च पार्थिवः ॥
हृद्यश्चोदरशाण्डिल्यः पाराशर्यः कृषीवलः ॥ २-७-१३ (११५७८)
वातस्कन्धो विशाखश्च विधाता काल एव च ।
करालदन्तस्त्वष्टा च विश्वकर्मा च तुम्बुरुः ॥ २-७-१४ (११५७९)
अयोनिजा योनिजाश्च वायुभक्षा हुताशिनः ।
ईशानं सर्वलोकस्य वज्रिणं समुपासते ॥ २-७-१५ (११५८०)
सहदेवः सुनीथश्च वाल्मीकिश्च महातपाः ।
समीकः सत्यवाक्चैव प्रचेताः सत्यसङ्गरः ॥ २-७-१६ (११५८१)
मेधातिथिर्वामदेवः पुलस्त्यः पुलहः क्रतुः ।
मरुत्तश्च मरीचिश्च स्थाणुश्चात्र महातपाः ॥ २-७-१७ (११५८२)
कक्षीवान्गौतमस्तार्क्ष्यस्तथा वैश्वानरो मुनिः ।
मुनिः कालकवृक्षीय आश्राव्योऽथ हिरण्मयः ॥ २-७-१८ (११५८३)
संवर्तो देवहव्यश्च विष्वक्सेनश्च वीर्यवान् ।
दिव्या आपस्तथौषध्यः श्रद्धा मेधा सरस्वती ॥ २-७-१९ (११५८४)
अर्थो धर्मश्च कामश्च विद्युतश्चैव पाण्डव ।
जलवाहास्तथा मेघा वायवः स्तनयित्नवः ॥ २-७-२० (११५८५)
प्राचीदिग्यज्ञवाहाश्च पावकाः सप्तविंशतिः ।
अग्नीषोमौ तथेन्द्राग्नी मित्रश्च सविताऽर्यमा ॥ २-७-२१ (११५८६)
भगो विश्वे साध्याश्च गुरुः शुक्रस्तथैव च ।
विश्वावसुश्चित्रसेनः सुमनस्तरुणस्तथा ॥ २-७-२२ (११५८७)
यज्ञाश्च दक्षिणाश्चैवं ग्रहास्तोभाश्च भारत ।
यज्ञवाहाश्च ये मन्त्राः सर्वे तत्र समासते ॥ २-७-२३ (११५८८)
तथैवाप्सरसो राजन् गरम्भोर्वश्यथ मेनका ।
घृताची पञ्चचूडा च विप्रचित्तिपुरोगमाः ॥ २-७-२४ (११५८९)
विद्याधराश्च राजेन्द्र' गन्धर्वाश्च मनोरमाः ।
नृत्यवादित्रगीतैश्च हास्यैश्च विविधैरपि ॥ २-७-२५ (११५९०)
रमयन्ति स्म नृपते देवराजं शतक्रतुम् ।

स्तुतिभिर्मङ्गलैश्चैव वस्तुवन्तः कर्मभिस्तथा ॥ २-७-२६ (११५९१)
विक्रमैश्च महात्मानं बलवृत्रनिषूदनम् ।
ब्रह्मराजर्षयश्चैव सर्वे देवर्षयस्तथा ॥ २-७-२७ (११५९२)
विमानैर्विविधैर्दिव्यैर्दीप्यमाना इवाग्नयः ।
स्रग्विणो भूषिताः सर्वे यान्ति चायान्ति चापरे ॥ २-७-२८ (११५९३)
बृहस्पतिश्च शुक्रश्च नित्यमास्तां हि तत्र वै ॥
एते चान्ये च बहवो महात्मानो यतव्रताः ॥ २-७-२९ (११५९४)
विमानैश्चन्द्रसङ्काशैः सोमवत्प्रियदर्शनाः ।
ब्रह्मणो वचनाद्राजन्भृगुः सप्तर्षयस्तथा ॥ २-७-३० (११५९५)
एषा सभा मया राजन्दृष्टा पुष्करमालिनी ।
शतक्रतोर्महाबाहो याम्यामपि सभां शृणु ॥ ॥ २-७-३१ (११५९६)

इति श्रीमन्महाभारते सभापर्वणि मन्त्रपर्वणि सप्तमोऽध्यायः ॥ ७.।
Mahabharata - Sabha Parva - Chapter Footnotes

२-७-१३ पाराशर्यः कपिष्ठल इति घ ।पाठः ॥
२-७-२१ ब्रह्मणोङ्गात्प्रसूतोऽग्निरङ्गिरा इति विश्रुतः
।दक्षिणाग्निर्गार्हपत्या हवनीयाविति त्रयी।निर्मन्थ्यो वैद्युतः शूरः
संवर्तो लौकिकस्तथा।२-७-३१ पुष्करमालिनी नामतः। ।

---

सभ-००८
॥ श्रीः ॥
२.८. अध्यायः ८

Mahabharata - Sabha Parva - Chapter Topics
यमसभावर्णमम् ॥ १.।
Mahabharata - Sabha Parva - Chapter Text

नारद उवाच ।
कथयिष्ये सभां याम्यां युधिष्ठिर निबोध ताम् ।
वैवस्वतस्य यां पार्थ विश्वकर्मा चकार ह ॥ २-८-१ (११५९७)
तैजसी सा सभा राजन्बभूव शतयोजना ।
विस्तारायामसम्पन्ना भूयसी चापि पाण्डव ॥ २-८-२ (११५९८)
अर्कप्रकाशा भ्राजिष्णुः सर्वतः कामरूपिणी ।
नातिशीता च चात्युष्णा मनसश्च प्रहर्षिणी ॥ २-८-३ (११५९९)
न शोको न जरा तस्यां क्षुत्पिपासे न चाप्रियम् ।
न च दैन्यं क्लमो वाऽपि प्रतिकूलं न चाप्युत ॥ २-८-४ (११६००)

सर्वे कामाः स्थितास्तस्यां ये दिव्या ये च मानुषाः ।
रसवच्च प्रभूतं च भक्ष्यं भोज्यमरिन्दम ॥ २-८-५ (११६०१)
लेह्यं चोष्यं च पेयं च हृद्यं स्वादु मनोहरम् ।
पुण्यगन्धाः स्रजस्तस्य नित्यं कामफला द्रुमाः ॥ २-८-६ (११६०२)
रसवन्ति च तोयानि शीतान्युष्णानि चैव हि ।
तस्यां राजर्षयः पुण्यास्तथा ब्रह्मर्षयोऽमलाः ॥ २-८-७ (११६०३)
यमं वैवस्वतं तात प्रहृष्टाः पर्युपासते ।
ययातिर्नहुषः पुरुर्मान्धाता सोमको नुगः ॥ २-८-८ (११६०४)
त्रसदस्युश्च राजर्षिः कृतवीर्यः श्रुतश्रवाः ।
अरिष्टनेमिः सिद्धश्च कृतवेगः कृतिर्निमिः ॥ २-८-९ (११६०५)
प्रतर्दनः शिबिर्मत्स्यः पृथुलाक्षो बृहद्रथः ।
वार्तो मरुत्तः कुषिकः साङ्काश्यः साङ्कृतिर्ध्रुवः ॥ २-८-१० (११६०६)
चतुरश्वः सदस्योर्मिः कार्तवीर्यश्च पार्थिवः ।
भरतः सुरथश्चैव सुनीथो निशठोऽनलः ॥ २-८-११ (११६०७)
दिवोदासश्च सुमना अम्बरीषो भगीरथः ।
व्यश्वः सदश्वो वाध्र्यश्वः पृथुवेगः पृथुश्रवाः ॥ २-८-१२ (११६०८)
पृषदश्वो वसुमनाः क्षुपश्च सुमहाबलः ।
रुषद्गुर्वृषसेनश्च पुरुकुत्सो ध्वजी रथी ॥ २-८-१३ (११६०९)
आर्ष्टिषेणो दिलीपश्च महात्मा चाप्युशीनरः ।
औशीनरिः पुण्डरीकः शर्यातिः शरभः शुचिः ॥ २-८-१४ (११६१०)
अङ्गो रिष्टश्च वेनश्च दुष्यन्तः सृञ्जयो जयः ।
भाङ्गासुरिः सुनीथश्च निषधोऽथ वहीनरः ॥ २-८-१५ (११६११)
करन्धमो बाह्लिकश्च सुद्युम्नो बलवान्मधुः ।
ऐलो मरुत्तश्च तथा बलवान्पृथिवीपतिः ॥ २-८-१६ (११६१२)
कपोतरोमा तृणकः सहदेवार्जुनौ तथा ।
व्यश्वः साश्वः कृशाश्वश्च शशबिन्दुश्च पार्थिवः ॥ २-८-१७ (११६१३)
रामो दाशरथिश्चैव लक्ष्मणोऽथ प्रतर्दनः ।
अलर्कः कक्षसेनश्च गयो गौराओश्व एव च ॥ २-८-१८ (११६१४)
जामदग्न्यश्च रामश्च नाभागसगरौ तथा ।
भूरिद्युम्नो महाश्वश्च पृथाशावो जनकस्तथा ॥ २-८-१९ (११६१५)
राजा वैन्यो वारिसेनः पुरिजिज्जनमेजयः ।
ब्रह्मदत्तस्त्रिगर्तिश्च राजोपरिचरस्तथा ॥ २-८-२० (११६१६)
इन्द्रद्युम्नो भीमजानुर्गौरपृष्ठोऽनघो लयः ।
पद्मोऽथ मुचुकुन्दश्च भूरिद्युम्नः प्रसेनजित् ॥ २-८-२१ (११६१७)
अरिष्टनेमिः सुद्युम्नः पृथुलाश्वोऽष्टकस्तथा ।
शतं मत्स्या नृपतयः शतं नीपाः शतं हयाः ॥ २-८-२२ (११६१८)

धृतराष्ट्राश्चैकशतमशीतिर्जनमेजयाः ।
शतं च ब्रह्मदत्तानां वीरिणामीरिणां शतम् ॥ २-८-२३ (११६१९)
भीष्माणां द्वे शतेऽप्यत्र भीमानां तु तथा शतम् ।
शतं च प्रतिविन्ध्यानां शतं नागाः शतं हयाः ॥ २-८-२४ (११६२०)
पलाशानां शतं ज्ञेयं शतं काशकुशादयः ।
शान्तनुश्चैव राजेन्द्र पाण्डुश्चैव पिता तव ॥ २-८-२५ (११६२१)
उशङ्गवः शतरथो देवराजो जयद्रथः ।
वृषदर्भश्च राजर्षिर्बुद्धिमान्सहमन्त्रिभिः ॥ २-८-२६ (११६२२)
अथापरे सहस्राणि ये गताः शसबिन्दवः ।
इष्ट्वाऽश्वमेधैर्बहुभिर्महद्भिर्भूरिदक्षिणैः ॥ २-८-२७ (११६२३)
एते राजर्षयः पुण्याः कीर्तिमन्तो बहुश्रुताः ।
तस्यां सभायां राजेन्द्र वैवस्वतमुपासते ॥ २-८-२८ (११६२४)
अगस्त्योऽथ मतङ्गश्च कालो मृत्युस्तथैव च ।
यज्वानश्चैव सिद्धाश्च ये न योगशरीरिणः ॥ २-८-२९ (११६२५)
अग्निष्वात्ताश्च पितरः फेनपाश्चोष्मपाश्च ये ।
सुधावन्तो बर्हिषदो मूर्तिमन्तस्तथाऽपरे ॥ २-८-३० (११६२६)
कालचक्रं च साक्षाच्च भगवान्हव्यवाहनः ।
नरा दुष्कृतकर्माणो दक्षिणायनमृत्यवः ॥ २-८-३१ (११६२७)
कालस्य नयने युक्ता यमस्य पुरुपाश्च ये ।
तस्यां शिंशुपपालाशास्तथा काशकुशादयः ॥ २-८-३२ (११६२८)
उपासते धर्मराजं मूर्तिमन्तो जनाधिप ।
एते चान्ये च बहवः पितृराजसभासदः ।
न शक्याः परिसङ्ख्यातुं नामभिः कर्मभिस्तथा । २-८-३३ (११६२९)
असम्बाधा हि सा पार्थ रम्या कामगमा सभा ।
दीर्घकालं तपस्तप्त्वा निर्मिता विश्वकर्मणा। २-८-३४ (११६३०)
ज्वलन्ती भासमाना च तेजसा स्वेन भारत ।
तामुग्रतपसो यान्ति सुव्रताः सत्यवादिनः ॥ २-८-३५ (११६३१)
शान्ताः सन्यासिनः शुद्धाः पूताः पुण्येन कर्मणा ।
सर्वे भास्वरदेहाश्च सर्वे च विरजोम्बराः ॥ २-८-३६ (११६३२)
चित्राङ्गदाश्चित्रमाल्याः सर्वे ज्वलितकुण्डलाः ।
सुकृतैः कर्मभिः पुण्यैः पारिबर्हैश्च भूषिताः ॥ २-८-३७ (११६३३)
गन्धर्वाश्च महात्मानः सङ्घशश्चाप्सरोगणाः ।
वादित्रं नृत्तगीतं च हास्यं लास्यं च सर्वशः ॥ २-८-३८ (११६३४)
पुण्याश्च गन्धाः शब्दाश्च तस्यां पार्थ समन्ततः ।
दिव्यानि चैव माल्यानि उपतिष्ठन्ति नित्यशः ॥ २-८-३९ (११६३५)
शतं शतसहस्राणि धर्मिणां तं प्रजेश्वरम् ।

उपासते महात्मानं रूपयुक्ता मनस्विनः ॥ २-८-४० (११६३६)
ईदृशी सा सभा राजन्पितृराज्ञो महात्मनः ।
वरुणस्यापि वक्ष्यामि सभां पुष्करमालिनीम् ॥ ॥ २-८-४१ (११६३७)

इति श्रीमन्महाभारते सभापर्वणि मन्त्रपर्वणि अष्टमोऽध्यायः ॥ ८.।
Mahabharata - Sabha Parva - Chapter Footnotes

२-८-१८ रामइति रामलक्ष्मणयोर्विष्णुशेषरूपेण स्वस्थानस्थयोरपि रूपान्तरेण उपासकानु ग्रहार्थमत्रावस्थानम् ॥
२-८-२३ धृतराष्टाश्चैकशतमिति पुराणेषु प्रायेणाधिकारिणामेव कीर्तनात्तेषां च प्रति कल्पं समाननामरूपकर्मत्वादनेककल्पं धर्मसभावासिनां तेषां बहुत्वं युक्तम् ।एवमन्येषामपि ॥
२-८-३१ दुष्कृतकर्माणो विद्याविहीनकर्ममात्रनिष्टाः ॥

---

सभ-००९
॥ श्रीः ॥
२.९. अध्यायः ९

Mahabharata - Sabha Parva - Chapter Topics
वरुणसभावर्णनम् ॥ १.।
Mahabharata - Sabha Parva - Chapter Text

नारद उवाच ॥
युधिष्ठिर सभा दिव्या वरुणस्यामितप्रभा ।
प्रमाणेन यथा याम्या शुभप्राकारतोरणा ॥ २-९-१ (११६३८)
अन्तः सलिलमास्थाय विहिता विश्वकर्मणा ।
दिव्यै रत्नमयैर्वृक्षैः फलपुष्पप्रदैर्युता ॥ २-९-२ (११६३९)
नीलपीतैः सिताः श्यामैः सितैर्लोहितकैरपि ।
अवतानैस्तथा गुल्मैर्मञ्जरीजालधारिभिः ॥ २-९-३ (११६४०)
तथा शकुनयस्तस्यां विचित्रा मधुरस्वराः ।
अनिर्देश्या वपुष्मन्तः शतशोऽथ सहस्रशः ॥ २-९-४ (११६४१)
सा सभा सुखसंस्पर्शा न शीता न च धर्मदा ।
वेश्मासनवती रम्या सिता वरुणपालिता ॥ २-९-५ (११६४२)
यस्यामास्ते स वरुणो वारुण्या च समन्वितः ।
दिव्यरत्नाम्बरधरो दिव्याभरणभूषितः ॥ २-९-६ (११६४३)
गद्वितीयेन तु नाम्ना वै गौरीति भुवि विश्रुता ।

पत्न्या सवरुणो देवः प्रमोदति सुखी सुखम्'॥ २-९-७ (११६४४)
स्रग्विणो दिव्यगन्धाश्च दिव्यगन्धानुलेपनाः ।
आदित्यास्तत्र वरुणं जलेश्वरमुपासते ॥ २-९-८ (११६४५)
वासुकिस्तक्षकश्चैव नागश्चैरावतस्तथा ।
कृष्णश्च लोहितश्चैव पद्मश्चित्रश्च वीर्यवान् ॥ २-९-९ (११६४६)
कम्बलाश्वतरौ नागौ धृतराष्ट्रबलाहकौ ।
मणिमान्कुण्डधारश्च कर्कोटकधनञ्जयौ ॥ २-९-१० (११६४७)
पाणिमान्कुण्डधारश्च बलवान्पृथिवीपते ।
प्रह्लादो मुषिकादश्च तथैव जनमेजयः ॥ २-९-११ (११६४८)
पताकिनो मण्डलिनः फणवन्तश्च सर्वशः ।
ग अर्थो धर्मश्च कामश्च वसुः कपिल एव च ॥ २-९-१२ (११६४९)
अनन्तश्च महानागो यं दृष्ट्वा जलजेश्वरः ।
अभ्यर्चयति सत्कारैरासनेन च तं विभुः ॥ २-९-१३ (११६५०)
वासुकिप्रमुखाश्चैव सर्वे प्राञ्जलयः स्थिताः ।
अनुज्ञाताश्च शेषेण यथार्हमुपविश्य च ॥ २-९-१४ (११६५१)
एते चान्ये च बहवः सर्पास्तस्यां युधिष्ठिर ।
ग्वैनतेयश्च गरुडो ये चास्य परिचारिणः'।
उपासते महात्मानं वरुणं विगतक्लमाः ॥ २-९-१५ (११६५२)
बलिर्वैरोचनो राजा नरकः पृथिवीञ्जयः ।
संह्रादो विप्रचित्तिश्च कालखञ्जाश्च दानवाः ॥ २-९-१६ (११६५३)
सुहनुर्दुर्मुखः शङ्खः सुमनाः सुमतिस्ततः ।
घटोदरो महापार्श्वः क्रथनः पिठरस्तथा ॥ २-९-१७ (११६५४)
विश्वरूपः स्वरूपश्च विरूपोऽथ महाशिराः ।
दशग्रीवश्च वाली च मेघवासा दशावरः ॥ २-९-१८ (११६५५)
टिट्टिभो विटभूतश्च संह्रादश्चेन्द्रतापनः ।
दैत्यदानवसङ्घाश्च सर्वे रुचिरकुण्डलाः ॥ २-९-१९ (११६५६)
स्रग्विणो मौलिनश्चैव तथा दिव्यपरिच्छदाः ।
सर्वे लब्धवराः शूराः सर्वे विगतमृत्यवः ॥ २-९-२० (११६५७)
ते तस्यां वरुणं देवं धर्मपाशधरं सदा ।
उपासते महात्मानं सर्वे सुचरितव्रताः ॥ २-९-२१ (११६५८)
तथा समुद्राश्चत्वारो नदी भागीरथी च सा ।
कालिन्दी विदिशा वेणा नर्दमा वेगवाहिनी ॥ २-९-२२ (११६५९)
विपाशा च शतद्रुश्च चन्द्रभागा सरस्वती ।
इरावती वितस्ता च सिन्धुर्देवनदी तथा ॥ २-९-२३ (११६६०)
गोदावरी कृष्णवेणी कावेरी च सरिद्वरा ।
किम्पुना च विशल्या च तथा वैतरणी नदी ॥ २-९-२४ (११६६१)

तृतीया ज्येष्ठिला चैव शोणश्चापि महानदः ।
चर्मण्वती तथा चैव पर्णाशा च महानदी ॥ २-९-२५ (११६६२)
सरयूर्वारवत्याऽथ लाङ्गली च सरिद्वरा ।
करतोया तथाऽऽत्रेयी लौहित्यश्च महानदः ॥ २-९-२६ (११६६३)
लङ्घती गोमती चैव सन्ध्या त्रिस्रोतसी तथा ।
एताश्चान्याश्च राजेन्द्र सुतीर्था लोकविश्रुताः ॥ २-९-२७ (११६६४)
सरितः सर्वतश्चान्यास्तीर्थानि च सरांसि च ।
कूपाश्च सप्रस्रवणा देहवन्तो युधिष्ठिर। २-९-२८ (११६६५)
पल्वलानि तटाकानि देहवन्त्यथ भारत ।
दिशस्तथा मही चैव तथा सर्वे महीधराः ॥ २-९-२९ (११६६६)
उपासते महात्मानं सर्वे जलचरास्तथा ।
गीतवादित्रवन्तश्च गन्धर्वाप्सरसां गणाः ॥ २-९-३० (११६६७)
स्तुवन्तो वरुणं तस्यां सर्व एव समासते ।
महीधरा रत्नवन्तो रसा ये च प्रतिष्ठिताः ॥ २-९-३१ (११६६८)
कथयन्तः सुमधुराः कथास्तत्र समासते ।
वारुणश्च तथा मन्त्री सुनाभः पर्युपासते ॥ २-९-३२ (११६६९)
पुत्रपौत्रैः परिवृतो गोनाम्ना पुष्करेण च ।
सर्वे विग्रहवन्तस्ते तमीश्वरमुपासते ॥ २-९-३३ (११६७०)
एषा मया सम्पतता वारुणी भरतर्षभ ।
दृष्टपूर्वा सभा रम्या कुबेरस्य सभां शृणु ॥ ॥ २-९-३४ (११६७१)

इति श्रीमन्महाभारते सभापर्वणि मन्त्रपर्वणि नवमोऽध्यायः ॥ ९.।
Mahabharata - Sabha Parva - Chapter Footnotes

२-९-३४ सम्पतता समागच्छता ॥

---

सभ-०१०
॥ श्रीः ॥
२.१०. अध्यायः १०

Mahabharata - Sabha Parva - Chapter Topics
कुबेरसभावर्णनम् ॥ १.।
Mahabharata - Sabha Parva - Chapter Text

नारद उवाच ।
सभा वैश्रवणी राजञ्शतयोजनमायता ।
विस्तीर्णा सप्ततिश्चैव योजनानि सितप्रभा ॥ २-१०-१ (११६७२)

तपसा निर्जिता राजन्स्वयं वैश्रवणेन सा ।
शशिप्रभा प्रावरणा कैलासशिखरोपमा ॥ २-१०-२ (११६७३)
गुह्यकैरुह्यमाना सा खे विषक्तेव शोभते ।
दिव्या हेममयैरुच्चैः प्रासादैरुपशोभिता ॥ २-१०-३ (११६७४)
महारत्नवती चित्रा दिव्यगन्धा मनोरमा ।
सिताभ्रशिखराकारा प्लवमानेव दृश्यते। २-१०-४ (११६७५)
दिव्या हेममयै रङ्गैर्विद्युद्भिरिव चित्रिता ।
तस्यां वैश्रवणो राजा विचित्राभरणाम्बरः ॥ २-१०-५ (११६७६)
स्त्रीसहस्रैर्वृतः श्रीमानास्ते ज्वलितकुण्डलः ।
ग्सह पत्न्या महाराज ऋद्ध्या सह विराजते। २-१०-६ (११६७७)
सर्वाभरणभूषिण्या वपुष्मत्या धनेश्वरः'।
दिवाकरनिभे पुण्ये दिव्यास्तरणसंवृते ।
दिव्यपादोपधाने च निषण्णः परमासने ॥ २-१०-७ (११६७८)
मन्दाराणामुदाराणां वनानि परिलोडयन् ।
सौगन्धीकवनानां च गन्धं गन्धवहो वहन् ॥ २-१०-८ (११६७९)
नलिन्याश्चालकाख्याया नन्दनस्य वनस्य च ।
शीतो हृदयसंह्लादी वायुस्तमुपसेवते ॥ २-१०-९ (११६८०)
तत्र देवाः सगन्धर्वा गणैरप्सरसां वृताः ।
दिव्यतानैर्महाराज गायन्तिस्म सभागताः ॥ २-१०-१० (११६८१)
मिश्रकेशी च रम्भा च चित्रसेना शुचिस्मिता ।
चारुनेत्रा घृताची च मेनका पुञ्जिकस्थला ॥ २-१०-११ (११६८२)
विश्वाची सहजन्या च प्रम्लोचा उर्वशी ॥ २-१०-१२ (११६८३)
वर्गा च सौरभेयी च समीची बुद्बुदा लता ।
एताः सहस्रशश्चान्या नृत्तगीतविशारदाः ॥ २-१०-१३ (११६८४)
उपतिष्ठन्ति धनदं गन्धर्वाप्सरसां गणाः ।
अनिशं दिव्यवादित्रैर्नृत्तगीतैश्च स सभा ॥ २-१०-१४ (११६८५)
अशून्या रुचिरा भाति गन्धर्वाप्सरसां गणैः ।
किन्नरा नाम गन्धर्वा नरा नाम तथाऽपरे ॥ २-१०-१५ (११६८६)
माणिभद्रोऽथ धनदः श्वेतभद्रश्च गुह्यकः ।
कशेरको गण्डकण्डूः प्रद्योतश्च महाबलः ॥ २-१०-१६ (११६८७)
कुस्तम्बरुः पिशाचश्च गजकर्णो विशालकः ।
वराहकर्णस्ताम्रौष्ठः फलकक्षः फलोदकः ॥ २-१०-१७ (११६८८)
हंसचूडः शङखावर्तो हेमनेत्रो विभीषणः ।
पुष्पाननः पिङ्गलकः शोणितोदः प्रवालकः ॥ २-१०-१८ (११६८९)
वृक्षवास्यनिकेतश्च चीरवासाश्च भारत ।
एते चान्ये च बहवो यक्षाः शतसहस्रशः ॥ २-१०-१९ (११६९०)

सदा भगवती लक्ष्मीस्तत्रैव नलकूबरः ।
अहं च बहुशस्तस्यां भवन्त्यन्ये च मद्विधाः ॥ २-१०-२० (११६९१)
ब्रह्मर्षयो भवन्त्यत्र तथा देवर्षयोऽपरे ।
क्रव्यादाश्च तथैवान्ये गन्धर्वाश्च महाबलाः ॥ २-१०-२१ (११६९२)
उपासते महात्मानं तस्यां धनदमीश्वरम् ।
भगवान्भूतसङ्घैश्च वृतः शतसहस्रशः ॥ २-१०-२२ (११६९३)
उमापतिः पशुपतिः शूलभृद्भगनेत्रहा ।
त्र्यम्बको राजशार्दूल देवी च विगतक्लमा ॥ २-१०-२३ (११६९४)
वामनैर्विकटैः कुब्जैः क्षतजाक्षैर्महारवैः ।
मेदोमांसाशनैरुग्रैरुग्रधन्वा महाबलः ॥ २-१०-२४ (११६९५)
नानाप्रहरणैरुग्रैर्वातैरिव महाजवैः ।
वृतः सखायमन्वास्ते सदैव धनदं नृप ॥ २-१०-२५ (११६९६)
प्रहृष्टाः शतशश्चान्ये बहुशः सपरिच्छदाः ।
गन्धर्वाणां च पतयो विश्वावसुर्हहा हुहूः ॥ २-१०-२६ (११६९७)
तुम्बुरुः प्रवतश्चैव शैलूषश्च तथाऽपरः ।
चित्रसेनश्च गीतज्ञस्तथा चित्ररथोपि च ॥ २-१०-२७ (११६९८)
एते चान्ये च गन्धर्वा धनेश्वरमुपासते ।
विद्याधराधिपश्चैव चक्रधर्मा सहानुजैः ॥ २-१०-२८ (११६९९)
उपाचरति तत्र स्म धनानामीश्वरं प्रभुम् ।
किन्नराः शतशस्तत्र धनानामीश्वरं प्रभुम् ॥ २-१०-२९ (११७००)
आसते चापि राजानो भगदत्तपुरोगमाः ।
द्रुमः किम्पुरुषेशश्च उपास्ते धनदेश्वरम् ॥ २-१०-३० (११७०१)
राक्षसाधिपतिश्चैव महेन्द्रो गन्धमादनः ।
सह यक्षैः सगन्धर्वैः सह सर्वैर्निशाचरैः ॥ २-१०-३१ (११७०२)
विभीषणश्च धर्मिष्ठ उपास्ते भ्रातरं प्रभुम् ।
हिमवान्पारियात्रश्च विन्ध्यकैलासमन्दराः ॥ २-१०-३२ (११७०३)
मलयो दर्दुरश्चैव महेन्द्रो गन्धमादनः ।
इन्द्रकीलः सुनाभश्च तथा दिव्यौ च पर्वतौ ॥ २-१०-३३ (११७०४)
एते चान्ये च बहवः सर्वे मेरुपुरोगमाः ।
उपासते महात्मानं धनानामीश्वरं प्रभुम् ॥ २-१०-३४ (११७०५)
न्दीश्वरश्च भगवान्महाकालस्तथैव च ।
शङ्कुकर्णमुखाः सर्वे दिव्याः पारिषदास्तथा ॥ २-१०-३५ (११७०६)
काष्ठः कुटी मुखो दन्ती विजयश्च तपोधिकः ।
श्वेतश्च वृषभस्तत्र नर्दन्नास्ते महाबलः ॥ २-१०-३६ (११७०७)
धनदं राक्षसाश्चान्ये पिशाचाश्च उपासते ।
पारिषदैः परिवृतमुपायान्तं महेश्वरम् ॥ २-१०-३७ (११७०८)

सदा हि देवदेवेशं शिवं त्रैलोक्यभावनम् ।
प्रणम्य मूर्ध्ना पौलस्त्यो बहुरूपमुमापतिम् ॥ २-१०-३८ (११७०९)
ततोऽभ्यनुज्ञां सम्प्राप्य महादेवाद्धनेश्वरः ।
आस्ते कदाचिद्भगवान्भवो धनपतेः सखा ॥ २-१०-३९ (११७१०)
निधिप्रवरमुख्यौ च शङ्खपद्मौ धनेश्वरौ ।
सर्वान्निधीन्प्रगृह्याथ उपास्तां वै धनेश्वरम् ॥ २-१०-४० (११७११)
सा सभा तादृशी रम्या मया दृष्टान्तरिक्षगा ।
पितामहसभां राजन्कीर्तयिष्ये निबोध ताम् ॥ ॥ २-१०-४१ (११७१२)

इति श्रीमन्महाभारते सभापर्वणि मन्त्रपर्वणि दशमोऽध्यायः ॥ १०.।

Mahabharata - Sabha Parva - Chapter Footnotes

२-१०-५ रङ्गैरितिच्छेदः ॥
२-१०-३९ आस्ते इत्यावृत्त्या योजनीयम् । यदा भवः
कदाचित्कुबेरसभामध्यास्ते तदा कुबेरोऽपि भवादनुज्ञां प्राप्य
तन्निकटे आस्ते उपविशति ॥

---

सभ-०११
॥ श्रीः ॥
२.११. अध्यायः ११

Mahabharata - Sabha Parva - Chapter Topics

ब्रह्मसभावर्णनम् ॥१.।

Mahabharata - Sabha Parva - Chapter Text

नारद उवाच ॥
पितामहसभां तात कथ्यमानां निबोध मे ।
शक्यते या न निर्देष्टुमेवंरूपेति भारत ॥ २-११-१ (११७१३)
पुरा देवयुगे राजन्नादित्यो भगवान्दिवः ।
आगच्छन्मानुषं लोकं दिदृक्षुर्विगतक्लमः ॥ २-११-२ (११७१४)
चरन्मानुषरूपेण सभां दृष्ट्वा स्वयम्भुवः ।
स तामकथयन्मह्यं दृष्ट्वा तत्त्वेन पाण्डव ॥ २-११-३ (११७१५)
अप्रमेयां सभां दिव्यां मानसीं भरतर्षभ ।
अनिर्देश्यां प्रभावेण सर्वभूतमनोरमाम् ॥ २-११-४ (११७१६)
श्रुत्वा गुणानहं तस्याः सभायाः पाण्डवर्षभ ।
दर्शनेप्सुस्तथा राजन्नादित्यमिदमब्रुवम्। २-११-५ (११७१७)
भगवन्द्रष्टुमिच्छामि पितामहसभां शुभाम् ।

येन वा तपसा शक्या कर्मणा वाऽपि गोपते ॥ २-११-६ (११७१८)
औषधैर्या तथा युक्तैरुत्तमा पापनाशिनी ।
तन्ममाचक्ष्व भगवन्पश्येयं तां सभां यथा ॥ २-११-७ (११७१९)
स तन्मम वचः श्रुत्वा सहस्रांशुर्दिवाकरः ।
प्रोवाच भारतश्रेष्ठ व्रतं वर्षसहस्रकम् ॥ २-११-८ (११७२०)
ब्रह्मव्रतमुपास्स्व त्वं प्रयतेनान्तरात्मना ।
ततोऽहं हिमवत्पृष्ठे समारब्दो महाव्रतम् ॥ २-११-९ (११७२१)
ततः स भगवान्सूर्यो मामुपादाय वीर्यवान् ।
आगच्छत्तां सभां ब्राह्मीं विपाप्मा विगतक्लमः ? २-११-१० (११७२२)
एवंरूपेति सा शक्या न निर्देष्टुं नराधिप ।
क्षणेन हि बिभर्त्यन्यदनिर्देश्यं वपुस्तथा ॥ २-११-११ (११७२३)
न वेद परिमाणं वा संस्थानं चापि भारत ।
न च रूपं मया तादृक् दृष्टपूर्वं कदाचन ॥ २-११-१२ (११७२४)
सुसुखा सा सदा राजन्न शीता न च घर्मदा ।
न क्षुत्पिपासे न ग्लानिं प्राप्यतां प्राप्तुवन्त्युत ॥ २-११-१३ (११७२५)
नानारूपैरिव कृता मणिभिः सा सुभास्वरैः ।
स्तम्भैर्न च धृता सा तु शाश्वती न च सा क्षरा ॥ २-११-१४ (११७२६)
दिव्यैर्नानाविधैर्भावैर्भासद्भिरमितप्रभैः ॥ २-११-१५ (११७२७)
अति चन्द्रं च सूर्यं च शिखिनं च स्वयम्प्रभा ।
दीप्यते नाकपृष्ठस्था भर्त्सयन्वीव भास्करम् ॥ २-११-१६ (११७२८)
तस्यां स भगवानास्ते विदधद्देवमायया ।
स्वयमेकोऽनिशं राजन्सर्वलोकपितामहः ॥ २-११-१७ (११७२९)
उपतिष्ठन्ति चाप्येनं प्रजानां पतयः प्रभुम् ।
दक्षः प्रचेताः पुलहो मरीचिः कश्यपः प्रभुः ॥ २-११-१८ (११७३०)
भृगुरत्रिर्वसिष्ठश्च गौतमोऽथ तथाङ्गिराः ।
पुलस्त्यश्च कतुश्चैव प्रह्लादः कर्दमस्तथा। २-११-१९ (११७३१)
अथर्वाङ्गिरसश्चैव वालखिल्या सरीचिपाः ।
मनोऽन्तरिक्षं विद्याश्च वायुस्तेजो जलं मही ॥ २-११-२० (११७३२)
शब्दस्पर्शौ तथा रूपं रसो गन्धश्च भारत ।
प्रकृतिश्च विकारश्च यच्चान्यत्कारणं भुवः ॥ २-११-२१ (११७३३)
अगस्त्यश्च महातेजा मार्कण्डेयश्च वीर्यवान् ।
जमदग्निर्भरद्वाजः संवर्तश्च्यवनस्तथा ॥ २-११-२२ (११७३४)
दुर्वासाश्च महाभाग ऋष्णशृङ्गश्च धार्मिकः ।
सनत्कुमारो भगवान्योगाचार्यो महातपाः ॥ २-११-२३ (११७३५)
असितो देवलश्चैव जैगीषव्यश्च तत्त्ववित् ।
ऋषभो जितशत्रुश्च महावीर्यस्तथा मणिः ॥ २-११-२४ (११७३६)

आयुर्वेदस्तथाऽष्टाङ्गो देहवांस्तत्र भारत ।
चन्द्रमाः सह नक्षत्रैरादित्यश्च गभस्तिमान् ॥ २-११-२५ (११७३७)
वायवः क्रतवश्चैव सङ्कल्पः प्राण एव च ।
मूर्तिमन्तो महात्मानो महाव्रतपरायणाः ॥ २-११-२६ (११७३८)
एते चान्ये च बहवो ब्रह्माणं समुपस्थिताः ।
अर्थो धर्मश्च कामश्च हर्षो द्वेषस्तपो दमः ॥ २-११-२७ (११७३९)
आयान्ति तस्यां सहिता गन्धर्वाप्सरसां गणाः ।
विंशतिः सप्त चैवान्ये लोकपालाश्च सर्वशः ॥ २-११-२८ (११७४०)
शुक्रो बृहस्पतिश्चैव बुधोऽङ्गारक एव च ।
शनैश्चरश्च राहुश्च ग्रहाः सर्वे तथैव च ॥ २-११-२९ (११७४१)
मन्त्रो रथन्तरं चैव हरिमान्वसुमानपि ।
आदित्याः साधिराजानो नामद्वन्द्वैरुदाहृताः ॥ २-११-३० (११७४२)
मरुतो विश्वकर्मा च वसवश्चैव भारत ।
तथा पितृगणाः सर्वे सर्वाणि च हवींष्यथ ॥ २-११-३१ (११७४३)
ऋग्वेदः सामवेदश्च यजुर्वेदश्च पाण्डव ।
अथर्ववेदश्च तथा सर्वशास्त्राणि चैव ह ॥ २-११-३२ (११७४४)
इतिहासोपवेदाश्च वेदाङ्गानि च सर्वशः ।
ग्रहा यज्ञाश्च सोमश्च देवताश्चापि सर्वशः ॥ २-११-३३ (११७४५)
सावित्री दुर्गतरणी वाणी सप्तविधा तथा ।
मेधा धृतिः श्रुतिश्चैव प्रज्ञा बुद्धिर्यशः क्षमा ॥ २-११-३४ (११७४६)
सामानि स्तुतिशस्त्राणि गाथाश्च विविधास्तथा ।
भाष्याणि तर्कयुक्तानि देहवन्ति विशाम्पते ॥ २-११-३५ (११७४७)
नाटका विविधाः काव्याः कथाख्यायिकारिकाः ।
तत्रतिष्ठन्ति ते पुण्या ये चान्ये गुरुपूजकाः ॥ २-११-३६ (११७४८)
क्षणा लवा मुहूर्ताश्च दिवा रात्रिस्तथैव च ।
अर्धमासाश्च मासाश्च ऋतवः षट् च भारत ॥ २-११-३७ (११७४९)
संवत्सराः पञ्चयुगमहोरात्रश्चतुर्विधः ।
कालचक्रं च तद्दिव्यं नित्यमक्षयमव्ययम् ॥ २-११-३८ (११७५०)
धर्मचक्रं तथा चापि नित्यमास्ते युधिष्ठिर ।
अदितिर्दितिर्दनुश्चैव सुरसा विनता इरा ॥ २-११-३९ (११७५१)
कालिका सुरभी देवी सरमा चाथ गौतमी ॥ २-११-४० (११७५२)
प्रभा कद्रूश्च वै देव्यौ देवतानां च मातरः ।
रुद्राणी श्रीश्च लक्ष्मीश्च भद्रा षष्ठी तथाऽपरा ॥ २-११-४१ (११७५३)
पृथिवी गां गता देवी ह्रीः स्वाहा कीर्तिरेव च ।
सुरा देवी शची चैव तथा पुष्टिररुन्धती ॥ २-११-४२ (११७५४)
संवृत्तिराशा नियतिः सृष्टिर्देवी रतिस्तथा ।

एताश्चान्याश्चवै देव्य उपतस्थुः प्रजापतिम् ॥ २-११-४३ (११७५५)
आदित्या वसवो रुद्रा मरुतश्चास्विनावपि ।
विश्वेदेवाश्च साध्याश्च पितरश्च मनोजवाः ॥ २-११-४४ (११७५६)
पितृणां च गणान्विद्धि सप्तैव पुरुषर्षभ ।
मूर्तिमन्तो वै चत्वारस्त्रयश्चापि शरीरिणः ॥ २-११-४५ (११७५७)
वैराजश्च महाभागा अग्निष्वात्ताश्च भारत ।
गार्हपत्या नाकचराः पितरो लोकविश्रुताः ॥ २-११-४६ (११७५८)
सोमपा एकशृङ्गाश्च चतुर्वेदाः कलास्तथा ।
एते चतुर्षु वर्णेषु पूज्यन्ते पितरो नृप ॥ २-११-४७ (११७५९)
एतैराप्यायितैः पुर्वं सोमश्चाप्याय्यते पुनः ।
त एते पितरः सर्वे प्रजापतिमुपस्थिताः ॥ २-११-४८ (११७६०)
उपासते च संहृष्टा ब्रह्माणममितौजसम् ।
राक्षसाश्च पिशाचाश्च दानवा गुह्यकास्तथा ॥ २-११-४९ (११७६१)
नागाः सुपर्णाः पशवः पितामहमुपासते ।
स्थावरा जङ्गमाश्चैव महाभूतास्तथाऽपरे ॥ २-११-५० (११७६२)
पुरन्दरश्च देवेन्द्रो वरुणो धनदो यमः ।
महादेवः सहोमोऽत्र सदा गच्छति सर्वशः ॥ २-११-५१ (११७६३)
महासेनश्च राजेन्द्र सदोपास्ते पितामहम् ।
देवो नारायणस्तस्यां तथा देवर्षयश्च ये ॥ २-११-५२ (११७६४)
ऋषयो वालखिल्याश्च योनिजायोनिजास्तथा ।
यच्च किञ्चित्रिलोकेऽस्मिन्दृश्यते स्थाणु जङ्गमम् ।
सर्वं तस्यां मया दृष्टमिति विद्धि नराधिप ॥ २-११-५३ (११७६५)
अष्टाशीतिसहस्राणि ऋषीणामूर्ध्वरेतसाम् ।
प्रजावतां च पञ्चाशदृषीणामपि पाण्डव ॥ २-११-५४ (११७६६)
ते स्म तत्र यथाकामं दृष्ट्वा सर्वे दिवौकसः ।
प्रणम्य शिरसा तस्मै सर्वे यान्ति यथागमम् ॥ २-११-५५ (११७६७)
अतिथीनागतान्देवान्दैत्यान्नागांस्तथा द्विजान् ।
यक्षान्सुपर्णान्कालेयान्गन्धर्वाप्सरसस्तथा ॥ २-११-५६ (११७६८)
महाभागानमितधीर्ब्रह्मा लोकपितामहः ।
दयावान्सर्वभूतेषु यथार्हं प्रतिपद्यते ॥ २-११-५७ (११७६९)
प्रतिगृह्य तु विश्वात्मा स्वयं स्वयम्भूरमितद्युतिः ।
सान्त्वमानार्थसम्भोगैर्युनक्ति मनुजाधिप ॥ २-११-५८ (११७७०)
तथा तैरुपयातैश्च प्रतियद्भिश्च भारत ।
आकुला सा सभातात भवति स्म सुखप्रदा ॥ २-११-५९ (११७७१)
सर्वतेजोमयी दिव्या ब्रह्मर्षिगणसेविता ।
ब्राह्मया श्रिया दीप्यमाना शुशुभे विगतक्लमा ॥ २-११-६० (११७७२)

सा सभा तादृशी दृष्टा मया लोकेषु दुर्लभा ।
सभेयं राजशार्दूल मनुष्येषु यथा तव ॥ २-११-६१ (११७७३)
एता मया दृष्टपूर्वाः सभा देवेषु भारत ।
सभेयं मानुषे लोके सर्वश्रेष्ठतमा तव ॥ ॥ २-११-६२ (११७७४)

इति श्रीमन्महाभारते सभापर्वणि मन्त्रपर्वणि एकादशोऽध्यायः ॥ ११.।
Mahabharata - Sabha Parva - Chapter Footnotes

२-११-२ देवयुगे कृतयुगे ॥
२-११-३० मामद्वन्द्वैरग्नीषोमेन्द्राभ्यादिभिः ॥
२-११-३८ संवत्सराः षष्टिः प्रभवादयः । तेच पञ्चपञ्च एकैकं युगम्। चतुर्विधो मानुषोऽ होरात्रः षष्टिघटिकाभिः। पैत्रो मासेन। दैवो वत्सरेण। ब्राह्मः कल्पेनेति। कालचक्रं द्वादशराश्यात्मकम् ॥

---

सभ-०१२
॥ श्रीः ॥
२.१२. अध्यायः १२

Mahabharata - Sabha Parva - Chapter Topics
इन्द्रसभास्थहरिश्चन्द्रचरिते युधिष्ठिरेण पृष्टे तत्कथाप्रसङ्गेन नारदकृता राजसूयप्रशंसा ॥ १.। युधिष्ठरम्प्रति पाण्डुसन्देशकथनपूर्वकं नारदस्य गमनम् ॥ २.।
Mahabharata - Sabha Parva - Chapter Text

युधिष्ठिर उवाच ॥
प्रायशो राजलोकस्ते कथितो वदतां वर ।
वैवस्वतसभायां तु यथा वदसि मे प्रभो ॥ २-१२-१ (११७७५)
वरुणस्य सभायां तु नागास्ते कथिता विभो ।
दैत्येन्द्राश्चापि भूयिष्ठाः सरितः सागरास्तथा ॥ २-१२-२ (११७७६)
तथा धनपतेर्यक्षा गुह्यका राक्षसास्तथा ।
गन्धर्वाप्सरसश्चैव भगवांश्च वृषध्वजः ॥ २-१२-३ (११७७७)
पितामहसभायां तु कथितास्ते महर्षभः ।
सर्वे देवनिकायाश्च सर्वशास्त्राणि वैव ह ॥ २-१२-४ (११७७८)
शक्रस्य तु सभायां तु देवाः सङ्कीर्तिता मुने ।
उद्देशतश्च गन्धर्वा विविधाश्च महर्षयः ॥ २-१२-५ (११७७९)

एक एव तु राजर्षिर्हरिश्चन्द्रो महामुने ।
कथितस्ते सभायां वै देवेन्द्रस्य महात्मनः ॥ २-१२-६ (११७८०)
किं कर्म तेनाचरितं तपो वा नियतव्रत ।
येनासौ सह शक्रेण स्पर्धते सुमहायशाः ॥ २-१२-७ (११७८१)
पितृलोकगतश्चैव त्वया विप्र पिता मम ।
दृष्टः पाण्डुर्महाभागः कथं वाऽपि समागतः ॥ २-१२-८ (११७८२)
किमुक्तवांश्च भगवंस्तन्ममाचक्ष्व सुव्रत ।
त्वत्तः श्रोतुं सर्वमिदं परं कौतूहलं हि मे ॥ २-१२-९ (११७८३)
नारद उवाच। २-१२-१०क्ष् (१३९५)
यन्मां पृच्छसि राजेन्द्र हरिश्चन्द्रं प्रति प्रभो ।
तत्तेऽहं सम्प्रवक्ष्यामि माहात्म्यं तस्य धीमतः ॥ २-१२-१० (११७८४)
ग इक्ष्वाकूणां कुले जातस्त्रिशङ्कुर्नाम पार्थिवः ।
अयोध्याधिपतिर्वीरो विश्वामित्रेण संस्थितः ॥ २-१२-११ (११७८५)
तस्य सत्यवती नाम पत्नी केकयवंशजा ।
तस्यां गर्भः समभवद्धर्मेण कुरुनन्दन ॥ २-१२-१२ (११७८६)
सा च काले महाभागा राजन्मासं प्रविश्य च ।
कुमारं जनयामास हरिश्चन्द्रमकल्मषम् ।
स वै राजा हरिश्चन्द्रस्त्रैशङ्कव इति स्मृतः'॥ २-१२-१३ (११७८७)
स राजा बलवानासीत्सम्राट् सर्वमहीक्षिताम् ।
तस्य सर्वे महीपालाः शासनावनताः स्थिताः ॥ २-१२-१४ (११७८८)
तेनैकं रथमास्थाय जैत्रं हेमविभूषितम् ।
शस्त्रप्रतापेन जिता द्वीपाः सप्त जनेश्वर ॥ २-१२-१५ (११७८९)
स निर्जित्य महीं कृत्स्नां सशैलवनकाननाम् ।
आजहार महाराज राजसूयं महाक्रतुम् ॥ २-१२-१६ (११७९०)
तस्य सर्वे महीपाला धनान्याजह्रुराज्ञया ।
द्विजानां परिवेष्टारस्तस्मिन्यज्ञे च तेऽभवन् ॥ २-१२-१७ (११७९१)
गसमाप्तयज्ञो विधिवद्धरिश्चन्द्रः प्रतापवान् ।
अभिषिक्तश्च शुशुभे साम्राज्येन नराधिपः ॥ २-१२-१८ (११७९२)
राजसूयेऽभिषिक्तश्च समाप्तवरदक्षिणे'॥ २-१२-१९ (११७९३)
प्रादाच्च द्रविणं प्रीत्या याचकानां नरेश्वरः ।
यथोक्तवन्तस्ते तस्मिंस्ततः पञ्चगुणाधिकम् ॥ २-१२-२० (११७९४)
अतर्पयच्च विविधैर्वसुभिर्ब्राह्मणांस्तदा ।
प्रसर्पकाले सम्प्राप्ते नानादिग्भ्यः समागतान् ॥ २-१२-२१ (११७९५)
भक्ष्यभोज्यैश्च विविधैर्यथाकामपुरस्कृतैः ।
रत्नौघतर्पितैस्तुष्टैर्द्विजैश्च समुदाहृतम् ।
तेजस्वी च यशस्वी च नृपेभ्योऽभ्यधिकोऽभवत् । २-१२-२२ (११७९६)

एतस्मात्कारणाद्राजन्हरिश्चन्द्रो विराजते ।
तेभ्यो राजसहस्रेभ्यस्तद्विद्धि भरतर्षभ ॥ २-१२-२३ (११७९७)
समाप्य च हरिश्चन्द्रो महायज्ञं प्रतापवान् ।
अभिषिक्तश्च शुशुभे साम्राज्येन नराधिप ॥ २-१२-२४ (११७९८)
ये चान्ये च महीपाला राजसूयं महाक्रतुम् ।
यजन्ते ते सहेन्द्रेण मोदन्ते भरतर्षभ। २-१२-२५ (११७९९)
ये चापि नि नं प्राप्ताः सङ्ग्रामेष्वपलायिनः ।
ते तत्सदनम् ताद्य मोन्दते भरतर्षभ ॥ २-१२-२६ (११८००)
तपसा ये च तीव्रेण त्यजन्तीह कलेवरम् ।
ते तत्स्थानं समासाद्य श्रीमन्तो भान्ति नित्यशः ॥ २-१२-२७ (११८०१)
पिता च त्वाऽऽह कौन्तेय पाण्डुः कौरवनन्दन ।
हरिश्चन्द्रे श्रियं दृष्ट्वा नृपतौ जातविस्मयः ॥ २-१२-२८ (११८०२)
विज्ञाय मानुषं लोकमायान्तं मां नराधिप ।
प्रोवाच प्रणतो भूत्वा वदेथास्त्वं युधिष्ठिरम् ॥ २-१२-२९ (११८०३)
समर्थोऽसि महीं जेतुं भ्रातरस्ते स्थिता वशे ।
राजसूयं क्रतुश्रेष्ठमहारस्वेति भारत ॥ २-१२-३० (११८०४)
त्वयीष्टवति पुत्रेऽहं हरिश्चन्द्रवदाशु वै ।
मोदिष्ये बहुलाः शश्वत्समाः शक्रस्य संसदि ॥ २-१२-३१ (११८०५)
एवं भवतु वक्ष्येऽहं तव पुत्रं नराधिपम् ।
भूलोकं यदि गच्छेयमिति पाण्डुमथाब्रुवम् ॥ २-१२-३२ (११८०६)
तस्य त्वं पुरुषव्याघ्र सङ्कल्पं कुरु पाण्डव ।
गन्तासित्वं महेन्द्रस्य पूर्वैः सह सलोकताम् ॥ २-१२-३३ (११८०७)
बहुविघ्नश्च नृपते क्रतुरेष स्मृतो महान् ।
छिद्राण्यस्य वाञ्छन्ति यज्ञघ्ना ब्रह्मराक्षसाः ॥ २-१२-३४ (११८०८)
युद्धं च क्षत्रशमनं पृथिवीक्षयकारणम् ।
किञ्चिदेव निमित्तं च भवत्यत्र क्षयावहम् ॥ २-१२-३५ (११८०९)
एतत्सञ्चिन्त्य राजेन्द्र यत्क्षमं तत्समाचर ।
अप्रमत्तोत्थितो नित्यं चातुर्वर्ण्यस्य रक्षणे ॥ २-१२-३६ (११८१०)
भव एधस्व मोदस्व धनैस्तर्पय च द्विजान् ।
एतत्ते विस्तरेणोक्तं यन्मां त्वं परिपृच्छसि ।
आपृच्छे त्वां गमिष्यामि दाशार्हनगरीं प्रति ॥ २-१२-३७ (११८११)
वैशम्पायन उवाच। २-१२-३८क्ष् (१३९६)
एवमाख्याय पार्थेभ्यो नारदो जनमेजय ।
जगाम तैर्वृतो राजन्नृषिभिर्यैः समागतः ॥ २-१२-३८ (११८१२)
गते तु नारदे पार्थो भ्रातृभिः सह कौरवः ।
राजसूयं क्रतुश्रेष्ठं चिन्तयामास पार्थिवः ॥ ॥ २-१२-३९ (११८१३)

इति श्रीमन्महाभारते सभापर्वणि मन्त्रपर्वणि द्वादशोऽध्यायः ॥ १२.।

---

सभ-०१३
॥ श्रीः ॥
२.१३. अध्यायः १३

Mahabharata - Sabha Parva - Chapter Topics
मन्त्रिभिः सह संमन्त्र्य कृतराजसूयकरणनिश्चयस्य युधिष्ठिरस्य श्रीकृष्णम्प रति दूतप्रेषणम् ॥ १.। दूतेन सह इन्द्रप्रस्थमागतं श्रीकृष्णम्प्रति युधिष्ठिरोक्ति ॥ २.।
Mahabharata - Sabha Parva - Chapter Text

वैशम्पायन उवाच ॥
ऋषेस्तद्वचनं श्रुत्वा निशश्वास युधिष्ठिरः ।
चिन्तयन्राजसूयेष्टिं न लेभे शर्म भारत ॥ २-१३-१ (११८१४)
राजर्षीणां च तं श्रुत्वा महिमानं महात्मनाम् ।
यज्वनां कर्मभिः पुण्यैर्लोकप्राप्तिं समीक्ष्य च ॥ २-१३-२ (११८१५)
हरिश्चन्द्रं च राजर्षिं रोजमानं विशेषतः ।
यज्वानं यज्ञमाहर्तुं राजसूयमियेष सः ॥ २-१३-३ (११८१६)
युधिष्ठिरस्ततः सर्वानर्चयित्वा सभासदः ।
प्रत्यर्चितश्च तैः सर्वैर्यज्ञायैव मनो दधे ॥ २-१३-४ (११८१७)
स राजसूयं राजेन्द्र कुरूणामृषभस्तदा ।
आहर्तुं प्रवणं चक्रे मनः सञ्चिन्त्य चासकृत् ॥ २-१३-५ (११८१८)
भूयश्चाद्भुतवीर्यौजा धर्ममेवानुचिन्तयन् ।
किं हितं सर्वलोकानां भवेदिति मनो दधे ॥ २-१३-६ (११८१९)
अनुगृह्णन्प्रजाः सर्वाः सर्वधर्मभृतां वरः ।
अविशेषेण सर्वेषां हितं चक्रे युधिष्ठिरः ॥ २-१३-७ (११८२०)
सर्वेषां दीयतां देयं मुष्णन्कोपमदावुभौ ।
साधु धर्मेति धर्मेति नान्यच्छ्रूयेत भाषितम् ॥ २-१३-८ (११८२१)
एवं गते ततस्तस्मिन्पितरीवाश्वसञ्जनाः ।
न तस्य विद्यते द्वेष्टा ततोऽस्याजातशत्रुता ॥ २-१३-९ (११८२२)
परिग्रहान्नरेन्द्रस्य भीमस्य परिपालनात् ।
शत्रूणां क्षपणाच्चैव बीभत्सोः सव्यसाचिनः ॥ २-१३-१० (११८२३)
ग्बलीनां सम्यगुत्थानान्नकुलस्य यशस्विनः’।
धीमतः सहदेवस्य धर्माणामनुशासनात् ॥ २-१३-११ (११८२४)

वैनत्यात्सर्वतश्चैव नकुलस्य स्वभावतः ।
अविग्रहा वीतभयाः स्वकर्मनिरताः सदा ॥ २-१३-१२ (११८२५)
निकामवर्षाः स्फीताश्च आसञ्जनपदास्तथा ।
वार्धुषी यज्ञसत्वानि गोरक्षं कर्षणं वणिक् ॥ २-१३-१३ (११८२६)
विशेषात्सर्वमेवैतत्सञ्जज्ञे राजकर्मणा ।
अनुकर्षं च निष्कर्षं व्याधिपावकमूर्छनम् ॥ २-१३-१४ (११८२७)
सर्वमेव न तत्रासीद्धर्मनित्ये युधिष्ठिरे ।
दस्युभ्यो वञ्चकेभ्यश्च राज्ञः प्रति परस्परम् ॥ २-१३-१५ (११८२८)
राजवल्लभतश्चैव नाश्रूयत मृषाकृतम् ।
प्रियं कर्तुमुपस्थातुं बलिकर्म स्वकर्मजम् ॥ २-१३-१६ (११८२९)
अभिहर्तुं नृपाः षट्सु पृथक्जात्यैश्च नैगमैः ।
ववृधे विषयस्तत्र धर्मनित्ये युधिष्ठिरे ॥ २-१३-१७ (११८३०)
कामतोऽप्युपयुञ्जानै राजसैर्लोभजैर्जनैः ।
सर्वव्यापी सर्वगुणी सर्वसाहः स सर्वराट् ॥ २-१३-१८ (११८३१)
यस्मिन्नधिकृतः सम्राड् भ्राजमानो महायशाः ।
यत्र राजन्दश दिशः पितृतो मातृतस्तथा ।
अनुरक्ताः प्रजा आसन्नागोपाला द्विजातयः ॥ २-१३-१९ (११८३२)
स मन्त्रिणः समानाय्य भ्रातृंश्च वदतां वरः ।
राजसूयं प्रति तदा पुनः पुनरपृच्छत ॥ २-१३-२० (११८३३)
ते पृच्छ्यमानाः सहिता वचोऽर्थ्यं मन्त्रिणस्तदा ।
युधिष्ठिरं महाप्राज्ञं यियक्षुमिदमब्रुवन् ॥ २-१३-२१ (११८३४)
येनाभिषिक्तो नृपतिर्वारुणं गुणमृच्छति ।
तेन राजाऽपि तं कुत्स्नं सम्राड्गुणमभीप्सृति ॥ २-१३-२२ (११८३५)
तस्य सम्राड्गुणार्हस्य भवतः कुरुनन्दन ।
राजसूयस्य समयं मन्यन्ते सुहृदस्तव ॥ २-१३-२३ (११८३६)
तस्य यज्ञस्य समयः स्वाधीनः क्षत्रसम्पदा ।
साम्ना षडग्नयो यस्मिंश्चीयन्ते शंसितव्रतैः ॥ २-१३-२४ (११८३७)
दर्वीहोमानुपादाय सर्वान्यः प्राप्नुते क्रतून् ।
अभिषेकं च यज्ञान्ते सर्वजित्तेन चोच्यते ॥ २-१३-२५ (११८३८)
समर्थोऽसि महाबाहो सर्वे ते वशगा वयम् ।
अचिरात्त्वं महाराज राजसूयमवाप्स्यसि ॥ २-१३-२६ (११८३९)
अविचार्य महाराज राजसूये मनः कुरु ।
इत्येवं सुहृदः सर्वे पृथक्च सह चाब्रुवन् ॥ २-१३-२७ (११८४०)
स धर्म्यं पाण्डवस्तेषां वचः श्रुत्वा विशाम्पते ।
धृष्टमिष्टं वरिष्टं च जग्राह मनसाऽरिहा ॥ २-१३-२८ (११८४१)
श्रुत्वा सुहृद्वचस्तच्च जानंश्चाप्यात्मनः क्षमम् ।

ग्स प्रशस्तक्रियारम्भः परीक्षामुपचक्रमे ॥ २-१३-२९ (११८४२)
वैशम्पायन उवाच ॥ २-१३-३०क्ष् (१३९७)
चतुर्भिर्भीमसेनाद्यैर्भ्रातृभिः सहितो हितम् ।
एवमुक्तस्तथा पार्थो धर्म एव मनो दधे ॥ २-१३-३० (११८४३)
स राजसूयं राजेन्द्रः कुरूणामृषभः क्रतुम् ।
जगाम मनसा सद्य आहरिष्यन्युधिष्ठिरः ॥ २-१३-३१ (११८४४)
भूयस्त्वद्भुतवीर्योपि धर्ममेवानुपालयन् '।
पुनः पुनर्मनो दध्रे राजसूयाय भारत ॥ २-१३-३२ (११८४५)
स भ्रातृभिः पुनर्धीमानृत्विग्भिश्च महात्मभिः ।
मन्त्रिभिश्चापि सहितो धर्मराजो युधिष्ठिरः ॥ २-१३-३३ (११८४६)
धौम्यद्वैपायनाद्यैश्च मन्त्रयामास मन्त्रवित् ।
गविराटद्रुपदाभ्यां च सात्यकेन च धीमता ॥ २-१३-३४ (११८४७)
युधामन्यूत्तमौजोभ्यां सौभद्रेण च धीमता ।
द्रौपदेयैः परं शूरैर्मन्त्रयामास संवृतः ॥ २-१३-३५ (११८४८)
युधिष्ठिर उवाच'॥ २-१३-३६क्ष् (१३९८)
भवन्तो राजसूयस्य सम्राडर्हस्य सुक्रतोः ।
श्रद्दधानस्य वदत ममावाप्तिः कथं भवेत् ॥ २-१३-३६ (११८४९)
वैशम्पायन उवाच। २-१३-३७क्ष् (१३९९)
एवमुक्तास्तु ते तेन राज्ञा राजीवलोचन ।
इदमूचुर्वचः काले धर्मराजं युधिष्ठिरम् ॥ २-१३-३७ (११८५०)
अर्हस्त्वमसि धर्मज्ञ राजसूयं महाक्रतुम् ।
अथैवमुक्ते नृपतावृत्विग्भिर्ऋषिभिस्तथा ॥ २-१३-३८ (११८५१)
मन्त्रिणो भ्रातरश्चास्य तद्वचः प्रत्यपूजयन् ।
स तु राजा महाप्राज्ञः पुनरेवात्मनाऽऽत्मवान् ॥ २-१३-३९ (११८५२)
भूयो विममृशे पार्थो लोकानां हितकाम्यया ।
सामर्थ्ययोगं सम्प्रेक्ष्य देशकालौ व्ययागमौ ॥ २-१३-४० (११८५३)
विमृश्य सम्यक् च धिया कुर्वन्प्राज्ञो न सीदति ।
नहि यज्ञसमारम्भः केवलात्मविनिश्चयात् ॥ २-१३-४१ (११८५४)
भवतीति समाज्ञाय यत्नतः कार्यमुद्वहन् ।
स निश्चयार्थं कार्यस्य कृष्णमेव जनार्दनम् ॥ २-१३-४२ (११८५५)
सर्वलोकात्परं मत्वा जगाम मनसा हरिम् ।
अप्रमेयं महाबाहुं कामाञ्जातमजं नृषु ॥ २-१३-४३ (११८५६)
पाण्डवस्तर्कयामास कर्मभिर्देवसंमतैः ।
नास्य किञ्चिदविज्ञातं नास्य किञ्चिदकर्मजम् ॥ २-१३-४४ (११८५७)
न स किञ्चिन्न विषहेदिति कृष्णममन्यत ।
स तु तां नैष्ठिकीं बुद्धिं कृत्वा पार्थो युधिष्ठिरः ॥ २-१३-४५ (११८५८)

गुरुवद्भूतगुरवे प्राहिणोद्भूतमञ्जसा ।
शीघ्रगेन रथेनाशु स दूतः प्राप्य यादवान् ॥ २-१३-४६ (११८५९)
द्वारकावासिनं कृष्णं द्वारवत्यां समासदत् ।
ग स प्रभुं प्राञ्जलिर्भूत्वा व्यज्ञापयत माधवम् ॥ २-१३-४७ (११८६०)
दूत उवाच ॥ २-१३-४८क्ष् (१४००)
धर्मराजो हृषीकेश धौम्यव्यासादिभिः सह ।
पाञ्चालमात्स्यसहितैर्भ्रातृभिश्चैव सर्वशः ॥ २-१३-४८ (११८६१)
त्वद्दर्शनं महाबाहो काङ्क्षते स युधिष्ठिरः ॥ २-१३-४९ (११८६२)
वैशम्पायन उवाच ॥ २-१३-५०क्ष् (१४०१)
इन्द्रसेनवचः श्रुत्वा यादवप्रवरो बली'।
दर्शनाकाङ्क्षिणं पार्थं दर्शनाकाङ्क्षयाच्युतः ॥ २-१३-५० (११८६३)
गआमन्त्र्य राजन्सुहृदो वसुदेवं च माधवः'।
इन्द्रसेनेन सहित इन्द्रप्रस्थमगात्तदा ।
व्यतीत्य विविधान्देशांस्त्वरावान्क्षिप्रवाहनवः ॥ २-१३-५१ (११८६४)
इन्द्रप्रस्थगतं पार्थमभ्यगच्छज्जनार्दनः ।
स गृहे पितृवद्भ्रात्रा धर्मराजेन पूजितः ॥ २-१३-५२ (११८६५)
भीमेन च ततोऽपश्यत्स्वसारं प्रीतिमान्पितुः ।
प्रीतः प्रीतेन सुहृदा रेमे स सहितस्तदा ॥ २-१३-५३ (११८६६)
अर्जुनेन यमाभ्यां च गुरुवत्पर्युपासितः ।
तं विश्रान्तं शुभे देशे क्षणिनं कल्पमच्युतम् ।
धर्मराजः समागम्य ज्ञापयत्स्वप्रयोजनम् ॥ २-१३-५४ (११८६७)
युधिष्ठिर उवाच ॥ २-१३-५क्ष् (१४०२)
प्रार्थितो राजसूयो मे न चासौ केवलेप्सया ।
प्राप्यते येन तत्ते हि विदितं कृष्ण सर्वशः ॥ २-१३-५५ (११८६८)
यस्मिन्सर्वं सम्भवति यश्च सर्वत्र पूज्यते ।
यश्च सर्वेश्वरो राजा राजसूयं स विन्दति ॥ २-१३-५६ (११८६९)
तं राजसूयं सुहृदः कार्यमाहुः समेत्य मे ।
तत्र मे निश्चिततमं तव कृष्ण गिरा भवेत् ॥ २-१३-५७ (११८७०)
केचिद्धि सौहृदा देवे न दोषं परिचक्षते ।
स्वार्थहेतोस्तथैवान्ये प्रियमेव वदन्त्युत ॥ २-१३-५८ (११८७१)
प्रियमेव परीप्सन्ते केचिदात्मनि यद्धितम् ।
एवम्प्रायाश्च दृश्यन्ते जनवादाः प्रयोजने ॥ २-१३-५९ (११८७२)
त्वं तु हेतूनतीत्यैतान्कामक्रोधौ व्युदस्य च ।
परमं यत्क्षमं लोके यथावद्वक्तुमर्हसि ॥ ॥ २-१३-६० (११८७३)

इति श्रीमन्महाभारते सभापर्वणि मन्त्रपर्वणि त्रयोदशोऽध्यायः ॥ १३.।

२-१३-१३ वार्धुषी वृद्ध्युपजीविका ।यज्ञसत्वानि कतूना सामर्थ्यानि सद्यः पुष्कलफलप् रदत्वादिविषयाणि ॥
२-१३-१४ अनुकर्ष दारिद्र्याद्राजकीयद्रव्यस्यातीतवर्षस्य ऋणत्वेन धारणम् ।निष्कर्ष करार्थं प्रजापीडनम्।अवर्षणं चातिवर्षं इति क।पाठः।मूर्छनं वृद्धिः ॥
२-१३-१७ नैगमैर्वणिग्भिः सह आसन्निति शेवः ।इतरे नृपा विणिग्वद्येन करदीकृता इत्यर् थः।तत्र तस्मिन् विषयोदेशः ॥
२-१३-१८
लोभजैर्विमोहोत्थैराजसरैर्वृत्तिविशेषैस्तृष्णादिभिस्तादृशैरपि ववृधे वृद्ध इमानभूत् ॥
२-१३-२२ येन कारेण वारुणं गुणं वृद्धिं ।तेन कारणेना ॥
२-१३-५२ भ्रात्रा पितृष्वसृजेन ॥
२-१३-५४ क्षणिनं सावसरम् ।कल्पं समर्थम् ॥

---

सभ-०१४
॥ श्रीः ॥
२.१४. अध्यायः १४

Mahabharata - Sabha Parva - Chapter Topics
जरासन्धशौर्यकथनादिरूपं श्रीकृष्णवाक्यम् ॥
Mahabharata - Sabha Parva - Chapter Text

कृष्ण उवाच ॥
सर्वैर्गुणैर्महाराज राजसूयं त्वमर्हसि ।
जानतस्त्वेव ते सर्वं किञ्चिद्वक्ष्यामि भारत ॥ २-१४-१ (११८७४)
जामदग्न्येन रामेण क्षत्रं यदवशेषितम् ।
तस्मादवरजं लोके यदिदं क्षत्रसंज्ञितम् ॥ २-१४-२ (११८७५)
कृतोऽयं कलुसङ्कल्पः क्षत्रियैर्वसुधाधिप ।
निदेशवाग्भिस्तत्तेह विदितं भरतर्षभ ॥ २-१४-३ (११८७६)
ऐलस्येक्ष्वाकुवंशस्य प्रकृतिं परिचक्षते ।
राजानः श्रेणिबद्धाश्च तथाऽन्ये क्षत्रिया भुवि ॥ २-१४-४ (११८७७)
ऐलवंश्याश्च ये राजंस्तथैवेक्ष्वाकवो नृपाः ।
तानि चैकशतं विद्धि कुलानि भरतर्षभ ॥ २-१४-५ (११८७८)
ययातेस्त्वेव भोजानां विस्तरो गुणतो महान् ।
भजतेऽद्य महाराज विस्तरं सचतुर्दिशम् ॥ २-१४-६ (११८७९)

तेषां तथैव तां लक्ष्मीं सर्वक्षत्रमुपासते ।
इदानीमेव वै राजञ्जरासन्धो महीपतिः ॥ २-१४-७ (११८८०)
अभिभूय श्रियं तेषां कुलानामभिषेचितः ।
स्थितो मूर्ध्नि नरेन्द्राणामोजसाऽऽक्रम्य सर्वशः ॥ २-१४-८ (११८८१)
सोऽवनीं मध्यमां भुक्त्वा मिथो भेदममन्यत ।
प्रभुर्यस्तु परो राजा यस्मिन्नेकवशे जगत् ॥ २-१४-९ (११८८२)
स साम्राज्यं महाराज प्राप्तो भवति योगतः ।
तं स राजा जरासन्धं संश्रित्य किल सर्वशः ॥ २-१४-१० (११८८३)
राजन्सेनापतिर्जातः शिशुपालः प्रतापवान् ।
तमेव च महाराज शिष्यवत्समुपस्थितः ॥ २-१४-११ (११८८४)
वक्रः करूषाधिपतिर्मायायोधी महाबलः ॥
अपरौ च महावीर्यौ महात्मानौ समाश्रितौ ॥ २-१४-१२ (११८८५)
जरासन्धं महावीर्यं तौ हिंसडिम्बिकावुभौ ।
वक्रदन्तः करूषस्य करभो मेघवाहनः ।
मूर्ध्ना दिव्यं मणिं बिभ्रद्यमद्भुतमणिं विदुः ॥ २-१४-१३ (११८८६)
मरुं च नरकं चैव शास्ति यो यवनाधिपः ।
अपर्यन्तबलो राजा प्रतीच्यां वरुणो यथा ॥ २-१४-१४ (११८८७)
भगदत्तो महाराज वृद्धस्तव पितुः सखा ।
स वाचा प्रणतस्तस्य कर्मणा च विशेषतः ॥ २-१४-१५ (११८८८)
स्नेहबद्धश्च मनसा पितृवद्भक्तिमांस्त्वयि ।
प्रतीच्यां दक्षिणं चान्तं पृथिव्याः प्रति यो नृपः ॥ २-१४-१६ (११८८९)
मातुलो भवतः शूरः पुरुजित्कुन्तिवर्धनः ।
स ते सन्नितिमानेकः स्नेहतः शत्रुसूदनः ॥ २-१४-१७ (११८९०)
जरासन्धं गतस्त्वेव पुरा यो न मया हतः ।
पुरुषोत्तमविज्ञातो योसौ चेदिषु दुर्मतिः ॥ २-१४-१८ (११८९१)
आत्मानं प्रतिजानाति लोकेऽस्मिन्पुरुषोत्तमम् ।
आदत्ते सततं मोहाद्यः स चिह्नं च मामकम् ॥ २-१४-१९ (११८९२)
वङ्गपुण्ड्रकिरातेषु राजा बलसमन्वितः ।
पौण्ड्रको वासुदेवेति योसौ लोकेऽभिविश्रुतः ॥ २-१४-२० (११८९३)
चतुर्थभाङ्महाराज भोज इन्द्रसखो बली ।
विद्याबलाद्यो व्यजयत्स पाण्ड्यक्रथकैशिकान् ॥ २-१४-२१ (११८९४)
भ्राता तस्याकृतिः शूरो जामदग्न्यसमोऽभवत् ।
स भक्तो मागधं राजा भीष्मकः परवीरहा ॥ २-१४-२२ (११८९५)
प्रियाण्याचरतः प्रह्वान्सदा सम्बन्धिनस्ततः ।
भजतो न भजत्यस्मानप्रियेषु व्यवस्थितः ॥ २-१४-२३ (११८९६)
न कुलं सबलं राजन्नभ्यजानात्तथाऽऽत्मनः ।

पश्यमानो यशो दीप्तं जरासन्धमुपस्थितः ॥ २-१४-२४ (११८९७)
उदीच्याश्च तथा भोजाः कुलान्यष्टादश प्रभो ।
जरासन्धभयादेव प्रतीचीं दिशमास्थिताः ॥ २-१४-२५ (११८९८)
शूरसेना भद्रकारा बोधाः शाल्वाः पटच्चराः ।
सुस्थलाश्च सुकुट्टाश्च कुलिन्दाः कुन्तिभिः सह ॥ २-१४-२६ (११८९९)
शाल्वायनाश्च राजानः सोदर्यानुचरैः सह ।
दक्षिणा ये च पञ्चालाः पूर्वाः कुन्तिषु कोसलाः ॥ २-१४-२७ (११९००)
तथोत्तरां दिशं चापि परित्यज्य भयार्दिताः ।
मत्स्याः सन्न्यस्तपादाश्च दक्षिणां दिशमाश्रिताः ॥ २-१४-२८ (११९०१)
तथैव सर्वपञ्चाला जरासन्धभायर्दिताः ।
स्वराज्यं सम्परित्यज्य विद्रुताः सर्वतोदिशम् ॥ २-१४-२९ (११९०२)
ग अग्रतो ह्यस्य पाञ्चालास्तत्रानीके महात्मनः ।
अनिर्गते सारबले मागधेभ्यो गिरिव्रजात् ॥ २-१४-३० (११९०३)
उग्रसेनसुतः कंसः पुरा निर्जित्य बान्धवान्'।
बार्हद्रथसुते देव्यावुपागच्छद्वृथामतिः ॥ २-१४-३१ (११९०४)
अस्तिः प्रास्तिश्च नाम्ना ते सहदेवानुजेऽबले ।
बलेन तेन स्वज्ञातीनभिभूय वृथामतिः ॥ २-१४-३२ (११९०५)
श्रैष्ठ्यं प्राप्तः स तस्यासीदतीवापनयो महान् ।
भोजराजन्यवृद्धैश्च पीड्यमानैर्दुरात्मना ॥ २-१४-३३ (११९०६)
ज्ञातित्राणमभीप्सद्भिरस्मत्सम्भावना कृता ।
दत्वाऽऽक्रूराय सुतनुं तामाहुकसुतां तदा ॥ २-१४-३४ (११९०७)
सङ्कर्षणद्वितीयेन ज्ञातिकार्यं मया कृतम् ।
हतौ कंससुनामानौ मया रामेण चाप्युत ॥ २-१४-३५ (११९०८)
गहत्वा कंसं तथैवादौ जरासन्धस्य बिभ्यतः ।
मया रामेण चान्यत्र ज्ञातयः परिपालिताः'॥ २-१४-३६ (११९०९)
भये तु समतिक्रान्ते जरासन्धे समुद्यते ।
मन्त्रोऽयं मन्त्रितो राजन्कुलैरष्टादशावरैः ॥ २-१४-३७ (११९१०)
अनारमन्तो निघ्नन्तो महास्त्रैः शत्रुघातिभिः ।
न हन्यामो वयं तस्य त्रिभिर्वर्षशतैर्बलम् ॥ २-१४-३८ (११९११)
तस्य ह्यमरसङ्काशौ बलेन बलिनां वरौ ।
नामभ्यां हंसडिबिकावशस्त्रनिधनावुभौ ॥ २-१४-३९ (११९१२)
तावुभौ सहितौ वीरौ जरासन्धश्च वीर्यवान् ।
त्रयस्त्रयाणां लोकानां पर्याप्ता इति मे मतिः ॥ २-१४-४० (११९१३)
न हि केवलमस्माकं यावन्तोऽन्ये च पार्थिवाः ।
तथैव तेषामासीच्च बुद्धिर्बुद्धिमतां वर ॥ २-१४-४१ (११९१४)
गअष्टादश मया तस्य सङ्ग्रामा रोमहर्षणाः ।

दत्ता न च हतो राजञ्जरासन्धो महाबलः'॥ २-१४-४२ (११९१५)
अथ हंस इति ख्यातः कश्चिदासीन्महान्नृपः ।
रामेण स हतस्तत्र सङ्ग्रामेऽष्टादशावरे ॥ २-१४-४३ (११९१६)
हतो हंस इति प्रोक्तस्य केनापि भारत ।
तच्छ्रुत्वा डिबिको राजन्यमुनाम्भस्यमज्जत ॥ २-१४-४४ (११९१७)
विना हसेन लोकेऽस्मिन्नाहं जीवितुमुत्सहे ।
इत्येतां मतिमास्थाय डिबिको निधनं गतः ॥ २-१४-४५ (११९१८)
तथा तु डिबिकं श्रुत्वा हंसः परुपुरञ्जयः ।
प्रपेदे यमुनामेव सोपि तस्यां न्यमज्जत ॥ २-१४-४६ (११९१९)
तौ स राजा जराजन्धः श्रुत्वा च निधनं गतौ ।
पुरं शून्येन मनसा प्रययौ भरतर्षभ ॥ २-१४-४७ (११९२०)
ततो वयमित्रघ्न तस्मिन्प्रतिगते नृपे ।
पुनरान्दिनः सर्वे मधुरायां वसामहे ॥ २-१४-४८ (११९२१)
यदा त्वभ्येत्य पितरं सा वै राजीवलोचना ।
कंसभार्या जरासन्धं दुहिता मागधं नृपम् ।
चोदयत्येव राजेन्द्र पतिव्यसनदुःखिता ॥  २-१४-४९ (११९२२)
पतिघ्नं मे जहीत्येवं पुनः पुनररिन्दम ।
ततो वयं महाराज तं मन्त्रं पूर्वमन्त्रितम् ॥ २-१४-५० (११९२३)
संस्मरन्तो विमनसो व्यपयाता नराधिप ।
पृथक्त्वेन महाराज सङ्क्षिप्य महतीं श्रियम् ॥ २-१४-५१ (११९२४)
पलायामो भयात्तस्य ससुतज्ञातिबान्धवाः ।
इति सञ्चिन्त्य सर्वे स्म प्रतीचीं दिशमाश्रिताः ॥ २-१४-५२ (११९२५)
कुशस्थलीं पुरीं रम्यां रैवतेनोपशोभिताम् ।
ततो निवेशं तस्यां च कृतवन्तो वयं नृप ॥ २-१४-५३ (११९२६)
तथैव दुर्गसंस्कारं देवैरपि दुरासदम् ।
स्त्रियोऽपि यस्यां युध्येयुः किमु वृष्णिमहारथाः ॥ २-१४-५४ (११९२७)
तस्यां वयममित्रघ्न निवसामोऽकुतोभयाः ।
आलोच्य गिरिमुख्यं तं मागधं तीर्णमेव च ॥ २-१४-५५ (११९२८)
माधवाः कुरुशार्दूल परां मुदमवाप्नुवन् ।
एवं वयं जरासन्धादभितः कृतकिल्बिषाः ॥ २-१४-५६ (११९२९)
सामर्थ्यवन्तः सम्बन्धाद्गोमन्तं समुपाश्रिताः ।
त्रियोजनायतं सद्म त्रिस्कन्धं योजनावधि ॥ २-१४-५७ (११९३०)
योजनान्ते शतद्वारं वीरविक्रमतोरणम् ।
अष्टादशावरैर्नद्धं क्षत्रियैर्युद्धदुर्मदैः ॥ २-१४-५८ (११९३१)
अष्टादश सहस्राणि भ्रातृणां सन्ति नः कले ।
आहुकस्य शतं पुत्रा एकैकस्त्रिदशावरः ॥ २-१४-५९ (११९३२)

चारुदेष्णः सह भ्रात्रा चक्रदेवोऽथ सात्यकिः ।
अहं च रोहिणेयश्च साम्बः प्रद्युम्न एव च ॥ २-१४-६० (११९३३)
एवमेते रथाः सप्त राजन्नन्यान्निबोध मे ।
कृतवर्मा ह्यनाधृष्टिः समीकः समितिंजयः ॥ २-१४-६१ (११९३४)
कङ्कः शङ्कुश्च कुन्तिश्च सप्तैते वै महारथाः ।
ग्प्रद्युम्नश्चानिरुद्धश्च भानुरक्रूरसारणौ ॥ २-१४-६२ (११९३५)
निशठश्च गदश्चैव सप्त चैते महारथाः ।
विकमो झिल्लिबभ्रू च उद्धवोऽथ विदूरथः ॥ २-१४-६३ (११९३६)
वसुदेवोग्रसेनौ च सप्तैते मन्त्रिपुङ्गवाः ।
प्रसेनजिच्च यमलो राजराजगुणान्वितः ॥ २-१४-६४ (११९३७)
स्यमन्तको मणिर्यस्य रुक्मं निस्रुवते बहु ।
पुत्रौ चान्धकभोजस्य वृद्धो राजा च ते दश ॥ २-१४-६५ (११९३८)
वज्रसंहनना वीरी वीर्यवन्तो महाबलाः ।
स्मरन्तो मध्यमं देशं वृष्णिवीरा गतज्वराः ॥ २-१४-६६ (११९३९)
पाण्डवैश्चापि सततं नाथवन्तो वयं नृप ।
सर्वसम्पद्गुणैः सिद्धे तस्मिन्नेवं व्यवस्थिते ॥ २-१४-६७ (११९४०)
क्षत्रे सम्राजमात्मानं कर्तुमर्हसि भारत ।
दुर्योधनं शान्तनवं द्रोणं द्रौणायनिं कृपम् ॥ २-१४-६८ (११९४१)
कर्णं च शिशुपालं च रुक्मिणं च धनुर्धरम् ।
एकलव्यं द्रुमं श्वेतं शैब्यं शकुनिमेव च ॥ २-१४-६९ (११९४२)
एतानजित्वा सङ्ग्रामे कथं शक्नोषि तं क्रतुम् ।
तथैते गौरवेणैव न योत्स्यन्ति नराधिपाः ॥ २-१४-७० (११९४३)
एकस्तत्र बलोन्मत्तः कर्णो वैकर्तनो वृषा ।
योत्स्यते स परामर्षी दिव्यास्रबलगर्वितः'॥ २-१४-७१ (११९४४)
न तु शक्यं जरासन्धे जीवमाने महाबल
राजसूयस्त्वयाऽवाप्तुमेषा राजन्मतिर्मम ॥ २-१४-७२ (११९४५)
तेन रुद्धा हि राजानः सर्वे जित्वा गिरिव्रजे ।
कन्दरे पर्वतेन्द्रस्य सिंहेनेव महाद्विपाः ॥ २-१४-७३ (११९४६)
स हि राजा जरासन्धो यियक्षुर्वसुधाधिपैः ।
ग्अभिषिक्तः स राजन्यैः सहस्रैरुत चाष्टभिः'।
महादेवं महात्मानमुमापतिमरिन्दम ॥ २-१४-७४ (११९४७)
आराध्य तपसोग्रेण निर्जितास्तेन पार्थिवाः ।
प्रतिज्ञायाश्च पारं स गतः पार्थिवसत्तम ॥ २-१४-७५ (११९४८)
स हि निर्जित्य निर्जित्य पार्थिवान्पृतनागतान् ।
पुरमानीय बद्ध्वा च चकार पुरुषव्रजम् ॥ २-१४-७६ (११९४९)
वयं चैव महाराज जरासन्धभयात्तदा ।

मधुरा सम्परित्यज्य गता द्वारवतीं पुरीम् ॥ २-१४-७७ (११९५०)
यदि त्वेनं महाराज यज्ञं प्राप्तुमभीप्ससि ।
यतस्व तेषां मोक्षाय जरासन्धवधाय च ॥ २-१४-७८ (११९५१)
समारम्भो न शक्योऽयमन्यथा कुरुनन्दन ।
राजसूयस्य कात्स्न्येन कर्तुं मतिमतां वर ॥ २-१४-७९ (११९५२)
इत्येषा मे मती राजन्यथा वा मन्यसेऽनघ ।
एवं गते ममाचक्ष्व स्वयं निश्चित्य हेतुभिः ॥ ॥ २-१४-८० (११९५३)

इति श्रीमन्महाभारते सभापर्वणि मन्त्रपर्वणि चतुर्दशोऽध्यायः ॥ १४.।
Mahabharata - Sabha Parva - Chapter Footnotes

२-१४-४ भुवि ये श्रेणिबद्धा राजानः येचान्ये क्षत्रियाः तान्
इक्ष्वाकुवंशस्य प्रकृ ति प्रजां परिचक्षते ॥
२-१४-५६ माधवाः मधुवश्याः ॥

---

सभ-०१५
॥ श्रीः ॥
२.१५. अध्यायः १५

Mahabharata - Sabha Parva - Chapter Topics
राजसूयविषये श्रीकृष्णयुधिष्ठिरभीमानां संवादः ॥ १.।
Mahabharata - Sabha Parva - Chapter Text

युधिष्ठिर उवाच ।
उक्तं त्वया बुद्धिमता यन्नान्यो वक्तुमर्हति ।
संशयानां हि निर्मोक्ता त्वन्नान्यो विद्यते भुवि ॥ २-१५-१ (११९५४)
गृहे गृहे हि राजानः स्वस्य स्वस्य प्रियङ्कराः ।
न च साम्राज्यमाप्तास्ते सम्राटशब्दो हि कृच्छ्रभाक्। २-१५-२ (११९५५)
कथं परानुभावज्ञः स्वं प्रशंसितुमर्हति ।
परेण समवेतस्तु यः प्रशस्यः स पूज्यते ॥ २-१५-३ (११९५६)
विशाला बहुला भूमिर्बहुरत्नसमाचिता ।
दूरं गत्वा विजानाति श्रेयो वृष्णिकुलोद्वह ॥ २-१५-४ (११९५७)
शममेव परं मन्ये शमात्क्षेमं भवेन्मम ।
आरम्भे पारमेष्ठ्यं तु न प्राप्यमिति मे मतिः ॥ २-१५-५ (११९५८)
एवमेते हि जानन्ति कुले जाता मनस्विनः ।
कश्चित्कदाचिदेतेषां भवेच्छ्रेष्ठो जनार्दन। २-१५-६ (११९५९)
वयं यैव महाभाग जरासन्धभयात्तदा ।

शङ्किताः स्म महाभाग द्वौरात्म्यात्तस्य चानघ ॥ २-१५-७ (११९६०)
अहं हि तव दुर्धर्ष भुजवीर्याश्रयः प्रभो ।
नात्मानं बलिनं मन्ये त्वयि तस्माद्विशङ्किते ॥ २-१५-८ (११९६१)
त्वत्सकाशाच्च रामाच्च भीमसेनाच्च माधव ।
अर्जुनाद्वा महाबाहो हन्तुं शक्यो नवेति वै ।
एवं जानन्हि वार्ष्णेय विमृशामि पुनः पुनः ॥ २-१५-९ (११९६२)
त्वं मे प्रमाणभूतोऽसि सर्वकार्येषु केशव ।
तच्छ्रुत्वा चाब्रवीद्भीमो वाक्यं वाक्यविशारदः ॥ २-१५-१० (११९६३)
भीम उवाच ॥ २-१५-११क्ष् (१४०३)
अनारम्भपरो राजा वल्मीक इव सीदति ।
दुर्बलश्चानुपायेन बलिनं योऽधितिष्ठति ॥ २-१५-११ (११९६४)
अतन्द्रितश्च प्रायेण दुर्बलो बलिनं रिपुम् ।
जयेत्सम्यक्प्रयोगेण नीत्याऽर्थानात्मनो हितान् ॥ २-१५-१२ (११९६५)
कृष्णे नयो मयि बलं जयः पार्थे धनञ्जये ।
मागधं साधयिष्याम इष्टिं त्रय इवाग्नयः ॥ २-१५-१३ (११९६६)
ग्त्वद्बुद्धिबलमाश्रित्य सर्वं प्राप्स्यति धर्मराद ।
जयोऽस्माकं हि गोविन्द येषां नाथो भवान्सदा'॥ २-१५-१४ (११९६७)
कृष्ण उवाच। २-१५-१५क्ष् (१४०४)
अर्थानारभते बालो नानुबन्धमवेक्षते ।
तस्मादरिं न मृष्यन्ति बालमर्थपरायणम् ॥ २-१५-१५ (११९६८)
जित्वा जय्यान्यौवनाश्विः पालनाच्च भगीरथः ।
कार्तवीर्यस्तपोवीर्याद्बलात्तु भरतो विभुः ॥ २-१५-१६ (११९६९)
ऋद्ध्या मरुत्तस्तान्पञ्च सम्राजस्त्वनुशुश्रुम ।
ग्सर्वान्वंश्याननुमृशन्नैते सन्ति युगे युगे'॥ २-१५-१७ (११९७०)
साम्राज्यमिच्छतस्ते तु सर्वाकारं युधिष्ठिर ।
निग्राह्यलक्षणं प्राप्तिर्धर्मार्थनयलक्षणैः ॥ २-१५-१८ (११९७१)
बार्हद्रथो नरासन्धस्तद्विद्धि भरतर्षभ ।
न चैनं प्रत्यत्युद्धयन्त कुलान्येकशतं नृपाः ॥ २-१५-१९ (११९७२)
तस्मादिह बलादेव साम्राज्यं कुरुते हि सः ॥ २-१५-२० (११९७३)
रत्नभाजो हि राजानो जरासन्धमुपासते ।
न च तुष्यति तेनापि बाल्यादनयमास्थितः ॥ २-१५-२१ (११९७४)
मूर्धाभिषिक्तं नृपतिं प्रधानपुरुषो बलात् ।
आदत्ते न च नो दृष्टोऽभागः पुरुषतः क्वचित् ॥ २-१५-२२ (११९७५)
एवं सर्वान्वशे चक्रे जरासन्धः शतावरान् ।
तं दुर्बलतरो राजा कथं पार्थ उपैष्यति ॥ २-१५-२३ (११९७६)
ग्तण्डुलप्रस्थके राजा कपर्दिनमुपासते'।

प्रोक्षितानां प्रमृष्टानां राज्ञां पशुपतेर्गृहे ।
पशूनामिव प्रमृष्टानां राज्ञां पशुपतेर्गृहे। २-१५-२४ (११९७७)
क्षत्रियः शस्त्रमरणो यदा भवति सत्कृतः ।
ततः स्म मागधं सङ्ख्ये प्रतिबाधेम यद्वयम् ॥ २-१५-२५ (११९७८)
षडशीतिः समानीताः शेषा राजंश्चतुर्दश ।
जरासन्धेन राजानस्ततः क्रूरं प्रवत्स्यते ॥ २-१५-२६ (११९७९)
प्राप्नुयात्स यशो दीप्तं तत्र यो विघ्नमाचरेत् ।
जयेद्यश्च जरासन्धं स सम्राण्णियतं भवेत् ॥ ॥ २-१५-२७ (११९८०)

इति श्रीमन्महाभारते सभापर्वणि मन्त्रपर्वणि पञ्चदशोऽध्यायः ॥ २५.।
Mahabharata - Sabha Parva - Chapter Footnotes

२-१५-१८ युधिष्ठिर धर्मार्थनयलक्षणैः सहिता प्राप्तिः पालनं
निग्राह्यलक्षणं साम्रा ज्यं च तेऽस्ति ॥
२-१५-१९ बार्हद्रथं जरासन्धं तं विद्धि इति क । घ पाठः ॥
२-१५-२२ बलात्प्रधानपुरुषः जरासन्धः पुरुषतः पुरुषेषु अभागः
अस्वीकृतः ॥

---

सभ-०१६
॥ श्रीः ॥
२.१६. अध्यायः १६

Mahabharata - Sabha Parva - Chapter Topics
युधिष्ठिरार्जुनयोर्भाषणम् ॥ १.।
Mahabharata - Sabha Parva - Chapter Text

युधिष्ठिर उवाच ॥
सम्राड्गुणमभीप्सन्वै युष्मान्स्वार्थपरायणः ।
कथं प्रहिणुयां कृष्ण सोऽहं केवलसाहसात् ॥ २-१६-१ (११९८१)
भीमार्जुनावुभौ नेत्रे मनो मन्ये जनार्दनम् ।
मनश्चक्षुर्विहीनस्य कीदृशं जीवितं भवेत् ॥ २-१६-२ (११९८२)
जरासन्धबलं प्राप्य दुष्पारं भीमविक्रमम् ।
यमोपि न विजेताऽऽजौ तत्र वः किं विचेष्टितम् ॥ २-१६-३ (११९८३)
अस्मिंस्त्वर्थान्तरे युक्तमनर्थः प्रतिपद्यते ।
तस्मान्न प्रतिपत्तिस्तु कार्या युक्ता मता मम ॥ २-१६-४ (११९८४)
यथाऽहं विमृशाम्येकस्तत्तावच्छ्रूयतां मम ।
संन्यासं रोचये साधु कार्यस्यास्य जनार्दन ।

प्रतिहन्ति मनो मेऽद्य राजसूयो दूराहरः ॥  २-१६-५  (११९८५)
वैशम्पायन उवाच ॥ २-१६-६क्ष् (१४०५)
पार्थः प्राप्य धनुः श्रेष्ठमक्षय्यौ च महेषुधी  ।
रथं ध्वजं हयांश्चैव युधिष्ठिरमभाषत ॥ २-१६-६  (११९८६)
अर्जुन उवाच। २-१६-७क्ष् (१४०६)
धनुः शस्त्रं शरा वीर्यं पक्षो भूमिर्यशो बलम्  ।
प्राप्तमेतन्मय राजन्दुष्प्रापं यदभीप्सितम्।  २-१६-७  (११९८७)
कुले जन्म प्रशंसन्ति वैद्याः साधु सुनिष्ठिताः  ।
बलेन सदृशं नास्ति वीर्यं तु मम रोचते।  २-१६-८  (११९८८)
कृतवीर्यकुले जातो निर्वीर्यः किं करिष्यति  ।
निर्वीर्ये तु कुले जातो वीर्यवांस्तु विशिष्यते ॥ २-१६-९  (११९८९)
क्षत्रियः सर्वशो राजन्यस्य वृत्तिर्द्विषज्जये  ।
सर्वैगुणैर्विहीनोऽपि वीर्यवान्हि तरेन्द्रिपून् ॥ २-१६-१०  (११९९०)
सर्वैरपि गुणैर्युक्तो निर्वीर्यः किं करिष्यति  ।
जयस्य हेतुः सिद्धिर्हि कर्म दैवं च संश्रितम् ॥ २-१६-११  (११९९१)
संयुक्तो हि बलैः कश्चित्प्रमादान्नोपयुज्यते ॥  २-१६-१२  (११९९२)
तेन द्वारेण शत्रुभ्यः क्षीयते सबलो रिपुः ॥  २-१६-१३  (११९९३)
दैन्यं यथा बलवति तथा मोहो बलान्विते  ।
तावुभौ नाशकौ हेतू राज्ञा त्याज्यौ जयार्थिना ॥ २-१६-१४  (११९९४)
जरासन्धिविनाशं च राज्ञां च परिरक्षणम्  ।
यदि कुर्याम् यज्ञार्थं किं ततः परमं भवेत् ॥ २-१६-१५  (११९९५)
अनारम्भे हि नियतो भवेदगुणनिश्चयः  ।
गुणान्निः संशयाद्राजन्नैर्गुण्यं मन्यसे कथम् ॥ २-१६-१६  (११९९६)
काषायं सुलभं पश्चान्मुनीनां शममिच्छताम्  ।
साम्राज्यं तु भवेच्छक्यं वयं योत्स्यामहे परान् ॥ ॥ २-१६-१७  (११९९७)

इति श्रीमन्महाभारते सभापर्वणि षोडशोऽध्यायः ॥ १६.।

---

सभ-०१७
॥ श्रीः ॥
२.१७. अध्यायः १७

Mahabharata - Sabha Parva - Chapter Topics
युधिष्ठिरेण जरासन्धप्रभावप्रश्ने श्रीकृष्णेन तदुपोद्घाततया
बृहद्रथराजोपा ख्यानकथनारम्भः ॥ १.। अपुत्रस्य बृहथस्य
पत्नीभ्यां सह तपोवनगमनम् ॥ २.। तत्र चण्डकौशिकमुनिना

बृहद्रथाय पुत्रीयाम्रफलदानम् ॥ ३.। प्रविभक्ततत्फलभोजनेन सञ्जातगर्भयोस्तद्भार्ययोः पृथगेकैकशरीरखण्डसम्भवः ॥४.। तत्पत्नीभ्यां दासीद्वारा बहिस्त्याजितयोः खण्डयोः जरानाम्न्या राक्षस्या स न्धानाजरासन्धसम्भवः ॥ ५.। बालकं गृहीत्वा आगतया जरया सह बृहद्रथस्य संवादः ॥ ६.।
Mahabharata - Sabha Parva - Chapter Text

वासुदेव उवाच ॥
जातस्य भारते वंशे तथा कुन्त्याः सुतस्य च ।
या वै युक्ता मतिः सेयमर्जुनेन प्रदर्शिता ॥ २-१७-१ (११९९८)
न स्म मृत्युं वयं विद्म रात्रौ वा यदि वा दिवा ।
न चापि कञ्चिदमरमयुद्धेनानुशुश्रुम ॥ २-१७-२ (११९९९)
एतावदेव पुरुषैः कार्यं हृदयतोषणम् ।
नयेन विधिदृष्टेन यदुपक्रमते परान् ॥ २-१७-३ (१२०००)
सुनयस्यानपायस्य संयोगे परमः क्रमः ।
सङ्गत्या जायतेऽसाम्यं साम्यं च न भवेद्द्वयोः ॥ २-१७-४ (१२००१)
अनयस्यानुपायस्य संयुगे परमः क्षयटः ।
संशयो जायते साम्याज्जयश्च न भवेद्द्वयोः ॥ २-१७-५ (१२००२)
ते वयं नयमास्थाय शत्रुदेशसमीपगाः ।
कथमन्तं न गच्छेम वृक्षस्येव नदीरयाः ॥
पररन्ध्रे पराक्रान्ताः स्वरन्ध्रावरणे स्थिताः ॥ २-१७-६ (१२००३)
व्यूढानीकैरतिबलैर्न युद्ध्येदरिभिः सह ।
इति बुद्धिमतां नीतिस्तन्ममापीह रोचते ॥ २-१७-७ (१२००४)
अनवद्या ह्यसम्बुद्धाः प्रविष्टाः शत्रुसद्म तत् ।
शत्रुदेशमुपाक्रम्य तं कामं प्राप्नुयामहे ॥ २-१७-८ (१२००५)
एको ह्येव श्रियं नित्यं बिभर्ति पुरुषर्षभः ।
अन्तरात्मेव भूतानां तत्क्षयं नैव लक्षये ॥ २-१७-९ (१२००६)
अथवैनं निहत्याजौ शेषेणापि समाहताः ।
प्राप्नुयाम ततः स्वर्गं ज्ञातित्राणपरायणाः ॥ २-१७-१० (१२००७)
युधिष्ठिर उवाच ॥ २-१७-११क्ष् (१४०७)
कृष्ण कोऽयं जरासन्धः किंवीर्यः किम्पराक्रमः ।
यस्त्वां स्पृष्ट्वाऽग्निसदृशं न दग्धः शलभो यथा ॥ २-१७-११ (१२००८)
कृष्ण उवाच ॥ २-१७-१२क्ष् (१४०८)
शृणु राजञ्जरासन्धो यद्वीर्यो यत्पराक्रमः ।
यथा चोपेक्षितोऽस्माभिर्बहुशः कृतविप्रियः ॥ २-१७-१२ (१२००९)
अक्षौहिणीनां तिसृणां पतिः समरदर्पितः ।

राजा बृहद्रथो नाम मगधाधिपतिर्बली ॥ २-१७-१३ (१२०१०)
रूपवान्वीर्यसम्पन्नः श्रीमानतुलविक्रमः ।
नित्यं दीक्षाङ्किततनुः शतक्रतुरिवापरः ॥ २-१७-१४ (१२०११)
तेजसा सूर्यसङ्काशः क्षमया पृथिवीसमः ।
यमान्तकसमः क्रोधे श्रिया वैश्रवणोपमः ॥ २-१७-१५ (१२०१२)
ग्स्वराज्यं कारयामास मगधेषु गिरिव्रजे'।
तस्याभिजनसंयुक्तैर्गणैर्भरतसत्तम ।
व्याप्तेयं पृथिवी सर्वा सूर्यस्येव गभस्तिभिः ॥ २-१७-१६ (१२०१३)
स काशिराजस्य सुते यमजे भरतर्षभः ।
उपयेमे महावीर्यो रूपद्रविणसंयुते। २-१७-१७त्तयोश्चकार समयं
मिथः स पुरुषर्षभः ॥ २-१७-१७ (१२०१४)
नातिवर्तिष्य इत्येवं पत्नीभ्यां सन्निधौ तदा ।
स ताभ्यां शुशुभे राजा पत्नीभ्यां वसुधाधिपः ॥ २-१७-१८ (१२०१५)
प्रियाम्भामनुरूपाभ्यां करेणुभ्यामिव द्विपः ।
तयोर्मध्यगतश्चापि रराज वसुधाधिपः ॥ २-१७-१९ (१२०१६)
गङ्गायमुनयोर्मध्ये मूर्तिमानिव सागरः ।
विषयेषु निमग्नस्य तस्य यौवनमत्यगात् ॥ २-१७-२० (१२०१७)
न च वंशकरः पुत्रस्तस्याजायत कश्चन ।
मङ्गलैर्बहुभिर्होमैः पुत्रकामाभिरिष्टिभिः ॥ २-१७-२१ (१२०१८)
नाससाद नृपश्रेष्ठः पुत्रं कुलविवर्धनम् ।
स भार्याभ्यां च सहितो निर्वेदमगमद्भृशम् ॥ २-१७-२२ (१२०१९)
ग्राज्यं चापि परित्यज्य तपोवनमथाश्रयत्। '
वार्यमाणः प्रकृतिभिर्नृपभक्त्या विशाम्पते'॥ २-१७-२३ (१२०२०)
अथ काक्षीवतः पुत्रं गौतमस्य महात्मनः ॥
शुश्राव तपसि श्रेष्ठमुदारं चण्डकौशिकम् ॥ २-१७-२४ (१२०२१)
यदृच्छयाऽऽगतं तं तु वृक्षमूलमुपाश्रितम् ।
पत्नीभ्यां सहितो राजा सर्वयत्नैरतोषयत् ॥ २-१७-२५ (१२०२२)
ग्बृहद्रथं च स ऋषिर्यथावच्चाभ्यनन्दत। '
उपविष्टः स तेनाथ अनुज्ञातो महात्मना ॥ २-१७-२६ (१२०२३)
तमपृच्छत्तदा विप्रः किमागमनमित्यथ ।
विप्रैरनुगतस्यैव पत्नीभ्यां सहितस्य च ॥ २-१७-२७ (१२०२४)
स उवाच मुनिं राजा भगवन्नास्ति मे सुतः ।
अपुत्रस्य तु राज्येन वृद्धत्वे किं प्रयोजनम् ॥ २-१७-२८ (१२०२५)
सोऽहं तपश्चरिष्यामि पत्नीभ्यां सहितो वने ।
नाप्रजस्य मुने कीर्तिः स्वधा चैवाक्षया भवेत् ।
एवमुक्तः स राज्ञा तु मुनिः कारुण्यमागतः ॥ २-१७-२९ (१२०२६)

तमब्रवीत्सत्यधृतिः सत्यवागृषिसत्तमः ।
परितुष्टोऽस्मि राजेन्द्र वरं वरय सुव्रत ॥ २-१७-३० (१२०२७)
ततः सभार्यः प्रणतस्तमुवाच बृहद्रथः ।
पुत्रदर्शननैराश्याद्बाष्पसन्दिग्धया गिरा ॥ २-१७-३१ (१२०२८)
राजोवाच ॥ २-१७-३२क्ष् (१४०९)
भगवन् राज्यमुत्सृज्य प्रस्थितस्य तपोवनम् ।
किं वरेणाल्पभाग्यस्य किं राज्येनाप्रजस्य मे ॥ २-१७-३२ (१२०२९)
कृष्ण उवाच। २-१७-३३क्ष् (१४१०)
एतच्छ्रुत्वा मुनिर्ध्यानमगमत्क्षुभितेन्द्रियः ।
तस्यैव चाम्रवृक्षस्य छायायां समुपाविशत ॥ २-१७-३३ (१२०३०)
तस्योपविष्टस्य मुनेरुत्सङ्गे निपपात ह ।
अवानमशुकादष्टमेकमाम्रफलं किल ॥ २-१७-३४ (१२०३१)
तत्प्रगृह्य मुनिश्रेष्ठो हृदयेनाभिमन्त्र्य च ।
राज्ञे ददावप्रतिमं पुत्रसम्प्राप्तिकारणम् ॥ २-१७-३५ (१२०३२)
उवाच च महाप्राज्ञस्तं राजानं महामुनिः ।
गच्छ राजन्कृतार्थोऽसि निवर्तस्व नराधिप ॥ २-१७-३६ (१२०३३)
ग्एष ते तनयो राजन्मा तपेह तपोवने ।
प्रजाः पालय धर्मेण एव धर्मो महीक्षिताम् ॥ २-१७-३७ (१२०३४)
यजस्व विविधैर्यज्ञैरिन्द्रं तर्पय चेन्दुना ।
पुत्रं राज्ये प्रतिष्ठाप्य तत आश्रममाव्रज ॥ २-१७-३८ (१२०३५)
अष्टौ वरान्प्रयच्छामि तव पुत्रस्य पार्थिव ।
ब्रह्मण्यत्वमजेयत्वं युद्धेषु च तथा मतिः ॥ २-१७-३९ (१२०३६)
प्रियातिथेयतां चैव दीनानामन्ववेक्षणम् ।
तथा बलं च सुभहल्लोके कीर्तिं च शाश्वतीम् ॥ २-१७-४० (१२०३७)
अनुरागं प्रजानां चेत्येवमष्टौ वरान्नृप ।
गच्छ त्वं कृतकृत्योऽसि निवर्तस्व जनाधिप'॥ २-१७-४१ (१२०३८)
अनुज्ञातः स ऋषिणा पत्नीभ्यां सहितो नृपः ।
पौरैरनुगतश्चापि विवेश स्वपुरं ततः ॥ २-१७-४२ (१२०३९)
यथासमयमाज्ञाय तदा स नृपसत्तमः ।
द्वाभ्यामेकं फलं प्रादात्पत्नीभ्यां भरतर्षभ ॥ २-१७-४३ (१२०४०)
मुनेश्च बहुमानेन कालस्य च विपर्ययात् ।
ते तदाम्रं द्विधा कृत्वा भक्षयामासतुः शुभे। २-१७-४४ (१२०४१)
तयोः समभवद्गर्भः फलप्राशनसम्भवः ।
ते च दृष्ट्वा स नृपतिः परां मुदमवाप ह ॥ २-१७-४५ (१२०४२)
अथ काले महाप्राज्ञ यथासमयमागते ।
प्रजायेतामुभे राजञ्शरीरशकले तदा ॥ २-१७-४६ (१२०४३)

एकाक्षिबाहुचरणे अर्धोदरमुखस्फिचे ।
दृष्ट्वा शरीरशकले प्रवेपतुरुभे भृशम् ॥ २-१७-४७ (१२०४४)
उद्विग्ने सह संमन्त्र्य ते भगिन्यौ तदाऽबले ।
सजीवे प्राणिशकले तत्यजाते सुदुःखिते ॥ २-१७-४८ (१२०४५)
तयोर्धात्र्यौ सुसंवीते कृत्वा ते गर्भसम्प्लवे ।
निर्गम्यान्तः पुरद्वारात्समुत्सृज्याभिजग्मतुः ॥ २-१७-४९ (१२०४६)
ग्दुकूलाभ्यां सुसञ्छन्ने पाण्डराभ्यामुभे तदा ।
अज्ञाते कस्यचित्ते तु जहतुस्ते चतुष्पथे ॥ २-१७-५० (१२०४७)
ततो विविशतुर्धात्र्यौ पुनरन्तः पुरं तदा ।
कथयामासतुरुभे देवीभ्यां तु पृथक्पृथक्'॥ २-१७-५१ (१२०४८)
ते चतुष्पथनिक्षिप्ते जरा नामाथ राक्षसी ।
जग्राह मनुजव्याघ्र मांसशोणितभोजना ॥ २-१७-५२ (१२०४९)
कर्तुकामा सुखवहे शकले सा तु राक्षसी ।
संयोजयामास तदा विधानबलचोदिता ॥ २-१७-५३ (१२०५०)
ते समानीतमात्रे तु शकले पुरुषर्षभ ।
एकमूर्तिधरो वीरः कुमारः समपद्यत ॥ २-१७-५४ (१२०५१)
ततः सा राक्षसी राजन्विस्मयोत्फुल्ललोचना ।
न शशाक समुद्वोढुं वज्रसारमयं शिशुम् ॥ २-१७-५५ (१२०५२)
बालस्ताम्रतलं मुष्टिं कृत्वा चास्ये निधाय सः ।
प्राक्रोशदतिसंरब्धः सतोय इव तोयदः ॥ २-१७-५६ (१२०५३)
तेन शब्देन सम्भ्रान्तः सहसाऽन्तः पुरे जनः ।
निर्जगाम नरव्याघ्र राज्ञा सह परन्तप ॥ २-१७-५७ (१२०५४)
ते चाबले परिम्लाने पयः पूर्णपयोधरे ।
निराशे पुत्रलाभाय सहसैवाभ्यगच्छताम् ॥ २-१७-५८ (१२०५५)
ते च दृष्ट्वा तथाभूते राजानं चेष्टसंततिम् ।
तं च बालं सुबलिनं चिन्तयामास राक्षसी ॥ २-१७-५९ (१२०५६)
नार्हामि विषये राज्ञो वसन्ती पुत्रगृद्धिनः ।
बालं पुत्रमिमं हन्तुं धार्मिकस्य महात्मनः ॥ २-१७-६० (१२०५७)
सा तं बालमुपादाय मेघलेखेन भास्करम् ।
कृत्वा च मानुषं रूपमुवाच वसुधाधिपम् ॥ २-१७-६१ (१२०५८)
बृहद्रथ सुतस्तेऽयं मया दत्तः प्रगृह्यताम् ।
तव पत्नीद्वये जातो द्विजातिवरशासनात् ।
धात्रीजनपरित्यक्तो मयाऽयं परिरक्षितः ॥ २-१७-६२ (१२०५९)
कृष्ण उवाच। २-१७-६३क्ष् (१४११)
ततस्ते भरतश्रेष्ठ काशिराजसुते शुभे ।
तं बालमभिपद्याशु प्रस्रवैरभ्यषिञ्जताम् ॥ २-१७-६३ (१२०६०)

ततः स राजा संहृष्टः सर्वं तदुपलभ्य च ।
अपृच्छद्धेमगर्भाभां राक्षसीं तामराक्षसीम् ॥ २-१७-६४ (१२०६१)
कात्वं कमलगर्भाभे मम पुत्रप्रदायिनी ।
कामं मा ब्रूहि कल्याणि देवता प्रतिभासि मे ॥ ॥ २-१७-६५ (१२०६२)

इति श्रीमन्महाभारते सभापर्वणि मन्त्रपर्वणि सप्तदशोऽध्यायः ॥ १७.।
Mahabharata - Sabha Parva - Chapter Footnotes

२-१७-४ क्रमः उपक्रमः ॥
२-१७-९ तत्क्षये बलक्षयः इति पाठः ॥
२-१७-३४ अवानमशुष्कं सरसमिति यावत् ।अमारुतमनाविद्धं इति
घ पाठः ॥
२-१७-४६ प्रजायेतां सुषुवतुः ॥
२-१७-४७ स्फिक् कट्या अधोभागः ॥
२-१७-५३ सुखवहे एकीकृतयोर्वहनं हि सुखेन भवतीति प्रसिद्धम् ॥
२-१७-५४ समानीतमात्रे संयोजितमात्रे ॥
२-१७-६४ अराक्षसी वेषतः ॥

---

सभ-०१८
॥ श्रीः ॥
२.१८. अध्यायः १८

Mahabharata - Sabha Parva - Chapter Topics
राजानम्प्रति स्वस्वरूपमभिधाय जराया अन्तर्धानम् ॥ १.।
Mahabharata - Sabha Parva - Chapter Text

राक्षस्युवाच ॥
जरा नामास्मि भद्रं ते राक्षसी कामरूपिणी ।
तव वेश्मनि राजेन्द्र पूजिता न्यवसं सुखम् ॥ २-१८-१ (१२०६३)
गृहे गृहे मनुष्याणां नित्यं तिष्ठामि राक्षसी ।
गृहदेवीति नाम्ना वै पुरा सृष्टा स्वयंम्भुवा ॥ २-१८-२ (१२०६४)
दानवानां विनाशाय स्थापिता दिव्यरूपिणी ।
यो मां भक्त्या लिखेत्कुड्ये सपुत्रां यौवनान्विताम् ॥ २-१८-३ (१२०६५)
गृहे तस्य भवेद्वृद्धिरन्यथा क्षयमाप्नुयात् ।
त्वद्गृहे तिष्ठमानाऽहं पूजिताऽहं सदा विभो ॥ २-१८-४ (१२०६६)
लिखिता चैव कुड्येषु पुत्रैर्बहुभिरावृता ।

गन्धपुष्पैस्तथा धूपैर्भक्ष्यभोज्यैः सुपूजिता ॥ २-१८-५ (१२०६७)
साऽहं प्रत्युपकारार्थं चिन्तयन्त्यनिशं नृप ।
तवेमे पुत्रशकले दृष्टवत्यस्मि धार्मिका। २-१८-६ (१२०६८)
संश्लिषिते मया दैवात्कुमारः समपद्यत ।
तव भाग्यान्महाराज हेतुमात्रमहं त्विह ॥ २-१८-७ (१२०६९)
मेरुं वा खादितुं शक्ता किं पुनस्तव बालकम् ।
गृहसम्पूजनात्तुष्ट्या मया प्रत्यर्पितस्तव ॥ २-१८-८ (१२०७०)
मम नाम्ना च लोकेऽस्मिन्ख्यात एव भविष्यति। २-१८-९ (१२०७१)
कृष्ण उवाच ।
एवमुक्त्वा तु सा राजंस्तत्रैवान्तरधीयत ।
स सङ्गृह्य कुमारं तं प्रविवेश गृहं नृपः ॥ २-१८-९क्ष् (१४१२)
तस्य बालस्य यत्कृत्यं तच्चकार नृपस्तदा ।
आज्ञापयच्च राक्षस्या मगधेषु महोत्सवम् ॥ २-१८-१० (१२०७२)
तस्य नामाकरोच्चैव पितामहसमः पिता ।
जरया सन्धितो यस्माज्जरासन्धो भवत्वयम् ॥ २-१८-११ (१२०७३)
सोऽवर्धत महातेजा मागधाधिपतेः सुतः ।
प्रमाणबलसम्पन्नो हुताहुतिरिवानलः ॥ २-१८-१२ (१२०७४)
गएवं स ववृधे राजन्कुमारः पुष्करेक्षणः ।
कालेन महता चापि यौवनस्थो बभूव ह'॥
मातापित्रोर्नन्दकरः शुक्लपक्षे यथा शशी ॥ ॥ २-१८-१३ (१२०७५)

इति श्रीमन्महाभारते सभापर्वणि मन्त्रपर्वणि अष्टादशोऽध्यायः ॥१८.।

---

सभ-०१९
॥ श्रीः ॥
२.१९. अध्यायः १९

Mahabharata - Sabha Parva - Chapter Topics
पुनर्यदृच्छागतेन चण्डकौशिकेन जरासन्धपराक्रमादौ
कथिते जरासन्धं राज्येऽभ इषिच्य तपोवनगतस्य सभार्यस्य
बृहद्रथस्य स्वर्गगमनम् ॥१.। कृष्णेन कंसवधात् जरासन्धस्य
स्वस्मिन्वैरोदयकथनम् ॥२.।
Mahabharata - Sabha Parva - Chapter Text

कृष्ण उवाच ॥
कस्यचित्त्वथ कालस्य पुनरेव महातपाः ।

मगधेषुपजक्राम भगवांश्चण्डकौशिकः ॥ २-१९-१ (१२०७६)
तस्याऽऽगमनसंहृष्टः सामात्यः सपुरः सरः ।
सभार्यः सह पुत्रेण निर्जगाम बृहद्रथः ॥ २-१९-२ (१२०७७)
पाद्यार्घ्याचमनीयैस्तमर्चयामास भारत ।
स नृपो राज्यसहितं पुत्रं तस्मै न्यवेदयत् ॥ २-१९-३ (१२०७८)
प्रतिगृह्य च तां पूजां पार्थिवाद्भगवानृषिः ।
उवाच मागधं राजन्प्रहृष्टेनान्तरात्मना ॥ २-१९-४ (१२०७९)
सर्वमेतन्मया ज्ञातं राजन्दिव्येन चक्षुषा ।
पुत्रस्तु शृणु राजेन्द्र यादृशोऽयं भविष्यति ॥ २-१९-५ (१२०८०)
अस्य रूपं च सत्वं च बलमूर्जितमेव च ।
एष श्रिया समुदितः पुत्रस्तव न संशयः ॥ २-१९-६ (१२०८१)
प्रापयिष्यति तत्सर्वं विक्रमेण समन्वितः ।
अस्य वीर्यवतो वीर्यं नानुयास्यन्ति पार्थिवाः ॥ २-१९-७ (१२०८२)
पततो वैनतेयस्य गतिमन्ये यथा खगाः ।
विनाशमुपयास्यन्ति ये चास्य परिपन्थिनः ॥ २-१९-८ (१२०८३)
देवैरपि विसृष्टानि शस्त्राण्यस्य महीपते ।
न रुजं जनयिष्यन्ति गिरेरिव नदीरयाः ॥ २-१९-९ (१२०८४)
सर्वमूर्धाभिषिक्तानामेव मूर्ध्नि ज्वलिष्यति ।
प्रभाहरोऽयं सर्वेषां ज्योतिषामिव भास्करः ॥ २-१९-१० (१२०८५)
एनमासाद्य राजानः समृद्धबलवाहनाः ।
विनाशमुपयास्यन्ति शलभा इव पावकम् ॥ २-१९-११ (१२०८६)
एष श्रियः समुदिताः सर्वराज्ञां ग्रहीष्यति ।
वर्षास्विवोदीर्णजला नदीर्नदनदीपतिः ॥ २-१९-१२ (१२०८७)
एष धारयित सम्यक्चातुर्वर्ण्यं महाबलः ।
शुभां शुभवतीं स्फीतां सर्वसस्यधरां धराम् ॥ २-१९-१३ (१२०८८)
अस्याज्ञावशगाः सर्वे भविष्यन्ति नराधिपाः ।
सर्वभूतात्मभूतस्य वायोरिव शरीरिणः ॥ २-१९-१४ (१२०८९)
एष रुद्रं महादेवं त्रिपुरान्तकरं हरम् ।
सर्वलोकेष्वतिबलः साक्षाद्द्रक्ष्यति मागधः ॥ २-१९-१५ (१२०९०)
एवं ब्रुवन्नेव मुनिः स्वकार्यमिव चिन्तयन् ।
विसर्जयामास नृपं बृहद्रथमथारिहन् ॥ २-१९-१६ (१२०९१)
प्रविश्य नगरीं चापि ज्ञातिसम्बन्धिभिर्वृतः ।
अभिषिच्य जरासन्धं मगधाधिपतिस्तदा ॥ २-१९-१७ (१२०९२)
बृहद्रथो नरपतिः परां निर्वृतिमाययौ ।
अभिषिक्ते जरासन्धे तदा राजा बृहद्रथः ।
पत्नीद्वयेनानुगतस्तपोवनचरोऽभवत् ॥ २-१९-१८ (१२०९३)

ततो वनस्थे पितरि मातृभ्यां सह भारत ।
जरासन्धः स्ववीर्येण पार्थिवानकरोद्वशे ॥ २-१९-१९ (१२०९४)
अथ दीर्घस्य कालस्य तपोवनचरो नृपः ।
सभार्यः स्वर्गमगमत्तपस्तप्त्वा बृहद्रथः ॥ २-१९-२० (१२०९५)
जरासन्धोऽपि नृपतिर्यथोक्तं कौशिकेन तत् ।
वरप्रदानमखिलं प्राप्य राज्यमपालयत् ॥ २-१९-२१ (१२०९६)
हते चैव मया कंसे सहंसडिभिके तदा ।
जरासन्धस्य दुहिता रोदते पार्श्वतः पितुः ।
जातो वै वैरनिर्बन्धो मयासीत्तत्र भारत ॥ २-१९-२२ (१२०९७)
भ्रामयित्वा शतगुणमेकोनं येन भारत ।
गदा क्षिप्ता बलवता मागधेन गिरिव्रजात् ॥ २-१९-२३ (१२०९८)
तिष्ठतो मथुरायां वै कुत्स्नस्याद्भुतकर्मणः ।
एकोनयोजनशते सा पपात गदा शुभा ॥ २-१९-२४ (१२०९९)
दृष्ट्वा पौरैस्तदा सम्यग्गदा चैव निवेदिता ।
गदावसानं तत्ख्यातं मथुरायाः समीपतः ॥ २-१९-२५ (१२१००)
तस्यास्तां हंसडिभिकावशस्त्रनिधनावुभौ ।
मन्त्रे मतिमतां श्रेष्ठौ नीतिशास्त्रे विशारदौ ॥ २-१९-२६ (१२१०१)
यौ तौ मया ते कथितौ पूर्वमेव महाबलौ ।
त्रयस्त्रयाणां लोकानां पर्याप्ता इति मे मतिः ॥ २-१९-२७ (१२१०२)
एवमेष तदा वीर बलिभिः कुकुरान्धकैः ।
वृष्णिभिश्च महाराज नीतिहेतोरुपेक्षितः ॥ ॥ २-१९-२८ (१२१०३)

इति श्रीमन्महाभारते सभापर्वणि मन्त्रपर्वणि एकोनविंशोऽध्यायः ॥ १९.।
Mahabharata - Sabha Parva - Chapter Footnotes

२-१९-१६ आह्निकाय महातपाः इति घ । पाठः ॥

---

सभ-०२०
॥ श्रीः ॥
२.२०. अध्यायः २०

Mahabharata - Sabha Parva - Chapter Topics
कृष्णयुधिष्ठिरसंवादानन्तरं भीमार्जुनाभ्यांसह कृष्णस्य
मागधपुरप्रस्थानम् ॥ १.।
Mahabharata - Sabha Parva - Chapter Text

वासुदेव उवाच ॥
पतितौ हंसडिभिकौ कंसश्च सगणो हतः ।
जरासन्धस्य निधने कालोऽयं समुपागतः ॥ २-२०-१ (१२१०४)
न शक्योऽसौ रणे जेतुं सर्वैरपि सुरासुरैः ।
प्राणयुद्धेन जेतव्यः स इत्युपलभामहे ॥ २-२०-२ (१२१०५)
मयि नीतिर्बलं भीमे रक्षिता चावयोर्जयः ।
मागधं साधयिष्याम इष्टिं त्रय इवाग्नयः ॥ २-२०-३ (१२१०६)
त्रिभिरासादितोऽस्माभिर्विजने स नराधिपः ।
न सन्देहो यथा युद्धमेकेनाप्युपयास्यति ॥ २-२०-४ (१२१०७)
अवमानाच्च लोभाच्च बाहुवीर्याच्च दर्पितः ।
भीमसेनेन युद्धाय ध्रुवमप्युपयास्यति ॥ २-२०-५ (१२१०८)
अलं तस्य महाबाहुर्भीमसेनो महाबलः ।
लोकस्य समुदीर्णस्य निधनायान्तको यथा ॥ २-२०-६ (१२१०९)
यदि भीमबलं वेत्सि यदि ते प्रत्ययो मयि ।
भीमसेनार्जुनौ शीघ्रं न्यासभूतौ प्रयच्छ मे ॥ २-२०-७ (१२११०)
वैशम्पायन उवाच ॥ २-२०-८क्ष् (१४१३)
एवमुक्तो भगवता प्रत्युवाच युधिष्ठिरः ।
भीमार्जुनौ समालोक्य सम्प्रहृष्टमुखौ स्थितौ ॥ २-२०-८ (१२१११)
युधिष्ठर उवाच। २-२०-९क्ष् (१४१४)
अच्युताच्युत मामैवं व्याहरामित्रकर्शन ।
पाण्डवानां भवान्नाथो भवन्तं चाश्रिता वयम् ॥ २-२०-९ (१२११२)
यथा वदसि गोविन्द सर्वं तदुपपद्यते ।
नहि त्वमग्रतस्तेषां येषां लक्ष्मीः पराङ्मुखी ॥ २-२०-१० (१२११३)
ग्येषामभिमुखी लक्ष्मीस्तेषां कृष्ण त्वमग्रतः'।
निहतश्च जरासन्धो मोक्षिताश्च महीक्षितः। २-२--११च्
राजसूयश्च मे लब्धो निदेशे त्व तिष्ठतः ॥ २-२०-११ (१२११४)
क्षिप्रमेव यथा त्वेतत्कार्यं समुपपद्यते ।
अप्रमत्तो जगन्नाथ तथा कुरु समुपपद्यते। २-२०-१२ (१२११५)
त्रिभिर्भवद्भिर्हि विना नाहं जीवितुमुत्सहे ।
धर्मकामार्थरहितो रोगार्त इव दुःखितः ॥ २-२०-१३ (१२११६)
न शौरिणा विना पार्थो न शौरिः पाण्डवं विना ।
नाजेयोस्त्यनयोऽर्लोके कृष्णयोरिति मे मतिः ॥ २-२०-१४ (१२११७)
अयं च बलिनां श्रेष्ठः श्रीमानपि वृकोदरः ।
युवाभ्यां सहितो वीर किं न कुर्यान्महायशाः ॥ २-२०-१५ (१२११८)
सुप्रणीतो बलौघो हि कुरुते कार्यमुत्तमम् ।
अन्धं बलं जडं प्राहुः प्रणेतव्यं विचक्षणैः ॥ २-२०-१६ (१२११९)

यतो हि निम्नं भवति नयन्ति हि ततो जलम् ।
यतश्छिद्रं ततश्चापि नयन्ते धीवरा जलम् ॥ २-२०-१७ (१२१२०)
तस्मान्नयविधानज्ञं पुरुषं लोकविश्रुतम् ।
वयमाश्रित्य गोविन्दं यतामः कार्यसिद्धये ॥ २-२०-१८ (१२१२१)
एवं प्रज्ञानयबलं क्रियोपायसमन्वितम् ।
पुरस्कुर्वीत कार्येषु कृष्णकार्यार्थसिद्धये ॥ २-२०-१९ (१२१२२)
एवमेव यदुश्रेष्ठ यावत्कार्यार्थसिद्धये ।
अर्जुनः कृष्णमन्वेतु भीमोऽन्वेतु धनञ्जयम् ।
नयो जयो बलं चैव विक्रमे सिद्धिमेष्यति ॥ २-२०-२० (१२१२३)
वैशम्पायन उवाच। २-२०-२१क्ष् (१४१५)
एवमुक्तास्ततः सर्वे भ्रातरो विपुलौजसः ।
वार्ष्णेयः पाण्डवेयौ च प्रतस्थुर्मागधं प्रति ॥ २-२०-२१ (१२१२४)
वर्चस्विनां ब्राह्मणानां स्नातकानां परिच्छदैः ।
आच्छाद्य सुहृदां वाक्यैर्मनोज्ञैरभिनन्दिताः ॥ २-२०-२२ (१२१२५)
ग्माधवः पाण्डवेयौ च प्रतस्थुर्व्रतधारिणः'।
अमर्षादभितप्तानां ज्ञात्यर्थं मुख्यतेजसाम् ।
रविसोमाग्निवपुषां दीप्तमासीत्तदा वपुः ॥ २-२०-२३ (१२१२६)
इतं मेने जरासन्धं दृष्ट्वा भीमपुरोगमौ ।
एककार्यसमुद्यन्तौ कृष्णौ युद्धेऽपराजितौ ॥ २-२०-२४ (१२१२७)
ईशौ हितौ महात्मानौ सर्वकार्यप्रवर्तिनौ ।
धर्मकामार्थलोकानां कार्याणां च प्रवर्तकौ ॥ २-२०-२५ (१२१२८)
कुरुभ्यः प्रस्थितास्ते तु मध्येन कुरुजाङ्गलम् ।
रम्यं पद्मसरो गत्वा कालकूडमतीत्य च ॥ २-२०-२६ (१२१२९)
गण्डकीं च महाशोणं सदानीरां तथैव च ।
एकपर्वतके नद्यः क्रमेणैत्याव्रजन्त ते ॥ २-२०-२७ (१२१३०)
उत्तीर्य सरयूं रम्यां दृष्ट्वा पूर्वांश्च कोसलान् ।
अतीत्य जग्मुर्मिथिलां मालां चर्मण्वतीं नदीम् ॥ २-२०-२८ (१२१३१)
अतीत्य गङ्गां शोणं च त्रयस्ते प्राङ्मुखास्तदा ।
कुशचीरच्छदा जग्मुर्मागधं क्षेत्रमच्युताः ॥ २-२०-२९ (१२१३२)
ते शश्वद्गोधनाकीर्णमम्बुमन्तं शुभद्रुमम् ।
गोरथं गिरिमासाद्य ददृशुर्मागधं पुरम् ॥ ॥ २-२०-३० (१२१३३)

इति श्रीमन्महाभारते सभापर्वणि जरासन्धवधपर्वणि विंशोऽध्यायः
॥ २०. ।

Mahabharata - Sabha Parva - Chapter Footnotes

सभ-०२१
॥ श्रीः ॥
२.२१. अध्यायः २१

Mahabharata - Sabha Parva - Chapter Topics
जरासन्धसमीपं गतानां श्रीकृष्णभीमार्जुनानां जरासन्धेन सह विवादः ॥ १.।
Mahabharata - Sabha Parva - Chapter Text

वासुदेव उवाच ॥
एष पार्थ महान्भाति पशुमान्नित्यमम्बुमान् ।
निरामयः सुवेश्माढ्यो निवेशो मागधः शुभः ॥ २-२१-१ (१२१३४)
वैहारो विपुलः शैलो वाराहो वृषभस्तथा ।
तथा ऋषिगिरिस्तात शुभाश्चैत्यकपञ्चमाः ॥ २-२१-२ (१२१३५)
एते पञ्चमहाशृङ्गाः पर्वताः शीतलद्रुमाः ।
रक्षन्तीवाभिसंहत्य संहताङ्गा गिरिव्रजम् ॥ २-२१-३ (१२१३६)
पुष्पवेष्टितशाखाग्रैर्गन्धवद्भिर्मनोहरैः ।
निगूढा इव लोध्राणां वनैः कामिजनप्रियैः ॥ २-२१-४ (१२१३७)
ग्यत्र दीर्घतमा नाम ऋषिः परमन्त्रितः'।
शूद्रायां गौतमो यत्र महात्मा संशितव्रतः ।
औशीनर्यामजनयत्काक्षीवाद्यान्सुतान्मुनिः ॥ २-२१-५ (१२१३८)
गौतमः प्रणयात्तस्माद्यथाऽसौ तत्र सद्मनि ।
भजते मागधं वंशं स नृपाणामनुग्रहः। २-२१-६ (१२१३९)
अङ्गवङ्गादयश्चैव राजानः सुमहाबलाः ।
गौतमक्षयमभ्येत्य रमन्ते स्म पुरार्जुन ॥ २-२१-७ (१२१४०)
वनराजीस्तु पश्येमाः पिप्लानां मनोरमाः ।
लोध्राणां च शुभाः पार्थ गौतमौकः समीपजाः ॥ २-२१-८ (१२१४१)
अर्बुदः शक्रवापी च पन्नगौ शत्रुतापनौ ।
स्वस्तिकस्यालयश्चात्र मणिनागस्य चोत्तमः ॥ २-२१-९ (१२१४२)
अपारिहार्या मेघानां मागधा मनुना कृताः ।
कौशिको मणिमांश्चैव चक्राते चाप्यनुग्रहम् ॥ २-२१-१० (१२१४३)
ग्पाण्डरे विपुले चैव तथा वाराहकेऽपि च ।
चैत्यके चज गिरिश्रेष्ठे मादङ्गे च शिलोच्चये ॥ २-२१-११ (१२१४४)
एतेषु पर्वतेन्द्रेषु सर्वसिद्धसमालयाः ।
यतीनामाश्रमाश्चैव मुनीनां च महात्मनाम् ॥ २-२१-१२ (१२१४५)

वृषभस्य तमालस्य महावीर्यस्य वै तथा ।
गन्धर्वरक्षसां चैव नागानां च तथाऽऽलयाः ॥ २-२१-१३ (१२१४६)
कक्षीवतस्तपोवीर्यात्तपोदा इति विश्रुताः ।
पुण्यतीर्थाश्च ते सर्वे सिद्धानां चैव कीर्तिताः ।
मणेश्च दर्शनादेव भद्रं शिवमवाप्नुयात्'॥ २-२१-१४ (१२१४७)
एवं प्राप्य पुरं रम्यं दुराधर्षं समन्ततः ॥
अर्थसिद्धिं त्वनुपमां जरासन्धोऽभिमन्यते ॥ २-२१-१५ (१२१४८)
वयमासादने तस्य दर्पमद्य हरेम हि। २-२१-१६ (१२१४९)
वैशम्पायन उवाच ।
एवमुक्त्वा ततः सर्वे भ्रातरो विपुलौजसः ॥ २-२१-१६क्ष् (१४१६)
वार्ष्णेयः पाण्डवौ चैव प्रतस्थुर्मागधं पुरम् ।
हृष्टपुष्टजनोपेतं चातुर्वर्ण्यसमाकुलम् ॥ २-२१-१७ (१२१५०)
स्फीतोत्सवमनाधृष्यमासेदुश्च गिरिव्रजतम् ।
ततो द्वारमनासाद्य पुरस्य गिरिमुच्छ्रितम् ॥ २-२१-१८ (१२१५१)
बार्हद्रथैः पूज्यमानं तथा नगरवासिभिः ।
मागधानां तु रुचिरं चैत्यकान्तरमाद्रवन् ॥ २-२१-१९ (१२१५२)
यत्र मांसादमृषभमाससाद बृहद्रथः ।
तं हत्वा मासतालाभिस्तिस्रो भेरीकारयत् ॥ २-२१-२० (१२१५३)
स्वपुरे स्थापयामास तेन चानह्य चर्मणा ।
यत्र ताः प्राणदन्भेर्यो दिव्यपुष्पावचूर्णिताः ॥ २-२१-२१ (१२१५४)
भङ्क्त्वा भेरीत्रयं तेऽपि चैत्यप्राकारमाद्रवन् ।
द्वारतोऽभिमुखाः सर्वे ययुर्नानायुधास्तधा ॥ २-२१-२२ (१२१५५)
मागधानां सुरुचिरं चैत्यकं तं समाद्रवन् ।
शिरसीव समाघ्नन्तो जरासन्धं जिघांस्वः ॥ २-२१-२३ (१२१५६)
स्थिरं सुविपुलं शृङ्गं सुमहत्तत्पुरातनम् ।
अर्चितं गन्धमाल्यैश्च सततं सुप्रतिष्ठितम् ॥ २-२१-२४ (१२१५७)
विपुलैर्बाहुभिर्वीरस्तेऽभिहत्याभ्यपातयन् ।
ततस्ते मागधं हृष्टाः पुरं प्रविविशुस्तदा ॥ २-२१-२५ (१२१५८)
एतस्मिन्नेव काले तु ब्राह्मणा वेदपारगाः ।
दृष्ट्वा तु दुर्निमित्तानि जरासन्धमदर्शयन् ॥ २-२१-२६ (१२१५९)
पर्युग्न्यकुर्वंश्च नृपं द्विरदस्थं पुरोहिताः ।
ततस्तच्छान्तये राजा जरासन्धः प्रतापवान् ।
दीक्षितो नियमस्थोऽसावुपवासपरोऽभवत् ॥ २-२१-२७ (१२१६०)
स्नातकव्रतिनस्ते तु बाहुशस्त्रा निरायुधाः ।
युयुत्सवः प्रविविशुर्जरासन्धेन भारत ॥ २-२१-२८ (१२१६१)
भक्ष्यमाल्यापणानां च ददृशुः श्रियमुत्तमाम् ।

स्फीतां सर्वगुणोपेतां सर्वकामसमृद्धिनाम् ॥ २-२१-२९ (१२१६२)
तां तु दृष्ट्वा समृद्धिं ते वीथ्यां तस्यां नरोत्तमाः ।
राजमार्गेण गच्छन्तः कृष्णभीमधनञ्जयाः ।
बलाद्गृहीत्वा माल्यानि मालाकारान्महाबलाः ॥ २-२१-३० (१२१६३)
ग्कर्पूरशृङ्गं कोष्टं च सफलं चान्तरापणे ।
वैश्याद्बलाद्गृहीत्वा ते विहृत्य च महारथाः'॥ २-२१-३१ (१२१६४)
विरागवसनाः सर्वे स्रग्विणो मृष्टकुण्डलाः ।
निवेशनमथाजग्मुर्जरासन्धस्य धीमतः ॥ २-२१-३२ (१२१६५)
गोवासमिव वीक्षन्तः सिंहा हैमवता यथा ।
शालस्तम्भनिभास्तेषां चन्दनागुरुरूषिताः ॥ २-२१-३३ (१२१६६)
अशोभन्त महाराज बाहवो युद्धशालिनाम् ।
तान्दृष्ट्वा द्विरदप्रख्याञ्शालस्कन्दानिवोद्गतान् ॥ २-२१-३४ (१२१६७)
व्यूढोरस्कान्मागधानां विस्मयः समपद्यत ।
ग्अद्वारेणाभ्यवस्कन्द्य विविशुर्मागधालयम्'॥ २-२१-३५ (१२१६८)
ते त्वतीत्य जनाकीर्णाः कक्षास्तिस्रो नरर्षभाः ।
अहङ्कारेण राजानमुपतस्थुर्गतव्यथाः ॥ २-२१-३६ (१२१६९)
ग्भो शब्देनैव राजानमुचुस्ते तु महारथाः'।
तान्पाद्यमधुपर्कार्हान्गवार्हान्सत्कृतिं गतान् ।
प्रत्युत्थाय जरासन्ध उपतस्थे यथाविधि ॥ २-२१-३७ (१२१७०)
उवाच चैतान्राजाऽसौ स्वागतं वोस्त्विति प्रभुः ।
मौनमासीत्तदा पार्थभीमयोर्जनमेजय ॥ २-२१-३८ (१२१७१)
तेषां मध्ये महाबुद्धिः कृष्णो वचनमब्रवीत् ।
वक्तुं नायाति राजेन्द्र एतयोर्नियमस्थयोः ॥ २-२१-३९ (१२१७२)
अर्वाङ्निशीथात्परतस्त्वाया सार्धं वदिष्यतः ।
यज्ञागारे स्थापयित्वा राजा राजगृहं वदिष्यतः। २-२१-४० (१२१७३)
ततोऽर्धरात्रे सम्प्राप्ते यातो यत्र स्थिता द्विजाः ।
तस्य ह्येतद्व्रतं राजन्बभूव भुवि विश्रुतम् ॥ २-२१-४१ (१२१७४)
स्नातकान्ब्राह्मणान्प्राप्ताञ्श्रुत्वा स समितिञ्जयः ।
अप्यर्धरात्रे नृपतिः प्रत्युद्गच्छति भारत ॥ २-२१-४२ (१२१७५)
तांस्त्वपूर्वेण वेषेण दृष्ट्वा स नृपसत्तमः ।
उपतस्थे जरान्धो विस्मितश्चाभवत्तदा ॥ २-२१-४३ (१२१७६)
ते तु दृष्ट्वैव राजानं जरासन्धं नरर्षभाः ।
इदमूचुरमित्रघ्नाः सर्वे भरतसत्तम ॥ २-२१-४४ (१२१७७)
स्वस्त्यस्तु कुशलं राजन्निति तत्र व्यवस्थिताः ।
तं नृपं नृपशार्दूल प्रेक्षमाणाः परस्परम् ॥ २-२१-४५ (१२१७८)
तानब्रवीञ्जरासन्धस्तथा पाण्डवयादवान् ।

आस्यतामिति राजेन्द्र ब्राह्मणच्छद्मसंवृतान् ॥ २-२१-४६ (१२१७९)
अथोपविविशुः सर्वे त्रयस्ते पुरुषर्षभाः ।
सम्प्रदीप्तास्त्रयो लक्ष्म्या महाध्वर इवाग्नयः ॥ २-२१-४७ (१२१८०)
तानुवाच जरासन्धः सत्यसन्धो नराधिपः ।
विगर्हमाणः कौरव्य वेषग्रहणवैकृतान् ॥
न स्नातकव्रता विप्रा वहिर्माल्यानुलेपनाः ॥ २-२१-४८ (१२१८१)
भवन्तीति नृलोकेऽस्मिन्विदितं मम सर्वशः ।
के यूयं पुष्पवन्तश्च भुजैर्ज्याकृतलक्षणैः ॥ २-२१-४९ (१२१८२)
बिभ्रतः क्षात्रमोजश्च ब्राह्मण्यं प्रतिजानथ ।
एवं विरागवसना बहिर्माल्यानुलेपनाः ॥ २-२१-५० (१२१८३)
ग क्षत्रिया एव लोकेऽस्मिन्विदिता मम सर्वशः'॥
सत्यं वदत के यूयं सत्यं राजसु शोभते ॥ २-२१-५१ (१२१८४)
चैत्यकस्य गिरेः शृङ्गं भित्त्वा किमिह सद्मनि ।
अद्वारेण प्रविष्टाः स्थ निर्भया राजकिल्विषात् ॥ २-२१-५२ (१२१८५)
वदध्वं वाचि वीर्यं च ब्राह्मणस्य विशेषतः ।
कर्म चैतद्विलिङ्गस्थं किं वोऽद्य प्रसमीक्षितम् ॥ २-२१-५३ (१२१८६)
एवं च मामुपास्थाय कस्माच्च विधिनार्हणाम् ।
प्रणीतां नानुगृह्णीत कार्यं किं वाऽस्मदागमे ॥ २-२१-५४ (१२१८७)
वैशम्पायन उवाच। २-२१-५५क्ष् (१४१७)
एवमुक्ते ततः कृष्णः प्रत्युवाच महामनाः ।
स्निग्धगमभीरया वाचा वाक्यं वाक्यविशारदः ॥ २-२१-५५ (१२१८८)
कृष्ण उवाच। २-२१-५६क्ष् (१४१८)
स्नातकान्ब्राह्मणान्राजन्विद्ध्यस्मांस्त्वं नराधिप ।
स्नातकव्रतिनो राजन्ब्राह्मणाः क्षत्रिया विशः ॥ २-२१-५६ (१२१८९)
विशेषनियमाश्चैषामविशेषाश्च सन्त्युत ।
विशेषवांश्च सततं क्षत्रियः श्रियमृच्छति ॥ २-२१-५७ (१२१९०)
पुष्पवत्सु ध्रुवा श्रीश्च पुष्पवन्तस्ततो वयम् ।
क्षत्रियो बाहुवीर्यस्तु न तथा वाक्यवीर्यवान् ॥
अम्प्रगल्भं वचस्तस्य तस्माद्वार्हद्रथेरितम् ॥ २-२१-५८ (१२१९१)
स्ववीर्यं क्षत्रियाणां तु बाह्वोर्धाता न्यवेशयत् ।
तद्दिदृक्षसि चेद्राजन्द्रष्टास्यद्य न संशयटः ॥ २-२१-५९ (१२१९२)
अद्वारेण रिम्पोर्गेहं द्वारेण सुहृदो गृहान् ।
प्रविशन्ति नरा धीरा द्वाराण्येतानि धर्मतः ॥ २-२१-६० (१२१९३)
कार्यवन्तो गृहानेत्य शत्रुतो नार्हणां वयम् ।
प्रतिगृह्णीम् तद्विद्धि एतन्नः शाश्वतं व्रतम् ॥ ॥ २-२१-६१ (१२१९४)

इति श्रीमन्महाभारते सभापर्वणि जरासन्धवधपर्वणि
एकविंशोऽध्यायः ॥ २१.।

---

सभ-०२२
॥ श्रीः ॥
२.२२. अध्यायः २२

Mahabharata - Sabha Parva - Chapter Topics
कृष्णजरासन्धयोर्विवादानन्तरं जरासन्धस्य युद्धोद्यमः ॥ १.।
Mahabharata - Sabha Parva - Chapter Text

जरासन्ध उवाच ।
न स्मरामि कदा वैरं कृतं युष्माभिरित्युत ।
चिन्तयंश्च न पश्यामि भवतां प्रति वैकृतम् ॥ २-२२-१ (१२१९५)
वैकृते वा सति कथं मन्यध्वं मामनागसम् ।
अरिं वै ब्रूत हे विप्राः सतां समय एष हि ॥ २-२२-२ (१२१९६)
अर्थधर्मोपघाताद्धि मनः समुपतप्यते ।
योऽनागसि प्रसजति क्षत्रियो हि न संशयटः ॥ २-२२-३ (१२१९७)
अतोऽन्यथा चरँल्लोके धर्मज्ञः सन्महारथः ।
वृजिनां गतिमाप्नोति श्रेयसोऽप्युपहन्ति च ॥ २-२२-४ (१२१९८)
त्रैलोक्ये क्षत्रधर्मो हि श्रेयान्वै साधुचारिणाम् ।
नान्यं धर्मं प्रशंसन्ति ये च धर्मविदो जनाः ॥ २-२२-५ (१२१९९)
तस्य मेऽद्य स्थितस्येह स्वधर्मे नियतात्मनः ।
अनागसं प्रजानां च प्रमादादिव जल्पथ ॥ २-२२-६ (१२२००)
कृष्ण उवाच। २-२२-७क्ष् (१४१९)
कुलकार्यं महाबाहो कश्चिदेकः कुलोद्वहः ।
वहते यस्तन्नियोगाद्वयमभ्युद्यतास्त्वयि ॥ २-२२-७ (१२२०१)
त्वया चोपहृता राजन्क्षत्रिया लोकवासिनः ।
तदागः क्रूरमुत्पाद्य मन्यसे किमनागसम् ॥ २-२२-८ (१२२०२)
राजा राज्ञः कथं साधून्हिंस्यान्नृपतिसत्तम ।
तद्राज्ञः सन्निगृह्य त्वं रुद्रायोपजिहीर्षसि ॥ २-२२-९ (१२२०३)
अस्मांस्तदेनोपगच्छेत्कृतं बार्हद्रथ त्वया ।
वयं हिं शक्ता धर्मस्य रक्षणे धर्मचारिणः ॥ २-२२-१० (१२२०४)
गतस्मादद्योपगच्छामस्तव बार्हद्रथान्तिकम्'।
मनुष्याणां समालम्भो न च दृष्टः कदाचन ।
स कथं मानुषैर्देवं यष्टुमिच्छसि शङ्करम् ॥ २-२२-११ (१२२०५)
सवर्णो हि सवर्णानां पशुसञ्ज्ञां करिष्यसि ।

कोऽन्यं एवं यथा हि त्वं जरासन्ध वृथामतिः ॥ २-२२-१२ (१२२०६)
यस्यां यस्यामवस्थायां यद्यत्कर्म करोति यः ।
तस्यां तस्यामवस्थायां तत्फलं समवाप्नुयात् ॥ २-२२-१३ (१२२०७)
ते त्वां ज्ञातिक्षयकरं यममार्तानुसारिणः ।
ज्ञातिवृद्धिनिमित्तार्थं विनिहन्तुमिहागताः ॥ २-२२-१४ (१२२०८)
नास्ति लोके पुमानन्यः क्षत्रियोष्विति चैव तत् ।
मन्यसे स च ते राजन्सुमहान्बुद्धिविप्लवः ॥ २-२२-१५ (१२२०९)
को हि जानन्नभिजनमात्मवान्क्षत्रियो नृप ।
नाविशेत्स्वर्गमतुलं रणानन्तरमव्ययम् ॥ २-२२-१६ (१२२१०)
स्वर्गं ह्येव समास्थाय रणयज्ञेषु दीक्षिताः ।
जयन्ति क्षत्रिया लोकांस्तद्विद्धि मनुजर्षभ ॥ २-२२-१७ (१२२११)
स्वर्गयोनिर्महद्ब्रह्म स्वर्गयोनिर्महद्यशः ।
स्वर्गं योनिस्तपो युद्धे मृत्युः सोऽव्यभिचारवान् ॥ २-२२-१८ (१२२१२)
एष ह्यैन्द्रो वैजयन्तो गुणैर्नित्यं समाहितः ।
येनासुरान्पराजित्य जगत्पाति शतक्रतुः ॥ २-२२-१९ (१२२१३)
स्वर्गमार्गाय कस्य स्याद्विग्रहो वै यथा तव ।
मागधैर्विपुलैः सैन्यैर्बाहुल्यबलदर्पितः ॥ २-२२-२० (१२२१४)
माऽवमंस्थाः परान्राजन्नास्ति वीर्यं नरे नरे ।
समं चेजस्त्वया चैव विशिष्टं वा नरेश्वर ॥ २-२२-२१ (१२२१५)
यावदेतदसम्बुद्धं तावदेव भवेत्तव ।
विषह्यमेतदस्माकमतो राजन्ब्रवीमि ते ॥ २-२२-२२ (१२२१६)
जहि त्वं सदृशेष्वेव मानं दर्पं च मागध ।
मा गमः ससुतामात्यः सबलश्च यमक्षयम् ॥ २-२२-२३ (१२२१७)
दम्भोद्भवः कार्तवीर्य उत्तरश्च बृहद्रथः ।
श्रेयसो ह्यवमत्येह विनेशुः सबला नृपाः ॥ २-२२-२४ (१२२१८)
युयुक्षमाणास्त्वत्तो हि न वयं ब्राह्मणा ध्रुवम् ।
शौरिरस्मि हृषीकेशो नृवीरौ पाण्डवाविमौ ।
अनयोर्मातुलेयं च कृष्णं मां विद्धि ते रिपुम् ॥ २-२२-२५ (१२२१९)
त्वामाह्वयामहे राजन्स्थिरो युध्यस्व मागध ।
मुच्छ वा नृपतीन्सर्वान् गच्छ वा त्वं यमक्षयम् ॥ २-२२-२६ (१२२२०)
ग वैशम्पायन उवाच ॥ २-२२-२७क्ष् (१४२०)
एतच्छ्रुत्वा जरासन्धः क्रुद्धो वचनमब्रवीत् ॥ २-२२-२७ (१२२२१)
नाहं कंसः प्रलम्बो वा न बाणो न च मुष्टिकः ।
नरको नेन्द्रतपनो न केशी न च पूतना ॥ २-२२-२८ (१२२२२)
न कालयवनो वाऽपि ये त्वया निहता युधि ।
त्वं तु गोपकुलोत्पन्नो जातिं वै पौर्विकीं स्मर ॥ २-२२-२९ (१२२२३)

योऽस्मद्भयादतिक्रम्य सागरानूपमाश्रितः ।
जन्मभूमिं परित्यज्य मधुरां प्राकृतो यथा ॥ २-२२-३० (१२२२४)
सोऽधुना कत्थसे शौरे शरदीव यथा घनः ।
अद्यानृण्यं करिष्यामि भोजराजस्य धीमतः ॥ २-२२-३१ (१२२२५)
जामातुरौग्रसेनस्य त्वां निहत्याद्य माधव ।
चिरकाङ्क्षितो मे सङ्ग्रामस्त्वां हन्तुं समुद्धृणम् ॥ २-२२-३२ (१२२२६)
दिष्ट्या मे सफलो यत्नः कृतो देवैः सवासवैः ।
क्लीबाविमौ च गोविन्द भीमसेनार्जुनावुभौ ॥ २-२२-३३ (१२२२७)
हिंस्यासि युधि विक्रम्य सिंहः क्षुद्रमृगाविव। २-२२-३४ (१२२२८)
वैशम्पायन उवाच ॥
तस्य रोषाभिभूतस्य जरासन्धस्य गर्जतः ॥ २-२२-३४क्ष् (१४२१)
सर्वभूतानि वित्रेमुषे तत्रासन्समागताः। २-२२-३५ (१२२२९)
श्रीभगवानुवाच ॥
किं गर्जसि जरासन्ध कर्मणा तत्समाचर ॥ २-२२-३५क्ष् (१४२२)
मम निर्देशकर्तृभ्यां पाण्डवाभ्यां नृपाधम ।
समात्यं ससुतं चाद्य घातयिष्याम्यहं रणे ।
न कथञ्चन जीवन्वै प्रवेक्ष्यसि पुरोत्तमम्'॥ २-२२-३६ (१२२३०)
जरासन्ध उवाच। २-२२-३७क्ष् (१४२३)
नाजितान्वै नरपतीनहमादद्मि काश्चन ।
अजितः पर्यवस्थाता कोऽत्र यो न मया जितः ॥ २-२२-३७ (१२२३१)
क्षत्रियस्यैतदेवाहुर्धर्म्यं कृष्णोपजीवनम् ।
विक्रम्य वशमानीय कामतो यत्समाचरेत् ॥ २-२२-३८ (१२२३२)
देवातार्थमुपाहृत्य राज्ञः कृष्ण कथं भयात् ।
अहमद्य विमुच्येयं क्षात्रं व्रतमनुस्मरन् ॥ २-२२-३९ (१२२३३)
सैन्यं सैन्येन व्यूढेन एक एकेन वा पुनः ।
द्वाभ्यां त्रिभिर्वा योत्स्येऽहं युगत्पृथगेव वा ॥ २-२२-४० (१२२३४)
वैशम्पाय उवाच। २-२२-४१क्ष् (१४२४)
एवमुक्त्वा जरासन्धः सहदेवाभिषेचनम् ।
अज्ञापयत्तदा राजा ययुत्सुर्भीमकर्मभिः ॥ २-२२-४१ (१२२३५)
स तु सेनापतिं राजा सस्मार भरतर्षभ ।
कौशिकं चित्रसेनं च तस्मिन्युद्ध उपस्थिते ॥ २-२२-४२ (१२२३६)
ययोस्ते नामनी राजन्हंसेति डिबिकेति च ।
पूर्वं सङ्कथिते पुम्भिर्नृलोके लोकसत्कृते ॥ २-२२-४३ (१२२३७)
तं तु राजन्विभुः शौरी राजानं बलिनां वरम् ।
स्मृत्वा पुरुषशार्दूलः शार्दूलसमविक्रमम् ॥ २-२२-४४ (१२२३८)
सत्यसन्धो जरासन्धं भुवि भीमपराक्रमम् ।

भागमन्यस्य निर्दिष्टमवध्यं मधुर्भिर्मृधेः ॥ २-२२-४५ (१२२३९)
नात्मनाऽऽत्मवतां मुख्य इयेष मधुसूदनः ।
ब्राह्मीमाज्ञां पुरस्कृत्य हन्तुं हलधरानुजः ॥ ॥ २-२२-४६ (१२२४०)

इति श्रीमन्महाभारते सभापर्वणि जरासन्धवधपर्वणि
द्वाविंशोऽध्यायः ॥ २.।
Mahabharata - Sabha Parva - Chapter Footnotes

२-२२-४५ मधुभिर्यादवैः ।ष्टं वध्य मत्वा तदाच्युतः इति पाठः ॥

---

सभ-०२३
॥ श्रीः ॥
२.२३. अध्यायः २३

Mahabharata - Sabha Parva - Chapter Topics
कृष्णजरासन्धयोर्द्वेषकारणकथनम् ॥ १.।
Mahabharata - Sabha Parva - Chapter Text

जनमेजय उवाच ।
किमर्थं वैरिणावास्तामुभौ तौ कृष्णमागधौ ।
कथं च निर्जितः सङ्ख्ये जरासन्धेन माधवः ॥ २-२३-१ (१२२४१)
कश्च कंसो मागधस्य यस्य हेतोः स वैरवान् ।
एतदाचक्ष्व मे सर्वं वैशम्पायन तत्वतः ॥ २-२३-२ (१२२४२)
वैशम्पायन उवाच ॥ २-२३-३क्ष् (१४२५)
यादवानामन्ववाये वसुदेवो महामतिः ।
उदपद्यत वार्ष्णेयो ह्युग्रसेनस्य मन्त्रभृत् ॥ २-२३-३ (१२२४३)
उग्रसेनस्य कंसस्तु बभूव बलवान्सुतः ।
ज्येष्ठो बहूनां कौरव्य सर्वशस्त्रविशारदः ॥ २-२३-४ (१२२४४)
जरासन्धस्य दुहिता तस्य भार्याऽतिविश्रुता ।
राज्यशुक्लेन दत्ता सा जरासन्धेन धीमता ॥ २-२३-५ (१२२४५)
तदर्थमुग्रसेनस्य मधुरायां सुतस्तदा ।
अभिषिक्तस्तदाऽमात्यैः स वै तीव्रपराक्रमः ॥ २-२३-६ (१२२४६)
ऐश्वर्यबलमत्तस्तु स तदा बलमोहितः ।
निगृह्य पितरं भुङ्क्ते तद्राज्यं मन्त्रिभिः सह ॥ २-२३-७ (१२२४७)
वसुदेवस्य तत्कृत्यं न शृणोति स मन्दधीः ।
त तेन सह तद्राज्यं धर्मतः पर्यपालयत् ॥ २-२३-८ (१२२४८)
प्रीतिमान्स तु दैत्येन्द्रो वसुदेवस्य देवकीम् ।

उवाह भार्या स तदा दुहिता देवकस्य या ॥ २-२३-९ (१२२४९)
तस्यामुद्वाह्यमानायां रथेन जनमेजय ।
उपारुरोह वार्ष्णेयं कंसो भूमिपतिस्तदा ॥ २-२३-१० (१२२५०)
ततोऽन्तरिक्षे वागासीद्देवदूतस्य कस्यचित् ।
वसुदेवश्च शुश्राव तां वाचं पार्थिवश्च सः ॥ २-२३-११ (१२२५१)
यामेतां वहमानोऽद्य कंसोद्वहसि देवकीम् ।
अस्या यश्चाष्टमो गर्भः स ते मृत्युर्भविष्यति ॥ २-२३-१२ (१२२५२)
सोऽवतीर्य ततो राजा खड्गमुद्धृत्य निर्मलम् ।
इयेष तस्या मूर्धानं छेत्तुं परमदुर्मतिः ॥ २-२३-१३ (१२२५३)
सान्त्वयन्स तदा कंसं हसन्क्रोधवशानुगम् ।
राजन्ननुनयामास वसुदेवो महामतिः ॥ २-२३-१४ (१२२५४)
अहिंस्यां प्रमदामाहुः सर्वधर्मेषु पार्थिव ।
अकस्मादबलां नारीं हन्तासीमामनागसीम् ॥ २-२३-१५ (१२२५५)
यच्च तेऽत्र भयं राजञ्शक्यते बाधितुं त्वया ।
इयं शक्या पालयितुं समयं चैव रक्षितुम् ॥ २-२३-१६ (१२२५६)
अस्यास्त्वमष्टमं गर्भं जातमात्रं महीपते ।
विध्वंसय तदा प्राप्तमेवं परिहृतं भवेत् ॥ २-२३-१७ (१२२५७)
एवं स राजा कथितो वसुदेवेन भारत ।
तस्य तद्वचनं चक्रे शूरसेनपतिस्तदा ॥ २-२३-१८ (१२२५८)
ततस्तस्यां सम्बभूवुः कुमाराः सूर्यवर्चसः ।
जाताञ्जातांस्तु तान्सर्वाञ्जघान मधुरेश्वरः ॥ २-२३-१९ (१२२५९)
अथ तस्यां समभवद्बलदेवस्तु सत्तमः ।
याम्यता मायया तं तु यमो राजा विशाम्पते ॥ २-२३-२० (१२२६०)
देवक्या गर्भमतुलं रोहिण्या जठरेऽक्षिपत् ।
आकृष्य कर्षणात्सम्यक्सङ्कर्षणं इति स्मृतः ॥ २-२३-२१ (१२२६१)
बलश्रेष्ठतया तस्य बलदेव इति स्मृतः ।
पुनस्तस्यां समभवदष्टमो मधुसूदनः ॥ २-२३-२२ (१२२६२)
तस्य गर्भस्य रक्षां तु स चक्रेऽभ्यधिकं नृपः ।
ततः काले रक्षणार्थं वसुदेवस्य तत्वतः ॥ २-२३-२३ (१२२६३)
उग्रः प्रयुक्तः कंसेन सचिवः क्रूरकर्मकृत् ॥ २-२३-२४ (१२२६४)
जातमात्रं वासुदेवमथाकृष्य पिता ततः ।
उपजह्रे परिक्रीतां सुतां गोपस्य कस्यचित् ॥ २-२३-२५ (१२२६५)
अमृष्यमाणस्तं शब्दं देवदूतस्य पार्थिवः ।
वासुदेवं महात्मानमर्पयामास गोकुले ॥ २-२३-२६ (१२२६६)
वासुदेवोपि गोपेषु ववृधेऽब्जमिवाम्भसि ।
अज्ञायमानः कंसेन गूढोऽग्निरिव दारुषु ॥ २-२३-२७ (१२२६७)

विप्रचके तदा सर्वान्बल्लवान्मधुरेश्वरः ।
वर्धमानो महाबाहुस्तेजोबलसमन्वितः ॥ २-२३-२८ (१२२६८)
ततस्ते क्लिश्यमानास्तु पुण्डरीकाक्षमच्युतम् ।
भयेन कामादपरे गणशः पर्यवारयन् ॥ २-२३-२९ (१२२६९)
स तु लब्ध्वा बलं राजन्नुग्रसेनस्य संमतः ।
वसुदेवात्मजः सर्वैर्भ्रातृभिः सहितं पुनः ॥ २-२३-३० (१२२७०)
निर्जित्य युधि भोजेन्द्रं हत्वा कंसं महाबलः ।
अभ्यषिञ्चत्ततो राज्य उग्रसेनं विशाम्पते ॥ २-२३-३१ (१२२७१)
ततः श्रुत्वा जरासन्धो माधवेन हतं युधि ।
शूरसेनाधिपं चक्रे कंसपुत्रं तदा नृप ॥ २-२३-३२ (१२२७२)
ससैन्यं महदुत्थाप्य वासुदेवं तदा नृप ।
अभ्यषिञ्चत्सुतं तत्र सुताया जनमेजय ॥ २-२३-३३ (१२२७३)
उग्रसेनं च वृष्णींश्च महाबलसमन्वितः ।
स तत्र विप्रकुरुते जरासन्धः प्रतापवान् ॥ २-२३-३४ (१२२७४)
एतद्वैरं कौरवेय जरासन्धस्य माधवे ।
आशासितार्थे राजेन्द्र संरुरोध विनिर्जितान् ॥ २-२३-३५ (१२२७५)
पार्थिवैस्तैर्नृपतिभिर्यक्ष्यमाणः समृद्धिमान् ।
देवश्रेष्ठं महादेवं कृत्तिवासं त्रियम्बकम् ॥ २-२३-३६ (१२२७६)
एतत्सर्वं यथावृत्तं कथितं भरतर्षभ ।
यथा तु स हतो राजा भीमसेनेन तच्छृणु ॥ ॥ २-२३-३७ (१२२७७)

इति श्रीमन्महाभारते सभापर्वणि जरासन्धवधपर्वणि
त्रयोविंशोऽध्यायः ॥ २३.।

---

सभ-०२४
॥ श्रीः ॥
२.२४. अध्यायः २४

Mahabharata - Sabha Parva - Chapter Topics
भीमजरासन्धयोः स्वस्त्ययनपूर्वकं युद्धारम्भः
॥ १.। श्रीकृष्णप्रोत्साहितस्य भीमस्य जरासन्धवधोद्यमः ॥ २.।
Mahabharata - Sabha Parva - Chapter Text

ततस्तं निश्चितात्मानं युद्धाय यदुनन्दनः ।
उवाच वाग्मी राजानं जरासन्धमधोक्षजः ॥ २-२४-१ (१२२७८)
त्रयाणां केन ते राजन्योद्धुमुत्सहते मनः ।
अस्मदन्यतमेनेह सज्जीभवतु को युधि ॥ २-२४-२ (१२२७९)

एवमुक्तः स नृपतिर्युद्धं वव्रे महाद्युतिः ।
जरासन्धस्ततो राजा भीमसेनेन मागधः ॥ २-२४-३ (१२२८०)
ग्धारयन्तं गदां दिव्यां बलं श्रुत्वा च निर्वृतः ।
अर्जुन वासुदेवं च वजर्यित्वा स मागधः ॥ २-२४-४ (१२२८१)
मत्वा देवं गोप इति बालोऽर्जुन इति स्म ह'।
आदाय रोजनां माल्यं मङ्गल्यान्यपराणि च ॥ २-२४-५ (१२२८२)
धारयन्नगदान्मुख्यान्निर्वृतीर्वेदनानि च ।
उपतस्थे जरासन्धं युयुत्सुं वै पुरोहितः ॥ २-२४-६ (१२२८३)
कृतस्वस्त्ययनो राजा ब्राह्मणेन यशस्विना ।
समनह्यज्जरासन्धः क्षात्रं धर्ममनुस्मरन् ॥ २-२४-७ (१२२८४)
अवमुच्य किरीटं स केशान्समनुमृज्य च ।
उदतिष्ठज्जरासन्धो वेलातिग इवार्णवः ॥ २-२४-८ (१२२८५)
उवाच मतिमान्राजा भीमं भीमपराक्रमः ।
भीम योत्स्ये त्वया सार्धं श्रेयसा निर्जितं वरम् ॥ २-२४-९ (१२२८६)
एवमुक्त्वा जरासन्धो भीमसेनमरिन्दमः ।
प्रत्युद्ययौ महातेजाः शक्रं बल इवासुरः ॥ २-२४-१० (१२२८७)
ततः संमन्त्र्य कृष्णेन कृतस्वस्त्ययनो बली ।
भीमसेनो जरासन्धमाससाद युयुत्सया ॥ २-२४-११ (१२२८८)
ततस्तौ नरशार्दूलौ बाहुशस्त्रौ समीयतुः ।
वीरौ परमसंहृष्टावन्योन्यजयकाङ्क्षिणौ ॥ २-२४-१२ (१२२८९)
करग्रहणपूर्वं तु कृत्वा पादाभिवन्दनम् ।
कक्षैः कक्षां विधुन्वानावास्फोटं तत्र चक्रतुः ॥ २-२४-१३ (१२२९०)
स्कन्धे दोर्भ्यां समाहत्य निहत्य च मुहुर्मुहुः ।
अङ्गमङ्गैः समाश्लिष्य पुनरास्फालनं च चक्रतुः। २-२४-१४ (१२२९१)
चित्रहस्तादिकं कृत्वा सस्फुलिङ्गेन चाशनिम् ॥
गलगण्डाभिघातेन सस्फुलिङ्गेन चाशनिम् ॥ २-२४-१५ (१२२९२)
बाहुपाशादिकं कृत्वा पादाहतशिरावुभौ ।
उरोहस्तं ततश्चक्रे पूर्णकुम्भौ प्रयुज्य तौ ॥ २-२४-१६ (१२२९३)
करसम्पीडनं कृत्वा गर्जन्तौ वारणाविव ।
नर्दन्तौ मेघसङ्काशौ बाहुप्रहरणावुभौ ॥ २-२४-१७ (१२२९४)
तलेनाहन्यमानौ तु अन्योन्यं कृतवीक्षणौ ।
सिंहाविव सुसंङ्क्रुद्धावाकृष्याकृष्य युध्यताम् ॥ २-२४-१८ (१२२९५)
अङ्गेनाङ्गं समापीड्य बाहुभ्यामुभयोरपि ।
आवृत्य बाहुभिश्चापि उदरं च प्रचक्रतुः ॥ २-२४-१९ (१२२९६)
उभौ कट्यां सुपार्श्वे तु तक्षवन्तौ च शिक्षितौ ।
अधो हस्तं स्वकण्ठे तूदरस्योरसि चाक्षिपत् ॥ २-२४-२० (१२२९७)

सर्वातिक्रान्तमर्यादं पृष्ठभङ्गं च चक्रतुः ।
सम्पूर्णमूर्च्छां बाहुभ्यां पूर्णकुम्भं प्रचक्रतुः ॥ २-२४-२१ (१२२९८)
तृणपीडं यथाकामं पूर्णयोगं समुष्टिकम् ।
एवमादीनि युद्धानि प्रकुर्वन्तौ परस्परम् ॥ २-२४-२२ (१२२९९)
तयोर्युद्धं ततो द्रष्टुं समेताः पुरवासिनाः ।
ब्राह्मणा वणिजश्चैव क्षत्रियाश्च सहस्रशः ॥ २-२४-२३ (१२३००)
शूद्राश्च नरशार्दूल स्त्रियो वृद्धाश्च सर्वशः ।
निरन्तरमभूत्तत्र जनौघैरभिसंवृतम् ॥ २-२४-२४ (१२३०१)
तयोरथ भुजाघातान्निग्रहप्रग्रहात्तथा ।
आसीत्सुभीमसम्पातो वज्रपर्वतयोरिव ॥ २-२४-२५ (१२३०२)
उभौ परमसंहृष्टौ बलेन बलिनां वरौ ।
अन्योन्यस्यान्तरं प्रेप्सू परस्परजयैषिणौ ॥ २-२४-२६ (१२३०३)
ग शिरोभिरिव तौ मेषौ वृक्षैरिव निशाचरौ ।
पदैरिव शुभावश्वौ तुण्डाभ्यां तित्तिरी इव'॥ २-२४-२७ (१२३०४)
तद्भीममुत्सार्य जनं युद्धमासीदुपप्लवे ।
बलिनोः संयुगे राजन्वृत्रवासवयोरिव ॥ २-२४-२८ (१२३०५)
प्रकर्षणाकर्षणाभ्यामनुकर्षविकर्षणैः ।
आचकर्षतुरन्योन्यं जानुभिश्चावजघ्नतुः ॥ २-२४-२९ (१२३०६)
ततः शब्देन महता भर्त्सयन्तौ परस्परम् ।
पाषाणसङ्घातनिभैः प्रहारैरभिजघ्नतुः ॥ २-२४-३० (१२३०७)
गततो भीमं जरासन्धो जघानोरसि मुष्टिना ।
भीमोषि तं जरासन्धं वक्षस्यभिजघान ह'॥ २-२४-३१ (१२३०८)
व्यूढोरस्कौ दीर्घभुजौ नियुद्धकुशलावुभौ ।
बाहुभिः समसज्जोतामायसैः परिघैरिव ॥ २-२४-३२ (१२३०९)
कार्तिकस्य तु मासस्य प्रवृत्तं प्रथमेऽहनि ।
तदा तद्युद्धमभवद्दिनानि दश पञ्च च ।
अनाहारं दिवारात्रमविश्रान्तमवर्तत ॥ २-२४-३३ (१२३१०)
तद्वृत्तं तु त्रयोदश्यां समवेतं महात्मनोः ।
चतुर्दश्यां निशायां तु निवृत्तो मागधः क्लमात् ॥ २-२४-३४ (१२३११)
तं राजानं तथा क्लान्तं दृष्ट्वा राजञ्जनार्दनः ।
उवाच भीमकर्माणं भीमं सम्बोधयन्निव ॥ २-२४-३५ (१२३१२)
क्लान्तः शत्रुर्हि कौन्तेय शक्यः पीडयितुं रणे ।
पीड्यमानो हि कात्स्न्र्येन जह्याज्जीवितमात्मनः ॥ २-२४-३६ (१२३१३)
तस्मात्तेऽद्यैव कौन्तेय पीडनीयो जनाधिपः ।
सममेतेन युध्यस्व बाहुभ्यां भरतर्षभ ॥ २-२४-३७ (१२३१४)
वैशम्पायन उवाच। २-२४-३८क्ष् (१४२६)

एवमुक्तःस कृष्णेन पाण्डवः परवीरहा ।
जरासन्दस्य तद्रन्ध्रं ज्ञात्वा चक्रे मतिं वधे ॥ २-२४-३८ (१२३१५)
ततस्तमजितं जेतुं जरासन्दं वृकोदरः ।
संरम्भाद्बलिनां श्रेष्ठो जग्राह कुरुनन्दनः ॥ ॥ २-२४-३९ (१२३१६)

इति श्रीमन्महाभारते सभापर्वणि जरासन्धवधपर्वणि
चतुर्विंशोऽध्यायः ॥ २४.।
Mahabharata - Sabha Parva - Chapter Footnotes

२-२४-६ निर्वृतीर्वेदनानि च दुःखमूर्छयोः काले सुखसञ्ज्ञाकराणि ॥
२-२४-१३ कक्षैः दोर्मूलैः ॥
२-२४-१६ ग्रथिताङ्गुलिभ्यां हस्ताभ्यां परशिरसः पीडने पूर्णकुम्भः ॥
२-२४-२० तक्षवन्तौ ग्रात्रसङ्कोचवन्तौ ॥

---

सभ-०२५
॥ श्रीः ॥
२.२५. अध्यायः २५

Mahabharata - Sabha Parva - Chapter Topics
जरासन्धवधः ॥ १.। जरासन्धेन बन्धीकृतानां राज्ञां
कृष्णेन मोचनम् ॥२.। मोचितै राजभिः कृष्णाय
रत्नादिदानम् ॥३.। कृष्णानुज्ञया जरासन्धपुत्रेण
सहदेवेन पितुरौर्ध्वदैहिककरणम् ॥४.। सहदेवं
राज्येऽभिषिच्य श्रीकृष्णभीमार्जुनानामिन्द्रप्रस्थगमनम्
॥ ५.। जरासन्धवधश्रवणहृष्टेन युधिष्ठिरेण पूजितस्य
कृष्णस्य द्वारकागमनम् ॥ ६.।
Mahabharata - Sabha Parva - Chapter Text

वैशम्पायन उवाच ।
भीमसेनस्ततः कृष्णमुवाच यदुनन्दनम् ।
बुद्धिमास्थाय विपुलां जरासन्धवधोप्सया ॥ २-२५-१ (१२३१७)
नायं पापो मया कृष्ण युक्तः स्यादनुरोधितुम् ।
प्रायेण यदुशार्दूल बान्धवक्षयकृत्तव ॥ २-२५-२ (१२३१८)
एवमुक्तस्ततः कृष्णः प्रत्युवाच वृकोदरम् ।
त्वरयन्पुरुषव्याघ्रो जरासन्धवधेप्सया ॥ २-२५-३ (१२३१९)
यत्ते दैवं परं सत्वं यच्च ते मातरिश्वनः ।

बलं भीमं जरासन्धे दर्शयाशु तदद्य वै ॥ २-२५-४ (१२३२०)
ग्तवैष वध्यो दुर्बुद्धिर्जरासन्धो महारथः ।
इत्यन्तरिक्षे त्वश्रौषं यदा वायुरवाप्यते ॥ २-२५-५ (१२३२१)
गोमन्ते पर्वतश्रेष्ठे येनैष परिमोक्षितः ।
बलदेवबलं प्राप्य कोऽन्यो जीवेत्तु मागधात् ॥ २-२५-६ (१२३२२)
तदस्य मृत्युर्विहितस्त्वदृते न महाबल ।
वायुं चिन्त्य महाबाहो जहीमं मगधाधिपम् ॥ २-२५-७ (१२३२३)
वैशम्पायन उवाच। २-२५-८क्ष् (१४२७)
एवमुक्तस्ततो भीमो मनसाऽऽचिन्त्य मारुतम् ।
जनार्दनं नमस्कृत्य परिष्वज्य च फल्गुनम्'॥ २-२५-८ (१२३२४)
प्रभञ्जनबलाविष्टो जरासन्धमरिन्दमः ।
उत्क्षिप्य भ्रामयामास बलवन्तं महाबलः ॥ २-२५-९ (१२३२५)
भ्रामयित्वा शतगुणं जानुभ्यां भरतर्षभ ।
बभञ्ज पृष्टं सङ्क्षिप्य निष्पिष्य विननाद च ॥ २-२५-१० (१२३२६)
करे गृहीत्वा चरणं द्विधा चक्रे महाबलः ।
तस्य निष्पिष्यमाणस्य पाण्डवस्य च गर्जतः ॥ २-२५-११ (१२३२७)
अभवत्तुमुलो नादः सर्वप्राणिभयङ्करः ।
वित्रेसुर्मागधाः सर्वे स्त्रीणां गर्भाश्च सुस्रुवुः ॥ २-२५-१२ (१२३२८)
भीमसेनस्य नादेन जरासन्धस्य चैव ह ।
किं नु स्याद्धिमवान्भिन्नः किंनुस्विद्दीर्यते मही ॥ २-२५-१३ (१२३२९)
इति वै मागधा जज्ञुर्भीमसेनस्य निखनात् ।
ग्ततस्तु भगवान्कृष्णो जरासन्धजिघांसया ॥ २-२५-१४ (१२३३०)
भीमसेनं समालोक्य नलं जग्राह पाणिना ।
द्विधा चिच्छेद वै तत्तु जरासन्धवधं प्रति ॥ २-२५-१५ (१२३३१)
ततस्त्वाज्ञाय तस्यैव पादमुत्क्षिप्य मारुतिः ।
द्विधा बभञ्ज तद्गात्रं प्राक्षिपद्विननाद च ॥ २-२५-१६ (१२३३२)
पुनः सन्धाय तु तदा जरान्धः प्रतापवान् ।
भीमेन च समागम्य बाहुयुद्धं चकार ह ॥ २-२५-१७ (१२३३३)
तयोः समभवद्युद्धं तुमुलं रोमहर्षणम् ।
सर्वलोकक्षयकरं सर्वभूतभयावहम् ॥ २-२५-१८ (१२३३४)
पुनः कृष्णस्तमिरिणं द्विधा विच्छिद्य माधवः ।
व्यत्यस्य प्राक्षिपत्तत्तु जरासन्धवधेप्सया ॥ २-२५-१९ (१२३३५)
भीमसेनस्तदा ज्ञात्वा निर्बिभेद च मागधम् ।
द्विधा व्यत्यस्य पादेन प्राक्षिपच्च ननाद ह ॥ २-२५-२० (१२३३६)
शुष्कमांसास्थिमेदस्त्वग्भिन्नमस्तिष्कपिण्डकटः ।
शवभूतस्तदा राजन्पिण्डीकृत इवाबबौ'॥ २-२५-२१ (१२३३७)

ततो राज्ञः कुलद्वारि प्रसुप्तमिव तं नृपम् ।
रात्रौ गतासुमुत्सृज्य निश्चक्रमुररिन्दमाः ॥ २-२५-२२ (१२३३८)
जरासन्धरथं कृष्णो योजयित्वा पताकिनम् ।
आरोप्य भ्रातरौ चैव मोक्षयामास बान्धवान् ॥ २-२५-२३ (१२३३९)
ते वै रत्नभुजं कृष्णं रत्नार्हं पृथिवीश्वराः ।
राजानं चक्रुरासाद्य मोक्षिता महतो भयात् ॥ २-२५-२४ (१२३४०)
अक्षतः शस्त्रसम्पन्नो जितारिः सह राजभिः ।
रथमास्थाय तं दिव्यं निर्जगाम गिरिव्रजात् ॥ २-२५-२५ (१२३४१)
यः स सोदर्यवान्नाम द्वियोधी कृष्णसारथिः ।
अभ्यासघाती सन्दृश्यो दुर्जयः सर्वराजभिः ॥ २-२५-२६ (१२३४२)
भीमार्जुनाभ्यां योधाभ्यामास्थितः कृष्णसारथिः ।
शुशुभे रथवर्योऽसौ दुर्जयः सर्वधन्विभिः ॥ २-२५-२७ (१२३४३)
शक्रविष्णू हि सङ्ग्रामे चेरतुस्तारकामये ।
रथेन तेन वै कृष्ण उपारुह्य ययौ तदा ॥ २-२५-२८ (१२३४४)
ग्एवमेतौ महाबाहू तदा दुष्करकारिणौ ।
कृष्णप्रणीतौ लोकेऽस्मिन्नथे को द्रष्टुमर्हति ॥ २-२५-२९ (१२३४५)
इत्यवोचन्व्रजन्तं तं जरासन्धपुरालयाः ।
वासुदेवं नरश्रेष्ठं युक्तं वातजवैर्हयैः'॥ २-२५-३० (१२३४६)
तप्तचामीकराभेण किङ्किणीजालमालिना ।
मेघनिर्घोषनादेन जैत्रेणामित्रघातिना ॥ २-२५-३१ (१२३४७)
येन शक्रो दानवानां जघान नवतीर्नव ।
तं प्राप्य समहृष्यन्त रथं ते पुरुषर्षभाः ॥ २-२५-३२ (१२३४८)
ततः कृष्णं महाबाहुं भ्रातृभ्यां सहितं तदा ।
रथस्थं मागधा दृष्ट्वा समपद्यन्त विस्मिताः ॥ २-२५-३३ (१२३४९)
हयैर्दिव्यैः समायुक्तो रथो वायुसमो जवे ।
अधिष्ठितः स शुशुभे कृष्णेनातीव भारत ॥ २-२५-३४ (१२३५०)
असङ्गो देवविहितस्तस्मिन्नथवरे ध्वजः ।
योजनाद्ददृशे श्रीमानिन्द्रायुधसमप्रभः ॥ २-२५-३५ (१२३५१)
चिन्तयामास कृष्णोऽथ गरुत्मन्तं स चाभ्ययात् ।
क्षणे तस्मिन्स तेनासीच्चैत्यवृक्ष इवोत्थितः ॥ २-२५-३६ (१२३५२)
व्यादितास्यैर्महानादैः सह भूतैर्ध्वजालयैः ।
तस्मिन्नथवरे तस्थौ गुरुत्मान्पन्नगाशनः ॥ २-२५-३७ (१२३५३)
दुर्निरीक्ष्यो हि भूतानां तेजसाऽऽभ्याधिकं बभौ ।
आदित्य इव मध्याह्ने सहस्रकिरणावृतः ॥ २-२५-३८ (१२३५४)
न सज्जति वृक्षेषु शस्त्रैश्चापि न रिष्यते ।
दिव्यो ध्वजवरो राजन्दृश्यते चेह मानुषैः ॥ २-२५-३९ (१२३५५)

तमास्थाय रथं दिव्यं पर्जन्यसमनिः स्वनम् ।
निर्ययौ पुरुषव्याघ्रः पाण्डवाभ्यां सहाच्युतः ॥ २-२५-४० (१२३५६)
यं लेभे वासवाद्राजा वसुस्तस्माद्बृहद्रथः ।
बृहद्रथात्क्रमेणैव प्राप्तो बार्हद्रथो रथम् ॥ २-२५-४१ (१२३५७)
स निर्याय महाबाहुः पुण्डरीकेक्षणस्ततः ।
गिरिव्रजाद्बहिस्तस्थौ समदेशे महायशाः ॥ २-२५-४२ (१२३५८)
तत्रैनं नागराः सर्वे सत्कारेणाभ्ययुस्तदा ।
ब्राह्मणप्रमुखा राजन्विधिदृष्टेन कर्मणा ॥ २-२५-४३ (१२३५९)
बन्धनाद्विप्रमुक्ताश्च राजानो मधुसूदनम् ।
पूजयामासुरूचुश्च स्तुतिपूर्वमिदं वचः ॥ २-२५-४४ (१२३६०)
नैतच्चित्रं महाबाहो त्वयि देवकिनन्दने ।
भीमार्जुनबलोपेते धर्मस्य प्रतिपालनम् ॥ २-२५-४५ (१२३६१)
जरासन्धह्रदे घोरे दुःखपङ्के निमज्जताम् ।
राज्ञां समभ्युद्धरमं यदिदं कृतमद्य वै ॥ २-२५-४६ (१२३६२)
विष्णो समवसन्नानां गिरिदुर्गे सुदारुणे ।
दिष्ट्या मोक्षाद्यशो दीप्तमाप्तं ते यदुनन्दन ॥ २-२५-४७ (१२३६३)
किं कर्मः पुरुषव्याघ्र शाधि नः प्रणतिस्थितान् ।
कृतमित्येव तद्विद्धि नृपैर्ययद्यपि दुष्करम् ॥ २-२५-४८ (१२३६४)
वैशम्पायन उवाच ॥ २-२५-४९क्ष् (१४२८)
तानुवाच हृम्पीकेशः समाश्वास्य महामनाः ।
यिधिष्ठिरो राजसूयं क्रतुमाहर्तुमिच्छति ॥ २-२५-४९ (१२३६५)
तस्य धर्मप्रवृत्तस्य पार्थिवत्वं चिकीर्षतः ।
सर्वैर्भवद्भिर्विज्ञाय साहाय्यं क्रियतामिति ॥ २-२५-५० (१२३६६)
ततः सुप्रीतमनसस्ते नृपा नृपसत्तम ।
तथेत्येवाब्रुवन्सर्वे प्रतिगृह्यास्य तां गिरम् ॥ २-२५-५१ (१२३६७)
रत्नभाजं च दाशार्हं चक्रुस्ते पृथिवीश्वराः ।
कृच्छ्राञ्जग्राह गोविन्दस्तेषां तदनुकम्पया ॥ २-२५-५२ (१२३६८)
जरासन्धात्मजश्चैव सहदेवो महामनाः ।
निर्ययौ सजनामात्यः पुरस्कृत्य पुरोहितम् ॥ २-२५-५३ (१२३६९)
स नीचैः प्रणतो भूत्वा बहुरत्नपुरोगमः ।
सहदेवो नृणां देवं वासुदेवमुपस्थितः ॥ २-२५-५४ (१२३७०)
भयार्ताय ततस्तस्मै कृष्णो दत्त्वाऽभयं तदा ।
आददेऽस्य महार्हाणि रत्नानि पुरुषोत्तमः ॥ २-२५-५५ (१२३७१)
ग्सददेव उवाच। २-२५-५६क्ष् (१४२९)
यत्कृतं पुरुषव्याघ्र मम पित्रा जनार्दन ।
तत्ते हृदि महाबाहो न कार्यं पुरुषोत्तम ॥ २-२५-५६ (१२३७२)

त्वां प्रपन्नोऽस्मि गोविन्द प्रासदं कुरु मे प्रभो ।
पितुरिच्छामि संस्कारं कर्तुं देवकिनन्दन ॥ २-२५-५७ (१२३७३)
त्वत्तोऽभ्यनुज्ञां सम्प्राप्य भीमसेनात्तथार्जुनात् ।
निर्भयो विचरिष्यामि यथाकामं यथासुखम् ॥ २-२५-५८ (१२३७४)
वैशम्पायन उवाच। २-२५-५९क्ष् (१४३०)
एवं विज्ञाप्यमानस्य सहदेवस्य मारिष ।
प्रहृष्टो देवकीपुत्रः पाण्डवै च महारथौ ॥ २-२५-५९ (१२३७५)
क्रियतां संस्क्रिया राजन्पितुस्त इति चाब्रुवन् ।
तच्छ्रुत्वा वासुदेवस्य पार्थयोश्च स मागधः ॥ २-२५-६० (१२३७६)
प्रविश्य नगरं तूर्णं सह मन्त्रिभिरप्युत ।
चितां चन्दनकाष्ठैश्च कालेयसरलैस्तथा ॥ २-२५-६१ (१२३७७)
कालागरुसुनगन्धैश्च तैलैश्च विविधैरपि ।
घृतधाराशतैश्चैव सुमनोभिश्च भारत ॥ २-२५-६२ (१२३७८)
समन्तादेव कीर्यन्तोऽदहन्त मगधाधिपम् ।
उदकं तस्य चक्रेऽथ सहदेवः सहानुजः ॥ २-२५-६३ (१२३७९)
कृत्वा पितुः स्वर्गगतिं निर्ययौ यत्र केशवः ।
पाण्डवौ च महाभागौ भीमसेनार्जुनावुभौ ॥ २-२५-६४ (१२३८०)
स प्रह्वः प्राञ्जलिर्भूत्वा व्यज्ञापयत माधवम्। २-२५-६५ (१२३८१)
सहदेव उवाच ।
इमे रत्नानि भूरिणी गोजाविमहिषादयः ॥ २-२५-६५क्ष् (१४३१)
हस्तिनोऽश्वाश्च गोविन्द वासांसि विविधानि च ।
दीयतां धर्मराजाय यथा वा मन्यते भवान् ॥ २-२५-६६ (१२३८२)
वैशम्पायन उवाच। २-२५-६७क्ष् (१४३२)
भयार्ताय ततस्तस्मै कृत्वा कृष्णोऽभयं तदा ।
अभ्यषिञ्चत राजानं सहदेवं जनार्दनः ॥ २-२५-६७ (१२३८३)
मागधानां महीपालं जरासन्धात्मजं तदा ।
आददे च महार्हाणि रत्नानि पुरुषोत्तमः ॥ २-२५-६८ (१२३८४)
गत्वैकत्वं स कृष्णेन पार्थाभ्यां चापि सत्कृतः ।
विवेश मतिमान्राजा पुनर्बार्हद्रथं पुरम् ॥ २-२५-६९ (१२३८५)
पार्थाभायं सहितः कृष्णः सर्वैश्च वसुधाधिपैः ।
यथावयः समागम्य विससर्ज नराधिपान् ॥ २-२५-७० (१२३८६)
विसृज्य सर्वान्नृपतीन्राजसूये महात्मभिः ।
आगन्तव्यं भवद्भिश्च धर्मराजप्रियेप्सुभिः। २-२५-७१ (१२३८७)
एवमुक्ता माधवेन सर्वे ते वसुधाधिपाः ।
एवमस्त्विति चाप्युक्त्वा समेताः परया मुदा ॥ २-२५-७२ (१२३८८)
भीमार्जुनहृषीकेशैः प्रहृष्टाः प्रययुस्तदा ।

रत्नान्यादाय भूरीणी ज्वलन्तो रिपुसूदनाः'॥ २-२५-७३ (१२३८९)
कृष्णस्तु सह पार्थाभ्यां श्रिया परमया युतः ।
रत्नान्यादाय भूरिणी प्रययौ पुरुषर्षभः ॥ २-२५-७४ (१२३९०)
इन्द्रप्रस्थमुपागम्य पाण्डवाभ्यां सहाच्युतः ।
समेत्य धर्मराजानं प्रीयमाणोऽभ्यभाषत ॥ २-२५-७५ (१२३९१)
दिष्ट्या भीमेन बलवाञ्जरासन्धो निपातितः ।
राजानो मोक्षिताश्चेमे बन्धनान्नृपसत्तम ॥ २-२५-७६ (१२३९२)
दिष्ट्या कुशलिनौ चेमौ भीमसेनधनञ्जयौ ।
पुनः स्वनगरं प्राप्तावक्षताविति भारत ॥ २-२५-७७ (१२३९३)
ततो युधिष्ठिरः कृष्णं पूजयित्वा यथार्हतः ।
भीमसेनार्जुनौ चैव प्रहृष्टः परिषस्वजे ॥ २-२५-७८ (१२३९४)
ततः क्षीणे जरासन्धे भ्रातृभ्यां विहितं जयम् ।
अजातशत्रुरासाद्य मुमुदे भ्रातृभिः सह ॥ २-२५-७९ (१२३९५)
ग्हृष्टश्च धर्मराड्वाक्यं जनार्दनमभाषत ।
त्वां प्राप्य पुरुषव्याघ्र भीमसेनेन पातितः ॥ २-२५-८० (१२३९६)
मागधोऽसौ बलोन्मत्तो जरासन्धः प्रतापवान् ।
राजसूयं क्रतुश्रेष्ठं प्राप्स्यामि विगतज्वरः ॥ २-२५-८१ (१२३९७)
त्वद्बुद्धिबलमाश्रित्य यागार्होऽस्मि जनार्दन ।
पीतं पृथिव्याः क्रुद्धेन यशस्ते पुरुषोत्तम ॥ २-२५-८२ (१२३९८)
जरासन्धवधेनैव प्राप्तास्ते विपुलाः श्रियः ॥ २-२५-८३ (१२३९९)
वैशम्पायन उवाच ।
एवं सम्भाष्य कौन्तेयः प्रादाद्रथवरं प्रभोः ॥ २-२५-८३क्ष् (१४३३)
प्रतिगृह्य तु गोविन्दो जरासन्धस्य तं रथम् ॥ २-२५-८४ (१२४००)
प्रहृष्टस्तस्य मुमुदे फल्गुनेन जनार्दनः ।
प्रीतिमानभवद्राजन्धर्मराजपुरस्कृतः'॥ २-२५-८५ (१२४०१)
यथावयः समागम्य भ्रातृभिः सह पाण्डवः ।
सत्कृत्य पूजयित्वा च विससर्ज नराधिपान् ॥ २-२५-८६ (१२४०२)
युधिष्ठिराभ्यनुज्ञातास्ते नृपा हृष्टमानसाः ।
जग्मुः स्वदेशांस्त्वरिता यानैरुच्चावचैस्ततः ॥ २-२५-८७ (१२४०३)
एवं पुरुषशार्दूलो महाबुद्धिर्जनार्दनः ।
पाण्डवैर्घातयामास जरासन्धमरिं तदा ॥ २-२५-८८ (१२४०४)
घातयित्वा जरासन्धं बुद्धिपूर्वमरिन्दमः ।
धर्मराजमनुज्ञाप्य पृथां कृष्णां च भारत ॥ २-२५-८९ (१२४०५)
सुभद्रां भीमसेनं च फाल्गुनं यमजौ तथा ।
धौम्यमामन्त्रयित्वा च प्रययौ स्वां पुरीं प्रति ॥ २-२५-९० (१२४०६)
ग्पाण्डवैरनुधावद्भिर्युधिष्ठिरपुरोगमैः ।

हर्षेण महता युक्तः प्राप्य चानुत्तमं यशः ।
जगाम हृष्टः कृष्णस्तु पुनर्द्वारवतीं पुरीम्'॥ २-२५-९१ (१२४०७)
तेनैव रथमुख्येन मनसस्तुल्यगामिना ।
धर्मराजविसृष्टेन दिव्येनानादयन्दिशः ॥ २-२५-९२ (१२४०८)
ततो युधिष्ठिरमुखाः पाण्डवा भरतर्षभ ।
प्रदक्षिणमकुर्वन्त कृष्णमक्लिष्टकारिणम् ॥ २-२५-९३ (१२४०९)
ततो गते भगवति कृष्णे देवकिनन्दने ।
जयं लब्ध्वा सुविपुलं राज्ञां दत्त्वाऽभयं तदा ॥ २-२५-९४ (१२४१०)
संवर्धितं यशो भूयः कर्मणा तेन भारत ।
द्रौपद्याः पाण्डवा राजन्परां प्रीतिमवर्धयन् ॥ २-२५-९५ (१२४११)
तस्मिन्काले तु यद्युक्तं धर्मकामार्थसंहितम् ।
तद्राजा धर्मतश्चक्रे प्रजापालनकीर्तनम् ॥ ॥ २-२५-९६ (१२४१२)

इति श्रीमन्महाभारते सभापर्वणि जरासन्धवधपर्वणि
पञ्चविंशोऽध्यायः ॥ २५. ।
Mahabharata - Sabha Parva - Chapter Footnotes

२-२५-५ अवाप्यते प्राप्तः ॥
२-२५-८ एवमुक्तस्तदा भीभो जरासन्धमिति झ । पाठः ॥
२-२५-१५ नलं इरिणनामकं तृणविशेषम् ॥
२-२५-२२ कुलद्वारि गृहद्वारि ॥
२-२५-३५ असङ्गो रथस्पर्शहीनः ॥

---

सभ-०२६
॥ श्रीः ॥
२.२६. अध्यायः २६

Mahabharata - Sabha Parva - Chapter Topics
युधिष्ठिराज्ञया दिग्विजयार्थं निर्गतानामर्जुनादीनां सङ्क्षेपेण
दिग्विजयक थनम् ॥
Mahabharata - Sabha Parva - Chapter Text

वैशम्पायन उवाच ।
ग्ऋषेस्तद्वचनं स्मृत्वा निशश्वास युधिष्ठिरः ।
धर्म धर्मभृतां श्रेष्ठः कर्तुमिच्छन्परन्तपः। २-२६-१ (१२४१३)
तस्येङ्गितज्ञो बीभत्सुः सर्वशस्त्रभृतां वरः ।

संविवर्तयिषुः कामं पावकात्पाकशासनिः'॥ २-२६-२ (१२४१४)
प्राप्तं प्राप्य धनुः श्रेष्ठमक्षय्यौ च महेषुधी ।
रथं ध्वजं सभां चैव युधिष्ठिरमभाषत ॥ २-२६-३ (१२४१५)
अर्जुन उवाच। २-२६-४क्ष् (१४३४)
धनुरस्त्रं शरा वीर्यं पक्षो भूमिर्यशो बलम् ।
प्राप्तमेतन्मया राजन्दुष्प्रापं यदभीप्सितम् ॥ २-२६-४ (१२४१६)
तस्य कृत्यमहं मन्ये कोशस्य परिवर्धनम् ।
करमाहारयिष्यामि राज्ञः सर्वान्नृपोत्तम ॥ २-२६-५ (१२४१७)
विजयाय प्रयास्यामि दिशं धनदपालिताम् ।
तिथावथ मुहूर्ते च नक्षत्रे चाभिपूजिते ॥ २-२६-६ (१२४१८)
वैशम्पायन उवाच। २-२६-७क्ष् (१४३५)
धनञ्जयवचः श्रुत्वा धर्मराजो युधिष्ठिरः
स्निग्धगम्भीरनादिन्यां तं गिरा प्रत्यभाषत ॥ २-२६-७ (१२४१९)
स्वस्ति वाच्यार्हतो विप्रान्प्रयाहि भरतर्षभ ।
दुर्हृदामप्रहर्षाय सुहृदां नन्दनाय च ॥ २-२६-८ (१२४२०)
विजयस्ते ध्रुवं पार्थ प्रियं काममवाप्स्यसि ।
इत्युक्तः प्रययौ पार्थः सैन्येन महता वृतः ॥ २-२६-९ (१२४२१)
अग्निदत्तेन दिव्येन रथेनाद्भुतकर्मणा ।
तथैव भीमसेनोऽपि यमौ च पुरुषर्षभौ ॥ २-२६-१० (१२४२२)
ससैन्याः प्रययुः सर्वे धर्मराजेन पूजिताः ।
दिशं धनपतेरिष्टामजयत्पाकशासनिः ॥ २-२६-११ (१२४२३)
भीमसेनस्तथा प्राचीं सहदेवस्तु दक्षिणाम् ।
प्रतीचीं नकुलो राजन्दिशं व्यजयतास्त्रवित् ॥ २-२६-१२ (१२४२४)
खाण्डवप्रस्थमध्यस्थो धर्मराजो युधिष्ठिरः ।
आसीत्परमया लक्ष्म्या सुहृद्गणवृतः प्रभुः ॥ ॥ २-२६-१३ (१२४२५)

इति श्रीमन्महाभारते सभापर्वणि दिग्विजयपर्वणि षड्विंशोऽध्यायः
॥ २६.।
Mahabharata - Sabha Parva - Chapter Footnotes

२-२६-१३ खाण्डवप्रस्थं खाण्डवदाहेन ख्यापितस्थानम् ॥
१३.।

---

सभ-०२७
॥ श्रीः ॥
२.२७. अध्यायः २७

Mahabharata - Sabha Parva - Chapter Topics

अर्जुनदिग्वजये भगदत्तादिजयः ॥१.।

Mahabharata - Sabha Parva - Chapter Text

जनमेजय उवाच ॥
दिशामभिजयं ब्रह्मन्विस्तरेणानुकीर्तय ।
न हि तृप्यामि पूर्वेषां शृण्वानश्चरितं महत् ॥ २-२७-१ (१२४२६)
वैशम्पायन उवाच। २-२७-२क्ष् (१४३६)
धनञ्जयस्य वक्ष्यामि विजयं पूर्वमेव ते ।
यौगपद्येन पार्थैर्हि निर्जितेयं वसुन्धरा ॥ २-२७-२ (१२४२७)
ग्अवाप्य राजा राज्यार्धं कुन्तीपुत्रो युधिष्ठिरः ।
महत्त्वे राजशब्दस्य मनश्चक्रे महामनाः ॥ २-२७-३ (१२४२८)
तदा क्षात्रं विदित्वाऽस्य पृथिवीविजयं प्रति ।
अमर्षात्पार्थिवेन्द्राणां तं समेयाय वारयत् ॥ २-२७-४ (१२४२९)
तत्समेत्य भुवः क्षात्रं रथनागाश्वपत्तिमत् ।
अभ्ययात्पार्थिवं जिष्णुं मोघं कर्तुं जनाधिप ॥ २-२७-५ (१२४३०)
तत्पार्थः पार्थिवं क्षात्रं युयुत्सुं परमाहवे ।
प्रत्युद्ययौ महाबाहुस्तरसा पाकशासनिः ॥ २-२७-६ (१२४३१)
तदग्रं पार्थिवं क्षात्रं पार्थेनाक्लिष्टकर्मणा ।
वायुनेव घनानीकं तूलीभूतं ययौ दिशः ॥ २-२७-७ (१२४३२)
तज्जित्वा पार्थिवं क्षात्रं समरे परवीरहा ।
ययौ तदा वशे कर्तुमुदीचीं पाण्डुनन्दनः'॥ २-२७-८ (१२४३३)
पूर्वं कुलिङ्गविषये वशे चक्रे महीपतिम् ।
धनञ्जयो महाबाहुर्नातितीव्रेण कर्मणा ॥ २-२७-९ (१२४३४)
ग्तेनैव सहितः प्रायाज्जिष्णुः साल्वपुरं प्रति ।
स साल्वपुरमासाद्य साल्वराजं धनञ्जयटः ॥ २-२७-१० (१२४३५)
विक्रमेणोग्रधन्वानं वशे चक्रे महामनाः ।
तं पार्थः सहसा जित्वा द्युमत्सेनं महीश्वरम् ॥ २-२७-११ (१२४३६)
कृत्वा स सैनिकं प्रायात्कटदेशमरिन्दमः ।
तत्र पार्थो रणे जिष्णुः सुनाभं वसुधाधिपम् ॥ २-२७-१२ (१२४३७)
विक्रमेण वशे कृत्वा कृतवाननुसैनिकम् ।
एतेन सहितो राजन्सव्यसाची परन्तपः'॥ २-२७-१३ (१२४३८)
विजिग्ये शाकलद्वीपे प्रतिविन्ध्यं च पार्थिवम् ।
शाकलद्वीपवासाश्च सप्तद्वीपेषु ये नृपाः ॥ २-२७-१४ (१२४३९)
अर्जुनस्य च सैन्यस्थैर्विग्रहस्तुमुलोऽभवत् ।
तान्सर्वानजयत्पार्तो धर्मराजप्रियेप्सया ॥ २-२७-१५ (१२४४०)

तैरेव सहितः सर्वैः प्रग्ज्योतिषमुपाद्रवत् ॥ २-२७-१६ (१२४४१)
तत्र राजा महानासीद्भगदत्तो विशाम्पते ।
तेनासीत्सुमहद्युद्धं पाण्डवस्य महात्मनः ॥ २-२७-१७ (१२४४२)
स किरातैश्च चीनैश्च वृतः प्राग्ज्योतिषोऽभवत् ।
अन्यैश्च बहुभिर्योधैः सागरानुपवासिभिः ॥ २-२७-१८ (१२४४३)
ततः स दिवसानष्टौ योधयित्वा धनञ्जयम् ।
प्रहसन्नब्रवीद्राजा सङ्ग्रामविगतक्रमम् ॥ २-२७-१९ (१२४४४)
उपपन्नं महाबाहो त्वयि कौरवनन्दन ।
पाकशासनदायादे वीर्यमाहवशोभिनि ॥ २-२७-२० (१२४४५)
अहं सखा महेन्द्रस्य शक्रादनवरो रणे ।
न शक्ष्यामि च ते तात स्थातुं प्रमुखतो युधि ॥ २-२७-२१ (१२४४६)
त्वमीप्सितं पाण्डवेयं ब्रूहि किं करवाणि ते ।
यद्वक्ष्यसि महाबाहो तत्करिष्यामि पुत्रक ॥ २-२७-२२ (१२४४७)
अर्जुन उवाच ॥ २-२७-२३क्ष् (१४३७)
कुरूणामृषभो राजा धर्मपुत्रो युधिष्ठिरः ।
धर्मज्ञः सत्यसन्धश्च यज्वा विपुलदक्षिणः ॥ २-२७-२३ (१२४४८)
तस्य पार्थिवतामीप्से करस्तस्मै प्रदीयताम् ।
भवान्पितृसखश्चैव प्रीयमाणो मयापि च ।
ततो नाज्ञापयामि त्वां प्रीतिपूर्वं प्रदीयताम् ॥ २-२७-२४ (१२४४९)
भगदत्त उवाच। २-२७-२५क्ष् (१४३८)
कुन्तीमातर्यथा मे त्वं तथा राजा युधिष्ठिरः ।
सर्वमेतत्करिष्यामि किं चान्यत्करवाणि ते ॥ ॥ २-२७-२५ (१२४५०)

इति श्रीमन्महाभारते सभापर्वणि दिग्विजयपर्वणि सप्तविंशोऽध्यायः
॥ २७.।

---

सभ-०२८
॥ श्रीः ॥
२.२८. अध्यायः २८

Mahabharata - Sabha Parva - Chapter Topics
अर्जुनेन उत्तरदिग्विजये नानादेशजयः ॥१.।
Mahabharata - Sabha Parva - Chapter Text

वैशम्पायन उवाच ।
एवमुक्तः प्रत्युवाच भगदत्तं धनञ्जयः ।
अनेनैव कृतं सर्वं भविष्यत्यनुजानता ॥ २-२८-१ (१२४५१)

तं विजित्य महाबाहुः कुन्तीपुत्रो धनञ्जयः ।
प्रययावुत्तरां तस्माद्दिशं धनदपालिताम् ॥ २-२८-२ (१२४५२)
अन्तर्गिरिं च कौन्तेयस्तथैव च बहिर्गिरिम् ।
तथैवोपगिरं चैव विजिग्ये पुरुषर्षभः ॥ २-२८-३ (१२४५३)
विजित्य पर्वतान्सर्वान्ये च तत्र नराधिपाः ।
तान्वशे स्थापयित्वा स धनान्यादाय सर्वशः ॥ २-२८-४ (१२४५४)
तैरेव सहितः सर्वैरनुरज्य च तान्नृपान् ।
उलूकवासिनं राजन्बृहन्तमुपजग्मिवान् ॥ २-२८-५ (१२४५५)
मृदङ्गवरनादेन रथनेमिस्वनेन च ।
हस्तिनां च निनादेन कम्पयन्वसुधामिमाम् ॥ २-२८-६ (१२४५६)
ततो बृहन्तस्त्वरितो बलेन चतुरङ्गिणा ।
निष्क्रम्य नगरात्तस्माद्योधयामास फाल्गुनम् ॥ २-२८-७ (१२४५७)
सुमहान्सन्निपातोऽभूद्धनञ्जयबृहन्तयोः ।
न शशाक बृहन्तस्तु सोढुं पाण्डवविक्रमम् ॥ २-२८-८ (१२४५८)
सोऽविषह्यतमं मत्वा कौन्तेयं पर्वतेश्वरः ।
उपावर्तत दुर्धर्षो रत्नान्यादाय सर्वशः ॥ २-२८-९ (१२४५९)
स तद्राज्यमवस्थाप्य उलूकसहितो ययौ ।
सेनाबिन्दुमथो राजन्राज्यादाशु समाक्षिपत् ॥ २-२८-१० (१२४६०)
मोदापुरं वामवेदं सुदामानं सुसङ्कुलम् ।
उलूकानुत्तरांश्चैव तांश्च राज्ञः समानयत् ॥ २-२८-११ (१२४६१)
तत्रस्थः पुरुषैरेव धर्मराजस्य शासनात् ।
किरीटी जितवान्राजन्देशान्पञ्चगणांस्ततः ॥ २-२८-१२ (१२४६२)
स देवप्रस्थमासाद्य सेनाबिन्दोः पुरं प्रति ।
बलेन चतुरङ्गेण निवेशमकरोत्प्रभुः ॥ २-२८-१३ (१२४६३)
स तैः परिवृतः सर्वैर्विष्वगश्वं नराधिपम् ॥
अभ्यगच्छन्महातेजाः पौरवं पुरुषर्षभ ॥ २-२८-१४ (१२४६४)
विजित्य चाहवे शूरान्पार्वतीयान्महारथान् ।
जिगाय सेनया राजन्पुरं पौरवरक्षितम् ॥ २-२८-१५ (१२४६५)
पौरवं युधि निर्जित्य दस्यून्पर्वतवासिनः ।
गणानुत्सवसङ्केतानजयत्सप्त पाण्डवः ॥ २-२८-१६ (१२४६६)
ततः काश्मीरकान्वीरान्क्षत्रियान्क्षत्रियर्षभः ।
व्यजयल्लोहितं चैव मण्डलैर्दशभिः सह ॥ २-२८-१७ (१२४६७)
ततस्त्रिगर्ताः कौन्तेयं दार्वाः कोकनदास्तथा ।
क्षत्रिया बहवो राजन्नुपावर्तन्त सर्वशः ॥ २-२८-१८ (१२४६८)
अभिसारीं ततो रम्यां विजिग्ये कुरुनन्दनः ।
उरगावासिनं रम्यं रोचमानं रणेऽजयत् ॥ २-२८-१९ (१२४६९)

ततः सिंहपुरं रम्यं चित्रायुधसुरक्षितम् ।
प्राधमद्बलमास्थाय पाकशासनिराहवे ॥ २-२८-२० (१२४७०)
ततः सुह्मांश्च चोलांश्च किरीटी पाण्डवर्षभः ।
सहितः सर्वसैन्येन प्रामथत्कुरुनन्दनः ॥ २-२८-२१ (१२४७१)
ततः परमविक्रान्तो बाह्लीकान्पाकशासनिः ।
महता परिमर्देन वशे चक्रे दुरासदान् ॥ २-२८-२२ (१२४७२)
गृहीत्वा तु बलं सारं फल्गुनः पाण्डुनन्दनः ।
दरदान्सहकाम्भोजैरजयत्पाकशासनिः ॥ २-२८-२३ (१२४७३)
प्रागुत्तरं दिशं ये च वसन्त्याश्रित्य दस्यवः ।
निवसन्ति वने ये च तान्सर्वानजयत्प्रभुः ॥ २-२८-२४ (१२४७४)
लोहान्परमकाम्भोजानृषिकानुत्तरानपि ।
सहितांस्तान्महाराज व्यजयत्पाकशासनिः ॥ २-२८-२५ (१२४७५)
ऋषिकेष्वपि सङ्ग्रामे बभूवातिभयङ्करः ।
तारकामयसङ्काशः परस्त्वृषिकपार्थयोः ॥ २-२८-२६ (१२४७६)
स विजित्य ततो राजन्नृषिकान्रणमूर्धनि ।
शुकोदरसमांस्तत्र हयानष्टौ समानयत् ॥ २-२८-२७ (१२४७७)
मयूरसदृशानन्यानुत्तरानपरानपि ।
जवनानाशुगांश्चैव करार्थं समुपानयत् ॥ २-२८-२८ (१२४७८)
स विनिर्जित्य सङ्ग्रामे हिमवन्तं सनिष्कुटम् ।
श्वेतपर्वतमासाद्य न्यविशत्पुरुषर्षभः ॥ ॥ २-२८-२९ (१२४७९)

इति श्रीमन्महाभारते सभापर्वणि दिग्विजयपर्वणि अष्टाविंशोध्यायः ॥ २८.।

---

सभ-०२९
॥ श्रीः ॥
२.२९. अध्यायः २९

Mahabharata - Sabha Parva - Chapter Topics
अर्जुनेन उत्तरदिग्विजये किम्पुरुषादिखण्डजयः ॥ १.। अर्जुनस्य खाण्डवप्रस्थं प्रति प्रत्यागमनम् ॥ २.।
Mahabharata - Sabha Parva - Chapter Text

वैशम्पायन इवाच ॥
स श्वेतपर्वतं वीरः समतिक्रम्य वीर्यवान् ।
देशं किम्पुरुषावासं द्रुमपुत्रेण रक्षितम् ॥ २-२९-१ (१२४८०)
महता सन्निपातेन क्षत्रियान्तकरेण ह ।

अजयत्पाण्डवश्रेष्ठः करे चैनं न्यवेशयत् ॥ २-२९-२ (१२४८१)
तं जित्वा हाटकं नाम देशं गुह्यकरक्षितम् ।
पाकशासनिरव्यग्रः सहसैन्यः समासदत् ॥ २-२९-३ (१२४८२)
तांस्तु सान्त्वेन निर्जित्य मानसं सर उत्तमम् ।
ऋषिकुल्यास्तथा सर्वा ददर्श कुरुनन्दनः ॥ २-२९-४ (१२४८३)
सरो मानसमासाद्य हाटकानभितः प्रभुः ।
गन्धर्वरक्षितं देशमजयत्पाण्डवस्ततः ॥ २-२९-५ (१२४८४)
तत्र तित्तिरिकल्माषान्मण्डूकाख्यान्हयोत्तमान् ।
लेभे स करसमत्यन्तं गन्धर्वनगरात्तदा ॥ २-२९-६ (१२४८५)
ग्हेमकूटमथासाद्य न्यवसत्फल्गुनस्तदा ।
तं हेमकूटं राजेन्द्र समतिक्रम्य पाण्डवः ॥ २-२९-७ (१२४८६)
हरिवर्षं विवेशाथ सैन्येन महता वृतः ।
तत्र पार्थो ददर्शाथ बहूनिह मनोरमान् ॥ २-२९-८ (१२४८७)
नगरान्सवनांश्चैव नदीश्च विमलोदकाः ।
पुरुषान्देवकल्पांश्च नारीश्च प्रियदर्शनाः ॥ २-२९-९ (१२४८८)
तान्सर्वास्तत्र दृष्ट्वाऽथ मुदा युक्तो धनञ्जयटः ।
वशे चक्रे स रत्नानि लेभे च सुबहूनि च ॥ २-२९-१० (१२४८९)
ततो निषधमासाद्य गिरिस्थानजयत्प्रभुः ।
अथ राजन्नतिक्रम्य निषधं शैलमायतम् ॥ २-२९-११ (१२४९०)
विवेश मध्यमं वर्षं पार्थो दिव्यमिलावृतम् ।
तत्र दिव्योपमान्दिव्यान्पुरुषान्देवदर्शनान् ॥ २-२९-१२ (१२४९१)
अदृष्टपूर्वान्सुभगान्स ददर्श धनञ्जयः ।
सदनानि च शुभ्राणि नारीश्चाप्सरसंनिभाः ॥ २-२९-१३ (१२४९२)
दृष्ट्वा तानजयद्रम्यान्स तैश्च ददृशे तदा ।
जित्वा च तान्महाभागान्करे च विनिवेश्य च ॥ २-२९-१४ (१२४९३)
रत्नान्यादाय दिव्यानि भूषणान्यासनैः सह ।
उदीचीमथ राजेन्द्र ययौ पार्थो मुदाऽन्वितः ॥ २-२९-१५ (१२४९४)
स ददर्श ततो मेरुं शिखरीणां प्रभुं महत् ।
तं काञ्चनमयं दिव्यं चतुर्वर्णं दुरासदम् ॥ २-२९-१६ (१२४९५)
उन्नतं शतसाहस्रं योजनानां तु सुस्थितम् ।
ज्वलन्तमचलं मेरुं तेजोराशिमनुत्तमम् ॥ २-२९-१७ (१२४९६)
आक्षिपन्तं प्रभां भानोः स्वशृङ्गैः काञ्चनोज्ज्वलैः ।
काञ्चनाभरणं दिव्यदेवगन्धर्वसेवितम् ॥ २-२९-१८ (१२४९७)
अप्रमेयमनाधृष्यमधर्मबहुलैर्जनैः ।
व्यालैराचरितं धोरैर्दिव्यौषधिविदीपितम् ॥ २-२९-१९ (१२४९८)
स्वर्गमावृत्य तिष्ठन्तमुच्छ्रायेण महागिरिम् ।

अगम्यं मनसाप्यन्यैर्नदीवृक्षसमन्वितम् ॥ २-२९-२० (१२४९९)
नानाविहगसङ्घैश्च नादितं सुमनोहरैः ।
तं दृष्टा फल्गुनो मेरुं प्रीतिमानभवत्तदा ॥ २-२९-२१ (१२५००)
मेरोरिलावृतं दिव्यं सर्वतः परिमण्डितम् ।
मेरोस्तु दक्षिणे पार्श्वे जम्बूर्नाम वनस्पतिः ॥ २-२९-२२ (१२५०१)
नित्यपुष्पफलोपेवः सिद्धचारणसेवितः ।
आस्वर्गमुच्छ्रिता राजंस्तस्य शाखा वनस्पतेः ॥ २-२९-२३ (१२५०२)
यस्य नाम्ना त्विदं द्वीपं जन्बूद्वीपमिति स्मृतम् ।
तां च जम्बूं ददर्शाथ सव्यसाची परन्तपः ॥ २-२९-२४ (१२५०३)
तौ दृष्ट्वाऽप्रतिमौ लोके जम्बूं मेरुं च संस्थितौ ।
प्रतीमानभवद्राजन्सर्वतः स विलोकयन् ॥ २-२९-२५ (१२५०४)
तत्र लेभे ततो जिष्णुः सिद्धैर्दिव्यैश्च चारणैः ।
रत्नानि बहुसाहस्रं दत्तान्याभरणानि च ॥ २-२९-२६ (१२५०५)
वासांसि च महार्हाणि तत्र लब्ध्वाऽर्जुनस्तदा ।
आमन्त्रयित्वा तान्सर्वान्यज्ञमुद्दिश्य वै गुरोः ॥ २-२९-२७ (१२५०६)
अथादाय बहून्रत्नान्गमनाययोपचक्रमे ।
मेरुं प्रदक्षिणीकृत्य प्रवतप्रवरं प्रभुः ॥ २-२९-२८ (१२५०७)
ययौ जम्बूनदीतीरे नदीं श्रेष्ठां विलोकयन् ।
स तां मनोरमां दिव्यां जम्बूस्वादुरसावहाम् ॥ २-२९-२९ (१२५०८)
हैमपक्षिगणैर्जुष्टां सौवर्णजलजाकुलाम् ।
हैमपङ्कां हैमजलां सौवर्णोज्ज्वलवालुकाम् ॥ २-२९-३० (१२५०९)
क्वचित्सुपिष्पितैः पूर्णां सौवर्णकुसुमोत्पलैः ।
क्वचित्तीररुहैः कीर्णां हैमपुष्पैः सुपुष्पितैः ॥ २-२९-३१ (१२५१०)
तीर्थैश्च रुक्मसोपानैः सर्वतः समलङ्कृताम् ।
विमलैर्मणिजालैश्च नृत्तगीतरवैर्युताम् ॥ २-२९-३२ (१२५११)
दीप्तैर्हैमवितानैश्च समन्ताच्छोभितां शुभाम् ।
तथाविधां नदीं दृष्ट्वा पार्थस्तां प्रशशंस ह ॥ २-२९-३३ (१२५१२)
अदृष्टपूर्वां राजेन्द्र दृष्ट्वा हर्षमवाप च ।
दर्शनीयां नदीतीरे पुरुषान्सुमनोहरान् ॥ २-२९-३४ (१२५१३)
तान्नदीसलिलाहारान्सदारानमरोपमान् ।
नित्यं सुखमुदा युक्तान्सर्वालङ्कारशोभितान् ॥ २-२९-३५ (१२५१४)
तेभ्यो बहूनि रत्नानि तदा लेभे धनञ्जयः ।
दिव्यजम्बूफलं हैमं भूषणानि च पेशलम् ॥ २-२९-३६ (१२५१५)
लब्ध्वा तान्दुर्लभान्पार्थः प्रतीचीं प्रययौ दिशम् ।
नागानां रक्षितं देशमजयश्च पुनस्ततः ॥ २-२९-३७ (१२५१६)
ततो गन्वा महाराज वारुणीं पाकशासनिः ।

गन्धमादनमासाद्य ततस्तानजयत्प्रभुः ॥ २-२९-३८ (१२५१७)
तं गन्धमादनं राजन्नतिक्रम्य ततोऽर्जुनः ।
केतुमालं ददर्शाथ वर्षं रत्नसमन्वितम् ॥ २-२९-३९ (१२५१८)
सेवितं देवकल्पैश्च नारीभिः प्रियदर्शनैः ।
तं जित्वा चार्जुनो राजन्करे च विनिवेश्य च ॥ २-२९-४० (१२५१९)
आहृत्य तत्र रत्नानि दुर्लभानि तथार्जुनः ।
पुनश्च परिवृत्याथ माध्यं देशमिलावृतम् ॥ २-२९-४१ (१२५२०)
गत्वा प्राचीं दिशं राजन्सव्यसाची धनञ्जयः ।
मेरुमन्दरयोर्मध्ये शैलोदामभितो नदीम् ॥ २-२९-४२ (१२५२१)
ये ते कीचकवेणूनां छायां रम्यामुपासते ।
कषान्झषांश्च नद्यौ तान्प्रघसान्दीप्तवेणिपान् ॥ २-२९-४३ (१२५२२)
पशुपांश्च कुलिन्दांश्च तङ्कणान्परतङ्कणान् ।
एतान्समस्ताञ्जित्वा च करे च विनिवेश्य च ॥ २-२९-४४ (१२५२३)
रत्नान्यादाय सर्वेभ्यो माल्यवन्तं ततो ययौ ।
तं माल्यवन्तं शैलेन्द्रं समतिक्रम्य पाण्डवः ॥ २-२९-४५ (१२५२४)
भद्राश्वं प्रविवेशाथ वर्षं स्वर्गोपमं शुचिम् ।
तत्र देवोपमान्दिव्यान्पुरुषाञ्शुभसंयुतान् ॥ २-२९-४६ (१२५२५)
जित्वा तान्स्ववशे कृत्वा करे च विनिवेश्य च ।
आहृत्य सर्वतो रत्नान्यसङ्ख्यानि ततस्ततः ॥ २-२९-४७ (१२५२६)
नीलं नाम गिरिं गत्वा तत्रस्थानजयत्प्रभुः ।
ततो जिष्णुरतिक्रम्य पर्वतं नीलमायतम् ॥ २-२९-४८ (१२५२७)
विवेश रम्यकं वर्षं सङ्कीर्णं मिथुनैः शुभैः ।
तं देशमथ जित्वा स करे च विनिवेश्य च ॥ २-२९-४९ (१२५२८)
अजयच्चापि बीभत्सुर्देशं गुह्यकरक्षितम् ।
तत्र लेभे च राजेन्द्र सौवर्णान्मृगपक्षिणः ॥ २-२९-५० (१२५२९)
अगृह्णाद्यज्ञभूत्यर्थं रमणीयान्मनोहरान् ।
अन्यांश्च लब्ध्वा रत्नानि पाण्डवोऽथ महाबलः ॥ २-२९-५१ (१२५३०)
गन्धर्वरक्षितं देशमजयत्सगणं तदा ।
तत्र रत्नानि दिव्यानि लब्ध्वा राजन्नथार्जुनः ॥ २-२९-५२ (१२५३१)
वर्षं हिरण्वतं नाम विवेशाथ महीपते ।
स तु देशेषु रम्येषु गन्तुं तत्रोपचक्रमे ॥ २-२९-५३ (१२५३२)
मध्ये प्रासादवृन्देषु नक्षत्राणां शशी यथा ।
महापथेषु राजेन्द्र सर्वतो यान्तमर्जुनम् ॥ २-२९-५४ (१२५३३)
प्रासादवरशृङ्गस्थाः परया वीर्यशोभया ।
ददृशुस्तं स्त्रियः सर्वाः पार्थमात्मयशस्करम् ॥ २-२९-५५ (१२५३४)
तं कलापधरं शूरं सरथं सधनुः करम् ।

सवर्मं सकिरीटं वै संनद्धं सपरिच्छदम् ॥ २-२९-५६ (१२५३५)
सुकुमारं महासत्वं तेजोराशिमनुत्तमम् ।
शक्रोपमममित्रघ्नं परवारणवारणम् ॥ २-२९-५७ (१२५३६)
पश्यन्तः स्त्रीगणास्तत्र शक्तिपाणिं स्म मेनिरे ।
अयं स पुरुषव्याघ्रो रणेऽद्भुतपराक्रमः ॥ २-२९-५८ (१२५३७)
अस्य बाहुबलं प्राप्य न भवन्त्यसुहृद्गणाः ।
इति वाचो ब्रुवन्त्यस्ताः स्त्रियः प्रेम्णा धनञ्जयम् ॥ २-२९-५९ (१२५३८)
तुष्टुवुः पुष्पवृष्टिं च ससृजुस्तस्य मूर्धनि ।
दृष्ट्वा ते तु मुदा युक्ताः कौतूहलसमन्विताः ॥ २-२९-६० (१२५३९)
रत्नैर्विभूषणैश्चैव अभ्यवर्षंश्च पाण्डवम् ।
अथ जित्वा समस्तांस्तान्करे च विनिवेश्य च ॥ २-२९-६१ (१२५४०)
मणिहेमप्रबालानि शस्त्राण्याभरणानि च ।
एतानि लब्ध्वा पार्थोऽथ शृङ्गवन्तं गिरिं ययौ ॥ २-२९-६२ (१२५४१)
शृङ्गवन्तं च कौरव्यः समतिक्रम्य फल्गुनः ।
उत्तरं हरिवर्षं तु स समासाद्य पाण्डवः ॥ २-२९-६३ (१२५४२)
विद्याधरगणांश्चैव यक्षेन्द्रांश्च विनिर्जयन् ।
तत्र लेभे महात्मा वै वासो दिव्यमनुत्तमम् ॥ २-२९-६४ (१२५४३)
किन्नरद्रुमपत्रांश्च तत्र कृष्णाजिनान्बहून् ।
याज्ञीयांस्तांस्तदा दिव्यांस्तत्र लेभे धनञ्जय'॥ २-२९-६५ (१२५४४)
उत्तरं हरिवर्षं तु स समासाद्य पाण्डवः ।
इयेष जेतुं तं देशं पाकशासननन्दनः ॥ २-२९-६६ (१२५४५)
तत एनं महावीर्यं महाकाया महाबलाः ।
द्वारपालाः समासाद्य हृष्टा वचनमब्रुवन् ॥ २-२९-६७ (१२५४६)
पार्थ नेदं त्वया शक्यं पुरं जेतुं कथञ्जन ।
उपावर्तस्व कल्याण पर्याप्तमिदमच्युत ॥ २-२९-६८ (१२५४७)
इदं पुरं यः प्रविशेद्ध्रुवं न स भवेन्नरः ।
प्रीयामहे त्वया वीर पर्याप्तो विजयस्तवै ॥ २-२९-६९ (१२५४८)
न चात्र किञ्चिज्जेतव्यमर्जुनात्र प्रदृश्यते ।
उत्तराः कुरुवो ह्येते नात्र युद्धं प्रवर्तते ॥ २-२९-७० (१२५४९)
प्रविष्टोऽपि हि कौन्तेय नेह द्रक्ष्यसि किञ्चन ।
न हि मानुषदेहेन शक्यमत्राभिवीक्षितुम् ॥ २-२९-७१ (१२५५०)
अथेह पुरुषव्याघ्र किञ्चिदन्यच्चिकीर्षसि ।
तत्प्रब्रूहि करिष्यामो वचनात्तव भारत ॥ २-२९-७२ (१२५५१)
ततस्तानब्रवीद्राजन्नर्जुनः प्रहसन्निव ।
पार्थिवत्वं चिकीर्षामि धर्मराजस्य धीमतः ॥ २-२९-७३ (१२५५२)
न प्रवेक्ष्यामि वो देशं विरुद्धं यदि मानुषैः ।

युधिष्ठिराय यत्किञ्चित्करपण्यं प्रदीयताम् ॥ २-२९-७४ (१२५५३)
ग्नो चेत्कृष्णेन सहितो योधयिष्यामि सायकैः'।
ततो दिव्यानि वस्त्राणि दिव्यान्याभरणानि च ।
क्षौमाजिनानि दिव्यानि तस्य ते प्रददुः करम् ॥ २-२९-७५ (१२५५४)
एवं स पुरुषव्याघ्रो विजित्य दिशमुत्तराम् ।
सङ्ग्रामान्सुबहून्कृत्वा क्षत्रियैर्दस्युभिस्तथा ॥ २-२९-७६ (१२५५५)
स विनिर्जित्य राज्ञस्तान्करे च विनिवेश्य तु ।
धनान्यादाय सर्वेभ्यो रत्नानि विविधानि च ॥ २-२९-७७ (१२५५६)
हयांस्तित्तिरिकल्माषाञ्शुकपत्रनिभानपि ।
मयूरसदृशान्यान्सर्वाननिलरंहसः ॥ २-२९-७८ (१२५५७)
वृतः सुमहता राजन्बलेन चतुरङ्गिणा ।
आजगाम पुनर्वीरः शक्रप्रस्थं पुरोत्तमम् ॥ २-२९-७९ (१२५५८)
धर्मराजाय तत्पार्थो धनं सर्वं सवाहनम् ।
न्यवेदयदनुज्ञातस्तेन राज्ञा गृहान्ययौ ॥ ॥ २-२९-८० (१२५५९)

इति श्रीमन्महाभारते सभापर्वणि दिग्विजयपर्वणि एकोनत्रिंशोऽध्यायः
॥ २९.।

---

सभ-०३०
॥ श्रीः ॥
२.३०. अध्यायः ३०

Mahabharata - Sabha Parva - Chapter Topics
भीमेन प्राचीदिग्विजये पाञ्चालदेशगमनम् ॥
Mahabharata - Sabha Parva - Chapter Text

वैशम्पायन उवाच ।
एतस्मिन्नेव काले तु भीमसेनोऽपि वीर्यवान् ।
धर्मराजमनुज्ञाप्य ययौ प्राचीं दिशं प्रति ॥ ५  २-३०-१ (१२५६०)
महता बलचक्रेण परराष्ट्रावमर्दिना ।
हस्त्यश्वरथपूर्णेन दंशितेन प्रतापवान्। २-३०-२ (१२५६१)
वृतो भरतशार्दूलो द्विषच्छोकविवर्धनः ।
स गत्वा नरशार्दूलः पञ्चालानां पुरं महत् ॥ २-३०-३ (१२५६२)
पञ्चालान्विविधोपायैः सान्त्वयामास पाण्डवः ।
गकिञ्चित्करं समादाय विदेहानां पुरं ययौ'॥
ततः स गण्डकाञ्शूरो विदेहान्भरतर्षभः ॥ २-३०-४ (१२५६३)
विजित्याल्पेन कालेन दशार्णानजयत्प्रभुः ।

तत्र दाशार्णको राजा सुधर्मा रोमहर्षणम् ।
कृतवान्भीमसेनेम महद्युद्धं निरायुधम्। २-३०-५ (१२५६४)
भीमसेनस्तु तद्दृष्ट्वा तस्य कर्म महात्मनः ।
अधिसेनापतिं चक्रे सुधर्माणं महाबलम् ॥ २-३०-६ (१२५६५)
ततः प्राचीं दिशं भीमो ययौ भीमपराक्रमः ।
सैन्येन महता राजन्कम्पयन्निव मेदिनीम् ॥ २-३०-७ (१२५६६)
सोऽश्वमेधेश्वरं राजन्रोचमानं सहानुगम् ।
जिगाय समरे वीरो बलेन बलिनां वरः ॥ २-३०-८ (१२५६७)
स तं निर्जित्य कौन्तेयो नातितीव्रेण कर्मणा ।
पूर्वदेशं महावीर्यं विजिग्ये कुरनन्दनः ॥ २-३०-९ (१२५६८)
ततो दक्षिणमागम्य पुलिन्दनगरं महत् ।
सुकुमारं वशे चक्रे सुमित्रं च नराधिपम् ॥ २-३०-१० (१२५६९)
ततस्तु धर्मराजस्य शासनाद्भरतर्षभः ।
शिशुपालं महावीर्यमभ्यगाज्जनमेजय ॥ २-३०-११ (१२५७०)
चेदिराजोऽपि तच्छ्रुत्वा पाण्डवस्य चिकीर्षितम् ।
उपनिष्क्रम्य नगरात्प्रत्यगृह्णात्परन्तप ॥ २-३०-१२ (१२५७१)
तौ समेत्य महाराज कुरुचेदिवृषौ तदा ।
उभयोरात्मकुलयोः कौशलं पर्यपृच्छताम् ॥ २-३०-१३ (१२५७२)
ततो निवेद्य तद्राष्ट्रं चेदिराजो विशाम्पते ।
उवाच भीमं प्रहसन्किमिदं कुरुषेऽनघ। २-३०-१४ (१२५७३)
तस्य भीमस्तदाचख्यौ धर्मराजचिकीर्षितम् ।
स च तं प्रतिगृह्यैव तथा चक्रे नराधिपः ॥ २-३०-१५ (१२५७४)
ततो भीमस्तत्र राजन्निषित्वा त्रिदशाः क्षपाः ।
सत्कृतः शिशुपालेन ययौ सबलवाहनः ॥ ॥ २-३०-१६ (१२५७५)

इति श्रीमन्महाभारते सभापर्वणि दिग्विजयपर्वणि त्रिंशोऽध्यायः ॥ ३०.।

---

सभ-०३१
॥ श्रीः ॥
२.३१. अध्यायः ३१

Mahabharata - Sabha Parva - Chapter Topics
प्राचीं दिशं निर्जित्य भीमस्य प्रतिनिवर्तनम् ॥१.।
Mahabharata - Sabha Parva - Chapter Text

वैशम्पायन उवाच ।

ततः कुमारविषये श्रेणिमन्तमथाजयत् ।
कोसलाधिपतिं चैव बृहद्बलमरिन्दमः ॥ २-३१-१ (१२५७६)
अयोध्यायां तु धर्मज्ञं दीर्घयज्ञं महाबलम् ।
अजयत्पाण्डवश्रेष्ठो नातितीव्रेण कर्मणा ॥ २-३१-२ (१२५७७)
ततो गोपालकक्षं च सोत्तरानपि कोसलान् ।
मल्लानामधिपं चैव पार्थिवं चाजयत्प्रभुः ॥ २-३१-३ (१२५७८)
ततो हिमवतः पार्श्वं समभ्येत्य जलोद्भवम् ।
सर्वमल्पेन कालेन देशं चक्रे वशं बली ॥ २-३१-४ (१२५७९)
एवं बहुविधान्देशान्विजिग्ये भरतर्षभः ।
भल्लाटमभितो जिग्ये शुक्तिमन्तं च पर्वतम् ॥ २-३१-५ (१२५८०)
पाण्डवः सुमहावीर्यो बलेन बलिनां वरः ।
स काशिराजं समरे सुबाहुमनिवर्तिनम् ॥ २-३१-६ (१२५८१)
वशे चक्रे महाबाहुर्भीमो भीमपराक्रमः ।
ततः सुपार्श्वमभितस्तथा राजपतिं क्रथम् ॥ २-३१-७ (१२५८२)
युध्यमानं बालत्सङ्ख्ये विजिग्ये पाण्डवर्षभः ।
ततो मत्स्यान्महातेजा मलदांश्च महाबलान् ॥ २-३१-८ (१२५८३)
अनघानभयांश्चैव पशुभूमिं च सर्वशः ।
निवृत्य च महाबाहुर्मदधारं महीधरम् ॥ २-३१-९ (१२५८४)
सोमधेयांश्च निर्जित्य प्रत्यययावुत्तरामुखः ।
वत्सभूमिं च कौन्तेयो विजिग्ये बलवान्बलात् ॥ २-३१-१० (१२५८५)
भर्गाणामधिपं चैव निषादाधिपतिं तथा ।
विजिग्ये भूमिपालांश्च ममिमत्प्रमुखान्बहून् ॥ २-३१-११ (१२५८६)
ततो दक्षिणमल्लांश्च भोगवन्तं च पर्वतम् ।
तरसैवाजयद्भीमो नातितीव्रेण कर्मणा ॥ २-३१-१२ (१२५८७)
शर्मकान्वर्मकांश्चैव व्यजयत्सान्त्वपूर्वकम् ।
वैदेहकं च राजानं जनकं जगतीपतिम् ॥ २-३१-१३ (१२५८८)
विजिग्ये पुरुषव्याघ्रो नातितीव्रेण कर्मणा ।
शकांश्च बर्बरांश्चैव अजयच्छद्मपूर्वकम् ॥ २-३१-१४ (१२५८९)
वैदेहस्थस्तु कौन्तेय इन्द्रपर्वतमन्तिकात् ।
किरातानामधिपतीनजयत्सप्त पाण्डवः ॥ २-३१-१५ (१२५९०)
ततः सुह्यान्प्रसुह्यांश्च सपक्षानतिवीर्यवान् ।
विजित्य युधि कौन्तेयो मागधानभ्यधाद्बली ॥ २-३१-१६ (१२५९१)
दण्डं च दण्डधारं च विजित्य पृथिवीपतीन् ।
तैरेव सहितैः सर्वैर्गिरिव्रजमुपाद्रवत् ॥ २-३१-१७ (१२५९२)
जारासन्धिं सान्त्वयित्वा करे च विनिवेश्य ह ।
तैरेव सहितैः सर्वैः कर्णमभ्यद्रवद्बली ॥ २-३१-१८ (१२५९३)

स कम्पयन्निव महीं बलेन चतुङ्गिणा ।
युयुधे पाण्डवश्रेष्ठः कर्णेनामित्रघातिना ॥ २-३१-१९ (१२५९४)
स कर्णं युधि निर्जित्य वशे कृत्वा च भारत ।
ततो विजिग्ये बलवान्राज्ञः पर्वतवासिनः ॥ २-३१-२० (१२५९५)
अथ मोदागिरौ चैव राजानं बलवत्तरम् ।
पाण्डवो बाहुवीर्येण निजघान महामृधे ॥ २-३१-२१ (१२५९६)
ततः पुण्ड्राधिपं वीरं वासुदेवं समाययौ ।
ग्इदानीं वृष्णिवीरेण न योत्स्यामीति पौण्ड्रकः ॥ २-३१-२२ (१२५९७)
कृष्णस्य भुजसंत्रासात्करमाशु ददौ नृपः'।
कौशिकीकच्छनिलयं राजानं च महौजसम् ॥ २-३१-२३ (१२५९८)
उभौ बलभृतौ वीरावुभौ तीव्रपराक्रमौ ।
निर्जित्याजौ महाराज वङ्गराजमुपाद्रवत् ॥ २-३१-२४ (१२५९९)
समुद्रसेन निर्जित्य चन्द्रसेनं च पार्थिवम् ।
ताम्रलिप्तं च राजानं कर्वटाधिपतिं तथा ॥ २-३१-२५ (१२६००)
सुह्मानामधिपं चैव ये च सागरवासिनः ।
सर्वान्म्लेच्छगणांश्चैव विजिग्ये भरतर्षभः ॥ २-३१-२६ (१२६०१)
एवं बहुविधान्देशान्विजित्य पवनात्मजः ।
वसु तेभ्य उपादाय लौहित्यमगद्बली ॥ २-३१-२७ (१२६०२)
स सर्वान्म्लेच्छनृपतीन्सागरानूपवासिनः ।
करमाहारयामास रत्नानि विविधानि च ॥ २-३१-२८ (१२६०३)
चन्दनागुरुवस्त्राणि मणिमौक्तिककम्बलम् ।
काञ्चनं रजतं चैव विद्रुमं च महाधनम् ॥ २-३१-२९ (१२६०४)
ते कोटीशतसङ्ख्येन कौन्तेयं महता तदा ।
अभ्यवर्षन्महात्मानं धनवर्षेण पाण्डवम् ॥ २-३१-३० (१२६०५)
इन्द्रप्रस्थमुपागम्य भीमो भीमपराक्रमः ।
निवेदयामास तदा धर्मराजाय तद्धनम् ॥ ॥ २-३१-३१ (१२६०६)

इति श्रीमन्महाभारते सभापर्वणि दिग्विजयपर्वणि एकत्रिंशोऽध्यायः
॥ ३२. ।
Mahabharata - Sabha Parva - Chapter Footnotes

२-३१-१६ सुह्मा राढाः मागधानभ्यधाद्बली करं प्रयच्छतेत्युक्तवान्
। पूर्वमेव पराकान् तत्वात् ॥

---

सभ-०३२
॥ श्रीः ॥
२.३२. अध्यायः ३२

दक्षिणदिग्विजये शूरसेनादीञ्जितवतः सहदेवस्य माहिष्मत्यां नीलेन सह युद्धम् ॥ १.। नोलस्य अग्निसाहाय्यकरणकारणकथनम् ॥ २.। सहदेवस्तुत्या तुष्टस्याग्नेराज्ञया नीलेनार्चितस्य सहदेवस्य विभीषणात्करग् रहणार्थं घटोत्कचप्रेषणम् ॥ ३.।


वैशम्पाय उवाच ॥
तथैव सहदेवोऽपि धर्मराजेन पूजितः ।
महत्या सेनया राजन्प्रययौ दक्षिणां दिशम् ॥ २-३२-१ (१२६०७)
स शूरसेनान्कार्त्स्न्येन पूर्वमेवाजयत्प्रभुः ।
मत्स्यराजं च कौरव्यो वशे चक्रे बलाद्बली ॥ २-३२-२ (१२६०८)
अधिराजाधिपं चैव दन्तवक्रं महाबलम् ।
जिगाय करदं चैव कृत्वा राज्ये न्यवेशयत् ॥ २-३२-३ (१२६०९)
सुकुमारं वशे चक्रे सुमित्रं च नराधिपम् ।
तथैवापरमत्स्यांश्च व्यजयत्स पटच्चरान् ॥ २-३२-४ (१२६१०)
निषादभूमिं गोशृङ्गं पर्वतप्रवरं तथा ।
तरसैवाजयद्धीमाञ्श्रेणिमन्तं च पार्थिवम् ॥ २-३२-५ (१२६११)
नरराष्ट्रं च निर्जित्य कुन्तिभोजमुपाद्रवत् ।
प्रीतिपूर्वं च तस्यासौ प्रतिजग्राह शासनम् ॥ २-३२-६ (१२६१२)
ततश्चर्मण्वतीकूले जम्भकस्यात्मजं नृपम् ।
ददर्श वासुदेवेन शेषितं पूर्ववैरिणा ॥ २-३२-७ (१२६१३)
चक्रे तेन स सङ्ग्रामं सहदेवेन भारत ।
स तमाजौ विनिर्जित्य दक्षिणाभिमुखो ययौ ॥ २-३२-८ (१२६१४)
सेकानपरसेकांश्च रत्नानि विविधानि च ॥
ततस्तेनैव सहितो नर्मदामभितो ययौ। २-३२-१०अग्भगदत्तं महाबाहुं क्षत्रियं नरकात्मजम् ।
अर्जुनाय करं दत्तं श्रुत्वा तत्र न्यवर्तत'॥ २-३२-९ (१२६१५)
विन्दानुविन्दावावन्त्यौ सैन्येन महतावृतौ ।
जिगाय समरे वीरावाश्विनेयः प्रतापवान् ॥ २-३२-११ (१२६१६)
ततो रत्नान्युपादाय पुरं भोजकटं ययौ ।
तत्र युद्धमभूद्राजन्दिवसद्वयमच्युत ॥ २-३२-१२ (१२६१७)
स विजित्य दुराधर्षं भीष्मकं माद्रिनन्दनः ।
कोसलाधिपतिं चैव तथा वेणातटाधिपम् ॥ २-३२-१३ (१२६१८)
कान्तारकांश्च समरे तथा प्राकोटकान्नृपान् ।

नाटकेयांश्च समरे तथा हेरम्बकान्युधि ॥ २-३२-१४ (१२६१९)
मारुधं च विनिर्जित्य रम्यग्राममथो बलात् ।
नाचीनानर्बुकांश्चैव राजानश्च महाबलः ॥ २-३२-१५ (१२६२०)
तांस्तानाटविकान्सर्वानजयत्पाण्डुनन्दनः ।
नाताधिपं च नृपतिं वशे चक्रे महाबलः ॥ २-३२-१६ (१२६२१)
पुलिन्दांश्च रणे जित्वा ययौ दक्षिणतः पुरः ।
युयुधे पाण्ड्यराजेन दिवसं नकुलानुजः ॥ २-३२-१७ (१२६२२)
तं जित्वा स महाबाहुः प्रययौ दक्षिणापथम् ।
गुहामासादयामास किष्किन्धां लोकविश्रुताम् ॥ २-३२-१८ (१२६२३)
ग्पुरा वानरराजेन वालिना चाभिरक्षिताम् ।
ततः कोसलराजस्य रामस्यैवानुगेन च ।
सुग्रीवेणाभिगुप्तां तां प्रविष्टस्तमथाह्वयत्'॥ २-३२-१९ (१२६२४)
तत्र वानरराजाभ्यां मैन्देन द्विविदेन च ।
युयुधे दिवसान्सप्त न च तौ विकृतिं गतौ ॥ २-३२-२० (१२६२५)
ततस्तुष्टौ महात्मानौ सहदेवाय वानरौ ।
ऊचतुश्चैव संहृष्टौ प्रीतिपूर्वमिदं वचः ॥ २-३२-२१ (१२६२६)
गच्छ पाण्डवशार्दूल रत्नान्यादाय सर्वशः ।
अविघ्नमस्त कार्याय धर्मराजाय धीमते ॥ २-३२-२२ (१२६२७)
ततो रत्नान्युपादाय पुरीं माहिष्मतीं ययौ ॥
तत्र नीलेन राज्ञा स चक्रे युद्धं नरर्षभः ॥ २-३२-२३ (१२६२८)
पाण्डवः परवीरघ्नः सहदेवः प्रतापवान् ॥
ततोऽस्य सुमहद्युद्धमासीद्भीरुभयङ्करम् ॥ २-३२-२४ (१२६२९)
सैन्यक्षयकरं चैव प्राणानां संशयावहम् ।
चक्रे तस्य हि साहाय्यं भगवान्हव्यवाहनः ॥ २-३२-२५ (१२६३०)
ततो रथा हया नागाः पुरुषाः कवचानि च ।
प्रतीप्तानि व्यदृश्यन्त सहदेवबले तदा ॥ २-३२-२६ (१२६३१)
ततः सुसंभ्रान्तमना बभूव कुरुनन्दनः ।
नोत्तरं प्रतिवक्तुं च शक्तोऽभूज्जनमेजय ॥ २-३२-२७ (१२६३२)
जनमेजय उवाच। २-३२-२८क्ष् (१४३९)
किमर्थं भगवान्वह्निः प्रत्यमित्रोऽभवद्युधि ।
सहदेवस्य यज्ञार्थं घटमानस्य वै द्विज ॥ २-३२-२८ (१२६३३)
वैशम्पायन उवाच। २-३२-२९क्ष् (१४४०)
तत्र माहिष्मतीवासी भगवान्हव्यवाहनः ।
श्रूयते हि गृहीतो वै पुरस्तात्पारदारिकः ॥ २-३२-२९ (१२६३४)
नीलस्य राज्ञो दुहिता बभूवतातीव शोभना ।
साऽग्निहोत्रमुपातिष्ठद्बोधनाय पितुः सदा ॥ २-३२-३० (१२६३५)

व्यजनैर्धूयमानोऽपि तावत्प्रज्वलते न सः ॥
यावच्चारुपुटौष्ठेन वायुना न विधूयते ॥ २-३२-३१ (१२६३६)
ततः स भगवानग्निश्चकमे तां सुदर्शनाम् ।
नीलस्य राज्ञः सर्वेषामुपनीतश्च सोऽभवत् ॥ २-३२-३२ (१२६३७)
ततो ब्रह्मणरूपेण रममाणो यदृच्छया ॥
चकमे तां वरारोहां कन्यामुत्पललोचनाम् ॥
तं तु राजा यथाशास्त्रमशासद्धार्मिकस्तदा ॥ २-३२-३३ (१२६३८)
प्रजज्वाल ततः कोपाद्भगवान्हव्यवाहनः ।
तं दृष्ट्वा विस्मितो राजा जगाम शिरसाऽवनिम् ॥ २-३२-३४ (१२६३९)
ततः कालेन तां कन्यां तथैव हि तदा नृपः ।
प्रददौ विप्ररूपाय वह्नये शिरसा नतः ॥ २-३२-३५ (१२६४०)
प्रतिगृह्य च तां सुभ्रुं नीलराज्ञः सुतां तदा ।
चक्रे प्रसादं भगवांस्तस्य राज्ञो विभावसुः ॥ २-३२-३६ (१२६४१)
वरेण च्छन्दयामास तं नृपं स्विष्टकृत्तमः ।
अभयं च स जग्राह स्वसैन्ये वै महीपतिः ॥ २-३२-३७ (१२६४२)
ततः प्रभृति ये केचिदज्ञानात्तां पुरीं नृपाः ।
जिगीषन्ति बलाद्राजंस्ते दह्यन्ते स्म वह्निना ॥ २-३२-३८ (१२६४३)
तस्यां पुर्यां तदा चैव माहिष्मत्यां कुरूद्वह ।
बभूवुरनतिग्राह्या योषितश्छन्दतः किल ॥ २-३२-३९ (१२६४४)
एवमग्निर्वरं प्रादात्स्त्रीणामप्रतिवारणे ।
स्वैरिण्यस्तत्र च राजानस्तत्पुरं भरतर्षभ। २-३२-४० (१२६४५)
वर्जयन्ति च राजानस्तत्पुरं भरतर्षभ ।
भयादग्नेर्महाराज तदाप्रभृति सर्वदा ॥ २-३२-४१ (१२६४६)
सहदेवस्तु धर्मात्मा सैन्यं दृष्ट्वा भयार्दितम् ।
परीतमग्निना राजन्नाकम्पत यथाऽचलः ।
उपस्पृश्य शुचिर्भूत्वा सोऽब्रवीत्पावकं ततः ॥ २-३२-४२ (१२६४७)
सहदेव उवाच। २-३२-४३क्ष् (१४४१)
त्वदर्थोऽयं समारम्भः कृष्णवर्त्मन्नमोस्तु ते ।
मुखं त्वमसि देवानां यज्ञस्त्वमसि पावक ॥ २-३२-४३ (१२६४८)
पावनात्पावकश्चासि वहनाद्धव्यवाहनः ।
वेदास्त्वदर्थं जाता वै जातवेदास्ततो ह्यसि ॥ २-३२-४४ (१२६४९)
चित्रभानुः सुरेशश्च अनलस्त्वं विभावसो ।
स्वर्गद्वारस्पृशश्चासि हुताशो ज्वलनः शिखी ॥ २-३२-४५ (१२६५०)
वैश्वानरस्त्वं पिङ्गेशः प्लवङ्गो भूरितेजसः ।
कुमारसूस्त्वं भगवान्रुद्रगर्भो हिरण्यकृत् ॥ २-३२-४६ (१२६५१)
अग्निर्ददातु मे तेजो वायुः प्राणं ददातु मे ।

पृथिवी बलमादध्याच्छिवं चापो दिशन्तु मे ॥ २-३२-४७ (१२६५२)
अपां गर्भ महासत्व जातवेदः सुरेश्वर ।
देवानां मुखमग्ने त्वं सत्येन विपुनीहि माम् ॥ २-३२-४८ (१२६५३)
ऋषिभिर्ब्राह्मणैश्चैव दैवतैरसुरैरपि ।
नित्यं सुहुत यज्ञेषु सत्येन विपुनीहि माम् ॥ २-३२-४९ (१२६५४)
धूमकेतुः शिखी च त्वं पापहाऽनिसम्भवः ।
सर्वप्राणिषु नित्यस्थः सत्येन विपुनीहि माम् ॥ २-३२-५० (१२६५५)
एवं स्तुतोऽसि भगवन्प्रीतेन शिचिना मया ।
तुष्टिं पुष्टिं श्रुतं चैव प्रीति चाग्ने प्रयच्छ मे ॥ २-३२-५१ (१२६५६)
वैशम्पायन उवाच। २-३२-५२क्ष् (१४४२)
इत्येवं मन्त्रमाग्नेयं पठन्यो जुहुयाद्विभुम् ।
ऋद्धिमान्सततं दान्तः सर्वपापैः प्रमुच्यते ॥ २-३२-५२ (१२६५७)
सहदेव उवाच। २-३२-५३क्ष् (१४४३)
यज्ञविघ्नमिमं कर्तुं नार्हस्त्वं यज्ञवाहन ।
एवमुक्त्वा तु माद्रेयः कुशैरास्तीर्य मेदिनीम् ॥ २-३२-५३ (१२६५८)
विधिवत्पुरुषव्याघ्रः पावकं प्रत्युपाविशत् ।
प्रमुखे तस्य सैन्यस्य भीतोद्विग्नस्य भारत ॥ २-३२-५४ (१२६५९)
न चैनमत्यगाद्वह्निरुवाच महोदधिः ।
तमुपेत्य शनैर्वह्निरुवाच कुरुनन्दनम् ॥ २-३२-५५ (१२६६०)
सहदेवं नृणां देवं सान्त्वपूर्वमिदं वचः ।
उत्तिष्ठोत्तिष्ठ कौरव्य जिज्ञासेयं कृता मया ॥ २-३२-५६ (१२६६१)
वेद्मि सर्वमभिप्रायं तव धर्मसुतस्य च ।
मया तु रक्षितव्या पूरियं भरतसत्तम ॥ २-३२-५७ (१२६६२)
यावद्राज्ञो हि नीलस्य कुले वंशधरा इति ।
ईप्सितं तु करिष्यामि मनसस्तव पाण्डव ॥ २-३२-५८ (१२६६३)
तत उत्थाय हृष्टात्मा प्राञ्जलिः शिरसा नतः ।
पूजयामास माद्रेयटः पावकं भरतर्षभ ॥ २-३२-५९ (१२६६४)
पावके विनिवृत्ते तु नीलो राजाऽभ्यगात्तदा ।
पावकस्याज्ञया चैनमर्चयामास पार्थिवः ॥ २-३२-६० (१२६६५)
सत्कारेण नरव्याघ्रं सहदेवं युधां पतिम् ।
प्रतिगृह्य च तां पूजां करे च विनिवेश्य च ॥ २-३२-६१ (१२६६६)
माद्रीसुतस्ततः प्रायाद्विजयी दक्षिणां दिशम् ।
त्रैपुरं स वशे कृत्वा राजानममितौजसम् ॥ २-३२-६२ (१२६६७)
निजग्राह महाबाहुस्तरसा पौरवेश्वरम् ।
आकृतिं कौशिकाचार्यं यत्ने महता ततः ॥ २-३२-६३ (१२६६८)
वशे चक्रे महाबाहुः सुराष्ट्राधिपतिं तदा ।

सुराष्ट्रविषयस्थश्च प्रेषयामास रुक्मिणे ॥ २-३२-६४ (१२६६९)
राज्ञे भोजकटस्थाय महामात्राय धीमते ।
भीष्मकायस धर्मात्मा साक्षादिन्द्रसखाय वै ॥ २-३२-६५ (१२६७०)
च चास्य प्रतिजग्राह ससुतः शासनं तदा ।
प्रीतिपूर्वं महाराज वासुदेवमवेक्ष्य च ॥ २-३२-६६ (१२६७१)
ततः स रत्नान्यादाय पुनः प्रायाद्युधां पतिः ।
ततः शूर्पारकं चैव तालाकटमथापि च ॥ २-३२-६७ (१२६७२)
वशे चक्रे महातेजा दण्डकांश्च महाबलः ।
सागरद्वीपवासांश्च नृपतीन्म्लेच्छयोनिजान् ॥ २-३२-६८ (१२६७३)
निषादान्पुरुषादांश्च कर्णप्रावरणानपि ।
ये च कालमुखा नाम नरराक्षसयोनयः ॥ २-३२-६९ (१२६७४)
कृत्स्नं कोलगिरिं चैव सुरभीपट्टनं तथा ।
द्वीपं ताम्राह्वयं चैव पर्वतं रामकं तथा ॥ २-३२-७० (१२६७५)
तिमिङ्गिलं च स नृपं वशे कृत्वा महामतिः ।
एकपादांश्च पुरुषान्केरलान्वनवासिनः ॥ २-३२-७१ (१२६७६)
नगरीं सञ्जयन्तीं च पाषण्डं करहाटकम् ।
दूतैरेव वशे चक्रे करं चैनानदापयत् ॥ २-३२-७२ (१२६७७)
पाण्ड्यांश्च द्रविडांश्चैव सहितांश्चोड्रकेरलैः ।
अन्ध्रांस्तावनांश्चैव कलिङ्गानुष्ट्रकर्णिकान् ॥ २-३२-७३ (१२६७८)
आटवीं च पुरीं रम्यां यवनानां पुरं तथा ।
दूतैरेव वशे चक्रे करं चैनानदापयत् ॥ २-३२-७४ (१२६७९)
ग्तात्रपर्णी ततो गत्वा कन्यातीर्थमतीत्य च ।
दक्षिणां च दिशं सर्वां विजित्य कुरुनन्दनः ॥ २-३२-७५ (१२६८०)
उत्तरं तीरमासाद्य सागरस्योर्मिमालिनः ।
चिन्तयामास कौन्तेयो भ्रातुः पुत्रं घटोत्कचम् ॥ २-३२-७६ (१२६८१)
ततश्चिन्तितमात्रस्तु राक्षसः प्रत्यदृश्यत ।
तं मेरुशिखराकारमागतं पाण्डुनन्दनः ॥ २-३२-७७ (१२६८२)
भृगुकच्छात्ततो धीमान्साम्नैवामित्रकर्शनः ।
आगम्यतामिति प्राह धर्मराजस्य शसनाः ॥ २-३२-७८ (१२६८३)
स राक्षसपरीवारस्तं प्रणम्याशु संस्थितः ।
घटोत्कचं महात्मानं राक्षसं घोरदर्शनम् ॥ २-३२-७९ (१२६८४)
तत्रस्थः प्रेषयामास पौलस्त्याय महात्मने'।
बिभीषणाय धर्मात्मा प्रीतिपूर्वमरिन्दमः ॥ २-३२-८० (१२६८५)
स चास्य प्रतिजग्राह शासनं प्रीतिपूर्वकम् ।
तच्च कृष्णकृतं धीमानभ्यमन्यत स प्रभुः ॥ २-३२-८१ (१२६८६)
ततः सम्प्रेषयामास रत्नानि विविधानि च ।

चन्दनागुरुकाष्ठानि दिव्यान्याभरणानि च ॥ २-३२-८२ (१२६८७)
वासांसि च महार्हाणि मणींश्चैव महाधनान् ॥ ॥ २-३२-८२क्ष् (१४४४)

इति श्रीमन्महाभारते सभापर्वणि दिग्विजयपर्वणि द्वात्रिंशोऽध्यायः
॥ ३२.।

---

सभ-०३३
॥ श्रीः ॥
२.३३. अध्यायः ३३

Mahabharata - Sabha Parva - Chapter Topics
जनमेजयप्रश्नानुरोधेन सहदेवस्य द्राविडपाण्ड्यदेशगमनकथनम् ॥ १.।
Mahabharata - Sabha Parva - Chapter Text

ग्जनमेजय उवाच ॥
इच्छाम्यागमनं श्रोतुं हैडिम्बस्य द्विजोत्तम ।
लङ्कायां च गतिं ब्रह्मन्पौलस्त्यस्य च दर्शनम् ॥ २-३३-१ (१२६८८)
कावेरीदर्शनं चैव आनुपूर्व्या वदस्व मे। २-३३-२ (१२६८९)
वैशम्पायन उवाच ।
शृणु राजन्यथा वृत्तं सहेदवस्य साहसम् ॥ २-३३-२क्ष् (१४४५)
कालनद्वीपगांश्चैव तरसाऽजित्य चाहवे ।
दक्षिणां च दिशं जित्वा चोलस्य विषयं ययौ ॥ २-३३-३ (१२६९०)
ददर्श पुण्यतोयां वै कावेरीं सरितां वराम् ।
नाजापक्षिगणैर्जुष्टां तापसैरुपशोभिताम् ॥ २-३३-४ (१२६९१)

कदम्बैः सप्तपर्णैश्च कश्मर्यामलकैर्वृताम् ॥ २-३३-५ (१२६९२)
-----महाशाखैः प्लक्षैरौदुम्बरैरपि ।
----- अश्वत्थैः खदिरैर्वृताम् ॥ २-३३-६ (१२६९३)
-------- सञ्छन्नामश्वकर्णैश्च शोभिताम् ।
बूतैः पुण्ड्रकपत्रैश्च कदलीवनसंवृताम् ॥ २-३३-७ (१२६९४)
चक्रवाकगणैः कीर्णं प्लवैश्च जलवायसैः ।
समुद्रकाकैः क्रौञ्चैश्च नादितां जलकुक्कुटैः ॥ २-३३-८ (१२६९५)
एवं खगैश्च बहुभिः सङ्घुष्टां जलवासिभिः ।
आश्रमैर्बहुभिः सक्तां चैत्यवृक्षैश्च शोभिताम् ॥ २-३३-९ (१२६९६)
शोभितां ब्राह्मणैः शुभ्रैर्वेदवेदाङ्गपारगैः ।
क्वचित्तीररुहैर्वृक्षैर्मालाभिरिव शोभिताम् ॥ २-३३-१० (१२६९७)
क्वचित्सुपुष्पितैर्वृक्षैः क्वचित्सौगन्धिकोत्पलैः ।

कह्लारकुमुदोत्फुल्लैः कमलैरुपशोभिताम् ॥ २-३३-११ (१२६९८)
कावेरीं तादृशीं दृष्ट्वा प्रीतिमान्पाण्डवस्तदा ।
अस्मद्राष्ट्रे यथा गङ्गा कावेरी च तथा शुभा ॥ २-३३-१२ (१२६९९)
सहदेवस्तु तां तीर्त्वा नदीमनुचरैः सह ।
दक्षिणं तीरमासाद्य गमनायोपचक्रमे ॥ २-३३-१३ (१२७००)
आगतं पाण्डवं तत्र श्रुत्वा विषयवासिनः ।
दर्शनार्थं ययुस्ते तु कौतूहलसमन्विताः ॥ २-३३-१४ (१२७०१)
द्रमिडाः पुरुषा राजन्स्त्रियश्च प्रियदर्शनाः ।
गत्वा पाण्डुसुतं तत्र ददृशुस्ते मुदाऽन्विताः ॥ २-३३-१५ (१२७०२)
सुकुमारं विशालाक्षं व्रजन्तं त्रिदशोपमम् ।
दर्शनीयतमं लोके नेत्रैरनिमिषैरिव ॥ २-३३-१६ (१२७०३)
आश्चर्यभूतं ददृशुर्द्रमिडास्ते समागताः ।
महासेनोपमं दृष्ट्वा पूजां चक्रुश्च तस्य वै ॥ २-३३-१७ (१२७०४)
रत्नैश्च विविधैरिष्टैर्भोगैरन्यैश्च संमतैः ।
गतिमङ्गलयुक्ताभिः स्तुवन्तो नकुलानुजम् ॥ २-३३-१८ (१२७०५)
सहदेवस्तु तान्दृष्ट्वा द्रमिलानागतान्मुदा ।
विसृज्य तान्महाबाहुः प्रस्थितो दक्षिणां दिशम् ॥ २-३३-१९ (१२७०६)
दूतेन तरसा चोलं विजित्य द्रमिडेश्वरम् ।
ततो रत्नान्युपादाय पाण्डस्य विषयं ययौ ॥ २-३३-२० (१२७०७)
दर्शने सहदेवस्य न च तृप्ता नराः परे ।
गच्छन्तमनुगच्छन्तः प्राप्ताः कौतूहलान्विताः ॥ २-३३-२१ (१२७०८)
ततो माद्रीसुतो राजन्मृगसङ्घान्विलोकयन् ।
गजान्वनचरानन्यान्व्याघ्रान्कृष्णमृगान्बहून् ॥ २-३३-२२ (१२७०९)
शुकान्मयूरान्दृष्ट्वा तु गृध्रानारण्यकुक्कुटान् ।
ततो देशं समासाद्य श्वशुरस्य महीपतेः ॥ २-३३-२३ (१२७१०)
प्रेषयामास माद्रेयो दूतान्पाण्ड्याय वै तदा ।
प्रतिजग्राह तस्याज्ञां सम्प्रीत्या मलयध्वजः ॥ २-३३-२४ (१२७११)
भार्या रूपवती जिष्णोः पाण्ड्यस्य तनया शुभा ।
चित्राङ्गदेति विख्याता द्रमिडी योषितां वरा ॥ २-३३-२५ (१२७१२)
आगतं सहदेवं तु सा श्रुत्वाऽन्तः पुरे पितुः ।
प्रेषयामास सम्प्रीत्या पूजारत्नं च वै बहु ॥ २-३३-२६ (१२७१३)
पाण्ड्योऽपि बहुरत्नानि दूतैः सह मुमोच ह ।
मणिमुक्ताप्रवालानि सहदेवाय कीर्तिमान् ॥ २-३३-२७ (१२७१४)
तां दृष्ट्वाऽप्रतिमां पूजां पाण्डवोऽपि मुदा नृप ।
भ्रातुः पुत्रे बहून्रत्नान्दत्वा वै बभ्रूवाहने ॥ २-३३-२८ (१२७१५)
पाण्ड्यं द्रमिडराजानं श्वशुरं मलयध्वजम् ।

स दूतैस्तं वशे कृत्वा मणलूरेश्वरं तदा ॥ २-३३-२९ (१२७१६)
ततो रत्नान्युपादाय द्रमिडैरावृतो ययौ ।
अगस्त्यस्यालयं दिव्यं देवलोकसमं गिरिम् ॥ २-३३-३० (१२७१७)
स तं प्रदक्षिमं कृत्वा मलयं भरतर्षभ ।
लङ्घयित्वा तु माद्रेयस्ताम्रपर्णीं नदीं शुभाम् ॥ २-३३-३१ (१२७१८)
प्रसन्नसलिलां दिव्यां सुशीतां च मनोहराम् ।
समुद्रतीरमासाद्य न्यविशत्पाण्डुनन्दनः ॥ ॥ २-३३-३२ (१२७१९)

इति श्रीमन्महाभारते सभापर्वणि दिग्विजयपर्वणि
त्रयस्त्रिंशोऽध्यायः ॥ ३३.।

---

सभ-०३४
॥ श्रीः ॥
२.३४. अध्यायः ३४

Mahabharata - Sabha Parva - Chapter Topics
स्मृतिमात्रागतघटोत्कचलङ्काप्रेषणवृत्तान्तस्य विस्तरेण
कथनम् ॥१.। कृष्णगौरवेण विभीषणेन करदानम्
॥ २.। विभीषणात्करणाहृतवता घटोत्कचेन सह सहदेवस्य
प्रतिनिवर्तनम् ॥ ३.।
Mahabharata - Sabha Parva - Chapter Text

वैशम्पायन उवाच ॥
सहदेवस्ततो राजा मन्त्रिभिः सह भारत ।
सम्प्रधार्य महाबाहुः सचिवैर्बुद्धिमत्तरैः ॥ २-३४-१ (१२७२०)
स विचार्य तदा राजन्सहदेवस्त्वरान्वितः ।
चिन्तयामास राजेन्द्र भ्रातुः पुत्रं घटोत्कचम् ॥ २-३४-२ (१२७२१)
ततश्चिन्तितमात्रे तु राक्षसः प्रत्यदृश्यत ।
अतिदीर्घो महाबाहु सर्वाभरणभूषितः ॥ २-३४-३ (१२७२२)
नीलजीमूतसङ्काशस्तप्तकाञ्चनकुण्डलः ।
विचित्रहारकेयूरः किङ्किणीमणिभूषितः ॥ २-३४-४ (१२७२३)
हेममाली महादंष्ट्रः किरीटी कुक्षिबन्धनः ।
ताम्रकेशो हरिश्मश्रुर्भीमाङ्गः कटकाङ्गदः ॥ २-३४-५ (१२७२४)
रक्तचन्दनदिग्धाङ्गः सूक्ष्माम्बरधरो बली ।
बलेन स ययौ तत्र चालयन्निव मेदिनीम् ॥ २-३४-६ (१२७२५)
ततो दृष्ट्वा जना राजन्नायान्तं पर्वतोपमम् ।
भयाद्धि दुद्रुवुः सर्वे सिंहात्क्षुद्रमृगा यथा ॥ २-३४-७ (१२७२६)

आससाद च माद्रेयं पुलस्त्यं रावणो यथा ।
अभिवाद्य ततो राजन्सहदेवं घटोत्कचः ॥ २-३४-८ (१२७२७)
प्रह्वः कृताञ्जलिस्तस्थौ किं कार्यमिति चाब्रवीत् ।
तं परिष्वज्य बाहुभ्यां मूर्ध्न्युपाघ्राय पाण्डवः ॥ २-३४-९ (१२७२८)
तं मेरुशिखराकारमागतं पाण्डुनन्दनः ।
पूजयित्वा सहामात्यः प्रीतो वाक्यमुवाच ह ॥ २-३४-१० (१२७२९)
गच्छ लङ्कां पुरीं वत्स करार्थं मम शासनात्। ॥
तत्र दृष्ट्वा महात्मानं राक्षसेन्द्रं बिभीषणम् ॥ २-३४-११ (१२७३०)
रत्नानि राजसूयार्थं विविधानि बहूनि च ।
उपादाय च सर्वाणि प्रत्यागच्छ महाबल ॥ २-३४-१२ (१२७३१)
वैशम्पायन उवाच। २-३४-१३क्ष् (१४४६)
पाण्डवेनैवमुक्तस्तु मुदा युक्तो घटोत्कचः ।
तथेत्युक्त्वा महाराज प्रतस्थे दक्षिणां दिशम् ॥ २-३४-१३ (१२७३२)
प्रययौ दक्षिणं कृत्वा सहदेवं घटोत्कचः ।
लङ्कामभिमुको राजन्समुद्रं स व्यलोकयत् ॥ २-३४-१४ (१२७३३)
कूर्मग्राहझषाकीर्णं मीननक्रैस्तथाऽऽकुलम् ।
शुक्तिव्रातसमाकीर्णं शङ्खानां निचयाकुलम् ॥ २-३४-१५ (१२७३४)
स दृष्ट्वा रामसेतुं च चिन्तयन्रामविक्रमम् ॥
गत्वा पारं समुद्रस्य दक्षिणं स घटोत्कचः ॥ २-३४-१६ (१२७३५)
ददर्श लङ्कां राजेन्द्र नाकपृष्ठोपमां शुभाम् ।
प्राकारेणावृतां रम्यां शुभद्वारैश्च शोभिताम् ॥ २-३४-१७ (१२७३६)
प्रासादैर्बहुसाहस्रैः श्वेतरक्तैश्च सङ्कुलाम् ।
दिव्यदुन्दुभिनिर्ह्रादामुद्यानवनशोभिताम् ॥ २-३४-१८ (१२७३७)
सर्वकालफलैर्वृक्षैः पुष्पितैरुपशोभिताम् ।
पुष्पगन्धैश्च सङ्कीर्णां रमणीयमहारथाम् ॥ २-३४-१९ (१२७३८)
नानारत्नैश्च सम्पूर्णामिन्द्रस्येवामरावतीम् ।
विवेश स पुरीं लङ्कां राक्षसैश्च निषेविताम् ॥ २-३४-२० (१२७३९)
ददर्श स पुरीं लङ्कां राक्षसैश्च निषेविताम् ॥
नानावेषधरान्दक्षान्नारीश्च प्रियदर्शनाः ॥ २-३४-२१ (१२७४०)
दिव्यमाल्याम्बरधरा दिव्यभूषणभूषिताः ।
मदरक्तान्तनयनाः पीनश्रोणिपयोधराः ॥ २-३४-२२ (१२७४१)
भैमसेनिं ततो दृष्ट्वा हृष्टास्ते विस्मयं गताः ।
आससाद गृहं राज्ञ इन्द्रस्य सदनोपमम् ॥ २-३४-२३ (१२७४२)
स द्वारपालमासाद्य वाक्यमेतदुवाच ह। २-३४-२४ (१२७४३)
घटोत्कच उवाच ॥
कुरूणामृष्टबो राजा पाण्डुर्नाम महाबलः ॥ २-३४-२४क्ष् (१४४७)

कनीयांस्तस्य दायादः सहदेव इति श्रुतः ।
तेनाहं प्रेषितो दूतः करार्थं कौरवस्य च ॥ २-३४-२५ (१२७४४)
द्रष्टुमिच्छामि राजेनद्रं त्वं क्षिप्रं मां निवेदय। २-३४-२६ (१२७४५)
वैशम्पायन उवाच ॥
तस्य तद्वचनं श्रुत्वा द्वारपालो महीपते ॥ २-३४-२६क्ष् (१४४८)
तथेत्युक्त्वा विवेशाथ भवनं स निवेदकः ।
प्राञ्जलिः स्रवमाचष्ट स्रवां दूतगिरं तदा ॥ २-३४-२७ (१२७४६)
द्वारपालवचः श्रुत्वा राक्षसेन्द्रो विभीषणः ।
उवाच वाक्यं धर्मात्मा समीपं मे प्रवेश्यताम् ॥ २-३४-२८ (१२७४७)
एवमुक्तस्तु राज्ञा स धर्मज्ञेन महात्मना ।
अथनिष्क्रम्य सम्भ्रान्तो द्वास्थोहैडिम्बमब्रवीत् ॥ २-३४-२९ (१२७४८)
एहि दूत नृपं द्रष्टुं क्षिप्रं प्रविश च स्वयम् ।
द्वारपालवचः श्रुत्वा प्रविवेश घटोत्कचः ॥ २-३४-३० (१२७४९)
स प्रविश्य ददर्शाथ राक्षसेन्द्रस्य मन्दिरम् ।
ततः कैलाससङ्काशं तत्पकाञ्चनतोरणम् ॥ २-३४-३१ (१२७५०)
प्राकारेण परिक्षिप्तं गोपुरैश्चापि शोभितम् ।
हर्म्यप्रासादसम्बाधं नानारत्नोपशोभितम् ॥ २-३४-३२ (१२७५१)
काञ्चनैस्तापनीयैश्च स्फाटिकै राजतैरपि ।
वज्रवैडूर्यजुष्टैश्च स्तम्भैश्च सुमनोहरैः ॥ २-३४-३३ (१२७५२)
नानाध्वजपताकाभिर्युक्तं मणिविचित्रितम् ।
चित्रमाल्यावृतं रम्यं तप्तकाञ्चनवेदिकम् ॥ २-३४-३४ (१२७५३)
स दृष्ट्वा तत्र सर्वं च भैमसेनिर्मनोहरम् ।
प्रविशन्नेव हैडिम्बः शुश्राव मधुरस्वरम् ॥ २-३४-३५ (१२७५४)
तन्त्रीगीतसमाकीर्णं समतालमिताक्षरम् ।
दिव्यदुन्दुभिनिर्ह्रादं वादित्रसततं शुभम् ॥ २-३४-३६ (१२७५५)
स श्रुत्वा मधुरं शब्दं प्रीतिमानभवत्तदा ।
ततो विगाह्य हैडिम्बो बहुकक्ष्यां मनोरमाम् ॥ २-३४-३७ (१२७५६)
स ददर्श महात्मानं द्वास्थेन सह भारत ।
तं विभीषणमासीनं काञ्चने परमासने ॥ २-३४-३८ (१२७५७)
दिवि भास्करसङ्काशं मुक्तामणिविभूषितम् ।
दिव्याभरणचित्राङ्गं दिव्यरूपधरं विभुम् ॥ २-३४-३९ (१२७५८)
दिव्यमाल्याम्बरधरं दिव्यगन्धोक्षितं शुभम् ।
विभ्राजमानं वपुषा सूर्यवैश्वानरप्रभम् ॥ २-३४-४० (१२७५९)
उपोपविष्टं सचिवैर्देवैरिव शतक्रतुम् ।
यक्षैर्महात्मभिर्दिव्यनारीभिर्हृद्यकान्तिभिः ॥ २-३४-४१ (१२७६०)
गीतैर्मङ्गलयुक्तैश्च पूज्यमानं यथा दिवि ।

चामरे व्यजने चाग्र्ये हेमदण्डे महाधने ॥ २-३४-४२ (१२७६१)
गृहीते वरनारीभ्यां धूयमाने च मूर्धनि ।
अर्चिष्मन्तं श्रिया जुष्टं कुबेरवरुणोपमम् ॥ २-३४-४३ (१२७६२)
धर्मे चैव स्थितं नित्यमद्भुतं राक्षसेस्वरम् ।
राममिक्ष्वाकुनाथं वै स्मरन्तं मनसा सदा ॥ २-३४-४४ (१२७६३)
दृष्ट्वा घटोत्कचो राजन्ववन्दे तं कृताञ्जलिः ।
प्रह्वस्तस्थौ महावीर्यः शक्रं चित्ररथो यथा ॥ २-३४-४५ (१२७६४)
तं दूतमागतं दृष्ट्वा राक्षसेन्द्रो विभीषणः ।
पूजयित्वा यथान्यायं सान्त्वपूर्वं वचोऽब्रवीत् ॥ २-३४-४६ (१२७६५)
विभीषण उवाच ॥ २-३४-४७क्ष् (१४४९)
कस्य वंशे स सञ्जातः करमिच्छन्महीपतिः ।
तस्यानुजान्समस्तांश्च पुरं देशं च तस्य वै ॥ २-३४-४७ (१२७६६)
त्वां च कार्यं च तत्सर्वं श्रोतुमिच्छामि तत्वतः ।
विस्तरेण मम ब्रूहि सर्वानेतान्पृथक्पृथक् ॥ २-३४-४८ (१२७६७)
वैशम्पायन उवाच। २-३४-४९क्ष् (१४५०)
एवमुक्तस्तु हैडिम्बः पौलस्त्येन महात्मना ।
कृताञ्जलिरुवाचाथ समर्थमिदमुत्तरम् ॥ २-३४-४९ (१२७६८)
घटोत्कच उवाच। २-३४-५०क्ष् (१४५१)
सोमवंशोद्भवो राजा पाण्डुर्नाम महाबलः ।
पाण्डोश्च पुत्राः पञ्चासञ्छक्रतुल्यपराक्रमाः ॥ २-३४-५० (१२७६९)
तेषां ज्येष्ठस्तु नाम्ना वै युधिष्ठिर इति श्रुतः ।
अजातशत्रुर्धर्मात्मा धर्मो विग्रहवानिव ॥ २-३४-५१ (१२७७०)
ततो युधिष्ठिरो राजा प्राप्य राज्यमकारयत् ।
गङ्गाया दक्षिणे तीरे नगरे नागसाह्वये ॥ २-३४-५२ (१२७७१)
तद्दत्वा धृतराष्ट्राय शक्रप्रस्थं ययौ ततः ।
भ्रातृभिः सह राजेन्द्र शक्रप्रस्थेऽन्वमोदत ॥ २-३४-५३ (१२७७२)
गङ्गायमुनयोर्मध्ये ते उभे नगरोत्तमे ।
नित्यं धर्मे स्थितो राजा शक्रप्रस्थे प्रशास्ति नः ॥ २-३४-५४ (१२७७३)
तस्यानुजो महाबाहुर्भीमसेन इति श्रुतः ।
महातेजा महाकीर्तिः शक्रतुल्यपराक्रमः ॥ २-३४-५५ (१२७७४)
दशनागसहस्राणां बले तुल्यः स पाण्डवः ।
तस्यानुजोऽर्जुनो नाम महाबलपराक्रमः ॥ २-३४-५६ (१२७७५)
सुकुमारो महासत्वो लोके वीर्येण विश्रुतः ।
कार्तवीर्यसमो वीर्ये सागरप्रतिमो बले ॥ २-३४-५७ (१२७७६)
जामदग्न्यसमश्चास्त्रे सङ्ख्ये रामसमोऽर्जुनः ।
रूपे शक्रसमः पार्थस्तेजसा भास्करोपमः ॥ २-३४-५८ (१२७७७)

देवदानवगन्धर्वैः पिशाचोरगराक्षसैः ।
मानुषैश्च समस्तैस्तु अजेयः फल्गुनो रणे ॥ २-३४-५९ (१२७७८)
तेन तत्खण्डवं दावं तर्पितं जातवेदसे ।
विजित्य तरसा शक्रं युधि देवगणैः सह ॥ २-३४-६० (१२७७९)
लब्धान्यस्त्राणि दिव्यानि तर्पयित्वा हुताशनम् ।
तेन लब्धा महाराज दुर्लभा दैवतैरपि ॥ २-३४-६१ (१२७८०)
वासुदेवस्य भगिनी सुभद्रा नाम विश्रुता ।
अर्जुनस्यानुजो राजन्नकुलश्चेति विश्रुतः ॥ २-३४-६२ (१२७८१)
दर्शनीयतमो लोके मूर्तिमानिव मन्मथः ।
तस्यानुजो महातेजाः सहदेव इति श्रुतः ॥ २-३४-६३ (१२७८२)
तेनाहं प्रेषितो राजन्कुमारेण समो रणे ।
अहं घटोत्कचो नाम भीमसेनसुतो बली ॥ २-३४-६४ (१२७८३)
मम माता महाभागा हिडिम्बा नाम राक्षसी ।
पार्थानामुपकारार्थं चरामि पृथिवीमिमाम् ॥ २-३४-६५ (१२७८४)
आसीत्पृथिव्याः सर्वस्या महीपालो युधिष्ठिरः ।
राजसूयं क्रतुश्रेष्ठमाहर्तुमुपचक्रमे ॥ २-३४-६६ (१२७८५)
सन्दिदेश च स भ्रातृन्करार्थं सर्वतोदिशम् ।
वृष्णिवीरेण सहितः सन्दिदेशानुजान्नृपः ॥ २-३४-६७ (१२७८६)
उदीचीमर्जुनस्तूर्णं गत्वा मेरोरथोत्तमः ।
गत्वा शतसहस्राणि योजनानि महाबलः ॥ २-३४-६८ (१२७८७)
जित्वा सर्वान्नृपान्युद्धे हत्वा च तरसा वशी ।
स्वर्गद्वारमुपागम्य रत्नान्यादाय वै भृशम् ॥ २-३४-६९ (१२७८८)
अश्वांश्च विविधान्दिव्यान्सर्वानादाय फल्गुनः ।
धनं बहुविधं राजन्धर्मपुत्राय वै ददौ ॥ २-३४-७० (१२७८९)
भीमसेनो हि राजेन्द्र जित्वा प्राचीं दिशं बलात् ।
वशे कृत्वा महीपालान्पाण्डवाय धनं ददौ ॥ २-३४-७१ (१२७९०)
दिशं प्रतीचीं नकुलः करार्थं प्रययौ तथा ।
सहदेवो दिशं याम्यां जित्वा सर्वान्महीक्षितः ॥ २-३४-७२ (१२७९१)
मां सन्दिदेश राजेन्द्र करार्थमिह सत्कृतः ।
पार्थानां चरितं तुभ्यं सङ्क्षेपात्समुदाहृतम् ॥ २-३४-७३ (१२७९२)
तमवेक्ष्य महाराज धर्मराजं युधिष्ठिरम् ।
पावनं राजसूयं च भगवन्तं हरिं प्रभुम् ।
एतानवेक्ष्य धर्मज्ञ करं दातुमिहार्हसि ॥ २-३४-७४ (१२७९३)
वैशम्पायन उवाच ॥ २-३४-७५क्ष् (१४५२)
तेन तद्भाषितं श्रुत्वा राक्षसेन्द्रो बिभीषणः ।
शासनं प्रतिजग्राह धर्मात्मा राक्षसैः सह ॥ २-३४-७५ (१२७९४)

तच्च कृष्णकृतं धीमानित्यमन्यत स प्रभुः ।
ततो ददौ विचित्राणि कम्बलानि कुथानि च ॥ २-३४-७६ (१२७९५)
दान्तकाञ्चनपर्यङ्कान्मणिहेमविचित्रितान् ।
भूषणानि महार्हाणि प्रवालानि मणींश्च सः ॥ २-३४-७७ (१२७९६)
काञ्चनानि च भाण्डनि कलशानि घटानि च ।
कटाहानि विचित्रानि द्रोण्यश्चैव सहस्रशः ॥ २-३४-७८ (१२७९७)
राजतानि च भाण्डानि रत्नगर्भांश्च कुण्डलान् ।
हेमपुष्पानि चान्यानि रुक्ममुख्यानि चापरान्। २-३४-७९ (१२७९८)
शङ्खांश्च चन्द्रसङ्काशांश्चित्रावर्तविचित्रितान् ।
यज्ञस्य तोरणे युक्तान्ददौ तालांश्चतुर्दश ॥ २-३४-८० (१२७९९)
रुक्मपङ्कजपुष्पाणि शिबिका मणिभूषिताः ।
मुकुटानि महार्हाणि रत्नगर्भांश्च कङ्कणान् ॥ २-३४-८१ (१२८००)
चन्दनानि च मुख्यानि वासांसि विविधानि च ।
स ददौ सहदेवाय तदा राजा विभीषणाः ॥ २-३४-८२ (१२८०१)
तानि सर्वाणि रत्नानि आजह्रुस्ते निशाचराः ।
अष्टाशीतिसहस्राणि समदा रक्तलोचनाः ॥ २-३४-८३ (१२८०२)
रत्नान्यादाय सर्वाणि प्रतस्थे स घटोत्कचः ।
विभीषणं च राजानमभिवाद्य कृताञ्जलिः ॥ २-३४-८४ (१२८०३)
प्रदक्षिणं परीत्यैव निर्जगाम घटोत्कचः ।
ततो रत्नान्युपादाय हैडिम्बो राक्षसैः सह ॥ २-३४-८५ (१२८०४)
जगाम तूर्णं लङ्कायाः सहदेवपदं प्रति ।
आसेदुः पाण्डवं सर्वे लङ्घयित्वा महोदधिम् ॥ २-३४-८६ (१२८०५)
सहदेवो ददर्शाथ रत्नाहारान्निशाचरान् ।
आगतान्भीमसङ्काशान्हैडिम्बं च तथा नृप ॥ २-३४-८७ (१२८०६)
द्रमिला नैरृतान्दृष्ट्वा दुद्रुवुस्ते भयार्दिताः ।
भैमसेनिस्ततो गत्वा मार्देयं प्राञ्जलिः स्थितः ॥ २-३४-८८ (१२८०७)
प्रीतिमानभवद्दृष्ट्वा रत्नौघं तं च पाण्डवः ।
तं परिष्वज्य पाणिभ्यां दृष्ट्वा तान्प्रीतिमानभूत् ॥ २-३४-८९ (१२८०८)
विसृज्य द्रविडान्सर्वान्गमनायोपचक्रमे ।
न्यवर्तम ततो धीमान्सहदेवो नराधिपः ॥ २-३४-९० (१२८०९)
एवं विजित्य तरसा सान्त्वेन विजयेन च ।
करदान्पार्थिवान्कृत्वा प्रत्यागच्छदरिन्दमः ॥ २-३४-९१ (१२८१०)
रत्नसालमुपादाय ययौ सहनिशाचरः ।
इन्द्रप्रस्थं विवेशाथ कम्पयन्निव मेदिनीम् ॥ २-३४-९२ (१२८११)
दृष्ट्वा युधिष्ठिरं राजन्सहदेवः कृताञ्जलिः ।
प्रह्वोऽभिवाद्य तस्थौ स पूजितश्चापि तेन वै ॥ २-३४-९३ (१२८१२)

लङ्काप्राप्तान्धनौघांश्च दृष्ट्वा तान्दुर्लभान्बहून् ।
प्रीतिमानभवद्राजा विस्मयं परमं ययौ ॥ २-३४-१४ (१२८१३)
धर्मराजाय तत्सर्वं निवेद्य भरतर्षभ ।
कोटीसहस्रमधिकं हिरण्यस्य महात्मने ॥ २-३४-१५ (१२८१४)
विविधानि च रत्नानि गोजाविमहिषांस्तथा ।
कृतकर्मा सुखं राजन्नुवास जनमेजय ॥ ॥ २-३४-१६ (१२८१५)

इति श्रीमन्महाभारते सभापर्वणि दिग्विजयपर्वणि चतुस्त्रिंसोऽध्यायः
॥ ३४.। ॥

---

सभ-०३५
॥ श्रीः ॥
२.३५. अध्यायः ३५

Mahabharata - Sabha Parva - Chapter Topics
नकुलस्य पश्चिमदिग्विजयः ॥ १.।
Mahabharata - Sabha Parva - Chapter Text

वैशम्पायन उवाच ॥
नकुलस्य तु वक्ष्यामि कर्माणि विजयं तथा ।
वासुदेवजितामाशां यथाऽसावजयत्प्रभुः ॥ २-३५-१ (१२८१६)
निर्याय खाण्डवप्रस्थात्प्रतीचीमभितो दिशम् ।
उद्दिश्य मतिमान्प्रायान्महत्या सेनया सह ॥ २-३५-२ (१२८१७)
सिंहनादेन महता योधानां गर्जितेन च ।
रथनेमिनिनादैश्च कम्पयन्वसुधामिमाम् ॥ २-३५-३ (१२८१८)
ततो बहु धनं रम्यं गावाढ्यं धनधान्यवत् ।
कार्तिकेयस्य दयितं रोहीतकुपाद्रवत् ॥ २-३५-४ (१२८१९)
तत्र युद्धं महच्चासीच्छूरैर्मत्तमयूरकैः ।
मरुभूमिं स कार्त्स्न्येन तथैव बहुधान्यकम् ॥ २-३५-५ (१२८२०)
शैरीषकं महेत्थं च वशे चक्रे महाद्युतिः ।
आक्रोशं चैव राजर्षि तेन युद्धमभून्महत् ॥ २-३५-६ (१२८२१)
तान्दशार्णान्स जित्वा च प्रतस्थे पाण्डुनन्दनः ।
शिबींस्त्रिगर्तानम्बष्ठान्मालवान्पञ्च कर्पटान् ॥ २-३५-७ (१२८२२)
तथा मध्यमकेयांश्च वाटधानान्द्विजानथ ।
पुनश्च परिवृत्याथ पुष्करारण्यवासिनः ॥ २-३५-८ (१२८२३)
गणानुत्सवसङ्केतान्व्यजयत्पुरुषर्षभः ।
सिन्धुकूलाश्रिता ये च ग्रामणीया महाबलाः ॥ २-३५-९ (१२८२४)

शूद्राभीरगणाश्चैव ये चाश्रित्य सरस्वतीम् ।
वर्तयन्ति च ये मत्स्यैर्ये च पर्वतवासिनः ॥ २-३५-१० (१२८२५)
कत्स्नं पञ्चनन्दं चैव तथैवामरपर्वतम् ।
उत्तरज्योतिषं चैव तथा दिव्यकटं पुरम् ॥ २-३५-११ (१२८२६)
द्वारपालं च तरसा वशे चक्रे महाद्युतिः ।
रामठान्हारहूणांश्च प्रतीच्याश्चैव ये नृपाः ॥ २-३५-१२ (१२८२७)
तान्सर्वान्स वशे चक्रे शासनादेव पाण्डवः ।
तत्रस्थः प्रेषयामास वासुदेवाय भारत ॥ २-३५-१३ (१२८२८)
स चास्य गतभी राजन्प्रतिजग्राह शासनम् ।
ततः शाकलमभ्येत्य मद्राणां पुटभेदनम् ॥ २-३५-१४ (१२८२९)
मातुलं प्रीतिपूर्वेण शल्यं चक्रे वशे बली ।
स तेन सत्कृतो राज्ञा सत्कारार्हो विशाम्पते ॥ २-३५-१५ (१२८३०)
रत्नानि भूरीण्यादाय सम्प्रतस्थे युधां पतिः ।
ततः सागरकुक्षिस्थान्म्लेच्छान्परमदारुणान् ॥ २-३५-१६ (१२८३१)
पह्लवान्वर्बरांश्चैव किरातान्यवनाञ्शकान् ।
ततो रत्नान्यपादाय वशे कृत्वा च पार्थिवान् ।
न्यवर्तत कुरुश्रेष्ठो नकुलश्चित्रमार्गवित् ॥ २-३५-१७ (१२८३२)
करमाणां सहस्राणि कोशं तस्य महात्मनः ।
ऊहर्दश महाराज कृच्छ्रादिव महाधनम् ॥ २-३५-१८ (१२८३३)
इन्द्रप्रस्थगतं वीरमभ्येत्य स युधिष्ठिरम् ।
ततो माद्रीसुतः श्रीमान्धनं तस्मै न्यवेदयत् ॥ २-३५-१९ (१२८३४)
एवं विजित्य नकुलो दिशं वरुणपालिताम् ।
प्रतीचीं वासुदेवेन निर्जितां भरतर्षभ ॥ ॥ २-३५-२० (१२८३५)

इति श्रीमन्महाभारते सभापर्वणि दिग्विजयपर्वणि
पञ्चत्रिंशोऽध्यायः ॥ ३५.।

---

सभ-०३६
॥ श्रीः ॥
२.३६. अध्यायः ३६

Mahabharata - Sabha Parva - Chapter Topics
द्वारकातः आगतस्य श्रीकृष्णस्याज्ञया
यज्ञसामग्रीसम्पादनोपक्रमः ॥ १.। द्वैपायनेन ऋत्विगानयनम्
॥ २.। ब्राह्मणक्षत्रियादीनामामन्त्रणाय दूतप्रेषणम्
॥ ३.। धृतराष्ट्राद्यमन्त्रणाय नकुलगमनम् ॥ ४.॥ दीक्षा ॥ ५.।
Mahabharata - Sabha Parva - Chapter Text

वैशम्पायन उवाच ॥
रक्षणाद्धर्मराजस्य सत्यस्य परिपालनात् ।
शत्रूणां क्षपणाच्चैव स्वकर्मनिरताः प्रजाः ॥ २-३६-१ (१२८३६)
बलीनां सम्यगादानाद्धर्मतश्चानुशासनात् ।
निकामवर्षी पर्जन्यः स्फीतो जनपदोऽभवत् ॥ २-३६-२ (१२८३७)
सर्वारम्भाः सुप्रवृत्ता गोरक्षा कर्षणं वणिक् ।
विशेषात्सर्वमेवैतत्सञ्जज्ञे राजकर्मणः ॥ २-३६-३ (१२८३८)
दस्युभ्यो वञ्चकेभ्यो वा राजन्प्रति परस्परम् ।
राजवल्लभतश्चैव नाश्रूयन्त मृषागिरः ॥ २-३६-४ (१२८३९)
अवर्षं चातिवर्षं च व्याधिपावकमूर्छनम् ।
सर्वमेतत्तदा नासीद्धर्मनित्ये युधिष्ठिरे ॥ २-३६-५ (१२८४०)
प्रियं कर्तुमुपस्थातुं बलिकर्म स्वभावजम् ।
अभिहर्तुं नृपा जग्मुर्नान्यैः कार्यैः कथञ्चनः ॥ २-३६-६ (१२८४१)
धर्मैर्धनागमैस्तस्य ववधे निचयो महान् ।
कर्तुं यस्य न शक्येन क्षयो वर्षशतैरपि ॥ २-३६-७ (१२८४२)
स्वकोष्ठस्य परीमाणं कोशस्य च महीपतिः ।
विज्ञाय राजा कौन्तेयो यज्ञायैव मनो दधे ॥ २-३६-८ (१२८४३)
सुहृदश्चैव ये सर्वे पृथक्च सहचाब्रुवन् ।
यज्ञकालस्तव विभो क्रियतामत्र साम्प्रतम् ॥ २-३६-९ (१२८४४)
अथैवं ब्रुवतामेव तेषामभ्याययौ हरिः ।
ऋषिः पुराणो वेदात्मा दृश्यश्चैव विजानताम् ॥ २-३६-१० (१२८४५)
जगतस्तस्थुषां श्रेष्ठः प्रभवश्चाप्ययश्च ह ।
भूतभव्यभवन्नाथः केशवः केशिसूदनः ॥ २-३६-११ (१२८४६)
प्राकारः सर्ववृष्णीनामापत्स्वभयदोऽरिहा ।
बलाधिकारे निक्षिप्य सम्यगानकदुन्दुभिम् ॥ २-३६-१२ (१२८४७)
उच्चावचमुपादाय धर्मराजाय माधवः ।
धनौघं पुरुषव्याघ्रो बलेन महता वृतः ॥ २-३६-१३ (१२८४८)
तं धनौघमपर्यन्तं रत्नसागरमक्षयम् ।
नादयन्रथघोषेण प्रविवेश पुरोत्तमम् ॥ २-३६-१४ (१२८४९)
पूर्णमापूरयंस्तेषां द्विषच्छोकावहोऽभवत् ।
असूर्यमिव सूर्येण निवातमिव वायुना ।
कृष्णेन समुपेतेन जहृषे भारतं पुरम् ॥ २-३६-१५ (१२८५०)
तं मुदाऽभिसमागम्य सत्कृत्य च यथाविधि ।
स पृष्ट्वा कुशलं चैव सुखासीनं युधिष्ठिरः ॥ २-३६-१६ (१२८५१)
धौम्यद्वैपायनमुखैर्ऋत्विग्भिः पुरुषर्षभः ।

भीमार्जुनयमैश्चैव सहितः कृष्णमब्रवीत् ॥ २-३६-१७ (१२८५२)
युधिष्ठिर उवाच ॥ २-३६-१८क्ष् (१४५३)
त्वत्कृते पृथिवी सर्वा मद्वशे कृष्ण वर्तते ।
धनं च बहु वार्ष्णेय त्वत्प्रसादादुपार्जितम् ॥ २-३६-१८ (१२८५३)
सोऽहमिच्छामि तत्सर्वं विधिवद्देवकीसुत ।
उपयोक्तुं द्विजाग्र्येभ्यो हव्यवाहे च माधव ॥ २-३६-१९ (१२८५४)
तदहं यष्टुमिच्छामि दाशार्ह सहितस्त्वया ।
अनुजैश्च महाबाहो तन्माऽनुज्ञातुमर्हसि ॥ २-३६-२० (१२८५५)
तद्दीक्षापय गोविन्द त्वमात्मानं महाभुज ।
त्वयीष्टवति दाशार्ह विपाप्मा भविता ह्यहम् ॥ २-३६-२१ (१२८५६)
मां वाप्यभ्यनुजानीह सहैभिरनुजैर्विभो ।
अनुज्ञातस्त्वया कृष्ण प्राप्नुयां क्रतुमुत्तमम् ॥ २-३६-२२ (१२८५७)
वैशम्पायन उवाच। २-३६-२३क्ष् (१४५४)
तं कृष्णःस प्रत्युवाचेदं बहूक्त्वा गुणविस्तरम् ।
त्वमेव राजशार्दूल स्म्राडर्हो महाक्रतुम् ।
सम्प्राप्नुहि त्वया प्राप्ते कृतकृत्यास्ततो वयम् ॥  २-३६-२३ (१२८५८)
यदस्वाभीप्सितं यज्ञं मयि श्रेयस्यवस्थिते ।
नियुङ्क्ष्व त्वं च मां कृत्ये सर्वं कर्तास्मि ते वचः ॥ २-३६-२४ (१२८५९)
युधिष्ठिर उवाच। २-३६-२५क्ष् (१४५५)
सफलः कृष्ण सङ्कल्पः सिद्धिश्च नियता मम ।
यस्यमे त्वं हृषीकेश यथेप्सितमुपस्थितः ॥ २-३६-२५ (१२८६०)
वैशम्पायन उवाच। २-३६-२६क्ष् (१४५६)
अनुज्ञातस्तु कृष्णेन पाण्डवो भ्रातृभिः सह ।
ईजितुं राजसूयेन साधनान्युपचक्रमे ॥ २-३६-२६ (१२८६१)
ततस्त्वाज्ञापयामास पाण्डवोऽरिनिबर्हणः ।
सहदेवं युधां श्रेष्ठं मन्त्रिणश्चैव सर्वशः ॥ २-३६-२७ (१२८६२)
अस्मिन्क्रतौ यथोक्तानि यज्ञाङ्गानि द्विजातिभिः ।
यथोपकरणं सर्वं मङ्गलानि च सर्वशः ॥ २-३६-२८ (१२८६३)
अधियज्ञांश्च सम्भारान्दौम्योक्तान्क्षिप्रमेव हि ।
समानयन्तु पुरुषा यथायोगं यथाक्रमम् ॥ २-३६-२९ (१२८६४)
इन्द्रसेनो विशोकश्च पूरश्चार्जुनसारथिः ।
अन्नाद्याहरणे युक्ताः सन्तु मत्प्रियकाम्यया ॥ २-३६-३० (१२८६५)
सर्वकामाश्च कार्यन्तां रसगन्धसमन्विताः ।
मनोरथप्रीतिकरा द्विजानां कुरुसत्तम ॥ २-३६-३१ (१२८६६)
वैशम्पायन उवाच ॥ २-३६-३२क्ष् (१४५७)
तद्वाक्यसमकालं च कृतं सर्वं न्यवेदयत् ।

सहदेवो युधां श्रेष्ठो धर्मराजो युधिष्ठिरे ॥ २-३६-३२ (१२८६७)
ततो द्वैपायनो राजन्नृत्विजः समुपानयत् ।
वेदानिव महाभागान्साक्षान्मूर्तिमतो द्विजान् ॥ २-३६-३३ (१२८६८)
स्वयं ब्रह्मत्वमकरोत्तस्य सत्यवतीसुतः ।
धनञ्जयानामृषभः सुसामा सामगोऽभवत् ॥ २-३६-३४ (१२८६९)
याज्ञवल्क्यो बभूवाथ ब्रह्मिष्ठोऽध्वर्युसत्तमः ।
पैलो होता वसोः पुत्रो धौम्येन सहितोऽभवत् ॥ २-३६-३५ (१२८७०)
एतेषां पुत्रवर्गाश्च शिष्याश्च भरतर्षभ ।
बभूवुर्होत्रगाः सर्वे वेदवेदाङ्गपारगाः ॥ २-३६-३६ (१२८७१)
ते वाचयित्वा पुण्याहमूहयित्वा च तं विधिम् ।
शास्त्रोक्तं पूजयामासुस्तद्देवयजनं महत् ॥ २-३६-३७ (१२८७२)
तत्र चक्रुरनुज्ञाताः शरणान्युत शिल्पिनः ।
गन्धवन्ति विशालानि वेश्मानीव दिवौकसाम् ॥ २-३६-३८ (१२८७३)
तत आज्ञापयामास स राजा राजसत्तमः ।
सहदेवं तदा सद्यो मन्त्रिणं पुरुषर्षभः ॥ २-३६-३९ (१२८७४)
आमन्त्रणार्थं दूतांस्त्वं प्रेषयस्वाशुगान्द्रुतम् ।
उपश्रुत्य वचो राज्ञः स दूतान्प्राहिणोत्तदा ॥ २-३६-४० (१२८७५)
आमन्त्रयध्वं राष्ट्रेषु ब्राह्मणान्भूमिपानथ ।
विनाश्च मान्याञ्शूद्रांश्च सर्वानानयतेति च ॥ २-३६-४१ (१२८७६)
वैशम्पायन उवाच ॥ २-३६-४२क्ष् (१४५८)
ते सर्वान्पृथिवीपालान्पाण्डवेयस्य शासनात् ।
आमन्त्रयाम्बभूवुस्ते प्रेषयामास चापरान् ॥ २-३६-४२ (१२८७७)
दूताश्च वाहनैर्जग्मू राष्ट्राणि सुबहून्यपि ।
ततो युधिष्ठिरो राजा प्रेषयामास पाण्डवम् ॥ २-३६-४३ (१२८७८)
नकुलं हास्तिनपुरं भीष्माय भरतर्षभ ।
द्रोणाय धृतराष्ट्राय विदुराय कृपाय च ।
भ्रातृणां चैव सर्वेणां येऽनुरक्ता युधिष्ठिरे ॥ २-३६-४४ (१२८७९)
ततस्ते तु यथाकालं कुन्तीपुत्रं युधिष्ठिरम् ।
दीक्षयाञ्चक्रिरे विप्रा राजसूयाय भारत ॥ २-३६-४५ (१२८८०)
ग ज्येष्ठामूले अमावास्यां मृगाजिनसमावृतः ।
रौरवाजिनसंवीतो नवनीताक्तदेहवान्'॥ २-३६-४६ (१२८८१)
दीक्षितः स तु धर्मात्मा धर्मराजो युधिष्ठिरः ।
जगाम यज्ञायतनं वृतो विप्रैः सहस्रशः ॥ २-३६-४७ (१२८८२)
भातृभिर्ज्ञातिभिश्चैव सुहृद्भिः सचिवैः सह ।
क्षत्रियैश्च मनुष्येन्द्रैर्नानादेशसमागतैः ॥ २-३६-४८ (१२८८३)
अमात्यैश्च नरश्रेष्ठो धर्मो विग्रहवानिव ।

आजग्मुर्ब्राह्मणास्तत्र विषयेभ्यस्ततस्ततः ॥ २-३६-४९ (१२८८४)
सर्वविद्यासु निष्णाता वेदवेदाङ्गपारगाः ।
तेषामावसथांश्चक्रुर्धर्मराजस्य शासनात् ॥ २-३६-५० (१२८८५)
बह्वन्नाच्छादनैर्युक्तान्सगणानां पृथक् पृथक् ।
सर्वर्तुगुणसम्पन्नाञ्शिल्पिनोऽथ सहस्रशः ॥ २-३६-५१ (१२८८६)
तेषु ते न्यवसन्राजन्ब्राह्मणा नृपसत्कृताः ।
कथयन्तः कथा बह्वीः पश्यन्तो नटनर्तकान् ॥ २-३६-५२ (१२८८७)
भुञ्जतां चैव विप्राणां वदतां च महास्वनः ।
अनिशं श्रूयते तत्र मुदितानां महात्मनाम् ॥ २-३६-५३ (१२८८८)
दीयतां दीयतामेषां भुज्यतां भुज्यतामिति ।
एवम्प्रकाराः सञ्जल्पाः श्रूयन्तेस्मात्र नित्यशः ॥ २-३६-५४ (१२८८९)
गवां शतसहस्राणि शयनानां च भारत ।
रुक्मस्य योषितां चैव धर्मराजः पृथक् ददौ ॥ २-३६-५५ (१२८९०)
प्रावर्ततैव यज्ञः स पाण्डवस्य महात्मनः ।
पृथिव्यामेकवीरस्य शक्रस्येव त्रिविष्टपे ॥ ॥ २-३६-५६ (१२८९१)

इति श्रीमन्महाभारते सभापर्वणि दिग्विजयपर्वणि षट्त्रिंशोऽध्यायः
॥ ३६.।
Mahabharata - Sabha Parva - Chapter Footnotes

२-३६-५ मूर्छनं प्रदीपनम् ॥
२-३६-७ निचयो भाण्डागारम् ॥
२-३६-३४ धनञ्जयानां धनञ्जयगोत्राणां मध्ये श्रेष्ठः सुसामानाम
आङ्गिरसः ॥

---

सभ-०३७
॥ श्रीः ॥
२.३७. अध्यायः ३७

Mahabharata - Sabha Parva - Chapter Topics
आमन्त्रितानां सर्वेषां आगमनम् ॥ १.।
Mahabharata - Sabha Parva - Chapter Text

वैशम्पायन उवाच ॥
तत आमन्त्रिता राजन्राजानः सत्कृतास्तदा ।
पुरेभ्यः प्रययुस्तेभ्यो विमानेभ्य इवामराः ॥ २-३७-१ (१२८९२)

ते वै दिग्भ्यः समापेतुः पार्थिवास्तत्र भारत ।
समादाय महार्हाणि रत्नानि विविधानि च ॥ २-३७-२ (१२८९३)
तच्छ्रुत्वा धर्मराजस्य यज्ञे यज्ञविदस्तदा ।
राजानः शतशस्तुष्टैर्मनोभिर्मनुर्षभ ॥ २-३७-३ (१२८९४)
बहु वित्तं समादाय विविधं पार्थिवा ययुः ।
द्रष्टुकामाः सभां चैव धर्मराजं च पाण्डवम् ॥ २-३७-४ (१२८९५)
स गत्वा हास्तिनपुरं नकुलः समितिञ्जयः ।
भीष्ममामन्त्रयाञ्चक्रे धृतराष्ट्रं च पाण्डवः ॥ २-३७-५ (१२८९६)
प्रयतः प्राञ्जलिर्भूत्वा भारतानानयत्तदा ।
धृतराष्ट्रं च भीष्मं च विदुरं च महामतिम् ॥ २-३७-६ (१२८९७)
दुर्योधनमुखांश्चैव भ्रातॄन्सर्वानथानयत् ॥ २-३७-७ (१२८९८)
सत्कृत्यामन्त्रिताः सर्वे ह्याचार्यप्रमुखास्ततः ।
प्रययुः प्रीतमनसो यज्ञं ब्रह्मपुरस्सराः ॥ २-३७-८ (१२८९९)
धृतराष्ट्रश्च भीष्मश्च विदुरस्च महामतिः ।
दुर्योधनपुरोगाश्च भ्रातरः सर्व एव ते ।
गान्धारराजः सुबलः शकुनिश्च महाबलः ॥ २-३७-९ (१२९००)
अचलो वृषकश्चैव कर्णश्च रथिनां वरः ।
तथा शल्यश्च बलवान्बाह्लिकश्च महाबलः ॥ २-३७-१० (१२९०१)
सोमदत्तोऽथ कौरव्यो भूरिर्भूरिश्रवाः शलः ।
अश्वत्थामा कृपो द्रोणः सैन्धवश्च जयद्रथः ॥ २-३७-११ (१२९०२)
यज्ञसेनः सपुत्रश्च साल्वश्च वसुधाधिपः ।
प्राग्ज्योतिषश्च नृपतिर्भगदत्तो महारथः ॥ २-३७-१२ (१२९०३)
स तु सर्वैः सह म्लेच्छैः सागरानूपवासिभिः ।
पार्वतीयाश्च राजानो राजा चैव बृहद्बलः ॥ २-३७-१३ (१२९०४)
पौण्ड्रको वासुदेवश्च वङ्गः कालिङ्गकस्तथा ।
आकर्षाः कुन्तलाश्चैव गालवाश्चान्ध्रकास्तथा ॥ २-३७-१४ (१२९०५)
द्राविडाः सिंहलाश्चैव राजा काश्मीरकस्तथा ।
कुन्तिभोजो महातेजाः पार्थिवो गौरवाहनः ॥ २-३७-१५ (१२९०६)
बाह्लिकाश्चापरे शूरा राजानः सर्व एव ते ।
विराटः सह पुत्राभ्यां मावेल्लश्च महाबलः ॥ २-३७-१६ (१२९०७)
राजानो राजपुत्राश्च नानाजनपदेश्वराः ।
शिशुपालो महावीर्यः सह पुत्रेण भारत ॥ २-३७-१७ (१२९०८)
आगच्छत्पाण्डवेयस्य यज्ञं समरदुर्मदः ।
रामश्चैवानिरुद्धश्च कङ्कश्च सहसारणः ॥ २-३७-१८ (१२९०९)
गदप्रद्युम्नसाम्बाश्च चारुदेष्णश्च वीर्यवान् ।
उल्मुको निशठश्चैव वीरश्चाङ्गावहस्तथा ॥ २-३७-१९ (१२९१०)

वृष्णयो निखिलाश्चान्ये समाजग्मुर्महारथाः ।
एते चान्ये च बहवो राजानो मध्यदेशजाः ॥ २-३७-२० (१२९११)
आजग्मुः पाण्डुपुत्रस्य राजसूयं महाक्रतुम् ।
ददुस्तेषामावसथान्धर्मराजस्य शासनात् ॥ २-३७-२१ (१२९१२)
बहुभक्ष्यान्वितान्राजन्दीर्घिकावृक्षशोभितान् ।
तथा धर्मात्मजः पूजां चक्रे तेषां महात्मनाम् ॥ २-३७-२२ (१२९१३)
सत्कृताश्च यथोद्दिष्टाञ्जग्मुरावसथान्नृपाः ।
कैलासशिखरप्रख्यान्मनोज्ञान्द्रव्यभूषितान् ॥ २-३७-२३ (१२९१४)
सर्वतः संवृतानुच्चैः प्राकारैः सुकृतैः सितैः ।
सुवर्णजालसंवीतान्मणिकुट्टिमभूषितान् ॥ २-३७-२४ (१२९१५)
सुखारोहणसोपानान्महासनपरिच्छदान् ।
स्नग्दामसमवच्छन्नानुत्तमागुरुगन्धिनः ॥ २-३७-२५ (१२९१६)
हंसेन्दुवर्णसदृशानायोजनसुदर्शनान् ।
असम्बाधान्समद्वारान्युतानुच्चावचैर्गुणैः ॥ २-३७-२६ (१२९१७)
बहुधातुनिबद्धाङ्गान्हिमवच्छिखरानिव ।
विश्रान्तास्ते ततोऽपश्यन्भूमिपा भूरिदक्षिणम् ॥ २-३७-२७ (१२९१८)
वृतं सदस्यैर्बहुभिर्धर्मराजं युधिष्ठिरम् ।
तत्सदः पार्थिवैः कीर्णं ब्राह्मणैश्च महर्षिभिः ।
भ्राजते स्म तदा राजन्नाकपृष्ठं यथाऽमरैः ॥ ॥ २-३७-२८ (१२९१९)

इति श्रीमन्महाभारते सभापर्वणि दिग्विजयपर्वणि सप्तत्रिंशोऽध्यायः
॥ ३७.।
Mahabharata - Sabha Parva - Chapter Footnotes

२-३७-८ ब्रह्मपुरस्सराः ब्राह्मणपुरस्सराः ॥

---

सभ-०३८
॥ श्रीः ॥
२.३८. अध्यायः ३८

Mahabharata - Sabha Parva - Chapter Topics
आगतान्भीष्णादीन्समान्य तत्तदधिकारेषु तेषांतेषां नियमनम्
॥ १.। राजसूययागः ॥ २.।
Mahabharata - Sabha Parva - Chapter Text

वैशम्पायन उवाच ॥

पितामहं गुरुं चैव प्रत्युद्गम्य युधिष्ठिरः ।
अभिवाद्य ततो राजन्निदं वचनमब्रवीत् ॥ २-३८-१ (१२९२०)
भीष्मं द्रोणं कृपं द्रौणिं दुर्योधनविविंशती ।
अस्मिन्यज्ञे भवन्तो मामनुगृह्णन्तु सर्वशः ॥ २-३८-२ (१२९२१)
इदं वः सुमहच्चैव यदिहास्ति धनं मम ।
प्रणयन्तु भवन्तो मां यथेष्टमभिमन्त्रितः ॥ २-३८-३ (१२९२२)
एवमुक्त्वा स तान्सर्वान्दीक्षितः पाण्डवाग्रजः ।
युयोज स यथायोगमधिकारेष्वनन्तरम् ॥ २-३८-४ (१२९२३)
ग्पङ्क्त्यारोपणकार्ये च उच्छिष्टापनये पुनः ।
भोजनावेक्षणे चैव युयुत्सुं समयोजयत्'॥ २-३८-५ (१२९२४)
भक्ष्यभोज्याधिकारेषु दुःशासनमयोजयत् ।
परिग्रहे ब्राह्मणानामश्वत्थामानमुक्तवान्। २-३८-६ (१२९२५)
राज्ञां तु प्रतिपूजार्थं सञ्जयं न्ययोजयत् ।
कृताकृतपरिज्ञाने भीष्णद्रोणौ महामती ॥ २-३८-७ (१२९२६)
हिरण्यस्य सुवर्णस्य रत्नानां चान्ववेक्षणे ।
दक्षिणानां च वै दाने कृपं राजा न्ययोजयत् ॥ २-३८-८ (१२९२७)
तथाऽऽन्यान्पुरुषव्याघ्रांस्तस्मिंस्तस्मिन्न्ययोजयत् ।
बाह्लिको धृतराष्ट्रश्च सोमदत्तो जयद्रथः ।
नकुलेन समानीताः स्वामिवत्तत्र रेमिरे ॥ २-३८-९ (१२९२८)
क्षत्ता व्ययकरस्त्वासीद्विदुरः सर्वधर्मवित् ।
दुर्योधनस्त्वर्हणानि प्रतिजग्राह सर्वशः ॥ २-३८-१० (१२९२९)
ग्कुन्ती साध्वी च गान्धारी स्त्रीणां कुर्वन्ति चार्चनम् ॥
अन्याः सर्वाः स्नुषास्तासां सन्देशं यान्तु माचिरम् ।
तिष्ठेत्कृष्णान्तिके सोयमर्जुनः कार्यसिद्धये'॥ २-३८-११ (१२९३०)
चरणक्षालने कृष्णो ब्राह्मणानां स्वयं ह्यभूत् ।
सर्वलोकसमावृत्तः पिप्रीषुः फलमुत्तमम् ॥ २-३८-१२ (१२९३१)
द्रष्टुकामः सभां चैव धर्मराजं यधिष्ठिरम् ।
न कश्चिदाहरत्तत्र सहस्रावरमर्हणम् ॥ २-३८-१३ (१२९३२)
रत्नैश्च बहुभिस्तत्र धर्मराजमवर्धयत् ।
कथं तु मम कौरव्यो रत्नदानैः समाप्नुयात् ॥ २-३८-१४ (१२९३३)
यज्ञमित्येव राजानः स्पर्धमाना ददुर्धनम् ।
भवनैः सविमानाग्रैः सोदर्कैर्बलसंवृतैः ॥ २-३८-१५ (१२९३४)
लोकराजविमानैश्च ब्राह्मणावसथैः सह ।
कृतैरावसथैर्दिव्यैर्विमानप्रतिमैस्तथा ॥ २-३८-१६ (१२९३५)
विचित्रै रत्ववद्भिश्च ऋद्ध्या परमया युतैः ।
राजभिश्च समावृत्तैरतीव श्रीसमृद्धिभिः ।

अशोभत सदो राजन्कौन्तेयस्य महात्मनः ॥ २-३८-१७ (१२९३६)
ऋद्ध्या तु वरुणं देवं स्पर्धमानो युधिष्ठिरः ।
षडग्निनाथ यज्ञेन सोऽयजद्दक्षिणावता ॥ २-३८-१८ (१२९३७)
सर्वाञ्जनान्सर्वकामैः समृद्धैः समतर्पयत् ।
अन्नवान्बहुभक्ष्यश्च भुक्तवज्जनसंवृतः ।
रत्नोपहारसम्पन्नो बभूव स समागमः ॥ २-३८-१९ (१२९३८)
इडाज्यहोमाहुतिभिर्मन्त्रशिक्षाविशारदैः ।
तस्मिन्हि ततृपुर्देवास्तते यज्ञे महर्षिभिः ॥ २-३८-२० (१२९३९)
यथा देवास्तथा विप्रा दक्षिणान्नमहाधनैः ।
ततृपुः सर्ववर्णाश्च तस्मिन्यज्ञे मुदाऽन्विताः ॥ ॥ २-३८-२१ (१२९४०)

इति श्रीमन्महाभारते सभापर्वणि दिग्विजयपर्वणि अष्टत्रिंशोऽध्यायः
॥ ३८ ॥ ॥ समाप्तं च राजसूयपर्व॥

---

सभ-०३९
॥ श्रीः ॥
२.३९. अध्यायः ३९

Mahabharata - Sabha Parva - Chapter Topics
अभिषेचनदिने ब्राह्मणादीनामन्तर्वेदिप्रवेशः
॥ १.। भूभारक्षपणे नारदचिन्तनम् ॥ २.। पूर्वं
सङ्क्षिप्योक्तायाः कृष्णागमनकथायाः किञ्चिद्विस्तरेण कथनम्
॥ ३.। सहदेवेन श्रीकृष्णस्याग्रपूजाकरणम् ॥ ४.। शिशुपालेन
श्रीकृष्णस्याग्रपूजाऽसहनम् ॥ ५.।
Mahabharata - Sabha Parva - Chapter Text

वैशम्पायन उवाच ॥
ततोऽभिषेचनीयेऽह्नि ब्राह्मणा राजभिः सह ।
अन्तर्वेदीं प्रविविशुः सत्काराहा महर्षयः ॥ २-३९-१ (१२९४१)
नारदप्रमुखास्तस्यामन्तर्वेद्यां महात्मनः ।
समासीनाः शुशुभिरे सहराजर्षिभिस्तदा ॥ २-३९-२ (१२९४२)
समेता ब्रह्मभवने देवा देवर्षयस्तथा ।
कर्मान्तरमुपासन्तो जजल्पुरमितौजसः ॥ २-३९-३ (१२९४३)
एवमेतन्न चाप्येवमेवं चैतन्न चान्यथा ।
इत्यूचुर्बहवस्तत्र वितण्डां वै परस्परम् ॥ २-३९-४ (१२९४४)
कृशानर्थांस्ततः केचिदकृशांस्तत्र कुर्वते ।
अकृशांश्च कृशांश्चक्रुर्हेतुभिः शास्त्रनिश्चयैः ॥ २-३९-५ (१२९४५)

तत्र मेधाविनः केचिदर्थमन्यैरुदीरितम् ।
विचिक्षिपुर्यथा श्येना नभोगतमिवामिषम् ॥ २-३९-६ (१२९४६)
केचिद्धर्मार्थकुशलाः केचित्तत्र महाव्रताः ।
रेमिरे कथयन्तश्च सर्वभाष्यविदां वराः ॥ २-३९-७ (१२९४७)
सा वेदिर्वेदसम्पन्नैर्देवद्विजमहर्षिभिः ।
आबभासे समाकीर्णा नक्षत्रैर्द्यौरिवायता ॥ २-३९-८ (१२९४८)
न तस्यां सन्निधौ शूद्रः कश्चिदासीन्न चाव्रती ।
अन्तर्वेद्यां तदा राजन्युधिष्ठिरनिवेशने ॥ २-३९-९ (१२९४९)
तां तु लक्ष्मीवतो लक्ष्मीं तदा यज्ञविधानजाम् ।
तुतोष नारदः पश्यन्धर्मराजस्य धीमतः ॥ २-३९-१० (१२९५०)
अथ चिन्तां समापेदे स मुनिर्मनुजाधिप ।
नारदस्तु तदा पश्यन्सर्वक्षत्रसमागमम् ॥ २-३९-११ (१२९५१)
सस्मार च पुरावृत्तां कथां तां पुरुषर्षभ ।
अंशावतरणे याऽसौ ब्रह्मणो भवनेऽभवत् ॥ २-३९-१२ (१२९५२)
देवानां सङ्गमं तं तु विज्ञाय कुरुनन्दन ।
नारदः पुण्डरीकाक्षं सस्मार मनसा हरिम् ॥ २-३९-१३ (१२९५३)
साक्षात्स विबुधारिघ्नः क्षत्रे नारायणो विभुः ।
प्रतिज्ञां पालयंश्चेमां जातः परपुरञ्जयः ॥ २-३९-१४ (१२९५४)
सन्दिदेश पुरा योऽसौ विबुधान्भूतकृत्स्वयम् ।
अन्योन्यमभिनिघ्नन्तः पुनर्लोकानवाप्स्यथ ॥ २-३९-१५ (१२९५५)
इति नारायणः शम्भुर्भगवान्भूतभावनः ।
आदिश्य विबुधान्सर्वानजायत यदुक्षये ॥ २-३९-१६ (१२९५६)
क्षितावन्धकवृष्णीनां वंशे वंशभृतां वरः ।
परया शुशुभे लक्ष्म्या नक्षत्राणामिवोडुराट् ॥ २-३९-१७ (१२९५७)
यस्य बाहुबलं सेन्द्राः सुराः सर्व उपासते ।
सोयं मानुषवन्नाम हरिरास्तेऽरिमर्दनः ॥ २-३९-१८ (१२९५८)
अहो बत महद्भूतं स्वयम्भूर्यदिदं स्वयम् ।
आदास्यति पुनः क्षत्रमेवं बलसमन्वितम् ॥ २-३९-१९ (१२९५९)
इत्येतां नारदश्चिन्तां चिन्तयामास सर्ववित् ।
हरिं नारायणं ज्ञात्वा यज्ञैरीज्यं तमीश्वरम् ॥ २-३९-२० (१२९६०)
तस्मिन्धर्मविदां श्रेष्ठो धर्मराजस्य धीमतः ।
महाध्वरे महाबुद्धिस्तस्थौ स बहुमानतः ॥ २-३९-२१ (१२९६१)
ग्ततः समुदिता मुख्यैर्गुणैर्गुणवतां वराः ।
बहवो भावितात्मानः पृथक्पृथगरिन्दमाः ॥ २-३९-२२ (१२९६२)
आत्मकृत्यमिति ज्ञात्वा पाञ्चालास्तत्र सर्वशः ।
समीयुर्वृष्णयश्चैव तदाऽनीकाग्रहारिणः ॥ २-३९-२३ (१२९६३)

सदाराः सजनामात्या वहन्तो रत्नसञ्चयान् ।
विकृष्टत्वाच्च देशस्य गुरुभारतया च ते ॥ २-३९-२४ (१२९६४)
ययुः प्रमुदिताः पश्चाद्भगवन्तं समन्वयुः ।
बलशेषं समुदितं परिगृह्य समन्ततः ॥ २-३९-२५ (१२९६५)
अजश्चक्रायुधः शौरिरमित्रगणमर्दनः ।
बलाधिकारे निक्षिप्य संमान्यानकदुन्दुभिम् ॥ २-३९-२६ (१२९६६)
सम्प्रायाद्यादवश्रेष्ठो जयमाने युधिष्ठिरे ।
उच्चावचमुपादाय धर्मराजाय माधवः ॥ २-३९-२७ (१२९६७)
धनौघं पुरतः कृत्वा खाण्डवप्रस्थमाययौ ।
तत्र यज्ञगतान्पश्यंश्चैद्यवर्गसमागतान् ॥ २-३९-२८ (१२९६८)
भूमिपालगणान्सर्वान्सप्रभानिव तोयदान् ।
मेघकायान्निवसतो यूथपानिव यूथपः ॥ २-३९-२९ (१२९६९)
बलिनः सिंहसङ्काशान्महीमावृत्य तिष्ठतः ।
ततो जनौघसम्बाधं राजसागरमव्ययम् ॥ २-३९-३० (१२९७०)
नादयन्रथघोषेण ह्युपायान्मधुसूदनः ।
असूर्यमिव सूर्येण निवातमिव वायुना ॥ २-३९-३१ (१२९७१)
कृष्णेन समुपेतेन जहर्षे भारतं पुरम् ।
ब्राह्मणक्षत्रियाणां तु पूजार्थं ह्यर्थधर्मवित् ॥ २-३९-३२ (१२९७२)
सहदेवो विशेषज्ञो माद्रीपुत्रः कृतोऽभवत् ।
भगवन्तं तु भूतानां भास्वन्तमिव तेजसा ॥ २-३९-३३ (१२९७३)
विशन्तं यज्ञभूमिं तां सितस्यावरजं प्रभुम् ।
तेजोराशिमृषिं विप्रमदृश्यं वै विजानताम् ॥ २-३९-३४ (१२९७४)
वयोधिकानां वृद्धानां मार्गमात्मनि तिष्ठताम् ।
जगतस्तस्थुषश्चैव प्रभवाप्ययमच्युतम् ॥ २-३९-३५ (१२९७५)
अनन्तमन्तं शत्रूणाममित्रगणमर्दनम् ।
प्रभवं सर्वभूतानामापत्स्वभयमच्युतम् ॥ २-३९-३६ (१२९७६)
भविष्यं भावनं भूतं द्वारवत्यामरिन्दमम् ।
स दृष्ट्वा कृष्णमायान्तं प्रतिपूज्यामितौजसम् ॥ २-३९-३७ (१२९७७)
यथार्हं केशवे वृत्तिं प्रत्यपद्यत पाण्डवः ।
ज्यैष्ठ्यकानिष्ठ्यसंयोगं सम्प्रधार्य गुणागुणैः ॥ २-३९-३८ (१२९७८)
आरिराधयिषुर्धर्मः पूजयित्वा द्विजोत्तमान् ।
महदादित्यसङ्काशमासनं च जगत्पतेः ।
ददौ नासादितं कैश्चित्तस्मिन्नुपविवेश सः'॥ २-३९-३९ (१२९७९)
ततो भीष्मोऽब्रवीद्राजन्धर्मराजं युधिष्ठिरम् ।
क्रियतामर्हणं राज्ञां यथार्हमिति भारत ॥ २-३९-४० (१२९८०)
आचार्यमृत्विजं चैव संयुजं च युधिष्ठिर ।

स्नातकं च प्रियं प्राहुः षडर्घार्हान्नृपं तथा ॥ २-३९-४१ (१२९८१)
एतानर्घ्यानभिगतानाहुः संवत्सरोषितान् ।
त इमे कालपूगस्य महतोऽस्मानुपागताः ॥ २-३९-४२ (१२९८२)
एषामेकैकशो राजन्नर्घ आनीयतामिति ।
अथ तैषां वरिष्ठाय समर्थायोपनीयताम् ॥ २-३९-४३ (१२९८३)
युधिष्ठिर उवाच ॥ २-३९-४४क्ष् (१४५९)
कस्मै भवान्मन्यतेऽर्घमेकस्मै कुरुनन्दन ।
उपनीयमानं युक्तं च तन्मे ब्रूहि पितामह ॥ २-३९-४४ (१२९८४)
वैशम्पायन उवाच ॥ २-३९-४५क्ष् (१४६०)
ततो भीष्मः शान्तनवो बुद्ध्या निश्चित्य वीर्यवान् ।
वार्ष्णेयं मन्यते कृष्णमर्हणीयतमं भुवि ॥ २-३९-४५ (१२९८५)
भीष्ण उवाच ॥ २-३९-४६क्ष् (१४६१)
एष ह्येषां समस्तानां तेजोबलपराक्रमैः ।
मध्ये तपन्निवाभाति ज्योतिषामिव भास्करः ॥ २-३९-४६ (१२९८६)
असूर्यमिव सूर्येण निर्वातमिव वायुना ।
भासितं ह्लादितं चैव कृष्णेनेदं सदो हि नः ॥ २-३९-४७ (१२९८७)
तस्मै भीष्माभ्यनुज्ञातः सहदेवः प्रतापवान् ।
उपजह्रेऽथ विधिवद्वार्ष्णेयायार्घ्यमुत्तमम् ॥ २-३९-४८ (१२९८८)
ग्गामर्घ्यं मधुपर्कं च ह्यानीयोपाहरत्तदा ।
एतस्मिन्नन्तरे राजन्निदमासीत्तदाऽद्भुतम् ॥ २-३९-४९ (१२९८९)
तां दृष्टवा क्षत्रियाः सर्वे पूजां कृष्णस्य भूयसीम् ।
सम्प्रेक्ष्यान्योन्यमासीना हृदयैस्तामधारयन्'॥ २-३९-५० (१२९९०)
प्रतिजग्राह तां कृष्णः शास्त्रदृष्टेन कर्मणा ।
शिशुपालस्तु तां पूजां वासुदेवे न चक्षमे ॥ २-३९-५१ (१२९९१)
उपालभ्य स भीष्मं च धर्मराजं च संसदि ।
अवाक्षिपद्वासुदेवं चेदिराजो महाबलः ॥ २-३९-५२ (१२९९२)
ग्तेषामाकारभावज्ञः सहदेवो न चक्षमे ।
मानिनां बलिनां राज्ञां पुरुः सन्दर्शिते पदे ॥ २-३९-५३ (१२९९३)
पुष्पवृष्टिर्महत्यासीत्सहदेवस्य मूर्धनि ।
जन्मप्रभृति वृष्णीना सुनीथः शत्रुरब्रवीत् ॥ २-३९-५४ (१२९९४)
प्रष्टा वियोनिजो राजा प्रतिवक्ता नदीसुतः ।
प्रतिग्रहीता गोपालः प्रदाता च वियोनिजः ॥ २-३९-५५ (१२९९५)
सदस्या मूकवत्सर्वे आसतेऽत्र किमुच्यते ।
इत्युक्त्वा स विहस्याशु पाण्डुं पुनरब्रवीत् ॥ २-३९-५६ (१२९९६)
अतिपश्यसि वा सर्वान्न वा पश्यसि पाण्डव ।
तिष्ठत्स्वन्येषु पूज्येषु गोपमर्चितवानसि ॥ २-३९-५७ (१२९९७)

एते चैवोभये तात कार्यस्य तु विनाशके ।
अतिदृष्टिरदृष्टिर्वा तयोः किं त्वं समास्थितः'॥ ॥ २-३९-५८ (१२९९८)

इति श्रीमन्महाभारते सभापर्वणि दिग्विजयपर्वणि
एकोनचत्वारिंशोऽध्यायः ॥३९.।
Mahabharata - Sabha Parva - Chapter Footnotes

२-३९-४१ संयुजं सम्बन्धिनं श्वशुरादिम् । प्रियं मित्रम् ॥
२-३९-५२ अवाक्षिपद्दूषितवान् ॥

---

सभ-०४०
॥ श्रीः ॥
२.४०. अध्यायः ४०

Mahabharata - Sabha Parva - Chapter Topics
शिशुपालेन अनेकधा कृष्णोपालम्भनपूर्वकं सभातो निर्गमनम् ॥ १.।
Mahabharata - Sabha Parva - Chapter Text

शिशुपाल उवाच ।
नायमर्हति वार्ष्णेयस्तिष्ठत्स्विह महात्मसु ।
महीपतिषु कौरव्य राजवत्पार्थिवार्हणम् ॥ २-४०-१ (१२९९९)
नायं युक्तः समाचारः पाण्डवेषु महात्मसु ।
यत्कामाद्देवकीपुत्रं पाण्डवार्चितवानसि ॥ २-४०-२ (१३०००)
बाला यूयं न जानीध्वं धर्मः सूक्ष्मो हि पाण्डवाः ।
अयं तत्राभ्यतिक्रान्तो ह्यापगेयोऽल्पदर्शनः ॥ २-४०-३ (१३००१)
त्वादृशो धर्मयुक्तो हि कुर्वाणः प्रियकाम्यया ।
भवत्यभ्यधिकं भीष्मो लोकेष्ववमतः सताम् ॥ २-४०-४ (१३००२)
कथं ह्यराजा दाशार्हो मध्ये सर्वमहीक्षिताम् ।
अर्हणामर्हति तथा यथा युष्माभिरर्चितः ॥ २-४०-५ (१३००३)
अथवा मन्यसे कृष्णं स्थविरं कुरुपुङ्गवः ।
वसुदेवे स्थिते वृद्धे कथमर्हति तत्सुतः ॥ २-४०-६ (१३००४)
अथवा वासुदेवोऽपि प्रियकामोऽनुवृत्तवान् ।
द्रुपदे तिष्ठति कथं माधवोऽर्हति पूजनम् ॥ २-४०-७ (१३००५)
आचार्यं मन्यसे कृष्णमथवा कुरुनन्दन ।
द्रोणे तिष्ठति वार्ष्णेयं कस्मादर्चितवानसि ॥ २-४०-८ (१३००६)
ऋत्विजं मन्यसे कृष्णमथवा कुरुनन्दन ।
द्वैपायने स्थिते वृद्धे कथं कृष्णोऽर्चितस्त्वया ॥ २-४०-९ (१३००७)

भीष्मे शान्तनवे राजन्स्थिते पुरुषसत्तमे ।
स्वच्छन्दमृत्युके राजन्कथं कृष्णोऽर्चितस्त्वया ॥ २-४०-१० (१३००८)
अश्वत्थाम्नि स्थिते वीरे सर्वशास्त्रविशारदे ।
कथं कृष्णस्त्वया राजन्नर्चितः कुरुनन्दन ॥ २-४०-११ (१३००९)
दुर्योधने च राजेन्द्रे स्थिते पुरुषसत्तमे ।
कृपे च भारताचार्ये कथं कृष्णस्त्वयाऽर्चितः ॥ २-४०-१२ (१३०१०)
द्रुमं कम्पुरुषाचार्यमतिक्रम्य तथाऽर्चितः ।
भीष्मके चैव दुर्धर्षे पाण्डुवत्कृतलक्षणे ॥ २-४०-१३ (१३०११)
नृपे च रुक्मिणि श्रेष्ठे एकलव्ये तथैव च ।
शल्ये मद्राधिपे चैव कथं कृष्णस्त्वयार्चितः ॥ २-४०-१४ (१३०१२)
अयं च सर्वराज्ञां वै बलश्लाघी महाबलः ।
जामदग्न्यस्य दयितः शिष्यो विप्रस्य भारत ॥ २-४०-१५ (१३०१३)
येनात्मबलमाश्रित्य राजानो युधि निर्जिताः ।
तं च कर्णमतिक्रम्य कथं कृष्णस्त्वयार्चितः ॥ २-४०-१६ (१३०१४)
नैवर्त्विङ्नैव चाचार्यो न राजा मधुसूदनः ।
अर्चितश्च कुरुश्रेष्ठ किमन्यत्प्रियकाम्यया ॥ २-४०-१७ (१३०१५)
अथवाऽभ्यर्चनीयोऽयं युष्माकं मधुसूदनः ।
किं राजभिरिहानीतैरवमानाय भारत ॥ २-४०-१८ (१३०१६)
वयं तु न भयादस्य कौन्तेयस्य महात्मनः ।
प्रयच्छामः करान्सर्वे न लोभान्न च सान्त्वनात् ॥ २-४०-१९ (१३०१७)
अस्य धर्मप्रवृत्तस्य पार्थिवत्वं चिकीर्षतः ।
करानस्मै प्रयच्छामः सोऽयमस्मान्न मन्यते ॥ २-४०-२० (१३०१८)
किमन्यदवमनानाद्धि यदेनं राजसंसदि ।
अप्राप्तलक्षणं कृष्णमर्घ्येणार्चितवानसि ॥ २-४०-२१ (१३०१९)
अकस्माद्धर्मपुत्रस्य धर्मात्मेति यशो गतम् ।
को हि धर्मच्युते पूजामेवं युक्तां नियोजयेत् ॥ २-४०-२२ (१३०२०)
योयं वृष्णिकुले जातो राजानं हतवान्पुरा ।
जरासन्धं महात्मानमन्यायेन दुरात्मवान् ॥ २-४०-२३ (१३०२१)
अद्य धर्मात्मता चैव व्यपकृष्टा युधिष्ठिरात् ।
दर्शितं कृपणत्वं च कृष्णेऽर्घ्यस्य निवेदनात् ॥ २-४०-२४ (१३०२२)
यदि भीताश्च कौन्तेयाः कृपणाश्च तपस्विनः ।
ननु त्वयाऽपि बोद्धव्यं यां पूजां माधवार्हसि ॥ २-४०-२५ (१३०२३)
अथवा कृपणैरेतामुपनीतां जनार्दन ।
पूजामनर्हः कस्मात्त्वमभ्यनुज्ञातवानसि ॥ २-४०-२६ (१३०२४)
अयुक्तामात्मनः पूजां त्वं पुनर्बहुमन्यसे ।
हविषः प्राप्य निष्यन्दं प्राशिता श्वेव निर्जने ॥ २-४०-२७ (१३०२५)

न त्वं पार्थिवेन्द्राणामपमानः प्रयुज्यते ।
त्वामेव कुरवो व्यक्तं प्रलम्भन्ते जनार्दन ॥ २-४०-२८ (१३०२६)
क्लीबे दारक्रिया यादृगन्धे वा रूपदर्शनम् ।
अराज्ञो राजवत्पूजा तथा ते मधुसूदन ॥ २-४०-२९ (१३०२७)
दृष्टो युधिष्ठिरो राजा दृष्टो भीष्मश्च यादृशः ।
वासुदेवोऽप्ययं दृष्टः सर्वमेतद्यथातथम् ॥ २-४०-३० (१३०२८)
इत्युक्त्वा शिशुपालस्तानुत्थाय परमासनात् ।
निर्ययौ सदसस्तस्मात्सहितो राजभिस्तदा ॥ ॥ २-४०-३१ (१३०२९)

इति श्रीमन्महाभारते सभापर्वणि दिग्विजयपर्वणि चत्वारिंशोऽध्यायः
॥ ४०.।

---

सभ-०४१
॥ श्रीः ॥
२.४१. अध्यायः ४१

Mahabharata - Sabha Parva - Chapter Topics
शिशुपालं सान्त्वयन्तं युधिष्ठिरं निवार्य भीष्णेण
श्रीकृष्णमाहात्म्यकथनम् ॥ १.।
Mahabharata - Sabha Parva - Chapter Text

वैशम्पायन उवाच ।
ततो युधिष्ठिरो राजा शिशुपालमुपाद्रवत् ।
उवाच चैनं मधुरं सान्त्वपूर्वमिदं वचः ॥ २-४१-१ (१३०३०)
नेदं युक्तं महीपाल यादृशं वै त्वमुक्तवान् ।
अधर्मश्च परो राजन्पारुष्यं च निरर्थकम् ॥ २-४१-२ (१३०३१)
न हि धर्मं परं जातु नावबुध्येत पार्थिवः ।
भीष्मः शान्तनवस्त्वेनं मावमंस्थास्त्वमन्यथा ॥ २-४१-३ (१३०३२)
पश्य चैतान्महीपालांस्त्वत्तो वृद्धतरान्बहून् ।
मृष्यन्ते चार्हणां कृष्णे तद्वत्त्वं क्षन्तुमर्हसि ॥ २-४१-४ (१३०३३)
वेद तत्त्वेन कृष्णं हि भीष्मश्चेदिपते भृशम् ।
न ह्येनं त्वं तथा यथैनं वेद कौरवः ॥ २-४१-५ (१३०३४)
भीष्म उवाच। २-४१-६क्ष् (१४६२)
नास्मै देयो ह्यनुनयो नायमर्हति सान्त्वनम् ।
लोकवृद्धतमे कृष्णे योऽर्हणां नाभिमन्यते ॥ २-४१-६ (१३०३५)
क्षत्रियः क्षत्रियं जित्वा रणे रणकृतां वरः ।
यो मुञ्चति वशे कृत्वा गुरुर्भवति तस्य सः ॥ २-४१-७ (१३०३६)

अस्यां हि समितौ राज्ञामेकमप्यजितं युधि ।
न पश्यामि महीपालं सात्वतीपुत्रतेजसा ॥ २-४१-८ (१३०३७)
न हि केवलमस्माकमयमर्च्यतमोऽच्युतः ।
त्रयाणामपि लोकानामर्चनीयो महाभुजः ॥ २-४१-९ (१३०३८)
कृष्णेन हि जिता युद्धे बहवः क्षत्रियर्षभाः ।
जगत्सर्वं च वार्ष्णेये निखिलेन प्रतिष्ठितम् ॥ २-४१-१० (१३०३९)
तस्मात्सत्स्वपि वृद्धेषु कृष्णमर्चाम नेतरान् ।
एवं वक्तुं न चार्हस्त्वं मा तेऽभूद्बुद्धिरीदृशी ॥ २-४१-११ (१३०४०)
ज्ञानवृद्धा मया राजन्बहवः पर्युपासिताः ।
ग्यस्य राजन्प्रभावज्ञाः पुरा सर्वे च रक्षिताः'।
तेषां कथयतां शौरेरहं गुणवतो गुणान् ॥ २-४१-१२ (१३०४१)
समागतानामश्रौषं बहून्बहुमतान्सताम् ।
कर्माण्यपि च यान्यस्य जन्मप्रभृति धीमतः ॥ २-४१-१३ (१३०४२)
बहुशः कथ्यमानानि नरैर्भूयः श्रुतानि मे ।
न केवलं वयं कामाच्चेदिगज जनार्दनम् ॥ २-४१-१४ (१३०४३)
न सम्बन्धं पुरस्कृत्य कृतार्थं वा कथञ्चन ।
अर्चामहेऽर्चितं सद्भिर्भुवि भूतसुखावहम् ॥ २-४१-१५ (१३०४४)
यशः शौर्यं जयं चास्य विज्ञायार्चां प्रयुञ्ज्महे
न च कश्चिदिहास्माभिः सुबालोप्यपरीक्षितः ॥ २-४१-१६ (१३०४५)
गुणैर्वृद्धानतिक्रम्य हरिरर्च्यतमो मतः ।
ज्ञानवृद्धो द्विजातीनां क्षत्रियाणां बलाधिकः ॥ २-४१-१७ (१३०४६)
वैश्यानां धान्यधनवाञ्शूद्राणामेव जन्मतः ।
पूज्यतायां च गोविन्दे हेतू द्वावपि संस्थितौ ॥ २-४१-१८ (१३०४७)
वेदवेदाङ्गविज्ञानं बलं चाप्यधिकं तथा ।
नृणां लोके हि कोऽन्योस्ति विशिष्टः केशवादृते ॥ २-४१-१९ (१३०४८)
दानं दाक्ष्यं श्रुतं शौर्यं ह्रीः कीर्तिर्बुद्धिरुत्तमा ।
संनतिः श्रीर्धृतिस्तुष्टिः पुष्टिश्च नियताऽच्युते ॥ २-४१-२० (१३०४९)
तमिमं लोकसम्पन्नमाचार्यं पितरं गुरुम् ।
अर्घ्यमर्चितमर्चामः सर्वे सङ्क्षन्तुमर्हथ ॥ २-४१-२१ (१३०५०)
ऋत्विग्गुरुर्विवाह्यश्च स्नातको नृपतिः प्रियः ।
सर्वमेतद्धृषीकेशस्तस्मादभ्यर्चितोऽच्युतः ॥ २-४१-२२ (१३०५१)
कृष्ण एव हि लोकानामुत्पत्तिरपि चाप्ययः ।
कृष्णस्य हि कृते विश्वमिदं भूतं चराचरम् ॥ २-४१-२३ (१३०५२)
एष प्रकृतिरव्यक्ता कर्ता चैव सनातनः ।
परश्च सर्वभूतेभ्यस्तस्मात्पूज्यतमोऽच्युतः ॥ २-४१-२४ (१३०५३)
बुद्धिर्मनो महद्वायुस्तेजोऽभः खं मही च या ।

चतुर्विधं च यद्भूतं सर्वं कृष्णे प्रतिष्ठितम् ॥ २-४१-२५ (१३०५४)
आदित्यश्चन्द्रमाश्चैव नक्षत्राणि ग्रहाश्च ये ।
दिशश्च विदिशश्चैव सर्वं कृष्णे प्रतिष्ठितम् ॥ २-४१-२६ (१३०५५)
ग एष रुद्रश्च सर्वात्मा ब्रह्मा चैव सनातनः ।
अक्षरं क्षररूपेण मानुषत्वमुपागतः'॥ २-४१-२७ (१३०५६)
अग्निहोत्रमुखा वेदा गायत्री च्छन्दसां मुखम् ।
राजा मुखं मनुष्याणां नदीनां सागरो मुखम् ॥ २-४१-२८ (१३०५७)
नक्षत्राणां मुखं चन्द्र आदित्यस्तेजसां मुखम् ।
पर्वतानां मुखं मेरुर्गरुडः पततां मुखम् ॥ २-४१-२९ (१३०५८)
ऊर्ध्वं तिर्यगधश्चैव यावती जगतो गतिः ।
सदेवकेषु लोकेषु भगवान्केशवो मुखम् ॥ २-४१-३० (१३०५९)
अयं तु पुरुषो बालः शिशुपालो न बुध्यते ।
सर्वत्र सर्वदा कृष्णं तस्मादेवं प्रभाषते ॥ २-४१-३१ (१३०६०)
यो हि धर्मं विचिनुयादुत्कृष्टं मतिमान्नरः ।
स वै पश्येद्यथा धर्मं न तथा चेदिराडयम् ॥ २-४१-३२ (१३०६१)
सवृद्धबालेष्वथवा पार्थिवेषु महात्मसु ।
को नार्हं मन्यते कृष्णं को वाप्येनं न पूजयेत् ॥ २-४१-३३ (१३०६२)
अथैनां दुष्कृतां पूजां शिशुपालो व्यवस्यति ।
दुष्कृतायां यथान्यायं तथाऽयं कर्तुमर्हति ॥ ॥ २-४१-३४ (१३०६३)

इति श्रीमन्महाभारते सभापर्वणि अर्घाहरणपर्वणि
एकचत्वारिंशोऽध्यायः ॥ ४१ ॥
Mahabharata - Sabha Parva - Chapter Footnotes

२-४१-२५ चतुर्विधं जरायुजादि भौतिकम् ॥

---

सभ-०४२
॥ श्रीः ॥
२.४२. अध्यायः ४२

Mahabharata - Sabha Parva - Chapter Topics
श्रीकृष्णस्याग्रपूजामसहमानानां शिरसि पदमाहितमिति
सहदेववचनश्रवणेन शिशुपाल स्य कोपोदयः ॥ १.।
Mahabharata - Sabha Parva - Chapter Text

ग्वैशम्पायन उवाच ॥
गाङ्गेयेनैवमुक्तस्तु शिशुपालश्चुकोप तम् ।

क्रुद्धं सुनीथं दृष्ट्वाऽथ सहदेवोऽब्रवीत्तदा ॥ २-४२-१ (१३०६४)
मतिपूर्वमिदं सर्वं चेदिराज मया कृतम् ।
तन्मे निगदतस्तत्त्वं कारणादत्र मे शृणु ॥ २-४२-२ (१३०६५)
स पार्थिवानां सर्वेषां गुरुः कृष्णोऽपरो न हि ।
तस्मादभ्यर्चितोऽस्माभिः सर्वे संमन्तुमर्हथ ॥ २-४२-३ (१३०६६)
यो वा सहते कश्चिद्राज्ञां सबलवाहनः ।
क्षिप्रं युद्धाय निर्यातु तस्य मूर्ध्न्याहितं पदम् ॥ २-४२-४ (१३०६७)
एवमुक्तो मया हेतुरुत्तरं प्रब्रवीतु मे। २-४२-५ (१३०६८)
वैशम्पायन उवाच ॥
ततो न व्याजहारैषां कश्चिद्बुद्धिमतां सताम् ॥ २-४२-५क्ष् (१४६३)
मानिनां बलिनां राज्ञां मध्ये सन्दर्शिते पदे ।
एवमुक्ते सुनीथस्य सहदेवेन केशवे ॥ २-४२-६ (१३०६९)
स्वभावरक्ते नयने कोपाद्रक्ततरे कृते ।
तस्य कोपं समुद्भूतं ज्ञात्वा भीष्मः प्रतापवान् ॥ २-४२-७ (१३०७०)
आचचक्षे पुनस्तस्मै कृष्णस्यैवोत्तरान्गुणान् ।
स सुनीथं समामन्त्र्य तांश्च सर्वान्महीक्षितः ॥ २-४२-८ (१३०७१)
उवाच वदतां श्रेष्ठं इदं मतिमतां वरः ।
सहदेवेन राजानो यदुक्तं केशवं प्रति ।
तत्तथेति विजानीध्वं भूयश्चात्र विबोधत ॥ ॥ २-४२-९ (१३०७२)

इति श्रीमन्महाभारते सभापर्वणि अर्घाहरणपर्वणि
द्विचत्वारिंशोऽध्यायः ॥ ४२ ॥

---

सभ-०४३
॥ श्रीः ॥
२.४३. अध्यायः ४३

Mahabharata - Sabha Parva - Chapter Topics
श्रीकृष्णमहिम्नो विस्तरेण कथनाय भीष्मम्प्रति
युधिष्ठिरप्रार्थना ॥ १.। भीष्णेण विष्णोर्जगत्सृष्टिकथाकथनम्
॥ २.।
Mahabharata - Sabha Parva - Chapter Text

वैशम्पायन उवाच ।
ततो भीष्मस्य तच्छ्रुत्वा वचः काले युधिष्ठिरः ।
ज्ञापनार्थाय सर्वेषां भीष्मं पुनरथाब्रवीत् ॥ २-४३-१ (१३०७३)
विस्तरेणास्य देवस्य कर्माणीच्छामि सर्वशः ।

श्रोतुं भगवतस्तानि प्रब्रवीहि पितामह ॥ २-४३-२ (१३०७४)
कर्मणामानुपूर्वा च प्रादुर्भावाश्च ये विभोः ।
यथा च प्रकृतिः कृष्णे तन्मे ब्रूहि पितामह ॥ २-४३-३ (१३०७५)
एवमुक्तस्तदा भीष्मः प्रोवाच भरतर्षभ ।
युधिष्ठिरममित्रघ्नं तस्मिन्राजसमागमे ॥ २-४३-४ (१३०७६)
समक्षं वासुदेवस्य देवस्येव शतक्रतोः ।
कर्माण्यसुकराण्यन्यैराचचक्षे जनाधिप ॥ २-४३-५ (१३०७७)
शृण्वतां पार्थिवानां च धर्मराजस्य चान्तिके ।
इदं मतिमतां श्रेष्ठः कृष्णं प्रति विशाम्पते ॥ २-४३-६ (१३०७८)
नाम्नैवामन्त्र्य राजेन्द्र चेदिराजमरिन्दमम् ।
भीमकर्मा ततो भीष्णो भूयः स इतमब्रवीत् ॥ २-४३-७ (१३०७९)
करूणामपि राजानं युधिष्ठिरमभाषत। २-४३-८ (१३०८०)
भीष्ण उवाच ।
वर्तमानामतीतां च शृणु राजन्युधिष्ठिर ॥ २-४३-८क्ष् (१४६४)
ईश्वरस्योत्तमस्यैनां कर्मणां गहनां गतिम् ।
अव्यक्तो व्यक्तलिङ्गस्थो य एष भगवान्प्रभुः ॥ २-४३-९ (१३०८१)
पुरा नारायणो देवः स्वयम्भूः प्रपितामहः ।
सहस्रशीर्षः पुरुषो ध्रवोऽनन्तः सनातनः ॥ २-४३-१० (१३०८२)
सहस्रास्यः सहस्राक्षः सहस्रचरणो विभुः ।
सहस्रबाहुः सर्वज्ञो देवो नामसहस्रवान् ॥ २-४३-११ (१३०८३)
सहस्रमुकुटो देवो विश्वरूपो महाद्युतिः ।
अनेकवर्णो देवादिरव्यक्ताद्वै परे स्थितः ॥ २-४३-१२ (१३०८४)
असृजत्सलिलं पूर्वं स च नारायणः प्रभुः ।
ततस्तु भगवांस्तोये ब्रह्माणमसृजत्स्वयम् ॥ २-४३-१३ (१३०८५)
ब्रह्मा चतुर्मुखो लोकान्सर्वांस्तानसृजत्स्वयम् ।
आदिकाले पुरा ह्येवं सर्वलोकस्य चोद्भवः ।
पुरा यः प्रलये प्राप्ते नष्टे स्थावरजङ्गमे ॥ २-४३-१४ (१३०८६)
ब्रह्मादिषु प्रलीनेषु नष्टे लोके चराचरे ।
आभूतसम्प्लवे प्राप्ते प्रलीने प्रकृतौ महान् ॥ २-४३-१५ (१३०८७)
एकस्मिष्ठति सर्वात्मा स तु नारायणः प्रभुः ।
नारायणस्य चाङ्गानि सर्वदैवानि भारत ॥ २-४३-१६ (१३०८८)
शिरस्तस्य दिवं राजन्नाभिः खं चरणौ मही ।
अश्विनौ कर्णयोर्देवौ चक्षुषी शशिभास्करौ ॥ २-४३-१७ (१३०८९)
इन्द्रवैश्वानरौ देवौ मुखं तस्य महात्मनः ।
अन्यानि सर्वदैवानि सर्वाङ्गानि महात्मनः ॥ २-४३-१८ (१३०९०)
सर्वं चापि हरौ संस्थं सूत्रे मणिगणा इव ।

आभूतसम्प्लवान्तेऽथ दृष्ट्वा सर्वं तमोन्वितम् ॥ २-४३-१९ (१३०९१)
नारायणो महायोगी सर्वज्ञः परमात्मवान् ।
ब्रह्मभूतस्तदात्मानं ब्रह्मणमसृजत्स्वयम् ॥ २-४३-२० (१३०९२)
सोऽध्यक्षः सर्वभूतानां प्रभूतप्रभवोऽच्युतः ।
सनत्कुमारं रुद्रं च सप्तर्षींश्च तपोधनात् ॥ २-४३-२१ (१३०९३)
सर्वमेवासृजद्ब्रह्मा तथा लोकांस्तथा प्रजाः ।
ते च तद्ब्रसृजंस्तत्र प्राप्तकाले युधिष्ठिर ॥ २-४३-२२ (१३०९४)
तेभ्योऽभवन्महात्मभ्यो बहुधा ब्रह्म शाश्वतम् ।
कल्पानां बहुकोट्यश्चसमतीतास्तु भारत ॥ २-४३-२३ (१३०९५)
आभूतसम्प्लवाश्चैव बहुधाऽद्धाऽपचक्रमुः ।
मन्वन्तरयुगा राजन्सङ्कल्पो भूतसम्प्लवाः ॥ २-४३-२४ (१३०९६)
चक्रवत्परिवर्तन्ते सर्वं विषमुखं जगत् ।
सृष्ट्वा चतुर्मुखं देवं देवो नारायणः प्रभुः ॥ २-४३-२५ (१३०९७)
स लोकानां हितार्थाय क्षीरोदे वसति प्रभुः ।
ब्रह्मा च सर्वलोकानां लोकस्य च पितामहः ॥ २-४३-२६ (१३०९८)
ततो नारायणो देवः सर्वस्य प्रपितामहः। ॥ २-४३-२७ (१३०९९)

इति श्रीमन्महाभारते सभापर्वणि अर्घाहरणपर्वणि
त्रिचत्वारिंशोऽध्यायः ॥ ४३ ॥
Mahabharata - Sabha Parva - Chapter Footnotes

२-४३-२५ विषमुखं जलादिकम् ॥

---

सभ-०४४
॥ श्रीः ॥
२.४४. अध्यायः ४४

Mahabharata - Sabha Parva - Chapter Topics
मधुकैटभवधकथनम् ॥ १.।
Mahabharata - Sabha Parva - Chapter Text

भीष्म उवाच ।
अव्यक्तो व्यक्तलिङ्गस्थो य एव भगवान्प्रभुः ।
नरनारायणो भूत्वा हरिरासीद्युधिष्ठिर ॥ २-४४-१ (१३१००)
ब्रह्मा च शक्रः सूर्यश्च धर्मश्चैव सनातनः ।
बहुशः सर्वभूतात्मा प्रादुर्भवति कार्यतः ।
प्रादुर्भावांस्तु वक्ष्यामि दिव्यान्देवगणैर्युतान्। २-४४-२ (१३१०१)

सुप्त्वा युगसहस्रं स प्रादुर्भवति कार्यवान् ।
अनेकबहुसाहस्रैर्देवदेवो जगत्पतिः ॥ २-४४-३ (१३१०२)
ब्रह्माणं कपिलं चैव परमेष्ठिं तथैव च ।
देवान्सप्तर्षिभिश्चैव शङ्करं च महायशाः ॥ २-४४-४ (१३१०३)
सनत्कुमारं भगवान्मनुं चैव प्रजापतिम् ।
पुरा चक्रे च देवादिः प्रदीप्ताग्निसमप्रभः ॥ २-४४-५ (१३१०४)
येन चार्णवमध्यस्थौ नष्टेस्थावरजङ्गमे ।
नष्टदेवासुरवरे प्रनष्टोरगराक्षसे ॥ २-४४-६ (१३१०५)
योद्धुकामौ सुदुर्धर्षौ भ्रातरौ मधुकैठभौ ।
हतौ भगवता तेन ततो दत्त्वा वरं परम् ॥ २-४४-७ (१३१०६)
भूमिं बद्ध्वा कृतौ पूर्वावजेयौ द्वौ महाऽसुरौ ।
तौ कर्णमलसंभूतौ विष्णोस्तस्य महात्मनः ॥ २-४४-८ (१३१०७)
महार्णवे प्रस्वपतः शैलराजसमौ स्थितौ ।
तौ विवेश स्वयं वायुर्ब्रह्मणा साधु चोदितः ॥ २-४४-९ (१३१०८)
तौ दिवं छादयित्वा तु ववृधाते महाऽसुरौ ।
वायुप्रमाणौ तौ दृष्ट्वा ब्रह्मा पर्यमृशच्छनैः ॥ २-४४-१० (१३१०९)
एकं मृदुतरं वेत्ति कठिनं वेत्ति चापरम् ।
नामनी तु तयोश्चक्रे सविता सलिलोद्भवः ॥ २-४४-११ (१३११०)
मृदुस्त्वयं मधुर्नाम कठिनः कैठभः स्वयम् ।
तौ दैत्यौ कृतनामानौ चेरतुर्बलगर्वितौ ॥ २-४४-१२ (१३१११)
तौ पुराऽथ दिवं सर्वां प्राप्तौ राजन्महासुरौ ।
प्रच्छाद्याथ दिवं सर्वां चेरतुर्मधुकैठभौ ॥ २-४४-१३ (१३११२)
सर्वमेकार्णवं लोकं योद्धुकामौ सुनिर्भयौ ।
तौ गतावसुरौ दृष्ट्वा ब्रह्मा लोकपितामहः ॥ २-४४-१४ (१३११३)
एकार्णवाम्बुनिचये तत्रैवान्तरधीयत ।
स पद्मात्पद्मनाभस्य नाभिदेशात्समुत्थितात् ॥ २-४४-१५ (१३११४)
आससाद स्वयं जन्म तत्पङ्कजमपङ्कजम् ।
पूजयामास वसतिं ब्रह्मा लोकपितामहः ॥ २-४४-१६ (१३११५)
तावुभौ जलगर्भस्थौ नारायणचतुर्मुखौ ।
बहून्वर्षायुतानप्सु शयानौ न च कम्पितौ ॥ २-४४-१७ (१३११६)
अथ दीर्घस्य कालस्य तावुभौ मधुकैठभौ ।
आजग्मतुस्तौ तं देशं यत्र ब्रह्मा व्यवस्थितः ॥ २-४४-१८ (१३११७)
तौ दृष्ट्वा लोकनाथस्तु रोषात्संरक्तलोचनः ।
उत्पपाताथ शयनात्पद्मनाभो महाद्युतिः ॥ २-४४-१९ (१३११८)
तद्युद्धमभवद्घोरं तयोस्तस्य च भारत ।
एकार्णवे तदा घोरे त्रैलोक्ये जलतां गते ॥ २-४४-२० (१३११९)

तदभूत्तुमुलं युद्धं वर्षसङ्ख्यासहस्रशः ।
न च तावसुरौ युद्धे तदा श्रममवापतुः ॥ २-४४-२१ (१३१२०)
अथ दीर्घस्य कालस्य तौ दैत्यौ युद्धदुर्मदौ ।
ऊचतुः प्रीतमनसौ देवं नारायणं प्रभुम् ॥ २-४४-२२ (१३१२१)
प्रीतौ स्वस्तव युद्धेन श्लाघ्यस्त्वं मृत्युरावयोः ।
आवां जहि न यत्रोर्वा सलिलेन परिप्लुता ॥ २-४४-२३ (१३१२२)
हतौ च तव पुत्रत्वं प्राप्नुयाव सुरोत्तम ।
यो ह्यानां युधि निर्जेता तस्यावां विहितौ सुतौ ॥ २-४४-२४ (१३१२३)
तयोस्तु वचनं श्रुत्वा तदा नारायणः प्रभुः ।
तौ प्रहस्य मृधे दैत्यौ दोर्भ्यां च समपीडयम् ॥ २-४४-२५ (१३१२४)
ऊरुभ्यां निधनं चक्रे तावुभौ मधुकैठबौ ।
तौ हतौ चाप्लुतौ तोये वपुर्भ्यामेकतां गतौ ॥ २-४४-२६ (१३१२५)
मेदो मुमुचतुर्दैत्यौ मज्जमानौ जलोर्मिभिः ।
मेदसा तज्जलं व्याप्तं ताभ्यामन्तर्दधे तदा ॥ २-४४-२७ (१३१२६)
नारायणश्च भगवानसृजद्विविधाः प्रजाः ।
दैत्ययोर्मेदसा छन्ना सर्वा राजन्वसुन्धरा ॥ २-४४-२८ (१३१२७)
तदाप्रभृति कौन्तेय मेदिनीति स्मृता मही ।
प्रभावात्पद्मनाभस्य शाश्वती च कृता नृणाम् ॥ ॥ २-४४-२९ (१३१२८)

इति श्रीमन्महाभारते सभापर्वणि अर्घाहरणपर्वणि
चतुश्चत्वारिंशोऽध्यायः ॥ ४४.।

---

सभ-०४५
॥ श्रीः ॥
२.४५. अध्यायः ४५

Mahabharata - Sabha Parva - Chapter Topics
वराहावतारकथनम् ॥ १.।
Mahabharata - Sabha Parva - Chapter Text

भीष्म उवाच ॥
प्रादुर्भावसहस्राणि समतीतान्यनेकशः ।
यथाशक्ति तु वक्ष्यामि शृणु तान्कुरुनन्दन ॥ २-४५-१ (१३१२९)
पुरा कमलनाभस्य स्वपतः सागराम्भसि ।
पुष्करे यत्र सम्भूता देवा ऋषिगणैः सह ॥ २-४५-२ (१३१३०)
एष पौष्करिको नाम प्रादुर्भावः प्रकीर्तितः ।
पुराणैः कथ्यते यत्र वेदश्रुतिसमाहितः ॥ २-४५-३ (१३१३१)

वाराहस्तु श्रुतिसुखः प्रादुर्भावो महात्मनः ।
यत्र विष्णुः सुरश्रेष्ठो वाराहं रूपमास्थितः ॥ २-४५-४ (१३१३२)
उज्जहार महीं तोयात्सशैलवनकाननाम् ।
वेदपादो यूपदंष्ट्रः क्रतुदन्तश्चितीमुखः ॥ २-४५-५ (१३१३३)
अग्निजिह्वो दर्भरोमा ब्रह्मशीर्षो महातपाः ।
अहोरात्रेक्षणो दिव्यो वेदाङ्गः श्रुतिभूषणः ॥ २-४५-६ (१३१३४)
आज्यनासः स्रुवं तुण्डं सामघोषस्वनो महान् ।
धर्मसत्यमयः श्रीमान्कर्मविक्रमसत्कृतः ॥ २-४५-७ (१३१३५)
प्रायश्चित्तमुखो धीरः पशुजानुर्महावृषः ।
औद्गात्रहोमलिङ्गोऽसौ पशुबीजमहौषधिः ॥ २-४५-८ (१३१३६)
बाह्यन्तरात्मा मन्त्रास्थिविकृतः सौम्यदर्शनः ।
वेदिस्कन्धो हविर्गन्धो हव्यकव्याभिवेगवान् ॥ २-४५-९ (१३१३७)
प्राग्वंशकायो द्युतिमान्नानादीक्षाभिरूर्जितः ।
दक्षिणाहृदयो योगी महाशास्त्रमयो महान् ॥ २-४५-१० (१३१३८)
उपाकर्मोष्ठरुचकः प्रावर्ग्यावर्तभूषणः ।
शालापत्नीसहायो वै मणिशृङ्गसमुच्छ्रितः ॥ २-४५-११ (१३१३९)
एवं यज्ञवराहो वै भूत्वा विष्णुः सनातनः ।
महीं सागरपर्यन्तां सशैलवनकाननाम् ॥ २-४५-१२ (१३१४०)
एकार्णवजले भ्रष्टामेकार्णवगतः प्रभुः ।
मज्जन्तीं सलिले तस्मिन्स्वदेवीं पृथिवीं तदा ॥ २-४५-१३ (१३१४१)
उज्जहार विषाणेन मार्गण्डेयस्य पश्यतः ।
शृङ्गेण यः समुद्धृत्य लोकानां हितकाम्यया ॥ २-४५-१४ (१३१४२)
सहस्रशीर्षो देवेशो निर्ममे जगतीं प्रभुः ।
एवं यज्ञवराहेण भूतभव्यभात्मना ॥ २-४५-१५ (१३१४३)
उद्धृता पृथिवी देवी पूज्या वै सागराम्बरा ।
निहता दानवाः सर्वे देवदेवेन विष्णुना ॥ २-४५-१६ (१३१४४)
वाराहः कथितो ह्येष नारसिंहमतो शृणु ।
यत्र भूत्वा मृगेन्द्रेण हिरण्यकशिपुर्हतः ॥ ॥ २-४५-१७ (१३१४५)

इति श्रीमन्महाभारते सभापर्वणि अर्घाहरणपर्वणि
पञ्चचत्वारिंशोऽध्यायः ॥ ४५ ॥

---

सभ-०४६
॥ श्रीः ॥
२.४६. अध्यायः ४६

हिरण्यकशिपुना समुद्रे तपश्चरणम् ॥ १.। तपः प्रसन्नेन ब्रह्मणा तस्मै वरदानम् ॥२.। तस्य वरप्राप्त्या भीतानां देवानां ब्रह्मणा परिसान्त्वनम् ॥ ३.। हिरण्यकशइपुना त्रैलोक्यपीडने आत्मानं शरणं गतानां देवानां श्रीहरिणाऽभयप् रदानम् ॥ ४.। नृसिंहरूपिणा हरिणा हिरण्यकशिपुहननम् ॥ ५.।

Mahabharata - Sabha Parva - Chapter Text

भीष्म उवाच ।
दैत्येन्द्रो बलवान्राजन्सुरारिर्बलगर्वितः ।
हिरण्यकशिपुर्नाम आसीत्रैलोक्यकण्टकः ॥ २-४६-१ (१३१४६)
दैत्यानामादिपुरुषो वीर्येणाप्रतिमो बली ।
प्रविश्य जलधं राजंश्चकार तप उत्तमम् ॥ २-४६-२ (१३१४७)
दशवर्षसहस्राणि शतानि दश पञ्च च ।
व्रतोपवासतस्तस्थौ स्याणुमौनव्रतो दृढः ॥ २-४६-३ (१३१४८)
ततः शमदमाभ्यां च ब्रह्मचर्येण चानघ ।
ब्रह्मा प्रीतमनास्तस्य तपसा नियमेन च ॥ २-४६-४ (१३१४९)
ततः स्वयम्भूर्भगवान्स्वयमागम्य भूपते ।
विमानेनार्कवर्णेन हंसयुक्तेन भास्वता ॥ २-४६-५ (१३१५०)
आदित्यैर्वसुभिः साध्यैर्मरुद्भिर्दैवतैस्तथा ।
रुद्रैर्विश्वसहायैश्च यक्षराक्षसकिन्नरैः ॥ २-४६-६ (१३१५१)
दिशाभिर्विदिशाभिश्च नदीभिः सागरैः सह ।
नक्षत्रैश्च मुहूर्तैश्च खेचरैश्चापरैर्ग्रहैः ॥ २-४६-७ (१३१५२)
देवर्षिभिस्तपोयुक्तैः सिद्धैः सप्तर्षिभिस्तदा ।
राजर्षिभिः पुण्यतमैर्गन्धर्वैरप्सरोगणैः ॥ २-४६-८ (१३१५३)
चराचरगुरुः श्रीमान्वृतः सर्वसुरैस्तथा ।
ब्रह्मा ब्रह्मविदां श्रेष्ठो दैत्यमागम्य चाब्रवीत् ॥ २-४६-९ (१३१५४)
प्रीतोऽस्मि तव भक्तस्य तपसाऽनेन सुव्रत ।
वरं वरय भद्रं ते यथेष्टं काममाप्नुहि ॥ २-४६-१० (१३१५५)
हिरण्यकशिपुरुवाच। २-४६-११क्ष् (१४६५)
न देवा न च गन्धर्वा न यक्षोरगराक्षसाः ।
न मानुषाः पिशाचाश्च हन्युर्मां देवसत्तम ॥ २-४६-११ (१३१५६)
ऋषयो वा न मां शापैः क्रुद्धा लोकपितामह ।
शपेयुस्तपसा युक्ता वर एष वृतो मया ॥ २-४६-१२ (१३१५७)
न शस्त्रेण नचास्त्रेण गिरिणा पादपेन च ।
न शुष्केण न चार्देण स्यान्न वाऽन्येन मे वधः ॥ २-४६-१३ (१३१५८)
नाकाशे नाथ भूमौ वा रात्रौ वा दिवसेपि वा ।

नान्तर्वा न बहिर्वापि स्याद्वधो मे पितामह ॥ २-४६-१४ (१३१५९)
पशुभिर्वा मृगैर्न स्यात्पक्षिभिर्वा सरीसृपैः ।
ददासि ------। २-४६-१५ (१३१६०)
ब्रह्मोवाच। २-४६-१६क्ष् (१४६६)
एते दिव्या---------------।
सर्वकामवरां---------------॥ २-४६-१६ (१३१६१)
एवमुक्त्वा स ------------हि ।
रराज ब्रह्मलोके ॥ २-४६-१७ (१३१६२)
ततो देवाश्च -------------।
वरप्रदानं श्रुत्वै-------------॥ २-४६-१८ (१३१६३)
देवा ऊचुः। २-४६-१९क्ष् (१४६७)
वरेणाने भग--------------।
तत्प्रसीदस्व भगवन्वधोपायोऽस्य चिन्त्यताम् ॥ २-४६-१९ (१३१६४)
भीष्म उवाच ॥ २-४६-२०क्ष् (१४६८)
ततो लोकहितं वाक्यं श्रुत्वा देवः प्रजापतिः ।
प्रोवाच भगवान्वाक्यं सर्वदेवगणांस्तदा ॥ २-४६-२० (१३१६५)
अवश्यं त्रिदशास्तेन प्राप्तव्यं तपसः फलम् ।
तपसोऽन्तेऽस्य भगवान्वधं कृष्णः करिष्यति ॥ २-४६-२१ (१३१६६)
एतच्छ्रुत्वा सुराः सर्वे ब्रह्मणा तस्य वै वधम् ।
स्वानि स्थानानि दिव्यानि जग्मुस्ते वै मुदान्विताः ॥ २-४६-२२ (१३१६७)
लब्धमात्रे वरे चापि सर्वास्ता बाधते प्रजाः ।
हिरण्यकशिपुर्दैत्यो वरदानेन दर्पितः ॥ २-४६-२३ (१३१६८)
राज्यं चकार दैत्येन्द्रो दैत्यसङ्घैः समावृतः ।
सप्तद्वीपान्वशेचक्रे लोकालोकान्तरं बलात् ॥ २-४६-२४ (१३१६९)
दिव्यभोगान्समस्तान्वै लोके सर्वानवाप सः ।
देवांस्त्रिभुवनस्थांस्तु पराजित्य महासुरः ॥ २-४६-२५ (१३१७०)
त्रैलोक्यं वशमानीय स्वर्गे वसति दानवः ।
यदा वरमदोन्मत्तो न्यवसद्दानवो दिवि ॥ २-४६-२६ (१३१७१)
अथ लोकान्सगस्तांश्च विजित्य स महाबलः ।
भवेयमहमेवेन्द्रः सोमोऽग्निर्मारुतो रविः ॥ २-४६-२७ (१३१७२)
सलिलं चान्तरिक्षं च नक्षत्राणि दिशो दश ।
अहं क्रोधश्च कामश्च वरुणो वसवोऽर्यमा ॥ २-४६-२८ (१३१७३)
धनदश्च धनाध्यक्षो यक्षकिम्पुरुषाधिपः ।
एते भवेयमित्युक्त्वा स्वयं भूत्वा बलात्स च ॥ २-४६-२९ (१३१७४)
एषां गृहीत्वा स्थानानि तेषां कार्याण्यवाप सः ।
इज्यश्चासीन्मखवरैर्देवकिन्नरसत्तमैः ॥ २-४६-३० (१३१७५)

नरकस्थान्समानीय स्वर्गस्थांश्च चकार सः ।
एवमादीनि कर्माणि कृत्वा दैत्यपतिर्बली ॥ २-४६-३१ (१३१७६)
आश्रमेषु महाभागान्मुनीन्वै शंसितव्रतान् ।
सत्यधर्मपरान्दान्तान्पुरा धर्षितवांस्तु सः ॥ २-४६-३२ (१३१७७)
याज्ञीयान्कृतबान्दैत्यन्याजकांश्चैव देवताः ।
यत्रयत्र सुरा जग्मुस्तत्रतत्र व्रजत्युत ॥ २-४६-३३ (१३१७८)
स्थानानि देवतानां तु हृत्वा राज्यमकारयत् ।
पञ्चकोट्यश्च वर्षाणि अयुतान्येकषष्टि च ॥ २-४६-३४ (१३१७९)
षष्टिश्चैव सहस्राणां जग्मुस्तस्य दुरात्मनः ।
एतद्वर्षं स दैत्येन्द्रो भोगैश्वर्यमवाप सः ॥ २-४६-३५ (१३१८०)
तेनातिबाध्यमानास्ते दैत्येन्द्रेण बलीयसा ।
ब्रह्मलोकं सुरा जग्मुः शर्वशक्रपुरोगमाः ॥ २-४६-३६ (१३१८१)
पितामहं समासाद्य खिन्नाः प्राञ्जलयोऽब्रुवन् ॥ २-४६-३७ (१३१८२)
देवा ऊचुः। २-४६-३८क्ष् (१४६९)
भगवन्भूतभव्येश नस्त्रायस्व इहागतान् ।
भयं दितिसुताद्घोराद्भवत्यद्य दिवानिशम् ॥ २-४६-३८ (१३१८३)
भगवन्सर्वदैत्यानां स्वयम्भूरादिकृत्प्रभुः ।
स्रष्टा त्वं हव्यकव्यानामव्यक्तः प्रकृतिर्ध्रुवः ॥ २-४६-३९ (१३१८४)
ब्रह्मोवाच। २-४६-४०क्ष् (१४७०)
श्रूयतामापदेवं हि दुर्विज्ञेया मयापि च ।
नारायणस्तु पुरुषो विश्वरूपो महाद्युतिः ॥ २-४६-४० (१३१८५)
अव्यक्तः सर्वभूतानामचिन्त्यो विभुरव्ययः ।
ममापि स तु युष्माकं व्यसने परमा गतिः ॥ २-४६-४१ (१३१८६)
नारायणः परोऽव्यक्तादहमव्यक्तसम्भवः ।
मत्तो जज्ञुः प्रजा लोकाः सर्वे देवासुराश्च ते ॥ २-४६-४२ (१३१८७)
देवा यथाहं युष्माकं तथा नारायणो मम ।
पितामहोऽहं सर्वस्य स विष्णुः प्रपितामहः ॥ २-४६-४३ (१३१८८)
निश्चितं विषुधा दैत्यं स विष्णुस्तं हनिष्यति ।
तस्य नास्ति न शक्यं च तस्माद्व्रजत माचिरम् ॥ २-४६-४४ (१३१८९)
भीष्म उवाच ॥ २-४६-४५क्ष् (१४७१)
पितामहवचः श्रुत्वा सर्वे ते भरतर्षभ ।
विबुधा ब्रह्मणा सार्धं जग्मुः क्षीरोदधिं प्रति ॥ २-४६-४५ (१३१९०)
आदित्या वसवः साध्या विश्वे च मरुतस्तथा ।
रुद्रा महर्षयश्चैव अश्विनौ च सुरूपिणौ ॥ २-४६-४६ (१३१९१)
अन्ये च दिव्या ये राजंस्ते सर्वे सगणाः सुराः ।
चतुर्मुखं पुरस्कृत्य श्वेतद्वीपमुपागताः ॥ २-४६-४७ (१३१९२)

देवा ऊचुः। २-४६-४८क्ष् (१४७२)
त्रायस्व नोऽद्य देवेश हिरण्यकशिपोर्वधात् ।
त्वं हि नः परमो धाता ब्रह्मादीनां सुरोत्तम ॥ २-४६-४८ (१३१९३)
उत्फुल्लाम्बुजपत्राक्ष शत्रुपक्षभयङ्कर ।
क्षयाय दितिवंशस्य शरणं त्वं भविष्यसि ॥ २-४६-४९ (१३१९४)
भीष्ण उवाच ॥ २-४६-५०क्ष् (१४७३)
तद्देवानां वचः श्रुत्वा तदा विष्णुः शुचिश्रवाः ।
अदृश्यः सर्वभूतात्मा वक्तुमेवोपचक्रमे ॥ २-४६-५० (१३१९५)
विष्णुरुवाच ॥ २-४६-५१क्ष् (१४७४)
भयं त्यजध्वममरा अभयं वो ददाम्यहम् ।
तदेव त्रिदिवं देवाः प्रतिपद्यत माचिरम् ॥ २-४६-५१ (१३१९६)
एषोऽहं सगणं दैत्यं वरदानेन दर्पितम् ।
अवध्यममरेन्द्राणां दानवेन्द्रं निहन्म्यहम् ॥ २-४६-५३ ब्रह्मोवाच॥
२-४६-५२ (१३१९७)
भहवन्देवदेवेश खिन्ना एते भृशं सुराः ।
तस्मात्त्वं जहि दैत्येन्द्रं क्षिप्रं कालोऽस्य माचिरम् ।
एष त्वं सगणं दैत्यं वरदानेन दर्पितम् ॥ २-४६-५३ (१३१९८)
विष्णुरुवाच ॥ २-४६-५४क्ष् (१४७५)
क्षिप्रमेव करिष्यामि त्वरया दैत्यनाशनम् ।
तस्मात्त्वं विबुधाश्चैव प्रतिपद्यत वै दिवम् ॥ २-४६-५४ (१३१९९)
भीष्म उवाच ॥ २-४६-५५क्ष् (१४७६)
एवमुक्त्वा तु भगवान्विसृज्य त्रिदिवेश्वरान् ।
नरस्यार्धतनुर्भूत्वा सिंहस्यार्धतनुः पुनः ॥ २-४६-५५ (१३२००)
नारसिंहेन वपुषा पाणिं संस्पृश्य पाणिना ।
भीमरूपो महातेजा व्यादितास्य इवान्तकः ॥ २-४६-५६ (१३२०१)
हिरण्यकशिपुं राजञ्जगाम हरिरीश्वरः ।
दैत्यास्तमागतं दृष्ट्वा नारसिंहं महाबलम् ॥ २-४६-५७ (१३२०२)
ववर्षुः शस्त्रवर्षैस्ते सुसङ्क्रुद्धास्तदा हरिम् ।
तैः सृष्टसर्वशस्त्राणि भक्षयामास वै हरिः ॥ २-४६-५८ (१३२०३)
जघान न रणे दैत्यान्सहस्राणि बहूनि च ।
तान्निहत्य च दैतेयान्सर्वान्क्रुद्धान्महाबलान् ॥ २-४६-५९ (१३२०४)
अभ्यधावत्सुसङ्क्रुद्धो दैत्येन्द्रं बलगर्वितम् ।
जीमूतघनसङ्काशो जीमूतघननिस्वनः ॥ २-४६-६० (१३२०५)
जीमूत इव दीप्तौजा जीमूत इव वेगवान् ।
दैत्यं सोऽतिबलं दृप्तं दृप्तशार्दूलविक्रमम् ॥ २-४६-६१ (१३२०६)
दृप्तैर्दैत्यगणैर्गुप्तं खरैर्नखमुकैरुत ।

ततः कृत्वा तु युद्धं वै तेन दैत्येन वै हरिः ॥ २-४६-६२ (१३२०७)
सन्ध्याकाले महातेजा भवनान्ते त्वरान्वितः ।
ऊरौ निधाय दैत्येन्द्रं निर्बिभेद नखैस्तदा ॥ २-४६-६३ (१३२०८)
महाबलं महावीर्यं वरदानेन गर्वितम् ।
दैत्यश्रेष्ठं सुरश्रेष्ठो जघान तरसा हरिः ॥ २-४६-६४ (१३२०९)
हिरण्यकशिपुं हत्वा सर्वदैत्यांश्च वै तदा ।
विबुधानां प्रजानां च हितं कृत्वा महाद्युतिः ॥ २-४६-६५ (१३२१०)
प्रमुमोद हरिर्देवः प्राप्य धर्मं तदा भुवि ।
एष ते नारसिंहोऽत्र कथितः पाण्डुनन्दन। २-४६-६६ (१३२११)
शृणु त्वं वामनं नाम प्रादुर्भावं महात्मनः ॥ ॥ २-४६-६७ (१३२१२)

इति श्रीमन्महाभारते सभापर्वणि अर्घाहरणपर्वणि
षट्चत्वारिंशोऽध्यायः ॥ ४६.।

---

सभ-०४७
॥ श्रीः ॥
२.४७. अध्यायः ४७

Mahabharata - Sabha Parva - Chapter Topics
बलिनिपीडितैरिन्द्रादिभिः प्रार्थितेन हरिणा अदित्यां
वामनत्वेनावतीर्य बलि म्प्रति याचनम् ॥ १.। त्रिविक्रमरूपिणो
हरेः पादाङ्गुष्ठनखनिर्भिण्णोर्ध्वाण्डाद्गङ्गायाः प्रादु र्भावो
बलिनिग्रहश्च ॥ २.।
Mahabharata - Sabha Parva - Chapter Text

भीष्म उवाच ॥
पुरा त्रेतायुगे राजन्बलिर्वैरोजनोऽभवत् ।
दैत्यानां पार्थिवो वीरो बलेनाप्रतिमो बली ॥ २-४७-१ (१३२१३)
तदा बलिर्महाराज दैत्यसङ्घैः समावृतः ।
विजेतुं तरसा शक्रमिन्द्रस्थानमवाप सः ॥ २-४७-२ (१३२१४)
तेन वित्रासिता देवा बलिनाऽऽखण्डलादयः ।
ब्रह्माणं तु पुरस्कृत्य गत्वा क्षीरोदधिं तदा ॥ २-४७-३ (१३२१५)
तुष्टुवुः सहिताः सर्वे देवं नारायणं प्रभुम् ।
स तेषां दर्शनं चक्रे विबुधानां हरिस्तदा ॥ २-४७-४ (१३२१६)
प्रसादजं तस्य विभोरदित्यां जन्म उच्यते ।
अदितेरपि पुत्रत्वमेत्य यादवनन्दनः ॥ २-४७-५ (१३२१७)

एष विष्णुरिति ख्यात इन्द्रस्यावरजोऽभवत् ।
तस्मिन्नेव च काले तु दैत्येन्द्रो बलवीर्यवान् ॥ २-४७-६ (१३२१८)
अश्वमेधं क्रतुश्रेष्ठमाहर्तुमुपचक्रमे ।
वर्तमाने तदा यज्ञे दैत्येन्द्रस्य युधिष्ठिर ॥ २-४७-७ (१३२१९)
स विष्णुर्मानवो भूत्वा प्रच्छन्नो ब्रह्मसंवृतः ।
मुण्डो यत्रोपवीती च कृष्णाजिनधरः शिखी ॥ २-४७-८ (१३२२०)
पालाशदण्डं सङ्गृह्य वामनोऽद्भुतदर्शनः ।
प्रविश्य स बलेर्यज्ञे वर्तमानो च दक्षिणाम् ॥ २-४७-९ (१३२२१)
देहीत्युवाच दैत्येन्द्रं विक्रमांस्त्रीनिहैव ह ।
दीयतां त्रिपदीमात्रमित्ययाचन्महासुरम् ॥ २-४७-१० (१३२२२)
स तथेति प्रतिश्रुत्य प्रददौ विष्णवे तदा ।
तेन लब्ध्वा हिरर्भूमिं जृम्भयामास वै भृशम् ॥ २-४७-११ (१३२२३)
स शिशुः सदिवं खं च पृथिवीं वच विशाम्पते ।
त्रिभिर्विक्रमणैश्चैव सर्वमाक्रमताभिभूः ॥ २-४७-१२ (१३२२४)
बलेर्बलवतो यज्ञे बलिना विष्णुना पुरा ।
विक्रमैस्त्रिभिरक्षोभ्याः क्षोभितास्ते महासुराः ॥ २-४७-१३ (१३२२५)
विप्रचित्तिमुखाः क्रुद्धाः सर्वसङ्घा महासुराः ।
नानावक्त्रा महाकाया नानावेषधरा नृप ॥ २-४७-१४ (१३२२६)
नानाप्रहरणा रौद्रा नानामाल्यानुलेपनाः ।
स्वान्यायुधानि सङ्गृह्य प्रदीप्ता इव तेजसा ॥ २-४७-१५ (१३२२७)
क्रममाणं हरिं तत्र उपावर्तन्त भारत ।
प्रमथ्य सर्वान्दैतेयान्पादहस्ततलैस्तु तान् ॥ २-४७-१६ (१३२२८)
रूपं कृत्वा महाभीमं जहाराशु स मेदिनीम् ।
सम्प्राप्य दिवमाकाशमादित्यसदने स्थितः ॥ २-४७-१७ (१३२२९)
अत्यरोचत भूतात्मा आदित्यस्यैव तेजसा ।
प्रकाशयन्दिशः सर्वाः प्रदिशश्च महायशाः ॥ २-४७-१८ (१३२३०)
शुशुभे स महाबाहुः सर्वलोकान्प्रकाशयन् ।
तस्य विक्रमतो भूमिं चन्द्रादित्यौ स्तनान्तरे ॥ २-४७-१९ (१३२३१)
नभस्तु क्रममाणस्य नाभ्यां किल तदा स्थितौ ।
परमाक्रममाणस्य नानुभ्यां तौ व्यवस्थितौ ॥ २-४७-२० (१३२३२)
विष्णोरमितवीर्यस्य वदन्त्येवं द्विजातयः ।
अथास्य पादाक्रमणात्पफालाण्डो युधिष्ठिरः ॥ २-४७-२१ (१३२३३)
तच्छिद्रात्स्यन्दिनी तस्य पादभ्रष्टा तु निम्नगा ।
ससार सागरं सा तु पावनी सागरंगमा ॥ २-४७-२२ (१३२३४)
जहार मेदिनीं सर्वां हत्वा दानवपुङ्गवान् ।
आसुरीं श्रियमाहृत्य त्रील्लोकान्स जनार्दन ॥ २-४७-२३ (१३२३५)

सपुत्रदारानसुरान्पाताले संन्यवेशयत् ।
नमुचिः शम्बरश्चैव प्रह्लादश्च महामनाः ॥ २-४७-२४ (१३२३६)
महाभूतानि भूतात्मा सविशेषानि वै हरिः ।
कालं च सकलं राजन्गात्रभूतान्यदर्शयत् ॥ २-४७-२५ (१३२३७)
तस्य गात्रे जगत्सर्वमानीतमधिपश्यति ।
न किञ्चिदस्ति लोकेषु यदनाप्तं महात्मना ॥ २-४७-२६ (१३२३८)
तद्धि रूपमुपेन्द्रस्य देवदानवमानवाः ।
दृष्ट्वा संमुमुहुः सर्वे विष्णुतेजोऽभिपीडिताः ॥ २-४७-२७ (१३२३९)
बलिर्बद्धोऽभिमानी च यज्ञवाटे महात्मना ।
विरोचनकुलं सर्वं पाताले विनिवेशितम् ॥ २-४७-२८ (१३२४०)
एवंविधानि कर्माणि कृत्वा गरुडावाहनः ।
न विस्मयमुपागच्छत्पारमेष्ठ्येन तेजसा ॥ २-४७-२९ (१३२४१)
स सर्वमसुरैश्वर्यं सम्प्रदाय शचीपतेः ।
त्रैलोक्यं च ददौ शक्रे विष्णुर्दानवसूदनः ॥ २-४७-३० (१३२४२)
एष ते वामनो नाम प्रादुर्भावो महात्मनः ।
वेदविद्भिर्द्विजैरेतच्छ्रूयते वैष्णवं यशः ।
मानुषेषु ततो विष्णोः प्रादुर्भावांस्तथा शृणु ॥ ॥ २-४७-३१ (१३२४३)

इति श्रीमन्महाभारते सभापर्वणि अर्घाहरणपर्वणि
सप्तचत्वारिंशोऽध्यायः ॥ ४७ ॥

---

सभ-०४८
॥ श्रीः ॥
२.४८. अध्यायः ४८

Mahabharata - Sabha Parva - Chapter Topics
दत्तात्रेयनाम्नाऽवतीर्णस्य हरेः कार्तवीर्यार्जुनस्य वरदानादिकम् ॥ १.।
Mahabharata - Sabha Parva - Chapter Text

भीष्म उवाच ॥
विष्णोः पुनर्महाभागः प्रादुर्भावो महात्मनः ।
दत्तात्रेय इति ख्यात ऋषिरासीन्महायशाः ॥ २-४८-१ (१३२४४)
तेन नष्टेषु वेदेषु क्रियासु च मखेषु च ।
चातुर्वर्ण्ये च सङ्कीर्णे धर्मे शिथिलतां गते ॥ २-४८-२ (१३२४५)
अभवर्धति चाधर्मे सत्ये नष्टे स्थितेऽनृते ।
प्रजासु क्षीयमाणासु धर्मे चामूलतां पते ॥ २-४८-३ (१३२४६)
सयज्ञाः सक्रिया वेदाः प्रत्यानीता हि तेन वै ।

चातुर्वर्ण्यमसङ्कीर्णं कृतं तेन महात्मना ॥ २-४८-४ (१३२४७)
स एव वै यदा प्रादाद्धैहयाधिपतेर्वरम् ।
तं हैहयानामधिपस्त्वर्जुनोऽभिप्रसादयन् ॥ २-४८-५ (१३२४८)
वनं पर्यचरन्सम्यक्छुश्रूषुरनुसूयकः ।
निर्ममो निरहङ्कारो दीर्घकालमतोषयत् ॥ २-४८-६ (१३२४९)
आराध्य दत्तात्रेयं हि अगृङ्णात्स वरानिमान् ।
आप्तादाप्ततरान्विप्राद्विद्वान्विद्वन्निषेवितात् ॥ २-४८-७ (१३२५०)
ऋतेऽमरत्वं विप्रेण दत्तात्रेयेण धीमता ।
वरैश्चतुर्भिः प्रवृत इमान्वव्रे वरान्नृपः ॥ २-४८-८ (१३२५१)
श्रीमान्मनस्वी बलवान्सत्यवागनसूयकः ।
सहस्रबाहुर्भूयासमेषु मे प्रथमो वरः ॥ २-४८-९ (१३२५२)
जरायुजाण्डजं सर्वं सर्वं चैव चराचरम् ।
शास्तुमिच्छामि धर्मेण द्वितीयस्त्वेष मे वरः ॥ २-४८-१० (१३२५३)
पितृन्देवानृषीन्विप्रान्यजेयं विपुलैर्मखैः ।
अमित्रांश्च शितैर्बाणैस्तृतीयो व्रर एष मे ॥ २-४८-११ (१३२५४)
यस्य नासीन्न भविता न चास्ति सदृशः पुमान् ।
इह वा दिवि वा लोके स मे हन्ता भवेदिति ॥ २-४८-१२ (१३२५५)
सोऽर्जुनः कृतवीर्यस्य वरः पुत्रोऽभवद्युधि ।
स सहस्रं सहस्राणां माहिष्मत्यामवर्धत ॥ २-४८-१३ (१३२५६)
स भूमिमखिलां जित्वा द्वीपांश्चापि समुद्रिणः ।
नभसीवाज्वलत्सूर्यः पुण्यैः कर्मभिर्जुनः ॥ २-४८-१४ (१३२५७)
इन्द्रद्वीपं कशेरुं च कामद्वीपं गभस्तितम् ।
गन्धर्ववरुणद्वीपं सौह्मष्टममितप्रभः ॥ २-४८-१५ (१३२५८)
पूर्वैरजितपूर्वांश्च द्वीपनजयदर्जुनः ।
इदं तु कार्तवीर्यस्य बभूवासदृशं जनैः ॥ २-४८-१६ (१३२५९)
न पूर्वे नापरे तस्य गमिष्यन्ति गतिं नृपाः ।
यदर्णवे प्रयातस्य वस्त्रं न परिषिच्यते ॥ २-४८-१७ (१३२६०)
सौवर्णं सर्वमप्यासीद्विमानवरमुत्तमम् ।
चतुर्धा व्यभजद्राष्ट्रं तद्विभज्यान्वपालयत् ॥ २-४८-१८ (१३२६१)
एकांशेनाहरत्सेनामेकांशेनावसद्गृहान् ।
यस्तु तस्य तृतीयांशो राज्ञोऽभूज्जनसङ्ग्रहे ॥ २-४८-१९ (१३२६२)
आप्तः परमकल्याणस्तेन यज्ञानकल्पयत् ।
ये दस्यवो ग्रामचरा अरम्ये च वसन्ति ये ॥ २-४८-२० (१३२६३)
चतुर्थेन तु सोंऽशेन तान्सर्वान्प्रत्यषेधयत् ।
द्वाराणि नापिधीयन्ते पुरेषु नगरेषु च ॥ २-४८-२१ (१३२६४)
स एव राष्ट्रपालोऽभूत्स्त्रीपालोऽभवदर्जुनः ।

स ----- सः गोपालो विशाम्पते ॥ २-४८-२२ (१३२६५)
शतं वर्षसहस्राणामनुशिष्यार्जुनो महीम् ।
दत्तात्रेयप्रसादेन एवं राज्यं चकार सः ॥ २-४८-२३ (१३२६६)
एवं बहूनि कर्माणि चक्रे लोकहिताय सः ॥
दत्तात्रेय इति ख्यातः प्रादुर्भावो ह्ययं हरेः ।
कथितो भरतश्रेष्ट शृणु भूयो महात्मनः ॥ ॥ २-४८-२४ (१३२६७)

इति श्रीमन्महाभारते सभापर्वणि अर्घाहरणपर्वणि
अष्टचतत्वारिंशोऽध्यायः ॥ ४८ ॥

---

सभ-०४९
॥ श्रीः ॥
२.४९. अध्यायः ४९

Mahabharata - Sabha Parva - Chapter Topics
श्रीहरेर्जमदग्निगृहे रामनाम्नाऽवतरणम् ॥ १.। परशुरामेण
कार्तवीर्यार्जुनहननम् ॥ २.॥ त्रिस्सप्तकृत्वः क्षत्रियान्निहत्य
तद्रक्तजलैः स्वपितॄणां तर्पणम् ॥३.। काश्यपायाखण्डभूमण्डलं
दत्त्वा साल्वेनायोधने कुमारीणां वाण्या तं विसृज्य शस्त्रन्यासपूर्वकं
तपश्चरणम् ॥ ४.।
Mahabharata - Sabha Parva - Chapter Text

भीष्म उवाच ॥
तथा भृगुकुले जन्म यदर्थं च महात्मनः ।
जामदग्न्य इति ख्यातः प्रादुर्भावश्च वैष्णवः ॥ २-४९-१ (१३२६८)
जमदग्निसुतो राजन्रामो नाम स वीर्यवान् ।
हेहयान्तकरो राजन्स रामो बलिनां वरः ॥ २-४९-२ (१३२६९)
कार्तावीर्यो महावीर्यो बलेनाप्रतिमस्तदा ।
रामेण जामदग्न्येन हतो विषममाचरन् ॥ २-४९-३ (१३२७०)
तं कार्तवीर्यं राजानं हेहयानामरिन्दमम् ।
रथस्थं पार्थिवं रामः पातयित्वाऽवधीद्रणे ॥ २-४९-४ (१३२७१)
जम्भस्य यज्ञं हत्वा स ऋत्विजश्चैव संस्तरे ।
जम्भस्य मूर्ध्नि भेत्ता च हन्ता च शतदुन्दुभेः ॥ २-४९-५ (१३२७२)
स एष कृष्णो गोविन्दो जातो भृगुषु वीर्यवान् ।
सहस्रबाहुमुद्धर्तुं सहस्रजितमाहवे ॥ २-४९-६ (१३२७३)
क्षत्रियाणां चतुष्पष्टिमयुतानि महायशाः ।
सरस्वत्यां समेतानि एष वै धनुषाऽजयत् ॥ २-४९-७ (१३२७४)

ब्रह्मद्विषां धे तस्मिन्महस्राणि चतुर्दश ।
पुनर्जघान शूराणामतिक्रूरो रथर्षभः ॥ २-४९-८ (१३२७५)
ततो राज्ञां सहस्रं स भङ्क्ता पूर्वमरिन्दमः ।
सहस्रं मुसलेनाहन्सहस्रमुदकृन्तत ॥ २-४९-९ (१३२७६)
चतुर्दशसहस्राणि कृणद्रूममपाययत् ।
शिष्टान्ब्रह्मद्विषो जित्वा ततोऽस्नायत भार्गवः २-४९-१० (१३२७७)
रामरामेत्यमिक्रुष्टो ब्राह्मणैः क्षत्रियार्दितैः ।
निघ्नञ्शतसहस्राणि रामः परशुनाभिभूः ॥ २-४९-११ (१३२७८)
न ह्यमृष्यत तां वाचमार्तैर्भृशमुदीरिताम् ।
भृगो रामाभिधावेति यदाऽक्रन्दन्द्विजातयः ॥ २-४९-१२ (१३२७९)
काश्मीरान्दरदान्कुन्तीन्क्षुद्रकान्मालवाञ्छवान् ।
चेदिकाशिकरूशांश्च ऋषिकान्क्रथकैशिकान् ॥ २-४९-१३ (१३२८०)
अङ्गान्वङ्गान्कलिङ्गांश्च मागधान्काशिकोसलान् ।
रात्रायणान्वीतिहोत्रान्किरातान्कार्तिकावतान् ॥ २-४९-१४ (१३२८१)
एतानन्यांश्च राजन्यान्देशेदेशे सहस्रशः ।
निकृत्य निशितैर्बाणैः सम्प्रदाय विवस्वते ॥ २-४९-१५ (१३२८२)
कीर्णा क्षत्रियकोटीभिर्मेरुमन्दरभूषणा ।
त्रिः सप्तकृत्वः पृथिवी तेन निःक्षत्रिया कृता ॥ २-४९-१६ (१३२८३)
कृत्वा निःक्षत्रियां चैव भार्गवः स महायशाः ।
इन्द्रगोपकवर्णस्य जीवञ्जीवनिभस्य च ॥ २-४९-१७ (१३२८४)
पूरयित्वा च सरितः क्षतजस्य सरांसि च ।
चकार तर्पणं वीरः पितॄणां तासु तेषु च ॥ २-४९-१८ (१३२८५)
सर्वानष्टादश द्वीपान्वशमानीय भार्गवः ।
सोऽश्वमेधसहस्राणि नरमेधशतानि च ॥ २-४९-१९ (१३२८६)
इष्ट्वा सागरपर्यन्तां काश्यपाय महीं ददौ ।
तस्याग्रेणानुपर्येति भूमिं कृत्वा विपांसुलाम् ॥ २-४९-२० (१३२८७)
ततः कालकृतां सत्यां भार्गवाय महात्मने ।
गाधामप्यत्र गायन्ति ये पुराणविदो जनाः ॥ २-४९-२१ (१३२८८)
वेदिमष्टादशोत्सेधां हिरण्यस्यातिपौरुषीम् ।
रामेण जामदग्न्येन प्रतिजग्राह काश्यपः ॥ २-४९-२२ (१३२८९)
एवमिष्ट्वा महाबाहुः क्रतुभिर्भूरिदक्षिणैः ।
अन्यद्वर्षशतं रामः सौभे साल्वमयोधयत् ॥ २-४९-२३ (१३२९०)
ततः स भृगुशार्दूलस्तं सौभं योधयन्प्रभुः ।
सुबन्धुरं रथं राजन्नास्थाय भरतर्षभ ॥ २-४९-२४ (१३२९१)
नग्निकानां कुमारीणां गायन्तीनामुपाशृणोत् ।
रामराम महाबाहो भृगूणां कीर्तिवर्धन ॥ २-४९-२५ (१३२९२)

त्यज शस्त्राणि सर्वाणि न त्वं सौभं वधिष्यसि ।
शङ्खचक्रगदापाणिर्देवानामभयङ्करः ॥ २-४९-२६ (१३२९३)
युधि प्रद्युम्नसाम्बाभ्यां कृष्णः सौभं वधिष्यति ।
तच्छ्रुत्वा पुरुषव्याघ्रस्तत एव वनं ययौ ॥ २-४९-२७ (१३२९४)
न्यस्य सर्वाणि शस्त्राणि कालकाङ्क्षी महायशाः ।
रथं सर्वायुधं चैव शरान्परशुमेव च ॥ २-४९-२८ (१३२९५)
धनूंष्यप्सु प्रतिष्ठाप्य रामस्तेपे परं तपः ।
ह्रियं प्रज्ञां श्रियं कीर्तिं लक्ष्मीं चामित्रकर्शनः ॥ २-४९-२९ (१३२९६)
पञ्चाधिष्ठाय धर्मात्मा तं रथं विससर्ज ह ।
आदिकाले प्रवृत्तं तु व्यभजत्करमीश्वरः ॥ २-४९-३० (१३२९७)
नाघ्नतं श्रद्धया सौभं न ह्यशक्तो महायशाः ।
जामदग्न्य इति ख्यातो यस्त्वयं भगवानृपिः। २-४९-३१ (१३२९८)
सोऽस्य भागस्तपस्तेपे भार्गवो लोकविश्रुतः ॥ ॥ २-४९-३२ (१३२९९)

इति श्रीमन्महाभारते सभापर्वणि अर्घाहरणपर्वणि
एकोनपञ्चाशोऽध्यायः ॥ ४९.।

---

सभ-०५०
॥ श्रीः ॥
२.५०. अध्यायः ५०

Mahabharata - Sabha Parva - Chapter Topics
श्रीविष्णोर्दशरथगृहे रामत्वेनावतारः ॥ १.। विश्वामित्रेण
स्वाश्रमं नीतेन सलक्ष्मणेन रामेण सुबाह्वादिहननम्
॥ २.। सीतामुदूह्य निजनगरमेत्य पितृनिदेशेन सीतालक्ष्मणाभ्यां
सह वनं गतेन रामेण स्वरदूषणादिहननम् ॥ ३.। सीतावियोगिनः
सुग्रीवेण सख्यमेत्य वालिनं संहृतवतो रामस्य हनुमद्वचनेन
लङ्क आगमनम् ॥ ४.। रावणादीन्निहत्य सीताप्रमुखैः सहायोध्यां
गतेन रामेण लवणासुरं शत्रुघ्नेन घ आतयित्वा प्रजापालनम्
॥ ५.। सङ्ग्रहेण श्रीकृष्णचरित्रनिरूपणं कल्क्यवतारकथनं
च ॥ ६.।
Mahabharata - Sabha Parva - Chapter Text

भीष्म उवाच ॥
शृणु राजंस्ततो विष्णोः प्रादुर्भावं महात्मनः ।
अष्टाविंशे युगे चापि मार्कण्डेयपुरः सरः ॥ २-५०-१ (१३३००)
तिथौ नावमिके जज्ञे तथा दशरथादपि ।

कृत्वाऽऽत्मानं महाबाहुश्चतुर्धा विष्णुरव्ययः ॥ २-५०-२ (१३३०१)
लोके राम इति ख्यातस्तेजसा भास्करोपमः ।
प्रसादनार्थं लोकस्य विष्णुस्तत्र सनातनः ॥ २-५०-३ (१३३०२)
धर्मार्थमेव कौन्तेय जज्ञे तत्र महायशाः ।
तमप्याहुर्मनुष्येन्द्रं सर्वभूतपतेस्तनुम् ॥ २-५०-४ (१३३०३)
यज्ञविघ्नकरस्तत्र विश्वामित्रस्य भारत ।
सुबाहुर्निहतस्तेन मारीचस्ताडितो भृशम् ॥ २-५०-५ (१३३०४)
तस्मै दत्तानि चास्त्राणि विश्वमित्रेण धीमता ।
वधार्थं सर्वशत्रूणां दुर्वाराणि सुरैरपि ॥ २-५०-६ (१३३०५)
वर्तमाने महायज्ञे जनकस्य महात्मनः ।
भग्नं माहेश्वरं चापं क्रीडता लीलया भृशम् ॥ २-५०-७ (१३३०६)
ततस्तु सीतां जग्राह भार्यार्थे जानकीं विभुः ।
नगरीं पुनरासाद्य मुमुदे तत्र सीतया ॥ २-५०-८ (१३३०७)
कस्यचित्त्वथ कालस्य पित्रा तत्राभिचोदितः ।
कैकेय्याः प्रियमन्विच्छन्वनमभ्यवपद्यत ॥ २-५०-९ (१३३०८)
यः समाः सर्वधर्मज्ञश्चतुर्दश वने वसन ।
लक्ष्मणानुचरो रामः सर्वभूतहिते रतः ॥ २-५०-१० (१३३०९)
चतुर्दश वने तीर्त्वा तदा वर्षाणि भारत ।
रूपिणी यस्य पार्श्वस्था सीतेत्यभिहिता जनैः ॥ २-५०-११ (१३३१०)
पूर्वोचितत्वात्सा लक्ष्मीर्भर्तारमनुशोचति ।
जनस्थाने वसन्कार्यं त्रिदशानां चकार सः ॥ २-५०-१२ (१३३११)
मारीचं दूषणं हुत्वा खरं त्रिशिरसं तथा ।
चतुर्दश सहस्राणि रक्षसां घोरकर्मणाम् ॥ २-५०-१३ (१३३१२)
जघान रामो धर्मात्मा प्रजानां हितकाम्यय ।
विराधं च कबन्धं च राक्षसौ घोरकर्मिणौ ॥ २-५०-१४ (१३३१३)
जघान च तदा रामो गन्धर्वौ शाषविक्षतौ ।
स रावणस्य भगिनीनासाच्छेदमकारयत् ॥ २-५०-१५ (१३३१४)
भार्यावियोगं तं प्राप्य मृगयन्व्यचरद्वनम् ।
स तस्मादृश्यमूकं तु गत्वा पम्पामतीत्य च ॥ २-५०-१६ (१३३१५)
सुग्रीवं मारुतिं दृष्ट्वा चक्रे मैत्रीं तयोः स वै ।
अथ गत्वा स किष्किन्धां सुग्रीवेण तदा सह ॥ २-५०-१७ (१३३१६)
निहत्य वालिनं युद्धे वानरेद्रं महाबलम् ।
अभ्यपिञ्चत्तदा रामः सुग्रीवं वानरेश्वरम् ॥ २-५०-१८ (१३३१७)
ततः स वीर्यवान्राजंस्त्वरया वै समुत्सुकः ।
विचित्य वायुपुत्रेण लङ्कादेशं निवेदितः ॥ २-५०-१९ (१३३१८)
सेतुं वद्धवा समुद्रस्य वानरैः स समुत्सुकः ।

सीतायाः पदमन्विच्छन्रामो लङ्कां विवेश वै ॥ २-५०-२० (१३३१९)
देवोरगगणानां हि यक्षराक्षसपक्षिणाम् ।
तत्रावद्यं राक्षसेन्द्रं रावणं युधि दुर्जयम् ॥ २-५०-२१ (१३३२०)
युक्तं राक्षसकोटीभिर्भिन्नाञ्जनचयोपमम् ।
दुर्निरीक्ष्यं सुरगणैर्वरदानेन दर्पितम् ॥ २-५०-२२ (१३३२१)
जघान सचिवैः सार्धं सान्वयं रावणं रणे ॥ २-५०-२३ (१३३२२)
त्रैलोक्यकण्टकं वीरं महाकायं महाबलम् ।
रावमं सगणं हत्वा रामो भूतपतिः पुरा ॥ २-५०-२४ (१३३२३)
लङ्कायां तं महात्मानं राक्षसेन्द्रं विभीषणम् ।
अभिषिच्य ततो राम अमरत्वं ददौ तदा ॥ २-५०-२५ (१३३२४)
आरुह्य पुष्पकं रामः सीतामादाय पाण्डव ।
सबलं स्वपुरं गत्वा धर्मराज्यमपालयत् ॥ २-५०-२६ (१३३२५)
दानवो लवणो नाम मधोः पुत्रो महाबलः ।
शत्रुघ्नेन हतो राजंस्तदा रामस्य शासनात् ॥ २-५०-२७ (१३३२६)
एवं बहूनि कर्माणि कृत्वा लोकहिताय सः ।
राजं चकार विधिवद्रामो धर्मभृतां वरः ॥ २-५०-२८ (१३३२७)
शताश्वमेधानाजह्रे ज्योतिरुक्थ्यान्निरर्गलान् ।
नाश्रूयन्ताशुभा वाचो नात्ययः प्राणिनां तदा। २-५०-२९ (१३३२८)
न दस्युजं भयं चासीद्रामे राज्यं प्रशसति ।
ऋषीणां देवतानां च मनुष्याणां तथैव च ॥ २-५०-३० (१३३२९)
पृथिव्यां धार्मिकाः सर्वे रामे राज्यं प्रशासति ।
नाधर्मिष्ठो नरः कश्चिद्बभूव प्राणिनां क्वचित् ॥ २-५०-३१ (१३३३०)
प्राणापानौ समौ ह्यास्तां रामे राज्यं प्रशासति ।
गाधामप्यत्र गायन्ति ये पुराणविदो जनाः ॥ २-५०-३२ (१३३३१)
श्यामो युवा लोहिताक्षो मातङ्गानामिवर्षभः ।
आजानुबाहुः सुमुखः सिंहस्कन्धो महाबलः ॥ २-५०-३३ (१३३३२)
दशवर्षसहस्राणि दशवर्षशतानि च ।
राज्यं भोगं च सम्प्राप्य शशास पृथिवीमिमाम् ॥ २-५०-३४ (१३३३३)
रामो रामो राम इति प्राजानामभवन्कथाः ।
रामभूतं जगदिदं रामे राज्यं प्रशासति ॥ २-५०-३५ (१३३३४)
ऋग्यजुः सामहीनाश्च न तदाऽसन्द्विजायः ।
उषित्वा दण्डके कार्यं त्रिदशानां चकार सः ॥ २-५०-३६ (१३३३५)
पूर्वापकारिणं तं तु पौलस्त्यं मनुजर्षभम् ।
देवगन्धर्वनागानामरिं स निजघानह ॥ २-५०-३७ (१३३३६)
सत्ववान्गुणसम्पन्नो दीप्यमानः स्वतेजसा ।
एवमेव महाबाहुरिक्ष्वाकुकुलवर्धनः ॥ २-५०-३८ (१३३३७)

रावणं सगणं हत्वा दिवमाक्रमताभिभूः ।
इति दाशरथेः ख्यातः प्रादुर्भावो महात्मनः ॥ २-५०-३९ (१३३३८)
ततः कृष्णो महाबाहुर्भीतानामभयङ्करः ।
अष्टाविंशे युगे राजञ्जज्ञे श्रीवत्सलक्षणः ॥ २-५०-४० (१३३३९)
पेशलश्च वदान्यश्चलोके बहुमतो नृषु ।
स्मृतिमान्देशकालज्ञः शङ्खचक्रगदासिभृत् ॥ २-५०-४१ (१३३४०)
वासुदेव इति ख्यातो लोकानां हितकृत्सदा ।
वृष्णीनां च कुले जातो भूमेः प्रियचिकीर्षया ॥ २-५०-४२ (१३३४१)
शत्रूणां भयकृद्दाता मधुहेति स विश्रुतः ।
शकटार्जुनरामाणां कीलस्थानान्यसूदयत् ॥ २-५०-४३ (१३३४२)
कंसादीन्निजघानाजौ दैत्यान्मानुषविग्रहान् ।
अयं लोकहितार्थाय प्रादुर्भावो महात्मनः ॥ २-५०-४४ (१३३४३)
कल्की विष्णुयशा नाम भूयश्चोत्पत्स्यते हरिः ।
लेर्युगान्ते सम्प्राप्ते धर्मे शिथिलतां गते ॥ २-५०-४५ (१३३४४)
पाषण्डिनां गणानां हि वधार्थं भरतर्षभ ।
धर्मस्य च विवृद्ध्यर्थं विप्राणां हितकाम्यया ॥ २-५०-४६ (१३३४५)
एते चान्ये च बहवो विष्णोर्देवगणैर्युताः ।
प्रादुर्भावाः पुराणेषु गीयन्ते ब्रह्मवादिभिः ॥ ॥ २-५०-४७ (१३३४६)

इति श्रीमन्महाभारते सभापर्वणि अर्घाहरणपर्वणि पञ्चाशोऽध्यायः ॥ ५०।

---

सभ-०५१
॥ श्रीः ॥
२.५१. अध्यायः ५१

Mahabharata - Sabha Parva - Chapter Topics
युधिष्ठिरेण भीष्मम्प्रति विस्तरेण कृष्णकथाकथनप्रार्थना ॥ १। देवासुरयुद्धे पराजितानां देवानां स्मरणमात्रसंनिहितेन हरिणा दैत्यानां परा जयः ॥ २। भूम्या स्वभारावतरणं प्रार्थितेऽस्य विष्णोः भूमाववतारनिर्धारणम् ॥ ३।
Mahabharata - Sabha Parva - Chapter Text

वैशम्पायन उवाच ॥
एवमुक्ते तु कौन्तेयस्ततः कौरवनन्दनः ।
आबभाषे पुनर्भीष्मे धर्मराजो युधिष्ठिरः ॥ २-५१-१ (१३३४७)
भूय एव मनुष्येन्द्र उपेन्द्रस्य यशस्विनः ।

जन्म वृष्णिषु विज्ञातुमिच्छामि वदतां वर ॥ २-५१-२ (१३३४८)
यथैव भगवाञ्जातः क्षिताविह जनार्दनः ।
माधवेषु महाबुद्धिस्तन्मे ब्रूहि पितामह ॥ २-५१-३ (१३३४९)
वैशम्पायन उवाच। २-५१-४क्ष् (१४७७)
एवमुक्तस्ततो भीष्मः केशवस्य महात्मनः ।
माधवेषु तथा जन्म कथयामास वीर्यवान् ॥ २-५१-४ (१३३५०)
हन्त ते कथयिष्यामि युधिष्ठिर यथातथम् ।
यतो नारायणस्येह जन्म वृष्णिषु कौरव ॥ २-५१-५ (१३३५१)
पुरा लोके महाराज वर्तमाने कृते युगे ।
आसीत्रैलोक्यविख्यातः सङ्ग्रामस्तारकामयः ॥ २-५१-६ (१३३५२)
विरोचनो मयस्तारो वराहः श्वेत एव च ।
विप्रचित्तिः प्रलम्बश्च वृत्रजम्भबलादयः ॥ २-५१-७ (१३३५३)
नमुचिः कालनेमिश्च प्रह्लाद इति विश्रुतः ।
लम्बः किशोरः स्वर्भानुररिष्टो राक्षसेश्वरः ॥ २-५१-८ (१३३५४)
एते चान्ये च बहवो दैत्यसङ्घाः सहस्रशः ।
नानाशस्त्रधरा राजन्नानाभूषणवाहनाः ॥ २-५१-९ (१३३५५)
देवतानामभिमुखास्तस्थुर्दैतेयदानवाः ।
देवास्तु युध्यमानास्ते दानवानभ्ययू रणे ॥ २-५१-१० (१३३५६)
आदित्या वसवो रुद्राः साध्या विश्वे मरुद्गणाः ।
इन्द्रो यमश्च वरुणश्चन्द्रश्चैव धनेश्वरः ॥ २-५१-११ (१३३५७)
अश्विनौ च महावीर्यौ ये चान्ये देवतागणाः ।
चक्रुर्युद्धं महाघोरं दानवैश्च यथाक्रमम् ॥ २-५१-१२ (१३३५८)
युध्यमानाः समेयुश्च देवा दैतेयदानवैः ।
तद्युद्धमभवद्घोरं देवदानवसङ्कुलम् ॥ २-५१-१३ (१३३५९)
ताभ्यां बलाभ्यां सञ्जज्ञे तुमुलो विग्रहस्तदा ।
तीक्ष्णशस्त्रैः किरन्तोऽथ अभ्ययुर्देवदानवाः ॥ २-५१-१४ (१३३६०)
घ्नन्ति देवान्सगन्धर्वान्सयक्षोरगचारणान् ।
ते वध्यमाना दैतेयैर्देवसङ्घास्तदा रणे ॥ २-५१-१५ (१३३६१)
त्रातारं मनसा जग्मुर्देवं नारायमं प्रभुम् ।
एतस्मिन्नन्तरे तत्र जगाम हरिरीश्वरः ॥ २-५१-१६ (१३३६२)
दीपयञ्ज्योतिषा भूमिं शङ्खचक्रगदाधरः ।
तमागतं सुपर्णस्थं विष्णुं लोकनमस्कृतम् ॥ २-५१-१७ (१३३६३)
दृष्ट्वा मुदा युताः सर्वे भयं त्यक्त्वा रमे सुराः ।
चक्रुर्युद्धं पुनः सर्वे देवा दैतेयदानवैः ॥ २-५१-१८ (१३३६४)
तद्युद्धमभवद्घोरमचिन्त्यं रोमहर्षणम् ।
जघ्नुर्दैत्यान्रणे घोराः सर्वे शक्रपुरोगमाः ॥ २-५१-१९ (१३३६५)

ते बाध्यमाना बिबुधैर्दुद्रुवुदैत्यदानवाः ॥ २-५१-२० (१३३६६)
विद्रुतान्दानवान्दृष्ट्वा तदा भारत संयुगे ।
कालनेमिरिति ख्यातो दानवः प्रत्यदृश्यता ॥ २-५१-२१ (१३३६७)
शत्रुप्रहरणे घोरः शतबाहुः शताननः ।
शतशीर्षः स्थितः श्रीमाञ्छतशृङ्गं इवाचलः ॥ २-५१-२२ (१३३६८)
भास्कराकारमुकुटः शिञ्जिताभरणाङ्गदः ।
धूम्रकेतुर्हरिश्मश्रुर्निर्दष्टोष्टपुटाननः ॥ २-५१-२३ (१३३६९)
त्रैलोक्यान्तरविस्तारं धारयन्विपुलं वपुः ।
तर्जयन्वै रणे देवाञ्छादयन्वै दिशो दश ॥ २-५१-२४ (१३३७०)
अभ्यधावत्सुसङ्क्रुद्धो व्यादितास्य इवान्तकः ।
तत्र शस्त्रप्रतानैश्च देवान्धर्षितवान्त्रणे ॥ २-५१-२५ (१३३७१)
अभ्याययुः सुरान्सर्वान्पुनस्ते दैत्यदानवाः ।
आपीडयन्त्रणे क्रुद्धास्ततो देवान्युधिष्ठिर ॥ २-५१-२६ (१३३७२)
ते वध्यमाना विबुधाः समरे कालनेमिना ।
दैत्यैश्चैव महाराज दुद्रुवुस्ते दिशो दश ॥ २-५१-२७ (१३३७३)
विबुधान्विद्रुतान्दृष्ट्वा कालनेमिर्महा ऽसुरः ।
इन्द्रं यमं च वरुणं वायुं च धनदं रविम् ॥ २-५१-२८ (१३३७४)
एतांश्चान्यान्बलाञ्जित्वा तेषां कार्याण्यवाप सः ।
तान्सर्वान्सहसा जित्वा कालनेमिर्महासुरः ॥ २-५१-२९ (१३३७५)
ददर्श गगने विष्णुं सुपर्णस्थं महाद्युतिम् ।
तं दृष्ट्वा क्रोधताम्राक्षस्तर्जयन्नभ्ययात्तदा ॥ २-५१-३० (१३३७६)
स बाहुशतमुद्यम्य सर्वास्त्रग्रहणं रणे ।
रोषाद्भारत दैत्येन्द्रो विष्णोरुरसि पातयत् ॥ २-५१-३१ (१३३७७)
दैत्याश्च दानवाश्चैव सर्वे मयपुरोगमाः ।
स्वान्यायुधानि सङ्गृह्य सर्वे विष्णुमुपाद्रवन् ॥ २-५१-३२ (१३३७८)
स ताड्यमानो ऽतिबलैर्दैत्यैः सर्वायुधोद्यतैः ।
न चचाल हरिर्युद्धेऽकम्पमान इवाचलः ॥ २-५१-३३ (१३३७९)
पुनरुद्यम्य सङ्क्रुद्धः कालनेमिर्दृढां गदाम् ।
जघान गदया राजंस्तं विष्णुं गरुडं च वै ॥ २-५१-३४ (१३३८०)
तं दृष्ट्वा गुरडं श्रान्तं चक्रमुद्यस्य वै हरिः ।
शतं शिरांसि बाहूंश्च सोच्छिनत्कालनेमिनः ॥ २-५१-३५ (१३३८१)
जघानान्यांस्च तान्सर्वान्समरे दैत्यदानवान् ।
विबुधानामृषीणां च स्वानि स्थानानि वै ददौ ॥ २-५१-३६ (१३३८२)
दत्त्वा सुराणां सुप्रीतो योग्यकर्माणि भारत ।
जगाम ब्रह्मणा सार्धं ब्रह्मलोकं तदा हरिः ॥ २-५१-३७ (१३३८३)
ब्रह्मलोकं प्रविश्याश्च प्राप्य नारायणः प्रभुः ।

पौराणं ब्रह्मसदनं दिव्यं नारायणाश्रयम् ॥ २-५१-३८ (१३३८४)
स प्रविश्य तदा देवः स्तूयमानो महर्षिभिः ।
सहस्रशीर्षा भूत्वा च शयनायोपचक्रमे ॥ २-५१-३९ (१३३८५)
आदिदेवः पुराणात्मा निद्रावशमुपागतः ।
शेते सुखं सदा विष्णुर्मोहयञ्जगदव्ययः ॥ २-५१-४० (१३३८६)
जग्मुस्तस्याथ वर्षाणि शयानस्य महात्मनः ।
षट्त्रिंशच्छतसाहस्रं मानुषेणेह सङ्ख्यया ॥ २-५१-४१ (१३३८७)
जग्मुः कृतयुगत्रेताद्वापरान्ते बुबोध ह ।
ब्रह्मादिभिः स्तूयमानः सुरैश्चापि सहर्षिभिः ॥ २-५१-४२ (१३३८८)
उत्पत्य शयनाद्विष्णुर्ब्रह्मणा विबुधैः सह ।
देवानां च हितार्थाय ययौ देवसभां प्रति ॥ २-५१-४३ (१३३८९)
मेरोः शिरसि विन्यस्तां ज्वलन्तीं तां शुभां सभाम् ।
विविशुस्ते सुराः सर्वे ब्रह्मणा सह भारत ॥ २-५१-४४ (१३३९०)
जग्मुस्तत्र निषेदुस्ते सा निःशब्दा ह्यभूत्तदा ।
तत्र भूमिरुवाचाथ खेदात्करुणभाषिणी ॥ २-५१-४५ (१३३९१)
राज्ञां बलैर्बलवतां खिन्नास्मि भृशपीडिता ।
नित्यं भारपरिश्रान्ता दुःखं जीवाम्यहं सुराः ॥ २-५१-४६ (१३३९२)
पुरे पुरे च नृपतिः कोटिसङ्ख्यैर्बलैर्वृतः ।
राष्ट्रे राष्ट्रे च शतशो ग्रामाः कुलसहस्रिणः ॥ २-५१-४७ (१३३९३)
भूमिपानां सहस्रैश्च तेषां च बिलनां बलैः ।
ग्रामायुतैः पुरै राष्ट्रैरहं निर्विवरीकृता ॥ २-५१-४८ (१३३९४)
तस्माद्धारयितुं शक्त्या न क्षमासि जनानहम् ।
दैत्यैश्च बाध्यमानास्ताः प्राज नित्यं दुरात्मभिः ॥ २-५१-४९ (१३३९५)
भीष्ण उवाच। २-५१-५०क्ष् (१४७८)
भूमेस्तु वचनं श्रुत्वा देवो नारायणस्तदा ।
व्यादिश्य तान्सुरान्सर्वान्क्षितौ वस्तुं मनो दधे ॥ ॥ २-५१-५० (१३३९६)

इति श्रीमन्महाभारते सभापर्वणि अर्घाहरणपर्वणि
एकपञ्चाशोऽध्यायः ॥ ५१.।
Mahabharata - Sabha Parva - Chapter Footnotes

२-५१-४२ कृतयुगत्रेताद्वापराः अन्त इति छेदः ॥

---

सभ-०५२
॥ श्रीः ॥
२.५२. अध्यायः ५२

Mahabharata - Sabha Parva - Chapter Topics
विष्णुना देवानां भूमावुत्पत्तये आज्ञापनम् । ।१.। अवतीर्णे कृष्णे स्वर्गादागतानामिन्द्रादीनां श्रीकृष्णं स्तुत्वा पुनः स्व लोकगमनम् ॥ २.। श्रीकृष्णेन शकटासुरवधः। अर्जुनतरुभञ्जनम्। बृन्दावं गत्वा वने विहरणम् ॥ ३.।
Mahabharata - Sabha Parva - Chapter Text

भीष्ण उवाच ।
यच्चके भगवान्विष्णुर्वसुदेवसुतस्तदा ।
तत्तेऽहं सम्प्रवक्ष्यामि शृणु स्रवमशेषतः ॥ २-५२-१ (१३३९७)
वासुदेवस्य महात्म्यं चरितं च महात्मनः ।
हितार्थं सुरसर्त्यानां लोकानां च हिताय च ॥ २-५२-२ (१३३९८)
यदा दिवि विभुस्तात न रेमे भगवानसौ ।
ततो व्यादिशय भूतानि विभुर्भूमिसुखावहः ॥ २-५२-३ (१३३९९)
निग्रहार्थाय दैत्यानां चोदयामास वै तदा ।
मुरुतश्च वसूंश्चैव सूर्याचन्द्रमसावुभौ ॥ २-५२-४ (१३४००)
गन्धर्वाप्सरसश्चैव रुद्रादित्यांस्तथाऽश्विनौ ।
जायध्वं मानुषे लोके सर्वलोकमहेश्वराः ॥ २-५२-५ (१३४०१)
जङ्गमानि विशालाक्षो ह्यात्मार्थमसृजत्प्रभुः ।
जायन्तामिति गोविन्दस्तिर्यग्योनिगतैः सह ॥ २-५२-६ (१३४०२)
तानि सर्वाणि सर्वज्ञो व्यजायत यदोः कुले ।
आत्मानमात्मना तात कृत्वा बहुविधं हरिः ।
रत्यर्थमिह गास्तत्र ररक्ष पुरुषोत्तमः। २-५२-७ (१३४०३)
अजातशत्रो जातस्तु यथेष्ट भुवि भूमिप ।
कीर्त्यमानं मया तात निबोध भरतर्षभ ॥ २-५२-८ (१३४०४)
सागराः समकम्पन्त मुदा चेलुश्च पर्वताः ।
जज्वलुश्चाग्नयः शान्ता जायमाने जनार्दने ॥ २-५२-९ (१३४०५)
शिवाः सम्प्रववुर्वाताः प्रशान्तमभवद्रजः ।
ज्योतींषि सम्प्रकाशन्त जायमाने जनार्दने ॥ २-५२-१० (१३४०६)
देवदुन्दुभयश्चापि सस्वनुर्भृशमम्बरे ।
अभ्यवर्षंस्तदाऽऽगम्य देवताः पुष्पवृष्टिभिः ॥ २-५२-११ (१३४०७)
गीर्भिर्मङ्गलयुक्ताभिः स्तुवन्वै मधुसदनम् ।
उपतस्थुस्तदा प्रीताः प्रादुर्भावे महर्षयः ॥ २-५२-१२ (१३४०८)
ततस्तानभिसम्प्रेक्ष्य नारदप्रमुखानृषीन् ।
उपानृत्यन्नुपजगुर्गन्धर्वाप्सरसां गणाः ॥ २-५२-१३ (१३४०९)
उपतस्थे च गोविन्दं सहस्राक्षः शचीपतिः ।

अभ्यभाषत तेजस्वी महर्षीन्पूजयंस्तदा ॥ २-५२-१४ (१३४१०)
कृत्वा च देवकार्याणि कृत्वा देवहितानि च ।
खं लोकं लोककृद्देवः पुनर्गच्छति तेजसा ॥ २-५२-१५ (१३४११)
इत्युक्त्वा ऋषिभिः सार्धं जगाम त्रिदिवं पुनः ।
अभ्यनुज्ञाय तान्सर्वाञ्छादयन्प्रकृतिं पराम् ॥ २-५२-१६ (१३४१२)
नन्दगोपकुले कृष्ण उवास बहुलाः समाः ।
ततः कदाचित्सुप्तं तं शकटस्य त्वधः शिशुम् ॥ २-५२-१७ (१३४१३)
यशोदा सम्परित्यज्य जगाम यमुनां नदीम् ।
शिशुलीलां ततः कुर्वन्स्वहस्तचरणौ क्षिपन् ॥ २-५२-१८ (१३४१४)
रुरोद मधुरं कृष्णः पादावूर्ध्वं प्रसारयन् ।
पादाङ्गुष्ठेन शकटं दारयन्नथ केशवः ॥ २-५२-१९ (१३४१५)
तत्र एकेन पादेन पातयित्वा तथा शिशुः ।
न्युब्जं पयोधराकाङ्क्षी ससार च रुरोद च ॥ २-५२-२० (१३४१६)
पाटितं शकटं दृष्ट्वा भिन्नभाण्डपुटीकटम् ।
जनास्ते शिशुना तेन विस्मयं परमं ययुः ॥ २-५२-२१ (१३४१७)
प्रत्यक्षं शूरसेनानां दृश्यते महदद्भुतम् ।
शयानेन हतः कंसपक्षवांस्तिग्मतेजसा ॥ २-५२-२२ (१३४१८)
पूतना चापि निहता महाकाया महास्तनी ।
ततः काले महाराज संसक्तौ रामकेशवौ ॥ २-५२-२३ (१३४१९)
कृष्णः सङ्कर्षणश्चोभौ रिङ्गिणौ च बभूवतुः ।
अन्योन्यकिरणाक्रान्तौ चन्द्रसूर्याविवाम्बरे ॥ २-५२-२४ (१३४२०)
विसर्पन्तौ च सर्वत्र महासर्पभुजौ तदा ।
रेजतुः पांसुदिग्धाङ्गौ रामकृष्णौ तदा नृप ॥ २-५२-२५ (१३४२१)
क्वचिच्च जानुभिः स्पृष्टौ क्रीडमानौ क्वचिद्वने ।
पिबन्तौ दधिकुल्यांश्च मथ्यमाने च भारत ॥ २-५२-२६ (१३४२२)
ततः स बालो गोविन्दो नवनीतं तदा क्षयम् ।
ग्रासमानस्तु तत्रायं गोपीभिर्ददृशे तथा ॥ २-५२-२७ (१३४२३)
दाम्नाऽथोलूखले कृष्णो गोपीभिश्च निबन्धितः ।
तत्तथा शिशुना तेन कर्षता चार्जुनावृभौ ॥ २-५२-२८ (१३४२४)
समूलविटपौ भग्नौ तदद्भुतमिवाभवत् ।
ततस्तौ बाल्यमुत्तीर्णौ कृष्णसङ्कर्षणावुभौ ॥ २-५२-२९ (१३४२५)
तस्मिन्नेव व्रजस्थाने सप्तवर्षौ बभूवतुः ।
नीलपीताम्बरधरौ पीतश्वेतानुलेपनौ ॥ २-५२-३० (१३४२६)
बभुवतुर्वत्सपालौ काकपक्षधरावुभौ ।
पर्णवाद्यं श्रुतिसुखं वादयन्तौ वराननौ ॥ २-५२-३१ (१३४२७)
शुशुभाते वनगतौ त्रिशीर्षाविव पन्नगौ ।

मयूराङ्गजकर्णौ तौ पल्लवापीडधारिणौ ॥ २-५२-३२ (१३४२८)
वनमालापरिक्षिप्तौ सालपोताविवोद्गतौ ।
अरविन्दकृतापीडौ रज्जुयज्ञोपवीतिनौ ॥ २-५२-३३ (१३४२९)
सशिक्यतुम्बुरुकरौ गोपवेणुप्रवादकौ ।
क्वचिद्धसन्तावन्योन्यं क्रडमानौ क्वचिद्वने ॥ २-५२-३४ (१३४३०)
पर्णशय्यासु तौ सुप्तौ क्वचिन्निद्रान्तरैषिणौ ।
तौ वत्सान्पालयन्तौ हि शोभयन्तौ महद्वनम् ॥ २-५२-३५ (१३४३१)
चञ्चूर्यन्तौ रमन्तौ च राजन्नेवं तदा शुभम् ।
ततो बृन्दावनं गत्वा वसुदेवसुतावुभौ ।
गोकुलं तत्र कौन्येय चारयन्तौ विजह्रतुः ॥ ॥ २-५२-३६ (१३४३२)

इति श्रीमन्महाभारते सभापर्वणि अर्घाहरणपर्वणि
द्विपञ्चाशोऽध्यायः ॥ ५२.।

---

सभ-०५३
॥ श्रीः ॥
२.५३. अध्यायः ५३

Mahabharata - Sabha Parva - Chapter Topics
कृष्णेन बालकैः सह विहृत्य कालियमर्दनम् ॥ १.। बलरामेण
धेनुकासुरहननम् ॥ २.। कृष्णेन गोवर्धनोद्धरणम्
॥ ३.। अरिष्टासुरादिहननम् ॥ ४.। मधुरायां कंसं हत्वा पित्रोः
पादाभिवन्दनम् ॥ ५.
Mahabharata - Sabha Parva - Chapter Text

भीष्ण उवाच ।
ततः कदचिद्गोविन्दो ज्येष्ठं सङ्कर्षणं विना ।
चचार तद्वनं रम्यं सुस्वरूपो वराननः ॥ २-५३-१ (१३४३३)
काकपक्षधरः श्रीमाञ्छ्यामः पद्मनिभेक्षणः ।
श्रीवत्सेनोरसा युक्तः शशाङ्क इव लक्ष्मणा ॥ २-५३-२ (१३४३४)
रज्जुयज्ञोपवीती स पीताम्बरधरो युवा ।
श्वेतचन्द्रनलिप्राङ्गो नीलकुञ्चितमूर्धजः ॥ २-५३-३ (१३४३५)
राजता बर्हिपत्रेण मन्दमारुतकम्पिना ।
क्वचिद्गायन्क्वञ्चित्क्रीडन्क्वचिन्नृत्यन्क्वचिद्धसन् ॥ २-५३-४ (१३४३६)
गोपवेणुं सुमधुरं कामं तदपि वादयन् ।
प्रह्लादनार्थं च गवां क क्वचिद्वनगतो युवा ॥ २-५३-५ (१३४३७)
गोकुले मेघकाले तु चचार द्युतिमान्प्रभुः ।

बहुरम्येषु देशेषु वनस्य वनराजिषु ॥ २-५३-६ (१३४३८)
तासु कृष्णो मुदा युक्तः क्रीडयन्भरतर्षभ ।
स कदाचिद्वने तस्मिन्गोभिः सह परिव्रजन् ॥ २-५३-७ (१३४३९)
भाण्डीरं नाम दृष्ट्वाऽथ न्यग्रोधं केशवो महान् ।
तच्छायायां मतिं चक्रे निवासाय तदा प्रभुः ॥ २-५३-८ (१३४४०)
स तत्र वयसा तुल्यैर्वत्सपालैस्तदाऽनघ ।
रेमे स दिवसं कृष्णः पुरा स्वर्गगतो यथा ॥ २-५३-९ (१३४४१)
तं क्रीडमानं गोपालाः कृष्णं भाण्डीरवासिनः ।
रमयन्ति स्म बहवो मान्यैः क्रीडनकैस्तदा ॥ २-५३-१० (१३४४२)
अन्ये स्म परिगायन्ति गोपा मुदितमानसाः ।
गोपालकृष्णमेवान्ये गायन्ति स्म वनप्रियाः ॥ २-५३-११ (१३४४३)
तेषां सङ्गायतामेव वादयामास केशवः ।
पर्णवाद्यान्तरे वेणुं तुम्बवीणां च तत्र वै ॥ २-५३-१२ (१३४४४)
एवं क्रीडान्तरैः कृष्णो गोपालैर्विजहार सः ।
तेन बालेन कौन्तेय कृतं लोकहितं तदा ॥ २-५३-१३ (१३४४५)
पश्यतां सर्वभूतानां वासुदेवेन भारत ।
ह्रदे निपातता तत्र क्रीडितं नागमूर्धनि ॥ २-५३-१४ (१३४४६)
शासयित्वा तु कालीयं सर्वलोकस्य पश्यतः ।
विजहार ततः कृष्णो बलेदवसहायवान् ॥ २-५३-१५ (१३४४७)
धेनुको दारुणो राजन्दैत्यो रासभविग्रहः ।
तदा तालवने राजन्बलदेवेन वै हतः ॥ २-५३-१६ (१३४४८)
ततः कदाचित्कौन्तेय रामकृष्णौ वनं गतौ ।
चारयन्तौ प्रवृद्धानि गोधनानि शुभाननौ ॥ २-५३-१७ (१३४४९)
विहरन्तौ मुदा युक्तौ वीक्षमाणौ वनानि वै ।
क्ष्वेलयन्तौ प्रगायन्तौ विचिन्वन्तौ च पादपान् ॥ २-५३-१८ (१३४५०)
नामभिर्व्याहरन्तौ च वत्सान्गाश्च परन्तपौ ।
चेरतुर्लोकसिद्धाभिः क्रीडाभिरपराजितौ ॥ २-५३-१९ (१३४५१)
तौ देवौ मानुषीं दीक्षां वहन्तौ सुरपूजितौ ।
तज्जातिगुणयुक्ताभिः क्रीडाभिश्चेरतुर्वनम् ॥ २-५३-२० (१३४५२)
एवं बाल्येऽपि गोपालैः क्रीडाभिश्च विजह्रतुः ॥ २-५३-२१ (१३४५३)
ततः कृष्णो महातेजास्तदा गत्वा तु गोव्रजम् ।
गिरियज्ञं तमेवैष प्रवृत्तं गोपदारकैः ॥ २-५३-२२ (१३४५४)
बुभुजे पायसं शौरिरीश्वरः सर्वभूतकृत् ।
तं दृष्ट्वा गोपकाः सर्वे कृष्णमेव समर्चयन् ॥ २-५३-२३ (१३४५५)
पूज्यमानस्तदा देवैर्दिव्यं वपुरधारयत् ।
धृतो गोवर्धनो नाम सप्ताहं पर्वतो धृतः ॥ २-५३-२४ (१३४५६)

शिशुना वासुदेवेन गवार्थमरिमर्दन ।
क्रीडमानस्तदा कृष्णः कृतवान्कर्म दुष्करम् ॥ २-५३-२५ (१३४५७)
तदद्भुतमतीवासीत्सर्वलोकस्य भारत ।
देवदेवः क्षितं गत्वा कृष्णं नत्वा मुदान्वितः। २-५३-२६ (१३४५८)
गोविन्द इति तं ह्युक्त्वा ह्यभ्यषिञ्चत्पुरन्दरः ।
इत्युक्त्वाश्लिष्य गोविन्दं पुरुहूतोभ्ययाद्दिवम् ॥ २-५३-२७ (१३४५९)
अथारिष्ट इति ख्यातं दैत्यं वृषभविग्रहम् ।
जघान तरसा कृष्णः पशूनां हितकाम्यया ॥ २-५३-२८ (१३४६०)
केशिनामा ततो दैत्यो राजंस्तुरगविग्रहः ।
तथा वनगतं पार्थ गजायुतबलं हयम् ॥ २-५३-२९ (१३४६१)
कराम्भोरुहवज्रेण जघान मधुसूदनः ।
अथ मल्लं तु चाणूरं निजघान महाऽसुरम् ॥ २-५३-३० (१३४६२)
सुदामानममित्रघ्न सर्वसैन्यपुरस्कृतम् ।
बालरूपेण गोविन्दो निजघान च भारत ॥ २-५३-३१ (१३४६३)
बलदेवेन चायत्नात्समाजे मुष्टिको हतः ।
ताडितश्च सहामात्यः कंसः कृष्णेन भारत ॥ २-५३-३२ (१३४६४)
हत्वा कंसममित्रघ्नः सर्वेषां पश्यतां तदा ।
अभिषिच्योग्रसेनं तं पित्रोः पादमवन्दत। २-५३-३३ (१३४६५)
एवमादीनि कर्माणि कृतवान्वै जनार्दनः ॥ ॥ २-५३-३४ (१३४६६)

इति श्रीमन्महाभारते सभापर्वणि अर्घाहरणपर्वणि
त्रिपञ्चाशोऽध्यायः ॥५३ ॥

---

सभ-०५४
॥ श्रीः ॥
२.५४. अध्यायः ५४

Mahabharata - Sabha Parva - Chapter Topics
रामकृष्णयोः विद्याभ्यासार्थं सान्दीपिन्याचार्यसमीपगमनम्
॥ १.। सान्दीपिनिना गुरुदक्षिणात्वेन मृतपुत्रानयनं
चोदितेन कृष्णेन स्वेनोज्जीवि तस्य पुत्रस्य समर्पणम्
॥२.। कंसपराक्रमादिवर्णनम् ॥ ३.। कृष्णेन जरासन्धपराजयः
॥ ४.।
Mahabharata - Sabha Parva - Chapter Text

भीष्म उवाच ॥
ततस्तौ जग्मतुस्तत्र गुरुं सान्दीपिनिं पुनः ।

गुरुशुश्रूषणायुक्तौ धर्मज्ञौ धर्मचारिणौ ॥ २-५४-१ (१३४६७)
व्रतमुग्रं महात्मानौ विचरन्ताववन्तिषु ।
अहोरात्रैश्चतुष्षष्ट्या साङ्गान्वेदानवापतुः ॥ २-५४-२ (१३४६८)
लेख्यं च गणितं चोभौ प्राप्नुतां यदुनन्दनौ ।
गान्धर्ववेदं वैद्यं च सकलं समावापतुः ॥ २-५४-३ (१३४६९)
हस्तिशिक्षामश्विशिक्षां द्वादशाहेन चाप्नुताम् ।
तावुभौ जग्मतुर्वीरौ गुरुं सान्दीपिनिं पुनः ॥ २-५४-४ (१३४७०)
धनुर्वेदचिकीर्षार्थं धर्मज्ञौ धर्मचारिणौ ।
ताविष्वासवराचार्यमभिगम्य प्रणम्य च ॥ २-५४-५ (१३४७१)
तेन वै सत्कृतौ राजंश्चरन्तौ ताववन्तिषु ।
पञ्चाशद्भिरहोरात्रैर्दशाङ्गं सुप्रतिष्ठितम् ॥ २-५४-६ (१३४७२)
सरहस्यं धनुर्वेदं सकलं तावयापतुः ।
दृष्ट्वा कृतार्थौ विप्रेन्द्रो गुर्वर्थे तावचोदयत् ॥ २-५४-७ (१३४७३)
अयाचतार्थं गोविन्दं तदा सान्दीपिनिर्विभुम् ।
मम पुत्रः समुद्रेऽस्मिंस्तिमिना चापवाहितः ॥ २-५४-८ (१३४७४)
पुत्रमानय भद्रं ते भक्षितं तिमिना मम ।
आर्ताय गुरवे तत्र प्रतिशुश्राव दुष्करम् ॥ २-५४-९ (१३४७५)
अशक्यं सर्वभूतेषु कर्तुमन्येन केनचित् ।
यश्च सान्दीपिनेः पुत्रं जहार भरतर्षभ ॥ २-५४-१० (१३४७६)
सोऽसुरः समरे ताभ्यां समुद्रे विनिपातितः ।
ततः सान्दीपिनेः पुत्रः प्रसादादमितौजसः ॥ २-५४-११ (१३४७७)
दीर्घकालं कृतः प्रेतः पुनरासीच्छरीरवान् ।
तदशक्यमचिन्त्यं च दृष्ट्वा सुमहदद्भुतम् ॥ २-५४-१२ (१३४७८)
सर्वेषामेव भूतानां विस्मयः समजायत ।
आसनानि च सर्वाणि गवाश्वं च धनादिकम् ॥ २-५४-१३ (१३४७९)
सर्वं तदुपजहाते गुरवे रामकेशवौ ।
गदापरिघयुद्धे च सर्वास्त्रेषु च केशवः ॥ २-५४-१४ (१३४८०)
परमां मुख्यतां प्राप्तः सर्वलोकेषु विश्रुतः ।
कश्च नारायणादन्यः सर्वरत्नविभूषितम् ॥ २-५४-१५ (१३४८१)
रथमादित्यसङ्काशमातिष्ठेत शचीपतेः ।
कस्य चाप्रतिमो यन्ता वज्रपाणेः प्रियः सखा ॥ २-५४-१६ (१३४८२)
मातलिः सङ्गृहीता स्यादन्यत्र पुरुषोत्तमात् ।
भोजराजात्मजो वापि कंसस्तात युधिष्ठिर ॥ २-५४-१७ (१३४८३)
अस्त्रजाते बले वीर्ये कार्तवीर्यसमोऽभवत् ।
तस्य भोजपतेः पुत्राद्भोजराजन्यवर्धनात् ॥ २-५४-१८ (१३४८४)
उद्विजन्ते स्म राजानः सुपर्णादिव पन्नगाः ।

चित्रकार्मुकनिस्त्रिंशविमलप्रासयोधिनः ॥ २-५४-१९ (१३४८५)
शतं शतसहस्राणि पादातास्तस्य भारत ।
अष्टौ शतसहस्राणि शूराणामनिवर्तिनाम् ॥ २-५४-२० (१३४८६)
अभवन्भोजराजस्य जाम्बूनदमया ध्वजाः ।
रुक्मकाञ्चनकक्ष्यास्तु रथास्तस्य युधिष्ठि ॥ २-५४-२१ (१३४८७)
अभवन्भोजपुत्रस्य द्विपास्तावद्धि तद्बलम् ।
चित्रकार्मुकनिस्त्रिंशविमलप्रासयोधिनाम् ॥ २-५४-२२ (१३४८८)
षोडशाश्वसहस्राणि किंशुकाभानि तस्य वै ।
अपरस्तु महाव्यूहः किशोरणां युधिष्ठिर ॥ २-५४-२३ (१३४८९)
आरोहवरसम्पन्नो दुर्धर्षः केनचिद्बलान् ।
स च षोडशसाहस्रः कंसभ्रातृपुरः सरः ॥ २-५४-२४ (१३४९०)
सुनामा सर्वतस्त्वेनं स कंसं पर्यपालयत् ।
सगणो मिश्रको नाम षष्टिमसाहस्र उच्यते ॥ २-५४-२५ (१३४९१)
कंसरोषमहावेगां वैवस्वतवशानुगाम् ॥
मत्तद्विपमहाग्राहां वैवस्वतवशानुगाम् ॥ २-५४-२६ (१३४९२)
शस्त्रजालमहाफेनां सादिवेगमहाजलाम् ।
गदापरिघपाठीनां नानाकवचशैवलाम् ॥ २-५४-२७ (१३४९३)
रथनागमहावर्तां नानारुधिरकर्दमाम् ।
चित्रकार्मुककल्लोलां रथाश्वकलिलह्रदाम् ॥ २-५४-२८ (१३४९४)
महामृधनदीं घोरां योधावर्तननिस्वनाम् ।
कोऽन्यो नारायणादेत्य कंसहन्ता युधिष्ठिर ॥ २-५४-२९ (१३४९५)
एष शक्ररथे तिष्ठंस्तान्यनीकानि भारत ।
व्यधमद्भोजपुत्रस्य महाभ्राणीव मारुतः ॥ २-५४-३० (१३४९६)
तं सभास्थं सहामात्यं हत्वा कंसं सहान्वयम् ।
आनयामास मानार्हां देवकीं समुद्ददृणाम् ॥ २-५४-३१ (१३४९७)
यशोदां रोहिणीं चैव अभिवाद्य पुनः पुनः ।
उग्रसेनं च राजानमभिषिच्य जनार्दनः ॥ २-५४-३२ (१३४९८)
अर्चितो यदुमुख्यैश्च भगवान्वासवानुजः ।
ततः पार्थिवमायान्तं सहितं सर्वराजभिः ।
सरस्वत्यां जरासन्धमजयत्पुरुषोत्तमः ॥ ॥ २-५४-३३ (१३४९९)

इति श्रीमन्महाभारते सभापर्वणि अर्घाहरणपर्वणि चतुः
पञ्चाशोऽध्यायः ॥ ५४.।

---

सभ-०५५
॥ श्रीः ॥
२.५५. अध्यायः ५५

कृष्णस्य मधुरां त्यक्त्वा द्वारकागमनम्
॥१.। नरकासुरप्रतापवर्णनम् ॥ २.। इन्द्रेण द्वारकामेत्य कृष्णं
प्रति नरकवधप्रार्थनम् ॥ ३.। गरुडमारुह्य प्राग्ज्योतिचं गतेन
कृष्णेन निहते धरण्या तस्मै कुण्डलार्पणम् ॥ ४.।
Mahabharata - Sabha Parva - Chapter Text

भीष्ण उवाच ॥
शूरसेनपुरं त्यक्त्वा ततो यादवनन्दनः ।
द्वारकां भगवान्कृष्णः प्रत्यपद्यत भारत ॥ २-५५-१ (१३५००)
ततो महात्मा यानानि रत्नानि विविधानि च ।
यथार्हं पुण्डरीकाक्षो नैर्ऋतात्प्रत्यपद्यत ॥ २-५५-२ (१३५०१)
तत्र विघ्नं चरन्ति स्म दैतेयाः सहदानवैः ।
ताञ्जघान महाबाहुर्वरमत्तान्महासुरान् ॥ २-५५-३ (१३५०२)
स विघ्नमकरोत्तत्र नरको नाम नैर्ऋतः ।
अदितिं धर्षयामास कुण्डलार्थं युधिष्ठिर ॥ २-५५-४ (१३५०३)
न चासुरगणैः सर्वैः सहितैः कर्म तत्पुरा ।
कृतपूर्वं महाघोरं यदकार्षीन्महासुरः ॥ २-५५-५ (१३५०४)
यं मही सुषुवे देवी यस्य प्राग्ज्योतिषं पुरम् ।
विषयान्तपालाश्चत्वारो यस्यासन्युद्धदुर्मदाः ॥ २-५५-६ (१३५०५)
आदेवयानमावृत्य पन्थानं पर्यवस्थिताः ।
त्रासनाः सुरसङ्घानां विरूपै राक्षसैः सह ॥ २-५५-७ (१३५०६)
हयग्रीवो निकुम्भश्च घोरः पञ्चजनस्तदा ।
मुरः पुत्रसहस्रैश्च वरमत्तो महासुरः ॥ २-५५-८ (१३५०७)
तद्वधार्थं महाबाहुरेष चक्रगदासिभृत् ।
जातो वृष्णिषु देवक्यां वासुदेवो जनार्दनः ॥ २-५५-९ (१३५०८)
तस्यास्य पुरुषेन्द्रस्यलोकप्रथिततेजसः ।
निवासो द्वारकायां तु विदितो वः प्रधानतः ॥ २-५५-१० (१३५०९)
अतीव हि पुरी रम्या द्वारका वासवक्षयात् ।
अतिवैराजमप्यद्धा प्रत्यक्षस्ते युधिष्ठिर ॥ २-५५-११ (१३५१०)
तस्मिन्देवपुरप्रख्ये सा सभा वृष्ण्युपाश्रया ।
सुधर्मेति च विख्याता योजनायतविस्तृता ॥ २-५५-१२ (१३५११)
तत्र वृष्ण्यन्दकाः सर्वे रामकृष्णपुरोगमाः ।
लोकयात्रामिमां कृत्स्नां परिरक्षन्त आसते ॥ २-५५-१३ (१३५१२)
तत्रासीनेषु सर्वेषु कदाचिद्भरतर्षभ ।

दिव्यगन्धा ववुर्वाताः कुसुमानां च वृष्टयः ॥ २-५५-१४ (१३५१३)
ततः सूर्यसहस्राभस्तेजोराशिर्महाद्भुतः ।
मध्ये तु तेजसस्तस्य पाण्डरं गजमास्थितः। २-५५-१५ (१३५१४)
वृतो देवगणैः सर्वैर्वासवः प्रत्यदृश्यत ॥
रामकृष्णौ च राजा च वृष्ण्यन्धकगणैः सह। २-५५-१६ (१३५१५)
उत्पत्य सहसा देवे नमस्कारमकुर्वत ॥
सोऽवतीर्य गजात्तूर्णं परिष्वज्य जनार्दनम्। २-५५-१७ (१३५१६)
सस्वजे बलदेवं च राजानं च तमाहुकम् ॥
वासुदेवोद्धवौ चैव विकद्रुं च महामतिम्। २-५५-१८ (१३५१७)
प्रद्युम्नसाम्बनिशठाननिरुद्धं च सात्यकिम् ॥
गदं सारणमक्रूरं भानुझल्लिविडूरथान्। २-५५-१९ (१३५१८)
तथैव कृतवर्णाणां चारुदेष्णं महाबलम् ॥
देवकल्पान्महाराज तान्दाशार्हपुरोगमान्। २-५५-२० (१३५१९)
पिरिष्वज्य च दृष्ट्वा च भगवान्भूतभावनः ॥
वृष्ण्यन्धकमहामात्रान्परिष्वज्याथ वासवः। २-५५-२१ (१३५२०)
प्रगृह्य पूजां तैर्दत्तां भगवान्पाकशासनः ॥
सोऽदितेर्वचनात्तात कुण्डलार्थे जनार्दनम्। २-५५-२२ (१३५२१)
उवाच परमप्रीतो जहि भौमं नरेश्व ॥ २-५५-२३ (१३५२२)
भीष्ण उवाच ।
निहत्य नरकं भौममाहरिष्यामि कुण्डले। २-५५-२३क्ष् (१४७९)
एवमुक्त्वाऽथ गोविन्दो राममेवाभ्यभाषत ॥
प्रद्युम्नमनिरुद्धं च साम्बं चाप्रतिमं बले। २-५५-२४ (१३५२३)
एतांश्चोच्त्का तथा तत्र वासुदेवो महायशाः ॥
अथारुह्य सुपर्णं वै शङ्खचक्रगदासिभृत्। २-५५-२५ (१३५२४)
ययौ तदा हृषीकेशो देवानां हितकाम्यया ॥
तं प्रयान्तममित्रघ्नं देवाः सहपुरन्दराः। २-५५-२६ (१३५२५)
पृष्ठतोऽनुययुः प्रीत्या स्तुवन्तो विष्णुमच्युतम् ।
उग्रान्त्रक्षोगणान्हत्वा नरकस्य महासुरान्। २-५५-२७ (१३५२६)
क्षुरान्तान्मौरवान्पाशान्षट्सहस्रं ददर्श सः ॥
सञ्छिद्य पाशाच्छस्त्रेण मुरं हत्वा सहान्वयम्। २-५५-२८ (१३५२७)
शैलसङ्घानतिक्रम्य निशुम्भं च व्यपोथयत् ॥ २-५५-२९ (१३५२८)
यः सहस्रसहस्त्वेकः सर्वान्देवानपोथयत् ।
तं जघान महावीर्यं हयग्रीवं महाबलम् ॥ २-५५-३० (१३५२९)
अपारतेजा दुर्धर्षः सर्वयादवनन्दनः ॥
मध्ये लोहितगङ्गायां भगवान्देवकीसुतः ॥ २-५५-३१ (१३५३०)
औदकायां विरूपाक्षं जघान मधुसूदनः ।

ततः प्राग्ज्योतिषं नाम दीप्यमानमिव श्रिया ।
पुरमासादयामास तत्र युद्धमवर्तत ॥ २-५५-३२ (१३५३१)
तद्युद्धमभवद्घोरं तेन भौमेन भारत ।
कुण्डलार्थे सुरेशस्य नरकेण महात्मना ॥ २-५५-३३ (१३५३२)
मुहूर्तं लालयित्वा तु नरकं मधूसूदनः ।
प्रवृत्तचक्रं चक्रेण प्रममाथ बलाद्बली ॥ २-५५-३४ (१३५३३)
चक्रप्रमथितं तस्य पपात सहसा भुवि ।
उत्तमाङ्गं हताङ्गस्य वृत्रे वज्रहते यथा ॥ २-५५-३५ (१३५३४)
भूमिस्तु पतितं दृष्ट्वा प्रायच्छत्कुण्डले सुतम् ।
प्रदाय च महाबाहुमिदं वचनमब्रवीत् ॥ २-५५-३६ (१३५३५)
सृष्टस्त्वयैव मधुहंस्त्वयैव विनिपातितः ।
यथेच्छसि तथा क्रीडा प्रजास्तस्यानुपालय ॥ २-५५-३७ (१३५३६)
श्रीवासुदेव उवाच। २-५५-३८क्ष् (१४८०)
देवानां च मुनीनां च पितॄणां च महात्मनाम् ।
उद्वेजनीयो भूतानां ब्रह्मद्विद् पुरुषाधमः ॥ २-५५-३८ (१३५३७)
लोकद्विष्टः सुतस्ते तु देवारिर्लोककण्टकः ।
सर्वलोकनमस्कार्यामदितं बाधयद्बली ॥ २-५५-३९ (१३५३८)
कुण्डले हृतवान्दर्पात्ततस्ते निहतः सुतः ।
नैव मन्युस्त्वया कार्यो यत्कृतं मयि भामिनि ॥ २-५५-४० (१३५३९)
त्वत्प्रभावाच्च ते पुत्रो लब्धवान्गतिमुत्तमाम् ।
तस्माद्गच्छ महाभागे भारावतरणं कृतम् ॥ ॥ २-५५-४१ (१३५४०)

इति श्रीमन्महाभारते सभापर्वणि अर्घाहरणपर्वणि
पञ्चपञ्चाशोऽध्यायः ॥५५ ॥

---

सभ-०५६
॥ श्रीः ॥
२.५६. अध्यायः ५६

Mahabharata - Sabha Parva - Chapter Topics
कृष्णस्य नरकं निहत्य तदीयधनरत्नादिकं
शतोत्तरषोडशसहस्रस्त्रीसहितं मणिपर्वं तं च गरुडमारोप्य
स्वर्गलोकगमनम् ॥ १. । रामकृष्णयोः अदित्यै कुण्डलादिकं दत्त्वा
अदितिशचीभ्यां सत्कृतया सत्यभामया सह द्वारकां प्रत्यागमनम्
॥ २. ।
Mahabharata - Sabha Parva - Chapter Text

भीष्ण उवाच ॥
निहत्य नरकं भौमं सत्यभामासहायवान् ।
सहितो लोकपालैश्च ददर्श नरकालयम् ॥ २-५६-१ (१३५४१)
अथास्य गृहमासाद्य नारकस्य महात्मनः ।
ददर्श धनमक्षय्यं रत्नानि विविधानि च। २-५६-२ (१३५४२)
मणिमुक्ताप्रवालानि वैडूर्यविकृतानि च ।
विस्ताराल्पांश्चार्कमणीन्विपुलान्स्फाटिकानपि ॥ २-५६-३ (१३५४३)
जाम्बूनदमयान्येव शातकुम्भमयानि च ।
प्रदीप्तज्वलनाभानि शीतरश्मिप्रभाणि च ॥ २-५६-४ (१३५४४)
हिरण्यवर्णं रुचिरं श्वेतमभ्यन्तरं गृहम् ।
तदक्षय्यं गृहे दृष्टं नरकस्य धनं बहु ॥ २-५६-५ (१३५४५)
न हि राज्ञः कुबेरस्य तावद्धनसमुच्छ्रयः ।
दृष्टपूर्वः पुरा साक्षान्महेन्द्रभवनेष्वपि ॥ २-५६-६ (१३५४६)
हते भौमे निशुम्भे च वासवः सगणोऽब्रवीत् ।
दाशार्हपतिमासीनमाहूत्य मणिकुण्डले ॥ २-५६-७ (१३५४७)
हेमसूत्रा महाकक्ष्यास्तोमरैर्वीर्यशालिनः ।
विमलानि पताकानि वासांसि विविधानि च ॥ २-५६-८ (१३५४८)
भीमरूपाश्च मातङ्गाः प्रवालविकृताः कुथाः ।
ते च विंशतिसाहस्रा द्वास्तावत्यः करेणवः ॥ २-५६-९ (१३५४९)
अष्टौ शतसहस्राणि देशजाश्चोत्तमा हयाः ।
गोभिश्चाविकृतैर्यावत्कामात्तव जनार्दन ॥ २-५६-१० (१३५५०)
एतत्ते प्रापयिष्याणि वृष्ण्यावासमरिन्दम ।
वसु यत्त्रिषु लोकेषु धर्मेणावर्जितं त्वया ॥ २-५६-११ (१३५५१)
भीष्म उवाच। २-५६-१२क्ष् (१४८१)
देवगन्धर्वरत्नानि दैतेयासुरजानि च ।
यानि सन्ति हिरण्यानि नरकस्य निवेशने ॥ २-५६-१२ (१३५५२)
एतत्तु गरुडे सर्वं क्षिप्रमारोप्य वासवः ।
दार्शार्हपतिना सार्धमुपायान्मणिपर्वतम् ॥ २-५६-१३ (१३५५३)
चित्रग्रथितमेघाभः प्रबभौ मणिपर्वतः ।
हेमचित्रवितानैश्च प्रासादैरुपशोभितः ॥ २-५६-१४ (१३५५४)
हर्म्याणि च विशालानि मणिसोपानवन्ति च ।
तत्रस्था वरवर्णिन्यो ददृशुर्मधुसूदनम् ॥ २-५६-१५ (१३५५५)
गन्धर्वसुरमुख्यानां प्रिया दुहितरस्तदा ।
त्रिविष्टपसमे देशे तिष्ठन्तमपराजितम् ॥ २-५६-१६ (१३५५६)
परिवव्रुर्महाबाहुमेकवेणीधराः स्त्रियः ।
पर्वाः काषायवासिन्यः सर्वाश्च नियतेन्द्रियाः ॥ २-५६-१७ (१३५५७)

व्रतसन्तापजः शोके नात्र कश्चिदपीडयत् ।
अरजांसि च वासांसि बिभ्रत्यः कौशिकान्यपि ॥ २-५६-१८ (१३५५८)
समेत्य यदुसिंहस्य चक्रुरस्याञ्जलिं स्त्रियः ।
ऊचुश्चैनं हृषीकेशं सर्वास्ताः कमलेक्षणाः ॥ २-५६-१९ (१३५५९)
नारदेन समाख्यातमस्माकं पुरुषोत्तम ।
आगमिष्यति गोविन्दः सुरकार्यार्थसिद्धये ॥ २-५६-२० (१३५६०)
सोऽसुरं नरकं हत्वा निशुम्भं मुरमेव च ।
भौमं च सपरीवारं हयग्रीवं च दानवम् ॥ २-५६-२१ (१३५६१)
तथा पञ्चजनं चैव प्राप्स्यते धनमक्षयम् ।
सोऽचिरेणैव कालेन युष्मन्मोक्ता भविष्यति ॥ २-५६-२२ (१३५६२)
एवमुक्त्वागमद्धीरो देवर्षिर्नारदस्तथा ।
त्वां चिन्तयानाः सततं तपो घोरमुपास्महे ॥ २-५६-२३ (१३५६३)
कालेऽतीते महाबाहुं कदा द्रक्ष्याम माधवम् ।
इत्येवं हृदि सङ्कल्पं कृत्वा पुरुषसत्तम ।
तपश्चराम सततं रक्ष्यमाणा हि दानवैः ॥ २-५६-२४ (१३५६४)
ततोऽस्मत्प्रियकामार्थं भगवान्मारुतोऽब्रवीत् ।
यथोक्तं नारदेनाथ न चिरात्तद्भविष्यति ॥ २-५६-२५ (१३५६५)
भीष्ण उवाच ॥ २-५६-२६क्ष् (१४८२)
तासां परमनारीणामृषभाक्षं पुरः स्थितम् ।
ददृशुर्देवगन्धर्वा गृष्टीनामिव गोपतिम् ॥ २-५६-२६ (१३५६६)
तस्य चन्द्रोपमं वक्त्रमुदीक्ष्य मुदितेन्द्रियाः ।
सम्प्रहृष्टा महाबाहुमिदं वचनमब्रुवन्। २-५६-२७ (१३५६७)
सत्यव्रत पुरा वायुरिदमस्मानिहाब्रवीत् ।
सर्वभूतहितज्ञश्च महर्षिरपि नारदः ॥ २-५६-२८ (१३५६८)
विष्णुर्नारायणो देवः शङ्खचक्रगदासिभृत् ।
स भौमं नरकं हत्वा भर्ता वो भविता ध्रुवम् ॥ २-५६-२९ (१३५६९)
दिष्ट्या तस्यर्षिमुख्यस्य नारदस्य महात्मनः ।
वचनादेव सत्यं नो भर्ता भवितुमर्हसि ॥ २-५६-३० (१३५७०)
यत्प्रियं बत पश्याम श्रुतं प्रियमरिन्दम ।
दर्शनेन कृतार्थाः स्मो वयमस्य महात्मनः ॥ २-५६-३१ (१३५७१)
उवाच हि यदुश्रेष्ठः सर्वास्ता जातमन्मथाः ।
यथा ब्रूत विशालाक्ष्यस्तत्सर्वं वो भविष्यति ॥ २-५६-३२ (१३५७२)
ततस्ता गरुडे सर्वाः सरत्नधनसञ्चयाः ।
क्षिप्रमारोपयाञ्चक्रे भगवान्देवकीसुतः ॥ २-५६-३३ (१३५७३)
सपक्षिगणमातङ्गं सव्यालमृगपन्नगम् ।
शाखामृगगणैर्जुष्टं सप्रस्तरशिलातलम् ॥ २-५६-३४ (१३५७४)

न्यङ्कुभिश्च वराहैश्च रुरुभिश्च निषेवितम् ।
सप्रपातमहासानुं विचित्रशिखिसङ्कुलम् ॥ २-५६-३५ (१३५७५)
स महेन्द्रानुजः शौरिश्चकार गुरुडोपरि ।
पश्यतां सर्वभूतानामुत्पाट्य मणिपर्वतम् ॥ २-५६-३६ (१३५७६)
उपेन्द्रं बलदेवं च वासवं च महाबलम् ।
स्वपक्षबलविक्षेपैर्महाद्रिशिखरोपमः ॥ २-५६-३७ (१३५७७)
दिक्षु सर्वासु संरावं स चक्रे गरुडो वहन् ।
आरुजन्पर्वताग्राणि पादपांश्च समुत्क्षिपन् ॥ २-५६-३८ (१३५७८)
सञ्जहार महाभ्राणि वैश्वानरपथं गतः ।
ग्रहनक्षत्रताराणां सप्तर्षीणां स्वतेजसा ॥ २-५६-३९ (१३५७९)
प्रभाजालमतिक्रम्य चाश्विनोश्च परन्तप ।
प्राप्य पुण्यतमं स्थानं देवलोकमरिन्दमः ॥ २-५६-४० (१३५८०)
शक्रसद्म समासाद्य चावरुह्य जनार्दनः ।
सोऽभिवाद्यादितेः पादावर्चितः सर्वदैवतैः ।
ब्रह्मदक्षपुरोगैश्च प्रजापतिभिरेव च ॥ २-५६-४१ (१३५८१)
अदितेः कुण्डले दिव्ये ददावथ तदा विभुः ।
रत्नान च परार्घ्याणि रामेण सह केशवः ॥ २-५६-४२ (१३५८२)
प्रतिगृह्य च तत्सर्वमदितिर्वासवानुजम् ।
पूजयामास दाशार्हं रामं च विगतज्वरा ॥ २-५६-४३ (१३५८३)
शची महेन्द्रमहिषी कृष्णस्य महिषीं तदा ।
सत्यभामां तु सङ्गृह्य अदित्यै सा न्यवेदयत् ॥ २-५६-४४ (१३५८४)
सा तस्याः सत्यभामायाः कृष्णाप्रियचिकीर्षया ।
वरं प्रादाद्देवमाता सत्यायै विगतज्वरा ॥ २-५६-४५ (१३५८५)
जरां न यास्यसि शुभे यावत्कृष्णोऽस्ति भूतले ।
सर्वगन्धगुणोपेता भविष्यसि वरानने ॥ २-५६-४६ (१३५८६)
विसृज्य सत्यभामा वै पौलोमीं च सुमध्यमा ।
शच्यापि समनुज्ञाता ययौ कृष्णनिवेशनम् ॥ २-५६-४७ (१३५८७)
सम्पूज्यमानस्त्रिदशैर्महर्षिगणसेवितः ।
द्वारकां प्रययौ कृष्णो देवलोकादरिन्दमः ॥ २-५६-४८ (१३५८८)
शीघ्रादेत्य महाबाहुर्दीर्घमध्वानमच्युतः ।
वर्धमानपुरद्वारमाससाद सुरोत्तमः ॥ ॥ २-५६-४९ (१३५८९)

इति श्रीमन्महाभारते सभापर्वणि अर्घाहरणपर्वणि
षट्पञ्चाशोऽध्यायः ॥ ५६.।

---

सभ-०५७

॥ श्रीः ॥
२.५७. अध्यायः ५७

Mahabharata - Sabha Parva - Chapter Topics
द्वारकावर्णनम् ॥ १.। रुक्मिणीसत्यभामादिगृहवर्णनम्
॥२.। कृष्णेन स्वर्गादानीतस्व पारिजातस्य प्रतिष्ठापनमुद्यान
वर्णनं च ॥ ३.।
Mahabharata - Sabha Parva - Chapter Text

भीष्ण उवाच ॥
तां पुरी द्वारकीं दृष्ट्वा विभुर्नारायणो हरिः ।
हृष्टः सर्वार्थसम्पन्नः -------॥ २-५७-१ (१३५९०)
सोऽपश्यद्वृक्षषण्डांश्च रम्यान्नानाजनान्वहून् ।
समन्ततो द्वारवत्यां नानापुष्पफलान्वितान् ॥ २-५७-२ (१३५९१)
अर्कचन्द्रप्रतीकाशैर्मेरुकूटनिभैर्गृहैः ।
द्वारकामावृतां रम्यां सुकृतां विश्वकर्मणा ॥ २-५७-३ (१३५९२)
पद्मषण्डाकुलाभिश्च हंससेवितवारिभिः ।
गङ्गासिन्धुप्रकाशाभिः परिघाभिरलङ्कृताम् ॥ २-५७-४ (१३५९३)
प्राकारेणार्कवर्णेन पाण्डरेण विराजिताम् ।
वियन्मूर्ध्नि निविष्टेन द्यामिवाभ्रपरिच्छदाम् ॥ २-५७-५ (१३५९४)
नन्दनप्रतिमैश्चापि मिश्रकप्रतिमैर्वनैः ।
तत्र सा विहिता साक्षान्नगरी विश्वकर्मणा ॥ २-५७-६ (१३५९५)
------------ जनहर्षिणी ।
------------ प्रसादप्रवरैः शुभा ॥ २-५७-७ (१३५९६)
तस्मिन्पुरवारश्रेष्ठे दाशार्हाणां यशस्विनाम् ।
नेश्मानि जहृषे दृष्ट्वा भगवान्पाकशासनः ॥ २-५७-८ (१३५९७)
समुच्छ्रितपताकानि पारिप्लवनिभानि च ।
------------ मेरुकूटनिभानि च ॥ २-५७-९ (१३५९८)
-------- २-५७-१० (१३५९९)
---- सधातुभिरिवाद्रिभिः ॥ २-५७-१२अ
----- -----------
जाम्बूनदमयद्वारैर्वैडूर्यविकृतार्गलैः ॥ २-५७-११ (१३६००)
सर्वर्तुसुखसंस्यशैर्महाधनपरिच्छदैः ।
रम्यसानुगृहैः शृङ्गैर्विचित्रैरिव पर्वतैः ॥ २-५७-१३ (१३६०१)
पञ्चवर्णसवर्णैश्च पुष्पवृष्टिसमप्रभैः ।
तुल्यैः पर्जन्यनिर्घोषैर्ह्रादैर्भोगवती यथा ॥ २-५७-१४ (१३६०२)

कृष्णध्वजोपवाह्यैश्च दाशार्हायुधरोहितैः ।
वृष्णिवीरमयूरैश्च स्त्रीसहस्रप्रजाकुलैः ॥ २-५७-१५ (१३६०३)
वासुदेवैन्द्रपर्जन्यैर्गृहमेघैरलङ्कृता ।
ददृशे द्वारकाऽतीव मेघैर्द्यौरिव संवृता ॥ २-५७-१६ (१३६०४)
साक्षाद्भगवतो वेश्म विहितं विश्वकर्मणा ।
ददृशुर्वासुदेवस्य चतुर्योजनमायतम् ॥ २-५७-१७ (१३६०५)
तावदेव सुविस्तीर्णं सुसम्पूर्णं महाधनैः ।
प्रासादवरसम्पन्नं युक्तं जगति पर्वतैः ॥ २-५७-१८ (१३६०६)
यं चकार महाभागस्त्वष्टा वासवचोदितः ।
प्रासादं हेमनाभस्य सर्वतो योजनायतम् ॥ २-५७-१९ (१३६०७)
मेरोरिव गिरेः शृङ्गमुच्छ्रितं काञ्चनालयम् ।
रुक्मिण्याः प्रवरो वासो निर्मितः सुमहात्मना ॥ २-५७-२० (१३६०८)
सत्यभामा पुनर्वेश्म सदा वसति पाण्डरम् ।
विचित्रमणिसोपानं यं विदुः शीतवानिति ॥ २-५७-२१ (१३६०९)
विमलादित्यवर्णाभिः पताकाभिरलङ्कृतम् ।
व्यक्तबद्धं यथोद्देशे चतुर्दशमहाध्वजम् ॥ २-५७-२२ (१३६१०)
सर्वप्रासादमुख्योऽत्र जाम्बवत्या विभूषितः ।
प्रभाया जृम्भणैश्चित्रैस्त्रैलोक्यमिव भासयन् ॥ २-५७-२३ (१३६११)
यस्तु पाण्डरवर्णाभस्तयोरन्तरमाश्रितः ।
विश्वकर्माकरोदेनं कैलासशिखरोपमम् ॥ २-५७-२४ (१३६१२)
जाम्बूनदप्रदीप्ताग्रः प्रदीप्तज्वलनोपमः ।
सागरप्रतिमोऽतिष्ठन्मेरुरित्यभिविश्रुतः ॥ २-५७-२५ (१३६१३)
तस्मिन्गान्धारराजस्य दुहिता कुलशालिनी ।
सुकेशी नाम विख्याता केशवेन निवेशिता ॥ २-५७-२६ (१३६१४)
पद्मकूट इति ख्यातः पद्मवर्णो महाप्रभः ।
सुप्रभाया महाबाहो वासः स परमोच्छ्रितः ॥ २-५७-२७ (१३६१५)
यस्तु सूर्यप्रभो नाम प्रासादवर उच्यते ।
लक्षणायाः कुरुश्रेष्ठ स दत्तः शार्ङ्गधन्वना ॥ २-५७-२८ (१३६१६)
वैडूर्यवरवर्णाभः प्रासादो हरितप्रभः ।
श्वेतजाला हि यत्रैव यत्रैव च निवेशिता ॥ २-५७-२९ (१३६१७)
यं विदुः सर्वभूतानि हरिरित्येव भारत ।
सुमित्रविजयावासो देवर्षिगणपूजितः ॥ २-५७-३० (१३६१८)
महिष्या वासुदेवस्य भूषणं सर्ववेश्मनाम् ।
यस्तु प्रासादमुख्योऽत्र विहितः सर्वशिल्पिभिः ॥ २-५७-३१ (१३६१९)
महिष्या वासुदेवस्य केतुमानिति विश्रुतः ।
प्रसादो विरजो नाम विरजस्को महात्मनः ॥ २-५७-३२ (१३६२०)

उपस्थानगृहं तात केशवस्य महात्मनः ।
यस्तु प्रासादमुख्योऽत्र यं त्वष्टा व्यदधात्स्वयम् ॥ २-५७-३३ (१३६२१)
योजनायतविष्कम्भं सर्वरत्नमयं विभोः ।
तेषां तु विहिताः सर्वे रुक्मदण्डाः पताकिनः ॥ २-५७-३४ (१३६२२)
सदने वासुदेवस्य मार्गसञ्जनना ध्वजाः ।
घण्टाजालानि तत्रैव सर्वेषां निवेशने ॥ २-५७-३५ (१३६२३)
आहृत्य यदुसिंहेन वैजयन्तच्छलो महात् ।
हंसकूटस्य यच्छृङ्गमिन्द्रद्युम्नसरो महत् ॥ २-५७-३६ (१३६२४)
षष्टितालसमुत्सेधमर्धयोजनविस्तृतम् ।
सकिन्नरमहानादं तदप्यमिततेजसः ॥ २-५७-३७ (१३६२५)
पश्यतां सर्वभूतानां त्रिषु लोकेषु विश्रुतम् ।
आदित्यपथगं यत्तन्मेरोः शिखरमुत्तमम् ॥ २-५७-३८ (१३६२६)
जाम्बूनदमयं दिव्यं त्रिषु लोकेषु विश्रुतम् ।
तदप्युत्पाट्य कुच्छ्रेण स्वं निवेशनमाहृतम् ॥ २-५७-३९ (१३६२७)
भ्राजमानं पुरा तत्र सर्वौषधिविदीपितम् ।
यमिन्द्रभवनाच्छौरिराजहार परन्तपः ॥ २-५७-४० (१३६२८)
पारिजातः स तत्रैव केशवेन निवेशितः ।
लेपहस्तशतैर्जुष्टो विमानैश्च हिरण्मयैः ॥ २-५७-४१ (१३६२९)
विहिता वासुदेवेन तत्रैव च महाद्रुमाः ।
पद्माकुलजलोपेता रक्तसौगन्धिकोत्पलाः ॥ २-५७-४२ (१३६३०)
मणिमौक्तिकवालूकाः पुष्करिण्यः सरांसि च ।
तासां परमकूलि शोभयन्ति महाद्रुमाः ॥ २-५७-४३ (१३६३१)
सालतालाश्वकर्णाश्च शतशाखाश्च रोहिणः ।
भल्लातककपित्थाश्च इन्द्रवृक्षाश्च चम्पकाः ॥ २-५७-४४ (१३६३२)
खादिरा मृतकाश्चैव समन्तात्परिरोपिताः ।
ये च हैमवता वृक्षा ये च नन्दनजास्तथा ॥ २-५७-४५ (१३६३३)
आहृत्य यदुसिंहेन तेऽपि तत्र निवेशिताः ।
रत्नपीतारुणप्रख्याः सितपुष्पाश्च पादपाः ॥ २-५७-४६ (१३६३४)
सर्वर्तुफलपूर्णास्ते ते च काननसिन्धुषु ।
सहस्रपत्रपद्माश्च मन्दराश्च सहस्रशः ॥ २-५७-४७ (१३६३५)
अशोकाः कर्णिकाराश्च तिलका नाग मल्लिकाः ।
कुरका नागपुष्पाश्च चम्पकास्तृणपुल्लिकाः ॥ २-५७-४८ (१३६३६)
सप्तवर्णाः कबन्धाश्च नीपाः कुरवकास्तथा ।
केतकाः केसराश्चैव हिनतालतलताटकाः ॥ २-५७-४९ (१३६३७)
तालाः प्रलम्बा वकुलाः पिण्डिका बीजपूरकाः ।
द्रुतामलकखर्जूरा महिता जम्बुकास्तथा ॥ २-५७-५० (१३६३८)

आम्राः पनसवृक्षाश्च चम्पकास्तिलतिन्दुकाः ।
लिकुचामृताश्चैव क्षीरिका कर्णिका तथा ॥ २-५७-५१ (१३६३९)
नालिकेरेङ्गुदाश्चैव उत्क्रोशकवनानि च ।
कदली जातमल्ली च पाटली कुमुदोत्पलाः ॥ २-५७-५२ (१३६४०)
नीलोत्पलकपूर्णाश्च वाप्यः कूपाः सहस्रशः ।
फुल्लाशाककपित्थाश्च तैस्तीर्त्वा बन्धुजीवकाः ॥ २-५७-५३ (१३६४१)
प्रियालाशोकवादिर्याः प्राचीनाश्चापि सर्वशः ।
प्रियङ्गुबदरीभिश्च यवैः स्यन्दनचन्दनैः ॥ २-५७-५४ (१३६४२)
शचीपीलुपलाश्चैश्च पलाशवधपिप्लैः ।
उदुम्बरैश्च बिल्वैश्च पालाशैः पारिभद्रकैः ॥ २-५७-५५ (१३६४३)
इन्द्रवृक्षार्जुनैश्चैव अश्वत्थैश्चिरबिल्वकैः ।
भौमगञ्जनवृक्षैश्च भल्लाभैरश्वसाह्वयैः ॥ २-५७-५६ (१३६४४)
सज्जैस्ताम्बूलवल्लीभिर्लवङ्गैः क्रमुकैस्तथा ।
वंशैश्च विविधैस्तत्र समन्तात्परिरोपितैः ॥ २-५७-५७ (१३६४५)
ये च नन्दनजा वृक्षा ये च चैत्ररथे वने ।
सर्वे ते यदुनाथेन समन्तात्परिरोपिताः ॥ २-५७-५८ (१३६४६)
समाहिता महानद्यः पीतलोहितवालुकाः ।
तस्मिन्गृहवरे रम्ये मणिशक्रसवालुकाः ॥ २-५७-५९ (१३६४७)
मत्तबर्हिणनादाश्च कोकिलाश्च मदावहाः ।
बभूवुः परमोपेताः सर्वे जगति पर्वताः ॥ २-५७-६० (१३६४८)
तत्रैव गजयूथानि तत्र गोमहिषास्तथा ।
निवासाश्च कृतास्तत्र वराहा मृगपक्षिणाम् ॥ २-५७-६१ (१३६४९)
विश्वकर्मकृतः शैलः प्राकारस्तत्र वेश्मनि ।
व्यक्तकिष्कुशतोद्यामः सुधारससमप्रभः ॥ २-५७-६२ (१३६५०)
तेन ते च महाशैलाः सरितश्च सरांसि च ।
परिक्षिप्तानि वै तस्य वनान्युपवनानि च ॥ ॥ २-५७-६३ (१३६५१)

इति श्रीमन्महाभारते सभापर्वण अर्घाहरणपर्वणि
सप्तपञ्चाशोऽध्यायः ॥ ५७.।

---

सभ-०५८
॥ श्रीः ॥
२.५८. अध्यायः ५८

Mahabharata - Sabha Parva - Chapter Topics
कृष्णदर्शनाय वसुदेवादीनामागमनम् ।१.। रामकृष्णाभ्यां
पित्रादिवन्दनपूर्वकं बन्धुभ्यो रत्नादिवितरणम् ॥ २.। इन्द्रस्य

भीष्म उवाच ।
एवमालोकयाञ्चक्रुर्द्वारकामृषभास्त्रयः ।
उपेन्द्रबलदेवौ च वासवश्च महायशाः ॥ २-५८-१ (१३६५२)
ततस्तं पाण्डरं शौरिर्मूर्ध्नि तिष्ठन्गारुत्मतः ।
प्रीतः शङ्खमुपाध्मासीद्द्विषतां रोमहर्षणम् ॥ २-५८-२ (१३६५३)
तस्य शङ्खस्य शब्देन सारस्सुक्षुभे भृशम् ।
ररास च नभः सर्वं तच्चित्रमभवत्तदा ॥ २-५८-३ (१३६५४)
पाञ्चजन्यस्य निर्घोषं निशम्य कुकुरान्दकाः ।
प्रीयमाणाः समाजग्मुरालोक्य मधुसूदनम् ॥ २-५८-४ (१३६५५)
वसुदेवं पुरस्कृत्य वेणुशङ्खरवैः सह ।
उग्रसेनो ययौ राजा वासुदेवनिवेशनम् ॥ २-५८-५ (१३६५६)
आनन्दितुं पर्यचन्स्वेषु वेश्मसु देवकी ।
रोहिणी च ययौ देशमाहुकस्य च याः स्त्रियः ॥ २-५८-६ (१३६५७)
हता ब्रह्मद्विषः सर्वे जयन्त्यन्धकवृष्णयटः ।
एवमुक्तः सह स्त्रीभिरक्षतैर्मधुसूदनः ॥ २-५८-७ (१३६५८)
ततः शौरिः सुपर्णेन स्वं निवेशनमभ्ययात् ।
चकाराथ यथोद्देशमीश्वरो मणिपर्वतम् ॥ २-५८-८ (१३६५९)
ततो धनानि रत्नानि सभायां मधुसूदनः ।
निधाय पुण्डरीकाक्षः पितुर्दर्शनलालसः ॥ २-५८-९ (१३६६०)
ततः सान्दीपिनिं पूर्वं ब्राह्मणं चापि भारत ।
यथान्यायं वासुदेव उपस्पृष्ट्वा महायशाः ॥ २-५८-१० (१३६६१)
ववन्दे पृथुताम्राक्षः प्रीयमाणो महायशाः ।
तथाऽश्रुपरिपूर्णाक्षमानन्दभृतचेतसम् ॥ २-५८-११ (१३६६२)
ववन्दे सह रामेण पितरं वासवानुजः ।
ताभ्यां च मूर्ध्न्युपाघ्रातः केशवः परवीरहा ॥ २-५८-१२ (१३६६३)
यथाश्रेष्ठमुपागम्य सात्वतान्यदुनन्दनः ।
सर्वेषां नाम जग्राह दाशार्हाणामधोक्षजः ॥ २-५८-१३ (१३६६४)
ततः सर्वाणि वित्तानि सर्वरत्नमयानि च ।
व्यभजत्तानि तेभ्योऽथ सर्वेभ्यो यदुनन्दनः ॥ २-५८-१४ (१३६६५)
सा केशवमहामात्रैर्महेन्द्रप्रतिमैः सभा ।
शुशुभे वृष्णिशार्दूलैः सिंहैरिव गिरेर्गुहा ॥ २-५८-१५ (१३६६६)
अथासनगतान्सर्वानुवाच विबुधाधिपः ।
शुभया हर्षयन्वाचा महेन्द्रस्तान्महायशाः ।

कुकुरान्धकमुख्यांश्च तं च राजानमाहुकम् ॥ २-५८-१६ (१३६६७)
इन्द्र उवाच। २-५८-१७क्ष् (१४८३)
यदर्थं जन्म कृष्णस्य मानुषेषु महात्मनः ।
यत्कृतं वासुदेवेन तद्वक्ष्यामि समासतः ॥ २-५८-१७ (१३६६८)
अयं शतसहस्राणि दानवानामरिन्दमः ।
निहय् पुण्डरीकाक्षः पातालविवरं ययौ ॥ २-५८-१८ (१३६६९)
यच्च नाधिगतं पूर्वैः प्रह्लादबलिशम्बरैः ।
तदिदं शौरिणा वित्तं प्रापितं भवतामिह ॥ २-५८-१९ (१३६७०)
सपाशं मुरमाक्रमय् पाञ्चजन्यं च धीमता ।
शिलासङ्घानतिक्रम्य निशुम्भः सगणो हतः ॥ २-५८-२० (१३६७१)
हयग्रीवश्च विक्रान्तो दानवो निहतो बली ।
मथितश्च मृधे भौमः कुण्डले चाहृते पुनः ॥ २-५८-२१ (१३६७२)
पुनर्बाणवधे शौरिमादित्या वसुभिः सह ।
मन्मुखा आगमिष्यन्ति साध्याश्च मधुसूदनम् ॥ २-५८-२२ (१३६७३)
एवमुक्त्वा ततः सर्वानामन्त्र्य कुकुरान्धकान् ।
सस्वजे रामकृष्णौ च वसुदेवं च वासवः ॥ २-५८-२३ (१३६७४)
प्रद्युम्नसाम्बप्रमुखाननिरूद्धं च सारणम् ।
बभ्रुं झल्लिं गदं भानुं चारुदेष्णं च वृत्रहा ॥ २-५८-२४ (१३६७५)
सत्कृत्य सारणाक्रूरौ पुनराभाष्य सात्यकिम् ।
सस्वजे वृष्णिराजानमाहुकं कुकुराधिपम् ।
भोजं च कृतवर्णाणमन्यांश्चान्दकवृष्णिषु ॥ २-५८-२५ (१३६७६)
आमन्त्र्य देवप्रवरैर्वासवो वासवानुजम् ।
ततः श्वेताचलप्रख्यं गजमैरावतं प्रभुः ॥ २-५८-२६ (१३६७७)
पश्यतां सर्वभातानामारुरोह शचीपतिः ।
पृथिवीं चान्तरिक्षं च दिवं च वरवारणम् ॥ २-५८-२७ (१३६७८)
मुखाडम्बरनिर्घोषैः पूरयन्तमिवासकृत् ।
हैमयन्त्रमहाकक्ष्यं हिरण्मयविषाणिनम् ॥ २-५८-२८ (१३६७९)
मनोहरकुथास्तीर्णं सर्वरत्नविभूषितम् ।
नित्यस्रुतमदस्रावं क्षरन्तमिव तोयदम् ॥ २-५८-२९ (१३६८०)
दिशागजं महामात्रं काञ्चनस्रजमास्थितः ।
प्रबभौ मन्दराग्रस्थः प्रतपन्भानुमानिव ॥ २-५८-३० (१३६८१)
ततो वज्मयं भीमं प्रगृह्य परामाङ्कुशम् ।
ययौ बलवता सार्धं पावकेन शचीपतिः ॥ २-५८-३१ (१३६८२)
तं करेणुगजव्रातैर्विमानैश्च मरुद्गणाः ।
पृष्ठतोऽनुययुः प्रीताः कुबेरवरुणग्रहाः ॥ २-५८-३२ (१३६८३)
स वायुपक्षमास्थाय वैश्वानरपथं गतः ।

प्राप्य सूर्यपथं देवस्तत्रैवान्तरधीयत ॥ ॥ २-५८-३३ (१३६८४)

इति श्रीमन्महाभारते सभापर्वणि अर्घाहरणपर्वणि
अष्टपञ्चाशोऽध्यायः ॥ ५८.।

---

सभ-०५९
॥ श्रीः ॥
२.५९. अध्यायः ५९

Mahabharata - Sabha Parva - Chapter Topics
कृष्णेनाहृतविभूतिविलोकनाय देवकीरुक्मिण्यादिस्त्रीणामागमनम्
॥१.। सभामागतायाः यशोदासुतायाः रामकृष्णाभ्यां सत्कारः
॥ २.। सर्वेषां स्वस्वभवनगमनम् ॥ ३.।
Mahabharata - Sabha Parva - Chapter Text

भीष्म उवाच ॥
ततः सर्वदशार्हाणामाहुकस्य च याः स्त्रियः ।
नन्दगोपस्य महिषी यशोदा लोकविश्रुता ॥ २-५९-१ (१३६८५)
रेवती च महाभागा रुक्मिणी च पतिव्रता ।
सत्या जाम्बवती चोभे गान्धारी शिंशुमापि च ॥ २-५९-२ (१३६८६)
विशोका लक्षणा चापि सुमित्रा केतुमा तथा ।
वासुदेवमहिष्योऽन्याः श्रिया सार्धं ययुस्तदा ॥ २-५९-३ (१३६८७)
विभूतिं द्रष्टुमनसः केशवस्य महात्मनः ।
प्रीयमाणाः सभां जग्मुरालोकयितुमच्युतम् ॥ २-५९-४ (१३६८८)
देवकी सर्वदेवीनां रोहिणी च पुरस्कृता ।
ददृशुर्देवमासीनं कृष्णं हलभृता सह ॥ २-५९-५ (१३६८९)
तौ तु पूर्वमतिक्रम्य रोहिणीमभिवाद्य च ।
अभ्यवादयतां देवौ देवकीं रामकेशवौ ॥ २-५९-६ (१३६९०)
सा ताभ्यामृषभाक्षाभ्यां पुत्राभ्यां शुशुभेऽधिकम् ।
देवकी देवमातेव मित्रेण वरुणेन च ॥ २-५९-७ (१३६९१)
ततः प्राप्ता यशोदाया दुहिता वै क्षणेन हि ।
जाज्वल्यमाना वपुषा प्रभयाऽतीव भारत ॥ २-५९-८ (१३६९२)
एकानङ्गेति यामाहुः कन्यां वै कामरूपिणीम् ।
यत्कृते सगणं कंसं जघान पुरुषोत्तमः ॥ २-५९-९ (१३६९३)
ततः स भगवान्रामस्तामुपाक्रम्य भामिनाम् ।
मूर्ध्न्युपाघ्राय सव्येन परिजग्राह पाणिना ॥ २-५९-१० (१३६९४)
तां च तत्रोपसम्प्राप्य प्रियामिव सखीमिमाम् ।

दक्षिणेन कराग्रेण पिरजग्राह माधवः ॥ २-५९-११ (१३६९५)
ददृशुस्तां सभामध्ये भगिनीं रामकृष्णयोः ।
रुक्मपद्मशां पद्मश्रीमिवोत्तमनाभयोः ॥ २-५९-१२ (१३६९६)
अथाक्षतमहावष्ट्या लाजपुष्पघृतैरपि ।
वृष्णयोऽवाकिरन्प्रीताः सङ्कर्षणजनार्दनौ ॥ २-५९-१३ (१३६९७)
सबालाः सहवृद्धाश्च ये ज्ञातिकुलबान्धवाः ।
उपोपविविशुः प्रीता वृष्णयो मधुसूदनम् ॥ २-५९-१४ (१३६९८)
पूज्यमानो महाबाहुः पौराणां रतिवर्धनः ।
विवेश पुरुषव्याघ्रः स्ववेश्म मधुसूदनः ॥ २-५९-१५ (१३६९९)
रुक्मिण्या सहितो देव्या प्रमुमोद सुखी सुखम् ।
अनन्तरं च सत्याया जाम्बवत्याश्च भारत ॥ २-५९-१६ (१३७००)
सर्वासां च यदुश्रेष्ठो गेहे गेहे विहारवान् ।
जगाम च हृषीकेशो रुक्मिण्याः सदनं पुनः ॥ २-५९-१७ (१३७०१)
एष तात महाबाहो विजयः शार्ङ्गधन्वनः ।
एतदर्थं च जन्माहुर्मानुषेषु महात्मनः ॥ ॥ २-५९-१८ (१३७०२)

इति श्रीमन्महाभारते सभापर्वणि अर्घाहरणपर्वणि
एकोनषष्टितमोऽध्यायः ॥ ५९ ॥

---

सभ-०६०
॥ श्रीः ॥
२.६०. अध्यायः ६०

Mahabharata - Sabha Parva - Chapter Topics
शर्ववरगर्वितेन बाणासुरेण स्वतनयया उषया सह गूढं रममाणस्य अनिरुद्घस्य कारा गृहप्राषणम् ॥१.। नारदाद्विदितपौत्रवृत्तेन कृष्णेन सरामप्रद्युम्नेन बाणं निर्जित्य उषया सह अनिरुद्घानयनम् ॥ २.।
Mahabharata - Sabha Parva - Chapter Text

भीष्म उवाच ॥
द्वारकायां ततः कृष्णः स्वदारेषु दिवानिशम् ।
सुखं लब्ध्वा महाराज प्रमुमोद महायशाः ॥ २-६०-१ (१३७०३)
पौत्रस्य कारणाच्चक्रे विबुधानां प्रियं तदा ।
सावसवैः सुरैः सर्वैर्दुष्करं भरतर्षभ ॥ २-६०-२ (१३७०४)
बाणो नामाऽभवद्राजा बलेर्ज्येष्ठसुतो बली ।
वीर्यवान्भरतश्रेष्ठ स च बाहुसहस्रवान् ॥ २-६०-३ (१३७०५)

ततस्तेपे तपस्तीव्रं सत्वेन मनसा नृप ।
रुद्रमाराधयामास स च बाणः समा बहु ॥ २-६०-४ (१३७०६)
तस्मै बहुवरा दत्ताः शङ्करेण महात्मना ।
तांश्च लब्ध्वा वरान्बाणो दुर्लभानसुरैर्भुवि ॥ २-६०-५ (१३७०७)
स शोणितपुरे राज्यं चकाराप्रतिमो बली ।
त्रासिताश्च सुराः सर्वे तेन बाणेन पाण्डव ॥ २-६०-६ (१३७०८)
विजित्य विबुधान्सेन्द्रान्बाणः संवत्सरान्बहून् ।
अशासत महद्राज्यं कुबेर इव भारत ॥ २-६०-७ (१३७०९)
ततो राजन्नुषा नाम बाणस्य दुहिता यथा ।
येनोपायेन कौन्तेय अनिरुद्धो महाद्युतिः ॥ २-६०-८ (१३७१०)
प्राद्युम्निस्तामुषां प्राप्य प्रच्छन्नः प्रमुमोद ह ।
अथ बाणो महातेजास्तदा तत्र युधिष्ठिर ॥ २-६०-९ (१३७११)
तं गृह्यनिलयं ज्ञात्वा प्राद्युम्निं सुतया तदा ।
गृहीत्वा कारयामास वस्तुं कारागृहे बलात् ॥ २-६०-१० (१३७१२)
स कुमारः सुखार्होऽथ तदा दुःखसमन्वितः ।
बामेन घातितो राजन्ननिरुद्धो मुमोह च ॥ २-६०-११ (१३७१३)
एतस्मिन्नेव काले तु नारदो मुनिपुङ्गवः ।
द्वारकां प्राप्य कौन्तेय कृष्णं दृष्ट्वा वचोऽब्रवीत् ॥ २-६०-१२ (१३७१४)
कृष्ण कृष्ण महाबाहो यदूनां कीर्तिवर्धन ।
पौत्रस्ते बाध्यमानोऽत्र बाणेनामिततेजसा ॥ २-६०-१३ (१३७१५)
कृच्छ्रं प्राप्तोऽनिरुद्धो वै शेते कारागृहे सदा ।
एतदुक्त्वा सुरर्षिर्वै बाणस्याथ पुरं ययौ ॥ २-६०-१४ (१३७१६)
नारदस्य वचः श्रुत्वा ततो राजञ्जनार्दनः ।
जाहूय बलदेवं हि प्रद्युम्नं च महाद्युतिम् ॥ २-६०-१५ (१३७१७)
आरुरोह गरुत्मन्तं ताभ्यां सह जनार्दनः ।
ततः सुपर्णमारुह्य जयाय भरतर्षभ ॥ २-६०-१६ (१३७१८)
जग्मुः क्रुधा महावीर्या बाणस्य नगरं प्रति ।
अथासाद्य महाराज तत्पुरं ददृशुश्च ते ॥ २-६०-१७ (१३७१९)
ताम्रप्राकारसङ्गुप्तां हेमप्रासादसङ्कुलाम् ।
दृष्ट्वा मुदा युताः सर्वे विस्मयं परमं ययुः ॥ २-६०-१८ (१३७२०)
तथा बाणपुरस्यासन्द्वारस्था देवताः सदा ।
महेश्वरो गुहश्चैव भद्रकाली विनायकः ॥ २-६०-१९ (१३७२१)
अथ कृष्णो बलाज्जित्वा द्वारपालान्युधिष्ठिर ।
सुसङ्क्रुद्धो महातेजाः शङ्खचक्रगदासिभृत् ॥ २-६०-२० (१३७२२)
आससादोत्तरद्वारं शङ्करेणाभिरक्षितम् ।
तत्र तस्थौ महातेजाः शूलपाणिर्महेश्वरः ॥ २-६०-२१ (१३७२३)

पिनाकं सशरं गृह्य बाणस्य हितकाम्यया ।
ज्ञात्वा तमागतं कृष्णं व्यादितास्यमिवान्तकम् ॥ २-६०-२२ (१३७२४)
ततस्तौ चक्रतुर्युद्धं वासुदेवमहेश्वरौ ।
तद्युद्धमभवद्घोरमचिन्त्यं रोमहर्षणम् ॥ २-६०-२३ (१३७२५)
अन्योन्यं तौ ततक्षाते अन्योन्यजयकाङ्क्षिणौ ।
दिव्यान्यस्त्राणि तौ देवौ क्रुद्धौ मुमुचतुस्तदा ॥ २-६०-२४ (१३७२६)
ततः कृष्णो रणं कृत्वा मुहूर्तं शूलपाणिना ।
विजित्य तं महादेवं ततो युद्धे शूलपाणिना ।
अन्यांश्च जित्वा द्वारस्थान्प्रविवेश पुरोत्तमम् ॥ २-६०-२५ (१३७२७)
प्रविश्य बाणमासाद्य स तत्राथ जनार्दनः ।
चक्रे युद्धं महाक्रुद्धस्तेन बाणेन भरतर्षभ। २-६०-२६ (१३७२८)
बाणोऽपि सर्वशस्त्राणि शितानि भरतर्षभ ।
सुसङ्क्रुद्धस्तदा युद्धे पातयामास केशवे ॥ २-६०-२७ (१३७२९)
पुनरुद्यम्य शस्त्राणि सहस्रं सर्वबाहुभिः ।
मुमोच बाणः सङ्क्रुद्धः कृष्णं प्रति रणाजिरे ॥ २-६०-२८ (१३७३०)
ततः कृष्णस्तदा कृत्त्वा तानि सर्वाणि भारत ।
कृत्त्वा मुहूर्तं बाणेन युद्धं राजन्नगोक्षजः ॥ २-६०-२९ (१३७३१)
चक्रमुद्यम्य रोषाद्वै दिव्यं शस्त्रोत्तमं ततः ।
सहस्रबाहूंश्चिच्छेद बाणस्यामिततेजसः ॥ २-६०-३० (१३७३२)
ततो बाणो महाराज कृष्णेन भृशपीडितः ।
भिन्नबाहुः पपाताशु विशाख इव पादपः ॥ २-६०-३१ (१३७३३)
स पातयित्वा बाणैस्तं बाणं कृष्णस्त्वरान्वितः ।
प्राद्युम्निं मोचयामास क्षिप्रं राजगृहात्तदा ॥ २-६०-३२ (१३७३४)
मोक्षयित्वाऽथ गोविन्दः प्राद्युम्निं सह भार्यया ।
बाणस्य सर्वरत्नानि असङ्ख्यानि जहार सः ॥ २-६०-३३ (१३७३५)
गोधनानि च सर्वस्वं स बाणस्यालये बलात् ।
जहार च हृषीकेशो यदूनां कुलवर्धनः ॥ २-६०-३४ (१३७३६)
ततः स सर्वरत्नानि चाहृत्य मधुसूदनः ।
क्षिप्रमारोपयाञ्चक्रे सर्वस्वं गरुडोपरि ॥ २-६०-३५ (१३७३७)
त्वरयाऽथ स कौन्तेय बलदेवं महाबलम् ।
प्रादुम्निं च महावीर्यमनिरुद्धं महाद्युतिम् ॥ २-६०-३६ (१३७३८)
उषां च सुन्दरीं राजन्भृत्यदारगणैः सह ।
सर्वानेतान्समारोप्य गरुडोपरि वीर्यवान् ॥ २-६०-३७ (१३७३९)
मुदा युक्तो महातेजाः पीताम्बरधरो बली ।
दिव्याभरमचित्राङ्गः शङ्कचक्रगदासिभृत्। २-६०-३८च आरुरोह
गरुत्मन्तमुदयं भास्करो यथा ॥ ॥ २-६०-३८ (१३७४०)

इति श्रीमन्महाभारते सभापर्वणि अर्घाहरणपर्वणि
षष्टितमोऽध्यायः ॥ ६०.।

---

सभ-०६१
॥ श्रीः ॥
२.६१. अध्यायः ६१

Mahabharata - Sabha Parva - Chapter Topics
भीष्मेण
नरकबाणासुरप्रमुखदुष्टनिग्रहादिरूपातीतानागतकृष्णचरित्रनिरूपणम्
॥ १.॥
Mahabharata - Sabha Parva - Chapter Text

भीष्ण उवाच ॥
सूदिता द्वारपालाश्च निशुम्भनरकौ हतौ ।
कृतक्षेमः पुनः पन्थाः पुरं प्राग्ज्योतिषं प्रति ॥ २-६१-१ (१३७४१)
शौरिणा पृथिवीपालास्त्रासिता भरतर्षभ ।
धनुषश्च प्रणादेन पाञ्चजन्यस्वनेन च ॥ २-६१-२ (१३७४२)
मेघप्रख्यैरनेकैश्च दाक्षिणात्याभिसंवृतम् ।
रुक्मिणं त्रासयामास केशवो भरतर्षभ ॥ २-६१-३ (१३७४३)
ततः पर्जन्यघोषेण रथेनादित्यवर्चसा ।
उवाह महिषीं भोज्यामेष चक्रगदाधरः ॥ २-६१-४ (१३७४४)
जारूथ्य आहृतक्रोधः शिशुपालश्च निर्जितः ।
वक्रश्च स हतः सङ्ख्ये शतधन्वा च क्षत्रियः ॥ २-६१-५ (१३७४५)
इन्द्रद्युम्नो हतः कोपाद्यवनश्च कशेरुकः ।
हतः सौभपतिश्चैव साल्वश्च कृतधन्वना ॥ २-६१-६ (१३७४६)
पर्वतानां सहस्रं च चक्रेण पुरुषोत्तमः ।
विभज्य पुण्डरीकाक्षो द्युमत्सेनमपोथयत् ॥ २-६१-७ (१३७४७)
महेन्द्रशिखरे चैव निमेषान्तरचारिणौ ।
जग्राह भरतश्रेष्ठ वानरावभितश्चरौ ॥ २-६१-८ (१३७४८)
इरावत्यां महाभोजो वह्निसूर्यसमो बले ।
गोपतिस्तालकेतुश्च निहतौ शार्ङ्गधन्वना ॥ २-६१-९ (१३७४९)
अक्षप्रपत्तने राजन्नवहेलनतत्परौ ।
उभौ तावपि कृष्णेन स्वराष्ट्रे विनिपातितौ ॥ २-६१-१० (१३७५०)
दग्धा वाराणसी तात केशवेन महात्मना ।
पाण्ड्यं पौण्ड्रं च मात्स्यं च कलिङ्गं च जनार्दनः ॥ २-६१-११ (१३७५१)

जघान सहितान्सर्वानङ्गराजं च माधवः ॥ २-६१-१२ (१३७५२)
एष चैव शतं हत्वा रथेन क्षत्रपुङ्गवान् ।
गान्धारीमवहत्कृष्णो महिषीं यादवर्षभः ॥ २-६१-१३ (१३७५३)
अथ गाण्डीवधन्वानं क्रीडार्थं मधुसूदनः ।
जिगाय भरतश्रेष्ठ कुन्त्याश्च प्रमुखे विभुः ॥ २-६१-१४ (१३७५४)
द्रौणिं कृपं च कर्णं च भीमसेनं सुयोधनम् ।
युद्धाय सहितान्राजञ्जिगाय भरतर्षभ ॥ २-६१-१५ (१३७५५)
बभ्रोश्च प्रियमन्विच्छन्नेष चक्रगदाधरः ।
वेणुदारिवृतां भार्यां प्रममाथ युधिष्ठिर ॥ २-६१-१६ (१३७५६)
पर्याप्तां पृथिवीं सर्वां साश्वां सरथकुञ्जराम् ।
वेणुदारिवशे युक्तां जिगाय मधुसूदनः ॥ २-६१-१७ (१३७५७)
अवाप्य तपसा वीर्यं बलमोजश्च भारत ।
त्रासिताः सगणाः सर्वे बाणेन विबुधाधिपाः ॥ २-६१-१८ (१३७५८)
वज्राशनिगदाबामैस्ताडयद्भिरनेकशः ।
तस्य नासीद्रणे मृत्युर्देवैरपि सवासवैः ॥ २-६१-१९ (१३७५९)
सोऽभिभूतश्च कृष्णेन न हतश्च मगात्मना ।
छित्वा बाहुसहस्रं तु गोविन्देन महात्मना ॥ २-६१-२० (१३७६०)
एषोऽपीडन्महाबाहुः कंसं च मधुसूदनः ।
अवाप्तं तपसा वीर्यं बलमोजश्च भारत ।
कैटभं चातिलोमानि निजघान जनार्दनः ॥ २-६१-२१ (१३७६१)
जम्बुमैरावतं चैव विरूपं च महायशाः। २-६१-२२ब्जघान
भरतश्रेष्ठ शम्बरं चारिमर्दनम् ॥ २-६१-२२ (१३७६२)
एष भोगवतीं गत्वा वासुकिं भरतर्षभ ।
निर्जित्य पुण्डरीकाक्षो रौक्मिणेयममोचयत् ॥ २-६१-२३ (१३७६३)
एवं बहूनि कर्माणि शिशुरेव जनार्दनः ।
कृतवान्पुण्डरीकाक्षः सङ्कर्षणसहायवान् ॥ २-६१-२४ (१३७६४)
एवमेषोऽसुराणां चसुराणामपि सर्वशः ।
भयामयकरः कृष्णः सर्वलोकेश्वरः प्रभुः ॥ २-६१-२५ (१३७६५)
एवमेव महाबाहुः शास्ता सर्वदुरात्मनाम् ।
कृत्वा देवार्थममितं स्वस्थानं प्राप्स्यते पुनः ॥ २-६१-२६ (१३७६६)
एष भोगवतीं पुण्यां रविकान्तिं महायशाः ।
द्वारकामात्मसात्कृत्वा सागरं प्लावयिष्यति ॥ २-६१-२७ (१३७६७)
सुरासुरमनुष्येषु नाभून्न भविता क्वचित् ।
यस्तामध्यवसद्राजा नान्यत्र मधुसूदनात् ॥ २-६१-२८ (१३७६८)
भ्राजमानास्तु वै सर्वे वृष्ण्यन्धकमहारथाः ।
तेजिष्ठं प्रतिपत्स्यन्ते नाकपृष्टं गतासवः ॥ २-६१-२९ (१३७६९)

एवमेव दशार्हाणां विधाय विधिना विधिम् ।
विष्णुर्नारायणः साक्षात्स्वस्थानं प्राप्स्यते ध्रुवम् ॥ २-६१-३० (१३७७०)
अप्रमेयोऽनियोज्यश्च यत्र कामगमो वशी। २-६१-३२अब् मोदते
भगवान्प्रीतो वालः क्रीडानकैरिव ॥ २-६१-३१ (१३७७१)
नैष गर्भत्वमापेदे न योन्यामावसत्प्रभुः ।
आत्मनस्तेजसा कृष्णः सर्वेषां कुरुते गतिम् ॥ २-६१-३२ (१३७७२)
यथा बुद्बुद उत्थाय तत्रैव प्रविलीयते ।
चराचराणि भूतानि तथा नारायणे सदा ॥ २-६१-३३ (१३७७३)
न प्रमातुं महाबाहुः शक्यो भारत केशवः ।
परं हि परतस्तस्माद्विश्वरूपान्न विद्यते ॥ ॥ २-६१-३४ (१३७७४)

इति श्रीमन्महाभारते सभापर्वणि अर्घाहरणपर्वणि
एकषष्टितमोऽध्यायः ॥ ६१.।

---

सभ-०६२
॥ श्रीः ॥
२.६२. अध्यायः ६२

Mahabharata - Sabha Parva - Chapter Topics
भीष्मवाक्योपरमे सहदेवेन कृष्णपूजाविरुद्धभाषिणो
वधे प्रतिज्ञाते राज्ञां त ऊष्णीम्भावः । ।१.। सहदेवमूर्ध्नि
पुष्पवृष्टिः। अशरीरवाणीच ॥ २.। नादरदेन कृष्णानर्चकस्य
निन्दनम् ॥ ३.। सहदेवेन सभ्यपूजनपूर्वकं कर्मसमापनम्
॥ ४.। शिशुपालेन यज्ञविघाताय राज्ञां प्रोत्साहनम् ॥ ५.।
Mahabharata - Sabha Parva - Chapter Text

वैशम्पायन उवाच ॥
एवमुक्त्वा ततो भीष्मो विरराम महाबलः ।
व्याजहारोत्तरं तत्र सहदेवोऽर्थवद्वचः ॥ २-६२-१ (१३७७५)
केशवं केशिहन्तारमप्रमेयपराक्रमम् ।
पूज्यमानं मया यो वः कृष्णं न सहते नृपाः ॥ २-६२-२ (१३७७६)
सर्वेषां बलिनां मूर्ध्नि मयेदं निहितं पदम् ।
एवमुक्ते मया सम्यगुत्तरं प्रब्रवीतु सः ॥ २-६२-३ (१३७७७)
स एव हि मया वध्यो भविष्यति न संशयः ।
मतिमन्तश्च ये केचिदाचार्यं पितरं गुरुम् ॥ २-६२-४ (१३७७८)
अर्च्यमर्चितमर्घार्हमनुजानन्तु ते नृपाः ।
ततो न व्याजहारैषां कश्चिद्बुद्धिमतां सताम् ॥ २-६२-५ (१३७७९)

मानिनां बलिनां राज्ञां मध्ये वै दर्शिते पदे ।
ततोऽपतत्पुष्पवृष्टिः सहदेवस्य मूर्धनि ॥ २-६२-६ (१३७८०)
अदृश्यरूपा वाचश्चाप्यब्रुवन्साधुसाध्विति ।
अविध्यदजिनं कृष्णं भविष्यद्भूतजल्पनः ॥ २-६२-७ (१३७८१)
सर्वसंशयनिर्मोक्ता नारदः सर्वलोकवित् ।
उवाचाखिलभूतानां मध्ये स्पष्टतरं वचः ॥ २-६२-८ (१३७८२)
कृष्णं कमलपत्राक्षं नार्चयिष्यन्ति ये नराः ।
जीवन्मृतास्तु ते ज्ञेया न सभाष्याः कदाचना ॥ २-६२-९ (१३७८३)
वैशम्पायन उवाच। २-६२-१०क्ष् (१४८४)
पूजयित्वा च पूजार्हान्ब्रह्मक्षत्रविशेषवित् ।
सहदेवो नृणां देवः समापयत कर्म तत् ॥ २-६२-१० (१३७८४)
तस्मिन्नभ्यर्चिते कृष्णे सुनीथः शत्रुकर्षणः ।
अतिताम्रेक्षणः कोपादुवाच मनुजाधिपान् ॥ २-६२-११ (१३७८५)
स्थितः सेनापतिर्योऽहं मन्वध्वं किं तु साम्प्रतम् ।
युधि तिष्ठाम सन्नह्य समेतान्वृष्णिपाण्डवान् ॥ २-६२-१२ (१३७८६)
इति सर्वान्समुत्साह्य राज्ञस्तांशाचेदिपुङ्गवः ।
यज्ञोपघाताय ततः सोऽमन्त्रतय राजभिः ॥ २-६२-१३ (१३७८७)
तत्राहूतागताः सर्वे सुनीथप्रमुखा गणाः ।
समदृश्यन्त सङ्क्रुद्धा विवर्णवदनास्तथा ॥ २-६२-१४ (१३७८८)
युधिष्ठिराभिषेकं च वासुदेवस्य चार्हणम् ।
न स्याद्यथा तथा कार्यमेवं सर्वे तदाऽब्रुवन् ॥ २-६२-१५ (१३७८९)
निष्कर्षान्निश्चयात्सर्वे राजानः क्रोधमूर्छिताः ।
अब्रुवंस्तत्र राजानो निर्वेदादात्मनिश्चयात् ॥ २-६२-१६ (१३७९०)
सुहृद्भिर्वार्यमाणानां तेषां हि वपुराबभौ ।
आमिषादपकृष्टानां सिहानामिव गर्जताम् ॥ २-६२-१७ (१३७९१)
तं बलौघमपर्यन्तं राजसागारमक्षयम् ।
कुर्वाणं समयं कृष्णो युद्धाय बुबुधे तदा ॥ ॥ २-६२-१८ (१३७९२)

इति श्रीमन्महाभारते सभापर्वणि अर्घाहरणपर्वणि
द्विषष्टितमोऽध्यायः ॥ ६२.।

---

सभ-०६३
॥ श्रीः ॥
२.६३. अध्यायः ६३

Mahabharata - Sabha Parva - Chapter Topics
राज्ञां रणोद्यमाद्बिभ्यतो युधिष्ठिरस्य भीष्णेण समाश्वासनम् ॥ १.।

वैशम्पायन उवाच ॥
ततः सागरसङ्काशं दृष्ट्वा नृपतिमण्डलम् ।
संवर्तवाताभिहतं भीमं क्षुब्धमिवार्णवम्। २-६३-१ (१३७९३)
रोषात्प्रचलितं सर्वमिदमाह युधिष्ठिरः ।
भीष्मं मतिमतां मुख्यं वृद्धं कुरुपितामहम् ।
बृहस्पतिं बृहत्तेजाः पुरुहूत इवारिहा। २-६३-२ (१३७९४)
असौ रोषात्प्रचलितो महान्नृपतिसागरः ।
अत्र यत्प्रतिपत्तव्यं तन्मे ब्रूहि पितामह ॥ २-६३-३ (१३७९५)
यज्ञस्य च न विघ्नः स्यात्प्रजानां च हितं भवेत् ।
यथा सर्वत्र तत्सर्वं ब्रूहि मेऽद्य पितामह ॥ २-६३-४ (१३७९६)
इत्युक्तवति धर्मज्ञे धर्मराजे युधिष्ठिरे ।
उवाचेदं वचो भीष्मस्ततः कुरुपितामहः ॥ २-६३-५ (१३७९७)
मा भैस्त्वं कुरुशार्दूल श्वा सिंहं हन्तुमर्हति ।
शिवः पन्थाः सुनीतोऽत्र मया पूर्वतरं वृतः ॥ २-६३-६ (१३७९८)
प्रसुप्ते हि यथा सिंहे श्वानस्तात समागताः ।
भषेयुः सहिताः सर्वे तथेमे वसुधाधिपाः ॥ २-६३-७ (१३७९९)
वृष्णिसिंहस्य सुप्तस्य तथाऽमी प्रमुके स्थिताः ।
भषन्ते तात सङ्क्रुद्धाः श्वानः सिंहस्य सन्निधौ ॥ २-६३-८ (१३८००)
न हि सम्बुध्यते यावत्सुप्तः सिंह इवाच्युतः ।
ग तदिदं ज्ञातपूर्वं हि तव संस्तोतुमिच्छसि'।
तेन सिंहीकरोत्येतानसिंहश्चेदिपुङ्गवः ॥ २-६३-९ (१३८०१)
पार्थिवान्पार्थिवश्रेष्ठ शिशुपालोऽल्पचेतनः ।
सर्वान्सर्वात्मना तात नेतुकामो यमक्षयम् ॥ २-६३-१० (१३८०२)
नूनमेतत्समादातुं पुनरिच्छत्यधोक्षजः ।
यदस्य शिशुपालस्य तेजस्तिष्ठति भारत ॥ २-६३-११ (१३८०३)
विप्लुता चास्य भद्रं ते बुद्धिर्बुद्धिमतां वर ।
चेदिराजस्य कौन्तेय सर्वेषां च महीक्षितम् ॥ २-६३-१२ (१३८०४)
आदातुं च नरव्याघ्रो यं यमिच्छत्ययं तदा ।
तस्य विप्लवते बुद्धिरेवं चेदिपतेर्यथा ॥ २-६३-१३ (१३८०५)
चतुर्विधानां भूतानां त्रिषु लोकेषु माधवः ।
प्रभवश्चैव सर्वेषां निधनं च युधिष्ठिर ॥ २-६३-१४ (१३८०६)
वैशम्पायन उवाच। २-६३-१५क्ष् (१४८५)
इति तस्य वचः श्रुत्वा ततश्चेदिपतिर्नृपः ।
भीष्मं रूक्षाक्षरा वाचः श्रावयामास भारत ॥ ॥ २-६३-१५ (१३८०७)

इति श्रीमन्महाभारते सभापर्वणि शिशुपालवधपर्वणि
त्रिषष्टितमोऽध्यायः ॥ ६३.।
Mahabharata - Sabha Parva - Chapter Footnotes

२-६३-७ भषणं श्वरवः ॥

---

सभ-०६४
॥ श्रीः ॥
२.६४. अध्यायः ६४

Mahabharata - Sabha Parva - Chapter Topics
शिशुपालेन भीष्मस्तुतकृष्णचरित्रापहसनपूर्वकं
भीष्मोपालम्भनम् ॥
Mahabharata - Sabha Parva - Chapter Text

शिशुपाल उवाच ।
बिभीषिकाभिर्बह्वीभिर्भीषयन्भीष्म पार्थिवान् ।
न व्यपत्रपसे कस्माद्वृद्धः सन्कुलपांसनः ॥ २-६४-१ (१३८०८)
युक्तमेतत्तृतीयायां प्रकृतौ वर्तता त्वया ।
वक्तुं धर्मादपेतार्थं त्वं हि सर्वकुरूत्तमः ॥ २-६४-२ (१३८०९)
नावि नौरिव सम्बद्धा यथान्धो वान्धमन्वियात् ।
तथाभूता हि कौरव्या येषां भीष्म त्वमग्रणीः ॥ २-६४-३ (१३८१०)
पूतनाघातपूर्वाणि कर्माण्यस्य विशेषतः ।
त्वया कीर्तयताऽस्माकं भूयः प्रव्यथितं मनः ॥ २-६४-४ (१३८११)
अवलिप्तस्य मूर्शस्य केशवं स्तोतुमिच्छतः ।
कथं भीष्म न ते जिह्वा शतधेयं विदीर्यते ॥ २-६४-५ (१३८१२)
यत्र कुत्सा प्रयोक्तव्या भीष्म बालतरैर्नरैः ।
तमिमं ज्ञानवृद्धः सन्गोपं संस्तोतुमिच्छसि ॥ २-६४-६ (१३८१३)
यद्यनेन हता बाल्ये शकुनिश्चित्रमत्र किम् ।
तौ वाऽश्ववृषभौ भीष्ण यौ न युद्धविशारदौ ॥ २-६४-७ (१३८१४)
चेतनारहितं काष्ठं यद्यनेन निपातितम् ।
पादेन शकटं भीष्ण तत्र किं कृतमद्भुतम् ॥ २-६४-८ (१३८१५)
ग्अर्कप्रमाणौ तौ वृक्षौ यद्यनेन निपातितौ। '
नागश्च दमितोऽनेन तत्र को विस्मयः कृतः'॥ २-६४-९ (१३८१६)
वल्मीकमात्रः सप्ताहं यद्यनेन धृतोऽचलः ।
तदा गोवर्धनो भीष्म न तच्चित्रं मतं मम ॥ २-६४-१० (१३८१७)

भुक्तमेतेन बह्वन्नं क्रीडता नगमूर्धनि ।
इति ते भीष्ण शृण्वानाः परे विस्मयमागताः ॥ २-६४-११ (१३८१८)
यस्य चानेन धर्मज्ञ भुक्तमन्नं बलीयसः ।
स चानेन हतः कंस इत्येतत्तु बलीयसः। २-६४-१२ (१३८१९)
स चानेन हतः कंस इत्येतत्तु महाद्भुतम् ॥
न ते श्रुतमिदं भीष्म नूनं कथयतां सताम्। २-६४-१३ (१३८२०)
यद्वक्ष्ये त्वामधर्मज्ञं वाक्यं कुरुकुलाधम ॥
स्त्रीषु गोषु न शस्त्राणि पातयेद्ब्राह्मणेषु च। २-६४-१४ (१३८२१)
इति सन्तोऽनुशासन्ति सञ्जना धर्मिणः सदा ।
भीष्म लोके हि तत्सर्वं वितथं त्वयि दृश्यते ॥ २-६४-१५ (१३८२२)
ज्ञानवृद्धं च वृद्धं च भूयांसं केशवं मम ।
अजानत इवाख्यासि संस्तुवन्कौरवाधम ॥ २-६४-१६ (१३८२३)
गोघ्रः स्त्रीघ्नश्च सन्भीष्म त्वद्वाक्याद्यदि पूज्यते ।
एवम्भूतश्च यो भीष्म कथं संस्तवमर्हति ॥ २-६४-१७ (१३८२४)
असौ मतिमतां श्रेष्ठो य एष जगतः प्रभुः ।
सम्भावयति चाप्येवं त्वद्वाक्याच्च जनार्दनः ।
एवमेतत्सर्वमिति तत्सर्वं वितथं ध्रुवम् ॥ २-६४-१८ (१३८२५)
आत्मानमात्मनाऽऽधातुं यदि शक्तो जनार्दनः ।
अकामयन्तं तं भीष्म कथं साध्विव पश्यसि ॥ २-६४-१९ (१३८२६)
न गाथा गाथिनं शास्ति बहुचेदपि गायति ।
प्रकृतिं यान्ति भूतानि कुलिङ्गशकुनिर्यथा ॥ २-६४-२० (१३८२७)
नूनं प्रकृतिरेषा ते जघन्या नात्र संशयटः ।
ग्नदीसुतत्वात्ते चित्तं चञ्चलं न स्थिरं स्मृतम्' ॥ २-६४-२१ (१३८२८)
अतः पापीयसी चैषां पाण्डवानामपीष्यते ।
येषामर्च्यतमः कृष्णस्त्वं च येषां प्रदर्शकः ॥ २-६४-२२ (१३८२९)
धर्मवांस्त्वमधर्मज्ञः सतां मार्गादवप्लुतः ।
को हि धर्मिणमात्मानं जानञ्ज्ञानविदां वरः ॥ २-६४-२३ (१३८३०)
कुर्याद्यथा त्वया भीषम कृतं धर्ममवेक्षता ।
चेत्त्वं धर्मं विजानासि यदि प्राज्ञा मतिस्तव ॥ २-६४-२४ (१३८३१)
अन्यकामा हि धर्मज्ञा कन्यका प्राज्ञमानिना ।
अम्बा नामेति भद्रं ते कथं साऽपहृता त्वया ॥ २-६४-२५ (१३८३२)
तां त्वयाऽपहृतां भीष्म कन्यां नैषितवान्नृपः ।
भ्राता विचित्रवीर्यस्ते सतां मार्गमनुस्मरन् ॥ २-६४-२६ (१३८३३)
भार्ययोर्यस्य चान्येन मिषतः प्राज्ञमानिनः ।
तव जातान्यपत्यानि सज्जनाचरिते पथि ॥ २-६४-२७ (१३८३४)
को हि धर्मोऽस्ति ते भीषम ब्रह्मचर्यमिदं वृथा ।

यद्धारयसि मोहाद्वा क्लीबत्वाद्वा न संशयः ॥ २-६४-२८ (१३८३५)
न त्वं तव धर्मज्ञ पश्याम्युपचरं क्वचित् ।
न हि ते सेविता वृद्धा य एवं धर्ममब्रवीः ॥ २-६४-२९ (१३८३६)
इष्टं दत्तमधीतं च यज्ञाश्च बहुदक्षिणाः ।
सर्वमेतदपत्यस्य कलां नार्हन्ति षोडशीम् ॥ २-६४-३० (१३८३७)
व्रतोपवासैर्बहुभिः कृतं भवति भीष्म यत् ।
सर्वं तदनपत्यस्य मोघं भवति निश्चयात् ॥ २-६४-३१ (१३८३८)
सोऽनपत्यश्च वृद्धश्च मिथ्याधर्मानुशासनात् ।
हंसवत्त्वमपीदानीं ज्ञातिभ्यः प्राप्नुया वधम् ॥ २-६४-३२ (१३८३९)
एवं हि कथयन्त्यन्ये नरा ज्ञानविदः पुरा ।
भीष्म यत्तदहं सम्यग्वक्ष्यामि तव शृण्वतः ॥ २-६४-३३ (१३८४०)
वृद्धः किल समुद्रान्ते कश्चिद्धंसोऽभवत्पुरा ।
धर्मवागन्यथावृत्तः पक्षिणः सोऽनुशास्ति च ॥ २-६४-३४ (१३८४१)
धर्मं चरत माऽधर्ममिति तस्य वचः किल ।
पक्षिणः शुश्रुवुर्भीष्म सततं धर्मवादिनः ॥ २-६४-३५ (१३८४२)
हंसस्य तु वचः श्रुत्वा मुदिताः सर्वपक्षिणः ।
ऊचुश्चैव स्वगा हंसं परिवार्य च सर्वशः ॥ २-६४-३६ (१३८४३)
कथयस्व भवान्सर्वं पक्षिणां तु समासतः ।
को हि नाम द्विजश्रेष्ठ ब्रूहि नो धर्म उत्तमः ॥ २-६४-३७ (१३८४४)
हंस उवाच ॥ २-६४-३८क्ष् (१४८६)
प्रजास्वहिंसा धर्मो वै हिंसाऽधर्मः खगव्रजाः ।
एतदेवानुबोद्धव्यं धर्माधर्मः समासतः ॥ २-६४-३८ (१३८४५)
शिशुपाल उवाच ॥ २-६४-३९क्ष् (१४८७)
वृद्धहंसवचः श्रुत्वा पक्षिणस्ते सुसंहिताः ।
ऊचुश्च धर्मलुब्धास्ते स्मयमाना इवाण्डजाः ॥ २-६४-३९ (१३८४६)
धर्मं यः कुरुते नित्यं लोके धीरतरोऽण्डजः ।
स यत्र गच्छेद्धर्मात्मा तन्मे ब्रूहीह तत्त्वतः ॥ २-६४-४० (१३८४७)
हंस उवाच ॥ २-६४-४१क्ष् (१४८८)
बाला यूयं न जानीध्वं धर्मसूक्ष्मं विहङ्गमाः ।
धर्मं यः कुरुते लोके सततं शुभबुद्धिना ।
न चायुषोऽन्ते स्वं देहं त्यक्त्वा स्वर्गं स गच्छति ॥ २-६४-४१ (१३८४८)
तथाऽहमपि च त्यक्त्वा काले देहमिमं द्विजाः ।
स्वर्गलोकं गमिष्यामि इयं धर्मस्य वै गतिः ॥ २-६४-४२ (१३८४९)
एवं धर्मकथां चक्रे स हंसः पक्षिणां भृशम् ।
पक्षिणः शुश्रुवुर्भीष्म सततं धर्ममेव ते ॥ २-६४-४३ (१३८५०)
अथास्य भक्ष्यमाजह्रुः समुद्रजलचारिणः ।

अण्डजा भीष्म तस्यान्ये धर्मार्थमिति शुश्रुम ॥ २-६४-४४ (१३८५१)
ते च तस्य समभ्याशे निक्षिप्याण्डानि सर्वशः ।
समुद्राम्भस्यमोदन्त चरन्तो भीष्म पक्षिणः ॥ २-६४-४५ (१३८५२)
तेषामण्डानि सर्वेषां भक्षयामास पापकृत् ।
स हंसः सम्प्रमत्तानामप्रमत्तः स्वकर्मणि ॥ २-६४-४६ (१३८५३)
ततः प्रक्षीयमाणेषु तेषु तेष्वण्डजोऽपरः ।
अशङ्कत महाप्राज्ञः स कदाचिद्ददर्श ह ॥ २-६४-४७ (१३८५४)
ततः सङ्कथयामास दृष्ट्वा हंसस्य किल्बिषम् ।
तेषां परमदुःखार्तः स पक्षी सर्वपक्षिणाम् ॥ २-६४-४८ (१३८५५)
ततः प्रत्यक्षतो दृष्ट्वा पक्षिणस्ते समीपगाः ।
निजघ्नस्तं तदा हंसं मिथ्यावृत्तं कुरूद्वह ॥ २-६४-४९ (१३८५६)
एवं त्वां हंसधर्माणमपीमे वसुधाधिपाः ।
निहन्युर्भीष्म सङ्क्रुद्धाः पक्षिणस्तं यथाण्डजम् ॥ २-६४-५० (१३८५७)
गाथामप्यत्र गायन्ति ये पुराणविदो जनाः ।
भीष्म यां तां च ते सम्यक्क्वथयिष्यामि भारत ॥ २-६४-५१ (१३८५८)
अन्तरात्मन्यभिहते रौषि पत्ररथाशुचि ।
अण्डभक्षणकर्मैतत्तव वाचमतीयते ॥ ॥ २-६४-५२ (१३८५९)

इति श्रीमन्महाभारते सभापर्वणि शिशुपालवधपर्वणि
चतुःषष्टितोऽध्यायः ॥ ६४ ॥
Mahabharata - Sabha Parva - Chapter Footnotes

२-६४-२ तृतीयायां प्रकृतौ नपुंसकत्वे ॥
२-६४-२० कुलिगोनाम भूशायी पक्षी मासाहसमित्यनिशं वदन्नपि
सिंहदंष्टान्तरस्थं मांसमा दत्ते स्वयं साहसमतिशयितं करोति ॥

---

सभ-०६५
॥ श्रीः ॥
२.६५. अध्यायः ६५

Mahabharata - Sabha Parva - Chapter Topics
कृष्णनिन्दाश्रवणेन शिशुपालजिघांसया उत्पततो भीमस्य भीष्मेण
विनिवर्तनम् ॥ १.।
Mahabharata - Sabha Parva - Chapter Text

शिशुपाल उवाच ।

स मे बहुमतो राजा जरासन्धो महाबलः ।
योऽनेन युद्धं नेयेष दाक्षोऽयमिति संयुगे ॥ २-६५-१ (१३८६०)
केशवेन कृतं कर्म जरासन्धवधे तदा ।
भीमसेनार्जुनाभ्यां च कस्तत्साध्विति मन्यते ॥ २-६५-२ (१३८६१)
उद्वारेण प्रविष्टेन छद्मना ब्रह्मवादिना ।
दृष्टः प्रभावः कृष्णेन जरासन्धस्य भूपतेः ॥ २-६५-३ (१३८६२)
येन धर्मात्मनाऽऽत्मानं ब्रह्मण्यमभिजानता ।
प्रेषितं पाद्यमस्मै तद्दातुमग्रे दूरात्मने ॥ २-६५-४ (१३८६३)
भुज्यतामिति तेनोक्ताः कृष्णबीमधनञ्जयाटः ।
जरासन्धेन कौरव्य कृष्णेन विकृतं कृतम् ॥ २-६५-५ (१३८६४)
यद्ययं जगतः कर्ता यथैनं मूर्ख मन्यसे ।
कस्मान्न ब्राह्मणं सम्यगात्मानमवगच्छति ॥ २-६५-६ (१३८६५)
इदं त्वाश्चर्यभूतं मे यदिमे पाण्डवास्त्वया ।
अपकृष्टाः सतां मार्गान्मन्यन्ते तच्च साध्विति ॥ २-६५-७ (१३८६६)
अथवा नैतदाश्चर्यं येषां त्वमसि भारत ।
स्त्रीसधर्मा च वृद्धश्च सर्वार्थानां प्रदर्शकः ॥ २-६५-८ (१३८६७)
वैशम्पायन उवाच ॥ २-६५-९क्ष् (१४८९)
तस्य तद्वचनं श्रुत्वा रूक्षं रूक्षाक्षरं बहु ।
चकोप बलिनां श्रेष्ठो भीमसेनः प्रतापवान् ॥ २-६५-९ (१३८६८)
तथा पद्मप्रतीकाशे स्वभावायतविस्तृते ।
भूयः क्रोधाभिताम्राक्षे रक्ते नेत्रे बभूवतुः ॥ २-६५-१० (१३८६९)
त्रिशिखां भ्रुकुटीं चास्य ददृशुः सर्वपार्थिवाः ।
ललाटस्थां त्रिकूटस्थां गङ्गां त्रिपथगामिव ॥ २-६५-११ (१३८७०)
दन्तान्सन्दशतस्तस्य कोपाद्ददृशुराननम् ।
युगान्ते सर्वभूतानि कालस्येव जिघत्सतः ॥ २-६५-१२ (१३८७१)
उत्पतन्तं तु वेगेन जग्राहैनं मनस्विन् ।
भीष्म एव महाबाहुर्महासेनमिवेश्वरः ॥ २-६५-१३ (१३८७२)
तस्व भीमस्य भीष्मेण वार्यमाणस्य भारत ।
गुरुणा विविधैर्वाक्यैः क्रोधः प्रशममागतः ॥ २-६५-१४ (१३८७३)
नातिचक्राम भीष्मस्य स हि वाक्यमरिन्दमः ।
समुद्धूत्तो घनापाये वेलामिव महोदधिः ॥ २-६५-१५ (१३८७४)
शिशुपालस्तु सङ्क्रुद्धे भीमसेने जनाधिप ।
नाकम्पत तदा वीरः पौरुषे व्यवस्थितः ॥ २-६५-१६ (१३८७५)
उत्पतन्तं तु वेगेन पुनः पुनररिन्दमः ।
न स तं चिन्तयामास सिंहः क्रुद्धो मृगं यथा ॥ २-६५-१७ (१३८७६)
प्रहसंश्चाब्रवीद्वाक्यं चेदिराजः प्रतापवान् ।

भीमसेनमभिक्रुद्धं दृष्ट्वा भीमपराक्रमम् ॥ २-६५-१८ (१३८७७)
मुञ्चैनं भीष्म पश्यन्तु यावदेनं नराधिपः ।
मत्प्रभावविनिर्दग्धं पतङ्गमिव वह्निना ॥ २-६५-१९ (१३८७८)
ततश्चेदिपतेर्वाक्यं श्रुत्वा तत्कुरुसत्तमः ।
भीमसेनमुवाचेदं भीष्मे मतिमतां वरः ॥ २-६५-२० (१३८७९)
ग्नैषा चेदिपतेर्बुद्धिर्यत्त्वामाह्वयतेऽच्युतम् ।
भीमसेन महाबाहो कृष्णस्यैव विनिश्चयः'॥ ॥ २-६५-२१ (१३८८०)

इति श्रीमन्महाभारते सभापर्वणि शिशुपालवधपर्वणि
पञ्चषष्टितमोऽध्यायः ॥६५.।
Mahabharata - Sabha Parva - Chapter Footnotes

२-६५-१३ महासेन कार्तिकयम् ॥

---

सभ-०६६
॥ श्रीः ॥
२.६६. अध्यायः ६६

Mahabharata - Sabha Parva - Chapter Topics
भीष्मेण शिशुपालवृत्तान्तकथनपूर्वकं स्वेन भीमनिषेधने
स्वाभिप्रायाविष्करणम् ॥ १.।
Mahabharata - Sabha Parva - Chapter Text

भीष्म उवाच ॥
चेदिराजकुले जातस्त्र्यक्ष एष चतुर्भुजः ।
रासभारावसदृशं ररास च ननाद च ॥ २-६६-१ (१३८८१)
तेनास्य मातापितरौ त्रेसतुस्तौ सबान्धवौ ।
वैकृतं तस्यत तौ दृष्ट्वा त्यागायाकुरुतां मतिम् ॥ २-६६-२ (१३८८२)
ततः सभार्यं नृपतिं सामात्यं सपुरोहितम् ।
चिन्तासंमूढहृदयं वागुवाचाशरीरेणी ॥ २-६६-३ (१३८८३)
एष ते नृपते पुत्रः श्रीमाञ्जातो बलाधिकः ।
तस्मादस्मान्न भेतव्यमव्यग्रः पाहि वै शिशुम् ॥ २-६६-४ (१३८८४)
न च वै तस्य मृत्युस्त्वं न कालः प्रत्युपस्थितः ।
यश्च शस्त्रेण हन्ताऽस्य स चोत्पन्नो नराधिप ॥ २-६६-५ (१३८८५)
संश्रुत्योदाहृतं वाक्यं भूतमन्तर्हितं ततः ।
पुत्रस्नेहाभिसन्तप्ता जननी वाक्यमब्रवीत् ॥ २-६६-६ (१३८८६)

येनेदमीरितं वाक्यं ममैतं तनयं प्रति ।
प्राञ्जलिस्तं नमस्यामि ब्रवीतु स पुनर्वचः ॥ २-६६-७ (१३८८७)
याथातथ्येन भगवान्देवो वा यदि वेतरः ।
श्रोतुमिच्छामि पुत्रस्य कोऽस्य मृत्युर्भविष्यति ॥ २-६६-८ (१३८८८)
अन्तर्भूतं ततो भूतमुवाचेदं पुनर्वचः ।
यस्योत्सङ्गे गृहीतस्य भुजावभ्यधिकावुभौ ॥ २-६६-९ (१३८८९)
पतिष्यतः क्षितितले पञ्चशीर्षाविवोरगौ ।
तृतीयमेतद्बालस्य ललाटस्थं तु लोचनम् ॥ २-६६-१० (१३८९०)
निमज्जिष्यति यं दृष्ट्वा सोऽस्य मृत्युर्भविष्यति ।
त्र्यक्षं चतुर्भुजं श्रुत्वा तथा च समुदाहृतम् ॥ २-६६-११ (१३८९१)
पृथिव्यां पार्थिवाः सर्वे अभ्यागच्छन्दिदृक्षवः ।
तान्पूजयित्वा सम्प्राप्तान्यथार्हं स महीपतिः ॥ २-६६-१२ (१३८९२)
एकैकस्य नृपस्याङ्के पुत्रमारोपयत्तदा ।
एवं राजसहस्राणा पृथक्त्वेन यथाक्रमम् ॥ २-६६-१३ (१३८९३)
शिशुरङ्के समारूढो न तत्प्राय निदर्शनम् ।
एतदेव तु संश्रुत्य द्वारवत्यां महाबलौ ॥ २-६६-१४ (१३८९४)
ततश्चेदिपुरं प्राप्तौ सङ्कर्षणजनार्दनौ ।
यादवौ यादवीं द्रष्टुं स्वसारं तौ पितुस्तदा ॥ २-६६-१५ (१३८९५)
अभिवाद्य यथान्यायं यथाश्रेष्ठं नृपं च ताम् ।
कुशलानामयं पृष्ट्वा निषण्णौ रामकेशवौ ॥ २-६६-१६ (१३८९६)
साऽभ्यर्च्य तौ तदा वीरौ प्रीत्या चाभ्यधिकं ततः ।
पुत्रं दामोदरोत्सङ्गे देवी संन्यदधात्स्वयम् ॥ २-६६-१७ (१३८९७)
न्यस्तमात्रस्य तस्याङ्के भुजावभ्यधिकावुभौ ।
पेततुस्तच्च नयनं न्यमज्जत ललाटजम् ॥ २-६६-१८ (१३८९८)
तद्दृष्ट्वा व्यथिता त्रस्ता वरं कृष्णमयाचत ।
ददस्व मे वरं कृष्ण भयार्ताया महाभुज ॥ २-६६-१९ (१३८९९)
त्वं ह्यार्तानां समाश्वासो भीतानामभयप्रदः ।
एवमुक्तस्ततः कृष्णः सोऽब्रवीद्यदुनन्दनः ॥ २-६६-२० (१३९००)
मा भैस्त्वं देवि धर्मज्ञे न मत्तोऽस्ति भयं तव ।
ददामि कं वरं किं च करवाणि पितृष्वसः ॥ २-६६-२१ (१३९०१)
शक्यं वा यदि वाऽशक्यं करिष्याणि वचस्तव ।
एवमुक्ता ततः कृष्णमब्रवीद्यदुनन्दनम् ॥ २-६६-२२ (१३९०२)
शिशुपालस्यापराधान्क्षमेथास्त्वं महाबल ।
मत्कृते यदुशार्दूल विद्ध्येनं मे वरं प्रभो ॥ २-६६-२३ (१३९०३)
कृष्ण उवाच। २-६६-२४क्ष् (१४९०)
अपराधशतं क्षाम्यं मया ह्यस्य पितृष्वसः ।

पुत्रस्य ते वधार्हस्य मा त्वं शोके मनः कृथाः ॥ २-६६-२४ (१३९०४)
भीष्म उवाच। २-६६-२५क्ष् (१४९१)
ग्स जानन्नात्मनो मृत्युं कृष्णं यदुसुखावहम्'।
एवमेष नृपः पापः शिशुपाः सुमन्दधीः ।
त्वां समाह्वयते वीर गोविन्दवरदर्पितः ॥ ॥ २-६६-२५ (१३९०५)

इति श्रीमन्महाभारते सभापर्वणि शिशुपालवधपर्वणि
षट्षष्टितमोऽध्यायः ॥ ६६ ॥

---

सभ-०६७
॥ श्रीः ॥
२.६७. अध्यायः ६७

Mahabharata - Sabha Parva - Chapter Topics
शिशुपालेन राज्ञां प्रशंसनपूर्वकं गर्हितेन भीष्मेण राज्ञां
तिरस्करणादिकम् ॥ १.।
Mahabharata - Sabha Parva - Chapter Text

भीष्म उवाच ॥
नैषा चेदिपतेर्बुद्धिर्यया त्वाह्वयतेऽच्युतम् ।
नूनमेव जगद्भर्तुः कृष्णस्यैव विनिश्चयः। २-६७-१ (१३९०६)
को हि मां भीमसेनाद्य क्षितावर्हति पार्थिवः ।
क्षेप्तुं कालपरीतात्मा यथैष कुलपांसनः ॥ २-६७-२ (१३९०७)
एष ह्यस्य महाबाहुस्तेजोंशश्च हरेर्ध्रुवम् ।
तमेव पुनरादातुं कुरुतेऽत्र मतिं हरिः ॥ २-६७-३ (१३९०८)
येनैष कुरुशार्दूल शार्दूल इव चेदिराट् ।
गर्जत्यतीव दुर्बुद्धिः सर्वानस्मानचिन्तयन् ॥ २-६७-४ (१३९०९)
वैशम्पायन उवाच ॥ २-६७-५क्ष् (१४९२)
ततो न ममृषे चैद्यस्तद्भीष्मवचनं तदा ।
उवाच चैन सङ्क्रुद्धः पुनर्भीष्ममथोत्तरम् ॥ २-६७-५ (१३९१०)
शिशुपाल उवाच ॥ २-६७-६क्ष् (१४९३)
द्विषतां नोऽस्तु भीष्मैष प्रभावः केशवस्य यः ।
यस्य संस्तववक्ता त्वं बन्दिवत्सततोत्थितः ॥ २-६७-६ (१३९११)
संस्तवे चमनो भीष्म परेषां रमते यदि ।
तदा संस्तुहि राज्ञस्त्वमिमं हित्वा जनार्दनम् ॥ २-६७-७ (१३९१२)
दरदं स्तुहि बाह्लीकमिमं पार्थिवसत्तमम् ।

जायमानेन येनेयभवद्दारिता मही ॥ २-६७-८ (१३९१३)
वङ्गाङ्गविषयाध्यक्षं सहस्राक्षसमं बले ।
स्तुहि कर्णमिमं भीष्म महाचापविकर्षणम् ॥ २-६७-९ (१३९१४)
यस्येमे कुण्डले दिव्ये सहजे देवनिर्मिते ।
कवचं च महाबाहो बालार्कसदृशप्रभम् ॥ २-६७-१० (१३९१५)
वासवप्रतिमो येन जरासन्धोऽतिदुर्जयः ।
विजितो बाहुयुद्धेन देहभेदं च लम्भितः ॥ २-६७-११ (१३९१६)
द्रोणं द्रौणिं च साधु त्वं पितापुत्रौ महारथौ ।
स्तुहि स्तुत्यावुभौ भीष्म सततं द्विजसत्तमौ ॥ २-६७-१२ (१३९१७)
ययोरन्यतरो भीष्म सङ्क्रुद्धः सचराचराम् ।
इमां वसुमतीं कुर्यान्निः शेषामिति मे मतिः ॥ २-६७-१३ (१३९१८)
द्रोणस्य हि समं युद्धे न पश्यामि नराधिपम् ।
नाश्वत्थाम्नः समं भीष्म न च तौ स्तोतुमिच्छसि ॥ २-६७-१४ (१३९१९)
पृथिव्यां सागरान्तायां यो वैप्रतिसमो भवेत् ।
दुर्योधनं त्वं राजेन्द्रमतिक्रम्य महाभुजम् ॥ २-६७-१५ (१३९२०)
जयद्रथं च राजानं कृतास्त्रं दृढविक्रमम् ।
द्रुमं किम्पुरुषाचार्यं लोके प्रथितविक्रमम् ।
अतिक्रम्य महावीर्यं किं प्रशंससि केशवम् ॥ २-६७-१६ (१३९२१)
वृद्धं च भरताचार्यं तथा शारद्वतं कृपम् ।
अतिक्रम्य महावीर्यं किं प्रशंससि केशवम् ॥ २-६७-१७ (१३९२२)
धनुर्धराणां प्रवरं रुक्मिणं पुरुषोत्तमम् ।
अतिक्रम्य महावीर्यं किं प्रशंससि केशवम् ॥ २-६७-१८ (१३९२३)
भीष्मकं च महावीर्यं दन्तवक्त्रं च भूमिपम् ।
भगदत्तं यूपकेथु जयत्सेनं च मागधम् ॥ २-६७-१९ (१३९२४)
विराटद्रुपदौ चोभौ शकुनिं च बहद्बलम् ।
विन्दानुविन्दावावन्त्यौ पाण्ड्यं श्वेतमथोत्तमम् ॥ २-६७-२० (१३९२५)
शङ्खं च सुमहाभागं वृषसेनं च मानिनम् ।
एकलव्यं च विक्रान्तं कालिङ्गं च महारथम् ॥ २-६७-२१ (१३९२६)
अतिक्रम्य महावीर्यं किं प्रशंसति केशवम् ।
शल्यादीनपि कस्मात्त्वं न स्तौषि वसुधाधिपान् ।
स्तवाय यदि ते बुद्धिर्वर्तते भीष्म वसुधाधिपान्। २-६७-२२ (१३९२७)
किं हि शक्यं मया कर्तुं यद्वृद्धानां त्वया नृप ।
पुरा कथयतां नूनं न श्रुतं धर्मवादिनाम् ॥ २-६७-२३ (१३९२८)
आत्मनिन्दात्मपूजा च परनिन्दा परस्तवः ।
अनाचरितमार्याणामिति ते भीष्म न श्रुतम् ॥ २-६७-२४ (१३९२९)
यदस्तव्यमिमं शश्वन्मोहात्संस्तौषि भक्तितः ।

केशवं तच्च ते भीष्म न कश्चिदनुमन्यते ॥ २-६७-२५ (१३९३०)
कथं भोजस्य पुरुषे वत्सपाले दुरात्मनि ।
समावेशयसे सर्वं जगत्केवलकाम्यया ॥ २-६७-२६ (१३९३१)
अथ चैषा न ते बुद्धिः प्रकृतिं याति भारत ।
मयैव कथितं पूर्वं कुलिङ्गशकुनिर्यथा ॥ २-६७-२७ (१३९३२)
कुलिङ्गशकुनिर्नाम पार्श्वे हिमवतः परे ।
भीष्म तस्याः सदा वाचः श्रूयन्तेऽर्थविगर्हिताः ॥ २-६७-२८ (१३९३३)
मा साहसमितीदं सा सततं वाशते किल ।
साहसं चात्मनातीव चरन्ती नावबुध्यते ॥ २-६७-२९ (१३९३४)
सा हि मांसार्गलं भीष्म मुखात्सिंहस्य खादतः ।
दन्तान्तरविलग्नं यत्तदादत्तेऽल्पचेतना ॥ २-६७-३० (१३९३५)
इच्छतः सा हि सिंहस्य भीष्म जीवत्यसंशयम् ।
तद्वत्त्वमप्यधर्मिष्ठ सदा वाचः प्रभाषसे ॥ २-६७-३१ (१३९३६)
इच्छतां भूमिपालानां भीष्म जीवस्यसंशयम् ।
लोकविद्विष्टकर्मा हि नान्योऽस्ति भवता समः ॥ २-६७-३२ (१३९३७)
वैशम्पायन उवाच ॥ २-६७-३३क्ष् (१४९४)
ततश्चेदिपतेः श्रुत्वा भीष्मः स कटुकं वचः ।
उवाचेदं वचो राजंश्चेदिराजस्य शृण्वतः ॥ २-६७-३३ (१३९३८)
इच्छतां किल नामाहं जीवाम्येषां महीक्षिताम् ।
सोऽहं न गणयाम्येतांस्तृणेनापि नराधिपान् ॥ २-६७-३४ (१३९३९)
एवमुक्ते तु भीष्मेण ततः सञ्चुक्रुशुर्नृपाः ।
केचिज्जहृषिरे तत्र केचिद्भीष्मं जगर्हिरे ॥ २-६७-३५ (१३९४०)
केचिदूचुर्महेष्वासाः श्रुत्वा भीष्मस्य यद्वचः ।
पापोऽवलिप्तो वृद्धश्च नायं भीष्मोऽर्हति क्षमाम् ॥ २-६७-३६ (१३९४१)
हन्यतां दुर्मतिर्भीष्मः पशुवत्साध्वयं नृपाः ।
सर्वैः समेत्य संरब्धैर्दह्यतां वा कटाग्निना ॥ २-६७-३७ (१३९४२)
इति तेषां वचः श्रुत्वा ततः कुरुपितामहः ।
उवाच मतिमान्भीष्मस्तानेव वसुधाधिपान् ॥ २-६७-३८ (१३९४३)
उक्तस्योक्तस्य नेहान्तमहं समुपलक्षये ।
यत्तु वक्ष्यामि तत्सर्वं शृणुध्वं वसुधाधिपाः ॥ २-६७-३९ (१३९४४)
पशुवद्घातनं वा मे दहनं वा कटाग्निना ।
क्रियतां मूर्ध्नि वो न्यस्तं मयेदं सकलं पदम् ॥ २-६७-४० (१३९४५)
एष तिष्ठति गोविन्दः पूजितोऽस्माभिरच्युतः ।
यस्य वस्त्वरते बुद्धिर्मरणाय स माधवम् ॥ २-६७-४१ (१३९४६)
कृष्णमाह्वयतामद्य युद्धे चक्रगदाधरम् ।
यादवस्यैव देवस्य देहं विशतु पातितः ॥ ॥ २-६७-४२ (१३९४७)

इति श्रीमन्महाभारते सभापर्वणि शिशुपालवधपर्वणि
सप्तषष्टितमोऽध्यायः ॥ ६७ ॥
Mahabharata - Sabha Parva - Chapter Footnotes

२-६७-१५ वैप्रतिसमः विगतः प्रतिसमो यस्य स तथा ।स्वार्थे तद्धितः।अतुल इत्यर्थः ॥
२-६७-२७ कुलिङ्गशकुनिरिति स्त्रीपक्षिविशेषः ॥
२-६७-३७ कटाग्निना कक्षाग्निना ॥

---

सभ-०६८
॥ श्रीः ॥
२.६८. अध्यायः ६८

Mahabharata - Sabha Parva - Chapter Topics
भीष्मवाक्यात्कुपितेन शशुपालेन राज्ञः सङ्गाह्य युयुत्सया कृष्णस्याह्वानम् ॥१.।कृष्णेन स्वस्मिन् शिशुपालकृतापराधान्विश्राव्य विभीषितानां राज्ञां पलायनम ॥२.।अपगतेषु राजसु शिशुपालस्य एकाकिनः कृष्णं प्रति युद्धाय गमनम् ॥३.।
Mahabharata - Sabha Parva - Chapter Text

वैशम्पायन उवाच ॥
वचः श्रुत्वैव भीष्मस्य चेदिराडुरुविक्रमः ।
युयुत्सुर्वासुदेवेन वासुदेवमुवाच ह ॥२-६८-१ (१३९४८)
आह्वये त्वां रणं गच्छ मया सार्धं जनार्दन ।
यावदद्य निहन्मि त्वां सहितं सर्वपाण्डवैः ॥२-६८-२ (१३९४९)
सह त्वया हि मे वध्याः सर्वथा कृष्ण पाण्डवाः ।
नृपतीन्समतिक्रम्य यैरराजा त्वमर्चितः ॥२-६८-३ (१३९५०)
ये त्वां दासमराजानं बाल्यादर्चन्ति दुर्मतिम् ।
अनर्हमर्हवत्कृष्ण वध्यास्त इति मे मतिः ॥२-६८-४ (१३९५१)
इत्युक्त्वा राजशार्दूल ग्शार्दूल इव नादयन् ।
पश्यतां सर्वभूतानां शिशुपालः प्रतापवान् ॥२-६८-५ (१३९५२)
स रणायैव सङ्क्रुद्धः सन्नद्धः सर्वराजभिः ।
सुनीथः प्रययौ क्षिप्रं पार्थयज्ञजिघांसया ॥२-६८-६ (१३९५३)
ततश्चक्रगदापाणिः केशवः केशिहा हरिः ।
सध्वजं रथमास्थाय दारुकेण सुसत्कृतम् ।

भीष्मेण दत्तहस्तोऽसावारुहोह रथोत्तमम् ॥ २-६८-७ (१३९५४)
तेन पापस्वभावेन कोपितान्सर्वपार्थिवान् ।
आससाद रणे कृष्णः सज्जितैकरथः स्थितः ॥ २-६८-८ (१३९५५)
ततः पुष्करपत्राक्षं तार्क्ष्यध्वजरथे स्थितम् ।
दिवाकरमिवोद्यन्तं ददृशुः सर्वपार्थिवाः ॥ २-६८-९ (१३९५६)
आरोपयन्तं ज्यां कृष्णं प्रतपन्तमिवौजसा ।
स्थितं पुष्परथे दिव्ये पुष्पकेतुमिवापरम् ॥ २-६८-१० (१३९५७)
दृष्ट्वा कृष्णं तथा यान्तं प्रतपन्तमिवौजसा ।
यथार्हं केशवे वृत्तिमवशाः प्रतिपेदिरे ॥ २-६८-११ (१३९५८)
तानुवाच महाबाहुर्महाऽसुरनिबर्हणः ।
वृष्णिवीरस्तदा राजन्सान्त्वयन्परवीरहा ॥ २-६८-१२ (१३९५९)
श्रीभगवानुवाच ॥ २-६८-१३क्ष् (१४९५)
अपेत सबलाः सर्व आस्वस्ता मम शासनात् ।
मा दृष्टो दूषयेत्पाप एष वः सर्वपार्थिपाः ॥ २-६८-१३ (१३९६०)
एष नः शत्रुरत्यन्तमेष वृष्णिविमर्दनः ।
सात्वतां सात्वतीपुत्रो वैरं चरति शाश्वतम्'॥ २-६८-१४ (१३९६१)
प्राग्ज्योतिषपुरं यातानस्माञ्ज्ञात्वा नृशंसकृत् ।
अदहद्द्वारकामेष स्वस्त्रीयः सन्नराधिपाः ॥ २-६८-१५ (१३९६२)
क्रीडतो भोजराजस्य एव रैवतके गिरौ ।
हत्वा बध्वा च तान्सार्वानुपायात्स्वपुरं पुरा ॥ २-६८-१६ (१३९६३)
अश्वमेधे हयं मेध्यमुत्सृष्टं रक्षिभिर्वृतम् ।
पितुर्मे यज्ञविघ्नार्थमहरत्पापनिश्चयः ॥ २-६८-१७ (१३९६४)
सौवीरान्प्रतियातां च बभ्रोरेष तपस्विनः ।
भार्यामभ्यहरन्मोहादकामां तामितो गताम् ॥ २-६८-१८ (१३९६५)
एष मायाप्रतिच्छन्नः कारूशार्थे तपस्विनीम् ।
जहार भद्रां वैशालीं मातुलस्य नृशंसकृत् ॥ २-६८-१९ (१३९६६)
वृष्णिदारान्विलाप्यैव हत्वा च कुकुरान्धकान् ।
पापाबुद्धिरुपातिष्ठत्स प्रविश्य ससम्भ्रमम् ॥ २-६८-२० (१३९६७)
विशालराज्ञो दुहितां मम पित्रा वृतां सतीम् ।
अनेन कृत्वा सन्धानं करूशेन जिगीषया ॥ २-६८-२१ (१३९६८)
जरासन्धं समाश्रित्य कृतवान्विप्रियाणि मे ।
तानि सर्वाणि सङ्ख्यातुं न शक्नोमि नराधिपाः ॥ २-६८-२२ (१३९६९)
एवमेतदपर्यन्तमेष वृष्णिषु किल्बिषी ।
अस्माकमयमारम्भांश्चकार परभानृजुः ॥ २-६८-२३ (१३९७०)
शतं क्षन्तव्यमस्माभिर्वधार्हाणां किलागसाम् ।
बद्धोऽस्मि समयैर्घोरैर्मातुरस्यैव सङ्गरे ॥ २-६८-२४ (१३९७१)

तत्तथा शतमस्माकं क्षान्तं क्षयकरं मया ।
द्वौ तु मे वधकालेऽस्मिन्न क्षन्तव्यौ कथञ्चन ॥ २-६८-२५ (१३९७२)
यज्ञविघ्नकरं हन्यां पाण्डवानां च दुर्हृदम् ।
इति मे वर्तते भावस्तमतीयां कथं न्वहम् ॥ २-६८-२६ (१३९७३)
पितृष्वसुः कृते दुःखं सुमहन्मर्षयाम्यहम् ।
दिष्ट्या हीदं सर्वराज्ञां सन्निधावद्य वर्तते ॥ २-६८-२७ (१३९७४)
पश्यन्ति हि भवन्तोऽद्य मय्यतीव व्यतिक्रमम् ।
कृतानि तु परोक्षं मे यानि तानि निबोधत ॥ २-६८-२८ (१३९७५)
इमं त्वस्य न शक्ष्यामि क्षन्तुमद्य व्यतिक्रमम् ।
अवलेपाद्वधार्हस्य समग्रे राजमण्डले ॥ २-६८-२९ (१३९७६)
रुक्मिण्यामस्य मूढस्य प्रार्थनाऽऽसीन्मुमूर्षतः ।
न च तां प्राप्तवान्मूढः शूद्रो वेदश्रुतीमिव ॥ २-६८-३० (१३९७७)
वैशम्पायन उवाच ॥ २-६८-३१क्ष् (१४९६)
एवमादि ततः सर्वे सहितास्ते नराधिपाः ।
गर्हणं शिशुपालस्य वासुदेवेन विश्रुतः ॥ २-६८-३१ (१३९७८)
वासुदेववचः श्रुत्वा चेदिराजं व्यगर्हयन् ।
रथोपस्थे धनुष्मन्तं शरान्सन्दधतं रुषा ॥ २-६८-३२ (१३९७९)
श्रुत्वाऽपि च विलोक्याशु दुद्रुवुः सर्वपार्थिवाः ।
विहाय परमोद्विग्नाश्चेदिराजं चमूमुखे ॥ २-६८-३३ (१३९८०)
तस्य तद्वचनं श्रुत्वा शिशुपालः प्रतापवान् ।
जहास स्वनवद्धासं वाक्यं चेदमुवाच ह ॥ २-६८-३४ (१३९८१)
मत्पूर्वां रुक्मिणीं कृष्ण संसत्सु परिकीर्तयन् ।
विशेषतः पार्थिवेषु व्रीडां न कुरुषे कथम् ॥ २-६८-३५ (१३९८२)
मन्यमानो हि कः सत्सु पुरुषः परिकीर्तयेत् ।
अन्यपूर्वां स्त्रियं जातु त्वदन्यो मधूसूदन ॥ २-६८-३६ (१३९८३)
क्षमा वा यदि ते श्रद्धा मा वा कृष्ण मम क्षम ।
क्रुद्धाद्वापि प्रसन्नाद्वा किं मे त्वत्तो भविष्यते ॥ २-६८-३७ (१३९८४)
ग्वैशम्पायन उवाच ॥ २-६८-३८क्ष् (१४९७)
स तांस्तु विद्रुतान्सर्वान्साश्वपत्तिरथद्विपान् ।
कृष्णतेजोहतान्सर्वान्समीक्ष्य वसुधाधिपान् ॥ २-६८-३८ (१३९८५)
शिशुपालो रथेनैकः प्रत्युपायात्स केशवम् ।
रुषा ताम्रेक्षणो राजञ्छलभः पावकं यथा ॥ ॥ २-६८-३९ (१३९८६)

इति श्रीमन्महाभारते सभापर्वणि शिशुपालवधपर्वणि
अष्टषष्टितमोऽध्यायः ॥ ६८.।

Mahabharata - Sabha Parva - Chapter Footnotes

सभ-०६९
॥ श्रीः ॥
२.६९. अध्यायः ६९

Mahabharata - Sabha Parva - Chapter Topics
शिशुपाले सन्नद्धे सति उत्पातदर्शनेन युधिष्ठिरस्य प्रश्ने
नारदेन तत्तदुत पातानां विशिष्य फलकथनम् ॥ १.।
Mahabharata - Sabha Parva - Chapter Text

वैशम्पायन उवाच ॥
ततो युद्धाय संनद्धं चेदिराजं युधिष्ठिरः ।
दृष्ट्वा मतिमतां श्रेष्ठो नारदं समुवाच ह ॥ २-६९-१ (१३९८७)
युधिष्ठिर उवाच ॥ २-६९-२क्ष् (१४९८)
अन्तरिक्षे च भूमौ च तेऽस्त्यविदितं क्वचित् ।
यानि राजविनाशाय भौमानि च खगानि च ॥ २-६९-२ (१३९८८)
निमित्तानीह जायन्ते उत्पाताश्च पृथग्विधाः ।
एतदित्छामि कात्स्न्र्येन श्रोतुं त्वत्तो महामुने ॥ २-६९-३ (१३९८९)
वैशम्पायन उवाच। २-६९-४क्ष् (१४९९)
इत्येवं मितमान्विप्रः कुरुराजस्य धीमतः ।
पृच्छतः सर्वमव्यग्रमाचचक्षे महायशाः ॥ २-६९-४ (१३९९०)
नारद उवाच ॥ २-६९-५क्ष् (१५००)
पराक्रमं च मार्गं च संनिपातं समुच्छ्रयम् ।
आरोहणं कुरुश्रेष्ठ अन्योन्यं प्रतिसर्पणम् ॥ २-६९-५ (१३९९१)
पश्मीनां व्यतिसंसर्गं व्यायामं वृत्तिपीडनम् ।
दर्शनादर्शनं चैव अदृश्यानां च दर्शनम् ॥ २-६९-६ (१३९९२)
हानिं वृद्धिं च ह्रासं च वर्णस्थानं बलाबलम् ।
सर्वमेतत्परीक्षेत ग्रहाणां ग्रहकोविदः ॥ २-६९-७ (१३९९३)
भौमाः पूर्वं प्रवर्तन्ते खेचराश्च ततः परम् ।
उत्पद्यन्ते च लोकेऽस्मिन्नुत्पाता देवनिर्मिताः ॥ २-६९-८ (१३९९४)
यदा तु सर्वभूतानां छाया न परिवर्तते ।
अपरेण गते सूर्ये तत्पराभवलक्षणम् ॥ २-६९-९ (१३९९५)
अच्छाये विमलच्छाया प्रतिच्छायेव दृश्यते ।
यत्र चैत्यकवृक्षाणां तत्र विद्यान्महद्भयम् ॥ २-६९-१० (१३९९६)
शीर्णपर्णप्रवालाश्च शुष्कपर्णाश्च चैत्यकाः ।

अपभ्रष्टप्रवालाश्च तत्राभावं विनिर्दिशेत् ॥ २-६९-११ (१३९९७)
स्निग्धपर्णप्रवालाश्च दृश्यन्ते यत्र चैत्यकाः ।
ईहमानाश्च वृक्षाश्च भावस्तत्र न संशयटः ॥ २-६९-१२ (१३९९८)
पुष्पे पुष्पं प्रजायेत फले वा फलमाश्रितम् ।
राजा वा राजमात्रो वा मरणायोपपद्यते ॥ २-६९-१३ (१३९९९)
प्रावृट्छरदि हेमन्ते वसन्ते वापि सर्वशः ।
आकालिकं पुष्पफलं राष्ट्रक्षोभं विनिर्दिशेत् ॥ २-६९-१४ (१४०००)
नदीनां स्त्रोतसोऽकाले द्योतयन्ति महाभयम् ।
वनस्पतिः पूज्यमानः पूजितोऽपूजितोऽपि वा ॥ २-६९-१५ (१४००१)
यदा भज्येत वातेन भिद्यते नमितोऽपि वा ।
अग्निवायुभयं विद्याच्छ्रेष्ठो वापि विनश्यति ॥ २-६९-१६ (१४००२)
दिशः सर्वाश्च दीप्यन्ते जायन्ते राजविभ्रमाः ।
भिद्यमानो यदा वृक्षो निनदेच्चापि पातितः ।
सह राष्ट्रं च पतितं नतं वृक्षं प्रपातयेत् ॥ २-६९-१७ (१४००३)
अथैनं छेदयेत्कश्चित्प्रतिक्रुद्धो वनस्पतिः ।
छेत्ता भेत्ता पतिश्चैव क्षिप्रमेव नशिष्यति ॥ २-६९-१८ (१४००४)
देवतानां च पतनं मष्टपानां च पातनम् ।
अचलानां प्रकम्पश्च तत्पराभवलक्षणम् ॥ २-६९-१९ (१४००५)
निशि चेन्द्रधनुर्दृष्टं ततोपि च महद्भयम् ।
तद्द्रष्टरेव भीतिः स्यान्नान्येषां भरतर्षभ ॥ २-६९-२० (१४००६)
रात्राविन्द्रधनुर्दृष्ट्वा तद्राष्ट्रं परिवर्जयेत् ॥ २-६९-२१ (१४००७)
अर्चा यत्र प्रनृत्यन्त नदन्ति च हसन्ति च ।
उन्मीलन्ति निमीलन्ति राष्ट्रक्षोभं विनिर्दिशेत् ॥ २-६९-२२ (१४००८)
शिला यदि प्रसिञ्चन्ति स्नेहांश्चोदकसम्भवान् ।
अन्यद्वा विकृतं किञ्चित्तद्भयस्य निदर्शनम् ॥ २-६९-२३ (१४००९)
म्रियन्ते वा महामात्रा राजा सपरिवारकः ।
पुरस्य या भवेद्व्याधी राष्ट्रे देशे च विभ्रमाः ॥ २-६९-२४ (१४०१०)
देवतानां यदाऽऽवासे राज्ञां वा यत्र वेश्मनि ।
भाण्डागारायुधागारे निविशेत यदा मधु ॥ २-६९-२५ (१४०११)
सर्वं तदा भवेत्स्थानं हन्यमानं बलीयसा ।
आगन्तुकं भयं तत्र भवेदित्येव निर्दिशेत् ॥ २-६९-२६ (१४०१२)
पादपश्चैव यो यत्र रक्तं स्रवति शोणितम् ।
दन्ताग्रात्कुञ्जरो वापि शृङ्गाद्वा वृषभस्तथा ॥ २-६९-२७ (१४०१३)
पादपाद्राष्ट्रिविभ्रंशः कुञ्जराद्राजविभ्रमः ।
गोब्राह्मणविनाशः स्याद्वृषभस्येति निर्दिशेत् ॥ २-६९-२८ (१४०१४)
छत्रं नरपतेर्यत्र निपतेत्पृथिवीतले ।

सराष्ट्रो नृपती राजन्क्षिप्रमेव विनश्यति ॥ २-६९-२९ (१४०१५)
देवागारेषु वा यत्र राज्ञो वा यत्र वेश्मनि ।
विकृतं यदि दृश्येत नागावासेषु वा पुनः ॥ २-६९-३० (१४०१६)
तस्य देशस्य पीडा स्याद्राज्ञो जनपदस्य वा ।
अनावृष्टिभयं घोरमतिदुर्भिक्षमादिशेत् ॥ २-६९-३१ (१४०१७)
अर्चाया बाहुभङ्गेन गृहस्थानां भयं भवेत् ।
भग्ने प्रहरणे विद्यात्सेनापतिविनाशनम् ॥ २-६९-३२ (१४०१८)
आगन्तुका तु प्रतिमा स्थानं यत्र न विन्दति ।
जभ्यन्तरेण षण्मासाद्राजा त्यजति तत्पुरम् ॥ २-६९-३३ (१४०१९)
प्रदीर्यते मही यत्र विनदत्यपि पात्यते ।
म्रियते तत्र राजा च तत्र राष्ट्रं विनश्यति ॥ २-६९-३४ (१४०२०)
एणीपदान्वा सर्पान्वा डुण्डुभानथ दीप्यकान् ।
मण्डूको ग्रसते यत्र तत्र राजा विनश्यति ॥ २-६९-३५ (१४०२१)
अभिन्नं वाप्यपक्वं वा यत्रान्नमुपचीयते ।
जीर्यन्ते वा म्रियन्ते वा तदन्नं नोपभुञ्जते ॥ २-६९-३६ (१४०२२)
उदपाने च यत्रापो विवर्धन्ते युधिष्ठिर ।
स्थावरेषु प्रवर्तन्ते निर्गच्छेन्न पुनस्ततः ॥ २-६९-३७ (१४०२३)
अपादं वा त्रिपादं वा द्विशीर्षं वा चतुर्भुजम् ।
स्त्रियो यत्र प्रसूयन्ते ब्रूयात्तत्र पराभवम् ॥ २-६९-३८ (१४०२४)
अजैडकाः स्त्रियो गावो ये चान्ये च वियोनयः ।
विकृतानि प्रजायन्ते तत्र तत्र पराभवः ॥ २-६९-३९ (१४०२५)
नदी यत्र प्रतिस्रोता आवहेत्कलुषोदकम् ।
दिशश्च न प्रकाशन्ते तत्पराभवलक्षणम् ॥ २-६९-४० (१४०२६)
एतानि च निमित्तानि यानि चान्यानि भारत ।
केशवादेव जायन्ते भौमानि च खगानि च ॥ २-६९-४१ (१४०२७)
चन्द्रादित्यौ ग्रहाश्चैव नक्षत्राणि च भारत ।
वायुरग्निस्तथा चापः पृथिवी च जनार्दनात् ॥ २-६९-४२ (१४०२८)
यस्य देशस्य हानिं वा वृद्धिं वा कर्तुमिच्छति ।
तस्मिन्देशे निमित्तानि तानि तानि करोत्ययम् ॥ २-६९-४३ (१४०२९)
सोसौ चेदिपतेस्तात विनाशं समुपस्थितम् ।
निवेदयति गोविन्दः स्वैरुपायैर्न संशयः ॥ २-६९-४४ (१४०३०)
इयं प्रचलिता भूमिरशिवा वान्ति मारुताः ।
राहुश्चाप्यपतत्सोममपर्वणि विशाम्पते ॥ २-६९-४५ (१४०३१)
सनिर्घाताः पतन्त्युल्कास्तमः सञ्जायते भृशम् ।
चेदिराजविनाशाय हरिरेष विजृम्भते ॥ २-६९-४६ (१४०३२)
वैशम्पायन उवाच ॥ २-६९-४७क्ष् (१५०१)

एवमुक्त्वा तु देवर्षिर्नारदो विरराम ह ।
ताभ्यां पुरुषसिंहाभ्यां तस्मिन्युद्ध उपस्थिते। २-६९-४७ (१४०३३)
ददृशुर्भूमिपालास्ते घोरानौत्पातिकान्बहून् ॥
तत्र वै दृश्यमानानां दिक्षु सर्वासु भारत। २-६९-४८ (१४०३४)
अश्रूयन्त तदा राजञ्छिवानामशिवा रवाः ॥
ररास च मही कृत्स्ना सवृक्षवनपर्वता। २-६९-४९ (१४०३५)
अपर्वणि च मध्याह्ने मूर्यं स्वर्भानुरग्रसत् ॥
ध्वजाग्रे चेदिराजस्य सर्वरत्नपरिष्कृते। २-६९-५० (१४०३६)
अपतत्खाच्च्युतो गृध्रस्तीक्ष्णतुण्डः परन्तप ॥
आरण्यैः सहसा हृष्टा ग्राम्याश्च मृगपक्षिणः। २-६९-५१ (१४०३७)
चुक्रुशुर्भैरवं तत्र तस्मिन्युद्ध उपस्थिते ॥
एवमादिनि घोराणि भौमानि च स्वगानि च। २-६९-५२ (१४०३८)
औत्पातिकान्यदृश्यन्त सङ्क्रुद्धे शार्ङ्गधन्वनि ॥ ॥ २-६९-५३ (१४०३९)

इति श्रीमन्महाभारते सभापर्वणि शिशुपालवधपर्वणि
एकोनसप्ततितमोऽध्यायः ॥ ६९ ॥

---

सभ-०७०
॥ श्रीः ॥
२.७०. अध्यायः ७०

Mahabharata - Sabha Parva - Chapter Topics
कृष्णशिशुपालयोर्युद्धवर्णनम् ॥ १. । शिशुपाल-----॥ २. ।
Mahabharata - Sabha Parva - Chapter Text

वैशम्पायन उवाच ॥
ततो विष्फारयन्राजा महच्चैदिपतिर्धनुः ।
अभियास्यन्हृषीकेशमुवाच मधुसूदनम् ॥ २-७०-१ (१४०४०)
एकस्त्वमसि मे शत्रुस्तत्त्वां हत्वाऽद्य माधव ।
ततः सागरपर्यन्तां पालयिष्यामि मेदिनीम् ॥ २-७०-२ (१४०४१)
द्वैरथं काङ्क्षितं यद्वै तदिदं पर्युपस्थितम् ।
चिरस्य वत मे ----वासुदेव सह त्वया ।
अद्य त्वां निहनिष्यामि भीष्मं च सह पाण्डवैः ॥ २-७०-३ (१४०४२)
वैशम्पायन उवाच। २-७०-४क्ष् (१५०२)
---
-- २-७०-४ (१४०४३)
--

-- २-७०-५ (१४०४४)
----
--- २-७०-६ (१४०४५)
----
--- २-७०-७ (१४०४६)
------ सुनीयं परवीरहा ॥
----- २-७०-८ (१४०४७)
अयं त्वं भामकस्तीक्ष्णश्चेदिराज महाशरः ।
भेत्तुमर्हति वेगेन महाशनिरिवाचलम् ॥ २-७०-९ (१४०४८)
वैशम्पायन उवाच। २-७०-१०क्ष् (१५०३)
एवं ब्रुवति गोविन्दे ततश्चेदिपतिः पुनः ।
मुमोच निशितानन्यान्कृष्णं प्रति शरान्बहून् ॥ २-७०-१० (१४०४९)
अथ बाणार्दितः कृष्णः शार्ङ्गमायम्य दीप्तिमान् ।
मुमोच निशितान्बाणाञ्छतशोथ सहस्रशः ॥ २-७०-११ (१४०५०)
ताञ्छरांस्तु स चिच्छेद शरवर्षैस्तु चेदिराट् ।
षड्भिश्चान्यैर्जघानाशु केशवं चेदिपुङ्गवः ॥ २-७०-१२ (१४०५१)
ततोऽस्त्रं सहसा कृष्णः प्रमुमोच जगद्गुरुः ।
अस्त्रेण तन्महाबाहुर्वारयामास चेदिराट् ॥ २-७०-१३ (१४०५२)
ततः शतसहस्रेण शराणां नतपर्वणाम् ।
सर्वतः समवाकीर्य शौरिं दामोदरं तदा ॥ २-७०-१४ (१४०५३)
ननाद बलवान्क्रुद्धः शिशुपालः प्रतापवान् ।
इदं चोवाच संरब्धः केशवं परवीरहा ॥ २-७०-१५ (१४०५४)
शिशुपाल उवाच ॥ २-७०-१६क्ष् (१५०४)
अद्याङ्गं मामका बाणा भेत्स्यन्ति तव संयुगे ।
हत्वा त्वां समुतामात्यं पाण्डवांश्च तरस्विनः ॥ २-७०-१६ (१४०५५)
अनृण्यमद्यय यास्यामि जरासन्धस्य धीमतः ।
कंसस्य केशिनश्चैव नरकस्य तथैव ह ॥ २-७०-१७ (१४०५६)
वैशम्पायन उवाच ॥ २-७०-१८क्ष् (१५०५)
इत्युक्त्वा क्रोधताम्राक्षः शिशुपालो जनार्दनम् ।
अदृश्यं शरवर्षेण सर्वतः स चकार ह ॥ २-७०-१८ (१४०५७)
ततोऽस्त्रेणैव चान्योन्यं निकृत्य च शरान्बहून् ।
शरवर्षैस्तदा चैद्यमन्तर्धातुं प्रचक्रमे ॥ २-७०-१९ (१४०५८)
अन्तर्धानगतौ वीरौ शुशुभाते महारथौ ।
तौ दृष्ट्वा सर्वभूतानि साधुसाध्वित्यपूजयन् ॥ २-७०-२० (१४०५९)
न दृष्टपूर्वमस्माभिर्युद्धमीदृशकं पुरा ।
ततः कृष्णं जघानाशु शुशुपालस्त्रिभिः शरैः ॥ २-७०-२१ (१४०६०)

कृष्णोऽपि बाणैर्विव्याध सुनीथं पञ्चभिर्युधि ।
ततः सुनीथं सप्तत्या नाराचैर्दयद्बली। २-७०-२२ (१४०६१)
ततोऽतिविद्धः कृष्णेन सुनीथः क्रोधमूर्छितः ।
विव्याध निशितैर्बाणैर्वासुदेवं स्तनान्तरे ॥ २-७०-२३ (१४०६२)
पुनः कृष्णं त्रिभिर्विद्ध्वा ननादावसरे नृपः ।
ततोऽतिदारुणं युद्धं सहसा चक्रतुस्तदा ॥ २-७०-२४ (१४०६३)
नौ नखैरिव शार्दूलौ दन्तैरिव महागजौ ।
दंष्ट्राभिरिव पञ्चास्यौ चरणैरिव कुक्कुटौ ॥ २-७०-२५ (१४०६४)
दारयेतां शरैस्तीक्ष्णैरन्योन्यं युधि तावुभौ ।
ततो मुमुचतुः क्रुद्धौ शरवर्षमनुत्तमम् ॥ २-७०-२६ (१४०६५)
शरैरेव शराञ्छित्वा तावुभौ पुरुषर्षभौ ।
चक्रातेऽस्त्रमयं युद्धं घोरं तदतिमानुषम् ॥ २-७०-२७ (१४०६६)
आग्नेयमस्त्रं मुमुचे शिशुपालः प्रतापवान् ।
वारुणास्त्रेण तच्छीघ्रं नाशयामास केशवः ॥ २-७०-२८ (१४०६७)
कौबेरमस्त्रं सहसा चेदिराट् प्रमुमोच ह। २-७०-२९ कौबेरणैव
सहसाऽनाशयत्तं जगत्प्रभुः ॥ २-७०-२९ (१४०६८)
याम्यमस्त्रं ततः क्रुद्धो मुमुचे कालमोहितः ।
याम्येनैवास्त्रयोगेन याम्यमस्त्रं व्यनाशयत् ॥ २-७०-३० (१४०६९)
गान्धर्वेण च गान्धर्वं मानवं मानवेन च ।
वायव्येन च वायव्यं रौद्रं रौद्रेण चाभिभूः ॥ २-७०-३१ (१४०७०)
ऐन्द्रमैन्द्रेण भगवान्वैष्णवेन च वैष्णवम् ।
एवमस्त्राणि कुर्वाणौ युयुधाते महाबलौ ॥ २-७०-३२ (१४०७१)
ततो मायां विकुर्वाणो दमगोषसुतो बली ।
गदामुसलसंयुक्ताञ्छक्तितोमरसायकान् ॥ २-७०-३३ (१४०७२)
परश्वथमुसण्डीश्च ववर्ष युधि केशवम् ।
अमोघास्त्रेण भगवान्नाशयामास केशिहा ॥ २-७०-३४ (१४०७३)
शिलावर्षं महाघोरं ववर्ष युधि चेदिराट् ।
वज्रास्त्रेणाभिसङ्क्रुद्धश्चूर्णं तदकरोत्प्रभुः ॥ २-७०-३५ (१४०७४)
जलवर्षं ततो घोरं व्यसजच्चेदिपुङ्गवः ।
वायव्यास्त्रेण भगवान्व्याक्षिपच्छतशो हि तत् ॥ २-७०-३६ (१४०७५)
निहत्य सर्वमायां वै सुनीतस्य जनार्दनः ।
स मुहूर्तं चकाराशु द्वन्द्वयुद्धं महारथः ॥ २-७०-३७ (१४०७६)
स बाणयुद्धं कुर्वाणो भर्त्सयामास चेदिराट् ।
दमघोषसुतो धृष्टमुवाच यदुपुङ्गवम् ॥ २-७०-३८ (१४०७७)
अद्य कृष्णमकृष्णं तु कुर्वन्तु मम सायकाः ।
इत्येवमुक्त्वा दुष्टात्मा शरवर्षं जनार्दने ॥ २-७०-३९ (१४०७८)

मुमोच पुरुषव्याघ्रो घोरं वै चेदिपुङ्गवः ।
शरसंङ्कृत्तगात्रस्तु क्षणेन यदुनन्दनः ॥ २-७०-४० (१४०७९)
रुधिरं परिसुस्राव मदं मत्त इव द्विपः ।
न यन्ता न रथो वापि न चाश्वाः पर्वतोपमाः ॥ २-७०-४१ (१४०८०)
दृश्यन्ते शरसञ्छन्नाः केशवस्य महात्मनः ।
केशवं तदवस्थं तु दृष्ट्वा भूतानि चक्रुशुः ॥ २-७०-४२ (१४०८१)
दारुकस्तु तदा प्राह कृष्णं यादवनन्दनम् ।
नेदृशो दृष्टपूर्वो हि सङ्ग्रामो वै पुरा मया ॥ २-७०-४३ (१४०८२)
स्थातव्यमिति तिष्ठामि त्वत्प्रभावेण माधव ।
अन्यथा न च मे प्राणा धरायेयुर्जनार्दन ॥ २-७०-४४ (१४०८३)
अतः सञ्चिन्त्य गोविन्द क्षिप्रमस्य वधं कुरु ।
एवमुक्तस्तु सूतेन केशवो वाक्यमब्रवीत् ॥ २-७०-४५ (१४०८४)
एष ह्यतिबलो दैत्यो हिरण्यकशिपुः पुरा ।
रिपुः सुराणामभवद्वरदानेन गर्वितः ॥ २-७०-४६ (१४०८५)
तथाऽऽसीद्रावणो नाम राक्षसो ह्यतिवीर्यवान् ।
तेनैव बलवीर्येण बलं नागणयन्मम ॥ २-७०-४७ (१४०८६)
अहं मृत्युश्च भविता काले काले दुरात्मनः ।
न भेतव्यं तथा सूत नैष कश्चिन्मयि स्थिते ॥ २-७०-४८ (१४०८७)
इत्येवमुक्त्वा भगवान्ननर्द गरुडध्वजः ।
पाञ्चजन्यं महाशङ्खं पूरयामास केशवः ॥ २-७०-४९ (१४०८८)
संमोहयित्वा भगवांश्चक्रं दिव्यं समाददे ।
चिच्छेद च सुनीथस्य शिरश्चक्रेण संयुगे'॥ २-७०-५० (१४०८९)
स पपात महाबाहुर्वज्राहत इवाचलः ।
ततश्चेदिपतेर्देहात्तेजोऽग्र्यं ददृशुर्नृपाः ॥ २-७०-५१ (१४०९०)
उत्पतन्तं महाराज गगनादिव भास्करम् ।
ततः कमलपत्राक्षं कृष्णं लोकनमस्कृतम् ।
ववन्दे तत्तदा तेजो विवेश च नराधिप ॥ २-७०-५२ (१४०९१)
तदद्भुतममन्यन्त दृष्ट्वा सर्वे महीक्षितः ।
यद्विवेश महाबाहुं तत्तेजः पुरुषोत्तमम् ॥ २-७०-५३ (१४०९२)
अनभ्रे प्रववर्ष द्यौः पपात ज्वलिताशनिः ।
कृष्णेन निहते चैद्ये चचाल न वसुन्धरा ॥ २-७०-५४ (१४०९३)
ततः केचिन्महीपाला नाब्रुवंस्तत्र किञ्चन ।
अतीतवाक्पथे काले प्रेक्षमाणा जनार्दनम् ॥ २-७०-५५ (१४०९४)
हस्तैर्हस्ताग्रमपरे प्रत्यपिंषन्नमर्षिताः ।
अपरे दशनैरोष्टानदशन्क्रोधमूर्च्छिताः ॥ २-७०-५६ (१४०९५)
रहश्च केचिद्वार्ष्णेयं प्रशशंसुर्नराधिपाः ।

केचिदेव सुसंरब्धा मध्यस्थास्त्वपरेऽभवन् ॥ २-७०-५७ (१४०९६)
प्रहृष्टाः केशवं जग्मुः संस्तुवन्तो महर्षयः ।
ब्राह्मणाश्च महात्मानः पार्थिवाश्च महाबलाः ।
शशंसुर्निर्वृताः सर्वे दृष्ट्वा कृष्णस्य विक्रमम् ॥ २-७०-५८ (१४०९७)
ग्सदेवगन्धर्वगणा राजानो भुवि विश्रुताः ।
प्रणामं हि हृषीकेशे प्राकुर्वत महात्मनि ॥ २-७०-५९ (१४०९८)
ये त्वासुरगणाः पक्षाः सम्भूताः क्षत्रिया इह ।
ते निन्दन्ति हृषीकेशं दुरात्मानो गतायुषः ॥ २-७०-६० (१४०९९)
प्रजापतिगणा ये तु मध्यस्थाश्च महात्मनि ।
ब्रह्मर्षयश्च सिद्धाश्च गन्धर्वोरगचारणाः ॥ २-७०-६१ (१४१००)
ते वै स्तुवन्ति गोविन्दं दिव्यैर्मङ्गलसंयुतैः ।
परस्परं च नृत्यन्ति गीतेन विविधेन च ।
उपतिष्ठन्ति गोविन्दं प्रीतियुक्ता महात्मनि ॥ २-७०-६२ (१४१०१)
प्रहृष्टाः केशवं जग्मुः संस्तुवन्तो महर्षयः ।
ब्राह्मणाश्चापि सुप्रीताः पाण्डवाश्च महाबलाः ॥ २-७०-६३ (१४१०२)
पाण्डवस्त्वब्रवीद्भातॄन्सत्कारेण महीपतिम् ।
दमघोषात्मजं शूरं संस्कारयत मा चिरम् ॥ २-७०-६४ (१४१०३)
कुरुराजवचः श्रुत्वा भ्रातरस्ते त्वरान्विताः ।
तथा च कृतवन्तस्ते भ्रातुर्वै शासनं तदा ॥ २-७०-६५ (१४१०४)
चेदीनामाधिपत्ये च पुत्रं तस्याज्ञया हरेः ।
अभ्यषिञ्चत तं पार्थः सहितैर्वसुधाधिपैः ॥ ॥ २-७०-६६ (१४१०५)

इति श्रीमन्महाभारते सभापर्वणि शिशुपालवधपर्वणि
सप्ततितमोऽध्यायः ॥ ७०.।

---

सभ-०७१
॥ श्रीः ॥
२.७१. अध्यायः ७१

Mahabharata - Sabha Parva - Chapter Topics
विस्तरेण राजसूयवर्णनम् ॥ १.।
Mahabharata - Sabha Parva - Chapter Text

वैशम्पायन उवाच ॥
ततः प्रववृते यज्ञो धर्मराजस्य धीमतः ।
शान्तविघ्नार्हणक्षोभो महर्षिगणसङ्कुलः ॥ २-७१-१ (१४१०६)
तं तु यज्ञं महाबाहुरासमाप्तेर्जनार्दनः ।

ररक्ष भगवाञ्छौरिः शार्ङ्गचक्रगदाधरः ॥ २-७१-२ (१४१०७)
तस्मिन्यज्ञे प्रवृत्ते तु वाग्मिनो हेतुवादिनः ।
हेतुवादान्बहून्प्राहुः परपक्षजिगीषवः ॥ २-७१-३ (१४१०८)
ददृशुस्ते नृपतयो यज्ञस्य विधिमुत्तमम् ।
उपेन्द्रस्येव विहितं सहदेवेन भारत ॥ २-७१-४ (१४१०९)
तद्यज्ञे न्यवसन्राजन्ब्राह्मणा भृशमुत्सुकाः ।
कथयन्तः कथाः पुण्याः पश्यन्तो नटनर्तकान् ॥ २-७१-५ (१४११०)
ददृशुस्तोरणान्यत्र हेमतालमयानि च ।
दीप्तभास्करतुल्यानि प्रदीप्तानीव तेजसा ॥ २-७१-६ (१४१११)
स यज्ञस्तोरणैस्तत्र ग्रहैर्द्यौरिव सम्बभौ ।
शय्यासनविहारांश्च सुबहून्रत्नसंवृतान् ॥ २-७१-७ (१४११२)
घटान्पात्रीकटाहानि कलशानि समन्ततः ।
न ते किञ्चिदसौवर्णमपश्यंस्तत्र पार्थिवाः ॥ २-७१-८ (१४११३)
भुञ्जानानां च विप्राणां स्वादुभोज्यैः पृथग्विधैः ।
अनिशं श्रूयते तत्र मुदितानां महात्मनाम् ॥ २-७१-९ (१४११४)
दीयतां दीयतामेषां भुज्यतां भुज्यतामिति ।
एवम्प्रकाराः सञ्जल्पाः श्रूयन्ते तत्र नित्यशः ॥ २-७१-१० (१४११५)
ओदनानां विकाराणि स्वादूनि च बहूनि च ।
विविधआनि च भक्ष्याणि पेयानि मधुराणि च ॥ २-७१-११ (१४११६)
ददुर्द्विजानां सततं राजप्रेष्या महाध्वरे ।
पूर्णे शतसहस्रे तु विप्राणां भुञ्जतां तदा ॥ २-७१-१२ (१४११७)
स्थापितस्तत्र सञ्ज्ञार्थं शङ्खोऽध्मायत नित्यशः ।
मुहुर्मुहुः प्रणादस्तु तस्य शङ्खस्य भारत ॥ २-७१-१३ (१४११८)
उत्तमः श्रूयते शब्दः श्रुत्वा विस्मयमागमन् ।
एवं प्रवृत्ते यज्ञे तु तुष्टपुष्टजनायुते ॥ २-७१-१४ (१४११९)
अन्नस्य बहुशो राजन्नुत्सेधाः पर्वतोपमाः ।
दधिकुल्याश्च ददृशुः सर्पिषश्च ह्रदाञ्जनाः ॥ २-७१-१५ (१४१२०)
जम्बूद्वीपो हि सकलो नानाजनपदायुतः ।
राजन्नदृश्यतैकस्थो राज्ञस्तस्मिन्महाक्रतौ ॥ २-७१-१६ (१४१२१)
तत्र राजसहस्राणि पुरुषाणां ततस्ततः ।
गृहीत्वा धनमाजग्मुस्तस्य राज्ञो महाक्रतौ ॥ २-७१-१७ (१४१२२)
राजानः स्रग्विणश्चैव संमृष्टमणिकुण्डलाः ।
तान्परीविविषुर्विप्राञ्छतशोऽथ सहस्रशः ॥ २-७१-१८ (१४१२३)
विविधान्यन्नपानानि लेह्यानि विविधानि च ।
तेषां नृपोपभोग्यानि ब्राह्मणेभ्यो ददुः स्म ते ॥ २-७१-१९ (१४१२४)
नानाविधानि भक्ष्याणि स्वादुपुष्पफलानि च ।

गुलानि स्वादुक्षौद्राणि ददुस्ते ब्राह्मणेषु वै ॥ २-७१-२० (१४१२५)
एतानि सततं भुक्त्वा तस्मिन्यज्ञे द्विजातयः ।
परां प्रीतिं ययुः सर्वे मोदमानास्ततस्ततः ॥ २-७१-२१ (१४१२६)
एवं प्रमुदितं सर्वं बहुशो धनधान्यवत् ।
यज्ञवाटं नृपा दृष्ट्वा विस्मयं परमं ययुः ॥ २-७१-२२ (१४१२७)
यथाबद्धूयमानाग्निं राजसूयं महाक्रतुम् ।
पाण्डवस्य यथाशास्त्रं जुहुवुः सर्वयाजकाः ॥ २-७१-२३ (१४१२८)
व्यासधौम्यादयः सर्वे विधिवत्षोडशर्त्विजः ।
स्वस्वकर्माणि चक्रुस्ते पाण्डवस्य महाक्रतौ ॥ २-७१-२४ (१४१२९)
नाषडङ्गविदत्रासीत्सदस्यो नाबहुश्रुतः ।
नाव्रतो नानुपाध्यायो न पापो नाक्षमो द्विजः ॥ २-७१-२५ (१४१३०)
न तत्र कृपणः कश्चिद्दरिद्रो न बभूव ह ।
क्षुधितो दुःखितो वापि प्राकृतो वापि मानुषः ॥ २-७१-२६ (१४१३१)
भोजनं भोजनार्थिभ्यो दापयामास सर्वदा ।
सहदेवो महातेजाः सततं राजशासनात् ॥ २-७१-२७ (१४१३२)
संस्तरे कुशलाश्चापि सर्वकर्माणि याजकाः ।
दिवस दिवसे चक्रुर्यथाशास्त्रार्थचक्षुषः ॥ २-७१-२८ (१४१३३)
ब्राह्मणा देवशास्त्रज्ञः कथाश्चक्रुश्च सर्वतः ।
रेमिरे च कथान्ते तु सर्वे तस्मिन्महाक्रतौ ॥ २-७१-२९ (१४१३४)
सा वेदिर्वेदसम्पन्नैर्देवद्विजमहर्षिभिः ।
आबभासे तदा कीर्णा नक्षत्रैर्द्यौरिवामला ॥ २-७१-३० (१४१३५)
पाण्डित्यदर्शनार्थाय केचन द्विजसत्तमाः ।
तर्कार्थमागताः केचित्केचिद्विद्याभिमानिनः ॥ २-७१-३१ (१४१३६)
केचिद्दिदृक्षया केचिद्भीत्या राज्ञः प्रतापिनः ।
सर्वेऽप्यवभृथस्नाता याजकाः केचन द्विजाः ॥ २-७१-३२ (१४१३७)
ततो वै हेमयूपांश्च सर्वरत्नसमाचितान् ।
शोभार्थं कारयामास सहदेवो महाद्युतिः ॥ २-७१-३३ (१४१३८)
ददृशुस्तोरणान्यत्र हेमतालमयानि च ।
स यज्ञस्तोरणैस्तैश्च ग्रहैर्द्योरिव सम्बभौ ॥ २-७१-३४ (१४१३९)
तालानां तोरणैर्हैमैर्दान्तैरिव दिशागजैः ।
दिक्षु सर्वासु विन्यस्तैस्तेजोभिर्भास्करैर्यथा ॥ २-७१-३५ (१४१४०)
सकिरीटैर्नृपैश्चैव शुशुभे तत्सदस्तदा ।
देवैर्दिव्यैश्च यक्षैश्च उरगैर्दिव्यमानुषैः ॥ २-७१-३६ (१४१४१)
विद्याधरगणैः कीर्णः पाण्डवस्य महात्मनः ।
स राजसूयः शुशुभे धर्मराजस्य धीमतः ॥ २-७१-३७ (१४१४२)
गन्धर्वगणसङ्कीर्णः शोभितोऽप्सरसां गणैः ।

देवैर्मुनिगणैर्यक्षैर्देवलोक इवापरः ॥ २-७१-३८ (१४१४३)
स किम्पुरुषगीतैश्च किन्नरैरुपशोभितः ।
नारदश्च जगौ तत्र तुम्बुरुश्च महाद्युतिः ॥ २-७१-३९ (१४१४४)
विश्वासुश्चित्रसेनस्तथाऽन्ये गीतकोविदाः ।
रमयन्ति स्म तान्सर्वान्यज्ञकर्मान्तरेष्वथ ॥ २-७१-४० (१४१४५)
तत्र चाप्सरसः सर्वाः सुन्दर्यः प्रियदर्शनाः ।
ननृतुश्च जगुश्चात्र नित्यं कर्मान्तरेष्वथ ॥ २-७१-४१ (१४१४६)
इतिहासपुराणानि आख्यानानि च सर्वशः ।
ऊचुर्वै शब्दशास्त्रज्ञा नित्यं कर्मान्तरेष्वथ ॥ २-७१-४२ (१४१४७)
भेर्यश्च मुरजाश्चैव मड्डुका गोमुखाश्च ये ।
शृङ्गवंशाम्बुजा वीणाः श्रूयन्ते स्म सहस्रशः ॥ २-७१-४३ (१४१४८)
लोकेऽस्मिन्सर्वविप्राश्च वैश्याः शूद्रा नृपादयः ।
सर्वे म्लेच्छाः सर्वगणास्त्वादिमध्यान्तजास्तथा। २-७१-४४ (१४१४९)
नानादेशसमुद्भूतैर्नानाजातिभिरागतैः ।
पर्याप्त इव लोकोऽयं युधिष्ठिरनिवेशने ॥ २-७१-४५ (१४१५०)
भीष्मद्रोणादयः सर्वे कुरवः ससुयोधनाः ।
वृष्णयश्च समग्राश्च पाञ्चालाश्चापि सर्वशः ॥ २-७१-४६ (१४१५१)
यज्ञेऽस्मिन्सर्वकर्माणि चक्रुर्दासा इव क्रतौ ।
एवं प्रवृत्तो यज्ञः स धर्मराजस्य धीमतः ॥ २-७१-४७ (१४१५२)
शुशुभे च महाबाहो सोमस्येव क्रतुर्यथा ।
वस्त्राणि कम्बलांश्चैव प्रावारांश्चैव सर्वदा ॥ २-७१-४८ (१४१५३)
निष्कहेमजभाण्डानि भूषणानि च सर्वशः ।
प्रददौ तत्र विप्राणां धर्मराजो युधिष्ठिरः ॥ २-७१-४९ (१४१५४)
यानि तत्र महीपालैर्लब्धवान्भरतर्षभः ।
तानि सर्वाणि रत्नानि ब्राह्मणानां ददौ तदा'॥ ॥ २-७१-५० (१४१५५)

इति श्रीमन्महाभारते सभापर्वणि शिशुपालवधपर्वणि
एकसप्ततितमोऽध्यायः ॥७१ ॥

---

सभ-०७२
॥ श्रीः ॥
२.७२. अध्यायः ७२

Mahabharata - Sabha Parva - Chapter Topics
युधिष्ठिरेण व्यासादीनां पूजनम् ॥ १.। राज्ञां युधिष्ठिरमामन्त्र्य
स्वस्वदेशगमनम् ॥ २.। श्रीकृष्णस्य युधिष्ठिरादीनामन्त्र्य
द्वारकां प्रति गमनम् ॥ ३.।

वैशम्पायन उवाच ॥
ततः स कुरुराजस्य सर्वकर्मसमृद्धिमान् ।
यज्ञः प्रीतिकरो राजन्संबभौ विपुलोत्सवः ॥ २-७२-१ (१४१५६)
शान्तविघ्नः सुखारम्भः प्रभूतधनधान्यवान् ।
अन्नवान्बहुभक्ष्यश्च केशवेन सुरक्षितः ॥ २-७२-२ (१४१५७)
समापयामास च तं राजसूयं महाक्रतुम् ।
ग्कोटिसहस्रं प्रददौ ब्राह्मणानां महात्मनाम् ॥ २-७२-३ (१४१५८)
न करिष्यति तं लोके कश्चिदन्यो महीपतिः ।
याजकाः सर्वकामैश्च सततं ततृपुर्धनैः ॥ २-७२-४ (१४१५९)
ततश्चावभृथस्नातः स राजा पाण्डुनन्दनः ।
व्यासं धौम्यं वसिष्ठं च नारदं च महामुनिम् ॥ २-७२-५ (१४१६०)
सुमन्तु जैमिनिं पैलं वैशम्पायनमेव च ।
याज्ञवल्क्यं च कपिलं कपालं कौशिकं तथा ।
सर्वांश्च ऋत्विक्प्रवरान्पूजयामास सत्कृतान् ॥ २-७२-६ (१४१६१)
युधिष्ठिर उवाच ॥ २-७२-७क्ष् (१५०६)
युष्मत्प्रसादात्प्राप्तोऽयं राजसूयो महाक्रतुः ।
जनार्दनप्रसादाद्धि सम्पूर्णो मे मनोरथः ॥ २-७२-७ (१४१६२)
वैशम्पायन उवाच ॥ २-७२-८क्ष् (१५०७)
अथ यज्ञं समाप्यान्ते पूजयामास माधवम् ।
बलदेव च देवेशं भीष्माद्यांश्च कुरूद्वहान्'॥ २-७२-८ (१४१६३)
ततस्त्ववभृथस्नातं धर्मात्मानं युधिष्ठिरम् ।
समस्तं पार्थिवं क्षत्रमुपगम्येदमब्रवीत् ॥ २-७२-९ (१४१६४)
दिष्ट्या वर्धसि धर्मज्ञ साम्राज्यं प्राप्तवानसि ।
आजमीढाजमीढानां यशः संवर्धितं त्वया ॥ २-७२-१० (१४१६५)
कर्मणैतेन राजेन्द्र धर्मश्च सुमहान्कृतः ।
आपृच्छामो नरव्याघ्र सर्वकामैः सुपूजिताः ॥ २-७२-११ (१४१६६)
स्वराष्ट्राणि गमिष्यामस्तदनुज्ञातुमर्हसि ।
श्रुत्वा तु वचनं राज्ञां धर्मराजो युधिष्ठिरः ॥ २-७२-१२ (१४१६७)
यथार्हं पूज्य नृपतीन्भ्रातॄन्सर्वानुवाच ह ।
राजानः सर्व एवैते प्रीत्याऽस्मान्प्तमुपागताः ॥ २-७२-१३ (१४१६८)
प्रस्थिताः स्वानि राष्ट्राणि मामापृच्छ्य परन्तपाः ।
अनुव्रजत भद्रं वो विषयान्तं नृपोत्तमान् ॥ २-७२-१४ (१४१६९)
भ्रातुर्वचनमाज्ञाय पाण्डवा धर्मचारिणः ।
यथार्हं नृपतीन्सर्वानेकैकं समनुव्रजन् ॥ २-७२-१५ (१४१७०)

विरायटमन्वायात्तूर्णं धृष्टद्युम्नः प्रतापवान् ।
धनञ्जयो यज्ञसेनं महात्मानं महारथम् ॥ २-७२-१६ (१४१७१)
भीष्मं च धृतराष्ट्रं च भीमसेनो महाबलः ।
द्रोणं तु ससुतं वीरं सहदेवो युधां पतिः ॥ २-७२-१७ (१४१७२)
नकुलः सुबलं राजन्सहपुत्रं समन्वयात् ।
द्रौपदेयाः ससौभद्राः पार्वतीयान्महारथान् ॥ २-७२-१८ (१४१७३)
अन्वगच्छंस्तथैवान्यान्क्षत्रियान्क्षत्रियर्षभाः ।
एवं सुपूजिताः सर्वे जग्मुर्विप्राः सहस्रशः ॥ २-७२-१९ (१४१७४)
गतेषु पार्थिवेन्द्रेषु सर्वेषु ब्राह्मणेषु च ।
युधिष्ठिरमुवाचेदं वासुदेवः प्रतापवान् ॥ २-७२-२० (१४१७५)
आपृच्छे त्वां गमिष्यामि द्वारकां कुरुनन्दन ।
राजसूयं क्रतुश्रेष्ठं दिष्ट्या त्वं प्राप्तवानसि ॥ २-७२-२१ (१४१७६)
तमुवाचैवमुक्तस्तु धर्मराजो जनार्दनम् ।
तव प्रसादाद्गोविन्द प्राप्तः क्रतुवरो मया ॥ २-७२-२२ (१४१७७)
क्षत्रं समग्रमपि च त्वत्प्रसादाद्वशे स्थितम् ।
उपादाय बलिं मुख्यं मामेव समुपस्थितम् ॥ २-७२-२३ (१४१७८)
कथं त्वद्गमनार्थं मे वाणी वितरतेऽनघ ॥ २-७२-२४ (१४१७९)
न ह्यहं त्वामृते वीरं रतिं प्राप्नोमि कर्हचित् ।
अवश्यं चैव गन्तव्या भवता द्वारका पुरी ॥ २-७२-२५ (१४१८०)
वैशम्पायन उवाच ॥ २-७२-२६क्ष् (१५०८)
एवमुक्तः स धर्मात्मा युधिष्ठिरसहायवान् ।
अभिगम्याब्रवीत्प्रीतः पृथां पृथुयशा हरिः ॥ २-७२-२६ (१४१८१)
साम्राज्यं समनुप्राप्ताः पुत्रास्तेऽद्य पितृष्वसः ।
सिद्धार्था वसुमन्तश्च सा त्वं प्रीतिमवाप्नुहि ॥ २-७२-२७ (१४१८२)
अनुज्ञातस्त्वया चाहं द्वारकां गन्तुमुत्सहे ।
सुभद्रां द्रौपदीं चैव सभाजयत केशवः ॥ २-७२-२८ (१४१८३)
निष्क्रम्यान्तः पुरात्तस्माद्युधिष्ठिरसहायवान् ।
स्नातश्च कृतजप्यश्च ब्राह्मणान्स्वस्ति वाच्य च ॥ २-७२-२९ (१४१८४)
ततो मेघवपुः प्रग्व्यं स्यन्दनं च सुकल्पितम् ।
योजयित्वा महाबाहुर्दारुकः समुपस्थितः ॥ २-७२-३० (१४१८५)
उपस्थितं रथं दृष्ट्वा ताक्ष्यर्प्रवरकेतनम् ।
प्रदक्षिणमुपावृत्य समारुह्य महामनाः ॥ २-७२-३१ (१४१८६)
प्रययौ पुण्डरीकाक्षस्ततो द्वारवतीं पुरीम् ॥ २-७२-३२ (१४१८७)
तं पद्भ्यामनुवव्राज धर्मराजो युधिष्ठिरः ।
भ्रातृभिः सहितः श्रीमान्वासुदेवं महाबलम् ॥ २-७२-३३ (१४१८८)
ततो मुहूर्तं सङ्गृह्य स्यन्दनप्रवरं हरिः ।

अब्रवीत्पुण्डरीकाक्षः कुन्तीपुत्रं युधिष्ठिरम् ॥ २-७२-३४ (१४१८९)
अप्रमत्तः स्थितो नित्यं प्रजाः पाहि विशाम्पते ।
पर्जन्यमिव भूतानि महाद्रुममिव द्विजाः ॥ २-७२-३५ (१४१९०)
बान्धवास्त्वोपजीवन्तु सहस्राक्षमिवामराः ।
कृत्वा परस्परेणैव संवादं कृष्णपाण्डवौ ॥ २-७२-३६ (१४१९१)
अन्योन्यं समनुज्ञाप्य जग्मतुः स्वगृहान्प्रति ।
गते द्वारवतीं कृष्णे सात्वतप्रवरे नृप ॥ २-७२-३७ (१४१९२)
महादुर्योधनो राजा शकुनिश्चापि सौबलः ।
ऽसूतपुत्रश्च गधेयः सह दुःशासनादिभिः ॥ २-७२-३८ (१४१९३)
सर्वकामगुणोपेतैरर्च्यमानास्तु भारत'।
तस्यां सभायां दिव्यायामवसंस्तत्र पाण्डवैः ॥ ॥ २-७२-३९ (१४१९४)

इति श्रीमन्महाभारते सभापर्वणि शिशुपालवधपर्वणि
द्विसप्ततितमोऽध्यायः ॥७२ ॥
Mahabharata - Sabha Parva - Chapter Footnotes

२-७२-२८ सभाजयत प्रीणितवान् ॥

---

सभ-०७३
॥ श्रीः ॥
२.७३. अध्यायः ७३

Mahabharata - Sabha Parva - Chapter Topics
व्यासम्प्रति युधिष्ठिरेण उत्पातफलप्रश्ने व्यासेन तत्कथनपूर्वकं
कैलासगमनम ॥ १. । व्यासोक्तं भ्रातृषु निवेद्य शोचतो
युधिष्ठिरस्य अर्जुनेन समाश्वासनम् ॥ २. । यिधिष्ठिरेण
समयकरणम् ॥ ३. ।
Mahabharata - Sabha Parva - Chapter Text

वैशम्पायन उवाच ॥
ऽअनुसंसार्य नृपतीन्पाण्डवाः पाण्डवाग्रजम् ।
अभिजग्मुर्महेष्वासा धर्मराजं युधिष्ठिरम् ॥ २-७३-१ (१४१९५)
सोऽनुमेने महाबाहुर्भ्रातॄंश्च सुहृदस्तथा'।
शिष्यैः परिवृतो व्यासः पुरस्तात्समपद्यत ॥ २-७३-२ (१४१९६)
सोऽभ्ययादासनात्तूर्णं भ्रातृभिः परिवारितः ।
पाद्येनासनदानेन पितामहमपूजयत् ॥ २-७३-३ (१४१९७)
अथोपविश्य भगवान्काञ्चने परमासने ।

आस्यतामिति चोवाच धर्मराजं युधिष्ठिरम् ॥ २-७३-४ (१४१९८)
अथोपविष्टं राजानं भ्रातृभिः परिवारितम् ।
उवाच भगवान्व्यासस्तत्तद्वाक्यविशारदः ॥ २-७३-५ (१४१९९)
दिष्ट्या वर्धसि कौन्तेय साम्राज्यं प्राप्य दुर्लभम् ।
वर्धिताः कुरवः सर्वे त्वया कुरुकुलोद्वह ॥ २-७३-६ (१४२००)
आपृच्छे त्वां गमिष्यामि पूजितोऽस्मि विशाम्पते ।
एवमुक्तः स कृष्णेन धर्मराजो युधिष्ठिरः ॥ २-७३-७ (१४२०१)
अभिवाद्योपसङ्गृह्य पितामहमथाब्रवीत् ॥ २-७३-८ (१४२०२)
युधिष्ठिर उवाच। २-७३-८क्ष् (१५०९)
संशयो द्विपदां श्रेष्ठ ममोत्पन्नः सुदुर्लभः ।
तस्य नान्योऽस्ति वक्ता वै त्वामृते द्विजपुङ्गव ॥ २-७३-९ (१४२०३)
उत्पातांस्त्रिविधान्प्राह नारदो भगवानृषिः ।
दिव्यांश्चैवान्तरिक्षांश्च पार्थिवांश्च पितामह ॥ २-७३-१० (१४२०४)
ग्सुमहच्च फलं तेषां भवितेति न संशयः'।
अपि चैद्यस्य पतनाच्छान्तमौत्पातिकं महत् ॥ २-७३-११ (१४२०५)
वैशम्पायन उवाच ॥ २-७३-१२क्ष् (१५१०)
राज्ञस्तु वचनं श्रुत्वा पराशरसुतः प्रभुः ।
कृष्णद्वैपायनो व्यास इदं वचनमब्रवीत् ॥ २-७३-१२ (१४२०६)
त्रयोदश समा राजन्नुत्पातानां फलं महत् ।
सर्वक्षत्रविनाशाय भविष्यति विशाम्पते ॥ २-७३-१३ (१४२०७)
त्वामेकं कारणं कृत्वा कालेन भरतर्षभ ।
समेतं पार्थिवं क्षत्रं क्षयं यास्यति भारत ।
दुर्योधनापराधेन भीमार्जुनबलेन च ॥ २-७३-१४ (१४२०८)
स्वप्नं द्रक्ष्यसि राजेन्द्र तस्मिन्काल उपस्थिते ।
तत्तेऽहं सम्प्रवक्ष्यामि तन्निबोध युधिष्ठिर ॥ २-७३-१५ (१४२०९)
यान्तं द्रक्ष्यसि राजेन्द्र क्षपान्ते त्वं वृषध्वजम् ।
नीलकण्ठं भवं स्थाणुं कपालिं त्रिपुरान्तकम् ॥ २-७३-१६ (१४२१०)
उग्रं रुद्रं पशुपतिं महादेवमुमापतिम् ।
हरं शर्वं वृषं शूलं पिनाकिं कृत्तिवाससम् ॥ २-७३-१७ (१४२११)
कैलासकूडप्रतिमे वृषभेऽवस्थितं शिवम् ।
निरीक्षमाणं सततं पितृराजाश्रितां दिशम् ॥ २-७३-१८ (१४२१२)
एवमीदृशकं स्वप्नं द्रक्ष्यसि त्वं विशाम्पते ।
मा तत्कृते ह्यनुध्याहि कालो हि दुरतिक्रमः ॥ २-७३-१९ (१४२१३)
स्वस्ति तेऽस्तु गमिष्यामि कैलासं पर्वतं प्रति ।
अप्रमत्तः स्थितो दान्तः पृथिवीं परिपालय ॥ २-७३-२० (१४२१४)
वैशम्पायन उवाच ॥ २-७३-२१क्ष् (१५११)

एवमुक्त्वा स भगवान्कैलासं पर्वतं ययौ ।
कृष्णद्वैपायनो व्यासः सह शिष्यैः सहानुगैः ॥ २-७३-२१ (१४२१५)
गते पितामहे राजा चिन्ताशोकसमन्वितः ।
निः श्वसन्नुष्णमसकृत्तमेवार्थं विचिन्तयन् ॥ २-७३-२२ (१४२१६)
कथं तु दैवं शक्येत पौरुषेण प्रबाधितुम् ।
अवश्यमेव भविता यदुक्तं परमर्षिणा ॥ २-७३-२३ (१४२१७)
ततोऽब्रवीन्महातेजाः सर्वान्भ्रातॄन्युधिष्ठिरः ।
श्रुतं वै पुरुषव्याघ्रा यन्मां द्वैपायनोऽब्रवीत् ॥ २-७३-२४ (१४२१८)
तदा तद्वचनं श्रुत्वा मरणे निश्चिता मतिः ।
सर्वक्षत्रस्य निधने यद्यहं हेतुरीप्सितः ॥ २-७३-२५ (१४२१९)
कालेन निर्मितस्तात को ममार्थोऽस्ति जीवतः ।
एवं ब्रुवन्तं राजानं फाल्गुनः प्रत्यभाषत ॥ २-७३-२६ (१४२२०)
मा राजन्कश्मलं घोरं प्रविशो बुद्धिनाशनम् ।
सम्प्रधार्य महाराज यत्क्षमं तत्समाचर ॥ २-७३-२७ (१४२२१)
वैशम्पायन उवाच ॥ २-७३-२८क्ष् (१५१२)
ततोऽब्रवीत्सत्यधृतिर्भ्रातॄन्सर्वान्युधिष्ठिरः ।
द्वैपायनस्य वचनं तत्रैव समचिन्तयत् ॥ २-७३-२८ (१४२२२)
अद्यप्रभृति भद्रं वः प्रतिज्ञां मे निबोधत ।
त्रयोदश समास्तात को ममार्थो ऽस्ति जीवतः ॥ २-७३-२९ (१४२२३)
न प्रवक्ष्यामि परुषं भ्रातॄनन्यांश्च पार्थिवान् ।
स्थितो निदेशे ज्ञातीनां योक्ष्ये तत्समुदाहरन् ॥ २-७३-३० (१४२२४)
एवं मे वर्तमानस्य स्वसुतेऽष्वितरेषु च ।
भेदो न भविता लोके भेदमूलो हि विग्रहः ॥ २-७३-३१ (१४२२५)
विग्रहं दूरतो रक्षन्प्रियाण्येव समाचरन् ।
वाच्यतां न गमिष्यामि लोकेषु मनुजर्षभाः ॥ २-७३-३२ (१४२२६)
भ्रातृर्ज्येष्ठस्य वचनं पाण्डवाः संनिशम्य तत ।
तमेव समवर्तन्त धर्मराजहिते रताः ॥ २-७३-३३ (१४२२७)
संसत्सु समयं कृत्वा धर्मराड्भ्रातृभिः सह ।
पितॄंस्तर्प्य यथान्यायं देवताश्च विशाम्पते ॥ २-७३-३४ (१४२२८)
कृतमङ्गलकल्यामो भ्रातृभिः पिरवारितः ।
गतेषु क्षत्रियेन्द्रेषु सर्वेषु भरतर्षभ ॥ २-७३-३५ (१४२२९)
युधिष्ठिरः सहामात्यः प्रविवेश पुरोत्तमम् ।
दुर्योधनो महाराज शकुनिश्चापि सौबलः ।
सभायां समणीयायां तत्रैवास्ते नराधिप ॥ ॥ २-७३-३६ (१४२३०)

इति श्रीमन्महाभारते सभापर्वणि द्यूतपर्वणि त्रिसप्ततितमोऽध्यायः

सभ-०७४
॥ श्रीः ॥
२.७४. अध्यायः ७४

Mahabharata - Sabha Parva - Chapter Topics
युधिष्ठिरसभायां दुर्योधने निर्जलदेशे जलभ्रमेण परिधानमुत्कर्षति सति तथा स जलदेशे स्थलभ्रान्त्या भवनधानगमनेन जले पतति च सति भीमादिभिरुपहासः ॥ १.। चिन्तातान्तं दुर्योधनं प्रति शकुनिना चिन्ताहेतुप्रश्ने दुर्योधनेन तत्कथन पूर्वकं धृतराष्ट्रे स्वदुः शनिवेदनाय शकुनिम्प्रति चोदनम् ॥ २.।
Mahabharata - Sabha Parva - Chapter Text

वैशम्पायन उवाच ॥
वसन्दुर्योधनस्तस्यां सभायां पुरुषर्षभ ।
शनैर्ददर्श तां सर्वां सभां शकुनिना सह ॥ २-७४-१ (१४२३१)
तस्यां दिव्यानभिप्रायान्ददर्श कुरुनन्दनः ।
न दृष्टपूर्वा ये तेन नगरे नागसाह्वये ॥ २-७४-२ (१४२३२)
स कदाचित्सभामध्ये धार्तराष्ट्रो महीपतिः ।
स्फाटिकं स्थलमासाद्य जलमित्यभिशङ्कया ॥ २-७४-३ (१४२३३)
स्ववस्त्रोत्कर्षणं राजा कृतवान्बुद्धिमोहितः ।
दुर्मना विमुखश्चैव परिचक्राम तां सभाम् ॥ २-७४-४ (१४२३४)
ततः स्थले निपतितो दुर्मना व्रीडितो नृपः ।
निः श्वसन्विमुखश्चापि परिचक्राम तां सभाम् ॥ २-७४-५ (१४२३५)
ततः स्फाटिकतोयां वै स्फाटिकाम्बुजशोभिताम् ।
वापीं मत्वा स्थलमिव सवासाः प्रापतञ्जले ॥ २-७४-६ (१४२३६)
जले निपतितं दृष्ट्वा भीमसेनो महाबलः ।
जहास जहसुश्चैव किङ्कराश्च सुयोधनम् ॥ २-७४-७ (१४२३७)
वासांसि च शुभान्यस्मै प्रददू राजशासनात् ।
तथागतं तु तं दृष्ट्वा भीमसेनो महाबलः ॥ २-७४-८ (१४२३८)
अर्जुनश्च यमौ चोभौ सर्वे ते प्राहसंस्तदा ।
नामर्षयत्ततस्तेषामवहासममर्षणः ॥ २-७४-९ (१४२३९)
आकारं रक्षमाणस्तु न स तान्समुदैक्षत ।
पुनर्वसनमुत्क्षिप्य प्रतिरिष्यन्निव स्थलम् ॥ २-७४-१० (१४२४०)
आरुरोह ततः सर्वे जहसुश्च पुनर्जनाः ।

द्वारं तु पिहिताकारं स्फाटिकं प्रेक्ष्य भूमिपः ।
प्रविशन्नाहतो मूर्ध्नि व्याघूर्णित इव स्थितः ॥ २-७४-११ (१४२४१)
तादृशं च परं द्वारं स्फाटिकोरुकवाटकम् ।
विघट्टयन्कराभ्यां तु निष्क्रम्याग्रे पपात हा ॥ २-७४-१२ (१४२४२)
द्वारं तु वितताकारं समापेदे पुनश्च सः ।
तद्वृत्तं चेति मन्वानो द्वारस्थानादुपारमत् ॥ २-७४-१३ (१४२४३)
एवं प्रलम्भान्विविधान्प्राप्य तत्र विशाम्पते ।
पाण्डवेयाभ्यनुज्ञातस्ततो दुर्योधनो नृपः ॥ २-७४-१४ (१४२४४)
अपहृष्टेन मनसा राजसूये महाक्रतौ ।
प्रेक्ष्य तामद्भुतामृद्धिं जगाम गजसाह्वयम् ॥ २-७४-१५ (१४२४५)
पाण्डवश्रीप्रतप्तस्य ध्यायमानस्य गच्छतः ।
दुर्योधनस्य नृपतेः पापा मतिरजायत ॥ २-७४-१६ (१४२४६)
पार्थान्सुमनसो दृष्ट्वा पार्थिवांश्च वशानुगान् ।
कृत्स्नं चापि हितं लोकमाकुमारं कुरूद्वह ॥ २-७४-१७ (१४२४७)
महिमानं परं चापि पाण्डवानां महात्मनाम् ।
दूर्योधनो धार्तराष्ट्रो विवर्णः समपद्यत ॥ २-७४-१८ (१४२४८)
स तु गच्छन्ननेकाग्नः सभामेकोऽन्वचिन्तयत् ।
श्रियं च तामनुपमां धर्मराजस्य धीमतः ॥ २-७४-१९ (१४२४९)
प्रमत्तो धृतराष्ट्रस्य पुत्रो दुर्योधनस्तदा ।
नाभ्यभाषत्सुबलजं भाषमाणं पुनः पुनः ॥ २-७४-२० (१४२५०)
अनेकाग्रं तु तं दृष्ट्वा शकुनिः प्रत्यभाषत ।
दुर्योधन कुतोमूलं निःश्वसन्निव गच्छसि ॥ २-७४-२१ (१४२५१)
दुर्योधन उवाच ॥ २-७४-२२क्ष् (१५१३)
दृष्ट्वेमां पृथिवीं कृत्स्नां युधिष्ठिरवशानुगाम् ।
जितामस्त्रप्रतापेन श्वेताश्वस्य महात्मनः ॥ २-७४-२२ (१४२५२)
तं च यज्ञं तथाभूतं दृष्ट्वा पार्थस्य मातुल ।
यथा शक्रस्य देवेषु तथाभूतं महाद्युतेः ॥ २-७४-२३ (१४२५३)
अमर्षेण तु सम्पूर्णो दह्यमानो दिवानिशम् ।
शुचिशुक्रागमे काले शुष्ये तोयमिवाल्पकम् ॥ २-७४-२४ (१४२५४)
पश्य सात्वतमुख्येन शिशुपालो निपातितः ।
न च तत्र पुमानासीत्कश्चित्तस्य पदानुगः ॥ २-७४-२५ (१४२५५)
दह्यमाना हि राजानः पाण्डवोत्थेन वह्निना ।
क्षान्तवन्तोऽपराधं ते को हि तत्क्षन्तुमर्हति ॥ २-७४-२६ (१४२५६)
वासुदेवेन तत्कर्म यथाऽयुक्तं महत्कृतम् ।
सिद्धं च पाण्डुपुत्राणां प्रतापेन महात्मनाम् ॥ २-७४-२७ (१४२५७)
तथाहि रत्नन्यादाय विविधानि नृपा नृपम् ।

उपातिष्ठन्त कौन्येयं वैश्या इव करप्रदाः ॥ २-७४-२८ (१४२५८)
श्रियं तथागतं दृष्ट्वा ज्वलन्तीमिव पाण्डवे ।
अमर्षवशमापन्नो दह्यामि न तथोचितः ॥ २-७४-२९ (१४२५९)
वह्निमेव प्रवेक्ष्यामि भक्षयिष्यामि वा विषम् ।
अपो वापि प्रवेक्ष्यामिन हि शक्ष्यामि जीवितुम् ॥ २-७४-३० (१४२६०)
को हि नाम पुमांल्लोके मर्षयिष्यति सत्ववान् ।
सपत्नानृद्ध्यतो दृष्ट्वा हीनमात्मानमेव च ॥ २-७४-३१ (१४२६१)
सोऽहं न स्त्री न चाप्यस्त्री न पुमान्नापुमानपि ।
योऽहं तां मर्षयाम्यद्य तादृशीं श्रियमागताम् ॥ २-७४-३२ (१४२६२)
ईश्वरत्वं पृथिव्याश्च वसुमत्तां च तादृशीम् ।
यज्ञं च तादृशं दृष्ट्वा मादृशः को न संज्ज्वरेत् ॥ २-७४-३३
(१४२६३)
अशक्तश्चैक एवाहं तामाहर्तुं नृपश्रियम् ।
सहायांश्च न पश्यामि तेन मृत्युं विचिन्तये ॥ २-७४-३४ (१४२६४)
दैवमेव परं मन्ये पौरुषं च निरर्थकम् ।
दृष्ट्वा कुन्तीसुते शुद्धां श्रियं तामहतां तथा ॥ २-७४-३५ (१४२६५)
कृतो यत्नो मया पूर्वं विनाशे तस्य सौबल ।
तच्च सर्वमतिक्रम्य संवृद्धोऽप्स्विव पङ्कजम् ॥ २-७४-३६ (१४२६६)
तेन दैवं परं मन्ये पौरुषं च निरर्थकम् ।
धार्तराष्ट्राश्च हीयन्ते पार्था वर्धन्ति
नित्यशः। २-७४-३८च्ग्कृष्णस्तु सुमनास्तेषां विवर्धयति सम्पदः'॥
२-७४-३७ (१४२६७)
सोऽहं श्रियं च तां दृष्ट्वा सभां तां च तथाविधाम् ।
रक्षिभिश्चावहासं तं परितप्ये यथाऽग्निना ॥ २-७४-३८ (१४२६८)
अमर्षं च समाविष्टं धृतराष्ट्रे निवेदय ॥ ॥ २-७४-३९ (१४२६९)

इति श्रीमन्महाभारते सभापर्वणि द्यूतपर्वणि
चतुःसप्ततितमोऽध्यायः ॥ ७४.।

---

सभ-०७५
॥ श्रीः ॥
२.७५. अध्यायः ७५

Mahabharata - Sabha Parva - Chapter Topics
शकुनिना दुर्योधनम्प्रति पाण्डवानां पौरुषेणाजय्यत्वकथनपूर्वकं
द्यूतेन जेष यामीति समाश्वासनादिकम् ॥ १.।
Mahabharata - Sabha Parva - Chapter Text

शकुनिरुवाच ॥
दुर्योधन न तेऽमर्षः कार्यः प्रति युधिष्ठिरम् ।
भागधेयानि हि स्वानि पाण्डवा भुञ्जते सदा ॥ २-७५-१ (१४२७०)
विधानं विविधाकारं परं तेषां विधानतः ।
अनेकैरभ्युपायैश्च त्वया न शकिताः पुरा ॥ २-७५-२ (१४२७१)
आरब्धा हि महाराज पुनः पुनररिन्दम ।
विमुक्ताश्च नरव्याघ्रा भगधेयपुरस्कृताः ।
ग्उत्साहवन्तः पुरुषा नावसीदन्ति कर्मसु'॥ २-७५-३ (१४२७२)
तैर्लब्धा द्रौपदी भार्या द्रुपदश्च सुतैः सह ।
सहायाः पृथिवीपाला वासुदेवश्च वीर्यवान् ॥ २-७५-४ (१४२७३)
लब्धश्चानभिभूतार्थैः पित्र्योंशः पृथिवीपते ।
विवृद्धस्तेजसा तेषां तत्र का परिदेवना ॥ २-७५-५ (१४२७४)
धनञ्जयेन गाण्डीवमक्षय्यौ च महेषुधी ।
लब्धान्यस्त्राणि दिव्यानि तोषयित्वा हुताशनम् ॥ २-७५-६ (१४२७५)
तेन कार्मुकमुख्येन बाहुवीर्येण चात्मनः ।
कृता वशे महीपालास्तत्र का परिदेवना ॥ २-७५-७ (१४२७६)
अग्निदाहान्मयं चापि मोक्षयित्वा स दानवम् ।
सभां तां कारयामास सव्यसाची परन्तपः ॥ २-७५-८ (१४२७७)
तेन चैव मयेनोक्ताः किङ्करा नाम राक्षसाः ।
वहन्ति तां सभां भीमास्तत्र का परिदेवना ॥ २-७५-९ (१४२७८)
यच्चासहायतां राजन्नुक्तवानसि भारत ।
तन्मिथ्या भ्रातरो हीमे तव सर्वे वशानुगाः ॥ २-७५-१० (१४२७९)
द्रोणस्तव महेष्वासः सह पुत्रेण वीर्यवान् ।
सूतपुत्रश्च राधेयो दृढधन्वा महारथः ॥ २-७५-११ (१४२८०)
ग्स एकः समरे सर्वान्पाण्डवान्सहसोमकान् ।
विजेष्यति महाबाहो किं सहायैः करिष्यसि ॥ २-७५-१२ (१४२८१)
भीष्मश्च पुरुषव्याघ्रो गौतमश्च महारथः ।
जयद्रथश्च बलावान्सोमदत्तस्तथैव च'॥ २-७५-१३ (१४२८२)
अहं च सह सोदर्यैः सौमदत्तिश्च पार्थिवः ।
एतैस्त्वं सहितः सर्वैर्जय कृत्स्नं वसुन्दराम् ॥ २-७५-१४ (१४२८३)
दुर्योधन उवाच। २-७५-१५क्ष् (१५१४)
त्वया च सहितो राजन्नेतैश्चान्यैर्महारथैः ।
एतानहं विजेष्यामि यदि त्वमनुमन्यसे ॥ २-७५-१५ (१४२८४)
एतेषु विजितेष्वद्य भविष्यति मही मम ।
सर्वे च पृथिवीपालाः सभा सा च महाधना ॥ २-७५-१६ (१४२८५)

शकुनिरुवाच ॥ २-७५-१७क्ष् (१५१५)
धनञ्जयो वासुदेवो भीमसेनो युधिष्ठिरः ।
नकुलः सहदेवश्च द्रुपदश्च सहात्मजैः ॥ २-७५-१७ (१४२८६)
नैते युधि पराजेतुं शक्या देवगणैरपि ।
महारथा महेष्वासाः कृतास्त्रा युद्धदुर्मदाः ॥ २-७५-१८ (१४२८७)
अहं तु तद्विजानामि विजेतुं येन शक्यते ।
युधिष्ठिरं स्वयं राजंस्तन्निबोध जुषस्व च ॥ २-७५-१९ (१४२८८)
दुर्योधन उवाच ॥ २-७५-२०क्ष् (१५१६)
अप्रमादेन सुहृदामन्येषां च महात्मनाम् ।
यदि शक्या विजेतुं ते तन्ममाचक्ष्व मातुल ॥ २-७५-२० (१४२८९)
शकुनिरुवाच। २-७५-२१क्ष् (१५१७)
द्यूतप्रियश्च कौन्तेयो न स जानाति देवितुम् ।
समाहूतश्च राजेन्द्रो न शक्ष्यति तिवर्तितुम् ॥ २-७५-२१ (१४२९०)
देवने कुशलश्चाहं न मेऽस्ति सदृशो भुवि ।
त्रिषु लोकेषु कौरव्य तं त्वं द्यूते समाह्वय ॥ २-७५-२२ (१४२९१)
तस्याक्षकुशलो राजन्नादास्येऽहमसंशयम् ।
राज्यं श्रियं च तां दीप्तां त्वदर्थं पुरुषर्षभ ॥ २-७५-२३ (१४२९२)
इदं तु सर्वं त्वं राज्ञे दुर्योधन निवेदय ।
अनुज्ञातस्तु ते पित्रा विजेष्ये तान्न संशयः ॥ २-७५-२४ (१४२९३)
दुर्योधन उवाच। २-७५-२५क्ष् (१५१८)
त्वमेव करुमुख्याय धृतराष्ट्राय सौबल ।
निवेदय यथान्यायं नाहं शक्ष्ये निवेदितुम् ॥ ॥ २-७५-२५ (१४२९४)

इति श्रीमन्महाभारते सभापर्वणि द्यूतपर्वणि
पञ्चसप्ततितमोऽध्यायः ॥७५ ॥

---

सभ-०७६
॥ श्रीः ॥
२.७६. अध्यायः ७६

Mahabharata - Sabha Parva - Chapter Topics
शकुनिना दुर्योधनस्य चिन्तया कार्श्यादिकं बोधितेन धृतराष्ट्रेण
दुर्योधनम् प्रति चिन्ताकारणप्रश्नः ॥ १.। दुर्योधनेन
तत्कथनपुर्वकं धृतराष्ट्रं प्रति द्यूताभ्यनुज्ञानप्रार्थनम्
॥ २.। धृतराष्ट्रेण द्यूतसभानिर्माणाज्ञापनपूर्वकं पाण्डवानयनाय
विदुरं प्रति चोद नम् ॥ ३.।
Mahabharata - Sabha Parva - Chapter Text

वैशम्पायन उवाच ॥
अनुभूय तु राज्ञस्तं राजसूयं सुदुर्मतिः ।
ग्युधिष्ठिरस्य शकुनिर्दुर्योधसुसंयुतः ॥ २-७६-१ (१४२९५)
विवेश हास्तिनपुरं दुर्योधनमतेन सः ।
वाढमित्येव शकुनिर्दृढं हृदि चकार ह ॥ २-७६-२ (१४२९६)
अस्वस्थतां चतां दृष्ट्वा धार्तराष्ट्रस्य पापकृत् ।
भारतानां च दुष्टात्मा क्षयाय हि नृपक्षयः'॥ २-७६-३ (१४२९७)
प्रियकृन्मतमाज्ञाय पूर्वं दुर्योधनस्य तत् ।
प्रज्ञाचक्षुषमासीनं शकुनिः सौबलस्तदा ॥ २-७६-४ (१४२९८)
दुर्योधनवचः श्रुत्वा धृतराष्ट्रं जनाधिपम् ।
उपगम्य महाप्राज्ञं शकुनिर्वाक्यमब्रवीत् ॥ २-७६-५ (१४२९९)
शकुनिरुवाच। २-७६-६क्ष् (१५१९)
दुर्योधनो महाराज विवर्णो हरिणः कृशः ।
दीनश्चिन्तापरश्चैव तं विद्धि मनुजाधिप ॥ २-७६-६ (१४३००)
न वै परीक्षसे सम्यगसह्यं शत्रुसंभवम् ।
ज्येष्ठपुत्रस्य हृच्छोकं किमर्थं नावबुध्यसे ॥ २-७६-७ (१४३०१)
गएवमुक्तः शकुनिना धृतराष्ट्रो जनेश्वरः ।
दुर्योधनं समाहूयं इदं वचनमब्रवीत्'॥ २-७६-८ (१४३०२)
धृतराष्ट्र उवाच। २-७६-९क्ष् (१५२०)
दुर्योधन कुतोमूलं भृशमार्तोऽसि पुत्रक ।
श्रोतव्यश्चेन्मया सोऽर्थो ब्रूहि मे कुरुनन्दन ॥ २-७६-९ (१४३०३)
अयं त्वां शकुनिः प्राह विवर्णं हरिमं कृशम् ।
चिन्तयंश्च न पश्यामि शोकस्य तव सम्भवम् ॥ २-७६-१० (१४३०४)
ऐश्वर्यं हि महत्पुत्र त्वयि सर्वं प्रतिष्ठितम् ।
भ्रातरः सुहृदश्चैव नाचरन्ति तवाप्रियम् ॥ २-७६-११ (१४३०५)
आच्छादयसि प्रावारानश्नासि पिशितौदनम् ।
आजानेया वहन्त्यश्वाः केनासि हरिणः कृशः ॥ २-७६-१२ (१४३०६)
शयनानि महार्हाणि योषितश्च मनोरमाः ।
गुणवन्ति च वेश्मानि विहाराश्च यथासुखम् ॥ २-७६-१३ (१४३०७)
देवनामिव ते सर्वं वाचि बद्धं न संशयः ।
स दीन इव दुर्धर्ष कस्माच्छोचसि पुत्रक ॥ २-७६-१४ (१४३०८)
गमात्रा पित्रा च पुत्रस्य यद्वै कार्यं परं स्मृतम् ।
प्राप्तस्त्वमसि तत्तात निखिलां नः कुलश्रियम् ॥ २-७६-१५ (१४३०९)
उपस्थितः सर्वकामैस्त्रिदिवे वासवो यथा ।
विविधैरन्नपानैश्च प्रवरैः किं नु शोचसि ॥ २-७६-१६ (१४३१०)

निरुक्तं निगमं छन्दः षडङ्गान्यस्त्रशास्त्रवान् ।
अधीती कृतविद्यस्त्वं दशव्याकरणैः कृपात् ॥ २-७६-१७ (१४३११)
हलायुधात्कृपाद्द्रोणादस्त्रविद्यामधीतवान् ।
भ्राताज्येष्ठः स्थितो राज्ये किमु शोचसि पुत्रक ॥ २-७६-१८ (१४३१२)
पृथग्जनैरलभ्यं यदशनाच्छादनं बहु ।
प्रभुः सन्भुञ्जसे पुत्र संस्तुतः सूतमागधैः ॥ २-७६-१९ (१४३१३)
तस्य ते विदितप्रज्ञ शोकमूलमिदं कथम् ।
लोकेस्मिञ्ज्येष्ठभागन्यस्तन्ममाचक्ष्व पृच्छतः ॥ २-७६-२० (१४३१४)
वैशम्पायन उवाच ॥ २-७६-२१क्ष् (१५२१)
तस्य तद्वचनं श्रुत्वा मन्दः क्रोधवशानुगः ।
पितरं प्रत्युवाचेदं स्वमतिं सम्प्रकाशयन् '॥ २-७६-२१ (१४३१५)
दुर्योधन उवाच ॥ २-७६-२२क्ष् (१५२२)
अश्नाम्याच्छादये चाहं यथा कुपुरुषस्तथा ।
अमर्षं धारये चोग्रं निनीषुः कालपर्ययम् ॥ २-७६-२२ (१४३१६)
अमर्षणः स्वाः प्रकृतीरभिभूय परं स्थितः ।
क्लेशान्मुमुक्षुः परजान्स वै पुरुष उच्यते ॥ २-७६-२३ (१४३१७)
सन्तोषो वै श्रियं हन्ति ह्यभिमानं च भारत ।
अनुक्रोशभये चोभे यैर्वृतो नाश्नुते महत् ॥ २-७६-२४ (१४३१८)
न मां प्रीणाति मद्भुक्तं श्रियं दृष्ट्वा युधिष्ठिरे ।
अतिज्वलन्तीं कौन्तेये विवर्णकरणीं मम ॥ २-७६-२५ (१४३१९)
सपत्नानृद्ध्यतोत्मानं हीयमानं निशाम्य च ।
अदृश्यामपि कौन्तेय श्रियं पश्यन्निवोद्यताम् ॥ २-७६-२६ (१४३२०)
तस्मादहं विवर्णश्च दीनश्च हरिमः कृशः ।
अष्टाशीतिसहस्राणि स्नातका गृहमेधिनः ॥ २-७६-२७ (१४३२१)
त्रिंशद्दासीक एकैको यान्बिभर्ति युधिष्ठिरः ।
दशान्यानि सहस्राणि यतीनामूर्ध्वरेतसाम् ।
भुञ्जते रुक्मपात्रीभिर्युधिष्ठिरनिवेशने ॥ २-७६-२८ (१४३२२)
कदलीमृगमोकानि कृष्णश्यामारुणानि च ।
काम्भोजः प्राहिणोत्तस्मै पराध्यार्नपि कम्बलान् ।
गजयोषिद्गवाश्वस्य शतशोऽथ सहस्रशः ॥ २-७६-२९ (१४३२३)
त्रिशतं चोष्ट्रवामीनां शतानि विचरन्त्युत ।
राजन्या बलिमादाय समेता हि नृपक्षये ॥ २-७६-३० (१४३२४)
पृथग्विधानि रत्नान पार्थिवाः पृथिवीपते ।
आहरन्क्रतुमुख्येऽस्मिन्कुन्तीपुत्राय भूरिशः ॥ २-७६-३१ (१४३२५)
न क्वचिद्धि मया तादृग्दृष्टपूर्वो न च श्रुतः ।
यादृग्धनागमो यज्ञे पाण्डुपुत्रस्य धीमतः ॥ २-७६-३२ (१४३२६)

ग्असत्यं चेदिदं सर्वं सञ्जयं प्रष्टुमर्हसि'।
अपर्यन्तं धनौघं तं दृष्ट्वा शत्रोरहं नृप ।
शर्म नैवाभिगच्छामि चिन्तयानो विशाम्पते ॥ २-७६-३३ (१४३२७)
ब्रह्मणा वाटधानाश्च गोमन्तः शतसङ्घशः ।
त्रिखर्वं बलिमादाय द्वारि तिष्ठन्ति वारिताः ॥ २-७६-३४ (१४३२८)
कमण्डलूनुपादाय जातरूपमयाञ्शुभान् ।
त्रैखर्वाः प्रतिवेद्यास्मै लेभिरेऽथ प्रवेशनम् ॥ २-७६-३५ (१४३२९)
यथैव मधु शक्राय धारयन्त्यमरस्त्रियटः ।
तदस्मै कांस्यमाहार्षीद्वारुणं कलशोदधिः ॥ २-७६-३६ (१४३३०)
शङ्खप्रवरमादाय वासुदेवोऽभिषिक्तवान् ।
शक्यं रुक्मसहस्रस्य बहुरत्नविभूषितम् ॥ २-७६-३७ (१४३३१)
दृष्ट्वा च मम तत्सर्वं ज्वररूपमिवाभवत् ।
गृहीत्वा तत्तु गच्छन्ति समुद्रौ पूर्वदक्षिणौ ॥ २-७६-३८ (१४३३२)
तथैव पश्चिमं यान्ति गृहीत्वा भरतर्षभ ।
उत्तरं तु न गच्छन्ति विना तात पतत्रिणः ।
तत्र गत्वाऽर्जुनो दण्डमाजहारामितं धनम् ॥ २-७६-३९ (१४३३३)
ग्कृतां बैन्दुसरै रत्नैर्मयेन स्फाटिकच्छदाम् ।
अपश्यं नलिनीं पूर्णामुदकस्येव भारत ॥ २-७६-४० (१४३३४)
उत्कर्षन्तं च वासश्च प्राहसन्मां वृकोदरः ।
किङ्कराश्च सभापाला जहसुर्भरतर्षभ ॥ २-७६-४१ (१४३३५)
पित्रोरर्थे विशेषेण प्रावृण्वं तत्र जीवितम् ।
तत्र त्म यदि शक्तः स्यां घातयेयं वृकोदरम् ॥ २-७६-४२ (१४३३६)
सपत्नेनापहासो हि स मां दहति भारत ॥ २-७६-४३ (१४३३७)
तत्र स्फाटिकतोयां हि स्फाटिकाम्बुजशोभिताम् ।
सभां पुष्करिणीं मत्वा पतितोऽस्मि नराधिप ॥ २-७६-४४ (१४३३८)
तत्र मामहसद्भीमः सह पार्थेन सस्वरम् ।
द्रौपदी चसह स्त्रीभिः पातयन्ती मनो मम ॥ २-७६-४५ (१४३३९)
क्लिन्नवस्त्रस्य च जले किङ्करा राजचोदिताः ।
ददुर्वासांसि मेऽन्यानि तच्च दुःखतरं मम ॥ २-७६-४६ (१४३४०)
अस्तम्भा इव तिष्ठन्ति स्तम्भा इव सहस्रशः ।
सोहं तत्राहतो राजन्स्फटिकाभ्यन्तरे विभो ॥ २-७६-४७ (१४३४१)
अद्वारेण विनिर्गच्छन्द्वारसंस्थानरूपिणा ।
अभिहत्य शिलां भूयो ललाटेनास्मि विक्षतः ॥ २-७६-४८ (१४३४२)
आमृशन्निव तां दृष्ट्वा मार्गान्तरमुपाविशम् ।
इदं द्वारमिदं राजन्नद्वारमिति मां प्रति ।
अद्भुतं प्रहसन्वाक्यं बभाषे स वृकोदरः ॥ २-७६-४९ (१४३४३)

स्त्रियश्च तत्र मां दृष्ट्वा जहसुस्तादृशं नृप ।
सर्वं हासकरं तेषां सदस्यानां नरर्षभ ॥ २-७६-५० (१४३४४)
न श्रुतानि न दृष्टानि यानि रत्नान मे क्वचित् ।
तानि मे तत्र दृष्टानि तेन तप्तोस्मि दुःखितः ॥ २-७६-५१ (१४३४५)
हुताशनं प्रवेक्ष्यामि प्रवेक्ष्यामि महोदधिम् ।
सम्भावितस्य चाकीर्तिर्मरणादतिरिच्यते'॥ २-७६-५२ (१४३४६)
इदं चाद्भुतमत्रासीत्तन्मे निगदतः शृणु ॥ २-७६-५३ (१४३४७)
पूर्णे शतसहस्रे तु विप्राणां भुञ्जतां सदा ।
स्थापितस्तत्र सञ्ज्ञार्थं शङ्खो ध्मायति नित्यसः ॥ २-७६-५४ (१४३४८)
मुहुर्मुहुः प्रणदतस्तस्य शङ्खस्य भारत ।
अनिशं शब्दमश्रौषं ततो रोमाणि मेऽहृषन् ॥ २-७६-५५ (१४३४९)
पार्थिवैर्बहुभिः कीर्णमुपस्थानं दिदृक्षुभिः ।
अशोभत महाराज नक्षत्रैर्द्यौरिवामला ॥ २-७६-५६ (१४३५०)
सर्वरत्नान्युपादाय पार्थिवा वै जनेश्वर ।
यज्ञे तस्य महाराज पाण्डुपुत्रस्य धीमतः ॥ २-७६-५७ (१४३५१)
वैश्या इव महीपाला द्विजातिपरिवेषकाः ।
न सा श्रीर्देवराजस्य यमस्य वरुणस्य च ।
गुह्यकाधिपतेर्वापि या श्री राजन्युधिष्ठिरे ॥ २-७६-५८ (१४३५२)
तां दृष्ट्वा पाण्डुपुत्रस्य श्रियं परमिक्रामहम् ।
शान्तिं न परिगच्छामि दह्यमानेन चेतसा ॥ २-७६-५९ (१४३५३)
ग्अप्राप्य पाण्डवैश्वर्यं शमो मम न विद्यते ।
अरीन्बाणैः शाययिष्ये शयिष्ये वा हतः परैः ॥ २-७६-६० (१४३५४)
एतादृशस्य मे किं तु जीवितेन परन्तप ।
वर्धन्ते पाण्डवा राजन्वयं हि स्थितवृद्धयः'॥ २-७६-६१ (१४३५५)
शकुनिरुवाच ॥ २-७६-६२क्ष् (१५२३)
यामेतामतुलां लक्ष्मीं दृष्टवानसि पाण्डवे ।
तस्याटः प्राप्तावुपायं मे शृणु सत्यपराक्रम ॥ २-७६-६२ (१४३५६)
अहमक्षेष्वभिज्ञोऽस्मि पृथिव्यामपि भारत ।
हृदयज्ञः पणज्ञश्च विशेषज्ञश्च देवने ॥ २-७६-६३ (१४३५७)
द्यूतप्रियश्च कौन्तेयो न च जानाति देवितुम् ।
आहूतश्चैष्यति व्यक्तं नित्यमेवाह्वयत्स्वयम् ॥ २-७६-६४ (१४३५८)
नियतं तं विजेष्यामि कृत्वा तु कपटं विभो ।
आनयामि समृद्धिं तां दिव्यां चोपाह्वयस्व तम् ॥ २-७६-६५ (१४३५९)
वैशम्पायन उवाच ॥ २-७६-६६क्ष् (१५२४)
एवमुक्तः शकुनिना राजा दुर्योधनस्ततः ।
धृतराष्ट्रमिदं वाक्यमपदान्तरमब्रवीत् ॥ २-७६-६६ (१४३६०)

अयमुत्सहते राजञ्श्रियमाहर्तुमक्षवित् ।
द्यूतेन पाण्डुपुत्रस्य तदनुज्ञातुमर्हसि ॥ २-७६-६७ (१४३६१)
धृतराष्ट्र उवाच ॥ २-७६-६८क्ष् (१५२५)
क्षत्ता मन्त्री महाप्राज्ञः स्थितो यस्यास्मि शासने ।
तेन सङ्गम्य वेत्स्यामि कार्यस्यास्य विनिश्चयम् ॥ २-७६-६८ (१४३६२)
स हि धर्मं पुरस्कृत्य दीर्घदर्शी परं हितम् ।
उभयोटः पक्षयोर्युक्तं वक्ष्यत्यर्थविनिश्चयम् ॥ २-७६-६९ (१४३६३)
दुर्योधन उवाच। २-७६-७०क्ष् (१५२६)
निवर्तयिष्यति त्वाऽसौ यदि क्षत्ता समेष्यति ।
निवृत्ते त्वयि राजेन्द्र मरिष्येऽहमसंशयम् ॥ २-७६-७० (१४३६४)
स त्वं मयि मृते राजन्विदुरेण सुखी भव ।
भोक्ष्यसे पृथिवीं कृत्स्नां किं मया त्वं करिष्यसि ॥ २-७६-७१ (१४३६५)
वैशम्पायन उवाच ॥ २-७-७२क्ष् (१५२७)
आर्तवाक्यं तु तत्तस्य प्रणयोक्तं निशम्य सः ।
धृतराष्ट्रोऽब्रवीत्प्रेष्यन्दुर्योधनमते स्थितः ॥ २-७६-७२ (१४३६६)
स्थूणासहस्रैर्बृहतीं शतद्वारां सभां मम ।
मनोरमां दर्शनीयामाशु कुर्वन्तुं शिल्पिनः ॥ २-७६-७३ (१४३६७)
ततः संस्तीर्य रत्नैस्तां तक्ष्ण आनाय्य सर्वशः ।
सुकृतां सुप्रवेशां च निवेदयत मेऽशनैः ॥ २-७६-७४ (१४३६८)
दूर्योधनस्य शान्त्यर्थमिति निश्चित्य भूमिपः ।
धृतराष्ट्रो महाराज प्राहिणोद्विदुराय वै ॥ २-७६-७५ (१४३६९)
अपृष्ट्वा विदुरं स्वस्यन नासीत्कश्चिद्विनिश्चयः ।
द्यूते दोषांश्च जानन्स पुत्रस्नेहादकृष्यत ॥ २-७६-७६ (१४३७०)
तच्छ्रुत्वा विदुरो धीमान्कलिद्वारमुपस्थितम् ।
विनाशमुखमुत्पन्नं धृतराष्ट्रमुपाद्रवत् ॥ २-७६-७७ (१४३७१)
सोऽभिगम्य महात्मानं भ्राता भ्रातरमग्रजम् ।
मूर्ध्ना प्रणम्य चरणाविदं वचनमब्रवीत् ॥ २-७६-७८ (१४३७२)
विदुर उवाच। २-७६-७९क्ष् (१५२८)
नाभिनन्दामि ते राजन्व्यवसायमिमं प्रभो ।
पुत्रैर्भेदो यथा न स्याद्द्यूतहेतोस्तथा कुरु ॥ २-७६-७९ (१४३७३)
धृतराष्ट्र उवाच। २-७६-८०क्ष् (१५२९)
क्षत्तः पुत्रेषु पुत्रैर्मे कलहो न भविष्यति ।
यदि देवाः प्रसादं नः करिष्यन्ति न संशयः ॥ २-७६-८० (१४३७४)
अशुभं वा शुभं वापि हितं वा यदि वाऽहितम्। २-७६-८१ (१४३७५)
मयि सन्निहिते द्रोणे भीष्मे त्वयि च भारत ।
अनयो दैवविहितो न कथञ्चिद्भविष्यति ॥ २-७६-८२ (१४३७६)

गच्छ त्वं रथमास्थाय हयैर्वातसमैर्जवे ।
खाण्डवप्रस्थमद्यैव समानय युधिष्ठिरम् ॥ २-७६-८३ (१४३७७)
न वाच्यो व्यवसायो मे विदुरैतद्ब्रवीमि ते ।
दैवमेव परं मन्ये येनैतदुपपद्यते ॥ २-७६-८४ (१४३७८)
इत्युक्तो विदुरो धीमान्नेदमस्तीति चिन्तयन् ।
आपगेयं महाप्राज्ञमभ्यगच्छत्सुदुः खितः ॥ ॥ २-७६-८५ (१४३७९)

इति श्रीमन्महाभारते सभापर्वणि द्यूतपर्वणि षट्सप्ततितमोऽध्यायः
॥ ७६ ॥
Mahabharata - Sabha Parva - Chapter Footnotes

२-७६-९ कुतोमूलं किंमुलम् । कुतइति प्रथमार्थे तसिः ॥
२-७६-२९ कदलीमृगा हरिणविशेषास्तेषां मोकान्यजिनानि तान्येव
कृष्णश्यामारुणानि चित्र वर्णानीत्यर्थः ॥
२-७६-३४ वाटाः क्षेत्रादिवृत्तयस्तासां धाना अभिनवोद्भेदो येषां ते
सस्यादिसम्पन्नक षेत्रादिवृत्तिमन्त इत्यर्थः ॥
२-७६-३७ शैक्यं वरत्रामयं पात्राधारभूतं शिक्यं कावडीति
प्रसिद्धं तत्र स्थितं पात् रं शैक्यम् । एतेन सामुद्रय आप उक्ताः ॥

---

सभ-०७७
॥ श्रीः ॥
२.७७. अध्यायः ७७

Mahabharata - Sabha Parva - Chapter Topics
जनमेजयेन विस्तरेण द्यूतवृत्तान्तकथनप्रार्थनम्
॥ १. । धृतराष्ट्रेण दुर्योधनम्प्रति
द्यूतनिषेधनम् ॥ २. । दुर्योधनेन धृतराष्ट्रम्प्रति
भीमादिकृतस्वापहसनादिकथनम् ॥ ३. ।
Mahabharata - Sabha Parva - Chapter Text

जनमेजय उवाच ॥
कथं समभवद्द्यूतं भ्रातॄणां तन्महात्ययम् ।
यत्र तद्व्यसनं प्राप्तं पाण्डवैर्मे पितामहैः ॥ २-७७-१ (१४३८०)
के च तत्र समास्तारा राजानो ब्रह्मवित्तम ।
के चैनमन्वमोदन्त के चैनं प्रत्यषेधयन् ॥ २-७७-२ (१४३८१)
विस्तरेणैतदिच्छामि कथ्यमानं त्वया द्विज ।

मूलं ह्येतद्विनाशस्य पृथिव्या द्विजसत्तम ॥ २-७७-३ (१४३८२)
सौतिरुवाच। २-७७-४क्ष् (१५३०)
एवमुक्तस्ततो राज्ञा व्यासशिष्यः प्रतापवान् ।
आचचक्षेऽथ यद्वृत्तं तत्सर्वं वेदतत्त्वविद् ॥ २-७७-४ (१४३८३)
वैशम्पायन उवाच ॥ २-७७-५क्ष् (१५३१)
एवमुक्तस्ततो राज्ञा व्यासशिष्यः प्रतापवान् ।
आचचक्षेऽथ यद्वृत्तं तत्सर्वं वेदतत्त्ववित् ॥ २-७७-५ (१४३८४)
विदुरस्य मतिं ज्ञात्वा धृतराष्ट्रोऽम्बिकासुतः ।
दुर्योधनमिदं वाक्यमुवाच विजने पुनः ॥ २-७७-६ (१४३८५)
अलं द्यूतेन गान्धारे विदुरो न प्रशंसति ।
न ह्यसौ सुमहाबुद्धिरहितं नो वदिष्यति ॥ २-७७-७ (१४३८६)
हितं हि परमं मन्ये विदुरो यत्प्रभाषते ।
क्रियतां पुत्र तत्सर्वमेतन्मन्ये हितं तव ॥ २-७७-८ (१४३८७)
देवर्षिर्वासवागुरुर्देवराजाय धीमते ।
यत्प्राह शास्त्रं भगवान्बृहस्पतिरुदारधीः ।
तद्वे विदुरः सर्वं सरहस्यं महाकविः ॥ २-७७-९ (१४३८८)
स्थितस्तु वचने तस्य सदाऽहमपि पुत्रक ।
विदुरो वापि मेधावी कुरूणां प्रवरो मतः ॥ २-७७-१० (१४३८९)
उद्धवो वा महाबुद्धिर्वृष्णीनामर्चितो नृप ।
तदलं पुत्र द्यूतेन द्यूते भेदो हि दृश्यते ॥ २-७७-११ (१४३९०)
भेदे विनाशो राज्यस्य तत्पुत्र परिवर्जय ॥ २-७७-१२ (१४३९१)
पित्रा मात्रा च पुत्रस्य यद्वै कार्यं परं स्मृतम् ।
प्राप्तस्त्वमसि तन्नाम पितृपैतामहं पदम् ॥ २-७७-१३ (१४३९२)
अधीतवान्कृती शास्त्रे लालितः सततं गृहे ।
भ्रातृज्येष्ठः स्थितो राज्ये विन्दसरे किं न शोभनम् ॥ २-७७-१४ (१४३९३)
पृथग्जनैरलभ्यं यद्भोजनाच्छादनं परम् ।
तत्प्राप्तोसि महाबाहो कस्माच्छोनसि पुत्रक ॥ २-७७-१५ (१४३९४)
स्फीतं राष्ट्रं महाबाहो पितृपैतामहं महत् ।
नित्यमाज्ञापयन्भासि दिवि देवेश्वरो यथा ॥ २-७७-१६ (१४३९५)
ग्यादृशं च तवैश्वर्यं तदन्येषां सुदुर्लभम् ।
ये चोपभोगास्ते राजन्मया ते परिकीर्तिताः'॥ २-७७-१७ (१४३९६)
तस्य ते विदितप्रज्ञ शोकमूलमिदं कथम् ।
समुत्थितं दुःखकरं तन्मे शंसितुमर्हसि ॥ २-७७-१८ (१४३९७)
दुर्योधन उवाच ॥ २-७७-१९क्ष् (१५३२)
अश्नाम्याच्छादयामीति प्रपश्यन्हीनपौरुषः ।
नामर्षं कुरुते यस्तु पुरुषः सोऽधमः स्मृतः ॥ २-७७-१९ (१४३९८)

न मां प्रीणाति राजेन्द्र लक्ष्मीः साधारणी विभो ।
ज्वलितामेव कौन्येये श्रियं दृष्ट्वा च विव्यथे ॥ २-७७-२० (१४३९९)
सर्वां च पृथिवीं चैव युधिष्ठिरवशानुगाम् ।
स्थिरोऽस्मि योऽहं जीवामि दुःखादेतद्ब्रवीमि ते। २-७७-२१ (१४४००)
आवर्जिता इवाभान्ति नीपाश्चित्रककौकुराः ।
कारस्कारा लोहजङ्घा युधिष्ठिरनिवेशने ॥ २-७७-२२ (१४४०१)
हिमवत्सागरानुपाः सर्वे रत्नाकरास्तथा ।
अन्त्याः सर्वे पर्युदस्ता युधिष्ठिरनिवेशने ॥ २-७७-२३ (१४४०२)
ज्येष्ठोऽयमिति मां मत्वा श्रेष्ठश्चेति विशाम्पते ।
युधिष्ठिरेण सत्कृत्य युक्तो रत्नपरिग्रहे ॥ २-७७-२४ (१४४०३)
उपस्थितानां रत्नानां श्रेष्ठानामर्घहारिणाम् ।
नादृश्यत परः पारो नापरस्तत्र भारत ॥ २-७७-२५ (१४४०४)
न मे हस्तः समभवद्वसु तत्प्रतिगृह्णतः ।
अतिष्ठन्त मयि श्रान्ते गृग्य दूराहृतं वसु ॥ २-७७-२६ (१४४०५)
कृतां बिन्दुसरोरत्नैर्मयेन स्फाटिकच्छदाम् ।
अपश्यं नलिनीं पूर्णामुदकस्येव भारत ॥ २-७७-२७ (१४४०६)
वस्त्रमुत्कर्षति मयि प्राहसत्स वृकोदरः ।
शत्रोर्ऋद्धिविशेषेण विमूढ रत्तवर्जितम् ॥ २-७७-२८ (१४४०७)
तत्र स्म यदि शक्तः स्यं पातयेऽहं वृकोदरम् ।
यदि कुर्यां समारम्भं भीमं हन्तुं नराधिप ॥ २-७७-२९ (१४४०८)
शिशुपाल इवास्माकं गतिः स्यान्नात्र संशयः ।
सपत्नेनावहासो मे स मां दहति भारत ॥ २-७७-३० (१४४०९)
पुनश्च तादृशीमेव वापीं जलजशालिनीम् ।
मत्वा शिलासमां तोये पतितोऽस्मि नराधिप ॥ २-७७-३१ (१४४१०)
तत्र मां प्राहसत्कृष्णः पार्थेन सह सुस्वरम् ।
द्रौपदी च सह स्त्रीभिर्व्यथयन्ती मनो मम ॥ २-७७-३२ (१४४११)
क्लिन्नवस्त्रस्य तु जले किङ्करा राजनोदिताः ।
ददुर्वासांसि मेऽन्यानि तच्च दुःखं परं मम ॥ २-७७-३३ (१४४१२)
प्रलम्भं च शृणुष्वान्यद्वदतो मे नराधिप ।
अद्वारेण विनिर्गच्छन्द्वारसंस्थानरूपिणा ।
अभिहत्य शिलां भूयो ललाटेनास्मि विक्षतः ॥ २-७७-३४ (१४४१३)
तत्र मां यमजौ दूरादालोक्याभिहतं तदा ।
बाहुभिः परिगृह्णीतां शोचन्तौ सहितावुभौ ॥ २-७७-३५ (१४४१४)
उवाच सहदेवस्तु तत्र मां विस्मयन्निव ।
इद द्वारं धार्तराष्ट्र मा गच्छेति पुनः पुनः ॥ २-७७-३६ (१४४१५)
भीमसेनेन तत्रोक्तो धृतराष्ट्रात्मजेति च ।

सम्बोध्य प्रहसित्वा च इतो द्वारं नराधिप ॥ २-७७-३७ (१४४१६)
नामधेयानि रत्नानां पुरस्तान्न श्रुतानि मे ।
यानि दृष्टानि मे तस्यां मनस्तपति तच्च मे ॥ ॥ २-७७-३८ (१४४१७)

इति श्रीमन्महाभारते सभापर्वणि द्यूतपर्वणि सप्तसप्ततितमोऽध्यायः
॥ ७७ ॥
Mahabharata - Sabha Parva - Chapter Footnotes

२-७७-२२ नीपादयो राजानः ।आवर्जिता दासवद्वशगाः ॥
२-७७-२३ पर्युदस्ता दूरक्षिप्ताः ॥
२-७७-२६ न समभवत् समर्थो नाभवत् ॥

---

सभ-०७८
॥ श्रीः ॥
२.७८. अध्यायः ७८

Mahabharata - Sabha Parva - Chapter Topics
दुर्योधनेन धृतराष्ट्रसमीपे युधिष्ठिराय
नानादेशीयराजोपाहृतोपायनवर्णनम् ॥ १.।
Mahabharata - Sabha Parva - Chapter Text

दुर्योधन उवाच ॥
यन्मया पाण्डवोयानां दृष्टं तच्छृणु भारत ।
आहृतं भूमिपालैर्हि वसु मुख्यं ततस्ततः ॥ २-७८-१ (१४४१८)
नाविदं मूढमात्मानं दृष्ट्वाहं तदरेर्धनम् ।
फलतो भूमितो वाऽपि प्रतिपद्यस्व भारत ॥ २-७८-२ (१४४१९)
और्णान्बैलान्वार्षदंशान् जातरूपपरिष्कृतान् ।
प्रावाराजिनमुख्यांश्च काम्भोजः प्रददौ बहून् ॥ २-७८-३ (१४४२०)
अश्वांस्तित्तिरिकल्माषांस्त्रिशतं शुकनासिकान् ।
अष्ट्रवामीस्त्रिगर्तांश्च पुष्टाः पीलुशमीङ्गुदैः ॥ २-७८-४ (१४४२१)
गोपाः स्वीयेन सहितास्तदादाय चतुष्पदम् ।
वसातयोऽन्यद्द्रव्यं द्वारि तस्यावतस्थिरे ॥ २-७८-५ (१४४२२)
कमण्डलूनुपादाय जातरूपमयञ्छिवान् ।
रत्नानि च हिरण्यं च सुवर्णं चैव केवलम्। २-७८-६ (१४४२३)
प्रीयमाणः प्रसन्नात्मा स्वयं स्वजनसंवृतः ।
त्रैखर्वो रथमुख्येशः पाण्डवाय न्यवेदयत् ॥ २-७८-७ (१४४२४)
यश्च स द्विजमुख्येन राज्ञः शङ्खो निवेदितः ।

प्रीत्या दत्तः कुविन्देन धर्मराजाय धीमते ॥ २-७८-८ (१४४२५)
तं सर्वे भ्रातरो भ्रात्रे ददुः शङ्खं किरीटिने ।
तं प्रत्यगृह्णाद्बीभत्सुस्तोयजं हेममालिनम् ॥ २-७८-९ (१४४२६)
चित्रं निष्कसहस्रेण भ्राजमानं स्वतेजसा ।
रुचिरं दर्शनीयं च पूजितं विश्वकर्मणा ॥ २-७८-१० (१४४२७)
अधारयच्च धर्मश्च तं नमस्य पुनः पुनः ।
योऽनादनेऽपि नदति स ननादाधिकं तदा ॥ २-७८-११ (१४४२८)
प्रणादाद्भूमिपास्तस्य पेतुर्हीनाः स्वतेजसा ।
धृष्टद्युम्नः पाण्डवाश्च सात्यकिः केशवोऽष्टमः ॥ २-७८-१२ (१४४२९)
सत्वेन स्वेन सम्पन्ना अन्योन्यप्रियकारिणः ।
विसञ्ज्ञान्भूमिपान्दृष्ट्वा मां च ते प्राहसंस्तदा ॥ २-७८-१३ (१४४३०)
ततः प्रहृष्टो बीभत्सुरददाद्धेमशृङ्गिणः ।
शतानडुहान्पञ्च द्विजमुख्याय भारत ॥ २-७८-१४ (१४४३१)
सुमुखेन बलिर्मुख्यः प्रेषितोऽजातशत्रवे ।
कुविन्देन हिरण्यं च वासांसि विविधानि च ॥ २-७८-१५ (१४४३२)
काश्मीरराजो मार्द्वीकं शुद्धं च सरसं मधु ।
बलिं च कृत्स्नमादाय पाण्डवायाभ्युटपागमत् ॥ २-७८-१६ (१४४३३)
यवना हयानुपादाय पार्वतीयान्मनोजवान् ।
आसनानि महार्हाणि कम्बलांश्च महाधनान् ॥ २-७८-१७ (१४४३४)
नवान्सूक्ष्मांश्च हृद्यांश्च परार्ध्यान्सुप्रदर्शनान् ।
अन्यच्च विविधं रत्नं द्वारि ते न्यवतस्थिरे ॥ २-७८-१८ (१४४३५)
श्रुतायुरपि कालिङ्गो मणिरत्नमनुत्तमम् ।
अङ्गः स्त्रियो दर्शनीया जातरूपविभूषिताः ॥ २-७८-१९ (१४४३६)
वङ्गो जाम्बूनदमयान्पर्यङ्काञ्छतशो नृप ।
दक्षिणात्सागराभ्याशात्प्रावारांश्च परश्शतम् ॥ २-७८-२० (१४४३७)
औदकानि सरत्नानि बलिं चादाय भारत ।
अन्येभ्यो भूमिपालेभ्यः पाण्डवाय न्यवेदयत् ॥ २-७८-२१ (१४४३८)
दार्दुरं चन्दनं मुख्यं भारं षण्णवति द्रुतम् ।
पाण्डवाय ददौ पाण्ड्यः शङ्खांस्तावत एव च ॥ २-७८-२२ (१४४३९)
चन्दनागरु चानन्तं मुक्तावैडूर्यचित्रिताः ।
चोलश्च केरलश्चोमौ ददतुः पाण्डवाय वै ॥ २-७८-२३ (१४४४०)
अश्मको हेमशृङ्गीश्च दोग्ध्रीर्हेमविभूषिताः ।
सवत्साः कुम्भदोहाश्च सहस्राण्यददाद्दश ॥ २-७८-२४ (१४४४१)
सैन्धवानां सहस्राणि हयानां पञ्चविंशतिम् ।
अददात्सैन्धवो राजा हेममाल्यैरलङ्कृतान् ॥ २-७८-२५ (१४४४२)
सौवीरो हस्तिभिर्युक्तान्रथांश्च त्रिशतं परान् ।

जातरूपपरिष्कारान्मणिरत्नविभूषितान् ॥ २-७८-२६ (१४४४३)
मध्यन्दिनार्कप्रतिमांस्तेजसा ज्वलितानिव ।
बलिं च कृत्स्नमादाय पाण्डवाय न्यवेदयत् ॥ २-७८-२७ (१४४४४)
अवन्तिराजो रत्नानि विविधानि सहस्रशः ।
हाराङ्गदांश्च मुख्यान्वै विविधं च विभूषणम् ॥ २-७८-२८ (१४४४५)
दासीनामयुतं चापि बलिमादाय भारत ।
सभाद्वारि नरश्रेष्ठ दिदृक्षुरवतिष्ठते ॥ २-७८-२९ (१४४४६)
दशार्णश्चेदिराजश्च शूरसेनश्च वीर्यवान् ।
वस्त्राणि मुख्यान्यादाय रत्नानि विविधानि च ।
बलिं च कृत्स्नमादाय पाण्डवाय न्यवेदयत् ॥ २-७८-३० (१४४४७)
काशिराजेन हृष्टेन बली राज्ञि निवेदितः ।
अशीतिगोसहस्राणि शतान्यष्टौ च दन्तिनाम् ॥ २-७८-३१ (१४४४८)
अयुतं च नदीजानां हयानां हेममालिनाम् ।
विविधानि च रत्नानि काशिराजो बलिं ददौ ॥ २-७८-३२ (१४४४९)
कृतक्षणश्च वैदेहः कौसलश्च बृहद्बलः ।
ददतुर्वाजिमुख्यांश्च सहस्राणि चतुर्दश ॥ २-७८-३३ (१४४५०)
शैब्यो वसादिभिः सार्धं त्रिगर्तो मालवैः सह ।
तेभ्यो रत्नानि ददतुरेकैको भूमिपोऽमितम् ॥ २-७८-३४ (१४४५१)
हारान्मुख्यान्पराध्र्यांश्च विविधं च विभूषणम् ।
शतं दासीसहस्राणि कार्पासिकनिवासिनाम् ॥ २-७८-३५ (१४४५२)
श्यामास्तन्वीर्दीर्घकेशीर्हेमाभरणभूषिताः ।
बलिं च कृत्स्नमादाय भारुकच्छो नरर्षभ ॥ २-७८-३६ (१४४५३)
शुद्धान्विप्रोत्तमार्हांश्च कम्बलप्रवरान्ददौ ।
ते सर्वे पाण्डुपुत्रस्य द्वार्यतिष्ठन्दिदृक्षवः ॥ २-७८-३७ (१४४५४)
उपायनं यदा दद्युस्तदा द्वारमलभ्यत ।
इन्द्रकृष्टैर्वर्धयन्ति धान्यैर्नदमुखैस्तु ये ॥ २-७८-३८ (१४४५५)
समुद्रनिकटे जाताः परिसिन्धुनिवासिनः ।
ते वै द्रुमाः पारदाश्च काश्यकैरातकैः सह ॥ २-७८-३९ (१४४५६)
बलिं विविधमादाय रत्नानि विविधानि च ।
अजाविकं गोहिरण्यं खरोष्ट्रं फलवन्मधु ॥ २-७८-४० (१४४५७)
कम्बलान्विविधांश्चैव द्वारि तिष्ठन्ति वारिताः ।
प्राग्ज्योतिषपतिः शूरो म्लेच्छानामधिपो बली ॥ २-७८-४१ (१४४५८)
यवनैः सहितो राजा भगदत्तो महाबलः ।
आजानेयान्हयाञ्छीघ्रमादायानिलरंहसः ॥ २-७८-४२ (१४४५९)
बलिं च कृत्स्नमादाय द्वारि तिष्ठति वारितः ।
अश्वसारमयान्भाण्डाञ्छुभान्दन्तत्सरूनसीन् ॥ २-७८-४३ (१४४६०)

प्राग्ज्योतिषाधिपो दत्त्वा भगदत्तोऽव्रजत्तदा ।
व्यक्षाङ्‌व्यक्षांल्ललाटाक्षान्नानादिग्भ्यः समागतान् ॥ २-७८-४४ (१४४६१)
औष्णीषआनहयांश्चैव बाहुकान्पुरुषादकान् ।
एकपादांश्च तत्राहमपश्यं द्वारि वारितान् ॥ २-७८-४५ (१४४६२)
बल्यर्थं ददतस्तस्य हिरण्यं रजतं वसु ।
इन्द्रगोपकसङ्काशाञ्छुकवर्णान्मनोजवान् ॥ २-७८-४६ (१४४६३)
तथैवेन्द्रायुधनिभान्सन्ध्याभ्रसदृशानपि ।
अनेकवर्णानारण्यान्गृहीत्वाश्वांस्तथा बहून् ॥ २-७८-४७ (१४४६४)
जातरूपमनर्घ्यं च ददुस्तस्यैकपादकाः ।
सिंहलश्च तदा राजा परिगृह्य धनं बहु ॥ २-७८-४८ (१४४६५)
गोशीर्षं हरितश्यामं चन्दनप्रवरं महत् ।
भाराणां शतमेकं तु द्वारि तिष्ठति वारितः ॥ २-७८-४९ (१४४६६)
ये नग्नविषया राजन्बर्बरेयाश्च विश्रुताः ।
शतं दासीसहस्राणां कम्बलांश्च सहस्रशः ।
परिगृह्य महाराज द्वारि तिष्ठन्ति वारिताः ॥ २-७८-५० (१४४६७)
पौण्ड्राश्च दामलिप्ताश्च यथाकामकृतो नृपाः ।
कालेयकं च रूप्यं च परिगृह्य परिच्छदान् ॥ २-७८-५१ (१४४६८)
अगरूस्फाटिकांश्चैव दन्ताञ्जातीफलानि च ।
तक्कोलांश्च लवङ्गाश्च कर्पूरांश्च महाबल ॥ २-७८-५२ (१४४६९)
अन्यांश्च विविधान्द्रव्यान्परिगृह्योपतस्थिरे ।
एते सर्वे महात्मानो द्वारि तिष्ठन्ति वारिताः ॥ २-७८-५३ (१४४७०)
शैलेयश्च ततो राजा पत्रोर्णान्परिगृह्य सः ।
द्वारि तिष्ठन्महाराज द्वारपालैर्निवारितः ॥ २-७८-५४ (१४४७१)
चीना हूणाः कषाः काचाः पर्वतान्तरवासिनः ।
आहार्षुर्दशसाहस्रान्विन्नीतान्दिक्षु विश्रुतान् ॥ २-७८-५५ (१४४७२)
औष्णीकं कम्बलं चैव कीटजं मणिजं तथा ।
प्रमाणरागस्पर्शाढ्यं बाह्लीचीनसमुद्भवम् ॥ २-७८-५६ (१४४७३)
रसान् गन्धान्प्रशंसन्तस्ततो द्वारमलभ्यत ।
खर्वटास्तोमराश्चैव शूरा वर्धनकास्तथा ॥ २-७८-५७ (१४४७४)
चेलान्बहुविधान्गृह्य द्वारि तिष्ठन्ति वारिताः ।
प्राक्कोटा नाटकेयाश्च नन्दीनगरकास्तथा ॥ २-७८-५८ (१४४७५)
नापितास्त्रैपुराश्चैव पञ्चमेयाः सहोरुजाः ।
तथा चाटविकाः सर्वे नानाद्रव्यपरिच्छदान् ॥ २-७८-५९ (१४४७६)
परिगृह्य महाराज द्वारि तिष्ठन्ति वारिताः ।
शकास्तुषाराः कौरव्य रोमकाः शृङ्गिणोश्मकाः ॥ २-७८-६० (१४४७७)
बलादूरुगमा राजन्गणितं चार्बुदं मया ।

कूटीकृतं सुवर्णं च पद्मकिञ्जल्कसंनिभम् ॥ २-७८-६१ (१४४७८)
शितान्दीर्घानसीनन्यान्यष्टिशक्तिपरश्वथान् ।
श्लक्ष्णं वस्त्रमकार्पसमाविकं मृदु चाजिनम् ॥ २-७८-६२ (१४४७९)
बलं मत्तं समादाय द्वारि तिष्ठन्ति वारिताः ।
आसनानि महार्हाणि यानानि शयनानि च ॥ २-७८-६३ (१४४८०)
मणिकाञ्चनचित्राणि गजदन्तमयानि च ।
रथांश्च विविधाकाराञ्जाम्बूनदपरिष्कृतान् ॥ २-७८-६४ (१४४८१)
हयैर्विनीतैः सम्पन्नान्वैयाघ्रपरिवारितान् ।
विचित्रान्सपरिस्तोमांश्चापानि विविधानि च। २-७८-६५ (१४४८२)
नाराचानर्धनाराचाञ्छस्त्राणि विविधानि च ।
एतद्द्रव्यं महद्गृह्य पूर्वदेशाधिपो नृपः ॥ २-७८-६६ (१४४८३)
प्रविष्टो यज्ञसदनं पाण्डवस्य महात्मनः ।
जन्तुचेलान्द्विसाहस्रान्दुकूलान्ययुतानि च ॥ २-७८-६७ (१४४८४)
कांस्यानि चैव भाण्डानि महार्हाणि कुथानि च ।
एतान्यन्यानि रत्नानि ददौ पार्थस्य वै मुदा ॥ २-७८-६८ (१४४८५)
अन्यान्बहुविधान्राजन्नरः सागरमाश्रिताः ।
रत्नानि विविधान्गृह्य ददुस्ते पाण्डवाय तु ॥ २-७८-६९ (१४४८६)
मालवाश्च ततो राजन्रत्नानि विविधानि च ।
गोधूमानां च राजेन्द्र द्रोणानां कोटिसंमितम् ॥ २-७८-७० (१४४८७)
अन्यांश्च विविधान्धान्यान्परिगृह्य महाबलः ।
पाण्डवाय ददौ प्रीत्या प्रविवेश महाध्वरम् ॥ २-७८-७१ (१४४८८)
नानारत्नान्बहून्गृह्य सुराष्ट्राधिपतिर्नृपः ।
तैलकुम्भान्महाराज द्रोणानामयुतानि च ॥ २-७८-७२ (१४४८९)
गुडानपि स तान्स्वादून्सहस्रशकटैर्नृपः ।
एतानि सर्वाण्यादाय ददौ कुन्तीसुताय सः ॥ २-७८-७३ (१४४९०)
अन्ये च पार्थिवा राजन्नानादेशसमागताः ।
रत्नानि विविधान्गृह्य ददुस्ते कौरवाय तु ॥ २-७८-७४ (१४४९१)
जम्बूद्वीपे समस्ते तु सराष्ट्रवनपर्वते ।
करं तु न प्रयच्छेत नास्ति पार्थस्य पार्थिवः ॥ २-७८-७५ (१४४९२)
नरः सप्तसु वर्षेसु तद्यज्ञे नास्ति नागतः ।
क्रतुर्नानागणैः कीर्णो बभौ शक्रसदो यथा ॥ २-७८-७६ (१४४९३)
इमांश्च दायान्विविधान्निबोध मम पार्थिव ।
यज्ञाप्थे राजभिर्दत्तान्महतो धनसञ्चयान् ॥ २-७८-७७ (१४४९४)
मेरुमन्दरयोर्मध्ये शैलोदामभितो नदीम् ।
ये ते कीचकवेणूनां छायां रम्यामुपासते ॥ २-७८-७८ (१४४९५)
खषा एकासनाद्यर्हाः प्रदरा दीर्घवेणवः ।

पारदाश्च कुलिन्दाश्च तङ्गणाः परतङ्गणाः ॥ २-७८-७९ (१४४९६)
तद्वै पिपीलिकं नाम उद्धृतं यत्पिपीलिकैः ।
जातरूपं द्रोणमेयमहार्षुः कुञ्जशो नराः ॥ २-७८-८० (१४४९७)
कृष्णवालांश्च चमराञ्छुक्लवालांस्तथा परान् ।
हिमवत्पुष्पजं चैव स्वादुक्षौद्ररसं बहु ॥ २-७८-८१ (१४४९८)
उत्तरेभ्यः कुरुभ्यश्च व्यूढमाल्यैर्महात्मभिः ।
उत्तरादपि कैलासादोषधीः सुमहाबलाः ॥ २-७८-८२ (१४४९९)
पार्वतीयाश्चराजान आहृत्य प्रणताः स्थिताः ।
अजातशत्रवे राजन्द्वारि तिष्ठन्ति वारिताः ॥ २-७८-८३ (१४५००)
ये परार्घ्या हिमवतः सूर्योदयगिरेरनु ।
एवंरूपाः समुद्रान्ते लौहित्यमभितश्च ये ॥ २-७८-८४ (१४५०१)
---
-- २-७८-८५ (१४५०२)
--
--- २-७८-८६ (१४५०३)
--
-- २-७८-८७ (१४५०४)
--
-- २-७८-८८ (१४५०५)
--
-- २-७८-८९ (१४५०६)
शिबित्रैगर्तयौधेया राजन्या मद्रकैः सह ।
वसुतेयाः समौलेया दाहक्षुद्रकमालवैः ॥ २-७८-९० (१४५०७)
चौण्डिकाश्चौदकाश्चैव साल्वाश्चैव विशम्पते ।
अङ्गवङ्गाश्च यवना अनवद्या गयैः सह ॥ २-७८-९१ (१४५०८)
सुजातयः श्रेणिमन्तः श्रेयांसः शस्त्रधारिणः ।
आहार्षुः क्षत्रिया वित्तं शतशोऽजातशत्रवे ॥ २-७८-९२ (१४५०९)
वङ्गाः कलिङ्गा मगधास्ताम्रलिप्ताः सपुण्ड्रकाः ।
दुकूलं कौशिकं चैव पत्रोर्णं चैव भारत ॥ २-७८-९३ (१४५१०)
उपावृत्ता नृपास्तस्य ददुः प्रीतिं न चागमन् ।
उच्यन्ते तत्र हि द्वास्थैर्बलिमादाय विष्ठिताः ॥ २-७८-९४ (१४५११)
ईषादन्तान्हेमकक्ष्यान्पद्मवर्णान्कुथावृतान् ।
शैलाभान्नित्यमत्तांश्चाप्यभितः काम्यकं सरः ॥ २-७८-९५ (१४५१२)
क्षमावतः कुलीनांश्च कुञ्जरान्सपरिच्छदान् ।
दत्त्वैकैको दशशतान्द्वारेण प्रविशन्त्विति ॥ २-७८-९६ (१४५१३)
वैदेहकाश्च पुण्ड्राश्च गौलेयास्ताम्रलिप्तकाः ।

मरुकाः काशिका दर्दा भौमेया नटनाटकाः ॥ २-७८-९७ (१४५१४)
कर्णाटाः कांस्यकुट्टाश्च पद्मजालाः सतीनराः ।
दाक्षिणात्याः पुलिन्दाश्च शवेरास्तङ्कणाः शषाः ॥ २-७८-९८ (१४५१५)
बर्बरा यवनाश्चैव गर्गराभीरकास्तथा ।
पल्लवाः शककारूशास्तुम्बकाः काशिकास्तदा ॥ २-७८-९९ (१४५१६)
एते चान्ये च बहवो नानादिगभ्यः समागताः ।
अन्यैश्चोपहृतान्यत्र रत्नानि हि महात्मभिः ॥ २-७८-१०० (१४५१७)
समुद्रसारवैडूर्यान्मुक्ताः शङ्खास्तथैव च ।
शुभावर्ताञ्छुभाञ्छुक्तीः सिंहलाः समुपाहरन् ॥ २-७८-१०१ (१४५१८)
सम्भृतान्मणिचीरैश्च श्यामांस्ताम्रान्तलोचनान् ।
राजा चित्ररथो नाम गन्धर्वो वासवानुगः ।
शतानि चत्वार्यददद्धयानां वातरंहसाम् ॥ २-७८-१०२ (१४५१९)
तुम्बुरुस्तु प्रमुदितो गन्धर्वो वाजिनां शतम् ।
आम्रपत्रसवर्णानामददद्धेममालिनाम् ॥ २-७८-१०३ (१४५२०)
कृती राजा च कौरव्य शूकराणां विशाम्पते ।
अददद्गजरत्नानां शतानि सुबहून्यथ ॥ २-७८-१०४ (१४५२१)
विराटेन तु मत्स्येन बल्यर्थं हेममालिनाम् ।
कुञ्जराणां सहस्रे द्वे मत्तानां समुपाहृते ॥ २-७८-१०५ (१४५२२)
पांसुराष्ट्राद्वसुदानो राजा षड्विंशतिं गजान् ।
अश्वानां चसहस्रे द्वे राजन्काञ्चनमालिनाम् ॥ २-७८-१०६ (१४५२३)
जवसत्वोपपन्नानां वयस्थानां नराधिप ।
बलिं च कृत्स्नमादाय पाण्डवेभ्यो न्यवेदयत् ॥ २-७८-१०७ (१४५२४)
यज्ञसेनेन दासीनां सहस्राणि चतुर्दश ।
दासानामयुतं चैव सदाराणां विशाम्पते ॥ २-७८-१०८ (१४५२५)
गजयुक्ता महाराज रथाः षड्विंशतिस्तथा ।
राज्यं च कृत्स्नं पार्थेभ्यो यज्ञार्थं वै निवेदितम् ॥ २-७८-१०९ (१४५२६)
वासुदेवोऽपि वार्ष्णेयो मानं कुर्वन्किरीटिनः ।
अददद्गजमुख्यानां सहस्राणि चतुर्दश ॥ २-७८-११० (१४५२७)
आत्मा हि कृष्णः पार्थस्य कृष्णस्यात्मा धनञ्जयः ।
यद्ब्रूयादर्जुनः कृष्णं सर्वं कुर्यादसंशयम् ॥ २-७८-१११ (१४५२८)
कृष्णो धनञ्जयस्यार्थे स्वर्गलोकमपि त्यजेत् ।
तथैव पार्थः कृष्णार्थे प्राणानपि परित्यजेत् ॥ २-७८-११२ (१४५२९)
सुरभींश्चन्दनरसान्हेमकुम्भसमास्थितान् ।
मलयाद्दर्दुराच्चैव चन्दनागुरुसञ्चयान् ॥ २-७८-११३ (१४५३०)
मणिरत्नानि भास्वन्ति काञ्चनं सूक्ष्मवस्त्रकम् ।
चोलपाण्ड्यावपि द्वारं न लेभाते ह्युपस्थितौ ॥ २-७८-११४ (१४५३१)

समुद्रसारं वैदूर्यं मुक्तासङ्घांस्तथैव च ।
शतशश्च कुथांस्तत्र सिंहलाः समुपाहरन् ॥ २-७८-११५ (१४५३२)
संवृता मणिचीरैस्तु श्यामास्ताम्रान्तलोचनाः ।
ता गृहीत्वा नरास्तत्र द्वारि तिष्ठन्ति वारिताः ॥ २-७८-११६ (१४५३३)
प्रीत्यर्थं ब्राह्मणश्चैव क्षत्रियाश्च विनिर्जिताः ।
उपाजह्रुर्विशश्चैव शूद्राः शुश्रूषवस्तथा ॥ २-७८-११७ (१४५३४)
प्रीत्या च बहुमानाच्चाप्युपागच्छन्युधिष्ठिरम् ।
सर्वे म्लेच्छाः सर्ववर्णा आदिमध्यान्तजास्तथा ॥ २-७८-११८ (१४५३५)
नानादेशसमुत्थैश्चन नानाजितिभिरेव च ।
पर्यस्त इव लोकोऽयं युधिष्ठिरनिवेशने ॥ २-७८-११९ (१४५३६)
उच्चावचानुपग्राहान्राजभिः प्रापितान्बहून् ।
शत्रूणां पश्यतो दुःखान्मुमूर्षा मे व्यजायत ॥ २-७८-१२० (१४५३७)
भृत्यास्तु ये पाण्डवानां तांस्ते वक्ष्यामि पार्थिव ।
येषामामं च पक्वं च संविधत्ते युधिष्ठिरः ॥ २-७८-१२१ (१४५३८)
अयुतं त्रीणि पद्मानि गजारोहाः ससादिनः ।
रथानामर्बुदं चापि पादाता बहवस्तथा ॥ २-७८-१२२ (१४५३९)
प्रमीयमाणमां च पच्यमानं तथैव च ।
विसृज्यमानं चान्यत्र पुण्याहस्वन एव च ॥ २-७८-१२३ (१४५४०)
नाभुक्तवन्तं नापीतं नालङ्कृतमसत्कृतम् ।
अपश्यं सर्ववर्णानां युधिष्ठिरनिवेशने ॥ २-७८-१२४ (१४५४१)
अष्टाशीतिसहस्राणि स्नातका गृहमेधिनः ।
त्रिंशद्दासीक एकैको यान्बिभर्ति युधिष्ठिरः ।
सुप्रीताः परितुष्टाश्च ते ह्याशंसत्त्यरिक्षयम् ॥ २-७८-१२५ (१४५४२)
दशान्यानि सहस्राणि यतीनामूर्ध्वरेतसाम् ।
भुञ्जते रुक्मपात्रीभिर्युधिष्ठिरनिवेशने ॥ २-७८-१२६ (१४५४३)
अभुक्तं भुक्तवद्वापि सर्वमाकुब्जवामनम् ।
अभुञ्जाना याज्ञसेनी प्रत्यवैक्षद्विशाम्पते ॥ २-७८-१२७ (१४५४४)
द्वौ करौ न प्रयच्छेतां कुन्तीपुत्राय भारत ।
साम्बन्धिकेनपाञ्चालाः सख्येनान्धकवृष्णयः ॥ ॥ २-७८-१२८ (१४५४५)

इति श्रीमन्महाभारते सभापर्वणि द्यूतपर्वणि अष्टसप्ततितमोऽध्यायः ॥७८.।

Mahabharata - Sabha Parva - Chapter Footnotes

२-७८-२ नाविदमिति सम्बन्धः ।अपि तथापि मुख्यतो वक्ष्यमाणं धनं प्रतिपद्यस्वेत्यर्थ ः। फलतो जातं वस्त्रादि। भूमितो जातं हीरादि ॥

२-७८-५ वस्त्राणि धान्यद्रव्यं च घ पाठः ॥
२-७८-१०४

---

सभ-०७९
॥ श्रीः ॥
२.७९. अध्यायः ७९

Mahabharata - Sabha Parva - Chapter Topics
दुर्योधनेन धृतराष्ट्रसमीपे राजसूयवर्णनादि ॥ १.।
Mahabharata - Sabha Parva - Chapter Text

दुर्योधन उवाच ॥
आर्यास्तु ये वै राजानः सत्यसन्धा महाव्रताः ।
पर्याप्तविद्या वक्तारो वेदान्तावभृथप्लुताः ॥ २-७९-१ (१४५४६)
धृतिमन्तो ह्रीनिषेवा धर्मात्मानो नाशस्विनः ।
मूर्धाभिषिक्तास्ते चैनं राजानः पर्युपासते ॥ २-७९-२ (१४५४७)
दक्षिणार्थं समानीत राजभिः कांस्यदोहनाः ।
आरण्या बहुसाहस्रा अपश्यंस्तत्रतत्र गाः ॥ २-७९-३ (१४५४८)
आजह्रस्तत्र सत्कृत्य स्वयमुद्यम्य भारत ।
अभिषेकार्थमव्यग्रा भाण्डमुच्चावचं नृपाः ॥ २-७९-४ (१४५४९)
बाह्लीको रथमाहार्षीज्जाम्बूनदविभूषितम् ।
सुदक्षिणस्तु युयुजे श्वेतैः काम्भोजजैर्हयैः ॥ २-७९-५ (१४५५०)
सुनीथः प्रीतिमांश्चैव ह्यनुकर्षं महाबलः ।
ध्वजं चेदिपतिश्चैवमहार्षीत्स्वयमुद्यतम् ॥ २-७९-६ (१४५५१)
दाक्षिणात्यः सन्नहनं स्रगुष्णीषे च मागधः ।
वसुदानो महेष्वासो गजेन्द्रं षष्टिहायनम् ॥ २-७९-७ (१४५५२)
मत्स्यस्त्वक्षान्हेमनद्धानेकलव्य उपानहौ ।
आवन्त्यस्त्वभिषेकार्थमपो बहुविधास्तथा ॥ २-७९-८ (१४५५३)
चेकितान उपासङ्गं धनुः काश्य उपाहरत् ।
असिं च सुत्सरुं शल्यः शैक्यं काञ्चनभूषणम् ॥ २-७९-९ (१४५५४)
अभ्यपिञ्चत्ततो धौम्यो व्यासश्च समुहातपाः ।
नारदं च पुरस्कृत्य देवलं चासितं मुनिम् ॥ २-७९-१० (१४५५५)
प्रीतिमन्त उपातिष्ठन्नभिषेकं महर्षयः ।
जामदग्न्येन सहितास्तथान्ये वेदपारगाः ॥ २-७९-११ (१४५५६)
अभिजग्मर्महात्मानो मन्त्रवद्भूरिदक्षिणम् ।
महेन्द्रमिव देवेन्द्रं दिवि सप्तर्षयो यथा ॥ २-७९-१२ (१४५५७)
अधारयच्छत्रमस्य सात्यकिः सत्यविक्रमः ।

धनञ्जयश्च व्यजने भीमसेनश्च पाण्डवः ॥ २-७९-१३ (१४५५८)
चामरे चापि शुद्धे द्वे यमौ जगृहतुस्तथा ।
उपागृह्णाद्यमिन्द्राय पुराकल्पे प्रजापतिः ॥ २-७९-१४ (१४५५९)
तमस्मै शङ्खमाहार्षीद्वारुणं कलशोदधिः ।
शैक्यं निष्कसहस्रेण सुकृतं विश्वकर्मणा ॥ २-७९-१५ (१४५६०)
तेनाभिषिक्तः कृष्णेन तत्र मे कश्मलोऽभवत् ।
गच्छन्ति पूर्वादपरं समुद्रं चापि दक्षिणम् ॥ २-७९-१६ (१४५६१)
उत्तरं तु गच्छन्ति विना तात पतत्रिभिः ।
तत्र स्म दध्मुः शतशः शङ्खान्मङ्गलकारकान् ॥ २-७९-१७ (१४५६२)
प्राणदन्त समाध्मातास्ततो रोमाणि मेऽहृषन् ।
प्रापतन्भूमिपालाश्च ये तु हीनाः स्वतेजसा ॥ २-७९-१८ (१४५६३)
धृष्टद्युम्नः पाण्डवाश्च सात्यकिः केशवोऽष्टमः ।
सत्वस्था वीर्यसम्पन्ना ह्यन्योन्यप्रियदर्शनाः ॥ २-७९-१९ (१४५६४)
विसञ्ज्ञान्भूमिपान्दृष्ट्वा मां च ते प्राहसंस्तदा ।
ततः प्रहृष्टो बीभत्सुः प्रादाद्धेमविषाणिनाम् ॥ २-७९-२० (१४५६५)
शतान्यनडुहां पञ्च द्विजमुख्येषु भारत ।
न रन्तिदेवो नाभागो यौवनाश्वो मनुर्न च ॥ २-७९-२१ (१४५६६)
न च राजा पृथुर्वैन्यो न चाप्यासीद्भगीरथः ।
ययातिर्नहुषो वापि यथा राजा युधिष्ठिरः ॥ २-७९-२२ (१४५६७)
यथाऽतिमात्रं कौन्तेयः श्रिया परमया युतः ।
राजसूयमवाप्यैवं हरिश्चन्द्र इव प्रभुः ॥ २-७९-२३ (१४५६८)
एतां दृष्टा श्रियं पार्थे हरिश्चन्द्रे यथा विभो ।
कथं तु जीवितं श्रेयो मम पश्यसि भारत ॥ २-७९-२४ (१४५६९)
अन्धेनेव युगं नद्धं विपर्यस्तं नराधिप ।
कनीयांसो विवर्धन्ते ज्येष्ठा हीयन्त एव च ॥ २-७९-२५ (१४५७०)
एवं दृष्ट्वा नाभिविन्दामि शर्म
समीक्षमाणोऽपि कुरुप्रवीर ।
तेनाहमेवं कृशतां गतश्च
विवर्णतां चैव सशोकतां च ॥ ॥ २-७९-२६ (१४५७१)

इति श्रीमन्महाभारते सभापर्वणि द्यूतपर्वणि ऊनाशीतितमोऽध्यायः ॥७९ ॥

Mahabharata - Sabha Parva - Chapter Footnotes

२-७९-२ हीनिषेवा लज्जावन्तः ॥

---

सभ-०८०

॥ श्रीः ॥
२.८०. अध्यायः ८०

Mahabharata - Sabha Parva - Chapter Topics
दुर्योधनम्प्रति धृतराष्ट्रेण पाण्डवेषु द्वेषनिषेधनम् ॥ १.।
Mahabharata - Sabha Parva - Chapter Text

धृतराष्ट्र उवाच ।
त्वं वै ज्येष्ठो ज्यैष्ठिनेयः पुत्र मा पाण्डवान्द्विषः ।
द्वेषा ह्यसुखमादत्ते यथैव निघनं तथा ॥ २-८०-१ (१४५७२)
अव्युत्पन्नं समानार्थं तुल्यमित्रं युधिष्ठिरम् ।
अद्विषन्तं कथं द्विष्यात्त्वादृशो भरतर्षभ ॥ २-८०-२ (१४५७३)
तुल्याभिजनवीर्यश्च कथं भ्रातुः श्रियं नृप ।
पुत्र कामयसे मोहान्मैवं भूः शाम्य मा शुचः ॥ २-८०-३ (१४५७४)
अथ यज्ञविभूतिं तां काङ्क्षसे भरतर्षभ ।
ऋत्विजस्तव तन्वन्तु सप्ततन्तुं महाध्वरम् ॥ २-८०-४ (१४५७५)
आहरिष्यन्ति राजानस्तवापि विपुलं धनम् ।
प्रीत्या च बहुमानाच्च रत्नान्याभरणानि च ॥ २-८०-५ (१४५७६)
अनार्याचरितं तात परस्वस्पृहणं भृशम् ।
स्वसन्तुष्टः स्वधर्मस्थो यः स वै सुखमेधते ॥ २-८०-६ (१४५७७)
ग्मही कामदुघा सा हि वीरपत्नीति चोच्यते ।
तथा वीरस्य भार्या श्रीस्ते इमे हि कलत्रवत् ॥ २-८०-७ (१४५७८)
तवाप्यस्ति हे चेद्वीर्यं भोक्ष्यसे हि महीमिमाम् ॥ २-८०-८ (१४५७९)
अयुक्तमिदमेतत्तु परस्वहरणं भृशम् ।
उभयोर्लोकयोर्दुःखं सुहृदां काङ्क्षतोऽनयम् ॥ २-८०-९ (१४५८०)
अव्यापारः परार्तेषु नित्योद्योगः स्वकर्मसु ।
रक्षणं समुपात्तानामेतद्वैभवलक्षणम् ॥ २-८०-१० (१४५८१)
विपत्तिष्वव्यथो दक्षो नित्यमुत्थानवान्नरः ।
अप्रमत्तो विनीतात्मा नित्यं भद्राणि पश्यति ॥ २-८०-११ (१४५८२)
बाहूनिवैतान्मा च्छेत्सीः पाण्डुपुत्रास्तथैव ते ।
भ्रातृणां तद्धनार्थं वै मित्रद्रोहं च मा कुरु ॥ २-८०-१२ (१४५८३)
पाण्डोः पुत्रान्मा द्विषस्वेह राजं-
स्तथैव ते भ्रातृधनं समग्रम् ।
मित्रद्रोहे तात महानघर्मः
पितामहा ये तव तेऽपि तेषाम् ॥ २-८०-१३ (१४५८४)
अन्तर्वेद्यां ददद्वित्तं कामाननुभवन्प्रियान् ।

क्रीडन्स्त्रीभिर्निरातङ्कः प्रशाम्य भरतर्षभ ॥ ॥ २-८०-१४ (१४५८५)

इति श्रीमन्महाभारते सभापर्वणि द्यूतपर्वणि अशीतितमोऽध्यायः ॥८० ॥
Mahabharata - Sabha Parva - Chapter Footnotes

२-८०-१ ज्येष्ठाया अपत्यं ज्यैष्ठिनेयः ॥
२-८०-२ अव्युत्पन्नं परकपटानभिज्ञम् । समानार्थं
तुल्यधनम्। तुल्यमित्रं त्वन्मित्रा द्रोहिणम् अद्विषन्तं च त्वामपीति
शेषः ॥

---

सभ-०८१
॥ श्रीः ॥
२.८१. अध्यायः ८१

Mahabharata - Sabha Parva - Chapter Topics
दुर्योधनेन धृतराष्ट्रोक्तिप्रतिकूलभाषणम् ॥ १.।
Mahabharata - Sabha Parva - Chapter Text

दुर्योधन उवाच ॥
यस्य नास्ति निजा प्रज्ञा केवलं तु बहुश्रुतः ।
न स जानाति शास्त्रार्थं दर्वी सूपरसानिव ॥ २-८१-१ (१४५८६)
जानन्वै मोहयति मां नावि नौरिव संयता ।
स्वार्थे किं नावधानं ते उताहो द्वेष्टि मां भवान् ॥ २-८१-२ (१४५८७)
न सन्तीमे धार्तराष्ट्रा येषां त्वमनुशासिता ।
भविष्यमर्थमाख्यासि सर्वदा कृत्यमात्मनः ॥ २-८१-३ (१४५८८)
परनेयोऽग्रणीर्यस्य स मार्गान्प्रतिमुह्यति ।
पन्थानमनुगच्छेयुः कथं तस्य पदानुगाः ॥ २-८१-४ (१४५८९)
राजन्परिणतप्रज्ञो वृद्धसेवी जितेन्द्रियः ।
प्रतिपन्नान्स्वकार्येषु संमोहयसि नो भृशम् ॥ २-८१-५ (१४५९०)
लोकवृत्ताद्राजवृत्तमन्यदाह बृहस्पतिः ।
तस्माद्राज्ञाऽप्रमत्तेन स्वार्थश्चिन्त्यः सदैव हि ॥ २-८१-६ (१४५९१)
क्षत्रियस्य महाराज जये वृत्तिः समाहिता ।
स वै धर्मस्त्वधर्मो वा स्ववृत्तौ का परीक्षणा ॥ २-८१-७ (१४५९२)
प्रकालयेद्दिशः सर्वाः प्रतोदेनेव सारथिः ।
प्रत्यमित्रश्रियं दीप्तां जिघृक्षुर्भरतर्षभ ॥ २-८१-८ (१४५९३)
प्रच्छन्नो वा प्रकाशो वा योगो योऽरिं प्रबाधते ।
तद्वै शस्त्रं शस्त्रविदां न शस्त्रं छेदनं स्मृतम् ॥ २-८१-९ (१४५९४)

शत्रुश्चैव हि मित्रं च न लेख्यं न च मातृका ।
यो वै सन्तापयति यं स शत्रुः प्रोच्यते नृप ॥ २-८१-१० (१४५९५)
असन्तोषः श्रियो मूलं तस्मात्तं कामयाम्यहम् ।
समुच्छ्रये यो यतते स राजन्परमो नयः ॥ २-८१-११ (१४५९६)
ममत्वं हि न कर्तव्यमैश्वर्ये वा धनेऽपि वा ।
पूर्वावाप्तं हरन्त्यन्ये राजधर्मं हि तं विदुः ॥ २-८१-१२ (१४५९७)
अद्रोहसमंय कृत्वा चिच्छेद नमुचेः शिरः ।
शक्रः साऽभिमता तस्य रिपौ वृत्तिः सनातनी ॥ २-८१-१३ (१४५९८)
द्वावेतौ ग्रसते भूमिः सर्पो बिलशयानिव ।
राजानं चाविरोद्धारं ब्राह्मणं चाप्रवासिनम् ॥ २-८१-१४ (१४५९९)
नास्ति वै जातितः शत्रुः पुरुषस्य विशाम्पते ।
येन साधारणी वृत्तिः स शत्रुर्नेतरो जनः ॥ २-८१-१५ (१४६००)
शत्रुपक्षं समृध्यन्तं यो मोहात्समुपेक्षते ।
व्याधिराप्यायित इव तस्य मूलं छिनत्ति सः ॥ २-८१-१६ (१४६०१)
अल्पोऽपि ह्यरिरत्यर्थं वर्धमानः पराक्रमैः ।
वल्मीको मूलज इव ग्रसते वृक्षमन्तिकात् ॥ २-८१-१७ (१४६०२)
आजमीढ रिपोर्लक्ष्मीर्मा ते रोचिष्ट भारत ।
एष भारः सत्ववतां न यः शिरसि धिष्ठितः ॥ २-८१-१८ (१४६०३)
जन्मवृद्धिमिवार्थानां यो वृद्धिमाभिकाङ्क्षते ।
एधते ज्ञातिषु स वै सद्यो वृद्धिर्हि विक्रमः ॥ २-८१-१९ (१४६०४)
नाप्राप्य पाण्डवैश्वर्यं संशयो मे भविष्यति ।
अवाप्स्ये वा श्रियं तां हि शयिष्ये वा हतो युधि ॥ २-८१-२० (१४६०५)
एतादृशस्य किं मेऽद्य जीवितेन विशाम्पते ।
वर्धन्ते पाण्डवा नित्यं वयं स्वस्थिरवृद्धयः ॥ ॥ २-८१-२१ (१४६०६)

इति श्रीमन्महाभारते सभापर्वणि द्यूतपर्वणि एकाशीतितमोऽध्यायः ॥८१ ॥
Mahabharata - Sabha Parva - Chapter Footnotes

२-८१-३ कृत्यं इदानीं कर्तव्यम् ॥
२-८१-१४ अप्रवासिनं तीर्थाटनादिरहितम् ॥
२-८१-१५ साधारणी तुल्या वृत्तिर्जीविका ।एकामिषत्वमित्यर्थः ॥

---

सभ-०८२
॥ श्रीः ॥
२.८२. अध्यायः ८२

Mahabharata - Sabha Parva - Chapter Topics

दुर्योधनम्प्रति शकुनिना द्यूताय प्रोत्साहनम्
॥ १.। धृतराष्ट्राज्ञया शिल्पिभिः सभानिर्माणम्
॥ २.। धृतराष्ट्रेण पाण्डवानयनाय विदुरप्रेषणम् ॥ ३.।
Mahabharata - Sabha Parva - Chapter Text

शकुनिरुवाच ॥
यां त्वमेतां श्रियं पाण्डुपुत्रे युधिष्ठिरे ।
तप्यसे तां हरिष्यामि द्यूतेन जयतां वर ॥ २-८२-१ (१४६०७)
आहूयतां परं राजन्कुन्तीपुत्रो युधिष्ठिरः ।
अगत्वा संशयमहमयुद्ध्वा च चमूमुखे ॥ २-८२-२ (१४६०८)
अक्षान्क्षिपन्नक्षतः सन्विद्वानविदुषो जये ।
ग्लहान्धनूंषि मे विद्धि शरानक्षांश्च भारत ॥ २-८२-३ (१४६०९)
अक्षाणां हृदयं मे ज्यां रथं विद्धि ममास्फुरम् ॥ २-८२-४ (१४६१०)
दुर्योधन उवाच। २-८२-५क्ष् (१५३३)
अयमुत्सहते राजच्छ्रियमाहर्तुमक्षवित् ।
द्यूतेन पाण्डुपुत्रेभ्यस्तदनुज्ञातुमर्हसि ॥ २-८२-५ (१४६११)
धृतराष्ट्र उवाच। २-८२-६क्ष् (१५३४)
स्थितोऽस्मि शासने भ्रातुर्विदुरस्य महात्मनः ।
तेन सङ्गम्य वेत्स्यामि कार्यस्यास्य विनिश्चयम् ॥ २-८२-६ (१४६१२)
दुर्योधन उवाच ॥ २-८२-७क्ष् (१५३५)
ग्कृष्णादभ्याधिकः सोऽपि क्षत्ता बोद्धा विशाम्पते ।
केवलं धर्ममेवाह न तद्विजयसाधकम् ॥ २-८२-७ (१४६१३)
जयश्च धर्मतोपेतस्तथैव भरतर्षभ ।
तस्माद्विनयतो जेता तावुभौ च विरोधिनौ'॥ २-८२-८ (१४६१४)
व्यपनेष्यति ते बुद्धिं विदुरो मुक्तसंशयः ।
पाण्डवानां हिते युक्तो न तथा मम कौरव ॥ २-८२-९ (१४६१५)
नारभेतान्यसामर्थ्यात्पुरुषः कार्यमात्मनः ।
मतिसाम्यं द्वयोर्नास्ति कार्येषु कुरुनन्दन ॥ २-८२-१० (१४६१६)
भयं परिहरन्मत्त आत्मानं परिपालयन् ।
वर्षासु क्लिन्नवटवत्तिष्ठन्नैवावसीदति ॥ २-८२-११ (१४६१७)
न व्याधयो नापि यमः प्राप्तुं श्रेयः प्रतीक्षते ।
यावदेव भवेत्कल्पस्तावच्छ्रेयः समाचरेत् ॥ २-८२-१२ (१४६१८)
धृतराष्ट्र उवाच ॥ २-८२-१३क्ष् (१५३६)
सर्वथा पुत्र बलिभिर्विग्रहो मे रोचते ।
वैरं विकारं सृजति तद्वै शस्त्रमनायसम् ॥ २-८२-१३ (१४६१९)
अनर्थमर्थं मन्यसे राजपुत्र

सङ्ग्रन्थनं कलहस्यातियाति ।
तद्वै प्रवृत्तं तु यथाकथञ्चित्
सृजेदसीन्निशितान्सायकांश्च ॥ २-८२-१४ (१४६२०)
दुर्योधन उवाच ॥ २-८२-१५क्ष् (१५३७)
द्यूते पुराणैर्व्यवहारः प्रणीत-
स्तत्रात्ययो नास्ति न सम्प्रहारः ।
तद्रोचतां शकुनेर्वाक्यमद्य
सभां क्षिप्रं त्वमिहाज्ञापयस्व ॥ २-८२-१५ (१४६२१)
स्वर्गद्वारं दीव्यतां नो विशिष्टं
तद्वर्तिनां चापि तथैव युक्तम् ।
भवेदेवं ह्यात्मना तुल्यमेव
दुरोदरं पाण्डवैस्त्वं कुरुष्व ॥ २-८२-१६ (१४६२२)
धृतराष्ट्र उवाच। २-८२-१७क्ष् (१५३८)
वाक्यं न मे रोचते यत्त्वयोक्तं
यत्ते प्रियं तत्क्रियतां नरेन्द्र ।
पश्चात्तप्स्यसे तदुपाक्रम्य वाक्यं
न हीदृशं भावि वचो हि धर्म्यम् ॥ २-८२-१७ (१४६२३)
दृष्टं ह्येतद्विदुरेणै सर्वं
विपश्चिता बुद्धिविद्यानुगेन ।
तदेवैतदवशस्याभ्युपैति
महद्भयं क्षत्रियजीवघाति ॥ २-८२-१८ (१४६२४)
वैशम्पायन उवाच ॥ २-८२-१९क्ष् (१५३९)
एवमुक्त्वा धृतराष्ट्रो मनीषी
दैवं मत्वा परमं दुस्तरं च ।
शशासोच्चैः पुरुषान्पुत्रवाक्ये
स्थितो राजा दैवसंमूढचेताः ॥ २-८२-१९ (१४६२५)
सहस्रस्तम्भां हेमवैदूर्यचित्रां
शतद्वारां तोरणस्फाटिकाढ्याम् ।
सभामग्र्यां क्रोशमात्रायतां मे
तद्विस्तारामाशु कुर्वन्तु युक्ताः ॥ २-८२-२० (१४६२६)
श्रुत्वा तस्य त्वरिता निर्विशङ्काः
प्राज्ञा दक्षास्तां तदा चक्रुराशु ।
सर्वद्रव्याण्युपजह्रुः सभायां
सहस्रशः शिल्पिनश्चैव युक्ताः ॥ २-८२-२१ (१४६२७)
कालेनाल्पेनाथ निष्ठां गतां तां
सभां रम्यां बहुरत्नां विचित्राम् ।

चित्रैर्हैमैरासनैरभ्युपेता-
माचख्युस्ते तस्य राज्ञः प्रतीताः ॥ २-८२-२२ (१४६२८)
ततो विद्वान्विदुरं मन्त्रिमुख्य-
मुवाचेदं धृतराष्ट्रो नरेन्द्रः ।
युधिष्ठिरं राजपुत्रं च गत्वा
मद्वाक्येन क्षिप्रमिहानयस्व ॥ २-८२-२३ (१४६२९)
सभेयं मे बहुरत्ना विचित्रा
शय्यासनैरुपपन्ना महार्हैः ।
सा दृश्यतां भ्रातृभिः सार्धमेत्य
सुहृद्द्यूतं वर्ततामत्र चेति ॥ २-८२-२४ (१४६३०)
वैशम्पायन उवाच ॥ २-८२-२५क्ष् (१५४०)
मतमाज्ञाय पुत्रस्य धृतराष्ट्रो नराधिपः ।
मत्वा च दुस्तरं दैवमेतद्राजंश्चकार ह ॥ २-८२-२५ (१४६३१)
अन्यायेन तथोक्तस्तु विदुरो विदुषां वरः ।
नाभ्यनन्दद्वचो भ्रातुर्वचनं चेदमब्रवीत् ॥ २-८२-२६ (१४६३२)
विदुर उवाच ॥ २-८२-२७क्ष् (१५४१)
नाभिनन्दे नृपते प्रैषमेतं
मैवं कृथाः कुलनाशाद्बिभेमि ।
पुत्रैर्भिन्नः कलहस्ते ध्रुवं स्या-
देतच्छङ्के द्यूतकृते नरेन्द्र ॥ २-८२-२७ (१४६३३)
धृतराष्ट्र उवाच। २-८२-२८क्ष् (१५४२)
नेह क्षत्तः कलहस्तप्स्यते मां
न चेद्दैवं प्रतिलोमं भविष्यत् ।
धात्रा तु दिष्टस्य वशे किलेदं
सर्वं जगच्चेष्टति न स्वतन्त्रम् ॥ २-८२-२८ (१४६३४)
तदद्य विदुर प्राप्य राजानं मम शासनात् ।
क्षिप्रमानय दुर्धर्षं कुन्तीपुत्रं युधिष्ठिरम् ॥ ॥ २-८२-२९ (१४६३५)

इति श्रीमन्महाभारते सभापर्वणि द्यूतपर्वणि द्व्यशीतितमोऽध्यायः ॥ ८२ ॥

Mahabharata - Sabha Parva - Chapter Footnotes

२-८२-३ ग्लहान् पणान् ॥
२-८२-४ आस्फुरमक्षविन्यासपातनादिस्थानम् ॥
२-८२-८ विनयतः अनयात् ॥
२-८२-१६ दुरोदरं द्यूतम् ॥

---

सभ-०८३

॥ श्रीः ॥

२.८३. अध्यायः ८३

Mahabharata - Sabha Parva - Chapter Topics

विदुरस्य इन्द्रप्रस्थगमनम् ॥ १.। पाण्डवानां द्यूतसभाप्रवेशः ॥ २.।

Mahabharata - Sabha Parva - Chapter Text

वैशम्पायन उवाच ॥
ततः प्रायाद्विदुरोऽश्वैरुदारै-
र्महाजवैर्बलिभिः साधु दान्तैः ।
बलान्नियुक्तो धृतराष्ट्रेण राज्ञा
मनीषिणां पाण्डवानां सकाशे ॥ २-८३-१ (१४६३६)
सोऽभिपत्य तदध्वानमासाद्य नृपतेः पुरम् ।
प्रविवेश महाबुद्धिः पूज्यमानो द्विजातिभिः ॥ २-८३-२ (१४६३७)
स राजगृहमासाद्य कुबेरभवनोपमम् ।
अभ्यागच्छत धर्मात्मा धर्मपुत्रं युधिष्ठिरम् ॥ २-८३-३ (१४६३८)
तं वै राजा सत्यधृतिर्महात्मा
अजातशत्रुर्विदुरं यथावत् ।
पूजापूर्वं प्रतिगृह्याजमीढ-
स्ततोऽपृच्छद्धृतराष्ट्रं सपुत्रम् ॥ २-८३-४ (१४६३९)
युधिष्ठिर उवाच ॥ २-८३-५क्ष् (१५४३)
विज्ञायते ते मनसोऽप्रहर्षः
कच्चित्क्षत्तः कुशलेनागतोऽसि ।
कच्चित्पुत्राः स्थविरस्यानुलोमा
वशानुगाश्चापि विशोऽथ कच्चित् ॥ २-८३-५ (१४६४०)
विदुर उवाच ॥ २-८३-६क्ष् (१५४४)
राजा महात्मा कुशली सपुत्र
आस्ते वृतो ज्ञातिभिरिन्द्रकल्पः ।
प्रीतो राजन्पुत्रगुणैर्विनीतो
विशोक एवात्मरतिर्महात्मा ॥ २-८३-६ (१४६४१)
इदं तु त्वां कुरुराजोऽभ्युवाच
पूर्वं पृष्ट्वा कुशलं चाव्ययं च ।
इयं सभा त्वत्सभातुल्यरूपा
भ्रातॄणां ते दृस्यतामेत्य पुत्र ॥ २-८३-७ (१४६४२)
समागम्य भ्रातृभिः पार्थ तस्यां
सुहृद्द्यूतं क्रियतां रम्यतां च ।

प्रीयामहे भवतां सङ्गमेन
समागताः कुरवश्चापि सर्वे ॥ २-८३-८ (१४६४३)
दुरोदरा विहिता ये तु तत्र
महात्मना धृतराष्ट्रेण राज्ञा ।
तान्द्रक्ष्यसे कितवान्सन्निविष्टा-
नित्यागतोऽहं नृपते तज्जुषस्व ॥ २-८३-९ (१४६४४)
युधिष्ठर उवाच ॥ २-८३-१०क्ष् (१५४५)
द्यूते क्षत्तः कलहो विद्यते नः
को वै रोचतने बुध्यमानः ।
किं वा भवान्मन्यते युक्तरूपं
भवद्वाक्ये सर्व एव स्थिताः स्मः ॥ २-८३-१० (१४६४५)
विदुर उवाच ॥ २-८३-११क्ष् (१५४६)
जानाम्यहं द्यूतमनर्थमूलं
कृतश्च यत्नोऽस्य मया निवारणे ।
राजा च मां प्राहिमोत्त्वत्सकाशं
श्रुत्वा विद्वञ्श्रेय इहाचरस्व ॥ २-८३-११ (१४६४६)
युधिष्ठिर उवाच ॥ २-८३-१२क्ष् (१५४७)
के तत्रान्ये कितवा दीव्यमाना
विना राज्ञो धृतराष्ट्रस्य पुत्रैः ।
पृच्छामि त्वां विदुर ब्रूहि नस्तान्
यैर्दीव्यामः शतशः सन्निपत्य ॥ २-८३-१२ (१४६४७)
विदुर उवाच ॥ २-८३-१३क्ष् (१५४८)
गन्धारराजः शकुनिर्विशाम्पते
राजाऽतिदेवी कृतहस्तो मताक्षः ।
विनिंशतिश्चित्रसेनश्च राजा
सत्यव्रतः पुरुमित्रो जयश्च ॥ २-८३-१३ (१४६४८)
युधिष्ठिर उवाच ॥ २-८३-१४क्ष् (१५४९)
महाभयाः कितवाः सन्निविष्टा
मायोपधा देवितारोऽत्र सन्ति ।
धात्रा तु दिष्टस्य वशे किलेदं
सर्वं जगत्तिष्ठति न स्वतन्त्रम् ॥ २-८३-१४ (१४६४९)
नाहं राज्ञो धृतराष्ट्रस्य शासना-
न्न गन्तुमिच्छामि कवे दुरोदरम् ।
इष्टो हि पुत्रस्य पिता सदैव
तदस्मि कर्ता विदुरात्थ मां यथा ॥ २-८३-१५ (१४६५०)
न चाकामः शकुनिना देविताहं

न चेन्मां जिष्णुराह्वयिता सभायाम् ।
आहूतोऽहं न निवर्ते कदाचित्
तदाहितं शाश्वतं वै व्रतं मे ॥ २-८३-१६ (१४६५१)
वैशम्पायन उवाच ॥ २-८३-१७क्ष् (१५५०)
एवमुक्त्वा विदुरं धर्मराजः
प्रायात्रिकं सर्वमाज्ञाप्य तूर्णम् ।
प्रायाच्छ्वोभूते सगणः सानुयात्रः
सह स्त्रीभिर्द्रौपदामादि कृत्वा ॥ २-८३-१७ (१४६५२)
दैवं हि प्रज्ञां मुष्णाति चक्षुस्तेज इवापतत् ।
धातुश्च वशमन्वेति पाशैरिव नरः सितः ॥ २-८३-१८ (१४६५३)
इत्युक्त्वा प्रययौ राजा सह क्षत्त्रा युधिष्ठिरः ।
अमृष्यमाणस्तस्याथ समाह्वानमरिन्दमः ॥ २-८३-१९ (१४६५४)
बाह्लिकेन रथं यत्तमास्थाय परवीरहा ।
परिच्छन्नो ययौ पार्थो भ्रातृभिः सह पाण्डवः ।
राजश्रिया दीप्यमानो ययौ ब्रह्मपुरः सरः ॥ २-८३-२० (१४६५५)
ग्सन्दिदेश ततः प्रेष्यानागतान्नगरं प्रति ।
ततस्ते नृपशार्दूल चक्रुर्वै नृपशासनम् ॥ २-८३-२१ (१४६५६)
ततो राजा महातेजाः संयम्य सपरिच्छदम् ।
ब्राह्मणैः स्वस्ति वाच्याथ प्रययौ मन्दिराद्बहिः २-८३-२२ (१४६५७)
ब्राह्मणेभ्यो धनं दत्त्वा गत्यर्थं स यथाविधि ।
अन्येभ्यः स तु दत्त्वा च गन्तुमेवोपचक्रमे ॥ २-८३-२३ (१४६५८)
सर्वलक्षणसम्पन्नं राजहंसपरिच्छदम् ।
तमारुह्य महाराजो गजेन्द्रं षष्टिहायनम् ॥ २-८३-२४ (१४६५९)
हारी किरीटी हेमाभः सर्वाभरणभूषितः ।
रराज राजन्पार्थो वै परया नृपशोभया ॥ २-८३-२५ (१४६६०)
रुक्मवेदिगतः प्राज्यो ज्वलन्निव हुताशनः ।
ततो जगाम राजा स प्रहृष्टनरवाहनः ॥ २-८३-२६ (१४६६१)
रथघोषेण महता पूरयन्वै नभः स्थलम् ।
संस्तूयमानः स्तुतिभिः सूतमागधबन्दिभिः ॥ २-८३-२७ (१४६६२)
महासैन्येन सहितो यथादित्यः स्वरश्मिभिः ।
पाण्डुरेणातपत्रेण ध्रियमाणेन मूर्धनि ॥ २-८३-२८ (१४६६३)
बभौ युधिष्ठिरो राजा पौर्णमास्यामिवोडुराट् ।
चामरैर्हेमदण्डैश्च धूयमानः समन्ततः ॥ २-८३-२९ (१४६६४)
जयाशिषः प्रहृष्टानां नराणां पथि पाण्डवः ।
प्रत्यगृह्णाद्यथान्यायं यथआवन्नरतर्षभः ॥ २-८३-३० (१४६६५)
तथैव सैनिका राजन्राजानमनुयान्ति ये ।

तेषां हलहलाशब्दो दिवं स्तब्धः प्रतिष्ठितः ॥ २-८३-३१ (१४६६६)
नृपस्याग्ने ययौ राजन्भीमसेनो रथी बली ।
उभौ पार्श्वगतौ राज्ञः सतल्पौ वै सुकल्पितौ ॥ २-८३-३२ (१४६६७)
अधिरूढौ यमौ चापि जग्मतुर्भरतर्षभ ।
शोभयन्तौ महासैन्यं तावुभौ रूपशालिनौ ॥ २-८३-३३ (१४६६८)
पृष्ठतोऽनुययौ जिष्णुर्वीरः शस्त्रभृतां वरः ।
श्वेताश्वो गाण्डिवं गृह्य अग्निदत्तं रथं गतः ॥ २-८३-३४ (१४६६९)
सैन्यमध्ये ययौ राजन्कुरुराजो युधिष्ठिरः ।
द्रौपदीप्रमुखा नार्यः सानुगाः सपरिच्छदाः ॥ २-८३-३५ (१४६७०)
आरुह्य ता विचित्राङ्ग्यो यानानि विविधानि च ।
महत्या सेनया राजन्नग्रे यानानि विविधानि च। २-८३-३६ (१४६७१)
समृद्धनरनागाश्वं सपताकरथध्वजम् ।
संनद्धवरनिस्त्रिंशं पथि निर्घोषनिः स्वनम् ॥ २-८३-३७ (१४६७२)
शङ्खदुन्दुभितालानां वेणुवीणानुवनादितम् ।
शुशुभे पाण्डवं सैन्यं प्रयास्यत्तत्तदा नृप ॥ २-८३-३८ (१४६७३)
यथा कुबेरो लङ्कायां पुरा चात्यन्तशोभया ।
महत्या सेनया सार्धं गुरुमिन्द्रं स गच्छति ॥ २-८३-३९ (१४६७४)
तथा ययौ स पार्थोऽपि असङ्ख्येयविभूतिना ।
सुसमृद्धेन सैन्येन यथा वैश्रवणस्तथा ॥ २-८३-४० (१४६७५)
स सरांसि नदीश्चैव वनान्युपवनानि च ।
अत्यक्रामन्महाराज पुरीं चाभ्यवपद्यत ॥ २-८३-४१ (१४६७६)
स हास्तिनसमीपे तु कुरुराजो युधिष्ठिरः ।
चक्रे निवेशनं तत्र ततः स सहसैनिकाः ॥ २-८३-४२ (१४६७७)
शिवे देशे समे चैव न्यवसत्पाण्डवस्तदा ।
ततोराजन्समाहूय शोकविह्वलया गिरा ॥ २-८३-४३ (१४६७८)
एतद्वाक्यं च सर्वस्वं धृतराष्ट्रचिकीर्षितम् ।
आचचक्षे यथावृत्तं विदुरोऽथ नृपस्य ह ॥ २-८३-४४ (१४६७९)
तच्छ्रुत्वा भाषितं तेन धर्मराजोऽब्रवीदिदम् ।
न मर्षयाम्यहं क्षत्तः समाह्वानं व्रतं हि मे ।
स्वस्त्यस्तु लोके विप्राणां प्रजानां चैव सर्वदा ॥ २-८३-४५ (१४६८०)
वैशम्पायन उवाच ॥ २-८३-४६क्ष् (१५५१)
प्रविवेश ततो राजा नगरं नागसाह्वयम् ।
धृतराष्ट्रेण चाहूतः कालस्य समयेन च'॥ २-८३-४६ (१४६८१)
स हास्तिनपुरं गत्वा धृतराष्ट्रगृहं ययौ ।
समियाय च धर्मात्मा धृतराष्ट्रेण पाण्डवः ॥ २-८३-४७ (१४६८२)
तथा भीष्मेण द्रोणेन कर्णेन च कृपेण च ।

समियाय यथान्यायं द्रौणिना च विभुः सह  २-८३-४८ (१४६८३)
समेत्य च महाबाहुः सोमदत्तेन चैव ह ।
दूर्योधनेन सभ्रात्रा सौबलेन च वीर्यवान् ॥ २-८३-४९ (१४६८४)
ये चान्ये तत्र राजानः पूर्वमेव समागताः ।
दुःशासनेन वीरेण सर्वैर्भ्रातृभिरेव च ॥ २-८३-५० (१४६८५)
जयद्रथेन च तथा कुरुभिश्चापि सर्वशः ।
ततः सर्वैर्महाबाहुर्भ्रातृभिः परिवारितः ॥ २-८३-५१ (१४६८६)
प्रविवेश गृहं राज्ञो धृतराष्ट्रस्य धीमतः ।
ददर्श तत्र गान्धारीं देवीं पतिमनुव्रताम् ॥ २-८३-५२ (१४६८७)
स्नुषाभिः संवृतां शश्वत्ताराभिरिव रोहिणीम् ।
अभिवाद्य स गान्धारीं तया च प्रतिनन्दितः ॥ २-८३-५३ (१४६८८)
ददर्श पितरं वृद्धं प्रज्ञाचक्षुषमीश्वरम् ॥  २-८३-५४ (१४६८९)
राज्ञा मूर्धन्युपाघ्रातास्ते च कौरवनन्दनाः ।
चत्वारः पाण्डवा राजन्भीमसेनपुरोगमाः ॥ २-८३-५५ (१४६९०)
ततो हर्षः समभवत्कौरवाणां विशाम्पते ।
तान्दृष्ट्वा पुरुषव्याघ्रान्पाण्डवान्प्रियदर्शनान् ॥ २-८३-५६ (१४६९१)
विविशुस्तेऽभ्यनुज्ञाता रत्नवन्ति गृहाणि च ।
ददृशुश्चोपयातारो द्रौपदीप्रमुखाः स्त्रियः ॥ २-८३-५७ (१४६९२)
याज्ञसेन्याः परामृद्धिं दृष्ट्वा प्रज्वलितामिव ।
स्नुषास्ता धृतराष्ट्रस्य नातिप्रमनसोऽभवन् ॥ २-८३-५८ (१४६९३)
ततस्ते पुरुषव्याघ्रा गत्वा स्त्रीभिस्तु संविदम् ।
कृत्वा व्यायामपूर्वाणि कृत्यानि प्रतिकर्म च ॥ २-८३-५९ (१४६९४)
ततः कृताह्निकाः सर्वे दिव्यचन्दनभूषिताः ।
कल्याणमनसश्चैव ब्राह्मणान्स्वस्ति वाच्य च ॥ २-८३-६० (१४६९५)
मनोज्ञमशनं भुक्त्वा विविशुः शरणान्यथ ।
उपगीयमाना नारीभिरस्वपन्कुरुपुङ्गवाः ॥ २-८३-६१ (१४६९६)
जगाम तेषां सा रात्रिः पुण्या रतिविहारिणाम् ।
स्तूयमानाश्च विश्रान्ताः काले निद्रामथात्यजन् ॥ २-८३-६२ (१४६९७)
मुखोषितास्ते रजनीं प्रातः सर्वे कृताह्निकाः ।
सभां रम्यां प्रविविशुः कितवैरभिनन्दिताः ॥ ॥ २-८३-६३ (१४६९८)

इति श्रीमन्महाभारते सभापर्वणि द्यूतपर्वणि व्यशीतितमोऽध्यायः ॥८३ ॥

Mahabharata - Sabha Parva - Chapter Footnotes

२-८३-२ द्विजातिभिस्त्रैवर्णिकैः ॥
२-८३-६ आत्मरतिः आत्मनः स्वस्योत्कर्ष एव रतिर्यस्य नतु

धर्ममन्वीक्षते इति भावः ॥
२-८३-७ अव्ययं धनादेरविनाशम् ॥
२-८३-९ दुरोदरा द्यूतकराः ॥
२-८३-१७ आदि अविभक्तिकनिर्देशः ॥
२-८३-५७ यातारः यातरः ॥
२-८३-५९ संविदं मिथः कथाम् । व्यायामः श्रमानोदनव्यापारः पूर्वो येषां तानि। प्रतिकर म केशप्रसाधनादिपरिष्कारम् ॥

---

सभ-०८४
॥ श्रीः ॥
२.८४. अध्यायः ८४

Mahabharata - Sabha Parva - Chapter Topics
शकुनियुधिष्ठिरयोः संवादः ॥ १.। द्यूतनिर्धारणम् ।२.।
Mahabharata - Sabha Parva - Chapter Text

वैशम्पायन उवाच ॥
प्रविश्य तां सभां पार्था युधिष्ठिरपुरोगमाः ।
समेत्य पार्थिवान्सर्वान्पूजार्हानभिपूज्य च ॥ २-८४-१ (१४६९९)
यथावयः समेयाना उपविष्टा यथार्हतः ।
आसनेषु विचित्रेषु स्पर्द्ध्यास्तरणवत्सु च ॥ २-८४-२ (१४७००)
तेषु तत्रोपविष्टेषु सर्वेष्वथ नृपेषु च ।
शकुनिः सौबलस्तत्र युधिष्ठिरमभाषत ॥ २-८४-३ (१४७०१)
शकुनिरुवाच ॥ २-८४-४क्ष् (१५५२)
उपस्तीर्णा सभा राजन्सर्वे त्वयि कृतक्षणाः ।
अक्षानुप्त्वा देवनस्य समयोऽस्तु युधिष्ठिर ॥ २-८४-४ (१४७०२)
युधिष्ठिर उवाच। २-८४-५क्ष् (१५५३)
नितिर्देवनं पापं न क्षात्रोऽत्र पराक्रमः ।
न च नीतिर्ध्रुवा राजन्किं त्वं द्यूतं प्रशंससि ॥ २-८४-५ (१४७०३)
न हि मानं प्रशंसन्ति निकृतौ कितवस्य हि ।
शकुने मैवं नोऽजैषीरमार्गेण नृशंसवत् ॥ २-८४-६ (१४७०४)
शकुनिरुवाच। २-८४-७क्ष् (१५५४)
यो वेत्ति सङ्ख्या निकृतौ विधिज्ञ-
श्चेष्टास्वखिन्नः कितवोऽक्षजासु ।
महामतिर्यश्च जानाति द्यूतं
स वै सर्वं सहते प्रक्रियासु ॥ २-८४-७ (१४७०५)
अक्षग्लहः सोऽभिभवेत्परं न-

स्तेनैव दोषो भवतीह पार्थ ।
दीव्यामहे पार्थिव मा विशङ्कां
कुरुष्व पाणं च चिरं च मा कृथाः ॥ २-८४-८ (१४७०६)
युधिष्ठिर उवाच। २-८४-९क्ष् (१५५५)
एवमाहायमसितो देवलो मुनिसत्तमः ।
इमानि लोकद्वाराणि यो वै भ्राम्यति सर्वदा ॥ २-८४-९ (१४७०७)
इदं वै देवनं पापं निकृत्या कितवैः सह ।
धर्मेण तु जयो युद्धे तत्परं न तु देवनम् ॥ २-८४-१० (१४७०८)
नार्या म्लेच्छन्ति भाषाभिर्मायया न चरन्त्युत ।
अजिह्ममशठं युद्धमेतत्सत्पुरुषव्रतम् ॥ २-८४-११ (१४७०९)
शक्तितो ब्राह्मणार्थाय शिक्षितुं प्रयतामहे ।
तद्वै वित्तं मातिदेवीर्माजैषीः शकुने परान् ॥ २-८४-१२ (१४७१०)
निकृत्या कामये नाहं सुखान्युत धनानि वा ।
कितवस्येह कृतिनो वृत्तमेतन्न पूज्यते ॥ २-८४-१३ (१४७११)
शकुनिरुवाच। २-८४-१४क्ष् (१५५६)
श्रोत्रियः श्रोत्रियानेति निकृत्यैव युधिष्ठिर ।
विद्वानविदुषोऽभ्येति नाहुस्तां निकृतिं जनाः ॥ २-८४-१४ (१४७१२)
अक्षैर्हि शिक्षितोऽभ्येति निकृत्यैव युधिष्ठिर ।
विद्वानविदुषोऽभ्येति नाहुस्तां निकृतिं जनाः ॥ २-८४-१५ (१४७१३)
अकृतास्त्रं कृतास्त्रश्च दुर्बलं बलवत्तरः ।
एवं कर्मसु सर्वेषु निकृत्यैव युधिष्ठिरः ।
विद्वानविदुषोभ्येति नाहुस्तां निकृतिं जनाः ॥ २-८४-१६ (१४७१४)
एवं त्वं मामिहाभ्येत्य निकृतिं यदि मन्यसे ।
देवनाद्विनिवर्तस्व यदि ते विद्यते भयम् ॥ २-८४-१७ (१४७१५)
युधिष्ठिर उवाच ॥ २-८४-१८क्ष् (१५५७)
आहूतो न निवर्तेयमिति मे व्रतमाहितम् ।
विधिश्च बलवान्राजन्दिष्टस्यास्मि वशे स्थितः ॥ २-८४-१८ (१४७१६)
अस्मिन्समागमे केन देवनं मे भविष्यति ।
प्रतिपाणश्च कोऽन्योस्ति ततो द्यूतं प्रवर्तताम् ॥ २-८४-१९ (१४७१७)
दुर्योधन उवाच। २-८४-२०क्ष् (१५५८)
अहं दातास्मि रत्नानां धनानां च विशाम्पते ।
मदर्थे देविता चायं शकुनिर्मातुलो मम ॥ २-८४-२० (१४७१८)
युधिष्ठिर उवाच ॥ २-८४-२१क्ष् (१५५९)
अन्येनान्यस्य वै द्यूतं विषमं प्रतिभाति मे ।
एतद्विद्विन्नुपादत्स्व काममेवं प्रवर्तताम् ॥ ॥ २-८४-२१ (१४७१९)

इति श्रीमन्महाभारते सभापर्वणि द्यूतपर्वणि चतुरशीतितमोऽध्यायः
॥८४ ॥
Mahabharata - Sabha Parva - Chapter Footnotes

२-८४-५ पापं पापहेतुः ॥
२-८४-८ पाणं पणनीयद्रव्यम् ॥

---

सभ-०८५
॥ श्रीः ॥
२.८५. अध्यायः ८५

Mahabharata - Sabha Parva - Chapter Topics
भीषमद्रोणादीनां द्यूतसभाप्रवेशः ॥ १.। द्यूतीपक्रमः
॥ २.। युधिष्ठिरेण पणीकृतानां सर्ववस्तूनां शकुनिना अपहारः
॥ ३.।
Mahabharata - Sabha Parva - Chapter Text

वैशम्पायन उवाच ॥
उपोह्यमाने द्यूते तु राजानः सर्व एव ते ।
धृतराष्ट्रं पुरस्कृत्य विविशुस्तां सभां ततः ॥ २-८५-१ (१४७२०)
भीष्मो द्रोणः कृपश्चैव विदुरश्च महामतिः ।
नातिप्रीतेन मनसा तेऽन्ववर्तन्त भारत ॥ २-८५-२ (१४७२१)
ते द्वन्द्वशः पृथक्चैव सिंहग्रीवा महौजसः ।
सिंहासनानि भूरिणी विचित्राणि च भेजिरे ॥ २-८५-३ (१४७२२)
शुशुभे सा सभा राजन्राजभिस्तैः समागतैः ।
देवैरिव महाभागैः समवेतैस्त्रिविष्टपम् ॥ २-८५-४ (१४७२३)
सर्वे वेदविदः शूराः सर्वे भास्वरमूर्तयः ।
प्रवर्तत महाराज सुहृद्द्यूतमनन्तरम् ॥ २-८५-५ (१४७२४)
युधिष्ठिर उवाच ॥ २-८५-६क्ष् (१५६०)
अयं बुहधनो राजन्सागरावर्तसम्भवः ।
मणिर्हारोत्तरः श्रीमान्कनकोत्तमभूषणः ॥ २-८५-६ (१४७२५)
एतद्राजन्मम धनं प्रतिपाणोऽस्ति कस्तव ।
येन मां त्वं महाराज धनेन प्रतिदीव्यसे ॥ २-८५-७ (१४७२६)
दुर्योधन उवाच ॥ २-८५-८क्ष् (१५६१)
सन्ति मे मणयश्चैव धनानि सुबहूनि च ।
मत्सरश्च न मेऽर्थेषु जयस्वैनं दुरोदरम् ॥ २-८५-८ (१४७२७)

वैशम्पायन उवाच ॥ २-८५-९क्ष् (१५६२)
ततो जग्राह शकुनिस्तानक्षानक्षतत्त्ववित् ।
जितमित्येव शकुनिर्युधिष्ठिरमभाषत ॥ २-८५-९ (१४७२८)
युधिष्ठिर उवाच ॥ २-८५-१०क्ष् (१५६३)
मत्त कैतकेनैव यज्जितोऽस्मि दुरोदरे ।
शकुने हन्त दीव्यामो ग्लहमानाः परस्परम् ॥ २-८५-१० (१४७२९)
सन्ति निष्कसहस्रस्य भाण्डिन्यो भरिताः शुभाः ।
कोशो हिरण्यमक्षय्यं जातरूपमनेकशः ।
एतद्राजन्मम धनं तेन दीव्याम्यहं त्वया ॥  २-८५-११ (१४७३०)
वैशम्पायन उवाच ॥ २-८५-१२क्ष् (१५६४)
कौरवाणां कुलकरं ज्येष्ठं पाण्डवमच्युतम् ।
इत्युक्तः शकुनिः प्राह जितमित्येव तं नृपम् ॥ २-८५-१२ (१४७३१)
युधिष्ठिर उवाच ॥ २-८५-१३क्ष् (१५६५)
अयं सहस्रसमितो वैयाघ्रः सुप्रतिष्ठितः ।
सुचक्रोपस्करः श्रीमान्किङ्किणीजालमण्डितः ॥ २-८५-१३ (१४७३२)
संह्रादनो राजरथो य इहास्मानुपावहत् ।
जैत्रो रथवरः पुण्यो मेघसागरनिः स्वनः ॥ २-८५-१४ (१४७३३)
अष्टौ यं कुररच्छायाः सदश्वा राष्ट्रसंमताः ।
वहन्ति नैषां मुच्येत पदाद्भूमिमुपस्पृशन् ।
एतद्राजन्धनं मह्यं तेन दीव्याम्यहं त्वया ॥  २-८५-१५ (१४७३४)
वैशम्पायन उवाच ॥ २-८५-१६क्ष् (१५६६)
एवं श्रुत्वा व्यवसितो निकृतिं समुपाश्रितः ।
जितमित्येव शकुनिर्युधिष्ठिरमभाषत ॥ २-८५-१६ (१४७३५)
युधिष्ठिर उवाच ॥ २-८५-१७क्ष् (१५६७)
शतं दासीसहस्राणि तरुण्यो हेमभद्रिकाः ।
कम्बुकेयूरधारिण्यो निष्ककण्ठ्यः स्वलङ्कृताः ॥ २-८५-१७ (१४७३६)
महार्हमाल्याभरणाः सुवस्त्राश्चन्दनोक्षिताः ।
मणीन्हेम च बिभ्रत्यश्चतुःषष्टिविशारदाः ॥ २-८५-१८ (१४७३७)
अनुसेवां चरन्तीमाः कुशला नृत्तसामसु ।
स्नातकानाममात्यानां राज्ञां च मम शासनात् ।
एतद्राजन्मम धनं तेन दीव्याम्यहं त्वया ॥  २-८५-१९ (१४७३८)
वैशम्पायन उवाच ॥ २-८५-२०क्ष् (१५६८)
एतच्छ्रुत्वा व्यवसितो निकृतिं समुपाश्रितः ।
जितमित्येव शकुनिर्युधिष्ठिरमभाषत ॥ २-८५-२० (१४७३९)
युधिष्ठिर उवाच। २-८५-२१क्ष् (१५६९)
एतावन्ति च दासानां सहस्राण्युत सन्ति मे ।

प्रदक्षिणानुलोमाश्च प्रावारवसनाः सदा ॥ २-८५-२१ (१४७४०)
प्राज्ञा मेधाविनो दान्ता युवानो मृष्टकुण्डलाः ।
पात्रीहस्ता दिवारात्रमतिथीन्भोजयन्त्युत ।
एतद्राजन्मम धनं तेन दीव्याम्यहं त्वया ॥ २-८५-२२ (१४७४१)
वैशम्पायन उवाच ॥ २-८५-२३क्ष् (१५७०)
एतच्छ्रुत्वा व्यवसितो निकृतिं समुपाश्रितः ।
जितमित्येव शकुनिर्युधिष्ठिरभाषत ॥ २-८५-२३ (१४७४२)
युधिष्ठिर उवाच ॥ २-८५-२४क्ष् (१५७१)
सहस्रसङ्ख्या नगा मे मत्तास्तिष्ठन्ति सौबल ।
हेमकक्षाः कृतापीडाः पद्मिनो हेममालिनः ॥ २-८५-२४ (१४७४३)
सुदान्ता राजवहनाः सर्वशब्दक्षमा युधि ।
ईषादन्ता महाकायाः सर्वे चाष्टकरेणवः ॥ २-८५-२५ (१४७४४)
सर्वे च पुरभेत्तारो नवमेघनिभा गजाः ।
एतद्राजन्मम धनं तेन दीव्याम्यहं त्वया ॥ २-८५-२६ (१४७४५)
वैशम्पायन उवाच ॥ २-८५-२७क्ष् (१५७२)
इत्येवंवादिनं पार्थं प्रहसन्निव सौबलः ।
जितमित्येव शकुनिर्युधिष्ठिरमभाषत ॥ २-८५-२७ (१४७४६)
युधिष्ठिर उवाच ॥ २-८५-२८क्ष् (१५७३)
रथास्तावन्त एवेमे हेमदण्डाः पताकिनः ।
हयैर्विनीतैः सम्पन्ना रथिभिश्चित्रयोधिभिः ॥ २-८५-२८ (१४७४७)
एकैको ह्यत्र लभते सहस्रपरमां भृतिम् ।
युध्यतोऽयुध्यतो वापि वेतनं मासकालिकम् ।
एतद्राजन्म धनं तेन दीव्याम्यहं त्वया ॥ २-८५-२९ (१४७४८)
वैशम्पायन उवाच ॥ २-८५-३०क्ष् (१५७४)
इत्येवमुक्ते वचने कृतवैरो दुरात्मवान् ।
जितमित्येव शकुनिर्युधिष्ठिरमभाषत ॥ २-८५-३० (१४७४९)
युधिष्ठिर उवाच ॥ २-८५-३१क्ष् (१५७५)
अश्वांस्तित्तिरिकल्माषान्गान्धर्वान्हेममालिनः ।
ददौ चित्ररथस्तुष्टो यांस्तान्गाण्डीवधन्वने ॥ २-८५-३१ (१४७५०)
युद्धे जितः पराभूतः प्रीतिपूर्वमरिन्दमः ।
एतद्राजन्मम धनं तेन दीव्याम्यहं त्वया ॥ २-८५-३२ (१४७५१)
वैशम्पायन उवाच ॥ २-८५-३३क्ष् (१५७६)
एतच्छ्रुत्वा व्यवसितो निकृतिं समुपाश्रितः ।
जितमित्येव शकुनिर्युधिष्ठिरमभाषत ॥ २-८५-३३ (१४७५२)
युधिष्ठिर उवाच ॥ २-८५-३४क्ष् (१५७७)
रथानां शकटानां च श्रेष्ठानां चायुतानि मे ।

युक्तान्येव हि तिष्ठन्ति वाहैरुच्चावचैस्तथा ॥ २-८५-३४ (१४७५३)
एवं वर्णस्य वर्णस्य समुच्चीय सहस्रशः ।
यथा समुदिता वीराः सर्वे वीरपराक्रमाः ॥ २-८५-३५ (१४७५४)
क्षीरं पिबन्तस्तिष्ठन्ति भुञ्जानाः शालितण्डुलान् ।
षष्टिस्तानि सहस्राणि सर्वे विपुलवक्षसः ।
एतद्राजन्मम धनं तेन दीव्याम्यहं त्वया ॥ २-८५-३६ (१४७५५)
वैशम्पायन उवाच ॥ २-८५-३७क्ष् (१५७८)
एतच्छ्रुत्वा व्यवसितो निकृतिं समुपाश्रितः ।
जितमित्येव शकुनिर्युधिष्ठिरमभाषत ॥ २-८५-३७ (१४७५६)
युधिष्ठिर उवाच। २-८५-३८क्ष् (१५७९)
ताम्रलोहैः परिवृता निधयो ये चतुः शताः ।
पञ्चद्रौणिक एकैकः सुवर्णस्याहतस्य वै ॥ २-८५-३८ (१४७५७)
जातरूपस्य मुख्यस्य नार्घो यस्य हि भारत ।
एतद्राजन्मम धनं तेन दीव्याम्यहं त्वया ॥ २-८५-३९ (१४७५८)
वैशम्पायन उवाच ॥ २-८५-४०क्ष् (१५८०)
एतच्छ्रुत्वा व्यवसितो निकृतिं समुपाश्रितः ।
जितमित्येव शकुनिर्युधिष्ठिरमभापतः ॥ ॥ २-८५-४० (१४७५९)

इति श्रीमन्महाभारते सभापर्वणि द्यूतपर्वणि पञ्चाशीतितमोऽध्यायः
॥८५ ॥
Mahabharata - Sabha Parva - Chapter Footnotes

२-८५-८ दुरोदरं पणम् ॥
२-८५-११ भाण्डिन्यो मञ्जषाः ॥
२-८५-१७ कम्बवः शङ्खवलयानि । निष्पो वक्षोभूषणम् ॥
२-८५-१८ चतुष्षष्टिकलासु विशारदाः ॥
२-८५-१९ नृत्तसामसु नर्तने गीतिविशेषेषु च ॥
२-८५-२४ कृतपीडाः कृतभूषणाः ॥
२-८५-२५ ईषा लाङ्गलदण्डः । अष्टकरेणवः, अष्टहस्तिनीकाः ॥

---

सभ-०८६
॥ श्रीः ॥
२.८६. अध्यायः ८६

Mahabharata - Sabha Parva - Chapter Topics
विदुरेण धृतराष्ट्रं प्रति दुर्योधननिन्दापूर्वकं द्यूतोपरमचोदनम्

वैशम्पायन उवाच ॥
एवं प्रवर्तिते द्यूते घोरे सर्वापहारिणि ।
सर्वसंशयनिर्मोक्ता विदुरो वाक्यमब्रवीत् ॥ २-८६-१ (१४७६०)
महाराज विजानीहि यत्त्वां वक्ष्यामि भारत ।
मुमूर्षोरौषधमिव न रोचेतापि ते श्रुतम् ॥ २-८६-२ (१४७६१)
यद्वै पुरा जातमात्रो रुराव
गोमायुवद्विस्वरं पापचेताः ।
दुर्योधनो भारतानां कुलघ्नः
सोऽयं युक्तो भवतां कालहेतुः ॥ २-८६-३ (१४७६२)
गृहे वसन्तं गोमायुं त्वं वै मोहान्न बुध्यसे ।
दुर्योधनस्य रूपेण शृणु काव्यां गिरं मम ॥ २-८६-४ (१४७६३)
मधु वै माध्विको लब्ध्वा प्रपातं नैव बुध्यते ।
आरुह्य तं मज्जति वा पतनं चाधिगच्छति ॥ २-८६-५ (१४७६४)
सोऽयं मत्तोऽक्षद्यूतेन मधुवन्न पीरक्षते ।
प्रपातं बुध्यते नैव वैरं कृत्वा महारथैः ॥ २-८६-६ (१४७६५)
विदितं मे महाप्राज्ञ भोजेष्वेवासमञ्जसम् ।
पुत्रं संत्यक्तवान्पूर्वं पौराणां हितकाम्यया ॥ २-८६-७ (१४७६६)
अन्धका यादवा भोजाः समेताः कंसमत्यजन् ।
नियोगात्तु हते तस्मिन्कृष्णेनामित्रघातिना ॥ २-८६-८ (१४७६७)
एवं ते ज्ञातयः सर्वे मोदमानाः शतं समाः ।
त्वन्नियुक्तः सव्यसाची निगृह्णातु सुयोधनम् ॥ २-८६-९ (१४७६८)
निग्रहादस्य पादस्य मोदन्तां कुरवः सुखम् ।
काकेनेमांश्चित्रवर्हाञ्शार्दूलान्क्रोष्टुकेन च ।
क्रीणीष्व पाण्डवान्राजन्मा मज्जीः शोकसागरे ॥ २-८६-१० (१४७६९)
त्यजेत्कुलार्थे पुरुषं ग्रामस्यार्थे कुलं त्यजेत् ।
ग्रामं जनपदस्यार्थे आत्मार्थे पृथिवीं त्यजेत् ॥ २-८६-११ (१४७७०)
सर्वज्ञः सर्वभावज्ञः सर्वशत्रुभयङ्करः ।
इति स्म भाषते काव्यो जम्भत्यागे महाऽसुरान् ॥ २-८६-१२ (१४७७१)
हिरण्यष्ठीविनः कांश्चित्पक्षिणो वनगोचरान् ।
गृहे किल कृतावासाँल्लोभाद्राजा न्यपीडयत् ।
स चोपभोगलोभान्धो हिरण्यार्थी परन्तप ॥ २-८६-१३ (१४७७२)
आयतिं च तदात्वं च उभे सद्यो व्यनाशयत् ।
तदर्थकामस्तद्वत्त्वं माद्रुहः पाण्डवान्नृप ॥ २-८६-१४ (१४७७३)

मोहात्मा तप्स्यसे पश्चात्पत्रिहा पुरुषो यथा ।
जातञ्जातं पाण्डवेभ्यः पुष्पमादत्स्व भारत ॥ २-८६-१५ (१४७७४)
मालाकार इवारामे स्नेहं कुर्वन्पुनः पुनः ।
वृक्षानङ्गारकारीव मैनाद्याक्षीः समूलकान् ।
मा गमः ससुतामात्यः सबलश्च यमक्षयम् ॥ २-८६-१६ (१४७७५)
समवेतान्हि कः पार्थान्प्रतियुध्येत भारत ।
मरुद्भिः सहितो राजन्नपि साक्षान्मरुत्पतिः ॥ २-८६-१७ (१४७७६)
द्यूतं मूलं कलहस्याभ्युपैति
मिथो भेदं महते दारुणाय ।
तदा स्थितोऽयं धृतराष्ट्रस्य पुत्रो
दुर्योधनः सृजते वैरमुग्रम् ॥ २-८६-१८ (१४७७७)
प्रातिपेयाः शान्तनवा भीमसेनाः सबाह्लिकाः ।
दुर्योधनापराधेन कृच्छ्रं प्राप्स्यन्ति सर्वशः ॥ २-८६-१९ (१४७७८)
दुर्योधनो मदेनैव क्षेमं व्यपोहति ।
विषाणं गौरिव मदात्स्वयमारुजतेत्मनः ॥ २-८६-२० (१४७७९)
यश्चित्तमन्वेति परस्य राजन्
वीरः कविः स्वामवमत्य दृष्टिम् ।
नावं समुद्र इव बालनेत्रा-
मारुह्य घोरे व्यसने निमज्जेत् ॥ २-८६-२१ (१४७८०)
दुर्योधनो ग्लहते पाण्डवेन
प्रीयायसे त्वं जयतीति तच्च ।
अतिनर्मा जायते संप्रहारो
यतो विनाशः समुपैति पुंसाम् ॥ २-८६-२२ (१४७८१)
आकर्षस्तेऽवाक्फलः सुप्रणीतो
हृदि प्रौढो मन्त्रपदः समाधिः ।
युधिष्ठिरेण कलहस्तवाय-
मचिन्तितोऽभिमतः स्वबन्धुना ॥ २-८६-२३ (१४७८२)
प्रातिपेयाः शान्तनवाः शृणुध्वं
काव्यां वाचं संसदि कौरवाणाम् ।
वैश्वानरं प्रज्वलितं सुघोरं
मा यास्यध्वं मन्दमनुप्रपन्नः ॥ २-८६-२४ (१४७८३)
यदा मन्युं पाण्डवोऽजातशत्रु-
र्न संयच्छेदक्षमदाभिभूतः ।
वृकोदरः सव्यसाची यमौ च
कोऽत्र द्वीपः स्यात्तुमुले वस्तदानीम् ॥ २-८६-२५ (१४७८४)
महाराज प्रभवस्त्वं धनानां

पुरा द्यूतान्मनसा यावदिच्छेः ।
बहुवित्तान्पाण्डवांश्चेज्जयस्त्वं
किं ते तत्स्याद्वसु विन्देह पार्थान् ॥ २-८६-२६ (१४७८५)
जानीमहे देवितं सौबलस्य
वेद द्यूते निकृतिं पार्वतीयः ।
यतः प्राप्तः शकुनिस्तत्र यातु
मा यूयुधो भारत पाण्डवेयान् ॥ ॥ २-८६-२७ (१४७८६)

इति श्रीमन्महाभारते सभापर्वणि द्यूतपर्वणि षडशीतितमोऽध्यायः
॥ ८६. ।
Mahabharata - Sabha Parva - Chapter Footnotes

२-८६-४ काव्यं कविना शुक्रेणोक्तां नीतिगिरम् ॥
२-८६-५ माध्विको मधुपण्यवान् ।प्रपातं भृगुम् ॥
२-८६-८ नियोगाद्दैवयोगात् ॥
२-८६-१० चित्रवर्हान् मयूरान् ॥
२-८६-१४ आयतिमुत्तरकालम् ।तदात्वं सांप्रतम्।तत्तस्मात्।अर्थकामो
धनकामः ॥
२-८६-१५ पत्रिहा पक्षिहा ॥
२-८६-२१ बालनेत्रामव्युत्पन्ननेतृकाम् ॥
२-८६-२२ ग्लहते पणं करोति ।प्रीयायसे अतिशयेन प्रीयसे ॥
२-८६-२३ आकर्षो द्यूतम् ॥
२-८६-२६ जयः अजयः ॥

---

सभ-०८७
॥ श्रीः ॥
२.८७. अध्यायः ८७

Mahabharata - Sabha Parva - Chapter Topics
दुर्योधनेन विदुरोपालम्भः ॥१.। विदुरेण धृतराष्ट्रस्य
हितोपदेशः ॥२.।
Mahabharata - Sabha Parva - Chapter Text

दुर्योधन उवाच ॥
परेषामेव यशसा श्लोघसे त्वं
सदा क्षत्तः कुत्सयन्धार्तराष्ट्रान् ।
जानीमहे विदुर यत्प्रियस्त्वं

बालानिवास्मानवमन्यसे नित्यमेव ॥ २-८७-१ (१४७८७)
स विज्ञेयः पुरुषोऽन्यत्रकामो
निन्दाप्रशंसे हि तथा युनक्ति ।
जिह्वाऽऽत्मनो हृदयस्थं व्यनक्ति
जानीमहे त्वन्मनसः प्रातिकूल्यम् ॥ २-८७-२ (१४७८८)
उत्सङ्गे च व्याल इवाहितोऽसि
मार्जरवत्पोषकं चोपहंसि ।
भर्तृघ्नं त्वां न हि पापीय आहु-
स्तस्मात्क्षत्तः किं न बिभेषि पापात् ॥ २-८७-३ (१४७८९)
जित्वा शत्रून्फलमाप्तं महद्वै
माऽस्मान्क्षत्तः परुषाणीह वोचः ।
द्विषद्भिस्त्वं सम्प्रयोगाभिनन्दी
मुहुर्द्वेषं यासि नः सम्प्रयोगात् ॥ २-८७-४ (१४७९०)
अमित्रतां याति नरोऽक्षमं ब्रुव-
न्निगूहते गुह्यममित्रसंस्तवे ।
तदाश्रितोऽपत्रप किं नु बाधसे
यदिच्छसि त्वं तदिहाभिभाषतसे ॥ २-८७-५ (१४७९१)
मा नोऽवमंस्था विद्म मानस्तवेदं
शिक्षस्व बुद्धिं स्थविराणां सकाशात् ।
यशो रक्षस्व विदुर सम्प्रणीतं
मा व्यापृतः परकार्येशु भूस्त्वम् ॥ २-८७-६ (१४७९२)
अहं कर्तेति विदूर मा च मंस्था
मा नो नित्यं परुषाणीह वोचः ।
न त्वां पृच्छामि विदुर यद्धितं मे
स्वस्ति क्षत्तर्मा तितिक्षून् क्षिण् त्वम् ॥ २-८७-७ (१४७९३)
एकः शास्ता न द्वितीयोऽस्ति शास्ता
गर्भे शयानं पुरुषं शास्ति शास्ता ।
तेनानुशिष्टः प्रवणादिवाम्भो
यथा नियुक्तोऽस्ति तथा भवामि ॥ २-८७-८ (१४७९४)
भिनत्ति शिरसा शैलमहिं भोजयते च यः ।
धीरेव कुरुते तस्य कार्याणामनुशासनम् ।
यो बलादनुशास्तीह सोऽमित्रं तेन विन्दति ॥ २-८७-९ (१४७९५)
मित्रतामनुवृत्तं तु समुपेक्षत्यपण्डितः ।
दीप्य यः प्रदीप्ताग्निं प्राच्किरं नाभिधावति ।
भस्मापि न स विन्देत शिष्टं क्वचन भारत ॥ २-८७-१० (१४७९६)
न वासयेत्पारवर्ग्यं द्विषन्तं

विशेषतः क्षत्तरहितं मनुष्यम् ।
स यत्रेच्छसि विदुर तत्र गच्छ
सुसान्त्विता ह्यसती स्त्री जहाति ॥ २-८७-११ (१४७९७)
विदुर उवाच ॥ २-८७-१२क्ष् (१५८१)
एतावता पुरुषं ये त्यजन्ति
तेषां सख्यमन्तवद्ब्रूहि राजन् ।
राज्ञां हि चित्तानि परिप्लुतानि
सान्त्वं दत्वा मुसलैर्घातयन्ति ॥ २-८७-१२ (१४७९८)
अबालत्वं मन्यसे राजपुत्र
बालोऽहमित्येव सुमन्दबुद्धे ।
यः सौहृदे पुरुषं स्थापयित्वा
पश्चादेनं दूषयते स बालः ॥ २-८७-१३ (१४७९९)
न श्रेयसे नीयते मन्दबुद्धिः
स्त्री श्रोत्रियस्येव गृहे प्रदुष्टा ।
ध्रुवं न रोचेद्भरतर्षभस्य
पतिः कुमार्या इव षष्टिवर्षः ॥ २-८७-१४ (१४८००)
अतः प्रियं चेदनुकाङ्क्षसे त्वं
सर्वेषु कार्येषु हिताहितेषु
स्त्रियश्च राजञ्जडपङ्गुकांश्च
पृच्छ त्वं वै तादृशांश्चैव सर्वान् ॥ २-८७-१५ (१४८०१)
लभ्यते खलु पापीयान्नरोऽनु प्रियवागिह ।
अप्रियस्य हि पथ्यस्य वक्ता श्रोता च दुर्लभः २-८७-१६ (१४८०२)
यस्तु धर्मपरश्च स्याद्धित्वा भर्तुः प्रियाप्रिये ।
अप्रियाण्याह पथ्यानि तेन राजा सहायवान् ॥ २-८७-१७ (१४८०३)
अव्याधइजं कटुजं तीक्ष्णमुष्णं
यशोमुषं परुषं पूतिगन्धिम् ।
सतां पेयं यन्न पिबन्त्यसन्तो
मन्युं महाराज पिब प्रशाम्य ॥ २-८७-१८ (१४८०४)
वैचित्रवीर्यस्य यशो धनं च
वाञ्छाम्यहं सहपुत्रस्य शश्वत् ।
यथा तथा तेऽस्तु नमश्चतेऽस्तु
ममापि च स्वस्ति दिशन्तु विप्राः ॥ २-८७-१९ (१४८०५)
आशीविषान्नेत्रविषान्कोपयेन्न च पण्डितः ।
एवं तेऽहं वदामीदं प्रयतः कुरुनन्दन ॥ ॥ २-८७-२० (१४८०६)

इति श्रीमन्महाभारते सभापर्वणि द्यूतपर्वणि सप्ताशीतितमोऽध्यायः

॥ ८७ ॥
Mahabharata - Sabha Parva - Chapter Footnotes

२-८७-३ पापीयः पापीयांसम् ॥
२-८७-११ पारवर्ग्यं शत्रुपक्षजातम् ॥

---

सभ-०८८
॥ श्रीः ॥
२.८८. अध्यायः ८८

Mahabharata - Sabha Parva - Chapter Topics
सपत्नीभ्रातृकस्य युधिष्ठिरस्य शकुनिना पराजयः ॥ १.।
Mahabharata - Sabha Parva - Chapter Text

शकुनिरुवाच ॥
बहुवित्तं पराजैषीः पाण्डवानां युधिष्ठिर ।
आचक्ष्व वित्तं कौन्तेय यदि तेऽस्त्यपराजितम् ॥ २-८८-१ (१४८०७)
युधिष्ठिर उवाच ॥ २-८८-२क्ष् (१५८२)
मम वित्तमसङ्ख्येयं यदहं वेद सौबल ।
अथ त्वं शकुने कस्माद्वित्तं समनुपृच्छसि ॥ २-८८-२ (१४८०८)
अयुतं प्रयुतं चैव शङ्कुं पद्मं तथार्बुदम् ।
खर्वं शङ्खं निखर्वं च महापद्मं च कोटयः ॥ २-८८-३ (१४८०९)
मध्यं चैव परार्धं च सपरं चात्र पण्यताम् ।
एतन्मम धनं राजंस्तेन दीव्याम्यहं त्वया ॥ २-८८-४ (१४८१०)
वैशम्पायन उवाच ॥ २-८८-५क्ष् (१५८३)
एतच्छ्रुत्वा व्यवसितो निकृतिं समुपाश्रितः ।
जितमित्येव शकुनिर्युधिष्ठिरमभाषत ॥ २-८८-५ (१४८११)
युधिष्ठिर उवाच ॥ २-८८-६क्ष् (१५८४)
गवाश्वं बहुधेनूकमसङ्ख्येयमजाविकम् ।
यत्किञ्चिदनु पर्णाशां प्राक् सिन्धोरपि सौबल ।
एतन्मम धनं सर्वं तेन दीव्याम्यहं त्वया ॥ २-८८-६ (१४८१२)
वैशम्पायन उवाच ॥ २-८८-७क्ष् (१५८५)
एतच्छ्रुत्वा व्यवसितो निकृतिं समुपाश्रितः ।
जितमित्येव शकुनिर्युधिष्ठिरमभाषत ॥ २-८८-७ (१४८१३)
युधिष्ठिर उवाच ॥ २-८८-८क्ष् (१५८६)
पुरं जनपदो भूमिरब्राह्मणधनैः सह ।
अब्राह्मणाश्च पुरुषा राजञ्शिष्टं धनं मम ।

एतद्राजन्मम धनं तेन दीव्याम्यहं त्वया ॥  २-८८-८ (१४८१४)
वैशम्पायन उवाच ॥ २-८८-९क्ष् (१५८७)
एतच्छ्रुत्वा व्यवसितो निकृतिं समुपाश्रितः ।
जितमित्येव शकुनिर्युधिष्ठिरमभाषत ॥ २-८८-९ (१४८१५)
युधिष्ठिर उवाच ॥ २-८८-१०क्ष् (१५८८)
राजपुत्रा इमे राजञ्छोमन्ते यैर्विभूषिताः ।
कुम्डलानि च निष्काश्च सर्वं राजविभूषणम् ।
एतन्मम धनं राजंस्तेन दीव्याम्यहं त्वया ॥  २-८८-१० (१४८१६)
वैशम्पायन उवाच ॥ २-८८-११क्ष् (१५८९)
एतच्छ्रुत्वा व्यवसितो निकृतिं समुपाश्रितः ।
जितमित्येव शकुनिर्युधिष्ठिरमभाषत ॥ २-८८-११ (१४८१७)
युधिष्ठिर उवाच ॥ २-८८-१२क्ष् (१५९०)
श्यामो युवा लोहिताक्षः सिंहस्कन्धो महाभुजः ।
नकुलो ग्लह एवैकी विद्धयेतन्मम तद्धनम् ॥ २-८८-१२ (१४८१८)
शकुनिरुवाच। २-८८-१३क्ष् (१५९१)
प्रियस्ते नकुलो राजन्राजपुत्रो युधिष्ठिर ।
अस्माकं वशतां प्राप्तो भूयः केनेह दीव्यसे ॥ २-८८-१३ (१४८१९)
वैशम्पायन उवाच ॥ २-८८-१४क्ष् (१५९२)
एवमुक्त्वा तु तानक्षाञ्शकुनिः प्रत्यदीव्यत ।
जितमित्येव शकुनिर्युधिष्ठिरमभाषत ॥ २-८८-१४ (१४८२०)
युधिष्ठिर उवाच ॥ २-८८-१५क्ष् (१५९३)
अयं धर्मान्सहदेवोऽनुशास्ति
लोके ह्यस्मिन्पण्डिताख्यां गतश्च ।
अनर्हता राजपुत्रेण तेन
दीव्याम्यहं चाप्रियवत्प्रियेण ॥  २-८८-१५ (१४८२१)
वैशम्पायन उवाच ॥ २-८८-१६क्ष् (१५९४)
एतच्छ्रुत्वा व्यवसितो निकृतिं समुपाश्रितः ।
जितमित्येव शकुनिर्युधिष्ठिरमभाषत ॥ २-८८-१६ (१४८२२)
शकुनिरुवाच ॥ २-८८-१७क्ष् (१५९५)
माद्रीपुत्रौ प्रियौ राजंस्तवेमौ विजितौ मया ।
गरीयांसौ तु मन्ये भीमसेनधनञ्जयौ ॥ २-८८-१७ (१४८२३)
युधिष्ठिर उवाच। २-८८-१८क्ष् (१५९६)
अधर्मं चरसे नूनं यो नावेक्षसि वै नयम् ।
यो नः सुमनसां मूढ विभेदं कर्तुमिच्छसि ॥ २-८८-१८ (१४८२४)
शकुनिरुवाच ॥ २-८८-१९क्ष् (१५९७)
गर्ते मत्तः प्रपतते प्रमत्तः स्थाणुमृच्छति ।

ज्येष्ठो राजन्वरिष्ठोऽसि नमस्ते भरतर्षभ ॥ २-८८-१९ (१४८२५)
स्वप्ने तानि न दृश्यन्ते जाग्रतो वा युधिष्ठिर ।
कितवा यानि दीव्यन्तः प्रलपन्त्युत्कटा इव ॥ २-८८-२० (१४८२६)
युधिष्ठिर उवाच ॥ २-८८-२१क्ष् (१५९८)
यो नः सङ्ख्ये नौरिव पारनेता
जेता रिपूणां राजपुत्रस्तरस्वी ।
अनर्हता लोकवीरेण तेन
दीव्याम्यहं शकुने फाल्गुनेन ॥ २-८८-२१ (१४८२७)
वैशम्पायन उवाच ॥ २-८८-२२क्ष् (१५९९)
एतच्छ्रुत्वा व्यवसितो निकृतिं समुपाश्रितः ।
जितमित्येव शकुनिर्युधिष्ठिरमभाषत ॥ २-८८-२२ (१४८२८)
शकुनिरुवाच। २-८८-२३क्ष् (१६००)
अयं मया पाण्डवानां धनिर्धरः
पराजितः पाण्डवः सव्यसाची ।
भीमेन राजन्दयितेन दीव्य
यत्कैतवं पाण्डव तेऽवशिष्टम् ॥ २-८८-२३ (१४८२९)
युधिष्ठिर उवाच ॥ २-८८-२४क्ष् (१६०१)
यो नो नेता यो युधि नः प्रणेता
यथा वज्री दानवशत्रुरेकः ।
तिर्यक्प्रेक्षी सन्नतभ्रूर्महात्मा
सिंहस्कन्धो यश्च सदाऽत्यमर्षी ॥ २-८८-२४ (१४८३०)
बलेन तुल्यो यस्यप पुमान्न विद्यते
गदाभृतामग्र्य इहारिमर्दनः ।
अनर्हता राजपुत्रेण तेन
दीव्याम्यहं भीमसेनेन राजन् ॥ २-८८-२५ (१४८३१)
वैशम्पायन उवाच ॥ २-८८-२६क्ष् (१६०२)
एतच्छ्रुत्वा व्यवसितो निकृतिं समुपाश्रितः ।
जितमित्येव शकुनिर्युधिष्ठिरमभाषत ॥ २-८८-२६ (१४८३२)
शकुनिरुवाच। २-८८-२७क्ष् (१६०३)
बहुवित्तं पराजैषीर्भ्रातॄंश्च सहयद्विपान् ।
आचक्ष्व वित्तं कौन्तेय यदि तेऽस्त्यपराजितम् ॥ २-८८-२७ (१४८३३)
युधिष्ठिर उवाच ॥ २-८८-२८क्ष् (१६०४)
अहं विशिष्टः सर्वेषां भ्रातॄणां दयितस्तथा ।
कुर्यामहं जितः कर्म स्वयमात्मन्युपप्लुते ॥ २-८८-२८ (१४८३४)
वैशम्पायन उवाच ॥ २-८८-२९क्ष् (१६०५)
एतच्छ्रुत्वा व्यवसितो निकृतिं समुपाश्रितः ।

जितमित्येव शकुनिर्युधिष्ठिरमभाषत ॥ २-८८-२९ (१४८३५)
शकुनिरुवाच। २-८८-३०क्ष् (१६०६)
एतत्पापिष्ठमकरोर्यदात्मानं पराजयेः ।
शिष्टे सति धने राजन्पाप आत्मपराजयः ॥ २-८८-३० (१४८३६)
वैशम्पायन उवाच ॥ २-८८-३१क्ष् (१६०७)
एवमुक्त्वा मताक्षस्तान् ग्लहे सर्वानवस्थितान् ।
पराजयल्लोकवीरानुक्त्वा राज्ञां पृथक् पृथक् ॥ २-८८-३१ (१४८३७)
शकुनिरुवाच ॥ २-८८-३२क्ष् (१६०८)
अस्ति ते वै प्रिया राजन् ग्लह एकोऽपराजितः ।
पणस्व कृष्णां पाञ्चालीं तयात्मानं पुनर्जय ॥ २-८८-३२ (१४८३८)
युधिष्ठिर उवाच ॥ २-८८-३३क्ष् (१६०९)
नैव ह्रस्वा न महती न कृशा नातिरोहिणी ।
नीलकुञ्चितकशी च तया दीव्याम्यहं त्वया ॥ २-८८-३३ (१४८३९)
शारदोत्पलपत्राक्ष्या शारदोत्पलगन्धया ।
शारदोत्पलसेविन्या रूपेण श्रीसमानया ॥ २-८८-३४ (१४८४०)
तथैव स्यादानुशंस्यात्तथ स्याद्रूपसम्पदा ।
तथा स्याच्छीलसम्पत्त्या यामिच्छेत्पुरुषः स्त्रियम् ॥ २-८८-३५ (१४८४१)
सर्वैर्गुणैर्हि सम्पन्नामनुकूलां प्रियंवदाम् ।
यादृशीं धर्मकामार्थसिद्धिमिच्छेन्नरः स्त्रियम् ॥ २-८८-३६ (१४८४२)
चरमं संविशति या प्रथमं प्रतिबुध्यते ।
आगोपालाविपालेभ्यः सर्वं वेद कृताकृतम् ॥ २-८८-३७ (१४८४३)
आभाति पद्मवद्वक्त्रं सस्वेदं मल्लिकेव च ।
वेदीमध्या दीर्घकेशी ताम्रास्या नातिलोमशा ॥ २-८८-३८ (१४८४४)
तयैवंविधया राजन्पाञ्चाल्याहं सुमध्यमा ।
ग्लहं दीव्यामि चार्वङ्ग्या द्रौपद्या हन्त सौबल ॥ २-८८-३९ (१४८४५)
वैशम्पायन उवाच ॥ २-८८-४०क्ष् (१६१०)
एवमुक्ते तु वचने धर्मराजेन धीमता ।
धिग्धिगित्येव वृद्धानां सभ्यानां निः सृता गिरः ॥ २-८८-४० (१४८४६)
चुक्षुभे सा सभा राजन्राज्ञां सञ्जज्ञिरे शुचः ।
भीष्मद्रोणकृपादीनां स्वेदश्च समजायत ॥ २-८८-४१ (१४८४७)
शिरो गृहीत्वा विदुरो गतसत्व इवाभवत् ।
आस्ते ध्यायन्नधोवक्त्रो निः श्वसन्निव पन्नगः ॥ २-८८-४२ (१४८४८)
ग्बाह्लीकः सोमदत्तश्च प्रातिपेयश्च सञ्जयः ।
द्रौणिर्भूरिश्रवाश्चैव युयुत्सुर्धृतराष्ट्रजः ।
आसुर्वीक्ष्य त्वधोवक्त्रा निश्वसन्त इवोरगाः'॥ २-८८-४३ (१४८४९)
धृतराष्ट्रस्तु संहृष्टः पर्यपृच्छत्पुनः पुनः ।

किं जितं किं जितमिति ह्याकारं नाभ्यरक्षत ॥ २-८८-४४ (१४८५०)
जहर्ष कर्णोऽतिभृशं सह दुःशासनादिभिः ।
इतरेषां तु सभ्यानां नेत्रेभ्यः प्रापतञ्जलम् ॥ २-८८-४५ (१४८५१)
सौबलस्त्वभिधायैव जितकाशी मदोत्कटः ।
जितमित्येव तानक्षान्पुररेवान्वपद्यत ॥ ॥ २-८८-४६ (१४८५२)

इति श्रीमन्महाभारते सभापर्वणि द्यूतपर्वणि अष्टाशीतितमोऽध्यायः ॥८८.।
Mahabharata - Sabha Parva - Chapter Footnotes

२-८८-६ पर्णाशा नदी ॥
२-८८-२३ कैतव कितवेभ्य आहर्तव्यं धनम् ॥
२-८८-४६ जितकाशी जयशोभी ॥

---

सभ-०८९
॥ श्रीः ॥
२.८९. अध्यायः ८९

Mahabharata - Sabha Parva - Chapter Topics
दुश्शासनेन द्रौपद्याः सभां प्रत्यानयनम् ॥ १.। द्रौपद्या सभ्यान्प्रति प्रश्नः ॥ २.।
Mahabharata - Sabha Parva - Chapter Text

दुर्योधन उवाच ॥
एहि क्षत्तर्द्रौपदीमानस्व
प्रियां भार्यां संमतां पाण्डवानाम् ।
संमार्जतां वेश्म परैतु शीघ्रं
तत्रास्तु दासीभिरपुण्यशीला ॥ २-८९-१ (१४८५३)
विदुर उवाच ॥ २-८९-२क्ष् (१६११)
दर्विभाषं भाषितं त्वादृशेन
न मन्द सम्बुद्ध्यसि ----।
प्रपाते त्वं लम्बमानो न वेत्सि
व्याघ्रान्मृगः कोपयसेऽतिवेलम् ॥ २-८९-२ (१४८५४)
आशीविषास्ते शिरसि पूर्णकोपा महाविषाः ।
मा कोपिष्ठाः सुमन्दात्मन्मा गमस्त्वं यमक्षयम् ॥ २-८९-३ (१४८५५)
न हि दासीत्वमापन्ना कृष्णा भवितुमर्हति ।
जनीशेन हि राज्ञैषा पणे न्यस्तेति मे मतिः ॥ २-८९-४ (१४८५६)
अयं दत्ते वेणुरिवात्मघाती

फलं राजा धृतराष्ट्रस्य पुत्रः ।
द्यूतं हि वैराय महाभयाय
मत्तो न ----मन्तकालम् ॥ २-८९-५ (१४८५७)
नारुन्तुदः स्यान्न -----
न हीनताः परमभ्याददीत ।
ययास्य वाचा पर उद्विजेत
न तां वदेदुशती पापलोक्याम् ॥ २-८९-६ (१४८५८)
समुच्चरन्त्यतिवादाश्च वक्त्रा-
--- शौचति रात्र्यहानि ।
परस्य नामर्मसु ते पतन्ति
तान्पण्डितो नावसृजेत्परेषु ॥ २-८९-७ (१४८५९)
अजो हि शस्त्रमगिलत्किलैकः
शस्त्रे विपन्ने शिरसास्य भूमौ ।
निकृन्तनं स्वस्य कण्ठस्य घोरं
तद्वद्वैरं मा कृथाः पाण्डुपुत्रैः ॥ २-८९-८ (१४८६०)
न किञ्चिदित्थं प्रवदन्ति पार्था
वनेचरं वा गृहमेधिनं वा ।
तपस्विनं वा परिपूर्णविद्यं
भषन्ति हैवं श्वनराः सदैव ॥ २-८९-९ (१४८६१)
द्वारं सुघोरं नरकस्य जिह्मं
न बुध्यते धृतराष्ट्रस्य पुत्रः ।
तमन्वेतारो बहवः कुरूणां
द्यूतोदये सह दुःशासनेन ॥ २-८९-१० (१४८६२)
मज्जन्त्यलाबूनि शिलाः प्लवन्ते
मुह्यन्ति नावोम्भसि शश्वदेव ।
मूढो राजा धृतराष्ट्रस्य पुत्रो
न मे वाचः पथ्यरूपाः शृणोति ॥ २-८९-११ (१४८६३)
अन्तो नूं भवितायं करूणां
सुदारुणः सर्वहरो विनाशः ।
वाचः काव्याः सुहृदां पथ्यरूपा
न श्रूयन्ते वर्धते लोभ एव ॥ २-८९-१२ (१४८६४)
वैशम्पायन उवाच ॥ २-८९-१३क्ष् (१६१२)
धिगस्तु क्षत्तारमिति ब्रुवाणो
दर्पेण मत्तो धृतराष्ट्रस्य पुत्रः ।
अवैक्षत प्रातिकामीं सभाया-
मुवाच चैनं परमार्यमध्ये ॥ २-८९-१३ (१४८६५)

दुर्योधन उवाच ॥ २-८९-१४क्ष् (१६१३)
त्वं प्रातिकामिन्द्रौपदीमानयस्व
न ते भयं विद्यते पाण्डवेभ्यः ।
क्षत्ता ह्ययं विवदत्येव भीतो
न चास्माकं वृद्धिकामः सदैव ॥ २-८९-१४ (१४८६६)
वैशम्पायन उवाच ॥ २-८९-१५क्ष् (१६१४)
एवमुक्तः प्रातिकामी स सूतः
प्रायाच्छीघ्रं राजवचो निशम्य ।
प्रविश्य च श्वेव हि सिंहगोष्ठं
समासदन्महिषीं पाण्डवानाम् ॥ २-८९-१५ (१४८६७)
प्रातिकाम्युवाच। २-८९-१६क्ष् (१६१५)
युधिष्ठिरो द्यूतमदेन मत्तो
दुर्योधनो द्रौपदि त्वामजैषीत् ।
सा त्वं प्रपद्यस्व धृतराष्ट्रस्य वेश्म
नयामि त्वां कर्मणि याज्ञसेनि ॥ २-८९-१६ (१४८६८)
द्रौपद्युवाच ॥ २-८९-१७क्ष् (१६१६)
कथं त्वेवं वदसि प्रातिकामि-
को हि दीव्येद्भार्यया राजपुत्रः ।
मूडो राजा द्यूतमदेन मत्तो
ह्यभून्नान्यत्कैतवमस्य किञ्चित् ॥ २-८९-१७ (१४८६९)
प्रातिकाम्युवाच ॥ २-८९-१८क्ष् (१६१७)
यदा नाभूत्कैतवमन्यदस्य
तदाऽदेवीत्पाण्डवोऽजातशत्रुः ।
न्यस्ताः पूर्वं भ्रातरस्तेन राज्ञा
स्वयं चात्मा त्वमथो राजपुत्रि ॥ २-८९-१८ (१४८७०)
द्रौपद्युवाच ॥ २-८९-१९क्ष् (१६१८)
गच्छ त्वं कितवं गत्वा सभायां पृच्छ सूतज ।
किं तु पूर्वं पराजैषीरात्मानमथवा नु माम् ॥ २-८९-१९ (१४८७१)
एतज्ज्ञात्वा समागच्छ ततो मां नयं सूतज ।
ज्ञात्वा चिकीर्षितमहं राज्ञो यास्यामि दुःखिता ॥ २-८९-२० (१४८७२)
वैशम्पायन उवाच ॥ २-८९-२१क्ष् (१६१९)
सभां गत्वा स चोवाच द्रौपद्यास्तद्वचस्तदा ।
युधिष्ठिरं नरेनद्राणां मध्ये स्थितमिदं वचः ॥ २-८९-२१ (१४८७३)
कस्येशो नः पराजैषीरिति त्वामाह द्रौपदी ।
किं नु पूर्वं पराजैषीरात्मानमथवापि माम् ॥ २-८९-२२ (१४८७४)
वैशम्पायन उवाच ॥ २-८९-२३क्ष् (१६२०)

युधिष्ठिरस्तु निश्चेता गतसत्व इवाभवत् ।
न तं सूतं प्रत्युवाच वचनं साध्वसाधु वा ॥ २-८९-२३ (१४८७५)
दुर्योधन उवाच ॥ २-८९-२४क्ष् (१६२१)
इहैवागत्य पाञ्चाली प्रश्नमेनं प्रभाषताम् ।
इहैव सर्वे शृण्वन्तु तस्याश्चैतस्य यद्वचः ॥ २-८९-२४ (१४८७६)
वैशम्पायन उवाच ॥ २-८९-२५क्ष् (१६२२)
स गत्वा राजभवनं दुर्योधनवशानुगः ।
उवाच द्रौपदीं सूतः प्रातिकामी व्यथन्निव ॥ २-८९-२५ (१४८७७)
सभ्यास्त्वमी राजपुत्र्याह्वयन्ति
मन्ये प्राप्तः संशयः कौरवाणाम् ।
न वै समृद्धिं पालयते लघीयान्
यस्त्वां सभां नेष्यति राजपुत्रि ॥ २-८९-२६ (१४८७८)
द्रौपद्युवाच ॥ २-८९-२७क्ष् (१६२३)
एवं नूनं व्यदधात्संविधाता
स्पर्शावुभौ स्पृशतो वृद्धबालौ ।
धर्मं त्वेकं परमं प्राह लोके
स नः शमं धास्यति गोप्यमानः ॥ २-८९-२७ (१४८७९)
सोऽयं धर्मो मा त्यगात्कौरवान्वै
सभ्यान्गत्वा पृच्छ धर्म्यं वचो मे ।
ते मां ब्रूयुर्निश्चितं तत्करिष्ये
धर्मात्मानो नीतिमन्तो वरिष्ठाः ॥ २-८९-२८ (१४८८०)
वैशम्पायन उवाच ॥ २-८९-२९क्ष् (१६२४)
श्रुत्वा सूतस्तद्वचो याज्ञसेन्याः
सभां गत्वा प्राह वाक्यं तदानीम् ।
अधोमुखास्ते न च किञ्चिदूचु-
र्निर्बन्धं तं धार्तराष्ट्रस्य बुद्ध्वा ॥ २-८९-२९ (१४८८१)
युधिष्ठिरस्तु तच्छ्रुत्वा दुर्योधनचिकीर्षितम् ।
द्रौपद्याः संमतं दूतं प्राहिणोद्भरतर्षभ ॥ २-८९-३० (१४८८२)
एकवस्त्र त्वधोनीवो रोदमाना रजस्वला ।
सभामागम्य पाञ्चालि श्वशुरस्याग्रतो भव ॥ २-८९-३१ (१४८८३)
अथ त्वामागतां दृष्ट्वा राजपुत्रीं सभां तदा ।
सभ्याः सर्वे विनिन्देरन्मनोभिर्धृतराष्ट्रजम् ॥ २-८९-३२ (१४८८४)
वैशम्पायन उवाच ॥ २-८९-३३क्ष् (१६२५)
स गत्वा त्वरितं दूतः कृष्णाया भवनं नृप ।
न्यवेदयन्मतं धीमान्धर्मराजस्य निश्चितम् ॥ २-८९-३३ (१४८८५)
पाण्डवाश्च महात्मानो दीना दुःखसमन्विताः ।

सत्येनातिपरीताङ्गा नोदीक्षन्ते स्म किञ्चन ॥ २-८९-३४ (१४८८६)
ततस्त्वेषां मुखमालोक्य राजा
दुर्योधनः सूतमुवाच हृष्टः ।
इहैवैतामानय प्रातिकामिन्
प्रत्यक्षमस्याः कुरवो ब्रुवन्तः ॥ २-८९-३५ (१४८८७)
ततः सूतस्तस्य वशानुगामी
भीतश्च कोपाद्द्रुपदात्मजायाः ।
विहाय मानं पुनरेव सभ्या-
नुवाच कृष्णां किमहं ब्रवीमि ॥ २-८९-३६ (१४८८८)
दूर्योधन उवाच। २-८९-३७क्ष् (१६२६)
दुःशासनैष मम सूतपुत्रो
वृकोदरादुद्विजतेऽल्पचेताः ।
स्वयं प्रगृह्यानय याज्ञसेनीं
किं ते करिष्यन्त्यवशाः सपत्नाः ॥ २-८९-३७ (१४८८९)
वैशम्पायन उवाच ॥ २-८९-३८क्ष् (१६२७)
ततः समुत्थाय स राजपुत्रः
श्रुत्वा भ्रातुः शासनं रक्तदृष्टिः ।
प्रविश्य तद्वेश्म महारथाना-
मित्यब्रवीद्द्रौपदीं राजपुत्रीम् ॥ २-८९-३८ (१४८९०)
एह्येहि पाञ्चालि राजपुत्रीम् ।
दुर्योधनं पश्य विमुक्तलज्जा ।
कुरून्भजस्वायतपत्रनेत्रे
धर्मेण लब्धाऽसि सभां परैहि ॥ २-८९-३९ (१४८९१)
ततः समुत्थाय सुदूर्मनाः सा
विवर्णमामृज्य मुखं करेण ।
आर्ता प्रदुद्राव यतः स्त्रियस्ता
वृद्धस्य राज्ञः कुरुपुङ्गवस्य ॥ २-८९-४० (१४८९२)
ततो जवेनाभिससार रोषा-
द्दुःशासनस्तामभिगर्जमानः ।
दीर्घेषु नीलेष्वथ चोर्मिमत्सु
जग्राह केशेषु नरेन्द्रपत्नीम् ॥ २-८९-४१ (१४८९३)
ये राजसूयावभृथे जलेन
महाक्रतौ मन्त्रपूतेन सिक्ताः ।
ते पाण्डवानां परिभूय वीर्यं
बलात्प्रमृष्टा धृतराष्ट्रजेन ॥ २-८९-४२ (१४८९४)
स तां पराकृष्य सभासमीप-

मानीय कृष्णामतिदीर्घकेशीम् ।
दुःशासनो नाथवतीमनाथव-
च्चकर्ष वायुः कदलीमिवार्ताम् ॥ २-८९-४३ (१४८९५)
सा कृष्यमाणा नमिताङ्गयष्टिः
शनैरुवाचाथ रजस्वलाऽस्मि ।
एकं च वासो मम मन्दबुद्धे
सभां नेतुं नार्हसि मामनार्य ॥ २-८९-४४ (१४८९६)
ततोऽब्रवीत्तां प्रसभं निगृह्य
केशेशु कृष्णेषु तदा स कृष्णाम् ।
कृष्णं च जिष्णुं च हरिं नरं च
त्रायाय विक्रोशति याज्ञसेनि ॥ २-८९-४५ (१४८९७)
रजस्वला वा भव याज्ञसेनि
एकाम्बरा वाप्यथवा विवस्त्रा ।
द्यूते जिता चासि कृताऽसि दासी
दासीषु वासश्च यथोपजोषम् ॥ २-८९-४६ (१४८९८)
वैशम्पायन उवाच। २-८९-४७क्ष् (१६२८)
प्रकीर्णकेशी पतितार्धवस्त्रा
दुःशासनेन व्यवधूयमाना ।
ह्रीमत्यमर्षेण च दह्यमाना
शनैरिदं वाक्यमुवाच कृष्णा ॥ २-८९-४७ (१४८९९)
द्रौपद्युवाच। २-८९-४८क्ष् (१६२९)
इमे सभायामुपनीतशास्त्राः
क्रियावन्तः सर्व एवेन्द्रकल्पाः ।
गुरुस्थाना गुरवश्चैव सर्वे
तेषामग्रे नोत्सहे स्थातुमेवम् ॥ २-८९-४८ (१४९००)
नशंसकर्मंस्त्वमनार्यवृत
मा मा विवस्त्रां कुरु मा विकार्षीः ।
न मर्षयेयुस्तव राजपुत्राः
सेन्द्रापि देवा यदि ते सहायाः ॥ २-८९-४९ (१४९०१)
धर्मे स्थितो धर्मसुतो महात्मा
धर्मश्च सूक्ष्मो निपुणोपलक्ष्यः ।
वाचापि भर्तुः परमाणुमात्र-
मिच्छामि दोषं न गुणान्विसृज्य ॥ २-८९-५० (१४९०२)
इदं त्वकार्यं कुरुवीरमध्ये
रजस्वलां यत्परिकर्षसे माम् ।
न चापि कश्चित्कुरुतेऽत्र कुत्सां

ध्रुवं तवेदं मतमभ्युपेतः ॥ २-८९-५१ (१४९०३)
धिगस्तु नष्टः खलु भारतानां
धर्मस्तथा क्षत्रविदां च वृत्तम् ।
यत्र ह्यतीतां कुरुधर्मवेलां
प्रेक्षन्ति सर्वे कुरवः सभायाम् ॥ २-८९-५२ (१४९०४)
द्रोणस्य भीष्मस्य च नास्ति सत्त्वं
क्षत्तुस्तथैवास्य चनास्ति सत्त्वं
क्षत्तुस्तथैवास्य महात्मनोपि ।
न लक्षयन्ति कुरुवृद्धमुख्याः ॥ २-८९-५३ (१४९०५)
वैशम्पायन उवाच ॥ २-८९-५४क्ष् (१६३०)
तथा ब्रुवन्ती करुणं सुमध्यमा
भर्तॄन्कटाक्षैः कुपितानपश्यत् ।
सा पाण्डवान्कोपपरीतदेहा-
न्सन्दीपयामास कटाक्षपातैः ॥ २-८९-५४ (१४९०६)
हृतेन राज्येन तथा धनेन
रत्नैश्च मुख्यैर्न तथा बभूव ।
यथा त्रपाकोपसमीरितेन
कृष्णाकटाक्षेण बभूव दुःखम् ॥ २-८९-५५ (१४९०७)
दुःशासनश्चापि समीक्ष्य कृष्णा-
मवेक्षमाणां कृपणान्पतींस्तान् ।
आधूय वेगेन विसञ्ज्ञकल्पा-
मुवाच दासीति हसन्सशब्दम् ॥ २-८९-५६ (१४९०८)
कर्णस्तु तद्वाक्यमतीव हृष्टः
सम्पूजयामास हसन्सशब्दम् ।
गान्धारराजः सुबलस्य पुत्र-
स्तथैव दुःशासनमभ्यनन्दत् ॥ २-८९-५७ (१४९०९)
सभ्यास्तु ये तत्र बभूवुरन्ये
ताभ्यामृते धार्तराष्ट्रेण चैव ।
तेषामभूद्दुः खमतीव कृष्णां
दृष्ट्वा सभायां परिकृष्यमाणाम् ॥ २-८९-५८ (१४९१०)
भीष्म उवाच। २-८९-५९क्ष् (१६३१)
न धर्मसौक्ष्म्यात्सुभगे विवेक्तुं
शक्नोमि ते प्रश्नमिमं यथावत् ।
अस्वाम्यशक्तः पणितुं परस्वं
स्त्रियाश्च भर्तुर्वशतां समीक्ष्य ॥ २-८९-५९ (१४९११)
त्यजेत सर्वां पृथिवीं समृद्धां

युधिष्ठिरो धर्ममथो न जह्यात् ।
उक्तं जितोऽस्मीति च पाण्डवेन
तस्मान्न शक्नोमि विवेक्तुमेतत् ॥  २-८९-६० (१४९१२)
द्यूतेऽद्वितीयः शकुनिर्नरेषु
कुन्तीसुतस्तेन निसृष्टकामः ।
न मन्यते तां निकृतिं युधिष्ठिर-
स्तस्मान् ते प्रश्नमिमं ब्रवीमि ॥  २-८९-६१ (१४९१३)
द्रौपद्युवाच। २-८९-६१क्ष् (१६३२)
आहूय राजा कुशलैरनार्यै-
र्दुष्टात्मभिर्नैकृतिकैः सभायाम् ।
द्यूतप्रियैर्नातिकृतप्रयत्नः
कस्मादयं नाम निसृष्टकामः ॥  २-८९-६२ (१४९१४)
अशुद्धभावैर्निकृतिप्रवृत्तै-
रबुध्यमानः कुरुपाण्डवाग्र्यः ।
सम्भूय सर्वैश्च जितोऽपि यस्मा-
त्पश्चादयं कैतवमभ्युपेतः ॥  २-८९-६३ (१४९१५)
तिष्ठन्ति चेमे कुरवः सभाया-
मीशाः सुतानां च तथा स्नुषाणाम् ।
समीक्ष्य सर्वे मम चापि वाक्यं
विब्रूत मे प्रश्नमिमं यथावत् ॥  २-८९-६४ (१४९१६)
न सा सभा यत्र न सन्ति वृद्धा
न ते वृद्धा ये न वदन्ति धर्मम् ।
नासौ धर्मो यत्र न सत्यमस्ति
न तत्सत्यं यच्छलेनानुविद्धम् ॥  २-८९-६५ (१४९१७)
वैशम्पायन उवाच ॥२-८९-६६क्ष् (१६३३)
तथा ब्रुवन्तीं करुणं रुदन्ती-
मवेक्षमाणां कृपणान्पतींस्तान् ।
दुःशासनः परुषाण्यप्रियाणि
वाक्यान्युवाचामधुराणि चैव ॥  २-८९-६६ (१४९१८)
तां कृष्यमाणां च रजस्वलां च
स्रस्तोत्तरीयामतदर्हमाणाम् ।
वृकोदरः प्रेक्ष्य युधिष्ठिरं च
चकार कोपं परमार्तरूपः ॥ ॥  २-८९-६७ (१४९१९)

इति श्रीमन्महाभारते सभापर्वणि द्यूतपर्वणि एकोननवतितमोऽध्यायः
॥ ८९.।

Mahabharata - Sabha Parva - Chapter Footnotes

२-८९-१७ कैतवं कितवेभ्यो देयं धनम् ॥
२-८९-२७ स्पर्शो सुखदुःखे वृद्धबालौ स्पृशतः प्राप्नुतः । शमं स्वास्थ्यम् ॥
२-८९-४१ ऊर्मिमत्सु प्रवहन्नदीजलवन्निम्नोन्नतेषु ॥
२-८९-४९ सेन्द्रपि सेन्द्रा अपि ॥
२-८९-६४ विब्रूत विस्पष्ट ब्रूत नतु भईष्मवत्सन्दिग्धमिति भावः ॥

---

सभ-०९०
॥ श्रीः ॥
२.९०. अध्यायः ९०

Mahabharata - Sabha Parva - Chapter Topics
भौमवचनम् ॥ १. । विकर्णवचनम् ॥ २. । दुःशासनेन द्रौपदीवस्त्रापहारः ॥३. । श्रीकृष्णप्रसादात् द्रौपद्यः वस्त्रराशिप्रादुर्भावः ॥ ४. । विदुरवचनम् ॥ ५. ।
Mahabharata - Sabha Parva - Chapter Text

भीम उवाच ।
भवन्ति गेहे बन्धक्यः कितवानां युधिष्ठिर ।
भवन्ति दीव्यन्ति दया चैवास्ति तावस्वपि ॥ २-९०-१ (१४९२०)
काश्यो यद्धनमाहार्षीद्द्रव्यं यच्चान्यदुत्तमम् ।
तथाऽन्ये पृथिवीपाला यानि रत्नान्युपाहरन् ॥ २-९०-२ (१४९२१)
वाहनानि धनं चैव कवचान्यायुधानि च ।
राज्यमात्मा वयं चैव कैतवेन हृतं परैः ॥ २-९०-३ (१४९२२)
न च मे तत्र कोपोऽभूत्सर्वस्येशो हि नो भवान् ।
इमं त्वतिक्रमं मन्यो द्रौपदी यत्र पण्यते ॥ २-९०-४ (१४९२३)
एषा ह्यनर्हती बाला पाण्डवान्प्राप्य कौरवैः ।
त्वत्कृते क्लिश्यते क्षुद्रैर्नृशंसैरकृतात्मभिः ॥ २-९०-५ (१४९२४)
अस्याः कृते मन्युरयं त्वयि राजन्निपात्यते ।
बाहू ते सम्प्रधक्ष्यामि सहदेवाग्निमानयः ॥ २-९०-६ (१४९२५)
अर्जुन उवाच। २-९०-७क्ष् (१६३४)
न पुरा भीमसेन त्वमीदृशीर्वदिता गिरः ।
परैस्ते नाशितं नूनं नृशंसैर्धर्मगौरवम् ॥ २-९०-७ (१४९२६)
न सकामाः परो कार्या धर्ममेवाचरोत्तमम् ।
भ्रातरं धार्मिकं ज्येष्टं कोऽतिवर्तितुमर्हति ॥ २-९०-८ (१४९२७)

आहूतो हि परै राजा क्षात्रं व्रतमनुस्मरन् ।
दीव्यते परकामेन तन्नः कीर्तिकरं महत् ॥ २-९०-९ (१४९२८)
भीमसेन उवाच ॥ २-९०-१०क्ष् (१६३५)
एवमस्मिन्कृतं विद्यां यदि नाहं धनञ्जय ।
दीप्तेऽग्नौ सहितौ बाहू निर्दहेयं बलादिव ॥ २-९०-१० (१४९२९)
वैशम्पायन उवाच ॥ २-९०-११क्ष् (१६३६)
तथा तान्दुः खितान्दृष्ट्वा पाण्डवान्धृतराष्ट्रजः ।
कृष्यमाणां च पाञ्चालीं विकर्ण इदमब्रवीत् ॥ २-९०-११ (१४९३०)
याज्ञसेन्या यदुक्तं तद्वाक्यं विब्रूत पार्थिवाः ।
अविवेकेन वाक्यस्य नरकः सद्य एव नः ॥ २-९०-१२ (१४९३१)
भीष्मश्च धृतराष्ट्रश्च कुरुवृद्धतमावुभौ ।
समेत्य नाहतुः किञ्चिद्विदुरश्च महामतिः ॥ २-९०-१३ (१४९३२)
भारद्वाजश्च सर्वेषामाचार्यः कृप एव च ।
कुत एतावपि प्रश्नं नाहतुर्द्विजसत्तमौ ॥ २-९०-१४ (१४९३३)
ये त्वन्ये पृथिवीपालाः समेताः सर्वतोदिशम् ।
कामक्रोधौ समुत्सृज्य ते ब्रुवन्तु यथामति ॥ २-९०-१५ (१४९३४)
यदितं द्रौपदी वाक्यमुक्तवत्यसकृच्छुभा ।
विमृश्य कस्य कः पक्षः पार्थिवा वदतोत्तरम् ॥ २-९०-१६ (१४९३५)
वाशम्पायन उवाच ॥ २-९०-१७क्ष् (१६३७)
एवं स बहुशः सर्वानुक्तवांस्तान्सभासदः ।
न च ते पृथिवीपालास्तमूचुः साध्वसाधु वा ॥ २-९०-१७ (१४९३६)
उक्त्वाऽसकृत्तथा सर्वान्विकर्णः पृथिवीपतीन् ।
पाणौ पाणिं विनिष्पिष्य निःश्वसन्निदमब्रवीत् ॥ २-९०-१८ (१४९३७)
विब्रूत पृथिवीपाला वाक्यं मा वा कथञ्चनि ।
मन्ये न्याय्यं यदत्राहं तद्धि वक्ष्यामि कौरवाः ॥ २-९०-१९ (१४९३८)
चत्वार्याहुर्नश्रेष्ठा व्यसनानि महीक्षिताम् ।
मृगयां पानमक्षांश्च ग्राम्ये चैवातिरक्तताम् ॥ २-९०-२० (१४९३९)
एतेषु हि नरः सक्तो धर्ममुत्सृज्य वर्तते ।
यथाऽयुक्तेन च कृतां क्रियां लोको न मन्यते ॥ २-९०-२१ (१४९४०)
तथेयं पाण्डुपुत्रेण व्यसने वर्तता भृशम् ।
समाहूतेन कितवैरास्थितो द्रौपदीपणः ॥ २-९०-२२ (१४९४१)
साधारणी च सर्वेषां पाण्डवानामनिन्दिता ।
जितेन पूर्वं चानेन पाण्डवेन कृतः पणः ॥ २-९०-२३ (१४९४२)
इयं च कीर्तिता कृष्णा सौबलेन पणार्थिना ।
एतत्सर्वं विचार्याहं मन्ये न विजितामिमाम् ॥ २-९०-२४ (१४९४३)
वैशम्पायन उवाच ॥ २-९०-२५क्ष् (१६३८)

एतच्छ्रुत्वा महान्नादः सभ्यानामुदतिष्ठत ।
विकर्णं शंसमानानां सौबलं चापि निन्दताम् ॥ २-९०-२५ (१४९४४)
तस्मिन्नुपरते शब्दे राधेयः क्रोधमूर्छितः ।
प्रगृह्य रुचिरं बाहुमिदं वचनमब्रवीत् ॥ २-९०-२६ (१४९४५)
कर्ण उवाच ॥ २-९०-२७क्ष् (१६३९)
दृश्यन्ते वै विकर्णेह वैकृतानि बहून्यपि ।
तज्जातस्तद्विनाशाय यथाऽग्निररणिप्रजः ॥ २-९०-२७ (१४९४६)
एते न किञ्चिदप्याहुश्चोदिता ह्यपि कृष्णया ।
धर्मेण विजितामेतां मन्यन्ते द्रुपदात्मजाम् ॥ २-९०-२८ (१४९४७)
त्वं तु केवलबाल्येन धार्तराष्ट्र विदीर्यसे ।
यद्ब्रवीषि सभाम्ध्ये बालः स्थविरभाषितम् ॥ २-९०-२९ (१४९४८)
न च धर्मं यथावत्त्वं कृष्णां च जितेति सुमन्दधीः ।
यद्ब्रवीषि जितां कृष्णां न जितेति सुमन्दधीः ॥ २-९०-३० (१४९४९)
कथं ह्यविजितां कृष्णां मन्यसे धृतराष्ट्रज ।
यदा सभायां सर्वस्वं न्यस्तवान्पाण्डवाग्रजः ॥ २-९०-३१ (१४९५०)
अभ्यन्तर च सर्वस्वे द्रौपदी भरतर्षभ ।
एवं धर्मजितां कृष्णां मन्यसे न जितां कथम् ॥ २-९०-३२ (१४९५१)
कीर्तिता द्रौपदी वाचा अनुज्ञाता च पाण्डवैः ।
भवत्यविजिता केन हेतुनैषा मता तव ॥ २-९०-३३ (१४९५२)
मन्यसे वा सभामेतामानीतामेकवाससम् ।
अधर्मेणेति तत्रापि शृणु मे वाक्यमुत्तमम् ॥ २-९०-३४ (१४९५३)
एको भर्ता स्त्रिया देवैर्विहितः कुरुनन्दन ।
इयं त्वनेकवशगा बन्धकीति विनिश्चिता ॥ २-९०-३५ (१४९५४)
अस्याः सभामानयनं न चित्रमिति मे मतिः ।
एकाम्बरधरत्वं वाऽप्यथवाऽपि विवस्त्रता ॥ २-९०-३६ (१४९५५)
यच्चैषां द्रविणं किञ्चिद्या चैषा ये च पाण्डवाः ।
सौबलेनेह तत्सर्वं धर्मेण विजितं वसु ॥ २-९०-३७ (१४९५६)
दुःशासन सुबालोऽयं विकर्णः प्राज्ञवादिकः ।
पाण्डवानां च वासांसि द्रौपद्याश्चाप्युपाहर ॥ २-९०-३८ (१४९५७)
वैशम्पायन उवाच ॥ २-९०-३९क्ष् (१६४०)
तच्छ्रुत्वा पाण्डवाः सर्वे स्वानि वासांसि भारत ।
अवकीर्योत्तरीयाणि सभायां समुपाविशन् ॥ २-९०-३९ (१४९५८)
ततो दुःशासनो राजन्द्रौपद्या वसनं बलात् ।
सभामध्ये सभाक्षिप्य व्यपाक्रष्टुं प्रचक्रमे ॥ २-९०-४० (१४९५९)
ग्आकृष्यमाणे वसने विललाप सुदुःखिता ।
ज्ञातं मया विसिष्ठेन पुरा गीतं महात्मना ॥ २-९०-४१ (१४९६०)

महत्यापदि सम्प्राप्ते स्मर्तव्यो भगवान्हरिः ।
इति निश्चित्य मनसा शरणागतवत्सलम् ।
आकृष्यमाणे वसने द्रौपदी कृष्णमस्तरत् ॥ २-९०-४२ (१४९६१)
शङ्खचक्रगदापाणे द्वारकानिलयाच्युत ।
गोविन्द पुण्डरीकाक्ष रक्ष मां शरणागताम् ॥ २-९०-४३ (१४९६२)
हा कृष्ण द्वारकावासिन्क्वासि यादवन्दन ।
इमामवस्थां सम्प्राप्तामनाथां किमुपेक्षसे ॥ २-९०-४४ (१४९६३)
गोविन्द द्वारकावासिन्कृष्ण गोपीजनप्रिय ।
कौरवैः परिभूतां मां किं न जानासि केशव'॥ २-९०-४५ (१४९६४)
हे नाथ हे रमानाथ व्रजनाथार्तिनाशन ।
कौरवार्णवग्नां मामुद्धरस्व जनार्दन ॥ २-९०-४६ (१४९६५)
कृष्णकृष्ण महायोगिन्विश्वात्मन्विश्भावन ।
प्रपन्नां पाहि गोविन्द कुरमध्येऽवसीदतीम् ॥ २-९०-४७ (१४९६६)
इत्यनुस्मृत्य कृष्णं सा हरिं त्रिभुवनेश्वरम् ।
प्रारुदद्दुः खिता राजन्मुखमाच्छाद्य भामिनी ॥ २-९०-४८ (१४९६७)
तस्य प्रसादद्रौपद्याः कृष्णमाणेऽम्बरे तदा ।
तद्रूपमपरे वस्त्रं प्रादुरासीदनेकशः ॥ २-९०-४९ (१४९६८)
नानारागविरागाणि वसनान्यथ वै प्रभो ।
प्रादुर्भवन्ति शतशो धर्मस्य परिपालनात् ॥ २-९०-५० (१४९६९)
ततो हलहलाशब्दस्तत्रासीद्घोरदर्शनः ।
तदद्भुततमं लोके वीक्ष्य सर्वे महीभृतः ॥ २-९०-५१ (१४९७०)
शशंसुर्द्रौपदीं तत्र कुत्सन्तो धृतराष्ट्रजम् ।
गधिग्धिगित्यशिवां वाचमुत्सृजन्कौरवान्प्रति'॥ २-९०-५२ (१४९७१)
यदा तु वाससां राशिः सभामध्ये समाचितः'।
तदा दुःशासनः श्रान्तो व्रीडितः समुपाविशत् २-९०-५३ (१४९७२)
शशाप तत्र भीमस्तु राजमध्ये बृहत्स्वनः ।
क्रोधाद्विस्फुरमाणौष्ठो विनिष्पिष्य करे करम् ॥ २-९०-५४ (१४९७३)
भीम उवाच ॥ २-९०-५५क्ष् (१६४१)
इदं मे वाक्यमादध्वं क्षत्रिया लोकवासिनः ।
नोक्तपूर्वं नरैरन्यैर्न चान्यो यद्वदिष्यति ॥ २-९०-५५ (१४९७४)
यद्येतदेवमुक्त्वाऽहं न कुर्यां पृथिवीश्वराः ।
पितामहानां पूर्वेषां नाहं गतिमवाप्नुयाम् ॥ २-९०-५६ (१४९७५)
अस्य पापस्य दुर्बुद्धेर्भारतापसदस्य च ।
न पिबेयं बलाद्वक्षो भित्त्वा चेद्रुधिरं युधि ॥ २-९०-५७ (१४९७६)
वैशम्पायन उवाच ॥ २-९०-५८क्ष् (१६४२)
तस्य ते तद्वचः श्रुत्वा रौद्रं लोमप्रहर्षणम् ॥

प्रचक्रुर्बहुलां पूजां कुसन्तो धृतराष्ट्रजम् ॥ २-९०-५८ (१४९७७)
न विब्रुवन्ति कौरव्याः प्रश्नमेतमिति स्म ह ।
सुजनः क्रोशति स्मात्र धृतराष्ट्रं विगर्हयन् ॥ २-९०-५९ (१४९७८)
विदुर उवाच ।
द्रौपदी प्रश्नमुक्त्वैवं रोरवीति त्वनाथवत्। २-९०-६० (१४९७९)
वैशम्पायन उवाच ॥ २-९०-६१क्ष् (१६४३)
तस्य ते तद्वचः श्रुत्वा रौद्रं लोमप्रहर्षणम् ।
न च विब्रूत तं प्रश्नं सभ्या धर्मोऽत्र पीड्यते ॥ २-९०-६१ (१४९८०)
सभां प्रपद्यते प्रश्नः प्रज्वलन्निव हव्यवाद् ।
तं वै सत्येन धर्मेण सभ्याः प्रशमयन्त्युत ॥ २-९०-६२ (१४९८१)
धर्म्यं प्रश्नमतो ब्रूयादार्यः सत्येन मानवः ।
विब्रूयुस्तत्र तं प्रश्नं कामक्रोधबलातिगाः ॥ २-९०-६३ (१४९८२)
विकर्णेन यथाप्रज्ञमुक्तः प्रश्नो नराधिपाः ।
भवन्तोऽपि हि तं प्रश्नं विब्रुवन्तु यथामति ॥ २-९०-६४ (१४९८३)
यो हि प्रश्नं न विब्रूयाद्धर्मदर्शी सभां गतः ।
अनृते या फलावाप्तिस्तस्याः सोऽर्धं समश्नुते ॥ २-९०-६५ (१४९८४)
यः पुनर्वितथं ब्रूयाद्धर्मदर्शी सभां गतः ।
अनृतस्य फलं कृत्स्नं स प्राप्नोतीति निश्चयः ॥ २-९०-६६ (१४९८५)
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
प्रह्लादस्य च संवादं मुनेराङ्गिरसस्य च ॥ २-९०-६७ (१४९८६)
प्रह्लादो नाम दैत्येन्द्रस्तस्य पुत्रो विरोचनः ।
कन्याहेतोराङ्गिरसं सुधन्वानमुपाद्रवत् ॥ २-९०-६८ (१४९८७)
अहं ज्यायानहं ज्यायानिति कन्येप्सया तदा ।
तयोर्देवनमत्रासीत्प्राणयोरिति नः श्रुतम् ॥ २-९०-६९ (१४९८८)
तयोः प्रश्नविवादोऽभूत्प्रह्लादं तावपृच्छताम् ।
ज्यायान्क आवयोरेकः प्रश्नं प्रब्रूहि मा मृषा ॥ २-९०-७० (१४९८९)
स वै विवदनाद्भीतः सुधन्वानं विलोकयन् ।
तं सुधन्वाब्रवीत्क्रुद्धो ब्रह्मदम्ड इव ज्वलन् ॥ २-९०-७१ (१४९९०)
यदि वै वक्ष्यसि मृषा प्रह्लादाथ न वक्ष्यसि ॥
शतघा ते शिरो वज्री वज्रेण प्रहरिष्यति ॥ २-९०-७२ (१४९९१)
सुधन्वना तथोक्तः सन्व्यथितोऽश्वत्थपर्णवत् ।
जगाम कश्यपं दैत्यः परिप्रष्टुं महौजसम् ॥ २-९०-७३ (१४९९२)
प्रह्लाद उवाच ॥ २-९०-७४क्ष् (१६४४)
त्वं वै धर्मस्य विज्ञाता दैवस्येहासुरस्य च ।
ब्राह्मणस्य महाभाग धर्मकृच्छ्रमिदं शृणु ॥ २-९०-७४ (१४९९३)
यो वै प्रश्नं न विब्रूयाद्वितथं चैव निर्दिशेत् ।

के वै तस्य परे लोकास्तन्ममाचक्ष्व पृच्छतः ॥ २-९०-७५ (१४९९४)
कश्यप उवाच ॥ २-९०-७६क्ष् (१६४५)
जानन्नविब्रुवन्प्रश्नान्कामात्क्रोधाद्भयात्तथा ।
सहस्रं वारुणान्पाशानात्मनि प्रतिमुञ्चति ॥ २-९०-७६ (१४९९५)
साक्षी वा विब्रुवन्साक्ष्यं गोकर्णशिथिलश्चरन् ।
सहस्रं वारुणान्पाशानात्मनि प्रतिमुञ्जति ॥ २-९०-७७ (१४९९६)
तस्य संवत्सरे पूर्णे पाश एकः प्रमुच्यते ।
तस्मात्सत्यं तु वक्तव्यं जानता सत्यमुञ्जसा ॥ २-९०-७८ (१४९९७)
विद्धो धर्मो ह्यधर्मेण सभां यत्रोपपद्यते ।
न चास्य शल्यं कृन्तन्ति विद्धास्तत्र सभासदः ॥ २-९०-७९ (१४९९८)
अर्धं हरति वै श्रेष्ठः पादो भवति कर्तृषु ।
पादश्चैव सभासत्सु ये न निन्दन्ति निन्दितम् ॥ २-९०-८० (१४९९९)
अनेना भवति श्रेष्ठो मुच्यन्ते च सभासदः ।
एनो गच्छति कर्तारं निन्दार्हो यत्र निन्द्यते ॥ २-९०-८१ (१५०००)
वितथं तु वदेयुर्ये धर्मं प्रह्लाद पृच्छते ।
इष्टापूर्तं च ते घ्नन्ति सप्तसप्त परावरान् ॥ २-९०-८२ (१५००१)
हृतस्वस्य हि यद्दुःखं हतपुत्रस्य चैव यत् ।
ऋणिनः प्रति यच्चैव स्वार्थाद्भ्रष्टस्य चैव यत् ॥ २-९०-८३ (१५००२)
स्त्रियाः पत्या विहीनाया राज्ञा ग्रस्तस्य चैव यत् ।
अपुत्रायाश्च यद्दुःखं व्याघ्राघ्रातस्य चैव यत् ॥ २-९०-८४ (१५००३)
अध्यूढायाश्च यद्दुःखं व्याघ्राघ्रातस्य चैव यत् ॥
एतानि वै समान्याहुर्दुःखानि त्रिदिवेश्वराः ॥ २-९०-८५ (१५००४)
तानि सर्वाणि दुःखानि प्राप्नोति वितथं ब्रुवन् ।
समक्षदर्शनात्साक्षी श्रवणाच्चेति धारणात् ॥ २-९०-८६ (१५००५)
तस्मात्सत्यं ब्रुवत्साक्षी धर्मार्थाभ्यां न हीयते ।
कश्यपस्य वचः श्रुत्वा प्रह्लादः पुत्रमब्रवीत् ॥ २-९०-८७ (१५००६)
श्रेयान्सुधन्वा त्वत्तो वै मत्तः श्रेयांस्तथाङ्गिराः ।
माता सुधन्वाऽयं प्राणानामीश्वरस्तव ॥
विरोचन सुधन्वाऽयं प्राणानामीश्वरस्तव ॥ २-९०-८८ (१५००७)
सुधन्वोवाच। २-९०-८९क्ष् (१६४६)
पुत्रस्नेहं परित्यज्य यस्त्वं धर्मे व्यवस्थितः ।
अनुजानामि ते पुत्रं जीवत्वेव शतं समाः ॥ २-९०-८९ (१५००८)
विदुर उवाच। २-९०-९०क्ष् (१६४७)
एवं वै परमं धर्मं श्रुत्वा सर्वे सभासदः ।
यथाप्रश्नं तु कृष्णाया मन्यध्वं तत्र किं परम् ॥ २-९०-९० (१५००९)
वैशम्पायन उवाच ॥ २-९०-९१क्ष् (१६४८)

विदुरस्य वचः श्रुत्वा नोचुः किञ्चन पार्थिवाः ।
कर्णो दुःशासनं त्वाह कृष्णां दासीं गृहान्नय ॥ २-९०-९१ (१५०१०)
तां वेपमानां सव्रीडां प्रलपन्तीं स्म पाण्डवान् ।
दुःशासनः सभामध्ये विचकर्ष तपस्विनीम् ॥ ॥ २-९०-९२ (१५०११)

इति श्रीमन्महाभारते सभापर्वणि द्यूतपर्वणि नवतितमोऽध्यायः ॥ ९०.।
Mahabharata - Sabha Parva - Chapter Footnotes

२-९०-२० ग्राम्ये स्त्रीभोगी ॥
२-९०-४१ आकृष्यमाणे वसने द्रौपद्या चिन्तितो हरिः ।गोविन्द द्वारकान्वासिन्कृष्ण गो पीजनप्रिय।कौरवैः परिभूतां मां किं ज जानासि केशव।इति झ पाठः ॥
२-९०-७७ गोकर्णशिथिल उभयक्षस्पर्शी ॥

---

सभ-०९१
॥ श्रीः ॥
२.९१. अध्यायः ९१

Mahabharata - Sabha Parva - Chapter Topics
द्रौपदीवचनम् ॥ १.। युधिष्ठिरेणैव द्रौपदीप्रश्नस्योत्तरं वक्तव्यमिति भीष्मवचनम् ॥ २.।
Mahabharata - Sabha Parva - Chapter Text

द्रौपद्युवाच ॥
पुरस्तात्करणीयं मे न कृतं कार्यमुत्तरम् ।
विह्वलाऽस्मि कृताऽनेन कर्षता बलिना बलात् ॥ २-९१-१ (१५०१२)
अभिवादं करोम्येषां कुरूणां कुरुसंसदि ।
न मे स्यादपराधोऽयं तदिदं न कृतं मया ॥
वैशम्पायन उवाच ॥ २-९१-२ (१५०१३)
सा तेन च समाधूता दुःखेन च तपस्विनी ।
पतिता विललापेदं सभायामतथोचिता ॥ २-९१-३ (१५०१४)
द्रौपद्युवाच। २-९१-४क्ष् (१६४९)
स्वयंवरे यास्मि नृपैर्दृष्टा रङ्गे समागतैः ।
न दृष्टपूर्वा चान्यत्र साऽहमद्य सभां गता ॥ २-९१-४ (१५०१५)
यां न वायुर्न चादित्यो दृष्टवन्तौ पुरा गृहे ।
साऽहमद्य सभामध्ये दृष्टास्मि जनसंसदि ॥ २-९१-५ (१५०१६)
यां न मृष्यन्ति वातेन स्पृश्यमानां गृहे पुरा ।

स्पृश्यमानां सहन्तेऽद्य पाण्डवास्तां दुरात्मना ॥ २-९१-६ (१५०१७)
मृष्यन्ति कुरवश्चेमे मन्ये कालस्य पर्ययम् ।
स्नुषां दुहितरं चैव क्लिश्यमानामनर्हतीम् ॥ २-९१-७ (१५०१८)
किंन्वतः कृपणं भूयो यदहं स्त्री सती शुभा ।
सभामध्यं विगाहेऽद्य क्व नु धर्मो महीक्षिताम् ॥ २-९१-८ (१५०१९)
धर्म्यं स्त्रियं सभां पूर्वे न नयन्तीति नः श्रुतम् ।
स नष्टः कौरवेयेषु पूर्वो धर्मः सनातनः ॥ २-९१-९ (१५०२०)
कथं हि भार्या पाण्डुनां पार्षतस्य स्वसा सती ।
वासुदेवस्य च सखी पार्थिवानां सभामियाम् ॥ २-९१-१० (१५०२१)
तामिमां धर्मराजस्य भार्यां सदृशवर्णजाम् ।
ब्रूत दासीमदासीं वा तत्करिष्यामि कौरवाः। २-९१-११ (१५०२२)
अयं मां सुदृढं क्षुद्रः कौरवाणां यशोहरः ।
क्लिश्नाति नाहं तत्सोढुं क्षुद्रः कौरवाणां यशोहरः। २-९१-१२ (१५०२३)
जितां वाऽप्यजितां वापि मन्यध्वं मां यथा नृपाः ।
तथा प्रत्युक्तमिच्छामि तत्करिष्यामि कौरवाः ॥ २-९१-१३ (१५०२४)
भीष्म उवाच ॥ २-९१-१४क्ष् (१६५०)
उक्तवानस्मि कल्याणि धर्मस्य परमा गतिः ।
लोके न शक्यते ज्ञातुमपि विज्ञैर्महात्मभिः ॥ २-९१-१४ (१५०२५)
बलवांश्च यथा धर्मं लोके पश्यति पुरुषः ॥
स धर्मो धर्मवेलायां भवत्यभिहतः परः ॥ २-९१-१५ (१५०२६)
न विवेक्तुं च ते प्रश्नमिमं शक्नोमि निश्चयात् ।
सूक्ष्मत्वाद्गहनत्वाच्च कार्यस्यास्य च गौरवात् ॥ २-९१-१६ (१५०२७)
नूनमन्तः कुलस्यास्य भविता न चिरादिव ।
तथा हि कुरवः सर्वे लोभमोहपरायणाः ॥ २-९१-१७ (१५०२८)
कुलेषु जाताः कल्याणि व्यसनैराहता भृशम् ।
धर्म्यान्मार्गान्न च्यवन्ते येषां नस्त्वं बधूः स्थिता ॥ २-९१-१८ (१५०२९)
उपपन्नं च पाञ्चालि तवेदं वृत्तमीदृशम् ।
यत्कृच्छ्रमपि सम्प्राप्ता धर्ममेवान्ववेक्षसे ॥ २-९१-१९ (१५०३०)
एते द्रोणादयश्चैव वृद्धा धर्मविदो जनाः ।
शून्यैः शरीरैस्तिष्ठन्ति गतासव इवानताः ॥ २-९१-२० (१५०३१)
युधिष्ठिरस्तु प्रश्नोऽस्मिन्प्रमाणमिति मे मतिः ।
अजितां वा जितां वेति स्वयं व्याख्यातुमर्हति ॥ ॥ २-९१-२१ (१५०३२)

इति श्रीमन्महाभारते सभापर्वणि द्यूतपर्वणि एकनवतितमोऽध्यायः ॥९१ ॥

---

सभ-०९२

॥ श्रीः ॥

२.९२. अध्यायः ९२

Mahabharata - Sabha Parva - Chapter Topics

दुर्योधनवचनम् ॥ १.। दुर्योधनेन द्रौपदीं प्रति निजोरौ प्रदर्शिते भीमेन तद्भेदनप्रतिज्ञा ॥२.। अर्जुनादिभिः कर्णादिहननप्रतिज्ञा ॥ ३.। द्रौपद्या दुर्योधनादीनां शापदानसमये अन्तरिक्षात्पुष्पवृष्टिः ॥ ४.।

Mahabharata - Sabha Parva - Chapter Text

वैशम्पायन उवाच ॥
तथा तु दृष्ट्वा बहु तत्र देवीं
रोरूयमाणां कुररीमिवार्ताम् ।
नोचुर्वचः साध्वथवाऽप्यसाधु
महीक्षितो धार्तराष्ट्रस्य भीताः ॥ २-९२-१ (१५०३३)
दृष्ट्वा तथा पार्थिवपुत्रपौत्रां-
स्तूष्णींभूतान्धृतराष्ट्रस्य पुत्रः ।
स्मयन्निवेदं वचनं बभाषे
पाञ्चालराजस्य सुतां तदानीम् ॥ २-९२-२ (१५०३४)
दुर्योधन उवाच ॥ २-९२-३क्ष् (१६५१)
तिष्ठत्वयं प्रश्न उदारसत्वे
भीमेऽर्जुने सहदेवे तथैव ।
पत्यौ च ते नकुले याज्ञसेनि
वदन्त्वेते वचनं त्वत्प्रसूतम् ॥ २-९२-३ (१५०३५)
अनीश्वरं विब्रुवन्त्वार्यमध्ये
युधिष्ठिरं तव पाञ्चालि हेतोः ।
कुर्वन्तु सर्वे चानृतं धर्मराजं
पाञ्चालि त्वं मोक्ष्यसे दासभावात् ॥ २-९२-४ (१५०३६)
धर्मे स्थितो धर्मसुतो महात्मा
स्वयं चेदं कथयत्विन्द्रकल्पः ।
ईशो वा ते ह्यनीशोऽथवैष
वाक्यादस्य क्षिप्रमेकं भजस्व ॥ २-९२-५ (१५०३७)
सर्वे हीमे कौरवेयाः सभायां
दुःखान्तरे वर्तमानास्तवैव ।
न विब्रुवन्त्यार्यसत्वा यथाव-
त्पतींश्च ते समवेक्ष्याल्पभाग्यान् ॥ २-९२-६ (१५०३८)

वैशम्पायन उवाच ॥ २-९२-७क्ष् (१६५२)
ततः सभ्याः कुरुराजस्य तस्य
वाक्यं सर्वे प्रशशंसुस्तथोच्चैः ।
चेलावेधांश्चापि चक्रुर्नदन्तो
हाहेत्यासीदपि चैवार्तनादः ॥ २-९२-७ (१५०३९)
श्रुत्वा तुं तद्वाक्यमनोहरं त-
द्धर्षश्चासीत्कौरवाणां सभायाम् ।
सर्वे चासन्पार्थिवाः प्रीतिमन्तः
कुरुश्रेष्ठं धार्मिकं पूजयन्तः ॥ २-९२-८ (१५०४०)
युधिष्ठिरं च ते सर्वे समुदैक्षन्त पार्थिवाः ।
किं नु वक्ष्यति धर्मज्ञ इति साचीकृताननाः ॥ २-९२-९ (१५०४१)
किं नु वक्ष्यति बीभत्सुरजितो युधि पाण्डवः ।
भीमसेनो यमौ चोभौ भृशं कौतूहलान्विताः ॥ २-९२-१० (१५०४२)
तस्मिन्नुपरते शब्दे भीमसेनोऽब्रवीदिदम् ।
प्रगृह्य रुचिरं दिव्यं भुजं चन्दनचर्चितम् ॥ २-९२-११ (१५०४३)
यद्येष गुरुरस्माकं धर्मराजो महामनाः ।
न प्रभुः स्यात्कुलस्यास्य न वयं मर्षयेमहि ॥ २-९२-१२ (१५०४४)
ईशो नः पुण्यतपसां प्राणानामपि चेश्वरः ।
मन्यते जितमात्मानं यद्येष विजिता वयम् ॥ २-९२-१३ (१५०४५)
न हि मुच्येत मे जीवन्पदा भूमिमुपस्पृशन् ।
मर्त्यधर्मा परामृश्य पाञ्चाल्या मूर्धजानिमान् ॥ २-९२-१४ (१५०४६)
पश्यध्वं ह्यायतौ वृत्तौ भुजौ मे परिघाविव ।
नैतयोरन्तरं प्राप्य मुच्येतापि शतक्रतुः ॥ २-९२-१५ (१५०४७)
धर्मपाशसितस्त्वेवमधिगच्छामि सङ्कटम् ।
गौरवेण निरुद्धश्च निग्रहादर्जुनस्य च ॥ २-९२-१६ (१५०४८)
धर्मराजनिसृष्टस्तु सिंहः क्षुद्रमृगानिव ।
धार्तराष्टारानिमान्पापान्निष्पषेयं तलासिभिः ॥ २-९२-१७ (१५०४९)
वैशम्पायन उवाच ॥ २-९२-१८क्ष् (१६५३)
तमुवाच तदा भीष्मो द्रोणो विदुर एव च ।
क्षम्यतामिदमित्येवं सर्वं सम्भाव्यते त्वयि ॥ २-९२-१८ (१५०५०)
कर्ण उवाच ॥ २-९२-१९क्ष् (१६५४)
त्रयः किलेमे ह्यधना भवन्ति ।
दासः पुत्रश्चास्वतन्त्रा च नारी ।
दासस्य पत्नी त्वधनस्य भद्रे
हीनश्वरा दासधनं च सर्वम् ॥ २-९२-१९ (१५०५१)
प्रविश्य राज्ञः परिवारं भजस्व

तत्ते कार्यं शिष्टमादिश्यतेऽत्र ।
ईशास्तु सर्वे तव राजपुत्रि
भवन्ति वै धार्तराष्ट्रा न पार्थाः ॥ २-९२-२० (१५०५२)
अन्यं वृणीष्व पतिमाशु भामिनि
यस्माद्दास्यं न लभसि देवनेन ।
अवाच्या वै पतिषु कामवृत्ति-
र्नित्यं दास्ये विदितं तत्तवास्तु ॥ २-९२-२१ (१५०५३)
पराजितो नकुलो भीमसेनो
युधिष्ठरः सहदेवार्जुनौ च ।
दासीभूता त्वं हि वै याज्ञसेनि
पराजितास्ते पतयो नैव सन्ति ॥ २-९२-२२ (१५०५४)
प्रयोजनं जन्मनि किं न मन्यते
पराक्रमं पौरुषं चैव पार्थटः ।
पाञ्चाल्यस्य द्रुपदस्यात्मजामिमां
सभामध्ये यो व्यदेवीद्ग्लहेषु ॥ २-९२-२३ (१५०५५)
वैशम्पायन उवाच ॥ २-९२-२४क्ष् (१६५५)
तद्वै श्रुत्वा भीमसेनोऽत्यमर्षी
भृशं निशश्वास तदाऽर्तरूपः ।
राजानुगो धर्मपाशानुबद्धो
दहन्निवैनं क्रोधसंरक्तदृष्टिः ॥ २-९२-२४ (१५०५६)
भीम उवाच ॥ २-९२-२५क्ष् (१६५६)
नाहं कुप्ये सूतपुत्रस्य राज-
न्नेष सत्यं दासधर्मः प्रदिष्टः ।
किं विद्विषो वै मामेवं व्याहरेयु-
र्नादेवीस्त्वं यद्यनया नरेन्द्र ॥ २-९२-२५ (१५०५७)
वैशम्पायन उवाच ॥ २-९२-२६क्ष् (१६५७)
भीमसेनवचः श्रुत्वा राजा दुर्योधनस्तदा ।
युधिष्ठिरमुवाचेदं तूष्णीम्भूतमचेतनम् ॥ २-९२-२६ (१५०५८)
भीमार्जुनौ यमौ चैव स्थितौ ते नृप शासने ।
प्रश्नं ब्रूहि च कृष्णां त्वमजितां यदि मन्यसे ॥ २-९२-२७ (१५०५९)
एवमुक्त्वा तु कौन्येयमपोह्य वसनं स्वकम् ।
स्मयन्निवेक्ष्य पाञ्चालीमैश्वर्यमदमोहितः ॥ २-९२-२८ (१५०६०)
कदलीदण्डसदृशं सर्वलक्षणसंयुतम् ।
गजहस्तप्रतीकाशं वज्रप्रतिमगौरवम् ॥ २-९२-२९ (१५०६१)
अभ्युत्स्मयित्वा राधेयं भीममाधर्षयन्निव ।
द्रौपद्याः प्रेक्षमाणायाः सव्यमूरुमदर्शयत् ॥ २-९२-३० (१५०६२)

भीमसेनस्तमालोक्य नेत्रे उत्फाल्य लोहिते ।
प्रोवाच राजमध्ये तं सभां विश्रावयन्निव ॥ २-९२-३१ (१५०६३)
पितृभिः सह सालोक्यं मा स्म गच्छेद्वृकोदरः ।
यद्येतमूरुं गदया न भिन्द्यां ते महाहवे ॥ २-९२-३२ (१५०६४)
वैशम्पायन उवाच ॥ २-९२-३३क्ष् (१६५८)
क्रुद्धस्य तस्य सर्वेभ्यः स्रोतोभ्यः पावकार्चिषः ।
वृक्षस्येव विनिश्चेरुः कोटरेभ्यः प्रदह्यतः ॥ २-९२-३३ (१५०६५)
विदुर उवाच ॥ २-९२-३४क्ष् (१६५९)
परं भयं पश्यत भीमसेना-
त्तद्बुध्यध्वं पार्थिवाः प्रातिपेयाः ।
दैवेरितो नूनमयं पुरस्ता-
त्परोऽनयो भरतेषूदपादि ॥ २-९२-३४ (१५०६६)
अतिद्यूतं कृतमिदं धार्तराष्ट्र
यस्मात्स्त्रियं विवदध्वं सभायाम् ।
योगक्षेमौ नश्यतो वः समग्रौ
पापान्मन्त्रान्कुरवो मन्त्रयन्ति ॥ २-९२-३५ (१५०६७)
इमं धर्मं कुरवो जानताशु
ध्वस्ते धर्मे परिषत्सम्प्रदुष्येत् ।
इमां चेत्पूर्वं कितवोऽग्लहिष्य-
दीशोऽभविष्यदपराजितात्मा ॥ २-९२-३६ (१५०६८)
स्वप्ने यथैतद्विजितं धनं स्या-
देवं मन्ये यस्य दीव्यत्यनीशः ।
गान्धारराजस्य वचो निशम्य
धर्मादस्मात्कुरवो माऽपयात ॥ २-९२-३७ (१५०६९)
दुर्योधन उवाच ॥ २-९२-३८क्ष् (१६६०)
भीमस्य वाक्ये तद्वदेवार्जुनस्य
स्थितोऽहं वै यमयोश्चैवमेव ।
युधिष्ठिरं ते प्रवदन्त्वनीश-
मथो दास्यान्मोक्षसे याज्ञसेनि ॥ २-९२-३८ (१५०७०)
अर्जुन उवाच ॥ २-९२-३९क्ष् (१६६१)
ईशो राजा पूर्वमासीद्ग्लहे नः
कुन्तीसुतो धर्मराजो महात्मा ।
ईशस्त्वयं कस्य पराजितात्मा
तज्जानीध्वं कुरवः सर्व एव ॥ २-९२-३९ (१५०७१)
ग्कर्ण उवाच ॥ २-९२-४०क्ष् (१६६२)
दुश्शासन निबोधेदं वचनं वै प्रभाषितम् ।

किमनेन चिरं वीर नयस्व द्रुपदात्मजाम् ।
दासीभावेन भुङ्क्ष्व त्वं यथेष्टं कुरुनन्दन ॥ २-९२-४० (१५०७२)
वैशम्पायन उवाच ॥ २-९२-४१क्ष् (१६६३)
ततो गान्धारराजस्य पुत्रः शकुनिरब्रवीत् ।
साधु कर्ण महाबाहो यथेष्टं क्रियतामिति ॥ २-९२-४१ (१५०७३)
ततो दुश्शासनस्तूर्णं द्रुपदस्य सुतां बलात् ।
प्रवेशयितुमारब्धः स चकर्ष दुरात्मवान् ॥
ततो विक्रोशति तदा पाञ्चाली वरवर्णिनी ॥ २-९२-४२ (१५०७४)
द्रौपद्युवाच। २-९२-४४क्ष् (१६६४)
परित्रायस्व मां भीष्म द्रोण द्रौणे तथा कृप ।
परित्रायस्व विदुर धर्मिष्ठो धर्मवत्सल ॥ २-९२-४४ (१५०७५)
धृतराष्ट्र महाराज परित्रायस्व वै स्नुषाम् ।
गान्धारि त्वं महाभागे सर्वज्ञे सर्वदर्शिनि ।
पिरत्रायस्व मां भीरुं सुयोधनभयार्दिताम् ॥ २-९२-४५ (१५०७६)
त्वमार्ये वीरजननि किं मां पश्यसि यादवीम् ।
क्लिश्यमानामनार्येण न त्रायसिव वधूं स्वकाम् ॥ २-९२-४६ (१५०७७)
यदि लालप्यमानां मां न कश्चित्किञ्चिदब्रवीत् ।
हा हताऽस्मि सुमन्दात्मा सुयोधनवशं गता ॥ २-९२-४७ (१५०७८)
न वै पाण्डुर्नरपतिर्न धर्मो न च देवराट् ।
न चायुर्नाश्विनौ वाऽपि परित्रायन्ति वै स्नुषाम् ॥
धिक्कष्टं यदि जीवेयं मन्दभाग्या पतिव्रता ॥ २-९२-४८ (१५०७९)
विदुर उवाच ॥ २-९२-५०क्ष् (१६६५)
शृणोमि वाक्यं तव राजपुत्रि
नेमे पार्थाः किञ्चिदपि ब्रुवन्ति ।
सा त्वं प्रियार्थं शृणु वाक्यमेत-
द्यदुच्यते पापमतिः कृतघ्नः ॥ २-९२-५० (१५०८०)
सुयोधनः सानुचरः सुदुष्टः
सहैव राजा निकृतः सूनुना च
यद्येष वाचं महदुच्यमानां
न श्रोष्यते पापमतिः सुदुष्टः ॥ २-९२-५१ (१५०८१)
वैशम्पायन उवाच ॥ २-९२-५२क्ष् (१६६६)
इत्येवमुक्त्वा द्रुपदस्य पुत्रीं
क्षत्ताऽब्रवीद्धृतराष्ट्रस्य पुत्रम्। २-९२-५२ (१५०८२)
मा क्लिश्यतां वै द्रुपदस्य पुत्रीं
मा त्वं चरीं द्रक्ष्यसि राजपुत्र ॥ २-९२-५३ (१५०८३)
विदुर उवाच ॥ २-९२-५४क्ष् (१६६७)

यद्येवं त्वं महाराज सङ्क्लेशयसि द्रौपदीम् ।
अचिरेणैव कालेन पुत्रस्ते सह मन्त्रिभिः ।
गमिष्यति क्षयं पापः पाण्डवक्षयकारणात् ॥ २-९२-५४ (१५०८४)
भीमार्जुनाभ्यां क्रुद्धाभ्यां माद्रीपुत्रद्वयेन च ।
तस्मान्निवारय सुतं मा विनाशं विचिन्तय ॥ २-९२-५५ (१५०८५)
वैशम्पायन उवाच ॥ २-९२-५६क्ष् (१६६८)
एतच्छ्रुत्वा मन्दबुद्धिर्नोत्तरं किञ्चिदब्रवीत् ।
ततो दुर्योधनस्तत्र दैवमोहबलात्कृतः ॥ २-९२-५६ (१५०८६)
अचिन्त्य क्षत्तुर्वचनं हर्षेणायतलोचनः ।
ऊरू दर्शयते पापो द्रौपद्या वै मुहुर्मुहुः ॥ २-९२-५७ (१५०८७)
ऊरौ सन्दर्श्यमाने तु निरीक्ष्य तु सुयोधनम् ।
वृकोदरस्तदालोक्य नेत्रे चोल्फाल्य लोहिते ॥ २-९२-५८ (१५०८८)
एतत्समीक्ष्यात्मनि चावमानं
नियम्य मन्युं बलनान्स मानी ।
राजानुजः संसदि कौरवाणां
विनिष्क्रमन्वाक्यमुवाच भीमः ॥ २-९२-५९ (१५०८९)
अहं दुर्योधनं हन्ता कर्णं हन्ता धनञ्जयः ।
शकुनिं चाक्षकितवं सहदेवो हनिष्यति ॥ २-९२-६० (१५०९०)
इदं च भूयो वक्ष्यामि सभामध्ये बृहद्वचः ।
सत्यं देवाः करिष्यन्ति यन्नो युद्धं भविष्यति ॥ २-९२-६१ (१५०९१)
सुयोधनमिमं पापं हन्ताऽस्मि गदया युधि ।
शिरः पादेन चास्याहमधिष्ठास्यामि भूतले ॥ २-९२-६२ (१५०९२)
वक्षः शूरस्य निर्वास्य परुषस्य दुरात्मनः ।
दुश्शासनस्य रुधिरं पास्यामि मृगराडिव ॥ २-९२-६३ (१५०९३)
अर्जुन उवाच ॥ २-९२-६४क्ष् (१६६९)
भीमसेन न ते सन्ति येषां वैरं त्वया सह ।
नन्दा गृहेषु न बुद्धयन्ते महद्भयम् ॥ २-९२-६४ (१५०९४)
नैव वाचा व्यवसितं भीम विज्ञायते सताम् ।
यदि स्थास्यन्ति सङ्ग्रामे क्षत्रधर्मेण वै सह ॥ २-९२-६५ (१५०९५)
दुर्योधनस्य कर्णस्य शकुनेश्च दुरात्मनः ।
दुश्शासनचतुर्थानां भूमिः पास्यति शोणितम् ॥ २-९२-६६ (१५०९६)
असूयितारं वक्तारं प्रहृष्टानां दुरात्मनाम् ।
भीमसेन नियोगात्ते हन्ताऽहं कर्णमाहवे ॥ २-९२-६७ (१५०९७)
कर्णं कर्णानुगांश्चैव रणे हन्ताऽस्मि पत्रिभिः ।
ये चान्ये विप्रयोत्स्यन्ति बुद्धिमोहेन मां नृपाः ।
तान्स्म सर्वञ्छितैर्बाणैर्नेताऽस्मि यमसादनम् ॥ २-९२-६८ (१५०९८)

चलेद्धि हिमवान्स्थानान्निष्प्रभः स्याद्दिवाकरः ।
शैत्यं सोमात्प्रणश्येत मत्सत्यं विचलेद्यदि ॥ २-९२-६९ (१५०९९)
वैशम्पायन उवाच ॥ २-९२-७०क्ष् (१६७०)
उत्युक्तवति पार्थे तु श्रीमान्माद्रवतीसुतः ।
प्रगृह्य विपुलं बाहुं सहदेवः प्रतापवान् ॥ २-९२-७० (१५१००)
सौबलस्य वधप्रेप्सुरिदं वचनमब्रवीत् ।
क्रोधसंरक्तनयनो निश्वस्य च मुहुर्मुहुः ॥ २-९२-७१ (१५१०१)
सहदेव उवाच ॥ २-९२-७२क्ष् (१६७१)
यानक्षान्मन्यसे मूढ गान्धाराणां यशोहर ।
नैते ह्यक्षाः शिता वाणास्त्वयैते समरे धृताः ॥ २-९२-७२ (१५१०२)
यथा चैवोक्तवान्भीमस्त्वामुद्दिश्य सबान्धवम् ।
कर्ताऽहं कर्मणा चास्य कुरुकार्याणि सर्वशः ।
यदि स्थस्यासि सङ्ग्रामे क्षत्रधर्मेण सौबल ॥ २-९२-७३ (१५१०३)
वैशम्पायन उवाच ॥ २-९२-७४क्ष् (१६७२)
सहदेववचः श्रुत्वा नकुलोऽपि विशाम्पते ।
दर्शनीयतमो नृणामिदं वचनमब्रवीत् ॥ २-९२-७४ (१५१०४)
नकुल उवाच ॥ २-९२-७५क्ष् (१६७३)
सुतेयं यज्ञसेनस्य द्यूतेऽस्मिन्धृतराष्ट्रजैः ।
यैर्वाचः श्राविता रूक्षा धूर्तैर्दुर्योधनप्रियैः ॥ २-९२-७५ (१५१०५)
धार्तराष्ट्रान्सुदुर्वृत्तान्मुमूर्षून्कालचोदितान् ।
दर्शयिष्यामि भूयिष्ठमहं वैवस्वतक्षयम् ॥ २-९२-७६ (१५१०६)
उलूकं च दुरात्मानं सौबलस्य प्रियं सुतम् ।
हन्ताऽहमस्मि समरे मम शत्रुं नराधमम् ॥ २-९२-७७ (१५१०७)
निदेशाद्धर्मराजस्य द्रौपद्याः पदवीं चरन् ।
नर्धार्तराष्टां पृथिवीं कर्तास्मि नचिरादिवा ॥ २-९२-७८ (१५१०८)
द्रौपद्युवाच ॥ २-९२-७९क्ष् (१६७४)
यस्माच्चोरुं दर्शयसे यस्माच्चोरुं निरीक्षसे ।
तस्मात्तव ह्यधर्मिष्ठ ऊरौ मृत्युर्भविष्यति ॥ २-९२-७९ (१५१०९)
यस्माच्चैवं क्लेशयति भ्राता ते मां दुरात्मवान् ।
तस्मादुधिरमेवास्य पास्यते वै वृकोदरः ॥ २-९२-८० (१५११०)
इमं च पापिष्ठमतिं कर्णं समुतबान्धवम् ।
सामात्यं सपरीवारं हनिष्यति धनञ्जयः ॥ २-९२-८१ (१५१११)
क्षुद्रधर्मं नैकृतिकं शकुनिं पापचेतसम् ।
सहदेवो रणे क्रुद्धो हनिष्यति सबान्धवम् ॥ २-९२-८२ (१५११२)
वैशम्पायन उवाच ॥ २-९२-८३क्ष् (१६७५)
एवमुक्ते तु वचने द्रौपद्या धर्मशीलया ।

ततोऽन्तरिक्षात्सुमहत्पुष्पवर्षमवापततम् ॥ २-९२-८३ (१५११३)
तेषां तु वचनं श्रुत्वा नोचुस्तत्र सभासदः ।
अर्जुनस्य भयाद्राजन्नभून्निश्शब्दमत्र वै ॥ ॥ २-९२-८४ (१५११४)

इति श्रीमन्महाभारते सभापर्वणि द्यूतपर्वणि द्विनवतितमोऽध्यायः ॥९२ ॥
Mahabharata - Sabha Parva - Chapter Footnotes

२-९२-१३ द्रौपदीपणनात् प्रागिति शेषः । अतो द्रौपदी न दासभावमापन्नेति भावः ॥
२-९२-१६ पश्यसितः पाशबद्धः ॥
२-९२-३३ स्रोतोभ्यः रोमकूपेभ्यः ॥

---

सभ-०९३
॥ श्रीः ॥
२.९३. अध्यायः ९३

Mahabharata - Sabha Parva - Chapter Topics
कुप्यतोऽर्जुनस्य युधिष्ठिरेण परिसान्त्वनम् ॥ १. । धृतराष्ट्रेण वरं वरयेति द्रौपदीम्प्रति चोदनम् ॥ २. । तत्प्रार्थनया धृतराष्ट्रेण युधिष्ठिरादीनामदासत्ववरदानम् ॥ ३. ।
Mahabharata - Sabha Parva - Chapter Text

वैशम्पायन उवाच ॥
द्रौपद्या वचनं श्रुत्वा चुकोपाथ धनञ्जयः ।
स तदा क्रोधताम्राक्ष इदं वचनमब्रवीत् ॥ २-९३-१ (१५११५)
अयं तु मां वारयते धर्मराजो युधिष्ठिरः ।
इत्युक्त्वा क्रोधताम्राक्षो धनुरादाय वीर्यवान् ॥ २-९३-२ (१५११६)
सव्यसाची समुत्पत्य ताञ्छत्रून्समुदैक्षत ।
उद्यतं फल्गुनं तत्र ददृशुः सर्वपार्थिवाः ॥ २-९३-३ (१५११७)
युगान्ते सर्वलोकांस्तु दहन्तमिव पावकम् ।
वीक्षमाणं धनुष्पामिं हन्तुकामं मुहुर्मुहुः ॥ २-९३-४ (१५११८)
हन्तुकामं पशून्क्रुद्धं रुद्रं दक्षक्रतौ यथा ।
तथाभूतं नरं दृष्ट्वा विषेदुस्तत्र मानवाः ॥ २-९३-५ (१५११९)
धनञ्जयस्यैव वीर्यज्ञा निराशा जीविते तदा ।
मृतभूता भवन्सर्वे नेत्रैरनिमिषैरिव ॥ २-९३-६ (१५१२०)
अर्जुनं धर्मपुत्रं च समुदैक्षन्त पार्थिवाः ।
क्रुद्धं तदाऽर्जुनं दृष्ट्वा पृथिवी च चचाल ह ॥ २-९३-७ (१५१२१)

खेचराणि च भूतानि वित्रेसुर्वै भयार्दिताः ।
नादित्यो विरराजाथ नापि वान्ति च मारुताः। २-९३-८ (१५१२२)
न चन्द्रो न च नक्षत्रं द्यौर्दिशोन न विभान्ति ह ।
सर्वमाविद्धमभवज्जगत्स्थावरजङ्गमम् ॥ २-९३-९ (१५१२३)
उत्पतन्स वभौ पार्तो दिवाकर इवाम्बरे। २-९३-१० (१५१२४)
पार्थं दृष्ट्वा क्रुद्धं कालान्तकयमोपमम् ।
भीमसेनो मुदा युक्तो युद्धायैव मनो दधे ॥ २-९३-११ (१५१२५)
पाञ्चाली च ददर्शाथ सुसङ्क्रुद्धं धनञ्जयम् ।
हन्तुकामं रिपून्मर्वान्सुपर्णमिव पन्नगान् ॥ २-९३-१२ (१५१२६)
दुष्प्रेक्षः सोऽभवत्क्रुद्धो युगान्ताग्निरिव ज्वलन् ।
तं दृष्ट्वा तेजसा युक्तं विव्यधुः पुरवासिनः ॥ २-९३-१३ (१५१२७)
उत्पतन्तं तु वेगेन ततो दृष्ट्वा धनञ्जयम् ।
जग्राह स तदा राजा पुरुहूतो यथा हरिम् ॥ २-९३-१४ (१५१२८)
उवाच स घृणी ज्येष्ठो धर्मराजो युधिष्ठिरः ।
मा पार्थ साहसं कार्षीर्मा विनाशं गमेद्यशः ॥ २-९३-१५ (१५१२९)
अहमेतान्पापकृतो द्यूतज्ञान्दग्धुमुत्सहे ।
कन्त्वसत्यगतिं दृष्ट्वा क्रोधो नाशमुपैति मे ॥ २-९३-१६ (१५१३०)
त्वमिमं जगतोऽर्थे वै कोपं संयच्छ पाण्डव ॥ २-९३-१७ (१५१३१)
वैशम्पायन उवाच ॥ २-९३-१८क्ष् (१६७६)
एवमुक्तस्तदा राज्ञा पाण्डवोऽथ धनञ्जयः ।
क्रोधं संशमयन्पार्थो धार्तराष्ट्रं प्रति स्थितः ॥ २-९३-१८ (१५१३२)
तस्मिन्वीरे प्रशान्ते तु पाण्डवे फल्गुने पुनः ।
सुसम्प्रहृष्टमभवज्जगत्स्थावरजङ्गमम् ॥ २-९३-१९ (१५१३३)
वारितं च तथा दृष्ट्वा भ्रात्रा पार्थं वृकोदरः ।
बभूव विमना राजन्नभून्निश्शब्दमत्र वै ॥ २-९३-२० (१५१३४)
ततो राज्ञो धृतराष्ट्रस्य गेहे
गोमायुरुच्चैर्व्याहरदग्निहोत्रे ।
तं रासभाः प्रत्यभाषन्त राज-
न्समन्ततः पक्षिणश्चैव रौद्राः ॥ २-९३-२१ (१५१३५)
तं वै शब्दं विदुरस्तत्त्ववेदी
शुश्राव घोरं सुबलात्मजा च ।
भीष्मो द्रोणो गौतमश्चापि विद्वान्
स्वस्तिस्वस्तीत्यपि चैवाहुरुच्चैः ॥ २-९३-२२ (१५१३६)
ततो गान्धारी विदुरश्चापि विद्वां-
स्तमुत्पातं घोरमालक्ष्य राज्ञे ।
निवेदयामासतुरार्तवत्तदा

ततो राजा वाक्यमिदं बभाषे ॥ २-९३-२३ (१५१३७)
धृतराष्ट्र उवाच ॥ २-९३-२४क्ष् (१६७७)
हतोऽसि दुर्योधन मन्दबुद्धे
यस्त्वं सभायां कुरुपुङ्गवानाम् ।
स्त्रियं समाभाषसि दुर्विनीत
विशेषतो द्रौपदीं धर्मपत्नीम् ॥ २-९३-२४ (१५१३८)
वैशम्पायन उवाच ॥ २-९३-२५क्ष् (१६७८)
एवमुक्त्वा धृतराष्ट्रो मनीषी
हितान्वेषी बान्धवानामपायात् ।
कृष्णां पाञ्चालीमब्रवीत्सान्त्वपूर्वं २-९३-२५ (१५१३९)
विमृश्यैतत्प्रज्ञया तत्त्वबुद्धिः ॥ २-९३-२६ (१५१४०)
धृतराष्ट उवाच ॥
वरं वृणीष्व पाञ्चालि मत्तो यदभिवाञ्छसि। २-९३-२६क्ष् (१६७९)
वधूनां हि विशिष्टा मे त्वं धर्मपरमा सती ॥ २-९३-२७ (१५१४१)
द्रौपद्युवाच ॥ २-९३-२७क्ष् (१६८०)
ददासि चेद्वरं मह्यंवृणोमि भरतर्षभ ।
सर्वधर्मानुगः श्रीमानदासोऽस्तु युधिष्ठिरः ॥ २-९३-२७ (१५१४२)
मनस्विनमजानन्तो मैवं ब्रूयुः कुमारकाः ।
एतं वै दासपुत्रेति प्रतिविन्ध्यं ममात्मजम् ॥ २-९३-२८ (१५१४३)
राजपुत्रः पुरा भूत्वा यथा नान्यः पुमान्क्वचित् ।
लालितो दासपुत्रत्वं पश्यन्नश्येद्धि भारत ॥ २-९३-२९ (१५१४४)
धृतराष्ट्र उवाच ॥ २-९३-३०क्ष् (१६८१)
एवं भवतु कल्याणि यथा त्वमभिभाषसे ।
द्वितीयं ते वरं भद्रे ददानि वरयस्व ह ।
मनो हि मे वितरति नैकं त्वं वरमर्हसि ॥ २-९३-३० (१५१४५)
द्रौपद्युवाच ॥ २-९३-३१क्ष् (१६८२)
सरथौ सधनुष्कौ न भीमसेनधनञ्जयौ ।
यमौ च वरये राजन्नदासान्स्ववशानहम् ॥ २-९३-३१ (१५१४६)
धृतराष्ट्र उवाच ॥ २-९३-३२क्ष् (१६८३)
तथाऽस्तु ते महाभागे यथा त्वं नन्दिनीच्छसि ।
तृतीयं वरयास्मत्तो नासि द्वाभ्यां सुसंस्कृता। २-९३-३२ (१५१४७)
त्वं हि सर्वस्नुषाणां मे श्रेयसी धर्मचारिणी ॥ २-९३-३३ (१५१४८)
द्रौपद्युवाच। २-९३-३३क्ष् (१६८४)
लोभो धर्मस्य नाशाय भगवन्नाहमुत्सहे ।
अनर्हा वरमादातुं तृतीयं राजसत्तम ॥ २-९३-३३ (१५१४९)
एकामाहुर्वैश्यवरं द्वौ तु क्षत्रस्त्रियो वरौ ।

त्रयस्तु राज्ञो राजेन्द्र ब्राह्मणस्य शतं वराः ॥ २-९३-३४ (१५१५०)
पापीयांस इमे भूत्वा सन्तीर्णाः पतयो मम ।
वेत्स्यन्ति चैव भद्राणि राजन्पुण्येन कर्मणा ॥ ॥ २-९३-३५ (१५१५१)

इति श्रीमन्महाभारते सभापर्वणि द्यूतपर्वणि त्रिनवतितमोऽध्यायः ॥९३ ॥
Mahabharata - Sabha Parva - Chapter Footnotes

२-९३-२१ अग्निहोत्रे गृह्याग्निसमीपे ॥

---

सभ-०९४
॥ श्रीः ॥
२.९४. अध्यायः ९४

Mahabharata - Sabha Parva - Chapter Topics
कर्णप्रलपितम् ॥ १.। क्रुद्धं भीमं निवार्य युधिष्ठिरस्य
धृतराष्ट्रसमीपगमनम् ॥ २.।
Mahabharata - Sabha Parva - Chapter Text

कर्ण उवाच ॥
या नः श्रुता मनुष्येषु स्त्रियो रूपेण संमताः ।
तासामेतादृशं कर्म न कस्याश्चन शुश्रुम ॥ २-९४-१ (१५१५२)
क्रोधाविष्टेषु पार्थेषु धार्तराष्ट्रेषु चाप्यति ।
द्रौपदी पाण्डुपुत्राणां कृष्णा शान्तिरिहाभवत् ॥ २-९४-२ (१५१५३)
अप्लवेऽम्भसि मग्नानामप्रतिष्ठे निमज्जताम् ।
पाञ्चाली पाण्डुपुत्राणां नौरेषां पारगाऽभवत् ॥ २-९४-३ (१५१५४)
वैशम्पायन उवाच ॥ २-९४-४क्ष् (१६८५)
तद्वै श्रुत्वा भीमसेनः कुरुमध्येऽत्यमर्षणः ।
स्त्री गतिः पाण्डुपुत्राणामित्युवाच सुदुर्मनाः ॥ २-९४-४ (१५१५५)
भीम उवाच ॥ २-९४-५क्ष् (१६८६)
त्रीणि ज्योतींषि पुरुष इति वै देवलोऽब्रवीत् ।
अपत्यं कर्म विद्या च यतः सृष्टाः प्रजास्ततः ॥ २-९४-५ (१५१५६)
अमेध्ये वै गतप्रामे शून्ये ज्ञातिभिरुज्झिते ।
देहे त्रितयमेवैतत्पुरुषस्योपयुज्यते ॥ २-९४-६ (१५१५७)
तन्नो ज्योतिरभिहतं दाराणामभिमर्शनात् ।
धनञ्जय कथं स्वित्स्यादपत्यमभिमृष्टजम् ॥ २-९४-७ (१५१५८)
अर्जुन उवाच ॥ २-९४-८क्ष् (१६८७)

न चैवोक्ता न चानुक्ता हीनतः परुषा गिरः ।
भारत प्रतिजल्पन्ति सदा तूत्तमपूरुषाः ॥ २-९४-८ (१५१५९)
स्मरन्ति सुकृतान्येव न वैराणि कृतान्यपि ।
सन्तः प्रतिविजानन्तो लब्धसम्भावनाः स्वयम् ॥ २-९४-९ (१५१६०)
भीम उवाच ॥ २-९४-१०क्ष् (१६८८)
इहैवैतानहं सर्वान्हन्मि शत्रून्समागतान् ।
अथ निष्क्रम्य राजेन्द्र समूलान्हन्मि भारत ॥ २-९४-१० (१५१६१)
किं नो विवदितेनेह किमुक्तेन च भारत ।
अद्यैवैतान्निहन्मीह प्रशाधि पृथिवीमिमाम् ॥ २-९४-११ (१५१६२)
इत्युक्त्वा भीमसेनस्तु कनिष्ठैर्भ्रातृभिः सह ।
मृगमध्ये यथा सिंहो मुहुर्मुहुरुदैक्षत ॥ २-९४-१२ (१५१६३)
सान्त्व्यमानो वीक्षमाणः पार्थेनाक्लिष्टकर्मणा ।
खिद्यत्येव महाबाहुरन्तर्दाहेन वीर्यवान् ॥ २-९४-१३ (१५१६४)
क्रुद्धस्य तस्य स्रोतोभ्यः कर्णादिभ्यो नराधिप ।
सधूमः सस्फुलिङ्गार्चिः पावकः समजायत ॥ २-९४-१४ (१५१६५)
भ्रुकुटीकृतदुष्प्रेक्ष्यमभवत्तस्य तन्मुखम् ।
युगान्तकाले सम्प्राप्ते कृतान्तस्येव रूपिणः ॥ २-९४-१५ (१५१६६)
युधिष्ठिरस्तमावार्य बाहुना बाहुशालिनम् ।
मैवमित्यब्रवीच्चैनं जोषमास्वेति भारत ॥ २-९४-१६ (१५१६७)
निवार्य च महाबाहुं कोपसंरक्तलोचनम् ।
पितरं समुपातिष्ठद्धृतराष्ट्रं कृताञ्जलिः ॥ ॥ २-९४-१७ (१५१६८)

इति श्रीमन्महाभारते सभापर्वणि द्यूतपर्वणि चतुर्नवतितमोऽध्यायः
॥९४ ॥

Mahabharata - Sabha Parva - Chapter Footnotes

२-९४-१६ जोषं तूष्णीम् ॥

---

सभ-०९५
॥ श्रीः ॥
२.९५. अध्यायः ९५

Mahabharata - Sabha Parva - Chapter Topics

धृतराष्ट्रानुज्ञया सभ्रातृकस्य युधिष्ठिरस्य इन्द्रप्रस्थगमनम्
॥ १.।

Mahabharata - Sabha Parva - Chapter Text

युधिष्ठर उवाच ॥
राजन्किं करवामस्ते प्रशाध्यस्मांस्त्वमीश्वरः ।
नित्यं हि स्थातुमिच्छामस्तव भारत शासने ॥ २-९५-१ (१५१६९)
धृतराष्ट्र उवाच ॥ २-९५-२क्ष् (१६८९)
अजातशत्रो भद्रं ते अरिष्टं स्वस्ति गच्छत ।
अनुज्ञाताः सहधनाः स्वराज्यमनुशासत ॥ २-९५-२ (१५१७०)
इदं चैवावबोद्धव्यं वृद्धस्य मम शासनम् ।
मया निगदितं सर्वं पथ्यं निःश्रेयसं परम् ॥ २-९५-३ (१५१७१)
वेत्थ त्वं तात धर्माणां गतिं सूक्ष्मां युधिष्ठिर ।
विनीतोऽसि महाप्राज्ञ वृद्धानां पर्युपासिता ॥ २-९५-४ (१५१७२)
यतो बुद्धिस्ततः शान्तिः प्रशमं गच्छ भारत ।
नादारुणि पतेच्छस्त्रं दारुण्येतन्निपात्यते ॥ २-९५-५ (१५१७३)
न वैराण्यभिजानन्ति गुणान्पश्यन्ति नागुणान् ।
विरोधं नाधिगच्छन्ति ये त उत्तमपूरुषाः ॥ २-९५-६ (१५१७४)
स्मरन्ति सुकृतान्येव न वैराणि कृतान्यपि ।
सन्तः परार्थं कुर्वाणा नावेक्षन्ति प्रतिक्रियाम् ॥ २-९५-७ (१५१७५)
संवादे परुषाण्याहुर्युधिष्ठिर नराधमाः ।
प्रत्याहुर्मध्यमास्त्वेतेऽनुक्ताः नराधमाः। २-९५-८ (१५१७६)
न चोक्ता नैव चानुक्तास्त्वहिताः परुषा गिरः ।
प्रतिजल्पन्ति वै धीराः सदा तूत्तमपुरुषाः ॥ २-९५-९ (१५१७७)
स्मरन्ति सुकृतान्येव न वैराणि कृतान्यपि ।
सन्तः प्रतिविजानन्तो लब्ध्वा प्रत्ययमात्मनः ॥ २-९५-१० (१५१७८)
असम्भिन्नार्यमर्यादाः साधवः प्रियदर्शनाः ।
तथा चरित्तंमार्येण त्वयाऽस्मिन्सत्समागमे ॥ २-९५-११ (१५१७९)
दुर्योधनस्य पारुष्यं तत्तात हृदि मा कृथाः ।
मातरं चैव गान्धारीं मां च त्वं गुणकाङ्क्षया ॥ २-९५-१२ (१५१८०)
उपस्थितं वृद्धमन्धं पितरं पश्य भारत ।
प्रेक्षापूर्वं मया द्यूतमिदमासीदुपेक्षितम् ॥ २-९५-१३ (१५१८१)
मित्राणि द्रष्टुकामेन पुत्राणां च बलाबलम् ।
अशोच्याः कुरवो राजन्येषां त्वमनुशासिता ॥ २-९५-१४ (१५१८२)
मन्त्री च विदुरो धीमान्सर्वशास्त्रविशारदः ।
त्वयि धर्मोऽर्जुने धैर्यं भीमसेने पराक्रमः ॥ २-९५-१५ (१५१८३)
शुद्धा च गुरुशुश्रूषा यमयोः पुरुषाग्र्ययोः ।
अजातशत्रो भद्रं ते खाण्डवप्रस्थमाविश ।
भ्रातृभिस्तेऽस्तु सौभ्रात्रं धर्मे ते धीयताम मनः ॥ २-९५-१६ (१५१८४)
वैशम्पायन उवाच ॥ २-९५-१७क्ष् (१६९०)

इत्युक्तो भरतश्रेष्ठ धर्मराजो युधिष्ठिरः ।
कृत्वाऽऽर्यसमयं सर्वं प्रतस्थे भ्रातृभिः सह ॥ २-९५-१७ (१५१८५)
ते रथान्मेघसङ्काशानास्थाय सह कृष्णया ।
प्रययुर्हृष्टमनस इन्द्रप्रस्थं पुरोत्तमम् ॥ ॥ २-९५-१८ (१५१८६)

इति श्रीमन्महाभारते सभापर्वणि द्यूतपर्वणि
पञ्चनवतितमोऽध्यायः ॥९५ ॥

---

सभ-०९६
॥ श्रीः ॥
२.९६. अध्यायः ९६

Mahabharata - Sabha Parva - Chapter Topics
दुर्योधनेन धृतराष्ट्रसमीपे कार्तवीर्यार्जुनोपाख्यानकथनम् ॥ १.।
Mahabharata - Sabha Parva - Chapter Text

जनमेजय उवाच ॥
अनुज्ञातांस्तान्विदित्वा सरत्नधनसञ्जयान् ।
पाण्डवान्धार्तराष्ट्राणां कथमासीन्मनस्तदा ॥ २-९६-१ (१५१८७)
वैशम्पायन उवाच ॥ २-९६-२क्ष् (१६९१)
अनुज्ञातांस्तान्विदित्वा धृतराष्ट्रेण धीमता ।
राजन्दुः शासनः क्षिप्रं जगाम भ्रातरं प्रति ॥ २-९६-२ (१५१८८)
दुर्योधनं समासाद्य सामात्यं भरतर्षभ ।
दुःखार्तो भरतश्रेष्ठ इदं वचनमब्रवीत् ॥ २-९६-३ (१५१८९)
दुःशासन उवाच ॥ २-९६-४क्ष् (१६९२)
दुःखेनैतत्समानीतं स्थविरो नाशयत्यसौ ।
शत्रुसाद्गमयद्द्रव्यं तद्बुध्यध्वं महारथाः ॥ २-९६-४ (१५१९०)
अथ दुर्योधनः कर्णः शकुनिश्चापि सौबलः ।
मिथः सङ्गम्य सहिताः पाण्डवान्प्रति मानिनः ॥ २-९६-५ (१५१९१)
वैचित्रवीर्यं राजानं धृतराष्ट्रं मनीषिणम् ।
अभिगम्य त्वरायुक्ताः श्लक्ष्णं वचनमब्रुवन् ॥ २-९६-६ (१५१९२)
दुर्योधन उवाच ॥ २-९६-७क्ष् (१६९३)
न त्वयेदं श्रुतं राजन्यज्जगाद बृहस्पतिः ।
शक्रस्य नीतिं प्रवदन्विद्वान्देवपुरोहितः ॥ २-९६-७ (१५१९३)
सर्वोपायैर्निहन्तव्याः शत्रवः शत्रुसूदन ।
पुरा युद्धाद्बलाद्वापि प्रकुर्वन्ति तवाहितम् ॥ २-९६-८ (१५१९४)
ते वयं पाण्डवधनैः सर्वान्सम्पूज्य पार्थिवान् ।

यदि तान्योधयिष्यामः किं वै निः परिहास्यति ॥ २-९६-९ (१५१९५)
अहीनाशीविषान्क्रुद्धान्नाशाय समुपस्थितान् ।
कृत्वा कण्ठे च पृष्ठे च कः समुत्स्रष्टुमर्हति ॥ २-९६-१० (१५१९६)
आत्तशस्त्रा रथगताः कुपितास्तात पाण्डवाः ।
निःशेषान्नः करिष्यन्ति क्रुद्धा ह्याशीविषा इव ॥ २-९६-११ (१५१९७)
सन्नद्धो ह्यर्जुनो याति विधृत्य परमेषुधी ।
गाण्डीवं मुहुरादत्ते निःश्वसंश्च निरीक्षते ॥ २-९६-१२ (१५१९८)
गदां गुर्वी समुद्यम्य त्वरितश्च वृकोदरः ।
स्वरथं योजयित्वाऽशु निर्यात इति नः श्रुतम् ॥ २-९६-१३ (१५१९९)
नकुलः खड्गमादाय चर्म चाप्यर्धचन्द्रवत् ।
सहदेवश्च राजा च चक्रुराकारमिङ्गितैः ॥ २-९६-१४ (१५२००)
ते त्वास्थाय रथान्सर्वे बहुशस्त्रपरिच्छदान् ।
अभिघ्नान्तो रथव्रातान्सेनायोगाय निर्ययुः ॥ २-९६-१५ (१५२०१)
न क्षंस्यन्ते तथाऽस्माभिर्जातु विप्रकृता हि ते ।
द्रौपद्याश्च परिक्लेशं कस्तेषां क्षन्तुमर्हति ॥ २-९६-१६ (१५२०२)
ग न पश्यामि रणे क्रुद्धं बीभत्सुं प्रतिवारणम् ।
भीष्मो द्रोणश्च कर्णश्च द्रौणिश्च रथिनां वरः ॥ २-९६-१७ (१५२०३)
कृपश्च वृषसेनश्च विकर्णश्च जयद्रथः ।
वाह्लीकः सोमदत्तश्च भूरिर्भूरिश्रवाः शलः ॥ २-९६-१८ (१५२०४)
शकुनिः ससुतश्चैव नृपाश्चान्ये च कौरवाः ।
नैते सर्वे रणोद्युक्ताः पार्थं सोढुमशक्नुवन् ॥ २-९६-१९ (१५२०५)
अर्जुनेन समो लोके नास्ति वीर्ये धनुर्धरः ।
योऽर्जुनेनार्जुनस्तुल्यो द्विबाहुर्बहुबाहुना ॥ २-९६-२० (१५२०६)
धृतराष्ट्र उवाच ॥ २-९६-२१क्ष् (१६९४)
कस्त्वयोक्तः पुमान्वीरो बीभत्सुसमविक्रमः ।
तं ये ब्रूहि महावीर्यं श्रोतुमिच्छामि पुत्रक ॥ २-९६-२१ (१५२०७)
दुर्योधन उवाच ॥ २-९६-२२क्ष् (१६९५)
कार्तवीर्यस्य चरितं शृणु राजन्महात्मनः ।
अव्यक्तप्रभवो ब्रह्मा सर्वलोकपितामहः ॥ २-९६-२२ (१५२०८)
ब्रह्मणोऽत्रिः सुतो विद्वानत्रेः पुत्रो निशाकरः ।
सोमस्य तद्व बुधः पुत्रो बुधस्य तु पुरूरवाः ॥ २-९६-२३ (१५२०९)
तस्याप्यध सुतोऽप्यायुरायोस्तु नहुषः सुतः। २-९६-२४ (१५२१०)
स चार्जुनोऽथ तेजस्वी तपः परमदुश्चरम् ।
------ सोऽर्जुनोऽत्रिसुतं मुनिम् ॥ २-९६-३० (१५२१६)
तस्य दत्तो वरान्प्रादाच्चतुरः पार्थिवस्य वै ।
पूर्वं बाहुसहस्रं तु प्रार्थितः परमो वरः ॥ २-९६-३१ (१५२१७)

अधर्मे प्रीयमाणस्य सद्भिस्तत्र निवारणम् ।
धर्मेण पृथिवीं जित्वा धर्मेणैव हि रञ्जनम् ॥ २-९६-३२ (१५२१८)
सङ्ग्रामान्सुबहून्कृत्वा हत्वा चारीन्सहस्रशः ।
सङ्ग्रामे यतमानस्य वधश्चैवाधिकाद्रणे ॥ २-९६-३३ (१५२१९)
तस्य बाहुसहस्रं तु युध्यतः किल भारत ।
रथो ध्वजश्च सञ्जज्ञ इत्येवं मे श्रुतं परा ॥ २-९६-३४ (१५२२०)
तथेयं पृथिवी राजन्तसप्तद्वीपा सपत्तना ।
ससमुद्राकरा तात विधिनोग्रेण वै जिता ॥ २-९६-३५ (१५२२१)
चार्जुनोऽथ तेजस्वी सप्तद्वीपेश्वरोऽभवत् ।
च राजा महायज्ञानाजहार महाबलः ।
प्रशशास महाबाहुर्महीं स च समा बहूः ॥ २-९६-३६ (१५२२२)
ततोऽर्जुनः कदाचिद्वै राजन्माहिष्मतीपतिः ।
नर्मदां भरतश्रेष्ठं तां तु दारैर्ययौ सह ॥ २-९६-३७ (१५२२३)
ततस्तां स नदीं गत्वा प्रविश्यन्तर्जले तदा ।
कर्तुं राजञ्जलक्रीडां ततो राजोपचक्रमे ॥ २-९६-३८ (१५२२४)
तस्मिन्नेव ततः काले रावमो राक्षसैः सह ।
लङ्काया ईश्वरस्तात तं देशं प्रययौ बली ॥ २-९६-३९ (१५२२५)
ततस्तमर्जुनं दृष्ट्वा नर्मदायां दशाननः ।
नित्यं क्रोधपरो धीरो वरदानेन मोहितः ॥ २-९६-४० (१५२२६)
अभ्यघावत्सुसङ्क्रुद्धो महेन्द्रं शम्बरो यथा ।
अर्जुनोऽप्यथ तं दृष्ट्वा रावणं प्रत्यवारयत् ॥ २-९६-४१ (१५२२७)
ततस्तौ चक्रतुर्युद्धं रावणश्चार्जुनश्च वै ।
ततस्तु दुर्जयं वीरं वरदानेन दर्पितम् ॥ २-९६-४२ (१५२२८)
राक्षसेन्द्रं मनुष्येन्द्रो जित्वा बध्वा रणे बलात् ।
बध्वा धनुर्ज्यया राजन्विवेशाथ पुरीं स्वकाम् ॥ २-९६-४३ (१५२२९)
स तु तं बन्धितं श्रुत्वा पुलस्त्यो रावणं तदा ।
मोक्षयाणास बन्धाद्वै पुरे दृष्ट्वाऽर्जुनं तदा ॥ २-९६-४४ (१५२३०)
ततः कदाचित्तेजस्वी कार्तवीर्योर्जुनो बली ।
समुद्रतीरं गत्वाथ विरचन्दर्पमोहितः ॥ २-९६-४५ (१५२३१)
अवाकिरच्छितशरैः समुद्रं स तु भारत ।
तं समुद्रो नमस्कृत्य कृताञ्जलिरभाषत ॥ २-९६-४६ (१५२३२)
आशुगान्वीर मा मुञ्च ब्रूहि किं करवाणि ते ।
मदाश्रयाणि सत्वानि त्वद्विसृष्टैर्महेषुभिः ।
बाध्यन्ते राजशार्दूल तेभ्यो देह्यभयं विभो ॥ २-९६-४७ (१५२३३)
अर्जुन उवाच ॥ २-९६-४८क्ष् (१६९६)
देहि सिन्धुपते युद्धमद्यैव त्वरया मम ।

अथवा पीडयामि त्वां तस्मात्त्वं कुरु माचिरम् ॥ २-९६-४८ (१५२३४)
समुद्र उवाच ॥ २-९६-४९क्ष् (१६९७)
लोके राजन्महावीर्या बहवो निवसन्ति ये ।
तेषामेकेन राजेन्द्र कुरु युद्धं महाबल ॥ २-९६-४९ (१५२३५)
अर्जुन उवाच ॥ २-९६-५०क्ष् (१६९८)
मत्समो यदि सङ्ग्रामे वरायुधधरः क्वचित् ।
विद्यते तं ममाचक्ष्व यः समासेत मा मृधे ॥ २-९६-५० (१५२३६)
समुद्र उवाच ॥ २-९६-५१क्ष् (१६९९)
महर्षिर्जमदग्निस्तु यदि राजन्परिश्रुतः ।
तस्य पुत्रो रणं दातुं यथावद्वै तवार्हति ॥ २-९६-५१ (१५२३७)
दुर्योधन उवाच ॥ २-९६-५२क्ष् (१७००)
समुद्रस्य वचः श्रुत्वा राजा माहिष्मतीपतिः ।
नारदस्य च वै पूर्वं क्रोधेन महता वृतः ॥ २-९६-५२ (१५२३८)
ततः प्रतिययौ शीघ्रं क्रोधेन सह भारत ।
स तमाश्रममागत्य काममेवान्वपद्यत ॥ २-९६-५३ (१५२३९)
स कामं प्रतिकूलानि चकार सह बन्धुभिः ।
आयासं जनयामास रामस्य स महात्मनः ॥ २-९६-५४ (१५२४०)
ततस्तेजः प्रजज्वाल रामस्यामिततेजसः ।
प्रदहन्निव सैन्यानि रश्मिमानिव तेजसा ॥ २-९६-५५ (१५२४१)
अथ तौ चक्रतुर्युद्धं वृत्रवासवयोरिव ॥ २-९६-५६ (१५२४२)
ततः परशुमादाय नृपं बाहुसहस्रिणम् ।
चिच्छेद सहसा रामो बहुशाखमिव द्रुमम् ॥ २-९६-५७ (१५२४३)
तं हतं पतितं दृष्ट्वा समेतास्तस्य बान्धवाः ।
असीनादाय शक्तीश्च रामं ते प्रत्यवारयन् ॥ २-९६-५८ (१५२४४)
रामोऽपि रथमास्थाय धनुरायम्य सत्वरः ।
विसृजन्परमास्त्राणि व्यधमत्पार्थिवान्बली ॥ २-९६-५९ (१५२४५)
ततस्तु क्षत्रिया राजञ्जामदग्न्यभयार्दिताः ।
विविशुर्गिरिदुर्गाणि मृगाः सिंहभयादिव ॥ २-९६-६० (१५२४६)
तेषां स्वविहितं कर्म तद्भयान्नानुतिष्ठति ।
प्रजा वृषलतां प्राप्ता ब्राह्मणानामदर्शनात् ॥ २-९६-६१ (१५२४७)
तथा च द्रविडाः काचाः पुण्डाश्च शबरैः सह ।
वृषलत्वं परिगता विच्छिन्नाः क्षत्रधर्मिणः ॥ २-९६-६२ (१५२४८)
ततस्तु हतवीरासु क्षत्रियासु पुनः पुनः ।
द्विजैरभ्युदितं क्षत्रं तानि रामो निहत्य च ॥ २-९६-६३ (१५२४९)
ततस्त्रिस्सप्तमे याते रामं वागशरीरिणी ।
दिव्या प्रोवाच मधुरा सर्वलोकपरिश्रुता ॥ २-९६-६४ (१५२५०)

रामराम निवर्तस्व स्वगुणं नात्र पश्यसि ।
क्षत्रबन्धूनिमान्प्रामैर्विप्रयुज्य पुनः पुनः ॥ २-९६-६५ (१५२५१)
तथैव तं महात्मानमृचीकप्रमुखास्तथा ।
रामराम महावीर्य निवर्तस्वेत्यथाब्रुवन् ॥ २-९६-६६ (१५२५२)
पितुर्वधमसमृष्यंस्तु रामः प्रोवाच तानृषीन् ।
नार्हा हन्त भवन्तो मां निवारयितुमित्युत ॥ २-९६-६७ (१५२५३)
पितर ऊचुः। २-९६-६८क्ष् (१७०१)
नार्हसि क्षत्रबन्धूंस्त्वं निहन्तुं जयतां वर ।
न हि युक्तं त्वया तात ब्राह्मणेनसता नृपान् ॥ २-९६-६८ (१५२५४)
दुर्योधन उवाच ॥ २-९६-६९क्ष् (१७०२)
पितॄणां वचनं श्रुत्वा क्रोधं त्यक्त्वा स भार्गवः ।
अश्वमेधसहस्राणि नरमेधशतानि च ॥ २-९६-६९ (१५२५५)
इष्ट्वा सागरपर्यन्तां काश्यपाय ददौ महीम् ।
तेन रामेण सङ्ग्रामे तुल्यस्तात दयञ्जयः ॥ २-९६-७० (१५२५६)
कार्तवीर्येण च रणे तुल्यः पार्थो न संशयः ।
रणे विक्रम्य राजेन्द्र पार्थं जेतुं न शक्यते ॥ ॥ २-९६-७१ (१५२५७)

इति श्रीमन्महाभारते सभापर्वणि अनुद्यूतपर्वणि
षण्णवतितमोऽध्यायः ॥९६ ॥
Mahabharata - Sabha Parva - Chapter Footnotes

२-९६-४ गमयत् अगमयत् ॥
२-९६-९ परिहास्यति नङ्क्ष्यति ॥

---

सभ-०९७
॥ श्रीः ॥
२.९७. अध्यायः ९७

Mahabharata - Sabha Parva - Chapter Topics
दुर्योधनेन धृतराष्ट्रसमीपे अर्जुनप्रभाववर्णनम्
॥ १.। दुर्योधनदुर्बोधनेन धृतराष्ट्रस्य पुनर्द्यूताय
पाण्डवानयनाभ्यनुज्ञा ॥ २.।
Mahabharata - Sabha Parva - Chapter Text

दुर्योधन उवाच ॥
शृणु राजन्पुराऽचिन्त्यानर्जुनस्य च साहसान् ।

अर्जुनो धन्विनां श्रेष्ठो दुष्करं कृतवान्पुरा ॥ २-९७-१ (१५२५८)
द्रुपदस्य पुरे राजन्द्रौपद्याश्च स्वयंवर ॥
आबालवृद्धसङ्क्षोभे सर्वक्षत्रसमागमे ।
क्षिप्रकारी जले मत्स्यं दुर्निरीक्ष्यं ससर्ज ह ॥ २-९७-२ (१५२५९)
सर्वैर्नृपैरसाध्यं तत्कार्मुकप्रवरं च वै ।
क्षणेन सज्यमकरोत्सर्वक्षत्रस्य पश्यतः ॥ २-९७-३ (१५२६०)
ततो यन्त्रमयं विध्वा विसारं फल्गुनो बली ।
कृष्णया हेममाल्येन स्कन्धे स परिवेष्टितः ॥ २-९७-४ (१५२६१)
ततस्तया वृतं पार्थं दृष्ट्वा सर्वे नृपास्तदा ।
रोषात्सर्वायुधान्गृह्य क्रुद्धा वीरा महौजसः ।
वैकर्तनं पुरस्कृत्य सर्वे पार्थमुपाद्रवन् ॥ २-९७-५ (१५२६२)
स सर्वान्पार्थिवान्दृष्ट्वा क्रुद्धान्पार्थो महाबलः ।
वारयित्वा शरैस्तीक्ष्णैरजयत्तत्र स स्वयम् ॥ २-९७-६ (१५२६३)
जित्वा तु तान्महीपालान्सर्वान्कर्णपुरोगमान् ।
लेभे कृष्णां शुभां पार्थो युध्वा वीर्यबलात्तदा ॥ २-९७-७ (१५२६४)
सर्वक्षत्रसमूहेषु अम्बां भीष्मो यथा पुरा ।
ततः कदाचिद्बीभत्सुस्तीर्थयात्रां ययौ स्वयम् ॥ २-९७-८ (१५२६५)
अथोलूपीं शुभां तात नागराजसतां तदा ।
नागेष्वाप वराग्र्येषु प्रार्थितोऽथ यथा तथा ॥ २-९७-९ (१५२६६)
ततो गोदावरीं कृष्णां कावेरीं चावगाहत ।
तत्र पाण्ड्यं समासाद्य तस्य कन्यामवाप सः ॥ २-९७-१० (१५२६७)
लब्ध्वा जिष्णुर्मुदं तत्र ततो याम्यां दिशं ययौ ॥ २-९७-११ (१५२६८)
स दक्षिणं समुद्रान्तं गत्वा चाप्सरसां च वै ।
कुमारतीर्थमासाद्य मोक्षयामास चार्जुनः ॥ २-९७-१२ (१५२६९)
ग्राहरूपाश्च ताः पञ्च अतिशौर्येण वै बलात् ।
कन्यातीर्थं समभ्येत्य ततो द्वारवतीं ययौ ॥। २-९७-१३ (१५२७०)
तत्र कृष्णनिदेशात्स सुभद्रां प्राप्य फल्गुनः ।
तामारोप्य रथोपस्थे प्रययौ स्वपुरीं प्रति ॥ २-९७-१४ (१५२७१)
अथादाय गते पार्थे ते श्रुत्वा सर्वयादवाः ।
तमभ्यधावन्त्सङ्क्रुद्धाः सिंहव्याघ्रगणा इव ॥ २-९७-१५ (१५२७२)
प्रद्युम्नः कृतवर्मा च गदः सारणसात्यकी ।
आहुकश्चैव साम्बश्च चारुदेष्णो विदूरथः ॥ २-९७-१६ (१५२७३)
अन्ये च यादवाः सर्वे बलदेवपुरोगमाः ।
एकमेव परे कृष्णं गजवाजिरथैर्युताः ॥ २-९७-१७ (१५२७४)
अथासाद्य वने यान्तं परिवार्य धनञ्जयम् ।
चक्रुर्युद्धं सुसङ्क्रुद्धा बहुकोट्यश्च यादवाः ॥ २-९७-१८ (१५२७५)

एक एव तु पार्थस्तैर्युद्धं चक्रे सुदारुणम् ।
तेन तेषां समं युद्धं मुहूर्तं प्रबभूव ह ॥ २-९७-१९ (१५२७६)
ततः पार्थो रणे सर्वान्वारयित्वा शितैः शरैः ।
बलाद्विजित्य राजेन्द्र वीरस्तान्सर्वयादवान् ।
तां सुभद्रामथादाय शक्रप्रस्थं विवेश ह ॥ २-९७-२० (१५२७७)
भूयः शृणु महाराज फल्गुनस्य च साहसम् ।
ददौ स वह्नेर्बिभत्सुः प्रार्थितं खाण्डवं वनम् ॥ २-९७-२१ (१५२७८)
लब्धमात्रे तु तेनाथ भगवान्हव्यवाहनः ।
भक्षितुं खाण्डवं राजंस्तत्रस्थानुपचक्रमे ॥ २-९७-२२ (१५२७९)
ततस्तं भक्षयन्तं वै सव्यसाची विभावसुम् ।
रथा धन्वी शरान्गृह्य स कलापयुतः प्रभुः ।
पालयामास राजेन्द्र स्ववीर्येण महाबलः ॥ २-९७-२३ (१५२८०)
ततः श्रुत्वा महेनद्रस्तु मेघांस्तान्सन्दिदेश ह ।
तेनोक्ता मेघसङ्घास्ते ववर्षुरतिवृष्टिभिः ॥ २-९७-२४ (१५२८१)
ततो मेघगाणान्पार्थः शरव्रातैः समान्ततः ।
खगमैर्वारयामास तदाश्चर्यमिवाभवत् ॥ २-९७-२५ (१५२८२)
वारितान्मेघसङ्घांश्च श्रुत्वा क्रुद्धः पुरन्दरः ।
पाण्डरं गजमास्थाय सर्वदेवगणैर्वृतः ।
ययौ पार्थेन संयोद्धुं रक्षार्थं खाण्डवस्य च ॥ २-९७-२६ (१५२८३)
रुद्राश्च मरुतश्चैव वसवश्चाश्विनौ तदा ।
आदित्याश्चैव साध्याश्च निश्वेदेवाश्च भारत ।
गन्धर्वाश्चैव सहिता अन्ये देवगणाश्च ये ॥ २-९७-२७ (१५२८४)
ते सर्वे शस्त्रसम्पन्ना दीप्यमानाः स्वतेजसा ।
धनञ्जयं जिघांसन्तः प्रपेतुर्विबुधाधिपाः ॥ २-९७-२८ (१५२८५)
युगान्ते यानि दृश्यन्ते निमित्तानि महान्त्यपि ।
सर्वाणि तत्र दृश्यन्ते निमित्तानि महीपते ॥ २-९७-२९ (१५२८६)
ततो देवगमाः सर्वे पार्थं समभिदुद्रुवुः ।
असम्भ्रान्तस्तु तान्दृष्ट्वा स तां देवमयीं चमूम् ॥ २-९७-३० (१५२८७)
त्वरितः फल्गुनो गृह्य तीक्ष्णांस्तानाशुगांस्तदा ।
इन्द्रं देवांश्च सम्प्रेक्ष्य तस्थौ काल इवात्यये ॥ २-९७-३१ (१५२८८)
ततो देवगणाः सर्वे बीभत्सुं सपुरन्दराः ।
अवाकिरञ्छरव्रातैर्मानुषं तं महीपते ॥ २-९७-३२ (१५२८९)
ततः पार्थो महातेजा गाण्डिवं गृह्य सत्वरः ।
वारयामास देवानां शरव्रातैः शरांस्तदा ॥ २-९७-३३ (१५२९०)
पुनः क्रुद्धाः सुराः सर्वे मर्त्यं तं सुमहाबलाः ।
नानाशस्त्रैर्ववर्षुस्तं सव्यसाची महीपते ॥ २-९७-३४ (१५२९१)

तान्पार्थः शस्त्रवर्षान्वै विसृष्टान्विबुधैस्तदा ।
द्विधा त्रिधा स चिच्छेद स एव निशितैः शरैः ॥ २-९७-३५ (१५२९२)
पुनश्च पार्थः सङ्क्रुद्धो मण्डलीकृतकार्मुकः ।
देवसङ्घाञ्छरैस्तीक्ष्णैरर्पयन्वै समन्ततः ॥ २-९७-३६ (१५२९३)
ततो देवगणाः सर्वे युध्वा पार्थेन वै मुहुः ।
रणे जेतुमशक्यं तं ज्ञात्वा ते भरतर्षभ ॥ २-९७-३७ (१५२९४)
शान्तास्ते विबुधाः सर्वे पार्थबाणाभिपीडिताः ।
सद्विपं वासवं त्यक्त्वा दुद्रुवुः सर्वतो दिशम् ॥ २-९७-३८ (१५२९५)
प्राचीं रुद्राः सगन्धर्वा दक्षिणां मरुतो ययुः ।
दिशं प्रतीचीं भीतास्ते वसवश्च तथाऽश्विनौ ॥ २-९७-३९ (१५२९६)
आदित्याश्चैव विश्वे च दुद्रुवुर्वा उदङ्मुखाः ।
साध्याश्चोर्ध्वमुखा भीताश्चिन्तयन्तोऽस्य सायकान् ॥ २-९७-४० (१५२९७)
एवं सुरगणाः सर्वे प्राद्रवन्त्सर्वतो दिशम् ।
मुहुर्मुहुः प्रेक्षमाणाः पार्थमेव सकार्मुकम् ॥ २-९७-४१ (१५२९८)
विद्रुतान्देवसङ्घांस्तान्रणे दृष्ट्वा पुरन्दरः ।
ततः क्रुद्धो महातेजाः पार्थं बाणैरवाकिरत् ॥ २-९७-४२ (१५२९९)
पार्थोऽपि शक्रं विव्याथ मानुषो विबुधाधिपम् ॥ २-९७-४३ (१५३००)
ततः सोऽश्ममयं वर्षं व्यसृजद्विबुधाधिपः ।
तच्छरैरर्जुनो वर्षं प्रतिजाघ्नेऽत्यमर्षणः ॥ २-९७-४४ (१५३०१)
अथ संवर्धयामास तद्वर्षं देवराडपि ।
भूय एव महावीर्यं जिज्ञासुः सव्यसाचिनः ॥ २-९७-४५ (१५३०२)
सोऽश्मवर्षं महावेगमिषुभिः पाण्डवोऽपि च ।
विलयं गमयामास हर्षयन्पाकशासनम् ॥ २-९७-४६ (१५३०३)
उपादाय तु पाणिभ्यामङ्गदं नाम पर्वतम् ।
सद्रुमं व्यसृजच्छक्रो जिघांसुः श्वेतवाहनम् ॥ २-९७-४७ (१५३०४)
ततोऽर्जुनो वेगवद्भिर्ज्वलमानैरजिह्मगैः ।
बाणैर्विध्वंसयामास गिरिराजं सहस्रधा ॥ २-९७-४८ (१५३०५)
शक्रं च पातयामास शरैः पार्थो महान्युधि ।
ततः शक्रो महाराज रणे वीरं धनञ्जयम् ॥ २-९७-४९ (१५३०६)
ज्ञात्वा जेतुमशक्यं तं तेजोबलसमन्वितम् ।
परां प्रीतिं ययौ तत्र पुत्रशौर्येण वासवः ॥ २-९७-५० (१५३०७)
तदा तत्र न तस्यास्ति दिवि कश्चिन्महायशाः ।
समर्थो निर्जये राजन्नपि साक्षात्प्रजापतिः ॥ २-९७-५१ (१५३०८)
ततः पार्थः शरैर्हत्वा यक्षराक्षसपन्नगान् ।
दीप्ते चाग्नौ महातेजाः पातयामास सन्ततम् ॥ २-९७-५२ (१५३०९)
प्रतिषेधयितुं पार्थं न शेकुस्तत्र केचन ।

दृष्ट्वा निवारितं शक्रं दिवि देवगणैः सह ॥ २-९७-५३ (१५३१०)
यथा सुपर्णः सोमार्थं विबुधानजयत्पुरा ।
तथा जित्वा सुरान्पार्थस्तर्पयामास पावकम् ॥ २-९७-५४ (१५३११)
ततोऽर्जुनः स्ववीर्येण तर्पयित्वा विभावसुम् ।
रथं ध्वजं च सहयं दिव्यानस्त्रांश्च पाण्डवः ॥ २-९७-५५ (१५३१२)
गाण्डीवं च धनुः श्रेष्ठं तूणी चाक्षयसायकौ ।
एतान्यपि च बीभत्सुर्लेभे कीर्तिं च भारत ॥ २-९७-५६ (१५३१३)
भूयोऽपि शृणु राजेन्द्र पार्थो गत्वोत्तरां दिशम् ।
विजित्य नववर्षांश्च सपुरांश्च सपर्वतान् ॥ २-९७-५७ (१५३१४)
जम्बुद्वीपं वशे कृत्वा सर्वं तद्भरतर्षभ ।
बलाज्जित्वा नृपान्सर्वान्करे चविनिवेश्य च ॥ २-९७-५८ (१५३१५)
रत्नान्यादाय सर्वाणि गत्वा चैव पुनः पुरीम् ।
ततो ज्येष्ठं महात्मानं धर्मराजं युधिष्ठिरम् ।
राजसूयं क्रतुश्रेष्ठं कारयामास भारत ॥ २-९७-५९ (१५३१६)
स तान्यन्यानि कर्माणि कृतवानर्जुनः पुरा ।
अर्जुनेन समो वीर्ये त्रिषु लोकेषु न क्वचित् ॥ २-९७-६० (१५३१७)
देवदानवयक्षाश्च पिशाचोरगराक्षसाः ।
भीष्मद्रोणादयः सर्वे कुरवश्च महारथाः ॥ २-९७-६१ (१५३१८)
लोके सर्वनृपाश्चैव वीराश्चान्ये धनुर्धराः ।
एते पार्थं रणे युक्ताः प्रतियोद्धुं न शक्नुयुः ॥ २-९७-६२ (१५३१९)
अहं हि नित्यं कौरव्य फल्गुनं हृदि संस्थितम् ।
अपश्यं चिन्तयित्वा तं समुद्विग्नोऽस्मि तद्भयात् ॥ २-९७-६३ (१५३२०)
गृहे गृहे च पश्यामि तात पार्थमहं सदा ।
शरगाण्डीवसंयुक्तं पाशहस्तमिवान्तकम् ॥ २-९७-६४ (१५३२१)
अपि पार्थसहस्राणि भीतः पश्यामि भारत ।
पार्थभूतमिदं सर्वं नगरं प्रतिभाति मे ॥ २-९७-६५ (१५३२२)
पार्थमेव हि पश्यामि रहिते तात भारत ।
दृष्ट्वा स्वप्नगतं पार्थमुद्भ्रमामि विचेतनः ॥ २-९७-६६ (१५३२३)
अकारादीनि नामानि अर्जुनग्रस्तचेतसः ।
अश्वाक्षराम्बुजाश्चैव त्रासं सञ्जनयन्ति मे ॥ २-९७-६७ (१५३२४)
नास्ति पार्थादृते तात परवीराद्भयं मम ।
प्रह्लादं वा बलिं वापि हन्याद्धि विजयो रणे ॥ २-९७-६८ (१५३२५)
तस्मात्तेन महाराज युद्धं नस्तात न क्षमम् ।
अहं तस्य प्रभावज्ञो नित्यं दुःखं वहामि च ॥ २-९७-६९ (१५३२६)
पुरा हि दण्डकारण्ये मारीचस्य यथा भयम् ।
भवेद्रामे महावीर्ये तथा पार्थे भयं मम ॥ २-९७-७० (१५३२७)

धृतराष्ट्र उवाच ॥ २-९७-७१क्ष् (१७०३)
जानाम्येव महद्वीयं जिष्णोरेतद्दुरासदम् ।
एतद्वीरस्य पार्थस्य कार्षीस्त्वं तु विप्रियम् ॥ २-९७-७१ (१५३२८)
द्यूतं वा शस्त्रयुद्धं वा दुवाक्यं वा कथञ्चन ।
एतेष्वेवं कृते तस्य विग्रहश्चैव वो भवेत् ॥ २-९७-७२ (१५३२९)
तस्मात्त्वं पुत्र पार्थेन नित्यं स्नेहेन वर्तय ।
यश्च पार्थेन सम्बन्धो वर्तते चेन्नरो भुवि ॥ २-९७-७३ (१५३३०)
तस्य नास्ति भयं किञ्चित्रिषु लोकेषु भारत ।
तस्मात्त्वं जिष्णुना वत्स नित्यं स्नेहेन वर्तय ॥ २-९७-७४ (१५३३१)
दुर्योधन उवाच ॥ २-९७-७५क्ष् (१७०४)
द्यूते पार्थस्य कौरव्य मायया निकृतिः कृता ।
तस्माद्धि नो जयस्तात अन्योपायेन नो भवेत् ॥ २-९७-७५ (१५३३२)
धृतराष्ट्र उवाच ॥ २-९७-७६क्ष् (१७०५)
उपायश्च न कर्तव्यः पाण्डवान्प्रति भारत ।
पार्थान्प्रति पुरा वत्स बहूपायाः कृतास्त्वया ॥ २-९७-७६ (१५३३३)
तानुपायान्हि कौन्तेया बहुशो व्यतिचक्रमुः ।
तस्माद्धितं जीविताय नः कुलस्य जनस्य च ॥ २-९७-७७ (१५३३४)
त्वं चिकीर्षसि चेद्वत्स समित्रः सहबान्धवः ।
सभ्रातृकस्त्वं पार्थेन नित्यं स्नेहेन वर्तय ॥ २-९७-७८ (१५३३५)
वैशम्पायन उवाच ॥ २-९७-७९क्ष् (१७०६)
धृतराष्ट्रवचः श्रुत्वा राजा दुर्योधनस्तदा ।
चिन्तयित्वा मुहूर्तं तु विधिना चोदितोऽब्रवीत्'॥ २-९७-७९ (१५३३६)
पुनर्दीव्याम भद्रं ते वनवासाय पाण्डवैः ।
एवमेतान्वशे कर्तुं शक्ष्यामः पुरुषर्षभ ॥ष २-९७-८० (१५३३७)
ते वा द्वादश वर्षाणि वयं वा द्यूतनिर्जिताः ।
प्रविशेम महारण्यमजिनैः प्रतिवासिताः ॥ २-९७-८१ (१५३३८)
त्रयोदशं च स्वजनैरज्ञाताः परिवत्सरम् ।
ज्ञाताश्च पुनरन्यानि वने वर्षाणि द्वादश ॥ २-९७-८२ (१५३३९)
निवसेम वयं ते वा तथा द्यूतं प्रवर्तताम् ।
अक्षानुप्त्वा पुनर्द्यूतमिदं कुर्वन्तु पाण्डवः ॥ २-९७-८३ (१५३४०)
एतत्कृत्यतमं राजन्नस्माकं भरतर्षभ ।
अयं हि शकुनिर्वेद सविद्यामक्षसम्पदम् ॥ २-९७-८४ (१५३४१)
दृढमूलं वयं राज्ये मित्राणि परिगृह्य च ।
सारवद्विपुलं सैन्यं सत्कृत्य च दुरासदम् ॥ २-९७-८५ (१५३४२)
ते च त्रयोदशं वर्षं पारयिष्यन्ति चेद्व्रतम् ।
जेष्यामस्तान्वयं राजन्रोचतां ते परन्तप ॥ २-९७-८६ (१५३४३)

धृतराष्ट्र उवाच ॥ २-९७-८७क्ष् (१७०७)
तूर्णं प्रत्यानयस्वैतान्कामं व्यध्वगतानपि ।
आगच्छन्तु पुनर्द्यूतमिदं कुर्वन्तु पाण्डवः ॥ २-९७-८७ (१५३४४)
वैशम्पायन उवाच ॥ २-९७-८८क्ष् (१७०८)
ततो द्रोणः सोमदत्तो बाह्लीकश्चैव गौतमः ।
विदुरो द्रोणपुत्रश्च वैश्यापुत्रश्च वीर्यवान् ॥ २-९७-८८ (१५३४५)
भूरिश्रवाः शान्तनवो विकर्णश्च महारथः ।
मा द्यूतमित्यभाषन्त शमोऽस्त्विति च सर्वशः ॥ २-९७-८९ (१५३४६)
अकामानां च सर्वेषां सुहृदामर्थदर्शिनाम् ।
अकरोत्पाण्डवाह्वानं धृतराष्ट्रः सुतप्रियः ॥ २-९७-९० (१५३४७)
अथाब्रवीन्महाराज धृतराष्ट्रं जनेश्वरम् ।
पुत्रहार्दाद्धर्मयुक्ता गान्धारी शोककर्शिता ॥ २-९७-९१ (१५३४८)
जाते दुर्योधने क्षत्ता महामतिरभाषत ।
नीयतां परलोकाय साध्वयं कुलपांसनः ॥ २-९७-९२ (१५३४९)
व्यनदज्जातमात्रो हि गोमायुरिव भारत ।
अन्तो नूनं कुलस्यास्य कुरवस्तन्निबोधत ॥ २-९७-९३ (१५३५०)
मा निमज्जीः स्वदोषेण महाप्सु त्वं हि भारत ।
मा बालानामशिष्टानामभिमंस्था मतिं प्रभो ॥ २-९७-९४ (१५३५१)
मा कुलस्य क्षये घोरे कारणं त्वं भविष्यसि ।
बद्धं सेतुं को नु भिन्द्याद्धमेच्छान्तं च पावकम् ॥ २-९७-९५ (१५३५२)
शमे स्थितान्को नु पार्थान्कोपयेद्भरतर्षभ ।
स्मरन्तं त्वामाजमीढं स्मारयिष्याम्यहं पुनः ॥ २-९७-९६ (१५३५३)
शास्त्रं न शास्ति दुर्बुद्धिं श्रेयसे चेतराय च ।
न वै वृद्धो बालमतिर्भवेद्राजन्कथञ्चन ॥ २-९७-९७ (१५३५४)
त्वन्नेत्राः सन्तु ते पुत्रा मा त्वां दीर्णाः प्रहासिषुः ।
तस्मादयं मद्वचनात्त्यज्यतां कुलपांसनः ॥ २-९७-९८ (१५३५५)
तथा ते न कृतं राजन्पुत्रस्नेहान्नराधिप ।
तस्य प्राप्तं फलं विद्धि कुलान्तकरणाय यत् ॥ २-९७-९९ (१५३५६)
शमेन धर्मेण नयेन युक्ता
या ते बुद्धिः साऽस्तु ते मा प्रमादीः ।
प्रध्वंसिनी क्रूरसमाहिता श्री-
र्मृदुप्रौढा गच्छति पुत्रपौत्रान् ॥ २-९७-१०० (१५३५७)
अथाब्रवीन्महाराजो गान्धारीं धर्मदर्शिनीम् ।
अन्तः कामं कुलस्यास्तु न शक्नोमि निवारितुम् ॥ २-९७-१०१ (१५३५८)
यथेच्छन्ति तथैवास्तु प्रत्यागच्छन्तु पाण्डवाः ।
पुनर्द्यूतं च कुर्वन्तु मामकाः पाण्डवैः सह ॥ ॥ २-९७-१०२ (१५३५९)

इति श्रीमन्महाभारते सभापर्वणि अनुद्यूतपर्वणि
सप्तनवतितमोऽध्यायः ॥९७.।
Mahabharata - Sabha Parva - Chapter Footnotes

२-९७-९० अकामानां द्यूतमनिच्छतां सताम् ॥
२-९७-९८ त्वन्नेत्रास्त्वमेव नेता येषां ते त्वन्नेत्राः ।दीर्णास्त्वत्तो भिन्नर्म यादाः ॥

---

सभ-०९८
॥ श्रीः ॥
२.९८. अध्यायः ९८

Mahabharata - Sabha Parva - Chapter Topics
निजनगरं गच्छतो युधिष्ठिरस्य मध्येमार्गं दूताह्वानेन पुनर्निवृत्त्य द्यूत सभाप्रवेशः ॥१.। अनुद्यूतेपि युधिष्ठिरस्य शकुनिना पराजयः ॥२.।
Mahabharata - Sabha Parva - Chapter Text

वैशम्पायन उवाच ॥
ततो व्यध्वगतं पार्थं प्रातिकामी युधिष्ठिरम् ।
उवाच वचनाद्राज्ञो धृतराष्ट्रस्य धीमतः ॥२-९८-१ (१५३६०)
उपास्तीर्णा सभा राजन्नक्षानुप्त्वा युधिष्ठिर ।
एहि पाण्डव दीव्येति पिता त्वाह नराधिपः ॥२-९८-२ (१५३६१)
युधिष्ठिर उवाच ॥२-९८-३क्ष् (१७०९)
धातुर्नियोगाद्भूतानि प्राप्नुवन्ति शुभाशुभम् ।
न निवृत्तिस्तयोरस्ति देवतव्यं पुनर्यदि ॥२-९८-३ (१५३६२)
अक्षद्यूते समाह्वानं नियोगात्स्थविरस्य च ।
जानन्नपि क्षयकरं नातिक्रमितुमुत्सहे ॥२-९८-४ (१५३६३)
वैशम्पायन उवाच ॥२-९८-५क्ष् (१७१०)
असम्भवो हेममयस्य जन्तो-
स्तथापि रामो लुलुभे मृगाय ।
प्रायः समासन्नपराभवाणां
धियो विपर्यस्ततरा भवन्ति ॥ २-९८-५ (१५३६४)
इति ब्रुवन्निववृते भ्रातृभिः सह पाण्डवः ।
जानांश्च शकुनेर्मायां पार्थो द्यूतमियात्पुनः ॥२-९८-६ (१५३६५)
विविशुस्ते सभां तां तु पुनरेव महारथाः ।

व्यथयन्ति स्म चेतांसि मुहृदां भरतर्षभाः ॥ २-९८-७ (१५३६६)
यथोपजोषमासीनाः पुनर्द्यूतप्रवृत्तये ।
सर्वलोकविनाशाय दैवेनोपनिपीडिताः ॥ २-९८-८ (१५३६७)
शकुनिरुवाच ॥ २-९८-९क्ष् (१७११)
अमुञ्चत्स्थविरो यद्वो धनं पूजितमेव तत् ।
महाधनं ग्लहं त्वेकं शृणु भो भरतर्षभ ॥ २-९८-९ (१५३६८)
वयं वा द्वादशाब्दानि युष्माभिर्द्यूतनिर्जिताः ।
प्रविशेम महारण्यं रौरवाजिनवाससः ॥ २-९८-१० (१५३६९)
त्रयोदशं च स्वजनैरज्ञाताः परिवत्सरम् ।
ज्ञाताश्च पुनरन्यानि वने वर्षाणि द्वादश ॥ २-९८-११ (१५३७०)
अस्माभिर्निर्जिता यूयं वने द्वादश वत्सरान् ।
वसध्वं कृष्णया सार्धमजिनैः प्रतिवासिताः ॥ २-९८-१२ (१५३७१)
त्रयोदशं च स्वजनैरज्ञाताः परिवत्सरम् ।
ज्ञाताश्च पुनरन्यानि वने वर्षाणि द्वादश ॥ २-९८-१३ (१५३७२)
त्रयोदशे च निर्वृत्ते पुनरेव यथोचितम् ।
स्वराज्यं प्रतिपत्तव्यमितरैरथवेतरैः ॥ २-९८-१४ (१५३७३)
अनेन व्यवसायेन सहास्माभिर्युधिष्ठिर ।
अक्षानुप्त्वा पुनर्द्यूतमेहि दीव्यस्व भारत ॥ २-९८-१५ (१५३७४)
अथ सभ्याः सभामध्ये समुच्छ्रितकरास्तदा ।
ऊचुरुद्विग्नमनसः संवेगात्सर्व एव हि ॥ २-९८-१६ (१५३७५)
सभ्या ऊचुः। २-९८-१७क्ष् (१७१२)
अहो धिग्बान्धवा नैनं बोधयन्ति महद्भयम् ।
बुद्ध्या बुद्ध्येन्न वा बुद्ध्येदयं वै भरतर्षभ ॥ २-९८-१७ (१५३७६)
वैशम्पायन उवाच ॥ २-९८-१८क्ष् (१७१३)
जनप्रवादान्सुबहूञ्शृण्वन्नपि नराधिपः ।
ह्रिया च धर्मसंयोगात्पार्थो द्यूतमियात्पुनः ॥ २-९८-१८ (१५३७७)
जानन्नापि महाबुद्धिः पुनर्द्यूतमवर्तयत् ।
अप्यासन्नो विनाशः स्यात्कुरूणामितिचिन्तयन् ॥ २-९८-१९ (१५३७८)
युधिष्ठिर उवाच ॥ २-९८-२०क्ष् (१७१४)
कथं वै मद्विधो राजा स्वधर्ममनुपालयन् ।
आहूतो विनिवर्तेत दीव्यामि शकुने त्वया ॥ २-९८-२० (१५३७९)
शकुनिरुवाच ॥ २-९८-२१क्ष् (१७१५)
गवाश्वं बहुधेनुकमपर्यन्तमजाविकम् ।
गजाः कोशो हिरण्यं च दासीदासाश्च सर्वशः ॥ २-९८-२१ (१५३८०)
हित्वा नो ग्लह एवैको वनवासाय पाण्डवाः ।
यूयं वयं वा विजिता वसेम वनमाश्रिताः ॥ २-९८-२२ (१५३८१)

त्रयोदशं च वै वर्णमज्ञाताः स्वजनैस्तथा ।
अनेन व्यवसायेन दीव्याम पुरुषर्षभाः। २-९८-२३ (१५३८२)
समुत्क्षेपेण चैकेन वनवासाय भारत ॥ २-९८-२४ (१५३८३)
ग वैशम्पायन उवाच ॥ २-९८-२४क्ष् (१७१६)
एवं दैवबलाविष्टो धर्मराजो युधिष्ठिरः ।
भीष्मद्रोणाऽऽवार्यमाणो विदुरेण च धीमता ॥ २-९८-२४ (१५३८४)
युयुत्सुना कृपेणाथ सञ्जयेन च भारत ।
गान्धार्या पृथया चैव भीमार्जुनयमैस्तथा ॥ २-९८-२५ (१५३८५)
विकर्णेन च वीरेण द्रौपद्या द्रौणिना तथा ।
सोमदत्तेन च तथा बाह्लीकेन च धीमता ॥ २-९८-२६ (१५३८६)
वार्यमाणोपि सततं न च राजन्नियच्छति ।
एवं संवार्यमाणोपि कौन्तेयो हितकाम्यया ॥ २-९८-२७ (१५३८७)
देवकार्यार्थसिद्ध्यर्थं मुहूर्तं कलिमाविशत् ।
अविष्टः कलिना राजञ्छकुनिं प्रत्यभाषत ॥ २-९८-२८ (१५३८८)
एवं भवत्विति तदा वनवासाय दीव्यति'।
प्रतिजग्राह तं पार्थो ग्लहं जग्राह सौबलः ॥
जितमित्येव शकुनिर्युधिष्ठिरमभाषत ॥ ॥ २-९८-२९ (१५३८९)

इति श्रीमन्महाभारते सभापर्वणि अनुद्यूतपर्वणि
अष्टनवतितमोऽध्यायः ॥ ९८ ॥
Mahabharata - Sabha Parva - Chapter Footnotes

२-९८-१६ संवेगादतिशयात् ॥

---

सभ-०९९
॥ श्रीः ॥
२.९९. अध्यायः ९९

Mahabharata - Sabha Parva - Chapter Topics
वनाय प्रस्थितान्पाण्डवान्प्रति दुश्शासनकृतापहासः ॥१.। पाण्डवानां
बहुप्रतिज्ञाकरणपूर्वकं धृतराष्ट्रसमीपगमनम् ॥ २.।
Mahabharata - Sabha Parva - Chapter Text

वैशम्पायन उवाच ॥
ततः पराजिताः पार्था वनावासाय दीक्षिताः ।
अजिनान्युत्तरीयाणि जगृहुश्च यथाक्रमम् ॥ २-९९-१ (१५३९०)
अजिनैः संवृतान्दृष्ट्वा हृतराज्यानरिन्दमान् ।

प्रस्थितान्वनवासाय ततो दुःशासनोऽब्रवीत् ॥ २-९९-२ (१५३९१)
प्रवृत्तं धार्तराष्ट्रस्य चक्रं राज्ञो महात्मनः ।
पराजिताः पाण्डवेया विपत्तिं परमां गताः ॥ २-९९-३ (१५३९२)
अद्य देवाः सम्प्रयाताः समैर्वर्त्मभिरस्थलैः ।
गुणज्येष्ठास्तथा श्रेष्ठाः श्रेयांसो यद्वयं परैः ॥ २-९९-४ (१५३९३)
नरकं पातिताः पार्था दीर्घकालमनन्तकम् ।
सुखाच्च हीना राज्याच्च विनष्टाः शाश्वतीः समाः ॥ २-९९-५ (१५३९४)
धनेन मत्ता ये ते स्म धार्तराष्ट्रान्प्रहासिषुः ।
ते निर्जिता हृतधना वनमेष्यन्ति पाण्डवः ॥ २-९९-६ (१५३९५)
चित्रान्सन्नाहानवमुञ्चन्तु चैषां
वासांसि दिव्यानि च भानुमन्ति ॥
विवास्यन्तां रुरुचर्माणि सर्वे
यथा ग्लहं सौबलस्याभ्युपेताः ॥ २-९९-७ (१५३९६)
न सन्ति लोकेषु पुमांस ईदृशा
इत्येव ये भावितबुद्धयः सदा ।
ज्ञास्यन्ति तेत्मानमिमेऽद्य पाण्डवा
विपर्यये पाण्ढतिला इवाफलाः ॥ २-९९-८ (१५३९७)
इदं हि वासो यदि वेदृशानां
मनस्विनां रौरवमाहवेषु ॥
आदीक्षितानामजिनानि यद्व-
द्बलीयसां पश्यत पाण्डवानाम् ॥ २-९९-९ (१५३९८)
महाप्राज्ञः सौमकिर्यज्ञसेनः
कन्यां पाञ्चालीं पाण्डवेभ्यः प्रदाय ।
अकार्षिद्वै सुकृतं नेह किञ्चित्
क्लीबाः पार्थाः पतयो याज्ञसेन्याः ॥ २-९९-१० (१५३९९)
सूक्ष्मप्रावारानजिनोत्तरीयान्
दृष्ट्वाऽरण्ये निर्धनानप्रतिष्ठान् ।
कां त्वं प्रीतिं लप्स्यसे याज्ञसेनि
पतिं वृणीष्वेह यमन्यमिच्छसि ॥ २-९९-११ (१५४००)
एते हि सर्वे कुरवः समेताः
क्षान्ता दान्ताः सुद्रविणोपपन्नाः ।
एषां वृणीष्वैकतमं पतित्वे
न त्वां नयेत्कालविपर्ययोऽयम् ॥ २-९९-१२ (१५४०१)
यथाऽफलाः षण्ढतिला यथा चर्ममया मृगाः ।
तथैव पाण्डवाः सर्वे यथा काकयवा अपि ॥ २-९९-१३ (१५४०२)
किं पाण्डवांस्ते पतितानुपास्य

मोघः श्रमः षण्ढतिलानुपास्य ।
एवं नृशंसः परुषाणि पार्था-
नश्रावयद्धृतराष्ट्रस्य पुत्रः ॥ २-९९-१४ (१५४०३)
तद्वै श्रुत्वा भीमसेनोऽत्यमर्षी
निर्भर्त्स्योच्चैः सन्निगृह्यैव रोषात् ।
उवाच चैनं सहसैवोपगम्य
सिंहो यथा हैमवतः शृगालम् ॥ २-९९-१५ (१५४०४)
भीमसेन उवाच ॥ २-९९-१६क्ष् (१७१७)
क्रूर पापजनैर्जुष्टमकृतार्थं प्रभाषसे ।
गान्धारविद्यया हि त्वं राजमध्ये विकत्थसे ॥ २-९९-१६ (१५४०५)
यथा तुदसि मर्माणि वाक्छरैरिह नो भृशम् ।
तथा स्मारयिता तेऽहं कृन्तन्मर्माणि संयुगे ॥ २-९९-१७ (१५४०६)
ये च त्वामनुवर्तन्ते क्रोधलोभवशानुगाः ।
गोप्तारः सानुबन्धांस्तान्नेताऽस्मि यमसादनम् ॥ २-९९-१८ (१५४०७)
वैशम्पायन उवाच ॥ २-९९-१९क्ष् (१७१८)
एवं ब्रुवाणमजिनैर्विवासितं
दुःशासनस्तं परिनृत्यति स्म ।
मध्ये कुरूणां धर्मनिबद्धमार्गं
गौर्गौरिति स्माह्वयन्मुक्तलज्जः ॥ २-९९-१९ (१५४०८)
भीमसेन उवाच ॥ २-९९-२०क्ष् (१७१९)
नृशंस परुषं वक्तुं दुःशासन त्वया ।
निकृत्या हि धनं लब्ध्वा को विकत्थितुमर्हति ॥ २-९९-२० (१५४०९)
मैव स्म सुकृतां लोकान्गच्छेत्पार्थो वृकोदरः ।
यदि वक्षो हि ते भित्त्वा न पिबेच्छोणितं रणे ॥ २-९९-२१ (१५४१०)
धार्तराष्ट्रान्रणे हत्त्वा मिषतां सर्वधन्विनाम् ।
शमं गन्ताऽस्मि नचिरात्सत्यमेतद्ब्रवीमि ते ॥ २-९९-२२ (१५४११)
वैशम्पायन उवाच ॥ २-९९-२३क्ष् (१७२०)
तस्य राजा सिंहगतेः सखेलं
दुर्योधनो भीमसेनस्य हर्षात् ।
गतिं स्वगत्याऽनुचकार मन्दो
निर्गच्छतां पाण्डवानां सभायाः ॥ २-९९-२३ (१५४१२)
नैतावता कृतमित्यब्रवीत्तं
वृकोदरः सन्निवृत्तार्धकायः ।
शीघ्रं हि त्वां निहतं सानुबन्धं
संस्मार्याहं प्रतिवक्ष्यामि मूढ ॥ २-९९-२४ (१५४१३)
एवं समीक्ष्यात्मनि चावमानं

नियम्य मन्युं बलवान्स मानी ।
राजानुगः संसदि कौरवाणां
विनिष्क्रामन्वाक्यमुवाच भीमः ॥ २-९९-२५ (१५४१४)
अहं दुर्योधनं हन्ता कर्णं हन्ता धनञ्जयः ।
शकुनिं चाक्षकितवं सहदेवो हनिष्यति ॥ २-९९-२६ (१५४१५)
इदं च भूयो वक्ष्यामि सभामध्ये बृहद्वचः ।
सत्यं देवाः करिष्यन्ति यन्नो युद्धं भविष्यति ॥ २-९९-२७ (१५४१६)
सुयोधनमिमं पापं हन्ताऽस्मि गदया युधि ।
शिरः पादेन चास्याहमधिष्ठास्यामि भूतले ॥ २-९९-२८ (१५४१७)
वाक्यशूरस्य चैवास्य परुषस्य दुरात्मनः ।
दुःशासनस्य रुधिरं पाताऽस्मि मृगराडिव ॥ २-९९-२९ (१५४१८)
अर्जुन उवाच ॥ २-९९-३०क्ष् (१७२१)
ग्भीमसेन न ते सन्ति येषां वैरं त्वया त्विह ।
मत्ता मृगेषु सुखिनो न बुद्ध्यन्ते महद्भयम्'॥ २-९९-३० (१५४१९)
नैवं वाचा व्यवसितं भीम विज्ञायते सताम् ।
इतश्चतुर्दशे वर्षे द्रष्टारो यद्भविष्यति ॥ २-९९-३१ (१५४२०)
भीमसेन उवाच ॥ २-९९-३२क्ष् (१७२२)
दुर्योधनस्य कर्णस्य शकुनेश्च दुरात्मनः ।
दुःशासनचतुर्थानां भूमिः पास्यति शोणितम् ॥ २-९९-३२ (१५४२१)
अर्जुन उवाच ॥ २-९९-३३क्ष् (१७२३)
असूयितारं द्रष्टारं प्रवक्तारं विकत्थनम् ।
भीमसेन नियोगात्ते हन्ताहं कर्णमाहवे ॥ २-९९-३३ (१५४२२)
अर्जुनः प्रतिजानीते भीमस्य प्रियकाम्यया ।
कर्णं कर्णानुगांश्चैव रणे हन्ताऽस्मि पत्रिभिः ॥ २-९९-३४ (१५४२३)
ये चान्ये प्रतियोत्स्यन्ति बुद्धिमोहेन मां नृपाः ।
तांश्च सर्वानहं बाणैर्नेताऽस्मि यमसादनम् ॥ २-९९-३५ (१५४२४)
चलेद्धि हिमवान्स्थानान्निष्प्रभः स्याद्दिवाकरः ।
शैत्यं सोमात्प्रणश्येत मत्सत्यं विचलेद्यदि ॥ २-९९-३६ (१५४२५)
न प्रदास्यति चेद्राज्यमितो वर्षे चतुर्दशे ।
दुर्योधनोऽभिसत्कृत्य सत्यमेतद्भविष्यति ॥ २-९९-३७ (१५४२६)
वैशम्पायन उवाच ॥ २-९९-३८क्ष् (१७२४)
इत्युक्तवति पार्थे तु श्रीमान्माद्रवतीसुतः ।
प्रगृह्य विपुलं बाहुं सहदेवः प्रतापवान् ॥ २-९९-३८ (१५४२७)
सौबलस्य वधं प्रेप्सुरिदं वचनमब्रवीत् ।
क्रोधसंरक्तनयनो निः श्वसन्निव पन्नगः ॥ २-९९-३९ (१५४२८)
सहदेव उवाच ॥ २-९९-४०क्ष् (१७२५)

अक्षान्यान्मन्यसे मूढ गान्धाराणां यशोहर ।
नैतेऽक्षा निशिता बाणास्त्वयैते समरे वृताः ॥ २-९९-४० (१५४२९)
यथा चैवोक्तवान्भीमस्त्वामुद्दिश्य सबान्धवम् ।
कर्ताहं कर्मणस्तस्य कुरु कार्याणि सर्वशः ॥ २-९९-४१ (१५४३०)
हन्ताऽस्मि तरसा युद्धे त्वामेवहे सबान्धवम् ।
यदि स्थास्यसि सङ्ग्रामे क्षत्रधर्मेण सौबल ॥ २-९९-४२ (१५४३१)
सहदेववचः श्रुत्वा नकुलोऽपि विशाम्पते ।
दर्शनीयतमो नृणामिदं वचनमब्रवीत् ॥ २-९९-४३ (१५४३२)
सुतेयं यज्ञसेनस्य द्यूतेऽस्मिन्धृतराष्ट्रजैः ।
यैर्वाचः श्राविता रूक्षाः स्थितैर्दुर्योधनप्रिये ॥ २-९९-४४ (१५४३३)
तान्धार्तराष्ट्रान्दुर्वृत्तान्मुमूर्षून्कालनोदितान् ।
गमयिष्यामि भूयिष्ठानहं वैवस्वतक्षयम् ॥ २-९९-४५ (१५४३४)
ग्उलूकं च दुरात्मानं सौबलस्य सुतं प्रियम् ।
क्रूरं हन्ताऽस्मि समरे तं वै क्रूरं नराधमम्'॥ २-९९-४६ (१५४३५)
निदेशाद्धर्मराजस्य द्रौपद्याः पदवीं चरन् ।
निर्धार्तराष्ट्रां पृथिवीं कर्ताऽस्मि नचिरादिव ॥ २-९९-४७ (१५४३६)
वैशम्पायन उवाच ॥ २-९९-४८क्ष् (१७२६)
एवं ते पुरुषव्याघ्राः सर्वे व्यायतबाहवः ।
प्रतिज्ञा बहुलाः कृत्वा धृतराष्ट्रमुपागमन् ॥ ॥ २-९९-४८ (१५४३७)

इति श्रीमन्महाभारते सभापर्वणि अनुद्यूतपर्वणि
एकोनशततमोऽध्यायः ॥ ९९ ॥
Mahabharata - Sabha Parva - Chapter Footnotes

२-९९-१३ काकयवा निस्तण्डुलं तृणधान्यम् ॥
२-९९-१७ स्मरयिता स्मारयिष्यामि ॥

---

सभ-१००
॥ श्रीः ॥
२.१००. अध्यायः १००

Mahabharata - Sabha Parva - Chapter Topics
युधिष्ठिरेण वनगमनाय भीष्माद्यामन्त्रणम् ॥ १.। पाण्डवान्प्रति
विदुरवचनम् ॥ २.।
Mahabharata - Sabha Parva - Chapter Text

युधिष्ठिर उवाच ॥

आमन्त्रयामि भरतांस्तथा वृद्धं पितामहम् ॥
राजानं सोमदत्तं च महाराजं च बाह्लिकम् ॥ २-१००-१ (१५४३८)
द्रोणं कृपं नृपांश्चान्यानश्वत्थामानमेव च ।
विदुरं धृतराष्ट्रं च धार्तराष्ट्रांश्च सर्वशः
॥ २-१००-३अग्सौमदत्तिं महावीर्यं विकर्णं च महामतिम्'।
युयुत्सुं सञ्जयं चैव तथैवान्यान्सभासदः ॥ २-१००-४अग्गान्धारीं
च महाभागां मातरं च तथा पृथाम्'।
सर्वानामन्त्र्य गच्छामि द्रष्टाऽस्मि पुनरेत्य वः ॥ २-१००-२ (१५४३९)
वैशम्पायन उवाच ॥ २-१००-५क्ष् (१७२७)
न च किञ्चिदथोचुस्तं ह्रियाऽऽसन्ना युधिष्ठिरम् ।
मनोभिरेव कल्याणं दध्युस्ते तस्य धीमतः ॥ २-१००-५ (१५४४०)
विदुर उवाच ॥ २-१००-६क्ष् (१७२८)
आर्या पृथा राजपुत्री नारण्यं गन्तुमर्हति ।
सुकुमारी च वृद्धा च नित्यं चैव सुखोचिता ॥ २-१००-६ (१५४४१)
इह वत्स्यति कल्याणी सत्कृता मम वेश्मनि ।
इति पार्था विजानीध्वमगदं वोऽस्तु सर्वशः ॥ २-१००-७ (१५४४२)
पाण्डवा ऊचुः। २-१००-८क्ष् (१७२९)
तथेत्युक्त्वाऽब्रुवन्सर्वे यथा नो वदसेऽनघ ।
त्वं पितृव्यः पितृसमो वयं च त्वत्परायणाः ॥ २-१००-८ (१५४४३)
यथाऽऽज्ञापयसे विद्वंस्त्वं हि नः परमो गुरुः ।
यच्चान्यदपि कर्तव्यं तद्विधत्स्व महामते ॥ २-१००-९ (१५४४४)
विदुर उवाच ॥ २-१००-१०क्ष् (१७३०)
युधिष्ठिर विजानीहि ममेदं भरतर्षभ ।
नाधर्मेण जितः कश्चिद्व्यथते वै पराजये ॥ २-१००-१० (१५४४५)
त्वं वै धर्मं विजानीषे युद्धे जेता धनञ्जयः ।
हन्ताऽरीणां भीमसेनो नकुलस्त्वर्थसङ्ग्रही ॥ २-१००-११ (१५४४६)
संयन्ता सहदेवस्तु धौम्यो ब्रह्मविदुत्तमः ।
धर्मार्थकुशला चैव द्रौपदी धर्मचारिणी ॥ २-१००-१२ (१५४४७)
अन्योन्यस्य प्रियाः सर्वे तथैव प्रियदर्शनाः ।
परैरभेद्याः सन्तुष्टाः को वोन न स्पृहयेदिह ॥ २-१००-१३ (१५४४८)
एष वै सर्वकल्याणः समाधिस्तव भारत ।
नैनं शत्रुर्विषहते शक्रेणापि समोऽप्युत ॥ २-१००-१४ (१५४४९)
हिमवत्यनुशिष्टोऽसि मेरुसावर्णिना पुरा ।
द्वैपायनेन कृष्णेन नगरे वारणावते ॥ २-१००-१५ (१५४५०)
भृगुतुङ्गे च रामेण दृषद्वत्यां च शम्भुना ।
अश्रौषीरसि तस्यापि महर्षेरञ्जनं प्रति ॥ २-१००-१६ (१५४५१)

कल्माषीतीरसंस्थस्य गतस्त्वं शिष्यतां भृगोः ।
द्रष्टा सदा नारदस्ते धौम्यस्तेऽयं पुरोहितः ॥ २-१००-१७ (१५४५२)
माहासीः साम्पराये त्वं बुद्धिं तामृषिपूजिताम् ।
पुरूरवसमैलं त्वं बुद्ध्या जयसि पाण्डव ॥ २-१००-१८ (१५४५३)
शक्त्या जयसि राज्ञोऽन्यानृषीन्धर्गोपसेवया ।
ऐन्द्रे जये धृतमना याम्ये कोपविधारणे ॥ २-१००-१९ (१५४५४)
तथा विसर्गे कौबेरे वारुणे कोपविधारणे ॥
आत्मप्रदानं सौम्यत्वमङ्कयश्चैवोपजीवनम् ॥ २-१००-२० (१५४५५)
भूमेः क्षमा च तेजश्च समग्रं सूर्यमण्डलात् ।
वायोर्बलं प्राप्नुहि त्वं भूतेभ्यश्चात्मसम्पदम् ॥ २-१००-२१ (१५४५६)
अगदं वोऽस्तु भद्रं वो द्रष्टाऽस्मि पुनरागतान् ।
आपद्धर्मार्थकृच्छ्रेषु सर्वकार्येषु वा पुनः ॥ २-१००-२२ (१५४५७)
यथावत्प्रतिपद्येथाः काले काले युधिष्ठिर ।
आपृष्टोऽसीह कौन्तेय स्वस्ति प्राप्नुहि भारत ॥ २-१००-२३ (१५४५८)
कृतार्थं स्वस्मिमन्तं त्वां द्रक्ष्यामः पुनरागतम् ।
न हि वो वृजिनं किञ्चिद्वेद कश्चित्पुराकृतम् ॥ २-१००-२४ (१५४५९)
वैशम्पायन उवाच ॥ २-१००-२५क्ष् (१७३१)
एवमुक्तस्तथेत्युक्त्वा पाण्डवः सत्यविक्रमः ।
भीष्मद्रोणौ नमस्कृत्य प्रातिष्ठत युधिष्ठिरः ॥ ॥ २-१००-२५ (१५४६०)

इति श्रीमन्महाभारते सभापर्वणि अनुद्यातपर्वणि शततमोऽध्यायः ॥ १००.।
Mahabharata - Sabha Parva - Chapter Footnotes

२-१००-१४ समाधिर्मनः स्वास्थ्यकरो नियमः ॥
२-१००-१९ विधारणे नियमने ॥
२-१००-२० विसर्गे दाने । संयमे वशीकरणे । उपजीवनं जीवनहेतुत्वम् ॥

---

सभ-१०१
॥ श्रीः ॥
२.१०१. अध्यायः १०१

Mahabharata - Sabha Parva - Chapter Topics
पाण्डवानां वनप्रस्थानेन खिद्यतां पौराणां वचनानि ॥ १.।
Mahabharata - Sabha Parva - Chapter Text

वैशम्पायन उवाच ॥

ततः सम्प्रस्थिते तत्र धर्मराजे तदा नृप ।
जनाः समन्तादद्रष्टुं तं समारुरुहुरातुराः ॥ २-१०१-१ (१५४६१)
ततः प्रासादवर्याणि विमानशिखराणि च ।
गोपुराणि च सर्वाणि वृक्षानन्यांश्च सर्वशः ॥ २-१०१-२ (१५४६२)
अथाधिरुह्य सस्त्रीका उदासीना व्यलोकयन् ।
न हि रथ्यास्तदा शक्या गन्तुं ताश्च जनाकुलाः ॥ २-१०१-३ (१५४६३)
आरुह्य स्मानतास्तत्र दीनाः पश्यन्ति पाण्डवान् ।
पदातिं वर्जितच्छत्रं चेलभूषणवर्जितम् ॥ २-१०१-४ (१५४६४)
वल्कलाजिनसंवीतं पार्थं दृष्ट्वा जनास्तदा ।
ऊचुर्बहुविधा वाचो भृशोपहतचेतसः ॥ २-१०१-५ (१५४६५)
जना ऊचुः। २-१०१-६क्ष् (१७३२)
यं यान्तमनुयाति स्म चतुरङ्गबलं महत् ।
तमेकं कृष्णया सार्धमनुगच्छन्ति पाण्डवाः ॥ २-१०१-६ (१५४६६)
चत्वारो भ्रातरश्चैव धौम्यश्चैव पुरोहितः ।
भीमार्जुनौ वारयित्वा निकृत्या बद्धकार्मुकौ ॥ २-१०१-७ (१५४६७)
धर्म एवास्थितो येन त्यक्त्वा राज्यं महात्मना ।
या न शक्या पुरा द्रष्टुं भूतैराकाशगैरपि ॥ २-१०१-८ (१५४६८)
तामद्य कृष्णां पश्यन्ति राजमार्गगता जनाः ।
अङ्गरागोचितां कृष्णां रक्तचन्दनसेविनीम् ॥ २-१०१-९ (१५४६९)
वर्षमुष्णं च शीतं च नेष्यत्याशु विवर्णताम् ।
अद्य नूनं पृथा देवी सत्यमाविश्य भाषते ॥ २-१०१-१० (१५४७०)
पुत्रान्स्नुषां च देवी तु द्रष्टुमद्याथ नार्हति ।
निर्गुणस्यापि पुत्रस्य कथं स्याद्दुःस्वदर्शनम् ॥ २-१०१-११ (१५४७१)
किम्पुनर्यस्य लोकोऽयं जितो वृत्तेन केवलम् ।
आनृशंस्यमनुक्रोशो धृतिः शीलं दमः शमः ॥ २-१०१-१२ (१५४७२)
पाण्डवं शोभयन्त्येते षड्गुणाः पुरुषोत्तमम् ।
तस्मादस्योपघातेन प्रजाः परमपीडिताः ॥ २-१०१-१३ (१५४७३)
औदकानीव सत्वानि ग्रीष्मे सलिलसङ्क्षयात् ।
पीडया पीडितं सर्वं जगदस्य जगत्पतेः ॥ २-१०१-१४ (१५४७४)
मूलस्यैवोपघातेन वृक्षः पुष्पफलोपगः ।
मूलं ह्येष मनुष्याणां धर्मराजो महाद्युतिः ॥ २-१०१-१५ (१५४७५)
पुष्पं फलं च पत्रं च शाखास्तस्येतरे जनाः ।
ते भ्रातर इव क्षिप्रं सपुत्राः सहबान्धवाः ॥ २-१०१-१६ (१५४७६)
गच्छन्तमनुगच्छामो येन गच्छति पाण्डवः ।
उद्यानानि परित्यज्य क्षेत्राणि च गृहाणि च ॥ २-१०१-१७ (१५४७७)
एकदुःखसुखाः पार्थमनुयाम सुधार्मिकम् ।

समुच्छ्रितपताकानि परिध्वस्ताजिराणि च ॥ २-१०१-१८ (१५४७८)
उपात्तधनधान्यानि हृतसाराणि सर्वशः ।
रजसाऽप्यवकीर्णानि परित्यक्तानि दैवतैः ॥ २-१०१-१९ (१५४७९)
मूषकैः परिधावद्भिरुद्बलैरावृतानि च ।
अपेतोदकधूमानि हीनसंमार्जनानि च ॥ २-१०१-२० (१५४८०)
प्रनष्टबलिकर्मेज्यामन्त्रहोमजपानि च ।
दुष्कालेनेव भग्नानि भिन्नभाजनवन्ति च ॥ २-१०१-२१ (१५४८१)
अस्मत्त्यक्तानि वेश्मानि सौबलः प्रतिपद्यताम् ।
वनं नगरमेवास्तु येन गच्छन्ति पाण्डवाः ॥ २-१०१-२२ (१५४८२)
अस्माभिश्च परित्यक्तं पुरं सम्पद्यतां वनम् ।
बिलानि दंष्ट्रिणः सर्वे वानि मृगपक्षिणः ॥ २-१०१-२३ (१५४८३)
त्यजन्त्वस्मद्भयाद्भीता गजाः सिंहा वनान्यपि ।
अनाक्रान्तं प्रपद्यन्तः सेवमानं त्यजन्तु च ॥ २-१०१-२४ (१५४८४)
तृणमांसफलादानां देशांस्त्यक्त्वा मृगद्विजाः ।
वयं पार्थैर्वने सम्यक्सह वत्स्याम निर्वृताः ॥ २-१०१-२५ (१५४८५)
इत्येवं विविधा वाचो नानाजनसमीरिताः ।
शुश्राव पार्थः श्रुत्वा च न विचक्रेऽस्य मानसम् ॥ २-१०१-२६ (१५४८६)
ततः प्रासादसंस्थास्तु समन्ताद्वै गृहे गृहे ।
ब्राह्मणक्षत्रियविशां शूद्राणां चैव योषितः ॥ २-१०१-२७ (१५४८७)
गत्वा स्वगृहजालानि उत्पाट्यावरणानि च ।
ददृशुः पाण्डवान्दीनान्वल्कलाजिनवाससः ॥ २-१०१-२८ (१५४८८)
कृष्णां त्वदृष्टपूर्वां तां व्रजन्तीं पद्भिरेव च ।
एकवस्त्रां रुदन्तीं तां मुक्तकेशीं रजस्वलाम् ॥ २-१०१-२९ (१५४८९)
दृष्ट्वा तदा स्त्रियः सर्वा विवर्णवदना भृशम् ।
विलप्य बहुधा मोहाद्दुःखशोकेन पीडिताः ।
हाहा धिग्धिग्धिगित्युक्त्वा नेत्रैरश्रूण्यवर्तयन् ॥ २-१०१-३० (१५४९०)
जनस्याथ वजः श्रुत्वा स राजा भ्रातृभिः सह ।
उद्दिश्य वनावासाय प्रतस्थे कृतनिश्चयः ॥ २-१०१-३१ (१५४९१)
वैशम्पायन उवाच ॥ २-१०१-३२क्ष् (१७३३)
तस्मिन्सम्प्रस्थिते कृष्णा पृथां प्राप्य यशस्विनीम् ।
अपृच्छद्भृशदुःखार्ता याश्चान्यास्तत्र योषितः ॥ २-१०१-३२ (१५४९२)
ततो निनादः सुमहान्पाण्डवान्तः पुरेऽभवत् ॥ २-१०१-३३ (१५४९३)
कुन्ती च भृशशन्तप्ता द्रौपदीं प्रेक्ष्य गच्छतीम् ।
शोकविह्वलया वाचा कृच्छ्राद्वचनमब्रवीत् ॥ २-१०१-३४ (१५४९४)
वत्से शोको न ते कार्यः प्राप्येदं व्यसनं महत् ।
स्त्रीधर्माणामभिज्ञाऽसि शीलाचारवती तथा ॥ २-१०१-३५ (१५४९५)

न त्वां शन्देष्टुमर्हामि भर्तॄन्प्रति शुचिस्मिते ।
साध्वी गुणसमापन्ना भूषितं ते कुलद्वयम् ॥ २-१०१-३६ (१५४९६)
सभाग्याः कुरवश्चेमे ये न दग्धास्त्वयाऽनघे ।
अरिष्टं व्रज पन्थानं मदनुध्यानबृंहिता ॥ २-१०१-३७ (१५४९७)
भाविन्यर्थे हि सत्स्त्रीणां वैकृतं नोपजायते ।
गुरुधर्माभिगुप्ता च श्रेयः क्षिप्रमवप्स्यसि ॥ २-१०१-३८ (१५४९८)
सहदेवश्च मे पुत्रः सदाऽवेक्ष्यो वने वसन् ।
यथेदं व्यसनं प्राप्य नायं सीदेन्महामतिः ॥ २-१०१-३९ (१५४९९)
वैशम्पायन उवाच ॥ २-१०१-४०क्ष् (१७३४)
तथेन्युक्त्वा तु सा देवी स्रवन्नेत्रजलाविला ।
शोणिताक्तैकवसना मुक्तकेशी विनिर्ययौ ॥ २-१०१-४० (१५५००)
तां क्रोशन्तीं पृथा दुःखादनुवव्राज गच्छतीम् ।
अथापश्यन्सुतान्सर्वान्हृताभरणवाससः ॥ २-१०१-४१ (१५५०१)
रुरुचर्मावृततनून्ह्रिया किञ्चिदवाङ्मुखान् ।
परैः परीतान्संहृष्टैः सुहृद्भिश्चानुशोचितान् ॥ २-१०१-४२ (१५५०२)
तदवस्थान्सुतान्सर्वानुपसृत्यातिवत्सला ।
स्वजमानाऽवदच्छेकात्तत्तद्विलपती बहु ॥ २-१०१-४३ (१५५०३)
कुन्त्युवाच। २-१०१-४४क्ष् (१७३५)
कथं सद्धर्मचारित्रान्वृत्तस्थितिविभूषितान् ।
अक्षुद्रान्दृढभक्तांश्च दैवतेज्यापरान्सदा ॥ २-१०१-४४ (१५५०४)
व्यसनं वः समभ्यागात्कोऽयं विधिविपर्ययः ।
कस्यापध्यानजं चेदमागः पश्यामि वो धिया ॥ २-१०१-४५ (१५५०५)
स्यात्तु मद्भाग्यदोषोऽयं याऽहं युष्मानजीजनम् ।
दुःखायासभुजोऽत्यर्थं युक्तानप्युत्तमैर्गुणैः ॥ २-१०१-४६ (१५५०६)
कथं वत्स्यथ दुर्गेषु वने ऋद्धिविनाकृताः ।
वीर्यसत्वबलोत्साहतेजोभिरकृशाः कृशाः ॥ २-१०१-४७ (१५५०७)
यद्येवमहमज्ञास्यं वने वासं हि वो ध्रुवम् ।
शतशृङ्गान्मृते पाण्डौ नागमिष्यं गजाह्वयम् ॥ २-१०१-४८ (१५५०८)
धन्यं वः पितरं मन्ये तपोमेधान्वितं तथा ।
यः पुत्राधिमसम्प्राप्य स्वर्गेच्छामकरोत्प्रियाम् ॥ २-१०१-४९ (१५५०९)
धन्यां चातीन्द्रियज्ञानामिमां प्राप्तां परां गतिम् ।
मन्ये तु माद्रीं धर्मज्ञां कल्याणीं सर्वथैव तु ॥ २-१०१-५० (१५५१०)
रत्या मत्या च गत्या च ययाऽहमभिसन्धिता ।
जीवितप्रियतां मह्यं धिङ्मां सङ्क्लेशभागिनीम् ॥ २-१०१-५१ (१५५११)
पुत्रका न विहास्ये वः कृच्छ्रलब्धान्प्रियान्सतः ।
साऽहं यास्यामि हि वनं हा कृष्णे किं जहासि माम्। २-१०१-५२ (१५५१२)

अन्तवत्यसुधर्मेऽस्मिन्धात्रा किं नु प्रमादतः ।
ममान्तो नैव विहितस्तेनायुर्न जहाति माम् ॥ २-१०१-५३ (१५५१३)
हा कृष्ण द्वारकावासिन्क्वासि सङ्कर्षणानुज ।
कस्मान्न त्रायसे दुःखान्मां चेमांश्च नरोत्तमान् ॥ २-१०१-५४ (१५५१४)
अनादिनिधनं ये त्वामनुध्यायन्ति वै नराः ।
तांस्त्वं पासीत्ययं वादः स गतो व्यर्थतां कथम् ॥ २-१०१-५५ (१५५१५)
इमे सद्धर्ममाहात्म्ययशोवीर्यानुवर्तिनः ।
नार्हन्ति व्यसनं भोक्तुं नन्वेषां क्रियतां दया ॥ २-१०१-५६ (१५५१६)
सेयं नीत्यर्थविज्ञेषु कथमापदुपागता ॥
स्थितेषु कुलनाथेषु कथमापदुपागता ॥ २-१०१-५७ (१५५१७)
हा पाण्डो हा महाराज क्वासि किं समुपेक्षसे ।
पुत्रान्विवास्यतः साधूनरिभिर्द्यूतनिर्जितान् ॥ २-१०१-५८ (१५५१८)
सहदेव निवर्तस्व ननु त्वमसि मे प्रियः ।
शरीरादपि माद्रेय मां मा त्याक्षीः कुपुत्रवत् ॥ २-१०१-५९ (१५५१९)
व्रजन्तु भ्रातरस्तेऽमी यदि सत्याभिसन्धिनः ।
मत्परित्राणजं धर्ममिहैव त्वमवाप्नुहि ॥ २-१०१-६० (१५५२०)
वैशम्पायन उवाच ॥ २-१०१-६१क्ष् (१७३६)
एवं विपलतीं कुन्तीमभिवाद्य प्रणम्य च ।
पाण्डवा विगतानन्दा वनायैव प्रवव्रजुः ॥ २-१०१-६१ (१५५२१)
विदुरश्चापि तामार्तां कुन्तीमाश्वास्य हेतुभिः ।
प्रावेशयद्गृहं क्षत्ता स्वयमार्ततरः शनैः ॥ २-१०१-६२ (१५५२२)
धार्तराष्ट्रस्त्रियस्ताश्च निखिलेनोपलभ्य तत् ।
गमनं परिकर्षं च कृष्णाया द्यूतमण्डले ॥ २-१०१-६३ (१५५२३)
रुरुदुः सुस्वनं सर्वा विनिन्दन्त्यः कुरून्भृशम् ।
दध्युश्च सुचिरं कालं करासक्तमुखाम्बुजाः ॥ २-१०१-६४ (१५५२४)
राजा च धृतराष्ट्रस्तु पुत्राणामनयं तदा ।
ध्यायन्नुद्विग्नहृदयो न शान्तिमधिजग्मिवान् ॥ २-१०१-६५ (१५५२५)
स चिन्तयन्ननेकाग्रः शोकव्याकुलचेतनः ।
क्षत्तुः सम्प्रेषयामास शीघ्रमागम्यतामिति ॥ २-१०१-६६ (१५५२६)
ततो जगाम विदुरो धृतराष्ट्रनिवेशनम् ।
तं पर्यपृच्छत्संविग्नो धृतराष्ट्रो जनाधिपः ॥ ॥ २-१०१-६७ (१५५२७)

इति श्रीमन्महाभारते सभापर्वणि अनुद्यूतपर्वणि
एकोत्तरशततमोऽध्यायः ॥ १०१.।

Mahabharata - Sabha Parva - Chapter Footnotes

२-१०१-४० शोणिताक्तैकवसना रजस्वला ॥
२-१०१-५१ मह्यं मम ॥
२-१०१-५३ असुधर्मे प्राणधारणे ।अन्तवति विनाशवति ॥

---

सभ-१०२
॥ श्रीः ॥
२.१०२. अध्यायः १०२

Mahabharata - Sabha Parva - Chapter Topics
धृतराष्ट्रेण विदुरम्प्रति पाण्डवानां वनप्रस्थानसमये चेष्टविशेषप्रश्ने तत तच्चेष्टाविशेषकथनपूर्वकं तत्तदभिप्रायाविष्करणम् ॥ १.। द्रोणेन दुर्योधनाय हितोपदेशः ॥ २.।
Mahabharata - Sabha Parva - Chapter Text

वैशम्पायन उवाच ॥
तमागतमथो राजा विदुरं दीर्घदर्शिनम् ।
साशङ्क इव प्रपच्छ धृतराष्टोऽम्बिकासुतः ॥ २-१०२-१ (१५५२८)
कथं गच्छति कौन्तेयो धर्मपुत्रो युधिष्ठिरः ।
भीमसेनः सव्यसाची माद्रीपुत्री च पाण्डवौ ॥ २-१०२-२ (१५५२९)
धौम्यश्चैव कथं क्षत्तर्द्रौपदी च यशस्विनी ।
श्रोतुमिच्छाम्यहं सर्वं तेषां शंस विचेष्टितम् ॥ २-१०२-३ (१५५३०)
विदुर उवाच ॥ २-१०२-४क्ष् (१७३७)
वस्त्रेण संवृत्य मुखं कुन्तीपुत्रो युधिष्ठिरः ।
बाहू विशालौ सम्पश्यन्भीमो गच्छति पाण्डवः ॥ २-१०२-४ (१५५३१)
सिकता वपन्सव्यसाची राजानमनुगच्छति ।
माद्रीपुत्रः सहदेवो मुखमालिप्य गच्छति ॥ २-१०२-५ (१५५३२)
पांसूपलिप्तसर्वाङ्गो नकुलश्चित्तविह्वलः ।
दर्शनीयतमो लोके राजानमनुगच्छति ॥ २-१०२-६ (१५५३३)
कृष्णा तु केशैः प्रच्छाद्य मुखमायतलोचना ।
दर्शनीया प्ररुदती राजानमनुगच्छति ॥ २-१०२-७ (१५५३४)
धौम्यो रौद्राणि सामानि याम्यानि च विशाम्पते ।
गायन्गच्छति मार्गेषु कुशानादाय पाणिना ॥ २-१०२-८ (१५५३५)
धृतराष्ट्र उवाच ॥ २-१०२-९क्ष् (१७३८)
विविधानीह रूपाणि कृत्वा गच्छन्ति पाण्डवाः ।
तन्ममाचक्ष्व विदुर कस्मादेवं व्रजन्ति ते ॥ २-१०२-९ (१५५३६)
विदुर उवाच ॥ २-१०२-१०क्ष् (१७३९)

निकृतस्यापि ते पुत्रैर्हृते राज्ये धनेषु च ।
न धर्माच्चलते बुद्धिर्धर्मराजस्य धीमतः ॥ २-१०२-१० (१५५३७)
योऽसौ राजा घृणी नित्यं धार्तराष्ट्रेषु भारत ।
निकृत्या भ्रंशितः क्रोधान्नोन्मीलयति लोचने ॥ २-१०२-११ (१५५३८)
नाहं जनं निर्दहेयं दृष्ट्वा घोरेण चक्षुषा ।
स पिधाय मुखं राजा तस्माद्गच्छति पाण्डवः ॥ २-१०२-१२ (१५५३९)
यथा च भीमो व्रजति निगदतः शृणु ।
बाह्वोर्बले नास्ति समो ममेति भरतर्षभ ॥ २-१०२-१३ (१५५४०)
बाहू विशालौ कृत्वाऽसौ तेन भीमोपि गच्छति ।
बाहू विदर्शयन्राजन्बाहुद्रविणदर्पितः ॥ २-१०२-१४ (१५५४१)
चिकीर्षन्कर्म शत्रुभ्यो बाहुद्रव्यानुरूपतः ।
प्रदिशञ्शरसम्पातान्कुन्तीपुत्रोऽर्जुनस्तदा ॥ २-१०२-१५ (१५५४२)
सिकता वपन्सव्यसाची राजानमनुगच्छति ।
असक्ताः सिकतास्तस्य यथा सम्प्रति भारत ।
असक्तं शरवर्षाणि तथा मोक्ष्यति शत्रुषु ॥ २-१०२-१६ (१५५४३)
न मे कश्चिद्विजानीयान्मुखमद्येति भारत ।
मुखमालिप्य तेनासौ सहदेवोऽपि गच्छति ॥ २-१०२-१७ (१५५४४)
नाहं मनांस्याददेयं मार्गे स्त्रीणामिति प्रभो ।
पांसूपलिप्तसर्वाङ्गो नकुलस्तेन गच्छति ॥ २-१०२-१८ (१५५४५)
एकवस्त्रा प्ररुदती मुक्तकेशी रजस्वला ।
शोणितेनाक्तवसना द्रौपदी वाक्यमब्रवीत् ॥ २-१०२-१९ (१५५४६)
यत्कृतेऽहमिदं प्राप्ता तेषां वर्षे चतुर्दशे ।
हतपत्यो हतसुता हतबन्धुजनप्रियाः ॥ २-१०२-२० (१५५४७)
बन्धुशोणितदिग्धाङ्ग्यो मुक्तकेश्यो रजस्वलाः ।
एवं कृतोदका भार्याः प्रवेक्ष्यन्ति गजाह्वयम् ॥ २-१०२-२१ (१५५४८)
कृत्वा तु नैर्ऋतान्दर्भान्धीरो धौम्यः पुरोहितः ।
सामानि गायन्याम्यानि पुरतो याति भारत ॥ २-१०२-२२ (१५५४९)
हतेषु भरतेष्वाजौ कुरूणां गुरवस्तदा ।
एवं सामानि -- न्तीत्युक्त्वा धौम्योपि गच्छति । २-१०२-२३ (१५५५०)
ग्प्रस्थाप्य पाण्डवाञ्शेषान्निः शेषस्ते भविष्यति ।
इति धौम्यो व्यवसितो रौद्रसामानि गायति ॥ २-१०२-२४ (१५५५१)
धृतराष्ट्र उवाच ॥ २-१०२-२५क्ष् (१७४०)
किमब्रुवन्नैकृतिकः किं वा नागरिका जनाः ।
तथ्येन मे समाचक्ष्व क्षत्तः सर्वमशेषतः ॥ २-१०२-२५ (१५५५२)
विदुर उवाच ॥ २-१०२-२६क्ष् (१७४१)
ब्राह्मणाः क्षत्रिया वैश्याः शूद्रा येऽन्ये वदन्त्यथ ।

तच्छृणुष्व महाराज वक्ष्यते च मया तव ॥ २-१०२-२६ (१५५५३)
प्रकृतय ऊचुः। २-१०२-२७क्ष् (१७४२)
हाहा गच्छन्ति नो नाथाः समवेक्षध्वमीदृशम् ।
अहो धिक्कुरुवृद्धानां बालानामिव चेष्टितम् ॥ २-१०२-२७ (१५५५४)
राष्ट्रेभ्यः पाण्डुदायादाँल्लोभान्निर्वासयन्ति ये ।
अनाथाः स्म वयं सर्वे वियुक्ताः पाण्डुनन्दनैः ॥ २-१०२-२८ (१५५५५)
दुर्विनीतेषु लुब्धेषु का प्रीतिः कौरवेषु नः ।
इति पौराः सुदुःखार्ताः क्रोशन्ति स्म पुनः पुनः ॥ २-१०२-२९ (१५५५६)
एवमाकारलिङ्गैस्ते व्यवसायं मनोगतम् ।
कथयन्तश्च कौन्तेया वनं जग्मुर्मनस्विनः ॥ २-१०२-३० (१५५५७)
एवं तेषु नराग्र्येषु निर्यत्सु गजसाह्वयात् ।
अनभ्रे विद्युतश्चासन्भूमिश्च समकम्पत ॥ २-१०२-३१ (१५५५८)
राहुरग्रसदादित्यमपर्वणि विशाम्पते ।
उल्का चाप्यपसव्येन पुरं कृत्वा व्यशीर्यत ॥ २-१०२-३२ (१५५५९)
प्रत्याहरन्ति क्रव्यादा गृध्रगोमायुवायसाः ।
देवायतनचैत्येषु प्राकाराट्टालकेषु च ॥ २-१०२-३३ (१५५६०)
एवमेते महोत्पाताः प्रादुरासन्दुरासदाः ।
भरतानामभावाय राजन्दुर्मन्त्रिते तव ॥ २-१०२-३४ (१५५६१)
वैशम्पायन उवाच ॥ २-१०२-३५क्ष् (१७४३)
एवं प्रवदतोरेव तयोस्तत्र विशाम्पते ।
धृतराष्ट्रस्य राज्ञश्च विदुरस्य च धीमतः ॥ २-१०२-३५ (१५५६२)
नारदश्च सभामध्ये कुरूणामग्रतः स्थितः ।
महर्षिभिः परिवृतो रौद्रं वाक्यमुवाच ह ॥ २-१०२-३६ (१५५६३)
इतश्चतुर्दशे वर्षे विङ्क्ष्यन्तीह कौरवाः ।
दुर्योधनापराधेन भीमार्जुनबलेन च ॥ २-१०२-३७ (१५५६४)
इत्युक्त्वा दिवमाक्रम्य क्षिप्रमन्तरधीयत ।
ब्राह्मीं श्रियं सुविपुलां बिभ्रद्देवर्षिसत्तमः ॥ २-१०२-३८ (१५५६५)
ततो दुर्योधनः कर्णः शकुनिश्चापि सौबलः ।
द्रोणं द्वीपममन्यन्त राज्यं चास्मै न्यवेदयन् ॥ २-१०२-३९ (१५५६६)
अथाब्रवीत्ततो द्रोणो दुर्योधनममर्षणम् ।
दुःशासनं च कर्णं च सर्वानेव च भारतान् ॥ २-१०२-४० (१५५६७)
अवध्यान्पाण्डवान्प्राहुर्देवपुत्रान्द्विजातयः ।
अहं चै शरणं प्राप्तान्वर्तमानो यथाबलम् ॥ २-१०२-४१ (१५५६८)
गन्ता सर्वात्मना भक्त्या धार्तराष्ट्रान्सराजकान् ।
नोत्सहेयं परित्यक्तुं दैवं हि बलवत्तरम् ॥ २-१०२-४२ (१५५६९)
धर्मतः पाण्डुपुत्रा वै वनं गच्छन्ति निर्जिताः ।

ते च द्वादश वर्षाणि वने वत्स्यन्ति पाण्डवः ॥ २-१०२-४३ (१५५७०)
चरितब्रह्मचर्याश्च क्रोधामर्षवशानुगाः ।
वैरं निर्यातयिष्यन्ति महद्दुःखाय पाण्डवाः ॥ २-१०२-४४ (१५५७१)
मया च भ्रंशितो राजन्द्रुपदः सखिविग्रहे ।
पुत्रार्थमयजद्राजा वधाय मम भारत ॥ २-१०२-४५ (१५५७२)
याजोपयाजतपसा पुत्रं लेभे स पावकात् ।
धृष्टद्युम्नं द्रौपदीं च वेदीमध्यात्सुमध्यमाम् ॥ २-१०२-४६ (१५५७३)
धृष्टद्युम्नस्तु पार्थानां स्यालः सम्बन्धतो मतः ।
पाण्डवानां प्रियरतस्तस्मान्मां भयमाविशत् ॥ २-१०२-४७ (१५५७४)
ज्वालावर्णो देवदत्तो धनुष्मान्कवची शरी ।
मर्त्यधर्मतया तस्मादद्य मे साध्वसो महान् ॥ २-१०२-४८ (१५५७५)
गतो हि पक्षतां तेषां पार्षतः परवीरहा ।
रथातिरथसङ्ख्यायां योऽग्रणीरर्जुनो युवा ॥ २-१०२-४९ (१५५७६)
सृष्टप्राणो भृशतरं तेन चेत्सङ्गमो मम ।
किमन्यद्दुःखमधिकं परमं भुवि कौरवाः ॥ २-१०२-५० (१५५७७)
धृष्टद्युम्नो द्रोणमृत्युरिति विप्रथितं वचः ।
मद्वधायाश्रितोऽप्येष लोके चाप्यतिविश्रुतः ॥ २-१०२-५१ (१५५७८)
सोऽयं नूनमनुप्राप्तस्त्वत्कृते कालपर्ययः ।
त्वरितं कुरुत श्रेयो नैतदेतावता कृतम् ॥ २-१०२-५२ (१५५७९)
मुहूर्तं सुखमेवैतत्तालच्छायेव हैमनी ।
जयध्वं च महायज्ञैर्भोगानश्नीत दत्त च ॥ २-१०२-५३ (१५५८०)
इतश्चतुर्दशे वर्षे महत्प्राप्स्यथ वैशसम् ।
दुर्योधन निशम्यैतत्प्रतिपद्य यथेच्छसि ॥ २-१०२-५४ (१५५८१)
शमं वा पाण्डुपुत्रेण प्रयुङ्क्ष्व यदि मन्यसे। २-१०२-५५ (१५५८२)
वैशम्पायन उवाच ॥
द्रोणस्य --चनं श्रुत्वा धृतराष्ट्रोऽब्रवीदिदम् ॥ २-१०२-५५क्ष् (१७४४)
सम्यगाह गुरुः क्षत्तरुपावर्तय पाण्डवान् ।
यदि ते न निवर्तन्ते सत्कृता यान्तु पाण्डवाः। २-१०२-५६ (१५५८३)
सशस्त्ररथपादाता भोगवन्तश्च पुत्रकाः ॥ ॥ २-१०२-५७ (१५५८४)

इति श्रीमन्महाभारते सभापर्वणि अनुद्यतपर्वणि
द्व्यधिकशततमोऽध्यायः ॥ १०२.।

Mahabharata - Sabha Parva - Chapter Footnotes

२-१०२-१६ असक्ताः परस्परमलग्नाः ॥
२-१०२-३९ द्वीपमाश्रयम् ॥

२-१०२-४८ देवदत्तो देवैर्दत्तः ॥
२-१०२-५० सङ्गमः सङ्ग्रामे इति शेषः ॥
२-१०२-५३ हैमनी हेमन्तसम्बन्धिनी ॥
२-१०२-५४ वैशसं नाशम् ॥

---

सभ-१०३
॥ श्रीः ॥
२.१०३. अध्यायः १०३

Mahabharata - Sabha Parva - Chapter Topics
धृतराष्ट्रसञ्जययोः संवादः ॥ १.।
Mahabharata - Sabha Parva - Chapter Text

वैशम्पायन उवाच ॥
वनं गतेषु पार्थेषु निर्जितेषु दुरोदरे ।
धृतराष्ट्रं महाराज तदा चिन्ता समाविशत् ॥ २-१०३-१ (१५५८५)
तं चिन्तयानमासीनं धृतराष्ट्रं जनेश्वरम् ।
निः श्वसन्तमनेकाग्रमिति होवाच सञ्जयः ॥ २-१०३-२ (१५५८६)
अवाप्य वसुसम्पूर्णां वसुधां वसुधाधिप ।
प्रव्राज्य पाण्डवान्राज्याद्राजन्किमनुशोचसि ॥ २-१०३-३ (१५५८७)
धृतराष्ट्र उवाच ॥ २-१०३-४क्ष् (१७४५)
अशोच्यत्वं कुतस्तेषां येषां वैरं भविष्यति ।
पाण्डवैर्युद्धशौण्डैर्हि बलवद्भिर्महारथैः ॥ २-१०३-४ (१५५८८)
सञ्जय उवाच ॥ २-१०३-५क्ष् (१७४६)
तवेदं सुकृतं राजन्महद्वैरमुपस्थितम् ।
विनाशो येन लोकस्य सानुबन्धो भविष्यति ॥ २-१०३-५ (१५५८९)
वार्यमाणो हि भीष्मेण द्रोणेन विदुरेण च ।
पाण्डवानां प्रियां भार्यां द्रौपदीं धर्मचारिणीम्। २-१०३-६ (१५५९०)
प्राहिणोदानयेहेति पुत्रो दुर्योधनस्तव ।
सूतपुत्रं सुमन्दात्मा निर्लज्जः प्रातिकामिनम् ॥ २-१०३-७ (१५५९१)
यस्मै देवाः प्रयच्छन्ति पुरुषाय पराभवम् ।
बुद्धिं तस्यापकर्षन्ति सोऽवाचीनानि पश्यति ॥ २-१०३-८ (१५५९२)
बुद्धौ कलुषभूतायां विनाशे समुपस्थिते ।
अनयो नयसङ्काशो हृदयान्नापसर्पति ॥ २-१०३-९ (१५५९३)
अनर्थाश्चार्थरूपेण अर्थाश्चानर्थरूपिणः ।
उत्तिष्ठन्ति विनाशाय नूनं तच्चास्य रोचते ॥ २-१०३-१० (१५५९४)
न कालो दण्डमुद्यम्य शिरः कृन्तति कस्यचित् ।

कालस्य बलमेतावाद्विपरीतार्थदर्शनम् ॥ २-१०३-११ (१५५९५)
आसादितमिदं घोरं तुमुलं रोमहर्षणम् ।
पाञ्चालीमपकर्षद्भिः सभामध्ये तपस्विनीम् ॥ २-१०३-१२ (१५५९६)
अयोनिजां रूपवतीं कुले जातां विभावसोः ।
को नु तां सर्वधर्मज्ञां परिभूय यशस्विनीम् ॥ २-१०३-१३ (१५५९७)
पर्यानयेत्सभामध्ये विना दुर्द्यूतदेविनम् ।
स्त्रीधर्मिणी वरारोहा शोणितेन परिप्लुता ॥ २-१०३-१४ (१५५९८)
एकवस्त्राथ पाञ्चाली पाण्डवानभ्यवैक्षत ।
हृतस्वान्हृतराज्यांश्च हृतवस्त्रान्हृतश्रियः ॥ २-१०३-१५ (१५५९९)
विहीनान्सर्वकामेभ्यो दासभावमुपागतान् ।
धर्मपाशपरिक्षिप्तानशक्तानिव विक्रमे ॥ २-१०३-१६ (१५६००)
क्रुद्धां चानर्हतीं कृष्णां दुःखितां कुरुसंसदि ।
दुर्योधनश्च कर्णश्च कटुकान्यभ्यभाषताम् ॥ २-१०३-१७ (१५६०१)
इति सर्वमिदं राजन्नाकुलं प्रतिभाति मे। २-१०३-१८ (१५६०२)
धृतराष्ट्र उवाच ॥
तस्याः कृपणचक्षुर्भ्यां प्रदह्येतापि मेदिनी ॥ २-१०३-१८क्ष् (१७४७)
अपि शेषं भवेदद्य पुत्राणां मम सञ्जय ।
भरतानां स्त्रियः सर्वा गान्धार्या सह सङ्गताः ॥ २-१०३-१९ (१५६०३)
प्राकोशन्भैरवं तत्र दृष्ट्वा कृष्णां सभागताम् ।
धर्मिष्टां धर्मपत्नीं च रूपयौवनशालिनीम् ॥ २-१०३-२० (१५६०४)
प्रजाभिःसह सङ्गम्य ह्यनुशोचन्ति नित्यशः ।
अग्निहोत्राणि सायाह्ने च चाहूयन्त सर्वशः ॥ २-१०३-२१ (१५६०५)
ब्राह्मणाः कुपिताश्चासन्द्रौपद्याः परिकर्षणे ।
आसीन्निष्ठानको घोरो निर्घातश्च महानभूत् ॥ २-१०३-२२ (१५६०६)
दिव उल्काश्चापतन्त राहुश्चार्कमुपाग्रसत् ।
अपर्वणि महाघोरं प्रजानां जयन्भयम् ॥ २-१०३-२३ (१५६०७)
तथैव रथशालासु प्रादुरासीद्धुताशनः ।
ध्वजाश्चापि व्यशीर्यन्त भरतानामभूतये ॥ २-१०३-२४ (१५६०८)
दुर्योधनस्याग्निहोत्रे प्राक्रोशन्भैरवं शिवाः ।
तास्तदा प्रत्यभाषन्त रासभाः सर्वतो दिशः ॥ २-१०३-२५ (१५६०९)
प्रातिष्ठत ततो भीष्मो द्रोणेन सह सञ्जय ।
कृपश्च सोमदत्तश्च बाह्लीकश्च महामनाः ॥ २-१०३-२६ (१५६१०)
ततोऽहमब्रुवं तत्र विदुरेण प्रचोदितः ।
वरं ददानि कृष्णायै काङ्क्षितं यद्यदिच्छति ॥ २-१०३-२७ (१५६११)
अवृणोत्तत्र पाञ्चाली पाण्डवाना --सताम् ।
सरथान्सधनुष्कांश्चाप्यनुज्ञासिषमप्यहम् ॥ २-१०३-२८ (१५६१२)

अथाब्रवीन्महाप्राज्ञो विदुरः सर्वधर्मवित् ।
एतदन्तास्तु भरता यद्व-कृष्णा सभां गता ॥ २-१०३-२९ (१५६१३)
यैषा पाञ्चालराजस्य सुता सा श्रीरनुत्तमा ।
पाञ्चाली पाण्डवानेतान्दैवसृष्टोपसर्पति ॥ २-१०३-३० (१५६१४)
तस्याः पार्थाः परिक्लेशं न क्षंस्यन्ते ह्यमर्षणाः ।
वृष्णयो वा महेष्वासाः पाञ्चाला वा महारथाः ॥ २-१०३-३१ (१५६१५)
तेन सत्याभिसन्धेन वासुदेवेन रक्षिताः ।
आगमिष्यति बीभत्सुः पञ्चालैः परिवारितः ॥ २-१०३-३२ (१५६१६)
तेषां मध्ये महेष्वासो भीमसेनो महाबलः ।
आगमिष्यति धुन्वानो गदां दण्डमिवान्तकः ॥ २-१०३-३३ (१५६१७)
ततो गाण्डीवनिर्घोषं श्रुत्वा पार्थस्य धीमतः ।
गदावेगं च भीमस्य नालं सोढुं नराधिपाः ॥ २-१०३-३४ (१५६१८)
तत्र मे रोचते नित्यं पार्थैः साम न विग्रहः ।
कुरुभ्यो हि सदा मन्ये पाण्डवान्बलवत्तरान् ॥ २-१०३-३५ (१५६१९)
तथा हि बलवान्राजा जरासन्धो महाद्युतिः ।
बाहुप्रहरणेनैव भीमेन निहतो युधि। २-१०३-३६ (१५६२०)
तस्य ते शम एवास्तु पाण्डवैर्भरतर्षभ ।
उभयोः पक्षयोर्युक्तं क्रियतामविशङ्कया ॥ २-१०३-३७ (१५६२१)
एवं कृते महाराज परं श्रेयस्त्वमाप्स्यसि ।
एवं गावल्गणे क्षत्ता धर्मार्थसहितं वचः ॥ २-१०३-३८ (१५६२२)
उक्तवान्न गृहीतं वै मया पुत्रहितैषिणा ॥ ॥ २-१०३-३९ (१५६२३)

इति श्रीमन्महाभारते शतसाहस्र्यां
संहितायां वैयासिक्यां सभापर्वणि अनुद्यूतपर्वणि
त्र्यधिकशततमोऽध्यायः। ।१०३.। ॥ समाप्तमनुद्यूतपर्व सभापर्व
च ॥ इतः परं वनपर्व भविष्यति तस्यायमाद्यः श्लोकः। जनमेजय
उवाच॥ एवं द्यूतजिताः पार्थाः कोपिताश्च दुरात्मभिः। धार्तराष्ट्रैः
सहामात्यैर्निकृत्या द्विजसत्तम॥ १.।

Mahabharata - Sabha Parva - Chapter Footnotes

२-१०३-२२ निष्ठानकः चण्डवात इत्यर्थः ।निर्घातो वज्रशब्दः ॥

---

.. vanaparva 03 Kumbhaghonam Edition ..

॥ ३ वनपर्व ॥

३. अरण्यपर्व

वन-अध्ययय००१
॥ श्रीः ॥
३.१. अध्यायः १

Mahabharata - Vana Parva - Chapter Topics
द्यूतजितानां पाण्डवानां द्रौपद्यासह वनंप्रति प्रस्थानम् ॥ १ ॥
तदनु पौरैर्दुर्योधननगर्हणपूर्वकं पाण्डवैः सहारण्यवासेच्छया तदनुगमनम् ॥ २ ॥
युधिष्ठिरेण प्रार्थनया तेषां पुरंप्रति निवर्तनपूर्वकं सायं गङ्गातीरगवटमेत्य तत्रानुगतब्राह्मणैः सह सुखेन रात्रियापनम् ॥ ३ ॥

Mahabharata - Vana Parva - Chapter Text

३-१-० (१५६२४)
श्रीवेदव्यासाय नमः। ३-१-०क्ष् (१७४८)
नारायणं नमस्कृत्य नरं चैव नरोत्तमम् ।
देवीं सरस्वतीं व्यासं ततो जयमुदीरयेत् ॥ ३-१-१ (१५६२५)
जनमेजय उवाच
एवं द्यूतजिताः पार्थाः कोपिताश्च दुरात्मभिः ।
धार्तराष्ट्रैः सहामात्यैर्निकृत्या द्विजसत्तम ॥ ३-१-१क्ष् (१७४९)
श्राविताः परुषा वाचः सृजन्तीर्वैरमुत्तमम् ।
किमकुर्वत कौरव्या मम पूर्वपितामहाः ॥ ३-१-२ (१५६२६)
कथं चैश्वर्यभूयिष्ठाः सहसा दुःखमेयुषः ।
वने विजह्रिरे पार्थाः शक्रप्रतिमतेजसः ॥ ३-१-३ (१५६२७)
के चैतानन्ववर्तन्त प्राप्तान्व्यसनमुत्तमम् ।
किमाचाराः किमाहाराः क्वच वासो महात्मनाम् ॥ ३-१-४ (१५६२८)
कथं द्वादश वर्षाणि वने तेषां महात्मनाम् ।
व्यतीयुर्ब्राह्मणश्रेष्ठ शूराणामनिवर्तिनाम् ॥ ३-१-५ (१५६२९)

कथं च राजपुत्री सा प्रवरा सर्वयोषिताम् ।
पतिव्रता महाभागा सततं प्रियवादिनी ॥ ३-१-६ (१५६३०)
वनवासमदुःखार्हा दारुणं प्रत्यपद्यत ।
एतदाचक्ष्व मे सर्वं विस्तरेण तपोधन ॥ ३-१-७ (१५६३१)
श्रोतुमिच्छामि तत्सर्वं भूरिद्रविणतेजसाम् ।
कथ्यमानं त्वया विप्र परं कौतूहलं हि मे ॥ ३-१-८ (१५६३२)
वैशंपायन उवाच। ३-१-९क्ष् (१७५०)
एवं द्यूतजिताः पार्थाः कोपिताश्च दुरात्मभिः ।
धार्तराष्ट्रैः सहामात्यैर्निर्ययुर्गजसाह्वयात् ॥ ३-१-९ (१५६३३)
वर्धमानपुरद्वारादभिनिष्क्रम्य ते तदा ।
उदङ्मुखाः शस्त्रभृतः प्रययुः सह कृष्णया ॥ ३-१-१० (१५६३४)
इन्द्रसेनादयश्चैतान्भृत्याः परिचतुर्दश ।
रथैरनुययुः शीघ्रैः स्त्रिय आदाय सर्वशः ॥ ३-१-११ (१५६३५)
ग्ततस्ते पुरुषव्याघ्रा रथानास्थाय भारत ।
ददृशुर्जाह्नवीतीरे प्रमाणाख्यं महावटम् ॥' ३-१-१२ (१५६३६)
व्रजतस्तान्विदित्वा तु पौराः शोकाभिपीडिताः ।
गर्हयन्तोऽसकृद्भीष्मविदुरद्रोणगौतमान् ।
ऊचुर्वै समयं कृत्वा समागम्य परस्परम् ॥ ३-१-१३ (१५६३७)
पौरा ऊचुः। ३-१-१४क्ष् (१७५१)
नेदमस्ति कुलं सर्वं न वयं नच नो गृहाः ।
यत्रदुर्योधनः पापः सौबलेयेन पालितः ।
कर्णदुःशासनाद्यैश्च राज्यमेतच्चिकीर्षति ॥ ३-१-१४ (१५६३८)
न तत्कुलं न चाचारो न धर्मोऽर्थः कुतः सुखम् ।
यत्र पापसहायोऽयं पापो राज्यं चिकीर्षति ॥ ३-१-१५ (१५६३९)
दुर्योधनो गुरुद्वेषी त्यक्तधर्मः प्रियानृतः ।
अर्तलुब्धोऽभिमानी च नीचः प्रकृतिनिर्घृणः ॥ ३-१-१६ (१५६४०)
नेयमस्ति मही कृत्स्ना यत्र दुर्योधनो नृपः ।
साधु गच्छामहे सर्वे यत्र गच्छन्ति पाण्डवाः ॥ ३-१-१७ (१५६४१)
सानुक्रोशा महात्मानो विजितेन्द्रियशत्रवः ।
ह्रीमन्तः कीर्तिमन्तश्च धर्माचारपरायणाः ॥ ३-१-१८ (१५६४२)
वैशंपायन उवाच। ३-१-१९क्ष् (१७५२)
एवमुक्त्वाऽनुजग्मुस्ते पाण्डवांस्तान्समेत्य च ।
ऊचुः प्राञ्जलयः सर्वे तान्कुन्तीमाद्रिनन्दनान् ॥ ३-१-१९ (१५६४३)
क्वगमिष्यथ भद्रंवस्त्यक्त्वाऽस्मान्दुःखभागिनः ।
वयमप्यनुयास्यामो यत्र यूयं गमिष्यथ ॥ ३-१-२० (१५६४४)
अधर्मेण जिताञ्श्रुत्वा युष्मांस्त्यक्तघृणैः परैः ।

उद्विग्नाः स्मो भृशं सर्वे नास्मान्हातुमिहार्हथ ॥ ३-१-२१ (१५६४५)
भक्तानुरक्तान्सुहृदः सदा प्रियहिते रतान् ।
कुराजाधिष्ठिते राज्ये न विनश्येम सर्वशः ॥ ३-१-२२ (१५६४६)
श्रूयतां चाभिधास्यामो गुणदोषान्नरर्षभाः ।
शुभाशुभाधिवासेन संसर्गः कुरुते यथा ॥ ३-१-२३ (१५६४७)
वस्त्रमापस्तिलान्भूमिं गन्धो वासयते यथा ।
पुष्पाणामधिवासेन तथा संसर्गजा गुणाः ॥ ३-१-२४ (१५६४८)
मोहजालस्य योनिर्हि मूढैरेव समागमः ।
अहन्यहनि धर्मस्य योनिः साधुसमागमः ॥ ३-१-२५ (१५६४९)
तस्मात्प्राज्ञैश्च वृद्धैश्च सुस्वभावैस्तपस्विभिः ।
सद्भिश्च सह संसर्गः कार्यः शमपरायणैः ॥ ३-१-२६ (१५६५०)
येषां त्रीण्यवदातानि विद्या योनिश्च कर्म च ।
ते सेव्यास्तैः समास्याहि शास्त्रेभ्योपि गरीयसी ॥ ३-१-२७ (१५६५१)
निरारम्भा ह्यपि वयं पुण्यशीलेषु साधुषु ।
पुण्यमेवाप्नुयामेह पापं पापोपसेवनात् ॥ ३-१-२८ (१५६५२)
असतां दर्शनात्स्पर्शात्संजल्पाच्च सहासवात् ।
धर्माचाराः प्रहीयन्ते सिद्ध्यन्ति च न मानवाः ॥ ३-१-२९ (१५६५३)
बुद्धिश्च हीयते पुंसां नीचैः सह समागमात् ।
मध्यमैर्मध्यतां याति श्रेष्ठैः श्रेष्ठत्वमाप्नुयुः ॥ ३-१-३० (१५६५४)
अनीचैर्नाप्यविषयैर्नाधर्मिष्ठैर्विशेषतः ।
ये गुणाः कीर्तिता लोके धर्मकामार्थसंभवाः ।
लोकाचारेषु संभूता वेदोक्ताः शिष्टसंमताः ॥ ३-१-३१ (१५६५५)
ते युष्मासु समस्ताश्च व्यस्ताश्चैवेह सद्गुणाः ।
इच्छामो गुणवन्मध्ये वस्तुं श्रेयोभिकाङ्क्षिणः ॥ ३-१-३२ (१५६५६)
युधिष्ठिर उवाच। ३-१-३३क्ष् (१७५३)
धन्या वयं यदस्माकं स्नेहकारुण्ययन्त्रिताः ।
असतोऽपि गुणानाहुर्ब्राह्मणप्रमुखाः प्रजाः ॥ ३-१-३३ (१५६५७)
तदहं भ्रातृसहितः सर्वान्विज्ञापयामि वः ।
नान्यथा तद्धि कर्तव्यमस्मत्स्नेहानुकम्पया ॥ ३-१-३४ (१५६५८)
भीष्मः पितामहो राजा विदुरो जननी च मे ।
सुहृज्जनश्च प्रायो मे नगरे नागसाह्वये ॥ ३-१-३५ (१५६५९)
ते त्वस्मद्धितकामार्थं पालनीयाः प्रयत्नतः ।
युष्माभिः सहिताः सर्वे शोकसंतापविह्वलाः ॥ ३-१-३६ (१५६६०)
निवर्ततागता दूरं ममागमनकाङ्क्षिणः ।
स्वजने न्यासभूते मे कार्या स्नेहान्विता मतिः ॥ ३-१-३७ (१५६६१)
एतद्धि मम कार्याणां परमं हृदि संस्थितम् ।

कृता तेन तु तुष्टिर्मे सत्कारश्च भविष्यति ॥ ३-१-३८ (१५६६२)
वैशंपायन उवाच। ३-१-३९क्ष् (१७५४)
तथानुमन्त्रितास्तेन धर्मराजेन ताः प्रजाः ।
चक्रुरार्तस्वरं घोरं हा राजन्निति दुःखिताः ॥ ३-१-३९ (१५६६३)
गुणान्पार्थस्य संस्मृत्य दुःखार्ताः परमातुराः ।
अकामाः संन्यवर्तन्त समागम्याथ पाण्डवान् ॥ ३-१-४० (१५६६४)
निवृत्तेषु तुं पौरेषु रथानास्थाय पाण्डवाः ।
आजग्मुर्जाह्नवीतीरे प्रमाणाख्यं महावटम् ॥ ३-१-४१ (१५६६५)
ते तं दिषसशेषेण वटं गत्वा तु पाण्डवाः ।
ऊषुस्तां रजनीं वीराः संस्पृश्य सलिलं शुचि ॥ ३-१-४२ (१५६६६)
उदकेनैव तां रात्रिमूषुस्ते दुःखकर्शिताः ।
अनुजग्मुश्च तत्रैतान्स्नेहात्केचिद्द्विजातयः ॥ ३-१-४३ (१५६६७)
साग्नयोऽनग्नयश्चैव सशिष्यगणबान्धवाः ।
स तैः परिवृतो राजा शुशुभे ब्रह्मवादिभिः ॥ ३-१-४४ (१५६६८)
तेषां प्रादुष्कृताग्नीनां मुहूर्ते रम्यदारुणे ।
ब्रह्मघोषपुरस्कारः संजल्पः समजायत ॥ ३-१-४५ (१५६६९)
राजानं तु कुरुश्रेष्ठं ते हंसमधुरस्वराः ।
आश्वासयन्तो विप्राग्र्याः क्षयां सर्वां व्यनोदयत् ॥ ३-१-४६ (१५६७०)
ग्राजा तु भ्रातृभिः सार्धं तथा सर्वैः सुहृद्गणैः ।
अशेत तां निशांराजन्दुःखशोकसमाहितः ॥' ३-१-४७ (१५६७१)

इति श्रीमन्महाभाते अरण्यपर्वणि किर्मीरवधपर्वणि प्रथमोऽध्यायः ॥ १ ॥
Mahabharata - Vana Parva - Chapter Footnotes

३-१-१ पार्था इति च्छत्रिन्यायेन माद्रीसुतयोरप्युपलक्षणम्
। दुरात्मभिर्दुष्टचित्तैः। सहामात्यैः कर्णादिभिः। निकृत्या छलेन ॥
३-१-२ सृजद्भिर्वैरमुत्तममिति ख । ङ। झ। पाठः ॥
३-१-३ एयुषः प्राप्तवन्तः । कथं चैश्वर्यविभ्रष्टा इति
ख। झ। पाठः ॥
३-१-४ उत्तमं तीव्रम् ॥
३-१-८ द्रविणं पराक्रमस्तेजो देहकान्तिश्च ते उभे पुष्कले येषां
ते भूरिद्रविणतेजसः ॥
३-१-९ गजसाह्वयात् हास्तिनपुरात् ॥
३-१-१० वर्धमानपुरंनाम ग्रामविशेषस्तदभिमुखं द्वारं तस्मात् ॥
३-१-११ परिचतुर्दश अधिकचतुर्दशाः
। पञ्चदशेत्यर्थः। संख्यायाव्ययासन्नेति

समासः। समासान्तविधेरनित्यत्वात् डचूप्रत्ययस्याभावः ॥
३-१-१३ ऊचुर्विगतसंत्रासा इति ख ।झ। पाठः ॥
३-१-१६ प्रकृतिनिर्घृणः स्वभावनिर्दयः ।त्यक्ताचारसुहृज्जन इति झ। पाठः ॥
३-१-१८ सानुक्रोशाः सदयाः ॥
३-१-२२ भक्तान् आराधनापरान् ।अनुरक्तान् प्रीतिमतः। सुहृदः वेतनाद्युपकारमनपेक्ष्य उपकारकान्। न विनश्येम विनाशं न प्रार्थयासहे। प्रार्थनायां लिङ् ॥
३-१-२४ आपः अपः ॥
३-१-२७ अवदातानि शुद्धानि ।समास्या संगतिः ॥
३-१-२८ निरारम्भाः अग्निहोत्राद्यकुर्वाणा अपि ॥
३-१-२९ न सिद्ध्यन्ति सिद्धिश्चित्तशुद्धिस्तां न प्राप्नुवन्ति धर्माचारहीनत्वात् ॥
३-१-३१ अविषयैः अगोचरैरपरिचितैरित्यर्थः ।धर्मकामार्थसंभवाः धर्मादीनां संभव उत्पत्तिर्येभ्यस्ते ॥
३-१-३२ समस्ताः एकीभूताः ।व्यस्ताः पृथक्पृथग्भूताः ॥
३-१-३४ स्नेहो वात्सल्यं तत्सहिता अनुकम्पा दया ॥
३-१-४० समागम्य संपृच्छ्य ३-१-४३ ऊषुः वासं चक्रुः ॥
३-१-४४ ऊषुर्निन्युः ॥
३-१-४५ साग्नयः दारैः सहिताः अग्नयो यैस्ते ।रम्यत्वं तापविरहात्संध्यारागादिशोभातश्च। दारुणो रक्षःपिशाचादिसंचारकालत्वात् ॥

---

वन-अध्यय००२
॥ श्रीः ॥
३.२. अध्यायः २

Mahabharata - Vana Parva - Chapter Topics
युधिष्ठिरेण वने स्वानुयायिनो ब्राह्मणान्प्रति स्वस्य हृतसर्वस्वतया तद्भरणस्य दुष्करत्वकथनपूर्वकं प्रतिनिवर्तनप्रार्थना ॥ १ ॥
ब्राह्मणैः स्वयमेवत्मभरणपूर्वकं स्वसहवासमात्रेऽर्थिते युधिष्ठिरेण स्वस्य तद्भरणाशक्तिचिन्तनेन विषादाधिगमः ॥ शौनकेन युधिष्ठिरंप्रति ब्राह्मणभरणाय तपसा सिद्धिसंपादनचोदना ॥ ३ ॥

Mahabharata - Vana Parva - Chapter Text

३-२-० (१५६७२)
वैशंपायन उवाच। ३-२-०क्ष् (१७५५)
प्रभातायां तु शर्वर्यां तेषामक्लिष्टकर्मणाम् ।
वनं यियासतां विप्रास्तस्थुर्भिक्षाभुजोऽग्रतः ।
तानुवाच ततो राजा कुन्तीपुत्रो युधिष्ठिरः ॥ ३-२-१ (१५६७३)
वयं हि हृतसर्वस्वा हृतराज्या हृतश्रियः ।
फलमूलामिषाहारा वनं यास्याम दुःखिताः ॥ ३-२-२ (१५६७४)
वनं च दोषबहुलं बहुव्यालसरीसृपम् ।
परिक्लेशश्च वो मन्ये ध्रुवं तत्र भविष्यति ॥ ३-२-३ (१५६७५)
ब्राह्मणानां परिक्लेशो दैवतान्यपि सादयेत् ।
किंपुनर्मामितो विप्रा निवर्तध्वं यथेष्टतः ॥ ३-२-४ (१५६७६)
ब्राह्मणा ऊचुः। ३-२-५क्ष् (१७५६)
गतिर्या भवतां राजंस्तां वयं गन्तुमुद्यताः ।
नार्हथास्मान्परित्यक्तुं भक्तान्सद्धर्मदर्शिन ॥ ३-२-५ (१५६७७)
स्नेहकर्माणि भक्तेषु दैवतान्यपि कुर्वते ।
विशेषतो ब्राह्मणेषु सदाचारावलम्बिषु ॥ ३-२-६ (१५६७८)
युधिष्ठिर उवाच। ३-२-७क्ष् (१७५७)
ममापि परमा भक्तिर्ब्राह्मणेषु सदा द्विजाः ।
सहायविपरिभ्रंशस्त्वयं सादयतीव माम् ॥ ३-२-७ (१५६७९)
आहरेयुर्हि ये सर्वे फलमूलमृगांस्तथा ।
त इमे शोकजैर्दुःखैर्भ्रातरो मे विमोहिताः ॥ ३-२-८ (१५६८०)
द्रौपद्या विप्रकर्षेण राज्यापहरणेन च ।
दुःखार्दितानिमान्क्लेशैर्नाहं योक्तुमिहोत्सहे ॥ ३-२-९ (१५६८१)
ब्राह्मणा ऊचुः। ३-२-१०क्ष् (१७५८)
अस्मत्पोषणजा चिन्ता मा भूत्ते हृदि पार्थिव ।
स्वयमाहृत्य वन्यानि त्वानुयास्यामहे वयम् ॥ ३-२-१० (१५६८२)
अनुध्यानेन जप्येन विधास्यामः शिव तव ।
कथाभिश्चानुकूलाभिः सह रंस्यामहे वने ॥ ३-२-११ (१५६८३)
युधिष्ठिर उवाच। ३-२-१२क्ष् (१७५९)
एवमेतन्न संदेहो रमेयं ब्राह्मणैः सह ।
न्यूनभावात्तु पश्यामि प्रत्यादेशमिवात्मनः ॥ ३-२-१२ (१५६८४)
कथं द्रक्ष्यामि वः सर्वान्स्वयमाहृत्य भोजिनः ।
मद्भक्त्या क्लिश्यतोऽनर्हान्धिक्पापान्धृतराष्ट्रजान् ॥ ३-२-१३ (१५६८५)
वैशंपायन उवाच। ३-२-१४क्ष् (१७६०)
इत्युक्त्वा नृपतिः शोचन्निषसाद महीतले ॥ ३-२-१४ (१५६८६)
तमध्यात्मरतो विद्वाञ्शौनको नाम वै द्विजः ।

योगे साङ्ख्ये च कुशलो राजानमिदमब्रवीत् ॥ ३-२-१५ (१५६८७)
शोकस्थानसहस्राणि हर्षस्थानशतानि च ।
दिवसेदिवसे मूढमाविशन्ति न पण्डितम् ॥ ३-२-१६ (१५६८८)
न हि ज्ञानविरुद्धेषु बहुदोषेषु कर्मसु ।
श्रेयोघातिषु सज्जन्ते बुद्धिमन्तो भवद्विधाः ॥ ३-२-१७ (१५६८९)
अष्टाङ्गां बुद्धिमाहुर्यां सर्वाश्रेयोभिघातिनीम् ।
श्रुतिस्मृतिसमायुक्तां राजन्सा त्वय्यवस्थिता ॥ ३-२-१८ (१५६९०)
ग्शुश्रूषा श्रवणं चैव ग्रहणं धारणं तथा ।
ऊहापोहोऽर्थविज्ञानं तत्वज्ञानं च धीगुणाः ॥' ३-२-१९ (१५६९१)
अर्थकृच्छ्रेषु दुर्गेषु व्यापत्सु स्वजनेष्वपि ।
शारीरमानसैर्दुःखैर्न सीदन्ति भवद्विधाः ॥ ३-२-२० (१५६९२)
श्रूयतां चाभिधास्यामि जनकेन यथा पुरा ।
आत्मव्यवस्थानकरागीताः श्लोका महात्मना ॥ ३-२-२१ (१५६९३)
मनोदेहसमुत्थाभ्यां दुःखाभ्यामर्दितं जगत् ।
तयोर्व्याससमासाभ्यांशमोपायमिमं शृणु ॥ ३-२-२२ (१५६९४)
व्याधेरनिष्टसंस्पर्शाच्छ्रमादिष्टविवर्जनात् ।
दुःखं चतुर्भिः शारीरं कारणैः संप्रवर्तते ॥ ३-२-२३ (१५६९५)
तदा तत्प्रतिकाराच्च सततं चाविचिन्तनात् ।
आधिव्याधिप्रशमनं क्रियायोगबलेन तु ॥ ३-२-२४ (१५६९६)
मतिमन्तो व्यथोपेताः शमं प्रागेव कुर्वते ।
मानसस्य प्रियाख्यानैः संभोगोपनयैर्नृणाम् ॥ ३-२-२५ (१५६९७)
मानसेन हि दुःखेन शरीरमुपतप्यते ।
अयःपिण्डेन तप्तेन कुम्भसंस्थमिवोदकम् ॥ ३-२-२६ (१५६९८)
मानसं शमयेत्तस्माज्ज्ञानेनाग्निमिवाम्बुना ।
प्रशन्ते मानसे दुःखे शारीरमुपशाम्यति ॥ ३-२-२७ (१५६९९)
मनसो दुःखमूलं तु स्नेह इत्युपलभ्यते ।
स्नेहात्तु सज्जते जन्तुर्दुःखयोगमुपैति च ॥ ३-२-२८ (१५७००)
स्नेहमूलानि दुःखानि स्नेहजानि भयानि च ।
शोकहर्षौ तथायासः सर्वं स्नेहात्प्रवर्तते ॥ ३-२-२९ (१५७०१)
स्नेहात्कारुण्यरागौ च प्रजास्वीर्ष्यादयस्तथा ।
अश्रेयस्कावुभावेतौ पूर्वस्तत्र गुरुः स्मृतः ॥ ३-२-३० (१५७०२)
कोटराग्निर्यथाऽशेषं समूलं पादपं दहेत् ।
धर्मार्थिनं तथाऽल्पोपि रागदोषो विनाशयेत् ॥ ३-२-३१ (१५७०३)
विप्रयोगे न तु त्यागी दोषदर्शी समागमे ।
विरागं भजते जन्तुर्निर्वैरो निष्परिग्रहः ॥ ३-२-३२ (१५७०४)
तस्मात्स्नेहं स्वपक्षेभ्यो मित्रेभ्यो धनसंचयात् ।

स्वशरीरसमुत्थं च ज्ञानेन विनिवर्तयेत् ॥ ३-२-३३ (१५७०५)
ज्ञानान्वितेषु युक्तेषु शास्त्रज्ञेषु कृतात्मसु ।
न तेषु सज्जते स्नेहः पद्मपत्रेष्विवोदकम् ॥ ३-२-३४ (१५७०६)
रागाभिभूतः पुरुषः कामेन परिकृष्यते ।
इच्छा संजायते तस्य ततस्तृष्णा विवर्धते ॥ ३-२-३५ (१५७०७)
तृष्णा हि सर्वपापिष्ठा नित्योद्वेगकरी नृणाम् ।
अधर्मबहुला चैव घोरा पापानुबन्धिनी ॥ ३-२-३६ (१५७०८)
या दुस्त्यजा दुर्मतिभिर्या न जीर्यति जीर्यतः ।
योसौ प्राणान्तिको रोगस्तां तृष्णांत्यजतः सुखम् ॥ ३-२-३७ (१५७०९)
अनाद्यन्ता तु सा तृष्णा अन्तर्देहगता नृणाम् ।
विनाशयति भूतानि अयोनिज इवानलः ॥ ३-२-३८ (१५७१०)
यथैधः स्वसमुत्थेन वह्निना नाशमृच्छति ।
तथाऽकृतात्मा लोभेन सहजेन विनश्यति ॥ ३-२-३९ (१५७११)
राजतः सलिलादग्नेश्चोरतः स्वजनादपि ।
ग्अर्थिभ्यः कालतस्तस्मान्नित्यमर्थवतां भयम्'।
भयमर्थवतां नित्यं मृत्योः प्राणभृतामिव ॥ ३-२-४० (१५७१२)
यथा ह्यामिषमाकाशे पक्षिभिः श्वापदैर्भुवि ।
भक्ष्यते सलिले मत्स्यैस्तथा सर्वेण वित्तवान् ॥ ३-२-४१ (१५७१३)
अर्थ एव हि केषांचिदनर्थं भजते नृणाम् ।
अर्थश्रेयसि चासक्तो न श्रेयो विन्दते नरः ।
तस्मादर्थागमाः सर्वे मनोमोहविवर्धनाः ॥ ३-२-४२ (१५७१४)
कार्पण्यं दर्पमानौ च भयमुद्वेग एव च ।
अर्थजानि विदुः प्राज्ञा दुःखान्येतानि देहिनाम् ॥ ३-२-४३ (१५७१५)
अर्थस्योपार्जने दुःखमार्जितानां च रक्षणे ।
नाशे दुःखं व्यये दुःखं घ्नन्ति चैवार्थकारणात् ३-२-४४ (१५७१६)
अर्था दुःखं परित्यक्तुं पालिताश्चैव शत्रवः ।
दुःखेन चाधिगम्यन्ते तेषां नाशं न चिन्तयेत् ॥ ३-२-४५ (१५७१७)
असन्तोषपरा मूढाः संतोषं यान्ति पण्डिताः ।
अन्तो नास्ति पिपासायाः संतोषः परमं सुखम् ।
तस्मात्संतोषमेवेह परं पश्यन्ति पण्डितः ॥ ३-२-४६ (१५७१८)
अनित्यं यौवनं रूपं जीवितं रत्नसंचयः ।
ऐश्वर्यं प्रियसंवासो गृद्ध्येत्तत्र न पण्डितः ॥ ३-२-४७ (१५७१९)
त्यजेत स च यांस्तस्मात्तज्जान्क्लेशान्सहेत च ।
न हि संचयवान्कश्चिद्दृश्यते निरुपद्रवः ।
अतश्च धार्मिकैः पुम्भिरनीहार्थः प्रशस्यते ॥ ३-२-४८ (१५७२०)
धर्मार्थं यस्य वित्तेहा वरं तस्य नरीहता ।

प्रक्षालनाद्धि पङ्कस्य श्रेयो ह्यस्पर्शनं नृणाम् ॥ ३-२-४९ (१५७२१)
युधिष्ठिरैवमर्थेषु न स्पृहां कर्तुमर्हसि ।
धर्मेण यदि ते कार्यं विमुक्तेच्छो भवार्थतः ॥ ३-२-५१क्ष्युधिष्ठिर
उवाच। ३-२-५० (१५७२२)
नार्थोपभोगलिप्सार्थमियमर्थेप्सुता मम ।
भरणार्थं तु विप्राणां ब्रह्मन्काङ्क्षे न लोभतः ॥ ३-२-५१ (१५७२३)
कथं ह्यस्मद्विधो ब्रह्मन्वर्तमानो गृहाश्रमे ।
भरणं पालनं चापि न कुर्यादनुयायिनाम् ॥ ३-२-५२ (१५७२४)
संविभागो हि भूतानां सर्वेषामेव दृश्यते ।
तथैवापचमानेभ्यः प्रदेयं गृहमेधिना ॥ ३-२-५३ (१५७२५)
तृणानि भूमिरुदकं वाक्चतुर्थी च सूनृता ।
सतामेतानि गेहेषु नोच्छिद्यन्ते कदाचन ॥ ३-२-५४ (१५७२६)
देयमार्तस्य शयनं स्थितश्रान्तस्य चासनम् ।
तृषितस्य च पानीयं क्षुधितस्य च भोजनम् ॥ ३-२-५५ (१५७२७)
चक्षुर्दद्यान्मनो दद्याद्वाचं दद्याच्च सूनृताम् ।
उत्थाय चासनं दद्यादेष धर्मः सनातनः ।
प्रत्युत्थायाभिगमनं कुर्यान्न्यायेन चार्चनाम् ॥ ३-२-५६ (१५७२८)
अग्निहोत्रमनड्वांश्च ज्ञातयोऽतिथिवान्धवाः ।
पुत्रा दाराश्च भृत्याश्च निर्दहेयुरपूजिताः ॥ ३-२-५७ (१५७२९)
आत्मार्थं पाचयेन्नान्नं न वृथा घातयेत्पशून् ।
न चैकः स्वयमश्नीयाद्विधिवर्जं न निर्वपेत् ॥ ३-२-५८ (१५७३०)
श्वभ्यश्च श्वपचेभ्यश्च वयोभ्यश्चावपेद्भुवि ।
वैश्वदेवं हि नामैतत्सायं प्रातश्च दीयते ॥ ३-२-५९ (१५७३१)
विघसाशी भवेत्तस्मान्नित्यं चामृतभोजनः ।
विघसो भुक्तशेषं तु यज्ञशेषं तथाऽमृतम् ॥ ३-२-६० (१५७३२)
चक्षुर्दद्यान्मनो दद्याद्वाचं दद्याच्च सूनृताम् ।
अनुव्रजेदुपासीत स यज्ञः पञ्चदक्षिणः ॥ ३-२-६१ (१५७३३)
यो दद्यादपरिक्लिष्टमन्नमद्ध्वनि वर्तते ।
श्रान्तायादृष्टपूर्वाय तस्य पुण्यफलं महत् ॥ ३-२-६२ (१५७३४)
एवं यो वर्तते वृत्तिं वर्तमानो गृहाश्रमे ।
तस्य धर्मं परंप्राहुः कथं वा विप्र मन्यसे ॥ ३-२-६३ (१५७३५)
शौनक उवाच। ३-२-६४क्ष् (१७६१)
अहो बत महत्कष्टं विपरीतमिदं जगत् ।
येनापत्रपते साधुरसाधुस्तेन तुष्यति ॥ ३-२-६४ (१५७३६)
शिश्नोदरकृतेऽप्राज्ञः करोति विषसं बहु ।
मोहरागवशाक्रान्त इन्द्रियार्थवशानुगः ॥ ३-२-६५ (१५७३७)

ह्रियते बुध्यमानोपि नरो हारिभिरिन्द्रियैः ।
विमूढसंज्ञो दुष्टाश्वैरुद्धान्तैरिव सारथिः ॥ ३-२-६६ (१५७३८)
षडिन्द्रियाणि विषयं समागच्छन्ति वै यदा ।
तद्रा प्रादुर्भवत्यषां पूर्वसंकल्पजं मनः ॥ ३-२-६७ (१५७३९)
मनो यस्येन्द्रियस्येह विषयान्याति सेवितुम् ।
वस्यौत्सुक्यं संभवति प्रवृत्तिश्चोपजायते ॥ ३-२-६८ (१५७४०)
ततः संकल्पवीर्येण कामेन विषयेषुभिः ।
विद्धः पतति लोभाग्नौज्योतिर्लोभात्पतङ्गवत् ॥ ३-२-६९ (१५७४१)
ततो दारैर्विहारैश्च मोहितश्च यथेप्सया ।
महामोहमुखे मग्नो नात्मानमवबुध्यते ॥ ३-२-७० (१५७४२)
एवं पतति संसारे तासुतास्विह योनिषु ।
अविद्याकर्मतृष्णाभिर्भ्राम्यमाणोऽथ चक्रवत् ॥ ३-२-७१ (१५७४३)
ब्रह्मादिषु तृणान्तेषु भूतेषु परिवर्तते ।
जले भुवि तथाऽऽकाशे जायमानः पुनःपुनः ॥ ३-२-७२ (१५७४४)
अबुधानां गतिस्त्वेषा बुधानामपि मे शृणु ।
ये धर्मे श्रेयसि रता विमोक्षरतयो जनाः ॥ ३-२-७३ (१५७४५)
तदिदं वेदवचनं कुरु कर्म त्यजेति च ।
तस्माद्धर्मानिमान्सर्वान्नाभिमानात्समाचरेत् ॥ ३-२-७४ (१५७४६)
इज्याध्ययनदानानि तपः सत्यं क्षमा दमः ।
अलोभ इतिमार्गोऽयं धर्मस्याष्टविधः स्मृतः ॥ ३-२-७५ (१५७४७)
अत्र पूर्वश्चतुर्वर्गः पितृयाणपथे स्थितः ।
कर्तव्यमिति यत्कार्यं नाभिमानात्समाचरेत् ॥ ३-२-७६ (१५७४८)
उत्तरो देवयानस्तु सद्भिराचरितः सदा ।
अष्टाङ्गेनैव मार्गेण विशुद्धात्मा समाचरेत् ॥ ३-२-७७ (१५७४९)
सम्यक्संकल्पसंबन्धात्सम्यक्चेन्द्रियनिग्रहात् ।
सम्यग्द्व्रतविशेषाच्च सम्यक्च गुरुसेवनात् ॥ ३-२-७८ (१५७५०)
सम्यगाहारयोगाच्च सम्यक्चाध्ययनागमात् ।
सम्यक्कर्मोपसंन्यासात्सम्यक्चित्तनिरोधनात् ॥ ३-२-७९ (१५७५१)
एवं कर्माणि कुर्वन्ति संसारविजिगीषवः ।
रागद्वेषविनिर्मुक्ता ऐश्वर्यवशमागताः ॥ ३-२-८० (१५७५२)
रुद्राः साध्यास्तथाऽऽदित्या वसवोऽथ तथाश्विनौ ।
योगैश्वर्येण संयुक्ता धारयन्ति प्रजा इमाः ॥ ३-२-८१ (१५७५३)
तथा त्वमपि कौन्तेय शममास्थाय पुष्कलम् ।
तपसा सिद्धिमन्विच्छ योगसिद्धिं च भारत ॥ ३-२-८२ (१५७५४)
पितृमातृमयी सिद्धिः प्राप्ता कर्ममयी च ते ।
तपसा सिद्धिमन्विच्छ द्विजानां भरणाय वै ॥ ३-२-८३ (१५७५५)

सिद्धा हि यद्यदिच्छन्ति कुर्वते तदनुग्रहम् ।
तस्मात्तपः समास्थाय कुरुष्वात्ममनोरथम् ॥ ३-२-८४ (१५७५६)

इति श्रीमन्महाभारते अरण्यपर्वणि किर्मीरवधपर्वणि द्वितीयोऽध्यायः
॥ २ ॥
Mahabharata - Vana Parva - Chapter Footnotes

३-२-१ प्रभातायामरुणोदयेन उद्दीपितायाम् ॥
३-२-११ अनुध्यानेन इष्टचिन्तनेन ।जप्येन स्वस्त्ययनेन तथा
विश्वासकरणैः सह रंस्यामहे इति ध।पाठः ॥
३-२-१२ प्रत्यादेशं धिक्कारम् ॥
३-२-१५ अध्यात्मं आत्मानमधिकृत्य प्रवृत्तं शास्त्रमध्यात्मं
वेदान्तस्तत्र रतः ।योगश्चित्तवृत्तिनिरोधः ॥
३-२-१६ शोकःस्थीयतेऽनेनेति व्युत्पत्त्या स्थानशब्दो हेतुवचनः
।भयस्थानशतानि चेति झ।पाठः ॥
३-२-२० गुर्देषु दुस्तरेषु शारीरदुःखेषु ।आपत्सु स्त्रीकर्षणादिषु ॥
३-२-२१ आत्मव्यवस्थानकराः मनःस्थैर्यहेतवः ॥
३-२-२२ व्याससमासाभ्यां विस्तरसंक्षेपाभ्याम् ॥
३-२-२३ अनिष्टं कणाटकादिः ।श्रमो व्यायामः ॥
३-२-२४ प्रतिकारादौषधादिभिरुपशमनात् आधिप्रशमनमविचिनतनात्
।इदमेव क्रियायोगबलम् ॥
३-२-२५ प्रागेव मानसस्य शमं कुर्वते
।प्रियाक्यानैरनुकूलवचनैः।संभोगोपनयैः
स्त्र्यादिसमर्पणैः।मतिमन्तो ह्यतो वैद्या इति ख।च।झ।पाठः ॥
३-२-२८ स्नेहो रागः सज्जते प्रवर्तते ॥
३-२-२९ आयासः क्लेशः ॥
३-२-३२ विप्रयोगे विषयेण सह वियोगे त्यागी न किंतु सत्यपि समागमे
यो विषयदोषदर्शी स एव त्यागी ।स एव च विरागं भजते ॥
३-२-३४ युक्तेषु नित्यवस्तुप्राप्तये उद्युक्तेषु ।कृतात्मसु ध्यानेन
संस्कृतचित्तेषु।तेषु प्रसिद्धेषु स्नेहो रागो न सज्जते न सङ्गं
प्राप्नोति ॥
३-२-३५ रागः रम्यवस्तुदर्शने चित्तस्योत्फुल्लता
।कामस्तल्लिप्सा।इच्छा लब्धे तस्मिन्
रुच्यतिशयात्पुनस्तदभिलाषः।पुनःपुनस्तल्लाभेप्यतृप्तिस्तृष्णा ॥
३-२-३७ जीर्यतः जरामृत्युग्रस्तस्य ॥
३-२-३८ अयः तप्तायःपिण्डं अनलो वह्निः ॥

३-२-३९ अकृतात्मा अनिर्जितचेताः ॥
३-२-४२ अर्थश्रेयसि अर्थसाध्ये श्रेयसि ज्योतिष्टोमादौ ॥
३-२-४६ पिपासायाः तृष्णायाः ॥
३-२-४८ संचयान् अर्थान् । तज्जान् अर्थत्यागजान्। अनीहार्थः यदृच्छालब्धोऽर्थः ॥
३-२-५० अर्थतः धनात् ॥
३-२-५१ अर्थोपभोगः विषयोपभोगः । अर्थेप्सुता घनेप्सुता ॥
३-२-५३ दृश्यते पञ्चमहायज्ञेषु । अपचमानेभ्यः यत्यादिभ्यः ॥
३-२-५४ तृणानि आसनार्थानि ॥
३-२-५८ वृथा श्राद्धयज्ञादिनिमित्तंविना ॥
३-२-५९ विश्वं सर्वजातीयं प्राणिजातं देवो देवता यस्मिंस्तद्विश्वदेवम् । स्वार्थे तद्धितः। वैश्वदेवं नाम कर्म ॥
३-२-६२ अपरिक्लिष्टं कार्पण्यं विना । अध्वनि वर्तते मार्गस्थाय ॥
३-२-६५ विघसं देवताद्युपयुक्तशेषं कामुको बहुकरोति । इन्द्रियार्थाः शब्दादयः ॥
३-२-६६ हारिभिः हरणशीलैः ॥
३-२-६८ इन्द्रियस्येन्द्रियाणां विषयान् शब्दादीन् ॥
३-२-७४ इति च वेदवचनमित्यन्वयः । फलेच्छां विनैः समाचरेदित्यर्थः ॥
३-२-७६ कर्तव्यमवश्यानुष्ठेयं नित्याग्निहोत्रसंध्योपासनादि । अभिमानात्सङ्गात् ॥
३-२-७७ अष्टाङ्गेन वक्ष्यमाणसंकल्पसंबन्धाद्यङ्गाष्टकवता तदाचरेदिति पूर्वेण संबन्धः । विशुद्धात्मा शुद्धचित्तः ॥
३-२-७८ संकल्पो मानसं कर्म तस्य संबन्धो निरोधः ॥
३-२-८३ कर्ममयी यज्ञयुद्धादिकर्मरूपसाधनप्रधाना सिद्धिः । पितृमातृमयी परलोकेहलोकफलप्रधाना ॥

---

वन-अध्यय००३
॥ श्रीः ॥
३.३. अध्यायः ३

Mahabharata - Vana Parva - Chapter Topics
युधिष्ठिरेण ब्राह्मणभरणाय धौम्यचोदनया सूर्यस्तुतिः ॥ १ ॥
स्तोत्रैः प्रसन्नेन सूर्येण युधिष्ठिरायाक्षयपात्रदानम् ॥ २ ॥

Mahabharata - Vana Parva - Chapter Text

३-३-० (१५७५७)
वैशंपायन उवाच। ३-३-०क्ष् (१७६२)
शौनकेनैवमुक्तस्तु कुन्तीपुत्रो युधिष्ठिः ।
ग्प्रणम्य द्विजशार्दूलं पूज्यवाक्यं सुभाषितम्।ं
पुरोहितमुपागम्य भ्रातृमध्येऽब्रवीषिदम् ॥ ३-३-१ (१५७५८)
प्रस्थितताननुयातारो ब्राह्मणा वेदपारनाः ।
न चास्मि पोषणे शक्तो बहुदुःखसमन्वितः ॥ ३-३-२ (१५७५९)
परित्यक्तुं न शक्नोमि दानशक्तिश्च नास्ति मे ।
कथमत्र मया कार्यं तद्ब्रूहि भगवन्मम ॥ ३-३-३ (१५७६०)
वैशंपायन उवाच। ३-३-४क्ष् (१७६३)
मुहूर्तमिव स ध्यात्वा धर्मेणान्वीक्ष्य तां गतिम् ।
युधिष्ठिरमुवाचैदं धौम्यो धर्मभृतां वरः ॥ ३-३-४ (१५७६१)
पुरा सृष्टानि भूतानि पीड्यन्ते क्षुधया भृशम् ।
ततोऽनुकम्पंयां तेषां सविता स्वपिता यथा ॥ ३-३-५ (१५७६२)
गत्वोत्तसयणं तेजो रसानुद्धृत्य रश्मिभिः ।
दक्षिणायनमावृत्तो महीं वर्षति वारिणा ॥ ३-३-६ (१५७६३)
क्षेत्रभूते ततस्तस्मिन्नोषधीरोषधीयतिः ।
रवेस्तेजः समुद्धृत्य जनयामास वारिणा ॥ ३-३-७ (१५७६४)
निषिक्तश्चन्द्तेजोभिः सूयते जगतो रविः ।
ओषध्यः षड्रसा मेध्यास्तदन्नं प्राणिनां भुवि ॥ ३-३-८ (१५७६५)
एवं भानुमयं ह्यन्नं भूतानां प्राणधारणम् ।
नाथोऽयं सर्वभूतानां तस्मात्तं शरणं व्रज ॥ ३-३-९ (१५७६६)
राजानो हि महात्मानो योनिकर्मविशोधिताः ।
उद्धरन्ति प्रजाः सर्वास्तप आस्थाय पुष्कलम् ॥ ३-३-१० (१५७६७)
भौमेन कार्तवीर्येण वैन्येन नहुषेण च ।
तपोयोगसमाधिस्थैरुद्धृता ह्यापदः प्रजाः ॥ ३-३-११ (१५७६८)
तथा त्वमपि धर्मात्मन्कर्मणा च विशोधितः ।
तप आस्थाय धर्मेण द्विजातीन्भर भारत ॥ ३-३-१२ (१५७६९)
वैशंपायन उवाच। ३-३-१३क्ष् (१७६४)
एवमुक्तस्तु धौम्येन तत्कालसदृशं वचः ।
ततस्त्वध्यापयामास मन्त्रं सर्वार्थसाधकम् ।
अष्टाक्षरं परं मन्त्रमार्तस्य सततं प्रियम् ॥ ३-३-१३ (१५७७०)
श्विप्रत्यागसमाधिस्थः संयतात्मा दृढव्रतः ।
धर्मराजो विशुद्धात्मा तप आतिष्ठदुत्तमम् ॥ॅ ३-३-१४ (१५७७१)
पुष्पोपहारैर्बलिभिरर्चयित्वा दिवाकरम् ।

सोऽवगाह्य जलं राजा देवस्याभिमुखोऽभवत् ॥ ३-३-१५ (१५७७२)
गाङ्गेयं वार्युपस्पृश्य प्राणायामेन तस्थिवान् ।
श्शुचिः प्रयतवाग्भूत्वा स्तोत्रमारब्धवांस्ततः ३-३-१६ (१५७७३)
युधिष्ठिर उवाच। ३-३-१७क्ष् (१७६५)
त्वं भानो जगतश्चक्षुस्त्वमात्मा सर्वदेहिनाम् ।
त्वं योनिः सर्वभूतानां त्वमाचारः क्रियावतां ॥ ३-३-१७ (१५७७४)
त्वं गतिः सर्वसाङ्ख्यानां योगिनां त्वं परायणम् ।
अनावृतार्गलद्वारं त्वं गतिस्त्वं मुमुक्षताम् ॥ ३-३-१८ (१५७७५)
त्वया संधार्यते लोकस्त्वया लोकः प्रकाश्यते ।
त्वयापवित्रीक्रियते निर्व्याजं पाल्यते त्वया ॥ ३-३-१९ (१५७७६)
त्वामुपस्थाय काले तु ब्राह्मणा वेदपारगाः ।
स्वशाखाविहितैर्मन्त्रैरर्चन्त्यृषिगणार्चित ॥ ३-३-२० (१५७७७)
तव दिव्यं रथं यान्तमनुयान्ति वरार्थिनः ।
सिद्धचारणगन्धर्वा यक्षगुह्यकपन्नगाः ॥ ३-३-२१ (१५७७८)
त्रयस्त्रिंशच्च वै देवास्तथा वैमानिका गणाः ।
सोपेन्द्राः समहेन्द्राश्च त्वामिष्ट्वासिद्धिमागताः ॥ ३-३-२२ (१५७७९)
उपयान्त्यर्चयित्वा तु त्वां वै प्राप्तमनोरथाः ।
दिव्यमन्दारमालाभिस्तूर्णं विद्याधरोत्तमाः ॥ ३-३-२३ (१५७८०)
गुह्याः पितृगणाः सप्त ये दिव्या ये च मानुषाः ।
ते पूजयित्वा त्वामेव गच्छन्त्याशु प्रधानताम् ॥ ३-३-२४ (१५७८१)
वसवो मरुतो रुद्रा ये च साध्या मरीचिपाः ।
वालखिल्यादयः सिद्धाः श्रेष्ठत्वं प्राणिनां गताः ॥ ३-३-२५ (१५७८२)
सब्रह्मकेषु लोकेषु सप्तस्वप्यखिलेषु च ।
न तद्भूतमहं मन्ये यदर्कादतिरिच्यते ॥ ३-३-२६ (१५७८३)
सन्ति चान्यानि सत्वानिवीर्यवन्ति महान्ति च ।
न तु तेषां तथा दीप्तिः प्रभावो वायथा तव ॥ ३-३-२७ (१५७८४)
ज्योतीषित्वयि सर्वाणि त्वं सर्वज्योतिषां पतिः ।
त्वयिसत्त्वं च सत्त्वं च सर्वेभावाश्च सात्त्विकाः ॥ ३-३-२८ (१५७८५)
त्वत्तेजसा कृतंचक्रं सुनाभं विश्वकर्मणा ।
देवारीणां मदो येन नाशितः शार्ङ्गधन्वना ॥ ३-३-२९ (१५७८६)
त्वमादायांशुभिस्तेजो निदाघे सर्वदेहिनाम् ।
सर्वौषधिरसानां च पुनर्वर्षासु मुञ्चसि ॥ ३-३-३० (१५७८७)
तपन्त्यन्ते दहन्त्यन्ये गर्जन्त्यन्ये तथा घनाः ।
विद्योतन्ते प्रवर्षन्ति तव प्रावृषि रश्मयः ॥ ३-३-३१ (१५७८८)
न तथा सुखयत्यग्निर्न प्रावारा न कम्बलाः ।
शीतवातार्दितं लोकं यथा तव मरीचयः ॥ ३-३-३२ (१५७८९)

त्रयोदशद्वीपवतीं गोभिर्भासयसे महीम् ।
त्रयाणामपि लोकानां हितायैकः प्रवर्तसे ॥ ३-३-३३ (१५७९०)
तव यद्युदयो न स्यादन्धं जगदिदं भवेत् ।
न च धर्मार्थकामेषु प्रवर्तेरन्मनीषिणः ॥ ३-३-३४ (१५७९१)
आधानपशुबन्धेष्टिमन्त्रयज्ञतपःक्रियाः ।
त्वत्प्रसादादवाप्यन्ते ब्रह्मक्षत्रविशां गणैः ॥ ३-३-३५ (१५७९२)
यदहर्ब्रह्मणः प्रोक्तं सहस्रयुगसंमितम् ।
तस्य त्वमादिरन्तश्च कालज्ञैः परिकीर्तितः ॥ ३-३-३६ (१५७९३)
मनूनां मनुपुत्राणां जगतोऽमानवस्य च ।
मन्वन्तराणां सर्वेषामीश्वराणां त्वमीश्वरः ॥ ३-३-३७ (१५७९४)
संहारकाले संप्राप्ते तव क्रोधविनिःसृतः ।
संवर्तकाग्निस्त्रैलोक्यं भस्मीकृत्यावतिष्ठते ॥ ३-३-३८ (१५७९५)
त्वद्दीधितिसमुत्पन्ना नानावर्णं महाघनाः ।
सैरावताः साशनयः कुर्वन्त्याभूतसंप्लवम् ॥ ३-३-३९ (१५७९६)
कृत्वा द्वादशधाऽऽत्मानं द्वादशादित्यतां गतः ।
संहृत्यैकार्णवं सर्वं त्वं शोषयसि रश्मिभिः ॥ ३-३-४० (१५७९७)
त्वामिन्द्रमाहुस्त्वं रुद्रस्त्वं विष्णुस्त्वं प्रजापतिः ।
त्वमग्निस्त्वं मनः सूक्ष्मं प्रभुस्त्वं ब्रह्मशाश्वतं ॥ ३-३-४१ (१५७९८)
त्वं हंसः सविता भानुरंशुमाली वृषाकपिः ।
विवस्वान्मिहिरः पूषा मित्रो धर्मस्तथैव च ॥ ३-३-४२ (१५७९९)
सहस्ररश्मिरादित्यस्तपनस्त्वं गवां पतिः ।
मार्तण्डोऽर्को रविः सूर्यः शरण्यो दिनकृत्तथा ॥ ३-३-४३ (१५८००)
दिवाकरः सप्तसप्तिर्धामकेशी विरोचनः ।
आशुगामी तमोघ्नश्च हरिताश्वश्च कीर्त्यसे ॥ ३-३-४४ (१५८०१)
सप्तम्यागथवा षष्ठ्यां भक्त्या पूजां करोति यः ।
अनिर्विण्णोऽनहंकारी तं लक्ष्मीर्भजते नरम् ॥ ३-३-४५ (१५८०२)
न तेषामापदः सन्ति नाधयो व्याधयस्तथा ।
ये तवानन्यमनसा कुर्वन्त्यर्चनवन्दनम् ॥ ३-३-४६ (१५८०३)
सर्वरोगैर्विरहिताः सर्वपापाविवर्जिताः ।
त्वद्भावभक्ताः सुखिनो भवन्ति चिरजीविनः ॥ ३-३-४७ (१५८०४)
त्वं ममापन्नकामस्य सर्वातिथ्यं चिकीर्षतः ।
अन्नमन्नपते दातुमभितः श्रद्धयाऽर्हसि ॥ ३-३-४८ (१५८०५)
येच तेऽनुचराः सर्वे पादोपान्तं समाश्रिताः ।
माठरारुणदण्डाद्यास्तांस्तान्वन्देऽशनिक्षुभान् ॥ ३-३-४९ (१५८०६)
क्षुभया सहिता मैत्री याश्चान्या भूतमातरः ।
ताश्च सर्वा नमस्यामि पान्तु मां शरणागतम् ॥ ३-३-५० (१५८०७)

वैशंपायन उवाच। ३-३-५१क्ष् (१७६६)
कण्ठदघ्ने जले स्थित्वा मन्त्रैः स्तोत्रैश्च तोषितः ।
ततो दिवाकरः प्रीतो दर्शयामास पाण्डवम् ।
दीप्यमानः स्ववपुषा ज्वलन्निव हुताशनः ॥ ३-३-५१ (१५८०८)
विवस्वानुवाच। ३-३-५२क्ष् (१७६७)
यत्तेऽभिलषितं किंचित्तत्त्वं सर्वमवाप्स्यसि ।
अहमन्नं प्रदास्यामि सप्त पञ्च च ते समाः ॥ ३-३-५२ (१५८०९)
गृह्णीष्व पिठरं ताम्रं मया दत्तं नराधिप ।
यावद्वत्स्र्यति पाञ्चाली पात्रेणानेन सुव्रत ॥ ३-३-५३ (१५८१०)
फलमूलामिषं शाकं संस्कृतं यन्महानसे ।
चतुर्विधं तदन्नाद्यमक्षय्यं ते भविष्यति ।
इतश्चतुर्दशे वर्षे भूयो राज्यमवाप्स्यसि ॥ ३-३-५४ (१५८११)
वैशंपायन उवाच। ३-३-५५क्ष् (१७६८)
एवमुक्त्वा तु भगवांस्तत्रैवान्तरधीयत ॥ ३-३-५५ (१५८१२)
लब्ध्वा वरं तु कौन्तेयो जलादुत्तीर्य धर्मवित् ।
जग्राह पादौ धौम्यस्य भ्रातॄंश्च परिषस्वजे ॥ ३-३-५६ (१५८१३)
द्रौपद्या सह-संगम्य पश्यमानोऽपयात्प्राभुः ।
महानसे तदान्नं तु साधयामास पाण्डवः ॥ ३-३-५७ (१५८१४)
संस्कृतं प्रसवं याति स्वल्पमन्नं चतुर्विधम् ।
अक्षय्यं वर्धते चान्नं तेनाभोजयत द्विजान् ॥ ३-३-५८ (१५८१५)
भुक्तवत्सु च विप्रेषु भोजयित्वाऽनुजानपि ।
शेषं विघससंज्ञं तुपश्चाद्भुङ्क्ते युधिष्ठिरः ॥ ३-३-५९ (१५८१६)
युधिष्ठिरं भोजयित्वा शेषमश्नाति पार्षती ।
श्द्रौपद्यां भुज्यमानायां तदन्नं क्षयमेति च ॥ ३-३-६० (१५८१७)
एवं दिवाकरात्प्राप्य दिवाकरसमप्रभः ।
कामान्मनोभिलषितान्ब्राह्मणेभ्योऽददात्प्रभुः ॥ ३-३-६१ (१५८१८)
पुरोहितपुरोगाश्च तिथिनक्षत्रपर्वसु ।
इज्यार्थे संप्रवर्तन्ते विधिमन्त्रप्रमाणतः ॥ ३-३-६२ (१५८१९)
ततः कृतस्वस्त्ययना धौम्येन सह पाण्डवाः ।
द्विजसङ्घैः परिवृताः प्रययुः काम्यकं वनम् ॥ ३-३-६३ (१५८२०)
ग्जनमेजय उवाच। ३-३-६४क्ष् (१७६९)
पुष्पोपहारबलिभिर्बहुशश्च यथाविधि ।
सर्वात्मभूतं संपूज्य यतप्राणो जितेन्द्रियः ॥ ३-३-६४ (१५८२१)
स्तवेन केन विप्रर्षे स तु राजा युधिष्ठिरः ।
विप्रार्थमाराधितवान्सूर्यमद्भुतविक्रमम् ॥ ३-३-६५ (१५८२२)
मयि स्नेहोऽस्ति चेद्ब्रह्मन्यद्यनुग्रहभागहम् ।

भगवन्नास्ति चेद्गुह्यं तच्च मे ब्रूहि सांप्रतम् ॥' ३-३-६६ (१५८२३)
वैशंपायन उवाच। ३-३-६७क्ष् (१७७०)
शृणुष्वांवहितो राजञ्शुचिर्भूत्वा समाहितः ।
क्षणं च कुरु राजेन्द्र गुह्यं वक्ष्यामि ते हितम् ॥ ३-३-६७ (१५८२४)
धौम्येन तु यथाप्रोक्तं पार्थाय सुमहात्मने ।
नाम्नामष्टोत्तरं पुण्यं शतं तच्छृणु भूपते ॥ ३-३-६८ (१५८२५)
सूर्योऽर्यभा भगस्त्वष्टा पूषाऽर्कः सविता रविः ।
गभस्तिमानजः कालो मृत्युर्धाता प्रभाकरः ॥ ३-३-६९ (१५८२६)
पृथिव्यापश्च तेजश्च खं वायुश्च परायणम् ।
सोमो बृहस्पतिः शुक्रो बुधोऽङ्गारक एव च ॥ ३-३-७० (१५८२७)
इन्द्रो विवस्वान्दीप्तांशुः शुचिः शौरिः शनैश्चरः ।
ब्रह्मा विष्णुश्च रुद्रश्च स्कन्दो वैश्रवणो यमः ॥ ३-३-७१ (१५८२८)
वैद्युतो जाठरश्चाग्निरैन्धनस्तेजसां पतिः ।
धर्मध्वजो वेदकर्ता वेगाङ्गो वेदवाहनः ॥ ३-३-७२ (१५८२९)
कृतं त्रेता द्वापरश्च कलिः सर्वामराश्रयः ।
कला काष्ठा मुहूर्ताश्च पक्षा मासा ऋतुस्तथा ॥ ३-३-७३ (१५८३०)
संवत्सरकरोऽश्वत्थः कालचक्रो विभावसुः ।
पुरुषः शाश्वतो योगी व्यक्ताव्यक्तः सनातनः ॥ ३-३-७४ (१५८३१)
लोकाध्यक्षः सुराध्यक्षो विश्वकर्मा तमोनुदः ।
वरुणः सागरोंशश्च जीमूतो जीवनोऽरिहा ॥ ३-३-७५ (१५८३२)
भूताश्रयो भूतपति- सर्वभूतनिषेवितः ।
ग्मणिः सुवर्णो भूतात्मा कामदः सर्वतोमुखः।'
श्स्रष्टा संवर्तको वह्निः सर्वस्यादिरलोलुपः ३-३-७६ (१५८३३)
अनन्तः कपिलो भानुः कामदः सर्वतोमुखः ।
जयो विशालो वरदः सर्वधातुनिषेचिता ॥ ३-३-७७ (१५८३४)
मनः सुपर्णो भूतादिः शीघ्रगः प्राणधारकः ।
धन्वन्तरिर्धूमकेतुरादिदेवोऽदितेः सुतः ॥ ३-३-७८ (१५८३५)
द्वादशात्माऽरविन्दाक्षः पिता माता पितामहः ।
स्वर्गद्वारं प्रजाद्वारं मोक्षद्वारं त्रिविष्टपम् ॥ ३-३-७९ (१५८३६)
देवकर्ता प्रशान्तात्मा विश्वात्मा विश्वतोमुखः ।
चराचरात्मा सूक्ष्मात्मा मैत्रेण वपुषाऽन्वितः ॥ ३-३-८० (१५८३७)
एतद्वै कीर्तनीयस्य सूर्यस्यामिततेजसः ।
नाम्नामष्टशतं पुण्यं शक्रेणोक्तं महात्मना ॥ ३-३-८१ (१५८३८)
शक्राच्च नारदः प्राप्तो धौम्यश्च तदन्तरम् ।
धौम्याद्युधिष्ठरः प्राप्य सर्वान्कमानवाप्तवान् ॥ ३-३-८२ (१५८३९)
सुरगणपितृयक्षसेवितं

ह्यसुरनिशाचरसिद्धवन्दितम् ।
वरकनकहुताशनप्रभं
त्वमपि मनस्यभिधेहि भास्करम् ॥ ३-३-८३ (१५८४०)
सूर्योदये यः सुसमाहितः पठे-
त्त पुत्रदारान्धनरत्नसंचयान् ।
लभेत जातिस्मरतां नरः सदा
धृतिं च मेधां च स विन्दते पुमान् ॥ ३-३-८४ (१५८४१)
इमं स्तवं देववरस्य यो नरः
प्रकीर्तयेच्छुचिसुमनाः समाहितः ।
स मुच्यते शोकदवाग्निसागरा-
ल्लभेत कामान्मनसा यथेप्सितान् ॥ ३-३-८५ (१५८४२)
इमं स्तवं प्रयतमनाः समाधिना
पच्छेदिहान्योऽपि वरं समर्थयन् ।
तत्तस्य दद्याच्च रविर्मनीषितं
तदाऽऽप्नुयाद्यद्यपि तत्सुदुर्लभम् ॥ ३-३-८६ (१५८४३)
यश्चेदं धारयेन्नित्यं शृणुयाद्वाप्यभीक्ष्णशः ।
पुत्रार्थी लभते पुत्रं धनार्थी लभते धनम् ।
विद्यार्थी लभते विद्यां पुरुषोप्यथवा स्त्रियः ॥ ३-३-८७ (१५८४४)
उभे संध्ये पठेन्नित्यं नारी वा पुरुषो यदि ।
आपदं प्राप्य मुच्येत बद्धो मुच्येत बन्धनात् ॥ ३-३-८८ (१५८४५)
संग्रामे च जयेन्नित्यं विपुलं चाप्नुयाद्वसु ।
मुच्यते सर्वपापेभ्यः सूर्यलोकं स गच्छति ॥ ३-३-८९ (१५८४६)

इति श्रीमन्महाभारते अरण्यपर्वणि किर्मीरवधपर्वणि तृतीयोऽध्यायः ॥ ३ ॥

Mahabharata - Vana Parva - Chapter Footnotes

३-३-४ धर्मेण योगमयेन ॥
३-३-६ तेजो रसान् जलानि । उद्धृत्य आदाय ॥
३-३-७ ओषधीपतिश्चन्द्रः ॥
३-३-११ तपोयोगः व्रतस्वीकारः तत्पूर्वकः समाधिर्ध्यानं तत्स्थैः ॥
३-३-१४ विप्रत्यागसमाधिस्थः विप्रेभ्यस्त्यागः त्यज्यमानमन्नं तदर्थं समाधिस्थः नियमस्थः ॥
३-३-१८ सांख्यानां ज्ञाननिष्ठानाम् । योगिनां चित्तनिरोधकानाम्। आवृणोतीत्यावृतं कपाटम्। कर्तरिक्तः। अर्गला कपाटविष्टम्भकं तिर्यक्काष्ठं तदुभयरहितं मुक्तिद्वारं त्वं

मुमुक्षतां गतिः प्राप्यं पदम् ॥
३-३-२८ सत्त्यं सत् पृथिव्यप्तेजांसि । त्यत् वाय्वाकाशौ तदात्मकं सत्त्यम्। सत्त्वं बुद्धिसत्त्वम्। सात्विका भावाः धर्मो ज्ञानं विराग ऐश्वर्यमित्याद्याः ॥
३-३-२९ सुनाभं सुदर्शनम् ॥
३-३-३२ प्रावाराः वस्त्रविशेषाः ॥
३-३-३३ गोभिः रश्मिभिः ॥
३-३-३९ सैरावताः मेघस्योपरि यो मेघः स ऐरावतस्तत्सहिताः । आभूतं यावच्चतुर्विधभूतग्रामं तस्य संप्लवः जलेनाभिप्लावनम् ॥
३-३-४२ हन्ति गच्छति विश्वं संहरतीति वा हंसः वृषाकपिः हरो हरिर्वा ॥
३-३-४३ गवां रश्मीनाम् ॥
३-३-४४ सप्तसप्तिः सप्ताश्वः । धामकेशी ज्योतिर्मयकिरणवान् ॥
३-३-४५ अनिर्विण्णः पूजने आसक्तः ॥
३-३-४७ त्वद्भावभक्ताः सूर्यएव सर्वत्रास्तीति भावो भावना तत्र भक्ता आदृताः ॥
३-३-४८ श्रद्धया आतिथ्यं चिकीर्षत इति संबन्धः ॥
३-३-४९ अशनिक्षुभान् विद्युदशन्यादिप्रवर्तकान् ॥
३-३-५० क्षुभामैत्र्यौ निग्रहानुग्रहकर्त्र्यौ देवते ॥
३-३-५३ पिठरं परिवेषणपात्रम् । ताम्रं ताम्रमयम्। वर्त्स्यति वृत्तिं जनजीविकांरूपां करिष्यति। पात्रेण पात्रप्रसूतेनान्नेन ॥
३-३-५७ महानसे पाकशालायाम् । साधयामास कारयामास अन्नमिति शेषः ॥
३-३-५८ संस्कृतं पक्वम् । वन्यमन्नं चतुर्विधमिति क। पाठः ॥
३-३-६० पार्षती पृषतः द्रुपदपितुः गोत्रापत्यम् ॥
३-३-६२ प्रवर्तन्ते निःसरन्ति । विधिमन्त्रप्रमाणतः। विधिर्वसन्ते वसन्ते ज्योतिषा यजेतेत्यादिरज्ञापनरूपः। मन्त्रः अनुष्ठेयार्थस्मारक इषेत्वेत्यादिः। तावेव प्रमाणे ताभ्यामित्यर्थः ॥
३-३-७६ सर्वलोकनमस्कृत इति झ । पाठः ॥
३-३-८० मैत्रेयः करुणान्वित इति झ । पाठः ॥
८०

---

वन-अध्यय००४
॥ श्रीः ॥
३.४. अध्यायः ४

पाण्डवेषु वनं गतेषु सत्सु हितं पृष्टेन विदुरेण
धृतराष्ट्रप्रति पाण्डवानां पुना राज्ये स्थापनविधानम् ॥ १ ॥
ततो धृतराष्ट्रधिक्कृतेन विदुरेण पाण्डवान्प्रति प्रस्थानम् ॥ २ ॥

Mahabharata - Vana Parva - Chapter Text

३-४-० (१५८४७)
वैशंपायन उवाच। ३-४-०क्ष् (१७७१)
वनं प्रविष्टेष्वथ पाण्डवेषु
प्रज्ञाचक्षुस्तप्यमानोऽम्बिकेयः ।
धर्मात्मानं विदुरमगाधबुद्धिं ३-४-१द सुखासीनो वाक्यमुवाच राजा ॥
३-४-१ (१५८४८)
धृतराष्ट्र उवाच। ३-४-२क्ष् (१७७२)
प्रज्ञा च ते भार्गवस्येव शुद्धा
धर्मं च त्वं परमं वेत्थ सूक्ष्मम् ।
समश्च त्वं संमतः कौरवाणां
पथ्यं चैषां मम चैव ब्रवीहि ॥ ३-४-२ (१५८४९)
एवं गते विदुरयदद्य कार्यं
पौराश्चेमे कथमस्मान्भजेरन् ।
ते चाप्यस्मान्नोद्धरेयुः समूला-
न्न कामये तांश्च विनश्यमानान् ॥ ३-४-३ (१५८५०)
ग्सौबलेनैव पापेन दुर्योधनहितैषिणा ।
क्रूरमाचरितं क्षत्तर्न मे प्रियमनुष्ठितम् ॥ ३-४-४ (१५८५१)
तथैवाङ्गीकृते तत्र तद्भवान्वक्तुमर्हति ।
उत्तरं प्राप्तकालं च किमन्यन्मन्यते क्षमम् ॥ ३-४-५ (१५८५२)
नास्ति धर्मे सहायत्वमिति मे दीर्यते मनः ।
यत्र पाण्डुसुताः सर्वे क्लिश्यन्ति वानमागताः' ॥ ३-४-६ (१५८५३)
विदुर उवाच। ३-४-७क्ष् (१७७३)
त्रिवर्गोऽयं धर्ममूलो नरेन्द्र
राज्यं चेदं धर्ममूलं वदन्ति ।
धर्मे राजन्वर्तमानः स्वशक्त्या
पुत्रान्सर्वान्पाहि कुन्तीसुतांश्च ॥ ३-४-७ (१५८५४)
स वै ध्रमो विप्रलब्धः सभायां
पापात्मभिः सौबलेयप्रधानैः ।
आहूय कुन्तीसुतमक्षवत्यां
पराजैषीत्सत्यसन्धं सुतस्ते ॥ ३-४-८ (१५८५५)

एतस्य ते दुष्प्रणीतस्य राज-
न्द्वेषस्याहं परिपश्याम्युपायम् ।
यथा पुत्रस्तव कौरव्य पापा-
न्मुक्तो लोके प्रतितिष्ठेत साधु ॥ ३-४-९ (१५८५६)
तद्वै सर्वं पाण्डुपुत्रा लभन्तां
यत्तद्राजन्नतिसृष्टं त्वयाऽऽसीत् ।
एष धर्मः परमो यत्स्वकेन
राजा तुष्येन्न परस्वेषु गृद्ध्येत् ॥ ३-४-१० (१५८५७)
श्यशो ने नश्येज्ज्ञातिभेदश्च न स्या-
द्धर्मो न स्यान्नैव चैवं कृते त्वाम् ॥
एतत्कार्यं तव सर्वप्रधानं
तेषां तुष्टिः शकुनेश्चावमानः ॥ ३-४-११ (१५८५८)
एवं शेषं यदि पुत्रेषु ते स्या-
देतद्राजंस्त्वरमाणः कुरुष्व ।
अथैतदेवं न करोषि राजन्
ध्रुवं कुरूणां भविता विनाशः ॥ ३-४-१२ (१५८५९)
नहि क्रुद्धो भीमसेनोऽर्जुनो वा
शेषं कुर्याच्छात्रवाणामनीके ।
येषां योद्धा सव्यसाची कृतास्त्रो
धनुर्येषां गाण्डिवं लोकसारम् ॥ ३-४-१३ (१५८६०)
येषां भीमो बाहुशाली च योद्धा
तेषां लोके किंनु न प्राप्यमस्ति ।
उक्तं पूर्वं जातमात्रे सुते ते
मया यत्ते हितमासीत्तदानीम् ॥ ३-४-१४ (१५८६१)
पुत्रं त्यजेममहितं कुलस्य
हितं परं न च तत्त्वं चकर्थ ।
इदानीं ते हितमुक्तं न चेत्त्व-
मेवं कर्ता परितप्ताऽसि पश्चात् ॥ ३-४-१५ (१५८६२)
यद्येतदेवमनुमन्ता सुतस्ते
संप्रीयमाणः पाण्डवैरेकराज्यम् ।
तापो न ते भविता प्रीतियोगा-
त्त्वं चेन्न गृह्णासि सुतं सहायैः ॥ ३-४-१६ (१५८६३)
दुर्योधनं त्वहितं वै निगृह्य
पाण्डोः पुत्रं प्रकुरुष्वाधिपत्ये ।
ग्ध्रुवं विनाशस्तव पुत्रेण धीमन्
सबन्धुवर्गेण सहैव राजभिः ॥ ३-४-१७ (१५८६४)

चतुर्दशे चैव वर्षे नरेन्द्र
कुलक्षयं प्राप्स्यसि राजसिंह ।
तस्मात्कुरुष्वाधिपत्ये नरेन्द्र
युधिष्ठिरं धर्मभृतां वरिष्ठम् ॥' ३-४-१८ (१५८६५)
अजातशत्रुर्हि विमुक्तरागो
धर्मोणेमां पृथिवीं शास्तु राजन् ।
ततो राजन्पार्थिवाः सर्व एव
वैश्या इवास्मानुपतिष्ठन्तु सद्यः ॥ ३-४-१९ (१५८६६)
दुर्योधनः शकुनिः सूतपुत्रः
प्रीत्या राजन्पाण्डुपुत्रान्भजन्तु ।
दुःशासनो याचतु भीमसेनं
सभामध्ये द्रुपदस्यात्मजां च ॥ ३-४-२० (१५८६७)
युधिष्ठिरं त्वं परिसान्त्वयस्व
राज्ये चैनं स्थापयस्वाभिपूज्य ।
त्वया पृष्टः किमहमन्यद्वदेय-
मेतत्कृत्वा कृतकृत्योसि राजन् ॥ ३-४-२१ (१५८६८)
धृतराष्ट्र उवाच। ३-४-२२क्ष् (१७७४)
एतद्वाक्यं विदुर यत्ते सभाया-
मिह प्रोक्तं पाण्डवान्प्राप्य मां च ।
हितं तेषामहितं मामकाना-
मेतत्सर्वं मम नावैदि चेतः ॥ ३-४-२२ (१५८६९)
इदं त्विदानीं गत एव निश्चितं
तेषामर्थे पाण्डवानां यदात्थ ।
तेनाद्य मन्ये नासि हितो ममेति
कथं हि पुत्रं पाण्डवार्थे त्यजेयम् ॥ ३-४-२३ (१५८७०)
असंशयं तेऽपि ममैव पुत्रा
दुर्योधनस्तु मम देहात्प्रसूतः ।
स्वं वै देहं परहेतोस्त्यजेति
कोनु ब्रूयात्समतामन्ववेक्षन् ॥ ३-४-२४ (१५८७१)
स मां जिह्मं विदुर सर्वं ब्रवीपि
मन्युं तेऽहमधिकं धारयामि ।
यथेच्छकं गच्छ वा तिष्ठ वा त्वं
सुसान्त्व्यमानाऽप्यसती स्त्री जहाति ॥ ३-४-२५ (१५८७२)
वैशेपायन उवाच। ३-४-२६क्ष् (१७७५)
एतावदुक्त्वा धृतराष्ट्रोऽन्वपद्य-
दन्तर्वेश्म सहसोत्थाय राजन् ।

नेदमस्तीत्यथ विदुरो भापमाप्पः
संप्राद्रवद्यत्र पार्था बभूवुः ॥ ३-४-२६ (१५८७३)

इति श्रीमन्महाभारते अरण्यपर्वणि किर्मीरवधपर्वणि
चतुर्थोऽध्यायः ॥ ४ ॥
Mahabharata - Vana Parva - Chapter Footnotes

३-४-२ कौरवाणां पाण्डवधार्तराष्ट्राणां समः पक्षपातशून्यः ॥
३-४-३ उद्धरेयुः उन्मूलयेयः ॥
३-४-८ अक्षवत्यां द्यूतकीडायाम् ॥
३-४-९ उपायं प्रशान्तिप्रकारम् । शेषस्याहं परिपश्यामीति
झ। ट। पाठः ॥
३-४-१० अतिसृष्टं दत्तम् । स्वकेन धनेनेति शेषः ॥
३-४-११ एवं कृतेसति त्वांप्रति धर्मो न स्यादिति नैव किंतु स्यादेव ॥
३-४-१५ चकर्थ कृतवान् । कर्ता करिष्यसि ॥
३-४-१६ एकराज्यं यदि अनुमन्ता तर्हि तापो न भविता । नचेत् यदि
नानुमन्ता तर्हि सुतं निगृह्णीष्वेत्यर्थः ॥
३-४-१७ नचेन्निगृह्णीष्व सुतं सुखायेति झ । पाठः। तत्र
पक्षान्तरमाह दुर्योधनमिति ॥
३-४-२२ नावैति नाङ्गीररोति ॥
३-४-२५ जिह्मं कुटिलम् ॥
३-४-२६ इदं कुलम् ॥

---

वन-अध्यय००५
॥ श्रीः ॥
३.५. अध्यायः ५

Mahabharata - Vana Parva - Chapter Topics
विदुरस्य काम्यकवने पाण्डवसमागमः ॥ १ ॥
तेन तेषु तत्रस्वागमनकारणनिवेदनम् ॥ २ ॥

Mahabharata - Vana Parva - Chapter Text

३-५-० (१५८७४)
वैशंपायन उवाच। ३-५-०क्ष् (१७७६)
पाण्डवास्तु वने वासमुद्दिश्य भरतर्पभाः ।
प्रययुर्जाह्नवीकूलात्कुरुक्षेत्रं सहानुगाः ॥ ३-५-१ (१५८७५)

सरस्वतीदृपद्वत्यौ यमुनां च निषेव्य ते ।
ययुर्वननैव वनं सततं पश्चिमां दिशम् ॥ ३-५-२ (१५८७६)
ततः सरस्वतीकूले समेषु मरुधन्वसु ।
काम्यकं नाम ददृशुर्वनं मुनिजनप्रियम् ॥ ३-५-३ (१५८७७)
तत्र ते न्यवसन्वीरा वने बहुमृगद्विजे ।
अन्वास्यमाना मुनिभिः सान्त्व्यमानाश्च भारत ॥ ३-५-४ (१५८७८)
विदुरस्त्वथ पाण्डूनां सदा दर्शनलालसः ।
जगामैकरथेनैव काम्यकं वनमृद्धिमत् ॥ ३-५-५ (१५८७९)
ततो गत्वा विदुरः काम्यकं त-
च्छीघ्रैरश्वैर्वाहितः स्यन्दनेन ।
ददर्शासीनं धर्मात्मानं विविक्ते
सार्धं द्रौपद्या भ्रातृभिर्ब्राह्मणैश्च ॥ ३-५-६ (१५८८०)
ततोऽपश्यद्विदुरं तूर्णमारा-
दभ्यायान्तं सत्यसन्धः स राजा ।
अथाब्रवीद्भ्रातरं भीमसेनं
किंनु क्षत्ता वक्ष्यतिनः समेत्य ॥ ३-५-७ (१५८८१)
कच्चिन्नायं वचनात्सौबलस्य
समाह्वातुं देवनायोपयाति ।
कच्चित्क्षुद्रः कुशली चाऽयुधानि
जेष्यत्यस्माकं पुनरेवाक्षवत्याम् ॥ ३-५-८ (१५८८२)
समाहूतः केनचिदाहवाय
नाहं शक्तो भीमसेनापयातुम् ।
गाण्डीवे च संशयिते कथं नु
राज्यप्राप्तिः संशयिता भवेन्नः ॥ ३-५-९ (१५८८३)
वैशंपायन उवाच। ३-५-१०क्ष् (१७७७)
तत उत्थाय विदुरं पाण्डवेयाः
प्रत्यगृह्णन्नृपते सर्व एव ।
तैः सत्कृतः स च तानाजमीढो
यथोचितं पाण्डुपुत्रान्समेयात् ॥ ३-५-१० (१५८८४)
समाश्वस्तं विदुरं ते नरर्षभा-
स्ततोऽपृच्छन्नागमनाय हेतुम् ।
स चापि तेभ्यो विस्तरतः शशंस
यथावृत्तं धृतराष्ट्रेऽम्बिकेये ॥ ३-५-११ (१५८८५)
विदुर उवाच। ३-५-१२क्ष् (१७७८)
अवोचन्मां धृतराष्ट्रोऽभिगुप्त-
मजातशत्रो परिगृह्याभिपूज्य ।

एवं गते समतामभ्युपेत्य
पथ्यं तेषां मम चैव ब्रवीहि ॥ ३-५-१२ (१५८८६)
मयाप्युक्तं यत्क्षमं कौरवाणां
हितं पथ्यं धृतराष्ट्रस्य चैव ।
तद्वै पथ्यं तन्मनो नाभ्युपैति
ततश्चाहं क्षममन्यन्न मन्ये ॥ ३-५-१३ (१५८८७)
परं श्रेयः पाण्डवेया मयोक्तं
न मे तच्च शुतवानाम्बिकेयः ।
यथाऽऽतुरस्येव हि पथ्यमौषधं
न रोचनते स्मास्य तदुच्यमानम् ॥ ३-५-१४ (१५८८८)
न श्रेयसे यततेऽजातशत्रो
स्त्री श्रोत्रियस्येव गृहे प्रदुष्टा ।
ध्रुवं न रोचेद्भरतर्षभस्य
पतिः कुमार्या इव षष्टिवर्षः ॥ ३-५-१५ (१५८८९)
ध्रुवं विनाशो नृप कौरवाणां
न वै श्रेयो धृतराष्ट्रः परैति ।
यथा च पर्णे पुष्करस्यावसिक्तं
जलं न तिष्ठेत्पथ्यमुक्तं तथाऽस्मिन् ॥ ३-५-१६ (१५८९०)
ततः क्रुद्धो धृतराष्ट्रोऽब्रवीन्मां
यस्मिञ्श्रद्धा तव तत्र प्रयाहि ।
नाहं भूयः कामये त्वां सहायं
महीमिमां पालयितुं पुरं वा ॥ ३-५-१७ (१५८९१)
सोहं त्यक्तो धृतराष्ट्रेण राज्ञा
प्रशासितुं त्वामुपयातो नरेन्द्र ।
तद्वै सर्वं यन्मयोक्तं सभायां
तद्धार्यतां यत्प्रवक्ष्यामि भूयः ॥ ३-५-१८ (१५८९२)
क्लेशैस्तीव्रैर्युज्यमानः सपत्नैः
क्षमां कुर्वन्कालमुपासते यः ।
संवर्धयन्स्तोकमिवाग्निमात्मवान्
स वै भुङ्क्ते पृथिवीमेक एव ॥ ३-५-१९ (१५८९३)
यस्याविभक्तं वसु राजन्सहायै-
स्तस्य दुःखस्यांशभाजः सहायाः ।
सहायानामेष संग्रगणेऽभ्युपायः
सहायाप्तौ पृथिवीप्राप्तिमाहुः ॥ ३-५-२० (१५८९४)
सत्यं श्रेष्टं पाण्डवा निष्प्रलापं
तुल्यं चान्नं सह भोज्यं सहायैः ।

आत्मा चैषामग्रतो नातिवर्ते
देवं वृत्तिर्वर्धते भूमिपाल ॥ ३-५-२१ (१५८९५)
युधिष्ठिर उवाच। ३-५-२२क्ष् (१७७९)
एवं करिष्यामि यथा ब्रवीपि
परां बुद्धिमुपगम्याप्रमत्तः ।
यच्चाप्यन्यद्देशकालोपपन्नं
तद्वै वाच्यं तत्करिष्यामि कृत्स्नम् ॥ ३-५-२२ (१५८९६)

इति श्रीमन्महाभारते अरण्यपर्वणि किर्मीरवधपर्वणि
पञ्चमोऽध्यायः ॥ ५ ॥
Mahabharata - Vana Parva - Chapter Footnotes

३-५-३ मरुधन्वसु मरुषु निर्जलदेशेषु । धन्वसु जाङ्गलदेशेषु ॥
३-५-९ अपयातुं निवर्तितुम् । संशयिते पणीकृतेसति। कथं नः
राज्यप्राप्तिर्यतः संशयिता। गाण्डीवनाशादित्यर्थः ॥
३-५-१२ अभिगुप्तं अभिरक्षितारम् । हितोपदेशेनेति
शेषः। कर्तरिक्तः। ब्रहीहीत्यवोचदिति संबन्धः ॥
३-५-१३ अन्यत् साम्नोऽन्यत् वैरम् ॥
३-५-१६ परैति परामृशति । पुष्करस् कमलस्य ॥
३-५-१७ श्रद्धा इष्टोयमिति धीः ॥
३-५-१८ धार्यतां न विस्मर्तव्यम् ॥
३-५-२० उपासते उपास्ते प्रतीक्षते । तृणैः स्तोकं अग्निमिव आत्मानं
सहायसंपत्त्या संवर्धयन्। सहायार्जनोपायमाह यस्येति। अविभक्तं
साधारणम्। वसु वित्तम् ॥

---

वन-अध्यय००६
॥ श्रीः ॥
३.६. अध्यायः ६

Mahabharata - Vana Parva - Chapter Topics
विदुरविप्रयोगखिन्नेन धृतराष्ट्रेण तदाह्वानाय संजयप्रेषणम् ॥ १ ॥
संजयाहूतेन विदुरेण पुनर्धृतराष्ट्रंप्रत्यागमनम् ॥ २ ॥

Mahabharata - Vana Parva - Chapter Text

३-६-० (१५८९७)
वैशंपायन उवाच। ३-६-०क्ष् (१७८०)

गते तु विदुरे राजन्नाश्रमं पाण्डवान्प्रति ।
धृतराष्ट्रो महाप्राज्ञः पर्यतप्यत दुर्मनाः ॥ ३-६-१ (१५८९८)
शविदुरस्य प्रभावं च सन्धिविग्रहकारितम् ।
विवृद्धिं च परां मत्वा पाण्डवानां भविष्यति ॥ ३-६-२ (१५८९९)
स सभाद्वारमागम्य विदुरस्मारमोहितः ।
समक्षं पार्थिवेनद्राणां विसंज्ञः प्रापतद्भुवि ॥ ३-६-३ (१५९००)
स तु लब्ध्वा चिरात्संज्ञां समुत्थाय महीतलात् ।
समीपोपस्थितं राजा संजयं वाक्यमब्रवीत् ॥ ३-६-४ (१५९०१)
भ्राता मम सुहृच्चैव साक्षाद्धर्म इवापरः ।
तस्य स्मृत्याऽद्य सुभृशं हृदयं दीर्यतीवमे ॥ ३-६-५ (१५९०२)
तमानय स्वधर्मज्ञं मम भ्रातरमाशु वै ।
इति ब्रुवन्स नृपतिः कृपणं पर्यदेवयत् ॥ ३-६-६ (१५९०३)
पश्चात्तापाभिसंतप्तो विदुरस्मारमोहितः ।
भ्रातृश्नेहादिदं राजा संजयं वाक्यमब्रवीत् ॥ ३-६-७ (१५९०४)
गच्छ संजय जानीहि भ्रातरं विदुरं मम ।
यदि जीवति रोषेण मया पापेन निर्धुतः ॥ ३-६-८ (१५९०५)
न हि तेन मम भ्रात्रा सुसूक्ष्ममपि किंचन ।
व्यलीकं कृतपूर्वं वै प्राज्ञेनामितबुद्धिना ॥ ३-६-९ (१५९०६)
स व्यलीकं कथं प्राप्तो मत्तः परमबुद्धिमान् ।
न जह्याज्जीवितं प्राज्ञ तं गच्छानय संजय ॥ ३-६-१० (१५९०७)
तस्य तद्वचनं श्रुत्वा राज्ञस्तमनुमान्य च ।
संजयो बाढमित्युक्त्वा प्राद्रवत्काम्यकं प्रति  ३-६-११ (१५९०८)
सोऽचिरेण समासाद्य तद्वनं यत्र पाण्डवाः ।
रौरवाजिनसंवीतं ददर्शाथ युधिष्ठिरम् ॥ ३-६-१२ (१५९०९)
विदुरेण सहासीनं ब्राह्मणैश्च सहस्रशः ।
भ्रातृभिश्चाभिसंगुप्तं देवैरिव पुरंदरम् ॥ ३-६-१३ (१५९१०)
युधिष्ठिरमुपागम्य पूजयामास संजयः ।
भीमार्जुनयमाश्चापि तद्युक्तं प्रतिपेदिरे ॥ ३-६-१४ (१५९११)
राज्ञा पृष्टः स कुशलं सुखासीनश्च संजयः ।
शशंसागमने हेतुमिदं चैवाब्रवीद्वचः ॥ ३-६-१५ (१५९१२)
संजय उवाच। ३-६-१६क्ष् (१७८१)
राजा स्मरति ते क्षत्तर्धृतराष्ट्रोऽम्बिकासुतः ।
तं पश्य गत्वा त्वं क्षिप्रं संजीवय च पार्थिवम् ॥ ३-६-१६ (१५९१३)
सोऽनुमान्य नरश्रेष्ठान्पाण्डवान्कुरुनन्दनान् ।
नियोगाद्राजसिंहस्य गन्तुमर्हसि सत्तम् ॥ ३-६-१७ (१५९१४)
एवमुक्तस्तु विदुरो धीमान्स्वजनवत्सलः ।

युधिष्ठिरस्यानुमते पुनरायाद्गजाह्वयम् ॥ ३-६-१८ (१५९१५)
तमब्रवीन्महातेजा धृतराष्ट्रोऽम्बिकासुतः ।
दिष्ट्या प्राप्तोसि धर्मज्ञ दिष्ट्या स्मरसि मेऽनघ ॥ ३-६-१९ (१५९१६)
अद्य चाहं दिवारात्रौ त्वत्कृते भरतर्षभ ।
प्रजागरे प्रपश्यामि विचित्रं देहमात्मनः ॥ ३-६-२० (१५९१७)
वैशंपायन उवाच। ३-६-२१क्ष् (१७८२)
सोङ्कमानीय विदुरं मूर्धन्याघ्राय चैव ह ।
क्षम्यतामिति चोवाचयदुक्तोसि मयाऽनघ ॥ ३-६-२१ (१५९१८)
विदुर उवाच। ३-६-२२क्ष् (१७८३)
क्षान्तमेव मया राजन्गुरुर्मे परमो भवान् ।
तथाऽहमागतः शीघ्रं त्वद्दर्शनपरायणः ॥ ३-६-२२ (१५९१९)
भवन्ति हि नरव्याघ्र पुरुषा धर्मचेतनाः ।
दीनानुकम्पिनो राजन्नात्र कार्या विचारणा ॥ ३-६-२३ (१५९२०)
पाण्डोः पुत्रा यादृशास्ते तादृशा मे सुतास्तव ।
दीना इतीव मे बुद्धिरभिपन्नाऽद्य तान्प्रति ॥ ३-६-२४ (१५९२१)
वैशंपायन उवाच। ३-६-२५क्ष् (१७८४)
अन्योन्यमनुनीयैवं भ्रातरौ द्वौ महाद्युती ।
विदुरो धृतराष्ट्रश्च लेभाते परमां मुदम् ॥ ३-६-२५ (१५९२२)

इति श्रीमन्महाभारते अरण्यपर्वणि किर्मीरवधपर्वणि षष्ठोऽध्यायः
॥ ६ ॥

Mahabharata - Vana Parva - Chapter Footnotes

३-६-१ महाप्राज्ञः विदुरेपदेशे स्थितानां जयो भविष्यतीति जानन् ॥
३-६-२ संधिविग्रहकारितं संधिविग्रहादिनीतिज्ञत्वकृतम्
। भविष्यति आगामिनि काले ॥
३-६-८ निर्धुतः निःसारितः ॥
३-६-९ व्यलीकं अप्रियम् ॥
३-६-१० त्यक्ष्यामि जीवितमिति झ । पाठः ॥

---

वन-अध्यय००७
॥ श्रीः ॥
३.७. अध्यायः ७

Mahabharata - Vana Parva - Chapter Topics

विदुरस्य पुनरागमनेन खिद्यता दुर्योधनेन कर्णादिभिरालोचनम् ॥ १ ॥
कर्णादिषु समालोच्य पाण्डवजिघांसया प्रस्थितेषु तदा समागतेन

श्रीव्यासेन तेषां प्रतिषेधनम् ॥ २ ॥

Mahabharata - Vana Parva - Chapter Text

३-७-० (१५९२३)
वैशंपायन उवाच। ३-७-०क्ष् (१७८५)
श्रुत्वा च विदुरं प्राप्तं राज्ञा च परिसान्त्वितम् ।
धृताराष्ट्रात्मजो राजा पर्यतप्यत दुर्मतिः ॥ ३-७-१ (१५९२४)
स सौबलेयमानाय्य कर्णदुःशासनौ तथा ।
अब्रवीद्वचनं राजा प्रविश्याबुद्धिजं तमः ॥ ३-७-२ (१५९२५)
एष प्रत्यागतो मन्त्री धृतराष्ट्रस्य संमतः ।
विदुरः पाण्डुपुत्राणां सुहृद्विद्वान्हिते रतः ॥ ३-७-३ (१५९२६)
यावदस्य पुनर्बुद्धिं विदुरो नापकर्षति ।
पाण्डवानयने तावन्मन्त्रयध्वं हितं मम ॥ ३-७-४ (१५९२७)
अथ पश्याम्यहं पार्थान्प्राप्तानिह कथंचन ।
पुनः शोषं गमिष्यामि निरसुर्निष्परिग्रहः ॥ ३-७-५ (१५९२८)
विषमुद्बन्धनं चैव शस्त्रमग्निप्रवेशनम् ।
करिष्ये न हि तानृद्धान्पुनर्द्रष्टुमिहोत्सहे ॥ ३-७-६ (१५९२९)
सुकुनिरुवाच। ३-७-७क्ष् (१७८६)
किं बालिशमतिं राजन्नास्थितोसि विशांपते ।
गतास्ते समयं कृत्वा नैतदेवं भविष्यति ॥ ३-७-७ (१५९३०)
सत्यवाक्येः स्विताः सर्वे पाण्डवा भरतषभ ।
पितुस्ते वचनं तात न ग्रहीष्यन्ति कर्हिचिति ॥ ३-७-८ (१५९३१)
अथवा ते ग्रहीष्यन्ति पुनरेष्यन्ति वा पुरम् ।
निरस्य समयं सर्वे पणोऽस्माकं भविष्यति ॥ ३-७-९ (१५९३२)
सर्वे भवामो मध्यस्था राज्ञश्छन्दानुवर्तिनः ।
छिद्रं बहु प्रपश्यन्तः पाण्डवानां सुसंवृताः । ३-७-१० (१५९३३)
दुःशासन उवाच। ३-७-११क्ष् (१७८७)
एवमेतन्महाप्राज्ञ यथा वदसि मातुल ।
नित्यं हि मे कथयतस्तव बुद्धिर्विरोचते ॥ ३-७-११ (१५९३४)
कर्ण उवाच। ३-७-१२क्ष् (१७८८)
काममीक्षामहे सर्वे दुर्योधन तवेप्सितम् ।
ऐकमत्यं हि नो राजन्सर्वेषामेव लक्षये ॥ ३-७-१२ (१५९३५)
श्नागमिष्यन्ति ते धीरा अकृत्वा कालसंविदम् ।
आगमिष्यन्ति चेन्मोहात्पुनर्द्यूतेन ताञ्जय ॥ॡ ३-७-१३ (१५९३६)
वैशंपायन उवाच। ३-७-१४क्ष् (१७८९)

एवमुक्तस्तु कर्णेन राजा दुर्योधनस्तदा ।
नातिहृष्टमनाः क्षिप्रमभवत्स पराङ्मुखः ॥ ३-७-१४ (१५९३७)
उपलभ्य ततः कर्णो विवृत्य नयने शुभे ।
रोषाद्दुःशासनं चैव सौबलं च तमेव च ॥ ३-७-१५ (१५९३८)
उवाच परमक्रुद्ध उद्यम्यात्मानमात्मना ।
अथो मम मतं यत्तु तन्निबोधत भूमिपाः ॥ ३-७-१६ (१५९३९)
प्रियं सर्वे करिष्यामो राज्ञः किं करवामहे ।
न चास्य शक्नुमः स्थातुं प्रिये सर्वे ह्यतन्द्रिताः ॥ ३-७-१७ (१५९४०)
वयं तु शस्त्राण्यादाय रथानास्थाय दंशिताः ।
गच्छामः सहिता हन्तुं पाण्डवान्वनगोचरान् ॥ ३-७-१८ (१५९४१)
तेषु सर्वेषु शान्तेषु गतेष्वविदितां गतिम् ।
निर्विवादा भविष्यन्ति धार्तराष्ट्रास्तथा वयम् ॥ ३-७-१९ (१५९४२)
यावदेव परिद्यूना यावच्छोकपरायणाः ।
यावन्मित्रविहीनाश्च तावद्गच्छाम माचिरम् ॥ ३-७-२० (१५९४३)
तस्यतद्वचनं श्रुत्वा पूजयन्तः पुनः पुनः ।
प्रहृष्टमनसः सर्वे प्रत्यूचुः सूतजं तदा ॥ ३-७-२१ (१५९४४)
एवमुक्त्वा सुसंरब्धा रथैः सर्वे पृथक्पृथक् ।
निर्ययुः पाण्डवान्हन्तुं सहिताः कृतनिश्चयाः ॥ ३-७-२२ (१५९४५)
तान्प्रस्थितान्परिज्ञाय कृष्णद्वैपायनः प्रभुः ।
आजगाम विशुद्धात्मा दृष्ट्वा दिव्येन चक्षुषा ॥ ३-७-२३ (१५९४६)
प्रतिषिध्याथ तान्सर्वान्भगवाँल्लोकपूजितः ।
प्रज्ञाचक्षुषमासीनमुवाचाभ्येत्य सत्वरम् ॥ ३-७-२४ (१५९४७)

इति श्रीमन्महाभारते अरण्यपर्वणि किर्मीरवधपर्वणि सप्तमोऽध्यायः
॥ ७ ॥

Mahabharata - Vana Parva - Chapter Footnotes

३-७-२ तमो रागद्वेषात्मकं मोहम् ॥
३-७-६ करिष्ये स्वीकरिष्ये ।ऋद्धान् ऋद्धिमतः ॥
३-७-९ पणः कार्याकार्यविवेकलक्षणो व्यवहारः ॥
३-७-१० छिद्रं समयातिक्रमदोषम् ॥
३-७-१५ उपलभ्य दुर्योधनाशयमिति शेषः ॥
३-७-१६ उद्यम्योत्क्षिप्य ।आत्मानं देहम् ॥
३-७-१७ प्रियं चिदीर्षामो नतु शक्नुमः प्रिये स्थातुमिति संबन्धः
।धृतराष्ट्रेण निरुद्धत्वात् ॥
३-७-२० परिद्यूनाः खिन्ना वर्जितविजिगीषा वा ॥

३-७-२१ बाढमित्येव ते सर्वे इति झ । फाठः ॥

वन-अध्यय००८
॥ श्रीः ॥
३.८. अध्यायः ८

Mahabharata - Vana Parva - Chapter Topics
तदा समागतेन व्यासेन धृतराष्ट्रंप्रति पाण्डवैः सह विरोधस्यानर्थहेतुत्वकथनपूर्वकं तैः सह शमविधानम् ॥ १ ॥

Mahabharata - Vana Parva - Chapter Text

३-७-० (१५९४८)
व्यास उवाच। ३-७-०क्ष् (१७९०)
धतराष्ट्र महाप्राज्ञ निबोध वचनं मम ।
वक्ष्यामि त्वां कौरवाणां सर्वेषां हितमुत्तमम् ॥ ३-७-१ (१५९४९)
न मे प्रियं महाबाहो यद्गताः पाण्डवा वनम् ।
निकृत्त्या निकृताश्चैव दुर्योधनपुरोगमैः ॥ ३-७-२ (१५९५०)
ते स्मरन्तः परिक्लेशान्वर्षे पूर्णे त्रयोदशे ।
विमोक्ष्यन्ति विषं क्रुद्धाः कौरवेयेषु भारत ॥ ३-७-३ (१५९५१)
तदयं किंनु पापात्मा तव पुत्रः सुमन्दधीः ।
पाण्डवान्नित्यसंक्रुद्धो राज्यहेतोर्जिघांसति ॥ ३-७-४ (१५९५२)
वार्यतां साध्वयं मूढः शमं गच्छतु ते सुतः ।
वनस्थांस्तानयं हन्तुमिच्छन्प्राणान्विमोक्ष्यति ॥ ३-७-५ (१५९५३)
यथाऽऽह विदुरः प्राज्ञो यथा भीष्मो यथा वयम् ।
यथा कृपश्च द्रोणश्च तथा साधु विधीयताम् ॥ ३-७-६ (१५९५४)
विग्रहो हि महाप्राज्ञ स्वजनेन विगर्हितः ।
अधर्म्यमयशस्यं च मा राजन्प्रतिपद्यथाः ॥ ३-७-७ (१५९५५)
समीक्षा यादृशी ह्यस्य पाण्डवान्प्रति भारत ।
उपेक्ष्यमाणा सा राजन्महान्तमनयं व्रजेत् ॥ ३-७-८ (१५९५६)
अथवाऽयं सुमन्दात्मा वनं गच्छतु ते सुतः ।
पाण्डवैः सहितो राजन्नेक एवासहायवान् ॥ ३-७-९ (१५९५७)
ततः संसर्गजः स्नेहः पुत्रस्य तव पाण्डवैः ।
यदि स्यात्कृतकृत्यस्त्वं भवेथाः पुरषर्षभ ॥ ३-७-१० (१५९५८)
अथवा जायमानस्य यच्छीलमनुजायते ।
श्रूयते तन्महाराज नामृतस्यापसर्पति ॥ ३-७-११ (१५९५९)
कथं वा मन्यते भीष्मो द्रोणोऽथ विदुरोपिवा ।

भवान्वाऽत्र परं कार्यं पुरा चार्थो निवर्तते ॥ ३-७-१२ (१५९६०)

इति श्रीमन्महाभारते अरण्यपर्वणि किर्मीरवधपर्वणि अष्टमोऽध्यायः
॥ ८ ॥
Mahabharata - Vana Parva - Chapter Footnotes

३-७-२ निकृताः निर्जिताः ॥
३-७-३ विषमिव विषं शस्त्रम् ॥
३-७-८ समीक्षा विचारपूर्विका बुद्धिः ॥
३-७-११ एतदपि दुर्घटमित्याह अथवेति ॥

---

वन-अध्यय००९
॥ श्रीः ॥
३.९. अध्यायः ९

Mahabharata - Vana Parva - Chapter Topics
व्यासेन धृतराष्ट्रंप्रति पुत्रस्नेहस्य दुस्त्यजत्वे दृष्टान्तत्वेन सुरभ्युपाख्यानाख्यानपूर्वकं कौरवाणां जीवितस्य पाण्डवैः सह शमाधीनत्वाभिधानम् ॥ १ ॥

Mahabharata - Vana Parva - Chapter Text

३-९-० (१५९६१)
धृतराष्ट्र उवाच। ३-९-०क्ष् (१७९१)
भगवन्नाहमप्येतद्रोचये द्यूतसंभवम् ।
मन्ये तद्विधिनाऽऽकृष्य कारितोस्मीति वै मुने ॥ ३-९-१ (१५९६२)
नैतद्रोचयते भीष्मो न द्रोणो विदुरो न च ।
गान्धार्या नेष्यते द्यूतं तत्र मोहात्प्रवर्तितम् ॥ ३-९-२ (१५९६३)
परित्यक्तुं न शक्नोमि दुर्योधनमचेतनम् ।
पुत्रस्नेहेन भगवञ्जानन्नपि यतव्रत ॥ ३-९-३ (१५९६४)
व्यास उवाच। ३-९-४क्ष् (१७९२)
वैचित्रवीर्य नृपते सत्यमाह यथा भवान् ।
दृढं विझः परं पुत्रं परं पुत्रान्न विद्यते ॥ ३-९-४ (१५९६५)
इन्द्रोप्यश्रुनिपातेन सुरभ्या प्रतिबोधितः ।
अन्यैः समृद्धैरप्यर्थैर्न सुतानमन्यते परम्। ३-९-५ (१५९६६)
अत्र ते वर्तयिष्यामि गहदाख्यानमुत्तमम् ।

सुरभ्याश्चैव संवादमिन्द्रस्य च विशांपते ॥ ३-९-६ (१५९६७)
त्रिविष्टपगता राजन्सुरभी प्रारुदत्किल ।
गवां माता पुरा तात तामिन्द्रोऽन्वकृपायत ॥ ३-९-७ (१५९६८)
इन्द्र उवाच। ३-९-८क्ष् (१७९३)
किमिदं रोदिषि शुभे कच्चित्क्षेमं दिवौकसाम् ।
मनुष्येष्वथवा गोषु नैतदल्पं भविष्यति ॥ ३-९-८ (१५९६९)
सुरभिरुवाच। ३-९-९क्ष् (१७९४)
विनिपातो न वः कश्चिद्दृश्यते त्रिदशाधिप ।
अहं तु पुत्रं शोचामि तेन रोदिमि कौशिक ॥ ३-९-९ (१५९७०)
पश्यैनं कर्षकं क्षुद्रं दुर्बलं मम पुत्रकम् ।
प्रतोदेनाभिनिघ्नन्तं लाङ्गलेन च पीडितम् ।
निषीदमानं सोत्कण्ठं वध्यमानं सुराधिप ॥ ३-९-१० (१५९७१)
ग्एनं दृष्ट्वा भृशं श्रान्तं वध्यमानं सुराधिप।'
कृपाविष्टाऽस्मि देवेन्द्र मनश्चोद्विपते मम ॥ ३-९-११ (१५९७२)
एकस्तत्रबलोपेतो धुरमुद्वहतेऽधिकाम् ।
अपरोप्यबलप्राणः कृशो धमनिसंततः ।
कृच्छ्रादुद्वहते भारं तं वै शोचामि वासव ॥ ३-९-१२ (१५९७३)
वध्यमानः प्रतोदेन तुद्यमानः पुनः पुनः ।
नैव शक्नोति तं भारमुद्वोढुं पश्य वासव ॥ ३-९-१३ (१५९७४)
ततोऽहं तस्य शोकार्ता विरौमि भृशदुःखिता ।
अश्रूण्यावर्तयन्ती च नेत्राभ्यां करुणायती ॥ ३-९-१४ (१५९७५)
शक्र उवाच। ३-९-१५क्ष् (१७९५)
तव पुत्रसहस्रेषु पीड्यमानेषु शोभने ।
किं कृपायितवत्यत्र पुत्र एको निपीड्यते ॥ ३-९-१५ (१५९७६)
सुरभिरुवाच। ३-९-१६क्ष् (१७९६)
यदि पुत्रसहस्राणि सर्वत्रसमतैव मे ।
दीनस्य तु सतः शक्र पुत्रस्याभ्यधिकाकृपा ॥ ३-९-१६ (१५९७७)
व्यास उवाच। ३-९-१७क्ष् (१७९७)
तदिन्द्रः सुरभेर्वाक्यं निशम्य भृशविस्मितः ।
जीवितेनापि कौरव्य मेनेऽभ्यधिकमात्मजम् ॥ ३-९-१७ (१५९७८)
प्रववर्ष च तत्रैव सहसा तोयमुल्वणम् ।
कर्षकस्याचरन्विघ्नं भगवान्पाकशासनः ॥ ३-९-१८ (१५९७९)
तद्यथा सुरभिः प्राह सममेवास्तु ते तथा ।
सुतेषु राजन्सर्वेषु हीनेष्वभ्यधिका कृपा ॥ ३-९-१९ (१५९८०)
यादृशो मे सुतः पाण्डुस्तादृशो मेऽसि पुत्रक ।
विदुरश्च महाप्राज्ञः स्नेहादेतद्ब्रवीम्यहम् ॥ ३-९-२० (१५९८१)

चिराय तव पुत्राणां शतमेकश्च भारत ।
पाण्डोः पञ्चैव लक्ष्यन्ते तेऽपि मन्दाःसुदुःखिताः ॥ ३-९-२१ (१५९८२)
कथं जीवेयुरत्यन्तं कथं वर्धेयुरित्यपि ।
इति दीनेषु पार्थेषु मनो मे परितप्यते ॥ ३-९-२२ (१५९८३)
यदि पार्थिव कौरव्याञ्जीवमानानिहेच्छसि ।
दुर्योधनस्तव सुतः शमं गच्छतु पाण्डवैः ॥ ३-९-२३ (१५९८४)

इति श्रीमन्महाभारते अरण्यपर्वणि किर्मीरवधपर्वणि नवमोऽध्यायः ॥ ९ ॥

Mahabharata - Vana Parva - Chapter Footnotes

३-९-५ सुरभ्या देवधेन्वा ॥
३-९-७ अन्वकृपायत अनुकम्पितवान् ॥
३-९-९ कौशिक हे इन्द्र ॥
३-९-१० प्रतोदेन तीक्ष्णाग्रलोहवता दण्डेन ॥
३-९-१२ धुरं भारम् । धमनिसंततः शिराभिर्व्याप्तः। निर्मांस इत्यर्थः ॥
३-९-१३ वधो दण्डाघातेन । तोदः प्रतोदेन ॥
३-९-१५ कृपायितवती कृपांकृतवती । पुत्र एको निपीड्यते बहुषु पुत्रेषु एकः कश्चित् निपीड्यत एवेत्यर्थः ॥
३-९-१८ उल्वणं उत्कटम् ॥
३-९-२१ मन्दा- त्वत्पुत्रवत्कपटानभिज्ञाः ॥

---

वन-अध्यय०१०

॥ श्रीः ॥

३.१०. अध्यायः १०

Mahabharata - Vana Parva - Chapter Topics

धृतराष्ट्रेण दुर्योधनानुशासनं प्रार्थितेन व्यासेन तत्रागमिष्यन्तं मैत्रेयप्रति तत्प्रार्थनाविधानपूर्वकं स्वावासंप्रति गमनम् ॥ १ ॥
तत्रागतेन मैत्रेयेण ऊर्वास्फालनपूर्वकं स्ववचनमनादृतवतो दुर्योधनस्य भीमसेनगदया तवोरुभेदो भूयादिति शापदानम् ॥ २ ॥

Mahabharata - Vana Parva - Chapter Text

३-१०-० (१५९८५)
धृतराष्ट्र उवाच। ३-१०-०क्ष् (१७९८)

एवमेतन्महाप्राज्ञ यथा वदसि मां मुने ।
अहं चैव विजानामि सर्वे चेमे नराधिपाः ॥ ३-१०-१ (१५९८६)
भवांश्च मन्यते साधु यत्कुरूणां सुखोदयम् ।
तदेव विदुरोऽप्याह भीष्मो द्रोणश्च मां मुने ॥ ३-१०-२ (१५९८७)
यदित्वहमनुग्राह्यः कौरव्येषु दया यदि ।
अन्वशाधि दुरात्मानं पुत्रं दुर्योधनं मम ॥ ३-१०-३ (१५९८८)
व्यास उवाच। ३-१०-४क्ष् (१७९९)
अयमायाति वै राजन्मैत्रेयो भगवानृषिः ।
अन्वीक्ष्य पाण्डवान्भ्रातृनिहैवाऽस्मद्दिदृक्षया ॥ ३-१०-४ (१५९८९)
एष दुर्योधनं पुत्रं तव राजन्महानृषिः ।
अनुशास्ता यथान्यायं शमायास्य कुलस्य च ॥ ३-१०-५ (१५९९०)
ब्रूयाद्यदेष कौरव्य तत्कार्यमविशङ्कया ।
अक्रियायां तु कार्यस्य पुत्रं ते शप्स्यते रुषा ॥ ३-१०-६ (१५९९१)
वैशंपायन उवाच। ३-१०-७क्ष् (१८००)
एवमुक्त्वा ययौ व्यासो मैत्रेयः प्रत्यदृश्यत ।
पूजया प्रतिजग्राह सपुत्रस्तं नराधिपः ॥ ३-१०-७ (१५९९२)
कृत्वाऽर्घ्याद्याः क्रियाः सर्वा विश्रान्तं मुनिसत्तमम्
प्रश्रयेणाब्रवीद्राजा धृतराष्ट्रोऽम्बिकासुतः ॥ ३-१०-८ (१५९९३)
सुखेनागमनं कच्चिद्भगवन्कुरुजाङ्गले ।
कच्चित्कुशलिनो वीरा भ्रातरः पञ्च पाण्डवाः । ३-१०-९ (१५९९४)
समये स्थातुमिच्छन्ति कच्चिच्च भरतर्षभाः ।
कच्चित्कुरूणां सौभ्रात्रमव्युच्छिन्नं भविष्यति ॥ ३-१०-१० (१५९९५)
मैत्रेय उवाच। ३-१०-११क्ष् (१८०१)
तीर्थयात्रामनुक्रामन्प्राप्तोऽस्मि कुरुजाङ्गलान् ।
यदृच्छया धर्मराजं दृष्टववान्काम्यके वने ॥ ३-१०-११ (१५९९६)
तं जटाजिनसंवीतं तपोवननिवासिनम् ।
समाजग्मुर्महात्मानं द्रष्टुं मुनिगणाः प्रभो ॥ ३-१०-१२ (१५९९७)
तत्राश्रौषं महाराज पुत्राणां तव विग्रहम् ।
अनयं द्यूतरूपेण महाभयमुपस्थितम् ॥ ३-१०-१३ (१५९९८)
ततोऽहं त्वामनुप्राप्तः कौरवाणामवेक्षया ॥
सदा ह्यभ्यधिकः स्नेहः प्रीतिश्च त्वयि मे प्रभो ॥ ३-१०-१४ (१५९९९)
नैतदौपयिकं राजंस्त्वयि भीष्मे च जीवति ।
यदन्योन्येन ते पुत्रा विरुध्यन्ते कथंचन ॥ ३-१०-१५ (१६०००)
मेढीभूतः स्वयं राजन्निग्रहे प्रग्रहे भवान् ।
किमर्थमनयं घोरमुत्पतन्तमुपेक्षसे ॥ ३-१०-१६ (१६००१)
दस्यूनामिव यद्वृत्तं सभायां कुरुनन्दन ।

तेन न भ्राजसे राजंस्तापसानां समागमे ॥ ३-१०-१७ (१६००२)
वैशंपायन उवाच। ३-१०-१८क्ष् (१८०२)
ततो व्यावृत्य राजानं दुर्योधनममर्षणम् ।
उवाच श्लक्ष्णया वाचा मैत्रेयो भगवानृषिः ॥ ३-१०-१८ (१६००३)
मैत्रेय उवाच। ३-१०-१९क्ष् (१८०३)
दुर्योधन महाबाहो निबोध वदतां वर ।
वचनं मे महाभाग ब्रुवतो यद्धितं तव ॥ ३-१०-१९ (१६००४)
मा द्रुहः पाण्डवान्राजन्कुरुष्व हितमात्मनः ।
पाण्डवानां कुरूणां च लोकस्य च नरर्षभ ॥ ३-१०-२० (१६००५)
पाण्डवान्प्राप्य तान्रात्रौ किर्मीरो नाम राक्षसः ।
अवृत्य मार्गं रौद्रात्मा तस्थौ गिरिवाचलः ॥ ३-१०-२१ (१६००६)
तं भीमः समरस्लाघी बलेन बलिनां वरः ।
जघान पशुमारेण व्याघ्रः क्षुद्रमृगं यथा ॥ ३-१०-२२ (१६००७)
पश्य दिग्विजये राजन्यथा भीमेन पातितः ।
जरासन्धो महेष्वासो नागायुतबलो युधि ॥ ३-१०-२३ (१६००८)
संबन्धी वासुदेवश्च श्यालाः सर्वे च पार्षताः ।
ते हि सर्वे नरव्याघ्राः शूरा विक्रान्तयोधिनः ॥ ३-१०-२४ (१६००९)
सर्वे नागायुतप्राणा वज्रसंहनना दृढः ।
सत्यव्रतधराः सर्वेसर्वे पुरुषमानिनः ॥ ३-१०-२५ (१६०१०)
हन्तारो देवशत्रूणां रक्षसां कामरूपिणाम् ।
हिडिम्बबकमुख्यानां किर्मीरस् च रक्षसः ।
कस्तान्युधि समासीत जरामरणवान्नरः ॥ ३-१०-२६ (१६०११)
तस्य ते शम एवास्तु पाण्डवैर्भरतर्षभ ।
कुरु मे वचनं राजन्मा मृत्युवशमन्वगाः ॥ ३-१०-२७ (१६०१२)
वैशंपायन उवाच। ३-१०-२८क्ष् (१८०४)
एवं तु ब्रुवतस्तस्य मैत्रेयस्य विशांपते ।
ऊरुं करिकराकारं करेणाभिजघान तः ॥ ३-१०-२८ (१६०१३)
दुर्योधनः स्मितं कृत्वा चरणेनोल्लिखन्महीम् ।
नकिंचिदुक्त्वा दुर्मेधास्तस्थौ किंचिदवाङ्मुखः ॥ ३-१०-२९ (१६०१४)
तमशुश्रूषमाणं तु विलिखन्तं वसुंधराम् ।
दृष्ट्वा दुर्योधनं राजन्मैत्रेयं कोप आविशत् ॥ ३-१०-३० (१६०१५)
स कोपवशमापन्नो मैत्रेयो मुनिसत्तमः ।
विधिना संप्रयुक्तश्च शापायास्य मनो दधे ॥ ३-१०-३१ (१६०१६)
ततः स वार्युपस्पृश्य कोपसंरक्तलोचनः ।
मैत्रेयो धार्तराष्ट्रं तमशपद्दुष्टचेतसम् ॥ ३-१०-३२ (१६०१७)
यस्मात्त्वं मामनादृत्य नेमां वाचं चिकीर्षसि ।

तस्मादस्यातिमानस्य सद्यः फलमवाप्स्यसि ॥ ३-१०-३३ (१६०१८)
त्वदभिद्रोहसंयुक्तं युद्धमुत्पत्स्यते महत् ।
यत्र भीमो गदाघातैस्तवोरुं भेत्स्यते बली ॥ ३-१०-३४ (१६०१९)
इत्येवमुक्ते वचने धृतराष्ट्रो महीपतिः ।
प्रसादयामास मुनिं नैतदेवं भवेदिति ॥ ३-१०-३५ (१६०२०)
मैत्रेय उवाच। ३-१०-३६क्ष् (१८०५)
शमं यास्यति चेत्पुत्रस्तव राजन्यदा तदा ।
शापो न भविता तात विपरीते भविष्यति ॥ ३-१०-३६ (१६०२१)
वैशंपायन उवाच। ३-१०-३७क्ष् (१८०६)
सविलक्षस्तु राजेन्द्रो दुर्योधनपिता तदा ।
मैत्रेयं प्राह किर्मीरः कथं भीमेन पातितः ॥ ३-१०-३७ (१६०२२)
मैत्रेय उवाच। ३-१०-३८क्ष् (१८०७)
नाहं वक्ष्याम्यसूया ते न ते शुश्रूषते सुतः ।
एष ते विदुरः सर्वमाख्यास्यति गते मयि ॥ ३-१०-३८ (१६०२३)
वैशंपायन उवाच। ३-१०-३९क्ष् (१८०८)
इत्येवमुक्त्वा मैत्रेयः प्रातिष्ठत यथागतम् ।
किर्मीरवधसंविग्नो भयं दुर्योधनो ययौ ॥ ३-१०-३९ (१६०२४)
॥ इतिश्रीमन्महाभारते अरण्यपर्वणि किर्मीरवधपर्वणि
दशमोऽध्यायः ॥ १० ॥
Mahabharata - Vana Parva - Chapter Footnotes

३-१०-५ अनुशास्ता अनुशासिष्यति ॥
३-१०-६ अक्रियायां अकरणे । कार्यस्य अवश्यकर्तव्यस्य ॥
३-१०-११ यदृच्छया दैवात् ॥
३-१०-१५ औपयिकं योग्यम् ॥
३-१०-१६ मेढीभूतः खलदामस्तम्भीभूतः । प्रग्रहे अनुग्रहे ॥
३-१०-१८ व्यावृत् अभिमुखीभूयेत्यर्थः ॥
३-१०-२२ पशुमारेण पशुमारणप्रकारेण ॥
३-१०-२४ विक्रान्तयोधिनः विक्रान्ताश्च युद्धशीलाश्च ॥
३-१०-२५ वज्रसंहननाः वज्रकायाः ॥

---

वन-अध्यय०११
॥ श्रीः ॥
३.११. अध्यायः ११

Mahabharata - Vana Parva - Chapter Topics

मैत्रेयचोदितेन विदुरेण धृतराष्ट्राय भीमकृतकिर्मीरवधप्रकारकथनम् ॥

Mahabharata - Vana Parva - Chapter Text

३-११-० (१६०२५)
धृतराष्ट्र उवाच। ३-११-०क्ष् (१८०९)
किर्मीरस्य वधं क्षत्तः श्रोतुमिच्छामि कथ्यताम् ।
रक्षसा भीमसेनस्य कथमासीत्समागमः ॥ ३-११-१ (१६०२६)
विदुर उवाच। ३-११-२क्ष् (१८१०)
शृणु भीमस्य कर्मेदमतिमानषकर्मणः ।
श्रुतपूर्वं मया तेषां कथान्तेषु पुनः पुनः ॥ ३-११-२ (१६०२७)
इतः प्रयाता राजेन्द्र पाण्डवा द्यूतनिर्जिताः ।
जग्मुस्त्रिभिरहोरात्रैः काम्यकं नाम तद्वनम् ॥ ३-११-३ (१६०२८)
रात्रौ निशीथे त्वाभीले गतेऽर्धसमये नृप ।
प्रचारे पुरुषादानां रक्षसां घोरकर्मणाम् ॥ ३-११-४ (१६०२९)
तद्वनं तापसा नित्यमशेषा वनचारिणः ।
दूरात्परिहरन्ति स्म पुरुषादभयात्किल ॥ ३-११-५ (१६०३०)
तेषां प्रविशतां तत्र मार्गमावृत्य भारत ।
दीप्ताक्षं भीषणं रक्षः मोल्मुकं प्रत्यपद्यत ॥ ३-११-६ (१६०३१)
बाहू महान्तौ कृत्वा च तथास्यं च भयानकम् ।
स्थितमावृत्यपन्थानं येन यान्ति कुरूद्वहाः ॥ ३-११-७ (१६०३२)
दष्टोष्ठदंष्ट्रं ताम्राक्षं प्रदीप्तोर्ध्वशिरोरुहम् ।
सार्करश्मितडिच्चक्रं सबलाकमिवाम्बुदम् ॥ ३-११-८ (१६०३३)
सृजन्तं राक्षसीं मायां महानादनिनादितम् ।
मुञ्चन्तं विपुलान्नादान्सतोयमिव तोयदम् ॥ ३-११-९ (१६०३४)
तस्य नादेन संत्रस्ताः पक्षिणः सर्वतोदिशम् ।
विमुक्तनादाः संपेतुः स्थलजा जलजैः सह ॥ ३-११-१० (१६०३५)
संप्रद्रुतमृगद्वीपिमहिषर्क्षसमाकुलम् ।
तद्वनं तस्य नादेन संप्रस्थितमिवाभवत् ॥ ३-११-११ (१६०३६)
तस्योरुवाताभिहतास्ताम्रपल्लवबाहवः ।
विदूरजाताश्च लताः समाश्लिष्यन्ति पादपान् ॥ ३-११-१२ (१६०३७)
तस्मिन्क्षणेऽथ प्रववौ मारुतो भृशदारुणः ।
रजसा संवृतं तेन नष्टर्क्षमभवन्नभः ॥ ३-११-१३ (१६०३८)
पञ्चानां पाण्डुपुत्राणामविज्ञातो महारिपुः ।
पञ्चानामिन्द्रियाणां तु शोकावेश इवातुलः ॥ ३-११-१४ (१६०३९)
स दृष्ट्वा पाण्डवान्दूरात्कृष्णाजिनसमावृतान् ।

आवृणोत्तद्वनद्वारं मैनाक इव पर्वतः ॥ ३-११-१५ (१६०४०)
तं समासाद्य वित्रस्ता कृष्णा कमललोचना ।
अदृष्टपूर्वं संत्रासान्न्यमीलयत लोचने ॥ ३-११-१६ (१६०४१)
दुःशासनकरोत्सृष्टविप्रकीर्णशिरोरुहा ।
पञ्चपर्वतमध्यस्था नदीवाकुलतां गता ॥ ३-११-१७ (१६०४२)
विमुह्यमानां तां तत्र जगृहुः पञ्च पाण्डवाः ।
इन्द्रियाणि प्रसक्तानि विषयेषु यथारतिम् ॥ ३-११-१८ (१६०४३)
अथ तां राक्षसीं मायामुत्थितां घोरदर्शनाम् ।
रक्षोघ्नैर्विविधैर्मन्त्रैर्धौम्यः सम्यक्प्रयोजितैः ॥ ३-११-१९ (१६०४४)
पश्यतां पाण्डुपुत्राणां नाशयामास वीर्यवान् ।
स नष्टमायोऽतिबलः क्रोधविस्फारितेक्षणः ॥ ३-११-२० (१६०४५)
काममूर्तिधरः क्रूरः कालकल्पो व्यदृश्यत ।
तमुवाच ततो राजा दीर्घप्रज्ञो युधिष्ठिरः ॥ ३-११-२१ (१६०४६)
को भवान्कस्य वा किं ते क्रियतां कार्यमुच्यताम् ।
प्रत्युवाचाथ तद्रक्षो धर्मराजं युधिष्ठिरम् ॥ ३-११-२२ (१६०४७)
अहं वकस्य वै भ्राता किर्मीर इति विश्रुतः ।
वनेऽस्मिन्काम्यके शून्ये निवसामि गतज्वरः ॥ ३-११-२३ (१६०४८)
युधि निर्जित्य पुरुषानाहारं नित्यमाचरन् ।
के यूयमभिसंप्राप्ता भक्ष्यभूता ममान्तिकम् ।
युधि निर्जित्यवः सर्वान्भक्षयिष्ये गतज्वरः ॥ ३-११-२४ (१६०४९)
विदुर उवाच। ३-११-२५क्ष् (१८११)
युधिष्ठिरस्तु तच्छ्रुत्वा वचस्तस्य दुरात्मनः ।
आचचक्षे ततः सर्वं गोत्रनामादि भारत ॥ ३-११-२५ (१६०५०)
पाण्डवो धर्मराजोऽहं यदि ते श्रोत्रमागतः ।
सहितो भ्रातृभिः सर्वैर्भीमसेनार्जुनादिभिः ॥ ३-११-२६ (१६०५१)
हृतराज्यो वने वासं वस्तुं कृतमतिस्ततः ।
वनमभ्यागतो घोरमिदं तव परिग्रहम् ॥ ३-११-२७ (१६०५२)
ग्विस्मयं परमं गत्वा राक्षसो घोरदर्शनः।'
किर्मीरस्त्वब्रवीदेनं दिष्ट्या देवैरिदं मम ।
उपपादितमद्येह चिरकालान्मनोरथम् ॥ ३-११-२८ (१६०५३)
भीमसेनवधार्थं हि नित्यमभ्युद्यतायुधः ।
चरामि पृथिवीं कृत्स्नां नैनं चासादयाम्यहम् ॥ ३-११-२९ (१६०५४)
सोयमासादितो दिष्ट्या भ्रातृहा काङ्क्षितश्चिरम् ।
अनेन हि मम भ्राता बको विनिहतः प्रियः ॥ ३-११-३० (१६०५५)
वैत्रकीयवने राजन्ब्राह्मणच्छद्मरूपिणा ।
विद्याबलमुपाश्रित्य न ह्यस्त्यस्यौरसं बलम् ॥ ३-११-३१ (१६०५६)

हिडिम्बश्च सखा मह्यं दयितो वनगोचरः ।
हतो दुरात्मनाऽनेन स्वसा चास्य हृता पुरा ॥ ३-११-३२ (१६०५७)
सोयमभ्यागतो मूढो ममेदं गहनं वनम् ।
प्रचारसमयेऽस्माकमर्द्धरात्रे स्थिते समे ॥ ३-११-३३ (१६०५८)
अद्यास्य यातयिष्यामि तद्वैरं चिरसंभृतम् ।
तर्पयिष्यामि च बकं रुधिरेणास्य भूरिणा ॥ ३-११-३४ (१६०५९)
अद्याहमनृणो भूत्वा भ्रातुः सख्युस्तथैव च ।
शान्तिं लब्धास्मि परमां हत्वा राक्षसकण्टकम् ॥ ३-११-३५ (१६०६०)
यदि तेन पुरा मुक्तो भीमसेनो बकेन वै ।
अद्यैनं भक्षयिष्यामि पश्यतस्ते युधिष्ठिर ॥ ३-११-३६ (१६०६१)
एनं हि विपुलप्राणमद्य हत्वा वृकोदरम् ।
संभक्ष्य जरयिष्यामि यथाऽगस्त्यो महासुरम् ॥ ३-११-३७ (१६०६२)
एवमुक्तस्तु धर्मात्मा सत्यसन्धो युधिष्ठिरः ।
नैतदस्तीति सक्रोधो भर्त्सयामास राक्षसम् ॥ ३-११-३८ (१६०६३)
ततो भीमो महाबाहुरारुज्यतरसा द्रुमम् ।
दशव्याममथोद्विद्धं निष्पत्रमकरोत्तदा ॥ ३-११-३९ (१६०६४)
चकार सज्यं गाण्डीवं वज्रनिष्पेषगौरवम् ।
निमेषान्तरमात्रेण तथैव विजयोऽर्जुनः ॥ ३-११-४० (१६०६५)
निवार्य भीमो जिष्णुं तं तद्रक्षो मेघनिःस्वनम् ।
अभिद्रुत्याब्रवीद्वाक्यं तिष्ठतिष्ठेति भारत ॥ ३-११-४१ (१६०६६)
इत्युक्त्वैनमतिक्रुद्धः कक्ष्यामुत्पीड्य पाण्डवः ।
निष्पिष्य पाणिना पाणिं संदष्टौष्ठपुटो बली ।
तमभ्यधावद्वेगेन भीमो वृक्षायुधस्तदा ॥ ३-११-४२ (१६०६७)
यमदण्डप्रतीकाशं ततस्तं तस्य मूर्धनि ।
पातयामास वेगेन कुलिशं मघवानिव ॥ ३-११-४३ (१६०६८)
असंभ्रान्तं तु तद्रक्षः समरे प्रत्यदृश्यत ।
चिक्षेप चोल्मुकं दीप्तमशनिं ज्वलितामिव ॥ ३-११-४४ (१६०६९)
तदुदस्तमलातं तु भीमः प्रहरतां वरः ।
पदा सव्येन चिक्षेप तद्रक्षः पुनराव्रजत् ॥ ३-११-४५ (१६०७०)
किर्मीरश्चापि सहसा वृक्षमुत्पाट्य पाण्डवम् ।
दण्डपाणिरिव क्रुद्धः समरे प्रत्यधावत ॥ ३-११-४६ (१६०७१)
तद्वृक्षयुद्धमभवन्महीरुहविनाशनम् ।
वालिसुग्रीवयोर्भ्रात्रोर्यथा स्त्रीकाङ्क्षिणोः पुरा ॥ ३-११-४७ (१६०७२)
शीर्षयोः पतिता वृक्षा विभिदुर्नैकधा तयोः ।
यथैवोत्पलपत्राणि मत्तयोर्द्विपयोस्तथा ॥ ३-११-४८ (१६०७३)
मूर्ध्निजर्झरभूतास्तु बहवस्तत्र पादपाः ।

चीराणीव व्युदस्तानि रेजुस्तत्र महावने ॥ ३-११-४९ (१६०७४)
तद्वृक्षयुद्धमभवन्मुहूर्तं भरतर्षभ ।
राक्षसानां च मुख्यस्य नराणामुत्तमस्य च ॥ ३-११-५० (१६०७५)
ततः शिलां समुत्क्षिप्य भीमस्य युधि तिष्ठतः ।
प्राहिणोद्रासः क्रुद्धो भीमसेनश्चचाल ह ॥ ३-११-५१ (१६०७६)
तं शिलाताडनजडं पर्यधावत राक्षसः ।
बाहुविक्षिप्तकिरणः स्वर्भानुरिव भास्करम् ॥ ३-११-५२ (१६०७७)
तावन्योन्यं समाश्लिश्य प्रकर्षन्तौ परस्परम् ।
उभावपि चकाशेते प्रवृद्धौ वृषभाविव ॥ ३-११-५३ (१६०७८)
तयोरासीत्सुतुमुलः संप्रहारः सुदारुणः ।
नखदंष्ट्रायुधवतोर्व्याघ्रयोरिव दृप्तयोः ॥ ३-११-५४ (१६०७९)
दुर्योधननिकाराच्च बाहुवीर्याच्च दर्पितः ।
कृष्णानयनदृष्टश्च व्यवर्धत वृकोदरः ॥ ३-११-५५ (१६०८०)
अभिहत्याथ बाहुभ्यां प्रत्यगृह्णादमर्षितः ।
मातङ्गमिव मातङ्गः प्रभिननकरटामुखम् ॥ ३-११-५६ (१६०८१)
स चाप्येनं ततो रक्षः प्रतिजग्राह वीर्यबान् ।
तमाक्षिपद्भीमसेनो बलेन बलिनां वरः ॥ ३-११-५७ (१६०८२)
तयोर्भुजविनिष्पेषादुभयोर्बलिनोस्तदा ।
शब्दः समभवद्घोरो वेणुस्फोटसमो युधि ॥ ३-११-५८ (१६०८३)
अथैनमाक्षिप्य बलाद्गृह्य मध्ये वृकोदरः ।
धूनयामास वेगेन वायुश्चण्ड इव द्रुमम् ॥ ३-११-५९ (१६०८४)
स भीमेन परामृष्टो दुर्बलो बलिनां रणे ।
व्यस्पन्दत यथाप्राणं विचकर्ष च पाण्डवम् ॥ ३-११-६० (१६०८५)
तत एनं परिश्रान्तमुपलक्ष्य वृकोदरः ।
योक्त्रयामास बाहुभ्यां पशुं रशनया यथा ॥ ३-११-६१ (१६०८६)
विनदन्तं महानादं भिन्नभेरीस्वनं बली ।
भ्रामयामास सुचिरं विस्फुरन्तमचेतसम् ॥ ३-११-६२ (१६०८७)
तं विषीदन्तमाज्ञाय राक्षसं पाण्डुनन्दनः ।
प्रगृह्य तरसा दोर्भ्यां पशुमारममारयत् । ३-११-६३ (१६०८८)
आक्रम्य च कटीदेशे जानुना राक्षसाधमम् ।
पीडयामास पाणिभ्यां तस्य कण्ठंवृकोदरः ॥ ३-११-६४ (१६०८९)
अथ जर्जरसर्वाङ्गं व्यावृत्तनयनोल्बणम् ।
भूतले भ्रामयामास वाक्यं चेदमुवाच ह ॥ ३-११-६५ (१६०९०)
हिडिम्बबकयोः पाप न त्वमश्रुप्रमार्जनम् ।
करिष्यसि गतश्चापि यमस्य सदनं प्रति ॥ ३-११-६६ (१६०९१)
इत्येवमुक्त्वा पुरुषप्रवीर-

स्तं राक्षसं क्रोधपरीतचेताः ।
विस्रस्तवस्त्राभरणं स्फुरन्त-
मुद्भ्रान्तचित्तं व्यसुमुत्ससर्ज ॥ ३-११-६७ (१६०९२)
तस्मिन्हते तोयदतुल्यरूपे
कृष्णां पुरस्कृत्य नरेन्द्रपुत्राः ।
भीमं प्रशस्याथ गुणैरनेकै-
र्हृष्टास्ततो द्वैतवनाय जग्मुः ॥ ३-११-६८ (१६०९३)
विदुर उवाच। ३-११-६९क्ष् (१८१२)
एवं विनिहतः सङ्ख्ये किर्मीरो मनुजाधिप ।
भीमेन वचनात्तस् धर्मराजस्य कौरव ॥ ३-११-६९ (१६०९४)
ततो निष्कण्टकं कृत्वा वनं तदयराजितः ।
द्रौपद्या सह धर्मज्ञो वसतिं तामुवास ह ॥ ३-११-७० (१६०९५)
समाश्वास्य च ते सर्वे द्रौपदीं भरतर्षभाः ।
प्रहृष्टमनसः प्रीत्या प्रसशंसुर्वृकोदरम् ॥ ३-११-७१ (१६०९६)
भीमबाहुबलोत्पिष्टे विनष्टे राक्षसे ततः ।
विविशुस्ते वनं वीराः क्षेमं निहतकण्टकम् ॥ ३-११-७२ (१६०९७)
स मया गच्छता मार्गे विनिकीर्णो भयावहः ।
वने महति दुष्टात्मा दृष्टो भीमबलाद्धतः ॥ ३-११-७३ (१६०९८)
तत्राश्रौषमहं चैतत्कर्म भीमस् भारत ।
ब्राह्मणानां कथयतां ये तत्रासन्समागताः ॥ ३-११-७४ (१६०९९)
वैशंपायन उवाच। ३-११-७५क्ष् (१८१३)
३-११-७५ (१६१००)
एवं विनिहतं सङ्ख्ये किर्मीरं रक्षसां वरम् ।
श्रुत्वा ध्यानपरो राजा निशश्वासार्तवत्तदा ॥
Mahabharata - Vana Parva - Chapter Footnotes

३-११-४ आभिले भयंकरे । अर्द्धसमयेऽर्द्धज्ञाने गतेसति। लोके तन्द्रावति सतीत्यर्थः ॥
३-११-९ भयानके इतिविश्वः ॥
३-११-३१ दैत्रकीयवने एकचक्रायाम् ॥
३-११-३२ महां मम ॥
३-११-३५ लब्धास्मि लप्स्यामि ॥
३-११-३७ महासुरं वातापिम् ॥
३-११-३९ आरुज्यभङ्त्वा । दशव्यामं विस्तारितयोः करयोस्तिर्यगन्तरम्। उद्विद्धं उत्पाटितम् ॥
३-११-४० वज्रेण निष्पेषश्चूर्णीभावो यस्य पर्वतस्य तद्वत् गौरवं

गुरुत्वं यस्य तत्तथा ।३-११-४२ कक्ष्यामुत्पीड्य परिधानवस्त्रं दृढीकृत्य ॥
३-११-४५ उदस्तं उत्क्षिप्तम् ।अलातं उल्मुकम्।रक्षः राक्षसम् ॥
३-११-४९ चीराणि वृक्षद ल्कलानि ॥
३-११-५५ निकारात् परिभवात् ।कृष्णाया आनय दृष्टं येन स तथा।द्रौपद्याकर्षणेन कुपित इत्यर्थः ॥
३-११-५६ प्रभिन्नकटामुखं प्रभिन्ने व्यक्तीभूते करटयोर्गण्डयोर्मुखे मदनिर्गममार्गौ यस्य तम् ॥
३-११-६० व्यस्पनदत किंचिच्चलनं कृतवान् ॥
३-११-६१ योक्रयामास बबन्ध ।रशनया पशुमिव ॥
३-११-६३ पशुमारं पशुमिव मारयित्वा ॥

---

वन-अध्यय०१२
॥ श्रीः ॥
३.१२. अध्यायः १२

Mahabharata - Vana Parva - Chapter Topics
श्रीकृष्णेन स्वीयैः सह वने पाण्डवसमीपगमनम् ॥ १ ॥
अर्जुनेन कृष्णस्तवनम् ॥ २ ॥
स्वदुखनिवेदनपूर्वकं रुदन्त्या द्रौपद्याः कृष्णेन समाश्वासनम् ॥ ३ ॥

Mahabharata - Vana Parva - Chapter Text

३-१२-० (१६१०१)
वैशंपायन उवाच।३-१२-०क्ष् (१८१४)
भोजाः प्रव्रजिताञ्श्रुत्वा वृष्णयश्चान्धकैः सह ।
पाण्डवान्दुःखसंतप्तान्समाजग्मुर्महावने ॥ ३-१२-१ (१६१०२)
पाञ्चालस्य च दायादो धृष्टकेतुश्च चेदिपः ।
केकयाश्च महावीर्या भ्रातरो लोकविश्रुताः ॥ ३-१२-२ (१६१०३)
वने द्रष्टुं ययुः पार्थान्क्रोधामर्षसमन्विताः ।
गर्हयन्तो धार्तराष्ट्रान्किं कुर्म इति चाब्रुवन् ॥ ३-१२-३ (१६१०४)
वासुदेवं पुरस्कृत्य सर्वे ते क्षत्रियर्षभाः ।
परिवार्योपविविशुर्धर्मराजं युधिष्ठिरम् ।
अभिवाद्य कुरुश्रेष्ठं विषण्णः केशवोऽब्रवीत् ॥ ३-१२-४ (१६१०५)
वासुदेव उवाच।३-१२-५क्ष् (१८१५)
दुर्योधनस्य कर्णस् शकुनेश्च दुरात्मनः ।
दुःशासनचतुर्थानां भूमिः पास्यति शोणितम् ॥ ३-१२-५ (१६१०६)

एतान्निहत्य समरे ये च तेषां पदानुगाः ।
तांश्च सर्वान्विनिर्जित्य सहितान्स नराधिपान् ॥ ३-१२-६ (१६१०७)
ततः सर्वेऽभिषिञ्चामो धर्मराजं युधिष्ठिरम् ।
निकृत्याऽभिचरन्वध्य एष धर्मः सनातनः ॥ ३-१२-७ (१६१०८)
वैशंपायन उवाच। ३-१२-८क्ष् (१८१६)
पार्तानामभिषङ्गेण तथा क्रुद्धं जनार्दनम् ।
अर्जुनः शमयामास दिधक्षन्तमिव प्रजाः ॥ ३-१२-८ (१६१०९)
संक्रुद्धं केशवं दृष्ट्वा पूर्वदेवेषु फल्गुनः ।
कीर्तयामास कर्माणि सत्यकीर्तेर्महात्मनः ॥ ३-१२-९ (१६११०)
पुरुषस्याप्रमेयस्य सत्यस्यामिततेजसः ।
प्रजापतिपतेर्विष्णोर्लोकनाथस्य धीमतः ॥ ३-१२-१० (१६१११)
अर्जुन उवाच। ३-१२-११क्ष् (१८१७)
दशवर्षसहस्राणि यत्रसायंगृहो मुनिः ।
व्यचरस्त्वं पुरा कृष्ण पर्वते गन्धमादने ॥ ३-१२-११ (१६११२)
दशवर्षसहस्राणि दशवर्षशतानि च ।
पुष्करेष्ववसः कृष्णं त्वमपो भक्षयन्पुरा ॥ ३-१२-१२ (१६११३)
ऊर्ध्वबाहुर्विशालायां बदर्यां मधुसूदन ।
अतिष्ठ एकपादेन वायुभक्षः शतं समाः ॥ ३-१२-१३ (१६११४)
कृष्णाजिनोत्तरासङ्गः कृशो धमनिसंततः ।
आसीः कृष्ण सरस्वत्यां सत्रेद्वादशवार्षिके ॥ ३-१२-१४ (१६११५)
प्रभासभप्यथासाद्य तीर्थं पुण्यजनार्चितम् ।
तत्र कृष्ण महातेजा दिव्यं वर्षसहस्रकम् ॥ ३-१२-१५ (१६११६)
आतिष्ठस्त्वमथैकेन पादेन नियमस्थितः ।
लोकप्रवृत्तिहेतोस्त्वमिति व्यासो ममाब्रवीत् ॥ ३-१२-१६ (१६११७)
क्षेत्रज्ञः सर्वभूतानामादिरन्तश्च केशवं ।
निधानं तपसां कृष्ण यज्ञस्त्वं च सनातनः ॥ ३-१२-१७ (१६११८)
ग्योगकर्ता हृषीकेशः सांख्यकर्ता सनातनः ।
शीलस्त्वं सर्वयोगानां करणं नियमस्य च' ॥ ३-१२-१८ (१६११९)
निहत्य नरकं भौममाहृत्य मणिकुण्डले ।
प्रथमोत्पादितं कृष्ण मेध्यमश्वमवासृजः ॥ ३-१२-१९ (१६१२०)
कृत्वातत्कर्म लोकानामृषभः सर्वलोकजित् ।
अवधीस्त्वं रणे सर्वान्समेतान्दैत्यदानवान् ॥ ३-१२-२० (१६१२१)
ततः सर्वेश्वरत्वं च संप्रदाय शचीपतेः ।
मानुषेषु महाबाहो प्रादुर्भूतोऽसि केशव ॥ ३-१२-२१ (१६१२२)
स त्वं नारायणो भूत्वा हरिरासीः परंतप ।
ब्रह्मा सोमश्च सूर्यश्च धर्मो धाता यमोऽनलः ॥ ३-१२-२२ (१६१२३)

वायुर्वैश्रवणो रुद्रः कालः खं पृथिवी दिशः ।
अजश्चराचरगुरुः स्रष्टा त्वं पुरुषोत्तम ॥ ३-१२-२३ (१६१२४)
तुरायणादिभिर्देव क्रतुभिर्भूरदक्षिणैः ।
अयजो भूरितेजा वै कृष्ण चैत्ररथे वने ॥ ३-१२-२४ (१६१२५)
शतं शतसहस्राणि सुवर्णस्य जनार्दन ।
एकैकस्मिंस्तदा यज्ञे परिपूर्णानि दत्तवान् ॥ ३-१२-२५ (१६१२६)
अदितेरपि पुत्रत्वमेत्य यादवनन्दन ।
त्वं विष्णुरिति विख्यात इन्द्रादवरजो विभुः ॥ ३-१२-२६ (१६१२७)
शिशुर्भूत्वा दिवं खं च पृथिवीं च परंतप ।
त्रिभिर्विक्रमणैः कृष्ण क्रान्तवानसि तेजसा । ३-१२-२७ (१६१२८)
संप्राप्य दिवमाकाशमादित्यस्यन्दने स्थितः ।
अत्यरोचश्च भूतात्मन्भास्करं स्वेन तेजसा ॥ ३-१२-२८ (१६१२९)
प्रादुर्भावसहस्रेषु तेषुतेषु त्वया विभो ।
अधर्मरुचयः कृष्ण निहताः शतशोऽसुराः ॥ ३-१२-२९ (१६१३०)
सादिता मौरवाः पाशा निशुम्भनरकौ हतौ ।
कृतः क्षेमः पुनः पन्थाः पुरं प्राग्ज्योतिषं प्रति ॥ ३-१२-३० (१६१३१)
जारूथ्यामाहुतिः क्राथः शिशुपालो नृपैः सह ।
जरासन्धश्च शैब्यश्च शतधन्वा च निर्जितः ॥ ३-१२-३१ (१६१३२)
तथा पर्जन्यघोषेण रथेनादित्यवर्चसा ।
अहार्षी रुक्मिणीं भैष्मीं रणे निर्जित्य रुक्मिणे ॥ ३-१२-३२ (१६१३३)
इन्द्रद्युम्नो हतः कोपाद्यवनश्च कशेरुमान् ।
हतः सौभपतिः साल्वस्त्वया सौभं च पातितम् ३-१२-३३ (१६१३४)
एवमेते युधि हता भूयश्चान्याञ्शृमुष्व ह ।
इरावत्यां हतो भोजः कार्तवीर्यसमो युधि ।
गोपतिस्तालकेतुश्च त्वया विनिहतावुभौ ॥ ३-१२-३४ (१६१३५)
तां च भोगवतीं पुण्यामृषिकान्तां जनार्दन ।
द्वारकामात्मसात्कृत्वा समुद्रं गमयिष्यसि ॥ ३-१२-३५ (१६१३६)
न क्रोधो न च मात्सर्यं नानृतं मधुसूदन ।
त्वयि तिष्ठति दाशार्ह न नृशंस्यं कुतोऽनृजु ॥ ३-१२-३६ (१६१३७)
आसीनं चैत्यमध्ये त्वां दीप्यमानं स्वतेजसा ।
आगम्य ऋषयः सर्वेऽयाचन्ताभयमच्युत ॥ ३-१२-३७ (१६१३८)
युगान्ते सर्वभूतानि संक्षिप्य मधुसूदन ।
आत्मनैवात्मसात्कृत्वा जगदासीः परंतप ॥ ३-१२-३८ (१६१३९)
युगादौ तव वार्ष्णेय नाभिपद्मादजायत ।
ब्रह्मा चराचरगुरुर्यस्येदं सकलं जगत् ।
तं हन्तुमुद्यतौ घोरौ दानवौ मधुकैटभौ ॥ ३-१२-३९ (१६१४०)

तयोर्व्यतिक्रमं दृष्ट्वा क्रुद्धस्य भवतो हरेः ।
ललाटाज्जातवाञ्शंभुः शूलपाणिस्त्रिलोचनः ॥ ३-१२-४० (१६१४१)
इत्थं तावपि देवेशौ त्वच्छरीरसमुद्भवौ ।
त्वन्नियोगकरावेताविति मे नारदोऽब्रवीत् ॥ ३-१२-४१ (१६१४२)
तथा नारायण पुरा क्रतुभिर्भूरिदक्षिणैः ।
इष्टवांस्त्वं महासत्रं कृष्ण चैत्ररथे वने ॥ ३-१२-४२ (१६१४३)
नैवं परे नापरे वा करिष्यन्ति कृतानि वा ।
यानि कर्माणि देव त्वं बाल एव महाबलः ॥ ३-१२-४३ (१६१४४)
कृतवान्पुण्डरीकाक्ष बलदेवसहायवान् ।
वैराजभवने चापि ब्रह्मणा न्यवसः सह ॥ ३-१२-४४ (१६१४५)
वैशंपायन उवाच। ३-१२-४५क्ष् (१८१८)
एवमुक्त्वा महात्मानमात्मा कृष्णस्य पाण्डवः ।
तूष्णीमासीत्ततः पार्थमित्युवाच जनार्दनः ॥ ३-१२-४५ (१६१४६)
ममैव त्वं तवैवाहं ये मदीयास्तवैव ते ।
यस्त्वां द्वेष्टि स मां द्वेष्टि यस्त्वामनु स मामनु ॥ ३-१२-४६ (१६१४७)
नरस्त्वमसि दुर्धर्ष हरिर्नारायणो ह्यहम् ।
काले लोकमिमं प्राप्तौ नरनारायणावृषी ॥ ३-१२-४७ (१६१४८)
अनन्यः पार्थ मत्तस्त्वं त्वत्तश्चाहं तथैव च ।
नावयोरन्तरं शक्यं वेदितुं भरतर्षभ ॥ ३-१२-४८ (१६१४९)
वैशंपायन उवाच। ३-१२-४९क्ष् (१८१९)
ग्इत्युक्त्वा पुण्डरीकाक्षः पाण्डवं सुप्रियं वचः ।
प्रीयमाणो हृषीकेशस्तूष्णीं तत्र बभूव सः ॥' ३-१२-४९ (१६१५०)
एवमुक्ते तु वचने केशवेन महात्मना ।
तस्मिन्वीरसमावाये संरब्धेष्वथ राजसु ॥ ३-१२-५० (१६१५१)
धृष्टद्युम्नमुखैर्वीरैर्भ्रातृभिः परिवारिता ।
पाञ्चाली पुण्डरीकाक्षमासीनं यादवैः सह ।
अभिगम्याब्रवीत्कृष्णा शरण्यं शरणैषिणी ॥ ३-१२-५१ (१६१५२)
द्रौपद्युवाच। ३-१२-५२क्ष् (१८२०)
ग्वासुदेव हृषीकेश वासवावरजाच्युत ।
देवदेवोसि देवानामिति द्वैपायनोऽब्रवीत्' ॥ ३-१२-५२ (१६१५३)
पूर्वे प्रजाभिसर्गे त्वामाहुरेकं प्रजापतिम् ।
स्रष्टारं सर्वलोकानामसितो देवलोऽब्रवीत् ॥ ३-१२-५३ (१६१५४)
विष्णुस्त्वमसि दुर्धर्ष त्वं यज्ञो मधुसूदन ।
यष्टात्वमसि त्वमसि यष्टव्यो जामदग्न्यो यथाऽब्रवीत् ॥ ३-१२-५४ (१६१५५)
ऋषयस्त्वां क्षमामाहुः सत्यं च परुषोत्तम ।
सत्याद्यज्ञोसि संभूतः कश्यपस्त्वां यथाऽब्रवीत् ॥ ३-१२-५५ (१६१५६)

साध्यानामपि देवानां शिवानामीश्वरेश्वर ।
लोकभावन लोकेश यथा त्वां नारदोऽब्रवीत् ॥ ३-१२-५६ (१६१५७)
ब्रह्मशंकरशक्राद्यैर्देववृन्दैः पुनः पुनः ।
क्रीडसे त्वं नरव्याघ्र बालः क्रीडनकैरिव ॥ ३-१२-५७ (१६१५८)
द्यौश्च ते शिरसा व्याप्ता पद्भ्यां च पृथिवीप्रभो ।
जठरे खमिमे लोकाः पुरुषोसि सनातनः ॥ ३-१२-५८ (१६१५९)
विद्यातपोभितप्तानां तपसा भावितात्मनाम् ।
आत्मदर्शनतृप्तानामृषीणामसि सत्तमः ॥ ३-१२-५९ (१६१६०)
राजर्षीणां पुण्यकृतामाहवेष्वनिवर्तिनाम् ।
सर्वधर्मोपपन्नानां त्वं गतिः पुरुषर्षभ ।
त्वं प्रभुस्त्वं विभुश्च त्वं भूतात्मा त्वं विचेष्टसे ॥ ३-१२-६० (१६१६१)
लोकपालाश्च लोकाश्च नक्षत्राणि दिशो दश ।
नभश्चन्द्रश्च सूर्यश्च त्वयि सर्वं प्रतिष्ठितम् ॥ ३-१२-६१ (१६१६२)
मर्त्यता चैव भूतानाममरत्वं दिवौकसाम् ।
त्वयि सर्वं महाबाहो लोककार्यं प्रतिष्ठितम् ॥ ३-१२-६२ (१६१६३)
सा तेऽहं दुःखमाख्यास्ये प्रणयान्मधुसूदन ।
ईशस्त्वं सर्वभूतानां ये दिव्या ये च मानुषाः ॥ ३-१२-६३ (१६१६४)
कथं नु भार्या पार्थानां तव कृष्ण सखी विभो ।
धृष्टद्युम्नस्य भगिनी सभां कृष्येत मादृशी ॥ ३-१२-६४ (१६१६५)
स्त्रीधर्मिणी वेपमाना शोणितेन समुक्षिता ।
एकवस्त्रा विकृष्टाऽस्मि दुःखिता कुरुसंसदि ॥ ३-१२-६५ (१६१६६)
राज्ञां मध्ये सभायां तु रजसाऽतिपरिप्लुता ।
दृष्ट्वा च मां धार्तराष्ट्राः प्राहसन्पापचेतसः ॥ ३-१२-६६ (१६१६७)
दासीभावेन मां भोक्तुमीष्सुते मधुसूदन ।
जीवत्सु पाण्डुपुत्रेषु पाञ्चालेषु च वृष्णिषु ॥ ३-१२-६७ (१६१६८)
नन्वहं कृष्ण भीष्मस्य धृतराष्ट्रस्य चोभयोः ।
स्नुषा भवामि धर्मेण साऽहं दासीकृता बलात् ॥ ३-१२-६८ (१६१६९)
गर्हयेपाण्डवांस्त्वेव युधि श्रेष्ठान्महाबलान् ।
यत्क्लिश्यमानां प्रेक्षन्ते धर्मपत्नीं यशस्विनीम् ॥ ३-१२-६९ (१६१७०)
धिग्बलं भीमसेनस्य धिक्पार्थस् च गाण्डिवम् ।
यौ मां विप्रकृतां क्षुद्रैर्मर्षयेतां जनार्दन ॥ ३-१२-७० (१६१७१)
शाश्वतोऽयं धर्मपथः सद्भिराचरितः सदा ।
यद्भार्यां परिरक्षन्ति भर्तारोऽल्पबला अपि ॥ ३-१२-७१ (१६१७२)
भार्यायां रक्ष्यमाणायां प्रजा भवति रक्षिता ।
प्रजायां रक्ष्यमाणायामात्मा भवति रक्षितः ॥ ३-१२-७२ (१६१७३)
आत्मा हि जायेत तस्यां तस्मज्जाया भवत्युत ।

भर्ता च भार्यया रक्ष्यः कथं जायान्ममोदरे ॥ ३-१२-७३ (१६१७४)
नन्विमे शरणं प्राप्तं न त्यजन्ति कदाचन ।
ते मां शरणमापन्नां नान्वपद्यन्त पाण्डवाः ॥ ३-१२-७४ (१६१७५)
पञ्चभिः पतिभिर्जाताः कुमासरा मे महौजसः ।
एतेषामप्यवेक्षार्थं त्रातव्याऽस्मि जनार्दन ॥ ३-१२-७५ (१६१७६)
प्रतिविन्ध्यो युधिष्ठिरात्सुतसोमो वृकोदरात् ।
अर्जुनाच्छ्रुतकीर्तिश्च शतानीकस्तु नाकुलिः ॥ ३-१२-७६ (१६१७७)
कनिष्ठाच्छ्रुतकर्मा च सर्वे सत्यपराक्रमा ।
प्रद्युम्नो यादृशः कृष्ण तादृशास्ते महारथाः ॥ ३-१२-७७ (१६१७८)
नन्विमे धनुषि श्रेष्ठा अजेया युधि शात्रवैः ।
किमर्थं धार्तराष्ट्राणां सहन्ते दुर्बलीयसाम् ॥ ३-१२-७८ (१६१७९)
अधर्मेण हृतं राज्यं सर्वे दासाः कृतास्तथा ।
सभायां परिकृष्टाऽहमेकवस्त्रा रजस्वला ॥ ३-१२-७९ (१६१८०)
नाधिज्यमपि यच्छक्यं कर्तुमन्येन गाण्डिवम् ।
अन्यत्रार्जुनभीमाभ्यां त्वया वा मधुसूदन ॥ ३-१२-८० (१६१८१)
धिग्बलं भीमसेनस्य धिक्पार्थस्य च पौरुषम् ।
यत्र दुर्योधनः कृष्ण मुहूर्तमपि जीवति ॥ ३-१२-८१ (१६१८२)
य एतानाक्षिपद्राष्टात्सह मात्राऽविहिंसकान् ।
अधीयानान्पुरा बालान्व्रतस्थान्मधुसूदन ॥ ३-१२-८२ (१६१८३)
भोजने भीमसेनस्य पापः प्राक्षिपयद्विषम् ।
कालकूटं नवं तीक्ष्णं संभृतं रोमहर्षणम् ॥ ३-१२-८३ (१६१८४)
तज्जीर्णमविकारेण सहान्नेन जनार्दन ।
सशेषत्वान्महाबाहो भीमस्य पुरुषोत्तम ॥ ३-१२-८४ (१६१८५)
प्रमाणकोट्यां विश्वस्तं तथा सुप्तं वृकोदरम् ।
बद्ध्वैनं कृष्ण गङ्गायां प्रक्षिप्य पुरमाव्रजत् ॥ ३-१२-८५ (१६१८६)
यदा विबुद्धः कौन्तेयस्तदा संछिद्य बन्धनम् ।
उदतिष्ठन्महाबाहुर्भीमसेनो महाबलः ॥ ३-१२-८६ (१६१८७)
आशीविषैः कृष्णसर्पैः सुप्तंचैनमदंशयत् ।
सर्वेष्वेवाङ्गदेशेषु न ममार च शत्रुहा ॥ ३-१२-८७ (१६१८८)
प्रतिबुद्धस्तु कौन्तेयः सर्वान्सर्पानपोथयत् ।
सारथिं चास्य दयितमपहस्तेन जघ्निवान् ॥ ३-१२-८८ (१६१८९)
पुनः सुप्तानुपाधाक्षीद्बालकान्वारणावते ।
शयानानार्यया सार्धं को नु तत्कर्तुमर्हति ॥ ३-१२-८९ (१६१९०)
यत्रार्या रुदती भीता पाण्डवानिदमब्रवीत् ।
महद्व्यसनमापन्ना शिखिना परिवारिता ॥ ३-१२-९० (१६१९१)
हा हतास्मि कुतोन्वद्य भवेच्छान्तिरिहानलात् ।

अनाथा विनशिष्यामि बालकैः पुत्रकैः सह ॥ ३-१२-९१ (१६१९२)
तत्र भीमो महाबाहुर्वायुवेगपराक्रमः ।
आर्यामाश्वासयामास भ्रातॄंश्चापि वृकोदरः ॥ ३-१२-९२ (१६१९३)
वैनतेयो यथा पक्षी गरुत्मान्पततांवरः ।
तथैवाभिपतिष्यामि भयंवो नेह विद्यते ॥ ३-१२-९३ (१६१९४)
आर्यामङ्केन वामेन राजानं दक्षिणेन च ।
अंसयोश्च यमौ कृत्वा पृष्ठे बीभत्सुमेव च ॥ ३-१२-९४ (१६१९५)
सहसोत्पत्य वेगेन सर्वानादाय वीर्यवान् ।
भ्रातॄनार्यां च बलवान्मोक्षयामास पावकात् ॥ ३-१२-९५ (१६१९६)
ते रात्रौ प्रस्थितां सर्वे सह मात्रा यशस्विनः ।
अभ्यगच्छन्महारण्ये हिडिम्बवनमन्तिकात् ॥ ३-१२-९६ (१६१९७)
श्रान्ताः प्रसुप्तास्तत्रेमे मात्रा सह सुदुःखिताः ।
सुप्तांश्चैनानभ्यगच्छद्धिडिम्बा नाम राक्षसी ॥ ३-१२-९७ (१६१९८)
सा दृष्ट्वा पाण्डवांस्तत्र सुप्तान्मात्रा सह क्षितौ ।
हृच्छयेनाभिभूतात्मा भीमसेनमकामयत् ॥ ३-१२-९८ (१६१९९)
भीमस्य पादौ कृत्वा तु स्वउत्सङ्गे ततोऽबला ।
पर्यमर्दत संहृष्टा कल्याणी मृदुपाणिना ॥ ३-१२-९९ (१६२००)
तामबुद्ध्यदमेयात्मा बलवान्सत्यविक्रमः ।
पर्यपृच्छत तां भीमः किमिहेच्छस्यनिन्दिते ॥ ३-१२-१०० (१६२०१)
एवमुक्ता तु भीमेन राक्षसी कामरूपिणी ।
भीमसेनं महात्मानमाह चैवमनिन्दिता ॥ ३-१२-१०१ (१६२०२)
पलायध्वमितः क्षिप्रं मम भ्रातैष वीर्यवान् ।
आगमिष्यति वो हन्तुं तस्माद्गच्छत माचिरम् ॥ ३-१२-१०२ (१६२०३)
अथ भीमोऽभ्युवाचैनां साभिमानमिदं वचः ।
नोद्विजेयमहं तस्मान्निहनिष्येऽहमागतम् ॥ ३-१२-१०३ (१६२०४)
तयोः श्रुत्वा तु संजल्पमागच्छद्राक्षसाधमः ।
भीमरूपो महानादान्विसृजन्भीमदर्शनः ॥ ३-१२-१०४ (१६२०५)
राक्षस उवाच। ३-१२-१०५क्ष् (१८२१)
केन सार्धं कथयसि आनयैनं ममान्तिकम् ।
हिडिम्बे भक्षयिष्यामो न चिरं कर्तुमर्हसि ॥ ३-१२-१०५ (१६२०६)
सा कृपासंगृहीतेन हृदयेन मनस्विनी ।
नैनमैच्छत्तदाकर्तुमनुक्रोशादनिन्दिता ॥ ३-१२-१०६ (१६२०७)
स नादान्विनदन्घोरान्राक्षसः पुरुषादकः ।
अभ्यद्रवत वेगेन भीमसेनं तदा किल ॥ ३-१२-१०७ (१६२०८)
तमभिद्रुत्य संक्रुद्धो वेगेन महता बली ।
अगृह्णात्पाणिना पाणिं भीमसेनस्य राक्षसः ॥ ३-१२-१०८ (१६२०९)

इन्द्राशनिसमस्पर्शं वज्रसंहननं दृढम् ।
संहत्य भीमसेनाय व्याक्षिपत्सहसा करम् ॥ ३-१२-१०९ (१६२१०)
गृहीतं पाणिना पाणिं भीमसेनस्य रक्षसा ।
नामृष्यत महाबाहुस्तत्राक्रुद्ध्यद्वृकोदरः ॥ ३-१२-११० (१६२११)
तदासीत्तुमुलं युद्धं भीमसेनहिडिम्बयोः ।
सर्वास्त्रविदुषोर्घोरं वृत्रवासवयोरिव ॥ ३-१२-१११ (१६२१२)
विक्रीड्य सुचिरं भीमो राक्षसेन सहानघ ।
निजघान महावीर्यस्तं तदा निर्बलं बली ॥ ३-१२-११२ (१६२१३)
हत्वा हिडिम्बं भीमोऽथ प्रस्थितो भ्रातृभिः सह ।
हिडिम्बामग्रतः कृत्वा यस्यां जातो घटोत्कटः ॥ ३-१२-११३ (१६२१४)
ततः संप्राद्रवन्सर्वे सह मात्रा परंतपाः ।
एकचक्रामभिमुखाः संवृता ब्राह्मणव्रजैः ॥ ३-१२-११४ (१६२१५)
प्रस्थाने व्यास एषां च मन्त्री प्रियहिते रतः ।
ततोऽगच्छन्नेकचक्रां पाणाडवाः संशितव्रताः ॥ ३-१२-११५ (१६२१६)
तत्राप्यासादयामासुर्बकं नाम महाबलम् ।
पुरुषादं प्रतिभयं हिडिम्बेनैव संमितम् ॥ ३-१२-११६ (१६२१७)
तं चापि विनिहत्योग्रं भीमः प्रहरतां वरः ।
सहितो भ्रातृभिः सर्वैर्द्रुपदस्य पुरं ययौ ॥ ३-१२-११७ (१६२१८)
लब्धाऽहमपि तत्रैव वसता सव्यसाचिना ।
यथा त्वया जिता कृष्णरुक्मिणी भीष्मकात्मजा ॥ ३-१२-११८ (१६२१९)
एवं सुयुद्धे पार्थेन जिताऽहं मधुसूदन ।
स्वयंवरे महत्कर्म कृत्वा न सुकरं परैः ॥ ३-१२-११९ (१६२२०)
एवं क्लेशैः सुबहुभिः क्लिश्यमाना सुदुःखिता ।
निवसाम्यार्यया हीना कृष्ण धौम्यपुरःसुरा ॥ ३-१२-१२० (१६२२१)
त इमे सिंहविक्रान्ता वीर्येणाभ्यधिकाः परैः ।
निर्हीनैः परिक्लिश्यन्ति समुपेक्षन्ति मां कथं। ३-१२-१२१ (१६२२२)
एतादृशानि दुःखानि महन्ती दुर्बलीयसाम् ।
दीर्घकालं प्रदीप्ताऽस्मि पापानां पापकर्मणाम् ॥ ३-१२-१२२ (१६२२३)
कुले महतिजाताऽस्मि दिव्येन विधिना किल ।
पाण्डवानां प्रिया भार्या स्नुषा पाण्डोर्महात्मनः ॥ ३-१२-१२३ (१६२२४)
केशग्रहमनुप्राप्ता का नु जीवेत मादृशी ।
पञ्चानामिन्द्रकल्पानां प्रेक्षतां मधुसूदन ॥ ३-१२-१२४ (१६२२५)
इत्युक्त्वा प्रारुदत्कृष्णा मुखं प्रच्छाद्य पाणिना ।
पद्मकोशप्रकाशेन मृदुना मृदुभाषिणी ॥ ३-१२-१२५ (१६२२६)
स्तनावपतितौ पीनौ सुजातौ शुभलक्षणौ ।
अभ्यवर्षत पाञ्चाली दुःखजैरश्रुबिन्दुभिः ॥ ३-१२-१२६ (१६२२७)

चक्षुषी परिमार्जन्ती निःश्वसन्ती पुनःपुनः ।
बाष्पपूर्णेन कणाठेन क्रुद्धा वचनमब्रवीत् ॥ ३-१२-१२७ (१६२२८)
नैव मे पतयः सन्ति न पुत्रा न च बान्धवाः ।
न भ्रातरो न च पिता नैव त्वं मधुसूदन ॥ ३-१२-१२८ (१६२२९)
ये मां विप्रकृतां क्षुद्रैरुपेक्षध्वं विशोकवत् ।
न च मे शाम्यते दुःखं कर्णो यत्प्राहसत्तदा ॥ ३-१२-१२९ (१६२३०)
चतुर्भिः कारणैः कृष्ण त्वया रक्ष्याऽस्मि नित्यशः ।
संबन्धाद्गौरवात्सख्यात्प्रभुत्वेनैव केशव ॥ ३-१२-१३० (१६२३१)
वैशंपायन उवाच। ३-१२-१३१क्ष् (१८२२)
अथ तामब्रवीत्कृष्णस्तस्मिन्वीरसमागमे ।
रोदिष्यन्ति स्त्रियो ह्येवं येषां क्रुद्धासि नामिनि ॥ ३-१२-१३१ (१६२३२)
बीभत्सुशरसंछन्नाञ्शोणितौघपरिप्लुतान् ।
निहतान्वल्लभान्वीक्ष्य शयानान्वसुधातले ॥ ३-१२-१३२ (१६२३३)
यत्समर्थं पाण्डवनां तत्करिष्यामि मा शुचः ।
सत्यं ते प्रतिजानामि राज्ञां राज्ञी भविष्यसि ॥ ३-१२-१३३ (१६२३४)
पतेद्द्यौर्हिमवाञ्शीर्येत्पृथिवी शकली भवेत् ।
शुष्येत्तोयनिधिः कृष्णे न मे मोघं वचो भवेत् ॥ ३-१२-१३४ (१६२३५)
तच्छ्रुत्वा द्रौपदी वाक्यं प्रतिवाक्यमथाच्युतात् ।
साचीकृतमवैक्षत्सा पाञ्चाली मध्यमं पतिम् ॥ ३-१२-१३५ (१६२३६)
आबभाषे महाराज द्रौपदीमर्जुनस्तदा ।
मा रोदीः शुभताम्राक्षि यदाह मधुसूदनः ।
तथा तद्भविता देवि नान्यथा वरवर्णिनि ॥ ३-१२-१३६ (१६२३७)
धृष्टद्युम्न उवाच। ३-१२-१३७क्ष् (१८२३)
अहं द्रोणं हनिष्यामि शिखण्डी तु पितामहम् ।
दुर्योधनं भीमसेनः कर्णं हन्ता धनिजयः ॥ ३-१२-१३७ (१६२३८)
रामकृष्णौ व्यपाश्रित्य अजेयाः स्म रणए स्वसः ।
अपि वृत्रहणा युद्धे किं पुनर्धृतराष्ट्रजैः ॥ ३-१२-१३८ (१६२३९)
वैशंपायन उवाच। ३-१२-१३९क्ष् (१८२४)
इत्युक्तेऽभिमुखा वीरा वासुदेवमुपास्थितः ।
तेषां मध्ये महाबाहुः केशवो वाक्यमब्रवीत् ॥ ३-१२-१३९ (१६२४०)

इति श्रीमन्महाभारते अरण्यपर्वणि अर्जुनाभिगमनपर्वणि
द्वादशोऽध्यायः ॥ १२ ॥

Mahabharata - Vana Parva - Chapter Footnotes

३-१२-७ निकृत्या छलेन ॥

३-१२-८ अभिषङ्गेण दुःखेन पराभवेन वा ॥
३-१२-११ यत्र सायंकालस्तत्रैव गृहं यस्य स यत्रसायंगृहः ॥
३-१२-१४ उत्तरासङ्ग उत्तरीयवस्त्रम् ॥
३-१२-१७ क्षेत्रज्ञः अन्तरात्मेत्यृथः ॥
३-१२-१९ भौमं भूमिपुत्रम् । मेध्यं यज्ञियम् ॥
३-१२-२० तत्कर्म अश्वोत्सर्गाख्यम् ॥
३-१२-२८ संप्राप्य सम्यक्व्याप्य । आदित्यस्यन्दने सूर्यदेहे भास्करमण्डलाभिमानिनं जीवम् ॥
३-१२-३० सादिताः छिन्नाः मौरवाः आन्त्रतन्तिमयाः । मुर वेष्टने अस्मादौणादिके उक्रप्रत्यये तद्धितः ॥
३-१२-३१ जारूथ्यां नगर्याम् ॥
३-१२-३२ सौभं खेचरं पुरम् ॥
३-१२-३६ नृशंस्यं निर्दयत्वम् ॥
३-१२-३७ चैत्यं आयतनं आध्यात्मिकं हृदयपुण्डरीकं । बाह्यं देवालयादि ॥
३-१२-३८ आत्मनैव निमित्तान्तरं विना ॥
३-१२-५० समावाये समूहे । संरब्धेषु कुपितेषु ॥
३-१२-६५ स्त्रीधर्मिणी रजस्वला ॥
३-१२-६७ ईषुः ऐच्छन् ॥
३-१२-६८ स्नुषा वधूः ॥
३-१२-६९ धर्मपत्नीं यज्ञसंयोगिनीम् ॥
३-१२-७० विप्रकृतां दुःखंप्रापिताम् । मर्षयेतां क्षमेताम् ॥
३-१२-७४ नान्वपद्यन्त नानुगृहीतवन्तः ॥
३-१२-७८ राष्ट्राणमपराधम् । दुर्बलीयसां दुर्बलतराणाम् ॥
३-१२-८० अधिज्यमारोपितगुणम् ॥
३-१२-८४ सशेषत्वात् । आयुष इति शेषः ॥
३-१२-८५ प्रमाणकोट्यां प्रमाणाख्यो गङ्गातीरस्थो वटविशेषस्तत्प्रदेशे ॥
३-१२-८८ अपोथयत् प्रहृतवान् । अपहस्तेन हस्तपृष्ठेन ॥
३-१२-८९ उपाधाक्षीत् दाहार्थं उपहृतवान् । आर्या श्वश्रूः ॥
३-१२-९३ वैनतेयः विनतापुत्रः ॥
३-१२-१०६ कृपासंगृहीतेन श्नेहवशेन ॥
३-१२-१०९ संहृत्य मुष्टीकृत्य ॥
३-१२-११९ एवं क्लेशैः सुबहुभिः क्लिश्यमानाः सुदुःखिताः । निवसामार्यया हीनाः कृष्ण धौम्यपुरस्सरा इति क । ट । द । पाठः ॥
३-१२-१२९ विशोकवद्विशोका इव ॥
३-१२-१३० संबन्धात् पितृष्वस्रीयभार्यात्वात्

। गौरवादग्निकुण्डोद्भवत्वात्। सख्यात् भक्तिमत्त्वात्। प्रभुत्वेन सामर्थ्यवत्त्वेन त्वदीयेन ॥
३-१२-१३८ स्वसः हे भगिनि ॥

---

वन-अध्यय०१३
॥ श्रीः ॥
३.१३. अध्यायः १३

Mahabharata - Vana Parva - Chapter Topics
कृष्णेन युधिष्ठिरंप्रति तद्व्यसनस्य द्वारकायां स्वस्यासांनिध्यहेतुकत्वकथनेन समाश्वासनम् ॥ १ ॥

Mahabharata - Vana Parva - Chapter Text

३-१३-० (१६२४१)
वासदेव उवाच। ३-१३-०क्ष् (१८२५)
नैतत्कृच्छ्रमनुप्राप्तो भवान्स्याद्वसुधाधिप ।
यद्यहं द्वारकायां स्यां राजन्सन्निहितः पुरा ॥ ३-१३-१ (१६२४२)
आगच्छेयमहं द्यूतमनाहूतोऽपि कौरवैः ।
आम्बिकेयेन दुर्धर्ष राज्ञा दुर्योधनेन च ।
वारयेयमहं द्यूतं बहून्दोपान्प्रदर्शयन् ॥ ३-१३-२ (१६२४३)
भीष्मद्रोणौ समानाय्य कृपं बाह्लीकमेव च ।
वैचित्रवीर्यं राजानमलं द्यूतेन कौरव ॥ ३-१३-३ (१६२४४)
पुत्राणां तव राजेन्द्र त्वन्निमित्तमिति प्रभो ।
तत्राचक्षमहं दोषान्यैर्भवान्व्यतिरोपितः ॥ ३-१३-४ (१६२४५)
वीरसेनसुतो यैस्तु राज्यात्प्रभ्रंशितः पुरा ।
अतर्कितविनाशश्च देवनेन विशांपते ॥ ३-१३-५ (१६२४६)
सातत्यं च प्रसङ्गस्य वर्णयेयं यथातथम् ॥ ३-१३-६ (१६२४७)
स्त्रियोऽक्षा मृगया पानमेतत्कामसमुत्थितम् ।
दुःखं चतुष्टय प्रोक्तं यैर्नरो भ्रश्यते श्रियः ॥ ३-१३-७ (१६२४८)
तत्रसर्वत्रवक्तव्यं मन्यन्ते शास्त्रकोविदाः ।
विशेषतश्च वक्तव्यं द्यूते पश्यन्ति तद्विदः ॥ ३-१३-८ (१६२४९)
एकाहाद्द्रव्यनाशोऽत्र ध्रुवं व्यसनमेव च ।
अभुक्तनाशश्चार्थानां वाक्पारुष्यं च केवलम् ॥ ३-१३-९ (१६२५०)
एतच्चान्यच्च कौरव्य प्रसङ्गिकटुकोदयम् ।
द्यूते ब्रूयां महाबाहो समासाद्याम्बिकासुतम् ॥ ३-१३-१० (१६२५१)

एवमुक्तो यदि मया गृह्णीयाद्वचनं मम ।
अनामयं स्याद्धर्मश्च कुरूणां कुरुवर्दन ॥ ३-१३-११ (१६२५२)
न चेत्स मम राजेन्द्र गृह्णीयान्मधुरं वचः ।
पथ्यं च भरतश्रेष्ठ निगृह्णीयां बलेन तम् ॥ ३-१३-१२ (१६२५३)
अथैनमविनीतेन सुहृदो नाम दुर्हृदः ।
सभासदोऽनुवर्तेरंस्तांश्च इन्यां दुरोदरान् ॥ ३-१३-१३ (१६२५४)
असान्निध्यं तु कौरव्य ममानर्तेष्वभूत्तदा ।
येनेदं व्यसनं प्राप्ता भवन्तो द्यूतकारितम् ॥ ३-१३-१४ (१६२५५)
सोहमेत्य कुरुश्रेष्ठ द्वारकां पाण्डुनन्दन ।
अश्रौषं त्वां व्यसनिनं युयुधानाद्यथातथम् ॥ ३-१३-१५ (१६२५६)
श्रुत्वैव चाहं राजेन्द्र परमोद्विग्नमानसः ।
तूर्णमभ्यागतोस्मित्वां द्रष्टुकामो विशंपते ॥ ३-१३-१६ (१६२५७)
अहो कृच्छ्रमनुप्राप्ताः सर्वे स्म भरतर्षभ ।
सोऽहं त्वां व्यसने मग्नं पश्यामि सह सोदरैः ॥ ३-१३-१७ (१६२५८)

इति श्रीमन्महाभारते अरण्यपर्वणइ अर्जुनाभिगमनपर्वणि
त्रयोदशोऽध्यायः ॥ १३ ॥

Mahabharata - Vana Parva - Chapter Footnotes

३-१३-४ अहं तत्र द्यूते दोषान् अचक्षं व्यक्तं कथितवान् स्यामित्यर्तः ॥
३-१३-५ वीरसेनसुतः नलः । यैः अक्षैरिति शेषः ॥
३-१३-६ सातत्यमविच्छेदम् । प्रसङ्गस्य द्यूतक्रीडायाः हीयमानोऽपि
जयाशया पुनःपुनर्दीव्यत्येवेत्यर्थः ॥
३-१३-१३ अपनीतेनेतिपाठे अन्यायेन । दुरोदरान् द्यूतकारान् ॥
३-१३-१५ एत्यागत्य । युयुधानात्सात्यकेः ॥

---

वन-अध्यय०१४
॥ श्रीः ॥
३.१४. अध्यायः १४

Mahabharata - Vana Parva - Chapter Topics

कृष्णेन युधिष्ठिरंप्रति साल्वेन युद्धस्
स्वस्यानागमनहेतुत्वकथनम् ॥ १ ॥

Mahabharata - Vana Parva - Chapter Text

३-१४-० (१६२५९)

युधिष्ठिर उवाच। ३-१४-०क्ष् (१८२६)
असान्निध्यं कथं कृष्ण तवासीद्वृष्णिनन्दन ।
क्व चासीद्विप्रवासस्ते किंचाकार्षीः प्रवासतः ॥ ३-१४-१ (१६२६०)
कृष्ण उवाच। ३-१४-२क्ष् (१८२७)
साल्वस्य नगरं सौभं गतोऽहं भरतर्षभ ।
निहन्तुं कौरवश्रेष्ठ तत्र मे शृणु कारणम् ॥ ३-१४-२ (१६२६१)
महातेजा महांवाहुर्यः स राजा महायशाः ।
दमघोषात्मजो वीरः शिशुपालो मया हतः ॥ ३-१४-३ (१६२६२)
यज्ञे ते भरतश्रेष्ठ राजसूयेऽर्हणां प्रति ।
स रोषवशमापन्नो नामृष्यत दुरात्मवान् ॥ ३-१४-४ (१६२६३)
श्रुत्वा तं निहतं साल्वस्तीव्ररोषसमन्वितः ।
उपायाद्द्वारकां शून्यामिहस्थे मयि भारत ॥ ३-१४-५ (१६२६४)
स तत्र युद्धमकरोद्बालकैर्वृष्णिपुङ्गवैः ।
निवृत्तः कामगं सौभमारुह्यैव नृशंसवत् ॥ ३-१४-६ (१६२६५)
ग्चिरजीवी नृपः सोऽपि प्रसादात्पद्मजन्मनः।'
ततो वृष्णिप्रवीरांस्तान्बालान्हत्वा बहूंस्तदा ।
पुरोद्यानानि सर्वाणि भेदयामास दुर्भतिः ॥ ३-१४-७ (१६२६६)
उक्तवांश्च महाबाहो क्वासौ वृष्णिकुलाधमः ।
वासुदेवः स मन्दात्मा वसुदेवसुतो गतः ॥ ३-१४-८ (१६२६७)
तस्य युद्धार्थिनो दर्पं युद्धेनाशयिताऽस्म्यहम् ।
आनर्ताः सत्यमाख्यात तत्र गन्ताऽस्मि यत्र सः ॥ ३-१४-९ (१६२६८)
तं हत्वा विनिवर्तिष्ये कंसकेशिनिषूदनम् ।
अहत्वा न निवर्तिष्ये सत्येनायुधमालभे । ३-१४-१० (१६२६९)
क्वासौ क्वासाविति पुनस्तत्रतत्र प्रधावति ।
मया सह रणे योद्धुं काङ्क्षमाणः स सौभराट् ॥ ३-१४-११ (१६२७०)
अद्यतं पापकर्माणं क्षुद्रं विश्वासघातिनम् ।
शिशुपालवधामर्षाद्गमयिष्ये यमक्षयम् ॥ ३-१४-१२ (१६२७१)
मम पापस्वभावेन भ्राता येन निपातितः ।
शिशुपालो महीपालस्तं वधिष्ये महीतले ॥ ३-१४-१३ (१६२७२)
भ्राता बालश्च राजा च न च संग्रामकोविदः ।
प्रमत्तश्च हतो वीरस्तं हनिष्ये जनार्दनम्। ३-१४-१४ (१६२७३)
एकमादि महाराज विलप्यदिवमास्थितः ।
कामगेन स सौभेन क्षिप्त्वा मां कुरुनन्दन ॥ ३-१४-१५ (१६२७४)
तमश्रौषमहं गत्वा यथा वृत्तः स दुर्मतिः ।
मयि कौरव्य दुष्टात्मा मार्तिकावतको नृपः ॥ ३-१४-१६ (१६२७५)
ततोऽहमपि कौरव्य रोषव्याकुललोचनः ।

निश्चित्य मनसा राजन्वधायास्य मनो दधे ॥ ३-१४-१७ (१६२७६)
आनर्तेषु विमर्दं च क्षेपं चात्मनि कौरव ।
प्रवृद्धमवलेपं च तस्य दुष्कृतकर्मणः ॥ ३-१४-१८ (१६२७७)
ततः सौभवधायाहं प्रतस्थे पृथिवीपते ।
स मया सागरावर्ते दृष्ट आसीत्परीप्सता ॥ ३-१४-१९ (१६२७८)
ततः प्रध्माप्य जलजं पाञ्चजन्यमहे नृप ।
आहूय साल्वं समरे युद्धाय समवस्थितः ॥ ३-१४-२० (१६२७९)
तन्मुहूर्तमभूद्युद्धं तत्र मे दानवैः सह ।
शर्वीभूताश्च मे सर्वे भूतले च निपातिताः ॥ ३-१४-२१ (१६२८०)
एतत्कार्यं महाबाहो येनाहं नागमं तदा ।
श्रुत्वैव हास्तिनपुरे द्यूतं चाविनयोत्थितम् ।
द्रुतमागतवान्युष्मान्द्रष्टुकामः सुदुःखितान् ॥ ३-१४-२२ (१६२८१)

इति श्रीमन्महाभारते अरण्यपर्वणि अर्जुनाभिगमनपर्वणि
चतुर्दशोऽध्यायः ॥ १४ ॥
Mahabharata - Vana Parva - Chapter Footnotes

३-१४-६ सौभं सुष्ठु भान्ति ते सुभाः काञ्चनादयो धातवस्तज्जम ॥
३-१४-९ आख्यात कथयत ॥
३-१४-१६ मार्तिकावतकः एतन्नामकदेशवासी ॥
३-१४-१८ अवलेपं गर्वं ज्ञात्वेति शेषः ॥
३-१४-१९ सागरस्य आसमन्ताद्वर्तो वर्तनं यस्मिन्सागरद्वीपे इत्यर्थः ॥
३-१४-२० जलजं शङ्खम् ॥

---

वन-अध्यय०१५
॥ श्रीः ॥
३.१५. अध्यायः १५

Mahabharata - Vana Parva - Chapter Topics
कृष्णेन युधिष्ठिरंप्रति साल्वसमागमसमये
उग्रसेनकृतद्वारकारक्षणप्रकारकथनम् ॥ १ ॥

Mahabharata - Vana Parva - Chapter Text

३-१५-० (१६२८२)
युधिष्ठिर उवाच। ३-१५-०क्ष् (१८२८)

वासुदेव महाबाहो विस्तरेण महामते ।
सौभस्य वधमाचक्ष्व न हि तृष्यामि कथ्यतः ॥ ३-१५-१ (१६२८३)
वासुदेव उवाच। ३-१५-२क्ष् (१८२९)
हतं श्रुत्वा महाबाहौ मया श्रौतश्रवं नृप ।
उपायाद्भरतश्रेष्ठ साल्वो द्वारवतीं पुरीम् ॥ ३-१५-२ (१६२८४)
अरुणत्तां सुदुष्टात्मा सर्वतः पाण्डुनन्दन ।
साल्वो वैहायसं चापि तत्पुरं व्यूह्य धिष्ठितः ॥ ३-१५-३ (१६२८५)
तत्रस्थोऽथ महीपालो योधयामास तां पुरीम् ।
अभिसारेण सर्वेण तत्र युद्धमवर्तत ॥ ३-१५-४ (१६२८६)
पुरी समन्ताद्विहिता सपताका सतोरणा ।
सचक्रा सहुडा चैव सयन्त्रखनका तथा ॥ ३-१५-५ (१६२८७)
सोपशल्यप्रतोलीका साट्टाट्टालकगोपुरा ।
सचक्रग्रहिणी चैव सोल्कालातावपोथिका ॥ ३-१५-६ (१६२८८)
सोष्टिका भरतश्रेष्ठ सभेरीपणवानका ।
सतोमराङ्कुशा राजन्सशतघ्नीकलाङ्गला ॥ ३-१५-७ (१६२८९)
सभुशुण्ड्यश्मगुडका सायुधा सपरश्वधा ।
लोहचर्मवती चापि साग्निः सगुडशृङ्गिका ।
शास्त्रदृष्टेन विधिना सुयुक्ता भरतर्षभ ॥ ३-१५-८ (१६२९०)
रथैरनेकैर्विविधैर्गदसाम्बोद्धवादिभिः ।
पुरुषैः कुरुशार्दूल समर्थैः प्रतिवारणे ॥ ३-१५-९ (१६२९१)
अतिख्यातकुलैर्वीरैर्दृष्टवीर्यैश्च संयुगे ।
मध्यमेन च गुल्मेन रक्षिभिः सा सुरक्षिता ।
उत्क्षिप्तगुल्मैश्च तथा हयैश्च सपताकिभिः ॥ ३-१५-१० (१६२९२)
आघोषितं च नगरे न पातव्या सुरेति वै ।
प्रमादं परिरक्षद्भिरुग्रसेनोद्धवादिभिः ॥ ३-१५-११ (१६२९३)
प्रमत्तेष्वभिघातं हि कुर्यात्साल्वो नराधिपः ।
इति कृत्वाऽप्रमत्तास्ते सर्ववृष्ण्यन्धकाः स्थिताः ॥ ३-१५-१२ (१६२९४)
आनर्ताश्च तथा सर्वे नटनर्तकगायकाः ।
बहिर्निर्वासिताः सर्वे रक्षद्भिर्वित्तसंचयम् ॥ ३-१५-१३ (१६२९५)
संक्रमा भेदिताः सर्वे नावश्च प्रतिषेधिताः ।
परिखाश्चापि कौरव्य कीलैः सुनिचिताः कृताः ॥ ३-१५-१४ (१६२९६)
उदपानाः कुरुश्रेष्ठ तथैवाप्यम्बरीषकाः ।
समन्तात्क्रोशमात्रं च कारिता विषमा च भूः ।
ग्संक्रमा भेदिताः सर्वे प्राकाराश्च नवीकृताः ॥' ३-१५-१५ (१६२९७)
प्रकृत्या विषमं दुर्गं प्रकृत्या च सुरक्षितम् ।
प्रकृत्या चायुधोपेतं विशेषेण तदाऽनघ ॥ ३-१५-१६ (१६२९८)

सुरक्षितं सुगुप्तं च सर्वायुधसमन्वितम् ।
तत्पुरं भरतश्रेष्ठ यथेन्द्रभवनं तथा ॥ ३-१५-१७ (१६२९९)
न चामुद्रोऽभिनिर्याति न चामुद्रः प्रवेश्यते ।
वृष्ण्यन्धकपुरे राजंस्तदा सौभसमागमे ॥ ३-१५-१८ (१६३००)
अनुरथ्यासु सर्वासु चत्वरेषु च कौरव ।
बलं बभूव राजेन्द्र प्रभूतगजवाजिमत् ॥ ३-१५-१९ (१६३०१)
दत्तवेतनभक्तं च दत्तायुधपरिच्छदम् ।
कृतोपधानं च तदा बलमासीद्विशांपते ॥ ३-१५-२० (१६३०२)
न कुप्यवेतनी कश्चिन्न चातिक्रान्तवेतनी ।
नानुग्रहभृतः कश्चिन्न चादृष्टपराक्रमः ॥ ३-१५-२१ (१६३०३)
एवं सुविहिता राजन्द्वारका भूरिदक्षिणैः ।
आहुकेन सुगुप्ता च राज्ञा राजीवलोचन ॥ ३-१५-२२ (१६३०४)

इति श्रीमन्महाभारते अरण्यपर्वणि अर्जुनाभिगमनपर्वणि
पञ्चदशोऽध्यायः ॥ १५ ॥

Mahabharata - Vana Parva - Chapter Footnotes

३-१५-१ कथ्यतः कथयतः ॥
३-१५-२ श्रुतश्रवा शिशुपालमाता ॥
३-१५-५ पताका ध्वजाञ्चलः । तोरणानि बहुर्द्वाराणि। चक्राणि योधगणाः। हुडास्तदाश्रयस्थानानि। यन्त्राणि आग्नेयौषधबलेन दृषत्पिण्डोत्क्षेपणानि। खनकाः सुरंगद्वारा गुप्तमार्गकर्तारः ॥
३-१५-६ उपशल्या लोहमुखाः कीलास्तद्युक्ताः । प्रतोल्यो रथ्यामार्गा यस्यां सा। अट्टालकाः उपरिगृहाः। गोपुराणि पुरद्वाराणि। साट्टानि अट्टेन अनेन सहितानि अट्टालकादीनि यस्यां सा चक्र ग्रहणी सैन्यनिग्राहिका। सोल्कालातावपोथिका सोल्कमलातं ज्वालासहितमुल्मुकं यस्यां सोल्कालाता। अवबद्धाः पोथिकाः यन्त्रबद्धाः काष्ठपाषाणादयो रिपूणामुपरि पातनाय यस्यामिति प्राञ्चः। सकचग्रहिणी चैव इति क। ट। पाठः ॥
३-१५-७ उष्ट्रिका मृच्चर्ममयानि भाण्डानि । सर्ष्टिका साङ्कुशेति क। ट। पाठः। ऋष्टय आयुधविशेषाः ॥
३-१५-८ अश्मगुडकाः वर्तुलीकृताः पाणाणाः । लोहमयानि चर्माणि कमठपृष्ठाकाराणि प्रहारवारकाणि। साग्निः आग्नेयौषधसहिता। गुडा गोलकाः। शृङ्गिकास्तदुत्क्षेपकयन्त्राणि ॥
३-१५-९ समन्तात्परिपालिते इति क । पाठः ॥
३-१५-१३ निवासिताः क्षिप्रं इति झ । पाठः ॥

३-१५-१४ संक्रमा नदीसेतवः ।कीलैः शूलैः।सुनिचिता व्याप्ताः ॥
३-१५-१५ उदपानाः कूपाः ।अम्बरीषो गुप्ताग्निः।विषमा लोहकण्टकाद्याकीर्णा ॥
३-१५-१९ अनुरथ्यासु प्रतिरथ्यम् ॥
३-१५-२० वेतनं धनम् ।भक्तं नित्यभोजनम्।कृतोपधानं
कृतविशेषम् ॥
३-१५-२१ कुप्यं स्वर्णरूप्येतरद्धनं ताम्रादि ।ग्रहो
रणोद्यमस्तमनुलक्षीकृत्य भृतोऽनुग्रहभृतस्तत्कालस्वीकृतो
न कश्चित् किंतु चिरसंभृता एव।नादत्तवेतनः कश्चित् इति
क।ठ।पाठः ॥
३-१५-२२ आहुकेन उग्रसेनेन ।भूरिदक्षिणेति झ।पाठः ॥

---

वन-अध्यय०१६
॥ श्रीः ॥
३.१६. अध्यायः १६

Mahabharata - Vana Parva - Chapter Topics
कृष्णेन युधिष्ठिरंप्रति साल्वयादवयुद्धवर्णनम् ॥१ ॥

Mahabharata - Vana Parva - Chapter Text

३-१६-० (१६३०५)
वासुदेव उवाच।३-१६-०क्ष् (१८३०)
तां तूपयातो राजेन्द्र साल्वः सौभपतिस्तदा ।
प्रभूतनरनागेन बलेनोपविवेश ह ॥३-१६-१ (१६३०६)
समे निविष्टां सा सेना प्रभूतसलिलाशये ।
चतुरङ्गबलोपेता साल्वराजाभिपालिता ॥३-१६-२ (१६३०७)
वर्जयित्वा श्मशानानि देवतायतनानि च ।
वल्मीकांश्चैव चैत्यांश्च संनिविष्टमभूद्बलम् ॥३-१६-३ (१६३०८)
अनीकानां विभागेन पन्थानः सुकृतास्तथा ।
प्रथमा नवमाश्चैव साल्वस्य शिबिरे नृप ॥३-१६-४ (१६३०९)
सर्वायुधसमोपेतं सर्वशस्त्रविशारदम् ।
रथनागाश्वकलिलं पदातिजनसंकुलम् ॥३-१६-५ (१६३१०)
तुष्टपुष्टबलोपेतं वीरलक्षणलक्षितम् ।
विचित्रध्वजसन्नाहं विचित्ररथकार्मुकम् ॥३-१६-६ (१६३११)
संनिवेश्य च कौरव्य द्वारकायां नरर्षभ ।
अभिसारयामास तदा वेगैन पतगेन्द्रवत् ॥३-१६-७ (१६३१२)

तदापतन्तं संदृश्य बलं साल्वपतेस्तदा ।
निर्याय योधयामासुः कुमारा वृष्णिनन्दनाः ॥ ३-१६-८ (१६३१३)
असहन्तोऽभियानं तत्साल्वराजस्य कौरव ।
चारुदेष्णश्च साम्बश्च प्रद्युम्नश्च रमहारथः ॥ ३-१६-९ (१६३१४)
ते रथैर्दशिताः सर्वेविचित्राभरणध्वजाः ।
संसक्ताः साल्वराजस्य बहुभिर्योधपुङ्गवैः ॥ ३-१६-१० (१६३१५)
गृहीत्वा कार्मुकं साम्बः साल्वस्य सचिवं रणे ।
यीधयामास संहृष्टः क्षेमधूर्तिं चमूपतिम् ॥ ३-१६-११ (१६३१६)
तस्य बाणमयं वर्षं जाम्बवत्याः सुतो महत् ।
मुमोच भरतश्रेष्ठ यथावर्षं सहस्रदृक् ॥ ३-१६-१२ (१६३१७)
तद्बाणवर्षं तुमुलं विषेहे स चमूपतिः ।
क्षेमधूर्तिर्महाराज हिमवानिव निश्चलः ॥ ३-१६-१३ (१६३१८)
ततः साम्बाय राजेन्द्र क्षेमधूर्तिरपि स्वयम् ।
मुमोच मायाविहितं शरजालं महत्तरम् ॥ ३-१६-१४ (१६३१९)
ततो मायामयं जालं माययैव विदार्यसः ।
साम्बः शरसहस्रेण रथमस्याभ्यवर्षत ॥ ३-१६-१५ (१६३२०)
ततः स विद्धः साम्बेन क्षेमधूर्तिश्चमूपतिः ।
अपायाज्जवनैरश्वैः साम्बबाणप्रपीडितः ॥ ३-१६-१६ (१६३२१)
तस्मिन्विप्रद्रुते शरे साल्वस्याथ चमूपतौ ।
वेगवान्नाम दैतेयः सुतं मेऽभ्यद्रवद्बली ॥ ३-१६-१७ (१६३२२)
अभिपन्नस्तु राजेन्द्र साम्बो वृष्णिकुलोद्वहः ।
वेगं वेगवतो राजंस्तस्थौ वीरो विधारयन् ॥ ३-१६-१८ (१६३२३)
स वेगवति कौन्तेय साम्बो वेगवतीं गदाम् ।
चिक्षेप तरसा वीरो व्याविद्ध्यन्सत्यविक्रमः ॥ ३-१६-१९ (१६३२४)
तया त्वभिहतो राजन्वेगवान्न्यपतद्भुवि ।
वातरुग्णं इव क्षुण्णो जीर्णमूलोवनस्पतिः ॥ ३-१६-२० (१६३२५)
तस्मिन्निपतिते वीरे गदारुग्णे महासुरे ।
प्रविश्य महतीं सेनां योधयामास मे सुतः ॥ ३-१६-२१ (१६३२६)
चारुदेष्णेन संसक्तो विविन्ध्यो नाम दानवः ।
महारथः समाज्ञातो महाराज महाधनुः ॥ ३-१६-२२ (१६३२७)
ततः सुतुमुलं युद्धं चारुदेष्णविविन्ध्ययोः ।
वृत्रवासवयो राजन्यथापूर्वं तथाऽभवत् ॥ ३-१६-२३ (१६३२८)
अन्योन्यस्याभिसंक्रुद्धावन्योन्यं जघ्नतुः शरैः ।
विनदन्तौ महाराज सिंहाविव महाबलौ ॥ ३-१६-२४ (१६३२९)
रौक्मिणेयस्ततो बाणमग्न्यर्कोपमवर्चसम् ।
अभिमन्त्र्य महास्त्रेण संदधे शत्रुनाशनम् ॥ ३-१६-२५ (१६३३०)

स विविन्ध्याय सक्रोधः समाहूय महारथः ।
चिक्षेप मे सुतो राजन्स गतासुरथापतत् ॥ ३-१६-२६ (१६३३१)
विविन्ध्यं निहतं दृष्ट्वा तां च विक्षोभितां चमूम् ।
कामगेन स सौभेन साल्वः पुनरुपागमत् ॥ ३-१६-२७ (१६३३२)
ततो व्याकुलितं सर्वं द्वारकावासि तद्बलम् ।
दृष्ट्वा साल्वं महाबाहो सौभस्थं पृथिवीगतम् ॥ ३-१६-२८ (१६३३३)
ततो निर्याय कौरव्य अवस्थाप्य च तद्बलम् ।
आनर्तानां महाराज प्रद्युम्नो वाक्यमब्रवीत् ॥ ३-१६-२९ (१६३३४)
सर्वे भवन्तस्तिष्ठन्तु सर्वे पश्यन्तु मां युधि ।
निवारयन्तं संग्रामे बलात्सौभं सराजकम् ॥ ३-१६-३० (१६३३५)
अयं सौभपतेः सेनामायसैर्भुजगैरिव ।
धनुर्भुजविनिर्मुक्तैर्नाशयम्यद्य यादवाः ॥ ३-१६-३१ (१६३३६)
आश्वसध्वं न भीः कार्या सौभराडद्य नश्यति ।
मयाऽभिपन्नो दुष्टात्मा ससौभो विनशिष्यति ॥ ३-१६-३२ (१६३३७)
एवं ब्रुवति संहृष्टे प्रद्युम्ने पाण्डुनन्दन ।
धिष्टितं तद्बलं द्वारि युयुधे च यथासुखम् ॥ ३-१६-३३ (१६३३८)

इति श्रीमन्महाभारते अरण्यपर्वणि अर्जुनाभिगमनपर्वणि
षोडशोऽध्यायः ॥ १६ ॥

Mahabharata - Vana Parva - Chapter Footnotes

३-१६-२ समे देशे ॥
३-१६-४ प्रवणाय च नैवासन्निति झ ।पाठः ॥
३-१६-५ कलिलं संकटम् ।पदातिध्वजसंकुलमिति झ।पाठः ॥
३-१६-७ अभिसारयामास नगरसमीपं गमयामास ।सैन्यं
पतगेन्द्रवत्सौभं चोपरितः अभिसारयामास ॥
३-१६-८ आपतन्समापतत् ॥
३-१६-१६ क्षेमधूर्तिः स्मयन्निवेति क ।ट।पाठः।अपायात्पलायितः ॥
३-१६-१८ अभिपन्नः आभिमुख्येनासादितः ॥
३-१६-१९ व्याविध्य सत्यविक्रमः इति झ ।पाठः।तत्र व्याविध्य
भ्रामयित्वेत्यर्थः ॥
३-१६-२० रुग्णः क्षुण्णश्च गजादिपदाघातैः ॥
३-१६-२७ सौभेन खेचरेण पुरेण ॥
३-१६-२९ निर्याय निर्गत्य ।अवस्थाप्य आश्वास्य।आनर्तानां द्वारकावासिनाम् ॥
३-१६-३१ धनुर्भुजविनिर्मुक्तैः धनुषः भुजेन कौटिल्येन
अत्याकर्षणजेन निर्मुक्तैः ।भुज कौटिल्ये तुदादिः ॥

३-१६-३३ धिष्ठितं अधिष्ठितम् ॥

---

वन-अध्यय०१७
॥ श्रीः ॥
३.१७. अध्यायः १७

Mahabharata - Vana Parva - Chapter Topics
कृष्णेन् युधिष्ठिरंप्रति साल्वप्रद्युम्नयुद्धवर्णनम् ॥१ ॥

Mahabharata - Vana Parva - Chapter Text

३-१७-० (१६३३९)
वासुदेव उवाच। ३-१७-०क्ष् (१८३१)
एवमुक्त्वा रौक्मिणेयो यादवान्यादवर्षभ ।
दंशितैर्हरिभिर्युक्तं रथमास्थाय काञ्चनम् ॥ ३-१७-१ (१६३४०)
उच्छ्रित्य मकरं केतुं व्यात्ताननमलङ्कृतम् ।
उत्पतद्भिरिवाकाशं तैर्हयैरन्वयात्परान् ॥ ३-१७-२ (१६३४१)
विक्षिपन्नादयंश्चापि धनुः श्रेष्ठं महाबलैः ।
तूणखङ्गधरः शूरो बद्धगोधाङ्गुलित्रवान् ॥ ३-१७-३ (१६३४२)
सविद्युच्छुरितं चापं विहरन्वै तलात्तलम् ।
मोहयामास दैतेयान्सर्वान्सौभनिवासिनः ॥ ३-१७-४ (१६३४३)
तस्य विक्षिपतश्चापं संदधानस्य चासकृत् ।
नान्तरं ददृशे कश्चिन्निघ्नितः शात्रवान्रणे ॥ ३-१७-५ (१६३४४)
मुखस्य वर्णो न विकल्पतेऽस्य
चेलुश्च गात्राणि न चापि तस्य ।
सिंहोन्नतं चाप्यभिगर्जतोऽस्य
शुश्राव लोकोऽद्भुतवीर्यमग्र्यम् ॥ ३-१७-६ (१६३४५)
जलेचरः काञ्चनयष्टिसंस्थो
व्यात्ताननः शत्रुबलप्रमाथी ।
वित्रासयन्राजति वाहमुख्ये
साल्वस्य सेनाप्रमुखे ध्वजाग्र्यः ॥ ३-१७-७ (१६३४६)
ततस्तूर्णं विनिष्पत्य प्रद्युम्नः शत्रुकर्शनः ।
साल्वमेवाभिदुद्राव विधित्सुः कलहं नृप ॥ ३-१७-८ (१६३४७)
अभियानं तु वीरेण प्रद्युम्नेन महारणे ।
नामर्षयत संक्रुद्धः साल्वः कुरुकुलोद्वह ॥ ३-१७-९ (१६३४८)
सरोषमहमत्तो वै कामगादवरुह्य च ।
प्रद्युम्नं योधयामास साल्वः परपुरंजयः ॥ ३-१७-१० (१६३४९)

तयोः सुतुमुलं युद्धं साल्ववृष्णिप्रवीरयोः ।
समेता ददृशुर्लोका बलिवासवयोरिव ॥ ३-१७-११ (१६३५०)
तस्य मायामयो वीर रथो हेमपरिष्कृतः ।
सपताकः सध्वजश्च सानुकर्षः स तूणवान् ॥ ३-१७-१२ (१६३५१)
स तं रथवरं श्रीमान्समारुह्य किल प्रभो ।
मुमोच बाणान्कौरव्य प्रद्युम्नाय महाबलः ॥ ३-१७-१३ (१६३५२)
ततो बाणमयं वर्षं व्यसृजत्तरसा रणे ।
प्रद्युम्नो भुजवेगेन साल्वं संमोहयन्निव ॥ ३-१७-१४ (१६३५३)
स तैरभिहतः सङ्ख्ये नामर्षयत सौभराट् ।
शरान्दीप्ताग्निसंकाशान्मुमोच तनये मम ॥ ३-१७-१५ (१६३५४)
तमापतन्तं बाणौघं स चिच्छेद महाबलः ।
ततश्चान्याञ्शरान्दीप्तान्प्रचिक्षेप सुते मम ॥ ३-१७-१६ (१६३५५)
स साल्वबाणै राजेन्द्र विद्धो रुक्मिणिनन्दनः ।
मुमोच बाणं त्वरितो मर्मभेदिनमाहवे ॥ ३-१७-१७ (१६३५६)
तस्य वर्म विभिद्याशु स बाणो मत्सुतेरितः ।
विवेश हृदयं पत्री स पपात भृशहतः ॥ ३-१७-१८ (१६३५७)
तस्मिन्निपतिते वीरे साल्वराजे विचेतसि ।
संप्रद्रवन्दानवेन्द्रा दारयन्तो वसुंधराम् ॥ ३-१७-१९ (१६३५८)
हाहाकृतमभूत्सैन्यं साल्वस्य पृथिवीपते ।
नष्टसंज्ञे निपतिते तदा सौभपतौ नृपे ॥ ३-१७-२० (१६३५९)
तत उत्थाय राजेन्द्र प्रतिलभ्य च चेतनाम् ।
मुमोच बाणान्सहसा प्रद्युम्नाय महाबलः ॥ ३-१७-२१ (१६३६०)
तेन बाणेन महता प्रद्युम्नः समरे स्थितः ।
जत्रुदेशे भृशं विद्धो व्यथितो ददृशे तदा ॥ ३-१७-२२ (१६३६१)
तं स विद्ध्वा महाराज साल्वो रुक्मिणिनन्दनम् ।
ननाद सिंहनादं वै नादेनापूरयन्महीम् ॥ ३-१७-२३ (१६३६२)
ततो मोहं समापन्ने तनये मम भारत ।
मुमोच बाणांस्त्वरितः पुनरन्यान्दुरात्मवान् ॥ ३-१७-२४ (१६३६३)
स तैरभिहतो बाणैर्बहुभिस्तेन मोहितः ।
निश्चेष्टः कौरवश्रेष्ठ प्रद्युम्नोऽभूद्रणाजिरे ॥ ३-१७-२५ (१६३६४)

इति श्रीमन्महाभारते अरण्यपर्वणि अर्जुनाभिगमनपर्वणि
सप्तदशोऽध्यायः ॥ १७ ॥

Mahabharata - Vana Parva - Chapter Footnotes

३-१७-१ हरिभिः अश्वैः ॥

३-१७-२ व्यात्ताननमिवान्तकं इति झ ।पाठः। अन्वयात् उपगतः ॥
३-१७-३ विक्षिपन् परान्धिक्वुर्वन् ।महाहलैः हयैः ॥
३-१७-४ समानं विद्युच्छुरितेन विद्युत्कम्पनेनेति
।विद्युच्छुरितम्।तलात्तलं सव्यापसव्यहस्ततलपरिवर्तेन ॥
३-१७-५ विक्षिप्तः कर्षतः ॥
३-१७-६ विकल्पते भिद्यते ॥
३-१७-७ जलेचरः मीनः ।सर्वतिमिप्रमाथी इति झ।पाठः।वाहमुख्ये
रथषेष्ठे ॥
३-१७-१२ सानुकर्षः रथाधस्थकाष्ठं अनुकर्षः सः ।रथः तूणवान् ॥
३-१७-१६ आपततेति विसर्गलोप आर्षः ॥
३-१७-२२ जत्रुदेशे कण्ठमूले ॥

---

वन-अध्यय०१८
॥ श्रीः ॥
३.१८. अध्यायः १८

Mahabharata - Vana Parva - Chapter Topics
प्रद्युम्ने साल्वबाणाभिहत्या मूर्च्छिते सारथिना रणाङ्गणादन्यतो
रथयापनम् ॥ १ ॥
ततः प्रतिबुद्धेन प्रद्युम्नेन सारधिं प्रति सविषादोक्तिः ॥ २ ॥

Mahabharata - Vana Parva - Chapter Text

३-१८-० (१६३६५)
वासुदेव उवाच। ३-१८-०क्ष् (१८३२)
साल्वबाणार्दिते तस्मिन्प्रद्युम्ने बलिनांवरे ।
वृष्णयो भग्नसंकल्पा विव्यथुः पृतनामुखे ॥ ३-१८-१ (१६३६६)
हाहाकृतमभूत्सर्वं वृष्ण्यन्धकबलं ततः ।
प्रद्युम्ने मोहिते राजन्साल्वः प्रमुदितोऽभवत् ॥ ३-१८-२ (१६३६७)
तं तथा मोहितं दृष्ट्वा सारथिर्जवनैर्हयैः ।
रणादपाहरत्तूर्णं शिक्षितो दारुकिस्तदा ॥ ३-१८-३ (१६३६८)
नातिदूरापयाते तु रथे रथवरप्रणुत् ।
धनुर्गृहीत्वा यन्तारं लब्धसञ्ज्ञोऽब्रवीदिदम् ॥ ३-१८-४ (१६३६९)
सौते किं ते व्यवसितं कस्माद्यासि पराङ्मुखः ।
नैष वृष्णिप्रवीराणामाहवे धर्म उच्यते ॥ ३-१८-५ (१६३७०)
कच्चित्सौते न ते मोहः साल्वं दृष्ट्वा महाहवे ।
विषादो वा रणँ दृष्ट्वा ब्रूहि मे त्वं यथातथम् ॥ ३-१८-६ (१६३७१)

सौतिरुवाच। ३-१८-७क्ष् (१८३३)
जानार्दने न मे मोहो नापि मां भयमाविशत् ।
अतिभारं तु ते मन्ये साल्वं केशवनन्दन ॥ ३-१८-७ (१६३७२)
सोभियाति शनैर्वीर बलवानेष पापकृत् ।
मोहितश्च रणे शूरो रक्ष्यः सारथिना रथी ॥ ३-१८-८ (१६३७३)
आयुष्मंस्त्वं मया नित्यं रक्षितव्यस्त्वयाऽप्यहम् ।
रक्षितव्यो रणे नित्यमिति कृत्वाऽपयाम्यहम् ॥ ३-१८-९ (१६३७४)
एकश्चासि महाबाहो बहवश्चापि दानवाः ।
न समं रौक्मिणेयाहं रणए मत्वाऽपयामि वा ॥ ३-१८-१० (१६३७५)
वासुदेव उवाच। ३-१८-११क्ष् (१८३४)
एवं ब्रुवति सूते तु तदा मकरकेतुमान् ।
उवाच सूतं कौरव्य संनिवर्त्य रथं पुनः ॥ ३-१८-११ (१६३७६)
दारुकात्मज मैवं त्वं पुनः कार्षीः कथंचन ।
न्यपयानं रणात्सौते जीवतो मम कर्हिचित् ॥ ३-१८-१२ (१६३७७)
न स वृष्णिकुले जातो यो वै त्यजति संगरम् ।
यो वा निपतितं हन्ति तवास्मीति च वादिनम् ॥ ३-१८-१३ (१६३७८)
तथा स्त्रियं च यो हन्ति बालं वृद्धं तथैव च ।
विरथं मुक्तकेशं च भग्नशस्त्रायुधं तथा ॥ ३-१८-१४ (१६३७९)
त्वं च सूतकुले जातो विदितः सूतकर्मणि ।
धर्मज्ञश्चासि वृष्णीनामाहवेष्वपि दारुके ॥ ३-१८-१५ (१६३८०)
स जानंश्चरितं कृत्स्नं वृष्णीनां पृतनामुखे ।
अपयानं पुन सौते मैवं कार्षीः कथंचन ॥ ३-१८-१६ (१६३८१)
अपयातं हतं पृष्ठे भ्रान्तं रणपलायितम् ।
गदाग्रजो दुराधर्षः किं मां वक्ष्यति माधवः ॥ ३-१८-१७ (१६३८२)
केशवस्याग्रजो वाऽपि नीलवासा मदोत्कटः ।
किं वक्ष्यति महाबाहुर्बलदेवः समागतः ॥ ३-१८-१८ (१६३८३)
किं वक्ष्यतिशिनेर्नप्ता रणसिंहो महारथः ।
अपयातं रणात्सूत साम्बश्च समितिंजयः ॥ ३-१८-१९ (१६३८४)
चारुदेष्णश्च दुर्धर्षस्तथैव गदसारणौ ।
अक्रूरश्च महाबाहुः किं मां वक्ष्यति सारथे ॥ ३-१८-२० (१६३८५)
शूरं संभावितं शान्तं नित्यं पुरुषमानिनम् ।
स्त्रियश्च वृष्णिवीराणां किं मांवक्ष्यन्ति संगताः ॥ ३-१८-२१ (१६३८६)
प्रद्युम्नोऽयमुपायाति भीतस्त्यक्त्वा महाहवम् ।
धिगेनमिति वक्ष्यन्ति न तु वक्ष्यन्ति साध्विति ॥ ३-१८-२२ (१६३८७)
धिग्वाचा परिहासोपि मम वा मद्विधस्य वा ।
मृत्युनाऽभ्यधिकः सौते स त्वं माव्यपयाः पुनः ॥ ३-१८-२३ (१६३८८)

भारं हि मयि संन्यस्य यातो मधुनिहा हरिः ।
यज्ञं बारतसिंहस्य न हि शक्योऽद्यमर्षितुम् । ३-१८-२४ (१६३८९)
कृतवर्मा मया वीरो निर्यास्यन्नेव वारितः ।
साल्वं निवारयिष्येऽहं तिष्ठ त्वमिति सूतज ॥ ३-१८-२५ (१६३९०)
स च संभावयन्मां वै निवृत्तो हृदिकात्मजः ।
तं समेत्य रणं त्यक्त्वा किं वक्ष्यामि महारथं ॥ ३-१८-२६ (१६३९१)
उपयान्तं दुराधर्षं शङ्खचक्रगदाधरम् ।
पुरुषं पुण्डरीकाक्षं किं वक्ष्यामि महाभुजम् ॥ ३-१८-२७ (१६३९२)
सात्यकिं बलदेवं च ये चान्येऽन्धकवृष्णयः ।
मया स्पर्धन्ति सततं किं नु वक्ष्यामि तानहं ॥ ३-१८-२८ (१६३९३)
त्यक्त्वा रणमिमं सौते पृष्ठतोऽभ्याहतः शरैः ।
त्वयाऽपनीती विवशो न जीवेयं कथंचन ॥ ३-१८-२९ (१६३९४)
संनिवर्त रथेनाशु पुनर्दारुकनन्दन ।
न चैतदेवं कर्तव्यमथापत्सु कथंचन ॥ ३-१८-३० (१६३९५)
न जीवितमहं सौते बहु मन्ये कथंचन ।
अपयातो रणाद्भीतः पृष्ठतोऽभ्याहतः शरैः ॥ ३-१८-३१ (१६३९६)
कदाऽपि सूतपुत्र त्वं जानीषे मां भयार्दितम् ।
अपयातं रणं हित्वा यथा कापुरुषं तथा ॥ ३-१८-३२ (१६३९७)
अयुक्तं तु मया त्यक्तुं संग्रामं दारुकात्मज ।
मयि युद्धार्थिनि भृशं स त्वं याहि यतो रणम् ॥ ३-१८-३३ (१६३९८)

इति श्रीमन्महाभारते अरण्यपर्णणि अर्जुनाभिगमनपर्वणि
अष्टादशोऽध्यायः ॥ १९ ॥
Mahabharata - Vana Parva - Chapter Footnotes

३-१८-२ परे च मुदिता भृशम् । इति झ। पाठः ॥
३-१८-११ रथं पुनः इति झ । पाठः ॥
३-१८-१९ शिनेर्नप्ता सात्यकिः ॥

---

वन-अध्यय०१९
॥ श्रीः ॥
३.१९. अध्यायः १९

Mahabharata - Vana Parva - Chapter Topics
प्रद्युम्नपराजितस्य साल्वस्य रणादपयानम् ॥ १ ॥

Mahabharata - Vana Parva - Chapter Text

३-१९-० (१६३९९)
वासुदेव उवाच। ३-१९-०क्ष् (१८३५)
एवमुक्तस्तु कौन्तेय सूतपुत्रस्ततो मृधे ।
प्रद्युम्नमब्रवीच्छ्लक्ष्णं मधुरं वाक्यमञ्जसा ॥ ३-१९-१ (१६४००)
न मे भयं रौक्मिणेय संग्रामे यच्छतो हयान् ।
युद्धज्ञोस्मि च वृष्णीनां नात्र किंचिदतोऽन्यथा ॥ ३-१९-२ (१६४०१)
आयुष्मन्नुपदेशस्तु सारथ्ये वर्ततां स्मृतः ।
सर्वार्थेषु रथी रक्ष्यस्त्वं चापि भृशपीडितः ॥ ३-१९-३ (१६४०२)
त्वं हि साल्वप्रयुक्तेन शरेणाभिहतो भृशम् ।
कश्मलाभिहतो वीर ततोऽहमपयातवान् ॥ ३-१९-४ (१६४०३)
सत्वं सात्वतमुख्याद्य लब्धसंज्ञो यदृच्छया ।
पश्य मे हयसंयाने शिक्षां केशवनन्दन ॥ ३-१९-५ (१६४०४)
दारुकेणाहमुत्पन्नो यथावच्चैव शिक्षितः ।
वीतभीः प्रविशाम्येतां साल्वस्य महतीं चमूम् ॥ ३-१९-६ (१६४०५)
वासुदेव उवाच। ३-१९-७क्ष् (१८३६)
एवमुक्त्वा ततो वीरो हयान्संचोद्य संगरे ।
रश्मिभिस्तु समुद्यम्य जवेनाभ्यपतत्तदा ॥ ३-१९-७ (१६४०६)
मण्डलानि विचित्राणि यमकानीतराणि च ।
सव्यानि च विचित्राणि दक्षिणानि च सर्वशः ॥ ३-१९-८ (१६४०७)
प्रतोदेनाहता राजन्रश्मिभिश्च समुद्यताः ।
उत्पतन्त इवाकाशं विबभुस्ते हयोत्तमाः ॥ ३-१९-९ (१६४०८)
ते हस्तलाघवोपेतं विज्ञाय नृप दारुकिम् ।
उह्यमाना इव तदा नास्पृशंश्चरणैर्महीम् ॥ ३-१९-१० (१६४०९)
सोपसव्यां चमूं तस्य साल्वस्य भरतर्षभ ।
चकार नातियत्नेन तदद्भुतमिवाभवत् ॥ ३-१९-११ (१६४१०)
अमृष्यमाणोपसव्यं साल्वः समितिदारुणः ।
यन्तारमस्य सहसा त्रिभिर्बाणैः समार्दयत् ॥ ३-१९-१२ (१६४११)
दारुकस्य सुतस्तं तु बाणवेगमचिन्तयन् ।
भूय एव महाबाहो प्रययावपसव्यतः ॥ ३-१९-१३ (१६४१२)
ततो बाणान्बहुविधान्पुनरेव स सौभराट् ।
मुमोच तनये वीर मम रुक्मिणिनन्दने ॥ ३-१९-१४ (१६४१३)
तानप्राप्ताञ्शितैर्बाणैश्चिच्छेद परवीरहा ।
रौक्मिणेयः स्मितं कृत्वा दर्शयन्हस्तलाघवं ॥ ३-१९-१५ (१६४१४)
छिन्नान्दृष्ट्वा तु तान्बाणान्प्रद्युम्नेन च सौभराट् ।
आसुरीं दारुणीं मायामास्थाय व्यसृजच्छरान् ॥ ३-१९-१६ (१६४१५)

प्रयुज्यमानमाज्ञाय दैतेयास्त्रं महाबलम् ।
ब्रह्मास्त्रेणान्तरा च्छित्त्वामुमोचान्यन्पतस्त्रिणः ॥ ३-१९-१७ (१६४१६)
ते तदस्त्रं विधूयाशु विव्यधू रुधिराशनाः ।
शिरस्युरसि वक्रे च स मुमोह पपात च ॥ ३-१९-१८ (१६४१७)
तस्मिन्निपतिते क्षुद्रे साल्वे बाणप्रपीडिते ।
रौक्मिणेयोऽपरं बाणं संदधे शत्रतापनः ॥ ३-१९-१९ (१६४१८)
तमर्चितं सर्वदाशार्हपूगै-
राशीर्भिरर्कज्वलनप्रकाशम् ।
दृष्ट्वा शरं ज्यामभिनीयमानं
बभूव हाहाकृतमन्तरिक्षम् ॥ ३-१९-२० (१६४१९)
ततो देवगणाः सर्वे सेन्द्राः सहधनेश्वराः ।
नारदं प्रेषयामासु- श्वसनं च मनोजवम् ॥ ३-१९-२१ (१६४२०)
तौ रौक्मिणेयमागम्य वचोऽब्रूतां दिवौकसाम् ।
नैव वध्यस्त्वया वीर साल्वराजः कथंचन ॥ ३-१९-२२ (१६४२१)
संहरस्व पुनर्बाणमवध्योऽयं त्वया रणे ।
एतस्य च शरस्याजौ नावध्योस्ति पुमान्क्वचित् ॥ ३-१९-२३ (१६४२२)
मृत्युरस्य महाबाहो रणे देवकिनन्दनः ।
कृष्णः संकल्पितो धात्रा तन्मिथ्या न भवेदिति ॥ ३-१९-२४ (१६४२३)
ततः परमसंहृष्टः प्रद्युम्नः शरमुत्तमम् ।
संजहार धनुःश्रेष्ठात्तूणे चैव न्यवेशयत् ॥ ३-१९-२५ (१६४२४)
तत उत्थाय राजेन्द्र साल्वः परमदुर्मनाः ।
व्यपायात्सबलस्तूर्णं प्रद्युम्नशरपीडितः ॥ ३-१९-२६ (१६४२५)
स द्वारकां परित्यज्य साल्वो वृष्णिभिरार्दितः ।
सौभमास्थाय राजेन्द्र दिवमाचक्रमे तदा ॥ ३-१९-२७ (१६४२६)

इति श्रीमन्महाभारते अरण्यपर्वणि अर्जुनाभिगमनपर्वणि
विंशोऽध्यायः ॥ २० ॥
Mahabharata - Vana Parva - Chapter Footnotes

३-१९-८ यमकानि सदृशानि ।इतराणि विसदृशानि ॥
३-१९-१० दह्यमाना इवेति ख ।झ। पाठः ॥

---

वन-अध्यय०२०
॥ श्रीः ॥
३.२०. अध्यायः २०

Mahabharata - Vana Parva - Chapter Topics

कृष्णेन युधिष्ठिरंप्रति संवस्य साल्वेन सह युद्धप्रकारकथनम्
॥ १ ॥

Mahabharata - Vana Parva - Chapter Text

३-२०-० (१६४२७)
वासुदेव उवाच। ३-२०-०क्ष् (१८३७)
आनर्तनगरं मुक्तं ततोऽहमगमं तदा ।
महाक्रतौ राजसूये निवृत्ते नृपते तव ॥ ३-२०-१ (१६४२८)
अपश्यं द्वारकां चाहं महाराज हतत्विषम् ।
निःस्वाध्यायवषट्कारां निर्भूषणवरस्त्रियम् ॥ ३-२०-२ (१६४२९)
अनभिज्ञेयरूपाणि द्वारकोपवनानि च ।
दृष्ट्वा शङ्कोपपन्नोऽहमपृच्छं हृदिकात्मजम् ॥ ३-२०-३ (१६४३०)
अस्वस्थनरनारीकमिदं वृष्णिकुलं भृशम् ।
किमिदं नरशार्दूल श्रोतुमिच्छामि तत्त्वतः ॥ ३-२०-४ (१६४३१)
एवमुक्तः स तु मया विस्तरेणेदमब्रवीत् ।
रोधं मोक्षं च साल्वेन हार्दिक्यो राजसत्तम ॥ ३-२०-५ (१६४३२)
ततोऽहं भरतश्रेष्ठ श्रुत्वा सर्वमशेषतः ।
विनाशे साल्वराजस्य तदैवाकरवं मतिम् ॥ ३-२०-६ (१६४३३)
ततोऽहं भरतश्रेष्ठ समाश्वास्य पुरे जनम् ॥
राजानमाहुकं चैव तथैवाकनदुन्दुभिम् ॥ ३-२०-७ (१६४३४)
सर्वान्वृष्णिप्रवीरांश्च हर्षयन्नब्रुवं तदा ।
अप्रमादः सदा कार्यो नगरे यादवर्षभाः ॥ ३-२०-८ (१६४३५)
साल्वराजविनाशाय प्रयातं मां निबोधत ।
नाहत्वा तं निवर्तिष्ये पुरीं द्वारवतीं प्रति ॥ ३-२०-९ (१६४३६)
ससाल्वं सौभनगरं हत्वा द्रष्टास्मि वः पुनः ।
त्रिःसामा हन्यतामेषा दुन्दुभिः शत्रुभीषणा ॥ ३-२०-१० (१६४३७)
ते मयाऽऽश्वासिता वीरा यथावद्भरतर्षभ ।
सर्वे मामब्रुवन्हृष्टाः प्रयाहि जहिशात्रवान् ॥ ३-२०-११ (१६४३८)
तैः प्रहृष्टात्मभिर्वीरैराशीर्भिरभिनन्दितः ।
वाचयित्वा द्विजश्रेष्ठान्प्रणम्य शिरसा भवम् ॥ ३-२०-१२ (१६४३९)
शैब्यसुग्रीवयुक्तेन रथेनानादयन्दिशः ।
प्रध्माय शङ्खप्रवरं पाञ्चजन्यमहं नृप ॥ ३-२०-१३ (१६४४०)
प्रयातोस्मि नरव्याघ्र बलेन महता वृतः ।
क्लृप्तेन चतुरङ्गेण यत्तेन जितकाशिना ॥ ३-२०-१४ (१६४४१)

समतीत्य बहून्देशान्गिरींश्च बहुपादपान् ।
सरांसि सरितश्चैव मार्तिकावतमासदम् ॥ ३-२०-१५ (१६४४२)
तत्राश्रौषं नरव्याघ्र साल्वं सागरमन्तिकात् ।
प्रयान्तं सौभमास्थाय तमहं पृष्ठतोऽन्वगाम् ॥ ३-२०-१६ (१६४४३)
ग्दृष्टवानस्मि राजेन्द्र साल्वराजमथान्तिके।'
ततः सागरमासाद्य कुक्षौ तस्य महोर्मिणः ।
समुद्रनाभ्यां साल्वोऽभूत्सौभमास्थाय शत्रुहन् ॥ ३-२०-१७ (१६४४४)
ग्स मामालोक्य सहसा सेनां स्वां प्राहिणोन्मृधे ।
मद्बाहुना च सेनायां शिष्टायां किंचिदेव च' ३-२०-१८ (१६४४५)
स समालोक्य सहसा स्मयन्निव युधिष्ठिर ।
आह्वयामास दुष्टात्मा युद्धायैव मुहुर्मुहुः ॥ ३-२०-१९ (१६४४६)
तस्य शार्ङ्गविनिर्मुक्तैर्बहुभिर्मर्मभेदिभिः ।
पुरं नासाद्यत शरैस्ततो मां रोष आविशत् ॥ ३-२०-२० (१६४४७)
स चापि पापप्रकृतिर्दैतेयापशदो नृप ।
मय्यवर्षत दुर्धर्षः शरधाराः सहस्रशः ॥ ३-२०-२१ (१६४४८)
सैनिकान्मम सूतं च हयांश्च स समाकिरत् ।
अचिन्तयन्तस्तु शरान्वयं युध्याम भारत ॥ ३-२०-२२ (१६४४९)
ततः शतसहस्राणि शराणां नतपर्वणाम् ।
चिक्षिपुः समरे वीरा मयि साल्वपदानुगाः ॥ ३-२०-२३ (१६४५०)
ते हयांश्च रथं चैव ध्वजं दारुकमेव च ।
छादयामासुरसुरास्तैर्बाणैर्मर्मभेदिभिः ॥ ३-२०-२४ (१६४५१)
न हया न रथो वीर न ध्वजो न च दारुकः ।
अदृश्यन्त शरैश्छन्नास्तथाऽहं सैनिकाश्च मे ॥ ३-२०-२५ (१६४५२)
ततोऽहमपि कौन्तेय शराणामयुतान्बहून् ।
आमन्त्रितानां धनुषा दिव्येन विधिनाऽक्षिपम् ॥ ३-२०-२६ (१६४५३)
न तत्रविषयस्त्वासीन्मम सैन्यस्य भारत ।
खे विषक्तं हि तत्सौभं क्रोशमात्र इवाभवत् ॥ ३-२०-२७ (१६४५४)
ततस्ते प्रेक्षकाः सर्वे देवा वै दिवमास्थिताः ।
हर्षयामासुरुच्चैर्मां सिंहनादतलस्वनैः ॥ ३-२०-२८ (१६४५५)
मत्कार्मुकविनिर्मुक्ता दानवानां महारणे ।
अङ्गेषु रुधिराक्तास्ते विविशुः शलभा इव ॥ ३-२०-२९ (१६४५६)
ततो हलहलाशब्दः सौभमध्ये व्यवर्धत ।
वध्यतां विशिखैस्तीक्ष्णैः पततां च महार्णवे ॥ ३-२०-३० (१६४५७)
ते निकृत्तभुजस्कन्धाः कबन्धाकृतिदर्शनाः ।
नदन्तो भैरवान्नादान्निपतन्ति स्म दानवाः ।
पतितास्तेऽपि भक्ष्यन्ते समुद्रांभोनिवासिभिः ॥ ३-२०-३१ (१६४५८)

ततो गोक्षीरकुन्देन्दुमृणालरजतप्रभम् ।
जलजं पाञ्चजन्यं वै प्राणेनाहमपूरयम् ॥ ३-२०-३२ (१६४५९)
तान्दृष्ट्वा पतितांस्तत्र साल्वः सौभपतिस्ततः ।
मायायुद्धेन महता योधयामास मां युधि ॥ ३-२०-३३ (१६४६०)
ततो गदा हलाः प्रासाः शूलशक्तिपरश्वथाः ।
असयः शक्तिकुलिशपाशर्ष्टिकनपाः शराः ।
पट्टसाश्च भुशुण्ड्यश्च प्रपतन्त्यनिशं मयि ॥ ३-२०-३४ (१६४६१)
तामहं माययैवाशु प्रतिगृह्य व्यनाशयम् ।
तस्यां हतायां मायायां गिरिशृङ्गैरयोधयत् ॥ ३-२०-३५ (१६४६२)
ततोऽभवत्तम इव प्रकाश इव चाभवत् ।
दुर्दिनं सुदिनं चैव शीतमुष्णं च भारत ॥ ३-२०-३६ (१६४६३)
अङ्गारपांसुवर्षं च शस्त्रवर्षं च भारत ।
एवं मायां प्रकुर्वाणो योधयामास मां रिपुः ॥ ३-२०-३७ (१६४६४)
विज्ञाय तदहं सर्वं माययैव व्यनाशयम् ।
यथाकालं तु युद्धेन व्यधमं सर्वतः शरैः ॥ ३-२०-३८ (१६४६५)
ग्ततो हतायां च मया मायायां युधि दानवः ।
मायामन्यां महाराज चकार मतिमोहिनीम् ॥' ३-२०-३९ (१६४६६)
ततो व्योम महाराज शतसूर्यमिवाभवत् ।
शतचन्द्रं च कौन्तेय सहस्रायुततारकम् ॥ ३-२०-४० (१६४६७)
ततो नाज्ञायत तदा दिवारात्रं तथा दिशः ।
ततोऽहं मोहमापन्नः प्रज्ञास्त्रं समयोजयम् ॥ ३-२०-४१ (१६४६८)
तदस्त्रमस्तमस्त्रेण विधूतं शरतूलवत् ।
तथा तदभवद्युद्धं तुमुलं रोमहर्षणम् ।
लब्धालोकस्तु राजेन्द्र पुनः शत्रुमयोधयम् ॥ ३-२०-४२ (१६४६९)

इति श्रीमन्महाभारते अरण्यपर्वणि अर्जुनाभिगमनपर्वणि
विंशोऽध्यायः ॥ २० ॥

Mahabharata - Vana Parva - Chapter Footnotes

३-२०-३ हृदिकात्मजं कृतकर्माणम् ॥
३-२०-१० त्रिःसामा त्रिस्वरा नीचमन्द्रतारभावेन ॥
३-२०-१२ वाचयित्वा स्वस्तिवादानिति शेषः । शिरसा हरमिति
ट। पाठः। शिरसाहुकमिति क। पाठः ॥
३-२०-१४ जितकाशिना जयशोभिना ॥
३-२०-१५ मार्तिकावतं देशविशेषम् । आसदं प्राप्तः ॥
३-२०-१६ सागरमन्तिकात् सागरसमीपे । अन्वगां अनुगतवानस्मि ॥

३-२०-१७ महोर्मिणः महोर्मिमतः ।व्रीह्यादित्वादिनिः। नाभ्यां गर्भे गुप्त इत्यर्थः ॥
३-२०-२० तस्य पुरं मदीयैः शरैर्नासाद्यतेति संबन्धः ॥
३-२०-२६ आमन्त्रितानां अभिमन्त्रितानाम् ।दिव्येन विधिना अलौकिकया अस्त्रिविद्यया ॥
३-२०-३० वध्यतां वध्यमानानाम् ॥
३-२०-३२ प्राणएन बलेन ॥
३-२०-३४ शक्त्यादीनां कनो दीप्तिर्गतिः शोभा वा तां पान्ति ते ।कार्तिकेयेन्द्रवरुणयमायुधतुल्या इत्यर्थः ॥

---

वन-अध्यय०२१
॥ श्रीः ॥
३.२१. अध्यायः २१

Mahabharata - Vana Parva - Chapter Topics
कृष्णसाल्वयोर्युद्धम् ॥ १ ॥
साल्वेन स्वमायासृष्टवसुदेवस्य शिरश्छेदनप्रदर्शनेन कृष्णव्यामोहनम् ॥ २ ॥
ततो मुहूर्तेन प्रतिबुद्धेन कृष्णेन स्वानुभूतस्य मायिकत्वाध्यवसायः ॥ ३ ॥

Mahabharata - Vana Parva - Chapter Text

३-२१-० (१६४७०)
वासुदेव उवाच। ३-२१-०क्ष् (१८३८)
एवं स पुरुषव्याघ्रः साल्वो राज्ञं महारिपुः ।
युध्यमानो मया सङ्ख्ये वियदभ्यगमत्पुनः ॥ ३-२१-१ (१६४७१)
ततः शतघ्नीश्च महागदाश्च
दीप्ताश्च शूलान्मुसलानसींश्च ।
चिक्षेप रोषान्मयि मन्दबुद्धिः
साल्वो महाराज जयाभिकाङ्क्षी ॥ ३-२१-२ (१६४७२)
तानाशुगैरापततोऽहमाशु
निवार्य तूर्णं खगमान्ख एव ।
द्विधा त्रिता चाच्छिनमाशु मुक्तै-
स्ततोऽन्तरिक्षे निनदो बभूव ॥ ३-२१-३ (१६४७३)
ततः शतसहस्रेण शराणां नतपर्वणाम् ।

दारुकं वाजिनश्चैव रथं च समवाकिरत् ॥ ३-२१-४ (१६४७४)
ततो मामब्रवीद्वीर दारुको विह्वलन्निव ।
स्थातव्यमिति तिष्ठामि साल्वबाणप्रपीडितः ।
अवस्थातुं न शक्नोमि अङ्गं मे व्यवसीदति ॥ ३-२१-५ (१६४७५)
इति तस्य निशम्याहं सारथेः करुणं वचः ।
अवेक्षमाणो यन्तारमपश्यं शरपीडितम् ॥ ३-२१-६ (१६४७६)
न तस्योरसि नो मूर्ध्नि न काये न भुजद्वये ।
अन्तरं पाण्डवश्रेष्ठ पश्याम्यनिचितं शरैः ॥ ३-२१-७ (१६४७७)
स तु बाणवरोत्पीडाद्विस्रवत्यसृगुल्बणम् ।
अभिवृष्टो यथा मेघैर्गिरिर्गैरिकधातुमान् ॥ ३-२१-८ (१६४७८)
अभीशुहस्तं तं दृष्ट्वा सीदन्तं सारथिं रणे ।
अस्तम्भयं महाबाहो साल्वबाणप्रपीडितम् ॥ ३-२१-९ (१६४७९)
अथ मां पुरुषः कश्चिद्द्वारकानिलयोऽब्रवीत् ।
त्वरितो रथमारोप्य सौहृदादिव भारत ॥ ३-२१-१० (१६४८०)
आहुकस्य वचो वीर तस्यैव परिचारकः ।
विषण्णः सन्नकण्ठेन तन्निबोध युधिष्ठिर ॥ ३-२१-११ (१६४८१)
द्वारकाधिपतिर्वीर आह त्वामाहुको वचः ।
केशवैहि विजानीष्व यत्त्वां पितृसखोऽब्रवीत् ॥ ३-२१-१२ (१६४८२)
उपयात्वा तु साल्वेन द्वारकां वृष्णिनन्दन ।
विषक्ते त्वयि दुर्धर्ष इतः शूरसुतो बलात् ॥ ३-२१-१३ (१६४८३)
तदलं साधुयुद्धेन निवर्तस्व जनार्दन ।
द्वारकामेव रक्षस्व कार्यमेतन्महत्तव ॥ ३-२१-१४ (१६४८४)
इत्यहं तस्य वचनं श्रुत्वा परमदुर्मनाः ।
निश्चयं नाधिगच्छामि कर्तव्यस्येतरस्य च ॥ ३-२१-१५ (१६४८५)
सात्यकिं बलदेवं च प्रद्युम्नं च महारथम् ।
जगर्हे मनसा वीर तच्छ्रुत्वा महदप्रियम् ॥ ३-२१-१६ (१६४८६)
अहं हि द्वारकायाश्च पितुश्च कुरुनन्दन ।
तेषु रक्षां समाधाय प्रयातः सौभयातने ॥ ३-२१-१७ (१६४८७)
बलदेवो महाबाहुः कच्चिज्जीवति शत्रुहा ।
सात्यकी रौक्मिणेयश्च चारुदेष्णश्च वीर्यवान् ।
साम्बप्रभृतयश्चैवेत्यहमासं सुदुर्मनाः ॥ ३-२१-१८ (१६४८८)
एतेषु हि नरव्याघ्र जीवत्सु न कथंचन ।
शक्यः शूरसुतो हन्तुमपि वज्रभृता स्वयम् ॥ ३-२१-१९ (१६४८९)
हतः शूरसुतो व्यक्तं व्यक्तं चैते परासवः ।
बलदेवमुखाः सर्व इति मे निश्चिता मतिः ॥ ३-२१-२० (१६४९०)
सोहं सर्वविनाशं तं चिन्तयानो मुहुर्मुहुः ।

अविह्वलो महाराज पुनः साल्वमयोधयम् ॥ ३-२१-२१ (१६४९१)
तदोऽपश्यं महाराज प्रपतन्तमहं तदा ।
सौभाच्छूरसुतं वीर ततो मां मोह आविशत् ॥ ३-२१-२२ (१६४९२)
तस्य रूपं प्रपततः पितुर्मम नराधिप ।
ययातेः क्षीणपुण्यस्य स्वर्गादिव महीतलम् ॥ ३-२१-२३ (१६४९३)
विशीर्णमलिनोष्णीपप्रकीर्णाम्बरमूर्धजः ।
प्रपतन्दृश्यते ह स्म क्षीणपुण्य इव ग्रहः ॥ ३-२१-२४ (१६४९४)
ततः शार्ङ्गं धनुःश्रेष्ठं करात्प्रपतितं मम ।
मोहापन्नश्च कौन्तेय रथोपस्थ उपाविशम् ॥ ३-२१-२५ (१६४९५)
ततो हाहाकृतं सर्वं सैन्यं मे गतचेतनम् ।
मां दृष्ट्वा रथनीडस्थं गतासुमिव भारत ॥ ३-२१-२६ (१६४९६)
प्रसार्य बाहू पततः प्रसार्य चरणावपि ।
रूपं पितुर्मे विबभौ शकुने- पततो यथा ॥ ३-२१-२७ (१६४९७)
तं पतन्तं महाबाहो शूलपट्टसपाणयः ।
अभिघ्नन्तो भृशं वीर मम चोतोह्यकम्पयन् ॥ ३-२१-२८ (१६४९८)
ततो मुहूर्तात्प्रतिलभ्य संज्ञा-
महं तदा वीर महाविमर्दे ।
न तत्रसौमं न रिपुं च साल्वं
पश्यामि वृद्धं पितरं न चापि ॥ ३-२१-२९ (१६४९९)
ततो ममासीन्मनसि मायेयमिति निश्चितम् ।
प्रबुद्धोस्मि ततो भूयः शतशो वाऽकिरं शरान् ॥ ३-२१-३० (१६५००)

इति श्रीमन्महाभारते अरण्यपर्वणि अर्जुनाभिगमनपर्वणि
एकविंशोऽध्यायः ॥ २१ ॥

Mahabharata - Vana Parva - Chapter Footnotes

३-२१-८ बाणरोत्पीडात् क्षतस्थानात् । उल्वणमुत्कटम् ॥
३-२१-९ अस्तम्भयमाश्वासितवान् ॥
३-२१-१२ पितृसख आहुकः ॥
३-२१-१३ विषक्तेऽन्यत्र व्यासक्ते । शूरसुतो वसुदेवः ॥
३-२१-१६ जगर्हे निन्दितवान् ॥

---

वन-अध्यय०२२
॥ श्रीः ॥
३.२२. अध्यायः २२

Mahabharata - Vana Parva - Chapter Topics
कृष्णेन युधिष्ठिरंप्रति स्वेन साल्वसंहारकथनपूर्वकं सुभद्राभिमन्युमभ्यां सह द्वारकागमनम् ॥ १ ॥
धृष्टद्युम्नधृष्टकेतुभ्यां यथाक्रमं द्रौपदेयान्नकुलभार्यां स्वस्वनगरगमनम् ॥ २ ॥

Mahabharata - Vana Parva - Chapter Text

३-२२-० (१६५०१)
वासुदेव उवाच। ३-२२-०क्ष् (१८३९)
ततोऽहं भरतश्रेष्ठ प्रगृह्यरुचिरं धनुः ।
शरैरपातयं सौभाच्छिरांसि विबुधद्विषाम् ॥ ३-२२-१ (१६५०२)
शरांश्चाशीविषाकारानूर्ध्वगांस्तिग्मतेजसः ।
प्रैषयं साल्वराजाय शार्ङ्गमुक्तान्सुवाससः ॥ ३-२२-२ (१६५०३)
ततो नादृश्यत तदा सौभं कुरुकुलोद्वह ।
अन्तर्हितं माययाऽभूत्ततोऽहं विस्मितोऽभवम् ॥ ३-२२-३ (१६५०४)
अथ दानवसङ्घास्ते विकृताननमूर्धजाः ।
उदक्रोशन्महाराज धिष्ठिते मयि भारत ॥ ३-२२-४ (१६५०५)
ततोऽस्त्रं शब्दसाहं वै त्वरमाणो महारणे ।
अयोजयं तद्वधाय ततः शब्द उपारमत् ॥ ३-२२-५ (१६५०६)
हतास्ते दानवाः सर्वे यैः स शब्द उदीरितः ।
शरैरादित्यसंकशैर्ज्वलितैः शब्दसाधनैः ॥ ३-२२-६ (१६५०७)
तस्मिन्नुपरते शब्दे पुनरेवान्यतोऽभवत् ।
शब्दोऽपरो महाराज तत्रापि प्राहरं शरैः ॥ ३-२२-७ (१६५०८)
एवं दश दिशः सर्वास्तिर्यगूर्ध्वं च भारत ।
नादयामासुरसुरास्ते चापि निहता मया ॥ ३-२२-८ (१६५०९)
ततः प्राग्ज्योतिषं गत्वा पुनरेव व्यदृश्यत ।
सौभं कामगमं वीर मोहयन्मम चक्षुषी ॥ ३-२२-९ (१६५१०)
ततो लोकान्तकरणो दानवो दारुणाकृतिः ।
शिलावर्षेण महता सहसा मां समावृणोत् ॥ ३-२२-१० (१६५११)
सोहं पर्वतवर्षेण वध्यमानः समन्ततः ।
वल्मीक इव राजेन्द्र पर्वतोपचितोऽभवम् ॥ ३-२२-११ (१६५१२)
ततोऽहं पर्वतचितः सहयः सहसारथिः ।
अप्रख्यातिमियां राजन्सध्वजः पर्वतैश्चितः ॥ ३-२२-१२ (१६५१३)
ततो वृष्णिप्रवीरा ये ममासन्सैनिकास्तदा ।
ते भयर्ता दिशः सर्वे सहसा विप्रदुद्रुवुः ॥ ३-२२-१३ (१६५१४)

ततो हाहाकृतमभूत्सर्वं किल विशांपते ।
द्यौश्च भूमिश्च खं चैवादृश्यमाने तथा मयि ॥ ३-२२-१४ (१६५१५)
ततो विषण्णमनसो मम राजन्सुहृज्जनाः ।
रुरुदुश्चुक्रुशुश्चैव दुःखशोकसमन्विताः ॥ ३-२२-१५ (१६५१६)
द्विषतां च प्रहर्षोऽभूदार्तिश्च सुहृदामपि ।
एवं विजितवान्वीर पश्चादश्रौषमच्युत ॥ ३-२२-१६ (१६५१७)
ततोऽहमिन्द्रदयितं सर्वपाषाणभेदनम् ।
वज्रमुद्यम्य तान्सर्वान्पर्वतान्समशातयम् ॥ ३-२२-१७ (१६५१८)
ततः पर्वतभारार्ता मन्दप्राणविचेष्टिताः ।
हया मम महाराज वेपमाना इवाभवन् ॥ ३-२२-१८ (१६५१९)
मेघजाल इवाकाशे विदार्याभ्युदितं रविम् ।
दृष्ट्वा मां बान्धवाः सर्वे हर्षमाहारयन्पुनः ॥ ३-२२-१९ (१६५२०)
ततः पर्वतभारार्तान्मन्दप्राणविचेष्टितान् ।
हयान्संदृश्य मां सूतः प्राह तात्कालिकं वचः ॥ ३-२२-२० (१६५२१)
साधु संपश्य वार्ष्णेय साल्वं सौभपतिं स्थितम् ।
अलं कृष्णावमन्यैनं साधु यत्नं समाचर ॥ ३-२२-२१ (१६५२२)
मार्दवं सखितां चैव साल्वादद्य व्यपाहर ।
जहि साल्वं महाबाहो मैनं जीवय केशव ॥ ३-२२-२२ (१६५२३)
सर्वैः पराक्रमैर्वीर वध्यः शत्रुरमित्रहन् ।
न शत्रुरवमन्तव्यो दुर्बलोऽपि बलीयसा ।
योपिस्यात्पीठगः कश्चित्किं पुनः समरे स्थितः ॥ ३-२२-२३ (१६५२४)
स त्वं पुरुषशार्दूल सर्वयत्नैरिमं प्रभो ।
जहि वृष्णिकुलश्रेष्ठ मा त्वां कालोऽत्यगात्पुनः ॥ ३-२२-२४ (१६५२५)
जितवाञ्जामदग्न्यं यः कोटिवर्षगणान्बहून् ।
स एष नान्यैर्वध्यो हि त्वामृते नास्ति कश्चन ॥ ३-२२-२५ (१६५२६)
नैष मार्दवसाध्यो वै मतो नापि सखा तव ।
येन त्वं योधितो वीर द्वारका चावमर्दिता ॥ ३-२२-२६ (१६५२७)
एवमादि तु कौन्तेय श्रुत्वाऽहं सारथेर्वचः ।
तत्वमेतदिति ज्ञात्वा युद्धे मतिमधारयम् ॥ ३-२२-२७ (१६५२८)
वधाय साल्वराजस्य सौभस्य च निपातने ।
दारुकं चाब्रुवं वीर मुहूर्तं स्थीयतामिति ॥ ३-२२-२८ (१६५२९)
ततोऽप्रतिहतं दिव्यमभोद्यमतिवीर्यवत् ।
आग्नेयमस्त्रं दयितं सर्वसाहं महाप्रभम् ।
योजयं तत्रधनुषा दानवान्तकरं रणे ॥ ३-२२-२९ (१६५३०)
यक्षाणां राक्षसानां च दानवानां च संयुगे ।
राज्ञां च प्रतिलोमानां भस्मान्तकरणं महत् ॥ ३-२२-३० (१६५३१)

क्षुरान्तममलं चक्रं कालान्तकयमोपमम् ।
अनुमन्त्र्याहमतुलं द्विषतां विनिबर्हणम् ॥ ३-२२-३१ (१६५३२)
जहि सौभं स्ववीर्येण ये चात्र रिपवो मम ।
इत्युक्त्वा भुजवीर्येण तस्मै प्राहिणवं रुषा ॥ ३-२२-३२ (१६५३३)
रूपं सुदर्शनस्यासीदाकाशे पततस्तदा ।
द्वितीयस्येव सूर्यस् युगान्ते प्रतपिष्यतः ॥ ३-२२-३३ (१६५३४)
तत्समासाद्य नगरं सौभं व्यपगतत्विषम् ।
मध्येन पाटयामास क्रकचो दार्विवोच्छ्रितम् ॥ ३-२२-३४ (१६५३५)
द्विधा कृतं ततः सौभं सुदर्शनबलाद्धतम् ।
महेश्वरशरोद्धूतं पपात त्रिपुरं यथा ॥ ३-२२-३५ (१६५३६)
तस्मिन्निपतिते सौभे चक्रमागात्करं मम ।
पुनश्चादाय वेगेन साल्वायेत्यहमब्रुवम् ॥ ३-२२-३६ (१६५३७)
ततः साल्वं गदां गुर्वीमाविध्यन्ते महाहवे ।
द्विधा चकार सहसा प्रजज्वाल च तेजसा ॥ ३-२२-३७ (१६५३८)
तस्मिन्विनिहते वीरे दानवास्त्रस्तचेतसः ।
हाहाभूता दिशो जग्मुरर्दिता मम सायकैः ॥ ३-२२-३८ (१६५३९)
ततोऽहंसमवस्थाप्यरथं सौभसमीपतः ।
शङ्खं प्रध्माप्य हर्षेण सुहृदः पर्यहर्षयम् ॥ ३-२२-३९ (१६५४०)
तन्मेरुशिखराकारं विध्वस्ताट्टालगोपुरम् ।
दह्यमानमभिप्रेक्ष्य स्त्रियस्ताः संप्रदुद्रुवुः ॥ ३-२२-४० (१६५४१)
एवं निहत्य समरे सौभं साल्वं निपात्य च ।
आनर्तात्पुनरागम्य सुहृदां प्रीतिमावहम् ॥ ३-२२-४१ (१६५४२)
तदेतत्कारणं राजन्नागमं नागसाह्वयम् ।
यद्यागां परवीरघ्न न हि जीवेत्सुयोधनः ॥ ३-२२-४२ (१६५४३)
मय्यागतेऽथवा वीर द्यूतं न भविता तथा ।
अद्याहं किं करिष्यामि भिन्नसेतुरिवोदकम् ॥ ३-२२-४३ (१६५४४)
वैशंपायन उवाच। ३-२२-४४क्ष् (१८४०)
एवमुक्त्वा महाबाहुः कौरवं पुरुषोत्तमः ।
आमन्त्र्य प्रययौ श्रीमान्पाण्डवान्मधुसूदनः ॥ ३-२२-४४ (१६५४५)
अभिवाद्य महाबाहुर्धर्मराजं युधिष्ठिरम् ।
राज्ञा मूर्धन्युपाघ्रातो भीमेन च महाभुजः ॥ ३-२२-४५ (१६५४६)
परिष्वक्तश्चार्जुनेन यमाभ्यां चाभिवादितः ।
संमानितश्च धौम्येन द्रौपद्या चार्चितोश्रुभिः ॥ ३-२२-४६ (१६५४७)
सुभद्रामभिमन्युं च रथमारोप्य काञ्चनम् ।
आरुरोह रथं कृष्णः पाण्डवैरभिपूजितः ॥ ३-२२-४७ (१६५४८)
शैब्यसुग्रीवयुक्तेन रथेनादित्यवर्चसा ।

द्वारकां प्रययौ कृष्णः समाश्वास्य युधिष्ठिरम् ॥ ३-२२-४८ (१६५४९)
ततः प्रयते दाशार्हे धृष्टद्युम्नोपि पार्षतः ।
द्रौपदेयानुपादाय प्रययौ स्वपुरं तदा ॥ ३-२२-४९ (१६५५०)
धृष्टकेतुः स्वसारं च समादायाथ चेदिराट् ।
जगाम पाण्डवान्दृष्ट्वा रम्यां शुक्तिमतीं पुरीम् ॥ ३-२२-५० (१६५५१)
केकयाश्चाप्यनुज्ञाताः कौन्तेयेनामितौजसा ।
आमन्त्र्य पाण्डवान्सर्वान्प्रययुस्तेऽपि भारत ॥ ३-२२-५१ (१६५५२)
ब्राह्मणाश्च विशश्चैव तथाविषयवासिनः ।
विसृज्यमानाः सुभृशं न त्यजन्ति स्म पाण्डवान् ॥ ३-२२-५२ (१६५५३)
समवायः स राजेन्द्र सुमहाद्भुतदर्शनः ।
आसीन्महात्मनां तेषां काम्यके भरतर्षभ ॥ ३-२२-५३ (१६५५४)
युधिष्ठिरस्तु विप्रांस्ताननुमान्य महामनाः ।
शशास पुरुषान्काले रथान्योजयतेति वै ॥ ३-२२-५४ (१६५५५)

इति श्रीमन्महाभारते अरण्यपर्वणि अर्जुनाभिगमनपर्वणि
द्वाविंशोऽध्यायः ॥ २२ ॥

Mahabharata - Vana Parva - Chapter Footnotes

३-२२-२ सुवाससः सुपुङ्खान् ॥
३-२२-४ विकृताननमूर्धजा इति तेषां स्वरूपकथनं नतु तद्दर्शनम्
। धिष्ठिते प्रागल्भ्येन स्थिते। विष्ठिते इति पाठेपि सएवार्तः ॥
३-२२-५ शब्दएव साहो लक्ष्यं यत्रतत्तथा शब्दवेधि
शब्देऽस्त्रमुपारमन्नयपतदित्यर्थः शब्दसाहं शब्दबाधानिवारकं
वा ॥
३-२२-६ शब्दसाधनैः शब्दएव साधनं लक्ष्यसंबन्धे कारणं
येषां तैः । पुरस्यादृश्यत्वात् ॥
३-२२-९ आग्ज्येतिषं पूर्वसमुद्रतीरस्थं नगरविशेषम् । यतः
कामगमं अतः प्राग्ज्योतिषं गत्वा व्यदृश्यत ॥
३-२२-१२ अप्रख्यातिं अदर्शनम् । इयां प्राप्तवान् ॥
३-२२-१६ एवं मां सौभराजो विजितवान् एतदप्यहं पश्चादश्रौषं
पूर्वं मोहमापन्नः सन् संज्ञालाभानन्तरं श्रुतवान्सारथिमुखेनेति
शेषः । एवमज्ञातवान्वीरेति ट। पाठः ॥
३-२२-१७ इन्द्रदयितं इन्द्रदैवत्यम् । वज्रं वज्रास्त्रम् समशातयं
नाशितवान् ॥
३-२२-१९ आहारयन्प्राप्तवन्तः ॥
३-२२-२० तात्कालिकं तत्कालयोग्यम् ॥

३-२२-२३ पीठगः स्वासनस्थः । अयुध्यमानोपीत्यर्थः ॥
३-२२-३० प्रतिलोमानां विपरिताचाराणां म्लेच्छानाम् ॥
३-२२-३१ क्षुरान्तं तीक्ष्णपरिधि ॥
३-२२-३२ तस्मै सौभाय । प्राहिणवं प्रहितवान् ॥
३-२२-३३ युगान्ते परिवेष्टत इति ट । पाठः ॥
३-२२-३४ क्रकचः दन्तुरखङ्गः ॥
३-२२-४३ उदकं धारयितुमिति शेषः ॥
३-२२-५० धृष्टकेतुः शिशुपालसुतः । स्वसारं करेणुमतीं नकुलभार्याम् ॥
३-२२-५१ केकयाः सहदेवश्यालाः ॥
३-२२-५४ शशास आज्ञापयामास ॥

---

वन-अध्यय०२३
॥ श्रीः ॥
३.२३. अध्यायः २३

Mahabharata - Vana Parva - Chapter Topics
कृष्णादीनां पाण्डवान्दृष्ट्वा वनात्स्वनगरगमनानन्तरं पाण्डवैः
पौराणामाश्वासनपूर्वकं नगरप्रति निवर्तनम् ॥ १ ॥

Mahabharata - Vana Parva - Chapter Text

३-२३-० (१६५५६)
वैशंपायन उवाच । ३-२३-०क्ष् (१८४१)
तस्मिन्दशार्हाधिपतौ प्रयाते
युधिष्ठिरो भीमसेनार्जुनौ च ।
यमौ च कृष्ण च पुरोहितश्च
रथान्महार्हान्परमाश्वयुक्तान् ॥ ३-२३-१ (१६५५७)
अस्थाय वीराः सहिता वनाय
प्रतस्थिरे भूतपतिप्रकाशाः ।
हिरण्यनिष्कान्वसनानि गाश्च
गदाय शिक्षाक्षरमन्त्रविद्भ्यः ॥ ३-२३-२ (१६५५८)
प्रेष्याः पुरो विंशतिरात्तशस्त्रा
धनूंषि शस्त्राणि शरांश्च दीप्तान् ।
मौर्वीश्च यन्त्राणि च सायकांश्च
सर्वे समादाय जघन्यमीयुः ॥ ३-२३-३ (१६५५९)
तत्सतु वासांसि च राजपुत्र्या

धात्र्यश्च दास्यश्च विभूषणं च ।
तदिन्द्रसेनस्त्वरितः प्रगृह्य
जघन्यमेवोपययौ रथेन ॥ ३-२३-४ (१६५६०)
ततः कुरुश्रेष्ठमुपेत्य पौराः
प्रदक्षिणं चक्रुरदीनसत्वाः ।
तं ब्राह्मणाश्चाभ्यवदन्प्रसन्ना
मुख्याश्च सर्वे कुरुजाङ्गलानाम् ॥ ३-२३-५ (१६५६१)
स चापि तानभ्यवदत्प्रसन्नः
सहैव तैर्भ्रातृभिर्धर्मराजः ।
तस्थौ च तत्राधिपतिर्महात्मा
दृष्ट्वा जनौघं कुरुजाङ्गलानाम् ॥ ३-२३-६ (१६५६२)
पितेव पुत्रेषु स तेषु भावं
चक्रे कुरूणामृषभो महात्मा ।
ते चापि तस्मिन्भरतप्रबर्हे
तथा बभूवुः पितरीव पुत्राः ॥ ३-२३-७ (१६५६३)
ततस्तमासाद्य महाजनौघाः
कुरुप्रवीरं परिवार्य तस्थुः ।
हानाथ हाधर्म इति ब्रुवाणा
हीताश्च सर्वेऽऽश्रुमुखा बभूवुः ॥ ३-२३-८ (१६५६४)
वरः कुरूणामधिपः प्रजानां
पितेव पुत्रानपहाय चास्मान् ।
पौरानिमाञ्जानपदांश्च सर्वान्
हित्वा प्रयातः क्वनु धर्मराजः ॥ ३-२३-९ (१६५६५)
धिग्धार्तराष्ट्रं सुनृशंसबुद्धिं
धिक्सौबलं पापमतिं च कर्णम् ।
अनर्थमिच्छन्ति नरेन्द्र पापा
ये धर्मनित्यस्य सतस्तवोग्राः ॥ ३-२३-१० (१६५६६)
स्वयं निवेश्याप्रतिमं महात्मा
पुरं महादेवपुरप्रकाशम् ।
शतक्रतुप्रस्थममोघकर्मा
हित्वा प्रयातः क्वनु धर्मराजः ॥ ३-२३-११ (१६५६७)
चकार यामप्रतिमां महात्मा
सभां मयो देवसभाप्रकाशाम् ।
तां देवगुप्तामिव देवमायां
हित्वाप्रयातः क्वनु धर्मराजः ॥ ३-२३-१२ (१६५६८)
तान्धर्मकामार्थविदुत्तमौजा

बीभत्सुरुच्चैः सहितानुवाच ।
आदास्यते वासमिमं निरुष्य
रवनेषु राजा द्विषतां यशांसि ॥ ३-२३-१३ (१६५६९)
द्विजातिमुख्याः सहिताः पृथक्व
भवद्भिरासाद्य तपस्विनश्च ।
प्रसाद्य धर्मार्थविदश्च वाच्या
यथार्थसिद्धिः परमा भवेन्नः ॥ ३-२३-१४ (१६५७०)
इत्येवमुक्ते वचनेऽऽर्जुनेन
ते ब्राह्मणाः सर्ववर्णाश्च राजन् ।
मुदाऽभ्यनन्दन्सहिताश्च चक्रुः
प्रदक्षिणं धर्मभृतांवरिष्ठम् ॥ ३-२३-१५ (१६५७१)
आमन्त्र्य पार्थं च वृकोदरं च
धनंजयं याज्ञसेनीं यमौ च ।
प्रतस्थिरे राष्ट्रमरपेतहार्षा
युधिष्ठिरेणानुमता यथास्वम् ॥ ३-२३-१६ (१६५७२)

इति श्रीमन्महाभारते अरण्यपर्वणि अर्जुनाभिगमनपर्वणि
त्रयोविंशोऽध्यायः ॥ २३ ॥
Mahabharata - Vana Parva - Chapter Footnotes

३-२३-१ भूतपतिः शिवः । निष्कः अष्टोत्तरशतं सुवर्णानि
वक्षोऽलंकारो वा। शिक्षेतिव्याकरणाद्यङ्गानामुपलक्षणम्। अक्षराणि
वेदः। नित्यत्वात्क्षरणशून्यः। मन्त्रः प्रणवः ॥
३-२३-३ पुर प्रागेव । जघन्यं पाश्चात्यं द्वारकादेशम् ॥
३-२३-४ राजपुत्र्या सुभद्रया सहा ॥
३-२३-७ तदा बभूवुरिति झ । पाठः ॥
३-२३-८ हीताः कुराज्ये तिष्ठाम इति लज्जिताः ॥
३-२३-१० अनर्थं द्यूतजम् ॥
३-२३-१३ बीभत्सुरर्जुनः आदास्यते आच्छिद्य ग्रहीष्यति । यशांसि
यशस्कराणि दिव्यसभादीनि ॥
३-२३-१४ भवद्भिः पौरैः वाच्याः प्रार्थ्याः ॥

---

वन-अध्यय०२४
॥ श्रीः ॥
३.२४. अध्यायः २४

Mahabharata - Vana Parva - Chapter Topics

पाण्डवैश्चिरावस्थाननिर्धारणपूर्वकं द्वैतवनप्रवेशः ॥ १ ॥

Mahabharata - Vana Parva - Chapter Text

३-२४-० (१६५७३)
वैशंपायन उवाच। ३-२४-०क्ष् (१८४२)
ततस्तेषु प्रयातेषु कौन्तेयः सत्यसंगरः ।
अभ्यभाषत धर्मात्मा भ्रातॄन्सर्वान्युधिष्ठिरः ॥ ३-२४-१ (१६५७४)
द्वादशेमाः समाऽस्माभिर्वस्तव्यं निर्जने वने ।
समीक्षध्वं महारण्ये देशं बहुमृगद्विजम् ॥ ३-२४-२ (१६५७५)
बहुपुष्पफलं रम्यं शिवं पुण्यजनोचितम् ।
यत्रेमा द्वादश समाः सुखं प्रतिवसेमहि ॥ ३-२४-३ (१६५७६)
एवमुक्ते प्रत्युवाच धर्मराजं धनंजयः ।
गुरुवन्मानववरं मानयित्वा मनस्विनम् ॥ ३-२४-४ (१६५७७)
भवानेव महर्षीणां वृद्धानां पर्युपासिता ।
अज्ञातं मानुषे लोके भवतो नास्ति किंचन ॥ ३-२४-५ (१६५७८)
त्वया ह्युपासिता नित्यं ब्राह्मणा वेदपारगाः ।
द्वैपायनप्रभृतयो नारदश्च महातपाः ॥ ३-२४-६ (१६५७९)
यः सर्वलोकद्वाराणि नित्यं संचरते वशी ।
देवलोकाद्ब्रह्मलोकं गन्धर्वाप्सरसामपि ॥ ३-२४-७ (१६५८०)
अनुभावांश्च जानासि ब्राह्मणानां न संशयः ।
प्रभावांश्चैव वेत्थ त्वं सर्वेषामेव पार्थिव ॥ ३-२४-८ (१६५८१)
त्वमेव राजञ्जानासि श्रेयःकारणमेव च ।
यत्रेच्छसि महाराज निवासं तत्र कुर्महे ॥ ३-२४-९ (१६५८२)
इदं द्वैतवनं नाम सरः पुण्यजनोषितम् ।
बहुपुष्पफलं रम्यं नानाद्विजनिषेवितम् ॥ ३-२४-१० (१६५८३)
अत्रेमा द्वादश समा विहरेमेति रोचये ।
यदि तेऽनुमतं राजन्किमन्यन्मन्यते भवान् ॥ ३-२४-११ (१६५८४)
युधिष्ठिर उवाच। ३-२४-१२क्ष् (१८४३)
ममाप्येतन्मतं पार्थ त्वया यत्समुदाहृतम् ।
गच्छामः पुण्यविख्यातं महद्द्वैतवनं सरः ॥ ३-२४-१२ (१६५८५)
वैशंपायन उवाच। ३-२४-१३क्ष् (१८४४)
ततस्ते प्रययुः सर्वे पाण्डवा धर्मचारिणः ।
ब्राह्मणैर्बहुभिः सार्धं पुण्यं द्वैतवनं सरः ॥ ३-२४-१३ (१६५८६)
ब्राह्मणाः साग्निहोत्राश्च तथैव च निरग्नयः ।
स्वाध्यायिनो भिक्षवश्च तथैव वनवासिनः ॥ ३-२४-१४ (१६५८७)

बहवो ब्राह्मणास्तत्र परिवव्रुर्युधिष्ठिरम् ।
तपस्विनः सत्यशीलाः शतशः संशितव्रताः ॥ ३-२४-१५ (१६५८८)
ते यात्वा पाण्डवास्तत्रब्राह्मणैर्बहुभिः सह ।
पुण्यं द्वैतवनं रम्यं विविशुर्भरतर्षभाः ॥ ३-२४-१६ (१६५८९)
तत्सालतालाम्रमधूकनीप-
कदम्बसर्जार्जुनकर्णिकारैः ।
तपात्यये पुष्पधरैरुपेतं
महावनं राष्ट्रपतिर्ददर्श ॥ ३-२४-१७ (१६५९०)
महाद्रुमाणां शिखरेषु तस्थु-
र्मनोरमां वाचमुदीरयन्तः ।
मयूरदात्यूहचकोरसङ्घा-
स्तस्मिन्वने बर्हिणकोकिलाश्च ॥ ३-२४-१८ (१६५९१)
करेणुयूथैः सह यूथपानां
मदोत्कटानामचलप्रभाणाम् ।
महान्ति यूथानि महाद्विपानां
तस्मिन्वने राष्ट्रपतिर्ददर्श ॥ ३-२४-१९ (१६५९२)
मनोरमां भोगवतीमुपेत्य
पूतात्मनां चीरजटाधराणाम् ।
तस्मिन्वने धर्मभृतां निवासे
ददर्श सिद्धर्षिगणाननेकान् ॥ ३-२४-२० (१६५९३)
ततः स यानादवरुह्य राजा
सभ्रातृकः सजनः काननं तत् ।
विवेश धर्मात्मवतां वरिष्ठ-
स्त्रिविष्टपं शक्र इवामितौजाः ॥ ३-२४-२१ (१६५९४)
तं सत्यसन्धं सहिताऽभिपेतु-
र्दिदृक्षवश्चारणसिद्धसङ्घाः ।
वनौकसश्चापि नेरन्द्रसिंहं
मनस्विनं तं परिवार्य तस्थुः ॥ ३-२४-२२ (१६५९५)
स तत्रवृद्धानभिवाद्य सर्वान्
प्रत्यर्चितो राजवद्देववच्च ।
विवेश सर्वैः सहितो द्विजाग्र्यैः
कृताञ्जलिर्धर्मभृतां वरिष्ठः ॥ ३-२४-२३ (१६५९६)
स पुण्यशीलः पितृवन्महात्मा
तपस्विभिर्मपरैरुपेत्य ।
प्रत्यर्चितः पुष्पधरस्य मूले
महाद्रुमस्योपविवेश राजा ॥ ३-२४-२४ (१६५९७)

भीमश्च कृष्णा च धनंजयश्च
यमौ च ते चानुचरा नरेन्द्रम् ।
विमुच्यवाहानवशाश्च सर्वे
तत्रोपतस्थुर्भरतप्रबर्हाः ॥ ३-२४-२५ (१६५९८)
लतावतानावनतः स पाण्डवै-
र्महाद्रुमः पञ्चभिरेव धन्विभिः ।
बभौ निवासोपगतैर्महात्मभि-
र्महागिरिर्वारणयूथपैरिव ॥ ३-२४-२६ (१६५९९)

इति श्रीमन्महाभारते अरण्यपर्वणि अर्जुनाभिगमनपर्वणि
चतुर्विंशोऽध्यायः ॥ २४ ॥
Mahabharata - Vana Parva - Chapter Footnotes

३-२४-१ सत्यसंगर सत्यप्रतिज्ञः ॥
समाः वर्षाणि । संधिरार्षः ॥
३-२४-८ अनुभावान् कर्तव्याकर्तव्यविषयान्निश्चयान् । प्रभावो
निग्रहानुग्रहशक्तिः। सर्वा गतीर्विजानासि इति क। पाठः ॥
३-२४-१० द्वैतं द्वौ शोकमोहौ इतौ गतौ यस्मात्तद्वीतं द्वीतमेव
द्वैतम् । स्वार्थे तद्धितः। वनं जलं यस्मिन् द्वैतवनम् ॥
३-२४-११ विहरेम प्रीत्यानयेम ॥
३-२४-१६ यात्वा गत्वा ॥
३-२४-१७ तपात्यये वर्षासु ॥
३-२४-१९ करेणुः हस्तिनी ॥
३-२४-२० भोगवतीं सरस्वतीं नदीम् ॥
३-२४-२२ चारणाः देवगायनाः ॥
३-२४-२४ महाद्रुमः कदम्बः ॥
३-२४-२६ लतावतानावनतः वल्लीतन्तुभिरावृततया नम्रः ॥

---

वन-अध्यय०२५
॥ श्रीः ॥
३.२५. अध्यायः २५

Mahabharata - Vana Parva - Chapter Topics
मार्कण्डेयेन पाण्डवानुपेत्य धर्मोपदेशपूर्वकमुत्तरदिग्गमनम् ॥ १ ॥

Mahabharata - Vana Parva - Chapter Text

३-२५-० (१६६००)
वैशंपायन उवाच। ३-२५-०क्ष् (१८४५)
तत्काननं प्राप्य नरेन्द्रपुत्राः
सुखोचिता वासमुपेत्य कृच्छ्रम् ।
विजह्रुरिन्द्रप्रतिमाः शिवेषु
सरस्वतीसालवनेषु तेषु ॥ ३-२५-१ (१६६०१)
यतींश्च राजा स मुनींश्च सर्वा
स्तस्मिन्वने मूलफलैरुदग्रैः ।
द्विजातिमुख्यानृषभः कुरूणां
संतर्पयामास महानुभावः ॥ ३-२५-२ (१६६०२)
इष्टीश्च पित्र्याणि तथा क्रियाश्च
महावने वसतां पाण्डवानाम् ।
पुरोहितस्तत्र समृद्धतेजा-
श्चकार धौम्यः पितृवन्नृपाणाम् ॥ ३-२५-३ (१६६०३)
अपेत्य राष्ट्राद्वसतां तु तेषा-
मृषिः पुराणोऽतिथिराजगाम ।
तमाश्रमं तीव्रसमृद्धतेजा
मार्कण्डेयः श्रीमतां पाण्डवानाम् ॥ ३-२५-४ (१६६०४)
तमागतं ज्वलितहुताशनप्रभं
महामनाः कुरुवृषभो युधिष्ठिरः ।
अपूजयत्सुरऋषिमानवार्चितं
महामुनिं ह्यनुपमसत्ववीर्यवान् ॥ ३-२५-५ (१६६०५)
स सर्वविद्द्रौपदीं वीक्ष्य दीनां
युधिष्टिरं भीमसेनार्जुनौ च ।
संस्मृत्यरामं मनसा महात्मा
तपस्विमध्येऽस्मयतामितौजाः ॥ ३-२५-६ (१६६०६)
तं धर्मराजो विमना इवाब्रवी-
त्सर्वे ह्रिया सन्ति तपस्विनोऽमी ।
भवानिदं किं स्मयतीव हृष्ट-
स्तपस्विनां पश्यतां मामुदीक्ष्य ॥ ३-२५-७ (१६६०७)
मार्कण्डेय उवाच। ३-२५-८क्ष् (१८४६)
न तात हृष्यामि न च स्मयामि
प्रहर्षजो मां भजतेन दर्पः ।
तवापदं त्वद्य समीक्ष्य रामं
सत्यव्रतं दाशरथिं स्मरामि ॥ ३-२५-८ (१६६०८)
स चापि राजा सह लक्ष्मणेन

वने निवासं पितुरेव शासनात् ।
धन्वी चरन्पार्थ मयैव दृष्टो
गिरे पुरा ऋष्यमूकस्य सानौ ॥ ३-२५-९ (१६६०९)
सहस्रनेत्रप्रतिमो महात्मा
यमस्य नेता नमुचेश्च हन्ता ।
पितुर्निदेशादनघः स्वधर्मं
चरन्वने दाशरथिश्चकार ॥ ३-२५-१० (१६६१०)
स चापि शक्रस् समप्रभावो
महानुभावः समरेष्वजेयः ।
विहाय भोगानचरद्वनेषु
नेशे बलस्येति चरेदधर्मम् ॥ ३-२५-११ (१६६११)
भापाश्च नाभागभगीरथादयो
महीमिमां सागरान्तां विजित्य ।
सत्येन तेऽप्यजयस्तात लोका-
न्नेशे बलस्येति चरेदधर्मम् ॥ ३-२५-१२ (१६६१२)
अलर्कमाहुर्नवर्य सन्तं
सत्यव्रतं काशिकरूशराजम् ।
विहाय राज्यानि वसूनि चैव
नेशे बलस्येति चरेदधर्मम् ॥ ३-२५-१३ (१६६१३)
धात्रा विधिर्यो विहितः पुराणै-
स्तं पूजयन्तो नरवर्य सन्तः ।
सप्तर्षयः पार्थ दिवि प्रभान्ति
नेशे बलस्येति चरेदधर्मम् ॥ ३-२५-१४ (१६६१४)
महाबलान्पर्वतकूटमात्रा-
न्विषाणिनः पश्य गजान्नरेन्द्र ।
स्थितान्निदेशे नरवर्य धातु-
र्नेशे बलस्येति चरेदधर्मम् ॥ ३-२५-१५ (१६६१५)
सर्वाणि भूतानि नरेन्द्र पश्य
तथा यथावद्विहितं विधात्रा ।
स्वयोनितः कर्म सदाचरन्ति
नेसे बलस्येति चरेदधर्मम् ॥ ३-२५-१६ (१६६१६)
सत्येनं धर्मेण यथार्हवृत्त्या
ह्रिया तथा सर्वभूतान्यतीत्य ।
यशश्च तेजश्च तवापि दीप्तं
विभावसोर्भास्करस्येव पार्त ॥ ३-२५-१७ (१६६१७)
यथाप्रतिज्ञं च महानुभाव

कृच्छ्रं वने वासमिमं निरूष्य ।
ततः श्रियं तेजसा तेन दीप्ता-
मादास्वसे पार्थिव कौरेवभ्यः ॥ ३-२५-१८ (१६६१८)
वैशंपायन उवाच। ३-२५-१९क्ष् (१८४७)
तमेवमुक्त्वा वचनं महर्षि-
स्तपस्विमध्ये सहितं सुहृद्धिः ।
आमन्त्र्य धौम्यं सहितांश्च पार्थां-
स्ततः प्रतस्थे दिशमुत्तरां सः ॥ ३-२५-१९ (१६६१९)

इति श्रीमन्महाभारते अरण्यपर्वणि अर्जुनाभिगमनपर्वणि
पञ्चविंशोऽध्यायः ॥ २५ ॥
Mahabharata - Vana Parva - Chapter Footnotes

३-२५-१ महावनेष्वम्बुफलोचितेषु सरस्वतीति ख
। पाठः। भागीरथीसालवनेष्विति क। पाठः ॥
३-२५-३ इष्टीः दर्शपौर्णमासाद्याः । पित्र्याणि
पिण्डपितृयज्ञदर्सश्राद्धादीनि ॥
३-२५-४ राष्ट्रात् अपेत्य निर्गत्य वने वसताम् ॥
३-२५-६ अस्मयत विस्मितवान् ॥
३-२५-७ ह्रिया प्रागल्भ्यसंकोचेन ॥
३-२५-११ बलस्य बहुसामर्थ्यस्य ईशे प्रभवामीति हेतोरधर्मं न
चरेत् । शक्तौ सत्यां धर्ममेवाचरेन्नत्वधर्ममित्यर्थः। नेशो
बलस्येतीति क। पाठः ॥
३-२५-१४ धात्रा ईशेन पुराणैर्वेदवाक्यैर्विहितो विधिरग्निहोत्रादिः ॥
३-२५-१५ पशवोऽपि बलवानस्मीति दर्पेणाधर्मं न चरन्तीत्याह
महाबलानिति । विषाणं दन्तः ॥
३-२५-१७ विभा प्रभा सैव वसु वित्तं यस्य ॥
३-२५-१८ आदास्यते ग्रहीष्यसि ॥

---

वन-अध्यय०२६
॥ श्रीः ॥
३.२६. अध्यायः २६

Mahabharata - Vana Parva - Chapter Topics
दाल्भ्येन युधिष्ठिरंप्रति ब्राह्मणस्य क्षत्रवृद्धिकारणत्वकधनम्
॥ १ ॥

महर्षीणां युधिष्ठिराभिगमनम् ॥ २ ॥

Mahabharata - Vana Parva - Chapter Text

३-११-० (१६६२०)
वैशंपायन उवाच। ३-११-०क्ष् (१८४८)
वसत्सु वै द्वैतवने पाण्डवेषु महात्मसु ।
अनुकीर्णं महारण्यं ब्राह्मणैः समपद्यत ॥ ३-११-१ (१६६२१)
ईर्यमाणेन सततं ब्रह्मघोषेण सर्वशः ।
ब्रह्मलोकसमं पुण्यमासीद्द्वैतवनं सरः ॥ ३-११-२ (१६६२२)
यजुषामृचां साम्नां च गद्यानां चैव सर्वशः ।
आसीदुच्चार्यमाणानां निःस्वनो हृदयंगमः ॥ ३-११-३ (१६६२३)
ज्याघोषश्चैव पार्थानां ब्रह्मघोषश्च धीमताम् ।
संसृष्टं ब्रह्मणा क्षत्रं भूय एव व्यरोचत ॥ ३-११-४ (१६६२४)
अथाब्रवीद्बको दाल्भ्यो धर्मराजं युधिष्ठिरम् ।
सन्ध्यां कौन्तेयमासीनमृषिभिः परिवारितम् ॥ ३-११-५ (१६६२५)
पश्य द्वैतवने पार्थ ब्राह्मणानां तपस्विनाम् ।
होमवेलां कुरुश्रेष्ठ संप्रज्वलितपावकाम् ॥ ३-११-६ (१६६२६)
चरन्ति धर्मं पुण्येऽस्मिंस्त्वया गुप्ता धृतव्रताः ।
भृगवोऽङ्गिरसश्चैव वासिष्ठाः काश्यपैः सह ॥ ३-११-७ (१६६२७)
आगस्त्याश्च महाभागा आत्रेयाश्चोत्तमव्रताः ।
सर्वस्य जगतः श्रेष्ठा ब्राह्मणाः संगतास्त्वया ॥ ३-११-८ (१६६२८)
इदं तु वचनं पार्थ शृण्वेकाग्रमना मम ।
भ्रातृभिः सह कौन्तेय यत्त्वां वक्ष्यामि कौरव ॥ ३-११-९ (१६६२९)
ब्राह्म क्षत्रेण संसृष्टं क्षत्रं च ब्रह्मणा सह ।
उदीर्णे दहतः शत्रून्वनानीवाग्निमारुतौ ॥ ३-११-१० (१६६३०)
नाब्राह्मणस्तात चिरं बुभूषे-
दिच्छन्नमं लोकममुं च जेतुम् ।
विनीतधर्मार्थमपेतमोहं
लब्ध्वा द्विजं हन्ति नृपः सपत्नान् ॥ ३-११-११ (१६६३१)
चरन्नैश्रेयसं धर्मं प्रजापालनकारितम् ।
नाध्यगच्छद्बलिर्लोके तीर्थमन्यत्र वै द्विजात् ॥ ३-११-१२ (१६६३२)
अनूनमासीदसुरस्य कामै-
वैरोचनेः श्रीरपि चाक्षयाऽऽसीत् ।
लब्ध्वा महीं ब्राह्मणसंप्रयोगा-
त्तेष्वाचरन्दुष्टमयथो व्यनश्यत् ॥ ३-११-१३ (१६६३३)

नाब्राह्मणं भूमिरियं सभूति-
र्वर्णं द्वितीयं भजते चिराय ।
समुद्रनेमिर्नमते तु तस्मै
यं ब्राह्मणः शास्ति नयैर्विनीतम् ॥ ३-११-१४ (१६६३४)
कुञ्चरस्येव संग्रामे परिगृह्याङ्कुशग्रहम् ।
ब्राह्माणैर्विप्रहीनस्य क्षत्रस्य क्षीयते बलम् ॥ ३-११-१५ (१६६३५)
ब्राह्मण्यनुपमा दृष्टिः क्षात्रमप्रतिमं बलम् ।
तौ यदा चरतः सार्धं तदा लोकः प्रसीदती ॥ ३-११-१६ (१६६३६)
यथा हि सुमहानग्निः कक्षं दहति सानिलः ।
तथा दहति राजन्यो ब्राह्मणेन समं रिपुम् ॥ ३-११-१७ (१६६३७)
ब्राह्मणेष्वेव मेधावी बुद्धिपर्येषणं चरेत् ।
अलब्धस्य च लाभाय लब्धस्य परिवृद्धये ॥ ३-११-१८ (१६६३८)
अलब्धलाभाय च लब्धवृद्धये ।
यथार्हतीर्थप्रतिपादनाय ।
यशस्विनं वेदविदं विपश्चितं
बहुश्रुं ब्राह्मणमेव वासयेत् ॥ ३-११-१९ (१६६३९)
ब्राह्मणेषूत्तमा भक्तिस्तव नित्यं युधिष्ठिर ।
तेन ते सर्वलोकेषु दीप्यते प्रथितं यशः ॥ ३-११-२० (१६६४०)
वैशंपायन उवाच। ३-११-२१क्ष् (१८४९)
ततस्ते ब्राह्मणाः सर्वे बकं दाल्भ्यमंपूजयन् ।
युधिष्ठिरं स्तूयमाने भूयः सुमनसोऽभवन् ॥ ३-११-२१ (१६६४१)
द्वैपायनो नारदश्च जामदग्न्यः पृथुश्रवाः ।
इन्द्रद्युम्नो भालुकिश्च कृतचेताः सहस्रपात् ॥ ३-११-२२ (१६६४२)
कर्णश्रवाश्च मुञ्जश्च लवणाश्वश्च काश्यपः ।
हारीतः स्थूणकर्णश्च अग्निवेश्योऽथ शौनकः ॥ ३-११-२३ (१६६४३)
कृतवाक्च सुवाश्चैव बृहदश्वो विभावसुः ।
ऊर्ध्वरेता वृषामित्रः सुहोत्रो होत्रवाहनः ॥ ३-११-२४ (१६६४४)
एते चान्ये च बहवो ब्राह्मणाः संशितव्रताः ।
अजातशत्रुमानर्चुः पुरंदरमिवर्षयः ॥ ३-११-२५ (१६६४५)

इति श्रीमन्महाभारते अरण्यपर्वणि अर्जुनाबिगमनपर्वणि
षड्विंशोऽध्यायः ॥ २६ ॥

Mahabharata - Vana Parva - Chapter Footnotes

३-११-१ अनुकीर्णं व्याप्तम् ॥
३-११-३ गद्यानां ब्राह्मणवाक्यानां पादाक्षरादिनियमहीनानाम् ।साम्नां

च निगमानां च भारतेति क। पाटः। भाष्याणां चैव सर्वश इति ख। पाठः। ॥
३-११-५ संध्यामुपास्येति शेषः ॥
३-११-११ नृपः अब्राह्मणो ब्राह्मणहीनो न बुभूषेत् न भवितुमिच्छेत् । तस्येच्छतोपि जयो दुर्लभ इत्यर्थः। विनीतौ सम्यक् शिक्षितौ धर्मार्थौ येन ॥
३-११-१२ तीर्थमुपायम् ॥
३-११-१३ वैरोचनेर्बलेः ॥
३-११-१५ अङ्कुशग्रहमङ्कुशेन निगृह्णाति तम् । परिगृह्य वर्जयित्वा। परिर्वर्जने ॥
३-११-१८ बुद्धिपर्येषणं बुद्धेः साकल्येन संग्रहणम् ॥
३-११-१९ यथार्हतीर्थे यथायोग्यपात्रे । प्रतिपादनाय दानाय ॥

---

वन-अध्यय०२७
॥ श्रीः ॥
३.२७. अध्यायः २७

Mahabharata - Vana Parva - Chapter Topics
भीमादिसनिधाने युधिष्ठिरंप्रति द्रौपद्याः सविषादवचनम् ॥
Mahabharata - Vana Parva - Chapter Text

३-२७-० (१६६४६)
वैशंपायन उवाच। ३-२७-०क्ष् (१८५०)
ततो वनगताः पार्थाः सायाह्ने सह कृष्णया ।
उपविष्टाः कथाश्चक्रुर्दुःखशोकपरायणाः ॥ ३-२७-१ (१६६४७)
प्रिया च दर्शनीया च पण्डिता च पतिव्रता ।
अथ कृष्णा धर्मराजमिदं वचनमब्रवीत् ॥ ३-२७-२ (१६६४८)
द्रौपद्युवाच। ३-२७-३क्ष् (१८५१)
न नूनं तस्य पापस्य दुःखमस्मासु किंचन ।
विद्यते धार्तराष्ट्रस्य नृशंसस्य दुरात्मनः ॥ ३-२७-३ (१६६४९)
यस्त्वां राजन्मया सार्धमजिनैः प्रतिवासितम् ।
वनं प्रस्थाप्य दुष्टात्मा नान्वतप्यत दुर्मतिः ॥ ३-२७-४ (१६६५०)
आयसं हृदयं नूनं तस्य दुष्कृतकर्मणः ।
यस्त्वां धर्मपरं श्रेष्ठं रूक्षाण्यश्रावयत्तदा ।
ग्वचनान्यपरोक्षाणि दुर्वाच्यानि च संसदि ॥' ३-२७-५ (१६६५१)
सुखोचितमदुःखार्हं दुरात्मा ससुहृद्गणः ।

ईदृशं दुःखमानीय मोदते पापपूरुषः ॥ ३-२७-६ (१६६५२)
चतुर्णामेव पापानामस्रं न पतितं तदा ।
त्वयि भारत निष्क्रान्ते वनायाजिनवाससि ॥ ३-२७-७ (१६६५३)
दुर्योधनस्य कर्णस्य शकुनेश्च दुरात्मनः ।
दुर्भ्रातुस्तस्य चोग्रस्य राजन्दुःखशासनस्य च ॥ ३-२७-८ (१६६५४)
इतरेषां तु सर्वेषां कुरूणां कुरुसत्तम ।
दुःखेनाभिपरीतानां नेत्रेभ्यः प्रापतज्जलम् ॥ ३-२७-९ (१६६५५)
इदं च शयनं दृष्ट्वा यच्चासीत्ते पुरातनम् ।
शोचामित्वां महाराजदुःखानर्हसुखोचितम् ॥ ३-२७-१० (१६६५६)
दान्तं यच्च सभामध्य आसनं रत्नभूषितम् ।
दृष्ट्वा कुशबृसीं चेमां शोको मां दारयत्ययम् ॥ ३-२७-११ (१६६५७)
यदपश्यं सभायां त्वां राजभिः परिवारितम् ।
तच्च राजन्नपश्यन्त्याः का सान्तिर्हृदयस्यमे ॥ ३-२७-१२ (१६६५८)
या त्वाऽहं चन्दनादिग्धमपश्यं सूर्यवर्चसम् ।
सा त्वां पङ्कमलादिग्धं दृष्ट्वा मुह्यामि भारत ॥ ३-२७-१३ (१६६५९)
या त्वाऽहं कौशिकैर्वस्त्रैः शुभ्रैराच्छादितं पुरा ।
दृष्टवत्यस्मिराजेनद्र साऽद्य पश्यामि चीरिणम् ॥ ३-२७-१४ (१६६६०)
यच्च तद्रुक्मपात्रीभिर्ब्राह्मणेभ्यः सहस्रशः ।
ह्रियते ते गृहादन्नं संस्कृतंसार्वकामिकम् ॥ ३-२७-१५ (१६६६१)
यतीनामगृहाणां ते तथैव गृहमेधिनाम् ।
दीयते भोजनं राजन्नतीव गुणवत्प्रभो ॥ ३-२७-१६ (१६६६२)
सत्कृतानि सहस्राणि सर्वकामैः पुरा गृहे ।
सर्वकामैः सुविहितैर्यदपूजयथा द्विजान् ।
तच्च राजन्नपश्यन्त्याः का शान्तिर्हृदयस्य मे ॥ ३-२७-१७ (१६६६३)
यत्ते भ्रातॄन्महाराज युवानो मृष्टकुण्डलाः ।
अभोजयन्त मृष्टान्नैः सूदाः परमसंस्कृतैः ॥ ३-२७-१८ (१६६६४)
सर्वांस्तानद्य पश्यामि वने वन्येन जीविनः ।
अदुःखार्हान्मनुष्येन्द्र नोपशाम्यति मे मनः ॥ ३-२७-१९ (१६६६५)
भीमसेनमिमं चापि दुःखितं वनवासिनम् ।
ध्यायतः किं न मन्युस्ते प्राप्ते काले विवर्धते ॥ ३-२७-२० (१६६६६)
भीमसेनं हि कर्माणि स्वयं कुर्वाणमच्युतम् ।
सुखार्हं दुःखितं दृष्ट्वा कस्माद्राजन्नुपेक्षसे ॥ ३-२७-२१ (१६६६७)
सत्कृतं विविधैर्यानैर्वस्त्रैरुच्चावचैस्तथा ।
तं ते वनगतं दृष्ट्वा कस्मान्मन्युर्न वर्धते ॥ ३-२७-२२ (१६६६८)
अयं कुरून्रणे सर्वान्हन्तुमुत्सहते प्रभुः ।
त्वत्प्रतिज्ञां प्रतीक्षंस्तु सहतेऽयं वृकोदरः ॥ ३-२७-२३ (१६६६९)

योऽर्जुनेनार्जुनस्तुल्यो द्विबाहुर्बहुबाहुना ।
शरातिसर्गे शीघ्रत्वात्कालान्तकयमोपमः ॥ ३-२७-२४ (१६६७०)
यस् शस्त्रप्रतापेन प्रणताः सर्वपार्थिवाः ।
यज्ञे तव महाराज ब्राह्मणानुपतस्थिरे ॥ ३-२७-२५ (१६६७१)
तमिमं पुरुषव्याघ्रं पूजितं देवदानवैः ।
ध्यायन्तमर्जुनं दृष्ट्वा कस्माद्राजन्न कुप्यसि ॥ ३-२७-२६ (१६६७२)
दृष्ट्वा वनगतं पार्थमदुःखार्हं सुखोचितम् ।
न च तेवर्धते मन्युस्तेन मुह्यामि भारत ॥ ३-२७-२७ (१६६७३)
यो देवांश्च मनुष्यांश्च सर्पांश्चैकरथोऽजयत् ।
तं ते वनगतं दृष्ट्वा कस्मान्मन्युर्न वर्धते ॥ ३-२७-२८ (१६६७४)
यो यानैरद्भुताकारैर्हयैर्नागैश्च संवृतः ।
प्रसह्य वित्तान्यादत्त पार्थिवेभ्यः परंतप ॥ ३-२७-२९ (१६६७५)
क्षिपत्येकेन वेगेन पञ्चबाणशतानि यः ।
तं ते वनगतं दृष्ट्वा कस्मान्मन्युर्न वर्धते ॥ ३-२७-३० (१६६७६)
श्यामं बृहन्तं तरुणं चर्मिणामुत्तमं रणे ।
नकुलं ते वने दृष्ट्वा कस्मान्मन्युर्न वर्धते ॥ ३-२७-३१ (१६६७७)
दर्शनीयं च शूरं च माद्रीपुत्रं युधिष्ठिर। ३-२७-३२ब्सहदेवं
वने दृष्ट्वा कस्मात्क्षमसि पार्थिव ॥ ३-२७-३२ (१६६७८)
नकुलं सहदेवं च दृष्ट्वा ते दुःखितावुभौ ।
अदुःखार्हौ मनुष्येन्द्र कस्मान्मन्युर्न वर्धते ॥ ३-२७-३३ (१६६७९)
द्रुपदस्य कुले जातां स्नुषां पाण्डोर्महात्मनः ।
धृष्टद्युम्नस्य भगिनीं वीरपत्नीमनुव्रताम् ।
मां वै वनगतां दृष्ट्वा कस्मात्क्षमसि पार्थिव ॥ ३-२७-३४ (१६६८०)
नूनं च तव नैवास्ति मन्युर्भरतसत्तम ।
यत्ते भ्रातॄंश्च मां चैव दृष्ट्वा नव्यथते मनः ॥ ३-२७-३५ (१६६८१)
न निर्मन्युःक्षत्रियोऽस्ति लोके निर्वचनं स्मृतम् ।
तदद्य त्वयि पश्यामि क्षत्रिये विपरीतवत् ॥ ३-२७-३६ (१६६८२)
यो न दर्शयते तेजः क्षत्रियः काल आगते ।
सर्वभूतानि तं पार्थ सदा परिभवन्त्युत ॥ ३-२७-३७ (१६६८३)
तत्त्वया न क्षमा कार्या शत्रून्प्रति कथंचन ।
तेजसैव हि ते शक्या निहन्तुं नात्र संशयः ॥ ३-२७-३८ (१६६८४)
तथैव यः क्षमाकाले क्षत्रियो नोपशाम्यति ।
अप्रियः सर्वभूतानां सोमुत्रेह च नश्यति ॥ ३-२७-३९ (१६६८५)

इति श्रीमन्महाभारते अरण्यपर्वणि अर्जुनाभिगमनपर्वणि
सप्तविंशोऽध्यायः ॥ २७ ॥

३-२७-३ अस्मासु दिःखितेष्विति शेषः ॥
३-२७-६ आनीय प्रापय्य ॥
३-२७-७ अस्रं नेत्रजलम् ॥
३-२७-११ दान्तं गजदन्तमयम् । कुशबृसीं कुशासनम् ॥
३-२७-१३ आदिग्धं लिप्तम् ॥
३-२७-१४ कौशिकैः कोशजैः ॥
३-२७-१६ अगृहाणां ब्रह्मचारिणाम् ॥
३-२७-१७ सर्वकामैः काम्यमानैरन्नैः सर्वैः काभैर्मनोरथैर्द्विजान् अपूजयथाः ॥
३-२७-२४ अर्जुनेन कार्तवीर्येण ॥
३-२७-२९ आदत्त आत्तवान् ॥
३-२७-३१ चर्भिणां खड्गचर्मधराणाम् ॥
३-२७-३६ निर्वचनं क्षत्रियशब्दस्य क्षरते हिनस्तीति क्षत्रमिति ॥

---

वन-अध्यय०२८
॥ श्रीः ॥
३.२८. अध्यायः २८

Mahabharata - Vana Parva - Chapter Topics
द्रौपद्या युधिष्ठिरंप्रति कालभेदेन क्षमाकोपयोरवश्याश्रयणीयत्वे प्रमाणतया बलिप्रह्लादसंवादानुवादपूर्वकंप्रकृते कोपस्यावश्यादरणीयत्वोक्तिः ॥
Mahabharata - Vana Parva - Chapter Text

३-२८-० (१६६८६)
द्रौपद्युवाच। ३-२८-०क्ष् (१८५२)
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
प्रह्लादस्य च संवादं बलेर्वैरोचनस्य च ॥ ३-२८-१ (१६६८७)
असुरेन्द्रं महाप्राज्ञं धर्माणामागतागमम् ।
बलिः पप्रच्छ दैत्येनद्रं प्रह्लादं पितरं पितुः ॥ ३-२८-२ (१६६८८)
क्षमा स्विच्छ्रेयसी तात उताहो तेज इत्युत ।
एतन्मे संशयं तात यथावद्ब्रूहि पृच्छते ॥ ३-२८-३ (१६६८९)
श्रेयो यदत्र धर्मज्ञ ब्रूहि मे तदसंशयम् ।
करिष्यामि हि तत्सर्वं यथावदनुशासनम् ॥ ३-२८-४ (१६६९०)

तस्मै प्रोवाच तत्सर्वमेवं पृष्टः पितामहः ।
सर्वनिश्चयवित्प्राज्ञः संशयं परिपृच्छते ॥ ३-२८-५ (१६६९१)
प्रह्लाद उवाच। ३-२८-६क्ष् (१८५३)
न श्रेयः सततं तेजो न नित्यं श्रेयसी क्षमा ।
इति तात विजानीहि द्वयमेतदसंशयम् ॥ ३-२८-६ (१६६९२)
यो नित्यं क्षमते तात बहून्दोषान्स विन्दति ।
भृत्याः परिभवन्त्येनमुदासीनास्तथाऽरयः ॥ ३-२८-७ (१६६९३)
सर्वभूतानि चाप्यस् न नमन्ते कदाचन ।
तस्मान्नित्यं क्षमा तात पण्डितैरपि वर्जिता ॥ ३-२८-८ (१६६९४)
अवज्ञाय हितं भृत्या भजन्ते बहुदोषताम् ।
आदातुं चास्य वित्तानि प्रार्थयन्तेऽल्पचेतसः ॥ ३-२८-९ (१६६९५)
यानं वस्त्राण्यलंकाराञ्शयनान्यासनानि च ।
भोजनान्यथ पानानि सर्वोपकरणानि च ॥ ३-२८-१० (१६६९६)
आददीरन्नधिकृता यथाकाममचेतसः ।
प्रदिष्टानि च देयानि न दद्युर्भर्तृशासनात् ॥ ३-२८-११ (१६६९७)
न चैनं भर्तृपूजाभिः पूजयन्ति कदाचन ।
अवज्ञानं हि लोकेऽस्मिन्मरणादपि गर्हितम् ॥ ३-२८-१२ (१६६९८)
क्षमिणं तादृशं तांत ब्रुवन्ति कटुकान्यपि ।
प्रेष्याः पुत्राश्च भृत्याश्च तथोदासीनवृत्तयः ॥ ३-२८-१३ (१६६९९)
अप्यस्य दारानिच्छन्ति परिभूय क्षमावतः ।
दाराश्चास्य प्रवर्तन्ते यथाकाममचेतसः ॥ ३-२८-१४ (१६७००)
तथा च नित्यमुदिता यदि नाल्पमपीश्वरात् ।
ग्अकृतोपद्रवः कश्चिन्महानपि न पूज्यते। ३-२८-१५ (१६७०१)
पूजयन्ति नरा नागान्न तार्क्ष्यं नामघातिनम् ॥'
एते चान्ये च बहवो नित्यं दोषाः क्षमावताम्। ३-२८-१६ (१६७०२)
अथ वैरोचने दोषानिमान्विद्ध्यक्षमांवताम् ॥
अथ वैरोचने दोषानिमान्विद्ध्यक्षमावताम् ॥ ३-२८-१७ (१६७०३)
अस्थाने यदि वा स्थाने सततं रजसावृतः ।
क्रुद्धो दण्डान्प्रणयति विविधान्स्वेन तेजसा ॥ ३-२८-१८ (१६७०४)
मित्रैः सह विरोधं च प्राप्नुते तेजसाऽऽवृतः ।
आप्नोति द्वेष्यतां चैव लोकात्स्वजनतस्तथा ॥ ३-२८-१९ (१६७०५)
सोऽवमानादर्थहानिमुपालम्भमनादरम् ।
संतापद्वेषमोहांश्च शत्रूंश्च लभते नरः ॥ ३-२८-२० (१६७०६)
क्रोधाद्दण्डान्मनुष्येषु विविधान्पुरुषोऽनयात् ।
भ्रश्यते शीघ्रमैश्वर्यात्प्राणेभ्यः स्वजनादपि ॥ ३-२८-२१ (१६७०७)
योपकर्तृंश्च हर्तृंश्च तेजसैवोपगच्छति ।

तस्मादुद्विजते लोकः सपाद्वेश्मगतादिव ॥ ३-२८-२२ (१६७०८)
यस्मादुद्विजतेलोकः कथं तस्य भवो भवेत् ।
अन्तरं तस्य दृष्ट्वैव लोको विकुरुते ध्रुवम् ॥ ३-२८-२३ (१६७०९)
तस्मान्नात्युत्सृजेत्तेजो न च नित्यं मृदुर्भवेत् ।
कालेकाले तु संप्राप्ते मृदुस्तीक्ष्णोपि वा भवेत् ॥ ३-२८-२४ (१६७१०)
काले मृदुर्यो भवति काले भवति दारुणः ।
स वै सुखमवाप्नोति लोकेऽमुष्मिन्निहैव च ॥ ३-२८-२५ (१६७११)
क्षमाकालांस्तु वक्ष्यामि शृणु मे विस्तरेण तान् ।
ये ते नित्यमसंत्याज्या यथा प्राहुर्मनीषिणः ॥ ३-२८-२६ (१६७१२)
पूर्वोपकारी यस्ते स्यादपराधे गरीयसि ।
उपकारेण तत्तस्य क्षन्तव्यमपराधिनः ॥ ३-२८-२७ (१६७१३)
अबुद्धिमाश्रितानां तु क्षन्तव्यमपराधिनाम् ।
न हि सर्वत्र पाण्डित्वं सुलभं पुरुषेण वै ॥ ३-२८-२८ (१६७१४)
अथ चेद्बुद्धिजं कृत्वा ब्रूयुस्ते तदबुद्धिजम् ।
पापान्स्वल्पेऽपि तान्हन्यादपराधे तथाऽनृजून् ॥ ३-२८-२९ (१६७१५)
सर्वस्यैकोपराधस्ते क्षन्तव्यः प्राणिनो भवेत् ।
द्वितीये सति वध्यस्तु स्वल्पेऽप्यपकृते भवेत् ॥ ३-२८-३० (१६७१६)
अजानता भवेत्कश्चिदपराधः कृतो यदि ।
क्षन्तव्यमेव तस्याहुः सुपरीक्ष्य परीक्षया ॥ ३-२८-३१ (१६७१७)
मृदुना दारुणं हन्ति मृदुना हन्त्यदारुणम् ।
नासाध्यं मृदुना किंचित्तस्मात्तीव्रतरं मृदु ॥ ३-२८-३२ (१६७१८)
देशकालौ तु संप्रेक्ष्य बलाबलमथात्मनः ।
अन्वीक्ष्यकारणं चैव कार्यं तेजः क्षमापि वा ॥' ३-२८-३३ (१६७१९)
नादेशकाले किंचित्स्याद्देशकालौ प्रतीक्षताम् ।
तथा लोकभयाच्चैव क्षन्तव्यमपराधितम् ॥ ३-२८-३४ (१६७२०)
एत एवंविधाः कालाः क्षमायाः परिकीर्तिताः ।
अतोऽन्यथाऽनुवर्तत्सु तेजसः काल उच्यते ॥ ३-२८-३५ (१६७२१)
तदहं तेजसः कालं तव मन्ये नराधिप ।
धार्तराष्ट्रेषु लुब्धेषु सततं चापकारिषु ॥ ३-२८-३६ (१६७२२)
न हि कश्चित्क्षमाकालो विद्यतेऽद्य कुरून्प्रति ।
तेजसश्चागते काले तेज उत्स्रष्टुमर्हसि ॥ ३-२८-३७ (१६७२३)
मृदुर्भवत्यवज्ञातस्तीक्ष्णादुद्विजते जनः ।
काले प्राप्ते द्वयं चैतद्यो वेद स महीपतिः ॥ ३-२८-३८ (१६७२४)

इति श्रीमन्महाभारते अरण्यपर्वणि अर्जुनाभिगमनपर्वणि
अष्टाविंशोऽध्यायः ॥ २८ ॥

३-२८-२ आगतागमं प्राप्तरहस्यम् ॥
३-२८-४ श्रेयः प्रशस्ततरम् । अत्र क्षमातेजसोर्मध्ये ॥
३-२८-८ अस् एनम् ॥
३-२८-११ अधिकृताः अन्नपानादिसंरक्षणे नियुक्ताः । प्रदिष्टानि इदमस्मै देयमित्याज्ञापितानि ॥
३-२८-१२ एनं क्षमिणम् । भर्तृपूजाभिः स्वाम्युचितमानेन ॥
३-२८-१८ तेजसा क्रोधेन ॥
३-२८-२० उपालम्भं धिक्करम् ॥
३-२८-२२ उपकर्तॄनिति च्छेदः
। रसंधिरार्षः। उपकर्तॄकोशादिवृद्धिकरान्। हर्तॄन् चोरान् ॥
३-२८-२३ भवः ऐश्वर्यम् अन्तरं छिद्रम् ॥
३-२८-२८ अबुद्धिं मौढ्यम् ॥
३-२८-३० अपकृते अपकारे ॥
३-२८-३२ मृदुना साम्ना ॥
३-२८-३७ उत्स्रष्टुं प्रयोक्तुम् ॥

---

वन-अध्यय०२९
॥ श्रीः ॥
३.२९. अध्यायः २९

Mahabharata - Vana Parva - Chapter Topics
युधिष्ठिरेण द्रौपदींप्रति क्रोधे बहुदोषोद्भावनपूर्वकं क्रोधगर्हणम् ॥ १ ॥

Mahabharata - Vana Parva - Chapter Text

३-२९-० (१६७२५)
ग्वैशंपायन उवाच। ३-२९-०क्ष् (१८५४)
द्रौपद्या वचनं श्रुत्वा श्लक्ष्णाक्षरपदं शुभम् ।
उवाच द्रौपदीं राजा स्मयमानो युधिष्ठिरः ॥ ३-२९-१ (१६७२६)
कारणे भवती क्रुद्धा धार्तराष्ट्रस्य दुर्मतेः ।
येन क्रोधं महाप्रज्ञे बहुधा बहुमन्यसे ।
क्रोधमूलं हरं शत्रुं कारणैः शृणु तं मम' ॥ ३-२९-२ (१६७२७)
युधिष्ठिर उवाच। ३-२९-३क्ष् (१८५५)
क्रोधो हन्ता मनुष्याणां क्रोधो भावयिता पुनः ।

इति विद्धि महाप्रात्रे क्रोधमूलौ भवाभवौ । ३-२९-३ (१६७२८)
यो हि संहरते क्रोधं भावस्तस्य सुशोभने ।
ग्यो न संहरते क्रोधं तस्याभावो भवत्युत ।
अभावकारणं तस्मात्क्रोधो भवति शोभने' ॥ ३-२९-४ (१६७२९)
यः पुनः पुरुषः क्रोधं नित्यं विसृजते शुभे ।
तस्याभावाय भवति क्रोधः परमदारुणः ॥ ३-२९-५ (१६७३०)
क्रोधमूलो विनाशो हि प्रजानामिह दृश्यते ।
तत्कथं मादृशः क्रोधमुत्सृजेल्लोकनाशनम् ॥ ३-२९-६ (१६७३१)
क्रुद्धः पापं नरः कुर्यात्क्रुद्धो हन्याद्गुरूनपि ।
क्रुद्धः परुषया वाचा श्रेयसोऽप्यवमन्यते ॥ ३-२९-७ (१६७३२)
वाच्यावाच्ये हि कुपितो न प्रजानाति कर्हिचित् ।
नाकार्यमस्ति क्रुद्धस्य नावाच्यं विद्यते तथा ॥ ३-२९-८ (१६७३३)
हिंस्यात्क्रोधादवध्यांस्तु वध्यान्संपूजयीत च ।
आत्मानमपि च क्रुद्धः प्रेषयेद्यमसादनम् ॥ ३-२९-९ (१६७३४)
एतान्दोषान्प्रपश्यद्भिर्जितः क्रोधो मनीषिभिः ।
इच्छद्भिः परमं श्रेय इह चामुत्र चोत्तमम् ॥ ३-२९-१० (१६७३५)
तं क्रोधं वर्जितं धीरैः कथमस्मद्विधश्चरेत् ।
एतद्द्रौपदि संस्मृत्यन मे मन्युः प्रवर्धते ॥ ३-२९-११ (१६७३६)
आत्मानं च परांश्चैव त्रायते महतो भयात् ।
क्रुध्यन्तमप्रतिक्रुध्यन्द्वयोरेष चिकित्सकः ॥ ३-२९-१२ (१६७३७)
मूढो यदि क्लिश्यमानः क्रुध्यतेऽशक्तिमान्नरः ।
बलीयसां मनुष्याणां त्यजत्यात्मानमन्ततः ॥ ३-२९-१३ (१६७३८)
तस्यात्मानं संत्यजतो लोका नश्यन्त्यनात्मनः ।
तस्माद्द्रौपद्यशक्तस् मन्योर्नियमनं स्मृतम् ॥ ३-२९-१४ (१६७३९)
विद्वांस्तथैव यः शक्तः क्लिश्यमानः प्रकुप्यति ।
स नाशयित्वा द्वेष्टारं परलोके न नन्दति ॥ ३-२९-१५ (१६७४०)
तस्माद्बलवता चैव दुर्बलेन च नित्यदा ।
क्षन्तव्यं पुरुषेणाहुरापत्स्वपि विजानता ॥ ३-२९-१६ (१६७४१)
मन्योर्हि विजयं कृष्णे प्रशंसन्तीह साधवः ।
क्षमावतो जयो नित्यं साधोरिह सतां मतम् ॥ ३-२९-१७ (१६७४२)
सत्यंचानृततः श्रेयो नृशंसाच्चानृशंसता ।
तमेवं बहुदोषं त क्रोधं सद्भिर्विवर्जितम् ।
मादृशो विसृजेत्तस्मात्सर्वलोकविनाशनम् ॥ ३-२९-१८ (१६७४३)
तेजस्वीति यमाहुर्वै पण्डिता दीर्गदर्शिनः ।
न क्रोधोऽभ्यन्तरस्तस् भवतीति विनिश्चेतम् ॥ ३-२९-१९ (१६७४४)
वस्तु क्रोधं समुत्पन्नं प्रज्ञया परिबाधते ।

तेजस्विनं तं विदुषो मन्यन्ते तत्त्वदर्शिनः ॥ ३-२९-२० (१६७४५)
क्रुद्धो हि कार्यं सुश्रोणि न यथावत्प्रपश्यति ।
नाकार्यं न च मर्यादां नरः क्रुद्धोऽनुपश्यति ॥ ३-२९-२१ (१६७४६)
हन्त्यवध्यानपि क्रुद्धो गुरून्रूक्षैस्तुदत्यपि ।
तस्मात्तेजसि कर्तव्ये क्रोधो दूरात्प्रतिष्ठितः ॥ ३-२९-२२ (१६७४७)
दाक्ष्यं ह्यमर्षः शौर्यं च शीघ्रत्वमिति तेजसः ।
गुणाः क्रोधाभिभूतेन न शक्याः प्राप्तुमञ्जसा ॥ ३-२९-२३ (१६७४८)
क्रोधं त्यक्त्वा तु पुरुषः सम्यक्तेजोऽभिपद्यते ।
कालयुक्तं महाप्राज्ञैः क्रुद्धैस्तेजः सुदुर्लभम् ॥ ३-२९-२४ (१६७४९)
क्रोधस्त्वपण्डितैः शश्वत्तेज इत्यभिनिश्चितम् ।
रजस्तु लोकनाशाय विहितं मानुषान्प्रति ॥ ३-२९-२५ (१६७५०)
तस्माच्छश्वत्त्यजेत्क्रोधं पुरुषः सम्यगाचरन् ।
श्रेयान्स्वधर्मानपगो न क्रुद्ध इति निश्चितम् ॥ ३-२९-२६ (१६७५१)
यदि सर्वमबुद्धीनामतिक्रान्तमचेतसाम् ।
अतिक्रमो मद्विधस्य कथं स्वित्स्यादनिन्दिते ॥ ३-२९-२७ (१६७५२)
यदि न स्युर्मानुषेषु क्षमिणः पृथिवीसमाः ।
न स्यात्सन्धिर्मनुष्याणां क्रोधमूलो हि विग्रहः ॥ ३-२९-२८ (१६७५३)
अभिषक्तो ह्यभिषजेदाहन्याद्गुरुणा हतः ।
एवं विनाशो भूतानाममधर्मः प्रथितो भवेत् ॥ ३-२९-२९ (१६७५४)
आक्रुष्ट पुरुषः सर्वं प्रत्याक्रोशेदनन्तरम् ।
प्रतिहन्याद्धतश्चैव तथा हिंस्याच्च हिंसितः ॥ ३-२९-३० (१६७५५)
हन्युर्हि पितरः पुत्रान्पुत्राश्चापि तथा पितॄन् ।
हन्युश्च पतयो भार्याः पतीन्भार्यास्तथैव च ॥ ३-२९-३१ (१६७५६)
एवं संकुपिते लोके जन्म कृष्णो न विद्यते ।
प्रजानां सन्धिमूलं हि जन्म विद्धिशुभानने ॥ ३-२९-३२ (१६७५७)
ताः क्षीयेरन्प्रजाः सर्वाः क्षिप्रं द्रौपदि तादृशाः ।
तस्मान्मन्युर्विनाशाय प्रजानामभवाय च ॥ ३-२९-३३ (१६७५८)
यस्मात्तु लोके दृश्यन्ते क्षमिणः पृथिवीसमाः ।
तस्माज्जन्म च भूतानां भवश्च प्रतिपद्यते ॥ ३-२९-३४ (१६७५९)
क्षन्तव्यं पुरुषेणेह सर्वापत्सु सुशोभने ।
क्षमावतो हि भूतानां जन्म चैव प्रकीर्तितम् ॥ ३-२९-३५ (१६७६०)
आक्रुष्टस्ताडितः क्रुद्धः क्षमते यो बवीयसा ।
यश्च नित्यं जितक्रोधो विद्वानुत्तमपूरुषः ।
प्रभाववानपि नरस्तस्य लोकाः सनातनाः ॥ ३-२९-३६ (१६७६१)
क्रोधनस्त्वल्पविज्ञानः प्रेत्य चेह च नश्यति ॥ ३-२९-३७ (१६७६२)
अत्राप्युदाहरन्तीमा गाथा नित्यं क्षमावताम् ।

गीताः क्षमावतां कृष्णे काश्यपेन महात्मना ॥ ३-२९-३८ (१६७६३)
क्षमा धर्मः क्षमा यज्ञः क्षमा वेदाः क्षमा श्रुतम् ।
यस्तमेवं विजानाति स सर्वं क्षन्तुमर्हति ॥ ३-२९-३९ (१६७६४)
क्षमा ब्रह्म क्षमा सत्यं क्षमा भूतं च भावि च ।
क्षमा तपः क्षमा शौचं क्षमयेदं धृतं जगत् ॥ ३-२९-४० (१६७६५)
अति यज्ञविदां लोकान्क्षमिणः प्राप्नुवन्ति च ।
अति ब्रह्मविदां लोकानति चापि तपस्विनाम् ॥ ३-२९-४१ (१६७६६)
अन्ये वै यजुषां लोकाः कर्मिणामपरे तथा ।
क्षमावतां ब्रह्मलोके लोकाः परमपूजिताः ॥ ३-२९-४२ (१६७६७)
क्षमा तेजस्विनां तेजः क्षमा ब्रह्म तपस्विनाम् ।
क्षमा सत्यं सत्यवतां क्षमा यज्ञः क्षमा शमः ॥ ३-२९-४३ (१६७६८)
तां क्षमां तादृशीं कृष्णे कथमस्मद्विधस्त्यजेत् ।
यत्रब्रह्म च सत्यं च यज्ञा लोकाश्च धिष्ठिताः ॥ ३-२९-४४ (१६७६९)
ग्इज्यन्ते यज्वनां लोकाः क्षमिणामपरे तथा।'
क्षन्तव्यमेव सततं पुरुषेण विजानता ।
यदा हि क्षमते सर्वं ब्रह्म संपद्यते तदा ॥ ३-२९-४५ (१६७७०)
क्षमावतामयं लोकः परश्चैव क्षमावताम् ।
इह सन्मानमृच्छन्ति परत्र च परा गतिम् ॥ ३-२९-४६ (१६७७१)
येषां मन्युर्मनुष्याणां क्षमयाऽभिहतः सदा ।
तेषां परतरे लोकास्तस्मात्क्षान्तिः परा मता ॥ ३-२९-४७ (१६७७२)
इति गीताः काश्यपेन गाथानित्यं क्षमावताम् ।
श्रुत्वा गाथाः क्षमायास्त्वं तुष्यद्रौपदि मा क्रुधः ॥ ३-२९-४८ (१६७७३)
पितामहः शान्तनवः रशमं संपूजयिष्यति ।
कृष्णश्च देवकीपुत्रः शमं संपूजयिष्यति ॥ ३-२९-४९ (१६७७४)
आचार्यो विदुरः क्षत्ता शममेव वदिष्यतः ।
कृपश्च संजयश्चैव शममेव वदिष्यतः ॥ ३-२९-५० (१६७७५)
सोमदत्तो युयुत्सुश्च द्रोणपुत्रस्तथैव च ।
पितामहश्च नो व्यासः शमं वदति नित्यशः ॥ ३-२९-५१ (१६७७६)
एतैर्हि राजा नियतं चोद्यमानः शमं प्रति ।
राज्यं दातेति मे बुद्धिर्न चेल्लोभान्नशिष्यति ॥ ३-२९-५२ (१६७७७)
कालोऽयं दारुणः प्राप्तो भरतानामभूतये ।
निश्चितं मे सदैवैतत्पुरस्तादपि भामिति ॥ ३-२९-५३ (१६७७८)
सुयोधनो नार्हतीति क्षमा मामेव विन्दति ।
अर्हस्तत्राहमित्येवं तस्मान्मां विन्दते क्षमा ॥ ३-२९-५४ (१६७७९)
एतदात्मवतां वृत्तमेष धर्मः सनातनः ।
क्षमा चैवानृशंस्यं च तत्कर्ताऽस्म्यहमञ्जसा ॥ ३-२९-५५ (१६७८०)

इति श्रीमन्महाभारते अरण्यपर्वणि अर्जुनाभिगमनपर्वणि
एकोनत्रिंशोऽध्यायः ॥ २९ ॥
Mahabharata - Vana Parva - Chapter Footnotes

३-२९-३ भावयिता वर्धयिता ।जितःसन्निति शेषः ॥
३-२९-७ पापं न कः कुर्यात् इति क ।पाठः ॥
३-२९-११ चरेदाचरेत् ॥
३-२९-१२ द्वयोरात्मपरयो- चिकित्सकः दोषापहर्ता
।क्रुध्यन्तमप्रतिक्रुध्याञ्जयेल्लोकांश्च शाश्वतान् इति ख।पाठः ॥
३-२९-१३ बलीयसामुपरि यदि अशक्तिमान् क्रुध्यते तर्हि आत्मानं देह
त्यजति ।मनुष्याणामात्मनैव विपद्यते इति ख।पाटः।मनुष्याणां
त्यजत्यात्मानमात्मना इति झ।पाठः ॥
३-२९-१४ अनात्मन अजितचित्तस्य ॥
३-२९-२५ रजः रजोगुणपरिणामः ॥
३-२९-२६ स्वधर्मान् अपगः अपहाय गच्छतीति तथा ।द्वितीयाया अलुगार्षः ॥
३-२९-२७ सर्वं क्षमार्जवादिकम् ।अबुद्धीनां मूढैः अतिक्रान्तं
लङ्घितम्।अनिन्दिते प्रशस्ते विषये क्षमादौ ॥
३-२९-२९ अभिषक्तः तापितः ।अभिषजेत्तापयेत् ॥
३-२९-३० आक्रुष्टो वाचा ताडितः ।हतोऽन्येनाभिगतः।हिंसितस्ताडितः ॥
३-२९-३२ जन्म उत्पत्तिः ।तत्रहेतुः।प्रजानां संधिः दम्पत्योः
प्रीतिः।एवं संकुचिते लोके इति प्रजानां वृद्धिमूलं हि इति
च।क।पाठः ॥
३-२९-३३ अभवाय अनैश्वर्याय ॥
३-२९-३४ जन्म प्रतिपद्यते ।अन्यथा क्रोधप्राबल्ये।पूर्ववयस्येव
दम्पत्योर्नाशाज्जन्मासंभव इत्यर्थः ॥
३-२९-३६ बलीयसा आक्रुष्टस्ताडितो वाऽशक्तः क्षमते तथा यः
प्रभाववानपि क्षमते तस्य लोका इत्यर्थः ॥
३-२९-३८ क्षमावतां गाथाः प्रशंसाः ।क्षमावतां मध्ये महात्मना ॥
३-२९-४० ब्रह्म ब्राह्मणजातिः ।भूतं संचितं तपः भावि च
क्षमैव रक्षति ॥
३-२९-४१ अति अतिक्रम्य प्राप्नुवन्ति ।तदूर्ध्वं पदमिति
शेषः।ब्र्हमविदां वेदविदाम् ॥
३-२९-४२ यजुषां त्रोताग्निसाध्यकर्मवताम् ।कर्मिणां वापीकूपादिधर्मवताम् ॥
३-२९-४८ तुष्य तुष्टा भव ॥
३-२९-५२ दाता दास्यति ॥

वन-अध्यय०३०
॥ श्रीः ॥
३.३०. अध्यायः ३०

Mahabharata - Vana Parva - Chapter Topics
भर्तृव्यसनदर्शनदूनया द्रौपद्या युधिष्ठिरंप्रति धर्मादितोऽपि विधेरेव प्राबल्योपपादनम् ॥ १ ॥

Mahabharata - Vana Parva - Chapter Text

३-३०-० (१६७८१)
द्रौपद्युवाच। ३-३०-०क्ष् (१८५६)
नमो धात्रे विधात्रे च यौ मोहं चक्रतुस्तव ।
पितृपैतामहे राज्ये वोढव्ये तेऽन्यथा मतिः ॥ ३-३०-१ (१६७८२)
श्कर्मभिश्चिन्तितो लोको गत्यांगत्यां पृथग्विधः ।
तस्मात्कर्माणि नित्यानि लोभान्मोक्षं यियासति ॥ ३-३०-२ (१६७८३)
नेह धर्मानृशंस्याभ्यां न क्षान्त्या नार्जवेन च ।
पुरुषः श्रियमाप्नोति न घृणित्वेन कर्हिचित् ॥ ३-३०-३ (१६७८४)
त्वां चेद्व्यसनमभ्यागादिदं भारत दुःसहम् ।
स त्वं नार्हसि नापीमे भ्रातरस्ते महौजसः ॥ ३-३०-४ (१६७८५)
न हि तेऽध्यगमञ्जातु तदानीं नाद्य भारत ।
धर्मात्प्रियतरं किंचिदपि चेज्जीवितादपि ॥ ३-३०-५ (१६७८६)
धर्मार्थमेव ते राज्यं धर्मार्थं जीवितं च ते ।
ब्राह्मणा गुरवश्चैव जानन्त्यपि च देवताः ॥ ३-३०-६ (१६७८७)
भीमसेनार्जुनौ चोभौ माद्रेयौ च मया सह ।
त्यजेस्त्वमिति मे बुद्धिर्न तु धर्मं परित्यजेः ॥ ३-३०-७ (१६७८८)
राजानं धर्मगोप्तारं धर्मो रक्षति रक्षितः ।
इति मे श्रुतमार्याणां त्वां तु मन्ये न रक्षति ॥ ३-३०-८ (१६७८९)
त्यक्त्वाऽन्यान्हि नरव्याघ्र नित्यदा धर्म एव ते ।
बुद्धिः सततमन्वेति छायेवं पुरुषं निजा ॥ ३-३०-९ (१६७९०)
नावमंस्था हि सदृशान्नावराञ्श्रेयसः कुतः ।
अवाप्य पृथिवीं कृत्स्नां न ते शृङ्गमवर्धत ॥ ३-३०-१० (१६७९१)
स्वाहाकारैः स्वधाभिश्च पूजाभिरपि च द्विजान् ।
देवताश्च पितॄंश्चैव सततं पार्थ सेवसे ॥ ३-३०-११ (१६७९२)
ब्राह्मणाः सर्वकामैस्ते सततं पार्थ तर्पिताः ।

यतयो मोक्षिणश्चैव गृहस्ताश्चैव भारत ॥ ३-३०-१२ (१६७९३)
भुञ्जते रुक्मपात्रीभिर्यत्राहं परिचारिका ।
आरण्यकेभ्यो वन्यानि भोजनानि प्रयच्छसि ।
नादेयं ब्राह्मणेभ्यस्ते गृहे किंचन विद्यते ॥ ३-३०-१३ (१६७९४)
यदिदं वैश्वदेवान्ते सायं प्रातः प्रदीयते ।
तद्दत्त्वाऽतिथिभृत्येभ्योराजञ्शिष्टेनजीवसि ॥ ३-३०-१४ (१६७९५)
इष्टयः पशुबन्धाश्च काम्यनैमित्तिकाश्च ये ।
वर्तन्ते पाकयज्ञाश्च सदा यज्ञाश्च तेऽनघ ॥ ३-३०-१५ (१६७९६)
अस्मिन्नपि महारण्ये विजने दस्युसेविते ।
राष्ट्रादपेत्य वसतो धर्मस्ते नावसीदति ॥ ३-३०-१६ (१६७९७)
अश्वमेधो राजसूयः पौण्डरीकोऽथ गोसवः ।
इष्टास्त्वया महायज्ञाबहवोऽन्ये सदक्षिणाः ॥ ३-३०-१७ (१६७९८)
राजन्परीतया बुद्ध्या विषमेऽक्षपराजये ।
पार्थ मित्राणि चास्मांश्च वसूनि च पराजितः ॥ ३-३०-१८ (१६७९९)
ऋजोर्मृदोर्बदान्यस्य धीमतः सत्यवादिनः ।
कथमक्षव्यसनजा बुद्धिरापतिता तव ॥ ३-३०-१९ (१६८००)
अतीव मोह आयाति मनश् परिदूयते ।
निशाम्य व्यसनं पार्थ तवेदमतिदुःसहम् ॥ ३-३०-२० (१६८०१)
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
ईश्वरस्य वशे लोकस्तिष्ठते नात्मनो यथा ॥ ३-३०-२१ (१६८०२)
धातैव खलु भूतानां सुखदुःखे प्रियाप्रिये ।
ददाति सर्वमीशानः पुरस्ताच्छुक्रमुच्चरन् ॥ ३-३०-२२ (१६८०३)
यथा दारुमयीं योषां नरो धीरः समाहितः ।
इङ्गयत्यङ्गमङ्गानि तथा राजन्निमाः प्रजाः ॥ ३-३०-२३ (१६८०४)
आकाश इव भूतानि व्याप्य सर्वाणि भारत ।
ईश्वरो विदधातीह कल्याणं यच्च पापकम् ॥ ३-३०-२४ (१६८०५)
शकुनिस्तन्तुबद्धो वा नीयतेऽयमनीश्वरः ।
ईश्वरस्य वशे तिष्ठन्नान्येषामात्मनः प्रभुः ॥ ३-३०-२५ (१६८०६)
मणिः सूत्र इव प्रोतो नस्योत इव गोवृषः ।
धातुरादेशमन्वेति तन्मयो हि तदर्पणः ॥ ३-३०-२६ (१६८०७)
नात्माधीनो मनुष्योऽयं कालं भजतिं कंचन ।
स्रोतसो मध्यमापन्नः कूलवृक्ष इव च्युतः ॥ ३-३०-२७ (१६८०८)
अज्ञो जन्तुरनीशोऽयमात्मनः सुखदुःखयोः ।
ईश्वरप्रेरितो गच्छेत्स्वर्गं नरकमेव च ॥ ३-३०-२८ (१६८०९)
यथा वायोस्तृणाग्राणि वशं यान्ति बलीयसः ।
धातुरेवं वशं यान्ति सर्वभूतानि भारत ॥ ३-३०-२९ (१६८१०)

आर्ये कर्मणि युञ्जानः पापे वा पुनरीश्वरः ।
व्याप्य भूतानि चरते न चायमिति लक्ष्यते ॥ ३-३०-३० (१६८११)
हेतुमात्रमिदं धातुः शरीरं क्षेत्रसंज्ञितम् ।
येन कारयते कर्म शुभाशुभफलं विभुः ॥ ३-३०-३१ (१६८१२)
पश्य मायाप्रभावोऽयमीश्वरेण यथा कृतः ।
यो हन्ति भूतैर्भूतानि मोहयित्वाऽऽत्ममायया ॥ ३-३०-३२ (१६८१३)
अन्यथा परिदृष्टानि मुनिभिस्तत्त्वदर्शिभिः ।
अन्यथा परिवर्तन्ते वेगा इव नभस्वतः ॥ ३-३०-३३ (१६८१४)
अन्यथैव हि वर्तन्ते पुरुषास्तानि तानि च ।
अन्यथैव प्रभुस्तानि करोति विकरोति च ॥ ३-३०-३४ (१६८१५)
यथा काष्ठेन वा काष्ठमश्मानं चाश्मना पुनः ।
अयसा चाप्ययश्छिन्द्यान्निर्विचेष्टमचेतनम् ॥ ३-३०-३५ (१६८१६)
एवं स भगवान्देवः स्वयंभूः प्रपितामहः ।
निहन्ति भूतैर्भूतानि छद्म कृत्वा युधिष्ठिर ॥ ३-३०-३६ (१६८१७)
संप्रयोज्य वियोज्यायं कामकारकरः प्रभुः ।
क्रीडते भगवान्भूतैर्बालः क्रीडनकैरिव ॥ ३-३०-३७ (१६८१८)
न मातृपितृवद्राजन्धाता भूतेषु वर्तते ।
रोषादिव प्रवृत्तोऽयं यथाऽयमितरो जनः ॥ ३-३०-३८ (१६८१९)
आर्याञ्शीलवो दृष्ट्वा ह्रीमतो वृत्तिकर्शितान् ।
अनार्यान्सुखिनश्चैव विह्वलानिव चिन्तये ॥ ३-३०-३९ (१६८२०)
तवेमामापदं दृष्ट्वा समृद्धिं च सुयोधने ।
धातारं गर्हये पार्थ विषमं योऽनुपश्यति ॥ ३-३०-४० (१६८२१)
आर्यशास्त्रातिगे क्रूरे लुब्धे धर्मापचायिनि ।
धार्तराष्ट्रे श्रियं दत्त्वा धाता किं फलमश्नुते ॥ ३-३०-४१ (१६८२२)
कर्मचेत्कृतमन्वेति कर्तारं नान्यमृच्छति ।
कर्मणा तेन पापेन लिप्यते नूनमीश्वरः ॥ ३-३०-४२ (१६८२३)
अथ कर्मकृतं पापं न चेत्कर्तारमृच्छति ।
कारणं बलमेवेह जनाञ्शोचामि दुर्बलान् ॥ ३-३०-४३ (१६८२४)

इति श्रीमन्महाभारते अरण्यपर्वणि अर्जुनाभिगमनपर्वणि
त्रिंशोऽध्यायः ॥ ३० ॥

Mahabharata - Vana Parva - Chapter Footnotes

३-३०-१ धात्रे ईश्वराय । विधात्रे पूर्वकर्मणे ॥
३-३०-२ चिन्तितः कल्पितो लोको भोगसाधनम् । गत्यांगत्यां ऊर्ध्वाधोमध्यमोत्तमाधमयोनिषु । नित्यानि अपरिहार्यफलानि । लोभात्

मोहात् मोक्षं कर्मफलेभ्यो दुःखेभ्यो मुक्तिं यियासति प्राप्तुमिच्छति ॥
३-३०-५ धर्मात्प्रियतरं नहि त अभ्यगमन् ज्ञातवन्तः किंतु
जीवितादपि प्रियतरं धर्ममेवाध्यगमन् ॥
३-३०-१० शृङ्गं प्रभुत्वाभिमानः ॥
३-३०-१२ ते त्वया ॥
३-३०-१५ पाकयज्ञा गृह्याग्निसाध्या इष्टयः ॥
३-३०-१८ परीतया विपरीतया ॥
३-३०-१९ ऋजोरवक्रस्य । मृदोर्दयालोः ॥
३-३०-२२ धाता ईश्वरः । तथैव खलु इति क। पाठः। शुक्रं
प्राक्कर्मवीजम्। उच्चरन्नुत्कर्षेणानुसरन् ॥
३-३०-२४ अन्तर्बहिर्व्याप्तौ आकाशदृष्टान्तः । बूतानि जरायुजादीनि ॥
३-३०-२५ बद्धो वा बद्धइव ॥
३-३०-२६ नसि नासिकायाम् । नस्यं नासासूत्रं तेन वा ओतः प्रोतः ॥
३-३०-३७ संप्रयोज्यसंयोगं कृत्वा कामकार इच्छा तयैव करोतीति
कामकारकरः । क्रीडनकैः सारीप्रभृतिभिः ॥
३-३०-४२ कृतं कर्म यदि कर्तारमेव गच्छति नत्वन्यं तर्हि
कारयितृतच्वादीश्वरोपि पापेन लिप्येतैवेत्यर्थः ॥

---

वन-अध्यय०३१
॥ श्रीः ॥
३.३१. अध्यायः ३१

Mahabharata - Vana Parva - Chapter Topics
युधिष्ठिरेण द्रौपदींप्रति धर्मस्य साफल्योपपादनम् ॥ १ ॥

Mahabharata - Vana Parva - Chapter Text

३-३१-० (१६८२५)
युधिष्ठिर उवाच। ३-३१-०क्ष् (१८५७)
वल्गु चित्रपदं श्लक्ष्णं याज्ञसेनि त्वया वचः ।
उक्तं तच्छ्रुतमस्माभिर्नास्तिक्यं तु प्रभाषसे ॥ ३-३१-१ (१६८२६)
नाहं धर्मफलाकाङ्क्षी राजपुत्रि चराम्भुत ।
ददामि देयमित्येव यजे यष्टव्यमित्युत ॥ ३-३१-२ (१६८२७)
अस्तु वाऽत्र फलं मा वा कर्तव्यं पुरुषेण यत् ।
गृहे निवसता कृष्णे यथाशक्ति करोमि तत् ॥ ३-३१-३ (१६८२८)
धर्मं चरामि सुश्रोणि न धर्मफलकारणात् ।
आगमाननतिक्रम्य सतां वृत्तमवेक्ष्य च ॥ ३-३१-४ (१६८२९)

धर्म एव मनः कृष्णे स्वभावाच्चैव मे धृतम् ।
श्धर्मवाणिज्यको हीनो जघन्यो धर्मवादिनाम्घ ३-३१-५ (१६८३०)
न धर्मफलमाप्नोति यो धर्मं दोग्धुमिच्छति ।
यश्चैनं शङ्कते कृत्वा नास्तिक्यात्पापचेतनः ॥ ३-३१-६ (१६८३१)
अतिवादान्मदाच्चैव मा धर्ममभिशङ्कथाः ।
धर्मातिशङ्की पुरुषस्तिर्यग्गतिपरायणः ॥ ३-३१-७ (१६८३२)
धर्मो यस्यातिशङ्क्यः स्यादार्षं वा दुर्बलात्मनः ।
वेदाच्छूद्र इवापेयात्स लोकादजरामरात् ॥ ३-३१-८ (१६८३३)
वेदाध्यायी धर्मपरः कुले जातो मनस्विनि ।
स्थविरेषु स योक्तव्यो राजभिर्धर्मचारिभिः ॥ ३-३१-९ (१६८३४)
पापीयान्स हि शूद्रेभ्यस्तस्करेभ्यो विशिष्यते ।
शास्त्रातिगो मन्दबुद्धिर्यो धर्ममतिशङ्कते ॥ ३-३१-१० (१६८३५)
प्रत्यक्षं हि त्वया दृष्ट ऋषिर्गच्छन्महातपाः ।
मार्कण्डेयोऽप्रमेयात्मा धर्मेण चिरजीविता ॥ ३-३१-११ (१६८३६)
व्यासो वसिष्ठो मैत्रेयो नारदो लोमशः शुकः ।
अन्ये च ऋषयः सर्वे धर्मेणैव सुचेतसः ॥ ३-३१-१२ (१६८३७)
प्रत्यक्षं पश्यसि ह्येतान्दिव्ययोगसमन्वितान् ।
शापानुग्रहणे शक्तान्देवेभ्योऽपि गरीयसः ॥ ३-३१-१३ (१६८३८)
एते हि धर्ममेवादौ वर्णयन्ति सदाऽनघे ।
कर्तव्यममरप्रख्याः प्रत्यक्षागमबुद्धयः ॥ ३-३१-१४ (१६८३९)
अतो नार्हसि कल्याणि धातारं धर्ममेव च ।
रजोमूढेन मनसा क्षेप्तुं शङ्कितुमेव च ॥ ३-३१-१५ (१६८४०)
उन्मत्तान्मन्यते बालः सर्वानागतनिश्चयान् ।
धर्मातिशङ्की नान्यस्मिन्प्रमाणमधिगच्छति ॥ ३-३१-१६ (१६८४१)
इन्द्रियप्रीतिसंबद्धं यदिदं लोकसाक्षिकम् ।
एतावन्मन्यते बालो मोहमन्यत्र गच्छति ॥ ३-३१-१७ (१६८४२)
प्रायश्चित्तं न तस्यास्ति यो धर्ममतिशङ्कते ।
ध्यायन्स कृपणः पापो न लोकान्प्रतिपद्यते ॥ ३-३१-१८ (१६८४३)
प्रमाणाद्धि निवृत्तो हि वेदशास्त्रार्थनिन्दकः ।
कामलोभानुगो मूढो नरकं प्रतिपद्यते ॥ ३-३१-१९ (१६८४४)
आर्षं प्रमाणमुत्क्राम्य धर्मं न प्रतिपालयन् ।
सर्वशास्त्रातिगो मूढः शं जन्मसु न विन्दति ॥ ३-३१-२० (१६८४५)
यस्तु नित्यं कृतमतिर्धर्ममेवाभिपद्यते ।
अशङ्कमानः कल्याणि सोऽमुत्रानन्त्यमश्नुते ॥ ३-३१-२१ (१६८४६)
यस्य नार्षं प्रमाणं स्याच्छिष्टाचारश्च भामिनि ।
न वै तस्य परो लोको नायमस्तीति निश्चयः ॥ ३-३१-२२ (१६८४७)

शिष्टैराचरितं धर्मं कृष्णे मास्मातिशङ्कथाः ।
पुराणमृषिभिः प्रोक्तं सर्वज्ञैः सर्वदर्शिभिः ॥ ३-३१-२३ (१६८४८)
धर्म एव प्लवो नान्यः स्वर्गं द्रौपदि गच्छताम् ।
सैवः नौः सागरस्येव वणिजः पारमिच्छतः ॥ ३-३१-२४ (१६८४९)
अफलो यदि धर्मः स्याच्चरितो धर्मचारिभिः ।
अप्रतिष्ठे तमस्येतज्जगन्मज्जेदनिन्दिते ॥ ३-३१-२५ (१६८५०)
निर्वाणं नाधिगच्छेयुर्जीवेयुः पशुजीविकाम् ।
विघातेनैव युज्येयुर्न चार्थं कंचिदाप्नुयुः ॥ ३-३१-२६ (१६८५१)
तपश्च ब्रह्मचर्यं च यज्ञः स्वाध्याय एव च ।
दानमार्जवमेतानि यदि स्युरफलानि वै ॥ ३-३१-२७ (१६८५२)
नाचरिष्यन्परे धर्मं परे परतरेऽपि च ।
दानमार्जवमेतानि यदि स्युरफलानि वै ॥ ३-३१-२८ (१६८५३)
ऋषयस्चैव देवाश्च गन्धर्वासुरराक्षसाः ।
ईश्वराः कस्य हेतोस्ते चरेयुर्धर्ममादृताः ॥ ३-३१-२९ (१६८५४)
फलदं त्विह विज्ञाय धातारं श्रेयसि स्थितम् ।
धर्मं तेऽव्यचरन्कृष्णे स हि धर्म सनातनः ॥ ३-३१-३० (१६८५५)
स चायं सफलो धर्मो न धर्मोऽफल उच्यते ।
दृश्यन्तेऽपि हि विद्यानां फलानि तपसां तथा ॥ ३-३१-३१ (१६८५६)
त्वय्येतद्वै विजानीहि जन्म कृष्णे यथाश्रुतम् ।
वेत्थ चापि यथा जातो धृष्टद्युम्नः प्रतापवान् ॥ ३-३१-३२ (१६८५७)
एतावदेव पर्याप्तमुपमानं शुचिस्मिते ।
कर्मणां फलमस्तीति धीरोऽल्पेनापि तुष्यति ॥ ३-३१-३३ (१६८५८)
बहुनाऽपि ह्यविद्वांसो नैव तुष्यन्त्यबुद्धयः ।
तेषां न ध्मजं किंचित्प्रेत्य कर्मास्ति शर्म वा ॥ ३-३१-३४ (१६८५९)
कर्मणामुत पुण्यानां पापानां च फलोदयः ।
प्रभवश्चाप्ययश्चैव देवगुह्यानि भामिनि ॥ ३-३१-३५ (१६८६०)
नैतानि वेद यः कश्चिन्मुह्यन्त्यत्र प्रजा इमाः ।
श्अपि कल्पसहस्रेण न च श्रेयोऽधिगच्छति ॥౯ ३-३१-३६ (१६८६१)
रक्ष्याण्येतानि देवानां गूढमाया हि देवताः ।
कृशाङ्गाः सुब्रताश्चैव तपसा दग्धकिल्विषाः ।
प्रसन्नैर्मानसैर्युक्ताः पश्यन्त्येतानि वै द्विजाः ॥ ३-३१-३७ (१६८६२)
न फलादर्सनाद्धर्मः शङ्कितव्यो न देवताः ।
यष्टव्यं च प्रयत्नेन दातव्यं चानमूयता ॥ ३-३१-३८ (१६८६३)
कर्मणां फलमस्तीह तथैतद्धर्मशासनम् ।
ब्रह्मा प्रोवाच पुत्राणां यदृषिर्वेद काश्यपः ॥ ३-३१-३९ (१६८६४)
तस्मात्ते संशयः कृष्णे नीहार इव नश्यतु ।

विमृश्य सर्वमस्तीति नास्तिक्यं भावमुत्सृज ॥ ३-३१-४० (१६८६५)
ईश्वरं चापि भूतानां धातारं मा च वै क्षिप ।
शिक्षस्वैनं नमस्वैनं मा तेऽभूद्बुद्धिरीदृशी ॥ ३-३१-४१ (१६८६६)
यस्य प्रसादात्तद्भक्तो मर्त्यो गच्छत्यमर्त्यताम् ।
उत्तमां देवतां कृष्णे मातिवोचः कथंचन ॥ ३-३१-४२ (१६८६७)

इति श्रीमन्महाभारते अरण्यपर्वणि अर्जुनाभिगमनपर्वणि
एकत्रिंशोऽध्यायः ॥ ३१ ॥
Mahabharata - Vana Parva - Chapter Footnotes

३-३१-१ वल्गु शोभनम् । श्लक्ष्णं सुकुमारम्। नास्तिक्यं वेदविद्विष्टम् ॥
३-३१-८ दोषो दुर्बोध आत्मन इति ट । पाठः। अदोषो दुर्बलात्मनः
इति ध। पाठः ॥
३-३१-२१ मूढ आजन्म स न नन्दतीति ट । पाठः। आजन्मसु न नन्दतीति
ध। पाठः। आत्मानं स विनश्यतीति क। पाठः ॥
३-३१-२४ स वै नौः सागरस्येवेति ट । पाठः ॥

---

वन-अध्यय०३२
॥ श्रीः ॥
३.३२. अध्यायः ३२

Mahabharata - Vana Parva - Chapter Topics
युधिष्ठिरंप्रति द्रौपद्या ब्राह्मणोक्तबृहस्पतिनीतिकथनम् ॥ १ ॥

Mahabharata - Vana Parva - Chapter Text

३-३२-० (१६८६८)
द्रौपद्युवाच। ३-३२-०क्ष् (१८५८)
नावमन्ये न गर्हे च धर्मं पार्थ कथंचन ।
ईश्वरं कुत एवाहमवमंस्ये प्रजापतिम् ॥ ३-३२-१ (१६८६९)
आर्ताऽहं प्रलपामीदमिति मां विद्धि भारत ।
भूयश्च विलपिष्यामि सुमनास्त्वं निबोध मे ॥ ३-३२-२ (१६८७०)
कर्म खल्विह कर्तव्यं जातेनामित्रकर्शन ।
अकर्माणो हि जीवन्ति स्थावरा नेतरे जनाः ॥ ३-३२-३ (१६८७१)
आमातृस्तन्यपानाच्च यावच्छय्योपसर्पणम् ।
जङ्गमाः कर्मणा वृत्तिमाप्नुवन्ति युधिष्ठिर ॥ ३-३२-४ (१६८७२)
जङ्गमेषु विशेषेण मनुष्या भरतर्षभ ।

इच्छन्ति कर्मणा वृत्तिमवाप्तुं प्रेत्य चेह च ॥ ३-३२-५ (१६८७३)
उत्थानमभिजानन्ति सर्वभूतानि भारत ।
प्रत्यक्षं फलमश्नन्ति कर्मणां लोकसाक्षिकम् ॥ ३-३२-६ (१६८७४)
पश्यन्तः स्वं समुत्थानमुपजीवन्ति जन्तरः ।
अपि धाता विधाता च यथाऽयमुदके बकः ॥ ३-३२-७ (१६८७५)
श्अकर्मणां वै भूतानां वृत्तिः स्वान्न हि काचन ।
तदेवाभिप्रपद्येत न विहन्यात्कदाचन ।॥ ३-३२-८ (१६८७६)
स्वकर्म कुरु माहासीः कर्मणा भव दंशितः ।
कृत्यं हि योऽभिजानाति सहस्रे सोस्ति नास्ति वां ॥ ३-३२-९ (१६८७७)
तस्य चापि भवेत्कार्वं विवृद्धौ रक्षणे तथा ।
भक्ष्यमाणो ह्यनावाषः क्षीयेत हिमवानपि ॥ ३-३२-१० (१६८७८)
उत्सीदेरन्प्रजाः सर्वा न कुर्युः कर्म चेद्यदि ।
श्तथा ह्येता न वर्धेरन्कर्म चेदफलं भवेत् ।॥ ३-३२-११ (१६८७९)
दृष्ट्वाऽपिच फलं कर्म पश्यामः कुर्वतो जनान् ।
नान्यथा ह्यपि जानन्ति वृत्तिं लोकाः कथंचन ॥ ३-३२-१२ (१६८८०)
यश्च दिष्टपरो लोके यश्चापि हठवादकः ।
उभावपि शठावेतौ कर्मबुद्धिः प्रशस्यते ॥ ३-३२-१३ (१६८८१)
यो हि दिष्टमुपासीत निर्विचेष्टः सुखं स्वपन् ।
अवसीदेत्सुदुर्बुद्धिरामो घट इवोदके ॥ ३-३२-१४ (१६८८२)
तथैव हठबुद्धिर्यः शक्तः कर्मण्यकर्मकृत् ।
आसीत न चिरं जीवेदनाथ इव दुर्बलः ॥ ३-३२-१५ (१६८८३)
अकस्मादिह यः कश्चिदर्थं प्राप्नोति पूरुषः ।
तं हठेनेति मन्यन्ते स हि यत्नो न कस्यचित् ॥ ३-३२-१६ (१६८८४)
वश्चापि कश्चित्पुरुषो दिष्टं नाम भजत्युत ।
दैवेन विधिना पार्थ तद्दैवमिति निश्चितम् ॥ ३-३२-१७ (१६८८५)
यत्तावस्कर्मणा किंचित्फलमाप्नोति पूरुषः ।
प्रत्यक्षं चक्षुषा दृष्टं तत्पौरुषमिति श्रुतम् ॥ ३-३२-१८ (१६८८६)
स्वभावतः प्रवृत्तो यः प्राप्नोत्यर्थं न कारणात् ।
तत्स्वभावात्प्रकं विद्धि फलं पुरुषसत्तम ॥ ३-३२-१९ (१६८८७)
एवं हठाच्च दैवाच्च स्वभावात्कर्मणस्तथा ।
यानि प्राप्नोति पुरुषस्तत्फलं पूर्वकर्मणाम् ॥ ३-३२-२० (१६८८८)
धातापि हि स्वकर्मैव तैस्तैर्हेतुभिरीश्वरः ।
विदधाति विभज्येह फलं पूर्वकतं नृणाम् ॥ ३-३२-२१ (१६८८९)
यद्धि यः पुरुषः किंचित्कुरुते वै शुभाशुभम् ।
तद्धातृविहितं विद्धि पूर्वकर्मफलोदयम् ॥ ३-३२-२२ (१६८९०)
कारणं तस्य देहोऽयं धातुः कर्मणि कर्मणि ।

स यथा प्रेरयत्येनं तथाऽयं कुरुतेऽवशः ॥ ३-३२-२३ (१६८९१)
तेषुतेषु हि कृत्येषु विनियोक्ता महेश्वरः ।
सर्वभूतानि कौन्तेय कारयत्यवशान्यपि ॥ ३-३२-२४ (१६८९२)
मनसाऽर्थान्विनिश्चित्य पश्चात्प्राप्नोति कर्मणा ।
बुद्धिपूर्वं स्वयं वीर पुरुषस्तत्र कारणम् ॥ ३-३२-२५ (१६८९३)
संख्यातुं नैव शक्यानि कर्माणि पुरुषर्षभ ।
अगारनगराणां हि सिद्धिः पुरुषहैतुकी ॥ ३-३२-२६ (१६८९४)
तिले तैलं गवि क्षीरं काष्ठे पावकमन्ततः ।
एवं धीरो विजानीयादुपायं चास्य सिद्धये ॥ ३-३२-२७ (१६८९५)
ततः प्रवर्तते पश्चात्कारणेष्वस्व सिद्धये ।
तां सिद्धिमुपजीवन्ति कर्मणामिह जन्तवः ॥ ३-३२-२८ (१६८९६)
कुशलेन कृतं कर्म कर्त्रा साधु स्वनुष्ठितम् ।
इदं त्वकुशलेनेति विशेषादुपलभ्यते ॥ ३-३२-२९ (१६८९७)
इष्टापूर्त्तफलं न स्यान्न शिष्यो न गुरुर्भवेत् ।
पुरुषः कर्मसाध्येषु स्वाच्चेदयमकारणम् ॥ ३-३२-३० (१६८९८)
कर्तृत्वादेव पुरुषः कर्मसिद्धौ प्रशस्यते ।
असिद्धौ निन्द्यते चापि कर्मनाशः कथं त्विह ॥ ३-३२-३१ (१६८९९)
सर्वमेव हठेनैके दैवेनैके वदन्त्युत ।
पुंसः प्रयत्नजं केचिद्दैवमेतद्विशिष्यते ॥ ३-३२-३२ (१६९००)
न चैवैतावता कार्यं मन्यन्त इति चापरे ।
अस्ति सर्वमदृश्यं तु दिष्टं चैव तथा हठः ॥ ३-३२-३३ (१६९०१)
दृश्यते हि हठाच्चैव दिष्टाच्चार्थस्य संततिः ।
किंचिद्दैवाद्धठात्किंचित्किंचिदेव स्वकर्मतः ॥ ३-३२-३४ (१६९०२)
पुरुषः फलमाप्नोति चतुर्थं नात्र कारणम् ।
कुशलाः प्रतिजानन्ति ये वै तत्त्वविदोजनाः ॥ ३-३२-३५ (१६९०३)
तथैव धाता भूतानामिष्टानिष्टफलप्रदः ।
यदि न स्वानन भूतानां कृपणो नाम कश्चन ॥ ३-३२-३६ (१६९०४)
यंयमर्थमभिप्रेप्सुः कुरुते कर्म पूरुषः ।
तत्तत्सफलमेव स्याद्यदि न स्यात्पुरा कृतम् ॥ ३-३२-३७ (१६९०५)
त्रिद्वारामर्थसिद्धिं तु नानुपश्यन्ति ये नराः ।
तथैवानर्थसिद्धिं च यथा लोकास्तथैव ते ॥ ३-३२-३८ (१६९०६)
कर्तव्यमेव कर्मेति मनोरेष विनिश्चयः ।
एकान्तेन ह्यनीहोऽयं वर्ततेऽस्मासु संप्रति ॥ ३-३२-३९ (१६९०७)
कुर्वतो हि भवत्येव प्रायेणेह युधिष्ठिर ।
एकान्तफलसिद्धिं तु न विन्दत्यलसः क्वचित् ॥ ३-३२-४० (१६९०८)
असंभवे त्वस्य हेतुः प्रायश्चित्तं तु लक्ष्यते ।

कृतेकर्मणि राजेन्द्र तथाऽनृण्यमवाप्नुते ॥ ३-३२-४१ (१६९०९)
अलक्ष्मीराविशत्येनं शयानमलसं नरम् ।
निःसंशयं फलं लब्ध्वा दक्षो भूतिमुपाश्नुते ॥ ३-३२-४२ (१६९१०)
अनर्थं संशयावस्थं गृणन्त्यामुक्तसशंयाः ।
धीरा नराः कर्मरता न तु निःसंशयाः क्वचित् ॥ ३-३२-४३ (१६९११)
एकान्ते नह्यनर्थोऽयं वर्ततेऽस्मासु सांप्रतम् ।
स तु निःसंशयं न स्यात्त्वयि कर्मण्यवस्थिते ॥ ३-३२-४४ (१६९१२)
अथवाऽसिद्धिरेव स्यान्महिमा तु तदेव ते ।
वृकोदरस्य बीभत्सोर्भ्रात्रोश्च यमयोरपि ॥ ३-३२-४५ (१६९१३)
अन्येषां कर्म सफलमस्माकमपि वा पुनः ।
विप्रकर्षेण बुद्ध्येत कृतकर्मा यथा फलम् ॥ ३-३३-४६ (१६९१४)
पृथिवीं लाङ्गलेनेह कृष्ट्वा बीजं वपत्युत ।
आस्तेऽथ कर्षकस्तूष्णीं पर्जन्यस्तत्र कारणम् ॥ ३-३२-४७ (१६९१५)
वृष्टिश्चेन्नानुगृह्णीयादनेनास्तत्र कर्षकः ।
यदन्यः पुरुषः कुर्यात्तत्कृतं सफलं मया ॥ ३-३२-४८ (१६९१६)
तच्चेदं फलमस्माकमपराधो न मे क्वचित् ।
इति धीरोऽन्ववेक्ष्यैव नात्मानं तत्रगर्हयेत् ॥ ३-३२-४९ (१६९१७)
कुर्वतो नार्थसिद्धिर्मे भवतीति ह भारत ।
निर्वेदो नात्र गन्तव्यो द्वावन्तौ यस्य कर्मणः ॥ ३-३२-५० (१६९१८)
सिद्धिर्वाऽप्यथवाऽसिद्धिरप्रवृत्तिरतोऽन्यथा ।
बहूनां समवाये हि भावानां कर्म सिध्यति ॥ ३-३२-५१ (१६९१९)
गुणाभावे फलं न्यूनं भवत्यफलमेव च ।
अनारम्भे हि न फलं न गुणो दृश्यते क्वचित् ॥ ३-३२-५२ (१६९२०)
देशकालावुपायांश्च मङ्गलं स्वस्तिसिद्धये ।
युनक्ति मेधया धीरो यथायोगं यथाबलम् ॥ ३-३२-५३ (१६९२१)
अप्युपायेन तत्कार्यमुपदेष्टा पराक्रमः ।
भूयिष्ठं कर्मयोगेषु सर्व एव पराक्रमः ॥ ३-३२-५४ (१६९२२)
यत्रधीमानवेक्षेत श्रेयासं बहुभिर्गुणैः ।
साम्नैवार्थं ततो लिप्सेत्कर्म चास्मै प्रयोजयेत् ॥ ३-३२-५५ (१६९२३)
व्यसनं नाभिकाङ्क्षेत्त विनाशं वा युधिष्ठिर ।
अपि सिन्धोर्गिरेर्वाऽपि किं पुनर्मर्त्यधर्मिणः ॥ ३-३२-५६ (१६९२४)
उत्थानयुक्तः सततं परेषामन्तरैषणे ।
आनृण्यमाप्नोति नरः परस्यात्मन एव च ॥ ३-३२-५७ (१६९२५)
न त्वेवात्माऽवमन्तव्यः पुरुषेण कदाचन ।
न ह्यात्मपरिभूतस् भूतिर्भवति शोभना ॥ ३-३२-५८ (१६९२६)
एवं संस्थितिका सिद्धिरियं लोकस्य भारत ।

चित्रा सिद्धिगतिः प्रोक्ता कालावस्थाविभागशः ॥ ३-३२-५९ (१६९२७)
ब्राह्मणं मे पिता पूर्वं वासयामास पण्डितम् ।
सर्वं चार्थमिमं प्राह पित्रे मे भरतर्षभ ॥ ३-३२-६० (१६९२८)
नीतिं बृहस्पतिप्रोक्तां भ्रातृन्मेऽग्राहयन्पुरा ।
तेषां सकाशादश्रौषमहमेतां तदा गृहे ॥ ३-३२-६१ (१६९२९)
स मां राजन्कर्मवतीमागतामाह सान्त्वयन् ।
शुश्रूषमाणामासीनां पितुरङ्के युधिष्ठिर ॥ ३-३२-६२ (१६९३०)

इति श्रीमन्महाभारते अरण्यपर्वणि अर्जुनाभिगमनपर्वणि
द्वात्रिंशोऽध्यायः ॥ ३२ ॥
Mahabharata - Vana Parva - Chapter Footnotes

३-३२-१२ अपिवाह्य फलं कर्मेति ट । ध। पाठः ॥
३-३२-१८ यत्नवान्कर्मणेति ध । पाठः ॥
३-३२-३२ त्रैधमेतन्निरुच्यते इति झ । पाटः ॥
३-३२-३३ दैवशिष्टं तथा हठमिति क । पाठः। दैवादिष्टं तथा
हठ इति ठ। पाठः ॥
३-३२-३९ एकान्ते नह्यनर्थोयमिति क ध । पाठः ॥
३-३२-५९ संस्थितिका ईदृग्व्यवस्थावती सिद्धिः फलसिद्धिः ॥
३-३२-६२ कर्मवतीमागतां किंचित्कार्योद्देशेन पितुरन्तिके आगताम् ॥

---

वन-अध्यय०३३
॥ श्रीः ॥
३.३३. अध्यायः ३३

Mahabharata - Vana Parva - Chapter Topics
भीमेन युधिष्ठिरंप्रति नीतिव्युत्पादनपूर्वकं युद्धेन
राज्याहरणकर्तव्यत्वोक्तिः ॥ १ ॥

Mahabharata - Vana Parva - Chapter Text

३-३३-० (१६९३१)
वैशंपायन उवाच। ३-३३-०क्ष् (१८५९)
याज्ञसेन्या वचः श्रुत्वा भीमसेनो ह्यमर्षणः ।
निश्वसन्नुपसंगम्य क्रुद्धो राजानमब्रवीत् ॥ ३-३३-१ (१६९३२)
राजन्सत्पदवीं धर्म्यां व्रज सत्पुरुषोचिताम् ।
धर्मकामार्थहीनानां किं नो वस्तुं तपोवने ॥ ३-३३-२ (१६९३३)

नैव धर्मेण तद्राज्यं नार्जवेण न चौजसा ।
अक्षकूटमधिष्ठाय हृतं दुर्योधनेन वै ॥ ३-३३-३ (१६९३४)
गोमायुनेव सिंहानां दिर्बलेन बलीयसाम् ।
आमिपं विघसाशेन तद्वद्राज्यं हि नो हृतम् ॥ ३-३३-४ (१६९३५)
धर्मलेशप्रतिच्छन्नः प्रभवं धर्मकामयोः ।
अर्थमुत्सृज्य किं राजन्दुःखेन परितप्यसे ॥ ३-३३-५ (१६९३६)
भवतोऽनुविधानेन राज्यं नः पश्यतां हृतम् ।
अहार्यमपि शक्रेण गुप्तं गाण्डीवधन्वना ॥ ३-३३-६ (१६९३७)
कुणीनामिव बिल्वानि पङ्गूनामिव धेनवः ।
हृतमैश्वर्यमस्माकं जीवतां भवतः कृते ॥ ३-३३-७ (१६९३८)
भवतः प्रियमित्येवं महद्व्यसनमीदृशम् ।
धर्मकामे प्रतीतस्य प्रतिपन्नाः स्म भारत ॥ ३-३३-८ (१६९३९)
कर्शयामः स्वमित्राणि नन्दयामश्च शात्रवान् ।
आत्मानं भवतः शास्त्रैर्नियम्य भरतर्षभ ॥ ३-३३-९ (१६९४०)
यद्वयं न तदैवैतान्धार्तराष्ट्रान्निहन्म हि ।
भवतः शास्त्रमादाय तन्नस्तपति दुष्कृतम् ॥ ३-३३-१० (१६९४१)
अथैनामन्ववेक्षस्व मृगचर्यामिवात्मनः ।
अवीराचरितां राजन्नबलस्थैर्निषेविताम् ॥ ३-३३-११ (१६९४२)
यां न कृष्णो न बीभत्सुर्नाभिमन्युर्न सृञ्जयाः ।
न चाहमभिनन्दामि न च माद्रीसुतावुभौ ॥ ३-३३-१२ (१६९४३)
भवान्धर्मो धर्म इति सततं व्रतकर्शितः ।
कच्चिद्राजन्न निर्वेदादापन्नः क्लीबजीविकाम् ॥ ३-३३-१३ (१६९४४)
दुर्मनुष्या हि निर्वेदमफलं सर्वघातकम् ।
अशक्ताः श्रियमाहर्तुमात्मनः कुर्वते प्रियम् ॥ ३-३३-१४ (१६९४५)
स भवान्दृष्टिमाञ्शक्तः पश्यन्नस्मासु पौरुषम् ।
आनृशंस्यपरो राजन्नात्मार्थमवबुध्यसे ॥ ३-३३-१५ (१६९४६)
अस्मानमी धार्तराष्ट्राः क्षममाणानहिंसतः ।
अशक्तानेव मन्यन्ते तद्दुःखं नाहवे वधः ॥ ३-३३-१६ (१६९४७)
तत्रचेद्युध्यमानानामजिह्ममनिवर्तिनाम् ।
सर्वशो हि वधः श्रेयान्प्रेत्य लोकांल्लभेमहि ॥ ३-३३-१७ (१६९४८)
अधवा वयमेवैतान्निहत्य भरतर्षभ ।
आददीमहि गां सर्वां तथापि श्रेय एव नः ॥ ३-३३-१८ (१६९४९)
सर्वथा कार्यमेतन्नः स्वधर्ममनुतिष्ठताम् ।
काङ्क्षतां विपुलां कीर्तिं वैरं प्रतिचिकीर्षताम् ॥ ३-३३-१९ (१६९५०)
आत्मार्थं युध्यमानानां जीविते कृत्यलक्षणे ।
अन्यैरपि हृते राज्ये प्रशंसैव न गर्हणा ॥ ३-३३-२० (१६९५१)

कर्शनार्थो हि यो धर्मो विप्राणामात्मनस्तथा ।
व्यसनं नाम तद्राजन्न धर्मः स कुवर्त्मतत् ॥ ३-३३-२१ (१६९५२)
सर्वथा धर्मनित्यं तु पुरुषं धर्मदुर्बलम् ।
जहतस्तात धर्मार्थौ प्रेतं दुःखसुखे यथा ॥ ३-३३-२२ (१६९५३)
यस्य धर्मो हि धर्मार्थं क्लेशभाङ्ग स पण्डितः ।
न स धर्मस्य वेदार्थं सूर्यस्यान्धः प्रभामिव ॥ ३-३३-२३ (१६९५४)
यस्य चार्थार्थ एवार्थः स च नार्थस्य कोविदः ।
रक्ष्यते भृतकः पुण्यं यथा स्यात्तादृगेव सः ॥ ३-३३-२४ (१६९५५)
अतिवेलं हि योऽर्थार्थी नेतरावनुतिष्ठति ।
स वध्यः सर्वभूतानां ब्रह्महेव जुगुप्सितः ॥ ३-३३-२५ (१६९५६)
सततं यश्च कामार्थी नेतरावनुतिष्ठति ।
मित्राणि तस्य नश्यन्ति धर्मार्थाभ्यां च हीयते ॥ ३-३३-२६ (१६९५७)
तस्य धर्मार्थहीनस्य कामान्ते निधनं ध्रुवम् ।
कामतो रममाणस्य मीनस्येवाम्भसः क्षये ॥ ३-३३-२७ (१६९५८)
तस्माद्धर्मार्थयोर्नित्यं न प्रमान्द्यन्ति पण्डिताः ।
प्रकृतिः सा हि कामस्य पावकस्यारणिर्यथा ॥ ३-३३-२८ (१६९५९)
सर्वथा धर्ममूलोऽर्थो धर्मश्चार्थपरिग्रहः ।
इतरेतरयोर्नीतौ विद्धि मेघोदधी यथा ॥ ३-३३-२९ (१६९६०)
द्रव्यार्थस्पर्शसंयोगे या प्रीतिरुपजायते ।
स कामश्चित्तसंकल्पः शरीरं नास्य दृश्यते ॥ ३-३३-३० (१६९६१)
अर्थार्थी पुरुषो राजन्बृहन्तं धर्ममिच्छति ।
अर्थमिच्छति कामार्थीन कामादन्यमिच्छति ॥ ३-३३-३१ (१६९६२)
न हि कामेन कामोऽन्यः सिध्यते फलमेव तत् ।
उषयोगात्फलस्यैव काष्ठाद्भस्मेव पण्डितः ॥ ३-३३-३२ (१६९६३)
इमाञ्शकुनकान्राजन्हन्ति वैतंसिको यथा ।
एतद्रूपमधर्मस्य भूतेषु च विहिंसनम् ॥ ३-३३-३३ (१६९६४)
कामाल्लोभाच्च धर्मस्य प्रवृत्तिं यो न पश्ति ।
स वध्यः सर्वभूतानां प्रेत्य चेहैच दुर्मतिः ॥ ३-३३-३४ (१६९६५)
व्यक्तं ते विदितो राजन्नर्थो द्रव्यपरिग्रहः ।
प्रकृतिं चापि वेत्थास्य विकृतिं चापि भूयसीम् ॥ ३-३३-३५ (१६९६६)
तस्य नाशं विनाशं वा जरया मरणेन वा ।
अनर्थ इति मन्यन्ते सोयमस्मासु वर्तते ॥ ३-३३-३६ (१६९६७)
इन्द्रियाणां च पञ्चानां मनसो हृदयस्य च ।
विपये वर्तमानानां या प्रीतिरुपजायते ॥ ३-३३-३७ (१६९६८)
स काम इति मे बुद्धिः कर्मणां फलमुत्तमम् ।
एवमेव पृथग्दृष्ट्वा धर्मार्थौ काममेव च ॥ ३-३३-३८ (१६९६९)

न धर्मपर एव स्यान्न चार्थपरमो नरः ।
न कामपरमो वा स्यात्सर्वान्सेवेत सर्वदा ॥ ३-३३-३९ (१६९७०)
धर्मं पूर्वे धनं मध्ये जघन्ये काममाचरेत् ।
अहन्यनुचरेदेवमेष शास्त्रकृतो विधिः ॥ ३-३३-४० (१६९७१)
कामं पूर्वे धनं मध्ये जघन्ये धर्ममाचरेत् ।
वयस्यनुचरेदेवमेष शास्त्रकृतो विधिः ॥ ३-३३-४१ (१६९७२)
धर्मं चार्थं च कामं च यथावद्वदतांवर ।
विभज्य काले कालज्ञः सर्वान्सेवेत पण्डितः ॥ ३-३३-४२ (१६९७३)
मोक्षो वा परमं श्रेय एष राजन्सुखार्थिनाम् ।
प्राप्तिं वा बुद्धिमास्थाय सोपायां कुरुनन्दन ॥ ३-३३-४३ (१६९७४)
तद्वाऽऽशु क्रियतां राजन्प्राप्तिर्वाप्यधिगम्यताम् ।
जीवितं ह्यातुरस्येव दुःखमन्तरवर्तिनः ॥ ३-३३-४४ (१६९७५)
विदितश्चैव मे धर्मः सततं चरितश्च ते ।
जानन्तस्त्वयि शंसन्ति सुहृदः कर्मचोदनाम् ॥ ३-३३-४५ (१६९७६)
दानं यज्ञाः सतां पूजा वेदधारणमार्जवम् ।
एष धर्मः परो राजन्फलवान्प्रेत्य चेंह च ॥ ३-३३-४६ (१६९७७)
एष नार्थविहीनेन शक्यो राजन्निपेवितुम् ।
अखिलाः पुरुषव्याघ्र गुणाः स्युर्यद्यपीनरे ॥ ३-३३-४७ (१६९७८)
धर्ममूलं जगद्राजन्नान्यद्धर्माद्विशिष्यते ।
धर्मश्चार्थेन महता शक्यो राजन्निषेवितुम् ॥ ३-३३-४८ (१६९७९)
न चार्थो भैक्ष्यचर्येण नापि क्लैब्येन कर्हिचित् ।
वेत्तुं शक्यस्तथा राजन्केवलं धर्मबुद्धिना ॥ ३-३३-४९ (१६९८०)
प्रतिष्द्धा हि ते याच्ञा यया सिध्यति वै द्विजः ।
तेजसैवार्थलिप्सायां यतस्व पुरुषर्षभ ॥ ३-३३-५० (१६९८१)
भैक्ष्यचर्या न विहिता न च विट्शूद्रजीविका ।
क्षत्रियस् विशेषेण धर्मस्तु बलमौरसम् ॥ ३-३३-५१ (१६९८२)
स्वधर्मं प्रतिपद्यस्व जहि शत्रून्समागतान् ।
धार्तराष्ट्रवनं पार्थ मया पार्थेन नाशय ॥ ३-३३-५२ (१६९८३)
उदारमेव विद्वांसो धर्मं प्राहुर्मनीषिणः ।
उदारं प्रतिपद्यस्व नावरे स्थातुमर्हसि ॥ ३-३३-५३ (१६९८४)
अनुबुध्यस्व राजेन्द्र वेत्थ धर्मान्सनातनान् ।
क्रूरकर्माऽभिजातोसि यस्मादुद्विजते जनः ॥ ३-३३-५४ (१६९८५)
प्रजापालनसंभूतं फलं तव न गर्हितम् ।
एष ते विहितो राजन्धात्रा धर्मः सनातनः ॥ ३-३३-५५ (१६९८६)
तस्माद्विचलितः पार्थ लोके हास्यं गमिष्यसि ।
स्वधर्माद्धि मनुष्याणां चलनं न प्रशस्यते ॥ ३-३३-५६ (१६९८७)

स क्षात्रं हृदयं कृत्वा त्यक्त्वेदं शिथिलं मनः ।
वीर्यमास्थाय कौरव्य धुरमुद्वह धुर्यवत् ॥ ३-३३-५७ (१६९८८)
न हि केवलधर्मात्मा पृथिवीं जातु कश्चन ।
पार्थिवो व्यजयद्राजन्न भूतिं न पुनः श्रियम् ॥ ३-३३-५८ (१६९८९)
जिह्वां दत्ता बहूनां हि क्षुद्राणां लुब्धचेतसाम् ।
निकृत्या लभते राज्यमाहारमिव शल्यकः ॥ ३-३३-५९ (१६९९०)
भ्रातर पूर्वजाताश्च सुसमृद्धाश्च सर्वशः ।
निकृत्या निर्जिता देवैरसुराः पाण्डवर्षभ ॥ ३-३३-६० (१६९९१)
एवं बलवतः सर्वमिति बुद्ध्वा महीपते ।
जहि शत्रून्महाबाहो परां निकृतिमास्थितान् ॥ ३-३३-६१ (१६९९२)
न ह्यर्जुनसमः कश्चिद्युधि योद्धा धनुर्धरः ।
भविता वा पुमान्कश्चिन्मत्समो वा गदाधरः ॥ ३-३३-६२ (१६९९३)
सत्वेन कुरुते युद्धं राजन्सुबलवानपि ।
न प्रमाणेन नोत्साहात्सत्वस्थो भव पाण्डव ॥ ३-३३-६३ (१६९९४)
सत्वं हि मूलमर्थस् यवितथं यदतोऽन्यथा ।
न तु प्रसक्तं भवति वृक्षच्छायेन हैमनी ॥ ३-३३-६४ (१६९९५)
अर्थत्यागोऽपि कार्यः स्यादर्थं श्रेयांसमिच्छता ।
बीजौपम्यन कौन्तेय मा ते भूदत्र संशयः ॥ ३-३३-६५ (१६९९६)
अर्थेन तु समोऽनर्थो यत्र लब्धो महोदयः ।
न तत्र विपणः कार्यः खरकण्डूयनं हि तत् ॥ ३-३३-६६ (१६९९७)
एवमेव मनुष्येन्द्र धर्मं त्यक्त्वाऽल्पकं नरः ।
बृहन्तं धर्ममाप्नोति स बुद्ध इति निश्चितम् ॥ ३-३३-६७ (१६९९८)
अमित्रं मित्रसंपन्नं मित्रैर्भिन्दन्ति पण्डितः ॥ ३-३३-६८ (१६९९९)
भिन्नैर्मित्रैः परित्यक्तं दुर्बलं कुरुते वशे ॥ ३-३३-६८ (१७०००)
सत्वेन कुरुते युद्धं राजन्सुबलवानपि ।
नोद्यमेन न होत्राभिः सर्वाः स्वीकुरुते प्रजाः ॥ ३-३३-६९ (१७००१)
सर्वथा संहतैरेव दुर्बलैर्बलवानपि ।
अमित्रः शक्यते हन्तुं मधुहा भ्रमरैरिव ॥ ३-३३-७० (१७००२)
यथा राजन्प्रजाः सर्वाः सूर्यः पाति गभस्तिभिः ।
हन्ति चैव तथैव त्वं सदृशः सवितुर्भव ॥ ३-३३-७१ (१७००३)
एतच्चापि तपो पाजन्पुराणमिति नः श्रुतम् ।
विधिना पालनं भूमेर्यत्कृतं नः पितामहैः ॥ ३-३३-७२ (१७००४)
न तथा तपसा राजँल्लोकान्प्राप्नोति क्षत्रियः ।
यथा सृष्टेन युद्धेन विजयेनेतरेण वा ॥ ३-३३-७३ (१७००५)
अपेयात्किल भा सूर्याल्लक्ष्मीश्चन्द्रमसस्तथा ।
इतिलोको व्यवसितो दृष्ट्वेमां भवतोव्यथाम् ॥ ३-३३-७४ (१७००६)

भवतश्च प्रशंसाभिर्निन्दाभिरितरस्य च ।
कथयन्त्यः परिषदः पृथग्राजन्समागताः ॥ ३-३३-७५ (१७००७)
इदमभ्यधिकं राजन्ब्राह्मणाः कुरवश्च ते ।
समेताः कथयन्तीह मुदिताः सत्यसन्धताम् ॥ ३-३३-७६ (१७००८)
यन्न मोहान्न कार्पण्यान्न लोभान्न भयादपि ।
अनृतं किंचिदुक्तं ते न कामान्नार्थकारणात् ॥ ३-३३-७७ (१७००९)
यदेनः कुरुते किंचिद्राजा भूमिमवाप्नुवन् ।
सर्वं तन्नुदते पश्चाद्यज्ञैर्विपुलदक्षिणैः ॥ ३-३३-७८ (१७०१०)
ब्राह्मणेभ्यो ददद्ग्रामान्गाश्च राजन्सहस्रशः ।
मुच्यते वीर पापेभ्यस्तमोभ्य इव चन्द्रमाः ॥ ३-३३-७९ (१७०११)
पौरजानपदाः सर्वे प्रायशः कुरुनन्दन ।
सवृद्धबालाः सहिताः शंसन्ति त्वां युधिष्ठिर ॥ ३-३३-८० (१७०१२)
श्वदृतौ क्षीरमासक्तं ब्रह्म वा वृषले यथा ।
सत्यं स्तेने बलं नार्यां राज्यं दुर्योधने तथा ॥ ३-३३-८१ (१७०१३)
इतिलोके निर्वचनं पुरश्चरति भारत ।
अपि चैताः स्त्रियो बालाः स्वाध्यायमधिकुर्वते ॥ ३-३३-८२ (१७०१४)
इमामवस्थां च गते सहास्माभिररिंदम् ।
हन्त नष्टाः स्म सर्वे वै भवतोपद्रवे सति ॥ ३-३३-८३ (१७०१५)
स भवान्रथमास्थाय सर्वोपकरणान्वितम् ।
त्वरमाणोऽभिनिर्यातु विप्रेभ्योऽर्थविभावकः ॥ ३-३३-८४ (१७०१६)
वाचयित्वा द्विजश्रेष्ठानद्यैव गजसाह्वयम् ।
अस्त्रविद्भिः परिवृतोभ्रातृभिर्दृढधन्विभिः ॥ ३-३३-८५ (१७०१७)
आशीविषसमैर्वीरैर्मरुद्भिरिव वृत्रहा ।
अमित्रांस्तेजसा मृद्नन्नसुरानिव वृत्रहा ।
श्रियमादत्स्व कौन्तेय धार्तराष्ट्रान्महाबल ॥ ३-३३-८६ (१७०१८)
न हि गाण्डीवमुक्तानां शराणां गार्ध्रवाससाम् ।
स्पर्शमाशीविषाभानां मर्त्यः कश्चन संसहेत् ॥ ३-३३-८७ (१७०१९)
न स वीरो न मातङ्गो न च सोऽश्वोस्ति भारत ।
यः सहेत गदावेगं मम क्रुद्धस्य संयुगे ॥ ३-३३-८८ (१७०२०)
सृञ्जयैः सहकैकेयैर्वृष्णीनां वृषभेण च ।
कथंस्विद्युधि कौन्तेय न राज्यं प्राप्नुयामहे ॥ ३-३३-८९ (१७०२१)
शत्रुहस्तगतां राजन्कथंस्विन्नाहरेर्महीम् ।
इह यत्नमुपाहृत्य बलेन महताऽन्वितः ॥ ३-३३-९० (१७०२२)

इति श्रीमन्महाभारते अरण्यपर्वणि अर्जुनाभिगमनपर्वणि
त्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥

३-३३-२ किंप्रयोजनमिति शेषः । राज्यस्यपदवीमिति झ ह। पाठः। ॥
३-३३-३ कूटं कपटम् ॥
३-३३-४ विघसो भूतबलिशेषः श्वकाकादियोग्यस्तद्भक्षकेण शुनकेनेत्यर्थः ॥
३-३३-५ धर्मलेशः प्रतिज्ञापालनजस्तेन प्रतिच्छन्न आवृतः । अर्थं राज्याख्यम् ॥
३-३३-७ कुणीनां हस्तविकलानाम् । पङ्गूनां पादविकलानाम्। अनादरे षष्ठी ॥
३-३३-८ धर्मकामे धर्मेच्छायाम् । प्रतीतस्य विश्वस्तस्य ॥
३-३३-९ शास्त्रैः शमवचनैः । न जयामः स्मशात्रवानिति क। ध। पाठः ॥
३-३३-११ मृगचर्यामिव । एनां वनचर्याम्। बलस्थैर्न निषेवितां बलवद्भिरसेवितामित्यर्थः ॥
३-३३-१३ न आपन्न इति संबन्धः ॥
३-३३-१८ गां पृथिवीम् ॥
३-३३-२० कृत्यलक्षणे करणीयस्वरूपे ॥
३-३३-२१ कुधर्मतत् इति पाठे कुधर्मं तनोतीति कुधर्मतत् कुधर्मबीजमित्यर्थः ॥
३-३३-२२ धर्मार्थौ बलसाध्यहेमन्तप्रातःस्नानशत्रुजयसंभवौ ॥
३-३३-२३ धर्मार्थे नत्वर्थकामार्थम् । अर्थं प्रयोजनम् ॥
३-३३-२४ यस्य चात्पार्थमेवार्थ इति झ । पाठः ॥
३-३३-२५ अतिवेलप्रत्यन्तम् ॥
३-३३-२८ साहि धर्मार्थरूपाहि ॥
३-३३-२९ अर्थपरिग्रहोऽर्थार्थमेवालम्बनीयः । इतरेतरयोर्नीतौ। धर्मादर्थः प्रणीयतेऽर्थाच्च धर्म इत्यर्थः। मेघादुदधिपुष्टिरुदधेर्मेघपूर्तिरिव ॥
३-३३-३० द्रव्यस्य स्रक्चन्दनादेः स्पर्शः । अर्थस्य स्वर्णादेः संयोगो लाभः ॥
३-३३-३१ न कामादर्थमृच्छतीति क । ध। पाठः ॥
३-३३-३२ साव्यते फलमेव तदिति झ । पाठः। उपयोगः साक्षात्प्रीत्युत्पादनेन कृतार्थत्वम्। काष्ठाद्भस्म साध्यं नतु भस्मतोपि भस्मान्तरे साध्यमस्ति तद्वत् ॥
३-३३-३३ वैतंसिको वीतंसेन जीवतीति पक्षिहन्ता । वीतंसं बन्धनोपाये मृगाणां पक्षिणामपीति विश्वः ॥
३-३३-४० धर्मं पूर्वे अहनि चरेत् ॥

३-३३-४१ कामं पूर्ववयसि चरेत् ॥
३-३३-४४ प्राप्तिर्महोदयो वा राज्यलाभजः तन्मोक्षाख्यं श्रेयः ।दुःखं दुःखदम् ॥
३-३३-४५ कर्मचोदनां प्रवृत्तिजनकं वेदवाक्यं शंसन्ति कथयन्ति ॥
३-३३-४९ क्लैब्येन कातर्येण ।वेत्तुं लब्धुम् ॥
३-३३-५० द्विजः ब्राह्मणः ॥
३-३३-५१ औरसं उत्साहः ॥
३-३३-५३ उदारं ईश्वरभावम् ।अवरे अनैश्वर्ये ॥
३-३३-५४ क्रूरं हिंसात्मकं क्षात्रं कर्म यस्य ॥
३-३३-५९ जिह्मां जिह्मायाः प्रियं साध्वन्नं उत्कोचमित्यर्थः ।क्षुद्राणां शत्रुपक्षीयाणाम्।निकृत्या भेदरूपेण छलेन।शल्यकः व्याधः।स हि मृगेभ्यो भक्ष्यं दत्त्वा विश्वास्य हत्वा आहारं लभते तद्वत् ॥
३-३३-६३ सत्वेन बलेन ।प्रमाणेन संधेन।उत्साहेन शत्रुपक्षीयैः सह संधानलक्षणेन ॥
३-३३-६७ एवमेव बीजौपम्येन ॥
३-३३-६९ होत्राभिः सान्त्वेन आह्वानैः ॥
३-३३-७० संहतैर्मिलितैः ।मधुहा मध्वर्थं गतः।ओहाङ्गतौ इत्यस्य रूपम्।कालप्रतीक्षायां हि शत्रुर्बलवान् भूत्वाऽस्मान् जेष्यतीति भावः ॥
३-३३-७१ हन्ति रसशोषणेन ।पाति वर्षेण ॥
३-३३-७२ पुराणं अनादि ॥
३-३३-७३ इतरेण मरणेन ॥
३-३३-७४ अपेयात् अपगच्छेत् ।व्यवसितः निश्चितः ॥
३-३३-७८ एनः पापम् ।अवाप्नुवन् अवाप्तिहेतोः ॥
३-३३-८१ श्वदृतौ सारमेयचर्मकोशे ।ब्रह्म वेदः।वृषले शूद्रे ॥
३-३३-८२ स्वाध्यायमधिकुर्वतेश्वदृताविति श्लोकं वेदवत् स्त्र्यादयो नित्यं पठन्तीत्यर्तः ॥
३-३३-८३ भवता हेतुना ।उपद्रवे राज्यभ्रंशे ॥
३-३३-८४ अर्थविभावको जयार्जितामर्थं प्रदातुम् ॥
३-३३-८५ वाचयित्वा आशीर्वादान् ॥
३-३३-८६ धार्तराष्ट्रादिति च्छेदः ॥
३-३३-९० उपाहृत्य आलम्ब्य ॥

---

वन-अध्यय०३४
॥ श्रीः ॥
३.३४. अध्यायः ३४

Mahabharata - Vana Parva - Chapter Topics

युधिष्ठिरेण भीमंप्रति स्वेन प्रतिज्ञाया दुस्त्यजत्वोक्तिपूर्वकं प्रतिज्ञाकालावसानप्रतिपालनविधानम् ॥१ ॥

Mahabharata - Vana Parva - Chapter Text

३-३४-० (१७०२३)
वैशंपायन उवाच। ३-३४-०क्ष् (१८६०)
स एवमुक्तस्तु महानुभावः
सत्यव्रतो भीमसेनेन राजा ।
अजातशत्रुस्तदनन्तरं वै
धैर्यान्वितो वाक्यमिदं बभाषे ॥ ३-३४-१ (१७०२४)
असंशयं भारत सत्यमेत-
द्यन्मां तुदन्वाक्यशल्यैः क्षिणोषि ।
न त्वां विगर्हे प्रतिकूलमेत-
न्ममानयाद्धि व्यसनं व आगात् ॥ ३-३४-२ (१७०२५)
अहं ह्यक्षानन्वपद्यं जिहीर्षन्
राज्यंसराष्ट्रं धृतराष्ट्रस्य पुत्रात् ।
तन्मां शठः कितव प्रत्यदेवी-
त्सुयोधनार्थं सुबलस्य पुत्रः ॥ ३-३४-३ (१७०२६)
महामायः शकुनिः पार्वतीयः
सभामध्ये प्रवपन्नक्षपूगान् ।
अमायिनं मायया प्रत्यजैषी-
त्ततोऽपश्यं वृजिनं भीमसेन ॥ ३-३४-४ (१७०२७)
अक्षांश्च दृष्ट्वा शकुनेर्यथावत्
कामानुकूलानयुजो युजश्च ।
शक्यो नियन्तुमभविष्यदात्मा
मन्युस्तु हन्यात्पुरुषस्य धैर्यम् ॥ ३-३४-५ (१७०२८)
यन्तुं नात्मा शक्यते पौरुषेण
मानेन वीर्येण च तात नद्धः ।
न ते वाचो भीमसेनाभ्यसूये
मन्ये तथा तद्भवितव्यमासीत् ॥ ३-३४-६ (१७०२९)
स नो राजा धृतराष्ट्रस्य पुत्रो
न्यपातयद्व्यसने राज्यमिच्छन् ।
दास्यं च नोऽगमयद्भीमसेन

यत्राभवच्छरणं द्रौपदी नः ॥ ३-३४-७ (१७०३०)
त्वं चापि तद्वेत्थ धनंजयश्च
पुनर्द्यूतायागतास्तां सभां नः ।
यन्माऽब्रवीद्धृतराष्ट्रस्य पुत्र
एकग्लहार्थं भरतानां समक्षम् ॥ ३-३४-८ (१७०३१)
वने समा द्वादश राजपुत्र
यथाकामं विदितमजातशत्रो ।
अथापरं चाविदितश्चरेथाः
सर्वैः सह भ्रातृभिश्छद्मरूपः ॥ ३-३४-९ (१७०३२)
त्वां चेच्छ्रुत्वा तात तथा चरन्त-
मवभोत्स्यन्ते भारतानां चराश्च ।
अन्यांश्चरेथास्तावतोऽब्दांस्तथात्वं
निश्चित्य तत्प्रतिजानीहि पार्थ ॥ ३-३४-१० (१७०३३)
चरैश्चेन्नो विदितः कालमेतं
युक्तो राजन्मोहयित्वा मदीयान् ।
ब्रवीमि सत्यं कुरुसंसदीह
तवैव ता भारत पञ्च नद्यः ॥ ३-३४-११ (१७०३४)
वयं चैतद्भारत सर्व एव
त्वया जिताः कालमपास्य भोगान् ।
चरेम इत्याह पुरा स राजा
मध्ये कुरूणां स मयोक्तस्तथेति ॥ ३-३४-१२ (१७०३५)
तत्र द्यूतमभवन्नो जघन्यं
यस्मिञ्जिताः प्रव्रजिताश् सर्वे ।
इत्थं तु देशाननुसंचरामो
वनानि कृच्छ्राणि च कृच्छ्ररूपाः ॥ ३-३४-१३ (१७०३६)
सुयोधनश्चापि न शान्तिमिच्छत्
भूयः स मन्योर्वशमन्वगच्छत् ।
उद्योजयामास कुरूंश्च सर्वान्
येचास्य केचिद्वशमन्वगच्छन् ॥ ३-३४-१४ (१७०३७)
तां सिद्धिमास्थाय सतां सकाशे
को नाम जह्यादिह राज्यहेतोः ।
आर्यस्य मन्ये मरणाद्गरीयो
यद्धर्ममुत्क्रम्य महीं प्रशासेत् ॥ ३-३४-१५ (१७०३८)
तदैव चेद्वीरकर्माकरिष्यो
यदा द्यूते परिघं पर्यमृक्षः ।
बाहू दिधक्षन्वारितः फल्गुनेन

किं दुष्कृतंभीम तदाऽभविष्यत् ॥ ३-३४-१६ (१७०३९)
प्रागेव चैवं समयक्रियायाः
किं नाब्रवीः पौरुषमाविदानः ।
प्राप्तं तु कालं त्वभिपद्यपश्चात्
किं मामिदानीमतिवेलमात्थ ॥ ३-३४-१७ (१७०४०)
भूयोपि दुःखं मम भीमसेन
दूये विषस्येव रसं हि पीत्वा ।
यद्याज्ञसेनीं परिक्लिश्यमानां
संदृश्य तत्क्षान्तमिति स्म भीम ॥ ३-३४-१८ (१७०४१)
न त्वद्य शक्यं भरतप्रवीर
कृत्वा यदुक्तं कुरुवीरमध्ये ।
कालं प्रतीक्षस्व सुखोदयाय
पाकं फलानामिव बीजवापः ॥ ३-३४-१९ (१७०४२)
यदा हि पूर्वं निकृतोनिकृन्ते-
द्वैरं सपुष्पं सफलं विदित्वा ।
महागुणं हरति हि पौरुषेण
तदा वीरो जीवति जीवलोके ॥ ३-३४-२० (१७०४३)
श्रियं च लोके लभते समग्रां
मन्ये चास्मै शत्रवः सन्नमन्ते ।
मित्राणि चैनमतिरागाद्भजन्ते
देवा इवेनद्रमुपजीवन्ति चैनम् ॥ ३-३४-२१ (१७०४४)
मम प्रतिज्ञां च निबोध सत्यां
वृणे सत्यममृतीज्जीविताच्च ।
राज्यं च पुत्राश्च यशो धनं च
सर्वं न सत्यस्य कलामुपैति ॥ ३-३४-२२ (१७०४५)

इति श्रीमन्महाभारते अरण्यपर्वणि अर्जुनाभिगमनपर्वणि
चतुस्त्रिंशोऽध्यायः ॥ ३४ ॥
Mahabharata - Vana Parva - Chapter Footnotes

३-३४-३ अन्वपद्यमनुसृतवात् ॥
३-३४-४ प्रवपन् पातयन् । अक्षपूगान् पाशसमूहान्। वृजिनं दुःखदं व्यसनम् ॥
३-३४-५ अयुजो विषमान् । युजः समान्। शक्य इति यः पुरुषस्य धैर्यं हन्यात् स सन्युर्यदि नाभविष्यत्तर्ह्यात्मा मनो नियन्तुं शक्यः अभविष्यदित्यध्याहृत्य योज्यम् ॥

३-३४-९ समा वर्षाणि । अथापरं वर्षम्। छद्मगूढ इति। झ। पाठः ॥
३-३४-१० अवभोत्स्यन्ते ज्ञास्यन्ति । बुद्ध्येरन्वै भारतानामिति क। पाठः ॥
३-३४-११ नो इति निपातः । वितस्तादिपञ्चनद्युपलक्षितो देशः ॥
३-३४-१२ सर्वे शतमपि भ्रातरः । स राजा दुर्योधनः ॥
३-३४-१३ नोऽस्माकम् । जघन्यं नीचम्। कृच्छ्ररूपाः
क्लिष्टरूपाः। वनानि दुर्गाणि च घोररूपा इति क। ध। पाठः ॥
३-३४-१४ शान्तिं नेच्छन् अनिच्छन् । उद्योजयामासोत्कर्षेण स्वेच्छया
तेषु तेषु द्रगदेशादिपालनकार्येष्विष्टान्योजितवान् ॥
३-३४-१५ तं संधिमास्थायेति झ । ट। पाठः ॥
३-३४-१६ पर्यमृक्षः परामृष्टवानसि । दिधक्षन् दग्धुमिच्छन् ॥
३-३४-१७ आविदानो जानन् । प्राप्तं कालं कालतुल्यां विपदमभिपद्य
स्वीकृत्य ॥
३-३४-१८ भूयोपि बह्वपि । दूये उपतप्ये ॥
३-३४-१९ बीजवापः कृषीबलः । पक्तिं फलानामिति झ। ध। पाठः ॥
३-३४-२० वैरं वैरिसमूहम् । सपुष्पं सफलं विदित्वा पुष्टतरं
ज्ञात्वा यदि निकृन्तेत् छिन्द्यात् तदा हि प्रसिद्धं महागुणं महान्तं
गुणं हरति आहरति ॥
३-३४-२२ अमृतात् देवभावात् । कलां षोडशं भागम् ॥

---

वन-अध्यय०३५
॥ श्रीः ॥
३.३५. अध्यायः ३५

Mahabharata - Vana Parva - Chapter Topics
भीमेन युधिष्ठिरंप्रति सोपपत्तिकं वनवासापूरणेनैव
दुर्योधननिग्रहचोदना ॥ १ ॥

Mahabharata - Vana Parva - Chapter Text

३-३५-० (१७०४६)
भीमसेन उवाच। ३-३५-०क्ष् (१८६१)
सन्धिं कृत्वैव कालेन ह्यन्तकेन पतत्रिणा ।
अनन्तेनाप्रमेयेण स्रोतसा सर्वहारिणा ॥ ३-३५-१ (१७०४७)
प्रत्यक्षं मन्यसे कालं मर्त्यः सन्कालबन्धनः ।
फेनधर्मा महाराज फलधर्मा तथैव च ॥ ३-३५-२ (१७०४८)
निमेषादपि कौन्तेय यस्यायुरपचीयते ।
सूच्येवाञ्जनचूर्णानि किमिति प्रतिपालयेत् ॥ ३-३५-३ (१७०४९)

यो नूनममितायुः स्यादथवाऽऽयुःप्रमाणवित् ।
स कालं वै प्रतीक्षेत सर्वप्रत्यक्षदर्शिवान् ॥ ३-३५-४ (१७०५०)
प्रतीक्ष्यमाणः कालो नः समा राजंस्त्रयोदश ।
आयुषोपचयं कृत्वा मरणायोपनेष्यति ॥ ३-३५-५ (१७०५१)
शरीरिणां हि मरणं शरीरे नित्यमाश्रितम् ।
प्रागेव मरणात्तस्माद्राज्यायैव घटामहे ॥ ३-३५-६ (१७०५२)
यो न याति प्रसंख्यानमस्पष्टो भूमिवर्धनः ।
अयातयित्वा वैराणि सोऽवसीदति गौरिव ॥ ३-३५-७ (१७०५३)
यो न यातयते वैरमल्पसत्वोद्यमः पुमान् ।
अफलं जन्म तस्याहं मन्ये दुर्जातजीविनः ॥ ३-३५-८ (१७०५४)
हैरण्यौ भवतो बाहू श्रुतिर्भवति पार्थिवी ।
हत्वा द्विषन्तं संग्रामे भुङ्क्ष्व बाहुजितं वसु ॥ ३-३५-९ (१७०५५)
हत्वा वै पुरुषो राजन्निकर्तारमरिंदम् ।
अह्नाय नरकं गच्छेत्स्वर्गेणास्य स संमितः ॥ ३-३५-१० (१७०५६)
अमर्षजो हि संतापः पावकाद्दीप्तिमत्तरः ।
येनाहमभिसंतप्तो न नक्तं न दिवा शये ॥ ३-३५-११ (१७०५७)
अयं च पार्थो बीभत्सुर्वरिष्ठो ज्याविकर्षणे ।
आस्ते परमसंतप्तो नूनं सिंह इवाशये ॥ ३-३५-१२ (१७०५८)
योऽयमेको नुदेत्सर्वांल्लोके राजन्धनुर्भृतः ।
सोयमात्मजमूष्माणं ग्रहाहस्तीव यच्छति ॥ ३-३५-१३ (१७०५९)
नकुलः सहदेवश्च वृद्धा माता च वीरसूः ।
तवैव प्रियमिच्छन्त आसते जडमूकवत् ॥ ३-३५-१४ (१७०६०)
सर्वे तेऽप्रियमिच्छन्ति बान्धवाः सह सृञ्जयैः ।
अहमेकश्च संतप्तो माता च प्रतिबिन्ध्यतः ॥ ३-३५-१५ (१७०६१)
प्रियमेव तु सर्वेषां यद्ब्रवीम्युत किंचन ।
सर्वे हि व्यसनं प्राप्ताः सर्वे युद्धाभिनन्दिनः ॥ ३-३५-१६ (१७०६२)
नातः पापीयसी काचिदापद्राजन्भविष्यति ।
यन्नो नीचैरल्पबलै राज्यमाच्छिद्य भुज्यते ॥ ३-३५-१७ (१७०६३)
शीलदोषाद्घृणाविष्ट आनृशंस्यात्परंतप ।
क्लेशांस्तितिक्षसे राजन्नान्यः कश्चित्प्रशंसति ॥ ३-३५-१८ (१७०६४)
श्रोत्रियस्येव ते राजन्मन्दकस्याविपश्चितः ।
अनुवाकहता बुद्धिर्नैषा तत्त्वार्थदर्शिनी ॥ ३-३५-१९ (१७०६५)
घृणी ब्राह्मणरूपोसि कथं क्षत्रेष्वजायथाः ।
अस्यां हि योनौ जायन्ते प्रायशः क्रूरबुद्धयः ॥ ३-३५-२० (१७०६६)
अश्रौषीस्त्वं राजधर्मान्यथा वै मनुरब्रवीत् ।
क्रूरान्निकृतिसंपन्नान्विहितानशमात्मकान् ॥ ३-३५-२१ (१७०६७)

धार्तराष्ट्रान्महाराज क्षमसे किं दुरात्मनः ।
कर्तव्ये पुरुषव्याघ्र किमास्से पीठसर्पवत् ॥ ३-३५-२२ (१७०६८)
बुद्ध्या वीर्येण संयुक्तः श्रुतेनाभिजनेन च ।
तृणानां मुष्टिनैकेन हिमवन्तं च पर्वतम् ।
छन्नमिच्छसि कौन्तेय योऽस्मान्संवर्तुमिच्छसि ॥ ३-३५-२३ (१७०६९)
अज्ञातचर्यागूढेन पृथिव्यां विश्रुतेन च ।
दिवीव पार्थ सूर्येण न शक्याऽऽचरितुं त्वया ॥ ३-३५-२४ (१७०७०)
बृहत्साल इवानूपे शाखापुष्पपलावान् ।
हस्ती श्वेत इवाज्ञातः कथं जिष्णुश्चरिष्ति ॥ ३-३५-२५ (१७०७१)
इमौ च सिंहसंकाशौ भ्रातरौ सहितौ शिशू ।
नकुलः सहदेवश्च कथं पार्थ चरिष्यतः ॥ ३-३५-२६ (१७०७२)
पुण्यकीर्ती राजपुत्री द्रौपदी वीरसूरियम् ।
विश्रुता कथमज्ञाता कृष्णा पार्थ चरिष्यति ॥ ३-३५-२७ (१७०७३)
मां चापि राजञ्जानन्ति ह्याकुमारमिमाः प्रजाः ।
अज्ञातचर्यां पश्यन्ति मेरोरिव निगूहनम् ॥ ३-३५-२८ (१७०७४)
तथैव बहवोऽस्माभी राष्ट्रेभ्यो विप्रवासिताः ।
राजानो राजपुत्राश्च धार्तराष्ट्रमनुव्रताः ॥ ३-३५-२९ (१७०७५)
न हि तेऽप्युपशाम्यन्ति निकृता वा निराकृताः ।
अवश्यं तैर्निकर्तव्यमस्माकं तत्प्रियैषिभिः ॥ ३-३५-३० (१७०७६)
तेऽप्यस्मासु प्रयुञ्जीरन्प्रच्छन्नान्सुबहूंश्चरान् ।
आचक्षीरंश्च नो ज्ञात्वा ततः स्यात्सुमहद्भयम् ॥ ३-३५-३१ (१७०७७)
अस्माभिरुषिताः सम्यग्वने मासास्त्रयोदश ।
परिमाणएन तान्पश्य तावतः परिवत्सरान् ॥ ३-३५-३२ (१७०७८)
अस्ति मासः प्रतिनिधिर्यथा प्राहुर्मनीषिणः ।
पूतिकानिव सोमस्य तथेदं क्रियतामिति ॥ ३-३५-३३ (१७०७९)
अथवाऽनडुहे राजन्साधने साधुवाहिने ।
सौहित्यदानादेतस्मादेनसः प्रतिमुच्यते ॥ ३-३५-३४ (१७०८०)
तस्माच्छत्रुवधे राजन्क्रियतां निश्चयस्त्वया ।
क्षत्रियस्य हि सर्वस्य नान्यो धर्मोस्ति संयुगात् ॥ ३-३५-३५ (१७०८१)

इति श्रीमन्महाभारेत अरण्यपर्वणि अर्जुनाभिगमनपर्वणि
पञ्चस्त्रिंशोऽध्यायः ॥ ३५ ॥

Mahabharata - Vana Parva - Chapter Footnotes

३-३५-१ पतत्रिणा बाणवत् शीघ्रगामिना स्रोतसा नित्यवाहिना ॥
३-३५-२ प्रत्यक्षं प्रत्यक्षेण ज्ञातम् ।कालबन्धनः कालवश्यः

फेनधर्मा निःसारः। फलधर्मा पतनशीलः ॥
३-३५-३ सूच्येवाञ्जनचूर्णस्य । यथा कज्जलक्षोदस्यातिश्लक्ष्णस्य सूक्ष्माग्रया सूच्यापि किंचिदपत्रीयते एवं निमेषादपि यस्यायुरपचीयते स किमिति अवधिं प्रतिपालयेन्न कथमपीत्यध्याहृत्य योज्यम्। सूच्येवाञ्जनचूर्णस्येति झ। पाठः ॥
३-३५-७ प्रसंख्यानं प्रकृष्टां साधुकीर्तिम् । यतः अस्पष्टः शौर्याद्यभावादितरैरविदितः। भूमिवर्धनः भूमिहिंसकः। भूमेर्भारभूत इत्यर्थः। अयातयित्वा अनिस्तीर्य। गौर्बलीवर्दइव। सोप्यशक्तश्चेत् गोषु संख्यानं स्पष्टतां वाप्य प्राप्नुवन्भूमेर्भारभूतो भवति ॥
३-३५-८ दुर्जातशायिन इति क । पाठः ॥
३-३५-९ हैरण्यौ हिरण्यस्वामिनौ । श्रुतिः कीर्तिः। पार्थिवी पृथोः राज्ञ इवेत्यर्थः ॥
३-३५-१० निकर्तारं वञ्चकम् । अह्नाय सद्यः ॥
३-३५-१२ आशये स्वस्थाने ॥
३-३५-१५ प्रतिविन्ध्यतः प्तिविन्ध्यस्य माता द्रौदी ॥
३-३५-१९ अनुवाकः गुरूक्तिमनुवचनं तेन हता । अर्थज्ञानसून्यस्य। वेदाक्षरमात्राभ्यासिनः ॥
३-३५-२० घृणी दयालुः ॥
३-३५-२२ आस्से तूष्णींभूतोसि । पीठसर्पवत् अजगरवत् ॥
३-३५-२३ संवर्तुं संवरीतुं छादितुम् ॥
३-३५-२५ अनूपे बहुजे देशे ॥
३-३५-३० निकर्तव्यं नीयं सूचनादिकर्म कर्तव्यम् ॥
३-३५-३४ अनडुहे पूर्णं घासमुपाहृत्यानृतान्मुच्यत इति धर्मशास्त्रोक्तं प्रायश्चित्तं वा कर्तव्यमित्याहाथवेति । सौहित्यमातृप्तिभोजनम् ॥

---

वन-अध्यय०३६
॥ श्रीः ॥
३.३६. अध्यायः ३६

Mahabharata - Vana Parva - Chapter Topics
भीमयुधिष्ठिरसंवादसमयसंनिहितेन व्यासेन युधिष्ठिराय प्रतिस्मृतिविद्योपदेशः ॥ १ ॥
युधिष्ठिरेण व्यासवचनात्परिजनैः सह द्वैतवनात्काम्यककवनगमनम् ॥ २ ॥

३-३६-० (१७०८२)
वैशंपायन उवाच। ३-३६-०क्ष् (१८६२)
भीमसेनवचः श्रुत्वा कुन्तीपुत्रो युधिष्ठिरः ।
निःश्वस्य पुरुषव्याघ्रः संप्रदध्यौ परंतपः ॥ ३-३६-१ (१७०८३)
श्रुता मे राजधर्माश्च वर्णानां च पृथक्पृथक् ।
आयत्यां च तदात्वे च यः पश्यति स पश्यति ॥ ३-३६-२ (१७०८४)
धर्मस्य जानमानोऽहं गतिमग्र्यां सुदुर्विदाम् ।
कथं बलात्करिष्यामि मेरोरिव विवर्तनम् ॥ ३-३६-३ (१७०८५)
स मुहूर्तमिव ध्यात्वा विनिश्चित्येतिकृत्यताम् ।
भीमसेनमिद वाक्यमपदान्तरमब्रवीत् ॥ ३-३६-४ (१७०८६)
एवमेतन्महाबाहो यथा वदसि भारत ।
इदमन्यत्समादत्स्व वाक्यं मे वाक्यकोविद ॥ ३-३६-५ (१७०८७)
महापापानि कर्माणि यानि केवलसाहसात् ।
आरभ्यन्ते भीमसेन व्यथन्ते तानि भारत ॥ ३-३६-६ (१७०८८)
सुमन्त्रिते सुविक्रान्ते सुकृतेसुविचारिते ।
सिद्ध्यन्त्यर्था महाबाहो दैवं चात्र प्रदक्षिणम् ॥ ३-३६-७ (१७०८९)
यत्तु केवलचापल्याद्बलदर्पोत्थितः स्वयम् ।
आरब्धव्यमिदं कार्यं मन्यसे शृणु तत्रमे ॥ ३-३६-८ (१७०९०)
भूरिश्रवाः शलश्चैव जलसन्धश्च वीर्यवान् ।
भीष्मो द्रोणश्च कर्णशच् द्रोणपुत्रश्च वीर्यवान् ॥ ३-३६-९ (१७०९१)
धार्तराष्ट्रा दुराधर्षा दुर्योधनपुरोगमाः ।
सर्व एव कृताशस्त्राश्च सततं चाततायिनः ॥ ३-३६-१० (१७०९२)
राजानः पार्थिवाश्चैव येऽस्माभिरुपतापिताः ।
ते श्रिताः कौरवं पक्षं जातस्नेहाश्च सांप्रतम् ॥ ३-३६-११ (१७०९३)
दुर्योधनहिते युक्ता न तथाऽस्मासु भारत ।
पूर्णकोशा बलोपेताः प्रयतिष्यन्ति रक्षणे ॥ ३-३६-१२ (१७०९४)
सर्वे कौरवसैन्यस् सपुत्रामात्यसैनिकाः ।
संविभक्ता हि मात्राभिर्भोगैरपि च सर्वशः ॥ ३-३६-१३ (१७०९५)
दुर्योधनेन ते वीरा मानिताश्च विशेषतः ।
प्राणांस्त्यक्ष्यन्ति संग्रामे इति मे निश्चिता मतिः ॥ ३-३६-१४ (१७०९६)
समा यद्यपि भीष्मस्य वृत्तिरस्मासु तेषु च ।
द्रोणस् च महाबाहो कृषस्य च महात्मनः ॥ ३-३६-१५ (१७०९७)
अवश्यं राजपिण्डस्तैर्निर्वेश्य इति मे मतिः ।

तस्मात्त्यक्ष्यन्ति संग्रामे प्राणानपि सुदुस्त्यजान् ॥ ३-३६-१६ (१७०९८)
सर्वेदिव्यास्त्रविद्वांसः सर्वे धर्मपरायणाः ।
अजेयाश्चेति मे बुद्धिरपि देवैः सवासवैः ॥ ३-३६-१७ (१७०९९)
अमर्षी नित्यसंरब्धस्तत्र कर्णो महारथः ।
सर्वास्त्रविदनाधृष्यो ह्यभेद्यकवचावृतः ॥ ३-३६-१८ (१७१००)
अनिर्जित्यरणे सर्वानेतान्पुरुषसत्तमान् ।
अशक्यो ह्यसहायेन हन्तुं दुर्योधनस्त्वया ॥ ३-३६-१९ (१७१०१)
न निद्रामधिगच्छामि चिन्तयानो वृकोदर ।
अतिसर्वान्धनुर्ग्राहान्सूतपुत्रस्य लाघवम् ॥ ३-३६-२० (१७१०२)
वैशंपायन उवाच। ३-३६-२१क्ष् (१८६३)
एतद्वचनमाज्ञाय भीमसेनोऽत्यमर्षणः ।
बभूव शान्तिसंयुक्तो गुरोर्वचनवारितः ॥ ३-३६-२१ (१७१०३)
तयोः संवदतोरेवं तदा पाण्डवयोर्द्वयोः ।
आजगाम महायोगी व्यासः सत्यवतीसुतः ॥ ३-३६-२२ (१७१०४)
सोऽभिगम्य यथान्यायं पाण्डवैः प्रतिपूजितः ।
युधिष्ठिरमिदं वाक्यमुवाच वदतांवरः ॥ ३-३६-२३ (१७१०५)
युधिष्ठिर महाबाहो वेद्मि ते हृदयस्थितम् ।
मनीषया तत क्षिप्रमागतोस्मि नरर्षभ ॥ ३-३६-२४ (१७१०६)
भीष्माद्द्रोणात्कृपात्कर्णाद्द्रोणपुत्राच्च भारत ।
दुर्योधनान्नृपसुतात्तथा दुःशासनादपि ॥ ३-३६-२५ (१७१०७)
त्ते भयममित्रघ्न हृदि संपरिवर्तते ।
तत्तेऽहं नाशयिष्यामि विधिदृष्टेन हेतुना ॥ ३-३६-२६ (१७१०८)
तच्छ्रुत्वा धृतिमास्थाय कर्मणा प्रतिपादय ।
प्रतिपाद्य तु राजेन्द्र ततः क्षिप्रं ज्वरं जहि ॥ ३-३६-२७ (१७१०९)
तत एकान्तमानाय्य पाराशर्यो युधिष्ठिरम् ।
अब्रवीदुपपन्नार्थमिदं वाक्यविशारदः ॥ ३-३६-२८ (१७११०)
श्रेयसस्तेऽपरः कालः प्राप्तो भरतसत्तम ।
येनाभिभविता शत्रून्रणे पार्थो धनुर्धरः ॥ ३-३६-२९ (१७१११)
गृहाणेमां मया प्रोक्तां सिद्धिं मूर्तिमर्तामिव ।
विद्यां प्रतिस्मृतिं नाम प्रपन्नाय ब्रवीमि ते ॥ ३-३६-३० (१७११२)
यामवाप्यमहाबाहुरर्जुनः साधयिष्यति ।
अस्त्रहेतोर्महेन्द्रं च रुद्रं चैवाभिगच्छतु ॥ ३-३६-३१ (१७११३)
वरुणं च कुबेरं च धर्मराजं च पाण्डव ।
शक्तो ह्येष सुरान्द्रष्टुं तपसा विक्रमेण च ॥ ३-३६-३२ (१७११४)
ऋषिरेष मेहातेजा नारायणसहायवान् ।
पुराणः शास्वतो देवस्त्वजेयो जिष्णुरच्युतः ॥ ३-३६-३३ (१७११५)

अस्त्राणीनद्राच्च रुद्राच्च लोकपालेभ्य एव च ।
समादाय महाबाहुर्महत्कर्म करिष्यति ॥ ३-३६-३४ (१७११६)
वनादस्माच्च कौन्तेय वनमन्यद्विचिन्त्यताम् ।
निवासार्थाय यद्युक्तं भवेद्वः पृथिवीपते ॥ ३-३६-३५ (१७११७)
एकत्रचिरवासो हि न प्रीतिजननो भवेत् ।
तापसानां च शान्तानां भवेदुद्वेगकारकः ॥ ३-३६-३६ (१७११८)
मृगाणामुपरोधश्च वीरुदोषधिसंक्षयः ।
बिभर्षि च बहून्विप्रान्वेदवेदाङ्गपारगान् ॥ ३-३६-३७ (१७११९)
वैशंपायन उवाच। ३-३६-३८क्ष् (१८६४)
एवमुक्त्वा प्रपन्नाय शुचये भगवान्प्रभुः ।
प्रोवाच योगतत्त्वज्ञो योगविद्यामनुत्तमाम् ॥ ३-३६-३८ (१७१२०)
धर्मराजाय धीमान्स व्यासः सत्यवतीसुतः ।
अनुज्ञाय च कौन्तेयं तत्रैवान्तरधीयत ॥ ३-३६-३९ (१७१२१)
युधिष्ठिरस्तु धर्मात्मा तद्ब्रह्म मनसा यतः ।
धारयामास मेधावी कालेकाले सदाऽभ्यसन् ॥ ३-३६-४० (१७१२२)
स व्यासवाक्यमुदितो वनाद्द्वैतवनात्ततः ।
ययौ सरस्वतीकूले काम्यकं नाम काननम् ॥ ३-३६-४१ (१७१२३)
तमन्वयुर्महाराज शिक्षाक्षरविशारदाः ।
ब्राह्मणास्तपसा युक्ता देवेन्द्रमृषयो यथा ॥ ३-३६-४२ (१७१२४)
ततः काम्यकमासाद्य पुनस्ते भरतर्षभ ।
न्यविशन्त महात्मानः सामान्याः सपदानुगाः ॥ ३-३६-४३ (१७१२५)
तत्रते न्यवसन्राजन्कंचित्कालं मनस्विनः ।
धनुर्वेदपरा वीरा गृणाना वेदमुत्तमम् ॥ ३-३६-४४ (१७१२६)
चरन्तो मृगयां नित्यं शुद्धैर्बाणैर्मृगार्थिनः ।
पितृदैवतविप्रेभ्यो निर्वपन्तो यथाविधि ॥ ३-३६-४५ (१७१२७)

इति श्रीमन्महाभारते अरण्यपर्वणि अर्जुनाभिगमनपर्वणि
षट्त्रिंशोऽध्यायः ॥ ३६ ॥

Mahabharata - Vana Parva - Chapter Footnotes

३-३६-२ आयत्यामुत्तरकाले तदात्वे वर्तमानकाले । यस्तान्पश्यति ॥
३-३६-४ इति कृत्यतामितिकर्तव्यताम् । अपदान्तरमविलम्बितम् ॥
३-३६-६ व्यथन्ते व्यथयन्ति ॥
३-३६-७ सुविचारिते निश्चिते सति ॥
३-३६-१३ सैन्यस् सैन्यसंबन्धिनः सर्वे । मात्राभिरंशपरिच्छेदैः ॥
३-३६-१६ राजपिण्डो राजदत्तो ग्रासो निर्वेश्य आनृण्यार्थं शोधनीयः ॥

३-३६-२० लाघवं शीघ्रताम् ॥
३-३६-३१ साधयिष्यति राज्यम् ॥
३-३६-३३ शाश्वतो देवो विष्णोरंशः सनातन इति क ।ठ।ध।पाठः ॥
३-३६-३९ अनुज्ञाय पृष्ट्वा ॥
३-३६-४० ब्रह्म मन्त्रम् ॥
३-३६-४३ सामात्याः सपरिच्छदा इति झ ।पाठः ॥

---

वन-अध्यय०३७
॥ श्रीः ॥
३.३७. अध्यायः ३७

Mahabharata - Vana Parva - Chapter Topics
युधिष्ठिरेण व्यासोपदिष्टमन्त्रोपदेशपूर्वकमस्त्रग्रहणाय
स्वर्गंप्रत्यर्जुनस्य प्रस्थापनम् ॥ १ ॥
स्वर्गं प्रस्थितेनार्जुनेन यध्येपथमिन्द्रकीलगिरौ तपश्चर्या ॥ २ ॥
तत्र मुनिरूपिण इन्द्रस्य दर्शनम् ॥ ३ ॥
दिव्यास्त्रदानं याचितेनेन्द्रेणार्जुनंप्रति तपसा
रुद्रप्रसादनानन्तरमस्त्रलाभाय स्वर्गागमनचोदना ॥ ४ ॥

Mahabharata - Vana Parva - Chapter Text

३-३७-० (१७१२८)
वैशंपायन उवाच। ३-३७-०क्ष् (१८६५)
कस्यचित्त्वथ कालस्य धर्मराजो युधिष्ठिरः ।
संस्मृत्य मुनिसंदेशमिदं वचनमब्रवीत् ॥ ३-३७-१ (१७१२९)
विविक्ते विदितप्रज्ञमर्जुनं पुरुषर्षभ ।
सान्त्वपूर्वं स्मितं कृत्वापाणिना परिसंस्पृशन् ॥ ३-३७-२ (१७१३०)
स मुहूर्तमिव ध्यात्वा वनवासमरिंदमः ।
धनंजयंधर्मराजो रहसीदमुवाच ह ॥ ३-३७-३ (१७१३१)
भीष्मे द्रोणे कृपे कर्णे द्रोणपुत्रे च भारत ।
धनुर्वेदश्चतुष्पाद एतेष्वद्य प्रतिष्ठितः ॥ ३-३७-४ (१७१३२)
दैवं ब्राह्मं चासुरं च सप्रयोगचिकित्सितम् ।
सर्वास्त्राणां प्रयोगं च अभिजानन्ति कृत्स्नशः ॥ ३-३७-५ (१७१३३)
ते सर्वे धृतराष्ट्रस्य पुत्रेण परिसान्त्विताः ।
संविभक्ताश्च तुष्टाश्च गुरुवत्तेषु वर्तते ।
सर्वयोधेषु चैवास्य सदा प्रीतिरनुत्तमा ॥ ३-३७-६ (१७१३४)
आचार्या मानितास्तुष्टाः शान्तिं व्यवहरन्नयुत ।

शक्तिं न हापयिष्यन्ति ते काले प्रतिपूजिताः ॥ ३-३७-७ (१७१३५)
अद्य चेयं मही कृत्स्ना दुर्याधनवशानुगा ।
सग्रामनगरा पार्थ ससागरवनाकरा ॥
भवानेव प्रियोऽस्माकं त्वयि भारः समाहितः ॥ ३-३७-८ (१७१३६)
अत्र कृत्यं प्रपश्यामि प्राप्तकालमरिंदम ।
कृष्णद्वैपायनात्तात गृहीतोपनिषन्मया ॥ ३-३७-१० (१७१३७)
गृहीतया तया सम्यग्जगत्सर्वं प्रकाशते ।
तेन त्वं ब्रह्मणा तात संयुक्तः सुसमाहितः ॥ ३-३७-११ (१७१३८)
देवतानां यथाकालं प्रसादं प्रतिपालय ।
तपसा योजयात्मानमुग्रेण भरतर्षभ ॥ ३-३७-१२ (१७१३९)
धनुष्मान्कवची खड्गी मुनिः साधुव्रते स्थितः ।
न कस्यचिद्ददन्मार्गं गच्छ तातोत्तरां दिशम् ॥ ३-३७-१३ (१७१४०)
इनद्रे ह्यस्त्राणि दिव्यानि समस्तानि धनंजय ।
वृत्राद्भीतैर्बलं देवैस्तदा शक्रे समर्पितम् ॥ ३-३७-१४ (१७१४१)
तान्येकस्थानि सर्वाणि ततस्त्वं प्रतिपत्स्यसे ।
ग्अनेन ब्रह्मणा तात सर्वं संप्रतिपद्यते ॥' ३-३७-१५ (१७१४२)
शक्रमेव प्रपद्यस्व स तेऽस्त्राणि प्रदास्यति ।
दीक्षितोऽद्यैव गच्छ त्वं द्रष्टुं देवं पुरंदरम् ॥ ३-३७-१६ (१७१४३)
वैशंपायन उवाच। ३-३७-१७क्ष् (१८६६)
एवमुक्त्वा धर्मराजस्तमध्यापयत प्रभुः ॥ ३-३७-१७ (१७१४४)
दीक्षितं विधिना तेन यतवाक्कायमानसम् ।
अनुजज्ञे तदा वीरं भ्राता भ्रातरमग्रजः ॥ ३-३७-१८ (१७१४५)
निदेशाद्धर्मराजस्य द्रष्टुकामः पुरंदरम् ।
धनुर्गाण्डीवमादाय तथाऽक्षय्ये महेषुधी ॥ ३-३७-१९ (१७१४६)
कवची सतलत्राणो बद्धगोधाङ्गुलित्रवान् ।
हत्वाऽग्निं ब्राह्मणान्निष्कैः स्वस्तिवाच्य महाभुज ॥ ३-३७-२० (१७१४७)
प्रातिष्ठत महाबाहुः प्रगृहीतशरासनः ।
वधाय धार्तराष्ट्राणां निःश्वस्योर्ध्वमुदैक्षत ॥ ३-३७-२१ (१७१४८)
तं दृष्ट्वा तत्रकौन्तेयं प्रगृहीतशरासनम् ।
अब्रुवन्ब्रह्मणाः सिद्धा भूतान्यन्तर्हितानि च ॥ ३-३७-२२ (१७१४९)
क्षिप्रमाप्नुहि कौन्तेय मनसा यद्यदिच्छसि ।
संसाधयस्व कौन्तेय ध्रुवोस्तु विजयस्तव ॥ ३-३७-२३ (१७१५०)
अब्रुवन्ब्राह्मणाः पार्थमिति कृत्वा जयाशिषः ।
गसिद्धचारणसङ्घाश्च गन्धर्वाश्च तमब्रुवन् ॥ ३-३७-२४ (१७१५१)
स्वस्तिव्रतमुपाधत्स्व सङ्कल्पस्तव सिद्ध्यताम् ।
मनोरथाश्च ते सर्वे समृद्ध्यन्तां महारथ ॥ ३-३७-२५ (१७१५२)

एवमुक्तोऽभिवाद्यैतान्बद्धाञ्जलिपुटस्तथा ।
तपोयोगमनाः पार्थः पुरोहितमवन्दत ॥ ३-३७-२६ (१७१५३)
ततः प्रीतमना जिष्णुस्तावुभावभ्यवन्दत ।
सहोदरावतिरथौ युधिष्ठिरवृकोदरौ ॥ ३-३७-२७ (१७१५४)
तं क्लान्तमनसौ पूर्णमभिगम्य महारथौ ।
यमौ गाण्डीवधन्वानमभ्यवादयतामुभौ ॥ ३-३७-२८ (१७१५५)
अभिवाद्य तु तौ वीरावूचतुः पाकशासनिम् ।
अवाप्तव्यानि सर्वाणि दिव्यान्यस्त्राणि वासवात्। ३-३७-२९चस्त्राण्याप्नुहि
कौन्तेय मनसा यद्यदिच्छसि ॥ ३-३७-२९ (१७१५६)
गिरो ह्यशिथिलाः सर्वा निर्दोषाः संमताः सताम् ।
त्वमेकः पाण्डवेष्वद्य संप्राप्तोसि धनञ्जय ॥ ३-३७-३० (१७१५७)
न चाधर्मविदं देवा नासिद्धं नातपस्विनम् ।
द्रष्टुमिच्छन्ति कौन्तेय चलचित्तं शठं न च ॥ ३-३७-३१ (१७१५८)
रोरूयमाणः कटुकमीर्ष्यकः कटुकाक्षरः ।
शठकः श्लाघकः क्षेप्ता हन्ता च विचिकित्सिता ॥ ३-३७-३२ (१७१५९)
विश्वस् हन्ता मायावी क्रोधनोऽनृतभाषिता ।
अत्याशी नास्तिकोऽदाता मित्रध्रुक्सर्वशङ्कितः ॥ ३-३७-३३ (१७१६०)
आक्रोष्टा चातिमानी च रौद्रो लुब्धोऽथ लोलुपः ।
स्तेनश्च मद्यपश्चैव भ्रूणहा गुरुतल्पगः ॥ ३-३७-३४ (१७१६१)
संभावितात्मा चात्यर्थं नृशंसः पुरुषश्च यः ।
नैते लोकानाप्नुवन्ति निर्लोकास्ते धनञ्जय ॥ ३-३७-३५ (१७१६२)
आनृशंस्यमनुक्रोशः सत्यं करुणवेदिता ।
दमः स्थितिर्धृतिर्धर्मः क्षमा कृत्यमनुत्तमम् ॥ ३-३७-३६ (१७१६३)
दया शमश्च धर्मश्च गुरुपूजा कृतज्ञता ।
मैत्रता द्विजभक्तिश्च वसन्ति त्वयि फल्गुन ।
व्यपेक्षा सर्वभूतेषु कृपा दानं मतिः स्मृतिः ॥ ३-३७-३७ (१७१६४)
तस्मात्कौरव्य शक्रेण समेष्यसि धनञ्जय ।
त्वादृशेन हि देवानां श्लाघनीयः समागमः ॥ ३-३७-३८ (१७१६५)
सुहृदां सोदराणां च सर्वेषां भरतर्षभ ।
त्वं गतिः परमा तात वृत्रहा मरुतामिव ॥ ३-३७-३९ (१७१६६)
तस्मिंस्त्रयोदशे वर्षे भ्रातरः सुहृदश्च ते ।
सर्वे हिसंश्रयिष्यन्ति बाहुवीर्यं महाबल ॥ ३-३७-४० (१७१६७)
स पार्थ पितरं गच्छ सहस्राक्षमरिन्दम ।
मुष्टिग्रहणमादत्स्व सर्वाण्यस्त्राणि वासवात् ॥ ३-३७-४१ (१७१६८)
शतशृङ्गे महाबाहो मघवानिदमब्रवीत् ।
शृण्वतां सर्वभूतानां त्वामुपाघ्राय मूर्धनि ॥ ३-३७-४२ (१७१६९)

विदितः सर्वभूतानां दिवं तात गमिष्यसि ।
प्राप्य पुण्यकृतां लोकान्नंस्यसे जयतांवर ॥ ३-३७-४३ (१७१७०)
मानितस्त्रिदशैः पार्थ विहृत्य सुसुखं दिवि ।
अवाप्यपरमास्त्राणि पृथिवीं पुनरेष्यसि ॥ ३-३७-४४ (१७१७१)
गुणांस्ते वासवस्तात खाण्डवं दहति त्वयि ।
शृण्वतां सर्वभूतानां पुनः पुनरभाषत ॥ ३-३७-४५ (१७१७२)
तां प्रतिज्ञां नरश्रेष्ठ कर्तुमर्हसि वासवीम् ।
कंचिद्देशमितः प्राप्य तपोयोगमना भव ॥ ३-३७-४६ (१७१७३)
कर्तुमर्हसि कौरव्य मघवद्वचनं हितम् ।
दीक्षित्वाऽद्यैव गच्छ त्वं द्रष्टाऽसि त्वं पुरन्दरम् ॥ ३-३७-४७ (१७१७४)
तौ परिष्वज्य बीभत्सुः कृष्णामामन्त्र्य चाप्युभौ ।
मनांस्यादाय सर्वेषां प्रयातः पुरुषर्षभः ॥' ३-३७-४८ (१७१७५)
तं तथा प्रस्थितं वीरं सिंहस्कन्धोरसं तदा ।
प्राञ्जलिः पाण्डवंकृष्णा देवानां कुर्वती नमः ।
वाग्भिः परमशुद्धाभिर्मङ्गलाभिरभाषत् ॥ ३-३७-४९ (१७१७६)
नमो धात्रे विधात्रे च स्वस्ति गच्छ वनाद्वनम् ।
ग्धर्मस्त्वां जुषतां पार्थ भास्करश्च विभावसुः ।
ब्रह्मा त्वां ब्राह्मणाश्चैव पालयन्तु धनञ्जय ॥' ३-३७-५० (१७१७७)
ज्येष्ठापचायी ज्येष्ठस्य भ्रातुर्वचनमास्थितः ।
प्रपद्येथा वसून्रुद्रानादित्यान्समरुद्गणान् ।
विश्वेदेवांस्तथा साध्याञ्शान्त्यर्थं भरतर्षभ ॥ ३-३७-५१ (१७१७८)
स्वस्ति तेस्त्वान्तरिक्षेभ्यो दिव्येभ्यो भरतर्षभ ।
पार्थिवेभ्यश्च सर्वेभ्यो ये केचित्परिपन्थिनः ॥ ३-३७-५२ (१७१७९)
अवरोधाद्वने वासात्सर्वस्वहरणादपि ।
इदं दुःखतरं मन्ये पुत्रेभ्यश्च विवासनात् ॥ ३-३७-५३ (१७१८०)
मास्माकं क्षत्रियकुले जातुचित्पुनरुद्भवः ।
ब्राह्मणेभ्यो नमस्यामि येषां नायुधजीविका ॥ ३-३७-५४ (१७१८१)
इदं मे परमं दुःखं यः स पापः सुयोधनः ।
दृष्टवा मां गौरिति प्राह प्रहसन्राजसंसदि ॥ ३-३७-५५ (१७१८२)
तस्माद्दुःखादिदं दुःखं गरीय इतिमे मतिः ।
यत्तत्परिषदो मध्ये बह्वयुक्तमभाषत ॥ ३-३७-५६ (१७१८३)
ग्ध्वंसितः स्वगृहेभ्यश्च राष्ट्राच्च भरतर्षभ ।
वने प्रतिष्ठितो भूत्वा सौहार्दादवतिष्ठसे ॥' ३-३७-५७ (१७१८४)
जेता यः सर्वशत्रूणां यः पावकमतर्पयः ।
जनस्त्वां पश्यतीदानीं गच्छन्तं भरतर्षभ ॥' ३-३७-५८ (१७१८५)
अस्मिन्नूनं महारण्ये भ्रातरः सुहृदश्च ते ।

त्वत्कथाः कथयिष्यन्ति चारणा ऋषयस्तथा ॥ ३-३७-५९ (१७१८६)
यत्ते कुन्ती महाबाहो जातस्यैच्छद्धनञ्जय ।
तत्तेऽस्तु सर्वं कौन्तेय यथा च स्वयमिच्छसि ॥ ३-३७-६० (१७१८७)
ग्वसुदेवस्वसा देवी त्वामार्या पुनरागतम् ।
पश्यतु त्वां पृथा पार्थ सहस्राक्षमिवादितिः' ॥ ३-३७-६१ (१७१८८)
नूनं ते भ्रातरः सर्वे त्वत्कथाभिः प्रजागरे ।
रंस्यन्ते तव कर्माणि कीरत्यन्तः पुनः पुनः ॥ ३-३७-६२ (१७१८९)
न च नः पार्थ भोगेषु न धने नोत जीविते ।
तुष्टिर्बुद्धिर्भवित्री वा त्वयि दीर्घप्रवासिनि ॥ ३-३७-६३ (१७१९०)
त्वयि नः पार्थ सर्वेषां सुखदुःखे प्रतिष्ठते ।
जीवितं मरणं चैव राज्यमैश्वर्यमेव च ॥ ३-३७-६४ (१७१९१)
आपृष्टो नोसि कौन्तेय स्वस्ति प्राप्नुहि पाण्डव ।
कृतास्त्रं स्वस्तिमन्तं त्वां द्रक्ष्यामि पुनरागतम् ॥ ३-३७-६५ (१७१९२)
बलवद्भिर्विरुद्धं न कार्यमेतत्त्वयाऽनघ ।
प्रयाह्यविघ्नेयैवाशु विजयाय महाबल ॥ ३-३७-६६ (१७१९३)
ह्रीः श्रीः कीर्तिर्धृतिः पुष्टिरुमा लक्ष्मीः सरस्वती ।
इमा वै तव पान्थस् पालयन्तु धनञ्जय ॥ ३-३७-६७ (१७१९४)
वैशंपायन उवाच। ३-३७-६८क्ष् (१८६७)
एवमुक्त्वाऽऽशिषः कृष्णा विरराम यशस्विनी। ३-३७-६८ (१७१९५)
ततःप्रदक्षिणं कृत्वा भ्रातॄन्धौम्यं च पाण्डवः ।
प्रातिष्ठत महाबाहुः प्रगृह्य रुचिरं धनुः ॥ ३-३७-६९ (१७१९६)
ग्शनैरिव दिशं वीर उदीचीं भरतर्षभ ।
संहरंस्तरसा वृक्षाँल्लता वल्लीश्च भारत ।
असज्जमानो वृक्षेषु जगाम सुमहाबलः ॥' ३-३७-७० (१७१९७)
तस्य मार्गादपाक्रामन्सर्वभूतानि गच्छतः ।
युक्तस्यैन्द्रेण योगेन पराक्रान्तस्य शुष्मिणः ॥ ३-३७-७१ (१७१९८)
सोऽगच्छत्पर्वतांस्तात तपोधननिषेवितान् ।
दिव्यं हैमवतं पुण्यं देवजुष्टं परंतपः ॥ ३-३७-७२ (१७१९९)
अगच्छत्पर्वतं पुण्यमेकाह्नैव महामनाः ।
मनोजवगतिर्भूत्वा योगयुक्तो यथाऽनिलः ॥ ३-३७-७३ (१७२००)
हिमवन्तमतिक्रम्य गन्धमादनमेव च ।
अत्यक्रामत्स दुर्गाणि दिवारात्रमतन्द्रितः ॥ ३-३७-७४ (१७२०१)
इन्द्रिकीलं समासाद्य ततोऽतिष्ठद्धनंजयः ।
ग्गत्वा स षडहोरात्रान्सप्तमेऽहनि पाण्डवः ॥ ३-३७-७५ (१७२०२)
प्रस्थेन्द्रकीलस्य शुभे तपोयोगपरोऽभवत् ।
ऊर्ध्वबाहुर्न चाङ्गानि प्रास्पन्दयत किंचन ॥ ३-३७-७६ (१७२०३)

समाहितात्मा नियतः सहस्राक्षसुतोऽच्युतः'।
अन्तरिक्षे स शुश्राव तिष्ठेति स वचस्तदा ॥ ३-३७-७७ (१७२०४)
तच्छ्रुत्वा सर्वतो दृष्टिं चारयामास रपाण्डवः ।
अथापश्यत्सव्यसाची वृक्षमूले तपस्विनम् ॥ ३-३७-७८ (१७२०५)
ब्राह्म्या श्रिया दीप्यमानं पिङ्गलं जटिलं कृशम् ।
सोऽब्रवीदर्जुनं तत्रस्थितं दृष्ट्वा महातपाः ॥ ३-३७-७९ (१७२०६)
कस्त्वं तातेह संप्राप्तो धनुष्मान्कवची शरी ।
निबद्धाऽसितलत्राणः क्षत्रधर्ममनुव्रतः ॥ ३-३७-८० (१७२०७)
नेह शस्त्रेण कर्तव्यं शान्तानामेष आलयः ।
विनीतक्रोधहर्षाणां ब्राह्मणानां तपस्विनाम् ॥ ३-३७-८१ (१७२०८)
नेहास्ति धनुषा कार्यं न संग्रामोऽत्र कर्हिचित् ।
निक्षिपैतद्धनुस्तात प्राप्तोसि परमां गतिम् ॥ ३-३७-८२ (१७२०९)
इत्यनन्तौजसं वीरं यथा चान्यं पृथग्जनम् ।
तथा हसन्निवाभीक्ष्णं ब्राह्मणोऽर्जुनमब्रवीत्। ३-३७८३च् न चैनं
चालयामास धैर्यात्सुधृतनिश्चयम् ॥ ३-३७-८३ (१७२१०)
तमुवाच ततः प्रीतः स द्विजः प्रहसन्निव ।
वरं वृणीष्व भद्रं ते शक्रोऽहमरिसूदन ॥ ३-३७-८४ (१७२११)
एवमुक्तः सहस्राक्षं प्रत्युवाच धनंजयः ।
प्राञ्जलिः प्रणतो भूत्वा सूरः कुरुकुलोद्वहः ॥ ३-३७-८५ (१७२१२)
ईप्सितो ह्येष वै कामो वरं चैनं प्रयच्छ मे ।
त्वत्तोऽद्य भगवन्नस्त्रंकृत्स्नमिच्छामि वेदितम् ॥ ३-३७-८६ (१७२१३)
प्रत्युवाच महेन्द्रस्तं प्रीतात्मा प्रहसन्निव ।
इह प्राप्तस्य किं कार्यमस्त्रैस्तव धनंजय ॥ ३-३७-८७ (१७२१४)
कामान्वृणीष्व लोकांस्त्वं प्राप्तोसि परमां गतिम् ।
एवमुक्तः प्रत्युवाच सहस्राक्षं धनंजयः ॥ ३-३७-८८ (१७२१५)
न लोभान्न पुनः कामान्न देवत्वं पुनः सुखम् ।
न च सर्वामरैश्वर्यं कामये त्रिदशाधिप ॥ ३-३७-८९ (१७२१६)
भ्रातॄंस्तान्विपिने त्यक्त्वा वैरमप्रतियात्य च ।
अकीर्तिं सर्वलोकेषु गच्छेयं शाश्वतीः समाः ॥ ३-३७-९० (१७२१७)
एवमुक्तः प्रत्युवाच वृत्रहा पाण्डुनन्दनम् ।
सान्त्वयञ्श्लक्ष्णया वाचा सर्वलोकनमस्कृतः ॥ ३-३७-९१ (१७२१८)
यदा द्रक्ष्यसि भूतेशं त्र्यक्षं शूलधरं शिवम् ।
तदा दाताऽस्मि ते तात दिव्यान्यस्त्राणि सर्वशः ॥ ३-३७-९२ (१७२१९)
क्रियतां दर्शने यत्नो देवस्य परमेष्ठिनः ।
दर्शनात्तस्य कौन्तेय संसिद्धः स्वर्गमेष्यसि ॥ ३-३७-९३ (१७२२०)
इत्युक्त्वा फल्गुनं शक्रो जगामादर्शनं पुनः ।

अर्जुनोप्यथ तत्रैव तस्थौ योगसमन्वितः ॥ ३-३७-९४ (१७२२१)

इति श्रीमन्महाभारेत अरण्यपर्वणि अर्जुनाभिगमनपर्वणि
सप्तत्रिंशोऽध्यायः ॥ ३७ ॥
Mahabharata - Vana Parva - Chapter Footnotes

३-३७-२ विविक्तेऽवितथप्रज्ञमिति क । पाठः ॥
३-३७-५ दैवं इन्द्रवरुणाद्यस्त्रम् । ब्राह्मं ब्रह्मास्त्रम्। चिकित्सा
परप्रयुक्तानां प्रतीकारः ॥
३-३७-६ गुरुवत् गुरुष्विव ॥
३-३७-७ शान्तिं दोषपरिहारं कर्तुं व्यवहरन्ति यतन्ते । शक्तिं
सामर्थ्ये न हापयिष्यन्ति त्याजयिष्यन्ति अपितु उद्दीपयिष्यन्ति ॥
३-३७-१० उपनिषत् रहस्यविद्या ॥
३-३७-११ तया प्रयुक्तया सम्यगिति झ । पाठः ॥
३-३७-१२ प्रतिपालय प्राप्नुहि ॥
३-३७-१३ मार्गं न ददत् अददत् ॥
३-३७-१४ बलं सर्वास्त्ररूपम् ॥
३-३७-१५ ततः शक्रात् ॥
३-३७-१६ दीक्षितः स्वीकृतव्रतः ॥
३-३७-१७ अध्यापयत विद्ययायोजितवान् ॥
३-३७-१८ अनुजज्ञे गमनाय अनुज्ञातवान् ॥
३-३७-५१ ज्येष्टापचयी ज्येष्ठपूजनशीलः ॥
३-३७-५५ गौरिति बहुपुरुषभोग्येत्युपहासः ॥
३-३७-५६ अभाषत शत्रुर्यत् तस्माद्दुःखादिदं त्वद्वियोगजमिति पूर्वेण
संबन्धः ॥
३-३७-६९ प्रातिष्ठत महाबाहुः सुमनाः प्रीतिमांस्तदेति क । पाठः ॥
३-३७-७१ शुष्मिणओ बलिनः ॥
३-३७-८१ विनीतौ, जितौ क्रोधहर्षौ यैः ॥
३-३७-८८ कामान् काम्यन्त इति व्युत्पत्त्या इष्टान् ॥
३-३७-९० अप्रतियात्यानिस्तीर्य ॥

---

वन-अध्यय०३८
॥ श्रीः ॥
३.३८. अध्यायः ३८

Mahabharata - Vana Parva - Chapter Topics
अर्जुनेन हिमवच्छिखरे तपश्चरणम् ॥ १ ॥

पार्थतपोभीरुभिर्महर्षिभिः प्रार्थितेन
महादेवेनाश्वासनपूर्वकमृषीणां प्रति निवर्तनम् ॥ २ ॥

Mahabharata - Vana Parva - Chapter Text

३-३८-० (१७२२२)
जनमेजय उवाच। ३-३८-०क्ष् (१८६८)
भगवञ्श्रोतुमिच्छामि पार्थस्याक्लिष्टकर्मणः ।
विस्तरेण कथामेतां यथाऽस्त्राण्युपलब्धवान् ॥ ३-३८-१ (१७२२३)
कथं च पुरुषव्याघ्रो दीर्घबाहुर्धनंजयः ।
वनं प्रविष्टस्तेजस्वी निर्मनुष्यमभीतवत् ॥ ३-३८-२ (१७२२४)
किंचानेन कृतंतत्रवसता ब्रह्मवित्तम ।
कथं च भगवान्स्थाणुर्देवराजश्च तोषितः ॥ ३-३८-३ (१७२२५)
एतदिच्छाम्यहं श्रोतुं त्वत्प्रसादाद्द्विजोत्तम ।
त्वं हि सर्वज्ञ दिव्यं च मानुषं चैव वेत्थ ॥ ३-३८-४ (१७२२६)
अत्यद्भुतं महाप्राज्ञ रोमहर्षणमर्जुनः ।
भवेन सह संग्रामं चकाराप्रतिमं किल ।
पुरा प्रहरतांश्रेष्ठः संग्रामेष्वपराजितः ॥ ३-३८-५ (१७२२७)
यच्छ्रुत्वा नरसिंहानां दैन्यहर्षातिविस्मयात् ।
शूराणामपि पार्थानां हृदयानि चकम्पिरे ॥ ३-३८-६ (१७२२८)
यद्यच्च कृतवानन्यत्पार्थस्तदस्विलं वद ॥ ३-३८-७ (१७२२९)
न ह्यस् निन्दितं जिष्णोः सुसूक्ष्ममपि लक्षये ।
चरितं यस्य शूरस्य तन्मे सर्वं प्रकीर्तय ॥ ३-३८-८ (१७२३०)
वैशंपायन उवाच। ३-३८-९क्ष् (१८६९)
कथयिष्यामि ते तात कथामेतां महात्मनः ।
दिव्यां कौरवशार्दूल महतीमद्भुतोपमाम् ॥ ३-३८-९ (१७२३१)
गात्रसंस्पर्शसंबद्धां त्र्यम्बकेण महाहवे ।
पार्थस्य देवदेवेन शृणु सम्यक्समागमम् ॥ ३-३८-१० (१७२३२)
युधिष्ठिरनियोगात्स जगामामितविक्रमः ।
शक्रं सुरेश्वरं द्रष्टुं देवदेवं च शंकरम् ॥ ३-३८-११ (१७२३३)
दिव्यं तद्धनुरादाय खड्गं च पुरुषर्षभः ।
महाबलो महाबाहुरर्जुनः कार्यसिद्धये ॥ ३-३८-१२ (१७२३४)
दिशं ह्युदीचीं कौरव्यो हिमवच्छिखरं प्रति ।
ऐन्द्रिः स्थिरमना राजन्सर्वलोकमहारथः ॥ ३-३८-१३ (१७२३५)
त्वरया परया युक्तस्तपसे धृतनिश्चयः ।
वनं कण्टकितं घोरमेक एवान्वपद्यत ॥ ३-३८-१४ (१७२३६)

नानापुष्पफलोपेतं नानापक्षिनिनादितम् ।
नानामृगगणाकीर्णं सिद्धचारणसेवितम् ॥ ३-३८-१५ (१७२३७)
ततः प्रयाते बीभत्सौ वनं मानुषवर्जितम् ।
शङ्खानां पटहानां च शब्दः समभवद्दिवि ॥ ३-३८-१६ (१७२३८)
पुष्पवर्षं च सुमहन्निपपात महीतले ।
मेघजालं च सततं छादयामास सर्वतः ॥ ३-३८-१७ (१७२३९)
सोतीत्य वनदुर्गाणि सन्निकर्षे महागिरेः ।
शुशुभे हिमवत्पृष्ठे वसमानोऽर्जुनस्तदा ॥ ३-३८-१८ (१७२४०)
तत्रतत्र द्रुमान्फुल्लान्विहगैर्वल्गुनादितान् ।
नदीश्च विपुलावर्ता वैदूर्यनीलसंनिभाः ॥ ३-३८-१९ (१७२४१)
हंसकारण्डवोद्गीताः सारसाभिरुतास्तथा ।
पुंस्कोकिलरुताश्चैव क्रौञ्चबर्हिणनादिताः ॥ ३-३८-२० (१७२४२)
मनोहरवनोपेतास्तस्मिन्नतिरथोऽर्जुनः ।
पुण्यशीतामलजलाः पश्यन्प्रीतमनाऽभवत् ॥ ३-३८-२१ (१७२४३)
रमणीये वनोद्देशे रममाणोऽर्जुनस्तदा ।
तपस्युग्रे वर्तमान उग्रतेजा महामनाः ॥ ३-३८-२२ (१७२४४)
दर्भचीरं निवस्याथ दण्डाजिनबिभूषितः ।
शीर्णं च पतितं भूमौ पर्णं समुपभुक्तवान् ॥ ३-३८-२३ (१७२४५)
पूर्णेपूर्णे त्रिरात्रे तु मासमेकं फलाशनः ।
द्विगुणेनैव कालेन द्वितीयं मासमत्ययात् ॥ ३-३८-२४ (१७२४६)
तृतीयमपि मासं स क्रमेणाहारमाचरन् ।
चतुर्थे त्वथ संप्राप्ते मासे भरतसत्तमः ॥ ३-३८-२५ (१७२४७)
वायुभक्षो महाबाहुरभवत्पाण्डुनन्दनः ।
ऊर्ध्वबाहुर्निरालम्बः पादाङ्गुष्ठाग्रधिष्ठितः ॥ ३-३८-२६ (१७२४८)
सदोपस्पर्शनाच्चास्य बभूवुरमितौजसः ।
विद्युदम्भोरुहनिभा जटास्तस्य महात्मनः ॥ ३-३८-२७ (१७२४९)
ततो महर्षयः सर्वे जग्मुर्देवं पिनाकिनम् ।
विवेदयिषवः पार्थं तपस्युग्रे समास्थितम् ॥ ३-३८-२८ (१७२५०)
नीलकण्ठं महादेवमभिवाद्य प्रणम्य च ।
सर्वे निवेदयामासुः कर्म तत्फल्गुनस्य ह ॥ ३-३८-२९ (१७२५१)
एकः पार्थो महातेजा हिमवत्पृष्ठमाश्रितः ।
उग्रे तपसि दुष्पारे स्थितो धूमापयन्दिशः ॥ ३-३८-३० (१७२५२)
तस्य देवेश न वयं विद्मः सर्वे चिकीर्षितम् ।
संतापयति नः सर्वानसौ साधु निवार्यताम् ॥ ३-३८-३१ (१७२५३)
तेषां तद्वचनं श्रुत्वा मुननां भावितात्मनाम् ।
उमापतिर्भूतपतिर्वाक्यमेतदुवाच ह ॥ ३-३८-३२ (१७२५४)

न वो विषादः कर्तव्यः फल्गुनं प्रति सर्वशः ।
शीघ्रं गच्छत संहृष्टा यथागतमतन्द्रिताः ॥ ३-३८-३३ (१७२५५)
अहमस्य विजानामि संकल्पं मनसि स्थितम् ।
नास्य स्वर्गस्पृहा काचिन्नैश्वर्यस्य न चायुषः ।
यत्तस्य काङ्क्षितं प्राप्तुं तत्करिष्येऽहमद्य वै ॥ ३-३८-३४ (१७२५६)
वैशंपायन उवाच। ३-३८-३५क्ष् (१८७०)
तच्छ्रुत्वा शर्ववचनमृषयः सत्यवादिनः ।
प्रहृष्टमनसो जग्मुर्यथास्वं पुनराश्रमम् ॥ ३-३८-३५ (१७२५७)

इति श्रीमन्महाभारते अरण्यपर्वणि कैरातपर्वणि अष्टत्रिंशोऽध्यायः
॥ ३८ ॥
Mahabharata - Vana Parva - Chapter Footnotes

३-३८-१२ खड्गं च कनकत्सरुं इति झ ।पाठः।तत्र कनकत्सरुं
स्वर्णमुष्टिंमित्यर्तः ॥
३-३८-१३ ऐन्द्रिरर्जुनः ॥
३-३८-१४ कण्टकितं कण्टकाक्रान्तम् ॥
३-३८-२३ दर्भचीरं तृणमयं वासः ।निवस्य परिधाय ॥
३-३८-२४ द्विगुणेन षट्रात्रेण अत्ययात् अतिवाहितवान् ॥
३-३८-२५ पक्षेणाहारमाचरन् इति झ ।पाठः ॥
३-३८-२६ निरालम्बो निराश्रयः ॥
३-३८-३० धूमापयन् धूमवतीरिव कुर्वन् ॥
३-३८-३४ संकल्पं मनोरथम् ॥

---

वन-अध्यय०३९
॥ श्रीः ॥
३.३९. अध्यायः ३९

Mahabharata - Vana Parva - Chapter Topics
किरातरूपिणआ हरेणार्जुनस्य पराजयः ॥ १ ॥
तथा पार्थपूजास्तुतिसंतुष्टेन तेन तदाश्वासनम् ॥ २ ॥

Mahabharata - Vana Parva - Chapter Text

३-३९-० (१७२५८)
वैशंपायन उवाच। ३-३९-०क्ष् (१८७१)
गतेषु तेषु सर्वेषु तपस्विषु महात्मसु ।

पिनाकपाणिर्भगवान्सर्वपापहरो हरः ॥ ३-३९-१ (१७२५९)
कैरातं वेषमास्थाय काञ्चनद्रुमसन्निभम् ।
विभ्राजमानो वपुषा गिरिर्मेरुरिवापरः ॥ ३-३९-२ (१७२६०)
श्रीगद्धनुरुपादाय शरांश्चाशीविषोपमान् ।
निष्पपात महार्चिष्मान्दहन्कक्षमिवानलः ॥ ३-३९-३ (१७२६१)
देव्या सहोमया श्रीमान्समानव्रतवेषया ।
नानावेषधरैर्हृष्टैर्भूतैरनुगतस्तदा ॥ ३-३९-४ (१७२६२)
किरातवेषसंछन्नः स्त्रीभिश्चापि सहस्रशः ।
अशोभत तदा राजन्स देशोऽतीव भारत ॥ ३-३९-५ (१७२६३)
क्षणेन तद्वनं सर्वं निःशब्दमभवत्तदा ।
नादः प्रस्रवणानां च पक्षिणां चाप्युपारमत् ॥ ३-३९-६ (१७२६४)
स सन्निकर्षमागम्य पार्थस्याक्लिष्टकर्मणः ।
मूकं नाम दितेः पुत्रं ददर्शाद्भुतदर्शनम् ॥ ३-३९-७ (१७२६५)
वाराहं रूपमास्थाय तर्जयन्तमिवार्जुनम् ।
हन्तुं परमदुष्टात्मा तमुवाचाथ फल्गुनः ॥ ३-३९-८ (१७२६६)
गाण्डीवं धनुरादाय शरांश्चाशीविषोपमान् ।
सज्यं धनुर्वरं कृत्वा ज्याघोषेण निनादयन् ॥ ३-३९-९ (१७२६७)
यन्मां प्रार्थयसे हन्तुमनागसमिहागतम् ।
तस्मात्त्वां पूर्वमेवाहं नेष्यामि यमसादनम् ॥ ३-३९-१० (१७२६८)
दृष्ट्वा तं प्रहरिष्यन्तं फल्गुनं दृढधन्विनम् ।
किरातरूपी सहसा वारयामास शंकरः ॥ ३-३९-११ (१७२६९)
मयैष प्रार्थितः पूर्वं नीलमेघसमप्रभः ।
अनादृत्यैव तद्वाक्यं प्रजहाराथ फल्गुनः ॥ ३-३९-१२ (१७२७०)
किरातश्च समं तस्मिन्नेकलक्ष्ये महाद्युतिः ।
प्रमुमोचाशनिप्रख्यं शरमग्निशिखोपमम् ॥ ३-३९-१३ (१७२७१)
तौ मुक्तौ सायकौ ताभ्यां समं तत्र निपेततुः ।
मूकस्य गात्रे विस्तीर्णे शैलपृष्ठनिभे तदा ॥ ३-३९-१४ (१७२७२)
यथाऽशनैर्विनिष्पेषो वज्रस्येव च पर्वते ।
तथा तयोः सन्निपातः शरयोरभवत्तदा ॥ ३-३९-१५ (१७२७३)
स विद्धो बहुभिर्बाणैर्दीप्तास्यैः पन्नगैरिव ।
ममार राक्षसं रूपं भूयः कृत्वा सुदारुणम् ॥ ३-३९-१६ (१७२७४)
स ददर्श ततो जिष्णुः पुरुषं काञ्चनप्रभम् ।
किरातवेषसंछन्नं स्त्रीसहायममित्रहा ॥ ३-३९-१७ (१७२७५)
तमब्रवीत्प्रीतमना कौन्तेयः प्रहसन्निव ।
को भवानटते शून्ये वने रस्त्रीगणसंवृतः ॥ ३-३९-१८ (१७२७६)
न त्वमस्मिन्वने घोरे बिभेषि कनकप्रभ ।

किमर्थं च त्वया विद्धो मृगोऽयं मत्परिग्रहः ॥ ३-३९-१९ (१७२७७)
मयाऽभिपन्नः पूर्वं हि राक्षसोऽयमिहागतः ।
कामात्परिभवाद्वाऽपि न मे जीवन्विमोक्ष्यसे ॥ ३-३९-२० (१७२७८)
न ह्येष मृगयाधर्मो यस्त्वयाऽद्य कृतो मयि ।
तेन त्वां भ्रंशयिष्यामि जीवितात्पर्वताश्रयम् ॥ ३-३९-२१ (१७२७९)
इत्युक्तः पाण्डवेयेन किरातः प्रहसन्निव ।
उवाच श्लक्ष्णया वाचा पाण्डवं सव्यसाचिनं ॥ ३-३९-२२ (१७२८०)
न मत्कृते त्वया वीरः भीः कार्या वनमन्तिकात् ।
इयं भूमिः सदाऽस्माकमुचिता वसतां वने ॥ ३-३९-२३ (१७२८१)
त्वया तु दुष्करः कस्मादिह वासः प्ररोचितः ।
वयं तु बहुसत्त्वेऽस्मिन्निवसामस्तपोधन ॥ ३-३९-२४ (१७२८२)
भवांस्तु कृष्णवर्त्माभः सुकुमारः सुखोचितः ।
कथं शून्यमिमं देशमेकाकी विचरिष्यति ॥ ३-३९-२५ (१७२८३)
अर्जुन उवाच। ३-३९-२६क्ष् (१८७२)
गाण्डीवमाश्रयं कृत्वा नाराजांश्चाग्निसन्निभान् ।
निवसामि महारण्ये द्वितीय इव पावकः ॥ ३-३९-२६ (१७२८४)
एष चापि मया जन्तुर्मृगरूपं समाश्रितः ।
राक्षसो निहतो घोरो हन्तुं मामिह चागतः ॥ ३-३९-२७ (१७२८५)
किरात उवाच। ३-३९-२८क्ष् (१८७३)
मयैष धन्वनिर्मुक्तैस्ताडितः पूर्वमेव हि ।
बाणैरभिहतः शेते नीतश्च यमसादनम् ॥ ३-३९-२८ (१७२८६)
ममैवायं लक्ष्यभूतः पूर्वमेव परिग्रहः ।
ममैव च प्रहारेण जीविताद्व्यपरिपितः ॥ ३-३९-२९ (१७२८७)
दोषान्स्वान्नार्हसेऽन्यस्मै वक्तुं स्वबलदर्पितः ।
अभिषक्तोस्मि मन्दात्मन्न मे जीवन्विमोक्ष्यसे ॥ ३-३९-३० (१७२८८)
स्थिरो भव विमोक्ष्यामि सायकानशनीनिव ।
घटस्व परया शक्त्या मुञ्च त्वमपि सायकान् ॥ ३-३९-३१ (१७२८९)
तस्य तद्वचनं श्रुत्वा किरातस्यार्जुनस्तदा ।
रोषमाहारयामास ताडयामास चेषुभिः ॥ ३-३९-३२ (१७२९०)
ततो हृष्टेन मनसा प्रतिजग्राह सायकान् ।
भूयोभूय इति प्राह मन्दमन्देत्युवाच ह ॥ ३-३९-३३ (१७२९१)
प्रहरस्व शरानेतान्नाराचान्मर्मभेदिनः ।
इत्युक्तो बाणवर्षं स मुमोच सहसाऽर्जुनः ॥ ३-३९-३४ (१७२९२)
ततस्तौ तत्रसंरब्धौ गर्जमानौ मुहुर्मुहुः ।
शरैराशीविषाकारैस्ततक्षाते परस्परम् ॥ ३-३९-३५ (१७२९३)
ततोऽर्जुनः शरवर्षं किराते समवासृजत् ।

तत्प्रसन्नेन मनसा प्रतिजग्राह शंकरः ॥ ३-३९-३६ (१७२९४)
मुहूर्तं शरवर्षं तु प्रतिगृह्य पिनाकधृक् ।
अक्षतेन शरीरेण तस्थौ गिरिवाचलः ॥ ३-३९-३७ (१७२९५)
स दृष्ट्वा बाणवर्षं तु मघीभूतं धनंजयः ।
परमं विस्मयं चक्रे साधुसाध्विति चाब्रवीत् ॥ ३-३९-३८ (१७२९६)
अहोऽयं सुकुमाराङ्गो हिमवच्छिखराश्रयः ।
गाण्डीवमुक्तान्नाराचान्प्रतिगृह्णात्यविह्वलः ॥ ३-३९-३९ (१७२९७)
कोऽयं देवो भवेत्साक्षाद्रुद्रो यक्षः सुरोऽसुरः ।
विद्यते हि गिरिश्रेष्ठे त्रिदशानां समागमः ॥ ३-३९-४० (१७२९८)
न हि मद्बाणजालानामुत्सृष्टानां सहस्रशः ।
शक्तोऽन्यः सहितुं वेगमृते देवं पिनाकिनम् ॥ ३-३९-४१ (१७२९९)
देवो वा यदि वा यक्षो रुद्रादन्यो व्यवस्थितः ।
अहमेनं शरैस्तीक्ष्णैर्नयामि यमसादनम् ॥ ३-३९-४२ (१७३००)
ततो हृष्टमना जिष्णुर्नाराचान्मर्मभेदिनः ।
व्यसृजच्छतधा राजन्मयूखानिव भास्करः ॥ ३-३९-४३ (१७३०१)
तान्प्रसन्नेन मनसा भगवाँल्लोकभावनः ।
शूलपाणिः प्रत्यगृह्णाच्छिलावर्षमिवाचलः ॥ ३-३९-४४ (१७३०२)
क्षणेन क्षीणबाणोऽथ संवृत्तः फल्गुनस्तदा ।
वित्रासं च जगामाथ तं दृष्ट्वा शरसंक्षयम् ॥ ३-३९-४५ (१७३०३)
चिन्तयामास जिष्णुस्तु भगवन्तं हुताशनम् ।
पुरस्तादक्षयौ दत्तौ तूणौ येनास्य खाण्डवे ॥ ३-३९-४६ (१७३०४)
किं नु मोक्ष्यामि धनुषा यन्मे बाणाः क्षयं गताः ।
अयं च पुरुषः कोपि बाणान्ग्रसति सर्वशः ॥ ३-३९-४७ (१७३०५)
अहमेनं धनुष्कोट्या रशूलाग्रेणेव कुञ्जरम् ।
नयामि दण्डधारस्य यमस्य सदनं प्रति ॥ ३-३९-४८ (१७३०६)
प्रगृह्याथ धनुष्कोट्या ज्यापाशेनावकृष्य च ।
मुष्टिभिश्चापि हतवान्वज्रकल्पैर्महाद्युतिः ॥ ३-३९-४९ (१७३०७)
संप्रायुध्यद्धनुष्कोट्या कौन्तेयः परवीरहा ।
तदप्यस्य धनुर्दिव्यं जग्राह गिरिगोचरः ॥ ३-३९-५० (१७३०८)
ततोऽर्जुनो ग्रस्तधनुः खड्गपाणिरतिष्ठत ।
युद्धस्यान्तमभीप्सन्वै वेगेनाभिजगाम तम् ॥ ३-३९-५१ (१७३०९)
तस्य मूर्ध्नि शितं खड्गमसक्तं पर्वतेष्वपि ।
मुमोय भुजवीर्येण विक्रम्य कुरुनन्दनः ॥ ३-३९-५२ (१७३१०)
तकस्य मूर्धानमासाद्य पफालासिवरो हि सः ।
ततो वृक्षैः शिलाभिश्च योधयामास फल्गुनः ॥ ३-३९-५३ (१७३११)
तदा वृक्षान्महाकायः प्रत्यगृह्णादथो शिलाः ।

किरातरूपी भगवांस्ततः पार्थो महाबलः ॥ ३-३९-५४ (१७३१२)
मुष्टिभिर्वज्रसंस्पर्शैर्धूममुत्पादयन्मुखे ।
प्रजहार दुराधर्षे किरातसमरूपिणि ॥ ३-३९-५५ (१७३१३)
ततः शक्राशनिसमैर्मुष्टिभिर्भृशदारुणैः ।
किरातरूपी भगवानर्दयामास फल्गुनम् ॥ ३-३९-५६ (१७३१४)
ततश्चटचटाशब्दः सुघोरः समजायत ।
पाण्डवस्य च मुष्टीनां किरातस् च युध्यतः ॥ ३-३९-५७ (१७३१५)
सुमुहूर्तं तयोर्युद्धमभवल्लोमहर्षणम् ।
भुजप्रहारसंयुक्तं वृत्रवासवयोरिव ॥ ३-३९-५८ (१७३१६)
महाराज ततो जिष्णुः किरातमुरसा बली ।
पाण्डवं च विचेष्टन्तं किरातोप्यहनद्बलात् ॥ ३-३९-५९ (१७३१७)
तयोर्भुजविनिष्पेषात्संघर्षेणोरसोस्तथा ।
समजायत गात्रेषु पावकोऽङ्गारधूमवान् ॥ ३-३९-६० (१७३१८)
तत एनं महादेवः पीड्य गात्रैः सुपीडितम् ।
तेजसा व्क्रमद्रोषाच्चेतस्तस्य विमोहयन् ॥ ३-३९-६१ (१७३१९)
ततोऽभिपीडितैर्गात्रैः पिण्डीकृत इवाबभौ ।
फल्गुनो गात्रसंरुद्धो देवदेवेन भारत ॥ ३-३९-६२ (१७३२०)
निरुच्छ्वासोऽभवच्चैव सन्निरुद्धो महामनाः ।
ततः पपात संमूढस्ततः प्रीतोऽभवद्भवः ॥ ३-३९-६३ (१७३२१)
स मुहूर्तं तथा भूत्वा सचेताः पुनरुत्थितः ।
रुधिरेणाप्लुताङ्गस्तु पाण्डवो भृशदुःखितः ॥ ३-३९-६४ (१७३२२)
शरण्यं शरणं गत्वा भगवन्तं पिनाकिनम् ।
मृन्मयं स्पिण्डलं कृत्वामाल्येनापूजयद्भवम् ॥ ३-३९-६५ (१७३२३)
तच्च माल्यं तदा पार्थः किरातशिरसि स्थितम् ।
अपश्यत्पाण्डवश्रेष्ठो हर्षेण प्रकृतिं गतः ॥ ३-३९-६६ (१७३२४)
पपात पादयोस्तस्य ततः प्रीतोऽभवद्भवः ।
श्उवाच चैनं वचसा मेघगम्भीरगीर्हसः ।
जातविस्मयमालोक्य ततः क्षीणाङ्गसंहतिम् ॥ ३-३९-६७ (१७३२५)
भव उवाच। ३-३९-६८क्ष् (१८७४)
भोभो फल्गुन तुष्टोस्मि कर्मणाऽप्रतिमेन ते ।
शौर्येणानेन धृत्या च क्षत्रियो नास्ति ते समः ॥ ३-३९-६८ (१७३२६)
समं तेजश्च वीर्यं च ममाद्य तव चानघ ।
प्रीतस्तेऽहं महाबाहो पश्य मां भरतर्षभ ॥ ३-३९-६९ (१७३२७)
ददामि ते विशालाक्ष चक्षुः पूर्वं मुनिर्भवान् ।
विजेष्यसि रणे शत्रूनपि सर्वान्दिवौकसः ॥ ३-३९-७० (१७३२८)
श्प्रीत्या च तेऽहं दास्यामि यदस्त्रमनिवारितम् ।

त्वं हि शक्तो मदीयं तदस्त्रं धारयितुं क्षणात् ॥' ३-३९-७१ (१७३२९)
वैशंपायन उवाच। ३-३९-७२क्ष् (१८७५)
ततो देवं महादेवं गिरिशं शूनपाणिनम् ।
ददर्श फल्गुनस्तत्र सह देव्या महाद्युतिम् ॥ ३-३९-७२ (१७३३०)
स जानुभ्यां महीं गत्वा शिरसा प्रणिपत्य च ।
प्रसादयामास हरं पार्थः परपुरंजयः ॥ ३-३९-७३ (१७३३१)
अर्जुन उवाच। ३-३९-७४क्ष् (१८७६)
कपर्दिन्सर्वभूतेश भगनेत्रनिपातन ।
श्देवदेव महादेव नीलग्रीव जटाधर ॥ ३-३९-७४ (१७३३२)
कारणानां च परमं जाने त्वां त्र्यम्बकं विभुम् ।
देवानां च गतिं देवं त्वत्प्रसूतमिदं जगत् ॥ ३-३९-७५ (१७३३३)
अजेयस्त्वं त्रिभिर्लोकैः सदेवासुरमानुषैः ।
शिवाय विष्णुरूपाय विष्णवे शिवरूपिणे ॥ ३-३९-७६ (१७३३४)
दक्षियज्ञविनाशाय हरिरूपाय ते नमः ।
ललाटाक्षाय शर्वाय मीढुषे शूलपाणये ॥ ३-३९-७७ (१७३३५)
पिनाकगोप्त्रे सूर्याय मङ्गल्याय च वेधसे ।
प्रसादये त्वां भगवन्सर्वभूतमहेश्वर ॥ ३-३९-७८ (१७३३६)
गणेशं जगतः शम्भुं लोककारणकारणम् ।
प्रधानपुरुषातीतं परं सूक्ष्मतरं हरम् ॥ ३-३९-७९ (१७३३७)
व्यतिक्रमं मे भगवन्क्षन्तुमर्हसि शंकर ।
भगवन्दर्शनाकाङ्क्षी प्राप्तोस्मीमं महागिरिम् ॥ ३-३९-८० (१७३३८)
दयितं तव देवेश तापसालयमुत्तमम् ।
प्रसादये त्वां भगवन्सर्वलोकनमस्कृतम् ॥ ३-३९-८१ (१७३३९)
कृतो मयाऽयमज्ञानाद्विमर्दो यस्त्वया सह ।
शरणं प्रतिपन्नाय तत्क्षमस्वाद्य शंकर ॥ ३-३९-८२ (१७३४०)
वैशंपायन उवाच। ३-३९-८३क्ष् (१८७७)
तमुवाच महातेजाः प्रहसन्वृषभध्वजः ।
प्रगृह्य रुचिरं बाहुं क्षान्तमित्येव फल्गुनम् ॥ ३-३९-८३ (१७३४१)
परिष्वज्य च बाहुभ्यां प्रीतात्मा भगवान्हरः ।
पुनः पार्थं सान्त्वपूर्वमुवाच वृषभध्वजः ॥ ३-३९-८४ (१७३४२)
ग्गङ्गाङ्गितजटः शर्वः पार्थस्यामिततेजसः ।
प्रगृह्य रुचिरं बाहुं वृत्तं ताम्रतलाङ्गुलिम् ॥' ३-३९-८५ (१७३४३)

इति श्रीमन्महाभारते अरण्यपर्वणि कैरातपर्वणि
एकोनचत्वारिंशोऽध्यायः ॥ ३९ ॥
Mahabharata - Vana Parva - Chapter Footnotes

३-३९-४ भूतैः प्रमथाख्यैः स्वपार्षदैः ॥
३-३९-१३ समं एककालम् ॥
३-३९-१५ अशनिर्मेधजं वज्रम् । वज्रं इन्द्रप्रहरणम्। संनिषातो योगः ॥
३-३९-१६ स दानवः राक्षसमिव ॥
३-३९-२० अभिपन्नः परिगृहीतः कामानत् । यदृच्छातः। परिभवात् ममाभिभवाय ॥
३-३९-२३ मत्कृते मन्निमित्तम् । वनमन्तिकाद्वनस्य समीपे ॥
३-३९-२४ प्ररोचितः स्वीकृतः ॥
३-३९-३० दोषान्मृगया धर्मातिक्रमरूपान् ॥
३-३९-३४ नाराचान् शरजातिभेदान् ॥
३-३९-३९ अहोऽयमिति संधिरार्षः ॥
३-३९-४१ सहितुं सोढुम् ॥
३-३९-५२ असक्तमकुण्ठितम् ॥
३-३९-५३ पफाल विशीर्ण ३-३९-५५ धूमं क्रोधावेशेन ॥
३-३९-६१ पीड्य निपीड्य ॥
३-३९-६२ गात्रेषु संरुद्धस्खलनहीनः ॥
३-३९-६६ प्रकृतिं स्वास्थ्यम् ॥
३-३९-७० चक्षुः दिव्यज्ञानम् ॥
३-३९-७७ मीढुषे वर्षकाय ॥

---

वन-अध्यय०४०
॥ श्रीः ॥
३.४०. अध्यायः ४०

Mahabharata - Vana Parva - Chapter Topics
महादेवेन पार्थाय स्वग्रस्तगाण्डीवादिप्रत्यर्पणपूर्वकं पाशुपतास्त्रप्रदानम् ॥ १ ॥

Mahabharata - Vana Parva - Chapter Text

३-४०-० (१७३४४)
देवदेव उवाच। ३-४०-०क्ष् (१८७८)
नरस्त्वं पूर्वदेहे वै नारायणसहायवान् ।
बदर्यां तप्तवानुग्रं तपो वर्षायुतान्बहून् ॥ ३-४०-१ (१७३४५)
त्वयि वा परमं तेजो विष्णौ वा पुरुषोत्तमे ।
युवाभ्यां पुरुषाग्र्याभ्यां तेजसा धार्यते जगत् ॥ ३-४०-२ (१७३४६)

शक्राभिषेके सुमहद्धनुर्जलदनिःस्वनम् ।
प्रगृह्य दानवाः शस्तास्त्वया कृष्णेन च प्रभो ॥ ३-४०-३ (१७३४७)
तदेतदेव गाण्डीवं तव पार्थ करोचितम् ।
भायामास्थाय तद्ग्रस्तं मया पुरुषसत्तम ॥ ३-४०-४ (१७३४८)
तूणौ चाप्यक्षयौ भूयस्तव पार्थ करोचितौ ।
भविष्यति शरीरं च नीरुजं कुरुनन्दन ॥ ३-४०-५ (१७३४९)
प्रीतिमानस्मि वै पार्थ भवान्सत्यपराक्रमः ।
गृहाण वरमस्मत्तः काङ्क्षितं यन्नरर्षभ ॥ ३-४०-६ (१७३५०)
न त्वया सदृशः कश्चित्पुमान्मर्त्येषु भारत ।
दिवि वा वर्तते त्रं त्वत्प्रधानमरिंदम ॥ ३-४०-७ (१७३५१)
अर्जुन उवाच। ३-४०-८क्ष् (१८७९)
वरं ददासि चेन्मह्यं कामं प्रीत्या वृषध्वज ।
कामये दिव्यामस्त्रं तद्धोरं पाशुपतं प्रभो ॥ ३-४०-८ (१७३५२)
यत्तद्ब्रह्मशिरो नाम रौद्रं भीमपराक्रमम् ।
युगान्ते दारुणे प्राप्ते कृत्स्नं संहरते जगत् ॥ ३-४०-९ (१७३५३)
श्कर्णभीष्मकृपद्रोणैर्भविता तु महाहवः ।
त्वत्प्रसादान्महादेव जयेयं तान्यथा युधि ॥ ३-४०-१० (१७३५४)
जयेयं येन संग्रामे दानवान्राक्षसांस्तथा ।
राज्ञश्चैव पिशाचांश्च गन्धर्वानथपन्नगान् ॥ ३-४०-११ (१७३५५)
यस्मिञ्शूलसहस्राणि गदाश्चोग्रप्रदर्शनाः ।
शराश्चाशीविषाकाराः संभवन्त्यनुमन्त्रिताः ॥ ३-४०-१२ (१७३५६)
युध्येयं येन भीष्मेण द्रोणेन च कृपेण च ।
सूतपुत्रेण च रणे नित्यं कटुकभाषिणा ॥ ३-४०-१३ (१७३५७)
एष मे प्रथमः कामो भगवन्भगनेत्रहन् ।
त्वत्प्रसादाद्विनिर्वृत्तः समर्थः स्यामहं यथा ॥ ३-४०-१४ (१७३५८)
भव उवाच । अ३०-११-१५क्ष् (१८८०)
ददामि तेऽस्त्रं दयितमहं पाशुपतं विभो ।
समर्थो धारणे मोक्षे संहारेऽपि च पाण्डव ॥ ३-४०-१५ (१७३५९)
न तद्वेद महेन्द्रोपि न यमो न च यक्षराट् ।
वरुणोप्यथवा वायुः कुतो वेत्स्यन्ति मानवाः ॥ ३-४०-१६ (१७३६०)
न त्वया सहसा पार्थ मोक्तव्यं पुरुषे क्वचित् ।
जगद्विनिर्दहेत्सर्वमल्पतेजसि पातितम् ॥ ३-४०-१७ (१७३६१)
अबध्यो नाम नास्त्यस्य त्रैलोक्ये सचराचरे ।
मनसा चक्षुषा वाचा धनुषा च निपात्यते ॥ ३-४०-१८ (१७३६२)
वैशंपायन उवाच। ३-४०-१९क्ष् (१८८१)
तच्छ्रुत्वा त्वरितः पार्थः शुचिर्भूत्वा समाहितः ।

उपसंगृह्य विश्वेशमधीष्वेत्यथ सोऽब्रवीत् ॥ ३-४०-१९ (१७३६३)
ततस्त्वध्यापयामास सरहस्यनिवर्तनम् ।
तदस्त्रं पाण्डवश्रेष्ठं मूर्तिमन्तमिवान्तकम् ॥ ३-४०-२० (१७३६४)
उपतस्थे महात्मानं यथा त्र्यक्षमुमापतिम् ।
प्रतिजग्राह तच्चापि प्रीतिमानर्जुनस्तदा ॥ ३-४०-२१ (१७३६५)
ततश्चचाल पृथिवी सपर्वतवनद्रुमा ।
ससागरवनोद्देशा सग्रामनगराकरा ॥ ३-४०-२२ (१७३६६)
शङ्खदुन्दुभिघोषाश्च भेरीणां च सहस्रशः ।
तस्मिनमुहूर्ते संप्राप्ते निर्घातश्च महानभूत् ॥ ३-४०-२३ (१७३६७)
अथास्त्रं जाज्वलद्घोरं पाण्डवस्यामितौजसः ।
मूर्तिमद्विष्ठितं पार्श्वे ददृशुर्देवदानवाः ॥ ३-४०-२४ (१७३६८)
स्पृष्टस्य त्र्यम्बकेणाथ फल्गुनस्यामितौजसः ।
यत्किं गच्छेत्यनुज्ञातस्त्र्यम्बकेण तदाऽर्जुनः ॥ ३-४०-२५ (१७३६९)
स्वर्गं गच्छेत्यनुज्ञातस्त्र्यम्बकेण तदाऽर्जुनः ।
प्रणम्य शिरसा राजन्प्राञ्जलिर्भवमैक्षत । ३-४०-२६ (१७३७०)
ततः प्रभुस्त्रिदिवनिवासिनां वसी
महामतिर्गिरिश उमापतिः शिवः ।
धनुर्महद्दितिजपिशाचसूदनं
ददौ भवः पुरुषवराय गाण्डिवम् ॥ ३-४०-२७ (१७३७१)
ततः शुभं गिरिवरमीश्वरस्तदा
सहोमयाऽसिततटसानुकन्दरम् ।
विहाय तं पतगमहर्षिसेवितं
जगाम स्वं पुरुषवरस्य पश्यतः ॥ ३-४०-२८ (१७३७२)

इति श्रीमन्महाभारते अरण्यपर्वणि कैरातपर्वणि चत्वारिंशोऽध्यायः
॥ ४० ॥

Mahabharata - Vana Parva - Chapter Footnotes

३-४०-३ शस्ताः मारिताः ॥
३-४०-७ त्वत्प्रधानं त्वमेव श्रेष्ठो रयस्मिन् क्षत्रे ॥
३-४०-१४ विनिर्वृत्तः विशेषेण कृतकृत्यः ॥
३-४०-१५ संहारे निवर्तने ॥
३-४०-१८ मनसा संकल्पमात्रेण निपात्यते शत्रुः धनुषेति बाणप्रयोगेण ॥
३-४०-१९ अधीष्व अध्यापय ॥
३-४०-२३ निर्घात उत्पातः ॥
३-४०-२७ वशी वश इच्छा तद्वान् । तज्जयीत्यर्थः ॥

वन-अध्यय०४१
॥ श्रीः ॥
३.४१. अध्यायः ४१

Mahabharata - Vana Parva - Chapter Topics
यमवरुणकुबेरैरर्जुनायास्त्रदानम् ॥ १ ॥
अर्जुनंप्रति शक्रेण स्वर्गागमनचोदना ॥ २ ॥

Mahabharata - Vana Parva - Chapter Text

३-४१-० (१७३७३)
वैशंपायन उवाच। ३-४१-०क्ष् (१८८२)
तस्य संपश्यतस्त्वेव पिनाकी गोवृषध्वजः ।
जगामादर्शनं भानुर्लोकस्येवास्तमीयिवान् ॥ ३-४१-१ (१७३७४)
ततोऽर्जुनः परं चक्रे विस्मयं परवीरहा ।
मया साक्षान्महादेवो दृष्ट इत्येव भारत ॥ ३-४१-२ (१७३७५)
धन्योस्म्यनुगृहीतोस्मि यन्मया त्र्यम्बको हरः ।
पिनाकी वरदो रूपी दृष्टः स्पृष्टश्ट पाणिना ॥ ३-४१-३ (१७३७६)
कृतार्थं चावगच्छामि परमात्मानमात्मना ।
शत्रूंश्च विजितान्सर्वान्निर्वृत्तं च प्रयोजनम् ॥ ३-४१-४ (१७३७७)
इत्येवं चिन्तयानस्य पार्थस्यामिततेजसः ।
ततो वैडूर्यवर्णाभो भासयन्सर्वतो दिशः ।
यादोगणवृतः श्रीमानाजगाम जलेश्वरः ॥ ३-४१-५ (१७३७८)
नागैर्नदैर्नदीभिश्च दैत्यैः साध्यैर्मरुद्गणैः ।
वरुणो यादसांभर्ता वशी तं देशमागमत् ॥ ३-४१-६ (१७३७९)
अथ जाम्बूनदवपुर्विमानेन महार्चिषा ।
कुबेरः समनुप्राप्तो यक्षैरनुगतः प्रभुः ॥ ३-४१-७ (१७३८०)
विद्योतयन्निवाकाशमद्भुतोपमदर्शनः ।
धनानामधिपः श्रीमानर्जुनं द्रष्टुमागतः ॥ ३-४१-८ (१७३८१)
तथा लोकान्तकः श्रीमान्यमः साक्षात्प्रतापवान् ।
मर्त्यमूर्तिधरैः सार्धं पितृभिर्लोकभावनैः ॥ ३-४१-९ (१७३८२)
दण्डपाणिरचिन्त्यात्मा सर्वभूतविनाशकृत् ।
वैवस्वतो धर्मराजो विमानेनावभासयन् ॥ ३-४१-१० (१७३८३)
त्रीँल्लोकान्गुह्यकांश्चैव गन्धर्वांश्चैव पन्नगान् ।
द्वितीय इव मार्ताण्डो युगान्ते समुपस्थिते ॥ ३-४१-११ (१७३८४)
भानुमन्ति विचित्राणि शिखराणि महागिरेः ।

समास्थायार्जुनं तत्रददृशुस्तपसान्वितम् ॥ ३-४१-१२ (१७३८५)
ततो मुहूर्ताद्भगवानैरावतशिरोगतः ।
आजगाम सहेन्द्राण्या शक्रः सुरगणैर्वृतः ॥ ३-४१-१३ (१७३८६)
पाण्डुरेणातपत्रेण ध्रियमाणेन मूर्धनि ।
शुशुभे नागराजस्थः सितमभ्रमिव स्थितः ॥ ३-४१-१४ (१७३८७)
संस्तूयमानो गन्धर्वैर्ऋषिभिश्च तपोधनैः ।
शृङ्गं गिरेः समासाद्य तस्थौ सूर्य इवोदितः ॥ ३-४१-१५ (१७३८८)
अथ मेघस्वनो धीमान्व्याजहार शुभां गिरम् ।
यमश्च परमधर्मज्ञो दक्षिणां दिशमास्थितः ॥ ३-४१-१६ (१७३८९)
अर्जुनार्जुन पश्यास्माँल्लोकपालान्समागतान् ।
दृष्टिं ते वितरामोऽद्य भवानर्हति दर्शनम् ॥ ३-४१-१७ (१७३९०)
पूर्वर्षिरमितात्मा त्वं नरो नाम महाबलः ।
नियोगाद्ब्रह्मणस्तात मर्त्यतां समुपागतः ॥ ३-४१-१८ (१७३९१)
त्वया च वसुसंभूतो महावीर्यः पितामहः ।
भीष्मः परमधर्मात्मा जेतव्यश्च रणेऽनघ ॥ ३-४१-१९ (१७३९२)
क्षत्रं चाग्निसमस्पर्शं भारद्वाजेन रक्षितम् ।
निवातकवचाश्चैव संसाध्याः कुरुनन्दन ॥ ३-४१-२० (१७३९३)
पितुर्ममांशो देवस्य सर्वलोकप्रतापिनः ।
कर्णश्च सुमहावीर्यस्त्वया वध्यो धनंजय ॥ ३-४१-२१ (१७३९४)
अंशाश्च क्षितिसंप्राप्ता देवगन्धर्वरक्षसाम् ।
त्वया निपातिता युद्धेस्वकर्मफलनिर्जिताम् ।
गतिं प्राप्स्यन्ति कौन्तेय यथास्वमरिकर्शन ॥ ३-४१-२२ (१७३९५)
अक्षया तव कीर्तिश्च लोके स्थासय्ति फल्गुन ।
त्वया साक्षान्महादेवस्तोषितो हि महामृधे ॥ ३-४१-२३ (१७३९६)
लघ्वी वसुमती चापि कर्तव्या विष्णुना सह ॥ ३-४१-२४ (१७३९७)
गृहाणास्त्रं महाबाहो दण्डमप्रतिवारणम् ।
अनेनास्त्रेण सुमहत्त्वं हि कर्म करिष्यसि ॥ ३-४१-२५ (१७३९८)
वैशंपायन उवाच। ३-४१-२६क्ष् (१८८३)
प्रतिजग्राह पार्थोपि विधिवत्कुरुनन्दनः ।
समन्त्रं सोपरोधं च समोक्षविनिवर्तनम् ॥ ३-४१-२६ (१७३९९)
ततो जलधरश्यामो वरुणो यादसांपतिः ।
पश्चिमां दिशमास्थाय गिरमुच्चारयन्प्रभुः ॥ ३-४१-२७ (१७४००)
पार्थ क्षत्रियमुख्यस्त्वं क्षत्रधर्मे व्यवस्थितः ।
पश्य मां पृथुताम्राक्ष वरुणोस्मि जलेश्वरः ॥ ३-४१-२८ (१७४०१)
मया समुद्यतान्पाशान्वारुणाननिवारितान् ।
प्रतिगृह्णीष्व कौन्तेय सहरहस्यनिवर्तनान् ॥ ३-४१-२९ (१७४०२)

एभिस्तदा मया वीर संग्रामे तारकामये ।
दैतेयानां सहस्राणि संयतानि महात्मनाम् ॥ ३-४१-३० (१७४०३)
तस्मादिमान्महासत्व मत्प्रसादसमुत्थितान् ।
गृहाण न हि ते मुच्येदन्तकोप्याततायिनः ॥ ३-४१-३१ (१७४०४)
अनेन त्वं यदाऽस्त्रेण संग्रामे विचरिष्यसि ।
तदा निःक्षत्रिया भूमिर्भविष्यति न संशयः ॥ ३-४१-३२ (१७४०५)
ग्ततस्तान्वारुणानस्त्रान्दिव्यानस्त्रविदांवरः ।
प्रतिजग्राह विधिवद्वरुणाद्वासविस्तदा ॥' ३-४१-३३ (१७४०६)
ततः कैलासनिलयो धनाध्यक्षोऽभ्यभापत ।
दत्तेष्वस्त्रेषु दिव्येषु वरुणेन यमेन च ॥ ३-४१-३४ (१७४०७)
प्रीतोऽहमपि ते प्राज्ञ पाण्डवेय महाहल ।
त्वया सह समागम्य अजितेन तथैव च ॥ ३-४१-३५ (१७४०८)
सव्यसाचिन्महाबाहो पूर्वदेव सनातन ।
सहास्माभिर्भवाञ्श्रान्तः पुराकल्पेषु नित्यशः ॥ ३-४१-३६ (१७४०९)
दर्शनं ते त्विदं दिव्यं प्रदिशामि नरर्षभ ।
अमानुषान्महाबाहो दुर्जयानपि जेष्यसि ॥ ३-४१-३७ (१७४१०)
मत्तश्चैव भवानाशु गृह्णात्वस्त्रमनुत्तमम् ।
अनेन त्वमनीकानि धार्तराष्ट्रस्य धक्ष्यसि ॥ ३-४१-३८ (१७४११)
मत्तोऽपि त्वं गृहाणास्त्रमन्तर्धानं प्रियं भम ।
ओजस्तेजोद्युतिकरं प्रस्वापनमरातिनुत् ॥ ३-४१-३९ (१७४१२)
महात्मना शंकरेण त्रिपुरं निहतं यादा ।
तदैतदस्त्रं निर्मुक्तं येन दग्धा महासुराः ॥ ३-४१-४० (१७४१३)
त्वदर्थमुद्यतं चेदं मया सत्यपराक्रम ।
त्वमर्हो धारणे चास्य मेरुप्रतिमगौरव। ३-४१-४१ (१७४१४)
ततोऽर्जुनो महाबाहुर्विधिवत्कुरुनन्दनः ।
कौबेरमधिजग्राह दिव्यमस्त्रं महाबलः ॥ ३-४१-४२ (१७४१५)
ततोऽब्रवीद्देवराजः पार्थमक्लिष्टकारिणम् ।
सान्त्वयञ्श्लक्ष्णयावाचादिव्यदुन्दुभिनिःस्वनः ॥ ३-४१-४३ (१७४१६)
कुन्तीमातर्महाबाहो त्वमीशानः पुरातनः ।
परां सिद्धिमनुप्राप्तः साक्षाद्देवगतिं गतः ॥ ३-४१-४४ (१७४१७)
देवकार्यं तु सुमहत्त्वया कार्यमरिंदम ।
आरोढव्यस्त्वया स्वर्गः सज्जीभव महाद्युते ॥ ३-४१-४५ (१७४१८)
रथो मातलिसंयुक्त आगतस्त्वत्कृते मम ।
तत्र तेऽहंप्रदास्यामि सर्वाण्यस्त्राणि कौरव ॥ ३-४१-४६ (१७४१९)
तान्दृष्ट्वा लोकपालांस्तु समेतान्गिरिमूर्धनि ।
जगाम विस्मयं धीमान्कुन्तीपुत्रो धनंजयः ॥ ३-४१-४७ (१७४२०)

ततोऽर्जुनो महातेजा लोकपालान्समागतान् ।
पूजयामास विधिवद्वाग्भिरद्भिः फलैरपि ॥ ३-४१-४८ (१७४२१)
ततः प्रतिययुर्देवाः प्रतिपूज्य धनंजयम् ।
यथागतेन विबुधाः सर्वे कामं मनोजवाः ॥ ३-४१-४९ (१७४२२)
३-४१-५० (१७४२३)
ततो ऽर्जुनो मुदं लेभे लब्धास्त्रः पुरुषर्षभः ।
कृतार्थमथ चात्मानं स मेने पूर्णमानसम् ॥
Mahabharata - Vana Parva - Chapter Footnotes

३-४१-४ निर्वृत्तं निष्पन्नम् ॥
३-४१-५ यादांसि जलजन्तवस्तेषां गणः ॥
३-४१-६ नागैः सर्पैः ॥
३-४१-१२ भानुमन्ति दीप्तिमन्ति ॥
३-४१-१७ वितरामो यच्छामः ॥
३-४१-२० संसाध्याः जेतव्याः ॥
३-४१-२१ मम पितुः सूर्यस्य ॥
३-४१-२३ मृधेसंप्रामे ॥
३-४१-२४ लघ्वी भारशून्या ॥
३-४१-३० संयतानि बद्धानि ॥
३-४१-३५ अजितेन कृष्णेन यथा तथैव प्रीतोस्मि ॥
३-४१-३६ पूर्वदेव नर ॥
३-४१-४१ उद्यतमुपस्थितम् ॥
३-४१-४४ देवगतिं देवानां परायणत्वम् ॥
३-४१-४५ आगन्ता इति झ । पाठः। आगन्ता आयास्यतीत्यर्थः ॥

---

वन-अध्यय०४२
॥ श्रीः ॥
३.४२. अध्यायः ४२

Mahabharata - Vana Parva - Chapter Topics
पार्थेन मातलिसमानीतरथारोहणएन स्वर्गगमनम् ॥ १ ॥

Mahabharata - Vana Parva - Chapter Text

३-४२-० (१७४२४)
वैशंपायन उवाच। ३-४२-०क्ष् (१८८४)
गतेषु लोकपालेषु पार्थः शत्रुनिबर्हणः ।

चिन्तयामास राजेन्द्र देवराजरथागमम् ॥ ३-४२-१ (१७४२५)
तस्य चिन्तयमानस्य गुडाकेशस्य धीमतः ।
रथो मातलिसंयुक्त आजगाम महाप्रभः ॥ ३-४२-२ (१७४२६)
नभो वितिमिरं कुर्वञ्जलदान्पाटयन्निव ।
दिशः संपूरयन्नादैर्महामेघरवोपमैः। ३-४२-३ (१७४२७)
असयः शक्तयो भीमा गदाश्चोग्रप्रदर्शनाः ।
दिव्यप्रभावाः प्रासाश्च विद्युतश्च महाप्रभाः ॥ ३-४२-४ (१७४२८)
तथैवाशनयश्चैव चक्रयुक्तास्तुलागुडाः ।
वायुस्फोटाः सनिर्घाताः शङ्खमेघस्वनास्तथा ॥ ३-४२-५ (१७४२९)
तत्रनागा महाकाया ज्वलितास्याः सुदारुणाः ।
सिताभ्रकूटप्रतिमाः संहताश्च यथोपलाः ॥ ३-४२-६ (१७४३०)
दशवाजिसहस्राणि हरीणां वातरंहसाम् ।
वहन्ति यं नेत्रमुषं दिव्यं मायामयं रथम् ॥ ३-४२-७ (१७४३१)
तत्रापश्यन्महानीलं वैजयन्तं महाप्रभम् ।
ध्वजमिन्दीवरश्यामं वंशं कनकभूषणम् ॥ ३-४२-८ (१७४३२)
तस्मिन्रथे स्थितं सूतं तप्तहेमविभूषितम् ।
दृष्ट्वा पार्थो महाबाहुर्देवराजमतर्कयत् ॥ ३-४२-९ (१७४३३)
तथा तर्कयतस्तस्य फल्गुनस्याथ मातलिः ।
सन्नतः प्रस्थितो भूत्वा वाक्यमर्जुनमब्रवीत् ॥ ३-४२-१० (१७४३४)
भोभो शक्रात्मज श्रीमञ्शक्रस्त्वां द्रष्टुमिच्छति ।
आरोहतु भवाञ्शीघ्रं रथमिन्द्रस्य संभतम् ॥ ३-४२-११ (१७४३५)
आह माममरश्रेष्ठः पिता तव शतक्रतुः ।
कुन्तीसुतमिह प्राप्तं पश्यन्तु त्रिदशालयाः ॥ ३-४२-१२ (१७४३६)
एष शक्रः परिवृतो देवैर्ऋषिगणैस्तथा ।
गन्धर्वैरप्सरोभिश्च त्वां दिदृक्षुः प्रतीक्षते ॥ ३-४२-१३ (१७४३७)
अस्माल्लोकाद्देवलोकं पाकशासनशासनात् ।
मारोह त्वं मया सार्धं लब्धास्त्रः पुनरेष्यसि ॥ ३-४२-१४ (१७४३८)
अर्जुन उवाच। ३-४२-१५क्ष् (१८८५)
मातले गच्छ शीघ्रं त्वमारोहस्व रथोत्तमम् ।
राजसूयाश्वमेधानां शतैरपि सुदुर्लभम् ॥ ३-४२-१५ (१७४३९)
पार्थिवैः सुमहाभागैर्यज्वभिर्भूरिदक्षिणैः ।
दैवतैर्वा दुरारोहं दानवैर्वा रथोत्तमम् ॥ ३-४२-१६ (१७४४०)
नातप्ततपसा शक्य एष दिव्यो महारथः ।
द्रष्टुं वाऽप्यथवा स्प्रष्टुमारोढुं कुत एव च ॥ ३-४२-१७ (१७४४१)
त्वयि मतिष्ठिते साधो रथस्थे स्थिरवाजिनि ।
पश्चादहमथारोक्ष्ये सुकृती सत्पथं यथा ॥ ३-४२-१८ (१७४४२)

वैशंपायन उवाच। ३-४२-१९क्ष् (१८८६)
तस्यतद्वचनं श्रुत्वा मातलिः शक्रसारथिः ।
आरुरोह रथं शीघ्रं हयाञ्जग्राह रश्मिभिः ॥ ३-४२-१९ (१७४४३)
ततोऽर्जुनो हृष्टमना गङ्गायामाप्लुतः शुचिः ।
जजाप जप्यं कौन्तेयो विधिवत्कुरुनन्दनः ॥ ३-४२-२० (१७४४४)
ततः पितृन्यथान्यायं तर्पयित्वा यथाविधि ।
मन्दरं शैलराजं तमाप्रष्टुमुपचक्रमे ॥ ३-४२-२१ (१७४४५)
साधूनां पुण्यशीलानां मुनीनां पुण्यकर्मणाम् ।
त्वं सदा संश्रयः शैल स्वर्गमार्गाभिकाङ्क्षिणाम् ॥ ३-४२-२२ (१७४४६)
त्वत्प्रसादात्सदा शैल ब्राह्मणाः क्षत्रिया विशः ।
स्वर्गं प्राप्ताश्चरन्ति स्म देवैः सह गतव्यथाः ॥ ३-४२-२३ (१७४४७)
अद्रिराज महाशैल मुनिसंश्रय तीर्थवन् ।
गच्छाम्यामन्त्रयित्वा त्वां सुखमस्म्युषितस्त्वयि ॥ ३-४२-२४ (१७४४८)
तव सानूनि कुञ्जाश्च नद्यः प्रस्रवणानि च ।
तीर्थानि च सुपुण्यानि मया दृष्टान्यनेकशः ॥ ३-४२-२५ (१७४४९)
सुसुगन्धाश्च वैर्योघास्त्वच्छरीरविनिःसृताः ।
अमृतास्वादसृशाः पीताः प्रस्रवणोदकाः ॥ ३-४२-२६ (१७४५०)
शिशुर्यथा पितुश्चाङ्के सुखं शेते तटे तथा ।
मया तवाङ्के ललितं शैलराज महाप्रभो ॥ ३-४२-२७ (१७४५१)
अप्सरोगणसंकीर्णए ब्रह्मघोषानुनादिते ।
सुखमस्म्युषितः शैल तव सानुषु नित्यदा ॥ ३-४२-२८ (१७४५२)
एवमुक्त्वार्जुनः शैलमामन्त्र्य परवीरहा ।
आरुरोह रथं दिव्यं द्योतयन्निव भास्करः ॥ ३-४२-२९ (१७४५३)
स तेनादित्यरूपेण दिव्येनाद्भुतकर्मणा ।
ऊर्ध्वमाचक्रमे धीमान्प्रहृष्टः कुरुनन्दनः ॥ ३-४२-३० (१७४५४)
सोऽदर्शनपथं यातो मर्त्यानां धर्मचारिणाम् ।
ददर्शाद्भुतरूपाणि विमानानि सहस्रशः ॥ ३-४२-३१ (१७४५५)
न तत्र सूर्यः सोमो वा द्योतते न च पावकः ।
स्वयैव प्रभया तत्र द्योतन्ते पुण्यलब्धया ॥ ३-४२-३२ (१७४५६)
तारारूपाणि यानीह दृश्यन्ते द्युतिमन्ति वै ।
आकाशे विप्रकृष्टत्वात्तनूनि सुमहान्त्यपि ॥ ३-४२-३३ (१७४५७)
तानि तत्र प्रभास्वन्ति रूपवन्ति च पाण्डवः ।
ददर्श स्वेषु धिष्ण्येषु दीप्तिमन्ति स्वयाऽर्चिषा ॥ ३-४२-३४ (१७४५८)
तत्र राजर्षयः सिद्धा वीराश्च निहता युधि ।
तपसा च जितं स्वर्गं संपेतुः शतसङ्घशः ॥ ३-४२-३५ (१७४५९)
गन्धर्वाणां सहस्राणि मूर्यज्वलिततेजसाम् ।

गुह्यकारनामृषीणां च तथैवाप्सरसां गणान् ॥ ३-४२-३६ (१७४६०)
लोकानात्मप्रभान्पश्यन्फल्गुनो विस्मयान्वितः ।
पप्रच्छ मातलिं प्रीत्या स चाप्येनमुवाच ह ॥ ३-४२-३७ (१७४६१)
एते सुकृतिनः पार्थ स्वेषु धिष्ण्येष्ववस्थिताः ।
तान्दृष्टवानसि विभो तारारूपाणि भूतले ॥ ३-४२-३८ (१७४६२)
ततोऽपश्यत्स्थितं द्वारि मत्तं विजयिनं गजम् ।
ऐरावतं चतुर्दन्तं कैलासमिव शृङ्गिणम् ॥ ३-४२-३९ (१७४६३)
स सिद्धमार्गमाक्रम्य कुरुपाण्डवसत्तमः ।
व्यरोचत यथापूर्वं मान्धाता पार्थिवोत्तमः ॥ ३-४२-४० (१७४६४)
अभिचक्राम लोकान्स राज्ञां राजीवलोचनः ॥ ३-४२-४१ (१७४६५)
शएवं स संक्रमंस्तत्र स्वर्गलोके महायशाः ꣵ
ततो ददर्श शक्रस्य पुरींताममरावतीम् ॥ ३-४२-४२ (१७४६६)
॥ इति श्रीमन्महाभारते अरण्यपर्वणि इन्द्रलोकाभिगमनपर्वणि
द्विचत्वारिंशोऽध्यायः ॥ ४२ ॥

Mahabharata - Vana Parva - Chapter Footnotes

३-४२-३ पाटयन् द्विधाकुर्वन् ॥
३-४२-५ तुलागुडाः भाण्डगोलकाः । वायुस्फोटाः वेगवशाद्वायुं जनयन्तः ॥
३-४२-७ हरीणां पीतकौशेयसंनिभानां वाजिनां सहस्राणीत्येकदेशान्वयः ॥
३-४२-८ वैजयन्तं नाम्ना देवेन्द्रध्वजम् ॥
३-४२-२० आप्लुतः स्नातः ॥
३-४२-२७ ललितं क्रीडितम् ॥
३-४२-३३ विप्कृष्टत्वात् दूरत्वात् । सुमहान्त्पि तनूनि सूक्ष्माणि दृश्यन्ते ॥
३-४२-३४ धिष्ण्येषु स्थानेषु ॥
३-४२-४२ संक्रमन् गच्छन् ॥

---

वन-अध्यय०४३
॥ श्रीः ॥
३.४३. अध्यायः ४३

Mahabharata - Vana Parva - Chapter Topics

इन्द्रेणार्जुनस्य सबहुमानं स्वार्धासनारोपणम् ॥ १ ॥

Mahabharata - Vana Parva - Chapter Text

३-४३-० (१७४६७)
वैशंपायन उवाच। ३-४३-०क्ष् (१८८७)

ददर्श स पुरीं रम्यां सिद्धचारणसेविताम् ।
सर्वर्तुकुसुमैः पुण्यैः पादपैरुपशोभिताम् ॥ ३-४३-१ (१७४६८)
तत्र सौगन्धिकानां च पुष्पाणां पुण्यगन्धिनाम् ।
उपवीज्यमानो मिश्रेण वायुना पुण्यगन्धिना ॥ ३-४३-२ (१७४६९)
नन्दनं च वनं दिव्यमप्सरोगणसेवितम् ।
ददर्श दिव्यकुसुमैराह्वयद्भिरिव द्रुमैः ॥ ३-४३-३ (१७४७०)
नातप्ततपसा शक्यो द्रष्टुं नानाहिताग्निना ।
स लोकः पुण्यकर्तॄणां नापि युद्धे पराङ्मुखैः ॥ ३-४३-४ (१७४७१)
नायज्वभिर्नाव्रतिकैर्न वेदश्रुतिवर्जितैः ।
नानाप्लुताङ्गैस्तीर्थेषु यज्ञदानबहिष्कृतैः ॥ ३-४३-५ (१७४७२)
नापि यज्ञहनैः क्षुद्रैर्द्रष्टुं शक्यः कथंचन ।
पानपैर्गुरुतल्पैश्च मांसादैर्वा दुरात्मभिः ॥ ३-४३-६ (१७४७३)
स तद्दिव्यं वनं पश्यन्दिव्यगीतनिनादितम् ।
प्रविवेश महाबाहुः शक्रस्य दयितां पुरीम् ॥ ३-४३-७ (१७४७४)
तत्र देवविमानानि कामगानि सहस्रशः ।
संस्थितान्यभियातानि ददर्शायुतशस्तदा ॥ ३-४३-८ (१७४७५)
संस्तूयमानो गन्धर्वैरप्सरोभिश्च पाण्डवः ।
पुष्पगन्धवहैः पुण्यैर्वायुभिश्चानुवीजितः ॥ ३-४३-९ (१७४७६)
ततो देवाः सगन्धर्वाः सिद्धाश्च परमर्षयः ।
हृष्टाः संपूजयामासुः पार्थमक्लिष्टकारिणम् ॥ ३-४३-१० (१७४७७)
आसीर्वादैः स्तूयमानो दिव्यवादित्रनिःस्वनैः ।
प्रतिपेदे महाबाहुः शङ्खदुन्दुभिनादितम् ॥ ३-४३-११ (१७४७८)
नक्षत्रमार्गं विपुलं सुरवीथीति विश्रुतम् ।
इन्द्राज्ञया ययौ पार्थः स्तूयमानः समन्ततः ॥ ३-४३-१२ (१७४७९)
तत्र साध्यास्तथा विश्वे मरुतोऽथाश्विनौ तथा ।
आदित्या वसवो रुद्रास्तथा ब्रह्मर्षयोऽमलाः ॥ ३-४३-१३ (१७४८०)
राजर्षयश्च बहवो दिलीपप्रमुखा नृपाः ।
तम्बुरुर्नारदश्चैव गन्धर्वौ च हाहा हूहूः ॥ ३-४३-१४ (१७४८१)
तान्स सर्वान्समागम्य विधिवत्कुरुनन्दनः ।
ततोऽपश्यद्देवराजं शतक्रतुमरिंदमः ॥ ३-४३-१५ (१७४८२)
ततः पार्थो महाबाहुरवतीर्य रथोत्तमात् ।
ददर्श साक्षाद्देवेशं पितरं पाकशासनम् ॥ ३-४३-१६ (१७४८३)
पाण्डुरेणातपत्रेण हेमदण्डेन चारुणा ।
दिव्यगन्धाधिवासेन व्यजनेन विधूयता ॥ ३-४३-१७ (१७४८४)
विश्वावसुप्रभृतिभिर्गन्धर्वैः स्तुतिवन्दिभिः ।
स्तूयमानं द्विजाग्र्यैश्च ऋग्यजुःसामसंस्तवैः ॥ ३-४३-१८ (१७४८५)

ततोऽभिगम्य कौन्तेयः शिरसाऽभ्यगमद्बली ।
स चैनं वृत्तपीनाभ्यां बाहुभ्यां प्रत्यगृह्णत ॥ ३-४३-१९ (१७४८६)
ततः शक्रासने पुण्ये देवर्षिगणसेविते ।
शक्रः पाणौ गृहीत्वैनमुपावेशयदन्तिके ॥ ३-४३-२० (१७४८७)
मूर्ध्नि चैनमुपाघ्राय देवेन्द्रः परवीरहा ।
अङ्कमारोपयामास प्रश्रयावनतं तदा ॥ ३-४३-२१ (१७४८८)
सहस्राक्षनियोगात्स पार्थः शक्रासनं तदा ।
आरुरुक्षुरमेयात्मा द्वितीय इववासवः ॥ ३-४३-२२ (१७४८९)
ततः प्रेम्णा वृत्रशत्रुरर्जुनस्य शुभं मुखम् ।
पस्पर्श पुण्यगन्धेन करेण परिसान्त्वयन् ॥ ३-४३-२३ (१७४९०)
प्रमार्जमानः शनकैर्बाहू चास्यायतौ शुभौ ।
ज्याशरक्षेपकिनौ स्तम्भाविव हिरण्मयौ ॥ ३-४३-२४ (१७४९१)
वज्रग्रहणचिह्नेन करेण परिसान्त्वयन् ।
मुहुर्मुहुर्वज्रधरो बाहू चास्फोटयञ्शनैः ॥ ३-४३-२५ (१७४९२)
स्मयन्निव गुडाकेशं प्रेक्षमाणः सहस्रदृक् ।
हर्षेणोत्फुल्लनयनो न चातृप्यत वृत्रहा ॥ ३-४३-२६ (१७४९३)
एकासनोपविष्टौ तौ शोभयांसचक्रतुः सभाम् ।
सूर्याचन्द्रमसौ व्योम चतुर्दश्यामिवोदितौ ॥ ३-४३-२७ (१७४९४)
तत्र स्म गाथा गायन्ति साम्ना परमवल्गुना ।
गन्धर्वास्तुम्बुरुश्रेष्ठाः कुशला गीतसामसु ॥ ३-४३-२८ (१७४९५)
घृताची मेनका रम्भा पूर्वचित्तिः स्वयंप्रभा ।
उर्वशी मिश्रकेशी च दण्डगौरी वरूथीनि ॥ ३-४३-२९ (१७४९६)
गोपाली सहजन्या च कुम्भयोनिः प्रजागरा ।
चित्रसेना चित्रलेखा सहा च मधुरस्वरा ॥ ३-४३-३० (१७४९७)
एताश्चान्याश्च ननृतुस्तत्रतत्र शुचिस्मिताः ।
चत्तप्रमथने युक्ताः सिद्धानां पद्मलोचनाः ॥ ३-४३-३१ (१७४९८)
महाकटितटश्रोण्यः कम्पमानैः पयोधरैः ।
कटाक्षहावमाधुर्यैश्चेतोबुद्धिमनोहरैः ॥ ३-४३-३२ (१७४९९)
श्ततो देवाः सगन्धर्वाः समादायार्घ्यमुत्तमम् ।
शक्रस्य मतमाज्ञाय पार्थमानर्चुरञ्जसा ॥ ३-४३-३३ (१७५००)
पाद्यमाचमनीयं च प्रतिग्राह्य नृपात्मजम् ।
प्रवेशयामासुरथो पुरंदरनिवेशनम् ॥ ३-४३-३४ (१७५०१)
एवं संपूजितो जिष्णुरुवास भवने पितुः ।
उपशिक्षन्महास्त्राणि ससंहाराणि पाण्डवः ॥ ३-४३-३५ (१७५०२)
शक्रस्य हस्ताद्दयितं वज्रमस्त्रं च दुःसहम् ।
अशनीश्च महानादा मेघबर्हिणलक्षणाः ॥ ३-४३-३६ (१७५०३)

गृहीतास्त्रस्तु कौन्तेयो भ्रातॄन्सस्मार पाण्डवः ।
पुरंदरनियोगाच्च पञ्चाब्दानवसत्सुखी ॥ ३-४३-३७ (१७५०४)
ततः शक्रोऽब्रवीत्पार्थं कृतास्त्रं काल आगते ।
नृत्यं गीतं च कौन्तेय चित्रसेनादवाप्नुहि ॥ ३-४३-३८ (१७५०५)
वादित्रं देवविहितं नृलोके यन्न विद्यते ।
तदर्जयस्व कौन्तेय श्रेयो वै ते भविष्यति ॥ ३-४३-३९ (१७५०६)
सखायं प्रददौ चास्य चित्रसेनं पुरंदरः ।
स तेन सह संगम्य रेमे पार्थो निरामयः ॥ ३-४३-४० (१७५०७)
गीतवादित्रनृत्यानि भूय एवादिदेश ह ।
तथाऽपि नालभच्छर्म तरस्वी द्यूतकारितम् ॥ ३-४३-४१ (१७५०८)
दुःशासनवधामर्षी शकुनेः सौबलस्य च ।
ततस्तेनातुलां प्रीतिमुपागम्य क्वचित्क्वचित् ।
गान्धर्वमतुलं नृत्यं वादित्रं चोपलब्धवान् ॥ ३-४३-४२ (१७५०९)
स शिक्षितो नृत्यगुणाननेका-
न्वादित्रगीतार्थगुणांश्च सर्वान् ।
न शर्म लेभे परवीरहन्ता
भ्रातॄन्स्मरन्मातरं चैव कुन्तीम् ॥ ३-४३-४३ (१७५१०)

इति श्रीमन्महाभारते अरण्यपर्वणि इन्द्रलोकाभिगमनपर्वणि
त्रिचत्वारिंशोऽध्यायः ॥ ४३ ॥
Mahabharata - Vana Parva - Chapter Footnotes

३-४३-३ नन्दनं नामतः ॥
३-४३-२१ प्रश्रयावनतं विनयेन प्रह्वीभूतम् ॥
३-४३-२५ वज्रग्रहणस्य चिह्नं किणो यस्मिन् ॥
३-४३-२८ गीतानि अमन्त्रेपरि गानम् । साम मन्त्रोपरि गानम् ॥
३-४३-३२ चेतः अलोचनात्मिका चित्तवृत्तिः
। बुद्धिरध्यवसायरूपा। मनः संकल्पविकल्पात्मकम्। कटाक्षादिभिः
चित्तस्य वृत्यन्तरं हरन्तीत्यर्थः ॥

---

वन-अध्यय०४४
॥ श्रीः ॥
३.४४. अध्यायः ४४

Mahabharata - Vana Parva - Chapter Topics
उर्वश्यामर्जुनस्य दृष्टिविशेषेण तस्य तस्यामनुरागोत्प्रेक्षिणा

शक्रेण चित्रसेनद्वारा तस्यास्तंप्रति यापनम् ॥ १ ॥
तथा स्वप्रार्थनां व्यर्थीकृतवते पार्थाय क्लीबो भवेति शापदानम् ॥ २ ॥
शक्रेण तच्छापस् भाव्यज्ञातवासमत्रोपयोगितया रपर्यवसानम् ॥ ३ ॥

Mahabharata - Vana Parva - Chapter Text

३-४४-० (१७५११)
वैसंपायन उवाच। ३-४४-०क्ष् (१८८८)
कदाचित्स हि देवेन्द्रश्चित्रसेनं रहोऽब्रवीत् ।
पार्थस्य चक्षुरुर्वश्यां सक्तं विज्ञाय वासवः ॥ ३-४४-१ (१७५१२)
गन्धर्वराज गच्छाद्य प्रहितोऽप्सरसांवराम् ।
उर्वशीं पुरुषव्याघ्रं सोपातिष्ठतु फल्गुनम् ॥ ३-४४-२ (१७५१३)
यथा न तामभिसृतां विद्यादस्मन्नियोगतः ।
तथा त्वया विधातव्यं स्त्रीसंसर्गविशारद ॥ ३-४४-३ (१७५१४)
एवमुक्तस्तथेत्युक्त्वा सोऽनुज्ञां प्राप्य वासवात् ।
गन्धर्वराजोऽप्सरसमभ्यगादुर्वशीं वराम् ॥ ३-४४-४ (१७५१५)
तां दृष्ट्वा विदितो हृष्टः स्वागतेनार्चितस्तया ।
सुखासीनः सुखासीनां स्मितपूर्वं वचोऽब्रवीत् ॥ ३-४४-५ (१७५१६)
विदितं तेऽस्तु सुश्रोणि प्रेषितोऽहमिहागतः ।
त्रिदिवस्यैकराजेन त्वत्प्रसादाभिनन्दिना ॥ ३-४४-६ (१७५१७)
यः स देवमनुष्येषु प्रख्यातः सहजैर्गुणैः ।
श्रिया शीलेन रूपेण श्रुतेन च बलेन च ।
प्रख्यातः शौर्यवीर्याभ्यां प्रपन्नः प्रतिभानवान् ॥ ३-४४-७ (१७५१८)
तेजस्वी सौम्यीलश्च क्षमावाञ्जितमत्सरः ।
साङ्गोपनिषदान्वेदांश्चतुराख्यानपञ्चमान् ॥ ३-४४-८ (१७५१९)
योऽधीते गुरुशुश्रूषां मेधां चाष्टगुणाश्रयाम् ।
ब्रह्मचर्येण दाक्ष्येण प्रसवैर्वयसाऽपि च ॥ ३-४४-९ (१७५२०)
एको वै रक्षिता चैव त्रिदिवं मघवानिव ।
अकत्थनो मानयिता स्थूललक्ष्यः प्रियंवदः ॥ ३-४४-१० (१७५२१)
सुहृदश्चान्नपानेन विविधेनाभिवर्षति ।
सत्यवागूर्जितो वक्ता रूपवाननहंकृतः ॥ ३-४४-११ (१७५२२)
भक्तानुकम्पी कान्तश्च प्रियश्च स्थिरसंगरः ।
प्रार्थनीयैर्गुणगणैर्महेन्द्रवरुणोपमः ॥ ३-४४-१२ (१७५२३)
विदितस्तेऽर्जुनो वीरः स स्वर्गफलमाप्तवान् ।
तव शक्राभ्यनुज्ञातः पादावद्यप्रपद्यताम्। ३-४४-१३ (१७५२४)
एवमुक्ता स्मितं कृत्वा स्वात्मानं बहुमान्य च ।

प्रत्युवाचोर्वशी प्रीता चित्रसेनमनिन्दिता ॥ ३-४४-१४ (१७५२५)
यत्त्वस्य कथितः सत्यो गुणोद्देशस्त्वयाऽनघ ।
तं श्रुत्वाऽन्यं प्रियं नारी वृणुयात्किमतोऽर्जुनं ॥ ३-४४-१५ (१७५२६)
तस्य चाहं गुणौघेन फल्गुने जातमन्मथा ।
गच्छत्वं हि याथाकाममागमिष्याम्यहं सुखम् ॥ ३-४४-१६ (१७५२७)
वैशंपायन उवाच। ३-४४-१७क्ष् (१८८९)
ततो विसृज्यगन्धर्वं कृतकृत्या शुचिस्मिता ।
उर्वशी चाकरोत्स्नानं पार्थप्रार्थनलालसा ॥ ३-४४-१७ (१७५२८)
स्नानालङ्कारनेपथ्यैर्गन्धमाल्यैश्च शौभनैः ।
धनंजयस्य रूपेण शरैर्मन्मथचोदितैः ॥ ३-४४-१८ (१७५२९)
अतिविद्धेन मनसा मन्मथेन प्रदीपिता ।
दिव्यास्तरणसंस्तीर्णे विस्तीर्णे शयनोत्तमे ॥ ३-४४-१९ (१७५३०)
चित्तसंकल्पभावेन सुचित्ताऽनन्यमानसा ।
मनोरथेन संप्राप्तं रमयन्तीव फल्गुनम् ॥ ३-४४-२० (१७५३१)
निशाम्य चन्द्रोदयनं विगाढे रजनीमुखे ।
प्रस्थिता सा पृथुश्रोणी पार्थस्य भवनं महत् ॥ ३-४४-२१ (१७५३२)
मृदुकुञ्चितदीर्घेण कुसुमोत्तमधारिणा ।
केशपाशेन ललना गच्छमाना व्यराजत ॥ ३-४४-२२ (१७५३३)
भ्रूक्षेपालापमाधुर्यैः कान्त्या सौम्यतयाऽपि च ।
शशिनं वक्रचन्द्रेण साऽऽह्वयन्तीव गच्छती ॥ ३-४४-२३ (१७५३४)
दिव्याङ्गरागौ सुमुखौ दिव्यचन्दनरूषितौ ।
गच्छन्त्या हाररुचिरौ स्तनौ तस्या ववल्गतुः ॥ ३-४४-२४ (१७५३५)
स्तनोद्वहनसंक्षोभात्ताम्यमाना पदेपदे ।
त्रिवलीदामचित्रेण मध्येनातीव शेभिना ॥ ३-४४-२५ (१७५३६)
रथकूबरविस्तीर्णं नितम्बोन्नतपीवरम् ।
मन्मथायतनं शुभ्रं रशनादामभूषितम् ॥ ३-४४-२६ (१७५३७)
ऋषीणामपि दिव्यानां मनोव्याघातकारणम् ।
सूक्ष्मवस्त्रधरं भाति जघनं निरवद्यवत् ॥ ३-४४-२७ (१७५३८)
गूडगुल्फधरौ पादौ ताम्रायततलाङ्गुली ।
कूर्मपृष्ठोन्तौ चास्याः शोभेते किङ्किणीकिणौ ॥ ३-४४-२८ (१७५३९)
शीधुपानेन चाल्पेन तुष्टा च मदनेन च ।
विलासितैश्च विविधैः प्रेक्षणीयतराऽभवत् ॥ ३-४४-२९ (१७५४०)
सिद्धचारणगन्धर्वैः साध्यैर्याति विलासिनी ।
बब्वाश्चर्येऽपि वै स्वर्गे दर्शनीयतमाकृतिः ॥ ३-४४-३० (१७५४१)
सुमूक्ष्मेणोत्तरीयेण मेघवर्णेन राजता ।
तन्वभ्रप्रावृता व्योम्नि चन्द्रलेखेन गच्छति ॥ ३-४४-३१ (१७५४२)

ततः प्राप्तातिदुष्प्रापा मनसाऽपि विकर्मभिः ।
भवनं पाण्डुपुत्रस्य फल्गुनस्य शुचिस्मिता ॥ ३-४४-३२ (१७५४३)
तत्र द्वारमनुप्राप्ता द्वारस्थैश्च निवेदिता ।
अर्जुनस्य नरश्रेष्ठ उर्वशी शुभलोचना ॥ ३-४४-३३ (१७५४४)
उपातिष्ठत तद्वेश्म निर्मलं सुमनोहरम् ।
स शङ्कितमना राजन्प्रत्यगच्छत तां निशि ॥ ३-४४-३४ (१७५४५)
दृष्ट्वैव चोर्वशीं पार्थो लज्जासंवृलोचनः ।
तदाऽभिवादनं कृत्वा गुरुपूजां प्रयुक्तवान् ॥ ३-४४-३५ (१७५४६)
अर्जुन उवाच। ३-४४-३६क्ष् (१८९०)
अभिवादये त्वां शिरसा प्रवराप्सरसांवरे ।
किं चागमनकृत्यं ते ब्रूहि सर्वं यथातथम् ।
किमाज्ञापयसे देवि प्रेष्यस्तेऽहमुपस्थितः ॥ ३-४४-३६ (१७५४७)
अकामं फल्गुनं ज्ञात्वा इङ्गितज्ञा तदोर्वशी ।
गन्धर्ववचनं सर्वं श्रावयामास फल्गुनम् ॥ ३-४४-३७ (१७५४८)
उर्वश्युवाच। ३-४४-३८क्ष् (१८९१)
यथा मे चित्रसेनेन कथितं मनुजोत्तम ।
नत्तेऽहं संप्रवक्ष्यामि यथा चाहमिहागता ॥ ३-४४-३८ (१७५४९)
उपस्ताने महेन्द्रस् वर्तमाने मनोरमे ।
तवागमनतुष्ट्या च स्वर्गस्य परमोत्सवे ॥ ३-४४-३९ (१७५५०)
रुद्राणां चैव सान्निध्यमादित्यानां च सर्वशः ।
समागमेऽश्विनोश्चैव वसूनां च नरोत्तम ॥ ३-४४-४० (१७५५१)
महर्षीणां च सङ्घेषु राजर्षिप्रवरेषु च ।
सिद्धचारणयक्षेषु महोरगगणेषु च ॥ ३-४४-४१ (१७५५२)
उपविष्टेषु सर्वेषु स्थानमानप्रभावतः ।
ऋद्ध्या प्रज्वलमानेषु अग्निसोमार्कवर्ष्मसु ॥ ३-४४-४२ (१७५५३)
वीणासु वाद्यमानासु गन्धर्वैः शक्रनन्दन ।
दिव्ये मनोरमे गीते प्रवृत्ते पृथुलोचन ॥ ३-४४-४३ (१७५५४)
सर्वाप्सरःसु मुख्यासु प्रनृत्तासु कुरूद्वह ।
त्वं किलानिमिषः पार्थ मामेकां तत्र दृष्टवान् ॥ ३-४४-४४ (१७५५५)
तत्र चावभृथे तस्मिन्नुपस्थाने दिवौकसाम् ।
तव पित्राऽभ्यनुज्ञाता गताः स्वनिलयान्सुराः ॥ ३-४४-४५ (१७५५६)
तथैवाप्सरसः सर्वाविशिष्टाः स्वगृहं गताः ।
अपि चान्याश्च शत्रुघ्न तव पित्रा विसर्जिताः ॥ ३-४४-४६ (१७५५७)
ततः शक्रेण संदिष्टश्चित्रसेनो ममान्तिकम् ।
प्राप्तः कमलपत्राक्ष स च मामब्रवीत्स्वयम् ॥ ३-४४-४७ (१७५५८)
त्वत्कृतेऽहं सुरेशेन प्रेषितो वरवर्णिनि ।

प्रियं कुरु महेन्द्रस्य मम चैवात्मनश्च ह ॥ ३-४४-४८ (१७५५९)
शक्रतुल्यं रणे शूरं रूपौदार्यगुणान्वितम् ।
पार्थं प्रार्थय सुश्रोणि त्वमित्येवं तदाऽब्रवीत् ॥ ३-४४-४९ (१७५६०)
ततोऽहं समनुज्ञाता तेन पित्रा च तेऽनघ ।
तवान्तिकमनुप्राप्ता शुश्रूषितुमरिंदम ॥ ३-४४-५० (१७५६१)
न केवलं हि चक्रेण प्रेषिता चाहमागता ।
चिराभिलषितो वीर ममाप्येष मनोरथः ॥ ३-४४-५१ (१७५६२)
वैशंपायन उवाच। ३-४४-५२क्ष् (१८९२)
तां तथा ब्रुवतीं श्रुत्वा भृशं लज्जान्वितोऽर्जुनः ।
उवाच कर्णौ हस्ताभ्यां पिधाय त्रिदशोपमः ॥ ३-४४-५२ (१७५६३)
दुःश्रुतं मेऽस्तु सुभगे यन्मां वदसि भामिनि ।
गुरुदारैः समाना मे निश्चयेन वरानने ॥ ३-४४-५३ (१७५६४)
श्यथा कुन्तीमहाभागा यथेन्राणी शची मम ।
तथा त्वमपि कल्याणीनात्र कार्या विचारणाघ ३-४४-५४ (१७५६५)
यच्चेक्षिताऽसि विस्पष्टं विशेषेण मया शुभे ।
तच्च मे कारणं सर्वं शृणु सत्येन सुस्मिते ॥ ३-४४-५५ (१७५६६)
इयं पौरववंशस् जननी सुदतीति ह ।
त्वामहं दृष्टवांस्तत्र विस्मयोत्फुल्ललोचनः ॥ ३-४४-५६ (१७५६७)
न मामर्हसि कल्याणि अन्यथा ध्यात्रमप्सरः ।
गुरोर्गरुतरा मे त्वं मम त्वं वंशवर्धिनी ॥ ३-४४-५७ (१७५६८)
उर्वश्युवाच। ३-४४-५८क्ष् (१८९३)
अनावृताश्च सर्वाः स्म देवराजाभिनन्दन ।
गुरुस्थाने न मां वीर नियोक्तुं त्वमिहार्हसि ॥ ३-४४-५८ (१७५६९)
पितरः सोदराः पुत्रा नप्तारो वा त्विहागताः ।
तपसा रमयन्त्यस्मान्न च तेषां व्यतिक्रमः ॥ ३-४४-५९ (१७५७०)
तत्प्रसीद न मामार्तां विसर्जयितुमर्हसि ।
हृच्छयेन च संतप्तां भक्तां च भज मानद ॥ ३-४४-६० (१७५७१)
अर्जुन उवाच। ३-४४-६१क्ष् (१८९४)
शृणु सत्यंवरारोहे यत्त्वां वक्ष्याम्यनिन्दिते ।
शृण्वन्तु मे दिशश्चैव विदिशश्च सदेवताः ॥ ३-४४-६१ (१७५७२)
यथा कुन्ती च माद्री च शची चैव समा इह ।
तथा च वंशजननी त्वं हि मेऽद्य गरीयसी ॥ ३-४४-६२ (१७५७३)
गच्छ मूर्ध्ना प्रपन्नोस्मि पादौ ते वरवर्णिनि ।
त्वं हि मे मातृवत्पूज्या रक्ष्योऽहं पुत्रवत्त्वया ॥ ३-४४-६३ (१७५७४)
वैशंपायन उवाच। ३-४४-६४क्ष् (१८९५)
ततोऽवधूता पार्थेन उर्वशी क्रोधमूर्च्छिता ।

वेपन्ती भ्रुकुटीवक्त्रा शशापाथ धनंजयम् ॥ ३-४४-६४ (१७५७५)
उर्वश्युवाच। ३-४४-६५क्ष् (१८९६)
तव पित्राऽभ्यनुज्ञातां स्वयं च गृहमागताम् ।
यस्मान्मां नाभिनन्देथाः कामबाणवशंगताम् ॥ ३-४४-६५ (१७५७६)
तस्मात्त्वं नर्तकः पार्थ स्त्रीमध्ये मानवर्जितः ।
अपुंस्त्वेन च विख्यातः पण्ढवद्विचरिष्यसि ॥ ३-४४-६६ (१७५७७)
एवं दत्त्वाऽर्जुने शापं स्फुरितोष्ठी श्वसन्त्यथ ।
पुनः प्रत्यागता क्षिप्रमुर्वशी स्वं निवेशनम् ॥ ३-४४-६७ (१७५७८)
पार्थोपि लब्ध्वा शापं तं तां निशां दुःखितोऽवसम् ।
विवक्षुश्चित्रसेनाय प्रातः सर्वमहृष्टवत् ॥ ३-४४-६८ (१७५७९)
ततः प्रभाते विमले गन्धर्वाय यथातथम् ।
निवेदयामास तदा चित्रसेनाय पाण्डवः ॥ ३-४४-६९ (१७५८०)
तच्च सर्वं यथावृत्तं शापं चैव यथातथम् ।
अवेदयच्च शक्रस्य चित्रसेनोऽपि सर्वशः ॥ ३-४४-७० (१७५८१)
तदा त्वानाय्य तनयं विविक्ते हरिवाहनः ।
सान्त्वयित्वा शुभैर्वाक्यैः स्मयमानोऽभ्यभाषत ॥ ३-४४-७१ (१७५८२)
सुपुत्राद्यपृथा तात त्वया पुत्रेण सत्तम ।
ऋषयोपि हि धैर्येण जिता वै ते महाभुज ॥ ३-४४-७२ (१७५८३)
यं च दत्तवती शापमुर्वशी तव मानद ।
स चापि तेऽर्थकृत्तात साधकश्च भविष्यति ॥ ३-४४-७३ (१७५८४)
अज्ञातवासो वस्तव्यो भवद्भिर्भूतलेऽनघ ।
वर्षे त्रयोदशे वीर तत्र त्वं गमयिष्यसि ॥ ३-४४-७४ (१७५८५)
तेन नर्तकवेषेण अपुंस्त्वेन तथैव च ।
वर्षमेकं विहृत्यैव ततः पुंस्त्वमवाप्स्यसि ॥ ३-४४-७५ (१७५८६)
एवमुक्तस्तु शक्रेण फल्गुनः परवीरहा ।
मुदं परमिकां लेभे न च शापं व्यचिन्तयत् ॥ ३-४४-७६ (१७५८७)
चित्रसेनेन सहितो गन्धर्वेण यशस्विना ।
रेमे स स्वर्गभवने पाण्डुपुत्रो धनंजयः ॥ ३-४४-७७ (१७५८८)
य इमां शृणुयान्नित्यं धृतिं पाण्डुसुतस्य वै ।
न तस्य कामः कामेषु पापकेषु प्रवर्तते ॥ ३-४४-७८ (१७५८९)
इदममरवरात्मजस्य घोरं
सुचि चरितं विनिशाम्य फल्गुनस्य ।
व्यपगतमददम्भरागदोषा-
स्त्रिदिवगताऽभिरमन्ति मानवेन्द्राः ॥ ३-४४-७९ (१७५९०)

इति श्रीमन्महाभारते अरण्यपर्वणि इन्द्रलोकाभिगमनपर्वणि

चतुश्चत्वारिंशोऽध्यायः ॥ ४४ ॥

Mahabharata - Vana Parva - Chapter Footnotes

३-४४-७ प्रतिभानं समये स्फूर्तिः ॥
३-४४-८ चतुराख्यानपच्चमान् चतुःचतुःसंख्यान् । विभक्तिलोप आर्षः ॥
३-४४-९ गुरुशुश्रूषां मेघां च प्रत्येकमष्टगुणां अधीते प्राप्नोति । प्रसवैर्देव मातुः कुलेद्वे पितुस्तैश्चतुर्भिः ॥
३-४४-१० स्थूललक्ष्यो दाता ॥
३-४४-१२ कान्तः सुखदः ॥
३-४४-१३ स्वर्गफलं त्वत्सङ्गम् ॥
३-४४-२३ आङ्गयन्ती स्वर्धया युद्धार्थम् ॥
३-४४-२६ उन्नतः पीवरश्च नितम्बो यस्येति विशेषणं विशेष्येण बहुलमिति बाहुलकात्समासः ॥
३-४४-४५ अवभृथो यज्ञान्तस्नानं तत्प्राप्ये ॥
३-४४-५९ पुरोर्वंशे हि ये पुत्रा इति झ । पाठः ॥
३-४४-७९ इदममरवरात्मजस्यघोरां धृतिमचलां च धनञ्जयस्य श्रुत्वा । अपगतभयदम्भरागरोषास्त्रिदिवगता रमयन्ति मानवेन्द्राः । इति क । ध । पाठः ॥

---

वन-अध्यय०४५

॥ श्रीः ॥

३.४५. अध्यायः ४५

Mahabharata - Vana Parva - Chapter Topics

शक्रेण स्वर्गमागतं लोमशंप्रति पार्थमहिमानुवर्णनपूर्वकं युधिष्ठिराय तद्वृत्तान्तकथनप्रार्थना ॥ १ ॥

Mahabharata - Vana Parva - Chapter Text

३-४५-० (१७५९१)
ग्वैशंपायन उवाच। ३-४५-०क्ष् (१८९७)
ततो देवाः सगन्धर्वाः समादायार्घ्यमुत्तमम् ।
शक्रस्य मतमाज्ञाय पार्थमानर्चुर्जसा ॥ ३-४५-१ (१७५९२)
पाद्यमाचमनीयं च प्रतिग्राह्य नृपात्मजम् ।
प्रवेशयामासुरथो पुरन्दरनिवेशनम् ॥ ३-४५-२ (१७५९३)
एवं संपूजितो जिष्णुरुवास भवने पितुः ।

उपशिक्षन्महास्त्राणि ससंहाराणि पाण्डवः ॥ ३-४५-३ (१७५९४)
स शक्रहस्ताद्दयितं वज्रमस्त्रं दुरुत्सहम् ।
अशनिं च महानादां मेघबृंहितलक्षणाम् ॥ ३-४५-४ (१७५९५)
गृहीतास्त्रस्तु कौन्तेयो भ्रातॄन्सस्मार पाण्डवः ।
पुरन्दरनियोगाच्च पञ्चाब्दमवसत्सुखम् ॥ ३-४५-५ (१७५९६)
ततः शक्रोऽब्रवीत्पार्थं कृतास्त्रं काल आगते ।
नृत्तं गीतं च कौन्तेय चित्रसेनादवाप्नुहि ॥ ३-४५-६ (१७५९७)
वादित्रं दैवविहितं नृलके यन्न विद्‍ते ।
मदाज्ञया च कौन्तेय श्रेयो वै ते भविष्ति ॥ ३-४५-७ (१७५९८)
सखायं प्रददौ चास्य चित्रसेनं पुरन्दरः ।
स तेन सह संगम्य रेमे पार्थो निरामयः ॥' ३-४५-८ (१७५९९)
कदाचिदटमानस्तु महर्षिरथ लोमशः ।
जगाम शक्रभवनं पुरंदरदिदृक्षया ॥ ३-४५-९ (१७६००)
स समेत्य नमस्कृत्य देवराजं महामुनिः ।
ददर्शार्धासनगतं पाण्डवं वासवस्य हि ॥ ३-४५-१० (१७६०१)
ततः शक्राभ्यनुज्ञात आसने विष्टरोत्तरे ।
निषसाद द्विजश्रेष्ठः पूज्यमानो महर्षिभिः ॥ ३-४५-११ (१७६०२)
तस्य दृष्ट्वाऽभवद्बुद्धिः पार्थमिन्द्रासने स्थितम् ।
कथं नु क्षत्रियः पार्थः शक्रासनमवाप्तवान् ॥ ३-४५-१२ (१७६०३)
किं त्वस्य सुकृतं कर्म के लोका वै विनिर्जिताः ।
स एवमनुसंप्राप्तः स्थानं देवनमस्कृतम् ॥ ३-४५-१३ (१७६०४)
तस्य विज्ञाय संकल्पं शक्रो वृत्रविमर्दनः ।
लोमशं प्रहसन्वाक्यमिदमाह शचीपतिः ॥ ३-४५-१४ (१७६०५)
देवर्षे श्रूयतां यत्ते मनसैतद्विवक्षितम् ।
नायं केवलमर्त्योऽभूत्क्षत्रियत्वमुपागतः ॥ ३-४५-१५ (१७६०६)
महर्षे मम पुत्रोऽयं कुन्त्यां जातो महाभुजः ।
अस्त्रहेतोरिह प्राप्तः कस्माच्चित्कारणान्तरात् ॥ ३-४५-१६ (१७६०७)
अहो नैनं भवान्वेत्ति पुराणमृषिसत्तमम् ।
शृणु मे वदतो ब्रह्मन्योऽयं यच्चास्य कारणम् ॥ ३-४५-१७ (१७६०८)
नरनारायणौ यौ तौ पुराणावृषिसत्तमौ ।
ताविमावभिजानीहि हृषीकेशधनंजयौ ॥ ३-४५-१८ (१७६०९)
विख्यातौ त्रिषु लोकेषु नरनारायणावृषी ।
कार्यार्थमवतीर्णौ तौ पृथ्वीं पुण्यप्रतिश्रयाम् ॥ ३-४५-१९ (१७६१०)
यन्न शक्यं शुरैर्द्रष्टुमृषिभिर्वा महात्मभिः ।
तदाश्रमपदं पुण्यं बदरीनाम विश्रुतम् ॥ ३-४५-२० (१७६११)
स निवासोऽभवद्विप्र विष्णोर्जिष्णोस्तथैव च ।

यतः प्रववृते गङ्गा सिद्धचारणसेविता ॥ ३-४५-२१ (१७६१२)
तौ मन्नियोगाद्ब्रह्मर्षे क्षितौ जातौ महाद्युती ।
भूमेर्भारावतरणं महावीर्यौ करिष्यतः ॥ ३-४५-२२ (१७६१३)
उद्वृत्ता ह्यसुराः केचिन्निवातकवचा इति ।
विप्रियेषु स्थिताऽस्माकं वरदानेन मोहिताः ॥ ३-४५-२३ (१७६१४)
तर्कयन्ते सुरान्हन्तुं बलदर्पसमन्विताः ।
देवान्न गणयन्त्येते तथा दत्तवरा हि ते ॥ ३-४५-२४ (१७६१५)
पातालवासिनो रौद्रा दनोः पुत्रा महाबलाः ।
सर्वे देवनिकाया हि नालं योधयितुं हि तान् ॥ ३-४५-२५ (१७६१६)
योसौ भूमिगतः श्रीमान्विष्णुर्मधुनिषूदनः ।
कपिलो नाम देवोसौ भगवानजितो हरिः ॥ ३-४५-२६ (१७६१७)
येन पूर्वंमहात्मानः खनमाना रसातलम् ।
दर्शनादेव निहताः सगरस्यात्मजा विभो ॥ ३-४५-२७ (१७६१८)
तेन कार्यं महत्कार्यमस्माकं द्विजसत्तम ।
पार्थेन च महायुद्धे समेताभ्यामसंशयम् ॥ ३-४५-२८ (१७६१९)
सोऽसुरान्दर्शनादेव शक्तो हन्तुं सहानुगान् ।
निवातकवचान्सर्वान्नागानिव महाह्रदे ॥ ३-४५-२९ (१७६२०)
किंतु नाल्पेन कार्येण प्रबोध्यो मधुसूदनः ।
तेजसः सुमहाराशिः प्रबुद्धः प्रदहेज्जगत् ॥ ३-४५-३० (१७६२१)
अयं तेषां समस्तानां शक्तः प्रतिसमासने ।
तान्निहत्यरणे शूरः पुनर्यास्यति मानुषान् ॥ ३-४५-३१ (१७६२२)
भवानस्मन्नियोगेन यातु तावन्महीतलम् ।
काम्यके द्रक्ष्यसे वीरं निवसन्तं युधिष्ठिरम् ॥ ३-४५-३२ (१७६२३)
सवाच्यो मम संदेशाद्धर्मात्मा सत्यसंगरः ।
नोत्कणाठा फल्गुने कार्या कृतास्त्रः शीघ्रमेष्यति ॥ ३-४५-३३ (१७६२४)
नाशुद्धबाहुवीर्येण नाकृतास्त्रेण वा रणे ।
भीष्मद्रोणादयो युद्धे शक्याः प्रतिसमासितुम् ॥ ३-४५-३४ (१७६२५)
गृहीतास्त्रो गुडाकेशो महाबाहुर्महामनाः ।
नृत्तवादित्रगीतानां दिव्यानां पारमीयिवान् ॥ ३-४५-३५ (१७६२६)
भवानपि विविक्तानि तीर्थानि मनुजेश्वर ।
भ्रातृभिः सहितः सर्वैर्द्रष्टुमर्हत्यरिंदम ॥ ३-४५-३६ (१७६२७)
तीर्थेष्वाप्लुत्य पुण्येषु विपाप्मा विगतज्वरः ।
राज्यं भोक्ष्यसि धर्मेण सुखी विगतकल्मपः ॥ ३-४५-३७ (१७६२८)
भवांश्चैनं द्विजश्रेष्ठ पर्यटन्तं महीतलम् ।
त्रातुमर्हति विप्राग्र्य तपोबलसमन्वितः ॥ ३-४५-३८ (१७६२९)
गिरिदुर्गेषु च सदा देशेषु विषमेषु च ।

वसन्ति रासा रौद्रास्तेभ्योरक्षां विधास्यति ॥ ३-४५-३९ (१७६३०)
एवमुक्ते महेन्द्रेण बीभत्सुरपि लोमशम् ।
उवाच प्रयतो वाक्यं रक्षेथाः पाण्डुनन्दनम् ॥ ३-४५-४० (१७६३१)
श्यथा गुप्तस्त्वया राजा चरेत्तीर्थानि सत्तम ।
दानं दद्याद्यथा चैव तथा कुरु महामुने ॥ ३-४५-४१ (१७६३२)
वैशंपायन उवाच। ३-४४-४२क्ष् (१८९८)
तथेति संप्रतिज्ञाय लोमशः सुमहातपाः ।
कामय्कं वनमुद्दिश्य समुपायान्महीतलम् ॥ ३-४५-४२ (१७६३३)
ददर्श तत्र कौन्तेयं धर्मराजमरिंदमम् ।
तापसैर्भ्रातृभिश्चैव सर्वतः परिवारितम् ॥ ३-४५-४३ (१७६३४)

इति श्रीमन्महाभारते अरण्यपर्वणि इन्द्रलोकाभिगमनपर्वणि
पञ्चचत्वारिंशोऽध्यायः ॥ ४५ ॥
Mahabharata - Vana Parva - Chapter Footnotes

३-४५-२५ देवनिकायाः देवसमूहाः । नालं न समर्थाः ॥
३-४५-३० प्रबोध्यो विज्ञाप्यः ॥
३-४५-३१ तेषां निवातकवचानाम् । प्रतिसमासने संक्षेपणे ॥
३-४५-३५ गुडाकेशोऽर्जुनः ॥
३-४५-४२ संप्रतिज्ञायाङ्गीकृत्य ॥

---

वन-अध्यय०४६
॥ श्रीः ॥
३.४६. अध्यायः ४६

Mahabharata - Vana Parva - Chapter Topics
अर्जुनस्य पाशुपतास्त्रलाभस्वर्लोकगमनादिश्रवणेन परिखिद्यता
धृतराष्ट्रेण संजयाग्रे स्वपुत्रान्प्रति परिशोचनम् ॥ १ ॥

Mahabharata - Vana Parva - Chapter Text

३-४६-० (१७६३५)
जनमेजय उवाच। ३-४६-०क्ष् (१८९९)
अत्यद्भुतमिदं कर्म पार्थस्यामिततेजसः ।
धृतराष्ट्रो महातेजाः श्रुत्वा तत्र किमब्रवीत् ॥ ३-४६-१ (१७६३६)
वैशंपायन उवाच। ३-४६-२क्ष् (१९००)

शक्रलोकगतं पार्थं श्रुत्वा राजाऽम्बिकासुतः ।
द्वैपायनादृषिश्रेष्ठात्संजयं वाक्यमब्रवीत् ॥ ३-४६-२ (१७६३७)
श्रुतं मे सूत कात्स्न्येन कर्म पार्थस् धीमतः ।
कच्चित्तवापि विदितं याथातथ्येन सारथे ॥ ३-४६-३ (१७६३८)
प्रमत्तो ग्राम्यधर्मेषु मन्दात्मा पापनिश्चयः ।
मम पुत्रः सुदुर्बुद्धिः पृथिवीं घातयिष्यति ॥ ३-४६-४ (१७६३९)
यस्य नित्यमृता वाचः स्वैरेष्वपि महात्मनः ।
त्रैलोक्यमपि तस्य स्याद्योद्धा यस्य धनंजयः ॥ ३-४६-५ (१७६४०)
अस्यतः कर्णिनाराचांस्तीक्ष्णाग्रांश्च शिलाशितान् ।
नार्जुनस्याग्रतस्तिष्ठेदपि मृत्युर्जरातिगः ॥ ३-४६-६ (१७६४१)
मम पुत्रा दुरात्मानः सर्वे मृत्युवशंगताः ।
येषां युद्धं दुराधर्षैः पाण्डवैः समुपस्थितम् ॥ ३-४६-७ (१७६४२)
तस्यैव च न पश्यामि युधि गाण्डीवधन्वनः ।
अनिशं चिन्तयानोऽपि य एनमुदियाद्युधि ॥ ३-४६-८ (१७६४३)
द्रोणकर्णौ प्रतीयातां यदि भीष्मोऽपि वा रणे ।
महान्स्यात्संशयोलोके न तु पश्यामि नो जयम् ॥ ३-४६-९ (१७६४४)
घृणी कर्णः प्रमादी च आचार्यः स्थविरो गुरुः ।
अमर्षी बलवान्पार्थः संरम्भी दृढविक्रमः ॥ ३-४६-१० (१७६४५)
भवेत्सुतुमुलं युद्धं सर्वस्याप्यपराजितम् ।
सर्वे ह्यस्त्रविदः शूराः सर्वे प्राप्ता महद्यशः ॥ ३-४६-११ (१७६४६)
अपि सर्वेश्वरत्वं हि न वाञ्छेरन्पराजिताः ।
वधे नूनं भवेच्छान्तिरेतेषां फल्गुनस्य वा ॥ ३-४६-१२ (१७६४७)
न तु हन्ताऽर्जुनस्यास्ति जेता वाऽस्य न विद्यते ।
मन्युस्तस्य कथं शाम्येन्मन्दान्प्रति समुत्थितः ॥ ३-४६-१३ (१७६४८)
त्रिदशेशसमो वीरः खाण्डवेऽग्निमतर्पयत् ।
जिगा पार्थिवान्सर्वान्राजसूये महाक्रतौ ॥ ३-४६-१४ (१७६४९)
शेषं कुर्याद्गिरेर्वज्रो निपतन्मूर्ध्नि संजय ।
न तु कुर्युः शराः शेषं क्षिप्तास्तात किरीटिना ॥ ३-४६-१५ (१७६५०)
यथा हि किरणा भानोस्तपन्तीह चराचरम् ।
तथा पार्थभुजोत्सृष्टाः शरास्तप्स्यन्ति मत्सुतान् ॥ ३-४६-१६ (१७६५१)
अपि तद्रथघोषेण भयार्था सव्यसाचिनः ।
प्रतिभाति विदीर्णेव सर्वतो भारती चमूः ॥ ३-४६-१७ (१७६५२)
समुद्धरन्प्रवपंश्चैव बाणान्
स्ताताऽऽततायी समरे किरीटि ।
सृष्टोऽन्तकः सर्वहरो विधात्रा
भवेद्यथा तद्वदवारणीयः ॥ ३-४६-१८ (१७६५३)

संजय उवाच। ३-४६-१९क्ष् (१९०१)
यदतत्कथितं राजंस्त्वया दुर्योधनं प्रति ।
सर्वमेतद्यथातत्त्वं नतु मिथ्या महीपते ॥ ३-४६-१९ (१७६५४)
मन्युना हि समाविष्टाः पाण्डवास्त्वमितौजसः ।
दृष्ट्वा कृष्णां सभां नीतां धर्मपत्नीं यशस्विनीं ॥ ३-४६-२० (१७६५५)
दुःशासनस्य ता वाचः श्रुत्वा वै कटुकोदयाः ।
कर्णस्य च महाराज न स्वप्स्यन्तीति मे मतिः ॥ ३-४६-२१ (१७६५६)
श्रुतं हि ते महाराज यथा पार्थेन संयुगे ।
एकादशतनुः स्थाणुर्धनुषा परितोषितः ॥ ३-४६-२२ (१७६५७)
कैरातं वेषमास्थाय योधयामास फल्गुनम् ।
जिज्ञासुः सर्वदेवेशः कपर्दी भगवान्स्वयम् ॥ ३-४६-२३ (१७६५८)
ग्लेभे पाशुपतं चापि परमास्त्रं महाद्युतिः।'
तत्रैनं लोकपालास्ते दर्शयामासुरर्जुनम् ।
अस्त्रहेतोः पराक्रान्तं तपसा कौरवर्षभम् ॥ ३-४६-२४ (१७६५९)
नैतदुत्सहते चान्यो लब्धुमन्यत्र फल्गुनात् ।
साक्षाद्दर्शनमेतेषामीश्वराणां नरो भुवि ॥ ३-४६-२५ (१७६६०)
महेश्वरेण यो राजन्न जीर्णो ग्रस्तमूर्तिमान् ।
कस्तमुत्सहते वीरो युद्धे जरयितुं पुमान् ॥ ३-४६-२६ (१७६६१)
आसादितमिदं घोरं तुमुलं रोमहर्षणम् ।
द्रौपदीं परिकर्षद्भिः कोपयद्भिश्च पाण्डवान् ॥ ३-४६-२७ (१७६६२)
यत्र विस्फुरमाणौष्ठो भीमः प्राह वचोऽर्थवत् ।
दृष्ट्वा दुर्योधनेनोरू द्रौपद्या दर्शितावुभौ ॥ ३-४६-२८ (१७६६३)
ऊरुं भेत्स्यामि ते पाप गदया वज्रकल्पया ।
त्रयोदशानां वर्षाणामन्ते दुर्द्यूतदेविनः ॥ ३-४६-२९ (१७६६४)
सर्वे प्रहरतां श्रेष्ठाः सर्वेचामिततेजसः ।
सर्वेसर्वास्त्रविद्वांसो देवैरपि सुदुर्जयाः ॥ ३-४६-३० (१७६६५)
मन्ये मन्युसमुद्भूताः पुत्राणां तव संयुगे ।
अन्तं पार्थाः करिष्यन्ति वीर्यामर्षसमन्विताः ॥ ३-४६-३१ (१७६६६)
धृतराष्ट्र उवाच। ३-४६-३२क्ष् (१९०२)
किं कृतं सूत कर्णेन वदता परुषं वचः ।
पर्याप्तं वैरमेतावद्यत्कृष्णा सा सभां गता ॥ ३-४६-३२ (१७६६७)
अपीदानीं मम सुतास्तिष्ठेरन्मन्दचेतसः ।
येषां भ्राता गुरुर्ज्येष्ठो विनये नावतिष्ठते ॥ ३-४६-३३ (१७६६८)
ममापि वचनं सूत न शुश्रूषति मन्दभाक् ।
दृष्ट्वा मां चक्षुषा हीनं निर्विचेष्टमचेतसम् ॥ ३-४६-३४ (१७६६९)
ये चास्य सचिवा मन्दाः कर्णसौबलकादयः ।

ते तस्य भूयसो दोषान्वर्धयन्ति विचेतसः ॥ ३-४६-३५ (१७६७०)
स्वैरं मुक्ता ह्यपि शराः पार्थेनामिततेजसा ।
निर्दहेयुर्मम सुतान्किंपुनर्मन्युनेरिताः ॥ ३-४६-३६ (१७६७१)
पार्थबाहुबलोत्सृष्टा महाचापविनिःसृताः ।
दिव्यास्त्रमन्त्रमुदिताः सादयेयुः सुरानपि ॥ ३-४६-३७ (१७६७२)
यस्य मन्त्री च गोप्ता च सुहृच्चैव जनार्दनः ।
हनिस्त्रैलोक्यनाथः स किंनु तस् न निर्जितम् ॥ ३-४६-३८ (१७६७३)
इदं हि सुमहच्चित्रमर्जुनस्येह संजय ।
महादेवेन बाहुभ्यां यत्समेत इति श्रुतिः ॥ ३-४६-३९ (१७६७४)
प्रत्यक्षं सर्वलोकस्य खाण्डवे यत्कृतं पुरा ।
फल्गुनेन सहायार्थे वह्नेर्दामोदरेण च ॥ ३-४६-४० (१७६७५)
सर्वथा न हि मे पुत्राः सहामात्याः सबान्धवाः ।
क्रुद्धे पार्थे च भीमे च वासुदेवे च सात्वते ॥ ३-४६-४१ (१७६७६)

इति श्रीमन्महाभारते अरण्यपर्वणि इन्द्रलोकाभिगमनपर्वणि
षट्चत्वारिंशोऽध्यायः ॥ ४६ ॥

Mahabharata - Vana Parva - Chapter Footnotes

३-४६-५ ऋताः सत्याः ॥
३-४६-९ प्रतीयातां प्रतिगच्छेताम् ॥
३-४६-१० धृणी दयालुः ।प्रमादी अनवहितः।संरम्भी उद्यमी ॥
३-४६-१८ प्रवपन् प्रेरयन् ।स्थाता स्थास्यति ॥
३-४६-२५ नैतदुत्पत्स्यतेऽन्यो हि इति क ।ध।पाठः ॥
३-४६-२६ न जीर्णो न क्षीणः ॥
३-४६-३१ अन्तं नाशम् ।भार्यामर्षसमन्विताः इति झ।पाठः ॥
३-४६-३३ विनये नीतौ ॥
३-४६-४१ नहि सन्तीति शेषः ॥

---

वन-अध्यय०४७
॥ श्रीः ॥
३.४७. अध्यायः ४७

Mahabharata - Vana Parva - Chapter Topics

वैशंपायनेन जनमेजयंप्रति पाण्डवानां वने भोज्यवस्तुकथनम् ॥ १ ॥

Mahabharata - Vana Parva - Chapter Text

३-४७-० (१७६७७)
जनमेजय उवाच। ३-४७-०क्ष् (१९०३)
यदिदं शोचितं राज्ञा धृतराष्ट्रेण वै मुने ।
प्रव्राज्यपाण्डवान्वीरान्सर्वमेतन्निरर्थकम् ॥ ३-४७-१ (१७६७८)
कथं च राजपुत्रं तमुपेक्षेताल्पचेतसम् ।
दुर्योधनं पाण्डुपुत्रान्कोपयानं महारथान् ॥ ३-४७-२ (१७६७९)
किमासीत्पाण्डुपुत्राणां वने भोजनमुच्यताम् ।
वन्यं वाऽप्यवा कृष्टमेतदाख्यातु नो भवान् ॥ ३-४७-३ (१७६८०)
वैंशंपायन उवाच। ३-४७-४क्ष् (१९०४)
वानेयं च मृगांश्चैव शुद्धैर्बाणैर्निपातितान् ।
ब्राह्मणानां निवेद्याग्रमभुञ्जता महारथाः ॥ ३-४७-४ (१७६८१)
तांस्तु शूरान्महेष्वासांस्तदा निवसतो वने ।
अन्वयुर्ब्राह्मणा राजन्साग्नयोऽनग्नयस्तथा ॥ ३-४७-५ (१७६८२)
ब्राह्मणानां सहस्राणि स्नातकानां महात्मनाम् ।
दश मोक्षविदां तद्वद्यान्बिभर्ति युधिष्ठिरः ॥ ३-४७-६ (१७६८३)
रुरून्कृष्णमृगांश्चैव मेध्यांश्चान्यान्मनोरमान् ।
बाणैरुन्मथ्य विविधैर्ब्राह्मणेभ्यो न्यवेदयत् ॥ ३-४७-७ (१७६८४)
न तत्र कश्चिद्दुर्वर्णो व्याधितो वाऽपि दृश्यते ।
कृशो वा दुर्बलो वाऽपि दीनो भीतोपि वा पुनाः ॥ ३-४७-८ (१७६८५)
पुत्रानिव प्रियान्भ्रातॄन्ज्ञातीनिव सहोदरान् ।
पुरोष कौरवश्रेष्ठो धर्मराजो युधिष्ठिरः। ३-४७-९ (१७६८६)
पतीश्च द्रौपदी सर्वान्द्विजातीश्च यशस्विनी ।
मातेव भोजयित्वाऽग्रे शिष्टमाहारयत्तदा ॥ ३-४७-१० (१७६८७)
प्राचीं राजा दक्षिणां भीमसेनो
यमौ प्रतीचीमथवाऽप्युदीचीम् ।
धनुर्धरा मांसहेतोर्मृगाणां
क्षयं चक्रुर्नित्यमेवोपगम्य ॥ ३-४७-११ (१७६८८)
तथा तेषां कवसतां काम्यके वै
विहीनानामर्जुनेनोत्सुकानाम् ।
पञ्चैव वर्षाणि तथा व्यतीयु-
रधीयतां जपतां जुह्वतां च ॥ ३-४७-१२ (१७६८९)

इति श्रीमन्महाभारते अरण्यपर्वणि इन्द्रलोकाभिगमनपर्वणि
सप्तचत्वारिंशोऽध्यायः ॥ ४७ ॥
Mahabharata - Vana Parva - Chapter Footnotes

३-४७-३ कृष्टं कर्षणजं ग्राम्यधान्यम् ॥
३-४७-४ शुद्धैर्विषालिप्तैः । आनेयं वनभवम् ॥
३-४७-५ अनग्नयः परिव्राजकाः ॥
३-४७-१० आहारयत् आहारं कृतवती ॥

---

वन-अध्यय०४८
॥ श्रीः ॥
३.४८. अध्यायः ४८

Mahabharata - Vana Parva - Chapter Topics
धृतराष्ट्रेण संजयाग्रे पाण्डवपराक्रमस्मरणेन पुत्रान्प्रति परिशोचनम् ॥ १ ॥
संजयेन धृतराष्ट्रंप्रति स्वस्य चारमुखात् पाण्डवदिदृक्षया वनं गतानां कृष्णादीनां दुर्योधनादिवधप्रतिज्ञाश्रवणकथनम् ॥ २ ॥

Mahabharata - Vana Parva - Chapter Text

३-४८-० (१७६९०)
वैशंपायन उवाच। ३-४८-०क्ष् (१९०५)
तेषां तच्चरितं श्रुत्वा मनुष्यातीतमद्भुतम् ।
चिन्ताशोकपरीतात्मा मन्युनाभिपरिप्लुतः ॥ ३-४८-१ (१७६९१)
दीर्घमुष्णं च निःश्वस्य धृतराष्ट्रोऽम्बिकासुतः ।
अब्रवीत्संजयं सूतमामन्त्र्य भरतर्षभ ॥ ३-४८-२ (१७६९२)
न रात्रौ न दिवा सूत शान्तिं प्राप्नोमि वैक्षणम् ।
संचिन्त्य दुर्णयं घोरमतीतं द्यूतजं हि तत् ॥ ३-४८-३ (१७६९३)
तेषामसह्यवीर्याणां शौर्यं धैर्यं धृतिं पराम् ।
अन्योन्यमनुरागं च भ्रातॄणामतिमानुषम् ॥ ३-४८-४ (१७६९४)
देवपुत्रौ महाभागौ देवराजसमद्युती ।
नकुलः सहदेवश्च पाण्डवौ युद्धदुर्मदौ ॥ ३-४८-५ (१७६९५)
दृढायुधौ दूरपातौ युद्धे च कृतनिश्चयौ ।
शीघ्रहस्तौ दृढक्रोधौ नित्ययुक्तौ रथे स्थितौ ॥ ३-४८-६ (१७६९६)
भीमार्जुनौ पुरोधाय यदा तौ रणमूर्धनि ।
स्थास्येते सिंहविक्रान्तावश्विनाविव दुःसहौ ॥ ३-४८-७ (१७६९७)
निःशेषमिह पश्यामि मम सैन्यस्य संजय ॥ ३-४८-८ (१७६९८)

तौ ह्यप्रतिरथौ युद्धे देवपुत्रौ महारथौ ।
द्रौपद्यास्तं परिक्लेशं न क्षंस्येतेऽत्यमर्षिणौ ॥ ३-४८-९ (१७६९९)
वृष्णयोऽथ महेष्वासाः पाञ्चाला वा महौजसः ।
युधि सत्याभिसन्धेन वासुदेवेन रक्षिताः ।
प्रधक्ष्यन्ति रणे पार्थाः पुत्राणां मम वाहिनीम् ॥ ३-४८-१० (१७७००)
रामकृष्णप्रणीतानां वृष्णीनां सूतनन्दन ।
न शक्यः सहितुं वेगः पर्वतैरपि दुःसहः ॥ ३-४८-११ (१७७०१)
तेषां मध्ये महेष्वासो भीमो भीमपराक्रमः ।
शैक्यया वीरघातिन्या गदया विचरिष्यति ॥ ३-४८-१२ (१७७०२)
तथा गाण्डीवनिर्घोषं विस्फूर्जितमिवाशनेः ।
गदावेगं च भीमस्य नालं सोढुं नराधिपाः ॥ ३-४८-१३ (१७७०३)
ततोऽहं सुहृदां वाचो दुर्योधनवशानुगः ।
स्मरणीयाः स्मरिष्यामि मया या न कृताः पुरा ॥ ३-४८-१४ (१७७०४)
संजय उवाच। ३-४८-१५क्ष् (११०६)
व्यतिक्रमोऽयं सुमहांस्त्वया राजन्नुपेक्षितः ।
समर्थेनापि यन्मोहात्पुत्रस्ते न निवारितः ॥ ३-४८-१५ (१७७०५)
श्रुत्वाऽयं निर्जितान्द्यूते पाण्डवान्मधुसूदनः ।
त्वरितः काम्यके पार्थान्समभावयदच्युतः ॥ ३-४८-१६ (१७७०६)
द्रुपदस्य तथा पुत्रा धृष्टद्युम्नपुरोगमाः ।
विराटो धृष्टकेतुश्च केकयाश्च महारथाः ॥ ३-४८-१७ (१७७०७)
तैश्च यत्कथितं राजन्दृष्ट्वा पार्थान्पराजितान् ।
चारेण विदितं सर्वं तन्मया वेदितं च ते ॥ ३-४८-१८ (१७७०८)
समागम्य वृतस्तत्र पाण्डवैर्मधुसूदनः ।
सारथ्ये फल्गुनस्याजौ तथेत्याह च तान्हरिः ॥ ३-४८-१९ (१७७०९)
अमर्षितो हि कृष्णोपि दृष्ट्वा पार्थांस्तदा गतान् ।
कृष्णाजिनोत्तरासङ्गानब्रवीच्च युधिष्ठिरम् ॥ ३-४८-२० (१७७१०)
या सा समृद्धिः पार्थानामिन्द्रप्रस्थे बभूव ह ।
राजसूये मया दृष्टा नृपैरन्यैः सुदुर्लभा ॥ ३-४८-२१ (१७७११)
यत्रसर्वान्महीपालाञ्शस्त्रतेजोभयार्दितान् ।
सवङ्गाङ्गान्सपौण्ड्रौढ्रान्सचोलद्रविडान्ध्रकान् ॥ ३-४८-२२ (१७७१२)
सागरानूपकांश्चैव ये च पत्तनवासिनः ।
सिंहलान्बर्बरान्म्लेच्छान्ये च लङ्कानिवासिनः ॥ ३-४८-२३ (१७७१३)
पश्चिमानि चराष्ट्राणि शतशः सागरान्तिकान् ।
पह्लवान्दरदान्सर्वान्किरातान्यवनाञ्शकान् ॥ ३-४८-२४ (१७७१४)
हारहूणांश्च चीनांश्च तुषारान्सैन्धवांस्तथा ।
जागुडान्रामठान्मुण्डान्स्त्रीराज्यमथ तङ्गणान् ॥ ३-४८-२५ (१७७१५)

केकयान्मालवांश्चैव तथा काश्मीरकानपि ।
अद्राक्षमहमाहूतान्यज्ञे ते परिवेषकान् ॥ ३-४८-२६ (१७७१६)
सा ते समृद्धिर्यैरात्ता चपला प्रतिसारिणी ।
आदाय जीवितं तेषामाहरिष्यामि तामहम् ॥ ३-४८-२७ (१७७१७)
रामेण सह कौरव्य भीमार्जुनवयैस्तथा ।
अक्रूरगदसाम्बैश्च प्रद्युम्नेनाहुकेन च ॥ ३-४८-२८ (१७७१८)
धृष्टद्युम्नेन वीरेण शिशुपालात्मजेन च ।
दुर्योधनं रणे हत्वा सद्यः कर्णं च भारत ।
दुःशासनं सौबलेयं यश्चान्यः प्रतियोत्स्यति ॥ ३-४८-२९ (१७७१९)
ततस्त्वं हास्तिनपुरे भ्रातृभिः सहितो वसन् ।
धार्तराष्ट्रीं श्रियं प्राप्य प्रशाधि पृथिवीमिमां ॥ ३-४८-३० (१७७२०)
अथैनमब्रवीद्राजा तस्मिन्वीरसमागमे ।
शृण्वत्स्वेतेषु वीरेषु धृष्टद्युम्नमुखेषु च ॥ ३-४८-३१ (१७७२१)
प्रतिगृह्णामि ते वाचमिमां सत्यां जनार्दन ।
अमित्रान्मे महाबाहो सानुबन्धान्हनिष्यसि ॥ ३-४८-३२ (१७७२२)
वर्षात्त्रयोदशादूर्ध्वं सत्यं मां कुरु केशव ।
प्रतिज्ञातो वने वासो राज्ञांमध्ये मया ह्ययम् ॥ ३-४८-३३ (१७७२३)
धर्मराजस्य वचनं प्रतिश्रुत्य सभासदः ।
धृष्टद्युम्नपुरोगास्ते समयामासुरञ्जसा ॥ ३-४८-३४ (१७७२४)
केशवं मधुरैर्वाक्यैः कालयुक्तैरमर्षितम् ।
पाञ्चालीं प्राहुरक्लिष्टां वासुदेवस्य शृण्वतः ॥ ३-४८-३५ (१७७२५)
दुर्योधनस्तव क्रोधाद्देवि त्यक्ष्यति जीवितम् ।
प्रतिजानीम ते सत्यं मा शुचो वरवर्णिनि ॥ ३-४८-३६ (१७७२६)
ये स्म ते कुरवः कृष्णे दृष्ट्वा त्वां प्राहसंस्तदा ।
मांसानि तेषां खादन्तो हरिष्यन्ति वृकद्विजाः ॥ ३-४८-३७ (१७७२७)
पास्यन्ति रुधिरं तेषां गृध्रा गोमायवस्तथा ।
उत्तमाङ्गानि कर्षन्तो यैः कृष्टाऽसि सभातले ॥ ३-४८-३८ (१७७२८)
तेषां द्रक्ष्यसि पाञ्चालि गात्राणि पृथिवीतले ।
क्रव्यादैः कृष्यमाणानि भक्ष्यमाणानि चासकृत् ॥ ३-४८-३९ (१७७२९)
परिक्लिष्टाऽसियैस्तत्रयैश्चासि समुपेक्षिता ।
तेषामुत्कृत्तशिरसां भूमिः पास्यति शोणितम् ॥ ३-४८-४० (१७७३०)
एवं बहुविधा वाचस्त ऊचुः पुरुषर्षभाः ।
सर्वेतेजस्विनः शूराः सर्वेचाहतलक्षणाः ॥ ३-४८-४१ (१७७३१)
ते धर्मराजेन वृतावर्षादूर्ध्वं त्रयोदशात् ।
पुरस्कृत्योपयास्यन्ति वासुदेवं महारथाः ॥ ३-४८-४२ (१७७३२)
रामश्च कृष्णश्च धनंजयश्च

प्रद्युम्नसाम्बौ युयुधानभीमौ ।
माद्रीसुतौ केकयराजपुत्राः
पाञ्चालपुत्राः सह मत्स्यराज्ञा ॥ ३-४८-४३ (१७७३३)
एतान्सर्वाल्लोँकवीरानजेया-
न्महात्मनः सानुबन्धान्ससैन्यान् ।
को जीवितार्थी समरेऽभ्युदीया-
त्क्रुद्धान्सिंहान्केसरिणो यथैव ॥ ३-४८-४४ (१७७३४)
धृतराष्ट्र उवाच। ३-४८-४५क्ष् (१९०७)
यन्माऽब्रवीद्विदुरो द्यूतकाले
त्वं पाण्डवाञ्जेष्यसि चेन्नरेन्द्र ।
ध्रुवं कुरूणामयमन्तकालो
महाभयो भविता शोणितौधः ॥ ३-४८-४५ (१७७३५)
मन्ये यथा तद्भवितेति सूत
यथा क्षत्ता प्राह वचः पुरा माम् ।
असंशयं भविता युद्धमेत-
द्गते काले पाण्डवानां यथोक्तम् ॥ ३-४८-४६ (१७७३६)

इति श्रीमन्महाभारते अरण्यपर्वणि इन्द्रलोकाभिगमनपर्वणि
अष्टचत्वारिंशोऽध्यायः ॥ ४८ ॥
Mahabharata - Vana Parva - Chapter Footnotes

३-४८-९ न क्षंस्येते क्षमां न करिष्तः ॥
३-४८-११ सहितुं सोढुम् ॥
३-४८-१२ शैक्यया शिक्यस्थया भूमिं भित्त्वा पातालं प्रवेक्ष्यतीति
भयादन्तरिक्षे एव धृतयेत्यर्थः ॥
३-४८-२७ प्रतिसारिणी प्रतीपं सरतीति नीचानुगामिनीत्यर्थः
। आहारेष्यामि इदानीमेवेति शेषः। अतएव प्रार्थना सत्यं मां कुर्विति ॥
३-४८-३४ समयामासुः समं युक्तमित्याचख्युः । समशब्दात्तदाचष्ट
इति णिच् लिटि आम् ॥
३-४८-४३ युयुधानः सात्यकिः ॥
३-४८-४४ केसरिणः क्रोधेनोच्छ्रितसटान् ॥

---

वन-अध्यय०४९
॥ श्रीः ॥
३.४९. अध्यायः ४९

Mahabharata - Vana Parva - Chapter Topics

भीमयुधिष्ठिरसंवादसमये बृहदश्वागमनम् ॥ १ ॥
युधिष्ठिरंप्रति बृहदश्वेन नलोपाख्यानकथनारम्भः ॥ २ ॥

Mahabharata - Vana Parva - Chapter Text

३-४९-० (१७७३७)
जनमेजय उवाच। ३-४९-०क्ष् (१९०८)
अस्त्रहेतोर्गते पार्थे शक्रलोकं महात्मनि ।
युधिष्ठिरप्रभृतयः किमकुर्वत पाण्डवाः ॥ ३-४९-१ (१७७३८)
वैशंपायन उवाच। ३-४९-२क्ष् (१९०९)
अस्त्रहेतोर्गते पार्थे शक्रलोकं महात्मनि ।
न्यवसन्कृष्णया सार्धं काम्यके भरतर्षभाः ॥ ३-४९-२ (१७७३९)
ततः कदाचिदेकान्ते विविक्ते मृदुशाद्वले ।
दुःखार्ता भरतश्रेष्ठा निषेदुः सह कृष्णया ॥ ३-४९-३ (१७७४०)
धनंजयं शोचमानाः साश्रुकण्ठाः सुदुःखिताः ।
तद्वियोगार्दितान्सर्वाञ्शोकः समभिपुप्लुवे ॥ ३-४९-४ (१७७४१)
धनंजयवियोगाच्च राज्यभ्रंशाच्च दुःखिताः ।
अथ भीमो महाबाहुर्युधिष्ठिरमभाषत ॥ ३-४९-५ (१७७४२)
निदेशात्ते महाराज गतोऽसौ भरतर्षभः ।
अर्जुनः पाण्डुपुत्राणां यस्मिन्प्राणाः प्रतिष्ठिताः ॥ ३-४९-६ (१७७४३)
यस्मिन्विनष्टे पाञ्चालाः सह पुत्रैस्तथा वयम् ।
सात्यकिर्वासुदेवश्च विनश्येयुर्न संशयाः ॥ ३-४९-७ (१७७४४)
योसौ गच्छति धर्मात्मा बहून्क्लेशान्विचिन्तयन् ।
भवन्नियोगाद्बीभत्सुस्ततो दुःखतरं नु किम् ॥ ३-४९-८ (१७७४५)
यस्य बाहू समाश्रित्य वयं सर्वे महात्मनः ।
मन्यामहे जितानाजौ परान्प्राप्तां च मेदिनीम् ॥ ३-४९-९ (१७७४६)
यस्य प्रभावाद्धि वयं सभामध्ये धनुष्मतः ।
गजितान्मन्यामहे सर्वान्धार्तराष्ट्रात्ससौबलान् ॥ ३-४९-१० (१७७४७)
यस्य प्रभावान्न मया सभामध्ये महाबलाः'।
नीता लोकममुं सर्वे धार्तराष्ट्राः ससौबलाः ॥ ३-४९-११ (१७७४८)
तेवयं बाहुबलिनः क्रोधमुत्थितमात्मनः ।
सहामहे भवन्मूलं वासुदेवेन पालिताः ॥ ३-४९-१२ (१७७४९)
मया हि सह कृष्णेन हत्वा कर्णमुखान्परान् ।
स्वबाहुविजितां कृत्स्नां प्रशाधीनां वसुंधराम् ॥ ३-४९-१३ (१७७५०)
भतो द्यूतदोषेण सर्वेवयमुपप्लुताः ।
अहीनपौरुषा राजन्बलिभिर्बलवत्तराः ॥ ३-४९-१४ (१७७५१)

क्षात्रं धर्मं महाराज त्वमवेक्षितुमर्हसि ।
ग हिधर्मो महाराज त्रियस्य वनाश्रयः ॥ ३-४९-१५ (१७७५२)
राज्यमेव परंधर्मं क्षत्रियस्य विदुर्बुधाः ।
स क्षत्रधर्मविद्राजन्माधर्म्यान्नीनशः पथः ॥ ३-४९-१६ (१७७५३)
प्राग्द्वादश समा राजन्धार्तराष्ट्रान्निहन्महि ।
निवर्त्य च वनात्पार्थमानाय्य च जनार्दनम् ॥ ३-४९-१७ (१७७५४)
व्यूढानीकान्महाराज जवेनैव महाहवे ।
धार्तराष्ट्रानमुं लोकं गमयाम विशांपते ॥ ३-४९-१८ (१७७५५)
सर्वानहं हनिष्यामि धार्तराष्ट्रान्ससौबलान् ।
दुर्योधनं च कर्णं च यो वाऽन्यः प्रतियोत्स्यते ॥ ३-४९-१९ (१७७५६)
मया प्रशमिते पश्चात्त्वमेष्यसि वनं पुनः ।
एवं कृते न ते दोषो भविष्यति विशांपते ॥ ३-४९-२० (१७७५७)
यज्ञैश्च विविधैस्तात कृतंपापमरिंदम ।
अवधूय महाराजगच्छेम स्वर्गमुत्तमम् ॥ ३-४९-२१ (१७७५८)
एवमेतद्भवेद्राजन्यदि राजा न बालिशः ।
अस्माकं दीर्घसूत्रः स्याद्भवान्धर्मपरायणः ॥ ३-४९-२२ (१७७५९)
निकृत्या निकृतिप्रत्रा हन्तव्या इति निश्चयः ।
न हि नैकृतिकं हत्वा निकृत्या पापमुच्यते ।
तथा भारत धर्मेषु धर्मज्ञैरिह दृश्यते ॥ ३-४९-२३ (१७७६०)
अहोरात्रं महाराज तुल्यं संवत्सरेण ह ।
तथैव वेदवचनं श्रूयते नित्यदा विभो ।
संवत्सरो महाराज पूर्णो भवति कृच्छ्रतः ॥ ३-४९-२४ (१७७६१)
यदि वेदाः प्रमाणं ते दिवसादूर्ध्वमच्युत ।
तयोदशादितः कालो ज्ञायतां परिनिष्ठितः ॥ ३-४९-२५ (१७७६२)
कालो दुर्योधनं हन्तुं सानुबन्धमरिंदम ।
एकाग्रां पृथिवीं सर्वां पुरा राजन्करोति सः ॥ ३-४९-२६ (१७७६३)
द्यूतप्रियेण राजेन्द्र तथा तद्भवता कृतम् ।
प्रायेणाज्ञातचर्यायां वयं सर्वेनिपातिताः ॥ ३-४९-२७ (१७७६४)
न तं देशं प्रपश्यामि यत्र सोऽस्मान्सुदुर्जनः ।
न विज्ञास्यति दुष्टात्मा चारैरिति सुयोधनः ॥ ३-४९-२८ (१७७६५)
अधिगम्य च सर्वान्नो वनवासमिमं ततः ।
प्रव्राजयिष्यतिपुनर्निकृत्याऽधमपूरुषः ।
यद्यस्मानभिगच्छेत पापः स हि कथंचन ॥ ३-४९-२९ (१७७६६)
अज्ञातचर्यामुत्तीर्णान्दृष्ट्वा च पुनराह्वयेत् ।
द्यूतेन ते महाराज पुनर्युद्धं प्रवर्तते ॥ ३-४९-३० (१७७६७)
भवांश्च पुनराहूतो द्यूतेनैवापनेष्यति ।

स तथाऽक्षेषु कुशलो निश्चितो गतचेतनः ॥ ३-४९-३१ (१७७६८)
चरिष्यसि महाराज वनेषु वसतीः पुनः ॥ ३-४९-३२ (१७७६९)
यद्यस्मान्सुमहाराज कृपणान्कर्तुमर्हसि ।
यावज्जीवमवेक्षस्व वेदधर्मांश्च कृत्स्नशः ।
निकृत्या निकृतिप्रज्ञो हन्तव्य इति निश्चयः ॥ ३-४९-३३ (१७७७०)
अनुज्ञातस्त्वया गत्वायावच्छक्ति सुयोधनम् ।
यथैव कक्षमुत्सृष्टो दहेदनिलसारथिः ।
हनिष्यामि तथा मन्दमनुजानातु मे भवान् ॥ ३-४९-३४ (१७७७१)
वैशंपायन उवाच। ३-४९-३५क्ष् (१९१०)
एवं ब्रुवाणं भीमं तु धर्मराजो युधिष्ठिरः ।
उवाच सान्त्वयन्राजा मूर्ध्न्युपाघ्राय पाण्डवम् ॥ ३-४९-३५ (१७७७२)
असशयं महाबाहो हनिष्यसि सुयोधनम् ।
वर्षात्त्रयोदशादूर्ध्वं सह गाण्डीवधन्वना ॥ ३-४९-३६ (१७७७३)
यत्त्वमाभाषसे पार्थ प्राप्तः काल इति प्रभो ।
अनृतं नत्सहे वक्तुं न ह्येतन्मयि विद्यते ॥ ३-४९-३७ (१७७७४)
अन्तरेणापि कौन्तेय निकृतिंपापनिश्चयम् ।
हन्ता त्वमसि दुर्धर्ष सानुबन्धं सुयोधनम् ॥ ३-४९-३८ (१७७७५)
एवं ब्रुवति भीमं तु धर्मराजे युधिष्ठिरे ।
आजगाम महाभागो बृहदश्वो महानृषिः ॥ ३-४९-३९ (१७७७६)
तमभिप्रेक्ष्यधर्मात्मा संप्राप्तं धर्मचारिणम् ।
शास्त्रवन्मधुपर्केण पूजयामास धर्मराट् ॥ ३-४९-४० (१७७७७)
आश्वस्तं चैनमासीनमुपासनो युधिष्ठिरः ।
अभिप्रेक्ष्य महाबाहुः कृपणं बह्वभाषत ॥ ३-४९-४१ (१७७७८)
अक्षद्यूते च भगवन्धनं राज्यं च मे हृतम् ।
आहूय निकृतिप्रज्ञैः कितवैरक्षकोविदैः ॥ ३-४९-४२ (१७७७९)
अनक्षज्ञस्य हि सतो निकृत्या पापनिश्चयैः ।
भार्या च मे सभां नीता प्राणेभ्योपि गरीयसी ॥ ३-४९-४३ (१७७८०)
पुनर्द्यूतेन मां जित्वा वनवासां सुदारुणम् ।
प्राव्राजयन्मंहारण्यमजिनैः परिवारितम् ॥ ३-४९-४४ (१७७८१)
अहं वने दुर्वसतीर्वसन्परमदुःखितः ।
अक्षद्यूताभिषङ्गेण गिरः शृण्वन्सुदारुणाः ॥ ३-४९-४५ (१७७८२)
आर्तानां सुहृदां वाचो द्यूतप्रभृति शंसताम् ।
अहं हृदि श्रिताः स्मृत्वा सर्वरात्रीर्विचिन्तयन् ॥ ३-४९-४६ (१७७८३)
यस्मिंश्च वयमायत्ताः सदा गाण्डीवधन्वनि ।
ग्स चेन्द्रलोकं गतवानस्त्रहेतोर्महाबलः ॥' ३-४९-४७ (१७७८४)
विना महात्मना तेन गतसत्व इवास्महे ।

कदा द्रक्ष्यामि बीभत्सुं कृतास्त्रं पुनरागतम् ॥ ३-४९-४८ (१७७८५)
'इति सर्वे महेष्वासं चिन्तयाना धनंजयम् ।
अनेन तु विषण्णोऽहं कारणेन सहानुजः ॥ ३-४९-४९ (१७७८६)
वनवासान्निवृत्तं मां पुनस्ते पापबुद्धयः ।
जानन्तः प्रीयमाणा वै देवने भ्रातृभिः सह ।
द्यूतेनैवाह्वयिष्यन्ति बलादक्षेषु तद्विदः ॥ ३-४९-५० (१७७८७)
आहूतश्च पुनर्द्यूते नास्मि शक्तो निवर्तितुम् ।
पणे च मम नात्यर्थं वसु किंचन विद्यते ॥ ३-४९-५१ (१७७८८)
एतत्सर्वमनुध्यायंश्चिन्तयानो दिवानिशम् ।
न मत्तो दुःखिततरः पुमानस्तीह कश्चन' ॥ ३-४९-५२ (१७७८९)
नास्ति राजा मया कश्चिदल्पभाग्यतरो भुवि ।
भवता दृष्टपूर्वो वा श्रुतपूर्वोपि वा क्वचित् ।
न मत्तो दुःखिततरः पुमानस्तीति मे मतिः ॥ ३-४९-५३ (१७७९०)
'एवं ब्रुवन्तं दुःखार्तमुवाच भगवानृषिः ।
शोकं व्यपनुदन्राज्ञो धर्मराजस्य धीमतः ॥ ३-४९-५४ (१७७९१)
बृहदश्व उवाच। ३-४९-५५क्ष् (१९११)
न विषादे मनः त्वया बुद्धिमतांवर ।
आगमिष्यति बीभत्सुरमित्रांश्च विजेष्यते' ॥ ३-४९-५५ (१७७९२)
यद्ब्रवीषि महाराज न मत्तो विद्ते क्वचित् ।
अल्पभाग्यतरः कश्चित्पुमानस्तीति पाण्डव ॥ ३-४९-५६ (१७७९३)
अत्र ते वर्णयिष्यामि यदि शुश्रूषसेऽनघ ।
यस्त्वत्तो दुःखिततरो राजाऽऽसीत्पृथिवीपते ॥ ३-४९-५७ (१७७९४)
वैशंपायन उवाच। ३-४९-५८क्ष् (१९१२)
अथैनमब्रवीद्राजा ब्रवीतु भगवानिति ।
इमामवस्थां संप्राप्तं श्रोतुमिच्छामि पार्थिवम् ॥ ३-४९-५८ (१७७९५)
बृहदश्व उवाच। ३-४९-५९क्ष् (१९१३)
शृणु राजन्नवहितः सह भ्रातृभिरच्युत ।
यस्त्वत्तो दुःखिततरो राजाऽऽसीत्पृथिवोपते ॥ ३-४९-५९ (१७७९६)
निषधेषु महीपालो वीरसेन इति श्रुतः ।
तस्य पुत्रोऽभवन्नाम्ना नलो धर्मार्तकोविदः ॥ ३-४९-६० (१७७९७)
स निकृत्याजतो राजा पुष्करेणेति नः श्रुतम् ।
वनवासं सुदुःखार्तो भार्यया न्यवसत्सह ॥ ३-४९-६१ (१७७९८)
न तस्य दासा न रथो न भ्राता न च भान्धवाः ।
वने निवसतो राजन्नश्रूयन्त कदाचन ॥ ३-४९-६२ (१७७९९)
भवान्हि संवृतो वीरैर्भ्रातृभिर्देवसंमितैः ।
ब्रह्मकल्पैर्द्विजाग्र्यैश्च तस्मान्नार्हसि शोचितुम् ॥ ३-४९-६३ (१७८००)

युधिष्ठिर उवाच। ३-४९-६४क्ष् (१९१४)
विस्तरेणाहमिच्छामि नलस्य सुमहात्मनः ।
चरितं वदतांश्रेष्ठ तन्ममाख्यातुमर्हसि ॥ ३-४९-६४ (१७८०१)

इति श्रीमन्महाभारते अरण्यपर्वणि नलोपाख्यानपर्वणि
एकोनपञ्चाशोऽध्यायः ॥ ४९ ॥
Mahabharata - Vana Parva - Chapter Footnotes

३-४९-४ पुप्लुवे प्लावितवान् ॥
३-४९-६ निदेशात् आज्ञातः ॥
३-४९-११ अगं लकं परलोकम् ॥
३-४९-१४ बलिभिः सामन्तदत्तैर्धनैर्बलवत्तरा ॥
३-४९-२२ बालिशः बालवद्वृथाहठी ।दीर्घसूत्रः चिरकारी ॥
३-४९-२६ पुरा अग्रे ॥
३-४९-३० द्यूतेन द्यूतार्थम् ॥
३-४९-३१ अपनेष्यति दूरीकरिष्ति ।थियमिति शेषः ॥
३-४९-३४ कक्षं तृणम् ॥
३-४९-५० जयन्तः प्रीयमाणा वै इति क ।पाठः ॥
३-४९-६१ पुष्करेण राज्ञा ॥

---

वन-अध्यय०५०
॥ श्रीः ॥
३.५०. अध्यायः ५०

Mahabharata - Vana Parva - Chapter Topics
दमयनत्यां समुत्कण्ठितेन नलंन वने विहरत्सु हंसेष्वेकतमस्य
ग्रहणम् ॥ १ ॥
प्रतिक्रियाप्रतिज्ञानेन आत्मानं मोचितवता हंसेन नलगुणानुवर्णनेन
दमयन्त्या नले रागोत्पादनम् ॥ २ ॥

Mahabharata - Vana Parva - Chapter Text

३-५०-० (१७८०२)
बृहदश्व उवाच। ३-५०-०क्ष् (१९१५)
आसीद्राजा नलो नाम वीरसेनसुतो बली ।
उपपन्नो गुणैरिष्टै रूपवानश्वकोविदः ॥ ३-५०-१ (१७८०३)

ग्यज्वा दानपतिर्दक्षः सदा शीलपुरस्कृतः'।
अतिष्ठन्मनुजेन्द्राणां मूर्ध्नि देवपतिर्यथा ।
उपर्युपरि सर्वेषामादित्य इव तेजसा ॥ ३-५०-२ (१७८०४)
ब्रह्मण्यो वेदविच्छूरो निषधेषु महीपतिः ।
अक्षप्रियः सत्यवादी महानक्षौहिणीपतिः ॥ ३-५०-३ (१७८०५)
ईप्सितो वरनारीणामुदारः संयतेन्द्रियः ।
रक्षिताधन्विनां श्रेष्ठः साक्षादिव मनुः स्वयम् ॥ ३-५०-४ (१७८०६)
तथैवासीद्विदर्भेषु भीमो भीमपराक्रमः ।
शूरः सर्वगुणैर्युक्तः प्रजाकामः स चाप्रजाः ॥ ३-५०-५ (१७८०७)
स प्रजार्थे परं यत्नमकरोत्सुसमाहितः ।
तमभ्यगच्छद्ब्रह्मर्षिर्दमनो नाम भारत ॥ ३-५०-६ (१७८०८)
तं स भीमः प्रजाकामस्तोषयामास धर्मवित् ।
महिष्या सह राजेन्द्र सत्कारेण सुवर्चसम् ॥ ३-५०-७ (१७८०९)
तस्मै प्रसन्नो दमनः सभार्याय वरं ददौ ।
कन्यारत्नं कुमारांश्च त्रीनुदारान्महायशाः ॥ ३-५०-८ (१७८१०)
दमयन्तीं दमं दान्तं दमनं च सुवर्चसम् ।
उपपन्नान्गुणैः सर्वैर्भीमान्भीमपराक्रमान् ॥ ३-५०-९ (१७८११)
दमयन्ती तु रूपेण तेजसा वपुषा श्रिया ।
सौभाग्येन च लोकेषु यशः प्राप सुमध्यमा ॥ ३-५०-१० (१७८१२)
अथ तां वसि प्राप्ते दासीनां समलंकृतम् ।
शतं सखीनां च तदा पर्युपास्ते शचीमिव ॥ ३-५०-११ (१७८१३)
तत्र स्म राजते भैमी सर्वाभरणभूषिता ।
सखीमध्येऽनवद्याङ्गी विद्युत्सौदामनी यथा ॥ ३-५०-१२ (१७८१४)
अतीव रूपसंपन्ना श्रीरिवायतलोचना ।
न देवेषु न यक्षेषु तादृग्रूपवती क्वचित् ॥ ३-५०-१३ (१७८१५)
मानुषेष्वपि चान्येषु दृष्टपूर्वाऽथवा श्रुता ।
चित्तप्रमाथिनी बाला देवानामपि सुन्दरी ॥ ३-५०-१४ (१७८१६)
नलश्च नरशार्दूलो रूपेणाप्रतिमो भुवि ।
कंदर्प इव रूपेण मूर्तिमानभवत्स्वयम् ॥ ३-५०-१५ (१७८१७)
तस्याः समीपे तु नलं प्रशशंसुः कुतूहलात् ।
नैषधस्य समीपे तु दमयन्तीं पुनः पुनः ॥ ३-५०-१६ (१७८१८)
तयोरदृष्टः कामोऽभूच्छृण्वतोः सततं गुणान् ।
अन्योन्यं प्रतिकौन्तेय स व्यर्धत हृच्छयः ॥ ३-५०-१७ (१७८१९)
अशक्नवन्नलः कामं तदा धारयितुं हृदा ।
अन्तःपुरसमीपस्थे वन आस्ते रहोगतः ॥ ३-५०-१८ (१७८२०)
स ददर्श ततो हंसाञ्जातरूपपरिच्छदान् ।

वने विचरतां तेषामेकं जग्राह पक्षिणम् ॥ ३-५०-१९ (१७८२१)
ततोऽन्तरिक्षगो वाचं व्याजहार नलं तदा ।
हन्तव्योस्मि न तेराजन्करिष्यामि तवप्रियम् ॥ ३-५०-२० (१७८२२)
दमयन्तीसकाशे त्वां कथयिष्यामि नैषध ।
यथा त्वदन्यं पुरुषं न सा मंस्यति कर्हिचित् ॥ ३-५०-२१ (१७८२३)
ग्तव चैव यथा भार्या भविष्यति तथाऽनघ ।
विधास्यामि नरव्याघ्र सोऽनुजानातु मां भवान् ॥' ३-५०-२२ (१७८२४)
एवमुक्तस्ततो हंसमुत्ससर्ज महीपतिः ।
ते तु हंसाः समुत्पत्य विदर्भानगमंस्ततः ॥ ३-५०-२३ (१७८२५)
विदर्भनगरीं गत्वा दमयन्त्यास्तदान्तिके ।
निपेतुस्ते गरुत्मन्तः सा ददर्शाथ तान्खगान् ॥ ३-५०-२४ (१७८२६)
सा तानद्भुतरूपान्वै दृष्ट्वा सखिगणावृता ।
हृष्टा ग्रहीतुं खगमांस्त्वरमाणोपचक्रमे ॥ ३-५०-२५ (१७८२७)
अथ हंसा विससृपुः सर्वतः प्रमदावने ।
एकैकशस्तदा कन्यास्तान्हंसान्समुपाद्रवन् ॥ ३-५०-२६ (१७८२८)
दमयन्ती तु यं हंसं समुपाधावदन्तिके ।
स मानुषीं गिरं कृत्वा दमयन्तीमथाब्रवीत् ॥ ३-५०-२७ (१७८२९)
दमयन्ति नलो नाम निषधेषु महीपतिः ।
अश्विनोः सदृशो रूपे न समास्तस्य मानुषाः ॥ ३-५०-२८ (१७८३०)
श्कन्दर्प इव रूपेण मूर्तिमानभवत्स्वयम् ॥
तस्य वै यदिभार्या त्वं भवेथा वरवर्णिनि ।
सफलंते भवेज्जन्म रूपं चेदं सुमध्यमे ॥ ३-५०-२९ (१७८३१)
वयं हि देवगन्धर्वमनुष्योरगराक्षसान् ।
दृष्टवन्तो न चास्माभिर्दृष्टपूर्वस्तथाविधः ॥ ३-५०-३० (१७८३२)
त्वं चापि रत्नं नारीणां नरेषु च नलो वरः ।
विशिष्टाया विशिष्टेन संगमो गुणवान्भवेत् ॥ ३-५०-३१ (१७८३३)
एवमुक्ता तु हंसेन दमयन्ती विशांपते ।
अब्रवीत्तत्र तं हंसं त्वमप्येवं नलं वद ॥ ३-५०-३२ (१७८३४)
तथेत्युक्त्वाऽण्डजः कन्यां विदर्भस्य विशांपते ।
पुनरागम्य निषधान्नले सर्वं न्यवेदयत् ॥ ३-५०-३३ (१७८३५)

इति श्रीमन्महाभारते अरण्यपर्वणि नलोपाख्यानपर्वणि
पञ्चाशोऽध्यायः ॥ ५० ॥

Mahabharata - Vana Parva - Chapter Footnotes

३-५०-१ उपपन्नो युक्तः ॥

३-५०-१२ सौदामनी प्रावृषेण्यमेघसंबन्धिनी ॥
३-५०-१५ मूर्तिमान् शरीरी ॥
३-५०-१६ प्रशशंसुः वार्ताहरा इति शेषः ॥
३-५०-१७ हृच्छयः कामः ॥
३-५०-१९ जातरूपपरिच्छदान् सुवर्णपक्षान् ॥
३-५०-२० अन्तरिक्षगः खगः ॥
३-५०-२४ गरुत्मन्तः पक्षिणः ॥

---

वन-अध्यय०५१
॥ श्रीः ॥
३.५१. अध्यायः ५१

Mahabharata - Vana Parva - Chapter Topics
नारदेनन्द्रादीन्प्रति दमयन्तीगुणानुवर्णनपूर्वकं
तस्स्वयंवरप्रवृत्तिकथनम् ॥ १ ॥
तत्स्वयंवरार्थमागच्छद्भिरिन्द्रादिभिः पथि दृष्टस्य नलस्य
दमयन्तीघटनायां दूत्येन वरणम् ॥ २ ॥

Mahabharata - Vana Parva - Chapter Text

३-५१-० (१७८३६)
बृहदश्व उवाच। ३-५१-०क्ष् (१९१६)
दमयन्ती तु तच्छ्रुत्वा वचो हंसस्य भारत ।
तदा प्रभृति न स्वस्था नलं प्रति बभूव सा ॥ ३-५१-१ (१७८३७)
ततश्चिन्तापरा दीना विवर्णवदना कृशा ।
बभूवदमयन्ती तु निःश्वासपरमा तदा ॥ ३-५१-२ (१७८३८)
ऊर्ध्वदृष्टिर्ध्यानपरा बभूवोन्मत्तदर्शना ।
पाण्डुवर्णा क्षणेनाथ हृच्छयाविष्टचेतना ॥ ३-५१-३ (१७८३९)
न शय्यासनभोगेषु रतिं विन्दति कर्हिचित् ।
न नक्तं न दिवा शेते हाहेति रुदती मुहुः ॥ ३-५१-४ (१७८४०)
तामस्वस्थां तदाकारां सख्यस्ता जज्ञिरिङ्गितैः ॥ ३-५१-५ (१७८४१)
ततो विदर्भपतये दमयन्त्याः सखीजनः ।
न्यवेदयत्तामस्वस्थां दमयन्तीं नरेश्वरः ॥ ३-५१-६ (१७८४२)
तच्छ्रुत्वा नृपतिर्भीमो दमयन्तीसखीगणात् ।
किमर्थं दुहिता मेऽद्यनातिस्वस्थेव लक्ष्यते ॥ ३-५१-७ (१७८४३)
स समीक्ष्य महीपालः स्वां सुतां प्राप्तयौवनाम् ।
अपश्यदात्मना कार्यं दमयन्त्याः स्वयंवरम् ॥ ३-५१-८ (१७८४४)

स सन्निपातयामास महीपालान्विशांपतिः ।
एषोऽनुभूयतां वीराः स्वयंवर इति प्रभो ॥ ३-५१-९ (१७८४५)
श्रुत्वा तु पार्थिवाः सर्वे दमयन्त्याः स्वयंवरम् ।
अभिजग्मुस्ततो वीरा राजानो भीमशासनात् ॥ ३-५१-१० (१७८४६)
हस्त्यश्वरथघोषेण नादयन्तो वसुंधराम् ।
विचित्रमाल्याभरणैर्बलैर्दृश्यैः स्वलंकृतैः ॥ ३-५१-११ (१७८४७)
तेषां भीमो महाबाहुः पार्थिवानां महात्मनाम् ।
यथार्हमकरोत्पूजां तेऽवसंस्तत्र पूजिताः ॥ ३-५१-१२ (१७८४८)
एतस्मिन्नेव काले तु सुराणामृषिसत्तमौ ।
अटमानौ महात्मानाविन्द्रलोकमितो गतौ ॥ ३-५१-१३ (१७८४९)
नारदः पर्वतश्चैव महाप्राज्ञौ महाव्रतौ ।
देवराजस् भवनं विविशाते सुपूजितौ ॥ ३-५१-१४ (१७८५०)
तावर्चयित्वा मघवा ततः कुशलमव्ययम् ।
पप्रच्छानामयं चापि तयोः सर्वगतं विभुः ॥ ३-५१-१५ (१७८५१)
नारद उवाच। ३-५१-१६क्ष् (१९१७)
आवयोः कशलं देव सर्वत्रगतमीश्वर ।
लोके च मघवन्कृत्स्ने नृपाः कुशलिनो विभो ॥ ३-५१-१६ (१७८५२)
बृहदश्व उवाच। ३-५१-१७क्ष् (१९१८)
नारदस्य वचः श्रुत्वा पप्रच्छ बलवृत्रहा ।
धर्मज्ञाः पृथिवीपालास्त्यक्तजीवितयोधिनः ॥ ३-५१-१७ (१७८५३)
शस्त्रेण निधनं काले ये गच्छन्त्यपराङ्मुखाः ।
अयं लोकोऽक्षयस्तेषां यथैव मम कामधुक् ॥ ३-५१-१८ (१७८५४)
क्वनु ते क्षत्रियाः शूरा नहि पश्यामि तानहम् ।
आगच्छतो महीपालान्दयितामनिथीन्मम ॥ ३-५१-१९ (१७८५५)
एवमुक्तस्तु शक्रेण नारदः प्रत्यभाषत ।
शृणु मे मघवन्येन न दृश्यन्ते महीक्षितः ॥ ३-५१-२० (१७८५६)
विदर्भराज्ञो दुहिता दमयन्तीति विश्रुता ।
रूपेण समतिक्रान्ता पृथिव्यां सर्वयोषितः ॥ ३-५१-२१ (१७८५७)
तस्याः स्वयंवरः शक्र भविता नचिरादिव ।
तत्र गच्छन्ति राजानो राजपुत्राश्च सर्वशः ॥ ३-५१-२२ (१७८५८)
तां रत्नभूतां लोकस्य प्रार्थयन्तो महीक्षितः ।
काङ्क्षन्ति स्म विशेषेण बलवृत्रनिषूदन ॥ ३-५१-२३ (१७८५९)
एतस्मिन्कथ्यमाने तु लोकपालाश्च साग्निकाः ।
आजग्मुर्देवराजस्य समीपममरोत्तमाः ॥ ३-५१-२४ (१७८६०)
ततस्ते शुश्रुवुः सर्वे नारदस्य वचो महत् ।
श्रुत्वैव चाब्रुवन्हृष्टा गच्छामो वयमप्युत ॥ ३-५१-२५ (१७८६१)

ततः सर्वे महाराज सगणाः सहवाहनाः ।
विदर्भानभिजग्मुस्ते यतः सर्वे महीक्षितः ॥ ३-५१-२६ (१७८६२)
नलोपि राजा कौन्तेय श्रुत्वा राज्ञां समागमम् ।
अभ्यगच्छददीनात्मा दमयन्तीमनुव्रतः ॥ ३-५१-२७ (१७८६३)
अथ देवाः पथि नलं ददृशुर्भूतले स्तितम् ।
साक्षादिव स्थितं मूर्त्या मन्मथं रूपसंपदा ॥ ३-५१-२८ (१७८६४)
तं दृष्ट्वा लोकपालास्ते भ्राजमानं यथा रविम् ।
तस्थुर्विगतसंकल्पा विस्मिता रूपसंपदा ॥ ३-५१-२९ (१७८६५)
ततोऽन्तरिक्षे विष्टभ्य विमानानि दिवौकसः ।
अब्रुवन्नैषधं राजन्नवतीर्य नभस्तलात् ॥ ३-५१-३० (१७८६६)
भोभो निषधराजेन्द्र नल सत्यव्रतो भवात् ।
अस्माकं कुरु साहाय्यं दूतो भव नरोत्तम ॥ ३-५१-३१ (१७८६७)

इति श्रीमन्महाभारते अरण्यपर्वणि नलोपाख्यानपर्वणि
एकपञ्चाशोऽध्यायः ॥ ५१ ॥
Mahabharata - Vana Parva - Chapter Footnotes

३-५१-५ जज्ञुः ज्ञातवत्यः । रइङ्गितैः अभिप्रायसूचकैश्चेष्टितैः ॥
३-५१-९ अनुभूयतां प्रेक्ष्यतां भवद्भिः ॥
३-५१-२० महीक्षितः पृथ्वीश्वरा ॥
३-५१-२९ विगतो विनष्टः दमयन्तीं प्राप्स्याम इतिसंकल्पो येषाम् ॥

---

वन-अध्यय०५२
॥ श्रीः ॥
३.५२. अध्यायः ५२

Mahabharata - Vana Parva - Chapter Topics
नलेन दमयन्त्यभिन्द्रादिनिदेशनिवेदनम् ॥ १ ॥

Mahabharata - Vana Parva - Chapter Text

३-५२-० (१७८६८)
बृहदश्व उवाच। ३-५२-०क्ष् (१९१९)
तेभ्यः प्रतिज्ञाय नलः करिष्य इति भारत ।
अथैतान्परिपप्रच्छ कृताञ्जलिरुपस्थितः ॥ ३-५२-१ (१७८६९)
के वै भवन्तः कश्चासौ यस्याहं दूत ईप्सितः ।
किंच तत्रमया कार्यं कथयध्वं यथातथम् ॥ ३-५२-२ (१७८७०)

एवमुक्ते नैषधेन मघवानभ्यभाषत ।
अमरान्वै निबोधास्मान्दमयन्त्यर्थमागतान् ॥ ३-५२-३ (१७८७१)
अहमिन्द्रोऽयमग्निश्च तथैवायमपांपतिः ।
शरीरान्तकरो नृणां यमोऽयमपि पार्थिव ॥ ३-५२-४ (१७८७२)
त्वं वै समागतानस्मान्दमयन्त्यै निवेदय ।
लोकपाला महेन्द्राद्याः समायान्ति दिदृक्षवः ॥ ३-५२-५ (१७८७३)
प्राप्तुमिच्छन्ति देवास्त्वां शक्रोऽग्निर्वरुणो यमः ।
तेषामन्यतमं देवं पतित्वे वरयस्व ह ॥ ३-५२-६ (१७८७४)
एवमुक्तः स शक्रेण नलः प्राञ्जलिरब्रवीत् ।
एकार्थसमवेतं मां न प्रेषयितुमर्हथ ॥ ३-५२-७ (१७८७५)
कथ हि जातसंकल्पः स्त्रियमुत्सृजते पुमान् ।
परार्थमीदृशं वक्तं तद्व पश्यामरेश्वर ॥ ३-५२-८ (१७८७६)
ग्एवमुक्तो नैषधेन मघवान्पुनरब्रवीत्।'
करिष्य इतिसंश्रुत्य पूर्वमस्मासु नैषध ।
न करिष्यसि कस्मात्त्वं व्रज नैषध माचिरम् ॥ ३-५२-९ (१७८७७)
ग्स वै त्वमागतानस्मान्दमयन्त्यै निवेदय ।
श्रेयसा योक्ष्यसे हि त्वं कुर्वन्नमरशासनम् ॥' ३-५२-१० (१७८७८)
बृहदश्व उवाच। ३-५२-११क्ष् (१९२०)
एवमुक्तः स देवैस्तैर्नैषधः पुनरब्रवीत् ।
सुरक्षितानि वेश्मानि प्रवेष्टुं कथमुत्सहे ॥ ३-५२-११ (१७८७९)
प्रवेक्ष्यसीति तं शक्रः पुनरेवाभ्यभाषत ।
जगाम स तथेत्युक्त्वा दमयन्त्या निवेशनम् ॥ ३-५२-१२ (१७८८०)
ददर्श तत्र वैदर्भी सखीगणसमावृताम् ।
देदीप्यमानां वपुषा श्रिया च वरवर्णिनीम् ॥ ३-५२-१३ (१७८८१)
अतीव सुकुमाराङ्गीं तनुमध्यां सुलोचनाम् ।
आक्षिपन्तीमिव च तां शशिनं स्वेन तेजसा ॥ ३-५२-१४ (१७८८२)
तस्य दृष्टवैव ववृधे कामस्तां चारुहासिनीम् ।
सत्यं चिकीर्षमाणस्तुधारयामास हृच्छयम् ॥ ३-५२-१५ (१७८८३)
ततस्ता नैषधं दृष्टवा संभ्रान्ताः परमाङ्गनाः ।
आसनेभ्यः समुत्पेतुस्तेजसा तस्य धर्षिताः ॥ ३-५२-१६ (१७८८४)
प्रशशंसुश्च मुप्रीता नलं ता विस्मयान्विताः ।
न चैनमभ्यभाषन्त मनोभिस्त्वभ्यपूजयन् ॥ ३-५२-१७ (१७८८५)
अहो रूपमहो कान्तिरहो धैर्यं महात्मनः ।
कोऽयं देवोऽथवा यक्षो गन्धर्वो वा भविष्यति ॥ ३-५२-१८ (१७८८६)
न तास्तं शक्नुवन्ति स्म व्याहर्तुमपि किंचन ।
तेजसा धर्षितास्तस्य लज्जावत्यो वराङ्गनाः ॥ ३-५२-१९ (१७८८७)

अथैनं स्मयमानेव स्मितपूर्वाभिभाषिणी ।
दमयन्ती नलं वीरमभ्यभाषत विस्मिता ॥ ३-५२-२० (१७८८८)
कस्त्वं सर्वानवद्याङ्ग मम हृच्छयवर्धन ।
प्राप्तोस्यमरवद्वीर ज्ञातुमिच्छामि तेऽनघ ॥ ३-५२-२१ (१७८८९)
कथमागमनं चेह कथं चासि न लक्षितः ।
सुरक्षितं हि मे वेश्म राजा चैवोग्रशासनः ॥ ३-५२-२२ (१७८९०)
एवमुक्तस्तु वैदर्भ्या नलस्तां प्रत्युवाच ह ।
नलं मां विद्धि कल्याणि देवदूतमिहागतम् ॥ ३-५२-२३ (१७८९१)
देवास्त्वां प्राप्तुमिच्छन्ति शक्रोऽग्निर्वरुणो यमः ।
तेषामन्यतमं देवं पतिं वरय शोभने ॥ ३-५२-२४ (१७८९२)
तेषामेव प्रभावेण प्रविष्टोऽहमलक्षितः ।
प्रविशन्तं न मां कश्चिदपश्यन्नाप्यवारयत् ॥ ३-५२-२५ (१७८९३)
एतदर्थमहं भद्रे प्रेषितः सुरसत्तमैः ।
एतच्छ्रुत्वा शुभे बुद्धिं प्रकुरुष्व यथेच्छसि ॥ ३-५२-२६ (१७८९४)

इति श्रीमन्महाभारते अरण्यपर्वणि नलोपाख्यानपर्वणि
द्विपञ्चाशोऽध्यायः ॥ ५२ ॥
Mahabharata - Vana Parva - Chapter Footnotes

३-५२-१६ धर्षिता अभिभूताः ॥

---

वन-अध्यय०५३
॥ श्रीः ॥
३.५३. अध्यायः ५३

Mahabharata - Vana Parva - Chapter Topics
नलदमयन्तीसंवाद ॥ १ ॥
नलेनेन्द्रादीन्प्रति दमयन्तीवचननिवेदनम् ॥ २ ॥

Mahabharata - Vana Parva - Chapter Text

३-५३-० (१७८९५)
बृहदश्व उवाच। ३-५३-०क्ष् (१९२१)
सा नमस्कृत्य देवेभ्यः प्रहस्य नलमब्रवीत् ।
प्रणयस्व यथाश्रद्धं राजन्किं करवाणि ते ॥ ३-५३-१ (१७८९६)
अहं चैव हि यच्चान्यन्ममास्ति वसु किंचना ।
तत्सर्वं तव विस्रब्धं कुरु प्रणयमीश्वर ॥ ३-५३-२ (१७८९७)

हंसानां वचनं यत्तु तन्मां दहति पार्थिव ।
त्वत्कृते हि मया वीर राजानः सन्निपातिताः ॥ ३-५३-३ (१७८९८)
यदि त्वं भजमानां मां प्रत्याख्यास्यसि मानद ।
विषमग्निं जलं रज्जुमास्थास्ये तव कारणात् ॥ ३-५३-४ (१७८९९)
एवमुक्तस्तु वैदर्भ्या नलस्तां प्रत्युवाच ह ।
तिष्ठत्सु लोकपालेषु कथं मानुषमिच्छसि ॥ ३-५३-५ (१७९००)
येषामहं लोककृतामीश्वराणां महात्मनाम् ।
न पादरजसा तुल्यो मनस्ते तेषु वर्तताम् ॥ ३-५३-६ (१७९०१)
विप्रियं ह्याचरन्मर्त्यो देवानां मृत्युच्छति ।
त्राहि मामनवद्याङ्गि वरयस्व सुरोत्तमान् ॥ ३-५३-७ (१७९०२)
विरजांसि च वासांसि दिव्यास्चित्राः स्रजस्तथा ।
भूषणानि तु दिव्यानि देवान्प्राप्य तु भुङ्क्ष्व वै ॥ ३-५३-८ (१७९०३)
य इमां पृथिवीं कृत्स्नां संक्षिप्य ग्रसते पुनः ।
हुताशमीशं देवानां का तं न वरयेत्पतिम् ॥ ३-५३-९ (१७९०४)
यस् दण्डभयात्सर्वे भूतग्रामाः समागताः ।
धर्ममेवानुरुध्यन्ति का तं न वरयेत्पतिम् ॥ ३-५३-१० (१७९०५)
धर्मात्मानं महात्मानं दैत्यदानवमर्दनम् ।
महेन्द्रं सर्वदेवानां का तं न वरयेत्पतिम् ॥ ३-५३-११ (१७९०६)
क्रियतामविशङ्केन मनसा यदि मन्यसे ।
वरुणं लोकपालानां सुहृद्वाक्यमिदं शृणु ॥ ३-५३-१२ (१७९०७)
नैषधेनैवमुक्ता सा दमयन्ती बचोऽब्रवीत् ।
समाप्लुताभ्यां नेत्राभ्यां शोकजेनाथ वारिणा ॥ ३-५३-१३ (१७९०८)
देवेभ्योऽहं नमस्कृत् यसर्वेभ्यः पृथिवीपते ।
वृणे त्वामेव भर्तारं सत्यमेतद्ब्रवीमि ते ॥ ३-५३-१४ (१७९०९)
तामुवाच ततो राजा वेषमानां कृताञ्जलिम् ।
दौत्येनागत्य कल्याणि नोत्सहे स्वार्थमीप्सितं ॥ ३-५३-१५ (१७९१०)
कथं ह्यहं प्रतिश्रुत्य देवतानां विशेषतः ।
परार्थे यत्नमारभ्य कथं स्वार्थमिहोत्सहे ॥ ३-५३-१६ (१७९११)
एष धर्मो यदि स्वार्थो ममापि भविता ततः ।
एवं स्वार्थं करिष्यामि तथा भद्रे विधीयताम् ॥ ३-५३-१७ (१७९१२)
ततो बाष्पाकुलांवाचं दमयन्ती शुचिस्मिता ।
प्रत्याहरन्ती शनकैर्नलं राजानमब्रवीत् ॥ ३-५३-१८ (१७९१३)
अस्त्युपायो मया दृष्टो निरपायो नरेश्वर ।
येन दोषो न भविता तव राजन्कथंचन ॥ ३-५३-१९ (१७९१४)
त्वं चैव हि नरश्रेष्ठ देवाश्चेन्द्रपुरोगमाः ।
आयान्तु सहिताः सर्वे मम यत्र स्वयंवरः ॥ ३-५३-२० (१७९१५)

ततोऽहं लोकपालानां सन्निधौ त्वां नरेश्वर ।
वरयिष्ये नरव्याघ्र नैवं दोषो भविष्यति ॥ ३-५३-२१ (१७९१६)
एवमुक्तस्तु वैदर्भ्या नलो राजा विशंपते ।
आजगाम पुनस्तत्र यत्र देवाः समागताः ॥ ३-५३-२२ (१७९१७)
तमपश्यंस्तथाऽऽयान्तं लोकपाला महेश्वराः ।
दृष्ट्वा चैनं ततोऽपृच्छन्वृत्तान्तं सर्वमेव तम् ॥ ३-५३-२३ (१७९१८)
कच्चिद्दृष्टा त्वया राजन्दमयन्ती शुचिस्मिता ।
किमब्रवीच्च नः सर्वान्वद भूमिपतेऽनघ ॥ ३-५३-२४ (१७९१९)
नल उवाच। ३-५३-२५क्ष् (१९२२)
भवद्भिरहमादिष्टो दमयन्त्या निवेशनम् ।
प्रविष्टः सुमहाकक्ष्यं दण्डिभिः स्थविरैर्वृतम् ॥ ३-५३-२५ (१७९२०)
प्रविशन्तं च मां तत्र न कश्चिद्दृष्टवान्नरः ।
ऋते तां पार्तिवसुतां भवतामेव तेजसा ॥ ३-५३-२६ (१७९२१)
सख्यश्चास्या मया दृष्टास्ताभिश्चाप्युपलक्षितः ।
विस्मिताश्चाभवन्सर्वा दृष्ट्वा मां विबुधेश्वराः ॥ ३-५३-२७ (१७९२२)
वर्ण्यमानेषु च मया भवत्सु रुचिराननां ।
मामेव गतसंकल्पा वृणीते सा सुरोत्तमाः ॥ ३-५३-२८ (१७९२३)
अब्रवीच्चैव मां बाला आयान्तु सहिताः सुराः ।
त्वया सह नरव्याघ्र मम यत्रस्वयंवरः ॥ ३-५३-२९ (१७९२४)
तेषामहं संनिधौ त्वां वरयिष्यामि नैषध ।
एवं तव महाबाहो दोषो न भवितेति ह ॥ ३-५३-३० (१७९२५)
एतावदेव विबुधा यथावृत्तमुपाहृतम् ।
मया शेषे प्रमाणं तु भवन्तस्त्रिदशेश्वराः ॥ ३-५३-३१ (१७९२६)

इति श्रीमन्महाभारते अरण्यपर्वणि नलोपाख्यानपर्वणि
त्रिपञ्चाशोऽध्यायः ॥ ५३ ॥

Mahabharata - Vana Parva - Chapter Footnotes

३-५३-१ यथाश्रद्धं देवेभ्यो नमस्कृत् प्रणयस्वेति संबन्धः
। प्रणयस्व परिणयस्व। मामिति शेषः ॥
३-५३-२ विस्रब्धं सविश्वासं यथास्यात्तथा प्रणयं परिणयनं विवाहम् ॥
३-५३-३ सन्निपातिताः मेलिताः ॥
३-५३-४ मृत्युकारणादिति क ।ध। पाठः ॥
३-५३-२५ महाकक्ष्यं महान्तं राजद्वारप्रदेशम् ॥
३-५३-३१ अतःपरं प्रमाणं तु भवन्तोऽमरसत्तमा इति ।क। पाठः ॥

---

वन-अध्यय०५४

॥ श्रीः ॥

३.५४. अध्यायः ५४

Mahabharata - Vana Parva - Chapter Topics

स्वयंवरमण्डपे इन्द्राग्नियमवरुणैर्नलसारूप्येण तत्पार्श्वे समुपवेशनम् ॥ १ ॥

दमयन्त्या स्वगुणसंतुष्टेन्द्रादिप्रसादेव नलस्यैव वरणम् ॥ २ ॥

Mahabharata - Vana Parva - Chapter Text

३-५४-० (१७९२७)
बृहदश्व उवाच। ३-५४-०क्ष् (१९२३)
अथ काले शुभे प्राप्ते तथौ पुण्ये क्षणे तथा ।
आजुहाव महीपालान्भीमो राजा स्वयंवरे ॥ ३-५४-१ (१७९२८)
तच्छ्रुत्वा पृथिवीपालाः सर्वे हृच्छयपीडिताः ।
त्वरिताः समपाजग्मुर्दमयन्तीमभीप्सवः ॥ ३-५४-२ (१७९२९)
कनकस्तम्भरुचिरं तोरणेन विराजितम् ।
विविशुस्ते नृपा रङ्गं महासिंह इवाचलम् ॥ ३-५४-३ (१७९३०)
तत्रासनेषु विविधेष्वासीनाः पृथिवीक्षितः ।
सुरभिस्रग्धराः सर्वे प्रमृष्टमणिकुण्डलाः ॥ ३-५४-४ (१७९३१)
संपूर्णा पुरुषव्याघ्रैर्व्याघ्रैर्गिरिगुहामिव ।
ग्प्रविवेश नलो देवैः पुण्यश्लोको नराधिप' ॥ ३-५४-५ (१७९३२)
तत्र स्म पीना दृश्यन्ते बाहवः परिघोपमाः ।
आकारवर्णसुश्लक्ष्णाः पञ्चशीर्षा इवोरगाः ॥ ३-५४-६ (१७९३३)
सुकेशान्तानि चारूणि सुनासानि शुभानि च ।
मुखानि राज्ञां शोभन्ते नक्षत्राणि यथा दिवि ॥ ३-५४-७ (१७९३४)
दमयन्ती ततो रङ्गं प्रविवेश शुभानना ।
मुष्णन्ती प्रभया राज्ञां चक्षूषि च मनांसि च ॥ ३-५४-८ (१७९३५)
तस्या गात्रेषु पतिता तेषां दृष्टिर्महात्मनाम् ।
तत्रतत्रैव सक्ताऽभून्न चचाल च पश्यताम् ॥ ३-५४-९ (१७९३६)
ततः संकीर्त्यमानेषु राज्ञां नामसु भारत ।
ददर्श भैमी पुरुषान्पञ्च तुल्याकृतीनिह ॥ ३-५४-१० (१७९३७)
तान्समीक्ष्य ततः सर्वान्निर्विशेषाकृतीन्स्थितान् ।
संदेहादथ वेदर्भी नाभ्यजानान्नलं नृपम् ॥ ३-५४-११ (१७९३८)
ग्निर्विशेषवयोवेषरूपाणां तत्र सा शुभा।'
यंयं हि ददृशे तेषां तंतं मेने नलं नृपम् ।

साचिन्तयन्ती बुद्ध्याऽथ तर्कयामास भामिनी ॥ ३-५४-१२ (१७९३९)
कथं नु देवाञ्जानीयां कथं विद्यां नलं नृपम् ।
एवं संचिन्तयन्ती सा वैदर्भी भृशदुःखिता ॥ ३-५४-१३ (१७९४०)
श्रुतानि देवलिङ्गानि तर्कयामास भारत ।
देवानां यानि लिङ्गानि स्थविरेभ्यः श्रुतानि मे ॥ ३-५४-१४ (१७९४१)
तानीह तिष्ठतां भूमावेकस्यापि न लक्षये ।
एवं विचिन्त्य बहुधा विचार्य च पुनः पुनः ॥ ३-५४-१५ (१७९४२)
शरणं प्रति देवानां प्राप्तकालममन्यत ।
वाचा च मनसा चैव नमस्कारं प्रयुज्य सा ॥ ३-५४-१६ (१७९४३)
देवेभ्यः प्राञ्जलिर्भूत्वा वेपमानेदमब्रवीत् ।
हंसानां वचनं श्रुत्वा यथा मे नैषधो वृतः ।
पतित्वे तेन सत्येन देवास्तं प्रदिशन्तु मे ॥ ३-५४-१७ (१७९४४)
मनसा वचसा चैव यथा नातिचराम्यहम् ।
तेन सत्येन विबुधास्तमेव प्रदिशन्तु मे ॥ ३-५४-१८ (१७९४५)
यथा देवैः स मे भर्ता विहितो निषधाधिषः ।
तेन सत्येन मे देवास्तमेव प्रदिशन्तु मे ॥ ३-५४-१९ (१७९४६)
यथेदं व्रतमारब्धं नलस्याराधने मया ।
तेन सत्येन मे देवास्तमेव प्रदिशन्तु मे ॥ ३-५४-२० (१७९४७)
स्वं चैव रूपं पुष्यन्तु लोकपाला महेश्वराः ।
यथाऽहमभिजानीयां पुण्यश्लोकं नराधिपम् ॥ ३-५४-२१ (१७९४८)
निशम्य दमयन्त्यास्तत्करुणं प्रतिदेवितम् ।
निश्चयंपरमं तथ्यमनुरागं च नैषधे ॥ ३-५४-२२ (१७९४९)
मनोविशुद्धिं बुद्धिं च भक्तिं रागं च नैषधे ।
यथोक्तं चक्रिरे देवाः सामर्थ्यं लिङ्गधारणे ॥ ३-५४-२३ (१७९५०)
साऽपश्यद्विबुधान्सर्वानस्वेदान्स्तब्धलोचनान् ।
अम्लानस्रग्रजोहीनान्स्थितानस्पृशतः क्षितिम् ॥ ३-५४-२४ (१७९५१)
छायाद्वितीयो म्लानस्रग्रजःस्वेदसमन्वितः ।
भूमिष्ठो नैषधश्चैव निमेषेण च सूचितः ॥ ३-५४-२५ (१७९५२)
सा समीक्ष्य तु तान्देवान्पुण्यश्लोकं च भारत ।
नैषधं वरयामास भैमी धर्मेण पाण्डव ॥ ३-५४-२६ (१७९५३)
विलज्जमाना वस्त्रान्तं जग्राहायतलोचना ।
स्कन्धदेशेऽसृजत्तस्य स्रजं परमशोभनाम् ॥ ३-५४-२७ (१७९५४)
वरयामास चैवैनं पतित्वे वरवर्णिनी ।
ततो हाहेति सहसा मुक्तः शब्दो नराधिपैः ॥ ३-५४-२८ (१७९५५)
देवैर्महर्षिभिस्तत्र साधुसाध्विति भारत ।
विस्मितैरीरितः शब्दः प्रशंसद्भिर्नलं नृपम् ॥ ३-५४-२९ (१७९५६)

दमयन्तीं तु कौरव्य वीरसेनसुतो नृपः ।
आश्वासयद्वरारोहां प्रहृष्टेनान्तरात्मना ॥ ३-५४-३० (१७९५७)
यत्त्वं भजसि कल्याणि पुमांसं देवसन्निधौ ।
तस्मान्मां विद्धि भर्तारमेतत्ते वचने रतम् ॥ ३-५४-३१ (१७९५८)
यावच्च मे धरिष्यन्ति प्राणा देहे शुचिस्मिते ।
तावत्त्वयि भविष्यामि सत्यमेतद्ब्रवीमि ते ॥ ३-५४-३२ (१७९५९)
दमयन्ती तथा वाग्भिरभिनन्द्य कृताञ्जलिः ॥ ३-५४-३३ (१७९६०)
तौ परस्परतः प्रीतौ दृष्ट्वा त्वग्निपुरोगमान् ।
तानेव शरणं देवाञ्जग्मतुर्मनसा तदा ॥ ३-५४-३४ (१७९६१)
वृते तु नैषधे भैम्या लोकपाला महौजसः ।
प्रहृष्टमनसः सर्वे नलायाष्टौ वरान्ददुः ॥ ३-५४-३५ (१७९६२)
प्रत्यक्षदर्शनं यज्ञे गतिं चानुत्तमां शुभाम् ।
नैषधाय ददौ शक्रः प्रीयमाणः शचीपतिः ॥ ३-५४-३६ (१७९६३)
अग्निरात्मभवं प्रादाद्यत्र वाञ्छति नैषधः ।
लोकानात्मप्रभांश्चैव ददौ तस्मै हुताशनः ॥ ३-५४-३७ (१७९६४)
यमस्त्वन्नरसं प्रादाद्धर्मे च परमां स्थितिम् ।
अपांपतिरपां भावं यत्रवाञ्छति नैपधः ॥
स्रजश्चोत्तमगन्धाढ्याः सर्वेच मिथुनं ददुः ३-५४-३८ (१७९६५)
वरानेवं प्रदायास्य देवास्ते त्रिदिवं गताः ।
गएतत्सर्वं नलोऽपश्यद्दमयन्ती च भारत ।
यथा स्वप्नं महाराज तथैव ददृशुर्जनाः ॥ ३-५४-३९ (१७९६६)
ततः स्वयवरं चक्रे भीमो राजाऽतिमानुषम् ।
समागतेषु सर्वेषु भूपालेसु विशांपते ॥ ३-५४-४० (१७९६७)
दमयन्त्यपि तद्दृष्ट्वाराजमण्डलमृद्धिमत् ।
अन्वीक्ष्यनैषधं वव्रे भैमी धर्मेण भारत ॥ ३-५४-४१ (१७९६८)
वृते च नैषधे भैम्या निवृत्ते च स्वयंवरे ।
सर्व एव महीपालाः प्रतिजग्मुर्यथागतम्' ॥ ३-५४-४२ (१७९६९)
पार्थिवाश्चानुभूयास्य विवाहं विस्मयान्विताः ।
दमयन्त्याश्च मुदिताः प्रतिजग्मुर्यथागतम् ॥ ३-५४-४३ (१७९७०)
गतेषु पार्थिवेन्द्रेषु भीमः प्रीतो महामनाः ।
विवाहं कारयामास दमयन्त्या नलस्य च ॥ ३-५४-४४ (१७९७१)
उष्य तत्र तथाकामं नैषधो द्विपदांवरः ।
भीमेन समनुज्ञातो जगाम नगरं स्वकम् ।
अवाप्य नारीरत्नं तु पुण्यश्लोकोपि पार्थिवः ॥ ३-५४-४५ (१७९७२)
रेमे सह तया राजञ्छच्येव बलवृत्रहा ।
अतीव मुदितो राजा भ्राजमानोंशुमानिव ॥ ३-५४-४६ (१७९७३)

अरञ्जयत्प्रजा वीरो धर्मेण परिपालयन् ।
ईजे चाप्यश्वमेधेन ययातिरिव नाहुषः ।
अन्यैश्च बहुभिर्धीमान्क्रतुभिश्चाप्तदक्षिणैः ॥ ३-५४-४७ (१७९७४)
पुगश्च रमणीयेषु वनेषूपवनेषु च ।
दमयन्त्या सह नलो विजहारामरोपमः ॥ ३-५४-४८ (१७९७५)
जनयामास च ततो दमयन्त्यां महामनाः ।
इन्द्रसेनं सुतं चापि इन्द्रसेनां चकन्यकाम् ॥ ३-५४-४९ (१७९७६)
एवं स यजमानश्च विहरंश्च नराधिपः ।
ररक्ष वसुसंपूर्णां वसुधां वसुधाधिपः ॥ ३-५४-५० (१७९७७)

इति श्रीमन्महाभारते अरण्यपर्वणि नलोपाख्यानपर्वणि
चतुःपञ्चाशोऽध्यायः ॥ ५४ ॥
Mahabharata - Vana Parva - Chapter Footnotes

३-५४-७ सुनासाक्षिभ्रुवाणि श्वेति झ ।पाठः ॥
३-५४-८ मुष्णन्ती हरन्त ॥
३-५४-२१ लोकपालाः सहेश्वरा इति झ ।पाठः ॥
३-५४-२४ अम्लानस्रजश्च ते रजोहीनाश्चेति विग्रहः
।ठायाविहीनानम्लानस्रजोऽस्वेदसमन्वितानिति क।पाठः ॥
३-५४-३१ यद्यस्मान्मां भजसि तस्मात्ते तव वचने रतं इत्येतत् विद्धि ॥
३-५४-३७ आत्मभवं भात्मन आविर्भावम् ॥
३-५४-३८ अन्नरसं यादृशे तादृशेप्यन्ने विशिष्टरसवत्ताम् ।भावं
सत्ताम्।मुधुनं एकैकेन द्वयं द्वयमपीत्यर्थः ॥
३-५४-४३ अनुभूय दृष्ट्वा ॥
३-५४-४५ उष्य वासं कृत्वा ॥

---

वन-अध्यय०५५
॥ श्रीः ॥
३.५५. अध्यायः ५५

Mahabharata - Vana Parva - Chapter Topics
दमयन्तीस्वयंवरादनन्तरं दिवं गच्छतामिन्द्रादीनां मध्येमार्गं
कलिद्वापरयोर्दर्शनम् ॥ १ ॥
तैः स्वयंवरे दमयन्त्या नलवरणं निवेदितेन द्वापरद्वितीयेन कलिना
नलपराभवप्रतिज्ञानम् ॥ २ ॥

Mahabharata - Vana Parva - Chapter Text

३-५५-० (१७९७८)
बृहदश्व उवाच। ३-५५-०क्ष् (१९२४)
वृते तु नैषधे भैम्या लोकपाला महौजसः ।
यान्तो ददृशुरायान्तं द्वापरं कलिना सह ॥ ३-५५-१ (१७९७९)
अथाब्रवीत्कलिं शक्रः संप्रेक्ष्य बलवृत्रहा ।
द्वापरेण सहायेन कले ब्रूहि क्व यास्यसि ॥ ३-५५-२ (१७९८०)
ततोऽब्रवीत्कलिः शक्रं दमयन्त्याः स्वयंवरम् ।
गत्वा हि वरयिष्ये तां मनो हि मम तां गतम् ॥ ३-५५-३ (१७९८१)
तमब्रवीत्प्रहस्येन्द्रो निर्वृत्तः स स्वयंवरः ।
वृतस्तया नलो राजा पतिरस्मत्समीपतः ॥ ३-५५-४ (१७९८२)
एवमुक्तस्तु शक्रेण कलिः कोपसमन्वितः ।
देवानामन्त्र्य तान्सर्वानुवाचेदं वचस्तदा ॥ ३-५५-५ (१७९८३)
देवानां मानुषं मध्ये यत्सा पतिमविन्दत ।
ननु तस्या भवेन्न्याय्यं विपुलं दण्डधारणम् ॥ ३-५५-६ (१७९८४)
एवमुक्ते तु कलिना प्रत्यूचुस्ते दिवौकसः ।
अस्माभिः सभनुज्ञाते दमयन्त्या नलो वृतः ॥ ३-५५-७ (१७९८५)
का हि सर्वगुणोपेतं नाश्रयेत नलं नृपम् ।
यो वेद धर्मानखिलान्यथावच्चरितव्रतः ॥ ३-५५-८ (१७९८६)
योऽधीते चतुरो वेदान्सर्वानाख्यानपञ्चमान् ।
अहिंसानिरतो यश्च सत्यवादी दृढव्रतः ॥ ३-५५-९ (१७९८७)
यस्मिन्दाक्ष्यं धृतिर्ज्ञानं तपः शौचं दमः शमः ।
ध्रुवाणि पुरुषव्याघ्रे लोकपालसमे नृपे ॥ ३-५५-१० (१७९८८)
एवंरूपं नलं यो वै कामयेच्छपितुं कले ।
आत्मानं स शपेन्मूढो हन्यादात्मानमात्मना ॥ ३-५५-११ (१७९८९)
एवंगुणं नलं यो वै कामयेच्छपितुं कले ।
कृच्छ्रे स नरके मज्जेदगाधे विपुले ह्रदे ॥ ३-५५-१२ (१७९९०)
एवमुक्त्वा कलिं देवा द्वापरं च दिवं ययुः ।
ततो गतेषु देवेषु कलिर्द्वापरमब्रवीत् ॥ ३-५५-१३ (१७९९१)
संयन्तुं नोत्सहे कोपं नले वत्स्यामि द्वापर ।
भ्रंशयिष्यामि तं राज्यान्न भैम्या सह रंस्यते ॥ ३-५५-१४ (१७९९२)
त्वमप्यक्षान्समाविश्य साहाय्यं कर्तुमर्हसि ।
ग्मम प्रियकृते ह्यस्मन्कृतवांश्च भविष्यसि' ॥ ३-५५-१५ (१७९९३)

इति श्रीमन्महाभारते अरण्यपर्वणि नलोपाख्यानपर्वणि
पञ्चपञ्चाशोऽध्यायः ॥ ५५ ॥

३-५५-४ निर्वृत्तः समाप्तः ॥
३-५५-७ अस्माभिः समनुज्ञातो दमयन्त्येति क ।ध।पाठः ॥
३-५५-९ धर्मवादी दृढव्रतं इति क ।पाठः ॥
३-५५-१० शौचं दया क्षमेति क ।पाठः ॥

---

वन-अध्यय०५६
॥ श्रीः ॥
३.५६. अध्यायः ५६

Mahabharata - Vana Parva - Chapter Topics
कलिचोदनया पुष्करेण नलाह्वानम् ॥ १ ॥
नलपुष्करयोरक्षदेवनम् ॥ १ ॥

Mahabharata - Vana Parva - Chapter Text

३-५६-० (१७९९४)
बृहदश्व उवाच। ३-५६-०क्ष् (१९२५)
एवं स समयं कृत्वा द्वापरेण कलिः सह ।
आजगाम ततस्तत्र यत्रराजा स नैषधः ॥ ३-५६-१ (१७९९५)
स नित्यमन्तरप्रेक्षी निषधेष्ववसच्चिरम् ।
अथास्य द्वादशे वर्षे ददर्श कलिरन्तरम् ॥ ३-५६-२ (१७९९६)
कृत्वा मूत्रमुपस्पृश्य संध्यामन्वास्त नैषधः ।
अकृत्वा पादयोः शौचं तत्रैनं कलिराविशत् ॥ ३-५६-३ (१७९९७)
स समाविश्य च नलं समीपं पुष्करस्य च ।
गत्वा पुष्करमाहेदमेहि दीव्य नलेन वै ॥ ३-५६-४ (१७९९८)
अक्षद्यूते नलं जेता भवान्हि सहितो मया ।
निषधान्प्रतिपद्यस्व जित्वा राज्यं नलं नृपम् ॥ ३-५६-५ (१७९९९)
एवमुक्तस्तु कलिना पुष्करो नलमभ्ययात् ।
कलिश्चैव वृषो भूत्वा तं वै पुष्करमन्वयात् ॥ ३-५६-६ (१८०००)
आसाद्य तु नलं वीरं पुष्करः परवीरहा ।
दीव्यावेत्यब्रवीद्भ्राता वृषेणेति मुहुर्मुहुः ॥ ३-५६-७ (१८००१)
न चक्षमे ततो राजा समाह्वानं महामनाः ।
वैदर्भ्याः प्रेक्षमाणायाः प्राप्तकालममन्यत ॥ ३-५६-८ (१८००२)
ग्ततः स राज्ञा सहसा देवितुं संप्रचक्रमे ॥ ३-५६-९ (१८००३)
भ्रात्रा देवाभिभूतेन दैवाविष्टो जनाधिपः।'

हिरण्यस्य सुवर्णस्य यानयुग्यस् वाससाम् ।
आविष्टः कलिना द्यूते जीयते स्म नलस्तदा ॥ ३-५६-१० (१८००४)
तमक्षमदसंमत्तं सुहृदां न तु कश्चन ।
निवारणेऽभवच्छक्तो दीव्यमानमरिंदमम् ॥ ३-५६-११ (१८००५)
ततः पौरजनाः सर्वे मन्त्रिभिः सह भारत ।
राजानं द्रष्टुमागच्छन्निवारयितुमातुरम् ॥ ३-५६-१२ (१८००६)
ततः सूत उपागम्य दमयन्त्यै न्यवेदयत् ।
एष पौरजनो देवि द्वारि तिष्ठति कार्यवान् ॥ ३-५६-१३ (१८००७)
निवेद्यतां नैषधाय सर्वाः प्रकृतयः स्थिताः ।
अमृष्यमाणा व्यसनं राज्ञो धर्मार्थदर्शिनः ॥ ३-५६-१४ (१८००८)
ततः सा बाष्पकलया वाचा दुखेन कर्शिता ।
उवाच नैषधं भैमी शोकोपहतचेतना ॥ ३-५६-१५ (१८००९)
राजन्पौरजनो द्वारि त्वां दिदृक्षुरवस्थितः ।
ग्वृद्धैर्ब्राह्मणमुख्यैश्च वणिग्भिश्च समन्वितः ॥ ३-५६-१६ (१८०१०)
आगतं सहितं राजंस्त्वत्प्रसादावलम्बनम्।'
तं द्रष्टुमर्हसीत्येवं पुनः पुनरभाषत ॥ ३-५६-१७ (१८०११)
तां तथा रुचिरापाङ्गीं विलपन्तीं तथाविधाम् ।
आविष्टः कलिना राजा नाभ्यभाषत किंचन ॥ ३-५६-१८ (१८०१२)
ततस्ते मन्त्रिणः सर्वे ते चैव पुरवासिनः ।
नायमस्तीति दुःखार्ता व्रीडिता जग्मुरालयान् ॥ ३-५६-१९ (१८०१३)
तथा तदभवद्द्यूतं पुष्करस्य नलस्य च ।
युधिष्ठिर बहून्मासान्पुण्यश्लोकस्त्वजीयत ॥ ३-५६-२० (१८०१४)

इति श्रीमन्महाभारते अरण्यपर्वणि नलोपाख्यानपर्वणि
षट्पञ्चाशोऽध्यायः ॥ ६५ ॥
Mahabharata - Vana Parva - Chapter Footnotes

३-५६-१ समयं संकेतम् ॥
३-५६-३ अन्वास्त उपासितवान् ॥
३-५६-४ स कुलिः ।नलं समाविश्य रूपान्तरेण पुष्करं
चाब्रवीत्। दीव्य द्यूतं कुरु ॥
३-५६-६ वृषः श्रेष्ठः पाशश्रेष्ठो भूत्वा ॥
३-५६-७ वृषेणाक्षमुख्येन ।अब्रवीत्प्रीत्येति क। पाठः ॥
३-५६-१० यानेषु युग्यं युगवहं रथादि तस्य ॥
३-५६-१९ नायमस्ति नष्टोयमित्यर्थः ॥
३-५६-२० पुण्यः पावनः श्लोको यशो यस्य ।अजीयत जितः ॥

वन-अध्यय०५७
॥ श्रीः ॥
३.५७. अध्यायः ५७

Mahabharata - Vana Parva - Chapter Topics
द्यूते नलपराजयमुत्पश्यन्त्या दमयन्त्या चोदितेन सारथिना तत्पुत्रमिथुनस्य रथारोपणेन भीमनगरप्रापणम् ॥ १ ॥

Mahabharata - Vana Parva - Chapter Text

३-५७-० (१८०१५)
बृहदश्व उवाच। ३-५७-०क्ष् (१९२६)
दमयन्ती ततो दृष्ट्वा पुण्यश्लोकं नराधिपम् ।
उन्मत्तवदनुन्मत्ता देवने कृतचेतसम् ॥ ३-५७-१ (१८०१६)
भयशोकसमाविष्टा राजन्भीमसुता ततः ।
चिन्तयामास तत्कार्यं सुमहत्पार्थिवं प्रति ॥ ३-५७-२ (१८०१७)
सा शङ्कमाना तत्पापं चिकीर्षन्ती च तत्प्रियम् ।
नलं च हृतसर्वस्वमुपलभ्येदमब्रवीत् ॥ ३-५७-३ (१८०१८)
बृहत्सेनामतियशां तां धात्रीं परिचारिकाम् ।
हितां सर्वार्थकुशलामनुरक्तां सुभाषिताम् ॥ ३-५७-४ (१८०१९)
बृहन्सेने व्रजामात्यानानाय्य नलंशासनात् ।
आचक्ष्व यद्धृतं द्रव्यमवशिष्टं च यद्वसु ॥ ३-५७-५ (१८०२०)
ग्इत्येवं सा समादिष्टा बृहत्सेना नरेश्वर ।
उवाच देव्या वचनं मन्त्रिणां सा समीपत ॥' ३-५७-६ (१८०२१)
ततस्ते मन्त्रिणः सर्वे विज्ञाय नलशासनम् ।
अपि नो भागधेयं स्यादित्युक्त्वा पुनराव्रजन् ॥ ३-५७-७ (१८०२२)
तास्तु सर्वाः प्रकृतयो द्वितीयं समुपस्थिताः ।
न्यवेदयद्भीमसुता न च तत्प्रत्यनन्दत ॥ ३-५७-८ (१८०२३)
वाक्यमप्रतिनन्दन्तं भर्तारमभिवीक्ष्य सा ।
दमयन्ती पुनर्वेश्म व्रीडिता प्रविवेश ह ॥ ३-५७-९ (१८०२४)
निशाम्य सततं चाक्षान्पुण्यश्लोकपराङ्मुखान् ।
नलं च हृतसर्वस्वं धात्रीं पुनरुवाच ह ॥ ३-५७-१० (१८०२५)
बृहत्सेने पुनर्गच्छ वार्ष्णेयं नलशासनात् ।
सूतमानय कल्याणि महत्कार्यमुपस्थितम् ॥ ३-५७-११ (१८०२६)
बृहत्सेना तु सा श्रुत्वा दमयन्त्याः प्रभापितम् ।
वार्ष्णेयमानयामास पुरुषैराप्तकारिभिः ॥ ३-५७-१२ (१८०२७)

वार्ष्णेयं तु ततो भैमी सान्त्वयच्छ्लक्ष्णया गिरा ।
उवाच देशकालज्ञा प्राप्तकालमनिन्दिता ॥ ३-५७-१३ (१८०२८)
जानषे त्वं यथा राजा सम्यग्वृत्तः सदा त्वयि ।
तस्य त्वं विपमस्थस्य साहाय्यं कर्तुमर्हसि ॥ ३-५७-१४ (१८०२९)
यथायथा हि नृपतिः पुष्करेणैव जीयते ।
तथातथाऽस्य वै द्यूते रागो भूयोऽभिवर्धते ॥ ३-५७-१५ (१८०३०)
यथा च पुष्करस्याक्षाः पतन्ति वशवर्तिनः ।
तथा विपर्ययश्चापि नलस्याक्षेषु दृश्यते ॥ ३-५७-१६ (१८०३१)
सुहृत्स्वजनवाक्यानि यथाऽयं न शृणोति च ।
ममापि च तथा वाक्यं नाभिनन्दति नैषध ॥ ३-५७-१७ (१८०३२)
यथा राज्ञः प्रदीप्तानां भाग्यानामद्य सारथे ।
नूनं मन्ये न शेषोस्ति नैषधस्य महात्मनः ॥ ३-५७-१८ (१८०३३)
यत्तु मे वचनं राजा नाभिनन्दति मोहितः ।
शरणं त्वां प्रपन्नाऽस्मि सारथे कुरु मद्वचः ।
न हि मे शुध्ते भावो विनाशं प्रति सारथे ॥ ३-५७-१९ (१८०३४)
नलस्य दयितानश्वान्योजयित्वा मनोजवान् ।
रथमारोप्य मिथुनं कुण्डिनं यातुर्महसि ॥ ३-५७-२० (१८०३५)
मम ज्ञातिषु निक्षिप्य दारकौ स्यन्दनं तथा ।
अश्वांश्चेमान्यथाकामं वस वाऽन्यत्र गच्छवा ॥ ३-५७-२१ (१८०३६)
दमयन्त्यास्तु तद्वाक्यं वार्ष्णेयो नलसारथिः ।
न्यवेदयदशेषेण नलामात्येषु मुख्यशः ॥ ३-५७-२२ (१८०३७)
तैः समेत्य विनिश्चित्य सोऽनुज्ञातो महीपते ।
ययौ मिथुनमारोप्य विदर्भांस्तेन वाहिना ॥ ३-५७-२३ (१८०३८)
हयांस्तत्र विनिक्षिप्य सूतो रथवरं च तम् ।
इन्द्रसेनां च तां कन्यामिन्द्रसेनं च बालकम् ॥ ३-५७-२४ (१८०३९)
आमन्त्र्य भीमं राजानमार्तः शोचन्नलं नृपम् ।
क्व नु यास्यामि मनसा चिन्तयानो मुहुर्मुहुः ।
अटमानस्ततोऽयोध्यां जगाम नगरीं तदा ॥ ३-५७-२५ (१८०४०)
ऋतुपर्णं स राजानमुपतस्थे सुदुःखितः ।
भृतिं च स ददौ चास्य सारथ्येन नियोजितः ॥ ३-५७-२६ (१८०४१)

इति श्रीमन्महाभारते अरण्यपर्वणि नलोपाख्यानपर्वणि
सप्तपञ्चाशोऽध्याः ॥ ५७ ॥

Mahabharata - Vana Parva - Chapter Footnotes

३-५७-२ द्वितीयं द्वतीयवारम् । न च तत्प्रत्यवबुध्यतेति क। ध पाठः ॥

३-५७-१९ कदाचिद्विनशेदपीति झ पाठः ॥
३-५७-२० मिथुनं कुमारीं कुमारं च ।कुण्डिनं भीमस् नगरम् ॥
३-५७-२२ मुख्यशः मुख्येषु मुख्येषु ॥
३-५७-२३ वाहिना अश्वरथेन ॥
३-५७-२६ भृतिं वेतनम् ॥

---

वन-अध्यय०५८
॥ श्रीः ॥
३.५८. अध्यायः ५८

Mahabharata - Vana Parva - Chapter Topics
द्यूते पुष्करजितेन नलेन दमयन्त्या सह वनप्रवेशः ॥ १ ॥
अन्तरिक्षे पक्षिरूपेण समुत्पतद्भिरक्षैरात्मजिघृक्षोर्नलस्य
अन्तरीयवस्त्रापकर्षणेन पलायनम् ॥ २ ॥

Mahabharata - Vana Parva - Chapter Text

३-५८-० (१८०४२)
बृहदश्व उवाच। ३-५८-०क्ष् (१९२७)
ततस्तु याते वार्ष्णेये पुण्यश्लोकस्य दीव्यतः ।
पुष्करेण हृतं राज्यं यच्चापि वसु किंचन ॥ ३-५८-१ (१८०४३)
हृतराज्यं नलं राजन्प्रहसन्पुष्करोऽब्रवीत् ।
द्यूतं प्रवर्ततां भूयः प्रतिपाणोऽस्ति कस्तव ॥ ३-५८-२ (१८०४४)
शिष्टा ते दमयन्त्येका सर्वमन्यद्धृतं मया ।
दमयन्त्याः पणः साधु वर्ततां यदि मन्यसे ॥ ३-५८-३ (१८०४५)
पुष्रेणैवमुक्तस्य पुण्यश्लोकस्य मन्युना ।
व्यदीर्यतेव हृदयं न चैनं किंचिदब्रवीत् ॥ ३-५८-४ (१८०४६)
ततः पुष्करमालोक्य नलः परममन्युमान् ।
ग्उवाच विद्यतेऽन्यच्च धनं मम नराधम ॥ ३-५८-५ (१८०४७)
षणरूपेण निक्षिप्य पुण्यश्लोकः सुदुर्मनाः ।
उत्तरीयं तथा वस्त्रं तस्याश्वाभरणानि च'।
उन्सृज्य सर्वगात्रभ्यो भूषणानि सहायशाः ॥ ३-५८-६ (१८०४८)
सुकवासा ह्यसंवीतः सुहृच्छोकविवर्धनः ।
निश्चक्राम ततोराजा त्यक्त्वा सुविपुलां श्रियम् ॥ ३-५८-७ (१८०४९)
दमयन्त्येकवस्त्राऽथ गच्छन्तं पृष्ठतोऽन्वगात् ।
स तया नगराभ्याशे त्रिरात्रं नैपधोऽवसत् ॥ ३-५८-८ (१८०५०)
पुष्करस्तु महाराज धोषयामास वै पुरे ।

नले यः सम्यगातिष्ठेत्स गच्छेद्वध्यतां मम ॥ ३-५८-९ (१८०५१)
पुष्करस्य तु वाक्येन तस्य विद्वेषणेन च ।
पौरा न तस्य सत्कारं कृतवन्तो युधिष्ठिर ॥ ३-५८-१० (१८०५२)
स तथा नगराभ्याशे सत्कारार्हो न सन्कृतः ।
त्रिगत्रमुपितो राजा जलमात्रेण वर्तयन् ॥ ३-५८-११ (१८०५३)
श्पीड्यमानः क्षुधा तत्र फलमृलानि कर्पयन् ।
प्रातिष्ठत ततोराजा दमयन्ती तमन्वगात् ॥ ३-५८-१२ (१८०५४)
क्षुधया पीड्यमानम्तु नलो बहुतिथेऽहनि ।
अपश्यच्छकुनान्कांश्चिद्धिरण्यसदृशच्छदान् ॥ ३-५८-१३ (१८०५५)
स चिन्तयामास तदा निपधाधिपतिर्बली ।
अस्ति भक्ष्यो ममाद्यापि वसु चेदं भविष्यति ॥ ३-५८-१४ (१८०५६)
ततस्तानन्तरीयेण वाससा स समावृणोत् ।
तस्य तद्वस्त्रमादाय सर्वे जग्मुर्विहायसा ॥ ३-५८-१५ (१८०५७)
उन्पतन्तः खगा वाक्यमेतदाहुस्ततो नलम् ।
दृष्ट्वा दिग्वाससं भूमौ स्थितं दीनमधोमुखम् ॥ ३-५८-१६ (१८०५८)
वयमक्षाः सुदुर्बुद्धे तववासो जिहीर्षवः ।
आगता न हि नः प्रीतिः सवाससि गते त्वयि ॥ ३-५८-१७ (१८०५९)
नान्समीक्ष्य गतानक्षानात्मानं च विवाससम् ।
पुण्यश्लोकस्तदा राजा दमयन्तीमथाब्रवीत् ॥ ३-५८-१८ (१८०६०)
येषां प्रकोपादैश्वर्यान्प्रच्युतोऽहमनिन्दिते ।
प्राणयात्रां न विन्देयं दुःखितः क्षुधयाऽन्वितः ॥ ३-५८-१९ (१८०६१)
येषां कृते न सत्कारमकुर्वन्मयि नैषधाः ।
इमे ते शकुना भूत्वा वासश्चाषहरन्ति मे ॥ ३-५८-२० (१८०६२)
वैषम्यं परमं प्राप्तो दुःखितो गतचेतनः ।
भर्ता तेऽहं निबोधेदं वचनं हितमात्मनः ॥ ३-५८-२१ (१८०६३)
एते गच्छन्ति वहवः पन्थानो दिणापथम् ।
अवन्तीमृक्षवन्तं च समतिक्रम्य पर्वतम् ॥ ३-५८-२२ (१८०६४)
एष विन्ध्यो महाशैलः पयोष्णी च समुद्रगा ।
आश्रमाश्च महर्षीणां बहुमूलफलान्विताः ॥ ३-५८-२३ (१८०६५)
एष पन्था विदर्भाणामेष यास्यति कोसलान् ।
अतःपरं च देशोऽयं दक्षिणो दक्षिणापथः ॥ ३-५८-२४ (१८०६६)
एतद्वाक्यं नलो राजा दमयन्तीं समाहितः ।
उवाचासकृदार्तो हि भैमीमुद्दिश्य भारत ॥ ३-५८-२५ (१८०६७)
ततः सा वाष्पकलया वाचा दुःखेन कर्शिता ।
उवाच दमयन्ती तं नैषधं करुणं वचः ॥ ३-५८-२६ (१८०६८)
उद्वेषते मे हृदयं सीदन्त्यङ्गानि सर्वशः ।

तव पार्थिव संकल्पं चिन्तयन्त्याः पुनः पुनः ॥ ३-५८-२७ (१८०६९)
हृतराज्यं हृतद्रव्यं विवस्त्रं क्षुच्छ्रमान्वितम् ।
कथमुत्सृज्य गच्छेयमहं त्वां निर्जने वने ॥ ३-५८-२८ (१८०७०)
श्रान्तस्य ते क्षुधार्तस्य चिन्तयानस्य तत्सुखम् ।
वने घोरे महाराज नाशयिष्याम्यहं क्लमम् ॥ ३-५८-२९ (१८०७१)
न च भार्यासमं किंचिन्नरस्यार्तस्य भेषजम् ।
नित्यं हि सर्वदुःखेषु सत्यमेतद्ब्रवीमि ते ॥ ३-५८-३० (१८०७२)
नल उवाच। ३-५८-३१क्ष् (१९२८)
एवमेतद्यथाऽऽन्थ त्वं दमयन्ति सुमध्यमे ।
नास्ति बार्यासमं मित्रं नरस्यार्तस्य भेषजम् ॥ ३-५८-३१ (१८०७३)
न चाहं त्यक्तुकामस्त्वां किमलं भीरु शङ्कसे ।
त्यजेयमहमात्मानं न चैव त्वामनिन्दिते ॥ ३-५८-३२ (१८०७४)
दमयन्त्युवाच। ३-५८-३३क्ष् (१९२९)
यदि मां त्वं महाराज न विहातुमिहच्छसि ।
तत्किमर्थं विदर्भाणां पन्थाः समुपदिश्यते ॥ ३-५८-३३ (१८०७५)
अवैमि चाहं नृपते न तु मां त्यक्तुमर्हसि ।
चेतसा त्वपकृष्टेन मां त्यजेथा महीपते ॥ ३-५८-३४ (१८०७६)
पन्थानं हि ममाभीक्ष्णमाख्यासि च नरोत्तम ।
अतो निमित्तं शोकं मे वर्धयस्यमरोपम ॥ ३-५८-३५ (१८०७७)
यदि चायमभिप्रायस्तव राजन्भविष्यति ।
सहितावेव गच्छावो विदर्भान्यदि मन्यसे ॥ ३-५८-३६ (१८०७८)
विदर्भराजस्तत्र त्वां पूजयिष्यति मानद ।
तेन त्वं पूजितो राजन्सुखं वत्स्यसि नो गृहे ॥ ३-५८-३७ (१८०७९)

इति श्रीमन्महाभारते अरण्यपर्वणि नलोपाख्यानपर्वणि
अष्टपञ्चाशोऽध्यायः ॥ ५८ ॥
Mahabharata - Vana Parva - Chapter Footnotes

३-५८-२ प्रतिपाणः पणनीयं द्रव्यम् ॥
३-५८- अपकृष्टेन कलिकर्पितन ॥

---

वन-अध्यय०५९
॥ श्रीः ॥
३.५९. अध्यायः ५९

Mahabharata - Vana Parva - Chapter Topics
नलेन स्वपन्त्या दमयन्त्या वस्त्रार्धच्छेदनपूर्वकं परित्यागेनापयानम्

॥ १ ॥

Mahabharata - Vana Parva - Chapter Text

३-५९-० (१८०८०)
बृहदश्व उवाच। ३-५९-०क्ष् (१९३०)
1इत्युक्तः स तदा देव्या नलो वचनमब्रवीत्।'
यथा राज्यंतव पितुस्तथा मम नसंशयः ।
न तु तत्र गमिष्यामि विषमस्थः कथंचन ॥ ३-५९-१ (१८०८१)
कथं समृद्धो गत्वाऽहं तव हर्षविवर्धनः ।
परिद्यूनो गमिष्यामि तव शोकविवर्धनः ॥ ३-५९-२ (१८०८२)
इति ब्रुवन्नलो राजा दमयन्तीं पुनः पुनः ।
सान्त्वयामास कल्याणीं वाससोर्धेन संवृताम् ॥ ३-५९-३ (१८०८३)
तावेकवस्त्रसंवीतावटमानावितस्ततः ।
क्षुत्पिपासापरिश्रान्तौ सभां कांचिदुपेयतुः ॥ ३-५९-४ (१८०८४)
तां सभामुपसंप्राप्य तदा स निषधाधिपः ।
वैदर्भ्या सहितो राजा निषसाद महीतले ॥ ३-५९-५ (१८०८५)
स वै विवस्त्रो मलिनो विवर्णः पांसुगुण्ठितः ।
दमयन्त्या सह श्रान्तः सुष्वाप धरणीतले ॥ ३-५९-६ (१८०८६)
1ततः स्ववसनस्यान्तं दमयन्ती विशांपते ।
भूमावास्तीर्य सुष्वाप पतिमालिङ्ग्य शोभना ॥' ३-५९-७ (१८०८७)
दमयनत्यपि कल्याणी निद्रयाऽपहृता ततः ।
सहसा दुःखमासाद्य सुकुमारी तपस्विनी ॥ ३-५९-८ (१८०८८)
सुप्तायां दमयन्त्यां तु नलो राजा विशांपते ।
शोकोन्मथितचित्तः सन्न स्म शेते यथा पुरा ॥ ३-५९-९ (१८०८९)
स तद्राज्यापहरणं सुहृत्त्यागं च सर्वशः ।
वने च तं परिध्वंसं प्रेक्ष्य चिन्तामुपेयिवान् ॥ ३-५९-१० (१८०९०)
किं नु मे स्यादिदं कृत्वा किंनु मे स्यादकुर्वतः ।
किंनु मे मरणं श्रेयः परित्यागो जनस्य वा ॥ ३-५९-११ (१८०९१)
मामियं ह्यनुरक्तैवं दुःखमाप्नोति मत्कृते ।
मद्विहीना त्वियं गच्छेत्कदाचित्स्वजनं प्रति ॥ ३-५९-१२ (१८०९२)
मया निःसंशयं दुखमियं प्राप्स्यत्यनुव्रता ।
उत्सर्गेसंशयः स्यात्तु विन्देतापि सुखं क्वचित् ॥ ३-५९-१३ (१८०९३)
बृहदश्व उवाच। ३-५९-१४क्ष् (१९३१)
स विनिश्चित्य बहुधा विचार्य च पुनःपुनः ।
उत्सर्गेऽमन्यत श्रेयो दमयन्त्या नराधिप ॥ ३-५९-१४ (१८०९४)

न चैषा तेजसा शक्या कैश्चिद्धर्षयितुं पथि ।
यशस्विनी महाभागा मद्भक्तेयं पतिव्रता ॥ ३-५९-१५ (१८०९५)
एवं तस् तदा बुद्धिर्दमयन्त्यां न्यवर्तत ।
कलिना दुष्टभावेन दमयन्त्या विसर्जने ॥ ३-५९-१६ (१८०९६)
सोऽवस्त्रतामात्मनश्च तस्याश्चाप्येकवस्त्रताम् ।
चिन्तयित्वाऽध्यगाद्राजा वस्त्रार्धस्यावकर्तनम् ॥ ३-५९-१७ (१८०९७)
कथं वासो विकर्तेयं न च बुद्ध्येत मे प्रिया ।
विचिन्त्यैवं नलो राजा सभां पर्यचरत्तदा ॥ ३-५९-१८ (१८०९८)
परिधावन्नथ नल इतश्चेतश्च भारत ।
आससाद सभोद्देशे विकोशं स्वङ्गमुत्तमम् ॥ ३-५९-१९ (१८०९९)
तेनार्धं वाससश्छित्त्वा निवस् च परंतपः ।
सुप्तामुत्सृज्य वैदर्भीं प्राद्रवद्गतचेतनाम् ॥ ३-५९-२० (१८१००)
ततो निबद्धहृदयः पुनरागम् तां सभाम् ।
दमयन्तीं तदा दृष्ट्वा रुरोद निषधाधिपः ॥ ३-५९-२१ (१८१०१)
यां न वायुर्न चादित्यः पुरा पश्यति मे प्रियाम् ।
सेयमद्य सभामध्ये शेते भूमावनाथवत् ॥ ३-५९-२२ (१८१०२)
इयं वस्त्रावकर्तेन संवीता चारुहासिनी ।
उन्मत्तेव मया हीना कथं बुद्ध्वा भविष्यति ॥ ३-५९-२३ (१८१०३)
कथमेका सती भमी मया विरहिता शुभा ।
चरिष्यति वने घोरे मृगव्यालनिषेविते ॥ ३-५९-२४ (१८१०४)
आदित्या वसवो रुद्रा अश्विनौ समरुद्गणौ ।
रक्षन्तु त्वां महाभागे धर्मेणासि समावृता ॥ ३-५९-२५ (१८१०५)
एवमुक्त्वा प्रियां भार्यां रूपेणाप्रतिमां भुषि ।
कलिनाऽपहृतज्ञानो नलः प्रातिपष्ठदुद्यतः ॥ ३-५९-२६ (१८१०६)
गत्वागत्वा नलो राजा पुनरेति सभां मुहुः ।
आकृष्यमाणः कलिना सौहृदेनावकृष्यते ॥ ३-५९-२७ (१८१०७)
द्विधेव हृदयं तस्य दुःखितस्याभवत्तदा ।
दोलेव मुहुरायाति याति चैव मुहुर्मुहुः ॥ ३-५९-२८ (१८१०८)
अवकृष्टस्तु कलिना मोहितः प्राद्रवन्नलः ।
सुप्तामुत्सृज्य तां भार्यां विलप्य करुणं बहु ॥ ३-५९-२९ (१८१०९)
नष्टात्मा कलिनाऽऽविष्टस्तत्तद्विगणयन्मुहुः ।
जगामैकां वने शून्ये भार्यामुत्सृज्य मोहितः ॥ ३-५९-३० (१८११०)

इति श्रीमन्महाभारते अरण्यपर्वणि नलोपाख्यानपर्वणि
एकोनषष्टितमोऽध्यायः ॥ ५९ ॥

Mahabharata - Vana Parva - Chapter Footnotes

३-५९-१० परिध्वंसं कलिना वस्त्रापहरणादिक्लेशम् ॥
३-५९-११ जनस्य भार्यायाः ॥
३-५९-१६ दमयन्त्यां विषये न्यवर्तत निवृत्तासती विसर्जनेऽभूदिति
शेषः ॥
३-५९-२० निवस्य परिधाय ॥

---

वन-अध्यय०६०
॥ श्रीः ॥
३.६०. अध्यायः ६०

Mahabharata - Vana Parva - Chapter Topics
वने चरन्त्या दमयन्त्या अजगरेण ग्रहणम् ॥ १ ॥
वनचरेण व्याधेन तां ग्रसतोऽजगरस्य वधः ॥ २ ॥
दमयन्त्या आत्मकामुकस्य तद्व्याधस्य स्वपातिव्रत्यमहिम्ना हननम् ॥ ३ ॥

Mahabharata - Vana Parva - Chapter Text

३-६०-० (१८१११)
बृहदश्व उवाच। ३-६०-०क्ष् (१९३२)
अपक्रान्ते नले राजन्दमयन्ती गतक्लमा ।
अबुध्यत वरारोहा संत्रस्ता विजने वने ॥ ३-६०-१ (१८११२)
अपश्यमाना भर्तारं शोकदुःखसमन्विता ।
प्राक्रोशदुच्चैः संत्रस्ता महाराजेति नैषधम् ॥ ३-६०-२ (१८११३)
हा नाथ हा महाराज हा स्वामिन्किं जहासि माम् ।
हा हताऽस्मि विनष्टाऽस्मि भीताऽस्मि विजने वने ॥ ३-६०-३ (१८११४)
ननु नाम महारज धर्मज्ञः सत्यवागसि ।
कथंविधस्त्वंहि तथा सुप्तामुत्सृज्य मां गतः ॥ ३-६०-४ (१८११५)
कथमुत्सृज्यगन्ताऽसि वश्यां भार्यामनुव्रताम् ।
विशेषतो नापकृतः परेणापकृतो ह्यसि ॥ ३-६०-५ (१८११६)
शक्यसे न गिरः सत्याः कर्तुं मयि नरेश्वर ।
यास्त्वया लोकपालानां सन्निधौ कथिताः पुरा ॥ ३-६०-६ (१८११७)
नाकाले विहितो मृत्युर्मर्त्यानां पुरुषर्षभ ।
यत्र कान्ता त्वयोत्सृष्टा मुहूर्तमपि जीवति ॥ ३-६०-७ (१८११८)
पर्याप्तः परिहासोऽयमेतावान्पुरुषर्षभ ।
भृशं भीतास्मि दुर्धर्ष दर्शयात्मानमीश्वर ॥ ३-६०-८ (१८११९)
दृश्यसे दृश्यसे राजन्नेष तिष्ठसि नैषध ।

आवार्य गुल्मैरात्मानं किं मां न प्रतिभाषसे ॥ ३-६०-९ (१८१२०)
नृशंसां वत राजेन्द्र यन्मामेवंगतामिह ।
विलपन्तीं समालिङ्ग्य नाश्वासयसि पार्थिव ॥ ३-६०-१० (१८१२१)
न शोचाम्यहमात्मानं न चान्यदपि किंचन ।
कथं नु भवितास्येक इति त्वां नृप शोचये ॥ ३-६०-११ (१८१२२)
कथं नु राजंस्तृषितः क्षुक्षितः श्रमकर्शितः ।
सायाह्ने वृक्षमूलेषु मामपश्यन्भविष्यसि ॥ ३-६०-१२ (१८१२३)
ततः सा तीव्रशोकार्ता प्रदीप्तेव च मन्युना ।
इतश्चेतश्च रुदती पर्यधावत दुःखिता ॥ ३-६०-१३ (१८१२४)
मुहुरुत्पतते बाला मुहुः पतति विह्वला ।
मुहुरालीयते भीता मुहुः क्रोशति रोदिति ॥ ३-६०-१४ (१८१२५)
अतीव शोकसंतप्ता मुहुर्निःश्वस् विह्वला ।
उवाच भैमी निःश्वस् रोदमाना पतिव्रता ॥ ३-६०-१५ (१८१२६)
यस्याभिशापाद्दुःखार्तो नैष नन्दति नैषधः ।
तस्य भूतस्य तद्दुःखाद्दुःखमभ्यधिकं भवेत् ॥ ३-६०-१६ (१८१२७)
अपापचेतसं पापो य एवं कृतवान्नलम् ।
तस्माद्दुःखतरं प्राप्य जीवत्वमसुखजीविकाम् ॥ ३-६०-१७ (१८१२८)
एवं तु विलपन्ती सा राज्ञो भार्या महात्मनः ।
अन्वेषति स्म भर्तारं वने श्वापदसेविते ॥ ३-६०-१८ (१८१२९)
उन्मत्तवद्भीमसुता विलपन्ती ततस्ततः ।
हाहा राजन्निति मुहुरितश्चेतश्च धावति ॥ ३-६०-१९ (१८१३०)
तां शुष्यमाणामत्यर्थं कुररीमिव वाशतीम् ।
करुणं बहुशोचन्तीं विलपन्तीं सुमध्यमाम्। ३-६०-२० (१८१३१)
सहसाऽभ्यागतां भैमीमभ्याशपरिवर्तिनीम् ।
जग्राहाजगरो ग्राहो महाकायः क्षुधान्वितः ॥ ३-६०-२१ (१८१३२)
सा ग्रस्यमाना ग्रहेण शोकेन च पराजिता ।
नात्मानं शोचति तथा यथा शोचति नैषधम् ॥ ३-६०-२२ (१८१३३)
ह्वा नाथ मामिह वने ग्रस्यमानामनागसम् ।
ग्राहेणानेन विजने किमर्थं नानुधावसि ॥ ३-६०-२३ (१८१३४)
कथं भविष्यसि पुनर्मामनुस्मृत्य नैषध ।
श्कथं भवाञ्जगामाद्य मामुत्सृज्य वने प्रभो ॥
पापान्मुक्तः पुनर्लब्ध्वा बुद्धिं चोतो धनानि च ॥ ३-६०-२४ (१८१३५)
श्रान्तस्य ते क्षुधार्तस् परिग्लानस्य नैषध ।
कः श्रमं राजशार्दूल नाशयिष्यति तेऽनघ ॥ ३-६०-२५ (१८१३६)
बृहदश्च उवाच। ३-६०-२६क्ष् (१९३३)
तां तु दृष्ट्वा तथा ग्रस्तामुरगेणायतेक्षणाम् ।

आक्रन्दमानां संश्रुत्य जवेनाभिससार ह ॥ ३-६०-२६ (१८१३७)
तां तु दृष्ट्वा तथा ग्रस्तामुरगेणायतेक्षणाम् ।
त्वरमाणो मृगव्याधः संचरन्गाहने वने ।
समभिक्रम्य वेगेन सत्वरः स वनेचरः ॥ ३-६०-२७ (१८१३८)
मुखे तं पाटयामास शस्त्रेण निशितेन च ।
निर्विचेष्टं भुजङ्गं तं विशस् मृगजीवनः ॥ ३-६०-२८ (१८१३९)
मोक्षयित्वा स तांव्याधः प्रक्षाल्य सलिलेन ह ।
समाश्वास्य कृताहारामथ पप्रच्छ भारत ॥ ३-६०-२९ (१८१४०)
कस्य त्वं मृगशावाक्षि कथं चास्यागता वनम् ।
कथं चेदं महत्कृच्छ्रं प्राप्तवत्यसि भामिनि ॥ ३-६०-३० (१८१४१)
दमयन्ती तथा तेन पृच्छ्यमाना विशांपते ।
सर्वमेतद्यथावृत्तमाचचक्षेऽस्य भारत ॥ ३-६०-३१ (१८१४२)
तामर्धवस्त्रसंवीतां पीनश्रोणिपयोधराम् ।
सुकुमारानवद्याङ्गीं पूर्णचन्द्रनिभाननाम् ॥ ३-६०-३२ (१८१४३)
अरालपक्ष्मनयनां तथा मधुरभाषिणीम् ।
लक्षयित्वा मृगव्याधः कामस्य वशमीयिवान् ॥ ३-६०-३३ (१८१४४)
तामथ श्लक्ष्णया वाचा लुब्धको मृदुपूर्वया ।
सान्त्वयामास कामार्तस्तदबुध्यत भामिनी ॥ ३-६०-३४ (१८१४५)
दमयन्त्यपि तं दुष्टमुपलभ्य पतिव्रता ।
तीव्ररोषसमाविष्टा प्रजज्वालेव मन्युना ॥ ३-६०-३५ (१८१४६)
स तु पापमतिः क्षुद्रः प्रधर्षयितुमातुरः ।
दुर्धर्षां तर्कयामास दीप्तामग्निशिखामिव ॥ ३-६०-३६ (१८१४७)
दमयन्ती तु दुःखार्ता पतिराज्यविनाकृता ।
अतीतवाक्यथे काले शशापैनं रुषा किल ॥ ३-६०-३७ (१८१४८)
यथाऽहं नैषधादन्यं मनसाऽपि न चिन्तये ।
तथाऽयं पततां क्षुद्रः परासुर्मृगजीवनः ॥ ३-६०-३८ (१८१४९)
उक्तमात्रे तु वचने तया स मृगजीवनः ।
व्यसुः पपात मेदिन्यामग्निदग्ध इव द्रुमः ॥ ३-६०-३९ (१८१५०)

इति श्रीमन्महाभारते अरण्यपर्वणि नलोपाख्यानपर्वणि
षष्टितमोऽध्यायः ॥ ६० ॥

Mahabharata - Vana Parva - Chapter Footnotes

३-६०-१३ मन्युना शोकेन ॥
३-६०-१६ कलिं शपति यस्येति । अभिशापात्र वृथाद्वेषात् ॥
३-६०-२० वाशतीं क्रोशन्तीम् ॥

३-६०-२१ ग्राहः सर्पः ॥
३-६०-२४ बुद्धिलाभादूर्ध्वं मां विना कथं भविष्यसि कथं
जीविष्यसि ।शापान्मुक्तः इति क।पाठः ॥
३-६०-२८ विशस्य विदार्य ॥
३-६०-३३ अरालानि शोभमानानि पक्ष्माणि नयनप्रान्तरोमाणि ययोस्तादृशे
नयने यस्या इति तथा ॥
३-६०-३५ मन्युना क्रोधेन ॥
३-६०-३७ पतिराज्यविनाकृता पत्या राज्येन च रहिता ।अतीतवाक्पथे
वाचाप्यनिवार्ये सति।काले धूम्रवर्णे व्याधे ॥
३-६०-३८ परासुः गतप्राणः ॥
३-६०-३९ व्यसुर्विगतप्राणः ॥

---

वन-अध्यय०६१
॥ श्रीः ॥
३.६१. अध्यायः ६१

Mahabharata - Vana Parva - Chapter Topics
नलमन्वेषयन्त्या दमयन्त्या वनमध्ये
हस्त्यश्वरथसंकुलजनसार्थदर्शनम् ॥ १ ॥
तथा सार्तनाथेन संभावणम् ॥ २ ॥

Mahabharata - Vana Parva - Chapter Text

३-६१-० (१८१५१)
बृहदश्व उवाच। ३-६१-०क्ष् (१९३४)
सा निहत्य मृगव्याधं प्रतस्थे कमलेक्षणा ।
वनं प्रतिभयं शून्यं झिल्लिकागणनादितम् ॥ ३-६१-१ (१८१५२)
सिंहद्वीपिरुरुव्याघ्रवराहर्क्षगणैर्युतम् ।
नानापक्षिगणाकीर्णां म्लेच्छतस्करसेवितम् ॥ ३-६१-२ (१८१५३)
सालवेणुधवाश्वत्थतिन्दुकेङ्गुदिकिंशुकैः ।
अर्जुनारिष्टसंछन्नं स्यन्दनैश्च सशाल्मलैः ॥ ३-६१-३ (१८१५४)
जम्ब्वाम्रलोध्रखदिरशाकवेत्रसमाकुलम् ।
पद्मकामलकप्लक्षकदम्बोदुम्बरावृतम् ॥ ३-६१-४ (१८१५५)
बदरीबिल्वसंछन्नं न्यग्रोधैश्च समाकुलम् ।
प्रियालतालखर्जूरहरीतकिबिभीतकैः ॥ ३-६१-५ (१८१५६)
नानाधातुशतैर्नद्धान्विविधानपि चाचलान् ।
निकुञ्जान्पक्षिसंघुष्टान्दरीश्चाद्भुतदर्शनाः ॥ ३-६१-६ (१८१५७)

नदी सरांसि वापीश्च विविधांश्चरतो द्विजान् ।
सा बहून्भीमरूपांश्च पिशाचोरगराक्षसान् ॥ ३-६१-७ (१८१५८)
पल्वलानि तटाकानि गिरिकूटानि सर्वशः ।
सरित्सरांसि च तदा ददर्शाद्भुतदर्शनाम् ॥ ३-६१-८ (१८१५९)
यूथशो ददृशे चात्र विदर्भाधिपनन्दिनी ।
महिषान्वराहान्गोमायूनृक्षवानरपन्नगान् ॥ ३-६१-९ (१८१६०)
तेजसा यशसा लक्ष्म्या स्थित्या च परया युता ।
वैर्दभी विचचारैका नलमन्वेषती तदा ॥ ३-६१-१० (१८१६१)
नाबिभ्यत्सा नृपसुता भैमी तत्राथ कस्यचित् ।
दारुणामटवीं प्राप्य भर्तृव्यसनकर्शिता ॥ ३-६१-११ (१८१६२)
विदर्भतनया राजन्विललाप सुदुःखिता ।
भर्तृशोकपरीताङ्गी शिलातलमथाश्रिता ॥ ३-६१-१२ (१८१६३)
दमयन्त्युवाच। ३-६१-१३क्ष् (१९३५)
सिह्योरस्क महाबाहो निषधानां जनाधिप ।
क्वनु राजन्गतोसि त्वं त्यक्त्वा मां विजने वने ॥ ३-६१-१३ (१८१६४)
अश्वमेधादिभिर्वीर क्रतुभिश्चाप्तदक्षिणैः ।
कथमिष्ट्वा नरव्याघ्र मयि मिथ्या प्रवर्तसे ॥ ३-६१-१४ (१८१६५)
यत्त्वयोक्तं नरश्रेष्ठ मत्समक्षं महाद्युते ।
कर्तुमर्हसि कल्याण तदृतं पार्थिवर्षभ ॥ ३-६१-१५ (१८१६६)
यच्चोक्तं विहगैर्हंसैः समीपे तव भूमिप ।
मत्सकाशे च तैरुक्तं तदवेक्षितुमर्हसि ॥ ३-६१-१६ (१८१६७)
चत्वार एकतो वेदाः साङ्गोपाङ्गाः सविस्तराः ।
स्वधीता मनुजव्याघ्र सत्यमेकं किलैकतः ॥ ३-६१-१७ (१८१६८)
तस्मादर्हसि शत्रुघ्न सत्यं कर्तुं नरेश्वर ।
उक्तवानसि यद्वीर मत्सकाशे पुरा वचः ॥ ३-६१-१८ (१८१६९)
हा वीर ननुनामाहमिष्टा किल तवानघ ।
अस्यामटव्यां घोरायां किं मां न प्रतिभाषसे ॥ ३-६१-१९ (१८१७०)
भर्त्सयत्येष मां रौद्रो व्यात्तास्यो दारुणाकृतिः ।
अरण्यराट् क्षुधाविष्टः किं मां न त्रातुमर्हसि ॥ ३-६१-२० (१८१७१)
न मे त्वदन्या काचिद्धि प्रियाऽस्तीत्यब्रवीस्तदा ।
तामृतां कुरु कल्याण पुरोक्तां भारतीं नृप ॥ ३-६१-२१ (१८१७२)
उन्मत्तां विलपन्तीं मां भार्यामिष्टां नराधिप ।
ईप्सितामीप्सितोसि त्वं किं मां न प्रतिभाषसे ॥ ३-६१-२२ (१८१७३)
कृशां दीनां विवर्णां च मलिनां वसुधाधिप ।
वस्त्रार्धप्रावृतामेकां विलपन्तीमनाथवत् ॥ ३-६१-२३ (१८१७४)
यूथभ्रष्टामिवैकां मां हरिणीं पृथुलोचन ।

न मानयसि मामार्य रुदन्तीमरिकर्शन ॥ ३-६१-२४ (१८१७५)
महाराज महारण्ये मामिहैकाकिनीं सतीम् ।
आभाषमाणां स्वां पत्नीं किं मां न प्रतिभाषसे ॥ ३-६१-२५ (१८१७६)
कुलशीलोपसंपन्नां चारुसर्वाङ्गशोभनाम् ।
ग्अनुव्रतां महाराज किं मां न प्रतिभाषसे ॥' ३-६१-२६ (१८१७७)
नाद्यत्वां प्रतिपश्यामि गिरावस्मिन्नरोत्तम ।
वने चास्मिन्महाधोरे सिंहव्याघ्रनिषेविते ॥ ३-६१-२७ (१८१७८)
शयानमुपविष्टं वा स्थितं वा निषधाधिप ।
प्रस्थितं वा नरश्रेष्ठ मम शोकनिबर्हण ॥ ३-६१-२८ (१८१७९)
कं नु पृच्छामि दुःखार्ता त्वदर्थे शोककर्शिता ।
कच्चिद्दृष्टस्त्वयाऽरण्ये संगत्येति नलो नृपः ॥ ३-६१-२९ (१८१८०)
को नु मे कथयेदद्य वनेऽस्मिन्विष्ठितं नृपम् ।
अभिरूपं महात्मानं परव्यूहविनाशनम् ॥ ३-६१-३० (१८१८१)
यमन्वेपसि राजानं नलं पद्मनिभेक्षणम् ।
अयंस इति कस्याद्य श्रोष्यामि मधुरां गिरम् ॥ ३-६१-३१ (१८१८२)
अरण्यराडयं श्रीमांश्चतुर्दंष्ट्रो महाहनुः ।
शार्दूलोऽभिमुखोऽभ्येति पृच्छाम्येनमशङ्किता ॥ ३-६१-३२ (१८१८३)
भवान्मृगाणामधिपस्त्वमस्मिन्कानने प्रभुः ।
विदर्भराजतनयां दमयन्तीति विद्धि माम् ॥ ३-६१-३३ (१८१८४)
निषधाधिपतेर्भार्यां नलस्यामित्रघातिनः ।
पतिमन्वेषतीमेकां कृपणां शोककर्शिताम् ॥ ३-६१-३४ (१८१८५)
आश्वासय मृगेन्द्रेह यदि दृष्टस्त्वया नलः ।
ग्सिंहस्कन्धो महाबाहुः पद्मपत्रनिभेक्षणः ॥' ३-६१-३५ (१८१८६)
अथवाऽरण्यनृपते नलं यदि न शंससि ।
मां खादय मृगश्रेष्ठ दुःखादस्माद्विमोचय ॥ ३-६१-३६ (१८१८७)
श्रुत्वाऽरण्ये विलपितं ममैष मृगराट् स्वयम् ।
यात्येष मृष्टसलिलामापगां सागरोपमाम् ॥ ३-६१-३७ (१८१८८)
इमं शिलोच्चयं पृच्छे शृङ्गैर्बहुभिरुच्छ्रितैः ।
विराजितं दिवस्पृग्भिर्नैकवर्णैर्मनोरमैः ॥ ३-६१-३८ (१८१८९)
नानाधातुसमाकीर्णं विविधोपलभूषितम् ।
आस्यारण्यस्य महतः केतुभूतमिवोच्छ्रितम् ॥ ३-६१-३९ (१८१९०)
सिंहशार्दूलमातङ्गवराहर्क्षमृगायुतम् ।
पतत्रिभिर्बहुविधैः समन्तादनुनादितम् ॥ ३-६१-४० (१८१९१)
किंशुकाशोकबकुलपुन्नागैरुपशोभितम् ।
श्कर्णिकारधवप्लक्षैः सुपुष्पैरुपशोभितम् ।॥ ३-६१-४१ (१८१९२)
सरिद्भिः सविहङ्गाभिः शिखरैश्च समाकुलम् ।

ग्पृथिव्या रुचिराकारं चूडामणिमिव स्थितम्'।
निरिराजमिमं तावत्पृच्छामि नृपतिं प्रति ॥ ३-६१-४२ (१८१९३)
भगवन्नचलश्रेष्ठ दिव्यद्रशन विश्रुत ।
शरण्य बहुकल्याण नमस्तेऽस्तु महीधर ॥ ३-६१-४३ (१८१९४)
प्रणमे त्वाऽभिगम्याहं राजपुत्रीं निबोध माम् ।
राजस्नुषां राजभार्यां दमयन्तीति विश्रुताम् ॥ ३-६१-४४ (१८१९५)
राजा विदर्भाधिपतिः पिता मम महारथः ।
भीमो नाम क्षितिपतिश्चातुर्वर्ण्यस्य रक्षिता ॥ ३-६१-४५ (१८१९६)
राजसूयाश्वमेधानां क्रतूनां दक्षिणावताम् ।
आहर्ता पार्थिवश्रेष्ठः पृथुचार्वञ्चितेक्षणः ॥ ३-६१-४६ (१८१९७)
ब्रह्मण्यः साधुवृत्तश्च सत्यवागनसूयकः ।
शीलवान्वीर्यसंपन्नः पृथुश्रीर्धर्मविच्छुचिः ॥ ३-६१-४७ (१८१९८)
सम्यग्गोप्ता विदर्भाणां निर्जितारिगणः प्रभुः ।
तस्य मां विद्धि तनयां भगवंस्त्वामुपस्थिताम् ॥ ३-६१-४८ (१८१९९)
निषधेषु महाराजः श्वशुरो मे नरोत्तमः ।
गृहीतनामा विख्यातो वीरसेन इति स्म ह ॥ ३-६१-४९ (१८२००)
तस्य राज्ञः सुतो वीरः श्रीमान्सत्यपराक्रमः ।
क्रमप्राप्तं पितुः स्वं यो राज्यं समनुशास्ति ह ॥ ३-६१-५० (१८२०१)
नलो नामारिहा श्यामः पुण्यल्को इति श्रुतः ।
ब्रह्मण्यो वेदविद्वाग्मी पुण्यकृत्सोमपोऽग्निचित् ॥ ३-६१-५१ (१८२०२)
यष्टा दाता च योद्धा च सम्यक्चैव प्रशासिता ।
तस्य मामचलश्रेष्ठ विद्धि भार्यामिहागताम् ॥ ३-६१-५२ (१८२०३)
त्यक्तश्रियं भर्तृहीनामनाथां व्यसनान्विताम् ।
अन्वेषमाणां भर्तारं नलं नरवरोत्तमम् ॥ ३-६१-५३ (१८२०४)
खमुल्लिखद्भिरेतैर्हि त्वया शृङ्गशतैर्नृपः ।
कच्चिद्दृष्टोऽचलश्रेष्ठ वनेऽस्मिन्दारुणे नलः ॥ ३-६१-५४ (१८२०५)
विक्रान्तः सत्त्ववान्वीरो भर्ता मम महायशाः ।
निषधानामधिपतिः कच्चिद्दृष्टस्त्वया नलः ॥ ३-६१-५५ (१८२०६)
कं मीं विलपतीमेकां पर्वतश्रेष्ठ विह्वलाम् ।
गिरा नाश्वासयस्यद्यस्वां सुतामिव दुखितां ॥ ३-६१-५६ (१८२०७)
वीर विक्रान्त धर्मज्ञ सत्यसंध महीपते ।
यद्यस्यस्मिन्वने राजन्दर्शयात्मानमात्मना ॥ ३-६१-५७ (१८२०८)
कदा सुस्निग्गम्भीरां जीमूतस्वनसन्निभाम् ।
श्रोष्यामि नैषधस्याहं वाचंताममृतोपमाम् ॥ ३-६१-५८ (१८२०९)
वैदर्भ्येहीति विस्पष्टां शुभां राज्ञो महात्मनः ।
आत्माभिधायिनीमृद्धां मम शोकविनाशिनीं ॥ ३-६१-५९ (१८२१०)

इतिसा तं गिरिश्रेष्ठमुक्त्वा पार्थिवनन्दिनी ।
दमयन्ती ततो भूयो जगाम दिशमुत्तराम् ॥ ३-६१-६० (१८२११)
सा गत्वा त्रीनहोरात्रान्ददर्श परमाङ्गना ।
तापसारण्यमतुलं दिव्यकाननशोभितम् ॥ ३-६१-६१ (१८२१२)
वसिष्ठभृग्वत्रिसमैस्तापसैरुपशोभितम् ।
नियतैः संयताहारैर्दमशौचसमन्वितैः ॥ ३-६१-६२ (१८२१३)
अब्भक्षैर्वायुभक्षैश्च पत्राहारैस्तथैव च ।
जितेन्द्रियैर्महाभागैः स्वर्गमार्गदिदृक्षुभिः ॥ ३-६१-६३ (१८२१४)
वल्कलाजिनसंवीतैर्मुनिभिः संयतेन्द्रियैः ।
तापसाध्युषितं रम्यं ददर्शाश्रममण्डलम् ॥ ३-६१-६४ (१८२१५)
नानामृगगणैर्जुष्टं शाखामृगगणायुतम् ।
तापसैः समुपेतं च सा दृष्ट्वैव समाश्वसत् ॥ ३-६१-६५ (१८२१६)
सुभ्रूः सुकेशी सुश्रोणी सुकुचा सुद्विजानना ।
वर्चस्विनी सुप्रतिष्ठा स्वसितायतलोचना ॥ ३-६१-६६ (१८२१७)
सा विवेशाश्रमपदं वीरसेनसुतप्रिया ।
योषिद्रत्नं महाभागा दमयन्ती तपस्विनी ॥ ३-६१-६७ (१८२१८)
साऽभिवाद्य तपोवृद्धान्विनयावनता स्थिता ।
स्वागतं त इतिप्रोक्ता तैः सर्वैस्तापसोत्तमैः ॥ ३-६१-६८ (१८२१९)
पूजां चास्या यथान्यायं कृत्वा तत्रतपोधनाः ।
आस्यतामित्यथोचुस्ते ब्रूहि किं करवामहे ॥ ३-६१-६९ (१८२२०)
तानुवाच वरारोहा कच्चिद्भगवतामिह ।
तपःस्वग्निषु धर्मेषु मृगपक्षिषु चानघाः ॥ ३-६१-७० (१८२२१)
कुशलं वो महाभागाः स्वधर्माचरणेषु च ।
तैरुक्ता कुशलं भद्रे सर्वत्रेति यशस्विनी ॥ ३-६१-७१ (१८२२२)
ब्रूहि सर्वानवद्याङ्गि का त्वं किंच चिकीर्षसि ।
दृष्ट्वैव ते परंरूपं द्युतिं च परमामिह ॥ ३-६१-७२ (१८२२३)
विस्मयो नः समुत्पन्नः समाश्वसिहि मा शुचः ।
अस्यारण्यस्य देवी त्वमुताहोऽस्य महीभृतः ।
अस्याश्च नद्याः कल्याणि वद सत्यमनिन्दिते ॥ ३-६१-७३ (१८२२४)
साऽब्रवीत्तानृपीन्नाहमरण्यस्यास्य देवता ।
न चाप्यस्य गिरर्विप्रा नैव नद्याश्च देवता ॥ ३-६१-७४ (१८२२५)
मानुषीं मां विजानीत यूयं सर्वेतपोधनाः ।
विस्तरेणाभिधास्यामि तन्मे शृणुत सर्वशः ॥ ३-६१-७५ (१८२२६)
विदर्भेपु महीपालो भीमो नाम महीपतिः ।
तस्य मां तनयां सर्वे जानीत द्विजसत्तमाः ॥ ३-६१-७६ (१८२२७)
निपधाधिपतिर्धीमान्नलो नाम महायशाः ।

वीरः संग्रामजिद्विद्वान्मम भर्ता विशांपतिः ॥ ३-६१-७७ (१८२२८)
देवताभ्यर्चनपरो द्विजातिजनवत्सलः ।
गोप्ता निपधवंशस्य महातेजा महाबलः ॥ ३-६१-७८ (१८२२९)
सत्यवान्धर्मवित्प्राज्ञः सत्यसंधोऽरिमर्दनः ।
ब्रह्मण्यो दैवतपरः श्रीमान्परपुरंजयः ॥ ३-६१-७९ (१८२३०)
नलो नाम नृपश्रेष्ठो देवराजसमद्युतिः ।
मम भर्ता विशालाक्षः पूर्णेन्दुवदनोऽरिहा ॥ ३-६१-८० (१८२३१)
आहर्ता क्रतुमुख्यानां वेदवेदाङ्गपारगः ।
सपत्नानां मृधे हन्ता रविसोमसमप्रभः ॥ ३-६१-८१ (१८२३२)
स कैश्चिन्निकृतिप्रज्ञैरनार्यैरकृतात्मभिः ।
आहूय पृथिवीपालः सत्यधर्मपरायणः ।
देवनेकुशलैर्जिह्मैर्जितो राज्यं वसूनि च ॥ ३-६१-८२ (१८२३३)
तस्य मामवगच्छध्वं भार्यां राजर्पभस्य वै ।
दमयन्तीति विख्यातां भर्तुर्दर्शनलालसाम् ॥ ३-६१-८३ (१८२३४)
सा वनानि गिरींश्चैव सरांसि सरितस्तथा ।
पल्वलानि च सर्वाणि तथाऽरण्यानि सर्वशः ॥ ३-६१-८४ (१८२३५)
अन्वेपमाणआ भर्तारं नलं रणविशारदम् ।
महात्मानं कृतास्त्रं च विचरामीह दुःखिता ॥ ३-६१-८५ (१८२३६)
कच्चिद्भगवतां रम्यं तपोवनमिदं नृपः ।
भवेत्प्राप्तो नलो नाम निपधानां जनाधिपः ॥ ३-६१-८६ (१८२३७)
यत्कृतेऽहमिदं दुःखं प्रपन्ना भृशदारुणम् ।
वनं प्रतियं धोरं शार्दूलमृगसेवितम् ॥ ३-६१-८७ (१८२३८)
यदि कैश्चिदहोरात्रैर्न द्रक्ष्यामि नलं नृपम् ।
आत्मानं श्रेयसा योक्ष्ये देहस्यास्य विमोक्षणात् ॥ ३-६१-८८ (१८२३९)
कोनु मे जीवितेनार्थस्तमृते पुरुषर्षभम् ।
कथं भविष्याम्यद्याहं भर्तृशोकाभिपीडिता ॥ ३-६१-८९ (१८२४०)
तथा विलपतीमेकामरण्ये भीमनन्दिनीम् ।
दमयन्तीमथोचुस्ते तापसाः सत्यवादिनः ॥ ३-६१-९० (१८२४१)
उदर्कस्तव कल्याणि कल्याणो भविता शुभे ।
वयं पश्याम तपसा क्षिप्रं द्रक्ष्यसि नैषधम् ॥ ३-६१-९१ (१८२४२)
निपधानामधिपतिं नलं रिपुनिपातिनम् ।
भैमि धर्मभृतां श्रेष्ठं द्रक्ष्यसे विगतज्वरम् ॥ ३-६१-९२ (१८२४३)
विमुक्तं सर्वपापेभ्यः सर्वरत्नसमन्वितम् ।
तदेव नगरं श्रेष्ठं प्रशासतमरिन्दमम् ॥ ३-६१-९३ (१८२४४)
द्विपतां भयकर्तारं सुहृदां शोकनाशनम् ।
पतिमेष्यसि कल्याणि कल्याणाभिजनं नृपम् ॥ ३-६१-९४ (१८२४५)

एवमुक्त्वा नलस्येष्टां महिषीं पार्थिवात्मजाम् ।
अन्तर्हितास्तापसास्ते साग्निहोत्राश्रमास्तथा ॥ ३-६१-९५ (१८२४६)
सा दृष्ट्वा महदाश्चर्यं विस्मिता ह्यभवत्तदा ।
दमयन्त्यनवद्याङ्गी वीरसेननृपस्नुषा ॥ ३-६१-९६ (१८२४७)
ग्चिन्तयामास वैदर्भी किमेतद्दृष्टवत्यहम्' ॥ ३-६१-९७ (१८२४८)
किंनु स्वप्नो मया दृष्टः कोऽयंविधिरिहाभवत् ।
क्वनु ते तापसाः सर्वे क्व तदाश्रममण्डलम् ॥ ३-६१-९८ (१८२४९)
क्व सा पुण्यजला रम्या नदी द्विजनिषेविता ।
क्वनु ते ह नगा हृद्याः फलपुष्पोपशोभिताः ॥ ३-६१-९९ (१८२५०)
ग्इत्येवं नरशार्दूल विस्मिता कमलेक्षणा।'
ध्यात्वा चिरं भीमसुता दमयन्ती शुचिस्मिता ।
भर्तृशोकपरा दीनाविवर्णवदनाऽभवत् ॥ ३-६१-१०० (१८२५१)
सा गत्वाऽथापरां भूमिं बाष्पसंदिग्धया गिरा ।
विललापाश्रुपूर्णाक्षी दृष्ट्वाऽशोकतरुं ततः ॥ ३-६१-१०१ (१८२५२)
उपगम्य तरुश्रेष्ठमशोकं पुष्पितं वने ।
पल्लवापीडितं हृद्यं विहङ्गैरनुनादितम् ॥ ३-६१-१०२ (१८२५३)
अहो बतायमगमः श्रीमानस्मिन्वनान्तरे ।
आपीडैर्बहुभिर्भाति श्रीमान्पर्वतराडिव ॥ ३-६१-१०३ (१८२५४)
विशोकां कुरु मां क्षिप्रमशोक प्रियदर्शन ।
वीतशोकभयाबाधं कच्चित्त्वं दृष्टवान्नृपम् ॥ ३-६१-१०४ (१८२५५)
नलं नामारिदमनं नमयन्त्याः प्रियं पतिम् ।
निमधानामधिपतिं दृष्टवानसि मे प्रियम् ॥ ३-६१-१०५ (१८२५६)
एकवस्त्रार्धसंवीतं सुकुमारतनुत्वचम् ।
व्यसनेनार्दितं वीरमरण्यमिदमागतम् ॥ ३-६१-१०६ (१८२५७)
यथा विशोका गच्छेयमशोकनग तत्कुरु ।
सत्यनामा भवाशोक मम शोकविनाशनात् ॥ ३-६१-१०७ (१८२५८)
एवंसाऽशोकवृत्तं तमार्ता वै परिगम्य ह ।
जगाम दारुणतरं देशं भैमी वराङ्गना ॥ ३-६१-१०८ (१८२५९)
सा ददर्श नागान्नैकान्नैकाश्च सरितस्तथा ।
नैकांश्च पर्वतान्रम्यान्नैकांश्च मृगपक्षिणः ॥ ३-६१-१०९ (१८२६०)
कन्दरांश्च नितम्बांश्च नदीश्चाद्भुतदर्शनाः ।
ददर्श तान्भीमसुता पतिमन्वेषती तदा ॥ ३-६१-११० (१८२६१)
गत्वा प्रकृष्टमध्वानं दमयन्ती शुचिस्मिता ।
ददर्शाथ महासार्थं हस्त्यश्वरथसंकुलम् ॥ ३-६१-१११ (१८२६२)
उत्तरन्तं नदीं रम्यां प्रसन्नसलिलां शुभाम् ।
सुशीततोयां विस्तीर्णां ह्रदिनीं वेतसैर्वृताम् ॥ ३-६१-११२ (१८२६३)

प्रोद्घुष्टां क्रौञ्चकुररैश्चक्रबाकोपकूजिताम् ।
कूर्मग्राहझवाकीर्णां विपुलद्वीपशोभिताम् ॥ ३-६१-११३ (१८२६४)
सा दृष्ट्वैव महासार्थं नलपत्नी यशस्विनी ।
उपसर्प्य वरारोहा जनमध्यं विवेश ह ॥ ३-६१-११४ (१८२६५)
उन्मत्तरूपा शोकार्ता तथा वस्त्रार्धसंवृता ।
कृशा विवर्णा मलिना पांसुध्वस्तशिरोरुहा ॥ ३-६१-११५ (१८२६६)
तां दृष्ट्वा तत्रमनुजाः केचिद्भीताः प्रदुद्रुवुः ।
केचिच्चिन्तापरास्तस्थुः केचित्तत्रविचुक्रुशुः ॥ ३-६१-११६ (१८२६७)
प्रहसन्ति स्म तां केचिदभ्यसूयन्ति चापरे ।
कुर्वन्त्यस्यांदयांकेचित्पप्रच्छुश्चापि भारत ॥ ३-६१-११७ (१८२६८)
काऽसि कस्यासि कल्याणि किं वा मृगयसे वने ।
त्वां दृष्ट्वा व्यथिताः स्मेह कच्चित्त्वमसिं मानुषी ॥ ३-६१-११८ (१८२६९)
वद सत्यं वनस्यास्य पर्वतस्याथवा दिशः ।
देवता त्वं हि कल्याणि त्वां वयं शरणं गताः ॥ ३-६१-११९ (१८२७०)
यक्षी वा राक्षसी वा त्वमुताहोसि सुराङ्गना ।
सर्वथाकुरु नः स्वस्ति रक्ष चास्माननिन्दिते ॥ ३-६१-१२० (१८२७१)
यथाऽयंसर्वथा सार्थः क्षेमी शीघ्रमितो व्रजेत् ।
तथा विधत्स्व कल्याणि यथा श्रेयो हि नो भवेत् ॥ ३-६१-१२१ (१८२७२)
तथोक्ता तेन सार्थेन दमयन्ती नृपात्मजा ।
प्रत्युवाच ततः साध्वी भर्तृव्यसनपीडिता ॥ ३-६१-१२२ (१८२७३)
सार्तवाहं च सार्थं च जना ये चात्र केचन ।
युवस्थविरबालाश् सार्थस्य च पुरोगमाः ॥ ३-६१-१२३ (१८२७४)
मानुषीं मां विजानीत मनुजाधिपतेः सुताम् ।
नृपस्नुषां राजभार्यां भर्तृदर्शनलालसाम् ॥ ३-६१-१२४ (१८२७५)
विदर्भराण्मम पिता भर्ता राजा च नैषधः ।
नलोनाम महाभागस्तं मार्गाम्यपराजितम् ॥ ३-६१-१२५ (१८२७६)
यदि जानीत नृपतिं क्षिप्रं शंसत मे प्रियम् ।
नलं पुरुषशार्दूलममित्रगणसूदनम् ॥ ३-६१-१२६ (१८२७७)
तामुवाचानवद्याङ्गीं सार्थस्य महतः प्रभुः ।
सार्थवाहः शुचिर्नाम शृणु कल्याणि मद्वचः ॥ ३-६१-१२७ (१८२७८)
अहं सार्थस्य नेता वै सार्थवाहः शुचिस्मिते ।
मनुष्यं नलनामानं न पश्यामि यशस्विनि ॥ ३-६१-१२८ (१८२७९)
कुञ्जरद्वीपिमहिषशार्दूलर्क्षमृगानपि ।
पश्याम्यस्मिन्वने कृत्स्ने ह्यमनुष्यनिषेविते ॥ ३-६१-१२९ (१८२८०)
ऋते त्वां मानुषीं मर्त्यं न पश्यामि महावने ।
तथा नो यक्षराडद्य मणिभद्रः प्रसीदतु ॥ ३-६१-१३० (१८२८१)

साऽब्रवीद्वणिजः सर्वान्सार्थवाहं च तं ततः ।
क्वनु यास्यति सार्थोऽयमेतदाख्यातुमर्हसि ॥ ३-६१-१३१ (१८२८२)
सार्तवाह उवाच। ३-६१-१३२क्ष् (१९३६)
सार्थोऽयं चेदिराजस्य सुबाहोः सत्यदर्शिनः ।
क्षिप्रं जनपदं गन्ता लाभाय मनुजात्मजे ॥ ३-६१-१३२ (१८२८३)

इति श्रीमन्महाभारते अरण्यपर्वणि नलोपाख्यानपर्वणि
एकषष्टितमोऽध्यायः ॥ ६१ ॥
Mahabharata - Vana Parva - Chapter Footnotes

३-६१-१ प्रतिभयं भीषणम् । झिल्लिका तीक्ष्णशब्दः पतङ्गविशेषः ॥
३-६१-४७ ब्रह्मण्यः ब्रह्मणि ब्राह्मणजातौ वेदे वैदिककर्मणि
परमात्मनि वा साधुः ॥
३-६१-६६ सुद्विजानना शोभनदन्तयुक्तमुखी । सुप्रतिष्ठा सुजघना ॥
३-६१-६७ वीरसेनसुतस्य नलस्य प्रिया ॥
३-६१-८२ सधूतैर्निकृतिप्रज्ञैरकल्याणैर्नराधमैरिति क । पाठः ॥
३-६१-८८ श्रेयसा मोक्षेण योक्ष्ये योजयिष्ये । योगबलेन देहे त्यक्त्वा
मोक्षं प्राप्स्ये इत्यर्तः ॥
३-६१-९१ उदर्कः उत्तरकालः ॥
३-६१-१०२ पल्लवैः आपीडितं भूषितम् ॥
३-६१-१०३ अगमः वृक्षः । आपीडैः पुष्पफलादिरूपैरलंकारैः ॥
३-६१-१११ महासार्थं महान्तं जनसमूहम् ॥
३-६१-११४ वरारोहा विस्तीर्णजघना ॥
३-६१-११५ पांसुयुक्ताः ध्वस्ताः मुक्तबन्धाश्च शिरोरुहाः केशा यस्याः ॥
३-६१-१२५ मार्गामि अन्वेषयामि ॥

---

वन-अध्यय०६२
॥ श्रीः ॥
३.६२. अध्यायः ६२

Mahabharata - Vana Parva - Chapter Topics
दमयन्त्या सार्थेन सह चेदिराजपुरंप्रति प्रस्तानम् ॥ १ ॥
वनमध्ये सरस्तीरशायिनि सार्थे निशीथे
पानीयपानायागतगजयूथनिहतभूयिष्ठे दिष्टया दमयन्त्या अपि
शेषीकारः ॥ २ ॥
हतावशिष्टेन जनेन सह चेदिराजपुरं गताया दमयन्त्या राजमात्रा
स्वान्तःपुराधिवासनम् ॥ ३ ॥

३-६२-० (१८२८४)
बृहदश्व उवाच। ३-६२-०क्ष् (१९३७)
सा तच्छ्रुत्वाऽनवद्याङ्गी सार्थवाहवचस्तदा ।
जगाम सह तेनैव सार्थेन पतिलालसा ॥ ३-६२-१ (१८२८५)
अथ काले बहुतिथे वने महति दारुणे ।
तटाकं सर्वतोभद्रं पद्मसौगन्धिकायुतम् ॥ ३-६२-२ (१८२८६)
ददृशुर्वणिजो रम्यं प्रभूतयवसेन्धनम् ।
बहुमूलफलोपेतं नानापक्षिनिषेवितम् ॥ ३-६२-३ (१८२८७)
तं दृष्ट्वा मृष्टसलिलं मनोहारि सुशीतलम् ।
सुपरिश्रान्तवाहास्ते निवेशाय मनो दधुः ॥ ३-६२-४ (१८२८८)
संमते सार्थवाहस्य विविशुर्वनमुत्तमम् ।
उवास सार्थः सुमहान्निशामासाद्य पद्मिनीम् ॥ ३-६२-५ (१८२८९)
अथार्धरात्रसमये निःशब्दे तिमिरे तदा ।
सुप्ते सार्थे परिश्रान्ते हस्तियूथमुपागमत् ।
पानीयार्थं गिरितटान्मदप्रस्रवणाविलम् ॥ ३-६२-६ (१८२९०)
श्अथापश्यत सार्थं तं सार्थजान्सुबहून्गजान् ॥ ३-६२-७ (१८२९१)
ते तान्ग्राम्यगजान्दृष्ट्वा सर्वे वनगजास्तदा ।
समाद्रवन्त वेगेन जिघांसन्तो मदोत्कटाः ॥ ३-६२-८ (१८२९२)
तेषामापततां वेगः करिणां दुःसहोऽभवत् ।
नगाग्रादिव शीर्णानां शृङ्गाणां पततां क्षितौ ।
स्पन्दतामपि नागानां मार्गा नष्टा वनोद्भवाः ।
ꣵ ३-६२-९ (१८२९३)
मार्गं संरुद्धय संसुप्तं पद्मिन्याः सार्थमुत्तमम् ।
ते तं ममर्दुः सहसा वेष्टमानं महीतले ॥ ३-६२-१० (१८२९४)
महारवं प्रमुञ्चतो वद्धयन्ते शरणार्थिनः ।
वनगुल्मांश्च धावन्तो निद्रया महतो भयात् ॥ ३-६२-११ (१८२९५)
केचिद्दन्तैः करैः केचित्केचित्पद्भ्यां हता गजैः ॥ ३-६२-१२ (१८२९६)
निहतोष्ट्राश्वबहुलाः पदातिजसंकुलाः ।
भयादाधावमानाश् परस्परहतास्तदा ॥ ३-६२-१३ (१८२९७)
घोरान्नादान्विमुञ्चन्तो निपेतुर्धरणीतले ।
वृक्षेष्वासज्यसंभग्नाः पतिता विषमेषु च ॥ ३-६२-१४ (१८२९८)
एवंप्रकारैर्बहुभिर्दैवेनाक्रम्य हस्तिभिः ।
राजन्विनिहतं सर्वं समृद्धं सार्थमण्डलम् ॥ ३-६२-१५ (१८२९९)
आरावः सुमहांश्चासीत्त्रैलोक्यभयकारकः ।

एषोऽग्निरुत्थितः कष्टस्त्रायध्वं धावताऽधुना ॥ ३-६२-१६ (१८३००)
रत्नराशिर्विशीर्णोऽयं गृह्णीध्वं किं प्रधावत ।
सामान्यमेतद्द्रविणं न मिथ्या वचनं मम ॥ ३-६२-१७ (१८३०१)
पुनरेवाभिधास्यामि चिन्तयध्वं सुकातराः ।
एवमेवाभिभाषन्तो विद्रवन्ति भयात्तदा ॥ ३-६२-१८ (१८३०२)
तस्मिंस्तथा वर्तमाने दारुणे जनसंक्षये ।
दमयन्ती च बुबुधे भयसंत्रस्तमानसा ।
अपश्यद्वैशसं तत्र सर्वलोकभयंकरम् ॥ ३-६२-१९ (१८३०३)
अदृष्टपूर्वं तद्दृष्ट्वा बाला पद्मनिभेक्षणा ।
संसक्तवदनाश्वासा उत्तस्थौ भयविह्वला ॥ ३-६२-२० (१८३०४)
ये तु तत्र विनिर्मुक्ताः सार्थात्केचिदविक्षताः ।
तेऽब्रुवन्सहिताः सर्वे कस्येदं कर्मणः फलम् ॥ ३-६२-२१ (१८३०५)
नूनं न पूजितोऽस्माभिर्मणिभद्रो महायशाः ।
तथा यक्षाधिपः श्रीमान्न वै वैश्रवणः प्रभुः ॥ ३-६२-२२ (१८३०६)
न पूजा विघ्नकर्तॄणामथवा प्रथमं कृता ॥ ३-६२-२३ (१८३०७)
शकुनानां फलं वाऽथ विपरीतिमिदं ध्रुवम् ।
ग्रहा न विपरीतास्तु किमन्यदिदमागतम् ॥ ३-६२-२४ (१८३०८)
अपरे त्वब्रुवन्दीना ज्ञातिद्रव्यविनाकृता ।
याऽसावद्य महासार्थे नारी ह्युन्मत्तदर्शना ॥ ३-६२-२५ (१८३०९)
प्रविष्टा विकृताकारा कृत्वा रूपममानुषम् ।
तयैवं विहिता पूर्वं माया परमदारुणा ॥ ३-६२-२६ (१८३१०)
राक्षसी वा ध्रुवं यक्षी पिशाची वा भयंकरी ।
तस्याः सर्वमिदं पापं नात्र कार्या विचारणा ॥ ३-६२-२७ (१८३११)
यदि पश्याम तां पापां सार्थघ्नीं नैकदुःखदाम् ।
लोष्टभिः पांसुभिश्चैव तृणैः काष्ठैश्च मुष्टिभिः ।
अवश्यमेव हन्यामः सार्थस्य किल कृत्यकाम् ॥ ३-६२-२८ (१८३१२)
दमयन्ती तु तच्छ्रुत्वा वाक्यं तेषां सुदारुणम् ।
ह्रीता भीता च संविग्रा प्राद्रवद्यत्र काननम् ॥ ३-६२-२९ (१८३१३)
आशङ्कमाना तत्पापमात्मानं पर्यदेवयत् ॥ ३-६२-३० (१८३१४)
अहो ममोपरि विधेः संरम्भो दारुणो महान् ।
नानुबध्नाति कुशलं कस्येदं कर्मणः फलम् ॥ ३-६२-३१ (१८३१५)
न स्मराम्यशुभं किंचित्कृतं कस्यचिदण्वपि ।
कर्मणा मनसा वाचा कस्येदं कर्मणः फलम् ॥ ३-६२-३२ (१८३१६)
नूनं जन्मान्तरकृतं पापां माऽऽपतितं महत् ।
अपश्चिमामिमां कष्टामापदं प्राप्तवत्यहम् ॥ ३-६२-३३ (१८३१७)
भर्तृराज्यापहरणं स्वजनाच्च रपराजयः ।

भर्त्रा सह वियोगश्च तनयाभ्यां च विच्युतिः ।
निर्नाथता वने वासो बहुव्यालनिषेविते ॥ ३-६२-३४ (१८३१८)
अथापरेद्युः संप्राप्ते हतशिष्टा जनास्तदा ।
वनगुल्माद्विनिष्क्रम्य शोचन्ते वैशसं कृतम् ।
भ्रातरं पितरं पुत्रं सखायं च नराधिप ॥ ३-६२-३५ (१८३१९)
ग्हन्यमाने तदा सार्थे दमयन्ती शुचिस्मिता ।
ब्राह्मणैः सहिता तत्रवने तु न विनाशिता ॥' ३-६२-३६ (१८३२०)
अशोचत्तत्र वैदर्भी किंनु मे दुष्कतं कृतम् ।
योपि मे निर्जनेऽरण्ये संप्राप्तोऽयं जनार्णवः ॥ ३-६२-३७ (१८३२१)
स हतो हस्तियूथेन मन्दभाग्यान्ममैव तत् ।
प्राप्तव्यं सुचिरं दुःखं नूनमद्यापि वै मया ॥ ३-६२-३८ (१८३२२)
नाप्राप्तकालो म्रियते श्रुतं वृद्धानुशासनम् ।
या नाहमद्य मृदिता हस्तियूथेन दुःखिता ॥ ३-६२-३९ (१८३२३)
न ह्यदैवकृतंकिंचिन्नराणामिह विद्यते ।
न च मे बालभावेऽपि किंचित्पापकृतं कृतम् ॥ ३-६२-४० (१८३२४)
कर्मणा मनसा वाचा यदिदं दुःखमागतम् ।
मन्ये स्वयंवरकृतेलोकपाला समागताः ॥ ३-६२-४१ (१८३२५)
प्रत्याख्याता मया तत्र नलस्यार्थाय देवताः ।
नूनं तेषां प्रभावेन वियोगं प्राप्तवत्यहम् ॥ ३-६२-४२ (१८३२६)
एवमादीनि दुःखार्ता सा विलप्य वराङ्गना ।
प्रलापानि तदा तानि दमयन्ती पतिव्रता ॥ ३-६२-४३ (१८३२७)
हतशेषैः सह तदा ब्राह्मणैर्वेदपारगैः ।
अगच्छद्राजशार्दूल दुःखशोकपरायणा ॥ ३-६२-४४ (१८३२८)
गच्छन्ती सा चिराद्बाला पुरमासादयन्महत् ।
सायाह्नि चेदिराजस् सुबाहोः सत्यवादिनः ॥ ३-६२-४५ (१८३२९)
ग्सा तु तच्चारुसर्वाङ्गी सुबाहोस्तुङ्गगोपुरम् ।'
वस्त्रार्धेन च संवीता प्रविवेश पुरोत्तमम् ॥ ३-६२-४६ (१८३३०)
तां विह्वलां कृशां दीनां मुक्तकेशीममार्जिताम् ।
उन्मत्तामिव गच्छन्तीं ददृशुः पुरवासिनः ॥ ३-६२-४७ (१८३३१)
प्रविशन्तीं तु तां दृष्ट्वा चेदिराजपुरीं तदा ।
अनुजग्मुस्तत्र बाला ग्रामिपुत्राः कुतूहलात् ॥ ३-६२-४८ (१८३३२)
सा तैः परिवृताऽगच्छत्समीपं राजवेश्मनः ।
तां प्रासादगताऽपश्यद्राजमाता जनैर्वृताम् ॥ ३-६२-४९ (१८३३३)
धात्रीमुवाच च्छैनामानयेह ममान्तिकम् ।
जनेन क्लिश्यते बाला दुःखिता शरणार्थिनी ॥ ३-६२-५० (१८३३४)
तादृग्रूपं च पश्यामि विद्योतयति मे गृहम् ।

उन्मत्तवेषा कल्याणी श्रीरिवायतलोचना ॥ ३-६२-५१ (१८३३५)
सा जनं वारयित्वा तं प्रासादतलमुत्तमम् ।
आरोप्य विस्मिता राजन्दमयन्तीमपृच्छत ॥ ३-६२-५२ (१८३३६)
एवमप्यसुखाविष्टा बिभर्षि परमं वपुः ।
भासि विद्युदिवाभ्रेषु शंस मे काऽसिकस्य वा ॥ ३-६२-५३ (१८३३७)
न हि ते मानुषं रूपं भूषणैरपि वर्जितम् ।
असहाया नरेभ्यश्च नोद्विजस्यमरप्रभे ॥ ३-६२-५४ (१८३३८)
तच्छ्रुत्वा वचनं तस्या भैमी वचनमब्रवीत् ।
मानुषीं मां विजानीहि भर्तारं समनुव्रताम् ॥ ३-६२-५५ (१८३३९)
सैरन्ध्रीं जातिसंपन्नां भुजिष्यां कामवासिनीम् ।
फलमूलाशनामेकां यत्रसायंप्रतिश्रयाम् ॥ ३-६२-५६ (१८३४०)
असङ्ख्येयगुणो भर्ता मां च नित्यमनुव्रतः ।
भक्ताऽहमपि तं वीरं छायेवानुगता पथि ॥ ३-६२-५७ (१८३४१)
तस्य दैवात्प्रसङ्गोऽभूदतिमात्रं सुदेवने ।
द्यूते स निर्जितश्चैव वनमेक उपेयिवान् ॥ ३-६२-५८ (१८३४२)
तमेकवसनच्छन्नमुन्म्तमिव विह्वलम् ।
आश्वासयन्ती भर्तारमहमप्यगमं वनम् ॥ ३-६२-५९ (१८३४३)
स कदाचिद्वने वीरः कस्मिंश्चित्कारणान्तरे ।
क्षुत्परीतस्तु विमना वासश्चैकं व्यसर्जयत् ॥ ३-६२-६० (१८३४४)
तमेकवसना नग्नमुन्मत्तवदचेतसम् ।
अनुव्रजन्ती बहुला न स्वपामि निशाः सदा ॥ ३-६२-६१ (१८३४५)
ततो बहुतिथे काले सुप्तामुत्सृज्य मां क्वचित् ।
वाससोऽर्धं परिच्छिद्य त्यक्तवान्मामनागसम् ॥ ३-६२-६२ (१८३४६)
तं मार्गमाणा भर्तारं दह्यमाना दिवानिशम् ।
न विन्दाम्यमरप्रख्यं प्रियं प्राणेश्वरं प्रभुम् ॥ ३-६२-६३ (१८३४७)
ग्इत्युक्त्वा साऽनवद्याङ्गी राजमातरमप्युत ।
स्थिताऽश्रुपरिपूर्णाक्षी वेपमाना सुदुःखिता' ॥ ३-६२-६४ (१८३४८)
तामश्रुपरिपूर्णाक्षीं विलपन्तीं तथा बहु ।
राजमाताऽब्रवीदार्ता भैमीमार्तस्वरां स्वयम् ॥ ३-६२-६५ (१८३४९)
वस त्वमिह कल्याणि प्रीतिर्मे परमा त्वयि ।
मृगयिष्यन्ति ते भद्रे भर्तारं पुरुषा मम ॥ ३-६२-६६ (१८३५०)
अपि वा स्वयमागच्छेत्परिधावन्नितस्ततः ।
इहैव वसती भद्रे भर्तारमुपलप्स्यसे ॥ ३-६२-६७ (१८३५१)
राजमातुर्वचः श्रुत्वा दमयन्ती वचोऽब्रवीत् ।
समयेनोत्सहे वस्तुं त्वि वीरप्रजायिनि ॥ ३-६२-६८ (१८३५२)
उच्छिष्टं नैव भुञ्जीयां न कुर्यां पादधावनम् ।

न चाहं पुरुषानन्यान्प्रभाषेयं कथंचन ॥ ३-६२-६९ (१८३५३)
प्रार्थयेद्यदि मां कश्चिद्दण्ड्यस्ते स पुमान्भवेत् ।
वध्यश्च ते सकृन्मन्द इतिमे व्रतमाहितम् ॥ ३-६२-७० (१८३५४)
भर्तुरन्वेषणार्थं तु पश्येयं ब्राह्मणानहम् ।
यद्येवमिह वत्स्यामि त्वत्सकाशे न संशयः ।
अतोऽन्यथा न मे वासो वर्तते हृदये क्वचित् ॥ ३-६२-७१ (१८३५५)
इत्युक्ता दमयन्त्या तु राजमातेदमब्रवीत् ।
सर्वमेतत्करिष्यामि दिष्ट्या ते व्रतमीदृशम् ॥ ३-६२-७२ (१८३५६)
एवमुक्त्वा ततो भैमीं राजमाता विशांपते ।
उवाचेदं दुहितरं सुनन्दां नाम भारत ॥ ३-६२-७३ (१८३५७)
सैरन्ध्रीमभिजानीष्व सुनन्दे देवरूपिणीम् ।
वयसा तुल्यतां प्राप्ता सखी तव भवत्वियम् ।
एतया सह मोदस्व निरुद्विग्नमना सदा ॥ ३-६२-७४ (१८३५८)
ततः परमसंहृष्टा सुनन्दा गृहणागमत् ।
दमयन्तीमुपादाय सखीभिः परिवारिता ॥ ३-६२-७५ (१८३५९)
सहसा न्यवसद्राजन्राजपुत्र्या सुनन्दया ।
चिन्तयन्ती नलं वीरमनिशं वामलोचना ॥ ३-६२-७६ (१८३६०)

इति श्रीमन्महाभारते अरण्यपर्वणि नलोपाख्यानपर्वणि
द्विषष्टितमोऽध्यायः ॥ ६२ ॥
Mahabharata - Vana Parva - Chapter Footnotes

३-६२-३ यवसं घासः ॥
३-६२-४ श्रान्तवाहाः श्रान्तवाहनाः । निवेशाय वासाय ॥
३-६२-१० पद्मिन्याः सरस्याः ॥
३-६२-२८ कृत्यैव कृत्यका । कुत्सिता कृत्या कृत्यकेति वा ताम् ॥
३-६२-३३ अपश्चिमां अपरावर्तिनीम् ॥
३-६२-४० पापकृतंपापं कर्म ॥
३-६२-४७ अमार्जितां धूसरवेणीम् ॥
३-६२-५६ भूजिष्यां दासीं । कामवासिनीं यत्रकाम इच्छा तत्रैव वसन्तीम्। यत्र सायंकालस्तत्रैव प्रतिश्रयो गृहं यस्यास्ताम् ॥
३-६२-५७ भर्तारमपि तं वीरं सीतेवानुगता सदेति क । पाठः। अहं चानुगता वीरं छायेवानपगा सदेति ध। पाठः ॥
३-६२-६८ हेवीरप्रजायिनि वीरानेव प्रजायते सूते सा वीरप्रजायीनी ॥
३-६२-७१ यद्येवमिह वस्तव्यं वसाम्यहमसंशयमिति ध । पाठः ॥

वन-अध्यय०६३
॥ श्रीः ॥
३.६३. अध्यायः ६३

Mahabharata - Vana Parva - Chapter Topics
दमयन्तीं परित्यज्याटव्यामटन्तं नलंप्रति वनवह्निवेष्टितेन कर्कोटकेनात्मपरिरक्षणप्रार्थना ॥ १ ॥
नलेन दावाग्नितो मोचितेन कर्कोटकेन नलगात्रे दंशनेन वैरूप्यापादनम् ॥ २ ॥
तथा निजरूपाविष्करणेच्छायां स्वस्मरणेन वासोवसनविधानपूर्वकं वस्त्रप्रदानम् ॥ ३ ॥

Mahabharata - Vana Parva - Chapter Text

३-६३-० (१८३६१)
बृहदश्व उवाच। ३-६३-०क्ष् (१९३८)
उत्सृज्य दमयन्तीं तु नलो राजा विशांपते ।
ददर्श दावं दह्यन्तं महान्तं गहने वने ॥ ३-६३-१ (१८३६२)
तत्र सुश्राव शब्दंवै मध्ये भूतस्य कस्यचित् ।
अभिधाव नलेत्युच्चैः पुण्यश्लोकेति चासकृत् ॥ ३-६३-२ (१८३६३)
मा भैरिति नलश्चोक्त्वा मध्यमग्नेः प्रविश्य तम् ।
दद्रश नागराजानं शयानं कुण्डलीकृतम् ॥ ३-६३-३ (१८३६४)
स नागः प्रञ्जलिर्भूत्वा वेपमानो नलं तदा ।
उवाच मां विद्धिराजन्नागं कर्कोटकं नृप ॥ ३-६३-४ (१८३६५)
मया प्रलब्धो ब्रह्मर्षिरनागाः सुमहातपाः ।
तेन मन्युपरीतेन शप्तोस्मि मनुजाधिप ॥ ३-६३-५ (१८३६६)
तिष्ठ त्वं स्थावर इव यावदेति नलः क्वचित् ।
इतो नेतासि तत्स त्वं शापान्मोक्ष्यसि मत्कृतात् ॥ ३-६३-६ (१८३६७)
तस्य शापान्न शक्नोमि पदाद्विचलितुं पदम् ।
उपदेक्ष्यामि ते श्रेयस्त्रातुमर्हति मां भवान् ॥ ३-६३-७ (१८३६८)
सखा च ते भविष्यामि मत्समो नास्ति पन्नगः ।
लघुश्च ते भविष्यामि शीघ्रमादाय गच्छ माम् ॥ ३-६३-८ (१८३६९)
एवमुक्त्वा स नागेन्द्रो बभूवाङ्गुष्ठमात्रकः ।
दं गृहीत्वा नलः प्रायाद्देशं दावविवर्जितम् ॥ ३-६३-९ (१८३७०)
आकाशदेशमासाद्य विमुक्तं कृष्णवर्त्मना ।
उत्स्रष्टुकामं तं नागः पुनः कर्कोटकोऽब्रवीत् ॥ ३-६३-१० (१८३७१)

पदानि गणयन्गच्छ स्वानि नैषध कानिचित् ।
तत्रतेऽहं महाबाहो श्रेयो धास्यामि यत्परम् ॥ ३-६३-११ (१८३७२)
ततः संख्यातुमारब्धमदशद्दशमे पदे ।
तस्य दष्टस्य तद्रूपं क्षिप्रमन्तरधीयत ॥ ३-६३-१२ (१८३७३)
स दृष्ट्वा विस्मितस्तस्थावात्मानं विकृतं नलः ।
स्वरूपधारिणं नागं ददर्श स महीपतिः ॥ ३-६३-१३ (१८३७४)
ततः कर्कोटको नागः सान्त्वयन्नलमब्रवीत् ।
मया तेऽन्तर्हितं रूपं न त्वां विद्युर्जना इति ॥ ३-६३-१४ (१८३७५)
यत्कृते चासि निकृतो दुःखेन महता नल ।
विषेण स मदीयेन त्वयि दुःखं निवत्स्यति ॥ ३-६३-१५ (१८३७६)
विषेण संवृतैर्गात्रैर्यावत्त्वां न विमोक्ष्यति ।
तावत्तु त्वां महाराज क्लेशेऽस्मिन्स नियोक्ष्यति ॥ ३-६३-१६ (१८३७७)
अनागा येन निकृतस्त्वमनर्हो जनाधिप ।
क्रोधादसूययित्वा तं रक्षा मे भवतः कृता ॥ ३-६३-१७ (१८३७८)
न ते भयं नरव्याघ्र दंष्ट्रिभ्यः शत्रुतोपि वा ।
ब्रह्मवित्त्वं च भविता मत्प्रसादान्नराधिप ॥ ३-६३-१८ (१८३७९)
राजन्विषनिमित्ता च न ते पीडा भविष्यति ।
संग्रामेषु न राजेन्द्रशश्वज्जयमवाप्स्यसि ॥ ३-६३-१९ (१८३८०)
गच्छ राजन्नितः सूतो बाहुकोऽहमिति ब्रुवन् ।
समीपमृतुपर्णस्य स हि वेदाक्षनैपुणम् ॥ ३-६३-२० (१८३८१)
अयोध्यां नगरीं रम्यामद्य वै निषधेश्वर ।
स तेऽक्षहृदयं दाता राजाऽश्वहृदयेन वै ॥ ३-६३-२१ (१८३८२)
इक्ष्वाकुकुलजः श्रीमान्मित्रं चैव भविष्यति ।
भविष्यसि यदाऽक्षज्ञः श्रेयसा योक्ष्यसे तदा ॥ ३-६३-२२ (१८३८३)
संयोक्ष्यसे स्वदारैस्त्वं मा स्म शोके मनः कृथाः ।
राज्येन तनयाभ्यां च सत्यमेतद्ब्रवीमि ते ॥ ३-६३-२३ (१८३८४)
स्वं रूपं च यदा द्रष्टुमिच्छेथास्त्वं नराधिप ।
संस्मर्तव्यस्तदा तेऽहंवासश्चदं विवासयेः ॥ ३-६३-२४ (१८३८५)
अनेन वाससाच्छन्नः स्वं रूपं प्रतिपत्स्यसे ।
इत्युक्त्वा प्रददौ तस्मै दिव्यं वासोयुगं तदा ॥ ३-६३-२५ (१८३८६)
एवं नलं च संदिश्य वासो दत्ताव च कौरव ।
नागराजस्ततो राजंस्तत्रैवान्तरधीयत ॥ ३-६३-२६ (१८३८७)

इति श्रीमन्महाभारते अरण्यपर्वणि नलोपाख्यानपर्वणि
त्रिषष्टितमोऽध्यायः ॥ ६३ ॥

Mahabharata - Vana Parva - Chapter Footnotes

३-६३-८ लघुगुरुत्वरहितः ॥
३-६३-९ दावविवर्जितं बह्निहीनम् ॥
३-६३-१२ दशेत्युक्तेऽदशत् । आज्ञां विना नागो न दशतीति भावः
३-६३-१५ स कलिः। इदं दमयन्त्या दत्तस्य शापस्य फलं कलिर्भुङ्क्ते इति भावः ॥
३-६३-१७ अनागाः निरपराधः । निकृतो वञ्चितः। मे मया ॥
३-६३-१८ ब्रह्मविड्डयश्च भवितेति झ । पाठः ॥
३-६३-२१ अक्षहृदयं द्यूते जयावहम् । अश्वहृदयेन विद्यया विद्यां परिवर्तयेदित्यर्थः ॥
३-६३-२४ निवासयेः परिधेहि ॥

---

वन-अध्यय०६४
॥ श्रीः ॥
३.६४. अध्यायः ६४

Mahabharata - Vana Parva - Chapter Topics
कर्कोटकवचनान्नलेनायोध्यायां बाहुक इति स्वनामनिर्देशपूर्वकमृतुपर्णनृपसमीपोपसर्पणम् ॥ १ ॥
ऋतुपर्णेन तस्य सारथ्ये नियोजनम् ॥ २ ॥

Mahabharata - Vana Parva - Chapter Text

३-६४-० (१८३८८)
बृहदश्व उवाच। ३-६४-०क्ष् (१९३९)
तस्मिन्नन्तर्हिते नागे प्रययौ नैषधो नलः ।
ऋतुपर्णस्य नगरं प्राविशद्दशमेऽहनि ॥ ३-६४-१ (१८३८९)
स राजानमुपातिष्ठद्बाहुकोऽहमिति ब्रुवन् ।
अश्वानां वाहने युक्तः पृथिव्यां नास्ति मत्समः ॥ ३-६४-२ (१८३९०)
अर्थकृच्छ्रेषु चैवाहं प्रष्टव्यो नैपुणेषु च ।
अन्नसंस्कारमपि च जानाम्यन्यैर्विशेषतः ॥ ३-६४-३ (१८३९१)
यानि शिल्पानि लोकेऽस्मिन्यच्चैवान्यत्सुदुष्करम् ।
सर्वं यतिष्ये तत्कर्तुमृतुपर्ण भरस्व माम् ॥ ३-६४-४ (१८३९२)
ग्इत्युक्तः स नलेनाथ ऋतुपर्णो नराधिपः ।
उवाच सुप्रीतमनास्तं प्रेक्ष्य च महीपते' ॥ ३-६४-५ (१८३९३)
वसबाहुक भद्रं ते सर्वमेतत्करिष्यसि ।

शीघ्रयाने सदा बुद्धिर्ध्रियते मे विशेषतः ॥ ३-६४-६ (१८३९४)
स त्वमातिष्ठ योगं तं येन शीघ्रां हया मम ।
भवेयुरश्वाध्यक्षोसि वेतनं ते शतंशतम् ॥ ३-६४-७ (१८३९५)
त्वामुपस्थास्यतश्चैव नित्यं वार्ष्णेयजीवलौ ।
एताभ्यां रंस्यसे सार्धं वस वै मयि बाहुक ॥ ३-६४-८ (१८३९६)
बृहदश्व उवाच। ३-६४-९क्ष् (१९४०)
एवमुक्तो नलस्तेन न्यवसत्तत्रपूजितः ।
ऋतुपर्णस्य नगरे सहवार्ष्णेयजीवलः ॥ ३-६४-९ (१८३९७)
स वै तत्रावसद्राजा वैदर्भीमनुचिन्तयन् ।
सायंसायं सदा चेमं श्लोकमेकं जगाद ह ॥ ३-६४-१० (१८३९८)
क्व नु सा क्षुत्पिपासार्ता श्रान्ता शेते तपस्विनी ।
स्मरन्ती तस्य मन्दस्य कं वाऽऽसाद्योपतिष्ठति ॥ ३-६४-११ (१८३९९)
एवं ब्रुवन्तं राजानं निशायां जीवलोऽब्रवीत् ।
कामेनां शोचसे नित्यं श्रोतुमिच्छामि बाहुक ।
आयुष्मन्कस्य वा नारी यामेवमनुशोचसि ॥ ३-६४-१२ (१८४००)
तमुवाच नलो राजा मन्दप्रज्ञस्य कस्यचित् ।
आसीद्बहुमता नारी तस्या दृढतरश्च सः ॥ ३-६४-१३ (१८४०१)
स वै केनचिदर्थेन तया मन्दो व्ययुज्यत ।
विप्रयुक्तः स मन्दात्मा भ्रमत्यसुखपीडितः ॥ ३-६४-१४ (१८४०२)
दह्यमानः स शोकेन दिवारात्रमतन्द्रितः ।
निशाकाले स्मरंस्तस्याः श्लोकमेकं स्म गायति ॥ ३-६४-१५ (१८४०३)
स विभ्रमन्महीं सर्वां क्वचिदासाद्य किंचन ।
वसत्यनर्हस्तद्दुःखं भूय एवानुसंस्मरन् ॥ ३-६४-१६ (१८४०४)
सा तु तं पुरुषं नारी कृच्छ्रेऽप्यनुगता वने ।
त्यक्ता तेनाल्पभाग्येन दुष्करं यदि जीवति ॥ ३-६४-१७ (१८४०५)
एका बालाऽनभिज्ञा च मार्गमाणाऽतथोचिता ।
क्षुत्पिपासापरीताङ्गी दुष्करं यदि जीवति ॥ ३-६४-१८ (१८४०६)
श्वापदाचरिते नित्यं वने महति दारुणे ।
त्यक्ता तेनाल्पभाग्येन मन्दप्रज्ञेन मारिष ॥ ३-६४-१९ (१८४०७)
इत्येवं नैषधो राजा दमयन्तीमनुस्मरन् ।
अज्ञातवासं न्यवसद्राज्ञस्तस्य नवेशने ॥ ३-६४-२० (१८४०८)

इति श्रीमन्महाभारते अरण्यपर्वणि नलोपाख्यानपर्वणि
चतुःषष्टितमोऽध्यायः ॥ ६४ ॥
Mahabharata - Vana Parva - Chapter Footnotes

वन-अध्यय०६५
॥ श्रीः ॥
३.६५. अध्यायः ६५

Mahabharata - Vana Parva - Chapter Topics
भीमराजेन नलदमयन्त्यन्वेषणाय नानादेशेषु ब्राह्मणानां प्रस्थापनम्
॥ १ ॥
सुदेवनाम्ना विप्रेण चेदिराजगृहे दमयन्तीदर्शनम् ॥ २ ॥
विप्रेण सह सबाष्पं भाषमाणां दमयन्तीं दृष्ट्वा राजमात्रा
विप्रंप्रति दमयन्तीकुलशीलादिप्रश्नः ॥ ३ ॥

Mahabharata - Vana Parva - Chapter Text

३-६५-० (१८४०९)
बृहदश्व उवाच। ३-६५-०क्ष् (१९४१)
हृतराज्ये नले भीमः सभार्येऽदर्शनं गते ।
गचिन्तयामास बहुशः सहामात्यैर्नराधिपः ॥ ३-६५-१ (१८४१०)
समाहूय द्विजान्सर्वानिदं वचनमब्रवीत् ।
अग्रहारं च दास्यामिग्रामं नगरसंमितम् ॥ ३-६५-२ (१८४११)
दमयन्तीं नलं चैव पर्यन्वेषति यो द्विजः ।
गवां शतसहस्राणि दाता तस्मै द्विजातये ॥ ३-६५-३ (१८४१२)
इत्युक्त्वा ब्राह्मणान्सर्वान्समाहूय द्विजोत्तमान् ।
प्रस्थापयामास तदा तयोर्दर्शनकाङ्क्षया' ॥ ३-६५-४ (१८४१३)
संदिदेश च तान्भीमो वसु दत्ता च पुष्कलम् ।
मृगयध्वं नलं चैव दमयन्तीं च मे सुताम् ॥ ३-६५-५ (१८४१४)
अस्मिन्कर्मणि निष्पन्ने विज्ञाते निषधाधिपे ।
गवां सहस्रं दास्यामि यो वस्तावानयिष्यति ॥ ३-६५-६ (१८४१५)
अग्रहारांश्च दास्यामि ग्रामं नगरसंमितम् ।
हिरण्यंच सुवर्णं च दासीदासं तथैव ॥ ३-६५-७ (१८४१६)
न चेच्छक्याविहानेतुं दमयन्ती नलोऽपि वा ।
ज्ञातमात्रेऽपि दास्यामि गवां दशशतं धनम् ॥ ३-६५-८ (१८४१७)
इत्युक्तास्ते ययुर्हृष्टा ब्राह्मणाः सर्वतो दिशम् ।
पुरराष्ट्राणि चिन्वन्तो नैषधं सह भार्यया ।
नैव क्वापि प्रपश्यन्ति नलं वा भीमपुत्रिकाम् ॥ ३-६५-९ (१८४१८)
ततश्चेदिपुरीं रम्यां सुदेवो नाम वै द्विजः ।

विचिन्वानोऽथ वैदर्भीमपश्यद्राजवेश्मनि ॥ ३-६५-१० (१८४१९)
तयैव राजमाता च ब्राह्मणान्पर्यवेषयत् ।
भोजनार्थे सुदेवोऽपि तत्रैव प्रविवेश ह ॥ ३-६५-११ (१८४२०)
कृशां विवर्णां मलिनां भर्तृशोकपरायणाम् ।
पुण्याहवाचने राज्ञः सुनन्दासहितां स्थिताम् ॥ ३-६५-१२ (१८४२१)
मन्दं प्रख्यायमानेन रूपेणाप्रतिमेन ताम् ।
निबद्धां धूमजालेन प्रभामिव विभावसोः ॥ ३-६५-१३ (१८४२२)
तां समीक्ष्य विशालाक्षीमधिकं मलिनां कृशाम् ।
तर्कयामास भैमीति कारणैरुपपादयन् ॥ ३-६५-१४ (१८४२३)
सुदेव उवाच। ३-६५-१५क्ष् (१९४२)
यथेयं मे पुरा दृष्टा तथारूपेयमङ्गना ।
कृतार्थोस्म्यद्य दृष्ट्वेमां लोककान्तामिव श्रियं ॥ ३-६५-१५ (१८४२४)
पूर्णचन्द्राननां श्यामां चारुवृत्तपयोधराम् ।
कुर्वन्तीं प्रभया देवीं सर्वावितिमिरा दिशः ॥ ३-६५-१६ (१८४२५)
चारुपद्मविशालाक्षीं मन्मथस्य रतीमिव ।
इष्टां समस्तलोकस्य पूर्णचन्द्रप्रभामिव ॥ ३-६५-१७ (१८४२६)
विदर्भसरसस्तस्माद्दैवदोषादिवोद्धृताम् ।
मलपङ्कानुलिप्ताङ्गीं प्रम्लानां नलिनीमिव ॥ ३-६५-१८ (१८४२७)
पौर्णमासीमिव निशां राहुग्रस्तनिशाकराम् ।
पतिशोकाकुलां दीनां कृशस्त्रोतां नदीमिव ॥ ३-६५-१९ (१८४२८)
विध्वस्तपर्णकमलां वित्रासितविहंगमाम् ।
हस्तिहस्तपरिक्लिष्टां व्याकुलामिव पद्मिनीम् ॥ ३-६५-२० (१८४२९)
सुकुमारीं सुजाताङ्गीं रत्नगर्भगृहोचिताम् ।
दह्यमानामिवार्केण मृणालीमिव चोद्धृताम् ॥ ३-६५-२१ (१८४३०)
रूपौदार्यगुणोपेतां मण्डनार्हाममण्डिताम् ।
चन्द्रलेखामिव नवांव्योम्नि नीलाभ्रसंवृताम् ॥ ३-६५-२२ (१८४३१)
कामभोगैः प्रियैर्हीनां हीनां बन्धुजनेन च ।
देहं धारयतीं दीनं भर्तृदर्शनकाङ्क्षया ॥ ३-६५-२३ (१८४३२)
भर्ता नाम परं नार्या भूषणं भूषणैर्विना ।
एषा हि रहिता तेन शोभमाना न शोभते ॥ ३-६५-२४ (१८४३३)
दुष्करं कुरुतेऽत्यन्तं हीनो यदनया नलः ।
धारयत्यात्मनो देहं न शोकेनापि सीदति ॥ ३-६५-२५ (१८४३४)
इमामसितकेशान्तां शतपत्रायतेक्षणाम् ।
सुखार्हां दुःखितां दृष्ट्वा ममापि व्यथते मनः ॥ ३-६५-२६ (१८४३५)
कदा नु खलुः दुःखस्य पारं यास्यति वै शुभा ।
भर्तुः समागमात्साध्वीरोहिणी शशिनो यथा ॥ ३-६५-२७ (१८४३६)

अस्या नूनं पुनर्लाभान्नैषधः प्रीतिमेष्यति ।
राजा राज्यपरिभ्रष्टः पुनर्लब्ध्वेव मेदिनीम् ॥ ३-६५-२८ (१८४३७)
तुल्यशीलवयोयुक्तां तुल्याभिजनसंवृतम् ।
नैषधोऽर्हति वैदर्भी तं चेयमसितेक्षणा ॥ ३-६५-२९ (१८४३८)
युक्तं तस्याप्रमेयस्य वीर्यसत्ववतो मया ।
समाश्वासयितुं भार्यां पतिदर्शनलालसाम् ॥ ३-६५-३० (१८४३९)
अहमाश्वासयाम्येनां पूर्णचन्द्रनिभाननाम् ।
अदृष्टदुःखां दुःखार्तां ध्यानरोदनतत्पराम् ॥ ३-६५-३१ (१८४४०)
बृहदश्व उवाच। ३-६५-३२क्ष् (१९४३)
एवं विमृश्य विविधैः कारणैर्लक्षणैश्च ताम् ।
उपगम्य ततो भैमीं सुदेवो ब्राह्मणोऽब्रवीत् ॥ ३-६५-३२ (१८४४१)
अहं सुदेवो वैदर्भि भ्रातुस्ते दयितः सखा ।
भीमस्य वचनाद्राज्ञस्त्वामन्वेष्टुमिहागतः ॥ ३-६५-३३ (१८४४२)
कुशली ते पिता राज्ञि जननी भ्रातरश्च ते ।
आयुष्मन्तौ कुशलिनौ तत्रस्थौ दारकौ च ते ॥ ३-६५-३४ (१८४४३)
त्वत्कृतेबन्धुवर्गाश्च गतसत्वा इवासते ।
अन्वेष्टारो ब्राह्मणाश्च भ्रमन्ति शतशो महीम् ॥ ३-६५-३५ (१८४४४)
बृहदश्व उवाच। ३-६५-३६क्ष् (१९४४)
अभिज्ञाय सुदेवं तं दमयन्ती युधिष्ठिर ।
पर्यपृच्छत तान्सर्वान्क्रमेण सुहृदः स्वकान् ॥ ३-६५-३६ (१८४४५)
रुरोद च भृशं राजन्वैदर्भी शोककर्शिता ।
दृष्ट्वा सुदेवं सहसा भ्रातुरिष्टं द्विजोत्तमम् ॥ ३-६५-३७ (१८४४६)
ततो रुदन्तीं तां दृष्ट्वा सुनन्दा शोककर्शिता ।
सुदेवेन सहैकान्ते कथयन्तीं च भारत ॥ ३-६५-३८ (१८४४७)
जनित्र्याः प्रेषयामास सैरन्ध्री रुदते भृशम् ।
ब्राह्मणेन सहागम्य तांविद्धि यदि मन्यसे ॥ ३-६५-३९ (१८४४८)
अथ चेदिपतेर्माता राज्ञश्चान्तःपुरात्तदा ।
जगाम यत्रसा बाला ब्राह्मणेन सहाभवत् ॥ ३-६५-४० (१८४४९)
ततः सुदेवमानाय्य राजमाता विशांपते ।
पप्रच्छ भार्या कस्येयं सुता वा कस्य भामिनी ॥ ३-६५-४१ (१८४५०)
कथं च नष्टा ज्ञातिभ्यो भर्तुर्वा वामलोचना ।
त्वया च विदिता विप्र कथमेवंगता सती ॥ ३-६५-४२ (१८४५१)
एतदिच्छाम्यहं श्रोतुं त्वत्तः सर्वमशेषतः ।
तत्त्वेन हि ममाचक्ष्व पृच्छन्त्यादेवरूपिणीम् ॥ ३-६५-४३ (१८४५२)
एवमुक्तस्तया राजन्सुदेवो द्विजसत्तमः ।
सुखोपविष्ट आचष्ट दमयन्त्या यथातथम् ॥ ३-६५-४४ (१८४५३)

इति श्रीमन्महाभारते अरण्यपर्वणि नलोपाख्यानपर्वणि
पञ्चषष्टितमोऽध्यायः ॥ ६५ ॥
Mahabharata - Vana Parva - Chapter Footnotes

३-६५-७ अग्रं ब्राह्मणभोजनं तदर्थं ह्रियन्ते
राजधनात्पृथक्क्रियन्ते तेऽग्रहाराः क्षेत्रादयः ॥
३-६५-१४ कारणैर्लिङ्गैः उपपादयन् इयमेव दमयन्तीति निश्चिन्वन् ॥
३-६५-१६ श्यामां सदा षोडशवार्षिकीम् ॥
३-६५-२० पद्मिनीं सरसीम् ॥

---

वन-अध्यय०६६
॥ श्रीः ॥
३.६६. अध्यायः ६६

Mahabharata - Vana Parva - Chapter Topics
सुदेवेन दमयन्तीतत्वं निवेदितया राजमात्रा पिप्लुरूपलाञ्छनेन
तत्वनिर्धारणपूर्वकं तस्याः पितृपुरंप्रति प्रापणम् ॥ १ ॥

Mahabharata - Vana Parva - Chapter Text

३-६६-० (१८४५४)
सुदेव उवाच। ३-६६-०क्ष् (१९४५)
विदर्भराजो धर्मात्मा भीमो भीमपराक्रमः ।
सुतेयं तस्य कल्याणी दमयन्तीति विश्रुता ॥ ३-६६-१ (१८४५५)
राजा तु नैषधो नाम वीरसेनसुतो नलः ।
भार्येयं तस्य कल्याणी पुण्यश्लोकस्य धीमतः ॥ ३-६६-२ (१८४५६)
स द्यूतेन जितो भ्रात्रा हृतराज्यो महामनाः ।
दमयन्त्या गतः सार्धं न प्राज्ञायत कस्यचित् ॥ ३-६६-३ (१८४५७)
ते वयं दमयन्त्यर्थे चरामः पृथिवीमिमाम् ।
सेयमासादिता बाला तव देवि निवेशने ॥ ३-६६-४ (१८४५८)
अस्या रूपेण सदृशी मानुषी न हि विद्यते ।
अस्या ह्येष भ्रुवोर्मध्ये सहजः पिप्लुरुत्तमः ॥ ३-६६-५ (१८४५९)
श्यामायाः पद्मसंकाशो लक्षितोऽन्तर्हितो मया ।
मलेन संवृतोह्यस्याश्छन्नोऽभ्रेणेव चन्द्रमाः ॥ ३-६६-६ (१८४६०)
चिह्नभूतो विभूत्यर्थमयं धात्रा विनिर्मितः ।
प्रतिपत्कलुषेवेन्दोर्लेखा नातिविराजते ॥ ३-६६-७ (१८४६१)

न चास्या नश्यते रूपं वपुर्मलसमाचितम् ।
असंस्कृतमपि व्यक्तं भाति काञ्चनसन्निभम् ॥ ३-६६-८ (१८४६२)
अनेन वपुषा बाला पिप्लुनाऽनेन सूचिता ।
लक्षितेयं मया देवी पिहितोऽग्निरिवोष्मणा ॥ ३-६६-९ (१८४६३)
बृहदश्व उवाच। ३-६६-१०क्ष् (१९४६)
तच्छ्रुत्वा वचनं तस्य सुदेवस्य विशांपते ।
सुनन्दा शोधयामास पिप्लुप्रच्छादनं मलम् ॥ ३-६६-१० (१८४६४)
स मलेनापकृष्टन पिप्लुस्तस्या व्यरोचत ।
दमयन्त्या यथा व्यभ्रे नभसीव निशाकरः ॥ ३-६६-११ (१८४६५)
पिप्लुं दृष्ट्वा सुनन्दा च राजमाता च भारत ।
रुदन्त्यौ तां परिष्वज्यमुहूर्तमिव तस्थतुः ॥ ३-६६-१२ (१८४६६)
उत्सृज्य बाष्पं शनकै राजमातेदमब्रवीत् ।
भगिन्या दुहिता मेऽसि पिप्लुनानेन सूचिता ॥ ३-६६-१३ (१८४६७)
अहं च तव माता च राजन्यस्य महात्मनः ।
सुते दशार्णाधिपतेः सुदाम्नश्चारुदर्शने ॥ ३-६६-१४ (१८४६८)
भीमस्य राज्ञः सा दत्ता वीरबाहोरहं पुनः ।
त्वं तु जाता मया दृष्टा दशार्णेषु पितुर्गृहे ॥ ३-६६-१५ (१८४६९)
यथैव ते पितुर्गेहं तथेदमपि भामिति ।
यथैव च ममैश्वर्यं दमयन्ति तथा तव ॥ ३-६६-१६ (१८४७०)
तां प्रहृष्टेन मनसा दमयन्ती विशांपते ।
प्रणम्य मातुर्भगिनीमिदं वचनमब्रवीत् ॥ ३-६६-१७ (१८४७१)
अज्ञायमानाऽपिसती सुखमस्म्युषिता त्वयि ।
सर्वकामैः सुविहिता रक्ष्यमाणा सदा त्वया ॥ ३-६६-१८ (१८४७२)
सुखात्सुखतरो वासो भविष्यति न संशयः ।
चिरविप्रोषितां मातर्मामनुज्ञातुमर्हसि ॥ ३-६६-१९ (१८४७३)
दारकौ च हि मे नीतौ वसतस्तत्र बालकौ ।
पित्रा विहीनौ शोकार्तौ मया चैव कथं नु तौ ॥ ३-६६-२० (१८४७४)
यदि चापि प्रियं किंचिन्मयि कर्तुमिहेच्छसि ।
विदर्भान्यातुमिच्छामि शीघ्रं मे यानमादिश ॥ ३-६६-२१ (१८४७५)
बाढमित्येव तामुक्त्वा हृष्टवा मातृष्वसा नृप ।
गुप्तां बलेन महता पुत्रस्यानुमते ततः ॥ ३-६६-२२ (१८४७६)
प्रास्थापयद्राजमाता श्रीमतीं नरवाहिना ।
यानेन भरतश्रेष्ठ स्वन्नपानपरिच्छदाम् ॥ ३-६६-२३ (१८४७७)
ततः सा नचिरादेव विदर्भानगमच्छुभा ।
तां तु बन्धुजनः सर्वः प्रहृष्टः समपूजयत् ॥ ३-६६-२४ (१८४७८)
सर्वान्कुशलिनो दृष्ट्वा बान्धवान्दारकौ च तौ ।

मातरं पितरं चोभौ सर्वं चैव सखीजनम् ॥ ३-६६-२५ (१८४७९)
देवताः पूजयामास ब्राह्मणांश्च यशस्विनी ।
परेण विधिना देवी दमयन्ती विशांपते ॥ ३-६६-२६ (१८४८०)
अतर्पयत्सुदेवं च गोसहस्रेण पार्थिवः ।
प्रीतो दृष्ट्वैव तनयां ग्रामेण द्रविणेन च ॥ ३-६६-२७ (१८४८१)
सा व्युष्टा रजनीं तत्रपितुर्वेश्मनि भामिनी ।
विश्रान्ता मातरं राजन्निदं वचनमब्रवीत् ॥ ३-६६-२८ (१८४८२)

इति श्रीमन्महाभारते अरण्यपर्वणि नलोपाख्यानपर्वणि
षट्षष्टितमोऽध्यायः ॥ ६६ ॥
Mahabharata - Vana Parva - Chapter Footnotes

३-६६-५ पिप्लुः रक्ततिलकाकृतिलाञ्छनम् ॥
३-६६-६ स दृष्टो बहुशो नाद्य लक्ष्यतेऽन्तर्हितो मयेति क ।पाठः ॥
३-६६-७ चिह्नभूतः सचात्यर्थमिति ध ।पाठः ॥
३-६६-८ अस्यास्तु दृश्यते रूपमिति ध ।पाठः ॥
३-६६-११ अपकृष्टेन दूरीकृतेन ॥
३-६६-२० दारकौ सुतः सुता च ॥
३-६६-२८ व्युष्टा वासंकृतवती ॥

---

वन-अध्यय०६७
॥ श्रीः ॥
३.६७. अध्यायः ६७

Mahabharata - Vana Parva - Chapter Topics
दमयन्तीप्रेषितैर्विप्रैस्तत्रतत्रनलान्वेषणम् ॥ १ ॥

Mahabharata - Vana Parva - Chapter Text

३-६७-० (१८४८३)
दमयन्त्यवाच। ३-६७-०क्ष् (१९४७)
मां चेदिच्छसि जीवन्तीं मातः सत्यं ब्रवीमिते ।
नलस्य नरवीरस्य यतस्वानयने पुनः ॥ ३-६७-१ (१८४८४)
दमयन्त्या तथोक्ता तु सा देवी भृशदुःखिता ।
बाष्पेणापिहिता राज्ञी नोत्तरं किंचिदब्रवीत् ॥ ३-६७-२ (१८४८५)
तदवस्थां तु तां दृष्ट्वा सर्वमन्तःपुरं तदा ।
हाहाभूतमतीवासीद्भृशं च प्ररुरोद ह ॥ ३-६७-३ (१८४८६)

ततो भीमं महाराजं भार्या वचनामब्रवीत् ।
दमयन्ती नृप भृशं भर्तारमनुशोचति ॥ ३-६७-४ (१८४८७)
अपकृष्य च लज्जां सा स्वयमुक्तवती विभो ।
प्रयतन्तु तवप्रेष्याः पुण्यश्लोकस्य दर्शने ॥ ३-६७-५ (१८४८८)
बृहदश्व उवाच। ३-६७-६क्ष् (१९४८)
तयाप्रयोदितो राजा ब्राह्मणान्वशवर्तिनः ।
प्राश्थापयद्दिशः सर्वा यतध्वं नलदर्शने ॥ ३-६७-६ (१८४८९)
ततो विदर्भाधिपतेर्नियोगाद्ब्राह्मणास्तदा ।
दमयन्तीमथापृच्छ्य प्रस्थितास्ते तथाऽब्रुवन् ॥ ३-६७-७ (१८४९०)
अथ तानब्रवीद्भैमी सर्वराष्ट्रेष्विदं वचः ।
ब्रूत वै जनसंसत्सु तत्रतत्र पुनः पुनः ॥ ३-६७-८ (१८४९१)
क्वनु त्वं कितव च्छित्त्वा वस्त्रार्धं प्रस्थितो मम ।
उत्सृज्य वपिने सुप्तामनुरक्तां प्रियां प्रिय ॥ ३-६७-९ (१८४९२)
सा वै यथा त्वया दृष्टा तथाऽऽस्ते त्वत्प्रतीक्षिणी ।
दह्यमाना भृशं बाला वस्त्रार्धेनाभिसंवृता ॥ ३-६७-१० (१८४९३)
तस्या रुदन्त्याः सततं तेन शोकेन पार्थिव ।
प्रसादं कुरु वै देव प्रतिवाक्यं वदस्व च ॥ ३-६७-११ (१८४९४)
एवमन्यच्च वक्तव्यं कृपां कुर्याद्यथा मयि ।
वायुना धूयमानो हि वनं दहति पावकः ॥ ३-६७-१२ (१८४९५)
भर्तव्या रक्षणीया त्व पत्नी पत्या हि नित्यदा ।
तन्नष्टमुभयं कस्माद्धर्मज्ञस्य सतस्तव ॥ ३-६७-१३ (१८४९६)
ख्यातः प्राज्ञः कुलीनश् सानुक्रोशो भवान्सदा ।
संवृत्तो निरनुक्रोशः शङ्के मद्भाग्यसंक्षयात् ॥ ३-६७-१४ (१८४९७)
तत्कुरुष्व नरव्याघ्र दयां मयि नरर्षभ ।
आनृशंस्यं परो धर्मस्त्वत्त एव हि मे श्रुतः ॥ ३-६७-१५ (१८४९८)
एवंब्रुवाणान्यदि वः प्रतिब्रूयाद्धि कश्चन ।
स नरः सर्वथा ज्ञेयः कश्चासौ क्वनु वर्तते ॥ ३-६७-१६ (१८४९९)
यश्चैवं वचनं श्रुत्व्वा बूयात्प्रतिवचो नरः ।
तदादाय वचस्तस्य ममावेद्यं द्विजोत्तमाः ॥ ३-६७-१७ (१८५००)
यथा च वो न जानीयाच्चरतो भीमशासनात् ।
पुनरागमनं चेह तथा कार्यमतन्द्रितैः ॥ ३-६७-१८ (१८५०१)
यदि वाऽसौ समृद्धः स्याद्यदि वाऽप्यधनो भवेत् ।
यदिऽवाप्यसमर्थः स्याज्ज्ञेयमस्य चिकीर्षितम् ॥ ३-६७-१९ (१८५०२)
एवमुक्तास्त्वगच्छंस्ते ब्राह्मणाः सर्वतो दिशम् ।
नलं मृगयितुं राजंस्तदा व्यसनिनं तथा ॥ ३-६७-२० (१८५०३)
ते पुराणि सराष्ट्राणि ग्रामान्धोपांस्तथाऽऽश्रमान् ।

अन्वेषन्तो नलं राजन्नाधिजग्मुर्दविजातयः ॥ ३-६७-२१ (१८५०४)
तच्च वाक्यं तथा सर्वेतत्रतत्र विशांपते ।
श्रावयांचक्रिरे विप्रा दमयन्त्या यथेरितम् ॥ ३-६७-२२ (१८५०५)

इति श्रीमन्महाभारते अरण्यपर्वणि नलोपाख्यानपर्वणि
सप्तषष्टितमोऽध्यायः ॥ ६७ ॥
Mahabharata - Vana Parva - Chapter Footnotes

३-६७-७ तथा अब्रुवन्नलान्वेषणाय प्रस्थिताःस्मेति ॥
३-६७-१२ वायुनेति शोकाग्निः कालवायुना दिनेदिने वर्धमानो
दमयन्तीशरीरवनं दहतीति रूपकेणोक्तम् ॥
३-६७-१३ भर्तव्याऽन्नादिना । रक्षणीया दस्युप्रभृतिभ्यः। उभयं
रक्षणभरणात्मकम् ॥
३-६७-१४ सानुक्रोशः सदयः ॥

---

वन-अध्यय०६८
॥ श्रीः ॥
३.६८. अध्यायः ६८

Mahabharata - Vana Parva - Chapter Topics
नलान्वेपिणा पर्णादनाम्ना विप्रेण ऋतुपर्णनृपगृहे
बाहुकनामनिगृढे नले शृण्वति दमयन्तीवचनानुवादः ॥ १ ॥
बाहुकेन विजने पर्णादंप्रति दमयन्तीवचनस्योत्तरदानम् ॥ २ ॥
पर्णादेन विदर्भान्पुनरभ्येत्य दमयन्त्या बाहुकवचननिवेदनम् ॥ ३ ॥
बाहुके नलशङ्किन्या दमयन्त्या प्रेपितेन सुदेवेन अयोध्यांगत्वा
ऋतुपर्णे श्लोनभूते दमयन्त्याः पुनः स्वयंवरो भवितेति कीर्तनम्
॥ ४ ॥

Mahabharata - Vana Parva - Chapter Text

३-६८-० (१८५०६)
बृहदश्व उवाच। ३-६८-०क्ष् (१९४९)
अथ दीर्घस्य कालस्य पर्णादो नाम वै द्विजः ।
प्रत्येत्य नगरं भैमीमिदं वचनमब्रवीत् ॥ ३-६८-१ (१८५०७)
नैषधं मृगयाणेन दमयन्ति दिवानिशम् ।
अयोध्यां नगरीं गत्वा भागस्वरिरुपस्थितः ॥ ३-६८-२ (१८५०८)
श्रावितश्च मया वाक्यं त्वदीयं स महाजने ।

ऋतुपर्णो महाभागो यथोक्तं वरवर्णिनि ॥ ३-६८-३ (१८५०९)
तच्छ्रुत्वा नाब्रवीत्किंचिदृतुपर्णो नराधिपः ।
न च पारिषदः कश्चिद्भाष्यमाणो मयाऽसकृत् ॥ ३-६८-४ (१८५१०)
अनुज्ञातं तु मां राज्ञा विजने कश्चिदब्रवीत् ।
ऋतुपर्णस्य पुरुषो बाहुको नाम नामतः ॥ ३-६८-५ (१८५११)
सूतस्तस्य नरेन्द्रस्य विरूपो ह्रस्वबाहुकः ।
शीघ्रयानेषु कुशलो मृष्टकर्ता च भोजने ॥ ३-६८-६ (१८५१२)
स विनिःश्वस्य बहुशो रुदित्वा च षुनःपुनः ।
कुशलं चैव मां पृष्ट्वा पश्चादिदमभाषत ॥ ३-६८-७ (१८५१३)
वैषम्यमपि संप्राप्ता गोपायन्ति कुलस्त्रियः ।
आत्मानमात्मना सत्यो जितः स्वर्गो न संशयः ॥ ३-६८-८ (१८५१४)
रहिता भर्तृभिश्चैव न कुप्यन्ति
कदाचन।३-६८-९ब्प्राणांश्चारित्रकवचान्धारयन्ति वरस्त्रियः ॥
३-६८-९ (१८५१५)
विषमस्थेन मूढेन परिभ्रष्टसुखेन च ।
यत्सा तेन परित्यक्ता तत्र न क्रोद्धुमर्हति ॥ ३-६८-१० (१८५१६)
प्राणयात्रां परिप्रेप्सोः शकुनैर्हृतवाससः ।
आधिभिर्दह्यमानस्य श्यामा न क्रोद्धुमर्हति ॥ ३-६८-११ (१८५१७)
सत्कृताऽसत्कृता वाऽपि पतिं दृष्ट्वा तथागतम् ।
भ्रष्टराज्यं श्रित्या हीनं श्यामा न क्रोद्धुमर्हति ॥ ३-६८-१२ (१८५१८)
तस्य तद्वचनं श्रुत्वा त्वरितोऽहमिहागतः ।
श्रुत्वा प्रमाणं भवती राज्ञश्चैव निवेदयः ॥ ३-६८-१३ (१८५१९)
एतच्छ्रुत्वाऽश्रुपूर्णाक्षी पर्णादस्य विशांपते ।
दमयन्ती रहोऽभ्येत्य मातरं प्रत्यभापत ॥ ३-६८-१४ (१८५२०)
अयमर्थो न संवेद्यो भीमे मातः कदाचन ।
त्वत्सन्निधौ नियोक्ष्येऽहंसुदेवं द्विजसत्तमम् ॥ ३-६८-१५ (१८५२१)
यथा न नृपतिर्भीमः प्रतिपद्येत मे मतम् ।
यथा त्वया प्रकर्तव्यं मम चेत्प्रियमिच्छसि ॥ ३-६८-१६ (१८५२२)
यथा चाहं समानीता सुदेवेनाशु बान्धवान् ।
तेनैव मङ्गलेनाद्य सुदेवो यातु मा चिरम् ॥ ३-६८-१७ (१८५२३)
समानेतुं नलं मातरयोध्यां नगरीमितः ।
ग्ऋतुपर्णस्य नगरे निवसन्तमरिन्दमम्' ॥ ३-६८-१८ (१८५२४)
विश्रान्तं तु ततः पश्चात्पर्णादं द्विजसत्तमम् ।
अर्चयामास वैदर्भी धनेनातीव भामिनी ॥ ३-६८-१९ (१८५२५)
ग्लवाच चैनं महता संपूज्य द्रविणेन वै।'
नले चेहागते विप्र भूयो दास्याभि ते वसु ॥ ३-६८-२० (१८५२६)

त्वया हि मे बहुकृतंयदन्यो न करिष्यति ।
यद्भर्त्राऽहं समेष्यामि शीघ्रमेव द्विजोत्तम ॥ ३-६८-२१ (१८५२७)
स एवमुक्तोऽथाश्वास्य आशीर्वादैः सुमङ्गलैः ।
गृहानुपययौ चापि कृतार्थः सुमहामनाः ॥ ३-६८-२२ (१८५२८)
ततः सुदेवमानाय्य दमयन्ती युधिष्ठिर ।
अब्रवीत्सन्निदौ मातुर्दुःखशोकसमन्विता ॥ ३-६८-२३ (१८५२९)
गत्वा सुदेव नगरीमयोध्यावासिनं नृपम् ।
ऋतुपर्णं वचो ब्रूहि पतिमन्यं चिकीर्षती ॥ ३-६८-२४ (१८५३०)
आस्थास्यति पुनर्भैमी दमयन्ती स्वयंवरम् ।
तत्र गच्छन्ति राजानो राजपुत्राश्च सर्वशः ॥ ३-६८-२५ (१८५३१)
तथा च गणितः कालः श्वोभूते स भविष्यति ।
यदि संभाविनीयं ते गच्छ शीघ्रमरिंदम ॥ ३-६८-२६ (१८५३२)
सूर्योदये द्वतीयं सा भर्तारं वरयिष्यति ।
न हि स ज्ञायते वीरो नलो जीवन्मृतोपि वा ॥ ३-६८-२७ (१८५३३)
एवं तथा यथोक्तो वै गत्वा राजानमब्रवीत् ।
ऋतुपर्णं महाराज सुदेवो ब्राह्मणस्तदा ॥ ३-६८-२८ (१८५३४)

इति श्रीमन्महाभारते अरण्यपर्वणि नलोपास्त्र्यानपर्वणि
अष्टषष्ठितमोऽध्यायः ॥ ६८ ॥
Mahabharata - Vana Parva - Chapter Footnotes

३-६८-८ गोपायन्ति पालयन्ति । जितः स्वर्गस्ताभिरित शेषः ॥
३-६८-२६ संभाविनी संभाविता इयम् । गतिरिति शेषः ॥

---

वन-अध्यय०६९
॥ श्रीः ॥
३.६९. अध्यायः ६९

Mahabharata - Vana Parva - Chapter Topics
ऋतुपर्णेन दमयन्तीस्वयंवराय बाहुकं सारत्येनियोज्य वार्ष्णेयेन
सह विदर्भान्प्रति प्रस्थानम् ॥ १ ॥
वार्ष्णेयेन बाहुके सारथ्यकौशलेन नलत्वसंभावना ॥ २ ॥

Mahabharata - Vana Parva - Chapter Text

३-६९-० (१८५३५)
बृहदश्व उवाच। ३-६९-०क्ष् (१९५०)

श्रुत्वा वचः सुदेवस्य ऋतुपर्णो नराधिपः ।
ग्सारथीन्स समानीय वार्ष्णेयप्रभृतीन्नृपः ।
कथयामास यद्वृत्तं ब्राह्मणेन श्रुतं तथा ॥ ३-६९-१ (१८५३६)
बाहुकं च समाहूय दमयन्त्याः स्वयंवरम्'।
सान्त्वयञ्श्लक्ष्णया वाचा बाहुकं प्रत्यभाषत ॥ ३-६९-२ (१८५३७)
विदर्भान्यातुमिच्छामि दमयन्त्याः स्वयंवरम् ।
एकाह्ना हयतत्त्वज्ञ मन्यसे यदि बाहुक ॥ ३-६९-३ (१८५३८)
एवमुक्तस्य कौन्तेय तेन राज्ञा नलस्य ह ।
व्यदीर्यत मनो दुःखात्प्रदध्यौ च महामनाः ॥ ३-६९-४ (१८५३९)
दमयन्ती भवेदेवं किंनु दुःखेन मोहिता ।
अस्मदर्थे भवेद्वाऽयमुपायश्चिन्तितो महान् ॥ ३-६९-५ (१८५४०)
नृशंसं बत वैदर्भी कर्तुकामा तपस्विनी ।
यया क्षुद्रेण निकृताकृपणा पापबुद्धिना ।
स्त्रीस्वभावश्चलो लोके मम दोषश्च दारुणः ॥ ३-६९-६ (१८५४१)
मम शोकेन संविग्ना नैराश्यात्तनुमध्यमा ।
नैवं सा कर्हिचित्कुर्यात्सापत्या च विशेषतः ॥ ३-६९-७ (१८५४२)
यदत्र सत्यं वाऽसत्यं गत्वा वेत्स्यामि निश्चयम् ।
ऋतुपर्णस्य वै काममात्मार्थं च करोम्यहम् ॥ ३-६९-८ (१८५४३)
इति निश्चित्य मनसा बाहुको दीनमानसः ।
कृताञ्जलिरुवाचेदमृतुपर्णं जनाधिपम् ॥ ३-६९-९ (१८५४४)
प्रतिजानामि ते वाक्यं गमिष्यामि नराधिप ।
एकाह्ना पुरुषव्याघ्र विदर्भनगरीं नृप ।
ग्तत्रादित्योदये काले श्वो विदर्भान्गमिष्यसि ॥ ३-६९-१० (१८५४५)
एवमुक्तोऽब्रवीद्राजा बाहुकं प्रहसन्निव ।
किं ते कामं करोम्यद्य तुष्टोऽस्मि तव बाहुक ॥ ३-६९-११ (१८५४६)
बाहुक उवाच। ३-६९-१२क्ष् (१९५१)
यावद्यानमिदं सज्जमृतुपर्ण करोम्यहम्' ॥ ३-६९-१२ (१८५४७)
ततः परीक्षामश्वानां चक्रे राजन्स बाहुकः ।
अश्वशालामुपागम्य भागस्वरिनृपाज्ञया ॥ ३-६९-१३ (१८५४८)
स त्वर्यमाणो बहुश ऋतुपर्णन बाहुकः ।
अश्वाञ्जिज्ञासमानो वै विचार्य च पुनःपुनः ।
अध्यगच्छत्कृशानश्वान्समर्थानध्वनि क्षमान् ॥ ३-६९-१४ (१८५४९)
तेजोबलसमायुक्तान्कुलशीलसमन्वितान् ।
वर्जितॉंल्लक्षणैर्हीनैः पृथुप्रोथान्महाहनून् ॥ ३-६९-१५ (१८५५०)
शुद्धान्दशभिरावर्तैः सिन्धुजान्वातरंहसः ।
ग्दृश्यमानान्कृशानङ्गैर्जवेनाप्रतिमान्पथि' ॥ ३-६९-१६ (१८५५१)

तान्दृष्ट्वा दुर्बलान्राजा प्राह कोपसमन्वितः ।
किमिदं प्रार्थितं कर्तुं प्रलब्धव्या न ते वचम् ॥ ३-६९-१७ (१८५५२)
कथमल्पबलप्राणा वक्ष्यन्तीमे हया रथम् ।
महानध्वा स चैकाह्ना गन्तव्यः कथमीदृशैः ॥ ३-६९-१८ (१८५५३)
बाहुक उवाच। ३-६९-१९क्ष् (१९५२)
श्एको ललाटे द्वे मूर्ध्नि द्वौद्वौ पार्श्वोपपार्श्वयोः ।
द्वौद्वौ वक्षसि विज्ञेयौ प्रयाणे चैक एव तु ॥ঌ ३-६९-१९ (१८५५४)
एते हया गमिष्यन्ति विदर्भान्नात्र संशयः ।
यानन्यान्मन्यसे राजन्ब्रूहि तान्योजयामिते ॥ ३-६९-२० (१८५५५)
ऋतुपर्ण उवाच। ३-६९-२१क्ष् (१९५३)
त्वमेव हयतत्त्वज्ञः कुशलो ह्यसि बाहुक ।
यान्मन्यसे समर्थास्त्वं क्षिप्रं तानेव योजय ॥ ३-६९-२१ (१८५५६)
ततः सदश्वांश्चतुरः कुलशीलसमन्वितान् ।
योजयामास कुशलो जवयुक्तान्रथे नलः ॥ ३-६९-२२ (१८५५७)
ततो युक्तं रथं राजा समारोहत्त्वरान्वितः ।
अथ पर्यपतन्भूमौ जानुभिस्ते हयोत्तमाः ॥ ३-६९-२३ (१८५५८)
ततो नरवरः श्रीमान्नलो राजा विशांपते ।
सान्त्वयामास तानश्वांस्तेजोबलसमन्वितान् ॥ ३-६९-२४ (१८५५९)
रश्मिभिश्च समुद्यम्य नलो यातुमियेष सः ।
सूतमारोप्य वार्ष्णेयं जवमास्थाय वै परम् ॥ ३-६९-२५ (१८५६०)
ते चोद्यमाना विधिवद्बाहुकेन हयोत्तमाः ।
समुत्पेतुरिवाकाशं रथिनं मोहयन्ति च ॥ ३-६९-२६ (१८५६१)
तथा तु दृष्ट्वा तानश्वान्वहतो वातरंहसः ।
अयोध्याधिपतिः श्रीमान्विस्मयं परमं ययौ ॥ ३-६९-२७ (१८५६२)
रथघोषं तु तं श्रुत्वा हयसंग्रहणं च तत् ।
वार्ष्णेयश्चिन्तयामास बाहुकस्य हयज्ञताम् ॥ ३-६९-२८ (१८५६३)
किंनु स्यान्मातलिरयं देवराजस्य सारथिः ।
तथा तल्लक्षणं वीरे बाहुके दृश्यते महत् ॥ ३-६९-२९ (१८५६४)
शालिहोत्रोऽथ किंतु स्याद्धयानां कुलतत्त्ववित् ।
मानुपं समनुप्राप्तो वपुः परमशोभनम् ॥ ३-६९-३० (१८५६५)
उताहोस्विद्भवेद्राजा नलः परपुरंजयः ।
सोयं नृपतिरायात इत्येवं समचिन्तयत् ॥ ३-६९-३१ (१८५६६)
अथवाऽयंनलात्प्राप्तो विद्यां तामेव बाहुकः ।
तुल्यं हि लक्षये ज्ञानं बाहुकस्य नलस्य च ॥ ३-६९-३२ (१८५६७)
अपिचेदं वयस्तुल्यं बाहुकस्य नलस्य च ।
नायं नलो महावीर्यस्तद्विद्यश्च भविष्यति ॥ ३-६९-३३ (१८५६८)

प्रच्छन्ना हि महात्मानश्चरन्ति पृथिवीमिमाम् ।
दैवेन विधिना युक्ताः शास्त्रोक्तैश्च निरूपणैः ॥ ३-६९-३४ (१८५६९)
भवेन्न मतिभेदो मे गात्रवैरूप्यता प्रति ।
प्रमाणात्परिहीनस्तु भवेदिति मतिर्मम ॥ ३-६९-३५ (१८५७०)
वयःप्रमाणं तत्तुल्यं रूपेण तु विपर्ययः ।
नलं सर्वगुणैर्युक्तं मन्ये बाहुकमन्ततः ॥ ३-६९-३६ (१८५७१)
एवं विचार्य बहुशो वार्ष्णेयः पर्यचिन्तयत् ।
हृदयेन महाराज पुण्यश्लोकस्य सारथिः ॥ ३-६९-३७ (१८५७२)
ऋतुपर्णश्च राजेन्द्रो बाहुकस्य हयज्ञताम् ।
चिन्तयन्मुमुदे राजा सहवार्ष्णेयसारथिः ॥ ३-६९-३८ (१८५७३)
ऐकाग्र्यं च तथोत्साहं हयसंग्रहणं च तत् ।
कौशलं चापि संप्रेक्ष्य परां मुदमवाप ह ॥ ३-६९-३९ (१८५७४)

इति श्रीमन्महाभारते अरण्यपर्वणि नलोपाख्यानपर्वणि
एकोनसप्ततितमोऽध्यायः ॥ ६९ ॥

Mahabharata - Vana Parva - Chapter Footnotes

३-६९-७ सापत्या अपत्यसहिता ॥
३-६९-१५ प्रोथं नासिका । हनुः अधरं मुखफलकम् ॥
३-६९-१६ सिन्धुजान् सिन्धुदेशजान् ॥
३-६९-१८ बलं भारसहिष्णुता । प्राणो वेगवत्ता। वक्ष्यन्ति वह्नं
करिष्यन्ति ॥
३-६९-१९ प्रयाणे पृष्ठभागे ॥
३-६९-३० शालिहोत्रः अश्वशास्त्रप्रणेता आचार्यः ॥
३-६९-३४ विधिना युक्ताः संयुक्ताश्च विरूपणैरिति क । पाठः ॥
३-६९-३५ भवेत्तु मतिभेदो मे इति क । पाठः ॥
३-६९-३६ अन्ततः निर्णयेन ॥

---

वन-अध्यय०७०
॥ श्रीः ॥
३.७०. अध्यायः ७०

Mahabharata - Vana Parva - Chapter Topics

बाहुकस्य सारथ्यसामर्थ्यविस्मितेन ऋतुपर्णेन तंप्रति
पुञ्जीभूतवस्तुपरिसंख्याने स्वीयसामर्थ्यनिवेदनम् ॥ १ ॥
वृक्षशाखास्थपर्णेषु तत्परीक्षया
विस्मितेन नलेनाश्वहृदयविद्यादानप्रतिज्ञानन

तदीयाक्षहृदयादिविद्यास्वीकरणम् ॥ २ ॥
ततो नलदेहाद्बहिर्निःसृतेन कलिना नलशापभयात्तस्मै वरदानपूर्वकं विभीतकवृक्षप्रवेशः ॥ ३ ॥

Mahabharata - Vana Parva - Chapter Text

३-७०-० (१८५७५)
बृहदश्व उवाच। ३-७०-०क्ष् (१९५४)
स नदीः पर्वतांश्चैव वनानि च सरांसि च ।
अचिरेणातिचक्राम स्वेचरः खे चरन्निव ॥ ३-७०-१ (१८५७६)
तथा प्रयाते तु रथे तदा भागस्वरिर्नृपः ।
उत्तरीयमधोपश्यद्भ्रष्टं परपुरंजयः ॥ ३-७०-२ (१८५७७)
ततः स त्वरमाणस्तु पटे निपतिते तदा ।
ग्रहीष्यामीति तं राजा नलमाह महामनाः ॥ ३-७०-३ (१८५७८)
निगृह्णीष्व महाबुद्धे हयानेतान्महाजवान् ।
वार्ष्णेयो यावदेनं मे पटमानयतामिह ॥ ३-७०-४ (१८५७९)
नलस्तं प्रत्युवाचाथ दूरे भ्रष्टः पटस्तव ।
योजनं समतिक्रान्तो नाहर्तुं शक्यते पुनः ॥ ३-७०-५ (१८५८०)
एवमुक्ते नलेनाथ नातिप्रीतमना नृपः ।
आससाद वने राजन्फलवन्तं बिभीतकम् ॥ ३-७०-६ (१८५८१)
तं दृष्ट्वा बाहुकं राजा त्वरमाणोऽभ्यभापत ।
ममापि सूत पश्य त्वं संख्याने परमं बलम् ॥ ३-७०-७ (१८५८२)
सर्वः सर्वं न जानाति सर्वज्ञो नास्ति कश्चन ।
नैकत्र परिनिष्ठाऽस्ति ज्ञानस्य पुरुषे क्वचित् ॥ ३-७०-८ (१८५८३)
वृक्षेऽस्मिन्यानि पर्णानि फलामेकं च बाहुक ।
पतितान्यपि यान्यत्रतत्रैकमधिकं कृतम् ॥ ३-७०-९ (१८५८४)
एवपत्राधिकं चात्र फलमेकं च बाहुक ।
फलकोट्यपि पत्राणां द्वयोरपि च शाखयोः ।
ग्प्रवक्ष्यामि फलान्यत्र यानि संख्यास्यते भवान् ॥' ३-७०-१० (१८५८५)
प्रचिनुह्यस्य शाखे द्वे याश्चाप्यन्याः प्रशाखिकाः ।
आभ्यां फलसहस्रे द्वे पञ्चोनं शतमेव च ॥ ३-७०-११ (१८५८६)
ततो रथादवप्लुत्य राजानं बाहुकोऽब्रवीत् ।
परोक्षमिव मे राजन्कत्थसे शत्रुकर्शन ॥ ३-७०-१२ (१८५८७)
प्रत्यक्षमेतत्कर्ताऽस्मि शातयित्वा विभीतकम् ।
अथ ते गणिते राजन्द्विजामाम्यपरोक्षताम् ॥ ३-७०-१३ (१८५८८)
प्रत्यक्षं ते महाराज् गणयिष्ये विभीतकम् ।

अहं हि नाभिजानामि भवेदेव नवेति वा ॥ ३-७०-१४ (१८५८९)
संख्यास्यामि फलान्यस्य पशय्तस्ते जनाधिप ।
मुहूर्तमपि वार्ष्णेयो रश्मीन्यच्छतु वाजिनाम् ॥ ३-७०-१५ (१८५९०)
तमब्रवीन्नृपः सूतं नायं कालो विलम्बितुम् ।
बाहुकस्त्वब्रवीदेनं परं यत्नं समास्थितः ॥ ३-७०-१६ (१८५९१)
प्रतीक्षस्व मुहूर्तं त्वमथवा त्वरते भवान् ।
एष याति शिवः पन्था याहि वार्ष्णेयसारथिः ॥ ३-७०-१७ (१८५९२)
अब्रवीदृतुपर्णस्तं सान्त्वयन्कुरुनन्दन ।
त्वभेव यन्ता नान्योस्ति पृथिव्यामपि बाहुक ॥ ३-७०-१८ (१८५९३)
त्वत्कृतेयातुमिच्छामि विदर्भान्हयकोविद ।
शरणं त्वांप्रपन्नोस्मि न विघ्नं कर्तुमर्हसि ॥ ३-७०-१९ (१८५९४)
कामं च ते करिष्यामि यन्मां वक्ष्यसि बाहुक ।
विदर्भान्यदि यात्वाऽद्य सूर्यं दर्शयितासि मे। ३-७०-२० (१८५९५)
अथाब्रवीद्बाहुकस्तं संख्यायच बिभीतकम् ।
ततो विदर्भान्यास्यामि कुरुष्वैवं वचो मम ॥ ३-७०-२१ (१८५९६)
अकाम इव तं राजा गणयस्वेत्युवाच ह ।
एकदेशं च शाखायाः समादिष्टं मयाऽनघ ॥ ३-७०-२२ (१८५९७)
गणयस्वाश्वतत्वज्ञ ततस्त्वंप्रीतिमावह ।
सोऽवतीर्य रथात्तूर्णं शातयामास तं द्रुमम् ॥ ३-७०-२३ (१८५९८)
ततः स विस्मयाविष्टो राजानमिदमब्रवीत् ।
गणयित्वायथोक्तानि तावन्त्येव फलानि तु ॥ ३-७०-२४ (१८५९९)
अत्युद्भुतमिदं राजन्दृष्टवानस्मि ते बलम् ।
श्रोतुमिच्छामि तां विद्यां ययैतज्ज्ञायते नृप ॥ ३-७०-२५ (१८६००)
तमुवाच ततो राजा त्वरितो गमने नृप ।
विद्धयक्षहृदयज्ञं मां संख्याने च विशारदम् ॥ ३-७०-२६ (१८६०१)
बाहुकस्तमुवाचाथ देहि विद्याद्वयं च मे ।
मत्तोऽपि चाश्वहृदयं गृहाण पुरुपर्षभ ॥ ३-७०-२७ (१८६०२)
ऋतुपर्णस्ततो राजा बाहुकं कार्यगौरवात् ।
हयज्ञानस्य लोभाच् तं तथेत्यब्रवीद्वचः ॥ ३-७०-२८ (१८६०३)
यथोक्तं त्वं गृहाणेदमक्षाणां हृदयं परम् ।
निक्षेपो मेऽश्वहृदयं त्वयि तिष्ठतु बाहुक ।
एवमुक्त्वा ददौ विद्यामृतुपर्णो नलाय वै ॥ ३-७०-२९ (१८६०४)
तस्याक्षहृदयज्ञस्य शरीरान्निःसृतः कलिः ।
कर्कोटकविषं तीक्ष्णं मुखात्सततमुद्वमन् ।
कलेस्तस्य तदार्तस्य शापाग्निः स विनिःसृतः ॥ ३-७०-३० (१८६०५)
सातेन कर्शितो राजादीर्घकालमनात्मवान् ॥ ३-७०-३१ (१८६०६)

ग्तं भ्राम्तरूपं निःशोभं संक्लिष्टमकरोत्कलिः'।
ततो विषविमुक्तात्मा स्वंरूपमकरोत्कलिः ।
तं शप्तुमैच्छत्कुपितो निषधाधिपतिर्नलः ॥ ३-७०-३२ (१८६०७)
ततो विषविमुक्तात्मा स्वंरूपमकरोत्कलिः ।
तं शप्तुमैच्छत्कुपितो निषधाधिपतिर्नलः ॥ ३-७०-३२ (१८६०८)
तमुवाच कलिर्भीतो वेपमानः कृताञ्जलिः ।
कोपं संयच्छ नृपते कीर्तिं दास्यामि ते पराम् ॥ ३-७०-३३ (१८६०९)
इन्द्रसेनस्य जननी कुपिता माऽशपत्पुरा ।
यदा त्वया परित्यक्ता ततोऽहं भृशपीडितः ॥ ३-७०-३४ (१८६१०)
अवसं त्वयि राजेन्द्र सुदुःखभपराजित ।
विषेण नागराजस्य दह्यमानो दिवानिशम् ॥ ३-७०-३५ (१८६११)
शरणं त्वां प्रपन्नोस्मि शृणु चेदं वचो मम ।
ये च त्वां मनुजा लोके कीर्तयिष्यन्त्यतन्द्रिताः ।
मत्प्रत्सूतं भयं तेषां न कदाचिद्भविष्यति ॥ ३-७०-३६ (१८६१२)
ग्न तेषां मानसं किंचिच्छारीरं वाचिकं तथा ।
भविष्यति महाराज कीर्तयिष्यन्ति ये नलम्'।
भयार्तं शरणं यातं यदि मां त्वं न शप्स्यसे ॥ ३-७०-३७ (१८६१३)
एवमुक्तो नलो राजा न्ययच्छत्कोपमात्मनः ।
ततो बीतः कलिः क्षिप्रं प्रविवेश विभीतकम् ।
कलिस्त्वन्येन नो दृष्टः कथयन्नैषधेन वै ॥ ३-७०-३८ (१८६१४)
ततो गतत्वरो राजा नैषधः परवीरहा ।
संप्रनष्टे कलौ राजा संख्यायास्य फलान्युत ॥ ३-७०-३९ (१८६१५)
मुदा परमया युक्तस्तेजसाऽथ परेण वै ।
रथमारुह्य तेजस्वी प्रययौ जवनैर्हयैः ॥ ३-७०-४० (१८६१६)
बिभीतकश्चाप्रशस्तः संवृत्तः कलिसंश्रयात् ।
ग्ततः प्रभृतिराजेन्द्र लोकेऽस्मिन्पाण्डुनन्दन'॥ ३-७०-४१ (१८६१७)
हयोत्तभानुत्पततो द्विजानिव पुनः पुनः ।
नलः संचोदयामास प्रहृष्टेनान्तरात्मना ॥ ३-७०-४२ (१८६१८)
विदर्भाभिमुखो राजा प्रययौ स महायशाः ।
नले तु समतिक्रान्ते कलिरप्यगमद्गृहम् ॥ ३-७०-४३ (१८६१९)
ततो गतज्वरो राजा नलोऽभूत्पृथिवीपतिः ।
विमुक्तः कलिना राजन्रूपमात्रवियोजितः ॥ ३-७०-४४ (१८६२०)

इति श्रीमन्महाभारते अरण्यपर्वणि नलोपाख्यानपर्वणि
सप्ततितमोऽध्यायः ॥ ७० ॥
Mahabharata - Vana Parva - Chapter Footnotes

३-७०-९ तत्रैकमधिकं शतमिति झ ।पाठः ॥
३-७०-१० पञ्चकोट्योऽथ पत्राणामिति झ ।पाठः ॥
३-७०-२६ अक्षहृदयज्ञं अक्षाणां अक्षाभिमानिदेवताया हृदयवद्वशीकरणार्थो मन्त्रः अक्षहृदयम् ।येन ज्ञातेन द्यूतेऽक्षा अनुकूला भवन्ति। संख्याने राशीकृतानां पत्रपुष्पफलधान्यादीना राश्यायामविस्तारोच्छ्रायाद्यालोचनेन पाटीगणितरीत्या झटिति तत्संख्याकथने ॥
३-७०-३० शापाग्निर्दमयन्तीनिशृष्टः स विषरूपः ॥
३-७०-३९ फलानि संख्याय ।अक्षविद्यासामर्थ्यात् राशेरायामादिकमनालोच्यैवेति भावः ॥
३-७०-४२ द्विजानिव पक्षिण इव ॥

---

वन-अध्यय०७१
॥ श्रीः ॥
३.७१. अध्यायः ७१

Mahabharata - Vana Parva - Chapter Topics
ऋतुपर्णे कुण्डिनपुरं प्रविष्टे तद्रथघोषश्रवणेन दमयन्त्या तत्सारथौ नलसंभावना ॥ १ ॥
ततस्तत्वजिज्ञासया नलंप्रति दूत्याः प्रस्थापनम् ॥ २ ॥

Mahabharata - Vana Parva - Chapter Text

३-७१-० (१८६२१)
बृहदश्व उवाच। ३-७१-०क्ष् (१९५५)
ततो विदर्भान्संप्राप्तं सायाह्ने सत्यविक्रमम् ।
ऋतुपर्णं जना राज्ञे भीमाय प्रत्यवेदयन् ॥ ३-७१-१ (१८६२२)
स भीमवचनाद्राजा कुण्डिनं प्राविशत्पुरम् ।
नादयन्रथघोषेण सर्वाः स विदिशो दिशः ॥ ३-७१-२ (१८६२३)
ततस्तं रथनिर्घोषं नलाश्वास्तत्र शुश्रुवुः ।
श्रुत्वा तु समहृष्यन्त पुरेव नलसन्निधौ ॥ ३-७१-३ (१८६२४)
दमयन्ती तु शुश्राव रथघोषं नलस्य तम् ।
यथा मेघस्य नदतो गम्भीरं जलदागमे ॥ ३-७१-४ (१८६२५)
परं विस्मयमापन्ना श्रुत्वा नादं महास्वनम् ।
नलेन संगृहीतेषु पुरेव नलवाजिषु ।
सदृशं रथनिर्घोषं मेने भैमी तथा हयाः ॥ ३-७१-५ (१८६२६)

प्रासादस्थाश्च शिखिनः शालास्थाश्चैव वारणाः ।
हयाश्च शुश्रुवुस्तस्य रथघोषं महीपतेः ॥ ३-७१-६ (१८६२७)
तच्छ्रुत्वा रथनिर्घोषं वारणाः शिखिनस्तथा ।
प्रवेदुरुन्मुखा राजन्दृष्ट्वेव जलदोदयम् ॥ ३-७१-७ (१८६२८)
दमयन्त्युवाच। ३-७१-८क्ष् (१९५६)
यथाऽसौ रथनिर्घोषः पूरयन्निव मेदिनीम् ।
ममाह्लादयते चेतो नल एव महीपतिः ॥ ३-७१-८ (१८६२९)
अद्य नन्द्राभवक्रं तं न पश्यामि नलं यदि ।
असंख्येयगुणं वीरं विनङ्क्ष्यामि न संशयः ॥ ३-७१-९ (१८६३०)
यदि वै तस्य वीरस्य हाह्वोर्नाद्याहमन्तरम् ।
प्रविशामि सुखस्पर्शं नभविष्याम्यसंशयम् ॥ ३-७१-१० (१८६३१)
यदि मां मेघनिर्घोषो नोपगच्छति नैषधः ।
अद्य चामीकरप्रख्यं प्रवेक्ष्यामि हुताशनम् ॥ ३-७१-११ (१८६३२)
यदि मां सिंहविक्रान्तो मत्तवारणविक्रमः ।
नाभिगच्छतिराजेन्द्रो विनङ्क्ष्यामि न संशयः ॥ ३-७१-१२ (१८६३३)
न स्मराम्यनृतं किंचिन्न स्मराम्यपकारताम् ।
न च पर्युषितं वाक्यं स्वैरेष्वपि महात्मनः ॥ ३-७१-१३ (१८६३४)
प्रभुः क्षमावान्वीरश्च दाता चाप्यधिको नृपैः ।
अहो नीचानुवर्ती च क्लीबवन्मम नैषध ॥ ३-७१-१४ (१८६३५)
गुणांस्तस्य स्मरन्त्या मे तत्पराया दिवानिशम् ।
हृदयं दीर्यत इदं शोकात्प्रियविनाकृतम् ॥ ३-७१-१५ (१८६३६)
एवं विलपमाना सा नष्टसंज्ञेव भारत ।
आरुरोह महद्वेश्म पुण्यश्लोकदिदृक्षया ॥ ३-७१-१६ (१८६३७)
ततो मध्यमकक्षायां ददर्श रथमास्थितम् ।
ऋतुपर्णं महीपालं सहवार्ष्णेयबाहुकम् ॥ ३-७१-१७ (१८६३८)
ततोऽवतीर्य वार्ष्णएयो बाहुकश्च रथोत्तमात् ।
हयांस्तानवमुच्याथ स्थापयामासतू रथम् ॥ ३-७१-१८ (१८६३९)
सोऽवतीर्य रथोपस्थादृतुपर्णो नराधिपः ।
उपतस्थे महाराजं भीमं भीमपराक्रमम् ॥ ३-७१-१९ (१८६४०)
तं भीमः प्रतिजग्राह पूजया परया मुदा ।
स तेन पूजितो राज्ञा ऋतुपर्णो नराधिपः ॥ ३-७१-२० (१८६४१)
स तत्र कुण्डिने रम्ये वसमानो महीपतिः ।
न च किंचित्तदाऽपश्यत्प्रेक्षमाणो मुहुर्मुहुः ।
स तु राज्ञा समागम्य विदर्भपतिना तदा ॥ ३-७१-२१ (१८६४२)
किं कार्यं स्वागतं तेऽस्तु राज्ञा पृष्टः स भारत ।
नाभिजज्ञे स नृपतिर्दुहित्रर्थे समागतम् ॥ ३-७१-२२ (१८६४३)

ऋतुपर्णोपि राजा स धीमान्सत्यपराक्रमः ।
राजानं राजपुत्रं वा न स्म पश्यति कंचन ॥ ३-७१-२३ (१८६४४)
नैव स्वयंवरकथां न च विप्रसमागमम् ।
ग्न चान्यं कंचिदारम्भं स्वयंवरविधिं प्रति' ॥ ३-७१-२४ (१८६४५)
ततो विगणयद्राजा मनसा कोसलाधिपः ।
आगतोस्मीत्युवाचैनं भवन्तमभिवादुकः ॥ ३-७१-२५ (१८६४६)
राजापि च स्मयन्भीमो मनसा समचिन्तयत् ।
अधिकं योजनशतं तस्यागमनकारणम् ।
ग्रामान्बहूनतिक्रम्य नाध्यगच्छद्यथातथम् ॥ ३-७१-२६ (१८६४७)
अल्पकार्यं विनिर्दिष्टं तस्यागमनकारणम् ।
पश्चादुदर्के ज्ञास्याप्रि कारणं यद्भविष्यति ॥ ३-७१-२७ (१८६४८)
नैतदेवं स नृपतिस्तं सत्कृत्य व्यसर्जयत् ।
विश्राम्यतामित्युवाच क्लान्तोसीति पुनःपुनः ॥ ३-७१-२८ (१८६४९)
स सत्कृतः प्रहृष्टात्मा प्रीतः प्रीतेन पार्थिवः ।
राजप्रेष्यैरनुगतो दिष्टं वेश्म समाविशत् ॥ ३-७१-२९ (१८६५०)
ऋतुपर्णे गते राजन्वार्ष्णेयसहिते नृपे ।
बाहुको रथमादाय रथशालामुपागमत् ॥ ३-७१-३० (१८६५१)
स मोचयित्वा तानश्वानुपचर्य च शास्त्रतः ।
स्वयं चैतान्समाश्वास्य रथोपस्थ उपाविशत् ॥ ३-७१-३१ (१८६५२)
दमयन्त्यपि शोकार्ता दृष्ट्वा भागस्वरिं नृपम् ।
सूतपुत्रं च वार्ष्णेयं बाहुकं च तथाविधम् ॥ ३-७१-३२ (१८६५३)
चिन्तयामास वैदर्भी कस्यैष रथनिःस्वनः ।
नलस्येव महानासीन्न च पश्यामि नैषधम् ॥ ३-७१-३३ (१८६५४)
वार्ष्णेयेन भवेन्नूनं विद्या सैवोपशिक्षिता ।
तेनाद्य रथनिर्घोषो नलस्येव महानभूत् ॥ ३-७१-३४ (१८६५५)
कआहोस्विदृतुपर्णोऽपि यथा राजा नलस्यथा ।
यथाऽयंरथनिर्घोषो नैषधस्येव लक्ष्यते ॥ ३-७१-३५ (१८६५६)
एवं सा तर्कयित्वा तु दमयन्ती विशांपते ।
दूतीं प्रस्थापयामास नैषधान्वेषणे शुभा ॥ ३-७१-३६ (१८६५७)

इति श्रीमन्महाभारते अरण्यपर्वणि नलोपाख्यानपर्वणि
एकसप्ततितमोऽध्यायः ॥ ७१ ॥

Mahabharata - Vana Parva - Chapter Footnotes

३-७१-३ नलाश्वाः विदर्भनगरे ये दमयन्त्याऽपत्याभ्यां सह प्रेषिताः ॥
३-७१-७ शिखिनो मयूराः ॥

३-७१-१३ पर्युषितं प्रतिज्ञातकालातिलङ्घि ॥
३-७१-२९ दिष्टं निर्दिष्टम् ॥

---

वन-अध्यय०७२
॥ श्रीः ॥
३.७२. अध्यायः ७२

Mahabharata - Vana Parva - Chapter Topics
दमयन्तीप्रेषितया केशिन्या बाहुकेन संभाष्य दमयन्त्यै
संभाषणकालिकबाहुकविकारादिनिवेदनम् ॥ १ ॥

Mahabharata - Vana Parva - Chapter Text

३-७२-० (१८६५८)
दमयन्त्युवाच। ३-७२-०क्ष् (१९५७)
गच्छ केशिनि जानीहि क एष रथवाहकः ।
उपविष्टो रथोपस्थे विकृतो ह्रस्वबाहुकः ॥ ३-७२-१ (१८६५९)
अभ्येत्य कुशलं भद्रे मृदुपूर्वंसमाहिता ।
पृच्छेथाः पुरुषे ह्येनं यथातत्त्वमनिन्दिते ॥ ३-७२-२ (१८६६०)
अत्र मे महती शङ्का भवेदेष नलो नृपः ।
यथाच मनसस्तुष्टिर्हृदयस्य च निर्वृतिः ॥ ३-७२-३ (१८६६१)
ब्रूयाश्चैनं कथान्ते त्वं पर्णादवचनं यथा ।
प्रतिवाक्यं च सुश्रोणि बुद्ध्येथास्त्वमनिन्दिते ॥ ३-७२-४ (१८६६२)
एवं समाहिता गत्वा दूती बाहुकमब्रवीत् ।
दमयन्त्यपि कल्याणी प्रासादस्थाऽनव्वैक्षत ॥ ३-७२-५ (१८६६३)
केशिन्युवाच। ३-७२-६क्ष् (१९५८)
स्वागतं ते मनुष्येन्द्र कुशलं ते ब्रवीम्यहम् ।
दमयन्त्या वचः साधु निबोध पुरुषर्षभ ॥ ३-७२-६ (१८६६४)
कदा वै प्रस्थिता यूयं किमर्थमिह चागताः ।
तत्त्वं ब्रूहि यथान्यायं वैदर्भी श्रोतुमिच्छति ॥ ३-७२-७ (१८६६५)
बाहुक उवाच। ३-७२-८क्ष् (१९५९)
श्रुतः स्वयंवरो राज्ञा कोसलेन महात्मना ।
द्वितीयो दमयन्त्या वै भविता श्व इति द्विजात् ॥ ३-७२-८ (१८६६६)
श्रुत्वैतत्प्रस्थितो राजा शतयोजनयायिभिः ।
हयैर्वातजवैर्मुख्यैरहमस्य च सारथिः ॥ ३-७२-९ (१८६६७)
केशिन्युवाच। ३-७२-१०क्ष् (१९६०)
अथ योसौ तृतीयो वः स कुतः कस्य वा पुनः ।

त्वं च कस्य कथं चेदंत्वयि कर्म समाहितम् ॥ ३-७२-१० (१८६६८)
बाहुक उवाच। ३-७२-११क्ष् (१९६१)
पुण्यश्लोकस्य वै सूतो वार्ष्णेय इति विश्रुतः ।
स नले विद्रुते भद्रेभागस्वरिमुपस्थितः ॥ ३-७२-११ (१८६६९)
अहमप्यश्वकुशलः सूतत्वे च प्रतिष्ठितः ।
ऋतुपर्णेन सारथ्ये भोजने च वृतः स्वयम् ॥ ३-७२-१२ (१८६७०)
केशिन्युवाच। ३-७२-१३क्ष् (१९६२)
अथ जानाति वार्ष्णेयः क्वनु राजा नलो गतः ।
कथं च त्वयि वा तेन कथितं स्यात्तु बाहुक ॥ ३-७२-१३ (१८६७१)
बाहुक उवाच। ३-७२-१४क्ष् (१९६३)
इहैव पुत्रौ निक्षिप्य नलस्य प्रियदर्शनौ ।
गतस्ततो यथाकामं नैष जानाति नैषधम् ॥ ३-७२-१४ (१८६७२)
न चान्यः पुरुषः कश्चिन्नलं वेत्ति यशस्विनि ।
गूढश्चरति लोकेऽस्मिन्नष्टरूपो महीपतिः ॥ ३-७२-१५ (१८६७३)
आत्मैव तु नलं वेद या चास्य तदनन्तरा ।
न हि वै स्वानि लिङ्गानि नलं शंसन्ति कर्हिचित् ॥ ३-७२-१६ (१८६७४)
केशिन्युवाच। ३-७२-१७क्ष् (१९६४)
योसावयोध्यां प्रथमं गतोसौ ब्राह्मणस्तदा ।
इमानि नारीवाक्यानि कथयानः पुनःपुनः ॥ ३-७२-१७ (१८६७५)
क्वनु त्वं कितव च्छित्त्वा वस्त्रार्धं प्रस्थितो मम ।
उत्सृज्य विपिने सुप्तामनुरक्तां प्रियां प्रिय ॥ ३-७२-१८ (१८६७६)
सा वै यथा समादिष्टा तथाऽऽस्ते त्वत्प्रतीक्षिणी ।
दह्यमाना दिवारात्रौ वस्त्रार्धेनाभिसंवृता ॥ ३-७२-१९ (१८६७७)
तस्या रुदनत्याः सततं तेन दुःखेन पार्थिव ।
प्रसादं कुरु मे वीर प्रतिवाक्यं वदस्व च ॥ ३-७२-२० (१८६७८)
तस्यास्तत्प्रियमाख्यानं प्रवदस्व महामते ।
तदेव वाक्यं वैदर्भी श्रोतुमिच्छन्त्यनिन्दिता ॥ ३-७२-२१ (१८६७९)
एतच्छ्रुत्वा प्रतिवचस्तस्य दत्तं त्वया किल ।
यत्पुरा तत्पुनस्त्वत्तो वैदर्भी श्रोतुमिच्छति ॥ ३-७२-२२ (१८६८०)
बृहदश्व उवाच। ३-७२-२३क्ष् (१९६५)
एवमुक्तस्य केशिन्या नलस्य कुरुनन्दन ।
हृदयं व्यथितं चासीदश्रुपूर्णे च लोचने ॥ ३-७२-२३ (१८६८१)
स निग्राह्यात्मनो दुःखं दह्यमानो महीपतिः ।
बाष्पसंदिग्धया वाचा पुनरेवेदमब्रवीत् ॥ ३-७२-२४ (१८६८२)
वैषम्यमपि संप्राप्ता गोपायन्ति कुलस्त्रियः ।
आत्मानमात्मना सत्यो जितः स्वर्गो न संशयः ॥ ३-७२-२५ (१८६८३)

रहिता भर्तृभिश्चापि न क्रुध्यन्ति कदाचन ।
प्राणांश्चारित्रकवचान्धारयन्ति वरस्त्रियः ॥ ३-७२-२६ (१८६८४)
विषमस्थेन मूढेन परिभ्रष्टसुखेन च ।
यत्सा तेन परित्यक्ता तत्रन क्रोद्धुमर्हति ॥ ३-७२-२७ (१८६८५)
प्राणयात्रां परिप्रेप्सोः शकुनैर्हृतवाससः ।
आधिभिर्दह्यमानस्य श्यामा न क्रोद्धुमर्हति ॥ ३-७२-२८ (१८६८६)
सत्कृताऽसत्कृता वाऽपि पतिं दृष्ट्वा तथाविधम् ।
राज्यभ्रष्टं श्रिया हीनं क्षिधितं व्यसनाप्लुतम् ॥ ३-७२-२९ (१८६८७)
एवं ब्रुवाणस्तद्वाक्यं नलः परमदुर्मनाः ।
न बाष्पमशकत्सोढुं प्ररुरोद च भारत ॥ ३-७२-३० (१८६८८)
ततः सा केशिनी गत्वा दमयन्त्यै न्यवेदयत् ।
तत्सर्वं कथितं चैव विकारं तस्य चैव तम् ॥ ३-७२-३१ (१८६८९)

इति श्रीमन्महाभारते अरण्यपर्वणि नलोपाख्यानपर्वणि
द्विसप्ततितमोऽध्यायः ॥ ७२ ॥

---

वन-अध्यय०७३
॥ श्रीः ॥
३.७३. अध्यायः ७३

Mahabharata - Vana Parva - Chapter Topics
केशिन्या बाहुकस्य जलाग्न्युत्पादनाद्यद्भुतकर्मनिवेदितया दमयन्त्या पुनःपरीक्षणाय तंप्रति कन्यापुत्रयोः प्रेपणम् ॥ १ ॥
बाहुकेन सबाष्पं पुत्रयोः परिरम्भणम् । केशिनींप्रति स्वकर्मणः कारणान्तरकथनेनापह्नवश्च ॥ २ ॥

Mahabharata - Vana Parva - Chapter Text

३-७३-० (१८६९०)
बृहदश्व उवाच। ३-७३-०क्ष् (१९६६)
केशिन्यास्तद्वचः श्रुत्वा दमयन्ती विशांपते ।
शङ्कमाना नलं तं वै केशिनीमिदमब्रवीत् ॥ ३-७३-१ (१८६९१)
गच्छ केशिनि भूयस्त्वं परीक्षां कुरु बाहुके ।
अब्रुवाणा समीपस्था चरितान्यस्य लक्षय ॥ ३-७३-२ (१८६९२)
यदा च किंचित्कुर्यात्स कारणं तत्र भामिनि ।
तत्रसंचेष्टमानस्य संलक्षेथा विचेष्टितम् ॥ ३-७३-३ (१८६९३)
न चास्य प्रतिबन्धेन देयोऽग्निरपि केशिनि ।

याचते न जलं देयं सकृच्चात्वरमाणया ।
एतत्सर्वं समीक्ष्यत्वं चरितं मे निवेदय ॥ ३-७३-४ (१८६९४)
निमित्तं यत्त्वया दृष्टं बाहुके दैवमानुषम् ।
यच्चान्यदपि पश्येथास्तच्चाख्येयं त्वया मम ॥ ३-७३-५ (१८६९५)
दमयन्त्यैवमुक्ता सा जगामाथ च केशिनी ।
निशाम्याथ हयज्ञस्य लिङ्गानि पुनरागमत् ॥ ३-७३-६ (१८६९६)
सा तत्सर्वं यथावृत्तं दमयन्त्यै न्यवेदयत् ।
निमित्तं यत्तया दृष्टं बाहुके दिव्यमानुषम् ॥ ३-७३-७ (१८६९७)
केशिन्युवाच। ३-७३-८क्ष् (१९६७)
दृढं शुच्यपदानोसौ न मया मानुषः क्वचित् ।
दृष्टपूर्वः श्रुतो वाऽपि दमयन्ति तथाविधः ॥ ३-७३-८ (१८६९८)
ह्रस्वमासाद्य तु द्वारं नासौ विनमते क्वचित् ।
तं तु दृष्ट्वा यथासङ्गमुत्सर्पति यथासुखम् ।
संकटेऽप्यस्य सुमहद्विवरं जायतेऽधिकम् ॥ ३-७३-९ (१८६९९)
ऋतुपर्णस्य चार्थाय भोजनीयमनेकशः ।
ऋतुपर्णस्य चार्थाय भोजनीयमनेकशः ।
प्रेषितं तत्रराज्ञा तु मांसं बहु च पाशवम् ॥ ३-७३-१० (१८७००)
तस्य प्रक्षालनार्थाय कुम्भास्तत्रोपकल्पिताः ।
ते तेनावेक्षिताः कुम्भाः पूर्णा एवाभवंस्ततः ॥ ३-७३-११ (१८७०१)
ततः प्रक्षालनं कृत्वा समधिश्रित्य बाहुकः ।
तृणमुष्टिं समादाय सवितुस्तं समादधत् ॥ ३-७३-१२ (१८७०२)
अथ प्रज्वलितस्तत्र सहसा हव्यवाहनः ।
तदद्भुततमं दृष्ट्वा विस्मिताऽमिहागता ॥ ३-७३-१३ (१८७०३)
अन्यच्च तस्मिन्सुमहदाश्चर्यं लक्षितं मया ।
यदग्निमपि संस्पृश्य नैवासौ दह्यते शुभे ॥ ३-७३-१४ (१८७०४)
छन्देन चोदकं तस्य वहत्यावर्जितं द्रुतम् ।
अतीव चान्यत्सुमहदाश्चर्यं दृष्टवत्यहम् ॥ ३-७३-१५ (१८७०५)
यत्स पुष्पाण्युपादाय हस्ताभ्यां ममृदे शनैः ।
मृद्यमानानि पाणिभ्यां तेन पुष्पाणि नान्यथा ।
भूय एव सुगन्धीनि हृपितानि भवन्ति हि ॥ ३-७३-१६ (१८७०६)
एतान्यद्भुतकल्पानि दृष्ट्वाऽहं भृशविस्मिता ।
चेष्टितानि विशालाक्षि बाहुकस्य समीपतः ॥ ३-७३-१७ (१८७०७)
बृहदश्व उवाच। ३-७३-१८क्ष् (१९६८)
दमयन्ती तु तच्छ्रुत्वा पुण्यश्लोकस्य चेष्टितम् ।
अमन्यत नलं प्राप्तं कर्मचेष्टाभिसूचितम् ॥ ३-७३-१८ (१८७०८)
सा शङ्कमाना भर्तारं नलं बाहुकरूपिणम् ।

केशिनीं श्लक्ष्णया वाचा रुदन्ती पुनरब्रवीत् ॥ ३-७३-१९ (१८७०९)
पुनर्गच्छ प्रमत्तस्य बाहुकस्योपसंस्कृतम् ।
महानसाच्छ्रितं मांसमानयस्वेह भामिनि ॥ ३-७३-२० (१८७१०)
सा दृष्ट्वाबाहुके व्यग्रे तन्मांसमपकृष्य च ।
अत्युष्णमेव त्वरिता तत्क्षणात्प्रियकारिणी ।
दमयन्त्यै ततः प्रादात्केशिनी कुरुनन्दन ॥ ३-७३-२१ (१८७११)
साऽशिता नलसिद्धस् मांसस्य बहुशः पुरा ।
प्राश्य मत्वा नलं सूतं प्राक्रोशद्भृशदुःखिता ॥ ३-७३-२२ (१८७१२)
वैक्लव्यं परमं गत्वाप्रक्षाल्य च मुखं ततः ।
मिथुनं प्रेषयामास केशिन्या सह भारत् ॥ ३-७३-२३ (१८७१३)
इन्द्रसेनां सह भ्रात्रा समभिज्ञाय बाहुकः ।
अभिद्रुत्य तदा राजा परिष्वज्याङ्कमानयत् ॥ ३-७३-२४ (१८७१४)
बाहुकस्तु समासाद्य सुतौ सुरसुतोपमौ ।
भृशं दुःखपरीतात्मा सुस्वरं प्ररुरोद ह ॥ ३-७३-२५ (१८७१५)
नैषधो दर्शयित्वा तु विकारमसकृत्तदा ।
उत्सृज्य सहसा पुत्रौ केशिनीमिदमब्रवीत् ॥ ३-७३-२६ (१८७१६)
इदं च मदृशं भद्रे मिथुनं मम पुत्रयोः ।
अतो दृष्ट्वैव सहसा बाष्पमुत्सृष्टवानहम् ॥ ३-७३-२७ (१८७१७)
बहुशः संपतन्तीं त्वां जनः शङ्केत दोषतः ।
वयंच देशातिथयो गच्छ भद्रे यथासुखम् ॥ ३-७३-२८ (१८७१८)

इति श्रीमन्महाभारते अरण्यपर्वणि नलोपाख्यानपर्वणि
त्रिसप्ततितमोऽध्यायः ॥ ७३ ॥
Mahabharata - Vana Parva - Chapter Footnotes

३-७३-९ द्वारं ह्रस्वमपि उत्सर्पति दीर्घं भवति ।संकटे संकुचिते ॥
३-७३-१० पाशवं पशुसंबन्धि ॥
३-७३-१२ सवितुः सकाशात् ।समादधत् उद्दीपितवान्।समादाय
ह्याविध्यैनमिति झ।पाठः ॥
३-७३-१८ कर्म पाकादि ।चेष्टा भूतजयादि ॥
३-७३-२२ बहुशः बहुवारम् ॥
३-७३-२८ संपतन्तीं आयान्तीम् ॥

---

वन-अध्यय०७४
॥ श्रीः ॥
३.७४. अध्यायः ७४

Mahabharata - Vana Parva - Chapter Topics

दमयन्त्या बाहुकस्य केशिन्या स्वगृहानयनम् ॥ १ ॥
बाहुकदमयन्त्योः संवादः ॥ २ ॥
बाहुकेन स्वस्य नलत्वोत्कीर्तनपूर्वकं कर्कोटकानुस्मरणेन तद्दत्तवस्त्रद्वयपरिधाने तस्य निजरूपप्रादुर्भावः ॥ ३ ॥
ततो नलंप्रत्यभिजानन्त्या दमयन्त्या तत्परिरम्भणम् ॥ ४ ॥

Mahabharata - Vana Parva - Chapter Text

३-७४-० (१८७१९)
बृहदश्व उवाच। ३-७४-०क्ष् (१९६९)
सर्वं विकारं दृष्ट्वा तु पुण्यश्लोकस्य धीमतः ।
आगत्य केशिनी क्षिप्रं दमयन्त्यै न्यवेदयत् ॥ ३-७४-१ (१८७२०)
दमयन्ती ततो भूयः प्रेषयामास केशिनीम् ।
मातुः सकाशं दुःखार्ता नलशङ्कासमुत्सुका ॥ ३-७४-२ (१८७२१)
परीक्षितो मे बहुशो बाहुको नलशङ्कया ।
रूपे मे संशयस्त्वेकः स्वयमिच्छमि वेदितुम् ॥ ३-७४-३ (१८७२२)
स वा प्रवेश्यतां मातर्मां वाऽनुज्ञातुमर्हसि ।
विदितं वाऽथवाऽज्ञातं पितुर्मे संविधीयताम् ॥ ३-७४-४ (१८७२३)
एवमुक्ता तु वैदर्भ्या सा देवी भीममब्रवीत् ।
दुहितुस्तमभिप्रायमन्वजानात्स पार्थिवः ॥ ३-७४-५ (१८७२४)
सा चै पित्राऽभ्यनुज्ञाता मात्रा च भरतर्षभ ।
ग्तयोर्नियोगात्कौरव्य केशिनीमिदमब्रवीत्' ॥ ३-७४-६ (१८७२५)
गच्छ केशिनि शीघ्रं त्वंबाहुकं पितृशासनात् ।
आनयस्व यथा माता त्वं तथा कुरु मे प्रियम् ॥ ३-७४-७ (१८७२६)
गत्वा तु केशिनी शिघ्रं बाहुकं वाक्यमब्रवीत् ।
भीमस्य शासनात्सूतागताहं विद्धि बाहुक ॥ ३-७४-८ (१८७२७)
प्रविश्यतां राजवेश्म इत्युक्तो भरतर्षभ ।
बाहुकस्तु चिरं ध्यात्वा केशिन्या सह भारत ।
प्रविवेश महाबाहुर्दमयन्तीनिवेशनम्' ॥ ३-७४-९ (१८७२८)
नलं प्रवेशयामास यत्रतस्याः प्रतिश्रयः ॥ ३-७४-१० (१८७२९)
तां स्म दृष्ट्वैव सहसा दमयन्तीं नलो नृपः ।
आविष्टः शोकदुःखाभ्यां बभूवाश्रुपरिप्लुतः ॥ ३-७४-११ (१८७३०)
तं तु दृष्ट्वातथायुक्तं दमयन्ती नलं तदा ।
तीव्रशोकसमाविष्टा बभूव वरवर्णिनी ॥ ३-७४-१२ (१८७३१)
ततः काषायवसना जटिला मलपङ्किनी ।

दमयन्ती महाराज बाहुकं वाक्यमब्रवीत् ॥ ३-७४-१३ (१८७३२)
पूर्वं दृष्टस्त्वया कश्चिद्धर्मज्ञो नाम बाहुक ।
सुप्तामुत्सृज्यविपिने गतो यः पुरुषः स्त्रियम् ॥ ३-७४-१४ (१८७३३)
अनागसं प्रियां भार्यां विजने श्रममोहिताम् ।
अपहाय तु को गच्चेत्पुण्यश्लोकमृतेनलम् ॥ ३-७४-१५ (१८७३४)
किमु तस्य मया बाल्यादपराद्धं महीपतेः ।
यो मामुत्सृज्य विपिने गतवान्निद्रयाऽर्दिताम् ॥ ३-७४-१६ (१८७३५)
साक्षाद्देवानपाहाय वृतो यः स पुरा मया ।
अनुव्रतामभिमतां पुत्रिणीं त्यक्तवान्कथम् ॥ ३-७४-१७ (१८७३६)
अग्नौ पाणिगृहीता च हंसानां वचने स्थिताम् ।
भरिष्यामीति सत्यं तु प्रतिश्रुत्य क्व तद्गतम् ॥ ३-७४-१८ (१८७३७)
बृहदश्व उवाच। ३-७४-१९क्ष् (१९७०)
दमयन्त्या ब्रुवन्त्यास्तु सर्वमेतदरिदम ।
शोकजं वारिनेत्राभ्यामसुखं प्रास्रवद्बहु ॥ ३-७४-१९ (१८७३८)
अतीव कृष्णताराभ्यां रक्तान्ताभ्यां जलंतु तत् ।
परिस्रवन्नलो राजा शोकार्तइदमब्रवीत् ॥ ३-७४-२० (१८७३९)
ग्नलोऽहं विपुलश्रोणि त्वामुत्सृज्य यतो गतः ।
आविष्टः कलिना भद्रे तेन मोहवशं गतः ॥' ३-७४-२१ (१८७४०)
मम राज्यं प्रनष्टं यन्नाहं तत्कृतवान्स्वयम् ।
कलिना तत्कृतं भीरु यच्च त्वामहमत्यजम् ॥ ३-७४-२२ (१८७४१)
यत्त्वया धर्मकृच्छ्रे तु शापेनाभिहतः पुरा ।
वनस्थया दुःखितया शोचन्त्या मांदिवानिशम् ॥ ३-७४-२३ (१८७४२)
स मच्छरीरे त्वच्छापाद्दह्यमानोऽवसत्कलिः ।
त्वच्छापदग्धः सततं सोऽग्नावग्निरिवाहितः ॥ ३-७४-२४ (१८७४३)
मम च व्यवसायेन तपसा चैव निर्जितः ।
दुःखस्यान्तेन चानेन भवितव्यं हि नौ शुभे ॥ ३-७४-२५ (१८७४४)
विमुच्य मां गतः पापस्ततोऽहमिह चागतः ।
त्वदर्थं विपुलश्रोणि न हि मेऽन्यत्प्रयोजनम् ॥ ३-७४-२६ (१८७४५)
कथं नु नारी भर्तारमनुरक्तमनुव्रतम् ।
उत्सृज्य वरयेदन्यं यथा त्वं भीरु कर्हिचित् ॥ ३-७४-२७ (१८७४६)
दूताश्चरन्ति पृथिवीं कृत्स्नां नृपतिशासनात् ।
भैमी किल स्म भर्तारं द्वितीयं वरयिष्यति ॥ ३-७४-२८ (१८७४७)
स्वैरवृत्ता यथाकाममनुरूपमिवात्मनः ।
श्रुत्वैव चैवं त्वरितो भागस्वरिरुपस्थितः ॥ ३-७४-२९ (१८७४८)
दमयन्ती तु तच्छ्रुत्वा नलस्य परिदेवितम् ।
प्राञ्जलिर्वेपमाना च भीता वचनमब्रवीत् ॥ ३-७४-३० (१८७४९)

न मामर्हसि कल्याण पापेन परिशङ्कितुम् ।
मया हि देवानुत्सृज्य वृतस्त्वं निषधाधिप ॥ ३-७४-३१ (१८७५०)
तवाभिगमनार्थं तु सर्वतो ब्राह्मणा गताः ।
वाक्यानि मम गाथाभिर्गायमाना दिशो दश ॥ ३-७४-३२ (१८७५१)
ततस्त्वां ब्राह्मणो विद्वान्पर्णादो नाम पार्थिव ।
अभ्यगच्छत्कोसलायामृतुपर्णनिवेशने ॥ ३-७४-३३ (१८७५२)
तेन वाक्ये कृतेसम्यक्प्रतिवाक्ये तथा हृते ।
उपायोऽयंमया दृष्टो नैषधानयने तव ॥ ३-७४-३४ (१८७५३)
त्वामृते नहि लोकेऽन्य एकाह्ना पृथिवीपते ।
समर्थो योजनशतं गन्तुमश्वैर्नराधिप ॥ ३-७४-३५ (१८७५४)
ग्तथापि मां महीपाल भजेतां चरणौ तव।'
स्पृशेयं तेन सत्येन पादावेतौ महीपते ।
यथा नासत्कृतं किंचिन्मनसाऽपि चराम्यहम् ॥ ३-७४-३६ (१८७५५)
अयं चरति लोकेऽस्मिन्भूतसाक्षी सदागतिः ।
एष मे मुञ्चतु प्राणान्यदि पापं चराम्यहम् ॥ ३-७४-३७ (१८७५६)
यथा चरति तिग्मांशुः परितो भुवनं सदा ।
स मुञ्चतु मम प्राणान्यदि पापं चराम्यहम् ॥ ३-७४-३८ (१८७५७)
चन्द्रमाः सर्वभूतानामन्तश्चरति साक्षिवत् ।
स मुञ्चतु मम प्राणान्यदि पापं चराम्यहम् ॥ ३-७४-३९ (१८७५८)
एते देवास्त्रयः कृत्स्नं त्रैलोक्यं धारयन्ति वै ।
विब्रुवन्तु यथा सत्यमेतद्देवास्त्यजन्तु माम् ॥ ३-७४-४० (१८७५९)
एवमुक्ते ततो वायुरन्तरिक्षादभाषत ।
नैषा कृतवती पापं नल सत्यं ब्रवीमि ते ॥ ३-७४-४१ (१८७६०)
राजञ्शीलनिधिः स्फीतो दमयन्त्या सुरक्षितः ।
साक्षिणो रक्षिणश्चास्या वयं त्रीन्परिवत्सरान् ॥ ३-७४-४२ (१८७६१)
उपायो विहितश्चायं त्वदर्थमतुलोऽनया ।
न ह्येकाह्ना शतं गन्ता त्वामृतेऽन्यः पुमानिह ॥ ३-७४-४३ (१८७६२)
उपपन्ना त्वया भैमी त्वं च भैम्या महीपते ।
नात्र शङ्का त्वया कार्या संगच्छ सह भार्यया ॥ ३-७४-४४ (१८७६३)
तथा ब्रुवति वायौ तु पुष्पवृष्टिः पपात ह ।
देवदुन्दुभयो नेदुर्ववौ च पवनः शिवः ॥ ३-७४-४५ (१८७६४)
तदद्भुतमयं दृष्ट्वा नलो राजाऽथ भारत ।
दमयन्त्यां विशङ्कां तामुपाकर्षदरिंदमः ॥ ३-७४-४६ (१८७६५)
ततस्तद्वस्त्रमरजः प्रावृणोद्वसुधाधिपः ।
संस्मृत्य नागराजं तं ततो लेभे स्वकं वपुः ॥ ३-७४-४७ (१८७६६)
स्वरूपिणं तु भर्तारं दृष्ट्वा भीमसुता तदा ।

प्राक्रोशदुच्चैरालिङ्ग्य पुण्यश्लोकमनिन्दिता ॥ ३-७४-४८ (१८७६७)
भैमीमपि नलो राजा भ्राजमानो यथा पुरा ।
सस्वजे स्वसुतौ चापि यथावत्प्रत्यनन्दत ॥ ३-७४-४९ (१८७६८)
ततः स्वोरसि विन्यस्य वक्त्रं तस्य शुभानना ।
परीता तेन दुःखेन निशश्वासायतेक्षणा ॥ ३-७४-५० (१८७६९)
तथैव मलदिग्धाङ्गीं परिष्वज्य शुचिस्मिताम् ।
सुचिरं पुरुषव्याघ्रस्तस्थौ शोकपरिप्लुतः ॥ ३-७४-५१ (१८७७०)
ततः सर्वं यथावृत्तं दमयन्त्या नलस्य च ।
भीमायाकथयत्प्रीत्या वैदर्भ्या जननी नृप ॥ ३-७४-५२ (१८७७१)
ततोऽब्रवीन्महाराजः कृतशौचमहंनलम् ।
दमयन्त्या सहोपेतं कल्ये द्रष्टा सुखोषितम् ॥ ३-७४-५३ (१८७७२)
ततस्तौ सहितौ रात्रिं कथयन्तौ पुरातनम् ।
वने विचरितं सर्वमूषतुर्मुदितौ नृप ॥ ३-७४-५४ (१८७७३)
गृहे भीमस्य नृपतेः परस्परसुखैषिणौ ।
वसेतां हृष्टसंकल्पौ वैदर्भी च नलश् ह ॥ ३-७४-५५ (१८७७४)
स चतुर्थे ततो वर्षे संगम्य सह भार्यया ।
सर्वकामैः सुसिद्धार्थो लब्धवान्परमां मुदम् ॥ ३-७४-५६ (१८७७५)
दमयन्त्यपि भर्तारमासाद्याप्यायिता भृशम् ।
अर्धसंजातसस्येव तोयं प्राप्य वसुंधरा ॥ ३-७४-५७ (१८७७६)
सैवं समेत्य व्यपनीय तन्द्रां
शान्तज्वरा हर्षविवृद्धसत्त्वा ।
रराज भैमी समवाप्तकामा
शीतांशुना रात्रिरिवोदितेन ॥ ३-७४-५८ (१८७७७)
॥ इतिश्रीमन्महाभारते अरण्यपर्वणि नलोपाख्यानपर्वणि
चतुःसप्ततितमोऽध्यायः ॥ ७४ ॥
Mahabharata - Vana Parva - Chapter Footnotes

३-७४-१० प्रतिश्रयः गृहम् ॥
३-७४-१६ किंनु तस्य मया चीर्णमपराधमिति ध ।पाटः ॥
३-७४-१८ अग्नौ पाणि गृहीत्वातु देवानामप्रतस्तथेति झ ।पाठः ॥
३-७४-३३ त्वां दृष्टवान्कोसलेष्वति ध ।पाठः ॥
३-७४-३७ सदागतिर्वायुः ॥
३-७४-३९ चन्द्रमाश्चित्ताभिमानिनी देवता ॥
३-७४-५३ कल्ये प्रभाते ।कृतार्थं तमहं नलमिति क।ध।पाठः ॥

---

वन-अध्यय०७५

॥ श्रीः ॥

३.७५. अध्यायः ७५

Mahabharata - Vana Parva - Chapter Topics

परेद्युः प्रभाते भीमराजेन स्नातालंकृतयोर्नलदमयन्त्योर्दर्शनम् ॥ १ ॥
ऋतुपर्णेन नलं क्षमापयित्वा ततोऽश्वविद्यापरिग्रहणपूर्वकं
स्वपुरंप्रति गमनम् ॥ २ ॥

Mahabharata - Vana Parva - Chapter Text

३-७५-० (१८७७८)
बृहदश्व उवाच। ३-७५-०क्ष् (१९७१)
अथ तां व्युषितो रात्रिं नलो राजा स्वलंकृतः ।
वैदर्भ्या सहितः काल्यं ददर्श वसुधाधिपम् ॥ ३-७५-१ (१८७७९)
ततोऽभिवादयामास प्रयतः श्वशुरं नलः ।
ततो नु दमयन्ती च ववन्दे पितरं शुभा ॥ ३-७५-२ (१८७८०)
तं भीमः प्रतिजग्राह पुत्रवत्परया मुदा ।
यथार्हं पूजयित्वा च समाश्वासयत प्रभुः ॥ ३-७५-३ (१८७८१)
नलेन सहितां तत्रदमयन्तीं पतिव्रताम् ।
ग्अनुजग्राह महता सत्कारेण क्षितीश्वरः' ॥ ३-७५-४ (१८७८२)
तामर्हणां नलो राजा प्रतिगृह्य यथाविधि ।
परिचर्यां स्वकां तस्मै यथावत्प्रत्यवेदयत् ॥ ३-७५-५ (१८७८३)
ततो बभूव नमरे सुमहान्हर्षजः स्वनः ।
जनस्य संप्रहृष्टस्य नलं दृष्ट्वा तथाऽऽगतम् ॥ ३-७५-६ (१८७८४)
अशोभयच्च नगरीं पताकाध्वजमालिनीम् ।
सिक्ताः सुमृष्टपुष्पाढ्या राजमार्गाः स्वलंकृताः ॥ ३-७५-७ (१८७८५)
द्वारिद्वारि च पौराणां पुष्पभङ्गः प्रकल्पितः ।
अर्चितानि च सर्वाणि देवतायतनानि च ॥ ३-७५-८ (१८७८६)
ऋतुपर्णोऽपिशुश्राव बाहुकच्छद्मिनं नलम् ।
दमयन्त्या समायुक्तं जहृषे च नराधिपः ॥ ३-७५-९ (१८७८७)
तमानाय्य नलं राजा क्षमयामास पार्थिवः ।
स च तं क्षमयामास हेतुभिर्बुद्धिसंमितः ॥ ३-७५-१० (१८७८८)
स सत्कृतोमहीपालो नैषधं विस्मिताननः ।
दिष्ट्या समेतो दारैः स्वैर्भवानित्यभ्यनन्दत ॥ ३-७५-११ (१८७८९)
कच्चित्तु नापराधं ते कृतवानस्मि नैषध ।
अज्ञातवासे वसतो मद्गृहेवसुधाधिप ॥ ३-७५-१२ (१८७९०)

यदि वाऽबुद्धिपूर्वाणि यदि बुद्ध्याऽपि कानिचित् ।
मया कृतान्यकार्याणि तानि त्वं क्षन्तुमर्हसि ॥ ३-७५-१३ (१८७९१)
नल उवाच। ३-७५-१४क्ष् (१९७२)
न मेऽपराधं कृतवांस्त्वं स्वल्पमपि पार्थिव ।
कृतेऽपि च न मे कोपः क्षन्तव्यं हि मया तव ॥ ३-७५-१४ (१८७९२)
पूर्वं ह्यापि सखा मेऽसि संबन्धी च जनाधिप ।
अत ऊर्ध्वं तु भूयस्त्वं प्रीतिमाहर्तुमर्हसि ॥ ३-७५-१५ (१८७९३)
सर्वकामैः सुविहितैः सुखमस्म्युषितस्त्वयि ।
न तथा स्वगृहेराजन्यथा तव गृहे सदा ॥ ३-७५-१६ (१८७९४)
इदं चैव हयज्ञानं त्वदीयं मयि तिष्ठति ।
तदुपाकर्तुमिच्छामि मन्यसे यदि पार्थिव ॥ ३-७५-१७ (१८७९५)
एवमुक्त्वा ददौ विद्यामृतुपर्णाय नैषधः ।
स च तां प्रतिजग्राह विधिदृष्टेन क्रमणा ॥ ३-७५-१८ (१८७९६)
गृहीत्वा चाश्वहृदयं प्रीतो भागस्वरिर्नृप ।
निषधाधिपतेश्चापि दत्ताऽक्षहृदयं नृपः ।
सूतमन्यमुपादाय ययौ स्वपुरमेव ह ॥ ३-७५-१९ (१८७९७)
ॠतुपर्णे गते राजन्नलो राजा विशांपते ।
नगरे कुण्डिने कालं नातिदीर्गमिवावसत् ॥ ३-७५-२० (१८७९८)

इति श्रीमन्महाभारते अरण्यपर्वयणि नलोपाख्यानपर्वणि
पञ्चसप्ततितमोऽध्यायः ॥ ७५ ॥
Mahabharata - Vana Parva - Chapter Footnotes

३-७५-६ जनाश्च सर्वे संहृष्टा राजा चोत्सवमाचरदिति ध ।पाठः ॥
३-७५-८ पुष्पभङ्गः पुष्पसंमर्दः ॥
३-७५-१७ उपाकर्तुं दातुम् ॥

---

वन-अध्यय०७६
॥ श्रीः ॥
३.७६. अध्यायः ७६

Mahabharata - Vana Parva - Chapter Topics
नलेन पुनः स्वपुरंप्रत्यागमनम् ॥ १ ॥
तथा पुनर्द्यूतेन पुष्रं पराजित्य तस्य तत्पुरं प्रतियापनम् ॥ २ ॥

Mahabharata - Vana Parva - Chapter Text

३-७६-० (१८७९९)
बृहदश्व उवाच। ३-७६-०क्ष् (१९७३)
स मासमुष्य कौन्तेय भीममामन्त्र्य नैषधः ।
पुरादल्पपरीवारो जगाम निषधान्प्रति ॥ ३-७६-१ (१८८००)
रथेनैकेन शुभ्रेण दन्तिभिः परिषोडशै ।
पञ्चाशद्भिर्हयैश्चैव षट्शतैश्च पदातिभिः ॥ ३-७६-२ (१८८०१)
स कम्पयन्निव महीं त्वरमाणो महापुरीम् ।
प्रविवेशाथ संरब्धस्तरसैव महामनाः ॥ ३-७६-३ (१८८०२)
ततः पुष्करमासाद्य वीरसेनसुतो नलः ।
उवाच दीव्याव पुनर्बहुवित्तं मयाऽर्जितम् ॥ ३-७६-४ (१८८०३)
दमयन्ती च यच्चान्यन्मम किंचन विद्यते ।
एष वै मम संन्यासस्तव राज्यंतु पुष्कर ॥ ३-७६-५ (१८८०४)
पुनः प्रवर्ततां द्यूतमिति मे निश्चिता मतिः ।
एकपाणेन भद्रं ते प्राणयोश्च पणावहे ॥ ३-७६-६ (१८८०५)
जित्वा परस्वमाहृत् राज्यंवा यदि वा वसु ।
प्रतिपाणः प्रदातव्यः प्राणो हि पणमुच्यते ॥ ३-७६-७ (१८८०६)
न चेद्वाञ्छसि तद्द्यूतं युद्धद्यूतं प्रवर्तताम् ।
द्वैरथेनास्तु वै शान्तिस्तव वा मम वा नृप ॥ ३-७६-८ (१८८०७)
वंशभोज्यमिदं राज्यमर्थितव्यं यथा तथा ।
येनकेनाप्युपायेन वृद्धानामिति शासनम् ॥ ३-७६-९ (१८८०८)
द्वयोरेकतरे बुद्धिः क्रियतामद्य पुष्कर ।
कैतवेनाक्षवत्यां वा युद्धे वा नाम्यतां धनुः ॥ ३-७६-१० (१८८०९)
नैषधेनैवमुक्तस्तु पुष्करः प्रहसन्निव ।
ध्रुवमात्मजयं मत्वा प्रत्याह निषधाधिपम् ॥ ३-७६-११ (१८८१०)
दिष्ट्या त्वयाऽर्जितं वित्तं प्रतिपाणाय नैषध ।
दिष्ट्या च दुष्कृतंकर्म दमयन्त्याः क्षयं गतम् ॥ ३-७६-१२ (१८८११)
दिष्ट्या वै प्रीसे राजन्मम लाभाय नैषध ।
पुनर्द्यूते च ते बुद्धिर्दिष्ट्या पुरुषसत्तम ॥ ३-७६-१३ (१८८१२)
धनेनानेन वै भैमी जितेन समलंकृता ।
मामुपस्थास्यति व्यक्तं दिवि शक्रमिवाप्सराः ॥ ३-७६-१४ (१८८१३)
नित्यशो हि स्मरामि त्वां प्रतीक्षेऽपि च नैषध ।
देवने च मभ प्रीतिर्भवत्येवासुहृद्गणैः ॥ ३-७६-१५ (१८८१४)
जित्वात्वद्य वरारोहां दमयन्तीमनिन्दिताम् ।
कतकृत्यो भविष्यामि सा हिमे नित्यशो हृदि ॥ ३-७६-१६ (१८८१५)
श्रुत्वा तु तस् ता वाचो बह्वबद्धप्रलापिनः ।
इयेष स शिरश्छेत्तुं खड्गेन कुपितो नलः ॥ ३-७६-१७ (१८८१६)

स्मयंस्तु रोषताम्राक्षस्तमुवाच नलो नृपः ।
पणावः किं व्याहरसे जितो न व्याहरिष्यसि ॥ ३-७६-१८ (१८८१७)
ततः प्रावर्तत द्यूतं पुष्करस्य नलस्य च ।
एकपाणेन भद्रं ते नलेन स पराजितः ॥ ३-७६-१९ (१८८१८)
स रत्नकोशनिचयैः प्राणेन पणितोपि च ।
जित्वा च पुष्करं राजा प्रहसन्निदमब्रवीत् ॥ ३-७६-२० (१८८१९)
मम सर्वमिदं राज्यमव्यग्रं हतकण्ठकम् ।
वैदर्भी न त्वया शक्या राजापशद वीक्षितम् ।
तस्यास्त्वं सपरीवारो मूढ दासत्वमागतः ॥ ३-७६-२१ (१८८२०)
न त्वया तत्कृतंकर्म येनाहं विजितः पुरा ।
कलिना तत्कृतं कर्म त्वं च मूढ न बुध्यसे ॥ ३-७६-२२ (१८८२१)
नाहं परकृतं दोषं त्वय्याधास्ये कथंचन ।
यथासुखं वै जीवत्वंप्राणानवसृजामि ते ॥ ३-७६-२३ (१८८२२)
तथैव सर्वसंभारं स्वमंशं वितरामि ते ।
तथैव च मम प्रीतिस्त्वयि वीर न संशयः ॥ ३-७६-२४ (१८८२३)
सौहार्दं चापि मे त्वत्तो न कदाचित्प्रहास्यति ।
पुष्कर त्वं हि मे भ्राता संजीव शरदः शतम् ॥ ३-७६-२५ (१८८२४)
एवं नलः सान्त्वयित्वा भ्रातरं सत्यविक्रमः ।
वचनैस्तोषयामास परिष्वज्य पुनः पुनः ॥ ३-७६-२६ (१८८२५)
सान्त्वितो नैषधेनैवं पुष्ररः प्रत्युवाच तम् ।
पुण्यश्लोकं तदा राजन्नभिवाद्य कृताञ्जलिः ॥ ३-७६-२७ (१८८२६)
कीर्तिरस्तु तवाक्षय्या जीव वर्षायुतं सुखी ।
यो मे वितरसि प्राणानधिष्ठानं च पार्थिव ॥ ३-७६-२८ (१८८२७)
स तथा सत्कृतो राज्ञा मासमुष्य तदा नृपः ।
प्रययौ पुषरो हृष्टः स्वपुरं स्वजनावृतः ॥ ३-७६-२९ (१८८२८)
महत्या सेनया सार्धंविनीतैः परिचारकैः ।
भ्राजमान इवादित्यो वपुषा पुरुषर्षभ ॥ ३-७६-३० (१८८२९)
प्रस्थाप्य पुष्करं राजा वित्तवन्तमनामयम् ।
प्रविवेश पुरं श्रीमानत्यर्थमुपशोभिताम् ॥ ३-७६-३१ (१८८३०)
प्रविश्य सान्त्वयामास पौरांश्च निषधाधिपः ।
ग्हितेषु चैषां सततं पितेवावहितोऽभवत्' ॥ ३-७६-३२ (१८८३१)
पौरा जानपदाश्चापि संप्रहृष्टतनूरुहाः ।
ऊचुः प्राञ्जलयः सर्वे सामात्यप्रमुखा जनाः ॥ ३-७६-३३ (१८८३२)
३-७६-३४ (१८८३३)
अद्यस्म निर्वृता राजन्पुरे जनपदेऽपि च ।
उपासितुं पुनः प्राप्ता देवा इव शतक्रतुम् ॥

३-७६-१ उष्य वासं कृत्वा ॥
३-७६-५ श्मयन्त्या च यच्चान्यज्जयत्वं सुसमार्जितमिति ध । पाठः ॥
३-७६-६ राज्यं एकपाणेनैव मम तुदमयन्त्यादि च प्राणयोश्च पणावहे युद्धमपि वर्ततामित्यर्तः ॥
३-७६-७ प्राणो हि धनमुच्यते इति ध । पाठः ॥
३-७६-९ प स्तगतं राज्यंइतिध । पाठः ॥
३-७६-१३ दिष्ट्याच ध्रियसे राजन्सदारोऽद्य महाभुजेति झ । पाठः ॥
३-७६-१८ पणाय किं व्याहरसे शीघ्रं द्यूतं प्रवर्ततामिति क । पाठः ॥

---

वन-अध्यय०७७
॥ श्रीः ॥
३.७७. अध्यायः ७७

Mahabharata - Vana Parva - Chapter Topics

पुष्करं निष्कासितवता नलेन कुण्डिनपुरात्सपुत्राया दमयन्त्या आनयनपूर्वकं प्रजापालनेन सुखवासः ॥ १ ॥
बृहदश्वेन युधिष्ठिरायाक्षहृदयविद्योपदेशपूर्वकं संक्षेपेण हरिश्चन्द्रोपाख्यानकथनम् ॥ २ ॥

Mahabharata - Vana Parva - Chapter Text

३-७७-० (१८८३४)
बृहदश्व उवाच। ३-७७-०क्ष् (१९७४)
प्रशान्ते तु पुरे हृष्टे संप्रवृत्ते महोत्सवे ।
महत्या सेनया राजा दमयन्तीमुपानयत् ॥ ३-७७-१ (१८८३५)
ग्पुण्यश्लोकं तु राज्यस्थं श्रुत्वा भीमो महीपतिः ।
मुदा परमया युक्तो बभूव भरतर्षभ ॥ ३-७७-२ (१८८३६)
अथ हृष्टमना राजा महत्या सेनया सह ।
सुतां प्रस्थापयामास पुण्यश्लोकाय धीमते' ॥ ३-७७-३ (१८८३७)
दमयन्तीमपि पिता सत्कृत्यपरवीरहा ।
प्रास्थापयदमेयात्मा भीमो भीमपराक्रमः ॥ ३-७७-४ (१८८३८)
आगतायां तु वैदर्भ्यां सपुत्रायां नलो नृपः ।
वर्तयामास मुदितो दोवराडिव नन्दने ॥ ३-७७-५ (१८८३९)
तथा प्रकाशतां यातो जम्बूद्वीपे स राजसु ।

पुनः स्वे चावसद्राज्ये प्रत्याहृत्य महायशाः ॥ ३-७७-६ (१८८४०)
ईजे च विविधैर्यज्ञैर्विधिवच्चाप्तदक्षिणैः ।
तथा त्वमपि राजेन्द्र ससुहृद्वक्ष्यसे चिरात् ॥ ३-७७-७ (१८८४१)
दुःखमेतादृशंप्राप्तो नलः परपुरंजयः ।
देवनेन नरश्रेष्ठ सभार्यो भरतर्षभ ॥ ३-७७-८ (१८८४२)
एकाकिनैव सुमहन्नलेन पृथिवीपते ।
दुःखमासादितं घोरं प्राप्तश्चाभ्युदयः पुनः ॥ ३-७७-९ (१८८४३)
त्वं पुनर्भ्रातृसहितः कृष्णया चैव पाण्डव ।
कथाश्चापि समाकर्ण्य धर्ममेवानुचिन्तयन् ॥ ३-७७-१० (१८८४४)
ब्राह्मणैश्च महाभागैर्वेदवेदाङ्गपारगैः ।
नित्यमन्वास्यसे राजंस्तत्र का परिदेवना ॥ ३-७७-११ (१८८४५)
कर्कोटकस्य नागस् दमयन्त्या नलस्य च ।
ऋतुपर्णस्य राजर्षेः कीर्तनं कलिनाशनम् ॥ ३-७७-१२ (१८८४६)
इतिहासमिमं चापि कलिनाशनमच्युत ।
शक्यमाश्वसितुं श्रुत्वा त्वद्विधेन विशांपते ॥ ३-७७-१३ (१८८४७)
अस्थिरत्वं च संचिन्त्य पुरुषार्थस् नित्यदा ।
तस्योदये व्यये चापि न चिन्तयितुमर्हसि ॥ ३-७७-१४ (१८८४८)
श्रुत्वेतिहासं नृपते समाश्वसिहि मा शुचः ।
व्यसने त्वं महाराज न विषीदितुमर्हसि ॥ ३-७७-१५ (१८८४९)
विषमावस्थिते दैवे पौरुषेऽफलतां गते ।
विषादयन्ति नात्मानं सत्त्वापाश्रयिणो नराः ॥ ३-७७-१६ (१८८५०)
ये चेदं कथयिष्यन्ति नलस् चरितं महत् ।
श्रोष्यन्ति चाप्यभीक्ष्णं वै नालक्ष्मीस्तान्भजिष्यति ॥ ३-७७-१७ (१८८५१)
अर्थास्तस्योपपत्स्यन्ते धन्यतां च गमिष्यति ।
इतिहासमिमं श्रुत्वा पुराणं शश्वदुत्तमम् ॥ ३-७७-१८ (१८८५२)
पुत्रान्पौत्रान्पशूंश्चापि लभते नृषु चाग्र्यताम् ।
आरोग्यप्रीतिमांश्चैव भविष्ति न संशयः ॥ ३-७७-१९ (१८८५३)
भयात्रस्यसि यच्च त्वमाह्वयिष्यति मां पुनः ।
अक्षज्ञ इति तत्तेऽहं नाशयिष्यामि पार्थिव ॥ ३-७७-२० (१८८५४)
वेदाक्षहृदयं कृत्स्नमहं सत्यपराक्रम ।
उपपद्यस्व कौन्तेय प्रसन्नोऽहं ब्रवीमि ते ॥ ३-७७-२१ (१८८५५)
वैशंपायन उवाच। ३-७७-२२क्ष् (१९७५)
ततो हृष्टमना राजा बृहदश्वमुवाच ह ।
भगवन्नक्षहृदयं ज्ञातुमिच्छामि तत्त्वतः ॥ ३-७७-२२ (१८८५६)
ग्कौन्तेयेनैवमुक्तस्तु बृहदश्वो महामुनिः'।
ततोऽक्षहृदयं प्रादात्पाण्डवाय महात्मने ।

ग्लब्ध्वा च पाण्डवो राजा विशोकः समपद्यत ॥ ३-७७-२३ (१८८५७)
बृहदश्व उवाच। ३-७७-२४क्ष् (१९७६)
पुनरेव तु वक्ष्यामि यस्त्वत्तो दुःखितो नृपः ।
तं शृणुष्व महाराज सर्वदुःखापनुत्तये ॥ ३-७७-२४ (१८८५८)
इक्ष्वाकूणां कुले जातो महात्मा पृथिवीपतिः ।
त्रिशङ्कुरिति विख्यातोराजराजो महाद्युतिः ॥ ३-७७-२५ (१८८५९)
हरिश्चन्द्रस्ततो जज्ञे गुणरत्नाकरो नृपात् ।
ततो विशेषैर्विविधैर्यज्ञैर्विपुलदक्षिणैः ॥ ३-७७-२६ (१८८६०)
स तु लोके वरः पुंसां पुण्यश्लोको महायशाः ।
सत्यवादी मधुरवाक्सत्येन बहुभाषिता ॥ ३-७७-२७ (१८८६१)
तस्य भार्याऽभवद्भूमौ सौशील्यसमलंकृता ।
उशीनरस्य राजर्षेर्दुहिता पुण्यलक्षणा ॥ ३-७७-२८ (१८८६२)
स्वयंवरे महाभागं वरयामास भामिनी ।
हरिश्चन्द्रं समेतानां राज्ञां मद्ये पतिं विभुम् ॥ ३-७७-२९ (१८८६३)
तया सह महीपालः सत्यवत्या मनोज्ञया ।
रेमे च सुचिरं कालं राजा राज्यमवाप्य च ॥ ३-७७-३० (१८८६४)
तस्यां देव्यां हरिश्चन्द्राज्जज्ञे राजीवलोचनः ।
पुत्रः पुण्यवतां श्रेष्ठो लोहिताश्व इति श्रुतः ॥ ३-७७-३१ (१८८६५)
देव्या पुत्रेण सहितः पुण्यश्लोको महायशाः ।
वसिष्ठयाज्यो नृपतिरीजे शुण्यैर्महाध्वरैः ॥ ३-७७-३२ (१८८६६)
एतस्मिन्नेव काले तु विश्वामित्रो दिवं गतः ।
पुरुहूतपुरीं रम्यामाजगामेन्द्रसेवया ॥ ३-७७-३३ (१८८६७)
उपस्थाने च संवृत्ते देवेन्द्रस्य महात्मनः ।
आजगाम वसिष्ठोऽपि वामदेवसहायवान् ॥ ३-७७-३४ (१८८६८)
उपस्थाने च संवृत्ते सुखासीने पुरंदरे ।
वर्ण्यमानेषु च तदा सत्यवादिषु राजसु ॥ ३-७७-३५ (१८८६९)
तस्यां संसदिसर्वस्माद्धरिश्चन्द्रोऽपि पप्रथे ।
यज्ञदानतपःशीलसत्यवाक्यदृढव्रतैः ॥ ३-७७-३६ (१८८७०)
वसिष्ठः परमप्रीतः स्वयाज्यपरिकीर्तनात् ।
तथापि विश्वामित्रस्तं न सेहे सत्यभूषितम् ॥ ३-७७-३७ (१८८७१)
हरिश्चन्द्रं प्रति तदा विश्वामित्रवसिष्ठयोः ।
पणः कृतस्तदा पश्चाद्विश्वामित्रेण पार्थिवः ॥ ३-७७-३८ (१८८७२)
राज्याच्चापि सुखाच्चापि सहसा चावरोपितः ।
अवाप परमं दुःखं मरणादमनोहरम् ॥ ३-७७-३९ (१८८७३)
वैशंपायन उवाच। ३-७७-४०क्ष् (१९७७)
तच्छ्रुत्वा परमप्रीतो धर्मराजो युधिष्ठिरः ।

भ्रातृभिर्ब्राह्मणैश्चैव द्रौपद्या च समन्वितः ।
विस्मयं परमं गत्वा साधुसाध्वित्यभाषत ॥ ३-७७-४० (१८८७४)
ततो हरिश्चन्द्रकथां च सर्वे
श्रुत्वा तु राजा मनुजेन्द्रकेतुः ।
विहाय शोकं विजहार भूयः
स्मरन्हरिश्चन्द्रमनन्तकीर्तिम् ॥ ३-७७-४१ (१८८७५)
कथामेवं तथा कृत्वा हरिश्चन्द्रनलाश्रयाम् ।
आमन्त्र्य पाण्डवान्सर्वान्बृहदश्वो जगाम ह'।
उक्त्वा चाशु सरोऽगच्छदुपस्प्रष्टुं महातपाः ॥ ३-७७-४२ (१८८७६)
बृहदश्व गते पार्थमश्रौषीत्सव्यसाचिनम् ।
वर्तमनं तपस्युग्रे वायुभक्षं मनीषिणम् ॥ ३-७७-४३ (१८८७७)
ब्राह्मणएभ्यस्तपस्विभ्यः संपतद्भयस्ततस्ततः ।
तीर्थशैलवनेभ्यश्च समेतेभ्यो दृढव्रतः ॥ ३-७७-४४ (१८८७८)
इतिपार्थो महाबाहुर्दुरापं तप आस्थितः ।
न तथा दृष्टपूर्वोऽन्यः कश्चिदुग्रतपा इति ॥ ३-७७-४५ (१८८७९)
यथा धनंजयः पार्थस्तपस्वी नियतव्रतः ।
मुनिरेकचरः श्रीमान्धर्मो विग्रहवानिव ॥ ३-७७-४६ (१८८८०)
तं श्रुत्वा पाण्डवो राजंस्तप्यमानं महावने ।
अन्वशोचत कौन्तेयः प्रियं वै भ्रातरं जयम् ॥ ३-७७-४७ (१८८८१)
दह्यमानेन तु हृदा शरणार्थी महावने ।
ब्राह्मणान्विविधज्ञानान्पर्यपृच्छद्युधिष्ठिरः ॥ ३-७७-४८ (१८८८२)
ग्प्रतिगृह्याक्षहृदयं कुन्तीपुत्रो युधिष्ठिरः ।
आसीद्धृष्टमना राजन्भीमसेनादिभिर्युतः ॥ ३-७७-४९ (१८८८३)
स्वभ्रातॄन्सहितान्पश्यन्कुन्तीपुत्रो युधिष्ठिरः ।
अपश्यन्नर्जुनं तत्रबभूवाश्रुपरिप्लुतः ॥ ३-७७-५० (१८८८४)
संतप्यमानः कौन्तेयो भीमसेनमुवाच ह ।
कदा द्रक्ष्यामि वै भीम पार्तमत्र तवानुजम् ॥ ३-७७-५१ (१८८८५)
मत्कृते हि कुरुश्रेष्ठ तप्यते परमं तपः ।
तस्याक्षहृदयज्ञानमाख्यास्यामि कदा न्वहम् ॥ ३-७७-५२ (१८८८६)
स हि श्रुत्वाऽक्षहृदयं समुपात्तं मया विभो ।
प्रहृष्टः पुरुषव्याघ्रो भविष्यति न संशयः' ॥ ३-७७-५३ (१८८८७)

इति श्रीमन्महाभारते अरण्यपर्वणि नलोपाख्यानपर्वणि
सप्तसप्तिततमोऽध्यायः ॥ ७७ ॥

Mahabharata - Vana Parva - Chapter Footnotes

३-७७-१ प्रशान्ते वीतशोके ।प्रशान्ते पुष्करे हृष्टे इति क।पाठः ॥
३-७७-७ वक्ष्यसे दीव्यसे ।वशकान्तावित्यस्य रूपम्।समहृच्यक्ष्यसे ह्यघमिति क।पाठः ॥
३-७७-२१ वेद वेद्मि ।उपपद्यस्व गृहाण ॥

---

वन-अध्यय०७८
॥श्रीः ॥
३.७८. अध्यायः ७८

Mahabharata - Vana Parva - Chapter Topics
अर्जुनविनाभावेन काम्यकवने निवासमरोचयानैः
पाण्डवैस्तस्मान्निर्गमननिर्धारणम् ॥१ ॥

Mahabharata - Vana Parva - Chapter Text

३-७८-० (१८८८८)
जनमेजय उवाच।३-७८-०क्ष् (१९७८)
भगवान्काम्यकात्पार्थे गते मे प्रपितामहे ।
पाण्डवाः किमकुर्वंस्ते तमृते सव्यसाचिनम् ॥३-७८-१ (१८८८९)
स हि तेषां महेष्वासो गतिरासीदनीकजित् ।
आदित्यानां यथा विष्णुस्तथैव प्रतिभाति मे ॥३-७८-२ (१८८९०)
तेनेन्द्रसमवीर्येण संग्रामेष्वनिवर्तिना ।
विनाभूता वने वीराः कथमासन्पितामहाः ॥३-७८-३ (१८८९१)
वैशंपायन उवाच।३-७८-४क्ष् (१९७९)
गते तु पाण्डवेतात काम्यकात्सव्यसाचिनि ।
बभूवुः कौरवेयास्ते दुःखशोकपरायणाः ॥३-७८-४ (१८८९२)
आक्षिप्तसूत्रा मणयश्छिन्नपक्षा इवाण्डजाः ।
अप्रीतमनसः सर्वे बभूवुरथ पाण्डवाः ॥३-७८-५ (१८८९३)
वनं तु तदभूत्तेन हीनमक्लिष्टकर्मणा ।
कुबेरेण यथाहीनं वनं चैत्ररथं तथा ॥३-७८-६ (१८८९४)
तमृते ते नरव्याघ्राः पाण्डवा जनमेजय ।
मुदमप्राप्नुवन्तो वै काम्यके न्यवसंस्तदा ॥३-७८-७ (१८८९५)
ब्राह्मणार्थे पराक्रान्ताः शुद्धैर्वाणैर्महारथाः ।
निघ्नन्तो भरतश्रेष्ठ मेध्यान्बहुविधान्मृगान् ॥३-७८-८ (१८८९६)
नित्यंहि पुरुषव्याघ्रा वन्याहारमरिंदमाः ।
प्रविसृत्य समाहृत्य ब्राह्मणेभ्यो न्यवेदयन् ॥३-७८-९ (१८८९७)

एवं ते न्यवसंस्तत्रसोत्कणाठाः पुरुषर्षभाः ।
अहृष्टमनसः सर्वेगते राजन्धनंजये ॥ ३-७८-१० (१८८९८)
अथ विप्रोषितं राजन्पाञ्चाली मध्यमं पतिम् ।
स्मरन्ती पाण्डवश्रेष्ठमिदं वचनमब्रवीत् ॥ ३-७८-११ (१८८९९)
योऽर्जुनेनार्जुनस्तुल्यो द्विबाहुर्बहुबाहुना ।
तमृते पाण्डवश्रेष्ठं वनं न प्रतिभाति मे ॥ ३-७८-१२ (१८९००)
शून्यामिव प्रपश्यामि तत्रतत्र महीमिमाम् ।
बह्वाश्चर्यमिदं चापि वनं कुसुमितद्रुमम् ॥ ३-७८-१३ (१८९०१)
न तथा रमणीयं वै तमृते सव्यसाचिनम् ।
नीलाम्बुदसमप्रख्यं मत्तमातङ्गगामिनम् ॥ ३-७८-१४ (१८९०२)
तमृते पुण्डरीकाक्षं काम्यकं नातिभाति मे ।
यस्य वा धनुषो घोषः श्रूयते चाशनिस्वनः ।
न लभे शर्म वै राजन्स्मरन्ती सव्यसाचिनम् ॥ ३-७८-१५ (१८९०३)
तथा लालप्यमानां तां निशाम्य परवीरहा ।
भीमसेनो महाराज द्रौपदीमिदमब्रवीत् ॥ ३-७८-१६ (१८९०४)
मनःप्रीतिकरं भद्रे यद्ब्रवीषि सुमध्यमे ।
तन्म प्रीणाति हृदयममृतप्राशनोपमम् ॥ ३-७८-१७ (१८९०५)
यस्य दीर्घौ समौ पीनौ भुजौ परिघसन्निभौ ।
मौर्वीकृतकिणौ वृत्तौ खड्गायुधधनुर्धरौ ॥ ३-७८-१८ (१८९०६)
निष्काङ्गदकृतापीडौ पञ्चशीर्षाविवोरगौ ।
तमृते पुरुषव्याघ्रं नष्टसूर्यमिवाम्बरम् ॥ ३-७८-१९ (१८९०७)
यमाश्रित्य महाबाहुं पाञ्चालाः कुरवस्तथा ।
सुराणामपि यत्तानां पृतनासु न बिभ्यति ॥ ३-७८-२० (१८९०८)
यस्य बाहू समाश्रित्य वयं सर्वेमहात्मनः ।
मन्यामहे जितानाजौ परान्प्राप्तां च मेदिनीम् ॥ ३-७८-२१ (१८९०९)
तमृते फल्गुनं वीरं न लभे काम्यके धृतिम् ।
पश्यामि च दिशः सर्वास्तिमिरेणावृता इव ॥ ३-७८-२२ (१८९१०)
ततोऽब्रवीत्साश्रुकण्ठो नकुलः पाण्डुनन्दनः ।
यस्मिन्दिव्यानि कर्माणि कथयन्ति रणाजिरे ।
देवा अपि युधांश्रेष्ठं तमृतेका रतिर्वने ॥ ३-७८-२३ (१८९११)
उदीचीं चो दिशं गत्वा जित्वा युधि महाबलान् ।
गन्धर्वमुख्याञ्शतशो हयाँल्लेबे महाद्युतिः ॥ ३-७८-२४ (१८९१२)
राज्ञे तित्तिरिकल्माषाञ्श्रीमतोऽनिलरंहसः ।
प्रादाद्भ्रात्रे प्रियः प्रेम्णा राजसूये महाक्रतौ ॥ ३-७८-२५ (१८९१३)
तमृतेभीमधन्वानं भीमादवरजं वने ।
कामये काम्यके वासं नेदानीममरोपमम् ॥ ३-७८-२६ (१८९१४)

सहदेव उवाच। ३-७८-२७क्ष् (१९८०)
यो धनानिन कन्याश्च युधि हित्वा महाबलान् ।
ग्शतशो घातयित्वाऽरीन्पृतनामध्यगस्तदा'।
आजहार पुरा राज्ञे राजसूये महाक्रतौ ॥ ३-७८-२७ (१८९१५)
यः समेतान्मृधे जित्वायादवानमितद्युतिः ।
सुभद्रामाजहारैको वासुदेवस्य संमते ॥ ३-७८-२८ (१८९१६)
ग्येनार्धराज्यमाच्छिद्य द्रुपदस्य महात्मनः ।
आचार्यदक्षिणा दत्ता रणे द्रोणश्यभारत' ॥ ३-७८-२९ (१८९१७)
तस्य जिष्णोर्बृसीं दृष्ट्वा सून्यत्रेव निवेशने ।
हृदयं मे महाराज न शाम्यात्रकदाचन ॥ ३-७८-३० (१८९१८)
विनादस्माद्विवासं तु रोचयेऽहमरिंदम ।
न हि नस्तमृते वीरं रमणीयमिदं वनम् ॥ ३-७८-३१ (१८९१९)

इति श्रीमन्महाभारते अरण्यपर्वणि तीर्थयात्रापर्वणि
अष्टसप्ततितमोऽध्यायः ॥ ७८ ॥
Mahabharata - Vana Parva - Chapter Footnotes

३-७८-५ आक्षिप्तसूत्राश्छिन्नसूत्राः । अण्डजाः पक्षिणः ॥
३-७८-८ मेध्यान् यज्ञार्हान् ॥
३-७८-१८ किणं आघातचिह्नम् ॥
३-७८-१९ निष्काङ्गदकृतापीडौ साष्टशतं सुवर्णाः निष्कः
तत्कृतेनाङ्गदेन कृतभूषणौ ॥
३-७८-३० बृसीं आसनम् ॥

---

वन-अध्यय०७९
॥ श्रीः ॥
३.७९. अध्यायः ७९

Mahabharata - Vana Parva - Chapter Topics
युधिष्ठिरेण काम्यकवनमुपागतं नारदंप्रति भूप्रादक्षिण्येन
तीर्थयात्राफलप्रश्नः ॥ १ ॥
नारदेन तत्कथनाय पुलस्त्यभीष्मसंवादानुवादारम्भः ॥ २ ॥

Mahabharata - Vana Parva - Chapter Text

३-७९-० (१८९२०)
वैशंपायन उवाच। ३-७९-०क्ष् (१९८१)

ग्धनञ्जयोत्सुकास्ते तु वने तस्मिन्महारथाः ।
न्यवसन्त महाभागा द्रौपद्या सह कृष्णया' ॥ ३-७९-१ (१८९२१)
धनं जयोत्सुकानां तु भ्रातॄणां कृष्णया सह ।
श्रुत्वा वाक्यानि विमना धर्मराजोप्यजायत ॥ ३-७९-२ (१८९२२)
अथापश्यन्महात्मानं देवर्षिं तत्र नारदम् ।
दीप्यमानं श्रिया ब्राह्म्या दीप्ताग्निसमतेजसम् ॥ ३-७९-३ (१८९२३)
तमागतमभिप्रेक्ष्य भ्रातृभिः सह धर्मराट् ।
प्रत्युत्थाय यथान्यायं पूजां चक्रे महात्मने ॥ ३-७९-४ (१८९२४)
स तैः परिवृतः श्रीमान्भ्रातृभिः कुरुसत्तमः ।
विबभावतिदीप्तौजा देवैरिव शतक्रतुः ॥ ३-७९-५ (१८९२५)
यथा च वेदान्सावित्री याज्ञसेनी तथा पतीन् ।
न जहौ धर्मतः पार्थान्मेरुमर्कप्रभा यथा ॥ ३-७९-६ (१८९२६)
ग्अर्घ्यं पाद्यमथानीय त्वभ्यवायदच्युतः ।
नारदस्तु महातेजाः स्वस्त्यस्त्वित्यभ्यभाषत ॥ ३-७९-७ (१८९२७)
ततो युधिष्ठिरो राजा दृष्ट्वा देवर्षिसत्तमम् ।
यथार्हं पूजयामास विधिवत्कुरुनन्दनः' ॥ ३-७९-८ (१८९२८)
प्रतिगृह्य च तां पूजां नारदो भगवानृषिः ।
आश्वासयद्धर्मसुतं युक्तरूपमिवानघ ॥ ३-७९-९ (१८९२९)
उवाच च महात्मानं धर्मराजं युधिष्ठिरम् ।
ब्रूहि धर्मभृतां श्रेष्ठ केनार्थः किं ददानि ते ॥ ३-७९-१० (१८९३०)
अथ धर्मसुतो राजा प्रणम्य भ्रातृभिः सह ।
उवाच प्राञ्जलिर्भूत्वा नारदं देवसंमितम् ॥ ३-७९-११ (१८९३१)
त्वयि तुष्टे महाभाग सर्वलोकाभिपूजिते ।
कृतमित्येव मन्येऽहं प्रसादात्तव सुव्रत ॥ ३-७९-१२ (१८९३२)
यदि त्वहमनुग्राह्यो भ्रातृभिः सहितोऽनघ ।
संदेहं मे मुनिश्रेष्ठ तत्वतश्छेत्तुमर्हसि ॥ ३-७९-१३ (१८९३३)
प्रदक्षिणां यः कुरुते पृथिवीं तीर्थतत्परः ।
किं फलं तस्य कार्त्स्न्येन तद्भवान्वक्तुमर्हति ॥ ३-७९-१४ (१८९३४)
नारद उवाच। ३-७९-१५क्ष् (१९८२)
शृणु राजन्नवहितो यथा भीष्मेण धीमता ।
पुलस्त्यस्य सकाशाद्वै सर्वमेतदुपश्रुतम् ॥ ३-७९-१५ (१८९३५)
पुरा भागीरथीतीरे भीष्मो धर्मभृतांवरः ।
पित्र्यं व्रतं समास्थाय न्यवसन्मुनिभिः सह ॥ ३-७९-१६ (१८९३६)
शुभे देशे तथा राजन्पुण्ये देवर्षिसेविते ।
गङ्गाद्वारे महाभाग देवगन्धर्वसेविते ॥ ३-७९-१७ (१८९३७)
स पितॄंस्तर्पयामास देवांश्च परमद्युतिः ।

ऋषींश्च तर्पयामास विधिदृष्टेन कर्मणा ॥ ३-७९-१८ (१८९३८)
कस्य चित्त्वथ कालस्य जपन्नेव महायशाः ।
ददर्शाद्भुतसंकाशं पुलस्त्यमृषिसत्तमम् ॥ ३-७९-१९ (१८९३९)
स तं दृष्ट्वोग्रतपसं दीप्यमानमिव श्रिया ।
प्रहर्षमतुलं लेभे विस्मयं परमं ययौ ॥ ३-७९-२० (१८९४०)
उपस्थितं महाभागं पूजयामास भारत ।
भीष्मो धर्मभृतां श्रेष्ठो विधिदृष्टेन कर्मणा ॥ ३-७९-२१ (१८९४१)
शिरसा चार्घमादाय शुचिः प्रयतमानसः ।
नाम संकीर्तयामास तस्मिन्ब्रह्मर्षिसत्तमे ॥ ३-७९-२२ (१८९४२)
भीष्मोऽहमस्मि भद्रं ते दासोऽस्मि तव सुव्रत ।
तव संदर्शनादेव मुक्तोऽहं सर्वकिल्बिषैः ॥ ३-७९-२३ (१८९४३)
रएवमुक्त्वा महाराज भीष्मो धर्मभृतांवरः ।
वाग्यतः प्राञ्जलिर्भूत्वातूष्णीमासीद्युधिष्ठिर ॥ ३-७९-२४ (१८९४४)
तं दृष्ट्वा नियमेनाथ स्वाध्यायाम्नायकर्शितम् ।
भीष्मं कुरुकुलश्रेष्ठं मुनिः प्रीतमनाऽभवत् ॥ ३-७९-२५ (१८९४५)
ग्ततः स मधुरेणाथ स्वरेण सुमहातपाः ।
उवाच वाक्यं धर्मज्ञः पुलस्त्यः प्रीतमानसः' ॥ ३-७९-२६ (१८९४६)

इति श्रीमन्माहाभारते अरण्यपर्वणि तीर्थयात्रापर्वणि
एकोनाशीतितमोऽध्यायः ॥ ७९ ॥

---

वन-अध्यय०८०
॥ श्रीः ॥
३.८०. अध्यायः ८०

Mahabharata - Vana Parva - Chapter Topics
पलस्त्येन भीष्मप्रतिपुष्करादितीर्थमहिमानुवर्णनम् ॥ १ ॥

Mahabharata - Vana Parva - Chapter Text

३-८०-० (१८९४७)
पुलस्त्य उवाच। ३-८०-०क्ष् (१९८३)
अनेन तव धर्मज्ञ प्रश्रयेण दमेन च ।
सत्येन च महाभाग तुष्टोस्मि तव सुव्रत ॥ ३-८०-१ (१८९४८)
यस्येदृशस्ते धर्मोऽयं पितृवाक्याश्रितोऽनघ ।
तेन पश्यसि मां पुत्र प्रीतिश्च परमा त्वयि ॥ ३-८०-२ (१८९४९)
अमोघदर्शी भीष्माहं ब्रूहि किं करवाणि ते ।

यद्वक्ष्यसि कुरुश्रेष्ठ तस्य दाताऽस्मि तेऽनघ ॥ ३-८०-३ (१८९५०)
भीष्म उवाच। ३-८०-४क्ष् (१९८४)
प्रीते त्वयि महाभाग सर्वलोकाभिपूजिते ।
कृतमित्येव मन्येऽहं यदहं दृष्टवान्प्रभुम् ॥ ३-८०-४ (१८९५१)
यदि त्वहमनुग्राह्यस्तव धर्मभृतांवर ।
संदेहं ते प्रवक्ष्यामि तन्मे त्वं छेत्तुमर्हसि ॥ ३-८०-५ (१८९५२)
अस्ति मे भगवन्कश्चित्तीर्थानि प्रति संशयः ।
तमहं श्रोतुमिच्छामि तद्भवान्वक्तुमर्हति ॥ ३-८०-६ (१८९५३)
प्रदक्षिणां यः पृथिवीं करोत्यमरसन्निभ ।
किं फलं तस्य विप्रर्षे तन्मे ब्रूहि तपोधन ॥ ३-८०-७ (१८९५४)
पुलस्त्य उवाच। ३-८०-८क्ष् (१९८५)
हन्त तेऽहंप्रवक्ष्यामि यदृषीणां परायणम् ।
तदेकाग्रमनास्तात शृणु तीर्थेषु यत्फलम् ॥ ३-८०-८ (१८९५५)
यस्य हस्तौ च पादौ च मनश्चैव सुसंयतम् ।
विद्या तपश्च कीर्तिश्च स तीर्थफलमश्नुते ॥ ३-८०-९ (१८९५६)
प्रतिग्रहादपावृत्तः संतुष्टो येन केनचित् ।
अहंकारनिवृत्तश्च स तीर्थफलमश्नुते ॥ ३-८०-१० (१८९५७)
अकल्कको निरारम्भो लघ्वाहारो जितेन्द्रियः ।
विमुक्तः सर्वपापेभ्यः स तीर्थफलमश्नुते ॥ ३-८०-११ (१८९५८)
अक्रोधनश्च राजेन्द्र सत्यशीलो दृढव्रतः ।
आत्मोपमश्च भूतेषु स तीर्थफलमश्नुते ॥ ३-८०-१२ (१८९५९)
ऋषिभिः क्रतवः प्रोक्ता देवेष्विह यथाक्रमम् ।
फलं चैव यथातत्त्वं प्रेत्य चेह च सर्वशः ॥ ३-८०-१३ (१८९६०)
न ते शक्या दरिद्रेण यज्ञाः प्राप्तुं महीपते ।
बहूपकरणा यज्ञा नानासंभारविस्तराः ॥ ३-८०-१४ (१८९६१)
प्राप्यन्ते पार्थिवैरेतैः समृद्धैर्वा नरैः क्वचित् ।
नार्थन्यूनोपकरणैरेकात्मभिरसंहतैः ॥ ३-८०-१५ (१८९६२)
यो दरिद्रैरपि विधिः शक्यः प्राप्तुं नरेश्वर ।
तुल्यो यज्ञफलैः पुण्यैस्तं निबोध युधांवर ॥ ३-८०-१६ (१८९६३)
ऋषीणां परमं गुह्यमिदं भरतसत्तम ।
तीर्थाभिगमनं पुण्यं यज्ञैरपि विशिष्यते ॥ ३-८०-१७ (१८९६४)
अनपोष्य त्रिरात्राणि तीर्थान्यनभिगम्य च ।
अदत्त्वा काञ्चनं गाश्च दरिद्रो नाम जायते ॥ ३-८०-१८ (१८९६५)
अग्निष्टोमादिभिर्यज्ञैरिष्ट्वा विपुलदक्षिणैः ।
न तत्फलमवाप्नोति तीर्थाभिगमनेन यत् ॥ ३-८०-१९ (१८९६६)
सर्वतीर्थेषु राजेन्द्र तीर्थं त्रैलोक्यविश्रुतम् ।

पुष्करं नाम विख्यातं महाभागः समाविशेत् ॥ ३-८०-२० (१८९६७)
दशकोटिसहस्राणि तीर्थानां वै महामते ।
सान्निध्यं पुष्करे येषां त्रिसन्ध्यं कुरुनन्दन ॥ ३-८०-२१ (१८९६८)
आदित्या वसवो रुद्राः साध्याश्च समरुद्गणाः ।
गन्धर्वाप्सरसश्चैव नित्यं सन्निहिता विभो ॥ ३-८०-२२ (१८९६९)
यत्र देवास्तपस्तप्त्वा दैत्या ब्रह्मर्षयस्तथा ।
ग्तपोविशेषैर्बहुभिः स्थानान्यापुर्महौजसः'।
दिव्ययोगा महाराज पुण्येन महताऽन्विताः ॥ ३-८०-२३ (१८९७०)
मनसाभ्येतुकामस्य पुष्कराणि मनस्विनः ।
पूयन्ते सर्वपापानि नाकपृष्ठे च पूज्यते ॥ ३-८०-२४ (१८९७१)
तस्मिंस्तीर्थे महाभागो नित्यमेव पितामहः ।
उवास परमप्रीतो देवदानवसत्तमः ॥ ३-८०-२५ (१८९७२)
पुष्करेषु महाभाग देवाः सर्षिगणाः पुरा ।
सिद्धिं समभिसंप्राप्ताः पुण्येन महताऽन्विताः ॥ ३-८०-२६ (१८९७३)
तत्राभिषेकं यः कुर्यात्पितृदेवांश्च तर्पयेत् ।
सर्वपापविनिर्मुक्तो ब्रह्मलोके च पूज्यते ॥ ३-८०-२७ (१८९७४)
अप्येकं भोजयेद्विप्रं पुष्करारण्यमाश्रितः ।
तेनासौ कर्मणा भीष्म प्रेत् यचेह च मोदते ॥ ३-८०-२८ (१८९७५)
शाकैर्मूलैः फलैर्वाऽपिचेन वर्तयते स्वयम् ।
तद्वै दद्याद्ब्राह्मणाय श्रद्धावाननसूयकः ।
तेनैव प्राप्नुयात्प्राज्ञो हयमेधफलं नरः ॥ ३-८०-२९ (१८९७६)
ग्अपि वाऽप्युदपात्रेण ब्राह्मणान्स्वस्ति वाचयेत् ।
तेनापि पूजनेनाशु प्रेत्यानन्त्याय कल्पते' ॥ ३-८०-३० (१८९७७)
ब्राह्मणाः क्षत्रिया वैश्याः शूद्रा वा राजसत्तम ।
न वै योनौ प्रजायन्ते स्नातास्तीर्थे महात्मनः ॥ ३-८०-३१ (१८९७८)
कार्तिक्यां तु विशेषेण योऽभिगच्छति पुष्करम् ।
ग्फलं तत्राक्षयं तेन लभते भरतर्षभ' ॥ ३-८०-३२ (१८९७९)
सायंप्रातः स्मरेद्यस्तु पुष्कराणि कृताञ्जलिः ।
उपस्पृष्टं भवेत्तेन सर्वतीर्थेषु भारत ।
प्राप्नुयाच्च नरो लोकान्ब्रह्मणः सदनेऽक्षयान् ॥ ३-८०-३३ (१८९८०)
जन्मप्रभृतियत्पापं स्त्रिया वा पुरुषस् वा ।
पुष्करे स्नातमात्रस्य सर्वमेव प्रणश्यति ॥ ३-८०-३४ (१८९८१)
यथा सुराणां सर्वेषामादिस्तु मधुसूदनः ।
तथैव पुष्करं राजंस्तीर्थानामादिरुच्यते ॥ ३-८०-३५ (१८९८२)
उष्य द्वादशवर्षाणि पुष्करे नियतः शुचिः ।
क्रतून्सर्वानवाप्नोति ब्रह्मलोकं स गच्छति ॥ ३-८०-३६ (१८९८३)

यस्तु वर्षशतं पूर्णमग्निहोत्रमुपासते ।
कार्तिकीं वा वसेदेकां पुष्करे सममेव तत् ॥ ३-८०-३७ (१८९८४)
श्त्रीणि शृङ्गाणि शुभ्राणि त्रीणि प्रस्रवणानि च ।
पुष्कराण्यादिसिद्धानि न विद्मस्तत्र कारणम् ॥ ३-८०-३८ (१८९८५)
दुष्करं पुष्करं गन्तुं दुष्करं पुष्करे तपः ।
दुष्करं पुष्करे दानं वस्तुं चैव सुदुष्करम् ॥ ३-८०-३९ (१८९८६)
उष्य द्वादशरात्रं तु नियतो नियताशनः ।
प्रदक्षिणमुपावृत्य जम्बूमार्गं समाविशेत् ॥ ३-८०-४० (१८९८७)
जम्बूमार्गं समाक्षिय देवर्षिपितृसेवितम् ।
अश्वमेधमवाप्नोति विष्णुलोकं च गच्छति ॥ ३-८०-४१ (१८९८८)
तत्रोष्य रजनीः पञ्च कषष्ठकालक्षमी नरः ।
न दुर्गतिमवाप्नोति विष्णुलोकं च गच्छति ॥ ३-८०-४२ (१८९८९)
ग्तत्रगत्वा महाप्राज्ञः कुर्याच्छ्राद्धं दृढव्रतः ।
वाजपेयमवाप्नोति दुष्कृतं चास्य नश्यति' ॥ ३-८०-४३ (१८९९०)
जम्बूमार्गादुपावृकत्यगच्छेत्स्थण्डिलकाश्रमम् ।
न दुर्गतिमवाप्नोति ब्रह्मलोकं च गच्छति ॥ ३-८०-४४ (१८९९१)
आगस्त्यं सर आसाद्य पितृदेवार्चने रतः ।
त्रिरात्रोपोषितो राजन्नग्निष्टोमफलं लभेत् ॥ ३-८०-४५ (१८९९२)
शाकवृत्तिः फलैर्वाऽपि कौमारं विन्दते पदम् ।
कण्वाश्रमं ततो गच्छेच्श्रीजुष्टं लोकपूजितम् ॥ ३-८०-४६ (१८९९३)
धर्मारण्यं हि तत्पुण्यमाद्यं च भरतर्षभ ।
यत्र प्रविष्टमात्रो वै सर्वपापैः प्रमुच्यते ॥ ३-८०-४७ (१८९९४)
अर्चयुत्वा पितॄन्देवान्नियतो नियताशनः ।
सर्वकामसमृद्धः स्याद्यज्ञस्य फलमश्नुते ॥ ३-८०-४८ (१८९९५)
प्रदक्षिणं ततः कृत्वा ययातिपतनं व्रजेत् ।
हयमेधस्य यज्ञस्य फंल प्राप्नोति तत्र वै ॥ ३-८०-४९ (१८९९६)
महाकालं ततो गच्छेन्नियतो नियताशनः ।
कोटितीर्थमुपस्पृश्य हयमेधफलं लभेत् ॥ ३-८०-५० (१८९९७)
ततो गच्छेत धर्मज्ञः स्थाणोस्तीर्थमुमापतेः ।
नाम्ना भद्रवटं नाम त्रिषु लोकेषु विश्रुतम् ॥ ३-८०-५१ (१८९९८)
तत्राभिगम्य चेशानं गोसहस्रफलं लभेत् ।
महादेवप्रसादाच्च गाणपत्यं च विन्दति ॥ ३-८०-५२ (१८९९९)
समृद्धमसपत्नं च श्रिया युक्तं नरोत्तमः ।
ग्राज्ञां चैवाधिपत्यं हि तत्र गत्वा समाप्नुयात् ॥' ३-८०-५३ (१९०००)
नर्मदां स समासाद्य नदीं त्रैलोक्यविश्रुताम् ।
तर्पयित्वा पितृन्देवानग्निष्टोमफलं लभेत् ॥ ३-८०-५४ (१९००१)

दक्षिमं सिन्धुमासाद्य ब्रह्मचारी जितेन्द्रियः ।
अग्निष्टोममवाप्नोति विमानं चाधिरोहति ॥ ३-८०-५५ (१९००२)
चर्मण्वतीं समासाद्य नियतो नियताशनः ।
रन्तिदेवाभ्यनुज्ञातमग्निष्टोमफलं लभेत् ॥ ३-८०-५६ (१९००३)
ततो गच्छेत धर्मज्ञं हिमवत्सुतमर्बुदम् ।
पृथिव्यां यत्रवै छिद्रं पूर्वमासीद्युधिष्ठिर ॥ ३-८०-५७ (१९००४)
तत्राश्रमो वसिष्ठस्य त्रिषु लोकेषु विश्रुतः ।
तत्रोष्य रजनीमेकां गोसहस्रफलं लभेत् ॥ ३-८०-५८ (१९००५)
पिङ्गतीर्थमुपस्पृश्य ब्रह्मचारी जितेन्द्रियः ।
कपिलानां नरश्रेष्ठ शतस् फलमश्नुते ॥ ३-८०-५९ (१९००६)
ततो गच्छेत राजेन्द्र प्रभासं लोकविश्रुतम् ।
त्तीर्थं देवगणैः पूज्यमृषिभिश्च निषेवितम्' ॥ ३-८०-६० (१९००७)
देवतानां मुखं वीर ज्वलनोऽनिलसारथिः ।
देवतानां मुखं वीर ज्वलनोऽनिलसारथिः ॥ ३-८०-६१ (१९००८)
तस्मिंस्तीर्थे नरः स्नात्वा शुचिः प्रयतमानसः ।
अग्निष्टोमातिरात्राभ्यां फलं प्राप्नोति मानवः ॥ ३-८०-६२ (१९००९)
ततो गत्वा सरस्वत्याः सागरस्य च संगमे ।
गोसहस्रफलं तस्य स्वर्गलोकं च विन्दति ।
प्रभया दीप्यते नित्यमग्निवद्भरतर्षभ ॥ ३-८०-६३ (१९०१०)
वरदानं ततो गच्छेत्तीर्थं भरतसत्तम ।
विष्णोर्दुर्वाससा यत्र वरो दत्तो युधिष्ठिर ।
प्रभासते यथा सोमः सोश्वमेधं च विन्दति ॥ ३-८०-६४ (१९०११)
वरदानं ततो गच्छेत्तीर्थं भरतसत्तम ।
विष्णोर्दुर्वाससा यत्र वरो दत्तो युधिष्ठिर ।
वरदाने नरः स्नात्वा गोसहस्रफंल लभेत् ॥ ३-८०-६५ (१९०१२)
ततो द्वारवतीं गच्छेन्नियतो नियताशनः ।
पिण्डारके नरः स्नात्वा लभेद्बहुसुवर्णकम् ॥ ३-८०-६६ (१९०१३)
तस्मिंस्तीर्थे महाभाग पद्मलक्षणलक्षिताः ।
अद्यापि मुद्रा दृश्यन्ते तदद्भुतमरिंदम ॥ ३-८०-६७ (१९०१४)
त्रिशूलाङ्कानि पद्मानि दृश्यन्ते कुरुनन्दन ।
महादेवस्य सांनिध्यं तत्र वै पुरुषर्षभ ॥ ३-८०-६८ (१९०१५)
सागरस्य च सिन्धोश्च संगमं प्राप्य दुर्लभम् ।
तीर्थे सलिलराजस्य स्नात्वा प्रयतमानसः ॥ ३-८०-६९ (१९०१६)
तर्पयित्वा पितॄन्देवानृषींश्च भरतर्षभ ।
प्राप्नोति वारुणं लोकं दीप्यमानं स्वतेजसा ॥ ३-८०-७० (१९०१७)
शङ्कुकर्णेश्वरं देवमर्चयित्वा युधिष्ठिर ।

अश्वमेधाद्दशगुणं प्रवदन्ति मनीषिणः ॥ ३-८०-७१ (१९०१८)
प्रदक्षिणमुपावृत्य गच्छेत भरतर्षभ ।
तीर्थं कुरुवरश्रेष्ठ त्रिषु लोकेषु विश्रुतम् ॥ ३-८०-७२ (१९०१९)
शमीति नाम्ना विख्यातं सर्वपापप्रणाशनम् ।
तत्रब्रह्मादयो देवा उपासन्ते महेश्वरम् ॥ ३-८०-७३ (१९०२०)
तत्रस्नात्वाऽर्चयित्वा च रुद्रं देवगणैर्वृतम् ।
जन्मप्रभृतियत्पापं तत्स्नातस्य प्रणश्यति ॥ ३-८०-७४ (१९०२१)
शमी चात्रनरश्रेष्ठ सर्वदेवैरभिष्टुता ।
तत्र स्नात्वा नरव्याघ्र हयमेधमवाप्नुयात् ॥ ३-८०-७५ (१९०२२)
गत्वा यत्रमहाप्राज्ञ विष्णुना प्रभविष्णुना ।
पुरा शौचं कृतंराजन्हत्वा दैवतकण्टकान् ॥ ३-८०-७६ (१९०२३)
ततो गच्छेत धर्मज्ञ वसोर्धारामभिष्टुताम् ।
गमनादेवतस्यां हि हयमेधफलं लभेत् ॥ ३-८०-७७ (१९०२४)
स्नात्वा कुरुवरश्रेष्ठ प्रयतात्मा समाहितः ।
तर्प्य देवान्पितॄंश्चैव विष्णुलोके महीयते ॥ ३-८०-७८ (१९०२५)
तीर्थे चात्र सर पुण्यं वसूनां भरतर्षभ ।
तत्र स्नात्वा च पीत्वा च वसूनां संमतोभवेत् ॥ ३-८०-७९ (१९०२६)
सिन्धूत्तममिति ख्यातं सर्वपापप्रणाशनम् ।
तत्र स्नात्वा नरश्रेष्ठ लभेद्बहुसुवर्णकम् ॥ ३-८०-८० (१९०२७)
ब्रह्मतीर्थं समासाद्य शुचिः शीलसमन्वितः ।
ब्रह्मलोकमवाप्नोति गतिं च परमां व्रजेत् ॥ ३-८०-८१ (१९०२८)
कुमारिकाणां शक्रस्य तीर्थं सिद्धनिषेवितम् ।
तत्र स्नात्वा नरः क्षिप्रं स्वर्गलोकमवाप्नुयात् ॥ ३-८०-८२ (१९०२९)
रेणुकायाश्च तत्रैव तीर्थं सिद्धनिषेवितम् ।
तत्र स्नात्वा भवेद्विप्रो निर्मलश्चन्द्रमा यथा ॥ ३-८०-८३ (१९०३०)
अथ पञ्चनदं गत्वा नियतो नियताशनः ।
पञ्चयज्ञानवाप्नोति क्रमशो येऽनुकीर्तिताः ॥ ३-८०-८४ (१९०३१)
ततो गच्छेत राजेन्द्र भीमायाः स्थानमुत्तमम् ।
तत्रस्नात्वा न योन्यां वै भवेद्भरतसत्तम ॥ ३-८०-८५ (१९०३२)
देव्याः पुत्रो भवेद्राजंस्तप्तकुण्डलभूषणः ।
गवां शतसहस्रस्य फलं प्राप्नोति मानवः ॥ ३-८०-८६ (१९०३३)
गिरिकुञ्जं समासाद्य त्रिषु लोकेषु विश्रुतम् ।
पितामहं नमस्कृत्य गोसहस्रफलं लभेत् ॥ ३-८०-८७ (१९०३४)
ततो गच्छेत धर्मज्ञ विमलं तीर्थमुत्तमम् ।
अद्यापि यत्रदृश्यन्ते मत्स्याः सौवर्णराजताः ॥ ३-८०-८८ (१९०३५)
तत्र स्नात्वा नरः क्षिप्रं वासवं लोकमाप्नुयात् ।

सर्वपापविशुद्धात्मा गच्छेत परमां गतिम् ॥ ३-८०-८९ (१९०३६)
वितस्तां च समासाद्य संतर्प्य पितृदेवताः ।
नरः फलमवाप्नोति वाजपेयस्य भारत ॥ ३-८०-९० (१९०३७)
काश्मीरष्वेव नागस्य भवनं तक्षकस्य च ।
वितस्ताख्यमिति ख्यातं सर्वपापप्रमोचनम् ॥ ३-८०-९१ (१९०३८)
तत्रस्नात्वा नरो नूनं वाजपेयमवाप्नुयात् ।
सर्वपापविशुद्धात्मा गच्छेच्च परमां गतिम् ॥ ३-८०-९२ (१९०३९)
ततो गच्छेत मलदां त्रिषु लोकेषु विश्रुताम् ।
पश्चिमायां तु संध्यायामुपस्पृश्य यथाविधि ॥ ३-८०-९३ (१९०४०)
चरुं सप्तार्चिषे राजन्यथाशक्ति निवेदयेत् ।
पितॄणामक्षयं दानं प्रवदन्ति मनीषिणः ॥ ३-८०-९४ (१९०४१)
ऋषयः पितरो देवा गन्धर्वाप्सरसां गणाः ।
गुह्यकाः किन्नरा यक्षाः सिद्धा विद्याधरा नराः ॥ ३-८०-९५ (१९०४२)
राक्षसा दितिजा रुद्रा ब्रह्मा च मनुजाधिप ।
नियतः परमां दीक्षामास्थायाब्दसहस्रिकीम् ॥ ३-८०-९६ (१९०४३)
विष्णोः प्रसादनं कुर्वंश्चरुं च श्रपयंस्तथा ।
सप्तभिः सप्तभिश्चैव ऋग्भिस्तुष्टाव केशवम् ॥ ३-८०-९७ (१९०४४)
ददावष्टगुणैश्वर्यं तेषां तुष्टस्तु केशवः ।
यथाभिलषितानन्यान्कामान्दत्वा महीपते ॥ ३-८०-९८ (१९०४५)
तत्रैवान्तर्दधे देवो विद्युदभ्रेषु वै यथा ।
नाम्ना सप्तचरुं तेन ख्यातं लोकेषु भारत ॥ ३-८०-९९ (१९०४६)
गवां शतसहस्रेण राजसूयशतेन च ।
अश्वमेधसहस्रेण श्रेयान्सप्तार्चिषे चरुः ॥ ३-८०-१०० (१९०४७)
ततो निवृत्तो राजेन्द्र रुद्रं पदमथाविशेत् ।
अर्चयित्वामहादेवमश्वमेधफलं लभेत्। ३-८०-१०१ (१९०४८)
मणिमन्तं समासाद्य ब्रह्मचारी समाहितः ।
एकरात्रोपितो राजन्नग्निष्टोमफलं लभेत् ॥ ३-८०-१०२ (१९०४९)
अथ गच्छेत राजेन्द्र देविकां लोकविश्रुतम् ।
प्रसूतिर्यत्र विप्राणां श्रूयते भरतर्षभ ॥ ३-८०-१०३ (१९०५०)
त्रिशूलपाणएः स्थानं च त्रिषु लोकेषु विश्रुतम् ।
देविकायां नरः स्नात्वा समभ्यर्च्य महेश्वरम् ॥ ३-८०-१०४ (१९०५१)
यथाशक्ति चरुं तत्र निवेद्य भरतर्षभ ।
सर्वकामसमृद्धस्य यज्ञस्य लभते फलम् ॥ ३-८०-१०५ (१९०५२)
कामाख्यं तत्र रुद्रस्य तीर्थं देवनिषेवितम् ।
तत्रस्नात्वा नरः क्षिप्रं सिद्धिं प्राप्नोति भारत ॥ ३-८०-१०६ (१९०५३)
यजनं याजनं चैवतथैव ब्रह्मबालुकम् ।

पुष्पाम्भश्च उपस्पृश्य न शोचेन्मरणं गतः ॥ ३-८०-१०७ (१९०५४)
अर्धयोजनविस्तारां पञ्चयोजनमायताम् ।
एतां हि देविकामाहुः पुण्यां देवर्षिसेविताम् ॥ ३-८०-१०८ (१९०५५)
ततो गच्छेत धर्मज्ञ दीर्घसत्रं यथाक्रमम् ।
तत्र ब्रह्मादयो देवाः सिद्धाश्च परमर्षयः ।
दीर्घसत्रमुपासन्ते दीक्षिता नियतव्रताः ॥ ३-८०-१०९ (१९०५६)
गमनादेव राजेन्द्र दीर्घसत्रमरिंदम ।
राजसूयाश्वमेधाभ्यां फलं प्राप्नोति भारत ॥ ३-८०-११० (१९०५७)
ततो विनशनं गच्छेन्नियतो नियताशनः ।
गच्छत्यन्तर्हिता यत्रमेरुपृष्ठे सरस्वती ॥ ३-८०-१११ (१९०५८)
चमसेऽथ शिवोद्भेदे नागोद्भेदे च दृश्यते ।
ग्तत्र स्नात्वा नरव्याघ्र द्योतते शशिवत्वदा।'
स्नात्वा तु चमसोद्भेदे अग्निष्टोमफलं लभेत् ॥ ३-८०-११२ (१९०५९)
शिवोद्भेदे नरः स्नात्वा गोसहस्रफंल लभेत् ।
नागोद्भेदे नरः स्नात्वा नागलोकमवाप्नुयात् ॥ ३-८०-११३ (१९०६०)
शशयानं च राजेन्द्रतीर्थमासाद्य दुर्लभम् ।
शतरूपप्रतिच्छन्नाः पुष्करा यत्र भारत ॥ ३-८०-११४ (१९०६१)
सरस्वत्यां महाराज शतं संवत्सरं च ते ।
दृश्यन्ते भरतश्रेष्ठ वृत्तां वै कार्तिकीं सदा ॥ ३-८०-११५ (१९०६२)
तत्रस्नात्वा नरव्याघ्र द्योतते शशिवत्सदा ।
गोसहस्रफलं चैव प्राप्नुयाद्भरतर्षभ ॥ ३-८०-११६ (१९०६३)
कुमारकोटीमासाद्य नियतः कुरुनन्दन ।
तत्राभिषेकं कुर्वीत पितृदेवार्चने रतः ॥ ३-८०-११७ (१९०६४)
गवामयुतमाप्नोति कुलं चैव समुद्धरेत् ।
ततो गच्छेत धर्मज्ञ रुद्रकोटिं समाहितः ॥ ३-८०-११८ (१९०६५)
पुरा यत्र महाराज मुनिकोटिः समागता ।
हर्षेण महताऽऽविष्टा रुद्रदर्शनकाङ्क्षया ॥ ३-८०-११९ (१९०६६)
अहंपूर्वमहंपूर्वं द्रक्ष्यामि वृषभध्वजम् ।
एवं संप्रस्थिता राजन्नृषयः किल भारत ॥ ३-८०-१२० (१९०६७)
ततो योगीश्वरेणापि योगमास्थाय भूपते ।
तेषां मन्युप्रणाशार्थमृषीणां भावितात्मनाम् ॥ ३-८०-१२१ (१९०६८)
स्रष्टा कोटीस्तु रुद्राणामृषीणामग्रतः स्थिता ।
मया पूर्वतरं दृष्ट इतिते मेनिरे पृथक् ॥ ३-८०-१२२ (१९०६९)
तेषां तुष्टो महादेवो मुनीनां भावितात्मनाम् ।
भक्त्या परमया राजन्वरं तेषां प्रदिष्टवान् ॥ ३-८०-१२३ (१९०७०)
अद्यप्रभृति युष्माकं धर्मवृद्धिर्भविष्यति ।

तत्रस्नात्वा नरव्याघ्र रुद्रकोट्यां नरः शुचिः ॥ ३-८०-१२४ (१९०७१)
अश्वमेधमवाप्नोति कुलं चैव समुद्धरेत् ।
ततो गच्छेत राजेन्द्र संगमं लोकविश्रुतम् ॥ ३-८०-१२५ (१९०७२)
सरस्वत्या महापुण्यं केशवं समुपासते ।
यत्रब्रह्माहयो देवा ऋषयश्च तपोधनाः ॥ ३-८०-१२६ (१९०७३)
अभिगच्छन्ति राजेन्द्र चैत्रशुक्लचतुर्दशीम् ।
तत्रस्नात्वा नरव्याघ्र विन्देद्बहुसुवर्णकम् ।
सर्वपापविशुद्धात्मा ब्रह्मलोकं च गच्छति ॥ ३-८०-१२७ (१९०७४)
ऋषीणां यत्र सत्राणि समाप्तानि नराधिप ।
तत्रावसानमासाद्य गोसहस्रफलं लभेत् । ३-८०-१२८ (१९०७५)

इति श्रीमन्महाभारते अरण्यपर्वणि तीर्थयात्रापर्वणि
अशीतितमोऽध्यायः ॥ ८० ॥

Mahabharata - Vana Parva - Chapter Footnotes

३-८०-१० अपावृत्तो निवृत्तः । संतुष्टो नियतः शुचिरिति
क। ध। पाठः ॥
३-८०-११ अकल्ककः दम्भादिहीनः ॥
३-८०-२० नृलोके देवदेवस्य तीर्थमिति झ । पाठः ॥
३-८०-२७ पितृदेवार्चने रतः इति झ । पाठः ॥
३-८०-३५ उपस्पृष्टं स्नातं भवेत् ॥
३-८०-३३ उष्य वासं कृत्वा ॥
३-८०-३६ पुण्यं स्थानमुमापतेरिति ध । पाठः ॥
३-८०-५१ पिकतीर्थमिति ध । पाठः ॥
३-८०-५९ तस्मिंस्तीर्थे नरः स्नात्वा पुण्यलक्षणलक्षितः इति ध । पाठः ॥
३-८०-६७ दमीतीति प्रमीतीति क्रमेण क । ध। पाठः ॥
३-८०-७३ भद्रतुङ्गं समासाद्येति झ । पाठः। अवाप्नोति सुकृती
विरजानर इति ध। पाठः ॥
३-८०-८१ श्रीकुण्डं तुं समासाद्येति झ । पाठः ॥
३-८०-९३ ततो गच्छेत बडबामिति झ । पाठः ॥
३-८०-१०१ भद्रपादमुपविशेदिति ध । पाठः ॥
३-८०-१०७ पुष्पजायामुपस्पृश्येति ध । पाठः ॥
३-८०-१०९ दक्षिणाभिर्यतव्रता इति क । ध। पाठः ॥
३-८०-११२ चमसे चमसोद्भेदे इति ध । पाठः ॥
३-८०-११४ शतह्रदं च राजेन्द्रेति क । ध।पाठः ॥
३-८०-११८ गवां मेधमवाप्नोतीति क । ध। पाठः ॥

वन-अध्यय०८१
॥ श्रीः ॥
३.८१. अध्यायः ८१

Mahabharata - Vana Parva - Chapter Topics
पुलस्त्येन भीष्मंप्रति नानातीर्थमहिमानुवर्णनम् ॥ १ ॥

Mahabharata - Vana Parva - Chapter Text

३-८१-० (१९०७६)
पुलस्त्य उवाच। ३-८१-०क्ष् (१९८६)
ततो गच्छेत राजेन्द्र कुरुक्षेत्रमभिष्टुतम् ।
पापेभ्योविप्रमुच्यन्ते तद्गताः सर्वजन्तवः ॥ ३-८१-१ (१९०७७)
कुरुक्षेत्रं गमिष्यामि कुरुक्षेत्रे वसाम्यहम् ।
य एवं सततं ब्रूयात्सोऽपि पापैः प्रमुच्यते ॥ ३-८१-२ (१९०७८)
पांसवोऽपिकुरुक्षेत्रे वायुना समुदीरिताः ।
अपिदुष्कृतकर्माणं नयन्ति परमां गतिम् ॥ ३-८१-३ (१९०७९)
दक्षिणेन सरस्वत्या दृषद्वत्युत्तरेण च ।
ये वसन्ति कुरुक्षेत्रे ते वसन्ति त्रिविष्टपे ॥ ३-८१-४ (१९०८०)
तत्र मासं वसेद्धीरः सरस्वत्यां युधांवर ।
यत्रब्रह्मादयो देवा ऋषयः सिद्धचारणाः ॥ ३-८१-५ (१९०८१)
गन्धर्वाप्सरसो यक्षाः पन्नगाश्च महीपते ।
ब्रह्मक्षेत्रं महापुण्यमभिगच्छन्ति भारत ॥ ३-८१-६ (१९०८२)
मनसाऽप्यभिकामस्य कुरुक्षेत्रं युधांवर ।
पापानि विप्रणश्यन्ति ब्रह्मलोकं च गच्छति ॥ ३-८१-७ (१९०८३)
गत्वा हि श्रद्धया युक्तः करुक्षेत्रं कुरूद्वह ।
राजसूयाश्वमेधाभ्यां फलमाप्नोति मानवः ॥ ३-८१-८ (१९०८४)
ततश्च मन्तुकं राजन्द्वारपालं महाबलम् ।
यक्षं समभिवाद्यैव गोसहस्रफलं लभेत् ॥ ३-८१-९ (१९०८५)
ततो गच्छेत धर्मज्ञ विष्णो स्थानमनुत्तमम् ।
सततं नाम राजेन्द्र यत्रसन्निहितो हरिः ॥ ३-८१-१० (१९०८६)
तत्रस्नात्वाऽर्चयित्वा च त्रिलोकप्रभवं हरिम् ।
अश्वमेधमवाप्नोति विष्णुलोकं च गच्छति ॥ ३-८१-११ (१९०८७)
ततः परिप्लवं गच्छेत्तीर्थं त्रैलोक्यविश्रुतम् ।
अग्निष्टोमातिरात्राभ्यां फलं प्राप्नोति भारत ॥ ३-८१-१२ (१९०८८)
पृथिवीतीर्थमासाद्य गोसहस्रफलं लभेत् ।

ततः शालूकिनी गत्वा तीर्थसेवी नराधिप ॥ ३-८१-१३ (११०८९)
दशाश्वमेधे स्नात्वा च तदेव फलमाप्नुयात् ।
सर्पदर्वीं समासाद्य नागानां तीर्थमुत्तमम् ॥ ३-८१-१४ (११०९०)
अग्निष्टोममवाप्नोति नागलोकं च विन्दति ।
ततो गच्छेत धर्मज्ञ द्वारपालमरुन्तुकम् ॥ ३-८१-१५ (११०९१)
तत्रोष्य रजनीमेकां गोसहस्रफलं लभेत् ।
ततः पञ्चनदं गत्वा नियतो नियताशनः ॥ ३-८१-१६ (११०९२)
कोटितीर्थमुपस्पृश्य हयमेधफंल लभेत् ।
अश्विनोस्तीर्थमासाद्य रूपवानभिजायते ॥ ३-८१-१७ (११०९३)
ततो गच्छेत धर्मज्ञ वाराहं तीर्थमुत्तमम् ।
विष्णुर्वाराहरूपेण पूर्वं यत्र स्थितो विभुः ॥ ३-८१-१८ (११०९४)
तत्रस्नात्वा नरश्रेष्ठ अग्निष्टोमफलं लभेत् ।
ततो जयन्त्यां राजेन्द्र सोमतीर्थं समाविशेत् ॥ ३-८१-१९ (११०९५)
स्नात्वा फलमवाप्नोति राजसूयस्य मानवः ।
एकहंसे नरः स्नात्वा गोसहस्रफलं लभेत् ॥ ३-८१-२० (११०९६)
शतशौचं समासाद्य तीर्थसेवी नराधिप ।
पौण्डरीकमवाप्नोति कृतशौचो भवेच्च सः ॥ ३-८१-२१ (११०९७)
ततो मुञ्जवटं नाम स्थाणोः स्थानं महात्मनः ।
उपोष्य रजनीमेकां गाणपत्यमवाप्नुयात् ॥ ३-८१-२२ (११०९८)
तत्रैव च महाराज यक्षिणी लोकविश्रुता ।
तां चाभिगम्यराजेन्द्र सर्वान्कामानवाप्नुयात् ॥ ३-८१-२३ (११०९९)
कुरुक्षेत्रस् तद्द्वारं विश्रुतं भरतर्षभ ।
प्रदक्षिणमुपावृत्य तीर्थसेवी समाहितः ॥ ३-८१-२४ (१११००)
संमिते पुष्कराणां च स्नात्वाऽर्च्य पितृदेवताः ।
जामदग्न्येन रामेण कृतं तत्सुमहात्मना ॥ ३-८१-२५ (१११०१)
कृतकृत्यो भवेद्राजन्नश्वमेधं च विन्दति ।
ततो रामह्रदानाच्छेत्तीर्थसेवी समाहितः ॥ ३-८१-२६ (१११०२)
तत्ररामेण राजेनद्रतरसा दीप्ततेजसा ।
क्षत्रमुत्साद्य वीरेण ह्रदाः पञ्च निवेशिताः ॥ ३-८१-२७ (१११०३)
पूरयित्वा नरव्याघ्र रुधिरेणेति नः श्रुतम् ।
पितरस्तर्पिताः सर्वे तथैव प्रपितागहाः ॥ ३-८१-२८ (१११०४)
ततस्ते पितरः प्रीता राममूचुर्नराधिप ।
रामराम महाभाग प्रीताः स्म तव भार्गव ॥ ३-८१-२९ (१११०५)
अनया पितृभक्त्या च विक्रमेण च ते विभो ।
वरं वृणीष्व भद्रं ते किमिच्छसि महाद्युते ॥ ३-८१-३० (१११०६)
एवमुक्तः स राजेन्द्र राम प्रहरतांवरः ।

अब्रवीत्प्राञ्जलिर्वाक्यं पितॄन्स गगने स्थितान् ॥ ३-८१-३१ (११९०७)
भवन्तो यदि मे प्रीता यद्यनुग्राह्यता मयि ।
पितृप्रसादादिच्छेयं तपःस्वाध्ययनं पुनः ॥ ३-८१-३२ (१९१०८)
यच्च रोषाभिभूतेन क्षत्रमुत्सादितं मया ।
ततश्च पापान्मुच्येयं युष्माकं तेजसाऽप्यहम् ॥ ३-८१-३३ (१९१०९)
ह्रदाश्च तीर्थभूता मे भवेयुर्भुवि विश्रुताः ।
एतच्छ्रुत्वा शुभं वाक्यं रामस्य पितरस्तदा ॥ ३-८१-३४ (१९११०)
प्रत्यूचुः परमप्रीता रामं हर्षसमन्विताः ।
तपस्ते वर्धतां भूयः पितृभक्त्या विशेषतः ॥ ३-८१-३५ (१९१११)
यच्च रोपाभिभूतेन क्षत्रमुत्सादितं त्वया ।
ततश्च पापान्मुक्तस्त्वं पातितास्ते स्वकर्मभिः ॥ ३-८१-३६ (१९११२)
ह्रदाश्च तव तीर्थत्वं गमिष्यन्ति न संशयः ।
ह्रदेषु तेषु यः स्नात्वा पितॄन्संतर्पयिष्यति ॥ ३-८१-३७ (१९११३)
पितरस्तस् वै प्रीता दास्यन्ति भुवि दुर्लभम् ।
ईप्सितं च मनःकामं स्वर्गलोकं च शाश्वतम् ॥ ३-८१-३८ (१९११४)
एवं दत्त्वा वरान्राजन्रामस्य पितरस्तदा ।
आमन्त्र्य भारग्वं प्रीत्या तत्रैवान्तर्हितास्ततः ॥ ३-८१-३९ (१९११५)
एवं रामह्रदाः पुण्या भार्गवस्य महात्मनः ।
स्नात्वा ह्रहेषु रामस्य ब्रह्मचारी शुचिव्रतः ॥ ३-८१-४० (१९११६)
राममभ्यर्च्य राजेन्द्र लभेद्बहु सुवर्णकम् ।
वंशमूलकमासाद्य तीर्थसेवी कुरूद्वह ॥ ३-८१-४१ (१९११७)
स्ववंशमुद्धरेद्राजन्स्नात्वा वै वंशमूलके ।
कायशोधनमासाद्य तीर्थं भरतसत्तम ॥
शरीरशुद्धिः स्नातस्य तस्मिंस्तीर्थे न संशयः। ३-८१-४२ (१९११८)
शरीरशुद्धिः स्नातस्य तस्मिंस्तीर्थे न संशयः ।
शुद्धदेहश्च संयाति युभाँल्लोकाननुत्तमान् ॥ ३-८१-४३ (१९११९)
ततो गच्छेत धर्मज्ञ तीर्थं त्रैलोक्यविश्रुतम् ।
लोका यत्रोद्धृताः पूर्वं विष्णुना प्रभविष्णुना ॥ ३-८१-४४ (१९१२०)
लोकोद्धारं समासाद्य तीर्थं त्रैलोक्यपूजितम् ।
स्नात्वा तीर्थवरे राजँल्लोकानुद्धरते स्वकान् ॥ ३-८१-४५ (१९१२१)
श्रीतीर्थं च समासाद्य स्नात्वा नियतमानसः ।
अर्चयित्वा पितॄन्देवान्विन्दते श्रियमुत्तमाम् ॥ ३-८१-४६ (१९१२२)
कपिलातीर्थमासाद्य ब्रह्मचारी समाहितः ।
तत्र स्नात्वाऽर्चयित्वा च पितॄन्स्वान्दैवतान्यपि ॥ ३-८१-४७ (१९१२३)
कपिलानां सहस्रस्य फलंविन्दति मानवः ।
सूर्यतीर्थं समासाद्य स्नात्वा नियतमानसः ॥ ३-८१-४८ (१९१२४)

अर्चयित्वा पितॄन्देवानुपवासपरायणः ।
अग्निष्टोममवाप्नोति सूर्यलोकं च गच्छति ॥ ३-८१-४९ (१९१२५)
गवां भगवनासाद्य तीर्थसेवी यथाक्रमम् ।
तत्राभिषेकं कुर्वाणो गोसहस्रफलं लभेत् ॥ ३-८१-५० (१९१२६)
शङ्खिनीतीर्थमासाद्य तीर्थसेवी कुरूद्वह ।
देव्यास्तीर्थे नरः स्नात्वा लभते रूपमुत्तमम् ॥ ३-८१-५१ (१९१२७)
ततो गच्छेत राजेन्द्रद्वारपालमरुन्तुकम् ।
तच्च तीर्थं सरस्वत्यां यक्षेन्द्रस्य महात्मनः ॥ ३-८१-५२ (१९१२८)
तत्रस्नात्वा नरो राजन्नग्निष्टोमफलं लभेत् ।
ततो गच्छेत राजेन्द्र ब्रह्मावर्तं नरोत्तमः ॥ ३-८१-५३ (१९१२९)
ब्रह्मावर्ते नरः स्नात्वा ब्रह्मलोकमवाप्नुयात् ।
ततो गच्छेत राजेन्द्र सुतीर्थकमनुत्तमम् ॥ ३-८१-५४ (१९१३०)
तत्रसन्निहिता नित्यं पितरो दैवतैः सह ।
तत्राभिषेकं कुर्वीत पितृदेवार्चने रतः ॥ ३-८१-५५ (१९१३१)
अश्वमेधमावाप्नोति पितृलोकं च गच्छति ।
ततोम्बुमत्यां धर्मज्ञ सुतीर्थकमनुत्तमम् ॥ ३-८१-५६ (१९१३२)
कोशेश्वरस्य तीर्थेषु स्नात्वा भरतसत्तम ।
सर्वव्याधिविनिर्मुक्तो ब्रह्मलोके महीयते ॥ ३-८१-५७ (१९१३३)
मातृतीर्थं च तत्रैव यत्रस्नातस्य भारत ।
प्रजा विवर्धते राजन्न तन्वीं श्रियमश्नुते ॥ ३-८१-५८ (१९१३४)
ततः शीतवनं गच्छेन्नियतो नियताशनः ।
तीर्थं तत्रमहाराज महदन्यत्र दुर्लभम् ॥ ३-८१-५९ (१९१३५)
पुनाति गमनादेव कुलमेकं नराधिप ।
केशानभ्युक्ष् वै तस्मिन्पूतो भवति भारत ॥ ३-८१-६० (१९१३६)
तीर्थं तत्र महाराज श्वानलोमापहं स्मृतम् ।
यत्र विप्रा नरव्याघ्र विद्वांसस्तीर्थतत्पराः ॥ ३-८१-६१ (१९१३७)
गतिं गच्छन्ति परमां स्नात्वा भरतसत्तम ।
श्वानलोमापनयने तीर्थे भरतसत्तम ॥ ३-८१-६२ (१९१३८)
प्राणायामैर्निर्हरन्ति स्वलोमानि द्विजोत्तमाः ।
पूतात्मानश्च राजेन्द्रप्रयान्ति परमां गतिम् ॥ ३-८१-६३ (१९१३९)
दशाश्वमेधिकं चैव तस्मिंस्तीर्थे महीपते ।
तत्र स्नात्वा नरव्याघ्र गच्छेत परमां गतिम् ॥ ३-८१-६४ (१९१४०)
ततो गच्छेत राजेन्द्र मानुषं लोकविश्रुतम् ।
यत्र कृष्णमृगा राजन्व्याधेन परिपीडिताः ॥ ३-८१-६५ (१९१४१)
विगाह्य तस्मिन्सरसि मानुषत्वमुपागताः ।
तस्मिंस्तीर्थे नरः स्नात्वा ब्रह्मचारी समाहितः ॥ ३-८१-६६ (१९१४२)

सर्वपापविशुद्धात्मा स्वर्गलोके महीयते ।
मानुषस्य तु पूर्वेण क्रोशमात्रे महीपते ॥ ३-८१-६७ (१९१४३)
आपगा नाम विख्याता नदीसिद्धनिषेविता ।
श्यामाकभोजनं तत्रयः प्रयच्छति मानवः ॥ ३-८१-६८ (१९१४४)
देवान्पितॄन्समुद्दिश्य तस्य धर्मफलं महत् ।
एकस्मिन्भोजिते विप्रे कोटिर्भवति भोजिता ॥ ३-८१-६९ (१९१४५)
तत्रस्नात्वाऽर्चयित्वा च पितृन्वै दैवतानि च ।
उषित्वा रजनीमेकामग्निष्टोमफलं लभेत् ॥ ३-८१-७० (१९१४६)
ततो गच्छेत राजेन्द्र ब्रह्मणः स्थानमुत्तमम् ।
ब्रह्मोदुम्बरमित्येव प्रकाशं भुवि भारत ॥ ३-८१-७१ (१९१४७)
तत्रसप्तर्षिकुण्डेषु स्नातस् यनरपुङ्गव ।
केदारे चैवराजेन्द्रकपिञ्जलमहामुनेः ॥ ३-८१-७२ (१९१४८)
ब्रह्माणमधिगत्वा च शुचिः प्रयतमानसः ।
सर्वपापविशुद्धात्मा ब्रह्मलोकं प्रपद्यते ॥ ३-८१-७३ (१९१४९)
कपिञ्जलस्य केदारं समासाद्य सुदुर्लभम् ।
अन्तर्धानमवाप्नोति तपसा दग्धकिल्विषः ॥ ३-८१-७४ (१९१५०)
ततो गच्छेत राजेन्द्र शङ्करं लोकविश्रुतम् ।
कृष्णपक्षे चतुर्दश्यामभिगम्य वृषध्वजम् ॥ ३-८१-७५ (१९१५१)
लभेत सर्वकामान्हि स्वर्गलोकं च गच्छति ।
तिस्रः कोट्यस्तु तीर्थानां शङ्करे कुरुनन्दन ॥ ३-८१-७६ (१९१५२)
रुद्रकोट्यां तथा कूपे ह्रदेषु च महीपते ।
शुद्धास्पदं च तत्रैव तीर्थं भरतसत्तम ॥ ३-८१-७७ (१९१५३)
तत्रस्नात्वाऽर्चयित्वा च दैवतानि पितॄनथ ।
न दुर्गतिमवाप्नोति वाजपेयं च विन्दति ॥ ३-८१-७८ (१९१५४)
किंदाने च नरः स्नात्वा किंजप्ये च महीपते ।
अप्रमेयमवाप्नोति दानं जप्यं च भारत ॥ ३-८१-७९ (१९१५५)
कलश्यां वार्युपस्पृश्य श्रद्दधानो जितेन्द्रियः ।
अग्निष्टोमस् यज्ञस्य फलं प्राप्नोति मानवः ॥ ३-८१-८० (१९१५६)
शंकरस्य तु पूर्वेण नारदस्य महात्मनः ।
तीर्थं कुरुकुलश्रेष्ठ अजानन्तेति विश्रुतम् ॥ ३-८१-८१ (१९१५७)
तत्रतीर्थे नरः स्नात्वा प्राणानुत्सृज्य भारत ।
नारदेनाभ्यनुज्ञातो लोकान्प्राप्नोत्यनुत्तमानन् ॥ ३-८१-८२ (१९१५८)
शुक्लपक्षे दशम्यां च पुण्डरीकं समाविशेत् ।
तत्र स्नात्वा नरो राजन्पौण्डरीकफलं लभेत् ॥ ३-८१-८३ (१९१५९)
ततस्त्रिविष्टपं गच्छेत्रिषु लोकेषु विश्रुतम् ।
तत्र वैतरणी पुण्या नदी पापप्रणाशिनी ॥ ३-८१-८४ (१९१६०)

तत्र स्नात्वाऽर्चयित्वा च शूलपाणिं वृषध्वजम् ।
सर्वपापविशुद्धात्मा गच्छेत परमां गतिम् ॥ ३-८१-८५ (११६१)
ततो गच्छेत राजेन्द्र फलकीवनमुत्तमम् ।
तत्र देवाः सदा राजन्फलकीवनमाश्रिताः ॥ ३-८१-८६ (११६२)
तपश्चरन्ति विपुलं बहुवर्षसहस्रकम् ।
दृषद्वत्यां नरः स्नात्वा तर्पयित्वा च देवताः ॥ ३-८१-८७ (११६३)
अग्निष्टोमातिरात्राभ्यां फलं विन्दति भारत ।
तीर्थे च सर्वदेवानां स्नात्वा भरतसत्तम ॥ ३-८१-८८ (११६४)
गोसहस्रस्य राजेन्द्र फलं विन्दति मानवः ।
पाणिस्वाते नरः स्नात्त्वा तर्पयित्वा च देवताः ॥ ३-८१-८९ (११६५)
अग्निष्टोमातिरात्राभ्यां फलं विन्दति भारत ।
राजसूयमवाप्नोति ऋषिलोकं च विन्दति ॥ ३-८१-९० (११६६)
ततो गच्छेत राजेन्द्र मिश्रकं तीर्थमुत्तमम् ।
तत्र तीर्थानि राजेन्द्र मिश्रितानि महात्मना ॥ ३-८१-९१ (११६७)
व्यासेन नृपशार्दूल द्विजार्थमिति नः श्रुतम् ।
सर्वतीर्थेषु स स्नाति मिश्रके स्नाति यो नरः ॥ ३-८१-९२ (११६८)
ततो व्यासवनं गच्छेन्नियतो नियताशनः ।
मनोजवे नरः स्नात्वा गोसहस्रफलं लभेत् ॥ ३-८१-९३ (११६९)
गत्वा मधुवटीं चैव देव्याः स्थानं नरः शुचिः ।
तत्र स्नात्वाऽर्चयित्वा च पितॄन्देवांश्च पूरुषः ॥ ३-८१-९४ (११७०)
स देव्या समनुज्ञातो गोसहस्रफलं लभेत् ।
कौशिक्याः संगमे यस्तु दृषद्वत्याश्च भारत ॥ ३-८१-९५ (११७१)
स्नाति वै नियताहार सर्वपापैः प्रमुच्यते ।
ततो व्यासस्थली नाम यत्रव्यासेन धीमता ॥ ३-८१-९६ (११७२)
पुत्रशोकाभितप्तेन देहत्यागे कृता मतिः ।
ततो देवैस्तु राजेन्द्र पुनरुत्थापितस्तदा ॥ ३-८१-९७ (११७३)
अभिगत्वा स्थलीं तस्य गोसहस्रफलं लभेत् ।
किंदत्तं कूपमासाद्य तिलप्रस्थं प्रदाय च ॥ ३-८१-९८ (११७४)
गच्छेत परमां सिद्धिमृणैर्मुक्तः कुरूद्वह ।
वेदीतीर्थे नरः स्नात्वा गोसहस्रफलं लभेत् ॥ ३-८१-९९ (११७५)
अहस्छ सुदिनं चैव द्वे तीर्थे लोकविश्रुते ।
तयोः स्नात्वा नरव्याघ्र सूर्यलोकमवाप्नुयात् ॥ ३-८१-१०० (११७६)
मृगधूमं ततो गच्छेत्रिषु लोकेषु विश्रुतम् ।
तत्राभिषेकं कुर्वीत गङ्गायां नृपसत्तम ॥ ३-८१-१०१ (११७७)
अर्चयित्वा महादेवमश्वमेधफलं लभेत् ।
देव्यास्तीर्थे नरः स्नात्वा गोसहस्रफलं लभेत् ॥ ३-८१-१०२ (११७८)

ततो वामनकं गच्छेत्रिषु लोकेषु विश्रुतम् ।
तत्रविष्णुपदे स्नात्वा अर्चयित्वा च वामनम् ॥ ३-८१-१०३ (११९७९)
सर्वपापविशुद्धात्मा विष्णुलोकं स गच्छति ।
कुलपुने नरः स्नात्वा पुनाति स्वकुलं ततः ॥ ३-८१-१०४ (११९८०)
पवनस्य ह्रदे स्नात्वा मरुतां तीर्थमुत्तमम् ।
तत्रस्नात्वा नरव्याघ्र विष्णुलोके महीयते ॥ ३-८१-१०५ (११९८१)
अमराणां ह्रदे स्नात्वा समभ्यर्च्यामराधिपम् ।
अमराणां प्रभावेन स्वर्गलोके महीयते ॥ ३-८१-१०६ (११९८२)
शालिहोत्रस्य तीर्थे च शालिशूर्पे यथाविधि ।
स्नात्वा नरवरश्रेष्ठ गोसहस्रफलं लभेत् ॥ ३-८१-१०७ (११९८३)
श्रीकुञ्जं च सरस्वत्यास्तीर्थं भरतसत्तम ।
तत्र स्नात्वा नरश्रेष्ठ अग्निष्टोमफलं लभेत् ॥ ३-८१-१०८ (११९८४)
ततो नैमिपकुञ्जं च समासाद्य कुरूद्वह ।
ऋषयः किल राजेन्द्र नैमिषेयास्तपस्विनः ॥ ३-८१-१०९ (११९८५)
तीर्थयात्रां पुरस्कृत्य कुरुक्षेत्रं गताः पुरा ।
ग्तत्र तीर्थे नरः स्नात्वा वाजिमेधफलं लभेत्।'
ततः कुञ्जः सरस्वत्याः कृतो भरतसत्तम ॥ ३-८१-११० (११९८६)
ऋपीणामवकाशः स्याद्यथा तुष्टिकरो महान् ।
कन्यातीर्थे नरः स्नात्वागोसहस्रफलं लभेत् ॥ ३-८१-१११ (११९८७)
ततो गच्छेत धर्मज्ञ कन्यातीर्थमनुत्तमम् ।
कन्यातीर्थे नरः स्नात्वा अग्निष्टोमफलं लभेत् ॥ ३-८१-११२ (११९८८)
ततो गच्छेत राजेन्द्र ब्रह्मणस्तीर्थमुत्तमम् ।
तत्रवर्णावरः स्नात्वा ब्राह्मण्यं लभते नरः ॥ ३-८१-११३ (११९८९)
ब्राह्मणश्च विशुद्धात्मा गच्छेत परमां गतिम् ।
ततो गच्छेन्नरश्रेष्ठ सोमतीर्थमनत्तमम् ॥ ३-८१-११४ (११९९०)
तत्र स्नात्वा नरो राजन्सोमलोकमवाप्नुयात् ।
सप्तसारस्वतं तीर्थं ततो गच्छेन्नराधिप ॥ ३-८१-११५ (११९९१)
यत्र मङ्कणकः सिद्धो महर्षिर्लोकविश्रुतः ।
पुरा मङ्कणको राजन्कुशाग्रेणेति नःश्रुतम् ॥ ३-८१-११६ (११९९२)
क्षतः किल करे राजंस्तस्य शाकरसोऽस्रवत् ।
स वै शाकरसं दृष्ट्वा हर्षाविष्टः प्रनृत्तवान् ॥ ३-८१-११७ (११९९३)
ततस्तस्मिन्प्रनृत्ते तु स्थावरं जङ्गमं च यत् ।
प्रनृत्तमुभयं वीर तेजसा तस्य मोहितम् ॥ ३-८१-११८ (११९९४)
ब्रह्मादिभिः सुरै राजनृषिभिश्च तपोधनैः ।
क्षिप्तो वै महादेव ऋषेरर्थे नराधिप ॥ ३-८१-११९ (११९९५)
नायं नृत्येद्यथा देव तथा न्वं कर्तुमर्हसि ।

तं प्रनृत्तं समासाद्य हर्षाविष्टेन चेतसा ।
सुराणां हितकामार्थमृषिं देवोऽभ्यभाषत ॥ ३-८१-१२० (१९१९६)
भोभो महर्षे धर्मज्ञ किमर्थं नृत्यते भवान् ।
हर्षस्थानं किमर्थं वा तवाद्य मुनिपुङ्गव ॥ ३-८१-१२१ (१९१९७)
ऋषिरुवाच। ३-८१-१२२क्ष् (१९८७)
तपस्विनो धर्मपथे स्थितस्य द्विजसत्तम ।
किं न पश्यसि मे ब्रह्मन्कराच्छाकरसं स्रुतम् ॥ ३-८१-१२२ (१९१९८)
यं दृष्ट्वाऽहं प्रनृत्तोऽहं हर्षेण महताऽन्वितः ।
तं प्रहस्याब्रवीद्देव ऋषिं रागेण मोहितम् ॥ ३-८१-१२३ (१९१९९)
अहं तु विस्मयं विप्र न गच्छामीति पश्य माम् ।
एवमुक्त्वा नरश्रेष्ठ महादेवेन धीमता ॥ ३-८१-१२४ (१९२००)
अङ्गुल्यग्रेण राजेन्द्रस्वाङ्गुष्ठस्ताडितोऽनघ ।
ततो भस्म क्षताद्राजन्निर्गतं हिमसन्निभम् ॥ ३-८१-१२५ (१९२०१)
तद्दृष्ट्वा व्रीडितो राजन्स मुनिः पादयोर्गतः ।
नान्यद्देवात्परं मेने रुद्रात्परतरं महत् ॥ ३-८१-१२६ (१९२०२)
सुरासुरस्य जगतो गतिस्त्वमसि शूलधृत् ।
त्वया सर्वमिदं सृष्टं त्रैलोक्यं सचराचरम् ॥ ३-८१-१२७ (१९२०३)
त्वमेव सर्वान्ग्रससि पुनरेव युगक्षये ।
देवैरपि न शक्यस्त्वं परिज्ञातुं कुतो मया ॥ ३-८१-१२८ (१९२०४)
त्वयि सर्वे प्रदृश्यन्ते सुरा ब्रह्मादयोऽनघ ।
सर्वस्त्वमसि लोकानां कर्ताकारयिता च ह ॥ ३-८१-१२९ (१९२०५)
त्वत्प्रसादात्सुराः सर्वे निवसन्त्यकुतोभयाः ।
एवं स्तुत्वा महादेवमृषिर्वचनमब्रवीत् ॥ ३-८१-१३० (१९२०६)
त्वत्प्रसादान्महादेव तपो मे न क्षरेत वै ।
ततो देवः प्रहृष्टात्मा ब्रह्मर्षिमिदमब्रवीत् ॥ ३-८१-१३१ (१९२०७)
तपस्ते वर्धतां विप्र मत्प्रसादात्सहस्रशः ।
आश्रमे चेह वत्स्यामि त्वया सह महामुने ॥ ३-८१-१३२ (१९२०८)
सप्तसारस्वते स्नात्वा अर्चयिष्यन्ति ये तु माम् ।
न तेषां दुर्लभं किंचिदिह लोके परत्र च ॥ ३-८१-१३३ (१९२०९)
सारस्वतं च ते लोकं गमिष्यन्ति न संशयः ।
एवमुक्त्वा महादेवस्तत्रैवान्तरधीयत ॥ ३-८१-१३४ (१९२१०)
पुलस्त्य उवाच। ३-८१-१३५क्ष् (१९८८)
ततस्त्वौशनसं गच्छेत्रिषु लोकेषु विश्रुतम् ।
यत्रब्रह्मादयो देवा ऋषयश्च तपोधनाः ॥ ३-८१-१३५ (१९२११)
कार्तिकेयश्च भगवांस्त्रिसंध्यं किल भारत ।
सान्निध्यमकरोन्नित्यं भार्गवप्रियकाम्यया ॥ ३-८१-१३६ (१९२१२)

कपालमोचनं तीर्थं सर्वपापप्रमोचनम् ।
तत्र स्नात्वा नरव्याघ्र सर्वपापैः प्रमुच्यते ॥ ३-८१-१३७ (१९२१३)
अग्नितीर्थं ततो गच्छेत्तत्र स्नात्वा नरर्षभ ।
अग्निलोकमवाप्नोति कुलं चैव समुद्धरेत् ॥ ३-८१-१३८ (१९२१४)
विश्वामित्रस्य तत्रैव तीर्थं भरतसत्तम ।
तत्र स्नात्वा नरश्रेष्ठ ब्राह्मण्यमधिगच्छति ॥ ३-८१-१३९ (१९२१५)
ब्रह्मयोनिं समासाद्य शुचिः प्रयतमानसः ।
तत्र स्नात्वा नरव्याघ्र ब्रह्मलोकं प्रपद्यते ॥ ३-८१-१४० (१९२१६)
पुनात्यासप्तमं चैव कुलं नास्त्यत्रसंशयः ।
ततो गच्छेत राजेन्द्र तीर्थं त्रैलोक्यविश्रुतम् ॥ ३-८१-१४१ (१९२१७)
पृथूदकमिति ख्यातं कार्तिकेयस्य वै नृप ।
तत्राभिषेकं कुर्वीत पितृदेवार्चने रतः ॥ ३-८१-१४२ (१९२१८)
अज्ञानाज्ज्ञानतो वाऽपिस्त्रिया वा पुरुषेण वा ।
यत्किंचिदशुभं कर्म कृतं मानुषबुद्धिना ॥ ३-८१-१४३ (१९२१९)
तत्सर्वं नश्यते तत्र स्नातमात्रस्य भारत ।
अश्वमेधफलं चास्य स्वर्गलोकं च गच्छति ॥ ३-८१-१४४ (१९२२०)
पुण्यमाहुः कुरुक्षेत्रं कुरुक्षेत्रात्सरस्वती ।
सरस्वत्याश्च तीर्थानि तीर्थेभ्यश् पृथूदकम् ॥ ३-८१-१४५ (१९२२१)
उत्तमे सर्वतीर्थानां यस्त्यजेदात्मनस्तनुम् ।
पृथूदके जप्यपरो नैव श्वो मरणं तपेत् ॥ ३-८१-१४६ (१९२२२)
गीतं सनत्कुमारेण व्यासेन च महात्मना ।
वेदे च नियतं राजन्नभिगच्छेत्पृथूदकम् ॥ ३-८१-१४७ (१९२२३)
पृथूदकात्तीर्थतमं नान्यत्तीर्थं कुरूद्वह ।
तन्मेध्यं तत्पवित्रं च पावनं च न संशयः ॥ ३-८१-१४८ (१९२२४)
तत्रस्नात्वा दिवं यान्ति येऽपि पापकृतो नराः ।
पृथूदके नरश्रेष्ठ एवमाहुर्मनीषिणः ॥ ३-८१-१४९ (१९२२५)
मधुस्रवं च तत्रैव तीर्थं भरतसत्तम ।
तत्र स्नात्वा नरो राजन्गोसहस्रफलं लभेत् ॥ ३-८१-१५० (१९२२६)
ततो गच्छेत राजेन्द्र तीर्थं देव्या यथाक्रमम् ।
सरस्वत्यारुणायाश्च संगमे लोकविश्रुते ॥ ३-८१-१५१ (१९२२७)
त्रिरात्रोपोषितः स्नात्वा मुच्यते ब्रह्महत्यया ।
अग्निष्टोमातिरात्राभ्यां फलं विन्दति मानवः ॥ ३-८१-१५२ (१९२२८)
आसप्तमं कुलं चैव पुनाति भरतर्षभ ।
अवतीर्णं च तत्रैव तीर्थं कुरुकुलोद्वह ॥ ३-८१-१५३ (१९२२९)
विप्राणामनुकम्पार्थं शार्ङ्गिणा निर्मितं पुरा ।
व्रतोपनयनाभ्यां चाप्युपवासेन वाऽप्युत ॥ ३-८१-१५४ (१९२३०)

क्रियामन्त्रैश्च संयुक्तो ब्राह्मणः स्यान्न संशयः ।
क्रियामन्त्रविहीनोऽपि तत्र स्नात्वा नरर्षभ ।
चीर्णव्रतो भवेद्विद्वान्दृष्टमेतत्पुरातनैः ॥ ३-८१-१५५ (१९२३१)
समुद्राश्चापि चत्वारः समानीताश् दर्भिणा ।
तेषु स्नातो नरश्रेष्ठ न दुर्गतिमवाप्नुयात् ॥ ३-८१-१५६ (१९२३२)
फलानि गोसहस्राणां चतुर्णां विन्दते च सः ।
ततो गच्छेत धर्मज्ञ तीर्थं शतसहस्रकम् ॥ ३-८१-१५७ (१९२३३)
साहस्रकं च तत्रैव द्वे तीर्थे लोकविश्रुते ।
उभयोर्हि नरः स्नात्वा गोसरस्रफंल लभेत् ॥ ३-८१-१५८ (१९२३४)
दानं वाऽप्युपवासो वा सहस्रगुणितं भवेत् ।
ततो गच्छेत राजेन्द्र रेणुकातीर्थमुत्तमम् ॥ ३-८१-१५९ (१९२३५)
तीर्ताभिषेकं कुर्वीत पितृदेवार्चने रतः ।
सर्वपापविशुद्धात्मा अग्निष्टोमफलं लभेत् ॥ ३-८१-१६० (१९२३६)
विमोचनमुपस्पृश्य जितमन्युर्जितेन्द्रियः ।
प्रतिग्रहकृतैर्दोषैः सर्वैः स परिमुच्यते ॥ ३-८१-१६१ (१९२३७)
ततः पञ्चवटीं गत्वा ब्रह्मचारी जितेन्द्रियः ।
पुण्येन महता युक्तः सतां लोके महीयते ॥ ३-८१-१६२ (१९२३८)
यत्रयोगेश्वरः स्थाणुः स्वयमेव वृषध्वजः ।
तमर्चयित्वा देवेशं गमनादेव सिद्धयति ॥ ३-८१-१६३ (१९२३९)
तैजसं वारुणं तीर्थं दीप्यमानं स्वतेजसा ।
यत्र रब्रह्मादिभिर्देवैर्ऋषिभिश्च तपोधनैः ॥ ३-८१-१६४ (१९२४०)
सैनापत्येन देवानामभिषिक्तो गुहस्तदा ।
तैजसस्य तु पूर्वेण कुरुतीर्थं कुरूद्वह ॥ ३-८१-१६५ (१९२४१)
कुरुतीर्थे नरः स्नात्वा ब्रह्मचारी जितेन्द्रियः ।
सर्वपापविशुद्धात्मा ब्रह्मलोकं प्रपद्यते ॥ ३-८१-१६६ (१९२४२)
स्वर्गद्वारं ततो गच्छेन्नियतो नियताशनः ।
स्वर्गलोकमवाप्नोति ब्रह्मलोकं च गच्छति ॥ ३-८१-१६७ (१९२४३)
ततो गच्छेदनरकं तीर्थसेवी नराधिप ।
तत्र स्नात्वा नरो राजन्न दुर्गतिमवाप्नुयात् ॥ ३-८१-१६८ (१९२४४)
तत्रब्रह्मा स्वयं नित्यं देवैः सह महीपते ।
अन्वास्ते पुरुषव्याघ्र नारायणपुरोगमैः ॥ ३-८१-१६९ (१९२४५)
सान्निध्यं तत्रराजेन्द्र रुद्रपत्न्याः कुरूद्वह ।
अभिगम्य च तां देवीं न दुर्गतिमवाप्नुयात् ॥ ३-८१-१७० (१९२४६)
तत्रैव च महाराज विश्वेश्वरमुमापतिम् ।
अभिगम्य महादेवं मुच्यते सर्वकिल्विषैः ॥ ३-८१-१७१ (१९२४७)
नारायणं चाभिगम्य पद्मनाभमरिंदम ।

राजमानो महाराज विष्णुलोकं च गच्छति ॥ ३-८१-१७२ (१९२४८)
तीर्थेषु सर्वदेवानां स्नातः स पुरुषर्षभ ।
सर्वदुःखैः परित्यक्तो द्योतते शशिवन्नरः ॥ ३-८१-१७३ (१९२४९)
ततः स्वस्तिपुरं गच्छेत्तीर्थसेवी नराधिप ।
प्रदक्षिणमुपावृत्य गोसहस्रफलं लभेत् ॥ ३-८१-१७४ (१९२५०)
पावनं तीर्थमासाद्य तर्पयेत्पितृदेवताः ।
अग्निष्टोमस्य यज्ञस्य फलं प्राप्नोति भारत ॥ ३-८१-१७५ (१९२५१)
गङ्गाह्रदश्च तत्रैव कूपश्च भरतर्षभ ।
तिस्रः कोट्यस्तु तीर्थानां तस्मिन्कूपे महीपते ॥ ३-८१-१७६ (१९२५२)
तत्र स्नात्वा नरो राजन्स्वर्गलोकं प्रपद्यते ।
आपगायां नरः स्नात्वा अर्चयित्वा महेश्वरम् ॥ ३-८१-१७७ (१९२५३)
गाणपत्यमवाप्नोति कुलं चैव समुद्धरेत् ।
ततः स्थाणुवटं गच्छेत्त्रिषु लोकेषु विश्रुतम् ॥ ३-८१-१७८ (१९२५४)
तत्र स्नात्वा स्थितो रात्रिं रुद्रलोकमवाप्नयात् ।
बदरीकाननं गच्छेद्वसिष्ठस्याश्रमं गतः ॥ ३-८१-१७९ (१९२५५)
बदरीं भक्षयेत्तत्र त्रिरात्रोपोषितो नरः ।
सम्यग्द्वादशवर्षाणि बदरीं भक्षयेत्तु यः ॥ ३-८१-१८० (१९२५६)
त्रिरात्रोपोषितस्तेन भवेत्तुल्यो नराधिप ।
इन्द्रमार्गं समासाद्य तीर्थसेवी नराधिप ॥ ३-८१-१८१ (१९२५७)
अहोरात्रोपवासेन शक्रलोके महीयते ।
एकरात्रं समासाद्य एकरात्रोषितो नरः ॥ ३-८१-१८२ (१९२५८)
नियतः सत्यवादी च ब्रह्मलोके महीयते ।
ततो गच्छेत राजेन्द्र तीर्थं त्रैलोक्यविश्रुतम् ॥ ३-८१-१८३ (१९२५९)
आदित्यस्याश्रमो यत्र तेजोराशेर्महात्मनः ।
तस्मिंस्तीर्थे नरः स्नात्वा पूजयित्वा विभावसुं ॥ ३-८१-१८४ (१९२६०)
आदित्यलोकं व्रजति कुलं चैव समुद्धरेत् ।
सोमतीर्थे नरः स्नात्वा तीर्थसेवी नराधिप ॥ ३-८१-१८५ (१९२६१)
सोमलोकमवाप्नोति नरो नास्त्यत्रसंशयः ।
ततो गच्छेत धर्मज्ञ दधीचस्य महात्मनः ॥ ३-८१-१८६ (१९२६२)
तीर्थं पुण्यतमं राजन्पावनं लोकविश्रुतम् ।
यत्र सारस्वतो यातः सोङ्गिरास्तपसो निधिः ॥ ३-८१-१८७ (१९२६३)
तस्मिस्तीर्थे नरः स्नात्वा वाजिमेधफलं लभेत् ।
सारस्वतीं गतिं चैव लभते नात्र संशयः ॥ ३-८१-१८८ (१९२६४)
ततः कन्याश्रमं गच्छेन्नियतो ब्रह्मचर्यवान् ।
त्रिरात्रोपोषितो राजन्नियतो नियताशनः ॥ ३-८१-१८९ (१९२६५)
लभेत्कन्याशतं दिव्यं स्वर्गलोकं च गच्छति ।

ततो गच्छेत धर्मज्ञ तीर्थं सन्निहतीमपि ॥ ३-८१-१९० (१९२६६)
तत्रब्रह्मादयो देवा ऋषयश्च तपोधनाः ।
मासिमासि समायान्ति पुण्येन महाताऽन्विताः ॥ ३-८१-१९१ (१९२६७)
सन्निहत्यामुपस्पृश्य राहुग्रस्ते दिवाकरे ।
अश्वमेधशतं तेन तत्रेष्टं शाश्वतं भवेत् ॥ ३-८१-१९२ (१९२६८)
पृथिव्यां यानि तीर्थानि अन्तरिक्षचराणि च ।
नद्यो ह्रदास्तडागाश्च सर्वप्रस्रवणानि च ॥ ३-८१-१९३ (१९२६९)
उदपानानि वाप्यश्च तीर्थान्यायतनानि च ।
निःसंशयममावास्यां समेष्यन्ति नराधिप ॥ ३-८१-१९४ (१९२७०)
मासिमासि नरव्याघ्र सन्निहत्यां न संशयः ।
तीर्थसन्निहनादेव सन्निहत्येति विश्रुता ॥ ३-८१-१९५ (१९२७१)
तत्र स्नात्वा च पीत्वा च स्वर्गलोके महीयते ।
अमावास्यां तु तत्रैव राहुग्रस्ते रदिवाकरे ॥ ३-८१-१९६ (१९२७२)
यः श्राद्धं कुरुते मर्त्यस्तस्य पुण्यफंल शृणु ।
अश्वमेधसहस्रस्य सम्यगिष्टस्य यत्फलम् ॥ ३-८१-१९७ (१९२७३)
स्नात एव समाप्नोति कृत्वा श्राद्धं च मानवः ।
यत्किंचिद्दुष्कृतंकर्म स्त्रिया वा पुरुषेण वा ॥ ३-८१-१९८ (१९२७४)
स्नातमात्रस्य तत्सर्वं नश्यते नात्र संशयः ।
पद्मवर्णेन याने ब्रह्मलोकं प्रपद्यते ॥ ३-८१-१९९ (१९२७५)
अभिवाद्य ततो यक्षं द्वारपालं मचक्रुकम् ।
कोटितीर्थमुपस्पृश्य लभेद्बहुसुवर्णकम् ॥ ३-८१-२०० (१९२७६)
गङ्गाह्रदश्च तत्रैव तीर्थं भरतसत्तम ।
तत्रस्नायीत धर्मज्ञ ब्रह्मचारी समाहितः ॥ ३-८१-२०१ (१९२७७)
राजसूयाश्वमेधाभ्यां फलं विन्दति मानवः ।
पृथिव्यां नैमिषं तीर्थमन्तरिक्षे च पुष्करम् ॥ ३-८१-२०२ (१९२७८)
त्रयाणामपि लोकानां कुरुक्षेत्रं विशिष्यते ।
पांसवोपि कुरुक्षेत्राद्वायुना समुदीरिताः ॥ ३-८१-२०३ (१९२७९)
अपि दुष्कृतकर्माणं नयन्ति परमां गतिम् ।
दक्षिणेन सरस्वत्या उत्तरेण दृषद्वतीम् ॥ ३-८१-२०४ (१९२८०)
ये वसन्ति कुरुक्षेत्रे तेवसन्ति त्रिविष्टपे ।
कुरुक्षेत्रं गमिष्यामि कुरुक्षेत्रे वसाम्यहम् ।
अप्येकां वाचमुत्सृज्य सर्वपापैः प्रमुच्यते ॥ ३-८१-२०५ (१९२८१)
ब्रह्मवेदी कुरुक्षेत्रं पुण्यं ब्रह्मर्षिसेवितम् ।
तस्मिन्वसन्ति ये मर्त्या न ते शोच्याः कथंचन ॥ ३-८१-२०६ (१९२८२)
तरन्तुकारन्तुकयोर्यदन्तरं
रामह्रदानां च मचक्रुकस्य च ।

एतत्कुरुक्षेत्रसमन्तपञ्चकं
पितामहस्योत्तरवेदिरुच्यते ॥ ३-८१-२०७ (१९२८३)

इति श्रीमन्महाभारते अरण्यपर्वणि तीर्थयात्रापर्वणि
एकाशीतितमोऽध्यायः ॥ ८१ ॥
Mahabharata - Vana Parva - Chapter Footnotes

३-८१-७ कुत्सितं रौतीति कुरु तस्य क्षेपणात्त्रायत इति कुरुक्षेत्र
पापनिवर्तकम् ॥
३-८१-९ ततश्च मन्तुकं राजन्निति ध । पाठः । ततो मचक्रुकं
नामेति झ । पाठः ॥
३-८१-६३ प्राणायामैर्हरन्तीह श्वानलोमा द्विजोत्तमा इति ध । पाठः ॥
३-८१-१२५ हिमसन्निभ अतिश्वेतमिक्षुविकारं खण्डशर्कराख्यम् ॥
३-८१-१९२ सन्निहत्यां कुरुक्षेत्रे ॥

---

वन-अध्यय०८२
॥ श्रीः ॥
३.८२. अध्यायः ८२

Mahabharata - Vana Parva - Chapter Topics
पुलस्त्येन भीष्मंप्रति नानातीर्थमाहात्म्यकथनम् ॥ १ ॥

Mahabharata - Vana Parva - Chapter Text

३-८२-० (१९२८४)
पुलस्त्य उवाच । ३-८२-०क्ष् (१९८९)
ततो गच्छेन्महाराज धर्मतीर्थमनुत्तमम् ।
श्यत्र धर्मो महाभागस्तप्तवानुत्तमं तपः ॥
तेन तीर्थं कृतंपुण्यं स्वेन नाम्ना च विश्रुतम् ॥ ३-८२-१ (१९२८५)
तत्रस्नात्वा नरो राजन्धर्मशील समाहितः ।
आसप्तमं कुलं चैव पुनीते नात्र संशयः ॥ ३-८२-२ (१९२८६)
ततो गच्छेत राजेन्द्र ज्ञानपावनमुत्तमम् ।
अग्निष्टोममवाप्नोति मुनिलोकं च गच्छति ॥ ३-८२-३ (१९२८७)
सौगन्धिकवनं राजंस्ततो गच्छेत मानवः ।
तत्रब्रह्मादयो देवा ऋषयश्च तपोधनाः ॥ ३-८२-४ (१९२८८)
सिद्धचारणगन्धर्वाः किन्नराश्च महोरगाः ।

कतद्वनं प्रविशन्नेव सर्वपापैः प्रमुच्यते ॥ ३-८२-५ (१९२८९)
ततश्चापि सरिचच्छ्रेष्ठा नदीनामुत्तमा नदी ।
प्लक्षा देवी स्मृता राजन्पुण्या देवी सरस्वती ॥ ३-८२-६ (१९२९०)
तत्राभिषेकं कुर्वीत वल्मीकान्निः सृतेजले ।
अर्चयित्वा पितॄन्देवानश्वमेधफलं लभेत् ॥ ३-८२-७ (१९२९१)
कवेराध्युषितं नाम तत्र तीर्थं सुदुर्लभम् ।
पट्सु शम्यानिपातेषु वल्मीकादिति निश्चयः ॥ ३-८२-८ (१९२९२)
कपिलानां सहस्रं च वाजिमेधं च विन्दति ।
तत्र स्नात्वा नरव्याघ्र दृष्टमेतत्पुरातने ॥ ३-८२-९ (१९२९३)
सुगन्धां शतकुम्भां च पञ्चयक्षां च भारत ।
अभिगम्य नरश्रेष्ठ स्वर्गलोके महीयते ॥ ३-८२-१० (१९२९४)
त्रिशूलखातं तत्रैव तीर्थमासाद्य भारत ।
तत्राभिषेकं कुर्वीत पितृदेवार्चने रतः ।
गाणपत्यं च लभते देहं त्यक्त्वा न संशयः ॥ ३-८२-११ (१९२९५)
ततो गच्छेत राजेन्द्र देव्याः स्थानं सुदुर्लभम् ।
शाकम्भरीति विख्याता त्रिषु लोकेषु विश्रुता ॥ ३-८२-१२ (१९२९६)
दिव्यं वर्षसहस्रं हि शाकेन किल सुव्रता ।
आहारं सा कृतवती मासिमासि नराधिप ॥ ३-८२-१३ (१९२९७)
ऋषयोऽभ्यागतास्तत्रदेव्या भक्त्या तपोधनाः ।
आतिथ्यं च कृतं तेषां शाकेन किल भारत ।
ततः शाकम्भरीत्येव नाम तस्याः प्रतिष्ठितम् ॥ ३-८२-१४ (१९२९८)
शाकम्भरीं समासाद्य ब्रह्मचारी समाहितः ।
त्रिरात्रमुषितः शाकं भक्षयित्वा नरः शुचिः ॥ ३-८२-१५ (१९२९९)
शाकाहारस्य यत्किंचिद्वर्षैर्द्वादशभिः कृतम् ।
तत्फलं तस्य भवति देव्याश्छन्देन भारत ॥ ३-८२-१६ (१९३००)
ततो गच्छेत्सुवर्णाख्यं त्रिषु लोकेषु विश्रुतम् ।
तत्र विष्णुः प्रसादार्थं रुद्रकमाराधयत्पुरा ॥ ३-८२-१७ (१९३०१)
वरांश्च सुबहूँल्लेभे दैवतेषु सुदुर्लभान् ।
उक्तश्च त्रिपुरघ्नेन परितुष्टेन भारत ॥ ३-८२-१८ (१९३०२)
अपिच त्वं प्रियतरो लोके कृष्ण भविष्यसि ।
त्वन्मुखं च जगत्सर्वं भविष्ति न संशयः ॥ ३-८२-१९ (१९३०३)
तत्राभिगम्य राजेन्द्र पूजयित्वा वृषध्वजम् ।
अश्वमेधमवाप्नोति गाणपत्यं च विन्दति ॥ ३-८२-२० (१९३०४)
धूमावतीं ततो गच्छेत्रिरात्रोपोषितो नरः ।
मनसा प्रार्थितान्कार्माल्लभते नात्र संशयः ॥ ३-८२-२१ (१९३०५)
देव्यास्तु दक्षिणार्धेन रथावर्तो नराधिप ।

तत्रारोहेत धर्मज्ञ श्रद्दधानो जितेन्द्रियः ।
महादेवप्रसादाद्धि गच्छेत परमां गतिम् ॥ ३-८२-२२ (१९३०६)
प्रदक्षिणमुपावृत्य गच्छेत भरतर्षभ ।
धारां नाम महाप्रात्र सर्वपापप्रमोचनीम् ॥ ३-८२-२३ (१९३०७)
तत्र स्नात्वा नरव्याघ्र न शोचति नराधिप ।
ततो गच्छेत धर्मज्ञ नमस्कृत् महागिरिम् ॥ ३-८२-२४ (१९३०८)
ग्अशीतियोजनशतं पुष्करं स्वर्गमुच्यते ।
अशीतिं धर्मपृष्ठात्तु प्रवदन्ति मनीषिणः ॥ ३-८२-२५ (१९३०९)
षष्टिं प्रयागाद्राजेन्द्र कुरुक्षेत्रात्तु द्वादश ।
संयुक्तमेव राजेन्द्र गङ्गाद्वारं त्रिविष्टपम्' ॥ ३-८२-२६ (१९३१०)
स्वर्गद्वारेण यत्तुल्यं गङ्गाद्वारं न संशयः ।
तत्राभिषेकं कुर्वीत कोटितीर्थे समाहितः ॥ ३-८२-२७ (१९३११)
पौण्डरीकमवाप्नोति कुलं चैव समुद्धरेत् ।
उष्यैकां रजनीं तत्र गोसहस्रफलं लभेत् ॥ ३-८२-२८ (१९३१२)
सप्तगङ्गे त्रिगङ्गे च शक्रावर्ते च तर्पयन् ।
देवान्पितॄंश्च विधिवत्पुण्ये लोके महीयते ॥ ३-८२-२९ (१९३१३)
ततः कनस्वले स्नात्वा त्रिरात्रोपोषितो नरः ।
अश्वमेधमवाप्नोति स्वर्गलोकं च गच्छति ॥ ३-८२-३० (१९३१४)
कपिलावटं ततो गच्छेत्तीर्थसेवी नराधिप ।
उपोष्य रजनीं तत्र गोसहस्रफलं लभेत् ॥ ३-८२-३१ (१९३१५)
नागराजस्य राजेन्द्र कपिलस्य महात्मनः ।
तीर्थं कुरुवरश्रेष्ठ सर्वलोकेषु विश्रुतम् ॥ ३-८२-३२ (१९३१६)
तत्राभिषेकं कुर्वीत नागतीर्थे नराधिप ।
कपिलानां सहस्रस्य फलं विन्दति मानवः ॥ ३-८२-३३ (१९३१७)
ततो ललितकं गच्छेच्छन्तनोस्तीर्थमुत्तमम् ।
तत्र स्नात्वा नरो राजन्न दुर्गतिमवाप्नुयात् ॥ ३-८२-३४ (१९३१८)
गङ्गायमुनयोर्मध्ये स्नाति यः संगमे नरः ।
दशाश्वमेधानाप्नोति कुलं चैव समुद्धरेत् ॥ ३-८२-३५ (१९३१९)
ततो गच्छेत राजेन्द्र सुगन्धं लोकविथुतम् ।
सर्वपापविशुद्धात्मा ब्रह्मलोके महीयते ॥ ३-८२-३६ (१९३२०)
रुद्रावर्तं ततो गच्छेत्तीर्थसेवी नराधिप ।
तत्रस्नात्वा नरो राजन्स्वर्गलोके च गच्छति ॥ ३-८२-३७ (१९३२१)
गङ्गायाश्च नरश्रेष्ठ सरस्वत्याश्च संगमे ।
स्नात्वाऽश्वमेधं प्राप्नोति स्वर्गलोकं च गच्छति ॥ ३-८२-३८ (१९३२२)
भद्रकर्णएश्वरं गत्वा देवमर्च्य यथाविधि ।
न दुर्गतिमवाप्नोति नाकपृष्ठे च पूज्यते ॥ ३-८२-३९ (१९३२३)

तत कुब्जावतीं गच्छेत्तीर्थसेवी नराधिप ।
रगोसहस्रमवाप्नोति स्वर्गलोकं च नच्छति ॥ ३-८२-४० (१९३२४)
अरुन्धतीवटं गच्छेत्तीर्थसेवी नराधिप ।
सामुद्रकमुपस्पृश्य ब्रह्मचारी समाहितः ॥ ३-८२-४१ (१९३२५)
अश्वमेधमवाप्नोति त्रिरात्रोपोषितो नरः ।
गोसहस्रफलं विद्यात्कुलं चैव समुद्धरेत् ॥ ३-८२-४२ (१९३२६)
कब्रह्मावर्तं ततो गच्छेद्ब्रह्मचारी समाहितः ।
अश्वमेधमवाप्नोति सोमलोकं च गच्छति ॥ ३-८२-४३ (१९३२७)
यमुनाप्रभवं गत्वा समुपस्पृश्य यामुनम् ।
अश्वमेधफंल लब्ध्वा स्वर्गलोके महीयते ॥ ३-८२-४४ (१९३२८)
दर्वीसंक्रमणं प्राप्य तीर्थं त्रैलोक्यपूजितम् ।
अश्वमेधमवाप्नोति स्वर्गलोकं च गच्छति ॥ ३-८२-४५ (१९३२९)
सिन्धोश्च प्रभवं गत्वा सिद्धगन्धर्वसेवितम् ।
तत्रोष्य रजनीः पञ्च विन्देद्बहु सुवर्णकम् ॥ ३-८२-४६ (१९३३०)
अथ वेदीं समासाद्य नरः परमदुर्गमाम् ।
अश्वमेधमवाप्नोति गच्छेदौशनसीं गतिम् ॥ ३-८२-४७ (१९३३१)
ऋषिकुल्यां समासाद्य वासिष्ठं चैवभारत ।
वासिष्ठीं समतिक्रम्य सर्वे वर्णा द्विजातयः ॥ ३-८२-४८ (१९३३२)
ऋषिकुल्यां समासाद्य नरः स्नात्वा विकल्मषः ।
देवान्पितॄंश्चार्चयित्वा ऋषिलोकं प्रपद्यते ॥ ३-८२-४९ (१९३३३)
यदि तत्रवसेन्मासं शाकाहारो नराधिप ।
ग्द्वादशाहस्य यज्ञस्य फलं स लभते नरः' ॥ ३-८२-५० (१९३३४)
भृगुतुङ्गं समासाद्य वाजिमेधफलं लभेत् ।
गत्वा वीरप्रमोक्षं च सर्वपापैः प्रमुच्यते ॥ ३-८२-५१ (१९३३५)
कृत्तिकामघयोश्चैव तीर्थमासाद्य भारत ।
अग्निष्टोमातिरात्राभ्यां फलमाप्नोति मानवः ॥ ३-८२-५२ (१९३३६)
तत्र संध्यां समासाद्य विद्यातीर्थमनुत्तमम् ।
उपस्पृश्य च वै विद्यां यत्र तत्रोपपद्यते ॥ ३-८२-५३ (१९३३७)
महाश्रमे वसेद्रात्रिं सर्वपापप्रमोचने ।
एककालं निराहारो लोकानावसते शुभान् ॥ ३-८२-५४ (१९३३८)
षष्ठाकालोपवासेन मासमुष्य महालये ।
सर्वपापविशुद्धात्मा विन्देद्बहु सुवर्णकम् ।
दशापरान्दशपूर्वान्नरानुद्धरते कुलम् ॥ ३-८२-५५ (१९३३९)
अथ वेतसिकां गत्वा पितामहनिषेविताम् ।
अश्वमेधमवाप्नोति गच्छेदौशनसीं गतिम् ॥ ३-८२-५६ (१९३४०)
अथ सुन्दरिकातीर्थं प्राप्य सिद्धनिषेवितम् ।

रूपस्य भागी भवति दृष्टमेतत्पुरातनैः ॥ ३-८२-५७ (१९३४१)
ततो वै ब्राह्मणं गत्वा ब्रह्मचारी जितेन्द्रियः ।
पद्मवर्णेन यानेन ब्रह्मलोकं प्रपद्यते ॥ ३-८२-५८ (१९३४२)
ततस्तु नैमिषं गच्छेत्पुण्यं सिद्धनिषेवितम् ।
तत्र नित्यं निवसति ब्रह्मा देवगणैः सह ॥ ३-८२-५९ (१९३४३)
नैमिषं मृगयाणस् पापस्यार्धं प्रणश्यति ।
प्रविष्टमात्रस्तु नरः सर्वपापैः प्रमुच्यते ॥ ३-८२-६० (१९३४४)
तत्र मासं वसेद्धीरो नैमिषे तीर्थतत्परः ।
पृथिव्यां यानि तीर्थानि तानि तीर्थानि नैमिषे ॥ ३-८२-६१ (१९३४५)
कृताभिषेकस्तत्रैव नियतो नियताशनः ।
गवां मेधस्य यज्ञस्य फलं प्राप्नोति भारत ।
पुनात्यासप्तमं चैव कुलं भरतसत्तम ॥ ३-८२-६२ (१९३४६)
यस्त्यजेन्नैमिषे प्राणानुपवासपरायणः ।
स मोदेत्सर्वलोकेषु एवमाहुर्मनीषिणः ॥ ३-८२-६३ (१९३४७)
नित्यं मेध्यं च पुण्यं च नैमिषं नृपसत्तम ॥ ३-८२-६४ (१९३४८)
गङ्गोद्भेदं समासाद्य त्रिरात्रोपोषितो नरः ।
वाजपेयमवाप्नोति ब्रह्मभूतो भवेत्सदा ॥ ३-८२-६५ (१९३४९)
सरस्वतीं समासाद्य तर्पयेत्पितृदेवताः ।
सारस्वतेषु लोकेषु मोदते नात्र संशयः ॥ ३-८२-६६ (१९३५०)
ततश्च बाहुदां गच्छेद्ब्रह्मचारी समाहितः ।
तत्रोष्य रजनीमेकां स्वर्गलोके महीयते ।
देवसत्रस्य यज्ञस्य फलंप्राप्नोति कौरव ॥ ३-८२-६७ (१९३५१)
ततः क्षीरवतीं गच्छेत्पुण्यां पुण्यतरैर्वृताम् ।
पितृदेवार्चनपरो वाजपेयमवाप्नुयात् ॥ ३-८२-६८ (१९३५२)
विमलाशोकमासाद्य ब्रह्मचारी समाहितः ।
तत्रोष्य रजनीमेकां स्वर्गलोके महीयते ॥ ३-८२-६९ (१९३५३)
गोप्रतारं ततो गच्छेत्सरय्वास्तीर्थमुत्तमम् ।
यत्र रामो गतः स्वर्गं सभृत्यबलवाहनः ।
देहं त्यक्त्वा महाराज तस्य तीर्थस्य तेजसा ॥ ३-८२-७० (१९३५४)
रामस्य च प्रसादेन व्यवसायाच्च भारत ।
तस्मिंस्तीर्थे नरः स्नात्वा गोप्रतारे नराधिप ।
सर्वपापविशुद्धात्मा स्वर्गलोके महीयते ॥ ३-८२-७१ (१९३५५)
रामतीर्थे नरः स्नात्वा गोमत्यां कुरुनन्दन ।
अश्वमेधमवाप्नोति पुनाति च कुलं नरः ॥ ३-८२-७२ (१९३५६)
शतसाहस्रकं तीर्थं तत्रैव भरतर्षभ ॥ ३-८२-७३ (१९३५७)
तत्रोपस्पर्शनं कृत्वा नियतो नियताशनः ।

गोसहस्रफलं पुण्यं प्राप्नोति भरतर्षभ ॥ ३-८२-७४ (१९३५८)
रततो गच्छेत राजेनद्र भर्तृस्थानमनुत्तमम् ।
अश्वमेधस्य यज्ञस्य फलं प्राप्नोति मानवः ॥ ३-८२-७५ (१९३५९)
कोटितीर्थे नरः स्नात्वा अर्चयित्वा गुहं नृप ।
गोसहस्रफंल विद्यात्तेजस्वी च भवेन्नरः ॥ ३-८२-७६ (१९३६०)
ततो वाराणसीं गत्वा अर्चयित्वा नृषध्वजम् ।
कपिलाह्रदे नरः स्नात्वाराजसूयमवाप्नुयात् ॥ ३-८२-७७ (१९३६१)
अविमुक्तं समासाद्य तीर्थसेवी कुरूद्वह ।
दर्शनाद्देवदेवस्य मुच्यते ब्रह्महत्यया ॥ ३-८२-७८ (१९३६२)
प्राणानुत्सृज्यतत्रैव मोक्षं प्राप्नोति मानवः ।
मार्कण्डेयस्य राजेन्द्र तीर्थमासाद्य दुर्लभम् ॥ ३-८२-७९ (१९३६३)
गोमतीगङ्गयोश्चैव संगमे लोकविश्रुते ।
अग्निष्टोममवाप्नोति कुलं चैव समुद्धरेत् ॥ ३-८२-८० (१९३६४)
ततो गयां समासाद्य ब्रह्मचारी समाहितः ।
अश्वमेधमवाप्नोति कुलं चैव समुद्धरेत् ॥ ३-८२-८१ (१९३६५)
तत्राक्षयवटो नाम त्रिषु लोकेषु विश्रुतः ।
तत्र दत्तं पितृभ्यस्तु भवत्यक्षयमुच्यते ॥ ३-८२-८२ (१९३६६)
महानद्यामुपस्पृश्य तर्पयेत्पितृदेवताः ।
अक्षयान्प्राप्नुयाल्लोकान्कुलं चैव समुद्धरेत् ॥ ३-८२-८३ (१९३६७)
ततो ब्रह्मसरो गत्वा धर्मारण्योपशोभितम् ।
ब्रह्मलोकमवाप्नोति प्रभातामेव शर्वरीम् ॥ ३-८२-८४ (१९३६८)
ब्रह्मणा तत्र सरसि यूपश्रेष्ठः समुच्छ्रितः ।
यूपं प्रदक्षिणीकृत्य वाजपेयफलं लभेत् ॥ ३-८२-८५ (१९३६९)
ततो गच्छेत राजेन्द्र धेनुकं लोकविश्रुतम् ।
एकरात्रोषितो राजन्प्रयच्छेत्तिलधेनुकाम् ॥ ३-८२-८६ (१९३७०)
सर्वपापविशुद्धात्मा सोमलोकं ब्रजेद्ध्रुवम् ।
तत्र चिह्निं महद्राजन्नद्यापि सुमहद्भृशम् ॥ ३-८२-८७ (१९३७१)
कपिलायाः सवत्सायाश्चरन्त्याः पर्वते कृतम् ।
सवत्सायाः पदानि स्म दृश्यन्तेऽद्यापि भारत ॥ ३-८२-८८ (१९३७२)
तेषूपस्पृश्य राजेन्द्रपदेषु नृपसत्तम ।
यत्कंचिदशुभं कर्म तत्प्रणश्यति भारत ॥ ३-८२-८९ (१९३७३)
ततो गृध्रवटं गच्छेत्स्थानं देवस्य धीमतः ।
स्नायीत भस्मना तत्र अभिगम्य वृषध्वजम् ॥ ३-८२-९० (१९३७४)
ब्राह्मणेन भवेच्चीर्णं व्रतं द्वादशवार्षिकम् ।
इतरेषां तु वर्णानां सर्वपापं प्रणश्यति ॥ ३-८२-९१ (१९३७५)
उद्यन्तं च ततो गच्छेत्पर्वतं गीतनादितम् ।

सावित्र्यास्तु पदं तत्र दृश्यते भरतर्षभ ॥ ३-८२-९२ (१९३७६)
तत्रसंध्यामुपासीत ब्राह्मणः संशितव्रतः ।
उपासिता भवेत्संध्या तेन द्वादशवार्षिकी ॥ ३-८२-९३ (१९३७७)
योनिद्वारं च तत्रैव विश्रुतं भरतर्षभ ।
तत्राभिगम्य मुच्येत पुरुषो योनिसंकरात् ॥ ३-८२-९४ (१९३७८)
कृष्णशुक्लावुभौ पक्षौ गयायां यो वसेन्नरः ।
पुनात्यासप्तमं राजन्कुलं नास्त्यत्र संशयः ॥ ३-८२-९५ (१९३७९)
एष्टव्या बहवः पुत्रा यद्येकोपि गयां व्रजेत् ।
गौरीं वा वरयेत्कन्यां नीलं वा वृषमुत्सृजेत् ॥ ३-८२-९६ (१९३८०)
ततः फल्गुं व्रजेद्राजंस्तीर्थसेवी नराधिप ।
अश्वमेधमवाप्नोति सिद्धिं च महतीं व्रजेत् ॥ ३-८२-९७ (१९३८१)
ततो गच्छेत राजेन्द्र धर्मप्रस्थं समाहितः ।
तत्र धर्मो महाराज नित्यमास्ते युधिष्ठिर ॥ ३-८२-९८ (१९३८२)
तत्र कूपोदकं कृत्वा तेन स्नातः शुचिस्तथा ।
पितॄन्देवांस्तु संतर्प्य मुक्तपापो दिवं व्रजेत् ॥ ३-८२-९९ (१९३८३)
मतङ्गस्याश्रमस्तत्रमहर्षेर्भावितात्मनः ॥ ३-८२-१०० (१९३८४)
तं प्रविश्याश्रमं श्रीमच्छ्रमशोकविनाशनम् ।
गवामयनयज्ञस्य फलंप्राप्नोति मानवः ॥ ३-८२-१०१ (१९३८५)
धर्मं तत्राभिसंस्पृश्य वाजिमेधमवाप्नुयात् ॥ ३-८२-१०२ (१९३८६)
ततो गच्छेत राजेन्द्र ब्रह्मस्थानमनुत्तमम् ।
तत्राभिगम्य राजेन्द्र ब्रह्माणं पुरुषर्षभ ।
राजसूयाश्वमेधाभ्यां फलं विन्दति मानवः ॥ ३-८२-१०३ (१९३८७)
ततो राजगृहं गच्छेत्तीर्थसेवी नराधिप ।
उपस्पृश्य ततस्तत्रकक्षीवानिव मोदते ॥ ३-८२-१०४ (१९३८८)
यक्षिण्या नैत्यकं तत्र प्राश्नीन पुरुषः शुचिः ।
यक्षिण्यास्तु प्रसादेन मुच्यते ब्रहमहत्यया ॥ ३-८२-१०५ (१९३८९)
मणइनागं ततो गत्वा गोसहस्रफलं लभेत् ॥ ३-८२-१०६ (१९३९०)
तैर्थिकं भुञ्जते यस्तु मणिनागस् भारत ।
दष्टस्याशीविषेणापि न तस्य क्रमते विपम् ॥ ३-८२-१०७ (१९३९१)
तत्रोष् रजनीमेकां गोसहस्रफंल लभेत् ।
ततो गच्छेत ब्रह्मर्षेर्गौतमस्य वनं प्रियम् ॥ ३-८२-१०८ (१९३९२)
अहल्याया ह्रदे स्नात्वा व्रजेत परमां गतिम् ।
अभिगम्याश्रमं राजन्विनदते श्रियमात्मनः ॥ ३-८२-१०९ (१९३९३)
तत्रोदपानं धर्मज्ञ त्रिपु लोकेषु विश्रुतम् ।
तत्राभिषेकं कृत्वा तु वाजिमेधमवाप्नुयात् ॥ ३-८२-११० (१९३९४)
जनकस् तु राजर्षेः कूपस्त्रिदशपूजितः ।

तत्राभिषेकं कृत्वा तु विष्णुलोकमवाप्नुयात् ॥ ३-८२-१११ (१९३९५)
ततो विनशनं गच्छेत्सर्वपापप्रमोचनम् ।
वाजपेयमवाप्नोति सोमलोकं च गच्छति ॥ ३-८२-११२ (१९३९६)
गण्डकीं तु समासाद्य सर्वतीर्थजलोद्भवाम् ।
वाजपेयमवाप्नोति सूर्यलोकं च गच्छति ॥ ३-८२-११३ (१९३९७)
कततो विशल्यामासाद्य नदीं त्रैलोक्यविश्रुताम् ।
अग्निष्टोममवाप्नोति स्वर्गलोकं च गच्छति ॥ ३-८२-११४ (१९३९८)
ततोऽधिवङ्गं धर्मज्ञ समाविश्य ततो वनम् ।
गुह्यकेषु महाराज मोदते नात्र संशयः ॥ ३-८२-११५ (१९३९९)
कम्पनां तु समासद्य नदीं सिद्धनिवेषिताम् ।
पुण्डरीकमवाप्नोति स्वर्गलोकं च गच्छति ॥ ३-८२-११६ (१९४००)
अथ माहेश्वरीं धारां समासाद्य धराधिप ।
अश्वमेधमवाप्नोति कुलं चैव समुद्धरेत् ॥ ३-८२-११७ (१९४०१)
दिवौकसां पुष्करिणीं समासाद्य नराधिप ।
न दुर्गतिमवाप्नोति वाजिमेधं च विन्दति ॥ ३-८२-११८ (१९४०२)
अथ सोमपदं गच्छेद्ब्रह्मचारी समाहितः ।
माहेश्वरपदे स्नात्वा वाजिमेधफलं लभेत् ॥ ३-८२-११९ (१९४०३)
तत्रकोटी तु तीर्थानां विश्रुता भरतर्षभ ।
कूर्मरूपेण राजेन्द्र ह्यसुरेण दुरात्मना ॥ ३-८२-१२० (१९४०४)
ह्रियमाणा हृता राजन्विष्णुना प्रभविष्णुना ।
तत्राभिषेकं कुर्वीत तीर्थकोट्यां युधिष्ठिर ॥ ३-८२-१२१ (१९४०५)
पुण्डरीकमवाप्नोति विष्णुलोकं च गच्छति ।
ततो गच्छेत राजेन्द्रस्थानं नारायणस्य च ॥ ३-८२-१२२ (१९४०६)
सदा सन्निहितो यत्रविष्णुर्वसति भारत ।
यत्रब्रह्मादयो देवा ऋषयश्च तपोधनाः ॥ ३-८२-१२३ (१९४०७)
आदित्या वसवो रुद्रा जनार्दनमुपासते ।
शालग्राम इति ख्यातो विष्णुरद्भुतकर्मकः ॥ ३-८२-१२४ (१९४०८)
अभिगम्य त्रिलोकेशं वरदं विष्णुमव्ययम् ।
अश्वमेधमवाप्नोति विष्णुलोकं च गच्छति ॥ ३-८२-१२५ (१९४०९)
तत्रोपदानं धर्मज्ञ सर्वपापप्रमोचनम् ।
समुद्रास्तत्रचत्वारः कूपे संनिहिताः सदा ।
तत्रोपस्पृश् राजेन्द्र न दुर्गतिमवाप्नुयात् ॥ ३-८२-१२६ (१९४१०)
अभिगम्य त्रिलोकेशं वरदं विष्णुमव्ययम् ।
विराजति यथासोमो मेघैर्मुक्तो नराधिप ॥ ३-८२-१२७ (१९४११)
जातिस्मरमुपस्पृश्य शुचिः प्रयतमानसः ।
जातिस्मरत्वमाप्नोति स्नात्वा तत्र न संशयः ॥ ३-८२-१२८ (१९४१२)

वदेश्वरपुरं गत्वा अर्चयित्वा तु केशवम् ।
ईप्सिताँल्लभते कामानुपवासान्न संशयः ॥ ३-८२-१२९ (१९४१३)
ततस्तु वामनं गत्वा सर्वपापप्रमोचनम् ।
अभिगम्य हरिं देवं न दुर्गतिमवाप्नुयात् ॥ ३-८२-१३० (१९४१४)
भरतस्याश्रमं गच्छेत्सर्वपापप्रमोचनम् ॥ ३-८२-१३१ (१९४१५)
कौशिकीं तत्र गच्छेत महापापप्रणाशिनीम् ।
राजसूयस्य यज्ञस्य फलं प्राप्नोति मानवः ॥ ३-८२-१३२ (१९४१६)
ततो गच्छेत राजेन्द्र चम्पकारण्यमुत्तमम् ।
तत्रोष्य रजनीमेकां गोसहस्रफलं लभेत् ॥ ३-८२-१३३ (१९४१७)
अथ जेष्ठिलमासाद्य तीर्थं परमदुर्लभम् ।
तत्रोष्य रजनीमेकां गोसहस्रफलं लभेत् ॥ ३-८२-१३४ (१९४१८)
तत्र विश्वेश्वरं दृष्ट्वा देव्या सह महाद्युतिम् ।
मित्रावरुणयोर्लोकानाप्नोति पुरुषर्षभ ।
त्रिरात्रोपोषितस्तत्राग्निष्टोमफलं लभेत् ॥ ३-८२-१३५ (१९४१९)
कन्यासंवेद्यमासाद्य नियतो नियताशनः ।
मनोः प्रजापतेर्लोकानाप्नोति पुरुषर्षभ ॥ ३-८२-१३६ (१९४२०)
कन्यायां ये प्रयच्छन्ति दानमण्वपि भारत ।
तदक्षय्यमिति प्राहुर्ऋषयः संशितव्रताः ॥ ३-८२-१३७ (१९४२१)
ततो निर्वीरमासाद्य त्रिपु लोकेपु विश्रुतम् ।
अश्वमेधमवाप्नोति विष्णुलोकं च गच्छति ॥ ३-८२-१३८ (१९४२२)
ये त्विन्धनं प्रयच्छन्ति निर्वीरासंगमे नराः ।
ते यान्ति नरशार्दूल शक्रलोकमनामयम् ॥ ३-८२-१३९ (१९४२३)
तत्राश्रमो वसिष्ठस् त्रिषु लोकेषु विश्रुतः ।
तत्राभिषेकं कुर्वाणो वाजपेयमवाप्नुयात् ॥ ३-८२-१४० (१९४२४)
देवकूटं समासाद्य ब्रह्मर्षिगणसेवितम् ।
अश्वमेधमवाप्नोति कुलं चैव समुद्धरेत् ॥ ३-८२-१४१ (१९४२५)
ततो गच्छेत राजेन्द्र कौशिकस्य मुनेर्ह्रदम् ।
यत्र सिद्धिं परां प्राप्तो विश्वामित्रोथ कौशिकः ॥ ३-८२-१४२ (१९४२६)
तत्र मासं वसेद्वीर कौशिक्यां भरतर्षभ ।
अश्वमेधस्य यत्पुण्यं तन्मासेनाधिगच्छति ॥ ३-८२-१४३ (१९४२७)
सर्वतीर्थवरे चैव यो वसेत महाह्रदे ।
न दुर्गतिमवाप्नोति विन्द्याद्बहु सुवर्णकम् ॥ ३-८२-१४४ (१९४२८)
कुमारमभिगम्याथ वीराश्रमनिवासिनम् ।
अश्वमेधमवाप्नोति नरो नास्त्यत्र संशयः ॥ ३-८२-१४५ (१९४२९)
अग्निधारां समासाद्य त्रिषु लोकेषु विश्रुताम् ।
तत्राभिषेकं कुर्वाणो ह्यग्निष्टोममवाप्नुयात् ॥ ३-८२-१४६ (१९४३०)

अभिगम्य महादेवं वरदं विष्णुमव्ययम् ।
पितामहसरो गत्वा शैलराजसमीपतः ।
तत्राभिषेकं कुर्वाणो ह्यग्निष्टोममवाप्नुयात् ॥ ३-८२-१४७ (१९४३१)
पितामहस्य सरसः प्रस्रुता लोकपावनी ।
कुमारधारा तत्रैव त्रिषु लोकेषु विश्रुता ॥ ३-८२-१४८ (१९४३२)
यत्रस्नात्वा कृतार्थोस्मीत्यात्मानमवगच्छति ।
षष्ठकालोपवासेन मुच्यते ब्रह्महत्यया ॥ ३-८२-१४९ (१९४३३)
ततो गच्छेत धर्मज्ञ तीर्थसेवनतत्परः ।
शिखरं वै महादेव्या गौर्यास्त्रैलोक्यविश्रुतम् ॥ ३-८२-१५० (१९४३४)
समारुह्य नरश्रेष्ठ स्तनकुण्डेषु संविशेत् ।
स्तनकुण्डमुपस्पृश्य वाजपेयफलं लभेत् ॥ ३-८२-१५१ (१९४३५)
तत्राभिषेकं कुर्वाणः पितृदेवार्चने रतः ।
हयमेधमवाप्नोति शक्रलोकं च गच्छति ॥ ३-८२-१५२ (१९४३६)
ताम्रारुणं समासाद्य ब्रह्मचारी समाहितः ।
अश्वमेमवाप्नोति ब्रह्मलोकं च गच्छति ॥ ३-८२-१५३ (१९४३७)
नन्दिन्यां च समासाद्य कूपं देवनिषेवितम् ।
नरमेधस् यत्पुण्यं तदाप्तोति नराधिप ॥ ३-८२-१५४ (१९४३८)
कालिकासंगमे स्नात्वा कौशिक्यरुणयोर्गतः ।
त्रिरात्रोपोषितो राजन्सर्वपापैः प्रमुच्यते ॥ ३-८२-१५५ (१९४३९)
उर्वशीतीर्थमासाद्य ततः सोमाश्रमं बुधः ।
कुम्भकर्णाश्रमं गत्वा पूज्यते भुविमानवः ॥ ३-८२-१५६ (१९४४०)
कोकामुखमुपस्पृश् ब्रह्मचारी यतव्रतः ।
जातिस्मरत्वमाप्नोति दृष्टमेतत्पुरातनैः ॥ ३-८२-१५७ (१९४४१)
प्राङ्गदीं च समासाद्य कृतात्मा भवति द्विजः ।
सर्वपापविशुद्धात्मा शक्रलोकं च गच्छति ॥ ३-८२-१५८ (१९४४२)
ऋषभद्वीपमासाद्य मेध्यं क्रौञ्चनिषूदनम् ।
सरस्वत्यामुपस्पृश्य विमानस्थो विराजते ॥ ३-८२-१५९ (१९४४३)
औद्दालकं महाराज तीर्थं मुनिनिषेवितम् ।
तत्राभिषेकं कृत्वा वै सर्वपापैः प्रमुच्यते ॥ ३-८२-१६० (१९४४४)
धर्मतीर्थं समासाद्य पुण्यं ब्रह्मर्षिसेवितम् ।
वाजपेयमवाप्नोति विमानस्थश्च पूज्यते ॥ ३-८२-१६१ (१९४४५)
अथ पम्पां समासाद्य भागीरथ्यां कृतोदकः ।
दण्डार्तमभिगत्वा तु गोसहस्रफलं लभेत् ॥ ३-८२-१६२ (१९४४६)
ग्ततो लेवलिकां गच्छेत्पुण्यां पुण्योपसेविताम् ।
वाजपेयमवाप्नोति विमानस्थश्च पूज्यते' ॥ ३-८२-१६३ (१९४४७)

इति श्रीमन्महाभारते अरण्यपर्वणि तीर्थयात्रापर्वणि
द्व्यशीतितमोऽध्यायः ॥ ८२ ॥
Mahabharata - Vana Parva - Chapter Footnotes

३-८२-८ शम्या मुद्गराकृतिर्यज्ञोपकरणविशेषः स वलवताक्षिप्तो
यावद्दूरं पतेत् तावान्देशः शम्यानिपातः तेषु षट्सु ॥
३-८२-९ पुरातने भविष्यपुराणादौ ॥
३-८२-१६ छन्देन इच्छया ॥
३-८२-१९ त्वमुखं त्वत्प्रधानम् ॥
३-८२-५६ औशनसीं गतिं शुक्रत्वम् ॥
३-८२-७१ व्यवसायान्निश्चयात् ॥
३-८२-१०५ नैत्यक नैवेद्यम् ॥

---

वन-अध्यय०८३
॥ श्रीः ॥
३.८३. अध्यायः ८३

Mahabharata - Vana Parva - Chapter Topics
नारदेन युधिष्ठिरंप्रति भीष्माय
पुलस्त्योदिततीर्थमहिमानुवादपूर्वकमिष्टदेशगमनम् ॥ १ ॥

Mahabharata - Vana Parva - Chapter Text

३-८३-० (१९४४८)
पुलस्त्य उवाच। ३-८३-०क्ष् (१९९०)
अथ सन्ध्यां समासाद्य संवेद्ये तीर्थ उत्तमे ।
उपस्पृश्य नरो विद्यां लभते नात्र संशयः ॥ ३-८३-१ (१९४४९)
रामस्य च प्रसादेन तीर्थं राजन्कृतं पुरा ।
तल्लौहित्यं समासाद्य विन्द्याद्बहु सुवर्णकम् ॥ ३-८३-२ (१९४५०)
करतोयां समासाद्य त्रिरात्रोपोषितो नरः ।
अश्वमेधमवाप्नोति प्रजापतिकृतो विधिः ॥ ३-८३-३ (१९४५१)
गङ्गायास्तत्र राजेन्द्र सागरस्य च सङ्गमे ।
अश्वमेधं दशगुणं प्रवदन्ति मनीषिणः ॥ ३-८३-४ (१९४५२)
गङ्गायास्त्वपरं पारं प्राप्य यः स्नाति मानवः ।
त्रिरात्रमुषितो राजन्सर्वान्कामानवाप्नुयात् ॥ ३-८३-५ (१९४५३)
ततो वैतरणीं गत्वा सर्वपापप्रमोचनीम् ।
विरजातीर्थमासाद्य विराजति यथा शशी ॥ ३-८३-६ (१९४५४)

प्रभवेच्च कुले पुण्ये सर्वपापं व्यपोहति ।
गोसहस्रफंल लब्ध्वा रपुनाति स्वकुलं नरः ॥ ३-८३-७ (१९४५५)
शोणस्य ज्योतिरथ्यायाः संगमे नियतः शुचिः ।
तर्पयित्वा पितॄन्देवानग्निष्टोमफलं लभेत् ॥ ३-८३-८ (१९४५६)
शोणस्य नर्मदायाश् प्रभेदे कुरुनन्दन ।
वंशगुल्म उपस्पृश्य वाचजिमेधफलं लभेत् ॥ ३-८३-९ (१९४५७)
वाजपेयमवाप्नोति त्रिरात्रोपोषितो नरः ।
गोसहस्रफलं विन्द्यात्कुलं चैव समुद्धरेत् ॥ ३-८३-१० (१९४५८)
कोसलां तु समासाद्य कालतीर्थमुपस्पृशेत् ।
वृषभैकादशफलं लभते नात्र संशयः ॥ ३-८३-११ (१९४५९)
पुष्पवत्यामुपस्पृश्य त्रिरात्रोपोषितो नरः ।
गोसहस्रफलं लब्ध्वा पुनाति स्वकुलं नृप ॥ ३-८३-१२ (१९४६०)
ततो बदरिकातीर्थे स्नात्वा भरतसत्तम ।
दीर्घमायुरवाप्नोति स्वर्गलोकं च गच्छति ॥ ३-८३-१३ (१९४६१)
तथा चम्पां समासाद्य भागीरथ्यां कृतोदकः ।
दण्डाख्यमभिगम्यैव गोसहस्रफलं लभेत् ॥ ३-८३-१४ (१९४६२)
लपेटिकां ततो गच्छेत्पुण्यां पुण्योपशोभिताम् ।
वाजपेयमवाप्नोति देवैः सर्वैश्च पूज्यते ॥ ३-८३-१५ (१९४६३)
ततो महेन्द्रमासाद्य जामदग्न्यनिपेवितम् ।
रामतीर्थे नरः स्नात्वा वाजिमेधफलं लभेत् ॥ ३-८३-१६ (१९४६४)
मतङ्गस्य तु केदारस्तत्रैव कुरुनन्दन ।
तत्र स्नात्वा कुरुश्रेष्ठ गोसहस्रफलं लभेत् ॥ ३-८३-१७ (१९४६५)
श्रीपर्वतं समासाद्य नदीतीरमुपस्पृशेत् ।
राश्वमेधमवाप्नोति पूजयित्वा वृषध्वजम् ॥ ३-८३-१८ (१९४६६)
श्रीपर्वते महादेवो देव्या सह महाद्युतिः ।
न्यवसत्परमप्रीतो ब्रह्मा च त्रिदशैः सह ॥ ३-८३-१९ (१९४६७)
तत्र देवह्रदे स्नात्वा शुचिः प्रयतमानसः ।
अश्वमेधमवाप्नोति कुलं चैव समुद्धरेत् ॥ ३-८३-२० (१९४६८)
ऋषभं पर्वतं गत्वा पाण्ड्येषु नृपपूजितम् ।
वाजपेयमवाप्नोति नाकपृष्ठे च मोदते ॥ ३-८३-२१ (१९४६९)
ततो गच्छेत कावेरीं वृतामप्सरसां गणैः ।
तत्रस्नात्वा नरो राजन्गोसहस्रफलं लभेत् ॥ ३-८३-२२ (१९४७०)
ततस्तीरे समुद्रस्य कन्यातीर्थमुपस्पृशेत् ।
तत्तोयं स्पृश्य राजेन्द्र सर्वपापैः प्रमुच्यते ॥ ३-८३-२३ (१९४७१)
अथ गोकर्णमासाद्य त्रिषु लोकेषु विश्रुतम् ।
समुद्रमध्ये राजेन्द्र सर्वलोकनमस्कृतम् ॥ ३-८३-२४ (१९४७२)

रयत्र ब्रह्मादयो देवा ऋषयश्च तपोधनाः ।
भूतयक्षपिशाचाश्च किन्नराः समहोरगाः ॥ ३-८३-२५ (१९४७३)
सिद्धचारणगन्धर्वमानुषाः पन्नगास्तथा ।
सरितः सागराः शैला उपासन्त उमापतिम् ॥ ३-८३-२६ (१९४७४)
तत्रेशानं समभ्यर्च्य त्रिरात्रोपोषितो नरः ।
अश्वमेधमवाप्नोति गाणपत्यं च विन्दति ॥ ३-८३-२७ (१९४७५)
उष्य द्वादशरात्रं तु पूतात्मा च भवेन्नरः ॥ ३-८३-२८ (१९४७६)
तत एव च गायत्र्याः स्थानं त्रैलोक्यपूजितम् ।
त्रिरात्रमुषितस्तत्र गोसहस्रफलं लभेत् ।
निदर्शनं च प्रत्यक्षं ब्राह्मणानां नराधिप ॥ ३-८३-२९ (१९४७७)
गायत्रीं पठते यस्तु योनिसंकरजस्तथा ।
गाथा च गाथिका चापि तस्य संपद्यते नृप ॥ ३-८३-३० (१९४७८)
अब्राह्मणस्य सावित्रीं पठतस्तु प्रणश्यति ॥ ३-८३-३१ (१९४७९)
संवर्तस्य तु विप्रर्षेर्वापीमासाद्य दुर्लभाम् ।
रूपस्य भागी भवति सुभगश्च प्रजायते ॥ ३-८३-३२ (१९४८०)
ततो वेणां समासाद्य त्रिरात्रोपोषितो नरः ।
मयूरहंससंयुक्तं विमानं लभते नरः ॥ ३-८३-३३ (१९४८१)
ततो गोदावरीं प्राप्य नित्यं सिद्धनिषेविताम् ।
गवां मेधमवाप्नोति वासुकेर्लोकमुत्तमम् ॥ ३-८३-३४ (१९४८२)
वेणायाः संगमे स्नात्वा वाजिमेधफलं लभेत् ।
वरदासंगमे स्नात्वा गोसहस्रफलं लभेत् ॥ ३-८३-३५ (१९४८३)
ब्रह्मस्थानं समासाद्य त्रिरात्रोपोषितो नरः ।
गोसहस्रफलं विन्द्यात्स्वर्गलोकं च गच्छति ॥ ३-८३-३६ (१९४८४)
कुशप्लवनमासाद्य ब्रह्मचारी समाहितः ।
त्रिरात्रमुषितः स्नात्वा अश्वमेधफंल लभेत् ॥ ३-८३-३७ (१९४८५)
ततो देवह्रदेऽरण्ये कृष्णवेणाजलोद्भवे ।
जातिस्मरह्रदे स्नात्वा भवेज्जातिस्मरो नरः ।
यत्र क्रतुशतैरिष्ट्वा देवराजो दिवं गतः ॥ ३-८३-३८ (१९४८६)
अग्निष्टोमफलं विन्द्याद्गमनादेव भारत ।
ततः सर्वह्रदे स्नात्वा गोसहस्रफलं लभेत् ॥ ३-८३-३९ (१९४८७)
ततो वापीं महापुण्यां पयोष्णीं सरितां वराम् ।
पितृदेवार्चनरतो गोसहस्रफलं लभेत् ॥ ३-८३-४० (१९४८८)
दण्डकारण्यमासाद्य पुण्यं राजन्नुपस्पृशेत् ।
गोसहस्रफलं तस्य स्नातमात्रस्य भारत ॥ ३-८३-४१ (१९४८९)
शरभङ्गाश्रमं गत्वा शुकस्य च महात्मनः ।
न दुर्गतिमवाप्नोति पुनाति च कुलं नरः ॥ ३-८३-४२ (१९४९०)

ततः शूर्पारकं गच्छेज्जामदग्न्यनिषेवितम् ।
रामतीर्थे नरः स्नात्वा विन्द्याद्बहु सुवर्णकम् ॥ ३-८३-४३ (१९४९१)
सप्तगोदावरे स्नात्वा नियतो नियताशनः ।
महत्पुण्यमवाप्नोति देवलोकं च गच्छति ॥ ३-८३-४४ (१९४९२)
ततो देवपथं गत्वा नियतो नियताशनः ।
देवसत्रस्य यत्पुण्यं तदेवाप्नोति मानवः ॥ ३-८३-४५ (१९४९३)
तुङ्गकारण्यमासाद्य ब्रह्मचारी जितेन्द्रियः ।
वेदानध्यापयत्तत्र ऋषिः सारस्वतः पुरा ॥ ३-८३-४६ (१९४९४)
तत्र वेदेषु नष्टेषु मुनेरङ्गिरसः सुतः ।
ऋषीणआमुत्तरीयेषु सूपविष्टो यथासुखम् ॥ ३-८३-४७ (१९४९५)
ओंकारेण यथान्यायं सम्यगुच्चारितेन ह ।
येन यत्पूर्वमभ्यस्तं तत्सर्वं समुपस्थितम् ॥ ३-८३-४८ (१९४९६)
ऋषयस्तत्र देवाश्च वरुणोऽग्निः प्रजापतिः ।
हरिर्नारायणस्तत्र महादेवस्तथैव च ॥ ३-८३-४९ (१९४९७)
पितामहश्च भगवान्देवैः सह महाद्युतिः ।
भृगुं नियोजयामास याजनार्थे महाद्युतिम् ॥ ३-८३-५० (१९४९८)
ततः स चक्रे भगवानृषीणां विधिवत्तदा ।
सर्वेषां पुनराधानं विधिदृष्टेन कर्मणा ॥ ३-८३-५१ (१९४९९)
आज्यभागेन तत्राग्नीं तर्पयित्वा यथाविधि ।
देवाः स्वभवनं याता ऋषयश्च यथाक्रमम् ॥ ३-८३-५२ (१९५००)
तदरण्यं प्रविष्टस्य तुङ्गकं राजसत्तम ।
पापं प्रणश्यत्यखिलं स्त्रिया वा पुरुषस्य वा ॥ ३-८३-५३ (१९५०१)
तत्रमासं वसेद्धीरो नियतो नियताशनः ।
ब्रह्मलोकं व्रजेद्राजन्कुलं चैव समुद्धरेत् ॥ ३-८३-५४ (१९५०२)
मेधाविकं समासाद्य पितॄन्देवांश्च तर्पयेत् ।
अग्निष्टोममवाप्नोति स्मृतिं मेधां च विन्दति ॥ ३-८३-५५ (१९५०३)
अत्र कालञ्चरं गत्वा पर्वतं लोकविश्रुतम् ।
तत्र देवह्रदे स्नात्वा गोसहस्रफलं लभेत् ॥ ३-८३-५६ (१९५०४)
आत्मानं स्नापयेत्तत्रगिरौ कालञ्जरे नृप ।
स्वर्गलोके महीयेत नरो नास्त्यत्र संशयः ॥ ३-८३-५७ (१९५०५)
ततो गिरिवरश्रेष्ठे चित्रकूटे विशांपते ।
मन्दाकिनीं समासाद्य सर्वपापप्रणाशिनीम् ॥ ३-८३-५८ (१९५०६)
तत्राभिषेकं कुर्वाणः पितृदेवार्चने रतः ।
अश्वमेधमवाप्नोति गतिं च परमां व्रजेत् ॥ ३-८३-५९ (१९५०७)
ततो गच्छेत धर्मज्ञ भर्तृस्थानमनुत्तमम् ।
यत्र नित्यं महासेनो गुहः सन्निहितो नृप ॥ ३-८३-६० (१९५०८)

तत्र गत्वा नृपश्रेष्ठ गमनादेव सिध्यति ।
कोटितीर्थे नरः स्नात्वा गोसहस्रफलं लभेत् ॥ ३-८३-६१ (१९५०९)
प्रदक्षिणमुपावृत्य ज्येष्ठस्थानं व्रजेन्नरः ।
अभिगम्य महादेवं विराजति यथा शशी ॥ ३-८३-६२ (१९५१०)
तत्र कूपे महाराज विश्रुता भरतर्षभ ।
समुद्रास्तत्र चत्वारो निवसन्ति युधिष्ठिर ॥ ३-८३-६३ (१९५११)
तत्रोपस्पृश्य राजेन्द्र पितृदेवार्चने रतः ।
नियतात्मा नरः पूतो गच्छेत परमां गतिम् ॥ ३-८३-६४ (१९५१२)
ततो गच्छेत राजेन्द्र शृङ्गबेरपुरं महत् ।
यत्रतीर्णो महाराज रामो दाशरथिः पुरा ॥ ३-८३-६५ (१९५१३)
रकतस्मिंस्तीर्थे महाबाहो स्नात्वा पापैः प्रमुच्यते ।
गङ्गायां तु नरः स्नात्वा ब्रह्मचारी समाहितः ॥ ३-८३-६६ (१९५१४)
विधूतपाप्मा भवति वाजपेयं च विन्दति ।
ततो मुञ्जवटं गच्छेत्स्थानं देवस्य धीमतः ॥ ३-८३-६७ (१९५१५)
अभिगम्य महादेवमभिवाद्य च भारत ।
प्रदक्षिणमुपावृत् यगाणपत्यमवाप्नुयात् ॥ ३-८३-६८ (१९५१६)
तस्मिंस्तीर्थे तु जाह्नव्यां स्नात्वा पापैः प्रमुच्यते ।
ततो गच्छेत राजेन्द्र प्रयागमृषिसंस्तुतम् ॥ ३-८३-६९ (१९५१७)
यत्र ब्रह्मादयो देवा दिशश्च सदिगीश्वराः ।
लोकपालाश्च साध्याश्च पितरो लोकसंमताः ॥ ३-८३-७० (१९५१८)
सनत्कुमारप्रमुखास्तथैव परमर्षयः ।
अङ्गिरःप्रमुखाश्चैव तथा ब्रह्मर्षयोऽमलाः ॥ ३-८३-७१ (१९५१९)
तथा नागाः सुपर्णाश्च सिद्धाश्चक्रचरास्तथा ।
सरितः सागराश्चैव गन्धर्वाप्सरसोऽपि च ॥ ३-८३-७२ (१९५२०)
हरिश्च भगवानास्ते प्रजापतिपुरस्कृतः ।
तत्र त्रीण्यग्निकुण्डानि येषां मध्येन जाह्नवी ॥ ३-८३-७३ (१९५२१)
प्रयागादभिनिष्क्रान्ता सर्वतीर्थपुरस्कृता ।
तपनस्य सुता देवी त्रिषु लोकेषु विश्रुता ॥ ३-८३-७४ (१९५२२)
यमुना गङ्गया सार्धं संगता लोकपावनी ।
गङ्गायमुनयोर्मध्यं पृथिव्या जघनं स्मृतम् ॥ ३-८३-७५ (१९५२३)
प्रयागं जघनस्थानमुपस्थमृषयो विदुः ।
प्रयागं सप्रतिष्ठानं कम्बलाश्वतरौ तथा ॥ ३-८३-७६ (१९५२४)
तीर्थं भोगवती चैव वेदिरेषा प्रजापतेः ।
तत्रवेदाश्च यज्ञाश्च मूर्तिमन्तो युधिष्ठिर ॥ ३-८३-७७ (१९५२५)
प्रजापतिमुपासन्ते ऋषयश्च तपोधनाः ।
यजन्ते क्रतुभिर्देवास्तथा चक्रधरा नृपाः ॥ ३-८३-७८ (१९५२६)

ततः पुण्यतमं नाम त्रिषु लोकेषु भारत ।
प्रयागं सर्वतीर्थेभ्यः प्रवदन्त्यधिकं विभो ॥ ३-८३-७९ (१९५२७)
श्रवणात्तस्य तीर्थस् नामसंकीर्तनादपि ।
मृत्युकालभयाच्चापि नरः पापात्प्रमुच्यते ॥ ३-८३-८० (१९५२८)
तत्राभिषेकं यः कुर्यात्संगमे लोकविश्रुते ।
पुण्यं स फलमाप्नोति राजसूयाश्वमेधयोः ॥ ३-८३-८१ (१९५२९)
एषा यजनभूमिर्हि देवानामभिसंस्कृता ।
तत्र रदत्तं सूक्ष्ममपि महद्भवति भारत ॥ ३-८३-८२ (१९५३०)
न वेदवचनात्तात न लोकवचनादपि ।
मतिरुत्क्रमणीया ते प्रयागमरणं प्रति ॥ ३-८३-८३ (१९५३१)
दशतीर्तसहस्राणि षष्टिः कोट्यस्तथाऽपराः ।
येषां सान्निध्यमत्रैव कीर्तितं कुरुन्दन ॥ ३-८३-८४ (१९५३२)
चतुर्विद्ये च यत्पुण्यं सत्यवादिषु चैव यत् ।
स्नात एव तदाप्नोति गङ्गायमुनसंगमे ॥ ३-८३-८५ (१९५३३)
तत्र भोगवती नाम वासुकेस्तीर्थमुत्तमम् ।
तत्राभिषेकं यः कुर्यात्सोऽश्वमेधफलं लभेत् ॥ ३-८३-८६ (१९५३४)
तत्र हंसप्रपतनं तीर्थं त्रैलोक्यविश्रुतम् ।
दशाश्वमेधिकं चैव गङ्गायां कुरुनन्दन ॥ ३-८३-८७ (१९५३५)
कुरुक्षेत्रसमा गङ्गा यत्रतत्रावगाहिता ।
विशेषो वै कनखले प्रयागे परमं महत् ॥ ३-८३-८८ (१९५३६)
यद्यकार्यशतं कृत्वा कृतंगङ्गावसेचनम् ।
सर्वं तत्तस्य गङ्गापो दहत्यग्निरिवेन्धनम् ॥ ३-८३-८९ (१९५३७)
सर्वं कृतयुगे पुण्यंत्रेतायां पुष्करं स्मृतम् ।
द्वापरेऽपि कुरुक्षेत्रं गङ्गा कलियुगे स्मृता ॥ ३-८३-९० (१९५३८)
पुष्करे तु तपस्तप्येद्दानं दद्यान्महालये ।
मलये त्वग्निमारोहेद्भृगुतुन्दे त्वनाशनम् ॥ ३-८३-९१ (१९५३९)
पुष्करे तु कुरुक्षेत्रे रगङ्गायां मगधेषु च ।
स्नात्वा तारयते जन्तुः सप्तसप्तावरांस्तथा ॥ ३-८३-९२ (१९५४०)
पुनाति कीर्तिता पापं दृष्टा भद्रं प्रयच्छति ।
अवगाढा च पीता च पुनात्यासप्तमं कुलम् ॥ ३-८३-९३ (१९५४१)
यावदस्थि मनुष्यस् गङ्गायाः स्पृशते जलम् ।
तावत्स पुरुषो राजन्स्वर्गलोके महीपते ॥ ३-८३-९४ (१९५४२)
यथा पुण्यानि तीर्थानि पुण्यान्यायतनानि च ।
उपास्य पुण्यं लब्ध्वा च भवत्यमरलोकभाक् ॥ ३-८३-९५ (१९५४३)
न गङ्गासदृशं तीर्थं न देवः केशवात्परः ।
ब्राह्मणेभ्यः परं नास्ति एवमाह पितामहः ॥ ३-८३-९६ (१९५४४)

यत्र गङ्गा महाराज स देशस्तत्तपोकवनम् ।
सिद्धिक्षेत्रं च तज्ज्ञेयं गङ्गातीरसमाश्रितम् ॥ ३-८३-९७ (१९५४५)
इदं सत्यंद्विजातीनां साधूनामात्मनोपि च ।
सुहृदां च जपेत्कर्मे शिष्यस्यानुगतस्य च ॥ ३-८३-९८ (१९५४६)
इदं धन्यमिदं मेध्यमिदं स्वर्ग्यमिदं सुखम् ।
इदं पुण्यमिदं रम्यं पावनं धर्म्यमुत्तमम् ॥ ३-८३-९९ (१९५४७)
महर्षीणामिदं गुह्यं सर्वपापप्रमोचनम् ।
अधीत्यद्विजमध्ये च निर्मलः स्वर्गमाप्नुयात् ॥ ३-८३-१०० (१९५४८)
श्रीमत्स्वर्ग्यं तथा पुण्यं सपत्नशमनं शिवम् ।
मेधाजननमग्र्यं वै तीर्थवंशानुकीर्तनम् ॥ ३-८३-१०१ (१९५४९)
अपुत्रो लभते पुत्रमधनो धनमाप्नुयात् ।
शूद्रो यथेप्सितान्कामान्ब्राह्मणः पारगः पठन् ।
महीं विजयते राजा वैश्यो धनमवाप्नुयात् ॥ ३-८३-१०२ (१९५५०)
यश्चेदं शृणुयान्नित्यं तीर्थपुण्यं नरः शुचिः ।
जातीः स स्मरते बह्वीर्नाकपृष्ठे च मोदते ॥ ३-८३-१०३ (१९५५१)
गम्यान्यपि च तीर्थानि कीर्तितान्यगमानि च ।
मनसा तानि गच्छेत सर्वतीर्थसमीक्षया ॥ ३-८३-१०४ (१९५५२)
एतानि वसुभिः साध्यैरादित्यैर्मरुदश्विभिः ।
ऋषिभिर्देवकल्पैश्च स्नातानि सुकृतैषिभिः ॥ ३-८३-१०५ (१९५५३)
एवं त्वमपि कौरव्य विधिनाऽनेन सुव्रत ।
व्रत तीर्थानि नियतः पुण्यं पुण्येन वर्धयन् ॥ ३-८३-१०६ (१९५५४)
भाषितैः करणैः पूर्वमास्तिक्याच्छ्रुतिदर्शनात् ।
प्राप्यन्ते तानि तीर्तानि सद्भिः शास्त्रार्थदर्शिभिः ।
सद्भिः शास्त्रार्थतत्वज्ञैर्ब्राह्मणैः सह गम्यताम् ॥ ३-८३-१०७ (१९५५५)
नाव्रती नाकृतात्मा च नाशुचिर्न च तस्करः ।
स्नाति तीर्थेषु कौरव्य न च वक्रमतिर्नरः ॥ ३-८३-१०८ (१९५५६)
त्वया तु सम्यग्वृत्तेन नित्यं धर्मार्थदर्शिना ।
गपितरस्तात सर्वे च तारिताः प्रपितामहाः' ॥ ३-८३-१०९ (१९५५७)
पिता पितामहस्चैव सर्वे च प्रपितामहाः ।
पितामहपुरोगाश्च देवाः सर्षिगणा नृप ।
तव धर्मेण धर्मज्ञ नित्यमेवाभितोषितः ॥ ३-८३-११० (१९५५८)
अवाप्स्यसि त्वं लोकान्वै वसूनां वासवोपम ।
कीर्तिं च महातीं भीष्म प्राप्स्यसे भुविशाश्वतीं ॥ ३-८३-१११ (१९५५९)
नारद उवाच। ३-८३-११२क्ष् (१९९१)
एवमुक्त्वाऽभ्यनुज्ञाय पुलस्त्यो भगवानृषिः ।
प्रीतः प्रीतेन मनसा तत्रैवान्तरधीयत ॥ ३-८३-११२ (१९५६०)

भीष्मश्च कुरुशार्दूल शास्त्रतत्त्वार्थदर्शिवान् ।
पुलस्त्यवचनाच्चैव पृथिवीं परिचक्रमे ॥ ३-८३-११३ (१९५६१)
एवमेषा महाभागा प्रतिष्ठाने प्रतिष्ठिता ।
तीर्थयात्रा महापुण्या सर्वपापप्रमोचनी ॥ ३-८३-११४ (१९५६२)
अनेन विधिना यस्तु पृथिवीं संचरिष्यति ।
अश्वमेधशतं साग्रं फलं प्रेत्य स भोक्ष्यति ॥ ३-८३-११५ (१९५६३)
ततश्चाष्टगुणं पार्थ प्राप्स्यसे धर्ममुत्तमम् ।
भीष्मः कुरूणां प्रवरो यथा पूर्वमवाप्तवान् ॥ ३-८३-११६ (१९५६४)
नेता च त्वमृषीन्यस्मात्तेन तेऽष्टगुणं फलम् ।
रक्षोगणबिकीर्णानि तीर्थान्येतानि भारत ।
अगम्यानि मनुष्येन्द्रैस्त्वामृते कुरुनन्दन ॥ ३-८३-११७ (१९५६५)
इदं देवर्षिचरितं सर्वतीर्ताभिसंवृतम् ।
यः पठेच्छृणुयाद्वाऽपिसर्वपापैः प्रमुच्यते ॥ ३-८३-११८ (१९५६६)
ऋषिमुख्याः सदा यत्रवाल्मीकिस्त्वथ कश्यपः ।
आत्रेयः कुण्डजठरो विश्वामित्रोऽथ गौतमः ॥ ३-८३-११९ (१९५६७)
असितो देवलश्चैव मार्कण्डेयोऽथ गालवः ।
भरद्वाजो वसिष्ठश्च मुनिरुद्दालकस्तथा ॥ ३-८३-१२० (१९५६८)
शौनकः सह पुत्रेण व्यासश्च तपतांवरः ।
दुर्वासाश्च मुनिश्रेष्ठो जाबालिश्च महातपाः ॥ ३-८३-१२१ (१९५६९)
एते ऋषिवराः सर्वे त्वत्प्रतीक्षास्तपोधनाः ।
एभिः सह महाराज तीर्थान्येतान्यनुव्रज ॥ ३-८३-१२२ (१९५७०)
एष ते लोमशो नाम महर्षिरमितद्युतिः ।
समेष्यति महाराज तेन सार्धमनुव्रज ॥ ३-८३-१२३ (१९५७१)
मयाऽपिसह धर्मज्ञ तीर्थान्येतान्यनुक्रमात्। ३-८३-ब्१२४ प्राप्स्यसे
महतीं कीर्तिं यथा राजा महाभिषक् ॥ ३-८३-१२४ (१९५७२)
यथा ययातिर्धर्मात्मा यथा राजा पुरूरवाः ।
तथा त्वं कुरुशार्दूल स्वेन धर्मेण शोभसे ॥ ३-८३-१२५ (१९५७३)
यथा भगीरथो राजा यथा रामश्च विश्रुतः ।
तथा त्वं सर्वराजभ्यो भ्राजसे रश्मिवानिव ॥ ३-८३-१२६ (१९५७४)
यथा मनुर्यथेक्ष्वाकुर्यथा पूरुर्महायशाः ।
यथा वैन्यो महाराज तथा त्वमपि विश्रुतः ॥ ३-८३-१२७ (१९५७५)
यथा च वृत्रहा सर्वान्सपत्नान्निर्दहन्पुरा ।
त्रैलोक्यं पालयामास देवराड्विगतज्वरः ॥ ३-८३-१२८ (१९५७६)
तथा शत्रुक्षयं कृत्वा त्वं प्रजाः पालयिष्यसि ।
स्वधर्मविजितामुर्वीं प्राप्य राजीवलोचन ।
ख्यातिं यास्यसि धर्मेण कार्तवीर्यार्जुनो यथा ॥ ३-८३-१२९ (१९५७७)

वैशंपायन उवाच। ३-८३-१३०क्ष् (१९९२)
एवमाश्वास्य राजानं नारदो भगवानृषिः ।
अनुज्ञाप्य महाराज तत्रैवान्तरधीयत ॥ ३-८३-१३० (१९५७८)
युधिष्ठिरोषि धर्मात्मा तमेवार्थं विचिन्तयन् ।
तीर्थयात्राश्रितं पुण्यमृषीणां प्रत्यवेदयत् ॥ ३-८३-१३१ (१९५७९)

इति श्रीमन्महाभारते अरण्यपर्वणि तीर्तयात्रापर्वणि
त्र्यशीतितमोऽध्यायः ॥ ८३ ॥
Mahabharata - Vana Parva - Chapter Footnotes

३-८३-४ अश्वमेधाद्दशगुणमिति क ।पाठः ॥
३-८३-२९ निदर्शनमुदाहरणम् ॥
३-८३-३० यो योनिसंकरजः स जेतत्र गायत्रीं पठति तस्य
सम्यक् पठतोपितीर्थमाहात्म्यात्सा गायत्री गाथा स्वरनियमहीना
गद्यवन्मुखान्निःसरति ।गाथिका ग्राम्यगीतवत् स्वरवर्णविकृता ॥
३-८३-३१ अब्राह्मणस्य तु प्राक्सिद्धापि तत्र न स्फुरतीति भावः ॥
३-८३-३३ ततो बेण्णां समासाद्येति क ।ध। पाठः ॥
३-८३-७३ चक्रचराः सूर्यादयः ॥
३-८३-७५ स्त्रीरूपायाः पृथिव्याः मेरुपृष्ठशीर्षाया हरिद्वारादरभ्य
जघनं नाभेरधोभागः ॥
३-८३-७७ नदी प्रोक्ता प्रजापतेरिति ध ।पाठः ॥
३-८३-८३ प्रयागगमनं प्रतीति क ।पाठः ॥
३-८३-८५ चातुर्वेद्ये च यत्पुण्यमिति क ।पाठः ॥
३-८३-१०३ कैलासे सत्यलोके नाकपृष्ठे च मोदत इति क ।पाठः ॥
३-८३-१०४ अगमानि अगम्यानि ।समीक्षया दर्शनेच्छया ॥
३-८३-१०७ करणैः इन्द्रियैः ॥
३-८३-१०८ अकृतात्मा अवशीकृतचित्तः ॥
३-८३-११४ प्रतिष्ठाने प्रयागे ।प्रतिष्ठिता समाप्ता ॥
३-८३-१२४ महाभिषक् शन्तनुरूपेणावतीर्णः ॥
३-८३-१२६ रश्मिवान् सूर्यः ॥

---

वन-अध्यय०८४
॥ श्रीः ॥
३.८४. अध्यायः ८४

Mahabharata - Vana Parva - Chapter Topics
युधिष्ठिरेण धौम्यंप्रति अर्जुनेन विना स्वस्य

काम्यकवनेऽनभिरुचिकथनपूर्वकं निवासाय स्थानान्तरकथनप्रार्थना ॥ १ ॥

Mahabharata - Vana Parva - Chapter Text

३-८४-० (१९५८०)
वैशंपायन उवाच। ३-८४-०क्ष् (१९९३)
भ्रातॄणां मतमाज्ञाय नारदस्य च धीमतः ।
पितामहसमं धौम्यं प्राह राजा युधिष्ठिरः ॥ ३-८४-१ (१९५८१)
मया स पुरुषव्याघ्रो जिष्णुः सत्यपराक्रमः ।
अस्त्रहेतोर्महाबाहुरमितात्मा विवासितः ॥ ३-८४-२ (१९५८२)
स हि वीरोऽनुरक्तश् समर्थश्च तपोधनः ।
कृती च भृशमप्यस्त्रे वासुदेव इव प्रभुः ॥ ३-८४-३ (१९५८३)
अहं ह्येतावुभौ ब्रह्मन्कृष्णावरिविघातिनौ ।
अभिजानामि विक्रान्तौ तथा व्यासः परन्तपौ ॥ ३-८४-४ (१९५८४)
त्रियुगौ पुण्डरीकाक्षौ वासुदेवधनंजयौ ।
नारदोऽपितथा वेद योष्यशंसत्सदा मम ॥ ३-८४-५ (१९५८५)
तथाऽहमपि जानामि नरनारायणावृषी ।
शक्तोऽयमित्यतो मत्वा मया स प्रेषितोऽर्जुनः ॥ ३-८४-६ (१९५८६)
इन्द्रादनवरः शक्रं सुरसूनुः सुराधिपम् ।
द्रष्टुमस्त्राणि चादातुमिन्द्रादिति विवासितः ॥ ३-८४-७ (१९५८७)
भीष्मद्रोणावतिरथौ कृपो द्रौणिश्च दुर्जयः ।
धृतराष्ट्रस्य पुत्रेण सुधृताः सुमहाबलाः ॥ ३-८४-८ (१९५८८)
सर्वे वेदविदः शूराः सर्वेऽस्त्रकुशलास्तथा ।
ग्सर्वे महारथा मुख्याः सर्वे जितपरिश्रमाः'।
योद्धुकामाश्च पार्थेन सततं ये महाबलाः ॥ ३-८४-९ (१९५८९)
स च दिव्यास्त्रवित्कर्णः सूतपुत्रो महारथः ।
योऽस्त्रवेगानिलबलः शरार्चिस्तलनिःस्वनः ।
रजोधूमोऽस्त्रसंपातो धार्तराष्ट्रानिलोद्धतः ॥ ३-८४-१० (१९५९०)
निसृष्ट इव कालेन युगान्तज्वलनो यथा ।
मम सैन्यमयं कक्षं प्रधक्ष्यति न संशयः ॥ ३-८४-११ (१९५९१)
तं स कृष्णानिलोद्धूतो दिव्यास्त्रज्वलनो महान् ।
श्वेतवाजिबलाकाभृद्गण्डीवेन्द्रायुधोल्बणः ॥ ३-८४-१२ (१९५९२)
संरब्धः शरधाराभिः सुधीप्तं कर्णपावकम् ।
उदीर्णोऽर्जुनमेघोऽयं शमयिष्यति संयुगे ॥ ३-८४-१३ (१९५९३)
स साक्षादेव सर्वाणि शक्रात्परपुरंजयः ।

दिव्यान्यस्त्राणि वीभत्सुर्यथावत्प्रतिपत्स्यते ॥ ३-८४-१४ (१९५९४)
अलं स तेषां सर्वेषामिति मे धीयते मतिः ।
नास्ति त्वतिक्रिया तस् रणेऽरीणां प्रतिक्रिया ॥ ३-८४-१५ (१९५९५)
ते वयं पाण्डवं सर्वे गृहीतास्त्रमरिंदमम् ।
द्रष्टारो न हि बीभत्सुर्भारमुद्यम्य सीदति ॥ ३-८४-१६ (१९५९६)
वयं तु तमृते वीरं वनेऽस्मिन्द्विपदांवर ।
अवधानं न गच्छामः काम्यके सह कृष्णया ॥ ३-८४-१७ (१९५९७)
भवानन्यद्वनं साधु बह्वन्नं फलवच्छुचि ।
आख्यातु रमणीयं च सेवितं पुण्यक्रमभिः ॥ ३-८४-१८ (१९५९८)
यत्रकंचिद्वयं कालं वसन्तः सत्यविक्रमम् ।
प्रतीक्षामोऽर्जुनं वरं वृष्टिकामा इवाम्बुदम् ॥ ३-८४-१९ (१९५९९)
विविधानाश्रमान्कांश्चिद्द्विजातिभ्यः प्रतिश्रुतान् ।
सरांसि सरितश्चैव रमणीयांश्च पर्वतान् ॥ ३-८४-२० (१९६००)
आचक्ष्व न हि मे ब्रह्मन्रोचते तमृतेऽर्जुनम् ।
वनेऽस्मिन्काम्यके वासो गच्छामोऽन्यां दिशंप्रति ॥ ३-८४-२१ (१९६०१)

इति श्रीमन्महाभारते अरण्यपर्वणि तीर्थयात्रापर्वणि
चतुरशीतितमोऽध्यायः ॥ ८४ ॥
Mahabharata - Vana Parva - Chapter Footnotes

३-८४-७ अनवरोऽन्यूनः ॥
३-८४-१० रजःकार्यं क्रोधः स एव धूमो यस्य
। धार्तराष्ट्रैरनिलैरिव उद्धत उद्दीपितः ॥
३-८४-११ कक्षं तृणवनम् ॥
३-८४-१२ उल्वणो दुःसहः ॥
३-८४-१५ अलं जेतुं पर्याप्तः ॥
३-८४-१६ द्रष्टारो द्रक्ष्यामः ॥
३-८४-१७ अवधानं स्वास्थ्यम् ॥
३-८४-१८ ब्रह्माढ्यं जलवच्छुचीति क । घ। पाठः ॥

---

वन-अध्यय०८५
॥ श्रीः ॥
३.८५. अध्यायः ८५

Mahabharata - Vana Parva - Chapter Topics
धौम्येन युधिष्ठिरय प्राचीस्थनानातीर्थकथनम् ॥ १ ॥

३-८५-० (१९६०२)
वैशंपायन उवाच। ३-८५-०क्ष् (१९९४)
तान्सर्वानुत्सुकान्दृष्ट्वा पाण्डवान्दीनचेतसः ।
अश्वासयंस्तथा धौम्यो बृहस्पतिसमोऽब्रवीत् ॥ ३-८५-१ (१९६०३)
ब्राह्मणानुमतान्पुण्यानाश्रमान्भरतर्षभ ।
दिशस्तीर्थानि शैलांश्च शृणु मे वदतोऽनघ ॥ ३-८५-२ (१९६०४)
याञ्श्रुत्वा गदतो राजन्विशोको भवितासि ह ।
द्रौपद्या चानया सार्धं भ्रातृभिश्च नरेश्वर ॥ ३-८५-३ (१९६०५)
श्रवणाच्चैव तेषां त्वं पुण्यमाप्स्यसि पाण्डव ।
गत्वा शतगुणं चैव तेभ्य एव नरोत्तम ॥ ३-८५-४ (१९६०६)
शृणु पूर्वां दिशं राजन्देवर्षिगणसेविताम् ।
रम्यां ते कथयिष्यामि युधिष्ठिर यथास्मृति ॥ ३-८५-५ (१९६०७)
तस्यां रदेवर्षिजुष्टायां नैमिषं नाम भारत ।
यत्रतीर्थानि देवानां पुण्यानि च पृथक् पृथक् ॥ ३-८५-६ (१९६०८)
यत्र सा गोमती पुण्या रम्या देवर्षिसेविता ।
यज्ञभूमिश्च देवानां शामित्रं च विवस्वतः ॥ ३-८५-७ (१९६०९)
तस्यां गिरिवरः पुण्यो गयो राजर्षिसत्कृतः ।
शिवं ब्रह्मसरो यत्रसेवितं त्रिदशर्षिभिः ॥ ३-८५-८ (१९६१०)
यदर्थे पुरुषव्याघ्र कीर्तयन्ति पुरातनाः ।
एष्टव्या बहवः पुत्रा यद्येकोपि गयां व्रजेत् ॥ ३-८५-९ (१९६११)
गौरीं वा वरयेत्कन्यां नीलं वा वृषमुत्सृजेत् ।
उत्तारयति संतत्या दश पूर्वान्दशावरान् ॥ ३-८५-१० (१९६१२)
महानदी च तत्रैव तथा गयशिरो नृप ।
यत्रासौ कीर्त्यते विप्रैरक्षय्यकरणो वटः ॥ ३-८५-११ (१९६१३)
यत्रदत्तं पितृभ्योऽन्नमक्षय्यं भवति प्रभो ।
सा च पुण्यजला तत्र फल्गुनामा महानदी ॥ ३-८५-१२ (१९६१४)
बहुमूलफला चापि कौशिकी भरतर्षभ ।
विश्वामित्रोऽध्यगाद्यत्र ब्राह्मणत्वं तपोधनः ॥ ३-८५-१३ (१९६१५)
गङ्गा यत्रनदी पुण्या यस्यास्तीरे भगीरथः ।
अयजत्तत्रबहुभिः क्रतुभिर्भूरिदक्षिणैः ॥ ३-८५-१४ (१९६१६)
पाञ्चालेषु च कौरव्य कथयन्त्युत्पलावतम् ।
विश्वामित्रोऽयजद्यत्र शक्रेण सह कौशिकः ॥ ३-८५-१५ (१९६१७)
यत्रानुवंशं भगवाञ्जामदग्न्यस्तथा जगौ ।

विश्वामित्रस्य तां दृष्ट्वा चिभूतिमतिमानुषीम् ॥ ३-८५-१६ (१९६१८)
कान्यकुब्जेऽपिबत्सोममिन्द्रेण सह कौशिकः ।
ततः क्षत्रादपाक्रामद्ब्राह्मणोस्मीति चाब्रवीत् ॥ ३-८५-१७ (१९६१९)
पवित्रमृषिभिर्जुष्टं पुण्यं पावनमुत्तमम् ।
गङ्गायमुनयोर्वीर संगमं लोकविश्रुतम् ॥ ३-८५-१८ (१९६२०)
यत्रायजत भूतात्मा पूर्वमेव पितामहः ।
प्रयागमिति विख्यातं तस्माद्भरतसत्तम ॥ ३-८५-१९ (१९६२१)
अगस्त्यस्य तु राजेन्द्र तत्राश्रमवरो नृप ।
तत्तथा तापसारण्यं तापसैरुपशोभितम् ॥ ३-८५-२० (१९६२२)
हिरण्यबिन्दुः कथितो गिरौ कालञ्जरे महान् ।
आगस्त्यपर्वतोरम्यः पुण्यो गिरिवः शिवः ॥ ३-८५-२१ (१९६२३)
महेन्द्रो नाम कौरव्य भार्गवस्य महात्मनः ।
अयजत्तत्रकौन्तेय पूर्वमेव पितामहः ॥ ३-८५-२२ (१९६२४)
यत्रभागीरथी पुण्यां सरस्यासीद्युधिष्ठिर ।
यत्र सा ब्रह्मशालेति पुण्याख्याता विशांपते ।
धूतपाप्मभिराकीर्णा पुण्यं तस्याश्च दर्शनम् ॥ ३-८५-२३ (१९६२५)
पवित्रो मङ्गलीयश्च ख्यातो लोके सनातनः ।
केदारश्च मतङ्गस्य महानाश्रम उत्तमः ॥ ३-८५-२४ (१९६२६)
कुण्डोदः पर्वतो रम्यो बहुमूलफलोदकः ।
नैषधस्तृषितो यत्र जलं शर्म च लब्धवान् ॥ ३-८५-२५ (१९६२७)
यत्र देववनं पुण्यं तापसैरुपशोभितम् ।
बाहुदा च नदी यत्रनन्दा च गिरिमूर्धनि ॥ ३-८५-२६ (१९६२८)
तीर्थानि सरितः शैलाः पुण्यान्यायतनानि च ।
प्राच्यां दिशि महाराज कीर्तितानि मया तव ॥ ३-८५-२७ (१९६२९)
तिसृष्वन्यासु पुण्यानि दिक्षु तीर्थानि मे शृणु ।
सरितः पर्वतांश्चैव पुण्यान्यायतनानि च ॥ ३-८५-२८ (१९६३०)

इति श्रीमन्महाभारते अरण्यपर्वणि तीर्थयात्रापर्वणि
पञ्चाशीतितमोऽध्यायः ॥ ८५ ॥
Mahabharata - Vana Parva - Chapter Footnotes

३-८५-७ शामित्रं शमितुः कर्म यज्ञे पशुमारणम् । विवस्वतः
पुत्रस्य यमस्येति शेषः ॥
३-८५-८ तस्यां प्राच्यां दिशि । राजर्षिरपि गयसंज्ञः ॥
३-८५-१८ पविर्वज्रं तत्तुल्यं जन्ममरणादिदुःखं तस्मात्त्रायत
इति पवित्रम् । अतएव ऋषिभिर्जुष्टं सेवितम्। पुण्यं

धर्मवृद्धिहेतुः। पावनं पापनाशनम् ॥
३-८५-२१ अत्यन्यान्पर्वतान्राजन्पुण्यो गिरिवरः शिवः इति क । पाठः ॥
३-८५-२३ सरसि मणिकर्णिकाख्ये प्रविष्टा आसीत् । आकार्णा व्याप्ता ॥
३-८५-२४ मङ्गलीयः मङ्गलावहः ॥
३-८५-२५ नैषधो नलः ॥
३-८५-२६ बहुला च नदी यत्रेति क । ध। पाठः ॥

---

वन-अध्यय०८६
॥ श्रीः ॥
३.८६. अध्यायः ८६

Mahabharata - Vana Parva - Chapter Topics
धौम्येन युधिष्टिरंप्रति दक्षिणदिक्स्थनानातीर्थानुकीर्तनम् ॥ १ ॥

Mahabharata - Vana Parva - Chapter Text

३-८६-० (१९६३१)
धौम्य उवाच। ३-८६-०क्ष् (१९९५)
दक्षिणस्यां तु पुण्यानि शृणु तीर्थानि भारत ।
विस्तरेण यथाबुद्धि कीर्त्यमानानि तानि वै ॥ ३-८६-१ (१९६३२)
यस्यामाख्यायते पुण्या दिशि गोदावरी नदी ।
बह्वारामा बहुजला तापसाचरिता शिवा ॥ ३-८६-२ (१९६३३)
वेणा भीमरथी चैव नद्यौ पापभयापहे ।
मृगद्विजसमाकीर्णे तापसालयभूषिते ॥ ३-८६-३ (१९६३४)
राजर्षेस्तस् च सरिन्नृगस्य भरतर्षभ ।
रम्यतीर्था बहुजला पयोष्णी द्विजसेविता ॥ ३-८६-४ (१९६३५)
अपि चात्र महायोगी मार्कण्डेयो महायशाः ।
अनुवंश्यां जगौ गाथां नृगस्य धरणीपतेः ॥ ३-८६-५ (१९६३६)
नृगस् यजमानस्य प्रत्यक्षमिति नः श्रुतम् ।
ग्मरुतः परिवेष्टारः सदस्याश्च दिवौकसः'॥ ३-८६-६ (१९६३७)
पयोष्ण्यां यजमानस्य वाराहे तीर्थ उत्तमे ।
उद्धृतं भूतलस्थं वावायुना समुदीरितम् ।
पयोष्ण्या हरते तोयं पापमामरणान्तिकम् ॥ ३-८६-७ (१९६३८)
स्वर्गादुत्तुङ्गममलं विषाणं यत्र शूलिनः ।
स्वमात्मविहितं दृष्ट्वा मर्त्यः शिवपुरं व्रजेत् ॥ ३-८६-८ (१९६३९)
एकतः सरितः सर्वा गङ्गाद्याः सलिलोच्चयाः ।

पयोष्णी चैकतः पुण्या तीर्थेभ्यो हि मता मम ॥ ३-८६-९ (१९६४०)
माठरस्य वनं पुण्यं बहुमूलफलं शिवम् ।
यूपश्च भरतश्रेष्ठ वरुणस्रोतसे गिरौ ॥ ३-८६-१० (१९६४१)
प्रवेण्युत्तरपार्श्वे तु पुण्ये कण्वाश्रमे तथा ।
तापसानामरण्यानि कीर्तितानि यथाश्रुति ॥ ३-८६-११ (१९६४२)
वेदी शूर्पारके तात जमदग्नेर्महात्मनः ।
रम्या पाषाणतीर्था च पुरश्चन्द्रा च भारत ॥ ३-८६-१२ (१९६४३)
अशोकतीर्थं तत्रैव कौन्ते य बहुलाश्रमम् ।
अगस्त्यतीर्थं पाण्ड्येषु वारुणं च युधिष्ठिर ॥ ३-८६-१३ (१९६४४)
कुमार्यः कथिताः पुण्याः पाण्ड्येष्वेव नरर्षभ ।
ताम्रपर्णी तु कौन्तेय कीर्तयिष्यामि तां शृणु ॥ ३-८६-१४ (१९६४५)
यत्र देवैस्तपस्तप्तं महदिच्छद्भिराश्रमे ।
गोकर्णमिति विख्यातं त्रिषु लोकेषु भारत ॥ ३-८६-१५ (१९६४६)
शीततोयो बहुजलः पुण्यस्तात शिवश्च सः ।
ह्रदः परमदुष्प्रापो मानुषैरकृतात्मभिः ॥ ३-८६-१६ (१९६४७)
तत्र वृक्षतृणाद्यैश्च संपन्नः फलमूलवान् ।
आश्रमोऽगस्त्यशिष्यस्य पुण्यो देवसहे गिरौ ॥ ३-८६-१७ (१९६४८)
वैडूर्यपर्वतस्तत्र श्रीमान्मणिमयः शिवः ।
अगस्त्यस्याश्रमश्चैव बहुमूलफलोदकः ॥ ३-८६-१८ (१९६४९)
सुराष्ट्रेष्वपि वक्ष्यामि पुण्यान्यायतनानि च ।
आश्रमान्सरितश्चैव सरांसि च नराधिप ॥ ३-८६-१९ (१९६५०)
चमसोद्भेदनं विप्रास्तत्रापि कथयन्त्युत ।
प्रभासं चोदधौ तीर्थं त्रिषु लोकेषु विश्रुतम् ॥ ३-८६-२० (१९६५१)
तत्र पिण्डारकं नाम तापसाचरितं शिवम् ।
उज्जयन्तश्च शिखरी क्षिप्रं सिद्धिकरो महान् ॥ ३-८६-२१ (१९६५२)
तत्र देवर्षिवीरेण नारदेनानुकीर्तितः ।
पुराणः श्रूयते श्लोकस्तं निबोध युधिष्ठिर ॥ ३-८६-२२ (१९६५३)
पुण्ये गिरौ सुराष्ट्रेषु मृगपक्षिनिषेविते ।
उज्जयन्ते स्म तप्ताङ्गो नाकपृष्ठे महीयते ॥ ३-८६-२३ (१९६५४)
ग्एष नारायणः श्रीमान्क्षीरार्णवनिकेतनः ।
नागपर्यङ्कमुत्सृज्यह्यागतो मधुरां पुरीम्' ॥ ३-८६-२४ (१९६५५)
पुण्या द्वारवती तत्रयत्रासौ मधुसूदनः ।
साक्षाद्देवः पुराणोसौ स हि धर्मः सनातनः ॥ ३-८६-२५ (१९६५६)
ये च कवेदविदो विप्रा ये चाध्यात्मविदो जनाः ।
ते वदन्ति महात्मानं कृष्णं धर्मं सनातनम् ॥ ३-८६-२६ (१९६५७)
पवित्राणां हि गोविन्दः पवित्रं परमुच्यते ।

पुण्यानामपि पुण्योसौ मङ्गालानां च मङ्गलम् ।
त्रैलोक्ये पुण्डरीकाक्षो देवदेवः सनातनः ॥ ३-८६-२७ (१९६५८)
अव्ययात्मा व्ययात्मा च क्षेत्रज्ञः परमेश्वरः ।
आस्ते हरिरचिन्त्यात्मा तत्रैव मधुसूदनः ॥ ३-८६-२८ (१९६५९)

इति श्रीमन्महाभारते अरण्यपर्वणि तीर्थयात्रापर्वणि
षडशीतितमोऽध्यायः ॥
Mahabharata - Vana Parva - Chapter Footnotes

३-८६-५ अनुवंश्यां वंशानूरूपां तु नृगमात्रानुरूपाम् ॥
३-८६-१३ अशोकतीर्थं मत्स्येष्विति ध ।पाठः ॥
३-८६-१५ महत् मोक्षफलम् ॥
३-८६-२३ तप्ताङ्ग कृततपस्कः ॥

---

वन-अध्यय०८७
॥ श्रीः ॥
३.८७. अध्यायः ८७

Mahabharata - Vana Parva - Chapter Topics
धौम्येन युधिष्ठिरंप्रति प्रतीचीस्थतीर्थकथनम् ॥ १ ॥

Mahabharata - Vana Parva - Chapter Text

३-८७-० (१९६६०)
धौम्य उवाच। ३-८७-०क्ष् (१९९६)
अवन्तीषु प्रतीच्यां वै कीर्तयिष्यामि ते दिशि ।
यानि तत्रपवित्राणि पुण्यान्यायतनानि च ॥ ३-८७-१ (१९६६१)
प्रियङ्ग्वाम्रवणोपेता वानीरफलमालिनी ।
प्रत्यक्स्रोता नदी पुण्या नर्मदा तत्र भारत ॥ ३-८७-२ (१९६६२)
त्रैलोक्ये यानि तीर्थानि पुण्यान्यायतनानि च ।
सरिद्वनानि शैलेन्द्रा देवाश्च सपितामहाः ॥ ३-८७-३ (१९६६३)
नर्मदायां कुरुश्रेष्ठ सहसिद्धर्षिचारणैः ।
स्नातुमायान्ति पुण्यौघैः सदा वारिषु भारत ॥ ३-८७-४ (१९६६४)
निरेतः श्रूयते पुण्यो यत्र विश्रवसो मुनेः ।
जज्ञे धनपतिर्यत्र कुबेरो नरवाहनः ॥ ३-८७-५ (१९६६५)
वैढूर्यशिखरो नाम पुण्यो गिरिवरः शिवः ।

नित्यपुष्पफलास्तत्र पादपा हरितच्छदाः ॥ ३-८७-६ (१९६६६)
तस्य शैलस्य शिखरे सरः पुण्यं महीपते ।
फुल्लपद्मं महाराज देवगन्धर्वसेवितम् ॥ ३-८७-७ (१९६६७)
बह्वाश्चर्यं महाराज दृश्यते तत्र पर्वते ।
पुण्ये स्वर्गोपमे चैव देवर्षिगणसेविते ॥ ३-८७-८ (१९६६८)
ह्रदिनी पुण्यतीर्था च राजर्षेस्तत्र वै सरित् ।
विश्वामित्रेण तपसा निर्मिता सर्वपावनी ॥ ३-८७-९ (१९६६९)
यस्यास्तीरे सतां मध्ये ययातिर्नहुषात्मजः ।
पपात स पुनर्लोकाँल्लेभे धर्मान्सनातनान् ॥ ३-८७-१० (१९६७०)
तत्रपुण्यो ह्रदः ख्यातो मैनाकश्चैव पर्वतः ।
बहुमूलफलोपेतस्त्वमितो नाम पर्वतः ॥ ३-८७-११ (१९६७१)
आश्रमः कक्षसेनस्य पुण्यस्तत्रयुधिष्ठिरः ।
च्यवनस्याश्रमश्चैव विख्यातस्तत्रपाण्डव ।
तत्राल्पेनैव सिद्ध्यन्ति मानवास्तपसा विभो ॥ ३-८७-१२ (१९६७२)
जम्बूमार्गो महाराज ऋषीणां भावितात्मनाम् ।
आश्रम शाम्यतां श्रेष्ठ मृगद्विजनिषेवितः ॥ ३-८७-१३ (१९६७३)
ततः पुण्यतमा राजन्सततं तापसैर्युता ।
केतुमाला च मेध्या च गङ्गाद्वारं च भूमिप ।
ख्यातं च सैन्धवारण्यं पुण्यं द्विजनिषेवितम् ॥ ३-८७-१४ (१९६७४)
पितामहसरः पुण्यं पुष्करं नाम नामतः ।
वैखानसानां सिद्धानामृषीणामाश्रमः प्रियः ॥ ३-८७-१५ (१९६७५)
अप्यत्र संश्रयार्थाय प्रजापतिरथो जगौ ।
पुष्करेषु कुरुश्रेष्ठ गाथां सुकृतिनांवर ॥ ३-८७-१६ (१९६७६)
मनसाऽप्यभिकामस्य पुष्कराणि मनस्विनः ।
विप्रणश्यन्ति पापानि नाकपृष्ठे च मोदते ॥ ३-८७-१७ (१९६७७)

इति श्रीमन्महाभारते अरण्यपर्वणि तीर्थयात्रापर्वणइ
सप्ताशीतितमोऽध्यायः ॥

Mahabharata - Vana Parva - Chapter Footnotes

३-८७-२ प्रत्यक्स्त्रोता- पश्चिमवाहिनी ॥
३-८७-१३ शाम्यतां शमवताम् ॥
३-८७-१४ गङ्गारण्यं च भूमिपेति ध ।पाठः ॥
३-८७-१६ संश्रयार्थाय वासार्थम् ॥
३-८७-१७ अभिकामस्य गन्तुमिच्छोः ॥

---

वन-अध्यय०८८

॥ श्रीः ॥

३.८८. अध्यायः ८८

Mahabharata - Vana Parva - Chapter Topics

धौम्येन युधिष्ठिरंप्रत्युदीचीस्थतीर्थकथनम् ॥ १ ॥

Mahabharata - Vana Parva - Chapter Text

३-८८-० (१९६७८)
धौम्य उवाच। ३-८८-०क्ष् (१९९७)
उदीच्यां राजशार्दूल दिशि पुण्यानि यानि वै ।
तानि ते कीर्तयिष्यामि पुण्यान्यायतनानि च ॥ ३-८८-१ (१९६७९)
शृणुष्वावहितो भूत्वा मम मन्त्रयतः प्रभो ।
कथाप्रतिग्रहो वीर श्रद्धां जनयते शुभाम् ॥ ३-८८-२ (१९६८०)
सरस्वती महापुण्या ह्रदिनी तीर्थमालिनी ।
समुद्रगा महावेगा यमुना यत्र पाण्डव ॥ ३-८८-३ (१९६८१)
यत्र पुण्यतरं तीर्थं प्लक्षावतरणं शुभम् ।
यत्रसारस्वतैरिष्ट्वा गच्छन्त्यवभृथं द्विजाः ॥ ३-८८-४ (१९६८२)
पुण्यं चाख्यायते दिव्यं शिवमग्निशिरोऽनघ ।
सहदेवोऽयजद्यत्रशम्याक्षेपेण भारत ॥ ३-८८-५ (१९६८३)
एतस्मिन्नेव चार्थेऽसौ इन्द्रगीता युधिष्ठिर ।
गाथा चरति लोकेऽस्मिन्गीयमाना द्विजातिभिः ॥ ३-८८-६ (१९६८४)
अग्नयः सहदेवेन ये चिता यमुनामनु ।
ते तस्य कुरुशार्दूल सहस्रशतदक्षिणाः ॥ ३-८८-७ (१९६८५)
तत्रैव भरतो राजा चक्रवर्ती महायशाः ।
विंशतीं सप्त चाष्टौ च हयमेधानुपाहरत् ॥ ३-८८-८ (१९६८६)
कामकृद्यो द्विजातीनां श्रुतस्तात यथा पुरा ।
अत्यन्तमाश्रमः पुण्यः शरभङ्गस्य विश्रुतः ॥ ३-८८-९ (१९६८७)
सरस्वती नदी सद्भिः सततं पार्थ पूजिता ।
वालखिल्यैर्महाराज यत्रेष्टमृषिभिः पुरा ॥ ३-८८-१० (१९६८८)
दृषद्वती महापुण्या यत्र रख्याता युधिष्ठिर ।
न्यग्रोधाख्यस्तु पाञ्चाल्यः पाञ्चाल्योद्विपदांवर ।
दाल्भ्यघोषश्च दाल्भ्याश् धरणीस्थो महात्मनः ॥ ३-८८-११ (१९६८९)
कौन्तेयानन्तयशसः सुव्रतस्यामितौजसः ।
आश्रमः ख्यायते पुण्यस्त्रिषु लोकेषु विश्रुतः ॥ ३-८८-१२ (१९६९०)
एतावर्णाववर्णौ च विश्रुतौ मनुजाधिप ।

ईजाते क्रतुभिर्मुख्यैः पुण्यैर्भरतसत्तम ॥ ३-८८-१३ (१९६९१)
समेत्य बहुशो देवाः सेन्द्राः सवरुणाः पुरा ।
विशाखयूपेऽतप्यन् तेन पुण्यतमश्च सः ॥ ३-८८-१४ (१९६९२)
ऋषिर्महान्महाभागो जमदग्निर्महायशाः ।
पलाशकेषु पुण्येषु रम्येष्वयजत प्रभुः ॥ ३-८८-१५ (१९६९३)
यत्रसर्वाः सरिच्छ्रेष्टाः साक्षात्तमृषिसत्तमम् ।
स्वं स्वं तोयमुपादाय परिवार्योपतस्थिरे ॥ ३-८८-१६ (१९६९४)
अपि चात्र महाराज स्वयं विश्वावसुर्जगौ ।
इमं श्लोकं तदा वीर प्रेक्ष्य दीक्षां महात्मनः ॥ ३-८८-१७ (१९६९५)
यजमानस्य वै देवाञ्जमदग्नेर्महात्मनः ।
आगम्य सरितो विप्रान्मधुना समतर्पयन् ॥ ३-८८-१८ (१९६९६)
गन्धर्वयक्षरक्षोबिरप्सरोभिश्च सेवितम् ।
किरातकिन्नरावासं शैलं शिखरिणांवरम् ॥ ३-८८-१९ (१९६९७)
बिभेद तरसा गङ्गा गङ्गाद्वारं युधिष्ठिर ।
पुण्यं तत्ख्यायते राजन्ब्रह्मर्षिगणसेवितम् ॥ ३-८८-२० (१९६९८)
सनत्कुमारः कौरव्य पुण्यं कनखलं तथा ।
पर्वतश्च पुरुर्नाम यत्रयातः पुरूरवाः ॥ ३-८८-२१ (१९६९९)
भृगुर्यत्रतपस्तेपे महर्षिगणसेविते ।
राजन्स आश्रमः ख्यातो भृगुतुन्दो महागिरिः ॥ ३-८८-२२ (१९७००)
यः स भूतं भविष्यच्च भवच् भरतर्षभ ।
नारायणः प्रभुर्विष्णुः शाश्वतः पुरुषोत्तमः ॥ ३-८८-२३ (१९७०१)
तस्यातियशसः पुण्यां विशालां बदरीमनु ।
आश्रमः ख्यायते पुण्यस्त्रिषु लोकेषु विश्रुतः ॥ ३-८८-२४ (१९७०२)
उष्णतोयवहा गङ्गा शीततोयवहा पुरा ।
सुवर्णसिकता राजन्विशालां बदरीमनु ॥ ३-८८-२५ (१९७०३)
ऋषयो यत्रदेवाश्च महाभागा महौजसः ।
प्राप्य नित्यं नमस्यन्ति देवं नारायणं प्रभुम् ॥ ३-८८-२६ (१९७०४)
यत्रनाराजणो देवः परमात्मा सनातनः ।
तत्र कृत्स्नं जगत्सर्वं तीर्थान्यायतनानि च ॥ ३-८८-२७ (१९७०५)
तत्पुण्यं परमं ब्रह्म तत्तीर्थं त्तपोवनम् ।
तत्परं परमं देवं भूतानां परमेश्वरम् ॥ ३-८८-२८ (१९७०६)
शाश्वतं परमं चैव धातारं परमं पदम् ।
यं विदित्वान शोचन्ति विद्वांसः शास्त्रदृष्टयः ॥ ३-८८-२९ (१९७०७)
तत्र देवर्षयः सिद्धाः सर्वे चैव तपोधनाः ।
आदिदेवो महायोगी यत्रास्ते मधुसूदनः ॥ ३-८८-३० (१९७०८)
पुण्यानामपि तत्पुण्यमत्र ते संशयेस्तु मा ।

एतानि राजन्पुण्यानि पृथिव्यां पृथिवीपते ।
कीर्तितानि नरश्रेष्ठ तीर्थान्यायतनानि च ॥ ३-८८-३१ (१९७०९)
एतानि वसुभिः साध्यैरादित्यैर्मरुदश्विभिः ।
ऋषिभिर्देवकल्पैश्च सेवितानि महात्मभिः ॥ ३-८८-३२ (१९७१०)
३-८८-३३ (१९७११)
चरन्नेतानि कौन्तेय सहितो ब्राह्मणर्षभैः ।
भ्रातृभिश्च महाभागैरुत्कण्ठां विजयिष्यसि ॥
Mahabharata - Vana Parva - Chapter Footnotes

३-८८-७ शतं शतसहस्राणि सहस्रशतदक्षिणाः इति क ।ध।पाठः ॥
३-८८-९ शंकरस्तत्रविश्रुत इति क ।ध।पाठः ॥
३-८८-१३ एता कृष्णमृगी तद्वर्णौ कृष्णौ नरनारायणावित्यर्थः
।वस्तुतस्त्ववर्णौ वर्णाः लोहितशुक्लकृष्णाः रजःसत्वतमांसि
तद्रहितौ।तत्र वैवर्ण्यवर्ण्यौ चेति क।ध।पाठः ॥
३-८८-२३ प्रभुर्जिष्णुरिति क ।पाठः ॥
३-८८-२४ विशालां नामतः ।बदरीमनु बदरीसमीपे ॥

---

वन-अध्यय०८९
॥ श्रीः ॥
३.८९. अध्यायः ८९

Mahabharata - Vana Parva - Chapter Topics
लोमशेनेन्द्रवचनाद्युधिष्ठिरंप्रति पार्थस्
पाशुपतादिप्राप्तिकथनपूर्वकमिनद्रसंदेशनिवेदनम् ॥ १ ॥

Mahabharata - Vana Parva - Chapter Text

३-८९-० (१९७१२)
वैशंपायन उवाच। ३-८९-०क्ष् (१९९८)
एवं संभाषमाणे तु धौम्ये कौरवनन्दन ।
लोमशः स महातेजा ऋषिस्तत्राजगाम ह ॥ ३-८९-१ (१९७१३)
तं पाण्डवाग्रजो राजा सगणो ब्राह्मणाश्च ते ।
उपातिष्ठन्महाभागं दिवि शक्रमिवामराः ॥ ३-८९-२ (१९७१४)
समभ्यर्च्य यथान्यायं धर्मपुत्रो युधिष्ठिरः ।
पप्रच्छागमने हेतुमटने च प्रयोजनम् ॥ ३-८९-३ (१९७१५)
स पृष्टः पाण्डुपुत्रेण प्रीयमाणो महामनाः ।
उवाच श्लक्ष्णया वाचा हर्षयन्निव पाण्डवान् ॥ ३-८९-४ (१९७१६)

संचरन्नस्मि कौन्तेय सर्वांल्लोकान्यदृच्छया ।
गतः शक्रस्य भवनं तत्रापश्यं सुरेश्वरम् ॥ ३-८९-५ (१९७१७)
तव च भ्रातरं वीरमपश्यं सव्यसाचिनम् ।
शक्रस्यार्धासनगतं तत्र मे विस्मयो महान् ॥ ३-८९-६ (१९७१८)
आसीत्पुरुषशार्दूल दृष्ट्वा पार्थं तथागतम् ।
आह मां तत्र देवेशो गच्छ पाण्डुसुतान्प्रति ॥ ३-८९-७ (१९७१९)
सोऽहमभ्यागतः क्षिप्रं दिदृक्षुस्त्वां सहानुजम् ।
वचनात्पुरुहूतस्य पार्थस् च महात्मनः ॥ ३-८९-८ (१९७२०)
आख्यास्ये ते प्रियं तात महत्पाण्डवनन्दन ।
भ्रातृभिः सहितो राजन्कृष्णया चैव तच्छृणु ॥ ३-८९-९ (१९७२१)
यत्त्वयोक्तो महाबाहुरस्त्रार्थं भरतर्षभ ।
तदस्त्रमाप्तं पार्थेन रुद्रादप्रतिमं विभो ॥ ३-८९-१० (१९७२२)
यत्तद्ब्रह्मशिरो नाम तपसा रुद्रमागमत् ।
अमृतादुत्थितं रौद्रं तल्लब्धं सव्यसाचिना ॥ ३-८९-११ (१९७२३)
तत्समन्त्रं ससंहारं सप्रायश्चित्तमङ्गलम् ।
वज्रमस्त्राणि चान्यानि दण्डादीनि युधिष्ठिर ॥ ३-८९-१२ (१९७२४)
यमात्कुबेराद्वरुणादिन्द्राच्च कुरुनन्दन ।
अस्त्राण्यधीतवान्पार्थो दिव्यान्यमितविक्रमः ॥ ३-८९-१३ (१९७२५)
विश्वावसोस्तु तनयाद्गीतं नृत्यं च साम च ।
वादित्रं च यथान्यायं प्रत्यविन्दद्यथाविधि ॥ ३-८९-१४ (१९७२६)
एवं कृतास्त्रः कौन्तेयो गान्धर्वं वेदमात्मवान् ।
सुखं वसति बीभत्सुरनुजस्यानुजस्तव ॥ ३-८९-१५ (१९७२७)
यदर्थं मां सुरश्रेष्ठ इदं वचनमब्रवीत् ।
तच्च ते कथयिष्यामि युधिष्ठिर निबोध मे ॥ ३-८९-१६ (१९७२८)
भवान्मनुष्यलोकेऽपि गमिष्यति न संशयः ।
ब्रूयाद्युधिष्ठिरं तत्रवचनान्मे द्विजोत्तम ॥ ३-८९-१७ (१९७२९)
आगमिष्यति ते भ्राता कृतास्त्रः क्षिप्रमर्जुनः ।
सुरकार्यं महत्कृत्वा यदशक्यं दिवौकसैः ॥ ३-८९-१८ (१९७३०)
तपसाऽपि त्वमात्मानं योजय भ्रातृभिः सह ।
तपसो हि परं नास्ति तपसा विन्दते महत् ॥ ३-८९-१९ (१९७३१)
अहं च कर्णं जानामि यथावद्भरतर्षभ ।
सत्यसन्धं महोत्साहं महावीर्यं महाबलम् ॥ ३-८९-२० (१९७३२)
महाहवेष्वप्रतिमं महायुद्धविशारदम् ।
महाधनुर्धरं वीरं महास्त्रं वरवर्णिनम् ॥ ३-८९-२१ (१९७३३)
महेश्वरसुतप्रख्यमादित्यतनयं प्रभुम् ।
तथाऽर्जुनमतिस्कन्धं सहजोल्वणपौरुणम् ॥ ३-८९-२२ (१९७३४)

न स पार्तस्य संग्रामे कलामर्हति षोडशीम् ॥ ३-८९-२३ (१९७३५)
यच्चापि ते भयं कर्णान्मनसिस्थमरिंदम ।
तच्चाप्यपहरिष्यामि सव्यसाचिन्युपागते ॥ ३-८९-२४ (१९७३६)
यच्च ते मानसं वीर तीर्थयात्रामिमां प्रति ।
स महर्षिर्लोमशस्ते कथयिष्यत्यसंशयम् ॥ ३-८९-२५ (१९७३७)
यच्च किंचित्तपोयुक्तं फलं तीर्थेषु भारत ।
ब्रह्मर्षिरेष ब्रूयात्ते न तच्छ्रद्धेयमन्यथा ॥ ३-८९-२६ (१९७३८)

इति श्रीमन्महाभारते अरण्यपर्वणि तीर्तयात्रापर्वणि
एकोननवतितमोऽध्यायः ॥ ८९ ॥
Mahabharata - Vana Parva - Chapter Footnotes

३-८९-१२ प्रायश्चित्तं अस्त्राग्निना निरपराधानां दाहे यो दोषस्तस्
शोधनम् । मङ्गलं दग्धानामेवारामादीनां पुनर्विकसनम्। वज्रं
वज्रवदप्रतीकार्यं रौद्रमेव ॥
३-८९-१४ गीतं लौकिकं गानम् । साम ऋक्षु गानम् ॥
३-८९-१८ सुरकार्यं निवातकवचादीनां वधः । कृतार्थः
क्षिप्रमर्जुन इति क। थ। पाठः ॥
३-८९-२० रसत्यसन्धं सत्यप्रतिज्ञम् ॥
३-८९-२१ वरवर्णिनं अतिसुन्दरम् ॥
३-८९-२२ महेश्वरसुतप्रख्यं स्कन्दतुल्यम् । अतित्कन्धं उन्नतांसम् ॥
३-८९-२४ अपहरिष्यामि कवचकुण्डलापहरणेन ॥
३-८९-२६ तत् श्रद्धेयं नत्वन्यथा ग्रहीतव्यमित्यर्थः ॥

---

वन-अध्यय०९०
॥ श्रीः ॥
३.९०. अध्यायः ९०

Mahabharata - Vana Parva - Chapter Topics
लोमशेन युधिष्ठिरंप्रति स्वसाहित्येन
तीर्थयात्राविधायकपार्थवचननिवेदनम् ॥ १ ॥
युधिष्ठिरेण लोमशाशयाऽधिक परिजनविसर्जनम् ॥ २ ॥

Mahabharata - Vana Parva - Chapter Text

३-९०-० (१९७३९)

लोमश उवाच। ३-९०-०क्ष् (१९९९)
धनंजयेन चाप्युक्तं यत्तच्छृणु युधिष्ठिर ।
युधिष्ठिरं भ्रातरं मे योजयेर्धर्म्यया धिया ॥ ३-९०-१ (१९७४०)
त्वं हि धर्मान्परान्वेत्थ तपांसि च तपोधन ।
श्रीमतां चापि जानासि धर्मं राज्ञां सनातनम् ॥ ३-९०-२ (१९७४१)
स भवान्परमं वेद रपावनं पुरुषं प्रति ।
तेन संयोजयेथास्त्वं तीर्थपुण्येन पाण्डवान् ॥ ३-९०-३ (१९७४२)
यथा तीर्थानि गच्छेत गाश्च दद्यात्स पार्थिवः ।
तथा सर्वात्मना कार्यमिति मामर्जुनोऽब्रवीत् ॥ ३-९०-४ (१९७४३)
भवता चानुगुप्तोऽसौ चरेत्तीर्थानि सर्वशः ।
रक्षोभ्यो रक्षितव्यश्च दुर्गेषु विषमेषु च ॥ ३-९०-५ (१९७४४)
दधीच इव देवेन्द्रं यथा चाप्यङ्गिरा रविम् ।
तथा रक्षस्व कौन्तेयान्राक्षसेभ्यो द्विजोत्तम ॥ ३-९०-६ (१९७४५)
यातुधाना हि बहवो राक्षसाः पर्वतोपमाः ।
त्वयाऽभिगुप्तान्कौन्तेयान्न विवर्तेयुरन्तिकम् ॥ ३-९०-७ (१९७४६)
सोऽहमिन्द्रस्य वचनान्नियोगादर्जुनस्य च ।
रक्षमाणो भयेभ्यस्त्वां चरिष्यामि त्वा सह ॥ ३-९०-८ (१९७४७)
द्विस्तीर्थानि मया पूर्वं दृष्टानि कुरुनन्दन ।
इदं तृतीयं द्रक्ष्यामि तान्येव भवता सह ॥ ३-९०-९ (१९७४८)
इयं राजर्षिभिर्याता पुण्यकृद्भिर्युधिष्ठिर ।
मन्वादिभिर्महाराज तीर्थयात्रा भयापहा ॥ ३-९०-१० (१९७४९)
नानृजुर्नाकृतात्मा च नाविद्यो न च पापकृत् ।
स्नाति तीर्थेषु कौरव्य न च वक्रमतिर्नरः ॥ ३-९०-११ (१९७५०)
त्वं तु धर्ममतिर्नित्यं धर्मज्ञः सत्यसंगरः ।
विमुक्तः सर्वपापेभ्यो भूय एव भविष्यसि ॥ ३-९०-१२ (१९७५१)
यथा भगीरथो राजा राजानश्च गयादयः ।
यथा ययातिः कौन्तेय तथा त्वमपि पाण्डव ॥ ३-९०-१३ (१९७५२)
युधिष्ठिर उवाच। ३-९०-१४क्ष् (२०००)
न हर्षात्संप्रपश्यामि वाक्यस्यास्योत्तरं क्वचित् ।
यन्मां स्मरति देवेशः किं नामाभ्यधिकं ततः ॥ ३-९०-१४ (१९७५३)
भवता संगमो यस् भ्राता चैव धनंजयः ।
वासवः स्मरते यस् को नामाभ्यधिकस्ततः ॥ ३-९०-१५ (१९७५४)
यच्च मां भगवानाह तीर्थानां गमनं प्रति ।
धौम्यस्य वचनादेषा बुद्धिः पूर्वं कृतैव मे ॥ ३-९०-१६ (१९७५५)
तद्यदा मन्यसे ब्रह्मन्गमनं तीर्तदर्शने ।
तदैव गन्तास्मि तीर्तान्येष मे निश्चयः परः ॥ ३-९०-१७ (१९७५६)

वैशंपायन उवाच। ३-९०-१८क्ष् (२००१)
गमने कृतबुद्धिं तं पाण्डवं लोमशोऽब्रवीत् ।
लघुर्भव महाराज लघुः स्वैरं गमिष्यसि ॥ ३-९०-१८ (१९७५७)
युधिष्ठिर उवाच। ३-९०-१९क्ष् (२००२)
भिक्षाभुजो निवर्तन्तां ब्राह्मणा यतयश्च ये ॥ ३-९०-१९ (१९७५८)
क्षुत्तृडध्वश्रमायासशीतार्तिमसहिष्णवः ।
ते सर्वे विनिवर्तन्तां ये च मृष्टभुजो द्विजाः ॥ ३-९०-२० (१९७५९)
पक्वान्नलेह्यपानानां मांसानां च विकल्पकाः ।
तेऽपि सर्वे निवर्तन्तां ये च सूदानुयायिनः ।
मया यथोचिताऽऽजीव्यौः संविभक्ताश्च वृत्तिभिः ॥ ३-९०-२१ (१९७६०)
ये चाप्यनुगताः पौरा राजभक्तिपुरःसराः ।
धृतराष्ट्रं महाराजमभिगच्छन्तु ते च वै ।
स दास्यति यथाकालमुचिता यस्य या भृतिः ॥ ३-९०-२२ (१९७६१)
स चेद्यथोचितां वृत्तिं न दद्यान्मनुजेश्वरः ।
अस्मत्प्रियहितार्थायपाञ्चाल्यो वः प्रदास्यति ॥ ३-९०-२३ (१९७६२)
वैशंपायन उवाच। ३-९०-२४क्ष् (२००३)
ततो भूयिष्ठशः पौरा गुरौ भारे समाहिते ।
विप्राश्च यतयो मुख्या जग्मुर्नागपुरं प्रति ॥ ३-९०-२४ (१९७६३)
तान्सर्वान्धर्मराजस्य प्रेम्णा राजाऽम्बिकासुतः ।
प्रतिजग्राह विधिवद्धनैश्च समतर्पयत् ॥ ३-९०-२५ (१९७६४)
ततः कुन्तीसुतो राजा लघुभिर्ब्राह्मणैः सह ।
लोमशेन च सुप्रीतस्त्रिरात्रं काम्यकेऽवसत् ॥ ३-९०-२६ (१९७६५)

इति श्रीमन्महाभारते अरण्यपर्वणि तीर्थयात्रापर्वणि
नवतितमोऽध्यायः ॥ ९० ॥
Mahabharata - Vana Parva - Chapter Footnotes

३-९०-३ पुरुषप्रति पुरुषस्येत्यर्थः ॥
३-९०-९ द्विः द्विवारम् । तृतीयं तृतीयवारम् ॥
३-९०-१० तीर्तयात्रा शुभावहेति क ध । पाठः ॥
३-९०-११ नानृती नाकृतात्मा चेति क । ध। पाठः ॥
३-९०-१८ लघुरल्पपरिवारः ॥
३-९०-२१ विकल्पकाः मृष्टामृष्टविभाजकाः
। आजीव्यैर्भृत्यादिभिः। वृत्तिभिर्जीवनहेतुभिरन्नादिभिः ॥
३-९०-२३ पाञ्चाल्यो द्रुपदः ॥

वन-अध्यय०९१
॥ श्रीः ॥
३.९१. अध्यायः ९१

Mahabharata - Vana Parva - Chapter Topics
युधिष्ठिरेण लोमशादिभिः सह तीर्थसेवनाय प्रस्थानम् ॥१ ॥

Mahabharata - Vana Parva - Chapter Text

३-९१-० (१९७६६)
वैशंपायन उवाच। ३-९१-०क्ष् (२००४)
ततः प्रयान्तं कौन्तेयं ब्राह्मणा वनवासिनः ।
अभिगम्य तदा राजन्निदं वचनमब्रुवन् ॥ ३-९१-१ (१९७६७)
राजंस्तीर्थानि गन्तासि पुण्यानि भ्रातृभिः सह ।
देवर्षिणा च सहितो लोमशेन महात्मना ॥ ३-९१-२ (१९७६८)
अस्मानपि महाराज नेतुमर्हसि पाण्डव ।
अस्माभिर्हि न शक्यानि त्वदृते तानि कौरव ॥ ३-९१-३ (१९७६९)
श्वापरदैरुपसृष्टानि दुर्गाणि विषमाणि च ।
अगम्यानि नरैरल्पैस्तीर्थानि मनुजेश्वर ॥ ३-९१-४ (१९७७०)
भवतो भ्रातरः शूरा धनुर्धरवराः सदा ।
भवद्भिः पालिताः शूरैर्गच्छामो वयमप्युत ॥ ३-९१-५ (१९७७१)
भवत्प्रसादाद्धि वयं प्राप्नुयामः सुखं फलम् ।
तीर्थानां पृथिवीपाल वनानां च विशांपते ॥ ३-९१-६ (१९७७२)
तव वीर्यपरित्राताः शुद्धास्तीर्थपरिप्लताः ।
भवेम धूतपाप्मानस्तीर्थसंदर्शनान्नृप ॥ ३-९१-७ (१९७७३)
भवानपि नरेन्द्रस्य कार्तवीर्यस्य भारत ।
अष्टकस्य च राजर्षेर्लोमपादस् चैव ह ॥ ३-९१-८ (१९७७४)
भरतस्य च वीरस्य सार्वभौमस्य पार्तिव ।
ध्रुवं प्राप्स्यति दुष्प्रापाँल्लोकांस्तीर्थपरिप्लुतः ॥ ३-९१-९ (१९७७५)
प्रभासादीनि तीर्थानि महेन्द्रादींश्च पर्वतान् ।
गङ्गाद्याः सरितश्चैव प्लक्षादींश्च पर्वतान् ॥ ३-९१-१० (१९७७६)
त्वया सह महीपाल द्रष्टुमिच्छामहे वयम् ।
‘भवद्भिः पालिताः शूरैस्तीर्थान्यायतनानि च’ ॥ ३-९१-११ (१९७७७)
यदि ते ब्राह्मणेष्वस्ति काचित्प्रीतिर्जनाधिप ।
कुरुक्षिप्रं वचोऽस्माकं ततः श्रेयोऽभिपत्स्यसे ॥ ३-९१-१२ (१९७७८)
तीर्तानि हि महाबाहो तपोविघ्नकरैः सदा ।

अनुकीर्णानि रक्षोभिस्तेभ्यो नस्त्रातुमर्हसि ॥ ३-९१-१३ (१९७७९)
तीर्थान्युक्तानि धौम्येन नारदेन च धीमता ।
यान्युवाच च देवर्षिर्लोमशः सुमहातपाः ॥ ३-९१-१४ (१९७८०)
विधिवत्तानि सर्वाणि पर्यटस्व नराधिप ।
धूतपाप्मा सहास्माभिर्लोमशेनाबिपालितः ॥ ३-९१-१५ (१९७८१)
स राजा पूज्यमानस्तैर्हर्षादश्रुपरिप्लुतः ।
भीमसेनादिभिर्वीरैर्भ्रातृभिः परिवारितः ॥ ३-९१-१६ (१९७८२)
बाढमित्यब्रवीत्सर्वांस्तानृषीन्पाण्डवर्षभः ।
लोमशं समनुज्ञाप्य धौम्यं चैव पुरोहितम् ॥ ३-९१-१७ (१९७८३)
ततः स पाण्डवश्रेष्ठो भ्रातृभिः सहितो वशी ।
द्रौपद्या चानवद्याङ्ग्या गमनाय मनो दधे ॥ ३-९१-१८ (१९७८४)
अथ व्यासो महाभागस्तथा पर्वतनारदौ ।
दाम्यके पाण्डवंद्रष्टुं समाजग्मुर्मनीषिणः ॥ ३-९१-१९ (१९७८५)
तेषां युधिष्ठिरो राजा पूजां चक्रे यथाविधि ।
सत्कृतास्ते महाभागा युधिष्ठिरमथाब्रुवन् ॥ ३-९१-२० (१९७८६)
युधिष्ठिरयमौ भीम मनसा कुरुतार्जवम् ।
मनसा कृतशौचा वै शद्धास्तीर्थानि यास्यथ ॥ ३-९१-२१ (१९७८७)
शरीरनियमं प्राहुर्ब्राह्मणा मानुषं व्रतम् ।
मनोविशुद्धां बुद्धिं च दैवमाहुर्व्रतं द्विजाः ॥ ३-९१-२२ (१९७८८)
मनो ह्यदुष्टं शौचाय पर्याप्तं वै नराधिप ।
मैत्रीं बुद्धिं समास्थाय शुद्धास्तीर्थानि गच्छत ॥ ३-९१-२३ (१९७८९)
ते यूयं मानसैः शुद्धाः शरीरनियमव्रतैः ।
दैवं व्रतं समास्थाय यथोक्तं फलमाप्स्यथ ॥ ३-९१-२४ (१९७९०)
ते तथेति प्रतिज्ञाय कृष्णया सह पाण्डवाः ।
कृतस्वस्त्ययनाः सर्वे मुनिभिर्देवमानुषैः ॥ ३-९१-२५ (१९७९१)
लोमशस्योपसंगृह्य पादौ द्वैपायनस् च ।
नारदस्य च राजेन्द्र देवर्षेः पर्वतस्य च ॥ ३-९१-२६ (१९७९२)
धौम्येन सहिता वीरास्तथा तैर्वनवासिभिः ।
मार्गशीर्ष्यामतीतायां पुष्येण प्रययुस्ततः ॥ ३-९१-२७ (१९७९३)
कठिनानि समादाय चीराजिनजटाधराः ।
अभेद्यैः कवचैर्युक्तास्तीर्थान्यन्वचरंस्ततः ॥ ३-९१-२८ (१९७९४)
इन्द्रसेनादिभिर्भृत्यै रथैः परिचतुर्दशैः ।
महानसव्यापृतैश्च तथाऽन्यैः परिचारकैः ॥ ३-९१-२९ (१९७९५)
सायुधा बद्धनिस्त्रिंशास्तूणवन्तः समार्गणाः ।
प्राङ्मुखाः प्रययुर्वीराः पाण्डवा जनमेजय ॥ ३-९१-३० (१९७९६)

इति श्रीमन्महाभारते अरण्यपर्वणि तीर्थयात्रापर्वणि
एकनवतितमोऽध्यायः ॥ ९१ ॥
Mahabharata - Vana Parva - Chapter Footnotes

३-९१-७ तीर्थसंस्पर्शनान्नृपेति क । पाठः ॥
३-९१-१३ अनुकीर्णानि व्याप्तानि । नोऽस्मान् ॥
३-९१-२१ आर्जवमृजुबुद्धिं श्रद्धामित्यर्थः ॥
३-९१-२३ मनो ह्यदुष्टं शूराणामिति क । पाठः ॥
३-९१-२४ फलमाप्नुतेति क । पाठः ॥
३-९१-२८ कठिनानि करण्डानि ॥
३-९१-२९ परिचतुर्दशैः पञ्चदशाभिः । चतुर्दशभ्यः परि
उपरीति व्युत्पत्तेः। संख्ययाव्ययासन्नेति समासः। बहुव्रीहौ संख्येये
डजिति डच् ॥

---

वन-अध्यय०९२
॥ श्रीः ॥
३.९२. अध्यायः ९२

Mahabharata - Vana Parva - Chapter Topics
लोमशेन युधिष्ठिरंप्रति धर्माधर्मयोः
समृद्धसमृद्धिलक्षणोदर्ककारणत्वाभिधानम् ॥ १ ॥

Mahabharata - Vana Parva - Chapter Text

३-९२-० (१९७९७)
युधिष्ठिर उवाच। ३-९२-०क्ष् (२००५)
न वै निर्गुणमात्मानं मन्ये देवर्षिसत्तम ।
तथाऽस्मि दुःखसंतप्तो यथा नान्यो महीपतिः ॥ ३-९२-१ (१९७९८)
परांश्च निर्गुणान्मन्ये न च धर्मगतानपि ।
ते च लोमश लोकेऽस्मिन्नृध्यन्ते के न हेतुना ॥ ३-९२-२ (१९७९९)
लोमश उवाच। ३-९२-३क्ष् (२००६)
नात्र दुःखं त्वया राजन्कार्यं पार्थ कथंचन ।
यदधर्मेण वर्धेयुरधर्मरुचयो जनाः ॥ ३-९२-३ (१९८००)
वर्धत्यधर्मेण नरस्ततो भद्राणि पश्यति ।
ततः सपत्नाञ्जयति समूलस्तु विनश्यति ॥ ३-९२-४ (१९८०१)
ग्यत्र धर्मेण वर्धन्ते राजानो राजसत्तम ।
सर्वान्सपत्नान्वाधन्ते राज्यं चैषां विवर्धते' ॥ ३-९२-५ (१९८०२)

मया हि दृष्टा दैतेया दानवाश्च महीपते ।
वर्धमाना ह्यधर्मेण क्षयं चोपगताः पुनः ॥ ३-९२-६ (१९८०३)
पुरा देवयुगे चैव दृष्टं सर्वं मया विभो ।
अरोचयन्सुरा धर्मं धर्मं तत्यजिरेऽसुराः ॥ ३-९२-७ (१९८०४)
तीर्तानि देवा विविशुर्नाविशन्भारतासुराः ।
तानधर्मकृतो दर्पः पूर्वमेव समाविशत् ॥ ३-९२-८ (१९८०५)
दर्पान्मानः समभवन्मानात्क्रोधो व्यजायत ।
क्रोधादह्रीस्ततोऽलज्जा वृत्तं तेषां ततोऽनशत् ॥ ३-९२-९ (१९८०६)
तानलज्जान्गतश्रीकान्हीनवृत्तान्वृथाव्रतान् ।
क्षमा लक्ष्मीः स्वधर्मश्च नचिरात्प्रजहुस्ततः ॥ ३-९२-१० (१९८०७)
लक्ष्मीस्तु देवानगमदलक्ष्मीरसुरान्नृप ॥ ३-९२-११ (१९८०८)
तानलक्ष्मीसमाविष्टान्दर्पोपहतचेतसः ।
दैतेयान्दानवांश्चैव कलिरप्याविशत्ततः ॥ ३-९२-१२ (१९८०९)
तानलक्ष्मीसमाविष्टान्दानवान्कलिनाहतान् ।
दर्पाभिभूतान्कौन्तेय क्रियाहीनानचेतसः ॥
मानाभिभूतानचिराद्विनाशः समपद्यत ॥ ३-९२-१३ (१९८१०)
निर्यशस्कास्तथा दैत्याः कृत्स्नशो विलयं गताः ।
ग्अधर्मरुचयोराजन्नलक्ष्म्या समधिष्ठिताः' ॥ ३-९२-१४ (१९८११)
देवास्तु सागरांश्चैव सरितश्च सरांसि च ।
अभ्यगच्छन्धर्मशीलाः पुण्यान्यावतनानि च ॥ ३-९२-१५ (१९८१२)
तपोभिः क्रतुभिर्दानैराशीर्वादैश्च पाण्डव ।
प्रजहुः सर्वपापानि श्रेयश्च प्रतिपेदिरे ॥ ३-९२-१६ (१९८१३)
एवमादानवन्तश् निरादानाश्च सर्वशः ।
तीर्थान्यगच्छन्विबुधास्तेनापुर्भूतिमुत्तमाम् ॥ ३-९२-१७ (१९८१४)
तथा त्वमपि राजेन्द्र स्नात्वा तीर्थेषु सानुजः ।
पुनर्वेत्स्वसि तां लक्ष्मीमेष पन्थाः सनातनः ॥ ३-९२-१८ (१९८१५)
यथैव हि नृगो राजा शिविरौशीनरो यथा ।
भगीरयो वसुमना गयः पूरुः पुरूरवाः ॥ ३-९२-१९ (१९८१६)
चरमाणास्तपो नित्यंस्पर्शनादम्भसश्च ते ।
तीर्थामिगमनात्पूता दर्शनाच्च महात्मनाम् ॥ ३-९२-२० (१९८१७)
अलभन्त यशः पुण्यं धनानि च विशांपते ।
तथा त्वमपि राजेन्द्र लब्ध्वा सुविपुलां श्रियम् ॥ ३-९२-२१ (१९८१८)
यथा चेक्ष्वाकुरभवत्सपुत्रजनबान्धवः ।
मुचुकुन्दोऽथ मांधाता मरुत्तश्च महीपतिः ॥ ३-९२-२२ (१९८१९)
कीर्तिं पुण्यामविन्दन्त यथा देवास्तपोबलात् ।
देवर्षयश्च कात्स्न्येन तथा त्वमपि वेत्स्यसि ॥ ३-९२-२३ (१९८२०)

धार्तराष्ट्रास्त्वधर्मेण मोहिन च वशीकृताः ।
नचिराद्वै विनङ्क्ष्यन्ति दैत्या इव न संशयः ॥ ३-९२-२४ (१९८२१)

इति श्रीमन्महाभारते अरण्यपर्वणि तीर्थयात्रापर्वणि
द्विनवतितमोऽध्यायः ॥ ९२ ॥
Mahabharata - Vana Parva - Chapter Footnotes

३-९२-२ परान् शत्रून् ॥
३-९२-८ विविशुः स्नानार्थमिति शेषः ॥
३-९२-९ अह्रीः अकार्ये प्रवृत्तिः । ततः अलज्जा लज्जा
निन्द्यतादोषाद्भयं तस्य नाशः । ३-९२-१० नचिरात् शीघ्रमेव ॥
३-९२-१७ आदानवन्तः आर्जवादिनियमग्रहणवन्तः । निरादानाः
अप्रतिबद्धाः। सर्वशः देवादिभिरपि। एवं हि दानवन्तश्च
क्रियावन्तश्च सर्वशः इति ध। पाठः ॥
३-९२-१८ वेत्स्यसिलप्स्यसे ॥
३-९२-२४ धार्तराष्ट्रस्तु दर्पेण इति क ।ध। पाठः ॥

---

वन-अध्यय०९३
॥ श्रीः ॥
३.९३. अध्यायः ९३

Mahabharata - Vana Parva - Chapter Topics
युधिष्ठिरादिभिः क्रमेण ब्रह्मसरस्तीर्थगमनम् ॥ १ ॥
तत्रशमठेन युधिष्ठिरादीन्प्रति गययज्ञवर्णनम् ॥ २ ॥

Mahabharata - Vana Parva - Chapter Text

३-९३-० (१९८२२)
वैशंपायन उवाच। ३-९३-०क्ष् (२००७)
ने तथा सहिता वीरा वसन्तस्तत्रतत्र ह ।
क्रमेण पृथिवीपाल नैमिषारण्यमागताः ॥ ३-९३-१ (१९८२३)
तत्स्तीर्थेषु पुण्येषु गोमत्याः पाण्डवा नृप ।
कृताभिषेकाः प्रददुर्गाश्च वित्तं च भारत ॥ ३-९३-२ (१९८२४)
तत्र देवान्पितॄन्विप्रांस्तर्पयित्वा पुनःपुनः ।
कन्यातीर्थेऽश्वतीर्थे च गवां तीर्थे च भारत ॥ ३-९३-३ (१९८२५)
कालकोट्यां विपप्रस्थे गिरावुष्य च कौरवाः ।
बाहुदायां महीपाल चक्रुः सर्वेऽभिषेचनम् ॥ ३-९३-४ (१९८२६)

प्रयागे देवयजने देवानां पृथिवीपते ।
ऊषुगप्लुत्य गात्राणि तपश्चातस्थुरुत्तमम् ॥ ३-९३-५ (१९८२७)
गङ्गायमुनयोश्चैव संगमे सत्यसंगराः ।
विपाप्मानो महात्मानो विप्रेभ्यः प्रददुर्वसु ॥ ३-९३-६ (१९८२८)
तपस्विजनजुष्टां च ततो वेदीं प्रजापतेः ।
जग्मुः पाण्डुसुता राजन्ब्राह्मणैः सह भारत ॥ ३-९३-७ (१९८२९)
तत्र ते न्यवसन्वीरास्तपश्चातस्थुरुत्तमम् ।
संतर्पयन्तः सततं वन्येन हविषा द्विजान् ॥ ३-९३-८ (१९८३०)
ततो महीधरं जग्मुर्धर्मज्ञेनाभिसत्कृतम् ।
राजर्षिणा पुण्यकृता गयेनानुपमद्युते ॥ ३-९३-९ (१९८३१)
नगो गयशिरो यत्र पुण्या चैव महानदी ।
वानीरमालिनी रम्या नदी पुलिनशोभिता ॥ ३-९३-१० (१९८३२)
दिव्यं पवित्रकूटं च पवित्रधरणीधरम् ।
ऋषिजुष्टं सुपुण्यं तत्तीर्थं ब्रह्मसरोतुलम् ॥ ३-९३-११ (१९८३३)
अगस्त्यो भगवान्यत्र गतो वैवस्वतं प्रति ।
रउवास च स्वयं तत्र धर्मराजः सनातनः ॥ ३-९३-१२ (१९८३४)
सर्वासां सरितां चैव समुद्भेदो विशांपते ।
यत्रसंनिहितो नित्यं महादेवः पिनाकधृक् ॥ ३-९३-१३ (१९८३५)
ग्परिपूर्णः परंज्योतिः परमात्मा सनातनः ।
ब्रह्मादिभिरुपास्योऽयं भगवान्परमेश्वरः ॥ ३-९३-१४ (१९८३६)
तं प्रणम्य महादेवं चतुर्वर्गफलप्रदम् ।
रसिद्धिक्षेत्रमिदं मत्वासर्वेषांमोक्षकाङ्क्षिणाम् ॥ ३-९३-१५ (१९८३७)
तत्र ते पाण्डवा वीराश्चातुर्मास्यैस्तदेजिरे ।
ऋषियज्ञेन महता यत्राक्षयवटो महान् ।
अक्षये देवयजने अक्षयं यत्रवै फलम् ॥ ३-९३-१६ (१९८३८)
ये तु तत्रोपवासांस्तु चक्रुर्निश्चितमानसाः ।
ब्राह्मणास्तत्रशतशः समाजग्मुस्तपोधनाः ॥ ३-९३-१७ (१९८३९)
चातुर्मास्येनायजन्त आर्षेण विधिना तदा ।
तत्र विद्यातपोवृद्धा ब्राह्मणा वेदपारगाः ।
कथां प्रचक्रिरे पुण्यां सदसिस्था महात्मनाम् ॥ ३-९३-१८ (१९८४०)
तत्र विद्याव्रतस्नातः कौमारं व्रतमास्थितः ।
शमठोऽकथयद्राजन्नाधूर्तरजसं गयम् ॥ ३-९३-१९ (१९८४१)
शमठ उवाच। ३-९३-२०क्ष् (२००८)
आधूर्तरजसः पुत्रो गयो राजर्षिसत्तमः ।
पुण्यानि तस्य कर्माणि तानि मे शृणु भारत ॥ ३-९३-२० (१९८४२)
यस्य यज्ञो बभूवेह बह्वन्नो बहुदक्षिणः ।

यत्रान्नपर्वता राजञ्शतशोऽथ सहस्रशः ॥ ३-९३-२१ (१९८४३)
घृतकुल्याश्च दध्नश्च नद्यो बहुशतास्तथा ।
व्यञ्जनानां प्रवाहाश्च महार्हाणां सहस्रशः ॥ ३-९३-२२ (१९८४४)
अहन्यहनि चाप्येवं याचतां संप्रदीयते ।
अन्ये च ब्राह्मणा राजन्भुञ्जतेऽन्नं सुसंस्कृतम् ॥ ३-९३-२३ (१९८४५)
तत्र वै दक्षिणाकाले ब्रह्मघोषो दिवं गतः ।
न च प्रज्ञायते किंचिद्ब्रह्मशब्देन भारत ॥ ३-९३-२४ (१९८४६)
पुण्येन चरता राजन्भूर्दिशः खं नभस्तथा ।
आपूर्णमासीच्छब्देन तदप्यासीन्महाद्भुतम् ॥ ३-९३-२५ (१९८४७)
यत्रस्म गाथा गायन्ति मनुष्या मरतर्षभ ।
अन्नपानैः शुभैस्तृप्ता देशे देशे सुवर्चसः ॥ ३-९३-२६ (१९८४८)
गयस्य यज्ञे के त्वद्य प्राणिनो भोक्तुमीप्सवः ।
तत्र भोजनशिष्टस्य पर्वताः पञ्चविंशतिः ॥ ३-९३-२७ (१९८४९)
न तत्पूर्वे जनाश्चक्रुर्न करिष्यन्ति चापरे ।
गयो यदकरोद्यज्ञे राजर्षिरमितद्युतिः ॥ ३-९३-२८ (१९८५०)
कथं तु देवा हविषा गयेन परितर्पिताः ।
पुन शक्ष्यन्त्युपादातुमन्यैर्दत्तानि कानिचित् ॥ ३-९३-२९ (१९८५१)
सिकता वा यथा लोके यथा वा दिवि तारकाः ।
यथा वा वर्षतोधारा असंख्येयाः स्म केनचित् ।
तथा गणयितुं शक्या गययज्ञे न दक्षिणाः ॥ ३-९३-३० (१९८५२)
एवंविधाः सुबहवस्तस्य यज्ञा महीपतेः ।
बभूवुरस्य सरसः समीपे कुरुनन्दन ॥ ३-९३-३१ (१९८५३)

इति श्रीमन्महाभारते अरण्यपर्वणि तीर्थयात्रापर्वणि
त्रिनवतितमोऽध्यायः ॥ ९३ ॥
Mahabharata - Vana Parva - Chapter Footnotes

३-९३-१० वानीरमालिनी वेत्रपङ्क्तियुक्ता ।सरो गयशिरो यत्रेति
क।ध।पाठः ॥
३-९३-२४ ब्रह्मशब्देन वेदध्वनिना ॥

---

वन-अध्यय०९४
॥ श्रीः ॥
३.९४. अध्यायः ९४

Mahabharata - Vana Parva - Chapter Topics

लोमशेन युधिष्ठिरंप्रत्यगस्त्यचरितकथनारम्भः ॥ १ ॥
वातापील्वलवृत्तकथनम् ॥ २ ॥
तथा लोपामुद्रोत्पत्तिप्रकारकथनम् ॥ ३ ॥

Mahabharata - Vana Parva - Chapter Text

३-९४-० (१९८५४)
वैशंपायन उवाच। ३-९४-०क्ष् (२००९)
ततः संप्रस्थितो राजा कौन्तेयो भूरिदक्षिणः ।
अगस्त्याश्रममासाद्य दुर्जयायामुवास ह ॥ ३-९४-१ (१९८५५)
तत्रैव लोमशं राजा पप्रच्छ वदतांवरः ।
अगस्त्येनेह वातापिः किमर्थमुपशामितः ॥ ३-९४-२ (१९८५६)
आसीद्वा किंप्रभावश्च स दैत्यो मानवान्तकः ।
किमर्थं चोदितो मन्युरगस्त्यस्य महात्मनः ॥ ३-९४-३ (१९८५७)
लोमश उवाच। ३-९४-४क्ष् (२०१०)
इल्वलो नाम दैतेय आसीत्कौरवनन्दना ।
मणिमत्यां पुरि पुरा वातापिस्तस्य चानुजः ॥ ३-९४-४ (१९८५८)
स ब्राह्मणं तपोयुक्तमुवाच दितिनन्दनः ।
पुत्रं मे भगवानेकमिन्द्रतुल्यं प्रयच्छतु ॥ ३-९४-५ (१९८५९)
तस्मै स ब्राह्मणो नादात्पुत्रं वासवसंमितम् ।
चुक्रोध सोऽसुरस्तस्य ब्राह्मणस्य ततो भृशम् ॥ ३-९४-६ (१९८६०)
तदाप्रभृतिराजेन्द्र इल्वलो ब्रह्महाऽसुरः ।
मन्युमान्भ्रातरं छागं मायावी ह्यकरोत्ततः ॥ ३-९४-७ (१९८६१)
मेषरूपी च वातापिः कामरूप्यभवत्क्षणात् ।
संस्कृत्यतं भोजयति ततो विप्रं जिघांसति ॥ ३-९४-८ (१९८६२)
स चाह्वयति यं वाचा गतं वैवस्वतक्षयम् ।
स पुनर्देहमास्थाय जीवन्स्म प्रत्यदृश्यत ॥ ३-९४-९ (१९८६३)
ततो वातापिमसुरं छागं कृत्वा सुसंस्कृतम् ।
तं ब्राह्मणं भोजयित्वा पुनरेव समाह्वयत् ॥ ३-९४-१० (१९८६४)
तामिल्वलेन महता स्वरेण गिरमीरिताम् ।
श्रुत्वाऽतिमायो बालवान्क्षिप्रं ब्राह्मणकण्टकः ॥ ३-९४-११ (१९८६५)
तस्य पार्श्वं विनिर्भिद्य ब्राह्मणस्य महासुरः ।
वातापिः प्रहसन्राजन्निश्चक्राम विशांपते ॥ ३-९४-१२ (१९८६६)
एवं स ब्राह्मणान्राजन्भोजयित्वा पुनःपुनः ।
हिंसयामायस दैतेय इल्वलो दुष्टचेतनः ॥ ३-९४-१३ (१९८६७)
अगस्त्यश्चापि भगवानेतस्मिन्काल एव तु ।

पितॄन्ददर्श गर्ते वै लम्बमानानधोमुखान् ॥ ३-९४-१४ (१९८६८)
सोऽपृच्छल्लम्बमानांस्तान्भगवन्तश्च किंपराः ।
गकिंमर्थं वेह लम्बध्वे गर्ते यूयमधोमुखाः'।
संतानहेतोरिति ते प्रत्यूचुर्ब्रह्मवादिनः ॥ ३-९४-१५ (१९८६९)
ते तस्मै कथयामासुर्वयं ते पितरः स्वकाः ।
गर्तमेतमनुप्राप्ता लम्बामः प्रसवार्थिनः ॥ ३-९४-१६ (१९८७०)
यदि नो जनयेथास्त्वमगस्त्यापत्यमुत्तमम् ।
स्यान्नोस्मान्निरयान्मोक्षस्त्वं च पुत्राप्नुया गतिम् ॥ ३-९४-१७ (१९८७१)
स तानुवाच तेजस्वी सत्यधर्मपरायणः ।
करिष्ये पितरः कामं व्येतु वो मानसो ज्वरः ॥ ३-९४-१८ (१९८७२)
ततः प्रसवसन्तानं चिन्तयन्भगवानृषिः ।
आत्मनः प्रसवस्यार्थे नापश्यत्सदृशीं स्त्रियम् ॥ ३-९४-१९ (१९८७३)
स तस्य तस् सत्वस्य तत्तदङ्गमनुत्तमम् ।
संगृह्यतत्समैरङ्गैर्निर्ममे स्त्रियमुत्तमाम् ॥ ३-९४-२० (१९८७४)
स तां विदर्भराजाय पुत्रकामाय ताम्यते ।
निर्मितामात्मनोऽर्थाय मुनिः प्रादान्महातपाः ॥ ३-९४-२१ (१९८७५)
सा तत्र जज्ञे सुभगा विद्युत्सौदामनी यथा ।
विभ्राजमाना वपुषा व्यवर्धत शुभानना ॥ ३-९४-२२ (१९८७६)
जातमात्रां च तां दृष्ट्वा वैदर्भः पृथिवीपतिः ।
प्रहर्षेण द्विजातिभ्यो न्यवेदयत भारत ॥ ३-९४-२३ (१९८७७)
अभ्यनन्दन्त तां सर्वे ब्राह्मणा वसुधाधिप ।
लोपामुद्रेति तस्याश्च चक्रिरे नाम ते द्विजाः ॥ ३-९४-२४ (१९८७८)
ववृधे सा महाराज बिभ्रती रूपमुत्तमम् ।
अप्स्विवोत्पलिनी शीघ्रमग्नेरिव शिखा शुभा ॥ ३-९४-२५ (१९८७९)
तां यौवनस्थां राजेन्द्रशतं कन्याः स्वलंकृताः ।
दास्यः शतं च कल्याणीमुपातस्थुर्वशानुगाः ॥ ३-९४-२६ (१९८८०)
सा स्म दासीशतवृता मध्ये कन्याशतस्य च ।
आरस्ते तेजस्विनी कन्या रोहिणीव दिविप्रभा ॥ ३-९४-२७ (१९८८१)
यौवनस्थामपि च तां शीलाचारसमन्विताम् ।
न वव्रे पुरुषः कश्चिद्भयात्तस्य महात्मनः ॥ ३-९४-२८ (१९८८२)
सा तु सत्यवती कन्या रूपेणाप्सरसोप्यति ।
तोषयामास पितरं शीलेन स्वजनं तथा ॥ ३-९४-२९ (१९८८३)
वैदर्भी तु तथायुक्तां युवतीं प्रेक्ष्य वै पिता ।
मनसा चिन्तयामास कस्मै दद्यामिमांसुताम् ॥ ३-९४-३० (१९८८४)

इति श्रीमन्महाभारते अरण्यपर्वणि तीर्थयात्रापर्वणि

चतुर्नवतितमोऽध्यायः ॥ ९४ ॥

Mahabharata - Vana Parva - Chapter Footnotes

३-९४-१ दुर्जयायां वातापिपुर्यां मणिमतीसंज्ञायाम् ॥
३-९४-६ नादात् न दत्तवान् ॥
३-९४-८ कामरूपी यथाकामं रूपाणि कर्तुं समर्थः । संस्कृत्य पक्त्वा ॥
३-९४-९ स च इल्वलश्च ॥
३-९४-१९ प्रसवसन्तानं संततेरविच्छेदम् ॥
३-९४-२० तस्य तस्य सिंहमृगादेः अङ्गं कटिदृष्ट्यादि
। सर्वगुणवतीमित्यर्थः ॥
३-९४-२२ जज्ञे जाता । विद्युदिति विशेषणं द्युतिविशेषोपपादनार्थम् ॥
३-९४-२४ मुद्राणां तत्तन्मृगादिजातिगतानामसाधारणानां चिह्नानां
कमनीयचक्षुष्ट्वानां लोपइव लोपस्तिरस्कारो यया सा लोपामुद्रा
। आहिताग्न्यादिवत्पूर्वनिपातः। अन्येष्वपि दृश्यत इति दीर्घः ॥
३-९४-२६ वशानुगाः इच्छानुरूपाः ॥

---

वन-अध्यय०९५
॥ श्रीः ॥
३.९५. अध्यायः ९५

Mahabharata - Vana Parva - Chapter Topics

विदर्भराजेन सन्तानार्थं कन्यां कामयमानायागस्त्याय लोपामुद्राया
यथाविधि प्रदानम् ॥ १ ॥
अगस्त्येन लोपामुद्राया महार्हवसनाभरणत्याजनेन
वल्कलादिग्राहणपूर्वकं स्वाश्रमंप्रत्यानयनम् ॥ २ ॥
ऋतुकाले समाहूतया तया महार्हवसनाभरणानि याचितेनागस्त्येन
तत्संपादनाय प्रस्थानम् ॥ ३ ॥

Mahabharata - Vana Parva - Chapter Text

३-९५-० (१९८८५)
लोमश उवाच। ३-९५-०क्ष् (२०११)
यदात्वमन्यतागस्त्यो गार्हस्थ्ये तां क्षमामिति ।
तदाऽभिगम्य प्रोवाच वैदर्भं पृथिवीपतिम् ॥ ३-९५-१ (१९८८६)
राजन्निवेशे बुद्धिर्मे वर्तते पुत्रकारणात् ।
वरयेत्वां महीपाल लोपामुद्रां प्रयच्छ मे ॥ ३-९५-२ (१९८८७)
एवमुक्तः स मिनिना महीपालो विचेतनः ।

प्रत्याख्यानाय चाशक्तः प्रदातुं चैव नैच्छत ॥ ३-९५-३ (१९८८८)
ततः स भार्यामभ्येत्य प्रोवाच पृथिवीपतिः ।
महर्षिर्वीर्यवानेष क्रुद्धः शापाग्निना दहेत् ॥ ३-९५-४ (१९८८९)
तं तथा दुःखितं दृष्ट्वा सभार्यं पृथिवीपतिम् ।
लोपामुद्राऽभिगम्येदं काले वचनमब्रवीत् ॥ ३-९५-५ (१९८९०)
न मत्कृते महीपाल पीडामभ्येतुमर्हसि ।
प्रयच्छ मामगस्त्याय त्राह्यात्मानं मया पितः ॥ ३-९५-६ (१९८९१)
दुहितुर्वचनाद्राजा सोऽगस्त्याय महात्मने ।
लोपामुद्रां ततः प्रादाद्विधिपूर्वं विशांपते ॥ ३-९५-७ (१९८९२)
प्राप्य भार्यामगस्त्यस्तु लोपामुद्रामभाषत ।
महार्हाण्युत्सृजैतानि वासांस्याभरणानि च ॥ ३-९५-८ (१९८९३)
ततः सा दर्शनीयानि महार्हाणि तनूनि च ।
समुत्ससर्ज रम्भोरूर्वसनान्यायतेक्षणा ॥ ३-९५-९ (१९८९४)
ततश्चीराणि जग्राह वल्कलान्यजिनानि च ।
समानव्रतचर्या च बभूवायतलोचना ॥ ३-९५-१० (१९८९५)
गङ्गाद्वारमथागम्य भगवानृषिसत्तमः ।
उग्रमातिष्ठत तपः सह पत्न्याऽनुकूलया ॥ ३-९५-११ (१९८९६)
सा प्रीत्या बहुमानाच्च पतिं पर्यचरत्तदा ।
अगस्त्यश्च परां प्रीतिं भार्यायामगमत्प्रभुः ॥ ३-९५-१२ (१९८९७)
ततो बहुतिथे काले लोपामुद्रां विशांपते ।
तपसा द्योतितां स्नातां ददर्श भगवानृषिः ॥ ३-९५-१३ (१९८९८)
स तस्याः परिचारेण शौचेन च दमेन च ।
श्रिया रूपेण च प्रीतो मैथुनायाजुहाव ताम् ॥ ३-९५-१४ (१९८९९)
ततः सा प्राञ्जलिर्भूत्वा लज्जमानेव भामिनी ।
तदा सप्रणयं वाक्यं भगवन्तमथाब्रवीत् ॥ ३-९५-१५ (१९९००)
असंशयं प्रजाहेतोर्भार्यां पतिरविन्दत ।
पा तु त्वयि मम प्रीतिस्तामृषे कर्तुमर्हसि ॥ ३-९५-१६ (१९९०१)
यथा पितुर्गृहे विप्र प्रासादे शयनं मम ।
तथाविधे त्वं शयने मामुपैतुमिहार्हसि ॥ ३-९५-१७ (१९९०२)
इच्छामि त्वां स्रग्विणं च भूषणैश्च विभूषितम् ।
उपसर्तुं यथाकामं दिव्याभरणभूषिता ॥ ३-९५-१८ (१९९०३)
अन्यथा नोपतिष्ठेयं चीरकाषायवासिनी ।
नैवापवित्रो विप्रर्षे भूषणोयं कथंचन ॥ ३-९५-१९ (१९९०४)
अगस्त्य उवाच। ३-९५-२०क्ष् (२०१२)
न ते धनानि विद्यन्ते लोपामुद्रे तथा मम ।
यथाविधानि कल्याणि पितुस्तव सुमध्यमे ॥ ३-९५-२० (१९९०५)

लोपामुद्रोवाच। ३-९५-२१क्ष् (२०१३)
ईशोसि तपसा सर्वं समाहर्तुं तपोधन ।
क्षणेन जीवलोके यद्वसु किंचन विद्यते ॥ ३-९५-२१ (१९९०६)
अगस्त्य उवाच। ३-९५-२२क्ष् (२०१४)
एवमेतद्यथाऽऽत्थ त्वं तपोव्ययकरं तु तत् ।
यथा तु मे न नश्येत तपस्तन्मां प्रयोदय ॥ ३-९५-२२ (१९९०७)
लोपामुद्रोवाच। ३-९५-२३क्ष् (२०१५)
अल्पावशिष्टः कालोऽयमृतोर्मम तपोधन ।
न चान्यथाऽहमिच्छामि त्वामुपैतुं कथंचन ॥ ३-९५-२३ (१९९०८)
न चापि धर्ममिच्छामि विलोप्तुं ते कथंचन ।
एवं तु मे यथाकामं संपादयितुमर्हसि ॥ ३-९५-२४ (१९९०९)
अगस्तय उवाच। ३-९५-२५क्ष् (२०१६)
३-९५-२५ (१९९१०)
यद्येष काम सुभगे तव बुद्ध्या विनिश्चितः ।
हर्तुं गच्छाम्यहं भद्रे चर काममिह स्थिता ॥
Mahabharata - Vana Parva - Chapter Footnotes

३-९५-२ निवेशे विवाहे ॥
३-९५-१३ स्नातां ऋताविति शेषः ॥
३-९५-१४ परिचारेण सेवया ॥
३-९५-१९ भूषणोयं चीरकाषायादिस्तपस्विनां श्लाघ्योयं सामग्रीकलापो भोगसंपर्केणापवित्रो नैव भवत्विति शेषः ॥
३-९५-२१ समाहर्तुं ममेप्सितमिति क । ध। पाठः ॥
३-९५-२३ ऋतोः कालः षोडशदिनानि तेषु अल्पोऽवशिष्टः ॥

---

वन-अध्यय०९६
॥ श्रीः ॥
३.९६. अध्यायः ९६

Mahabharata - Vana Parva - Chapter Topics
धनयाचनाय श्रुतर्वादिनृपत्रयमुपगतेनागस्त्येन तद्धनानां समायव्ययतापरिज्ञानेन तैःसह इल्वलं प्रति गमनम् ॥ १ ॥

Mahabharata - Vana Parva - Chapter Text

३-९६-० (१९९११)
लोमश उवाच। ३-९६-०क्ष् (२०१७)

ततो जगाम कौरव्य सोऽगस्त्यो भिक्षितुं वसु ।
श्रुतर्वाणं महीपालं यं वेदाभ्यधिकं नृपैः ॥ ३-९६-१ (१९९१२)
स विदित्वा तु नृपतिः कुम्भयोनिमुपागतम् ।
विषयान्ते सहामात्यः प्रत्यगृह्णात्सुसत्कृतम् ॥ ३-९६-२ (१९९१३)
तस्मै चार्घ्यं थान्यायमानीय पृथिवीपतिः ।
प्राञ्जलिः प्रयतो भूत्वापप्रच्छागमनेऽर्थिताम् ॥ ३-९६-३ (१९९१४)
अगस्त्य उवाच। ३-९६-४क्ष् (२०१८)
वित्तार्थिनमनुप्राप्तं विद्धि मां पृथिवीपते ।
थाशक्त्यविहिंस्यान्यान्संविभागं प्रयच्छ मे ॥ ३-९६-४ (१९९१५)
लोमश उवाच। ३-९६-५क्ष् (२०१९)
तत आयव्ययौ पूर्णौ तस्मै राजा न्यवेदयत् ।
अतो विद्वन्नुपादत्स्व यदत्रव्यतिरिच्यते ॥ ३-९६-५ (१९९१६)
तत आयव्ययौ दृष्ट्वा समौ सममतिर्द्विजः ।
सर्वथा प्राणिनां पीडामुपादानादमन्यत ॥ ३-९६-६ (१९९१७)
स श्रुतर्वाणमादाय ब्रध्नश्वमगमत्ततः ।
स च तौ विषयस्यान्ते प्रत्यगृह्णाद्यथाविधि ॥ ३-९६-७ (१९९१८)
तयोरर्घ्यं च पाद्यं च ब्रध्नश्वः प्रत्यवेदयत् ।
अनुज्ञाप्यच पप्रच्छ प्रयोजनमुपक्रमे ।
ग्वद कामं मुनिश्रेष्ठ धन्योस्म्यागमनेन ते' ॥ ३-९६-८ (१९९१९)
अगस्त्य उवाच। ३-९६-९क्ष् (२०२०)
वित्तकामाविह प्राप्तौ विद्धयावां पृथिवीपते ।
यथाशक्त्यविहिंस्यान्यान्संविभागं प्रयच्छ नौ ॥ ३-९६-९ (१९९२०)
लोमश उवाच। ३-९६-१०क्ष् (२०२१)
तत आयव्ययौ पूर्णौ ताभ्यां राजा न्यवेदयत् ।
अतो ज्ञात्वा तु गृह्णीतं यदत्रव्यतिरिच्यते ॥ ३-९६-१० (१९९२१)
तत आयव्ययौ दृष्ट्वासमौ सममतिर्द्विजः ।
सर्वथा प्राणिनां पीडामुपादानादमन्यत ॥ ३-९६-११ (१९९२२)
पौरुकुत्सं ततो जग्मुस्त्रसदस्युं महाधनम् ।
अगस्त्यश्च श्रुतर्वा च ब्रध्नश्वश्च महीपतिः ॥ ३-९६-१२ (१९९२३)
त्रसदस्युस्तु तान्दृष्ट्वा प्रत्यगृह्णाद्यथाविधि ।
अभिगम्य महाराज विषयान्ते महामनाः ॥ ३-९६-१३ (१९९२४)
अर्चयित्वा यथान्यायमैक्ष्वाको राजसत्तमः ।
समस्तांश्च ततोऽपच्छत्प्रयोजनमुपक्रमे ॥ ३-९६-१४ (१९९२५)
अगस्त्य उवाच। ३-९६-१५क्ष् (२०२२)
वित्तकामानिह प्राप्तान्विद्धि नः पृथिवीपते ।
यथाशक्त्यवीहिंस्यान्यान्संविभागं प्रयच्छ नः ॥ ३-९६-१५ (१९९२६)

लोमश उवाच। ३-९६-१६क्ष् (२०२३)
तत आयव्ययौ पूर्णौ तेषां राजा न्यवेदयत् ।
एतज्ज्ञात्वा ह्युपादद्धवं यदत्रव्यतिरिच्यते ॥ ३-९६-१६ (१९९२७)
तत आयव्ययौ दृष्ट्वासमौ सममतिर्द्विजः ।
सर्वथा प्राणिनां पीडामुपादानादमन्यत ॥ ३-९६-१७ (१९९२८)
ततः सर्वे समेत्याथ ते नृपास्तं महामुनिम् ।
इदमूचुर्महाराज समवेक्ष्य परस्परम् ॥ ३-९६-१८ (१९९२९)
अयं वै दानवो ब्रह्मन्निल्वलो वसुमान्भुवि ।
तमतिक्रम्य सर्वेऽद्यवयं चार्तामहे वसु ॥ ३-९६-१९ (१९९३०)
लोमश उवाच। ३-९६-२०क्ष् (२०२४)
३-९६-२० (१९९३१)
तेषां तदासीदुचितमिल्वलस्यैव भिक्षणम् ।
ततस्ते सहिता राजन्निल्वलं समुपाद्रवन् ॥
Mahabharata - Vana Parva - Chapter Footnotes

३-९६-२ विषयान्ते देशसीमान्ते ॥
३-९६-३ आगमने निमित्तभूतां अर्थिताम् । किमिच्छन्नागतोसीति पप्रच्छेत्यर्थः ॥
३-९६-६ उपादानात् धनग्रहणात् ॥
३-९६-७ वाध्र्यश्वमगमत्तत इति क । ध। पाठः ॥
३-९६-८ उपक्रमे आगमने ॥
३-९६-९ नौ आवाभ्याम् ॥
३-९६-१९ वसुमान् धनवान् ॥

---

वन-अध्यय०९७
॥ श्रीः ॥
३.९७. अध्यायः ९७

Mahabharata - Vana Parva - Chapter Topics
इल्वलेनागस्त्याय मेषीकृतवातापिमांसपरिवेषणम् ॥ १ ॥
इल्वलेन वातापेराह्वानेऽगस्त्येन स्वेन तस्य जीर्णीकरणोक्ति ॥ २ ॥
भीतेनेल्वलेनागस्त्याय धनदानपूर्वकं तज्जिधांसया तदनुगमनम् ॥ ३ ॥
अगस्त्येन हुङ्कारेणेल्वलस्य भस्मीकरणपूर्वकं लोपामुद्रायै बहुधनदानेन तस्यां गुणवदेकापत्योत्पादनम् ॥ ४ ॥

Mahabharata - Vana Parva - Chapter Text

३-९७-० (१९९३२)
लोमश उवाच। ३-९७-०क्ष् (२०२५)
इल्वलस्तान्विदित्वा तु महर्षिसहितान्नृपान् ।
उपस्थितान्सहामात्यो विषयान्ते ह्यपूजयत् ॥ ३-९७-१ (१९९३३)
तेषां ततोऽसुरश्रेष्ठस्त्वातिथ्यमकरोत्तदा ।
सुसंस्कृतेन कौरव्य भ्रात्रा वातापिना तदा ॥ ३-९७-२ (१९९३४)
ततो राजर्षयः सर्वे विषण्णा गतचेतसः ।
वातापिं संस्कृतं दृष्ट्वा मेषभूतं महासुरम् ॥ ३-९७-३ (१९९३५)
अथाब्रवीदगस्त्यस्तान्राजर्षीनृषिसत्तमः ।
विषादो वो न कर्तव्यो ह्यहं भोक्ष्ये महासुरम् ॥ ३-९७-४ (१९९३६)
धुर्यासनमथासाद्य निषसाद महानृषिः ।
तं पर्यवेषद्दैत्येन्द्र इल्वलः प्रहसन्निव ॥ ३-९७-५ (१९९३७)
अगस्त्य एव कृत्स्नं तु वातापिं बुभुजे ततः ।
ग्बह्वन्नाशापि ते मेऽस्तीत्यवदङ्गक्षयन्स्वयम्' ॥ ३-९७-६ (१९९३८)
भुक्तवत्यसुरोऽह्वानमकरोत्तस्य चेल्वलः ।
ग्वातापे प्रतिबुध्यस्व दर्शयन्बलतेजसी ।
तपसा दुर्जयो यावदेष त्वां नातिवर्तते ॥ ३-९७-७ (१९९३९)
ततस्तस्योदरं भेत्तुं वातापिर्वेगमाहरत् ।
तमबुध्यत तेजस्वी कुम्भयोनिर्महातपाः ॥ ३-९७-८ (१९९४०)
स वीर्यात्तपसोग्रस्तु ननर्द भगवानृषिः ।
एष जीर्णोसि वातापे मया लोकस्य शान्तये ॥ ३-९७-९ (१९९४१)
इत्युक्त्वा स्वकराग्रेण उदरं समताडयत् ।
त्रिरेवं प्रतिसंरब्धस्तेजसा प्रज्वलन्निव'॥ ३-९७-१० (१९९४२)
ततो वायुः प्रादुरभूदधस्तस्य महात्मनः ।
शब्देन महता तात गर्जन्निव यथा घनः ॥ ३-९७-११ (१९९४३)
वातापे निष्क्रमस्वेति पुनः पुनरुवाच ह ।
तं प्रहस्याब्रवीद्राजन्नगस्त्यो मुनिसत्तमः ।
कुतो निष्क्रमितुं शक्तो मया जीर्णस्तु सोसुरः ॥ ३-९७-१२ (१९९४४)
इल्वलस्तु विषण्णोऽभूद्दृष्ट्वा जीर्णं महासुरम् ।
प्राञ्जलिश्च सहामात्यैरिदं वचनमब्रवीत् ।
किमर्थमुपयाताः स्थ ब्रूत किं करवाणि वः ॥ ३-९७-१३ (१९९४५)
प्रत्युवाच ततोऽगस्त्यः प्रहसन्निल्वलं तदा ।
ईशोस्यसुर विद्मस्त्वां वयं सर्वे धनेश्वरम् ॥ ३-९७-१४ (१९९४६)
एते च नातिधनिनो धनाशा महती मम ।
यथाशक्त्यविहिंस्यान्यान्संविभागं प्रयच्छ नः ॥ ३-९७-१५ (१९९४७)
ततोऽवमत्य तमृषिमिल्वलो वाक्यमब्रवीत् ।

दित्सितं यदि वेत्सि त्वंततो दास्यामि ते वसु ॥ ३-९७-१६ (१९९४८)
अगस्त्य उवाच। ३-९७-१७क्ष् (२०२६)
गवां दशसहस्राणि राज्ञामेकैकशोऽसुर ।
तावदेव सुवर्णस्य दित्सितं ते महासुर ॥ ३-९७-१७ (१९९४९)
मह्यं ततो वै द्विगुणं रथश्चैव हिरण्मयः ।
मनोजवौ वाजिनौ च दित्सितं ते महासुर ॥ ३-९७-१८ (१९९५०)
ग्लोमश उवाच। ३-९७-१९क्ष् (२०२७)
उल्वलस्तु मुनिं प्राह सर्वमस्ति यथाऽऽत्थ माम् ।
सर्वमेतत्प्रदास्यामि हिरण्यं गाश्च यद्धनम् ।
रथं तु यदवोचो मां नैतं विद्म हिरण्मयम् ॥ ३-९७-१९ (१९९५१)
आगस्त्य उवाच। ३-९७-२०क्ष् (२०२८)
न मे वागनृता काचिदुक्तपूर्वा महाऽसुर ।
विज्ञायतां रथः साधु व्यक्तमस्ति हिरण्मयः ॥ ३-९७-२० (१९९५२)
लोमश उवाच। ३-९७-२१क्ष् (२०२९)
विज्ञायमानः स रथः कौन्तेयासीद्धिरण्मयः'।
ततः प्रव्यथितो दैत्यो ददावभ्यधिकं वसु ॥ ३-९७-२१ (१९९५३)
विवाजी च सुवाजी च तस्मिन्युक्तौ रथे हयौ ।
ऊहतुः स वसूनाशु तावगस्त्याश्रमं प्रति ।
सर्वान्राज्ञः सहागस्त्यान्निमेषादिव भारत ॥ ३-९७-२२ (१९९५४)
गइल्वलस्त्वनुगम्यैनमगस्त्यं हन्तुमैच्छत ।
भस्म चक्रे महातेजा हुङ्कारेण महाऽसुरम्' ॥ ३-९७-२३ (१९९५५)
अगस्त्येनाभ्यनुज्ञाता जग्मू राजर्षयस्तदा ।
कृतवांश् मुनिः सर्वं लोपामुद्राचिकीर्षितम् ॥ ३-९७-२४ (१९९५६)
लोपामुद्रोवाच। ३-९७-२५क्ष् (२०३०)
कृतवानसि तत्सर्वं भगवन्मम काङ्क्षितम् ।
उत्पादय सकृन्मह्यमपत्यं वीर्यवत्तरम् ॥ ३-९७-२५ (१९९५७)
अगस्त्य उवाच। ३-९७-२६क्ष् (२०३१)
तुष्टोऽहमस्मि कल्याणि तव वृत्तेन शोभने ।
विचारणामपत्ये तु तव वक्ष्यामि तां शृणु ॥ ३-९७-२६ (१९९५८)
सहस्रं तेऽस्तु पुत्राणआं शतं वा तत्समं तव ।
दश वा शततुल्याः स्युरेको वाऽपि सहस्रजित् ॥ ३-९७-२७ (१९९५९)
लोपामुद्रोवाच। ३-९७-२८क्ष् (२०३२)
सहस्रसंमितः पुत्र एकोप्यस्तु तपोधन ।
एको हि बहुभिः श्रेयान्विद्वान्साधुरसाधुभिः ॥ ३-९७-२८ (१९९६०)
स तथेति प्रतिज्ञाय तया समगमन्मुनिः ।
समये समशीलिन्या श्रद्धावान्श्रद्दधानया ॥ ३-९७-२९ (१९९६१)

तत आधाय गर्भं तमगमद्वनमेव सः ।
तस्मिन्वनगते गर्भो ववृधे सप्त शारदान् ॥ ३-९७-३० (१९९६२)
सप्तमेऽब्दे गते चापि प्राच्यवत्स महाकविः ।
ज्वलन्निव प्रभावेन दृढस्युर्नाम भारत ॥ ३-९७-३१ (१९९६३)
साङ्गोपनिषदान्वेदाञ्जपन्नेव महातपाः ।
तस्य पुत्रोऽभवदृषेः स तेजस्वी महानृषिः ॥ ३-९७-३२ (१९९६४)
स बाल एवतेजस्वी पितुस्तस्य निवेशने ।
इध्मानां भारमाजह्रे इध्मवाहस्ततोऽभवत् ॥ ३-९७-३३ (१९९६५)
तथायुक्तं तु तं दृष्ट्वा मुमुदे स मुनिस्तदा ।
एवं स जनयामास भारतापत्यमुत्तमम् ।
लेभिरे पितरश्चास्य लोकान्राजन्यथेप्सितान् ॥ ३-९७-३४ (१९९६६)
अगस्त्यस्याश्रमश्चायमत ऊर्ध्वं विशांपते ।
ख्यातो भुवि महाराज तेजसा तस्य धीमतः ॥ ३-९७-३५ (१९९६७)
प्राह्लादिरेवं वातापिर्ब्रह्मघ्नो दुष्टचेतनः ।
एवं विनाशितो राजन्नगस्त्येन महात्मना ।
तस्यायमाश्रमो राजन्रमणीयैर्गुणैर्युतः ॥ ३-९७-३६ (१९९६८)
एषा भागीरथी पुण्या देवगन्धर्वसेविता ।
वातेरिता पताकेव विराजति नभस्तले ॥ ३-९७-३७ (१९९६९)
प्रतार्यमाणा कूटेषु यथा निम्नेषु नित्यशः ।
शिलातलेषु संत्रस्ता पन्नगेन्द्रवधूरिव ॥ ३-९७-३८ (१९९७०)
३-९७-३९ (१९९७१)
दक्षिणां वै दिशं सर्वां प्लावयन्ती च मातृवत् ।
पूर्वं शंभोर्जटाभ्रष्टा समुद्रमहिषी प्रिया ।
अस्यां नद्यां सुपुण्यायां यथेष्टमवगाह्यताम् ॥
Mahabharata - Vana Parva - Chapter Footnotes

३-९७-१६ ईप्सितं यदिह ब्रूहि तद्धि दास्यामि ते वसु इति क ।पाठः
दित्सितं मया युष्मभ्यं दातुमिष्टम् ॥
३-९७-३१ प्रच्यवदुदरान्निर्गतोऽभवदित्यर्थः ॥
३-९७-३४ युक्तमध्ययनेध्यवाहनादौ ॥
३-९७-३६ प्राह्लादिः प्रह्लादगोत्रोद्भवः ॥

---

वन-अध्यय०९८
॥ श्रीः ॥
३.९८. अध्यायः ९८

Mahabharata - Vana Parva - Chapter Topics
युधिष्ठिरेण भृगुतीर्थगमनम् ॥ १ ॥
लोमशेन युधिष्ठिरंप्रति परशुरामस्य दाशरथिरामेण तेजोहरणप्रकारकथनम् ॥ २ ॥
तथापरशुरामस्य पितृनिदेशाद्भृगुतीर्थनिमज्जनेन पुनस्तेजोलाभकथनम् ॥ ३ ॥

Mahabharata - Vana Parva - Chapter Text

३-९८-० (१९९७२)
श्लोमश उवाच। ३-९८-०क्ष् (२०३३)
युधिष्ठिर निबोधेदं त्रिषु लोकेषु विश्रुतम् ।
भृगोस्तीर्थं महाराज महर्षिगणसेवितम् ॥ ३-९८-१ (१९९७३)
यत्रोपस्पृष्टवान्रामो हृतंतेजस्तदाप्तवान् ।
अत्र त्वंभ्रातृभिः सार्धं कृष्णया चैव पाण्डव ॥ ३-९८-२ (१९९७४)
दुर्योधनहृतंतेजः पुनरादातुमर्हसि ।
कृतवैरेण रामेण यथा कचोपहृतं पुनः ॥ ३-९८-३ (१९९७५)
वैशंपायन उवाच। ३-९८-४क्ष् (२०३४)
स तत्रभ्रातृभिश्चैव कृष्णया चैव पाण्डवः ।
स्नात्वा देवान्पितृंश्चैव तर्पयामास भारत ॥ ३-९८-४ (१९९७६)
तस्य तीर्थस्य रूपं वै दीप्ताद्दीप्ततरं बभौ ।
अप्रवृष्यतरश्चासीच्छात्रवाणां नरर्षभ ॥ ३-९८-५ (१९९७७)
अपृच्छच्चैव राजेन्द्र लोमशं पाण्डुनन्दनः ।
भगवन्किमर्थं रामस्य हृतमासीद्वपुः प्रभो ।
कथं प्रत्याहृतंचैव एतदाचक्ष्व पृच्छतः ॥ ३-९८-६ (१९९७८)
लोमश उवाच। ३-९८-७क्ष् (२०३५)
शृणु रामस्य राजेन्द्र भार्गवस्य च धीमतः ।
जातो दशरथस्यासीत्पुत्रो रामो महात्मनः ॥ ३-९८-७ (१९९७९)
विष्णुः स्वेन शरीरेण रावणस्य वधाय वै ।
पश्यामस्तमयोध्यायां जातं दाशरथिं ततः ॥ ३-९८-८ (१९९८०)
ऋचीकनन्दनो राभो भार्गवो रेणुकासुतः ।
तस् दाशरथेः श्रुत्वा ररामस्याक्लिष्टकर्मणः ॥ ३-९८-९ (१९९८१)
कौतूहलान्वितो रामस्त्वयोध्यामगमत्पुनः ।
जिज्ञासमानो रामस्य वीर्यं दाशरथेस्तदा ॥ ३-९८-१० (१९९८२)
तं वै दशरथः श्रुत्वा वियान्तमुपागतम् ।
प्रेषयामास रामस्य रामं पुत्रं पुरस्कृतम् ॥ ३-९८-११ (१९९८३)

स तमभ्यागतं दृष्ट्वा उद्यतास्त्रमवस्थितम् ।
प्रहसन्निव कोन्तेय रामो वचनमब्रवीत् ॥ ३-९८-१२ (१९९८४)
कृतकालं हि राजेन्द्र धनुरेतन्मया विभो ।
समारोपय यत्नेन यदि शक्नोषि पार्तिव ॥ ३-९८-१३ (१९९८५)
इत्युक्तस्त्वाह भगवंस्त्वं नाधिक्षेप्तुमर्हसि ।
नाहमप्यधमो धर्मे क्षत्रियाणां द्विजातिषु ।
इश्र्वाकूणां विशेषेण बाहुवीर्ये न कत्थनम् ॥ ३-९८-१४ (१९९८६)
तमेवं वादिनं तत्र रामो वचनमब्रवीत् ।
अलं वै व्यपदेशेन धनुरायच्छ राघव ॥ ३-९८-१५ (१९९८७)
ततो जग्राह रोषेण क्षत्रियर्षभमूदनम् ।
रामो दाशरथिर्दिव्यं हस्ताद्रामस्य कार्मुकम् ॥ ३-९८-१६ (१९९८८)
धनुरारोपयामास सलील इव भारत ।
ज्याशब्दमकरोच्चैव स्मयमानः स वीर्यवान् ।
तस्य शब्दस् भूतानि वित्रसन्त्यशनेरिव ॥ ३-९८-१७ (१९९८९)
अथाब्रवीत्तदा रामो रामं दाशरथिस्तदा ।
इदमारोपितं ब्रह्मन्किमन्यत्करवाणि ते ॥ ३-९८-१८ (१९९९०)
तस्य रामो ददौ दिव्यं जामदग्न्यो महात्मनः ।
शरमाकर्णदेशान्तमयमाकृष्यतामिति ॥ ३-९८-१९ (१९९९१)
लोमश उवाच। ३-९८-२०क्ष् (२०३६)
एतच्छ्रुत्वाऽब्रवीद्रामः प्रदीप्त इव मन्युना ।
श्रूयते क्षम्यते चैव दर्पपूर्णोसि भार्गव ॥ ३-९८-२० (१९९९२)
त्वया ह्यधिगतं तेजः क्षत्रियेभ्यो विशेषतः ।
पितामहप्रसादेन तेन मां क्षिपसि ध्रुवम् ।
पश्य मां स्वेन रूपेण चक्षुस्ते वितराम्यहम् ॥ ३-९८-२१ (१९९९३)
ततो रामशरीरे वै रामः पश्यति भार्गवः ।
आदित्यान्सवसून्रुद्रान्साध्यांश्च समरुद्गणान् ॥ ३-९८-२२ (१९९९४)
पितरो हुताशनश्चैव नक्षत्राणि ग्रहास्तथा ।
गन्धर्वा राक्षसा यक्षा नद्यस्तीर्थानि यानि च ॥ ३-९८-२३ (१९९९५)
ऋषयो वालखिल्याश्च ब्रह्मभूताः सनातनाः ।
देवर्षयश्च कात्स्न्र्येन समुद्राः पर्वतास्तथा ॥ ३-९८-२४ (१९९९६)
वेदाश्च सोपनिषदो वषट्कारैः सहाध्वरैः ।
चेतोमन्ति च सामानि धनुर्वेदश्च भारत ।
मेघवृन्दानि वर्षाणि विद्युतश्च युधिष्ठिर ॥ ३-९८-२५ (१९९९७)
ततः स भगवान्विष्णुस्तं वै बाणं मुमोच ह ।
शुष्काशनिसमाकीर्णं महोल्काभिश्च भारत ॥ ३-९८-२६ (१९९९८)
पांसुवर्षेण महता मेघवर्षैश्च भूतलम् ।

भूमिकम्पैश्च निर्घातैर्नादैश्च विपुलैरपि ॥ ३-९८-२७ (१९९९९)
स रामं विह्वलं कृत्वा तेजश्चाक्षिप्य केवलम् ।
आगच्छज्ज्वलितो बाणो रामबाहुप्रचोदितः ॥ ३-९८-२८ (२००००)
स तु विह्वलतां गत्वा प्रतिलभ्य च चेतनाम् ।
रामः प्रत्यागतप्राणः प्राणमद्विष्णुतेजसम् ॥ ३-९८-२९ (२०००१)
विष्णुना सोभ्यनुज्ञातो महेन्द्रमगमत्पुनः ।
भीतस्तु तत्रन्यवसद्व्रीडितस्तु महातपाः ॥ ३-९८-३० (२०००२)
ततः संवत्सरेऽतीते हृतौजसमवस्थितम् ।
निर्मदं दुःखितं दृष्ट्वा पितरो राममब्रुवन् ॥ ३-९८-३१ (२०००३)
न वै सम्यगिदं पुत्र विष्णुमासाद्य वैकृतम् ।
स हि पूज्यश्च मान्यश्च त्रिषु लोकेषु सर्वदा ॥ ३-९८-३२ (२०००४)
गच्छ पुत्रनदीं पुण्यां वधूसरकृताह्वयाम् ।
तत्रोपस्पृश्य तीर्थेषु पुनर्वपुरवाप्स्यसि ॥ ३-९८-३३ (२०००५)
दीप्तोदं नाम तत्तीर्थं यत्रते प्रतितामहः ।
भृगुर्देवयुगे राम तप्तवानुत्तमं तपः ॥ ३-९८-३४ (२०००६)
तत्तथा कृतवान्रामः कौन्तेय वचनात्पितुः ।
प्राप्तवांश्च पुनस्तेजस्तीर्थेऽस्मिन्पाण्डुनन्दन ॥ ३-९८-३५ (२०००७)
एतदीदृशकं तात रामेणाक्लिष्टकर्मणा ।
प्राप्तमासीन्महाराज विष्णुमासाद्य वै पुरा ॥ ३-९८-३६ (२०००८)

इति श्रीमन्महाभारते अरण्यपर्वणि तीर्थयात्रापर्वणि
अष्टनवतितमोऽध्यायः ॥ ९८ ॥

Mahabharata - Vana Parva - Chapter Footnotes

३-९८-२ रामो जामदग्यः । हृतं दाशरथिरमेण ॥
३-९८-५ तस्य युधिष्ठिरस्य । तीर्थस् तीर्थे स्नातस्य ॥
३-९८-६ वपुः तेजः ॥
३-९८-९ दाशरथेः । कर्मणि षष्ठी ॥
३-९८-१५ व्यपदेशेन उक्त्या ॥
३-९८-२५ चेतोमन्ति चेतनावन्ति । आर्षं पदत्वप्रयुक्तं
रुत्वम्। चेतस्वन्तीत्यपेक्षितम् ॥

---

वन-अध्यय०९९
॥ श्रीः ॥
३.९९. अध्यायः ९९

Mahabharata - Vana Parva - Chapter Topics

वृत्रासुरनिपीडितशक्रादिभिर्ब्रह्मवचनाद्वज्रनिर्माणाय दधीचंप्रति तच्छरीरास्थिप्रार्थनम् ॥ १ ॥
त्वष्ट्रा दधीचास्थिभिर्वज्रायुधनिर्माणम् ॥ २ ॥

Mahabharata - Vana Parva - Chapter Text

३-९९-० (२०००९)
युधिष्ठिर उवाच। ३-९९-०क्ष् (२०३७)
भूय एवाहमिच्छामि महर्षेस्तस्य धीमतः ।
कर्मणां विस्तरं श्रोतुमगस्त्यस्य द्विजात्तम ॥ ३-९९-१ (२००१०)
लोमश उवाच। ३-९९-२क्ष् (२०३८)
शृणु राजन्कथां दिव्यामद्भुतामतिमानुषीम् ।
अगस्त्यस्य महाराज प्रभावममितौजसः ॥ ३-९९-२ (२००११)
आसन्कृतयुगे घोरा दानवा युद्धदुर्मदाः ।
कालकेया इतिख्याता गणाः परमदारुणाः ॥ ३-९९-३ (२००१२)
ते तु वृत्रं समाश्रित्य नानाप्रहरणोद्यताः ।
समन्तात्पर्यधावन्त महेन्द्रप्रमुखान्सुरान् ॥ ३-९९-४ (२००१३)
ततो वृत्रवधे यत्नमकुर्वंस्त्रिदशाः पुरा ।
पुरंदरं पुरस्कृत्य ब्रह्माणमुपतस्थिरे ॥ ३-९९-५ (२००१४)
कृताञ्जलींस्तु तान्सर्वान्परमेष्ठीत्युवाच ह ।
विदितं मे सुराः सर्वं यद्वः कार्यं चिकीर्षितम् ॥ ३-९९-६ (२००१५)
तमुपायं प्रवक्ष्यामि यथा वृत्रं वधिष्यथ ।
दधीच इतिविख्यातो महानृषिरुदारधीः ॥ ३-९९-७ (२००१६)
तं गत्वा सहिताः सर्वेवरं वै संप्रयाचत ।
स वो दास्यति धर्मात्मा सुप्रीतेनान्तरात्मना ॥ ३-९९-८ (२००१७)
स वाच्यः सहितैः सर्वैर्भवद्भिर्जयकाङ्क्षिभिः ।
स्वान्यस्थीनि प्रयच्छेति त्रैलोक्यस् हिताय वै ॥ ३-९९-९ (२००१८)
स शरीरं समुत्सृज्य स्वान्यस्थीनि प्रदास्यति ।
तस्यास्थिभिर्महाघोरं वज्रं संस्क्रियतां दृढम् ॥ ३-९९-१० (२००१९)
महच्छत्रुहणं घोरं षडश्रं भीमनिःस्वनम् ।
तेन वज्रेण वै वृत्रं वधिष्यति शतक्रतुः ॥ ३-९९-११ (२००२०)
एतद्वः सर्वमाख्यातं तस्माच्छीघ्रं विधीयताम् ।
एवमुक्तास्ततो देवा अनुज्ञाप्य पितामहम् ॥ ३-९९-१२ (२००२१)
नारायणं पुरस्कृत्य दधीचस्याश्रमं ययुः ।
सरस्वत्याः परे पारे नानाद्रुमलतावृतम् ॥ ३-९९-१३ (२००२२)
षट्पदोद्गीतनिनदैर्विघुष्टं सामगैरिव ।

पुंस्कोकिलरवोन्मिश्रं जीवंजीवकनादितम् ॥ ३-९९-१४ (२००२३)
महिषैश्च वराहैश्च सृमरैश्चमरैरपि ।
तत्र तत्रानुचरितं शार्दूलभयवर्जितैः ॥ ३-९९-१५ (२००२४)
करेणुभिर्वारणैश्च प्रभिन्नकरटामुखैः ।
सरोवगाढैः क्रीडद्भिः समन्तादनुनादितम् ॥ ३-९९-१६ (२००२५)
सिंहव्याघ्रैर्महानादान्नदद्भिरनुनादितम् ।
अपरैश्चापि संलीनैर्गुहाकन्दरशायिभिः ॥ ३-९९-१७ (२००२६)
तेषु तेष्ववकाशेषु शोभितं सुमनोरमम् ।
त्रिविष्टपसमप्रख्यं दधीचाश्रममागमन् ॥ ३-९९-१८ (२००२७)
तत्रापश्यन्दधीचं ते दिवाकरसमद्युतिम् ।
जाज्वल्यमानं वपुषा यथा साक्षात्पितामहम् ॥ ३-९९-१९ (२००२८)
तस्य पादौ सुरा राजन्नभिवाद्य प्रणम्य च ।
अयाचन्त वरं सर्वे यथोक्तं परमेष्ठिना ॥ ३-९९-२० (२००२९)
ततो दधीचः परमप्रतीतः
सुरोत्तमांस्तानिदमभ्युवाच ।
करोमि यद्वो हितमद्य देवाः
स्वं चापि देहंस्वयमुत्सृजामि ॥ ३-९९-२१ (२००३०)
स एवमुक्त्वा द्विपदांवरिष्ठः
प्राणान्वशी स्वान्सहसोत्ससर्ज ।
ततः सुरास्ते जगृहुः परासो-
रस्थीनि तस्याथ यथोपदेशम् ॥ ३-९९-२२ (२००३१)
प्रहृष्टरूपाश्च जयाय देवा-
स्त्वष्टारमागम् तमर्थमूचुः ।
त्वष्टा तु तेषां वचनं निशम्य
प्रहृष्टरूपः प्रयतः प्रयत्नात् ॥ ३-९९-२३ (२००३२)
चकार वज्रं भृशमुग्ररूपं
कृत्वा च शक्रं स उवाच हृष्टः ।
अनेन वज्रप्रवरेण देव
भस्मीकुरुष्वाद्य सुरारिमुग्रम् ॥ ३-९९-२४ (२००३३)
ततो हतारिः सगणः सुखं वै
प्रशाधिकृत्स्नं त्रिदिवं दिविष्ठः ।
त्वष्ट्रा तथोक्तस्तु पुरंदरस्त-
द्वज्रं प्रहृष्टः प्रयतो ह्यगृह्णात् ॥ ३-९९-२५ (२००३४)

इति श्रीमन्महाभारते अरण्यपर्वणि तीर्थयात्रापर्वणि
एकोनशततमोऽध्यायः ॥ ९९ ॥

३-९९-३ कालेया इति विख्याता इति क । पाटः ॥
३-९९-८ सवो दास्यति ईप्सितमिति शेषः ॥
३-९९-११ षडश्रं षट्कोणम् ॥
३-९९-१६ करेणुभिर्हस्तिनीभिः प्रभिन्नं
मदस्राविकरटामदोद्भेदस्थानं गण्डस्थलैकदेशस्तस्य
मुखमुपरिभागो तेषा तैः ॥
३-९९-१८ त्रिविष्टपसमप्रख्य स्वर्गतुल्यप्रकाशम् ॥
३-९९-२२ परासोः गतप्राणस्य ॥

---

वन-अध्यय१००
॥ श्रीः ॥
३.१००. अध्यायः १००

Mahabharata - Vana Parva - Chapter Topics
इन्द्रेण वृत्रहननम् ॥ १ ॥
ततो देवगणाभिपीडनात्समुद्रं
प्रविष्टैर्दैत्यैर्जगद्विनाशनाध्यवसायः ॥ २ ॥

Mahabharata - Vana Parva - Chapter Text

३-१००-० (२००३५)
लोमश उवाच। ३-१००-०क्ष् (२०३९)
ततः स वज्री बलभिद्दैवतैरभिरक्षितः ।
आससाद ततो वृत्रं स्थितमावृत्य रोदसी ॥ ३-१००-१ (२००३६)
कालकेयैर्महाकायै समन्तादभिरक्षितम् ।
समुद्यतप्रहरणैः सशृङ्गैरिव पर्वतैः ॥ ३-१००-२ (२००३७)
ततो युद्धं समभवद्देवानां दानवैः सह ।
मुहूर्तं भरतश्रेष्ठ लोकत्रासकरं महत् ॥ ३-१००-३ (२००३८)
उद्यतप्रतिविद्धानां स्वङ्गानां वीरबाहुभिः ।
आसीत्सुतुमुः शब्दः शरीरेष्वभिपात्यताम् ॥ ३-१००-४ (२००३९)
शिरोभिः प्रपतद्भिश्चाप्यन्तरिक्षान्महीतलम् ।
तालैरिव महाराज वृन्तादभ्रष्टैरदृश्यत ॥ ३-१००-५ (२००४०)
ते हेमकवचा भूत्वा कालेयाः परिघायुधाः ।
त्रिदशानभ्यवर्तन्त दावदग्धा इवाद्रयः ॥ ३-१००-६ (२००४१)
तेषां वेगवतां वेगं सहितानां प्रधावताम् ।

न शेकुस्त्रिदशाः सोढुं ते भग्नाः प्राद्रवन्भयात् ॥ ३-१००-७ (२००४२)
तान्दृष्ट्वा द्रवतो भीतान्सहस्राक्षः पुरंदरः ।
वृत्रे विवर्धमाने च कश्मलं महदाविशत् ॥ ३-१००-८ (२००४३)
तं शक्तं कश्मलाविष्टं दृष्ट्वा विष्णुः सनातनः ।
जगाम शरणं शीघ्रं तं तु नारायणं प्रभुम् ॥ ३-१००-९ (२००४४)
तं शक्रं कश्मलाविष्टं दृष्ट्वा विष्णुः सनातनः ।
स्वतेजो व्यदधच्छक्रे बलमस्य विवर्धयन् ॥ ३-१००-१० (२००४५)
विष्णुना गोपितं शक्रं दृष्ट्वादेवगणास्ततः ।
स्वं स्वंतेजः समादध्युस्तथा ब्रह्मर्षयोऽमलाः ॥ ३-१००-११ (२००४६)
स समाप्यायितः शक्रो विष्णुना दैवतैः सह ।
ऋषिभिश्च महाभागैर्बलवान्समपद्यत ॥ ३-१००-१२ (२००४७)
ज्ञात्वा बलस्थं त्रिदशाधिपं तु
ननाद वृत्रो महतो निनादान् ।
तस् प्रणादेन धरा दिशश्च
खं द्यौर्नगाश्चापि चचाल सर्वम् ॥ ३-१००-१३ (२००४८)
ततो महेन्द्रः परमाभितप्तः
श्रुत्वा रवं घोररूपं महान्तम् ।
भये निमग्नस्त्वरितो मुमोच
वज्रं महत्तस्य वधाय राजन् ॥ ३-१००-१४ (२००४९)
स चक्रवज्राभिहतः पपात
महासुरः काञ्चनमाल्यधारी ।
यथा महाशैलवरः पुरस्ता-
त्स मन्दरो विष्णुकराद्विमुक्तः ॥ ३-१००-१५ (२००५०)
तस्मिन्हते दैत्यवरे भयार्तः
शक्रः प्रदुद्राव सरः प्रवेष्टुम् ।
वज्रं न मेने स्वकराद्विमुक्तं
वृत्रं भयाच्चापि हतं न मेने ॥ ३-१००-१६ (२००५१)
सर्वे च देवा मुदिताः प्रहृष्टा
महर्षयश्चन्द्रमभिष्टुवन्तः ।
ग्वृत्रं हतं संददृशुः पृथिव्यां
वज्राहतं शैलमिवावदीर्णम् ॥ ३-१००-१७ (२००५२)
सर्वांश्च दैत्यांस्त्वरिताः समेत्य
जघ्नुः सुरा वृत्रवधाभितप्तान् ।
ते वध्यमानास्त्रिदशैः समेतैः
समुद्रमेवाविविशुर्भयार्ताः ॥ ३-१००-१८ (२००५३)
प्रविश्य चैवोदधिमप्रमेयं

झषाकुलं नक्रसमाकुलं च ।
तदा स्म मन्त्रं सहिताः प्रचक्रु-
स्त्रैलोक्यनाशार्थमभिप्रयत्नात् ॥ ३-१००-१९ (२००५४)
तत्रस्म केचिन्मतिनिश्चयज्ञा-
स्तांस्तानुपयानुपवर्णयन्ति ।
तेषां तु तत्रक्रमकालयोगा-
द्धोरा मतिश्चिन्तयतां बभूव ॥ ३-१००-२० (२००५५)
ये सन्ति विद्यातपसोपपन्ना-
स्तेषां विनाशः प्रथमं तु कार्यः ।
लोका हि सर्वे तपसा ध्रियन्ते
तस्मात्त्वरध्वं तपसः क्षयाय ॥ ३-१००-२१ (२००५६)
येसन्ति केचिच्च वसुंधरायां
तपस्विनो धर्मविदश् तज्ज्ञाः ।
तेषां वधः क्रियतां क्षिप्रमेव
तेषु प्रनष्टेषु जगत्प्रनष्टम् ॥ ३-१००-२२ (२००५७)
एवं हि सर्वे गतबुद्धिभावा
जगद्विनाशे परमप्रहृष्टाः ।
दुर्गं समाश्रित्य महोर्मिमन्तं
रत्नाकरं वरुणस्यालयं स्म ॥ ३-१००-२३ (२००५८)

इति श्रीमन्महाभारते अरण्यपर्वणि तीर्थयात्रापर्वणि शततमोऽध्यायः
॥ १०० ॥
Mahabharata - Vana Parva - Chapter Footnotes

३-१००-१ रोदसी द्यावापृथिव्यौ ॥
३-१००-५ तालैस्तालफलैः ॥
३-१००-१० व्यदधत् निहितवान् ॥
३-१००-१३ बलस्थं बलवन्तम् ॥
३-१००-१६ हतमपि वृत्रं भयात् न हतमिव मेने ॥
३-१००-२१ ध्रियन्ते जीवन्ति ॥
३-१००-२३ वृद्धिभावाः प्राप्तधीनिश्चयाः ।वरुणस्यालयं समुद्रम् ॥

---

वन-अध्यय१०१
॥ श्रीः ॥
३.१०१. अध्यायः १०१

Mahabharata - Vana Parva - Chapter Topics

समुद्रान्तर्हितैर्दैत्यै रात्रौरात्रौ बहिर्निर्गत्याश्रमेषु ऋषिगणेषु निहतेषु देवगणैर्नारायणस्य शरणीकरणम् ॥१ ॥

Mahabharata - Vana Parva - Chapter Text

३-१०१-० (२००५९)
लोमश उवाच। ३-१०१-०क्ष् (२०४०)
समुद्रं ते समाश्रित्य वरुणं निधमम्भसः ।
कालेयाः संप्रवर्तन्त त्रैलोक्यस्य विनाशने ॥३-१०१-१ (२००६०)
ते रात्रौ समभिक्रुद्धा भक्षयन्ति सदा मुनीन् ।
आश्रमेषु च ये सन्ति पुण्येष्वायतनेषु च ॥३-१०१-२ (२००६१)
वसिष्ठस्याश्रमे विप्रा भक्षितास्तैर्दुरात्मभिः ।
अशीतिः शतमष्टौ च नव चान्ये तपस्विनः ॥३-१०१-३ (२००६२)
च्यवनस्याश्रमं गत्वा पुण्यं द्विजनिषेवितम् ।
फलमूलाशनानां हि मुनीनां भक्षितं शतम् ॥३-१०१-४ (२००६३)
एवं रात्रौ स्म कुर्वन्ति विविशुश्चार्णवं दिवा ।
'कालेयास्ते दुरात्मानो भक्षयन्तस्तपोधनान्' ॥३-१०१-५ (२००६४)
भरद्वाजाश्रमे चैव नियता ब्रह्मचारिणः ।
वाय्वाहाराम्बुभक्षाश्च विंशतिः संनिषूदिताः ॥३-१०१-६ (२००६५)
एवं क्रमेण सर्वांस्तानाश्रमान्दानवास्तदा ।
निशायां परिबाधन्ते समुद्राम्बुबलाश्रयात् ।
कालोपसृष्टाः कालेया घ्नन्तो द्विजगणान्बहून् ॥ ३-१०१-७ (२००६६)
न चैनानन्वबुध्यन्त मनुजा मनुजोत्तम ।
एवं प्रवृत्तान्दैत्यांस्तांस्तापसेषु तपस्विषु ॥३-१०१-८ (२००६७)
'क्षयाय जगतः क्रूराः पर्यटन्ति स्म मेदिनीम् ॥ ३-१०१-९ (२००६८)
प्रभाते समदृश्यन्त नियताहारकर्शिताः ।
महीतलस्था मुनयः शरीरैर्गतजीवितैः ॥३-१०१-१० (२००६९)
क्षीणमांसैर्विरुधिरैर्विमज्जान्त्रैर्विसन्धिभिः ।
आकीर्णैराचिता भूमिः शङ्खानामिव राशिभिः ॥३-१०१-११ (२००७०)
लशैर्विप्रविद्धैश्च स्रुवैर्भग्नैस्तथैव च ।
विकीर्णैरग्निहोत्रैश्च भूर्बभूव समावृता ॥३-१०१-१२ (२००७१)
निःस्वाध्यायवपट्कारं नष्टयज्ञोत्सवक्रियम् ।
जगदासीन्निरुत्साहं कालेयभयपीडितम् ॥३-१०१-१३ (२००७२)
एवं संक्षीयमाणाश्च मानवा मनुजेश्वर ।
आत्मत्राणपपा भीताः प्राद्रवन्त दिशो भयात् ॥३-१०१-१४ (२००७३)

केचिद्गुहाः प्रविविशुर्निर्भरांश्चापरे श्रिताः ।
अपरे मरणोद्विग्ना भयात्प्राणान्समुत्सृजन् ॥ ३-१०१-१५ (२००७४)
केचिदत्रमहेष्वासाः शूराः परमहर्षिताः ।
मार्गमाणआः परं यत्नं दानवानां प्रचक्रिरे ॥ ३-१०१-१६ (२००७५)
न चैतानधिजग्मुस्ते समुद्रं समुपाश्रितान् ।
श्रमं जग्मुश्च परममाजग्मुः क्षयमेव च ॥ ३-१०१-१७ (२००७६)
जगत्युपशमं याते नष्टयज्ञोत्सवक्रिये ।
आजग्मुः परमामार्तिं त्रिदशा मनुजेश्वर ॥ ३-१०१-१८ (२००७७)
समेत्य समहेन्द्राश्च भयान्मन्त्रं प्रचक्रिरे ॥ ३-१०१-१९ (२००७८)
शरण्यं शरणं देवं नारायणमजं विभुम् ।
तेऽभिगम्य नमस्कृत्य वैकुण्ठमपराजितम् ।
ततो देवाः समस्तास्ते तदोचुर्मधुसूदनम् ॥ ३-१०१-२० (२००७९)
त्वंनः स्रष्टा च भर्ता च हर्ता च जगतः प्रभो ।
त्वया सृष्टमिदं विश्वं यच्चेङ्गं यच्च नेङ्गति ।
ग्त्वय्येव पुण्डरीकाक्ष पुनस्तत्प्रविलीयते' ॥ ३-१०१-२१ (२००८०)
त्वया भूमिः पुरा नष्टा समुद्रात्पुष्करेक्षण ।
वाराहं वपुराश्रित्यजगदर्थे समुद्धृता ॥ ३-१०१-२२ (२००८१)
आदिदैत्यो महावीर्यो हिरण्यकशिपुः पुरा ।
नारसिंहं वपुः कृत्वा सूदितः पुरुषोत्तम ॥ ३-१०१-२३ (२००८२)
अवध्यः सर्वभूतानां बलिश्चापि महासुरः ।
वामनं वपुराश्रित्य त्रैलोक्याद्भ्रंशितस्त्वया ॥ ३-१०१-२४ (२००८३)
असुरश्च महेष्वासो जम्भ इत्यभिविश्रुतः ।
यज्ञक्षोभकरः क्रूरस्त्वयैव विनिपातितः ॥ ३-१०१-२५ (२००८४)
एवमादीनि कर्माणि येषां संख्या न विद्यते ।
अस्माकं भयभीतानां त्वं गतिर्मधुसूदन ॥ ३-१०१-२६ (२००८५)
तस्मात्त्वां देवदेवेश लोकार्थं ज्ञापयामहे ।
रक्ष लोकांश्च देवांश्च शक्रं च महतो भयात् ।
ग्शरणागतसंत्राणे त्वमेकोऽसि दृढव्रतः' ॥ ३-१०१-२७ (२००८६)

इति श्रीमन्महाभारते अरण्यपर्वणि तीर्थयात्रापर्वणि
एकाधिकशततमोऽध्यायः ॥ १०१ ॥

Mahabharata - Vana Parva - Chapter Footnotes

३-१०१-१ ---निश्चित्यैवमसुरा वज्रसंहारदुःखिता इति क ।पाठः। ---- कालायाः कश्यपभार्यायाः पुत्राः ॥
१ ॥

३-१०१-७ सृष्टाः मृत्युना ग्रस्ताः ॥
३-१०१-१६ दानवानां वधायेति शेषः ॥
३-१०१-२१ इङ्गति चलतीति इङ्गं पचाद्यच् जङ्गमम् । नेङ्गति स्थावरम् ॥

---

वन-अध्यय१०२
॥ श्रीः ॥
३.१०२. अध्यायः १०२

Mahabharata - Vana Parva - Chapter Topics
विष्णुना समुद्रान्तर्हितदैत्यनिधने समुद्रशोपणस्योपायत्वं
ज्ञापितैर्देवैर्ब्रह्मलोकगमनम् ॥ १ ॥
ब्रह्मचोदनया देवैरगस्त्यमेत्य सागरशोषणप्रार्थनम् ॥ २ ॥

Mahabharata - Vana Parva - Chapter Text

३-१०२-० (२००८७)
देवा ऊचुः। ३-१०२-०क्ष् (२०४१)
तव प्रसादाद्वर्धन्ते प्रजाः सर्वाश्चतुर्विधाः ।
ता भाविता भावयनति हव्यकव्यैर्दिवौकसः ॥ ३-१०२-१ (२००८८)
लोका ह्येवं विवर्धन्ते ह्यन्योन्यं समुपाश्रिताः ।
त्वत्प्रसादान्निरुद्विग्नास्त्वयैव परिरक्षिताः ॥ ३-१०२-२ (२००८९)
इदं च समनुप्राप्तं लोकानां भयमुत्तमम् ।
न च जानीम केनेति रात्रौ वध्यन्ति ब्राह्मणाः ॥ ३-१०२-३ (२००९०)
क्षीणेषु च ब्राह्मणेषु पृथिवी क्षयमेष्यति ।
तत पृथिव्यां क्षीणायां त्रिदिवं क्षयमेष्यति ॥ ३-१०२-४ (२००९१)
त्वत्प्रसादान्महाबाहो लोकाः सर्वे जगत्पते ।
विनाशं नाधिगच्छेयुस्त्वया वै परिरक्षिताः ॥ ३-१०२-५ (२००९२)
विष्णुरुवाच। ३-१०२-६क्ष् (२०४२)
विदितं मे सुराः सर्वं प्रजानां क्षयकारणम् ।
भवतां चापि वक्ष्यामि शृणुध्वं विगतज्वराः ॥ ३-१०२-६ (२००९३)
कालेया इति विख्याता गणाः परमदारुणाः ।
तैश्च वृत्रं समाश्रित्य जगत्सर्वं प्रमाथितम् ॥ ३-१०२-७ (२००९४)
ते वृत्रं निहतं दृष्ट्वा सहस्राक्षेण धीमता ।
जीवितं परिरक्षन्तः प्रविष्टा वरुणालयम् ॥ ३-१०२-८ (२००९५)
ते प्रविश्योदधिं घोरं नक्रग्राहसमाकुलम् ।
उत्सादार्थं लोकानां रात्रौ घ्नन्ति ऋषीनिह ॥ ३-१०२-९ (२००९६)

न तु शक्याः क्षयं नेतुं समुद्राश्रयिणो हि ते ।
समुद्रस्य क्षये बुद्धिर्भवद्भिः संप्रधार्यताम् ॥ ३-१०२-१० (२००९७)
ग्एतच्छ्रुत्वा वचो देवा विष्णुना समुदीरितम् ।
विष्णुमेव पुरस्कृत्यब्रह्माणं समुपस्थिताः ॥ ३-१०२-११ (२००९८)
ततस्ते प्रणता भूत्वा तमेवार्थं न्यवेदयन् ।
सर्वलोकविनाशार्थं कालेया कृतनिश्चयाः ॥ ३-१०२-१२ (२००९९)
एषां तद्वचनं श्रुत्वा पद्मयोनिः सनातनः ।
उवाच परमप्रीतस्त्रिदशानर्थवद्वचः ॥ ३-१०२-१३ (२०१००)
विदितं मे सुराः सर्वे दानवानां विवेष्टितम् ।
मनुष्यादेश्च निधनं कालेयैः कालचोदितैः ॥ ३-१०२-१४ (२०१०१)
क्षयस्तेपामनुप्राप्तः कालेनोपहताश्च ये ।
उपायं संप्रवक्ष्यामि समुद्रस्य विशोषणे ॥ ३-१०२-१५ (२०१०२)
अगस्त्य इतिविग्व्यातो वारुणिः सुसमाहितः ।
तमुपागम्य सहिता इममर्थं प्रयाचत ॥ ३-१०२-१६ (२०१०३)
स हि शक्तो महातेजाः क्षणात्पातुं महोदधिम्'।
अगस्त्येन विना को हि शक्तोऽन्योऽर्णवशोपणे ॥ ३-१०२-१७ (२०१०४)
अन्यथा हि न शक्यास्ते विना सागरशोपणम् ।
समुद्रे च क्षयं नीते कालेयान्निहनिष्यथ ॥ ३-१०२-१८ (२०१०५)
एवं श्रुत्वा वचो देवा ब्रह्मणः परमेष्ठिनः ।
परमेष्ठिनमाज्ञाप्यागस्त्यस्याश्रमं ययुः ॥ ३-१०२-१९ (२०१०६)
तत्रापश्यन्महात्मानं वारुणिं दीप्ततेजसम् ।
उपास्यमानमृपिभिर्देवैरिव पितामहम् ॥ ३-१०२-२० (२०१०७)
तेऽभिगम्य महात्मानं मैत्रावरुणिमच्युतम् ।
आश्रमश्थं तपोराशिं कर्मभिः स्वैस्तु तुष्टुवुः ॥ ३-१०२-२१ (२०१०८)
देवा ऊचुः। ३-१०२-२२क्ष् (२०४३)
नहुपेणाभितप्तानां त्वं लोकानां गतिः पुरा ।
भ्रंशितश्च सुरैश्वर्याल्लोकार्थं लोककण्टकः ॥ ३-१०२-२२ (२०१०९)
क्रोधात्प्रवृद्धस्तरणं भास्करस्य नभोगतः ।
वचस्तवानतिक्रामन्विन्ध्यः शैलो न वर्धते ॥ ३-१०२-२३ (२०११०)
तमसा चावृतेलोके मृत्युनाऽभ्यर्दिताः प्रजाः ।
त्वामेव नाथमासाद्य निर्वृतिं परमां गताः ॥ ३-१०२-२४ (२०१११)
अस्माकं भयभीतानां नित्यशो भगवान्गतिः ।
ततस्त्वार्ताः प्रयाचामो वरं त्वां वरदो ह्यसि ॥ ३-१०२-२५ (२०११२)

इति श्रीमन्महाभारते अरण्यपर्वणि तीर्थयात्रापर्वणि
द्व्यधिकशततमोऽध्यायः ॥ १०२ ॥

Mahabharata - Vana Parva - Chapter Footnotes

३-१०२-१ चतुर्विधाः सुरनरतिर्यक्स्थावराः । दिवौकसः देवान् ॥
३-१०२-२० वारुणिं मैत्रावरुणपुत्रम् ॥
३-१०२-२३ कोधात्प्रवृद्धस्तरसा भास्करस्य नगोतम इति झ । पाठः ॥

---

वन-अध्यय१०३
॥ श्रीः ॥
३.१०३. अध्यायः १०३

Mahabharata - Vana Parva - Chapter Topics
लोमशेन युधिष्ठिरंप्रति विन्ध्यगिरेरिवृद्धेरगस्त्येन तन्निरोधस्
च हेतुकथनम् ॥ १ ॥
देवैः समुद्रशोषणं प्रार्थितेनागस्त्येन तैःसह समुद्रंप्रति
गमनम् ॥ २ ॥

Mahabharata - Vana Parva - Chapter Text

३-१०३-० (२०११३)
युधिष्ठिर उवाच। ३-१०३-०क्ष् (२०४४)
किमर्थं सहसा विन्ध्यः प्रवृद्धः क्रोधमूर्च्छितः ।
एतदिच्छाम्यहं श्रोतुं विस्तरेण महामुने ॥ ३-१०३-१ (२०११४)
लोमश उवाच। ३-१०३-२क्ष् (२०४५)
अद्रिराजं महाघोरं रमेरुं कनकपर्वतम् ।
उदयास्तमने भानुः प्रदक्षिणमवर्तत ॥ ३-१०३-२ (२०११५)
तं तु दृष्ट्वा तथा विन्ध्य शैलः सूर्यमथाब्रवीत् ।
यथा हि मेरुर्भवता नित्यशः परिगम्यते ॥ ३-१०३-३ (२०११६)
प्रदक्षिणश्च क्रियते मामेवं करु भास्कर ।
एवमुक्तस्ततः सूर्यः शैलेन्द्रं प्रत्यभापत ॥ ३-१०३-४ (२०११७)
नाहमात्मेच्छया शैल करोम्येनं प्रदक्षिणम् ।
एष मार्गः प्रदिष्टो मे येनेदं निर्मितं जगत् ॥ ३-१०३-५ (२०११८)
एवमुक्तस्ततः क्रोधात्प्रवृद्धः सहसाऽचलः ।
सूर्याचन्द्रमसोर्मार्गं रोद्धुमिच्छन्परंतप ॥ ३-१०३-६ (२०११९)
ततो देवाः सहिताः सर्व एव ।
सेन्द्राः समागम्य महाद्रिराजम् ।
निवारयामासुरुपायतस्तं
न च स्म तेषां वचनं चकार ॥ ३-१०३-७ (२०१२०)

अथाभिजग्मुर्मुनिमाश्रमस्थं
तपस्विनं धर्मभृतां वरिष्ठम् ।
अगस्त्यमत्यद्भुतवीर्यदीप्तं
तं चार्थमूचुः सहिताः सुरास्ते ॥ ३-१०३-८ (२०१२१)
सूर्याचन्दर्मसोर्मार्गं नक्षत्राणां गतिं तथा ।
शैलराजो वृणोत्येप विन्ध्यः क्रोधवशानुगः ॥ ३-१०३-९ (२०१२२)
तं निवारयितुं शक्तो नान्यः कश्चिद्द्विजोत्तम ।
ऋते त्वां हि महाभाग तस्मादेनं निवारय ॥ ३-१०३-१० (२०१२३)
तच्छ्रुत्वा वचनं विप्रः सुराणां शैलमभ्यगात् ।
सोभिगम्याब्रवीद्विन्ध्यं सदारः समुपस्थितः ॥ ३-१०३-११ (२०१२४)
मार्गमिच्छाम्यहं दत्तं भवता पर्वतोत्तम ।
दक्षिणामभिगन्तास्मि दिशे कार्येण केनचित् ॥ ३-१०३-१२ (२०१२५)
यावदागमनं मह्यं तावत्त्वं प्रतिपालय ।
निवृत्ते मयि शैलेन्द्र ततो वर्धस्व कामतः ॥ ३-१०३-१३ (२०१२६)
एवं स समयं कृत्वाविन्ध्येनामित्रकर्शन ।
अद्यापि दक्षिणाद्देशाद्वारुणिर्न निवर्तते ॥ ३-१०३-१४ (२०१२७)
विन्ध्योऽपितद्भयाद्राजन्कुञ्चिताङ्गो न वर्धते ।
अगस्त्यस्य प्रभावेण यन्मां त्वं परिपृच्छसि ॥ ३-१०३-१५ (२०१२८)
कालेयास्तु यथा राजन्सुरैः सर्वैर्निषूदिताः ।
अगस्त्याद्वरमासाद्य तन्मे निगदतः शृणु ॥ ३-१०३-१६ (२०१२९)
त्रिदशानां वचः श्रुत्वा मैत्रावरुणिरब्रवीत् ।
किमर्थमभियाता स्थ वरं मत्तः कमिच्छथ ॥ ३-१०३-१७ (२०१३०)
एवमुक्तास्ततस्तेन देवता मुनिमब्रुवन् ।
ग्सर्वे प्राञ्जलयो भूत्वा पुरन्दरपुरोगमाः' ॥ ३-१०३-१८ (२०१३१)
एवं त्वयोच्छाम कृतं हि कार्यं
महार्णवं पीयमानं महात्मन् ।
ततो वधिष्याम सहानुबन्धा-
न्कालोपसृष्टान्सुरविद्विषस्तान् ॥ ३-१०३-१९ (२०१३२)
त्रिदशानां वचः श्रुत्वा तथेति मुनिरब्रवीत् ।
करिष्ये भवतां कामं लोकानां च महत्सुखम् ॥ ३-१०३-२० (२०१३३)
एवमुक्त्वा ततोऽगच्छत्समुद्रं सरितांपतिम् ।
ऋषिभिश्च तपःसिद्धै सार्धं देवैश्च सुव्रत ॥ ३-१०३-२१ (२०१३४)
मनुष्योरगगन्धर्वयक्षकिंपुरुषास्तथा ।
अनुजग्मुर्महात्मानं द्रष्टुकानास्तदद्भुतम् ॥ ३-१०३-२२ (२०१३५)
ततोऽभ्यगच्छन्सहिताः समुद्रं भीमनिःखनम् ।
नृत्यन्तमिव चोर्मीभिर्वल्गान्तमिव वायुना ॥ ३-१०३-२३ (२०१३६)

हसन्तमिव फेनौघैः स्खलन्तं कन्दरेषु च ।
तानाग्राहसमाकीर्णं नानाद्विजगणान्वितम् ॥ ३-१०३-२४ (२०१३७)
अगस्त्यसहिता देवाः सगन्धर्वमहारगाः ।
ऋषयश्च महाभागाः समासेदुर्महोदधिम् ॥ ३-१०३-२५ (२०१३८)

इति श्रीमन्महाभारते अरण्यपर्वणि तीर्तयात्रापर्वणि
त्र्यधिकशततमोऽध्यायः ॥ १०३ ॥

---

वन-अध्ययय१०४
॥ श्रीः ॥
३.१०४. अध्यायः १०४

Mahabharata - Vana Parva - Chapter Topics
अगस्त्येन समुद्रसलिले निपीते देवैर्दैत्यहननम् ॥ १ ॥
देवैः पुनरर्णवपूरणाय पीतोदकोत्सर्जनं प्रारिथितेनागस्त्येन तस्
स्वेन जीर्णीकरणोक्तौ तदर्थं ब्रह्माणंप्रति प्रार्थनम् ॥ २ ॥

Mahabharata - Vana Parva - Chapter Text

३-१०४-० (२०१३९)
लोमश उवाच। ३-१०४-०क्ष् (२०४६)
समुद्रं स समासाद्य वारुणिर्भगवानृषिः ।
उवाच सहितान्देवानृषींश्चैव समागतान् ॥ ३-१०४-१ (२०१४०)
एष लोकहितार्थं वै पिबामि वरुणालयम् ।
भवद्भिर्यदनुष्ठेयं तच्छीघ्रं संविधीयताम् ॥ ३-१०४-२ (२०१४१)
एतावदुक्त्वा वचनं मैत्रावरुणिरच्युतः ।
समुद्रमपिबत्क्रुद्धः सर्वलोकस्य पश्यतः ॥ ३-१०४-३ (२०१४२)
पीयमानं समुद्रं तं दृष्ट्वा सेन्द्रास्तदाऽमराः ।
विस्मयं परमं जग्मुः स्तुतिभिश्चाप्यपूजयन् ॥ ३-१०४-४ (२०१४३)
त्वं नस्त्राता विधाता च लोकानां लोकभावन ।
त्वत्प्रसादात्समुच्छेदं न गच्छेत्सामरं जगत् ॥ ३-१०४-५ (२०१४४)
स पूज्यमानस्त्रिदशैर्महात्मा
गन्धर्वतूर्येषु नदत्सु सर्वशः ।
दिव्यैश्च पुष्पैरवकीर्यमाणो
महार्णवं निःसलिलं चकार ॥ ३-१०४-६ (२०१४५)
दृष्ट्वा कृतंनिःसलिलं महार्णवं
सुराः समस्ताः परमप्रहृष्टाः। ३-१०४-७च्प्रगृह्य दिव्यानिवरायुधानि

तान्दानवाञ्जघ्नुरदीनसत्वाः ॥ ३-१०४-७ (२०१४६)
ते वध्यमानास्त्रिदशैर्महात्मभि-
र्महाबलैर्वेगिभिरुन्नदद्भिः ।
न सेहिरेवेगवतां महात्मनां
वेगं तदा धारयितुं दिवौकसाम् ॥ ३-१०४-८ (२०१४७)
ते वध्यमानास्त्रिदशैर्दानवा भीमनिःस्वनाः ।
रचक्रु सुतुमुलं युद्धं मुहूर्तमिव भारत ॥ ३-१०४-९ (२०१४८)
ते पूर्वं तपसा दग्धा मुनिभिर्भावितात्मभिः ।
यतमानाः परं शक्त्या त्रिदशैर्विनिषूदिताः ॥ ३-१०४-१० (२०१४९)
तेहेमनिष्काभरणाः कुण्डलाङ्गदधारिणः ।
निहता बह्वशोभन्त पुष्पिता इव किंशुकाः ॥ ३-१०४-११ (२०१५०)
हतशेषास्ततः केचित्कालेया मनुजोत्तम ।
विदार्य वसुधां देवीं पातालतलमास्थिताः ॥ ३-१०४-१२ (२०१५१)
निहतान्दानवान्दृष्ट्वा त्रिदशा मुनिपुङ्गवम् ।
तुष्टुवुर्विविधैर्वाक्यैरिदं वचनमब्रुवन् ॥ ३-१०४-१३ (२०१५२)
त्वत्प्रसादान्महाबाहो लोकैः प्राप्तं महत्सुखम् ।
त्वत्तेजसा च निहताः कालेयाः क्रूरविक्रमाः ॥ ३-१०४-१४ (२०१५३)
पूरस्व महाबाहो समुद्रं लोकभावन ।
यत्त्वया सलिलं पीतं तदस्मिन्पुनरुत्सृज ॥ ३-१०४-१५ (२०१५४)
एवमुक्तः प्रत्युवाच भगवान्मुनिपुङ्गवः ।
ग्तांस्तदा सहितान्देवानगस्त्यःसपुरन्दरान्' ॥ ३-१०४-१६ (२०१५५)
जीर्णं तद्धि मया तोयमुपायोऽन्यः प्रचिन्त्यताम् ।
पूरणार्थं समुद्रस्य भवद्भिर्यत्नमास्थितैः ॥ ३-१०४-१७ (२०१५६)
केतच्छ्रुत्वा तु वचनं महर्षेर्भावितात्मनः ।
विस्मिताश्च विषण्णाश्च बभूवुः सहिताः सुराः ॥ ३-१०४-१८ (२०१५७)
परस्परमनुज्ञाप्यप्रणम्य मुनिपुङ्गवम् ।
प्रजाः सर्वा महाराज विप्रजग्मुर्यथागतम् ॥ ३-१०४-१९ (२०१५८)
त्रिदशा विष्णुना सार्धमुपजग्मुः पितामहम् ।
पूरणार्थं समुद्रस्य मन्त्रयित्वा पुनः पुनः ॥ ३-१०४-२० (२०१५९)
ते धातारमुपागम्य त्रिदशाः सह विष्णुना ।
ऊचुः प्राञ्जलयः सर्वे सागरस्याभिपूरणम् ॥ ३-१०४-२१ (२०१६०)

इति श्रीमन्महाभारते अरण्यपर्वणि तीर्थयात्रापर्वणि
चतुरधिकशततमोऽध्यायः ॥ १०४ ॥

---

वन-अध्यय१०५
॥ श्रीः ॥

## ३.१०५. अध्यायः १०५

Mahabharata - Vana Parva - Chapter Topics

ब्रह्मणा देवान्प्रति भगीरथेन समुद्रपूरणकथनम् ॥ १ ॥
युधिष्ठिरेण तत्प्रकारं पृष्टेन लोमशेन तदुपोद्घाततया सगरस्य भार्याद्वये पुत्रलाभप्रकारकथनम् ॥ २ ॥

Mahabharata - Vana Parva - Chapter Text

३-१०५-० (२०१६१)
लोमश उवाच। ३-१०५-०क्ष् (२०४७)
तानुवाच समेतांस्तु ब्रह्मा लोकपितामहः ।
गनिर्ह्लादिन्या गिरा राजन्देवानाश्वासयंस्तदा' ॥ ३-१०५-१ (२०१६२)
गच्छध्वं विबुधाः सर्वे यथाकामं यथेप्सितम् ।
महता कालयोगेन प्रकृतिं यास्यतेऽर्णवः ॥ ३-१०५-२ (२०१६३)
ज्ञातींश्च कारणं कृत्वा महाराजो भगीथः ।
गपूरयिष्यति तोयौघैः समुद्रं निधिमम्भसाम्' ॥ ३-१०५-३ (२०१६४)
पितामहवचः श्रुत्वा सर्वे विबुधसत्तमाः ।
कालयोगं प्रतीक्षन्तो जग्मुश्चापि यथागतम् ॥ ३-१०५-४ (२०१६५)
युधिष्ठिर उवाच। ३-१०५-५क्ष् (२०४८)
कथं वै ज्ञातयोब्रह्मन्कारणं चात्र किं मुने ।
कथं समुद्रः पूर्णश्च भगीरथपरिश्रमात् ॥ ३-१०५-५ (२०१६६)
एतदिच्छाम्यहं श्रोतुं विस्तरेण तपोधन ।
कथ्यमानं त्वया विप्र राज्ञां चरितमुत्तमम् ॥ ३-१०५-६ (२०१६७)
वैशंपायन उवाच। ३-१०५-७क्ष् (२०४९)
एवमुक्तस्तु विप्रेन्द्रो धर्मराज्ञा महात्मना ।
कथयामास माहात्म्यं सगरस्य महात्मनः ॥ ३-१०५-७ (२०१६८)
लोमश उवाच। ३-१०५-८क्ष् (२०५०)
इक्ष्वाकूणां कुले जातः सगरो नाम पार्थिवः ।
रूपसत्वबलोपेतः स चापुत्रः प्रतापवान् ॥ ३-१०५-८ (२०१६९)
स हैहयान्समुत्साद्य तालजङ्घांश्च भारत ।
वशे च कृत्वा राजन्यान्स्वराज्यमनुशिष्टवान् ॥ ३-१०५-९ (२०१७०)
तस्य भार्ये त्वभवतां रूपयौवनदर्पिते ।
वैदर्भी भरतश्रेष्ठ शैव्या च भरतर्षभ ॥ ३-१०५-१० (२०१७१)
सपुत्रकामो नृपतिस्तप्यते स्म महत्तपः ।
पत्नीभ्यां सह राजेन्द्र कैलासं गिरिमाश्रितः ॥ ३-१०५-११ (२०१७२)

स तप्यमानः सुमहत्तपोयोगसमन्वितः ।
आससाद महात्मानं त्र्यक्षं त्रिपुरमर्दनम् ॥ ३-१०५-१२ (२०१७३)
शंकरं भवमीशानं पिनाकिं शूलपाणिनम् ।
त्र्यम्बकं शिवमुग्रेशं बहुरूपमुमापतिम् ॥ ३-१०५-१३ (२०१७४)
स तं दृष्ट्वैव वरदं पत्नीभ्यां सहितो नृपः ।
प्रणिपत्य महाबाहुः पुत्रार्थे समयाचत ॥ ३-१०५-१४ (२०१७५)
तं प्रीतिमान्हरः प्राह सभार्यं नृपसत्तमम् ।
यस्मिन्वृतो मुहूर्तेऽहं त्वयेह नृपते वरम् ॥ ३-१०५-१५ (२०१७६)
षष्टिः पुत्रसहस्राणि शूराः परमदर्पिताः ।
एकस्यां संभविष्यन्ति पत्न्यां नरवरोत्तम ॥ ३-१०५-१६ (२०१७७)
ते चैवसर्वे सहिताः क्षयं यास्यन्ति पार्थिव ।
एको वंशधरः शूर एकस्यां संभविष्यति ॥ ३-१०५-१७ (२०१७८)
एवमुक्त्वा तु तं रुद्रस्तत्रैवान्तरधीयत ।
स चापि सगरो राजा जगाम स्वं निवेशनम् ॥ ३-१०५-१८ (२०१७९)
पत्नीभ्यां सहितस्तत्र होऽतिहृष्टमनास्तदा ।
ग्कालं शंभुवरप्राप्तं प्रतीक्षन्सगरोऽनयत्' ॥ ३-१०५-१९ (२०१८०)
तस्य तेमनुजश्रेष्ठ भार्ये कललोचने ।
वैदर्भी चैव शैब्या च गर्भिण्यौ संबभूवतुः ॥ ३-१०५-२० (२०१८१)
ततः कालेन वैदर्भी गर्भालाबुं व्यजायत ।
शैव्या च सुषुवे पुत्रं कुमारं देवरूपिणम् ॥ ३-१०५-२१ (२०१८२)
तदाऽलाबुं समुत्स्रष्टुं मनश्चक्रे स पार्थिवः ।
अथान्तरिक्षाच्छुश्राव वाचं गंभीरनिःस्वनाम् ॥ ३-१०५-२२ (२०१८३)
राजन्मा साहसंकार्षीः पुत्रान्न त्यक्तुमर्हसि ।
अलाबुमध्यान्निष्कृष्य वीजं यत्नेन गोप्यताम् ॥ ३-१०५-२३ (२०१८४)
सोपस्वेदेषु पात्रेषु घृतपूर्णेषु भागशः ।
ततः पुत्रसहस्राणि षष्टिं प्राप्स्यसि पार्थिव ॥ ३-१०५-२४ (२०१८५)
महादेवेन दिष्टं ते पुत्रजन्म नराधिप ।
अनेन क्रमयोगेन मा ते बुद्धिरतोऽन्यथा ॥ ३-१०५-२५ (२०१८६)

इति श्रीमन्महाभारते अरण्यपर्वणि तीर्थयात्रापर्वणि
पञ्चाधिकशततमोऽध्यायः ॥ १०५ ॥

---

वन-अध्यय१०६
॥ श्रीः ॥
३.१०६. अध्यायः १०६

अश्वमेधे दीक्षितसगराज्ञया षष्टिसहस्रैस्तत्पुत्रैर्भुवं संचारितस्याश्वस् समुद्रतीरेऽन्तर्धानम् ॥ १ ॥
पित्राज्ञया हयान्वेषणाय समुद्रतीरं खनद्भिः सागरैः पातालतले तपस्यतो भगवतः कपिलस् तत्समीपचारिणो हयस्य च दर्शनम् ॥ २ ॥

Mahabharata - Vana Parva - Chapter Text

३-१०६-० (२०१८७)
लोमश उवाच। ३-१०६-०क्ष् (२०५१)
एतच्छ्रुत्वान्तरिक्षाच्च स राजा राजसत्तमः ।
यथोक्तं तच्चराकाथ श्रद्दधद्भरतर्षभ ॥ ३-१०६-१ (२०१८८)
श्एकैकशस्ततः कृत्वा बीजं बीजं नराधिपः ।
घृतपूर्णेषु कुम्भेषु तान्भागान्विदधे ततः ॥ ३-१०६-२ (२०१८९)
धात्रीश्चैकैकशः प्रादात्पुत्ररक्षणतत्परः ।
ततः कालेन महता समुत्तस्थुर्महाबलाः ॥ ३-१०६-३ (२०१९०)
षष्टिः पुत्रसहस्राणि तस्याप्रतिमतेजसः ।
रुद्रप्रसादाद्राजर्षेः समजायन्त पार्थिव ॥ ३-१०६-४ (२०१९१)
ते घोराः क्रूरकर्माण आकाशपरिसर्पिणः ।
बहुत्वाच्चावजानन्तः सर्वाल्लोँकान्सहामरान् ॥ ३-१०६-५ (२०१९२)
त्रिदशांश्चाप्यबाधन्त तथा गन्धर्वराक्षसान् ।
सर्वाणि चैव भूतानि शूरा समरशालिनः ॥ ३-१०६-६ (२०१९३)
वध्यमानास्तदा लोकाः सागरैर्मन्दबुद्धिभिः ।
ब्रह्माणं शरणं जग्मुः सहिताः सर्वदैवतैः ॥ ३-१०६-७ (२०१९४)
तानुवाच महाभागः सर्वलोकपितामहः ।
गच्छध्वं त्रिदशाः सर्वे लोकैः सार्धं यथागतम् ॥ ३-१०६-८ (२०१९५)
नातिदीर्घेण कालेन सागराणां क्षयो महान् ।
विष्यति महाघोरः स्वकृतैः कर्मभिः सुराः ॥ ३-१०६-९ (२०१९६)
एवमुक्तास्तु ते देवा लोकाश् मनुजेश्वर ।
पितामहमनुज्ञाप्य विप्रजग्मुर्यथागतम् ॥ ३-१०६-१० (२०१९७)
ततः काले बहुतिथे व्यतीते भरतर्षभ ।
दीक्षितः सगरो राजा हयमेधेन वीर्यवान् ॥ ३-१०६-११ (२०१९८)
तस्याश्वो व्यचरद्भूमिं पुत्रैः सुपरिरक्षितः ।
ग्सर्वैरेव महोत्साहैः स्वच्छन्दप्रचरो नृप' ॥ ३-१०६-१२ (२०१९९)
समुद्रं स समासाद्य निस्तोयं भीमदर्शनम् ।
रक्ष्यमाणः प्रयत्नेन तत्रैवान्तरधीयत ॥ ३-१०६-१३ (२०२००)

ततस्ते सागरास्तात हृतं मत्वा हयोत्तमम् ।
आगम्य पितुराचख्युरदृश्यं तुरगं हृतम् ।
तेनोक्ता दिक्षु सर्वासु पुत्रा मार्गत वाजिनम् ॥ ३-१०६-१४ (२०२०१)
ततस्ते पितुराज्ञाय दिक्षु सर्वासु तं हयम् ।
अमार्गन्त महाराज सर्वंच पृथिवीतलम् ॥ ३-१०६-१५ (२०२०२)
ततस्ते सागराः सर्वे समुपेत्य परस्परम् ।
नाध्यगच्छन्त तुरगमश्वहर्तारमेव च ॥ ३-१०६-१६ (२०२०३)
आगम्य पितरं चोचुस्ततः प्राञ्जलयोऽग्रतः ॥ ३-१०६-१७ (२०२०४)
ससमुद्रवनद्वीपा सनदीनदकन्दरा ।
सपर्वतवनोद्देशा निखिलेन मही नृप ॥ ३-१०६-१८ (२०२०५)
अस्माभिर्विचिता राजञ्शासनात्तव पार्थिव ।
न चाश्वमधिगच्छामो नाश्वहर्तारमेव च ॥ ३-१०६-१९ (२०२०६)
श्रुत्वा तु वचनं तेषां स राजा क्रोधमूर्च्छितः ।
उवाच वचनं सर्वांस्तदा दैववशान्नृप ॥ ३-१०६-२० (२०२०७)
अनागमाय गच्छध्वं भूयो मार्गत वाजिनम् ।
याज्ञीयं तं विनाह्यश्वं नागन्तव्यं हि पुत्रकाः ॥ ३-१०६-२१ (२०२०८)
प्रतिगृह्य तु संदेशं पितुस्ते सगरात्मजाः ।
भूय एव महीं कृत्स्नां विचेतुमुपचक्रमुः ॥ ३-१०६-२२ (२०२०९)
अथापश्यन्त ते वीराः पृथिवीमवदारिताम् ।
ग्समुद्रे पृथिवीपाल पदं मार्गं च वाजिनः' ॥ ३-१०६-२३ (२०२१०)
समासाद्य बिलं तच्चाप्यखनन्सगरात्मजाः ।
कुद्दालैर्मुसलैश्चैव समुद्रं यत्नमास्थिताः ॥ ३-१०६-२४ (२०२११)
स खन्यमानः सहितैः सागरैर्वरुणालयः ।
अगच्छत्परमामार्तिं दीर्यमाणः समन्ततः ॥ ३-१०६-२५ (२०२१२)
असुरोरगरक्षांसि सत्वानि विविधानि च ।
आर्तनादमकुर्वन्त वध्यमानानि सागरैः ॥ ३-१०६-२६ (२०२१३)
छिन्नशीर्षा विदेहाश्च भिन्नजान्वस्थिमस्तकाः ।
प्राणिनः समदृश्यन्त शतशोथ सहस्रशः ॥ ३-१०६-२७ (२०२१४)
एवं हि खनतां तेषां समुद्रं वरुणालयम् ।
व्यतीतः सुमहान्कालो न चाश्वः समदृश्यत ॥ ३-१०६-२८ (२०२१५)
ततः पूर्वोत्तरे देशे समुद्रस्य महीपते ।
विदार्य पातालमथ संक्रुद्धाः सगरात्मजाः ॥ ३-१०६-२९ (२०२१६)
अपश्यन्त हयं यत्र विचरन्तं महीतले ।
कपिलं च महात्मानं तेजोराशिमनुत्तमम् ॥ ३-१०६-३० (२०२१७)
तेजसा दीप्यमानं तु ज्वालाभिरिव पावकम् ।
ग्दृष्ट्वा हि विस्मिताः सर्वे बभूवुः सगरात्मजाः' ॥ ३-१०६-३१ (२०२१८)

इति श्रीमन्महाभारते अरण्यपर्वणि तीर्थयात्रापर्वणइ
षडधिकशततमोऽध्यायः ॥ १०६ ॥
Mahabharata - Vana Parva - Chapter Footnotes

३-१०६-२९ पूर्वोत्तरे ऐशान्याम् ॥

---

वन-अध्यय१०७
॥ श्रीः ॥
३.१०७. अध्यायः १०७

Mahabharata - Vana Parva - Chapter Topics
कपिलेन हयचोरत्वभ्रमेण स्वजिघांसूनां सर्वसागराणां नयनानलेन
भस्मीकरणम् ॥ १ ॥
सगरनिदेशान्निर्गतेनांशुमता कपिलप्रसादनन हयानयनपूर्वकं
पितामहयज्ञसमापनम् ॥ २ ॥
सगरइवांशुमत्यपि स्वर्गते तत्सुतेन - दिलीपेन गङ्गावतरणआय
यतमाननापि तदपारयतैव त्रिदिवगमनम् ॥ ३ ॥

Mahabharata - Vana Parva - Chapter Text

३-१०७-० (२०२१९)
लोमश उवाच। ३-१०७-०क्ष् (२०५२)
क़तेतं दृष्ट्वा हयं राजन्संप्रहृष्टतनूरुहाः ।
अनादृत् महात्मानं कपिलं कालचोदिताः ॥ ३-१०७-१ (२०२२०)
संफ़ुद्धाः संप्रधावन्त वाजिग्रहणकाङ्क्षिणः ।
ततः क्रुद्धो महाराज कपिलो मुनिसत्तमः ॥ ३-१०७-२ (२०२२१)
वासुदेवेति यं प्राहुः कपिलं मुनिपुङ्गवम् ।
स चक्षुर्विकतं कृत्वा तेजस्तेषु समुत्सृजन् ॥ ३-१०७-३ (२०२२२)
ददाह सुमहातेजा मन्दबुद्धीन्स सागरान् ।
षष्टिं रतानि सहस्राणि युगपन्मुनिसत्तमः ॥ ३-१०७-४ (२०२२३)
तान्दृष्ट्वा भस्मसाङ्गतान्नारदः सुमहातपाः ।
सगरान्तिकमागत्य तच्च तस्मै न्यवेदयत् ॥ ३-१०७-५ (२०२२४)
स तच्छ्रुत्वा वचो घोरं राजा मुनिमुखोद्गतम् ।
महूर्तं विमना भूत्वा स्थाणोर्वाक्यमचिन्तयत् ॥ ३-१०७-६ (२०२२५)
ग्स पुत्रनिधनोत्थेन दुःखेन समभिप्लुतः ।
आत्मानमात्मनाऽऽश्वास्य हयमेवान्वचिन्तयत्' ॥ ३-१०७-७ (२०२२६)

अशुमन्तं समाहूय असमञ्जसुतं तदा ।
पौत्रं भरतशार्दूल इदं वचनमब्रवीत् ॥ ३-१०७-८ (२०२२७)
षष्टिस्तात सहस्राणि पुत्राणाममितौजसाम् ।
कापिलं तेज आसाद्य मत्कृतेनिधनं गताः ॥ ३-१०७-९ (२०२२८)
तव चापि पिता तात परित्यक्तो मयाऽनघ ।
धर्मं संरक्षमाणेन पौराणां हितमिच्छता ॥ ३-१०७-१० (२०२२९)
युधिष्ठिर उवाच। ३-१०७-११क्ष् (२०५३)
किमर्थं राजशार्दूलः सगरः पुत्रमात्मजम् ।
त्यक्तवान्दुस्त्यजं वीरं तन्मे ब्रूहि तपोधन ॥ ३-१०७-११ (२०२३०)
लोमश उवाच। ३-१०७-१२क्ष् (२०५४)
असमञ्ज इति ख्यातः सगरस्य सुतो ह्यभूत् ।
यं शैव्या जनयामास पौराणां स हि दारकान् ॥ ३-१०७-१२ (२०२३१)
ग्क्रीडतः सहसाऽऽसाद्य तत्रतत्र महीपते'।
चूडासु क्रोशतो गृह्यनद्यां चिक्षेप दुर्बलान् ॥ ३-१०७-१३ (२०२३२)
ततः पौराः समाजग्मुर्भयशोकपरिप्लुताः ।
सगरं चाभ्यभाषन्त सर्वे प्राञ्जलयः स्थिताः ॥ ३-१०७-१४ (२०२३३)
त्वं नस्त्राता महाराज परचक्रादिभिर्भयात् ।
असमञ्जभयाद्घोरात्ततो नस्त्रातुनर्हसि ॥ ३-१०७-१५ (२०२३४)
पौराणां वचनं श्रुत्वा घोरं नृपतिसत्तमः ।
मुहूर्तं विमना भूत्वासचिवानिदमब्रवीत् ॥ ३-१०७-१६ (२०२३५)
असमञ्ज पुरादद्य सुतो मे विप्रवास्यताम् ।
यदि वो मत्प्रियं कार्यमेतच्छीध्रं विधीयताम् ॥ ३-१०७-१७ (२०२३६)
एवमुक्ता नरेन्द्रेण सचिवास्ते नराधिप ।
यथोक्तं त्वरिताश्चक्रुर्यथाऽऽज्ञापितवान्नृपः ॥ ३-१०७-१८ (२०२३७)
एतत्ते सर्वमाख्यातं यथा पुत्रो महात्मना ।
पौराणां हितकामेन सगरेण विवासितः ॥ ३-१०७-१९ (२०२३८)
अंशुमांस्तु महेष्वासो यदुक्तः सगरेण हि ।
तत्ते सर्वंप्रवक्ष्यामि कीर्त्यमानं निबोध मे ॥ ३-१०७-२० (२०२३९)
सगर उवाच। ३-१०७-२१क्ष् (२०५५)
पितुश् तेऽहंत्यागेन पुत्राणां निधनेन च ।
अलाभेन तथाऽश्वस् परितप्यामि पुत्रक ॥ ३-१०७-२१ (२०२४०)
तस्माद्दुःखाभिसंतप्तं यज्ञविघ्नाच्च मोहितम् ।
हयस्यानयनात्पौत्र नरकान्मां समुद्धर ॥ ३-१०७-२२ (२०२४१)
लोमश उवाच। ३-१०७-२३क्ष् (२०५६)
अंशुमानेवमुक्तस्तु सगरण महात्मना ।
जगाम दुःखात्तं देशं यत्रवै दारिता मही ॥ ३-१०७-२३ (२०२४२)

स तु तेनैव मार्गेण समुद्रं प्रविवेश ह ।
अपश्यच्च महात्मानं कपिलं तुरगं च तम् ॥ ३-१०७-२४ (२०२४३)
स दृष्ट्वा तेजसो राशिं पुराणमृपिसत्तमम् ।
प्रणम्य शिरसा भूमौ कार्यमस्मै न्यवेदयत् ॥ ३-१०७-२५ (२०२४४)
ततः प्रीतो महाराज कपिलोंऽशुमतोऽभवत् ।
उवाच चैनं धर्मात्मा वरदोस्मीति भारत ॥ ३-१०७-२६ (२०२४५)
स वव्रे तुरगं तत्र प्रथमं यज्ञकारणात् ।
द्वितीयमुदकं वव्रे पितॄणां पावनेच्छया ॥ ३-१०७-२७ (२०२४६)
तमुवाच महातेजाः कपिलो मुनिपुङ्गवः ।
ददानि तव भद्रं ते यद्यत्प्रार्थयसेऽनघ ॥ ३-१०७-२८ (२०२४७)
त्वयि क्षमा च धर्मश्च सत्यं चापि प्रतिष्ठितम् ।
त्वया कृतार्थः सगरः पुत्रवांश्च त्वया पिता ॥ ३-१०७-२९ (२०२४८)
तव चैव प्रभावेन स्वर्गं यास्यन्ति सागराः ।
ग्शलभत्वं गता ये ते मम क्रोधहुताशने' ॥ ३-१०७-३० (२०२४९)
पौत्रश्च ते त्रिपथगां त्रिदिवादानयिष्यति ।
पावनार्थं सागराणां तोषयित्वा महेश्वरम् ॥ ३-१०७-३१ (२०२५०)
हयं नयस्व भद्रं ते याज्ञिं नरपुङ्गव ।
यज्ञः समाप्यतां तात सगरस्य महात्मनः ॥ ३-१०७-३२ (२०२५१)
अंशुमानेवमुक्तस्तु कपिलेन महात्मना ।
आजगाम हयं गृह्य यज्ञवाटं महात्मनः ॥ ३-१०७-३३ (२०२५२)
सोभिवाद्य ततः पादौ सगरस्य महात्मनः ।
मूर्ध्नि तनाप्युपाघ्रातस्तस्मै सर्वंनय्वेदयत् ॥ ३-१०७-३४ (२०२५३)
यथा दृष्टं श्रुतं चापि सागराणां क्षयं तथा ।
तं चास्मै हयमाचष्ट यज्ञवाटमुपागतम् ॥ ३-१०७-३५ (२०२५४)
तच्छ्रुत्वा सगरो राजा पुत्रजं दुःखमत्यजत् ।
अंशुमन्तं च संपूज्यसमापयत तं क्रतुम् ॥ ३-१०७-३६ (२०२५५)
समाप्तयज्ञः सगरो देवैः सर्वैः सभाजितः ।
पुत्रत्वे कल्पयामास समुद्रं वरुणालयम् ॥ ३-१०७-३७ (२०२५६)
प्रशास्य सुचिरं कालं राज्यं राजीवलोचनः ।
पौत्रे भारं समवेश्य जगाम त्रिदिवं तदा ॥ ३-१०७-३८ (२०२५७)
अंशुमानपि धर्मात्मा महीं सागरमेखलाम् ।
प्रशशास महाराज यथैवास् पितामहः ॥ ३-१०७-३९ (२०२५८)
तस्य पुत्रः समभवद्दिलीपो नाम धर्मवित् ।
तस्मिन्राज्यं समाधाय अंशुमानपि संस्थितः ॥ ३-१०७-४० (२०२५९)
दिलीपस्तु ततः श्रुत्वा पितॄणां निधनं महत् ।
पर्यतप्यत दुःखेन तेषां गतिमचिन्तयत् ॥ ३-१०७-४१ (२०२६०)

गङ्गावतरणए यत्नं सुमहच्चाकरोन्नृपः ।
न चावतारयामास चेष्टमानो यथाबलम् ॥ ३-१०७-४२ (२०२६१)
तस् पुत्र समभवच्छ्रीमान्धर्मपराणः ।
भगीरथ इति ख्यातः सत्यवागनसूयकः ॥ ३-१०७-४३ (२०२६२)
अभिषिच्य तु तं राज्येदिलीपो वनमाश्रितः ॥ ३-१०७-४४ (२०२६३)
तपः सिद्धिसमायोगात्स राजा भरतर्षभ ।
वनाज्जगाम त्रिदिवं कालयोगेन भारत ॥ ३-१०७-४५ (२०२६४)
Alternate Text??
३-१०७अ-१अ
ते तं दृष्ट्वा हयं राजन्संप्रहृष्टतनूरुहाः। ३-१०७अ-१ब्
अनादृत्य महात्मानं कपिलं कालचोदिताः। ३-१०७अ-१च्
संक्रुद्धाः समधावन्त कपिलं हन्तुमुद्यताः ॥ ३-१०७अ-२अ
तान्दृष्ट्वा हन्तुमुद्युक्तान्कपिलो रोपमूर्च्छितः। ३-१०७अ-२ब्
सगरस्यात्मजान्सर्वान्ददाह क्षणतो नृप ॥ ३-१०७अ-३अ
तान्दृष्ट्वा भस्मसाद्भूतान्नारदः सुमहातपाः। ३-१०७अ-३ब्
सगरान्तिकमागन्य तच्च तस्मै न्यवेदयत् ॥ ३-१०७अ-४अ
एतच्छ्रुत्वा वचो राजा घोरं मुनिमुखोद्गतम्। ३-१०७अ-४ब्
मुहूर्तं विमना भूत्वास्थाणोर्वाक्यमचिन्तयत् ॥ ३-१०७अ-५अ
अशुमन्तं प्रेपयित्वा हयमानाय्य यत्नतः। ३-१०७अ-५ब्
यज्ञं समाप्य विधिवन्सगरो भृशदुःखितः। ३-१०७अ-५च्
कृत्वांऽशुमति तद्राज्यं वनमेवान्वपद्यत ॥ ३-१०७अ-६अ
अशुमानकरोद्राज्यं प्रजा धर्मेण रञ्जयन्। ३-१०७अ-६ब्
दिलीपे राज्यमाधाय वनमेवान्वपद्यत ॥ ३-१०७अ-७अ
दिलीपोपि महाराज चिरं राज्यमकारयत् ॥ ३-१०७अ-८अ
तस् पुत्रो महीपाल भगीरथ इति श्रुतः। ३-१०७अ-८ब्
धर्मज्ञश्च कृतज्ञश्च प्रजानामनुरञ्जकः ॥ ३-१०७अ-९अ
पितरि स्वर्गते राजन्दिलीपे पुण्यशालिनि। ३-१०७अ-९ब्
भगीरथो महानासीद्राजा परमधार्मिकः ॥ ३-१०७अ-१०अ
स चिरं तप आतिष्ठच्छन्महादेवप्रसादतः। ३-१०७अ-१०ब्
ऊर्ध्ववाहुर्निरालम्बः पादाङ्गुष्ठाश्रितावनिः ॥ ३-१०७अ-११अ
वायुभक्षो निराहारो भक्तियुक्तेन चेतसा। ३-१०७अ-११ब्
तत आविरभूद्देवः पिनाकी वृपभध्वजः ॥ ३-१०७अ-१२अ
परंब्रह्म परं धाम परमात्मा सनातनः। ३-१०७अ-१२ब्
आनादिमध्यनिधनः शङ्करः सर्वपूजितः ॥ ३-१०७अ-१३अ
भगीरथोपि तं दृष्ट्वा भगवान्तमुमापतिम्। ३-१०७अ-१३ब्
प्रणिपत्य महादेवमस्तौषीद्विविधैः स्तवैः ॥ ३-१०७अ-१४अ

स्तुत्वा च विविधै स्तोत्रैः कृताञ्जलिपुटो नृपः। ३-१०७अ-१४ब्
अयाचत वरं देवं गङ्गाया धारणं प्रति ॥ ३-१०७अ-१५अ
भगवंस्तपसा तुष्टोब्रह्मा मे स्वर्गवासिनीम्। ३-१०७अ-१५ब्
गङ्गां संप्रेषयामीति ददौ वरमनुत्तमम् ॥ ३-१०७अ-१७अ
तां वै धारयितुं शक्तं नान्यं पश्यामि शूलिनः। ३-१०७अ-१७ब्
तं तोषय महाराजेत्पेवमुक्त्या दिवं गतः ॥ ३-१०७अ-१८अ
भवत्प्रसादसिद्ध्यर्थं तपस्तप्तं मया विभो। ३-१०७अ-१८ब्
भवता धृतया देव गङ्गया पूतया मम। ३-१०७अ-१८च्
पितामहाश्च लोकाश्च सर्वे सद्गतिमाप्नुयुः ॥ ३-१०७अ-१९अ
एवंसंप्रार्थितो देवस्तथा चक्रे महेश्वरः ॥ ३-१०७अ-२०अ
ब्रह्मणा समनुज्ञता गङ्गाऽपिक्रोधमूर्च्छिता। ३-१०७अ-२०ब्
विशाम्यहं तु पातालं स्रोतसा गृह्य शङ्करम् ॥ ३-१०७अ-२१अ
इत्याग्रहान्महाराज शिवे शिवशिरस्युत। ३-१०७अ-२१ब्
पतित्वा तव वभ्राम वहन्वर्षान्विमोहिता। ३-१०७अ-२१च्
तृणेऽवश्यायकणिका यथा तद्वत्स्थिताक्वचित् ॥ ३-१०७अ-२२अ
तामदृष्ट्वाऽथ भूपालस्तोपयामास शङ्करम्। ३-१०७अ-२२ब्
पुनश्च व्यसृजद्देवो गङ्गां वै गूहितां नृप ॥ ३-१०७अ-२३अ
प्रणिपत्य महादेवं पुरा राजा भगीरथः। ३-१०७अ-२३ब्
पितॄनाप्लावयामास सागरं चाप्यपूरयत् ॥ ३-१०७अ-२४अ
तेऽपि स्वर्गं गता राजन्सगरस्यात्मजाः क्षणात्। ३-१०७अ-२४ब्
पितृभ्यश्चोदकं तत्रददौ पूर्णमनोरथः ॥ ३-१०७अ-२५अ
एतत्ते सर्वमाख्यातं यन्मां त्वं परिपृच्छसि। ३-१०७अ-२५ब्
एवं स सागरो राजन्पूरितोऽगस्त्यदूपितः ॥

---

वन-अध्यय१०८
॥ श्रीः ॥
३.१०८. अध्यायः १०८

Mahabharata - Vana Parva - Chapter Topics
दिलीपसुतेन भगीरथेन धरणीतलावतरणाय गङ्गांप्रति
तपश्चरणम् ॥ १ ॥
तथा धरणीतलमवतरन्त्या गङ्गाया वेगाधारणाय तदाज्ञया तपसा
शंकरतोषणम् ॥ २ ॥

Mahabharata - Vana Parva - Chapter Text

३-१०८-० (२०२६५)

लोमश उवाच। ३-१०८-०क्ष् (२०५७)
स तु राजा महेष्वासश्चक्रवर्ती महारथः ।
बभूव सर्वलोकस् मनोनयननन्दनः ॥ ३-१०८-१ (२०२६६)
स शुश्राव महाबाहुः कपिलेन महात्मना ।
पितॄणआं निधनं घोरमप्राप्तिं त्रिदिवस्य च ॥ ३-१०८-२ (२०२६७)
स राज्यं सचिवे न्यस्य हृदयेन विदूयता ।
जगाम हिमवत्पार्श्वं तपस्तप्तुं नरेश्वरः ॥ ३-१०८-३ (२०२६८)
आरिराधयिषुर्गङ्गां तपसा दग्धकिल्विषः ।
सोऽपश्यत नरेष्ठ हिमवन्तं नगोत्तमम् ॥ ३-१०८-४ (२०२६९)
शृङ्गैर्बहुविधाकारैर्धातुमद्भिरलंकृतम् ।
पवनालम्बिभिर्मेघैः परिपिक्तं समन्ततः ॥ ३-१०८-५ (२०२७०)
नदीकुञ्जनितम्बैश्च सोदकैरुपशोभितम् ।
गुहाकन्दरसंलीनसिंहव्याघ्रनिषेवितम् ॥ ३-१०८-६ (२०२७१)
शकुनैश्च विचित्राङ्गैः कूजद्भिर्विविधा गिरः ।
भृङ्गराजैस्तथा हंसैर्दात्यूहैर्जलकुक्कुटैः ॥ ३-१०८-७ (२०२७२)
मयूरैः शतपत्रैश्च जीवंजीवककोकिलैः ।
चकोरैरसितापाङ्गैस्तथा पुत्रप्रियैरपि ॥ ३-१०८-८ (२०२७३)
जलस्थानेषु रम्येषु पद्मिनीभिश्च संकुलम् ।
सारसानां च मधुरैर्व्याहृतैः समलंकृतम् ॥ ३-१०८-९ (२०२७४)
किन्नरैरप्सरोभिश्च निषेवितशिलातलम् ।
दिग्वारणविषाणाग्रैः समन्ताद्घृष्टपादपम् ॥ ३-१०८-१० (२०२७५)
विद्याधरानुचरितं नानारत्नसमाकुलम् ।
विषोल्वणैर्भुजङ्गैश्च दीप्ताजिह्वैर्निषेवितम् ॥ ३-१०८-११ (२०२७६)
क्वचित्कनकसंकाशं क्वचिद्रजतसंनिभम् ।
क्वचिदञ्जनपुञ्जाभं हिमवनतमुपागमत् ॥ ३-१०८-१२ (२०२७७)
स तु तत्रनरश्रेष्ठस्तपो घोरं समाश्रितः ।
फलमूलाम्बुसंभक्षः सहस्रपरिवत्सरान् ॥ ३-१०८-१३ (२०२७८)
संवत्सरसहस्रे तु गते दिव्ये महानदी ।
दर्शयामास तं गङ्गा तदा मूर्तिमती स्वयम् ॥ ३-१०८-१४ (२०२७९)
गङ्गोवाच। ३-१०८-१५क्ष् (२०५८)
किमिच्छसि महाराज म्तः किंच ददानि ते ।
तद्ब्रवीहि नरश्रेष्ठ करिष्यामि वचस्तव ॥ ३-१०८-१५ (२०२८०)
एवमुक्तः प्रत्युवाच राजा हैमवतीं नदीम् ।
ग्तदा भगीरथो राजन्प्रणिपत्य कृताञ्जलिः'।
पितामहा मे वरदे कपिलेन महानदि ॥ ३-१०८-१६ (२०२८१)
अन्वेषमाणास्तुरगं नीता वैवस्वतक्षयम् ।

षष्टिस्तानि सहस्राणि सागराणां महात्मनाम् ॥ ३-१०८-१७ (२०२८२)
कपिलं देवमासाद्य क्षणेन निधनं गताः ।
तेषामेवं विनष्टानां स्वर्गे वासो न विद्यते ॥ ३-१०८-१८ (२०२८३)
यावत्तानि शरीराणि त्वं जलैर्नाभिषिञ्चसि ।
तावत्तेषां गतिर्नास्ति सागराणां महानदि ॥ ३-१०८-१९ (२०२८४)
स्वर्गं नय महाभागे मत्पितॄन्सगरात्मजान् ।
तेषामर्थेऽभियाचामि त्वामहं वै महानदि ॥ ३-१०८-२० (२०२८५)
लोमश उवाच। ३-१०८-२१क्ष् (२०५९)
एतच्छ्रुत्वा वचो राज्ञो गङ्गा लोकनमस्कृता ।
भगीरथमिदं वाक्यं सुप्रीता समभाषत ॥ ३-१०८-२१ (२०२८६)
करिष्यामि माहाराज वचस्ते नात्र संशयः ।
वेगं तु मम दुर्धार्यं पतन्त्या गगनाच्च्युतम् ॥ ३-१०८-२२ (२०२८७)
न शक्तस्त्रिषु लोकेषु कश्चिद्धारयितुं नृप ।
अन्यत्र विबुधश्रेष्ठान्नीलकण्ठान्महेश्वरात् ॥ ३-१०८-२३ (२०२८८)
तं तोषय रमहाबाहो तपसा वरदं हरम् ।
स तु मां प्रच्युतां देवः शिरसा धारयिष्यति ॥ ३-१०८-२४ (२०२८९)
स करिष्यति ते रकामं पितॄणां हितकाम्यया ।
ग्तपसाऽऽराधितः शंभुर्भगवाँल्लोकभावनः' ॥ ३-१०८-२५ (२०२९०)
एतच्छ्रुत्वा ततो राजन्महाराजो भगीरथः ।
कैलासं पर्वतं गत्वा तोषयामास शंकरम् ॥ ३-१०८-२६ (२०२९१)
ततस्तेन समागम्य कालयोगेन केनचित् ।
ग्गह्गावतरणं राजन्नयाचत महीपतिः ॥ ३-१०८-२७ (२०२९२)
अगृह्णाच्च वरं तस्माद्गङ्गाया धारणे नृप ।
स्वर्गे वासं समुद्दिश् पितॄणां स नरोत्तमः ॥ ३-१०८-२८ (२०२९३)

इति श्रीमन्महाभारते अरण्यपर्वणि तीर्थयात्रापर्वणि
अष्टाधिकशततमोऽध्यायः ॥ १०८ ॥

Mahabharata - Vana Parva - Chapter Footnotes

३-१०८-२२ गगनाच्च्युतं यथा भवति तथा पतन्त्याः
। गगनाद्भुवमिति झ। पाठः ॥

---

वन-अध्यय१०९
॥ श्रीः ॥
३.१०९. अध्यायः १०९

Mahabharata - Vana Parva - Chapter Topics

Mahabharata - Vana Parva - Chapter Text

३-१०९-० (२०२९४)
३-१०९-२२ (२०३१६)
Mahabharata - Vana Parva - Chapter Footnotes

३-१०९- ३-१०९- ३-१०९- ३-१०९- ३-१०९- ३-१०९- ३-१०९- ३-१०९-
३-१०९- ३-१०९-

---

वन-अध्यय११०
॥ श्रीः ॥
३.११०. अध्यायः ११०

Mahabharata - Vana Parva - Chapter Topics
Mahabharata - Vana Parva - Chapter Text

३-११०-० (२०३१७)
३-११०-१ (२०३१८)
३-११०-२२ (२०३३९)
Mahabharata - Vana Parva - Chapter Footnotes

३-११०- ३-११०- ३-११०- ३-११०- ३-११०- ३-११०- ३-११०- ३-११०-
३-११०- ३-११०-

---

वन-अध्यय१११
॥ श्रीः ॥
३.१११. अध्यायः १११

Mahabharata - Vana Parva - Chapter Topics
युधिष्ठिरेण कौशिकीतीरे ऋश्यशृङ्गाश्रमगमनम् ॥ १ ॥
लोमशेन युधिष्ठिरंप्रति
विभाण्डकान्मृग्यामृश्यशृङ्गोत्पत्तिकथनम् ॥ २ ॥
लोमपादेनानावृष्टिनिवृत्तये ऋश्यशृङ्गानयनं
चोदिताभिर्वेश्याभिस्तद्वनगमनम् ॥ ३ ॥

Mahabharata - Vana Parva - Chapter Text

३-१११-० (२०३४०)
लोमश उवाच। ३-१११-०क्ष् (२०६३)
एषा देवनदी पुण्या कौशिकी भरतर्षभ ।
विश्वामित्राश्रमो रम्य एष चात्र प्रकाशते ॥ ३-१११-१ (२०३४१)
आश्रमश्चैव पुण्याख्यः काश्यपस्य महात्मनः ।
ऋश्यशृङ्गः सुतो यस् तपस्वी संयतेन्द्रियः ॥ ३-१११-२ (२०३४२)
तपसो यः प्रभावेन वर्षयामास वासवम् ।
अनावृष्ट्यां भयाद्यस्य ववर्ष बलवृत्रहा ॥ ३-१११-३ (२०३४३)
मृग्यां जातः स तेजस्वी काश्यपस्य सुतः प्रभुः ।
विषये लोमपादस्य यश्चकाराद्भुतं महत् ॥ ३-१११-४ (२०३४४)
निर्वर्तितेषु सस्येषु यस्मै शान्तां ददौ नृपः ।
लोमपादो दुहितरं सावित्रीं सविता यथा ॥ ३-१११-५ (२०३४५)
युधिष्ठिर उवाच। ३-१११-६क्ष् (२०६४)
ऋश्यशृङ्गः कथं मृग्यामुत्पन्नः काश्यपात्मजः ।
विरुद्धयोनिसंसर्गः कथं च तपसा युतः ॥ ३-१११-६ (२०३४६)
किमर्थं च भयाच्छक्रस्तस्य बालस्य धीमतः ।
अनावृष्ट्यां प्रवृत्तायां ववर्ष बलवृत्रहा ॥ ३-१११-७ (२०३४७)
कथंरूपा च सा शान्ता राजपुत्री पतिव्रता ।
लोभयामास या चेतो मृगभूस्य तस्य वै ॥ ३-१११-८ (२०३४८)
लोमपादश्च राजर्षिर्यदाऽश्रूयत धार्मिकः ।
कथं वै विषये तस्य नावर्षत्पाकशासनः ॥ ३-१११-९ (२०३४९)
एतन्मे भगवन्सर्वं विस्तरेण यथातथम् ।
वक्तुमर्हसि शुश्रूषोर्ऋश्यशृङ्गस् चेष्टितम् ॥ ३-१११-१० (२०३५०)
लोमश उवाच। ३-१११-११क्ष् (२०६५)
विभाण्डकस्य ब्रह्मर्षेस्तपसा भावितात्मनः ।
अमोघवीर्यस्य सतः प्रजापतिसमद्युतेः ॥ ३-१११-११ (२०३५१)
शृणु पुत्रो यथा जात ऋश्यशृङ्गः प्रतापवान् ।
महाह्रदे महातेजा बालः स्थविरसंभतः ॥ ३-१११-१२ (२०३५२)
महाह्रदं समासाद्य काश्यपस्तपसि स्थितः ।
दीर्घकालं रिश्रान्त ऋषिर्देवर्षिसंमितः ॥ ३-१११-१३ (२०३५३)
तस्य रेतः प्रचस्कन्द दृष्ट्वाऽप्सरसमुर्वशीम् ।
अप्सूपस्पृशतो राजन्मृगी तच्चापिबत्तदा ।
सह तोयेन तृषिता गर्भिणी चाभवत्ततः ॥ ३-१११-१४ (२०३५४)
सा पुरोक्ता भगवता ब्रह्मणा लोककर्तृणा ।
देवकन्या मृगी भूत्वा मुनिं सूय विमोक्ष्यसे ॥ ३-१११-१५ (२०३५५)
अमोघत्वाद्विधेश्चैव भावित्वाद्दैवनिर्मितात् ।

तस्यां मृग्यां समभवत्तस्य पुत्रो महानृषिः ।
ऋश्यशृङ्गस्तपोनित्यो वन एवाभ्यवर्धत ॥ ३-१११-१६ (२०३५६)
तस्य शृङ्गं शिरसि वै राजन्नासीन्महात्मनः ।
तेनर्श्यशृङ्ग इत्येवं तदा स प्रथितोऽभवत् ॥ ३-१११-१७ (२०३५७)
न तेन दृष्टपूर्वोऽन्यः पितुरन्यत्रमानुषः ।
तस्मात्तस्य मनो नित्यं ब्रह्मचर्येऽभवन्नृप ॥ ३-१११-१८ (२०३५८)
एतस्मिन्नेव काले तु सखा दशरशस्य वै ।
कलोमपाद इतिख्यातो ह्यङ्गानामीश्वरोऽभवत् ॥ ३-१११-१९ (२०३५९)
तेन कामः कृतो मिथ्या ब्राह्मणेभ्य इति श्रुतिः ।
ग्दैवोपहतसत्त्वेन धर्मज्ञेनापि भारत'।
स ब्राह्मणैः परित्यक्तस्तदा भरतसत्तम ॥ ३-१११-२० (२०३६०)
पुरोहितापचाराच्च तस्य राज्ञो यदच्छया ।
न ववर्ष सहस्राक्षस्ततोऽपीड्यन्त वै प्रजाः ॥ ३-१११-२१ (२०३६१)
स ब्राह्मणान्पर्यपृच्छत्तपोयुक्तान्मनीषिणः ।
प्रवर्षणे सुरेन्द्रस्य समर्थान्पृथिवीपते ॥ ३-१११-२२ (२०३६२)
कथं प्रवर्षेत्पर्जन्य उपायः परिमृश्यताम् ।
तमूचुश्चोदितास्ते तु स्वमतानि मनीषिणः ॥ ३-१११-२३ (२०३६३)
तत्र त्वेको रमुनिवरस्तं राजानमुवाच ह ।
कुपितास्तव राजेन्द्र ब्राह्मणा निष्कृतिं चर ॥ ३-१११-२४ (२०३६४)
ऋश्यशृङ्गं मुनिसुतमानयस्व च पार्थिव ।
ऐणेयमनभिज्ञं च नारीणामार्जवे रतम् ॥ ३-१११-२५ (२०३६५)
स चेदवतरेद्राजन्विषयं ते महातपाः ।
सद्यः प्रवर्षेत्पर्जन्य इति मे नास्ति संशयः ॥ ३-१११-२६ (२०३६६)
एतच्छ्रुत्वा वचो राजन्कृत्वा निष्कृतिमात्मनः ।
स गत्वा पुनरागच्छत्प्रसन्नेषु द्विजातिषु ॥ ३-१११-२७ (२०३६७)
राजानमागतं ज्ञात्वा प्रतिसंजगृहुः प्रजाः ।
ग्स च ता प्रतिजग्राह पितेव हितकृत्सदा' ॥ ३-१११-२८ (२०३६८)
ततोऽङ्गपतिराहूय सचिवान्मन्त्रकोविदान् ।
ऋश्यशृङ्गागमे यत्नमकरोन्मन्त्रनिश्चये ॥ ३-१११-२९ (२०३६९)
सोऽध्यगच्छदुपायं तु तैरमात्यैः सहाच्युतः ।
शास्त्रज्ञैरलमर्थज्ञैर्नीत्यां च परिनिष्ठितैः ॥ ३-१११-३० (२०३७०)
ततश्चानाययामास वारमुख्या महीपतिः ।
वेश्याः सर्वत्रनिष्णातास्ता उवाच स पार्थिवः ॥ ३-१११-३१ (२०३७१)
ऋश्यशृङ्गमृषेः पुत्रमानयध्वमुपायतः ।
लोभयित्वाऽभिविश्वास्य विषयं मम शोभनाः ॥ ३-१११-३२ (२०३७२)
ता राजभयभीताश्च शापभीताश्च योषितः ।

अशक्यमूचुस्तत्कार्यं विषण्णा गतचेतसः ॥ ३-१११-३३ (२०३७३)
तत्र त्वेका जरद्योषा राजानमिदमब्रवीत् ।
प्रयतिष्ये महाराज तमानेतुं तपोधनम् ॥ ३-१११-३४ (२०३७४)
अभिप्रेतांस्तु मे कामांस्त्वमनुज्ञातुमर्हसि ।
ततः शक्ष्याम्यानयितुमृश्यशृङ्गमृषेः सुतम् ॥ ३-१११-३५ (२०३७५)
तस्याः सर्वमभिप्रेतमन्वजानात्स पार्थिवः ।
धनं च प्रददौ भूरि रत्नानि विविधानि च ॥ ३-१११-३६ (२०३७६)
ततो रूपेण सपन्ना वयसा च महीपते ।
स्त्रिय आदाय काश्चित्सा जगाम वनमञ्जसा ॥ ३-१११-३७ (२०३७७)

इति श्रीमन्महाभारते अरण्यपर्वणि तीर्थयात्रापर्वणि
एकादशाधिकशततमोऽध्यायः ॥ १११ ॥
Mahabharata - Vana Parva - Chapter Footnotes

३-१११-२ काश्यपस्य विभाण्कस्य ॥
३-१११-३ हर्षयामास वासवमिति ध ।पाठः ॥
३-१११-१० शुस्रूषोर्मे इति संबन्धः ॥
३-१११-१५ सूय प्रसूय ॥
३-१११-१६ विधेः विधिवाक्यस्य दैवनिर्मिताद्धेतोः भावित्वात्
अपरिहार्यत्वाच्च ॥
३-१११-१९ अङ्गानां देशानाम् ॥
३-१११-२० मिथ्याकृतः मया तुभ्यं दातुं किमपि न
प्रतिश्रुतमित्यपलापं कृतवानित्यर्थः ॥
३-१११-२४ निष्कृतिं प्रायश्चित्तम् ॥
३-१११-२५ मुनिसुतमाह्वयस्वचेति क ।पाठः ॥
३-१११-३१ सर्वत्र परवञ्चनादौ निष्णाताः कुशलाः ॥
३-१११-३४ जरद्योषा वृद्धास्त्री ॥
३-१११-३६ अन्वजानात् अजुज्ञातवान् ॥

---

वन-अध्यय११२
॥ श्रीः ॥
३.११२. अध्यायः ११२

Mahabharata - Vana Parva - Chapter Topics
विभाण्डकस्यासन्निधाने तदाश्रमं प्रविष्टया वेश्यायुवत्या विलासै
र्ऋश्यशृङ्गं प्रलोभ्य पुनः स्वावासगमनम् ॥ १ ॥

आगतेन विभाण्डकेन वेश्याविलासमुग्धचेतसं सुतंप्रति मोहकारणप्रश्नः ॥ २ ॥

Mahabharata - Vana Parva - Chapter Text

३-११२-० (२०३७८)
लोमश उवाच। ३-११२-०क्ष् (२०६६)
सा तु नाव्याश्रमं चक्रे राजकार्यार्थसिद्धये ।
संदेशाच्चैव नृपतेः स्वबुद्ध्या चैव भारत ॥ ३-११२-१ (२०३७९)
नानापुष्पफलैर्वृक्षैः कृत्रिमैरुपशोभितैः ।
नानागुल्मलतोपेतैः स्वादुकामफलप्रदैः ॥ ३-११२-२ (२०३८०)
अतीव रमणीयं तदतीव च मनोहरम् ।
चक्रे नाव्याश्रमं रम्यमद्भुतोपमदर्शनम् ॥ ३-११२-३ (२०३८१)
ततो निवध्य सा नावमदूरे काश्यपाश्रमात् ।
चारयामास पुरुषैर्विहारं तस्य वै मुनेः ॥ ३-११२-४ (२०३८२)
ततो दुहितरं वेश्यां समाधायेतिकार्यताम् ।
दृष्ट्वाऽन्तरं काशय्पस्य प्राहिणोद्बुद्धिसंमताम् ॥ ३-११२-५ (२०३८३)
सा तत्र गत्वा कुशला तपोनित्यस्य संनिधौ ।
आश्रमं तं समासाद्य ददर्श तमृषेः सुतम् ॥ ३-११२-६ (२०३८४)
वेश्योवाच। ३-११२-७क्ष् (२०६७)
कच्चिन्मुने कुशलं तापसानां
कच्चिच्च वो मूलफलं प्रभूतम् ।
कच्चिद्भवान्रमते चाश्रेऽस्मिं-
स्त्वां वै द्रष्टुं सांप्रतमागतास्मि ॥ ३-११२-७ (२०३८५)
कच्चित्तपो वर्धते तापसानां
पिता च ते कच्चिदहीनतेजाः ।
कच्चित्त्वया प्रीयतेचैव विप्र
कच्चित्स्वाध्यायः क्रियते चर्श्यशृङ्गः ॥ ३-११२-८ (२०३८६)
ऋश्यशृङ्ग उवाच। ३-११२-९क्ष् (२०६८)
ऋद्ध्या भवाञ्ज्योतिरिव प्रकाशते
मन्ये चाहं त्वामभिवादनीयम् ।
पाद्यं वै ते संप्रदास्यामि कामा-
द्यथाधर्मं फलमूलानि चैव ॥ ३-११२-९ (२०३८७)
कौश्यां बृस्यामास्स्व यथोपजोषं
कृष्णाजिनेनावृतायां सुखाय ।
क्व चाश्रमस्तव किं नाम चेदं

व्रतंब्रह्मंश्चरसि हि देववत्त्वम् ॥ ३-११२-१० (२०३८८)
वेश्योवाच। ३-११२-११क्ष् (२०६९)
ममाश्रमः काश्यपपुत्र रम्य-
स्त्रियोजनं शैलमिमं परेण ।
तत्रस्वधर्मोऽनभिवादनं नो
न चोदकं पाद्यमुपस्पृशामः ॥ ३-११२-११ (२०३८९)
भवता नाभिवाद्योऽहमभिवाद्यो भवान्मया ।
व्रतमेतादृशं ब्रह्मन्परिष्वज्यो भवान्मया ॥ ३-११२-१२ (२०३९०)
ऋश्यशृङ्ग उवाच। ३-११२-१३क्ष् (२०७०)
फलानि पक्वानि ददानि तेऽहं
भल्लातकान्यामलकानि चैव ।
करूषकानीङ्गुदधन्वनानि
प्रियालानां काङ्क्षितं वै कुरुष्व ॥ ३-११२-१३ (२०३९१)
लोमश उवाच। ३-११२-१४क्ष् (२०७१)
सा तानि सर्वाणि विसर्जयित्वा
भक्ष्याण्यनर्हाणि ददौ ततोऽस्मै ।
तान्यृश्यशृङ्गाय महारसानि
भृशं सुरूपाणि च मोदकानि ॥ ३-११२-१४ (२०३९२)
ददौ च माल्यानि सुगन्धवन्ति
चित्राणि वासांसि च भानुमन्ति ।
पेयानि चाग्र्याणि ततो मुमोद
चिक्रीड चैव प्रजहास चैव ॥ ३-११२-१५ (२०३९३)
सा कन्दुकेनारमतास्य मूले
विभज्यमाना फलिता लतेव ।
गात्रैश्च गात्राणि निषेवमाणा
समाश्लिषच्चासकृदृश्यशृङ्गम् ॥ ३-११२-१६ (२०३९४)
सर्जानशोकांस्तिलकांश्च वृक्षा-
न्सुपुष्पितानवनाम्यावभज्य ।
विलज्जमानेव मदाभिभूता
प्रोभयामास सुतं महर्षेः ॥ ३-११२-१७ (२०३९५)
अथर्श्यशृङ्गं विकृतंसमीक्ष्य
पुनः पुनः पीज्य च कायमस्य ।
अवेक्ष्यमाणा शनकैर्जगाम
कृत्वाऽग्निहोत्रस्य तदाऽपदेशम् ॥ ३-११२-१८ (२०३९६)
तस्यां गतायां मदनेन मत्तो
विचेतनश्चाभवदृश्यशृङ्गः ।

तामेव भावेन गतेन शून्ये
विनिःश्वसन्नार्तरूपो बभूव ॥ ३-११२-१९ (२०३९७)
ततो मुहूर्ताद्धरिपिङ्गलाक्षः
प्रवेष्टितो रोमभिरानखाग्रात् ।
स्वाध्यायवान्वृत्तसमाधियुक्तो
विभाण्डकः काश्यपः प्रादुरासीत् ॥ ३-११२-२० (२०३९८)
सोऽपश्यदासीनमुपेत्य पुत्रं
ध्यायन्तमेकं विपरीतचित्तम् ।
विनिःश्वसन्तं मुहुरूर्ध्वदृष्टिं
विभाण्कः पुत्रमुवाच दीनम् ॥ ३-११२-२१ (२०३९९)
न कल्पिताः समिधः किंनु तात
कच्चिद्धुतं चाग्निहोऽत्रं त्वयाऽद्य ।
ग्न संसृष्टं क्रियते द्वारभागे
सुवृक्षाणा खण्डने कः प्रवृत्तः' ॥ ३-११२-२२ (२०४००)
सुनिर्णिक्तं स्रुक्स्रुवं होमधेनुः
कच्चित्सवत्साद्यकृता त्वया च ।
ग्कोप्यागतः शुश्रूषणायेह पुत्र
कुतश्चित्रं माल्यमिदं प्रवृद्धम्' ॥ ३-११२-२३ (२०४०१)
न वै यथापूर्वमिवासि पुत्र
चिन्तापरश्चासि विचेतनश्च ।
दीनोतिमात्रं किमिवाद्य खिन्नः
पृच्छामि त्वां क इहाद्यागतोऽभूत् ॥ ३-११२-२४ (२०४०२)

इति श्रीमन्महाभारते अरण्यपर्वणि तीर्थयात्रापर्वणि
द्वादशाधिकशततमोऽध्यायः ॥११२ ॥
Mahabharata - Vana Parva - Chapter Footnotes

३-११२-१ सा तु नार्याश्रमं चक्रे इति क । ध पाठः। नाव्याश्रमं
नावा तार्यमाश्रमम् ॥
३-११२-४ मुनेर्विभाण्डकस्य विहारं बहिर्गमनं चारयामास
चारैरधिगतवती ॥
३-११२-५ समाधाय बोधयित्वा । इतिकार्यातां इतिकर्तव्यताम्। अन्तरं
असान्निध्यम् ॥
३-११२-१० कौश्यां बृस्यामास्व कुशासने उपविश । यथोपजोषं
यथासुखम् ॥
३-११२-१४ अनर्हाणि अमूल्यानि ॥

३-११२-१६ मूले समीपे । विभज्यमाना अङ्गमोटनादीनि कुर्वाणा ॥
३-११२-१८ कायं देहं पीड्य आलिङ्ग्येत्यर्थः । अपदेशं छलम् ॥
३-११२-१९ भावेनाभिप्राये ॥
३-११२-२० प्रवेष्टितो व्याप्तः ॥
३-११२-२३ निर्णिक्तं प्रक्षालितम् । सवत्सा कृता। दोहनायेति शेषः ॥

---

वन-अध्यय११३
॥ श्रीः ॥
३.११३. अध्यायः ११३

Mahabharata - Vana Parva - Chapter Topics
ऋश्यशृङ्गेण विभाण्डकंप्रति भ्रमाद्वेश्याकुमार्यां
मुनिकुमारत्वव्यपदेशेन तदागमनोक्तिपूर्वकं
तदङ्गचेष्टाविलासैस्तस्यामेव स्वचित्तासक्त्युक्तिः ॥ १ ॥

Mahabharata - Vana Parva - Chapter Text

३-११३-० (२०४०३)
ऋश्यशृङ्ग उवाच। ३-११३-०क्ष् (२०७२)
इहागतो जटिलो ब्रह्मचारी
न वै ह्रस्वो नातिदीर्घो मनस्वी ।
सुवर्णवर्णः कमलायताक्षः
सुतः सुराणामवि शोभमानः ॥ ३-११३-१ (२०४०४)
समृद्धरूपः सवितेव दीप्तः
सुश्लक्ष्णवाक्कृष्णतारश्चकोरात् ।
नीलाः प्रसन्नाश्च जटाः सुगन्धा
हिरण्यरज्जुग्रथिताः सुदीर्घाः ॥ ३-११३-२ (२०४०५)
आधारभूतः पुनरस्य कण्ठे
विभ्राजते विद्युदिवान्तरिक्षे ।
द्वौ चास् पिण्डावधरेण कण्ठा-
दजातरोमौ सुमनोहरौ च ॥ ३-११३-३ (२०४०६)
विलग्नमध्यश्च स नाभिदेशे
कटिश्च तस्यातिकृतप्रमाणा ।
तथाऽस् चीरान्तरतः प्रभाति
हिरण्मयी मेखला मे यथेयम् ॥ ३-११३-४ (२०४०७)
अन्यच्च तस्याद्भुतदर्शनीयं

विकूजितं पादयोः संप्रभाति ।
पाण्योश्च तद्वत्स्वनवन्निबद्धौ
कलापकावक्षमाला यथेयम् ॥ ३-११३-५ (२०४०८)
विचेष्टमानस्य च तस्य तानि
कूजन्ति हंसाः सरसीव मत्ताः ।
चीराणि तस्याद्भुतदर्शनानि
नेमानि तद्वन्मम रूपवन्ति ॥ ३-११३-६ (२०४०९)
वक्रं च तस्याद्भुतदर्सनीयं
प्रव्याहृतं ह्लादयतीव चेतः ।
पिंस्कोकिलस्येव च तस्य वाणि
तां शृण्वतो मे व्यथितोऽन्तरात्मा ॥ ३-११३-७ (२०४१०)
यथा वनं माधवमासिमध्ये
समीरीतं श्वसनेनेव भाति ।
तथा स भात्युत्तमपुण्यगन्धी
निषेव्यमाणः पवनेन तात ॥ ३-११३-८ (२०४११)
सुसंवताश्चापि जटा विभक्ता
द्वैधीकृता भातिललाटदेशे ।
कर्णौ च चित्रैरिव चक्रवाकैः
समावृतौ तस्य सुरूपवद्भिः ॥ ३-११३-९ (२०४१२)
तथा फलं वृत्तमथो विचित्रं
समाहतं पाणिना दक्षिणेन ।
तद्भूमिमासाद्य पुनःपुनश्च
समुत्पतत्यद्भुतरूपमुच्चैः ॥ ३-११३-१० (२०४१३)
तच्चाभिहत्वा परिवर्ततेऽसौ
वातेरितो वृक्ष इवावघूर्णम् ।
तं प्रेक्षतः पुत्रमिवामराणां
प्रीतिः परा तात रतिश्च जाता ॥ ३-११३-११ (२०४१४)
स मे समाश्लिष्य पुनः शरीरं
जटासु गृह्याभ्यवनाम्य वक्रम् ।
वक्रेण वक्रं प्रणिधाय शब्दं
चकार तन्मेऽजनयत्प्रहर्षम् ॥ ३-११३-१२ (२०४१५)
न चापि पाद्यं बहुमन्यतेऽसौ
फलानि चेमानि मया हृतानि ।
एवंव्रतोस्मीति च मामवोच-
त्फलानि चान्यानि नवान्यदान्मे ॥ ३-११३-१३ (२०४१६)
मयोपयुक्तानि फलानि यानि

नेमानि तुल्यानि रसेन तेषाम् ।
न चापि तेषां त्वगियं यथैषां
साराणि नैषामिव सन्ति तेषाम् ॥ ३-११३-१४ (२०४१७)
तोयानि चैवातिरसानि मह्यं
प्रादात्स वै पातुमुदाररूपः ।
पीत्वैव यान्यभ्यधिकः प्रहर्षो
ममाभवद्भूश्चलितेव चासीत् ॥ ३-११३-१५ (२०४१८)
इमानि चित्राणि च गन्धवन्ति
माल्यानि तस्योद्ग्रथितानि पट्टैः ।
यानि प्रकीर्येह गतः स्वमेव
स आश्रमं तपसा द्योतमानः ॥ ३-११३-१६ (२०४१९)
गतेन तेनास्मिकृतो विचेता
गात्रं च मे संपरिदह्यतीव ।
इच्छामि तस्यान्तिकमाशु गन्तुं
तं चेह नित्यं परिवर्तमानम् ॥ ३-११३-१७ (२०४२०)
गच्छामि तस्यान्तिकमेव तात
का नाम सा ब्रह्मचर्या च तस्य ।
इच्छाम्यहं चरितुं तेन सार्धं
यथा तपः स चरत्यार्यधर्मा ॥ ३-११३-१८ (२०४२१)
चर्तुं तथेच्छा हृदये ममास्ति
दुनोति चित्तं यदि तं न पश्ये ॥ ३-११३-१९ (२०४२२)

इति श्रीमन्महाभारते अरण्यपर्वणि तीर्थयात्रापर्वणि
त्रयोदशाधिकशततमोऽध्यायः ॥ ११३ ॥
Mahabharata - Vana Parva - Chapter Footnotes

३-११३-३ आधाररूपा पुनरिति झ ।ध। पाठः ॥
३-११३-५ कलापकौ भूषणविशेषौ ।स्वार्थे
कः। कङ्कणावित्यर्थः। विकुञ्चितं पादयोः संप्रभाति इति ध। पाठः
॥
३-११३-१० तथा फलं फलसदृशं कन्दुकम् ॥
३-११३-११ प्रीतिराह्लादः ।रतिरासक्तिः ॥

---

वन-अध्यय११४
॥ श्रीः ॥
३.११४. अध्यायः ११४

Mahabharata - Vana Parva - Chapter Topics

पुनर्विभाण्डकासन्निधाने तदाश्रमं गतया गणिकातरुण्या नौकारोपणेन ऋश्यशृङ्गेऽङ्गदेशमानीते महावृष्टेराविर्भावः ॥ १ ॥
ऋश्यशृङ्गेण लोमपादप्रार्थनया शान्ताभिधायास्तत्सुतायाः परिणयनम् ॥ २ ॥
लोमपादेन क्रुद्धस् विभाण्डकस्य प्रसादनम् ॥ ३ ॥
ऋश्यशृङ्गेण पितृशासनादङ्गदेशे तनयोदयावधिनिवासपूर्वकं ततः सहभार्यया निजाश्रमाभिगमनम् ॥ ४ ॥

Mahabharata - Vana Parva - Chapter Text

३-११४-० (२०४२३)
विभाण्डक उवाच। ३-११४-०क्ष् (२०७३)
रक्षांसि चैतानि चरन्ति पुत्र
रूपेण तेनाद्भुतदर्शनेन ।
अतुल्यवीर्याण्यभिरूपवन्ति
विघ्नं सदा तपसश्चिन्तयन्ति ॥ ३-११४-१ (२०४२४)
सुरूपरूपाणि च तानि तात
प्रलोभयन्ते विविधैरुपायैः ।
सुखाच्च लोकाच्च निपातयन्ति
तान्युग्ररूपाणि मुनीन्वनेषु ॥ ३-११४-२ (२०४२५)
न तानि सेवेत मुनिर्यतात्मा
सतां लोकान्प्रार्थयानः कथंचित् ।
कृत्वा विघ्ननं तापसानां रमन्ते
पापाचारास्तापसस्तान्न पश्येत् ॥ ३-११४-३ (२०४२६)
असज्जनेनाचरितानि पुत्र
पानान्यपेयानि मधूनि तानि ।
माल्यानि चैतानि न वै मुनीनां
स्मृतानि चित्रोज्ज्वलगन्धवन्ति ॥ ३-११४-४ (२०४२७)
रक्षांसि तानीति निवार्य पुत्रं
विभाण्डकस्तां मृगयांबभूव ।
नासादयामास यदा त्र्यहेण
तदा स पर्याववृते श्रमाय ॥ ३-११४-५ (२०४२८)
यदा पुन काश्यपो वै जगाम
फलान्याहर्तुं विधिनाश्रमेऽसौ ।

तदा पुनर्लोभयितुं जगाम
सा वेशयोषा मुनिमृश्यशृङ्गम् ॥ ३-११४-६ (२०४२९)
दृष्ट्वैव तामृश्यशृङ्गः प्रहृष्टः
संभ्रान्तरूपोऽभ्यपतत्तदानीम् ।
प्रोवाच चैनां भवतः श्रमाय
गच्छाव यावन्न पिता ममैति ॥ ३-११४-७ (२०४३०)
लोमश उवाच। ३-११४-८क्ष् (२०७४)
ततो राजन्काश्यपस्यैकपुत्रं
प्रवेश्य वेगेन विमुच्य नावम् ।
प्रलोभयन्त्यो विविधैरुपायै-
राजग्मुरङ्गाधिपतेः समीपम् ॥ ३-११४-८ (२०४३१)
संस्थाप्यतामाश्रमदर्शने तु
संतारितां नावमथातिशुभ्राम् ।
तीरादुपादाय तथैव चक्रे
राजाश्रमं नाम वनं विचित्रम् ॥ ३-११४-९ (२०४३२)
अन्तःपुरे तं तु निवेश्य राजा
विभाण्डकस्यात्मजमेकपुत्रम् ।
ददर्श मेघैः सहसा प्रवृष्ट-
मापूर्यमाणं च जगज्जलेन ॥ ३-११४-१० (२०४३३)
स रोमपाद परिपूर्णकामः
सुतां ददावृश्यशृङ्गाय शान्ताम् ।
क्रोधप्रतीकारकरं च चक्रे
गोभिश्च मार्गेष्वभिकर्षणं च ॥ ३-११४-११ (२०४३४)
विभाण्डकस्याव्रजतः स राजा
पशून्प्रभूतान्पशुपांश्च वीरान् ।
समादिशत्पुत्रगृद्धी महर्षि-
र्विभाण्डकः परिपृच्छेद्यदा वः ॥ ३-११४-१२ (२०४३५)
स क्तव्यः प्राञ्जलिभिर्भवद्भिः
पुत्रस्य ते पशवः कर्षणं च ।
किं ते प्रियं वै क्रियतां महर्षे
दासाः स्म सर्वे तव वाचि बद्धाः ॥ ३-११४-१३ (२०४३६)
अथोपायात्स मुनिश्चण्डकोपः
स्वमाश्रमं मूलफलं गृहीत्वा ।
अन्वेषमाणश्च न तत्र पुत्रं
ददर्श चुक्रोध ततो भृशं सः ॥ ३-११४-१४ (२०४३७)
ततः स कोपेन विदीर्यमाण

आशङ्कमानो नृपतेर्विधानम् ।
जगाम चम्पां प्रतिधक्ष्यमाण-
स्तमङ्गराजं सपुरं सराष्ट्रम् ॥ ३-११४-१५ (२०४३८)
स वै श्रान्तः क्षुधितः काश्यपस्ता-
न्घोषान्समासादितवान्समृद्धान् ।
गोपैश्च तैर्विधिवत्पूज्यमानो
राजेव तां रात्रिमुवास तत्र ॥ ३-११४-१६ (२०४३९)
अवाप्य सत्कारमतीव हृष्टः
प्रोवाच कस्य प्रथिताः स्थ गोपाः ।
ऊचुस्ततस्तेऽभ्युपगम्य सर्वे
धनं तवेदं विहितं सुतस्य ॥ ३-११४-१७ (२०४४०)
देशेषु देशेषु स पूज्यमान-
स्तांश्चैव शृण्वन्मधुरान्प्रलापान् ।
प्रशान्तभूयिष्ठरजाः प्रहृष्टः
समाससादाङ्गपतिं पुरस्थम् ॥ ३-११४-१८ (२०४४१)
स पूजितस्तेन नरर्षभेण
ददर्श पुत्रं दिवि देवं यथेन्द्रम् ।
शान्तां स्नुषां चैव ददर्श तत्र
सौदामनीमुच्चरन्तीं यथैव ॥ ३-११४-१९ (२०४४२)
ग्रामां श्च घोषांश्च सुतस्य दृष्ट्वा
शान्तां च शान्तोऽस्य परः स कोपः ।
चकार तस्यैव परं प्रसादं
विभाण्डको भूमिपतेर्नरेद्र ॥ ३-११४-२० (२०४४३)
स तत्रनिक्षिप्य सुतं महर्षि-
रुवाच सूर्याग्निसमप्रभावः ।
जाते च पुत्रे वनमेवाव्रजेथा
राज्ञः प्रियाण्यस्य सर्वाणि कृत्वा ॥ ३-११४-२१ (२०४४४)
स तद्वचः कृतवानृश्यशृङ्गो
ययौ च यत्रास्य पिता बभूव ।
शान्ता चैनं पर्यचरन्नरेन्द्र
स्वे रोहिणी सोममिवानुकूला ॥ ३-११४-२२ (२०४४५)
अरुन्धती वा सुभगा वसिष्ठं
लोपामुद्रा वा यथा ह्यगस्त्यम् ।
नलस्य वै दमयन्ती यथा भू
द्यथा शची वज्रधरस्य चैव ॥ ३-११४-२३ (२०४४६)
नालायनी चेन्द्रसेना बभूव

वस्या नित्यं मुद्गलस्याजमीढ ।
ग्यथा सीता दाशरथेर्महात्मनो
यथा तव द्रौपदी पाण्डुपुत्र'।
तथा शान्ता ऋश्यशृङ्गं वनस्थं
प्रीत्या युक्ता पर्यचरन्नरेन्द्र ॥ ३-११४-२४ (२०४४७)
तस्याश्रमः पुण्य एषोऽवभाति
महाह्रदं शोभयन्पुण्यकीर्तिः ।
अत्रस्नातः कृतकृत्यो विशुद्ध-
स्तीर्थान्यन्यान्यनुसंयाहि राजन् ॥ ३-११४-२५ (२०४४८)

इति श्रीमन्महाभारते अरण्यपर्वणि तीर्थयात्रापर्वणि
चतुर्दशाधिकशततमोऽध्यायः ॥ ११४ ॥
Mahabharata - Vana Parva - Chapter Footnotes

३-११४-५ श्रमाय आश्रमाय ॥
३-११४-६ विधिना श्रावणेनेति झ ।पाठः। वेशयोषा वेश्या ॥
३-११४-९ आश्रमो यत्रस्थैर्दृश्यते तावतिदेशे आश्रमदर्शने
।नाव्याश्रमं नामेति झ। पाठः ॥
३-११४-११ गाश्चैव मार्गेषु च कर्षणानीति झ ।पाठः ॥

---

वन-अध्यय११५
॥ श्रीः ॥
३.११५. अध्यायः ११५

Mahabharata - Vana Parva - Chapter Topics
युधिष्ठिरेण गङ्गासागरसङ्गमादितीर्थगमनम् ॥ १ ॥
लोमशेन युधिष्ठिरंप्रति तत्तत्तीर्थाश्रममहिमानुवर्णनम् ॥ २ ॥

Mahabharata - Vana Parva - Chapter Text

३-११५-० (२०४४९)
वैशंपायन उवाच। ३-११५-०क्ष् (२०७५)
ततः प्रयातः कौशिक्याः पाण्डवो जनमेजय ।
आनुपूर्व्येण सर्वाणि जगामायतनान्यथ ॥ ३-११५-१ (२०४५०)
स सागरं समासाद्य गङ्गायाः संगमे नृप ।
नदीशतानां पञ्चानां मध्ये चक्रे समाप्लवम् ॥ ३-११५-२ (२०४५१)
ततः समुद्रतीरेण जगाम वसुधाधिपः ।

भ्रातृभिः सहितो वीरः कलिङ्गान्प्रति भारत ॥ ३-११५-३ (२०४५२)
लोमश उवाच। ३-११५-४क्ष् (२०७६)
एते कलिङ्गाः कौन्तेय यत्र वैतरणी नदी ।
यत्रायजत धर्मोपि देवाञ्शरणमेत्य वै ॥ ३-११५-४ (२०४५३)
ऋषिभिः समुपायुक्तं यज्ञियं गिरिशोभितम् ।
उत्तरं तीरमेतद्धि सततं द्विजसेवितम् ॥ ३-११५-५ (२०४५४)
समेन देवयानेन पथा स्वर्गमुपेयुषः ।
अत्रवै ऋषयोऽन्येऽपि पुरा क्रतुभिरीजिरे ॥ ३-११५-६ (२०४५५)
अत्रैव रुद्रो राजेन्द्र पशुमादत्तवान्मखे ।
पशुमादाय राजेन्द्र भागोयमिति चाब्रवीत् ॥ ३-११५-७ (२०४५६)
हृते पशौ तदा देवास्तमूचुर्भरतर्षभ ।
मा परस्वमभिद्रोग्धा माधर्म्यान्नीनशः पथः ॥ ३-११५-८ (२०४५७)
ग्स्वयं यज्ञेश्वरो भूत्वा कर्मणां फलदायकः ।
यज्ञं विहन्तुं भगवान्नार्हसे जगदीश्वर' ॥ ३-११५-९ (२०४५८)
इतिकल्याणरूपाभिर्वाग्भिस्ते रुद्रमस्तुवन् ।
इष्ट्या चैनं तर्पयित्वा मानयांचक्रिरे तदा ॥ ३-११५-१० (२०४५९)
ततः स पशुमुत्सृज्य देवयानेन जग्मिवान् ।
तत्रानुवंशो रुद्रस्यतं निबोध युधिष्ठिर ॥ ३-११५-११ (२०४६०)
अयातयामं सर्वेभ्यो भागेभ्यो भागमुत्तमम् ।
देवाः संकल्पयामासुर्भयाद्रुद्रस्य शाश्वतम् ॥ ३-११५-१२ (२०४६१)
इमां गाथामत्र गायन्नपः स्पृशति यो नरः ।
देवयानोऽस्य पन्थाश्च चक्षुषाऽभिप्रकाशते ॥ ३-११५-१३ (२०४६२)
वैशंपायन उवाच। ३-११५-१४क्ष् (२०७७)
ततो वैतरणीं सर्वे पाण्डवा द्रौपदी तथा ।
अवतीर्य महाभागास्तर्पयांचक्रिरे पितॄन् ॥ ३-११५-१४ (२०४६३)
युधिष्ठिर उवाच। ३-११५-१५क्ष् (२०७८)
उपस्पृश्येह विधिवदस्यां नद्यां तपोबलात् ।
मानुषादस्मि विषयादपेतः पश्य लोमश ॥ ३-११५-१५ (२०४६४)
सर्वाल्लोँकान्प्रपश्यामि प्रसादात्तव सुव्रत ।
वैखानसानां जपतामेष शब्दो महात्मनाम् ॥ ३-११५-१६ (२०४६५)
लोमश उवाच। ३-११५-१७क्ष् (२०७९)
त्रिशतं वै सहस्राणि योजनानां युधिष्ठिर ।
यत्रध्वनिं शृणोष्येनं तूष्णीमास्स्व विशांपते ॥ ३-११५-१७ (२०४६६)
एतत्स्वयंभुवो राजन्वनं दिव्यं प्रकाशते ।
यत्रायजत राजेन्द्र विश्वकर्मा प्रतापवान् ॥ ३-११५-१८ (२०४६७)
यस्मिन्यज्ञे हि भूर्दत्ता कश्यपाय महात्मने ।

सपर्वतवनोद्देशा दक्षिणार्थे स्वयंभुवा ॥ ३-११५-१९ (२०४६८)
अवासीदच्च कौन्तेय दत्तमात्रा मही तदा ।
उवाच चापि कुपिता लोकश्वरमिदं प्रभुम् ॥ ३-११५-२० (२०४६९)
न मां मर्त्याय भगवन्कस्मैचिद्दातुमर्हसि ।
प्रदानं मोघमेतत्ते यास्याम्येषा रसातलम् ॥ ३-११५-२१ (२०४७०)
विषीदन्तीं तु तां दृष्ट्वा कश्यपो भगवानृषिः ।
प्रसादयांबभूवाथ ततो भूमिं विशांपते ॥ ३-११५-२२ (२०४७१)
ततः प्रसन्ना पृथिवी तपसा तस्य पाण्डव ।
पुनरुन्नह्य सलिलाद्देदीरूपास्थिता बभौ ॥ ३-११५-२३ (२०४७२)
सैषा प्रकाशते राजन्वेदीसंस्थानलक्षणा ।
आरुह्यात्र महाराज वीर्यवान्वै भविष्यसि ॥ ३-११५-२४ (२०४७३)
सैषा सागरमास्राद्य राजन्वेदी समाश्रिता ।
एतामारुह्य भद्रं ते त्वमेकस्तर सागरम् ॥ ३-११५-२५ (२०४७४)
अहं च ते स्वस्त्ययनं प्रयोक्ष्ये
यथा त्वमेनामधिरोहसेऽद्य ।
स्पृष्टा हि मर्त्येन ततः समुद्र-
मेषा वेदी प्रविशत्याजमीढ ॥ ३-११५-२६ (२०४७५)
ओंनमो विश्वगुप्ताय नमो विश्वपराय ते ।
सान्निध्यं कुरु देवेश सागरे लवणाम्भसि ॥ ३-११५-२७ (२०४७६)
अग्निर्मित्रो योनिरापोऽथ देव्यो
विष्णो रेतस्त्वममृतस्य नाभिः ।
एवं ब्रुवन्पाण्डव सत्यवाक्यं
वेदीमिमां त्वं तरसाऽधिरोह ॥ ३-११५-२८ (२०४७७)
अग्निश्च ते योनिरिडा च देहो
रेतोधा विष्णोरमृतस्य नाभिः ।
एवं ब्रुवन्पाण्डव सत्यवाक्यं
ततोऽवगाहेत पतिं नदीनाम् ॥ ३-११५-२९ (२०४७८)
अन्यथा हि कुरुश्रेष्ठ देवयोनिरपांपतिः ।
कुशाग्रेणापि कौन्तेय न स्प्रष्टव्यो महोदधिः ॥ ३-११५-३० (२०४७९)
वैशंपायन उवाच। ३-११५-३१क्ष् (२०८०)
ततः कृतस्वस्त्ययनो महात्मा
युधिष्ठिरः सागरमभ्यगच्छत् ।
कृत्वा च तच्छ्रासनमस्य सर्वं
महेन्द्रमासाद्य निशामुवास ॥ ३-११५-३१ (२०४८०)

इति श्रीमन्महाभारते अरण्यपर्वणि तीर्थयात्रापर्वणि

पञ्चदशाधिकशततमोऽध्यायः ॥ ११५ ॥

Mahabharata - Vana Parva - Chapter Footnotes

३-११५-५ उत्तरंतीरं वैतरण्याः ॥
३-११५-८ मा परस्वमभिद्रोग्धा परभागस्य नाशं मादुर्वित्यर्थः ॥
३-११५-१२ अयातयामं तात्कालिकम् ॥
३-११५-२७ समुद्रप्रार्थनामन्त्रमाह ओंनम इति । विश्वं गुप्तं
लीनमस्मिन् प्रलये इति विश्वगुप्तः। विश्वस्मात्पराय श्रेष्ठाय विष्णवे
इत्यर्थः। लवणाम्भसि क्षारोदके ॥
३-११५-३० देवयोनिः देवस्तानम् ॥
३-११५-३१ युधिष्ठिरः सागरगामचच्छदिति क । ध। पाठः ॥

---

वन-अध्यय११६
॥ श्रीः ॥
३.११६. अध्यायः ११६

Mahabharata - Vana Parva - Chapter Topics

अकृतव्रणएन मुनिना युधिष्ठिरंप्ति परशुरामचरित्रकीर्तनारम्भः
॥ १ ॥
ऋचीकेन भृगुसुतेन दिव्याश्वसहस्रशुल्कदानेन
गाधिकन्यापरिणयनम् ॥ २ ॥
गाधिसुतया सत्यवत्या भूगुप्रसादाज्जमदग्निनामकतवयोत्पादनम् ॥ ३ ॥

Mahabharata - Vana Parva - Chapter Text

३-११६-० (२०४८१)
वैशंपायन उवाच। ३-११६-०क्ष् (२०८१)
स तत्र तामुषित्वैकां रजनीं पृथिवीपतिः ।
तापसानां परं चक्रे सत्कारं भ्रातृभिः सह ॥ ३-११६-१ (२०४८२)
लोमशस्तस्य तान्सर्वानाचख्यौ तत्र तापसान् ।
भृगूनङ्गिरसश्चैव वसिष्ठानथ काश्यपान् ॥ ३-११६-२ (२०४८३)
तान्समेत्य सा राजर्षिरभिवाद्य कृताञ्जलिः ।
रामस्यानुचरं वीरमपृच्छदकृतव्रणम् ॥ ३-११६-३ (२०४८४)
कदा नु रामो भगवांस्तापसो दर्शयिष्यति ।
तमहं तपसा युक्तं द्रष्टुमिच्छामि भार्गवम् ॥ ३-११६-४ (२०४८५)
अकृतव्रण उवाच। ३-११६-५क्ष् (२०८२)
आयानेवासि विदितो रामस्य विदितात्मनः ।

प्रीतिस्त्वयि च रामस्य क्षिप्रं त्वां दर्शयिष्यति ॥ ३-११६-५ (२०४८६)
चतुर्दशीमष्टमीं च रामं पश्यन्ति तापसाः ।
अस्यां रात्र्यां व्यतीतायां भवित्री श्वश्चतुर्दशी ॥ ३-११६-६ (२०४८७)
ग्ततो द्रक्ष्यसि रामं त्वं कृष्णाजिनजटाधरम्'। ३-११६-७ (२०४८८)
युधिष्ठिर उवाच ।
भवाननुगतो रामं जामदग्न्यं महाबलम् ।
प्रत्यक्षदर्शी सर्वस्य पूर्ववृत्तस्य कर्मणः ॥ ३-११६-७क्ष् (२०८३)
स भवान्कथयत्वद्य यथा रामेण निर्जिताः ।
आहवे क्षत्रियाः सर्वे कथं केन च हेतुना ॥ ३-११६-८ (२०४८९)
अकृतव्रण उवाच। ३-११६-९क्ष् (२०८४)
श्हन्त ते कथयिष्यामि महदाख्यानमुत्तमम् ।
भृगूणां राजशार्दूल वंशे जातस्य भारत ॥ ३-११६-९ (२०४९०)
रामस्य जामदग्न्यस्य चरितं देवसंमितम् ।
हैहयाधिपतेश्चैव कार्तवीर्यस् भारत ॥ ३-११६-१० (२०४९१)
रामेण चार्जुनो नाम हैहयाधिपतिर्हतिः ।
तस्य बाहुशतान्यासंस्त्रीणि सप्त च पाण्डव ॥ ३-११६-११ (२०४९२)
दत्तात्रेयप्रसादेन विमानं काञ्चनं तथा ।
ऐश्वर्यं सर्वभूतेषु पृथिव्यां पृथिवीपते ॥ ३-११६-१२ (२०४९३)
अव्याहतगतिश्चैव रथस्तस्य महात्मनः ।
रथेन तेन तु सदावरदानेन वीर्यवान् ॥ ३-११६-१३ (२०४९४)
ममर्द देवान्यक्षांश्च ऋषींश्चैव समन्ततः ।
भूतांश्चैव स सर्वांस्तु पीडयामास सर्वतः ॥ ३-११६-१४ (२०४९५)
ततो देवाः समेत्याहुर्ऋषयश्च महाव्रताः ।
देवदेवं सुरारिघ्नं विष्णुं सत्यपराक्रमम् ।
भगवन्भूतरार्थमर्जुनं जहि वै प्रभो ॥ ३-११६-१५ (२०४९६)
विमानेन च दिव्येन हैहयाधिपतिः प्रभुः ।
शचीसहायं क्रीडन्तं धर्षयामास वासवम् ॥ ३-११६-१६ (२०४९७)
ततस्तु भगवान्देवः शक्रेण सहितस्तदा ।
कार्तवीर्यविनाशार्थं मन्त्रयामास भारत ॥ ३-११६-१७ (२०४९८)
यत्तद्भूतहितं कार्यं सुरेन्द्रेण निवेदितम् ।
संप्रतिश्रुत्य तत्सर्वं भगवाँल्लोकपूजितः ।
जगाम बदरीं रम्यां स्वमेवाश्रममण्डलम् ॥ ३-११६-१८ (२०४९९)
एतस्मिन्नेव काले तु पृथिव्यां पृथिवीपतिः ꣵ
कान्यकुब्जे महानासीत्पार्थिवः सुमहाबलः ।
गाधीति विश्रुतो लोके वनवासं जगाम ह ॥ ३-११६-१९ (२०५००)
वने तु तस्य वसतः कन्या जज्ञेऽप्सरःसमा ।

ऋचीको भार्गवस्तां च वरयामास भारत ॥ ३-११६-२० (२०५०१)
तमुवाच ततो गाधिर्ब्राह्मणं संशितव्रतम् ।
उचितं नः कुले किंचित्पूर्वैर्यत्संप्रवर्तितम् ॥ ३-११६-२१ (२०५०२)
एकतः श्यामकर्णानां पाण्डुराणां तरस्विनाम् ।
सहस्रं वाजिनां शुक्लमिति विद्धि द्विजोत्तम ॥ ३-११६-२२ (२०५०३)
न चापि भगवान्वाच्योदीयतामिति भार्गव ।
देया मे दुहिता चैव त्वद्विधाय महात्मने ॥ ३-११६-२३ (२०५०४)
ऋचीक उवाच। ३-११६-२४क्ष् (२०८५)
एकतः श्यामकर्णानां पाण्डुराणां तरस्विनाम् ।
दास्याम्यश्वसहस्रं ते मम भार्या सुताऽस्तु ते ॥ ३-११६-२४ (२०५०५)
ग्गाधिरुवाच। ३-११६-२५क्ष् (२०८६)
ददास्यश्वसहस्रं मे तव भार्या सुताऽस्तु मे' ॥ ३-११६-२५ (२०५०६)
अकृतव्रण उवाच। ३-११६-२६क्ष् (२०८७)
स तथेति प्रतिज्ञाय राजन्वरुणमब्रवीत् ।
एकतः श्यामकर्णानां पाण्डुराणां तरस्विनाम् ।
सहस्रं वाजिनामेकं शुल्कार्थं प्रतिदीयताम् ॥ ३-११६-२६ (२०५०७)
तस्मै प्रादात्सहस्रं वै वाजिनां वरुणस्तदा ।
तदश्वतीर्थं विख्यातमुत्थिता यत्र ते हयाः ॥ ३-११६-२७ (२०५०८)
गङ्गायां कान्यकुब्जे वै ददौ सत्यवतीं तदा ।
ततो गाधिः सुतां चास्मै जन्याश्चासन्सुरास्तदा ॥ ३-११६-२८ (२०५०९)
लब्धं हयसहस्रं तु तां च दृष्ट्वा दिवौकसः ।
गविस्मयं परमं जग्मुस्तमेव दिवि संस्तुवन्' ॥ ३-११६-२९ (२०५१०)
धर्मेण लब्ध्वा तां भार्यामृचीको द्विजसत्तमः ।
यथाकामं यथाजोषं तया रेमे सुमध्यया ॥ ३-११६-३० (२०५११)
तं विवाहे कृतेराजन्सभार्यमवलोककः ।
आजगाम भृगुश्रेष्ठः पुत्रं दृष्ट्वा ननन्द च ॥ ३-११६-३१ (२०५१२)
भार्यापती तमासीनं भृगुं सुरगणार्चितम् ।
अर्चित्वा पर्युपासीनौ प्राञ्जली तस्थतुस्तदा ॥ ३-११६-३२ (२०५१३)
ततः स्नुषां स भगवान्प्रहृष्टो भृगुरब्रवीत् ।
वरं वृणीष्व सुभगे दाता ह्यस्मि तवेप्सितम् ॥ ३-११६-३३ (२०५१४)
सा वै प्रसादयाभास तं गुरुं पुत्रकारणात् ।
आत्मनश्चैव मातुश्च प्रसादं च चकार सः ॥ ३-११६-३४ (२०५१५)
भृगुरुवाच। ३-११६-३५क्ष् (२०८८)
ऋतौ त्वं चैव माता च स्नाते पुंसवनाय वै ।
आलिङ्गेतां पृथग्वृक्षौ साऽस्वत्थं त्वमुदुम्बरम् ॥ ३-११६-३५ (२०५१६)
चरुद्वयमिदं भद्रे जनन्याश्च तवैव च ।

विश्वमावर्तयित्वा तु मया यत्नेन साधितम् ॥ ३-११६-३६ (२०५१७)
प्राशितव्यं प्रयत्नेन तेत्युक्त्वाऽदर्शनं गतः ।
आलिङ्गने चरौ चैव चक्रतुस्ते विपर्ययम् ॥ ३-११६-३७ (२०५१८)
ततः पुन स भगवान्काले बहुतिथे गते ।
दिव्यज्ञानाद्विदित्वा तु भगवानागतः पुनः ॥ ३-११६-३८ (२०५१९)
अथोवाच महातेजा भृगुः सत्यवतीं श्नुषाम् ॥ ३-११६-३९ (२०५२०)
उपयुक्तश्चरुर्भद्रे वृक्षे चालिङ्गनं कृतम् ।
विपरीतेन ते सुभ्रूर्मात्रा चैवासि वञ्चिता ॥ ३-११६-४० (२०५२१)
क्षत्रियो ब्राह्मणाचारो मातुस्तव सुतो महान् ।
भविष्यति महावीर्यः साधूनां मार्गमास्थितः ॥ ३-११६-४१ (२०५२२)
ततः प्रसादयामास श्वशुरं सा पुनःपुनः ।
न मे पुत्रो भवेदीदृक्कामं पौत्रो भवेदिति ॥ ३-११६-४२ (२०५२३)
एवमस्त्विति सा तेन पाण्डव प्रतिनन्दिता ।
कालं प्रतीक्षती गर्भं धारयामास यत्नतः ॥ ३-११६-४३ (२०५२४)
जमदग्निं ततः पुत्रं जज्ञे सा काल आगते ।
तेजसा वर्चसा चैव युक्तं भार्गवनन्दनम् ॥ ३-११६-४४ (२०५२५)
स वर्धमानस्तेजस्वी वेदस्याध्ययनेन च ।
बहूनृषीन्महातेजाः पाण्डवेयात्यवर्तत ॥ ३-११६-४५ (२०५२६)
तं तु कृत्स्नो धनुर्वेदः प्रत्यभाङ्गरतर्षभ ।
चतुर्विधानि चास्त्राणि भास्करोपमवर्चसम् ॥ ३-११६-४६ (२०५२७)

इति श्रीमन्महाभारते अरण्यपर्वणि तीर्थयात्रापर्वणि
षोडशाधिकशततमोऽध्यायः ॥ ११६ ॥

Mahabharata - Vana Parva - Chapter Footnotes

३-११६-४ तापसान्दर्शयिष्यति ।तेनैवाहंप्रसङ्गेनेति झ। पाठः ॥
३-११६-५ आयान् आगच्छन् ॥
३-११६-२८ जन्याः वरपक्षीयाः ।ततो गाधिः सुतां तस्मै ददौ कन्यां नृपोत्तमेति क। पाठः ॥
३-११६-२९ लब्ध्वा हयसहस्रं तद्देवानां सन्निधौ तदेति क ।पाठः ॥
३-११६-३१ अवलोककः अवलोकनार्थी ॥
३-११६-३६ विश्वंविराटपुरुषं आवर्तयित्वामुहुर्मुहुरनुसंधाय एतयोश्चर्वोर्भक्षणेन विश्वस्रष्टृतुल्यौ पुत्रौ भविष्यत इति भावः ॥
३-११६-३७ ते उभे प्रति इत्युक्त्वेतीकारलोपः संधिर्वा आर्षः ।आलिङ्गने अश्वत्थोदुम्बरयोः ॥

वन-अध्यय११७
॥ श्रीः ॥
३.११७. अध्यायः ११७

Mahabharata - Vana Parva - Chapter Topics
रामेण रेणुकायां मानसिकव्यभिचारदर्शिनः
पितुर्जमदग्नेर्नियोगात्कुठारेण तस्याः कण्ठच्छेदनम् ॥ १ ॥
जमदग्निना पुत्रप्रार्थनया रेणुकायाः पुनरुज्जीवनम् ॥ २ ॥
रामासंनिधाने जमदग्न्याश्रममुपागतेन कार्तवीर्यार्जुनेन
तदीयहोमधेनुवत्साहरणपूर्वकं तदाश्रमपीडनम् ॥ ३ ॥
तत आगतेन रामेण कार्तवीर्ये युधि निहते तदीयै रामासंनिधाने
जमदग्नेर्वधः ॥ ४ ॥

Mahabharata - Vana Parva - Chapter Text

३-११७-० (२०५२८)
अकृतव्रण उवाच। ३-११७-०क्ष् (२०८९)
स वेदाध्ययने युक्तो जमदग्निर्महातपाः ।
तपस्तेपे ततो देवान्नियमाद्वशमानयत् ॥ ३-११७-१ (२०५२९)
स प्रसेनजितं राजन्नधिगम्य नराधिपम् ।
रेणुकां वरयामास स च तस्मै ददौ नृपः ॥ ३-११७-२ (२०५३०)
रेणुकां त्वथ संप्राप्य भार्यां भार्गवनन्दनः ।
आश्रमस्थस्तया सार्धं तपस्तेपेऽनुकूलया ॥ ३-११७-३ (२०५३१)
तस्याः कुमाराश्चत्वारो जज्ञिरे रामपञ्चमाः ।
सर्वेषामजघन्यस्तु राम आसीञ्जघन्यजः ॥ ३-११७-४ (२०५३२)
फलाहारेषु सर्वेषु गतेष्वथ सुतेषु वै ।
रेणुका स्नातुमगमत्कदाचिन्नियतव्रता ॥ ३-११७-५ (२०५३३)
सा तु चित्ररथं नाम मार्तिकावतकं नृपम् ।
ददर्श रेणुका राजन्नागच्छन्ती यदृच्छया ॥ ३-११७-६ (२०५३४)
क्रीडन्तं सलिले दृष्ट्वा सभार्यं पद्ममालिनम् ।
ऋद्धिमन्तं ततस्तस्य स्पृहयामास रेणुका ॥ ३-११७-७ (२०५३५)
व्यभिचाराच्च तस्मात्सा क्लिन्नाम्भसि विचेतना ।
ग्अन्तरिक्षान्निपतिता नर्मदायां महाह्रदे ॥ ३-११७-८ (२०५३६)
उतीर्य चापि सा यत्नाज्जगाम भरतर्षभ'।
प्रविवेशाश्रमं त्रस्ता तां वै भर्तान्वबुध्यत ॥ ३-११७-९ (२०५३७)
स तां दृष्ट्वाच्युतांधैर्याद्ब्राह्म्या लक्ष्म्या विवर्जिताम् ।

श्रिक्षब्देन महातेजा गर्हयामास वीर्यवान् ॥ ३-११७-१० (२०५३८)
ततो ज्येष्ठो जामदग्न्यो रुमण्वान्नाम नामतः ।
आजगाम सुषेणश्च वसुर्विश्वावसुस्तथा ॥ ३-११७-११ (२०५३९)
तानानुपूर्व्याद्भगवान्वधे मातुरचोदयत् ।
न च ते जातसंमोहाः किंचिदूचुर्विचेतसः ॥ ३-११७-१२ (२०५४०)
ततः शशाप तान्क्रोधात्ते शप्ताश्चैतनां जहुः ।
मृगपक्षिसधर्माणः क्षिप्रमासञ्जडोपमाः ॥ ३-११७-१३ (२०५४१)
ततो रामोऽभ्ययात्पश्चादाश्रमं परवीरहा ।
तमुवाच महामन्युर्जमदग्निर्महातपाः ॥ ३-११७-१४ (२०५४२)
जहीमां मातरं पापां मा च पुत्र व्यथां कृथाः ।
तत आदाय परशुं रामो मातु शिरोऽहरत् ॥ ३-११७-१५ (२०५४३)
ततस्तस्य महाराज जमदग्नेर्महात्मनः ।
कोपोऽभ्यगच्छत्सहसा प्रसन्नश्चाब्रवीदिदम् ॥ ३-११७-१६ (२०५४४)
ममेदं वचनात्तात कृतं ते कर्म दुष्करम् ।
वृणीष्व कामान्धर्मज्ञ यावतो वाञ्छसे हृदा ॥ ३-११७-१७ (२०५४५)
स वव्रे मातुरुत्थानमस्मृतिं च वधस्य वै ।
पापेन तेन चास्पर्शं भ्रातॄणां प्रकृतिं तथा ॥ ३-११७-१८ (२०५४६)
अप्रतिद्वन्द्वतां युद्धे दीर्घमायुश्च भारत ।
ददौ च सर्वान्कामांस्ताञ्जमदग्निर्महातपाः ॥ ३-११७-१९ (२०५४७)
कदाचित्तु तथैवास्य विनिष्क्रान्ताः सुताः प्रभो ।
अथानूपपतिर्वीरः कार्तवीर्योऽभ्यवर्तत ॥ ३-११७-२० (२०५४८)
तमाश्रमपदं प्राप्तमृषिरर्ध्यात्समार्चयत् ।
स युद्धमदसंमत्तो नाभ्यनन्दत्तथाऽर्चनम् ॥ ३-११७-२१ (२०५४९)
प्रमथ्य चाश्रमात्तस्माद्धोमधेनोस्ततोबलात् ।
जहार वत्सं क्रोशन्त्या बभञ्ज च महाद्रुमान् ॥ ३-११७-२२ (२०५५०)
आगताय च रामाय तदाचष्ट पिता स्वयम् ।
गां च रोरुदतीं दृष्ट्वा कोपो रामं समाविशत् ।
स मन्युवशमापन्नः कार्तवीर्यमुपाद्रवत् ॥ ३-११७-२३ (२०५५१)
तस्याथ युधि विक्रम्य भार्गवः परवीरहा ।
चिच्छेद निशितैर्भल्लैर्बाहून्परिघसंनिभान् ॥ ३-११७-२४ (२०५५२)
सहस्रसंमितान्राजन्प्रगृह्य रुचिरं धनुः ।
अभिभूतः स रामेण संयुक्तः कालधर्मणा ॥ ३-११७-२५ (२०५५३)
अर्जुनस्याथ दायादा रामेण कृतमन्यवः ।
आश्रमस्थं विना रामं जमदग्निमुपाद्रवन् ॥ ३-११७-२६ (२०५५४)
ते तं जघ्नुर्महावीर्यमयुध्यन्तं तपस्विनम् ।
असकृद्रामरामेति विक्रोशन्तमनाथवत् ॥ ३-११७-२७ (२०५५५)

कार्तवीर्यस्य पुत्रास्तु जमदग्निं युधिष्ठिर ।
घातयित्वा शरैर्जग्मुर्यथागतमरिंदमाः ॥ ३-११७-२८ (२०५५६)
अपक्रान्तेषु वै तेषु जमदग्नौ तथा गते ।
समित्पाणिरुपागच्छदाश्रमं भृगुनन्दनः ॥ ३-११७-२९ (२०५५७)
स दृष्ट्वा पितरं वीरस्तदा मृत्युवशं गतम् ।
अनर्हं तं तथाभूतं विललाप सुदुःखितः ॥ ३-११७-३० (२०५५८)

इति श्रीमन्महाभारते अरण्यपर्वणि तीर्थयात्रापर्वणि
सप्तदशाधिकशततमोऽध्यायः ॥ ११७ ॥
Mahabharata - Vana Parva - Chapter Footnotes

३-११७-७ ततस्तस्य स्पृहयामास तमैच्छत् । सभार्यं हेममालिनमिति
क। ध। पाठः ॥
३-११७-२५ कालधर्मणा मृत्युना ॥

---

वन-अध्यय११८
॥ श्रीः ॥
३.११८. अध्यायः ११८

Mahabharata - Vana Parva - Chapter Topics
अकृतव्रणेन युधिष्ठिरंप्रति पितृवधमर्षात् त्रिः सप्तकृत्वः
पृथिव्या निःक्षत्रियीकरणादिरामचरित्रकथनम् ॥ १ ॥
युधिष्ठिरेण परेद्युश्चतुर्दश्यां संनिहितपरशुरामपूजनादिपूर्वकं
महेन्द्रशैलात्पुरः प्रस्थानम् ॥ २ ॥

Mahabharata - Vana Parva - Chapter Text

३-११८-० (२०५५९)
राम उवाच। ३-११८-०क्ष् (२०९०)
ममापराधात्तैः क्षुद्रैर्हतस्त्वं तात बालिशैः ।
कार्तवीर्यस्य दायादैर्वने मृग इवेषुभिः ॥ ३-११८-१ (२०५६०)
धर्मज्ञस्य कथं तात वर्तमानस्य सत्पथे ।
मृत्युरेवंविधो युक्तः सर्वभूतेष्वनागसः ॥ ३-११८-२ (२०५६१)
किंनु तैर्न कृतंपापं यैर्बवांस्तपसि स्तितः ।
अयुध्यमानो वृद्धः सन्हतः शरशतैः शितैः ॥ ३-११८-३ (२०५६२)
किंनु ते तत्र वक्ष्यन्ति सचिवेषु सुहृत्सु च ।
अयुध्यमानं धर्मज्ञमेकं हत्वाऽनपत्रपाः ॥ ३-११८-४ (२०५६३)

अकृतव्रण उवाच। ३-११८-५क्ष् (२०९१)
लालप्यैवं सकुस्न्णं बहु नानाविधं नृप ।
प्रेतकार्याणि सर्वाणि पितुश्चक्रे महातपाः ॥ ३-११८-५ (२०५६४)
ददाह पितरं चाग्नौ रामः परपुरंजयः ।
प्रतिजज्ञे वधं चापि सर्वक्षत्रस्य भारत ॥ ३-११८-६ (२०५६५)
संक्रुद्धोऽतिबलः सङ्ख्ये शस्त्रमादाय वीर्यवान् ।
जघ्निवान्कार्तवीर्यस्य सुतानेकोऽन्तकोपमः ॥ ३-११८-७ (२०५६६)
तेषां चानुगता ये च क्षत्रियाः क्षत्रियर्षभ ।
तांश्च सर्वानवामृद्नाद्रामः प्रहरतांवरः ॥ ३-११८-८ (२०५६७)
त्रिःसप्तकृत्वः पृथिवीं कृत्वा निःक्षित्रियां प्रभुः ।
समन्तपञ्चके पञ्च चकार रुधिरह्रदान् ॥ ३-११८-९ (२०५६८)
स तेषु तर्पयामास पितॄन्भृगुकुलोद्वहः ।
साक्षाद्ददर्श चर्चीकं स च रामं न्यवारयत् ॥ ३-११८-१० (२०५६९)
ततो यज्ञेन महता जामदग्न्यः प्रतापवान् ।
तर्पयामास देवेन्द्रमृत्विग्भ्यः प्रददौ महीम् ॥ ३-११८-११ (२०५७०)
वेदीं चाप्यददद्धैमीं कश्यपाय महात्मने ।
दशव्यामायतां कृत्वा नवोत्सेधां विशांपते ॥ ३-११८-१२ (२०५७१)
तां कश्यपस्यानुमते ब्राह्मणाः खण्डशस्तदा ।
व्यभजंस्ते तदा राजन्प्रख्याताः खाण्डवायनाः ॥ ३-११८-१३ (२०५७२)
स प्रदाय महीं तस्मै कश्यपाय महात्मने ।
ग्तपः सुमहदास्थाय महाबलपराक्रमः'।
अस्मिन्महेन्द्रे शैलेन्द्रे वसत्यमितविक्रमः ॥ ३-११८-१४ (२०५७३)
एवं वैरमभूत्तस्य क्षत्रियैर्लोकवासिभिः ।
पृथिवी चापि विजिता रामेणामिततेजसा ॥ ३-११८-१५ (२०५७४)
वैशंपायन उवाच। ३-११८-१६क्ष् (२०९२)
ततश्चतुर्दशीं रामः समयेन महामनाः ।
दर्शयामास तान्विप्रान्धर्मराजं ज सानुजम् ॥ ३-११८-१६ (२०५७५)
स तमानर्च राजेन्द्र भ्रातृभिः सहितः प्रभुः ।
द्विजानां च परां पूजां चक्रे नृपतिसत्तमः ॥ ३-११८-१७ (२०५७६)
अर्जित्वा जामदग्न्यं स पूजितस्तेन चोदितः ।
महेन्द्र उष्य तां रात्रिं प्रययौ दक्षिणामुखः ॥ ३-११८-१८ (२०५७७)

इति श्रीमन्महाभारते अरण्यपर्वणि तीर्थयात्रापर्वणि
अष्टादशाधिकशततमोऽध्यायः ॥ ११८ ॥
Mahabharata - Vana Parva - Chapter Footnotes

३-११८-१२ दशव्यामायतां व्यामो हस्तचतुष्टयम्
। चत्वारिंशद्धस्तायामविस्ताराम्। नवोत्सेधां
षट्त्रिंशद्धस्तोच्छ्रायां चेत्यर्थः ३-११८-१७ आनर्च अर्चितवान् ॥
३-११८-१८ उष्य उषित्वा ॥

---

वन-अध्यय११९
॥ श्रीः ॥
३.११९. अध्यायः ११९

Mahabharata - Vana Parva - Chapter Topics
युधिष्ठिरेण यात्राक्रमेण प्रभासतीर्थेप्रति गमनम् ॥ १ ॥
तत्रतद्दिदृक्षया कृष्णबलभद्रादीनामागमनम् ॥ २ ॥

Mahabharata - Vana Parva - Chapter Text

३-११९-० (२०५७८)
वैशंपायन उवाच। ३-११९-०क्ष् (२०९३)
गच्छन्स तीर्थानि महानुभावः ।
पुण्यानि रम्याणि ददर्श राजा ।
सर्वाणि वैप्रैरुपशोभितानि
क्वचित्क्वचिद्भारत सागरम्य ॥ ३-११९-१ (२०५७९)
स वृत्तवांस्तेषु कृताभिषेकः
सहानुजः पार्थिवपुत्रपौत्रः ।
समुद्रगां पुण्यतमां प्रशस्तां
जगाम पारिक्षित पाण्डुपुत्रः ॥ ३-११९-२ (२०५८०)
तत्रापि चाप्लुत्य महानुभाव
संतर्पयामास पितृडन्सुरांश्च ।
द्विजातिमुख्येषु धनं विसृज्य
गोदावरीं सागरगामगच्छत् ॥ ३-११९-३ (२०५८१)
ततो विपाप्मा द्रविडेषु राज-
न्समुद्रमासाद्य च लोकपुण्यम् ।
अगस्त्यतीर्थं च महापवित्रं-
नारीतीर्थान्यथा वीरो ददर्श ॥ ३-११९-४ (२०५८२)
तत्रार्जुनस्याग्र्यधनुर्धरस्य
निशम्य तत्कर्म परैरशक्यम् ।
संपूज्यमानः परमर्षिसङ्घैः
परां मुदं पाणाडुसुतः स लेभे ॥ ३-११९-५ (२०५८३)

स तेषु तीर्थेष्वभिषिक्तगात्रः
कृष्णासहायः सहितोऽनुजैश्च ।
संपूजयन्विक्रममर्जुनस्य
रमे महीपालपतिः पृथिव्याम् ॥ ३-११९-६ (२०५८४)
ततः सहस्राणि गवां प्रदाय
तीर्थेषु तेष्वम्बुधरोत्तमस्य ।
हृष्टः सह भ्रातृभिरर्जुनस्य
संकीर्तयामास गवां प्रदानम् ॥ ३-११९-७ (२०५८५)
स तानि तीर्थानि च सागरस्य
पुण्यानि चान्यानि बहूनि राजन् ।
क्रमेण गच्छन्परिपूर्णकामः
शूर्पारकं पुण्यतमं ददर्श ॥ ३-११९-८ (२०५८६)
तत्रोदधेः कंचिदतीत्य देशं
ख्यातं पृथिव्यां वनमाससाद ।
तप्तं सुरैरत्र तपः पुरस्ता-
दिष्टं कतथा पुण्यपरैर्नरेन्द्रैः ॥ ३-११९-९ (२०५८७)
स तत्र तामग्र्यधनुर्धरस्य
वेदीं ददर्शायतपीनबाहुः ।
ऋचीकपुत्रस्य तपस्विसङ्घैः
समावृतां पुण्यकृदर्चनीयाम् ॥ ३-११९-१० (२०५८८)
ततो वसूनां वसुधाधिपः स
मरुद्गणानां च तथाश्विनोश्च ।
वैवस्वतादित्यधनेश्वराणा-
मिन्द्रस्य विष्णोः सवितुर्विभोश्च ॥ ३-११९-११ (२०५८९)
भगस्य चन्द्रस्य दिवाकरस्य
पतेरपां साध्यगणस्य चैव ।
धातुः पितॄणां च तथा महात्मा
रुद्रस्य राजन्सगणस्य चैव ॥ ३-११९-१२ (२०५९०)
सरस्वत्याः सिद्धगणस्य चैव
पूष्णश्च ये चाप्यमरास्तथाऽन्ये ।
पुण्यानि चाप्यायतनानि तेषां
ददर्श राजा सुमनोहराणि ॥ ३-११९-१३ (२०५९१)
तेषूपवासान्विबुधानुपोष्य
दुत्त्वा च रत्नानि महान्ति राजा ।
तीर्थेषु सर्वेषु परिप्लुताङ्गः
पुनः स शूर्पारकमाजगाम ॥ ३-११९-१४ (२०५९२)

स तेन तीरेण तु सागरस्य
पुनः प्रयातः सह सोदरीयैः ।
द्विजैः पृथिव्यां प्रथितं महद्भि-
स्तीर्थं प्रभासं समुपाजगाम ॥ ३-११९-१५ (२०५९३)
तत्राभिषिक्तः पृथुलोहिताक्षः
सहानुजैर्देवगणान्पितॄंश्च ।
संतर्पयामास तथैव कृष्णा
ते चापि विप्राः सह लोमशेन ॥ ३-११९-१६ (२०५९४)
कस द्वादशाहं जलवायुभक्षः
कुर्वन्क्षपाहःसु तदाऽभिषेकम् ।
समन्ततोऽग्नीनुपदीपयित्वा
तेपे तपो धर्मभृतांवरिष्ठः ॥ ३-११९-१७ (२०५९५)
तमुग्रमास्थाय तपश्चरन्तं
शुश्राव रामश्च जनार्दनश्च ।
तौ सर्ववृष्णिप्रवरौ ससैन्यौ
युधिष्ठिरं जग्मतुराजमीढम् ॥ ३-११९-१८ (२०५९६)
ते वृष्णयः पाण्डुसुतान्समीक्ष्य
भूमौ शयानान्मलदिग्धगात्रान् ।
अनर्हतीं द्रौपदीं चापि दृष्ट्वा
सुदुःखिताश्चुक्रुशुरार्तनादान् ॥ ३-११९-१९ (२०५९७)
ततः स रामं च जनार्दनं च
कार्ष्णिं च साम्बं च शिनेश्च पौत्रम् ।
अन्यांश्च वृष्णीनुपगम्य पूजां
चक्रे यथाधर्ममहीनसत्वः ॥ ३-११९-२० (२०५९८)
ते चापि सर्वान्प्रतिपूज्य पार्था-
स्तैः सत्कृताः पाण्डुसुतैस्तथैव ।
युधिष्ठिरं संपरिवार्य राज-
न्नुपाविशन्देवगणा यथेन्द्रम् ॥ ३-११९-२१ (२०५९९)
तेषां स सर्वं चरितं परेषां
वने च वासं परमप्रतीतः ।
अस्त्रार्थमिन्द्रस्य गतं च पार्थं
कृष्णे शशंसामरराजसूनुम् ॥ ३-११९-२२ (२०६००)
श्रुत्वा तु ते तस्य वचः प्रतीता-
स्तांश्चापि दृष्ट्वा सुकृशनतीव ।
नेत्रोद्भवं संमुमुचुर्महार्हा
दुःखार्तिजं वारि महानुभावाः ॥ ३-११९-२३ (२०६०१)

इति श्रीमन्महाभारते अरण्यपर्वणि तीर्थयात्रापर्वणि
एकोनविंशत्यधिकशततमोऽध्यायः ॥ ११९ ॥
Mahabharata - Vana Parva - Chapter Footnotes

३-११९-२ वृत्तवान् सद्वृत्तः । पार्थिवः पृथ्वीपतिः
कश्यपस्तस्य पुत्रः सूर्यस्तस्य पौत्रो युधिष्ठिरः तत्पितुर्धर्मस्य
सूर्यपुत्रत्वात्। प्रशस्तां नाम नदीम् ॥
३-११९-४ नारीतीर्थानि ग्राहरूपाः पञ्चाप्सरसो मुनिशापवशाद्यत्र
स्थिता अर्जुनेन च शापान्मोचितास्तानि नारीतीर्थानि ॥
३-११९-७ मम्बुधरोत्तमस्य समुद्रस्य ॥
३-११९-१४ तीर्थेषु । उपवासान् पुमीपवासिनो विबुधान्पणाडितानुपोष्य
वस्त्रैरावास् रत्नानि च तेभ्य एव दत्त्वा ॥
३-११९-२० कार्ज्जि प्रद्युम्नम् । पौत्रं सात्यकिम् ॥

---

वन-अध्यय१२०
॥ श्रीः ॥
३.१२०. अध्यायः १२०

Mahabharata - Vana Parva - Chapter Topics
बलभद्रेण वृष्णिपाण्डवसभायां
भीष्मधृतराष्ट्रादिगर्हणपूर्वकं पाण्डवान्प्रति शोचनम् ॥ १ ॥

Mahabharata - Vana Parva - Chapter Text

३-१२०-० (२०६०२)
जनमेजय उवाच। ३-१२०-०क्ष् (२०९४)
प्रभासतीर्थमासाद्यपाण्डवा वृष्णयस्तथा ।
किमकुर्वन्कथाश्चैषां कास्तत्रासंस्तपोधन ॥ ३-१२०-१ (२०६०३)
ते हि सर्वे महात्मानः सर्वशास्त्रविशारदाः ।
वृष्णयः पाण्डवाश्चैव सुहृदश्चपरस्परम् ॥ ३-१२०-२ (२०६०४)
वैशंपायन उवाच। ३-१२०-३क्ष् (२०९५)
प्रभासतीर्थं संप्राप्य पुण्यं तीर्थं महोदधेः ।
वृष्णयः पाण्डवान्वीराः परिवार्योपतस्थिरे ॥ ३-१२०-३ (२०६०५)
ततो गोक्षीरकुन्देन्दुमृणआलरजतप्रभः ।
वनमाली हली रामो बभाषे पुष्करेक्षणम् ॥ ३-१२०-४ (२०६०६)
न कृष्ण धर्मश्चरितो भवाय

जन्तोरधर्मश्च पराभवाय ।
युधिष्ठिरो यत्रजटी महात्मा
वनाश्रयः क्लिश्यति चीरवासाः ॥ ३-१२०-५ (२०६०७)
दुर्योधनश्चापि महीं प्रशास्ति
न चास्य भूमिर्विवरं ददाति ।
धर्मादधर्मश्चरितो वरीया-
नितीव मन्येत नरोऽल्पबुद्धिः ॥ ३-१२०-६ (२०६०८)
दुर्योधने चापि विवर्धमाने
युधिष्ठिरे चासुखमात्तराज्ये ।
ग्हृतस्वराज्यायतनार्थभार्ये
दुर्योधनेनाल्पधिया च पार्थे'।
किंन्वत्र कर्तव्यमिति प्रजाभिः
शङ्का मिथः संजनिता नराणाम् ॥ ३-१२०-७ (२०६०९)
अयं स धर्मप्रभवो नरेन्द्रो
धर्मे धृतः सत्यधृतिः प्रदाता ।
चलेद्धि राज्याच्च सुखाच्च पार्थो
धर्मादपेतस्तु कथं विवर्धेत् ॥ ३-१२०-८ (२०६१०)
कथं नु भीष्मश्च कृपश्च विप्रो
द्रोणश्च राजा च कुलस्य वृद्धः ।
प्रव्राज्य पार्थान्सुमाप्नुवन्ति
धिक्पापबुद्धीन्भरतप्रधानान् ॥ ३-१२०-९ (२०६११)
किंनाम वक्ष्यत्यवनिप्रधानः
पितृडन्समागम्य परत्र पापः ।
पुत्रेषु सम्यक्चरितं मयेति
पुत्रानपापान्व्यपरोप्य राज्यात् ॥ ३-१२०-१० (२०६१२)
नासौ धिया संप्रति पश्यति स्म
किंनाम कृत्वाऽहमचक्षुरेवम् ।
जातः पृथिव्यामिति पार्थिवेषु
प्रव्राज्यकौन्तेयमिति स्म राज्यात् ॥ ३-१२०-११ (२०६१३)
नूनं समृद्धान्पितृलोकभूमौ
चामीकराभान्क्षितिजान्प्रफुल्लान् ।
विचित्रवीर्यस्य सुतः सपुत्रः
कृत्वा नृशंसं वत पश्यति स्म ॥ ३-१२०-१२ (२०६१४)
व्यूढोत्तरांसान्पृथुलोहिताक्षा-
निमान्स्म पृच्छन्स शृणोति नूनम् ।
प्रास्थापयद्यत्स वनं सशङ्को

युधिष्ठिरं सानुजमात्तशस्त्रम् ॥ ३-१२०-१३ (२०६१५)
योऽयं परषां पृतनां समृद्धां
निरायुधो दीर्घभुजो निहन्यात् ।
श्रुत्वैव शब्दं हि वृकोदरस्य
मुञ्चन्ति सैन्यानि शकृत्समूत्रम् ॥ ३-१२०-१४ (२०६१६)
स क्षुत्पिपासाध्वकृशस्तरस्वी
समेत्य नानायुधबाणपाणिः ।
वने स्मरन्वासमिमं सुघोरं
शेषं न कुर्यादिति निश्चितं मे ॥ ३-१२०-१५ (२०६१७)
न ह्यस् वीर्येण बलेन कश्चि-
त्समः पृथिव्यामपि विद्यतेऽन्यः ।
स शीतवातातपकर्शिताङ्गो
न शेषमाजावसुहृत्सु कुर्यात् ॥ ३-१२०-१६ (२०६१८)
प्राच्यां नृपानेकरथेन जित्वा
वृकोदरः सानुचरान्रणेषु ।
स्वस्त्यागमद्योऽतिरथस्तरस्वी
सोयं वने क्लिश्यति चीरवासाः ॥ ३-१२०-१७ (२०६१९)
यः सिन्धुकूले व्यजयन्नृदेवा-
न्समागतान्दाक्षिणात्यान्महीपान् ।
तं पश्यतेमं सहदेवमद्य
तरस्विनं तापसवेषरूपम् ॥ ३-१२०-१८ (२०६२०)
यः पार्थिवानेकरथेन वीरो
दिशं प्रतीचीं प्रत्नियुद्धशौण्डः ।
जिग्ये रणे तं नकुलं वनेऽस्मि-
न्संपश्यतैनं मलदिग्धगात्रम् ॥ ३-१२०-१९ (२०६२१)
सत्रे समृद्धेऽतिरथस्य राज्ञो
वेदीतलादुत्पतिता सुता या ।
सेयं वने वासमिमं सुदुःखं
कथं सहत्यद्य सती सुखार्हा ॥ ३-१२०-२० (२०६२२)
त्रिवर्गमुख्यस् समीरणस्य
देवेश्वरस्याप्यथवाऽश्विनोश्च ।
एषां सुराणां तनयाः कथंनु
वने चरन्त्यस्तसुखाः सुखार्हाः ॥ ३-१२०-२१ (२०६२३)
जिते हि धर्मस्य सुते सभार्ये
सभ्रातृके सानुचरे निरस्ते ।
दुर्योधने चापि विवर्धमाने

कथं न सीदत्यवनिः सशैला ॥ ३-१२०-२२ (२०६२४)

इति श्रीमन्महाभारते अरण्यपर्वणि तीर्थयात्रापर्वणि
विंशत्यधिकशततमोऽध्यायः ॥ १२० ॥
Mahabharata - Vana Parva - Chapter Footnotes

३-१२०-५ भवाय अभ्युदयाय ॥
३-१२०-६ विवरं शरीरगूहनाय न ददातीत्यर्थः ॥
३-१२०-७ मिथः शङ्काधर्माधर्मयोः किं बलीय इति
शास्त्रानुभवयोर्विरोधात्संशयः ॥
३-१२०-८ राज्याच्च सुखाच्च चलेत् नतु धर्मादिति शेषः । तत्र
हेतुः धर्मादिति ॥
३-१२०-१० अवनिप्रधानो धृतराष्ट्रः ॥
३-१२०-११ किंनाम पापं कृत्वाऽहमचक्षुर्जातः कौन्तेयं प्रव्राज्य
कीदृशो भविष्यामीति धिया नासौ पश्यतीत्यध्याहृत्य योज्यम् ॥
३-१२०-१२ चामीकराभान् कनकप्रभान् । एतन्मरणचिह्नम्। नृशंसं
निन्द्यं कर्स ॥
३-१२०-१५ शेषं न कुर्यात् निऋशेषमेव नाशयेदित्यर्थः ॥
३-१२०-१७ स्वस्ति क्षेमेण आगमत् आगतः ॥
३-१२०-१८ यो दन्तकूटे त्वजयत्समेतानिति ध । पाठः ॥
३-१२०-२० राज्ञः द्रुपदस्य ॥
३-१२०-२१ त्रिवर्गमुख्यस् धर्मस्य ॥

---

वन-अध्यय१२१
॥ श्रीः ॥
३.१२१. अध्यायः १२१

Mahabharata - Vana Parva - Chapter Topics
सात्यकिना पाणाडवानपेक्षणेन स्वैरेव धार्तराष्ट्रादिहननपूर्वकं
पाण्डवानामावनवाससमापनमभिमन्यो राज्येऽभिषच नोक्तिः ॥ १ ॥
कृष्णेन सात्यकिंप्रतिपाण्डवानां
परबाहुबलैकानुपजीवित्वादिगुणकथनपूर्वकं तन्निपेधनम् ॥ २ ॥

Mahabharata - Vana Parva - Chapter Text

३-१२१-० (२०६२५)
सात्यकिरुवाच। ३-१२१-०क्ष् (२०९६)

न राम कालः परिदेवनाय
यदुत्तरं त्वत्र तदेव सर्वे ।
समाचरामो ह्यनतीतकालं
युधिष्ठिरो यद्यपि नाह किंचित् ॥ ३-१२१-१ (२०६२६)
ये नाथवन्तोऽद्य भवन्ति लोके
ते नात्मना कर्म समारन्ते ।
तेषां तु कार्येषु भवन्ति नाथाः
शैब्यादयो राम यथा ययातेः ॥ ३-१२१-२ (२०६२७)
येषां तथा राम समारभन्ते
कार्याणि नाथाः स्वमतेन लोके ।
रते नाथवन्तः पुरुषप्रवीरा
नानाथवत्कृच्छ्रमवाप्नुवन्ति ॥ ३-१२१-३ (२०६२८)
कस्मादिमौ रामजनार्दनौ च
प्रद्युम्नसाम्बौ च मया समेतौ ।
वसन्त्यरण्ये सह सोदरीयै-
स्त्रैलोक्यनाथानभिगम्य पार्थाः ॥ ३-१२१-४ (२०६२९)
निर्यातु साध्यद्य दशार्हसेना
प्रभूतनानायुधचित्रवर्मा ।
यमक्षयं गच्छतु धार्तराष्ट्रः
सबान्धवो वृष्णिबलाभिभूतः ॥ ३-१२१-५ (२०६३०)
त्वं ह्येव कोपात्पृथिवीमपीमां
संवेष्टयेस्तिष्ठतु शार्ङ्गधन्वा ।
स धार्तराष्ट्रं जहि सानुबन्धं
वृत्रं यथा देवपतिर्महेन्द्रः ॥ ३-१२१-६ (२०६३१)
भ्राता च मे यः स सखा गुरुश्च
जनार्दनस्यात्मसमश्च पार्थः ।
तदर्थमेको हि य उद्यमन्वै
करोति कर्णोऽस्त्रमवारणीयम् ॥ ३-१२१-७ (२०६३२)
श्यदर्थमैच्छन्मनुजाः सुपुत्रं
शिष्यं गुरुं चाप्रतिकूलवादम् ।
यदर्थमभ्युद्यतमुत्तमं त-
त्करोति कर्माग्र्यमपारणीयम् ॥ ३-१२१-८ (२०६३३)
तस्यास्त्रवर्षाण्यहमुत्तमास्त्रै-
र्विहत्य सर्वाणइ रणेऽभिभूय ।
कायाच्छिरः सर्पविषाग्निकल्पैः
शरोत्तमैरुन्मथिताऽस्मि राम ॥ ३-१२१-९ (२०६३४)

खङ्गेन चाहं निशितेन सङ्ख्ये
कायाच्छिरस्तस्य बलात्प्रमत्य ।
ततोऽस् सर्वाननुगान्हनिष्ये
दुर्योधनं चापि कुरूश्च सर्वान् ॥ ३-१२१-१० (२०६३५)
आत्तायुधं मामिह रौहिणएय
पश्यन्तु भैमा युधि जातहर्षाः ।
निघ्नन्तमेकं कुरुयोधमुख्या-
नग्निं महाकक्षमिवान्तकाले ॥ ३-१२१-११ (२०६३६)
प्रद्युम्नमुक्तान्निशितान्न शक्ताः ।
सोढुं कृपद्रोणविकर्णकर्णाः ।
जानासि पीर्यं च तवात्मजस्य
कार्ष्णिर्भवत्येव यथा रणस्थः ॥ ३-१२१-१२ (२०६३७)
साम्बः ससूतं सरथं भुजाभ्यां
दुःशासनं शास्तु बलात्प्रमथ्य ।
न विद्यतेजाम्बवतीसुतस्य
रणेऽविषह्यं हि रणोत्कटस्य ॥ ३-१२१-१३ (२०६३८)
एतेन बालेन हि शम्बरस्य
दैत्यस्य सैन्यं सहसा प्रणुन्नम् ।
ग्हतः स पापो युधि केवलेन
युद्धेऽद्वितीयो हरितुल्यवीर्यः' ॥ ३-१२१-१४ (२०६३९)
वृत्तोरुरत्यायतपीनबाहु-
रेतेन सङ्ख्ये निहतोऽश्वचक्रः ।
को नाम साम्बस्य महारथस्य
रणे समक्षं रथमभ्युदीयात् ॥ ३-१२१-१५ (२०६४०)
यथा प्रविश्यान्तरमन्तकस्य
काले मनुष्यो न विनिष्क्रमेत ।
तथा प्रविश्यान्तरमस्य सङ्ख्ये
को नाम जीवन्पुनराव्रजेच्च ॥ ३-१२१-१६ (२०६४१)
द्रोणं कच भीष्मं च महारथौ तौ
सुतैर्वृतं चाप्यथ सोमदत्तम् ।
सर्वाणइ सैन्यानि च वासुदेवः
प्रधक्ष्यते सायकवह्निजालैः ॥ ३-१२१-१७ (२०६४२)
किंनाम लोकेषु विषह्यमस्ति-
कृष्णस्य सर्वेषु सदेवकेषु ।
आत्तायुधस्योत्तमबाणपाणे-
श्चक्रायुधस्याप्रतिमस्य युद्धे ॥ ३-१२१-१८ (२०६४३)

ततो निरुद्धोऽप्यसिचर्मपाणि-
र्महीमिमां धार्तराष्ट्रैर्विसंज्ञैः ।
हृतोत्तमाङ्गैर्निहतैः करोतु
कीर्णाङ्कुशैर्वेदिमिवाध्वरेषु ॥ ३-१२१-१९ (२०६४४)
गदोल्मुकौ बाहुकभानुनीथाः
शूरश्च सङ्ख्ये निशठः कुमारः ।
रणोत्कटौ सारणचारुदेष्णौ
कुलोचितं विप्रथयन्तु कर्म ॥ ३-१२१-२० (२०६४५)
सवृष्णिभोजान्धकयोधमुख्या
समागता सात्वतशूरसेना ।
हत्वा रणे तान्धृतराष्ट्रपुत्रा-
न्लोके यशः स्फीतमुपाकरोतु ॥ ३-१२१-२१ (२०६४६)
ततोऽभिमन्युः पृथिवीं प्रशास्तु
यावद्व्रतं धर्मभृतांवरिष्ठः ।
युधिष्ठिरः पारयते महात्मा
द्यूते यथोक्तं कुरुसत्तमेन ॥ ३-१२१-२२ (२०६४७)
अस्मत्प्रमुक्तैर्विशिखैर्जितारि-
स्ततो महीं भोक्ष्यति धर्मराजः ।
निर्धार्तराष्ट्रां हतसूतपुत्रा-
मेतद्धि नः कृत्यतमं यशस्यम् ॥ ३-१२१-२३ (२०६४८)
वासुदेव उवाच। ३-१२१-२४क्ष् (२०९७)
असंशयं माधव सत्यमेत-
द्गृह्णीम ते वाक्यमदीनसत्व ।
स्वाभ्यां भुजाभ्यामजितां तु भूमिं
नेच्छेत्कुरूणामृषभः कथंचित् ॥ ३-१२१-२४ (२०६४९)
न ह्येष कामान्न भयान्न लोभा-
द्युधिष्ठिरो जातु जह्यात्स्वधर्मम् ।
भीमार्जुनौ चातिरथौ यमौ च
तथैव कृष्णा द्रुपदात्मजेयम् ॥ ३-१२१-२५ (२०६५०)
उभौ हि युद्धेऽप्रतिमौ पृथिव्यां
वृकोदरश्चैव धनंजयश्च ।
कस्मान्न कृत्स्नां पृथिवीं प्रशासे-
न्माद्रीसुताभ्यां च पुरस्कृतोऽयम् ॥ ३-१२१-२६ (२०६५१)
यदा तु पाञ्चालपतिर्महात्मा
सकेकयश्चेदिपतिर्वयं च ।
युध्येम विक्रम्य रणे समेता-

स्तदैव सर्वे रिपवो हि न स्युः ॥ ३-१२१-२७ (२०६५२)
युधिष्ठिर उवाच। ३-१२१-२८क्ष् (२०९८)
नेदं चित्रं माधव यद्ब्रवीषि
सत्यं तु मे रक्ष्यतमं न राज्यम् ।
कृष्णस्तु मां वेद यथावदेकः
कृष्णं च वेदाहमथो यथावत् ॥ ३-१२१-२८ (२०६५३)
यदैव कालं पुरुषप्रवीरो
वेत्स्यत्ययं माधव विक्रमस्य ।
तदा रणे त्वं च शिनिप्रवीर
सुयोधनं जेष्यसि केशवश्च ॥ ३-१२१-२९ (२०६५४)
प्रतिप्रयान्त्वद्य दशार्हवीरा
दृष्टोस्मि नाथैर्नरलोकनाथैः ।
धर्मेऽप्रमादं कुरुताप्रमेया
द्रष्टाऽस्मि भूयः सुखिनः समेतान् ॥ ३-१२१-३० (२०६५५)
वैशंपायन उवाच। ३-१२१-३१क्ष् (२०९९)
तेऽन्योन्यमामन्त्र्य तथाऽभिवाद्य
वृद्धान्परिष्वज्य शिशूंश्च सर्वान् ।
यदुप्रवीराः स्वगृहाणि जग्मु-
स्ते चापि तीर्थान्यमुसंविचेरुः ॥ ३-१२१-३१ (२०६५६)
विसृज्य वृष्णीननु धर्मराजौ
विदर्भराजोपचितां सुतीर्थाम् ।
जगाम पुण्यां सरितं पयोष्णीं
सभ्रातृभृत्यः सह लोमशेन ॥ ३-१२१-३२ (२०६५७)
सुतेन सोमेन विमिश्रतोयां
पयः पयोष्णीं प्रति सोध्युवास ।
द्विजातिमुख्यैर्मुदितैर्महात्मा
संस्तूयमानः स्तुतिभिर्वराभिः ॥ ३-१२१-३३ (२०६५८)

इति श्रीमन्महाभारते अरण्यपर्वणि तीर्तयात्रापर्वणि
एकविंशत्यधिकशततमोऽध्यायः ॥ १२१ ॥
Mahabharata - Vana Parva - Chapter Footnotes

३-१२१-२ शैव्यादय इति स्वार्थे ष्यञ् ॥
३-१२१-७ स पार्थोपि तिष्ठत्विति पूर्वेणान्वयः ॥
३-१२१-८ यदर्थं शत्रुवधार्थम् । तत् सुपुत्रादिकम्। अस्माकमस्तीति
शेषः ॥

३-१२१-११ भैमा भीमकर्मकर्तारो भीमवंशजा वा ॥
३-१२१-१४ एतेन प्रद्युम्नेन ॥
३-१२१-३३ सुतेन अभिषुतेन । यज्ञे सोमपानतुल्यं
तज्जलपानमित्यर्थः। पयोष्णीं प्रति पयोष्ण्यां पयोमात्रमध्युवासं
भक्षितवान् ॥

---

वन-अध्यय१२२
॥ श्रीः ॥
३.१२२. अध्यायः १२२

Mahabharata - Vana Parva - Chapter Topics
लोमशेन युधिष्ठिरंप्रति पयोष्णोतटे गयकृतयागवर्णनम् ॥ १ ॥
तथा च्यवनेन शर्यातियाजनादिकथनम् ॥ २ ॥
युधिष्ठिरेण लोमशंप्रतिसविस्तरं च्यवनचरित्रकीर्तनप्रार्थना ॥ ३ ॥

Mahabharata - Vana Parva - Chapter Text

३-१२२-० (२०६५९)
लोमश उवाच। ३-१२२-०क्ष् (२१००)
गयेन यजमानेन सोमेनेह पुरंदरः ।
तर्पित श्रूयते राजन्स तृप्तो मुदमभ्यगात् ॥ ३-१२२-१ (२०६६०)
इह देवैः सहेन्द्रैश्च प्रजापतिभिरेव च ।
इष्टं बहुविधैर्यज्ञैर्महद्भिर्भूरिदक्षिणैः ॥ ३-१२२-२ (२०६६१)
आधूर्तरजसश्चेह राजा वज्रधरं प्रभुः ।
तर्पयामास सोमेन हयमेधेषु सप्तसु ॥ ३-१२२-३ (२०६६२)
तस्य सप्तसु यज्ञेषु सर्वमासीद्धिरण्ययम् ।
वानप्रस्थं च भौमं च यद्द्रव्यं नियतं मखे ॥ ३-१२२-४ (२०६६३)
चषालयूपचमसाः स्थाल्यः पात्र्यः स्रुचः स्रुवाः ।
तेष्वेव चास्य यज्ञेषु प्रयोगाः सप्त विश्रुताः ॥ ३-१२२-५ (२०६६४)
सप्तैकैकस्ययूपस्य चषालाश्चोपरिश्थिताः ।
तस्य स्म यूपान्यज्ञेषु भ्राजमानान्हिरण्मयान् ।
स्वयमुत्थापयामासुर्देवाः सेन्द्रा युधिष्ठिर ॥ ३-१२२-६ (२०६६५)
तेषु तस्य मखाग्र्येषु गयस्य पृथिवीपतेः ।
अमाद्यदिन्द्रः सोमेन दक्षिणाभिर्द्विजातयः ॥ ३-१२२-७ (२०६६६)
प्रसङ्ख्यानानसङ्ख्येयान्प्रत्यगृह्णन्द्विजातयः ॥ ३-१२२-८ (२०६६७)
सिकता वा यथा लोके यथावा दिवि तारकाः ।
यथा वा वर्षतो धारा असङ्ख्येयाः स्म केनचित् ॥ ३-१२२-९ (२०६६८)

तथैव तदसङ्ख्येयं धनं यत्प्रददौ गयः ।
सदस्येभ्यो महाराज तेषु यज्ञेषु सप्तसु ॥ ३-१२२-१० (२०६६९)
भवेत्सङ्ख्येयमेतद्धि यदेतत्परिकीर्तितम् ।
न तस्य शक्याः सङ्ख्यातुं दक्षिणादक्षिणावतः ॥ ३-१२२-११ (२०६७०)
हिरण्मयीभिर्गोभिश्च कृताभिर्विश्वकर्मणा ।
ब्राह्मणांस्तर्पयामास नानादिग्भ्यः समागतान् ॥ ३-१२२-१२ (२०६७१)
अल्पावशेषा पृथिवी चैत्यैरासीत्समाचिता ।
गयस्य यजमानस्य तत्रतत्र विशांपते ॥ ३-१२२-१३ (२०६७२)
स लोकान्प्राप्तवैनैन्द्रान्कर्मणा तेन भरत ।
सलोकतां तस्य गच्छेत्पयोष्ण्यां य उपस्पृशेत् ॥ ३-१२२-१४ (२०६७३)
तरस्मात्त्वमत्र राजेनद्र भ्रातृभिः सहितोच्युत ।
उपस्पृश्य महीपाल धूतपाप्मा भविष्यसि ॥ ३-१२२-१५ (२०६७४)
वैशंपायन उवाच। ३-१२२-१६क्ष् (२१०१)
स पयोष्ण्यां नरश्रेष्ठः स्नात्वा वै भ्रातृभिः सह ।
वैदूर्यपर्वतं चैव नर्मदां च महानदीम् ॥ ३-१२२-१६ (२०६७५)
ग्उद्दिश्य पाण्डवश्रेष्ठः स प्रतस्थे महीपतिः'।
समागमत तेजस्वी भ्रातृभिः सहितो नघ ॥ ३-१२२-१७ (२०६७६)
तत्रास्य सर्वाण्याचख्यौ लोमशो भगवानृषिः ।
तीर्थानि रमणीयानि पुण्यान्यायतनानि च ॥ ३-१२२-१८ (२०६७७)
यथायोगं यथाप्रीति प्रययौ भ्रातृभिः सह ।
तत्रतत्राददद्वित्तं ब्राह्मणेभ्यः सहस्रशः ॥ ३-१२२-१९ (२०६७८)
लोमश उवाच। ३-१२२-२०क्ष् (२१०२)
देवानामेति कौन्तेय तथा राज्ञां सलोकताम् ।
वेदूर्यपर्वतं दृष्ट्वा नर्मदामवतीर्य च ॥ ३-१२२-२० (२०६७९)
सन्धिरेष नरश्रेष्ठ त्रेताया द्वापरस्य च ।
एनमासाद्य कौन्तेय सर्वपापैः प्रमुच्यते ॥ ३-१२२-२१ (२०६८०)
एष शर्यातियज्ञस्य देशस्तात प्रकाशते ।
साक्षाद्यत्रापिबत्सोममश्विभ्यां सह वासवः ॥ ३-१२२-२२ (२०६८१)
चुकोप भार्गवश्चापि महेन्द्रस् महातपाः ।
संस्तम्भयामास च तं वासवं च्यवनः प्रभुः ॥ ३-१२२-२३ (२०६८२)
सुकन्यां चापि भार्यां स राजपुत्रीमवाप्तवान् ।
ग्नासत्यौ च महाभाग कृतवान्सोमपीथिवौ' ॥ ३-१२२-२४ (२०६८३)
युधिष्ठिर उवाच। ३-१२२-२५क्ष् (२१०३)
कथं विष्टम्भितस्तेन भगवान्पाकशासनः ।
किमर्थं भार्गवश्चापि कोपं चक्रे महातपाः ॥ ३-१२२-२५ (२०६८४)
नासत्यौ च कथं ब्रह्मन्कृतवान्सोमपीथिनौ ।

एतत्सर्वं यथावृत्तमाख्यातु भगवान्मम ॥ ३-१२२-२६ (२०६८५)

इति श्रीमन्महाभारते अरण्यपर्वणि तीर्थयात्रापर्वणि
द्वाविंशत्यधिकशततमोऽध्यायः ॥१२२ ॥
Mahabharata - Vana Parva - Chapter Footnotes

३-१२२-३ आधूर्तरजसो गयनामा ॥
३-१२२-४ वानरस्पत्यं वृक्षजं चषालादि ।भौमं मृन्मयं स्थाल्यादि ॥
३-१२२-५ चषालो यूपाकटकः ।यूपः यज्ञस्तम्भः। चमसाः
सोमपानपात्राणि। पात्र्यः हविःस्थापनार्थानि मृन्मयानि। स्रुचः
हविःप्रदानार्थाः। स्रुवाहविरवदानार्थाः ॥
३-१२२-८ प्रसङ्ख्यानान् एकयत्नेन भूयःस्वर्णमुद्रादेर्मापकान् खारीद्रोणादीन् ॥
३-१२२-२६ सोमस्य पीथः पानं तद्वन्तौ सोमपीथिनौ ॥

---

वन-अध्यय१२३
॥ श्रीः ॥
३.१२३. अध्यायः १२३

Mahabharata - Vana Parva - Chapter Topics
लामशेन युधिष्ठिरंप्रति सुकन्योपाख्यानकथनारम्भः ॥१ ॥
कदाचन शर्यातनिना नृपेण सैन्यादिभिःसह च्यवनाश्रमाभिगमनम्
॥२ ॥
तत्र शर्यातिकन्यया सुकन्यया चिरतरतपश्चर्यानिरतस्य च्यवनस्य
शरीरं पर्यावृत्य विवर्धमानमहावल्मीकावलोकनम् ॥३ ॥
तथा कुतूहलाद्वल्मीकोपरि
दृश्यमानच्यवननयनयुगलस्याज्ञानात्कण्टकेन विभेदनम् ॥४ ॥
ततः क्रुद्धस्य च्यवनस्य प्रसादनाय शर्यातिना भार्यात्वाय तस्मै
सुकन्यायाः प्रदानम् ॥५ ॥

Mahabharata - Vana Parva - Chapter Text

३-१२३-० (२०६८६)
लोमश उवाच। ३-१२३-०क्ष् (२१०४)
भृगोर्महर्षेः पुत्रोऽभूच्चयवनो नाम भारत ।
समीपे सरसस्तस्य तपस्तेपे महाद्युतिः ॥३-१२३-१ (२०६८७)
स्थाणुभूतो महातेजा वीरस्थानेन पाण्डव ।
अतिष्ठत चिरं कालमेकदेशे विशांपते ॥३-१२३-२ (२०६८८)

सवल्मीकोऽभवदृषिर्लताभिरिव संवृतः ।
कालेन महता राजन्समाकीर्णः पिपीलिकैः ॥ ३-१२३-३ (२०६८९)
तथा स संवृतो धीमान्मृत्पिण्ड इव सर्वशः ।
तप्यते स्म तपो घोरं वल्मीकेन समावृतः ॥ ३-१२३-४ (२०६९०)
अथ दीर्घस्य कालस्य शर्यातिर्नाम पार्थिवः ।
आजगाम सरो रम्यं विहर्तुमिदमुत्तमम् ॥ ३-१२३-५ (२०६९१)
तस्य स्त्रीणां सहस्राणि चत्वार्यासन्परिग्रहः ।
एकैव च सुता सुभ्रूः सुकन्या नाम भारत ॥ ३-१२३-६ (२०६९२)
सा सखीभिः परिवृता दिव्याभरणभूषिता ।
चङ्क्रम्यमाणा वल्मीकं भार्गवस्य समासदत् ॥ ३-१२३-७ (२०६९३)
सा वै वसुमतीं तत्र पश्यन्ती सुमनोरमाम् ।
वनस्पतीन्प्रचिन्वन्ती विजहार सखीवृता ॥ ३-१२३-८ (२०६९४)
रूपेण वयसा चैव भदनेन मदेन च ।
बभञ्ज वनवृक्षाणां शाखाः परमपुष्पिताः ॥ ३-१२३-९ (२०६९५)
तां सखीरहितामेकामेकवस्त्रामलंकृताम् ।
ददर्श भार्गवो धमांश्चरन्तीमिव विद्युतम् ॥ ३-१२३-१० (२०६९६)
तां पश्यमानो विजने स रेमे परमद्युतिः ।
क्षामकण्ठश्च विप्रर्षिस्तपोबलसमन्वितः ।
तामाबभाषेकल्याणीं सा चास्य न शृणोति वै ॥ ३-१२३-११ (२०६९७)
ततः सुकन्या वल्मीके दृष्ट्वा भार्गवचक्षुषी ।
कौतूहलात्कण्टकेन बुद्धिमोहबलात्कृता ।
किंनु खल्विदमित्युक्त्वा निर्बिभेदास्य लोचने ॥ ३-१२३-१२ (२०६९८)
अक्रुद्ध्यत्स तथा विद्धे नेत्रे परममन्युमान् ।
ततः शर्यातिसैन्यस्य शकृन्मूत्रे समावृणोत् ॥ ३-१२३-१३ (२०६९९)
ततो रुद्धे शकृन्मूत्रे सैन्यमासीत्सुदुःखितम् ।
तथागतमभिप्रेक्ष्य पर्यपृच्छत्स पार्थिवः ॥ ३-१२३-१४ (२०७००)
तपोनित्यस्य वृद्धस्य रोषणस्य विशेषतः ।
केनापकृतमद्येह भार्गवस्य महात्मनः ।
ज्ञातं वा यदि वाऽज्ञातं तद्द्रुतं ब्रूत माचिरम् ॥ ३-१२३-१५ (२०७०१)
तमूचुः सैनिकाः सर्वे न विद्मोऽपकृतं वयम् ।
सर्वोपायैर्यथाकामं भवांस्तदधिगच्छतु ॥ ३-१२३-१६ (२०७०२)
ततः स पृथिवीपालः साम्ना चोग्रेण च स्वयम् ।
पर्यपृच्छत्सुहृद्वर्गं पर्यजानन्न चैव ते ॥ ३-१२३-१७ (२०७०३)
आनाहार्तं ततो दृष्ट्वा तत्सैन्यमनुखार्दितम् ।
पितरं दुःखितं दृष्ट्वा सुकन्येदमथाब्रवीत् ॥ ३-१२३-१८ (२०७०४)
मयाऽटन्त्येह वल्मीके दृष्टं सत्वमभिज्वलत् ।

खद्योतवदभिज्ञातं तन्मया विद्धमन्तिकात् ॥ ३-१२३-१९ (२०७०५)
एतच्छ्रुत्वा तु वल्मीकं शर्यातिस्तूर्णमभ्ययात् ।
तत्रापशय्त्तपोवृद्धं चन्द्रादित्यसमप्रभम् ॥ ३-१२३-२० (२०७०६)
अयाचदथ सैन्यार्थं प्राञ्जलिः पृथिवीपतिः ।
अज्ञानाद्बालया यत्ते कृतं तत्क्षन्तुमर्हसि ॥ ३-१२३-२१ (२०७०७)
ततोऽब्रवीन्महीपालं च्यवनो भार्गवस्तदा ।
अपमानादहं विद्धो ह्यनया दर्पपूर्णया ॥ ३-१२३-२२ (२०७०८)
रूपौदार्यसमायुक्तां लोभमोहबलात्कृताम् ।
तामेव प्रतिगृह्याहं राजन्दुहितरं तव ।
क्षंस्यामीति महीपाल सत्यमेतदब्रवीमि ते ॥ ३-१२३-२३ (२०७०९)
लोमश उवाच। ३-१२३-२४क्ष् (२१०५)
ऋषेर्वचनमाज्ञाय शर्यातिरविचारयन् ।
ददौ दुहितरं तस्मै च्यवनाय महात्मने ॥ ३-१२३-२४ (२०७१०)
प्रतिगृह्य च तां कन्यां भगवान्प्रससाद ह ।
प्राप्तप्रसादौ राजा वै ससैन्यः पुरमाव्रजत् ॥ ३-१२३-२५ (२०७११)
सुकन्याऽपि पतिं लब्ध्वा तपस्विनमनिन्दिता ।
नित्यं पर्यचरत्प्रीत्या तपसा नियमेन च ॥ ३-१२३-२६ (२०७१२)
अग्नीनामतीथीनां च शुश्रूषुनसूयिका ।
समाराधयत क्षिप्रं च्यवनं सा शुभानना ॥ ३-१२३-२७ (२०७१३)

इति श्रीमन्महाभारते अरण्यपर्वणि तीर्थयात्रापर्वणि
त्रयोविंशत्यधिकशततमोऽध्यायः ॥ १२३ ॥
Mahabharata - Vana Parva - Chapter Footnotes

३-१२३-२ वीरस्तानेन वीरासनेन ॥
३-१२३-११ क्षामकण्ठः क्षीणध्वनिः अतएव सा तद्वचनं न शृणोति ॥
३-१२३-२० वयोवृद्धं च भार्गवम् इति झ । ध। पाठः ॥

---

वन-अध्यय१२४
॥ श्रीः ॥
३.१२४. अध्यायः १२४

Mahabharata - Vana Parva - Chapter Topics
कदाचन च्यवनाश्रममुपागताभ्यामश्विभ्यां भार्यात्वाय सुकन्याप्रति
प्रार्थनम् ॥ १ ॥
तदकामयमानां तां प्रत्यश्विभ्यां स्वप्रसादाच्च्यवने
रूपयौवनसंपन्ने सति तुल्यरूपेषु त्रिषु कस्यचिद्वरणचोदना

॥ २ ॥
भर्त्राज्ञया तया तदङ्गीकारे च्यवनेन सहाश्विभ्यां सरसोऽन्तर्जले निमज्जनम् ॥ ३ ॥
सुकन्यया निमज्ज्योत्थितेषु सरूपेषु त्रिषु तेषु स्वपातिव्रत्यमहिम्ना च्यवनस्यैव वरणम् ॥ ४ ॥
ततस्तुष्टेन च्यवनेनाश्विनोः सोमरसदापनप्रतिज्ञानम् ॥ ५ ॥

Mahabharata - Vana Parva - Chapter Text

३-१२४-० (२०७१४)
लोमश उवाच। ३-१२४-०क्ष् (२१०६)
कस्य चित्त्वथ कालस्य त्रिदशावश्विनौ नृप ।
कृताभिषेकां विवृतां सुकन्यां तामपश्यताम् ॥ ३-१२४-१ (२०७१५)
तां दृष्ट्वा दर्शनीयाङ्गीं देवराजसुतामिव ।
ऊचतुः समभिद्रुत्य नासत्यावश्विनाविदम् ॥ ३-१२४-२ (२०७१६)
कस्य त्वमसि वामोरु वनेऽस्मिन्किं करोषि च ।
इच्छाव भद्रे ज्ञातुं त्वां तत्वमाख्याहि शोभने ॥ ३-१२४-३ (२०७१७)
ततः सुकन्या संवीता तावुवाच सुरोत्तमौ ।
शर्यातितनयां वित्तं भार्यां मां च्यवनस्य च ॥ ३-१२४-४ (२०७१८)
ग्नाम्ना चाहं सुकन्येति नृलोकेऽस्मिन्प्रतिष्ठिता ।
साऽहंसर्वात्मना नित्यं भर्तारमनुवर्तिनी' ॥ ३-१२४-५ (२०७१९)
अथाश्विनौ प्रहस्यैतामब्रूतां पुनरेव तु ।
कथं त्वमसि कल्याणि पित्रा दत्ताऽऽगता वने ॥ ३-१२४-६ (२०७२०)
भ्राजसेऽस्मिन्वने भीरु विद्युत्सौदामनी यथा ।
न देवेष्वपि तुल्यां हि त्वया पश्याव भामिनि ॥ ३-१२४-७ (२०७२१)
अनाभरणसंपन्ना परमाम्बरवर्जिता ।
शोभयस्यधिकं भद्रे वनमप्यनलंकृता ॥ ३-१२४-८ (२०७२२)
सर्वाभरणसंपनना परमाम्वरधारिणी ।
शोभेथास्त्वनवद्याङ्गि न त्वेवं मलपङ्किनी ॥ ३-१२४-९ (२०७२३)
कस्मादेवंविधा भूत्वा जराजर्जरितं पतिम् ।
त्वमुपास्से ह कल्याणि कामभोगबहिष्कृतम् ॥ ३-१२४-१० (२०७२४)
असमर्थं परित्राणे पोषणे तु शुचिस्मिते ।
सा त्वं च्यवनमुत्सृज्यवरयस्वैकमावयोः ॥ ३-१२४-११ (२०७२५)
पत्यर्थं देवगर्भाभे मा वृथा यौवनं कृथाः ।
एवमुक्ता सुकन्याऽपि सुरौ ताविदमब्रवीत् ॥ ३-१२४-१२ (२०७२६)
रताऽहं च्यवने पत्यौ मैवं मां पर्यशङ्कतम् ।

तावब्रूतां पुनस्त्वेनामावां देवभिषग्वरौ ॥ ३-१२४-१३ (२०७२७)
युवानं रूपसंपन्नं करिष्यावः पतिं तव ।
ततस्तस्यावयोश्चैव वृणीष्वान्यतमं पतिम् ।
एतेन समयेनैनमामन्त्रय पतिं शुभे ॥ ३-१२४-१४ (२०७२८)
सा तयोर्वचनाद्राजन्नुपसंगम्य भार्गवम् ।
उवाच वाक्यं यत्ताभ्यामुक्तं भृगुसुतं प्रति ॥ ३-१२४-१५ (२०७२९)
तच्छ्रुत्वा च्यवनो भार्यामुवाच क्रियतामिति ।
ग्सा भर्त्रा समनुज्ञाता क्रियतामित्यथाब्रवीत् ॥ ३-१२४-१६ (२०७३०)
श्रुत्वा तदश्विनौ वाक्यं तस्यास्तत्क्रियतामिति'।
ऊचतू राजपुत्रीं तां पतिस्तव विशत्वपः ॥ ३-१२४-१७ (२०७३१)
ततोऽम्भश्च्यवनः शीघ्रं रूपार्थी प्रविवेश ह ।
अश्विनावपि तद्राजन्सरः प्राविशतां तदा ॥ ३-१२४-१८ (२०७३२)
ततो मुहूर्तादुत्तीर्णाः सर्वे ते सरसस्त्रयः ।
दिव्यरूपधराः सर्वे युवानो मृष्टकुण्डलाः ।
तुल्यवेषधराश्चैव मनसः प्रीतिवर्धनाः ॥ ३-१२४-१९ (२०७३३)
तेऽब्रुवन्सहिताः सर्वे वृणीष्वान्यतमं शुभे ।
अस्माकमीप्सितं भद्रे पतित्वे वरवर्णिनि ॥ ३-१२४-२० (२०७३४)
ग्त्वमश्विनोरन्यतरं च्यवनं वा यशस्विनि'।
यत्र वाऽप्यभिकामाऽसि तं वृणीष्व सुशोभने ॥ ३-१२४-२१ (२०७३५)
सा समीक्ष्य तु तान्सर्वांस्तुल्यरूपधरान्स्थितान् ।
निश्चित्य मनसा बुद्ध्या देवी वव्रे स्वकं पतिम् ॥ ३-१२४-२२ (२०७३६)
लब्ध्वा तु च्यवनो भार्यांवयोरूपं च वाञ्छितम् ।
हृष्टोऽब्रवीन्महातेजास्तौ नासत्याविदं वचः ॥ ३-१२४-२३ (२०७३७)
यथाऽहं रूपसंपन्नो वयसा च समन्वितः ।
कृतो भवद्भ्यां वृद्धः सन्भार्यां च प्राप्तवानिमाम् ॥ ३-१२४-२४ (२०७३८)
तस्माद्युवां करिष्यामि प्रीत्याऽहं सोमपीथिनौ ।
मिषतो देवराजस्य सत्यमेतद्ब्रवीमि वाम् ॥ ३-१२४-२५ (२०७३९)
तच्छ्रुत्वा हृष्टमनसौ दिवं तौ प्रतिजग्मतुः ।
च्यवनश्च सुकन्या च सुराविव विजह्रतुः ॥ ३-१२४-२६ (२०७४०)

इति श्रीमन्महाभारते अरण्यपर्वणि तीर्थयात्रापर्वणि
चतुर्विंशत्यधिकशततमोऽध्यायः ॥ १२४ ॥

Mahabharata - Vana Parva - Chapter Footnotes

३-१२४-१ विवृतामनाच्छादीताम् ॥
३-१२४-४ ततः सुकन्या सव्रीडेति झ । पाठः ॥

वन-अध्यय१२५
॥ श्रीः ॥
३.१२५. अध्यायः १२५

Mahabharata - Vana Parva - Chapter Topics
च्यवनस्य यौवनलाभश्रवणहृष्टेन शर्यातिना तदाश्रमाभिगमनम्
॥ १ ॥
च्यवनेन शर्यातेर्याजनम् ॥ २ ॥
तत्र च्यवनेनाश्विभ्यां स्वप्रतिश्रुतसोमरसदानोद्यमे इन्द्रेण तस्य हननाय बाहुना वज्रोद्यमनम् ॥ ३ ॥
तद्बाहुसंस्तग्भनपूर्वकं च्यवनसृष्टया कृत्यया शक्रंप्रत्यभिसरणम् ॥ ४ ॥

Mahabharata - Vana Parva - Chapter Text

३-१२५-० (२०७४१)
लोमश उवाच। ३-१२५-०क्ष् (२१०७)
ततः श्रुत्वा तु शर्यातिर्वयस्थं च्यवनं कृतम् ।
सुहृष्टः सेनया सार्धमुपायाद्भार्गवाश्रमम् ॥ ३-१२५-१ (२०७४२)
च्यवनं च सुकन्यां च दृष्ट्वा देवसुताविव ।
रेमे सभार्यः शर्यातिः कृत्स्नां प्राप्य महीमिव ॥ ३-१२५-२ (२०७४३)
ऋषिणा सत्कृतस्तेन सभार्यः पृथिवीपतिः ।
उपोपविष्टः कल्याणीः कथाश्चक्रे मनोरमाः ॥ ३-१२५-३ (२०७४४)
अथैनं भार्गवो राजन्नुवाच परिसान्त्वयन् ।
याजयिष्यामि राजंस्त्वां संभारानुपकल्पय ॥ ३-१२५-४ (२०७४५)
ततः परमसंहृष्टः शर्यातिरवनीपतिः ।
च्यवनस्य महाराज तद्वाक्यं प्रत्यपूजयत् ॥ ३-१२५-५ (२०७४६)
प्रशस्तेऽहनि यज्ञीये सर्वकामसमृद्धिमत् ।
कारयामास शर्यातिर्यज्ञायतनमुत्तमम् ॥ ३-१२५-६ (२०७४७)
तत्रैनं च्यवनो राजन्याजयामास भार्गवः ।
अद्भुतानि च तत्रासन्यानि तानि निबोध मे ॥ ३-१२५-७ (२०७४८)
अगृह्णाच्च्यवनः सोममश्विनोर्देवयोस्तदा ।
तमिन्द्रो वारयामास गृह्णानं स तयोर्ग्रहम् ॥ ३-१२५-८ (२०७४९)
इन्द्र उवाच। ३-१२५-९क्ष् (२१०८)
उभावेतौ न सोमार्हौ नासत्याविति मे मतिः ।
भिषजौ दिवि देवानां कर्मणा तेन नार्हतः ॥ ३-१२५-९ (२०७५०)

च्यवन उवाच। ३-१२५-१०क्ष् (२१०९)
मावमंस्था महात्मानौ रूपद्रविणवत्तरौ ।
यौ चक्रतुर्मां मधवन्वृन्दारकमिवाजरम् ॥ ३-१२५-१० (२०७५१)
ऋते त्वां विबुधांश्चान्यान्कथं वै नार्हतः सवम् ।
अश्विनावपि देवेन्द्र देवौ विद्धि पुरंदर ॥ ३-१२५-११ (२०७५२)
इन्द्र उवाच। ३-१२५-१२क्ष् (२११०)
चिकित्सकौ कर्मकरौ कामरूपसमन्वितौ ।
लोके चरन्तौ मर्त्यानां कथं सोममिहार्हतः ॥ ३-१२५-१२ (२०७५३)
लोमश उवाच। ३-१२५-१३क्ष् (२१११)
एतदेव तदा वाक्यमाम्रेडयति वासवे ।
अनादृत्यततः शक्रं ग्रहं जग्राह भार्गवः ॥ ३-१२५-१३ (२०७५४)
ग्रहीष्यन्तं तु तं सोममश्विनोरुत्तमं तदा ।
समीक्ष्य बलभिद्देव इदं वचनमब्रवीत् ॥ ३-१२५-१४ (२०७५५)
आभ्यामर्ताय सोमं त्वं ग्रहीष्यसि यदि स्वयम् ।
वज्रं ते प्रहरिष्यामि घोररूपमनुत्तमम् ॥ ३-१२५-१५ (२०७५६)
एवमुक्तः स्मयन्निन्द्रमभिवीक्ष्यस भार्गवः ।
जग्राह विधिवत्सोममश्विभ्यामुत्तमं ग्रहम् ॥ ३-१२५-१६ (२०७५७)
ततोऽस्मै प्राहरद्वज्रं घोररूपं शचीपतिः ।
तस्य प्रहरतो बाहुं स्तम्भयामास भार्गवः ॥ ३-१२५-१७ (२०७५८)
तं स्तम्भयित्वा च्यवनो जुहुवे मन्त्रतोऽनलम् ।
कृत्यार्थी सुमहातेजा देवं हिंसितुमुद्यतः ॥ ३-१२५-१८ (२०७५९)
ततः कृत्याऽथ संजज्ञे मुनेस्तस्य तपोबलात् ।
मदो नाम महावीर्यो बृहत्कायो महासुरः ॥ ३-१२५-१९ (२०७६०)
शरीरं यस् निर्देष्टुमशक्यं तु सुरासुरैः ।
तस्यास्यमभवद्धोरं तीक्ष्णाग्रदशनं महत् ॥ ३-१२५-२० (२०७६१)
हनुरेका स्थिता त्वस्य भूमावेका दिवं गता ।
चतस्रश्चायता दंष्ट्रा योजनानां शतंशतम् ॥ ३-१२५-२१ (२०७६२)
इतरे तस्य दशना बभूवुर्दशयोजनाः ।
प्रासादशिखराकाराः शूलाग्रसमदर्शनाः ॥ ३-१२५-२२ (२०७६३)
बाहू परिघसंकाशावायतावयुतं समौ ।
नेत्रे रविशशिप्रख्ये वक्रं कालाग्निसंनिभम् ॥ ३-१२५-२३ (२०७६४)
लेलिहज्जिह्वया वक्रं विद्युच्चपललोलया ।
व्यात्ताननो घोरदृष्टिर्ग्रसन्निव जगद्बलात् ॥ ३-१२५-२४ (२०७६५)
स भक्षयिष्यन्संक्रुद्धः शतक्रतुमुपाद्रवत् ।
महता घोररूपेण लोकाञ्शब्देन नादयत् ॥ ३-१२५-२५ (२०७६६)

इति श्रीमन्महाभारते अरण्यपर्वणि तीर्थयात्रापर्वणि
प्चविंशत्यधिकशततमोऽध्यायः ॥ १२५ ॥
Mahabharata - Vana Parva - Chapter Footnotes

३-१२५-१ वयस्थं युवानम् ॥
३-१२५-४ संभारान् यज्ञोपकरणानि ॥
३-१२५-८ ग्रहं सोमस्य । गृह्णानं तयोरर्थे ॥
३-१२५-११ सवं सोमम् ॥
३-१२५-१२ भैषज्यात्कर्मणो निन्द्याविति क । पाठः ॥
३-१२५-१३ आम्रेड्यति पुनःपुनरावर्तयति ॥

---

वन-अध्यय१२६
॥ श्रीः ॥
३.१२६. अध्यायः १२६

Mahabharata - Vana Parva - Chapter Topics
इन्द्राभिष्टुतेन च्यवनेन तस्मिन्स्वप्रयुक्तकृत्यायास्ततो विनिवर्त्य स्त्र्यादिषु विभजनम् ॥ १ ॥
लोमशेन सुकन्योपाख्यानसमापनपूर्वकं युधिष्ठिराय नानातीर्थमहिमानुवर्णनम् ॥ २ ॥

Mahabharata - Vana Parva - Chapter Text

३-१२६-० (२०७६७)
लोमश उवाच। ३-१२६-०क्ष् (२१११२)
तं दृष्ट्वा घोरवदनं मदं देवः शतक्रतुः ।
आयान्तं भक्षयिष्यन्तं व्यात्ताननमिवान्तकम् ॥ ३-१२६-१ (२०७६८)
भयात्संस्तम्भितभुजः सृक्विणी लेलिहन्मुहुः ।
ततोऽब्रवीद्देवराजश्च्यवनं भयपीडितः ॥ ३-१२६-२ (२०७६९)
सोमार्हावश्विनावेतावद्य प्रभृति भार्गव ।
भविष्यतः सत्यमेतद्वचो विप्र प्रसीद मे ॥ ३-१२६-३ (२०७७०)
न ते मिथ्या समारम्भो भवत्वेष परो विधिः ।
जानामि चाहं विप्रर्षे न मिथ्या त्वं करिष्यसि ॥ ३-१२६-४ (२०७७१)
सोमपावश्विनावेतौ यथा वाद्य कृतौ त्वया ।
ग्तथैव मामपि ब्रह्मञ्श्रेयसा योक्तुमर्हसि' ॥ ३-१२६-५ (२०७७२)
भूय एव तु ते वीर्यं प्रकाशेदिति भार्गव ।
सुकन्यायाः पितुश्चास्य लोके कीर्तिः प्रथेदिति ॥ ३-१२६-६ (२०७७३)

अतो मयैतद्विहितं तव वीर्यप्रकाशनम् ।
तस्मात्प्रसादं कुरु मे भवत्वेवं यथेच्छसि ॥ ३-१२६-७ (२०७७४)
एवमुक्तस्य शक्रेण च्यवनस्य महात्मनः ।
स मन्युर्व्यगमच्छीघ्रं मुमोच च पुरंदरम् ॥ ३-१२६-८ (२०७७५)
मदं च व्यभजद्राजन्पाने स्त्रीषु च वीर्यवान् ।
अक्षेषु मृगयायां च पूर्वसृष्टं पुनः पुनः ॥ ३-१२६-९ (२०७७६)
तदा मदं विनिक्षिप्य शक्रं संतर्प्य चेन्दुना ।
अश्विभ्यां सहितान्देवान्याजयित्वा च तं नृपम् ॥ ३-१२६-१० (२०७७७)
विख्याप्य वीर्यं लोकेषु सर्वेषु वदतांवरः ।
सुकन्यया सहारण्ये विजहारानुकूलया ॥ ३-१२६-११ (२०७७८)
तस्यैतद्द्विजसंघुष्टं सरो राजन्प्रकाशते ।
अत्रत्वं सह सोदर्यैः पितृडन्देवांश्च तर्पय ॥ ३-१२६-१२ (२०७७९)
एतद्दृष्ट्वा महीपाल सिकताक्षं च भारत ।
सैन्धवारण्यमासाद्य कुल्यानां कुरु दर्शनम् ॥ ३-१२६-१३ (२०७८०)
पुष्करेषु महाराज सर्वेषु च जलं स्पृश ।
स्थाणोर्मन्त्राणि च जपन्सिद्धिं प्राप्स्यसि भारत ॥ ३-१२६-१४ (२०७८१)
संधिर्द्वयोर्नरश्रेष्ठ त्रेताया द्वापरस्य च ।
अयं हि दृश्यते पार्थ सर्वपापप्रणाशनः ।
अत्रोपस्पृश चैव त्वं सर्वपापप्रणाशने ॥ ३-१२६-१५ (२०७८२)
आर्चीकपर्वतश्चैव निवासौ वै मनीषिणाम् ।
सदाफलः सदास्रोतो मरुतां स्तानमुत्तमम् ॥ ३-१२६-१६ (२०७८३)
चैत्याश्चैते बहुविधास्त्रिदशानां युधिष्ठिर ।
एतच्चन्द्रमसस्तीर्थमृषयः पर्युपासते ।
वैखानसप्रभृतयो वालखिल्यास्तथैव च ॥ ३-१२६-१७ (२०७८४)
शृङ्गाणि त्रीणि पुण्यानि त्रीणि प्रसर्वणानि च ।
सर्वाण्यनुपरिक्रम्य यथाकाममुपस्पृश ॥ ३-१२६-१८ (२०७८५)
शान्तनुश्चात्र राजेन्द्र शुनकश्च नराधिपः ।
नरनारायणौ चोभौ तपस्तप्त्वा चिरं नृप ।
स्थानं सनातनं प्राप्तावीश्वरध्यानतत्परौ ॥ ३-१२६-१९ (२०७८६)
इह नित्याश्रया देवाः पितरश्च महर्षिभिः ।
आर्चीकपर्वते तेपुस्तान्यजस्व युधिष्ठिर ॥ ३-१२६-२० (२०७८७)
इह ते वै चरून्प्राश्नन्नृषयश्च विशांपते ।
यमुना चाक्षयस्रोताः कृष्णश्चेह तपोरतः ॥ ३-१२६-२१ (२०७८८)
यमौ च भीमसेनश्च कृष्णा चामित्रकर्शन ।
सर्वे चात्र गमिष्यामस्त्वयैव सह पाण्डव ॥ ३-१२६-२२ (२०७८९)
एतत्प्रस्रवणं पुण्यमिन्द्रस्य मनुजेश्वर ।

यत्रधाता विधाता च वपरुणश्चोर्ध्वमागताः ॥ ३-१२६-२३ (२०७९०)
इह तेऽप्यवसन्राजञ्शान्ताः परमधर्मिणः ।
मैत्राणामृजुबुद्धीनामयं गिरिवरः शुभः ॥ ३-१२६-२४ (२०७९१)
एषा सा यमुना राजन्महर्षिगणसेविता ।
नानायज्ञचिता राजन्पुण्या पापभयापहा ॥ ३-१२६-२५ (२०७९२)
अत्रराजा महेष्वासो मांधाताऽयजत स्वयम् ।
साहदेविश्च कौन्तेय सोमको ददतांवरः ॥ ३-१२६-२६ (२०७९३)

इति श्रीमन्महाभारते अरण्यपर्वणि तीर्थयात्रापर्वणि
षड्विंशत्यधिकशततमोऽध्यायः ॥ १२६ ॥
Mahabharata - Vana Parva - Chapter Footnotes

३-१२६-२ सृक्किणी गल्लगर्भौ ॥
३-१२६-३ वचो ब्रह्मन्ब्रवीमि ते इति क । पाठः ॥
३-१२६-१५ संप्रति कलिद्वापरसंधावपि अत्रतीर्थे
त्रेताद्वापारसंधितुल्यः कालेस्ति । अत्रस्नातानां कलिस्पर्शो नास्तीति
भावः ॥
३-१२६-१६ सदास्रोतः सदाप्रवाहयुक्तम् ॥
३-१२६-१८ त्रीणि सृङ्गाणीति त्रिकोणं वाराणसीक्षेत्रम् । त्रीणि
प्रस्रवणानीति च प्रयागम्। एतानि सर्वाणि अनुपरिक्रम्य
प्रदक्षिणीकृत्य ॥
३-१२६-२० तेपुस्तपस्रक्रुः ॥
३-१२६-२६ साहदेविः सृञ्जयपुत्रस्य पुत्रः ॥

---

वन-अध्यय१२७
॥ श्रीः ॥
३.१२७. अध्यायः १२७

Mahabharata - Vana Parva - Chapter Topics
लोमशेन युधिष्ठिरंप्रति
मान्धातृपदप्रवृत्तिनिमित्तकथनपूर्वकं मांदातृचरित्रकीर्तनम्
॥ १ ॥

Mahabharata - Vana Parva - Chapter Text

३-१२७-० (२०७९४)

युधिष्ठिर उवाच। ३-१२७-०क्ष् (२११३)
मान्धाता राजशार्दूलस्त्रिषु लोकेषु विश्रुतः ।
कथं जातो महाब्रह्मन्यौवनाश्वो नृपोत्तमः ॥ ३-१२७-१ (२०७९५)
कथं चैनां परां ख्यातिं प्राप्तवानमितद्युतिः ।
यस्य लोकास्त्रयो वश्या विष्णोरिव महात्मनः ॥ ३-१२७-२ (२०७९६)
एतदिच्छाम्यहं श्रोतुं चरितं तस्य धीमतः ।
ग्सत्यकीर्तेर्हि मान्धातुः कथ्यमानं त्वयाऽनघ' ॥ ३-१२७-३ (२०७९७)
यथा मान्धातृशब्दश्च तस्य शक्रसमद्युते ।
जन्म चाप्रतिवीर्यस् कुशलो ह्यसि भाषितुम् ॥ ३-१२७-४ (२०७९८)
लोमश उवाच। ३-१२७-५क्ष् (२११४)
शृणुष्वावहितो राजन्राज्ञस्तस्य महात्मनः ।
यथा मान्धातृशब्दो वै लोकेषु परिगीयते ॥ ३-१२७-५ (२०७९९)
इक्ष्वाकुवंशप्रभवो युवनाश्वो महीपतिः ।
सोऽयजत्पृथिवीपालः क्रतुभिर्भूरिदक्षिणैः ॥ ३-१२७-६ (२०८००)
अश्वमेधसहस्रं च प्राप्य धर्मभृतांवरः ।
अन्यैश्च क्रतुभिर्मुख्यैरयजत्स्वाप्तदक्षिणैः ॥ ३-१२७-७ (२०८०१)
अनपत्यस्तु राजर्षिः स महात्मा महाव्रतः ।
मन्त्रिष्वाधाय तद्राज्यं वनित्यो बभूव ह ।
शास्त्रदृष्टेन विधिना संयोज्यात्मानमात्मवान् ॥ ३-१२७-८ (२०८०२)
स कदाचिन्नृपो राजन्नुपवासेन दुःखितः ।
पिपासाशुष्कहृदयः प्रविवेशाश्रमं भृगोः ॥ ३-१२७-९ (२०८०३)
तामेव रात्रिं राजेन्द्र महात्मा भृगुनन्दनः ।
इष्टिं चकार सौद्युम्नेर्महर्षिः पुत्रकारणात् ॥ ३-१२७-१० (२०८०४)
संभृतो मन्त्रपूतेन वारिणा कलशो महान् ।
तत्रातिष्ठत राजेन्द्र पूर्वमेव समाहितः ॥ ३-१२७-११ (२०८०५)
यत्प्राश्य प्रसवेत्तस्य पत्नी शक्रसमं सुतम् ।
ग्तद्वारि विहितं राजन्यस्मिन्नासीत्सुसंस्कृतम्'।
तं न्यस्य वेद्यां कलशं सुषुपुस्ते महर्षयः ॥ ३-१२७-१२ (२०८०६)
रात्रिजागरणाच्छ्रान्तान्सौद्युम्निः समतीत्य तान् ।
शुष्ककण्ठः पिपासार्तः पानीयार्थी भृशं नृपः ।
तं प्रविश्याश्रमं शान्तः पानीयं सोऽभ्ययाचत ॥ ३-१२७-१३ (२०८०७)
तस्य श्रान्तस्य शुष्केण कण्ठेन क्रोशतस्तदा ।
नाश्रौषीत्कश्चन तदा शकुनेरिव वाशतः ॥ ३-१२७-१४ (२०८०८)
ततस्तं कलशं दृष्ट्वा जलपूर्णं स पार्थिवः ।
अभ्यद्रवत वेगेन पीत्वा चाम्भो व्यवासृजत् ॥ ३-१२७-१५ (२०८०९)
स पीत्वा शीतलं तोयं पिपासार्तो महीपतिः ।

निर्वाणमगमद्धीमान्सुसुखी चाभवत्तदा ॥ ३-१२७-१६ (२०८१०)
ततस्ते प्रत्यबुध्यन्त मुनयः सतपोधनाः ।
निस्तोयं तं च कलशं ददृशुः सर्व एव ते ॥ ३-१२७-१७ (२०८११)
कस्य कर्मेदमिति ते पर्यपृच्छन्समागताः ।
युवनाश्वो ममेत्येवं सत्यं समभिपद्यत ॥ ३-१२७-१८ (२०८१२)
न युक्तमिति तं प्राह भगवान्भार्गवस्तदा ।
सुतार्थं स्थापिता ह्यापस्तपसा चैव संभृताः ॥ ३-१२७-१९ (२०८१३)
मया ह्यत्राहितं ब्रह्म तप आस्थाय दारुणम् ।
पुत्रार्थं तव राजर्षे महाबलपराक्रम ॥ ३-१२७-२० (२०८१४)
महाबलो महावीर्यस्तपोबलसमन्वितः ।
यः शक्रमपि वीर्येण गमयेद्यमसादनम् ॥ ३-१२७-२१ (२०८१५)
अनेन विधिना राजन्मयैतदुपपादितम् ।
अब्भक्षणं त्वया राजन्न युक्तं कृतमद्य वै ॥ ३-१२७-२२ (२०८१६)
न त्वद्य शक्यमस्माभिरेतत्कर्तुमतोऽनयथा ।
नूनं दैवकृतं ह्येतद्यदेवं कृतवानसि ॥ ३-१२७-२३ (२०८१७)
पिपासितेन याः पीता विधिमन्त्रपुरस्कृताः ।
आपस्त्वया महाराज मत्तपोवीर्यसंभृताः ॥ ३-१२७-२४ (२०८१८)
ताभ्यस्त्वमात्मना पुत्रमीदृशं जनयिष्यसि ।
विधास्यामो वयं तत्र तवेष्टिं परमाद्भुताम् ॥ ३-१२७-२५ (२०८१९)
यथा शक्रसमं पुत्रं जनयिष्यसि वीर्यवान् ।
ग्न च प्राणैर्महाराज वियोगस्ते भविष्यति' ॥ ३-१२७-२६ (२०८२०)
मा खिदस्त्वं हि राजेनद्र दैवं हि बलवत्तरम्'।
गर्भधारणजं वाऽपि न खेदं समवाप्स्यसि ॥ ३-१२७-२७ (२०८२१)
ततो वर्षशते पूर्णे तस्य राज्ञो महात्मनः ।
वामं पार्श्वं विनिर्भिद्य सुतः सूर्य इव स्थितः ॥ ३-१२७-२८ (२०८२२)
निश्चक्राम महातेजा न च तं मृत्युराविशत् ।
युवनाश्वं नरपतिं तदद्भुतमिवाभवत् ॥ ३-१२७-२९ (२०८२३)
ततः शक्रो महातेजास्तं दिदृक्षुरुपागमत् ।
ततो देवा महेन्द्रं तमपृच्छन्धास्यतीति किम् ॥ ३-१२७-३० (२०८२४)
प्रदेशिनीं ततोऽस्यास्ये शक्रः समभिसंदधे ।
मामयं धास्यतीत्येवं भाषिते चैव वज्रिणा ।
मांधातेति च नामास्य चक्रुः सेन्द्रा दिवौकसः ॥ ३-१२७-३१ (२०८२५)
प्रदेशिनीं शक्रदत्तामास्वाद्य स शिशुस्तदा ।
अवर्धत महातेजाः किष्कून्राजंस्त्र्योदश ॥ ३-१२७-३२ (२०८२६)
वेदास्तं सधनुर्वेदा दिव्यान्स्त्राणि चेश्वरम् ।
उपतस्थुर्महाराजं ध्यातमात्राणि सर्वशः ॥ ३-१२७-३३ (२०८२७)

धनुराजगवं नाम शराः शृङ्गोद्भवाश्च ये ।
अभेद्यं कवचं चैव सद्यस्तमुपशिश्रियुः ॥ ३-१२७-३४ (२०८२८)
सोऽभिषिक्तो भगवता स्वयं शक्रेण भारत ।
धर्मेण व्यजयल्लोकांस्त्रीन्विष्णुरिव विक्रमैः ॥ ३-१२७-३५ (२०८२९)
तस्याप्रतिहतं चक्रं प्रावर्तत महात्मनः ।
रत्नानि चैव राजर्षिं स्वयमेवोपतस्थिरे ॥ ३-१२७-३६ (२०८३०)
तस्येयं वसुसंपूर्णा वसुधा वसुधाधिप ।
तेनेष्टं विविधैर्यज्ञैर्बहुभिः स्वाप्तदक्षिणैः ॥ ३-१२७-३७ (२०८३१)
चितचैत्यो महातेजा धर्मान्प्राप्य च पुष्कलान् ।
शक्रस्यार्धासनं राजँल्लब्धवानमितद्युतिः ॥ ३-१२७-३८ (२०८३२)
एकाह्ना पृथिवी तेन धर्मनित्येन धीमता ।
विजिता शासनादेव सरत्नाकरपत्तना ॥ ३-१२७-३९ (२०८३३)
तस्य चैत्यैर्महाराज क्रतूनां दक्षिणावताम् ।
चतुरन्ता मही व्याप्ता नासीत्किंचिदनावृतम् ॥ ३-१२७-४० (२०८३४)
तेन पद्मसहस्राणि गवां दश महात्मना ।
ब्राह्मणेभ्यो महाराज दत्तानीति प्रचक्षते ॥ ३-१२७-४१ (२०८३५)
तेन द्वादशवार्षिक्यामनावृष्ट्यां महात्मना ।
वृष्टं सस्यविवृद्ध्यर्थं मिषतो वज्रपाणिनः ॥ ३-१२७-४२ (२०८३६)
तेन सोमकुलोत्पन्नो गान्धाराधिपतिर्महान् ।
शर्जन्निव महामेघः प्रमथ्य निहतः शरैः ॥ ३-१२७-४३ (२०८३७)
प्रजाश्चतुर्विधास्तेन त्राता राजन्कृतात्मना ।
तेनात्मतपसा लोकास्तापिताश्चातितेजसा ॥ ३-१२७-४४ (२०८३८)
तस्यैतद्देवयजनं स्थानमादित्यवर्चसः ।
यस्य पुण्यतमे देशे कुरुक्षेत्रेस्य मध्यतः ॥ ३-१२७-४५ (२०८३९)
गतथा त्वमपि राजेन्द्र मान्धातेव महीपतिः ।
धर्मं कृत्वा महीं रक्ष स्वर्गलोकं गमिष्यसि' ॥ ३-१२७-४६ (२०८४०)
एतत्ते सर्वमाख्यातं मान्धातुश्चरितं महत् ।
जन्म चाग्र्यं महीपाल यन्मां त्वं परिपृच्छसि ॥ ३-१२७-४७ (२०८४१)
वैशंपायन उवाच। ३-१२७-४८क्ष् (२११५)
एवमुक्तः स कौन्तेयो लोमशेन महर्षिणा ।
पप्रच्छानन्तरं भूयः सोमकं प्रति भारत ॥ ३-१२७-४८ (२०८४२)

इति श्रीमन्महाभारते अरण्यपर्वणि तीर्थयात्रापर्वणि
सप्तविंशत्यधिकशततमोऽध्यायः ॥ १२७ ॥

Mahabharata - Vana Parva - Chapter Footnotes

३-१२७-१ यौवनाश्वो युवनाश्वपुत्रः । यौवनाश्विर्नृपोत्तम इति क। पाठः ॥
३-१२७-८ आत्मानं चित्तम् । आत्मवान् जितचित्तः। संयोज्येष्टदेवतया ऐवयं नीत्वा ॥
३-१२७-१० सौद्युम्नेः युवनाश्वस्य ॥
३-१२७-१४ वाशतः शब्दं कुर्वतः ॥
३-१२७-१६ निर्वाणं तपःफलम् ॥
३-१२७-२५ इष्टिमिच्छितम् ॥
३-१२७-३० किं धास्यति पास्यति स्तन्याभावात् ॥
३-१२७-३१ मां धास्यति मां धाता । धातेति लुङन्तस्य व्याख्यानं धास्यतीति। प्रदेशिनीं, तर्जनीम् ॥
३-१२७-३२ किष्कून् हस्तान् वितस्तीन्वा ॥
३-१२७-३६ चक्रमाज्ञा ३-१२७-३८ चितचैत्यः कृतचयनक्रतुः ॥
३-१२७-४१ पद्मं शतकोटयस्तेषामपि सहस्राणि दश ॥
३-१२७-४४ चतुर्विधाः सुरनरतिर्यक्स्थावराः ॥

---

वन-अध्यय१२८
॥ श्रीः ॥
३.१२८. अध्यायः १२८

Mahabharata - Vana Parva - Chapter Topics
सोमकनामकेन राज्ञा भार्याशतोद्वाहेपि ज्येष्ठायामेव जन्तुनामकैकापत्यजननम् ॥ १ ॥
पिपीलिकादष्टसुतदुःखदर्शननिर्विण्णेन तेन राज्ञा ऋत्विजंप्रति बहुपुत्रोत्पादनोपायप्रश्नः ॥ २ ॥
ऋत्विजा राजानंप्रति जन्तोः पशूकरणेन होमे तद्वपाघ्राणनेन भार्याशते पुत्रशतजननोक्तिः ॥ ३ ॥

Mahabharata - Vana Parva - Chapter Text

३-१२८-० (२०८४३)
युधिष्ठिर उवाच। ३-१२८-०क्ष् (२११६)
कथंवीर्यः स राजाऽभूत्सोमको ददतांवरः ।
कर्माण्यस्य प्रभावं च श्रोतुमिच्छामि तत्त्वतः ॥ ३-१२८-१ (२०८४४)
लोमश उवाच। ३-१२८-२क्ष् (२११७)
युधिष्ठिरासीन्नृपतिः सोमको नाम धार्मिकः ।
तस्य भार्याशतं राजन्सदृशीनामभूत्तदा ॥ ३-१२८-२ (२०८४५)

स वै यत्नेन महता तासु पुत्रं महीपतिः ।
कंचिन्नासादयामास कालेन महता ह्यपि ॥ ३-१२८-३ (२०८४६)
कदाचित्तस् वृद्धस्य यतमानस्य धीमतः ।
जन्तुर्नाम सुतस्तस्य ज्येष्ठायां समजायत ॥ ३-१२८-४ (२०८४७)
तं जातं मातरः सर्वाः परिवार्य समासते ।
सततं पृष्ठतः कृत्वा कामभोगान्विशांपते ॥ ३-१२८-५ (२०८४८)
ततः पिपीलिका जन्तुं कदाचिददशत्स्फिचि ।
स दष्टो ह्यरुदद्राजंस्तेन दुःखेन बालकः ॥ ३-१२८-६ (२०८४९)
ततस्ता मातरः सर्वाः प्राक्रोशन्भृशदुःखिताः ।
प्रवार्य जनतुं सहसा स शब्दस्तुमुलोऽभवत् ॥ ३-१२८-७ (२०८५०)
तमार्तनादं सहसा शुश्राव स महीपतिः ।
अमात्यपर्षदो मध्ये उपविष्टः सहर्त्विजा ॥ ३-१२८-८ (२०८५१)
ततः प्रस्थापयामास किमेतदिति पार्थिवः ।
तस्मै क्षत्ता यथावृत्तमाचचक्षे सुतं प्रति ॥ ३-१२८-९ (२०८५२)
त्वरमाणः स चोत्थाय सोमकः सह मन्त्रिभिः ।
प्रविश्यान्तःपुरं पुत्रमाश्वासयदरिंदमः ॥ ३-१२८-१० (२०८५३)
सान्त्वयित्वा तु तं पुत्रं निष्क्रम्यान्तःपुरान्नृपः ।
ऋत्विजा सहितो राजन्सहामात्य उपाविशत् ॥ ३-१२८-११ (२०८५४)
सोमक उवाच। ३-१२८-१२क्ष् (२११८)
धिगस्त्विहैकपुत्रत्वमपुत्रत्वं वरं भवेत् ।
नित्यातुरत्वाद्भूतानां शोक एवैकपुत्रता ॥ ३-१२८-१२ (२०८५५)
इदं भार्याशतं ब्रह्मन्परीक्ष्यसदृशं प्रभो ।
पुत्रार्थिना मया वोढं न तासां विद्यते प्रजा ॥ ३-१२८-१३ (२०८५६)
एकः कथंचिदुत्पन्नः पुत्रो जन्तुरयं मम ।
यतमानासु सर्वासु किंनु दुःखमतः परम् ॥ ३-१२८-१४ (२०८५७)
वयश्च समतीतं मे सभार्यस्यं द्विजोत्तम ।
आसां प्राणाः समायत्ता मम चात्रैकपुत्रके ॥ ३-१२८-१५ (२०८५८)
स्यात्तु कर्म तथा युक्तं येन पुत्रशतं भवेत् ।
महता लघुना वाऽपि कर्मणा दुष्करेण वा ॥ ३-१२८-१६ (२०८५९)
ऋत्विगुवाच। ३-१२८-१७क्ष् (२११९)
अस्ति चैतादृशं कर्म येन पुत्रशतं भवेत् ।
यदि शक्नोषि तत्कर्तुमथ वक्ष्यामि सोमक ॥ ३-१२८-१७ (२०८६०)
सोमक उवाच। ३-१२८-१८क्ष् (२१२०)
कार्यं वा यदि वाऽकार्यं येन पुत्रशतं भवेत् ।
कृतमेवेति तद्विद्धि भगवान्प्रब्रवीतु मे ॥ ३-१२८-१८ (२०८६१)
ऋत्विगुवाच। ३-१२८-१९क्ष् (२१२१)

यजस्व जन्तुना राजंस्त्वं मया वितते क्रतौ ।
ततः पुत्रशतं श्रीमद्भविष्यत्यचिरेण ते ॥ ३-१२८-१९ (२०८६२)
वपायां हूयमानायां धूममाघ्राय मातरः ।
ततस्ताः सुमहावीर्याञ्जनयिष्यन्ति ते सुतान् ॥ ३-१२८-२० (२०८६३)
तस्यामेव तु ते जन्तुर्भविता पुनरात्मजः ।
उत्तरे चास्य सौवर्णं लक्ष्म पार्श्वे भविष्यति ॥ ३-१२८-२१ (२०८६४)

इति श्रीमन्महाभारते अरण्यपर्वणि तीर्थयात्रापर्वणि
अष्टाविंशत्यधिकशततमोऽध्यायः ॥ १२८ ॥
Mahabharata - Vana Parva - Chapter Footnotes

३-१२८-६ स्फिचि कट्याम् ॥
३-१२८-८ अमात्यपर्षदो मध्ये मन्त्रिसभान्तः ॥
३-१२८-९ क्षत्ता दौवारिकः ॥
३-१२८-१९ जन्तुना पशुभूतेन ॥

---

वन-अध्यय१२९
॥ श्रीः ॥
३.१२९. अध्यायः १२९

Mahabharata - Vana Parva - Chapter Topics
ऋत्विक्चोदनया सोमकेन राज्ञा जन्तुनामकपुत्रवपाया होमे
तद्गन्धाघ्राणनेन तद्भार्याशते पुत्रशतोत्पत्तिः ॥ १ ॥
लोकान्तरं गतेन सोमकेन ऋत्विजा सह
तद्भोग्यस्वपुत्रहननजनारकीयदुःखानुभवपूर्वकं तेन सहैव
स्वीयसुकृतकलोपभोगः ॥ २ ॥

Mahabharata - Vana Parva - Chapter Text

३-१२९-० (२०८६५)
सोमक उवाच। ३-१२९-०क्ष् (२१२२)
ब्रह्मन्यद्यद्यथा कार्यं तत्कुरुष्व तथातथा ।
पुत्रकामतया सर्वंकरिष्यामि वचस्तव ॥ ३-१२९-१ (२०८६६)
लोमश उवाच। ३-१२९-२क्ष् (२१२३)
ततः स याजयामास सोमकं तेन जन्तुना ।
मातरस्तु बलातपुत्रमपाकार्षुः कृपान्विताः ॥ ३-१२९-२ (२०८६७)
हा हताः स्मेति वाशन्त्यस्तीव्रशोकसमाहताः ।

तं मातरः प्त्यकर्षन्गृहीत्वा दक्षिणे करे ॥ ३-१२९-३ (२०८६८)
सव्ये पाणौ गृहीत्वा तु याजकोपि स्म कर्षति ।
कुररीणामिवार्तानामपाकृष्य तु तं सुतम् ॥ ३-१२९-४ (२०८६९)
विशस्य चैनं विधिवद्वपामस्य जुहाव सः ।
वपायां हूयमानायां गन्धमाघ्राय मातरः ॥ ३-१२९-५ (२०८७०)
आर्ता निपेतुः सहसा पृथिव्यां कुरुनन्दन ।
सर्वाश्च गर्भानलबंस्ततस्ताः पार्थिवाङ्गनाः ॥ ३-१२९-६ (२०८७१)
ततो दशसु मासेषु सोमकस्य विशांपते ।
जज्ञे पुत्रशतं पूर्णं तासु सर्वासु भारत ॥ ३-१२९-७ (२०८७२)
जन्तुर्ज्येष्ठः समभवज्जनित्र्यामेव पूर्ववत् ।
स तासामिष्ट एवासीन्न तथाऽन्ये निजाः सुताः ॥ ३-१२९-८ (२०८७३)
तच्च लक्षणमस्यासीत्सौवर्णं पार्श्वे उत्तरे ।
तस्मिन्पुत्रशते चाग्र्यः स बभूव गुणैरपि ॥ ३-१२९-९ (२०८७४)
ततः स लोकमगमत्सोमकस्य गुरुः परम् ।
अन्वक्षमेव पश्चात्तु सोमकोप्यगमत्परम् ॥ ३-१२९-१० (२०८७५)
अथ तं नरके घोरे पच्यमानं ददर्श सः ।
तमपृच्छत्किमर्थं त्वं नरके पच्यसे द्विज ॥ ३-१२९-११ (२०८७६)
तमब्रवीद्गुरुः सोऽथ पच्यमानोऽग्निना भृशम् ।
त्वं मया याजितो राजंस्तस्येदं कर्मणः फलम् ॥ ३-१२९-१२ (२०८७७)
एतच्छ्रुत्वा स राजर्षिर्धर्मराजमथाब्रवीत् ।
अहमत्र प्रवेक्ष्यामि मुच्यतां मम याजकः ॥ ३-१२९-१३ (२०८७८)
मत्कृते हि महाभागः पच्यते नरकाग्निना ।
ग्सोहमात्मानमाधास्ये नरके मुच्यतां गुरुः' ॥ ३-१२९-१४ (२०८७९)
धर्म उवाच। ३-१२९-१५क्ष् (२१२४)
नान्य कर्तुः फलं राजन्नुपभुङ्क्ते कदाचन ।
इमानि तव दृश्यन्ते फलानि वदतांवर ॥ ३-१२९-१५ (२०८८०)
सोमक उवाच। ३-१२९-१६क्ष् (२१२५)
पुण्यान्न कामये लोकानृतेऽहं ब्रह्मवादिनम् ।
इच्छाम्यहमनेनैव सह वस्तुं सुरालये ॥ ३-१२९-१६ (२०८८१)
नरके वा धर्मराज कर्मणाऽस्य समो ह्यहम् ।
पुण्यापुण्यफलं देव सममस्त्वावयोरिदम् ॥ ३-१२९-१७ (२०८८२)
धर्मराज उवाच। ३-१२९-१८क्ष् (२१२६)
यद्येवमीप्सितं राजन्भुङ्क्ष्वास्य सहितः फलम् ।
तुल्यकालं सहानेन पश्चात्प्राप्स्यसि सद्गतिम् ॥ ३-१२९-१८ (२०८८३)
लोमश उवाच। ३-१२९-१९क्ष् (२१२७)
स चकार तथा सर्वं राजा राजीवलोचनः ।

क्षीणपापश्च तस्मात्स विमुक्तो गुरुणा सह ॥ ३-१२९-१९ (२०८८४)
लेभे कामाञ्शुभान्राजन्कर्मणा निर्जितान्स्वयम् ।
सह तेनैव विप्रेण गुरुणा स गुरुप्रियः ॥ ३-१२९-२० (२०८८५)
एष तस्याश्रमः पुण्यो य एषोग्रे विराजते ।
क्षान्त उष्यात्र षड्रात्रं प्राप्नोति सुगतिं नरः ॥ ३-१२९-२१ (२०८८६)
एतस्मिन्नपि राजेन्द्र वत्स्यामो विगतज्वराः ।
षड्रात्रं नियतात्मानः सज्जीभव कुरूद्वह ॥ ३-१२९-२२ (२०८८७)

इति श्रीमन्महाभारते अरण्यपर्वणि तीर्थयात्रापर्वणि
एकोनत्रिंशदधिकशततमोऽध्यायः ॥ १२९ ॥
Mahabharata - Vana Parva - Chapter Footnotes

३-१२९- वाशन्त्यः क्रोशन्त्यः ॥
३-१२९- वपां देहान्तर्गतमपूपाकारं मासम् ॥
३-१२९- लक्षणं चिह्नम् ॥
३-१२९- सोमकस्य ऋत्विगिति शेषः ॥
३-१२९- क्षान्तः क्षमावान् । उष्य उषित्वा ॥

---

वन-अध्यय१३०
॥ श्रीः ॥
३.१३०. अध्यायः १३०

Mahabharata - Vana Parva - Chapter Topics
युधिष्ठिरेण मार्कण्डेयाश्रमगमनम् ॥ १ ॥
लोमशेन युधिष्ठिरंप्रति संग्रहेण मार्कण्डेयचरित्रकथनम् ॥ २ ॥

Mahabharata - Vana Parva - Chapter Text

३-१३०-० (२०८८८)
ग्वैशंपायन उवाच। ३-१३०-०क्ष् (२१२८)
सोमकस्याश्रमे पुण्ये धर्मराजो युधिष्ठिरः ।
षड्रात्रमुष्य नियतो भ्रात्रादिभिररिंदमः ।
तस्मान्निर्गम्य सहसा दिशं प्रायात्तथोत्तराम् ॥ ३-१३०-१ (२०८८९)
बहुदूरं ततो गत्वा वनं तत्र मनोहरम् ।
बहुपष्पफलाकीर्णं महानद्युपशोभितम् ॥ ३-१३०-२ (२०८९०)
दृष्ट्वा पप्रच्छ राजाऽसौ लोमशं मुनिसत्तमम् ।
किमिदं दृश्यते रम्यं वनं बहुमृगद्विजम् ॥ ३-१३०-३ (२०८९१)

बहुपुष्पफलोपेतं मुनिसङ्घैर्निषेवितम् ।
स्रवन्त्या च समायुक्तं महत्या पुण्यतोयया ॥ ३-१३०-४ (२०८९२)
ऋषीणामाश्रमाः पुण्या दृश्यन्ते विविधा मुने ।
कस्यायमाश्रमः पुण्यः कस्येमे मुनयोऽमलाः ।
एतदिच्छाम्यहं श्रोतुं वद त्वं वदतांवर ॥ ३-१३०-५ (२०८९३)
लोमश उवाच। ३-१३०-६क्ष् (२१२९)
शृणु राजेनद्र भद्रं ते वनस्यास्य पुरातनम् ।
वृत्तान्तं निखिलेनाद्य प्रोच्यमानं मयाऽनघ ॥ ३-१३०-६ (२०८९४)
मृकण्डुपुत्रो मेधावी मार्कण्डेयो महामुनिः ।
बाल एव महाबुद्धिः सर्वविद्याविशारदः ॥ ३-१३०-७ (२०८९५)
मातापित्रोः प्रियं कुर्वंस्तपोर्थं वनमाविशत् ।
अत्राश्रमपदं कृत्वा तपस्तेपे सुदारुणम् ॥ ३-१३०-८ (२०८९६)
ग्रीष्मे पञ्चतपा भूत्वा वर्षास्वाकाशसंश्रयः ।
जलस्थः शिशिरे योगी बहुकालमवर्तत ॥ ३-१३०-९ (२०८९७)
ऊर्ध्वबाहुर्निरालम्बः पादाङ्गुष्ठाग्रविष्ठितः ।
जितेन्द्रियो जितप्राणश्चिन्तयन्दृढमव्ययम् ।
अनाहारो जितक्रोधश्चिरमेवमवर्तत ॥ ३-१३०-१० (२०८९८)
एतस्मिन्नन्तरे राजन्ननावृष्टिः सुदारुणा ।
संभूता सर्वसंहर्त्री तया दग्धं चराचरम् ॥ ३-१३०-११ (२०८९९)
अनावृष्ट्यां प्रवृत्तायां सर्वे च निधनं गताः ।
केचिदन्ये महात्मानो मुनयो द्विजपुङ्गवाः ॥ ३-१३०-१२ (२०९००)
ब्राह्मणाः क्षत्रिया वैश्याः शूद्रा सर्वाश्च योषितः ।
पशुपक्षिमृगाः सर्वे क्षुत्पिपासासमाकुलाः ।
कृशाः शुष्कोष्ठकण्ठाश्च श्रान्ता भ्रान्ता विचेतसः ॥ ३-१३०-१३ (२०९०१)
केनचित्पुण्यशेषेण मार्कण्डेयस्य धीमतः ।
आश्रमं शनकैः प्राप्ता मूर्च्छिताः सहसाऽपतन् ॥ ३-१३०-१४ (२०९०२)
समाधिविरतो योगी मार्कण्डेयो महातपाः ।
तद्वनं निबिडं दृष्ट्वा जनैः क्षुत्तृट्समाकलैः ॥ ३-१३०-१५ (२०९०३)
दयार्द्रहृदयो योगी शिवं ध्यात्वा हृदम्बुजे ।
तेषां संरक्षणार्थाय वेदगन्धिस्वरेण सः ।
आजुहाव तदा गङ्गां तपोयोगेन भारत ॥ ३-१३०-१६ (२०९०४)
गङ्गा समागता शीघ्रं तेनाहूताऽतिपावना ।
नाम्ना वेदनदीत्येव प्रख्याता लोकपावना ॥ ३-१३०-१७ (२०९०५)
पर्जन्यश्च समाहूतः सुखं वर्षति भारत ।
सस्यानि च समृद्धानि फलमूलान्यनेकशः ।

संभूतान्यत्रराजेनद्र सर्वे ते रक्षिता जनाः ॥ ३-१३०-१८ (२०९०६)
मार्कण्डेयं प्रशंसन्तो जनाः सर्वे द्विजात्तयः ।
चिरं सुखमवर्तन्त तेन संरक्षिता नृप ॥ ३-१३०-१९ (२०९०७)
एवं विधाय रक्षां स सर्वेषां पुण्यकर्मणाम् ।
पुनश्चचार च तपः परमेश्वरतुष्टये ॥ ३-१३०-२० (२०९०८)
एवं बहुतिथे काले प्रादुरासीन्महेश्वरः ॥ ३-१३०-२१ (२०९०९)
दृष्ट्वा च सर्वदेवेशं चन्द्रमौलिमुमापतिम् ।
ब्रह्मविष्ण्वादिभिर्देवैः सिद्धविद्याधरोरगैः ॥ ३-१३०-२२ (२०९१०)
गन्धर्वयक्षप्रवरैः सकिन्नरपतत्रिभिः ।
स्तूयमानं महादेवमव्ययं निष्कलं शिवम् ।
प्रणनाम मुनिर्भक्त्या साष्टाङ्गं च पुनः पुनः ॥ ३-१३०-२३ (२०९११)
प्रणम्योत्थाय सहसा बद्धाञ्जलिपुटो मुनिः ।
तुष्टाव विविधैः स्तोत्रैर्महादेवं जगत्पतिम् ॥ ३-१३०-२४ (२०९१२)
तमुवाच महादेवो मार्कण्डेयं महामुनिम् ।
वरं वरय भद्रं ते वरदोस्मि मुने तव ॥ ३-१३०-२५ (२०९१३)
एवं संबोधितस्तेन शिवेन परमात्मना ।
सगद्गदमिदं वाक्यमुवाच परमेश्वरम् ॥ ३-१३०-२६ (२०९१४)
नान्यं वरं वृणे शंभो ---त्वत्पादपङ्कजे ।
भक्तिंह्यनन्यसुलभां स्व व्यभिचारिणीम् ॥ ३-१३०-२७ (२०९१५)
एवमुक्तोऽथ मुनिना भरतगीश्वरेश्वरः ।
पुनरेवाब्रवीद्वाक्यं मार्कण्डेय महामुनिम् ॥ ३-१३०-२८ (२०९१६)
सम्यगाराधितः पित्रा तव पुत्रार्थमादरात् ॥ ३-१३०-२९ (२०९१७)
शतायुर्निर्गुणः पुत्रः शुभः षोडशवार्षिकः ।
उभयोरन्यमिच्छ त्वमित्युक्तः सोऽब्रवीच्च माम् ॥ ३-१३०-३० (२०९१८)
निर्गुणो मास्तु देवेश शतायुः षोडशाब्दकः ।
सुगुणोऽस्तु सुतो मेऽद्य इति पित्रावृत पुरा ॥ ३-१३०-३१ (२०९१९)
त्वया तप्तेन तपसा तोषितोऽहं भृशं मुने ।
दीर्घमायुर्मया दत्तं मृत्युश्च प्रतिषेधितः ॥ ३-१३०-३२ (२०९२०)
इत्युक्त्वा भगवानीशस्तत्रैवान्तरधीयत ।
तस्यायमाश्रमः पुण्यस्तस्येमे मुनयोऽमलाः ॥ ३-१३०-३३ (२०९२१)
अत्रैकरात्रमुषिताः सर्वे मृत्युं तरन्ति वै ।
अत्रैव भरतश्रेष्ठ प्रयतो वस भूमिप' ॥ ३-१३०-३४ (२०९२२)

इति श्रीमन्महाभारते अरण्यपर्वणि तीर्थयात्रापर्वणि
त्रिंशदधिकशततमोऽध्यायः ॥ १३० ॥

---

वन-अध्यय१३१

॥ श्रीः ॥

३.१३१. अध्यायः १३१

Mahabharata - Vana Parva - Chapter Topics

लोमशेन युधिष्ठिरंप्रति नानातीर्थमहिमानुवर्णनम् ॥ १ ॥

Mahabharata - Vana Parva - Chapter Text

३-१३१-० (२०९२३)
लोमश उवाच। ३-१३१-०क्ष् (२१३०)
अस्मिन्किल स्वयं राजन्निष्टवान्वै प्रजापतिः ।
सत्रमिष्टीकृतं नाम पुरा वर्षसहस्रिकम् ॥ ३-१३१-१ (२०९२४)
अम्बरीषश्च नाभाग इष्टवान्यमुनामनु ।
यत्रेष्ट्वा दशपद्मानि सदस्येभ्योऽभिसृष्टवान् ॥ ३-१३१-२ (२०९२५)
यज्ञैश्च तपसा चैव परां सिद्धिमवाप सः ।
देशश्च नाहुषस्यायं यज्वनः पुण्यकर्मणः ॥ ३-१३१-३ (२०९२६)
सार्वभौमस्य कौन्तेय ययातेरमितौजसः ।
स्पर्धमानस्य शक्रेण तस्येदं यज्ञवास्त्विह ॥ ३-१३१-४ (२०९२७)
पश्य नानाविधाकारैरग्निभिर्निचितां महीम् ।
मज्जन्तीमिव चाक्रान्तां ययातेर्यज्ञकर्मभिः ॥ ३-१३१-५ (२०९२८)
एषा शम्येकपत्रा सा शकटं चैतदुत्तमम् ।
पश्य रामह्रदानेतान्पश्य नारायणाश्रमम् ॥ ३-१३१-६ (२०९२९)
एतच्चर्चीकपुत्रस्य योगैर्विचरतो महीम् ।
प्रसर्पणं महीपाल रौप्यायाममितौजसः ॥ ३-१३१-७ (२०९३०)
अत्रानुवंशं पठतः शृणु मे कुरुनन्दन ।
उलूखलैराभरणैः पिशची यदभाषत ॥ ३-१३१-८ (२०९३१)
युगन्धरे दधि प्राश्य उषित्वा चाच्युतस्थले ।
तद्वद्भूतलये स्नात्वा सपुत्रा वस्तुमर्हसि ॥ ३-१३१-९ (२०९३२)
एकरात्रमुषित्वेह द्वितीयं यदि वत्स्यसि ।
एतद्वै ते गदेवावृत्तं रात्रौ वृत्तमितोऽन्यथा ॥ ३-१३१-१० (२०९३३)
अद्य चात्र निवत्स्यामः क्षपां भरतसत्तम ।
द्वारमेतत्तु कौन्तेय कुरुक्षेत्रस्य भारत ॥ ३-१३१-११ (२०९३४)
अत्रैव नाहुषो राजा राजन्क्रतुभिरिष्टवान् ।
ययातिर्बहुरत्नौर्घर्यत्रेन्द्रो मुदमभ्यगात् ॥ ३-१३१-१२ (२०९३५)
एतत्प्लक्षावतरणं यमुनातीर्थमुत्तमम् ।
एतद्वै नाकपृष्ठस्य द्वारमाहुर्मनीषिणः ॥ ३-१३१-१३ (२०९३६)

अत्रसारस्वतैर्यज्ञैरीजानाः परमर्षयः ।
यूपोलूखलिकास्तात गच्छन्त्यवभृथप्लवम् ॥ ३-१३१-१४ (२०९३७)
अत्रवै भरतो राजा राजन्क्रतुभिरिष्टवान् ।
हयमेधेन यज्ञेन मेध्यमश्वमवासृजत् ॥ ३-१३१-१५ (२०९३८)
असकृत्कृष्णसारङ्गं धर्मेणाप्य च मेदिनीम् ।
अत्रैव पुरुषव्याघ्र मरुत्तः सत्रमुत्तमम् ।
प्राप चैवर्षिमुख्येन संवर्तेनाभिपालितः ॥ ३-१३१-१६ (२०९३९)
अत्रोपस्पृश्य राजेन्द्र सर्वाल्लोँकान्प्रपश्यति ।
पूयते दुष्कृताच्चैव अत्रापि समुपस्पृश ॥ ३-१३१-१७ (२०९४०)
वैशंपायन उवाच। ३-१३१-१८क्ष् (२१३१)
तत्र सभ्रातृकः स्नात्वा स्तूयमानो महर्षिभिः ।
लोमशं पाण्डवश्रेष्ठ इदं वचनमब्रवीत् ॥ ३-१३१-१८ (२०९४१)
सर्वाँल्लोकान्प्रपश्यामि तपसा सत्यविक्रम ।
इहस्तः पाण्डवश्रेष्ठं पश्यामि श्वेतवाहनम् ॥ ३-१३१-१९ (२०९४२)
लोमश उवाच। ३-१३१-२०क्ष् (२१३२)
एवमेतन्महाबाहो पश्यन्ति परमर्षयः ।
इह स्नात्वा तपोयुक्तांस्त्रील्लोँकान्सचराचरान् ॥ ३-१३१-२० (२०९४३)
सरस्वतीमिमां पुण्यां पुण्यैकशरणावृताम् ।
यत्र स्नात्वा नरश्रेष्ठ धूतपाप्मा भविष्यसि ॥ ३-१३१-२१ (२०९४४)
इह सारस्वतैर्यज्ञैरिष्टवन्तः सुरर्षयः ।
ऋषयश्चैव कौन्तेय तथा राजर्षयोपि च ॥ ३-१३१-२२ (२०९४५)
वेदी प्रजापतेरेषा समन्तात्पञ्चयोजना ।
कुरोर्वै यज्ञशीलस्य क्षेत्रमेतन्महात्मनः ॥ ३-१३१-२३ (२०९४६)

इति श्रीमन्महाभारते अरण्यपर्वणि तीर्थयात्रापर्वणि
एकत्रिंशदधिकशततमोऽध्यायः ॥ १३१ ॥
Mahabharata - Vana Parva - Chapter Footnotes

३-१३१-२ अभिसृष्टवान् दत्तवान् ॥
३-१३१-४ यज्ञवास्तु यज्ञभूमिः । इह अस्मिन्वास्तुनि। इदमुत्तरान्वयि ॥
३-१३१-५ अग्निभिरग्निस्थापनार्थैरिष्टकारचितैः स्थण्डिलैः ॥
३-१३१-६ शमी आमिक्षार्थं दध्युत्पादनार्थमानीता शमीशाखा
। एकपत्रा शातितपत्रा ॥
३-१३१-७ प्रसर्पणं संचारभूमिः । रौप्यायां रूप्यवत् श्वेतवर्णायां
स्थत्यां नद्यां वा। सामीप्ये सप्तमी। प्रसर्पणं तीर्थमित्यन्ये ॥
३-१३१-८ अनुवंशं परंपरागतमाख्यानश्लोकम्

। उलूखलैरिति। उलूखलसदृशानि स्त्रीणां कर्णाभरणानि भवन्तीति स्वयमुलूलैरेवाभरणैर्युक्तासतीति शेषः। एतेन विकृतवेषत्वं पिशाच्याः ॥
३-१३१-९ युगन्धरे पयः प्राश्येति ध । पाठः। उक्तं भाषणमेवाह द्वाभ्यां युगन्धर इति। अस्मिंस्तीर्थे सपुत्रा ब्राह्मणी स्नातुमागता तां प्रति पिशाची वदति। त्वया युगन्धरे पर्वते देशे वा दधिप्राशनं कृतम्। तत्रोष्ट्रीक्षीरं गर्दभ्यादिक्षीरं च दधि क्रियते। तथा अच्युतस्थलाख्ये संकरजानां ग्रामे वासश्च कृतः। तथा भूतिलयाख्ये दस्युग्रामेऽग्निदग्धानां मृतानां क्षेपणं यस्यां नद्यां क्रियते तस्यां स्नातासि। अतो दोषत्रयवती त्वम्। एतत्करणे रहि प्रायश्चित्तं धर्मशास्त्रे प्रसिद्धम्। औष्ट्रमैकशफं क्षीरं सुरातुल्यमिति। संसृज्य संकरैः सार्धं प्राजापत्यं व्रतं चरेदिति। प्रोष्यभूतिलये विप्रः प्राजापत्यं व्रतं चरेदिति च। तच्च त्वया न कृतमतः कथमत्र वस्तुमिच्छसि। दोषवतामिह तीर्थे वासो दुर्लभ इत्यर्थः। एवं पिशाचीवाक्यं श्रुत्वापि सा ब्राह्मणी तत्र स्नानादिकं कृतवती। ततस्तया राक्षस्या तस्या घटपिठरादिकं नाशितम्। उक्तंच। एतत्तव दिवावृत्तं रात्रौ वृत्तं तु द्रक्ष्यसीति। वृत्तं जातम्। रात्रौ तु तव पुत्रमपि नाशयिष्यामीति भावः। अथापि द्वितीयां रात्रिं वस्तुमिच्छसि चेत्तव भूयांसमपकारं करिष्यामीति युगन्धरादिदेशत्रयनिन्दापरत्वेन व्याख्या ॥
३-१३१-१० त्वं तु अब्रह्मवित् एकरात्रमेवात्र वस्तुं योग्या । यदि द्वितीयां वस्तुमिच्छसि तर्हि ते तव एतत् मदीयं वृत्तं भविष्यति मद्वत् पिशाची भूत्वात्र स्नानं न लप्स्यसे। एतदिति स्ववृत्तस्याभिनीय प्रदर्शनम्। द्वितीयदिनवासस्यैवैतत्फलं। द्वितीयरात्रिवासे तुं इतोन्था अहल्यादिवन्मोहप्राप्त्या शिलाभावो भविष्यति। तेन तीर्थदर्शनमपि न लप्स्यसे इति ॥
३-१३१-१३ एतत्प्लक्षवटं नामेति क । पाठः ॥
३-१३१-१४ दन्तोलूखलिनस्तत्रेति क । पाठः। सारस्वतैर्ब्राह्मणैः ऋत्विग्भिर्यज्ञैरीजानाः यूपोलूखलिकाः यूपान् उलूखलानि च यज्ञसाधनान्याददते यूपोलूखलिकाः ॥
३-१३१-१६ कृष्णसारङ्गं कृष्णहरिणसदृशं श्यामकर्णमित्यर्थः ॥
३-१३१-२१ तीर्थान्तरमाह सरस्वतीति । पश्यैकशरणावृतामिति क। पाठः ॥

---

वन-अध्यय१३२
॥ श्रीः ॥

३.१३२. अध्यायः १३२

Mahabharata - Vana Parva - Chapter Topics

लोमशेन युधिष्ठिरंप्रति सरस्वत्यादिमाहात्म्यकथनम् ॥ १ ॥
तथा श्येनकपोतोपाख्यानकथनारम्भः ॥ २ ॥

Mahabharata - Vana Parva - Chapter Text

३-१३२-० (२०९४७)
लोमश उवाच। ३-१३२-०क्ष् (२१३३)
इह मर्त्यास्तनूस्त्यक्त्वा स्वर्गं गच्छन्ति भारत ।
मर्तुकामा नरा राजन्निहायान्ति सहस्रशः ॥ ३-१३२-१ (२०९४८)
एवमाशीः प्रयुक्ता हि दक्षेण यजता पुरा ।
इह ये वै मरिष्यन्ति ते वै स्वर्गजितो नराः ॥ ३-१३२-२ (२०९४९)
एषा सरस्वती रम्या दिव्या चौघवती नदी ।
एतद्विनशनं नाम सरस्वत्या विशांपते ॥ ३-१३२-३ (२०९५०)
द्वारं निषादराष्ट्रस्य येषां दोषात्सरस्वती ।
प्रविष्टा पृथिवीं वीर मा निषादा हि मां विदुः ॥ ३-१३२-४ (२०९५१)
एष वै चमसोद्भेदो यत्र दृश्या सरस्वती ।
यत्रैनामभ्यवर्तन्त दिव्याः पुण्याः समुद्रगाः ॥ ३-१३२-५ (२०९५२)
एतत्सिन्धोर्महत्तीर्थं यत्रागस्त्यमरिंदम ।
लोपामुद्रा समागम्य भर्तारमवृणीत वै ॥ ३-१३२-६ (२०९५३)
एतत्प्रकाशते तीर्थं प्रभासं भास्करद्युते ।
इन्द्रस्य दयितं पुण्यं पवित्रं पापनाशनम् ॥ ३-१३२-७ (२०९५४)
एतद्विष्णुपदं नाम दृश्यते तीर्थमुत्तमम् ।
एषां रम्या विपाशा च नदी परमपावनी ॥ ३-१३२-८ (२०९५५)
अत्र वै पुत्रशोकेन वसिष्ठो भगवानृषिः ।
बद्ध्वाऽत्मानं निपतितो विपाशः पुनरुत्थितः ॥ ३-१३२-९ (२०९५६)
काश्मीरमण्डलं चैतत्सर्वपुण्यमरिंदम ।
महर्षिभिश्चाध्युषितं पश्येदं भ्रातृभिः सह ॥ ३-१३२-१० (२०९५७)
यत्रौत्तराणां सर्वेषामृषीणां नाहुषस्य च ।
अग्नेश्चैवात्र संवादः काश्यपश्य च भारत ॥ ३-१३२-११ (२०९५८)
एतद्द्वारं महाराज मानसस्य प्रकाशते ।
वर्षमस्य गिरेर्मध्ये रामेण श्रीमता कृतम् ॥ ३-१३२-१२ (२०९५९)
एष वातिकषण्डो वै प्रख्यातः सत्यविक्रमः ।
नात्यवर्तत यद्द्वारं विदेहादुत्तरं च यः ॥ ३-१३२-१३ (२०९६०)

इदमाश्चर्यमपरं देशेऽस्मिन्पुरुषर्षभ ।
क्षीणे युगे तु कौन्तेय शर्वस्य सह पार्षदैः ।
सहोमया च भवति दर्शनं कामरूपिणः ॥ ३-१३२-१४ (२०९६१)
अस्मिन्सरसि सत्रैर्वै चैत्रे मासि पिनाकिनम् ।
यजन्ते याजकाः सम्यक् परिवारं शुभार्थिनः ॥ ३-१३२-१५ (२०९६२)
अत्रोपस्पृश्य सरसि श्रद्दधानो जितेन्द्रियः ।
क्षीणपापः शुभाँल्लोकान्प्राप्नुते नात्र संशयः ॥ ३-१३२-१६ (२०९६३)
एष उज्जानको नाम पावकिर्यत्र शान्तवान् ।
अरुन्धतीसहायश्च वसिष्ठो भगवानृषिः ॥ ३-१३२-१७ (२०९६४)
ह्रदश्च कुशवानेष यत्र पद्मं कुशेशयम् ।
आश्रमश्चैव रुक्मिण्या यत्राशाम्यदकोपना ॥ ३-१३२-१८ (२०९६५)
समाधीनां समासस्तु पाण्डवेय श्रुतस्त्वया ।
तं द्रक्ष्यसि महाराज भृगुतुन्दं महागिरिम् ॥ ३-१३२-१९ (२०९६६)
वितस्तां पश्य राजेन्द्र सर्वपापप्रमोचनीम् ।
महर्षिभिश्चाध्युषितां शीततोयां सुनिर्मलाम् ॥ ३-१३२-२० (२०९६७)
जलां चोपजलां चैव यमुनामभितो नदीम् ।
उशीनरो वै यत्रेष्ट्वा वासवादत्यरिच्यत ॥ ३-१३२-२१ (२०९६८)
तां देवसमितिं तस्य वासवश्च विशांपते ।
अभ्यागच्छन्नृपवरं ज्ञातुमग्निश्च भारत ॥ ३-१३२-२२ (२०९६९)
जिज्ञासमानौ वरदौ महात्मानमुशीनरम् ।
इन्द्रः श्येनः कपोतोऽग्निर्भूत्वा यज्ञेऽभिजग्मतुः ॥ ३-१३२-२३ (२०९७०)
उरुं राज्ञः समासाद्य कपोतः श्येनजाद्भयात् ।
शरणार्थी तदा राजन्निलिल्ये भयपीडितः ॥ ३-१३२-२४ (२०९७१)

इति श्रीमन्महाभारते अरण्यपर्वणि तीर्थयात्रापर्वणि
द्वात्रिंशदधिकशततमोऽध्यायः ॥ १३२ ॥

Mahabharata - Vana Parva - Chapter Footnotes

३-१३२-१ इह मर्त्यास्तपस्तप्त्वेति क ।ध। पाठः ॥
३-१३२-९ वद्वा पाशैरिति शेषः ।विपाशः पाशहीनः।अतएव विपाशानाम ॥
३-१३२-१२ वर्षं वसतिस्थानम् ॥
३-१३२-१३ यो रामः प्रख्यातः सत्यविक्रमश्च विदेहादुत्तरं
च यद्द्वारं यद्वर्षस्य द्वारं एषोऽनुभूयमानो वातिकषण्डो
वातानीतः पद्मादिसमूहो नात्यवर्तत ।तेन रामेण कृतमिति
पूर्वेणान्वयः।पद्मादेर्वातानीतस्यात्राप्रवेशाद्रामसामर्थ्यं
प्रत्यक्षमाश्चर्यमित्यर्थः।एष वाति मृकण्डो वै इति

क। ध। पाठः ॥
३-१३२-१४ युगं पञ्चसंवत्सरात्मकं तस्मिन्क्षीणे समाप्ते सति यदा सौरसावनबार्हस्पत्यनाक्षत्रचान्द्राः संवत्सरा एककालं समाप्यन्ते स युगक्षयकालस्तस्मिन्नित्यर्थः ॥
३-१३२-१७ पावकिः स्कन्दः ।शान्तवान् शमं प्राप। वसिष्टोपि शान्तवान् एष उज्जीतको नाम यवक्रीर्यत्र शान्तवानिति क। ध। पाठः ॥
३-१३२-१८ कुशवान् जलवान् ।अकोपना जितक्रोधा ॥
३-१३२-१९ समासः संक्षेपः ।यस्मिन्दृष्टे समाधिफलं भवतीत्यर्थः ॥
३-१३२-२२ देवसमितिं राजसभाम् ॥
३-१३२-२४ निलिल्ये लीनः ॥

---

वन-अध्यय१३३
॥ श्रीः ॥
३.१३३. अध्यायः १३३

Mahabharata - Vana Parva - Chapter Topics
शिबिपरी७णार्थं श्येनीभूतेनेन्द्रेणानुद्रुतस्य कपोतरूपधारिणोऽग्नेः शिविंप्रति शरणागतिः ॥ १ ॥
कपोतरिरक्षिषया राज्ञा श्येनानुमत्या स्वशरीरोत्कृत्तमांसस्य कपोतेन सह तुलारोपणम् ॥ २ ॥
मांसापेक्षया कपोतस्य गौरवातिरेके राज्ञा स्वयमेव तुलारोहणम् ॥ ३ ॥
ततस्तुष्टाभ्यामिन्द्राग्निभ्यां तत्प्रशंसनपूर्वकं स्वलोकगमनम् ॥ ४ ॥

Mahabharata - Vana Parva - Chapter Text

३-१३३-० (२०९७२)
श्येन उवाच। ३-१३३-०क्ष् (२१३४)
धर्मात्मानं त्वाहुरेकं सर्वे राजन्महीक्षितः ।
स वै धर्मविरुद्धं त्वं कस्मात्कर्म चिकीर्षसि ॥ ३-१३३-१ (२०९७३)
विहितं भक्षणं राजन्पीड्यमानस्य मे क्षुधा ।
माहिंसीर्धर्मलोभेन धर्ममुत्सृज्य मा नशः ॥ ३-१३३-२ (२०९७४)
राजोवाच। ३-१३३-३क्ष् (२१३५)
संत्रस्तरूपस्त्राणार्थी त्वत्तो भीतो महाद्विज ।
मत्सकाशमनुप्रप्तः प्राणगृध्नुरयं द्विजः ॥ ३-१३३-३ (२०९७५)
एवमभ्यागतस्येह कपोतस्याभयार्थिनः ।
अप्रदाने परो धर्मः किं त्वं श्येनेह पश्यसि ॥ ३-१३३-४ (२०९७६)
प्रस्पन्दमानः संभ्रान्तः कपोतः श्येन लक्ष्यते ।

मत्सकाशं जीवितार्थी तस्य त्यागो विगर्हितः ॥ ३-१३३-५ (२०९७७)
श्यो हि कश्चिद्द्विजान्हन्याद्गां वा लोकस्य मातरम् ।
शरणागतं च त्यजते तुल्यं तेषां हि पातकम्घ ३-१३३-६ (२०९७८)
श्येन उवाच। ३-१३३-७क्ष् (२१३६)
आहारत्सर्वभूतानि संभवन्ति महीपते ।
आहारेण विवर्धन्ते तेन जीवन्ति जन्तवः ॥ ३-१३३-७ (२०९७९)
शक्यते दुस्त्यजेऽप्यर्थे चिररात्राय जीवितुम् ।
न तु भोजनमुत्सृज्य शक्यं वर्तयितुं चिरम् ॥ ३-१३३-८ (२०९८०)
भक्ष्याद्विलोपितस्याद्य मम प्राणा विशांपते ।
विसृज्यकायमेष्यन्ति पन्थानमपुनर्भवम् ॥ ३-१३३-९ (२०९८१)
प्रमृते मयि धर्मात्मन्पुत्रदारादि नङ्क्ष्यति ।
रक्षमाणः कपोतं त्वं बहून्प्राणान्न रक्षसि ॥ ३-१३३-१० (२०९८२)
बहून्यो बाधते धर्मो न स धर्मः कुवर्त्म तत् ।
अविरोधी तु यो धर्मः स धर्मः सत्यविक्रम ॥ ३-१३३-११ (२०९८३)
विरोधिषु महीपाल निश्चित्य गुरुलाघवम् ।
न बाधा विद्यते यत्र तं धर्मं समुपाचरेत् ॥ ३-१३३-१२ (२०९८४)
गुरुलाघवमाज्ञाय धर्माधर्मविनिश्चये ।
यतो भूयांस्ततो राजन्कुरु धर्मविनिश्चयम् ॥ ३-१३३-१३ (२०९८५)
राजोवाच। ३-१३३-१४क्ष् (२१३७)
बहुकल्याणसंयुक्तं भाषसे विहगोत्तम ।
सुपर्णः पक्षिराट् किं त्वं धर्मं ज्ञात्वाऽभिभाषसे ॥ ३-१३३-१४ (२०९८६)
तथाहि धर्मसंयुक्तं बहुचित्रं च भाषसे ।
न तेऽस्त्यविदितं किंचिदिति त्वां लक्षयाम्यहम् ।
शरणैषिपरित्यागं कथं साध्विति मन्यसे ॥ ३-१३३-१५ (२०९८७)
आहारार्थं समारम्भस्तव चायं विहंगम ।
शक्यश्चाप्यन्यथा कर्तुमाहारोऽप्यधिकस्त्वया ॥ ३-१३३-१६ (२०९८८)
गोवृषो वा वराहो वा मृगो वा महिषोपि वा ।
त्वदर्थमद्य क्रियतां यच्चान्यदिह काङ्क्षसि ॥ ३-१३३-१७ (२०९८९)
श्येन उवाच। ३-१३३-१८क्ष् (२१३८)
न वराहं न चोक्षाणं न मृगान्विविधांस्तथा ।
भक्षयामि महाराज किं ममान्येन केचचित् ॥ ३-१३३-१८ (२०९९०)
यस्तु मे दैवविहितो भक्षः क्षत्रियपुङ्गव ।
तमुत्सृज महीपाल कपोतमिममेव मे ॥ ३-१३३-१९ (२०९९१)
श्येनाः कपोतान्स्वादन्ति श्रुतिरेषा सनातनी ।
मा राजन्सारमज्ञात्वा कदलीस्कन्धमासज ॥ ३-१३३-२० (२०९९२)
राजोवाच। ३-१३३-२१क्ष् (२१३९)

राष्ट्रं शिबीनामृद्धं वै शाधि पक्षिभिरर्चितः ।
कृत्स्नमेतन्मया दत्तं राजवद्विहगोत्तम ॥ ३-१३३-२१ (२०९९३)
यं वा कामयसे कामं श्येन सर्वं ददानि ते ।
विनेमं पक्षिणं श्यन शरणार्थिनमागतम् ॥ ३-१३३-२२ (२०९९४)
येनेमं स्थापयेथास्त्वं कर्मणा पक्षिसत्तम ।
तदाचक्ष्व करिष्यामि न हि दास्ये कपोतकम् ॥ ३-१३३-२३ (२०९९५)
श्येन उवाच। ३-१३३-२४क्ष् (२१४०)
उशीनर कपोते ते यदि स्नेहो नराधिप ।
आत्मनो मांसमुत्कृत्य कपोततुलया धृतम् ॥ ३-१३३-२४ (२०९९६)
यदा समं कपोतेन तव मांसं नृपोत्तम ।
त्वया प्रदेयं तन्मह्यं सा मे तुष्टिर्भविष्यति ॥ ३-१३३-२५ (२०९९७)
राजोवाच। ३-१३३-२६क्ष् (२१४१)
अनुग्रहमिमं मन्ये श्येन यन्माभियाचसे ।
तस्मात्तेऽद्य प्रदास्यामि स्वमांसं तुलया धृतम् ॥ ३-१३३-२६ (२०९९८)
लेमश उवाच। ३-१३३-२७क्ष् (२१४२)
अथोत्कृत्य स्वमांसं तु राजा परमधर्मवित् ।
तुलयामास कौन्तेय कपोतेन समं विभो ॥ ३-१३३-२७ (२०९९९)
ध्रियमाणः कपोतस्तु मांसेनात्यतिरिच्यते ।
पुनश्चोत्कृत्यमांसानि राजा प्रादादुशीनरः ॥ ३-१३३-२८ (२१०००)
न विद्यते यदा मांसं कपोतेन समं धृतम् ।
तत उत्कृत्तमांसोऽसावारुरोह स्वयं तुलाम् ॥ ३-१३३-२९ (२१००१)
श्येन उवाच। ३-१३३-३०क्ष् (२१४३)
इन्द्रोऽहमस्मि धर्मज्ञ कपोतो हव्यवाडयम् ।
जिज्ञासमानौ धर्मे त्वां यज्ञवाटमुपागतौ ॥ ३-१३३-३० (२१००२)
यत्ते मांसानि गात्रेभ्य उक्तृत्तानि विशांपते ।
एषा ते शाश्वती कीर्तिर्लोकानभिभविष्यति ॥ ३-१३३-३१ (२१००३)
यावल्लोके मनुष्यास्त्वां कथयिष्यन्ति पार्थिव ।
तावत्कीर्तिश्च लोकाश्च स्थास्यन्ति तव शाश्वताः ॥ ३-१३३-३२ (२१००४)
इत्युक्त्वा भूमिपतये तस्मै दत्त्वा यथेप्सितम् ।
प्रशस्य जग्मतू राजन्निन्द्राग्नी तुष्टमानसौ ॥ ३-१३३-३३ (२१००५)
उशीनरोऽपिधर्मात्मा धर्मेणावृत्यरोदसी ।
विभ्राजमानो वपुषाऽप्यारुरोह त्रिविष्टपम् ॥ ३-१३३-३४ (२१००६)
तदेतत्सदनं राजन्राज्ञस्तस्य महात्मनः ।
पश्यस्वैतन्मया सार्धं पुण्यं पापप्रमोचनम् ॥ ३-१३३-३५ (२१००७)
तत्र वै सततं देवा मुनयश्च सनातनाः ।
दृश्यन्ते ब्राह्मणै राजन्पुण्यवद्भिर्महात्मभिः ॥ ३-१३३-३६ (२१००८)

इति श्रीमन्महाभारते अरण्यपर्वणि तीर्थयात्रापर्वणि
त्रयस्त्रिंशदधिकशततमोऽध्यायः ॥ १३३ ॥
Mahabharata - Vana Parva - Chapter Footnotes

३-१३३-२ मा रक्षीर्धर्मलोभेन धर्ममुत्सृष्टवानसि इति झ । पाठः ॥
३-१३३-२० कदलीस्कन्धमासजेति कदलीस्कन्धतुल्ये निःशारेऽस्मिन् धर्मे मा सज्जो भवेत्यर्थः ॥

---

वन-अध्यय१३४
॥ श्रीः ॥
३.१३४. अध्यायः १३४

Mahabharata - Vana Parva - Chapter Topics
लोमशेन श्वेतकेतोराश्रमंगतं द्युधिष्ठिरंप्रति
अष्टावक्रोपाख्यानकथधनारम्भः ॥ १ ॥
धनार्जनाय जनकपुरं गतस्य कहोळस्य वन्दिना वादे विजित्य जले विनिमज्जनम् ॥ २ ॥
तद्विदितवता तत्पुत्रेणाष्टावक्रेण श्वेतकेतुनासह जनकनगरंप्रति गमनम् ॥ ३ ॥

Mahabharata - Vana Parva - Chapter Text

३-१३४-० (२१००९)
लोमश उवाच। ३-१३४-०क्ष् (२१४४)
यः कथ्यते मन्त्रविदग्र्यबुद्धि-
रौद्दालकिः श्वेतकेतुः पृथिव्याम् ।
तस्याश्रमं पश्यत पाण्डवेया
सदाफलैरुपपन्नं महीजैः ॥ ३-१३४-१ (२१०१०)
साक्षादत्र श्वेतकेतुर्ददर्श
सरस्वतीं मानुषदेहरूपाम् ।
वेत्स्यामि वाणीमिति संप्रवृत्तां
सरस्वतीं श्वेतकेतुर्बभाषे ॥ ३-१३४-२ (२१०११)
अस्मिन्युगे ब्रह्मकृतां वरिष्ठा-
वास्तां मुनी मातुलभागिनेयौ ।
अष्टावक्रश्चैव कहोलसूनु-
रौद्दालकिः श्वेतकेतुः पृथिव्याम् ॥ ३-१३४-३ (२१०१२)

विदेहराजस् समीपतस्तौ
धीरावुभौ मातुलभागिनेयौ ।
प्रविश्य यज्ञायतनं विवादे
वन्दिं निजग्राहतुरप्रमेयौ ॥ ३-१३४-४ (२१०१३)
उपास्स्व कौन्तेय सहानुजस्त्वं
तस्याश्रमं पुण्यतमं प्रविश्य ।
अष्टावक्रं यस्य दौहित्रमाहु-
र्योऽसौ वन्दिं जनकस्याथ यज्ञे ।
वादि विप्राग्न्यो बाल एवाभिगम्य
वादे भङ्क्त्वा मज्जयामास नद्याम् ॥ ३-१३४-५ (२१०१४)
युधिष्ठिर उवाच। ३-१३४-६क्ष् (२१४५)
कथंप्रभावः स बभूव विप्र-
स्तथाभूतं यो निजग्राह वन्दिम् ।
गकिंचाधिकृत्याथ तयोर्विवादो
विदेहराजस् समीप आसीत्' ॥ ३-१३४-६ (२१०१५)
अष्टावक्रः केन चासौ बभूव
तत्सर्वं मे लोमश शंस तत्त्वम् ॥ ३-१३४-७ (२१०१६)
लोमश उवाच। ३-१३४-८क्ष् (२१४६)
उद्दालकस्य नियतः शिष्य एको
नाम्ना कहोळेति बभूव राजन् ।
शुश्रूषुराचार्यवशानुवर्ती
दीर्घं कालं सोऽध्ययनं चकार ॥ ३-१३४-८ (२१०१७)
तं वै विप्राः पर्यभवंस्तु शिखा-
स्तं च ज्ञात्वा विप्रकारं गुरुः सः ।
तस्मै प्रादात्सद्य एव श्रुतं च
भार्यां च वै दुहितरं स्वां सुजाताम् ॥ ३-१३४-९ (२१०१८)
तस्यां गर्भः समभवदग्निकल्पः
सोऽधीयानं पितरमथाभ्युवाच ।
सर्वां रात्रिमध्ययनं करोषि
नेदं पितः सम्यगिवोपवर्तते ॥ ३-१३४-१० (२१०१९)
उपालब्धः शिष्यमध्ये महर्षिः
स तं कोपादुदरस्थं शशाप ।
यस्माद्वक्रं वर्तमानो ब्रवीषि
तस्माद्वक्रो भवितास्यष्टधैव ॥ ३-१३४-११ (२१०२०)
स वै तथा वक्र एवाभ्यजाय-
दष्टावक्रः प्रथितो मानवेषु ।

अस्यासीद्धि मातुलः श्वेतकेतुः
स तेन तुल्यो वयसा बभूव ॥ ३-१३४-१२ (२१०२१)
संपीड्यमाना तु तदा सुजाता
विवर्धमानेन सुतेन कुक्षौ ।
उवाच भर्तारमिदं रहोगता
प्रसाद्य हीना वसुना धनार्थिनी ॥ ३-१३४-१३ (२१०२२)
कथं करिष्याम्यधुना महर्षे
मासश्चायं दशमो वर्तते मे ।
नैवास्ति मे वसु किंचित्प्रदाता
येंनाहमेतामापदं निस्तरेयम् ॥ ३-१३४-१४ (२१०२३)
उक्तस्त्वेवं भार्यया वै कहोळो
वित्तस्यार्थे जनकमथाभ्यगच्छत् ।
स वै तदा वादविदा निगृह्य
निमज्जितो वन्दिनेहाप्सु विप्रः ॥ ३-१३४-१५ (२१०२४)
उद्दालकस्तं तु तदा निशम्य
सूतेन वादेऽप्सु निमज्जितं तथा ।
उवाच तां तत्रततः सुजात-
मष्टवक्रे गूहितव्योऽयमर्थः ॥ ३-१३४-१६ (२१०२५)
ररक्ष सा चापि तमस् मन्त्रं
जातोऽप्यसौ नैव शुश्राव विप्रः ।
उद्दालकं पितरं सोऽभिमेने
तथाऽष्टावक्रो भ्रातरं श्वेतकेतुम् ॥ ३-१३४-१७ (२१०२६)
ततो वर्षे द्वादशे श्वेतकेतु-
रष्टावक्रं पितुरङ्के निषण्णम् ।
अपाकर्षद्गृह्यपाणौ रुदन्तं
नायं तवाङ्कः पितुरित्युक्तवांश्च ॥ ३-१३४-१८ (२१०२७)
यत्तेनोकतं दुरुक्तं तत्तदानीं
हृदि स्थितं तस्य सुदुःखमासीत् ।
गृहं गत्वा मातरं सोऽथ विग्रः
पप्रच्छेदं क्व नु तातो ममेति ॥ ३-१३४-१९ (२१०२८)
ततः सुजाता परमार्तरूपा
शापाद्भीता तत्त्वमस्याचचक्षे ।
तद्वै तत्त्वंसर्वमाज्ञाय रात्रा-
वित्यब्रवीच्छ्वेतकेतुं स विप्रः ॥ ३-१३४-२० (२१०२९)
गच्छाव यज्ञं जनकस्य राज्ञो
बह्वाश्चर्यः श्रूयते तस्य यज्ञः ।

श्रोष्यावोऽत्र ब्राह्मणानां विवाद-
मन्नं चाग्र्यं तत्रभोक्ष्यावहे च ॥ ३-१३४-२१ (२१०३०)
विचक्षणत्वं च भविष्यते नौ
शिवश्च सौम्यश्च हि ब्रह्मघोषः ॥ ३-१३४-२२ (२१०३१)
तौ जग्मतुर्मातुलभागिनेयौ
यज्ञं समृद्धं जमकस्य राज्ञः ।
अष्टावक्रः पथि राज्ञा समेत्य
प्रोत्सार्यमाणो वाक्यमिदं जगाद ॥ ३-१३४-२३ (२१०३२)

इति श्रीमन्महाभारते अरण्यपर्वणि तीर्तयात्रापर्वणि
चतुस्त्रिंशदधिकशततमोऽध्यायः ॥१३४ ॥
Mahabharata - Vana Parva - Chapter Footnotes

३-१३४-४ वन्दिं वन्दिनम् । निजग्राहतुः ॥
३-१३४-९ तं वै विप्रः पर्यचरत्सशिष्यस्तां च ज्ञात्वा परिचर्यां
गुरुः सः । इति झ पाठः ॥
३-१३४-११ यस्मात्कुक्षौ वर्तमान इति झ । पाठः ॥
३-१३४-१४ वसुकिंचित्प्रजातेति झ । पाठः। प्रजाता प्रसूता ॥

---

वन-अध्यय१३५
॥ श्रीः ॥
३.१३५. अध्यायः १३५

Mahabharata - Vana Parva - Chapter Topics
श्वेतकेतुना सह जनकयज्ञशालां विविक्षोरष्टावक्रस्य द्वारपालेन
निरोधनम् ॥१ ॥
अष्टावक्रद्वारपालयोः संवादः ॥२ ॥
स्वप्रश्नस्योत्तरदानतुष्टेन राज्ञा सभाप्रवेशाभुमतिः ॥३ ॥

Mahabharata - Vana Parva - Chapter Text

३-१३५-० (२१०३३)
अष्टावक्र उवाच। ३-१३५-०क्ष् (२१४७)
अन्धस्य पन्था बधिरस्य पन्थाः
स्त्रियः पन्था भारवाहस्य पन्थाः ।
राज्ञः पन्था ब्राह्मणेनासमेत्य
समेत्य तु ब्राह्मणस्यैव पन्थाः ॥ ३-१३५-१ (२१०३४)

राजोवाच। ३-१३५-२क्ष् (२१४८)
पन्था अयं तेऽद्य मया निसृष्टो
येनेच्छसे तेन कामं व्रजस्व ।
न पावको विद्यते वै लघीया-
निन्द्रोपि नित्यं नमते ब्राह्मणानाम् ॥ ३-१३५-२ (२१०३५)
लोमश उवाच। ३-१३५-३क्ष् (२१४९)
ग्स एवमुक्तो मातुलेनैव सार्धं
यथेष्टमार्गो यज्ञनिवेशनं तत् ।
संप्राप्य धर्मेण निवारितः सन्
द्वारि द्वाःस्थं वाक्यमिदं बभाषे ॥' ३-१३५-३ (२१०३६)
यज्ञं द्रष्टुं प्राप्तवन्तौ स्म तात
कौतूहलं बलवद्वै विवृद्धम् ।
आवां प्राप्तावतिथी संप्रवेशं
काङ्क्षावहे द्वारपते तवाज्ञाम् ॥ ३-१३५-४ (२१०३७)
ऐन्द्रद्युम्नेर्यज्ञदृशाविहावां
विवक्षू वै जनकेन्द्रं दिदृक्षू ।
न वै क्रुध्यो वन्दिना चोत्तमेन
संयोजय द्वारपाल क्षणेन ॥ ३-१३५-५ (२१०३८)
द्वारपाल उवाच। ३-१३५-५क्ष् (२१५०)
वन्देः समादेशकरा वयं स्म
निबोध वाक्यं च मयेर्यमाणम् ।
न वै बालाः प्रविशन्त्यत्र विप्रा
वृद्धा विदग्धाः प्रविशन्ति द्विजाग्र्याः ॥ ३-१३५-६ (२१०३९)
अष्टावक्र उवाच। ३-१३५-७क्ष् (२१५१)
यद्यत्रवृद्धेषु कृतः प्रवेशो
युक्तं मया द्वारपाल प्रवेष्टुम् ।
वयं हि वृद्धाश्चरितव्रताश्च
वेदप्रभावेन समन्विताश्च ॥ ३-१३५-७ (२१०४०)
शुश्रूषवश्चापि जितेन्द्रियाश्च
ज्ञानागमे चापि गताः स्म निष्ठाम् ।
न बाल इत्येव मन्तव्यमाहु-
र्बालोऽप्यग्निर्दहति स्पृश्यमानः ॥ ३-१३५-८ (२१०४१)
द्वारपाल उवाच। ३-१३५-९क्ष् (२१५२)
सरस्वतीमीरय वेद जुष्टा-
मेकाक्षरां बहुरूपां विराजम् ।
अङ्गात्मानं समवेक्षस्व बालं

किं श्लाघसे दुर्लभा वादसिद्धिः ॥ ३-१३५-९ (२१०४२)
अष्टावक्र उवाच। ३-१३५-१०क्ष् (२१५३)
न ज्ञायते कायवृद्ध्या विवृद्धि-
र्यथाऽष्ठीला शाल्मलेः संप्रवृद्धाः ।
ह्रस्वोऽल्पकायः फलितो विवृद्धो
यश्चाफलस्तस्य न वृद्धभावः ॥ ३-१३५-१० (२१०४३)
द्वारपाल उवाच। ३-१३५-११क्ष् (२१५४)
वृद्धेभ्य एवेह मतिं स्म बाला
गृह्णन्ति कालेन भवन्ति वृद्धाः ।
न हि ज्ञातुमल्पकालेन शक्यं
कस्माद्बालः स्थविर इव प्रभाषसे ॥ ३-१३५-११ (२१०४४)
अष्टावक्र उवाच। ३-१३५-१२क्ष् (२१५५)
न तेन स्थविरो भवति येनास्य पलितं शिरः ।
बालोपि यः प्रजानाति तं देवाः स्थविरं विदुः ॥ ३-१३५-१२ (२१०४५)
न हायनैर्न पलितैर्न वित्तैर्न च बन्धुभिः ।
ऋषयश्चक्रिरे धर्मं योऽनूचानः स नो महान् ॥ ३-१३५-१३ (२१०४६)
दिदृक्षुरस्मि संप्राप्तो बन्दिनं राजसंसदि ।
निवेदयस्व मां द्वाःस्थ राज्ञे पुष्करमालिने ॥ ३-१३५-१४ (२१०४७)
द्रष्टास्यद्य वदतोऽस्मान्द्वारपाल मनीषिभिः ।
सह वादे विवृद्धे तु वन्दिनं चापि निर्जितम् ॥ ३-१३५-१५ (२१०४८)
पश्यन्तु विप्राः परिपूर्णविद्याः
सहैव राज्ञा सपुरोधमुख्याः ।
उताहो वाऽप्युच्चतां नीचतां वा
तूष्णींभूतेष्वेव सर्वेष्वथाद्य ॥ ३-१३५-१६ (२१०४९)
द्वारपाल उवाच। ३-१३५-१७क्ष् (२१५६)
कथं यज्ञं दशवर्षो विशेस्त्वं
विनीतानां विदुषां संप्रवेशम् ।
उपायतः प्रयतिष्ये तवाहं
प्रवेशने कुरु यत्नं यथावत् ॥ ३-१३५-१७ (२१०५०)
गएष राजा संश्रवणे स्थितस्ते
स्तुह्येनं त्वं वचसा संस्कृतेन ।
स चानुज्ञां दास्यति प्रीतियुक्तः
प्रवेशने यच्च किंचित्तवेष्टम्'॥ ३-१३५-१८ (२१०५१)
अष्टावक्र उवाच। ३-१३५-१९क्ष् (२१५७)
भोभो राजञ्जनकानां वरिष्ठ
त्वं वै सम्राट् त्वयि सर्वं समृद्धम् ।

त्वं वा कर्ता कर्मणां यज्ञियानां
ययातिरेको नृपतिर्वा पुरस्तात् ॥ ३-१३५-१९ (२१०५२)
विद्वान्वन्दी वादविदो निगृह्य
वादे भग्नानप्रतिशङ्कमानः ।
त्वयाऽभिसृष्टैः पुरुषैराप्तकृद्भि-
र्जले सर्वान्मज्जयतीति नः श्रुतम् ॥ ३-१३५-२० (२१०५३)
सोऽहं श्रुत्वा ब्राह्मणानां सकाशे
ब्रह्माद्य वै कथयितुमागतोस्मि ।
क्वासौ वनदी यावदेनं समेत्य
नक्षत्राणीव सविता नाशयामि ॥ ३-१३५-२१ (२१०५४)
राजोवाच। ३-१३५-२२क्ष् (२१५८)
आशंससे वन्दिनं वै विजेतु-
मविज्ञाय त्वं वाक्यबलं परस्य ।
विज्ञातवीर्यैः शक्यमेवं प्रवक्तुं
दृष्टश्चासौ ब्राह्मणैर्वादशीलैः ॥ ३-१३५-२२ (२१०५५)
आशंसमाना वन्दिनं वै बिजेतु-
मविज्ञात्वा तु बलं वन्दिनोऽस्य ।
समागता ब्राह्मणास्तेन पूर्वं
न शोभन्ते भास्करेणेव ताराः ॥ ३-१३५-२३ (२१०५६)
आशानुबन्धो हि तवात्र यत्नः
स वन्दिमासाद्यतथा विनश्यति ।
विज्ञानवन्तो निकृतास्तु तात
कथं सदस्तर्तुमिदं समर्थः ॥ ३-१३५-२४ (२१०५७)
अष्टावक्र उवाच। ३-१३५-२५क्ष् (२१५९)
विवादितोऽसौ न हि मादृशैर्हि
सिंहीकृतस्तेन वदन्यभीतः ।
समेत्य मां निहतः शेष्यतेऽद्य
मार्गे भग्नं शकटमिवाबलाक्षम् ॥ ३-१३५-२५ (२१०५८)
राजोवाच। ३-१३५-२६क्ष् (२१६०)
षण्नाभेर्द्वादशाक्षस्य चतुर्विंशतिपर्वणः ।
यस्त्रिषष्टिशतारस्य वेदार्थं स परः कविः ॥ ३-१३५-२६ (२१०५९)
अष्टावक्र उवाच। ३-१३५-२७क्ष् (२१६१)
चतुर्विंशतिपर्व त्वां षणानाभि द्वादशप्रधि ।
तत्रिषष्टिशतारं वै चक्रं पातु सदागति ॥ ३-१३५-२७ (२१०६०)
राजोवाच। ३-१३५-२८क्ष् (२१६२)
बडबे इव संयुक्ते श्येनपाते दिवौकसाम् ।

कस्तयोर्गर्भमाधत्ते गर्भं सुषुवतुश्च कम् ॥ ३-१३५-२८ (२१०६१)
अष्टावक्र उवाच। ३-१३५-२९क्ष् (२१६३)
मा स्म भूः स्वगृहे राजञ्शात्रवाणामपि ध्रुवम् ।
वातसारथिराधत्ते गर्भं सुषुवतुश्च तम् ॥ ३-१३५-२९ (२१०६२)
राजोवाच। ३-१३५-३०क्ष् (२१६४)
किंस्वित्स्तुप्तं न निमिषति किंस्विज्जातं न चोपति ।
कस्यखिद्धृदयं नास्ति किंस्विद्वेगेन वर्धते ॥ ३-१३५-३० (२१०६३)
अष्टावक्र उवाच। ३-१३५-३१क्ष् (२१६५)
मत्स्यः सुप्तो न निमिषत्यण्डं जातं न चोपति ।
अश्मनो हृदयं नास्ति नदी वेगेन वर्धते ॥ ३-१३५-३१ (२१०६४)
राजोवाच। ३-१३५-३२क्ष् (२१६६)
न त्वां मन्ये मानुषं देवसत्व
न त्वं बालः स्थविरः संमतो मे ।
न ते तुल्यो विद्यते वाक्प्रलापे
तस्माद्द्वारं वितराम्येष विद्वन् ॥ ३-१३५-३२ (२१०६५)

इति श्रीमन्महाभारते अरण्यपर्वणि तीर्थयात्रापर्वणि
पञ्चत्रिंशदधिकशततमोऽध्यायः ॥ १३५ ॥
Mahabharata - Vana Parva - Chapter Footnotes

३-१३५-१ स्त्रियः पन्था वै पथिकस्य पन्था इति क
। पाठः। अन्धादीनामक्षमत्वान्मार्गो देय इत्यर्थः। असमेत्य समीपं
अप्राप्य ॥
३-१३५-५ ऐन्द्रद्युम्नेर्जनकस्य ॥
३-१३५-७ चरितव्रताश्च तपःप्रभावेन निवेशनार्हाः इति क
। ध। पाठः ॥
३-१३५-८ ज्ञानागमे ज्ञानशास्त्रे वेदान्तेष्वित्यर्थः । निष्ठां निश्चयम् ॥
३-१३५-९ वेद जानीते यदि तर्हि ईरय । जुष्टां मुनिसेविताम्। एकमेव
अक्षरं ब्रह्म प्रतिपाद्यं यस्यां तां एकाक्षराम्। बहुरूपां
मन्त्रार्थवादादिरूपाम्। विराजं विशेषेण कर्मकाण्डादाधिवयेन
राजमानाम्। अङ्गेति संबोधने ॥
३-१३५-१० शाल्मलेरष्ठीला शाल्मलिफलान्तर्गतग्रन्थिः । सहि
केवलतूलमयत्वान्निःसारः। अतो देहवृद्धिर्व्यर्था। अल्पकायः
कृशः ॥
३-१३५-१३ अनूचानः साङ्गवेदाध्यायी ॥
३-१३५-१४ पुष्करमालिने स्वर्णमालाधारिणे ॥

३-१३५-१९ सम्राट् सार्वभौमः ॥
३-१३५-२१ ब्रह्माद्वैत इति झ । पाठः। ब्रह्माद्यं वै इति ध। पाठः ॥
३-१३५-२७ प्रधयो मासा राशयो वा । तेषु
हि त्रिंशदहोरात्रा अंशा वा प्रत्येकं प्रत्येकं
प्रधीयन्ते। चक्रं पात्वस्मिन् काले यथाकालं विहितो धर्मस्त्वां
पात्वित्यर्थः। केवलकालज्ञानस्यापुरुषार्थत्वात्। एवमन्यत्रापि विधानं
द्रष्टव्यम् ॥
३-१३५-२८ रथसंयुक्ते अश्वे इव सहचारिण्यौ श्येनपाते
श्येनवदकस्मात् पतनशीले ये उभे वर्तेते । दिवौकसां देवानां मध्ये
तयोः संबन्धिनं गर्भं को धत्ते। कस्य गर्भे ते उत्पद्येते कंच
जनयत इत्यर्थः ॥
३-१३५-३२ वाक्प्रलापे वाचां प्रकृष्टे संलापे । वितराम्येष वन्दीति
झ। पाठः। एष वन्दी दृश्यतामिति शेषः ॥

---

वन-अध्यय१३६
॥ श्रीः ॥
३.१३६. अध्यायः १३६

Mahabharata - Vana Parva - Chapter Topics
अष्टावक्रेण वादे पराजितस्य वन्दिनो जनकेन जले विनिमज्जनम् ॥ १ ॥
जलमज्जितेषु सर्वविप्रेषु समुत्थितेषु अष्टावक्रेण स्वपित्रा कहोळेन
मातुलेन च सह स्वाश्रमगमनम् ॥ २ ॥
अष्टावक्रस्य पितृचोदनया समङ्गाप्रवेशाद्देहस्य समीभवनम् ॥ ३ ॥

Mahabharata - Vana Parva - Chapter Text

३-१३६-० (२१०६६)
अष्टावक्र उवाच। ३-१३६-०क्ष् (२१६७)
अत्रोग्रसेनसमितेषु राजन्
समागतेष्वप्रतिमेषु राजसु ।
न मे विवित्सान्तरमस्ति वादिनां
महाजने हंसविवादिनामिव ॥ ३-१३६-१ (२१०६७)
न मोक्ष्यसे वै वदमानो निमज्जन्
जलं प्रपन्नः सरितामिवाधनः ।
हुताशनस्येव समिद्धतेजसः
स्थिरो भवस्वेह ममाद्य वन्दिन् ॥ ३-१३६-२ (२१०६८)
वन्द्युवाच। ३-१३६-३क्ष् (२१६८)

व्याघ्रं शयानं प्रति मा प्रबोध
आशीविषं सृक्विणी संलिहानम् ।
पदा हतस्येह शिरोभिहत्य
नादष्टो वै मोक्ष्यसे तन्निबोध ॥ ३-१३६-३ (२१०६९)
यो वै दर्पात्संहननोपपन्नः
सुदुर्बलः पर्वतमाविहन्ति ।
तस्यैव पाणिः सनखो विदीर्यते
न चैव शैलस्य हि दृश्यते व्रणः ॥ ३-१३६-४ (२१०७०)
अष्टावक्र उवाच। ३-१३६-५क्ष् (२१६९)
सर्वे राज्ञो मैथिलस्य मैनाकस्येव पर्वताः ।
निकृष्टभूता राजानो वत्सा ह्यनडुहो यथा ॥ ३-१३६-५ (२१०७१)
यथा महेन्द्रः प्रवरः सुराणां
नदीषु गङ्गा प्रवरा यथैव ।
तथा नृपाणां प्रवरस्त्वमेको
वन्दिं समभ्यानय मत्सकाशम् ॥ ३-१३६-६ (२१०७२)
लोमश उवाच। ३-१३६-७क्ष् (२१७०)
एवमष्टावक्रः समितौ हि गर्ज-
ञ्जातक्रोधो वन्दिनमाह राजन् ।
उक्ते वाक्ये चोत्तरं मे ब्रवीहि
वाक्यस्य चाप्युत्तरं ते ब्रवीमि ॥ ३-१३६-७ (२१०७३)
वन्द्युवाच। ३-१३६-८क्ष् (२१७१)
एक एवाग्निर्बहुधा समिध्यते
एकः सूर्यः सर्वमिदं विभाति ।
एकोऽवीरो देवराजोऽरिहन्ता
यमः पितॄणामीश्वरश्चैक एव ॥ ३-१३६-८ (२१०७४)
अष्टावक्र उवाच। ३-१३६-९क्ष् (२१७२)
द्वाविन्द्राग्नी चरतो वै सखायौ
द्वौ देवर्षी नारदपर्वतौ च ।
द्वावश्विनौ द्वे रथस्यापि चक्रे
भार्यापती द्वौ विहितौ विधात्रा ॥ ३-१३६-९ (२१०७५)
वन्द्युवाच। ३-१३६-१०क्ष् (२१७३)
त्रिः सूयते कर्मणा वै प्रजेयं
त्रयो युक्ता वाजपेयं वहन्ति ।
अध्वर्यवस्त्रिसवनानि तन्वते
त्रयो लोकास्त्रीणि ज्योतींषि चाहुः ॥ ३-१३६-१० (२१०७६)
अष्टावक्र उवाच। ३-१३६-११क्ष् (२१७४)

चतुष्टयं ब्राह्मणानां निकेतं
चत्वारो वर्णा यज्ञमिमं वहन्ति ।
दिशश्चतस्रो वर्णचतुष्टयं च
चतुष्पदा गौरपि शश्वदुक्ता ॥ ३-१३६-११ (२१०७७)
वन्द्युवाच। ३-१३६-१२क्ष् (२१७५)
पञ्चाग्नयः पञ्चपदा च पङ्क्ति-
र्यज्ञाः पञ्चैवाप्यथ पञ्चेनद्रियाणि ।
दृष्ट्वा वेदे पञ्चचूडाप्सराश्च
लोके ख्यातं पञ्चनदं च पुण्यम् ॥ ३-१३६-१२ (२१०७८)
अष्टावक्र उवाच। ३-१३६-१३क्ष् (२१७६)
षडाधाने दक्षिणामाहुरेके
षट् चैवेमे ऋतवः कालचक्रम् ।
षडिन्द्रियाण्युत षट् कृत्तिकाश्च
षट् साद्यस्काः सर्ववेदेषु दृष्टाः ॥ ३-१३६-१३ (२१०७९)
वन्द्युवाच। ३-१३६-१४क्ष् (२१७७)
सप्त ग्राम्याः पशवः सप्त वन्याः
सप्त च्छन्दांसि क्रतुमेकं वहन्ति ।
सप्तर्षयः सप्त चाप्यर्हणानि
सप्तन्त्री प्रथिता चैव वीणा ॥ ३-१३६-१४ (२१०८०)
अष्टावक्र उवाच। ३-१३६-१५क्ष् (२१७८)
अष्टौ शाणाः शतमानं वहन्ति
तथाष्टपादः शरभः सिंहघाती ।
अष्टौ वसूञ्शुश्रुम देवतासु
यूपश्चाष्टास्रिर्विहितः सर्वयज्ञे ॥ ३-१३६-१५ (२१०८१)
वन्द्युवाच। ३-१३६-१६क्ष् (२१७९)
नवैवोक्ताः सामिधेन्यः पितॄणां
तथा प्राहुर्नवयोगं विसर्गम् ।
नवाक्षरा बृहती संप्रदिष्टा
नवैव योगो गणनामेति शश्वत् ॥ ३-१३६-१६ (२१०८२)
अष्टावक्र उवाच। ३-१३६-१७क्ष् (२१८०)
दिशो दशोक्ताः पुरुषस्य लोके
सहस्रमाहुर्दशपूर्णं शतानि ।
दशैव मासान्बिभ्रति भर्गवत्यो
दशैरका दशदाशा दशार्हाः ॥ ३-१३६-१७ (२१०८३)
वन्द्युवाच। ३-१३६-१८क्ष् (२१८१)
एकादशैकादशिनः पशूना-

मेकादशैवात्र भवन्ति यूपाः ।
एकादश प्राणभृतां विकारा
एकादशोक्ता दिवि देवेषु रुद्राः ॥ ३-१३६-१८ (२१०८४)
अष्टावक्र उवाच। ३-१३६-१९क्ष् (२१८२)
संवत्सरं द्वादशमासमाहु-
र्जगत्याः पादो द्वादशैवाक्षराणि ।
द्वादशाहः प्राकृतो यज्ञ उक्तो
द्वादशादित्यान्कथयन्तीह धीराः ॥ ३-१३६-१९ (२१०८५)
वन्द्युवाच। ३-१३६-२०क्ष् (२१८३)
त्रयोदशी तिथिरुक्ता महोग्रा
त्रयोदशद्वीपवती मही च। ३-१३६-२० (२१०८६)
लोमश उवाच ।
एतावदुक्त्वा विरराम वन्दी
श्लोकस्यार्धं व्याजहाराष्टवक्रः। ३-१३६-२०क्ष् (२१८४)
अष्टावक्र उवाच ।त्रयोदशाहानि ससार केशी
त्रयोदशादीन्यतिच्छन्दांसि चाहुः ॥ ३-१३६-२०क्ष् (२१८५)
लोमश उवाच। ३-१३६-२१क्ष् (२१८६)
ततो महानुदतिष्ठन्निनाद-
स्तूर्ष्णींभूतं सूतपुत्रं निशम्य ।
अधोमुखं ध्यानपरं तदानी-
मष्टावक्रं चाप्युदीर्यन्तमेव ॥ ३-१३६-२१ (२१०८७)
तस्मिंस्तथा संकुले वर्तमाने
स्फीते यज्ञे जनकस्योत राज्ञः ।
अष्टावक्रं पूजयन्तोऽभ्युपेयु-
र्विप्राः सर्वे प्राञ्जलयः प्रतीताः ॥ ३-१३६-२२ (२१०८८)
अष्टावक्र उवाच। ३-१३६-२३क्ष् (२१८७)
अनेनैव ब्राह्मणाः शुश्रुवांसो
वादे जित्वा सलिले मज्जिताः प्राक् ।
तानेव धर्मानयमद्य वन्दी
प्राप्नोतु गृह्याशु निमज्जयैनम् ॥ ३-१३६-२३ (२१०८९)
वन्द्युवाच। ३-१३६-२४क्ष् (२१८८)
अहं पुत्रो वरुणस्योत राज्ञ-
स्तत्रास सत्रं द्वादशवार्षिकं वै ।
सत्रेण ते जनक तुल्यकालं
तदर्थं ते प्रहिता मे द्विजाग्र्याः ॥ ३-१३६-२४ (२१०९०)
ते तु सर्वे वरुणस्योत यज्ञं

द्रष्टुं गता इम आयान्ति भूयः ।
अष्टावक्रं पूजये पूजनीयं
यस्य हेतोर्जनितारं समेष्ये ॥ ३-१३६-२५ (२१०९१)
अष्टावक्र उवाच। ३-१३६-२६क्ष् (२१८९)
विप्राः समुद्राम्भसि मज्जिता ये
वाचा जिता मेधया वा विदानाः ।
तां मेधया वाचमथोज्जहार
यथा वाचमवचिन्वन्ति सन्तः ॥ ३-१३६-२६ (२१०९२)
अग्निर्दहञ्जातवेदाः सतां, गृहान्
विसर्जयंस्तेजसा न स्म धाक्षीत् ।
बालेषु पुत्रेषु कृपणं वदत्सु
तथा वाचमवचिन्वन्ति सन्तः ॥ ३-१३६-२७ (२१०९३)
श्लेष्मातकी क्षीणवर्चाः शृणोषि
उताहो त्वां स्तुतयो मादयन्ति ।
हस्तीव त्वं स्तुतयो मादयन्ति ।
न मामिकां वाचमिमां शृणोषि ॥ ३-१३६-२८ (२१०९४)
जनक उवाच। ३-१३६-२९क्ष् (२१९०)
शृणोमि वाचं तव दिव्यरूपा-
ममानुषीं दिव्यरूपोऽसि साक्षात् ।
अजैषीर्यद्वन्द्विनं त्वं विवादे
निसृष्ट एष तव कामोऽद्य वन्दी ॥ ३-१३६-२९ (२१०९५)
अष्टावक्र उवाच। ३-१३६-३०क्ष् (२१९१)
नानन जीवता कश्चिदर्थो मे वन्दिना नृप ।
पिता यद्यस्य वरुणो मज्जयैनं जलाशये ॥ ३-१३६-३० (२१०९६)
वन्द्युवाच। ३-१३६-३१क्ष् (२१९२)
अहं पुत्रो वरुणस्योत राज्ञो
न मे भयं विद्यते मज्जितस्य ।
इमं मुहूर्तं पितरं द्रक्ष्यतेऽय-
मष्टावक्रश्चिरनष्टं कहोळम् ॥ ३-१३६-३१ (२१०९७)
लोमश उवाच। ३-१३६-३२क्ष् (२१९३)
ततस्ते पूजिता विप्रा वरुणेन महात्मना ।
उदतिष्ठंस्ततः सर्वे जनकस्य समीपतः ॥ ३-१३६-३२ (२१०९८)
कहोळ उवाच। ३-१३६-३३क्ष् (२१९४)
इत्यर्थमिच्छन्ति सुताञ्जना जननकर्मणा ।
यदहं नाशकं कर्तुं तत्पुत्रः कृतवान्मम ॥ ३-१३६-३३ (२१०९९)
उताबलस्य क्लवानुत बालस्य पण्डितः ।

उत वाऽविदुषो विद्वान्पुत्रो जनक जायते ॥ ३-१३६-३४ (२११००)
वन्द्युवाच। ३-१३६-३५क्ष् (२१९५)
शितेन ते परशुना स्वयमेवान्तको नृप ।
शिरांस्यपाहरन्नाजौ रिपूणां भद्रमस्तु ते ॥ ३-१३६-३५ (२११०१)
महदैक्थ्यं गीयते साम चाग्र्यं
सम्यक्सोमः पीयते चात्र सत्रे ।
शुचीन्भागान्प्रतिजगृहुश्च हृष्टाः
साक्षाद्देवा जनकस्येह राज्ञः ॥ ३-१३६-३६ (२११०२)
लोमश उवाच। ३-१३६-३७क्ष् (२१९६)
समुत्थितेष्वथ सर्वेषु राजन्
विप्रेषु तेष्वधिकं सुप्रभेषु ।
अनुज्ञातो जनकेनाथ राज्ञा
विवेश तोयं सागरस्योत वन्दी ॥ ३-१३६-३७ (२११०३)
अष्टावक्रः पितरं पूजयित्वा
संपूजितो ब्राह्मणैस्तैर्यथावत् ।
प्रत्याजगामाश्रममेव चाग्र्यं
जित्वा वन्दिं सहितो मातुलेन ॥ ३-१३६-३८ (२११०४)
ततोऽष्टावक्रं मातुरथान्तिके पिता
नदीं समङ्गां शीघ्रमिमां विशस्व ।
प्रोवाच चैनं स तथा विवेश
समैरङ्गैश्चापि बभूव पुण्या ३-१३६-३९ (२११०५)
नदी समङ्गा च बभूव पुण्या
यस्यां स्नातो मुच्यते किल्बिषाद्धि ।
त्वमप्येनां स्नानपानावगाहैः
सभ्रातृकः सहभार्यो विशस्व ॥ ३-१३६-४० (२११०६)
अत्र कौन्तेय सहितो भ्रातृभिस्त्वं
सुखोषितः सह विप्रैः प्रतीतः ।
पुण्यान्यन्यानि शुचिकर्मैकभक्ति-
र्मया सार्धं चरितास्याजमीढ ॥ ३-१३६-४१ (२११०७)

इति श्रीमन्महाभारते अरण्यपर्वणि तीर्थयात्रापर्वणि
षट्त्रिंशदधिकशततमोऽध्यायः ॥ १३६ ॥

Mahabharata - Vana Parva - Chapter Footnotes

३-१३६-१ नावैमि वन्दिं वरमत्र वादिनां महाजले हंसमिवाददामि इति
झ । पाठः ॥

३-१३६-२ न मेऽद्य वक्ष्यस्यतिवादिमानिन् ग्लहं प्रपन्नः सरितामिवागमः । इति झ। पाठः ॥
३-१३६-३ प्रबोध प्रबोधय ॥
३-१३६-४ संहननेन देहेन दृढकायत्वेन उपपन्नः ॥
३-१३६-६ वन्दिं वन्दिनम् । विभक्त्यलोपे नकारलोप आर्षः ॥
३-१३६-१३ षडेव यज्ञाः सर्ववेदेष्विति ध । पाठः ॥
३-१३६-१५ अष्टौ दिगीशान्यतमानान्वदन्ति इति ख । पाठः। अष्टौ योगाः प्रथिमानं वहन्ति इति ध। पाठः ॥
३-१३६-२१ सूतपुत्रं वरुणपुत्रम् । उदीर्यन्तमुदीर्यमाणम्। स्तूयमानमित्यर्थः ॥
३-१३६-२३ शुश्रुवांसः पण्डिताः ॥
३-१३६-२५ जनितारं वरुणम् ॥
३-१३६-२६ वाचा उच्चैः पाठेनैव । उत मेधया ऊहापोहकौशलेन। विप्राः विदानाः पण्डिता अपि जिताः मज्जिताश्च तां प्रसिद्धां वाचं वेदमयीं मेधया सहितां वन्दिना कुतर्कार्णवे मज्जितां अहं यथा उज्जहार उद्धृतवानस्मि तथा सन्तः सदसद्वचनविवेककुशलाः अवचिन्वन्ति परीक्षयन्ति। लोडर्थे लट्। परीक्षयन्त्वित्यर्थः ॥
३-१३६-२७ अग्निः दहन् स्वभावेन दाहकोऽपि जातवेदाः जातानि सतामसतां च वृत्तानि वेद जानातीति जातवेदाः । सतां सत्याभिसंधीनां गृहान् शरीराणि विसर्जयन् वर्जयन् तेजसा यथा अधाक्षीत्स्म अर्थादनृताभिसंधिगृहान्। नशब्द उपमार्थे। यथा तप्तपरशुग्रहणे वह्निः सत्याभिसंधि न दहति सत्यपक्षपाती नतु जातिवयोविद्यादिपक्षपाती। एवं सन्तोपि बालादिषु। अतो बालवचनमिति मद्वाक्यं नावमन्तव्यमिति भावः ॥
३-१३६-२८ श्लोष्मातकीशब्दिततस्तरुविशेषस्तस्य पत्रेषु भोजनं तत्फलभक्षणं च बुद्धिघ्नं दोषकरं चेति प्रसिद्धम् ॥
३-१३६-२९ अद्य तव कामो निसृष्टः एष वन्दी दृश्यतामिति शेषः ॥
३-१३६-३३ इत्यर्थं एतदर्थम् ॥
३-१३६-३५ शितेन तीक्ष्णेन ते तव रिपूणामित्यन्वयः । यमादपि तव शत्रुसंहरणशक्तिरधिकेति भावः ॥
३-१३६-३६ औक्थ्यं उक्थ्याख्यक्रतुविशेषे गेयम् ॥
३-१३६-३८ सौतिं सूतस्य वरुणस्य पुत्रम् ॥
३-१३६-३९ समानि अङ्गानि करोतीति समगेति योगो दर्शितः । शकन्ध्वादित्वात् पररूपम् ॥
३-१३६-४१ प्रतीतो विश्रब्धः ॥

वन-अध्यय१३७
॥ श्रीः ॥
३.१३७. अध्यायः १३७

Mahabharata - Vana Parva - Chapter Topics
लोमशेन रैभ्याश्रमंगतं युधिष्ठिरंप्रति
यवक्रीतोपाख्यानकथनारम्भः ॥ १ ॥
भरद्वाजपुत्रेण यवक्रीतेन स्वपितृमित्रे रैभ्ये
तत्पुत्रयोरर्वावसुपरावस्वोश्चासूयया निवैवोपदेशं वेदाधिगमाय
इन्द्रंप्रति तपश्चरणम् ॥ २ ॥
इन्द्रनिवारितेनापि यवक्रीतेन बलात्कारेण तस्माद्वरग्रहणम् ॥ ३ ॥
भरद्वाजेन लब्धवरं यवक्रीतंप्रति गर्वेण रैभ्यपीडाप्रतिषेधाय
बालध्युपाख्यानकथनम् ॥ ४ ॥

Mahabharata - Vana Parva - Chapter Text

३-१३७-० (२११०८)
लोमश उवाच। ३-१३७-०क्ष् (२१९७)
एषा मधुविला नाम समङ्गा संप्रकाशते ।
एतत्कर्दमिलं नाम भरतस्याभिषेचनम् ॥ ३-१३७-१ (२११०९)
अलक्ष्म्या किल संयुक्तो वृत्रं हत्वा शचीपतिः ।
आप्लुतः सर्वपापेभ्यः समङ्गायां व्यमुच्यत ॥ ३-१३७-२ (२१११०)
एतद्विनशनं कुक्षौ मैनाकस्य नरर्षभ ।
अदितिर्यत्रपुत्रार्थं तदन्नमपचत्पुरा ॥ ३-१३७-३ (२११११)
एनं पर्वतराजानमारुह्य भरतर्षभाः ।
अयशस्यामसंशब्द्यामलक्ष्मीं व्यपनोत्स्यथ ॥ ३-१३७-४ (२१११२)
एते कनखला राजन्नृषीणां दयिता नगाः ।
एषा प्रकाशते गङ्गा युधिष्ठिर यशस्विनी ॥ ३-१३७-५ (२१११३)
सनत्कुमारो भगवानत्र सिद्धिमगात्पुरा ।
आजमीढावगाह्यैनां सर्वपापैः प्रमोक्ष्यसे ॥ ३-१३७-६ (२१११४)
अपां ह्रदं च पुण्याख्यं भृगुतुन्दं च पर्वतम् ।
तूष्णीं गङ्गां च कौन्तेय सानुजः समुपस्पृश ॥ ३-१३७-७ (२१११५)
आश्रमः स्थूलशिरसो रमणीयः प्रकाशते ।
अत्र मानं च कौन्तेय क्रोधं चैव विवर्जय ॥ ३-१३७-८ (२१११६)
एष रैभ्याश्रमः श्रीमान्पाण्डवेय प्रकाशते ।
भारद्वाजो यत्रकविर्यवक्रीतो व्यनश्यत ॥ ३-१३७-९ (२१११७)

युधिष्ठिर उवाच। ३-१३७-१०क्ष् (२१९८)
कथं युक्तोऽभवदृषिर्भरद्वाजः प्रतापवान् ।
किमर्थं च यवक्रीतः पुत्रोऽनश्यत वै मुनेः ॥ ३-१३७-१० (२१११८)
एतत्सर्वं यथावृत्तं श्रोतुमिच्छामि तत्त्वतः ।
कर्मभिर्देवकल्पानां कीर्त्यमानैर्भृशं रमे ॥ ३-१३७-११ (२१११९)
लोमश उवाच। ३-१३७-१२क्ष् (२१९९)
भरद्वाजश्च रैभ्यश्च सखायौ संबभूवतुः ।
तावूषतुरिहात्यन्तं प्रीयमाणौ वनान्तरे ॥ ३-१३७-१२ (२११२०)
रैभ्यस्य तु सुतावास्तामर्वावसुपरावसू ।
आसीद्यवक्रीः पुत्रस्तु भरद्वाजस्य भारत ॥ ३-१३७-१३ (२११२१)
रैभ्यो विद्वान्सहापत्यस्तपस्वी चेतरोऽभवत् ।
तयोश्चाप्यतुला प्रीतिरभवद्भरतर्षभ ॥ ३-१३७-१४ (२११२२)
यवक्रीः पितरं दृष्ट्वा तपस्विनमसत्कृतम् ।
दृष्ट्वा च सत्कृतं विप्रै रैभ्यं पुत्रैः सहानघः ॥ ३-१३७-१५
(२११२३)
पर्यतप्यत तेजस्वी मन्युनाऽभिपरिप्लुतः ।
तपस्तेपे ततो घोरं वेदज्ञानाय पाण्डव ॥ ३-१३७-१६ (२११२४)
सुसमिद्धे महत्यग्नौ शरीरमुपतापयन् ।
जनयामास संतापमिन्द्रस्य सुमहातपाः ॥ ३-१३७-१७ (२११२५)
तत इन्द्रो यवक्रीतमुपगम्य युधिष्ठिर ।
अब्रवीत्कस्य हेतोस्त्वमास्थितस्तप उत्तमम् ॥ ३-१३७-१८ (२११२६)
यवक्रीत उवाच। ३-१३७-१९क्ष् (२२००)
द्विजानामनधीता वै वेदाः सुरगणार्चित ।
प्रतिभान्त्विति तप्येहमिदं परमकं तपः ॥ ३-१३७-१९ (२११२७)
स्वाध्यायार्थं समारम्भो ममायं पाकशासन ।
तपसा ज्ञातुमिच्छामि सर्वज्ञानानि कौशिक ॥ ३-१३७-२० (२११२८)
कालेन महता वेदाः शक्या गुरुमुखाद्विभो ।
प्राप्तुं तस्मादयं यत्नः परमो मे समास्थितः ॥ ३-१३७-२१ (२११२९)
इन्द्र उवाच। ३-१३७-२२क्ष् (२२०१)
अमार्ग एष विप्रर्षे येन त्वं यातुमिच्छसि ।
किं विघातेन ते विप्र गच्छाधीहि गुरोर्मुखात् ॥ ३-१३७-२२ (२११३०)
लोमश उवाच। ३-१३७-२३क्ष् (२२०२)
एवमुक्त्वा गतः शक्रो यवक्रीरपि भारत ।
भूय एवाकरोद्यत्नं तपस्यमितविक्रमः ॥ ३-१३७-२३ (२११३१)
घोरेण तपसा राजंस्तप्यमानो महत्तपः ।
संतापयामास भृशं देवेन्द्रमिति नः श्रुतम् ॥ ३-१३७-२४ (२११३२)

तं तथा तप्यमानं तु तपस्तीव्रं महामुनिम् ।
उपेत्य बलभिद्देवो वारयामास वै पुनः ॥ ३-१३७-२५ (२११३३)
अशक्योऽर्थः समारब्धो नैतद्बुद्धिकृतं तव ।
प्रतिभास्यन्ति वै वेदास्तव चैव पितुश्च ते ॥ ३-१३७-२६ (२११३४)
यवक्रीत उवाच। ३-१३७-२७क्ष् (२२०३)
न चैतदेवं क्रियते देवराजसमीप्सितम् ।
महता नियमेनाहं तप्स्ये घोरतरं तपः ॥ ३-१३७-२७ (२११३५)
समिद्धेऽग्नावुपकृत्याङ्गमङ्गं
होष्यामि वा मघवंस्तन्निबोध ।
यद्येतदेवं न करोषि कामं
ममेप्सितं देवराजेह सर्वम् ॥ ३-१३७-२८ (२११३६)
लोमश उवाच। ३-१३७-२९क्ष् (२२०४)
निश्चयं तमभिज्ञाय मुनेस्तस्य महात्मनः ।
प्रतिवारणहेत्वर्थं बुद्ध्या संचिन्त्य बुद्धिमान् ॥ ३-१३७-२९ (२११३७)
तत इन्द्रोऽकरोद्रूपं ब्राह्मणस्य तपस्विनः ।
अनेकशतवर्षस्य दुर्बलस्य सयक्ष्मणः ॥ ३-१३७-३० (२११३८)
यवक्रीतस्य यत्तीर्थमुचितं शैचकर्मणि ।
भागीरथ्यां तत्र सेतुं वालुकाभिश्चकार सः ॥ ३-१३७-३१ (२११३९)
यदाऽस्य वदतो वाक्यं न स चक्रे द्विजोत्तमः ।
वालुकाभिस्ततः शक्रो गङ्गां समभिपूरयन् ॥ ३-१३७-३२ (२११४०)
वालुकामुष्टिमनिशं भागीरथ्यां व्यसर्जयत् ।
स्नातुमभ्यागतं शक्रो यवक्रीतमदर्शयत् ॥ ३-१३७-३३ (२११४१)
तं ददर्श यवक्रीतो यत्नवन्तं निबन्धने ।
प्रहसंश्चाब्रवीद्वाक्यमिदं स मुनिपुङ्गवः ॥ ३-१३७-३४ (२११४२)
किमिदं वर्तते ब्रह्मन्किंच ते ह चिकीर्षितम् ।
अतीव हि महान्यत्नः क्रियतेऽयं निरर्थकः ॥ ३-१३७-३५ (२११४३)
इन्द्र उवाच। ३-१३७-३६क्ष् (२२०५)
बन्धिष्ये सेतुना गङ्गां सुखः पन्था भविष्यति ।
क्लिश्यते हि जनस्तात तरमाणः पुनःपुनः ॥ ३-१३७-३६ (२११४४)
यवक्रीत उवाच। ३-१३७-३७क्ष् (२२०६)
नायं शक्यस्त्वया बद्धुं महानोघस्तपोधन ।
अशक्याद्विनिवर्तस्व शक्यमर्थं समारभ ॥ ३-१३७-३७ (२११४५)
इन्द्र उवाच। ३-१३७-३८क्ष् (२२०७)
यथैव भवता चेद तपो वेदार्थमुद्यतम् ।
अशक्यं तद्वदस्माभिरयं भारः समाहितः ॥ ३-१३७-३८ (२११४६)
यवक्रीत उवाच। ३-१३७-३९क्ष् (२२०८)

यथा तव निरर्थोऽयमारम्भस्त्रिदशेश्वर ।
तथा यदि ममापीदं मन्यसे पाकशासन ॥ ३-१३७-३९ (२११४७)
क्रियतां यद्भवेच्छक्यं त्वया सुरगणेश्वर ।
वरांश्च मे प्रयच्छान्यासन्यैर्विद्वान्भवितास्म्यहम् ॥ ३-१३७-४० (२११४८)
लोमश उवाच। ३-१३७-४१क्ष् (२२०९)
तस्मै प्रादाद्वरानिन्द्र उक्तवान्यान्महातपाः ।
प्रतिभास्यन्ति ते वेदाः पित्रा सह यथेप्सिताः ॥ ३-१३७-४१ (२११४९)
यच्चान्यत्काङ्क्षसे कामं यवक्रीर्गम्यतामिति ।
स लब्धकाम पितरं समेत्याथेदमब्रवीत् ॥ ३-१३७-४२ (२११५०)
यवक्रीत उवाच। ३-१३७-४३क्ष् (२२१०)
प्रतिभास्यन्ति वै वेदा मम तातस्य चोभयोः ।
अपि चान्यान्भविष्यावो वरा लब्धास्तथा मया ॥ ३-१३७-४३ (२११५१)
भरद्वाज उवाच। ३-१३७-४४क्ष् (२२११)
दर्पस्ते भविता तात वराँल्लब्ध्वा यथेप्सितान् ।
स दर्पपर्णः कृपणः क्षिप्रमेव विनङ्क्ष्यसि ॥ ३-१३७-४४ (२११५२)
अत्राप्युदाहरन्तीमा गाथा देवैरुदाहृताः ।
मुनिरासीत्पुरा पुत्र बालधिर्नाम विश्रुतः ॥ ३-१३७-४५ (२११५३)
स पुत्रशोकादुद्विग्रस्तपस्तेपे सुदुष्करम् ।
भवेन्मम सुतोऽमर्त्य इतितं लब्धवांश्च सः ॥ ३-१३७-४६ (२११५४)
तस्य प्रसादो वै देवैः कृतो न त्वमरैः समः ।
नामर्त्यो विद्यते मर्त्यो निमित्तायुर्भविष्यति ॥ ३-१३७-४७ (२११५५)
बालधिरुवाच। ३-१३७-४८क्ष् (२२१२)
यथेमे पर्वताः शश्वत्तिष्ठन्ति सुरसत्तमाः ।
तावज्जीवेन्मम् सुतो निर्वाणमुत मे मतः ॥ ३-१३७-४८ (२११५६)
भरद्वाज उवाच। ३-१३७-४९क्ष् (२२१३)
तस्य पुत्रस्तदा जत्रे मेधावी क्रोधनस्तदा ।
स तु लब्धवरो दर्पादृषींश्चैवावमन्यत ॥ ३-१३७-४९ (२११५७)
विकुर्वाणो मुनीनां च व्यचरत्स महीमिमाम् ।
आससाद महावीर्यं धनुषाक्षं मनीषिणम् ॥ ३-१३७-५० (२११५८)
तस्यापचक्रे मेधावी तं शशाप स वीर्यवान् ।
भव भस्मेति चोक्तः स न भस्म समपद्यत ॥ ३-१३७-५१ (२११५९)
धनुषाक्षस्तु तं दृष्ट्वा मेधाविनमनामयम् ।
ग्मुनिस्तत्कारणं ज्ञात्वा स्वयं महिषरूपधृत् ।
शृङ्गेणाद्रीनचलयत्ततोऽयंभस्मसादभूत्' ॥ ३-१३७-५२ (२११६०)
निमित्तमस्य महर्षिर्भेदयामास पर्वतान् ।
स निमित्ते विनष्टे तु ममार सहसा शिशुः ॥ ३-१३७-५३ (२११६१)

तं मृतं पुत्रमादाय विललाप ततः पिता ॥ ३-१३७-५४ (२१११६२)
लालप्यमानं तं दृष्ट्वा मुनयः परमार्तवत् ।
ऊचुर्वेदविदः सर्वे गाथां यां तां निबोध मे ॥ ३-१३७-५५ (२१११६३)
न दिष्टमर्थमत्येतुमीशोऽमर्त्यः कथंचन ।
महर्षिर्भेदयामास धनुषाक्षो महीधरान् ॥ ३-१३७-५६ (२१११६४)
एवं लब्ध्वा वरान्बाला दर्पपूर्णास्तपस्विनः ।
क्षिप्रमेव विनश्यन्ति यथा न स्यात्तथा भवान् ॥ ३-१३७-५७ (२१११६५)
एष रैभ्यो महावीर्यः पुत्रौ चास्य तथाविधौ ।
तं यथा पुत्र नाभ्येषि तथा कुर्यास्त्वतन्द्रितः ॥ ३-१३७-५८ (२१११६६)
स हि क्रुद्धः समर्थस्त्वां पुत्र पीडयितुं रुषा ।
रैभ्यश्चापि तपस्वी च कोपनश्च महानृषिः ॥ ३-१३७-५९ (२१११६७)
यवक्रीत उवाच। ३-१३७-६०क्ष् (२२१४)
एव करिष्ये मा तापं तात कार्षीः कथंचन ।
यथा हि मे भवान्मान्यस्तथा रैभ्यः पिता मम ॥ ३-१३७-६० (२१११६८)
लोमश उवाच। ३-१३७-६१क्ष् (२२१५)
उक्त्वा स पितरं श्लक्ष्ण यवक्रीरकुतोभयः ।
विप्रकुर्वन्नृषीनन्यानतुष्यत्परया मुदा ॥ ३-१३७-६१ (२१११६९)

इति श्रीमन्महाभारते अरण्यपर्वणि तीर्थयात्रापर्वणि
सप्तत्रिंशदधिकशततमोऽध्यायः ॥ १३७ ॥

Mahabharata - Vana Parva - Chapter Footnotes

३-१३७-१ मधुविलेति अष्टावकाङ्गसमीकरणात्पूर्वं समंगाया एव नाम
मधुवहानामेति क ।ध ।पाठः ॥
३-१३७-३ अन्नं ब्रह्मौदनम् अदितिः पुत्रकामा ।साध्येभ्यो देवेभ्यो
ब्रह्मौदनमपचदिति श्रुतेः ॥
३-१३७-४ अयशस्यां अयशस्करीम् ।असंशब्द्यां
अकीर्तनीयाम्। अयशस्यामसह्यां च अलक्ष्मीं इति ध। पाठः ॥
३-१३७-१४ इतरो भरद्वाजस्तपस्व्येव नतु शिष्यादिसंपन्नः
। कीर्तिर्बाल्यात्प्रभृति भारत इति झ। पाठः ॥
३-१३७-२० सर्वज्ञानानि सर्वशास्त्राणि ३-१३७-२२ विघातेन आत्मनाशनेन ॥
३-१३७-२६ न प्रतिभास्यन्तीति नकारावृत्त्या योज्यम् ॥
३-१३७-४६ अमर्त्यः अमर इत्यर्थः ॥
३-१३७-४८ अक्षयास्तन्निमित्तं मे सुतस्यायुर्भवेद्ध्रुवम् ।इति
झ। ध। पाठः ॥
३-१३७-५२ निमित्तं पर्वतान्भेदयामासखण्डयामास ॥

वन-अध्यय१३८
॥ श्रीः ॥
३.१३८. अध्यायः १३८

Mahabharata - Vana Parva - Chapter Topics
रैभ्याश्रमे तत्स्नुषायाः परावसुभार्याया दर्शनाज्जातकामेन यवक्रीतेन एकान्ते बलात्कारेण तदुपभोगः ॥ १ ॥
रुदत्यातया निवेदितवृत्तान्तेन रौभ्येण यवक्रीतहननाय ज्जटाभ्यां कृत्यारक्षसोः सर्ज्जनम् ॥ २ ॥
कृत्यया रूपसंपदा संमोह्य कमण्डलुहरणए रात्रसाभिद्रावितेन यवक्रीतेन स्वपितुरग्निहोत्रगृहप्रवेशः ॥ ३ ॥
तदाऽन्धेन द्वारकशूद्रेण निवारितस्य यवक्रीतस्य राक्षसेन हननम् ॥ ४ ॥

Mahabharata - Vana Parva - Chapter Text

३-१३८-० (२११७०)
लोमश उवाच। ३-१३८-०क्ष् (२२१६)
चङ्क्रम्यमाणः स तदा यवक्रीरकुतोभयः ।
जगाम माधवे मासि रैभ्याश्रमपदं प्रति ॥ ३-१३८-१ (२११७१)
स ददर्शाश्रमे रम्ये पुष्पतद्रुमभूषिते ।
विचरन्तीं स्नुषां तस्य किन्नरीमिव भारत ॥ ३-१३८-२ (२११७२)
यवक्रीस्तामुवाचेदमुपतिष्ठस्व मामिनि ।
निर्लज्जो लज्जया युक्तां कामेन हृतचेतनः ॥ ३-१३८-३ (२११७३)
सा तस्य शीलमाज्ञाय तस्माच्छापाच्च बिभ्यती ।
तेजस्वितां च रैभ्यस् तथेत्युक्त्वा जगाम ह ॥ ३-१३८-४ (२११७४)
तत एकान्तमानीय लज्जयामास भारत ।
आजगाम तदा रैभ्यः स्वमाश्रममरिंदम ॥ ३-१३८-५ (२११७५)
रुदतीं च स्नुषां दृष्ट्वा भार्यामार्ता परावसोः ।
सान्त्वयञ्श्लक्ष्णया वाचा पर्यपृच्छद्युधिष्ठिर ॥ ३-१३८-६ (२११७६)
सा तस्मै सर्वमाचष्ट यवक्रीभाषितं शुभा ।
प्रत्युक्तं च यवक्रीतं प्रेक्षापूर्वं तथाऽऽत्मना ॥ ३-१३८-७ (२११७७)
शृण्वानस्यैव रैभ्यस्य यवक्रेस्तद्विचेष्टनम् ।
दहन्निव तदा चेतः क्रोधः समभवन्महान् ॥ ३-१३८-८ (२११७८)
स तदा मन्युनाऽऽविष्टस्तपस्वी कोपनो भृशम् ।

अवलुप्य जटामेकां जुहावाग्नौ सुसंस्कृते ॥ ३-१३८-९ (२११७९)
ततः समभवन्नारी तस्या रूपेण संमिता ।
अवलुप्यापरां चापि जुहावाग्नौ जटां पुनः ॥ ३-१३८-१० (२११८०)
ततः समभवद्रक्षो दीप्तास्यं घोरदर्शनम् ।
अब्रूतां तौ तदा रैभ्यं किं कार्यं करवामहे ॥ ३-१३८-११ (२११८१)
तावब्रवीदृषिः क्रुद्धो यवक्रीर्वध्यतामिति ।
जग्मतुस्तौ तथेत्युक्त्वा यवक्रीतजिघांसया ॥ ३-१३८-१२ (२११८२)
ततस्तं समुपास्थाय कृत्या सृष्टा महात्मना ।
कमण्डलुं जहारास्य मोहयित्वा तु भारत ॥ ३-१३८-१३ (२११८३)
उच्छिष्टं तु यवक्रीतमपकृष्टकमण्डलुम् ।
तत उद्यतशूलः स राक्षसः समुपाद्रवत् ॥ ३-१३८-१४ (२११८४)
तमाद्रवन्तं संप्रेक्ष्य शूलहस्तं जिघांसया ।
यवक्रीः सहसोत्थाय प्राद्रवद्यत्रवै सरः ॥ ३-१३८-१५ (२११८५)
जलहीनं सरो दृष्ट्वा यवक्रीस्त्वरितः पुनः ।
जगाम सरितः सर्वास्ताश्चाप्यासन्विशोषिताः ॥ ३-१३८-१६ (२११८६)
स काल्यमानो घोरेण शूलहस्तेन रक्षसा ।
अग्निहोत्रे पितुर्भीतः सहसा प्रविवेश ह ॥ ३-१३८-१७ (२११८७)
स वै प्रविशमानस्तु शुद्रेणान्धेन रक्षिणा ।
निगृहीतो बलाद्द्वारि सोऽवातिष्ठत पार्थिव ॥ ३-१३८-१८ (२११८८)
निगृहीतं तु शूद्रेण यवक्रीतं स राक्षसः ।
ताडयामास शूलेन स भिन्नहृदयोऽपतत् ॥ ३-१३८-१९ (२११८९)
यवक्रीतं स हत्वा तु राक्षसो रैभ्यमागमत् ।
अनुज्ञातस्तु रैभ्येण तया नार्या सहावसत् ॥ ३-१३८-२० (२११९०)

इति श्रीमन्महाभारते अरण्यपर्वणि तीर्थयात्रापर्वणि
अष्टत्रिंशदधिकशततमोऽध्यायः ॥ १३८ ॥
Mahabharata - Vana Parva - Chapter Footnotes

३-१३८-५ एकान्तमुन्नीय मज्जयामासेति झ ।पाठः।तत्र एकान्तं उन्नीय
एकान्ते कार्यं रतं समाप्य मज्जयामास संमुद्रे इत्यर्थः ॥
३-१३८-७ प्रत्युक्तं प्रत्याख्यातम् ।मदुपरि बलात्कारं
कृतवानित्युक्तवतीत्यर्थः ॥
३-१३८-१० नारी कृत्या ॥
३-१३८-१७ काल्यमानः सर्वतो निषिध्यमानः अग्निहोत्रे अग्निहोत्रशालायाम् ॥
३-१३८-१८ अवातिष्ठत बहिरेव ॥

वन-अध्यय१३९
॥ श्रीः ॥
३.१३९. अध्यायः १३९

Mahabharata - Vana Parva - Chapter Topics
द्वाररक्षकशूद्रेण निवेदितपुत्रमरणेन भरद्वाजेन रैभ्यस्यापि ज्येष्ठसुतेन हननरूपशापदानम् ॥ १ ॥
पुत्रमरणदुःखितेन भरद्वाजेन तद्देहदहनपूर्वकमग्नौ प्रवेशः ॥ २ ॥

Mahabharata - Vana Parva - Chapter Text

३-१३९-० (२११९१)
लोमश उवाच। ३-१३९-०क्ष् (२२१७)
भरद्वाजस्तु कौन्तेय कृत्वा स्वाध्यायमाह्निकम् ।
समित्कलापमादाय प्रविवेश स्वमाश्रमम् ॥ ३-१३९-१ (२११९२)
तं स्म दृष्ट्वा पुरा सर्वे प्रत्युत्तिष्ठिन्ति पावकाः ।
न त्वेनमुपतिष्ठन्ति हतपुत्रं तदाऽग्नयः ॥ ३-१३९-२ (२११९३)
वैकृतंत्वग्निहोत्रे स लक्षयित्वा महातपाः ।
तमन्धं शूद्रमासीनं गृहपालमथाब्रवीत् ॥ ३-१३९-३ (२११९४)
किंनु मे नाग्नयः शूद्र प्रतिनन्दन्ति दर्शनम् ।
त्वं चापि न यथापूर्वं कच्चित्क्षेममिहाश्रमे ॥ ३-१३९-४ (२११९५)
कच्चिन्न रैभ्यं पुत्रो मे गतवानल्पचेतनः ।
एतदाचक्ष्व मे शीघ्रं न हि शुद्ध्यति मे मनः ॥ ३-१३९-५ (२११९६)
शूद्र उवाच। ३-१३९-६क्ष् (२२१८)
रैभ्यं यातो नूनमयं पुत्रस्ते मन्दचेतनः ।
तथाहि निहतः शेते राक्षसेन महात्मना ॥ ३-१३९-६ (२११९७)
प्रकाल्यमानस्तेनायं शूलहस्तेन रक्षसा ।
अग्न्यगारं प्रतिद्वारि मया दोर्भ्यां निवारितः ॥ ३-१३९-७ (२११९८)
ततः स विहताशोऽत्रजलकामोशुचिर्ध्रुवम् ।
निहतः सोऽतिवेगेन शूलहस्तेन रक्षसा ॥ ३-१३९-८ (२११९९)
लोमश उवाच। ३-१३९-८क्ष् (२२१९)
भरद्वाजस्तु तच्छ्रुत्वा शूद्रस्य विप्रियं महत् ।
गतासुं पुत्रमादाय विललाप सुदुःखितः ॥ ३-१३९-९ (२१२००)
भरद्वाज उवाच। ३-१३९-१०क्ष् (२२२०)
रब्राह्मणानां किलार्थाय ननु त्वं तप्तवांस्तपः ।
द्विजानामनधीता वै वेदाः संप्रतिभान्त्विति ॥ ३-१३९-१० (२१२०१)

तथा कल्याणशीलस्त्वं ब्राह्मणेषुमहात्मसु ।
अनागाः सर्वभूतेषु कर्कशत्वमुपेयिवान् ॥ ३-१३९-११ (२१२०२)
प्रतिषिद्धो मया तात रैभ्यावसथदर्शनात् ।
गतवानेव तं क्षुद्रं कालान्तकयमोपमम् ॥ ३-१३९-१२ (२१२०३)
यः स जानन्महातेजा वृद्धस्यैकं ममात्मजम् ।
गतवानेव कोपस्य वशं परमदुर्मतिः ॥ ३-१३९-१३ (२१२०४)
पुत्रशोकमनुप्राप्त एष रैभ्यस्य कर्मणा ।
त्यक्ष्यामि त्वामृतेपुत्र प्राणानिष्टतमान्भुवि ॥ ३-१३९-१४ (२१२०५)
यथाऽहं पुत्रशोकेन देहं त्यक्ष्यामि किल्विषी ।
तथा ज्येष्ठः सुतो रैभ्यं हिंस्याच्छीघ्रमनागसम् ॥ ३-१३९-१५ (२१२०६)
सुखिनो वै नरा येषां जाया पुत्रो न विद्यते ।
ये पुत्रशोकमप्राप्य विचरन्ति यथासुखम् ॥ ३-१३९-१६ (२१२०७)
ये तु पुत्रकृताच्छोकाद्भृशं व्याकुलचेतसः ।
शपन्तीष्टान्सखीनार्तास्तेभ्यः पापतरो नु कः ॥ ३-१३९-१७ (२१२०८)
परासुश्च सुतो दृष्टः शप्तश्चेष्टः सखा मया ।
ईदृशीमापदं कोत्र द्वितीयोऽनुविष्यति ॥ ३-१३९-१८ (२१२०९)
लोमश उवाच। ३-१३९-१९क्ष् (२२२१)
विलप्यैवं बहुविधं भरद्वाजोऽदहत्सुतम् ।
सुसमिद्धं ततः पश्चात्प्रविवेश हुताशनम् ॥ ३-१३९-१९ (२१२१०)

इति श्रीमन्महाभारते अरण्यपर्वणि तीर्थयात्रापर्वणि
एकोनचत्वारिंशदधिकशततमोऽध्यायः ॥ १३९ ॥
Mahabharata - Vana Parva - Chapter Footnotes

३-१३९-१ आह्निकं स्वाध्यायं प्रत्यहं कर्तव्यं ब्रह्मयज्ञम् ॥
३-१३९-२ हतपुत्रत्वेन आशौचयुक्तत्वात् ॥
३-१३९-५ शुद्ध्यति निःसंदेहं भवति ॥
३-१३९-७ अग्न्यगारं प्रविष्टस् रक्षोभयं न भवेदिति ॥
३-१३९-९ शूद्रस्य शूद्रकृतं विप्रियं पुत्रनिरोधेन कृतम् ॥
३-१३९-१५ किल्विषी शोकाकान्तः ॥

---

वन-अध्यय१४०
॥ श्रीः ॥
३.१४०. अध्यायः १४०

Mahabharata - Vana Parva - Chapter Topics
रैभ्ययाज्येन बृहद्द्युम्नेन सत्रे सहायत्वेन

वृतयोरर्वावसुपरावस्वोस्तदर्थं गमनम् ॥ १ ॥
भार्यादिदृक्षया पुनराश्रमं गतेन परावसुना रात्रौ मृगभ्रमेण कृष्णाजिनसंवीतस्य रैभ्यस्य हननम् ॥ २ ॥
परावसुचोदनया बृहद्द्युम्नेन ब्रह्महत्याग्रस्त इति प्रोत्सार्यमाणेनार्वावसुना तपःप्रसादितसूर्यादिदेवेभ्यो रैभ्यभरद्वाजयवक्रीतोत्थानादिवरग्रहणम् ॥ ३ ॥
देवैर्यवक्रीतदुःखस्य वनोपदेशं वेदाभ्यासफलत्वकथनपूर्वकं रैभ्यादीनामुज्जीवनम् ॥ ४ ॥

Mahabharata - Vana Parva - Chapter Text

३-१४०-० (२१२११)
लोमश उवाच। ३-१४०-०क्ष् (२२२२)
एतस्मिन्नेव काले तु बृहद्द्युम्नो महीपतिः ।
सत्रं तेने महाभागो रैभ्ययाज्यः प्रतापवान् ॥ ३-१४०-१ (२१२१२)
तेन रैभ्यस्य वै पुत्रावर्वावसुपरासू ।
वृतौ सहायौ सत्रार्थं बृहद्द्युम्नेन धीमता ॥ ३-१४०-२ (२१२१३)
तत्र तौ समनुज्ञातौ पित्रा कौन्तेय जग्मतुः ।
आश्रमे त्वभवद्रैभ्यो भार्या चैव परावसोः ॥ ३-१४०-३ (२१२१४)
अथावलोककोऽगच्छद्गृहानकः परावसुः ।
कृष्णाजिनेन संवीतं ददर्श पितरं वने ॥ ३-१४०-४ (२१२१५)
जघन्यरात्रे निद्रान्धः सावशेषे तमस्यापि ।
चरन्तं गहनेऽरण्ये मेने स पितरं मृगम् ॥ ३-१४०-५ (२१२१६)
मृगं तु मन्यमानेन पिता वै तेन हिंसितः ।
अकामयानेन तदा शरीरत्राणमिच्छता ॥ ३-१४०-६ (२१२१७)
तस्य स प्रेतकार्याणि कृत्वा सर्वाणि भारत ।
पुनरागम्य तत्सत्रमब्रवीद्भ्रातरं वचः ॥ ३-१४०-७ (२१२१८)
इदं कर्म न शक्तस्त्वं वोढुमेकः कथंचन ।
मया च हिंसितस्तातो मन्यमानेन वै मृगम् ॥ ३-१४०-८ (२१२१९)
सोऽस्मदर्थे व्रतं तात चर त्वं ब्रह्मघातिनाम् ।
समर्थो ह्यहमेकाकी कर्म कर्तुमिदं मुने ॥ ३-१४०-९ (२१२२०)
अर्वावसुरुवाच। ३-१४०-१०क्ष् (२२२३)
करोतु वै भवान्सत्रं बृहद्द्युम्नस्य धीमतः ।
ब्रह्महत्यां चरिष्येऽहं त्वदर्थं नियतेन्द्रियः ॥ ३-१४०-१० (२१२२१)
लोमश उवाच। ३-१४०-११क्ष् (२२२४)
स तस्यब्रह्महत्यायाः पारं गत्वा युधिष्ठिर ।

अर्वावसुस्तदा सत्रमाजगाम पुनर्मुनिः ॥ ३-१४०-११ (२१२२२)
ततः परावसुर्दृष्ट्वा भ्रातरं समुपस्थितम् ।
बृहद्द्युम्नमुवाचेदं वचनं हर्षगद्गदम् ॥ ३-१४०-१२ (२१२२३)
एष ते ब्रह्महा यज्ञं मा द्रष्टुं प्रविशेदिति ।
ब्रह्महा प्रेक्षितेनापि पीडयेत्त्वामसंशयम् ॥ ३-१४०-१३ (२१२२४)
लोमश उवाच। ३-१४०-१४क्ष् (२२२५)
तच्छ्रुत्वैव तदा राजा प्रेष्यानाह स विट्पते ।
प्रेष्यैरुत्सार्यमाणस्तु राजन्नर्वावसुस्तदा ।
न मया ब्रह्महत्येयं कृतेत्याह पुनःपुनः ॥ ३-१४०-१४ (२१२२५)
उच्यमानोऽसकृत्प्रेष्यैर्ब्रह्महा इति भारत ।
नैवस्म प्रतिजानामि ब्रहमहत्यां स्वयंकृताम् ।
मम भ्रात्रा कृतमिदं मया स परिमोक्षितः ॥ ३-१४०-१५ (२१२२६)
स तथा प्रवदन्क्रोधात्तैश्च प्रेष्यैः प्रभाषितः ।
तूष्णीं जगाम ब्रह्मर्षिर्वनमेव महातपाः ॥ ३-१४०-१६ (२१२२७)
उग्रं तपः समास्थाय दिवाकरमथाश्रितः ।
रहस्यवेदं कृतवान्सूर्यस्य द्विजसत्तमः ॥ ३-१४०-१७ (२१२२८)
मूर्तिमांस्तं ददर्शाथ स्वयमग्रभुगव्ययः
॥ ३-१४०-१९अप्रीतास्तस्याभवन्देवाः कर्मणाऽर्वावसोर्नृप ।
तं ते प्रवरयामासुर्निरासुश्च परावसुम् ॥ ३-१४०-१८ (२१२२९)
ततो देवा वरं तस्मै ददुरग्निपुरोगमाः ॥ ३-१४०-२० (२१२३०)
स चापि वरयामास पितुरुत्थानमात्मनः ।
अनागस्त्वं ततो भ्रातुः पितुश्चास्मरणं वधे ॥ ३-१४०-२१ (२१२३१)
भरद्वाजस्य चोत्थानं यवक्रीतस्य चोभयोः ।
प्रतिष्ठां चापि वेदस्य सौरस्य द्विजसत्तमः ॥ ३-१४०-२२ (२१२३२)
एवमस्त्विति तं देवाः प्रोचुश्चापि वरान्ददुः ।
ततः प्रादुर्बभूवुस्ते सर्व एव युधिष्ठिर ॥ ३-१४०-२३ (२१२३३)
अथाब्रवीद्यवक्रीतो देवानग्निपुरोगमान् ।
समधीतं मया ब्रह्म व्रतानि चरितानि च ॥ ३-१४०-२४ (२१२३४)
कथं च रैभ्यः शक्तो मामदीयानं तपस्विनम् ।
तथायुक्तेन विधिना निहन्तुममरोत्तमाः ॥ ३-१४०-२५ (२१२३५)
देवा ऊचुः। ३-१४०-२६क्ष् (२२२६)
मैवं कृथा यवक्रीत यथा वदसि वै मुने ।
ऋते गुरुमधीता हि स्वयं वेदास्त्वया पुरा ॥ ३-१४०-२६ (२१२३६)
अनन तु गुरूनदुःखात्तोषयित्वाऽऽत्मक्रमणा ।
कालेन महता क्लेशाद्ब्रह्माधिगतमुत्तमम् ॥ ३-१४०-२७ (२१२३७)
लोमश उवाच। ३-१४०-२८क्ष् (२२२७)

यवक्रीतमथोक्त्वैवं देवाः साग्निपुरोगमाः ।
संजीवयित्वा तान्सर्वान्पुनर्जग्मुस्त्रिविष्टपम् ॥ ३-१४०-२८ (२१२३८)
ग्ततो वै स यवक्रीतो ब्रह्मचर्यं चचार ह ।
अष्टादश च वर्षाणि त्रिंशतं च युधिष्ठिर' ॥ ३-१४०-२९ (२१२३९)
आस्रमस्तस्य पुण्योऽयं सदापुष्पफलद्रुमः ।
अत्रोष्य राजशार्दूल सर्वपापैः प्रभोक्ष्यसे ॥ ३-१४०-३० (२१२४०)

इति श्रीमन्महाभारते अरण्यपर्वणि तीर्थयात्रापर्वणि
चत्वारिंशदधिकशततमोऽध्यायः ॥ १४० ॥
Mahabharata - Vana Parva - Chapter Footnotes

३-१४०-४ अवलोककः अवलोकनार्थी ।गृहान्भार्याम् ॥
३-१४०-५ जघानरात्राविति ध ।पाठः ॥
३-१४०-९ चर त्वं ब्रह्मरक्षणे इति ध ।पाठः ॥
३-१४०-१४ विट्पते हे प्रजाधीश ॥
३-१४०-१६ प्रभाषितो मिथ्यावाद्यसीत्यधिक्षिप्तः ॥
३-१४०-१७ रहस्यवेदं सूर्यमन्त्रप्रकाशकं वेदम् ॥
३-१४०-१८ मूर्तिमान्सूर्यस्तं द्विजं ददर्श आत्मानं दर्शयामास ॥
३-१४०-१९ तं देवाः प्रकर्षेण वरयामासुः
।निरासुर्निराचक्रुर्यज्ञादिति शेषः ॥
३-१४०-२२ प्रतिष्ठां संप्रदायप्रवृत्तिम् ।सौरस्य सूर्यप्रकाशकस्य ॥
३-१४०-२४ समधीतं साम्यक्प्राप्तम् ।ब्रह्म वेदः ॥

---

वन-अध्यय१४१
॥ श्रीः ॥
३.१४१. अध्यायः १४१

Mahabharata - Vana Parva - Chapter Topics
लोमशचोदनया युधिष्ठिरेण कैलासादिगिरिप्रवेशः ॥ १ ॥

Mahabharata - Vana Parva - Chapter Text

३-१४१-० (२१२४१)
लोमश उवाच। ३-१४१-०क्ष् (२२२८)
उशीरबीजं मैनाकं गिरिं श्वेतं च भारत ।
समतीतोऽसि कौन्तेय कालशैलं च पार्थिव ॥ ३-१४१-१ (२१२४२)

एषा गङ्गा सप्तविधा राजते भरतर्षभ ।
स्थानं विरजसं पुण्यं यत्राग्निर्नित्यमिध्यते ॥ ३-१४१-२ (२१२४३)
एतद्वै मानुषेणाद्य न शक्यं द्रष्टुमद्भुतम् ।
समाधिं कुरुताव्यग्रास्तीर्थान्येतानि द्रक्ष्यथ ॥ ३-१४१-३ (२१२४४)
एतद्द्रक्ष्यसि देवानामाक्रीडं च रणाङ्कितम् ।
अतिक्रान्तोसि कौन्तेय कालशैलं च पर्वतम् ॥ ३-१४१-४ (२१२४५)
श्वेतं गिरिं प्रवेक्ष्यामो मन्दरं चैव पर्वतम् ।
यत्र माणिवरो यक्षः कुबेरश्चैव यक्षराट् ॥ ३-१४१-५ (२१२४६)
अष्टाशीतिसहस्राणि गन्धर्वाः शीघ्रगामिनः ।
तथा किंपुरुषा राजन्यक्षाश्चैव चतुर्गुणाः ॥ ३-१४१-६ (२१२४७)
अनेकरूपसंस्थाना नानाप्रहरणाश्च ते ।
यक्षेन्द्रं मनुजश्रेष्ठ माणिभद्रमुपासते ॥ ३-१४१-७ (२१२४८)
तेषामृद्धिरतीवात्र गतौ वायुसमाश्च ते ।
यक्षेन्द्रं मनुजश्रेष्ठ माणिभद्रमुपासते ॥ ३-१४१-८ (२१२४९)
तैस्तात बलिभिर्गुप्ता यातुधानैश्च रक्षिताः ।
दुर्गमाः पर्वताः पार्थ समाधिं परमं कुरु ॥ ३-१४१-९ (२१२५०)
कुबेरसचिवाश्चान्ये रौद्रा मैत्राश्च राक्षसाः ।
तैः समेष्याम कौन्तेय यत्तो विक्रमणे भव ॥ ३-१४१-१० (२१२५१)
कैलासः पर्वतो राजन्षड्योजनशतोच्छ्रितः ।
यत्रदेवाः समायान्ति विशाला यत्र भारत ॥ ३-१४१-११ (२१२५२)
असङ्ख्येयास्तु कौन्तेय यक्षराक्षसकिन्नराः ।
नागाः सुपर्णा गन्धर्वाः कुबेरसदनं प्रति ॥ ३-१४१-१२ (२१२५३)
तान्विगाहस्व पार्थाद्य तपसा च दमेन च ।
रक्ष्यमाणो मया राजन्भीमसेनबलेन च ॥ ३-१४१-१३ (२१२५४)
स्वस्ति ते वरुणो राजा यमश्च समितिंजयः ।
गङ्गा च यमुना चैव पर्वताश्च दिशन्तु ते ॥ ३-१४१-१४ (२१२५५)
मरुतश्च सहाश्विभ्यां सरितश्च सरांसि च ।
स्वस्ति देवासुरेभ्यश्च वसुभ्यश् महाद्युते ॥ ३-१४१-१५ (२१२५६)
इन्द्रस्य जाम्बूनदपर्वताद्वै
शृणोमि घोषं तव देवि गङ्गे ।
गोपाययेमं सुभगे गिरिभ्यः
सर्वाजमीढापचितं नरेन्द्रम् ॥ ३-१४१-१६ (२१२५७)
ददस्व शर्म प्रविविक्षतोऽस्य
शैलानिमाञ्छैलसुते नृपस्य ।
गशिवप्रदा सर्वसरित्प्रधाने
स भ्रातृकस्येह युधिष्ठिरस्य'। ३-१४१-१७ (२१२५८)

युधिष्ठिर उवाच। ३-१४१-१८क्ष् (२२२९)
अपूर्वोऽयं संभ्रमो लोमशस्य
कृष्णां च सर्वे रक्षत मा प्रमादः ।
देशो ह्ययं दुर्गतमो मतोऽस्य
तस्मात्परं शौचमिहाचरध्वम् ॥ ३-१४१-१८ (२१२५९)
वैशंपायन उवाच। ३-१४१-१९क्ष् (२२३०)
ततोऽब्रवीद्भीममुदारवीर्यं
कृष्णां यत्तः पालय भीमसेन ।
शून्येऽर्जुनेऽसन्निहिते च तात
त्वामेव कृष्णा भजते भयेषु ॥ ३-१४१-१९ (२१२६०)
ततो महात्मां स यमौ समेत्य
मूर्धन्युपाघ्राय विमृज्यगात्रे ।
उवाच तौ बाष्पकलं स राजा
मा बैष्टमागच्छतमप्रमत्तौ ॥ ३-१४१-२० (२१२६१)

इति श्रीमन्महाभारते अरण्यपर्वणि तीर्थयात्रापर्वणि
एकचत्वारिंशदधिकशततमोऽध्यायः ॥१४१ ॥
Mahabharata - Vana Parva - Chapter Footnotes

३-१४१-१ कैलासं चापि पर्वतम् इति क ।पाठः ॥
३-१४१-२ यत्राग्निर्नित्यमिध्यत इति त्रियोगिनारायणाख्यं हरिद्वारात्
परतः स्थानमस्ति ॥
३-१४१-११ विशाला वदरी ॥
३-१४१-१६ इन्द्रस्य इन्द्रसंबन्धिनः ।जाम्बूनदं सुवर्णं
तन्मयात्पर्वतान्मेरोः। आजमीढवंशे अपचितं पूजितं
श्रेष्ठमित्यर्थः ॥
३-१४१-१७ ददस्व देहि ॥
३-१४१-१८ शौचं वाङ्मनःकायशुद्धिम् ॥
३-१४१-२० भैष्टमिति च्छेदः ॥

---

वन-अध्यय१४२
॥ श्रीः ॥
३.१४२. अध्यायः १४२

Mahabharata - Vana Parva - Chapter Topics
भीमेन दुर्गमे गमनाक्षमतया युधिष्ठिरनिवारितानां द्रौपद्यादीनां
वहनाङ्गीकारः ॥१ ॥

पथि कुलिन्दाधिपतिना सुबाहुना पूजितैर्युधिष्ठिरादिभिस्तस्यिन्भृत्यवर्गस्थापनपूर्वकमर्जुनदिदृक्षया गन्धमादनंप्रति प्रस्थानम् ॥ २ ॥

Mahabharata - Vana Parva - Chapter Text

३-१४२-० (२१२६२)
युधिष्ठिर उवाच। ३-१४२-०क्ष् (२२३१)
अन्तर्हितानि भूतानि रक्षांसि बलवन्ति च ।
अग्निना तपसा चैव शक्यं गन्तुं वृकोदर ॥ ३-१४२-१ (२१२६३)
सन्निवर्तय कौन्तेय क्षुत्पिपासे बलाश्रयात् ।
ततो बलं च दाक्ष्यं च संश्रयस्व वृकोदर ॥ ३-१४२-२ (२१२६४)
ऋषेस्त्वया श्रुतं वाक्यं कैलासं पर्वतं प्रति ।
बुद्ध्या प्रपश्य कौन्तेय कथं कृष्णा गमिष्यति ॥ ३-१४२-३ (२१२६५)
अथवा सहदेवेन धौम्येन च समं विभो ।
सूतैः पौरोगवैश्चैव सर्वैश्च परिचारकैः ॥ ३-१४२-४ (२१२६६)
रथैरश्वैश्च ये चान्ये विप्राः क्लेशासहाः पथि ।
सर्वैस्त्वं सहितो भीम निवर्तस्वायतेक्षण ॥ ३-१४२-५ (२१२६७)
त्रयो वयं गमिष्यामो लध्वाहारा यतव्रताः ।
अहं च नकुलश्चैव लोमशश्च महातपाः ॥ ३-१४२-६ (२१२६८)
ममागमनमाकाङ्क्षन्गङ्गाद्वारे समाहितः ।
वसेह द्रौपदीं रक्षन्यावदागमनं मम ॥ ३-१४२-७ (२१२६९)
भीम उवाच। ३-१४२-८क्ष् (२२३२)
राजपुत्री श्रमेणार्ता दुःखार्ता चैव भारत ।
व्रजत्येव हि कल्याणी श्वेतवाहदिदृक्षया ॥ ३-१४२-८ (२१२७०)
तवचाप्यरतिस्तीव्रा वर्तते तमपश्यतः ।
गुडाकेशं महात्मानं संग्रामेष्वपलायिनम् ।
किं पुनः सहदेवं च मां च कृष्णां च भारत ॥ ३-१४२-९ (२१२७१)
द्विजाः कामं निवर्तन्तां सर्वे च परिचारकाः ।
सूताः पौरोगवाश्चैव यं च मन्येत नो भवान् ॥ ३-१४२-१० (२१२७२)
न ह्यहं हातुमिच्छामि भवन्तमिह कर्हिचित् ।
शैलेऽस्मिन्राक्षसाकीर्णे दुर्गेषु विपमेषु च ॥ ३-१४२-११ (२१२७३)
इयं चापि महाभागा राजपुत्री पतिव्रता ।
त्वामृते पुरुषव्याघ्र नोत्सहेद्विनिवर्तितुम् ॥ ३-१४२-१२ (२१२७४)
तथैवसहदेवोऽयं सततं त्वामनुव्रतः ।
न जातु विनिवर्तेत मतज्ञो ह्यहमस्य वै ॥ ३-१४२-१३ (२१२७५)

अपिचात्र महाराज सव्यसाचिदिदृक्षया ।
सर्वे लालसभूताः स्म तस्माद्यास्यामहे सह ॥ ३-१४२-१४ (२१२७६)
यद्यशक्यो रथैर्गन्तुं शैलोऽयं बहुकन्दरः ।
पद्भिरेव गमिष्यामो मा राजन्विमना भव ॥ ३-१४२-१५ (२१२७७)
अहं वहिष्ये पाञ्चालीं यत्रयत्र न शक्ष्यति ।
इति मे वर्तते बुद्धिर्मा राजन्विमना भव ॥ ३-१४२-१६ (२१२७८)
सुकुमारौ तथा वीरौ माद्रीनन्दिकरावुभौ ।
दुर्गे संतारयिष्यामि यत्राशक्तौ भविष्यतः ॥ ३-१४२-१७ (२१२७९)
युधिष्ठिर उवाच। ३-१४२-१८क्ष् (२२३३)
एवं ते भाषमाणस्य बलं भीमाभिवर्धताम् ।
यत्त्वमुत्सहसे वोढुं पाञ्चालीं विपुलेऽध्वनि ॥ ३-१४२-१८ (२१२८०)
यमजौ चापि भद्रं ते नैतदन्यत्र विद्यते ।
बलं तव यशश्चैवधर्मः कीर्तिश्च वर्धताम् ॥ ३-१४२-१९ (२१२८१)
यत्त्वमुत्सहसे नेतुं भ्रातरौ सह कृष्णया ।
मा ते ग्लानिर्महाबाहो मा च तेऽस्तु पराभवः ॥ ३-१४२-२० (२१२८२)
वैशंपायन उवाच। ३-१४२-२१क्ष् (२२३४)
ततः कृष्णाऽब्रवीद्वाक्यं प्रहसन्ती मनोरमा ।
गमिष्यामि न संताप कार्यो मां प्रति भारत ॥ ३-१४२-२१ (२१२८३)
लोमश उवाच। ३-१४२-२२क्ष् (२२३५)
तपसा शक्यते गन्तुं पर्वतो गन्धमादनः ।
तपसा चैव कौन्तेय सर्वे योक्ष्यामहे वयम् ॥ ३-१४२-२२ (२१२८४)
नकुलः सहदेवश्च भीमसेनश् पार्थिव ।
अहं च त्वं च कौन्तेय द्रक्ष्यामः श्वेतवाहनम् ॥ ३-१४२-२३ (२१२८५)
वैशंपायन उवाच। ३-१४२-२४क्ष् (२२३६)
एवं संभाषमाणास्ते सुबाहुविषयं महत् ।
ददृशुर्मुदिता राजन्प्रभूतगजवाजिमत् ॥ ३-१४२-२४ (२१२८६)
किराततङ्गणाकीर्णं पुलिन्दशतसंकुलम् ।
हिमवत्यमरैर्जुष्टं बह्वाश्चर्यसमाकुलम् ।
सुबाहुश्चापि तान्दृष्ट्वा पूजयाप्रत्यगृह्णत ॥ ३-१४२-२५ (२१२८७)
विषयान्ते कुलिन्दानामीश्वरः प्रीतिपूर्वकम् ।
तत्र ते पूजितास्तेन सर्व एव सुखोपिताः ॥ ३-१४२-२६ (२१२८८)
प्रतस्थुर्विमले सूर्ये हिमवन्तं गिरिं प्रति ।
इन्द्रसेनमुखांश्चापि भृत्यान्पौरोगवांस्तथा ॥ ३-१४२-२७ (२१२८९)
सूदांश्च पारिबर्हांश्च द्रौपद्याः सर्वशो नृप ।
राज्ञः कुलिन्दाधिपतेः परिदाय महारथाः ॥ ३-१४२-२८ (२१२९०)
पद्भिरेव महावीर्या ययुः कौरवनन्दनाः ।

ते शनैः प्राद्रवन्सर्वे कृष्णया सह पाण्डवाः ।
तस्माद्देशात्सुसंहृष्टा द्रष्टुकामा धनंजयम् ॥ ३-१४२-२९ (२१२९१)

इति श्रीमन्महाभारते अरण्यपर्वणि तीर्थयात्रापर्वणि
द्विचत्वारिंशदधिकशततमोऽध्यायः ॥ १४२ ॥
Mahabharata - Vana Parva - Chapter Footnotes

३-१४२-२८ परिदाय रक्षार्थं समर्प्य ॥

---

वन-अध्यय१४३
॥ श्रीः ॥
३.१४३. अध्यायः १४३

Mahabharata - Vana Parva - Chapter Topics
धनंजयादर्सनदुःखितेन युधिष्ठिरेण भीमंप्रति
धनंजयप्रशंसनपूर्वकं तद्दर्शनाय गन्धमादनप्रवेशनिश्चयः
॥ १ ॥

Mahabharata - Vana Parva - Chapter Text

३-१४३-० (२१२९२)
युधिष्ठिर उवाच। ३-१४३-०क्ष् (२२३७)
भीमसेनयमौ चोभौ पाञ्चालि च निबोधत ।
नास्ति भूतस्य नाशो वै पश्यतास्मान्वनेचरान् ॥ ३-१४३-१ (२१२९३)
दुर्बलाः क्लेशिताः स्मेति यद्ब्रुवामेतरेतरम् ।
अशक्येऽपि व्रजामो यद्नंजयदिदृक्षया ॥ ३-१४३-२ (२१२९४)
तन्मे दहति गात्राणि तूलराशिमिवानलः ।
यच्च वीरं न पश्यामि धनंजयमुपान्तिके ॥ ३-१४३-३ (२१२९५)
तस्यादर्शनतप्तं मां सानुजं वनमास्थितम् ।
याज्ञसेन्याः परामर्शः स च वीर दहत्युत ॥ ३-१४३-४ (२१२९६)
नकुलात्पूर्वजं पार्थं न पश्याम्यमितौजसम् ।
अजेयमुग्रधन्वानं तेन तप्ये वृकोदर ॥ ३-१४३-५ (२१२९७)
तीर्थानि चैव रम्याणि वनानि च सरांसि च ।
चरामि सह युष्माभिस्तस्य दर्शनकाङ्क्षया ॥ ३-१४३-६ (२१२९८)
पञ्चवर्षाण्यहं वीरं सत्यसन्धं धनंजयम् ।
यन्न पश्यामि बीभत्सुं तेन तप्ये वृकोदर ॥ ३-१४३-७ (२१२९९)
तं वै श्यामं गुडाकेशं सिंहविक्रान्तगामिनम् ।

न पश्यामि महाबाहुं तेन तप्ये वृकोदर ॥ ३-१४३-८ (२१३००)
कृतास्त्रं निपुणं युद्देऽप्रतिमानं धनुष्मताम् ।
न पश्यामि कुरुश्रेष्ठ तेन तप्ये वृकोदर ॥ ३-१४३-९ (२१३०१)
चरन्तमरिसङ्घेषु क्रुद्धं कालमिवानघ ।
प्रभिन्नमिव मातङ्गं सिंहस्कन्धं धनंजयम् ॥ ३-१४३-१० (२१३०२)
यः स शक्रादनवरो वीर्येण च बलेन च ।
यमयोः पूर्वजः पार्थः श्वेताश्वोऽमितविक्रमः ॥ ३-१४३-११ (२१३०३)
'नारायणसमो युद्धे सत्यसन्धो दृढव्रतः ।
तं ममापश्यतो भीम न शान्तिर्हृदयस्य वै' ॥ ३-१४३-१२ (२१३०४)
दुःखेन महताऽऽविष्टश्चिन्तयामि दिवानिशम् ।
अजेयमुग्रधन्वानं तेन तप्ये वृकोदर ॥ ३-१४३-१३ (२१३०५)
सततं यः क्षमाशीलः क्षिप्यमाणोऽप्यणीयसा ।
ऋजुमार्गप्रपन्नस्य शर्मदाता भयस्य च ॥ ३-१४३-१४ (२१३०६)
स तु जिह्मप्रवृत्तस्य माययाऽभिजिघांसतः ।
अपि वज्रधरस्यापि भवेत्कालविषोपमः ॥ ३-१४३-१५ (२१३०७)
शत्रोरपि प्रपन्नस्य सोऽनृशंसः प्रतापवान् ।
दाताऽभयस् बीभत्सुरमितात्मा महाहलः ॥ ३-१४३-१६ (२१३०८)
सर्वेषामाश्रयोऽस्माकं रणेऽरीणां प्रमर्दिता ।
आहर्ता सर्वरत्नानां सर्वेषां नः सुखावहः ॥ ३-१४३-१७ (२१३०९)
रत्नानि यस्य वीर्येण दिव्यान्यासत्पुरा मम ।
बहूनि बहुजातीनि यानि प्राप्तः सुयोधनः ॥ ३-१४३-१८ (२१३१०)
यस्य बाहुबलाद्वीर सभा चासीत्पुरा मम ।
सर्वरत्नमयी ख्याता त्रिषु लोकेषु पाण्डव ॥ ३-१४३-१९ (२१३११)
वासुदेवसमं वीर्ये कार्तवीर्यसमं युधि ।
अजेयममितं युद्धे तं न पश्यामि फल्गुनम् ॥ ३-१४३-२० (२१३१२)
संकर्षणं महावीर्यं त्वां च भीमापराजितम् ।
अनुयातः स्ववीर्येण वासुदेवं च शत्रुहा ॥ ३-१४३-२१ (२१३१३)
यस् बाहुबले तुल्यः प्रभावे च पुरंदरः ।
जवे वायुर्मुखे सोमः क्रोधे मृत्युः सनातनः ॥ ३-१४३-२२ (२१३१४)
ते वयं तं नरव्याघ्रं सर्वेवीर दिदृक्षवः ।
प्रवेक्ष्यामो महाबाहो पर्वतं गन्धमादनम् ॥ ३-१४३-२३ (२१३१५)
विशाला बदरी यत्रनरनारायणाश्रमः ।
तं सदाऽध्युषितं यक्षैर्द्रक्ष्यामो गिरिसुत्तमम् ॥ ३-१४३-२४ (२१३१६)
कुबेरनलिनीं रम्यां राक्षसैरभिसेविताम् ।
पद्भिरेव गमिष्यामस्तप्यभाना महत्तपः ॥ ३-१४३-२५ (२१३१७)
नातप्ततपसा शक्यो गन्तुं देशो वृकोदर ।

न नृशंसेन लुब्धेन नाप्रशान्तेन भारत ॥ ३-१४३-२६ (२१३१८)
तत्र सर्वेगमिष्यामो भीमार्जुपदैषिणः ।
सायुधा बद्धनिस्त्रिंशाः सार्धं विप्रैर्महाव्रतैः ॥ ३-१४३-२७ (२१३१९)
मक्षिकादंशमशकान्सिंहान्व्याघ्रान्सरीसृपान् ।
प्राप्नोत्यनियतः पार्थ नियतस्तान्न पश्यति ॥ ३-१४३-२८ (२१३२०)
ते वयं नियतात्मानः पर्वतं गन्धमादनम् ।
प्रवेक्ष्यामो मिताहारा धनंजयदिदृक्षवः ॥ ३-१४३-२९ (२१३२१)

इति श्रीमन्महाभारते अरण्यपर्वणि तीर्थयात्रापर्वणि
त्रिचत्वारिंशदधिकशततमोऽध्यायः ॥ १४३ ॥
Mahabharata - Vana Parva - Chapter Footnotes

३-१४३-१ भूतस्य प्राक्तनकर्मणः ॥
३-१४३-४ परामर्शः केशेषु ग्रहणम् । तस्य दर्शनतृष्णं मामिति
झ। पाठः ॥
३-१४३-९ अप्रतिमानं नास्ति प्रतिमानं सादृश्यं यस् सोऽप्रतिमानस्तम् ॥
३-१४३-१० प्रभिन्नं स्रवन्मदम् ॥
३-१४३-११ अनवरोऽहीनः ॥
३-१४३-१६ अमितात्मा महामनाः ॥
३-१४३-२० अमितमहिंसितं अजितमितियावत् ॥
३-१४३-२१ हे भीम ॥
३-१४३-२८ अनियतोऽशुचिः ॥

---

वन-अध्यय१४४
॥ श्रीः ॥
३.१४४. अध्यायः १४४

Mahabharata - Vana Parva - Chapter Topics
पाण्डवैर्मन्दरगिरिगमनम् ॥ १ ॥
तथा आकाशगङ्गासेवनम् ॥ २ ॥
तथा नरकासुरास्थिराशिदर्शनम् ॥ ३ ॥
लोमशेन पाण्डवान्प्रति विष्णुना नरकासुरवधप्रकारकथनम् ॥ ४ ॥
तथा वराहरूपिणा हरिणा भारावमग्नभूम्युद्धरणकथनम् ॥ ५ ॥

Mahabharata - Vana Parva - Chapter Text

३-१४४-० (२१३२२)

श्लोमश उवाच। ३-१४४-०क्ष् (२२३८)
द्रष्टारः पर्वताः सर्वे नद्यः सपुरकाननाः ।
तीर्थानि चैव श्रीमन्ति स्पृष्टं च सलिलं करैः ॥ ३-१४४-१ (२१३२३)
पर्वतं मन्दरं दिव्यमेष पन्थाः प्रयास्यति ।
समाहीता निरुद्विग्नाः सर्वे भवत पाण्डवाः ॥ ३-१४४-२ (२१३२४)
अयं देवनिवासो वै गन्तव्यो वो भविष्यति ।
ऋषीणां चैव दिव्यानां निवासः पुण्यकर्मणां ॥ ३-१४४-३ (२१३२५)
एषा शिवजला पुण्या याति सौम्य महानदी ।
बदरीप्रभवा राजन्देवर्षिगणसेविता ॥ ३-१४४-४ (२१३२६)
एषा वैहायसैर्नित्यं वालखिल्यैर्महात्मभिः ।
अर्चिता चोपयाता च गन्धर्वैश्च महात्मभिः ॥ ३-१४४-५ (२१३२७)
अत्रसाम स्म गायन्ति सामगाः पुण्यनिःस्वनाः ।
मरीचिः पुलहश्चैव भृगुश्चैवाङ्गिरास्तथा ॥ ३-१४४-६ (२१३२८)
अत्राह्निकं सुरश्रेष्ठो जपते समरुद्गणः ।
साध्याश्चैवाश्विनौ चैव परिधावन्ति तं तदा ॥ ३-१४४-७ (२१३२९)
चन्द्रमाः सह सूर्येण ज्योतीषि च ग्रहैः सह ।
अहोरात्रविभागेन नदीमेनामनुव्रजन् ॥ ३-१४४-८ (२१३३०)
एतस्याः सलिलं मूर्ध्नि वृषाङ्कः पर्यधारयत् ।
गङ्गाद्वारे महाभाग येन लोकस्थितिर्भवेत् ॥ ३-१४४-९ (२१३३१)
एतां भगवतीं देवीं भवन्तः सर्व एव हि ।
प्रयतेनात्मना तात प्रतिगम्याभिवादत ॥ ३-१४४-१० (२१३३२)
तस्य तद्वचनं श्रुत्वा लोमशस्य महात्मनः ।
आकाशगङ्गां प्रयताः पाण्डवास्तेऽभ्यवादयन् ॥ ३-१४४-११ (२१३३३)
अभिवाद्य च ते सर्वे पाण्डवा धर्मचारिणः ।
पुनः प्रयाताः संहृष्टाः सर्वैर्ऋषिगणैः सह ॥ ३-१४४-१२ (२१३३४)
ततो दूरात्प्रकाशन्तं पाण्डुरं मेरुसंनिभम् ।
ददृशुस्ते नरश्रेष्ठा विकीर्णं सर्वतोदिशम् ॥ ३-१४४-१३ (२१३३५)
तान्प्रष्टुकामान्विज्ञाय पाण्डवान्स तु लोमशः ।
उवाच वाक्यं वाक्यज्ञः शृणुध्वं पाण्डुनन्दनाः ॥ ३-१४४-१४ (२१३३६)
एतद्विकीर्णं सुश्रीमत्कैलासशिखरोपमम् ।
यत्पश्यसि नरश्रेष्ठ पर्वतप्रतिमं स्थितम् ॥ ३-१४४-१५ (२१३३७)
एतान्यस्थीनि दैत्यस्य नरकस्य महात्मनः ।
पर्वतप्रतिमं भाति पर्वतप्रस्तराश्रितम् ॥ ३-१४४-१६ (२१३३८)
पुरातनेन देवेन विष्णुना परमात्मना ।
रदैत्यो विनिहतस्तेन सुरराजहितैषिणा ॥ ३-१४४-१७ (२१३३९)
दशवर्षसहस्राणि तपस्तप्यन्महामनाः ।

ऐनद्रं प्रार्थयते स्थानं तपःस्वाध्यायविक्रमात् ॥ ३-१४४-१८ (२१३४०)
तपोबलेन महता बाहुवेगबलेन च ।
नित्यमेव दुराधर्षो धर्षयन्स दितेः सुतः ॥ ३-१४४-१९ (२१३४१)
स तु तस्य बलं ज्ञात्वा धर्मे च चरितव्रतम् ।
भयाभिभूतः संविग्नः शक्र आसीत्तदाऽनघ ॥ ३-१४४-२० (२१३४२)
तेन संचिन्तितो देवो मनसा विष्णुरव्ययः ।
सर्वत्रगः प्रभुः श्रीमानागतश्च स्थितो बभौ ॥ ३-१४४-२१ (२१३४३)
ऋषयश्चापि तं सर्वे तुष्टुवुश्च दिवौकसः ॥ ३-१४४-२२ (२१३४४)
तं दृष्ट्वा ज्वलमानश्रीर्भगवान्हव्यवाहनः ।
नष्टतेजाः समभवत्तस्य तेजोभिभर्त्सितः ॥ ३-१४४-२३ (२१३४५)
तं दृष्ट्वा वरदं देवं विष्णुं देवगणेश्वरम् ।
प्राञ्जलिः प्रणतो भूत्वा नमस्कृत्य च वज्रभृत् ।
प्राह वाक्यं ततस्तत्त्वं यतस्तस्य भयं भवेत् ॥ ३-१४४-२४ (२१३४६)
विष्णुरुवाच। ३-१४४-२५क्ष् (२२३९)
जानामि ते भयं शक्र दैत्येन्द्रान्नरकात्ततः ।
ऐन्द्रं रप्रार्थयते स्थानं तपःसिद्धेन कर्मणा ॥ ३-१४४-२५ (२१३४७)
सोहमेनं तव प्रीत्या तपःसिद्धमपि ध्रुवम् ।
वियुनज्मि देहाद्देवेनद्र मुहूर्तं प्रतिपालय ॥ ३-१४४-२६ (२१३४८)
लोमश उवाच। ३-१४४-२७क्ष् (२२४०)
तस्य विष्णुर्महातेजाः पाणिना चेतनां हरत् ।
स पपात ततो भूमौ गिरिराज इवाहतः ।
तस्यैतदस्थिसंघातं मायाविनिहतस्य वै ॥ ३-१४४-२७ (२१३४९)
इदं द्वितीयमपरं विष्णो कर्म प्रकाशते ॥ ३-१४४-२८ (२१३५०)
नष्टा वसुमती कृत्स्ना पाताले चैव मज्जिता ।
पुनरुद्धरिता तेन वाराहेणैकशृङ्गिणा ॥ ३-१४४-२९ (२१३५१)
युधिष्ठिर उवाच। ३-१४४-३०क्ष् (२२४१)
मगवन्विस्तरेणेमां कथां कथय तत्त्वतः ॥ ३-१४४-३० (२१३५२)
कथं तेन सुरेशेन नष्टा वसुमती तदा ।
योजनानां शतं ब्रह्मन्पुनरुद्धरिता तदा ॥ ३-१४४-३१ (२१३५३)
केन चैव प्रकारेण जगतो धरणी ध्रुवा ।
शिवा देवी महाभागा सर्वसस्यप्ररोहिणी ।
कस्य चैव प्रभावाद्धि योजनानां शतं गता ॥ ३-१४४-३२ (२१३५४)
श्रोतुं विस्तरशः सर्वं त्वं हि तस्य प्रतिश्रयः ॥ ३-१४४-३३ (२१३५५)
लोमश उवाच। ३-१४४-३४क्ष् (२२४२)
यत्तेऽहं परिपृष्टोऽस्मि कथामेतां युधिष्ठिर ।
तत्सर्वमखिलेनेह श्रूयतां मम भाषतः ॥ ३-१४४-३४ (२१३५६)

पुरा कृतयुगे तात वर्तमाने भयंकरे ।
यमत्वं कारयामास आदिदेवः पुरातनः ॥ ३-१४४-३५ (२१३५७)
यमत्वं कुर्वतस्तस्य देवदेवस्य धीमतः ।
न तत्र म्रियते कश्चिज्जायते वा तथाऽच्युत ॥ ३-१४४-३६ (२१३५८)
वर्धन्ते पक्षिसङ्घाश्च तथा पशुगवेडकम् ।
गवाश्वं च मृगाश्चैव सर्वे ते पिशिताशनाः ॥ ३-१४४-३७ (२१३५९)
तथा पुरुषशार्दूल मानुषाश्च परंतप ।
सहस्रशो ह्ययुतशो वर्धन्ते सलिलं यथा ॥ ३-१४४-३८ (२१३६०)
एतस्मिन्संकुले तात वर्तमाने भयंकरे ।
अतिभाराद्वसुमती योजनानां शतं गता ॥ ३-१४४-३९ (२१३६१)
सा वै व्यथितसर्वाङ्गी भारेणाक्रान्तचेतना ।
नारायणं वरं देवं प्रपन्ना शरणं गता ॥ ३-१४४-४० (२१३६२)
पृथिव्युवाच। ३-१४४-४१क्ष् (२२४३)
भगवंस्त्वत्प्रसादाद्धि तिष्ठेयं सुचिरं त्विह ।
भारेणास्मि समाक्रान्ता न शक्नोस्मि स्म वर्तितुम् ॥ ३-१४४-४१ (२१३६३)
ममेमं भगवन्भारं व्यपनेतुं त्वमर्हसि ।
शरणागताऽस्मि ते देव प्रसादं कुरु मे विभो ॥ ३-१४४-४२ (२१३६४)
तस्यास्तद्वचनं श्रुत्वा भगवानक्षरः प्रभुः ।
प्रोवाच वचनं हृष्टः श्राव्यारसमीरितम् ॥ ३-१४४-४३ (२१३६५)
न ते महि भयं कार्यं भारार्ते वसुधारिणि ।
अयमेवं तथा कुर्मि यथा लघ्वी भविष्यसि ॥ ३-१४४-४४ (२१३६६)
लोमश उवाच। ३-१४४-४५क्ष् (२२४४)
स तां विसर्जयित्वा तु वसुधां शैलकुण्डलाम् ।
ततो वराहः संवृत्त एकशृङ्गो महाद्युतिः ॥ ३-१४४-४५ (२१३६७)
रक्ताभ्यां नयनाभ्यां तु भयमुत्पादयन्निव ।
धूमं च ज्वलयँल्लक्ष्म्या तत्र देशे व्यवर्धत ॥ ३-१४४-४६ (२१३६८)
स गृहीत्वा वसुमतीं शृङ्गेणैकेन भास्वता ।
योजनानां शतं वीर समुद्धरति सोऽक्षरः ॥ ३-१४४-४७ (२१३६९)
तस्यां चोद्धार्यमाणायां संक्षोभः समजायत ।
देवाः संक्षुभिताः सर्वे ऋषयश्च तपोधनाः ॥ ३-१४४-४८ (२१३७०)
हाहाभूतमभूत्सर्वं त्रिदिवं व्योम भूस्तथा ।
न पर्यवस्थितः कश्चिद्देवो वा मानुषोपि वा ॥ ३-१४४-४९ (२१३७१)
ततो ब्रह्माणमासीनं ज्वलमानमिव श्रिया ।
देवाः सर्षिगणाश्चैव उपतस्थुरनेकशः ॥ ३-१४४-५० (२१३७२)
उपसर्प्य च देवेशं ब्रह्माणं लोकसाक्षिकम् ।
भूत्वा प्राञ्जलयः सर्वे वाक्यमुच्चारयंस्तदा ॥ ३-१४४-५१ (२१३७३)

लोकाः संक्षुभिताः सर्वे व्याकुलं च चराचरम् ।
समुद्राणां च संक्षोभस्त्रिदशेश प्रकाशते ॥ ३-१४४-५२ (२१३७४)
सैषा वसुमती कृत्स्ना योजनानां शतं गता ।
किमेतत्किंप्रभावेण येनेदं रव्याकुलं जगत् ।
आख्यातु नो भवाञ्शीघ्रं विसंज्ञाः स्मेह सर्वशः ॥ ३-१४४-५३ (२१३७५)
ब्रह्मोवाच। ३-१४४-५४क्ष् (२२४५)
असुरेभ्यो भयं नास्ति युष्माकं कुत्रचित्क्वचित् ।
श्रूयतां यत्कृते त्वेष संक्षोभो जायतेऽमराः ॥ ३-१४४-५४ (२१३७६)
योसौ सर्वत्रगः श्रीमानक्षरात्मा व्यवस्थितः ।
तस्य प्रभावात्संक्षोभस्त्रिदिवस्य प्रकाशते ॥ ३-१४४-५५ (२१३७७)
यैषा वसुमती कृत्स्ना योजनानां शतं गता ।
समुद्धृता पुनस्तेन विष्णुना परमात्मना ॥ ३-१४४-५६ (२१३७८)
तस्यामुद्धार्यमाणायां संक्षोभः समजायत ।
एवं भवन्तो जानन्तु च्छिद्यतां संशयश्च वः ॥ ३-१४४-५७ (२१३७९)
देवा ऊचुः। ३-१४४-५८क्ष् (२२४६)
क्व तद्भूतं वसुमतीं समुद्धरति हृष्टवत् ।
तं देशं भगवन्ब्रूहि तत्र यास्यामहे वयम् ॥ ३-१४४-५८ (२१३८०)
ब्रह्मोवाच। ३-१४४-५९क्ष् (२२४७)
हन्त गच्छत भद्रं वो नन्दने पशय्त स्थितम् ।
एषोत्र भगवाञ्श्रीमान्सुपर्णः संप्रकाशते ॥ ३-१४४-५९ (२१३८१)
वारादेणैव रूपेण भगवाँल्लोकभावनः ।
कालानल इवाभाति पृथिवीतलमुद्धरन् ॥ ३-१४४-६० (२१३८२)
एतस्योरसि सुव्यक्तं श्रीवत्समभिराजते ।
पश्यध्वं विबुधाः सर्वे भूतमेतदनामयम् ॥ ३-१४४-६१ (२१३८३)
लोमश उवाच। ३-१४४-६२क्ष् (२२४८)
ततो दृष्ट्वा महात्मानं श्रुत्वा चामन्त्र्य चामराः ।
पितामहं पुरस्कृत्य जग्मुर्देवा यथागतम् ॥ ३-१४४-६२ (२१३८४)
वैशंपायन उवाच। ३-१४४-६३क्ष् (२२४९)
श्रुत्वा तु तां कथां सर्वे पाण्डवा जनमेजय ।
लोमशादेशितेनाशु यथा जग्मुः प्रहृष्टवत् ॥ ३-१४४-६३ (२१३८५)

इति श्रीमन्महाभारते अरण्यपर्वणि तीर्थयात्रापर्वणि
चतुश्चत्वारिंशदधिकशततमोऽध्यायः ॥ १४४ ॥

Mahabharata - Vana Parva - Chapter Footnotes

३-१४४-१ भोद्रष्टारः सर्वे मन्दरादन्ये पर्वता दृष्टा इति शेषः ॥

३-१४४-४ महानदी गङ्गा अलकनन्दा वा ॥
३-१४४-५ उपयाता इष्टसिद्ध्यर्थं प्रार्थिता ॥
३-१४४-७ आह्निकं नैयमिकं जपम् । परिधावन्ति परिचरन्ति। तमिन्द्रम् ॥
३-१४४-१० वादत वादयत । अक्षरलोप आर्षः ॥
३-१४४-१३ पाण्डुरं श्वेतम् । अस्थां राशिमिति शेषः ॥
३-१४४-२७ पाणिना चपेटाघातेन चेतनां हरत्प्राणान्जहार ॥
३-१४४-३२ गता अधस्तादिति शेषः ॥
३-१४४-३७ पशवश्च गावश्च एडका मेषाश्च पशुगवेडकम् ॥
३-१४४-४४ न ते त्वया । हे महि। कुर्मि करोमि ॥
३-१४४-४६ धूमं धूपम् । ज्वलयन्निति हेतौ शतृप्रत्ययः। यथायथा धूमो ज्वलति तथातथाऽवर्धत इत्यर्थः ॥
३-१४४-५१ वाक्यं उच्चारयन् उच्चारितवन्तः ॥
३-१४४-५९ नन्दने इन्द्रवने । अत्र एतत्समीपे ॥

---

वन-अध्यय१४५
॥ श्रीः ॥
३.१४५. अध्यायः १४५

Mahabharata - Vana Parva - Chapter Topics
गन्धमादनं प्रस्थितेषु पाण्डवेषु मध्येमार्गं महावृष्टेः प्रादुर्भावः ॥ १ ॥
तदा पादपाद्यन्तरितैस्तैर्वृष्ट्युपरमे पुनः प्रस्थानम् ॥ २ ॥

Mahabharata - Vana Parva - Chapter Text

३-१४५-० (२१३८६)
वैशंपायन उवाच। ३-१४५-०क्ष् (२२५०)
ते शूरा सज्जधन्वानस्तूणवन्तः समार्गणाः ।
बद्धगोधाङ्गुलित्राणाः खड्गवन्तोऽमितौजसः ॥ ३-१४५-१ (२१३८७)
परिगृह्य द्विजश्रेष्ठाञ्ज्येष्ठाः सर्वधनुष्मताम् ।
पञ्चालीसहिता राजन्प्रययुर्गन्धमादनम् ॥ ३-१४५-२ (२१३८८)
सरांसि सरितश्चैव पर्वतांश्च वनानि च ।
वृक्षांश्च बहुलच्छायान्ददृशुर्गिरिमूर्धनि ॥ ३-१४५-३ (२१३८९)
नित्यपुष्पफलान्देशान्देवर्षिगणसेवितान् ।
आत्मन्यात्मानमाधाय वीरा मूलफलाशिनः ॥ ३-१४५-४ (२१३९०)
चेरुरुच्चावचाकारान्देशान्विषमसंकटान् ।

पश्यन्तो मृगजातानि बहूनि विविधानि च ॥ ३-१४५-५ (२१३९१)
ऋषिसिद्धामरयुतं गन्धर्वाप्सरसां प्रियम् ।
विविशुस्ते महात्मानः किन्नराचरितं गिरिम् ॥ ३-१४५-६ (२१३९२)
प्रविशत्स्वथ वीरेषु पर्वतं गन्धमादनम् ।
चणाडवातं महद्वर्षं प्रादुरासीद्विशांपते ॥ ३-१४५-७ (२१३९३)
ततो रेणुः समुद्भूतः सपत्रबहुलो महान् ।
पृथिवीं चान्तरिक्षं च द्यां चैव सहसाऽवृणोत् ॥ ३-१४५-८ (२१३९४)
न स्म प्रज्ञायते किंचिदावृते व्योम्नि रेणुना ।
न चापि शेकुस्तत्कर्तुमन्योन्यस्याभिभाषणम् ॥ ३-१४५-९ (२१३९५)
न चापश्यंस्ततोऽन्योन्यं तमसाऽऽवृतचक्षुषः ।
आकृष्यमाणा वातेन साश्मचूर्णेन भारत ॥ ३-१४५-१० (२१३९६)
द्रुमाणां वातरुग्णआनां पततां भूतलेऽनिशम् ।
अन्येषां च महीजानां शब्दः समभवन्महान् ॥ ३-१४५-११ (२१३९७)
द्यौः स्वित्पतति किं भूमिर्दीर्यते पर्वतोनु किम् ।
इति ते मेनिरे सर्वेपवनेन विमोहिताः ॥ ३-१४५-१२ (२१३९८)
ते पथाऽनन्तरांन्वृक्षान्वल्मीकान्विषमाणि च ।
पाणिभिः परिमार्गन्तो भीता वायोर्निलिल्यिरे ॥ ३-१४५-१३ (२१३९९)
ततः कार्मुकमादाय भीमसेनो महाबलः ।
कृष्णामादाय संगम्य तस्थावाश्रित्य पादपम् ॥ ३-१४५-१४ (२१४००)
धर्मराजश्च धौम्यश् निलिल्याते महावने ।
अग्निहोत्राण्युपादाय सहदेवस्तु पर्वते ॥ ३-१४५-१५ (२१४०१)
नकुलो ब्राह्मणाश्चान्ये लोमशश्च महातपाः ।
वृक्षानासाद्य संत्रस्तास्तत्रतत्र निलिल्यिरे ॥ ३-१४५-१६ (२१४०२)
मन्दीभूते तु पवने तस्मिन्नजसि शाम्यति ।
महद्भिर्जलधारौघैर्वर्षमभ्याजगाम ह ॥ ३-१४५-१७ (२१४०३)
भृशं चटचटाशब्दो वज्राणां क्षिप्यतामिव ।
ततस्ताश्चञ्चलाभासश्चेरुरभ्रेषु विद्युतः ॥ ३-१४५-१८ (२१४०४)
ततोऽश्मसहिता धाराः संवृण्वन्त्यः समन्ततः ।
प्रपेतुरनिशं तत्र शीघ्रवातसमीरिताः ॥ ३-१४५-१९ (२१४०५)
तत्र सागरगा ह्यापः कीर्यमाणाः समन्ततः ।
प्रादुरासन्सकलुषाः फेनवत्यो विशांपते ॥ ३-१४५-२० (२१४०६)
वहन्त्यो वारि बहुलं फेनोडुपपरिप्लुतम् ।
परिसमस्रुर्महाशब्दाः प्रकर्षन्त्यो महीरुहान् ॥ ३-१४५-२१ (२१४०७)
तस्मिन्नुपरते शब्देबाते च समतां गते ।
गते ह्यम्भसि निम्नानि प्रादुर्भूते दिवाकरे ॥ ३-१४५-२२ (२१४०८)
निर्जग्मुस्ते शनैः सर्वे समाजग्मुश्च भारत ।

प्रतस्थिरे पुनर्वीराः पर्वतं गन्धमादनम् ॥ ३-१४५-२३ (२१४०९)

इति श्रीमन्महाभारते अरण्यपर्वणि तीर्थयात्रापर्वणि
पञ्चचत्वारिंशदधिकशततमोऽध्यायः ॥१४५ ॥
Mahabharata - Vana Parva - Chapter Footnotes

३-१४५-१३ पथा मार्गेण ।अनन्तरान्सन्निहितान्। निलिल्यिरे निलीनाः ॥
३-१४५-१४ संगम्यादायेत्यन्वयः ।गत्वा गृहीत्वेत्यर्थः ॥
३-१४५-१९ अश्मसहिता करकासहिताः ॥
३-१४५-२१ वारि वहन्त्यो नद्यः ॥

---

वन-अध्यय१४६
॥ श्रीः ॥
३.१४६. अध्यायः १४६

Mahabharata - Vana Parva - Chapter Topics
गन्धमादनप्रयाणे गमनाक्षमतयाऽधः पतनेन मूर्च्छिताया
द्रौपद्याः पाण्डवैः सलिलसेचनादिना श्रमापनोदनम् ॥१ ॥
पाञ्चाल्या दुश्चराध्वसंचरणे चिन्तयमानं यिधिष्ठिरंप्रति
भीमेन स्वेन घटोत्कचेन वा तस्या वहनोक्तिः ॥२ ॥

Mahabharata - Vana Parva - Chapter Text

३-१४६-० (२१४१०)
वैशंपायन उवाच। ३-१४६-०क्ष् (२२५१)
ततः प्रयातमात्रेषु पाण्डवेषु महात्मसु ।
पद्भ्यामनुचिता गन्तुं द्रौपदी समुपाविशत् ॥ ३-१४६-१ (२१४११)
श्रान्ता दुःखपरीता च वातवर्षेण तेन च ।
सौकुमार्याच्च पाञ्चाली संमुमोह तपस्विनी ॥ ३-१४६-२ (२१४१२)
सा कम्पमाना मोहेन बाहुभ्यामसितेक्षणा ।
रवृत्ताभ्यामनुरूपाभ्यामूरू समवलम्बत ॥ ३-१४६-३ (२१४१३)
आलम्बमाना सहितावूरू गजकरोपमौ ।
रपपात सहसा भूमौ वेपन्ती कदली यथा ॥ ३-१४६-४ (२१४१४)
तां पतन्तीं वरारोहां भज्यमानां लतामिव ।
नकुलः समभिद्रुत्य परिजग्राह वीर्यवान् ॥ ३-१४६-५ (२१४१५)
नकुल उवाच। ३-१४६-६क्ष् (२२५२)

राजन्पाञ्चालराजस्य सुतेयमसितक्षणा ।
श्रान्ता निपतिता भूमौ तामवेक्षस्व भारत ॥ ३-१४६-६ (२१४१६)
अदुःखार्हा परं दुःखं प्राप्तेयं मृदुगामिनी ।
आश्वासय महाराज तामिमां श्रमकर्शिताम् ॥ ३-१४६-७ (२१४१७)
वैशंपायन उवाच। ३-१४६-८क्ष् (२२५३)
राजा तु वचनात्तस्य भृशं दुःखसमन्वितः ।
भीमश्च सहदेवश्च सहसा समुपाद्रवन् ॥ ३-१४६-८ (२१४१८)
तामवेक्ष्यतु कौन्तेयो विवर्णवदनां कृशाम् ।
अङ्कमानीय धर्मात्मा पर्यदेवयदातुरः ॥ ३-१४६-९ (२१४१९)
युधिष्ठिर उवाच। ३-१४६-१०क्ष् (२२५४)
कथं वेश्मसु गुप्तेषु स्वास्तीर्णशयनोचिता ।
भूमौ निषतिता शेते सुखार्हा वरवर्णिनी ॥ ३-१४६-१० (२१४२०)
सुकुमारौ कथं पादौ मुखं च कमलप्रभम् ।
मत्कृतेऽद्य वरार्हायाः श्यामतां समुपागतम् ॥ ३-१४६-११ (२१४२१)
किमिदं द्यूतकामेन मया कृतमबुद्धिना ।
आदाय कृष्णां चरता वने मृगगणाकुले ॥ ३-१४६-१२ (२१४२२)
सुखं प्राप्स्यसि कल्याणि पाण्डवान्प्राप्य वै पतीन् ।
इतिद्रुवदराजेन पित्रा दत्ताऽयतेक्षणा ॥ ३-१४६-१३ (२१४२३)
तत्सर्वमानवाप्येयं श्रमशोकाद्विकर्शिता ।
शेते निपतिता भूमौ पापस्य मम कर्मभिः ॥ ३-१४६-१४ (२१४२४)
वैशंपायन उवाच। ३-१४६-१५क्ष् (२२५५)
तथा लालप्यमाने तु धर्मराजे युधिष्ठिरे ।
धौम्यप्रभृतयः सर्वे तत्राजग्मुर्द्विजोत्तमाः ॥ ३-१४६-१५ (२१४२५)
ते समाश्वासयामासुराशीर्भिश्चाप्यपूजयन् ।
राक्षोघ्नांश्च तथा मन्त्राञ्जेपुश्चक्रुश्च ते क्रियाः ॥ ३-१४६-१६ (२१४२६)
पठ्यमानेषु मन्त्रेषु शान्त्यर्थं परमर्षिभिः ।
स्पृश्यमाना करैः शीतैः पाण्डवैश्च मुहुर्मुहुः ॥ ३-१४६-१७ (२१४२७)
सेव्यमाना च शीतेन जलमिश्रेण वायुना ।
पाञ्चाली सुखमासाद्य लेभे चेतः शनैः शनैः ॥ ३-१४६-१८ (२१४२८)
परिगृह्यच तां दीनां कृष्णामजिनसंस्तरे ।
पार्था विश्रामयामासुर्लब्धसंज्ञां तपस्विनम् ॥ ३-१४६-१९ (२१४२९)
तस्या यमौ रक्ततलौ पादौ पूजितलक्षणौ ।
कराभ्यां किणजाताभ्यां शनकैः संववाहतुः ॥ ३-१४६-२० (२१४३०)
पर्याश्वासयदप्येनां धर्मराजो युधिष्ठिरः ।
उवाच च कुरुश्रेष्ठो भीमसेनमिदं वचः ॥ ३-१४६-२१ (२१४३१)
बहवः पर्वता मीम विषमा हिमदुर्गमाः ।

तेषु कृष्णा महाबाहो कथं नु विचरिष्यति ॥ ३-१४६-२२ (२१४३२)
भीमसेन उवाच। ३-१४६-२३क्ष् (२२५६)
त्वां राजन्राजपुत्रीं च यमौ च पुरुषर्षभ ।
स्वयं नेष्यामि राजेन्द्र मा विषादे मनुः कृथाः ॥ ३-१४६-२३ (२१४३३)
अथवा यो मया जातो विहगो मद्बलोपमः ।
वहेदनघ सर्वान्नो वचनात्ते घटोत्कचः ॥ ३-१४६-२४ (२१४३४)

इति श्रीमन्महाभारते अरण्यपर्वणि तीर्थयात्रापर्वणि
षट्चत्वारिंशदधिकशततमोऽध्यायः ॥ १४६ ॥
Mahabharata - Vana Parva - Chapter Footnotes

३-१४६-१ क्रोशमात्रं प्रयातेषु इति झ । पाठः ॥
१ ॥
३-१४६-२४ विहगइव विहगः खेचरः ॥

---

वन-अध्यय१४७
॥ श्रीः ॥
३.१४७. अध्यायः १४७

Mahabharata - Vana Parva - Chapter Topics
भीमसेनस्मरणमात्रसन्निहितेन घटोत्कचेन दुर्गमे पथि द्रौपद्या
वहनम् ॥ १ ॥
तदनुचरै राक्षसैः पाण्डवानां विप्राणं च वहनम् ॥ २ ॥
सर्वैर्नरनारायणाश्रममेत्य तत्र सुखेन निवासः ॥ ३ ॥

Mahabharata - Vana Parva - Chapter Text

३-१४७-० (२१४३५)
युधिष्ठिर उवाच। ३-१४७-०क्ष् (२२५७)
धर्मज्ञो बलवाञ्शूरः सद्यो राक्षसपुङ्गवः ।
भक्तोऽस्मानौरसः पुत्रो नेतुमर्हति मातरम् ॥ ३-१४७-१ (२१४३६)
तव भीम सुतेनाहं नीतो भीमपराक्रम ।
अक्षतः सह पाञ्चाल्या गच्छेयं गन्धमादनम् ॥ ३-१४७-२ (२१४३७)
वैशंपायन उवाच। ३-१४७-३क्ष् (२२५८)
भ्रातुर्वचनमाज्ञाय भीमसेनो घटोत्कचम् ।
गचिन्तयामास बलवान्महाबलपराक्रमम् ॥ ३-१४७-३ (२१४३८)

घटोत्कचश्च धर्मात्मा स्मृतमात्रः पितुस्तदा ।
कृताञ्जलिरुषातिष्ठदभिवाद्याथ पाण्डवान् ।
ब्राह्मणांश्च महाबाहुः स च तैरमिनन्दितः ॥ ३-१४७-४ (२१४३९)
उवाच भीमसेनं स पितरं सत्यविक्रमः ॥ ३-१४७-५ (२१४४०)
स्मृतोऽस्मि भवता शीघ्रं शुश्रूषुरहमागतः ।
आज्ञापय महाबाहो सर्वं कर्ताऽस्म्यसंशयम् ॥ ३-१४७-६ (२१४४१)
तच्छ्रुत्वा भीमसेनस्तु राक्षसं परिषस्वजे ।
चिन्ताया समनप्राप्तमित्युवाच वृकोदरः'॥ ३-१४७-७ (२१४४२)
हैडिम्बेय परिश्रान्ता तव माताऽपराजिता ।
त्वं कच कामगमस्तात बलवान्वह तां खग ॥ ३-१४७-८ (२१४४३)
स्कन्धमारोप्य भद्रं ते मध्येऽस्माकं विहायसा ।
गच्छ नीचिकया गत्या यथा चैनां न पीडयेः ॥ ३-१४७-९ (२१४४४)
घटोत्कच उवाच। ३-१४७-१०क्ष् (२२५९)
धर्मराजं च धौम्यं च कृष्णां च यमजौ तथा ।
एकोप्यहमलं वोढुं किमुताद्य सहायवान् ॥ ३-१४७-१० (२१४४५)
श्अन्ये च शतशः शूरा विहङ्गाः कामरूपिणः ।
सर्वान्वो ब्राह्मणैः सार्धं वक्ष्यन्ति सहिताऽनघ ।
ग्मन्दंमन्दं गमिष्यामि वहन्द्रुपदनन्दिनीम्' ॥ ३-१४७-११ (२१४४६)
वैश्पायन उवाच। ३-१४७-१२क्ष् (२२६०)
एवमुक्त्वा ततः कृष्णामुवाह स घटोत्कचः ।
पाण्डूनां मध्यगो वीरः पाण्डवानपि चापरे ॥ ३-१४७-१२ (२१४४७)
लोमशः सिद्धमार्गेण जगामानुपमद्युतिः ।
स्वेनैव स प्रभावेण द्वीतीय इव भास्करः ॥ ३-१४७-१३ (२१४४८)
ब्राह्मणांश्चापि तान्सर्वान्समुपादाय राक्षसाः ।
नियोगाद्राक्षसेनद्रस्य जग्मुर्भीमपराक्रमाः ॥ ३-१४७-१४ (२१४४९)
एवं सुरमणीयानि वनान्युपवनानि च ।
आलोकयन्तस्ते जग्मुर्विशालां बदरीमनु ॥ ३-१४७-१५ (२१४५०)
ते त्वाशुगतिभिर्वीरा राक्षसैस्तैर्महाजवैः ।
उह्यमाना ययुः शीघ्रं महदध्वानमल्पवत् ॥ ३-१४७-१६ (२१४५१)
देशान्म्लेच्छजनाकीर्णान्नानारत्नाकरायुतान् ।
ददृशुर्गिरिपादांश्च नानाधातुसमाचितान् ॥ ३-१४७-१७ (२१४५२)
विद्याधरमाकीर्णआन्युतान्वानरकिन्नरैः ।
तथा किंपुरुषैश्चैव गन्धर्वैश्चसमन्ततः ॥ ३-१४७-१८ (२१४५३)
मयूरैश्चभरैश्चैव हरिणै रुरुभिस्तथा ।
वराहैर्गवयैश्चैव महिषैश्च समावृतान् ॥ ३-१४७-१९ (२१४५४)
नदीजालसमाकीर्णान्नानापक्षियुतान्बहून् ।

नानाविधमृगैर्जुष्टांश्चारणैश्चोपशोभितान् ।
समदैश्च्यशि विहगैः उपैरन्वितांस्तथा ॥ ३-१४७-२० (२१४५५)
तेऽवतीर्य बहून्देशानुत्तरांश्च कुरूनपि ।
ददृशुर्विविधाश्चर्यं कैलासं पर्वतोत्तमम् ॥ ३-१४७-२१ (२१४५६)
तस्याभ्याशे तु ददृशुर्नरनारायणाश्रमम् ।
उपेतं पादपैर्दिव्यैः सदापुष्पफलोपगैः ॥ ३-१४७-२२ (२१४५७)
ददृशुस्तां च बदरीं वृत्तस्कन्धां मनोरमाम् ।
स्निग्धामविरलच्छायां श्रिया परमया युताम् ॥ ३-१४७-२३ (२१४५८)
पत्रैः स्निग्धैरविरलैरुपेतां मृदुभिः शुभाम् ।
विशालशाखां विस्तीर्णामतिद्युतिसमन्विताम् ॥ ३-१४७-२४ (२१४५९)
फलैरुपचितैर्दिव्यैराचितां स्वादुभिर्भृशम् ।
मधुस्रवैः सदा दिव्यां महर्षिगणसेविताम् ।
मदप्रमुदितैर्नित्यं नानाद्विजगणैर्युताम् ॥ ३-१४७-२५ (२१४६०)
अदंशमशके देशे बहुमूलफलोदके ।
नीलशाद्वलसंछन्ने देवगन्धर्वसेविते ॥ ३-१४७-२६ (२१४६१)
सुभूमिभागविशदे स्वभावविदिते शुभे ।
जातां हिममृदुस्पर्शे देशेऽपहतकण्टके ॥ ३-१४७-२७ (२१४६२)
तामुपेत्य महात्मानः सह तैर्ब्राह्मणर्षभैः ।
अवतेरुस्ततः सर्वे राक्षसस्कन्धतः शनैः ॥ ३-१४७-२८ (२१४६३)
ततस्तमाश्रमं पुण्यं नरनारायणाश्रितम् ।
ददृशुः पाण्डवा राजन्सहिता द्विजपुङ्गवैः ॥ ३-१४७-२९ (२१४६४)
तमसा रहितं पुण्यमनामृष्टं रवेः करैः ।
क्षुत्तृट्शीतोष्णदोषैश्च वर्जितं शोकनाशनम् ॥ ३-१४७-३० (२१४६५)
महर्षिगणसंबाधं ब्राह्म्या लक्ष्म्या समन्वितम् ।
दुष्प्रवेशं महाराज नरैर्धर्मबहिष्कृतैः ॥ ३-१४७-३१ (२१४६६)
बलिहोमार्चितं दिव्यं सुसंमृष्टानुलेपनम् ।
दिव्यपुष्पोपहारैश्च सर्वतोऽभिविराजितम् ॥ ३-१४७-३२ (२१४६७)
विशालैरग्निशरणैः स्रुग्भाण्डैराचितं शुभैः ।
महद्भिस्तोयकलशैः कठिनैश्चोपशोभितम् ॥ ३-१४७-३३ (२१४६८)
शरण्यं सर्वभूतानां ब्रह्मघोपनिनादितम् ।
दिव्यमाश्रयणीयं तमाश्रमं श्रमनाशनम् ।
श्रिया युतमनिर्देश्यं देववर्योपशोभितम् ॥ ३-१४७-३४ (२१४६९)
फलमूलाशनैर्दान्तैश्चारुकृष्णाजिनाम्बरैः ।
सूर्यवैश्वानरसमैस्तपसा भावितात्मभिः ॥ ३-१४७-३५ (२१४७०)
महर्षिभिर्मोक्षपरैर्यतिभिर्नियतेन्द्रियैः ।
ब्रह्मभूतैर्महाभागैरुपेतं ब्रह्मवादिभिः ॥ ३-१४७-३६ (२१४७१)

सोऽभ्यगच्छन्महातेजास्तानृषीन्नियतः शुचिः ।
भ्रातृभिः सहितो धीमान्धर्मपुत्रो युधिष्ठिरः ॥ ३-१४७-३७ (२१४७२)
दिव्यज्ञानोपपन्नास्ते दृष्ट्वा प्राप्तं युधिष्ठिरम् ।
अभ्यगच्छन्त सुप्रीता दिव्या देवमहर्षयः। ३-१४७-३८ (२१४७३)
प्रीतास्ते तस्य सत्कारं विधिना पावकापमाः ।
उपाजह्रुश्च सलिलं पुष्पमूलफलं शुचि ॥ ३-१४७-३९ (२१४७४)
स तैः प्रीत्याऽथ सत्कारमुपनीतं महर्षिभिः ।
प्रयतः प्रतिगृह्याथ धर्मराजो युधिष्ठिरः ॥ ३-१४७-४० (२१४७५)
तं शक्रसदनप्रख्यं दिव्यगन्धं मनोरमम् ।
प्रीतः स्वर्गोपमं पुण्यं पाण्डवः सह कृष्णया ॥ ३-१४७-४१ (२१४७६)
रविवेश शोभया युक्तं भ्रातृभिश्च सहानघ ।
ब्राह्मणैर्वेदवेदाङ्गपारगैश्च सहार्चितः ॥ ३-१४७-४२ (२१४७७)
तत्रापश्यत्स धर्मात्मा देवदेवर्पिपूजितम् ।
नरनारायणस्थानं भागीरथ्योपशोभितम् ॥ ३-१४७-४३ (२१४७८)
तस्मिन्मधुस्रवफलां ब्रह्मर्षिगणभाविनीम् ।
वदरीं तामुपाश्रित्य पाण्डवो भ्रातृभिः सह ॥ ३-१४७-४४ (२१४७९)
मुदा युक्ता महात्मानो रेमिरे तत्र ते तदा ।
आलोकयन्तो मैनाकं नानाद्विजगणायुतम् ।
हिरण्यशिखरं चैव मध्ये विन्दुसरः शिवम् ॥ ३-१४७-४५ (२१४८०)
भागीरथीं सुतीर्थां च शीतामलजलां शिवाम् ।
मणिप्रवालप्रस्तारां पादपैरुषशोभिताम् ॥ ३-१४७-४६ (२१४८१)
दिव्यपुष्पसमाकीर्णां मनःप्रीतिविवर्धनीम् ।
वीक्षमाणा महात्मानो विजह्रुस्तत्र पाण्डवाः ॥ ३-१४७-४७ (२१४८२)
तस्मिन्देवर्षिचरिते देशे परमदुर्गमे ।
भागीरथीपुण्यजलेतर्पयांचक्रिरे पितॄन् ।
देवानृषींश्च कौन्तेयाः परमं शौचमास्थिताः ॥ ३-१४७-४८ (२१४८३)
तत्र ते तर्पयन्तश्च जपन्तश्च कुरूद्वहाः ।
ब्राह्मणैः सहिता वीरा ह्यवसन्पुरुपर्षभाः ॥ ३-१४७-४९ (२१४८४)
कृष्णायास्तत्रपशय्न्तः क्रीडितान्यमरप्रभाः ।
विचित्राणि नरव्याघ्रा रेमिरे तत्र पाण्डवाः ॥ ३-१४७-५० (२१४८५)

इति श्रीमन्महाभारते अरण्यपर्वणि तीर्थयात्रापर्वणि
सप्तचत्वारिंशदधिकशततमोऽध्यायः ॥ १४७ ॥
Mahabharata - Vana Parva - Chapter Footnotes

३-१४७-११ वक्ष्यन्ति वहनं करिष्यन्ति ॥

३-१४७-१७ रत्नाकरैः आसमन्तात् युतान् ॥
३-१४७-२२ अभ्याशे समीपे ॥
३-१४७-२७ स्वभावत एव विशेषेण रहिते स्वभावविहिते ।जातां बदरीम् ॥
३-१४७-३३ अग्निशरणैः अग्न्यगारैः ।आचितं व्याप्तम्। कठिनैः शिक्यैः करण्डैर्वा ॥
३-१४७-३९ सत्कारं चक्रुरिति शेषः ॥
३-१४७-४६ सीतां विमलपङ्कजाम् इति झ ।पाठः। सीतां नामतः। प्रस्तारः सोपानपादगणादिरूपः। षट्ट इत्यर्थः ॥

---

वन-अध्यय१४८
॥ श्रीः ॥
३.१४८. अध्यायः १४८

Mahabharata - Vana Parva - Chapter Topics
दाचन पाञ्चाल्या भीमसंनिधाने
वाय्वानीताद्भुतसौगन्धिकपुष्पदर्शनम् ॥ १ ॥
तया तादृशबहुपुष्पानयनं प्रार्थितेन भीमेन तदर्थं गमनम् ॥ २ ॥
भीमस्य मध्येमार्गं स्वमार्गनिरोधकेन हनुमता सह संवादः ॥ ३ ॥

Mahabharata - Vana Parva - Chapter Text

३-१४८-० (२१४८६)
वैशंपायन उवाच। ३-१४८-०क्ष् (२२६१)
तत्र ते पुरुषव्याघ्राः परमं शौचमास्थिताः ।
षड्रात्रमवसन्वीरा धनंजयदिदृक्षया ॥ ३-१४८-१ (२१४८७)
तस्मिन्विहरमाणाश्च रममाणाश्च पाण्डवाः ।
मनोज्ञे काननवरे सर्व भूतमनोरमे ॥ ३-१४८-२ (२१४८८)
पादपैः पुष्पविकचैः फलभारावनामितैः ।
शोभितः पर्वतो रम्यः पुंस्कोकिलकुलाकुलैः ।
स्निग्धपत्रैरविरलैः शीतच्छायैर्मनोरमैः ॥ ३-१४८-३ (२१४८९)
सरांसि च विचित्राणि प्रसन्नसलिलानि च ।
कमलैः सोत्पलैस्तत्रभ्राजमानानि सर्वशः ।
पश्यन्तश्चारुरूपाणइ रेमिरे तत्र पाण्डवाः ॥ ३-१४८-४ (२१४९०)
पुण्यगन्धः सुखस्पर्शो ववौ तत्र समीरणः ।
ह्लादयन्पाण्डवान्सर्वान्सकृष्णान्सद्विजर्षभान् ॥ ३-१४८-५ (२१४९१)
ततः पूर्वोत्तरे वायुः प्लवमानो यदृच्छया ।

सहस्रपत्रमर्काभं दिव्यं पद्ममुपाहरत् ॥ ३-१४८-६ (२१४९२)
तदवैक्षत पाञ्चाली दिव्यगन्धं मनोरमम् ।
अनिलेनाहृतंभूमौ पतितं जलजं शुचि ॥ ३-१४८-७ (२१४९३)
तच्छुभा शुभमासाद्य सौगन्धिकमनुत्तमम् ।
अतीव मुदिता राजन्भीमसेनमथाब्रवीत् ॥ ३-१४८-८ (२१४९४)
पश्य दिव्यं सुरुचिरं भीम पुष्पमनुत्तमम् ।
गन्धसंस्थानसंपन्नं मनसो मम नन्दनम् ॥ ३-१४८-९ (२१४९५)
इदं च धर्मराजाय प्रदास्यामि परंतप ।
ग्गृह्यापराणि पुष्पाणि बहूनि पुरुषर्षभ'।
हरेरिदं मे कामाय काम्यके पुनराश्रमे ॥ ३-१४८-१० (२१४९६)
यदि तेऽहं प्रिया पार्थ बहूनीमान्युपाहर ।
तान्यहं नेतुमिच्छामि काम्यकं पुनराश्रमम् ॥ ३-१४८-११ (२१४९७)
एवमुक्त्वा तु पाञ्चली भीमसेनमनिन्दिता ।
जगाम पुष्पमादाय धर्मराजाय तत्तदा ॥ ३-१४८-१२ (२१४९८)
अभिप्रायं तु विज्ञाय महिष्याः पुरुषर्षभः ।
प्रियायाः प्रियकामः स प्रायाद्भीमो महाबलः ॥ ३-१४८-१३ (२१४९९)
वातं तमेवाभिमुखो यतस्तत्पुष्पमागतम् ।
आजिहीर्षुर्जगामाशु सपुष्पाण्यपराण्यपि ॥ ३-१४८-१४ (२१५००)
रुक्मपृष्ठं धनुर्गृह्य शरांश्चाशीविषोपमान् ।
मृगराडिव संक्रुद्धः प्रभिन्न इव कुञ्जरः ।
श्ददृशुः सर्वभूतानि महाबाणधनुर्धरम् ॥ ३-१४८-१५ (२१५०१)
न ग्लानिर्न च वैक्लब्यं न भयं न च संभ्रमः ।
कदाचिज्जुषते पार्थमात्मजं मातरिश्वनः ।॥ ३-१४८-१६ (२१५०२)
द्रौपद्याः प्रियमन्विच्छन्स बाहुबलमाश्रितः ।
व्यपेतभयसमोहः शैलमभ्यपतद्बली ॥ ३-१४८-१७ (२१५०३)
स तं द्रुमलतागुल्मच्छन्नं नीलशिलातलम् ।
गिरिं चचारारिहरः किन्नराचरितं शुभम् ॥ ३-१४८-१८ (२१५०४)
नानावर्णधरैश्चित्रं धातुद्रुममृगाण्डजैः ।
सर्वभूषणसंपूर्णं भूमेर्भुजमिवोच्छ्रितम् ॥ ३-१४८-१९ (२१५०५)
सर्वर्तुरमणीयेषु गन्धमादनसानुषु ।
सक्तचक्षुरभिप्रायान्हृदयेनानुचिन्तयन् ॥ ३-१४८-२० (२१५०६)
पुंस्कोकिलनिनादेषु षट्पदाचरितेषु च ।
बद्धश्रोत्रमनश्चक्षुर्जगामामितविक्रमः ॥ ३-१४८-२१ (२१५०७)
आजिघ्रन्स महातेजाः सर्वर्तुकुसुमोद्भवम् ।
गन्धमुद्धतमुद्दामो वने मत्त इव द्विपः ॥ ३-१४८-२२ (२१५०८)
वीज्यमानः सुपुण्येन नानाकुसुमगन्धिना ।

पितुः संस्पर्शशीतेन गन्धमादनवायुना ॥ ३-१४८-२३ (२१५०९)
ह्रियमाणश्रमः पित्रा संप्रहृष्टतनूरुहः ॥ ३-१४८-२४ (२१५१०)
स यक्षगन्धर्वसुरब्रह्मर्षिगणसेवितम् ।
विलोकयामास तदा पुष्पहेतोररिंदमः ॥ ३-१४८-२५ (२१५११)
विषमच्छेदैरचितैरनुलिप्त इवाङ्गुलैः ।
विमलैर्धातुविच्छेदैः काञ्चनाञ्जनराजतैः ॥ ३-१४८-२६ (२१५१२)
सपक्षमिव नृत्यन्तं पार्श्वलग्नैः पयोधरैः ।
मुक्ताहारैरिव चितं च्युतैः प्रस्रवणोदकैः ॥ ३-१४८-२७ (२१५१३)
अभिरामदरीकुञ्जनिर्झरोदककन्दरम् ।
अप्सरोनूपुररवैः प्रनृत्तवरबर्हिणम् ॥ ३-१४८-२८ (२१५१४)
दिग्वारणविषाणाग्रैर्घृष्टोपलशिलातलम् ।
स्रस्तांशुकमिवाक्षोभ्यैर्निम्नगानिःसृतैर्जलैः ॥ ३-१४८-२९ (२१५१५)
सशष्पकबलैः स्वस्थैरदूरपरिवर्तिभिः ।
भयानभिज्ञैर्हरिणैः कौतूहलनिरीक्षितः ॥ ३-१४८-३० (२१५१६)
चालयानः स्ववेगेन लताजालान्यनेकशः ।
आक्रीडमानः कौन्तेयः श्रीमान्वायुसुतो ययौ ॥ ३-१४८-३१ (२१५१७)
प्रियामनोरथं कर्तुमुद्यतश्चारुलोचनः ।
प्रांशुः कनकवर्णाभः सिंहसंहननो युवा ॥ ३-१४८-३२ (२१५१८)
मत्तवारणविक्रान्तो मत्तवारणवेगवान् ।
मत्तवारणताम्राक्षो मत्तवारणवारणः ॥ ३-१४८-३३ (२१५१९)
प्रियपार्श्वोपविष्टाभिर्व्यावृत्ताभिर्विचेष्टितैः ।
यक्षगन्धर्वयोषाभिरदृश्याभिर्निरीक्षितः ॥ ३-१४८-३४ (२१५२०)
नवावतारं रूपस् विक्रीडन्निव पाण्डवः ।
चचार रमणीयेषु गन्धमादनसानुषु ॥ ३-१४८-३५ (२१५२१)
संस्मरन्विविधान्क्लेशान्दुर्योधनकृतान्बहून् ।
द्रौपद्या वनवासिन्याः प्रियं कर्तुं समुद्यतः ॥ ३-१४८-३६ (२१५२२)
सोऽचिन्तयत्तथा पार्थे मयि त्वतिविलम्बिते ।
पुष्पहेतोः कथं त्वार्यः करिष्यति युधिष्ठिरः ॥ ३-१४८-३७ (२१५२३)
स्नेहान्नरवरो नूनमविश्वासाद्बलस्य च ।
नकुलं सहदेवं च न मोक्ष्यति युधिष्ठिरः ॥ ३-१४८-३८ (२१५२४)
कथं नु कुसुमावाप्तिः स्याच्छीघ्रमिति चिन्तयन् ।
प्रतस्थे नरशार्दूलः पक्षिराडिव वेगितः ॥ ३-१४८-३९ (२१५२५)
श्सज्जमानमनोदृष्टिः फुल्लेषु गिरिसानुषु ।
द्रौपदीवाक्यपाथेयो भीमः शीघ्रतरं ययौ ॥ ३-१४८-४० (२१५२६)
कम्पयन्मेदिनीं पद्भ्यां निर्घात इव पर्वसु ।
त्रासयन्गजयूथानि वातरंहा वृकोदरः ॥ ३-१४८-४१ (२१५२७)

सिंहव्याघ्रमृगांश्चैव मर्दयानो महाबलः ।
उन्मूलयन्महावृक्षान्पोथयंश्चोरसा बली ॥ ३-१४८-४२ (२१५२८)
लतावल्लीश्च वेगेन विकर्षन्पाण्डुनन्दनः ।
उपर्युपरि शैलाग्रमारुरुक्षुरिव द्विपः ॥ ३-१४८-४३ (२१५२९)
जलावलम्बोऽतिभृशं सविद्युदिव तोयदः ।
व्यनदत्स महानादं भीमसेनो महाबलः ॥ ३-१४८-४४ (२१५३०)
तेन शब्देन महता भीमस्य प्रतिबोधिताः ।
गुहां संतत्यजुर्व्याघ्रा निलिल्युर्वनवासिनः ॥ ३-१४८-४५ (२१५३१)
समुत्पेतुः खगास्त्रस्ता मृगयूथानि दुद्रुवुः ।
ऋक्षाश्चोत्ससृजर्वृक्षांस्तत्यजुर्हरयो गुहाम् ।
व्यजृम्भन्त महासिंहा महिषाश्च वनेचराः ॥ ३-१४८-४६ (२१५३२)
तेन वित्रासिता नागाः करेणुपरिवारिताः ।
तद्वनं संपरित्यज्य जग्मुरन्यन्महावनम् ॥ ३-१४८-४७ (२१५३३)
वराहमृगसङ्घाश्च महिषाश्च वनेचराः ।
व्याघ्रगोमायुसङ्घाश्च प्रणेदुर्गवयैः सह ॥ ३-१४८-४८ (२१५३४)
रथाङ्गसाह्वदात्यूहा हंसकारण्डवप्लवाः ।
शुकाः पारावताः कौञ्चा विसंज्ञा भेजिरे दिशः ॥ ३-१४८-४९ (२१५३५)
तथाऽन्ये दर्पिता नागाः करेणुशरपीडिताः ।
सिंहव्याघ्राश्च संक्रुद्धा भीमसेनमथाद्रवन् ॥ ३-१४८-५० (२१५३६)
शकृन्मूत्रं च मुञ्चाना भयविभ्रान्तमानसाः ।
व्यादितास्या महारौद्र व्यनदन्भीषणान्रवान् ॥ ३-१४८-५१ (२१५३७)
ततो वायुसुतः क्रोधात्स्वबाहुबलमाश्रितः ।
गजेनान्यान्गजाञ्श्रीमान्सिंहं सिंहेन वा विभुः ।
तलप्रहारैरन्यांश्च व्यहनत्पाण्डवो बली ॥ ३-१४८-५२ (२१५३८)
ते वध्यमाना भीमेन सिंहव्याघ्रतरक्षवः ।
भयाद्विससृजुर्भीमं शकृन्मूत्रं च सुस्रुवुः ॥ ३-१४८-५३ (२१५३९)
प्रविवेश ततः क्षिप्रं तानपास्य महाबलः ।
वनं पाण्डुसुतः श्रीमाञ्शब्देनापूरयन्दिशः ॥ ३-१४८-५४ (२१५४०)
अथापश्यन्महाबाहुर्गनधमादनसानुषु ।
सुरम्यं कदलीषणाडं बहुयोजनविस्तृतम् ॥ ३-१४८-५५ (२१५४१)
तमभ्यगच्छद्वेगेन क्षोभयिष्यन्महाबलः ।
महागज इवास्रावी प्रभञ्जन्विविधान्द्रुमान् ॥ ३-१४८-५६ (२१५४२)
उत्पाट्य कदलीस्तम्भान्बहुतालसमुच्छ्रयान् ।
चिक्षेप तरसा भीमः समन्ताद्बलिनां वरः ।
विमर्दन्सुमहातेजा नृसिंह इव दर्पितः ॥ ३-१४८-५७ (२१५४३)
ततः संन्यपतंस्तत्रसुबहूनि महान्ति च ।

रुरुवारणयूथानि महिषाश्च जलाश्रयाः ॥ ३-१४८-५८ (२१५४४)
ग्प्रविवेश ततः क्षिप्रं तानपास्य महाबलः ।
वनं पाण्डुसुतः श्रीमान्नादेनापूरयन्दिशः' ॥ ३-१४८-५९ (२१५४५)
तेन शब्देन चैवाथ भीमसेनरवेण च ।
वनान्तरगताश्चापि वित्रेसुर्मृहपक्षिः ॥ ३-१४८-६० (२१५४६)
तस्मिननथ प्रवृत्ते तु संक्षोभे मृगपक्षिणाम् ।
जलार्द्रपक्षा विहगाः समुत्पेतुः सहस्रशः ॥ ३-१४८-६१ (२१५४७)
तानौदकान्पक्षिगणान्निरीक्ष्य भरतर्षभः ।
तानेवानुसरन्रम्यं ददर्श सुमहत्सरः ॥ ३-१४८-६२ (२१५४८)
काञ्चनैः कदलीषण्डैर्मन्दमारुतकम्पितैः ।
वीज्यमानमिवाक्षोभ्यं तीरात्तीरविसर्पिभिः ॥ ३-१४८-६३ (२१५४९)
तत्सरोऽथावतीर्याशु प्रभूतनलिनोत्पलम् ।
महागज इवोद्दामश्चिक्रीड बलवद्बली ॥ ३-१४८-६४ (२१५५०)
विक्रीड्यतस्मिन्नुचिरमुत्ततारामितद्युतिः ।
ग्क्षोभयन्सलिलं भीमः प्रभिन्न इववारणः' ॥ ३-१४८-६५ (२१५५१)
ततो जगाहे वेगेन तद्वनं बहुपादपम् ।
दध्मौ च शङ्खं स्वनवत्सर्वप्राणेन पाण्डवः ।
श्आस्फोटयच्च बलवान्भीमः संनादयन्दिशः ॥ह ३-१४८-६६ (२१५५२)
तस्य शङ्खस्य शब्दन भीमसेनरवेण च ।
बाहुशब्दन चोग्रेण नदन्तीव गिरेर्गुहाः ॥ ३-१४८-६७ (२१५५३)
तं वज्रनिष्पेषसममास्फोटितमहारवम् ।
श्रुत्वा शैलगुहासुप्तैः सिंहैर्मुक्तो महास्वनः ॥ ३-१४८-६८ (२१५५४)
सिंहनादभयत्रस्तैः कुञ्जरैरपि भारत ।
मुक्तो विरावः सुमहान्पर्वतो येन पूरितः ॥ ३-१४८-६९ (२१५५५)
तं तु नादं ततः श्रुत्वा सुप्तो वानरपुङ्गवः। ३-१४८-७० (२१५५६)
श्भ्रातरं भीमसेनं तु विज्ञाय हनुमान्कपिः ॥ ३-१४८-७० (२१५५७)
दिवंगमं रुरोधाथ मार्गं भीमस्य कारणात् ।
अनेन हि पथा मा वै गच्छेदिति विचार्य सः ॥ ३-१४८-७१ (२१५५८)
आस्त एकायने मार्गे कदलीषण्डमण्डिते ।
भ्रातुर्भीमस्य रक्षार्थं तं मार्गमवरुध्य वै ॥ ३-१४८-७२ (२१५५९)
माऽत्र प्राप्स्यति शापं वा धर्षणां वेति पाण्डवः ।
कदलीषण्डमध्यस्थो ह्येवं संचिन्त्य वानरः ॥ ३-१४८-७३ (२१५६०)
प्राजृम्भत महाकायो हनूमान्नाम वानरः ।
कदलीषण्डमध्यस्थो निद्रावशगतस्तदा ॥ ३-१४८-७४ (२१५६१)
ग्तेन शब्देन महता व्यबुध्यत महाकपिः'।
जृम्भमाणः सुविपुलं शक्रध्वजमिवोच्छ्रितम् ।

आस्फोटयच्चलाङ्गूलमिन्द्राशनिसमस्वनम् ॥ ३-१४८-७५ (२१५६२)
तस्य लाङ्गूलनिनदं पर्वतः सुगुहामुखैः ।
उद्गारमिव गौर्नर्दन्नुत्ससर्ज समन्ततः ॥ ३-१४८-७६ (२१५६३)
लाङ्गूलास्फोटशब्दाच्च चलितः स महागिरिः ।
विघूर्णमानशिखरः समन्तात्पर्यशीर्यत ॥ ३-१४८-७७ (२१५६४)
स लाङ्गूलरवस्तस्य मत्तवारणनिस्वनम् ।
अन्तर्धायविचित्रेषु चचार गिरिसानुषु ॥ ३-१४८-७८ (२१५६५)
स भीमसेनस्तच्छ्रुत्वा संप्रहृष्टतनूरुहः ।
शब्दप्रभवमन्विच्छंश्चचार कदलीवनम् ॥ ३-१४८-७९ (२१५६६)
कदलीवनमध्यस्थमथ पीने शिलातले ।
ददर्श सुमहाबाहुर्वानराधिपतिं तदा ॥ ३-१४८-८० (२१५६७)
विद्युत्संपातदुष्प्रेक्षं विद्युत्संपातपिङ्गलम् ।
विद्युत्संपातनिनदं विद्युत्संपातचञ्चलम् ॥ ३-१४८-८१ (२१५६८)
बाहुस्वस्तिकविन्यस्तपीनवृत्तशिरोधरम् ।
स्कन्धभूयिष्ठकायत्वात्तनुमध्यकटीतटम् ॥ ३-१४८-८२ (२१५६९)
किंचिच्चाभुग्नशीर्षेण दीर्घरोमाञ्चितेन च ।
लाङ्गूलेनोर्ध्वगतिना ध्वजेनेव विराजितम् ॥ ३-१४८-८३ (२१५७०)
ह्रस्वौष्ठं ताम्रजिह्वास्यं रक्तकर्णं चलद्भ्रुवम् ।
अपश्यद्वदनं तस्य रश्मिवन्तमिवोडुपम् ॥ ३-१४८-८४ (२१५७१)
वदनाभ्यन्तरगतैः शुक्लैर्दन्तैरलंकृतम् ।
केसरोत्करसंमिश्रमशोकानामिवोत्करम् ॥ ३-१४८-८५ (२१५७२)
हिरण्मयीनां मध्यस्थं कदलीनां महाद्युतिम् ।
दीप्यमानेन वपुषा स्वर्चिष्मन्तमिवानलम् ।
निरीक्षन्तमपत्रस्तं लोचनैर्मधुपिङ्गलैः ॥ ३-१४८-८६ (२१५७३)
तं वानरवरं धीमानतिकायं महाबलम् ।
स्वर्गपन्थानमावृत्य हिमवन्तमिव स्तितम् ॥ ३-१४८-८७ (२१५७४)
दृष्ट्वा चैनं महाबाहुरेकं तस्मिन्महावने ।
अथोपसृत्यतरसा भीमो भीमपराक्रमः ॥ ३-१४८-८८ (२१५७५)
सिंहनादं चकारोग्रं वज्राशनिसमं बली ।
तेन शब्देन भीमस्य वित्रेसुर्मृगपक्षिणः ॥ ३-१४८-८९ (२१५७६)
हनूमांश्च महासत्व ईषदुन्मील्य लोचने ।
दृष्ट्वा तमथ सावज्ञं लोचनैर्मधुपिङ्गलैः ॥ ३-१४८-९० (२१५७७)
ग्ततः पवनजः श्रीमानन्तिकस्थं महौजसम्'।
स्मितेन चैनमासाद्यहनूमानिदमब्रवीत् ॥ ३-१४८-९१ (२१५७८)
किमर्थं सरुजस्तेऽहं सुखसुप्तः प्रबोधितः ।
ननु नाम त्वया कार्या दया भूतेषु जानता ॥ ३-१४८-९२ (२१५७९)

वयं धर्मं न जानीमस्तिर्यग्योनिमुपाश्रिताः ।
नरास्तु बुद्धिसंपन्ना दयां कुर्वन्ति जन्तुषु ॥ ३-१४८-९३ (२१५८०)
क्रूरेषु कर्मसु कथं देहवाक्चित्तदूषिषु ।
धर्मघातिषु सज्जन्ते बुद्दिमन्तो भवद्विधाः ॥ ३-१४८-९४ (२१५८१)
न त्वं धर्मं विजानासि वृद्धा नोपासितास्त्वया ।
अल्पबुद्धितया बाल्यादुत्सादयसि यन्मृगान् ॥ ३-१४८-९५ (२१५८२)
ब्रूहि कस्त्वं किमर्थं वा किमिदं वनमागतः ।
वर्जितं मानुषैर्भावैस्तथैव पुरुषैरपि ॥ ३-१४८-९६ (२१५८३)
क्व च त्वयाऽद्यगन्तव्यं प्रब्रूहि पुरुषर्षभ ।
अतः परमगम्योऽयं पर्वतः सुदुरारुहः ॥ ३-१४८-९७ (२१५८४)
विना सिद्धगतिं वीर गतिरत्र न विद्यते ।
श्देवलोकस्य मार्गोऽयमगम्यो मानुषैः सदाघ ॥ ३-१४८-९८ (२१५८५)
कारुण्यात्त्वामहं वीर वारयामि निबोध मे ।
नातः परं त्वया शक्यं गन्तुमाश्वसिहि प्रभो ॥ ३-१४८-९९ (२१५८६)
स्वागतं सर्वथैवेह तवाद्य मनुजर्षभ ।
इमान्यमृतकल्पानि मूलानि च फलानि च ॥ ३-१४८-१०० (२१५८७)
भक्षयित्वा निवर्तस्व मा वृथा प्राप्स्यसे वधम् ।
ग्राह्यं यदि वचो मह्यं हितं मनुजपुङ्गव ॥ ३-१४८-१०१ (२१५८८)

इति श्रीमन्महाभारेत अरण्यपर्वणि तीर्थयात्रापर्वणि
अष्टचत्वारिंशदधिकशततमोऽध्यायः ॥ २४८ ॥
Mahabharata - Vana Parva - Chapter Footnotes

३-१४८-३ पुष्पविकचैर्विकसितकुसुमैः ॥
३-१४८-६ पूर्वोत्तरे ऐशानकोणे ॥
३-१४८-८ सौगन्धिकं पद्मजातिभेदः ॥
३-१४८-९ संस्थानमाकारः ॥
३-१४८-१० हरेः आहर ।इदमे तज्जातीयम् ॥
३-१४८-१५ प्रभिन्नो मत्तः ॥
३-१४८-१६ मातरिश्वनो वायोः ॥
३-१४८-२३ पितुर्यथा पुत्रस्पर्शः शीतस्तादृक् स्पर्शवता वायुनेत्यर्थः ॥
३-१४८-२४ पित्रा वायुना ॥
३-१४८-२६ धातुविच्छेदैर्धातुभेदैः ।अङ्गुलैरिव
विषमच्छदैः सप्तपर्णादिभिर्नानाधातुरञ्जितपत्रैः। आञ्जनेति
कृष्णधातुग्रहणम्। पीतकृष्णश्वेतधातुभिरित्यर्थः ॥
३-१४८-२७ पयोधरैर्मेघैः ॥

३-१४८-२८ दरी बिलगृहम् । कदरं महाप्रपातः ॥
३-१४८-२९ विषाणाग्रैर्दन्ताग्रैः । शिलाः समपाषाणाः
शयनासनयोग्याः। उपलास्तदन्ये ॥
३-१४८-३० शष्पं बालतृणम् । कबलो ग्रासस्तद्युक्तैः ॥
३-१४८-३३ वारणानामपि वारणः निवारकः संग्रामादौ ॥
३-१४८-३४ विचेष्टितैर्व्यावृत्ताभिः निश्चेष्टाभिरेकाग्राभिरित्यर्थः ॥
३-१४८-३५ रूपस्य सौन्दर्यस्य ॥
३-१४८-४१ निर्घात उत्पातः । पर्वसु उत्सवेषु ॥
३-१४८-४२ पोथयन् मर्दयन् ॥
३-१४८-४३ लता भूचरा । बल्ली वृक्षचरेति भेदः ॥
३-१४८-४९ रथाङ्गसाह्वाः चक्रसमाननामानश्चक्रवाका इतियावत्
। दात्यूहः मयूरश्चातको वा ॥
३-१४८-५० करेणुशरेण हस्तिनीकृतेवोत्तेजनेन पीजिताः । शरस्तूतेजने
वाणे इतिभेदिनी ॥
३-१४८-५६ आस्त्रावी मत्तः ॥
३-१४८-६४ नलिनोत्पलं पद्मपुष्पम् ॥
३-१४८-६८ आस्फोटितं बाहुधातः ॥
३-१४८-७१ दिवंरामं मार्गं स्वर्गमार्गम् ॥
३-१४८-७२ एकायने अतिसंकुचिते ॥
३-१४८-७६ उद्गारं रप्रतिशब्दं गौरिव उत्ससर्ज ॥
३-१४८-८२ बाहोः स्वस्तिकं चतुरश्रं मूलं अंस इति यावत् तत्र
न्यस्तकधरमित्यर्थः । तत्र हेतुः स्कन्धेति। विपुलांसत्वादित्यर्थः ॥
३-१४८-८४ उडुपं चन्द्रम् ॥
३-१४८-८५ अशोकानामशोकपुष्पाणाम् ॥
३-१४८-९२ सरुजः सपीडः । ते स्वया ॥
३-१४८-९९ आश्वसिहि विश्वासं कुरु ॥
३-१४८-१०१ मह्यं मम ॥

---

वन-अध्यय१४९
॥ श्रीः ॥
३.१४९. अध्यायः १४९

Mahabharata - Vana Parva - Chapter Topics
भीमेन स्वमार्गादपसरणं चोदितेन हनुमता तंप्रति अपसरणे
स्वस्याशक्तिकथनपूर्वकं स्वबालोद्धरणेन गमनचोदना ॥ १ ॥
प्रयतनेऽपि पुच्छचालनेऽप्यसमर्थेन भीमेन तंप्रति

तत्प्रभवादिप्रश्नः ॥ २ ॥
हनुमता स्वप्रभवादिकथनपूर्वकं रामकथकथनारम्भः ॥ ३ ॥

Mahabharata - Vana Parva - Chapter Text

३-१४९-० (२१५८९)
वैशंपायन उवाच। ३-१४९-०क्ष् (२२६२)
एतच्छ्रुत्वा वचस्तस्य वानरेन्द्रस्य धीमतः ।
भीमसेनस्तदा वीरः प्रोवाचामितविक्रमः ॥ ३-१४९-१ (२१५९०)
भीम उवाच। ३-१४९-२क्ष् (२२६३)
को भवान्किंनिमित्तं वा वानरं वपुराश्रितः ।
ब्राह्मणानन्तरो वर्णः क्षत्रियस्त्वाऽनुपृच्छति ॥ ३-१४९-२ (२१५९१)
कौरवः सोमवंशीयः कुन्त्या गर्भेण धारितः ।
पाण्डवो वायुतनयो भीमसेन इति श्रुतः ॥ ३-१४९-३ (२१५९२)
स वाक्यं भीमसेनस्य स्मितेन प्रतिगृह्य तत् ।
हनुमान्वायुतनयो वायुपुत्रमभाषत ॥ ३-१४९-४ (२१५९३)
वानरोऽहं न ते मार्गं प्रदास्यामि यथोप्सितम् ।
साधु गच्छ निवर्तस्व मा त्वं प्राप्स्यसि वैशसम् ॥ ३-१४९-५ (२१५९४)
भीमसेन उवाच। ३-१४९-६क्ष् (२२६४)
वैशसं वाऽस्तु यद्वान्यन्न त्वां रपृच्चामि वानर ।
प्रयच्छ मार्गमुत्तिष्ठ मा मत्तः प्राप्स्यसे व्यथाम् ॥ ३-१४९-६ (२१५९५)
हनूमानुवाच। ३-१४९-७क्ष् (२२६५)
नास्ति शक्तिर्ममोत्थातुं जरया क्लेशितो ह्यहम् ।
यद्यवश्यं प्रयातव्यं लङ्घयित्वा प्रयाहि माम् ॥ ३-१४९-७ (२१५९६)
भीम उवाच। ३-१४९-८क्ष् (२२६६)
निर्गुणः परमात्मा तु देहं ते व्याप्य तिष्ठते ।
तमहं ज्ञानविज्ञेयं नावमन्ये न लङ्घये ॥ ३-१४९-८ (२१५९७)
यद्यागमैर्न विद्यां च तमहं भूतभावनम् ।
क्रमेयं त्वां गिरिं चैव हनीमानिव सागरम् ॥ ३-१४९-९ (२१५९८)
हनूमानुवाच। ३-१४९-१०क्ष् (२२६७)
क एष हनुमान्नाम सागरो येन लङ्घितः ।
पृच्चामि त्वां नरश्रेष्ठ कथ्यतां यदि शक्यते ॥ ३-१४९-१० (२१५९९)
भीम उवाच। ३-१४९-११क्ष् (२२६८)
भ्राता मम गुणश्लाघ्यो बुद्धिसत्वबलान्वितः ।
रामायणेऽतिविख्यातः श्रीमान्वानरपुङ्गवः ॥ ३-१४९-११ (२१६००)
रामपत्नीकृते येन शतयोजनविस्तृतः ।

सागरः प्लवगेन्द्रेण क्रमेणैकेन लङ्घितः ॥ ३-१४९-१२ (२१६०१)
स मे भ्राता महावीर्यस्तुल्योऽहं तस् तेजसा ।
बले पराक्रमे युद्धे शक्तोऽहं तव निग्रहे ॥ ३-१४९-१३ (२१६०२)
ग्इमं देशमनुप्राप्तः कारणेनास्मि केनचित्।'
उत्तिष्ठ देहि मे मार्गं पश्य मे चाद्य पौरुषम् ।
मच्छासनमकुर्वाणं त्वां वा नेष्ये यमक्षयम् ॥ ३-१४९-१४ (२१६०३)
वैशंपायन उवाच ३-१४९-१५क्ष् (२२६९)
विज्ञाय तं बलोन्मत्तं बाहुवीर्येण दर्पितम् ।
हृदयेनावहस्यैनं हनूमान्वाक्यमब्रवीत् ॥ ३-१४९-१५ (२१६०४)
प्रसीद नास्ति मे शक्तिरुत्थातुं जरयाऽनघ ।
ममानुकम्पया त्वेतत्पुच्छमुत्सार्य गम्यताम् ॥ ३-१४९-१६ (२१६०५)
वैशंपायन उवाच। ३-१४९-१७क्ष् (२२७०)
श्एवमुक्ते हनुमता हीनवीर्यपराक्रमम् ।
मनसाऽचिनतयद्भीमः स्वबाहुबलदर्पितः ॥ ३-१४९-१७ (२१६०६)
पुच्छे प्रगृह्य तरसा हीनवीर्यपराक्रमम् ।
सालोक्यमन्तकस्यैनं नयाम्यद्येह वानरम् ॥ ३-१४९-१८ (२१६०७)
सावज्ञमथ वामेन स्मयञ्जग्राह पाणिना ।
न चाशकच्चालयितुं भीमः पुच्छं महाकपेः ॥ ३-१४९-१९ (२१६०८)
उच्चिक्षेप पुनर्दोर्भ्यामिन्द्रायुधमिवोच्छ्रितम् ।
नोद्धर्तुमशकद्भीमो दोर्भ्यामपि महाबलः ॥ ३-१४९-२० (२१६०९)
उत्क्षिप्तभ्रूर्विवृत्ताक्षः संहतभ्रुकुटीमुखः ।
स्विन्नगात्रोऽभवद्भीमो न चोद्धर्तुंशशाक तम् ॥ ३-१४९-२१ (२१६१०)
यत्नवानपि तु श्रीमाँल्लाङ्गूलोद्धरणे ततः ।
कपेः पार्श्वगतो भीमस्तस्थौ व्रीडडानताननः ॥ ३-१४९-२२ (२१६११)
प्रणिपत्य च कौन्तेयः प्राञ्जलिर्वाक्यमब्रवीत् ।
प्रसीद कपिशार्दूल दुरुक्तं क्षम्यतां मम ॥ ३-१४९-२३ (२१६१२)
सिद्धो वा यदि वा देवो गन्धर्वो वाऽथ गुह्यकः ।
पृष्टः सन्को मया ब्रूहि कस्त्वं वानररूपधृत् ॥ ३-१४९-२४ (२१६१३)
न चेद्गुह्यं महाबाहो श्रोतव्यं चेद्भवेन्मम ।
शिष्यवत्त्वां तु पृच्छामि उपपन्नोऽस्मि तेऽनघ ॥ ३-१४९-२५ (२१६१४)
हनूमानुवाच। ३-१४९-२६क्ष् (२२७१)
यत्ते मम परिज्ञाने कौतूहलमरिंदम ।
तत्सर्वमखिलेन त्वं शृणु पाण्डवनन्दन ॥ ३-१४९-२६ (२१६१५)
अहं केसरिणः क्षेत्रे वायुना जगदायुषा ।
जातः कमलपत्राक्ष हनूमान्नाम वानरः ॥ ३-१४९-२७ (२१६१६)
सूर्यपुत्रं च सुग्रीवं शक्रपुत्रं च वालिनम् ।

सर्ववानरराजानौ सर्ववानरयूथपाः ॥ ३-१४९-२८ (२१६१७)
उपतस्थुर्महावीर्या मम चामित्रकर्शन ।
सुग्रीवेणाभवत्प्रीतिरनिलस्याग्निना यथा ॥ ३-१४९-२९ (२१६१८)
निकृतः स ततो भ्रात्रा कस्मिंश्चित्कारणान्तरे ।
ऋश्यमूके मया सार्धं सुग्रीवो न्यवसच्चिरम् ॥ ३-१४९-३० (२१६१९)
अथ दाशरथिर्वीरो रामो नाम महाबलः ।
विष्णुर्मानुषरूपेण चचार वसुधातलम् ॥ ३-१४९-३१ (२१६२०)
स पितुः प्रियमन्विच्छन्सहभार्यः सहानुजः ।
सधनुर्धन्विनांश्रेष्ठो दण्डकारण्यमाश्रितः ॥ ३-१४९-३२ (२१६२१)
तस्य भार्या जनस्थानाच्छलेनापहृता बलात् ।
राक्षसेन्द्रेण बलिना रावणेन दुरात्मना ॥ ३-१४९-३३ (२१६२२)
सुवर्णरत्नचित्रेण मृगरूपेण रक्षसा ।
वञ्चयित्वा नरव्याघ्रं मारीचेन तदाऽनघ ॥ ३-१४९-३४ (२१६२३)

इति श्रीमन्महाभारते अरण्यपर्वणि तीर्थयात्रापर्वणि
एकोनपञ्चाशदधिकशततमोऽध्यायः ॥ १४९ ॥

Mahabharata - Vana Parva - Chapter Footnotes

३-१४९-५ वैशसं विरोधम् ॥
३-१४९-९ भूतभावनं भूतानां वियदादीनां जरायुजादीनां च भावनं रचनं यस्मात्तम् ॥
३-१४९-१२ क्रमेण पादविक्षेपेन ॥
३-१४९-१७ एवमुक्ते सति ।तमित्यध्याहारः।तं हीनवीर्यपराक्रमं मनसाऽविन्तयन्मेने ॥
३-१४९-२९ मम च सुग्रीवेण प्रीतिरभवत् ॥
३-१४९-३० निकृतः निरस्तः ॥

---

वन-अध्यय१५०
॥ श्रीः ॥
३.१५०. अध्यायः १५०

Mahabharata - Vana Parva - Chapter Topics

हनुमता भीमंप्रति समग्ररामकथाकथनम् ॥ १ ॥

Mahabharata - Vana Parva - Chapter Text

३-१५०-० (२१६२४)

हनूमानुवाच। ३-१५०-०क्ष् (२२७२)
हृतदारः सह भ्रात्रा पत्नीं मार्गन्स राघवः ।
दृष्टवाञ्शैलशिखरे सुग्रीवं वानरर्षभम् ॥ ३-१५०-१ (२१६२५)
तेन तस्याभवत्सख्यं राघवस्य महात्मनः ।
स हत्वा वालिनं राज्ये सुग्रीवं प्रत्यपादयत् ॥ ३-१५०-२ (२१६२६)
स राज्यं प्राप्य सुग्रीवः सीतायाः परिमार्गणे ।
वानरान्प्रेषयामास शतशोऽथ सहस्रशः ॥ ३-१५०-३ (२१६२७)
ततो वानरकोटीभिः सहितोऽहं नरर्षभ ।
सीतां मार्गन्महाबाहो प्रस्थितो दक्षिणां दिशम् ॥ ३-१५०-४ (२१६२८)
ततः प्रवृत्तिः सीताया गृध्रेण सुमहात्मना ।
संपातिना समाख्याता रावणस्य निवेशने ॥ ३-१५०-५ (२१६२९)
ततोऽहं कार्यसिद्ध्यर्थं रामस्याक्लिष्टकर्मणः ।
शतयोजनविस्तारमर्णवं सहसा प्लुतः ॥ ३-१५०-६ (२१६३०)
अहं स्ववीर्यादुत्तीर्य सागरं मकरालयम् ।
सुतां जनकराजस्य सीतां सुररसुतोपमाम् ॥ ३-१५०-७ (२१६३१)
दृष्टवान्भरतश्रेष्ठ रावणस्य निवेशने ।
समेत्य तामहं देवीं वैदेहीं राघवप्रियाम् ॥ ३-१५०-८ (२१६३२)
दग्ध्वा लङ्कामशेषेण सादृप्राकारतोरणाम् ।
प्रत्यागतश्चास्य पुनर्नाम तत्रप्रकाश्य वै ॥ ३-१५०-९ (२१६३३)
मद्वाक्यं चावधार्याशु रामो राजीवलोचनः ।
अबद्धपूर्वमन्यैश्च बद्ध्वा सेतुं महोदधौ ।
वृतो वानरकोटीभिः समुत्तीर्णो महार्णवम् ॥ ३-१५०-१० (२१६३४)
ततो ररामेण वीर्येण हत्वा तान्सर्वराक्षसान् ।
रणे तु राक्षसगणं रावणं लोकरावणम् ॥ ३-१५०-११ (२१६३५)
निशाचरेनद्रं हत्वा तु सभ्रातृसुतबान्धवम् ।
राज्येऽभिषिच्य लङ्कायां राक्षसेन्द्रं विभीषणम् ॥ ३-१५०-१२ (२१६३६)
धार्मिकं भक्तिमन्तं च भक्तानुगतवत्सलः ।
प्रत्याहृत्य ततः सीतां नष्टां वेदश्रुतिं यथा ॥ ३-१५०-१३ (२१६३७)
तयैव सहितः साध्व्या पत्न्या रामो महायशाः ।
गत्वा ततोऽतित्वरितः स्वां पुरीं रघुनन्दनः ।
अध्यावसत्ततोऽयोध्यामयोध्यां द्विषतां प्रभुः ॥ ३-१५०-१४ (२१६३८)
ततः प्रतिष्ठितो राज्ये रामो नृपतिसत्तमः ।
वरं मया याचितोऽसौ रामो राजीवलोचनः ॥ ३-१५०-१५ (२१६३९)
यावद्रामकथेयं ते भवेल्लोकेषु शत्रुहन् ।
तावज्जीवेयमित्येवं तथाऽस्त्विति च सोब्रवीत् ॥ ३-१५०-१६ (२१६४०)
सीताप्रसादाच्च सदा मामिहस्थमरिंदम ।

उपतिष्ठन्ति दिव्या हि भोगा भीम यथेप्सिताः ॥ ३-१५०-१७ (२१६४१)
दशवर्षसहस्राणि दशवर्षशतानि च ।
राज्यं कारितवान्रामस्ततः स्वभवनं गतः ॥ ३-१५०-१८ (२१६४२)
तदिहाप्सरसस्तात गन्धर्वाश्च सदाऽनघ ।
तस्य वीरस्य चरितं गायन्त्यो रमयन्ति माम् ॥ ३-१५०-१९ (२१६४३)
अयं च मार्गो मर्त्यानामगम्यः कुरुनन्दन ।
ततोऽहं रुद्धवान्मार्गं तवेमं देवसेवितम् ॥ ३-१५०-२० (२१६४४)
ग्त्वामनेन पथा यान्तं यक्षो वा राक्षसोपि वा'।
धर्षयेद्वा शपेद्वाऽपि मा कश्चिदिति भारत ॥ ३-१५०-२१ (२१६४५)
दिव्यो देवपथो ह्येष नात्र गच्छन्ति मानुषाः ।
यदर्थमागतश्चासि अत एव सरश्च तत् ॥ ३-१५०-२२ (२१६४६)

इति श्रीमन्महाभारते अरण्यपर्वणि तीर्थयात्रापर्वणि
पञ्चाशदधिकशततमोऽध्यायः ॥ १५० ॥

Mahabharata - Vana Parva - Chapter Footnotes

३-१५०-८ समेत्य विदित्वा संभाषणादिना निश्चित्येत्यर्थः ॥
३-१५०-९ अस्य रामस्य ।तत्र लङ्कायाम् ॥
३-१५०-१० अवधार्य निश्चित्य ॥
३-१५०-११ लोकरावणं लोकपीडाकरम् ॥
३-१५०-१४ अयोध्यां योद्धुमशक्याम् ॥
३-१५०-१८ कारितवान् कृतवान् ।स्वार्थे णिच्।स्वभवनं वैकुण्ठम् ॥

---

वन-अध्यय१५१
॥ श्रीः ॥
३.१५१. अध्यायः १५१

Mahabharata - Vana Parva - Chapter Topics

भीमेन जलधिलङ्घनकलिकपृथुरूपप्रदर्शनं प्रार्थितेन हनुमता
तंप्रति एतत्कालिकैस्तात्कालिकरूपस्य दुर्निरीक्षताकथनपूर्वकं
कृतादियुगधर्मप्रतिपादनम् ॥ १ ॥

Mahabharata - Vana Parva - Chapter Text

३-१५१-० (२१६४७)
वैशंपायन उवाच। ३-१५१-०क्ष् (२२७३)
एवमुक्तो महाबाहुर्भीमसेनः प्रतापवान् ।

प्रणिपत्य ततः प्रीत्या भ्रातरं हृष्टमानसः ॥ ३-१५१-१ (२१६४८)
उवाच श्लक्ष्णया वाचा हनूमन्तं कपीश्वरम् ।
मत्तो धन्यतरो नास्ति यदार्यं दृष्टवानहम् ॥ ३-१५१-२ (२१६४९)
अनुग्रहो मे सुमहांस्तृप्तिश्च तव दर्शनात् ।
एतत्तु कृतमिच्छामि त्वयाऽऽर्येण प्रियं मम ॥ ३-१५१-३ (२१६५०)
यत्त्वेतदासीत्प्लवतः सागरं मकरालयम् ।
रूपमप्रतिमं वीर तदिच्छामि नीरीक्षितुम् ॥ ३-१५१-४ (२१६५१)
एवं तुष्टो मभिष्यामि श्रद्धास्यामि च ते वचः ।
एवमुक्तः स तेजस्वी प्रहस्य हरिरब्रवीत् ॥ ३-१५१-५ (२१६५२)
न तच्छक्यं त्वया द्रष्टुं रूपं नान्येन केनचित् ।
कालावस्था तदा ह्यन्या वर्तते सा न सांप्रतम् ।
ग्ततोऽद्य दुष्करं द्रष्टुं मम रूपं नरोत्तम' ॥ ३-१५१-६ (२१६५३)
अन्यः कृतयुगे कालश्चेतायां द्वापरे परः ।
अयं प्रध्वंसनः कालो नाद्य तद्रूपमस्ति मे ॥ ३-१५१-७ (२१६५४)
भूमिर्नद्यो नगाः शैलाः सिद्धा देवा महर्षयः ।
कालं समनुवर्तन्ते यथा भावा युगेयुगे ॥ ३-१५१-८ (२१६५५)
ग्कालंकालं समासाद्य नराणां नरपुङ्गव'।
बलवर्ष्मप्रभावा हि प्रहीयन्त्युद्भवन्ति च ॥ ३-१५१-९ (२१६५६)
तदलं बत तद्रूपं द्रष्टुं कुरुकुलोद्वह ।
युगं समनुवर्तामि कालो हि दुरतिक्रमः ॥ ३-१५१-१० (२१६५७)
भीम उवाच। ३-१५१-११क्ष् (२२७४)
युगसङ्ख्यां समाचक्ष्व आचारं च युगेयुगे ।
धर्मकामार्थभावांश्च कर्मवीर्ये भवाभवौ ॥ ३-१५१-११ (२१६५८)
हनूमानुवाच। ३-१५१-२क्ष् (२२७५)
कृतं नाम युगं श्रेष्ठं यत्रधर्मः सनातनः ।
कृतमेव न कर्तव्यं तस्मिन्काले युगोत्तमे ॥ ३-१५१-१२ (२१६५९)
न तत्र धर्माः सीदन्ति क्षीयन्ते न च वै प्रजाः ।
ततः कृतयुगं नाम कालेन गुणतां गतम् ॥ ३-१५१-१३ (२१६६०)
देवदानवगन्धर्वयक्षराक्षसपन्नगाः ।
नासन्कृतयुगे तात तदा न क्रयविक्रयः ॥ ३-१५१-१४ (२१६६१)
न सामऋग्यजुर्वर्णाः क्रिया नासीच्च मानवी ।
अभिध्याय फलं तत्र धर्मः संन्यास एव च ॥ ३-१५१-१५ (२१६६२)
न तस्मिन्युगसंसर्गे व्याधयो नेन्द्रियक्षयः ।
नासूया नापि रुदितं न दर्पो नापि वैकृतम् ॥ ३-१५१-१६ (२१६६३)
न विग्रहः कुतस्तन्द्री न द्वेषो न च पैशुनम् ।
न भयं नापि संतापो न चेर्ष्या न च मत्सरः ॥ ३-१५१-१७ (२१६६४)

ततः परमकं ब्रह्म सा गतिर्योगिनां परा ।
आत्मा च सर्वभूतानां शुक्लो नारायणस्तदा ॥ ३-१५१-१८ (२१६६५)
ब्राह्मणआः क्षत्रिया वैश्याः शूद्राश्च कृतलक्षणाः ।
कृते युगे समभवन्स्वकर्मनिरताः प्रजाः ॥ ३-१५१-१९ (२१६६६)
समाश्रयं समाचारं समज्ञानं च केवलम् ।
तदा हि समकर्माणो वर्णा धर्मानवाप्नुवन् ॥ ३-१५१-२० (२१६६७)
एकदेवसदायुक्ता एकमन्त्रविधिक्रियाः ।
पृथग्धर्मास्त्वेकवेदा धर्ममेकमनुव्रताः ॥ ३-१५१-२१ (२१६६८)
चातुराश्रम्ययुक्तेन कर्मणा कालयोगिना ।
अकामफलसंयोगात्प्राप्नुवन्ति परां गतिम् ॥ ३-१५१-२२ (२१६६९)
आत्मयोगसमायुक्तो धर्मोऽयं कृतलक्षणः ।
कृते युगे चतुष्पादश्चातुर्वर्ण्यस्य शाश्वतः ॥ ३-१५१-२३ (२१६७०)
ग्कामः कामयमानेषु ब्राह्मणेषु तिरोहितः'।
एतत्कृतयुगं नाम त्रैगुण्यपरिवर्जितम् ॥ ३-१५१-२४ (२१६७१)
त्रेतामपि निबोध त्वं यस्मन्सत्रं प्रवर्तते ।
पादेन ह्रसते धर्मो रक्ततां याति चाच्युतः ॥ ३-१५१-२५ (२१६७२)
सत्यप्रवृत्ताश्च नराः क्रिया धर्मपरायणाः ।
ततो यज्ञाः प्रवर्तन्ते धर्माश्चविविधाः क्रियाः ॥ ३-१५१-२६ (२१६७३)
त्रेतायां भावसंकल्पाः क्रियादानफलोपगाः ।
प्रचलन्ति न वै धर्मात्तपोदानपरायणाः ।
स्वधर्मस्थाः क्रियावन्तो नरास्त्रेतायुगेऽभवन् ॥ ३-१५१-२७ (२१६७४)
द्वापरे च युगे धर्मो द्विभागो नः प्रवर्तते ।
विष्णुर्वै पीततां याति चतुर्धा वेद एव च ॥ ३-१५१-२८ (२१६७५)
ततोऽन्ये च चतुर्वेदास्त्रिवेदाश्च तथा परे ।
द्विवेदाश्चैकवेदाश्चाप्यनृचश्च तथा परे ॥ ३-१५१-२९ (२१६७६)
एवं शास्त्रेषु भिननेषु बहुधा नीयते क्रिया ।
तपोदानप्रवृत्ता च राजसी भवति प्रजा ॥ ३-१५१-३० (२१६७७)
एकवेदस्य चाज्ञानाद्वेदास्ते बहवः कृताः ।
सत्यस्य चेह विभ्रंशात्सत्ये कश्चिदवस्थितः ॥ ३-१५१-३१ (२१६७८)
सत्यात्प्रच्यवमानानां व्याघयो बहवोऽभवन् ।
कामाश्चोपद्रवाश्चैव तदा वै दैवकारिताः ॥ ३-१५१-३२ (२१६७९)
यैरर्द्यभानाः सुभृशं तपस्तप्यन्ति मानवाः ।
कामकामाः स्वर्गकामा यज्ञांस्तन्वन्ति चापरे ॥ ३-१५१-३३ (२१६८०)
एवं द्वापरमासाद्य प्रजाः क्षीयन्त्यधर्मतः ।
पादेनैकेन कौन्तेय धर्मः कलियुगे स्थितः ॥ ३-१५१-३४ (२१६८१)
तामसं युगमासाद्य कृष्णो भवति केशवः ।

वेदाचाराः प्रशाम्यन्ति धर्मयज्ञक्रियास्तथा ॥ ३-१५१-३५ (२१६८२)
ईतयो व्याधयस्तन्द्री दोषाः क्रोधादयस्तथा ।
उपद्रवाः प्रवर्तन्ते आधयो व्याधयस्तथा ॥ ३-१५१-३६ (२१६८३)
युगेष्वावर्तमानेषु धर्मो व्यावर्तते पुनः ।
धर्मे व्यावर्तमाने तु लोको व्यावर्तते पुनः ॥ ३-१५१-३७ (२१६८४)
लोके क्षीणे क्षयं यानति भावा लोकप्रवर्तकाः ।
युगक्षयकृता धर्माः प्रार्थनानि विकुर्वते ॥ ३-१५१-३८ (२१६८५)
एतत्कलियुगं नाम अचिराद्यत्प्रवर्तते ।
युगानुवर्तनं त्वेतत्कुर्वन्ति चिरजीविनः ॥ ३-१५१-३९ (२१६८६)
यच्च ते मत्परिज्ञाने कौतूहलमरिंदम ।
अनर्थकेषु को भावः पुरुषस्य विजानतः ॥ ३-१५१-४० (२१६८७)
एतत्ते सर्वमाख्यातं यन्मां त्वं परिपृच्छसि ।
युगसङ्ख्यां महाबाहो स्वस्ति प्राप्नुहि गम्यताम् ॥ ३-१५१-४१ (२१६८८)

इति श्रीमन्महाभारते अरण्यपर्वणि तीर्तयात्रापर्वणि
एकपञ्चाशदधिकशततमोऽध्यायः ॥ १५१ ॥

Mahabharata - Vana Parva - Chapter Footnotes

३-१५१-३ एकं तु कृतमिच्छामीति ध ।पाठः ॥
३-१५१-५ हरिर्वानरः ॥
३-१५१-९ वर्ष्म शरीरम् ॥
३-१५१-११ भावान् तत्त्वानि ।कर्म शुभाशुभम्।वीर्यं
फलोदयपर्यन्तं शक्तिः।भवाभवावुत्पत्तिविनाशौ ऐश्वर्यानैश्वर्ये
वा ॥
३-१५१-१२ कृतमेव सर्वे कृतकृत्या एवेत्यर्थः ।ततएव हेतोः
कृतयुगं नाम ॥
३-१५१-१५ त्रयीधर्मस्य चित्तशुद्ध्यर्थत्वात्तस्याश्च
तदानीं स्वभावसिद्धत्वान्न सामादीन्यासन् ।मानवीक्रिया
कृष्याद्यारम्भरूपा।किंतु अभिध्याय फलं संकल्पादेव सर्वं
संपद्यत इत्यर्थः ॥
३-१५१-१६ वैकृतं कपटम् ॥
३-१५१-१७ विग्रहो वैरम् ।तन्द्री आलस्यम्।ईर्ष्या अक्षमा।मत्सरः
परोत्कर्षासहिष्णुत्वम् ॥
३-१५१-१८ ततोऽसूयादित्यागात् परमकं परमानन्दात्मकं ब्रह्म
प्राप्यत इति शेषः ।गतिः प्राप्यम्।श्वेतरक्तपीतकृष्णरूपाणि
क्रमेण कृतादिषु भवन्तीति कृते नारायणः शुक्ल इत्युक्तम् ॥

३-१५१-३३ यैः व्याधिभिः कामैश्च ॥
३-१५१-३५ तामसं तमोगुणप्रधानं कलिम् ॥
३-१५१-३६ ईतयः अतिवृष्ट्यादयः ॥
३-१५१-३७ व्यावर्तते नश्यति ॥
३-१५१-३८ भावाः धर्मज्ञानादयः ।प्रार्थनानि
विकुर्वते। अन्यत्प्रार्थ्यतेऽन्यत् जायते। पौष्टिकमपि कर्म
विधिलोपान्नाशकं भवतीति भावः ॥
३-१५१-३९ चिरजीविनो मादृशा अपि युगानुवर्तिनः कालानुसारिणो भवन्ति ॥
३-१५१-४० अनर्थकेषु निष्प्रयोजनेषु ।भावोऽभिनिवेशः ॥
३-१५१-४१ स्वस्ति कल्याणम् ॥

---

वन-अध्यय१५२
॥ श्रीः ॥
३.१५२. अध्यायः १५२

Mahabharata - Vana Parva - Chapter Topics
हनुमता भीमाय समुद्रतरणकालिकपृथुतरनिजरूपप्रदर्शनपूर्वकं
चतुर्वर्णधर्मनिरूपणम् ॥१ ॥

Mahabharata - Vana Parva - Chapter Text

३-१५२-० (२१६८९)
भीमसेन उवाच। ३-१५२-०क्ष् (२२७६)
पूर्वरूपमदृष्ट्वा ते न यास्यामि कथंचन ।
यदि तेऽहमनुग्राह्यो दर्शयात्मानमात्मना ॥ ३-१५२-१ (२१६९०)
वैशंपायन उवाच। ३-१५२-२क्ष् (२२७७)
एवमुक्तस्तु भीमेन स्मितं कृत्वा प्लवंगमः ।
तद्रूपं दर्शयामास यद्वै सागरलङ्घने ॥ ३-१५२-२ (२१६९१)
भ्रातुः प्रियमभीप्सन्वै चकार सुमहद्वपुः ।
ग्तद्रूपं यत्पुरा तस्य बभूवोदधिलङ्घने' ॥ ३-१५२-३ (२१६९२)
देहस्तस्य ततोऽतीव वर्धत्यायामविस्तरैः ।
सद्रुमं कदलीषण्डं छादयन्नमितद्युतिः ॥ ३-१५२-४ (२१६९३)
गिरिश्चोच्छ्रयमाक्रम्य तस्थौ तत्र च वानरः ।
समुच्छ्रितमहाकायो द्वितीय इव पर्वतः ॥ ३-१५२-५ (२१६९४)
ताम्रेक्षणस्तीक्ष्णदंष्ट्रो भृकुटीकृतलोचनः ।
दीर्घं लाङ्गूलमाविध्य दिशो व्याप्य स्थितः कपिः ॥ ३-१५२-६ (२१६९५)
तद्रूपं महदालक्ष्यभ्रातुः कौरवनन्दनः ।

विसिष्मिये तदा भीमो जहृषे च पुनः पुनः ॥ ३-१५२-७ (२१६९६)
तमर्कमिव तेजोभिः सौवर्णमिव पर्वतम् ।
प्रदीप्तमिव चाकाशं दृष्ट्वा भीमो न्यमीलयत् ॥ ३-१५२-८ (२१६९७)
आबभाषे च हनुमान्भीमसेनं स्मयन्निव ।
एतावदिह शक्तस्त्वं द्रष्टुं रूपं ममानघ ॥ ३-१५२-९ (२१६९८)
वर्धेऽहं चाप्यतो भूयो यावन्मे मनसेप्सितम् ।
भीम शत्रुषु चात्यर्थं वर्धते मूर्तिरोजसा ॥ ३-१५२-१० (२१६९९)
वैशंपायन उवाच। ३-१५२-११क्ष् (२२७८)
तदद्भुतं महारौद्रं विन्ध्यपर्वतसन्निभम् ।
दृष्ट्वा हनूमतो वर्ष्म संभ्रान्तः पवनात्मजः ॥ ३-१५२-११ (२१७००)
प्रत्युवाच ततो भीमः संप्रहृष्टतनूरुहः ।
कृताञ्जलिरदीनात्मा हनूमन्तमवस्थितम् ॥ ३-१५२-१२ (२१७०१)
दृष्टं प्रमाणं विपुलं शरीरस्यास्य ते विभो ।
संहरस्व महावीर्य स्वयमात्मानमात्मना ॥ ३-१५२-१३ (२१७०२)
न हि शक्नोमि त्वां द्रष्टुं दिवाकरमिवोदितम् ।
अप्रमेयमनाधृष्यं मैनाकमिव पर्वतम् ॥ ३-१५२-१४ (२१७०३)
विस्मयश्चैव मे वीर सुमहान्मनसोऽद्य वै ।
यद्रामस्त्वयि पार्श्वश्थे स्वयं रावणमभ्यगात् ॥ ३-१५२-१५ (२१७०४)
त्वमेव शक्तस्तां लङ्कां सयोधां सहरावणाम् ।
स्वबाहुबलमाश्रित् विनाशयितुमञ्जसा ॥ ३-१५२-१६ (२१७०५)
न हि ते किंचिदप्राप्यं मारुतात्मज विद्यते ।
न चैव तव पर्याप्तो रावयणः सगणो युधि ॥ ३-१५२-१७ (२१७०६)
एवमुक्तस्तु भीमेन हनूमान्प्लवगोत्तमः ।
प्रत्युवाच ततो वाक्यं स्निग्धगम्भीरया गिरा ॥ ३-१५२-१८ (२१७०७)
एवमेतन्महाबाहो यथा वदसि भारत ।
भीमसेन न पर्याप्तो ममासौ राक्षसाधमः ॥ ३-१५२-१९ (२१७०८)
मया तु निहते तस्मिन्रावणे लोककण्टके ।
कीर्तिर्नश्येद्राघवस्य तत एतदुपेक्षितम् ॥ ३-१५२-२० (२१७०९)
तेन वीरेण तं हत्वा सगणं राक्षसाधमम् ।
आनीता स्वपुरं सीता कीर्तिश्च स्थापिता नृषु ॥ ३-१५२-२१ (२१७१०)
तद्गच्छ विपुलप्रज्ञ भ्रातुः प्रियहिते रतः ।
अरिष्टं क्षेममध्वानं वायुना परिरक्षितः ॥ ३-१५२-२२ (२१७११)
एष पन्थाः कुरुश्रेष्ठ सौगन्धिकवनाय ते ।
द्रक्ष्यसे धनदोद्यानं रक्षितं यक्षराक्षसैः ॥ ३-१५२-२३ (२१७१२)
न च ते तरसा कार्यः कुसुमापचयः स्वयम् ।
दैवतानि हि मान्यानि पुरुषेण विशेषतः ॥ ३-१५२-२४ (२१७१३)

बलिहोमनमस्कारैर्मन्त्रैश्च भरतर्षभ ।
दैवतानि प्रसादं हि भक्त्या कुर्वन्ति भारत ॥ ३-१५२-२५ (२१७१४)
मा तात साहसं कार्षीः स्वधर्मं परिपालय ।
स्वधर्मस्थापनं धर्मं बुध्यस्वागमयस्व च ॥ ३-१५२-२६ (२१७१५)
न हि धर्ममविज्ञाय वृद्धाननुपसेव्य च ।
धर्मो वै वेदितुं शक्यो बृहस्पतिसमैरपि ॥ ३-१५२-२७ (२१७१६)
अधर्मो यत्र धर्माख्यो धर्मश्चाधर्मसंज्ञितः ।
स विज्ञेयो विभागेन यत्रमुह्यन्त्यबुद्धयः ॥ ३-१५२-२८ (२१७१७)
आचारसंभवो धर्मो धर्माद्विदाः समुत्थिताः ।
वेदैर्यज्ञाः समुत्पन्ना यज्ञैर्देवाः प्रतिष्ठिताः ॥ ३-१५२-२९ (२१७१८)
वेदाचारविधानोक्तैर्यज्ञैर्धार्यन्ति देवताः ।
बृहस्पत्युशनःप्रोक्तैर्नयैर्धार्यन्ति मानवाः ॥ ३-१५२-२० (२१७१९)
बल्याकरवणिज्याभिः कृष्यर्थैर्योनिपोषणैः ।
वार्तया धार्यते सर्वं धर्मैरेतैर्द्विजातिभिः ॥ ३-१५२-३१ (२१७२०)
त्रयी वार्ता दण्डनीतिस्तिस्रो विद्या विजानताम् ।
ताभिः सम्यक्प्रवृत्ताभिर्लोकयात्रा विधीयते ॥ ३-१५२-३२ (२१७२१)
सा चेद्धर्मकृता न स्यात्त्रयीधर्ममृते भुवि ।
दण्डनीतिमृतेचापि निर्मर्यादमिदं भवेत् ॥ ३-१५२-३३ (२१७२२)
वार्ताधर्मे ह्यवर्तिन्यो विनश्येयुरिमाः प्रजाः ।
सुप्रवृत्तैस्त्रिभिर्ह्येतैर्धर्मैः सूयन्ति वै प्रजाः ॥ ३-१५२-३४ (२१७२३)
द्विजानाममृतं धर्मो ह्येकश्चैवैकवर्णकः ।
यज्ञाध्ययनदानानि त्रयः साधारणाः स्मृताः ॥ ३-१५२-३५ (२१७२४)
याजनाध्यापने चोभे ब्राह्मणानां परिग्रहः ।
पालनं क्षत्रियाणां वै वैश्यधर्मश्च पोषणम् ॥ ३-१५२-३६ (२१७२५)
शुश्रूषा च द्विजातीनां शूद्राणआं धर्म उच्यते ।
भैक्षहोमव्रतैर्हीनास्तथैव गुरुवासिताः ॥ ३-१५२-३७ (२१७२६)
क्षत्रधर्मोऽत्रकौन्तेय तव धर्मोऽत्र रक्षणम् ।
स्वधर्मं प्रतिपद्यस्व विनीतो नियतेन्द्रियः ॥ ३-१५२-३८ (२१७२७)
वृद्धैः संमन्त्र्य सद्भिश्च बुद्धिमद्भिः श्रुतान्वितैः ।
आस्थितः शास्तिदण्डेन व्यसनी परिभूयते ॥ ३-१५२-३९ (२१७२८)
निग्रहानुग्रहैः सम्यग्यदा नेता प्रवर्तते ।
तदा भवन्ति लोकस्य मर्यादाः सुव्यवस्थिताः ॥ ३-१५२-४० (२१७२९)
तस्माद्देशे च दुर्गे च शत्रुमित्रबलेषु च ।
नित्यं चारेण बोद्धव्यं स्थानं वृद्धिः क्षयस्तथा ॥ ३-१५२-४१ (२१७३०)
राज्ञामुपायश्चारश्च बुद्धिमन्त्रपराक्रमाः ।
निग्रहप्रग्रहौ चैव दाक्ष्यं वै कार्यसाधकम् ॥ ३-१५२-४२ (२१७३१)

साम्ना दानेन भेदेन दण्डेनोपेक्षणेन च ।
साधनीयानि कार्याणि समासव्यासयोगतः ॥ ३-१५२-४३ (२१७३२)
मन्त्रमूला नयाः सर्वेचाराश्च भरतर्षभ ।
सुमन्त्रितनयैः सद्भिस्तद्विधैः सह मन्त्रयेत् ॥ ३-१५२-४४ (२१७३३)
स्त्रिया मूढेन बालेन लुब्धेन लघुनाऽपि वा ।
न मन्त्रयीत गुह्यानि येषु चास्पनदलक्षणम् ॥ ३-१५२-४५ (२१७३४)
मन्त्रयेत्सह विद्वद्भिः शक्तैः कर्माणि कारयेत् ।
स्निग्धैश्च नीतिविन्यासैर्मूर्खान्सर्वत्र वर्जयेत् ॥ ३-१५२-४६ (२१७३५)
धार्मिकान्धर्मकार्येषु अर्थकार्येषु पण्डितान् ।
स्त्रीषु क्लीबान्नियुञ्जीत क्रूरान्क्रूरेषु कर्मसु ॥ ३-१५२-४७ (२१७३६)
स्वेभ्यश्चैव परेभ्यश्च कार्याकार्यसमुद्भवा ।
बुद्धिः कर्मसु विज्ञेया रिपूणां च बलाबलम् ॥ ३-१५२-४८ (२१७३७)
बुद्ध्या स्वप्रतिपन्नेषु कुर्यात्साधुष्वनुग्रहम् ।
निग्रहं चाप्यशिष्टेषु निर्मर्यादेषु कारयेत् ॥ ३-१५२-४९ (२१७३८)
निग्रहे प्रग्रहे सम्यग्यदा राजा प्रवर्तते ।
तदा भवति लोकस्य मर्यादा सुव्यवस्थिता ॥ ३-१५२-५० (२१७३९)
एष तेऽभिहितः पार्थ घोरो धर्मो दुरन्वयः ।
तं स्वधर्मविभागेन विनयस्थोऽनुपालय ॥ ३-१५२-५१ (२१७४०)
तपोधर्मदमेज्याभिर्विप्रा यान्ति यथा दिवम् ।
दानातिथ्यक्रियाधर्मैर्यान्ति वैश्याश्च सद्गतिम् ॥ ३-१५२-५२ (२१७४१)
गद्विजशुश्रूषया शूद्रा लभन्ते गतिमुत्तमाम्'।
क्षत्रं याति तथा स्वर्गं भुवि निग्रहपालनैः ॥ ३-१५२-५३ (२१७४२)
सम्यक्प्रणीतदण्डा हि कामद्वेपविवर्जिताः ।
अलुब्धा विगतक्रोधाः सतां यान्ति सलोकतां ॥ ३-१५२-५४ (२१७४३)

इति श्रीमन्महाभारते अरण्यपर्वणि तीर्थयात्रापर्वणि
द्विपञ्चाशदधिकशततमोऽध्यायः ॥

Mahabharata - Vana Parva - Chapter Footnotes

३-१५२-५ गिरिश्च विन्ध्यगिरिरिव ।इवार्थे चः ॥
३-१५२-१७ पर्याप्तः समर्थः ॥
३-१५२-२२ अरिष्टं निर्विघ्नम् ॥
३-१५२-२४ पुरुषेण मर्त्येन ॥
३-१५२-२६ आगमयस्व मात्वरिष्ठाः ॥
३-१५२-२८ दुर्जनवधोऽधर्मोपि धर्मएव ।परोपघातकं सत्यं
धर्मोपि अधर्मएव ॥

३-१५२-३० यज्ञैर्देवानां नीत्या मनुष्याणां च स्थितिरित्यर्थः ॥
३-१५२-३१ वार्ता जीविकार्थावृत्तिः ॥
३-१५२-३२ साच क्रमेण ब्राह्मणस्य त्रयीयाजनाध्यापनादिः । वैश्यस्
वार्तापण्यादिः। क्षत्रियस्य दण्डादिः ॥
३-१५२-३३ सा लोकयात्रा ॥
३-१५२-३७ गुरौ त्रिवर्णे वासितं वासो येषां ते ॥
३-१५२-३९ आस्थितोऽनुगृहीतः ॥
३-१५२-४१ स्थानं सिद्धसंरक्षणम् ॥
३-१५२-४८ स्वेभ्यश्चारेभ्यः परेभ्य उत्कोचादिना लोभितेभ्यः ॥
३-१५२-४९ बुद्ध्या जीवनाशया प्रतिपन्नेषु शरणागतेषु ॥
३-१५२-५१ घोरो धर्मो राजधर्मः ॥

---

वन-अध्यय१५३
॥ श्रीः ॥
३.१५३. अध्यायः १५३

Mahabharata - Vana Parva - Chapter Topics
उपसंहृतपृथुरूपेण हनुमता सपरिष्वङ्गवरदानं विसृष्टेन
भीमेन गन्धमादने सौरान्धिकसरोदर्शनम् ॥ १ ॥

Mahabharata - Vana Parva - Chapter Text

३-१५३-० (२१७४४)
वैशंपायन उवाच। ३-१५३-०क्ष् (२२७९)
ततः संहृत्य विपुलं तद्वपुः कामवर्धितम् ।
भीमसेनं पुनर्दोर्भ्यां पर्यष्वजत वानरः ॥ ३-१५३-१ (२१७४५)
परिष्वक्तस्य तस्याशु भ्रात्रा भीमस्य भारत ।
श्रमो नाशमुपागच्छत्सर्वं चासीत्प्रदक्षिणम् ॥ ३-१५३-२ (२१७४६)
श्बलं चातिबलो मेने न मेऽस्ति सदृशो महान् ए
ततः पुनरथोवाच पर्यश्रुनयनो हरिः ॥ ३-१५३-३ (२१७४७)
भीममाभाष्य सौहार्दाद्बाष्पगद्गदया गिरा ।
गच्छ वीर स्वमावासं स्मर्तव्योऽस्मि कथान्तरे ॥ ३-१५३-४ (२१७४८)
इहस्थश्च कुरुश्रेष्ठ न निवेद्योस्मि कस्यचित् ।
धनदस्यालयाच्चापि विसृष्टानां महाबल ॥ ३-१५३-५ (२१७४९)
एष काल इहायातुं देवगन्धर्वयोषिताम् ।
ममापि सफलं च क्षुः स्मारितश्चास्मि राघवम् ॥ ३-१५३-६ (२१७५०)
श्रामाभिधानं विष्णुं हि जगद्धृदयनन्दनम् ।

सीतावक्त्रारविन्दार्क दशास्यध्वान्तभास्करम् ॥ ३-१५३-७ (२१७५१)
मानुषं गात्रसंस्पर्शं गत्वा भीम त्वया सह ।
तदस्मद्दर्शनं वीर कौन्तेयामाघमस्तु ते ॥ ३-१५३-८ (२१७५२)
भ्रातृत्वं त्वं पुरस्कृत्य वरं वरय भारत ।
यदि तावन्मया क्षुद्रा गत्वा वारणसाह्वयम् ॥ ३-१५३-९ (२१७५३)
धार्तराष्ट्रा निहन्तव्या यावदेतत्करोम्यहम् ।
शिलया नगरं वा तन्मर्दितव्यं मया यदि ॥ ३-१५३-१० (२१७५४)
श्बद्ध्वा दुर्योधनं चाद्य आनयामि तवान्तिकम् ॥
यावदेतत्करोम्यद्यकामं तव महाबल ॥ ३-१५३-११ (२१७५५)
भीमसेनस्तु तद्वाक्यं श्रुत्वा तस् महात्मनः ।
प्रत्युवाच हनूमन्तं प्रहृष्टेनान्तरात्मना ॥ ३-१५३-१२ (२१७५६)
कृतमेव त्वया सर्वं मम वानरपुङ्गव ।
स्वस्ति तेऽस्तु महाबाहो कामये त्वां प्रसीदमे ॥ ३-१५३-१३ (२१७५७)
सनाथाः पाण्डवाः सर्वे त्वया नाथेन वीर्यवन् ।
तवैव तेजसा सर्वान्विजेष्यामो वयं परान् ॥ ३-१५३-१४ (२१७५८)
एवमुक्तस्तु हनुमान्भीमसेनमभाषत ।
भ्रातृत्वात्सौहृदाच्चैव करिष्यामि प्रियं तव ॥ ३-१५३-१५ (२१७५९)
चमूं विगाह्य शत्रूणां परशक्तिसमाकुलाम् ।
यदा सिंहरवं वीर करिष्यसि महाबल ॥ ३-१५३-१६ (२१७६०)
तदाहं बृंहयिष्यामि स्वरवेण रवं तव ।
ग्यं श्रुत्वैव भविष्यन्ति व्यसवस्तेऽरयो रणे' ॥ ३-१५३-१७ (२१७६१)
विजयस्य ध्वजस्थश्च नादान्मोक्ष्यामि दारुणान् ।
शत्रूणां ये प्राणहराः सुखं येन हनिष्यथ ॥ ३-१५३-१८ (२१७६२)
एवमाभाष्य हनुमांस्तदा पाण्डवनन्दनम् ।
मार्गमाख्याय भीमाय तत्रैवान्तरधीयत ॥ ३-१५३-१९ (२१७६३)
गते तस्मिन्हरिवरे भीमोपि बलिनांवरः ।
तेन मार्गेण विपुलं व्यचरद्गन्धमादनम् ॥ ३-१५३-२० (२१७६४)
अनुस्मरन्वपुस्तस्य श्रियं चाप्रतिमां भुवि ।
माहात्म्यमनुभावं च स्मरन्दाशरथेर्ययौ ॥ ३-१५३-२१ (२१७६५)
स तानि रमणीयानि वनान्युपवनानि च ।
विलोलयामास तदा सौगन्धिकवनेप्सया ॥ ३-१५३-२२ (२१७६६)
फुल्लपद्मविचित्राणि सरांसि सरितस्तथा ।
नानाकुसुमचित्राणि पुष्पितानि वनानि च ॥ ३-१५३-२३ (२१७६७)
मत्तवारणयुथानि पङ्कक्लिन्नानि भारत ।
वर्षतामिव मेघानां वृन्दानि ददृशे तदा ॥ ३-१५३-२४ (२१७६८)
हरिणैश्चपलापाङ्गैर्हरिणीसहितैर्वनम् ।

सशष्पकवलैः श्रीमान्पथि दृष्ट्वा द्रुतं ययौ ॥ ३-१५३-२५ (२१७६९)
महिषैश्च वराहैश्च शार्दूलैश्च निषेवितम् ।
व्यपेतभीर्गिरिं शौर्याद्भीमसेनो व्यगाहत ॥ ३-१५३-२६ (२१७७०)
कुसुमानतशाखैश्च ताम्रपल्लवकोमलैः ।
याच्यमान इवारण्ये द्रुमैर्मारुतकम्पितैः ॥ ३-१५३-२७ (२१७७१)
कृतपद्माञ्जलिपुटा मत्तषट्पदसेविताः ।
प्रियतीर्थवना मार्गे पद्मिनीः समतिक्रमन् ॥ ३-१५३-२८ (२१७७२)
सज्जमानमनोदृष्टिः फुल्लेषु गिरिसानुषु ।
द्रौपदीवाक्यपाथेयो भीमो भीमपराक्रमः ॥ ३-१५३-२९ (२१७७३)
परिवृत्तेऽहनि ततः प्रकीर्णहरिणे वने ।
काञ्चनैर्विलैः पद्मैर्ददर्श विपुलां नदीम् ॥ ३-१५३-३० (२१७७४)
हंसकारण्डवयुतां चक्रवाकोपशोभिताम् ।
रचितामिव तस्याद्रेर्मालां विमलपङ्कजाम् ॥ ३-१५३-३१ (२१७७५)
तस्यां नद्यां महासत्वः सौगन्धिकवनं महत् ।
अपश्यत्प्रीतिजननं बालार्कसदृशद्युति ॥ ३-१५३-३२ (२१७७६)
तद्दृष्ट्वा लब्धकामः स मनसा पाण्डुनन्दनः ।
वनवासपरिक्लिष्टां जगाम मनसा प्रियाम् ॥ ३-१५३-३३ (२१७७७)

इति श्रीमन्महाभारते अरण्यपर्वणि तीर्थयात्रापर्वणि
त्रिपञ्चाशदधिकशततमोऽध्यायः ॥ १५३ ॥

---

वन-अध्यय१५४
॥ श्रीः ॥
३.१५४. अध्यायः १५४

Mahabharata - Vana Parva - Chapter Topics
सौगन्धिकसरोविविक्षुं भीमंप्रति तद्रक्षिभिः क्रोधवशनामकै
राक्षसैस्तच्चिकीर्षिप्रश्नः ॥ १ ॥

Mahabharata - Vana Parva - Chapter Text

३-१५४-० (२१७७८)
वैशंपायन उवाच। ३-१५४-०क्ष् (२२८०)
स गत्वानलिनीं रम्यां राक्षसैरभिरक्षिताम् ।
कैलासशिरे रम्ये ददर्श शुभकानने ॥ ३-१५४-१ (२१७७९)
कुबेरभुवनाभ्याशे जातां पर्वतनिर्झरैः ।
सुरम्यां विपुलच्छायां नानाद्रुमलताकुलाम् ॥ ३-१५४-२ (२१७८०)

हरिताम्बुजसंछन्नां दिव्यां कनकपुष्कराम् ।
नानापक्षिजनाकीर्णां सूपतीर्थामकर्दमाम् ॥ ३-१५४-३ (२१७८१)
अतीव रम्यां सुजलां जातां पर्वतसानुषु ।
विचित्रभूतां लोकस्य शुभामद्भुतदर्शनाम् ॥ ३-१५४-४ (२१७८२)
तत्रामृतरसं शीतं लघु कुन्तीसुतः शुभम् ।
ददर्शविमलं तोयं पिबंश्च बहु पाण्डवः ॥ ३-१५४-५ (२१७८३)
तां तु कपुष्करिणीं रम्यां दिव्यसौगन्धिकावृताम् ।
जातरूपमयैः पद्मैश्छन्नां परमगन्धिभिः ॥ ३-१५४-६ (२१७८४)
वैडूर्यवरनालैश्च बहुचित्रैर्मनोरमैः ।
हंसकारण्डवोद्धूतैः सृजद्भिरमलं रजः ॥ ३-१५४-७ (२१७८५)
आक्रीडं राजराजस् कुबेरस्य महात्मनः ।
गन्धर्वैरप्सरोभिश्च देवैश्च परमार्चिताम् ॥ ३-१५४-८ (२१७८६)
सेवितामृषिभिर्दिव्यैर्यक्षैः किंपुरुषैस्तथा ।
राक्षसैः किंनरैश्चापि गुप्तां वैश्रवणेन च ॥ ३-१५४-९ (२१७८७)
तां च दृष्ट्वैव कौन्तेयो भीमसेनो महाहलः ।
बभूव परमप्रीतो दिव्यंप्रेक्ष्य सरो महत् ॥ ३-१५४-१० (२१७८८)
तच्च क्रोवशा नाम राक्षसा राजशासनात् ।
रक्षन्ति शतसाहस्राश्चित्रायुधपरिच्छदाः ॥ ३-१५४-११ (२१७८९)
ते तु दृष्ट्वैव कौन्तेयमजिनैः परिवारितम् ।
रुक्माङ्गदधरं वीरं भीमं भीमपराक्रमम् ॥ ३-१५४-१२ (२१७९०)
सायुधं बद्धनिस्त्रिंशमशङ्कितमरिंदमम् ।
पुष्करप्सुमुपायान्तमन्योन्यमभिचुक्रुशुः ॥ ३-१५४-१३ (२१७९१)
अयं पुरुषशार्दूलः सायुधोऽजिनसंवृतः ।
यच्चिकीर्षुरिह प्राप्तस्तत्संप्रष्टुमिहार्हथ ॥ ३-१५४-१४ (२१७९२)
ततः सर्वे महाबाहुं समासाद्यवृकोदरम् ।
तेजोयुक्तमपृच्छन्त कस्त्वमाख्यातुमर्हसि ॥ ३-१५४-१५ (२१७९३)
मुनिवेषधरश्चैव सायुधश्चैव लक्ष्यसे ।
यदर्थमाभिसंप्राप्तस्तदाचक्ष्यमहामते ॥ ३-१५४-१६ (२१७९४)

इति श्रीमन्महाभारते अरण्यपर्वणि तीर्तयात्रापर्वणि
चतुःपञ्चाशदधिकशततमोऽध्यायः ॥ १५४ ॥

Mahabharata - Vana Parva - Chapter Footnotes

३-१५४-३ सूपतीर्थां शोभनानि उपतीर्थानि तीराणि यस्यां सा ॥
३-१५४-५ लघु आरोग्यकरम् ॥
३-१५४-६ जातरूपं स्वर्णम् ॥

वन-अध्ययः१५५
॥ श्रीः ॥
३.१५५. अध्यायः १५५

Mahabharata - Vana Parva - Chapter Topics
भीमेन सौगन्धिकसरोरक्षकान्प्रति स्वचिकीर्षितकथनपूर्वकं सौगन्धिकाहरणए प्रवर्तनम् ॥ १ ॥
तथा सप्रतिषेधं स्वजिघांसूनां तेषां गदया ताडनम् ॥ २ ॥
भीमगदाप्रहारमशक्नुवद्भिस्तैर्भीमवृत्तं निवेदितेन कुबेरेण तदनुमोदनम् ॥ ३ ॥

Mahabharata - Vana Parva - Chapter Text

३-१५५-० (२१७९५)
भीम उवाच। ३-१५५-०क्ष् (२२८१)
पाण्डवो भीमसेनोऽहं धर्मराजादनन्तरः ।
विशालां बदरीं प्राप्तो भ्रातृभिः सह राक्षसाः ॥ ३-१५५-१ (२१७९६)
अपश्यत्तत्रपाञ्चाली सौगन्धिकमनुत्तमम् ।
अनिलोढमितो नूनं सा बहूनि परीप्सति ॥ ३-१५५-२ (२१७९७)
तस्या मामनवद्याङ्ग्या धर्मपत्न्याः प्रिये स्थितम् ।
पुष्पाहारमिह प्राप्तं निबोधत निशाचराः ॥ ३-१५५-३ (२१७९८)
राक्षसा ऊचुः। ३-१५५-४क्ष् (२२८२)
आक्रीडोऽयं कुबेरस्य दयितः पुरुषर्षभ ।
नेह शक्यं मनुष्येण विहर्तुं मर्त्यधर्मणा ॥ ३-१५५-४ (२१७९९)
देवर्षयस्तथा यक्षा देवाश्चात्र वृकोदर ।
आमन्त्र्य यक्षप्रवरं पिबन्ति च हरन्ति च ॥ ३-१५५-५ (२१८००)
गन्धर्वाप्सरसश्चैव विहरन्त्यत्र पाण्डव ।
ग्यक्षाधिपस्यानुमते कुबेरस् महात्मनः' ॥ ३-१५५-६ (२१८०१)
अन्यायेनेह यः कश्चिदवमन्य धनेश्वरम् ।
विहर्तुमिच्छेद्दुर्वृत्तः स विनश्येन्न संशयः ॥ ३-१५५-७ (२१८०२)
तमनादृत्य पद्मानि जिहीर्षसि बलादिह ।
धर्मराजस्य चात्मानं ब्रवीषि भ्रातरं कथम् ॥ ३-१५५-८ (२१८०३)
श्आमन्त्र्य यक्षराजं वै ततः पिव हरस्व च ।
नातोऽन्यथा त्वया शक्यं किंचित्पुष्करमीक्षितुं ॥ ३-१५५-९ (२१८०४)
भीमसेन उवाच। ३-१५५-१०क्ष् (२२८३)

राक्षसास्तं न पश्यामि धनेश्वरमिहान्तिके ।
दृष्ट्वाऽपिच महाराजं नाहं याचितुमुत्सहे ॥ ३-१५५-१० (२१८०५)
न हि याचन्ति राजान एष धर्मः सनातनः ।
न चाहं हातुमिच्छामि क्षात्रधर्मं कथंचन ॥ ३-१५५-११ (२१८०६)
इयं च नलिनी रम्या जाता पर्वतनिर्झरे ।
नेयं भवनमासाद्यकुबेरस्य महात्मनः ॥ ३-१५५-१२ (२१८०७)
तुल्या हि सर्वभूतानामियं वैश्रवणस्य च ।
एवं गतेषु द्रव्येषु कः कं याचितुमर्हति ॥ ३-१५५-१३ (२१८०८)
इत्युक्त्वा राक्षसान्सर्वान्भीमसेनो व्यगाहत ।
तां तु पुष्करिणीं वीरः प्रभिन्न इव कुञ्जरः ॥ ३-१५५-१४ (२१८०९)
ततः स राक्षसैर्वाचा प्रतिषिद्धः प्रतापवान् ।
मा मैवमिति सक्रोधैर्भर्त्सयद्भिः समन्ततः ॥ ३-१५५-१५ (२१८१०)
कदर्थीकृत्यतु स तान्राक्षसान्भीमविक्रमः ।
व्यगाहत महातेजास्ते तं सर्वे न्यवारयन् ॥ ३-१५५-१६ (२१८११)
गृह्णीत बध्नीत विकर्ततेमं
पचाम खादाम च भीमसेनम् ।
क्रुद्धा ब्रुवन्तोऽभिययुर्द्रुतं ते
शस्त्राणि चोद्यम्य विवृत्तनेत्राः ॥ ३-१५५-१७ (२१८१२)
प्रगृह्यतानभ्यपतत्तरस्वी
ततोऽब्रवीत्तिष्ठत तिष्ठतेति ॥
ते तं तदा तोमरपट्टसाद्यै-
र्व्याविद्धशस्त्रैः सहसा निपेतुः। ३-१५५-१८ (२१८१३)
जिघांसवः क्रोधवशाः सुभीमा
भीमं समन्तात्परिवव्रुरुग्राः ।
जिघांसवः क्रोधवशाः सुभीमा
भीमं समन्तात्परिवव्रुरुग्राः ॥ ३-१५५-१९ (२१८१४)
वातेन कुन्त्यां बलवान्सुजातः
शूरस्तरस्वी द्विषतां निहन्ता ।
सत्ये च धर्मे च रतः सदैव
पराक्रमे शत्रुभिरप्रधृष्यः ॥ ३-१५५-२० (२१८१५)
तेषां स मार्गान्विविधान्महात्मा
निहत्य शस्त्राणि च शास्त्रवाणाम् ।
यथा प्रवीरान्निजघान भीमः
परश्शतान्पुष्करिणीसमीपे ॥ ३-१५५-२१ (२१८१६)
ते तस्य वीर्यं च बलं च दृष्ट्वा
विद्याबलंबाहुबलं तथैव ।

अशक्नुवन्तः सहितं समन्ता-
द्द्रुतं प्रवीरा सहसा निवृत्ताः ॥ ३-१५५-२२ (२१८१७)
विदीर्यमाणास्तत एव तूर्ण-
माकाशमास्थाय विमूढसंज्ञाः ।
कैलासशृङ्गाण्यभिदुद्रुवुस्ते
भीमार्दिताः क्रोधवशाः प्रभग्नाः ॥ ३-१५५-२३ (२१८१८)
स शक्रवद्दानवदैत्यसङ्घान्
विक्रम्य जित्वा च रणेऽरिसङ्घान् ।
विगाह्यतां पुष्करीणीं जितारिः
कामं स जग्राह ततोऽम्बुजानि ॥ ३-१५५-२४ (२१८१९)
ततः स पीत्वाऽमृतकल्पमम्भो
भूयो बभूवोत्तमवीर्यतेजाः ।
उत्पाट्य जग्राह ततोऽम्बुजानि
सौगन्धिकान्युत्तमगन्धवन्ति ॥ ३-१५५-२५ (२१८२०)
ततस्तु ते क्रोधवशाः समेत्य
धनेश्वरं भीमबलप्रणुन्नाः ।
भीमस्य वीर्यं च बलं च संख्ये
यथावदाचख्युरतीव दीनाः ॥ ३-१५५-२६ (२१८२१)
तेषां वचस्तत्तु निशाम्य देवः
प्रहस्य रक्षांसि ततोऽभ्युवाच ।
गृह्णातु भीमो जलजानि कामं
कृष्णानिमित्तं विदितं ममैतत् ॥ ३-१५५-२७ (२१८२२)
ततोऽभ्यनुज्ञाय धनेश्वरं ते
जग्मुः कुरूणां प्रवरं विरोषाः ।
भीमं च तस्यां ददृशुर्नलिन्यां
यथोपजोषं विहरन्तमेकम् ॥ ३-१५५-२८ (२१८२३)

इति श्रीमन्महाभारते अरण्यपर्वणि तीर्थयात्रापर्वणि
पञ्चपञ्चाशदधिकशततमोऽध्यायः ॥ १५५ ॥
Mahabharata - Vana Parva - Chapter Footnotes

३-१५५-१ प्राप्तं मां निबोधत राक्षसाः इति ध । पाठः ॥
३-१५५-२ अनिलोढं वायुना आनीतम् ॥
३-१५५-२२ सहितमेकीभूयाप्यशक्नुवन्तः ॥

---

वन-अध्यय१५६

॥ श्रीः ॥

३.१५६. अध्यायः १५६

Mahabharata - Vana Parva - Chapter Topics

दुर्निमित्तप्रदर्शिना भीमसेनानवलोकिना च युधिष्ठिरेण द्रौपदींप्रतिभीमाभिगतदेशप्रश्नः ॥ १ ॥
द्रौपद्या भीमचिकीर्षितं निवेदितेन युधिष्ठिरेण घटोत्कचसाहाय्येन भीमसमीपगमनम् ॥ २ ॥
कुबेरबहुमानितैस्तैरर्जुनदिदृक्षया तत्रैव सुखेन विहरणम् ॥ ३ ॥

Mahabharata - Vana Parva - Chapter Text

३-१५६-० (२१८२४)
वैशंपायन उवाच। ३-१५६-०क्ष् (२२८४)
ततस्तानि महार्हाणि दिव्यानि भरतर्षभ ।
बहूनि बहुरूपाणि विरजांसि समाददे ॥ ३-१५६-१ (२१८२५)
ततो वायुर्महाञ्शीघ्रो नीचैः शर्करकर्षणः ।
प्रादुरासीद्खरस्पर्शः संग्राममभिचोदयन् ॥ ३-१५६-२ (२१८२६)
पपात महती चोल्का सनिर्घाता महाभया ।
निष्प्रभश्चाभवत्सूर्यश्छन्नरश्मिस्तमोवृतः ॥ ३-१५६-३ (२१८२७)
निर्घातश्चाभवद्भीमो भीमे विक्रममास्थिते ।
चचाल पृथिवी चापि पांसुवर्षं पपात च ॥ ३-१५६-४ (२१८२८)
सलोहिता दिशश्चासन्खरवाचो मृगद्विजाः ।
तमोवृतमभूत्सर्वं न प्राज्ञायत किंचन। ३-१५६-५ (२१८२९)
श्अन्ये च बहवो भीमा उत्पातास्तत्र जज्ञिरे ॥ङ
तदद्भुतमभिप्रेक्ष्य धर्मपुत्रो युधिष्ठिरः ।
उवाच वदतां श्रेष्ठः कोऽस्मानभिभविष्यति ॥ ३-१५६-६ (२१८३०)
सज्जीभवत भद्रं वः पाण्डवा युद्धदुर्मदाः ।
यथा रूपाणि पश्यामि सुव्यक्तो नः पराक्रमः ॥ ३-१५६-७ (२१८३१)
एवमुक्त्वा ततो राजा वीक्षांचक्रे समन्ततः ।
अपश्यमानो भीमं तु धर्मपुत्रो युधिष्ठिरः ॥ ३-१५६-८ (२१८३२)
ततः कृष्णां यमौ चापि समीपस्थानरिंदमः ।
पप्रच्छ भ्रातरं भीमं भीमकर्माणमाहवे ॥ ३-१५६-९ (२१८३३)
कच्चिन्न भीमः पाञ्चालि किंच कृत्यं चिकीर्षति ।
कृतवानपि वा वीर साहसं साहसप्रियः ॥ ३-१५६-१० (२१८३४)
इमे ह्यकस्मादुत्पाता महासमरशंसिनः ।

दर्शयन्तो भयं तीव्रं प्रादुर्भूताः समन्ततः ॥ ३-१५६-११ (२१८३५)
तं तथावादिनं कृष्णा प्रत्युवाच मनस्विनी ।
प्रिया प्रियं चिकीर्षन्ती महिषी चारुहासिनी ॥ ३-१५६-१२ (२१८३६)
यत्तत्सौगन्धिकं राजन्नाहृतं मातरिश्वना ।
तन्मया भीमसेनस्य प्रीतयाऽद्योपपादितम् ॥ ३-१५६-१३ (२१८३७)
अपि चोक्तो मया वीरो यदिपश्येर्बहून्यपि ।
तानि सर्वाणायुपादाय शीघ्रमागम्यतामिति ॥ ३-१५६-१४ (२१८३८)
स तु नूनं महाबाहुः प्रियार्थं मम पाण्डवः ।
प्रागुदीचीं दिशं राजंस्तान्याहर्तुमितो गतः ॥ ३-१५६-१५ (२१८३९)
उक्तस्त्वेवं तया राजा यमाविदमथाब्रवीत् ।
गच्छाम सहितास्तूर्णं येन यातो वृकोदरः ॥ ३-१५६-१६ (२१८४०)
वहन्तु राक्षसा विप्रान्यथाश्रान्तान्यथाकृशान् ।
त्वमप्यमरसंकाश वह कृष्णां घटोत्कच ॥ ३-१५६-१७ (२१८४१)
व्यक्तं दूरमितो भीमः प्रविष्ट इतिमे मतिः ।
चिरं चतस्य कालोऽयं स च वायुसमो जवे ॥ ३-१५६-१८ (२१८४२)
तरस्वी वैनतेयस्य सदृशो भुवि लङ्घने ।
उत्पतेदपिचाकाशं निपतेच्चयथेच्छकम् ॥ ३-१५६-१९ (२१८४३)
तमन्वियाम भवतां प्रभावाद्रजनीचराः ।
पुरा स नापराध्नोति सिद्धानां ब्रह्मवादिनाम् ॥ ३-१५६-२० (२१८४४)
तथेत्युक्त्वा तु ते सर्वेहैडिम्बप्रमुखास्तदा ।
उद्देशज्ञाः कुबेरस्य नलिन्या भरतर्षभ ॥ ३-१५६-२१ (२१८४५)
आदाय पाण्डवांश्चैव तांश्च विप्राननेकशः ।
लोमशेनैव सहिताः प्रययुः प्रीतमानसाः ॥ ३-१५६-२२ (२१८४६)
ते सर्वे त्वरिता गत्वा ददृशुस्तत्र कानने ।
पद्मसौगन्धिकवतींनलिनीं सुमनोरमाम् ॥ ३-१५६-२३ (२१८४७)
तं च भीमं महात्मानं तस्यास्तीरे व्यवस्थितम् ।
ददृशुर्निहतांश्चैव यक्षांश्च विपुलेक्षणान् ॥ ३-१५६-२४ (२१८४८)
भिन्नकायाक्षिबाहूरुन्संचूर्णितशिरोधरान् ।
तं च भीमं महात्मानं तस्यास्तीरे व्यवस्थितम् ॥ ३-१५६-२५ (२१८४९)
सक्रोधं स्तब्धनयनं संदष्टदशनच्छदम् ।
उद्यम्य च गदां दोर्भ्यां नदीतीरे व्यवस्थितम् ॥ ३-१५६-२६ (२१८५०)
प्रजासंक्षेपसमये दण्डहस्तमिवान्तकम् ।
तं दृष्ट्वा धर्मराजस्तु परिष्वज्याथ भारत ॥ ३-१५६-२७ (२१८५१)
उवाच श्लक्ष्णया वाचा कौन्तेय किमिदं कृतम् ।
साहसं वत भद्रं ते देवानामपि चाप्रियम् ।
पुनरेवं न कर्तव्यं मम चेदिच्छसि प्रियम् ॥ ३-१५६-२८ (२१८५२)

अनुशिष्य तु कौन्तेयं पद्मानि परिगृह्य च ।
तस्यामेव नलिन्यां तु विजह्रुरमरोपमाः ॥ ३-१५६-२९ (२१८५३)
एतस्मिन्नेव काले तु प्रगृहीतशिलायुधाः ।
प्रादुरासन्महाकायास्तस्योद्यानस्य रक्षिणः ॥ ३-१५६-३० (२१८५४)
ते दृष्ट्वाधर्मराजानं महर्षिं चापि लोमशम् ।
नकुलं सहदेवं च तथाऽन्यान्ब्राह्मणर्षभान् ॥ ३-१५६-३१ (२१८५५)
विनयेन नताः सर्वेप्रणिपत्य च भारत ।
सान्त्विता धर्मराजेन प्रसेदुः क्षणदाचराः ॥ ३-१५६-३२ (२१८५६)
विदिताश्चकुबेरस्य तत्रते कुरुपुङ्गवाः ।
ऊषुर्नातिचिरं कालं रममाणाः कुरूद्वहाः ।
प्रतीक्षमाणआ बीभत्सुं गन्धमादनसानुषु ॥ ३-१५६-३३ (२१८५७)

इति श्रीमन्महाभारते अरण्यपर्वणि तीर्थयात्रापर्वणि
पञ्चपञ्चाशदधिकशततमोऽध्यायः ॥ १५६ ॥
Mahabharata - Vana Parva - Chapter Footnotes

३-१५६-७ पराक्रमः पराक्रमकालः ॥
३-१५६-२१ उद्देशज्ञाः स्थलज्ञाः ॥

---

वन-अध्यय१५७
॥ श्रीः ॥
३.१५७. अध्यायः १५७

Mahabharata - Vana Parva - Chapter Topics
गन्धमादनादुत्तरं देशं जिगमिषुणा युधिष्ठिरेण
आकाशवाणीश्रवणात्ततः प्रतिनिवृत्य अनुचरैःसह नरनारायणाश्रमं
प्रति पुनरागमनम् ॥ १ ॥

Mahabharata - Vana Parva - Chapter Text

३-१५७-० (२१८५८)
वैशंपायन उवाच। ३-१५७-०क्ष् (२२८५)
तस्मिन्निवसमानोऽथ धर्मराजो युधिष्ठिरः ।
आमन्त्र्य सहितान्भ्रातृनित्युवाच सहद्विजान् ॥ ३-१५७-१ (२१८५९)
दृष्टानि तीर्थान्यस्माभिः पुण्यानि च शिवानि च ।
मनसो ह्लादनीयानि वनानि च पृथक्पृथक् ॥ ३-१५७-२ (२१८६०)

देवैः पूर्वं विचीर्णानि मुनिभिश्च महात्मभिः ।
यथाक्रममशेषेण द्विजैः संपूजितानि च ॥ ३-१५७-३ (२१८६१)
ऋषीणां पूर्वचरितं तपोधर्मविचेष्टितम् ।
राजर्षीणां च चरितं कथाश्च विविधाः शुभाः ॥ ३-१५७-४ (२१८६२)
शृण्वानास्तत्रतत्र स्म आश्रमेषु शिवेषु च ।
अभिषेकं द्विजैः सार्धं कृतवन्तो विशेषतः ॥ ३-१५७-५ (२१८६३)
अर्चिताः सततं देवाः पुष्पैरद्भिः सदा च वः ।
यथालब्धैर्मूलफलैः पितरश्चापि तर्पिताः ॥ ३-१५७-६ (२१८६४)
पर्वतेषु च रम्येषु सर्वेषु च सरस्सु च ।
उदधौ च महापुण्ये सूपस्पृष्टं महात्मभिः ॥ ३-१५७-७ (२१८६५)
इला सरस्वती सिन्धुर्यमुना नर्मदा तथा ।
नानातीर्थेषु रम्येषु सूपस्पृष्टं सह द्विजैः ॥ ३-१५७-८ (२१८६६)
गङ्गाद्वारमतिक्रम्य बहवः पर्वताः शुभाः ।
हिमवान्पर्वतश्चैव नानाद्विजगणायुतः ॥ ३-१५७-९ (२१८६७)
विशाला बदरी दृष्टा नरनारायणाश्रमः ।
दिव्यपुष्करिणी दृष्टा सिद्धदेवर्षिपूजिता ॥ ३-१५७-१० (२१८६८)
यथाक्रमविशेषेण सर्वाण्यायतनानि च ।
दर्शितानि द्विजेनद्रेण लोमशेन महात्मना ॥ ३-१५७-११ (२१८६९)
इमं वैश्रवणावासं दुर्गमं गन्धमादनम् ।
कथं भीम गमिष्यामो मतिरत्र विधीयताम् ॥ ३-१५७-१२ (२१८७०)
वैशंपायन उवाच। ३-१५७-१३क्ष् (२२८६)
एवं ब्रुवति राजेन्द्रे वागुवाचाशरीरिणी ।
न शक्यो दुर्गमो गन्तुं पर्वतो गन्धमादनः ॥ ३-१५७-१३ (२१८७१)
अननैव पथा राजन्प्रतिगच्छ यथागतम् ।
नरनारायणस्थानं बदरीत्यभिविश्रुतम् ॥ ३-१५७-१४ (२१८७२)
तस्माद्यास्यसि कौन्तेय सिद्धचारणसेवितम् ।
बहुपुष्पफलं रम्यमाश्रमं वृषपर्वणः ॥ ३-१५७-१५ (२१८७३)
अतिक्रम्य च तं पार्थ त्वार्ष्टिषेणाश्रमे वसेः ।
ततो द्रक्ष्यसि कौन्तेय निवेशं धनदस्य च ॥ ३-१५७-१६ (२१८७४)
एतस्मिन्नन्तरे वायुर्दिव्यगन्धवहः शुभः ।
भनःप्रह्लादनः शीतः पुष्पवर्षं ववर्ष वै ॥ ३-१५७-१७ (२१८७५)
तच्छ्रुत्वा दिव्यमाकाशाद्विस्मयः समपद्यत ।
ऋषीणां ब्राह्मणानां च पार्थिवानां विशेषतः ॥ ३-१५७-१८ (२१८७६)
श्रुत्वा तन्महदाश्चर्यं द्विजो धौम्यस्त्वभाषत ।
न शक्यमुत्तरं गन्तुं प्रतिगच्छाम पाण्डव ॥ ३-१५७-१९ (२१८७७)
ततो युधिष्ठिरो राजा विस्मयोत्फुल्ललोचनः ।

श्प्रत्यागम्य पुनस्तं तु नरनारायणाश्रमम् ।ꣳ ३-१५७-२० (२१८७८)
भीमसेनादिभिः सर्वैर्भ्रातृभिः परिवारितः ।
पाञ्चाल्या ब्राह्मणैश्चैव न्यवसत्सुसुखं तदा ॥ ३-१५७-२१ (२१८७९)

इति श्रीमन्महाभारते अरण्यपर्वणि तीर्थयात्रापर्वणि
सप्तपञ्चाशदधिकशततमोऽध्यायः ॥१५७ ॥

---

वन-अध्यय१५८
॥ श्रीः ॥
३.१५८. अध्यायः १५८

Mahabharata - Vana Parva - Chapter Topics
विप्रवेषेण पाण्डवनिकटचिरवासिना जटासुरेण भीमासंनिधाने
द्रौपदीसहितान्युधिष्ठिरादीनपहृत्य पलायनम् ॥१ ॥
मध्येमार्गं यदृच्छासमागतेन भीमन तस्य मारणम् ॥२ ॥

Mahabharata - Vana Parva - Chapter Text

३-१५८-० (२१८८०)
वैशंपायन उवाच। ३-१५८-०क्ष् (२२८७)
ततस्तान्परिविश्वस्तान्वसतस्तत्र पाण्डवान् ।
श्पर्वतेन्द्रे द्विजैः सार्धं पार्तागमनकाङ्क्षया ।ꣳ ३-१५८-१ (२१८८१)
गतेषु तेषु रक्षःसु भीमसेनात्मजेऽपि च ।
रहितान्भीमसेनेन कदाचित्तान्यदृच्छया ।
जहार धर्मराजं वै यमौ कृष्णां च राक्षसः ॥ ३-१५८-२ (२१८८२)
ग्जनमेजय उवाच। ३-१५८-३क्ष् (२२८८)
ब्रह्मन्कथं धर्मराजं यमौ कृष्णां च राक्षसः ।
जहार चित्रं भीमश्च गतो राक्षसकण्टकः ।
वक्तुमर्हसि विप्राग्र्य व्यक्तमेतन्ममाऽनघ ॥ ३-१५८-३ (२१८८३)
वैशंपायन उवाच।' ३-१५८-४क्ष् (२२८९)
ब्राह्मणो मन्त्रकुशलः सर्वास्त्रेष्वस्त्रवित्तमः ।
इति ब्रुवन्पाण्डवेयान्पर्युपास्ते स्म नित्यदा ।
परीप्समानः पार्थानां कलापांश्च धनूंषि च ॥ ३-१५८-४ (२१८८४)
अन्तरं संपरिप्रेप्सुर्द्रौपद्या हरणं प्रति ।
दुष्टात्मा पापबुद्धिः स नाम्ना ख्यातो जटासुरः ॥३-१५८-५ (२१८८५)
श्पोषणं तस् राजेन्द्र चक्रे पाण्डवनन्दनः ।
बुबुधे न च तं पापं भस्मच्छन्नमिवानलम् ॥३-१५८-६ (२१८८६)

स भीमसेने निष्क्रान्ते मृगयार्थमरिंदमे ।
श्घटोत्कचं सानुचरं दृष्ट्वा विप्रद्रुतं दिशः ॥ ३-१५८-७ (२१८८७)
लोमशप्रभृतींस्तांस्तु महर्षींश्च समाहितान् ।
स्नातुं विनिर्गतान्दृष्ट्वा पुष्पार्थं च तपोधनान्घ ॥ ३-१५८-८ (२१८८८)
रूपमन्यत्समास्थाय विकृतं भैरवं महत् ।
गृहीत्वा सर्वशस्त्राणि द्रौपदीं परिगृह्य च ।
प्रातिष्ठत सुदुष्टात्मा त्रीन्गृहीत्वा च पाण्डवान् ॥ ३-१५८-९ (२१८८९)
श्विक्रम्य कौशिकं खड्गं मोक्षयित्वा ग्रहं रिपोः ऽ
आक्रन्दद्भीमसेन वै येन यातो महाबलः ॥ ३-१५८-१० (२१८९०)
तमब्रवीद्धर्मराजो ह्रियमाणो युधिष्ठिरः ।
धर्मस्ते हीयते मूढ न चैनं समवेक्षसे ॥ ३-१५८-११ (२१८९१)
येऽन्ये क्वचिन्मनुष्येषु तिर्यग्योनिगताश्च ये ।
धर्मं ते समवेक्षन्ते रक्षांसि च विशेषतः ॥ ३-१५८-१२ (२१८९२)
धर्मस्यराक्षसा मूलं धर्मं ते विदुरुत्तमम् ।
एतत्परीक्ष्यसर्वं त्वं समीपे स्थातुमर्हसि ॥ ३-१५८-१३ (२१८९३)
देवाश्च ऋषयः सिद्धाः पितरश्चापि राक्षस ।
गन्धर्वोरगरक्षांसि वयांसि पशवस्तथा ॥ ३-१५८-१४ (२१८९४)
तिर्यग्योनिगताश्चैव अपि कीटपिपीलिकाः ।
मनुष्यानुपजीवन्ति ततस्त्वमपि जीवसि ॥ ३-१५८-१५ (२१८९५)
समृद्ध्या यस्य लोकस्य लोको युष्माकमृध्यति ।
इमं च लोकं शोचन्तमनुशोचन्ति देवताः ।
पूज्यमानाश्च वर्धन्ते हव्यकव्यैर्यथाविधि ॥ ३-१५८-१६ (२१८९६)
वयं राष्ट्रस्य गोप्तारो रक्षितारश्च राक्षस ।
राष्ट्रस्यारक्ष्यमाणस्य कुतो भूतिः कुतः सुखम् ॥ ३-१५८-१७ (२१८९७)
न च राजाऽवमन्तव्यो रक्षसा जात्वनागसि ।
अनुरप्यपचारश्च नास्त्यस्माकं नराशन ॥ ३-१५८-१८ (२१८९८)
विघसाशान्यथाशक्त्या कुर्महे देवतादिषु ।
गुरूंश्च ब्राह्मणांश्चैव प्रमाणप्रवणाः सदा ॥ ३-१५८-१९ (२१८९९)
द्रोग्धव्यं न च मित्रेषु न विश्वस्तेषु कर्हिचित् ।
येषां चान्नानि भुञ्जीत यत्रच स्यात्प्रतिश्रयः ॥ ३-१५८-२० (२१९००)
स त्वं प्रतिश्रयेऽस्माकं पूज्यमानः सुखोषितः ।
भुक्त्वा चान्नानि दुष्प्रज्ञ कथमस्माञ्जिहीर्षसि ॥ ३-१५८-२१ (२१९०१)
एवमेव वृथाचारो वृथा वृद्धो वृथामतिः ।
वृथामरणमर्हस्त्वं वृथाऽद्य नमविष्यसि ॥ ३-१५८-२२ (२१९०२)
अथ चेद्दुष्टबुद्धिस्त्वं सर्वैर्धर्मैर्विवर्जितः ।
प्रदाय शस्त्राण्यस्माकं युद्धेन द्रौपदीं हर ॥ ३-१५८-२३ (२१९०३)

अथ चेत्त्वमविज्ञाय इदं कर्म करिष्यसि ।
अधर्मं चाप्यकीर्तिं च लोके प्राप्स्यसि केवलं ॥ ३-१५८-२४ (२११०४)
एतामद्य परामृश्य स्त्रियं राक्षस मानुषीम् ।
विषमेतत्समालोड्य कुम्भेन प्राशितं त्वया ॥ ३-१५८-२५ (२११०५)
ततो युधिष्ठिरस्तस्य भारिकः समपद्यत ।
स तु भाराभिभूतात्मा न तथा शीघ्रगोऽभवत् ॥ ३-१५८-२६ (२११०६)
अथाब्रवीद्द्रौपदीं च नकुलं च युधिष्ठिरः ।
मा भैष्टं राक्षसान्मूढाद्गतिरस्य मया हृता ॥ ३-१५८-२७ (२११०७)
नातिदूरे महबाहुर्भविता पवनात्मजः ।
अस्मिन्मुहूर्ते संप्राप्ते नभविष्यति राक्षसः ॥ ३-१५८-२८ (२११०८)
सहदेवस्तु तं दृष्ट्वा राक्षसं मूढचेतसम् ।
उवाच वचनं राजन्कुन्तीपुत्रं युधिष्ठिरम् ॥ ३-१५८-२९ (२११०९)
राजन्किं नाम सत्कृत्यं क्षत्रियस्यास्त्यतोऽधिकम् ।
यद्युद्धेऽभिमुखः प्राणांस्त्यजेच्छत्रुं जयेत वा ॥ ३-१५८-३० (२१११०)
एष वास्मान्वयं वैनं युध्यमानाः परंतप ।
सूदयेम महाबाहो देशः कालो ह्ययं नृप ॥ ३-१५८-३१ (२११११)
क्षत्रधर्मस्य संप्राप्तः कालः सत्यपराक्रम ।
जयन्तो हन्यमाना वा प्राप्तुमर्हाम सद्गतिम् ॥ ३-१५८-३२ (२१११२)
राक्षसे जीवमानेऽद्य रविरस्तमियाद्यदि ।
नाहं ब्रूयां पुनर्जातु क्षत्रियोस्मीति भारत ॥ ३-१५८-३३ (२१११३)
भोभो राक्षस तिष्ठस्व सहदेवोस्मि पाण्डवः ।
हत्वा रवा मां नयस्वैनां हतो वा स्वप्स्यसीह वै ॥ ३-१५८-३४ (२१११४)
तदा ब्रुवति माद्रेये भीमसेनो यदृच्छया ।
प्रादृश्यत महाबाहुः सवज्र इव वासवः ॥ ३-१५८-३५ (२१११५)
सोऽपश्यद्भ्रातरौ तत्र द्रौपदीं च यशस्विनीम् ।
क्षितिस्थं सहदेवं च क्षिपन्तं राक्षसं तदा ॥ ३-१५८-३६ (२१११६)
मार्गाच्च राक्षसं मूढं कालोपहतचेतसम् ।
भ्रमन्तं तत्रतत्रैव दैवेन परिमोहितम् ॥ ३-१५८-३७ (२१११७)
हृतान्संदृश्य तान्भ्रातॄन्द्रौपदीं च महाबलः ।
क्रोधमाहारयद्भीमो राक्षसंचेदमब्रवीत् ॥ ३-१५८-३८ (२१११८)
विज्ञातोऽसि मया पूर्वं चेष्टञ्शस्त्रपरीक्षणे ।
आस्था तु त्वयि मे नास्ति यतोसि न हतस्तदा ॥ ३-१५८-३९ (२१११९)
ब्रह्मरूपप्रतिच्छन्नो न नो वदसि चाप्रियम् ।
प्रियेषु रममाणं त्वां न चैवाप्रियकारिणम् ।
ब्रह्मरूपेण विहितं नैव हन्यामनागसम् ॥ ३-१५८-४० (२११२०)
राक्षसं जानमानोऽपि यो हन्यान्नरकं व्रजेत् ।

अपक्वस्य च कालेन वधस्तव न विद्यते ॥ ३-१५८-४१ (२१९२१)
नूनमद्यासि संपक्वो यथा ते मतिरीदृशी ।
दत्ता कृष्णापहरणे कालेनाद्भुतकर्मणा ।
ग्सोपि कालं समासाद्य तथाऽद्य नभविष्यसि' ॥ ३-१५८-४२ (२१९२२)
बडिशोऽयंत्वया ग्रस्तः कालसूत्रेण लम्बितः ।
मत्स्योऽम्भसीव स्यूतास्यः कथमद्य गमिष्यसि ॥ ३-१५८-४३ (२१९२३)
यं चासि प्रस्थितो देशं मनः पूर्वं गतं च ते ।
न तं गन्तासि गन्तासि मार्गं बकहिडिम्बयोः ॥ ३-१५८-४४ (२१९२४)
एवमुक्तस्तु भीमेन राक्षसः कालचोदितः ।
भीत उत्सृज्य तान्सर्वान्युद्धाय समुपस्थितः ॥ ३-१५८-४५ (२१९२५)
अब्रवीच्च पुनर्भीमं रोषात्प्रस्फुरिताधरः ।
न मे मूढा दिशः पाप त्वदर्थं मे विलम्बनम् ॥ ३-१५८-४६ (२१९२६)
श्रुता मे राक्षसा ये ये त्वया विनिहता रणे ।
तेषामद्यकरिष्यामि तवास्रेणोदकक्रियाम् ॥ ३-१५८-४७ (२१९२७)
ग्एवमुक्त्वातदा भीमं राक्षसो योद्धुमाययौ ।
करालवदनः क्रोधात्कालसर्प इव श्वसन्' ॥ ३-१५८-४८ (२१९२८)
एवमुक्तस्ततो भीमः सृक्विणी परिलेलिहन् ।
स्मयमान इव क्रोधात्साक्षात्कालान्तकोपमः ॥ ३-१५८-४९ (२१९२९)
ग्ब्रुवन्वै तिष्ठतिष्ठेति क्रोधसंरक्तलोचनः'।
बाहुसंरम्भमेवेच्छन्नभिदुद्राव राक्षसम् ॥ ३-१५८-५० (२१९३०)
मुहुर्मुहुर्व्यादिदानः सृक्विणी परिसंलिहन् ।
अभिदुद्राव संरब्धो बलो वज्रधरं यथा ॥ ३-१५८-५१ (२१९३१)
भीमसेनोऽप्यवष्टब्धो नियुद्धायाभवत्स्थितः ।
राक्षसोऽपि च विस्रब्धो बाहुयुद्धमकाङ्क्षत' ॥ ३-१५८-५२ (२१९३२)
वर्तमाने तयो राजन्बाहुयुद्धे सुदारुणे ।
माद्रीपुत्रावतिक्रुद्धावुभावप्यभ्यधावताम् ॥ ३-१५८-५३ (२१९३३)
न्यवारयत्तौ प्रहसन्कुन्तीपुत्रो वृकोदरः ।
शक्तोऽहं राक्षसस्येति प्रेक्षध्वमिति चाब्रवीत् ॥ ३-१५८-५४ (२१९३४)
आत्मना भ्रातृभिश्चैव धर्मेण सुकृतेन च ।
इष्टेन च शपे राजन्सूदयिष्यामि राक्षसम् ॥ ३-१५८-५५ (२१९३५)
इत्येवमुक्त्वा तौ वीरौ स्पर्धमानौ परस्परम् ।
बाहुभिः समसज्जेतामुभौ रक्षोवृकोदरौ ॥ ३-१५८-५६ (२१९३६)
तयोरासीत्संप्रहारः क्रुद्धयोर्भीमरक्षसोः ।
अमृष्यमाणयोः सङ्ख्ये शक्रशम्बरयोरिव ॥ ३-१५८-५७ (२१९३७)
तौ वीरौ समभिक्रुद्धावन्योन्यं पर्यधावताम् ।
आरुज्यारुज्यतौ वृक्षानन्योन्यमभिजघ्नतुः ।

जीमूताविव धर्मान्ते विनदन्तौ महाबलौ ॥ ३-१५८-५८ (२१९३८)
बभञ्जतुर्महावृक्षानूरुभिर्बलिनां वरौ ।
अन्योन्येनाभिसंरब्धौ परस्परवधैषिणौ ॥ ३-१५८-५९ (२१९३९)
तद्वृक्षयुद्धमभवनमहीरुहविनाशनम् ।
वालिसुग्रीवयोर्भ्रात्रोः पुरेव कपिसिंहयोः ॥ ३-१५८-६० (२१९४०)
आविध्याविध्य तौ वृक्षान्मुहूर्तमितरेतरम् ।
ताडयामासतुरुभौ विनदन्तौ मुहुर्मुहुः ॥ ३-१५८-६१ (२१९४१)
तस्मिन्देशे यदा वृक्षाः सर्व एव निपातिताः ।
पुगीकृताश्च शतशः परस्परवधेप्सया ॥ ३-१५८-६२ (२१९४२)
ततः शिलाः समादाय मुहूर्तमिव भारत ।
महाभ्रैरिव शैलेन्द्रौ युयुधाते महाबलौ ॥ ३-१५८-६३ (२१९४३)
शिलाभिरुग्ररूपाभिर्बृहतीभिः परस्परम् ।
वज्रैरिव महावेगैराजघ्नतुरमर्षणौ ॥ ३-१५८-६४ (२१९४४)
अभिद्रुत्य च भूयस्तावन्योन्यबलदर्पितौ ।
भुजाभ्यां परिगृह्याथ चकर्षाते गजाविव ॥ ३-१५८-६५ (२१९४५)
मुष्टिभिश् महाघोरैरन्योन्यमभिपेततुः ।
ततः कटकटाशब्दो बभूव शुमहात्मनोः ॥ ३-१५८-६६ (२१९४६)
ततः संहृत्यमुष्टिं तु पञ्चशीर्षमिवोरगम् ।
वेगेनाभ्यहनद्भीमो राक्षसस्य शिरोधराम् ॥ ३-१५८-६७ (२१९४७)
ततः श्रान्तं तु तद्रक्षो भीमसेनभुजाहतम् ।
सुपरिश्रान्तमालक्ष्य भीमसेनोऽभ्यवर्तत ॥ ३-१५८-६८ (२१९४८)
तत एनं महाबाहुर्बाहुभ्याममरोपमः ।
समुत्क्षिप्य बलाद्भीमो निष्पिपेष महीतले ॥ ३-१५८-६९ (२१९४९)
ग्ततः संपीड्य बलवद्भुजाभ्यां क्रोधमूर्च्छितः।'
तस्य गात्राणि सर्वाणि चूर्णयामास पाण्डवः ।
अरत्निना चाभिहत्य शिरः कायादपाहरत् ॥ ३-१५८-७० (२१९५०)
संदष्टौष्ठं विवृत्ताक्षं फलं वृक्षादिव च्युतम् ।
जटासुरस्य तु शिरो भीमसेनबलाद्धृतम् ।
पपात रुधिरादिग्धं संदष्टदशनच्छदम् ॥ ३-१५८-७१ (२१९५१)
तं निहत्यमहेष्वासो युधिष्ठिरमुपागमत् ।
स्तूयमानो द्विजाग्र्यैस्तु मरुद्भिरिव वासवः ॥ ३-१५८-७२ (२१९५२)

इति श्रीमन्महाभारते अरण्यपर्वणि जटासुरवधपर्वणि
अष्टपञ्चाशदधिकशततमोऽध्यायः ॥ १५८ ॥

Mahabharata - Vana Parva - Chapter Footnotes

३-१५८-४ कलापान् निषङ्गान् ॥
३-१५८-१० कौशिकं कोशादागतम् । ग्रहं ग्रहणम् ॥
३-१५८-१६ युष्माकं देवासुरादीनाम् । ऋध्यति वृद्धिं गच्छति ॥
३-१५८-१९ विघसाशान् देवादिशेषान्नं विघसं तस्य आशो भोजनं येषां तान् ॥
३-१५८-२० प्रतिश्रयो गृहम् ॥
३-१५८-२२ नभविष्यसि मरिष्यति ॥
३-१५८-२६ गुरुकः समपद्यतेति झ । पाठः ॥
३-१५८-३० सत्कृत्यं साधुकार्यम् ॥
३-१५८-३९ आस्था त्वन्मारणे आदरः ॥
३-१५८-४० अतिथि ब्रह्मरूपं च कथं इति झ । पाठः ॥
३-१५८-४२ कालपक्व इदानीं त्वं यथेति थ । पाठः ॥
३-१५८-४३ बडिशो मत्स्यवेधनम् ॥
३-१५८-४७ अस्रेण लोहितेन ॥
३-१५८-६० पुरा स्त्रीकाङ्क्षिणोर्यथा इति झ । पाठः ॥
३-१५८-६१ आविध्य भ्रामयित्वा ॥
३-१५८-६२ मुञ्जीकृताश्चेति झ । पाठः। तत्र मुञ्जीकृताः रज्ज्वर्थं मुञ्जवज्जर्जरीकृता इत्यर्थः ॥
५-१५८-६३ महाभ्रैरिवेत्यभूतोपमा ॥
३-१५८-६७ शिरोधरां ग्रीवाम् ॥
३-१५८-६८ अभ्यवर्तत अधिकोत्साह्वानभूत् ॥

---

वन-अध्यय१५९
॥ श्रीः ॥
३.१५९. अध्यायः १५९

Mahabharata - Vana Parva - Chapter Topics
जटासुरवधानन्तरं सपरिवारेण युधिष्ठिरेण नरनारायणाश्रमे निवासः ॥ १ ॥
ततो वृषपर्वाश्रमादिषु सुखेन संचरणम् ॥ २ ॥
तत आर्ष्टिषेणाश्रमगमनम् ॥ ३ ॥

Mahabharata - Vana Parva - Chapter Text

३-१५९-० (२१९५३)
वैशंपायन उवाच। ३-१५९-०क्ष् (२२९०)

निहते राक्षसे तस्मिन्पुनर्नारायणाश्रमम् ।
अभ्येत्य राजा कौन्तेयो निवासमकरोत्प्रभुः ॥ ३-१५९-१ (२१९५४)
स समानीय तान्सर्वान्भ्रातॄनित्यब्रवीद्वचः ।
द्रौपद्या सहितः काले संस्मरन्भ्रातरं जयम् ॥ ३-१५९-२ (२१९५५)
समाश्वतस्रोऽभिगताः शिवेन चरतां वने ।
कृतोद्देशः स बीभत्सुश्च पञ्चमीमभितः समाम् ॥ ३-१५९-३ (२१९५६)
प्राप्य पर्वतराजानं श्वेतं शिखरिणांवरम् ।
श्पुष्पितैर्द्रुमषण्डैश्च मत्तकोकिलाषट्पदैः ॥ ३-१५९-४ (२१९५७)
मयूरैश्चातकैश्चापि नित्योत्सवविभूषितम् ।
व्याघ्रैर्वरहैर्महिषैर्गवयैर्हरिणैस्तथा ॥ ३-१५९-५ (२१९५८)
श्वापदैर्व्यालरूपैश्च रुरुभिश्च निषेवितम् ।
फुल्लैः सहस्रपत्रैश्च शतपत्रैस्तथोत्पलैः ॥ ३-१५९-६ (२१९५९)
प्रफुल्लैः कमलैश्चैव तथा नीलोत्पलैरपि ।
महापुणायं पवित्रं च सुरासुरनिषेवितम् ॐ
तत्रापि च कृतोद्देशः समागमदिदृक्षुभिः ॥ ३-१५९-७ (२१९६०)
कृतश्च समयस्तेन पार्थेनामिततेजसा ।
पञ्चवर्षाणि वत्स्याभि विद्यार्थीति पुरा मयि ॥ ३-१५९-८ (२१९६१)
अत्रगाण्डीवधन्वानमवाप्तास्त्रमरिंदमम् ।
देवलोकादिमं लोकं द्रक्ष्यामः पुनरागतम् ॥ ३-१५९-९ (२१९६२)
इत्युक्त्वा ब्राह्मणान्सर्वानामन्त्रयत पाण्डवः ।
कारणं चैव तत्तेवामाचचक्षे तपस्विनाम् ॥ ३-१५९-१० (२१९६३)
तमुग्रतपसः प्रीताः कुत्वापार्थं प्रदक्षिणम् ।
ब्राह्मणास्तेऽन्वमोदन्त शिवेन कुशलेन च ॥ ३-१५९-११ (२१९६४)
सुखोदर्कमिमं क्लेशमचिराद्भरतर्षभ ।
क्षत्रधर्मेण धर्मज्ञ तीर्त्वा गां पालयिष्यसि ॥ ३-१५९-१२ (२१९६५)
तत्तु राजा वचस्तेषां प्रतिगृह्य तपस्विनाम् ।
प्रतस्थे सह विप्रैस्तैर्भ्रातृभिश्च परंतपः ॥ ३-१५९-१३ (२१९६६)
ग्द्रौपद्या सहितः श्रीमान्हैडिम्बेयादिभिस्तदा'।
राक्षसैरनुयातो वै लोमशेनाभिरक्षितः ॥ ३-१५९-१४ (२१९६७)
क्वचित्पद्भयां ततोऽगच्छद्राक्षसैरुदह्यते क्वचित् ।
तत्रतत्र महातेजा भ्रातृभिः सह सुव्रतः ॥ ३-१५९-१५ (२१९६८)
ततो युधिष्ठिरो राजा बहुन्क्लेशान्विचिन्तयन् ।
सिंहव्याघ्रगजाकीर्णामुदीचीं प्रययौ दिशम् ॥ ३-१५९-१६ (२१९६९)
अवेमाण कैलासं मैनाकं चैव पर्वतम् ।
गन्धमादनपादांश्च मेरुं चापि शिलोच्चयम् ॥ ३-१५९-१७ (२१९७०)
उपर्युपरि शैलस्य बहीश्च सरितः शिवाः ।

पृष्ठं हिमवतः पुण्यं ययौ सप्तदशेऽहनि ॥ ३-१५९-१८ (२१९७१)
ददृशुः पाण्डवा राजन्गान्धमादनमन्तिकम् ।
पृष्ठे हिमवतः पुण्ये नानाद्रुमलतावृते ॥ ३-१५९-१९ (२१९७२)
सलिलावर्तसंजातैः पुष्पितैश्च महीरुहैः ।
समावृतं पुण्यतममाश्रमं वृषपर्वणः ॥ ३-१५९-२० (२१९७३)
तमुपक्रम्य राजर्षिं धर्मात्मानमरिंदमाः ।
पाण्डवा वृषपर्वाणमवदन्त गतक्लमाः ॥ ३-१५९-२१ (२१९७४)
अभ्यनन्दत्स राजर्षिः पुत्रवद्भरतर्षभान् ।
पूजितास्त्वावसंस्तत्रसप्तरात्रमरिंदमाः ॥ ३-१५९-२२ (२१९७५)
अष्टमेऽहनि संप्राप्ते तमृषिं लोकविश्रुतम् ।
आमन्त्र्य वृषपर्वाणं प्रस्थानं प्रत्यरोचयन् ॥ ३-१५९-२३ (२१९७६)
एकैकशश्च तान्विप्रान्निवेद्य वृषपर्वणि ।
न्यासभूतान्यथाकालं बन्धूनिव सुसत्कृतान् ।
पारिबर्हं चतं शेषं परिदाय महात्मने ॥ ३-१५९-२४ (२१९७७)
ततस्ते यज्ञपात्राणि रत्नान्याभरणानि च ।
न्यदधुःपाण्डवा राजन्नाश्रमे वृषपर्वणः ॥ ३-१५९-२५ (२१९७८)
अतीतानागते विद्वान्कुशलः सर्वधर्मवित् ।
अन्वशासत्स धर्मज्ञः पुत्रवद्भरतर्षभान् ॥ ३-१५९-२६ (२१९७९)
तेऽनुज्ञाता महात्मानः प्रययुर्दिशमुत्तराम् ।
ग्कृष्णया सहिता वीरा ब्राह्मणैश्च महात्मभिः ३-१५९-२७ (२१९८०)
तान्प्रस्थितानन्वगच्छद्वृषपर्वा महीपतीन् ।
उपन्यस् महातेजा विप्रेभ्यः पाण्डवांस्तदा ॥ ३-१५९-२८ (२१९८१)
अनुसंसार्य कौन्तेयानाशीर्भिरभिनन्द्य च ।
वृषपर्वा निववृतेपन्थानमुपदिश्य च ॥ ३-१५९-२९ (२१९८२)
नानामृगगणैर्जुष्टं कौन्तेयः सत्यविक्रमः ।
पदातिर्भ्रातृभिः सार्धं प्रातिष्ठत युधिष्ठिरः ॥ ३-१५९-३० (२१९८३)
नानाद्रुमनिरोधेषु वसन्तः शैलसानुषु ।
पर्वतं विविशुस्ते तं चतुर्थेऽहनि पाण्डवाः ॥ ३-१५९-३१ (२१९८४)
महाभ्रघनसंकाशं सलिलोपहितं शुभम् ।
मणिकाञ्चनरम्यं च शैलं नानासमुच्छ्रयम् ॥ ३-१५९-३२ (२१९८५)
ग्रम्यं हिमवतः प्रस्थं बहुकन्दरनिर्झरम् ।
शिलाविभङ्गविकटं लतापादपसङ्कुलम्' ॥ ३-१५९-३३ (२१९८६)
ते समासाद्यपन्थानं यतोक्तं वृषपर्वणा ।
अनुसस्रुर्यथोद्देशं पश्यन्तो विविधान्नगान् ॥ ३-१५९-३४ (२१९८७)
उपर्युपरि शैलस्य गुहाः परमदुर्गमाः ।
सुदुर्गमांस्ते सुबहून्सुखेनैवाभिचक्रमुः ॥ ३-१५९-३५ (२१९८८)

धौम्यः कृष्णा च पार्ताश्च लोमशश्च महानृषिः ।
आगच्छन्सहितास्तत्रन कश्चिदपि हीयते ॥ ३-१५९-३६ (२१९८९)
ते मृगद्विजसंघुष्टं नानाद्रुमलतायुतम् ।
शाखामृगगणैश्चैव सेवितं सुमनोरमम् ॥ ३-१५९-३७ (२१९९०)
पुण्यं पद्मसरोपेतं सपल्वलमहावनम् ।
उपतस्थुर्महाभागा माल्यवतं महागिरिम् ॥ ३-१५९-३८ (२१९९१)
ततः किंपुरुषावासं सिद्धचारणसेवितम् ।
ददृशुर्हृषरोमाणाः पर्वतं गन्धमादनम् ॥ ३-१५९-३९ (२१९९२)
विद्याधरानुचरितं किन्नरीभिस्तथैव च ।
गजसङ्घसमावासं सिंहव्याघ्रगणायुतम् ॥ ३-१५९-४० (२१९९३)
शरभोन्नादसंघुष्टं नानमृगनिषेवितम् ॥ ३-१५९-४१ (२१९९४)
ते गन्धमादनवनं तन्नन्दनवनोपमम् ।
मुदिताः पाण्डुतनया मनोनयननन्दनम् ॥ ३-१५९-४२ (२१९९५)
विविशुः क्रमशो वीरा अरण्यं शुभकाननम् ।
द्रौपदीसहिता वीरास्तैश्च विप्रैर्महात्मभिः ॥ ३-१५९-४३ (२१९९६)
शृण्वन्तः प्रीतिजननान्वल्गून्मन्दकलाञ्शुभान् ।
श्रोत्ररम्यान्सुमधुराञ्शब्दान्खगमुखेरितान् ॥ ३-१५९-४४ (२१९९७)
सर्वर्तुफलभाराञ्यान्सर्वर्तुकुसुमोज्ज्वलाम् ।
पश्यन्तः पादपांस्चापि फलभारावनामितान् ॥ ३-१५९-४५ (२१९९८)
आम्रानाम्रातकान्फुल्लान्नारिकेलान्सतिन्दुकान् ।
मुञ्जातकांस्तथाञ्जीरान्दाडिमान्बीजपूरकान् ॥ ३-१५९-४६ (२१९९९)
पनसाँल्लिकुचान्मोचाः खर्जूरानम्लवेतसान् ।
परावतांस्तथा क्षौद्रानीपांश्चापि मनोरमान् ॥ ३-१५९-४७ (२२०००)
बेल्वान्कपित्थाञ्जम्बूश्च काश्मरीर्बदरीस्तथा ।
पुक्षानुदुम्बरवटानश्वत्थान्क्षीरिकास्तथा ॥ ३-१५९-४८ (२२००१)
मल्लातकानामलकीर्हरीतकबिभीतकान् ।
इङ्गुदान्करमर्दांश्च तिन्दुकांश् महाफलान् ॥ ३-१५९-४९ (२२००२)
एतानन्यांश्च विविधान्गन्धमादनसानुषु ।
फलैरमृतकल्पैस्तानाचितान्स्वादुभिस्तरूपन् ॥ ३-१५९-५० (२२००३)
तथैव चम्पकाशोकान्केतकान्बकुलांस्तथा ।
पुन्नागान्सप्तपर्णांश्च कर्णिकारान्सकेतकान् ।
पाटलान्कुटजान्रम्यान्मन्दारेन्दीवरांस्तथा ॥ ३-१५९-५१ (२२००४)
पारिजातान्कोविदारान्देवदारुद्रुमांस्तथा ।
पारिजातान्कोविदारान्देवदारुद्रुमांस्तथा ।
शालांस्तालांस्तमालांश्च पिप्पलान्हिङ्गुकांस्तथा ॥ ३-१५९-५२ (२२००५)
चकोरैः शतपत्रैश् भृङ्गराजैस्तथा शुकैः ।

कोकिलैः कलविङ्कैश्च हारितैर्जीवजीवकैः ॥ ३-१५९-५३ (२२००६)
प्रियकैश्चातकैश्चैव तथाऽन्यैर्विविधैः खगैः ।
श्रोत्ररम्यं सुमधुरं कूजद्भिश्चाप्यधिष्ठितान् ॥ ३-१५९-५४ (२२००७)
सरांसि च मनोज्ञानि समन्ताज्जलचारिभिः ।
कुमुदैः पुण्डरीकैश्च तृथा कोकनदोत्पलैः ।
कह्लारैः कमलैश्चैव आचितानि समन्ततः ॥ ३-१५९-५५ (२२००८)
कादम्बैश्चक्रवाकैश्च कुररैर्जलकुक्कुटैः ।
कारण्डवैः प्लवैर्हंसैर्बकैर्मद्गुभिरेव च ॥ ३-१५९-५६ (२२००९)
एतैश्चान्यैश्च कीर्णानि समन्ताज्जलचारिभिः ।
हृष्टैस्तथा तामरसरसासवमदालसैः ॥ ३-१५९-५७ (२२०१०)
पद्मोदरच्युतरजःकिञ्जल्कारुणरञ्जितैः ।
मञ्जुस्वरैर्मधुकरैर्विरुतान्कमलाकरान् ॥ ३-१५९-५८ (२२०११)
अपश्यंस्ते नरव्याघ्रा गन्धमादनसानुषु ।
तथैव पद्मषण्डैश्च मण्डितांश्च समन्ततः ॥ ३-१५९-५९ (२२०१२)
शिखण्डिनीभिः सहिताँल्लतामण्डलकेषु च ।
मेघतूर्यरवोद्दाममदनाकुलितान्भृशम् ॥ ३-१५९-६० (२२०१३)
कृत्वैव केकामधुरं संगीतं मधुरस्वरम् ।
चित्रान्कलापान्विस्तीर्य सविलासान्मदालसान् ॥ ३-१५९-६१ (२२०१४)
मयूरान्ददृशुर्हृष्टान्नृत्यतो वनलालसान् ।
कांश्चित्प्रियाभिः सहितान्रममाणान्कलापिनः ॥ ३-१५९-६२ (२२०१५)
वल्लीलतासंकटेषु कुटजेषु स्थितांस्तथा ।
कांश्चिच्च कुटजानां तु विटपेषूत्कटानिव ॥ ३-१५९-६३ (२२०१६)
कलापरुचिराटोपनिचितान्मुकुटानिव ।
विवरेषु तरूणां च रुचिरान्ददृशुश्च ते ॥ ३-१५९-६४ (२२०१७)
सिन्धुवारांस्तथोदारान्मन्मथस्येव तोमरान् ।
सुवर्णवर्णकुसुमान्गिरीणां सिखरेषु च ।
कर्णिकारान्विकसितान्कर्णपूरानिवोत्तमान् ॥ ३-१५९-६५ (२२०१८)
तथाऽपश्यन्कुरबकान्वनराजिषु पुष्पितान् ।
कामवश्यौत्सुक्यकरान्कामस्येव शरोत्करान् ॥ ३-१५९-६६ (२२०१९)
तथैव वनराजीनामुदारान्नचितानिव ।
विराजमानांस्तेऽपश्यंस्तिलकांस्तिलकानिव ॥ ३-१५९-६७ (२२०२०)
तथानङ्गशराकारान्सहकारान्मनोरमान् ।
अपश्यन्भ्रामरारान्राजन्मञ्जरीभिर्विराजितान् ॥ ३-१५९-६८ (२२०२१)
हिरण्यसदृशैः पुष्यैर्दावाग्निसदृशैरपि ।
लोहितैरञ्जनाभैश्च वैदूर्यसदृशैरपि ।
अतीव वृक्षा राजन्ते पुष्पिताः शैलसानुषु ॥ ३-१५९-६९ (२२०२२)

तथा सालांस्तमालांश्च पाटलाबकुलानपि ।
माला इव समासक्ताः शैलानां शिखरेषु च ॥ ३-१५९-७० (२२०२३)
विमलस्फाटिकाभानि पाण्डुरच्छदनैर्द्विजैः ।
कलहंसैरुपेतानि सारसाभिरुतानि च ॥ ३-१५९-७१ (२२०२४)
सरांसि बहुशः पार्था पश्यन्तः शैलसानुषु ।
पद्मोत्पलविमिश्राणि सुखशीतजलानि च ॥ ३-१५९-७२ (२२०२५)
एवं क्रमेण ते वीरा वीक्षमाणाः समन्ततः ।
गन्वन्त्यथ माल्यानि रसवन्ति फलानि च ॥ ३-१५९-७३ (२२०२६)
सरांसि च मनोज्ञानि वृक्षांश्चातिमनोरमान् ।
विविशुः पाण्डवाः सर्वेविस्मयोत्फुल्ललोचनाः ॥ ३-१५९-७४ (२२०२७)
कमलोत्पलकह्लारपुण्डरीकसुगन्धिना ।
सेव्यमाना वने तस्मन्सुखस्पर्शेन वायुना ॥ ३-१५९-७५ (२२०२८)
ततो युधिष्ठिरो भीममाहेदं प्रीतिमद्वचः ।
अहो श्रीमदिदं भीम गन्धमादनकाननम् ॥ ३-१५९-७६ (२२०२९)
वने ह्यस्मिन्मनोरम्ये दिव्या काननजा द्रुमाः ।
लताश्च विविधाकाराः पत्रपुष्पफलोपगाः ।
भान्त्येते पुष्पविकचाः पुंस्कोकिलकुलाकुलाः ॥ ३-१५९-७७ (२२०३०)
नात्र कण्टकिनः केचिन्न च विद्यन्त्यपुष्पिताः ।
स्निग्धपत्रफला वृक्षा गन्धमादनसानुषु ॥ ३-१५९-७८ (२२०३१)
भ्रमरारावमधुरा नलिनीः फुल्लपङ्कजाः ।
विलोड्यमाना पश्येमाः करिभिः सकरेणुभिः ॥ ३-१५९-७९ (२२०३२)
पश्येमां नलिनीं चान्यां कमलोत्पलमालिनीम् ।
स्रग्धरां विग्रहवतीं साक्षाच्छ्रियमिवापराम् ॥ ३-१५९-८० (२२०३३)
नानाकुसुमगन्धाढ्यास्तस्येमाः काननोत्तमे ।
उपगीयमाना भ्रमरै राजन्ते वनराजयः ॥ ३-१५९-८१ (२२०३४)
पश्य भीम शुभान्देशान्देवाक्रीडान्समन्ततः ।
अमानुषगतिं प्राप्ताः संसिद्धाः स्म वृकोदर ॥ ३-१५९-८२ (२२०३५)
लताभिः पुष्पिताग्राभिः पुष्पिताः पादपोत्तमाः ।
संश्लिष्टाः पार्थ शोभन्ते गन्धमादनसानुषु ॥ ३-१५९-८३ (२२०३६)
शिखण्डिनीभिश्चरतां सहितानां शिखण्डिनाम् ।
नदतां शृणु निर्घोषं भीम पर्वतसानुषु ॥ ३-१५९-८४ (२२०३७)
चकोराः शतपत्राश्च मत्तकोकिलशारिकाः ।
पत्रिणः पुष्पितानेतान्संपतन्ति महाद्रुमान् ॥ ३-१५९-८५ (२२०३८)
रक्तपीतारुणाः पार्थ पादपाग्रगताः खगाः ।
परस्परमुदीन्ते बहवो जीवजीवकाः ॥ ३-१५९-८६ (२२०३९)
हरितारुणवर्णानां शाड्वलानां समीपतः ।

सारसाः प्रतिदृश्यन्ते शैलप्रस्रवणेष्वपि ॥ ३-१५९-८७ (२२०४०)
वदन्ति मधुरा वाचः सर्वभूतमनोरमाः ।
भृङ्गराजोपचक्राश्च लोहपृष्ठाः पतत्रिणः ॥ ३-१५९-८८ (२२०४१)
चतुर्विषाणाः पद्माभाः कुञ्जराः सकरेणवः ।
एते वैडूर्यवर्णाभं क्षोभयन्ति महत्सरः ॥ ३-१५९-८९ (२२०४२)
बहुतालसमुत्सेधाः शैलशृङ्गपरिच्युताः ।
नानाप्रस्रवणेभ्यश्च वारिधाराः पतन्ति च ॥ ३-१५९-९० (२२०४३)
भास्कराभप्रभा भीमाः शारदाभ्रघनोपमाः ।
शोभयन्ति महाशैलं नानारजतधातवः ॥ ३-१५९-९१ (२२०४४)
क्वचिदञ्जनवर्णाभाः क्वचित्काञ्चनसन्निभाः ।
धातवो हरितालस्य क्वचिद्धिङ्गुलकस्य च ॥ ३-१५९-९२ (२२०४५)
मनःशिलागुहाश्चैव संध्याभ्रनिकरोपमाः ।
शशलोहितवर्णाभाः क्वचिद्गैरिकधातवः ॥ ३-१५९-९३ (२२०४६)
सितासिताभ्रप्रतिमा बालसूर्यसमप्रभाः ।
एते बहुविधाः शैलं शोभयन्ति महाप्रभाः ॥ ३-१५९-९४ (२२०४७)
गन्धर्वाः सह कान्ताभिर्यथेष्टं भीमविक्रमाः ।
दृश्यन्ते शैलशृङ्गेषु पार्थ किंपुरुषैः सह ॥ ३-१५९-९५ (२२०४८)
गीतानां समतालानां तथासाम्नां च निःस्वनः ।
श्रूयते बहुधा भीम सर्वभूतमनोहरः ॥ ३-१५९-९६ (२२०४९)
महागङ्गामुदीक्षस्व पुण्यां देवनदीं शुभाम् ।
कलहंसगणैर्जुष्टामृषिकिन्नरसेविताम् ॥ ३-१५९-९७ (२२०५०)
धातुभिश्च सरिद्भिश्च किन्नरैर्मृगपक्षिभिः ।
गन्धर्वैरप्सरोभिश्च काननैश्च मनोरमैः ॥ ३-१५९-९८ (२२०५१)
व्यालैश्च विविधाकारैः शतशीर्षैः समन्ततः ।
उपेतं पश्य कौन्तेय शैलराजमरिंदम ॥ ३-१५९-९९ (२२०५२)
वैशंपायन उवाच। ३-१५९-१००क्ष् (२२९१)
ते प्रीतमनसः शूराः प्राप्ता गतिमनुत्तमाम् ।
नातृप्यन्पर्वतेन्द्रस्य दर्शनेन परंतपाः ॥ ३-१५९-१०० (२२०५३)
उपेतमथ माल्यैश्च फलवद्भिश्च पादपैः ।
आर्ष्टिपेणस् राजर्षेराश्रमं ददृशुस्तदा ॥ ३-१५९-१०१ (२२०५४)
ततस्ते तिग्मतपसं कृशं धमनिसंततम् ।
पारगं सर्वविद्यानामार्ष्टिषेणमुपागमन् ॥ ३-१५९-१०२ (२२०५५)

इति श्रीमन्महाभारते अरण्यपर्वणि यक्षयुद्धपर्वणि
एकोनषष्ट्यधिकशततमोऽध्यायः ॥ १५९ ॥
Mahabharata - Vana Parva - Chapter Footnotes

३-१५९-२ जयं अर्जुनम् ॥
३-१५९-३ कृतोद्देशः पञ्चमे वर्षे मयाऽवश्यमागन्तव्यमिति कृतसंकेतः ॥
३-१५९-४ श्वेतं कैलासम् ॥
३-१५९-७ तत्रापि देशे अस्माभिरिति शेषः । उद्देशः कृतः। संधिरार्षः ॥
३-१५९-१२ सुखोदर्कं सुखोदयम् ॥
३-१५९-२८ उपन्यस्य निवेद्य ॥
३-१५९-२९ अनुसंसार्य अनुगम्य ॥
३-१५९-५७ तामरसानां रसएव आसवो मद्यं तज्जेन मदेन अलसाः ॥
३-१५९-५८ विरुतान्विशिष्टशब्दयुतान् ॥
३-१५९-६३ कुटजेषु वृक्षविशेषेषु । वल्लीनां रलताप्रतानानि तैः संकटेषु कुञ्जीकृतेषु ॥
३-१५९-६५ सिंधुवारान् पद्मविशेषान् ॥
३-१५९-६६ कामवश्यानां नराणामौत्मुक्यकरान् ॥
३-१५९-७६ हे भीम ॥
३-१५९-८० नलिनीं सरसीम्
। कमलोत्पलयोरवान्तरजातिभेदः। विग्रहवतीं शरीरवतीम् ॥
३-१५९-८१ तस्य शैलस्य ॥
३-१५९-८८ भृङ्गराजादयः पक्षिविशेषाः ॥
३-१५९-८९ चतुर्विषाणाश्चतुर्दन्ताः ॥

---

वन-अध्यय१६०
॥ श्रीः ॥
३.१६०. अध्यायः १६०

Mahabharata - Vana Parva - Chapter Topics
आर्ष्टिपेणराजर्षिणा युधिष्ठिरंप्रति कैलासवर्णनपूर्वकमर्जुनागमनपर्यन्तं स्वाश्रमएव निवासचोदना ॥ १ ॥

Mahabharata - Vana Parva - Chapter Text

३-१६०-० (२२०५६)
वैशंपायन उवाच। ३-१६०-०क्ष् (२२९२)
युधिष्ठिरस्तमासाद्य तपसा दग्धकिल्बिषम् ।
अभ्यवादयत प्रीतः शिरसा नाम कीर्तयन् ॥ ३-१६०-१ (२२०५७)

ततः कृष्णा च भीमश्च यमौ च सुतपस्विनौ ।
शिरोभिः प्राप्य राजर्षिं परिवार्योपतस्थिरे ॥ ३-१६०-२ (२२०५८)
तथैव धौम्यो धर्मज्ञः पाण्डवानां पुरोहितः ।
यथान्यायमुपाक्रान्तस्तमृषिं संशितव्रतम् ॥ ३-१६०-३ (२२०५९)
अन्वजानात्स धर्मज्ञो मुनिर्दिव्येन चक्षुषा ।
पाण्डोः पुत्रान्कुरुश्रेष्ठानास्यतामिति चाब्रवीत् ॥ ३-१६०-४ (२२०६०)
कुरूणामृषभं प्राज्ञं पूजयित्वा महातपाः ।
सह भ्रातृभिरसीनं पर्यपृच्छदनामयम् ॥ ३-१६०-५ (२२०६१)
नानृते कुरुपे भावं कच्चिद्धर्मे प्रवर्तसे ।
मातापित्रोश्च ते वृत्तिः कच्चित्पार्थ न सीदति ॥ ३-१६०-६ (२२०६२)
कच्चित्ते गुरवः सर्वे वृद्धा वैद्याश्च पूजिताः ।
कच्चिन्न कुरुपे भावं पार्थ पापेषु कर्मसु ॥ ३-१६०-७ (२२०६३)
सुकृतंप्रतिकर्तुं च कच्चिद्धातुं च दुष्कृतम् ।
यथान्यायं कुरुश्रेष्ठ जानासि न विकत्थसे ॥ ३-१६०-८ (२२०६४)
यथार्हं मानिताः कच्चित्त्वया नन्दन्ति साधवः ।
वनेष्वपि वसन्कच्चिद्धर्ममेवानुवर्तसे ॥ ३-१६०-९ (२२०६५)
कच्चिद्धौम्यस्त्वदाचारैर्न पार्थ परितप्यते ।
दानधर्मतपःशौचैरार्जवेन तितिक्षया ॥ ३-१६०-१० (२२०६६)
पितृपैतामहं वृत्तं कच्चित्पार्थानुवर्तसे ।
कच्चिद्राजर्षियातेन पथा गच्छसि पाण्डव ॥ ३-१६०-११ (२२०६७)
स्वेस्वे किल कुले जाते पुत्रे नप्तरि वा पुनः ।
पितरः पितृलोकस्थाः शोचन्ति च रमन्ति च ॥ ३-१६०-१२ (२२०६८)
किं तस्य दुष्कृतेऽस्माभिः संप्राप्तव्यं भविष्यति ।
किं चास्य सुकृतेऽस्माभिः प्राप्तव्यमिति शोभनं ॥ ३-१६०-१३ (२२०६९)
पिता माता तथैवाग्निर्गुरुरात्मा च पञ्चमः ।
यस्यैतेपूजिताः पार्थ तस् लोकावुभौ जितौ ॥ ३-१६०-१४ (२२०७०)
श्युधिष्ठिर उवाच। ३-१६०-१५क्ष् (२२९३)
भगवन्नार्य माऽऽहैतद्यथावद्धर्मनिश्चयम् ।
यथाशक्ति यथान्यायं क्रियते विधिवन्मया ॥ ३-१६०-१५ (२२०७१)
आर्ष्टिषेण उवाच ॥ ३-१६०-१६क्ष् (२२९४)
अब्भक्षा वायुभक्षाश्च प्लवमाना विहायसा ।
जुषन्ते पर्वतश्रेष्ठमृषयः पर्वसन्धिषु ॥ ३-१६०-१६ (२२०७२)
कामिनः सह कान्ताभिः परस्परमनुव्रताः ।
दृश्यन्ते शैलशृङ्गस्था यथा किंपुरुषा नृप ॥ ३-१६०-१७ (२२०७३)
अरजांसि च वासांसि वसानाः कौशिकानि च ।
दृश्यन्ते बहवः पार्थ गन्धर्वाप्सरसां गणाः ॥ ३-१६०-१८ (२२०७४)

विद्याधरगणाश्चैव स्रग्विणः प्रियदर्शनाः ।
महोरगगणाश्चैव सुपर्णाश्चारणादयः ॥ ३-१६०-१९ (२२०७५)
अस्य चोपरि शैलस्य श्रूयते पर्वसन्धिषु ।
भेरीपणवशङ्खानां मृदङ्गानां च निःस्वनः ॥ ३-१६०-२० (२२०७६)
इहस्थैरेव तत्सर्वं श्रोतव्यं भरतर्षभाः ।
न कार्या वः कथंचित्स्यात्तत्राभिगमने मतिः ॥ ३-१६०-२१ (२२०७७)
न चाप्यतः परं शक्यं गन्तुं भरतसत्तमाः ।
विहारस्तत्र देवानाममानुषगतिस्तु सा ॥ ३-१६०-२२ (२२०७८)
ईषच्चपलकर्माणं मनुष्यमिह भारत ।
द्विषन्ति सर्वभूतानि ताडयन्ति च राक्षसाः ॥ ३-१६०-२३ (२२०७९)
अस्यातिक्रम्य शिखरं कैलासस्य युधिष्ठिर ।
गतिः परमसिद्धानां देवर्षीणां प्रकाशते ॥ ३-१६०-२४ (२२०८०)
चापलाद्धि न गन्तव्यं पार्त यानैस्ततः परम् ।
अयःशूलादिभिर्घ्नन्ति राक्षसाः शत्रुसूदन ॥ ३-१६०-२५ (२२०८१)
अप्सरोभिः परिवृतः समृद्ध्या नरवाहनः ।
इह वैश्रवणस्तात पर्वसन्धिषु दृश्यते ॥ ३-१६०-२६ (२२०८२)
शिखरे तं समासीनमधिपं यक्षरक्षसाम् ।
प्रेक्षन्ते सर्वभूतानि भानुमन्तमिवोदितम् ॥ ३-१६०-२७ (२२०८३)
देवदानवसिद्धानां तथा वैश्रवणस्य च ।
गिरेः शिखरमुद्यानमिदं भरतसत्तम ॥ ३-१६०-२८ (२२०८४)
उपासीनस्य धनदं तुम्बुरोः पर्वसन्धिषु ।
गीतसामस्वनस्तात श्रूयते गन्धमादने ॥ ३-१६०-२९ (२२०८५)
एतदेवंविधं चित्रमिह तात युधिष्ठिर ।
प्रेक्षन्ते सर्वभूतानि बहुशः पर्वसन्धिषु ॥ ३-१६०-३० (२२०८६)
भुञ्जाना मुनिभोज्यानि रसवन्ति फलानि च ।
वसध्वं पाण्डवश्रेष्ठा यावदर्जुनदर्शनात् ॥ ३-१६०-३१ (२२०८७)
न तात चपलैर्भाव्यमिह प्राप्तैः कथंचन ।
ग्चपलः सर्वभूतानां द्वेष्यो भवति मानवः' ॥ ३-१६०-३२ (२२०८८)
उषित्वेह यथाकामं यथाश्रद्धं विहृत्य च ।
ततः शस्त्रजितां श्रेष्ठ पृथिवीं पालयिष्यसि ॥ ३-१६०-३३ (२२०८९)

इति श्रीमन्महाभारते अरण्यपर्वणिः यक्षयुद्धपर्वणि
षष्ट्यधिकततमोऽध्यायः ॥ १६० ॥

Mahabharata - Vana Parva - Chapter Footnotes

३-१६०-४ मुनिः आर्ष्टिषेणः ॥

३-१६०-७ वैद्याः विद्यया विदिताः ॥
३-१६०-८ सुषुक्रनममां उपकारिणम् । दुष्कृतं अपकारिणं हातुं त्यक्तुं न विकत्थसे ज्ञातास्मीति न श्लाघसे ॥
३-१६०-१५ यथावत् माऽऽह यथामामाह ॥
३-१६०-१६ पर्वसंधिषु प्रतिपत्पञ्चदश्योरन्तराले ॥
३-१६०-२८ उद्यानं क्रीडावनयुतम् ॥

---

वन-अध्यय१६१
॥ श्रीः ॥
३.१६१. अध्यायः १६१

Mahabharata - Vana Parva - Chapter Topics
कदाचन गरुडपक्षवातानीताद्भुताम्बुजदर्शिन्या द्रौपद्या तादृशबहुपुष्पानयनं तथा दुष्टयक्षराक्षसक्षपणं च प्रार्थितेन भीमेन तदर्थं गन्धमादनशिखरारोहणम् ॥ १ ॥
तथा स्वीयशङ्खध्वनिश्रवणेनाभिद्रुतवतां मणिमदादीनां युद्धे हननम् ॥ २ ॥

Mahabharata - Vana Parva - Chapter Text

३-१६१-० (२२०९०)
जनमेजय उवाच। ३-१६१-०क्ष् (२२९५)
आर्ष्टिषेणाश्रमे तस्मिन्मम पूर्वपितामहाः ।
पाण्डोः पुत्रा महात्मान सर्वे दिव्यपराक्रमाः ॥ ३-१६१-१ (२२०९१)
कियन्तं कालमवसन्पर्वते गन्धमादने ।
किंच चक्रुर्महावीर्याः सर्वेऽतिबलपौरुषाः ॥ ३-१६१-२ (२२०९२)
कानि चाभ्यवहार्याणि तत्र तेषां महात्मनाम् ।
वसतां लोकवीराणामासंस्तद्ब्रूहि सत्तम ॥ ३-१६१-३ (२२०९३)
विस्तरेण च मे शंस भीमसेनपराक्रमम् ।
यद्यच्चक्रे महाबाहुस्तस्मिन्हैमवते गिरौ ॥ ३-१६१-४ (२२०९४)
न खल्वासीत्पुनर्युद्धं तस् यक्षैर्द्विजोत्तम ।
‘धनदाध्युषिते नित्यं वसतस्तत्र पर्वते’ ॥ ३-१६१-५ (२२०९५)
कच्चित्समागमस्तेषामासीद्वैश्रवणस्य च ।
तत्र ह्यायाति धनद आर्ष्टिषेणो यथाऽब्रवीत् ॥ ३-१६१-६ (२२०९६)
एतदिच्छाम्यहं श्रोतुं रविस्तरेण तपोधन ।
न हि मे शृण्वतस्तृप्तिरस्ति तेषां विचेष्टितम् ॥ ३-१६१-७ (२२०९७)
वैशंपायन उवाच। ३-१६१-८क्ष् (२२९६)

एतदात्महितं श्रुत्वा तस्याप्रतिमतेजसः ।
शासनं सततं चक्रुस्तथैव भरतर्षभाः ॥ ३-१६१-८ (२२०९८)
भुञ्जाना मुनिभोज्यानि रसवन्ति फलानि च ।
शुद्धबाणहतानां च मृगाणां पिशितान्यपि ॥ ३-१६१-९ (२२०९९)
मेध्यानि हिमवत्पृष्ठे मधूनि विविधानि च ।
एवं ते न्यवसंस्तत्र पाण्डवा भरतर्षभाः ॥ ३-१६१-१० (२२१००)
तथा निवसतां तेषां पञ्चमं वर्षमभ्यगात् ।
शृण्वतां लोमशोक्तानि वाक्यानि विविधान्युत ॥ ३-१६१-११ (२२१०१)
कृत्यकाल उपस्तास्य इति चोक्त्वा घटोत्कचः ।
राक्षसैः सह सर्वैश्च पूर्वमेव गतः प्रभो ॥ ३-१६१-१२ (२२१०२)
आर्ष्टिषेणाश्रमे तेषां वसतां वै महात्मनाम् ।
अगच्छन्बहवो मासाः पश्यतां महदद्भुतम् ॥ ३-१६१-१३ (२२१०३)
तैस्तत्रविहरद्भिश्च रममाणैश्च पाण्डवैः ।
प्रीतिमन्तो महाभागा मुनयश्चारणास्तथा ॥ ३-१६१-१४ (२२१०४)
आजग्मुः पाण्डवान्द्रष्टुं शुद्धात्मानो यतव्रताः ।
ते तैः सह कथां चक्रुर्दिव्यां भरतसत्तमाः ॥ ३-१६१-१५ (२२१०५)
ततः कतिपयाहस्सु महाह्रदनिवासिनम् ।
ऋद्धिमन्तं महानागं सुपर्णः सहसाऽहरत् ॥ ३-१६१-१६ (२२१०६)
प्राकम्पत महाशैलः प्रामृद्यन्त महाद्रुमाः ।
ददृशुः सर्वभूतानि पाणाडवाश्च तदद्भुतम् ॥ ३-१६१-१७ (२२१०७)
ततः शैलोत्तमस्याग्रात्पाण्डवान्प्रति मारुतः ।
अवहत्सर्वमाल्यानि गन्धवन्ति शुभानि च ॥ ३-१६१-१८ (२२१०८)
तत्रपुष्पाणि दिव्यानि सुहृद्भिः सह पाण्डवाः ।
ददृशुः पञ्चवर्णानि द्रौपदी च यशस्विनी ॥ ३-१६१-१९ (२२१०९)
भीमसेनं ततः कृष्णा काले वचनमब्रवीत् ।
विविक्ते पर्वतोद्देशे सुखासीनं महाभुजम् ॥ ३-१६१-२० (२२११०)
सुपर्णानिलवेगेन श्वसनेन महाबलात् ।
पञ्चवर्णानि पात्यन्ते पुष्पाणि भरतर्षभ ॥ ३-१६१-२१ (२२१११)
गदिव्यावर्णानि दिव्यानि दिव्यगन्धवहानि च ।
मदयन्तीव गन्धेन मनो मे भरतर्षभ ॥ ३-१६१-२२ (२२११२)
येषां तु दर्शनात्स्पर्शान्सौरभ्याच्च तथैव च ।
नश्यतीव मनोदुःखं ममेदं शत्रुतापन ॥ ३-१६१-२३ (२२११३)
ईदृशैः कुसुमैर्दिव्यैर्दिव्यगन्धवहैः शुभैः ।
देवतान्यर्चयित्वाऽहमिच्छेयं सङ्गमं त्वया ॥ ३-१६१-२४ (२२११४)
इदं तु पुरुषव्याघ्र विशेषेणाम्बुजं शुभम् ।
गन्धसंस्थानसंपन्नं मम मानसवर्धनम्' ॥ ३-१६१-२५ (२२११५)

प्रत्यक्षं सर्वलोकस् नह्यदृश्यत मां प्रति ॥ ३-१६१-२६ (२२११६)
ग्वासुदेवसहायेन वासुदेवप्रियेण च'।
खाण्डवे सत्यसन्धेन भ्रात्रा तव महात्मना ॥ ३-१६१-२७ (२२११७)
गन्धर्वोरगरक्षांसि वासवश्च पराजितः ।
हता मायाविनश्चोग्रा धनुः प्राप्तं च गाण्डिवं ॥ ३-१६१-२८ (२२११८)
तवापि सुमहत्तेजो महद्बाहुबलं च ते ।
अविषह्यमनाधृष्यं शक्रतुल्यपराक्रम ॥ ३-१६१-२९ (२२११९)
त्वद्बाहुबलवेगेन त्रासिताः सर्वराक्षसाः ।
हित्वा शैलं प्रपद्यन्तां भीमसेन दिशो दश ॥ ३-१६१-३० (२२१२०)
ततः शैलोत्तमस्याग्रं चित्रमाल्यधरं शिवम् ।
व्यपेतभयसंमोहाः पश्यन्तु सुहृदस्तव ॥ ३-१६१-३१ (२२१२१)
एवं प्रणिहितं भीम चिरात्प्रभृतिमे मनः ।
द्रष्टुमिच्छामि शैलाग्रं त्वद्बाहुबलमाश्रिता ॥ ३-१६१-३२ (२२१२२)
गइच्छामि च नरव्याघ्र पुष्पं प्रत्यक्षमीदृशम् ।
आनीयमानं क्षिप्रं वै त्वया भरतसत्तम' ॥ ३-१६१-३३ (२२१२३)
ततः क्षिप्तमिवात्मानं द्रौपद्या स परंतपः ।
नामृष्यत महाबाहुः प्रहारमिवसद्गजः ॥ ३-१६१-३४ (२२१२४)
सिंहर्षभगतिः श्रीमानुदारः कनकप्रभः ।
मनस्वी बलवान्दृप्तो मानी भूरश्च पाण्डवः ॥ ३-१६१-३५ (२२१२५)
लोहिताक्षः पृथुव्यंसो मत्तवारणविक्रमः ।
सिंहदंष्ट्रो वृषस्कन्धः सालपोत इवोद्गतः ॥ ३-१६१-३६ (२२१२६)
महात्मा चारुसर्वाङ्ग कम्बुग्रीवो महाहनुः ।
रुक्मपृष्ठं धनुः खङ्गं तूणांश्चापि परामृशन् ॥ ३-१६१-३७ (२२१२७)
सकेसरीव चोत्सिक्तः प्रभिन्न इव वारणः ।
व्यपेतभयसंमोहः शैलमभ्यपतद्बली ॥ ३-१६१-३८ (२२१२८)
तं मृगेन्द्रमिवायान्तं प्रभिन्नमिव वारणम् ।
ददृशुः सर्वभूतानि पार्थं खङ्गधनुर्धरम् ॥ ३-१६१-३९ (२२१२९)
द्रौपद्या वर्धयन्हर्षं गदामादाय पाण्डवः ।
व्यपेतभयसंमोहः शैलराजं समाविशत् ॥ ३-१६१-४० (२२१३०)
न ग्लानिर्न च कातर्यं न वैक्लव्यं न मत्सरः ।
कदाचिज्जुषते पार्थमात्मजं मातरिश्वनः ॥ ३-१६१-४१ (२२१३१)
तदेकायनमासाद्य विषमं भीमदर्शनम् ।
बहुतालोच्छ्रयं शृङ्गमारुरोह महाबलः ॥ ३-१६१-४२ (२२१३२)
स किन्नरमहानागमुनिगन्धर्वराक्षसान् ।
हर्षयन्पर्वतस्याग्रमारुरोह महाबलः ॥ ३-१६१-४३ (२२१३३)
ततो वैश्रवणावासं ददर्श भरतर्षभः ।

काञ्चनैः स्फाटिकैश्चैव वेश्मभिः समलंकृतम् ॥ ३-१६१-४४ (२२१३४)
श्प्राकारेण परिक्षिप्तं सौवर्णेन समन्ततः ।
सर्वरत्नद्युतिमता सर्वोद्यानवता तथा ॥ ३-१६१-४५ (२२१३५)
शैलादभ्युच्छ्रयवता चयाट्टालकशोभिना ।
द्वारतोरणनिर्व्यूहध्वजसंवाहशोभिना ॥ ३-१६१-४६ (२२१३६)
विलासिनीभिरत्यर्थं नृत्यन्तीभिः समन्ततः ।
वायुना धूयमानाभिः पताकाभिरलंकृतम् ॥ ३-१६१-४७ (२२१३७)
धनुष्कोटिमवष्टभ्य वक्रभावेन बाहुना ।
पश्यमानः सखेदेन द्रविणाधिपतेः पुरम् ॥ ३-१६१-४८ (२२१३८)
मोदयनसर्वभूतानि गन्धमादनसंभवः ।
सर्वगन्धवहस्तत्र मारुतः सुसुखो ववौ ॥ ३-१६१-४९ (२२१३९)
चित्रा विविधवर्णाभाश्चित्रमञ्जरिधारिणः ।
अचिन्त्या विविधास्तत्र द्रुमाः परमशोभिनः ॥ ३-१६१-५० (२२१४०)
रत्नजालपरिक्षिप्तं चित्रमाल्यविभूषितम् ।
राक्षसाधिपतेः स्थानं ददृशे भरतर्षभः ॥ ३-१६१-५१ (२२१४१)
गदाखड्गधनुष्पाणिः समभित्यक्तजीवितः ।
भीमसेनो महाबाहुस्तस्थौ गिरिवाचलः ॥ ३-१६१-५२ (२२१४२)
ततः शङ्खमुपाध्माय द्विषतां रोमहर्षणम् ।
ज्याघोषं तलशब्दं च कृत्वा भूतान्यमोहयत् ॥ ३-१६१-५३ (२२१४३)
ततः प्रहृष्टरोमाणस्तं शब्दमभिदुद्रुवुः ।
यक्षराक्षसगन्धर्वाः पाण्डवस्य समीपतः ॥ ३-१६१-५४ (२२१४४)
गदापरिघनिस्त्रिंशशूलशक्तिपरश्वथाः ।
प्रगृहीता व्यरोचन्त यक्षराक्षसबाहुभिः ॥ ३-१६१-५५ (२२१४५)
ततः प्रववृते युद्धं तेषां तस्य च भारत ॥ ३-१६१-५६ (२२१४६)
तैः प्रयुक्तान्महामायैः शूलशक्तिपरश्वथान् ।
भल्लैर्भीमः प्रचिच्छेद भीमवेगतरैस्ततः ॥ ३-१६१-५७ (२२१४७)
अन्तरिक्षगतानां च भूमिष्ठानां च गर्जताम् ।
शरैर्विव्याध गात्राणइ राक्षसानां महाबलः ॥ ३-१६१-५८ (२२१४८)
ग्शोणितस्य ततः पेतुर्घनानामिव भारत।'
गात्रेभ्यः प्रच्युता धारा राक्षसानां समन्ततः'।
स लोहितमहावष्टिमभ्यवर्षन्महाबलः ॥ ३-१६१-५९ (२२१४९)
गदापरिघपाणीनां रक्षसां कायसंभवा ।
कायेभ्यः प्रच्युता धारा राक्षसानां समन्ततः ॥ ३-१६१-६० (२२१५०)
भीमबाहुबलोत्सृष्टैरायुधैर्यक्षरक्षसाम् ।
विनिकृत्तानि दृश्यन्ते शरीराणि शिरांसि च ॥ ३-१६१-६१ (२२१५१)
प्रच्छाद्यमानं रक्षोभिः पाण्डवं प्रियदर्शनम् ।

दद‍ृशुः सर्वभूतानि सूर्यमभ्रगणैरिव ॥ ३-१६१-६२ (२२१५२)
स रश्मिभिरिवादित्यः शरैररिनिपातिभिः ।
सर्वानार्च्छन्महाबाहुर्बलवान्सत्यविक्रमः ॥ ३-१६१-६३ (२२१५३)
अभितर्जयमानाश्च रुवन्तश् महारवान् ।
सन्नाहं भीमसेनस्य ददृशुः सर्वराक्षसाः ॥ ३-१६१-६४ (२२१५४)
ते हि विक्षतसर्वाङ्गा भीमसेनभयार्दिताः ।
भीममार्तस्वरं चक्रुर्विप्रकीर्णमहायुधाः ॥ ३-१६१-६५ (२२१५५)
उत्सृज्य ते गदाशूलानसिशक्तिपरश्वथान् ।
दक्षिणां दिशमाजग्मुस्त्रासिता दृढधन्वना ॥ ३-१६१-६६ (२२१५६)
तत्र शूलगदापाणिर्व्यूढोरस्को महाभुजः ।
सखा वैश्रवणस्यासीन्मणिमान्नाम राक्षसः ॥ ३-१६१-६७ (२२१५७)
दर्शयन्स प्रतीकारं पौरुषं च महाबलः ।
स तान्दृष्ट्वा परावृत्तान्स्मयमान इवाब्रवीत् ॥ ३-१६१-६८ (२२१५८)
एकेन बहवः सङ्ख्ये मानुषेण पराजिताः ।
प्राप्य वैश्रवणावासं किं वक्ष्यथ धनेश्वरम् ॥ ३-१६१-६९ (२२१५९)
एवमाभाष् तान्सर्वानभ्यवर्तत राक्षसः ।
शक्तिशूलगदापाणिरभ्यधावत्स पाण्डवम् ॥ ३-१६१-७० (२२१६०)
तमापतन्तं वेगेन प्रभिन्नमिव वारणम् ।
वत्सदन्तैस्त्रिभिः पार्श्वे भीमसेनः समार्दयत् ॥ ३-१६१-७१ (२२१६१)
मणिमानपि संक्रुद्धः प्रगृह्य महतीं गदाम् ।
प्राहिणोद्भीमसेनाय परिगृह्य महाबलः ॥ ३-१६१-७२ (२२१६२)
विद्युद्रूपां महाघोरामाकाशे महतीं गदाम् ।
शरैर्बहुभिरानर्च्छद्भीमसेनः शिलाशितैः ॥ ३-१६१-७३ (२२१६३)
प्रत्यहन्यन्त ते सर्वेगदामासाद्य सायकाः ।
न वेगं धारयामासुर्गदावेगस्य वेगिताः ॥ ३-१६१-७४ (२२१६४)
गदायुद्धसमाचारं बुध्यमानः स वीर्यवान् ।
व्यंसयामास तं तस्य प्रहारं भीमविक्रमः ॥ ३-१६१-७५ (२२१६५)
ततः शक्तिं महाघोरां रुक्मदण्डामयस्मयीम् ।
तस्मिन्नेवान्तरे धीमान्प्रचिक्षेप स राक्षसः ॥ ३-१६१-७६ (२२१६६)
सा भुजं भीमनिर्ह्रादा भित्त्वाभीमस् दक्षिणम् ।
साग्निज्वाला महारौद्रा पपात सहसा भुवि ॥ ३-१६१-७७ (२२१६७)
सोऽतिविद्धो महेष्वासः शक्त्याऽमितपराक्रमः ।
गदां जग्राह कौन्तेयो गदायुद्धविशारदः ॥ ३-१६१-७८ (२२१६८)
रुक्मपट्टपिनद्धां तां शत्रूणां भयवर्धिनीम् ।
प्रगृह्याथ नदन्भीमः शैक्यां सर्वायसीं गदाम् ।
तरसा चाभिदुद्राव मणिमन्तं महाबलम् ॥ ३-१६१-७९ (२२१६९)

दीप्यमानं महाशूलं प्रगृह्य मणिमानपि ।
प्राहिणोद्भीमसेनाय वेगेन महता नदन् ॥ ३-१६१-८० (२२१७०)
भङ्क्त्वा शूलं गदाग्रेण गदायुद्धविभागवित् ।
अभिदुद्राव तं तूर्णं गरुत्मानिव पन्नगम् ॥ ३-१६१-८१ (२२१७१)
सोऽन्तरिक्षमवप्लुत्य विधूय सहसा गदाम् ।
प्रचिक्षेप महाबाहुर्विनद्य रणमूर्धनि ॥ ३-१६१-८२ (२२१७२)
सेन्द्राशनिरिवेन्द्रेण विसृष्टा वातरहसा ।
हत्वा रक्षः क्षितिं प्राप्य कृत्येव निपपात ह ॥ ३-१६१-८३ (२२१७३)
तं राक्षसं बीमबलं भीमसेनबलाहतम् ।
ददृशुः सर्वभूतानि सिंहेनेव गवांपतिम् ॥ ३-१६१-८४ (२२१७४)
तं प्रेक्ष्य निहतं भूमौ हतशेषा निशाचराः ।
भीममार्तस्वरं कृत्वा जग्मुः प्राचजीं दिशं प्रति ॥ ३-१६१-८५ (२२१७५)

इति श्रीमन्महाभारते अरण्यपर्वणि यक्षयुद्धपर्वणि
एकषष्ट्यधिकशततमोऽध्यायः ॥

Mahabharata - Vana Parva - Chapter Footnotes

३-१६१-३४ सद्भव इति झ ।पाठः ॥
३-१६१-३६ पृथू विशिष्टौ अंसौ यस्यस पृथुव्यंसः ॥
३-१६१-४१ ग्लानिः श्रमः ।कातर्यं भयम्।वैक्लव्यमनुत्साहः।मत्सरः
परोत्कर्षासहिष्णुत्वम् ॥
३-१६१-४२ एकायनं वामदक्षिणसंचारशून्यम् ॥
३-१६१-४५ परिक्षिप्तं परित आवृतम् ॥
३-१६१-४६ चयाट्टालकशोभिना ।चयः प्रकारस्य मूलबन्धः।अट्टालकः
उपरिगृहम्।तोरणं वहिर्द्वारम्।निर्व्यूहः नागदन्ताख्यं
गृहान्निर्गतं दारु ॥
३-१६१-४८ वक्रभावेन वक्रेण बाहुना उपलक्षितः ।खेदेन
तद्दर्शनात्खसंपात्स्मरणं तेन।द्रविणाधिपतेः धनाधिपतेः ॥
३-१६१-५१ ददृशे ददर्श ॥
३-१६१-६४ न मोहं भीमसेनस्येति झ ।पाठः ॥
३-१६१-६८ अदर्शयदाधीकारमिति झ ।पाठः ॥
३-१६१-६९ सङ्ख्ये संग्रामे ॥
३-१६१-७४ प्रत्यहन्यन्त प्रतिहताः ।वेगिताः वेगवन्तोपि।गदावेगस्य
गदायां वेगोऽत्यभ्यासो यस्य तस्य ॥
३-१६१-७५ सः भीमः ।व्यंसयामास व्यर्थीचकार ॥
३-१६१-७६ अयस्मयी अयोमयीम् ॥

३-१६१-७९ शैक्यां शीकयति शत्रुन्पराभवतीति शैक्या
। शीकयतेर्ऋहलोर्ण्यदिति ण्यत्। ततः स्वार्थिकोण् ॥

---

वन-अध्यय१६२
॥ श्रीः ॥
३.१६२. अध्यायः १६२

Mahabharata - Vana Parva - Chapter Topics
भीमादर्शनेन दुर्मनायमानैर्युधिष्ठिरादिभिः पर्वताग्रारोहणेन
भीमसमीपगमनम् ॥ १ ॥
भीमहतावशिष्टैर्निवेदितमणिमदादिवधेन कुबेरेण युयुत्सया
भीमंप्रत्यागमनम् ॥ २ ॥
तत्रयुधिष्ठिरादिदर्शनेन शान्तमन्युना तेन तान्प्रति स्वस्याग
स्त्यशापावासिकथनपूर्वकं भीमसेनकार्यानुमोदनम् ॥ ३ ॥

Mahabharata - Vana Parva - Chapter Text

३-१६२-० (२२१७६)
वैशंपायन उवाच। ३-१६२-०क्ष् (२२९७)
श्रुत्वा बहुविधैः शब्दैर्नाद्यमानां गिरेर्गुहाम् ।
अजातशत्रुः कौन्तेयो माद्रीपुत्रावुभावपि ॥ ३-१६२-१ (२२१७७)
धौम्यः कृष्णा च विप्राश्च सर्वे च सुहृदस्तथा ।
भीमसेनमपश्यन्तः सर्वे विमनसोऽभवन् ॥ ३-१६२-२ (२२१७८)
द्रौपदीमार्ष्टिषेणाय संप्रधार्य महारथाः ।
सहिताः सायुधाः शूराः शैलमारुरुहुस्तदा ॥ ३-१६२-३ (२२१७९)
ततः संप्राप्य शैलाग्रं वीक्षमाणा महारथाः ।
ददृशुस्ते महेष्वासा भीमसेनमरिंदमम् ॥ ३-१६२-४ (२२१८०)
स्फुरतश्च महाकायान्गतसत्वांश्च राक्षसान् ।
महाबलान्महासत्वान्भीमसेनेव पातितान् ॥ ३-१६२-५ (२२१८१)
शुशुरतश्च महाकायान्गतसत्वांश्च राक्षसान् ।
महाबलान्महासत्वान्भीमसेनेन पातितान् ॥ ३-१६२-६ (२२१८२)
ततस्ते समतिक्रम्य परिष्वज्य वृकोदरम् ।
तत्रोपविविशुः पार्थाः प्राप्ता गतिमनुत्तमाम् ॥ ३-१६२-७ (२२१८३)
तैश्चतुर्भिर्महेष्वासैर्गिरिशृङ्गमशोभत ।
लोकपालैर्महाभागैर्दिवं देववरैरिव ॥ ३-१६२-८ (२२१८४)
कुबेरसदनं दृष्ट्वा राक्षसांश्च निपातितान् ।

भ्राता भ्रातरमासीनमथोवाच युधिष्ठिरः ॥ ३-१६२-९ (२२१८५)
साहसाद्यदिवा मोहाद्भीम पापमिदं कृतम् ।
नैतत्ते सदृशं वीर मुनेरिव मृषा वधाः ॥ ३-१६२-१० (२२१८६)
राजद्विष्टं न कर्तव्यमिति धर्मविदो विदुः ।
त्रिदशानामिदं द्विष्टं भीमसेन त्वया कृतम् ॥ ३-१६२-११ (२२१८७)
अर्थधर्मावनादृत्य यः पापे कुरुते मनः ।
कर्मणां पार्थ पापानां स फलं विन्दते ध्रुवम् ॥ ३-१६२-१२ (२२१८८)
ग्साहसंवत भद्रं ते देवानामपि चाप्रियम्'।
पुनरेवं न कर्तव्यं मम चेदिच्छसि प्रियम् ॥ ३-१६२-१३ (२२१८९)
वैशंपायन उवाच। ३-१६२-१४क्ष् (२२९८)
एवमुक्त्वा स धर्मात्मा भ्राता भ्रातरमच्युतम् ।
ग्भीमसेनं महाबाहुमप्रधृष्यपराक्रमम्' ॥ ३-१६२-१४ (२२१९०)
अर्थतत्त्वविभागज्ञः कुन्तीपुत्रो युधिष्ठिरः ।
विराम महातेजास्तमेवार्थं विचिन्तयन् ॥ ३-१६२-१५ (२२१९१)
ततस्ते हतशिष्टा ये भीमसेनेन राक्षसाः ।
सहिताः प्रत्यपद्यन्त कुबेरसदनं प्रति ॥ ३-१६२-१६ (२२१९२)
ते जवेन महावेगाः प्राप्य वैश्रवणालयम् ।
भीममार्तस्वरं चक्रुर्भीमसेनभयार्दिताः ॥ ३-१६२-१७ (२२१९३)
न्यस्तशस्त्रायुधाः क्लान्ताः शोणिताक्तपरिच्छदाः ।
प्रकीर्णमूर्धजा राजन्यक्षाधिपतिमब्रुवन् ॥ ३-१६२-१८ (२२१९४)
गदापरिघनिस्त्रिंसतोमरप्रासयोधिनः ।
राक्षसा निहताः सर्वे तव देवपुरःसराः ॥ ३-१६२-१९ (२२१९५)
प्रमृद्यतरसा शैलं मानुषेण धनेश्वर ।
एकेन निहताः सङ्ख्ये गताः क्रोधवशा गणाः ॥ ३-१६२-२० (२२१९६)
प्रवरा राक्षसेन्द्राणां यक्षाणां च नराधिप ।
शेरते निहता देव गतसत्वाः परासवः ॥ ३-१६२-२१ (२२१९७)
भग्नः शैलो वयं भग्ना मणिमांस्ते सखा हतः ।
मानुषेणं कृतं कर्म विधत्स्व यदनन्तरम् ॥ ३-१६२-२२ (२२१९८)
स तच्छ्रुत्वा तु संक्रुद्धः सर्वयक्षगणाधिपः ।
कोपसंरक्तनयनः कथमित्यब्रवीद्वचः ॥ ३-१६२-२३ (२२१९९)
द्वितीयमपराध्यन्तं भीमं श्रुत्वा धनेश्वरः ।
चुक्रोध यक्षाधिपतिर्युज्यतामिति चाब्रवीत् ॥ ३-१६२-२४ (२२२००)
अथाभ्रघनसंकाशं गिरिकूटमिवोच्छ्रितम् ।
रथं संयोजयामासुर्गन्धर्वैर्हेममालिभिः ॥ ३-१६२-२५ (२२२०१)
तस्य सर्वगुणोपेता विमलाक्षा हयोत्तमाः ।
तेजोबलगुणोपेता नानारत्नविभूषिताः ।

शोभमाना रथे युक्तास्तरिष्यन्त इवाशुगाः ॥ ३-१६२-२६ (२२२०२)
ग्ततस्ते तु महायक्षाः क्रुद्धं दृष्ट्वा धनेश्वरम्'।
हर्षयामासुरन्योन्यमिङ्गितैर्विजयावहैः ॥ ३-१६२-२७ (२२२०३)
स तमास्थाय भगवान्राजराजो महारथम् ।
प्रययौ देवगनधर्वैः स्तूयमानो महाद्युतिः ॥ ३-१६२-२८ (२२२०४)
तं प्रयान्तं महात्मानं सर्वे यक्षा धनाधिपम् ।
ग्अनुजग्मुर्महात्मानं धनदं घोरदर्शनाः' ॥ ३-१६२-२९ (२२२०५)
रक्ताक्षा हेमसंकाशा महाकाया महाबलाः ।
सायुधा बद्धनिस्त्रिंशा यक्षा बहुशतायुधाः ॥ ३-१६२-३० (२२२०६)
ते जवेन महावेगाः प्लवमाना विहायसा ।
गन्धमादनमाजग्मुः प्रकर्षन्त इवाम्बरम् ॥ ३-१६२-३१ (२२२०७)
तत्केसरिमहाजालं धनाधिपतिपालितम् ।
ग्रम्यं चैव गिरेः शृङ्गमासेदुर्यत्रपाण्डवाः' ॥ ३-१६२-३२ (२२२०८)
कुबेरं च महात्मानं यक्षरक्षोगणावृतम् ।
ददृशुर्हृष्टरोमाणः पाण्डवाः प्रियदर्शनम् ॥ ३-१६२-३३ (२२२०९)
कुबेरस्तु महासत्वान्पाण्डोः पुत्रान्महारथान् ।
आत्तकार्मुकनिस्त्रिंशान्दृष्ट्वा प्रीतोऽभवत्तदा ॥ ३-१६२-३४ (२२२१०)
ग्सर्वे चेमे नरव्याघ्राः पुरन्दरसमौजसः।'
देवकार्यं करिष्यन्ति हृदयेन तुतोष ह ॥ ३-१६२-३५ (२२२११)
ते पक्षिण इवापेतुर्गिरिशृङ्गं महाजवाः ।
तस्थुस्तेषां सकाशे वै धनेश्वरपुरःसराः ॥ ३-१६२-३६ (२२२१२)
ततस्तं हृष्टमनसं पाण्डवान्प्रति भारत ।
समीक्ष्ययक्षगन्धर्वा निर्विकारमवस्थिताः ॥ ३-१६२-३७ (२२२१३)
पाण्डवाश्च महात्मानः प्रणम्य धनदं प्रभुम् ।
नकुलः सहदेवश् धर्मपुत्रश्च धर्मवित् ॥ ३-१६२-३८ (२२२१४)
अपराद्धमिवात्मानं मन्यमाना महारथाः ।
तस्थुः प्राञ्जलयः सर्वे परिवार्य धनेश्वरम् ॥ ३-१६२-३९ (२२२१५)
शय्यासनयुतं श्रीमत्पुष्पकं विश्वकर्मणा ।
विहितं चित्रपर्यन्तमातिष्ठत धनाधिपः ॥ ३-१६२-४० (२२२१६)
तमासीनं महाकायाः शङ्कुकर्णा महाजवाः ।
उपोपविविशुर्यक्षा राक्षसाश् सहस्रशः ॥ ३-१६२-४१ (२२२१७)
शतशश्चापि गन्धर्वास्तथैवाप्सरसां गणाः ।
परिवार्योपतिष्ठन्ति यथा देवाः शतक्रतुम् ॥ ३-१६२-४२ (२२२१८)
काञ्जनीं शिरसा बिभ्रद्भीमसेनः स्रजं शुभाम् ।
बाणखङ्गधनुष्पाणिरुदैक्षत धनाधिपम् ॥ ३-१६२-४३ (२२२१९)
न भीर्भीमस्य न ग्लानिर्विक्षतस्यापि राक्षसैः ।

आसीत्तस्यामवस्तायां कुबेरमपि पश्यतः ॥ ३-१६२-४४ (२२२२०)
आददानं शितान्बाणान्योद्धुकाममवस्थितम् ।
दृष्ट्वा भीमं धर्मसुतमब्रवीन्नरवाहनः ॥ ३-१६२-४५ (२२२२१)
विदुस्त्वां सर्वभूतानि पार्थ भूतहिते रतम् ।
निर्भयश्चापिशैलाग्रे वस त्वं सह बन्धुभिः ॥ ३-१६२-४६ (२२२२२)
न च मन्युस्त्वया कार्यो भीमसेनस्य पाण्डव ।
कालेनैते हताः पूर्वं निमित्तमनुजस्तव ॥ ३-१६२-४७ (२२२२३)
व्रीडा चात्रन कर्तव्या साहसं यदिदं कृतम् ।
दृष्टश्चापि सुरैः पूर्वंविनाशो यक्षरक्षसाम् ॥ ३-१६२-४८ (२२२२४)
न भीमसेने कोपो मे प्रीतोस्मि भरतर्षभ ।
कर्मणा भीमसेनस्य मम तुष्टिरभूत्पुरा ॥ ३-१६२-४९ (२२२२५)
वैशंपायन उवाच। ३-१६२-५०क्ष् (२२९९)
स एवमुक्त्वा राजानं भीमसेनमभाषत ।
नैतन्मनसि मे तात वर्तते कुरुसत्तम ॥ ३-१६२-५० (२२२२६)
यदिदं साहसं भीम कृष्णार्थे कृतवानसि ।
मामनादृत्य देवांश्च विनाशं यक्षरक्षसाम् ॥ ३-१६२-५१ (२२२२७)
स्वबाहुबलमाश्रित्य तेनाहं प्रीतिमांस्त्वयि ।
शापादद्य विनिर्मुक्तो घोरादस्माद्वृकोदर ॥ ३-१६२-५२ (२२२२८)
अहं पूर्वमगस्त्येन क्रुद्धेन परमर्षिणा ।
शप्तोऽपराधे कस्मिंश्चित्तस्यैषा निष्कृतिर्ध्रुवम् ॥ ३-१६२-५३ (२२२२९)
दृष्टो हि मम संक्लेशः पुरा पाण्डवनन्दन ।
न तवात्रापराधोस्ति कथंचिदपि पाण्डव ॥ ३-१६२-५४ (२२२३०)
युधिष्ठिर उवाच। ३-१६२-५५क्ष् (२३००)
कथं शप्तोसि भगवन्नगस्त्येन महात्मना ।
श्रोतुमिच्छाम्यहं देव यथैतच्छापकारणम् ॥ ३-१६२-५५ (२२२३१)
इदं चाश्चर्यभूतं मे यत्क्रोधात्तस् धीमतः ।
तदैव त्वं न निर्दग्धः सबलः सपदानुगः ॥ ३-१६२-५६ (२२२३२)
धनेश्वर उवाच। ३-१६२-५७क्ष् (२३०१)
देवतानामभून्मन्त्रः कुशावत्यां नरेश्वर ॥ ३-१६२-५७ (२२२३३)
वृतस्तत्राहमगमं महापद्मशतैस्त्रिभिः ।
यक्षाणआं घोररूपाणां विविधायुधधारिणाम् ॥ ३-१६२-५८ (२२२३४)
अध्वन्यहमथापश्यमगस्त्यमृपिसत्तमम् ।
उग्रं तपस्तप्यभानं यमुनातीरमाश्रितम् ।
नानापक्षिगणाकीर्णे पुष्पितद्रुमशोभितम् ॥ ३-१६२-५९ (२२२३५)
तमूर्द्ध्वबाहुं दृष्ट्वैव सूर्यस्याभिमुखे स्थितम् ।
तेजोराशिं दीप्यमानं हुताशनमिवैधितम् ॥ ३-१६२-६० (२२२३६)

राक्षसाधिपतिः श्रीमान्मणिमान्नाम मे सखा ।
मौर्क्याददज्ञानभावाच्च दर्पान्मोहाच्च पार्थिव ॥ ३-१६२-६१ (२२२३७)
न्यष्ठीवदाकाशगतो महर्षेस्तस्य मूर्धनि ।
ततः क्रुद्धः स भगवानुवाचेदं तपोधनः ॥ ३-१६२-६२ (२२२३८)
मामवज्ञाय दुष्टात्मा यस्मादेष सखा तव ।
धर्षणां कृतवानेतां पश्यतस्ते धनेश्वर ॥ ३-१६२-६३ (२२२३९)
त्वं चाप्येभिर्हतैः सैन्यैः क्लेशं प्राप्नुहि दुर्मते ।
तमेव मानुषं दृष्ट्वाकिल्विषाद्विप्रमोक्ष्यसे ॥ ३-१६२-६४ (२२२४०)
सैन्यानां तु तवैतेषां पुत्रपौत्रबलान्वितम् ।
न शापं प्राप्यते घोरं गच्छ तेऽऽज्ञां करिष्यति ॥ ३-१६२-६५ (२२२४१)
एष शापो मया प्राप्तः प्राक्तस्मादृषिसत्तमात् ।
स भीमेन महाराज भ्रात्रा तव विमोक्षितः ॥ ३-१६२-६६ (२२२४२)

इति श्रीमन्महाभारते अरण्यपर्वणि यक्षयुद्धपर्वणि
द्विषष्ट्यधिकशततमोऽध्यायः ॥ १६२ ॥
Mahabharata - Vana Parva - Chapter Footnotes

३-१६२-३ संप्रधार्य रक्षार्थं समर्प्य ॥
३-१६२-१० मुनेरिव वनवासिनस्ते तवैतत् सदृशं नोचितम् । यत्
मृषा निर्निमित्तम्। वधो रक्षसां हिंसा ॥
३-१६२-१६ सहिता मिलिताः ॥
३-१६२-२४ युज्यतां रथ इवि शेषः ॥
३-१६२-२५ अभ्रघनः सजलमेघः । गन्धर्वैर्हयैर्योजयामासुः यक्षा
इति शेषः ॥
३-१६२-२६ विमलाक्षाः दशावर्तशुद्धाः ॥
३-१६२-४८ दृष्टो ज्ञातः ॥
३-१६२-५४ मम मया । संक्लेशो भाविदुःखम् ॥
३-१६२-५७ कुशावत्यां कुशस्थलीसंज्ञे देशविशेषे ॥
३-१६२-६० एधितं समिद्धम् ॥
३-१६२-६१ मौर्ख्यात् विचाराक्षमत्वात् । अतएव
अगस्त्योयमित्यज्ञानभावात्। मौर्ख्यमपि दर्पात्संपत्तिगर्वात्। सोपि
मोहात् संपत्तेर्नश्वरत्वाज्ञानात् ॥
३-१६२-६२ न्यष्ठीवत् थूत्कृतवान् ॥

---

वन-अध्यय१६३
॥ श्रीः ॥
३.१६३. अध्यायः १६३

Mahabharata - Vana Parva - Chapter Topics
कुबेरेण युधिष्ठिरानुशासनपूर्वकं स्वभवनगमनम् ॥ १ ॥
कुबेराज्ञया राक्षसपूजितैर्युधिष्ठिरादिभिस्तद्रात्रौ तद्गृहे सुखवासः ॥ २ ॥

Mahabharata - Vana Parva - Chapter Text

३-१६३-० (२२२४३)
धनद उवाच। ३-१६३-०क्ष् (२३०२)
युधिष्ठिर धृतिर्दाक्ष्यं देशकालपराक्रमाः ।
लोकतन्त्रविधानानामेष पञ्चविधो विधिः ॥ ३-१६३-१ (२२२४४)
धृतिमन्तश्च दक्षाश्च स्वे स्वे कर्मणि भारत ।
पराक्रमविधानज्ञा नराः कृतयुगेऽभवन् ॥ ३-१६३-२ (२२२४५)
धृतिमान्देशकालज्ञः सर्वधर्मविधानवित् ।
क्षत्रियः क्षत्रियश्रेष्ठ शास्ति वै पृथिवीमनु ॥ ३-१६३-३ (२२२४६)
य एवं वर्तते पार्थ पुरुषः सर्वकर्मसु ।
स लोके लभते वीर यशः प्रेत्य च सद्गतिम् ॥ ३-१६३-४ (२२२४७)
देशकालान्तरप्रेप्सुः कृत्वा शक्रः पराक्रमम् ।
संप्राप्तस्त्रिदिवे राज्यं वृत्रहा वसुभिः सह ॥ ३-१६३-५ (२२२४८)
श्यस्तु केवलसंरम्भात्प्रपातं न निरीक्षते ॥
पापात्मा पापबुद्धिर्यः पापमेवानुवर्तते ।
कर्मणामविभागज्ञः प्रेत्य चेह विनश्यति ॥ ३-१६३-६ (२२२४९)
अकालज्ञः सुदुर्मेधाः कार्याणामविशेषवित् ।
वृथाचारसमारम्भः प्रेत्य चेह विनश्यति ॥ ३-१६३-७ (२२२५०)
साहसे वर्तमानानां निकृतीनां दुरात्मनाम् ।
सर्वेषामर्थलिप्सूनां पापो भवति निश्चयः ॥ ३-१६३-८ (२२२५१)
अधर्मज्ञोऽवलिप्तश्च बालबुद्धिरमर्षणः ।
निर्भयो भीमसेनोऽयं तं शाधि पुरुषर्षभ ॥ ३-१६३-९ (२२२५२)
आर्ष्टिषेणस् राजर्षेः प्राप्य भूयस्त्वमाश्रमम् ।
तमिस्रां प्रथमां तत्र वीतशोकभयो वस ॥ ३-१६३-१० (२२२५३)
अलकां सह गन्धर्वैर्यक्षैश्च सह किन्नरैः ।
ग्गमिष्यामि महाबाहो त्वं चापि बदरीं व्रज' ॥ ३-१६३-११ (२२२५४)
मन्नियुक्ता मनुष्येन्द्र सर्वे च गिरिवासिनः ।
रक्षन्तु त्वां महाबाहो सहितं द्विजसत्तमैः ॥ ३-१६३-१२ (२२२५५)
साहसेषु च संतिष्ठंस्त्वया शैले वृकोदरः ।

वार्यतां साध्वयं राजंस्त्वया धर्मभृतांवर ॥ ३-१६३-१३ (२२२५६)
इतः परं च वो राजन्द्रक्ष्यन्ति वनगोचराः ।
उपश्थास्यन्ति वो राजन्रक्षिष्यन्ते च वः सदा ॥ ३-१६३-१४ (२२२५७)
तथैव चान्नपानानि स्वादूनि च बबूनि च ।
आहरिष्यन्ति मत्प्रेष्याः सदा वः पुरुषर्षभाः ॥ ३-१६३-१५ (२२२५८)
यथा जिष्णुर्महेन्द्रस्य यथा वायोर्वृकोदरः ।
धर्मस्य त्वं यथा तात योगोत्पन्नो निजः सुतः ॥ ३-१६३-१६ (२२२५९)
आत्मजावात्मसंपन्नौ यमौ चोभौ यथाश्विनोः ।
रक्ष्यास्तद्वन्ममापीह यूयं सर्वे युधिष्ठिर ॥ ३-१६३-१७ (२२२६०)
अर्थतत्त्वविधानज्ञः सर्वधर्मविधानवित् ।
भीमसेनादवरजः पल्गुनः कुशली दिवि ॥ ३-१६३-१८ (२२२६१)
याः काश्चन मता लोके स्वग्र्याः परमसंपदः ।
जनमप्रभृति ताः सर्वाः स्थितास्तात धनंजये ॥ ३-१६३-१९ (२२२६२)
द्रमो दानं बलं बुद्धिर्ह्रीर्धृतिस्तेज उत्तमम् ।
एतान्यपि महासत्वे स्थितान्यमिततेजसि ॥ ३-१६३-२० (२२२६३)
न मोहात्कुरुते जिष्णुः कर्म पाण्डव गर्हितम् ।
न पार्थस् मृषोक्तानि कथयन्ति नरा नृषु ॥ ३-१६३-२१ (२२२६४)
स देवपितृगन्धर्वैः कुरूणआं कीर्तिवर्धनः ।
आनीतः कुरुतेऽस्त्राणि शक्रसद्मनि भारत ॥ ३-१६३-२२ (२२२६५)
योऽसौ सर्वान्महीपालान्धर्मेण वशमानयत् ।
स शन्तनुर्महातेजाः पितुस्तव पितामहः ॥ ३-१६३-२३ (२२२६६)
प्रीयते पार्थ पार्थेन दिवि गाण्डीवधन्वना ।
सम्यक्वासौ महावीर्यः कुलधुर्य इव स्थितः ॥ ३-१६३-२४ (२२२६७)
पितॄन्देवानृषीन्विप्रान्पूजयित्वा महायशाः ।
सप्त मुख्यान्महामेधानाहरद्यमुनां प्रति ॥ ३-१६३-२५ (२२२६८)
अधिराजः स राजंस्त्वां शन्तनुः प्रपितामहः ।
स्वर्गजिच्छक्रलोकस्थः कुशलं परिपृच्छति ॥ ३-१६३-२६ (२२२६९)
वैशंपायन उवाच। ३-१६३-२७क्ष् (२३०३)
एतच्छ्रुत्वा तु वचनं धनदेन प्रभाषितम् ।
पाण्डवाश्च ततस्तेन बभूवः संप्रहर्षिताः ॥ ३-१६३-२७ (२२२७०)
ततः शक्तिं गदां खङ्गं धनुश्च भरतर्षभः ।
प्राध्वंकृत्वा नमश्चक्रे कुबेराय वृकोदरः ॥ ३-१६३-२८ (२२२७१)
ततोऽब्रवीद्धनाध्यक्षः शरण्यः शरणागतम् ।
मानहा भव शत्रूणां सुहृदां नन्दिवर्धनः ॥ ३-१६३-२९ (२२२७२)
गविभयस्ताप शैलाग्रे वसानः सह बन्धुभिः ।
सुपर्णपितृदेवानां सततं मानकृद्भव ॥ ३-१६३-३० (२२२७३)

ऋजुं पश्यत मा वक्रं सत्यं वदत माऽनृतम् ।
दीर्घं पश्यत मा ह्रस्वं परं पश्यत माऽपरम्' ॥ ३-१६३-३१ (२२२७४)
स्वेषु वेश्मसु रम्येषु वसतामित्रतापनाः ।
कामान्न परिहास्यन्ति यक्षा वोभरतर्षभाः ॥ ३-१६३-३२ (२२२७५)
शीघ्रमेव गुडाकेशः कृतास्त्रः पुरुषर्षभः ।
साक्षान्मघवतोत्सृष्टः संप्राप्स्यति धनंजयः ॥ ३-१६३-३३ (२२२७६)
एवमुत्तमकर्माणमनुशिष्य युधिष्ठिरम् ।
अस्तं गिरिमिवादित्यः प्रययौ गुह्यकाधिपः ॥ ३-१६३-३४ (२२२७७)
तं परिस्तोमसंकीर्णैर्नानारत्नविभूषितैः ।
यानैरनुययुर्यक्षा राक्षसाश्च सहस्रशः ॥ ३-१६३-३५ (२२२७८)
पक्षिणामिव कनिर्घोषः कुबेरसदनं प्रति ।
बभूव परमाश्वानामैरावतपथे यथा ॥ ३-१६३-३६ (२२२७९)
ते जग्मुस्तूर्णमाकाशं धनाधिपतिवाजिनः ।
प्रकर्षन्त इवाभ्राणि पिबन्त इवमारुतम् ॥ ३-१६३-३७ (२२२८०)
ततस्तानि शरीराणि गतसत्वानि रक्षसाम् ।
अपाकृष्यन्त शैलाग्राद्धनाधिपतिशासनात् ॥ ३-१६३-३८ (२२२८१)
तेषां हि शापकालः स कृतोऽगस्त्येन धीमता ।
समरे निहतास्तस्माच्छापस्यान्तोऽभवत्तदा ॥ ३-१६३-३९ (२२२८२)
पाण्डवाश्महात्मानस्तेषु वेश्मसु तां क्षपाम् ।
सुखमूषुर्गतोद्विगाः पूजिताः सह राक्षसैः ॥ ३-१६३-४० (२२२८३)

इति श्रीमन्महाभारते अरण्यपर्वणि यक्षयुद्धपर्वणि
त्रिषष्ट्यधिकशततमोऽध्यायः ॥ १६३ ॥

Mahabharata - Vana Parva - Chapter Footnotes

३-१६३-१ दाक्ष्यं यत्नशीलता ।पराक्रमः शत्रूणामभिभावनहेतुः
क्रिया। विधानानां कार्याणां विधिरभ्युदयहेतुः। अदेशे अकाले च कृतं
धृत्यादिकमभिभवहेतुरित्यर्थः ॥
३-१६३-६ संरम्भात् कोपात् ॥
३-१६३-८ निकृतीनां वञ्जनापराणाम् ॥
३-१६३-९ अवलिप्तो गर्वितः ॥
३-१६३-१८ तत्त्वं याथात्म्यम् ।विधानं प्राप्त्युपायम् ॥
३-१६३-१९ स्वर्ग्याः स्वर्गाय हिताः संपदः ॥
३-१६३-२२ कुरुते अभ्यस्यति ॥
३-१६३-२५ महामेधानश्वमेधान् ॥
३-१६३-२८ प्राध्वंकृत्वा बद्ध्वा ।उपसंहृत्येत्यर्थः ॥

३-१६३-२९ नन्दिः समृद्धिः ॥
३-१६३-३२ स्वेषु वेश्मसु अस्मदीयेषु ।कामान् काम्यमानानर्थान् न परिहास्यन्ति किंतु साधयिष्यन्त्येवेत्यर्थः ॥
३-१६३-३५ परिस्तोमाश्चित्रकम्बला हस्त्यादीनां पल्याणभूताः ॥
३-१६३-३६ ऐरावतपथे इनद्रपुरीप्रदेशे ॥
३-१६३-३८ अपाकृष्यन्त अपाकृतानि ॥

---

वन-अध्यय१६४
॥ श्रीः ॥
३.१६४. अध्यायः १६४

Mahabharata - Vana Parva - Chapter Topics
धौम्येन युधिष्ठिरंप्रति मेरुमन्दववर्णनपूर्वकं चन्द्रसूर्यादिगतिप्रकारनिरूपणम् ॥१ ॥

Mahabharata - Vana Parva - Chapter Text

३-१६४-० (२२२८४)
वैशंपायन उवाच। ३-१६४-०क्ष् (२३०४)
ततः सूर्योदये धौम्यः पाञ्चालीसहितांस्च तान् ।
आर्ष्टिणेन सहितः पाण्डवानभ्यवर्तत ॥ ३-१६४-१ (२२२८५)
तेऽभिवाद्यार्ष्टिषेणस्य पादौ धौम्यस्य चैव ह ।
ततः प्राञ्जलयः सर्वे ब्राह्मणांस्तानपूजयन् ॥ ३-१६४-२ (२२२८६)
ग्आर्ष्टिषेणं परिष्वज्य पुत्रवद्भरतर्षभ'।
धर्मराजं स्पृशन्पाणौ पाणिना स महातपाः ।
प्राचीं दिशमभिप्रेक्ष्य महर्षिरिदमब्रवीत् ॥ ३-१६४-३ (२२२८७)
असौ सागरपर्यन्तां भूमिमावृत्य तिष्ठति ।
शैलराजो महाराज मन्दरोऽभिविराजयन् ।
इन्द्रवैश्रवणोपेतां दिशं पाण्डव रक्षति ॥ ३-१६४-४ (२२२८८)
पर्वतैश्च वनान्तैश्च काननैश्चैव शोभितम् ।
एतमाहुर्महेन्द्रस्य राज्ञो वैश्रवणस्य च ।
ऋषयः सर्वधर्मज्ञाः सर्वे तात मनीषिणः ॥ ३-१६४-५ (२२२८९)
अतश्चोद्यन्तमादित्यमुपतिष्ठन्ति वै प्रजाः ।
ऋषयश्चापि धर्मज्ञाः सिद्धाः साध्याश्च देवताः ॥ ३-१६४-६ (२२२९०)
यमस्तु राजा धर्मज्ञः सर्वप्राणभृतां प्रभुः ।
प्रेतसत्वगतीमेतां दक्षिणामाश्रितो दिशम् ॥ ३-१६४-७ (२२२९१)
एतत्संयमनं पुण्यमतीवाद्भुतदर्शनम् ।

प्रेतराजस्य भवनमृद्ध्या परमया युतम् ॥ ३-१६४-८ (२२२९२)
यं प्राप्य सविता राजन्सत्येन प्रतितिष्ठति ।
अस्तं पर्वतराजानमेतमाहुर्मनीषिणः ॥ ३-१६४-९ (२२२९३)
एवं पर्वतराजानं समुद्रं च महोदधिम् ।
अवसन्वरुणो राजा भूतानि परिरक्षति ॥ ३-१६४-१० (२२२९४)
उदीचीं दीपयन्नेष दिशं तिष्ठति कीर्तिमान् ।
महामेरुर्महाभाग शिवो ब्रह्मविदांगतिः ॥ ३-१६४-११ (२२२९५)
यस्मिन्ब्रह्मसदश्चैव भूतात्मा चावतिष्ठते ।
प्रजापतिः सृजन्सर्वं यत्किंचिज्जङ्गमागमम् ॥ ३-१६४-१२ (२२२९६)
यानाहुर्ब्रह्मणः पुत्रान्मानसान्दक्षसप्तमान् ।
तेषामपि महामेरुः शिवं स्थानमनामयम् ॥ ३-१६४-१३ (२२२९७)
अत्रैव प्रतितिष्ठन्ति पुनरेषोदयन्ति च ।
सप्त देवर्षयस्तात वसिष्ठप्रमुखास्तदा ॥ ३-१६४-१४ (२२२९८)
देशं विरजसं पश्य मेरोः शिखरमुत्तमम् ।
यत्रात्मतृप्तैरध्यास्ते देवैः सह पितामहः ॥ ३-१६४-१५ (२२२९९)
यमाहुः सर्वभूतानां प्रकृतेः प्रकृतिं ध्रुवम् ।
अनादिनिधनं देवं प्रभुं नारायणं परम् ॥ ३-१६४-१६ (२२३००)
ब्रह्मणः सदनात्तस्य परं स्थानं प्रकाशते ।
देवाश्च यत्नात्पश्यन्ति सर्वतेजोमयं शुभम् ॥ ३-१६४-१७ (२२३०१)
अत्यर्कानलदीप्तं तत्स्थानं विष्णोर्महात्मनः ।
स्वयैव प्रभया राजन्दुष्प्रेक्ष्यं देवदानवैः ॥ ३-१६४-१८ (२२३०२)
प्राच्यां नारायणस्थानं मेरावतिविराजते ॥ ३-१६४-१९ (२२३०३)
यत्र भूतेश्वरस्तात सर्वप्रकृतिरात्मभूः ।
भासयन्सर्वभूतानि सुश्रियाऽभिविराजते ॥ ३-१६४-२० (२२३०४)
नात्र ब्रह्मर्षयस्तात कुत एव महर्षयः ।
प्राप्नुवन्ति गतिं ह्येतां यतीनां भावितात्मनाम् ॥ ३-१६४-२१ (२२३०५)
न तं ज्योतींपि सर्वाणि प्राप्य भासन्ति पाण्डव ।
स्वयंप्रभुरचिन्त्यात्मा तत्र ह्यतिविराजते ॥ ३-१६४-२२ (२२३०६)
यतयस्तत्र गच्छन्ति भक्त्या नारायणं हरिम् ।
परेण तपसा युक्ता भाविताः कर्मभिः शुभैः ।
योगसिद्धा महात्मानस्तमोमोहविवर्जिताः ॥ ३-१६४-२३ (२२३०७)
तत्र गत्वा पुनर्नेमं लोकमायान्ति भारत ।
स्वयंभुवं महात्मानं देवदेवं सनातनम् ॥ ३-१६४-२४ (२२३०८)
स्थानमेतन्महाभाव ध्रुवमक्षयमव्ययम् ।
ईश्वरस्य सदा ह्येतत्प्रणमात्र युधिष्ठिर ॥ ३-१६४-२५ (२२३०९)
शएनं त्वहरहर्मेरुं सूर्याचन्द्रमसौ ध्रुवम् ।

प्रदक्षिणमुपावृत्यकुरुतः कुरुनन्दन ॥ ३-१६४-२६ (२२३१०)
ज्योतींषि चाप्यशेषेण सर्वाण्यनघ सर्वतः ।
परियान्ति महाराज गिरिराजं प्रदक्षिणम् ॥ ३-१६४-२७ (२२३११)
एतं ज्योतींषि सर्वाणि प्रकर्षन्भगवानपि ।
कुरुते वितमस्कर्मा आदित्योऽभिप्रदक्षिणम् ॥ ३-१६४-२८ (२२३१२)
अस्तं प्राप्य ततः सन्ध्यामतिक्रम्य दिवाकरः ।
उदीचीं भजते काष्ठां बहुधा पर्वसन्धिषु ॥ ३-१६४-२९ (२२३१३)
सुमेरुमनुवृत्तः स पुनर्गच्छति पाण्डव ।
प्राङ्मुखः सविता देवः सर्वभूतहिते रतः ॥ ३-१६४-३० (२२३१४)
स सम्यग्विभजन्कालान्बहुधा पर्वसन्धिषु ।
तथैव भगवान्सोमो नक्षत्रैः सह गच्छति ॥ ३-१६४-३१ (२२३१५)
एवमेतं त्वतिक्रम्य महामेरुमतन्द्रितः ।
सोमश्च विभजन्कालं बहुधा पर्वसन्धिषु ।
भासयन्सर्वभूतानि पुनर्गच्छति सागरम् ॥ ३-१६४-३२ (२२३१६)
तथा तमिस्रहा देवो मयूखैर्भासयञ्जगत् ।
मार्गमेतमसंबाधमादित्यः परिवर्तते ॥ ३-१६४-३३ (२२३१७)
सिसृक्षुः शिशिराण्येव दक्षिणां भजते दिशम् ।
ततः सर्वाणि भूतानि कालं शिशिरमृच्छति ॥ ३-१६४-३४ (२२३१८)
स्थावराणां च भूतानां जङ्गमानां च तेजसा ।
तेजांसि समुपादत्ते निवृत्तः स विभावसुः ॥ ३-१६४-३५ (२२३१९)
ततः स्वेदः क्लमस्तन्द्री ग्लानिश्च भजते नरान् ।
प्राणिभिः सततं स्वप्नोह्यभीक्ष्णं च निषेव्यते ॥ ३-१६४-३६ (२२३२०)
एवमेतमनिर्देश्यं मार्गमावृत्य भानुमान् ।
पुनः सृजति वर्षाणि भगवान्भासयन्प्रजाः ॥ ३-१६४-३७ (२२३२१)
वृष्टिमारुतसंतापैः सुखैः स्थावरजङ्गमान् ।
वर्धयनसुमहातेजाः पुनः प्रतिनिवर्तते ॥ ३-१६४-३८ (२२३२२)
एवमेष चरन्पार्थ कालचक्रमतन्द्रितः ।
प्रकर्षन्सर्वभूतानि सविता परिवर्तते ॥ ३-१६४-३९ (२२३२३)
संतता गतिरेतस्य नैष तिष्ठति पाण्डव ।
आदायैव तु भूतानां तेजो विसृजते पुनः ॥ ३-१६४-४० (२२३२४)
विभजन्सर्वभूतानामायुः कर्म च भारत ।
अहोरात्रं कलाः काष्ठाः सृजत्येष सदा विभुः ॥ ३-१६४-४१ (२२३२५)

इति श्रीमन्महाभारते अरण्यपर्वणि यक्षयुद्धपर्वणि
चतुःषष्ट्यधिकशततमोऽध्यायः ॥ १६४ ॥
Mahabharata - Vana Parva - Chapter Footnotes

३-१६४-४ इन्द्रवैश्रवणांवेतां दिशं पाण्डव रक्षतः इति झ ।पाठः ॥
३-१६४-७ प्रेतसत्वगतीं मृतानां प्राणिनां गम्याम् ॥
३-१६४-७ संयमनं नामतः ॥
३-१६४-१० आवसन्नधितिष्ठन् ॥
३-१६४-१२ भूतात्मा सर्वे षां भूतानामात्मा
।संपूर्णब्रह्माण्डपिण्डभिमानित्वात् ॥
३-१६४-१७ ब्रह्मणः चतुर्मुखस्य ॥
३-१६४-२५ प्रणम नमस्कुरु ॥
३-१६४-२६ उपावृत्य अप्रदक्षिणं गत्वैव ।भचक्रवेगात् कुलालचक्रे
प्रतीपं क्रमन्ती पिपीलिकेव प्रदक्षिणं कुरुत इत्यर्थः ॥
३-१६४-३२ पुनर्गच्छति मन्दरमिति झ ।पाठः ॥
३-१६४-३४ शिशिराणि शीतानि ॥
३-१६४-३५ तेजांसि समुपादत्ते ग्रीष्मे ॥
३-१६४-३७ अनिर्देश्यं मार्गं अन्तरिक्षम् ॥

---

वन-अध्यय१६५
॥ श्रीः ॥
३.१६५. अध्यायः १६५

Mahabharata - Vana Parva - Chapter Topics
इन्द्रादधिगतास्त्रेणार्जुनेन स्वर्गाद्गन्धमादननिवासिनो
युधिष्ठिरादीन्प्रत्यागमनम् ॥१ ॥

Mahabharata - Vana Parva - Chapter Text

३-१६५-० (२२३२६)
वैशंपायन उवाच। ३-१६५-०क्ष् (२३०५)
तस्मिन्नगेन्द्रे वसतां तु तेषां
महात्मनां सद्व्रतमास्थितानाम् ।
रतिः प्रमोदश्च बभूव तेषा-
माकाङ्क्षतां दर्शनमर्जुनस्य ॥ ३-१६५-१ (२२३२७)
तान्वीर्ययुक्तान्सुविशुद्धसत्वां-
स्तेजस्विनः सत्यधृतिप्रधानान् ।
संप्रीयमाणा बहवोऽबिजग्मु-
र्गन्धर्वसङ्घाश्च महर्षयश्च ॥ ३-१६५-२ (२२३२८)
तं पादपैः पुष्पफलैरुपेतं

नगोत्तमं प्राप्य महारथानाम् ।
मनःप्रसादः परमो बभूव
यथा दिवं प्राप्य मरुद्गणानाम् ॥ ३-१६५-३ (२२३२९)
मयूरहंसस्वननादितानि
पुष्पोपकीर्णानि महाचलस्य ।
शृङ्गाणि सानूनि च पश्यमाना
गिरेः परं हर्षमवाप्य तस्थुः ॥ ३-१६५-४ (२२३३०)
साक्षात्कुबेरेण कृताश्च तस्मि-
न्नगोत्तमे संवृतकूटगुल्माः ।
कादम्बकारण्डवहंसजुष्टाः
पद्माकुलाः पुष्करिणीरपश्यन् ॥ ३-१६५-५ (२२३३१)
क्रीडाप्रदेशांस्च समृद्धरूपा-
न्सवेदिकांस्ते न्यवसन्सुवेशान् ।
मणिप्रकीर्णांश्च मनोरमांश्च
यथा भवेयुर्नदस्य राज्ञः ॥ ३-१६५-६ (२२३३२)
अनेकवर्णैश् सुगन्धिभिश्च
महाद्रुमैः संततमभ्रजालैः ।
तपःप्रधानाः सततं चरन्तः
शृङ्गं गिरेश्चिन्तयितुं न शेकुः ॥ ३-१६५-७ (२२३३३)
स्वतेजसा तस्य नगोत्तमस्य
महौषधीनां च तथा प्रभावात् ।
विभक्तरूपः सविता बभूव
निशामुखं प्राप्य नरर्षभाणाम् ॥ ३-१६५-८ (२२३३४)
यमास्थितः स्थावरजङ्गमानां
विभावसुर्भाविता हरीशः ।
तस्योदयं चास्तमनं च वीर-
स्तत्रस्थितास्ते ददृशुर्नृसिंहाः ॥ ३-१६५-९ (२२३३५)
रवेस्तमिस्रागमनिर्गमांस्ते
तथोदयं चास्तमनं च वीराः ।
समावृताः प्रेक्ष्य तमोनुदस्य
गभस्तिजालैः प्रदिशो दिशश्च ॥ ३-१६५-१० (२२३३६)
स्वाध्यायवन्तः सततक्रियाश्च
धर्मप्रधानाश्च शुचिव्रताश्च ।
सत्ये स्थितास्तस्य महारथस्य
सत्यव्रतस्यागमनप्रतीक्षाः ॥ ३-१६५-११ (२२३३७)
इहैव हर्षोऽस्तु समागतानां

क्षिप्रं कृतास्त्रेण धनंजयेन ।
इति ब्रुवन्तः परमाशिपस्ते
पार्थास्तपोयोगपरा बभूवुः ॥ ३-१६५-१२ (२२३३८)
दृष्ट्वा विचित्राणि गिरौ वनानि
किरीटिनं चिन्तयतामभीक्ष्णम् ।
बभूव रात्रिर्दिवसश्च तेषां
संवत्सरेणैव समानरूपः ॥ ३-१६५-१३ (२२३३९)
यदैव धौम्यानुमते महात्मा
कृत्वा जटां प्रव्रजितः स जिष्णुः ।
तदैव तेषां नबभूव हर्षः
कुतो रतिस्तद्गतमानसानाम् ॥ ३-१६५-१४ (२२३४०)
भ्रातुर्नियोगात्तु युधिष्ठिरस्य
वनादसौ वारणमत्तगामी ।
यत्काम्यकात्प्रव्रजितः स जिष्णु-
स्तदैव ते शोकहता बभूवुः ॥ ३-१६५-१५ (२२३४१)
तथैव तं चिन्तयतां सिताश्व-
मस्त्रार्थिनं वासवमभ्युपेतम् ।
कालः स कृच्छ्रेण महानतीत-
स्तस्मिन्नगे भारत भारतानाम् ॥ ३-१६५-१६ (२२३४२)
श्उषित्वा पञ्चवर्षाणि सहस्राक्षनिवेशने ।
अवाप्य दिव्यान्यस्त्राणि सर्वाणि विबुधेश्वरात् ॥ ३-१६५-१७ (२२३४३)
आग्नेयं वारुणं सौम्यं वायव्यमथ वैष्णवम् ।
ऐन्द्रं पाशुपतं ब्राह्मं पारमेष्ठ्यं प्रजापतेः ॥ ३-१६५-१८ (२२३४४)
यमस्य धातुः सवितुस्त्वष्टुर्वैश्रवणस्य चं ।
तानि प्राप्य सहस्राक्षादभिवाद्य शतक्रतुम् ॥ ३-१६५-१९ (२२३४५)
अनुज्ञातस्तदा तेन कृत्वा चापि प्रदक्षिणम् ।
आगच्छदर्जुनः प्रीतः प्रहृष्टो गन्धपादनम् ॥ ३-१६५-२० (२२३४६)

इति श्रीमन्महाभारते अरण्यपर्वणि यक्षयुद्धपर्वणि
पञ्चषष्ट्यधिकशततमोऽध्यायः ॥ १६५ ॥
Mahabharata - Vana Parva - Chapter Footnotes

३-१६५-४ महती चला लक्ष्मीः शोभा यस् महाचलस्य । चला
लम्यां पुमान् कम्पे इति मेदिनी। सानून्येव तीक्ष्णाग्राणि पुंसंयोग्यानि
शृङ्गाणीत्युच्यन्ते ॥
३-१६५-९ यं सूर्यम् । विभावसुर्वह्निरास्थितः। यस्य सूर्यस्याश्रयेणैव

वन-अध्यय१६६
॥ श्रीः ॥
३.१६६. अध्यायः १६६

Mahabharata - Vana Parva - Chapter Topics
अर्जुनेन युधिष्ठिरादीन्प्रति संक्षेपेण
स्वकीयस्वर्गनिवासप्रकारकथनम् ॥ १ ॥

Mahabharata - Vana Parva - Chapter Text

३-१६६-० (२२३४७)
वैशंपायन उवाच। ३-१६६-०क्ष् (२३०६)
ततः कदाचिद्धरिसंप्रयुक्तं
महेन्द्रवाहं सहसोपयातम् ।
विद्युत्प्रभं प्रेक्ष्य महारथानां
हर्षोऽर्जुनं चिन्तयतां बभूव ॥ ३-१६६-१ (२२३४८)
स दीप्यमानः सहसाऽन्तरिक्षं
प्रकाशयन्मातलिसंगृहीतः ।
बभौ महोल्केव घनान्तरस्था
शिखेव चाग्नेर्ज्वलिता विधूमा ॥ ३-१६६-२ (२२३४९)
तमास्थितः संददृशे किरीटी
स्रग्वी नवान्याभरणानि बिभ्रत् ।
धनंजयो वज्रधरप्रभावः
श्रिया ज्वलन्पर्वतमाजगाम् ॥ ३-१६६-३ (२२३५०)
स शैलमासाद्य किरीटमाली
महेन्द्रवाहादवरुह्य तस्मात् ।
धौम्यस्य पादावभिवाद्य पूर्व-
मजातशत्रोस्तदनन्तरं च ॥ ३-१६६-४ (२२३५१)
वृकोदरस्यापि च वन्द्य पादौ
माद्रीसुताभ्यामभिवादितश्च ।
समेत्य कृष्णां परिसान्त्व्य चैनां
प्रह्वोऽभवद्भ्रातुरुपह्वरे सः ॥ ३-१६६-५ (२२३५२)
बभूव तेषां परमः प्रहर्ष-
स्तेनाप्रमेयेण समेत्य तत्र ।

स चापि तान्प्रेक्ष्य किरीटमाली
ननन्द राजानमभिप्रशंसन् ॥ ३-१६६-६ (२२३५३)
यमास्थितः सप्त जघान पूगान्
दितेः सुतानां नमुचेर्निहन्ता ।
तमिन्द्रवाहं समुपेत्य पार्थाः
प्रदक्षिणं चक्रुरदीनसत्वाः ॥ ३-१६६-७ (२२३५४)
ते मातलेश्चक्रुरतीव हृष्टाः
सत्कारमग्र्यं सुरराजतुल्यम् ।
सर्वं यथावच्च दिवौकसङ्घं
पप्रच्छुरेनं कुरुराजपुत्राः ॥ ३-१६६-८ (२२३५५)
तानप्यसौ मातलिरभ्यनन्द-
त्पितेव पुत्राननुशिष्य पार्थान् ।
ययौ रथेनाप्रतिमप्रभेण
पुनः सकाशं त्रिदिवेश्वरस्य ॥ ३-१६६-९ (२२३५६)
गते तु तस्मिन्वरदेववाहे
शक्रात्मजः सर्वरिपुप्रमाथी ।
ऽसाक्षात्सहस्राक्ष इव प्रतीतः
श्रीमान्स्वदेहादवमुच्य जिष्णुः' ॥ ३-१६६-१० (२२३५७)
शक्रेण दत्तानिददौ महात्मा
महाधनान्युत्तमरूपवन्ति ।
दिवाकराभाणि विभूषणानि
प्रीतः प्रियायै सुतसोममात्रे ॥ ३-१६६-११ (२२३५८)
ततश्चः स तेषां कुरुपुङ्गवानां
तेषां च सूर्याग्निसमप्रभाणाम् ।
विप्रर्षभाणामुपविश्य मध्ये
सर्वं यथावत्कथयांबभूव ॥ ३-१६६-१२ (२२३५९)
एवं मयाऽस्त्राण्युपशिक्षितानि
शक्राच्च वायोश्च शिवाच्च साक्षात् ।
तथैव शीलेन समाधिना च
प्रीताः सुरा मे सहिताः सहेन्द्राः ॥ ३-१६६-१३ (२२३६०)
संक्षेपतो वै स विशुद्धकर्मा
तेभ्यः समाख्याय दिवःप्रवेशम् ।
माद्रीसुताभ्यां सहितः किरीटी
सुष्वाप तामावसतिं प्रतीतः ॥ ३-१६६-१४ (२२३६१)

इति श्रीमन्महाभारते अरण्यपर्वणि निवातकवचयुद्धपर्वणि

षट्षष्ट्यधिकशततमोऽध्यायः ॥ १६६ ॥

Mahabharata - Vana Parva - Chapter Footnotes

३-१६६-१ हरिभिरश्वैः संप्रयुक्तम् । महेन्द्रस्य वाहं रथम् ॥
३-१६६-५ प्रह्वो नम्रः । उपह्वरे समीपे ॥
३-१६६-७ पूगान्यूथानि ॥
३-१६६-८ एनं मातलिम् ॥
३-१६६-११ सुतसोमो भीमाद्द्रौपद्यां जातः ॥
३-१६६-१४ आवसतिं रात्रिम् । प्रतीतो हृष्टः ॥

---

वन-अध्यय१६७
॥ श्रीः ॥
३.१६७. अध्यायः १६७

Mahabharata - Vana Parva - Chapter Topics

इन्द्रेण सभ्रातृकं युधिष्ठिरमेत्य जयाशीः संसनपूर्वकं पुनः स्वर्गंप्रति गमनम् ॥ १ ॥

Mahabharata - Vana Parva - Chapter Text

३-१६७-० (२२३६२)
वैशंपायन उवाच। ३-१६७-०क्ष् (२३०७)
श्ततो रजन्यां व्युष्टायां धर्मराजं युधिष्ठिरम् ।
भ्रातृभिः सहितः सर्वैरवन्दत धनंजयः ॥ ३-१६७-१ (२२३६३)
एतस्मिन्नेव काले तु सर्ववादित्रनिःस्वनः ।
बभूव तुमुलः शब्दस्त्वन्तरिक्षे दिवौकसाम् ॥ ३-१६७-२ (२२३६४)
रथनेमिखनश्चैव घण्टाशब्दश्च भारत ।
पृथग्व्यालमृगाणां च पक्षिणां चैव सर्वशः ॥ ३-१६७-३ (२२३६५)
ग्रवोन्मुखास्ते ददृशुः प्रीयमाणाः कुरूद्वह ।
मरुद्भिरन्वितं शक्रमापतन्तं विहायसा' ॥ ३-१६७-४ (२२३६६)
ते समन्तादनुययुर्गन्धर्वाप्सरसस्तथा ।
विमानैः सूर्यसंकाशैर्देवराजमरिंदमम् ॥ ३-१६७-५ (२२३६७)
ततः स हरिभिर्युक्तं जाम्बूनदपरिष्कृतम् ।
मेघनादिनमारुह्य श्रिया परमया ज्वलन् ॥ ३-१६७-६ (२२३६८)
पार्थानभ्याजपामाशु देवराजः पुरंदरः ।
आगत्य च सहस्राक्षो रथादवरुरोह वै ॥ ३-१६७-७ (२२३६९)

तं दृष्ट्वैव महात्मानं धर्मराजो युधिष्ठिरः ।
भ्रातृभिः सहितः श्रीमान्देवराजमुपागमत् ॥ ३-१६७-८ (२२३७०)
पूजयामास चैवाथ विधिवद्भूरिदक्षिणः ।
यथार्हममितात्मानं विधिदृष्टेन कर्मणा ॥ ३-१६७-९ (२२३७१)
धनंजयश्च तेजस्वी प्रणिपत्य पुरंदरम् ।
भृत्यवत्प्रणतस्तस्थौ देवराजसमीपतः ॥ ३-१६७-१० (२२३७२)
आघ्राय तं महातेजाः कुन्तीपुत्रो युधिष्ठिरः ।
धनंजयभिप्रेक्ष्यविनीतं स्थितमन्तिके ॥ ३-१६७-११ (२२३७३)
जटिलं देवराजस्य तपोयुक्तमकल्मषम् ।
हर्षेण महताऽऽविष्टः फल्गुनस्याथ दर्शनात् ।
बभूव परमप्रीतो देवराजं च पूजयन् ॥ ३-१६७-१२ (२२३७४)
तं तथाऽदीनमनसं राजानं हर्,संप्लुतम् ।
उवाच वचनं धीमान्धर्मराजं पुरंदरः ॥ ३-१६७-१३ (२२३७५)
त्वमिमां पृथिवीं राजन्प्रशासिष्यसि पाण्डव ।
स्वस्ति प्राप्नुहि कौन्तेय काम्यकं पुनराश्रमम् ॥ ३-१६७-१४ (२२३७६)
अस्त्राणि लब्धानि च पाण्डवेन
सर्वाणि मत्तः प्रयतेन राजन् ।
कृतप्रियश्चास्मि धनंजयेन
जेतुं न शक्यस्त्रिभिरेष लोकैः ॥ ३-१६७-१५ (२२३७७)
एवमुक्त्वा सहस्राक्षः कुन्तीपुत्रं युधिष्ठिरम् ।
जगाम त्रिदिवं हृष्टः स्तूयमानो महर्षिभिः ॥ ३-१६७-१६ (२२३७८)
धनेश्वरगृहस्थानां पाण्डवानां समागमम् ।
शक्रेण य इदं विद्वानधीयीत समाहितः ॥ ३-१६७-१७ (२२३७९)
संवत्सरं ब्रह्मचारी नियतः संशितव्रतः ।
स जीवेद्धि निराबाधः सुसुखी शरदां शतम् ॥ ३-१६७-१८ (२२३८०)

इति श्रीमन्महाभारते अरण्यपर्वणि निवातकवचयुद्धपर्वणि
सप्तषष्ट्यधिकशततमोऽध्यायः ॥ १६७ ॥

Mahabharata - Vana Parva - Chapter Footnotes

३-१६७-३ भुजङ्गव्याघ्रसिंहानां इति थ ।पाठः ॥
३-१६७-६ हरिभिर्युक्तं रथम् ॥
३-१६७-९ अमितात्मा अमितबुद्धिः ॥
३-१६७-१५ कृतप्रियः शत्रुवधेन ।सर्वाणि भत्तो गिरिशाच्च
देवात् इति थ।पाठः ॥

---

वन-अध्यय१६८

॥ श्रीः ॥

३.१६८. अध्यायः १६८

Mahabharata - Vana Parva - Chapter Topics

अर्जुनेन स्वस्य किरातरूपिणा सह युद्धप्रकारस्य
पाशुपताश्रलाभप्रकारस्य च कथनम् ॥ १ ॥

Mahabharata - Vana Parva - Chapter Text

३-१६८-० (२२३८१)
वैशपायन उवाच। ३-१६८-०क्ष् (२३०८)
यथागतं गते शक्रे भ्रातृभिः सह संगतः ।
कृष्णया चैव बीभत्सुर्धर्मराजमपूजयत् ॥ ३-१६८-१ (२२३८२)
अभिवादयमानं तं मूर्ध्न्युपाघ्राय पाण्डवम् ।
हर्षगद्गदया वाचा प्रहृष्टोऽर्जुनमब्रवीत् ॥ ३-१६८-२ (२२३८३)
कथमर्जुन कालोऽयं स्वर्गे रव्यतिगतस्तव ।
कथं चास्त्राण्यवाप्तानि देवराजश्च तोषितः ॥ ३-१६८-३ (२२३८४)
सम्यग्वा ते गृहीतानि कच्चिदस्त्राणि पाण्डव ।
कच्चित्सुराधिपः प्रीतो रुद्रश्चास्त्राण्यदात्तव ॥ ३-१६८-४ (२२३८५)
यथा दृष्टश्च ते शक्रो भगवान्वा पिनाकधृत् ।
यथैवास्त्राण्यवाप्तानि यथैवाराधिताश्च ते ॥ ३-१६८-५ (२२३८६)
यथोक्तवांस्त्वां भगवाञ्शतक्रतुररिंदम ।
कृतप्रियस्त्वयाऽस्मीति तस्य ते किं प्रियं कृतम् ॥ ३-१६८-६ (२२३८७)
एतदिच्छाम्यहं श्रोतुं विस्तरेण महाद्युते ।
यथा तुष्टो महादेवो देवराजस्तथाऽनघ ॥ ३-१६८-७ (२२३८८)
यच्चापि वज्रपाणेस्तु प्रियं कृतमरिंदम ।
एतदाख्याहि मे सर्वमखिलेन धनंजय ॥ ३-१६८-८ (२२३८९)
अर्जुन उवाच। ३-१६८-९क्ष् (२३०९)
शृणु हन्त महाराज विधिना येन दृष्टवान् ।
शतक्रतुमहं देवं भगवन्तं च शंकरम् ॥ ३-१६८-९ (२२३९०)
विद्यामधीत्य तां राजंस्त्वयोक्तामरिमर्दन ।
भवता च समादिष्टस्तपसे प्रस्थितो वनम् ॥ ३-१६८-१० (२२३९१)
भृगुतुन्दमथो गत्वा काम्यकादास्थितस्तपः ।
एकरात्रोषितः कंचिदपश्यं ब्राह्मणं पथि ॥ ३-१६८-११ (२२३९२)
स मामपृच्छत्कौन्तेय क्वासि गन्ता ब्रवीहि मे ।
तस्मा अवितथं सर्वमब्रवं कुरुनन्दन ॥ ३-१६८-१२ (२२३९३)

स तथ्यं मम तच्छ्रुत्वा ब्राह्मणो राजसत्तम ।
अपूजयत मां राजन्प्रीतिमांश्चाभवन्मयि ॥ ३-१६८-१३ (२२३९४)
ततो मामब्रवीत्प्रीतस्तप आतिष्ठ भारत ।
तपस्वी नचिरेण त्वं द्रक्ष्यसे विबुधाधिषम् ॥ ३-१६८-१४ (२२३९५)
ततोऽहं वचनात्तस्य गिरिमारुह्य शैशिरम् ।
तपोऽतप्यं महाराज मासं मूलफलाशनः ॥ ३-१६८-१५ (२२३९६)
द्वितीयश्चापि मे मासो जलं भक्षयतो गतः ।
निराहारस्तृतीयेऽथ मासे पाण्डवनन्दन ॥ ३-१६८-१६ (२२३९७)
ऊर्ध्वबाहुश्चतुर्थं तु मासमस्मि स्थितस्तदा ।
न च मे हीयते प्राणस्तदद्भुतमिवाभवत् ॥ ३-१६८-१७ (२२३९८)
पञ्चमे त्वथ संप्राप्ते प्रथमे दिवसे गते ।
वराहसंस्थितं भूतं मत्समीपं समागमत् ॥ ३-१६८-१८ (२२३९९)
निघ्नन्प्रोथेन पृथिवीं विलिखंश्चरणैरपि ।
संमार्जञ्जठरेणोर्वीं विवर्तंश्च मुहुर्मुहुः ॥ ३-१६८-१९ (२२४००)
अनु तस्यापरं भूतं महत्कैरातसंस्थितम् ।
धनुर्बाणासिमत्प्राप्तं स्त्रीगणानुगतं तदा ॥ ३-१६८-२० (२२४०१)
ततोऽहं धनुरादाय तथाऽक्षय्ये महेषुधी ।
अताडयं शरेणाथ तद्भूतं रोमहर्षणम् ॥ ३-१६८-२१ (२२४०२)
युपत्तं किरातस्तु विकृष्य बलवद्धनुः ।
अभ्याजघ्ने दृढतरं कम्पयन्निव मेदिनीम् ॥ ३-१६८-२२ (२२४०३)
सतु मामब्रवीद्राजन्मम पूर्वपरिग्रहः ।
मृगयाधर्ममुत्सृज्य किमर्थं ताडितस्त्वया ॥ ३-१६८-२३ (२२४०४)
एष ते निशितैर्बाणैर्दर्पं हन्मि स्थिरो भव ।
संघर्षवान्महाकायस्ततो मामभ्यधावत ॥ ३-१६८-२४ (२२४०५)
ततो गिरिमिवात्यर्थमावृणोन्मां महाशरैः ।
तं चाहं शरवर्षेण महता समवाकिरम् ॥ ३-१६८-२५ (२२४०६)
ततः शरैर्दीप्तमुखैर्यन्त्रितैरनु यन्त्रितैः ।
प्रत्यविध्यमहं तं तु वज्रैरिव शिलोच्चयम् ॥ ३-१६८-२६ (२२४०७)
तस्य तच्छतधा रूपमभवच्च सहस्रधा ।
तानि चास्य शरीराणि शरैरहमताडयम् ॥ ३-१६८-२७ (२२४०८)
पुनस्तानि शरीराणि एकीभूतानि भारत ।
अदृश्यन्त महाराज तान्यहं व्यधमं पुनः ॥ ३-१६८-२८ (२२४०९)
अणुर्बृहच्छिरा भूत्वा बृहच्चाणुशिराः पुनः ।
एकीभूतस्तदा राजन्सोऽभ्यवर्तत मां युधि ॥ ३-१६८-२९ (२२४१०)
यदाऽभिभवितुं बाणैर्न च शक्नोमि तं रणे ।
ततो महास्त्रमातिष्ठं वायव्यं भरतर्षभ ॥ ३-१६८-३० (२२४११)

न चैनमशकं हन्तुं तदद्भुतमिवाभवत् ।
तस्मिन्प्रतिहते चास्त्रे विस्मयो मे महानभूत् ॥ ३-१६८-३१ (२२४१२)
तत्रापि च महाराज सविशेषमहं ततः ।
अस्त्रपूगेन महता रणे भूतमवाकिरम् ॥ ३-१६८-३२ (२२४१३)
स्थूणाकर्णमथो जालं शरवर्षं शरोल्वणम् ।
शलभास्त्रमश्मवर्षं समास्थायाहमभ्ययाम् ॥ ३-१६८-३३ (२२४१४)
जग्रास प्रसभं तानि सर्वाण्यस्त्राणि मे नृप ।
तेषु सर्वेषु जग्धेषु ब्रह्मास्त्रं महदादिशम् ॥ ३-१६८-३४ (२२४१५)
ततः प्रज्वलितैर्बाणैः सर्वतश्चोपचीयत ।
उपचीयमानश्च तदा महास्त्रेण व्यवर्धत ॥ ३-१६८-३५ (२२४१६)
ततः संतापिता लोका मत्प्रसूतेन तेजसा ।
क्षणएन हि दिशः स्वं च सर्वतो हि विदीपितं ॥ ३-१६८-३६ (२२४१७)
तदप्यस्त्रं महातेजाः क्षणेनैव व्यशामयत् ।
ब्रह्मास्त्रे तु हते राजन्भयं मां महदाविशत् ॥ ३-१६८-३७ (२२४१८)
ततोऽहं धनुरादाय तथाऽक्षय्ये महेषुधी ।
सहसाऽभ्यहनं भूतं तान्यप्यस्त्राण्यभक्षयत् ॥ ३-१६८-३८ (२२४१९)
एतेष्वस्त्रेषु भूतेन भक्षितेष्वायुधेषु च ।
मम तस् च भूतस्य बाहुयुद्धमवर्तत ॥ ३-१६८-३९ (२२४२०)
व्यायामं मुष्टिभिः कृत्वा तलैरभिसमाहतौ ।
अपायच्च तद्भूतमहं चापातयं महीम् ॥ ३-१६८-४० (२२४२१)
ततः प्रहस्य तद्भूतं तत्रैवान्तरधीयत ।
सह स्त्रीभिर्महाराज पश्यतो मेऽद्भुतोपमम् ॥ ३-१६८-४१ (२२४२२)
मुख्यं कृत्वा स भगवांस्ततोऽन्यद्रूपमात्मनः ।
दिव्यमेव महाराज वरानोऽद्भुतमम्बरम् ॥ ३-१६८-४२ (२२४२३)
हित्वा किरातरूपं च भगवांस्त्रिदशेश्वरः ।
स्वरूपं दिव्यमास्थाय तस्यौ महेश्वरः ॥ ३-१६८-४३ (२२४२४)
सोऽदृश्यत ततः साक्षाद्भगवान्गोवृषध्वजः ।
धनुर्गृह्यतदा पाणौ बहुरूपः पिनाकधृत् ॥ ३-१६८-४४ (२२४२५)
स मामभ्येत्य समरे तथैवाभिमुखं स्थितम् ।
शूलपाणिरथोवाच तुष्टोस्मीति परंतप ॥ ३-१६८-४५ (२२४२६)
ततस्तद्धनुरादाय तूणौ चाक्षय्यसायकौ ।
प्रादान्ममैव भगवान्वरयस्वेति चाब्रवीत् ॥ ३-१६८-४६ (२२४२७)
तुष्टोस्मि तव कौन्तेय ब्रूहि किं करवाणि ते ।
मनोगतं वीर यत्ते तद्ब्रूहि वितराम्यहम् ।
अमरत्वमपाहाय ब्रूहि यत्ते मनोगतम् ॥ ३-१६८-४७ (२२४२८)
ततः प्राञ्जलिरेवाहमस्त्रेषु कृतमानसः ।

प्रणम्य शिरसा शर्वं ततो वचनमाददे ॥ ३-१६८-४८ (२२४२९)
भगवानमे प्रसन्नश्चेदीप्सितोऽयं वरो मम ।
अस्त्राणीच्छाम्यहं ज्ञातुं यानि देवेषु कानिचित् ॥ ३-१६८-४९ (२२४३०)
ददानीत्येव भगवानब्रवीत्र्यम्बकश्च माम् ।
रौद्रमस्त्रं मदीयं त्वामुपस्थास्यति पाण्डव ॥ ३-१६८-५० (२२४३१)
प्रददौ च मम प्रीतः सोऽस्त्रं पाशुपतं प्रभुः ।
उवाच च महादेवो दत्त्वा मेऽस्त्रं सनातनम् ॥ ३-१६८-५१ (२२४३२)
न प्रयोज्यंभवेदेतन्मानुषेषु कथंचन ।
श्जगद्विनिर्दहेदेवमल्पतेजसि पातितम् ॥ ३-१६८-५२ (२२४३३)
पीड्यमानन बलवत्प्रयोज्यंस्याद्धनंजय ।
अस्त्राणां प्रतिघाते च सर्वथैव प्रयोजयेः ॥ ३-१६८-५३ (२२४३४)
ततोऽप्रतिहतं दिव्यं सर्वास्त्रप्रतिषेधनम् ।
मूर्तिमन्मे स्थितं पार्श्वे प्रसन्ने गोवृषध्वजे ॥ ३-१६८-५४ (२२४३५)
उत्सादनममित्राणां परसेनानिकर्तनम् ।
दुरासदं दुष्प्रसहं सुरदानवराक्षसैः ॥ ३-१६८-५५ (२२४३६)
अनुज्ञातस्त्वहं तेन तत्रैव समुपाविशम् ।
प्रेक्षतश्चैवमे देवस्तत्रैवान्तरधीयत ॥ ३-१६८-५६ (२२४३७)

इति श्रीमन्महाभारते अरण्यपर्वणि निवातकवचयुद्धपर्वणि
अष्टषष्ट्यधिकशततमोऽध्यायः ॥ १६८ ॥

Mahabharata - Vana Parva - Chapter Footnotes

३-१६८-२ प्रहृष्टो धर्मपुत्रः ॥
३-१६८-९ हन्तेत्यव्ययं वाक्यारम्भे हर्षे वा ॥
३-१६८-१५ शैशिरं हिममयम् ॥
३-१६८-१७ प्राणो बलम् ॥
३-१६८-१८ चतुर्थे मास्यतिक्रान्ते इति ध । पाठः। वराहवत् संस्थितं आकारो यस्य ॥
३-१६८-१९ प्रोथेन मुखाग्रेण पोत्राख्येन । विवर्तन् विषमेण भावेन वर्तमानः इतस्ततः पर्यटन्वा ॥
३-१६८-२६ अनुपश्चात् यन्त्रितैः दृढाकृष्टैः ॥
३-१६८-३३ स्थूणाकर्ण इति शङ्कुकर्णाख्यो रुद्रावतारभेदस्तद्दैवत्यमस्त्रम् । जालं जलमयं वारुणम्। शैलास्त्रमश्मवर्षं च इति ध। पाठः ॥
३-१६८-४० व्यायामं संघटनम् ॥
३-१६८-४४ गोवृषो बलीवर्दश्रेष्ठः ॥

वन-अध्यय१६९
॥ श्रीः ॥
३.१६९. अध्यायः १६९

Mahabharata - Vana Parva - Chapter Topics
अर्जुनेन स्वस्येन्द्रलोकगमनप्रकारस्य तत्रनिवासप्रकारकथनपूर्वकमिन्द्रादस्त्रप्राप्तिप्रकारस्यच कथनम्
॥ १ ॥

Mahabharata - Vana Parva - Chapter Text

३-१६९-० (२२४३८)
अर्जुन उवाच। ३-१६९-०क्ष् (२३१०)
ततस्तामवसं प्रीतो रजनीं तत्र भारत ।
प्रसादाद्देवदेवस्यत्र्यम्बकस्य महात्मनः ॥ ३-१६९-१ (२२४३९)
व्युषितो रजनीं चाहंकृत्वापौर्वाह्णिकीः क्रियाः ।
अपश्यं तं द्विजश्रेष्ठं दृष्टवानस्मि यं पुरा ॥ ३-१६९-२ (२२४४०)
तस्मै चाहं यथावृत्तं सर्वमेव न्यवेदयम् ।
भगवन्तं महादेवं समेतोस्मीति भारत ॥ ३-१६९-३ (२२४४१)
स मामुवाच राजेन्द्र प्रीयमाणो द्विजोत्तमः ।
दृष्टस्त्वया महादेवो यथा नान्येन केनचित् ॥ ३-१६९-४ (२२४४२)
समेतं लोकपालैस्तु सर्वैर्वैवस्वतादिभिः ।
द्रष्टास्यनघ देवेन्द्रं स च तेऽस्त्राणि दास्यति ॥ ३-१६९-५ (२२४४३)
एवमुक्त्वा स मां राजन्नाश्लिष्य च पुनः पुनः ।
अगच्छत्स यथाकामं ब्राह्मणः सूर्यसन्निभः ॥ ३-१६९-६ (२२४४४)
अथापराह्णे तस्याह्नः प्रावात्पुण्यः समीरणः ।
पुनर्नवमिमं लोकं कुर्वन्निव सपत्नहन् ॥ ३-१६९-७ (२२४४५)
दिव्यानि चैव माल्यानि सुगन्धीनि नवानि च ।
शैशिरस्य गिरे पादे प्रादुरासन्समीपतः ॥ ३-१६९-८ (२२४४६)
वादित्राणिच दिव्यानि सुघोषाणि समन्ततः ।
स्तुतयश्चेन्द्रसंयुक्ता अश्रूयन्त मनोहराः ॥ ३-१६९-९ (२२४४७)
गणाश्चाप्सरसां तत्रगन्धर्वाणां तथैव च ।
पुरस्ताद्देवदेवस्य जगुर्गीतानि सर्वशः ॥ ३-१६९-१० (२२४४८)
मरुतां च गणास्तत्र देवयानैरुपागमन् ।
महेन्द्रानुचरा ये च देवसद्मनिवासिनः ॥ ३-१६९-११ (२२४४९)
ततो मरुत्वानहरिभिर्युक्तैर्वाहैः स्वलंकृतैः ।

शचीसहायस्तत्रायात्सह सर्वैस्तदाऽमरैः ॥ ३-१६९-१२ (२२४५०)
एतस्मिन्नैव काले तु कुबेरो नरवाहनः ।
दर्शयामास मां राजँल्लक्ष्म्या परमया युतः ॥ ३-१६९-१३ (२२४५१)
दक्षिणस्यां दिशि यमं प्रत्यपश्यं व्यस्थितम् ।
वरुणं देवराजं च यथास्थानमवस्थितम् ॥ ३-१६९-१४ (२२४५२)
ते मामूचुर्महाराज सान्त्वयित्वा सुरर्षभाः ।
सव्यसाचिन्निरीक्षास्माँल्लोकपालानवस्थितान् ॥ ३-१६९-१५ (२२४५३)
सुरकार्यार्थसिद्ध्यर्थं दृष्टवानसि शंकरम् ।
अस्मत्तोऽपि गृहाण त्वमस्त्राणीति समन्ततः ॥ ३-१६९-१६ (२२४५४)
ततोऽहं प्रयतो भूत्वा प्रणिपत्य सुरर्षभान् ।
प्रत्यगृह्णां तदाऽस्त्राणि महान्ति विविधानि च ॥ ३-१६९-१७ (२२४५५)
गृहीतास्त्रस्ततो देवैरनुज्ञातोस्मि भारत ।
अथ देवा ययुः सर्वेयथागतमरिंदम ॥ ३-१६९-१८ (२२४५६)
मघवानपि मां देवो रथमारोप्य सुप्रभम् ।
उवाच भगवान्वाक्यं स्मयन्निव महायशाः ॥ ३-१६९-१९ (२२४५७)
पुरैवागमनादस्माद्वेदाहं त्वां धनंजय ।
अतः परं त्वहं वै त्वां दर्शये भरत्रषभ ॥ ३-१६९-२० (२२४५८)
त्वया हि तीर्थेषु पुरा समाप्लावः कृतोऽसकृत् ।
तपश्चेदं महत्त्प्तं स्वर्गं गन्तासि पाण्डव ॥ ३-१६९-२१ (२२४५९)
भूयश्चैव च तप्तव्यं तपश्चरणमुत्तमम् ।
ग्दुश्चरं घोरमस्त्राणां तपोबलकरं तव' ॥ ३-१६९-२२ (२२४६०)
स्वर्गस्त्ववश्यं गन्तव्यस्त्वया शत्रुनिषूदन ।
मातलिर्मन्नियोगात्त्वां त्रिदिवं प्रापयिष्यति ॥ ३-१६९-२३ (२२४६१)
विदितस्त्वंहि देवानां मुनीनां च महात्मनाम् ।
ग्इहस्थः पाण्डवश्रेष्ठ तपः कुर्वन्सुदुष्करम्' ॥ ३-१६९-२४ (२२४६२)
ततोऽहमब्रुवं शक्रं प्रसीद भगवन्मम ।
आचार्यं वरयेऽहं त्वामस्त्रार्थं त्रिदशेश्वर ॥ ३-१६९-२५ (२२४६३)
इन्द्र उवाच। ३-१६९-२६क्ष् (२३११)
क्रूरकर्माऽस्त्रवित्तात भविष्यसि परंतप ।
यदर्थमस्त्राणीप्सुस्त्वं तं कामं पाण्डवाप्नुहि ॥ ३-१६९-२६ (२२४६४)
ततोऽहमब्रुवं नाहं दिव्यान्यस्त्राणि शत्रुहन् ।
मानुषेषु प्रयोक्ष्यामि विनाऽस्त्रप्रतिघातनात् ॥ ३-१६९-२७ (२२४६५)
तानि दिव्यानि मेऽस्त्राणि प्रयच्छ विबुधाधिप ।
लेकांश्चास्त्रजितान्पश्चाल्लभेयं सुरपुङ्गव ॥ ३-१६९-२८ (२२४६६)
इन्द्र उवाच। ३-१६९-२९क्ष् (२३१२)
परीक्षार्थं मयैतत्ते वाक्यमुक्तं धनंजय ।

ममात्मजस्य वचनं सूपपन्नमिदं तव ॥ ३-१६९-२९ (२२४६७)
शिक्ष मे भवनं गत्वासर्वाण्यस्त्राणि भारत ।
वायोरग्नेर्वसुभ्योऽपि वरुणात्समरुद्गणात् ॥ ३-१६९-३० (२२४६८)
साध्यं पैतामहं चैव गन्धर्वोरगरक्षसाम् ।
वैष्णवानि च सर्वाणि नैर्ऋतानि तथैव च ॥ ३-१६९-३१ (२२४६९)
मद्गतानि च जानीहि सर्वास्त्राणि कुरूद्वह ।
एवमुक्त्वा तु मां शक्रस्तत्रैवान्तरधीयत ॥ ३-१६९-३२ (२२४७०)
अथापश्यं हरियुजं रथमैन्द्रमुपस्थितम् ।
दिव्यं मायामयं पुण्यं यत्तं मातलिना नृप ॥ ३-१६९-३३ (२२४७१)
लोकपालेषु यातेषु मामुवाचाथ मातलिः ।
द्रष्टुमिच्छति शक्रस्त्वां देवराजो महाद्युते ॥ ३-१६९-३४ (२२४७२)
संसिद्धस्त्वं महाबाहो कुरु कार्यमनुत्तमम् ।
पश्य पुण्यकृतां लोकान्सशरीरो दिवं व्रज ॥ ३-१६९-३५ (२२४७३)
देवराजः सहस्राक्षस्त्वां दिदृक्षति भारत ।
इत्युक्तोऽहं मातलिना गिरिमामन्त्र्य शैशिरम् ॥ ३-१६९-३६ (२२४७४)
प्रदक्षिणमुपावृत्य समारोहं रथोत्तमम् ।
चोदयामास स हयान्मनोमारुतरंहसः ॥ ३-१६९-३७ (२२४७५)
श्मातलिर्हयतत्त्वज्ञो यथावद्भूरिदक्षिणः ।
अवैक्षत च मे वक्त्रंस्तितस्याथ ससारथिः ।
तथा भ्रान्ते रथे राजन्विस्मितश्चेदमब्रवीत् ॥ ३-१६९-३८ (२२४७६)
अत्यद्भुतमिदं त्वद्यविचित्रं प्रतिभाति मे ।
यदास्थितो रथं दिव्यं पदान्न चलितः पदम् ॥ ३-१६९-३९ (२२४७७)
देवराजोऽपिहि मया नित्यमत्रोपलक्षितः ।
विचलन्प्रथमोत्पाते हयानां भरतर्षभ ॥ ३-१६९-४० (२२४७८)
त्वं पुनः स्थित एवात्ररथे भ्रान्ते कुरूद्वह ।
अतिशक्रमिदं सर्वं तवेति प्रतिभाति मे ॥ ३-१६९-४१ (२२४७९)
इत्युक्त्वाऽऽकाशमाविश्य मातलिर्विबुधालयान् ।
दर्शयामास मे राजन्विमानानि च भारत ॥ ३-१६९-४२ (२२४८०)
श्स रथो हरिभिर्युक्तो ह्यूर्ध्वमाचक्रमे ततः ।
ऋषयो देवताश्चैव पूजयन्ति नरोत्तम ॥ ३-१६९-४३ (२२४८१)
ततः कामगमाँल्लोकानपश्यं वै सुरर्षिणाम् ।
गन्धर्वाप्सरसां चैव प्रभावममितौजसाम् ॥ ३-१६९-४४ (२२४८२)
नन्दनादीनि देवानां वनान्युपवनानि च ।
दर्शयामास मे शीघ्रं मातलिः शक्रसारथिः ॥ ३-१६९-४५ (२२४८३)
ततः शक्रस्य भवनमपश्यभमरावतीम् ।
दिव्यैः कामफलैर्वृक्षै रत्नैश्च समलंकृताम् ॥ ३-१६९-४६ (२२४८४)

न तां भासयते सूर्यो न शीतोष्णे न च क्लमः ।
न बाधते तत्ररजस्तत्रास्ति न जरा नृप ॥ ३-१६९-४७ (२२४८५)
न तत्रशोको दैन्यं वा वैवर्ण्यं चोपलक्ष्यते ।
दिवौकसां महाराज न ग्लानिररिमर्दन ।
न क्रोधलोभौ तत्रास्तामशुभं वा विशांपते ॥ ३-१६९-४८ (२२४८६)
नित्यं तुष्टाश् ते राजन्प्राणिनः सुरवेश्मनि ।
नित्यपुष्पफलास्तत्र पादपा हरितच्छदाः ॥ ३-१६९-४९ (२२४८७)
पुष्करिण्यश्च विविधाः पद्मसौगन्धिकायुताः ।
शीतस्तत्रववौ वायुः सुगन्धो वीजते शुभः ॥ ३-१६९-५० (२२४८८)
सर्वरत्नविचित्रा च भूमिः पुष्पविभूषिता ।
मृगद्विजाश्च बहवो रुचिरा मधुरस्वराः ।
विमानगामिनश्चात्रदृश्यन्ते बहवोऽमराः ॥ ३-१६९-५१ (२२४८९)
ततोऽपश्यं वसून्रुद्रान्साध्यांश्च समरुद्गणान् ।
आदित्यानश्विनौ चैव तान्सर्वान्प्रत्यपूजयम् ॥ ३-१६९-५२ (२२४९०)
ते मां वीर्येण यशसा तेजसा च बलेन च ।
अस्त्रैश्चाप्यन्वजानन्त संग्रामे विजयेन च ॥ ३-१६९-५३ (२२४९१)
प्रविश्य तां पुरीं दिव्यां देवगन्धर्वपूजिताम् ।
देवराजं सहस्राक्षमुपातिष्ठं कृताञ्जलिः ॥ ३-१६९-५४ (२२४९२)
ददावर्धासनं प्रीतः शक्रो मे ददतांवरः ।
बहुमानाच्च गात्राणि पस्पर्श मम वासवः ॥ ३-१६९-५५ (२२४९३)
तत्राहं देवगन्धर्वैः सहितो भूरिदक्षिणैः ।
अस्त्रार्तमवसं स्वर्गे शिक्षाणोऽस्त्राणि भारत ॥ ३-१६९-५६ (२२४९४)
विश्वावसोश्च वै पुत्रश्चित्रसेनोऽभवत्सखा ।
स च गान्धर्वमखिलं ग्राहयामास मां नृप ॥ ३-१६९-५७ (२२४९५)
तत्राहमवसं राजन्गृहीतास्त्रः सुपूजितः ।
सुखं शक्रस् भवने सर्वकामसमन्वितः ॥ ३-१६९-५८ (२२४९६)
शृण्वन्वै गीतशब्दं च तूर्यशब्दं च पुष्कलम् ।
पश्यंश्चाप्सरसः श्रेष्ठा नृत्यन्तीर्भरतर्षभ ॥ ३-१६९-५९ (२२४९७)
तत्सर्वमनवज्ञाय तथ्यं विज्ञाय भारत ।
अत्यर्थं प्रतिगृह्याहमस्त्रेष्वेव व्यवस्थितः ॥ ३-१६९-६० (२२४९८)
ततोऽतुष्यत्सहस्राक्षस्तेन कामेन मे विभुः ।
एवं मे वसतो राजन्नेष कालोऽत्यगाद्दिवि ॥ ३-१६९-६१ (२२४९९)

इति श्रीमन्महाभारते अरण्यपर्वणि निवातकवचयुद्धपर्वणि
एकोनसप्तत्यधिकशततमोऽध्यायः ॥ १६९ ॥
Mahabharata - Vana Parva - Chapter Footnotes

३-१६९-११ देवयानैर्विमानैः ।देवसद्मनिवासिनः स्त्रीबालादयः शचीजयन्तादय इत्यर्थः ॥
३-१६९-१४ यथास्थानं प्राच्यामिन्द्रं प्रतीच्यां वरुणमित्यादि ॥
३-१६९-२७ अस्त्रस्यैव प्रतिघातार्थमस्त्रं मोक्ष्ये नत्वन्यत्र मानुषे ॥
३-१६९-३३ मायामयमिवात्यद्भुतम् ॥
३-१६९-३९ पदात् रस्थानात् न चलितः ।रथस्य भ्रमणेपि दृढासन इत्यर्थः ॥
३-१६९-४४ सुरर्षिणमिति दैर्घ्याभाव आर्षः ॥
३-१६९-५३ अन्वजानन्त वीर्यादिमान्भवेत्याशीर्वादान्ददुरित्यर्थः ॥
३-१६९-६० अनवज्ञाय आदृत्य ।तथ्यं यथावत्।अत्यथै पुरुषार्थ इति विज्ञाय ॥
३-१६९-६१ तेन कामेन अस्त्रेच्छया नतु भोगेच्छया ॥

---

वन-अध्यय१७०
॥ श्रीः ॥
३.१७०. अध्यायः १७०

Mahabharata - Vana Parva - Chapter Topics
अस्त्रविद्यासमाप्तौ सहस्राक्षेण गुरुदक्षिणात्वेन निवातकवचानां क्षपणं भिक्षितेनार्जुनेन तदर्थं प्रस्थानम् ॥१ ॥

Mahabharata - Vana Parva - Chapter Text

३-१७०-० (२२५००)
अर्जुन उवाच।३-१७०-०क्ष् (२३१३)
कृतास्त्रमतिविश्वस्तमथ मां हरिवाहनः ।
रसंस्पृश्य मूर्ध्नि पाणिभ्यामिदं वचनमब्रवीत् ॥३-१७०-१ (२२५०१)
न त्वमद्य युधा जेतुं शक्यः सुरगणैरपि ।
किं पुनर्मानुषे लोके मानुषैरकृतात्मभिः ॥३-१७०-२ (२२५०२)
अप्रमेयोऽप्रधृष्यश्च युद्धेष्वप्रतिमस्तथा ।
ग्अजेयस्त्वं हि सङ्ग्रामे सर्वैरपिसुरासुरैः' ॥३-१७०-३ (२२५०३)
अथाब्रवीत्पुनर्देवः संप्रहृष्टतनूरुहः ।
अस्त्रयुद्धे समो वीर न ते कश्चिद्भविष्यति ॥३-१७०-४ (२२५०४)
अप्रमत्तः सदा दक्षः सत्यवादी जितेन्द्रियः ।
ब्रह्मण्यश्चास्त्रविच्चासि शूरश्चासि कुरूद्वह ॥३-१७०-५ (२२५०५)
अस्त्राणि समवाप्तानि त्वया दश च पञ्च च ।

पञ्चभिर्विधिभिः पार्थ विद्यते न त्वया समः ॥ ३-१७०-६ (२२५०६)
प्रयोगमुपसंहारमावृत्तिं च धनञ्जय ।
प्रायश्चित्तं च वेत्थ त्वं प्रतीघातं च सर्वशः ॥ ३-१७०-७ (२२५०७)
तव गुर्वर्थकालोऽयं समुत्पन्नः परंतप ।
प्रतिजानीष्व तं कर्तुं ततो वेत्स्याम्यहं परम् ॥ ३-१७०-८ (२२५०८)
ततोऽहमब्रवं राजन्देवराजमिदं वचः ।
विषह्यं यन्मया कर्तुं कृतमेव निबोध तत् ॥ ३-१७०-९ (२२५०९)
ततो मामब्रवीद्राजन्प्रहसन्बलवृत्रहा ।
नाविपह्यं तवाद्यास्ति त्रिषु लोकेषु किंचन ॥ ३-१७०-१० (२२५१०)
निवातकवचा नाम दानवा मम शत्रवः ।
समुद्रकुक्षिमाश्रित्य दुर्गे प्रतिवसन्त्युत ॥ ३-१७०-११ (२२५११)
तिस्रः कोट्यः समाख्यातास्तुल्यरूपबलप्रभाः ।
तांस्तत्रजहि कौन्तेय गुर्वर्थस्ते भविष्यति ॥ ३-१७०-१२ (२२५१२)
ततो मातलिसंयुक्तं मयूरसमरोमभिः ।
हयैरुपेतं प्रादान्मे रथं दिव्यं महाप्रभम् ॥ ३-१७०-१३ (२२५१३)
बबन्ध चैव मे मूर्ध्नि किरीटमिदमुत्तमम् ।
स्वरूपसदृशं चैव प्रादादङ्गविभूषणम् ॥ ३-१७०-१४ (२२५१४)
अभेद्यं कवचं चेदं स्पर्शरूपवदुत्तमम् ।
अजरां ज्यामिमां चापि गाण्डीवे समयोजयत् ॥ ३-१७०-१५ (२२५१५)
ततः प्रायामहं तेन स्यन्दनेन विराजता ।
येनाजयद्देवपतिर्बलिं वैरोचनिं पुरा ॥ ३-१७०-१६ (२२५१६)
ततो देवाः सर्व एव तेन घोषेण बोधिताः ।
मन्वाना देवराजं मां समाजग्मुर्विशांपते ॥ ३-१७०-१७ (२२५१७)
दृष्ट्वा च मामपृच्छन्त किं करिष्यसि फल्गुन ।
तानब्रुवं यथाभूतमिदं कर्ताऽस्मि संयुगे ॥ ३-१७०-१८ (२२५१८)
निवातकवचानां तु प्रस्थितं मां तधैपिणम् ।
निबोधत महाभागा शिवं चाशास्त मेऽनघाः ॥ ३-१७०-१९ (२२५१९)
'ततो वाग्भिः प्रशस्ताभिस्त्रिदशाः पृथिवीपते'।
तुष्टुवुर्मां प्रसन्नास्ते यथा देवं पुरंदरम् ॥ ३-१७०-२० (२२५२०)
रथेनानेन मघवा जितवाञ्शम्बरं युधि ।
नमुचिं बलवृत्रौ च प्रह्लादनरकावपि ॥ ३-१७०-२१ (२२५२१)
बहूनि च सहस्राणि प्रयुतान्यर्बुदान्यपि ।
रथेनानेन दैत्यानां जितवान्मघवा युधि ॥ ३-१७०-२२ (२२५२२)
न्वमप्यनेन कौन्तेय निबातकवचान्रणे ।
विजेता युधि विक्रम्य पुरेव मघवा वशी ॥ ३-१७०-२३ (२२५२३)
अयंच शङ्खप्रवरो येन जेतासि दानवान् ।

अनेन विजिता लोका शक्रेणापि महात्मना ॥ ३-१७०-२४ (२२५२४)
प्रदीयमानं देवैस्तं देवदत्तं जलोद्भवम् ।
प्रत्यगृह्णां जयायैनं स्तूयमानस्तदाऽमरैः ॥ ३-१७०-२५ (२२५२५)
स शङ्खी कवची वाणी प्रगृहीतशरासनः ।
दानवालयमत्युग्रं प्रयातोस्मि युयुत्सया ॥ ३-१७०-२६ (२२५२६)

इति श्रीमन्महाभारते अरण्यपर्वणि निवातकवचयुद्धपर्वणि
सप्तत्यधिकशततमोऽध्यायः ॥ १७० ॥
Mahabharata - Vana Parva - Chapter Footnotes

३-१७०-६ पञ्चभिः प्रयोगादिभिः ॥
३-१७०-७ आवृत्तिः पुनःपुनः प्रयोगोपसंहारौ । प्रायश्चित्तं
अस्त्राग्निना दग्धानामनागसां पुनरुज्जीवनम्। प्रतीघातं
परास्त्रेणाभिभूतस्य स्वास्त्रस्योद्दीपनम् ॥
३-१७०-८ गुर्वर्यो दक्षिणा । वेत्स्यामि वेदयिष्यामि। परं कार्यमिति शेषः ॥
३-१७०-९ विषह्यं शक्यम् ॥
३-१७०-१६ प्रायां प्रयाणं कृतवान् ॥
३-१७०-१९ आशास्त आशाध्वम् ॥

---

वन-अध्यय१७१
॥ श्रीः ॥
३.१७१. अध्यायः १७१

Mahabharata - Vana Parva - Chapter Topics
पार्थेन निवातकवचैः सह युयुत्सया मातलिसनाथेनेन्द्ररथेन
तत्पुरंप्रति गमनम् ॥ १ ॥
अर्जुनशङ्खध्वनिश्रवणेन सन्नद्धैर्निवातकवचैस्तेन सह
युद्धारम्भः ॥ २ ॥

Mahabharata - Vana Parva - Chapter Text

३-१७१-० (२२५२७)
अर्जुन उवाच। ३-१७१-०क्ष् (२३१४)
ततोऽहं स्तूयमानस्तु तत्रतत्र सुरर्पिभिः ।
अपश्यमुदधिं भीममपांपतिमथाव्ययम् ॥ ३-१७१-१ (२२५२८)
फेनवत्यः प्रकीर्णाश्च संहताश्च समुच्छ्रिताः ।
ऊर्मयश्चात्र दृश्यन्ते चलन्तइव पर्वताः ॥ ३-१७१-२ (२२५२९)

नावः सहस्रशस्तत्र रत्नपूर्णाः समन्ततः ।
ग्नभसीव विमानानि विचरन्त्यो विरेजिरे' ॥ ३-१७१-३ (२२५३०)
तिमिङ्गिलाः कच्छपाश् तथा तिमितिभिङ्गिलाः ।
मकराश्चात्र दृश्यन्ते जले मप्रा इवाद्रयः ॥ ३-१७१-४ (२२५३१)
शङ्खानां च महबाणि मग्नान्यप्सु ममन्ततः ।
दृश्यन्ते स्म यथा रात्रौ तारास्तन्वभ्रमंवृताः ॥ ३-१७१-५ (२२५३२)
तथा सहस्रशस्तत्ररत्नसङ्घाः प्लवन्त्युत ।
वायुश् घूर्णते भीमस्तदद्भुतमिवाभवत् ॥ ३-१७१-६ (२२५३३)
तमतीत्य महावेगं सर्वाम्भोनिधिमुत्तमम् ।
अपश्यं दानवाकीर्णं तद्दैत्यपुरमन्तिकात् ॥ ३-१७१-७ (२२५३४)
तत्रैव मातलिस्तृणं निपात्य पृथिवीतले ।
दानवान्नथघोपेण तन्पुरं समुपाद्रवत् ॥ ३-१७१-८ (२२५३५)
रथघोषं तु तं श्रुत्वा स्तनयित्नोग्विम्बरे ।
मन्वाना देवराजं मामाविग्ना दानवाऽभवन् ॥ ३-१७१-९ (२२५३६)
सर्वे संभ्रान्तमनसः शग्चापधराः स्थिताः ।
तथाऽसिशूलपरशुगदामुसलपाणयः ॥ ३-१७१-१० (२२५३७)
ततो द्वाराणि पिदधुर्दानवास्त्रस्तचेतसः ।
संविधाय पुरे रक्षां न स्म कश्चन दृश्यते ॥ ३-१७१-११ (२२५३८)
ततः शङ्खमुपादाय देवदत्तं महास्वनम् ।
परमां मुदमाश्रित्य प्राधमं तं शनैरहम् ॥ ३-१७१-१२ (२२५३९)
स तु शब्दो दिवं स्तब्ध्वा प्रतिशब्दमजीजनत् ।
वित्रेसुश्च निलिल्युश्च भूतानि सुमहान्त्यपि ॥ ३-१७१-१३ (२२५४०)
ततो निवातकवचाः सर्व एव समन्ततः ।
दंशिता विविधैस्त्राणैर्विचित्रायुपाणयः ॥ ३-१७१-१४ (२२५४१)
आयसैश्च महाशूलैर्गदाभिर्मुसलैरपि ।
पट्टसैः करवालैश्च रथचक्रैश्च भारत ॥ ३-१७१-१५ (२२५४२)
शतघ्नीभिर्भुशुण्डीभिः खङ्गैश्चित्रैः स्वलंकृतैः ।
प्रगृहीतैर्दितेः पुत्राः प्रादुरासन्सहस्रशः ॥ ३-१७१-१६ (२२५४३)
ततो विचार्य बहुशो रथमार्गेषु तान्हयान् ।
प्राचोदयत्समे देशे मातलिर्भरतर्षभ ॥ ३-१७१-१७ (२२५४४)
तेन तेषां प्रणुन्नानासाशुत्वाच्छीघ्रगामिनाम् ।
नान्वपश्यत्तदा कश्चित्तन्मेऽद्भुतमिवाभवत् ॥ ३-१७१-१८ (२२५४५)
ततस्ते दानवास्तत्रयोधवातान्यनेकशः ।
विकृतस्वररूपाणि भृशं सर्वाण्यचोदयन् ॥ ३-१७१-१९ (२२५४६)
३-१७१-२० (२२५४७)
तेन शब्देन सहसा समुद्रे पर्वतोपमाः ।

आप्लवन्त गतैः सत्वैर्मत्स्याः शतसहस्रशः ॥
Mahabharata - Vana Parva - Chapter Footnotes

३-१७१-४ तिमिर्मत्स्यस्त गिलति महामतस्यस्तिमिगिलः तमपि गिलतीति तिमितिमिगिलः ।तिमिरिव गिलनीयस्तिमिगिलो यस्येति विग्रहः ॥
३-१७१-६ घूर्मते भ्रमति ॥
३-१७१-१३ दिवं स्तब्ध्वा आकाश व्याप्य ॥
३-१७१-१४ दशिताः सन्नद्धाः ।त्राणैः कवचैः ॥
३-१७१-१९ ततस्तेदानवास्तत्र बादित्राणि सहस्रशः ।विकृतस्वररूपाणि भृशं सर्वाण्यनादयन् इति झ।पाठः ॥
३-१७१-२० आप्लवन्त पलायने कृतवन्तः ।गतैः सत्वैर्विगताभिर्वुद्धिभिरुपलक्षिता भ्रान्ता इत्यर्थः ॥
३-१७१-२४ तारकामये इति झ ।पाठः।तत्र तारकामये तारार्थे संग्रामे इत्यर्थः ॥

---

वन-अध्यय१७२
॥ श्रीः ॥
३.१७२. अध्यायः १७२

Mahabharata - Vana Parva - Chapter Topics
अर्जुनस्य निवातकवचैः सह युद्धम् ॥१ ॥

Mahabharata - Vana Parva - Chapter Text

३-१७२-० (२२५४८)
अर्जुन उवाच।३-१७२-०क्ष् (२३१५)
ततो निवातकवचाः सर्वेवेगेन भारत ।
अभ्यद्रवन्मां सहिताः प्रगृहीतायुधा रणे ॥३-१७२-१ (२२५४९)
आच्छाद्य रथपन्थानमुत्क्रोशन्तो महारथाः ।
अवृत्य सर्वतस्ते मां शरवर्षैरवाकिरन् ॥३-१७२-२ (२२५५०)
ततोऽपरे महावीर्याः शूलपट्टसपाणयः ।
शूलानि च भुशुण्डीश्च मुमुचुर्दानवा मयि ॥३-१७२-३ (२२५५१)
सुमहत्तुमुलं वर्षं गदाशक्तिसमाकुलम् ।
अनिशं सृज्यमानं तैरपतन्मद्रथोपरि ॥३-१७२-४ (२२५५२)
अन्ये मामभ्यधावन्त निवातकवचा सुधि ।
शितशस्त्रायुधा रौद्राः कालरूपाः प्रहारिणः ॥३-१७२-५ (२२५५३)
तानहं विविधैर्बाणैर्वेगवद्भिरजिह्मगैः ।

गाण्डीवमुक्तैरभ्यघ्नमेकैकं दशभिर्मृधे ॥ ३-१७२-६ (२२५५४)
ते कृता विमुखाः सर्वे मत्प्रयुक्तैः शिलाशितैः ।
ततो मातलिना तूर्णं हयास्ते संप्रयोदिताः ॥ ३-१७२-७ (२२५५५)
अथ मार्गान्बहूंस्तत्र विचेरुर्वातरंहसः ।
सुसंयता मातलिना प्रामथ्नन्त दितेःसुतान् ॥ ३-१७२-८ (२२५५६)
शतं शतास्ते हरयस्तस्मिन्युक्ता महारथे ।
तदा मातलिना यथ्ता व्यचरन्नल्पका इव ॥ ३-१७२-९ (२२५५७)
तेषां चरणपातेन रथनेमिस्वनेन च ।
मम बाणनिपातैश्च हतास्ते शतशोऽसुराः ॥ ३-१७२-१० (२२५५८)
गतासवस्तथैवान्ये दानवाः पाण्डवर्षभ ।
हतसारथयस्तत्र व्यकृष्यन्त तुरंगमैः ॥ ३-१७२-११ (२२५५९)
ते दिशो विदिशः सर्वे प्रतिरुध्य प्रहारिणः ।
अभ्यघ्नन्विविधैः शस्त्रैस्ततो मे व्यथितं मनः ॥ ३-१७२-१२ (२२५६०)
ततोऽहं मातलेर्वीर्यमद्भुतं समदर्शयम् ।
अश्वांस्तथा वेगवतो यदयत्नादधारयत् ॥ ३-१७२-१३ (२२५६१)
ततोऽहं लघुभिश्चित्रैरस्त्रैस्तानसुरान्रणे ।
चिच्छेद सायुधान्राजञ्छतशोऽथ सहस्रशः ॥ ३-१७२-१४ (२२५६२)
एवं मे चरतस्तत्र सर्वयत्नेन शत्रुहन् ।
प्रीतिमानभवद्वीरो मातलिः शक्रसारथिः ॥ ३-१७२-१५ (२२५६३)
वध्यमानास्ततस्तैस्तु हयैस्तेन रथेन च ।
अगमन्प्रक्षयं केचिन्न्यवर्तन्त तथाऽपरे ॥ ३-१७२-१६ (२२५६४)
स्पर्धमाना इवास्माभिर्निवातकवचा रणे ।
शरवर्षैः शरार्तं मां महद्भिः प्रत्यवारयन् ॥ ३-१७२-१७ (२२५६५)
शरवेगैर्निहत्याहमस्त्रैः शरविघातिभिः ।
ज्वलद्भिः परमैः शीघ्रैस्तानविध्यं सहस्रशः ॥ ३-१७२-१८ (२२५६६)
ततः संपीड्यमानास्ते क्रोधाविष्टा महासुराः ।
अपीडयन्मां सहिताः शक्तिशूलासिवृष्टिभिः ॥ ३-१७२-१९ (२२५६७)
ततोऽहमस्त्रं प्रायुञ्जं गान्धर्वं नाम भारत ।
दयितं देवराजस् माधवं नाम भारत ॥ ३-१७२-२० (२२५६८)
ततः खड्गांस्त्रिशूलांश्च तोमरांशच् सहस्रशः ।
अस्त्रवीर्येण शतधा तैर्मुक्तानहमच्छिदम् ॥ ३-१७२-२१ (२२५६९)
छित्त्वा प्रहरणान्येषां ततस्तानपि सर्वशः ।
प्रत्यविध्यमहं रोषाद्दशभिर्दशभिः शरैः ॥ ३-१७२-२२ (२२५७०)
गाण्डीवाद्धि तदा सङ्ख्ये यथा भ्रमरपङ्क्तयः ।
निष्पतन्ति महाबाणास्तन्मातलिरपूजयत् ॥ ३-१७२-२३ (२२५७१)
तेषामपि तु बाणास्ते बहुत्वाच्छलभा इव ।

अवाकिरन्मां बलवत्तानहं व्यधमं शरैः ॥ ३-१७२-२४ (२२५७२)
वध्यमानास्ततस्ते तु निवातकवचाः पुनः ।
शरवर्षैर्महद्भिर्मां समन्तात्पर्यवारयन् ॥ ३-१७२-२५ (२२५७३)
शरवेगान्निहत्याहमस्त्रैरस्त्रविघातिभिः ।
ज्वलद्भिः परमैः शीघ्रैस्तानविध्यं सहस्रशः ॥ ३-१७२-२६ (२२५७४)
तेषां छिन्नानि गात्राणि विसृजन्तिस्म शोणितम् ।
प्रावृषीवाभिवृष्टानि शृङ्गाण्यथ धराभृताम् ॥ ३-१७२-२७ (२२५७५)
इन्द्राशनिसमस्पर्शैर्वेगवद्भिरजिह्मगैः ।
मद्बाणैर्वध्यमानास्ते समुद्विग्नाः स्म दानवाः ॥ ३-१७२-२८ (२२५७६)
शतधा भिन्नदेहास्ते क्षीणप्रहरणौजसः ।
ततो निवातकवचा मामयुध्यन्त मायया ॥ ३-१७२-२९ (२२५७७)

इति श्रीमन्महाभारते अरण्यपर्वणि निवातकवचयुद्धपर्वणि
द्विसप्तत्यधिकशततमोऽध्यायः ॥ १७२ ॥
Mahabharata - Vana Parva - Chapter Footnotes

३-१७२-९ शताः शतानि अयुतमित्यर्थः । हरयोऽश्वाः ॥
३-१७२-१४ चिच्छेद अहमिति शेषः ॥
३-१७२-२० माधवं नाम मधोर्दैत्यस् वधार्थं निर्मितत्वात्
। देवराजस्य ब्रह्मदण्डसमंरणे इति ध। पाठः ॥

---

वन-अध्यय१७३
॥ श्रीः ॥
३.१७३. अध्यायः १७३

Mahabharata - Vana Parva - Chapter Topics
अर्जुनेन दिव्यास्त्रैर्मायानिरसनपूर्वक् दैत्यहननम् ॥ १ ॥

Mahabharata - Vana Parva - Chapter Text

३-१७३-० (२२५७८)
अर्जुन उवाच। ३-१७३-०क्ष् (२३१६)
ततोऽश्मवर्षं सुमहत्प्रादुरासीत्समन्ततः ।
नगमात्रैः शिलाखण्डैस्तन्मां दृढमपीडयत् ॥ ३-१७३-१ (२२५७९)
तदहं वज्रसंकाशैः शरैरिन्द्रास्त्रचोदितैः ।
अचूर्णयं वेगवद्भिः शतधैकैकमाहवे ॥ ३-१७३-२ (२२५८०)

चूर्ण्यमानेऽश्मवर्षे तु यावकः समजायत ।
तत्राश्मचूर्णा न्यपतन्पावकप्रकरा इव ॥ ३-१७३-३ (२२५८१)
ततोऽश्मवर्षे विहते जलवर्षं महत्तरम् ।
धाराभिरक्षमात्राभिः प्रादुरासीनममान्तिके ॥ ३-१७३-४ (२२५८२)
नभस प्रच्युता धारास्तिग्मवीर्याः सहस्रशः ।
आवृण्वन्सर्वतो व्योम दिशश्चोपदिशस्तथा ॥ ३-१७३-५ (२२५८३)
धाराणां च निपातेन वायोर्विष्फूर्जितेन च ।
गर्जितेन च मेघानां न प्राज्ञायत किंचन ॥ ३-१७३-६ (२२५८४)
धारा दिवि च संबद्धा वसुधायां च सर्वशः ।
व्यामोहयन्त मां तत्रनिपतन्त्योऽनिशं भुवि ॥ ३-१७३-७ (२२५८५)
तत्रोपदिष्टमिन्द्रेण दिव्यमस्त्रं विशोषणम् ।
दीप्तं प्राहिणवं घोरमशुप्यत्तेन तज्जलम् ॥ ३-१७३-८ (२२५८६)
हतेऽश्मवर्षे च मया जलवर्षे च शोषिते ।
मुमुचुर्दानवा मायामग्निं वायुं च भारत ॥ ३-१७३-९ (२२५८७)
ततोऽहमग्निं व्यधमं सलिलास्त्रेण सर्वशः ।
शैलेन च महास्त्रेण वायोरवेगमधारयम् ॥ ३-१७३-१० (२२५८८)
तस्यां प्रतिहतायां ते दानवा युद्धदुर्मदाः ।
प्राकुर्वन्विविधां मायां यौगपद्येन भारत ॥ ३-१७३-११ (२२५८९)
ततो वर्षं प्रादुरभूत्सुमहद्रोमहर्षणम् ।
अस्त्राणां घोररूपाणामग्नेर्वायोस्तथाऽश्मनाम् ॥ ३-१७३-१२ (२२५९०)
सा तु मायामयी वृष्टिः पीडयामास मां युधि ।
अथ घोरं तमस्तीव्रं प्रादुरासीत्समन्ततः ॥ ३-१७३-१३ (२२५९१)
तमसा संवृतेलोके घोरेण परुषेण च ।
हरयो विमुखाश्चासन्प्रास्खलच्चापि मातलिः ॥ ३-१७३-१४ (२२५९२)
हस्ताद्धिरण्मयश्चास्य प्रतोदः प्रापतद्भुवि ।
असकृच्चाह मां भीतः किं करिष्याव इत्यपि ॥ ३-१७३-१५ (२२५९३)
मां च भीराविशत्तीव्रा तस्मिन्विगतचेतसि ।
स च मां विगतज्ञानः संत्रस्तमिदमब्रवीत् ॥ ३-१७३-१६ (२२५९४)
सुराणामसुराणां च संग्रामः सुमहानभूत् ।
अमृतार्थं पुरा पार्त स च दृष्टो मयाऽनघ ॥ ३-१७३-१७ (२२५९५)
शम्बरस्य वधे घोरः संग्रामः सुमहानभूत् ।
सारथ्यं देवराजस्य तत्रापि कृतवानहम् ॥ ३-१७३-१८ (२२५९६)
तथैव वृत्रस्य वधे संगृहीता हया मया ।
वैरोचनेर्मया युद्धं दृष्टं चापि सुदारुणम् ॥ ३-१७३-१९ (२२५९७)
एते मया महाघोरः संग्रामाः पर्युपासिताः ।
न चापि विगतज्ञानो भूतपूर्वोस्मि पाण्डव ॥ ३-१७३-२० (२२५९८)

पितामहेन संहारः प्रजानां विहितो ध्रुवम् ।
न हि युद्धमिदं युक्तमन्यत्र जगतः क्षयात् ॥ ३-१७३-२१ (२२५९९)
तस्य तद्वचनं श्रुत्वा संस्तभ्यात्मानमात्मना ।
मोहयिष्यन्दानवानामहं मायाबलं महत् ॥ ३-१७३-२२ (२२६००)
अब्रुवं मातलिं भीतं पश्य मे बुजयोर्बलम् ।
अस्त्राणां च प्रभावं वै धनुषो गाण्डिवस्य च ॥ ३-१७३-२३ (२२६०१)
अद्यास्त्रमाययैतैषां मायामेतां सुदारुणाम् ।
विनिहन्मि तमश्चोग्रं मा भैः सूत स्तिरो भव ॥ ३-१७३-२४ (२२६०२)
एवमुक्त्वाहमसृजमस्त्रमायां नराधिप ।
मोहनीं सर्वभूतानां हिताय त्रिदिवौकसाम् ॥ ३-१७३-२५ (२२६०३)
पीड्यमानासु मायासु तासु तास्वसुरोत्तमाः ।
पुनर्बहुविधा मायाः प्राकुर्वन्नमितौजसः ॥ ३-१७३-२६ (२२६०४)
पुनः प्रकाशमभवत्तमसा ग्रस्यते पुनः ।
भवत्यदर्शनो लोकः पुनरप्सु निमज्जति ॥ ३-१७३-२७ (२२६०५)
सुसंगृहीतैर्हरिभिः प्रकाशे सति मातलिः ।
व्यचरत्स्यन्दनाग्र्येण संग्रामे रोमहर्षणे ॥ ३-१७३-२८ (२२६०६)
ततः पर्यपतन्नुग्रा निवातकवचा मयि ।
तानहं विवरं दृष्ट्वा प्राहण्वं यमसादनम् ॥ ३-१७३-२९ (२२६०७)
३-१७३-३० (२२६०८)
वर्तमाने तथा युद्धे निवातकवचान्तके ।
नापश्यं सहसा सर्वान्दानवान्मायया वृतान् ॥
Mahabharata - Vana Parva - Chapter Footnotes

३-१७३-१ नगमात्रैः वृक्षप्रमाणैः ॥
३-१७३-३ पावकप्रकराः वह्निराशयः ॥
३-१७३-१९ वैरोचनेः बलेः ॥
३-१७३-२६ पीड्यमानासु नश्यमानासु ॥

---

वन-अध्यय१७४
॥ श्रीः ॥
३.१७४. अध्यायः १७४

Mahabharata - Vana Parva - Chapter Topics
अर्जुनेन निवातकवचवधानन्तरं पुनः स्वर्गप्रति प्रस्तानम् ॥ १ ॥

Mahabharata - Vana Parva - Chapter Text

३-१७४-० (२२६०९)
अर्जुन उवाच। ३-१७४-०क्ष् (२३१७)
अदृश्यमानास्ते दैत्या योधयन्ति स्म मायया ।
अदृश्यनास्त्रवीर्येण तानप्यहमयोधयम् ॥ ३-१७४-१ (२२६१०)
गाण्डीवमुक्ता विशिखाः सम्यगस्त्रप्रचोदिताः ।
अच्छिन्दन्नुत्तमाङ्गानि यत्रयत्र स्म तेऽभवन् ॥ ३-१७४-२ (२२६११)
ततो निवातकवचा वध्यमाना मया युधि ।
संहृत्य रमायां सहसा प्राविशन्पुरमात्मनः ॥ ३-१७४-३ (२२६१२)
व्यपयातेषु दैत्येषु प्रादुर्भूते च दर्शने ।
अपश्यं दानवांस्तत्र हताञ्शतसहस्रशः ॥ ३-१७४-४ (२२६१३)
विनिष्पिष्टानि तत्रैषां शस्त्राण्याभरणानि च ।
शतशः स्म प्रदृश्यन्ते गात्राणि कवचानि च ॥ ३-१७४-५ (२२६१४)
हयानां नान्तरं ह्यासीत्पदाद्विचलितुं पदम् ।
उत्पत्य सहसा तस्थुरन्तरिक्षगमास्ततः ॥ ३-१७४-६ (२२६१५)
ततो निवातकवचा व्योम संछाद्य केवलम् ।
अदृश्या ह्यभ्यवर्तन्त विसृजन्तः शिलोच्चयान् ॥ ३-१७४-७ (२२६१६)
अन्तर्भूमिगताश्चान्ये हयानां चरणानथ ।
व्यगृह्णन्दानवा घोरा रथचक्रे च भारत ॥ ३-१७४-८ (२२६१७)
विनिगृह्य हयांश्चान्ये रथं च मम युध्यतः ।
सर्वतो मामविध्यन्त सरथं धरणीधरैः ॥ ३-१७४-९ (२२६१८)
पर्वतैरुपचीयद्भिः पतद्भिश्च तथाऽपरैः ।
स देशो यत्रवर्तामि गुहेव समपद्यत ॥ ३-१७४-१० (२२६१९)
पर्वतैश्चाद्यमानोऽहं निगृहीतैश्च वाजिभिः ।
अगच्छं परमामार्तिं मातलिस्तदलक्षयत् ॥ ३-१७४-११ (२२६२०)
लक्षयित्वा च मां भीतमिदं वचनमब्रवीत् ।
आर्जुनार्जुन मा भैस्त्वं वज्रमस्त्रमुदीरय ॥ ३-१७४-१२ (२२६२१)
ततोऽहं तस्य तद्वाक्यं श्रुत्वा वज्रमुदीरयम् ।
देवराजस् दयितं वज्रमस्त्रं नराधिप ॥ ३-१७४-१३ (२२६२२)
अचलं स्थानमासाद्य गाण्डीवमनुमन्त्र्य च ।
अमुञ्चं वज्रसंस्पर्शानायतान्निशिताञ्सरान् ॥ ३-१७४-१४ (२२६२३)
ततो मायाश् ताः सर्वा निवातकवचांश्च तान् ।
ते वज्रचोदिता बाणा वज्रभूताः रसमाविशन् ॥ ३-१७४-१५ (२२६२४)
ते वज्रवेगविहता दानवाः पर्वतोपमाः ।
इतरेतरमाश्लिष्य न्यपतन्पृथिवीतले ॥ ३-१७४-१६ (२२६२५)
अन्तर्भूमौ च येऽगृह्णन्दानवा रथवाजिनः ।
अनुप्रविश्य तान्वाणाः प्राहिण्वन्यमसादनम् ॥ ३-१७४-१७ (२२६२६)

हतैर्निवातकवचैर्निरस्तैः पर्वतोपमैः ।
समाच्छाद्यत देशः स विकीर्णैरिव पर्वतैः ॥ ३-१७४-१८ (२२६२७)
न हयानां क्षतिः काचिन्न रथस् न मातलेः ।
मम चादृश्यत तदा तदद्भुतमिवाभवत् ॥ ३-१७४-१९ (२२६२८)
ततो मां प्रहसन्राजन्मातलिः प्रत्यभाषत ।
नैतदर्जुन देवेषु त्वयि वीर्यं यदीक्ष्यते ॥ ३-१७४-२० (२२६२९)
हतेष्वसुरसङ्घेषु दारास्तेषां तु सर्वशः ।
प्राक्रोशन्नगरे तस्मिन्यथा शरदि लक्ष्मणाः ॥ ३-१७४-२१ (२२६३०)
ततो मातलिना सार्धमहं तत्पुरमभ्ययाम् ।
त्रासयन्रथघोषेण निवातकवचस्त्रियः ॥ ३-१७४-२२ (२२६३१)
तान्दृष्ट्वा दशसाहस्रान्मयूरसदृशान्हयान् ।
रथं च रविसंकाशं प्राद्रवन्गणशः स्त्रियः ॥ ३-१७४-२३ (२२६३२)
ताभिराभरणैः शब्दस्त्रासिताभिः समीरितः ।
शिलानामिव शैलेषु पतन्तीनामभूत्तदा ॥ ३-१७४-२४ (२२६३३)
वित्रस्ता दैत्यनार्यस्ताः स्वानि वेश्मान्यथाविशन् ।
बहुरत्नविचित्राणि शातकुम्भमयानि च ॥ ३-१७४-२५ (२२६३४)
तदद्भुताकारमहं दृष्ट्वा नगरमुत्तमम् ।
विशिष्टं देवनगरादपृच्छं मातलिं ततः ॥ ३-१७४-२६ (२२६३५)
इदमेवंविधं कस्माद्देवता न विशन्त्युत ।
पुरंदरपुराद्धीदं विशिष्टमिति लक्षये ॥ ३-१७४-२७ (२२६३६)
मातलिरुवाच। ३-१७४-२८क्ष् (२३१८)
आसीदिदं पुरा पार्थ देवराजस्य नः पुरम् ।
ततो निवातकवचैरितः प्रच्याविताः सुराः ॥ ३-१७४-२८ (२२६३७)
तपस्तप्त्वा महत्तीव्रं प्रसाद्य च पितामहम् ।
इदं वृतं निवासाय देवेभ्यश्चाभयं युधि ॥ ३-१७४-२९ (२२६३८)
ततः शक्रेण भगवान्स्वयंभूरभिचोदितः ।
विधत्तां भगवानत्रेत्यात्मनो हितकाम्यया ॥ ३-१७४-३० (२२६३९)
तत उक्तो भगवता दिष्टमत्रेति भारत ।
भवितान्तस्त्वमप्येषां देहेनान्येन वृत्रहन् ॥ ३-१७४-३१ (२२६४०)
तत एषां वधार्थाय शक्रोऽस्त्राणि ददौ तव ।
न हि शक्याः सुरैर्हन्तुं य एते निहतास्त्वया ॥ ३-१७४-३२ (२२६४१)
कालस्य परिणामेन ततस्त्वमिह भारत ।
एषामन्तकरः प्राप्तस्तत्त्वया च कृतं तथा ॥ ३-१७४-३३ (२२६४२)
दानवानां विनाशार्थं महास्त्राणां महद्बलम् ।
ग्राहितस्त्वं महेन्द्रेण पुरुषेन्द्र तदुत्तमम् ॥ ३-१७४-३४ (२२६४३)
उर्जुन उवाच। ३-१७४-३५क्ष् (२३१९)

ततः प्रशाम्य नगरं दानवांश्च निहत्य तान् ।
पुनर्मातलिना सार्धमगमं देवसद्म तत् ॥ ३-१७४-३५ (२२६४४)

इति श्रीमन्महाभारते अरण्यपर्वणि निवातकवचयुद्धपर्वणि
चतुःसप्तत्यधिकशततमोऽध्यायः ॥१७४ ॥
Mahabharata - Vana Parva - Chapter Footnotes

३-१७४-२१ लक्ष्मणाः सारस्यः ॥
३-१७४-३५ प्रशाम्य प्रकर्षेण आलोच्य ॥

---

वन-अध्यय१७५
॥ श्रीः ॥
३.१७५. अध्यायः १७५

Mahabharata - Vana Parva - Chapter Topics
निवातकवचवधानन्तरं स्वर्गंप्रत्यागच्छताऽर्जुनेन मध्येमार्गं
हिरण्यपुरावलोकनम् ॥१ ॥
ततस्तद्वासिनां पौलोमानां कालकेयानां च वधानन्तरं पुनः स्वर्गं
प्रत्यागमनम् ॥२ ॥

Mahabharata - Vana Parva - Chapter Text

३-१७५-० (२२६४५)
अर्जुन उवाच। ३-१७५-०क्ष् (२३२०)
निवर्तमानेन मया महद्दृष्टं ततोऽपरम् ।
पुरं कामगमं दिव्यं पावकार्कसमप्रभम् ॥३-१७५-१ (२२६४६)
रत्नद्रुममयैश्चित्रैर्भास्वरैश्च पतत्रिभिः ।
पौलोमैः कालकेयैश्च रनित्यहृष्टैरधिष्ठिरतम् ॥३-१७५-२ (२२६४७)
गोपुराट्टालकोपेतं चतुर्द्वारं दुरासदम् ।
सर्वरत्नमयं दिव्यमद्भुतोपमदर्शनम् ॥३-१७५-३ (२२६४८)
द्रुमैः पुष्पलोपेतैः सर्वरत्नमयैर्वृतम् ।
तथा पतत्रिभिर्दिव्यैरुपेतं सुमनोहरैः ॥३-१७५-४ (२२६४९)
असुरैर्नित्यमुदितैः शूलर्ष्टिमुसलायुधैः ।
चापमुद्गरहस्तैश्च स्रग्विभिः सर्वतो वृतम् ॥३-१७५-५ (२२६५०)
तदहं प्रेक्ष्यदैत्यानां पुरमद्भुतदर्शनम् ।
अपृच्छं मातलिं राजन्किमिदं दृश्यतेति वै ॥३-१७५-६ (२२६५१)
मातलिरुवाच। ३-१७५-७क्ष् (२३२१)

पुलोमा नाम दैतेयी कालका च महासुरी ।
दिव्यंवर्षसहस्रं ते चेरतुः परमं तपः ॥ ३-१७५-७ (२२६५२)
तपसोन्ते ततस्ताभ्यां स्वयंभूरददाद्वरम् ।
अगृह्णीतां वरं ते तु सुतानामल्पदुःखताम् ॥ ३-१७५-८ (२२६५३)
अवध्यतां च राजेन्द्र सुरराक्षसपन्नगैः ।
पुरं सुरमणीयं च स्वचरं सुकृतप्रभम् ॥ ३-१७५-९ (२२६५४)
सर्वरत्नैः समुदितं दुर्धर्षममरैरपि ।
महर्षियक्षगन्धर्वपन्नगासुरराक्षसैः ॥ ३-१७५-१० (२२६५५)
सर्वकामगुणोपेतं वीतशोकमनामयम् ।
ब्रह्मणो भवनाच्छ्रेष्ठं कालकेयकृतं विभो ॥ ३-१७५-११ (२२६५६)
तदेतत्खपुरं दिव्यं चरत्यमरवर्जितम् ।
पौलोमाध्युषितं वीर कालकेयैश्च दानवैः ॥ ३-१७५-१२ (२२६५७)
हिरण्यपुरमित्येवं ख्यायते नगरं महत् ।
रक्षितंकालकेयैश्च पौलोमैश्च महासुरैः ॥ ३-१७५-१३ (२२६५८)
त एतेमुदिता राजन्नवध्याः सर्वदैवतैः ।
निवसन्त्यत्रराजेन्द्र गतोद्वेगा निरुत्सुकाः ॥ ३-१७५-१४ (२२६५९)
ग्सुरासुरैरवध्यानां दानवानां धनञ्जय'।
मानुषान्मृत्युरेतेषां निर्दिष्टो ब्रह्मणा पुरा ॥ ३-१७५-१५ (२२६६०)
शएतानपि रणे पार्त कालकेयान्दुरासदान् ।
वज्रास्त्रेण नयस्वाशु विनाशं सुमहाबलान्घ ॥ ३-१७५-१६ (२२६६१)
अर्जुन उवाच। ३-१७५-१७क्ष् (२३२२)
सुरासुरैरवध्यं तदहं ज्ञात्वा विशांपते ।
अब्रुवं मातलिं हृष्टो याह्येतत्पुरमञ्जसा ॥ ३-१७५-१७ (२२६६२)
त्रिदशेशद्विषो यावत्क्षयमस्त्रैर्नयाम्यहम् ।
न कथंचिद्धि मे पापा न वध्या ये सुरद्विषः ॥ ३-१७५-१८ (२२६६३)
उवाह मां ततः शीघ्रं हिरण्यपुरमन्तिकात् ।
रथेन तेन दिव्येन हरियुक्तेन मातलिः ॥ ३-१७५-१९ (२२६६४)
ते मामालक्ष्य दैतेया विचित्राभरणाम्बराः ।
समुत्पेतुर्महावेगा रथानास्थाय दंशिताः ॥ ३-१७५-२० (२२६६५)
ततो नालीकनाराचैर्भल्लैः शक्त्यृष्टितोमरैः ।
प्रत्यघ्नन्दानवेन्द्रा मां क्रुद्धास्तीव्रपराक्रमाः ॥ ३-१७५-२१ (२२६६६)
तदहं शस्त्रवर्षेण महता प्रत्यवारयम् ।
शस्त्रवर्षं महद्राजन्विद्याबलमुपाश्रितः ॥ ३-१७५-२२ (२२६६७)
व्यामोहयं च तान्सर्वान्रथमार्गैश्चरन्रणे ।
तेऽन्योन्यमभिसंमूढाः पातयन्ति स्म दानवाः ॥ ३-१७५-२३ (२२६६८)
तेषामेवं विमूढानामन्योन्यमभिधावताम् ।

शिरांसि विशिखैर्दीप्तैरच्छिन्दं शतसङ्घशः ॥ ३-१७५-२४ (२२६६९)
ते वध्यमाना दैतेयाः पुरमास्थाय तत्पुनः ।
खमुत्पेतुः सनगरा मायामास्थाय दानवीम् ॥ ३-१७५-२५ (२२६७०)
ततोऽहं शरवर्षेण महता कुरुनन्दन ।
मार्गमावृत्य दैत्यानां गतिं चैषामवारयम् ॥ ३-१७५-२६ (२२६७१)
तत्पुरं खचरं दिव्यं कामगं दिव्यवर्चसम् ।
दैतेयैर्वरदानेन धार्यते स्म यथासुखम् ॥ ३-१७५-२७ (२२६७२)
अन्तर्भूमौ निपतति पुनरूर्ध्वं प्रतिष्ठते ।
पुनस्तिर्यक् प्रयात्याशु पुनरप्सु निमज्जति ॥ ३-१७५-२८ (२२६७३)
अमरावतिसंकाशं तत्पुरं कामगं महत् ।
अहमस्त्रैर्बहुविधैः प्रत्यगृह्णां परंतप ॥ ३-१७५-२९ (२२६७४)
ततोऽहं शरजालेन दिव्यास्त्रनुदितेन च ।
व्यगृह्णां सह दैतेयैस्तत्पुरं पुरुषर्षभ ॥ ३-१७५-३० (२२६७५)
विक्षत चायसैर्बाणैर्मत्प्रयुक्तैरजिह्मगैः ।
महीमभ्यपतद्राजन्प्रभग्नं पुरमासुरम् ॥ ३-१७५-३१ (२२६७६)
ते वध्यमाना मद्बाणैर्वज्रवेगैरयस्मयैः ।
पर्यभ्रमन्त वै राजन्नसुराः कालचोदिताः ॥ ३-१७५-३२ (२२६७७)
ततो मातलिरारुह्यपुरस्तान्निपतन्निव ।
महीमवातरत्क्षिप्रं रथेनादित्यवर्चसा ॥ ३-१७५-३३ (२२६७८)
ततो रथसहस्राणि षष्टिस्तेषाममर्षिणाम् ।
युयुत्सूनां मया सार्धं पर्यवर्तन्त भारत ।
तान्यहं निशितैर्बाणैर्व्यधमं गार्ध्रराजितैः ॥ ३-१७५-३४ (२२६७९)
ते युद्धे संन्यवर्तन्त समुद्रस्य यथोर्मयः ।
नेमे शक्या मानुषेण युद्धेनेति प्रचिन्त्य तत् ॥ ३-१७५-३५ (२२६८०)
ततोऽहमानुपूर्व्येण दिव्यान्यस्त्राण्ययोजयम् ॥ ३-१७५-३६ (२२६८१)
ततस्तानि सहस्राणइ रथिनां चित्रयोधिनाम् ।
अस्त्राणि मम दिव्यानि प्रत्यघ्नञ्छनकैरिव ॥ ३-१७५-३७ (२२६८२)
रथमार्गान्विचित्रांस्ते विचरन्तो महाबलाः ।
प्रत्यदृश्यन्त संग्रामे शतशोऽथ सहस्रशः ॥ ३-१७५-३८ (२२६८३)
विचित्रमुकुटापीडा विचित्रकवचध्वजाः ।
विचित्राभरणाश्चैव मम प्रीतिकराऽभवन् ॥ ३-१७५-३९ (२२६८४)
अहं तुशरवर्षैस्तानस्त्रप्रचुदितै रणे ।
नाशक्नुवं पीडयितुं ते तु मां प्रत्यपीडयन् ॥ ३-१७५-४० (२२६८५)
तैः पीड्यमानो बहुभिः कृतास्त्रैः कुशलैर्युधि ।
व्यथितोस्मि महायुद्धे भयं चागान्महन्मम ॥ ३-१७५-४१ (२२६८६)
गततोहं परमायत्तो मातलिं परिपृष्टवान् ॥ ३-१७५-४२ (२२६८७)

किमेते मम बाणौघैर्दिव्यास्त्रप्रतिमन्त्रितैः ।
न वध्यन्ते महाघोरैस्तत्त्वमाख्याहि पृच्छतः ॥ ३-१७५-४३ (२२६८८)
स मामुवाच पर्याप्तस्त्वमेषां भरतर्षभ ।
तानुद्दिश्याथ मर्माणि प्रतिघातं तदाचर ॥ ३-१७५-४४ (२२६८९)
एतच्छ्रुत्वा तु राजेनद्रसंप्रहृष्टस्तमूचिवान् ।
निवर्तय रथं शीघ्रं पश्य चैतान्निपातितान् ॥ ३-१७५-४५ (२२६९०)
एवमुक्तो रथं तत्र मातलिः पर्यवर्तयत् ॥ ३-१७५-४६ (२२६९१)
ततो मत्वा रणे भग्नं दानवाः प्रतिहर्षिताः ।
विचुक्रुशुर्महाराज स्वरेण महता मुहुः ॥ ३-१७५-४७ (२२६९२)
अभग्नः कैश्चिदप्येष पाण्डवो रणमूर्धनि ।
अस्माभिः समरे भग्न इत्येवं संघशस्तदा ॥ ३-१७५-४८ (२२६९३)
ततोहं देवदेवाय रुद्रायाव्यक्तमूर्तये ।
प्रयतः प्रणतो भूत्वा नमस्कृत्य महात्मने'।
यत्तद्रौद्रमिति ख्यातं सर्वामित्रविनाशनम् ॥ ३-१७५-४९ (२२६९४)
यत्तद्रौद्रमिति ख्यातं सर्वामित्रविनाशनम् ।
ग्महत्पाशुपतं दिव्यं सर्वलोकनमस्कृतम्' ॥ ३-१७५-५० (२२६९५)
गततोऽपश्यं त्रिशिरसं पुरुषं नवलोचनम् ।
त्रिमुखं षड्भुजं दीप्तमर्कज्वलनमूर्धजम् ।
लेलिहानैर्महानागैः कृतचिह्नममित्रहन् ॥ ३-१७५-५१ (२२६९६)
विभीस्ततस्तदस्त्रं तु घोरं रौद्रं सनातनम् ।
दृष्ट्वा गाण्डीवसंयोगमानीय भरतर्षभ ॥ ३-१७५-५२ (२२६९७)
नमस्कृत्वा त्रिनेत्राय शर्वायामिततेजसे ।
मुक्तवान्दानवेन्द्राणां पराभावाय भारत ॥ ३-१७५-५३ (२२६९८)
मुक्तमात्रे ततस्तस्मिन्रूपाण्यासन्सहस्रशः ।
मृगाणामथ सिंहानां व्याग्राणां च विशांपते ॥ ३-१७५-५४ (२२६९९)
ऋक्षाणां महिषाणां च पन्नगानां तथा गवाम् ।
शरभाणां गजानां च वानराणां च सङ्घशः ।
ऋषभाणां वराहाणां मार्जाराणां तथैव च ॥ ३-१७५-५५ (२२७००)
सालावृकाणां प्रेतानां भुरुण्डानां च सर्वशः ।
गृध्राणां गरुडानां च चमराणां तथैव च ॥ ३-१७५-५६ (२२७०१)
देवानां च ऋषीणां रच गन्धर्वाणां च सर्वशः ।
पिशाचानां सयक्षाणां तथैव च सुरद्विषाम् ॥ ३-१७५-५७ (२२७०२)
गुह्यकानां च संग्रामे नैर्ऋतानां तथैव च ।
झषाणां गजवक्त्राणामुलूकानां तथैव च ॥ ३-१७५-५८ (२२७०३)
मीनवाजिसरूपाणां नानाशस्त्रासिपाणिनाम् ।
तथैव यातुधानानां गदामुद्गरधारिणाम् ॥ ३-१७५-५९ (२२७०४)

एतैस्चान्यैश्च बहुभिर्नानारूपधरैस्तदा ।
सर्वमासीज्जगद्व्याप्तं तस्मिन्नस्त्रे विसर्जिते ॥ ३-१७५-६० (२२७०५)
त्रिशिरोभिश्चतुर्दंष्ट्रैश्चतुरास्यैश्चतुर्भुजैः ।
अनेकरूपसंयुक्तैर्मांसमेदोवसास्तिभिः ॥ ३-१७५-६१ (२२७०६)
अभीक्ष्णं वध्यमानास्ते दानवा ये समागताः ।
अर्कज्वलनतेजोभिर्वज्राशनिसमप्रभैः ॥ ३-१७५-६२ (२२७०७)
अद्रिसारमयैश्चान्यैर्बाणैरपि निबर्हणैः ।
न्यहनं दानवान्सर्वान्मुहूर्तेनैव भारत ॥ ३-१७५-६३ (२२७०८)
गाण्डीवास्त्रप्रणुन्नांस्तान्गतासून्नभसश्च्युतान् ।
दृष्ट्वाऽहं प्राणमं भूयस्त्रिपुरघ्नाय वेधसे ॥ ३-१७५-६४ (२२७०९)
तथा रौद्रास्त्रनिष्पिष्टान्दिव्याभरणभूषितान् ।
निशाम्य परमं हर्षमगमद्देवसारथिः ॥ ३-१७५-६५ (२२७१०)
तदसह्यं कृतं कर्म देवैरपि दुरासदम् ।
दृष्ट्वा मां पूजयामास मातलिः शक्रसारथिः ॥ ३-१७५-६६ (२२७११)
उचाच वचनं चेदंप्रीयमाणः कृताञ्जलिः ।
ग्हतांस्तान्दानवान्दृष्ट्वा मया सङ्ख्ये सहस्रशः ॥ ३-१७५-६७ (२२७१२)
सुरासुरैरसह्यं हि कर्म यत्साधितं त्वया ।
न ह्येतत्संयुगे कर्तुमपि शक्तः सुरेश्वरः ।
ग्ध्रुवं धनञ्जय प्रीतस्त्वयि शक्रः पुरार्दन' ॥ ३-१७५-६८ (२२७१३)
सुरासुरैरवध्यं हि पुरमेतत्खगं महत् ।
त्वया विमथितं वीर स्ववीर्यतपसो बलात् ॥ ३-१७५-६९ (२२७१४)
अर्जुन उवाच। ३-१७५-६९क्ष् (२३२३)
विद्ध्वस्ते खपुरे तस्मिन्दानवेषु हतेषु च ।
विनदन्त्यः स्त्रियः सर्वा निष्पेतुर्नगराद्बहिः ॥ ३-१७५-७० (२२७१५)
प्रकीर्णकेश्यो व्यथिताः कुरर्य इव दुःखिताः ।
पेतुः पुत्रान्पितृन्भ्रातॄञ्शोचमाना महीतले ॥ ३-१७५-७१ (२२७१६)
रुदत्यो दीनकण्ठ्यस्तु निनदन्त्यो हतेश्वराः ।
उरांसि पाणिभिर्घ्नन्त्यो विस्रस्तस्रग्विभूषणाः ॥ ३-१७५-७२ (२२७१७)
तच्छोकयुक्तमश्रीकं दुःखदैन्यसमाहतम् ।
न बभौ दानवपुरं हतत्विड्कं हतेश्वरम् ॥ ३-१७५-७३ (२२७१८)
गन्धर्वनगराकारं हृतनागमिव ह्रदम् ।
शुष्कवृक्षमिवारण्यमदृश्यमभवत्पुरम् ॥ ३-१७५-७४ (२२७१९)
मां तु संहृष्टमनसं क्षिप्रं मातलिरानयत् ।
देवराजस्य भवनं कृतकर्माणमाहवात् ॥ ३-१७५-७५ (२२७२०)
हिरण्यपुरमुत्सृज्य निहत्य च महासुरान् ।
निवातकवचांश्चैव ततोऽहंशक्रमागमम् ॥ ३-१७५-७६ (२२७२१)

मम कर्म च देवेन्द्रं मातलिर्विस्तरेण तत् ।
सर्वं विश्रावयामास यथाभूतं महाद्युते ॥ ३-१७५-७७ (२२७२२)
हिरण्यपुरघातं च मायानां च निवारणम् ।
निवातकवचानां च वधं सङ्ख्ये महौजसाम् ।
ग्कालकेयवधं चैव अद्भुतं रोमहर्षणम्' ॥ ३-१७५-७८ (२२७२३)
तच्छ्रुत्वा भगवान्प्रीतः सहस्राक्षः पुरंदरः ।
मरुद्भिः सहितः श्रीमान्साधुसाध्वित्यथाब्रवीत् ।
ग्परिष्वज्य च मां प्रेम्णा मूर्ध्नि चाघ्राय सस्मितम्' ॥ ३-१७५-७९ (२२७२४)
ततो मां देवराजो वै समाश्वास्य पुनः पुनः ।
अब्रवीद्विबुधैः सार्धमिदं समधुरं वचः ॥ ३-१७५-८० (२२७२५)
अतिदेवासुरं कर्म कृतमेव त्वया रणे ।
गुर्वर्थश्च कृतः पार्थ महाशत्रून्घ्नता मम ॥ ३-१७५-८१ (२२७२६)
एवमेव सदा भाव्यं स्थिरेणाजौ धनंजय ।
असंमूढेन चास्त्राणां कर्तव्यं प्रतिपादनम् ॥ ३-१७५-८२ (२२७२७)
अविषह्यो रणे हि त्वं देवदानवराक्षसैः ।
सयक्षासुरगन्धर्वैः सपक्षिगणपन्नगैः ॥ ३-१७५-८३ (२२७२८)
वसुधां चापि कौन्तेय त्वद्बाहुबलनिर्जिताम् ।
पालयिष्यति धर्मात्मा कुन्तीपुत्रो युधिष्ठिरः ॥ ३-१७५-८४ (२२७२९)

इति श्रीमन्महाभारते अरण्यपर्वणि निवातकवचयुद्धपर्वणि
पञ्चसप्तत्यधिकशततमोऽध्यायः ॥१७५ ॥
Mahabharata - Vana Parva - Chapter Footnotes

३-१७५-१२ खपुरं खचरत्वात् ॥
३-१७५-१८ न वध्या इति न अपितु वध्या एव ॥
३-१७५-३३ आरुह्य गगनमुत्पत्य ।अवातरत् अवतीर्णः ॥
३-१७५-३४ पर्यवर्तन्त परिवार्य अवर्तन्त ।गार्ध्रराजितैः
गृध्रपत्रशोभितैः ॥
३-१७५-३५ युद्धे निमित्ते सति संन्यवर्तन्त ।इमे वयमिति
शेषः। रयुद्धेन जेतुमिति शेषः ॥
३-१७५-६१ मांसमेदोवसास्थिभिः संयुक्तैरिति शेषः ॥
३-१७५-६३ निबर्हणैर्नाशकरैः ॥
३-१७५-६५ निशाम्य दृष्ट्वा ॥

---

वन-अध्यय१७६
॥ श्रीः ॥

## ३.१७६. अध्यायः १७६

Mahabharata - Vana Parva - Chapter Topics
अर्जुनेन युधिष्ठिरंप्रति इन्द्रेण स्वस्मै सानुग्रहं कवचकिरीटादिदानकथनम् ॥ १ ॥
तथा युधिष्ठिरेण दिव्यास्त्रप्रदर्शनचोदनायां श्वःप्रदर्शनप्रतिज्ञानम् ॥ २ ॥

Mahabharata - Vana Parva - Chapter Text

३-१७६-० (२२७३०)
अर्जुन उवाच। ३-१७६-०क्ष् (२३२४)
ततो मामिविश्वस्तं संरूढशरविक्षतम् ।
देवराजोऽनुगृह्येदं काले वचनमब्रवीत् ॥ ३-१७६-१ (२२७३१)
दिव्यान्यस्त्राणि सर्वाणि त्वयि तिष्ठन्ति भारत ।
न त्वाऽभिभवितुं शक्तो मानुषो भुवि कश्चन ॥ ३-१७६-२ (२२७३२)
भीष्मो द्रोणः कृपः कर्णः शकुनिः सह राजभिः ।
संग्रामस्थस्य ते पुत्र कलां नार्हन्ति षोडशीम् ॥ ३-१७६-३ (२२७३३)
इदं च मे तनुत्राणं प्रायच्छन्मघवान्प्रभुः ।
अभेद्यं कवचं दिव्यं स्रजं चैव हिरण्मयीम् ॥ ३-१७६-४ (२२७३४)
देवदत्तं च मे शङ्खं देवः प्रादान्महारवम् ।
दिव्यं चेदं किरीटं मे स्वयमिन्द्रो युयोज ह ॥ ३-१७६-५ (२२७३५)
ततो दिव्यानि वस्त्राणि दिव्यान्याभरणानि च ।
प्रादाच्छक्रो ममैतानि रुचिराणि बृहन्ति च ॥ ३-१७६-६ (२२७३६)
एवं संपूजितस्तत्रसुखमस्म्युषितो नृप ।
इन्द्रस् भवने पुण्ये गन्धर्वशिशुभिः सह ॥ ३-१७६-७ (२२७३७)
ततो मामब्रवीच्छक्रः प्रीतिमानमरैः सह ।
समयोऽर्जुन गन्तुं ते भ्रातरो हि स्मरन्ति ते ॥ ३-१७६-८ (२२७३८)
एवमिन्द्रस्य भवने पञ्चवर्षाणि भारत ।
उषितानि मया राजन्स्मरता द्यूतजं कलिम् ॥ ३-१७६-९ (२२७३९)
ततो भवन्तमद्राक्षं भ्रातृभिः परिवारितम् ।
गन्धमादनमासाद्य पर्वतस्यास्य मूर्धनि ॥ ३-१७६-१० (२२७४०)
युधिष्ठिर उवाच। ३-१७६-११क्ष् (२३२५)
दिष्ट्या धनंजयास्त्राणि त्वया प्राप्तानि भारत ।
दिष्ट्या चाराधितो राजा देवानामीश्वरः प्रभुः ॥ ३-१७६-११ (२२७४१)
दिष्ट्या च भगवन्स्थाणुर्देव्या सह परंतपः ।

साक्षाद्दृष्टः स्वयुद्धेन तोषितश् त्वयाऽनघ ॥ ३-१७६-१२ (२२७४२)
दिष्ट्या च लोकपालैस्त्वं समेतो भरतर्षभ ।
दिष्ट्या वर्धामहे पार्थ दिष्ट्याऽसि पुनरागतः ॥ ३-१७६-१३ (२२७४३)
अद्य कृत्स्नामिमां देवीं विजितां पुरमालिनीम् ।
ग्पश्यामि भूमिं कौन्तेय त्वया मे प्रतिपादिताम्'।
मन्ये च धृतराष्ट्रस्य पुत्रानपि वशीकृतान् ॥ ३-१७६-१४ (२२७४४)
इच्छामि तानि चास्त्राणि द्रष्टुं दिव्यानि भारत ।
यैस्तथा वीर्यवन्तस्ते निवातकवचा हताः ॥ ३-१७६-१५ (२२७४५)
अर्जुन उवाच। ३-१७६-१६क्ष् (२३२६)
सः प्रभाते भवान्द्रष्टा दिव्यान्यस्त्राणि सर्वशः ।
निवातकवचा घोरा यैर्मया विनिपातिताः ॥ ३-१७६-१६ (२२७४६)
वैशंपायन उवाच। ३-१७६-१७क्ष् (२३२७)
एवमागमनं तत्र कथयित्वा धनंजयः ।
भ्रातृभिः सहितः सर्वै रजनीं तामुवास ह ॥ ३-१७६-१७ (२२७४७)

इति श्रीमन्महाभारते अरण्यपर्वणि निवातकवचयुद्धपर्वणि
षट्सप्तत्यधिकशततमोऽध्यायः ॥ १७६ ॥
Mahabharata - Vana Parva - Chapter Footnotes

३-१७६-१ अतिविश्वस्तं अति अत्यन्तं विश्वस्तं शत्रून् जेष्यतीति
विश्वासो यस्मिंस्तम् । संरूढा देहे निमग्नाः शरास्तैर्विक्षतम् ॥
३-१७६-२ त्वा त्वाम् ॥

---

वन-अध्यय१७७
॥ श्रीः ॥
३.१७७. अध्यायः १७७

Mahabharata - Vana Parva - Chapter Topics
अर्जुनेन युधिष्ठिराय दिव्यास्त्रप्रदर्शनन् ॥ १ ॥
अस्त्रतेजसा जगत्क्षोभे सति इन्द्रचोदनया
नरादेनार्जुनप्रत्यस्त्रप्रदर्शन प्रतिषेधनम् ॥ २ ॥

Mahabharata - Vana Parva - Chapter Text

३-१७७-० (२२७४८)
वैशंपायन उवाच। ३-१७७-०क्ष् (२३२८)
तस्यां रात्र्यां व्यतीतायां धर्मराजो युधिष्ठिरः ।

उत्थायावश्यकार्याणि कृतवान्भ्रातृभिः सह ॥ ३-१७७-१ (२२७४९)
ततः संचोदयामास सोऽर्जुनं मातृनन्दनम् ।
दर्शयास्त्राणि कौन्तेय यैर्जिता दानवास्त्वया ॥ ३-१७७-२ (२२७५०)
ततो धनंजयो राजन्देवैर्दत्तानि पाण्डवः ।
अस्त्राणि तानि दिव्यानि दर्शयामास भारत ॥ ३-१७७-३ (२२७५१)
यथान्यायं महातेजाः शौचं परममास्थितः ।
ग्नमस्कृत्य त्रिनेत्राय वासवाय च पाण्डवः' ॥ ३-१७७-४ (२२७५२)
गिरिकूबरपादाक्षं शुभवेणु त्रिवेणुमत् ।
पार्थिवं रथमास्थाय शोभमानो धनंजयः ॥ ३-१७७-५ (२२७५३)
दिव्येन संवृतस्तेन कवचेन सुवर्चसा ।
धनुरादाय गाण्डीवं देवदत्तं स वारिजम् ॥ ३-१७७-६ (२२७५४)
शोशुभ्यमानः कौन्तेय आनुपूर्व्यान्महाभुजः ।
अस्त्राणि तानि दिव्यानि दर्शनायोपचक्रमे ॥ ३-१७७-७ (२२७५५)
अथ प्रयोक्ष्यमाणेषु दिव्येष्वस्त्रेषु तेषु वै ।
समाक्रान्ता मही पद्भ्यां समकम्पत सद्रुमा ॥ ३-१७७-८ (२२७५६)
क्षुभिताः सरितश्चैव तथैव च महोदधिः ।
शैलाश्चापि व्यदीर्यन्त न ववौ च समीरणः ॥ ३-१७७-९ (२२७५७)
न बभासे सहस्रांशुर्न जज्वाल च पावकः ।
न वेदाः प्रतिभान्ति स्म द्विजातीनां कथंचन ॥ ३-१७७-१० (२२७५८)
अन्तर्भूमिगता ये च प्राणिनो जनमेजय ।
पीड्यमानाः समुत्थाय पाण्डवं पर्यवारयन् ॥ ३-१७७-११ (२२७५९)
वेपमानाः प्राञ्जलयस्ते सर्वे विकृताननाः ।
दह्यमानास्तदाऽस्त्रैस्ते याचन्ति स्म धनंजयम् ॥ ३-१७७-१२ (२२७६०)
ततो ब्रह्मर्षयश्चैव सिद्धा ये च महर्षयः ।
जङ्गमानि च भूतानि सर्वाण्येवावतस्थिरे ॥ ३-१७७-१३ (२२७६१)
देवर्षयश्च प्रवरास्तथैव च दिवौकसः ।
यक्षराक्षसगन्धर्वास्तथैव च पतत्रिणः ।
खेचराणि च भूतानि सर्वाण्येवावतस्थिरे ॥ ३-१७७-१४ (२२७६२)
ततः पितामहश्चैव लोकपालाश्च सर्वशः ।
भगवांश्च महादेवः सगणोऽभ्याययौ तदा ॥ ३-१७७-१५ (२२७६३)
ततो वायुर्महाराज दिव्यैर्माल्यैः समन्वितः ।
अभितः पाण्डवंचित्रैरवचक्रे समन्ततः ॥ ३-१७७-१६ (२२७६४)
जगुश्च गाथा विविधा गन्धर्वाः सुरचोदिताः ।
ननृतुः सङ्घशश्चैव राजन्नप्सरसां गणाः ॥ ३-१७७-१७ (२२७६५)
तस्मिंश्च तादृशे काले नारदश्चोदितः सुरैः ।
आगम्याह वचः पार्थं श्रवणीयमिदं नृप ॥ ३-१७७-१८ (२२७६६)

अर्जुनार्जुन मा युङ्क्ष दिव्यान्यस्त्राणि भारत ।
नैतानि निरधिष्ठाने प्रयुज्यन्ते कथंचन ॥ ३-१७७-१९ (२२७६७)
अधिष्ठाने न वाऽनार्तः प्रयुञ्जीत कदाचन ।
प्रयोगेषु महान्दोषो ह्यस्त्राणां कुरुनन्दन ॥ ३-१७७-२० (२२७६८)
एतानि रक्ष्यमाणानि धनंजय यथागमम् ।
बलवन्ति सुखार्हाणि भविष्यन्ति न संशयः ॥ ३-१७७-२१ (२२७६९)
अरक्ष्यमाणान्येतानि त्रैलोक्यस्यापि पाण्डव ।
भवन्ति स्म विनाशाय मैवं भूयः कृथाः क्वचित् ॥ ३-१७७-२२ (२२७७०)
अजातशत्रो त्वं चैव द्रक्ष्यसे तानि संयुगे ।
योज्यमानानि पार्थे नद्विषतामवमर्दने ॥ ३-१७७-२३ (२२७७१)
वैशंपायन उवाच। ३-१७७-२४क्ष् (२३२९)
निवार्याथ ततः पार्थं सर्वे देवा यथागतम् ।
जग्मुरन्ये च ये तत्र रसमाजग्मुर्नरर्षभ ॥ ३-१७७-२४ (२२७७२)
तेषु सर्वेषु कौरव्य प्रतियातेषु पाण्डवाः ।
तस्मिननेव वने हृष्टास्त ऊषुः सह कृष्णया ॥ ३-१७७-२५ (२२७७३)

इति श्रीमन्महाभारते अरण्यपर्वणि निवातकवचयुद्धपर्वणि
सप्तमप्तत्यधिकशततमोऽध्यायः ॥ १७७ ॥
Mahabharata - Vana Parva - Chapter Footnotes

३-१७७-२ मातृनन्दनं मातुः सुखकरम् ॥
३-१७७-५ गिरयएव कूवरादयस्तद्वन्तम् । कूबरो यस्मिन् युगं ध्रियते
तद्दारु। पादौ चक्रे। अक्षः तयोः संधानं दारु। शुभाः वेणवइव
वेणवो यस्मिन् तत् शुभवेमु त्रिवेणु अक्षकूबरयोः संधानार्थं
त्रिशिख दारु तद्वन्तम्। सुपां सुलुगिति द्वितीयाया आर्षो लुक्। रथपदे
वा क्लीबत्वं ध्येयम्। पृथिवीमेव पार्थिवं मानसं भूमिरूपं रथम् ॥
३-१७७-६ वारिजं शङ्खम् । देवदत्तं नामतः ॥
३-१७७-७ दर्शनाय दर्शयितुम् ॥
३-१७७-१९ निरधिष्ठाने लक्ष्याभावे सति ॥
३-१७७-२० अधिष्ठानेपि वा अनार्तः न प्रयुञ्जीत ॥

---

वन-अध्यय१७८
॥ श्रीः ॥
३.१७८. अध्यायः १७८

Mahabharata - Vana Parva - Chapter Topics
अर्जुनसमागमानन्तरं युधिष्ठिरेण गन्धमादनादवतरणाध्यवसायः ॥ १ ॥

लोमशेन पाण्डवान्प्रति जयाशीर्वचनपूर्वकं स्वर्गंप्रति गमनम् ॥ २ ॥

Mahabharata - Vana Parva - Chapter Text

३-१७८-० (२२७७४)
जनमेजय उवाच। ३-१७८-०क्ष् (२३३०)
तस्मिन्कृतास्त्रे रथिनां प्रवीरे ।
प्रत्यागते भवनाद्वृत्रहन्तुः ।
अतः परं किमकुर्वन्त पार्थाः
समेत्य शूरेण धनंजयेन ॥ ३-१७८-१ (२२७७५)
वैशंपायन उवाच। ३-१७८-२क्ष् (२३३१)
वनेषु तेष्वेव तु ते नरेन्द्राः
सहार्जुनेनेन्द्रसमेन वीराः ।
तस्मिंश्च शैलप्रवरे सुरम्ये
धनेश्वराक्रीडगता विजह्रुः ॥ ३-१७८-२ (२२७७६)
वेश्मानि तान्यप्रतिमानि पश्यन्
क्रीडाश्च नानाद्रुमसन्निबद्धाः ।
चचार धन्वी बहुधा नरेन्द्रः
सोऽस्त्रेषु यत्तः सततं किरीटी ॥ ३-१७८-३ (२२७७७)
अवाप्य वासं नरदेवपुत्राः
प्रसादजं वैश्रवणस्य राज्ञः ।
न प्राणिनां ते स्पृहयन्ति राज-
ञ्शिवश् कालः स बभूव तेषाम् ॥ ३-१७८-४ (२२७७८)
समेत्य पार्थेन यथैकरात्र-
मूषुः समास्तत्रतथा चतस्रः ।
पूर्वाश्च षट् ता दश पाण्डवानां
शिवा बभूवुर्वसतां वनेषु ॥ ३-१७८-५ (२२७७९)
ततोऽब्रवीद्वायुसुतस्तरस्वी
जिष्णुश्च राजानमुपोपविश्य ।
यमौ च वीरौ सुरराजकल्पा-
वेकान्तमास्थाय हितं प्रियं च ॥ ३-१७८-६ (२२७८०)
तव प्रतिज्ञां कुरुराज सत्यां
चिकीर्षमाणास्त्वदनुप्रियं च ।
ततो न गच्छाम वनान्यपास्य
सुयोधनं सानुचरं निहन्तुम् ॥ ३-१७८-७ (२२७८१)
एकादशं वर्षमिदं वसामः

सुयोधनेनात्तसुखाः सुखार्हाः ।
तं वञ्चयित्वाऽधमबुद्धिशील-
मज्ञातवासं सुखमाप्नुयाम ॥ ३-१७८-८ (२२७८२)
तवाज्ञया पार्थिव निर्विशङ्का
विहाय मानं विचरामो वनानि ।
समीपवासेन विलोभितास्ते
ज्ञास्यन्ति नास्मानपकृष्टदेशान् ॥ ३-१७८-९ (२२७८३)
संवत्सरं तत्र विहृत्य गूढं
नराधमं तं सुखमुद्धरेम ।
निर्यात्य वैरं सफलं सपुष्पं
तस्मै नरेन्द्राधमपूरुषाय ॥ ३-१७८-१० (२२७८४)
सुयोधनायानुचरैर्वृताय
ततो महीं प्राप्नुहि धर्मराज ।
स्वर्गोपमं देशमिमं चरद्भिः
शक्यो विहन्तुं नरदेव शोकः ॥ ३-१७८-११ (२२७८५)
कीर्तिस्तु ते भारत पुण्यगन्धा
नश्येद्धि लोकेषु चराचरेषु ।
तत्प्राप्य राज्यंकुरुपुङ्गवानां
शक्यं महत्प्राप्तुमथ क्रियाश्च ॥ ३-१७८-१२ (२२७८६)
इदं तु शक्यं सततं नरेन्द्र
प्राप्तुं त्वया यल्लभसे कुबेरात् ।
कुरुष्व बुद्धिं द्विषतां वधाय
कृतागसां भारत निग्रहे च ॥ ३-१७८-१३ (२२७८७)
तेजस्तवोग्रं न सहेत राजन्
समेत्य साक्षादपि वज्रपाणिः ।
न हि व्यथां जातु करिष्यतस्तौ
समेत्य देवैरपि धर्मराज ॥ ३-१७८-१४ (२२७८८)
तवार्थसिद्ध्यर्थमपि प्रवृत्तौ
सुपर्णकेतुश्च शिनेश्च नप्ता ।
यथैव कृष्णोऽप्रतिमो बलेन
तथैव राजन्स शिनिप्रवीरः ॥ ३-१७८-१५ (२२७८९)
तवार्थसिद्ध्यर्थमभिप्रपन्नो
यथैव कृष्णः सह यादवैस्तैः ।
तथैव चेमौ नरदेववर्य
यमौ च वीरौ कृतिनौ प्रयोगे ॥ ३-१७८-१६ (२२७९०)
त्वदर्थयोगप्रभवप्रधानाः

शमं करिष्याम परान्समेत्य ॥ ३-१७८-१७ (२२७९१)
वैशंपायन उवाच ३-१७८-१८क्ष् (२३३२)
ततस्तदाज्ञाय मतं महात्मा
तेषां च धर्मस्य सुतो वरिष्ठः ।
प्रदक्षिणं स्थानमुपेत्य राजा
पर्याक्रमद्वैश्रवणस्य राज्ञः ॥ ३-१७८-१८ (२२७९२)
आमन्त्र्य वेश्मानि नदीः सरांसि
सर्वाणि रक्षांसि च धर्मराजः ।
यथागतं मार्गमवेक्षमाणः
पुनर्गिरिं चैव निरीक्षमाणः ।
श्ततो महात्मा स विशुद्धबुद्धिः
संप्रार्थयामास नगेन्द्रवर्यम् ॥ ३-१७८-१९ (२२७९३)
समाप्तकर्मा सहितः सुहृद्भि-
र्जित्वा सपत्नान्प्रतिलभ्य राज्यम् ।
शैलेन्द्र भूयस्तपसे जितात्मा
द्रष्टा तवास्मीति मतिं चकार ॥ ३-१७८-२० (२२७९४)
वृतश्च सर्वैरनुजैर्द्विजैश्च
तेनैव मार्गेण पुनर्निवृत्तः ।
उवाह चैनान्गणशस्तथैव
घटोत्कचः पर्वतनिर्झरेषु ॥ ३-१७८-२१ (२२७९५)
तान्प्रस्थितान्प्रीतमना महर्षिः
पितेव पुत्राननुशिष्य सर्वान् ।
स लोमशो दिवमेवोर्जितश्री-
र्जगाम तेषां विजयं तदोक्त्वा ॥ ३-१७८-२२ (२२७९६)
तेनार्ष्टिषेणेन तथानुशिष्टा-
स्तीर्तानि रम्याणि तपोवनानि ।
महान्ति चान्यानि सरांसि पार्थाः
कसंपश्यमानाः प्रययुर्नराग्र्याः ॥ ३-१७८-२३ (२२७९७)

इति श्रीमन्महाभारते अरण्यपर्वणि आजगरपर्वणि
अष्टसप्तत्यधिकशततमोऽध्यायः ॥१७८ ॥

Mahabharata - Vana Parva - Chapter Footnotes

३-१७८-१ वृत्रहन्तुरिन्द्रस्य ॥
३-१७८-२ आक्रीडं उद्यानम् ॥
३-१७८-४ वासं स्थानम् ।प्राणिनां भूमिस्तानामैश्वर्यमिति शेषः ॥

३-१७८-५ पूर्वाश् षट् समाः ॥
३-१७८-९ अपकृष्टदेशान् दूरस्थान् न ज्ञास्यन्ति अपितु समीपस्थानेव ॥
३-१७८-१० निर्यात्य प्रत्यर्प्य । अपकारिणेऽपकारं
कृत्वेत्यर्थः। फलं राज्यप्राप्तिः। पुष्पं शत्रुवधः ॥
३-१७८-१३ निग्रहे च बन्धने वा
। भ्रातृत्वाद्वधेऽप्रवृत्तिश्चेदिति भावः ॥
३-१७८-१४ समेत्य युद्धं प्राप्य ॥
३-१७८-१५ सुपर्णकेतुः कृष्णः । शिनेर्नप्ता सात्यकिः। एतयोर्वीर्यं
हितकारित्वं चाह। तथैवेति। तथैव कृष्णोऽप्रतिमो बलेन तथैव
चाहं नरदेव वर्य। इति झ। पाठः। तत्र कृष्णोऽर्जुनः। अहं
भीमसेन इत्यर्थः ॥
३-१७८-१६ प्रयोगेऽस्त्रप्रयोगे कृतिनौ कुशलौ ॥
३-१७८-१७ त्वदर्थयोगप्रभवप्रधानाः तव अर्थयोगो धनलाभः
प्रभव ऐश्वर्योत्कर्षस्तद्द्वयं प्रधानं तेषां ते तथा ॥
३-१७८-२० इति प्रार्थयामासेति पूर्वेण संबन्धः । मतिं चकार। गमने
इति शेषः ॥

---

वन-अध्यय१७९
॥ श्रीः ॥
३.१७९. अध्यायः १७९

Mahabharata - Vana Parva - Chapter Topics
गन्धमादनादवतीर्णैः पाण्डवैः क्रमेण
कैलासवृषपर्वसुबाह्वादिनिवासगमनपूर्वकं पुनर्द्वैतदनमेत्य
सरस्वतीतीरे सुखविहरणम् ॥ १ ॥

Mahabharata - Vana Parva - Chapter Text

३-१७९-० (२२७९८)
वैशंपायन उवाच। ३-१७९-०क्ष् (२३३३)
नगोत्तमं प्रस्रवणैरुपेतं
दिशां गजैः किन्नरपक्षिभिश्च ।
सुखं निवासं जहतां हि तेषां
न प्रीतिरासीद्भरतर्षभाणाम् ॥ ३-१७९-१ (२२७९९)
ततस्तु तेषां पुनरेव हर्षः
कैलासमालोक्य महान्बभूव ।
कुबेरकान्तं भरतर्षभाणां

महीधरं वारिधरप्रकाशम् ॥ ३-१७९-२ (२२८००)
समुच्छ्रयान्पर्वतसंनिरोधान्
गोष्ठान्हरीणां गिरिगह्वराणि ।
बहुप्रकाराणि समीक्ष्यवीराः
स्थलानि निम्नानि च तत्र तत्र ॥ ३-१७९-३ (२२८०१)
तथैव चान्यानि महावनानि
मृगद्विजानेकपसेवितानि ।
आलोकयन्तोऽभिययुः प्रतीता-
स्ते धन्विनाः खङ्गधरा नराग्र्याः ॥ ३-१७९-४ (२२८०२)
वनानि रम्याणि नदीः सरांसि
गुहा गिरीणां गिरिगह्वराणि
एते निवासाः सततं बभूवु-
र्निशामुखं प्राप्य नरर्षभाणाम् ॥ ३-१७९-५ (२२८०३)
ते दुर्गवासं बहुधा निरुष्य
व्यतीत्य कैलासमचिन्त्यरूपम् ।
आसेदुरत्यर्थमनोरमं ते
तमाश्रमाग्र्यं वृषपर्वणस्तु ॥ ३-१७९-६ (२२८०४)
समेत्य राज्ञा वृषपर्वणा ते
प्रत्यर्चितास्तेन च वीतमोहाः ।
शशंसिरे विस्तरशः प्रवासं
शिवं यथावद्वृषपर्वणस्ते ॥ ३-१७९-७ (२२८०५)
सुखोषितास्तस्य त एकरात्रं
पुण्याश्रमे देवमहर्षिजुष्टे ।
अभ्याययुस्ते बदरीं विशालां
सुखेन वीराः पुनरेव वासम् ॥ ३-१७९-८ (२२८०६)
ऊषुस्ततस्तत्र महानुभावा
नारायणस्थानगताः समग्राः ।
कुबेरकान्तां नलिनीं विशोकाः
संपश्यमानाः सुरसिद्धजुष्टाम् ॥ ३-१७९-९ (२२८०७)
तां चाथ दृष्ट्वा नलिनीं विशोकाः
पाण्डोः सुताः सर्वनरप्रधानाः ।
ते रेमिरे नन्दनवासमेत्य
द्विजर्षयो वीतमला यथैव ॥ ३-१७९-१० (२२८०८)
ततः क्रमेणोपययुर्नृवीरा
यथागतेनैव पथा समग्राः ।
विहृत्य मासं सुखिनो बदर्यां

किरातराज्ञो विषयं सुबाहोः ॥ ३-१७९-११ (२२८०९)
चीनांस्तुषारान्दरदांश्च सर्वान्
देशान्कुलिन्दस्य च भूरिरम्यान् ।
अतीत्य दुर्गं हिमवत्प्रदेशं
पुरं सुबाहोर्ददृशुर्नृवीराः ॥ ३-१७९-१२ (२२८१०)
श्रुत्वा च तान्पार्थिव पुत्रपौत्रा-
न्प्राप्तान्सुबाहुर्विषये समग्रान् ।
प्रत्युद्ययौ प्रीतियुतः स राजा
तं चाभ्यनन्दन्वृषभाः कुरूणाम् ॥ ३-१७९-१३ (२२८११)
समेत्य राज्ञा तु सुबाहुना ते
सुतैर्विशोकप्रमुखैश्च सर्वे ।
सहेन्द्रसेनैः परिचारकैश्च
पौरोगवैर्ये च रमहानसस्थाः ॥ ३-१७९-१४ (२२८१२)
सुखोपितास्तत्रत एकरात्रं
सूतान्समादाय रथांश्च सर्वान् ।
घटोत्कचं सानुचरं विसृज्य
ततोऽभ्ययुर्यामुनमद्रिराजम् ॥ ३-१७९-१५ (२२८१३)
तस्मिन्गिरौ प्रस्रवणोपपन्न-
हिमोत्तरीयारुणपाण्डुसानौ ।
विशाखयूपं समुपेत्य चक्रु-
स्तदा निवासं पुरुषप्रवीराः ॥ ३-१७९-१६ (२२८१४)
वराहनानामृगपक्षिजुष्टं
महावनं चैत्ररथप्रकाशम् ।
शिवेन यात्वा मृगयाप्रधानाः
संवत्सरं तत्रवने विजह्रुः ॥ ३-१७९-१७ (२२८१५)
तत्राससादातिबलं भुजङ्गं
क्षुधार्दितं मृत्युमिवोग्ररूपम् ।
वृकोदरः पर्वतकन्दरायां
विषादमोहव्यथितान्तरात्मा ॥ ३-१७९-१८ (२२८१६)
द्वीपोऽभवद्यत्र वृकोदरस्य
युधिष्ठिरो धर्मभृतां वरिष्ठः ।
अमोक्षयद्यस्तमनन्ततेजा
ग्राहेण संवेष्टितसर्वगात्रम् ॥ ३-१७९-१९ (२२८१७)
ते द्वादशं वर्षमथोपयान्तं
वने विहर्तुं कुरवः प्रतीताः ।
तस्माद्वनाच्चैत्ररथप्रकाशा-

च्छ्रिया ज्वलन्तस्तपसा च युक्ताः ॥ ३-१७९-२० (२२८१८)
ततश्च यात्वा मरुधन्वपार्श्वं
सदा धनुर्वेदरतिप्रधानाः ।
सरस्वतीमेत्य निवासकामाः
सरस्ततो द्वैतवनं प्रतीयुः ॥ ३-१७९-२१ (२२८१९)
समीक्ष् तान्द्वैतवने निविष्टा-
न्निवासिनस्तत्रततोऽभिजग्मुः ।
तपोदमाचारसमाधियुक्ता-
स्तृणोदपात्रावरणाश्मकुट्टाः ॥ ३-१७९-२२ (२२८२०)
प्लक्षाक्षरौहीतकवेतसाश्च
तथा बदर्यः खदिराः शिरीषाः ।
बिल्वेङ्गुदाः पीलुशमीकरीराः
सरस्वतीतीररुहा बभूवुः ॥ ३-१७९-२३ (२२८२१)
तां यक्षगन्धर्वमहर्षिकान्ता-
मावासभूतामिव देवतानाम् ।
सरस्वतीं प्रीतियुताश्चरन्तः
सुखं विजह्रुर्नरदेवपुत्राः ॥ ३-१७९-२४ (२२८२२)

इति श्रीमन्महाभारते अरण्यपर्वणि आजगरपर्वणि
एकोनाशीत्यधिकशततमोऽध्यायः ॥१७९ ॥

Mahabharata - Vana Parva - Chapter Footnotes

३-१७९-१ नगोत्तमं गन्धमादनं जहतां त्यजताम् ॥
३-१७९-२ कुबेरस्य कान्तं प्रियम् ॥
३-१७९-३ समुच्छ्रयान् उच्चैस्त्वानि ।संनिरोधान्
संकीर्णत्वानि।गोष्ठान् स्थानानि।हरीणां सिंहानाम् ॥
३-१७९-४ अनेकपाः द्विपाः ॥
३-१७९-५ गुहा अल्पप्रमाणादरी ।गह्वरं महती दरी ॥
३-१७९-९ नलिनीं सरसीम् ॥
३-१७९-१० नन्दनमिन्द्रवनम् ॥
३-१७९-१४ पौरोगवैः पुरोगामिभिः पटगृहादिसामग्रीवाहः ॥
३-१७९-१५ यामुनं यमुनोद्गमम् ॥
३-१७९-१६ पुंसि यथा श्वेतमुत्तरीयं श्वेतारुणमुष्णीषं च तद्वत्
गिरौ प्रस्रवणानि अरुणपाण्डसानूनि च भान्तीत्युत्प्रेक्षा ।विशाखयूपं
स्थानविशेषः ॥
३-१७९-१७ शिवेन पार्थाः इति झ ।पाठः ॥

३-१७९-१९ द्वीपो द्वीपवदाश्रयः । ग्राहेण सर्वेण ॥
३-१७९-२२ तृणोदपात्रावरणाः आसनार्थं तृणेन पाद्यार्थं उदकपात्रेण च आवृण्वनति ते तथाभूताः । अश्मकुट्टाः वानप्रस्था दन्तोलूखलिका एव सन्तो जरया नष्टदन्ता अश्मकुट्टा भवन्ति ॥
३-१७९-२३ बभूवुः शोभावन्त इति शेषः ॥

---

वन-अध्यय१८०
॥ श्रीः ॥
३.१८०. अध्यायः १८०

Mahabharata - Vana Parva - Chapter Topics
वने मृगयार्थमटतो भीमस्य महताऽजगरेण ग्रहणम् ॥ १ ॥

Mahabharata - Vana Parva - Chapter Text

३-१८०-० (२२८२३)
जनमेजय उवाच। ३-१८०-०क्ष् (२३३४)
कथं नागायुतप्राणो भीमो भीमपराक्रमः ।
भयमाहारयत्तीव्रं तस्मादजगरान्मुने ॥ ३-१८०-१ (२२८२४)
पौलस्त्यं धनदं युद्धे य आह्वयति दर्पितः ।
नलिन्यां कदनं कृत्वा निहन्ता यक्षरक्षसाम् ॥ ३-१८०-२ (२२८२५)
तं संससि भयाविष्टमापन्नमरिसूदनम् ।
एतदिच्छाम्यहं श्रोतुं परं कौतूहलं हि मे ॥ ३-१८०-३ (२२८२६)
वैशंपायन उवाच। ३-१८०-४क्ष् (२३३५)
बह्वाश्चर्ये वने तेषां वसतामुग्रधन्विनाम् ।
प्राप्तानामाश्रमं राजन्राजर्षेर्वृषपर्वणः ॥ ३-१८०-४ (२२८२७)
यदृच्छया धनुष्पाणिर्बद्धखङ्गो वृकोदरः ।
ददर्श तद्वनं रम्यं देवगन्धर्वसेवितम् ॥ ३-१८०-५ (२२८२८)
स ददर्श शुभान्देशान्गिरेर्हिमवतस्तदा ।
देवर्षिसिद्धचरितानप्सरोगणसेवितान् ॥ ३-१८०-६ (२२८२९)
चकोरैरुपचक्रैशच् पक्षिभिर्जीवजीवकैः ।
कोकिलैर्भृङ्गराजैश्च तत्र तत्र निनादितान् ॥ ३-१८०-७ (२२८३०)
नित्यपुष्पफलैर्वृक्षैर्हिमसंस्पर्शकोमलैः ।
उपेतान्बहुलच्छायैर्मनोनयननन्दनैः ॥ ३-१८०-८ (२२८३१)
स संपश्यन्गिरिनदीर्वैडूर्यमणिसंनिभैः ।
सलिलैर्हिमसंकाशैर्हंसकारण्डवायुतैः ॥ ३-१८०-९ (२२८३२)
वनानि देवदारूणां मेघानामिव वागुराः ।

हरिचन्दनमिश्राणि तुङ्गकालीयकान्यपि ॥ ३-१८०-१० (२२८३३)
मृगयां परिधावन्स समेषु मरुधन्वसु ।
विध्यन्मृगाञ्शरैः शुद्धैश्चचार स महाबलः ॥ ३-१८०-११ (२२८३४)
भीमसेनस्तु विख्यातो महान्तं दंष्ट्रिणं बलात् ।
निघ्नन्नागशतप्राणो वने तस्मिन्महाबलः ॥ ३-१८०-१२ (२२८३५)
मृगाणां सवराहाणां महिषाणां महाभुजः ।
विनिघ्नंस्तत्रतत्रैव भीमो भीमपराक्रमः ॥ ३-१८०-१३ (२२८३६)
स मातङ्गशतप्राणो मनुष्यशतवारणः ।
सिंहशार्दूलविक्रान्तो वने तस्मिन्महाबलः ॥ ३-१८०-१४ (२२८३७)
वृक्षानुत्पाटयामास तरसा वै बभञ्ज च ।
पृथिव्याश्च प्रदेशान्वै नादयंस्तु वनानि च ॥ ३-१८०-१५ (२२८३८)
पर्वताग्राणि वै मृद्गन्नादयानश्च विज्वरः ।
प्रक्षिपन्पादपांश्चापि नादेनापूरयन्महीम् ॥ ३-१८०-१६ (२२८३९)
वेगेन न्यपतद्भीमो निर्भयश्च पुनः पुनः ।
आस्फोटयन्क्ष्वेडयंश्च तलतालांश्च वादयन् ।
चिरसंबद्धदर्पस्तु भीमसेनो वने तदा ॥ ३-१८०-१७ (२२८४०)
गजेन्द्राश्च महासत्वा मृगेन्द्राश्च महाबलाः ।
भीमसेनस्य नादेन व्यमुञ्चन्त गुहा भयात् ॥ ३-१८०-१८ (२२८४१)
क्वचित्प्रधावंस्तिष्ठंश्च क्वचिच्चोपविशंस्तथा ।
मृगप्रेप्सुर्महारौद्रे वने चरति निर्भयः ॥ ३-१८०-१९ (२२८४२)
स तत्रमनुजव्याघ्रो वने वनचरोपमः ।
पद्भ्यामभिसमापेदे भीमसेनो महाबलः ॥ ३-१८०-२० (२२८४३)
स प्रविष्टो महारण्ये नादान्नदति चाद्भुतान् ।
त्रासयन्सर्वभूतानि महासत्वपराक्रमः ॥ ३-१८०-२१ (२२८४४)
ततो भीमस्य शब्देन भीताः सर्पा गुहाशयाः ।
अतिक्रान्तास्तु वेगेन जगामानुसृतः शनैः ।
ततोऽमरवरप्रख्यो भीमसेनो महाबलः ॥ ३-१८०-२२ (२२८४५)
स ददर्श महाकायं भुजङ्गं रोमहर्षणम् ।
गिरिदुर्गे समापन्नं कायेनावृत्य कन्दरम् ॥ ३-१८०-२३ (२२८४६)
पर्वताभोगवर्ष्माणं भोगैश्चन्द्रार्कमण्डलैः ।
चित्राङ्गमङ्गजैश्चित्रैर्हरिद्रासदृशच्छविम् ॥ ३-१८०-२४ (२२८४७)
गुहाकारेण वक्रेण चतुर्दंष्ट्रेण राजता ।
दीप्ताक्षेणातिताम्रेण लिहानं सृक्विणी मुहुः ॥ ३-१८०-२५ (२२८४८)
त्रासनं सर्वभूतानां कालान्तकयमोपमम् ।
निःश्वासक्ष्वेडनादेन भर्त्सयन्तमिव स्थितम् ॥ ३-१८०-२६ (२२८४९)
स भीमं सहसाऽभ्येत्य पृदाकुः क्षुधितो भृशम् ।

जग्राहाजगरो ग्राहो भुजयोरुभयोर्बलात् ॥ ३-१८०-२७ (२२८५०)
तेन संस्पृष्टगात्रस्य भीमसेनस्य वै तदा ।
संज्ञा मुमोह सहसा वरदानेन तस्य हि ॥ ३-१८०-२८ (२२८५१)
दशनागसहस्राणि धारयन्ति हि यद्बलम् ।
इद्बलं भीमसेनस्य भुजयोरसमं परैः ॥ ३-१८०-२९ (२२८५२)
स तेजस्वी तथा तेन भुजगेन वशीकृतः ।
विस्फुरञ्शनकैर्भीमो न शशाक विचेष्टितुम् ॥ ३-१८०-३० (२२८५३)
नागायुतसमप्राणः सिंहस्कन्धो महाभुजः ।
गृहीतो व्यजहात्सत्वं वरदानविमोहितः ॥ ३-१८०-३१ (२२८५४)
स हि प्रयत्नमकरोत्तीव्रमात्मविमोक्षणे ।
न चैनमशकद्वीरः कथंचित्प्रतिबाधितुम् ॥ ३-१८०-३२ (२२८५५)

इति श्रीमन्महाभारते अरण्यपर्वणि आजगरपर्वणि
अशीत्यधिकशततमोऽध्यायः ॥ १८० ॥
Mahabharata - Vana Parva - Chapter Footnotes

३-१८०-१० तुङ्गं कालीयकं च काष्ठविशेषौ ॥
३-१८०-११ मरुधन्वसु गिरेर्निर्जलप्रदेशेषु । मरुर्ना गिरिधन्वनोरिति मेदिनी ॥
३-१८०-२४ पर्वतस्याभोगः विस्तीर्णता तत्परिमाणं वर्ष्म शरीरं यस्य तम् ॥
३-१८०-२७ पृदाकुः सर्पः ॥
३-१८०-३१ सत्वं बुद्धिम् ॥

---

वन-अध्यय१८१
॥ श्रीः ॥
३.१८१. अध्यायः १८१

Mahabharata - Vana Parva - Chapter Topics
अजगरेण भीमंप्रति स्वस्याजगरत्वप्रापककारणाभिधानम् ॥ १ ॥
दुर्निमित्तदर्शनाद्दुर्मनायमानेन युधिष्ठिरेण भीममार्गानुसरणएनाज्जगरगृहीतभीमस्य दर्शनम् ॥ २ ॥

Mahabharata - Vana Parva - Chapter Text

३-१८१-० (२२८५६)
वैशंपायन उवाच। ३-१८१-०क्ष् (२३३६)

स भीमसेनस्तेजस्वी तदा सर्पवशं गतः ।
चिन्तयामास सर्पस्य वीर्यमत्यद्भुतं महत् ॥ ३-१८१-१ (२२८५७)
उवाच च महासर्पं कामयाब्रूहि पन्नग ।
कस्त्वं भो भुजगश्रेष्ठ किं मया च करिष्यसि ॥ ३-१८१-२ (२२८५८)
पाण्डवो भीमसेनोऽहं धर्मराजादनन्तरः ।
नागायुतसमप्राणस्त्वया नीतः कथं वशम् ॥ ३-१८१-३ (२२८५९)
सिंहाः केसरिणो व्याघ्रा महिषा वारणास्तथा ।
समागताश्च बहुशो निहताश्च मया युधि ॥ ३-१८१-४ (२२८६०)
राक्षसाश्च पिशाचाश्च पन्नगाश्च महाबलाः ।
भुजवेगमशक्ता मे सोढुं पन्नगसत्तम ॥ ३-१८१-५ (२२८६१)
किंनु विद्याबलं किंनु वरदानमथो तव ।
उद्योगमपि कुर्वाणो वशगोस्मि कृतस्त्वया ॥ ३-१८१-६ (२२८६२)
अनुत्यो विक्रमो नॄणामिति मे धीयते मतिः ।
यथेदं मे त्वया नाग बलं प्रतिहतं महत् ॥ ३-१८१-७ (२२८६३)
इत्येवंवादिनं वीरं भीममक्लिष्टकारिणम् ।
भोगेन महता गृह्य समन्तात्पर्यवेष्टयत् ॥ ३-१८१-८ (२२८६४)
निगृह्यैनं महाबाहुं ततः स भुजगस्तदा ।
विमुच्यास्य भुजौ पीनाविदं वचनमब्रवीत् ॥ ३-१८१-९ (२२८६५)
दिष्टस्त्वं क्षुधितस्याद्य देवैर्भक्षो महाभुज ।
दिष्ट्या कालस्य महतः प्रियाः प्राणा हि देहिनां ॥ ३-१८१-१० (२२८६६)
यथा त्विदं मया प्राप्तं भुजङ्गत्वमरिंदम ।
तदवश्यं त्वया मत्तः श्रोतव्यं शृणु यन्मम ॥ ३-१८१-११ (२२८६७)
इमामवस्थां संप्राप्तो ह्यहं कोपान्महर्षिणा ।
शापस्यान्तं परिप्रेप्सुः सर्वस् कथयामि तत् ॥ ३-१८१-१२ (२२८६८)
नहुषो नाम राजर्षिर्व्यक्तं ते श्रोत्रमागतः ।
तवैव पूर्वः पूर्वेषामायोर्वंशधरः सुतः ॥ ३-१८१-१३ (२२८६९)
सोहं शापादगस्त्यस्य ब्राह्मणानवमत्य च ।
इमामवस्थामापन्नः पश्य दैवमिदं मम ॥ ३-१८१-१४ (२२८७०)
त्वां चेदवध्यमायान्तमतीव प्रियदर्शनम् ।
अहमद्योपयोक्ष्यामि विधानं पश्य यादृशम् ॥ ३-१८१-१५ (२२८७१)
न हि मे मुच्यते कश्चित्कथंचित्प्रग्रहं गतः ।
गचजोवा महिषो वाऽपि षष्ठे काले नरोत्तम ॥ ३-१८१-१६ (२२८७२)
नासि केवलसर्पेण तिर्यग्योनिषु वर्तता ।
गृहीतः कौरवश्रेष्ठ वरदानमिदं मम ॥ ३-१८१-१७ (२२८७३)
पतता हि विमानाग्रान्मया शक्रासनादद्रुतम् ।
कुरु शापान्तमित्युक्तो भगवान्मुनिसत्तमः ॥ ३-१८१-१८ (२२८७४)

ग्यस्त्वया वेष्टितो राजन्मोहमेति महाबलः'।
मोक्षस्ते भविता राजन्कस्माच्चित्कालपर्ययात् ॥ ३-१८१-१९ (२२८७५)
ततोस्मि पतितो भूमौ न च मामजहात्स्मृतिः ।
स्मार्तमस्ति पुराणं मे यथैवाधिगतं तथा ॥ ३-१८१-२० (२२८७६)
यस्तु ते व्याहृतान्प्रश्नान्प्रतिब्रूयाद्विभागवित् ।
स त्वां मोक्षयिता शापादिति मामब्रवीदृषिः ॥ ३-१८१-२१ (२२८७७)
गृहीतस्य त्वया राजन्प्राणिनोपि बलीयसः ।
सत्वभ्रंशोऽधिकस्यापि सर्वस्याशु भविष्यति ॥ ३-१८१-२२ (२२८७८)
इतिचाप्यहमश्रौषं वचस्तेषां दयावताम् ।
मयि संजातहार्दानामथ तेऽन्तर्हिता द्विजाः ॥ ३-१८१-२३ (२२८७९)
सोहं परमदुष्कर्मा वसामि निरयेऽशुचौ ।
सर्पयोनिमिमां प्राप्यकालाकाङ्क्षी महाद्युते ॥ ३-१८१-२४ (२२८८०)
तमुवाच महाबाहुर्भीमसेनो भुजङ्गमम् ।
न ते कुप्ये महासर्प नात्मने द्विजसत्तम ॥ ३-१८१-२५ (२२८८१)
यस्मादभावी भावी वा मनुष्यः सुखदुःखयोः ।
आगमे यदि वाऽपाये न तत्र ग्लपयेन्मनः ॥ ३-१८१-२६ (२२८८२)
दैवं पुरुषकारेण को वञ्चयितुमर्हति ।
दैवमेव परं मन्ये पौरुषं तु निरर्थकम् ॥ ३-१८१-२७ (२२८८३)
पश्य दैवोपघाताद्धि भुजवीर्यव्यपाश्रयम् ।
इमामवस्थां संप्राप्तमनिमित्तमिहाद्य माम् ॥ ३-१८१-२८ (२२८८४)
किंतु नाद्यानुशोचामि तथाऽऽत्मानं विनाशितम् ।
तथा तु विपिने न्यस्तान्भ्रातॄन्राज्यपरिच्युतान् ॥ ३-१८१-२९ (२२८८५)
हिमवांश्च सुदुर्गोऽयं यक्षराक्षससंकुलः ।
मां समुद्वीक्षमाणास्ते प्रयतिष्यन्ति विह्वलाः ॥ ३-१८१-३० (२२८८६)
विनष्टमथ मां श्रुत्वा भविष्यन्ति निरुद्यमाः ।
धर्मशीला मया ते हि बाध्यन्ते राज्यगृद्धिना ॥ ३-१८१-३१ (२२८८७)
अथवा नार्जुनो धीमान्विषादमुपयास्यति ।
सर्वास्त्रविदनाधृष्यो देवगन्धर्वराक्षसैः ॥ ३-१८१-३२ (२२८८८)
समर्थः स महाबाहुरेकाङ्गा सुमहाबलः ।
देवराजमपि स्थानात्प्रच्यावयितुमञ्जसा ॥ ३-१८१-३३ (२२८८९)
किं पुनर्धृतराष्ट्रस् पुत्रं दुर्द्यूतदेविनम् ।
विद्विष्टं सर्वलोकस्य दम्भमोहपरायणम् ॥ ३-१८१-३४ (२२८९०)
मातरं चैव शोचामि कृपणां पुत्रगृद्धिनीम् ।
याऽस्माकं नित्यमाशास्ते महत्त्वमधिकं परैः ॥ ३-१८१-३५ (२२८९१)
तस्याः कथं त्वनाथाया मद्विनाशाद्भुजङ्गम् ।
सफलास्ते भविष्यन्ति मयि सर्वे मनोरथाः ॥ ३-१८१-३६ (२२८९२)

नकुलः सहदेवश्च यमौ च गुरुवर्तिनौ ।
मद्बाहुबलसंगुप्तौ नित्यं पुरुषमानिनौ ॥ ३-१८१-३७ (२२८९३)
भविष्यतो निरुत्साहौ भ्रष्टवीर्यपराक्रमौ ।
मद्विनाशात्परिद्यूनाविति मे वर्तते मतिः ॥ ३-१८१-३८ (२२८९४)
एवंविधं बहु तदा विललाप वृकोदरः ।
भुजङ्गभोगसंरुद्धो नाशकच्च विचेष्टितुम् ॥ ३-१८१-३९ (२२८९५)
युधिष्ठिरस्तु कौन्तेयो बभूवास्वस्तचेतनः ।
अनिष्टदर्शनान्घोरानुत्पातान्परिचिन्तयन् ॥ ३-१८१-४० (२२८९६)
दारुणं ह्यशिवं नादं शिवा दक्षिणतः स्थिता ।
दीप्तायां दिशि वित्रस्ता रौति तस्याश्रमस्य ह ॥ ३-१८१-४१ (२२८९७)
एकपक्षाक्षिचरणा वर्तिका घोरदर्शना ।
रक्तं वमन्ती ददृशे प्रत्यादित्यमभासुरा ॥ ३-१८१-४२ (२२८९८)
प्रववौ चानिलो रूक्षश्चण्डः सर्करकर्षणः ।
अपसव्यानि सर्वाणि मृगपक्षिरुतानि च ॥ ३-१८१-४३ (२२८९९)
पृष्ठतो वायसः कृष्णो याहियाहीति वाशति ।
मुहुर्मुहुः स्फुरति च दक्षिणोऽस्य भुजस्तथा ॥ ३-१८१-४४ (२२९००)
हृदयं चरणश्चापि वामोऽस्य परितप्यति ।
सव्यस्याक्ष्णओ विकारश्चाप्यनिष्टः समपद्यत ॥ ३-१८१-४५ (२२९०१)
धर्मराजोपि मेधावी शङ्कमानो महद्भयम् ।
द्रौपदीं परिपप्रच्छ क्व भीम इति भारत ॥ ३-१८१-४६ (२२९०२)
शंस तस्मै पाञ्चाली चिरयातं वृकोदरम् ।
स प्रतस्थे महाबाहुर्धौम्येन सहितो नृपः ॥ ३-१८१-४७ (२२९०३)
द्रौपद्या रक्षणं कार्यमित्युवाच धनंजयम् ।
नकुलं सहदेवं च व्यादिदेश द्विजान्प्रति ॥ ३-१८१-४८ (२२९०४)
स तस्य पदमुन्नीय तस्मादेवाश्रमात्प्रभुः ।
मृगयामास कौन्तेयो भीमसेनं महावने ॥ ३-१८१-४९ (२२९०५)
स प्राचीं दिशमास्थाय महतो गजयूथपान् ।
ददर्श पृथिवीं चिह्नैर्भीमस्य परिचिह्निताम् ॥ ३-१८१-५० (२२९०६)
ततो मृगसहस्राणि मृगेनद्राणां शतानि च ।
पतितानि वने दृष्ट्वा मार्गं तस्याविशन्नृपः ॥ ३-१८१-५१ (२२९०७)
धावतस्तस्य वीरस् मृगार्थं वातरंहसः ।
ऊरुवातविनिर्भग्नान्द्रुमान्व्यावर्जितान्पथिः ॥ ३-१८१-५२ (२२९०८)
स गत्वा तैस्तदा चिह्नैर्ददर्श गिरिगह्वरे ।
श्रूक्षमारुतभूयिष्ठे निष्पत्रद्रुमसंकुले ॥ ३-१८१-५३ (२२९०९)
ईरिणे निर्जले देशे कण्टकिद्रुमसंकुले ।
अश्मस्थाणुक्षुपाकीर्णे सुदुर्गे विषमोत्कटे ।

गृहीतं भुजगेन्द्रेण निश्चेष्टमनुजं तदा ॥ ३-१८१-५४ (२२९१०)

इति श्रीमन्महाभारते अरण्यपर्वणि आजागरपर्वणि
एकाशीत्यधिकशततमोऽध्यायः ॥१८१ ॥
Mahabharata - Vana Parva - Chapter Footnotes

३-१८१-२ कामया इच्छातः ॥
३-१८१-८ भोगेन देहेन ॥
३-१८१-१५ उपयोक्ष्यामि भक्षितुगिच्छामि ।विधानं दैवम् ॥
३-१८१-१६ षष्ठे कालेऽष्टधाविभक्तस्याह्नो भागे ॥
३-१८१-२० स्मार्तं स्मृतिविषयम् ।पुराणं चिरकालीनमपि स्मरामीत्यर्थः ॥
३-१८१-२१ विभागविदात्मानात्मविवेकवित् ॥
३-१८१-२६ कदाचिदभावी सामर्थ्यहीनः कदाचित् भावी सामर्थ्यवान्
अवश्यं भवति ॥
३-१८१-३१ परुषोक्तिभिरिति सेषः ॥
३-१८१-४२ वर्तिका पक्षिविशेषः ॥
३-१८१-४४ दक्षिणो भुज स्फुरतीति भविष्यतोऽनिष्टप्रशमनस्य लिङ्गम् ॥
३-१८१-४५ विकारः स्फुरणम् ॥
३-१८१-५० यूथपान्पतितान्ददर्शेत्यन्वयः ॥
३-१८१-५४ ईरिणे ऊषरे ।क्षुपाः ह्रस्ववृक्षाः ॥

---

वन-अध्यय१८२
॥श्रीः ॥
३.१८२. अध्यायः १८२

Mahabharata - Vana Parva - Chapter Topics
युधिष्ठिराजगरयोः संवादः ॥१ ॥

Mahabharata - Vana Parva - Chapter Text

३-१८२-० (२२९११)
वैशंपायन उवाच।३-१८२-०क्ष् (२३३७)
युधिष्ठिरस्तमासाद्य सर्पभोगेन वेष्टितम् ।
दयितं भ्रातरं धीमानिदं वचनमब्रवीत् ॥३-१८२-१ (२२९१२)
कुन्तीमातः कथमिमामापदं त्वमवाप्तवान् ।
कश्चायं पर्वताभोगप्रतिमः पन्नगोत्तमः ॥३-१८२-२ (२२९१३)

स धर्मराजमालक्ष्य भ्राता भ्रतरमग्रजम् ।
कथयामास तत्सर्वं ग्रहणादिविचेष्टितम् ॥ ३-१८२-३ (२२९१४)
श्अयमार्य महासत्वो भक्षार्थं मां गृहीतवान् ।
नहुषो नाम राजर्षिः प्राणवानिव संस्थितः ॥ ३-१८२-४ (२२९१५)
युधिष्ठिर उवाच। ३-१८२-५क्ष् (२३३८)
मुच्यतामयमायुष्मन्भ्राता मेऽमितविक्रमः ।
वयमाहारमन्यं ते दास्यामः क्षुन्निवारणम् ॥ ३-१८२-५ (२२९१६)
सर्प उवाच। ३-१८२-६क्ष् (२३३९)
मुच्यतामयमायुष्मन्भ्राता मेऽमितविक्रमः ।
गम्यतां नेह स्थातव्यं श्वो भवानपि मे भवेत् ॥ ३-१८२-६ (२२९१७)
व्रतमेतन्महाबाहो विषयं मम यो व्रजेत् ।
स म भक्षो भवेत्तात त्वं चापि विषये मम ॥ ३-१८२-७ (२२९१८)
चिरेणाद्य मयाऽऽहारः प्राप्तोऽयमनुजस्तव ।
नाहमेनं विमोक्ष्यामि न चान्यमभिकाङ्क्षये ॥ ३-१८२-८ (२२९१९)
युधिष्ठिर उवाच। ३-१८२-९क्ष् (२३४०)
देवो वा यदि वा दैत्य उरगो वा भवान्यदि ।
सत्यं सर्प वचो ब्रूहि पृच्छति त्वां युधिष्ठिरः ॥ ३-१८२-९ (२२९२०)
किमर्थं च त्वया ग्रस्तो भीमसेनो भुजंगम ।
किमाहृत्यविदित्वा वा प्रीतिस्ते स्याद्भुजंगम ।
किमाहारं प्रयच्छामि कथं मुञ्चेद्भवानिमम् ॥ ३-१८२-१० (२२९२१)
सर्प उवाच। ३-१८२-११क्ष् (२३४१)
नहुषो नाम राजाऽहमासं पूर्वस्तवानघ ।
प्रथितः पञ्चमः सोमादायोः पुत्रो नराधिप ॥ ३-१८२-११ (२२९२२)
क्रतुभिस्तपसा चैवस्वाध्यायेन दमेन च ।
त्रैलोक्यैश्वर्यमव्यग्रं प्राप्तोऽहंविकर्मेण च ॥ ३-१८२-१२ (२२९२३)
तदैश्वर्यं समासाद्य दर्पो मामगमत्तदा ।
सहस्रं हि द्विजातीनामुवाह शिविकां मम ॥ ३-१८२-१३ (२२९२४)
ऐश्वर्यमदमत्तोऽहमवमत्य ततो द्विजान् ।
इमामगस्त्येन दशामानीत इतिमे स्मृतिः ॥ ३-१८२-१४ (२२९२५)
न तु मामजहात्प्रज्ञा यावदन्वेति पाण्डवः ।
तस्यैवानुग्रहाद्राजन्नगस्त्यस्य महात्मनः ॥ ३-१८२-१५ (२२९२६)
षष्ठे काले मयाऽऽहारः प्राप्तोऽयमनुजस्तव ।
नाहमेनं विमोक्ष्यामि न चान्यदपि कामये ॥ ३-१८२-१६ (२२९२७)
प्रश्नानुच्चारितानद्य वायहरिष्यसि चेन्मम ।
तथापश्चाद्विमोक्ष्यामि भ्रातरं ते वृकोदरम् ॥ ३-१८२-१७ (२२९२८)
युधिष्ठिर उवाच। ३-१८२-१८क्ष् (२३४२)

ब्रूहि सर्प यथाकामं प्रतिवक्ष्यामि ते वचः ।
अपि चच्छक्नुयां प्रीतिमाहर्तुं ते भुजङ्गम् ॥ ३-१८२-१८ (२२९२९)
वेद्यंच ब्राह्मणेनेह तद्भवान्वेत्ति केवलम् ।
सर्पराज ततः श्रुत्वा प्रतिवक्ष्यामि ते वचः ॥ ३-१८२-१९ (२२९३०)
सर्प उवाच। ३-१८२-२०क्ष् (२३४३)
ब्राह्मणः को भवेद्राजन्वेद्यं किंच युधिष्ठिर ।
ब्रवीह्यतिमतिं त्वां हि वाक्यैरनिमिनोमि ते ॥ ३-१८२-२० (२२९३१)
युधिष्ठिर उवाच। ३-१८२-२१क्ष् (२३४४)
सत्यं दानं क्षमा शीलमानृशंस्यं तपो घृणा ।
दृश्यन्ते यत्रनागेन्द्रस ब्राह्मण इति स्मृतः ॥ ३-१८२-२१ (२२९३२)
वेद्यं सर्प परं ब्रहम निर्दुःखमसुखं च यत् ।
यत्रगत्वा न शोचन्ति भवतः किं विवक्षितं ॥ ३-१८२-२२ (२२९३३)
सर्प उवाच। ३-१८२-२३क्ष् (२३४५)
चातुर्वर्ण्यं प्रमाणं च सत्यं च ब्रह्म चैव हि ।
आनृशंस्यमहिंसा च घृणा चैव युधिष्ठिर ॥ ३-१८२-२३ (२२९३४)
वेद्यं यच्चात्र निर्दुःखमसुखं च नराधिप ।
ताभ्यां हीनं पदं चान्यन्न तदस्तीति लक्षये ॥ ३-१८२-२४ (२२९३५)
युधिष्ठिर उवाच। ३-१८२-२५क्ष् (२३४६)
शूद्रे तु यद्भवेल्लक्ष्म द्विजे तच्च न विद्यते ।
न वै शूद्रो भवेच्छूद्रो ब्राह्मणो न च ब्राह्मणः ॥ ३-१८२-२५ (२२९३६)
यत्रैतल्लक्ष्यते सर्प वृत्तं स ब्राह्मणः स्मृतः ।
तत्रैतन्न वेत्सर्प तं शूद्रमिति निर्दिशेत् ॥ ३-१८२-२६ (२२९३७)
यत्पुनर्भवता प्रोक्तं न वेद्यं विद्यतेति च ।
ताभ्यां हीनमतोऽन्यत्र पदं नास्तीति चेदपि ॥ ३-१८२-२७ (२२९३८)
एवमेतन्मतं सर्प ताभ्यां हीनं तु विद्यते ।
यथा शीतोष्णयोर्मध्ये भवेन्नोष्णं न शीतता ॥ ३-१८२-२८ (२२९३९)
एवं वै सुखदुःखाभ्यां हीनमस्ति पदं क्वचित् ।
एषा मम मतिः सर्प यथा वा मन्यते भवान् ॥ ३-१८२-२९ (२२९४०)
सर्प उवाच। ३-१८२-३०क्ष् (२३४७)
यदि ते वृत्ततो राजन्ब्राह्मणः प्रसमीक्षितः ।
वृथा जातिस्तदायुष्मन्कृतिर्यावन्न विद्यते ॥ ३-१८२-३० (२२९४१)
युधिष्ठिर उवाच। ३-१८२-३१क्ष् (२३४८)
जातिरत्रमहासर्प मनुष्यत्वे महामते ।
संकरात्सर्ववर्णानां दुष्परीक्ष्येति मे मतिः ॥ ३-१८२-३१ (२२९४२)
सर्वे सर्वास्वपत्यानि जनयन्ति यदा नराः ।
वाङ्मैथुनमथो जन्म मरणं च समं नृणाम् ॥ ३-१८२-३२ (२२९४३)

इदमार्षं प्रमाणं च ये यजामह इत्यपि ।
तस्माच्छीलं प्रधानेष्टं विदुर्ये तत्त्वदर्शिनः ॥ ३-१८२-३३ (२२९४४)
प्राङ्नाभिवर्धनात्पुंसो जातकर्म विधीयते ।
ग्तथोपनयनं प्रोक्तं द्विजातीनां यथाक्रमम्'।
तत्रास्य माता सावित्री पिता त्वाचार्य उच्यते ॥ ३-१८२-३४ (२२९४५)
वृत्त्या शूद्रसमो ह्येष यावद्वेदेन जायते ।
तस्मिन्नेवं मतिद्वैधे मनुः स्वायंभुवोऽब्रवीत् ॥ ३-१८२-३५ (२२९४६)
कृतकृत्याः सर्ववर्णा यदि वृत्तं न पश्यति ।
संकरस्त्वत्र नागेन्द्र बलवान्प्रसमीक्षितः ॥ ३-१८२-३६ (२२९४७)
यत्रेदानीं महासर्प संस्कृतं वृत्तमिष्यते ।
तं ब्राह्मणमहं पूर्वमुक्तवान्भुजगोत्तम ॥ ३-१८२-३७ (२२९४८)
सर्प उवाच। ३-१८२-३८क्ष् (२३४९)
श्रुतं विदितवेद्यस्य तव वाक्यं युधिष्ठिर ।
भक्षयेयमहं कस्माद्भ्रातरं ते वृकोदरम् ॥ ३-१८२-३८ (२२९४९)

इति श्रीमन्महाभारते अरण्यपर्वणि आजगरपर्वणि
द्व्यशीत्यधिकशततमोऽध्यायः ॥ १८२ ॥
Mahabharata - Vana Parva - Chapter Footnotes

३-१८२-४ प्राणवान्वायुभक्षः सर्पइव नतु सर्पः ॥
३-१८२-२८ ताभ्यां हीनं न विद्यते इति झ । पाठः ॥
३-१८२-२९ हीनं नास्ति पदं क्वचित् इति झ । पाठः ॥
३-१८२-३३ प्रधानं तदिष्टं चेति कर्मधारयः ॥
३-१८२-३४ नाभिवर्धनान्नालच्छेदनात् ॥
३-१८२-३६ यदि वृत्तं न विद्यते इति झ । पाठः। यदि वृत्तं न
नश्ति इति ख। पाठः। यदि वृत्तं न दूष्यते इति ध। पाठः ॥

---

वन-अध्यय१८३
॥ श्रीः ॥
३.१८३. अध्यायः १८३

Mahabharata - Vana Parva - Chapter Topics
स्वप्रश्नस्योत्तरदानतुष्टेनाजगररूपिणा नहुषेण युधिष्ठिरंप्रति
स्वस्याजगरभावसंभवहेतुकथनपूर्वकं भीमं विमुच्य पुनः
स्वर्गं प्रति गमनम् ॥ १ ॥

Mahabharata - Vana Parva - Chapter Text

३-१८३-० (२२९५०)
युधिष्ठिर उवाच। ३-१८३-०क्ष् (२३५०)
भवानेतादृशो लोके वेदवेदाङ्गपारगः ।
ब्रूहि किं कुर्वतः कर्म भवेद्गतिरनुत्तमा ॥ १ ॥ ३-१८३-१ (२२९५१)
सर्प उवाच। ३-१८३-२क्ष् (२३५१)
पात्रे दत्त्वा प्रियाण्युक्त्वा सत्यमुक्त्वा च भारत ।
अहिंसानिरतः स्वर्गं गच्छेदिति मतिर्मम ॥ ३-१८३-२ (२२९५२)
युधिष्ठिर उवाच। ३-१८३-३क्ष् (२३५२)
दानाद्वा सर्प सत्याद्वा किमतो गुरु दृश्यते ।
अहिंसाप्रिययोश्चैव गुरुलाघवमुच्यताम् ॥ ३-१८३-३ (२२९५३)
सर्प उवाच। ३-१८३-४क्ष् (२३५३)
दानं च सत्यं तत्त्वं वा अहिंसा प्रियमेव च ।
एषां कार्यगरीयस्त्वाद्दृश्यते गुरुलाघवम् ॥ ३-१८३-४ (२२९५४)
क्वचिद्दानप्रयोगाद्धि सत्यमेव विशिष्यते ।
सत्यवाक्याच्च राजेनद्र क्वचिद्दानं विशिष्यते ॥ ३-१८३-५ (२२९५५)
एवमेव महेष्वास प्रियवाक्यान्महीपते ।
अहिंसा दृश्यते गुर्वी ततश्च प्रियमिष्यते ॥ ३-१८३-६ (२२९५६)
एवमेतद्भवेद्राजन्कार्यापेक्षमनन्तरम् ।
यदभिप्रेतमन्यत्ते ब्रूहि यावद्ब्रवीम्यहम् ॥ ३-१८३-७ (२२९५७)
युधिष्ठिर उवाच। ३-१८३-८क्ष् (२३५४)
कथं स्वर्गे गतिः सर्प कर्मणां च फलं ध्रुवम् ।
अशरीरस्य दृश्येत प्रब्रूहि विषयांश्च मे ॥ ३-१८३-८ (२२९५८)
सर्प उवाच। ३-१८३-९क्ष् (२३५५)
तिस्रो वै गतयो राजन्परिदृष्टाः स्वकर्मभिः ।
मानुषं स्वर्गवासश्च तिर्यग्योनिश्च तत्त्रिधा ॥ ३-१८३-९ (२२९५९)
तत्र वै मानुषाल्लोकाद्दानादिभिरनादिभिः ।
अहिंसार्थसमायुक्तैः कारणैः स्वर्गमश्नुते ॥ ३-१८३-१० (२२९६०)
विपरीतैश्च राजेन्द्र कारणैर्मानुषो भवेत् ।
तिर्यग्योनिस्तथा तात विशेषश्चात्र वक्ष्यते ॥ ३-१८३-११ (२२९६१)
कामक्रोधसमायुक्तो हिंसालोभसमनवितः ।
मनुष्यत्वात्परिभ्रष्टस्तिर्यग्योनौ प्रसूयते ॥ ३-१८३-१२ (२२९६२)
तिर्यग्योन्याः पृथग्भावो मनुष्यार्थे विधीयते ।
गवादिभ्यस्तथाऽश्वेभ्यो देवत्वमपि दृश्यते ॥ ३-१८३-१३ (२२९६३)
सोयमेता गतीस्तात जन्तुश्चरति कार्यवान् ।
निम्ने महति चात्मानमवस्थाप्य च वै नृप ॥ ३-१८३-१४ (२२९६४)

जातो जातश्च बलवान्भुङ्क्ते नाम्नाऽथ देहवान् ।
फलार्थस्तात निष्पृक्तः प्रजालक्षणभावनः ॥ ३-१८३-१५ (२२९६५)
युधिष्ठिर उवाच। ३-१८३-१६क्ष् (२३५६)
शब्दे स्पर्शे च रूपे च तथैव रसगन्धयोः ।
तस्याधिष्ठानमव्यग्रो ब्रूहि सर्प यथातथम् ॥ ३-१८३-१६ (२२९६६)
किं न गृह्णासि विषयान्युगपत्त्वं महामते ।
एतावदुच्यतां चोक्तं सर्वं पन्नगसत्तम ॥ ३-१८३-१७ (२२९६७)
सर्प उवाच। ३-१८३-१८क्ष् (२३५७)
तदात्मद्रव्यमायुष्मन्देहसंश्रयणान्वितम् ।
करणाधिष्ठितं भोगानुपभुङ्क्ते यथाविधि ॥ ३-१८३-१८ (२२९६८)
ज्ञानं चैवात्र बुद्धिश्च कमश्च भरतर्षभ ।
तस्य भोगाधिकरणे करणानि निबोध मे ॥ ३-१८३-१९ (२२९६९)
मनसा तात पर्येति क्रमशो विषयानिमान् ।
विषयायतनत्वेन भूतात्मा क्षेत्रविष्ठितः ॥ ३-१८३-२० (२२९७०)
तत्रचापि नरव्याघ्र मनो जन्तोर्विधीयते ।
तस्माद्युगपदत्रास्य ग्रहणं नोपपद्यते ॥ ३-१८३-२१ (२२९७१)
स आत्मा पुरुषव्याघ्र भ्रुवोरन्तरमाश्रितः ।
बुद्धिं द्रव्येषु सृजति विविधेषु परावराम् ॥ ३-१८३-२२ (२२९७२)
बुद्धेरुत्तरकालं च वेदना दृश्यते बुधैः ।
एष वै राजशार्दूल विधिः क्षेत्रज्ञभावनः ॥ ३-१८३-२३ (२२९७३)
युधिष्ठिर उवाच। ३-१८३-२४क्ष् (२३५८)
मनसश्चापि बुद्धेश्च ब्रूहि मे लक्षणं परम् ।
एतदध्यात्मविदुषां परं कार्यं विधीयते ॥ ३-१८३-२४ (२२९७४)
सर्प उवाच। ३-१८३-२५क्ष् (२३५९)
बुद्धिरात्मानुगाऽतीव उत्पातेन विधीयते ।
तदाश्रिता हि सा ज्ञेया बुद्धिस्तस्यैषिणी भवेत् ॥ ३-१८३-२५ (२२९७५)
बुद्धिरुत्पद्यते कार्यान्मनस्तूत्पन्नमेव हि ।
बुद्धेर्गुणविधानेन मनस्तद्गुणवद्भवेत् ॥ ३-१८३-२६ (२२९७६)
एतद्विशेषणं तात मनोबुद्ध्योर्मयेरितम् ।
त्वमप्यत्राभिसंबुद्धः कथं वा मनय्से स्वयम् ॥ ३-१८३-२७ (२२९७७)
युधिष्ठिर उवाच। ३-१८३-२८क्ष् (२३६०)
अहो बुद्धिमतांश्रेष्ठ शुभा बुद्धिरियं तव ।
विदितं वेदितव्यं ते कस्मान्नहुष पृच्छसि ॥ ३-१८३-२८ (२२९७८)
सर्वज्ञं त्वां कथं मोह आविशत्स्वर्गवासिनम् ।
एवमद्भुतकर्माणमिति मे संशयो महान् ॥ ३-१८३-२९ (२२९७९)
सर्प उवाच। ३-१८३-३०क्ष् (२३६१)

सुप्रज्ञमपि चेच्छूरमृद्धिर्मोहयते नरम् ।
वर्तमानः सुखे सर्वो नावैतीति मतिर्मम ॥ ३-१८३-३० (२२९८०)
सोहमैश्वर्यमोहेन मदाविष्टो युधिष्ठिर ।
पतितः प्रतिसंबुद्धस्त्वां तु संबोधयाम्यहम् ॥ ३-१८३-३१ (२२९८१)
कृतंकार्यं महाराज त्वया मम परंतप ।
क्षीणः शाप सुकृच्छ्रो मे त्वया संभाष्य साधुना ॥ ३-१८३-३२ (२२९८२)
अहं हि दिवि दिव्येन विमानन चरन्पुरा ।
अभिमानेन मत्तः सन्कंचिन्नान्यमचिन्तयम् ॥ ३-१८३-३३ (२२९८३)
ब्रह्मर्षिदेवगन्धर्वयक्षराक्षसपन्नगाः ।
वरं मम प्रयच्छन्ति सर्वे त्रैलोक्यवासिनः ॥ ३-१८३-३४ (२२९८४)
चक्षुषा यं प्रपश्यामि प्राणिनं पृथिवीपते ।
तस्य तेजो हराम्याशु तद्धि दृष्टेर्बलं मम ॥ ३-१८३-३५ (२२९८५)
ब्रह्मर्षीणां सरस्रं हि उवाह शिबिकां मम ।
कस मामपनयो राजन्भ्रंशयामास वै श्रियः ॥ ३-१८३-३६ (२२९८६)
तत्र ह्यगस्त्यः पादेन वहन्स्पृष्टो महामुनिः ।
अगस्त्येन ततोस्म्युक्तो ध्वंस सर्पेति वैरुषा ॥ ३-१८३-३७ (२२९८७)
ततस्तस्माद्विमानाग्र्यात्प्रच्युतश्च्युतलक्षणः ।
प्रपतन्बुबुधेऽऽत्मानं व्यालीभूतमधोमुखम् ॥ ३-१८३-३८ (२२९८८)
अयाचं तमहं विप्रं शापस्यान्तो भवेदिति ।
प्रमादात्संप्रमूढस्य भगवन्क्षन्तुमर्हसि ॥ ३-१८३-३९ (२२९८९)
ततः स मामुवाचेदं प्रपतन्तं कृपानवितः ।
युधिष्ठिरो धर्मराजः शापात्त्वां मोक्षयिष्यति ॥ ३-१८३-४० (२२९९०)
अभिमानस्य वै तस्य बलस्य च नराधिप ।
फले क्षीणे महाराज फलं पुण्यमवाप्स्यसि ॥ ३-१८३-४१ (२२९९१)
ततो मे विस्मयो जातस्तद्दृष्ट्वा तपसो बलम् ।
ब्रह्म च ब्राह्मणत्वं च येन त्वाऽहमचूचुदम् ॥ ३-१८३-४२ (२२९९२)
सत्यं दमस्तपो योगमहिंसा ज्ञाननित्यता ।
साधकानि सतां पुंसां न जातिर्नकुलं नृप ॥ ३-१८३-४३ (२२९९३)
अरिष्ट कएष ते भ्राता मुक्तो बीमो महाभुज ।
स्वस्ति तेऽस्तु महाराज गमिष्यामि दिवं पुनः ॥ ३-१८३-४४ (२२९९४)
ग्स चायं पुरुषव्याघ्र कालः पुण्य उपागतः ।
तदस्मात्कारणात्पार्थ कार्यं तन्मे महत्कृतम्' ॥ ३-१८३-४५ (२२९९५)
वैशंपायन उवाच। ३-१८३-४६क्ष् (२३६२)
ग्ततस्तस्मिन्मुहूर्ते तु विमानं कामगामि वै ।
अवपातेन महता तत्रावाप तदुत्तमम्' ॥ ३-१८३-४६ (२२९९६)
इत्युक्त्वाऽऽजगरं देहं मुक्त्वा स नहुषो नृपः ।

दिव्यं वपुः समास्थाय गतस्त्रिदिवमेव ह ॥ ३-१८३-४७ (२२९९७)
युधिष्ठिरोपि धर्मात्मा भ्रात्रा भीमेन संगतः ।
धौम्येन सहितः श्रीमानाश्रमं पुनरागमत् ॥ ३-१८३-४८ (२२९९८)
ततो द्विजेभ्यः सर्वेभ्यः समेतेभ्यो यथातथम् ।
कथयामास तत्सर्वं धर्मराजो युधिष्ठिरः ॥ ३-१८३-४९ (२२९९९)
तच्छ्रुत्वा ते द्विजाः सर्वे भ्रातरश्चास्य ते त्रयः ।
आसन्सुव्रीडिता राजन्द्रौपदी च यशस्विनी ॥ ३-१८३-५० (२३०००)
ते तु सर्वेद्विजश्रेष्ठाः पाण्डवानां हितेप्सया ।
मैवमित्यब्रुवन्भीमं गर्हयन्तोऽस् साहसम् ॥ ३-१८३-५१ (२३००१)
३-१८३-५२ (२३००२)
पाण्डवास्तु भयान्मुक्तं प्रेक्ष्य भीमं महाबलम् ।
हर्षमाहारयांचक्रुर्विजह्रुश्च मुदा युताः ॥
Mahabharata - Vana Parva - Chapter Footnotes

३-१८३-४ गुरुलाघवं गौरवं लाघवं चेत्यर्थः ॥

---

वन-अध्यय१८४
॥ श्रीः ॥
३.१८४. अध्यायः १८४

Mahabharata - Vana Parva - Chapter Topics
वर्षाशरद्वर्णनम् ॥ १ ॥
युधिष्ठिरादिभिर्द्वैतवनात्पुनः काम्यकवनप्रवेशः ॥ २ ॥

Mahabharata - Vana Parva - Chapter Text

३-१८४-० (२३००३)
वैशंपायन उवाच। ३-१८४-०क्ष् (२३६३)
निदाघान्तकरः कालः सर्वभूतसुखावहः ।
तत्रैव वसतां तेषां प्रावृट् समभिपद्यत ॥ ३-१८४-१ (२३००४)
छादयन्तो महाघोषाः स्वं दिशश्च बलाहकाः ।
प्रववर्षुर्दिवारात्रमसिताः सततं तदा ॥ ३-१८४-२ (२३००५)
तपात्ययनिकेताश्च शतशोऽथ सहस्रशः ।
अपेतार्कप्रभाजालाः सविद्युन्मण्डप्रभाः ॥ ३-१८४-३ (२३००६)
विरूढशष्पा धरणी मत्तदंशसरीसृपा ।
बभूव पयसा सिक्ता शान्तधूमरजोगणा ॥ ३-१८४-४ (२३००७)
न स्म प्रज्ञायते किंचिदम्भसा समवस्तृते ।

समं वा विषमं वाऽपि नद्यो वा स्तावराणि वा ॥ ३-१८४-५ (२३००८)
क्षुब्धतोया महावेगाः श्वसमाना इवाशुगाः ।
सिन्धवः शोभयांचक्रुः काननानि तपात्यये ॥ ३-१८४-६ (२३००९)
नदतां काननान्तेषु श्रूयन्ते विविधाः स्वनाः ।
वृष्टिभिस्ताड्यमानानां वराहमृगपक्षिणाम् ॥ ३-१८४-७ (२३०१०)
स्तोककाः शिखिनश्चैव पुंस्कोकिलगणैः सह ।
मत्ताः परिपतन्ति स्म दर्दुरश्चैव दर्पिताः ॥ ३-१८४-८ (२३०११)
तदा बहुविधाकारा प्रावृण्मेघानुनादिता ।
अभ्यतीता शिवा तेषां चरतां मरुधन्वसु ॥ ३-१८४-९ (२३०१२)
क्रौञ्चहंससमाकीर्णा शरत्प्रमुदीताऽभवत् ।
रूढकक्षवनप्रस्था प्रसन्नजलनिम्नगा ॥ ३-१८४-१० (२३०१३)
विमलाकाशनक्षत्रा शरत्तेषां शिवाऽभषत् ।
मृगद्विजसमाकीर्णा पाण्डवानां महात्मनाम् ॥ ३-१८४-११ (२३०१४)
दृश्यन्ते शान्तरजसः क्षपाजलदशीतलाः ।
ग्रहनक्षत्रसङ्घैश्च सोमेन च विराजिताः ॥ ३-१८४-१२ (२३०१५)
कुमुदैः पुण्डरीकैश्च शीतवारिधराः शिवाः ।
नदीः पुष्करिणीश्चैव ददृशुः समलंकृताः ॥ ३-१८४-१३ (२३०१६)
ते वै मुमुदिरे वीराः प्रसन्नसलिलां शिवाम् ।
पश्यन्तो दृढधन्वानः परिपूर्णां सरस्वतीम् ॥ ३-१८४-१५ (२३०१७)
तेषां पुण्यतमा रात्रिः पर्वसन्धौ स्म शारदी ।
तत्रैव वसतामासीत्कार्तिकी जनमेजय ॥ ३-१८४-१६ (२३०१८)
पुण्यकृद्भिर्महासत्वैस्तापसैः सह पाण्डवाः ।
तत्सर्वं भरतश्रेष्ठ समूहुर्योगमुत्तमम् ॥ ३-१८४-१७ (२३०१९)
तमिस्राभ्युदये तस्मिन्धौम्येन सह पाण्डवाः ।
सूतैः पौरोगवैः साकं काम्यकं प्रययुर्वनम् ॥ ३-१८४-१८ (२३०२०)

इति श्रीमन्महाभारते अरण्यपर्वणि मार्कण्डेयसमास्यापर्वणि
चतुरशीत्यधिकशततमोऽध्यायः ॥ १८४ ॥

Mahabharata - Vana Parva - Chapter Footnotes

३-१८४-२ असिताः कृष्णवर्णाः ॥
३-१८४-३ तपात्यये वर्षासु निकेता इव मण्डपीभूता इत्यर्थः ॥
३-१८४-५ समवस्तृते आच्छादिते । स्थावराणि भूतलादीनि ॥
३-१८४-६ आशुगाः तीव्रवेगाः । सिंधवः नद्यः ॥
३-१८४-८ स्तोककाश्चाकाः । दुर्दराः मण्डूकाः ॥
३-१८४-९ मरुधन्वसु गिरेः शुष्कस्थानेषु ॥

३-१८४-१० रूढकक्षाणि बहुतृणानि वनानि प्रस्थशब्देदितानि सानूनि च यस्यां सा तथा ॥
३-१८४-१६ कार्तिकी कृत्तिकायुक्ता पौर्णमासी ॥
३-१८४-१७ योगं युज्यते रथादाविति व्युत्पत्त्या वाहनादिक समूहुः आरोपितभारं कृतवन्तः ॥

---

वन-अध्यय१८५
॥ श्रीः ॥
३.१८५. अध्यायः १८५

Mahabharata - Vana Parva - Chapter Topics
पाण्डवानां पुनः कामय्कागमनं श्रुतवता कृष्णेन सत्यभामया सह तत्रागमनम् ॥ १ ॥
तथा नारदमार्कण्डेययोरागमनं च ॥ २ ॥
मार्कण्डेयेन श्रीकृष्णचोदनया पुराणकथाकथनारम्भः ॥ ३ ॥

Mahabharata - Vana Parva - Chapter Text

३-१८५-० (२३०२१)
वैशंपायन उवाच। ३-१८५-०क्ष् (२३६४)
काम्यकं प्राप्य कौरव्य युधिष्ठिरपुरोगमाः ।
कृतातिथ्या मुनिगणैर्निषेदुः सह कृष्णया ॥ ३-१८५-१ (२३०२२)
ततस्तान्परिविश्वस्तान्वसतः पाण्डुनन्दनान् ।
ब्राह्मणा बहवस्तत्र समन्तात्पर्यवारयन् ॥ ३-१८५-२ (२३०२३)
अथाब्रवीद्द्विजः कश्चिदर्जुनस्य प्रियः सखा ।
स एष्यति महाबाहुर्वशी शौरिरुदारधीः ॥ ३-१८५-३ (२३०२४)
विदिता हि हरेर्यूयमिहायाताः कुरूद्वहाः ।
सदा हि दर्शनाकाङ्क्षी श्रेयोन्वेषी च वो हरिः ॥ ३-१८५-४ (२३०२५)
बहुवत्सरजीवी च मार्कण्डेयो महातपाः ।
स्वाध्यायतपसा युक्तः क्षिप्रं युष्मान्समेष्यति ॥ ३-१८५-५ (२३०२६)
तथैव ब्रुवतस्तस्य प्रत्यदृश्यत केशवः ।
शैब्यसुग्रीवयुक्तेन रथेन रथिनारः ॥ ३-१८५-६ (२३०२७)
मघवानिव पौलोम्या सहितः सत्यभामया ।
उपायाद्देवकीपुत्रो दिदृक्षुः कुरुसत्तमान् ॥ ३-१८५-७ (२३०२८)
अवतीर्य रथात्कृष्णो धर्मराजं यथाविधि ।
ववन्दे मुदितो धीमान्भीमं च बलिनां वरम् ॥ ३-१८५-८ (२३०२९)
पूजयामास धौम्यं च यमाभ्यामभिवादितः ।

परिष्वज्यमहाभागां द्रौपदीं पर्यसान्त्वयत् ॥ ३-१८५-९ (२३०३०)
स दृष्ट्वा फल्गुनं वीरं चिरस्य प्रियमागतम् ।
पर्यष्वजत दाशार्हः पुनः पुनररिंदमः ॥ ३-१८५-१० (२३०३१)
तथैव सत्यभामाऽपि द्रौपदीं परिषस्वजे ।
पाण्डवानां प्रियं भार्यां कृष्णस्य महिषी प्रिया ॥ ३-१८५-११ (२३०३२)
ततस्ते पाण्डवाः सर्वेसभार्याः सपुरोहिताः ।
आनर्चुः पुण्डरीकाक्षं परिवव्रुश्च सर्वशः ॥ ३-१८५-१२ (२३०३३)
कृष्णस्तु पार्थेन समेत्य विद्वान्
धनंजयेनासुरमर्दनेन ।
बभौ यथा भूतपतिर्महात्मा
समेत्य साक्षाद्भगवान्गुहेन ॥ ३-१८५-१३ (२३०३४)
ततः समस्तानि किरीटमाली
वनेषु वृत्तानि गदाग्रजाय ।
उक्त्वा यथावत्पुनरन्वपृच्छ-
त्तस्मिन्सुभद्रां च तथाऽभिमन्युम् ॥ ३-१८५-१४ (२३०३५)
धौम्यं च कृष्णां च युधिष्ठिरं च
यमौ च भीमं च दशार्हसिंहः ।
उवाच दिष्ट्या भवतां शिवेन
प्राप्तः किरीटी मुदितः कृतास्त्रः ॥ ३-१८५-१५ (२३०३६)
स पूजयित्वा मधुहा यथाव-
त्पार्थांश्च कृष्णां च पुरोहितं च ।
उवाच राजानमभिप्रशंसन्
युधिष्ठिरं तेन सहोपविश्य ॥ ३-१८५-१६ (२३०३७)
धर्मः परः पाण्डव राज्यलाभा-
त्तस्यादिमाहुस्तप एव राजन् ।
सत्यार्जवाभ्यां चरता स्वधर्मं
जितस्त्वयाऽयं परश्च लोकः ॥ ३-१८५-१७ (२३०३८)
अधीतमग्रे चरता व्रतानि
सम्यग्धनुर्वेदमवाप्य कृत्स्नम् ।
क्षात्रेण धर्मेण वसूनि लब्ध्वा
सर्वे ह्यवाप्ताः क्रतवः पुराणाः ॥ ३-१८५-१८ (२३०३९)
न ग्राम्यधर्मेषु रतिस्तवास्ति
कामान्न किंचित्कुरुषे नरेन्द्र ।
न चार्तलोभात्प्रजहासि धर्मं
तस्मात्प्रभावादसि धर्मराजः ॥ ३-१८५-१९ (२३०४०)
दानं च सत्यं च तपश्च राजन्

क्षमा च शान्तिश्च दमो धृतिश्च ।
अवाप्य राष्ट्राणि वसूनि भोगा-
नेषा परा पार्थ सदा रतिस्ते ॥ ३-१८५-२० (२३०४१)
हृतं च देशं कुरुजाङ्गलानां
कृष्णां सभायामशां च पश्यन् ।
अपेतधर्मव्यवहारवृत्तं
सहेत तत्पाण्डव कस्त्वदन्यः ॥ ३-१८५-२१ (२३०४२)
असंशयं सर्वसमृद्धकामः
क्षिप्रं प्रजाः पालयितासि सम्यक् ।
अद्यैव तन्निग्रहणं कुरूणां
यदि प्रतिज्ञा भवतः समाप्ता ॥ ३-१८५-२२ (२३०४३)
प्रोवाच कृष्णामपि याज्ञसेनीं
दशार्हभर्ता सहितः सुहृद्भिः ।
कदिष्ट्या समग्राऽसि धनंजयेन
समागतेत्येवमुवाच कृष्णः ॥ ३-१८५-२३ (२३०४४)
कृष्णे धनुर्वेदरतिप्रदाना-
स्तवात्मजास्ते शिशवः शुशीलाः ।
सद्भिः सदैवाचरितं समाधिं
चरन्ति पुत्रास्तव याज्ञसेनि ॥ ३-१८५-२४ (२३०४५)
राज्ये नियुक्तैश्च निमन्त्र्यमाणाः
पित्रा च कृष्णे तव सोदरैश्च ।
न यज्ञसेनस्य न मातुलानां
गृहेषु बाला रतिमाप्नुवन्ति ॥ ३-१८५-२५ (२३०४६)
आनर्तमेवाभिमुखाः शिवेन
गत्वाधनुर्वेदरतिप्रधानाः ।
तवात्मजा वृष्णिपुरं प्रविश्य
न दैवतेभ्यः स्पृहयन्ति कृष्णे ॥ ३-१८५-२६ (२३०४७)
यथा त्वमेवार्हसि तेषु वृत्तं
प्रयोक्तुमार्या च यथैव कुन्ती ।
तेष्वप्रमादेन तथा करोति
तथैव भूयश्च तथा सुभद्रा ॥ ३-१८५-२७ (२३०४८)
यथाऽनिरुद्धस्य यथाऽभिमन्यो-
र्यथा सुनीथस्य यथैव भानोः ।
तथा विनेता च गतिश्च कृष्णे
तवात्मजानामपि रौक्मिणेयः ॥ ३-१८५-२८ (२३०४९)
गदासिचर्मग्रहणेषु शूरा-

नस्त्रेषु शिक्षासु रथाश्वयाने ।
सम्यग्विनेता विनयेदतन्द्री-
स्तांश्चाभिमन्युं च सदा कुमारान् ॥ ३-१८५-२९ (२३०५०)
स चापि सम्यक्प्रणिधाय शिक्षां
शस्त्राणइ चैषां विधिवत्प्रदाय ।
तवात्मजानां च तथाऽभिमन्योः
पराक्रमैस्तुष्यति रौक्मिणेयः ॥ ३-१८५-३० (२३०५१)
यथा विहारं प्रसमीक्षमाणाः
प्रयान्ति पुत्रास्तव याज्ञसेनि ।
एकैकमेषामनुयान्ति यत्र
रथाश्च यानानि च दन्तिनश्च ॥ ३-१८५-३१ (२३०५२)
अथाब्रवीद्धर्मराजं तु कृष्णो
दशार्हयोधाः कुकुरान्धकाश्च ।
एते निदेशं तव पालयन्त-
स्तिष्ठन्तु यत्रेच्छसि तत्र राजन् ॥ ३-१८५-३२ (२३०५३)
आवर्ततां कार्मुकवेगवाता
हलायुधप्रग्रणा मधूनाम् ।
सेना तवार्थेषु नरेन्द्र यत्ता
ससादिपत्त्यश्वरथा सनागा ॥ ३-१८५-३३ (२३०५४)
प्रस्थाप्यतां पाण्डव धार्तराष्ट्रः
सुयोधनः पापकृतां वरिष्ठः ।
स सानुबन्धः ससुहृद्गणश्च
भौमस्य सौबाधिपतेश्च मार्गम् ॥ ३-१८५-३४ (२३०५५)
कामं तथा तिष्ठ नरेन्द्र तस्मि-
न्यथा कृतस्ते समयः सभायाम् ।
दाशार्हयोधैस्तु हतारियोधं
प्रतीक्षतां नागपुरं प्रभग्नम् ॥ ३-१८५-३५ (२३०५६)
व्यपेतमन्युर्व्यपनीतपाप्मा
विहृत् यत्रेच्छसि तत्र कामम् ।
ततः समृद्धिप्रभवं विशोकः
प्रपत्स्यसे नागपुरं सराष्ट्रम् ॥ ३-१८५-३६ (२३०५७)
ततस्तदाज्ञाय मतं महात्मा
यथावदुक्तं पुरुषोत्तमेन ।
प्रशस्य विप्रेक्ष्य च धर्मराजः
कृताञ्जलिः केशवमित्युवाच ॥ ३-१८५-३७ (२३०५८)
असंशयं केशव पाण्डवानां

भवान्गतिस्त्वच्छरणा हि पार्थाः ।
कालोदये तच्च ततश्च भूयः
कर्ता भवान्कर्म न संशयोस्ति ॥ ३-१८५-३८ (२३०५९)
यथाप्रतिज्ञं विहृतश्च कालः
सर्वाः समा द्वादश निर्जनेषु ।
अज्ञातचर्यां विधिवत्समाप्य
भवद्गताः केशव पाण्डवेयाः ॥ ३-१८५-३९ (२३०६०)
एषैव बुद्धिर्जुषतां सदा त्वां
सत्ये स्थिताः केशव पाण्डवेयाः ।
सदानधर्माः सजलाः सदाराः
सबान्धवास्त्वच्छरणा हि पार्थाः ॥ ३-१८५-४० (२३०६१)
वैशंपायन उवाच। ३-१८५-४१क्ष् (२३६५)
तथा वदतिवार्ष्णेये धर्मराजे च भारत ।
अथ पश्चात्तपोवृद्धो बहुवर्षसहस्रधृक् ।
प्रत्यदृश्यत धर्मात्मा मार्कण्डेयो महातपाः ॥ ३-१८५-४१ (२३०६२)
अजरश्चामरश्चैव रूपौदार्यगुणान्वितः ।
व्यदृश्यत तथा युक्तो यथा स्यात्पञ्चविंशकः ॥ ३-१८५-४२ (२३०६३)
तमागतमृषिं वृद्धं बहुवर्षसहस्रिणम् ।
उपातिष्ठन्त ते सर्वेपाण्डवाः सहयादवाः ॥ ३-१८५-४३ (२३०६४)
तमर्चितं सुविश्वस्तमासीनमृषिसत्तमम् ।
ब्राह्मणानां मतेनाह पाण्डवानां च केशवः ॥ ३-१८५-४४ (२३०६५)
शुश्रूपवः पाण्डवास्ते ब्राह्मणाश्च समागताः ।
द्रौपदी सत्यभामा च तथाऽहंपरमं वचः ॥ ३-१८५-४५ (२३०६६)
पुरावृत्ताः कथाः पुण्याः सदाचारान्सनातनान् ।
राज्ञांस्त्रीणामृषीणां च मार्कणाडेय प्रचक्ष्व नः ॥ ३-१८५-४६ (२३०६७)
वैशंपायन उवाच। ३-१८५-४७क्ष् (२३६६)
तेषु तत्रोपविष्टेषु देवर्षिरपि नारदः ।
आजगाम विशुद्धात्मा पाण्डवानवलोककः ॥ ३-१८५-४७ (२३०६८)
तमप्यथ महात्मानं सर्वे ते पुरुषर्षभाः ।
पाद्यार्घ्याभ्यां यथान्यायमुपतस्थुर्मनीषिणः ॥ ३-१८५-४८ (२३०६९)
नारदस्त्वथ देवर्षिर्ज्ञात्वा तांस्तु कृतक्षणान् ।
मार्कण्डेयस्य वदतस्तां कथामन्वमोदत ॥ ३-१८५-४९ (२३०७०)
उवाच चैनं कालज्ञं स्मयन्निव सनारदः ।
ब्रह्मर्षे कथ्यतां यत्ते पाण्डवेषु विवक्षितम् ॥ ३-१८५-५० (२३०७१)
एवमुक्तः प्रत्युवाच मार्कण्डेयो महातपाः ।
क्षणं कुरुध्वंविपुलमाख्यातव्यं भविष्यति ॥ ३-१८५-५१ (२३०७२)

एवमुक्ताः क्षणं चक्रुः पाण्डवाः सह तैर्द्विजैः ।
मध्यंदिने यथादित्यं प्रेक्षन्तस्ते महामुनिम् ॥ ३-१८५-५२ (२३०७३)

इति श्रीमन्महाभारते अरण्यपर्वणि मार्कण्डेयसमास्यापर्वणि
पञ्चाशीत्यधिकशततमोऽध्यायः ॥ १८५ ॥
Mahabharata - Vana Parva - Chapter Footnotes

३-१८५-१३ भूतमतिः रुद्रः । गुहेन कार्तिकेयेन ॥
३-१८५-१९ कोपो न कश्चित्परुषो नरेन्द्रेति ध । पाठः ॥
३-१८५-२० एषा दानादिरूपा सदारतिः नित्यंप्रीतिविषयः ॥
३-१८५-२१ राज्ये निविष्टः कुरुजांगलानां कृष्णां सभायां
सभवानपश्यदिति ध । पाठः ॥
३-१८५-२६ आनर्तं द्वारकादेशम् ॥
३-१८५-२८ विनेता शिक्षयिता रौविमणेयः प्रद्युम्नः ॥
३-१८५-३३ मधूनां माथुराणाम् । हलायुधः प्रग्रहणो नियन्ता यस्या सा
सेना। यत्ता सन्नद्धा ॥
३-१८५-३४ भौमस्य नरकासुरस्य सौभाधिपतेः सात्वस्य । सात्वस्य
सौभाधिपतेश्च मार्गमिति ख। पाठः ॥
३-१८५-४२ पञ्चविंशकः वर्षैरिति शेषः ॥
३-१८५-४७ अवलोककः अवलोकनार्थी ॥

---

वन-अध्यय१८६
॥ श्रीः ॥
३.१८६. अध्यायः १८६

Mahabharata - Vana Parva - Chapter Topics
मार्कण्डेयेन युधिष्ठिरादीन्प्रति प्राणिनां
सुकृतदुष्कृतफलभोगादिप्रकारनिरूपणम् ॥ १ ॥

Mahabharata - Vana Parva - Chapter Text

३-१८६-० (२३०७४)
वैशंपायन उवाच। ३-१८६-०क्ष् (२३६७)
तं विवक्षन्तमालक्ष्यकुरुराजो महामुनिम् ।
कथासंजननार्थाय चोदयामास पाण्डवः ॥ ३-१८६-१ (२३०७५)
भवान्दैवतदैत्यानामृषीणां च महात्मनाम् ।
राजर्षीणां च सर्वेषां चरितज्ञः पुरातनः ॥ ३-१८६-२ (२३०७६)

सेव्यश्चोपासितव्यश् मतो नः काङ्क्षितश्चिरम् ।
अयं च देवकीपुत्रः प्राप्तोऽस्मानवलोककः ॥ ३-१८६-३ (२३०७७)
भ्रमत्येव हि मे बुद्धिर्दृष्ट्वाऽऽत्मानं सुखाच्च्युतम् ।
धार्तराष्ट्रांश्च रदुर्त्तानृद्ध्यतः प्रेक्ष्य सर्वशः ॥ ३-१८६-४ (२३०७८)
कर्मणः पुरुषः कर्ता शुभस्याप्यशुभस्य वा ।
स्वफलं तदुपाश्नापि कथं कर्ता स्विदीश्वरः ॥ ३-१८६-५ (२३०७९)
अथवा सुखदुःखेषु नृणां ब्रह्मविदांवर ।
इह वा कृतमन्वेति परदेहेऽथवा पुनः ॥ ३-१८६-६ (२३०८०)
देही च देहं संत्यज्य मृग्यमाणः शुभाशुभैः ।
कथं संयुज्यतेप्रेत्य इह वा द्विजसत्तम ॥ ३-१८६-७ (२३०८१)
ऐहलौकिकमेवैतदुताहो पारलौकिकम् ।
क्व वा कर्माणि तिष्ठन्ति जन्तोः प्रेतस्य भार्गव ॥ ३-१८६-८ (२३०८२)
मार्कण्डेय उवाच। ३-१८६-९क्ष् (२३६८)
त्वद्युक्तोऽयमनुप्रश्नो यथावद्वदतांवर ।
विदितं वेदितव्यं ते स्थित्यर्थं त्वं तु पृच्छसि ॥ ३-१८६-९ (२३०८३)
अत्र ते कथयिष्यामि तदिहैकमनाः शृणु ।
यथेहामुत्र च नर सुखदुःखमुपाश्नुते ॥ ३-१८६-१० (२३०८४)
निर्मलानि शरीराणि विशुद्धानि शरीरिणाम् ।
ससर्ज धर्मतन्त्राणि पूर्वोत्पन्नः प्रजापतिः ॥ ३-१८६-११ (२३०८५)
अमोघफलसंकल्पाः सुव्रताः सत्यवादिनः ।
ब्रह्मभूता नराः पुण्याः पुराणाः कुरुसत्तम ॥ ३-१८६-१२ (२३०८६)
सर्वे देवैः समायान्ति स्वच्छन्देन नभस्तलम् ।
ततश्च पुनरायान्ति सर्वे स्वच्छन्दचारिणः ॥ ३-१८६-१३ (२३०८७)
स्वच्चन्दमरणाश्चासन्नराः स्वच्छन्दजीविनः ।
अल्पबाधा निरातङ्काः सिद्धार्था निरुपद्रवाः ॥ ३-१८६-१४ (२३०८८)
द्रष्टारोदेवसङ्घानामृषीणां च महात्मनाम् ।
प्रत्यक्षाः सर्वधर्माणां दान्ता विगतमत्सराः ॥ ३-१८६-१५ (२३०८९)
आसन्वर्षसहस्राणि तथा पुत्रसहस्रिणः ।
ततः कालान्तरे तस्मिन्पृथिवीतलचारिणः ॥ ३-१८६-१६ (२३०९०)
कामक्रोधाभिभूतास्ते मायाव्याजोपजीविनः ।
लोभमोहाभिभूताश्च त्यक्ता देवैस्ततो नराः ॥ ३-१८६-१७ (२३०९१)
अशुभैः कर्मभिः पापास्तिर्यङ्गिरयगामिनः ।
संसारेषु विचित्रेषु पच्यमानाः पुनः पुनः ॥ ३-१८६-१८ (२३०९२)
मोघेष्टा मोघसंकल्पा मोघज्ञाना विचेतसः ।
ग्काङ्क्षणः सर्वकामानां नास्तिका भिन्नसेतवः' ॥ ३-१८६-१९ (२३०९३)
सर्वाभिशङ्किनश्चैव संवृत्ताः क्लेदायिनः ।

अशुभैः कर्मभिश्चापि प्रायशः परिचिह्निताः ॥ ३-१८६-२० (२३०९४)
दौष्कुल्या व्याधिबहुला दुरात्मानोऽभितापिनः ।
भवन्त्यल्पायुषः पापा रौद्रकर्मफलोदयाः ।
नाथन्तः सर्वकामानां नास्तिका भिन्नचेतसः ॥ ३-१८६-२१ (२३०९५)
जन्तोः प्रेतस्य कौन्तेय गतिः स्वैरिह कर्मभिः ।
प्राज्ञस्य हीनबुद्धेश्च कर्मकोशः क्व तिष्ठति ॥ ३-१८६-२२ (२३०९६)
क्वस्थस्तत्समुपाश्नाति सुकृतं यदि वेतरत् ।
इति ते दर्शनं यच्च तत्राप्यनुनयं शृणु ॥ ३-१८६-२३ (२३०९७)
अयमादिशरीरेण देवसृष्टेन मानवः ।
शुभानामशुभानां च कुरुते संचयं महत् ॥ ३-१८६-२४ (२३०९८)
आयुषोऽन्ते प्रहायेदं क्षीणप्रायं कलेबरम् ।
संभवत्येव युगपद्योनौ नास्त्यन्तराऽभवः ॥ ३-१८६-२५ (२३०९९)
तत्रास्य स्वकृतं कर्म च्छायेवानुगतं सदा ।
फलत्यथ सुखार्हो वा दुःखार्होवाऽथ जायते ॥ ३-१८६-२६ (२३१००)
कृतान्तविधिसंयुक्तः स जन्तुर्लक्षणैः शुभैः ।
अशुभैर्वा निरादानो लक्ष्यते ज्ञानदृष्टिभिः ॥ ३-१८६-२७ (२३१०१)
एषा तावदबुद्धीनां गतिरुक्ता युधिष्ठिर ।
अतः परं ज्ञानवतां निबोध गतिमुत्तमाम् ॥ ३-१८६-२८ (२३१०२)
मनुष्यास्तप्ततपसः सर्वागमपरायणाः ।
स्थिरव्रताः सत्यपरा गुरुशुश्रूषणे रताः ॥ ३-१८६-२९ (२३१०३)
सुशीलाः शुक्लजातीयाः क्षान्ता दान्ताः सुतेजसः ।
शुचियोन्यन्तरगताः प्रायशः शुभलक्षणाः ॥ ३-१८६-३० (२३१०४)
जितेनद्रियत्वाद्वशिनः सत्कृत्यान्मन्दरागिणः ।
अल्पाबाधपरित्रासा भवन्ति निरुपद्रवाः ॥ ३-१८६-३१ (२३१०५)
च्यवन्तं जायमानं च गर्भस्यं चैव सर्वशः ।
स्वमात्मानं परं चैव बुध्यन्ते ज्ञानचक्षुषः ॥ ३-१८६-३२ (२३१०६)
ऋषयस्ते महात्मानः प्रत्यक्षागमबुद्धयः ।
कर्मभूमिमिमां प्राप्य पुनर्यान्ति सुरालयम् ।
ग्कृत्वा शुभानि कर्माणि ज्ञानेन भरतर्षभ' ॥ ३-१८६-३३ (२३१०७)
किंचिद्दैवाद्धठात्किंचित्किंचिदेव स्वकर्मभिः ।
प्राप्नुवन्ति नरा राजन्मा तेऽस्त्वन्याविचारणा ॥ ३-१८६-३४ (२३१०८)
इमामत्रोपमां चापि निबोध वदतांवर ।
मनुष्यलोके यच्छ्रेयः परंमन्ये युधिष्ठिर ॥ ३-१८६-३५ (२३१०९)
इहैवैकस्य नामुत्र अमुत्रैकस्य नो इह ।
इह चामुत्र चैकस् नामुत्रैकस्य नो इह ॥ ३-१८६-३६ (२३११०)
धनानि येषां विपुलानि सन्ति

नित्यंरमन्ते सुविभूषिताङ्गाः ।
तेषामयं शत्रुवरघ्नलोको
नासौ सदा ग्राम्यसुखे रतानाम् ॥ ३-१८६-३७ (२३१११)
ये योगयुक्तास्तपसि प्रसक्ताः
स्वाध्यायशीला जरयन्ति देहान् ।
जितेन्द्रिया भूतहिते निविष्टा
स्तेषामसौ नायमरिघ्नलोकः ॥ ३-१८६-३८ (२३११२)
ये धर्ममेव प्रथमं चरन्ति
धर्मेण लब्ध्वा च धनानि काले ।
दारानवाप्य क्रतुभिर्यजन्ते
तेषामयं चैव परश्च लोकः ॥ ३-१८६-३९ (२३११३)
ये नैव विद्यां न तपो न दानं
न चापि मूढाः प्रजने यतन्ते ।
न चापिगच्छन्ति शुभान्यभाग्या-
स्तेषामयं चैव परश्च नास्ति ॥ ३-१८६-४० (२३११४)
सर्वे भवन्तस्त्वतिवीर्यसत्वा
दिव्यौजसः संहननोपपन्नाः ।
लोकादमुष्मादवनिं प्रपन्नाः
स्वधीतविद्याः सुरकार्यहेतोः ॥ ३-१८६-४१ (२३११५)
कृत्वैव कर्माणइ महान्ति शूरा-
स्तपोदमाचारविहारशीलाः ।
देवानृषीन्प्रेतगतांसच् सर्वा-
न्संतर्पयित्वा विधिना परेण ॥ ३-१८६-४२ (२३११६)
स्वर्गं परं पुण्यकृतां निवासं
क्रमेण संप्राप्स्यथ कर्मभिः स्वैः ।
माभूद्विशङ्का तव कौरवेन्द्र
दृष्ट्वाऽऽत्मनः क्लेशमिमं सुखार्थम् ॥ ३-१८६-४३ (२३११७)

इति श्रीमन्महाभारते अरण्यपर्वणि मार्कण्डेयसमास्यापर्वणि
षडशीत्यधिकशततमोऽध्यायः ॥१८६ ॥
Mahabharata - Vana Parva - Chapter Footnotes

३-१८६-४ ऋष्यतः समृद्धियुतान् ॥
३-१८६-९ स्थित्यर्थं लोकरक्षार्थम् ।वेदितव्यं ते
स्मृत्यर्थमनुपच्छसीति ध।पाठः ॥
३-१८६-१७ माया कूटकार्षापणादिः व्याजं दम्भः तदेवोपजीवन्ति नतु

धर्मम् ।ते मायाव्याजोपजीविनः ॥
३-१८६-२१ नाथन्तः प्रार्थयमानाः ।कामानां कामान् ॥
३-१८६-२३ अनुनयं सिद्धान्तम् ॥
३-१८६-२४ शरीरेण मानवो विधिसंयुतः इति क ।पाठः ॥
३-१८६-३८ जितेन्द्रियाः प्राणिवधे निवृत्ताः इति झ ।पाठः ॥
३-१८६-४० प्रजने पुत्रोत्पादने ॥

---

वन-अध्यय१८७
॥ श्रीः ॥
३.१८७. अध्यायः १८७

Mahabharata - Vana Parva - Chapter Topics
मार्कण्डेयेन युधिष्ठिरादीन्प्रति मृतस्य
पुनरुज्जीवनशक्त्यादिरूपब्राह्मणमाहात्म्यकथनम् ॥१ ॥

Mahabharata - Vana Parva - Chapter Text

३-१८७-० (२३११८)
वैशंपायन उवाच। ३-१८७-०क्ष् (२३६९)
मार्कण्डेयं महात्मानमूचुः पाण्डुसुतास्तदा ।
माहात्म्यं द्विजमुख्यानां श्रोतुमिच्छाम कथ्यताम् ॥ ३-१८७-१ (२३११९)
एवमुक्तः स भगवान्मार्कण्डेयो महातपाः ।
उवाच सुमहातेजाः सर्वशास्त्रविशारदः ॥ ३-१८७-२ (२३१२०)
हेहयानां कुलकरो राजा परपुरंजयः ।
कुमारो रूपसंपननो मृगयां व्यचरद्बली ॥ ३-१८७-३ (२३१२१)
चरमाणस्तु सोऽरण्ये तृणवीरुत्समावृते ।
कृष्णाजिनोत्तरासङ्गं ददर्श मुनिमन्तिके ॥ ३-१८७-४ (२३१२२)
स तेन हिंसितोऽरण्ये मन्यमानेन वै मृगम् ।
व्यथितः कर्म तत्कृत्वा शोकोपहतचेतनः ॥ ३-१८७-५ (२३१२३)
जगाम हेहयानां वै सकाशं प्रथितात्मनाम् ।
राज्ञां राजीवनेत्रोसौ कुमारः पृथिवीपते ॥ ३-१८७-६ (२३१२४)
तेषां च तद्यथावृत्तं कथयामास वै तदा ।
ग्स कुमारो महीपालो हेहयानां महीभृताम्' ॥ ३-१८७-७ (२३१२५)
तं चापि हिंसितं तात मुनिं मूलफलाशिनम् ।
श्रुत्वा दृष्ट्वा च ते तत्र बभूवुर्दीनमानसाः ॥ ३-१८७-८ (२३१२६)
कस्यायमिति ते सर्वे मार्गमाणास्ततस्ततः ।
जग्मुश्चारिष्टनाम्नोऽथ तार्क्ष्यस्याश्रममञ्जसा ॥ ३-१८७-९ (२३१२७)

तेऽभिवाद्य महात्मानं तं मुनिं संशितव्रतम् ।
तस्थुः सर्वे स तु मुनिस्तेषां पूजामथाहरत् ॥ ३-१८७-१० (२३१२८)
ते तमूचुर्महात्मानं न वयं सत्क्रियां मुने ।
त्वत्तोऽर्हाः कर्मदोषेण ब्राह्मणो हिंसितो हि नः ॥ ३-१८७-११ (२३१२९)
तानब्रवीत्स विप्रर्षिः कथं वो ब्राह्मणो हतः ।
क्व चासौ ब्रूत सहिताः पश्यध्वं मे रतपोबलम् ॥ ३-१८७-१२ (२३१३०)
ते तु तत्सर्वमखिलमाख्यायास्मै यथातथम् ।
नापश्यंस्तमृषिं तत्र गतासुं ते समागताः ॥ ३-१८७-१३ (२३१३१)
अन्वेषमाणाः सव्रीडाः सुप्तवद्गतमानसाः ।
तानब्रवीत्तत्रमुनिस्तार्क्ष्यः परपुरंजयः ॥ ३-१८७-१४ (२३१३२)
स्यादयं ब्राह्मणः सोऽथयुष्माभिर्यो विनाशितः ।
पुत्रो ह्ययं मम नृपास्तपोबलसमन्वितः ॥ ३-१८७-१५ (२३१३३)
ते च दृष्ट्वैव तमृषिं विस्मयं परमं गताः ।
महदाश्चर्यमिति वै ते ब्रुवाणा महीपते ॥ ३-१८७-१६ (२३१३४)
मृतो ह्ययमितो दृष्टः कथं जीवितमाप्तवान् ।
किमेतत्तपसो वीर्यं येनायं जीवितः पुनः ।
श्रोतुमिच्छामहे विप्र यदि श्रोतव्यमित्युत ॥ ३-१८७-१७ (२३१३५)
स तानुवाच नास्माकं मृत्युः प्रभवते नृपाः ।
कारणं च प्रवक्ष्यामि हेतुयोगं समासतः ।
ग्मृत्युः प्रभवते येन नास्माकं नृपसत्तमाः ॥ ३-१८७-१८ (२३१३६)
शुद्धाचारादनलसाः साध्योपासनतत्पराः ।
शुद्धान्नाः शुद्धसदना ब्रह्मचर्यव्रतान्विताः' ॥ ३-१८७-१९ (२३१३७)
सत्यमेवाभिजानीमो नानृते कुर्महे मनः ।
स्वधर्ममनुतिष्ठामस्तस्मान्मृत्युभयं न नः ॥ ३-१८७-२० (२३१३८)
यद्ब्राह्मणानां कुशलं तदेषां कथयामहे ।
तेषां हि चरितं ब्रूमस्तस्मान्मृत्युभयं न नः ॥ ३-१८७-२१ (२३१३९)
अतिथीनन्नपानेन भृत्यानत्यशनेन च ।
संभोज्य शेषमश्नीमस्तस्मान्मृत्युभयं न नः ॥ ३-१८७-२२ (२३१४०)
क्षान्ता दान्ताः क्षमाशीलास्तीर्थदानपरायणाः ।
पुण्यदेशनिवासाच्च तस्मान्मृत्युभयं न नः ।
तेजस्विदेशवासाच्च तस्मान्मृत्युभयं न नः ॥ ३-१८७-२३ (२३१४१)
एतद्वै लेशमात्रं वः समाख्यातं विमत्सराः ।
गच्छध्वं सहिताः सर्वे न पापाद्भयमस्ति वः ॥ ३-१८७-२४ (२३१४२)
एवमस्त्विति ते सर्वे प्रतिपूज्य महामुनिम् ।
स्वदेशमगमन्हृष्टा राजानो भरतर्षभ ॥ ३-१८७-२५ (२३१४३)

इति श्रीमन्महाभारते अरण्यपर्वणि मार्कण्डेयसमास्यापर्वणि सप्ताशीत्यधिकशततमोऽध्यायः ॥ १८७ ॥

Mahabharata - Vana Parva - Chapter Footnotes

३-१८७-४ उत्तरासङ्गः प्रावरणम् ॥
३-१८७-९ जग्मुश्चारिष्टनेम्नोऽथ इति झ ।पाठः। अरिष्टनेमिशब्द इकारान्तोऽप्यत्र मन्नन्तोऽपि ज्ञेयः ॥
३-१८७-१४ तार्क्ष्यः तृक्षस्य कश्यपस्यापत्यम् ॥
३-१८७-२१ नैषां दुश्चरितं ब्रूमः इति झ ।पाठः ॥
३-१८७-२३ तेजस्विनां योगसिद्धानां देशः सामीप्यम् ।तत्सङ्गादित्यर्थः ॥

---

वन-अध्यय१८८
॥ श्रीः ॥
३.१८८. अध्यायः १८८

Mahabharata - Vana Parva - Chapter Topics

मार्कण्डेयेन युधिष्ठिरादीन्प्रति वैन्यस्याश्वमेधे अत्रिगौतमविवादानुवादेन ब्राह्मणमाहात्म्यकथनम् ॥ १ ॥

Mahabharata - Vana Parva - Chapter Text

३-१८८-० (२३१४४)
मार्कण्डेय उवाच। ३-१८८-०क्ष् (२३७०)
भूय एव तु माहात्म्यं ब्राह्मणआनां निबोध मे ।
वैन्यो नामेह राजर्षिरश्वमेधाय दीक्षितः ॥ ३-१८८-१ (२३१४५)
तमत्रिर्गन्तुमारेबे वित्तार्थमिति नः श्रुतम् ।
भूयोऽर्थं नानुरुध्यत्स धर्मव्यक्तिनिदर्शनात् ॥ ३-१८८-२ (२३१४६)
स विचिन्त्य महातेजा वनमेवान्वरोचयत् ।
धर्मपत्नीं समाहूय पुत्रांश्चेदमुवाच ह ॥ ३-१८८-३ (२३१४७)
प्राप्स्यामः फलमत्यन्तं बहुलं निरुपद्रवम् ।
अरण्यगमनं क्षिप्रं रोचतां वो गुणाधिकम् ॥ ३-१८८-४ (२३१४८)
तं भार्या प्रत्युवाचाथ धनमेवानुरुन्धती ।
वैन्यं गत्वा महात्मानमर्थयस्व धनं बहुः ॥ ३-१८८-५ (२३१४९)
स ते दास्यति राजर्षिर्यजमानोऽर्थिने धनम् ।
तत आदाय विप्रर्षे प्रतिगृह्य धनं बहु ॥ ३-१८८-६ (२३१५०)
भृत्यान्सुतान्संविभज्य ततो व्रज यथेप्सितम् ।

एष वै परमो धर्मो धर्मविद्भिरुदाहृतः ॥ ३-१८८-७ (२३१५१)
अत्रिरुवाच। ३-१८८-८क्ष् (२३७१)
कथितो मे महाभागे गौतमेन महात्मना ।
वैन्यो धर्मार्थसंयुक्तः सत्यव्रतसमन्वितः ॥ ३-१८८-८ (२३१५२)
किंत्वस्ति तत्र द्वेष्टारो निवसन्ति हि मे द्विजाः ।
यथा मे गौतमः प्राह ततो न व्यवसाम्यहम् ॥ ३-१८८-९ (२३१५३)
तत्र स्म वाचं कल्याणीं धर्मकामार्थसंहिताम् ।
मयोक्तामन्यथा ब्रूयुस्ततस्ते वै निरर्थिकाम् ॥ ३-१८८-१० (२३१५४)
गमिष्यामि महाप्राज्ञे रोचते मे वचस्तव ।
गाश्च मे दास्यते वैन्यः प्रभूतं चार्थसंचयम् ॥ ३-१८८-११ (२३१५५)
एवमुक्त्वा जगामाशु वैन्ययज्ञं महातपाः ।
गत्वा च यज्ञायतनमत्रिस्तुष्टाव तं नृपम् ॥ ३-१८८-१२ (२३१५६)
वाक्यैर्मङ्गलसंयुक्तैः पूजयानोऽब्रवीद्वचः ।
राजन्धन्यस्त्वमीशश्च भुवि त्वं प्रथमो नृपः ।
स्तुवन्ति त्वां मुनिगणास्त्वदन्यो नास्ति धर्मवित् ॥ ३-१८८-१३ (२३१५७)
तमब्रवीदृषिः क्रुद्धो वचनं वै महातपाः ॥ ३-१८८-१४ (२३१५८)
गौतम उवाच। ३-१८८-१५क्ष् (२३७२)
मैवमत्रे पुनर्ब्रूया न ते प्रज्ञा समाहिता ।
अत्र नः प्रथमो धाता महेन्द्रो वै प्रजापतिः ॥ ३-१८८-१५ (२३१५९)
वैशंपायन उवाच। ३-१८८-१६क्ष् (२३७३)
अथात्रिरपि राजेन्द्र गौतमं प्रत्यभाषत ।
अयमेव विधाता च तथैवेन्द्रः प्रजापतिः ।
त्वमेव मुह्यसे मोहान्न प्रज्ञानं तवास्ति ह ॥ ३-१८८-१६ (२३१६०)
गौतम उवाच। ३-१८८-१७क्ष् (२३७४)
जानामि नाहं मुह्यामि त्वंविवक्षुर्विमुह्यसे ।
स्तौषि त्वं दर्शनप्रेप्सू राजानं जनसंसदि ॥ ३-१८८-१७ (२३१६१)
न वेत्थ परमं धर्मं न चास्त्यत्र प्रयोजनम् ।
बालस्त्वमसि मूढश्च वृद्धः केनापि हेतुना ॥ ३-१८८-१८ (२३१६२)
वैशंपायन उवाच। ३-१८८-१९क्ष् (२३७५)
विवदन्तौ तथा तौ तु मुनीनां द्रशने स्थितौ ।
ये तस्य यज्ञे संवृत्तास्तेऽपृच्छन्त कथं त्विमौ ॥ ३-१८८-१९ (२३१६३)
प्रवेशः केन दत्तोऽयमनयोर्वैन्यसंसदि ।
उच्चैः समभिभाषन्तौ केन कार्येण धिष्ठितौ ॥ ३-१८८-२० (२३१६४)
ततः परमधर्मात्मा काश्यपः सर्वधर्मवित् ।
विवादिनावनुप्राप्तौ तावुभौ प्रत्यवेदयत् ॥ ३-१८८-२१ (२३१६५)
अथाब्रवीत्सदस्यांस्तु गौतमो मुनिसत्तमान् ।

आवयोर्व्याहृतं प्रश्नं शृणुत द्विजसत्तमाः ।
वैन्यं विधातेत्याहात्रिरत्र नौ संशयो महान् ॥ ३-१८८-२२ (२३१६६)
ग्ततस्तु गौतमेनोक्तं वाक्यं वैन्यस्य संसदि'।
श्रुत्वैव तु महात्मानो मुनयोऽभ्यद्रवन्दुतम् ॥ ३-१८८-२३ (२३१६७)
सनत्कुमारं धर्मज्ञं संशयच्छेदनाय वै ।
ग्पप्रच्छुः प्रणताः सर्वे ब्रह्माणमिव सोमपाः' ॥ ३-१८८-२४ (२३१६८)
स च तेषां वचः श्रुत्वा यथातत्त्वं महातपाः ।
प्रत्युवाचाथ तानेवं धर्मार्थसहितं वचः ॥ ३-१८८-२५ (२३१६९)
ब्रह्म क्षत्रेण सहितं क्षत्रं च ब्रह्मणा सह ।
संयुक्तौ दहतः शत्रून्वनानीवाग्निमारुतौ ॥ ३-१८८-२६ (२३१७०)
राजा वै प्रथितो धर्मः प्रजानां पतिरेव च ।
स एव शक्रः शुक्रश्च स धाता च बृहस्पतिः ॥ ३-१८८-२७ (२३१७१)
प्रजापतिर्विराट् सम्राट् क्षत्रियो भूपतिर्नृपः ।
य एभिः स्तूयते शब्दैः कस्तं नार्चितुमर्हति ॥ ३-१८८-२८ (२३१७२)
पुरायोनिर्युधाजिच्च अभीष्टानचितो भवः ।
स्वर्णेता सहजिद्बभ्रुरिति राजाऽभिधीयते ।
सत्ययोनिः पुराविच्च सत्यधर्मप्रवर्तकः ॥ ३-१८८-२९ (२३१७३)
अधर्मादृषयो भीता बलं क्षत्रे समादधन् ।
ग्तस्माद्धि ब्रह्मणा क्षत्रं क्षत्रेण ब्रह्म चाव्ययम्' ॥ ३-१८८-३० (२३१७४)
आदित्यो दिवि देवेषु तमो नुदति तेजसा ।
तथैव नृपतिर्भूमावधर्मान्नुदते भृशम् ॥ ३-१८८-३१ (२३१७५)
ततो राज्ञः प्रधानत्वं शास्त्रप्रामाण्यदर्शनात् ।
उत्तरः सिद्ध्यते पक्षो येन राजेति भाषितम् ॥ ३-१८८-३२ (२३१७६)
मार्कण्डे उवाच। ३-१८८-३३क्ष् (२३७६)
ततः स राजा संहृष्टः सिद्धे पक्षे महामनाः ।
तमत्रिमब्रवीत्प्रीतः पूर्वं येनाभिसंस्तुतः ॥ ३-१८८-३३ (२३१७७)
यस्मात्पूर्वं मनुष्येषु ज्यायांसं मामिहाब्रवीः ।
सर्वदेवैश्च विप्रर्षे संमितं श्रेष्ठमेव च ॥ ३-१८८-३४ (२३१७८)
तस्मात्तेऽहंप्रदास्यामि विविधं वसु भूरि च ।
दासीसहस्रं श्यामानां सुवस्त्राणामलकृतम् ॥ ३-१८८-३५ (२३१७९)
दशकोटीर्हिरण्यस्य रुक्मभारांस्तथा दश ।
एतद्ददामि विप्रर्षे सर्वज्ञस्त्वं मतो हि मे ॥ ३-१८८-३६ (२३१८०)
तदत्रिनर्न्यायतः सर्वं प्रतिगृह्याभिसत्कृतः ।
प्रत्युज्जगाम तेजस्वी गृहानेव महातपाः ॥ ३-१८८-३७ (२३१८१)
प्रदाय च धनं प्रीतः पुत्रेभ्यः प्रयतात्मवान् ।
ततः समभिसंधाय वनमेवान्वपद्यत ॥ ३-१८८-३८ (२३१८२)

इति श्रीमन्महाभारते अरण्यपर्वणि मार्कण्डेयसमास्यापर्वणि
अष्टाशीत्यधिकशततमोऽध्यायः ॥ १८८ ॥

Mahabharata - Vana Parva - Chapter Footnotes

३-१८८-२ सोऽत्रिरर्थं भूयो नानुरुध्यत् अत्यन्तमर्थार्थी न बभूव
। कुतः। कर्मव्यक्तिर्धर्मस्य फलद्वाराऽभिव्यक्तिः। फलव्यक्त्या हि
धर्मो नश्यत्यतस्तद्रक्षणार्थं नैच्छदित्यर्थः ॥
३-१८८-३ वनं गन्तुमिति शेषः ॥
३-१८८-४ निरुपद्रवमक्षयं मोक्षाख्यम् ॥
३-१८८-५ धर्ममेवानुतन्वतीति झ । पाठः। धर्मं यज्ञादिकं
अनुतन्वती विस्तारयन्ती। हेतौ शतृप्रत्ययः। धर्मार्थे
धनमेवार्जयस्वेत्युवाचेत्यर्थः ॥
३-१८८-८ राजप्रतिग्रहे दोषं जानन्नत्रिस्तत्र विघ्नमुपन्यस्यति
कथित इत्यादिना ॥
३-१८८-९ व्यवसामि उद्यमं करोमि ॥
३-१८८-११ एवं जानन्नपि स्नेहदोषात्तत्कर्तुं प्रतिजानीते गमिष्यामीति ॥
३-१८८-१३ धन्यो धनार्हः ईश ईशिता नियन्ता । प्रथमः
हिरण्यगर्भइव अग्रजः। नृपः मनुष्याणां रक्षकः ॥
३-१८८-१५ अत्र परलोकमेव बहुमन्वानो गौतम आह मैवमिति ॥
३-१८८-१६ तत्रेन्द्रइवात्र राजैव महेन्द्र इतिवित्तार्थी अत्रिः
परपक्षं दूषयति अथेति ॥
३-१८८-१९ दर्शने दृष्टिपथे ॥
३-१८८-२१ प्रत्यषेधयत् इति ध । पाठः ॥
३-१८८-२२ नौ आवयोः । संशयः विवादः ॥
३-१८८-२७ प्रथितः प्रथांगतः । धर्मः धर्मस्थापकः। शक्रः
रक्षिता। शुक्रः नीतिवित्। धाता अतएव जनकः। बृहस्पतिः हितोपदेष्टा
॥
३-१८८-२९ अभिया मुदित इति झ । पाठः। पुरायोनिः
धर्मप्रवर्तकत्वेन प्रथमं कारणम्। युघाजित्
संग्रामे जयकर्तृत्वेनोपद्रवनाशकः। अभियाः अभितो
यातियामिकवद्रक्षणार्थमित्यभियाः। मुदितः भवः ईश्वरः। स्वर्णेता
स्वर्गं प्रति गमयिता। सहजित् सद्योजयशीलः। बभ्रुर्विष्णुः ॥

---

वन-अध्यय१८९
॥ श्रीः ॥

३.१८९. अध्यायः १८९

Mahabharata - Vana Parva - Chapter Topics
मार्कण्डेयेन युधिष्ठिरादीन्प्रति
दानाग्निहोत्रमोक्षादिनिरूपकतार्क्ष्यसरस्वतीसंवादानुवादः ॥ १ ॥

Mahabharata - Vana Parva - Chapter Text

३-१८९-० (२३१८३)
मार्कण्डेय उवाच। ३-१८९-०क्ष् (२३७७)
अत्रैव च सरस्वत्या गीतं परपुरंजय ।
पृष्टया मुनिना वीर शृणु तार्क्ष्येण धीमता ॥ ३-१८९-१ (२३१८४)
तार्क्ष्य उवाच। ३-१८९-२क्ष् (२३७८)
किंन श्रेयः पुरुषस्येह भद्रे
कथं कुर्वन्न च्यवते स्वधर्मात् ।
आचक्ष्व मे चारुसर्वाङ्गि सर्वं
त्वया शिष्टो न च्यवेयं स्वधर्मात् ॥ ३-१८९-२ (२३१८५)
कथं चाग्निं जुहुयां पूजये वा
कस्मिन्काले केन धर्मो न नश्येत् ।
एतत्सर्वं सुभगे प्रब्रवीहि
यथा लोकान्विरजाः संचरेयम् ॥ ३-१८९-३ (२३१८६)
मार्कण्डेय उवाच। ३-१८९-४क्ष् (२३७९)
एवं पृष्टा प्रीतियुक्तेन तेन
शुश्रूषुणा चोत्तमबुद्धियुक्तम् ।
तार्क्ष्यं विप्रं धर्मयुक्तं हितं च
सरस्वती वाक्यमिदं बभाषे ॥ ३-१८९-४ (२३१८७)
यो ब्रह्म जानाति यथोपदेशं
स्वाध्यायनित्यः शुचिरप्रमत्तः ।
स वै पुरो देवलोकस्य गन्ता
सहामरैः प्राप्नुयात्प्रीतियोगम् ॥ ३-१८९-५ (२३१८८)
तत्र स्म रम्या विपुला विशोकाः
सुपुष्पिताः पुष्करिण्यः सुपुण्याः ।
अकर्दमा मीनवत्यः सुतीर्था
हिरण्मयैरावृताः पुण्डरीकैः ॥ ३-१८९-६ (२३१८९)
तासां तीरेष्वासते पुण्यभाजो
महीयमानाः पृथगप्सरोभिः ।

सुपुण्यगन्धाभिरलंकृताभि-
र्हिरण्यवर्णाभिरतीव हृष्टाः ॥ ३-१८९-७ (२३१९०)
परं लोकं गोप्रदास्त्वाप्नुवन्ति
दत्त्वाऽनड्वाहं सूर्यलोकं व्रजन्ति ।
वासो दत्त्वा चान्द्रमसं तु लोकं
दत्त्वा हिरण्यममरत्वमेति ॥ ३-१८९-८ (२३१९१)
धेनुं दत्त्वा सुप्रमां साधुदोहां
कल्याणवत्सामपलायिनीं च ।
यावन्ति रोमाणि भवन्ति तस्या-
स्तावद्वर्षाण्यासते देवलोके ॥ ३-१८९-९ (२३१९२)
अनड्वाहं सुव्रतं यो ददाति
हलस्य वोढारमनन्तवीर्यम् ।
धुरंधरं बलवन्तं युवानं
प्राप्नोति लोकान्दशधेनुदस्य ॥ ३-१८९-१० (२३१९३)
ददाति यो वै कपिलां सचैलां
कांस्योपदोहां द्रविणैरुत्तरीयैः ।
तैस्तैर्गुणैः कामदुहाऽथ भूत्वा
नरं प्रदातारमुपैति नाकैः ॥ ३-१८९-११ (२३१९४)
यावन्ति रोमाणि भवन्ति धेन्वा-
स्तावत्फलं लभते गोप्रदाने ।
पुत्रांसच् पौत्रांश्च कुलं च सर्व-
मासप्तमं तारयते परत्र ॥ ३-१८९-१२ (२३१९५)
सदक्षिणां काञ्चनचारुशृङ्गीं
कांस्योपदोहां द्रविणैरुत्तरीयैः ।
धेनुं तिलानां ददतो द्विजाय
लोका वसूनां सुलभा भवन्ति ॥ ३-१८९-१३ (२३१९६)
स्वकर्मभिर्दानवसंनिरुद्धे
तीव्रान्धकारे नरके पतन्तम् ।
महार्णवे नौरिव वातयुक्ता
दानं गवां तारयते परत्र ॥ ३-१८९-१४ (२३१९७)
यो ब्राह्मदेयां तु ददाति कन्यां
भूमिप्रदानं च करोति विप्रे ।
ददाति दानं विधिना च यश्च
स लोकमाप्नोति पुरंदरस्य ॥ ३-१८९-१५ (२३१९८)
यः सप्तवर्षाणि जुहोति तार्क्ष्य
हव्यं त्वग्नौ नियतः साधुशीलः ।

सप्तावरान्सप्तपूर्वान्पुनाति
पितामहानात्मना कर्मभिः स्वैः ॥ ३-१८९-१६ (२३१९९)
तार्क्ष्य उवाच। ३-१८९-१६क्ष् (२३८०)
किमग्निहोत्रस्य व्रतं पुराण-
माचक्ष्व मे पृच्छतश्चारुरूपे ।
त्वयाऽनुशिष्टोऽहमिहाद्य विद्यां
यदग्निहोत्रस्य व्रतं पुराणम् ॥ ३-१८९-१७ (२३२००)
सरस्वत्युवाच। ३-१८९-१८क्ष् (२३८१)
न चाशुचिर्नाप्यनिर्णिक्तपाणि-
र्नाब्रह्मविज्जुहुयान्नाविपश्चित् ।
बुभुत्सवः शुचिकामा हि देवा
नाश्रद्दधानाद्धि हविर्जुषन्ति ॥ ३-१८९-१८ (२३२०१)
नाश्रोत्रियं देवहव्ये नियुञ्ज्या-
न्मोघं पुरा सिञ्चति तादृशो हि ।
अपूर्णमश्रोत्रियमाह तार्क्ष्य
न वै तादृग्जुहुयादग्निहोत्रम् ॥ ३-१८९-१९ (२३२०२)
रये वै कृशानुं जुह्वति श्रद्दधानाः
सत्यव्रता हुतशिष्टाशिनश्च ।
गवां लोकं प्राप्यते पुण्यगन्धं
पश्यन्ति देवं परमं चापि सत्यम् ॥ ३-१८९-२० (२३२०३)
तार्क्ष्य उवाच। ३-१८९-२१क्ष् (२३८२)
क्षेत्रज्ञभूतां परलोकभावे
कर्मोदये बुद्धिमभिप्रविष्टाम् ।
प्रज्ञां च देवीं सुभगे विमृश्य
पृच्छामि त्वां का ह्यसि चारुरूपे ॥ ३-१८९-२१ (२३२०४)
सरस्वत्युवाच। ३-१८९-२२क्ष् (२३८३)
अग्निहोत्रादहमभ्यागताऽस्मि
विप्रर्षभाणां संशयच्छेदनाय ।
त्वत्संयोगादहमेतदब्रुवं
भावे स्थिता तथ्यमर्थं यथावत् ॥ ३-१८९-२२ (२३२०५)
तार्क्ष्य उवाच। ३-१८९-२३क्ष् (२३८४)
न हि त्वया सदृशी काचिदस्ति
विभ्राजसे ह्यतिमात्रं यथा श्रीः ।
रूपं च ते दिव्यमनन्तकान्ति
प्रज्ञां च देवीं सुभगे बिभर्षि ॥ ३-१८९-२३ (२३२०६)
सरस्वत्युवाच। ३-१८९-२४क्ष् (२३८५)

श्रेष्ठानि यानि द्विपदांवरिष्ठ
यज्ञेषु विद्वन्नुपपादयन्ति ।
तैरेव चाहं संप्रवृद्धा भवामि
चाप्यायिता रूपवती च विप्र ॥ ३-१८९-२४ (२३२०७)
यच्चापि पात्रमुपयुज्यते ह
वानस्पत्यमायसं पार्थिवं वा ।
दिव्येन रूपेण प्रज्ञया च
तेनैव सिद्धिरिति विद्धि विद्वन् ॥ ३-१८९-२५ (२३२०८)
तार्क्ष्य उवाच। ३-१८९-२६क्ष् (२३८६)
इदं श्रेयः परमं मन्यमाना
व्यायच्छन्ते मुनयः संप्रतीताः ।
आचक्ष्व मे तं परमं विशोकं
मोक्षं परं यं प्रविशन्ति धीराः ।
साङ्ख्या योगाः परमं यं विदन्ति
परं पुराणं तमहं न वेद्मि ॥ ३-१८९-२६ (२३२०९)
सरस्वत्युवाच। ३-१८९-२७क्ष् (२३८७)
तं वै परं वेदविदः प्रपन्नाः
परं परेभ्यः प्रथितं पुराणम् ।
स्वाध्यायदानव्रतपुण्ययोगै-
स्तपोधना वीतशोका विमुक्ताः ॥ ३-१८९-२७ (२३२१०)
तस्याथ मध्ये वेतसः पुण्यगन्धः
सहस्रशाखो विपुलो विभाति ।
तस्य मूलात्सरितः प्रस्रवन्ति
मधूदकप्रस्रवणाः सुपुण्याः ॥ ३-१८९-२८ (२३२११)
शाखांशाखां महानद्यः संयान्ति सिकताशयाः ।
धानापूपा मांसशाकाः सदापायसकर्दमाः ॥ ३-१८९-२९ (२३२१२)
यस्मिन्नग्निमुखा देवाः सेन्द्राः सहमरुद्गणाः ।
ईजिरे क्रतुभिः श्रेष्ठैस्तत्पदं परमं मुने ॥ ३-१८९-३० (२३२१३)

इति श्रीमन्महाभारते अरण्यपर्वणि मार्कण्डेयसमास्यापर्वणि
एकोननवत्यधिकशततमोऽध्यायः ॥१८९ ॥

Mahabharata - Vana Parva - Chapter Footnotes

३-१८९-८ अनड्वाहं वृषभम् ॥
३-१८९-११ उत्तरीयैः पश्चाङ्गवैर्दक्षिणादिभिर्द्रव्यैः सहिताम् ॥
३-१८९-१५ ब्राह्मदेयां गृह्योक्तेन विधिना देयाम् ॥

वन-अध्यय१९०
॥ श्रीः ॥
३.१९०. अध्यायः १९०

Mahabharata - Vana Parva - Chapter Topics
मार्कण्डेयेन युधिष्ठिरादीन्प्रति मत्स्यरूपिणो हरेर्वैवस्वतमनोश्च चरितप्रतिपादकमस्योपाख्यानकथनम् ॥ १ ॥

Mahabharata - Vana Parva - Chapter Text

३-१९०-० (२३२१४)
वैशंपायन उवाच। ३-१९०-०क्ष् (२३८८)
ततः स पाण्डवो भूयो मार्कण्डेयमुवाच ह ।
कथयस्वति चरितं मनोर्वैवस्वतस्य च ॥ ३-१९०-१ (२३२१५)
मार्कण्डेय उवाच। ३-१९०-२क्ष् (२३८९)
विवस्वतः सुतो राजन्महर्षिः सुप्रतापवान् ।
बभूव नरशार्दूल प्रजापतिसमद्युतिः ॥ ३-१९०-२ (२३२१६)
ओजसातेजसा लक्ष्म्या तपसा च विशेषतः ।
अतिचक्राम पितरं मनुः स्वंच पितामहम् ॥ ३-१९०-३ (२३२१७)
ऊर्ध्वबाहुर्विशालायां बदर्यां स नराधिपः ।
एकपादस्थितस्तीव्रं चकार सुमहत्तपः ॥ ३-१९०-४ (२३२१८)
अवाक्शिरास्तथा चापि नेत्रैरनिमिषैर्दृढम् ।
सोऽतप्यत तपो घोरं वर्षाणामयुतं तदा ॥ ३-१९०-५ (२३२१९)
तं कदाचित्तपस्यन्तमार्द्रचीरजटाधरम् ।
चीरिणीतीरमागम्य मत्स्यो वचनमब्रवीत् ॥ ३-१९०-६ (२३२२०)
भगवन्क्षुद्रमत्स्येस्मि बलवद्भयो भयंमम ।
मत्स्येभ्यो हि ततो मां त्वं त्रातुमर्हसि सुव्रत ॥ ३-१९०-७ (२३२२१)
दुर्बलं बलवन्तो हि मत्स्या मत्स्यं विशेषतः ।
भक्षयन्ति सदा वृत्तिर्विहिता नः सनातनी ॥ ३-१९०-८ (२३२२२)
तस्माद्भयौघान्महतो मज्जन्तं मां विशेषतः ।
त्रातुमर्हसि कर्तास्मि कृतेप्रतिकृतं तव ॥ ३-१९०-९ (२३२२३)
स मत्स्यवचनं श्रुत्वा कृपयाऽभिपरिप्लुतः ।
मनुर्वैवस्वतोऽगृह्णात्तं मत्स्यं पाणिना स्वयम् ॥ ३-१९०-१० (२३२२४)
उदकान्तमुपानीय मत्स्यं वैवस्वतो मनुः ।

अलिञ्जरे प्राक्षिपत्तं चन्द्रांशुसदृशप्रभम् ॥ ३-१९०-११ (२३२२५)
स तत्र ववृधे राजन्मत्स्यः परमसत्कृतः ।
पुत्रवत्स्वीकरोत्तस्मै मनुर्भावं विशेषतः ॥ ३-१९०-१२ (२३२२६)
अथ कालेन महता स मत्स्यः सुमहानभूत् ।
अलिञ्जरजले चैव नासौ समभवत्किल ॥ ३-१९०-१३ (२३२२७)
अथ मत्स्यो मनुं दृष्ट्वा पुनरेवाभ्यभाषत ।
भगवन्साधु मेऽद्यान्यत्स्थानं संप्रतिपादय ॥ ३-१९०-१४ (२३२२८)
उद्धृत्यालिञ्जरात्तस्मात्ततः स भगवान्मनुः ।
तं मत्स्यमनयद्वापीं महतीं स मनुस्तदा ॥ ३-१९०-१५ (२३२२९)
तत्रतं प्राक्षिपच्चापि मनुः परपुरंजय ।
अथावर्धत मत्स्यः स पुनर्वर्षगणान्बहून् ॥ ३-१९०-१६ (२३२३०)
द्वियोजनायता वापी विस्तृताचापि योजनम् ।
तस्यां नासौ समभवन्मत्स्यो राजीवलोचन ॥ ३-१९०-१७ (२३२३१)
विचेष्टितुं च कौन्तेय मत्स्यो वाप्यां विशांपते ।
मनुं मत्स्यस्ततो दृष्ट्वा पुनरेवाभ्यभाषत ॥ ३-१९०-१८ (२३२३२)
नय मां भगवन्साधो समुद्रमहिषीं प्रियाम् ।
गङ्गां नांत्रापि शक्तोस्मि वस्तुं मतिमतांवर ॥ ३-१९०-१९ (२३२३३)
निदेशे हि मया तुभ्यं स्थातव्यमनसूयता ।
वृद्धिर्हि परमा प्राप्ता त्वत्कृते हि मयाऽनघ ॥ ३-१९०-२० (२३२३४)
एवमुक्तो मनुर्मत्स्यमनयद्भगवान्वशी ।
नदीं गङ्गां तत्रचैनं स्वयं प्राक्षिपदेव च ॥ ३-१९०-२१ (२३२३५)
स तत्र ववृधे मत्स्यः कंचित्रालमरिंदम ।
गतः पुनर्मनुं दृष्ट्वा मत्स्यो वचनमब्रवीत् ॥ ३-१९०-२२ (२३२३६)
गङ्गायां हि न शक्नोमि बृहत्त्वाच्चेष्टितुं प्रभो ।
समुद्रं नय मामाशु प्रसीद भगवन्निति ॥ ३-१९०-२३ (२३२३७)
उद्धृत्य गङ्गासलिलात्ततो मत्स्यं मनुः स्वयम् ।
समुद्रमनयत्पार्त तत्रचैनमवासृजत् ॥ ३-१९०-२४ (२३२३८)
सुमहानपि मत्स्यस्तु स मनोर्नयतस्तदा ।
आसीद्यथेष्टहार्यश्च स्पर्शगन्धसुखश्च वै ॥ ३-१९०-२५ (२३२३९)
यदा समुद्रे प्रक्षिप्तः स मत्स्यो ननुना तदा ।
तत एनमिदं वाक्यं स्मयमान इवाब्रवीत् ॥ ३-१९०-२६ (२३२४०)
भगवन्हि कृता रक्षा त्वया सर्वा विशेषतः ।
प्राप्तकालं तु यत्कार्यं त्वया तच्छ्रूयतां मम ॥ ३-१९०-२७ (२३२४१)
अचिराद्भगवन्बौममिदं स्थावरजङ्गमम् ।
सर्वमेव महाभाग प्रलयं वै गमिष्यति ॥ ३-१९०-२८ (२३२४२)
संप्रक्षालनकालोऽयंलोकानां समुपस्थितः ।

तस्मात्त्वां बोधयाम्यद्ययत्ते हितमनुत्तमम् ॥ ३-१९०-२९ (२३२४३)
त्रसानां स्तावराणां च यच्चेङ्गं यच्च नेङ्गति ।
तस्य सर्वस् संप्राप्तः कालः परमदारुणः ॥ ३-१९०-३० (२३२४४)
नौश्च कारयितव्या ते दृढा युक्तवटारका ।
तत्र सप्तर्षिभिः सार्धमारुहेथा महामुने ॥ ३-१९०-३१ (२३२४५)
बीजानि चैव सर्वाणि यथोक्तानि मया पुरा ।
तस्यामारोहयेर्नावि सुसंगुप्तानि भागशः ॥ ३-१९०-३२ (२३२४६)
नौस्थश्च मां प्रतीक्षेथास्ततो मुनिजनप्रिय ।
आगमिष्याम्यहं शृङ्गी विज्ञेयस्तेन तापस ॥ ३-१९०-३३ (२३२४७)
एवमेतत्त्वया कार्यमापृष्टोसि व्रजाम्यहम् ।
ता न शक्या महत्यो वै आपस्तर्तुं मया विना ।
नातिशङ्क्यमिदं चापि वचनं मे त्वया विभो ॥ ३-१९०-३४ (२३२४८)
एवं करिष्य इति तं स मत्स्यं प्रत्यभाषत ।
जग्मतुश्च यथाकाममनुज्ञाप्य परस्परम् ॥ ३-१९०-३५ (२३२४९)
ततो मनुर्महाराज यथोक्तं मत्स्यकेन ह ।
बीजान्यादाय सर्वाणि सागरं पुप्लुवे तदा ।
नौकया शुभयावीर महोर्मिणमरिंदम ॥ ३-१९०-३६ (२३२५०)
चिन्तयामास च मनुस्तं मत्स्यं पृथिवीपते ।
सच तच्चिन्तितं ज्ञात्वा मत्स्यः परपुरंजय ।
शृङ्गी तत्राजगागाशु तदा भरतसत्तम ॥ ३-१९०-३७ (२३२५१)
तं दृष्ट्वा मनुजव्याघ्र मनुर्मत्स्यं जलार्णवे ।
शृङ्गिणं तं यथोक्तेन रूपेणाद्रिमिवोच्छ्रितम् ॥ ३-१९०-३८ (२३२५२)
वटारकमयं पाशमथ मत्स्यस्य मूर्धनि ।
मनुर्मनुजशार्दूल तस् शृङ्गे न्यवेशयत् ॥ ३-१९०-३९ (२३२५३)
संयतस्तेन पाशेन मत्स्यः परपुरंजय ।
वेगेन महता नावं प्राकर्षल्लवणाम्भसि ॥ ३-१९०-४० (२३२५४)
स ततार तया नावा समुद्रं मनुजेश्वर ।
नृत्यमानमिवोर्मीभिर्गर्जमानमिवाम्भसा ॥ ३-१९०-४१ (२३२५५)
क्षोभ्यमाणा महावातैः सा नौस्तस्मिन्महोदधौ ।
घूर्णते चपलेव स्त्री मत्ता परपुरंजय ॥ ३-१९०-४२ (२३२५६)
नैव भूमिर्न च दिशः प्रदिशो वा चकाशिरे ।
सर्वं सलिलमेवासीत्खं द्यौश्च नरपुङ्गव ॥ ३-१९०-४३ (२३२५७)
एवंभूते तदा लोके संकुले भरतर्षभ ।
अदृश्यन्त सप्तर्षयो मनुर्मत्स्यस्तथैव च ॥ ३-१९०-४४ (२३२५८)
एवं बहून्वर्षगणांस्तां नावं सोऽथ मत्स्यकः ।
चकर्षातन्द्रितो राजंस्तस्मिन्सलिलसंचये ॥ ३-१९०-४५ (२३२५९)

ततो हिमवतः शृङ्गं यत्परं भरतर्षभ ।
तत्राकर्षत्ततो नावं स मत्स्यः कुरुनन्दन ॥ ३-१९०-४६ (२३२६०)
अथाब्रवीत्तदा मत्स्यस्तानृषीन्प्रहसञ्शनैः ।
अस्मिन्हिमवतः शृङ्गे नावं बध्नीत माचिरम् ॥ ३-१९०-४७ (२३२६१)
सा बद्धा तत्र तैस्तूर्णमृषिभिर्भरतर्षभ ।
नौर्मत्स्यस्य वचः श्रुत्वा शृङ्गे हिमवतस्तदा ॥ ३-१९०-४८ (२३२६२)
तच्च नौबन्धनं नाम शृङ्गं हिमवतः परम् ।
ख्यातमद्यापि कौन्तेय तद्विद्धि भरतर्षभ ॥ ३-१९०-४९ (२३२६३)
अथाब्रवीदनिमिषस्तानृषीन्सहितस्तदा ।
अहं प्रजापतिर्ब्रह्मा मत्परं नाधिगम्यते ।
मत्स्यरूपेण यूयं च मयाऽस्मान्मोक्षिता भयात् ॥ ३-१९०-५० (२३२६४)
मनुना च प्रजाः सर्वाः सदेवासुरमानुपाः ।
स्रष्टव्याः सर्वलोकाश्चयच्चेङ्गं यच्चा नेङ्गति ॥ ३-१९०-५१ (२३२६५)
तपसा चापि तीव्रेण प्रतिभाऽस्य भविष्यति ।
मत्प्रसादात्प्रजासर्गे न च मोहं गमिष्यति ।
इत्युक्त्वा वचनं मत्स्यः क्षणेनादर्शनं गतः ॥ ३-१९०-५२ (२३२६६)
स्रष्टुकामः प्रजाश्चापि मनुर्वैवस्वतः स्वयम् ।
प्रमूढोऽभूत्प्रजासर्गे तपस्तेपे महत्ततः ॥ ३-१९०-५३ (२३२६७)
तपसा महता युक्तः सोऽथ स्रष्टुं प्रचक्रमे ।
सर्वाः प्रजा मनुः साक्षाद्यथावद्भरतर्षभ ॥ ३-१९०-५४ (२३२६८)
इत्येतन्मात्स्यकं नाम पुराणं परिकीर्तितम् ।
आख्यानमिदमाख्यातं सर्वपापहरं मया ॥ ३-१९०-५५ (२३२६९)
य इदं शृणुयान्नित्यं मनोश्चरितमादितः ।
स सुखी सर्वपूर्णार्थः सर्वलोकमियान्नरः ॥ ३-१९०-५६ (२३२७०)

इति श्रीमन्महाभारते अरण्यपर्वणि मार्कण्डेयसमास्यापर्वणि
नवत्यधिकशततमोऽध्यायः ॥ १९० ॥

Mahabharata - Vana Parva - Chapter Footnotes

३-१९०-६ चीरिणीनदीविशेषः ॥
३-१९०-११ अलिञ्जरे मणिकाख्यपात्रे ॥
३-१९०-१३ न समभवत्स्थूलत्वेन न ममावित्यर्थः ॥
३-१९०-३० त्रसानां जङ्गमानाम् । इङ्गं चलनशीलं
वृक्षादि। नेङ्गति पाषाणादि। कालोऽन्तः ॥
३-१९०-३१ वटारका रज्जुः ॥
३-१९०-३२ यथोक्तानि द्विजैः पुरा इति झ । पाठः ॥

वन-अध्यय१९१
॥ श्रीः ॥
३.१९१. अध्यायः १९१

Mahabharata - Vana Parva - Chapter Topics
मार्कण्डेयेन युधिष्ठिरादीन्प्रति
कृतादियुगचतुष्टयधर्मकथनपूर्वकं प्रलयवर्णनम् ॥ १ ॥
तथा प्रलयजले परिप्लवता मार्कण्डेयेन वटशाखाशायिनः
शिशुरूपस्य हरेरुदरान्तःप्रविश्य ब्रह्माण्डदर्शनपूर्वकं
पुनर्वहिर्निर्गमनम् ॥ २ ॥

Mahabharata - Vana Parva - Chapter Text

३-१९१-० (२३२७१)
वैशंपायन उवाच। ३-१९१-०क्ष् (२३९०)
ततः स पुनरेवाथ मार्कण्डेयं तपस्विनम् ।
पप्रच्छ विनयोपेतो धर्मराजो युधिष्ठिरः ॥ ३-१९१-१ (२३२७२)
नैके युगसहस्रान्तास्त्वया दृष्टा महामुने ।
न चापीह समः कश्चिदायुष्मान्दृश्यते तव ॥ ३-१९१-२ (२३२७३)
वर्जयित्वा महात्मानं ब्रह्माणं परमेष्ठिनम् ।
न तेऽस्ति सदृशः कश्चिदायुषा ब्रह्मसत्तम ॥ ३-१९१-३ (२३२७४)
अथाऽन्तरिक्षे लोकेऽस्मिन्देवदानववर्जिते ।
त्वमेव प्रलये विप्र ब्रह्माणमुपतिष्ठसे ॥ ३-१९१-४ (२३२७५)
प्रलये चापि निर्वृत्ते प्रबुद्धे च पितामहे ।
त्वमेकः सृज्यमानानि भूतानीह प्रपश्यसि ॥ ३-१९१-५ (२३२७६)
चतुर्विधानि विप्रर्षे यथावत्परमेष्ठिना ।
वायुभूता दिशः कृत्वा विक्षिप्यापस्ततस्ततः ॥ ३-१९१-६ (२३२७७)
त्वया लोकगुरुः साक्षात्सर्वलोकपितामहः ।
आराधितो द्विजश्रेष्ठ तत्परेण समाधिना ॥ ३-१९१-७ (२३२७८)
स्वप्रमाणमथो विप्र त्वया कृतमनेकशः ।
घोरेणाविश्य तपसा वेधसो निर्जितास्त्वया ॥ ३-१९१-८ (२३२७९)
नारायणाङ्कप्रख्यस्त्वं सांपरायेऽतिपठ्यसे ॥ ३-१९१-९ (२३२८०)
भगवाननेकशः कृत्वा त्वया विष्णोश्च विश्वकृत् ।
कर्णिकोद्धरणं दिव्यं ब्रह्मणः कामरूपिणः ।
रत्नालंकारयोगाभ्यां दृग्भ्यां दृष्टस्त्वया पुरा ॥ ३-१९१-१० (२३२८१)

तस्मात्तवान्तको मृत्युर्जरा वा देहनाशिनी ।
न त्वां विशति विप्रर्षे प्रसादात्परमेष्ठिनः ॥ ३-१९१-११ (२३२८२)
यदा नैव रविर्नाग्निर्न वायुर्न च चन्द्रमाः ।
नैवान्तरिक्षं नैवोर्वी शेषं भवति किंचन ॥ ३-१९१-१२ (२३२८३)
तस्मिन्नेकार्णवे लोके नष्टे स्थावरजङ्गमे ।
नष्टे देवासुरगणे समुत्सन्नमहोरगे ॥ ३-१९१-१३ (२३२८४)
शयानममितात्मानं पद्मे पद्मनिकेतनम् ।
त्वमेकः सर्वभूतेशं ब्रह्माणमुपतिष्ठसि ॥ ३-१९१-१४ (२३२८५)
एतत्प्रत्यक्षतः सर्वं पूर्वं वृत्तं द्विजोत्तम ।
तस्मादिच्छाम्यहं श्रोतुं सर्वहेत्वात्मिकां कथां ॥ ३-१९१-१५ (२३२८६)
अनुभूतं हि बहुशस्त्वयैकेन द्विजोत्तम ।
न तेऽस्त्यविदितं किंचित्सर्वलोकेषु नित्यदा ॥ ३-१९१-१६ (२३२८७)
मार्कण्डेय उवाच। ३-१९१-१७क्ष् (२३९१)
हन्त ते कथयिष्यामि नमस्कृत्वा स्वयंभुवे ।
पुरुषाय पुराणाय शाश्वतायाव्ययाय च ।
अव्यक्ताय सुसूक्ष्माय निर्गुणाय गुणात्मने ॥ ३-१९१-१७ (२३२८८)
य एष पृथुदीर्घाक्षः पीतवासा जनार्दनः ।
एष कर्ता विकर्ता च भूतात्मा भूतकृत्प्रभुः ॥ ३-१९१-१८ (२३२८९)
अचिन्त्यं महदाश्चर्यं पवित्रमिति चोच्यते ।
अनादिनिधनं भूतं विश्वमव्ययमक्षयम् ॥ ३-१९१-१९ (२३२९०)
एष कर्ता न क्रियते कारणं चापि पौरुषे ।
को ह्येनं परुषं वेत्ति देवा अपि न तं पौरषे ॥ ३-१९१-२० (२३२९१)
सर्वमाश्चर्यमेवैतन्निर्वृत्तं राजसत्तम ।
आदितो मनुजव्याघ्र कृत्स्नस्य जगतः क्षये ॥ ३-१९१-२१ (२३२९२)
चत्वार्याहुः सहस्राणि वर्षाणां तत्कृतं युगम् ।
तस्य तावच्छती सन्ध्या सन्ध्यांशश्च तथाविधः ॥ ३-१९१-२२ (२३२९३)
वीणि वर्षसहस्राणि त्रेतायुगमिहोच्यते ।
तस्य तावच्छती सन्ध्या सन्ध्यांशश्च ततः परं ॥ ३-१९१-२३ (२३२९४)
तथा वर्षसहस्रे द्वे द्वापरं परिमाणतः ।
तस्यापि द्विशती सन्ध्या सन्ध्यांशश्च तथाविधः ॥ ३-१९१-२४ (२३२९५)
सहस्रमेकं वर्षाणां ततः कलियुगं स्मृतम् ।
तस्य वर्षशतं सन्ध्या सन्ध्यांशश्च ततः परम् ॥ ३-१९१-२५ (२३२९६)
सन्ध्यासंध्यांशयोस्तुल्यं प्रमाणमुपधारय ।
क्षीणे कलियुगे चैव प्रवर्तति कृतं युगम् ॥ ३-१९१-२६ (२३२९७)
एषा द्वादशसाहस्री युगाख्या परिकीर्तिता ।
एतत्सहस्रपर्यन्तमहो ब्राह्ममुदाहृतम् ॥ ३-१९१-२७ (२३२९८)

विश्वं हि ब्रह्मभवने सर्वतः परिवर्तते ।
लोकानां मनुजवन्याघ्र प्रलयं तं विदुर्बुधाः ॥ ३-१९१-२८ (२३२९९)
अल्पावशिष्टे तु तदा युगान्ते भरतर्षभ ।
सहस्रान्ते नराः सर्वे प्रायशोऽनृतवादिनः ॥ ३-१९१-२९ (२३३००)
यज्ञप्रतिनिधिः पार्थ दानप्रतिनिधिस्तथा ।
व्रतप्रतिनिधिश्चैव तस्मिन्काले प्रवर्तते ॥ ३-१९१-३० (२३३०१)
ब्राह्मणाः शूद्रकर्माणस्तथा शूद्रा धनार्जकाः ।
क्षत्रधर्मेण वाऽप्यत्र वर्तयन्ति युगक्षये ॥ ३-१९१-३१ (२३३०२)
निवृत्तयज्ञस्वाध्याया दण्डाजिनविवर्जिताः ।
ब्राह्मणा सर्वभक्षाश्च भविष्यन्ति कलौ युगे ॥ ३-१९१-३२ (२३३०३)
अजपा ब्राह्मणास्तात शूद्रा जपपरायणाः ।
विपरीते तदा लोके पूर्वरूपं क्षयस्य तत् ॥ ३-१९१-३३ (२३३०४)
बहवो म्लेच्छराजानः पृथिव्यां मनुजाधिप ।
मृषानुशासिनः पापा मृषावादपरायणाः ॥ ३-१९१-३४ (२३३०५)
आन्ध्राः शकाः पुलिन्दाश्च यवनाश्च नराधिपाः ।
काम्भोजा बाह्लिकाः शूरास्तथाऽऽभीरा नरोत्तमा ॥ ३-१९१-३५ (२३३०६)
न तदा ब्राह्मणः कश्चित्स्वधर्ममुपजीवति ।
क्षत्रियाश्चापि वैश्याश्च विकर्मस्था नराधिप ॥ ३-१९१-३६ (२३३०७)
अल्पायुषः स्वल्पबलाः स्वल्पवीर्यपराक्रमाः ।
अल्पसाराल्पदेहाश्च तथा सत्याल्पभाषिणः ॥ ३-१९१-३७ (२३३०८)
बहुशून्या जनपदा मृगव्यालावृता दिशः ।
युगान्ते समनुप्राप्ते वृथा च ब्रह्मवादिनः ॥ ३-१९१-३८ (२३३०९)
भोवादिनस्तथा शूद्रा ब्राह्मणाश्चार्यवादिनः ।
युगान्ते मनुजव्याघ्र भवन्ति बहुजन्तवः ॥ ३-१९१-३९ (२३३१०)
न तथा घ्राणयुक्ताश्च सर्वगन्धा विशांपते ।
रसाश्च मनुजव्याघ्र न तथा स्वादुयोगिनः ॥ ३-१९१-४० (२३३११)
बहुप्रजा ह्रस्वदेहा शीलाचारविवर्जिताः ।
मुखेभगाः स्त्रियो राजन्भविष्यन्ति युगक्षये ॥ ३-१९१-४१ (२३३१२)
अट्टशूला जनपदाः शिवशूलाश्चतुष्पथाः ।
केशशूलाः स्त्रियो राजन्भविष्यन्ति युगक्षये ॥ ३-१९१-४२ (२३३१३)
अल्पक्षीरास्तथा गावो भविष्यन्ति जनाधिप ।
अल्पपुष्पफलाश्चापि पादपा बहुवायसाः ॥ ३-१९१-४३ (२३३१४)
ब्रह्मवध्यानुलिप्तानां तथा मिथ्याभिशंसिनाम् ।
नृपाणां पृथिवीपाल प्रतिगृह्णन्ति वै द्विजाः ॥ ३-१९१-४४ (२३३१५)
लोभमोहपरीताश्च मिथ्याधर्मध्वजावृताः ।
भिक्षार्थं पृथिवीपाल चञ्चूर्यन्ते द्विजैर्दिशः ॥ ३-१९१-४५ (२३३१६)

कराभारभयाद्भीता गृहस्थाः परिमोषकाः ।
मुनिच्छद्माकृतिच्छन्ना वाणिज्यमुपभुञ्जते ॥ ३-१९१-४६ (२३३१७)
मित्या च नखरोमाणि धारयन्ति तदा द्विजाः ।
अर्थलोभान्नरव्याघ्र वृथा च ब्रह्मचारिणः ॥ ३-१९१-४७ (२३३१८)
आश्रमेषु वृथाचार पारपा गुरुतल्पगाः ।
ऐहलौकिकमीहन्ते मांसशोणितवर्धनम् ॥ ३-१९१-४८ (२३३१९)
ग्पारलौकिककार्येषु प्रमत्ता भृशनास्तिकाः'।
बहुपाषण्डसंकीर्णाः परान्नगुणवादिनः ।
आश्रमा मनुजव्याघ्र न भवन्ति युगक्षये ॥ ३-१९१-४९ (२३३२०)
यथर्तुवर्षी भगवान्न तथा पाकशासनः ।
न चापि सर्वभीजानि सम्यग्रोहन्ति भारत ॥ ३-१९१-५० (२३३२१)
फलं धर्मस्य राजेन्द्र सर्वत्र परिहीयते ।
हिंसाभिरामश्च जनस्तथा संपद्यतेऽशुचिः ।
अधर्मफलमत्यर्थं तदा भवति चानघ ॥ ३-१९१-५१ (२३३२२)
तदा च पृथिवीपाल यो भवेद्धर्मसंयुतः ।
अल्पायुः स हि मन्तव्यो न हि धर्मोस्ति कश्चन ॥ ३-१९१-५२ (२३३२३)
भूयिष्ठं कूटमानैश्च पण्यं विक्रीणते जनाः ।
वणिजश्च नरव्याघ्र बहुमाया भवन्त्युत ॥ ३-१९१-५३ (२३३२४)
धर्मिष्ठाः परिहीयन्ते पापीयान्वर्धते जनः ।
धर्मस्य बलहानिः स्यादधर्मश्च बलायते ॥ ३-१९१-५४ (२३३२५)
अल्पायुषो दरिद्राश्च धर्मिष्ठा मानवास्तथा ।
दीर्घायुषः समृद्धाश्च विधर्माणो युगक्षये ॥ ३-१९१-५५ (२३३२६)
नगराणआं विहारेषु विधर्माणो युगक्षये ।
अधर्मिष्ठैरुपायैश् प्रजा व्यवहरन्त्युत ॥ ३-१९१-५६ (२३३२७)
संचयेन तथाऽल्पेन भवन्त्याढ्यमदान्विताः ।
धनं विश्वासतो न्यस्तं मिथो भूयिष्ठशो नराः ॥ ३-१९१-५७ (२३३२८)
हर्तुं व्यवसिता राजन्पापाचारसमनविताः ।
नैतदस्तीति मनुजा वर्तन्ते निरपत्रपाः ॥ ३-१९१-५८ (२३३२९)
पुरुषादानि सत्वानि पक्षिणोऽथ मृगास्तथा ।
नगराणां विहारेषु चैत्येष्वपि च शेरते ॥ ३-१९१-५९ (२३३३०)
सप्तवर्षाष्टवर्षाश्च स्त्रियो गर्भधरा नृप ।
दशद्वादशवर्षाणां पुंसां पुत्रः प्रजायते ॥ ३-१९१-६० (२३३३१)
भवन्ति षोडशे वर्षे नराः पलितिनस्तथा ।
आयुःक्षयो मनुष्याणां क्षिप्रमेव प्रपद्यते ॥ ३-१९१-६१ (२३३३२)
क्षीणायुषो महाराज तरुणा वृद्धशीलिनः ।
तरुणानां च यच्छीलं तद्वृद्धेषु प्रजायते ॥ ३-१९१-६२ (२३३३३)

विपरीतास्तदा नार्यो वञ्चयित्वाऽर्हतः पतीन् ।
व्युच्चरन्त्यपि दुःशीला दासैः पशुभिरेव च ॥ ३-१९१-६३ (२३३३४)
वीरपत्न्यस्तथा नार्यः संश्रयन्ति नरान्नृप ।
भर्तारमपि जीवन्तमन्यान्व्यभिचरन्त्युत ॥ ३-१९१-६४ (२३३३५)
तस्मिन्युगसहस्रान्ते संप्राप्ते चायुषः क्षये ।
अनावृष्टिर्महाराज जायते बहुवार्षिकी ॥ ३-१९१-६५ (२३३३६)
ततस्तान्यल्पसाराणि सत्वानि क्षुधितानि वै ।
प्रलयं यान्ति भूयिष्ठं पृथिव्यां पृथिवीपते ॥ ३-१९१-६६ (२३३३७)
ततो दिनकरैर्दीप्तैः सप्तभिर्मनुजाधिप ।
पीयते सलिलं सर्वं समुद्रेषु सरित्सु च ॥ ३-१९१-६७ (२३३३८)
यच्च रकाष्ठं तृणं चापि शुष्कं चार्द्रं च भारत ।
सर्वं तद्भस्मसाद्भूतं दृश्यते भरतर्षभ ॥ ३-१९१-६८ (२३३३९)
ततः संवर्तको वह्निर्वायुना सह भारत ।
लोकमाविशते पूर्वमादित्यैरुपशोषितम् ॥ ३-१९१-६९ (२३३४०)
ततः स पृथिवीं भित्त्वा प्रविश्य च रसातलम् ।
रदेवदानवयक्षाणां भयं जनयते महत् ॥ ३-१९१-७० (२३३४१)
निरदहन्नागलोकं च यच्च किंचित्क्षितาविह ।
अधस्तात्पृथिवीपाल सर्वं नाशयते क्षणात् ॥ ३-१९१-७१ (२३३४२)
ततो योजनविंशानां सहस्राणि शतानि च ।
निर्दहत्यशिवो वायुः स च संवर्तकोऽनलः ॥ ३-१९१-७२ (२३३४३)
सदेवासुरगन्धर्वं सयक्षोरगराक्षसम् ।
ततो दहति दीप्तः स सर्वमेव जगद्विभुः ॥ ३-१९१-७३ (२३३४४)
ततो गजकुलप्रख्यास्तजिन्मालाविभूषिताः ।
उत्तिष्ठन्ति महामेघा नभस्यद्भुतदर्शनाः ॥ ३-१९१-७४ (२३३४५)
केचिन्नीलोत्पलश्यामाः केचित्कुमुदसन्निभाः ।
केचित्किञ्जल्कसंकाशाः केचित्पीताः पयोधराः ॥ ३-१९१-७५ (२३३४६)
केचिद्धारिद्रसंकाशाः कारण्डवनिभास्तथा ।
केचित्कमलपत्राभाः केचिद्धिङ्गुलसप्रभाः ॥ ३-१९१-७६ (२३३४७)
केचित्पुरवराकाराः केचिद्गजकुलोपमाः ।
केचिदञ्जनसंकाशाः केचिन्मकरसन्निभाः ॥ ३-१९१-७७ (२३३४८)
विद्युन्मालापिनद्धाङ्गाः समुत्तिष्ठन्ति वै घनाः ।
घोररूपा महाराज घोरस्वननिनादिताः ॥ ३-१९१-७८ (२३३४९)
ततो जलधराः सर्वं व्याप्नुवनति नभस्तलम् ।
ग्गर्जन्तः पृथिवीपाल पृथिवीधरसन्निभाः' ॥ ३-१९१-७९ (२३३५०)
तैरियं पृथिवी सर्वा सपर्वतवनाकरा ।
आपूर्यते महाराज सलिलौघपरिप्लुता ॥ ३-१९१-८० (२३३५१)

ततस्ते जलदा घोरा राविणः पुरुषर्षभ ।
पर्वतान्प्लावयन्त्याशु चोदिताः परमेष्ठिना ॥ ३-१९१-८१ (२३३५२)
वर्षमाणा महत्तोयं पूरयन्तो वसुंधराम् ।
सुघोरमशिवं रौद्रं नाशयनति च पावकम् ॥ ३-१९१-८२ (२३३५३)
ततो द्वादशवर्षाणि पयोदास्त उपप्लवे ।
धाराभिः पूरयन्तो वै चोद्यमाना महात्मना ॥ ३-१९१-८३ (२३३५४)
ततः समुद्रः स्वां वेलामतिक्रामति भारत ।
पर्वताश्च विदीर्यन्ते मही चापि विदीर्यते ॥ ३-१९१-८४ (२३३५५)
सर्वतः सहसा भ्रान्तास्ते पयोदा नभस्तलम् ।
संवेष्टयित्वा नश्यन्ति वायुवेगपराहताः ॥ ३-१९१-८५ (२३३५६)
कततस्तं मारुतं घोरं स्वयंभूर्मनुजाधिप ।
आदिः पद्मालयो देवः पीत्वा स्वपिति भारत ॥ ३-१९१-८६ (२३३५७)
तस्मिन्नेकार्णवे घोरे नष्टे स्थावरजङ्गमे ।
नष्टे देवासुरगणए यक्षराक्षसवर्जिते ॥ ३-१९१-८७ (२३३५८)
निर्मनुष्ये महीपाल निःश्वापदमहीरुहे ।
अनन्तरिक्षे लोकेऽस्मिन्भ्रमाम्येकोऽहमातुरः ॥ ३-१९१-८८ (२३३५९)
एकार्णवे जले घोरे विचरन्पार्थिवोत्तम ।
अपश्यन्सर्वभूतानि वैक्लब्यमगमं ततः ॥ ३-१९१-८९ (२३३६०)
ततः सुदीर्घं गत्वाऽहं प्लवमानो धराधिप ।
श्रान्तः क्वचिन्न शरणं लब्धवानस्म्यतन्द्रितः ॥ ३-१९१-९० (२३३६१)
ततः कदाचित्पश्यामि तस्मिन्सलिलसंनिघौ ।
न्यग्रोधं सुमहान्तं वै विशालं पृथिवीपते ॥ ३-१९१-९१ (२३३६२)
शाखायां तस्य वृक्षस्य विस्तीर्णायां नराधिप ।
पर्यङ्के पृथिवीपाल दिव्यास्तरणसंस्तृते ॥ ३-१९१-९२ (२३३६३)
उपविष्टं महाराज पद्मेन्दुसदृशाननम् ।
फुल्लपद्मविशालाक्षं बालं पश्यामि भारत ॥ ३-१९१-९३ (२३३६४)
ततो मे पृतिवीपाल विस्मयः सुमहाभूत् ।
कथं त्वयं शिशुः शेते लोके नाशमुपागते ॥ ३-१९१-९४ (२३३६५)
तपसा चिन्तयंश्चापि तं शिशुं नोपलक्षये ।
भूतं भव्यं भविष्यं च जानन्नपि नराधिप ॥ ३-१९१-९५ (२३३६६)
अतसीपुष्पवर्णाभः श्रीवत्सकृतभूषणः ।
साक्षाल्लक्ष्म्या इवावास स तदा प्रतिभाति मे ॥ ३-१९१-९६ (२३३६७)
ततो मामब्रवीद्बालः स पद्मनिभलोचनः ।
श्रीवत्सधारी द्युतिमान्वाक्यं श्रुतिसुखावहम् ॥ ३-१९१-९७ (२३३६८)
जानामि त्वां परिश्रान्तं तात विश्रामकाङ्क्षिणम् ।
मार्कण्डेय महासत्वं यावदिच्छसि भार्गव ॥ ३-१९१-९८ (२३३६९)

अभ्यन्तरं शरीरं मे प्रविश्य मुनिसत्तम ।
आस्स्वेह विहितो वासः प्रसादस्ते कृतो मया ॥ ३-१९१-९९ (२३३७०)
ततो बालेन तेनैव मुक्तस्यासीत्तदा मम ।
निर्वेदो जीविते दीर्घे मनुष्यत्वे च भारत ॥ ३-१९१-१०० (२३३७१)
ततो बालेन तेनास्यं सहसा विवृतं कृतम् ।
तस्याहमवशो वक्रे दैवयोगात्प्रवेशितः ॥ ३-१९१-१०१ (२३३७२)
ततः प्रविष्टस्तत्कुक्षिं सहसा मनुजाधिप ।
सराष्ट्रनगराकीर्णां कृत्स्नां पश्यामि मेदिनीम् ॥ ३-१९१-१०२ (२३३७३)
गङ्गां शतद्रुं सीतां च यमुनामथ कौशिकीम् ।
चर्मण्वतींवेत्रवतीं चन्द्रभागां सरस्वतीम् ॥ ३-१९१-१०३ (२३३७४)
सिन्धुं चैव विपाशां च नदीं गोदावरीमपि ।
वस्वोकसारां नलिनीं नर्मदां चैव भारत ॥ ३-१९१-१०४ (२३३७५)
नदीं ताम्रां च वेणां च पुण्यतोयां शुभावहाम् ।
सुवेणां कृष्णवेणां च इरामां च महानदीम् ॥ ३-१९१-१०५ (२३३७६)
वितस्तां च महाराज कावेरीं च महानदीम् ।
ग्तुङ्गभद्रां कृष्णवेणीं कमलां च महानदीम्'।
शोणं च पुरुषव्याघ्र विशल्यां किंपुनामपि ॥ ३-१९१-१०६ (२३३७७)
एताश्चान्याश्च नद्योऽहं पृथिव्यां या नरोत्तम ।
परिक्रामन्प्रपश्यामि तस्य कुक्षौ महात्मनः ॥ ३-१९१-१०७ (२३३७८)
ततः समुद्रं पश्मामि यादोगणनिषेवितम् ।
रत्नाकरममित्रघ्न पयसोनिधिमुत्तमम् ॥ ३-१९१-१०८ (२३३७९)
ततः पश्यामि गगनं चन्द्रसूर्यविराजितम् ।
जाज्वल्यमानं तेजोभिः पावकार्कसमप्रभम् ॥ ३-१९१-१०९ (२३३८०)
पश्यामि च महीं राजन्काननैरुपशोभिताम् ।
ग्सपर्वतवनद्वीपां निम्नगाशतसंकुलाम् ॥ ३-१९१-११० (२३३८१)
यजन्ते हि ततो राजन्ब्राह्मणा बहुभिर्मखैः ।
क्षत्रियाश् प्रवर्तन्ते सर्ववर्णानुरञ्जनैः ॥ ३-१९१-१११ (२३३८२)
वैश्याः कृषिं यथान्यायं कारयन्ति नराधिप ।
शुश्रूषायां च निरता द्विजानां वृषलास्तथा ॥ ३-१९१-११२ (२३३८३)
ततः परिपतन्राजंस्तस्य कुक्षौ महात्मनः ।
हिमवन्तं च पश्यामि हेमकूटं च पर्वतम् ॥ ३-१९१-११३ (२३३८४)
निषधं चापि पश्यामि श्वेतं च रजतान्वितम् ।
पश्यामि च महीपाल पर्वतं गन्धमादनम् ॥ ३-१९१-११४ (२३३८५)
मन्दरं मनुजव्याघ्र नीलं चापि महागिरिम् ।
पश्यामि च महाराज मेरु कनकपर्वतम् ॥ ३-१९१-११५ (२३३८६)
महेन्द्रं चैव पश्यामि विन्ध्यं च गिरिमुत्तमम् ।

मलयं चापि पश्यामि पारियात्रं च पर्वतम् ॥ ३-१९१-११६ (२३३८७)
एते चान्ये च बहवो यावन्तः पृथिवीधराः ।
तस्योदरे मया दृष्टाः सर्वे रत्नविभूषिताः ॥ ३-१९१-११७ (२३३८८)
सिंहान्व्याघ्रान्वराहांश्च पश्यामि मनुजाधिप ।
पृथिव्यां यानि चान्यानि सत्त्वानि जगतीपते ।
तानि सर्वाण्यहं तत्र पश्यन्पर्यचरं तदा ॥ ३-१९१-११८ (२३३८९)
कुक्षौ तस् नरव्याघ्र प्रविष्टः संचरन्दिशः ।
शक्रादींश्चापि पश्यामि कृत्स्नान्देवगणानहम् ॥ ३-१९१-११९ (२३३९०)
साध्यान्रुद्रांस्तथाऽऽदित्यान्गुह्यकान्पितरस्तथा ।
सर्पान्नागान्सुपर्णांश्च वसूनप्यश्विनावपि ॥ ३-१९१-१२० (२३३९१)
गन्धर्वाप्सरसो यक्षानृषींश्चैव महीपते ।
दैत्यदानवसङ्घांश्च नागांश्च मनुजाधिप ॥ ३-१९१-१२१ (२३३९२)
सिंहिकातनयांश्चापि ये चान्ये सुरशत्रवः ।
यच्च किंचिन्मया लोके दृष्टं स्थावरजङ्गमम् ॥ ३-१९१-१२२ (२३३९३)
सर्वं पश्याम्यहं राजंस्तस्य कुक्षौ महात्मनः ।
त्वरमाणः फलाहारः कृत्स्नं जगदिदं विभो ॥ ३-१९१-१२३ (२३३९४)
अन्तःशरीरे तस्याहं वर्षाणामधिकं शतम्। ३-१९१-ब्१२४ न च
पश्यामि यस्याहं देहस्यान्तं कदाचन ॥ ३-१९१-१२४ (२३३९५)
सततं धावमानश्च चिन्तयानो विशांपते ।
ग्भ्रमंस्तत्र महीपाल यदा वर्षगणान्बहून्'।
आसादयामि नैवान्तं तस्य राजन्महात्मनः ॥ ३-१९१-१२५ (२३३९६)
ततस्तमेव शरणं गतोस्मि विधिवत्तदा ।
वरेण्यं वरदं देवं मनसा कर्मणैव च ॥ ३-१९१-१२६ (२३३९७)
ततोऽहं सहसा राजन्वायुवेगेन निःसृतः ।
महात्मनो मुखात्तस्य विवृतात्पुरुषोत्तम ॥ ३-१९१-१२७ (२३३९८)
ततस्तस्यैव शाखायां न्यग्रोधस्य विशांपते ।
आस्ते मनुजशार्दूल कृत्स्नमादाय वै जगत् ॥ ३-१९१-१२८ (२३३९९)
ते नैव बालवेषेण श्रीवत्सकृतलक्षणम् ।
आसीनं तं नरव्याघ्र पश्याम्यमिततेजसम् ॥ ३-१९१-१२९ (२३४००)
ततो मामब्रवीद्बालः स प्रीतः प्रहसन्निव ।
श्रीवत्सधारी द्युतिमान्पीतवासा महाद्युतिः ॥ ३-१९१-१३० (२३४०१)
अपीदानीं शरीरेऽस्मिन्मामके मुनिसत्तम ।
उषितस्त्वं परिश्रान्तो मार्कण्डेय ब्रवीहि मे ॥ ३-१९१-१३१ (२३४०२)
मुहूर्तादथ मे दृष्टिः प्रादुर्भूता पुनर्नवा ।
मायानिर्मुक्तमात्मनमपश्यं लब्धचेतसम् ॥ ३-१९१-१३२ (२३४०३)
तस्य ताम्रतलौ तात चरणौ सुप्रतिष्ठितौ ।

सुजातौ मृदुरक्ताभिरङ्गुलीभिर्विराजितौ ॥ ३-१९१-१३३ (२३४०४)
प्रयत्नेन मया मूर्ध्ना गृहीत्वा ह्यभिवनदितौ ।
दृष्टवाऽपरिमितं तस् प्रभावममितौजसः ॥ ३-१९१-१३४ (२३४०५)
विनयेनाञ्जलिं कृत्वाप्रयत्नेनोपगम्य ह ।
दृष्टो मया स भूतात्मा देवः कमललोचनः ॥ ३-१९१-१३५ (२३४०६)
तमहं प्राञ्जलिर्भूत्वा नमस्कृत्येदमब्रवम् ।
ज्ञातुमिच्छामि देव त्वां मायां चैतां तवोत्तमाम् ॥ ३-१९१-१३६ (२३४०७)
आस्येनानुप्रविष्टोऽहं शरीरे भगवंस्तव ।
दृष्टवानखिलाँल्लोकान्समस्तान्जठरे हि ते ॥ ३-१९१-१३७ (२३४०८)
तव देव शरीरस्था देवदानवराक्षसाः ।
यक्षगन्धर्वनागाश्च जगत्स्थावरजङ्गमम् ॥ ३-१९१-१३८ (२३४०९)
त्वत्प्रसादाच्च मे देव स्मृतिर्न परिहीयते ।
द्रुतमन्तःशरीरे ते सततं परिवर्तिनः ॥ ३-१९१-१३९ (२३४१०)
निर्गतोऽहमकामस्तु इच्छया ते महाप्रभो ।
यतिष्ये पुण्डरीकाक्ष ज्ञातुं त्वाऽहमनिन्दितं ॥ ३-१९१-१४० (२३४११)
इह भूत्वा शिशुः साक्षात्किं भवानवतिष्ठते ।
पीत्वा जगदिदं सर्वमेतदाख्यातुमर्हसि ॥ ३-१९१-१४१ (२३४१२)
किमर्थं च जगत्सर्वं शरीरस्थं तवानघ ।
कियन्तं च त्वया कालमिह स्थेयमरिंदम ॥ ३-१९१-१४२ (२३४१३)
एतदिच्छामि देवेश श्रोतुं ब्राह्मणकाम्यया ।
त्वत्तः कमलपत्राक्षं विस्तरेण यथातथम् ।
महद्ध्येतदचिन्त्यं च यदहं दृष्टवान्प्रभो ॥ ३-१९१-१४३ (२३४१४)
इत्युक्तः स मया श्रीमान्देवदेवो महाद्युतिः ।
सान्त्वयन्मामिदं वाक्यमुवाच वदतांवरः ॥ ३-१९१-१४४ (२३४१५)

इति श्रीमन्महाभारते अरण्यपर्वणि मर्कण्डेयसमास्यापर्वणि
एकनवत्यधिकशततमोऽध्यायः ॥ १९१ ॥

Mahabharata - Vana Parva - Chapter Footnotes

३-१९१-४ अनन्तरिक्षे लोके इति झ ।पाठः ॥
३-१९१-६ चतुर्विधानि जरायुजाण्डजस्वेदजोद्भिज्जानि ॥
३-१९१-९ नारायणास्य अङ्कः स्थानं समीपं वा ।तत्र प्रख्यः
प्रख्यातः भगवद्भक्तेषूत्तमः। सांपराये परलोके अतिपठ्यसे
अत्यन्तं स्तूयसे। लोकैरिति शेषः ॥
३-१९१-१० विष्णोर्ब्रह्मणः उपलब्धिस्थानत्वेन संबन्धिकर्णिकोद्धरणं
कृत्वा योगकलया हृदयपुण्डरीकमुद्घात्येत्यर्थः ।रत्वया

दृग्भ्यां भगवाननेकशोऽनेकवरि दृष्ट इत्यन्वयः। रत्नानि तत्तज्जात्युत्कृष्टवस्तूनि तेषां अलकारो निवारणक्रिया। परं वैराग्यमिति यावत्। योगः अभियोगोऽभ्यासः। वैराग्याभ्यासाभ्यामित्यर्थः ॥
३-१९१-११ तव त्वां न विशतीत्यपकृष्यते ॥
३-१९१-१२ शेषं अवशिष्टम् । पञ्चमहाभूतप्रलये सतीत्यर्थः ॥
३-१९१-१५ एतत्सर्वं त्वया दृष्टमिति शेषः ॥
३-१९१-१७ स्वयंभुवे अजन्मने । पुरुषाय पूर्णाय। पुराणाय नित्यैकरूपाय। शाश्वताय अनादये। अव्ययाय नित्याय ॥
३-१९१-२० यद्येष पुरुषो वेद चेदा अपि इति झ । पाठः ॥
३-१९१-२२ तावच्छती चतुःशती । सन्ध्या पूर्वस्मिन् युगे उत्तरयुगधर्माणामुपसर्जनतया संक्रमः। सन्ध्यांशस्तूत्तरस्मिन् पूर्वयुगधर्माणाम्। तथाविध उत्तरप्रकारस्त्रिशतीमितोयमेव पूर्वयुगापेक्षया सन्ध्यांश उत्तरयुगापेक्षया सन्ध्येति चोच्यते। तथाच कृतत्रेतयोः सन्ध्यासन्ध्यांशौ सप्तशती। त्रेताद्वापरयोः पञ्चशती। द्वापारकल्योस्त्रिशती। कलिकृतयोस्तु पञ्चशतीति विज्ञेयम्। एवं च कृतस्यादौ चतुःशती कल्यपेक्षया सन्ध्यांशोपि कृतापेक्षया सन्ध्या। एवं सर्वत्र। तेन सन्ध्यासन्ध्यांशयोस्तुल्यं प्रमाणं भवति ॥
३-१९१-३१ तथा शूद्रधनार्जकाः इतिथ । पाठः ॥
३-१९१-३७ सत्येऽल्पं सत्याल्पम् । सत्यवादोऽत्यन्तमल्प इत्यर्तः ॥
३-१९१-३८ वृथा अनुभवाभावात् ॥
३-१९१-४१ मुखेभगाः प्रथमं मुखेनैव भगकार्यं कृत्वा पुरुषस् काममुद्दीपयन्त्यः । अत्यन्तं रतार्तत्वात् ॥
३-१९१-४२ अट्टमन्नं शिवो वेदो ब्राह्मणाश्च चतुष्पथाः । केशो भगं समाख्यातं शूलं तद्विक्रयं विदुरिति पूर्वेषां व्याख्यासंक्षेपः ॥
३-१९१-४५ मिथ्याधर्मः कपटधर्मः सएव ध्वजइव ख्यात्यर्थं ज्ञाप्यो येषां ते तथा चञ्चूर्यन्ते पीड्यन्ते । दिशः दिक्स्थाः जनाः ॥
३-१९१-४८ पानपाः मद्यपाः ॥
३-१९१-५६ नगराणां नगरस्थानाम् ॥
३-१९१-५७ आढ्योहमिति मदः आढ्यमदः ॥
३-१९१-५९ पुरुषादानि वृकव्याघ्रादीनि चैत्येष देवतास्थानेषु ॥
३-१९१-६३ अर्हतः योग्यान् ॥
३-१९१-८६ ततस्तं सलिलं घोरं इति क । ध। पाठः ॥

वन-अध्यय१९२

॥ श्रीः ॥

३.१९२. अध्यायः १९२

Mahabharata - Vana Parva - Chapter Topics

हरिणा मार्कण्डेयंप्रित स्वमाहात्म्यकथनपूर्वकमन्तर्धानम् ॥ १ ॥
मार्कण्डेयेन युधिष्ठिरादीन्प्रति कृष्णस्य सर्वोत्तमत्वप्रतिपादनेन तंप्रति शरणागमनचोदना ॥ २ ॥
कृष्णेन तेषां समाश्वासनम् ॥ ३ ॥

Mahabharata - Vana Parva - Chapter Text

३-१९२-० (२३४१६)
देव उवाच। ३-१९२-०क्ष् (२३९२)
कामं देवाऽपि मां विप्र न हि जानन्ति तत्त्वतः ।
त्वत्प्रीत्या तु प्रवक्ष्यामि यथेदं विमृजाम्यहम् ॥ ३-१९२-१ (२३४१७)
पितृभक्तोसि विप्रर्षे मां चैव शरणं गतः ।
ततो दृष्टोस्मि ते साक्षाद्ब्रह्यचर्यं च ते महत् ॥ ३-१९२-२ (२३४१८)
आपो नारा इति प्रोक्तास्तासां नाम कृतं मया ।
तेन नारायणप्युक्तो मम तत्त्वयनं सदा ॥ ३-१९२-३ (२३४१९)
अहंनारायणो नाम प्रभवः शाश्वतोऽव्ययः ।
विधाता सर्वभूतानां संहर्ता च द्विजोत्तम् ॥ ३-१९२-४ (२३४२०)
अहं विष्णुरहं ब्रह्मा शक्रश्चाहं सुराधिपः ।
अहं वैश्रवणो राजा यमः प्रेताधिपस्तथा ॥ ३-१९२-५ (२३४२१)
अहं शिवश्च सोमश्च कश्यपोऽथ प्रजापतिः ।
अहं धाता विधाता च यज्ञश्चाहं द्विजोत्तम ॥ ३-१९२-६ (२३४२२)
अग्निरास्यं क्षिति पादौ चन्द्रादित्यौ च लोचने ।
द्यौर्मूर्धा मे दिशः श्रोत्रे तथाऽऽपः स्वेदसंभवाः ।
सकलं च नभः कायो वायुर्मनसि मे स्थितः ॥ ३-१९२-७ (२३४२३)
मया क्रतुशतैरिष्टं बहुभिस्त्वाप्तदक्षिणैः ।
यजन्ते वेदविदुषो मां देवसदने स्थितम् ॥ ३-१९२-८ (२३४२४)
पृथिव्यां क्षत्रियेन्द्राश् पार्तिवाः स्वर्गकाङ्क्षिणः ।
यजन्ते मां तथा वैश्याः स्वर्गलोकजिगीषया ॥ ३-१९२-९ (२३४२५)
चतुःसमुद्रपर्यन्तां मेरुमन्दरभूषणाम् ।
शेषो भूत्वाऽहमेवैतां धारयामि वसुंधराम् ॥ ३-१९२-१० (२३४२६)
वाराहं रूपमास्थाय मयेयं जगती पुरा ।

मज्जमाना जले विप्र वीर्येणासीत्समुद्धृता ॥ ३-१९२-११ (२३४२७)
अग्निश्च बडबावक्रे भूत्वाऽहं द्विजसत्तम ।
पिबाम्यापः सदा विद्वंस्ताश्चैव विसृजाम्यहम् ॥ ३-१९२-१२ (२३४२८)
ब्रह्म वक्रं भुजौ क्षत्रमूरू मे संस्थिता विशः ।
पादौ शूद्रा भवन्तीमे विक्रमेण क्रमेण च ॥ ३-१९२-१३ (२३४२९)
ऋग्वेदः सामवेदश्च यजुर्वेदोऽप्यथर्वणः ।
मत्तः प्रादुर्भवन्त्येते मामेव प्रविशन्ति च ॥ ३-१९२-१४ (२३४३०)
यतयः शान्तिपरमा यतात्मानो मुमुक्षवः ।
कामक्रोधद्वेषमुक्ता निःसंङ्गा वीतकल्मषाः ॥ ३-१९२-१५ (२३४३१)
सत्वस्था निरहंकारा नित्यमध्यात्मकोविदाः ।
मामेव सततं विप्राश्चिन्तयन्त उपासते ॥ ३-१९२-१६ (२३४३२)
अहं संवर्तको वह्निरहं संवर्तको यमः ।
अहं संवर्तकः सूर्यस्त्वहं संवर्तकोऽनिलः ॥ ३-१९२-१७ (२३४३३)
तारारूपाणि दृश्यन्ते यान्येतानि नभस्तले ।
मम रूपाण्यथैतानि विद्धि त्वं द्विजसत्तम ॥ ३-१९२-१८ (२३४३४)
रत्नाकराः समुद्राश्च सर्व एव चतुर्दिशः ।
वसनं शयनं चैव विलयं चैव विद्धि मे ॥ ३-१९२-१९ (२३४३५)
मयैव सुविभक्तास्ते देवकार्यार्थसिद्धये ।
कामं क्रोधं च हर्षं च भयं मोहं तथैव च ।
ममैव विद्धि रोमाणि सर्वाण्येतानि सत्तम ॥ ३-१९२-२० (२३४३६)
प्राप्नुवन्ति नरा विप्र यत्कृत्वा कर्म शोभनम् ।
सत्यं दानं तपश्चोग्रमहिंसा चैव जन्तुषु ॥ ३-१९२-२१ (२३४३७)
मद्विधानेन विहिता मम देहविहारिणः ।
मयाऽभिभूतविज्ञाना विचेष्टन्ते न कामतः ॥ ३-१९२-२२ (२३४३८)
सम्यग्वेदमधीयाना यजन्ते विविधैर्मखैः ।
शान्तात्मानो जितक्रोधाः प्राप्नुवन्ति द्विजातयः ॥ ३-१९२-२३ (२३४३९)
---न शक्यो यो विद्वन्नरैर्दुष्कृतकर्मभिः ।
---भाभिभूतैः कृपणैरनार्यैरकृतात्मभिः ॥ ३-१९२-२४ (२३४४०)
तस्मान्महाफलंविद्धि पदं सुकृतकर्मणः ।
सुदुष्प्रापं विमूढानां मार्गं योगैर्निषेवितम् ॥ ३-१९२-२५ (२३४४१)
यदा यदा च धर्मस्य ग्लानिर्भवति सत्तम ।
अभ्युत्थानमधर्मस्य तदाऽऽत्मानं सृजाम्यहम् ॥ ३-१९२-२६ (२३४४२)
दैत्या हिंसानुरक्ताश्च अवध्याः सुरसत्तमैः ।
राक्षसाश्चापि लोकेऽस्मिन्यदोत्पत्स्यन्ति दारुणाः ॥ ३-१९२-२७ (२३४४३)
तदाऽहंसंप्रसूयामि गृहेषु शुभकर्मणाम् ।
प्रविष्टो मानुषं देहं सर्वं प्रशमयाम्यहम् ॥ ३-१९२-२८ (२३४४४)

सृष्ट्वा देवमनुष्यांस्तु गन्धर्वोरगराक्षसान् ।
स्थावराणि च भूतानि संहराम्यात्ममायया ॥ ३-१९२-२९ (२३४४५)
कर्मकाले पुनर्देहमनुचिन्त्य सृजाम्यहम् ।
आविश्य मानषं देहं मर्यादाबन्धकारणात् ॥ ३-१९२-३० (२३४४६)
श्वेतः कृतयुगे वर्णः पीतस्त्रेतायुगे मम ।
श्यामो द्वापरमासाद्य कृष्णः कलियुगे तथा ॥ ३-१९२-३१ (२३४४७)
त्रयो भागा ह्यधर्मस् तस्मिन्काले भवनति च ।
ग्यदा भवति मे वर्णः कृष्णो वै द्विजसत्तम्' ॥ ३-१९२-३२ (२३४४८)
अन्तकाले च संप्राप्ते कालो भूत्वाऽतिदारुणः ।
त्रैलोक्यं नाशयाम्येकः कृत्स्नं स्थावरजङ्गमम् ॥ ३-१९२-३३ (२३४४९)
अहं त्रिवर्त्मा विश्वात्मा सर्वलोकसुखावहः ।
अजितः सर्वगोऽनन्तो हृषीकेश उरुक्रमः ।
कालचक्रं नयाम्येको ब्रह्मन्नहमरूपकम् ॥ ३-१९२-३४ (२३४५०)
शमनं सर्वभूतानां सर्वकालकृतोद्यमम् ।
एवं प्रणिहितः सम्यङ्मायया मुनिसत्तम ।
सर्वभूतेषु विप्रेन्द्र न च मां वेत्ति कश्चन ॥ ३-१९२-३५ (२३४५१)
सर्वलोके च मां भक्ताः पूजयन्ति च सर्वशः ॥ ३-१९२-३६ (२३४५२)
यच्च किंचित्त्वया प्राप्तं मयि क्लेशात्मकं द्विज ।
सुखोदयाय तत्सर्वं श्रेयसे च तवानघ ॥ ३-१९२-३७ (२३४५३)
यच्च किंचित्त्वया लोके दृष्टं स्थावरजङ्गमम् ।
विहित सर्वथैवासौ ममात्मा भूतभावनः ॥ ३-१९२-३८ (२३४५४)
अर्धं मम शरीरस्य सर्वलोकपितामहः ।
अहं नारायणो नाम शङ्खचक्रगदाधरः ॥ ३-१९२-३९ (२३४५५)
यावद्युगानां विप्रर्षे सहस्रपरिवर्तनम् ।
तावत्स्वपिमि विश्वात्मा सर्वलोकपितामहः ॥ ३-१९२-४० (२३४५६)
एवं सर्वमहं कालमिहासे मुनिसत्तम ।
अशिशुः शिशुरूपेण यावद्ब्रह्मा न बुध्यते ॥ ३-१९२-४१ (२३४५७)
मया च दत्तो विप्राग्य्र वरस्ते ब्रह्मरूपिणा ।
असकृत्परितष्टेन विप्रर्षिगणपूजित ॥ ३-१९२-४२ (२३४५८)
सर्वमेकार्णवं दृष्ट्वा नष्टं स्थावरजङ्गमम् ।
विक्लबोसि मया ज्ञातस्ततस्ते दर्शितं जगत् ॥ ३-१९२-४३ (२३४५९)
अभ्यन्तरं शरीरस्य प्रविष्टोसि यदा मम ।
दृष्ट्वा लोकं समस्तं च विस्मितो नावबुध्यसे ॥ ३-१९२-४४ (२३४६०)
ततोसि वक्राद्विप्रर्षे द्रुतं निःसारितो मया ।
आख्यातस्ते मया चात्मा दुर्ज्ञे योपि सुरासुरैः ॥ ३-१९२-४५ (२३४६१)
यावत्स भगवान्ब्रह्मा न बुध्येत महातपाः ।

तावत्त्वमिह विप्रर्षे विस्रब्धश्चर वै सुखम् ॥ ३-१९२-४६ (२३४६२)
ततो विबुद्धे तस्मिंस्तु सर्वलोकपितामहे ।
एकीभूतः प्रवेक्ष्यामि शरीराणि द्विजोत्तम ॥ ३-१९२-४७ (२३४६३)
आकाशं पृथिवीं ज्योतिर्वायुं सलिलमेव च ।
लोके यच्च भवेच्छेषमिह स्थावरजङ्गमम् ॥ ३-१९२-४८ (२३४६४)
मार्कण्डेय उवाच। ३-१९२-४९क्ष् (२३९३)
इत्युक्त्वान्तर्हितस्तात स देवः परमाद्भुतः ।
प्रजाश्चेमाः प्रपश्यामि विचित्रा विविधाः कृताः ॥ ३-१९२-४९ (२३४६५)
एवं दृष्टं मया राजंस्तस्मिन्प्राप्ते युगक्षये ।
आश्चर्यं भरतश्रेष्ठ सर्वधर्मभृतांवरः ॥ ३-१९२-५० (२३४६६)
यः स देवो मया दृष्टः पुरा पद्मायतेक्षणः ।
स एष पुरुषव्याघ्र संबन्धी ते जनार्दनः ॥ ३-१९२-५१ (२३४६७)
अस्यैव वरदानाद्धि स्मृतिर्न प्रजहाति माम् ।
दीर्गमायुश्च कौन्तेय स्वच्छन्दमरणं मम ॥ ३-१९२-५२ (२३४६८)
स एष कृष्णो वार्ष्णेय पुराणपुरुषो विभुः ।
आस्ते हरिरचिन्त्यात्मा क्रीडन्निव महाभुजः ॥ ३-१९२-५३ (२३४६९)
एष धाता विधाता च संहर्ता चैव शाश्वतः ।
श्रीवत्सवक्षा गोविन्दः प्रजापतिपतिः प्रभुः ॥ ३-१९२-५४ (२३४७०)
दृष्ट्वेमं वृष्णिप्रवरं स्मृतिर्मामियमागता ।
आदिदेवमयं जिष्णुं पुरुषं पीतवाससम् ॥ ३-१९२-५५ (२३४७१)
सर्वेषामेव भूतानां पिता माता च माधवः ।
गच्छध्वमेनं शरणं शरण्यं कौरवर्षभाः ॥ ३-१९२-५६ (२३४७२)
वैशंपायन उवाच। ३-१९२-५७क्ष् (२३९४)
एवमुक्तास्च ते पार्ता यमौ च पुरुषर्षभौ ।
द्रौपद्या सहिताः सर्वे नमश्चक्रुर्जनार्दनम् ॥ ३-१९२-५७ (२३४७३)
स चैतान्पुरुषव्याघ्र साम्ना परमवल्गुना ।
सान्त्वयामास मानार्हो मन्यमानो यथाविधि ॥ ३-१९२-५८ (२३४७४)

इति श्रीमन्महाभारते अरण्यपर्वणि मार्कण्डेयसमास्यापर्वणि
द्विनवत्यधिकशततमोऽध्यायः ॥ १९२ ॥
Mahabharata - Vana Parva - Chapter Footnotes

३-१९२-२ ते त्वया ॥
३-१९२-३१ रक्तो द्वापरमासाद्य इति । झ। पाठः ॥
३-१९२-४७ एकीभूतो हि स्रक्ष्यामि इति झ । पाठः ॥

॥ श्रीः ॥
३.१९३. अध्यायः १९३

Mahabharata - Vana Parva - Chapter Topics
मार्कण्डेयेन युधिष्ठिरंप्रतिकलौ भविष्यल्लोकवृत्तान्तकथनम् ॥ १ ॥
कलियगान्ते कल्कित्वेनावतरिष्यता हरिणा दुष्टजनसंहारः ॥ २ ॥

Mahabharata - Vana Parva - Chapter Text

३-१९३-० (२३४७५)
वैशंपायन उवाच। ३-१९३-०क्ष् (२३९५)
युधिष्ठिरस्तु कौन्तेयो मार्कण्डेयं महामुनिम् ।
पुन- पप्रच्छ सामात्यो भविष्यां जगतो गतिम् ॥ ३-१९३-१ (२३४७६)
युधिष्ठिर उवाच। ३-१९३-२क्ष् (२३९६)
आश्चर्यभूतं भवतः श्रुतं नो वदतांवर ।
मुने भार्गव यद्वृत्तं युगादौ प्रभवाप्ययौ ॥ ३-१९३-२ (२३४७७)
अस्मिन्कलियुगे त्वस्ति पुनः कौतूहलं मम ।
समाकुलेषु धर्मेषु किंनु शेषं भविष्यति ॥ ३-१९३-३ (२३४७८)
किंवीर्या मानवास्तत्रकिमाहारविहारिणः ।
किमायुषः किंवसना भविष्यन्ति युगक्षये ॥ ३-१९३-४ (२३४७९)
कां च काष्ठां समासाद्य पुनः संपत्स्यते कृतम् ।
विस्तरेण मुने ब्रूहि विचित्राणीह भाषसे ॥ ३-१९३-५ (२३४८०)
इत्युक्तः स मुनिश्रेष्ठः पुनरेवाभ्यभाषत ।
रमयन्वृष्णिशार्दूलं पाण्डवांस्च महानृषिः ॥ ३-१९३-६ (२३४८१)
शृणु राजन्मया दृष्टं यत्पुरा श्रुतमेव च ।
अनुभूतं च राजेनद्रदेवदेवप्रसादजम् ॥ ३-१९३-७ (२३४८२)
भविष्यं सर्वलोकस्य वृत्तान्तं भरतर्षभ ।
कलुषं कालमासाद्य कथ्यमानं निबोध मे ॥ ३-१९३-८ (२३४८३)
कृते चतुष्पात्सकलो निर्व्याजोप्राधिवर्जितः ।
वृषः प्रतिष्ठितो धर्मो मनुष्ये भरतर्षभ ॥ ३-१९३-९ (२३४८४)
अधर्मपादविद्धस्तु त्रिभिरंशैः प्रतिष्ठितः ।
त्रेतायां द्वापरेऽर्धेन व्यामिश्रो धर्म उच्यते ॥ ३-१९३-१० (२३४८५)
त्रिभिरंशैरधर्मस्तु लोकानाक्रम्य तिष्ठति ।
तामसं युगमासाद्य तदा भरतसत्तम ॥ ३-१९३-११ (२३४८६)
चतुर्थांशेन धर्मस्तु मनुष्यानुपतिष्ठति ।

आयुर्वीर्यं मनो बुद्धिर्बलं तेजश्च पाण्डव ॥ ३-१९३-१२ (२३४८७)
मनुष्याणआमनुयुगं ह्रप्तन्तीति निबोध मे ।
ब्राह्मणाः क्षत्रिया वैश्याः शूद्राश्चैव युधिष्ठिर ॥ ३-१९३-१३ (२३४८८)
व्याजैर्धर्मं चरिष्यन्ति धर्मवैतंसिका नराः ।
सत्यं संक्षेप्स्यते लोके नरैः पण्डितमानिभिः ॥ ३-१९३-१४ (२३४८९)
सत्यहान्या ततस्तेषामायुरल्पं भविष्यति ।
आयुषः प्रक्षयाद्विद्यां न शक्ष्यन्त्युपशिक्षितुम् ॥ ३-१९३-१५ (२३४९०)
विद्याहीनानविज्ञानाल्लोभोप्यभिभविष्यति ।
लोभमोहपरा मूढाः कामासक्ताश् मानवाः ॥ ३-१९३-१६ (२३४९१)
वैरबद्धा भविष्यन्ति परस्परवधैषिणः ।
ब्राह्मणाः क्षत्रिया वैश्याः संकीर्यन्ते परस्परम् ॥ ३-१९३-१७ (२३४९२)
शूद्रतुल्या भविष्यन्ति तपःसत्यविवर्जिताः ।
अन्त्या मध्या भविष्यन्ति मध्याश्चान्त्या न संशयः ॥ ३-१९३-१८ (२३४९३)
ईदृशो भविता लोको युगान्ते पर्युपस्थिते ।
वस्त्राणां प्रवरा शाणी धान्यानां कोरदूपकः ॥ ३-१९३-१९ (२३४९४)
भार्यामित्राश्च पुरुषा भविष्यन्ति युगक्षये ।
मत्स्यामिषेण जीवन्तो दुहन्तश्चाप्यजैडकम् ॥ ३-१९३-२० (२३४९५)
गोषु नष्टासु पुरुषा येऽपि नित्यं धृतव्रताः ।
तेऽपिलोभसमायुक्ता भविष्यन्ति युगक्षये ॥ ३-१९३-२१ (२३४९६)
अन्योन्यं परिमुष्णन्तो हिंसयन्तश्च मानवाः ।
अजपा नास्तिकाः स्तेना भविष्यन्ति युगक्षये ॥ ३-१९३-२२ (२३४९७)
सरित्तीरेषु कुद्दालैर्वापयिष्यनति चौपधीः ।
ताश्चाप्यल्पफलास्तेषां भविष्यन्ति युगक्षये ॥ ३-१९३-२३ (२३४९८)
श्राद्धे दैवे च पुरुषा येऽपि नित्यं धृव्रताः ।
तेऽपिलोभसमायुक्ता भोक्ष्यन्तीह परस्परम् ॥ ३-१९३-२४ (२३४९९)
पिता पुत्रस् भोक्ता च पितुः पुत्रस्तथैव च ।
अतिक्रान्तानि भोज्यानि भविष्यन्ति युगक्षये ॥ ३-१९३-२५ (२३५००)
न व्रतानि चरिष्यन्ति ब्राह्मणा वेदनिन्दकाः ।
न यक्ष्यन्ति न होष्यन्ति हेतुवादविमोहिताः ।
निम्नेष्वीहां करिष्यनति हेतुवादविमोहिताः ॥ ३-१९३-२६ (२३५०१)
निम्ने कृषिं करिष्यन्ति योक्ष्यन्ति धुरि धेनुकाः ।
एकहायनवत्सांश्च वाहयिष्यन्ति मानवाः ॥ ३-१९३-२७ (२३५०२)
पुत्रः पितृवधं कृत्वा पिता पुत्रवधं तथा ।
गस्त्रियोऽपि पतिपुत्रादीन्वधिष्यनति युगक्षये'।
निरुद्वेगो बृहद्वादी न निन्दामुपलप्स्यते ॥ ३-१९३-२८ (२३५०३)
म्लेच्छभूतं जगत्सर्वं निष्क्रियं दानवर्जितम् ।

भविष्यति निरानन्दमनुत्सवमथो तथा ॥ ३-१९३-२९ (२३५०४)
प्रायशः कृपणानां हि तथा बन्धुमतामपि ।
विधवानां च वित्तानि हरिष्यन्तीह मानवाः ॥ ३-१९३-३० (२३५०५)
स्वल्पवीर्यबलाः स्वाधा लोभमोहपरायणाः ।
तत्कथादानसंतुष्ट शिष्टानामपि बान्धवाः ॥ ३-१९३-३१ (२३५०६)
परिग्रहंकरिष्यति मायाचारपरिग्रहाः ।
संघातयन्तः तय राजानः पापबुद्धयः ॥ ३-१९३-३२ (२३५०७)
परस्परवधोयुक्ता मूर्खाः पण्डितमानिनः ।
भविष्यन्ति युगस्यान्ते क्षत्रिया लोककण्टकाः ॥ ३-१९३-३३ (२३५०८)
अरक्षितारो लुब्धाश् मानाहंकारदर्पिताः ।
केवलं दण्डरुचयो भविष्यन्ति युगक्षये ॥ ३-१९३-३४ (२३५०९)
आक्रम्याक्रम्य साधूनां दारांश्चापि धनानि च ।
भोक्ष्यन्ते निरनुक्रोसा रुदतामपि भारत ॥ ३-१९३-३५ (२३५१०)
न कन्यां याचे कश्चिन्नापि कन्या प्रदीयते ।
स्वयंग्रहा भविष्यन्ति युगान्ते समुपस्थिते ॥ ३-१९३-३६ (२३५११)
राजानश्चाप्यसंतुष्टाः परार्तान्मूढचेतसः ।
सर्वोपायैर्हरिष्यन्ति युगान्ते पर्युपस्थिते ॥ ३-१९३-३७ (२३५१२)
म्लेच्छीभूतं जगत्सर्वं भविष्यति न संशयः ।
हस्तो हस्तं परिमुषेद्युगान्ते समुपस्थिते ॥ ३-१९३-३८ (२३५१३)
सत्यं संक्षिप्यते लोके नरैः पण्डितमानिभिः ।
स्थविरा बालमतयो बालाः स्थविरबुद्धयः ॥ ३-१९३-३९ (२३५१४)
भीरुस्था शूरमानी शूरा भीरुविषादिनः ।
न विश्वसन्ति चान्योन्यं युगान्ते पर्युपस्थिते ॥ ३-१९३-४० (२३५१५)
नैकभार्यं जगत्सर्वं लोभमोहव्यवस्थितम् ।
अधर्मो वर्धते तत्र न तु धर्मः प्रवर्तते ॥ ३-१९३-४१ (२३५१६)
ब्राह्मणाः क्षत्रिया वैश्या नशिष्यन्ति जनाधिप ।
एकवर्णस्तदा लोको भविष्यति युगक्षये ॥ ३-१९३-४२ (२३५१७)
न क्षंस्यति पिता पुत्रं पुत्रश्च पितरं तथा ।
बार्याश्च पतिशुश्रूषां न करिष्यन्ति संक्षये ॥ ३-१९३-४३ (२३५१८)
ये यवान्ना जनपदा गोधूमान्नास्तथैव च ।
तान्देशान्संश्रयिष्यन्ति युगान्ते पर्युपस्थिते ॥ ३-१९३-४४ (२३५१९)
स्वैराहाराश्च पुरुषा योपितश्च विशांपते ।
अन्योन्यं न सहिष्यन्ति युगान्ते पर्युपस्थिते ॥ ३-१९३-४५ (२३५२०)
म्लेच्छभूतं जगत्सर्वं भविष्यति युधिष्ठिर ।
श्राद्धे न देवान्न पितॄस्तर्पयिष्यन्ति मानवाः ॥ ३-१९३-४६ (२३५२१)
न कश्चित्कस्यचिच्छ्रोता न कश्चित्कस्यचिद्गुरुः ।

तमोग्रस्तस्तदा लोको भविष्यति जनाधिप ॥ ३-१९३-४७ (२३५२२)
परमायुश्च भविता तदा वर्षाणि षोडश ।
ततः प्राणान्विमोक्ष्यन्ति युगान्ते समुपस्थिते ॥ ३-१९३-४८ (२३५२३)
पञ्चमे वाऽथ षष्ठे वा वर्षे कन्या प्रसूयते ।
सप्तवर्षाष्टवर्षाश्च प्रजास्यन्ति नरास्तदा ॥ ३-१९३-४९ (२३५२४)
पत्यौ स्त्री तु तदा राजन्पुरुषो वा स्त्रियं प्रति ।
युगान्ते राजशार्दूल न तोषमुपयास्यति ॥ ३-१९३-५० (२३५२५)
अल्पद्रव्या वृथालिङ्गा हिंसा च प्रभविष्यति ।
न कश्चित्कस्यचिद्दाता भविष्यति युगक्षये ॥ ३-१९३-५१ (२३५२६)
अट्टशूला जनपदाः शिवशूलाश्चतुष्पथाः ।
केशशूलाः स्त्रियश्चापि भविष्यनति युगक्षये ॥ ३-१९३-५२ (२३५२७)
म्लेच्छाचाराः सर्वमभक्षा दारुणा सर्वकर्मसु ।
भाविन पश्चिमे काले मनुष्या नात्र संशयः ॥ ३-१९३-५३ (२३५२८)
क्रयविक्रयकाले च सर्वः सर्वस्य वञ्चनम् ।
युगान्ते भरतश्रेष्ठ वित्तलोभात्करिष्यति ॥ ३-१९३-५४ (२३५२९)
ज्ञानानि चाप्यविज्ञाय करिष्यन्ति क्रियास्तथा ।
आत्मच्छन्देन वर्तन्ते युगान्ते समुपस्थिते ॥ ३-१९३-५५ (२३५३०)
स्वभावात्क्रूरकर्माणश्चान्योन्यमभिशंसिनः ।
भवितारो जनाः सर्वे संप्राप्ते तु युगक्षये ॥ ३-१९३-५६ (२३५३१)
आरामांश्चैव वृक्षांश्च नाशयिष्यन्ति निर्व्यथाः ।
भविता संशयो लोके जीवितस्य हि देहिनाम् ॥ ३-१९३-५७ (२३५३२)
तथा लोभाभिभूताश्च भविष्यन्ति नरा नृप ।
ब्राह्मणांश्च हनिष्यन्ति ब्राह्मणस्वोपभोगिनः ॥ ३-१९३-५८ (२३५३३)
हाहाकृता द्विजाश्चैव भयार्ता वृषलार्दिताः ।
त्रातारमलाभन्तो वै भ्रमिष्यनति महीमिमाम् ॥ ३-१९३-५९ (२३५३४)
जीवितान्तकराः क्रूरा रौद्राः प्राणिविहिंसकाः ।
यदा भविष्यन्ति नरास्तदा संक्षेप्स्यते युगम् ॥ ३-१९३-६० (२३५३५)
आश्रयिष्यन्ति च नदी पर्वतान्विषमाणि च ।
प्रधावमाना वित्रस्ता द्विजाः कुरुकुलोद्वह ॥ ३-१९३-६१ (२३५३६)
दस्युभिः पीडिता राजन्काका इव द्विजोत्तमाः ।
कुराजभिश्च सततं करभारप्रपीडिताः ॥ ३-१९३-६२ (२३५३७)
धैर्यं त्यक्त्वा महीपाल दारुणे युगसंक्षये ।
विकर्माणि करिष्यन्ति शूद्राणां परिचारकाः ॥ ३-१९३-६३ (२३५३८)
शूद्रा धर्मं प्रवक्ष्यन्ति ब्राह्मणाः पर्युपासकाः ।
श्रोतारश्च भविष्यन्ति प्रामाण्येन व्यवस्थिताः ॥ ३-१९३-६४ (२३५३९)
विपरीतश्च लोकोऽयं भविष्यत्यधरोत्तरः ।

एडूकान्पूजयिष्यन्ति वर्जयिष्यन्ति देवताः ।
शूद्राश्च प्रभविष्यन्ति न द्विजा युगसंक्षये ॥ ३-१९३-६५ (२३५४०)
आश्रमेषुमहर्षीणां ब्राह्मणावसथेषु च ।
देवस्थानेषु चैत्येषु नागानामालयेषु च ॥ ३-१९३-६६ (२३५४१)
एडूकचिह्ना पृथिवी न देवगृहभूषिता ।
भविष्यति युगे क्षीणे तद्युगान्तस्य लक्षणम् ॥ ३-१९३-६७ (२३५४२)
दा रौद्रा धर्महीना मांसादाः पानपास्तथा ।
भविष्यन्ति नरा नित्यं तदा संक्षेप्स्यते युगम् ॥ ३-१९३-६८ (२३५४३)
पुष्पं पुष्पे यदा राजन्फले वा फलमाश्रितम् ।
प्रजास्यति महाराज तदा संक्षेप्स्यते युगम् ॥ ३-१९३-६९ (२३५४४)
अकालवर्षी पर्जन्यो भविष्यति गते युगे ।
अक्रमेण मनुष्याणां भविष्यनति तदा क्रियाः ॥ ३-१९३-७० (२३५४५)
विरोधमथ यास्यनति वृषला ब्राह्मणैः सह ।
मही म्लेच्छजनाकीर्णा भविष्यति ततोऽचिरात् ॥ ३-१९३-७१ (२३५४६)
करभारभयाद्विप्रा भजिष्यन्ति दिशो दश ।
ग्अन्यायवर्तिनश्चापि भविष्यनति नराधिपाः' ॥ ३-१९३-७२ (२३५४७)
निर्विशेषा जनपदास्तथा विष्टिकरार्दिताः ।
आश्रमानुपलप्स्यन्ति फलमूलोपजीविनः ॥ ३-१९३-७३ (२३५४८)
एवं पर्याकुले लोके मर्यादा न भविष्यति ।
ग्ब्राह्मणःक्षत्रियावैश्याः परित्यक्ष्यन्ति सत्क्रियाम्'
न स्थास्यन्त्युपदेशे च शिष्या विप्रियकारिणः ॥ ३-१९३-७४ (२३५४९)
आचार्योपनिधिश्चैव भर्त्स्यते तदनन्तरम् ।
अर्थयुक्त्या प्रवात्स्यन्ति मित्रसंबन्धिबान्धवाः ॥ ३-१९३-७५ (२३५५०)
अभावः सर्वभूतानां युगान्ते संभविष्यति ।
दिशः प्रज्वलिता सर्वा नक्षत्राण्यप्रभाणि च ॥ ३-१९३-७६ (२३५५१)
प्रधूपितानि ज्योतींषि वाताः पर्याकुलास्तथा ।
उल्कापाताश्च बहवो महाभयनिदर्शकाः ॥ ३-१९३-७७ (२३५५२)
षड्भिरन्यैश्च सहितो भास्करः प्रतपिष्यति ।
तुमुलाश्चापि निर्ह्रादा दिग्दाहाश्चापि सर्वशः ।
कबन्धान्तर्हितो भानुरुदयास्तमने तदा ॥ ३-१९३-७८ (२३५५३)
अकालवर्षी भगवान्भविष्यति सहस्रदृक् ।
सस्यानि च न रोक्ष्यन्ति युगान्ते पर्युपस्थिते ॥ ३-१९३-७९ (२३५५४)
अभीक्ष्णं क्रूरवादिन्यः परुषा रदितप्रियाः ।
भर्तॄणां वचने चैव न स्थास्यन्ति ततः स्त्रियः ॥ ३-१९३-८० (२३५५५)
पुत्राश्च मातापितरौ हनिष्यन्ति युगक्षये ।
सूदयिष्यन्ति च पतीन्स्त्रियः पुत्रानपाश्रिताः ॥ ३-१९३-८१ (२३५५६)

अपर्वणि महाराज सूर्यं राहुरुपैष्यति ।
युगान्ते हुतभुक्चापि सर्वतः प्रज्वलिष्यति ॥ ३-१९३-८२ (२३५५७)
पानीयं भोजनं चापि याचमानास्तदाऽध्वगाः ।
न लप्स्यन्ते निवासं च निरस्ताः पथि शेरते ॥ ३-१९३-८३ (२३५५८)
निर्घातवायसा नागाः शकुनाः समृगद्विजाः ।
रूक्षा वाचो विमोक्ष्यन्ति युगान्ते पर्युपस्थिते ॥ ३-१९३-८४ (२३५५९)
मित्रसंबन्धिनश्चापि संत्यक्ष्यनति नरास्तदा ।
जनं परिजनं चापि यागान्ते पर्युपस्थिते ॥ ३-१९३-८५ (२३५६०)
अथ देशान्दिशश्चापि पत्तनान्यापणानि च ।
क्रमशः संलयिष्यन्ति युगान्ते पर्युपस्थिते ॥ ३-१९३-८६ (२३५६१)
हा तात हा सुतेत्येवं तदा वाच सुदारुणाः ।
विक्रोशमानश्चान्योन्यं जनो गां पर्यटिष्यति ॥ ३-१९३-८७ (२३५६२)
ग्मोवादिनस्तथा शूद्रा ब्राह्मणाः प्राकृतप्रियाः ।
पाषण्डजनसंकीर्णा भविष्यन्ति युगक्षये' ॥ ३-१९३-८८ (२३५६३)
ततस्तुमुलसंघाते वर्तमाने युगक्षये ।
द्विजातिपूर्वको लोकः क्रमेण प्रभविष्यति ॥ ३-१९३-८९ (२३५६४)
ततः कालान्तरेऽन्यस्मिन्पुनर्लोकविवृद्धये ।
भविष्यति पुनर्दैवमनुकूलं यदृच्छया ॥ ३-१९३-९० (२३५६५)
यदा सूर्यश्च चन्द्रश्च तथा तिष्यबृहस्पती ।
एकराशौ समेष्यन्ति प्रपत्स्यति तदा कृतम् ॥ ३-१९३-९१ (२३५६६)
कालवर्षी च पर्जन्यो नक्षत्राणि शुभानि च ।
प्रदक्षिणा ग्रहाश्चापि भविष्यन्त्यनुलोमगाः ।
क्षेमं सुभिक्षमारोग्यं भविष्यति निरामयम् ॥ ३-१९३-९२ (२३५६७)
कल्की विष्णुयशा नाम द्विजः कालप्रचोदितः ।
उत्पत्स्यते महावीर्यो महाबुद्धिपराक्रमः ॥ ३-१९३-९३ (२३५६८)
संभूतः संभलग्रामे ब्राह्मणावसथे शुभे ।
ग्महात्मा वृत्तसंपन्नः प्रजानां हितकृन्नृप' ॥ ३-१९३-९४ (२३५६९)
मनसा तस्य सर्वाणि वाहनान्यायुधानि च ।
उपस्तास्यन्ति योधाश्च शस्त्राणि कवचानि च ॥ ३-१९३-९५ (२३५७०)
स धर्मविजयी राजा चक्रवर्ती भविष्यति ।
सचेमं संकुलं लोकं प्रसादमुपनेष्यति ॥ ३-१९३-९६ (२३५७१)
उत्थितो ब्राह्मणो दीप्तः क्षयान्तकृदुदारधीः ।
संक्षेपको हि सर्वस्य युगस्य परिवर्तकः ॥ ३-१९३-९७ (२३५७२)
स सर्वत्र गतान्क्षुद्रान्ब्राह्मणैः परिवारितः ।
उत्सादयिष्यति तदा सर्वम्लेच्छगणान्द्विजः ॥ ३-१९३-९८ (२३५७३)

इति श्रीमन्महाभारते अरण्यपर्वणि मार्कण्डेयसमास्यापर्वणि त्रिनवत्यधिकशततमोऽध्यायः ॥

Mahabharata - Vana Parva - Chapter Footnotes

३-१९३-३ शेषं जगद्भविष्यति उत्कर्षं प्राप्स्यति ॥
३-१९३-५ काष्ठां अवधिम् । कृतंकृतयुगम् ॥
३-१९३-८ कलुषं कलिम् ॥
३-१९३-९ निर्व्याजश्छद्महीनः । उपाधिवर्जितः लोभादिहीनः। वृषइव चतुष्पात् ॥
३-१९३-१० अर्धेनाधर्मेण ॥
३-१९३-१४ धर्मवैतंसिकाः धर्मजालिकाः धर्मजालं विस्तार्य लोकान्वञ्चयन्तीत्यर्थः ॥
३-१९३-१८ अन्त्या इति । चाण्डालाः क्षत्रियादिकर्म क्षत्रियादयश्चाण्डालकर्म करिष्यन्तीत्यृथः ॥
३-१९३-१९ शाणी शणसूतर्जा प्रवराशाटीति ख । पाठः ॥
३-१९३-२६ निम्नेषु हीनेषु कर्मसु ॥
३-१९३-३२ पापाचारपरिग्रहा इति ध । पाठः ॥
३-१९३-३७ परार्थान्परधनानि ॥
३-१९३-३८ हस्तो हस्तं परिमुषेद्धस्तवदेकोदरजोपि भ्राता भ्रातरं वञ्चयेदेव ॥
३-१९३-४१ एकाहार्यं युगं सर्वमिति झ । पाठः। एकहार्यं एकविधमेव मांसशाकादिकमाहारमर्हतीति तथा। भक्ष्याभक्ष्यविभागो नास्तीत्यर्थः ॥
३-१९३-४२ एकवर्णः वर्णविभागनाशनात् ॥
३-१९३-४३ न रक्षति पिता पुत्रमिति ध । पाठः ॥
३-१९३-४५ स्वैराचारश्चेति झ । पाठः ॥
३-१९३-४९ प्रजास्यन्ति प्रजाः जनयिष्यन्ति ॥
३-१९३-५५ ज्ञानानि ज्ञेयस्वरूपाणि ॥
३-१९३-५६ श्चान्योन्यमभिशङ्किता इति ध । पाठः ॥
३-१९३-५७ संक्षयो लोक इजि ध । पाठः ॥
३-१९३-५९ वृषलार्दिताः शूद्रपीडिताः ॥
३-१९३-६० संक्षेप्स्यते नाशं गमिष्यति ॥
३-१९३-६२ काका इव सर्वतः शङ्किनः नीचवृत्त्युपजीविनो वा ॥
३-१९३-६५ एडूकान् अस्थ्यङ्कितनानि कुड्यानि । जालूकान्पूजयिष्यन्तीति क। ध। पाठः ॥
३-१९३-७३ निर्विशेषाः तुल्याचारवेषाः । विष्टिकराः

मृतिमदत्त्वाकारयन्ति ते ॥
३-१९३-७५ आचार्योपि अपनिधिः निर्धनः भर्त्स्यते धिकूक्रिते ।अर्थयुक्त्या धनयोगेन नतु स्नेहेन धर्मेण वा ॥
३-१९३-७८ कबन्धान्तर्हितः राह्वन्तर्हितः ॥
३-१९३-९१ यदेति ।गुरुसूर्यचन्द्राः यदा युगपत्पुष्यक्षत्रमेष्यन्ति तदा कृतयुगप्रवृत्तिरितित्यर्तः ॥
३-१९३-९४ सभूतः शंबलग्नामे इति ध ।पाठः ॥

---

वन-अध्यय१९४
॥ श्रीः ॥
३.१९४. अध्यायः १९४

Mahabharata - Vana Parva - Chapter Topics
मार्कण्डेयेन युधिष्ठिरप्रति कृतयुगवृत्तान्तकथनपूर्वकं धर्माचरणचोदना ॥१ ॥

Mahabharata - Vana Parva - Chapter Text

३-१९४-० (२३५७४)
मार्कण्डेय उवाच।३-१९४-०क्ष् (२३९७)
ततश्चोरक्षयंकृत्वाद्विजेभ्यः पृथिवीमिमाम् ।
वाजिमेधे महायज्ञे विधिवत्कल्पयिष्यति ॥३-१९४-१ (२३५७५)
स्थापयित्वा च मर्यादाः स्वयंभुविहिताः शुभाः ।
पुनः पुण्ययशःकर्म जरया संश्रयिष्यति ॥३-१९४-२ (२३५७६)
तच्छीलमनुवर्स्यन्ति मनुष्या लोकवासिनः ।
विप्रैश्चोरक्षये चैव कृतेक्षेमं भविष्यति ॥३-१९४-३ (२३५७७)
कृष्णाजिनानि शक्तीश्च त्रिशूलान्यायुधानि च ।
स्थापयन्द्विजशार्दूलो देशेषु विजितेषु च ॥३-१९४-४ (२३५७८)
संस्तूयमानो विप्रेन्द्रैर्मानयानो द्विजोत्तमान् ।
कल्कीचरिष्यति महीं सदा दस्युवधे रतः ॥३-१९४-५ (२३५७९)
हा मातस्तात पुत्रेति तास्ता वाचः सुदारुणाः ।
विक्रोशमानान्सुभृशं दस्यूननेष्यति संक्षयम् ॥३-१९४-६ (२३५८०)
ततोऽधर्मविनाशो वै धर्मवृद्धिश्च भारत ।
भविष्यति कृतेप्राप्ते क्रियावांश्च जनस्तथा ॥३-१९४-७ (२३५८१)
आरामाश्चैव चैत्याश्च तटाकावसथास्तथा ।
पुष्करिण्यश्च विविधा देवतायतनानि च ॥३-१९४-८ (२३५८२)
यज्ञक्रियाश्च विविधा भविष्यन्ति कृते युगे ।

ब्राह्मणाः साधवश्चैव मुनयश्च तपस्विनः ॥ ३-१९४-९ (२३५८३)
आश्रमा हतपाषण्डाः स्थिताः सत्ये जनास्तदा ।
जायन्ति सर्वभूतानि शुध्यमानानि चैव हि ॥ ३-१९४-१० (२३५८४)
सर्वेष्वृतुषु राजेन्द्र सर्वं सस्यं भविष्यति ।
नरा दानेषु निरता व्रतेषु नियमेषु च ॥ ३-१९४-११ (२३५८५)
जपयज्ञपरा विप्रा धर्मकामा मुदा युताः ।
पालयिष्यन्ति राजानो धर्मेणेमां वसुंधराम् ॥ ३-१९४-१२ (२३५८६)
व्यवहाररता वैश्या भविष्यन्ति कृते युगे ।
षट्कर्मनिरता विप्राः क्षत्रिया रक्षणे रताः ॥ ३-१९४-१३ (२३५८७)
शुश्रूषायां रताः शूद्रास्तथा वर्णत्रयस्य च ।
एष धर्मः कृतयुगे त्रेतायां द्वापरे तथा ॥ ३-१९४-१४ (२३५८८)
पश्चिमे युगकाले च यः स ते संप्रकीर्तितः ।
सर्वलोकस् विदिता युगसह्ख्या च पाण्डव ॥ ३-१९४-१५ (२३५८९)
एतत्ते सर्वमाख्यातमतीतानागतं मया ।
वायुप्रोक्तमनुस्मृत्यपुराणमृषिसंस्तुतम् ॥ ३-१९४-१६ (२३५९०)
एवं संसारमार्गा मे बहुशश्चिरजीविनः ।
दृष्टाश्चैवानुभूताश्च किं भूयः श्रोतुमिच्छसि ॥ ३-१९४-१७ (२३५९१)
इदं चैवापरं भूयः सह भ्रातृभिरच्युत ।
धर्मसंशयमोक्षार्थं निबोध वचनं मम ॥ ३-१९४-१८ (२३५९२)
न तेऽन्यथाऽत्र विज्ञेयो धर्मो धर्मभृतांवर ।
धर्मात्मा हि सुखं राजन्प्रेत्य चेह च नन्दति ॥ ३-१९४-१९ (२३५९३)
न ब्राह्मणे परिभवः कर्तव्यस्ते कदाचन ।
ब्राह्मणः कुपितोऽहन्यादपि लोकान्प्रतिज्ञया ॥ ३-१९४-२० (२३५९४)
वैशंपायन उवाच। ३-१९४-२१क्ष् (२३९८)
मार्कण्डेयवचः श्रुत्वा कुरूणां प्रवरो नृपः ।
उवाच वचनं धीमान्परमं परमद्युतिः ॥ ३-१९४-२१ (२३५९५)
गएतच्छ्रुत्वा मया किं स्यात्कर्तव्यं मुनिसत्तम ।
कथं चायं जितोलोको रक्षितव्यो भविष्यति' ॥ ३-१९४-२२ (२३५९६)
कस्मिन्धर्मे मया स्थेयं प्रजाः संरक्षता मुने ।
कथंच वर्तमानो वै न च्यवेयं स्वधर्मतः ॥ ३-१९४-२३ (२३५९७)
मार्कण्डेय उवाच। ३-१९४-२४क्ष् (२३९९)
दयावान्सर्वबूतेषु हितो रक्तोऽनसूयकः ।
उपत्यानामिव स्नेहात्प्रजानां रक्षणे रतः ॥ ३-१९४-२४ (२३५९८)
चर धर्मं त्यजाधर्मं पितॄन्पूर्वाननुस्मर ।
प्रमादाद्यत्कृतं तेऽभूत्सम्यग्ज्ञानेन तज्जय ॥ ३-१९४-२५ (२३५९९)
अलं ते मानमाश्रित्य सततं प्रियवाग्भव ।

विजित्य पृथिवीं सर्वां मोदमानः सुखी भव ॥ ३-१९४-२६ (२३६००)
एष भूतो भविष्यश्च धर्मस्ते समुदीरितः ।
न तेऽस्त्यविदितं किंचिदतीतानागतं भुवि ॥ ३-१९४-२७ (२३६०१)
तस्मादिमं परिक्लेशं त्वं तात हृदि मा कृथाः ।
प्राज्ञास्तात न मुह्यन्ति कालेनापि प्रपीडिताः ॥ ३-१९४-२८ (२३६०२)
एष कालो महाबाहो अपि सर्वदिबौकसाम् ।
मुह्यन्ति हि प्रजास्तात कालेनापि प्रचोदिताः ॥ ३-१९४-२९ (२३६०३)
मा च तेऽत्र विशङ्का भूद्यन्मयोक्तं तवानघ ।
अतिशङ्क्य वचो ह्येतद्धर्मलोपो भवेत्तव ॥ ३-१९४-३० (२३६०४)
जातोसि प्रथिते वंशे कुरूणां भरतर्षभ ।
कर्मणा मनसा वाचा सर्वमेतत्समाचर ॥ ३-१९४-३१ (२३६०५)
युधिष्ठिर उवाच। ३-१९४-३२क्ष् (२४००)
यत्त्वयोक्तं द्विजश्रेष्ठ वाक्यं श्रुतिमनोहरम् ।
तथा करिष्ये यत्नेन भवतः शासनं विभो ॥ ३-१९४-३२ (२३६०६)
न मे लोभोस्ति विप्रेन्द्रन भयं न च मत्सरः ।
करिष्यामि हि तत्सर्वमुक्तं यत्ते मयि प्रभो ॥ ३-१९४-३३ (२३६०७)
वैशंपायन उवाच। ३-१९४-३४क्ष् (२४०१)
श्रुत्वा तु वचनं तस्य पाण्डवस्य यशस्विनः ।
संहृष्टः पाण्डवा राजन्सहिता शार्ङ्गधन्वना ॥ ३-१९४-३४ (२३६०८)
विप्र्रषभाश्च ते सर्वे ये तत्रासन्समागताः ।
तथा कथां शुभां श्रुत्वा रमार्कण्डेयस्य धमतः ।
विस्मिता समपद्यन्त पुराणस् निवेदनात् ॥ ३-१९४-३५ (२३६०९)

इति श्रीमन्महाभारते अरण्यपर्वणि मार्कण्डेयसमास्यापर्वणि
चतुर्नवत्यधिकशततमोऽध्यायः ॥ १९४ ॥

Mahabharata - Vana Parva - Chapter Footnotes

३-१९४-१ कल्पयिष्ति दास्यति ॥
३-१९४-२ वनं पुण्ययशः कर्मारमणीयं प्रवेक्ष्यति । इति झ। पाठः ॥
३-१९४-३ विप्रैर्हेतुभिः कृतेयुगे ॥
३-१९४-४ कृष्णाजिनानि ब्रह्मचारिपरिधेयानि । तेन सर्वाणि ब्राह्मणकर्माणि लक्ष्यन्ति। शक्तीरित्यादिना राजधर्माः। स्थापयान् ब्रह्मक्षत्रयोर्धर्मव्यवस्थांचक्रे इतिभावः ॥
३-१९४-१० प्रयन्ति सर्वबीजानि रोप्यमाणानि चैव हेति झ । पाठः। तत्र प्रयन्ति नश्यन्ति बीजानि संस्काराः रोप्यमाणानि क्रियमाणैः कर्मभिर्दृढं संपाद्यमानान्यपि

ज्ञानबलान्नश्यन्तीत्यर्थ ॥
३-१९४-२५ सम्यग्दानेन इति झ ।पाठः ॥
३-१९४-३४ तस्य मार्कण्डेयस् धीमत इति झ ।पाठः ॥

---

वन-अध्यय१९५
॥ श्रीः ॥
३.१९५. अध्यायः १९५

Mahabharata - Vana Parva - Chapter Topics
मार्कण्डेयेन युधिष्ठिरंप्रति
ब्राह्मणमाहात्म्यप्रतिपादकमण्डूकोपाख्यानकथनारम्भः ॥ १ ॥
इक्ष्वाकुवंशजेन परीक्षिन्नामकेन राज्ञा मृगयार्थं वनं
प्रविष्टेन उदकादर्शनरूपसमयकरणेन मण्डूककन्यायाः परिणयः
॥ २ ॥
राज्ञा समयातिलङ्घने तथा जले निमज्जनम् ॥ ३ ॥
तदन्वेषणाय राज्ञा मण्डूकहनने तापसरूपिणा मण्डूकराजेन
तननिवारणएन तस्याः स्वपुत्रीत्वकथनादिपूर्वकं पुनस्तस्मै तस्याः
प्रदानम् ॥ ४ ॥
मार्कण्डेयेन मण्डूकपुन्याः पुत्रयोः शलदलयोर्वृत्तकथनपूर्वकं
वामदेवमुनिमाहात्म्यकथनम् ॥ ५ ॥

Mahabharata - Vana Parva - Chapter Text

३-१९५-० (२३६१०)
वैशंपायन उवाच। ३-१९५-०क्ष् (२४०२)
भूय एव ब्राह्मणमाहात्म्यं वक्तुमर्हसीत्यब्रवीत्पाण्डवेयो मार्कण्डेयम् ॥
३-१९५-१ (२३६११)
अथाचष्ट मार्कण्डेयोऽपूर्वमिदं श्रूयतां ब्राह्मणानां चरितम् ॥
३-१९५-२ (२३६१२)
अयोध्यायामिक्ष्वाकुकुलोद्वहः पार्थिवः परीक्षिन्नाम मृगयामगमत् ॥
३-१९५-३ (२३६१३)
स एकोऽश्वेन मृगमन्वसरत् मृगो दूरमपाहरत् ॥ ३-१९५-४ (२३६१४)
अध्वनि जातश्रमः क्षुत्तृष्णाभिभूतश्चैकस्मिन्देशे नीलं गहनं
वनषण्डमपश्यत् ॥ ३-१९५-५ (२३६१५)
तस्याविशेषतो वनषण्डस्य मध्येऽतीव रमणीयं सरो दृष्ट्वा
साश्व एव व्यगाहत ॥ ३-१९५-६ (२३६१६)
अथाश्वस्तः स बिसमृणालमश्वायाग्रतो निक्षिप्य पुष्करिणीतीरे

संविवेश ततः शयानो मधुरंगीतमशृणोत् ॥ ३-१९५-७ (२३६१७)
स श्रुत्वाऽचिन्तयन्नेह मनुष्यगतिं पश्यामि कस्य स्वल्वयं
गीतंशब्द इति ॥ ३-१९५-८ (२३६१८)
अथापश्यत्कन्यां परमरूपदर्शनीयां पुष्पाण्यवचिन्वतीं गायन्तीं
च अथ सा राज्ञः समीपे पर्यक्रामत् ॥ ३-१९५-९ (२३६१९)
तामब्रवीद्राजा कस्यासि भद्रे का वा त्वमिति सा प्रत्युवाच कन्याऽस्मीति
तां राजोवाचार्थी त्वयाऽहमिति ॥ ३-१९५-१० (२३६२०)
अथोवाच कन्या समयेनाहं शक्या त्वया लब्धुं नान्यथेति राजा तां
समयमपृच्छत् मण्डूकराजस्य कः समय इति ततः कन्येदमुवाच
नोदकं मे दर्शयितव्यमिति ॥ ३-१९५-११ (२३६२१)
स राजा तां बाढमित्युक्त्वा तां समागम्य तयासह तत्र तस्थौ ॥
३-१९५-१२ (२३६२२)
ततस्तत्रैवासीने राजनि सा सेनाऽन्वगच्छत् ॥ ३-१९५-१३ (२३६२३)
पदेनानुपदं दृष्ट्वा राजानं परिवार्यातिष्ठत अथ पर्याश्वस्तश्च
राजा तयैव सह शिविकया प्रायादविषादः स्वनगरमनुप्राप्य रहसि
तया रममाणो न कांश्चिदपश्यत् ॥ ३-१९५-१४ (२३६२४)
अथ प्रधानामात्योऽभ्याशचरास्तस्य स्त्रियोऽपृच्छत् ॥ ३-१९५-१५ (२३६२५)
किमत्र प्रयोजनं वर्तते इत्यथाब्रुवंस्ताः स्त्रियः ॥ ३-१९५-१६ (२३६२६)
अपूर्वमिव पश्याम उदकं नात्र नीयत इत्यथामात्योऽनुदकं वनं
कारयित्वोदारवृक्षं बहुपुष्पफलमूलं तस्य मध्ये मुक्ताजालमयीं
पार्श्वे वापीं गूढां सुधोपलिप्तां स रहस्युपगम्य राजानमब्रवीत् ॥
३-१९५-१७ (२३६२७)
वनमिदमुदारमनुदकं साध्वत्र सहैतया गम्यतामिति ॥ ३-१९५-१८ (२३६२८)
स तस्य वचनात्तयैव सह देव्या तद्वनं प्राविशत्स
कदाचित्तस्मिन्कानने रम्ये तयैव स व्यवाहरदथक्षुत्तृष्णार्दितः
श्रान्तोऽतिमुक्तागारमपश्यत् ॥ ३-१९५-१९ (२३६२९)
तत्प्रविश्यराजा सह प्रियया सुसंस्कृतां विमलां सलिलपूर्णां
वापीमपश्त् ॥ ३-१९५-२० (२३६३०)
दृष्ट्वैव च तां तस्याश्च तीरे सहैव तया देव्याऽवातिष्ठत् ॥
३-१९५-२१ (२३६३१)
अथ ता देवीं स राजाऽब्रवीत्साध्ववतर वापीसलिलमिति सा तद्वच
श्रुत्वाऽवतीर्य वापीं न्यमज्जन्न पुनरुदकादुदमज्जत् ॥ ३-१९५-२२
(२३६३२)
तां स मृगयमाणो राजा नापश्यद्वापीमथ निःस्राव्य मण्डूकं
श्वभ्रमुखे दृष्ट्वा क्रुद्ध आज्ञापयामास स राजा ॥ ३-१९५-२३
(२३६३३)

सर्वमण्डूकवधः क्रियतामिति योमयाऽर्थी स मां
मृतमण्डूकोपायनमादायोपतिष्ठेदिति ॥ ३-१९५-२४ (२३६३४)
अथ मण्डूकवधे घोरे क्रियमाणे दिक्षु सर्वासु रमण्डूकान्भयमाविवेश
ते भीता मण्डूकराज्ञे यथावृत्तं न्यवेदयन् ॥ ३-१९५-२५ (२३६३५)
ततो मण्डूकराट् तापसवेषधारी राजानमभ्यगच्छदुपेत्य चैनमुवाच
॥ ३-१९५-२६ (२३६३६)
मा राजन्क्रोधवशं गमः प्रसादं कुरु नार्हसि मण्डूकानामनपराधिनां
वधं कर्तुमिति श्लोकौ चात्र भवतः ॥ ३-१९५-२७ (२३६३७)
मा मण्डूकाञ्जिघांसीस्त्वं कोपं संधारयाच्युत । प्रक्षिपन्ति
वधाङ्गेका जनानां परिजानताम् ॥ ३-१९५-२८ (२३६३८)
प्रतिजानीहि नैतांस्त्वं प्राप्य क्रोधं विमोक्ष्यसे । अलं कृत्वा
तवाधर्मं मण्डूकैः किं हतैर्हि ते ॥ ३-१९५-२९ (२३६३९)
तमेवंवादिनमिष्टजनवियोगशोकपरीतात्मा राजाऽथोवाच ॥ ३-१९५-३०
(२३६४०)
न हि क्षम्यते तन्मया हनिष्याम्येतानेतैर्दुरात्मभिः प्रिया मे
भक्षिता सर्वथैव मे वध्या मण्डूका नार्हसि विद्वन्मामुपरोद्धुमिति ॥
३-१९५-३१ (२३६४१)
स तद्वाक्यमुपलभ्यव्यथितेन्द्रियमनाः प्रोवाच प्रसीद
राजन्नहमायुर्नाम मण्डूकराजो मम सा दुहिता सुशोभना नाम तस्या हि
दौःशील्यमेतद्बहवस्तया राजानो विप्रलब्धपूर्वा इति ॥ ३-१९५-३२
(२३६४२)
तमब्रवीद्राजा या सा तव रदुहिता तया समर्थी सा मे दीयतामिति ॥
३-१९५-३३ (२३६४३)
अथैनां राज्ञे पिताऽदादब्रवीच्चैनामेनं राजानं शुश्रूषस्वेति ॥
३-१९५-३४ (२३६४४)
स एवमुक्त्वा दुहितरं क्रुद्धः शशाप यस्मात्त्वया राजानो विप्रलब्धा
बहवस्तस्मादब्रह्मण्यानि तवापत्यानि भविष्यन्त्यानृतिकत्वात्तवेति ॥
३-१९५-३५ (२३६४५)
स च राजा तामुपलभ्य तस्यां सुरतगुणनिबद्धहृदयो
लोकत्रयैश्वर्यमिवोपलभ्य हर्षबाष्पसन्दिग्धया वाचा
प्रणिपत्याभिपूज्य मण्डूकराजमब्रवीदनुगृहीतोस्मीति ॥ ३-१९५-३६
(२३६४६)
स च मण्डूकराजो दुहितरमनुज्ञाप्य यथागतमगच्छत् ॥ ३-१९५-३७
(२३६४७)
अथ कस्यचित्कालस्य तस्यां कुमारास्त्रयस्तस्य राज्ञः संबभूवुः
शलो दलो बलश्चेति ततस्तेषां ज्येष्ठं शलं समये पिता

राज्येऽभिषिच्य तपसि धृतात्मा वनं जगाम ॥ ३-१९५-३८ (२३६४८)
अथ कदाचिच्छलो मृगयामनुचरन्मृगमासाद्य रथेनान्वधावत् ॥
३-१९५-३९ (२३६४९)
सूतं चोवाच शीघ्रं मां वाहयस्वेति स तथोक्त सूतो राजानमब्रवीत् ॥
३-१९५-४० (२३६५०)
न क्रियतामनुबन्धो नैष शक्यस्त्वया मृगोऽयं ग्रहीतुं यद्यपि
ते रथे युक्तौ वाम्यौ स्यातामिति ततोऽब्रवीद्राजा सूतमाचक्ष्व मे
वाम्यौ वाजिनौ त्वा पृच्छामीति ॥ स एवमुक्तो राजभयभीतः सूतो
वामदेवशापभयभीतश्चास्योपाचख्यौ ॥ वामदेवस्याश्वौ वाम्यौ
मनोजवाविति ॥ ३-१९५-४१ (२३६५१)
अथैनमेवं ब्रुवाणमब्रवीद्राजा वामदेवाश्रमं प्रयादहीति स गत्वा
वामदेवाश्रमं तमृषिमब्रवीत् ॥ ३-१९५-४२ (२३६५२)
भगवन्मृगो मे विद्धः पलायते संभावयितुमर्हसि वाम्यौ
दातुमिति तमब्रवीदृषिर्ददानि ते वाम्यौ कृतकार्येण भवता
ममैव वाम्यौ निर्यातयितव्यौ क्षिप्रमिति स च तावश्वौ
प्रतिगृह्यानुज्ञाप्य ऋषिं प्रायाद्वाजियुक्तेन रथेन मृगं प्रति
गच्छंश्चाब्रवीत्सूतमश्वरत्नद्वयमावयोर्योग्यं नैतौ प्रतिदेयौ
वामदेवायेत्युक्त्वा मृगमवाप्य स्वनगरमेत्याश्वावन्तःपुरेऽस्थापयत् ॥
३-१९५-४३ (२३६५३)
अथर्षिश्चिन्तयामास तरुणो राजपुत्रः कल्याणं पत्रमासाद्य रमते
न मे वाम्यौ प्रतिनिर्यातयत्यहो कष्टमिति ॥ ३-१९५-४४ (२३६५४)
स मनसा विचिन्त्य मासि पूर्णे शिष्यमब्रवीत् ॥ ३-१९५-४५ (२३६५५)
गच्छात्रेय राजानं ब्रूहि यदि पर्याप्तं निर्यातयोगाध्यायवाम्याविति स
गत्वैवं तं राजानमब्रवीत्तराजा प्रत्युवाच राज्ञामेतद्वाहनमनर्हा
ब्राह्मणा रत्नानामेवंविधानां न किंचित् ब्राह्मणानामश्वैः कार्यं साधु
गम्यतामिति ॥ ३-१९५-४६ (२३६५६)
स गत्वैतदुपाध्यायायाचष्ट तच्छ्रुत्वा वचनमप्रियं वामदेवः
क्रोधपरीतात्मा स्वयमेव राजानमभिगम्याश्वार्थमचोदयन्न
चाददद्राजा ॥ ३-१९५-४७ (२३६५७)
वामदेव उवाच। ३-१९५-४८क्ष् (२४०३)
प्रपच्छ वाम्यौ मम पार्थिव त्वं
कृतं हि ते कार्यमाभ्यामशक्यम् ।
मा त्वा वधीद्वरुणो घोरपाशै-
र्ब्रह्मक्षत्रस्यान्तरे वर्तमानः ॥ ३-१९५-४८ (२३६५८)
राजोवाच। ३-१९५-४९क्ष् (२४०४)
अनड्वाहौ सुव्रतौ साधु दान्ता-

वेतद्विप्राणां वाहनं वामदेव ।
ताभ्यां याहि त्वं यत्र कामो महर्षे-
च्छन्दांसि वै त्वादृशं संवहन्ति ॥ ३-१९५-४९ (२३६५९)
वामदवे उवाच। ३-१९५-५०क्ष् (२४०५)
छन्दांसि वै मादृशं संवहन्ति
लोकेऽमुष्मिन्पार्थिव यानि सन्ति ।
अस्मिस्तु लोके मम यानमेत-
दस्मद्विधानामपरेषां च राजन् ॥ ३-१९५-५० (२३६६०)
राजोवाच। ३-१९५-५१क्ष् (२४०६)
चत्वारस्त्वां वा गर्दभाः संवहन्तु
श्रेष्ठाश्वतर्यो हरयो वातरंहाः ।
तैस्त्वं याहि रक्षत्रियस्यैष वाहो
ममैव वाम्यौ न तवैतौ हि विद्धि ॥ ३-१९५-५१ (२३६६१)
वामदेव उवाच। ३-१९५-५२क्ष् (२४०७)
घोरं व्रतं ब्राह्मणस्यैतदाहु-
रेतद्राजन्यदिहाजीवमानः ।
अयस्मया घोररूपा महान्त-
श्चत्वारो वा यातुधानाः सुरौद्राः ।
मया प्रयुक्तास्त्वद्वधमीप्समाना
वहन्तु त्वां शितशूलाश्चतुर्धा ॥ ३-१९५-५२ (२३६६२)
राजोवाच। ३-१९५-५३क्ष् (२४०८)
ये त्वां विदुर्ब्राह्मणं वामदेव
वाचा हन्तुं मनसा कर्मणा वा ।
ते त्वां सशिष्यमिह पातयन्तु
मद्वाक्यनुन्नाः शितशूलासिहस्ताः ॥ ३-१९५-५३ (२३६६३)
श्वामदेव उवाच। ३-१९५-५४क्ष् (२४०९)
ममैतौ वाम्यौ प्रतिगृह्य राजन्
पुनर्ददानीति प्रपद्य मे त्वम् ।
प्रयच्छ शीघ्रं मम वाम्यौ त्वमश्वौ
यद्यात्मानं जीवितुं ते क्षमं स्यात् ॥ ३-१९५-५४ (२३६६४)
राजोवाच। ३-१९५-५५क्ष् (२४१०)
न ब्राह्मणेभ्यो मृगया प्रसूता
न त्वाऽनुशास्म्यद्यप्रभृति ह्यसत्यम् ।
तवैवाज्ञां संप्रणिधाय सर्वां
तथा ब्रह्मन्पुण्यलोकं लभेयम् ॥ ३-१९५-५५ (२३६६५)
वामदेव उवाच। ३-१९५-५६क्ष् (२४११)

नानुयोगा ब्राह्मणानां भवन्ति
वाचा राजन्मनसा कर्मणा वा ।
यस्त्वेवं ब्रह्म तपसाऽन्वेति विद्वां-
स्तेन श्रेष्ठो भवति हि जीवमानः ॥ ३-१९५-५६ (२३६६६)
मार्कण्डेय उवाच। ३-१९५-५७क्ष् (२४१२)
एवमुक्ते वामदेवेन राजन्
समुत्तस्थू राक्षसा घोररूपाः ।
तैः शूलहस्तैर्वध्यमानः स राजा
प्रोवाचेदं वाक्यमुच्चैस्तदानीम् ॥ ३-१९५-५७ (२३६६७)
इक्ष्वाकवो वा यदि मां त्यजेयु-
र्ये ते विधेया भुवि चान्ये महीपाः ।
नोत्स्रक्ष्येऽहं वामदेवस् वाम्यौ
नैवंविधा धर्मशीला भवन्ति ॥ ३-१९५-५८ (२३६६८)
एवं ब्रुवन्नेव स यातुधानै-
र्हतो जगामाशु महीं क्षितीशः ।
ततो विदित्वा नृपतिं निपातित-
मिक्ष्वाकवो वै दलमभ्यषिञ्चन् ॥ ३-१९५-५९ (२३६६९)
राज्ये तदा तत्र गत्वा स विप्रः
प्रोवाचेदं वचनं वामदेवः ।
दलं राजानं ब्राह्मणानां हि देय-
मेवं राजन्सर्वधर्मेषु दृष्टम् ॥ ३-१९५-६० (२३६७०)
बिभेषि चेत्त्वमधर्मान्नरेन्द्र
प्रयच्छ मे शीघ्रमेवाद्य वाम्यौ ।
एतच्छ्रुत्वा वामदेवस् वाक्यं
स पार्थिवः सूतमुवाच रोषात् ॥ ३-१९५-६१ (२३६७१)
एकं हि मे सायकं चित्ररूपं
दुग्धं विषेणाहरसंगृहीतम् ।
येन विद्धो वामदेवः शयीत
संदश्यमानः श्वभिरार्तरूपः ॥ ३-१९५-६२ (२३६७२)
वामदेव उवाच। ३-१९५-६३क्ष् (२४१३)
जानामि पुत्रं दशवर्षं तवाहं
जातं महिष्यां श्येनजितं नरेन्द्र ।
एतं जहि त्वं मद्वचनात्प्रणुन्न-
स्तूर्णं प्रियं सायकैर्घोररूपैः ॥ ३-१९५-६३ (२३६७३)
मार्कण्डेय उवाच। ३-१९५-६४क्ष् (२४१४)
एवमुक्तो वामदेवेन राजन्न-

न्तःपुरे राजपुत्रं जघान ।
स सायकस्तिग्मतेजा विसृष्टः
श्रुत्वा दलस्तत्र वाक्यं बभाषे ॥ ३-१९५-६४ (२३६७४)
इक्ष्वाकवो हन्त चरामि वः प्रियं
निहन्मीमं विप्रमद्य प्रमथ्य ।
आनीयतामपरस्तिग्मतेजाः
पश्यध्वं मे वीर्यमद्य क्षितीशाः ॥ ३-१९५-६५ (२३६७५)
वामदेव उवाच। ३-१९५-६६क्ष् (२४१५)
यत्त्वमेनं सायकं घोररूपं
विषेण दिग्धं मम संदधासि ।
न त्वेतं त्वं शरवर्षं विमोक्तुं
संधातुं वा शक्ष्यसे मानवेन्द्र ॥ ३-१९५-६६ (२३६७६)
राजोवाच। ३-१९५-६७क्ष् (२४१६)
इक्ष्वाकवः पश्त मां गृहीतं
न वै शक्नोम्येष शरं विमोक्तुम्
न चास्य कर्तुं नाशमभ्युत्सहामि
आयुष्मान्वै जीवतु वामदेवः ॥ ३-१९५-६७ (२३६७७)
वैमदेव उवाच। ३-१९५-६८क्ष् (२४१७)
संस्पृश्यैनां महीषीं सायकेन
ततस्तस्मादेनसो मोक्ष्यसे त्वम् ।
ततस्तथा कृतवान्पार्थिवस्तु
ततो मुनिं राजपुत्री बभाषे ॥ ३-१९५-६८ (२३६७८)
यथा युक्ता वामदेवाहमेनं
दिनेदिने संदिशन्ती नृशंसम् ।
ब्राह्मणेभ्यो मृगयती सूनृतानि
तथा ब्रह्मन्पुण्यलोकं लभेयम् ॥ ३-१९५-६९ (२३६७९)
वामदेव उवाच। ३-१९५-७०क्ष् (२४१८)
त्वया त्रातं राजकुलं शुभेक्षणे
वरं वृणीष्वाप्रतिमं ददानि ते ।
प्रशाधीमं स्वजनं राजपुत्रि
इक्ष्वाकुराज्यं सुमहच्चाप्यनिन्द्ये ॥ ३-१९५-७० (२३६८०)
राजपुत्र्युवाच। ३-१९५-७१क्ष् (२४१९)
वरं वृणे भगवंस्त्वेवमेष
विमुच्यतां किल्विषादद्य भर्ता ।
शिवेन जीवामि सपुत्रबान्धवं
वरो वृतो ह्येष मया द्विजाग्र्य ॥ ३-१९५-७१ (२३६८१)

मार्कण्डेय उवाच। ३-१९५-७२क्ष् (२४२०)
श्रुत्वा वच स मुनी राजपुत्र्या-
स्तथाऽस्त्विति प्राह कुरुप्रवीर ।
ततः स राजा मुदितो बभूव
वाम्यौ चास्मै प्रददौ संप्रणम्य ॥ ३-१९५-७२ (२३६८२)

इति श्रीमन्महाभारते अरण्यपर्वणि मार्कण्डेयसमास्यापर्वणि
पञ्चनवत्यधिकशततमोऽध्यायः ॥ १९५ ॥

Mahabharata - Vana Parva - Chapter Footnotes

३-१९५-७ आश्वस्त इति छेदः ॥
३-१९५-१६ प्रयोजनं कर्तव्यम् ॥
३-१९५-१९ अतिमुक्तागारं वासन्तीगृहम् ॥
३-१९५-२८ प्रक्षीयते धनोद्रेको जनानामविजानताम् इति झ
। पाठः। धनोद्रेकः श्रीतपसोरुत्कर्षः ॥
३-१९५-२९ प्तिजानीहि निश्चयं कुरु । प्राप्य प्रापय्य मृत्युम्। क्रोधं
स्त्रीशोकजम्। अलं कृत्वा मा करु ॥
३-१९५-३५ ब्रह्मण्यं ब्राह्मणहितं तेन रहितानि अब्रह्मण्यानि ॥
३-१९५-४१ वाम्यौ वामदेवीयौ रथे युक्तौ अश्वौ अश्वतरौ ॥
३-१९५-४४ पत्रं वाहनम् ॥
३-१९५-४८ अन्तरे भेदे ॥
३-१९५-५१ वाहो वाहनम् ॥
३-१९५-५२ यदेतत् ब्राह्मणस्य स्वं आजीवमान उपजीवमानोसि एतदिह
घोरमनिष्टपाकं व्रतं कर्म आहुरित्यन्वयः । वहंतु चतुर्दिक्षु
प्रापयन्तु चतुर्धाकृत्वेति शेषः ॥
३-१९५-५३ त्वां मां हन्तुमुद्युक्तं ते मदीयास्त्वामेव पातयन्त्वित्यर्थः ॥
३-१९५-५५ असत्यं मिथ्यावादिनमपि त्वा त्वां नानुशास्मि न दण्डयामि
। अद्यप्रभृति तवाज्ञामिति संबन्धः। तवापराधान् क्षमिष्ये आज्ञया
च वर्तिष्ये इति वरद्वयं ज्ञेयम् ॥
३-१९५-५६ अनुयोगः शासनम् । अदण्ड्या ब्राह्मणा
इत्यर्थः। ब्रह्म ब्राह्मणजातिम्। यो ब्राह्मणसेवी स जीवत्यन्यो
नश्यतीत्यर्थः। वरद्वयमपि निरर्थकमिति भावः ॥
३-१९५-५८ ब्रह्मन्दलो वा विधेया मे यदि चेमे विशोपि इति झ
। पाठः। दलः कनिष्ठो भ्राता। रविधेया आज्ञाकारिणः ॥
३-१९५-५९ निपातितं मृतम् ॥
३-१९५-६३ एतं जहि तव सायकस्त्वत्पुत्रमेव हिंसिष्यति नतु मामित्यर्थः ॥

३-१९५-६७ एवमुक्त्वा वामदेवेन स्तम्भितहस्तपादो राजोवाच इक्ष्वाकव इति ॥
३-१९५-६८ संस्पृश्य हत्वा ।एनसो ब्रह्महत्याध्यवसायजात्पापात् ॥
३-१९५-६९ एनं नृशंसं भर्तारं दिनेदिने सूनृतानि कल्याणकराणि वाक्यानि संदिशन्तीति संबन्धः ।ब्रह्मणेभ्यो मृगयती ब्राह्मणान् सेवितुमिच्छन्ती ॥

---

वन-अध्यय१९६
॥ श्रीः ॥
३.१९६. अध्यायः १९६

Mahabharata - Vana Parva - Chapter Topics
मार्कण्डेयेन सुखदुःखनिरूपकबकशक्रसंवादानुवाः ॥१ ॥

Mahabharata - Vana Parva - Chapter Text

३-१९६-० (२३६८३)
वैशंपायन उवाच।३-१९६-०क्ष् (२४२१)
मार्कण्डेयमृषयो ब्राह्मणा युधिष्ठिरश्च ।
पर्यपृच्छन्नृषिः केन दीर्घायुरासीद्बकः ॥३-१९६-१ (२३६८४)
मार्कण्डेयस्तु तान्सर्वान्प्रत्युवाच महातपाः ।
दीर्घायुश्च बकोराजन्नृषिर्नात्र विचारणा ॥३-१९६-२ (२३६८५)
एतच्छ्रुत्वा तु कौन्तेयो भ्रातृभिः सह भारत ।
मार्कण्डेयं पर्यपृच्छद्धर्मराजो युधिष्ठिरः ॥३-१९६-३ (२३६८६)
बकदाल्भ्यौ महात्मानौ श्रूयेते चिरजीविनौ ।
सखायौ देवराजस् यतावृषी लोकसंमतौ ॥३-१९६-४ (२३६८७)
एतदिच्छामि भगवन्बकशक्रसमागमम् ।
सुखदुःखसमायुक्तं तत्त्वेन कथितं त्वया ॥३-१९६-५ (२३६८८)
मार्कण्डेय उवाच।३-१९६-६क्ष् (२४२२)
वृत्ते देवासुरे राजन्संग्रामे रोमहर्षणे ।
त्रयाणामपि लोकानामिन्द्रो लोकाधिपोऽभवत् ॥३-१९६-६ (२३६८९)
सम्यग्वर्षति पर्जन्ये सस्यसंपद उत्तमाः ।
निरामयाः सुधर्मिष्ठाः प्रजा धर्मपरायणाः ।
मुदितश्च जनः सर्वः स्वधर्मेषु व्यवस्थितः ॥ ३-१९६-७ (२३६९०)
ताः प्रजा मुदिताः सर्वा दृष्ट्वा बलनिषूदनः ।
ततस्तु मुदितोराजन्देवराजः शतक्रतुः ॥३-१९६-८ (२३६९१)
ऐरावतं समास्थाय अपश्यन्मुदिताः प्रजाः ।
आश्रमांश्च विचित्रांश् नदीश्च विविधाः शुभाः ॥३-१९६-९ (२३६९२)

नगराणि समृद्धानि घेटाञ्जनपदांस्तथा ।
प्रजापालनदक्षांश्च नरेन्द्रान्धर्मचारिणः ॥ ३-१९६-१० (२३६९३)
उदपानं प्रपा वापी तटाकानि सरांसि च ।
नानाब्रह्मसमाचारैः सेवितानि द्विजोततमैः ॥ ३-१९६-११ (२३६९४)
ततोऽवतीर्य रम्यायां पृथ्व्यां राजञ्छतक्रतुः ।
तत्र रम्ये शिवे देशे बहुवृक्षसमाकुले ॥ ३-१९६-१२ (२३६९५)
पूर्वस्यां दिशि रम्यायां समुद्राभ्याशतो नृप ।
तत्राश्रमपदं रम्यं मृगद्विजनिषेवितम् ।
तत्राश्रमपदे रम्ये बकं पश्यति देवराट् ॥ ३-१९६-१३ (२३६९६)
बकस्तु दृष्ट्वा देवेन्द्रं दृढं प्रीतमनाऽभवत् ।
पाद्यासनार्थदानेन फलमूलैरथार्चयत् ॥ ३-१९६-१४ (२३६९७)
सुखोपविष्टो वरदस्ततस्तु बलसूदनः ।
ततः प्रश्नं बकं देवं उवाच त्रिदशेश्वरः ॥ ३-१९६-१५ (२३६९८)
शतं वर्षसहस्राणि मुने जातस्य तेऽनघ ।
समाख्याहि मम ब्रह्मन्किं दुःखं चिरजीविनाम् ॥ ३-१९६-१६ (२३६९९)
बक उवाच। ३-१९६-१७क्ष् (२४२३)
अप्रियैः सह संवासः प्रियैश्चापि विनाभवः ।
असद्भिः संप्रयोगश्च तद्दुःखं चिरजीविनाम् ॥ ३-१९६-१७ (२३७००)
पुत्रदारविनाशोऽत्र ज्ञातीनां सुहृदामपि ।
परेष्वायत्तता कृच्छ्रं किंनु दुःखतरं ततः ॥ ३-१९६-१८ (२३७०१)
नान्यद्दुःखतरं किंचिल्लोकेषु प्रतिभाति मे ।
अर्थैर्विहीनः पुरुषः एरैः संपरिभूयते ॥ ३-१९६-१९ (२३७०२)
अकुलानां कुले भावं कुलीनानां कुलक्षयम् ।
संयोगं विप्रयोगं च पश्यन्ति चिरजीविनः ॥ ३-१९६-२० (२३७०३)
अपिप्रत्यक्षमेवैतत्तव देघ शतक्रतो ।
अकुलानां समृद्धानां कथं कुलविपर्ययः ॥ ३-१९६-२१ (२३७०४)
देवदानवगन्धर्वमनुष्योरगराक्षसाः ।
प्राप्नुवन्ति विपर्यासं किंनु दुःखतरं ततः ॥ ३-१९६-२२ (२३७०५)
कुले जाताश् क्लिश्यन्ते दौष्कुलेयवशानुगाः ।
आढ्यैर्दरिद्राऽवमताः किंनु दुःखतरं ततः ॥ ३-१९६-२३ (२३७०६)
लोके वैधर्म्यमेतत्तु दृश्ते बहुविस्तरम् ।
हीनज्ञानाश्च हृष्यन्ते क्लिश्यन्ते प्राज्ञकोविदाः ।
बहुदुःखपरिक्लेशं मानुष्यमिह दृश्यते ॥ ३-१९६-२४ (२३७०७)
इन्द्र उवाच। ३-१९६-२५क्ष् (२४२४)
पुनरेव महाभाग देवर्षिगणसेवित ।
समाख्याहि मम ब्रह्मन्किं सुखं चिरजीविनाम् ॥ ३-१९६-२५ (२३७०८)

बक उवाच। ३-१९६-२६क्ष् (२४२५)
अष्टमे द्वादशे वाऽपि शाकं यः पचते गृहे ।
कुमित्राण्यनपाश्रित् किं वै सुखतरं ततः ॥ ३-१९६-२६ (२३७०९)
यत्राहानि न गण्यन्ते नैनमाहुर्महाशनम् ।
अपि शाकं पचानस्य सुखं वै मघवन्गृहे ॥ ३-१९६-२७ (२३७१०)
आर्जितं स्वेन वीर्येण नाप्यपाश्रित्य कंचन ।
फलशाकमपि श्रेयो भोक्तुं ह्यकृपणं गृहे ॥ ३-१९६-२८ (२३७११)
परस्य तु गृहे भोक्तुः परिभूतस् नित्यशः ।
सुमृष्टमपि न श्रेयो विकल्पोऽयमतः सताम् ॥ ३-१९६-२९ (२३७१२)
श्ववद्धि लोलुपो यस्तु परान्नं भोक्तुमिच्छति ।
धिगस्तु तस्य तद्भुक्तं कृपणस् दुरात्मनः ॥ ३-१९६-३० (२३७१३)
यो दत्त्वाऽतिथिभृत्येभ्यः पितृभ्यश्च द्विजोत्तमः ।
शिष्टान्यन्नानि यो भुङ्क्ते किं वै सुखतरं ततः ॥ ३-१९६-३१ (२३७१४)
अतो मृष्टतरं नान्यत्पूतं किंचितच्छतक्रतो ।
दत्त्वा यस्त्वतिथिभ्योऽन्नं भुङ्क्ते तेनैव नित्यशः ॥ ३-१९६-३२ (२३७१५)
तावतां गोसहस्राणां फलं प्राप्नोति दायकः ।
यदेनो यौवनकृतंतत्सर्वं नश्यते ध्रुवम् ॥ ३-१९६-३३ (२३७१६)
रसदक्षिणस् भुक्तस् द्विजस्य तु करे गतम् ।
यद्वारि वारिणा सिञ्चेत्तद्ध्येनस्तरते क्षणात् ॥ ३-१९६-३४ (२३७१७)
एताश्चान्याश्च वै बह्वीः कथयित्वा कथाः शुभाः ।
बकेन सह देवेन्द्र आपृच्छ्य त्रिदिवं गतः ॥ ३-१९६-३५ (२३७१८)

इति श्रीमन्महाभारते अरण्यपर्वणि मार्कण्डेयसमास्यापर्वणि
षणाणवत्यधिकशततमोऽध्यायः ॥ १९६ ॥

Mahabharata - Vana Parva - Chapter Footnotes

३-१९६-१ ऋषिर्बकः किल भवतो दीर्घायुरासीच्चेति ध । पाठः ॥
३-१९६-१२ यह्नोत्सववतीं रम्यां पृथ्वीं राजञ्शतक्रतुरिति ध । पाठः ॥
३-१९६-२१ आकुलानां समृद्धानां कथं कालविपर्ययः इति ध । पाठः ॥
३-१९६-३४ द्विजस्य तु करे हुतमिति ध । पाठः ॥

---

वन-अध्यय१९७
॥ श्रीः ॥
३.१९७. अध्यायः १९७

Mahabharata - Vana Parva - Chapter Topics

मार्कण्डेयेन पाण्डवान्प्रति क्षत्रियमहिमख्यापकशिबिचरित्रकीर्तनम् ॥ १ ॥

Mahabharata - Vana Parva - Chapter Text

३-१९७-० (२३७१९)
वैशंपायन उवाच। ३-१९७-०क्ष् (२४२६)
ततः पाण्डवाः पुनर्मार्कण्डेयमूचुः ॥ ३-१९७-१ (२३७२०)
कथितं ब्राह्मणमाहात्म्यं राजन्यमाहात्म्यमिदानीं शुश्रूषामह
इति तानुवाच मार्कण्डेयो महर्षिः श्रूयतामिदानीं राजन्यानां
माहात्म्यमिति ॥ कुरूणामन्यतमः सुहोत्रो नाम राजा महर्षीनभिगम्य
निवृत्यरथस्थमेव राजानमौशीनरं शिबिं ददर्शाभिमुखं तौ
समेत्य परस्परेण यथावयः पूजां प्रयुज्य गुणसाम्येन परस्परेण
तुल्यात्मानौ विदित्वाऽन्योन्यस्य पन्थानं न ददतुस्तत्र नारदः
प्रादुरासीत्किमिदं भवन्तौ परस्परस्य पन्थानमावृत्य तिष्ठत
इति ॥ ३-१९७-२ (२३७२१)
तावूचतुर्नारदं नैतद्भगवन्पूर्वकर्मकर्त्रादिभिर्विशिष्टस्
पन्था उपदिश्यते समर्थाय वा आवां च सख्यं परस्परेणोपगतौ
तच्चावधानतोऽत्युत्कृष्टमधरोत्तरं परिभ्रष्टम् ॥
नारदस्त्वेवमुक्तः श्लोकत्रयमपठत् ॥ ३-१९७-३ (२३७२२)
क्रूरः कौरव्य मृदवे मृदुः क्रूरे च कौरव ।
साधुश्चासाधवे साधुः साधवे नाप्नुयात्कथम् ॥ ३-१९७-४ (२३७२३)
कृतं शतगुणं कुर्यान्नास्ति देवेषु निर्णयः ।
औशीनरः साधुशीलो भवतो वै महीपतिः ॥ ३-१९७-५ (२३७२४)
जलेत्कदर्यं दानेन सत्येनानृतवादिनम् ।
क्षमया क्रूरकर्माणमसाधुं साधुना जयेत् ॥ ३-१९७-६ (२३७२५)
तदुभावेव भवन्तावुदारौ य इदानीं भवद्भयामन्यतमः सोपसर्पतु
एतद्वै निदर्शनमित्युक्ताव तूष्णीं नारदो बभूव ॥ एतच्छ्रुत्वा तु
कौरव्यः शिबिं प्रदक्षिणं कृत्वा पन्थानं दत्त्वा बहुकर्मभिः
प्रशस्य प्रययौ ॥ ३-१९७-७ (२३७२६)
तदेतद्राज्ञो महाभाग्यमप्युक्तवान्नारदः ॥ ३-१९७-८ (२३७२७)
॥ इतिश्रीमन्महाभारते अरण्यपर्वणि मार्कण्डेयसमाख्यापर्वणि
सप्तनवत्यधिकशततमोऽध्यायः ॥ १९७ ॥

Mahabharata - Vana Parva - Chapter Footnotes

३-१९७-३ नैतत् यत्पन्थास्त्याज्य इत्येतन्नेत्यर्थः
। तत्र हेतुः पूर्वेति। पूर्वे च ते कर्मकर्त्रादयश्चेति

विग्रहः। अनुमन्तृवक्तृप्रभृतय आदिशब्दार्थः। अवधानतो
विचारतः। अधरेति। आवयोस्तारतम्यं नास्तीत्यर्थः ॥
३-१९७-४ पूर्वार्धे खलवृत्तं नाप्नुयात्साधुत्वं वै कथं न
कुर्यादित्यर्थः ॥
३-१९७-८ राज्ञः शिबेः ॥

---

वन-अध्यय१९८
॥ श्रीः ॥
३.१९८. अध्यायः १९८

Mahabharata - Vana Parva - Chapter Topics
मार्कण्डेयेन पाण्डवान्प्रति विप्राय गोप्रदानरूपययातिचरितकथनम् ॥१ ॥

Mahabharata - Vana Parva - Chapter Text

३-१९८-० (२३७२८)
श्क्मार्कण्डेय उवाच। ३-१९८-०क्ष् (२४२७)
इदमन्यच्छ्रूतां ययातिर्नाहुषो राजा राज्यस्थः पौरजनावृत
आसांचक्रे ॥ गुर्वर्थी ब्राह्मण उपेत्याब्रवीत् भो राजन्गुर्वर्थं
भिक्षेयं समयादिति राजोवाच ॥ ३-१९८-१ (२३७२९)
ब्रवीतु भगवान्समयमिति ॥ ३-१९८-२ (२३७३०)
ब्राह्मण उवाच। ३-१९८-३क्ष् (२४२८)
विद्वेषणं परमं जीवलोके
कुर्यान्नरः पार्थिव याच्यमानः ।
तं त्वां पृच्छामि कथं तु राज-
न्दद्याद्द्यान्दयितं च मेऽद्य ॥ ३-१९८-३ (२३७३१)
राजोवाच। ३-१९८-४क्ष् (२४२९)
नचानुकीर्तये दद्य दत्त्वा
अयाच्यमर्थं न च संशृणोमि ।
प्राप्यमर्थं च संश्रुत्य
तं चापि दत्त्वा सुसुखी भवामि ॥ ३-१९८-४ (२३७३२)
ददामि ते रोहिणीनां सहस्रं
प्रियो हि मे ब्राह्मणो याचमानः ।
न मे मनः कुप्यति याचमाने
दत्तं न शोचामि कदाचिदर्थम् ॥ ३-१९८-५ (२३७३३)
इत्युक्त्वा ब्राह्मणा राजा गोसहस्रं ददौ ।

प्राप्तवांश्च गवां सहस्रं ब्राह्मण इति ॥ ३-१९८-६ (२३७३४)

इति श्रीमन्महाभारते अरण्यपर्वणि मार्कण्डेयसमास्यापर्वणि अष्टनवत्यधिकशततमोऽध्यायः ॥१९८ ॥
Mahabharata - Vana Parva - Chapter Footnotes

३-१९८-३ विद्वेषणं याचकस्य द्वेषम् ।प्रीत्यैव ददासि चेत् ग्रहीष्यामीत्यर्थः ॥
३-१९८-४ हे दद्य ददो हानं तदर्ह ॥
३-१९८-५ रोहिणीनां गवाम् ॥
क़ - एतदाद्यध्यायत्रयं षोढशगद्याधिकं झ ।पुस्तकएव दृश्यते नेतरकोशेषु ।

---

वन-अध्यय१९९
॥ श्रीः ॥
३.१९९. अध्यायः १९९

Mahabharata - Vana Parva - Chapter Topics
मार्कण्डेयेन सेदुकवृषदर्भचरितकथनम् ॥१ ॥

Mahabharata - Vana Parva - Chapter Text

३-१९९-० (२३७३५)
वैशंपायन उवाच।३-१९९-०क्ष् (२४३०)
भूय एव महाभाग्यं कथ्यतामित्यब्रवीत्पाण्डवः ॥ ३-१९९-१ (२३७३६)
अथाचष्ट मार्कण्डेयो महाराज वृषदर्भसेदुकनामानौ राजानौ नतिमार्गरतावस्त्रोपास्त्रकृतिनौ ॥ ३-१९९-२ (२३७३७)
सेदुको वृषदर्भस् बालस्यैव उपांशुव्रतमभ्यजानात् कुप्यमदेयं ब्राह्मणस्य ॥ ३-१९९-३ (२३७३८)
अथ तं सेदुकं ब्राह्मणः कश्चिद्वेदाध्ययनसंपन्न आशिषं दत्त्वा गुर्वर्थी भिक्षितवान् ॥ ३-१९९-४ (२३७३९)
अश्वसहस्रं मे भवान्ददात्विति ॥तं सेदुको ब्राह्मणमब्रवीत् ॥ ३-१९९-५ (२३७४०)
नास्ति संभवो गुर्वर्थं दातुमिति ॥ ३-१९९-६ (२३७४१)
स त्वं गच्छ वृषदर्भसकाशम् ॥राजा परमधर्मज्ञो ब्राह्मण तं भिक्षस्व ॥स ते दास्यति तस्यैतदुपांशुव्रतमिति ॥ ३-१९९-७ (२३७४२)

अथ ब्राह्मणो वृषदर्भसकाशं गत्वा अश्वसहस्रमयाचत ॥ स
राजा तं कशेनाताडयत् ॥ ३-१९९-८ (२३७४३)
तं ब्राह्मणोऽब्रवीत् ॥ किं हिंस्यनागसं मामिति ॥ ३-१९९-९ (२३७४४)
एवमुक्त्या तं शपन्तं राजाऽऽह ॥ विप्र किं यो न ददाति
तुभ्यमुताहोस्विद्ब्राह्मण्यमेतत् ॥ ३-१९९-१० (२३७४५)
कब्राह्मण उवाच। ३-१९९-११क्ष् (२४३१)
राजाधिराज तव समीपं सेदुकेन प्रेषितो भिक्षितुमागतः
तेनानुशिष्टेन मया त्वं भिक्षितोसि ॥ ३-१९९-११ (२३७४६)
पूर्वाह्णे ते दास्यामि यो मेऽद्य बलिरागमिष्यति ॥ यो हन्यते कशया
कथं मोघं क्षेपणं तस्य स्यात् ॥ ३-१९९-१२ (२३७४७)
३-१९९-१३ (२३७४८)
इत्युक्त्वा ब्राह्मणाय दैवसिकामुत्पत्तिं प्रदात् ॥ अधिकस्याश्वसहस्रस्य
मूल्यमेवादादिति ॥
Mahabharata - Vana Parva - Chapter Footnotes

३-१९९-३ उपांशु बहिरनुद्घाटितम् ।कुप्यं स्वर्णरूप्यादन्यत् ॥
३-१९९-८ कशेन पुंस्त्वमार्षम् ॥
३-१९९-९ हिंसि हिनस्सि ताडयसि ॥
३-१९९-१० शपन्तं शापं दित्सन्तम् ।हे विप् यो न ददाति स्वीयं धनं
तुभ्यं तस्मै वा एतत् शापदानं उचितम्। उताहोस्वित् एतद्ब्राह्मण्यं
ब्राह्मणयोग्यं स्वोयमपि दित्सन्न शापयोग्यः नापि शानतिधर्मा ब्राह्मणः
शापं दातुमर्हतीत्यर्थः ॥
३-१९९-१२ क्षेपणं दूरीकरणम् ।अवश्यं स प्रसादनीय इत्यर्थः ॥
३-१९९-१३ दैवसिकां एकदिवसजातामुत्पततिं धनस्य
।स्वनियमभङ्गाय प्रवृत्तं ब्राह्मणं दण्डयितुमपि प्रार्थितादधिकं
दत्त्वा प्रसादयितुमपि समर्था राजान इति तात्पर्यम् ॥

---

वन-अध्यय२००
॥ श्रीः ॥
३.२००. अध्यायः २००

Mahabharata - Vana Parva - Chapter Topics
मार्कण्डेयेन पाण्डवानप्रति श्येनात्कपोतरक्षणरूपशिबिचरितकथनम्
॥ १ ॥

Mahabharata - Vana Parva - Chapter Text

३-२००-० (२३७४९)
मार्कण्डेय उवाच। ३-२००-०क्ष् (२४३२)
देवानां कथा संजाता महीतलं गत्वा महीपतिं शिबिमौशीनरं साध्वेनं
शिबिं जिज्ञास्याम इति ॥ एवं भो इत्युक्त्वा अग्नीन्द्रावुपतिष्ठेताम् ॥
३-२००-१ (२३७५०)
अग्निः कपोतरूपेण तमभ्यधावदामिषार्थमिन्द्रः श्येनरूपेण ॥
३-२००-२ (२३७५१)
अथ कपोतो राज्ञो दिव्यासनासीनस्योत्सङ्गं न्यपतत् ॥ ३-२००-३ (२३७५२)
अथ पुरोहितो राजानमब्रवीत् ॥ प्राणरक्षार्थं श्येनाद्भीतो भवन्तं
प्राणार्थी प्रपद्यते ॥ ३-२००-४ (२३७५३)
वसु ददातु अन्तवान्पार्थिवोऽस्य निष्कृतिं कुर्यात् घोरं कपोतस्य
निपातमाहुः ॥ ३-२००-५ (२३७५४)
अथ कपोतो राजानमब्रवीत् ॥ प्राणरक्षणार्थं श्येनाद्भीतो भवन्तं
प्राणार्थी प्रपद्ये अङ्गैरङ्गानि प्राप्यार्थी मुनिर्भूत्वा प्राणांस्त्वां
प्रपद्ये ॥ ३-२००-६ (२३७५५)
स्वाध्यायेन कर्शितं ब्रह्मचारिणं मां विद्धि ॥ तपसा दमेन
युक्तमाचार्यस्याप्रतिकूलभाषिणम् ॥ एवंयुक्तमपापं मां विद्धि ॥
३-२००-७ (२३७५६)
गदामि वेदानविचिनोमि छन्दः
सर्वेवेदा अक्षरशो मे अधीताः ।
न साधु दानं श्रोत्रियस्य प्रदानं
मा प्रादाः श्येनाय न कपोतोऽस्मि ॥ ३-२००-८ (२३७५७)
अथ श्येनो राजानमब्रवीत् ॥ ३-२००-९ (२३७५८)
पर्यायेण वसतिर्वा भवेषु
सर्गे जातः पूर्वमस्मात्कपोतात् ।
त्वमाददानोऽथ कपोतमेनं
मा त्वं राजन्विघ्नकर्ता भवेथाः ॥ ३-२००-१० (२३७५९)
राजोवाच। ३-२००-११क्ष् (२४३३)
केनेदृशी जातु परा हि दृष्टा
वागुच्यमाना शकनेन संस्कृता ।
यां वै कपोतो वदते यां च श्येन
उभौ विदित्वा कथमस्तु साधु ॥ ३-२००-११ (२३७६०)
नास्य वर्षं वर्षति वर्षकाले
नास्य बीजं रोहति काल उप्तम् ।
भीतं प्रपन्नं यो हि ददाति शत्रवे
न त्राणं लभेत्राणमिच्छन्स काले ॥ ३-२००-१२ (२३७६१)

जाता ह्रस्वा प्रजा प्रमीयते
सदा न वासं पितरोऽस्य कुर्वते ।
भीतं प्रपन्नं यो हि ददाति शत्रवे
नास्य देवाः प्रतिगृह्णन्ति हव्यम् ॥ ३-२००-१३ (२३७६२)
मोघमन्नं विन्दति चाप्रचेताः
स्वर्गाल्लोकाद्भ्रश्यति शीघ्रमेव ।
भीतं प्रपन्नं यो हि ददाति शत्रवे
सेन्द्रा देवाः प्रहरन्त्यस्य वज्रम् ॥ ३-२००-१४ (२३७६३)
उक्षाणं पक्त्वा सह ओदनेन
अस्मात्कपोतात्प्रति ते नयन्तु ।
यस्मिन्देशे रमसेऽतीव श्येन
तत्रमांसं शिवयस्ते वहन्तु ॥ ३-२००-१५ (२३७६४)
श्येन उवाच। ३-२००-१६क्ष् (२४३४)
नोक्षाणो राजन्प्रार्थयेयं न चान्य
दस्मान्मांसमधिकं वा कपोतात् ।
देवैर्दत्तः सोऽद्य ममैष भक्ष-
स्तन्मे ददस्व शकुनानामभावात् ॥ ३-२००-१६ (२३७६५)
राजोवाच। ३-२००-१७क्ष् (२४३५)
उक्षाणं वेहतमनूनं नयन्तु
ते पश्यन्तु पुरुषा ममैव ।
भयाहितस् दायं ममान्तिकात्त्वां
प्रत्याम्नायं तु त्वं ह्येनं मा हिंसीः ॥ ३-२००-१७ (२३७६६)
त्यजे प्राणाननैव दद्यां कपोतं
सौम्यो ह्ययं किं न जानासि श्येन ।
यथा क्लेशं मा कुरुष्वेह सौम्य
नाहं कपोतमर्पयिष्ये कथंचित् ॥ ३-२००-१८ (२३७६७)
यथा मां वै साधुवादैः प्रसन्नाः
प्रशंसेयुः शिबयः कर्मणा तु ।
यथा श्येन प्रियमेव कुर्यां
प्रशाधि मां यद्वदेस्तत्करोमि ॥ ३-२००-१९ (२३७६८)
श्येन उवाच। ३-२००-२०क्ष् (२४३६)
ऊरोर्दक्षिणादुत्कृत्य स्वपिशितं तावद्राजन्यावन्मांसं कपोतेन समम्
॥ तथा तस्मात्साधु त्रातः कपोतः प्रशंसेयुश्च शिबय कृतं
च प्रियं स्यान्ममेति ॥ ३-२००-२० (२३७६९)
अथ स दक्षिणादूरोरुत्कृत्य स्वमांसपेशीं तुलयाधारयत् ॥ गुरुतर
एव कपोत आसीत् ॥ ३-२००-२१ (२३७७०)

पुनरन्यमुच्चकर्त गुरुतर एव कपोतः ॥ एवं सर्वं समधिकृत्य शरीरं तुलायामारोपयामास रतत्तथापि गुरुतर एव कपोत आसीत् ॥ ३-२००-२२ (२३७७१)
अथ राजा स्वयमेव तुलामारुरोह ॥ न च व्यलीकमासीद्राज्ञ एतद्वृत्तान्तं दृष्टाव त्रात इत्युक्त्वा प्रालीयत श्येनः अथ राजा अब्रवीत् ॥ ३-२००-२३ (२३७७२)
कपोतं विद्युः शिवयस्त्वां कपोत
पृच्छामि ते शकुने को नु श्येनः ।
नानीश्वर ईदृशं जातु कुर्या-
देतं प्रश्नं भगवन्मे विचक्ष्व ॥ ३-२००-२४ (२३७७३)
कपोत उवाच। ३-२००-२५क्ष् (२४३७)
वैश्वानरोऽहं ज्वलनो धूमकेतु-
रथैव श्येनो वज्रहस्तः शचीपतिः ।
साधु ज्ञातुं त्वामृषभं सौरथेय
नौ जिज्ञासया त्वत्सकाशंप्रपन्नौ ॥ ३-२००-२५ (२३७७४)
यामेतां पेशीं मम निष्क्रयाय
प्रादाद्भवानसिनोत्कृत्य राजन् ।
एतद्वो लक्ष्म शिवं करोमि
हिरण्यवर्णं रुचिरं पुण्यगन्धम् ॥ ३-२००-२६ (२३७७५)
एतासां प्रजानां पालयिता यशस्वी
सुरर्षीणामथ संमतो भृशम् ।
एतस्मात्पार्श्वात्पुरुषो जनिष्यति
कपोतरोमेति च तस्य नाम ॥ ३-२००-२७ (२३७७६)
कपोतरोमाणं शिबिनौद्भिदं पुत्रं प्राप्स्यसि नृपवृषसंहननं यशोदीप्यमानं द्रष्टासि शूरमृषभं सौरथानाम् ॥ ३-२००-२८ (२३७७७)

इति श्रीमन्महाभारते अरण्यपर्वणि मार्कण्डेयसमास्यापर्वणि द्विशततमोऽध्यायः ॥ २०० ॥

Mahabharata - Vana Parva - Chapter Footnotes

३-२००-५ घोरं निन्दितं अनिष्टसूचकमित्यर्थः । अन्तवान् दिगन्तानामीश्वरः ॥
३-२००-६ अङ्गैरिति । मुनिरहं स्वशरीरेण कपोतशरीरं प्रविष्टोऽस्मीत्यर्थः। प्राणान्प्राणरक्षकत्वेन त्वमेव मम प्राणा इत्यर्थः ॥

३-२००-८ श्रोत्रियस्य मे श्येनाय त्वत्कर्तृकं प्रदानं न साधुदानम् ॥
३-२००-१० भवेषु जन्मसु पर्यायेण वसतिः स्थितिर्भवति अतस्त्वं सर्गे सृष्टौ अस्मात्कपोतात् जातोसि ।अतस्त्वं तव जन्मान्तरीयं पितरं कपोतं आददानो रक्षन् मम आहारे विघ्नं माकुर्वित्यर्थः ॥
३-२००-११ एतयोः स्वरूपं ज्ञात्वा साधुकर्म कथं कुर्यामिति विमृशतीत्यर्थः ॥
३-२००-१३ ह्रस्वा शैशवे एव प्रजा प्रमीयते म्रियते ॥
३-२००-१४ मोघं निष्फलं सोऽन्नं विन्दंति लभते ।अप्रचेताः अनुदारः ॥
३-२००-१५ अस्मात्कपोतात् ।एनं कपोतं मोचयित्वा ते तुभ्यं प्रतिनयन्तु प्रतिनिधित्वेन समर्पयन्तु ॥
३-२००-१६ शकुनानां एकस्मिन्नेव बहुत्वम् ।अभावात् नाशेन ॥
३-२००-१७ उक्षाणं बलीवर्दनम् ।वेहतं वन्ध्यां गां वा अनूनं सर्वाङ्गसंपूर्णं यथा स्यात्तथा।भयाहितस्य भीप्रस्तस्य कपोतस्य।दायं प्रतिधनं प्रत्याम्नायं नयन्तु प्रापयन्तु।पश्यन्तु आलोचयन्तु च सन्तः।एनं कपोतं मा हिंसीरिति ॥
३-२००-१८ सौम्यो ह्ययं सोमसंयुक्तक्रतुवन्नित्यं परिपाल्यो ह्ययम् ।हे सौम्य सोमवत्प्रियदर्शन ॥
३-२००-२२ अधिकृत्य छित्त्वा ॥
३-२००-२३ अपर्याप्तौ स्वयमेव तुलामाविवेश ।व्यलीकं अप्रियम्।त्रातस्त्वया कपोत इत्युक्त्वा ॥
३-२००-२५ हे सौरथेय सुरथायाः पुत्र ।नौ आवाम्।विद्धीति शेषः ॥
३-२००-२६ असिना स्वङ्गेन ।एतन्मांसम्।वः गृपाणां लक्ष्म चिह्निं करोमि ॥
३-२००-२८ शिबिना शिथिलशरीरेण जातं औद्भिदं उद्भेदेन जातम् ।यशसा दीप्यमानम् ॥

---

वन-अध्यय२०१
॥ श्रीः ॥
३.२०१. अध्यायः २०१

Mahabharata - Vana Parva - Chapter Topics
मार्कण्डेयेन पाण्डवान्प्रति नारदेरिताष्टकादिराजतारतम्कथनपूर्वकदानमहिमानुवाद ॥१ ॥

Mahabharata - Vana Parva - Chapter Text

३-२०१-० (२३७७८)
वैशंपायन उवाच।३-२०१-०क्ष् (२४३८)

भूय एव महाभाग्यं कथ्यतामित्यब्रवीत्पाण्डवो मार्कण्डेयम्
॥ अथाचष्ट मार्कण्डेयः ॥ अष्टकस्य वैश्वामित्रेरश्वमेधे सर्वे
राजानः प्रागच्छन् ॥ ३-२०१-१ (२३७७९)
भ्रातरश्चास्य प्रतर्दनो वसुमनाः शिबिरौशीनर इति
स च समाप्तयज्ञो भ्रातृभिः सह रथेन प्रायात्ते च
नारदमागच्छन्तमभिवाद्यारोहतु भवान्रथमित्यब्रुवन् ॥ ३-२०१-२
(२३७८०)
तांस्तथेत्युक्त्वा रथमारुरोह ॥ अथ तेषामेकः सुरर्षिं नारदमब्रवीत्
॥ प्रसाद्य भगवन्तं किंचिदिच्छेयं प्रष्टुमिति ॥ ३-२०१-३ (२३७८१)
पृच्छेत्यब्रवीदृषिः ॥ रसोऽब्रवीदायुष्मन्तः सर्वगुणप्रमुदिताः
॥ अथायुष्मन्तं स्वर्गस्थानं चतुर्भिर्यातव्यं स्यात्कोऽवतरेत्
॥ अयमष्टकोऽवतरेदित्यब्रवीदृषिः ॥ ३-२०१-४ (२३७८२)
किंकारणमित्यपृच्छत् ॥ अथाचष्टाष्टकस्य गृहे मया
उपितं स मां रथेनानुप्रावहदथापश्यमनेकानि गोसहस्राणि
वर्णशो विविक्तानि तमहमपृच्छं कस्येमा गाव इति सोब्रवीत्
॥ मयानिसृष्टाइत्येतास्तेनैवस्वयं श्लाघति कथितेन
॥ एपोवतरेदथ त्रिभिर्यातव्यं सांप्रतं कोऽवतरेत् ॥ ३-२०१-५
(२३७८३)
प्रतर्दन इत्यत्रवीदृषिः ॥ तत्र किं कारणं प्रतर्दनस्यापि गृहे
मयोपितं स मां रथेनानुप्रावहत् ॥ ३-२०१-६ (२३७८४)
अथैनं ब्राह्मणोऽभिक्षेताश्वं मे ददातु
भवान्निवृत्तो दास्यामीत्यब्रवीद्ब्राह्मणं त्वरितमेव
दीयतामित्यब्रवीद्ब्राह्मणस्त्वरितमेव स ब्राह्मणस्यैव मुक्त्वा दक्षिणं
पार्श्वमददत् ॥ ३-२०१-७ (२३७८५)
अथान्योष्यश्वार्थी ब्राह्मण आगच्छत् ॥ तथैव चैनमुक्त्वा
वामपार्ष्णिमभ्यदादथ प्रायात्पुनरपि चान्योप्यश्वार्थी ब्राह्मण
आगच्छत् त्वरितोथ तस्मै अपनह्य वामं धुर्यमददत् ॥ ३-२०१-८
(२३७८६)
अथ प्रायात्पुनरन्य आगच्छदश्वार्थी ब्राह्मणस्तमब्रवीदतियातो
दास्यामि त्वरितमेव मे दीयतामित्यब्रवीद्ब्राह्मणस्तस्मै दत्त्वाऽश्वं
रथधुरं गृह्णता व्याहृतं ब्राह्मणानां सांप्रतं नास्ति किंचिदिति ॥
३-२०१-९ (२३७८७)
य एष ददाति चासूयति च तेन व्याहृतेन तथाऽवतरेत् ॥ अथ
द्वाभ्यां यातव्यमिति कोऽवतरेत् ॥ ३-२०१-१० (२३७८८)
वसुमना अवतरेदित्यब्रवीदृषिः ॥ ३-२०१-११ (२३७८९)
किंकारणमित्यपृच्छदथाचष्ट नारदः ॥ अहं परिभ्रमन्वसुमनसो

गृहमुपस्थितः ॥ ३-२०१-१२ (२३७९०)
स्वस्तिवचनमासीत्पुष्परथस्य प्रयोजनेन तमहमन्वगच्छं
स्वस्तिवाचितेषु ब्राह्मणेषु रथो ब्राह्मणानां दर्शितः ॥ ३-२०१-१३
(२३७९१)
तमहं रथं प्राशंसमथ राजाऽब्रवीद्भगवतारथः प्रशस्तः
॥ एष भगवतो भगवतोरथ इति ॥ ३-२०१-१४ (२३७९२)
अथ कदाचित्पुनरप्यहमुपस्थितः पुनरेव च रथप्रयोजनमासीत्
॥ सम्यगयमेष भगवत इत्येवं राजाऽब्रवीदिति पुनरेव
च तृतीयं स्वस्तिवाचनं समभावयमथ राजा ब्राह्मणानां
दर्शयन्मामभिप्रेक्ष्याब्रवीत् ॥ अथो भगवता पुष्परथस्य
स्वस्तिवाचनानि सुष्ठु संभावितानि एतेन द्रोहवचनेनावतरेत् ॥
३-२०१-१५ (२३७९३)
अथैकेन यातव्यं स्यात्कोऽवतरेत्पुनर्नारद आह
॥ शिबिर्यायादहमवतरेयं अत्र किं कारणमित्यब्रवीत् ॥ असावहं
शिविना समो नास्मि यतोघ ब्राह्मणः कश्चिदेनमब्रवीत् ॥ ३-२०१-१६
(२३७९४)
शिबे अन्नार्थ्यस्मीति तमब्रवीच्छिबिः किं क्रियतामाज्ञापयतु भवानिति
॥ ३-२०१-१७ (२३७९५)
अथैनं ब्राह्मणोऽब्रवीत् य एष ते पुत्रो बृहद्गर्भो नाम एष
प्रमातव्य इति तमेनं संस्कुरु अन्नं चोपपादय ततोऽहं प्रतीक्ष्य इति
॥ ततः पुत्रं प्रमाथ्य संस्कृत्य विधिना साधयित्वा पात्र्यामर्पयित्वा
शिरसा प्रतिगृह्य ब्राह्मणममृगयत् ॥ ३-२०१-१८ (२३७९६)
अथास्य मृगयमाणस्य कश्चिदाचष्ट एष ते ब्राह्मणो नगरं
प्रविश्य दहति ते गृहं कोशागारमायुधागारं स्त्र्यगारमश्वशालां
हस्तिशालां च क्रुद्ध इति ॥ ३-२०१-१९ (२३७९७)
अथ शिबिस्तथैवाविकृतमुखवर्णो नगरं प्रविश्य ब्राह्मणं
तमब्रवीत्सिद्धं भगवन्नन्नमिति ब्राह्मणो न किंचिद्व्याजहार
विस्मयादधोमुखश्चासीत् ॥ ३-२०१-२० (२३७९८)
ततः प्रासादयद्ब्राह्मणं भगवन्भुज्यतामिति ॥ मुहूर्तादुद्वीक्ष्य
शिबिमब्रवीत् ॥ ३-२०१-२१ (२३७९९)
त्वमेवैतदशानेति तत्राह तथेति शिबिस्तथैवाविमना महित्वा
कपालमभ्युद्धार्य भोक्तुमैच्छत् ॥ ३-२०१-२२ (२३८००)
अथास्य ब्राह्मणो हस्तमगृह्णात् ॥ अब्रवीच्चैनं जितक्रोधोसि न ते
किंचिदपरित्याज्यं ब्राह्मणार्थे ब्राह्मणोऽपि तं महाभागं सभाजयत् ॥
३-२०१-२३ (२३८०१)
स ह्युद्वीक्षमाणः पुत्रमपश्यदग्रे तिष्ठन्तं देवकुमारमिव

पुण्यगन्धान्वितमलंकृतं सर्वं च तमर्थं विधाय
ब्राह्मणोऽन्तरधीयत ॥
स ह्युद्वीक्षमाणः पुत्रमपश्यदग्रे तिष्ठन्तं देवकुमारमिव
पुण्यगन्धान्वितमलंकृतं सर्वंच तमर्थं विधाय
ब्राह्मणोऽन्तरधीयत ॥ ३-२०१-२४ (२३८०२)
तस्य राजर्षेर्विधाता तेनैव वेषेण परीक्षार्थमागत
इतितस्मिन्नन्तर्हिते अमात्या राजानमूचुः ॥ किं प्रेप्सुना भवता इदमेवं
जानता कृतमिति ॥ ३-२०१-२५ (२३८०३)
शिबिरुवाच। ३-२०१-२६क्ष् (२४३९)
नैवाहमेतद्यशसे ददानि
न चार्यहेतोर्न च भोगतृष्णया ।
पापैरनासेवित एष मार्ग
इत्येवमेतत्सकलं करोमि ॥ ३-२०१-२६ (२३८०४)
सद्भिः सदाऽध्यासितं तु प्रशस्तं
तस्मात्प्रशस्तं श्रयते मतिर्मे ।
एतन्महाभाग्यवरं शिबेस्तु
तस्मादहं वेद यथावदेतत् ॥ ३-२०१-२७ (२३८०५)

इति श्रीमन्महाभारते अरण्यपर्वणि मार्कण्डेयसमास्यापर्वणि
एकाधिकद्विशततमोऽध्यायः ॥ २०१ ॥
Mahabharata - Vana Parva - Chapter Footnotes

३-२०१-४ आयुष्मन्तं चिरकालभोग्यम्
। स्वर्गस्थानम्। पुंस्त्वमार्षम्। अवतरेत्स्वर्गात् भूमौ प्रथममिति
शेषः ॥
३-२०१-७ पार्श्वं रथचक्रप्रदेशस्थमश्वम् ॥
३-२०१-९ अतियातोऽतिवेगवान् । अश्वचतुष्टयस्यापि दानात् धुरं
स्वहस्तेनैव गृह्णता। सांप्रतं युक्तायुक्तविचारः ॥
३-२०१-१३ पुष्परथस् गिरिगगनसागरेष्वप्रतिषिद्धमार्गस्य
प्रयोजनेन तदर्थमित्यर्थः ॥
३-२०१-१४ रथः स्तुत एव नतु याचितः । राजापि ममाशयं बुद्धापि
रथं न दत्तवान् रथस्तुतिं चानुमोदितवानिति प्रघट्टकार्थः ॥
३-२०१-१५ द्रोहवचनेन अदत्त्वा वृथास्तवेन ॥
३-२०१-२२ महित्वा पूजयित्वा । कपालं शीर्षास्थिपात्रम् ॥
३-२०१-२७ यो दत्त्वा श्लाघते यश्चासूयेत् यश्चार्थिनो
लिप्सितमिङ्गितैर्ज्ञात्वापि तं स्तुतिमात्रेणैव संभावयति नत्वर्थेन

यश्च ब्राह्मणेनार्थितः श्रद्धाक्षमापूर्वकमदेयमपि ददाति अकर्तव्यमपि करोति ते उत्तरोत्तरं श्रेष्ठाः ।तत्राप्यन्त्यो नारदादपि श्रेष्ठ इति दातुर्गुणदाम विधानपरोऽयमध्यायः ॥

---

वन-अध्यय२०२
॥ श्रीः ॥
३.२०२. अध्यायः २०२

Mahabharata - Vana Parva - Chapter Topics
मार्कण्डेयेन पाण्डवान्प्रति कीर्त्यकीर्त्योः स्वर्गनरकनिवासहेतुताप्रतिपादकेन्द्रद्युम्नोपाख्यानकथनम् ॥१ ॥

Mahabharata - Vana Parva - Chapter Text

३-२०२-० (२३८०६)
वैशंपायन उवाच। ३-२०२-०क्ष् (२४४०)
मार्कण्डेयमृषिं पाण्डवाः पर्यपृच्छन्नस्ति कश्चिद्भवतश्चिरजाततर इति ॥ ३-२०२-१ (२३८०७)
स तानुवाचास्ति खलु राजर्षिरिन्द्रद्युम्नो नाम क्षीणपुण्यस्त्रिदिवात्प्रच्युतः कीर्तिर्मे व्युच्छिन्नेति स मामुपातिष्ठदथ प्रत्यभिजानाति मां भवानिति ॥ ३-२०२-२ (२३८०८)
तमहमब्रवं नाभिजानीमो भवन्तमिति रकार्यचेष्टाकुलत्वानन वयं रासायनिका ग्रामैकरात्रवासिनो न प्रत्यभिजानीमोऽप्यात्मनोऽर्थानामनुष्टानं न शरीरोपतापेनात्मनः समारभामोऽर्थानामनुष्ठानम् ॥ ३-२०२-३ (२३८०९)
ग्एवमुक्तो राजर्षिरिन्द्रद्युम्नः पुनर्मामब्रवीत् । ।अथास्ति कश्चित्त्वत्तश्चिरजाततर इति। तं पुनः प्रत्यब्रवम् ॥' अस्ति खलु हिमवति प्रावारकर्णो नामोलूकः प्रतिवासति ॥स मत्तश्चिरजातो भवन्तं यदि जानीयाद्विप्रकृष्टे चाध्वनि हिमवांस्त त्रासौ प्रतिवसतीति ॥ ३-२०२-४ (२३८१०)
तत स मामश्वो भूत्वा तत्रावहद्यत्र बभूवो लूकः ॥अथैनं स राजर्षिः पर्यपृच्छत्प्रतिजानाति मां भवानिति ॥ ३-२०२-५ (२३८११)
स मुहूर्तमिव ध्यात्वाऽब्रवीदेनं नाभिजानामि भवन्तमिति स एवमुक्त इन्द्रद्युम्नः पुनस्तमुलङ मब्रवीद्राजर्षिः ॥ ३-२०२-६ (२३८१२)
अथास्ति कश्चिद्भवतः सकाशाच्चिरजात इति स एवमुक्तोऽब्रवीदस्तिखल्विन्द्रद्युम्नं नाम सरस्त स्मिन्नालिजङ्घो नाम बकः प्तिवसति सोस्मत्तश्चिरजाततरस्तं पृच्छेति तत इन्द्रद्युम्नो

मां चोलूकमादाय तत्सरोऽगच्छद्यत्रासौ नालिजङ्घो नाम बको बभूव ॥ ३-२०२-७ (२३८१३)
सोस्माभिः पृष्टो भवानिममिनद्रद्युम्नं राजानमभिजानातीति स एवं मुहूर्तं ध्यात्वाऽब्रवीन्नाभिजानाम्यहमिन्द्रद्युम्नं राजानमिति ॥ ततः सोस्माभिः पृष्टः कश्चिद्भवतोऽन्यश्चिरजाततरोस्तीति स नोऽब्रवीदस्ति खल्वस्मिन्नेव सरस्यकूपारो नाम रकच्छपः प्रतिवसति ॥ स मत्तश्चिरजाततरः स यदि कथंचिदभिजानीयादिमं राजानं तमकूपारं पृच्छध्वमिति ॥ ३-२०२-८ (२३८१४)
ततः स बकस्तमकूपारं कच्छपं विज्ञापयामास अस्माकमभिप्रेतं भवन्तं कंचिदर्थमभिप्रष्टं साध्वागम्यतां तावदिति तच्छ्रुत्वा कच्छपस्तस्मात्सरस उत्थायाभ्यागच्छद्यत्र तिष्ठामो वयं तस्य सरसस्तीरे आगतं चैनं वयमपृच्छाम भवानिन्द्रद्युम्नं राजानमभिजानातीति ॥ ३-२०२-९ (२३८१५)
स मूहूर्तं ध्यात्वा बाष्पसंपूर्णनयन उद्विग्नहृदयो वेपमानो विसंज्ञकल्पः प्राञ्जलिरब्रवीत् किमहमेनं न प्रत्यभिज्ञास्यामीह ह्यनेन सहस्रकृत्वः पूर्वमग्निचितिषूपहिताः ॥ ३-२०२-१० (२३८१६)
सरश्चेदमस्य दक्षिणोदकदत्ताभिर्गोभिरतिक्रममाणाभिः कृतम् ॥ अत्रचाहं प्रतिवसामीति ॥ ३-२०२-११ (२३८१७)
अथैतत्सकलं कच्छपेनोदाहृतं श्रुत्वा तदनन्तरं देवलोकाद्देवरथः प्रादुरासीद्वाचश्चाश्रूयन्तेन्द्रद्युम्नं प्रति प्रस्तुतस्ते स्वर्गो यथोचितं स्थानं प्रतिपद्यस्व कीर्तिमानस्यव्यग्रो याहीति ॥ ३-२०२१३क्ष् भवन्ति चात्र श्लोकाः। ३-२०२-१२ (२३८१८)
दिवं स्पृशति भूमिं च शब्दः पुण्यस्य कर्मणः । यावत्स शब्दो भवति तावत्स्वर्गे महीयते ॥ ३-२०२-१३ (२३८१९)
अकीर्तिः कीर्त्यते लोके यस्य भूतस्य कस्यचित् । स पतत्यधमाँल्लोकान्यावच्छब्दः प्रकीर्त्यते ॥ ३-२०२-१४ (२३८२०)
तस्मात्कल्याणवृत्तः स्याद्दाता तावन्नरो भुवि । विहाय वृत्तंपापिष्ठं धर्ममेव समाश्रयेत् ॥ ३-२०२-१५ (२३८२१)
इत्येतच्छ्रुत्वा स राजाऽब्रवीत्तिष्ठ तावद्यावदिमौ वृद्धौ यथास्थानं प्रतिपादयामीति ॥ ३-२०२-१६ (२३८२२)
स मां प्रावारकर्णं चोलूकं यथोचिते स्थाने प्रतिपाद्य तेन देवयानेन संसिद्धं यथोचितं स्थानं प्रतिपेदे तन्मयाऽनुभूतं चिरजीविनेदृशमिति पाण्डवानुवाच मार्कण्डेयः ॥ ३-२०२-१७ (२३८२३)
तमृषिं पाण्डवाश्चोचुः साधु शोभनं भवता कृतंराजानमिन्द्रद्युम्नं स्वर्गलोकाच्च्युतं स्वे स्थाने प्रतिपादयतेत्यथैतानब्रवीदसौ ननु देवकीपुत्रेणापि कृष्णेन नरके

मज्जमानो राजर्षिर्नृगस्तस्मात्कृच्छ्रात्पुनः समुद्धृत्यस्वर्गं
प्रापित इति ॥ ३-२०२-१८ (२३८२४)

इति श्रीमनमहाभारते अरण्यपर्वणि मार्कण्डेयसमास्यापर्वणि
द्व्यधिकद्विशततमोऽध्यायः ॥ २०२ ॥
Mahabharata - Vana Parva - Chapter Footnotes

३-२०२-३ रसायनिकाः इति झ ।पाठः ॥
३-२०२-१० अग्निचितिषु अग्निचयनेषु कर्तव्येषु सत्मु ॥
३-२०२-१३ तावत्पुरुषउच्यते इति झ ।पाठः। पुरुषः स्वर्गस्थ
इति शेषः ॥
३-२०२-१८ असौ मार्कण्डेयः ॥

---

वन-अध्यय२०३
॥ श्रीः ॥
३.२०३. अध्यायः २०३

Mahabharata - Vana Parva - Chapter Topics
मार्कण्डेयेन युधिष्ठिरंप्रति स्वार्गकारणीभूतसाधारणधर्मकथनम् ॥ १ ॥

Mahabharata - Vana Parva - Chapter Text

३-२०३-० (२३८२५)
वैशंपायन उवाच। ३-२०३-०क्ष् (२४४१)
श्रुत्वा स राजा राजर्षिरिन्द्रद्युम्नस्य तत्तदा ।
मार्कण्डेयान्महाभागात्स्वर्गस्य प्रतिपादनम् ॥ ३-२०३-१ (२३८२६)
युधिष्ठिरो महाराज पुनः पप्रच्छ तं मुनिम् ।
कीदृशीषु ह्यवस्थासु दत्त्वा दानं महामुने ।
इन्द्रलोकं त्वनुभवेत्पुरुषस्तद्ब्रवीहि मे ॥ ३-२०३-२ (२३८२७)
गार्हस्थ्येऽप्यथवा बाल्ये यौवने स्थाविरेऽपि वा ।
यथा फलं समश्नाति तथा त्वं कथयस्व मे ॥ ३-२०३-३ (२३८२८)
मार्कण्डेय उवाच। ३-२०३-४क्ष् (२४४२)
वृथा जन्मानि चत्वारि वृथा दानानि षोडश ।
वृथा जन्म ह्यपुत्रस् ये च धर्मबहिष्कृताः ॥ ३-२०३-४ (२३८२९)
परपाकं च येऽश्नन्ति आत्मार्थं च पचेत्तु यः ।
पर्यश्नन्ति वृथा यत्र तदसत्यं प्रकीर्त्यते ॥ ३-२०३-५ (२३८३०)
आरूढपतिते दत्तमन्यायोपहृतं च यत् ।

व्यर्थं तु पतिते दानं ब्राह्मणे तस्करे तथा ॥ ३-२०३-६ (२३८३१)
गुरौ चानृतिके पापे कृतघ्ने ग्रामयाजके ।
वेदविक्रयिणे दत्तं तथा वृषलयाजके ॥ ३-२०३-७ (२३८३२)
ब्रह्मबन्धुषु यद्दत्तं यद्दत्तं वृषलीपतौ ।
स्त्रीजितेषु च यद्दत्तं व्यालग्राहे तथैव च ॥ ३-२०३-८ (२३८३३)
परिचारकेषु यद्दत्तं वृथा दानानि षोडश ।
तमोवृतस्तु यो दद्याद्भयात्क्रोधात्तथैव च ॥ ३-२०३-९ (२३८३४)
भुङ्क्ते च दानं तत्सर्वं गर्भस्थस्तु नरः सदा ।
ददद्दानं द्विजातिभ्यो वृद्धभावेन मानवः ॥ ३-२०३-१० (२३८३५)
तस्मात्सर्वास्ववस्थासु सर्वदानानि पार्थिव ।
दातव्यानि द्विजातिभ्यः स्वर्गमार्गजिगीषया ॥ ३-२०३-११ (२३८३६)
युधिष्ठिर उवाच। ३-२०३-१२क्ष् (२४४३)
चातुर्वर्ण्यस्य सर्वस्य वर्तमानाः प्रतिग्रहे ।
केन विप्रा विशेषेण तारयन्ति तरन्ति च ॥ ३-२०३-१२ (२३८३७)
मार्कण्डेय उवाच। ३-२०३-१३क्ष् (२४४४)
जपैर्मन्त्रैश्च होमैश्च स्वाध्यायाध्यायनेन च ।
नावं वेदमयीं कृत्वातारयन्ति तरन्ति च ॥ ३-२०३-१३ (२३८३८)
ब्राह्मणांस्तोषयेद्यस्तु तुष्यन्ते तस्य देवताः ।
वचनाच्चापि विप्राणां स्वर्गलोकमवाप्नुयात् ॥ ३-२०३-१४ (२३८३९)
अनन्तं पुण्यलोकं तु गन्ताऽसौ तु न संशयः ।
श्लेष्मादिभिर्व्याप्ततनुर्म्रियमाणोऽविचेतनः ॥ ३-२०३-१५ (२३८४०)
ब्राह्मा एव संपूज्याः पुण्यं स्वर्गमभीप्सता ।
श्राद्धकाले तु यत्नेन भोक्तव्या ह्यजुगुप्सिताः ॥ ३-२०३-१६ (२३८४१)
दुर्बलः कुनस्वी कुष्ठी मायावी कुण्डगोलकौ ।
वर्जनीयाः प्रयत्नेन काण्डपृष्ठाश्च देहिनः ॥ ३-२०३-१७ (२३८४२)
जुगुप्सितं हि यच्छ्राद्धं दहत्यग्निरिवेन्धनम् ॥ ३-२०३-१८ (२३८४३)
ये ये श्राद्धे न पूज्यन्ते मूकान्धबधिरादयः ।
तेऽपिसर्वे नियोक्तव्या मिश्रिता वेदपारगैः ॥ ३-२०३-१९ (२३८४४)
प्रतिग्रहश्च वै देयः शृणु यस् युधिष्ठिर ।
प्रदातारं तथाऽऽत्मानं यस्तारयति शक्तिमान् ॥ ३-२०३-२० (२३८४५)
तस्मिन्देयं द्विजे दानं सर्वागमविजानता ।
प्रदातारं तथाऽऽत्मानं तारयेद्यः स शक्तिमान् ॥ ३-२०३-२१ (२३८४६)
न तथा हविषो होमैर्न पुष्पैर्नानुलेपनैः ।
अग्नयः पार्थ तुष्यन्ति यथा ह्यतिथिभोजने ॥ ३-२०३-२२ (२३८४७)
तस्मात्त्वंसर्वयत्नेन यतस्वातिथिभोजने ॥ ३-२०३-२३ (२३८४८)
पादोदकंपादघृतंदीपमन्नं प्रतिश्रयम् ।

प्रयच्छन्ति तु ये राजन्नोपसर्पन्ति ते यमम् ॥ ३-२०३-२४ (२३८४९)
देवमाल्यापनयनं द्विजोच्छिष्टावमार्जनम् ।
आकल्पपरिचर्या च गात्रसंवाहनानि च ।
अत्रैकैकं नृपश्रेष्ठ गोदानाद्व्यतिरिच्यते ॥ ३-२०३-२५ (२३८५०)
कपिलायाः प्रदानात्तु मुच्यते नात्र संशयः ।
तस्मादलंकृतां दद्यात्कपिलां तु द्विजातये ॥ ३-२०३-२६ (२३८५१)
श्रोत्रियाय दरिद्राय गृहस्थायाग्निहोत्रिणे ।
पुत्रदाराभिभूताय तथा ह्यनुपकारिणे ॥ ३-२०३-२७ (२३८५२)
एवंविधेषु दातव्या न समृद्धेषु भारत ।
को गुणो भरतश्रेष्ठ समृद्धेष्वभिवर्जितम् ॥ ३-२०३-२८ (२३८५३)
एकस्यैका प्रदातव्या न बहूनां कदाचन ।
सा गौर्विक्रयमापन्ना हन्यात्त्रिपुरुषं कुलम् ।
न तारयति दातारं ब्राह्मणं नैव नैव तु ॥ ३-२०३-२९ (२३८५४)
ब्राह्मणस्य विशुद्धस्य सुवर्णं यः प्रयच्छति ।
सुवर्णानां शतं तेन दत्तं भवति शाश्वतम् ॥ ३-२०३-३० (२३८५५)
अनड्वाहं तु यो दद्याद्बलवन्तं धुरंधरम् ।
स निस्तरति दुर्गाणि स्वर्गलोकं च गच्छति ॥ ३-२०३-३१ (२३८५६)
वसुंधरां तु यो दद्याद्द्विजाय विदुषात्मने ।
दातारं ह्यनुगच्छन्ति सर्वे कामाभिवाञ्छिताः ॥ ३-२०३-३२ (२३८५७)
पृच्छन्ति चान्नदातारं वदन्ति पुरुषा भुवि ।
अध्वनि क्षीणगात्राश्च पांसुना चावकुण्ठिताः ॥ ३-२०३-३३ (२३८५८)
तेषामेव श्रमार्तानां यो ह्यन्नं कथयेद्बुधः ।
अन्नदातृसमः सोपि कीर्त्यते नात्र संशयः ॥ ३-२०३-३४ (२३८५९)
तस्मात्त्वं सर्वदानानि हित्वाऽन्नं संप्रयच्छ ह ।
न हीदृशं पुण्यफलं विचित्रामिह विद्यते ॥ ३-२०३-३५ (२३८६०)
यथाशक्ति च यो दद्यादन्नं विप्रेषु संस्कृतम् ।
स तेन कर्मणाऽऽप्नोति प्रजापतिसलोकताम् ॥ ३-२०३-३६ (२३८६१)
अन्नमेव विशिष्टं हि तस्मात्परतरं न च ।
अन्नं प्रजापतिश्चोक्तः स च संवत्सरो मतः ॥ ३-२०३-३७ (२३८६२)
संवत्सरस्तु यज्ञोऽसौ सर्वं यज्ञे प्रतिष्ठितम् ।
तस्मात्सर्वाणि भूतानि स्थावराणि चराणि च ॥ ३-२०३-३८ (२३८६३)
तस्मादन्नं विशिष्टं हि सर्वेभ्यइति विश्रुतम् ॥ ३-२०३-३९ (२३८६४)
येषां तटाकानि महोदकानि
वाप्यश्चकूपाश्चप्रतिश्रयाश्च ।
अन्नस्य दानं मधुरा च वाणी
यमस्य ते निर्वचना भवन्ति ॥ ३-२०३-४० (२३८६५)

धान्यं श्रमेणार्जितवित्तसंचितं
विप्रे सुशीले प्रतियच्छते यः ।
वसुंधरा तस्य भवेत्सुतुष्टा
धारां वसूनां प्रतिमुञ्चतीव ॥ ३-२०३-४१ (२३८६६)
अन्नदाः प्रथमं यान्ति सत्यवाक्यदनन्तरम् ।
अयाचितप्रदाता च समं यान्ति त्रयो जनाः ॥ ३-२०३-४२ (२३८६७)
वैशंपायन उवाच। ३-२०३-४३क्ष् (२४४५)
कौतूहलसमुत्पन्नः पर्यपृच्छद्युधिष्ठिरः ।
मार्कण्डेयं महात्मानं पुनरेव सहानुजः ॥ ३-२०३-४३ (२३८६८)
यमलोकस्य चाध्वानमन्तरं मानुषस्य च ।
कीदृशं किंप्रमाणं वा कथं वा तन्महामुने ।
तरन्ति पुरुषाश्चैव केनोपायेन शंस मे ॥ ३-२०३-४४ (२३८६९)
मार्कण्डेय उवाच। ३-२०३-४५क्ष् (२४४६)
सर्वगुह्यतनं प्रश्नं पवित्रमृषिसंस्तुतम् ।
कथयिष्यामि ते राजन्धर्मं धर्मभृतांवर ॥ ३-२०३-४५ (२३८७०)
षडशीतिसहस्राणि योजनानां नराधिप ।
यमलोकस्य चाध्वानमन्तरं मानुषस्य च ॥ ३-२०३-४६ (२३८७१)
आकाशं तदपानीयं घोरं कान्तारदर्शनम् ।
न तत्र वृक्षच्छाया वा पानीनं केतनानि च ॥ ३-२०३-४७ (२३८७२)
विश्रमेद्यत्र वै श्रान्तः पुरुषोऽध्वनि कर्शितः ।
नीयते यमदूतैस्तु यमस्वाज्ञाकरैर्बलात् ॥ ३-२०३-४८ (२३८७३)
नराः स्त्रियस्तथैवान्ये पृथिव्यां जीवसंज्ञिताः ।
ब्रह्मणेभ्यः प्रदानानि नानारूपाणि पार्थिव ॥ ३-२०३-४९ (२३८७४)
हयादीनां प्रकृष्टानि तेऽध्वानं यान्ति वै नराः ।
सन्निवार्यातपं यानति च्छत्रेणैव हि च्छत्रदाः ॥ ३-२०३-५० (२३८७५)
तृप्ताश्चैवान्नदातारो ह्यतृप्ताश्चाप्यनन्नदाः ।
वस्त्रिणो वस्त्रदा यान्ति अवस्त्रा यान्त्यवस्त्रदाः ॥ ३-२०३-५१ (२३८७६)
हिरण्यदाः सुखं यान्ति पुरुषास्त्वभ्यलंकृताः ।
भूमिदास्तुसुखं यान्ति सर्वैः कामैः सुतर्पिताः ॥ ३-२०३-५२ (२३८७७)
यान्ति चैवापरिक्लिष्टा नरा सस्यप्रदावकाः ।
नराः सुखतरं यान्ति विमानेषु गृहप्रदाः ॥ ३-२०३-५३ (२३८७८)
पानीयदा ह्यतृषिताः प्रहृष्टमनसो नराः ।
पन्थानं द्योतयन्तश्च यान्ति दीपप्रदाः सुखम् ॥ ३-२०३-५४ (२३८७९)
गोप्रदास्तु सुखं यान्ति निर्मुक्ताः सर्वपातकैः ।
विमानैर्हंससंयुक्तैर्यान्ति मासोपवासिनः ॥ ३-२०३-५५ (२३८८०)
तथा बर्हिप्रयुक्तैश्च षष्ठरात्रोपवासिनः ।

त्रिरात्रं क्षपते यस्तु एकभक्तेन पाण्डव ॥ ३-२०३-५६ (२३८८१)
अन्तरा चैव नाश्नाति तस्य लोका ह्यनामयाः ।
पानीयस्य गुणा दिव्याः प्रेतलोकसुखावहाः ॥ ३-२०३-५७ (२३८८२)
तत्र पुष्पोदका नाम नदी तेषां विधीयते ।
शीतलं सलिलं तत्रपिबन्ति ह्यमृतोपमम् ॥ ३-२०३-५८ (२३८८३)
ये चदृष्कृतकर्माणः पूयं तेषां विधीयते ।
एवं नदी महाराज सर्वकामप्रदा हि सा ॥ ३-२०३-५९ (२३८८४)
तस्मात्त्वमपि राजेन्द्र पूजयैनान्यथाविधि ।
अध्वनिं क्षीणगात्रश्च पथि पांशुसमन्वितः ॥ ३-२०३-६० (२३८८५)
पृच्छते ह्यन्नदातारं गृहमायाति चाशया ।
तं पूजयाथ यत्नेन सोऽतिथिर्ब्राह्मणश्च सः ॥ ३-२०३-६१ (२३८८६)
तं यान्तमनुगच्छन्ति देवाः सर्वे सवासवाः ।
तस्मिन्संपूजिते प्रीता निराशा यान्त्यपूजिते ॥ ३-२०३-६२ (२३८८७)
तस्मात्त्वमपि राजेन्द्र पूजयैनं यथाविधि ।
एतत्ते शतशः प्रोक्तं किं भूयः श्रोतुमिच्छसि ॥ ३-२०३-६३ (२३८८८)
युधिष्ठिर उवाच। ३-२०३-६४क्ष् (२४४७)
पुनः पुनरहं श्रोतुं कथां धर्मसमाश्रयाम् ।
पुण्यामिच्छामि धर्मज्ञ कथ्यमानां त्वया विभो ॥ ३-२०३-६४ (२३८८९)
मार्कण्डेय उवाच। ३-२०३-६५क्ष् (२४४८)
धर्मान्तरं प्रति कथां कथ्यमानां मया नृप ।
सर्वपापहरां नित्यं शृणुष्वावहितो मम ॥ ३-२०३-६५ (२३८९०)
कपिलायां तु दत्तायां यत्फलंज्येष्ठपुष्करे ।
तत्फलंभरतश्रेष्ठ विप्राणां पादधावने ॥ ३-२०३-६६ (२३८९१)
द्विजपादोदकक्लिन्ना यावत्तिष्ठति मेदिनी ।
तावत्पुष्करपर्णेन पिबन्ति पितरो जलम् ॥ ३-२०३-६७ (२३८९२)
स्वागतेनाग्नयस्तृप्ता आसनेन शतक्रतुः ।
पितरः पादशौचेन अन्नाद्येन प्रजापतिः ॥ ३-२०३-६८ (२३८९३)
यावद्वत्सस्य पादौ द्वौ शिरश्चैव प्रदृश्यते ।
तस्मिन्काले प्रदातव्या प्रयतेनान्तरात्मना ॥ ३-२०३-६९ (२३८९४)
अन्तरिक्षगतो वत्सो यावद्योन्यां प्रदृश्यते ।
तावद्गौः पृथिवी ज्ञेया यावद्गर्भं न मुञ्चति ॥ ३-२०३-७० (२३८९५)
यावन्ति तस्यां रोमाणि वत्सस्य च युधिष्ठिर ।
तावद्युगसहस्राणि स्वर्लोके महीयते ॥ ३-२०३-७१ (२३८९६)
सुवर्णनासां यः कृत्वा सखुरां कृष्णधेनुकाम् ।
तिलैः प्रच्छादितां दद्यात्सर्वरत्नैरलंकृताम् ॥ ३-२०३-७२ (२३८९७)
प्रतिग्रहं गृहीत्वा यः पुनर्ददति साधवे ।

फलानां फलमश्नाति तदा दत्त्वा च भारत ॥ ३-२०३-७३ (२३८९८)
ससमुद्रगुहा तेन सशैलवनकानना ।
चतुरन्ता भवेद्दत्ता पृथिवी नात्र संशयः ॥ ३-२०३-७४ (२३८९९)
अन्तर्जानुशयो यस्तु भुञ्जते सक्तभाजनः ।
यो द्विजः शब्दरहितं संयन्तुस्तारणाय वै ॥ ३-२०३-७५ (२३९००)
ये पानीयानि ददति तथाऽन्ये ये द्विजातयः ।
जपन्ति संहितां सम्यक्ते नित्यं तारणक्षमाः ॥ ३-२०३-७६ (२३९०१)
हव्यंकव्यं च यत्किंचित्सर्वं तच्छ्रोत्रियोऽर्हति ।
दत्तं हि श्रोत्रिये साधौज्यलितेऽग्नौ यथा हुतम् ॥ ३-२०३-७७ (२३९०२)
मन्युप्रहरणा विप्रा न विप्राः शस्त्रयोधिनः ।
निहन्युर्मन्युना विप्रा वज्रपाणिरिवासुरान् ॥ ३-२०३-७८ (२३९०३)
धर्माश्रितेयं तु कथा कथिता हि तवानघ ।
यां श्रुत्वा मुनयः प्रीता नैमिषारण्यवासिनः ॥ ३-२०३-७९ (२३९०४)
वीतशोकभयक्रोधा विपाप्मानस्तथैव च ।
श्रुत्वेमां तु कथां राजन्भवन्तीह तु मानवाः ॥ ३-२०३-८० (२३९०५)
युधिष्ठिर उवाच। ३-२०३-८१क्ष् (२४४९)
किं तच्छौचं भवेद्येन विप्रः शुद्धः सदा भवेत् ।
तदिच्छामि महाप्राज्ञ श्रोतुं धर्मभृतांवर ॥ ३-२०३-८१ (२३९०६)
मार्कण्डेय उवाच। ३-२०३-८२क्ष् (२४५०)
वाक्शौचं क्रमशौचं च यच्च शौचं जलात्मकम् ।
त्रिभिः शौचैरुपेतो यः स स्वर्गी नात्र संशयः ॥ ३-२०३-८२ (२३९०७)
सायं प्रातश्च संध्यां यो ब्राह्मणोऽभ्युपसेवते ।
प्रजपन्पावनीं देवीं गायत्रीं वेदमातरम् ॥ ३-२०३-८३ (२३९०८)
स तया पावितो देव्या ब्राह्मणो नष्टकिल्बिषः ।
न सीदेत्प्रतिगृह्णानो महीमपि ससागराम् ॥ ३-२०३-८४ (२३९०९)
ये चास् दारुणा केचिद्ग्रहाः सूर्यादयो दिवि ।
ते चास्य सौम्या जायन्ते शिवाः शिवतराः सदा ॥ ३-२०३-८५ (२३९१०)
सर्वेनानुगतं चैनं दारुणाः पिशिताशनाः ।
घोररूपा महाकाया धर्षयन्ति द्विजोत्तमम् ॥ ३-२०३-८६ (२३९११)
नाध्यापनाद्याजनाद्वा अन्यायाद्वा प्रतिग्रहात् ।
दोषो भवति विप्राणां ज्वलिताग्निसमा द्विजाः ॥ ३-२०३-८७ (२३९१२)
दुर्वेदा वा सुवेदा वा प्राकृताः संस्कृतास्तथा ।
ब्राह्मणा नावमन्तव्या भस्मच्छन्ना इवाग्नयः ॥ ३-२०३-८८ (२३९१३)
यथा श्मशाने दीप्तौजाः पावको नैव दुष्यति ।
एवं विद्वानविद्वान्वा ब्राह्मणो दैवतं महत् ॥ ३-२०३-८९ (२३९१४)
प्राकारैश्च पुरद्वारैः प्रासादैश्च पृथग्विधैः ।

नगराणि न शोभन्ते हीनानि ब्राह्मणोत्तमैः ॥ ३-२०३-९० (२३९१५)
वेदाढ्या वृत्तसंपन्ना ज्ञानवन्तस्तपस्विनः ।
यत्रतिष्ठन्ति वै विप्रास्तन्नाम नगरं नृप ॥ ३-२०३-९१ (२३९१६)
व्रजे वाऽप्यथवाऽरण्ये यत्रसन्ति बहुश्रुताः ।
तत्तन्नगरमित्याहुः पार्थ तीर्थं च तद्भवेत् ॥ ३-२०३-९२ (२३९१७)
रक्षितारं च राजानं ब्राह्मणं च तपस्विनम् ।
अभिगम्याभिपूज्याथ सद्यः पापात्प्रमुच्यते ॥ ३-२०३-९३ (२३९१८)
पुण्यतीर्थाभिषेकं च पवित्राणां च कीर्तनम् ।
सद्भिः संभाषणं चैव प्रशस्तं कीर्त्यते बुधैः ॥ ३-२०३-९४ (२३९१९)
साधुसङ्गमपूतेन वाक्सुभाषितवारिणा ।
पवित्रीकृतमात्मानं सन्तो मन्नित नित्यशः ॥ ३-२०३-९५ (२३९२०)
त्रिदण्डधारणं मौनं जटाभारोऽथ मुण्डनम् ।
वल्कलाजिनसंवेष्टं व्रतचर्याऽभिषेचनम् ॥ ३-२०३-९६ (२३९२१)
अग्निहोत्रं वने वासः शरीरपरिशोषणम् ।
सर्वाण्येतानि मिथ्या स्युर्यदि भावो न निर्मलः ॥ ३-२०३-९७ (२३९२२)
विशुद्धिं चक्षुरादीनां षण्णामिन्द्रियगामिनाम् ।
विकारि तेषां राजेन्द्र सुदुष्करतरं मनः ॥ ३-२०३-९८ (२३९२३)
ये पापानि न कुर्वन्ति मनोवाक्कर्मबुद्धिभिः ।
ते तपन्ति महात्मानो न शरीरस्य शोषणम् ॥ ३-२०३-९९ (२३९२४)
न ज्ञातिभ्यो दया यस्य शुक्लदेहोऽविकल्मषः ।
हिंसा सा तपसस्तस्य नानाशित्वं तपः स्मृतम् ॥ ३-२०३-१०० (२३९२५)
तिष्ठन्गृहे चैव मुनिर्नित्यं शुचिरलंकृतः ।
यावज्जीवं दयावांश् सर्वपापैः प्रमुच्यते ॥ ३-२०३-१०१ (२३९२६)
न हि पापानि कर्माणि शुद्ध्यन्त्यनशनादिभिः ।
सीदत्यनशनादेव मांसशोणितलेपनः ॥ ३-२०३-१०२ (२३९२७)
अज्ञातं कर्म कृत्वा च क्लेशो नान्यत्प्रहीयते ।
नाग्निर्दहति कर्माणि भावशून्यस्य देहिनः ॥ ३-२०३-१०३ (२३९२८)
पुण्यादेव प्रव्रजन्ति शुध्यन्त्यनशनानि च ।
न मूलफलभक्षित्वान्न मौनान्नानिलाशनात् ॥ ३-२०३-१०४ (२३९२९)
शिरसो मुण्डनाद्वाऽपि न स्थानकुटिकासनात् ।
न जटाधारणाद्वाऽपिन तु स्थानकुटिकासनात्। ३-२०३-१०५ (२३९३०)
नित्यं ह्यनशनाद्वाऽपि नाग्निशुश्रूषणादपि ।
न चोदकप्रवेशेन न च क्ष्माशयनादपि ॥ ३-२०३-१०६ (२३९३१)
ज्ञानेन कर्मणा वापि जरामरणमेव च ।
व्याधयश्च प्रहीयन्ते प्राप्यते चोत्तमं पदम् ॥ ३-२०३-१०७ (२३९३२)
बीजानि ह्यग्निदग्धानि न रोहन्ति पुनर्यथा ।

ज्ञानदग्धैस्तथा क्लेशैर्नात्मा संडुज्यते पुनः ॥ ३-२०३-१०८ (२३९३३)
आत्मना विप्रहीणानि काष्ठकुण्ठोपमानि च ।
विनश्यन्ति न संदेहः फेनानीव महार्णवे ॥ ३-२०३-१०९ (२३९३४)
आत्मानं विन्दते येन सर्वभूतगुहाशयम् ।
श्लोकेन यदि वाऽर्धेन क्षीणं तस्य प्रयोजनम् ॥ ३-२०३-११० (२३९३५)
द्व्यक्षरादभिसंधाय केचिच्छ्लोकपदाङ्कितैः ।
शतैरन्यैः सहस्रैश्च प्रत्ययो मोक्षलक्षणम् ॥ ३-२०३-१११ (२३९३६)
नायं लोकोस्ति न परो न सुखं संशयात्मनः ।
ऊटुर्ज्ञानविदो वृद्धाः प्रत्ययो मोक्षलक्षणम् ॥ ३-२०३-११२ (२३९३७)
विदितार्थस्तु वेदानां परिवेद प्रयोजनम् ।
उद्विजेत्स तु देवेभ्यो दावाग्नेरिव मानवः ॥ ३-२०३-११३ (२३९३८)
शुष्कं तर्कं परित्यज्यआश्रयस्व श्रुतिं स्मृतिम् ।
एकाराभिसंबद्धं तत्त्वं हेतुभिरिच्छसि ।
बुद्धिर्न तस्य सिद्ध्येत साधनस्य विपर्ययात् ॥ ३-२०३-११४ (२३९३९)
वेद्यं पूर्वं वेदितव्यं प्रयत्ना-
त्तद्धीर्वेदस्तस्य वेदः शरीरम् ।
वेदस्तत्त्वं तत्समासोपलब्धिः
क्लीबस्त्वात्मा न स वेद्यं न वेदः ॥ ३-२०३-११५ (२३९४०)
वेदोक्तमायुर्देवानामाशिषश्चैव कर्मणाम् ।
फलत्यनुयुगं लोके प्रभावश्च शरीरिणाम् ॥ ३-२०३-११६ (२३९४१)
इन्द्रियाणां प्रसादेन तदेतत्परिवर्जयेत् ।
तस्मादनशनं दिव्यं निरुद्धेन्द्रियगोचरम् ॥ ३-२०३-११७ (२३९४२)
तपसा स्वर्गगमनं भोगो दानेन जायते ।
ज्ञानेन मोक्षो विज्ञेयस्तीर्थस्नानादघक्षयः ॥ ३-२०३-११८ (२३९४३)
वैशंपायन उवाच। ३-२०३-११९क्ष् (२४५१)
एवमुक्तस्तु राजेन्द्र प्रत्युवाच महायशाः ।
भगवञ्श्रोतुमिच्छामि प्रदानविधिमुत्तमम् ॥ ३-२०३-११९ (२३९४४)
मार्कण्डेय उवाच। ३-२०३-१२०क्ष् (२४५२)
यत्तत्पृच्छसि राजेन्द्रदानधर्मं युधिष्ठिर ।
इष्टं चेदं सदा मह्यं राजन्गौरवतस्तथा ॥ ३-२०३-१२० (२३९४५)
शृणु दानरहस्यानि श्रुतिस्मृत्युदितानि च ।
छायायां करिणः श्राद्धं तत्कर्म परिवीजितम् ।
दशकल्पायुतानीह न क्षीयेत युधिष्ठिर ॥ ३-२०३-१२१ (२३९४६)
जीवनाय समाक्लिन्नं वसु दत्त्वा महीपते ।
विप्रं तु वासयेद्यस्तु सर्वयज्ञैः स इष्टवान् ॥ ३-२०३-१२२ (२३९४७)
प्रतिस्रोतश्चित्रवाहाः पर्जन्योऽन्नानुसंचरन् ।

महाधुरि यथा नावा महापापैः प्रमुच्यते ।
विषुवे विप्रदत्तानि दधिमध्वक्षयाणि च ॥ ३-२०३-१२३ (२३९४८)
पर्वसु द्विगुणं दानमृतौ दशगुणं भवेत्। ३-२०३-ब्१२४ ग्अब्दे
दशगुणं प्रोक्तमनन्तं विषुवे भवेत्' ॥ ३-२०३-१२४ (२३९४९)
अयने विषुवे चैवषडशीतिमुखेषु च ।
चन्द्रसूर्योपरागे च दत्तमक्षयमुच्यते ॥ ३-२०३-१२५ (२३९५०)
ऋतुषु दशगुणं वदन्ति दत्तं
शतगुणमृत्वयनादिषु ध्रुवम् ।
भवति सहस्रगुणं दिनस्य राहो-
र्विषुवति चाक्षयमश्नुते फलम् ॥ ३-२०३-१२६ (२३९५१)
नाभूमिदो भूमिमश्नाति राज-
न्नायानदो यानमारुह्य याति ।
यान्यान्कामान्ब्राह्मणेभ्यो ददाति
तांस्तान्कामाञ्जायमानः स भुङ्क्ते ॥ ३-२०३-१२७ (२३९५२)
अग्नेरपत्यं प्रथमं सुवर्णं
भूर्वैष्णवी सूर्यसुताश्च गावः ।
लोकाश्त्रयस्तेन भवन्ति दत्ता
यः काञ्चनं गाश्च महीं च दद्यात् ॥ ३-२०३-१२८ (२३९५३)
परंहि दानान्न बभूव शाश्वतं
भव्यं त्रिलोके भवते कुतः पुनः ।
तस्मात्प्रधानं परमं हि दानं
वदन्ति लोकेषु विशिष्टबुद्धयः ॥ ३-२०३-१२९ (२३९५४)

इति श्रीमन्महाभारते अरण्यपर्वणि मार्कण्डेयसमास्यापर्वणि
त्र्यधिकद्विशततमोऽध्यायः ॥ २०३ ॥

Mahabharata - Vana Parva - Chapter Footnotes

३-२०३-५ यत्र जन्मनि असत्यं वृथा गोब्राह्मणादित्राणं विना कीर्त्यते
तदपि वृथेत्यर्थः ॥
३-२०३-६ आरूढश्चासौ पतितः ॥
३-२०३-७ गुरावप्यानृतिकेऽनृतप्रिये । वृषलः शूद्रः ॥
३-२०३-८ ब्राह्मबन्धवो जातिमात्रब्राह्मणआ वृत्ताध्ययनशून्याः ॥
३-२०३-१० दानं दानफलं अन्यत्तु दानं वृद्धभावेन जरया भुङ्क्ते ॥
३-२०३-१७ काण्डपृष्ठाः बाणनिषङ्गधराः क्षात्रवृत्तय इत्यर्थः
। दुर्वर्णः कुनखीति झ। पाः ॥
३-२०३-२५ माल्यं निर्माल्यम् । आकल्पः

गन्धादिनालंकरणम्। अरोगिप्रतिचर्याचेति नृपश्रेष्ठगोशतादिति
च ध। पाठः ॥
३-२०३-२७ अभिभूताय दारिद्र्यादेव ॥
३-२०३-२८ अभिवर्जितं दत्तम् ॥
३-२०३-२९ सा बहुभ्यो दत्ता ॥
३-२०३-४० प्रतिश्रया गृहाः येषां यैः उत्सृष्टा इति शेषः
। निर्वचनाः यमवार्तामपि न शृण्वन्तीत्यृतः ॥
३-२०३-४१ वसूनां धनानाम् ॥
३-२०३-४२ सत्योक्तास्तदनन्तरमिति ध । पाठः ॥
३-२०३-४५ सर्वं पूज्यतमं प्रश्नमिति ध । पाठः ॥
३-२०३-५१ प्रावृता वस्त्रदातार इति ध । पाठः ॥
३-२०३-७६ अपानपा नगदितास्तथा इति झ । पाठः। अपानपा अमद्यपाः
नगदिताः न केनचिद्दोषवत्तया कीर्तिताः ॥
३-२०३-८० राजन्न भवन्तीह इति झ । पाठः। न भवन्तीह मानवाः
स्वर्गं प्राप्योपर्युपरि गच्छन्तो मुक्तिमेव प्राप्नुवन्तीत्यर्थः ॥
३-२०३-८७ अन्यस्माद्वा इति झ । पाठः ॥
३-२०३-९४ पवित्राणां त्रिसुपर्णादिमन्त्राणाम् ॥
३-२०३-९६ अभिषेचनं तीर्थेषु ॥
३-२०३-९७ भावश्चित्तम् ॥
३-२०३-९८ न दुष्करमिति इन्द्रियगामिनां विषयाणां
विशुद्धिं विना अशनं भोगः सुकरम् । भोगो विषयशुद्धिं
नापेक्षते। पण्याङ्गनासङ्गादिनापि तत्सिद्धेः। किंतु अनाशित्वं
अमृतत्वं भोगवर्जनं वा तां विना न सुकरम्। यतो दुष्करं
स्वभावतो दुःसंपादमिति योजना। दुष्करत्वे हेतुमाहार्धेन
विकारीति। सुदुष्करतरं दुर्जयम् ॥
३-२०३-१०० ज्ञातिभ्यः पुत्राद्यर्थे । शुक्लदेहः
शुक्लवत्त्युपजीवी। अविकल्मषः शुक्लवृत्त्या यः कुटुम्बं पीडयति
स निष्कल्मषो न भवतीत्यर्थः। तस्योपपादनमुत्तरार्धेन
हिंसेति। अनाशित्वं अशनत्यागः ॥
३-२०३-१०१ मांसशोणितलेपनः देहः ॥
३-२०३-१०३ अज्ञातं शास्त्रत्किंतु स्वयमेव कल्पितं तप्तशिलारेहणादि
। तेन क्लेश एव नतु अन्यत्पापं प्रहीयते ॥
३-२०३-१०५ स्थानकुटिकासनात्स्थावरगृहत्यागात् ॥
३-२०३-१०९ आत्मनेति शरीराणीति शेषः ॥
३-२०३-११३ स तु वेदेभ्यः इति झ । पाठः ॥
३-२०३-११५ वेदपूर्वं वेदितव्यं प्रयत्नात्तद्वै वेदस्तस्य वेदः

शरीरम् ।वेदस्तत्वं तत्समासोपलब्धौ क्लीवस्त्वात्मा तत्सवेद्यस्य वेद्यम्। इति झ।पाठः ॥
३-२०३-११७ प्रसादेन नैर्मल्येन ।अनशनं नाम चित्तेन्द्रियनिरोधो नत्वाहारत्याग इत्याह तस्मादिति ॥
३-२०३-१२१ छायायां करिणः ।गुर्वमायोगेऽश्वत्थच्छाया गजच्छायाख्यं पर्व देशकालयोगजम्। तत्कर्णपरिवीजिते इति झ। पाठः। कर्णाइव कर्णा अश्वत्थपल्लवास्तैर्वीजिते देशे जलोपान्ते ॥
३-२०३-१२२ समाक्लिन्नं आर्द्रं वसु अन्नादिद्रव्यं दत्त्वा महीयते ।वैश्यं तु इति झ। पाठः ॥
३-२०३-१२३ प्रति प्रतीपं पूर्ववाहिन्याः नद्याः पश्चिमाभिमुखं स्नोतः प्रवाहो यत्रतत् तीर्थं प्रतिस्नोतः ।तत्र पात्रेऽर्पिताश्चित्रबाहा उत्तमाश्वाः। विपरिणम्य अक्षया इत्यपकृष्यते। अक्षयफला इत्यर्थः। पर्जन्योऽन्नानुसंचरन् अन्नार्थं अनुसंचरन्पर्जन्य इन्द्रोऽप्यक्षयः। अतिथिरूपेण तृप्त इन्द्रोप्यक्षयस्वर्गप्रद इत्यर्थः। महाधुरि महति धूसदृशे प्रवाहे ना पुरुषोवा यथा महाधुरि योगभारे। यथा सर्वपापैः प्रमुच्यते तथैव गजच्छायाश्राद्धदिकर्तारोपि मुच्यन्त इत्यर्तः ॥
३-२०३-१२४ विप्लवे विप्रदत्तानि दधिमस्त्वक्षयाणि च इति झ ।पाठः ॥
३-२०३-१२५ विषुवे तुलामेषसंक्रान्त्योः ।षडशीतिमुखे मिथुनकनयामीनसंक्रान्तिषु ॥
३-२०३-१२७ कामान् काम्यमानान्विषयान् ॥

---

वन-अध्यय२०४
॥ श्रीः ॥
३.२०४. अध्यायः २०४

Mahabharata - Vana Parva - Chapter Topics
मार्कण्डेयेन युधिष्ठिरंप्रति धुन्धुमारोपाख्यानकथनारम्भः ॥ १ ॥
उदङ्कनामकमुनेस्तपसा तुष्टेन विष्णुना तस्मै वरदानम् ॥ २ ॥
तथा विष्णुना उदङ्कंप्रति कुवलाश्वेन धुन्धुनामकासुरघातनविधानपूर्वकमन्तर्धानम् ॥ ३ ॥

Mahabharata - Vana Parva - Chapter Text

३-२०४-० (२३९५५)
वैशंपायन उवाच। ३-२०४-०क्ष् (२४५३)
श्श्रुत्वा तु राजा राजर्षेरिन्द्रद्युम्नस्य तत्तथा ।

मार्कण्डेयान्महाभागात्स्वर्गस्य प्रतिपादनम् ॥ ३-२०४-१ (२३९५६)
युधिष्ठिरो महाराज पप्रच्छ भरतर्षभ ।
मार्कण्डेयं तपोवृद्धं दीर्घायुषमकल्मषम् ॥ ३-२०४-२ (२३९५७)
विदितास्तव धर्मज्ञ देवदानवरक्षसाम् ।
राजवंशाश्च विविधा ऋषिवंशाश्च शाश्वताः ॥ ३-२०४-३ (२३९५८)
न तेऽस्त्यविदितं किंचिदस्मिँल्लोके द्विजोत्तम ।
अथ वेत्सि मुने वंशान्मनुष्योरगरक्षसाम् ॥ ३-२०४-४ (२३९५९)
देवगन्धर्वयक्षाणां किन्नराप्सरसां तथा ।
इदमिच्छाम्यहं श्रोतुं तत्त्वे द्विजसत्तम ॥ ३-२०४-५ (२३९६०)
कुवलाश्व इति ख्यात इक्ष्वाकुकुलसंभवः ।
कथं नाम विपर्यासाद्धुन्धुमारत्वमागतः ॥ ३-२०४-६ (२३९६१)
एतदिच्छामि तत्त्वेन ज्ञातुं भार्गवसत्तम ।
विपर्यस्तं यथा नाम कुवलाश्वस् धीमतः ॥ ३-२०४-७ (२३९६२)
श्वैशंपायन उवाच। ३-२०४-८क्ष् (२४५४)
युधिष्ठिरेणैवमुक्तो मार्कण्डेयो महामुनिः ।
धौन्धुमारमुपाख्यानं कथयामास भारत ॥ ३-२०४-८ (२३९६३)
मार्कण्डेय उवाच। ३-२०४-९क्ष् (२४५५)
हन्त ते कथयिष्यामि शृणु राजन्युधिष्ठिर ।
धर्मिष्ठमिदमाख्यानं धुन्धुमारस्य तच्छृणु ॥ ३-२०४-९ (२३९६४)
यथा स राजा ऐक्ष्वाकः कुवलाश्वो महीपतिः ।
धुन्धुमारत्वमगमत्तच्छृणुष्व महीपते ॥ ३-२०४-१० (२३९६५)
महर्षिर्विश्रुतस्तात उदङ्क इति भारत ।
मरुधन्वसु रम्येषु आश्रमस्तस्य कौरव ॥ ३-२०४-११ (२३९६६)
उदङ्कस्तु महाराज तपोतप्यत्सुदुश्चरम् ।
आरिराधयिषुर्विष्णुं बहून्वर्षगणान्विभुः ॥ ३-२०४-१२ (२३९६७)
तस्य प्रीतः स भगवान्साक्षाद्दर्शनमेयिवान् ।
दृष्ट्वा महर्षिस्तद्ब्रह्म तुष्टाव विविधैः स्तवैः ॥ ३-२०४-१३ (२३९६८)
उदङ्क उवाच। ३-२०४-१४क्ष् (२४५६)
त्वया देव प्रजाः सर्वाः ससुरासुरमानवाः ।
स्थावराणि च भूतानि जङ्गमानि तथैव च ॥ ३-२०४-१४ (२३९६९)
ब्रह्म वेदाश्च वेद्यं च त्वया सृष्टं महाद्युते ।
शिरस्ते गगनं देव नेत्रे शशिदिवाकरौ ॥ ३-२०४-१५ (२३९७०)
निःश्वासः पवनश्चापि तेजोऽग्निश्च तवाच्युत ।
बाहवस्ते दिशः सर्वाः कुक्षिश्चापि महार्णवः ॥ ३-२०४-१६ (२३९७१)
ऊरू ते पर्वता देव स्वं नाभिर्मधुसूदन ।
पादौ ते पृथिवी चैव रोमाण्योषधयस्तथा ॥ ३-२०४-१७ (२३९७२)

इन्द्रसोमाग्निवरुणा देवासुरमहोरगाः ।
प्रह्वास्त्वामुपतिष्ठन्ति स्तुवन्तो विविधैः स्तवैः ॥ ३-२०४-१८ (२३९७३)
त्वया व्याप्तानि सर्वाणि भूतानि भुवनेश्वर ।
योगिनः सुमहावीर्याः स्तुवन्ति त्वां महर्षयः ॥ ३-२०४-१९ (२३९७४)
त्वयि तुष्टे जगच्छान्तं त्वयि क्रुद्धे महद्भयम् ।
भयानामपनेतासि त्वमेकः पुरुषोत्तम ॥ ३-२०४-२० (२३९७५)
देवानां मानुषाणां च सर्वभूतसुखावहः ।
त्रिभिर्विक्रमणैर्देव त्रयो लोकास्त्वया वृताः ॥ ३-२०४-२१ (२३९७६)
असुराणां समृद्धानां विनाशश्च त्वया कृतः ।
तव विक्रमणैर्देवा निर्वाणमगमन्परम् ॥ ३-२०४-२२ (२३९७७)
पराभवं च दैत्येन्द्रास्त्वयि क्रुद्धे महाद्युते ।
त्वं हि कर्ता विकर्ता च भूतानामिह सर्वशः ।
आराधयित्वा त्वां देवाः सुखमेधन्ति नित्यशः ॥ ३-२०४-२३ (२३९७८)
एवं स्तुतो हृषीकेश उदङ्केन महात्मना ।
उदङ्कमब्रवीद्विष्णुः प्रीतस्तेऽहं वरं वृणु ॥ ३-२०४-२४ (२३९७९)
उदङ्क उवाच। ३-२०४-२५क्ष् (२४५७)
पर्याप्तो मे वरो ह्येष यदहं दृष्टवान्हरिम् ।
पुरुषं शाश्वतं दिव्यं स्रष्टारं जगतः प्रभुम् ॥ ३-२०४-२५ (२३९८०)
विष्णुरुवाच। ३-२०४-२६क्ष् (२४५८)
प्रीतस्तेऽहमलौल्येन भक्त्या तव च सत्तम ।
अवश्यं हि त्वया ब्रह्मन्मत्तो ग्राह्यो वरो द्विज ॥ ३-२०४-२६ (२३९८१)
एवं स च्छन्द्यमानस्तु वरेण हरिणा तदा ।
उदङ्कः प्राञ्जलिर्वव्रे वरं भरतसत्तम ॥ ३-२०४-२७ (२३९८२)
यदि मे भगवन्प्रीतः पुण्डरीकनिभेक्षण ।
धर्मे सत्ये दमे चैव बुद्धिर्भवतु मे सदा ।
अभ्यासश्च भवेद्भक्त्या त्वयि नित्यं ममेश्वर ॥ ३-२०४-२८ (२३९८३)
भगवानुवाच। ३-२०४-२९क्ष् (२४५९)
सर्वमेतद्धि भविता मत्प्रसादात्तव द्विज ॥ ३-२०४-२९ (२३९८४)
प्रतिभास्यति योगश्च येन युक्तो दिवौकसाम् ।
त्रयाणामपि लोकानां महत्कार्यं करिष्यसि ॥ ३-२०४-३० (२३९८५)
उत्सादनार्थं लोकानां धुन्धुर्नाम महासुरः ।
तपस्यति तपो घोरं शृणु यस्तं हनिष्यति ॥ ३-२०४-३१ (२३९८६)
श्राजा हि वीर्यवांस्तात इक्ष्वाकुरपराजितःघ
बृहदश्व इति ख्यातो भविष्यति महीपतिः ॥ ३-२०४-३२ (२३९८७)
तस्य पुत्रः शुचिर्दान्तः कुवलाश्व इति श्रतः ।
स योगबलामास्थाय मामकं पार्तिवोत्तमः ।

शासनात्तव विप्रर्षे धुन्धुमारो भविष्यति ॥ ३-२०४-३३ (२३९८८)
उदङ्कमेवमुक्त्वा तु विष्णुरन्तरधीयत ॥ ३-२०४-३४ (२३९८९)

इति श्रीमन्महाभारते अरण्यपर्वणि मार्कण्डेयसमास्यापर्वणि
चतुरधिकद्विशततमोऽध्यायः ॥ २०४ ॥
Mahabharata - Vana Parva - Chapter Footnotes

३-२०४-३ देवदानवराक्षसा इति ध ।पाठः ॥

---

वन-अध्यय२०५
॥ श्रीः ॥
३.२०५. अध्यायः २०५

Mahabharata - Vana Parva - Chapter Topics
उदङ्केन राज्येस्वपुत्राभिषेचनपूर्वकं वनंप्रस्थितं बृहदश्वं
प्रति तन्निवारणपूर्वकं धुन्धुनामकासुरहननचोदना ॥१ ॥

Mahabharata - Vana Parva - Chapter Text

३-२०५-० (२३९९०)
मार्कण्डेय उवाच। ३-२०५-०क्ष् (२४६०)
इक्ष्वाकौ संस्तिते राजञ्शशादः पृथिवीमिमाम् ।
प्राप्तः परमधर्मात्मा सोऽयोध्यायां नृपोऽभवत् ॥ ३-२०५-१ (२३९९१)
शशादस्य तु दायाद ककुत्स्थो नाम वीर्यवान् ।
अनेनाश्चापि काकुत्स्थः पृथुश्चानेनसः सुतः ॥ ३-२०५-२ (२३९९२)
विष्वगश्वः पृथोः पुत्रस्तस्मादार्द्रश्च जज्ञिवान् ।
आर्द्रस्य युवनाश्वस्तु श्रावस्तस्तस्य चात्मजः ॥ ३-२०५-३ (२३९९३)
जज्ञे श्रावस्तको राजा श्रावस्ती येन निर्मिता ।
श्रावस्तस्य तु दायादो बृहदश्वो महाबलः ॥ ३-२०५-४ (२३९९४)
बृहदश्वस् दायादः कुवलाश्व इति स्मृतः ।
कुवलाश्वस्य पुत्राणां सहस्राण्येकविंसतिः ॥ ३-२०५-५ (२३९९५)
सर्वे विद्यासु निष्णाता बलवन्तो दुरासदाः ।
कुवलाश्वश्च पितृतोगुणैरभ्यधिकोऽभवत् ॥ ३-२०५-६ (२३९९६)
समये तं तदा राज्ये बृहदश्वोऽभ्यषेचयत् ।
कुवलाश्वं महाराज शूरमुत्तमधार्मिकम् ॥ ३-२०५-७ (२३९९७)
पुत्रसंक्रामितश्रीस्तु बृहदश्वो महीपतिः ।
जगाम तपसे धीमांस्तपोवनममित्रहा ॥ ३-२०५-८ (२३९९८)

अथ शश्राव राजर्षिं तमुदङ्को नराधिप ।
वनं संप्रस्थितं राजन्बृहदश्वं द्विजोत्तमः ॥ ३-२०५-९ (२३९९९)
तमुदङ्को महातेजाः सर्वास्त्रविदुषांवरम् ।
न्यवारयदमेयात्मा समासाद्य पुरोत्तमे ॥ ३-२०५-१० (२४०००)
उदङ्क उवाच। ३-२०५-११क्ष् (२४६१)
भवता रक्षणं कार्यं तत्तावत्कर्तुमर्हसि ।
निरुद्विग्रा वयं राजंस्त्वत्प्रदाद्वसेमहि ॥ ३-२०५-११ (२४००१)
त्वया हि पृथिवी राजन्रक्ष्यमाणा महात्मना ।
भविष्यति निरुद्विग्ना नारण्यं गन्तुमर्हसि ॥ ३-२०५-१२ (२४००२)
पालन हि महान्धर्मः प्रजानामिह दृश्यते ।
न तथा दृश्यतेऽरण्ये माभूत्ते बुद्धिरीदृशी ॥ ३-२०५-१३ (२४००३)
ईदृशो न हि राजेन्द्र धर्मः क्वचन दृश्यते ।
प्रजानां पालने यत्नः पुरा राजर्षिभिः कृतः ॥ ३-२०५-१४ (२४००४)
रक्षितव्याः प्रजा राज्ञा तास्त्वं रक्षितुमर्हसि ।
निरुद्विग्नस्तपस्तप्तुं न हि शक्नोमि पार्थिव ॥ ३-२०५-१५ (२४००५)
ममाश्रमसमीपे वै समेषु मरुधन्वसु ।
समुद्रवालुकापूर्ण उज्जालक इति स्मृतः ।
बहुयोजनविस्तीर्णो बहुयोजनमायतः ॥ ३-२०५-१६ (२४००६)
तत्र रौद्रो दानवेन्द्रो महावीर्यपराक्रमः ।
मधुकैटभयोः पुत्रो धुन्धुर्नाम सुदारुणः ।
अन्तर्भूमिगतो राजन्वसत्यमितविक्रमः ॥ ३-२०५-१७ (२४००७)
तं निहत्य महाराज वनं त्वं गन्तुमर्हसि ॥ ३-२०५-१८ (२४००८)
शेते लोकविनाशाय तप आस्थाय दारुणम् ।
त्रिदशानां विनाशाय लोकानां चापि पार्थिव ॥ ३-२०५-१९ (२४००९)
अवध्यो दैवतानां हि दैत्यानामथ रक्षसाम् ।
नागानामथ यक्षाणां गन्धर्वाणां च सर्वशः ।
अवाप्यस वरं राजन्सर्वलोकपितामहात् ॥ ३-२०५-२० (२४०१०)
तं विनाशय भद्रं ते मा ते बुद्धिरतोऽन्यथा ।
प्राप्स्यसे महतीं कीर्तिं शाश्वतीमव्ययां ध्रुवाम् ॥ ३-२०५-२१ (२४०११)
क्रूरस्य तस्य स्वपतो वालुकान्तर्हितस्य च ।
संवत्सरस्य पर्यन्ते निःश्वासः संप्रवर्तते ॥ ३-२०५-२२ (२४०१२)
यदा तदा भूश्चलति सशैलवनकानना ।
तस्य निःश्वासवातेन रज उद्धूयते महत् ॥ ३-२०५-२३ (२४०१३)
आदित्यरथमाश्रित्य सप्ताहं भूमिकम्पनम् ।
सविस्फुलिङ्गं सज्वालं धूममिश्रं सुदारुणम् ॥ ३-२०५-२४ (२४०१४)
तेन राजन्न शक्नोमि तस्मिन्स्तातुं स्वआंश्रमे ॥ ३-२०५-२५ (२४०१५)

तं विनाशय राजेन्द्र लोकानां हितकाम्यया ।
लकाः स्वस्था भविष्यन्ति तस्मिन्विनिहतेऽसुरे ॥ ३-२०५-२६ (२४०१६)
ग्धुन्धुनामानमत्युग्रं दानवं धोरविग्रहम् ।
समरे धोरतुमुले विनाशय महेषुणा' ॥ ३-२०५-२७ (२४०१७)
त्वं हि तस्य विनाशाय पर्याप्त इति मे मतिः ।
तेजसा तव तेजश्च विष्णुराप्यायविष्यति ॥ ३-२०५-२८ (२४०१८)
विष्णुना च वरो दत्तः पूर्वं मम महीपते ॥ ३-२०५-२९ (२४०१९)
यस्तं महासुरं रौद्रं वधिष्यति महीपतिः ।
तेजस्तद्वैष्णवमिति प्रवेक्ष्यति दुरासदम् ॥ ३-२०५-३० (२४०२०)
तत्तेजस्त्वंसमाधाय राजेन्द्र भुवि दुःसहम् ।
तं निषूदय संदिष्टो दैत्यं रौद्रपराक्रमम् ॥ ३-२०५-३१ (२४०२१)
न हि धुन्धुर्महातेजास्तेजसाऽल्पेन शक्यते ।
निर्दग्धुं पृथिवीपाल स हि वर्षशतैरपि ॥ ३-२०५-३२ (२४०२२)

इति श्रीमन्महाभारते अरण्यपर्वणि मार्कण्डेयसमास्यापर्वणि
पञ्चाधिकद्विशततमोऽध्यायः ॥ २०५ ॥
Mahabharata - Vana Parva - Chapter Footnotes

३-२०५-३ बाडिशश्च पृथो पुत्र इति क ।थ। पाठः ॥

---

वन-अध्यय२०६
॥ श्रीः ॥
३.२०६. अध्यायः २०६

Mahabharata - Vana Parva - Chapter Topics
बृहदश्वेनोदङ्कंप्रति स्वपुत्रेण कुवलाश्वेन धुन्धुवधस्य
भावित्वकथनपूर्वकं वनंप्रति गमनम् ॥ १ ॥
धुन्धूत्पत्तिं पृष्टेन मार्कण्डेयेन युधिष्ठिरंप्रति तदुपोद्धाततया
मधुकैटभवृत्तान्तकथनम् ॥ २ ॥

Mahabharata - Vana Parva - Chapter Text

३-२०६-० (२४०२३)
मार्कण्डेय उवाच। ३-२०६-०क्ष् (२४६२)
स एवमुक्तो राजर्षिरुदङ्केनापराजितः ।
उदङ्कं कौरवश्रेष्ठ कृताञ्जलिथाब्रवीत् ॥ ३-२०६-१ (२४०२४)
न हि मे गमनं ब्रह्मन्मोघमेतद्भविष्यति ।

पुत्रो ममायं भगवन्कुवलाश्व इति स्मृतः ॥ ३-२०६-२ (२४०२५)
धृतिमान्क्षिप्रकारी च वीर्येणाप्रतिमो भुवि ।
प्रियं च ते सर्वमेतत्करिष्यति न संशयः ॥ ३-२०६-३ (२४०२६)
पुत्रैः परिवृतः सर्वैः शूरैः परिघबाहुभिः ।
ग्हनिष्यति महाबाहुस्तं वै धुन्धुं महाऽसुरम्'।
विसर्जयस्व मां ब्रह्मन्न्यस्तशस्त्रोस्मि सांप्रतम् ॥ ३-२०६-४ (२४०२७)
तथाऽस्त्विति च तेनोक्तो मुनिनाऽमिततेजसा ।
स तमादिश्य तनयमुदङ्काय महात्मने ।
क्रियतामिति राजर्षिर्जगाम वनमुत्तमम् ॥ ३-२०६-५ (२४०२८)
युधिष्ठिर उवाच। ३-२०६-६क्ष् (२४६३)
क एष भगवन्दैत्यो महावीर्यस्तपोधन ।
कस्य पुत्रोऽथ नप्ता वा एतदिच्छामि वेदितुम् ॥ ३-२०६-६ (२४०२९)
एवं महाबलो दैत्यो न श्रुतो मे तपोधन ।
ग्यस्य निश्वासवातेन कम्पते भूः सपर्वता' ॥ ३-२०६-७ (२४०३०)
एतदिच्छामि भगवन्याथातथ्येन वेदितुम् ।
सर्वमेव महाप्राज्ञ विस्तरेण तपोधन ॥ ३-२०६-८ (२४०३१)
मार्कण्डेय उवाच। ३-२०६-९क्ष् (२४६४)
शृणु राजननिदं सर्वं यथावृत्तं नराधिप ।
कथ्यमानं महाप्राज्ञ विस्तरेण यथातथम् ॥ ३-२०६-९ (२४०३२)
एकार्णवे निरालोके नष्टे स्थावरजङ्गमे ।
प्रनष्टेषु च भूतेषु सर्वेषु भरतर्षभ ॥ ३-२०६-१० (२४०३३)
प्रभवं लोककर्तारं विष्णुं शाश्वतमव्ययम् ।
यमाहुर्मुनयः सिद्धाः सर्वलोकमहेश्वरम् ।
ग्चतुर्भुजमुदाराङ्गं दृष्टवानस्मि भारत' ॥ ३-२०६-११ (२४०३४)
सुष्वाप भगवान्विष्णुरप्शय्यामेक एव हि ।
नागस् भोगे महति शेपस्यामिततेजसः ॥ ३-२०६-१२ (२४०३५)
लोककर्ता महाभाग भगवानच्युतो हरिः ।
नागभगेन महता परिरभ्य महीमिमाम् ॥ ३-२०६-१३ (२४०३६)
स्वपतस्तस्य देवस्य पद्मं सूर्यसमप्रभम् ।
नाभ्या विनिःसृतं दिव्यं तत्रोत्पन्नः पितामहः ॥ ३-२०६-१४ (२४०३७)
साक्षाल्लोकगुरुर्ब्रह्मा पद्मे सूर्यसमप्रभः ।
चतुर्वेदश्चतुर्मूर्तिश्चतुर्वर्गश्चतुर्मुखः ॥ ३-२०६-१५ (२४०३८)
स्वप्रभावाद्दुराधर्षो महाबलपराक्रमः ।
कस्यचित्त्वथ कालस्य दानवौ वीर्यवत्तमौ ॥ ३-२०६-१६ (२४०३९)
मधुश्च कैटभश्चैव दृष्टवन्तौ हरिं प्रभुम् ।
शयानं शयने दिव्ये नागभोगे महाद्युतिम् ॥ ३-२०६-१७ (२४०४०)

बहुयोजनविस्तीर्णे बहुयोजनमायते ।
किरीटकौस्तुभधरं पीतकौशेयवाससम् ॥ ३-२०६-१८ (२४०४१)
दीप्यमानं श्रिया राजंस्तेजसा वपुपा तथा ।
सहस्रसूर्यप्रतिममद्भुतोपमदर्शनम् ॥ ३-२०६-१९ (२४०४२)
विस्मय सुमहानासीन्मधुकैटभयोस्तदा ॥ ३-२०६-२० (२४०४३)
दृष्ट्वा पितामहं चापि पद्मे पद्मनिभेक्षणम् ।
वित्रासयेतामथ तौ ब्रह्माणममितौजसम् ॥ ३-२०६-२१ (२४०४४)
वित्रास्यमानो बहुधा ब्रह्मा ताभ्यां महायशाः ।
अकम्पयत्पद्मनालं ततोऽबुध्यत केशवः ॥ ३-२०६-२२ (२४०४५)
अथापश्त गोविन्दो दानवौ वीर्यवत्तरौ ॥ ३-२०६-२३ (२४०४६)
दृष्ट्वा तावब्रवीद्देवः स्वागतं वां महाबलौ ।
ददामि वां वरं श्रेष्ठं रप्रीतिर्हि मम जायते ॥ ३-२०६-२४ (२४०४७)
तौ प्रहस्य हृषीकेशं महादर्पौ महाबलौ ।
प्रत्यब्रूतां महाराज सहितौ मधुसूदनम् ॥ ३-२०६-२५ (२४०४८)
आवां वरय देव त्वं वरदौ स्वः सुरोत्तम ।
दातारौ स्वो वरं तुभ्यं तद्ब्रवीह्यविचारयन् ॥ ३-२०६-२६ (२४०४९)
भगवानुवाच। ३-२०६-२७क्ष् (२४६५)
प्रतिगृह्णे वरं वीरावीप्सितश्च वरो मम ।
युवां हि वीर्यसंपन्नौ न वामस्ति समः पुमान् ॥ ३-२०६-२७ (२४०५०)
वध्यत्वमुपगच्छेतां मम सत्यपराक्रमौ ।
एतदिच्छाम्यहं कामं प्राप्तुं लोकहिताय वै ॥ ३-२०६-२८ (२४०५१)
मधुकैटभावूचतुः। ३-२०६-२९क्ष् (२४६६)
अनृतंनोक्तपूर्वं नौ स्वैरेष्वपि कुतोऽन्यथा ।
सत्ये धर्मे च निरतौ विद्ध्यावां पुरुषोत्तम ॥ ३-२०६-२९ (२४०५२)
बले रूपे च शौर्ये च शमे न च समोस्ति नौ ।
धर्मे तपसि दाने च शीलसत्वदमेषु च ॥ ३-२०६-३० (२४०५३)
उपप्लवो महानस्मानुपावर्तत केशव ।
उक्तं प्रतिकुरुष्व त्वं कालो हि दुरतिक्रमः ॥ ३-२०६-३१ (२४०५४)
आवामिच्छावहे देव कृतमेकं त्वया विभो ।
आनावृतेऽवकाशे त्वं जह्यावां सुरसत्तम ॥ ३-२०६-३२ (२४०५५)
पुत्रत्वमधिगच्छाव तव चापि सुलोचन ।
वर एष वृतोदेव तद्विद्धि सुरसत्तम ॥ ३-२०६-३३ (२४०५६)
अनृतं मा भवेद्देव यद्धि नौ संश्रुतं तदा ॥ ३-२०६-३४ (२४०५७)
भगवानुवाच। ३-२०६-३५क्ष् (२४६७)
बाढमेवं करिष्यामि सर्वमेतद्भविष्यति ॥ ३-२०६-३५ (२४०५८)
सविचिन्त्याथ गोविन्दो नापश्यद्यदनावृतम् ।

अवकाशंपृथिव्यां वा दिवि वा मधुसूदनः ॥ ३-२०६-३६ (२४०५९)
स्वकावनावृतावूरू दृष्ट्वा देववरस्तदा ।
मधुकैटभयो राजञ्शिरसी मधुसूदनः ।
चक्रेण शितधारेण न्यकृन्तत महायशाः ॥ ३-२०६-३७ (२४०६०)

इति श्रीमन्महाभारते अरण्यपर्वणि मार्कण्डेयसमास्यापर्वणि
षडधिकद्विशततमोऽध्यायः ॥ २०६ ॥
Mahabharata - Vana Parva - Chapter Footnotes

३-२०६-९ न तेऽभिगमनं इति झ ।पाठः ॥

---

वन-अध्यय२०७
॥ श्रीः ॥
३.२०७. अध्यायः २०७

Mahabharata - Vana Parva - Chapter Topics
मधुकैटभपुत्रेण धुन्धुना
तपस्तोषिताद्विरिञ्चादवध्यत्वादिवरग्रहणेन देवानां पीडनम् ॥ १ ॥
उदङ्कचोदितेन कुवलाश्वेन समुद्रमध्यमधिवसतस्तस्य ब्रह्मास्त्रेण
दहनम् ॥ २ ॥
तदा देवादिभिः कुवलाश्वस्य धुन्धुमार इति नामकरणेन तस्मै
वरदानपूर्वकं स्वस्वस्थानंप्रति गमनम् ॥ ३ ॥
मार्कण्डेयेन युधिष्ठिरंप्रति तत्पुत्राणां नामकथनपूर्वकं
धुन्धुमारोपाख्यानस्तवनम् ॥ ४ ॥

Mahabharata - Vana Parva - Chapter Text

३-२०७-० (२४०६१)
मर्कण्डेय उवाच। ३-२०७-०क्ष् (२४६८)
धुन्धुर्नाम महाराज तयोः पुत्रो महाद्युतिः ।
स तपोऽतप्यत महन्महावीर्यपराक्रमः ॥ ३-२०७-१ (२४०६२)
अतिष्ठदेकपादेन कृशो धमनिसंततः ।
तस्मै ब्रह्मा ददौ प्रीतो वरं वव्रे स च प्रभुम् ॥ ३-२०७-२ (२४०६३)
देवदानवयक्षाणां सर्पगन्धर्वरक्षसाम् ।
अवध्योऽहं भवेयं वै वर एष वृतो मया ॥ ३-२०७-३ (२४०६४)
एवं भवतु गच्छेति तमुवाच पितामहः ।
स एवमुक्तस्तत्पादौ मूर्ध्ना स्पृष्ट्वा जगाम ह ॥ ३-२०७-४ (२४०६५)

सतु धुन्धुर्वरं लब्ध्वा महवीर्यपराक्रमः ।
अनुस्मरन्पितृवधं द्रुतं विष्णुमुपागमत् ॥ ३-२०७-५ (२४०६६)
सतु देवान्सगन्धर्वाञ्जित्वा धुन्धुरमर्षणः ।
बबाध सर्वानसकृद्विष्णुं देवांश्च वै भृशम् ॥ ३-२०७-६ (२४०६७)
समुद्रवालुकापूर्णे उज्जानक इति स्मृते ।
आगम्य च स दुष्टात्मा तं देशं भरतर्षभ ।
बाधतेस्म परं शक्त्या तमुदङ्काश्रमं विभो ॥ ३-२०७-७ (२४०६८)
अन्तर्भूमिगतस्तत्र वालुकान्तर्हितस्तथा ।
मधुकैटभयोः पुत्रो धुन्धुर्भीमपराक्रमः ॥ ३-२०७-८ (२४०६९)
शेते लोकविनाशाय तपोबलमुपाश्रितः ।
उदङ्कस्याश्रमाभ्याशे निःश्वसन्पावकार्चिषः ॥ ३-२०७-९ (२४०७०)
एतस्मिन्नेव काले तु राजा सबलवाहनः ।
कुवलाश्वो नरपतिरन्वितो बलशालिनाम् ॥ ३-२०७-१० (२४०७१)
सहस्रैरेकविंशत्या पुत्राणामरिमर्दनः ।
प्रायादुदङ्कसहितो धुन्धोस्तस्य वधाय वै ॥ ३-२०७-११ (२४०७२)
तमाविशत्ततो विष्णुर्भगवांस्तेजसा प्रभुः ।
उदङ्कस् नियोगेन लोकानां हितकाम्यया ॥ ३-२०७-१२ (२४०७३)
तस्मिन्प्रयाते दुर्धर्षे दिवि शब्दो महानभूत् ।
एष श्रीमान्नृपसुतो धुन्धुमारो भविष्यति ॥ ३-२०७-१३ (२४०७४)
दिव्यैश्च पुष्पैस्तं देवाः समन्तात्पर्यवाकिरन् ।
देवदुन्दुभयश्चापि नेदुः स्वयमनीरिताः ॥ ३-२०७-१४ (२४०७५)
शीतश्च वायुः प्रववौ प्रयाणे तस्य धीमतः ।
विपांसुलां महीं कुर्वन्ववर्ष च सुरेश्वरः ।
ग्प्रदक्षिणाश्चाप्यभवन्वन्यास्तं समृगद्विजाः' ॥ ३-२०७-१५ (२४०७६)
अन्तरिक्षे विमानानि देवतानां युधिष्ठिर ।
तत्रैव समदृश्यन्त धुन्धुर्यत्र महासुरः ॥ ३-२०७-१६ (२४०७७)
कुवलाश्वस्य धुन्योश्च युद्धकौतूहलान्विताः ।
देवगन्धर्वसहिताः समवैक्षन्महर्षयः ॥ ३-२०७-१७ (२४०७८)
नारायणेन कौरव्य तेजसाऽऽप्यायितस्तदा ।
स गतो नृपतिः क्षिप्रं पुत्रैस्तैः सर्वतो दिशम् ॥ ३-२०७-१८ (२४०७९)
अर्णवं स्वानयामास कुवलाश्वो महीपतिः ।
ग्हितार्तं सर्वलोकानामुदङ्कस्य वशे स्थितः' ॥ ३-२०७-१९ (२४०८०)
कुवलाश्वस् पुत्रैश्च तस्मिन्वै वालुकार्णवे ।
सप्तभिर्दिवसैः स्वात्वा दृष्टो धुन्धुर्महाबलः ॥ ३-२०७-२० (२४०८१)
आसीद्घोरं वपुस्तस्य वालुकान्तर्हितं महत् ।
दीप्यमानं यथा सूर्यस्तेजसा भरतर्षभ ॥ ३-२०७-२१ (२४०८२)

ततो धुन्धुर्महाराज दिशमावृत्य पश्चिमाम् ।
सुप्तोऽभूद्राजशार्दूल कालानलसमद्युतिः ॥ ३-२०७-२२ (२४०८३)
कुवलाश्वस्य पुत्रैस्तु सर्वतः परिवारितः ।
अभिद्रुतः शरैस्तीक्ष्णैर्गदाभिर्मुसलैरपि ॥ ३-२०७-२३ (२४०८४)
प्टसैः परिधैः प्रासैः खड्गैश् विमलैः शितैः ।
सवध्यमानः संक्रुद्धः समुत्तस्थौ महाबलः ॥ ३-२०७-२४ (२४०८५)
क्रुद्धश्चाभक्षयत्तेषां शस्त्राणि विविधानि च ।
आस्याद्वमन्पावकं स संवर्तकसमं तदा ॥ ३-२०७-२५ (२४०८६)
तान्सर्वान्नृपतेः पुत्रानदहत्स्वेन तेजसा ।
मुखजेनाग्निना क्रुद्धो लोकानुद्वर्तयन्निव ॥ ३-२०७-२६ (२४०८७)
क्षणेन राजशार्दूल पुरेव कपिलः प्रभुः ।
सगरस्यात्मजान्क्रुद्धस्तदद्भुतमिवाभवत् ॥ ३-२०७-२७ (२४०८८)
तेषु क्रोधाग्निदग्धेषु तदा भरतसत्तम ।
तं प्रबुद्धं महात्मानं कुम्भकर्णमिवापरम् ।
आससाद महातेजाः कुवलाश्वो महीपतिः ॥ ३-२०७-२८ (२४०८९)
तस्य वारिमहाराज सुस्राव बहु देहतः ।
तत्तदापीयतेतेजो राज्ञा वारिमयं नृप ॥ ३-२०७-२९ (२४०९०)
योगी योगेन सृष्टं स समयित्वा च वारिणा ।
ब्रह्मास्त्रेण ततो राजा दैत्यंक्रूरपराक्रमम् ।
ददाह भरतश्रेष्ठ सर्वलोकभवाय वै ॥ ३-२०७-३० (२४०९१)
सोऽस्त्रेण दग्ध्वा राजर्षिः कुवलाश्वो महासुरम् ।
सुरशत्रुममित्रघ्नस्त्रैलोक्येश इवापरः ॥ ३-२०७-३१ (२४०९२)
धुन्धोर्वधात्तदा राजा कुवलाश्वो महामनाः ।
धुन्धुमार इतिख्यातो नाम्ना समभवत्ततः ॥ ३-२०७-३२ (२४०९३)
प्रीतैश्च त्रेदशैः सर्वैर्महर्षिमसितैस्तदा ।
परं वृणीष्वत्युक्तः स प्राञ्जलिः प्रणतस्तदा ।
अतीव मुदितो राजन्निदंवचनमब्रवीत् ॥ ३-२०७-३३ (२४०९४)
दद्यां वित्तं द्विजाग्र्येभ्यः शत्रूणां चापि दुर्जयः ।
सख्यं च विष्णुना मे स्याद्भूतेष्वद्रोह एव च ।
धर्मे रतिश् सततं स्वर्गे वासस्तथाऽक्षयः ॥ ३-२०७-३४ (२४०९५)
तथाऽस्त्विति ततो देवैः प्रीतैरुक्तः स पार्थिवः ।
ऋषिभिश्च सगन्धर्वैरुदङ्केन च धीमता ॥ ३-२०७-३५ (२४०९६)
संभाष्य चैनं विविधैराशीर्वादैस्ततो नृषम् ।
देवा महर्षयश्चापि स्वानि स्तानानि भेजिरे ॥ ३-२०७-३६ (२४०९७)
तस्य पुत्रास्त्रयः शिष्टा युधिष्ठिर तदाऽभवन् ।
दृढाश्वः कपिलाश्वश्च भद्राश्वश्चैव भारत ॥ ३-२०७-३७ (२४०९८)

तेभ्यः परम्परा राजन्निक्ष्वाकूणां महात्मनाम् ।
श्वंशस्य सुमहाभाग राज्ञाममिततेजसाम्घ ॥ ३-२०७-३८ (२४०९९)
एवंसं निहतस्तेन कुवलाश्वेन सत्तम ।
धुन्धुर्नाम महादैत्यो मधुकैटभयोः सुतः ॥ ३-२०७-३९ (२४१००)
कुवलाश्वश्च नृपतिर्धुन्धुमार इति स्मृतः ।
नाम्ना च गुणयुक्तेन तदाप्रभृति सोऽभवत् ॥ ३-२०७-४० (२४१०१)
एतत्ते सर्वमाख्यातं यन्मां त्वं परिपृच्छसि ।
धौन्धुमारमुपाख्यानं प्रथितं यस्य कर्मणा ॥ ३-२०७-४१ (२४१०२)
इदं तु पुण्यमाख्यानं विष्णोः समनुकीर्तनम् ।
शृणुयाद्यः स धर्मात्मा पुत्रवांश्च भवेन्नरः ॥ ३-२०७-४२ (२४१०३)
आयुष्मान्भूतिमांश्चैव श्रुत्वा भवति पर्वसु ।
न च व्याधिभंयकिंचित्प्राप्नोति विगतज्वरः ॥ ३-२०७-४३ (२४१०४)

इति श्रीमन्महाभारते अरण्यपर्वणि गार्कण्डेयसमास्यापर्वणि
सप्ताधिकद्विशततमोऽध्यायः ॥ २०७ ॥
Mahabharata - Vana Parva - Chapter Footnotes

३-२०७-३० वृष्टिं सगमयित्वाविचारिणा इति क ।थ। पाठः। वह्निं
च शमयामास वारिणा इति झ। पाठः ॥

---

वन-अध्यय२०८
॥ श्रीः ॥
३.२०८. अध्यायः २०८

Mahabharata - Vana Parva - Chapter Topics
मार्कण्डेयेन युधिष्ठिरंप्रति पतिव्रतामाहात्म्यकथनारम्भः ॥ १ ॥

Mahabharata - Vana Parva - Chapter Text

३-२०८-० (२४१०५)
वैशंपायन उवाच। ३-२०८-०क्ष् (२४६९)
ततो युधिष्ठिरो राजा मार्कण्डेयं महाद्युतिम् ।
प्रपच्छ भरतश्रेष्ठ धर्मप्रश्नं स दुर्वचम् ॥ ३-२०८-१ (२४१०६)
श्रोतुमिच्छामि भगवन्स्त्रीणां माहातम्यमुत्तमम् ।
कथ्यमानं त्वया विप्र सूक्ष्मं धर्म्यं च तत्त्वतः ॥ ३-२०८-२ (२४१०७)
प्रत्यक्षमिह विप्रर्षे देवा दृश्यन्ति सत्तम ।
सूर्याचन्द्रमसौ वायुः पृथिवी वह्निरेव च ॥ ३-२०८-३ (२४१०८)

पिता माता च भगवान्गाव एव च सत्तम ।
यच्चान्यदेव विहितं तच्चापि भृगुनन्दन ॥ ३-२०८-४ (२४१०९)
मन्येऽहं गुरुवत्सर्वमेकपत्न्यस्तथा स्त्रियः ।
पतिव्रतानां शुश्रूषा दुष्करा प्रतिभाति मे ।
पतिव्रतानां महात्म्यं वक्तुमर्हसि नः प्रभो ॥ ३-२०८-५ (२४११०)
निरुध्य चेन्द्रियग्रामं मनः संरुध्य चानघ ।
पतिं दैवतवच्चापि चिन्तयन्त्य स्थिता हि या ॥ ३-२०८-६ (२४१११)
भगवन्दुष्करं त्वेतत्प्रतिभाति मम प्रभो ।
मातापित्रोश्च शुश्रूषा स्त्रीणां भर्तरि च द्विज ॥ ३-२०८-७ (२४११२)
स्त्रीणां धर्मात्सुघोराद्धि नान्यं पश्यामि दुष्करम् ।
साध्वाचाराः स्त्रियो ब्रह्मन्कुर्वन्तीह सदादृताः ॥ ३-२०८-८ (२४११३)
दुष्करं खलु कुर्वन्ति पितरो मातरश्च वै ।
एकपत्न्यश्च या नार्यो याश् सत्यं वदन्त्युत ॥ ३-२०८-९ (२४११४)
कुक्षिणा दशमासांश्च गर्भं संधारयन्ति याः ।
नार्यः कालेन संबूय किमद्भुततरं ततः ॥ ३-२०८-१० (२४११५)
संशयं परमं प्राप्य वेदनामतुलामपि ।
प्रजायन्ते सुतान्नार्यो दुःखेन महता विभो ॥ ३-२०८-११ (२४११६)
पुष्णन्ति चापि महता स्नेहेन द्विजपुङ्गव ।
गचिन्तयन्ति ततश्चापि किंशीलोऽयंभविष्यति' ॥ ३-२०८-१२ (२४११७)
याश्च क्रूरेषु सर्वेषु वर्तमाना जुगुप्सिताः ।
स्वकर्म कुर्वन्ति सदा दुष्करं तच्च मे मतम् ॥ ३-२०८-१३ (२४११८)
क्षत्रधर्मसमाचारतत्त्वं व्याख्याहि मे द्विज ।
धर्मः सुदुर्लभो विप्र नृशंसेन महात्मना ॥ ३-२०८-१४ (२४११९)
एतदिच्छामि भगवन्प्रश्नं प्रश्नविदांवर ।
श्रोतुं भृगुकुलश्रेष्ठ शुश्रूषे तव सुव्रत ॥ ३-२०८-१५ (२४१२०)
मार्कण्डेय उवाच। ३-२०८-१६क्ष् (२४७०)
हन्त तेऽहं समाख्यास्ये प्रश्नमेतं सुदुर्वचम् ।
तत्त्वेन भरतश्रेष्ठ गदतस्तन्निबोध मे ॥ ३-२०८-१६ (२४१२१)
मातरंश्रेयसीं तात पितृनन्ये तु मेनिरे ।
दुष्करं कुरुते माता विवर्धयति या प्रजाः ॥ ३-२०८-१७ (२४१२२)
तपसा देवतेज्याभिर्वन्दनेन तितिक्षया ।
सुप्रशस्तैरुपायैश्चापीहन्ते पितरः सुतान् ॥ ३-२०८-१८ (२४१२३)
एवं कृच्छ्रेण महता पुत्रं प्राप्य सुदुर्लभम् ।
चिन्तयन्ति सदा वीर कीदृशोऽयं भविष्यति ॥ ३-२०८-१९ (२४१२४)
आशंसते हि पुत्रेषु पिता माता च भारत ।
यशः कीर्तिमथैश्वर्यं तेजो धर्मं तथैव च ॥ ३-२०८-२० (२४१२५)

ग्मातुः पितुश्च राजेन्द्र सततं हितकारिंणोः'।
तयोराशां तु सफलां यः करोति स धर्मवित् ॥ ३-२०८-२१ (२४१२६)
पिता माता च राजेन्द्र तुष्यतो यस् नित्यशः ।
इह प्रेत्य च तस्याथ कीर्तिर्धर्मश्च शाश्वतः ॥ ३-२०८-२२ (२४१२७)
नैव यज्ञक्रियाः काश्चिन्न श्राद्धं नोपवासकम् ।
या तु भर्तरि शुश्रूषा तया स्वर्गं जयत्युत ॥ ३-२०८-२३ (२४१२८)
एतत्प्रकरणं राजन्नधिकृत्य युधिष्ठिर ।
पतिव्रतानां नियतं धर्मं चावाहितः शृणु ॥ ३-२०८-२४ (२४१२९)

इति श्रीमन्महाबारते अरण्यपर्वणि मार्कण्डेयसमास्यापर्वयणि
अष्टाधिकद्विशततमोऽध्यायः ॥ २०८ ॥
Mahabharata - Vana Parva - Chapter Footnotes

३-२०८-१३ ये चक्रूरेषु इति झ ।पाठः ॥
३-२०८-२० प्रजाधर्मं इति झ ।पाठः ॥

---

वन-अध्यय२०९
॥ श्रीः ॥
३.२०९. अध्यायः २०९

Mahabharata - Vana Parva - Chapter Topics
तरुतले तपस्यता कौशिकेनात्मोपरि पुरीषोत्सृष्ट्या बलाकायाः
सक्रोधनिरीक्षणेन दहनम् ॥ १ ॥
तथा भिक्षार्थं पतिव्रतायाः कस्याश्चिद्गृहं प्रविष्टं
भिक्षादाने चिरीकरणेन रुष्टं च कौशिकंप्रति तया स्वत्य
बलाकावृत्तान्तावगतिसूचनेन स्वशक्तिप्रकाशनपूर्वकं धर्मावगतये
धर्मव्याधसमीपगमनचोदना ॥ २ ॥

Mahabharata - Vana Parva - Chapter Text

३-२०९-० (२४१३०)
मार्कण्डेय उवाच। ३-२०९-०क्ष् (२४७१)
कश्चिद्द्विजातिप्रवरो वेदाध्यायी तपोधनः ।
तपस्वी धर्मशीलश्च कौशिको नाम भारत ॥ ३-२०९-१ (२४१३१)
साङ्गोपनिषदान्वेदानधीते द्विजसत्तमः ।
सवृक्षमूले कस्मिंश्चिद्वेदानुच्चारयन्स्थितः ॥ ३-२०९-२ (२४१३२)
उपरिष्टाच्च वृक्षस्य बलाका संन्यलीयत ।

तया पुरीषमुत्सृष्टं ब्राह्मणस्य तदोपरि ॥ ३-२०९-३ (२४१३३)
समवेक्ष्यततः क्रुद्धः सममध्यायत द्विजः ।
ग्तां बलकां महाराज निलीनां नगमूर्धनि ॥ ३-२०९-४ (२४१३४)
भृशं क्रोधाभिभूतेन बलाका सा निरीक्षिता ।
अपध्याता च विप्रेण न्यपतद्धरणीतले ॥ ३-२०९-५ (२४१३५)
बलाकां पतितां दृष्ट्वा गतसत्वामचेतनाम् ।
कारुण्यादभिसंतप्तः पर्यशोचत तां द्विजः ।
अकार्यं कृतवानस्मि द्वेषरागबलात्कृतः ॥ ३-२०९-६ (२४१३६)
इत्युक्ताव बहुशो विद्वान्ग्रामं भैक्षाय संश्रितः ।
ग्रामे शुचीनि प्रचरन्कुलानि भरतर्षभ ॥ ३-२०९-७ (२४१३७)
देहीति याचमानोऽसौ तिष्ठेत्युक्तः स्त्रिया ततः ।
शौचं तु यावत्कुरुते भाजनस्य कुटुम्बिवी ॥ ३-२०९-८ (२४१३८)
एतस्मिन्नन्तरे राजन्क्षुधासंपीडितो भृशम् ।
भर्ता प्रविष्टः सहसा तस्या भरतसत्तम ॥ ३-२०९-९ (२४१३९)
सा तु दृष्ट्वा पतिं साध्वी ब्राह्मणं व्यपहाय तम् ।
पाद्यमाचमनीयं वै ददौ भर्तुस्तथाऽऽसनम् ॥ ३-२०९-१० (२४१४०)
प्रह्वा पर्यचरच्चापि भर्तारमसितेक्षणा ।
आहारेणाथ भक्ष्यैश्च वाक्यैः सुमधुरैस्तथा ॥ ३-२०९-११ (२४१४१)
उच्छिष्टं भाविता भर्तुर्भुङ्क्ते नित्यं युधिष्ठिर ।
दैवतं च पतिं मेने भर्तुश्चित्तानुसारिणी ॥ ३-२०९-१२ (२४१४२)
कर्मणा मनसा वाचा नात्यश्नान्नापि चापिवत् ।
तं सर्वभावोपगता पतिशुश्रूषणे रता ॥ ३-२०९-१३ (२४१४३)
साध्वाचारा शुचिर्दक्षा कुटुम्बस्य हितैषिणी ।
भर्तुश्चापि हितं यत्तत्सततं साऽनुवर्तते ॥ ३-२०९-१४ (२४१४४)
देवतातिथिभृत्यानां श्वश्रूश्वशुरयोस्तथा ।
शुश्रूषणपरा नित्यं सततं संयतेन्द्रिया ॥ ३-२०९-१५ (२४१४५)
सा ब्राह्मणं तदा दृष्ट्वा संस्थितं भैक्षकाङ्क्षिणम् ।
कुर्वती पतिशुश्रूषां सस्माराथ शुभेक्षणा ॥ ३-२०९-१६ (२४१४६)
व्रीडिता साऽभवत्साध्वी तदा भरतसत्तम ।
भिक्षामादाय विप्राय निर्जगाम यशस्विनी ॥ ३-२०९-१७ (२४१४७)
ब्राह्मण उवाच। ३-२०९-१८क्ष् (२४७२)
किमिदं भवति त्वं मां तिष्ठेत्युक्त्वा वराङ्गने ।
उपरोधं कृतवती न विसर्जितवत्यसि ॥ ३-२०९-१८ (२४१४८)
मार्कण्डेय उवाच। ३-२०९-१९क्ष् (२४७३)
ब्राह्मणं क्रोधसंतप्तं ज्वलन्तमिव तेजसा ।
दृष्ट्वा साध्वी मनुष्येन्द्रसान्त्वपूर्वं वचोऽब्रवीत् ॥ ३-२०९-१९ (२४१४९)

ग्क्षमस्वविप्रप्रवर क्षमस्व स्त्रीजडात्मताम् ।
प्रसीद भगवन्मह्यं कृपां कुरु मयि द्विज' ॥ ३-२०९-२० (२४१५०)
क्षन्तुमर्हसि मे विद्वन्भर्ता मे दैवतं महत् ।
स चापि क्षुधितः श्रान्तः प्राप्तः शुश्रूषितोमया ॥ ३-२०९-२१ (२४१५१)
ब्राह्मण उवाच। ३-२०९-२२क्ष् (२४७४)
ब्राह्मणआ न गरीयांसो गरीयांस्ते पतिः कृतः ।
गृहस्थधर्मे वर्तन्ती ब्राह्मणानवमन्यसे ॥ ३-२०९-२२ (२४१५२)
इन्द्रोऽप्येषां प्रणमते किं पुनर्मानवो भुवि ।
अवलिप्ते न जानीषे वृद्धानां न श्रुतं त्वया ॥ ३-२०९-२३ (२४१५३)
ब्राह्मणा ह्यग्निसदृशा दहेयुः पृथिवीमपि ।
ग्सपर्वतवनद्वीपां क्षिप्रमेवावमानिताः' ॥ ३-२०९-२४ (२४१५४)
स्त्र्युवाच। ३-२०९-२५क्ष् (२४७५)
श्नाहं बलाका विप्रर्षे त्यज क्रोधं तपोधन ।
अनया क्रुद्धया दृष्ट्या क्रुद्धः किं मां करिष्यसिघ ३-२०९-२५ (२४१५५)
नावजानाम्यहं विप्रान्देवैस्तुल्यान्मनस्विनः ।
अपराधमिमं विप्र क्षन्तुमर्हसि मेऽनघ ॥ ३-२०९-२६ (२४१५६)
जानामि तेजो विप्राणआं महाभाग्यं च धीमताम् ।
अपेयः सागरः क्रोधात्कृतो हि लवणोदकः ॥ ३-२०९-२७ (२४१५७)
तथैव दीप्ततपसां मुनीनां भावितात्मनाम् ।
येषां क्रोधाग्निरद्यापि समुद्रे नोपशाम्यति ।
ग्कस्तान्परिभवेन्मूढो ब्राह्मणानमितौजसः' ॥ ३-२०९-२८ (२४१५८)
ब्राह्मणानां परिभवाद्वातापिः सुदुरात्मवान् ।
अगस्त्यमृषिमासाद्य जीर्णः क्रूरो महासुरः ॥ ३-२०९-२९ (२४१५९)
बहुप्रभावाः श्रूयन्ते ब्राह्मणानां महात्मनाम् ।
क्रोधः सुविपुलो ब्रह्मन्प्रसादश्च महात्मनाम् ।
अस्मिंस्त्वतिक्रमे ब्रह्मन्क्षन्तुमर्हसि मेऽनघ ॥ ३-२०९-३० (२४१६०)
पतिशुश्रूषया धर्मो य स मे रोचते द्विज ।
दैवतेष्वपि सर्वेषु भर्ता मे दैवतं परम् ॥ ३-२०९-३१ (२४१६१)
अविशेषेण तस्याहं कुर्यां धर्मं द्विजोत्तम ।
शुश्रूषायाः फलं पश्य पत्युर्ब्राह्मण यादृशम् ॥ ३-२०९-३२ (२४१६२)
बलाका हि त्वया दग्धा रोषात्तद्विदितं मया ।
क्रोधः शत्रुः शरीरस्थो मनुष्याणां द्विजोत्तम ॥ ३-२०९-३३ (२४१६३)
ग्मास्म क्रुध्यो बलाकेव न वध्याऽस्मि पतिव्रता'।
यः क्रोधमोहौ त्यजति तं देवा ब्राह्मणं विदुः ॥ ३-२०९-३४ (२४१६४)
यो वदेदिह सत्यानि गुरुं संतोषयेत च ।
हिंसितश्च त हिंसेत तं देवा ब्राह्मणं विदुः ॥ ३-२०९-३५ (२४१६५)

जितेन्द्रियो धर्मपरः स्वाध्यायनिरतः शुचिः ।
कामक्रोधौ वशौ यस्य तं देवा ब्राह्मणं विदुः ॥ ३-२०९-३६ (२४१६६)
यस्य चात्मसमो लोको धर्मज्ञस्य मनस्विनः ।
सर्वधर्मेषु चरतस्तं देवा ब्राह्मणं विदुः ॥ ३-२०९-३७ (२४१६७)
योऽध्यापयेदधीयीत यजेद्वा याजयीत वा ।
दद्याद्वाऽपि यथाशक्ति तं देवा ब्राह्मणं विदुः ॥ ३-२०९-३८ (२४१६८)
ब्राह्मचारी वदान्यो योप्यधीयादि्द्वजपुङ्गवः ।
स्वाध्यायवानमत्तो वै तं देवा ब्राह्मणं विदुः ॥ ३-२०९-३९ (२४१६९)
यद्ब्राह्मणानां कुशलं तदेषां परिकीर्तयेत् ।
सत्यं तथा व्याहरतां नानृते रमते मनः ॥ ३-२०९-४० (२४१७०)
धनं तु ब्राह्मणस्याहुः स्वाध्यायं दममार्जवम् ।
इन्द्रियाणां निग्रहं च शाश्वतं द्विजसत्तम ॥ ३-२०९-४१ (२४१७१)
सत्यार्जवे धर्ममाहुः परं धर्मविदो जनाः ।
दुर्ज्ञेयः शाश्वतो धर्मः स च सत्ये प्रतिष्ठितः ॥ ३-२०९-४२ (२४१७२)
श्रुतिप्रमाणो धर्मः स्यादिति वृद्धानुशासनम् ।
बहुधा दृश्यते धर्मः सूक्ष्म एव द्विजोत्तम ॥ ३-२०९-४३ (२४१७३)
भगवानपि धर्मज्ञः स्वाद्यायनिरतः शुचिः ।
न तु तत्त्वेन भगवन्दर्मं वेत्सीति मे मतिः ॥ ३-२०९-४४ (२४१७४)
यदि विप्र न जानीषे धर्मं परमकं द्विज ।
धर्मव्याधं तत पृच्छ गत्वा तु मिथिलां पुरीम् ॥ ३-२०९-४५ (२४१७५)
मातापितृभ्यां शुश्रूपुः सत्यवादी जितेन्द्रियः ।
मिथिलायां वसेद्व्याधः स ते धर्मान्प्रवक्ष्यति ॥ ३-२०९-४६ (२४१७६)
तत्र गच्छस्व भद्रं ते यथाकामं द्विजोत्तम ।
ग्व्याधः परमधर्मात्मा स ते छेत्स्यति संशयम्' ॥ ३-२०९-४७ (२४१७७)
अत्युक्तमपि मे सर्वं क्षन्तुमर्हस्यनिन्दित ।
स्त्रियो ह्यवध्याः सर्वेषां ये धर्ममभिविन्दते ॥ ३-२०९-४८ (२४१७८)
ब्राह्मण उवाच। ३-२०९-४९क्ष् (२४७६)
प्रीतोस्मि तव भद्रं ते गतः क्रोधश्च शोभने ।
उपालम्भस्त्वया प्रोक्तो मम निश्रेयसं परम् ॥ ३-२०९-४९ (२४१७९)
स्वस्ति तेऽस्तु गमिष्यामि साधयिष्यामि शोभने ।
ग्धन्या त्वमसि कल्याणि यस्याः स्याद्वृत्तमीदृशम्। ३-२०९-५० (२४१८०)
मारक्ण्डेय उवाच। ३-२०९-५१क्ष् (२४७७)
३-२०९-५१ (२४१८१)
तया विसृष्टो निर्गत्य स्वमेव भवनं ययौ ।
विनिन्दन्स स्वमात्मानं कौशिको द्विजसत्तमः ॥
Mahabharata - Vana Parva - Chapter Footnotes

३-२०९-२८ दण्डकेनोपशाम्यति इति झ ।पाठः ॥
३-२०९-४८ अभिविन्दते जानन्तीत्यर्थः ॥
३-२०९-५० साधयिष्यामि स्वकार्यमिति शेषः ॥

---

वन-अध्यय२१०
॥ श्रीः ॥
३.२१०. अध्यायः २१०

Mahabharata - Vana Parva - Chapter Topics
कौशिकनामकेन द्विजवरेण पतिव्रतावचनाद्धर्मावगतये
धर्मव्याधंप्रति गमनम् ॥ १ ॥
व्याधेन तस्मै नानाधर्मोपदेशः ॥ २ ॥

Mahabharata - Vana Parva - Chapter Text

३-२१०-० (२४१८२)
मार्कण्डेय उवाच। ३-२१०-०क्ष् (२४७८)
चिन्तयित्वा तदाश्चर्यं स्त्रिया प्रोक्तमशेपतः ।
विनिन्दन्स द्विजोऽऽत्मानमागस्कृत इवाबभौ ॥ ३-२१०-१ (२४१८३)
चिन्तयानः स धर्मस्य सूक्ष्मां गतिमथाब्रवीत् ।
श्रद्दधानेन वै भाव्ये गच्छामि मिथिलामहम् ॥ ३-२१०-२ (२४१८४)
कृतात्मा धर्मवित्तस्यां व्याधो निवसते किल ।
तं गच्चाम्यहमद्यैव धर्मं प्रष्टुं तपोधनम् ॥ ३-२१०-३ (२४१८५)
इतिसंचिन्त्य मनसा श्रद्दधानः स्त्रिया वचः ।
बलाकाप्रत्ययेनासौ धर्म्यैश्च वचनैः शुभैः ॥ ३-२१०-४ (२४१८६)
संप्रतस्थे स मिथिलां कौतूहलसमन्वितः ।
अतिक्रामन्नरण्यानि ग्रामांश्च नगराणि च ॥ ३-२१०-५ (२४१८७)
ततो जगाम मिथिलां जनकेन सुरक्षिताम् ।
धर्मसेतुसमाकीर्णां यज्ञोत्सववतीं शुभाम् ॥ ३-२१०-६ (२४१८८)
गोपुराट्टालकवतीं हर्म्यप्राकारशोभनाम् ।
प्रविश्य नगरीं रम्यां विमानैर्बहुभिर्युताम् ॥ ३-२१०-७ (२४१८९)
पण्यैश्च बहुभिर्युक्तां सुविभक्तमहापथाम् ।
अश्वै रथैस्तथा नागैर्योधैश्च बहुभिर्युताम् ॥ ३-२१०-८ (२४१९०)
हृष्टपुष्टजनाकीर्णां नित्योत्सवसमाकुलाम् ।
सोऽपस्यद्बहुवृत्तान्तां ब्राह्मणः समतिक्रमन् ॥ ३-२१०-९ (२४१९१)
धर्मव्याधमपृच्छच्च स चास्य कथितो द्विजैः ।

अपश्यत्तत्रगत्वा तं सूनामध्ये व्यवस्थितम् ॥ ३-२१०-१० (२४१९२)
मार्गमाहिपमांसानि विक्रीणन्तं तपस्विनम् ।
आकुलत्वाच्च क्रेतृणामेकान्ते संस्थितो द्विजः ॥ ३-२१०-११ (२४१९३)
स तु ज्ञाता द्विजं प्राप्तं सहसा संभ्रमोत्थितः ।
आजगाम यतो विप्रः स्थित एकान्तआसने ॥ ३-२१०-१२ (२४१९४)
व्याध उवाच। ३-२१०-१३क्ष् (२४७९)
अभिवादये त्वां भगवन्स्वागतं ते द्विजोत्तम ।
अहं व्याधो हि भद्रं ते किं करोमि प्रशाधि माम् ॥ ३-२१०-१३ (२४१९५)
एकपत्न्या यदुक्तोसि गच्छ त्वं मिथिलामिति ।
जानाम्येतदहं सर्वं यदर्थं त्वमिहागतः ॥ ३-२१०-१४ (२४१९६)
श्रुत्वा च तस्य तद्वाक्यं स विप्रो भृशविस्मितः ।
द्वितीयमिदमाश्चर्यमित्यचिन्तयत द्विजः ॥ ३-२१०-१५ (२४१९७)
अदेशस्थं हि ते स्तानमिति व्याघोऽब्रवीद्द्विजम् ।
गृहं गच्छाव भगवन्यदि ते रोचतेऽनघ ॥ ३-२१०-१६ (२४१९८)
मार्कण्डेय उवाच। ३-२१०-१७क्ष् (२४८०)
बाढमित्येव तं विप्रो हृष्टो वचनमब्रवीत् ।
अग्रतस्तु द्विजं कृत्वा स जगाम गृहं प्रति ॥ ३-२१०-१७ (२४१९९)
प्रविश्य च गृहंरम्यमासनेनाभिपूजितः ।
ग्अर्घ्येण च स वै तेन व्याधेन द्विजसत्तमः' ॥ ३-२१०-१८ (२४२००)
पाद्यमाचमनीयं च प्रतिगृह्य द्विजोत्तमः ।
ततः सुखोपविष्स्तं व्याधं वचनमब्रवीत् ॥ ३-२१०-१९ (२४२०१)
कर्मैतद्वै न सदृशं भवतः प्रतिभाति मे ।
अनुतप्ये भृशं तात तव घोरेण कर्मणा ॥ ३-२१०-२० (२४२०२)
व्याध उवाच। ३-२१०-२१क्ष् (२४८१)
कुलोचितमिदं कर्म पितृपैतामहं परम् ।
वर्तमानस्य मे धर्मे स्वे मन्युं मा कृथा द्विज ॥ ३-२१०-२१ (२४२०३)
विधात्रा विहितं पूर्वं कर्म स्वमनुपालयन् ।
प्रयत्नाच्च गुरू वृद्धौ शुश्रूषेऽहं द्विजोत्तम ॥ ३-२१०-२२ (२४२०४)
सत्यं वदे नाभ्यसूये यथाशक्ति ददामि च ।
देवतातिथिभृत्यानामवशिष्टेन वर्तये ॥ ३-२१०-२३ (२४२०५)
न कुत्सयाम्यहं किंचिन्न गर्हे बलवत्तरम् ।
कृतमन्वेति कर्तारं पुरा कर्म द्विजेत्तम ॥ ३-२१०-२४ (२४२०६)
कृषिगोरक्ष्यवाणिज्यमिह लोकस्य जीवनम् ।
दण्डनीतिस्त्रयो विद्या तेन लोको भवत्युत ॥ ३-२१०-२५ (२४२०७)
कर्म शूद्रे कृषिर्वैश्ये संग्रामः क्षत्रिये स्मृतः ।
ब्रह्मचर्यतपोमन्त्राः सत्यं च ब्राह्मणे सदा ॥ ३-२१०-२६ (२४२०८)

राजा प्रशास्ति धर्मेण स्वकर्मनिरताः प्रजाः ।
विकर्माणश्च ये केचित्तान्युनक्ति स्वकर्मसु ॥ ३-२१०-२७ (२४२०९)
भेतव्यं हि सदा राज्ञां प्रजानामधिपा हिते ।
मारयन्ति विकर्मस्थं लुब्धा मृगमिवेषुभिः ॥ ३-२१०-२८ (२४२१०)
जनकस्येह विप्रर्षे विकर्मस्थो न विद्यते ।
स्वकर्मनिरता वर्णाश्चत्वारोपि द्विजोत्तम ॥ ३-२१०-२९ (२४२११)
स एष जनको राजा दुर्वृत्तमपि चेत्सुतम् ।
दण्ड्यं दण्डे निक्षिपति यथा न ग्लाति धार्मिकम् ॥ ३-२१०-३० (२४२१२)
सुयुक्तचारो नृपतिः सर्वं धर्मेण पश्यति ।
श्रीश्च राज्यं च दण्डश्च क्षत्रियाणां द्विजोत्तम ॥ ३-२१०-३१ (२४२१३)
राजानो हि स्वधर्मेण श्रियमिच्छन्ति भूयसीम् ।
सर्वेषामेव वर्णानां त्राता राजा भवत्युत ॥ ३-२१०-३२ (२४२१४)
परेण हि हतान्ब्रह्मन्वराहमहिषानहम् ।
न स्वयं हन्मि विप्रर्षे विक्रीणामि सदा त्वहम् ॥ ३-२१०-३३ (२४२१५)
न भक्षयामि मांसानि ऋतुगामी तथाह्यहम् ।
सदोपवासी च तथा नक्तभोजी सदा द्विज ॥ ३-२१०-३४ (२४२१६)
अशीलश्चापि पुरुषो भूत्वा भवति शीलवान् ।
प्राणिहिंसारतिश्चापि भवते धार्मिकः पुनः ॥ ३-२१०-३५ (२४२१७)
व्यभिचारान्नरेन्द्राणां धर्मः संकीर्यते महान् ।
अधर्मो वर्तते चापि संकीर्यन्ते ततः प्रजाः ॥ ३-२१०-३६ (२४२१८)
भेरुण्डा वामनाः कुब्जाः स्थूलशीर्षास्तथैव च ।
क्लीबाश्चान्धाश्च बधिरा जायन्तेऽत्युच्चलोचनाः ॥ ३-२१०-३७ (२४२१९)
पार्थिवानामधर्मत्वात्प्रजानामभवः सदा ।
स एष राजा जनकः प्रजा धर्मेण पश्यति ॥ ३-२१०-३८ (२४२२०)
अनुगृह्णन्प्रजाः सर्वाः स्वधर्मनिरताः सदा ।
ग्पात्येष राजा जनकः पितृवद्द्विजसत्तम' ॥ ३-२१०-३९ (२४२२१)
येचैव मां प्रशंसन्ति येच निन्दन्ति मानवाः ।
सर्वान्सुपरिणीतेन कर्माणा तोषयाम्यहम् ॥ ३-२१०-४० (२४२२२)
ये जीवन्ति स्वधर्मेण संयुञ्जन्ति च पार्थिवाः ।
न किंचिदुपजीवनति दान्ता उत्थानसीलिनः ॥ ३-२१०-४१ (२४२२३)
शक्त्याऽन्नदानं सततं तितिक्षा धर्मनित्यता ।
यथार्हं प्रतिपूजा च सर्वभूतेषु वै दया ॥ ३-२१०-४२ (२४२२४)
त्यागान्नान्यत्र मर्त्यानां गुणास्तिष्ठान्ति पूरुषे ।
मृषावादं परिहरेत्कुर्यात्प्रियमयाचितः ॥ ३-२१०-४३ (२४२२५)
न च कामान्न संरम्भान्न द्वेषाद्धर्ममुत्सृजेत् ।
प्रिये नातिभृशं हृष्येदप्रिये न च संज्वरेत् ॥ ३-२१०-४४ (२४२२६)

न मुह्येदर्थकृच्छ्रेषु न च धर्मं परित्यजेत् ।
कर्म चेत्किंचिदन्यत्स्यादितरन्न तदाचरेत् ॥ ३-२१०-४५ (२४२२७)
यत्कल्याणमभिध्यायेत्तत्रात्मानं नियोजयेत् ।
न पापं प्रति पापः स्यात्साधुरेव सदा भवेत् ॥ ३-२१०-४६ (२४२२८)
आत्मनैव हतः पापो यः पापं कर्तुमिच्छति ।
कर्म चैतदसाधूनां वृजिनानामसाधुकम् ॥ ३-२१०-४७ (२४२२९)
न धर्मोस्तीति मन्वानाः शुचीनवहसन्ति ये ।
अश्रद्दधाना धर्मस् ते नश्यन्ति न संशयः ॥ ३-२१०-४८ (२४२३०)
महादृतिरिवाध्मातः पापो भवति नित्यदा ।
गसाधुः सन्नतिमानेव सर्वत्रद्विजसत्तम' ॥ ३-२१०-४९ (२४२३१)
मूढानामवलिप्तानामसारं भाषितं भवेत् ।
दर्शयन्त्यन्तरात्मानं दिवा रूपमिवांशुमान् ॥ ३-२१०-५० (२४२३२)
न लोके राजते मूर्खः केवलात्मप्रशंसया ।
अपिचेह मृजाहीनः कृतविद्यः प्रकाशते ॥ ३-२१०-५१ (२४२३३)
अब्रुवन्कस्यचिन्निन्दामात्मपूजामवर्णयन् ।
न कश्चिद्गुणसंपन्नः प्रकाशो भुवि दृश्यते ॥ ३-२१०-५२ (२४२३४)
विकर्मणा तप्यमानः पापाद्विपरिमुच्यते ।
न तत्कुर्यां पुनरिति द्वितीयात्परिमुच्यते ॥ ३-२१०-५३ (२४२३५)
कर्मणा येन केनापि पापात्मा द्विजसत्तम ।
एवं श्रुतिरियं ब्रह्मन्धर्मेषु प्रतिदृश्यते ॥ ३-२१०-५४ (२४२३६)
पापनि बुद्ध्वेह पुरा कृतानि
स्वधर्मशीलो विनिहन्ति पश्चात् ।
धर्मो ब्रह्मन्नुदते ब्राह्मणानां
यत्कुर्वते पापमिह प्रमादात् ॥ ३-२१०-५५ (२४२३७)
पापं कृत्वा हि मन्येत नाहमस्मीति पूरुषः ।
श्तं तु देवाः प्रपश्यन्ति स्वस्यैवान्तरपूरुषःछ ॥ ३-२१०-५६ (२४२३८)
चिकीर्षेदेव कल्यायणं श्रद्दधानोऽनसूयकः ॥ ३-२१०-५७ (२४२३९)
वसनस्येव च्छिद्राणइ साधूनां विवृणोति यः ।
गअपश्यन्नात्मनो दोषान्स पापः प्रेत्य नश्यति' ॥ ३-२१०-५८ (२४२४०)
पापं चेत्पुरुषः कृत्वा कल्याणमभिपद्यते ।
मुच्यते सर्वपापेभ्यो महाभ्रेणेव चन्द्रमाः ॥ ३-२१०-५९ (२४२४१)
यथाऽऽदित्यः समुद्यन्वै तमः सर्वं व्यपोहति ।
एवं कल्याणमातिष्ठन्सर्वपापैः प्रमुच्यते ॥ ३-२१०-६० (२४२४२)
पापानां विद्ध्यधिष्ठानं लोभमोहौ द्विजोत्तम ।
गतस्मात्तौ विदुषा विप्र वर्जनीयौ विशेषतः' ॥ ३-२१०-६१ (२४२४३)
लुबधाः पापं व्यवस्यन्ति नरा नातिबहुश्रुताः ।

अधर्म्या धर्मरूपेण तृणैः कूपा इवावृताः ॥ ३-२१०-६२ (२४२४४)
येषां पञ् पवित्राणि प्रलापा धर्मसंश्रितः ।
सर्वं हि विद्यते तेषु शिष्टाचारः सुदुर्लभः ॥ ३-२१०-६३ (२४२४५)

इति श्रीमन्महाभारते अरण्यपर्वणि मार्कण्डेयसमास्यापर्वणि
दशाधिकद्विशततमोऽध्यायः ॥ २१० ॥
Mahabharata - Vana Parva - Chapter Footnotes

३-२१०-१ आगोऽपराधः कृतमननेत्यागस्कृतः ॥
३-२१०-७ विमानैः साप्तभौमिकगृहैः ॥
३-२१०-१० सूना वधस्थानं तन्मध्ये ॥
३-२१०-१६ अदेशस्थं अयोग्यदेशस्थम् ॥
३-२१०-२२ गुरू मातापितरौ ॥
३-२१०-२३ वर्तये जीवामि ॥
३-२१०-२४ कुत्सा विद्यमानदोषसंकीर्तनम् । गर्हा
अविद्यमानदोषारोपः। पुराकृतं कर्मेति संबन्धः ॥
३-२१०-२५ लोकः परलोकः ॥
३-२१०-३० न ग्लाति न ग्लानि नयति ॥
३-२१०-३६ व्यभिचारात्स्वैरगतेः ॥
३-२१०-३७ भेरुण्डाः भयानकाः । उरुण्डाः इति ख। थ।ध। पाठः ॥
३-२१०-४० सुपरिणीतेन साधुना ॥
३-२१०-४१ ये संयुञ्जन्ति सम्यग्योगं सेनाविनेशं कुर्वन्ति तएव
पार्तिवा अन्ये चोरो इत्यर्थः ॥
३-२१०-४४ संरम्भाद्भयात् ॥
३-२१०-४५ अन्त् विपरीतं स्यात् इतरत्तादृशं द्वितीयं कल्याणमेवाचरेत् ॥
३-२१०-४६ पापः पापी ॥
३-२१०-४७ वृजिनानां व्यसनवताम् ॥
३-२१०-४९ दृतिर्भस्त्रा । आध्यातः सन्नसारोपि पुष्टो भवेत् ॥
३-२१०-५१ मृजाहीनः मलिनदेहः ॥
३-२१०-५२ मूढस्वरूपमाह अब्रुवन्निति ॥
३-२१०-५३ पापात् प्राक्कृतात् । द्वितीयात्करिष्यमाणात् ॥
३-२१०-५४ जपतपस्तीर्थाद्यन्यतमेन येनकेनचिदपि कर्मणा पापात्
परिमुच्यत् इत्यनुषज्ज्यते ॥

---

वन-अध्यय२११
॥ श्रीः ॥
३.२११. अध्यायः २११

Mahabharata - Vana Parva - Chapter Topics

**कौशिकंप्रति धर्मव्याधेन शिष्टलक्षणादिकथनम् ॥ १ ॥**

Mahabharata - Vana Parva - Chapter Text

३-२११-० (२४२४६)
मार्कण्डेय उवाच। ३-२११-०क्ष् (२४८२)
स तु विप्रो महाप्राज्ञ धर्मव्याधमपृच्छत ।
शिष्टाचारं कथमहं विद्यामिति नरोत्तम ॥ ३-२११-१ (२४२४७)
ग्पञ्च कानि पवित्राणि शिष्टाचारेषु नित्यदा'।
एतदिच्छामि भद्रं ते श्रोतुं धर्मभृतांवर ।
त्वत्तो महामते व्याध तद्ब्रवीहि यथातथम् ॥ ३-२११-२ (२४२४८)
व्याध उवाच। ३-२११-३क्ष् (२४८३)
यज्ञो दानं तपो वेदाः सत्यं च द्विजसत्तम ।
पञ्चैतानि पवित्राणि शिष्टाचारेषु नित्यदा ॥ ३-२११-३ (२४२४९)
कामक्रोधौ वशे कृत्वा दम्भं लोभमनार्जवम् ।
धर्ममित्येवं संतुष्टास्ते शिष्टाः शिष्टसंमताः ॥ ३-२११-४ (२४२५०)
न तेषां भिद्यते वृत्तं यज्ञस्वाध्यायशीलिनाम् ।
आचारपालनं चैव द्वितीयं शिष्टलक्षणम् ॥ ३-२११-५ (२४२५१)
गुरुशुश्रूषणं सत्यमक्रोधो दानमेव च ।
एतच्चतुष्टयं ब्रह्मञ्शिष्टाचारेषु नित्यदा ॥ ३-२११-६ (२४२५२)
शिष्टाचारे मनः कृत्वा प्रतिष्ठाप्य च सर्वशः ।
यामयं लभते तुष्टिं सा न शक्या ह्यतोऽन्यथा ॥ ३-२११-७ (२४२५३)
वेदस्योपनिषत्सत्यं सत्यस्योपनिषद्दमः ।
दमस्योपनिषत्त्यागः शिष्टाचारेषु नित्यदा ॥ ३-२११-८ (२४२५४)
ये तु धर्मानसूयन्ते बुद्धिमोहान्विता नराः ।
अपथा गच्छतां तेषामनुयाता च पीड्यते ॥ ३-२११-९ (२४२५५)
ये तु शिष्टाः सुनियताः श्रुतित्यागपरायणाः ।
धर्मपन्थानमारूढाः सत्यधर्मपरायणाः ॥ ३-२११-१० (२४२५६)
नियच्छन्ति परां बुद्धिं शिष्टाचारान्विता जनाः ।
उपाध्यायमते युक्ताः स्थित्या धर्मार्थदर्शिनः ॥ ३-२११-११ (२४२५७)
नास्तिकान्भिन्नमर्यादान्क्रूरान्पापमतौ स्थितान् ।
त्यज ताञ्ज्ञानमाश्रित्य धार्मिकानुपसेव्य च ॥ ३-२११-१२ (२४२५८)
कामलोभग्रहाकीर्णं पञ्चेन्द्रियजलां नदीम् ।
नावं धृतिमयीं कृत्वा जन्मदुर्गाणि संतर ॥ ३-२११-१३ (२४२५९)

क्रमेण संचितो धर्मो बुद्धियोगमयो महान् ।
शिष्टाचारे भवेत्साधू रागः शुक्ले व वाससि ॥ ३-२११-१४ (२४२६०)
अहिंसा सत्यवचनं सर्वभूतहितं परम् ।
अहिंसा परमो धर्मः स च सत्ये प्रतिष्ठितः ।
सत्यं कृत्वा प्रतिष्ठां तु प्रवर्तन्ते प्रवृत्तयः ॥ ३-२११-१५ (२४२६१)
सत्यमेव गरीयस्तु शिष्टाचारनिषेवितम् ।
आचारश्च सतां धर्मः सन्तो ह्याचारलक्षणाः ॥ ३-२११-१६ (२४२६२)
यो यथा प्रकृतिर्जन्तुः स स्वां प्रकृतिमश्नुते ।
पापात्मा क्रोधकामादीन्दोषानाप्नोत्यनात्मवान् ॥ ३-२११-१७ (२४२६३)
आरम्भो न्याययुक्तो यः स हि धर्म इति स्मृतः ।
अनाचारस्त्वधर्मेति एतच्छिष्टानुशासनम् ॥ ३-२११-१८ (२४२६४)
अक्रुध्यन्तोऽनसूयन्तो निरहंकारमत्सराः ।
ऋजवः शमसंपन्नाः शिष्टाचारा भवन्ति ते ॥ ३-२११-१९ (२४२६५)
त्रैविद्यवृद्धाः शुचयो वृत्तवन्तो मनस्विनः ।
गुरुशुश्रूषवो दान्ताः शिष्टाचारा भवन्त्युत ॥ ३-२११-२० (२४२६६)
तेषामहीनसत्वानां दुष्कराचारकर्मणाम् ।
स्वैः कर्मभिः सत्कृतानां घोरत्वं संप्रणश्यति ॥ ३-२११-२१ (२४२६७)
तं तदाचारमाश्चर्यं पुराणं शाश्वतं ध्रुवम् ।
धर्म्यं धर्मेण पश्यन्तः स्वर्गं यान्ति मनीषिणः ॥ ३-२११-२२ (२४२६८)
आस्तिका मानहीनाश्च द्विजातिजनपूजकाः ।
श्रुतवृत्तोपसंपन्नास्ते सन्तः स्वर्गगामिनः ॥ ३-२११-२३ (२४२६९)
वेदोक्तः प्रथमो धर्मो धर्मशास्त्रेषु चापरः ।
शिष्टाचीर्णश् शिष्टानां त्रिविधं धर्मलक्षणम् ॥ ३-२११-२४ (२४२७०)
धारणं चापि वेदानां तीर्थानामवगाहनम् ।
क्षमा सत्यार्जवं शौचं शिष्टाचारनिदर्शनम् ॥ ३-२११-२५ (२४२७१)
सर्वभूतदयावन्तो ह्यहिंसानिरताः सदा ।
परुषं च न भाषन्ते सदा सन्तो द्विजप्रियाः ॥ ३-२११-२६ (२४२७२)
शुभानामशुभानां च कर्मणां सबलाश्रयम् ।
विपाकमभिजानन्ति ते शिष्टाः शिष्टसंमताः ॥ ३-२११-२७ (२४२७३)
न्यायोपेता गुणोपेताः सर्वलोकहितैषिणः ।
सन्तः स्वर्गजितः शक्त्या सन्निविष्टाश्च सत्पथे ।
दातारः संविभक्तारो दीनानुग्रहकारिणः ॥ ३-२११-२८ (२४२७४)
सर्वपूज्याः श्रुतधनास्तथैव च तपस्विनः ।
सर्वभूतदयावन्तस्ते शिष्टाः शिष्टसंमताः ॥ ३-२११-२९ (२४२७५)
दाननित्याः सुखान्याशु प्राप्नुवन्त्यपि च श्रियम् ।
पीडया च कलत्रस्य भृत्यानां च समाहिताः ॥ ३-२११-३० (२४२७६)

अतिशक्त्या प्रयच्छन्ति सन्तः सद्भिः समागताः ।
लोकयात्रां च पशय्न्तो धर्ममात्महितानि च ।
एवं सन्तोवर्तमानास्त्वेधन्ते शाश्वतीः समाः ॥ ३-२११-३१ (२४२७७)
अहिंसा सत्यवचनमानृशंस्यवथार्जवम् ।
अद्रोहो नातिमानश्च ह्रीस्तितिक्षा दमः शमः ॥ ३-२११-३२ (२४२७८)
धीमन्तो धृतिमन्तश्च भूतानामनुकम्पकाः ।
अकामद्वेषसंयुक्तास्ते सन्तो लोकसत्कृताः ॥ ३-२११-३३ (२४२७९)
त्रीण्येव तु पदान्याहुः सतां वृत्तमनुस्मरन् ।
न चैव द्रुह्येद्दद्याच्च सत्यं चैव सदा वदेत् ॥ ३-२११-३४ (२४२८०)
सर्वत्र च दयावन्तः सन्तः करुणवेदिनः ।
गच्छन्तीह सुसंतुष्टा धर्म्यं पन्थानमुत्तमम् ॥ ३-२११-३५ (२४२८१)
शिष्टाचारा महात्मानो येषां धर्मः सुनिश्चितः ।
अनसूया क्षमा शान्तिः संतोषः प्रियवादिता ॥ ३-२११-३६ (२४२८२)
कामक्रोधपरित्यागः शिष्टाचारनिषेवणम् ।
कर्म च श्रुतसंपन्नं सतां मार्गमनुत्तमम् ॥ ३-२११-३७ (२४२८३)
शिष्टाचारं निषेवन्ते नित्यं ध्रममनुव्रताः ।
प्रज्ञाप्रासादमारूह्य मुह्यतो महतो जनान् ॥ ३-२११-३८ (२४२८४)
प्रेक्षन्ते लोकवृत्तानि विविधानि द्विजोत्तमाः ।
अतिषुण्यानि दानानि तानि द्विजवरोत्तम ॥ ३-२११-३९ (२४२८५)
एतत्ते सर्वमाख्यातं यथाप्रज्ञं यथाश्रुतम् ।
शिष्टाचारगुणान्ब्रह्मन्पुरस्कृत्य द्विजर्षभ ॥ ३-२११-४० (२४२८६)

इति श्रीमन्महाभारते अरण्यपर्वणि मार्कण्डेयसमास्यापर्वणि
एकादशाधिकद्विशततमोऽध्यायः ॥

Mahabharata - Vana Parva - Chapter Footnotes

३-२११-६ वृत्तं वृतं स्वेच्छोपात्तमिति यावत् ॥
३-२११-७ अतोऽन्यथा गुरुशुश्रूषणाद्यभावे ॥
३-२११-८ उपनिषद्रहस्यम् ॥
३-२११-९ अनुयाता अनुगन्ता ॥
३-२११-१० श्रुतिश्च त्यागाश्च ते द्वे परं अयनं स्थानं येषां ते
श्रुतित्यागपरायणाः ॥
३-२११-१४ शिष्टाचारवति शुक्लपोपमे योगधर्मः रागइव साधुर्भवेत्
। शुक्लेव वेति इवार्थे ॥
३-२११-१७ अनात्मवान् अजितचित्तः ॥
३-२११-१९ अहंकारो दर्पः मत्सरः परदोषासहिष्णुत्वं तद्विर्जिताः

। शिष्टं गुरुशास्त्रोक्तं आचरन्तः शिष्टाचाराः ॥
३-२११-२० त्रैविद्यवृद्धाः तिस्रो विद्या ऋग्यजुःसामात्मिका यत्रस
त्रिविद्यो यज्ञस्तत्र साधवस्त्रैविद्या याज्ञिकाः । वृत्तं शीलं
तद्वन्तः। मनस्विन जितचित्ताः ॥
३-२११-२१ दुष्कराचारकर्मणां अन्यैर्दुष्करः आचारः शीलं कर्म
यज्ञादि येषां तेषाम् । घोरत्वं हिंसादिदोषवत्त्वम् ॥
३-२११-२२ पुराणमनादिम् । शाश्वतं अनवच्छिन्नम्। ध्रुवं
नित्यम्। अत्याज्यमित्यर्थः ॥
३-२११-२४ वेदोक्तोऽग्निहोत्रादिः । धर्मशास्त्रोक्तः
अष्टकाश्राद्धादिः। शिष्टाचीर्णः होलकादिः। शिष्टनां तुष्टिरिति
शेषः ॥
३-२११-२८ न्यायो युक्तिः । गुणाः शमादयस्तदुपेताः। संविभक्तारः
कुटुम्बेषु ॥
३-२११-२९ श्रुतधनाः विद्याधनाः ॥
३-२११-३५ करुणाः करुणावन्तश्च ते वेदनशीलाश्च । मत्वर्थीयोऽच् ॥
३-२११-३९ अतिपुण्यानि पापानि इति झ । पाठः ॥

---

वन-अध्यय२१२
॥ श्रीः ॥
३.२१२. अध्यायः २१२

Mahabharata - Vana Parva - Chapter Topics
कौशिकंप्रतिधर्मव्याधेन सर्वैर्हिंसाया दुस्त्यजत्वोपपादनपूर्वकं
सर्ववर्णानां स्वस्वधर्मानुष्ठानस्य श्रेयःसाधात्वादिकथनम् ॥ १ ॥

Mahabharata - Vana Parva - Chapter Text

३-२१२-० (२४२८७)
मार्कण्डेय उवाच। ३-२१२-०क्ष् (२४८४)
स तु विप्रमथोवाच धर्मव्याधो युधिष्ठिर ।
यदहं ह्याचरे कर्म घोरमेतदसंशयम् ॥ ३-२१२-१ (२४२८८)
विधिस्तु बलवान्ब्रह्मन्दुस्तरं हि पुरा कृतम् ।
पुरा कृतस् पापस्य कर्मदोषो भवत्ययम् ॥ ३-२१२-२ (२४२८९)
दोपस्यैतस्य वै ब्रह्मन्विघाते यत्नवानहम् ।
विधिना हि हते पूर्वं निमित्तं घातको भवेत् ॥ ३-२१२-३ (२४२९०)
निमित्तभूता हि वयं कर्मणोऽस्य द्विजोत्तम ॥ ३-२१२-४ (२४२९१)
येषां हतानां मांसानि विक्रीणीमो वयं द्विज ।

तेषामपि भवेद्धर्म उपयोगेन भक्षणात् ।
देवतातिथिभृत्यानां पितृणां चापि पूजनात् ॥ ३-२१२-५ (२४२९२)
ओषध्यो वीरुधश्चैव पशवो मृगपक्षिणः ।
अन्नाद्यभूता लोकस्य इत्यपि श्रूयते श्रुतिः ॥ ३-२१२-६ (२४२९३)
आत्ममांसप्रसादेन शिबिरौशीनरो नृपः ।
स्वर्गं सुदुर्लभं प्राप्तः क्षमावान्द्विजसत्तम ॥ ३-२१२-७ (२४२९४)
राज्ञो महानसे पूर्वं रन्तिदेवस्य वै द्विज ।
द्वे सहस्रे तु पच्छेते पशूनामन्वहं तदा ॥
अहन्यहनि पच्येते द्वे सहस्रे गवां तथा ॥ ३-२१२-८ (२४२९५)
स मासं ददतो ह्यन्नं रन्तिदेवस्य नित्यशः ।
अतुला कीर्तिरभवन्नृपस्य द्विजसत्तम ॥ ३-२१२-९ (२४२९६)
चातुर्मास्ये च पशवो वध्यन्त इति नित्यशः ।
अग्नयो मांसकामाश्चइत्यपि श्रूयते श्रुतिः ॥ ३-२१२-१० (२४२९७)
यज्ञेषु पशवो ब्रह्मन्वध्यन्ते सततं द्विजैः ।
संस्कृताः किल मन्त्रैश्च तेऽपि स्वर्गमवाप्नुवन् ॥ ३-२१२-११ (२४२९८)
यदि नैवाग्नयो ब्रह्मन्मांसकामाऽभवन्पुरा ।
भक्ष्यं नैवाभवन्मांसं कस्यचिद्द्विजसत्तम ॥ ३-२१२-१२ (२४२९९)
अत्रापि विधिरुक्तश् मुनिभिर्मांसभक्षणे ॥ ३-२१२-१३ (२४३००)
देवतानां पितृणां च शुङ्क्ते दत्त्वाऽपियः सदा ।
यथाविधि यथाश्रद्धं न स दुष्येत भक्षणात् ॥ ३-२१२-१४ (२४३०१)
अमांसाशी भवत्येवमित्यपि श्रूयते श्रुतिः ।
भार्यां गच्छन्ब्रह्मचारी ऋतौ भवति ब्राह्मणः ॥ ३-२१२-१५ (२४३०२)
सत्यानृते विनिश्चित्य अत्रापि विधिरुच्यते ।
सौदासेन तदा राज्ञा मानुषा भक्षिता द्विज ।
शापाभिभूतेन भृशमत्र किं प्रतिभाति ते ॥ ३-२१२-१६ (२४३०३)
स्वधर्म इतिकृत्वा तु न त्यजामि द्विजोत्तम ।
पुरा कृतमिति ज्ञात्वा रजीवाम्येतेन कर्मणा ॥ ३-२१२-१७ (२४३०४)
स्वधर्मं त्यजतो ब्रह्मन्नधर्म इह दृश्यते ।
स्वकर्मनिरतो यस्तु धर्मः स इति निश्चयः ॥ ३-२१२-१८ (२४३०५)
कुले हि विहितं कर्म देही तं न विमुञ्चति ।
धात्रा विधिरयं दृष्टो बहुधा कर्मनिर्मये ॥ ३-२१२-१९ (२४३०६)
द्रष्टव्यस्तु भवेद्ब्रह्मन्धर्मो धर्मविनिश्चये ।
कथं कर्म शुभं कुर्यां कथं मुच्ये पराभवात् ॥ ३-२१२-२० (२४३०७)
कर्मणस्तस्य घोरस् वसुधा निर्णयो भवेत् ।
दाने च सत्यवाक्ये च गुरुशुश्रूणे तथा ।
द्विजातिपूजने चाहं धर्मे च निरतः सदा ॥ ३-२१२-२१ (२४३०८)

अतिमानातिवादाभ्यां निवृत्तोस्मि द्विजोत्तम ।
कृषिं साध्वीति मन्यन्ते तत्र हिंसा परा स्मृता ॥ ३-२१२-२२ (२४३०९)
कर्षन्तो लाङ्गलैरुर्वीं घ्नन्ति भूमिशयान्बहून् ।
जीवानन्यांश्च बहुशस्तत्रकिं प्रतिभाति ते ॥ ३-२१२-२३ (२४३१०)
धान्यबीजानि यान्याहुर्व्रीह्यादीनि द्विजोत्तम ।
सर्वाण्येतानि जीवा हि तत्र किं प्रतिभाति ते ॥ ३-२१२-२४ (२४३११)
अध्याक्रम् पशूंश्चापि घ्नन्ति वै भक्षयन्ति च ।
वृक्षांस्तथौषधीश्चापि छिन्दन्ति पुरुषा द्विज ॥ ३-२१२-२५ (२४३१२)
जीवा हि बहवो ब्रह्मन्वृक्षेषु च फलेषु च ।
उदके बहवश्चापि तत्रकिं प्रतिभाति ते ॥ ३-२१२-२६ (२४३१३)
सर्वं व्याप्तमिदं ब्रह्मन्प्राणिभिः प्राणिजीवनैः ।
मत्स्यान्ग्रसन्ते मत्स्याश्च तत्रकिं प्रतिभाति ते ॥ ३-२१२-२७ (२४३१४)
सत्वैः सत्वानि जीवन्ति बहुधा द्विजसत्तम ।
प्राणिनोऽन्योन्यभक्षाश्च तत्रकिं प्रतिभाति ते ॥ ३-२१२-२८ (२४३१५)
चङ्क्रम्यमाणा जीवांश्च धरणीसंश्रितान्बहून् ।
पद्भ्यां घ्नन्ति नरा विप्र तत्र किं प्रतिभाति ते ॥ ३-२१२-२९ (२४३१६)
उपविष्टाः शयानाश्च घ्नन्ति जीवाननेकशः ।
अज्ञानादथवा ज्ञानात्तत्रकिं प्रतिभाति ते ॥ ३-२१२-३० (२४३१७)
जीवैर्ग्रस्तमिदं सर्वमाकाशं पृथिवी तथा ।
अविज्ञानाच्च हिंसन्ति तत्र किं प्रतिभाति ते ॥ ३-२१२-३१ (२४३१८)
अहिंसेति यदुक्तं हि पुरुषैर्विस्मितैः पुरा ।
के न हिंसन्ति जीवान्वै लोकेऽस्मिन्द्विजसत्तम् ॥ ३-२१२-३२ (२४३१९)
बहु संचिन्त्य इह वै नास्ति कश्चिदहिंसकः ॥ ३-२१२-३३ (२४३२०)
अहिंयासां तु निरता यतयो द्विजसत्तम ।
कुर्वन्त्येव हि हिंसां ते यत्नादल्पतरा भवेत् ॥ ३-२१२-३४ (२४३२१)
आलक्ष्याश्चैव पुरुषाः कुले जाता महागुणाः ।
महाघोराणि कर्माणि कृत्वा लज्जन्ति वै न च ॥ ३-२१२-३५ (२४३२२)
सुहृदः सुहृदोऽन्यांस्च दुर्हृदश्चापि दुर्हृदः ।
सम्यक्प्रवृत्तान्पुरुषानन सम्यगनुपश्यति ॥ ३-२१२-३६ (२४३२३)
समृद्धैश्चन नन्दन्ति बान्धवा बान्धवैरपि ।
गुरूंश्चैव विनिदन्ति मूढा निश्चितमानिनः ॥ ३-२१२-३७ (२४३२४)
बहु लोके विपर्यस्तं दृश्यते द्विजसत्तम ।
धर्मयुक्तमधर्मं च तत्र किं प्रतिभाति ते ॥ ३-२१२-३८ (२४३२५)
वक्तुं बहुविधं शक्यं धर्माधर्मेषु कर्मसु ।
स्वकर्मनिरतो यो हि स यशः प्राप्नुयान्महत् ॥ ३-२१२-३९ (२४३२६)

इति श्रीमन्महाभारते अरण्यपर्वणि मार्कण्डेयसमास्यापर्वणि
द्वादशाधिकद्विशततमोऽध्यायः ॥ २१२ ॥
Mahabharata - Vana Parva - Chapter Footnotes

३-२१२-१ एतन्मांसविक्रयात्मकम् ॥
३-२१२-३ यत्नवानपि न परिहर्तुं शक्नोमि । विधेः प्राबल्यादित्यर्थः ॥
३-२१२-४ शरवन्निमित्तभूता वयं संधातृकल्कर्ता तु विधिरेवेत्यर्थः ॥
३-२१२-६ अन्नाद्यभूताः अन्नं च तदद्यं च भोग्यं भक्ष्यं चेत्यर्थः ॥
३-२१२-१५ यज्ञियमांसभुजोऽपि ऋतुगामिनो ब्रह्मचर्यमिव
औपचारिकममांसाशित्वमिति भावः ॥
३-२१२-२० द्रष्टव्या तु भवेत्प्रज्ञा क्रूरे कर्मणि वर्तता इति झ । पाठः ।

---

वन-अध्यय२१३
॥ श्रीः ॥
३.२१३. अध्यायः २१३

Mahabharata - Vana Parva - Chapter Topics
धर्मव्याधेन कौशिकंप्रति पौरुषनिन्दनन दैवप्रशंसनपूर्वकं
सुकृतदुष्कृतयोः सुखदुःखहेतुताप्रतिपादनम् ॥ १ ॥

Mahabharata - Vana Parva - Chapter Text

३-२१३-० (२४३२७)
मार्कण्डेय उवाच। ३-२१३-०क्ष् (२४८५)
धर्मव्याधस्तु निपुणं पुनरेव युधिष्ठिर ।
विप्रर्षभमुवाचेदं सर्वधर्मभृतांवर ॥ ३-२१३-१ (२४३२८)
श्रुतिप्रमाणो धर्मोऽयमिति वृद्धानुशासनम् ।
सूक्ष्मा गतिर्हि धर्मस् बहुशाखा ह्यनन्तिका ॥ ३-२१३-२ (२४३२९)
प्राणान्तिके विवाहे च वक्तव्यमनृतं भवेत् ।
अनृतेन भवेत्सत्यं सत्येनैवानृतं भवेत् ॥ ३-२१३-३ (२४३३०)
यद्भूतहितमत्यन्तं तत्सत्यमिति धारणा ।
विपर्ययकृतोऽधर्मः पश्य धर्मस्य सूक्ष्मताम् ॥ ३-२१३-४ (२४३३१)
यत्करोत्यशुभं कर्म शुभं वा यदि सत्तम ।
अवश्यं तत्समाप्नोति पुरुषो नात्र संशयः ॥ ३-२१३-५ (२४३३२)
विषमां च दशां प्राप्तो देवान्गर्हति वै भृशम् ।
आत्मनः कर्मदोषेण न विजानात्यपण्डितः ॥ ३-२१३-६ (२४३३३)

मूढो नैकृतिकश्चापि चपलश्च द्विजोत्तम ।
ग्न शुभं कर्म बध्नाति पुरुषं पाषनिश्चयम्' ॥ ३-२१३-७ (२४३३४)
सुखदुःखविपर्यासो यदा समुपपद्यते ।
नैनं प्रज्ञा सुनीतं वा त्रायते नैव पौरुषम् ॥ ३-२१३-८ (२४३३५)
यो यमिच्छेद्यथा कामं तं तं कामं स आप्नुयात् ।
यदि स्यादपराधीनं पौरुषस् क्रियाफलम् ॥ ३-२१३-९ (२४३३६)
संयताश्चापि दक्षाश्च मतिमन्तश्च मानवाः ।
दृश्यन्ते निष्फलाः सन्तः प्रहीणाः सर्वकर्मभिः ॥ ३-२१३-१० (२४३३७)
भूतानामपरः कश्चिद्धिंसायां सततोत्थितः ।
वञ्चनायां च लोकस्य स सुखेनैव युज्यते ॥ ३-२१३-११ (२४३३८)
अचेष्टमपि चासीनं श्रीः कंचिदुपतिष्ठति ।
कश्चित्कर्माणि कुर्वन्हि न प्राप्यमधिगच्छति ॥ ३-२१३-१२ (२४३३९)
देवानिष्ट्वा तपस्तप्त्वा कृपणैः पुत्रगृध्नुभिः ।
दशमासधृता गर्भा जायन्ते कुलपांसनाः ॥ ३-२१३-१३ (२४३४०)
अपरे धनधान्यैश्च भोगैश्च पितृसंचितैः ।
विपुलैरभिजायन्ते लब्धास्तैरेव मङ्गलैः ॥ ३-२१३-१४ (२४३४१)
ग्न देहजा मनुष्याणां व्याधयो द्विजसत्तम'।
कर्मजा हि मनुष्याणां रोगा नास्त्यत्र संशयः ॥ ३-२१३-१५ (२४३४२)
आधिभिश्चैव बाध्यन्ते व्यालैः क्षुद्रमृगा इव ।
व्याधयो विनिवार्यन्ते मृगा व्याधैरिव द्विज ॥ ३-२१३-१६ (२४३४३)
येषामस्ति च भोक्तव्यं ग्रहणीरोगपीडिताः ।
न शक्नुवन्ति ते भोक्तुं चेष्टितं पूर्वकर्मया ॥ ३-२१३-१७ (२४३४४)
अपरे बाहुबलिनः क्लिश्यन्ति बहवो जनाः ।
दुःखेन चाधिगच्छनति भोजनं द्विजसत्तम ॥ ३-२१३-१८ (२४३४५)
इति लोकमनाक्रन्दं देहशङ्कापरिप्लुतम् ।
स्रोतसाऽसकृदाक्षिप्तं ह्रियमाणं बलीयसा ॥ ३-२१३-१९ (२४३४६)
न म्रियेयुर्न जीर्यैयुः सर्वे स्युः सर्वकामिकाः ।
नाप्रियं प्रतिपश्येयुर्विधिश्च यदि नो भवेत् ॥ ३-२१३-२० (२४३४७)
उपर्युपरि लोकस्य सर्वो गन्तुं समीहते ।
यतते च यथाथक्ति न च तद्वर्तते तथा ॥ ३-२१३-२१ (२४३४८)
बहवः संप्रदृश्यन्ते तुल्यनक्षत्रमङ्गलाः ।
महत्तु फलवैषम्यं दृश्यते कर्मसिद्धिषु ॥ ३-२१३-२२ (२४३४९)
न केचिदीशते ब्रह्मन्स्वयंग्राह्यस्य सत्तम ।
कर्मणां प्राकृतानां वै इह सिद्धिः प्रदृश्यते ॥ ३-२१३-२३ (२४३५०)
तथा श्रुतिरियंब्रह्मञ्जीवः किल सनातनः ।
शरीरमध्रुवं लोके सर्वेषां प्राणिनामिह ॥ ३-२१३-२४ (२४३५१)

वध्यमाने शरीरे तु देहनाशो भवत्युत ।
जीवः संक्रमतेऽन्यत्रकर्मबनधनिबन्धनः ॥ ३-२१३-२५ (२४३५२)
ब्राह्मण उवाच। ३-२१३-२६क्ष् (२४८६)
कथं धर्मविदांश्रेष्ठ जीवो भवति शाश्वतः ।
एतदिच्छाम्यहं ज्ञातुं तत्त्वेन वदतांवर ॥ ३-२१३-२६ (२४३५३)
व्याध उवाच। ३-२१३-२७क्ष् (२४८७)
न जीवनाशोस्ति हि देहभेदे
मिथ्यैतदाहुर्म्रियतीति मूढाः ।
जीवस्तु देहान्तरितः प्रयाति
दशार्धतैवास् शरीरभेदः ॥ ३-२१३-२७ (२४३५४)
अन्यो हि नाश्नाति कृतं हि कर्म
मनुष्यलोके मनुजस् कश्चित् ।
यत्तेन किंचिद्धि कृतंहि कर्म
तदश्नुते नास्ति कृतस्य नाशः ॥ ३-२१३-२८ (२४३५५)
सुपुण्यशीला हि भवन्ति पुण्या
नराधमाः पापकृतो भवन्ति ।
नरोऽनुयातस्त्विह कर्मभिः स्वै-
स्ततः समुत्पद्यति भावितस्तैः ॥ ३-२१३-२९ (२४३५६)
ब्राह्मण उवाच। ३-२१३-३०क्ष् (२४८८)
कथं संभवते योनौ कथं वा पुण्यपापयोः ।
जातीः पुण्या ह्यपुण्याश् कथं गच्छति सत्तम ॥ ३-२१३-३० (२४३५७)
व्याध उवाच। ३-२१३-३१क्ष् (२४८९)
गर्भाधानसमायुक्तं कर्मेदं संप्रदृश्यते ।
समासेन तु ते क्षिप्रं प्रवक्ष्यामि द्विजोत्तम ॥ ३-२१३-३१ (२४३५८)
यथा संभृतसंभारः पुनरेव प्रजायते ।
शुभकृच्छुभयोनीषु पापकृत्पापयोनिषु ॥ ३-२१३-३२ (२४३५९)
शुभैः प्रयोगैर्देवत्वंव्यामिश्रैर्मानुषो भवेत् ।
मोहनीयैर्वियोनीषु त्वधोगामी च किल्बिषैः ॥ ३-२१३-३३ (२४३६०)
जातिमृत्युजरादुःखैः सततं समभिद्रुतः ।
संसारे पच्यमानश्च दोषैरात्मकृतैर्नरः ॥ ३-२१३-३४ (२४३६१)
तिर्यग्योनिसहस्राणि गत्वा नरकमेव च ।
जीवाः संपरिवर्तन्ते कर्मबन्धनिबन्धनाः ॥ ३-२१३-३५ (२४३६२)
जन्तुस्तु कर्मभिस्तैस्तैः स्वकृतैः प्रेत्य दुःखितः ।
तद्दुःखप्रतिघातार्थमपुण्यां योनिमाप्नुते ॥ ३-२१३-३६ (२४३६३)
ततः कर्म समादत्ते पुनरन्यन्नवं बहु ।
पच्यते तु पुनस्तेन भुक्त्वाऽपथ्यमिवातुरः ॥ ३-२१३-३७ (२४३६४)

अजस्रमेव दुःखार्तोऽदुःखितः सुखिसंज्ञितः ।
ततो निवृत्तबन्धत्वात्कर्मणामुदयादपि ॥ ३-२१३-३८ (२४३६५)
परिक्रामति संसारे चक्रवद्बहुवेदनः ।
स चेन्निवृत्तबन्धस्तु विशुद्धश्चापि कर्मभिः ॥ ३-२१३-३९ (२४३६६)
तपोयोगसमारम्भं कुरुते द्विजसत्तम ।
कर्मभिर्बहुभिश्चापि लोकानश्नाति कर्मभिः ॥ ३-२१३-४० (२४३६७)
श्स चेन्निवृत्तबन्धस्तु विशुद्धश्चापि कर्मभिः ॥
प्राप्नोति सुकृताँल्लोकान्यत्रगत्वा न शोचति ॥ ३-२१३-४१ (२४३६८)
पापं कुर्वनपुण्यवृत्तः पुण्यस्यान्तं न गच्छति ।
ग्पुण्यं कुर्वन्पुण्यवृत्तः पुण्यस्यान्तं न गच्छति’।
तस्मात्पुण्यं यतेत्कर्तुं वर्जयीत च पापकम् ॥ ३-२१३-४२ (२४३६९)
अनसूयुः कृतज्ञश्च कल्याणान्येव सेवते ।
सुखानि धर्ममर्थं च स्वर्गं च लभते नरः ॥ ३-२१३-४३ (२४३७०)
संस्कृतस्य च दान्तस् नियतस्य यतात्मनः ।
प्राज्ञास्यानन्तरा वृत्तिरिहि लोके परत्र च ॥ ३-२१३-४४ (२४३७१)
सतां धर्मेण वर्तेत क्रियां शिष्टवदाचरेत् ।
असंक्लेशेन लोकस्य वृत्तिं लिप्सेत वै द्विजः ॥ ३-२१३-४५ (२४३७२)
सन्ति ह्यागमविज्ञानाः शिष्टाः शास्त्रे विचक्षणाः ।
स्वधर्मेण क्रिया लोके कुर्वाणास्ते ह्यसंकराः ॥ ३-२१३-४६ (२४३७३)
प्राज्ञो धर्मेण रमते धर्मं चैवोपजीवति ।
तस्माद्धर्मादवाप्तेन धनन द्विजसत्तम ॥ ३-२१३-४७ (२४३७४)
तस्यैव सिंचते मूलं गुणान्पश्यति यत्र वै ।
धर्मात्मा भवति ह्येवं चित्तं चास्य प्रसीदति ।
स मित्रजनसंतुष्ट इह प्रेत्य च नन्दति ॥ ३-२१३-४८ (२४३७५)
शब्दं स्पर्शं तथा रूपं गन्धानिष्टांस्च सत्तम ।
प्रभुत्वं लभते चापि धर्मस्यैतत्फलं विदुः ॥ ३-२१३-४९ (२४३७६)
धरमस्य च पलं लब्ध्वा न तुष्यति महाद्विज ।
अतुष्यमाणो निर्वेदमादत्ते ज्ञानचक्षुषा ॥ ३-२१३-५० (२४३७७)
प्रज्ञाचक्षुर्नर इह दोषं नैवानुरुध्यते ।
विरज्ये यथाकामं न च धर्मं विमुञ्चति ॥ ३-२१३-५१ (२४३७८)
फलत्यागे च यतते दृष्ट्वा लोकं क्रियात्मकम् ।
ततो मोक्षे प्रयतते नानुपायादुपायतः ॥ ३-२१३-५२ (२४३७९)
एवं निर्वेदमादत्ते पापं कर्म जहाति च ।
धार्मिकश्चापि भवति मोक्षं च लभते परम् ॥ ३-२१३-५३ (२४३८०)
तपो निःश्रेयसं जन्तोस्तस्य मूलं शमो दमः ।
तेन सर्वानवाप्नोति कामान्यान्मनसेच्छति ॥ ३-२१३-५४ (२४३८१)

इन्द्रियाणां निरोधेन सत्येन च दमेन च ।
ब्रह्मणः पदमाप्नोति यत्परं द्विजसत्तम ॥ ३-२१३-५५ (२४३८२)
ब्राह्मण उवाच। ३-२१३-५६क्ष् (२४९०)
इन्द्रियाणीति यान्याहुः कानि तानि यतव्रत ।
निग्रहश्च कथं कार्यो निग्रहस्य च किं फलम् ॥ ३-२१३-५६ (२४३८३)
कथं च फलमाप्नोति तेषां धर्मभृतांवर ।
एतदिच्छामि तत्त्वेन धर्मं ज्ञातुं सुधार्मिक ॥ ३-२१३-५७ (२४३८४)

इति श्रीमन्महाभारते अरण्यपर्वणि मार्कण्डेयसमस्यापर्वणि त्रयोदशाधिकद्विशततमोऽध्याः ॥ २१३ ॥

Mahabharata - Vana Parva - Chapter Footnotes

३-२१३-४ धारणा अवधारणं । निश्चय इत्यर्थः ॥
३-२१३-८ सनीतं गुरुशिक्षा ॥
३-२१३-१० प्रहीणाः श्रान्ता अपीत्यर्थः ॥
३-२१३-१३ पुत्रगृध्नुभिः पुतर्कामैः ॥
३-२१३-१९ अनाक्रन्दं असहायम् । आक्रन्दः क्रन्दने ह्वाने मित्रदारुणयुद्धयोरिति मेदिनी। स्रोतसा कर्मप्रवाहेण ॥
३-२१३-२३ स्वीयमपि वस्तु स्वस्यानधीनं प्राक्कर्मवशाद्भवतीत्यर्थः ॥
३-२१३-२७ दशार्धता पञ्चत्वम् ॥
३-२१३-२७ मोहनीयैस्तामसै । अधः नरकतिर्यक्षु ॥
३-२१३-३३ प्रेत्य मृत्वा । ३-२१३-३६ दुःखात्मकः प्रतीघातः। दुखं भोक्तुमित्यर्थः ॥
३-२१३-३९ निवृत्तबन्धो वीतरागः । तत्र हेतुः विशुद्धश्चेति ॥
३-२१३-४० तपोयोगयोः आलोचनध्यानयो समारम्भम् ॥
३-२१३-४२ यतेत् यतेत ॥
३-२१३-४९ प्रभुत्वं अप्रतिहतेच्छत्वम् ॥
३-२१३-५१ अतुष्यमाणः प्रीतिमलभमानः निर्वेदं वैराग्यं दोषं रागद्वेषादिकं नानुरुध्यते तद्वशो न भवतीत्यर्थः ॥
३-२१३-५२ उपायत एव मोक्षे प्रयतते नन्वनुपायाद्दैवमात्राश्रयादिति योजना ॥
३-२१३-५४ तपः ज्ञानम् । निःश्रेयसं मोक्षसाधनम् ॥
३-२१३-५७ तेषां इन्द्रियाणां निग्रहादिति शेषः ॥

---

वन-अध्यय२१४
॥ श्रीः ॥

## ३.२१४. अध्यायः २१४

Mahabharata - Vana Parva - Chapter Topics
धर्मव्याधेन कौशिकंप्रति
प्राणिभिर्दुष्कृतसुकृतकरणप्रकारादिकधनपूर्वकं
ब्राह्मणमाहात्म्यादिकथनम् ॥१ ॥

Mahabharata - Vana Parva - Chapter Text

३-२१४-० (२४३८५)
मार्कण्येय उवाच। ३-२१४-०क्ष् (२४९१)
एवमुक्तस्तु विप्रेण धर्मव्याधो युधिष्ठिर ।
प्रत्युवाच यथा विप्रं तच्छृणुष्व नराधिप ॥ ३-२१४-१ (२४३८६)
व्याध उवाच। ३-२१४-२क्ष् (२४९२)
विज्ञानार्थं मनुष्याणां मनः पूर्वं प्रवर्तते ।
तत्प्राप्य कामं भजतेक्रोधं च द्विजसत्तम ॥ ३-२१४-२ (२४३८७)
ततस्तदर्थं यतते कर्म चारभते महत् ।
इष्टानां रूपगन्धानामभ्यासं च निषेवते ॥ ३-२१४-३ (२४३८८)
ततो रागः प्रभवति द्वेषश्च तदनन्तरम् ।
ततो लोभः प्रभवति मोहश्च तदनन्तरम् ॥ ३-२१४-४ (२४३८९)
तस् लोभाभिभूतस्य रागद्वेषहतस्य च ।
न धर्मे जायते बुद्धिर्व्याजाद्धर्मं करोति च ॥ ३-२१४-५ (२४३९०)
व्याजेन चरते धर्ममर्थं व्याजेन रोचते ।
व्याजेन सिध्यमानेषु धनेषु द्विजसत्तम ॥ ३-२१४-६ (२४३९१)
तत्रैव रमते बुद्धिस्ततः पापं चिकीर्षति ।
सुहृद्भिर्वार्यमाणश्च पण्डितैश्च द्विजोत्तम ॥ ३-२१४-७ (२४३९२)
उत्तरं श्रुतिसंबद्धं ब्रवीत्यश्रुतियोजितम् ।
अधर्मस्त्रिविधस्तस्य वर्तते रागदोषजः ॥ ३-२१४-८ (२४३९३)
पापं चिन्तयते चैव ब्रवीति च करोति च ।
तस्याधर्मप्रवृत्तस्य गुणा नश्यन्ति साधवः ॥ ३-२१४-९ (२४३९४)
एकशीलाश्च मित्रत्वं भजन्ते पापकर्मिणः ।
स तेन दुःखमाप्नोति परत्र च विपद्यते ॥ ३-२१४-१० (२४३९५)
पापात्मा भवति ह्येवं धर्मलाभं तु मे शृणु ।
यस्त्वेतान्प्रज्ञाया दोषान्पूर्वमेवानुपश्यति ॥ ३-२१४-११ (२४३९६)
कुशलः सुखदुःखेषु सांधूंश्चाप्युपसेवते ।
तस्य साधुसमारम्भाद्बुद्धिर्धर्मेषु राजते ॥ ३-२१४-१२ (२४३९७)

ब्राह्मण उवाच। ३-२१४-१३क्ष् (२४९३)
ब्रवीषि सूनृतंधर्मं यस्य वक्ता न विद्यते ।
दिव्यप्रभावः सुमहानृषिरेव मतोसि मे ॥ ३-२१४-१३ (२४३९८)
व्याध उवाच। ३-२१४-१४क्ष् (२४९४)
ब्राह्मणा वै महाभागाः पितरोऽग्रभुजः सदा ।
तेषां सर्वात्मना कार्यं प्रियं लोके मनीषिणा ॥ ३-२१४-१४ (२४३९९)
यत्तेषां च प्रियं तत्ते वक्ष्यामि द्विजसत्तम ।
नमस्कृत्वा ब्राह्मणेभ्यो ब्राह्मीं विद्यां निबोध मे ॥ ३-२१४-१५ (२४४००)
इदं विश्वं जगत्सर्वमजगच्चापि सर्वशः ।
महाभूतात्मकं ब्रह्मन्नातः परतरं भवेत् ॥ ३-२१४-१६ (२४४०१)
महाभूतानि खं वायुरग्निरापस्तथा च भूः ।
शब्दः स्पर्शश्च रूपं च रसो गन्धश् तद्गुणाः ॥ ३-२१४-१७ (२४४०२)
तेषामपि गुणाः सर्वे गुणवृत्तिः परस्परम् ।
पूर्वपूर्वगुणाः सर्वे क्रमशो गुणिषु त्रिषु ॥ ३-२१४-१८ (२४४०३)
षष्ठी तु चेतना नाम मन इत्यभिधीयते ।
सप्तमी तु भवेद्बुद्धिरहंकारस्ततः परम् ॥ ३-२१४-१९ (२४४०४)
इन्द्रियाणि च पञ्चात्मा रजः सत्वं तमस्तथा ।
इत्येष सप्तदशको राशिरव्यक्तसंज्ञकः ॥ ३-२१४-२० (२४४०५)
सर्वैरिहेन्द्रियार्थैस्तु व्यक्ताव्यक्तैः सुसंवृतैः ।
चतुर्विंसक इत्येष व्यकत्वाव्यक्तमयो गुणः ।
एतत्ते सर्वमाख्यातं किं भूयः श्रोतुमिच्छसि ॥ ३-२१४-२१ (२४४०६)

इति श्रीमन्महाभारते अरण्यपर्वणि मार्कण्डेयसमास्यापर्वणि
चतुर्दशाधिकद्विशततमोऽध्यायः ॥ २१४ ॥

---

वन-अध्यय२१५
॥ श्रीः ॥
३.२१५. अध्यायः २१५

Mahabharata - Vana Parva - Chapter Topics
कौशिकंप्रति धर्मव्याधे
नभूतपञ्चकगुणनिरूपणपूर्वकमिन्द्रियजयाजययोः
सुखदुःखासाधारणकारणताकथनम् ॥ १ ॥

Mahabharata - Vana Parva - Chapter Text

३-२१५-० (२४४०७)

मार्कण्डेय उवाच। ३-२१५-०क्ष् (२४९५)
एवमुक्तः स विप्रस्तु धर्मव्याधेन भारत ।
कथामकथयद्भूयो मनसः प्रीतिवर्धनीम् ॥ ३-२१५-१ (२४४०८)
ब्राह्मण उवाच। ३-२१५-२क्ष् (२४९६)
महाभूतानि यान्याहुः पञ्च धर्मविदांवर ।
एकैकस्य गुणान्सम्यक्पञ्चानामपि मे वद ॥ ३-२१५-२ (२४४०९)
व्याध उवाच। ३-२१५-३क्ष् (२४९७)
भूमिरापस्तथा ज्योतिर्वायुराकाशमेव च ।
गुणोत्तराणइ सर्वाणि तेषां वक्ष्यामि ते गुणान् ॥ ३-२१५-३ (२४४१०)
भूमिः पञ्चगुणा ब्रह्मननुदकं च चतुर्गुणम् ।
गुणास्त्रयस्तेजसि च त्रयश्चाकाशवातयोः ॥ ३-२१५-४ (२४४११)
शब्दः स्पर्शश्च रूपं च रसो गन्धश्च पञ्चमः ।
एतेगुणाः पञ्च भूमेः सर्वेभ्यो गुणवत्तराः ॥ ३-२१५-५ (२४४१२)
शब्दः स्पर्शश्च रूपं च सरश्चापि द्विजोत्तम ।
अपामेते गुणा ब्रह्मन्कीर्तितास्तव सुव्रत ॥ ३-२१५-६ (२४४१३)
शब्दः स्पर्शश्च रूपं च तेजसोऽथ गुणास्त्रयः ।
शब्दः स्पर्शश्च वायौ तु शब्दश्चाकाश एव तु ॥ ३-२१५-७ (२४४१४)
एते पञ्चदश ब्रह्मन्गुणा भूतेषु पञ्चसु ।
वर्तन्ते सर्वभूतेषु येषु लोकाः प्रतिष्ठिताः ॥ ३-२१५-८ (२४४१५)
अन्योन्यं नातिवर्तन्ते सम्यक्व भवति द्विज ।
यदा तु विषमं भावमाचरन्ति चराचराः ॥ ३-२१५-९ (२४४१६)
तदा देही देहमन्यं व्यतिरोहति कालतः ।
प्रातिलोम्याद्विनश्यन्ति जायन्ते चानुपूर्वशः ॥ ३-२१५-१० (२४४१७)
तत्र तत्रहि दृश्यन्ते धातवः पाञ्चभौतिकाः ।
यैरावृतमिदं सर्वं जगत्स्थावरजङ्गमम् ॥ ३-२१५-११ (२४४१८)
इन्द्रियैर्गृह्यते यद्यत्तत्तद्व्यक्तमिति स्मृतम् ।
तदव्यक्तमिति ज्ञेयं लिङ्गग्राह्यमतीन्द्रियम् ॥ ३-२१५-१२ (२४४१९)
यथास्वं ग्राहकान्येषां शब्दादीनामिमानि तु ।
इन्द्रियाणि तथा देही धारयन्निह तप्यते ॥ ३-२१५-१३ (२४४२०)
लोके विततमात्मानं लोकं चात्मनि पश्यति ।
परापरज्ञः सक्तः सन्स तु भूतानि पश्यति ॥ ३-२१५-१४ (२४४२१)
पश्यतः सर्वभूतानि सर्वावस्थासु सर्वदा ।
ब्रह्मभूतस् संयोगो नाशुभेनोपपद्यते ॥ ३-२१५-१५ (२४४२२)
ज्ञानमूलात्मकं क्लेशमतिवृत्तस्य मोहजम् ।
लोकबुद्धिप्रकाशेन ज्ञेयमार्गेण गम्यते ॥ ३-२१५-१६ (२४४२३)
अनादिनिधनं जन्तुमात्मयोनिं सदाव्ययम् ।

अनौपम्यममूर्तं च भगवानाह बुद्धिमान् ॥ ३-२१५-१७ (२४४२४)
तपोमूलमिदं सर्वं यन्मां विप्रानुपृच्छसि ।
ग्तपसा हि समाप्नोति यद्यदेवाभिवाञ्छति'।
इन्द्रियाण्येव संयम्य तपो भवति नान्यथा ॥ ३-२१५-१८ (२४४२५)
इन्द्रियाण्येव तत्सर्वंयत्स्वर्गनरकावुभौ ।
निगृहीतविसृष्टानि स्वर्गाय नरकाय च ॥ ३-२१५-१९ (२४४२६)
एष योगविधिः कृत्स्नो यावदिन्द्रियधारणम् ।
एतन्मूलं हि तपसः स्वर्गस्य नरकस्य च ॥ ३-२१५-२० (२४४२७)
इन्द्रियाणां प्रसङ्गेन दोमाच्छ्र्त्यसंशयम् ।
सन्नियम्य तु तान्येव ततः सिद्धिं समाप्नुयात् ॥ ३-२१५-२१ (२४४२८)
षण्णामात्प्रनि योज्यानामैश्वर्यं योऽधितिष्ठति ।
न स पापैः कुतोऽनर्थैर्युज्यते विजितेन्द्रियः ॥ ३-२१५-२२ (२४४२९)
रथः शरीरं पुरुषस्य दृष्ट-
मात्मा नियन्तेन्द्रियाण्याहुरश्वान् ।
तैरप्रमत्तः कुशली सदश्वै-
र्दान्त सुखं याति रथीव धीरः ॥ ३-२१५-२३ (२४४३०)
षण्णामात्मनियुक्तानामिन्द्रियाणां प्रमाथिनाम् ।
यो धीरो धारयेद्रश्मीन्स स्यात्परमसारथिः ॥ ३-२१५-२४ (२४४३१)
इन्द्रियाणां प्रसृष्टानां हयानामिव वर्त्मसु ।
धृतिं कुर्वीत सारथ्ये धृत्या तानि जयेद्ध्रुवम् ॥ ३-२१५-२५ (२४४३२)
इन्द्रियाणां विचरतां यन्मनोऽनुविधीयते ।
तदस् हरते बुद्धिं नावं वायुरिवाम्भसि ॥ ३-२१५-२६ (२४४३३)
येषु विप्रतिपद्यन्ते षट्स्वमोहात्फलागमम् ।
तेष्वध्यवसिताध्यायी विन्दते ध्यानजं फलम् ॥ ३-२१५-२७ (२४४३४)

इति श्रीमन्महाभारते अरण्यपर्वणि मार्कण्डेयसमास्यापर्वणि
पञ्चदशाधिकद्विशततमोऽध्यायः ॥ २१५ ॥
Mahabharata - Vana Parva - Chapter Footnotes

३-२१५-३ गुणोत्तराणि उत्तरोत्तरगुणाः पूर्वपूर्वस्मिन्वर्तन्त इत्यर्थः ॥
३-२१५-१० आनुपूर्व्या विनश्यन्ति इति झ ।थ। पाठः ॥
३-२१५-२० कृत्स्नस्य नरकस्य चेति झ ।ध। पाठः ॥
३-२१५-२७ षट्सु मोहात् इति झ ।पाठः ॥

---

वन-अध्यय२१६
॥ श्रीः ॥

## ३.२१६. अध्यायः २१६

Mahabharata - Vana Parva - Chapter Topics

**धर्मव्याधेन**
**कौशिकंप्रतिसत्वादिगुणत्रयगुणनिरूपणपूर्वकमध्यात्मकथनम् ॥१ ॥**

Mahabharata - Vana Parva - Chapter Text

३-२१६-० (२४४३५)
मार्कण्डेय उवाच। ३-२१६-०क्ष् (२४९८)
एवं तु सूक्ष्मे कथिते धर्मव्याधेन भारत ।
ब्राह्मणः स पुन सूक्ष्मं पप्रच्छ सुसमाहितः ॥ ३-२१६-१ (२४४३६)
वृत्त्वस्य रजसश्चैव तमसश्च यथातथम् ।
वृणांस्तत्त्वेन मे ब्रूहि यथावदिह पृच्छतः ॥ ३-२१६-२ (२४४३७)
व्याध उवाच। ३-२१६-२क्ष् (२४९९)
दृन्त ते कथयिष्यामि यन्मां त्वं परिपृच्छसि ।
एतान्गुणान्पृथक्त्वेन निबोध गदतो मम ॥ ३-२१६-३ (२४४३८)
मोहात्मकं तमस्तेषां रज एषां प्रवर्तकम् ।
प्रकाशबहुलत्वाच्च सत्वं ज्याय इहोच्यते ॥ ३-२१६-४ (२४४३९)
अविद्याबहुलो मूढः स्वप्नशीलो विचेतनः ।
दूर्हृपीकस्तमोध्यस्तः सक्रोधस्तामसोऽलसः ॥ ३-२१६-५ (२४४४०)
सुवृत्तवाक्यो मन्त्री च यो नराग्योऽनमूयकः ।
विवित्समानो विप्रर्षे स्तब्धो मानी स राजसः ॥ ३-२१६-६ (२४४४१)
प्रकाशबहुलो धीरो निर्विवित्सोऽनसूयकः ।
अक्रोधनो नरो धीमान्दान्तश्चैवस सात्विकः ॥ ३-२१६-७ (२४४४२)
सात्विकस्त्वथ संबुद्धो लोकवृत्तैर्न लिप्यते ।
यदा बुध्यति बोध्धव्यं लोकवृत्तं जुगुप्सते ॥ ३-२१६-८ (२४४४३)
वैराग्यस् च रूपं तु पूर्वमेव प्रवर्तते ।
मृदुर्भवत्यहंकारः प्रसीदत्यार्जवं च यत् ॥ ३-२१६-९ (२४४४४)
ततोऽस् सर्वद्वन्द्वानि प्रशाम्यन्ति परस्परम् ।
न चास्यासंयमो नाम क्वचिद्भवति कश्चन ॥ ३-२१६-१० (२४४४५)
शूद्रयोनौ हि जातस्य सद्गुणानुपतिष्ठतः ।
वैश्यत्वं भवति ब्रह्मन्क्षत्रियत्वं तथैव च ॥ ३-२१६-११ (२४४४६)
आर्जवे वर्तमानस्य ब्राह्मण्यमभिजायते ।
गुणास्ते कीर्तिताः सर्वे किं भूयः श्रोतुमिच्छसि ॥ ३-२१६-१२ (२४४४७)
ब्राह्मण उवाच। ३-२१६-१३क्ष् (२५००)

पार्थिवं धातुमासाद्य शारीरोऽग्निः कथं भवेत् ।
अवकाशविशेषेण कथं वर्तयतेऽनिलः ॥ ३-२१६-१३ (२४४४८)
मार्कण्डेय उवाच। ३-२१६-१४क्ष् (२५०१)
प्रश्नमेतं समुद्दिष्टं ब्राह्मणेन युधिष्ठिर ।
व्याधस्तु कथयामास ब्राह्मणाय महात्मने ॥ ३-२१६-१४ (२४४४९)
मूर्धानमाश्रितो वह्निः शरीरं परिपालयन् ।
प्राणो मूर्धनि चाग्नौ च वर्तमानो विचेष्टते ॥ ३-२१६-१५ (२४४५०)
भूं भव्यं भविष्यं च सर्वं प्राणे प्रतिष्ठितम् ।
श्रेष्ठं तदेव भूतानां ब्रह्मज्योतिरुपास्महे ॥ ३-२१६-१६ (२४४५१)
स जन्तुः सर्वभूतात्मा पुरुषः स सनातनः ।
मनोबुद्धिरहंकारो भूतानां विषयश्च सः ॥ ३-२१६-१७ (२४४५२)
ग्अव्यक्तं सस्वसंज्ञं च जीवः कालः स चैव हि ।
प्रकृतिः पुरुषश्चैव प्राण एव द्विजोत्तम ॥ ३-२१६-१८ (२४४५३)
जागर्ति स्वप्नकाले च स्वप्ने स्वप्नायते च सः ।
जाग्रत्सु बलमाधत्ते चेष्टत्सु चेष्टयत्यपि ॥ ३-२१६-१९ (२४४५४)
तस्मिन्निरुद्दे विप्रेन्द्र मृत इत्यभिधीयते ।
त्यक्त्वा शरीरं भूतात्मा पुनरन्यत्प्रपद्यते ॥ ३-२१६-२० (२४४५५)
एष त्वग्निरपानन प्राणेन परिपाल्यते ।
पृष्ठतस्तु समानन स्वांस्वां गतिमुपाश्रितः ॥ ३-२१६-२१ (२४४५६)
वस्तुमूले गुदे चैव पावकं समुपाश्रितः ।
वहन्मूत्रं पुरीषंवाऽप्यपानः परिवर्तते ॥ ३-२१६-२२ (२४४५७)
प्रयत्ने कर्मणि बले य एकस्त्रिषु वर्तते ।
उदान इति तं प्राहुरध्यात्मविदुषो जनाः ॥ ३-२१६-२३ (२४४५८)
सन्धौसन्धौ संनिविष्टः सर्वेष्वपि तथाऽनिलः ।
शरीरेषु मनुष्याणां व्यान इत्युपदिश्ते ॥ ३-२१६-२४ (२४४५९)
धातुष्वग्निस्तु विततः स तु वायुसमीरितः ।
रसान्धातूंश्च दोषांश्च वर्तयन्परिधावति ॥ ३-२१६-२५ (२४४६०)
प्राणानां संनिपातात्तु सन्निपातः प्रजायते ।
सोष्मा सोग्निरितिज्ञेयो योऽन्नं पचतिदेहिनां ॥ ३-२१६-२६ (२४४६१)
अपानोदानयोर्मध्ये प्राणन्यानौ समाहितौ ।
समन्वितस्त्वधिष्ठानं सम्यक्पचति पावकः ॥ ३-२१६-२७ (२४४६२)
अस्यापि पायुपर्यन्तस्तथा स्याद्गुदसंज्ञितः ।
स्रोतांशि तस्माज्जायन्ते सर्वप्राणेषु देहिनाम् ॥ ३-२१६-२८ (२४४६३)
अग्निवेगवहः प्राणो गुदान्ते प्रतिहन्यते ।
स ऊर्ध्वमागम्य पुनः समुत्क्षिपति पावकम् ॥ ३-२१६-२९ (२४४६४)
पक्वाशयस्त्वधोनाभ्या ऊर्ध्वमामाशयः स्थितः ।

नाभिमध्ये शरीरस्य प्राणाः सर्वे प्रतिष्ठिताः ॥ ३-२१६-३० (२४४६५)
प्रवृत्ता हृदयात्सर्वे तिर्यगूर्ध्वमधस्तथा ।
वहन्त्यन्नरसान्नाड्यो दशप्राणप्रचोदिताः ॥ ३-२१६-३१ (२४४६६)
योगिनामेष मार्गस्तु येन गच्छन्ति तत्परम् ।
जितक्लमासनो धीरो मूर्धन्यात्मानमादत् ॥ ३-२१६-३२ (२४४६७)
एवं सर्वेषु विततौ प्राणापानौ हि देहिषु ।
'तौ तावदग्निसहितौ विद्धि वै प्राणमात्मनि' ॥ ३-२१६-३३ (२४४६८)
एकादशविकारात्मा कलासंभारसंभृतः ।
मूर्तिमन्तं हि तं विद्धि नित्यं कर्माजेतात्मकम् ।
तस्मिन्यः संस्थितो ह्यग्निर्नित्यं स्थाल्यामिवाहितः ॥ ३-२१६-३४ (२४४६९)
आत्मानं तं विजानीहि नित्यं त्यागजितात्मकं ॥ ३-२१६-३५ (२४४७०)
देवो यः संस्थितस्तस्मिन्नब्बिन्दुरिव पुष्करे ।
क्षेत्रज्ञं तं विजानीहि नित्यं त्यागजितात्मकं ॥ ३-२१६-३६ (२४४७१)
जीवात्मकं विजानीहि रजः सत्वं तमस्तथा ।
जीवमात्मगुणं विद्धि तथाऽऽत्मानं परात्मकं ॥ ३-२१६-३७ (२४४७२)
अचेतनं जीवगुणं वदन्ति
सचेष्टते चेष्टयते च सर्वम् ।
ततः परं क्षेत्रविदो वदन्ति
प्राकल्पयद्यो भुवनानि सप्त ॥ ३-२१६-३८ (२४४७३)
एष सर्वेषु भूतेषु भूतात्मा न प्रकाशते ।
दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया ज्ञानवेदिभिः ॥ ३-२१६-३९ (२४४७४)
चित्तस्य हि प्रसादेन हनति कर्म शुभाशुभम् ।
प्रसन्नात्मात्मनि स्थित्वा सुखमनन्त्यमश्नुते ॥ ३-२१६-४० (२४४७५)
लक्षणं तु प्रसादस्य यथा तृप्तः सुखं स्वपेत् ।
'सुखदुःखे हि संत्यज्य निर्द्वन्द्वो निष्परिग्रहः'।
निवाते वा यथा दीपो दीप्येत्कुशलदीपितः ॥ ३-२१६-४१ (२४४७६)
पूर्वरात्रेऽपरे चैव युञ्जानः सततं मनः ।
लध्वाहारो विशुद्धात्मा पश्यत्यात्मानमात्मनि ॥ ३-२१६-४२ (२४४७७)
प्रदीप्तेनेव दीपेन मनोदीपेन पश्यति ।
दृष्ट्वाऽऽत्मानं निरात्मानं स तदा विप्रमुच्यते ॥ ३-२१६-४३ (२४४७८)
सर्वोपायैस्तु लोभस् क्रोधस्य च विनिग्रहः ।
एतत्पवित्रं यज्ज्ञानं तपो वै संक्रमो मतः ॥ ३-२१६-४४ (२४४७९)
नित्यं क्रोधात्तपो रक्षेन्छ्रियं रक्षेच्च मत्सरात् ।
विद्यां मानापमानाभ्यामात्मानं तु प्रमादतः ॥ ३-२१६-४५ (२४४८०)
आनृशंस्यं परो धर्मः क्षमा च परमं बलम् ।
आत्मज्ञानं परं ज्ञानं परं सत्यव्रतव्रतम् ॥ ३-२१६-४६ (२४४८१)

सत्यस् वचनं श्रेयः सत्यं ज्ञानं हितं भवेत् ।
यद्भूतहितमत्यन्तं तद्वै सत्यं परं मतम् ॥ ३-२१६-४७ (२४४८२)
यस् सर्वे समारम्भा निराशीर्बन्धनाः सदा ।
त्यागे यस् हुतं सर्वं स त्यागी स च बुद्धिमान् ॥ ३-२१६-४८ (२४४८३)
यदा न गुरुतां चैनं च्यावयेदुपपादयन् ।
तं विद्याद्ब्राह्मणो योगमयोगं योगसंज्ञितम् ॥ ३-२१६-४९ (२४४८४)
न हिंस्यात्सर्वभूतानि मैत्रायणगतश्चरेत् ।
नेदं जीवितमासाद्यवैरं कुर्वीत केनचित् ॥ ३-२१६-५० (२४४८५)
आकिंचन्यं सुसंतोषो निराशित्वमचापलम् ।
एतदेव परं ज्ञानं सदात्मज्ञानमुत्तमम् ॥ ३-२१६-५१ (२४४८६)
परिग्रहं परित्यज्य भवेद्बुद्ध्या यतव्रतः ।
अशोकं स्थानमाश्रित् निश्चलं प्रेत्य चेह च ॥ ३-२१६-५२ (२४४८७)
तपोनित्येन दान्तेन मुनिना संयतात्मना ।
अजितं जेतुकामेन भाव्यं सङ्गेष्वसङ्गिना ॥ ३-२१६-५३ (२४४८८)
गुणागुणमनासङ्गमेककार्यमनन्तरम् ।
एतत्तद्ब्रह्मणो वृत्तमाहुरेकपदं सुखम् ॥ ३-२१६-५४ (२४४८९)
परित्यजति यो दुःखं सुखं चाप्युभयं नरः ।
ब्रह्म प्राप्नोति सोत्यन्तमासङ्गं च न गच्छति ॥ ३-२१६-५५ (२४४९०)
यथाश्रुतमिदं सर्वं समासेन द्विजोत्तम ।
एतत्ते सर्वमाख्यातं किं भूयः श्रोतुमिच्छसि ॥ ३-२१६-५६ (२४४९१)

इति श्रीमन्महाभारते अरण्यपर्वणि मार्कण्डेयसमास्यापर्वणि
षोडशाधिकद्विशततमोऽध्यायः ॥

Mahabharata - Vana Parva - Chapter Footnotes

३-२१६-१० नचास्य संशयो नाम इति झ । पाठः ॥
३-२१६-२७ समानोदानयोर्मध्येप्राणपानौ समाहितौ इति झ । पाठः ॥
३-२१६-४५ धर्मे रक्षेच्च मत्सरात् इति झ । पाठः ॥
३-२१६-५० मैत्रं मित्रभावस्तदेवायनं मार्गस्तद्गतश्चरेत् ॥

---

वन-अध्यय२१७

॥ श्रीः ॥

३.२१७. अध्यायः २१७

Mahabharata - Vana Parva - Chapter Topics

धर्मव्याधेन कौशिकाय स्वगृहप्रवेशनपूर्वकं वृद्धयोः

स्वपित्रोः प्रदर्शनम् ॥ १ ॥
तथा मातापितृविषये स्वानुसंधानप्रकारनिवेदनम् ॥ २ ॥

Mahabharata - Vana Parva - Chapter Text

३-२१७-० (२४४९२)
मार्कण्डेय उवाच। ३-२१७-०क्ष् (२५०२)
एवं संकथिते कृत्स्ने मोक्षधर्मे युधिष्ठिर ।
दृढप्रीतमना विप्रो धर्मव्याधमुवाच ह ॥ ३-२१७-१ (२४४९३)
न्याययुक्तमिदं सर्वं भवता परिकीर्तितम् ।
न तेऽस्त्यविदितं किंचिद्धर्मेष्वभिसमीक्ष्यते ॥ ३-२१७-२ (२४४९४)
व्याध उवाच। ३-२१७-३क्ष् (२५०३)
प्रत्यक्षं मम यो धर्मस्तं च पश्य द्विजोत्तम ।
येन सिद्धिरियं प्राप्ता मया ब्राह्मणपुङ्गव ॥ ३-२१७-३ (२४४९५)
उत्तिष्ठ भगवन्क्षिप्रं प्रविश्याभ्यन्तरं गृहम् ।
द्रष्टुमर्हसि धर्मज्ञ मातरं पितरं च मे ॥ ३-२१७-४ (२४४९६)
इत्युक्तः स प्रविश्याथ ददर्श परमार्चितम् ।
सौधं हृद्यं चतुःशालमतीव च मनोरमम् ॥ ३-२१७-५ (२४४९७)
देवतागृहसंकाश दैवतैश्च सुपूजितम् ।
शयनासनसंबाधं गन्धैश्च परमैर्युतम् ॥ ३-२१७-६ (२४४९८)
तत्रशुक्लाम्बरधरौ पितरावस्य पूजितौ ।
कृताहारौ तु संतुष्टावुपविष्टौ वरासने ॥ ३-२१७-७ (२४४९९)
ग्तस्य व्याधस्य पितरौ ब्राह्मणः संददर्श ह’।
धर्मव्याधस्तु तौ दृष्ट्वा पादेषु शिरसाऽपतत् ॥ ३-२१७-८ (२४५००)
वृद्धावूचतुः। ३-२१७-९क्ष् (२५०४)
उत्तिष्ठोत्तिष्ठ धर्मज्ञ धर्मस्त्वामभिरक्षतु ।
प्रीतौ स्वस्तव शौचेन दीर्घमायुरवाप्नुहि ।
श्गतिमिष्टां तपो ज्ञानं मेधां च परमां गतःघ ॥ ३-२१७-९ (२४५०१)
सत्पुत्रेण त्वया पुत्र नित्यं काले सुपूजितौ ।
ग्सुखमेव वसावोऽत्र देवलोकगताविव’ ॥ ३-२१७-१० (२४५०२)
न तेऽन्यद्दैवतं किंचिद्दैवतेष्वपि वर्तते ।
प्रयतसत्वाद्द्विजातीनांदमेनासि समनवितः ॥ ३-२१७-११ (२४५०३)
पितुः पितामहा ये च तथैव प्रपितामहाः ।
प्रीतास्ते सततं पुत्र दमेनावां च पूजया ॥ ३-२१७-१२ (२४५०४)
मनसा कर्मणा वाचा शुश्रूषा नैव हीयते ।
न चान्या हि तथा बुद्धिर्दृश्यते सांप्रतं तव ॥ ३-२१७-१३ (२४५०५)

जामदग्न्येन रामेण यथा वृद्धौ सुपूजितौ ।
तथा त्वया कृतंसर्वंतद्विशिष्टं च पुत्रक ॥ ३-२१७-१४ (२४५०६)
मार्कण्डेय उवाच। ३-२१७-१५क्ष् (२५०५)
ततस्तं ब्राह्मणं ताभ्यां धर्मव्याधो न्यवेदयत् ।
तौ स्वागतेन तं विप्रमर्चयामासतुस्तदा ॥ ३-२१७-१५ (२४५०७)
प्रतिगृह्यच तां पूजां द्विजः पप्रच्छ तावुभौ ।
सपुत्राभ्यां सभृत्याभ्यां कच्चिद्वां कुशलं गृहे ।
अनामय च वां कच्चित्सुखं वेह शरीरयोः ॥ ३-२१७-१६ (२४५०८)
वृद्धावूचतुः। ३-२१७-१७क्ष् (२५०६)
कुशलं नौ गृहे विप्र भृत्यवर्गे च सर्वशः ।
कच्चित्त्वमप्यविघ्नेन संप्राप्तो भगवन्निति ॥ ३-२१७-१७ (२४५०९)
मार्कण्डेय उवाच। ३-२१७-१८क्ष् (२५०७)
हाढमित्येव तौ विप्रः प्रत्युवाच मुदान्वितः ।
धर्मव्याधस्तु तं विप्रमर्थवद्वाक्यमब्रवीत् ॥ ३-२१७-१८ (२४५१०)
पिता माता च भगवन्नेतौ मे दैवतं परम् ।
यद्दैवतेभ्यः कर्तव्यं तदेताभ्यां करोम्यहम् ॥ ३-२१७-१९ (२४५११)
त्रयस्त्रिंशद्यथा देवाः सर्वे शक्रपुरोगमाः ।
संपूज्याः सर्वलोकस्य तथा वृद्धाविमौ मम ॥ ३-२१७-२० (२४५१२)
उपाहारानाहरन्तो देवतानां यथा द्विजः ।
कुर्वन्ति तद्वदेताभ्यां करोम्यहमतन्द्रितः ॥ ३-२१७-२१ (२४५१३)
एतौ मे परमं ब्रह्मन्पिता माता च दैवतम् ।
एतौ पुष्पैः फलैरन्नैस्तोषयामि सदा द्विज ॥ ३-२१७-२२ (२४५१४)
एतावेवाग्नयो मह्यं यान्वदन्ति मनीषिणः ।
यज्ञा वेदाश्च चत्वारः सर्वमेतौ मम द्विज ॥ ३-२१७-२३ (२४५१५)
एतदर्थं मम प्राणा भार्या पुत्रः सुहृज्जनः ।
सपुत्रदारः शुश्रूषां नित्यमेव करोम्यहम् ॥ ३-२१७-२४ (२४५१६)
स्वयं च स्नापयाम्येतौ तथा पादौ प्रधावये ।
आहारं च प्रयच्छामि स्वयंच द्विजसत्तम ॥ ३-२१७-२५ (२४५१७)
अनुकूलाः कथा वच्मि विप्रियं परिवर्जये ।
अधर्मेणापि संयुक्तं प्रियमाभ्यां करोम्यहम् ॥ ३-२१७-२६ (२४५१८)
धर्ममेव गुरुं मत्वा साक्षादेतौ द्विजोत्तम ।
अतन्द्रितः सदा विप्र शुश्रूषां वै करोम्यहम् ॥ ३-२१७-२७ (२४५१९)
पञ्चैव गुरवो ब्रह्मनपुरुषस्य बुभूषतः ।
पिता माताऽग्निरात्मा च गुरुश्च द्विजसत्तम ॥ ३-२१७-२८ (२४५२०)
एतेषु यस्तु वर्तेत सम्यगेव द्विजोत्तम ।
भवेयुरप्रयस्तेन परिचीर्णास्तु नित्यशः ।

गार्हस्थ्ये वर्तमानस्य एष धर्मः सनातनः ॥ ३-२१७-२९ (२४५२१)

इति श्रीमन्महाभारते अरण्यपर्वणि मार्कण्डेयसमास्यापर्वणि
सप्तदशाधिकद्विशततमोऽध्यायः ॥ २१७ ॥
Mahabharata - Vana Parva - Chapter Footnotes

३-२१७-६ शयनासनसबाधं शयनादिसंकीर्णम् ॥
३-२१७-१६ वां युवयोः ॥
३-२१७-१७ नौ आवयोः ॥

---

वन-अध्यय२१८
॥ श्रीः ॥
३.२१८. अध्यायः २१८

Mahabharata - Vana Parva - Chapter Topics
धर्मव्याधेन कौशिकंप्रति मातापितृशुश्रूषणचोदनपूर्वकं
स्वस्य शूद्रयोनौ जनननिदानकथनम् ॥ १ ॥

Mahabharata - Vana Parva - Chapter Text

३-२१८-० (२४५२२)
मार्कण्डेय उवाच। ३-२१८-०क्ष् (२५०८)
गुरू निवेद्य विप्राय तौ मातापितरावुभौ ।
पुनरेव स धर्मात्मा व्याधो ब्राह्मणमब्रवीत् ॥ ३-२१८-१ (२४५२३)
प्रवृत्तचक्षुर्जातोस्मि संपश्य तपसो बलम् ।
यदर्थमुक्तोसि तया गच्छ त्वं मिथिलामिति ॥ ३-२१८-२ (२४५२४)
पतिशुश्रूषपरया दान्तया सत्यशीलया ।
मिथिलायां वसन्व्याधः स ते धर्मान्प्रवक्ष्यति ॥ ३-२१८-३ (२४५२५)
ब्राह्मण उवाच। ३-२१८-४क्ष् (२५०९)
पतिव्रतायाः सत्यायाः शीलाढ्याया यतव्रत ।
संस्मृत्य वाक्यं धर्मज्ञ गुणवानसि मे मतः ॥ ३-२१८-४ (२४५२६)
व्याध उवाच। ३-२१८-५क्ष् (२५१०)
यत्तया त्वं द्विजश्रेष्ठ नियुक्तो मां प्रति प्रभो ।
दृष्टमेव तया सम्यगेकपत्न्या न संशयः ॥ ३-२१८-५ (२४५२७)
त्वदनुग्रहबुद्ध्या तु विप्रैतद्दर्शितं मया ।
वाक्यं च शृणु मे तात यत्ते वक्ष्ये हितं द्विज ॥ ३-२१८-६ (२४५२८)
त्वया न पूजिता माता पिता च द्विजसत्तम ।

अनिसृष्टोसि निष्क्रान्तो गृहात्ताभ्यामनिनन्दित ॥ ३-२१८-७ (२४५२९)
वेदोच्चारणकार्यार्थमयुक्तं तत्त्वया कृतम् ।
तव शोकेन वृद्धौ तावन्धीभूतौ तपस्विनौ ॥ ३-२१८-८ (२४५३०)
तौ प्रसादयितुं गच्छ मा त्वां धर्मोऽत्यगादयम् ।
तपस्वी त्वं महात्मा च धर्मे च निरतः सदा ॥ ३-२१८-९ (२४५३१)
सर्वमेतदपार्थं ते क्षिप्रं तौ संप्रसादय ।
ग्तौ प्रसाद्य द्विजश्रेष्ठ यच्छ्रेयस्तदवाप्स्यसि' ॥ ३-२१८-१० (२४५३२)
श्रद्दधस्व मम ब्रह्मन्नान्यथा कर्तुमर्हसि ।
यम्यतामद्यविप्रर्षे श्रेयस्ते कथयाम्यहम् ॥ ३-२१८-११ (२४५३३)
ब्राह्मण उवाच। ३-२१८-१२क्ष् (२५११)
यदेतदुक्तं भवता सर्वं सत्यमसंशयम् ।
प्रीतोस्मि तव भद्रं ते धर्माचारगुणान्वित ॥ ३-२१८-१२ (२४५३४)
व्याध उवाच। ३-२१८-१३क्ष् (२५१२)
दैवतप्रतिमो हि त्वं यस्त्वं धर्ममनुव्रतः ।
पुराणं शाश्वतं दिव्यं दुष्प्रापमकृतात्मभिः ॥ ३-२१८-१३ (२४५३५)
मातापित्रोः सकाशं हि गत्वात्वं द्विजसत्तम ।
अतन्द्रितः कुरु क्षिप्रंमातापित्रोर्हि पूजनम् ।
अतः परमहं धर्मं नान्यं पश्यामि कंचन ॥ ३-२१८-१४ (२४५३६)
ब्राह्मण उवाच। ३-२१८-१५क्ष् (२५१३)
इहाहमागतो दिष्ट्या दिष्ट्या मे संगतं त्वया ।
ईदृशा दुर्लभा लोके नरा धर्मप्रदर्शकाः ॥ ३-२१८-१५ (२४५३७)
एकोनरसहस्रेषु धर्मवानविद्यते न वा ।
प्रीतोस्मि तवसत्येन भद्रं ते पुरुषर्षभ ॥ ३-२१८-१६ (२४५३८)
पतमानोऽद्यनरके भवताऽस्मि समुद्धृतः ।
भवितव्यमथैवं च यद्दृष्टोसि मयाऽनघ ॥ ३-२१८-१७ (२४५३९)
राजा ययातिर्दौहित्रैः पतितस्तारितो यथा ।
सद्भिः पुरुषशार्दूल तथाऽहं भवता त्विह ॥ ३-२१८-१८ (२४५४०)
मातापितृभ्यां शुश्रूषां करिष्ये वचनात्तव ।
नाकृतात्मा वेदयति धर्माधर्मविनिश्चयम् ॥ ३-२१८-१९ (२४५४१)
दुर्ज्ञेयः शाश्वतो धर्मः शूद्रयोनौ हि वर्तता ।
न त्वां शूद्रमहं मन्ये भवितव्यं हि कारणम् ॥ ३-२१८-२० (२४५४२)
येन कर्मविशेषेण प्राप्तेयं शूद्रता त्वया ।
एतामिच्छामि विज्ञातुं तत्त्वेन तव शूद्रताम् ।
कामयानस् मे शंस सर्वं त्वं प्रयतात्मवान् ॥ ३-२१८-२१ (२४५४३)
व्याघ उवाच। ३-२१८-२२क्ष् (२५१४)
अनतिक्रमणीया वै ब्राह्मणा मे द्विजोत्तम ।

शृणु सर्वमिदं वृत्तं पूर्वदेहे ममानघ ॥ ३-२१८-२२ (२४५४४)
अहं हि ब्राह्मणः पूर्वमासं द्विजवरात्मजः ।
वेदाध्यायी सुकुशलो वेदाङ्गानां च पारगः ।
आत्मदोषकृतैर्ब्रह्मन्नवस्थामाप्तवानिमाम् ॥ ३-२१८-२३ (२४५४५)
कश्चिद्राजा मम सखा धनुर्वेदपरायणः ।
संसर्गाद्धनुषि श्रेष्ठस्ततोऽहमभवं द्विज ॥ ३-२१८-२४ (२४५४६)
एतस्मिन्नेव काले तु मृगयां निर्गतो नृपः ।
सहितो योधमुख्यैश् मन्त्रिभिश्च सुसंवृतः ।
ततोऽभ्यहन्मृगांस्तत्र सुबहूनाश्रमं प्रति ॥ ३-२१८-२५ (२४५४७)
अथ क्षिप्तः शरो घोरो मयापि द्विजसत्तम ।
ताडितश्च ऋषिस्तन शरेणानतपर्वणा ॥ ३-२१८-२६ (२४५४८)
भूमौ निपतितो ब्रह्मन्नुवाच प्रतिनादयन् ।
नापराध्याम्यहं किंचित्केन पापमिदं कृतम् ॥ ३-२१८-२७ (२४५४९)
मन्वानस्तं मृगं चाहं संप्राप्तः सहसा मुनिम् ।
अपश्यं तमृषिं विद्धं शरेणानतपर्वणा ।
तमुग्रतपसं विप्रं निष्टनन्तं महीतले ॥ ३-२१८-२८ (२४५५०)
अकार्यकरणाच्चापि भृशं मे व्यथितं मनः ।
अजानता कृतमिदं मयेत्यहमथाब्रुवम् ॥ ३-२१८-२९ (२४५५१)
क्षन्तुमर्हसि मे सर्वमिति चोक्तो मया मुनिः ॥ ३-२१८-३० (२४५५२)
ततः प्रत्यब्रवीद्वाक्यमृषिर्मां क्रोधमूर्च्छितः ।
व्याधस्त्वं भविता क्रूर शूद्रयोनाविति द्विज ॥ ३-२१८-३१ (२४५५३)

इति श्रीमन्महाभारते अरण्यपर्वणि मार्कण्डेयसमास्यापर्वणि
अष्टादशाधिकद्विशततमोऽध्यायः ॥ २१८ ॥
Mahabharata - Vana Parva - Chapter Footnotes

३-२१८-२ प्रवृत्तचक्षुर्दिव्यदृष्टिः । तपसः पित्रोः
शुश्रूषात्मकस्य ॥
३-२१८-२८ निष्टनन्तं शब्दं कुर्वन्तम् ॥

---

वन-अध्यय२१९
॥ श्रीः ॥
३.२१९. अध्यायः २१९

Mahabharata - Vana Parva - Chapter Topics
धर्मव्याधेन नानाधर्मान्बोधितेन कौशिकेन गृहमेत्य स्वपित्रोः
शुश्रूषणम् ॥ १ ॥

मार्कण्डेयेन युधिष्ठिरम्प्रति पतिव्रतामाहात्म्यादिकथनोपसंहारः ॥ २ ॥

Mahabharata - Vana Parva - Chapter Text

३-२१९-० (२४५५४)
व्याध उवाच। ३-२१९-०क्ष् (२५१५)
एवं शप्तोऽहमृषिणा तदा द्विजबरोत्तम ।
अहं प्रासादयमृषिं गिरा वाक्यविशारदम् ॥ ३-२१९-१ (२४५५५)
अजानता मयाऽकार्यमिदमद्य कृतं मुने ।
क्षन्तुमर्हसि तत्सर्वं प्रसीद भगवन्निति ॥ ३-२१९-२ (२४५५६)
ऋषिरुवाच। ३-२१९-३क्ष् (२५१६)
नान्यथा भविता शाप एवमेतदसंशयम् ।
आनृशंस्यात्त्वंहकिंचित्कर्ताऽनुग्रहमद्य ते ॥ ३-२१९-३ (२४५५७)
शूद्रयोन्यां वर्तमानो धर्मज्ञो हि भविष्यसि ।
मातापित्रोश् शुश्रूषां करिष्यसि न संशयः ॥ ३-२१९-४ (२४५५८)
तयोः शुश्रूषया सिद्धिं महतीं समवाप्स्यसि ।
जातिस्मरश् भविता स्वर्गं चैव गमिष्यसि ॥ ३-२१९-५ (२४५५९)
ग्भूत्वाच धार्मिको व्याधः पित्रोः शुश्रूषणे रतः ।
शापक्षये तु निर्वृत्ते भविताऽसि पुनर्द्विजः ॥ ३-२१९-६ (२४५६०)
एवं शप्तः पुरा तेन ऋषिणाऽस्म्युग्रतेजसा ।
प्रसादश्च कृतस्तेन ममैव द्विपदांवर ॥ ३-२१९-७ (२४५६१)
शरं चोद्धृतवानस्मि तस्य वै द्विजसत्तम ।
आश्रमं च मया नीतो न च प्राणैर्व्ययुज्यत ॥ ३-२१९-८ (२४५६२)
एतत्ते सर्वमाख्यातं यथा मम पुराऽभवत् ।
अभितश्चापि गन्तव्यो मया स्वर्गो द्विजोत्तम ॥ ३-२१९-९ (२४५६३)
ब्राह्मण उवाच। ३-२१९-१०क्ष् (२५१७)
एवमेतानि पुरुषा दुःखानि च सुखानि च ।
आप्नुवन्ति महाबुद्धे नोत्कण्ठां कर्तुमर्हसि ॥ ३-२१९-१० (२४५६४)
दुष्करं हि कृतंकर्म जानता जातिमात्मनः ।
श्लोकवृत्तान्ततत्त्वज्ञ नित्यं धर्मपरायण ॥ऽ ३-२१९-११ (२४५६५)
कर्मदोषाच्च वै विद्वन्नात्मजातिकृतेन वै ।
कंचित्कालं मृष्यतां वै ततोसि भविता द्विजः ॥ ३-२१९-१२ (२४५६६)
सांप्रतं च मतो मेऽसि ब्राह्मणो नात्र संशयः ॥ ३-२१९-१३ (२४५६७)
ब्राह्मणः पतनीयेषु वर्तमानो विकर्मसु ।
दाम्भिक्वो दुष्कृतप्रायः शूद्रेण सदृशो भवेत् ॥ ३-२१९-१४ (२४५६८)
यस्तु शूद्रो दमे सत्ये धर्मे च सततोत्थितः ।

तं ब्राह्मणमहं मन्ये वृत्तेन हि भवेद्द्विजः ॥ ३-२११-१५ (२४५६९)
कर्मदोषेण विषमां गतिमाप्तोसि दारुणाम् ।
क्षीणदोषमहं मन्ये चाभितस्त्वां नरोत्तम ॥ ३-२११-१६ (२४५७०)
कर्तुमर्हसि नोत्कण्ठां त्वद्विधा ह्यविषादिनः ।
लोकवृत्तान्ततत्वज्ञा नित्यं धर्मपरायणाः ॥ ३-२११-१७ (२४५७१)
व्याध उवाच। ३-२११-१८क्ष् (२५१८)
प्रज्ञया मानसं दुःखं हन्याच्छारीरमौषधैः ।
एतद्विज्ञानसामर्थ्यं न बालै समतामियात् ॥ ३-२११-१८ (२४५७२)
अनिष्टसंप्रयोगाच्च विप्रयोगात्प्रयिस्य च ।
मनुष्या मानसैर्दुःखैर्युज्यन्ते चाल्पबुद्धयः ॥ ३-२११-१९ (२४५७३)
गुणैर्भूतानि युज्यन्ते वियुज्यन्ते तथैव च ।
सर्वाणि नैतदेकस्य शोकस्थानं हि विद्यते ॥ ३-२११-२० (२४५७४)
अनिष्टनान्वितं पश्यंस्तथा क्षिप्रं विरज्यते ।
ततश्च प्रतिकुर्वन्ति यदि पश्यन्त्युपक्रमम् ॥ ३-२११-२१ (२४५७५)
शोचतो न भवेत्किंचित्केवलं परितप्यते ।
परित्यजन्ति ये दुःखं सुखं वाऽप्युभयं नराः ॥ ३-२११-२२ (२४५७६)
त एव सुखमेधन्ते ज्ञानतृप्ता मनीषिणः ।
असंतोषपरा मूढाः संतोषं यानति पण्डिताः ॥ ३-२११-२३ (२४५७७)
असंतोषस्य नास्त्यन्तस्तुष्टिस्तु परमं सुखम् ।
न शोचन्ति गताध्वानः पश्यन्तः परमां गतिं ॥ ३-२११-२४ (२४५७८)
न विषादे मनः कार्यं विषादो विषमुत्तमम् ।
मारयत्यकृतप्रज्ञं बालं क्रुद्ध इवोरगः ॥ ३-२११-२५ (२४५७९)
यंविषादोऽभिभवति विषमे समुपस्थिते ।
तेजसा तस् हीनस्य पुरुषार्थो न विद्यते ॥ ३-२११-२६ (२४५८०)
अवश्यं क्रियमाणस् कर्मणो दृश्यते फलम् ।
न हि निर्वेदमागम्य किंचित्प्राप्नोति शोभनम् ॥ ३-२११-२७ (२४५८१)
अथाप्युपायं पश्येत दुःखस् परिमोक्षणे ।
अशोचन्नारभेतैव युक्तश्चाव्यसनी भवेत् ॥ ३-२११-२८ (२४५८२)
भूतेष्वभावं संचिन्त्य ये तु बुद्धेः परं गताः ।
न शोचन्ति कृतप्रज्ञाः पश्यन्तः परमां गतिम् ॥ ३-२११-२९ (२४५८३)
न शोचामि रमे विद्वन्कालाकाङ्क्षी स्थितोस्म्यहम् ।
एतैर्निदर्शनैर्ब्रह्मन्नावसीदामि सत्तम ॥ ३-२११-३० (२४५८४)
ब्राह्मण उवाच। ३-२११-३१क्ष् (२५१९)
कृतप्रज्ञोसि मेधावी बुद्धिश्च विपुला तव ।
पापान्निवृत्तोसि सदा ज्ञानवृद्धोसि धर्मवित् ॥ ३-२११-३१ (२४५८५)
आपृच्छे त्वां स्वस्ति तेऽस्तु धर्मस्त्वां परिरक्षतु ।

अप्रमादस्तु कर्तव्यो धर्मे धर्मभृतांवर ॥ ३-२१९-३२ (२४५८६)
मार्कण्डेय उवाच। ३-२१९-३३क्ष् (२५२०)
बाढमित्येव तं व्याधः कृताञ्जलिरुवाच ह ।
प्रदक्षिणमथो कृत्वा प्रस्थितो द्विजसत्तमः ॥ ३-२१९-३३ (२४५८७)
स तु गत्वाद्विजः सर्वां शुश्रूषां कृतवांस्तदा ।
मातापितृभ्यामन्धाभ्यां यथान्यायं सुसंशितः ॥ ३-२१९-३४ (२४५८८)
एतत्ते सर्वमाख्यातं निखिलेन युधिष्ठिर ।
पृष्टवानसि यं तात धर्मं धर्मभृतांवर ॥ ३-२१९-३५ (२४५८९)
पतिव्रताया माहात्म्यं ब्राह्मणस्य च सत्तम ।
मातापित्रोश्च शुश्रूषा धर्मव्याधेन कीर्तिता ॥ ३-२१९-३६ (२४५९०)
युधिष्ठिर उवाच। ३-२१९-३७क्ष् (२५२१)
अत्यद्भुतमिदं ब्रह्मन्धर्माख्यानमनुत्तमम् ।
सर्वधर्मविदांश्रेष्ठ कथितं मुनिसत्तम ॥ ३-२१९-३७ (२४५९१)
सुखश्राव्यतया विद्वन्मुहूर्त इव मे गतः ।
न हि तृप्तोस्मि भगवञ्शृण्वानो धर्ममुत्तमम् ॥ ३-२१९-३८ (२४५९२)

इति श्रीमन्महाभारते अरण्यपर्वणि मार्कण्डेयसमास्यापर्वणि
एकोनिविंशत्यधिकद्विशततमोऽध्यायः ॥ २१९ ॥
Mahabharata - Vana Parva - Chapter Footnotes

३-२१९-२० गुणैः गुणकार्यैः सुखदुःखमोहैः ॥
३-२१९-२४ गताध्वानः प्राप्तज्ञानमार्गाः ॥
३-२१९-२९ बुद्धेस्तत्त्वज्ञानात् । परं ब्रह्म गताः प्राप्ताः ॥

---

वन-अध्यय२२०
॥ श्रीः ॥
३.२२०. अध्यायः २२०

Mahabharata - Vana Parva - Chapter Topics
मार्कण्डेयेन युधिष्ठिरंप्रत्याङ्गिरसोपाख्यानकथनारम्भः ॥ १ ॥
अग्ङिरसःपुत्रस्य बृहस्पतेर्देवैरङ्गिरसो वचनाद्गुरुत्वेन
स्वीकरणम् ॥ २ ॥

Mahabharata - Vana Parva - Chapter Text

३-२२०-० (२४५९३)

वैशंपायन उवाच। ३-२२०-०क्ष् (२५२२)
श्रुत्वेमां धर्मसंयुक्तां धर्मराजः कथां शुभाम् ।
पुनः पप्रच्छ तमृषिं मार्कण्डेयमिदं तदा ॥ ३-२२०-१ (२४५९४)
कथमग्निर्वनं यातः कथं चाप्यङ्गिराः पुरा ।
नष्टेऽग्नौ हव्यमहवदग्निर्भूत्वा महाद्युतिः ॥ ३-२२०-२ (२४५९५)
अग्निर्यदा चैक एव बहुत्वं चास्य कर्मसु ।
दृश्यते भगवन्सर्वमेतदिच्छामि वेदितुम् ॥ ३-२२०-३ (२४५९६)
कुमारश्च यथोत्पन्नो यथा चाग्नेः सुतोऽभवत् ।
यथा रुद्राच्च संभूतो गङ्गायां कृत्तिकासु च ॥ ३-२२०-४ (२४५९७)
एतदिच्छाम्यहं त्वत्तः श्रोतुं भार्गवसत्तम ।
कौतूहलसमाविष्टो याथातथ्यं महामुने ॥ ३-२२०-५ (२४५९८)
मार्कण्डेय उवाच। ३-२२०-६क्ष् (२५२३)
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
यथा क्रुद्धो हुतवहस्तपस्तप्तुं वनं गतः ॥ ३-२२०-६ (२४५९९)
यथा च भगवानग्निः स्वयमेवाङ्गिराऽभवत् ।
संतापयंश्च प्रभया नाशयंस्तिमिरावलिम् ॥ ३-२२०-७ (२४६००)
पुराङ्गिरा महाबाहो चचार तप उत्तमम् ।
आश्रमस्थो महाभागो हव्यवाहं विशेषयन् ।
यथाग्निर्भूत्वा तु तदा जगत्सर्वं व्यकाशयत् ॥ ३-२२०-८ (२४६०१)
तपश्चरंस्तु हुतभुक्संतप्तस्तस्य तेजसा ।
भृशं ग्लानश्चतेजस्वी न च किंचित्प्रजज्ञिवान् ॥ ३-२२०-९ (२४६०२)
अथ संचिन्तयामास भगवान्हव्यवाहनः ।
अन्योऽग्निरिव लोकानां ब्रह्मणा संप्रकल्पितः ॥ ३-२२०-१० (२४६०३)
अग्नित्वं विप्रनष्टं हि तप्यमानस् मे तपः ।
कथमग्निः पुनरहं भवेयमिति चिन्त्य सः ॥ ३-२२०-११ (२४६०४)
अपश्यदग्निवल्लोकांस्तापयन्तं महामुनिम् ।
सोपासर्पच्छनैर्भीतस्तमुवाच तदाङ्गिराः ॥ ३-२२०-१२ (२४६०५)
शीघ्रमेव भवस्वाग्निस्त्वं पुनर्लोकभावनः ।
विज्ञातश्चासि लोकेषु त्रिषु संस्थानचारिषु ॥ ३-२२०-१३ (२४६०६)
त्वमग्ने प्रथमः सृष्टो ब्रह्मणा तिमिरापहः ।
स्वस्थानं प्रतिपद्यस्व शीघ्रमेव तमो नुद ॥ ३-२२०-१४ (२४६०७)
अग्निरुवाच। ३-२२०-१५क्ष् (२५२४)
नष्टकीर्तिरहं लोके भवाञ्जातो हुताशनः ।
भवन्तमेव ज्ञास्यन्ति पावकं न तु मां जनाः ॥ ३-२२०-१५ (२४६०८)
निक्षिपम्यहमग्नित्वं त्वमग्निः प्रथमो भव ।
भविष्यामि द्वितीयोऽहं प्राजापत्यक एव च ॥ ३-२२०-१६ (२४६०९)

अङ्गिरा उवाच। ३-२२०-१७क्ष् (२५२५)
कुरु पुण्यं प्रजास्वर्ग्यं भवाग्निस्तिमिरापहः ।
मां च देव कुरुष्वाग्ने प्रथमं पुत्रमञ्जसा ॥ ३-२२०-१७ (२४६१०)
मार्कण्डेय उवाच। ३-२२०-१८क्ष् (२५२६)
तच्छ्रुत्वाङ्गिरसो वाक्यं जातवेदास्तथाऽकरोत् ।
राजन्वृहस्पतिर्नाम तस्याप्यङ्गिरसः सुतः ॥ ३-२२०-१८ (२४६११)
ज्ञात्वा प्रथमजं तं तु वह्नेरङ्गिरसं सुतम् ।
उपेत्य देवाः पप्रच्छुः कारणं तत्र भारत ॥ ३-२२०-१९ (२४६१२)
स तु पृष्टस्तदा देवैस्तत कारणमब्रवीत् ।
प्रत्यगृह्णन्त देवाश्च तद्वचोऽङ्गिरसस्तदा ॥ ३-२२०-२० (२४६१३)
तत्रनानाविधानग्नीन्प्रवक्ष्यामि महाप्रभान् ।
कर्मभिर्वहुभिः ख्यातानननानार्थान्ब्राह्मणेष्विह ॥ ३-२२०-२१ (२४६१४)

इति श्रीमन्महाभारते अरण्यपर्वणि मार्कण्डेयसमास्यापर्वणि विंशत्यधिकद्विशततमोऽध्यायः ॥ २२०.।

Mahabharata - Vana Parva - Chapter Footnotes

३-२२०-१३ संस्थानचारिषु स्थावरजंगमेषु ।सम्यक् स्थानं गतिनिवृत्तिर्येषु चरणशीलेषु चेति योगात् ॥
३-२२०-१६ प्राजापत्यस्तथैकत इति क ।थ।ध। पाठः ॥
३-२२०-२० प्रत्यगृह्णन् अङ्गिरसो वचः अयं भवतां गुरुरिति अङ्गीकृतवन्तः ॥
३-२२०-२१ यातान्नानात्वं ब्राह्मणेष्वपि इति थ ।पाठः ॥

---

वन-अध्यय२२१
॥ श्रीः ॥
३.२२१. अध्यायः २२१

Mahabharata - Vana Parva - Chapter Topics
मार्कण्डेयेनाग्नीनामुत्पत्त्यादिकथनम् ॥ १ ॥

Mahabharata - Vana Parva - Chapter Text

३-२२१-० (२४६१५)
मार्कण्डेय उवाच। ३-२२१-०क्ष् (२५२७)
ब्रह्मणो यस्तृतीयस्तु पुत्रः कुरुकुलोद्वह ।

तस्यापि वसुदाभार्या प्रजास्तस्यां च मे शृणु ॥ ३-२२१-१ (२४६१६)
बृहत्कीर्तिर्बृहज्ज्योतिर्बृहद्ब्रह्मा बृहन्मनाः ।
बृहन्मन्त्रो बृहद्भासस्तथा राजन्बृहस्पतिः ॥ ३-२२१-२ (२४६१७)
प्रजासु तासु सर्वासु रूपेणाप्रतिमाऽभवत् ।
देवी भानुमती नाम प्रथमाऽङ्गिरसः सुता ॥ ३-२२१-३ (२४६१८)
भूतानामेव सर्वेषां यस्यां रागस्तदाऽभवत् ।
रागाद्रागेति यामाहुर्द्वितीयाऽङ्गिरसः सुता ॥ ३-२२१-४ (२४६१९)
यां कपर्दिसुतामाहुर्दृश्यादृश्येति देहिनः ।
तनुत्वात्सा सिनीवाली तुतीयाऽङ्गिरसः सुता ॥ ३-२२१-५ (२४६२०)
यां तु दृष्ट्वा भगवतीं जनः कुहकुहायते ।
एकानकेति यामाहुश्चतुर्थ्यङ्गिरसः सुता ॥ ३-२२१-६ (२४६२१)
पञ्चम्यर्चिष्मती नाम्ना हविर्भिश्च हविष्मती ।
षष्ठीम्गिरसः कन्यां पुण्यामाहुर्महिष्मतीम् ॥ ३-२२१-७ (२४६२२)
महामखेष्वाङ्गिरसी दीप्तिमत्सु महीयती ।
महामतीति विख्याता सप्तमी कथ्यते सुता ॥ ३-२२१-८ (२४६२३)
बृहस्पतेश्चान्द्रमसी भार्याऽऽसीद्या यशस्विनी ।
अग्नीन्साऽजनयत्पुण्यान्षडेकां चापि पुत्रिकाम् ॥ ३-२२१-९ (२४६२४)
आहुतिष्वेव यस्याग्नेर्हविराज्यं विधीयते ।
सोग्निर्बृहस्पतेः पुत्र शंयुर्नाम महाप्रभः ॥ ३-२२१-१० (२४६२५)
चातुर्मास्येषु यस्येष्टमश्वमेधाग्रभागभूत् ।
दीप्तिज्वालैरनेकाग्रैरग्निष्टोमोऽथ वीर्यवान् ॥ ३-२२१-११ (२४६२६)
शंयोरप्रतिमा भार्या सत्या सत्याऽथ धर्मजा ।
अग्नितस्य सुतो दीप्तस्तिस्रः कन्याश्च सुव्रताः ॥ ३-२२१-१२ (२४६२७)
प्रथमेनाज्यभागेन पूज्यते योऽग्निरध्वरे ।
अग्निस्तस्य भरद्वाजः प्रथमः पुत्र उच्यते ॥ ३-२२१-१३ (२४६२८)
पौर्णमासेषु सर्वेषु हविराज्यं ध्रुवोद्यतम् ।
भरतो नामतः सोग्निर्द्वितीयः शंयुतः सुतः ॥ ३-२२१-१४ (२४६२९)
तिस्रः कन्या भवन्त्यन्या यासां स भरत पतिः ।
भारतस्तु सुतस्तस्य भारत्येका च पुत्रिका ॥ ३-२२१-१५ (२४६३०)
भारतो भरतस्याग्नेः पावकस्तु प्रजायते ।
महानत्यर्थमहितस्तथा भरतसत्तम ॥ ३-२२१-१६ (२४६३१)
भरद्वाजस्य भार्या तु वीरा वीरश्च पिण्डदः ।
प्राहुराज्येन तस्येज्यां सोमस्येव द्विजाः शनैः ॥ ३-२२१-१७ (२४६३२)
हविषा यो द्वितीयेन सोमेन सह युज्यते ।
रथप्रभू रथध्वानः कुम्भरेताः स उच्यते ॥ ३-२२१-१८ (२४६३३)
सरय्वां जनयत्सिद्धिं भानुं भाभिः समावृणोत् ।

आग्नेयमनयन्मिथ्यं मिथ्यो नामैव कथ्यते ॥ ३-२२१-१९ (२४६३४)
यस्तु न च्यवते नित्यं शयसा वर्चसा श्रिया ।
अग्निर्निश्च्यवनो नाम पृथिवीं स्तौति केवलम् ॥ ३-२२१-२० (२४६३५)
विपाप्मा कलुषैर्मुक्तो विशुद्धश्चार्चिषा ज्वलन् ।
विपापोऽग्निः सुतस्तस्य योज्यः समयकर्मसु ॥ ३-२२१-२१ (२४६३६)
अक्रोशतां हि भूतानां यः करोति हि निष्कृतिम् ।
अग्निः स निष्कृतिर्नाम शोभयत्यभिसेवितः ॥ ३-२२१-२२ (२४६३७)
अनुकूजन्ति येनेह वेदनार्ताः स्वयं जनाः ।
तस्य पुत्रः स्वनो नाम पावकः सरुजस्करः ॥ ३-२२१-२३ (२४६३८)
यस्तु विश्वस् जगतो बुद्धिमाक्रम्य तिष्ठति ।
तं प्राहुरध्यात्मविदो विश्वजिन्नाम पावकम् ॥ ३-२२१-२४ (२४६३९)
अन्तराग्निः स्मृतो यस्तु भुक्तं पचति देहिनाम् ।
स यज्ञे विश्वभुङ्वाम सर्वलोकेषु भारत ॥ ३-२२१-२५ (२४६४०)
ब्रह्मचारी यतात्मा च सततं विपुलप्रभः ।
ब्राह्मणाः पूजयन्त्येनं पाकयज्ञेषु पावकम् ॥ ३-२२१-२६ (२४६४१)
प्रथितो गोपतिर्नाम नदी यस्याभवत्प्रिया ।
तस्मिन्कर्माणि सर्वाणि क्रियन्ते धर्मकर्तृभिः ॥ ३-२२१-२७ (२४६४२)
बडबाग्निः पिबत्यम्भो योसौ परमदारुणः ।
ऊर्द्ध्वभागूर्ध्वभाङ्नाम कविः प्राणाश्रितस्तु यः ॥ ३-२२१-२८ (२४६४३)
उदग्द्वारं हविर्यस्य गृहे नित्यं प्रदीयते ।
ततस्तुष्टो भवेद्ब्रह्मा स्विष्टकृत्परमः स्मृतः ॥ ३-२२१-२९ (२४६४४)
यः प्रशान्तेषु भूतेषु आविर्भवति पावकः ।
क्रोधस्य तु रसो जज्ञे मन्यती चाथ पुत्रिका ॥ ३-२२१-३० (२४६४५)
स्वाहेति दारुणा क्रूरा सर्वभूतेषु तिष्ठति ।
त्रिदिवे यस्य सदृशो नास्ति रूपेण कश्चन ।
अतुलत्वात्कृतो देवैर्नाम्ना कामस्तु पावकः ॥ ३-२२१-३१ (२४६४६)
संहर्षाद्धारयन्क्रोधं धन्वी स्रग्वी रथे स्थितः ।
समरे नाशयेच्छत्रूनमोघो नाम पावकः ॥ ३-२२१-३२ (२४६४७)
उक्थ्यो नाम महाभाग त्रिभिरुक्थैरभिष्टुतः ।
महावर्षं त्वजनयत्सकामाश्वं हि यं विदुः ॥ ३-२२१-३३ (२४६४८)

इति श्रीमन्महाभारते अरण्यपर्वणि मार्कण्डेयसमास्यापर्वणि
एकविंसत्यधिकद्विशततमोऽध्यायः ॥ २२१ ॥

Mahabharata - Vana Parva - Chapter Footnotes

३-२२१-१ तस्यापि वसुधा भार्या इति ट ।ध। पाठः ॥

३-२२१-२ बृहत्तेजा बृहन्मना इति क । ध। पाठः ॥
३-२२१-१० हविषाद्यं विधीयते इति झ । पाठः ॥
३-२२१-१७ वीरस्य पिण्डदा इतिझ । पाठः ॥

---

वन-अध्यय२२२
॥ श्रीः ॥
३.२२२. अध्यायः २२२

Mahabharata - Vana Parva - Chapter Topics
मारक्ण्डेयेन युधिष्ठिरंप्रत्यग्न्युत्पत्तिकथनम् ॥ १ ॥

Mahabharata - Vana Parva - Chapter Text

३-२२२-० (२४६४९)
मार्कण्डेय उवाच। ३-२२२-०क्ष् (२५२८)
काश्यपो ह्यथ वासिष्ठः प्राणश्च प्राणपुत्रकः ।
अग्निराङ्गिरसश्चैव च्यवनस्तीव्रवर्चकः ॥ ३-२२२-१ (२४६५०)
अचरत्स तपस्तीव्रं पुत्रार्थे बहुवार्षिकम् ।
पुत्रं लभेयं धर्मिष्ठं यशसा ब्रह्मणा समम् ॥ ३-२२२-२ (२४६५१)
महाव्याहृतिभिर्ध्यातः पञ्चभिस्तैस्तदा त्वथ ।
जज्ञे तेजोमयार्चिष्मान्पञ्चवर्णः प्राकरः ॥ ३-२२२-३ (२४६५२)
समिद्धोऽग्निः शिरस्तस्य बाहू सूर्यनिभौ तथा ।
त्वङ्नेत्रे च सुवर्णाभे कृष्णे जङ्घे च भारत ॥ ३-२२२-४ (२४६५३)
पञ्चवर्षः स तपसा कृतस्तैः पञ्चभिर्जनैः ।
पाञ्चजन्यः श्रुतो देवः पञ्चवंशकरस्तु सः ॥ ३-२२२-५ (२४६५४)
दशवर्षसहस्राणि तपस्तप्त्वा महातपाः ।
जनयत्पावकं घोरं पितॄणां स प्रजाः सृजन् ॥ ३-२२२-६ (२४६५५)
बृहद्रथंतरौ मूर्ध्नो वक्राच्च तपसा हरिम् ।
शिवं नाभ्यां बलादिन्द्रं प्राणाद्वायुं च भारत ॥ ३-२२२-७ (२४६५६)
बाहुभ्यामनुदात्तौ च विश्वे भूतानि चैव ह ।
एतान्सृष्ट्वा ततः पञ्च पितॄणामसृजत्सुतान् ॥ ३-२२२-८ (२४६५७)
बृहद्रथस्य प्रणिधिः काश्यपश्य महत्तरः ।
भानुरङ्गिरसो धीरः पुत्रो वर्चस्य सौरभः ॥ ३-२२२-९ (२४६५८)
प्राणस्य चानुदात्तस्तु व्याख्याताः पञ्च वंशजाः ।
देवान्यज्ञमुषश्चान्यान्सृजन्पञ्चदशोत्तरान् ॥ ३-२२२-१० (२४६५९)
सुभीममतिभीमं च भीमं भीमबलाबलम् ।
एतान्यज्ञमुषः पञ्च देवानप्यसृजत्ततः ॥ ३-२२२-११ (२४६६०)

सुमित्रं मित्रवन्तं च मित्रज्ञं मित्रवर्धनम् ।
मित्रधर्माणमित्येतान्देवानभ्यसृजत्ततः ॥ ३-२२२-१२ (२४६६१)
सुरप्रवीरं वीरं च सुरेशं च सुवर्चसम् ।
सुराणामपि भर्तारं पञ्चैतानसृजत्ततः ॥ ३-२२२-१३ (२४६६२)
त्रिविधं संस्थिता ह्येते पञ्चपञ्च पृथक्पृथक् ।
मुष्णन्त्यत्र स्थिता ह्येते स्वर्गतान्यज्ञयाजिनः ॥ ३-२२२-१४ (२४६६३)
तेषामिष्टं हरन्त्येते निघ्नन्ति च महद्धविः ।
स्पर्धयाहव्यवाहानां निघ्नन्त्येते हरन्ति च ॥ ३-२२२-१५ (२४६६४)
बहिर्वेद्यां तदादानं कुशलैः संप्रवर्तितम् ।
तत्रैते नोपसर्पन्ति यत्र चाग्निः स्थितो भवेत् ॥ ३-२२२-१६ (२४६६५)
चितोऽग्निरुद्वहन्यज्ञं पक्षाभ्यां तान्प्रबाधते ।
मन्त्रै प्रशमिताह्येते नेष्टं मुष्णन्ति यज्ञियम् ॥ ३-२२२-१७ (२४६६६)
तपस्ये बृदुक्थस्य पुत्रो भूमिमुपाश्रितः ।
अग्निहोत्रे हूयमाने पृथिव्यां सद्भिरीड्यते ॥ ३-२२२-१८ (२४६६७)
रथन्तरश्चतपसः पुत्रोऽग्निः परिपठ्यते ।
मित्रविन्दा तथा भार्या हविरध्वर्यवो विदुः ॥ ३-२२२-१९ (२४६६८)
गएतैः सह महाभाग तपस्तेजस्विभिर्नृप'।
मुमुदे परमप्रीतः सह पुत्रैर्भहायशाः ॥ ३-२२२-२० (२४६६९)

इति श्रीमन्महाभारते अरण्यपर्वणि मार्कण्डेयसमास्यापर्वणि
द्वाविंशत्यधिरकद्विरतितमोऽध्यायः ॥ २२२ ॥
Mahabharata - Vana Parva - Chapter Footnotes

३-२२२-२ काश्यप इति त्रयाणां संबन्धः ।अत्रपाठकमादर्थक्रमस्य
बलीयस्त्वात् आद्ययोः श्लोकयोर्व्यत्यासेनार्थो ग्राह्यः।अचरदिति ॥

---

वन-अध्यय२२३
॥ श्रीः ॥
३.२२३. अध्यायः २२३

Mahabharata - Vana Parva - Chapter Topics
मार्कण्डेयेन युधिष्ठिरप्रति विस्तरेणाग्नीनां वंशकथनम् ॥ १ ॥

Mahabharata - Vana Parva - Chapter Text

३-२२३-० (२४६७०)

मार्कण्डेय उवाच। ३-२२३-०क्ष् (२५२९)
गुरुभिर्नियमैर्युक्तो भरतो नाम पार्थिव ।
अग्निः पुष्टिमग्निमि तुष्टः पुष्टिं प्रयच्छति ॥ ३-२२३-१ (२४६७१)
ग्सततं भरतश्रेष्ठ पावकोयं महाप्रभः’।
अग्निर्यश्च शिवो नाम शक्तिपूजायनिश्च सः ।
दुःखार्तानां स सर्वेषां शिवकृत्सततं शिवः ॥ ३-२२३-२ (२४६७२)
तपसस्तु फलं दृष्ट्वासंप्रवृत्तं तपोमयम् ।
उद्धर्तुकामो मतिमान्पुत्रो जज्ञे पुरंदरः ॥ ३-२२३-३ (२४६७३)
उष्मा चैवोष्मणो जज्ञे सोऽग्निर्भूतेषु लक्ष्यते ।
अग्निश्चापि मनुर्नाम प्राजापत्यं सकारणम् ॥ ३-२२३-४ (२४६७४)
शंभुमग्निमथ प्राहुर्ब्राह्मणा वेदपारगाः ।
आवसथ्यं देविजाः प्राहुर्दीप्तमग्निं महाप्रभम् ॥ ३-२२३-५ (२४६७५)
ऊर्जस्करान्हव्यवाहान्सुवर्णसदृशप्रभान् ।
अग्निस्तपो ह्यजनयत्पञ्च यज्ञसुतानिह ॥ ३-२२३-६ (२४६७६)
प्रततोऽग्निर्महाभाग परिश्रान्तो गवांपतिः ।
असुराञ्जनयन्धोरान्मत्यांश्चैव पृथिग्विधान् ॥ ३-२२३-७ (२४६७७)
तपसश्च मनुं भानुं चाप्यङ्गिराः सृजत् ।
बृहद्भानुं तु तं प्राहुर्ब्राह्मणा वेदपारघाः ॥ ३-२२३-८ (२४६७८)
भानोर्भार्या महाराज बृहद्भासा तु सोमजा ।
षट्पुत्राञ्जनयामास तदा सा कन्यया सह ।
भानोराङ्गिरसस्याथ शृणु तस्य प्रजाविधिम् ॥ ३-२२३-९ (२४६७९)
दुर्बलानां तु भूतानामसून्यः संप्रयच्छति ।
तमग्निं बलदं प्राहुः प्रथमं भानुजं सुतम् ॥ ३-२२३-१० (२४६८०)
यः प्रशान्तेषु भूतेषु मन्युर्भवति दारुणः ।
अग्निः स मन्युमान्नाम द्वितीयो भानुजः सुतः ॥ ३-२२३-११ (२४६८१)
दर्शे च पौर्णमासे च यस्येह हविरुच्यते ।
विष्णुर्नामेह योऽग्निस्तु धृतिमान्नाम सोङ्गिराः ॥ ३-२२३-१२ (२४६८२)
इन्द्रेण सहितं यस्य हविराग्रयणं स्मृतम् ।
अग्निराग्रयणो नाम भानोरेवान्वयस्तु सः ॥ ३-२२३-१३ (२४६८३)
चातुर्मास्येषु नित्यानां हविषां यो निरग्रहः ।
चतुर्भिः सहितः पुत्रैर्भानोरेवान्वयस्तु सः ॥ ३-२२३-१४ (२४६८४)
निशां त्वजनयत्कन्यामग्नीषोमावुभौ तथा ।
मनोरेवाभवद्भार्या सुषुवे पञ्च पावकान् ॥ ३-२२३-१५ (२४६८५)
पूज्यते हविषा योऽग्रे चातुर्मास्येषु पावकः ।
पर्जन्यसहितः श्रीमानग्निर्वैश्वानरस्तु सः ॥ ३-२२३-१६ (२४६८६)
अस्य लोकस्य सर्वस्य यः प्रभुः परिषठ्यते ।

सोऽग्निर्विश्वपतिर्नाम द्वितीयस्तापसः सुतः ॥ ३-२२३-१७ (२४६८७)
कन्या या हरिणी नाम हिरण्यकशिपोः सुताः। ३-२२३-१८ (२४६८८)
कर्मणाऽसौ बभौ भार्या स वह्निः स प्रजापतिः ।
प्राणानाश्रित्य यो देहं प्रवर्तयति देहिनाम् ।
तस्य सन्निहितो नाम शब्दरूपस् साधनः ॥ ३-२२३-१९ (२४६८९)
शुक्लं कृष्णं वपुर्देवो यो बिभर्ति हुताशनः ।
अकल्मषः कल्मषाणां कर्ता क्रोधाश्रितस्तुसः ॥ ३-२२३-२० (२४६९०)
कपिलं परमर्षिं च यं प्राहुर्यतयः सदा ।
अग्निः स कपिलो नाम साङ्ख्ययोगप्रवर्तकः ॥ ३-२२३-२१ (२४६९१)
योऽन्तर्यच्छति भूतानि येन चेष्टन्ति नित्यदा ।
कर्मस्विह विचित्रेषु सोऽग्रणीर्वह्निरुच्यते ॥ ३-२२३-२२ (२४६९२)
इमामन्यान्समसृजत्पावकान्प्रथितौजसः ।
अग्निहोत्रस्य दुष्टस्य प्रायश्चित्तार्थमुल्वणान् ॥ ३-२२३-२३ (२४६९३)
संस्पृशेयुर्यदाऽन्योन्यं कथंचिद्वायुनाऽग्नयः ।
इष्टिरष्टाकपालेन कार्या वै शुचयेऽग्नये ॥ ३-२२३-२४ (२४६९४)
दक्षिणाग्निर्यदा द्वाभ्यां संसृजेत तदा किल ।
इष्टिरष्टाकपालेन कार्या वै वीतयेऽग्नये ॥ ३-२२३-२५ (२४६९५)
यद्यग्नयो हि स्पृश्येयुर्निवेशस्था दवाग्निना ।
इष्टरष्टाकपालेन कार्या तु शुचयेऽग्नये ॥ ३-२२३-२६ (२४६९६)
अग्निं रजस्वला वै स्त्री संस्पृशेदाग्निहौत्रिकम् ।
इष्टिरष्टाकपालेन कार्या वसुमतेऽग्नये ॥ ३-२२३-२७ (२४६९७)
मृतः श्रूयेत यो जीवन्परासुरशुचिर्यथा ।
इष्टिरष्टाकपालेन कार्या सुरभिमतेऽग्नये ॥ ३-२२३-२८ (२४६९८)
आर्तो न जुहुयादग्निं त्रिरात्रं यस्तु ब्राह्मणः ।
इष्टिरष्टाकपालेन कार्या तन्तुमतेऽग्नये ॥ ३-२२३-२९ (२४६९९)
दर्शश्च पौर्णमासश्च यस् तिष्ठेत्प्रतिष्ठितम् ।
इष्टिरष्टाकपालेन कार्या पथिकृतेऽग्नये ॥ ३-२२३-३० (२४७००)
सूतिकाग्निर्यदा चाग्निं संस्पृशेदाग्निहौत्रिकम् ।
इष्टिरष्टाकपालेन कार्या चाग्निमतेऽग्नये ॥ ३-२२३-३१ (२४७०१)

इति श्रीमन्महाभारते अरण्यपर्वणि मार्कण्डेयसमास्यापर्वणि
त्रयोविंशत्यधिकद्विशततमोऽध्यायः ॥ २२३ ॥

Mahabharata - Vana Parva - Chapter Footnotes

३-२२३-९ भानोर्भार्या सुप्रजा तु बृहद्भासा तु सूर्यजा इति झ ।पाठः ॥
३-२२३-१४ भानोरेवान्वयस्तुभः इति झ ।पाठः ॥

३-२२३-१८ कन्या सा रोहिणी इति झ । पाठः ॥
३-२२३-२० शुक्ककृष्णगतिर्देवो यो बिभर्ति हुताशनं इति झ । पाठः ॥

---

वन-अध्यय२२४
॥ श्रीः ॥
३.२२४. अध्यायः २२४

Mahabharata - Vana Parva - Chapter Topics
मार्कण्डेयेन युधिष्ठिरंप्रत्यग्निवंशादिकीर्तनम् ॥ १ ॥

Mahabharata - Vana Parva - Chapter Text

३-२२४-० (२४७०२)
मार्कण्डेय उवाच। ३-२२४-०क्ष् (२५३०)
आपस्य मुदिता भार्या सा चास्य परमाप्रिया ।
भूपतिं भूतकर्तारं जनयामास पावकम् ॥ ३-२२४-१ (२४७०३)
भूतानां साऽपि सर्वेषां यं प्राहुः पावकं पतिम् ।
आत्मा भुवनकर्ता च सोऽध्वरेषु द्विजातिभिः ॥ ३-२२४-२ (२४७०४)
महतां चैव भूतानां सर्वेषामिह यः पतिः ।
भगवान्स महातेजा नित्यं चरति पावकः ॥ ३-२२४-३ (२४७०५)
अग्निर्गृहपतिर्नाम नित्यं यज्ञेषु पूज्यते ।
आज्यं वहतियो हव्यं सर्वलोकस् पावकः ॥ ३-२२४-४ (२४७०६)
अपांगर्भो महाभागः सत्वभुग्यो महाद्भुतः ।
भूपतिर्भूतकर्ता च महतः पतिरुच्यते ॥ ३-२२४-५ (२४७०७)
मता वहन्तो हव्यानि तस्याग्नेरप्रजाऽभवन् ।
अग्निष्टोमस्तु नियतः क्रतुश्रेष्ठो भवत्युत ॥ ३-२२४-६ (२४७०८)
श्स वह्निः प्रथमो नित्यं देवैरन्विष्यते प्रभुःघ ।
आयान्तं नियतं दृष्ट्वाप्रविवेशार्णवं भयात् ॥ ३-२२४-७ (२४७०९)
देवास्तं नाधिगच्छन्ति मार्गमाणा यथातथम् ।
दृष्ट्वा त्वग्निरथर्वाणं ततो वचनमब्रवीत् ॥ ३-२२४-८ (२४७१०)
देवानां वह हव्यं त्वमहं वीर सुदुर्बलः ।
अथ त्वं गच्छ मध्वक्षं प्रियमेतत्कुरुष्व मे ॥ ३-२२४-९ (२४७११)
प्रेष्य चाग्निरथर्वाणमन्यं देशं ततोऽगमत् ।
मत्स्यास्तस्य समाचख्युः क्रुद्धस्तानग्निरब्रवीत् ।
भक्ष्या वै विविधैर्भावैर्भविष्यथ शरीरिणाम् ॥ ३-२२४-१० (२४७१२)
अथर्वाणं तथा चापि हव्यवाहोऽब्रवीद्वचः ॥ ३-२२४-११ (२४७१३)

अनुनीयमानो हि भृशं देववाक्यान्वितेन सः ।
नैच्छद्वोढुं हविं सर्वं शरीरं चापि सोऽत्यजत् ॥ ३-२२४-१२ (२४७१४)
स तच्छरीरं संत्यज्य प्रविवेश धरां तदा ।
भूमिं स्पृष्ट्वाऽसृजद्धातून्पृथक्पृथगतीव हि ॥ ३-२२४-१३ (२४७१५)
आस्यात्सुगन्धं तेजश्च अस्थिभ्यो देवदारु च ।
श्लेष्मणः स्फाटिकं तस् पित्तान्मारकतं तथा ॥ ३-२२४-१४ (२४७१६)
वातात्कृष्णायसं तस्य त्रिभिरेतैर्बहु प्रजाः ।
त्वचस्तस्याभ्रपटलं स्नायुजं चापि विद्रुमम् ॥ ३-२२४-१५ (२४७१७)
शरीरास्थिविधाश्चान्ये धातवोऽस्याभवन्नृप ।
एवं कृत्वा शरीरं च परमे तपसि स्थितः ॥ ३-२२४-१६ (२४७१८)
भृग्वङ्गिरादिभिर्भूयस्तपसोत्थापितस्तदा ।
भृशं जज्वाल तेजस्वी तपसाऽऽप्याधितः शिखी ॥ ३-२२४-१७ (२४७१९)
दृष्ट्वा ऋषीनभयाच्चापि प्रविवेश महार्णवम् ।
तस्मिन्नष्टे जगद्भीतमथर्वाणमथाश्रितम् ।
अर्चयामासुरेवैनमथर्वाणं सुरादयः ॥ ३-२२४-१८ (२४७२०)
अथर्वाणं श्रिताँल्लोकानात्मन्यालोच्य पावकः ।
मिषतां सर्वभूतानामुन्ममज्ज महार्णवात् ॥ ३-२२४-१९ (२४७२१)
एवमग्निर्भगवता नष्टः पूर्वमथर्वणा ।
आहूतः सर्वूतानां हव्यं वहति सर्वदा ॥ ३-२२४-२० (२४७२२)
एवं त्वजनयद्धिष्ण्यान्वेदोक्तान्विबुधान्बहून् ।
विचरन्विविधान्देशान्भ्रममाणस्तु तत्र वै ॥ ३-२२४-२१ (२४७२३)
सिन्धुवर्ज्याः पञ्च नद्यो देविकाऽथ सरस्वती ।
गङ्गा च शतकुम्भा च सरयू गण्डसाह्वया ॥ ३-२२४-२२ (२४७२४)
चर्मण्वती मही चैव मेध्या मेधासृतिस्तदा ।
इरावती वेत्रवती नद्यतिस्रोऽथ कौशिकी ॥ ३-२२४-२३ (२४७२५)
तमसा नर्मदा चैव नदी गोदावरी तथा ।
वेण्णा प्रवेणी भीमा च मरुदा चैव भारत ॥ ३-२२४-२४ (२४७२६)
भारती सुप्रयोगा च कावेरी मज्जुरा तथा ।
तुङ्गवेणा कृष्णवेणा कपिला शोण एव च ॥ ३-२२४-२५ (२४७२७)
एता नद्यस्तु धिष्ण्यानां मातरो याः प्रकीर्तिताः ॥ ३-२२४-२६ (२४७२८)
अद्भुतस्य प्रिया भार्या तस्याः पुत्रो विडूरथः ।
यावन्तः पावकाः प्रोक्ताः सोमास्तावन्त एव तु ॥ ३-२२४-२७ (२४७२९)
अत्रेश्चाप्यन्वये जाता ब्रह्मणो मानसाः प्रजाः ।
अग्निः पुत्रान्स्रष्टुकामस्तानेवात्मन्यधारयत् ॥ ३-२२४-२८ (२४७३०)
तस्य तद्ब्रह्मणः कायान्निर्हरन्ति हुताशनाः ।
एवमेते महात्मानः कीर्तितास्तेऽग्नयो यथा ॥ ३-२२४-२९ (२४७३१)

अप्रमेया यथोत्पन्नाः श्रीमन्तस्तिमिरापहाः ।
अद्भुतस्त तु माहात्म्यं यथा वेदेषु कीर्तितम् ॥ ३-२२४-३० (२४७३२)
तादृशं विद्धि सर्वेषामेको ह्येषु हुताशनः ।
एक एवैष भगवान्विज्ञेयः प्रथमोऽङ्गिराः ॥ ३-२२४-३१ (२४७३३)
बहुधा निःसृतः कायाज्ज्योतिष्टोमः क्रतुर्वथा ।
इत्येष वंशः सुमहानग्नीनां कीर्तितो मया ।
पावको विविधैर्मन्त्रैर्हव्यं वहति देहिनाम् ॥ ३-२२४-३२ (२४७३४)

इति श्रीन्ममहाभारते अरण्यपर्वणि मार्कण्डेयसमास्यापर्वणि
चतुर्विंसत्यधिकद्विशततमोऽध्यायः ॥ २२४ ॥
Mahabharata - Vana Parva - Chapter Footnotes

३-२२४-८ अथर्वाणमङ्गिरसं तीव्रतपसं दृष्ट्वा ॥
३-२२४-९ गच्छ मा द्वेषमिति ध ।पाठः।मध्वक्षं
पिङ्गाक्षमग्निम्।भावप्रधानो निर्देशः।तथाच निक्षिपाम्यहमग्नित्वं
त्वमग्निः प्रथमो भवेत्युपक्रमस्योपसंहारेण सहैकवाक्यता भवति ॥
३-२२४-१० प्रेष्य आदिश्य ॥
३-२२४-११ तथाचापि तथैव मत्स्यैराख्यातोपि ।वचस्त्वं मध्वक्षो
भवेति पूर्वोक्तमेव ॥
३-२२४-१३ धातून् मनःशिलादीन् ॥
३-२२४-१५ यकृत्कृष्णायसं प त्रिभिरेव बभुः प्रजाः
।नखास्तस्याभ्रपटलं शिराजालानि विद्रुमम्।इति झ।पाठः ॥
३-२२४-१६ रीरद्विविधाश्चान्येप्एवं त्यक्त्वा शरीरं इति झ
।पाठः।अन्ये स्वर्णपारदादयः ॥
३-२२४-१७ तपसा सामर्थ्येन ।उत्थापितः समाधेश्च्यावितः ॥
३-२२४-१९ अथर्वा त्वसृजल्लोकानात्मना लोक्यपावकम् ।प्अन्ममाथ
महार्णवमिति झ।पाठः ॥
३-२२४-२१ एवंत्विति ।अग्नेरङ्गिरास्ततो बृहस्पतिस्तः शंय्वादिक्रमेण
वेदोक्तान् विष्ण्यान् नानास्थानानि अजनयत् ॥
३-२२४-२७ यावन्तः पावका धिष्ण्याः सन्ति तावन्तः सोमाः सोमयागाः ॥
३-२२४-३२ योर्चितो विविधैः इति झ ।पाठः ॥

---

वन-अध्यय२२५
॥ श्रीः ॥
३.२२५. अध्यायः २२५

Mahabharata - Vana Parva - Chapter Topics

मार्कण्डेयेन युदिष्ठिरंप्रति कुमारोत्पत्तिप्रकारकथनारम्भः ॥ १ ॥
देवसेनानां नायकसंपादनाय चिन्तयता इन्द्रेण मानसशैले
कस्याश्चित्कन्याया अवलोकनम् तस्याः कुलचिकीर्षितादिप्रश्नश्च ॥ २ ॥

Mahabharata - Vana Parva - Chapter Text

३-२२५-० (२४७३५)
मार्कण्डेय उवाच। ३-२२५-०क्ष् (२५३१)
अग्नीनां विविधा वंशाः कीर्तितास्ते मयाऽनघ ।
शृणु जन्म तु कौरव्य कार्तिकेयस् धीमतः ॥ ३-२२५-१ (२४७३६)
अद्भुतस्याद्भुतं पुत्रं प्रवक्ष्याम्यमितौजसम् ।
जातं सप्तर्षिभार्याभिर्ब्रह्मण्यं कीर्तिवर्धनम् ॥ ३-२२५-२ (२४७३७)
देवासुराः पुरा यत्ता विनिघ्नन्तः परस्परम् ।
तत्राजयन्सदा देवान्दानवा घोररूपिणः ॥ ३-२२५-३ (२४७३८)
वध्यमानं बलं दृष्ट्वा बहुशस्तैः पुरंदरः ।
स सैन्यनायकार्थाय चिन्तयामास वासवः ॥ ३-२२५-४ (२४७३९)
देवसेनां दानवैर्हि भग्नां दृष्ट्वा महाबलः ।
पालयेद्वीर्यमाश्रित्य स ज्ञेयः पुरुषो मया ॥ ३-२२५-५ (२४७४०)
स शैलं मानसं गत्वा ध्यायन्नर्थमिमं भृशम् ।
शुश्रावार्तस्वरं घोरमथ मुक्तं स्त्रिया तदा ॥ ३-२२५-६ (२४७४१)
अभिधावतु मां कश्चित्पुरुषस्त्रातु चैव ह ।
पतिं च मे प्रदिशतु स्वयं वा पतिरस्तु मे ॥ ३-२२५-७ (२४७४२)
पुरंदरस्तु तामाह मा भैर्नास्ति भयं तव ।
एवमुक्त्वा ततोऽपश्यत्केशिनं स्थितमग्रतः ॥ ३-२२५-८ (२४७४३)
किरीटिनं गदापाणिं धातुमन्तमिवाचलम् ।
हस्ते गृहीत्वा कन्यां तामथैनं वासवोऽब्रवीत् ॥ ३-२२५-९ (२४७४४)
अनार्यकर्मन्कस्मात्त्वमिमां कन्यां जिहीर्षसि ।
वज्रिणं मांविजानीहि विरमास्याः प्रबाधनात् ॥ ३-२२५-१० (२४७४५)
केश्युवाच। ३-२२५-११क्ष् (२५३२)
विसृजस्व त्वमेवैनां शक्रैषा प्रार्थिता मया ।
क्षमं तेजीवतो गनतुं स्वपुरं पाकशासन ॥ ३-२२५-११ (२४७४६)
एवमुक्त्वा गदां केशी चिक्षेपेन्द्रवधाय वै ।
तामापतन्तीं चिच्छेद मध्ये वज्रेण वासवः ॥ ३-२२५-१२ (२४७४७)
अथास्य शैलशिखरं केशी क्रुद्धो व्यवासृजत् ।
ग्महामेघप्रतीकाशं चलत्पावकसंकुलम् ॥ ३-२२५-१३ (२४७४८)
तदापन्ततं संप्रेक्ष्य शैलशृङ्गं शतक्रतुः ।

बिभेद राजन्वज्रेण भुवि तन्निपपात ह ॥ ३-२२५-१४ (२४७४९)
पतता तु तदा केशी तेन शृङ्गेण ताडितः ।
हित्वा कन्यां महाभागां प्राद्रवद्भृशपीडितः ॥ ३-२२५-१५ (२४७५०)
अपयातेऽसुरे तस्मिंस्तां कन्यां वासवोऽब्रवीत् ।
कासि कस्यसि किंचेह कुरुषे त्वं शुभानने ॥ ३-२२५-१६ (२४७५१)

इति श्रीमन्महाभारते अरण्यपर्वणि मार्कण्डेयसमास्यापर्वणि
पञ्चविंसत्यधिकशततमोऽध्यायः ॥ २२५ ॥
Mahabharata - Vana Parva - Chapter Footnotes

३-२२५-२ अद्भुतस्याग्नेः ।अद्भुतं अभिवनम् ॥
३-२२५-६ स्त्रिया देवसेनाभिमानिदेवतया ॥

---

वन-अध्यय२२६
॥ श्रीः ॥
३.२२६. अध्यायः २२६

Mahabharata - Vana Parva - Chapter Topics
कन्यया इन्द्रंप्रतिस्वस्य दक्षपुत्रीत्वकथनपूर्वकं
भर्तृकामनानिवेदनम् ॥ १ ॥
इन्द्रेण कन्याया उचितपतिं प्रार्थितेन ब्रह्मणा
कन्याभर्तुरनतिचिरभावित्वकथनपूर्वकं तस्यैव
तत्सेनापतीभवनकथनम् ॥ २ ॥
सप्तर्षिमस्वे तत्पत्नीनामवलोकनेन क्षुभितमनसाऽग्निना तासामलाभेन
निर्वेदाद्वनंप्रति गमनम् ॥ ३ ॥
चिरेणाग्निकामया स्वाहयाऽत्रावसरे
सप्तर्षिपत्नीसमानरूपस्वीकारेणाग्निवशीकरणनिर्धारणम् ॥ ४ ॥

Mahabharata - Vana Parva - Chapter Text

३-२२६-० (२४७५२)
कन्योवाच। ३-२२६-०क्ष् (२५३३)
अहं प्रजापतेः कन्या देवसेनेति वुश्रुता ।
भगिनी मे दैत्यसेना सा पूर्वं कोशिना हृता ॥ ३-२२६-१ (२४७५३)
सहैवावां भगिन्यौ तु सखीभिः सह मानसम् ।
आगच्छावो विहारार्थमनुज्ञाप्य प्रजापतिम् ॥ ३-२२६-२ (२४७५४)
नित्यं चावां प्रार्थयते हर्तुं केशी महासुरः ।

इच्छत्येनं दैत्यसेना न चाहं पाकशासन ॥ ३-२२६-३ (२४७५५)
सा हृताऽनेन भगवान्मुक्ताऽहं त्वद्बलेन तु ।
त्वया देवेन्द्र निर्दिष्टं पतिमिच्छामि दुर्जयम् ॥ ३-२२६-४ (२४७५६)
इन्द्र उवाच। ३-२२६-५क्ष् (२५३४)
मम मातृष्वसेयी त्वं माता दाक्षायणी मम ।
आख्यातुं त्वहमिच्छामि स्वयमात्मबलं त्वया ॥ ३-२२६-५ (२४७५७)
कन्योवाच। ३-२२६-६क्ष् (२५३५)
अबलाऽहं महाबाहो पतिस्तु बलवान्मम ।
वरदानात्पितुर्भावी सुरासुरनमस्कृतः ॥ ३-२२६-६ (२४७५८)
इन्द्र उवाच। ३-२२६-७क्ष् (२५३६)
कीदृशं तु बलंदेवि पत्युस्तव भविष्यति ।
एतदिच्छाम्यहं श्रोतुं तव वाक्यमनिन्दिते ॥ ३-२२६-७ (२४७५९)
कन्योवाच। ३-२२६-८क्ष् (२५३७)
देवदानवयक्षाणां किन्नरोरगरक्षसाम् ।
जेता यो दुष्टदैत्यानां महावीर्यो महाबलः ॥ ३-२२६-८ (२४७६०)
यस्तु सर्वाणि भूतानि त्वया सह विजेष्यति ।
स हि मे भविता भर्ता ब्रह्मण्यः कीर्तिवर्धनः ॥ ३-२२६-९ (२४७६१)
मार्कण्डेय उवाच। ३-२२६-१०क्ष् (२५३८)
इन्द्रस्तस्या वचः श्रुत्वा दुःखितोऽचिन्तयद्भृशम् ।
अस्या देव्याः पतिर्नास्ति यादृशं संप्रभाषते ॥ ३-२२६-१० (२४७६२)
अथापश्यत्स उदये भास्करं भास्करद्युतिः ।
सोमं चैव महाभागं प्रविशन्तं दिवाकरम् ॥ ३-२२६-११ (२४७६३)
अमावास्यां प्रवृत्तायां मुहूर्ते रौद्र एव तु ।
देवासुरं च संग्रामं सोऽपश्यदुदये गिरौ ॥ ३-२२६-१२ (२४७६४)
लोहितैश्च घनैर्युक्तां पूर्वां संध्यां शतक्रतुः ।
अपश्यल्लोहितोदं च मघवान्वरुणालयम् ॥ ३-२२६-१३ (२४७६५)
भृगुभिश्चाङ्गिरोभ्यश्च हुतं मन्त्रैः पृथग्विधैः ।
हव्यं गृहीत्वा वह्निं च प्रविशन्तं दिवाकरम् ॥ ३-२२६-१४ (२४७६६)
पर्व चैव चतुर्विंशं तदा सूर्यमुपस्थितम् ।
तथा सूर्यं वह्निगतं सोमं सूर्यगतं च तम् ॥ ३-२२६-१५ (२४७६७)
समालोक्यैकतामेव शशिनो भास्करस्य च ।
समवायं तु तं रौद्रं दृष्ट्वा शक्रोऽन्वचिन्तयत् ॥ ३-२२६-१६ (२४७६८)
सूर्याचन्द्रमसोर्घोरं दृश्यते परिवेषणम् ।
एतस्मिन्नेव रात्र्यन्ते महद्युद्धं तु शंसति ॥ ३-२२६-१७ (२४७६९)
सरित्सिन्धुरपीयं तु प्रत्यसृग्वाहिनी भृशम् ।
शृगालिनयग्निवक्त्रा च प्रत्यादित्यं विराविणी ॥ ३-२२६-१८ (२४७७०)

एष रौद्रश्चसंघातो महान्युक्तश्च तेजसा ।
सोमस्य वह्निसूर्याभ्यामद्भुतोऽयं समागमः ॥ ३-२२६-१९ (२४७७१)
जनयेद्यं सुतं सोमः सोऽस्या देव्याः पतिर्भवेत् ।
अथानेकैर्गुणैश्चाग्निरग्निः सर्वाश्च देवताः ॥ ३-२२६-२० (२४७७२)
एष चेञ्जनयेद्गर्भं सोऽस्या देव्याः पतिर्भवेत् ।
एवं संचिन्त्य भगवान्ब्रह्मलोकं तदा गतः ॥ ३-२२६-२१ (२४७७३)
गृहीत्वा देवसेनां तां ववन्दे स पितामहम् ।
उवाच चास्या देव्यास्त्वं साधु शूरं पतिं दिशा ॥ ३-२२६-२२ (२४७७४)
ब्रह्मोवाच। ३-२२६-२३क्ष् (२५३९)
यथैतच्चिन्तितंकार्यं त्वया दानवसूदन ।
तथा स भविता गर्भो बलवानुरुविक्रमः ॥ ३-२२६-२३ (२४७७५)
स विष्यति सेनानीस्त्वया सह शतक्रतो ।
अस्या देव्याः पतिश्चैव स भविष्यति वीर्यवान् ॥ ३-२२६-२४ (२४७७६)
एतच्छ्रुत्वा नमस्तस्मै कृत्वाऽसौ मह कन्यया ।
तत्राभ्यगच्छद्देवेन्द्रो यत्र सप्तर्षयोऽभवन् ॥ ३-२२६-२५ (२४७७७)
वसिष्ठप्रमुखा मुख्या विप्रेन्द्राः सुमहाप्रभाः ।
भागार्थं तपसोपात्तं तेषां सोमं तथाऽध्वरे ॥ ३-२२६-२६ (२४७७८)
पिपासवो ययुर्देवाः शतक्रतुपुरोगमाः ।
इष्टिं कृत्वयतान्यायं सुसमिद्धे हुताशने ॥ ३-२२६-२७ (२४७७९)
जुहुवुस्ते महात्मानो हव्यं सर्वदिवौकसाम् ।
समाहूतो हुतवहःसोऽद्भुतः सूर्यमण्डलात् ॥ ३-२२६-२८ (२४७८०)
विनिःसृत्य ययौ वह्निः पार्श्वतो विधिवत्प्रभुः ।
आगम्याहवनीयं वै तैर्द्विजैर्मन्त्रतो हुतम् ॥ ३-२२६-२९ (२४७८१)
सतत्र विविधं हव्यं प्रतिगृह्यहुताशनः ।
ऋषिभ्यो भरतश्रेष्ठ प्रायच्छत दिवौकसाम् ॥ ३-२२६-३० (२४७८२)
निष्क्रामंश्चाप्यपश्यत्स पत्नीस्तेषां महात्मनाम् ।
स्वेष्वासतेषूपविष्टाः स्नायन्तीश्च यथासुस्वम् ॥ ३-२२६-३१ (२४७८३)
रुक्मवेदिनिभास्तास्तु चन्द्रलेखा इवामलाः ।
हुताशनार्चिःप्रतिमाः सर्वास्तारा इवाद्भुताः ॥ ३-२२६-३२ (२४७८४)
स तत्रतेन मनसा बभूव क्षुभितेन्द्रियः ।
पत्नीर्दृष्ट्वा द्विजेन्द्राणां वह्निः कामवशं ययौ ॥ ३-२२६-३३ (२४७८५)
भूयः संचिन्तयामास न न्याय्यं क्षुभितो ह्यहम् ।
साध्व्यः पत्न्यो द्विजेन्द्राणामकामा कामयाम्यहम् ॥ ३-२२६-३४ (२४७८६)
नैताः शक्या मया द्रष्टुं स्प्रष्टुं वाऽप्यनिमित्ततः ।
गार्हपत्यं समाविश्य तस्मात्पश्याम्यभीक्ष्णशः ॥ ३-२२६-३५ (२४७८७)
मार्कण्डेय उवाच। ३-२२६-३६क्ष् (२५४०)

संस्पृशन्निव सर्वास्ताः शिखाभिः काञ्चनप्रभाः ।
पश्यमानश्च मुमुदे गार्हपत्यं समाश्रितः ॥ ३-२२६-३६ (२४७८८)
निरुध्य तत्रसुचिरमेवं वह्निर्वनं गतः ।
मनस्तासु विनिक्षिप्य कामयानो वराङ्गनाः ॥ ३-२२६-३७ (२४७८९)
कामसंतप्तहृदयो देहत्यागे विनिश्चितः ।
अलाभे ब्राह्मणस्त्रीणामग्निर्वनमुपागमत् ॥ ३-२२६-३८ (२४७९०)
स्वाहा तं दक्षदुहिता प्रथमाऽकामयत्तदा ।
सा तस्य च्छिद्रमन्वैच्छच्चिरात्प्रभृतिभामिनी। ३-२२६-३९ (२४७९१)
सा तं ज्ञात्वा यथावत्तु वर्हिं वनमुपागतम् ।
तत्त्वतः कामसंतप्तं चिन्तयामास भामिनी ॥ ३-२२६-४० (२४७९२)
अहं सप्तर्षिपत्नीनां कृत्वा रूपाणि पावकम् ।
कामयिष्यामि कामार्तं तासां रूपेण मोहितम् ।
एवं कृते प्रीतिरस् कामावाप्तिश्च मे भवेत् ॥ ३-२२६-४१ (२४७९३)

इति श्रीमन्महाभारते अरण्यपर्वणि मार्कण्डेयसमास्यापर्वणि
षड्विंशत्यधिकद्विशततमोऽध्यायः ॥ २२६ ॥
Mahabharata - Vana Parva - Chapter Footnotes

३-२२६-१२ अप्यमावस्यमावासी चामामास्यप्यमामसाति शब्दार्णवः ॥
३-२२६-२० अग्निस्च तैर्गुणैर्युक्तः सर्वैरग्निश्च देवतेति झ । पाठः ॥

---

वन-अध्यय२२७
॥ श्रीः ॥
३.२२७. अध्यायः २२७

Mahabharata - Vana Parva - Chapter Topics
स्वाहयाऽरुन्धतीवर्जं सप्तर्षिपत्नीसारूप्येणाग्निना सह रमणम् ॥ १ ॥
ततो गारुडरूपस्वीकारेणाग्निरेतसां श्वेतपर्वतस्थकाञ्चनकुण्डे
प्रक्षेपणम् ॥ २ ॥
स्वकन्नात्तद्रेतसः षण्मुखस्य संभवः ॥ ततस्तेन बाणैः
क्रौञ्चगिरिविदारणपूर्वकं शक्त्या श्वेतगिरिशिखरविभेदनम् ॥ ४ ॥

Mahabharata - Vana Parva - Chapter Text

३-२२७-० (२४७९४)
मार्कण्डेय उवाच। ३-२२७-०क्ष् (२५४१)
शिवा भार्या त्वङ्गिरसः शीलरूपगुणान्विता ।

तस्याः सा प्रथमं रूपं कृत्वादेवी जनाधिप ॥ ३-२२७-१ (२४७९५)
जगाम पावकाभ्याशं तं चोवाच वराङ्गना ।
मामग्ने कामसंतप्तां त्वं कामयितुमर्हसि ॥ ३-२२७-२ (२४७९६)
करिष्यसि न चेदेवं मृतां मामुपधारय ।
ग्तवाप्यधर्मः सुमहान्भविता वै हुताशन' ॥ ३-२२७-३ (२४७९७)
अहमङ्गिरसो भार्या शिवा नाम हुताशन ।
सखीभिः सहिता प्राप्ता मन्त्रयित्वा विनिश्चयम् ॥ ३-२२७-४ (२४७९८)
अग्निरुवाच। ३-२२७-५क्ष् (२५४२)
कथं मां त्वं विजानीषे कामार्तमितराः कथम् ।
यास्त्वया कीर्तिताः सर्वाः सप्तर्षीणां प्रियाः स्त्रियः ॥ ३-२२७-५ (२४७९९)
शिवोवाच। ३-२२७-६क्ष् (२५४३)
अस्माकं त्वं प्रियो नित्यं बिभीमस्तु वयं तव ।
त्वच्चित्तमिङ्गितैर्ज्ञात्वा प्रेषिताऽस्मि तवान्तिकम् ॥ ३-२२७-६ (२४८००)
मैथुनायेह संप्राप्ता कामाच्चैव द्रुतं च माम् ।
ग्उपयन्तुं महावीर्य पूर्वमेव त्वमर्हसि'।
श्जामयो मां प्रतीक्षन्ते गमिष्यामि हुताशनघ ॥ ३-२२७-७ (२४८०१)
मार्कण्डेय उवाच। ३-२२७-८क्ष् (२५४४)
ततोऽग्निरुपयेमे तां शिवां प्रीतिमुदायुतः ।
प्रीत्या देवी समायुक्ता शुक्रं जग्राह पाणिना ॥ ३-२२७-८ (२४८०२)
साऽचन्तयन्ममेदं ये रूपं द्रक्ष्यन्ति कानने ।
ते ब्राह्मणीनामनृतं दोषं वक्ष्यन्ति पावके ॥ ३-२२७-९ (२४८०३)
तस्मादेतद्रक्षमाणआ गरुडी संभवाम्यहम् ।
वनान्निर्गमनं चैव सुखं मम भविष्यति ॥ ३-२२७-१० (२४८०४)
मार्कण्डेय उवाच। ३-२२७-११क्ष् (२५४५)
सुपर्णी सा तदा भूत्वा निर्जगाम महावनात् ।
उपश्यत्पर्वतं श्वेतं शरस्तम्बैः सुसंवृतम् ॥ ३-२२७-११ (२४८०५)
दृष्टीविषैः सप्तशीर्षैर्गुप्तं भोगिभिरद्भुतैः ।
रक्षोभिश्च पिशाचैश्च रौद्रैर्भूतगणैस्तथा ॥ ३-२२७-१२ (२४८०६)
राक्षसीभिश्च संपूर्णमनेकैश्च मृगद्विजैः ।
ग्नदीप्रस्रवणोपेतं नानातरुलताचितम्' ॥ ३-२२७-१३ (२४८०७)
सा तत्र सहसा गत्वा शैलपृष्ठं सुदुर्गमम् ।
प्राक्षिपत्काञ्चने कुण्डे शुक्रं सा त्वरिता शुभा ॥ ३-२२७-१४ (२४८०८)
शिष्टानामपि सा देवी सप्तर्षीणां महात्मनाम् ।
पत्नीसरूपतां कृत्वा रमयामास पावकम् ॥ ३-२२७-१५ (२४८०९)
दिव्यरूपमरुन्धत्याः कर्तुं न शकितं तया ।
तस्यास्तपःप्रभावेण भर्तृशुश्रूषणेन च ॥ ३-२२७-१६ (२४८१०)

षड्कृत्वस्तत्तु निक्षिप्तमग्ने रेतः कुरुत्तम ।
तस्मन्कुण्डे प्रतिपदि कामिन्या स्वाहया तदा ॥ ३-२२७-१७ (२४८११)
तत्स्कन्नं तेजसा तत्रसंवृतंजनयत्सुतम् ।
ऋषिभिः पूजितं स्कन्नमनयन्स्कन्दतां ततः ॥ ३-२२७-१८ (२४८१२)
षट्शिरा द्विगुणश्रोत्रो द्वादशाक्षिभूजक्रमः ।
एकग्रीवस्त्वेककायः कुमारः समपद्यत ॥ ३-२२७-१९ (२४८१३)
द्वितीयायामभिव्यक्तस्तृतीयायां शिशुर्बभौ ।
अङ्गप्रत्यङ्गसंभूतश्चतुर्थ्यामभवद्गुहः ॥ ३-२२७-२० (२४८१४)
लोहिताभ्रेण महता संवृतः सह विद्युता ।
लोहिताभ्रे सुमहति भाति सूर्य इवोदितः ॥ ३-२२७-२१ (२४८१५)
गृहीतं तु धनुस्तेन विपुलं रोमहर्षणम् ।
न्यस्तं यत्रिपुरघ्नेन सुरारिविनिकृन्तनम् ॥ ३-२२७-२२ (२४८१६)
तद्गृहीत्वा धनुःश्रेष्ठं ननाद बलवांस्तदा ।
संमोहयन्निमाँल्लोकान्गुहस्त्रीन्सचराचरान् ॥ ३-२२७-२३ (२४८१७)
तस् तं निनदं श्रुत्वा महामेघौघनिःस्वनम् ।
उत्पेततुर्महानागौ चित्रश्चैरावतश्च ह ॥ ३-२२७-२४ (२४८१८)
तावापतन्तौ संप्रेक्ष्यस बालोऽर्कसमद्युतिः ।
द्वाभ्यां गृहीत्वा पाणिभ्यां शक्तिं चान्येन पाणिना ॥ ३-२२७-२५ (२४८१९)
अपरेणाग्निदायादस्ताम्रचूडं भुजेन सः ।
महाकायमुपश्लिष्टं कुक्कुटं बलिनां वरम् ।
गृहीत्वा व्यनदद्भीमं चिक्रीड च महाभुजः ॥ ३-२२७-२६ (२४८२०)
द्वाभ्यां भुजाभ्यां बलवान्गृहीत्वा शङ्खमुत्तमम् ।
प्राध्मापयत् भूतानां त्रासनं बलिनामपि ।
द्वाभ्यां भुजाभ्यामाकाशं बहुशो निजघान ॥ ३-२२७-२८अक्रीडन्भाति
महासेनस्त्रींल्लोकान्वदनैः पिवन् ।
पर्वताग्रेऽप्रमेयात्मा रश्मिमानुदये यथा ॥ ३-२२७-२७ (२४८२१)
स तस् पर्वतस्याग्रे निषण्णोऽद्भुतविक्रमः ।
व्यलोकयदमेयात्मा मुखैर्नानाविधैर्दिशः ॥ ३-२२७-२९ (२४८२२)
स पश्यन्विविधान्भावांश्चकार निनदं पुनः ।
तस्य तं निनदं श्रुत्वा न्यपतन्बहुधा जनाः ।
भीताश्चोद्विग्नमनसस्तमेव शरणं ययुः ॥ ३-२२७-३० (२४८२३)
ये तुं संश्रिता देवं नानावर्णास्तदा जनाः ।
तानप्याहुः पारिषदान्ब्राह्मणाः सुमहाबलान् ॥ ३-२२७-३१ (२४८२४)
स तूत्थाय महाबाहुरुपसान्त्व्य च ताञ्जनान् ।
धनुर्विकृष्य व्यसृजद्बाणाञ्श्वेते महागिरौ ॥ ३-२२७-३२ (२४८२५)
विभेद स शरैः शैलं क्रौञ्चं हिमवतः सुतम् ।

तेन हंसाश्च गृध्राश्च मेरुं गच्छन्ति पर्वतम् ॥ ३-२२७-३३ (२४८२६)
स विशीर्णोऽपतच्छैलो भृशमार्तस्वरान्ब्रुवन् ॥ ३-२२७-३४ (२४८२७)
तस्मिन्निपतिते त्वन्ये नेदुः शैला भृशं भयात् ।
ग्घोरमार्तस्वरं चक्रुर्दृष्ट्वा क्रौञ्चं विदारितम्' ॥ ३-२२७-३५ (२४८२८)
सतं नादं भृशार्तानां श्रुत्वाऽपि बलिनांवरः ।
न प्राव्यधदमेयात्मा शक्तिमुद्यम्य चानदत् ॥ ३-२२७-३६ (२४८२९)
सा तदा विमला शक्तिः क्षिप्ता तेन महात्मना ।
बिभेद शिखरं घोरं श्वेतस् तरसा गिरेः ॥ ३-२२७-३७ (२४८३०)
स तेनाभिहतो दीर्णो गिरिः श्वेतोऽचलैः सह ।
पलायत महीं त्यक्त्वा भीतस्तस्मान्महात्मनः ॥ ३-२२७-३८ (२४८३१)
ततः प्रव्यथिता भूमिर्व्यशीर्यत समन्ततः ।
आर्ता स्कन्दं समासाद्य पुनर्बलवती बभौ ॥ ३-२२७-३९ (२४८३२)
पर्वताश्च नमस्कृत्यतमेव पृथिवीं गताः ।
अथैनमभजल्लोकः स्कन्दं शुक्लस्य पञ्चमीम् ॥ ३-२२७-४० (२४८३३)

इति श्रीमन्महाभारते अरण्यपर्वणि रमार्कण्डेयसमास्यापर्वणि
सप्तविंशत्यधिकद्विशततमोऽध्यायः ॥ २२७ ॥
Mahabharata - Vana Parva - Chapter Footnotes

३-२२७-४ शिष्टाभिः प्रहिता प्राप्तेति झ ।पाठः ॥
३-२२७-९ ते ब्राह्मणीनामहितमिति झ ।थ।पाठः ॥

---

वन-अध्यय२२८
॥ श्रीः ॥
३.२२८. अध्यायः २२८

Mahabharata - Vana Parva - Chapter Topics
षडृषिभिर्लोकापवादभयात्स्वपत्नीनां परित्यागः ॥ १ ॥
विश्वामित्रेण कुमारस्य जातकर्मादिना संस्करणम् ॥ २ ॥
स्कन्दपराक्रमासहिष्णुना शक्रेण स्कन्देन सहाऽऽयोधनम् ॥ ३ ॥
इन्द्रवज्राभिहतात्स्कन्दस्य दक्षिणपार्श्वाद्विशास्वस्य तथा कुमाराणां
कन्यानां च समुद्भवः ॥ ४ ॥
स्कन्दाद्भीतेनेन्द्रेण तेन सह संधानम् ॥ ५ ॥

Mahabharata - Vana Parva - Chapter Text

३-२२८-० (२४८३४)
मार्कण्डेय उवाच। ३-२२८-०क्ष् (२५४६)
तस्मिञ्जाते महासत्त्वे महासेने महाबले ।
समुत्तस्थुर्महोत्पाता घोररूपाः पृथग्विधाः ॥ १ ॥ ३-२२८-१ (२४८३५)
स्त्रीपुंसोर्विपरीतं च तथा द्वन्द्वानि यानि च ।
ग्रहा दीप्ता दिशः खं च ररास च मही भृशम् ॥ ३-२२८-२ (२४८३६)
ऋषयश्च महाघोरान्दृष्ट्वोत्पातान्समन्ततः ।
अकुर्वञ्शान्तिमुद्विग्ना लोकानां लोकभावनाः ॥ ३-२२८-३ (२४८३७)
निवसन्ति वने ये तु तस्मिंश्चैत्ररथे जनाः ।
तेऽब्रुवन्नेष नोऽनर्थः पावकेनाहृतो महान् ।
संगम्य षड्भिः पत्नीभिः सप्तर्षीणामिति स्म ह ॥ ३-२२८-४ (२४८३८)
अपरे गरुडीमाहुस्तयाऽनर्थोऽयमाहृतः ।
यैर्दृष्टा सा तदा देवी तस्या रूपेण गच्छती ॥ ३-२२८-५ (२४८३९)
न तु तत्स्वाहया कर्म कृतंजानाति वै जनः ॥ ३-२२८-६ (२४८४०)
सुपर्णी तु वचः श्रुत्वा ममायं तनयस्त्विति ।
उपगम्य शनैः स्कन्दमाहाहं जननी तव ॥ ३-२२८-७ (२४८४१)
अथ सप्तर्षयः श्रुत्वा जातं पुत्रं महौजसम् ।
तत्यजुः षट् तदा पत्नीर्विना देवीमरुन्धतीम् ।
षड्भिरेव तदा जातमाहुस्तद्वनवासिनः ॥ ३-२२८-८ (२४८४२)
सप्तर्षीनाह च स्वाहा मम पुत्रोऽयमित्युत ।
अहं हेतुर्नैतदेवमिति राजन्पुनः पुनः ॥ ३-२२८-९ (२४८४३)
विश्वामित्रस्तु कृत्वेष्टिं सप्तर्षीणां महामुनिः ।
पावकं कामसंतप्तमदृष्टः पृष्ठतोऽन्वगात् ।
तत्तेन निखिलं सर्वमवबुध्य यथातथम् ॥ ३-२२८-१० (२४८४४)
विश्वामित्रस्तु प्रथमं कुमारं शरणं गतः ।
स्तवं दिव्यं संप्रचक्रे महासेनस् चापि सः ॥ ३-२२८-११ (२४८४५)
मङ्गलानि च सर्वाणि कौमाराणि त्रयोदश ।
जातकर्मादिकास्तस् क्रियाश्चक्रे महामुनिः ॥ ३-२२८-१२ (२४८४६)
षड्वक्रस्य तु मांहात्म्यं कुक्कुटस्य तु साधनम् ।
शक्त्या देव्याः साधनं च तथा पारिषदामषि ॥ ३-२२८-१३ (२४८४७)
विश्वामित्रश्चकारैतत्कर्म लोकहिताय वै ।
तस्मादृषिः कुमारस् विश्वामित्रोऽभवत्प्रियः ॥ ३-२२८-१४ (२४८४८)
अन्वजानाच्च स्वाहाया रूपान्यत्वं महामुनिः ।
अब्रवीच्च मुनीन्सर्वाननापराध्यन्ति वै स्त्रियः ।
श्रुत्वा तु तत्वतस्तस्मात्ते पत्नीः सर्वतोत्यजन् ॥ ३-२२८-१५ (२४८४९)
मार्कण्डेय उवाच। ३-२२८-१६क्ष् (२५४७)

स्कन्दं श्रुत्वा तदा देवा वासवं सहिताऽब्रुवन् ।
अविषह्यं वलं स्कन्दं जहि शक्राशु माचिर् ॥ ३-२२८-१६ (२४८५०)
यदि वा न निहंस्येनमद्येन्द्रोऽयं भविष्यति ।
त्रैलोक्यं सन्निगृह्यास्मांस्त्वां च शक्र महाबला ॥ ३-२२८-१७ (२४८५१)
स तानुवाच व्यथितो वालोऽयं सुमहाबलः ।
स्रष्टारमपि लोकानां युधि विक्रम्य नाशयेत् ।
श्न बालमुत्सहे हन्तुमिति शक्रः प्रभाषते ॥ ३-२२८-१८ (२४८५२)
तेऽब्रुवन्नास्ति ते वीर्यं यत एवं प्रभासे ह्
सर्वास्त्वद्याभिगच्छन्तु स्कन्दं लोकस्य मातरः ॥ ३-२२८-१९ (२४८५३)
कामवीर्या घ्नन्तु चैनं तथेत्युक्त्वा च ता ययुः ।
तमप्रतिबलं दृष्ट्वा विषण्णवदनास्तु ताः ॥ ३-२२८-२० (२४८५४)
अशक्योऽयंविचिन्त्यैवं तमेव शरणं ययुः ।
ऊचुश्चैनं त्वमस्माकं पुत्रोऽस्माभिर्धृतंजगत् ॥ ३-२२८-२१ (२४८५५)
अभिनन्द्य ततः सर्वाः प्रस्नुताः स्नेहविक्लबाः ।
श्तासां तद्वचनं श्रुत्वा पातुकामः स्तनान्प्रभुःघ ॥ ३-२२८-२२ (२४८५६)
ताः संपूज्य महासेनःकामांश्चासां प्रदाय सः ।
अपश्यदग्निमायान्तं पितरं बलिनां बली ॥ ३-२२८-२३ (२४८५७)
स तु संपूजितस्तेन सह मातृगणेन ह ।
परिवार्य महासेनं रक्षमाणः स्थितः शिवः ॥ ३-२२८-२४ (२४८५८)
सर्वासां या तु मातॄणां नारी क्रोधसमुद्भवा ।
धात्री स्वपुत्रवत्स्कन्दं शूलहस्ताऽभ्यरक्षत ॥ ३-२२८-२५ (२४८५९)
लोहितस्योदधेः कन्या क्रूरा लोहितभोजना ।
परिष्वज्य महासेनं पुत्रवत्पर्यरक्षत ॥ ३-२२८-२६ (२४८६०)
अग्निर्भूत्वा नैगमेयश्छागवक्रो बहुप्रजः ।
रमयामास शैलस्तं बालं क्रीडनकैरिव ॥ ३-२२८-२७ (२४८६१)
ब्रहाः सोपग्रहाश्चैव ऋषयो मातरस्तथा ।
हुताशनमुखाश्चैव दृप्ताः पारिषदां गणाः ॥ ३-२२८-२८ (२४८६२)
एते चान्ये च बहवो घोरास्त्रिदिववासिनः ।
परिवार्य महासेनं स्थिता मातृगणैः सह ॥ ३-२२८-२९ (२४८६३)
संदिग्धं विजयं दृष्ट्वा विजयेप्सुः सुरेश्वरः ।
आरुह्यैरावतस्कन्धं प्रययौ दैवतैः सह ॥ ३-२२८-३० (२४८६४)
आदाय वज्रं बवान्सर्वैर्देवगणैर्वृतः ।
विजिघांसुर्महासेनमिन्द्रस्तूर्णतरं ययौ ॥ ३-२२८-३१ (२४८६५)
ग्इन्द्रस्तस्य महावेगं दृष्ट्वाऽद्भुतपराक्रमम् ।
विस्मितश्चाभवद्राजन्देवानीकमचोदयत् ॥ ३-२२८-३२ (२४८६६)
उग्रं तं च महानादं देवानीकं महाप्रभम् ।

विचित्रध्वजसन्नाहं नानावाहनकार्मुकम्' ॥ ३-२२८-३३ (२४८६७)
प्रवराम्बरसंवीतं श्रिया जुष्टमलंकृतम् ।
विजिघांसुं तमायान्तं कुमारः शक्रमन्वयात् ॥ ३-२२८-३४ (२४८६८)
वियत्पतिः स शक्रस्तु द्रुतमायान्महाबलः ।
संहर्षयन्देवसेनां जिघांसुः पावकात्मजम् ॥ ३-२२८-३५ (२४८६९)
संपूज्यमानस्त्रिदशैस्तथैव परमर्षिभिः ।
समीपमथ संप्राप्तो वह्निपुत्रस्य वासवः ॥ ३-२२८-३६ (२४८७०)
सिंहनादं ततश्चक्रे देवेशः सहितैः सुरैः ।
गुहोऽपिशब्दं तं श्रुत्वा व्यनदात्सागरो यथा ॥ ३-२२८-३७ (२४८७१)
तस्य शब्देन महता समुद्धतोदधिप्रभम् ।
वभ्राम तत्रतत्रैव देवसैन्यमचेतनम् ॥ ३-२२८-३८ (२४८७२)
जिधांसूनुपसंप्राप्तान्देवान्दृष्ट्वा सपावकिः ।
विससर्ज मुखात्क्रुद्धः प्रवृद्धाः पावकार्चिषः ॥ ३-२२८-३९ (२४८७३)
अदहद्देवसैन्यानि वेपमानानि भूतले ॥ ३-२२८-४० (२४८७४)
ते प्रदीप्तशिरोदेहाः प्रदीप्तायुधवाहनाः ।
प्रच्युताः सहसा भान्ति चित्रास्तारागणा इव ॥ ३-२२८-४१ (२४८७५)
दह्यमानाः प्रपन्नास्ते शरणं पावकात्मजम् ।
देवा वज्रधरं त्यक्त्वाततः शानतिमुपागताः ॥ ३-२२८-४२ (२४८७६)
त्यक्तो देवैस्ततः स्कन्दे वज्रं शक्रो न्यपातयत् ॥ ३-२२८-४३ (२४८७७)
तद्विसृष्टं जघानाशु पर्श्वं स्कन्दस्य दक्षिणम् ।
विभेद च महाराज पार्श्वं तस्य महात्मनः ॥ ३-२२८-४४ (२४८७८)
वज्रप्रहारात्स्कन्दस्य संजातः पुरुषोऽपरः ।
युवा काञ्चनसन्नाहः शक्तिधृग्दिव्यकुण्डलः ॥ ३-२२८-४५ (२४८७९)
यद्वज्रविशनाज्जातो विशाखस्तेन सोऽभवत् ॥ ३-२२८-४६ (२४८८०)
तं जातमपरं दृष्ट्वा कालानलसमद्युतिम् ।
भयादिनद्रस्तुत तं स्कन्दं प्राञ्जलिः शरणं गतः ॥ ३-२२८-४७ (२४८८१)
तस्याभयंददौ स्कन्दः सहसैन्यस् सत्तम ।
ततः प्रहृष्टास्त्रिदशा वादित्राण्यभ्यवादयन् ॥ ३-२२८-४८ (२४८८२)
स्कन्दपारिषदान्धोराञ्छ्रूणुष्वाद्भुतदर्शनान् ।
वज्रप्र्हहारात्स्कन्दस्य जज्ञुस्तत्र कुमारकाः ।
ये हरन्ति शिशूञ्जातान्गर्भस्थाश्चैव दारुणाः ॥ ३-२२८-४९ (२४८८३)
वज्रप्रहारात्कन्याश्च जज्ञिरेऽस् महाबलाः ॥ ३-२२८-५० (२४८८४)
कुमारान्स विशखं च पुत्रत्वे समकल्पयत् ।
स भूत्वा भगवान्सङ्ख्ये रक्षंश्छागमुखस्तदा ॥ ३-२२८-५१ (२४८८५)
वृतः कन्यागणैः सर्वैरात्मीयैः सह पुत्रकैः ।
मातृणां प्रेषितानां च भद्रशाखश्चकोमलैः ॥ ३-२२८-५२ (२४८८६)

ततः कुमारं संजातं स्कन्दमाहुर्जना भुवि ।
रुद्रमग्निमुखां स्वाहां प्रदेशेषु महाबलाः ॥ ३-२२८-५३ (२४८८७)
यजन्ति पुत्रकामाश्च पुत्रिणश्च सदा जनाः ।
यास्तास्त्वजनयत्कन्यास्तपो नाम हुताशनः ॥ ३-२२८-५४ (२४८८८)
किं करोमीति ताः स्कन्दं संप्राप्ताः समभाषयन् ॥ ३-२२८-५५ (२४८८९)
भवेम सर्वलोकस्य मातरो वयमुत्तमाः ।
प्रसादात्तव पूज्याश्च प्रियमेतत्कुरुष्व नः ॥ ३-२२८-५६ (२४८९०)
सोऽब्रवीद्बाढमित्येवं भविष्यध्वं पृथिग्विधाः ।
शिवाश्चैवाशिवाश्चैव पुनःपुनःरुदारधीः ॥ ३-२२८-५७ (२४८९१)
ग्अग्निर्भूत्वा ततश्चैनं छागवक्रो बहुप्रजः ।
रमयामास शैलस्थं बलं क्रीडनकैरिव' ॥ ३-२२८-५८ (२४८९२)

इति श्रीमन्महाभारते अरण्यपर्वणि मार्कण्डेयसमास्यापर्वणि
अष्टाविंशत्यधिकद्विशततमोऽध्यायः ॥ २२८ ॥
Mahabharata - Vana Parva - Chapter Footnotes

३-२२८-२ विपरीतं वैरम् । द्वन्द्वानि अतिशीतात्युष्णादीनि ॥
३-२२८-१५ श्रुत्वा तु ध्रुत्वापि । सर्वतः
लोकापवादभयाद्रामवत्पत्नीस्त्यक्तवन्त
इत्यर्थः। अथाब्रवीत्तान्सप्तर्षीन्युष्मत्पत्नीष्वयं शिशुः। षट्सु
जातोहुवहात्ते चाग्रेस्त्वग्रतोल्यजन्। इति ध। पाठः ॥
३-२२८-४६ वज्रस्य विशनात् बाहोराखननाच्चविशाख इत्यर्थः ॥
३-२२८-५१ कुमारास्तेपपितृत्वे इति झ । पाठः ॥
३-२२८-५३ ततः कुमारपितरमिति झ । पाठः ॥

---

वन-अध्यय२२९
॥ श्रीः ॥
३.२२९. अध्यायः २२९

Mahabharata - Vana Parva - Chapter Topics
मार्कण्डेयेन युधिष्ठिरंप्रति स्कन्दचरित्रप्रतिपादनम् ॥ १ ॥
इन्द्रेण स्कन्दस्य देवसैनापत्येऽभिषेचनम् ॥ २ ॥
स्कन्देनेन्द्रप्रार्थनया देवसेनाया उद्वहनम् ॥ ३ ॥

Mahabharata - Vana Parva - Chapter Text

३-२२९-० (२४८९३)

मार्कण्डेय उवाच। ३-२२९-०क्ष् (२५४८)
ततः प्रकल्प्य पुत्रत्वे स्कन्दं मातृगणोऽगमत् ।
काकी च हलिमा चैव माता चाथ हली तथा ।
आर्या बाला च धात्री च सप्तैता शिशुमातरः ॥ ३-२२९-१ (२४८९४)
एतासां वीर्यसंपन्नः शिशुर्नामातिदारुणः ।
स्कन्दप्रसादजः पुत्रो लोहिताक्षो भयंकरः ॥ ३-२२९-२ (२४८९५)
एष वीरोऽष्टमः प्रोक्तः स्कन्दो मातृगणोद्भवः ।
छागवक्रेण सहितो नवमः परिकीर्त्यते ॥ ३-२२९-३ (२४८९६)
षष्ठं छागमयं वक्रं स्कन्दस्यैवेति विद्धि तम् ।
षट्शिरोभ्यन्तरं राजन्नित्यं मातृगणार्चितम् ॥ ३-२२९-४ (२४८९७)
षण्णां तु प्रवरं तस्य शीर्षाणामिह शब्द्यते ।
शक्तिं येनासृजद्दिव्यां भद्रशाख इति स्म ह ॥ ३-२२९-५ (२४८९८)
इत्येतद्विविधाकारं वृत्तं शुक्लस्य पञ्चमीम् ।
तत्र युद्धं महाघोरं वृत्तं षष्ठ्यां जनाधिप ॥ ३-२२९-६ (२४८९९)
उपविष्टं तु तं स्कन्दमामुक्तकवचस्रजम् ।
हिरण्यचूडमुकुटं हिरण्यांक्षं महाप्रभम् ॥ ३-२२९-७ (२४९००)
लोहिताम्बरसंवीतं तीक्ष्णदंष्ट्रं मनोरमम् ।
सर्वलक्षणसंपन्नं त्रैलोक्यस्यापि सुप्रियम् ॥ ३-२२९-८ (२४९०१)
ततस्तं वरदं शूरं युवानं मृष्टकुण्डलम् ।
अभजत्पद्मरूपा श्रीः स्वयमेव शरीरिणी ॥ ३-२२९-९ (२४९०२)
श्रिया जुष्टः पृथुयशाः स कुमारो वरस्तदा ।
निषण्णो दृश्यते भूतैः पौर्णमास्यां यथा शशी ॥ ३-२२९-१० (२४९०३)
अपूजयन्महात्मानो ब्राह्मणास्तं महाबलम् ॥ ३-२२९-११ (२४९०४)
इदमाहुस्तदा चैव स्कन्दं तत्र महर्षयः ॥ ३-२२९-१२ (२४९०५)
हिरण्यवर्ण भद्रं ते लोकानां शंकरो भव ।
त्वया षड्रात्रजातेन सर्वे लोका वशीकृताः ॥ ३-२२९-१३ (२४९०६)
अभयंच पुनर्दत्तं त्वयैवैषां सुरोत्तम ।
तस्मादिन्द्रो भवानस्तु त्रैलोक्यस्याभयंकरः ॥ ३-२२९-१४ (२४९०७)
स्कन्द उवाच। ३-२२९-१५क्ष् (२५४९)
किमिन्द्रः सर्वलोकानां करोतीह तपोधनाः ।
कथं देवगणांश्चैव पाति नित्यं सुरेश्वरः ॥ ३-२२९-१५ (२४९०८)
ऋषय ऊचुः। ३-२२९-१६क्ष् (२५५०)
इन्द्रो दधाति भूतानां बलं तेजः प्रजाः सुखम् ।
तुष्टः प्रयच्छति तथा सर्वान्कामान्सुरेश्वरः ॥ ३-२२९-१६ (२४९०९)
दुर्वृत्तानां संहरति व्रतस्थानां प्रयच्छति ।
अनुशास्ति च भूतानि कार्येषु बलसूदनः ॥ ३-२२९-१७ (२४९१०)

असूर्ये च भवेत्सूर्यस्तथाऽचनद्रे च चन्द्रमाः ।
भवत्यग्निश्च वायुश्च पृथिव्यापश्च स्वं तथा ॥ ३-२२९-१८ (२४९११)
एतदिन्द्रेण कर्तव्यमिन्द्रे हि विपुलं बलम् ।
त्वं च वीर बली श्रेष्ठस्तस्मादिन्द्रो भवस्व न ॥ ३-२२९-१९ (२४९१२)
शक्र उवाच। ३-२२९-२०क्ष् (२५५१)
भवस्वेन्द्रो महाबाहो सर्वेषां नः सुखावहः ।
अभिषिच्यस्व चैवाद्य प्राप्तरूपोऽसि सत्तम ॥ ३-२२९-२० (२४९१३)
स्कन्द उवाच। ३-२२९-२१क्ष् (२५५२)
शाधि त्वमेव त्रैलोक्यमव्याग्रे निजये रतः ।
अहं ते किंकरः शक्र न ममेन्द्रत्वमीप्सितम् ॥ ३-२२९-२१ (२४९१४)
शक्र उवाच। ३-२२९-२२क्ष् (२५५३)
बलंतवाद्भुतं वीर त्वं देवानामरीञ्जहि ।
अवज्ञास्यन्ति मां लोका वीर्यण तव विस्मिताः ॥ ३-२२९-२२ (२४९१५)
इन्द्रत्वे तु स्थितं वीर बलहीनं पराजितम् ।
ग्त्वत्तेजसाऽवमंस्यन्ति लोका मां सुरसत्तम' ॥ ३-२२९-२३ (२४९१६)
आवयोश्च मिथो भेदे प्रयतिष्यन्त्यतन्द्रिताः ।
भेदिते च त्वयि विभो लोको द्वैधमुपेष्यति ॥ ३-२२९-२४ (२४९१७)
द्विधाभूतेषु लोकेषु निश्चितेष्वावयोस्तथा ।
विग्रहः संप्रवर्तेत भूतभेदान्महाबल ॥ ३-२२९-२५ (२४९१८)
तत्र त्वं मां रणे तात यथाश्रद्धं विजेष्यसि ।
तस्मादिन्द्रो भवानेव भविता मा विचारय ॥ ३-२२९-२६ (२४९१९)
स्कन्द उवाच। ३-२२९-२७क्ष् (२५५४)
त्वमेव राजा भद्रं ते त्रैलोक्यस्य ममैव च ।
करोमि किं च तेशक्र शासनात्तद्ब्रवीहि मे ॥ ३-२२९-२७ (२४९२०)
इन्द्र उवाच। ३-२२९-२८क्ष् (२५५५)
अहमिन्द्रो भविष्यामि तव वाक्यान्महाबल ।
यदि सत्यमिदं वाक्यं निश्चयाद्भाषितं त्वया ॥ ३-२२९-२८ (२४९२१)
यदि वा शासनं स्कन्द कर्तुमिच्छसि मे शृणु ।
अभिषिच्यस्व देवानां सैनापत्ये महाबल ॥ ३-२२९-२९ (२४९२२)
स्कन्द उवाच। ३-२२९-३०क्ष् (२५५६)
दानवानां विनाशाय देवानामर्थसिद्धये ।
गोब्राह्मणहितार्थाय सैनापत्येऽभिषिञ्च माम् ॥ ३-२२९-३० (२४९२३)
मार्कण्डेय उवाच। ३-२२९-३१क्ष् (२५५७)
सोऽभिषिक्तो मघवता सर्वैर्देवगणैः सह ।
अतीव शुशुभे तत्र पूज्यमानो महर्षिभिः ॥ ३-२२९-३१ (२४९२४)
तत्र तत्काञ्चनं छत्रं ध्रियमाणं व्यरोचत ।

तथैव सुसमिद्धस्य पावकस्यात्ममण्डलम् ॥ ३-२२९-३२ (२४९२५)
विश्वकर्मकृता चास्य दिव्या माला हिरण्मयी ।
आबद्धा त्रिपुरघ्नेन स्वयमेव यशस्विना ॥ ३-२२९-३३ (२४९२६)
आगम्य मनुजव्याघ्र सह देव्या परंतप ।
अर्चयामास सुप्रीतो भगवान्गोवृषध्वजः ॥ ३-२२९-३४ (२४९२७)
रुद्रमग्निं द्विजाः प्राहू रुद्रसूनुस्ततस्तु सः ।
ग्कीर्त्यते सुमहातेजाः कुमारोऽद्भुतदर्शनः' ॥ ३-२२९-३५ (२४९२८)
रुद्रेण शुक्रमुत्सृष्टं तच्छ्वेतः पर्वतोऽभवत् ।
पावकस्येनद्रियं श्वेते कृत्तिकाभिः कृतं नगे ॥ ३-२२९-३६ (२४९२९)
पूज्यमानं तु रुद्रेण दृष्ट्वा सर्वेदिवौकसः ।
रुद्रसूनुं ततः प्राहुर्गुहं गुणवतांवरम् ॥ ३-२२९-३७ (२४९३०)
अनुप्रविश्य रुद्रेण वह्निं जातो ह्ययं शिशुः ।
तत्र जातस्ततः स्कन्दो रुद्रसूनुस्ततोऽभवत् ॥ ३-२२९-३८ (२४९३१)
रुद्रस्य वह्नेः स्वाहायाः षण्णां स्त्रीणां च तेजसा ।
जातः स्कन्दः सुरश्रेष्ठो रुद्रसूनुस्ततोऽभवत् ॥ ३-२२९-३९ (२४९३२)
अरजे वाससी रक्ते वसानः पावकात्मजः ।
भाति दीप्तवपुः श्रमान्रक्ताभ्राभ्यामिवांशुमान् ॥ ३-२२९-४० (२४९३३)
कुक्कुटश्चाग्निना दत्तस्तस् केतुरलंकृतः ।
रथे समुच्छ्रितो भाति कालाग्निरव लोहितः ॥ ३-२२९-४१ (२४९३४)
या चेष्टा सर्वभूतानां प्रभा शक्तिर्बलं तथा ।
अग्रतस्तस्य सा शक्तिर्देवानां जयवर्धनी ॥ ३-२२९-४२ (२४९३५)
विवेश कवचं चास्य शरीरं सहजं तथा ।
युध्यमानस्य देवस्य प्रादुर्भवति तत्सदा ॥ ३-२२९-४३ (२४९३६)
शक्तिर्धर्मो बलं तेजः कान्तत्वं सत्यमुन्नतिः ।
ब्रह्मण्यत्वमसंमोहो भक्तानां परिरक्षणम् ॥ ३-२२९-४४ (२४९३७)
निकृन्तनं च शत्रूणां लोकानां चाभिरक्षणम् ।
स्कन्देन सह जातानि सर्वाण्येव जनाधिप ॥ ३-२२९-४५ (२४९३८)
एवं देवगणैः सर्वैः सोऽभिषिक्तः स्वलंकृतः ।
बभौ प्रतीतः सुमनाः परिपूर्णेन्दुदर्शनः ॥ ३-२२९-४६ (२४९३९)
इष्टैः स्वाध्यायघोषैश्च देवतूर्यवरैरपि ।
देवगन्धर्वगीतैश्च सर्वैरप्सरसां गणैः ॥ ३-२२९-४७ (२४९४०)
एतैश्चान्यैश्च बहुभिस्तुष्टैर्हृष्टैः स्वलंकृतः ।
श्सुसंवृतः पिशाचानां गणैर्देवगणैस्तथा ।
क्रीडन्भाति तदा देवैरभिषिक्तश्च पावकिः ॥ ३-२२९-४८ (२४९४१)
अभिषिक्तं महासेनमपश्यन्त दिवौकसः ।
विनिहत्य तमः सूर्यं यथैवाभ्युदितं तथा ॥ ३-२२९-४९ (२४९४२)

अथैनमभ्ययुः सर्वा देवसेनाः सहस्रशः ।
अस्माकं त्वं पतिरिति ब्रुवाणाः सर्वतो दिशः ॥ ३-२२९-५० (२४९४३)
ताः समासाद्य भगवान्सर्वभूतगणैर्वृतः ।
अर्चितस्तु स्तुतश्चैव सान्त्वयामास ता अपि ॥ ३-२२९-५१ (२४९४४)
शतक्रतुश्चाभिषिच्य स्कन्दं सेनापतिं तदा ।
सस्मार तां देवसेनां या सा तेन विमोक्षिता ॥ ३-२२९-५२ (२४९४५)
अयं तस्याः पतिर्नूनं विहितो ब्रह्मणा स्वयम् ।
संचिन्त्य त्वानयामास देवसेनां ह्यलंकृताम् ॥ ३-२२९-५३ (२४९४६)
स्कन्दं प्रोवाच बलभिदियं कन्या सुरोत्तम ।
अजाते त्वयि निर्दिष्टा तव पत्नी स्वयंभुवा ॥ ३-२२९-५४ (२४९४७)
तस्मात्त्वमस्या विधिवत्पाणिं मन्त्रपुरस्कृतम् ।
गृहाण दक्षिणं देव्याः पाणिना पद्मवर्चसा ॥ ३-२२९-५५ (२४९४८)
एवमुक्तः स जग्राह तस्याः पाणिं यथाविधि ।
बृहस्पतिर्मन्त्रविद्धि जजाप च जुहाव च ॥ ३-२२९-५६ (२४९४९)
एवं स्कन्दस्य महिषीं देवसेनां विदुर्जनाः ।
षष्ठीं यां ब्राह्मणाः प्राहुर्लक्ष्मीमासां सुखप्रदाम् ॥ ३-२२९-५७ (२४९५०)
सिनीबालीं कुहूं चैव सद्वृत्तिमपराजिताम् ।
ग्इत्येवमादिभिर्देवी नामभिः परिकीर्त्यते' ॥ ३-२२९-५८ (२४९५१)
यदा स्कन्दः पतिर्लब्धः शाश्वतो देवसेनया ।
तदा तमाश्रयल्लक्ष्मीः स्वयं देवी शरीरिणी ॥ ३-२२९-५९ (२४९५२)
श्रीजुष्टः पञ्चमीस्कन्दस्तस्माच्छ्रीः पञ्चमी स्मृता ।
षष्ठ्यां कृतार्थोऽभूद्यस्थात्तस्मात्षष्ठी महातिथिः ॥ ३-२२९-६०
(२४९५३)

इति श्रीमन्महाभारते अरण्यपर्वणि मार्कण्डेयसमास्यापर्वणि
एकोनत्रिंशदधिद्विशततमोऽध्यायः ॥ २२९ ॥
Mahabharata - Vana Parva - Chapter Footnotes

३-२२९-२७ शसनं तद्द्रवीहि इति झ ।पाठः ॥
३-२२९-३५ रुद्रमग्निमिति ।रुद्रो वा एष यदग्निरित श्रुतिविदो द्विजाः
प्राहुः ॥
३-२२९-३८ अनुप्रविश्य स्थितेनेति शेषः ॥

---

वन-अध्यय२३०
॥ श्रीः ॥
३.२३०. अध्यायः २३०

Mahabharata - Vana Parva - Chapter Topics
मार्कण्डेयेन युधिष्ठिरंप्रतिस्कन्दचरित्रकीर्तनम् ॥ १ ॥

Mahabharata - Vana Parva - Chapter Text

३-२३०-० (२४९५४)
मार्कण्डेय उवाच। ३-२३०-०क्ष् (२५५८)
श्रिया जुष्टं महासेनं देवसेनापतीकृतम् ।
सप्तर्षिपत्नयः षड् देव्यस्तत्सकाशमथागमन् ॥ ३-२३०-१ (२४९५५)
ऋषिभिः संपरित्यक्ता धर्मयुक्ता महाव्रताः ।
द्रुतमागम्य चोचुस्ता देवसेनापतिं प्रभुम् ॥ ३-२३०-२ (२४९५६)
वयं पुत्र परित्यक्तां भर्तृभिर्देवसंमितैः ।
अकारणाद्रुषा तैस्तु पुण्यस्थानात्परिच्युताः ॥ ३-२३०-३ (२४९५७)
अस्माभिः किल जातस्त्वमिति केनाप्युदाहृतम् ।
तत्सत्यमेतत्संश्रुत्य तस्मान्नस्त्रातुमर्हसि ॥ ३-२३०-४ (२४९५८)
अक्षयश्च भवेत्स्वर्गस्त्वत्प्रसादाद्धि नः प्रभो ।
त्वां पुत्रं चाप्यभीप्सामः कृत्वैतदनृणो भव ॥ ३-२३०-५ (२४९५९)
स्कन्द उवाच। ३-२३०-६क्ष् (२५५९)
मातरो हि भवत्यो मे सुतो वोऽहमनिन्दिताः ।
यद्वापीच्छत तत्सर्वं संभविष्यति वस्तथा ॥ ३-२३०-६ (२४९६०)
मार्कण्डेय उवाच। ३-२३०-७क्ष् (२५६०)
विवक्षन्तं ततः शक्रं किं कार्यमिति सोऽब्रवीत् ।
उक्तः स्कन्देन ब्रूहिति सोऽब्रवीद्वासवस्ततः ॥ ३-२३०-७ (२४९६१)
अभिजित्स्पर्धमाना तु रोहिण्या कन्यसी स्वसा ।
इच्छन्ती ज्येष्ठतां देवी तपस्तप्तुं वनं गता ॥ ३-२३०-८ (२४९६२)
तत्र मूढोस्मि भद्रं ते नक्षत्रं गगनाच्च्युतम् ।
कालं त्विमं परं स्कन्द ब्रह्मणा सह चिन्तय ॥ ३-२३०-९ (२४९६३)
धनिष्ठादिस्तदा कालो ब्रह्मणा परिकल्पितः ।
रोहिणो ह्यभवत्पूर्वमेवं सङ्ख्या समाभवत् ॥ ३-२३०-१० (२४९६४)
एवमुक्ते तु शक्रेण त्रिदिवं कृत्तिका गताः ।
नक्षत्रं शकटाकारं भाति तद्वह्निदैवतम् ॥ ३-२३०-११ (२४९६५)
विनता चाब्रवीत्स्कन्दं मम त्वं पिण्डदः सुतः ।
इच्छामि नित्यमेवाहं त्वया पुत्र सहासितुम् ॥ ३-२३०-१२ (२४९६६)
स्कन्द उवाच। ३-२३०-१३क्ष् (२५६१)
एवमस्तु नमस्तेऽस्तु पुत्रस्नेहात्प्रशाधि माम् ।
स्नुषया पूज्यमाना वै देवि वत्स्यसि नित्यदा ॥ ३-२३०-१३ (२४९६७)

मार्कण्डेय उवाच। ३-२३०-१४क्ष् (२५६२)
अथ मातृगणः सर्वः स्कन्दं वचनमब्रवीत् ।
वयं सर्वस्य लोकस्य मातरः कविभिः स्तुताः ।
इच्छामो मातरस्तुभ्यं भवितुं पूजयस्व नः ॥ ३-२३०-१४ (२४९६८)
ग्तासां तु वचनं श्रुत्वास्कन्दो वचनमब्रवीत्'।
मातरो हि भवत्यो मे भवतीनामहं सुतः ।
उच्यतां यन्मया कार्यं भवतीनामथेप्सितम् ॥ ३-२३०-१५ (२४९६९)
मातर ऊचुः। ३-२३०-१६क्ष् (२५६३)
यास्तु ता मातरः पूर्वं लोकस्यास्य प्रकल्पिताः ।
अस्माकं तु भवेत्स्थानं तासां चैव न तद्भवेत् ॥ ३-२३०-१६ (२४९७०)
भवेम पूज्या लोकस्य न ताः पूज्याः सुरर्षभ ।
प्रजाऽस्माकं हृतास्ताभिस्त्वत्कृते ताः प्रयच्छ नः ॥ ३-२३०-१७ (२४९७१)
स्कन्द उवाच। ३-२३०-१८क्ष् (२५६४)
वृत्ताः प्रजा न ताः प्रक्या भवतीभिर्निषेवितुम् ।
अन्प्रां वः कां प्रयच्छामि प्रजां यां मनसेच्छथा ॥ ३-२३०-१८ (२४९७२)
मातर ऊचुः। ३-२३०-१९क्ष् (२५६५)
इच्चाम तासां मातॄणां प्रजा भोक्तुं प्रयच्छ नः ।
त्वया सह पृथग्भूता ये च तासामथेश्वराः ॥ ३-२३०-१९ (२४९७३)
स्कन्द उवाच। ३-२३०-२०क्ष् (२५६६)
प्रजा वो दद्मि कष्टं तु भवतीभिरुदाहृतम् ।
परिरक्षत भद्रं वः प्रजा साधुनमस्कृताः ॥ ३-२३०-२० (२४९७४)
मातर ऊचुः। ३-२३०-२१क्ष् (२५६७)
परिरक्षाम भद्रं ते प्रजाः स्कन्द यथेच्छसि ।
त्वया नो रोचते स्कन्द सहवासश्चिरंप्रभो ॥ ३-२३०-२१ (२४९७५)
स्कन्द उवाच। ३-२३०-२२क्ष् (२५६८)
यावत्षोडश वर्षाणि भवन्ति तरुणाः प्रजाः ।
प्रबाधत मनुष्याणां तावद्रूपैः पृथग्विधैः ॥ ३-२३०-२२ (२४९७६)
अहं च वः प्रदास्यामि रौद्रमात्मानमव्ययम् ।
परमं तेन सहिताः सुखं वत्स्यथ पूजिताः ॥ ३-२३०-२३ (२४९७७)
मार्कण्डेय उवाच। ३-२३०-२३क्ष् (२५६९)
ततः शरीरात्स्कन्दस्य परुषः पावकप्रभः ।
भोक्तुं प्रजाः स मर्त्यानां निष्पपात महाबलः ॥ ३-२३०-२४ (२४९७८)
अपतत्सहसा भूमौ विसंज्ञोऽथ क्षुधार्दितः ।
स्कन्देन सोऽभ्यनुज्ञातो रौद्ररूपोऽभवद्ग्रहः ॥ ३-२३०-२५ (२४९७९)
स्कन्दापस्मार इत्याहुर्गृहं तं द्विजसत्तमाः ।
विनता तु महारौद्रा कथ्यते शकुनिग्रहः ॥ ३-२३०-२६ (२४९८०)

मातॄणां राक्षसंप्राहुस्तं विद्यात्पूतनाग्रहम् ।
कष्टा दारुणरूपेण घोररूपा निशाचरी ॥ ३-२३०-२७ (२४९८१)
पशाची रदारुणाकारा कथ्यते शीतपूतना ।
गर्भान्सा मानुषीणां तु हरते घोरदर्शना ॥ ३-२३०-२८ (२४९८२)
अदितिं रेवतीं प्राहुर्ग्रहस्तस्यास्तु रैवतः ।
सोऽपि बालान्महागोरो बाधते वै महाग्रहः ॥ ३-२३०-२९ (२४९८३)
दैत्यानां या दितिर्माता तामाहुर्मुखमण्डिकाम् ।
अत्यर्थं शिशुमांसेन संप्रहृष्टा दुरासदा ॥ ३-२३०-३० (२४९८४)
कुमाराश्च कुमार्यश् ये प्रोक्ताः स्कन्दसंभवाः ।
तेऽपि गर्भभुजः सर्वे कौरव्यसुमहाग्रहाः ॥ ३-२३०-३१ (२४९८५)
तासामेव तु पत्नीनां पतयस्ते प्रकीर्तिताः ।
आजायमानान्गृह्णन्ति बालकान्रौद्रकर्मणः ॥ ३-२३०-३२ (२४९८६)
गवां माता तु या प्राज्ञैः कथ्यते सुरभिर्नृप ।
शकुनिस्तामथारुह्यसह भुङ्क्ते शिशून्भुवि ॥ ३-२३०-३३ (२४९८७)
सरमा नाम या माता शुनां देवी जनाधिप ।
साऽपिगर्भान्समादत्ते मानुषीणां सदैव हि ॥ ३-२३०-३४ (२४९८८)
पादपानां च या माता करञ्जनिलया हि सा ।
वरदा सा हि सौम्या च नित्यं भूतानुकम्पिनी ॥ ३-२३०-३५ (२४९८९)
करञ्जे तां नमस्यन्ति तस्मात्पुत्रार्थिनो नराः ।
इमे त्वष्टादशान्ये वै ग्रहा मांसमधुप्रियाः ॥ ३-२३०-३६ (२४९९०)
द्विपञ्चरात्रं तिष्ठन्ति सततं सूतिकागृहे ।
कद्रूः सूक्ष्मवपुर्भूत्वा गर्भिणीं प्रविशत्यथ ॥ ३-२३०-३७ (२४९९१)
भुङ्क्ते सा तत्र तं गर्भं सा तु नागं प्रसूयते ।
गन्धर्वाणां तु या माता सा गर्भं गृह्य गच्छति ॥ ३-२३०-३८ (२४९९२)
ततो विलीनगर्भा सा मानुषी भुवि दृश्यते ।
या जनित्री त्वप्सरसां गर्भमास्ते प्रगृह्य सा ॥ ३-२३०-३९ (२४९९३)
उपविष्टं ततो गर्भं कथयनति मनीषिणः ।
लोहितस्योदधेः कन्या धात्री स्कन्दस्य सा स्मृता ॥ ३-२३०-४० (२४९९४)
लोहितायनिरित्येवं कदम्बे सा हि पूज्यते ।
पुरुषे तु यथा रुद्रस्तथाऽऽर्या प्रमदास्वपि ॥ ३-२३०-४१ (२४९९५)
आर्या माता कुमारस्य पृथक्कामार्थमिज्यते ।
एवमेते कुमाराणां मया प्रोक्ता महाग्रहाः ॥ ३-२३०-४२ (२४९९६)
यावत्षोडश वर्षाणि शिशूनां ह्यशिवास्ततः ।
ये च मातृगणाः प्रोक्ताः पुरुषाश्चैवये ग्रहाः ॥ ३-२३०-४३ (२४९९७)
सर्वे स्कन्दग्रहा नाम ज्ञेया नित्यं शरीरिभिः ।
तेषां प्रशमनं कार्यं स्नानं धूपमथाञ्जनम् ।

बलिकार्गेपहाराश् स्कन्दस्येज्या विशेषतः ॥ ३-२३०-४४ (२४९९८)
एवमभ्यर्चिताः सर्वे प्रयच्छन्ति शुभं नृणाम् ।
आयुर्दीर्घं च राजेनद्रसम्यक्पूजानमस्कृताः ॥ ३-२३०-४५ (२४९९९)
ऊर्ध्वं तु षोडशाद्वर्षाद्ये भवन्ति ग्रहा नृणाम् ।
तानहं संप्रवक्ष्यामि नमस्कृत्य महेश्वरम् ॥ ३-२३०-४६ (२५०००)
यः पश्यति नरो देवाञ्जाग्रद्वा शयितोपि वा ।
उन्माद्यति स तु क्षिप्रं तं तु देवग्रहं विदुः ॥ ३-२३०-४७ (२५००१)
आसीनश्च शयानश्च यः पश्यति नरः पितॄन् ।
उन्माद्यतिस तु क्षिप्रं स ज्ञेयस्तु पितृग्रहः ॥ ३-२३०-४८ (२५००२)
अवमन्यति यः सिद्धान्क्रुद्धाश्चापि शपन्ति यम् ।
उन्माद्यति स तु क्षिप्रं ज्ञेयः सिद्धग्रहस्तु सः ॥ ३-२३०-४९ (२५००३)
उपाघ्राति च यो गन्धान्रसांश्चापि पृथग्विधान् ।
उन्माद्यति स तु क्षिप्रं स ज्ञेयो राक्षसो ग्रहः ॥ ३-२३०-५० (२५००४)
गन्धर्वाश्चापि यं दिव्याः संविशन्ति नरं भुवि ।
उन्माद्यति स तु क्षिप्रं ग्रहो गान्धर्व एव सः ॥ ३-२३०-५१ (२५००५)
अधिरोहन्ति यं नित्यं पिशाचाः पुरुषं प्रति ।
उन्माद्यति स तु क्षिप्रं ग्रहः पैशाच एव सः ॥ ३-२३०-५२ (२५००६)
आविशन्ति च यं यक्षाः पुरुषं कालपर्यये ।
उनमाद्यति स तु क्षिप्रं ज्ञेयो यक्षग्रहस्तु सः ॥ ३-२३०-५३ (२५००७)
यस् दोषैः प्रकुपितं चित्तं मुह्यति देहिनः ।
उनमाद्यति स तु क्षिप्रं साधनं तस्य शास्त्रतः ॥ ३-२३०-५४ (२५००८)
वैक्लव्याच्च भयाच्चैव घोराणां चापि दर्शनात् ।
उन्माद्यति स तु क्षिप्रं सान्त्वं तस्य तु साधनम् ॥ ३-२३०-५५ (२५००९)
कश्चित्क्रीडितुकामो वै भोक्तुकामस्तथाऽपरः ।
अभिकामस्तथैवान्य इत्येष त्रिविधो ग्रहः ॥ ३-२३०-५६ (२५०१०)
यावत्सप्ततिवर्षाणि भवन्त्येते ग्रहा नृणाम् ।
अतः परं देहिनां तु ग्रहतुल्या भवेञ्जरा ॥ ३-२३०-५७ (२५०११)
अप्रकीर्णेन्द्रियं दान्तं शुचिं नित्यमतन्द्रितम् ।
आस्तिकं श्रद्दधानं च वर्जयन्ति तदा ग्रहाः ॥ ३-२३०-५८ (२५०१२)
इत्येष ते ग्रहोद्देशो मानुषाणां प्रकीर्तितः ।
न स्पृशन्ति ग्रहा भक्तान्नरान्देवं महेश्वरम् ॥ ३-२३०-५९ (२५०१३)

इति श्रीमन्महाभारते अरण्यपर्वणि मार्कण्डेयसमास्यापर्वणि
त्रिंसदधिकद्विशततमोऽध्यायः ॥ २३० ॥

Mahabharata - Vana Parva - Chapter Footnotes

३-२३०-४ असत्यमेतत्संस्कृत्य इति ध । पाठः। अपत्यमेतत्संस्मृत्य
इति ट। थ। पाठः ॥
३-२३०-७ विवक्षन्तमभिजिन्नक्षत्रस् पतनान्नक्षत्रसंख्या कथं
समा भवेदिति प्रष्टुमिच्छन्तम् ॥
३-२३०-८ कन्यसी कनिष्ठा । वनं गता अधिकारं त्यक्तेति शेषः ॥
३-२३०-१० यस्य नक्षत्रस्याद्यक्षणे चन्द्रसूर्यगुरूणां
योगस्तद्युगादिनक्षत्रम् । तच्चपूर्वं रोहिण्यभूत्। तदाभिजित्पतनकाले
त्वेकन्यूनैरहोरात्रैर्भगणस्य भोगात् कृतयुगादिनक्षत्रं
धनिष्ठैवाभवदित्यर्थः। संख्या कलाकाष्ठादीनाम् ॥
३-२३०-११ तथा च कृत्तिकाभिरेव नक्षत्रसंख्यापूर्तिं कुर्विति
शक्राशयं ज्ञात्वा तास्त्रिदिवं गताः । नक्षत्रं सप्तशीर्षाभं
इति झ। पाठः ॥
३-२३०-१२ ऋषिपत्नीनामिव गरुत्मत्या अपिरूपं स्वाहया धृतमिति
त्सुतत्वं बोध्यम् ॥
३-२३०-१३ स्नुषया देवसेनया ॥
३-२३०-१४ मातृगणो विनतादिसमूहः ॥
३-२३०-१६ ताः प्रसिद्धाः मातरो ब्राह्मीमाहेश्वरीप्रभृतयः ॥
३-२३०-१७ त्वत्कृते त्वदर्थं ताभिर्ब्राह्म्यादिभिरस्मद्भर्तॄन्
मिथ्याभिशापदोषेण कोपयन्तीभिः प्रजा हृताः सङ्गाभावादित्यर्थः
। संधिरार्षः। नोऽस्मभ्यं प्रयच्छ भर्तॄणामनुकूलनेनेत्यर्थः ॥
३-२३०-१८ वृत्तामया दत्ता अपि । मया प्रार्थिता अपि मुनयो युष्मान्
नाङ्गीकरिष्यन्तीति भावः ॥
३-२३०-१९ मातॄणां ब्राह्म्यादीनाम् । तासां प्रजानामीश्वराः पित्रादयः ॥
३-२३०-२० प्रजाः अस्मदाद्याः । नमस्कृता यूयं मयेति शेषः ॥
३-२३०-३२ अज्ञायमाना गृहन्ति इति ध । पाठः ॥
३-२३०-३८ मुजाता हरिणी या तु सा गर्भं पिबति प्रभो इति ट
। थ। ध पाठः ॥

---

वन-अध्यय२३१
॥ श्रीः ॥
३.२३१. अध्यायः २३१

Mahabharata - Vana Parva - Chapter Topics
स्कन्देन स्वाहादेव्या अभीष्टदानम् ॥ १ ॥
ब्राह्मणा स्कन्दंप्रति सोपपत्तिकं तस्य रुद्रपुत्रत्वादिकथनम् ॥ २ ॥

Mahabharata - Vana Parva - Chapter Text

३-२३१-० (२५०१४)
मार्कण्डेय उवाच। ३-२३१-०क्ष् (२५७०)
यदा स्कन्देन मातृणामेवमेतत्प्रियं कृतम् ।
अथनैमब्रवीत्स्वाहा मम पुत्रस्त्वमौरसः ॥ ३-२३१-१ (२५०१५)
इच्छाम्यहं त्वया दत्तां प्रीतिं परमदुर्लभाम् ।
तामब्रवीत्ततः स्कन्दः प्रीतिमिच्छसि कीदृशीम् ॥ ३-२३१-२ (२५०१६)
स्वाहोवाच। ३-२३१-३क्ष् (२५७१)
दक्षस्याहं प्रिया कन्या स्वाहा नाम महाभुज ।
बाल्यात्प्रभृति नित्यं च जातकामा हुताशने ॥ ३-२३१-३ (२५०१७)
न स मां कामिनीं पुत्र सम्यग्जनाति पावकः ।
इच्छामि शाश्वतं वासं वस्तु पुत्र सहाग्निना ॥ ३-२३१-४ (२५०१८)
स्कन्द उवाच। ३-२३१-५क्ष् (२५७२)
हव्यं कव्यंच यत्किंचिद्द्विजा मन्त्रसुसंस्तुतम् ।
होष्यन्त्यग्नौ सदा देवि स्वाहेत्युक्त्वासमुद्धृतम् ॥ ३-२३१-५ (२५०१९)
अद्यप्रभृति दास्यन्ति सुवृत्ताः सत्पथे स्थिताः ।
एवमग्निसत्वया सार्धं सदा वत्स्यति शोभने ॥ ३-२३१-६ (२५०२०)
मार्कण्डेय उवाच। ३-२३१-७क्ष् (२५७३)
एवमुक्ता ततः स्वाहा तुष्टास्कन्देन पूजिता ।
पावकेन समायुक्ता भर्त्रा स्कन्दमपूजयत् ॥ ३-२३१-७ (२५०२१)
ततो ब्रह्मा महासेनं प्रजापतिरथाब्रवीत् ।
अभिगच्छ महादेवं पितरं त्रिपुरार्दनम् ॥ ३-२३१-८ (२५०२२)
रुद्रेणाग्निं समाविश्य स्वाहामाविश्य चोमया ।
हितर्थं सर्वलोकानां जातस्त्वमपराजितः ॥ ३-२३१-९ (२५०२३)
उमायोन्यां च रुद्रेण शुक्रं सिक्तं महात्मना ।
अस्मिन्गिरौ निपतितं मिञ्जिकमिञ्जिकं यतः ॥ ३-२३१-१० (२५०२४)
गमिथुनं वै महाभाग तत्र तद्रुद्रसंभवम्'।
संभूतं लोहितोदे तु शुक्रशेषमवापतत् ॥ ३-२३१-११ (२५०२५)
सूर्यरश्मिषु चाप्यनयदन्यच्चैवापतद्भुवि ।
आसक्तमन्यद्वृक्षेषु तदेवं प्चधाऽपतत् ॥ ३-२३१-१२ (२५०२६)
तत्र ते विविधाकारा गणा ज्ञेया मनीषिभिः ।
तव पारिषदा घोरा य एते पिशिताशिनः ॥ ३-२३१-१३ (२५०२७)
एवमस्त्विति चाप्युक्त्वा महासेनो महेश्वरम् ।
अपूजयदमेयात्मा पितरं पितृवत्सलः ॥ ३-२३१-१४ (२५०२८)
मार्कण्डेय उवाच। ३-२३१-१५क्ष् (२५७४)
अर्कपुष्पैस्तु ते पञ् गणाः पूज्या धनार्थिभिः ।

व्यादिप्रशमनार्थं चतेषां पूजां समाचरेत् ॥ ३-२३१-१५ (२५०२९)
मिञ्जिकामिञ्जिकं चैव मिथुनं रुद्रसंभवम् ।
नमस्कार्यं सदैवेह बालानां हितमिच्छता ॥ ३-२३१-१६ (२५०३०)
स्त्रियो मानुषमांसादा वृक्षका नाम नामतः ।
वृक्षेषु जातास्ता देव्यो नमस्कार्याः प्रजार्थिभिः ॥ ३-२३१-१७ (२५०३१)
एषामेव पिशाचानामसङ्ख्येयगणाः स्मृताः ।
घण्टायाः सपताकायाः शृणु मे संभवं नृप ॥ ३-२३१-१८ (२५०३२)
ऐरावतस्य घण्टे द्वे वैजयन्त्याविति श्रुते ।
गुहस्य ते स्वयं दत्ते क्रमेणानाय्य धीमता ॥ ३-२३१-१९ (२५०३३)
एका तत्रविशाखस्य घण्टा स्कन्दस्य चापरा ।
पताका कार्तिकेयस् विशाखस्य च लोहिता ॥ ३-२३१-२० (२५०३४)
यानि क्रीडनकान्यस्य देवैर्दत्तानि वै तदा ।
तैरेव रमते देवो महासेनो महाबलः ॥ ३-२३१-२१ (२५०३५)
स संवृतः पिशाचानां गणैर्देवगणैस्तथा ।
शुशुभे काञ्चने शैले दीप्यमानः श्रिया वृत्तः ॥ ३-२३१-२२ (२५०३६)
तेन वीरेण शुशुभे स शैलः शुभकाननः ।
आदित्येनेवांशुमता मन्दरश्चारुकन्दरः ॥ ३-२३१-२३ (२५०३७)
संतानकवनैः फुल्लैः करवीरवनैरपि ।
पारिजातवनैश्चैव जपाशोकवनैस्तथा ॥ ३-२३१-२४ (२५०३८)
कदम्बतरुषण्डैश्च दिव्यैर्मृगगणैरपि ।
दिव्यैः पक्षिगणैश्चैव शुशुभे श्वेतपर्वतः ॥ ३-२३१-२५ (२५०३९)
तत्रदेवगणाः सर्वेसर्वे देवर्षयस्तथा ।
मेघतूर्यरवाश्चैव क्षुब्धोदधिसमस्वनाः ॥ ३-२३१-२६ (२५०४०)
तत्रदेवाश्च गन्धर्वा नृत्यन्तेऽप्सरसस्तथा ।
हृष्टानां तत्रभूतानां श्रूयते निनदो महान् ॥ ३-२३१-२७ (२५०४१)
एवं सेन्द्रं जगत्सर्वं श्वेतपर्वतसंस्थितम् ।
प्रहृष्टं प्रेक्षते स्कन्दं न च ग्लायति दर्शनात् ॥ ३-२३१-२८ (२५०४२)

इति श्रीमन्महाभारते अरण्यपर्वणि मार्कण्डेयसमास्यापर्वणि
एकत्रिंशदधिकद्विशततमोऽध्यायः ॥ २३१ ॥
Mahabharata - Vana Parva - Chapter Footnotes

३-२३१-१० मुञ्जिको मुष्टिका ततः इति ट ।थ पाठः ॥

---

वन-अध्यय२३२
॥ श्रीः ॥
३.२३२. अध्यायः २३२

स्कन्दस्य देवसैनापत्येऽभिषेकानन्तरं महादेवस्य पार्वत्या सह भद्रवटंप्रति प्रस्थानम् ॥ १ ॥
तदेन्द्रादिभिर्दिक्पालैः ससैन्यैस्तमनु प्रस्थानम् ॥ २ ॥
तदा रुद्रेण स्कन्दस्य देवसैनापत्ये नियोजनम् ॥ ३ ॥
ततो देवासुराणां महायुद्धम् । तत्रस्कन्देन महिषासुरसंहारः ॥ ४ ॥

Mahabharata - Vana Parva - Chapter Text

३-२३२-० (२५०४३)
मार्कण्डेय उवाच। ३-२३२-०क्ष् (२५७५)
यदाऽभिषिक्तो भगवान्सैनापत्ये तु पावकिः ।
तदा संप्रस्थितः श्रीमान्हृष्टो भद्रवटं हरः ॥ ३-२३२-१ (२५०४४)
रथेनादित्यवर्णेन पार्वत्या सहितः प्रभुः ।
ग्अनुयातः सुरैः सर्वैः सहस्राक्षपुरोगमैः' ॥ ३-२३२-२ (२५०४५)
सहस्रं तस्य सिंहानां तस्मिन्युक्तं रथोत्तमे ।
उत्पपात दिवं शुभ्रं कालेनाभिप्रचोदितम् ॥ ३-२३२-३ (२५०४६)
तेपिबन्त इवाकाशं त्रासयन्तश्चराचरान् ।
सिंहा नभस्यगच्छन्त नदन्तश्चारुकेसराः ॥ ३-२३२-४ (२५०४७)
तस्मिन्रथे पशुपतिः स्थितो भात्युमया सह ।
विद्युता सहितः सूर्यः सेन्द्रचापे घने यथा ॥ ३-२३२-५ (२५०४८)
अग्रतस्तस्य भगवान्धनेशो गुह्यकैः सह ।
आस्थाय रुचिरं याति पुष्पकं नरवाहनः ॥ ३-२३२-६ (२५०४९)
ऐरावतं समास्थाय शक्रश्चापि सुरैः सह ।
पृष्ठतोऽनुययौ यान्तं वरदं वृषभध्वजम् ॥ ३-२३२-७ (२५०५०)
जृम्भकैर्यक्षरक्षोभिः स्रग्विभिः समलंकृतः ।
यात्यमोघो महायक्षो दक्षिणं पक्षमास्थितः ॥ ३-२३२-८ (२५०५१)
तस्य दक्षिणतो देवा बहवश्चित्रयोधिनः ।
गच्छन्ति वसुभिः सार्धं रुद्रैश्च सह संगताः ॥ ३-२३२-९ (२५०५२)
यमश्च मृत्युना सार्धं सर्वतः परिवारितः ।
घोरैर्व्याधिशतैर्याति घोररूपवपुस्तथा ॥ ३-२३२-१० (२५०५३)
यमस्य पृष्ठतश्चैव रघोरस्त्रिशिखरः शितः ।
विजयो नाम रुद्रस्य याति शूलः स्वलंकृतः ॥ ३-२३२-११ (२५०५४)
तमुग्रपाशो वरुणो भगवान्सलिलेश्वरः ।
परिवार्य शनैर्याति यादोभिर्विविधैर्वृतः ॥ ३-२३२-१२ (२५०५५)

पृष्ठतोविजयस्यापि याति रुद्रस्य पट्टसः ।
गदामुसलशक्त्याद्यैर्वृतः प्रहरणोत्तमैः ॥ ३-२३२-१३ (२५०५६)
पट्टसं त्वन्वगाद्राजंश्छत्रं रौद्रं महाप्रभम् ।
कमण्डलुश्चाप्यनु तं महर्षिगणसेवितः ॥ ३-२३२-१४ (२५०५७)
तस्य दक्षिणतो भाति दण्डो गच्छञ्श्रिया वृतः ।
भृग्वङ्गिरोभिः सहितो दैधतैश्चानुपूजितः ॥ ३-२३२-१५ (२५०५८)
एषां तु पृष्ठतो रुद्रो विमले स्यन्दने स्थितः ।
याति संहर्षयन्सर्वांस्तेजसा त्रिदिवौकसः ॥ ३-२३२-१६ (२५०५९)
ऋषयश्चापि देवाश्च गन्धर्वा भुजगास्तथा ।
नद्यो ह्रदाःसमुद्राश्चतथैवाप्सरसां गणाः ॥ ३-२३२-१७ (२५०६०)
नक्षत्राणि ग्रहाश्चैवदेवानां शिशवश्च ये ।
स्त्रियश्च विविधाकारा यान्ति रुद्रस्य पृष्ठतः ॥ ३-२३२-१८ (२५०६१)
सृजन्त्यः पुष्पवर्षाणि चारुरूपा वराङ्गनाः ।
पर्जन्यश्चाप्यनुययौ नमस्कृत्य पिनाकिनम् ॥ ३-२३२-१९ (२५०६२)
छत्रं च पाण्डुरं सोमस्तस्य मूर्धन्यधारयत् ।
चामरे चापि वायुश्च गृहीत्वाऽग्निश्च धिष्ठितौ ॥ ३-२३२-२० (२५०६३)
शक्रश्च पृष्ठतस्तस्य याति राजञ्छ्रिया वृतः ।
सहराजर्षिभिः सर्वैः स्तुवानो वृषकेतनम् ॥ ३-२३२-२१ (२५०६४)
गौरी विद्याऽथ गान्धारी केशिनी मित्रसाह्वया ।
सावित्र्या सह सर्वास्ताः पार्वत्या यान्ति पृष्ठतः ॥ ३-२३२-२२ (२५०६५)
तत्र विद्यागणाः सर्वेये केचित्कविभिः स्मृताः ।
तस्य कुर्वन्ति वचनं सेन्द्रा देवाश्चमूमुखे ॥ ३-२३२-२३ (२५०६६)
गृहीत्वा तु पताकां वै यात्यग्रे राक्षसो ग्रहः ।
व्यापृतस्तु श्मशाने यो नित्यं रुद्रस् वै सखा ।
पिङ्गलो नाम यक्षेन्द्रो लोकस्यानन्ददायकः ॥ ३-२३२-२४ (२५०६७)
एबिश्च सहितो देवस्तत्रयाति यथासुखम् ।
अग्रतः पृष्ठतस्चैवं न हि तस्य गतिर्ध्रुवा ॥ ३-२३२-२५ (२५०६८)
रुद्रं सत्कर्मभिर्मर्त्याः पूजयन्तीह दैवतम् ।
शिवमित्येव यं प्राहुरीशं रुद्रं पिनाकिनम् ॥ ३-२३२-२६ (२५०६९)
गएवं सर्वे सुरगणास्तदा वै प्रीतमानसाः'।
भावैस्तु विविधाकारैः पूजयन्ति महेश्वरम् ॥ ३-२३२-२७ (२५०७०)
कदेवसेनापतिस्त्वं देवसेनाभिरावृतः ।
अनुदच्छति देवेशं ब्रह्मण्यः कृत्तिकासुतः ॥ ३-२३२-२८ (२५०७१)
अथाब्रवीन्महासेनं महादेवो बृहद्वचः ।
सप्तमं मारुतस्कन्धं रक्ष नित्यमतन्द्रितः ॥ ३-२३२-२९ (२५०७२)
स्कन्द उवाच। ३-२३२-३०क्ष् (२५७६)

सप्तमं मारुतस्कन्धं पालयिष्याम्यहं प्रभो ।
यदन्यदपि मे कार्यं देव तद्वद माचिरम् ॥ ३-२३२-३० (२५०७३)
रुद्र उवाच। ३-२३२-३१क्ष् (२५७७)
कार्येष्वहं त्वया पुत्र संद्रष्टव्यः सदैव हि ।
दर्शनान्मम भक्त्या च श्रेयः परमवाप्स्यसि ॥ ३-२३२-३१ (२५०७४)
मार्कण्डेय उवाच। ३-२३२-२५क्ष् (२५७८)
इत्युक्त्वा विससर्जैनं परिष्यज्य महेश्वरः ।
ग्स्कन्दं सहोमया प्रीतो ज्वलन्तमिव तेजसा' ॥ ३-२३२-३२ (२५०७५)
विसर्जिते ततः स्कन्दे बभूवौत्पातिकं महत् ।
सहसैव महाराजदेवान्सर्वान्प्रमोहयत् ॥ ३-२३२-३३ (२५०७६)
जज्वाल स्वं सनक्षत्रं प्रमूढं भुवनं भृशम् ।
चचाल व्यनदच्चोर्वी तमोभूतं जगत्प्रभो ॥ ३-२३२-३४ (२५०७७)
ततस्तद्दारुणं दृष्ट्वा क्षुभितः शंकरस्तदा ।
उमा चैवमहाभाग देवाश्च समहर्षयः ॥ ३-२३२-३५ (२५०७८)
ततस्तेषु प्रमूढेषु पर्वताम्बुदसन्निभम् ।
नानाप्रहरणं घोरमदृश्यत महद्बलम् ॥ ३-२३२-३६ (२५०७९)
तद्वै घोरमसङ्ख्येयं गर्जच्च विविधा गिरः ।
अभ्यद्रवद्रणए देवान्भगवन्तं च शंकरम् ॥ ३-२३२-३७ (२५०८०)
तैर्विसृष्टान्यनीकेषु बाणजालान्यनेकशः ।
पर्वताश्च शतघ्न्यश्च प्रासासिपरिघा गदाः ॥ ३-२३२-३८ (२५०८१)
निपतद्भिश्च तैर्घोरैर्देवानीकं महायुधैः ।
क्षणेन व्यद्रवत्सर्वं विमुखं चाप्यदृश्यत ॥ ३-२३२-३९ (२५०८२)
निकृत्तयोधनागाश्वं कृत्तायुधमहारथम् ।
दानवैरर्दितं सैन्यं देवानां विमुखं बभौ ॥ ३-२३२-४० (२५०८३)
असुरैर्वध्यमानं तत्पावकैरिव काननम् ।
अपतद्दग्धभूयिष्ठं महाद्रुमवनं तथा ॥ ३-२३२-४१ (२५०८४)
ते विभिन्नशिरोदेहाः प्राद्रवन्तो दिवौकसः ।
न नाथमधिगच्छन्ति वध्यमाना महारणे ॥ ३-२३२-४२ (२५०८५)
अथ तद्विद्रुतं सैन्यं दृष्ट्वा देवः पुरंदरः ।
आश्वासयन्नुवाचेदं बलभिद्दानवार्दितम् ॥ ३-२३२-४३ (२५०८६)
भयं त्यजत भद्रं व शूराः शस्त्राणि गृह्णत ।
कुरुध्वंविक्रमे बुद्धिं मा वः काचिद्व्यथा भवेत् ॥ ३-२३२-४४ (२५०८७)
जयतैनाम्सुदुर्वृत्तान्दानवान्घोरदर्शनान् ।
अभिद्रवत भद्रं वो मया सह महासुरान् ॥ ३-२३२-४५ (२५०८८)
शक्रस् वचनं श्रुत्वा समाश्वस्ता दिवौकसः ।
दानवान्प्रत्ययुध्यन्त शक्रं कृत्वा व्यपाश्रयम् ॥ ३-२३२-४६ (२५०८९)

ततस्ते त्रिदशाः सर्वेमरुतश्च महाबलाः ।
प्रत्युद्ययुर्महाभागाः साध्याश्च वसुभिः सह ॥ ३-२३२-४७ (२५०९०)
तैर्विसृष्टान्यनीकेषु क्रुद्धैः शस्त्राणि संयुगे ।
शराश्च दैत्यकायेषु पिबन्ति रुधिरं बहु ॥ ३-२३२-४८ (२५०९१)
तेषां देहान्विनिर्भिद्य शरास्ते निशितास्तदा ।
निपतन्तोऽभ्यदृश्यन्त नगेभ्य इव पन्नगाः ॥ ३-२३२-४९ (२५०९२)
तानि दैत्यशरीराणि निर्भिन्नानिस्म सायकैः ।
अपतन्भूतलेराजंश्छिन्नाभ्राणीव सर्वशः ॥ ३-२३२-५० (२५०९३)
ततस्तद्दानवं सैन्यं सर्वैर्देवगणैर्युधि ।
त्रासितं विविधैर्बाणैः कृतंचैव पराङ्मुखम् ॥ ३-२३२-५१ (२५०९४)
अथोत्क्रुष्टं तदा हृष्टैः सर्वैर्देवैरुदायुधैः ।
संहतानि च तूर्याणि प्रावाद्यन्त ह्यनेकशः ॥ ३-२३२-५२ (२५०९५)
एवमन्योन्रसंयुक्तं युद्धमासीत्सुदारुणम् ।
देवानां दानवानां च मांसशोणितकर्दमम् ॥ ३-२३२-५३ (२५०९६)
अनयो देवलोकस्य सहसैवाभ्यदृश्यत ।
तथहि दानवा घोरा विनिघ्नन्ति दिवौकसः ॥ ३-२३२-५४ (२५०९७)
ततस्तूर्यप्रणादाश्च भेरीणां च महास्वनाः ।
बभूवुर्दानवेन्द्राणां सिंहनादाश्च दारुणाः ॥ ३-२३२-५५ (२५०९८)
अथ दैत्यबलाद्घोरान्निष्पपात महाबलः ।
दानवो महिषो नाम प्रगृह्य विपुलं गिरिम् ॥ ३-२३२-५६ (२५०९९)
ते तं धनैरिवादित्यं दृष्ट्वासंपरिवारितम् ।
तमुद्यतगिरिं राजन्व्यद्रवन्त दिवौकसः ॥ ३-२३२-५७ (२५१००)
अथाभिद्रुत्य महिषो देवांश्चिक्षेप तं गिरिम् ।
ग्महाकायं महाराज सतोयमिव तोयदम्' ॥ ३-२३२-५८ (२५१०१)
पतता तेन गिरिणा देवसैन्यस् पार्थिव ।
भीमरूपेण निहतमयुतं प्रापतद्भुवि ॥ ३-२३२-५९ (२५१०२)
अथ तैर्दानवैः सार्धं महिषस्त्रासयन्सुरान् ।
अभ्यद्रवद्रणे तूर्णं सिंहः क्षुद्रमृगानिव ॥ ३-२३२-६० (२५१०३)
तमापतन्तं महिषं दृष्ट्वा सेन्द्रा दिवौकसः ।
व्यद्रवन्तरणे बीता विकीर्णायुधकेतनाः ॥ ३-२३२-६१ (२५१०४)
ततःस महिषः क्रुद्धस्तूर्णं रुद्ररथं ययौ ।
अभिद्रुत्य च जग्राह रुद्रस् रथकूवरम् ॥ ३-२३२-६२ (२५१०५)
यदा रुद्ररथं क्रुद्धो महिषः सहसा गतः ।
रेसतू रोदसी गाढं मुमुहुश् महर्षयः ॥ ३-२३२-६३ (२५१०६)
अनदंश्चमहाकाया दैत्या जलधरोपमाः ।
आसीच्चनिश्चितं तेषां जितमस्माभिरित्युत ॥ ३-२३२-६४ (२५१०७)

तथाभूते तु भगवानाहूय गुहमात्मजम् ।
ग्दौरात्म्यं पश्य पुतर् त्वं दानवस्य दुरात्मनः ।
जहि शीघ्रं दुराचारं द्रष्टुमिच्छामि ते बलम् ॥ ३-२३२-६५ (२५१०८)
इत्युक्ताव भगवान्स्कन्दं परिपूज्य महेश्वरः ।
अयोजयन्निग्रहार्थं महिषस् गतायुषः'।
सस्मार च तदा स्कन्दं मृत्युं तस्य दुरात्मनः ॥ ३-२३२-६६ (२५१०९)
महिषोऽपि रथं दृष्ट्वा रौद्रं रुद्रस् चानदत् ।
देवान्संत्रासयंश्चापि दैत्यांस्चापिप्रहर्षयत् ॥ ३-२३२-६७ (२५११०)
ततस्तस्मिनभये घोरे देवानां समुपस्थिते ।
आजगाम महासेनः क्रोधात्सूर्य इव ज्वलन् ॥ ३-२३२-६८ (२५१११)
लोहिताम्बरसंवीतो लोहितस्रग्विभूषणः ।
लोहिताश्वो महाबाहुर्हिरण्यकवचः प्रभुः ॥ ३-२३२-६९ (२५११२)
रथमादित्यसंकाशमास्थितः कनकप्रभम् ।
तं दृष्ट्वा दैत्यसेना सा व्यद्रवत्सहसा रणे ॥ ३-२३२-७० (२५११३)
स चापि तां प्रज्वलितां महिषस् विदारिणीम् ।
मुमोच शक्तिं राजेनद्र महासेनो महाबलः ॥ ३-२३२-७१ (२५११४)
सा मुक्ताऽभ्यहरत्तस्य महिषस्य शिरो महत् ।
पपात भिन्ने शिरसि महिषस्त्यक्तजीवितः ॥ ३-२३२-७२ (२५११५)
पतता शिरसा तेन द्वारं षोडशयोजनम् ।
पर्वताभेन पिहितं तदाऽगम्यं ततोऽभवत् ।
उत्तराः कुरवस्तेन गच्छन्त्यद्य यथासुम् ॥ ३-२३२-७३ (२५११६)
क्षिप्ताक्षिप्ता तु सा शक्तिर्हत्वा शत्रून्सहस्रशः ।
स्कन्दहस्तमनुप्राप्ता दृश्यते देवदानवैः ॥ ३-२३२-७४ (२५११७)
प्रायः शरैर्विनिहता महासेनेन धीमता ।
शेषा दैत्यगणा घोरा भीतास्त्रस्ता दुरासदैः ।
स्कन्दपारिषदैर्हत्वा भक्षिताश्च सहस्रशः ॥ ३-२३२-७५ (२५११८)
दनवान्भक्षयन्तस्ते प्रपिबन्तश्च शोणितम् ।
क्षणान्निर्दानवं सर्वमकार्षुर्भृशहर्षिताः ॥ ३-२३२-७६ (२५११९)
तमांसीवयथा सूर्यो वृक्षानग्निर्घनान्खगः ।
तथास्कन्दोऽजयच्छत्रून्स्वेन वीर्येण कीर्तिमान् ॥ ३-२३२-७७ (२५१२०)
संपूज्यमानस्त्रिदशैरभिवाद्य महेश्वरम् ।
शुशुभे कृतिकापुत्रः प्रकीरणांशुरिवांशुमान् ॥ ३-२३२-७८ (२५१२१)
नष्टशत्रुर्यदा स्कन्दः प्रयातस्तु महेश्वरम् ।
तदाऽब्रवीन्महासेनं परिष्वज्य पुरंदरः ॥ ३-२३२-७९ (२५१२२)
ब्रह्मदत्तवरः स्कन्द त्वयाऽयं महिषो हतः ।
ग्हजय्यो युधि देवानां दानवः स महाबलः' ॥ ३-२३२-८० (२५१२३)

देवास्तृणसमा यस्य वबूवुर्जयतांवर ।
सोऽयं त्वया महाबाहो शमितो देवकण्टकः ॥ ३-२३२-८१ (२५१२४)
शतं महिषतुल्यानां दानवानां त्वय रणे ।
निहतंदेवशत्रूणां यैर्वयं पूर्वतापिताः ॥ ३-२३२-८२ (२५१२५)
तावकैर्भक्षिताश्चान्ये दानवाः शतसङ्घशः ।
अजेयस्त्वं रणेऽरीणामुमापतिरिव प्रभुः ॥ ३-२३२-८३ (२५१२६)
एतत्ते प्रथमं देव ख्यातं कर्म भविष्यति ।
त्रिषु लोकेषु कीर्तिश्च तवाक्षय्या भविष्यति ।
वशगाश्च भविष्यनति सुरास्तव महाभुज ॥ ३-२३२-८४ (२५१२७)
महासेनमेवमुक्त्वा निवृत्तः सह दैवतैः ।
अनुज्ञातो भगवता त्र्यम्बकेण शचीपतिः ॥ ३-२३२-८५ (२५१२८)
गतो भद्रवटंरुद्रो निवृत्ताश्च दिवौकसः ।
उक्ताश्च देवा रुद्रेण स्कन्दं पश्यत मामिव ॥ ३-२३२-८६ (२५१२९)
स हत्वा दानवगणान्पूज्यमानो महर्षिभिः ।
एकाह्नैवाजयत्सर्वं त्रैलोक्यं वह्निनन्दनः ॥ ३-२३२-८७ (२५१३०)
स्कन्दस् य इदं विप्रः पठेज्जन्म समाहितः ।
ग्शृणुयाद्ब्राह्मणेभ्यो यः श्रावयेद्वाविचेतनम् ॥ ३-२३२-८८ (२५१३१)
धनमायुर्यशो दीप्तिं पुत्राञ्शत्रुजयंतथा'।
सपुष्टिमिहसंप्राप्य स्कन्दसालोक्यमाप्नुयात् ॥ ३-२३२-८९ (२५१३२)

इति श्रीमन्महाभारते अरण्यपर्वणि मार्कण्डेयसमास्यापर्वणि
द्वात्रिंशदधिकद्विशततमोऽध्यायः ॥ २३२ ॥
Mahabharata - Vana Parva - Chapter Footnotes

३-२३२-८ जृम्भकैर्ग्रहविशेषैः भास्करैर्यक्षरक्षोभिः इति
ध पाठः ॥
३-२३२-२३ विद्यागणाः स्तुतिपद्यसमूह्यः ॥
३-२३२-६२ कूवरं धूःप्रदेशम् ॥
३-२३२-६३ रेसतुः शब्दं चक्रतुः । रोदसी द्यावाभूमी ॥

---

वन-अध्यय२३३
॥ श्रीः ॥
३.२३३. अध्यायः २३३

Mahabharata - Vana Parva - Chapter Topics
मार्कण्डेयेन युधिष्ठिराय स्कन्दनाम्नां कीर्तनम् ॥
Mahabharata - Vana Parva - Chapter Text

३-२३३-० (२५१३३)
युधिष्ठिर उवाच। ३-२३३-०क्ष् (२५७९)
भगवञ्श्रोतुमिच्छामि नामानि च महात्मनः ।
तरिषु लोकेषु यान्यस्य विख्यातानि द्विजोत्तम ॥ ३-२३३-१ (२५१३४)
वैशंपायन उवाच। ३-२३३-२क्ष् (२५८०)
इत्युक्तः पाण्डवेयेन महात्मा ऋषिसन्निधौ ।
उवाच भगवांस्तत्र मार्कण्डेयो महातपाः ॥ ३-२३३-२ (२५१३५)
आगेयश्चैव स्कनदश्च दीप्तकीर्तिरनामयः ।
मयूरकेतुर्धर्मात्मा भूतेशो महिषार्दनः ॥ ३-२३३-३ (२५१३६)
कामजित्कामदः कान्तः सत्यवाग्भुवनेश्वरः ।
शिशुः शीघ्रः शुचिश्चण्डो दीप्तवर्णः शुभाननः ॥ ३-२३३-४ (२५१३७)
अमोघस्त्वनघो रौद्रः प्रियश्चन्द्राननस्तथा ।
दीप्तशक्तिः प्रशान्तात्मा नद्रकुक्कुटमोहनः ॥ ३-२३३-५ (२५१३८)
षष्ठीप्रियश्च धर्मात्मा पवित्रो मातृवत्सलः ।
कन्याभर्ता विभक्तश्च स्वाहेयो रेवतीसुतः ॥ ३-२३३-६ (२५१३९)
प्रभुर्नेता विशाखश्च नैगमेयः सुदुश्चरः ।
सुव्रतो ललितश्चैवबालक्रीडनकप्रियः ॥ ३-२३३-७ (२५१४०)
खचारी ब्रह्मचारी च शूरः शरवणोद्भवः ।
विश्वामित्रप्रियश्चैव देवसेनाप्रियस्तथा ।
वासुदेवप्रियश्चैव प्रियः प्रियकृदेव तु ॥ ३-२३३-८ (२५१४१)
नामान्येतानि दिव्यानि कार्तिकेयस्य यः पठेत् ।
स्वर्गं कीर्तिं धनं चैव स लभेन्नात्र संशयः ॥ ३-२३३-९ (२५१४२)
मार्कण्डेय उवाच। ३-२३३-१०क्ष् (२५८१)
स्तोष्यामि देवैर्ऋषिभिश्च जुष्टं
शक्त्या गुहंनामभिरप्रमेयम् ।
षडाननं शक्तिधरं सुवीरं
निबोध चैतानि कुरुप्रवीर ॥ ३-२३३-१० (२५१४३)
ब्रह्मण्यो वै ब्रहमजो ब्रह्मविच्च
ब्रह्मेशयो ब्रह्मवतांवरिष्ठः ।
ब्रह्मप्रियो ब्राह्मणसर्वमन्त्री
त्वं ब्रह्मणां ब्राह्मणानांच नेता ॥ ३-२३३-११ (२५१४४)
स्वाहा स्वधा त्वंपरमं पवित्रं
मन्त्रस्तुतस्त्वंप्रथितः षडर्चिः ।
संवत्सरस्त्वमृतवश्च षड्वै
मासार्धमासाश्चदिनं दिशश्च ॥ ३-२३३-१२ (२५१४५)

त्वंपुष्कराक्षस्त्वरविन्दवक्त्रः
सहस्रचक्षोसि सहस्रबाहुः ।
त्वं लोकपालः परमं हविश्च
त्वं भावनः सर्वसुरासुराणाम् ॥ ३-२३३-१३ (२५१४६)
त्वमेव सेनाधिपतिः प्रचण्डः
प्रभुर्विभुश्चाप्यथ शक्रजेता ।
सहस्रपात्त्वं धरणी त्वमेव
सहस्रतुष्टिश्च सहस्रभुक्च ॥ ३-२३३-१४ (२५१४७)
सहस्रशीर्षस्त्वमनन्तरूपः ।
सहस्रपात्त्वंदशशक्तिधारी ।
गङ्गासुतस्त्वं स्वमतेन देव
स्वाहामहीकृत्तिकानां तथैव ॥ ३-२३३-१५ (२५१४८)
त्वं क्रीडसे षण्मुख कुक्कुटेन
यथेष्टनानाविधकामरूपी ।
दीक्षाऽसि सोमो मरुतः सदैव
धर्मोऽसि वायुरचलेन्द्र इन्द्रः ॥ ३-२३३-१६ (२५१४९)
सनातनानामपि शाश्वतस्त्वं
प्रभुः प्रभूणामपि चोग्रधन्वा ।
ऋतस्य कर्ता दितिजान्तकस्त्वं
जता रिपूणां प्रवरः सुराणाम् ॥ ३-२३३-१७ (२५१५०)
सूक्ष्मं तपस्तत्परमं त्वमेव
परावरज्ञोसि परावरस्त्वम् ।
धर्मस्य कामस्य परस्य चैव
त्वत्तेजसा कत्स्नमिदं महात्मन् ॥ ३-२३३-१८ (२५१५१)
व्याप्तं जगत्सर्वसुरप्रवीर
शक्त्या मया संस्तुत लोकनाथ ।
नमोस्तु ते द्वादशनेत्रबाहो
अतः परं वेद्मि गतिं न तेऽहम् ॥ ३-२३३-१९ (२५१५२)
स्कन्दस्य य इदं विप्रः पठेज्जन्म समाहितः ।
श्रावयेद्ब्राह्मणेभ्यो यः शृणुयाद्वा द्विजेरितम् ॥ ३-२३३-२० (२५१५३)
धनमायुर्यशो दीप्तं पुत्राञ्शत्रुजयं तथा ।
स पुष्टितुष्टी संप्राप्य स्कन्दसालोक्यमाप्नुयात् ॥ ३-२३३-२१ (२५१५४)

इति श्रीमन्महाभारते अरण्यपर्वणि मार्कण्डेयसमास्यापर्वणि
त्रयस्त्रिंशदधिकद्विशततमोऽध्यायः ॥ २३३ ॥
Mahabharata - Vana Parva - Chapter Footnotes

३-२३३-४ कामजित्पूर्णमनोरथः ॥
३-२३३-१० जुष्टं सेवितम् ॥
३-२३३-११ ब्रह्मण्यो ब्राह्मणेषु साधुः । ब्रह्मजोवेदोक्तेन गर्भाधानादिकर्मणाजातः। ब्रह्मविद्वेदार्थज्ञाता। ब्रह्मे ब्रह्मणि कर्मब्रह्मरूपे शेते इति ब्रह्मेशयः। अदन्तत्वमार्षम्। कर्मब्रह्मनिष्ठावानित्यर्थः। ब्राह्मणसव्रतीति पाठे ब्राह्मणो ब्रह्मवित्तेन सह समानं व्रतमद्वेष्टृत्वादिरूपं यस्य स ब्राह्मणसव्रती ॥
३-२३३-१२ वषडर्चिःषण्मुखत्वात्वड्जिह्वः ॥

---

वन-अध्यय२३४
॥ श्रीः ॥
३.२३४. अध्यायः २३४

Mahabharata - Vana Parva - Chapter Topics
सत्यभामया पतिवशीकरणोपायं पृष्टया द्रौपद्यातदुत्तारदानव्याजेन पतिव्रताधर्मकथनम् ॥ १ ॥

Mahabharata - Vana Parva - Chapter Text

३-२३४-० (२५१५५)
वैशंपायन उवाच। ३-२३४-०क्ष् (२५८२)
उपासीनेषु विप्रेषु पाण्डवेषु च भारत ।
द्रौपदी सत्यभामा च विविशाते तदा समम् ॥ ३-२३४-१ (२५१५६)
ग्प्रविश्य चाश्रमं पुण्यमुभे ते परमस्त्रियौ'।
जाहस्यमाने सुप्रीते सुखं तत्र निषीदतुः ॥ ३-२३४-२ (२५१५७)
चिरस् दृष्ट्वा राजेन्द्र तेऽन्योन्यस्य प्रियंवदे ।
कथयामासतुश्चित्राः कथाः कुरुयदूचिताः ॥ ३-२३४-३ (२५१५८)
अथाब्रवीत्सत्यभामा कृष्णस् महिषी प्रिया ।
सात्राजिती याज्ञसेनीं रहसीदं सुमध्यमा ॥ ३-२३४-४ (२५१५९)
केन द्रौपदि वृत्तेन पाण्डवानधितिष्ठसि ।
लोकपालोपमान्वीरान्नूनं परमसंमतान् ॥ ३-२३४-५ (२५१६०)
कथं च वशगास्तुभ्यं न कुप्यन्ति च ते शुभे ।
तव वश्या हि सतत पाण्डवाः प्रियदर्शने ॥ ३-२३४-६ (२५१६१)
ग्न चान्योन्यमसूयन्ते कथं वा ते सुमध्यमे'।

मुखप्रेक्षाश्च ते सर्वे तत्त्वमेतद्ब्रवीहि मे ॥ ३-२३४-७ (२५१६२)
व्रतचर्या तपो वाऽपि स्नानमन्त्रौषधानि वा ।
विद्यावीर्यं मूलवीर्यंजपहोमागदास्तथा ॥ ३-२३४-८ (२५१६३)
ममाद्याचक्ष्वपाञ्चालि यशस्यं भगवेतनम् ।
येन कृष्णे भवेन्नित्यं मम कृष्णो वशानुगः ॥ ३-२३४-९ (२५१६४)
एवमुक्त्वासत्यभामा विरराम यशस्विनी ।
पतिव्रता महाभागा द्रौपदी प्रत्युवाच ताम् ॥ ३-२३४-१० (२५१६५)
असत्स्त्रीणां समाचरं सत्ये मामनुपृच्छसि ।
असदाचरिते मार्गे कथं स्यादनुकीर्तनम् ॥ ३-२३४-११ (२५१६६)
अनुप्रश्नः संशयो वा नैष त्वय्युपपद्यते ।
कथं ह्युपेता बुद्ध्या त्वंकृष्णस् महिषी प्रिया ॥ ३-२३४-१२ (२५१६७)
यदैव भर्ता जानीयानमन्त्रमूलपरां स्त्रियम् ।
उद्विजेत तदैवास्याः सपद्विश्मगतादिव ॥ ३-२३४-१३ (२५१६८)
उद्विग्नस्य कुतः शान्तिरशान्तस्य कुतः सुखम् ।
न जातु वशगो भर्ता स्त्रियाः स्यान्मन्त्रकारणात् ॥ ३-२३४-१४ (२५१६९)
किमत्रप्रहिताश्चापि गदाः परमदारुणाः ।
मूलप्रवादैर्हि विषं प्रयच्छन्ति जिघांसवः बब  ३-२३४-१५ (२५१७०)
जिह्वया यानि पुरुषस्त्वचा वाप्युपसेवते ।
तत्र चूर्णानि दत्तानि हन्युः क्षिप्रमसंशयम् ॥ ३-२३४-१६ (२५१७१)
जलोदरसमायुक्ताः श्वित्रिणः पलितास्तथा ।
अपुमांसः कृताः स्त्रीभिर्जडान्धवधिरास्तथा ॥ ३-२३४-१७ (२५१७२)
पापानुगास्तु पापास्ताः पतीनुपसृजन्त्युत ।
न जातु विप्रियं भर्तुः स्त्रिया कार्यं कथंचन ॥ ३-२३४-१८ (२५१७३)
वर्ताम्यहं तु यां वृत्तिं पाण्डवेषु महात्मसु ।
तां सर्वां शृणु मे सत्यां सत्यभामे यशस्विनि ॥ ३-२३४-१९ (२५१७४)
अहंकारं विहायाहं कामक्रोधौ च सर्वदा ।
सदारान्पाण्डवान्नित्यं प्रयतोपचराम्यहम् ॥ ३-२३४-२० (२५१७५)
प्रणयं प्रतिसंहृत्य निधायात्मानमात्मनि ।
शुश्रूषुर्निरभीमाना पतीनां चित्तरक्षिणी ॥ ३-२३४-२१ (२५१७६)
दुर्व्याहृताच्छङ्कमाना दुस्थिताद्दुरवेक्षितात् ।
दुरासिताद्दुर्व्रजितादिङ्गिताध्यासितादपि ॥ ३-२३४-२२ (२५१७७)
सूर्यवैश्वानरसमान्सोमकल्पान्महारथान् ।
सेवे चक्षुर्हणः पार्थानुग्रवीर्यप्रतापिनः ॥ ३-२३४-२३ (२५१७८)
देवो मनुष्यो गन्धर्वो युवा चापि स्वलंकृतः ।
द्रव्यवानभिरूपो वा न मेऽन्यः पुरुषो मतः ॥ ३-२३४-२४ (२५१७९)
न भुक्तवति न स्नाते नासंविष्टे च भर्तरि ।

न संविशामि नाश्नामि न स्नाये कर्म कुर्वती ॥ ३-२३४-२५ (२५१८०)
क्षेत्राद्वनाद्वा ग्रामाद्वा भर्तारं गृहमागतम् ।
अभ्युत्थायाभिनन्दामि आसनेनोदकेन च ॥ ३-२३४-२६ (२५१८१)
प्रसन्नभाण्डा मृष्टान्ना काले भोजनदायिनी ।
संयता गुप्तधान्या च सुसंमृष्टनिवेशना ॥ ३-२३४-२७ (२५१८२)
अतिरस्कृतसंभाषा दुःस्त्रियो नानुसेवती ।
अनुकूलवती नित्यं भवाम्यनलसा सदा ॥ ३-२३४-२८ (२५१८३)
अनर्म चापि हसितं द्वारि स्थानमभीक्ष्णशः ।
अवस्करे चिरस्थानं निष्कुटेषु च वर्जये ॥ ३-२३४-२९ (२५१८४)
ग्अत्यालापमसन्तोषं परव्यापारसंकथाः'।
अतिहासातिरोषौ च क्रोधस्थानं च वर्जये ॥ ३-२३४-३० (२५१८५)
निरताऽहं सदा सत्ये पापानां च विवर्जने ।
सर्वथा भर्तुरहितं न ममेष्टं कथंचन ॥ ३-२३४-३१ (२५१८६)
यदा प्रवसते भर्ता कुटुम्बार्थेन केनचित् ।
सुमनोवर्णकापेता भवामि व्रतचारिणी ॥ ३-२३४-३२ (२५१८७)
यच्च भर्ता न पिबति यच्च भर्ता न सेवते ।
यच्च नाश्नाति मे भर्ता सर्वं तद्वर्जयाम्यहम् ॥ ३-२३४-३३ (२५१८८)
यथोपदेशं नियता वर्तमाना वराङ्गने ।
स्वलंकृता सुप्रयता भर्तुः प्रियहिते रता ॥ ३-२३४-३४ (२५१८९)
ये च धर्माः कुटुम्बेषु श्वश्र्वामे कथिताः पुरा ।
ग्अनुतिष्ठामि तान्सत्ये नित्यकालमतन्द्रिता' ॥ ३-२३४-३५ (२५१९०)
भिक्षाबलिश्राद्धविधिस्थालीपाकाश्च पर्वसु ।
मान्यानां मानसत्कारा ये चान्ये विदिता मम ॥ ३-२३४-३६ (२५१९१)
तान्सर्वाननुवर्तामि दिवारात्रमतन्द्रिता ।
विनयाननियमांश्चैव सदा सर्वात्मना श्रिता ॥ ३-२३४-३७ (२५१९२)
मृदून्सतः सत्यशीलान्सत्यधर्मानुपालिनः ।
स देवः सा गतिर्नार्यास्तस्य का विप्रियं चरेत् ॥ ३-२३४-३८ (२५१९३)
पत्याश्रयो हि मे धर्मो मतः स्त्रीणां सनातनः ।
स देवः सा गतिर्नार्यास्तस्य काविप्रियं चरेत् ॥ ३-२३४-३९ (२५१९४)
अहं पतीन्नातिशये नात्यश्ने नातिभूषये ।
नापि श्वश्रूं परिवदे सर्वदा परियन्त्रिता ॥ ३-२३४-४० (२५१९५)
अवधानेन सुभगे नित्योत्थिततयैव च ।
भर्तारो वशगा मह्यं गुरुशुश्रूषयैव च ॥ ३-२३४-४१ (२५१९६)
नित्यमार्यामहं कुन्तीं वीरसूं सत्यवादिनीम् ।
स्वयं परिचराम्यतां पानाच्छादनभोजनैः ॥ ३-२३४-४२ (२५१९७)
नैतामतिशये जातु वस्त्रभूषणभोजनैः ।

न वदे चाप्यतिवाचा तां पृथां पृथिवीसमाम् ॥ ३-२३४-४३ (२५१९८)
अष्टावग्रे ब्राह्मणानां सहस्राणि स्म नित्यदा ।
भुञ्जते रुक्मपात्रीषु युधिष्ठिरनिवेशने ॥ ३-२३४-४४ (२५१९९)
अष्टाशीतिसहस्राणि स्नातका गृहमेधिनः ।
त्रिंशद्दासीक एकैको यान्बिभर्ति युधिष्ठिरः ॥ ३-२३४-४५ (२५२००)
दशान्यानि सहस्राणि येषामन्नं सुसंस्कृतम् ।
ह्रियते रुक्मपात्रीभिर्यतीनामूर्ध्वरेतसाम् ॥ ३-२३४-४६ (२५२०१)
तान्सर्वानग्रहारेण ब्राह्मणान्वेदवादिनः ।
यथार्हं पूजयामि स्म पानाच्छादनभोजनैः ॥ ३-२३४-४७ (२५२०२)
शतं दासीसहस्राणि कौन्तेयस्य महात्मनः ।
कम्बुकेयूरधारिण्यो निष्ककण्ठ्यः स्वलंकृताः ॥ ३-२३४-४८ (२५२०३)
महार्हमाल्याभरणाः सुवर्णाश्चन्दनोक्षिताः ।
मणीन्हेम च बिभ्रत्यो नृत्तगीतविशारदाः ॥ ३-२३४-४९ (२५२०४)
तासां नाम च रूपंच भोजनाच्छादनानि च ।
सर्वासामेव वेदाहं कर्म चैव कृताकृतम् ॥ ३-२३४-५० (२५२०५)
शतं दासीसहस्राणि कुन्तीपुत्रस्य धीमतः ।
पात्रीपस्ता दिवारात्रमतिथीन्भोजयन्त्युत ॥ ३-२३४-५१ (२५२०६)
शतमश्वसहस्राणि दशनागायुतानि च ।
युधिष्ठिरस्यानुयात्रमिन्द्रप्रस्थनिवासिनः ॥ ३-२३४-५२ (२५२०७)
एतदासीत्तदा राज्ञो यन्महीं पर्यपालयत् ।
येषां सङ्ख्याविधिं चैव प्रदिशामि शृणोमि च ॥ ३-२३४-५३ (२५२०८)
अन्तःपूराणां सर्वेषां भृत्यानां चैव सर्वशः ।
आगोपालाविपालेभ्यः सर्वं वेद कृताकृतम् ॥ ३-२३४-५४ (२५२०९)
सर्वं राज्ञः समुदयमायं च व्ययमेव च ।
एकाऽहंवेद्मि कल्याणि पाण्डवानां यशस्विनि ॥ ३-२३४-५५ (२५२१०)
मयि सर्वं समासज्यकुटुम्बं भरतर्षभाः ।
उपासनरताः सर्वे घटयन्ति वरानने ॥ ३-२३४-५६ (२५२११)
तमहं भारमासक्तमनाधृष्यं दुरात्मभिः ।
सुखं सर्वंपरित्यज्यरात्र्यहानि घटामि वै ॥ ३-२३४-५७ (२५२१२)
अधृष्यं वरुणस्येव निधिपूर्णमिवोदधिम् ।
एकाहं वेद्मि कोशं वै पतीनां धर्मचारिणाम् ॥ ३-२३४-५८ (२५२१३)
अनिशायां निशायां च विहाय क्षुत्पिपासयोः ।
आराधयन्त्याः कौरव्यांस्तुल्या रात्रिरहश्च मे ॥ ३-२३४-५९ (२५२१४)
प्रथमं प्रतिबुध्यामि चरमं संविशामि च ।
नित्यकालमहं सत्ये एतत्संवननं मम ॥ ३-२३४-६० (२५२१५)
एतज्जानाम्यहं कर्तुं भर्तृसंवननं महत् ।

असत्स्त्रीणां समाचारं नाहं कुर्यां न कामये ॥ ३-२३४-६१ (२५२१६)
वैशंपायन उवाच। ३-२३४-६२क्ष् (२५८३)
तच्छ्रुत्वा धर्मसहितं व्याहृतं कृष्णया तदा ।
उवाच सत्या सत्कृत्य पाञ्चालीं धर्मचारिणीं ॥ ३-२३४-६२ (२५२१७)
अभिपन्नाऽस्मि पाञ्चालि याज्ञसेनि क्षमस्व मे ।
कामकारः सखीनं हि सोपहासं प्रभाषितम् ॥ ३-२३४-६३ (२५२१८)

इति श्रीमन्महाभारते अरण्यपर्वणि द्रौपदीसत्यभामासंवादपर्वणि
चतुस्त्रिंशदधिकद्विशततमोऽध्यायः ॥ २३४ ॥
Mahabharata - Vana Parva - Chapter Footnotes

३-२३४-१ सममेकत्र । विविशाते तदाश्रममिति ध।पाठः ॥
३-२३४-२ जाहस्यमाने परस्परमतिशयेन हसन्त्यौ ॥
३-२३४-८ मूलवीर्यं मूलं अप्रच्युतं तारुण्यादि तद्वीर्यम्
। अगदोऽञ्जनादिरौषधम् ॥
३-२३४-९ भगदैवतमिति झ । पाठः। भगदैवत सौभाग्यवर्धकं
सौरव्रतादिकम्। वशानुग इच्छानुसारी ॥
३-२३४-११ हे सत्ये अनुकीर्तनमुत्तरम् ॥
३-२३४-१७ जलोदरः उदररोगः । श्वित्रिणः कुष्ठवन्तः ॥
३-२३४-१८ उपसृजन्ति दोषैर्योजयन्ति ॥
३-२३४-२१ प्रणयं ईर्ष्याम् । आत्मानं चित्तम्। आत्मनि स्वस्मिन्। निरभिमाना
दर्पहीना ॥
३-२३४-२२ इङ्गितं अभिप्रायः अध्यासितः क्षिप्तो यस्मिन् कटाक्षो तस्मात्
इङ्गिताध्यासितात् ॥
३-२३४-२३ चक्षुर्हणः दृष्ट्वैव रिपून् घ्नन्ति तादृशान् । सेवे
शत्रुहणान्पार्थानिति क। ट। ध। पाठः ॥
३-२३४-२४ अभिरूपः सुन्दरः ॥
३-२३४-२८ अतिरस्कृतसंभाषा तिरस्कारशून्यवचना ॥
३-२३४-२९ अनर्म परिहासहीनम् । हसितं हासः। स्थानं स्थितिम्। अवस्करे
तिरस्करोमि। किरतेरिदं रूपम्। निष्कुटेषु गृहारामेषु ॥
३-२३४-३२ सुमनोवर्णकापेता पुष्पैरनुलेपनैश्च वर्जिता ॥
३-२३४-३६ मानः पूजा । सत्कार आदरः ॥
३-२३४-४० नातिशये नातिक्रमामि । न परिवदे न निन्दामि ॥
३-२३४-४१ अवधानेन अप्रमादेन । मह्यं मम ॥
३-२३४-४७ अग्रहारेण वैश्वदेवान्ते प्रथमदेयेनान्नेव ॥
३-२३४-५२ अनुयात्रं स्वैरयात्रायामपि परिवारभूतम् ॥

३-२३४-५४ वेदवेद्मि ॥
३-२३४-६० संवननं वशीकरणम् ॥
३-२३४-६३ अभिपन्ना प्रार्थयाना ॥

---

वन-अध्यय२३५
॥ श्रीः ॥
३.२३५. अध्यायः २३५

Mahabharata - Vana Parva - Chapter Topics
द्रौपद्या सत्यभामांप्रति पतिवशीकरणोपायोपदेशव्याजेन
पतिव्रताधर्मकथनम् ॥ १ ॥

Mahabharata - Vana Parva - Chapter Text

३-२३५-० (२५२१९)
द्रौपद्युवाच। ३-२३५-०क्ष् (२५८४)
इमं तु ते मार्गमपेतदोषं
वक्ष्यामि चित्तग्रहणाय भर्तुः ।
अस्मिन्यथावत्सखि वर्तमाना
भर्तारमाच्छेत्स्यसि कामिनीभ्यः ॥ ३-२३५-१ (२५२२०)
नैतादृशं दैवतमस्ति किंचि-
त्सर्वेषुलोकेषु सदेवकेषु ।
यथा पतिस्तस्य तु सर्वकामा
लभ्याः प्रसादे कुपितश् हन्यात् ॥ ३-२३५-२ (२५२२१)
तस्मादपत्यं विविधाश् भोगाः
शय्यासनान्यद्भुतदर्शनानि ।
वस्त्राणि माल्यानि तथैव गन्धाः
स्वर्गश्चलोको विपुला च कीर्तिः ॥ ३-२३५-३ (२५२२२)
सुखं सुखनेह न जातु लभ्यं
दुःखेन साध्वी लभते सुखानि ।
सा कृष्णमाराधय सौहृदेन
प्रेम्णा च नित्यं प्रतिकर्मणा च ॥ ३-२३५-४ (२५२२३)
स्नानासनैश्चारुभिरग्रमाल्यै-
र्दाक्षिण्ययोगैर्विविधैश्च गन्धैः ।
अस्याः प्रियोस्मीति यथा विदित्वा
त्वामेव संश्लिष्यति सर्वभावैः ॥ ३-२३५-५ (२५२२४)
श्रुत्वा स्वरं द्वारगतस् भर्तुः

प्रत्युत्थिता तिष्ठ गृहस्य मध्ये ।
दृष्ट्वा प्रविष्टं त्वरिताऽसनेन
पाद्येन चैनं प्रतिपूजयस्व ॥ ३-२३५-६ (२५२२५)
संप्रेषितायामथ चैव दास्या-
मुत्थाय सर्वं स्वयमेव कार्यम् ।
जानातु कृष्णस्तव भावमेतं
सर्वात्मना मां भजतीति सत्ये ॥ ३-२३५-७ (२५२२६)
त्वत्संनिधौ यत्कथयेत्पतिस्ते
यद्यप्यगुह्यं परिरक्षितव्यम् ।
काचित्सपत्नी तव वासुदेवं
प्रत्यादिशेत्तेन भवेद्विरागः ॥ ३-२३५-८ (२५२२७)
प्रियांश्च रम्यांश्च हितांश् भर्तु-
स्तान्भोजयेथा रविविधैरुपायैः ।
द्वेष्यैरुपेक्ष्यैरहितैश् तस्य
भिद्स्वनित्यं कुहकोद्धतैश्च ॥ ३-२३५-९ (२५२२८)
मदं प्रमादं पुरुषेषु हित्वा
संयच्छ मानं प्रतिगृह्य वाचम् ।
प्रद्युम्नसाम्बावपि ते कुमारौ
नोपासितव्यौ रहिते कदाचित् ॥ ३-२३५-१० (२५२२९)
महाकुलीनाभिरपापिकाभिः
स्त्रीभिः सतीभिस्तव सख्यमस्तु ।
चण्डाश् शौण्डाश्च महाशनाश्च
चोराश्च दुष्टाश्चपलाश्च वर्ज्याः ॥ ३-२३५-११ (२५२३०)
एतद्यशस्यं भगवेतनं च
स्वार्थं तदा शत्रुनिबर्हणं च ।
महार्हमाल्याभरणाङ्गरागा
भर्तारमाराधय पुण्यगन्धैः ॥ ३-२३५-१२ (२५२३१)

इति श्रीमनमहाभारते अरण्यपर्वणि द्रौपदीसत्यभामासंवादपर्वणि
पञ्चत्रिंशततमोऽध्यायः ॥ २३५ ॥

Mahabharata - Vana Parva - Chapter Footnotes

३-२३५-१ आच्छेत्स्यसि बलाद्धरिष्यसि ।कामिनीभ्यः
सपत्नीभ्यः। भर्तारमाकर्षसीति थ। पाठः ॥
३-२३५-४ प्रतिकर्मणा कायक्लेशेन ॥
३-२३५-५ संश्लिष्यति तद्विधत्स्वेति झ ।पाठः ॥

३-२३५-८ न भवेद्विकार इतिट । पाठः ॥
३-२३५-१० तप्रमादं पुरुषेषु कृत्वेति ध पाठः । नैवं प्रमाणं कुहकेषु कुर्या इति थ पाठः। रहिते विजने ॥
३-२३५-११ चण्डाः क्रूराः । शौण्डाः पराभिभवसमर्थाः। महाशनाः बहुभुजः। दुष्टाः द्वेषाद्याक्रान्ताः। स्त्रियो वर्ज्या इति शेषः ॥
३-२३५-१२ भगदैवतमिति झ । पाठः। भगदैवतं भाग्यकरम् ॥

---

वन-अध्यय२३६
॥ श्रीः ॥
३.२३६. अध्यायः २३६

Mahabharata - Vana Parva - Chapter Topics
प्रियोक्तिभिर्द्रौपदीं परिसान्त्वितवत्या सत्यभामया सह श्रीकृष्णेन स्वपुरंप्रति गमनम् ॥ १ ॥

Mahabharata - Vana Parva - Chapter Text

३-२३६-० (२५२३२)
वैशंपायन उवाच। ३-२३६-०क्ष् (२५८५)
मार्कण्डेयादिभिर्विप्रैः पाण्डवैश्च महात्मभिः ।
कथाभिरनुकूलाभिः सह स्तित्वा जनार्दनः ॥ ३-२३६-१ (२५२३३)
ततस्तैः संविदं कृत्वा यथावन्मधुसूदनः ।
आरुरुक्षू रथं सत्यामाह्वयामास भारत ॥ ३-२३६-२ (२५२३४)
सत्यभामा ततस्तत्र स्वजित्वा द्रुपदात्मजाम् ।
उवाच वचनं हृद्यं यथाभावं समाहितम् ॥ ३-२३६-३ (२५२३५)
कृष्णे माभूत्तवोत्कण्ठा मा व्यथा मा प्रजागरः ।
भर्तृभिर्देवसंकाशैर्जितां प्राप्स्यसि मेदिनीम् ॥ ३-२३६-४ (२५२३६)
न ह्येवं शीलसंपन्ना नैवं पूजितलक्षणाः ।
प्राप्नुवन्ति चिरं क्लेशं यथा त्वमसितेक्षणे ॥ ३-२३६-५ (२५२३७)
अवश्यं च त्वया भूमिरियं निहतकण्टका ।
भर्तृभिः सहभोक्तव्या निर्द्वन्द्वेति श्रुतं मया ॥ ३-२३६-६ (२५२३८)
धार्तराष्ट्रवधं कृत्वावैराणि प्तियात्य च ।
युधिष्ठिरस्थां पृथिवीं द्रष्टासि द्रुपदात्मजे ॥ ३-२३६-७ (२५२३९)
यास्ताः प्रव्राजपानां त्वां प्राहसन्दर्पमोहिताः ।
ताः क्षिप्रं हतसंकल्पा द्रक्ष्यसि त्वं कुरुस्त्रियः ॥ ३-२३६-८ (२५२४०)
तव दुःखोपपन्नाया यैराचरितमप्रियम् ।
विद्धि संप्रस्थितान्सर्वांस्तान्कृष्णे यमसादनम् ॥ ३-२३६-९ (२५२४१)

पुत्रस्ते प्रतिविन्ध्यश्च सुतसोमस्तथाविधः ।
श्रुतकर्माऽर्जुनिश्चैव शतानीकश्च नाकुलिः ॥ ३-२३६-१० (२५२४२)
सहदेवाच्च यो जातः श्रुतसेनस्तवात्मजः ।
सर्वेकुशलिनो वीराः कृतास्त्राश्च सुतास्तव ॥ ३-२३६-११ (२५२४३)
अभिमन्युरिव प्रीता द्वारवत्यां रता भृशम् ।
त्वमिवैषां सुभद्रा च प्रीत्या सर्वात्मना स्थिता ॥ ३-२३६-१२ (२५२४४)
प्रीयते तव निर्द्वन्द्वा तेभ्यश्च विगतज्वरा ।
दुःखिता तेन दुःखेन सुखेन सुखिता तथा ॥ ३-२३६-१३ (२५२४५)
भजेत्सर्वात्मना चैव प्रद्युम्नजननी तथा ।
भानुप्रभृतिभिश्चैनान्विशिनष्टि च केशवः ॥ ३-२३६-१४ (२५२४६)
भोजनाच्छादने चैषां नित्यं मे श्वशुरः स्थितः ।
रामप्रभृतयः सर्वे भजन्त्यन्धकवृष्णयः ॥ ३-२३६-१५ (२५२४७)
तुल्यो हिप्रणयस्तेषां प्रद्युम्नस्य च भामिनि ।
एवमादि प्रियं सत्यंहृद्यमुक्त्वा मनोनुगम् ॥ ३-२३६-१६ (२५२४८)
गमनाय मनश्चक्रेवासुदेवरथं प्रति ।
तां कृष्णां कृष्णमहिषी चकाराभिप्रदक्षिणम् ॥ ३-२३६-१७ (२५२४९)
आरुरोह रथं शौरेः सत्यभामाऽथ भामिनी ।
स्मयित्वातु यदुश्रेष्ठो द्रौपदीं परिसान्त्व्य च ।
उपावर्त्य ततः शीघ्रैर्हयैः प्रायात्परंतपः ॥ ३-२३६-१८ (२५२५०)

इति श्रीमन्महाभारते अरण्यपर्वणि द्रौपदीसत्यभामासंवादपर्वणि
षट्त्रिंशदधिकद्विशततमोऽध्यायः ॥ २३६ ॥
Mahabharata - Vana Parva - Chapter Footnotes

३-२३६-२ संविदं संभाषाम् ॥
३-२३६-३ स्वजित्वा आश्लिष्य ॥
३-२३६-४ कृष्णे हेद्रौपदि ॥
३-२३६-६ निर्द्वन्द्वा निष्प्रतिपक्षा ॥
३-२३६-१६ प्रणयः स्नेहः ॥
३-२३६-१८ उपावर्त्य पाण्डवनिति शेषः ॥

---

वन-अध्यय२३७
॥ श्रीः ॥
३.२३७. अध्यायः २३७

Mahabharata - Vana Parva - Chapter Topics
कस्माच्चिद्ब्राह्मणात्पाण्डववृत्तान्तं श्रुतवता धृतराष्ट्रेण

पाण्डवान्प्रति परिशोचनम् ॥ १ ॥
तथा पाण्डवपराक्रमानुस्मरणेन स्वपुत्राणां भाविवधनिर्धारणपूर्वकं तान्प्रति परिशोचनम् ॥ २ ॥

Mahabharata - Vana Parva - Chapter Text

३-२३७-० (२५२५१)
जनसेजय उवाच। ३-२३७-०क्ष् (२५८६)
एवं वने वर्तमाना नराग्र्याः
शीतोष्णवातातपकर्शिताङ्गाः ।
सरस्तदासाद्यवनं च पुण्यं
ततः परंकिमकुर्वन्त पार्थाः ॥ ३-२३७-१ (२५२५२)
वैशंपायन उवाच। ३-२३७-२क्ष् (२५८७)
सरस्तदासाद्य तु पाण्डुपुत्रा
जनं समुत्सृज्य विधाय चेष्टम् ।
वनानि रम्याण्यथ पर्वतांश्च
नदीप्रदेशांश्च तदा विचेरुः ॥ ३-२३७-२ (२५२५३)
तथा वने तान्वसतः प्रवीरान्
स्वाध्यायवन्तश्च तपोधनाश्च ।
अभ्याययुर्वेदविदः पुराणा-
स्तान्पूजयामासुरथो नराग्र्याः ॥ ३-२३७-३ (२५२५४)
ततः कदाचित्कुशलः कथासु
विप्रोऽभ्यगच्छद्भुवि कौरवेयान् ।
स तैः समेत्याथ यदृच्छयैव
वैचित्रवीर्यं नृपमभ्यगच्छत् ॥ ३-२३७-४ (२५२५५)
अथोपविष्टः प्रतिसत्कृतश्च
वृद्धेन राज्ञा कुरुसत्तमेन ।
प्रचोदितः संकथयांबभूव
धर्मानिलेन्द्रप्रभवान्यमौ च ॥ ३-२३७-५ (२५२५६)
कृशांश्च वातातपकर्शिताङ्गान्
दुःखस्य चोग्रस् मुखे प्रपन्नान् ।
तां चाप्यनाथामिव वीरनाथां
कृष्णां परिक्लेशगुणेन युक्ताम् ॥ ३-२३७-६ (२५२५७)
ततः कथास्तस्य निशम्य राजा
वैचित्रवीर्यः कृपयाऽभितप्तः ।
वने तथा पार्थिवपुत्रपौत्रा-

ञ्श्रुत्वा तथा दुःखनदींप्रपन्नान् ॥ ३-२३७-७ (२५२५८)
प्रोवाच दैन्याभिहतान्तरात्मा
निश्वासवातोपहतस्तदानीम् ।
वाचं कथंचित्स्थिरतामुपेत्य
तत्सर्वमात्मप्रभवं विचिन्त्य ॥ ३-२३७-८ (२५२५९)
कथंनु सत्यः शुचिरार्यवृत्तः
श्रेष्ठः सुतानां मम धर्मराजः ।
अजातशत्रुः पृथिवीतले स्म
शेते पुरा राङ्कवकूटशायी ॥ ३-२३७-९ (२५२६०)
प्रबोध्यते मागधसूतपुत्रै-
र्नित्यं स्तुवद्भिः स्वयमिन्द्रकल्पः ।
पतत्रिसङ्घैः स जघन्यरात्रे
प्रबोध्यते नूनमिलातलस्थः ॥ ३-२३७-१० (२५२६१)
कथंनु वातातपकर्शिताङ्गो
वृकोदरः कोपपरिप्लुताङ्गः ।
शेते पृथिव्यामतथोचिताङ्गः
कृष्णासमक्षं वसुधातलस्थः ॥ ३-२३७-११ (२५२६२)
तथाऽर्जुनः सुकुमारो मनस्वी
वशे स्थितो धर्मसुतस्य राज्ञः ।
विदूयमानैरिव सर्वगात्रै-
र्ध्रुवं न शेते वसतीरमर्षात् ॥ ३-२३७-१२ (२५२६३)
यमौ च कृष्णां च युधिष्ठिरं च
भीमं च दृष्ट्वा सुखविप्रयुक्तान् ।
विनिःश्वसन्सर्प इवोग्रतेजा
ध्रुवं न शेते वसतीरमर्षात् ॥ ३-२३७-१३ (२५२६४)
तथा यमौ चाप्यसुखौ सुखार्हौ
समृद्धरीपावमरौ दिवीव ।
प्रजागरस्थौ ध्रुवमप्रशान्तौ
क्रोधेन सत्येन च वार्यमाणौ ॥ ३-२३७-१४ (२५२६५)
समीरणेनाथ समो बलेन
समीरणस्यैवसुतो बलीयान् ।
स धर्मपासेन सितोऽग्रजेन
ध्रुवं विनिःश्वस्य सहत्यमर्षम् ॥ ३-२३७-१५ (२५२६६)
स चापिभूमौ परिवर्तमानो
वधं सुतानां मम काङ्क्षमाणः ।
सत्येन धर्मेण च वार्यमाणः

कालंप्रतीक्षत्यधिको रणेऽन्यैः ॥ ३-२३७-१६ (२५२६७)
अजातशत्रौ तु जिते निकृत्या
दुःशासनो यत्परुषाण्यवोचत् ।
तानि प्रविष्टानि वृकोदराङ्गं
दहन्ति कक्षाग्निरिवेन्धनानि ॥ ३-२३७-१७ (२५२६८)
न पापकं ध्यास्यति धर्मपुत्रो
धनंजयश्चाप्यनुवर्त्स्यते तम् ।
अरण्यवासेन विवर्धते तु
भीमस्य कोपोऽग्निरिवानिलेन ॥ ३-२३७-१८ (२५२६९)
स तेन कोपेन विदीर्यमाणः
करं करेणाभिनिपीड्यवीरः ।
विनिःश्वसत्युष्णमतीव घोरं
दहन्निवेमां मम पुत्रसेनाम् ॥ ३-२३७-१९ (२५२७०)
गाण्डीवधन्वा च वृकोदरश्च
संरम्भिणावन्तककालकल्पौ ।
न शेषयेतां युधि शत्रुसेनां
शरान्किरन्तावनिप्रकाशान् ॥ ३-२३७-२० (२५२७१)
दुर्योधनः शकुनिः सूतपुत्रो
दुःशासनश्चापि सुमन्दचेताः ।
मधु प्रपश्यन्ति न तु प्रपातं
वृकोदरं चैव धनंजयं च ॥ ३-२३७-२१ (२५२७२)
शुभाशुभं कर्म नरोहि कृत्वा
प्रतीक्षतेचेत्स फलंविपाके ।
सतेन युज्यत्यवशः फलेन
मोक्षः कथं स्यात्पुरुषस्य तस्मात् ॥ ३-२३७-२२ (२५२७३)
क्षेत्रे सुकृष्टे ह्युपिते च बीजे
देवेच वर्षत्यृतुकालयुक्तम् ।
न स्यात्फलंतस्य कुतः प्रसिद्धि-
रन्यत्रदैवादिति नास्ति हेतुः ॥ ३-२३७-२३ (२५२७४)
कृतं मताक्षेण यथा न साधु
साधुप्रवृत्तेन च पाण्डवेन ।
मया च दुष्पुत्रवशानुगेन
कृतः कुरूणामयमन्तकालः ॥ ३-२३७-२४ (२५२७५)
ध्रुवं प्रशाम्यत्यसमीरितोऽग्नि-
र्ध्रुवं प्रजास्यत्युत गर्भिणी या ।
ध्रुवं दिनादौ रजनीप्रणाश-

स्तथा क्षपादौ च दिनप्रणाशः ॥ ३-२३७-२५ (२५२७६)
कृतेच कस्मान्न परेच कुर्यु-
र्दत्ते च दद्युः पुरुषाः कथंस्वित् ।
प्राप्यार्थकालं च भवेदनर्थः
कथंचन स्यादितितत्कुतः स्यात् ॥ ३-२३७-२६ (२५२७७)
कथं न भिद्येत न च स्रवेत
न च प्रसिच्येदितिरक्षितव्यम् ।
अरक्ष्यमाणं शतधा प्रकीर्ये-
द्ध्रुवं न नाशोऽस्ति कृतस्य लोके ॥ ३-२३७-२७ (२५२७८)
गतो ह्यरण्यादपिशक्रलोकं
धनंजयः पशय्त वीर्यमस्य ।
अस्त्राणि दिव्यानि चतुर्विधानि
ज्ञात्वा पुनर्लोकमिमं प्रपन्नः ॥ ३-२३७-२८ (२५२७९)
स्वर्गं हि गत्वा सशरीर एव
को मानुषः पुनरागन्तुमिच्छेत् ।
अन्यत्रकालोपहताननेका-
न्समीक्षमाणस्तुकुरून्मुमूर्षून् ॥ ३-२३७-२९ (२५२८०)
धनुर्ग्राहश्चार्जुनः सव्यसाची
धनुश्च तद्गाण्डिवं भीमवेगम् ।
अस्त्राणि दिव्यानि च तानि तस्य
त्रयस्य तेजः प्रसहेत कोऽत्र ॥ ३-२३७-३० (२५२८१)
निशम्य तद्वचनं पार्थिवस्य
दुर्योधनं रहिते सौबलोऽथ ।
अबोधयत्कर्णमुपेत्य सर्वं
स चाप्यहृष्टोऽभवदल्पचेताः ॥ ३-२३७-३१ (२५२८२)

इति श्रीमन्महाभारते अरण्यपर्वणि धोषयात्रापर्वणि
सप्तत्रिंशदधिकद्विशततमोऽध्यायः ॥ २३७ ॥
Mahabharata - Vana Parva - Chapter Footnotes

३-२३७-१ सरो द्वैतवनस्थम् ॥
३-२३७-२ जनं समुदायम् ॥
३-२३७-३ वने द्वैतवने ॥
३-२३७-४ नृप धृतराष्ट्रम् ॥
३-२३७-९ रङ्कोर्मृगविशेषस्य लोमराशिमयीतूलिका राङ्कवकूटम् ॥
३-२३७-१३ उग्रतेजा अर्जुनः ॥

३-२३७-१४ प्रजागरस्थौ भुवि शयाते इति शेषः ॥
३-२३७-१६ अन्यैः अन्येभ्यः अधिकः ॥
३-२३७-२३ उपिते न्युप्ते । एवं मच्चित्ते दुर्योधनादीनां च चित्ते
वृद्धहितोपदेशो वृथा भवतीति भावः ॥
३-२३७-२४ मताक्षेण शकुनिना पाण्डवेन च तदानीमेव तान् अविघ्नता ॥
३-२३७-२५ प्रजास्यति अपत्यं अनयिष्यति । क्षपादौ रात्र्यादौ। एतस्
पापस्य फलं अपरिहार्यमिति भावः ॥

---

वन-अध्यय२३८
॥ श्रीः ॥
३.२३८. अध्यायः २३८

Mahabharata - Vana Parva - Chapter Topics
कर्णशकुनिभ्यां दुर्योधनंप्रतिस्ववैभवप्रदर्सनेन पाण्डवानां
दुःखजननाय द्वैतवनगमनचोदना ॥ १ ॥

Mahabharata - Vana Parva - Chapter Text

३-२३८-० (२५२८३)
वैशंपायन उवाच। ३-२३८-०क्ष् (२५८८)
धृतराष्ट्रस्य तद्वाक्यं निशम्य शकुनिस्तदा ।
दुर्योधनमिदं काले कर्णेन सहितोऽब्रवीत् ॥ ३-२३८-१ (२५२८४)
प्रव्राज्य पाण्डवान्वीरान्स्वेन वीर्येण भारत ।
भुङ्क्ष्वेमां पृथिवीमेको दिवि शम्बरहायथा ॥ ३-२३८-२ (२५२८५)
ग्तवाद्यपृथिवी राजन्नखिला सागराम्बरा ।
सपर्वतवनाकारा सहस्थावरजङ्गमा' ॥ ३-२३८-३ (२५२८६)
प्राच्याश्च दाक्षिणात्याश्च पतीच्योदीच्यवासिनः ।
कृताः करप्रदाः सर्वे राजानस्ते नाराधिप ॥ ३-२३८-४ (२५२८७)
या हि सा दीप्यमानेव पाण्डवान्भजडते पुरा ।
साऽद्यलक्ष्मीस्त्वया राजन्नवाप्ता भ्रातृभिः सह ॥ ३-२३८-५ (२५२८८)
इन्द्रप्रस्थगते यां तां दीप्यमानां युधिष्ठिरे ।
अपश्याम श्रियं राजन्सुचिरं शोककर्शिताः ॥ ३-२३८-६ (२५२८९)
सा तु बुद्धिबलेनेयं राज्ञस्तस्मात्तथाविधात् ।
त्वयाक्षिप्ता महाबाहो दीप्यमानेव दृश्यते ॥ ३-२३८-७ (२५२९०)
तथैव तव राजेन्द्रराजानः परवीरहन् ।
शासनेऽधिष्ठिताः सर्वेकिं कुर्म इति वादिनः ॥ ३-२३८-८ (२५२९१)

ते वयं पृथिवी राजन्निखिला सागराम्बरा ।
सपर्वतवना देवी सग्रामनगराकरा ॥ ३-२३८-९ (२५२९२)
नानावनोद्देशवती पत्तनैरुपशोभिता ।
ग्नानाजनपदाकीर्णा स्फीतराष्ट्रा महाहला' ॥ ३-२३८-१० (२५२९३)
नन्द्यमानो द्विजै राजन्भासि नक्षत्रराडिव ।
पौरुषाद्दिवि देवेषु भ्राजसे रश्मिवानिव ॥ ३-२३८-११ (२५२९४)
रुद्रैरिव यमो राजा मरुद्भिरिव वासवः ।
कुरुभिस्त्वं वृतो राजन्भासि नक्षत्रराडिव ॥ ३-२३८-१२ (२५२९५)
यैः स्म ते नाद्रियेताज्ञा न च ये शासने स्थिताः ।
पश्यामस्ताञ्श्रिया हीनान्पाण्डवान्वनवासिनः ॥ ३-२३८-१३ (२५२९६)
श्रूयते हि महाराजसरो द्वैतवनं प्रति ।
वसन्तः पाण्डवाः सार्धं ब्राह्मणैर्वनवासिभिः ॥ ३-२३८-१४ (२५२९७)
सप्रयाहि महाराज श्रिया परमया युतः ।
तापयन्पाण्डुपुत्रांस्त्वं रश्मिवानिव तेजसा ॥ ३-२३८-१५ (२५२९८)
स्तितोराज्येऽच्युतान्राज्याच्छ्रियाहीनाञ्छ्रियावृतः
असमृद्धान्समृद्धार्थः पश्य पाण्डुसुतान्नृप ॥ ३-२३८-१६ (२५२९९)
महाभिजनसंपन्नं भद्रे महति संस्थितम् ।
पाण्डवास्त्वाऽभिवीक्षन्तु ययातिमिव नाहुषां ॥ ३-२३८-१७ (२५३००)
यां श्रियं सुहृदश्चैव दुर्हृदश्च विशांपते ।
पश्यन्ति पौरुषैर्दीप्तां सा समर्था भवत्युत ॥ ३-२३८-१८ (२५३०१)
समस्थो विषमस्थान्हि दुर्हृदो योऽभिवीक्षते ।
जगतीस्थनिवाद्रिस्थः किमतः परमं सुखम् ॥ ३-२३८-१९ (२५३०२)
न पुत्रधनलाभेन न राज्येनापि विन्दति ।
प्रीतिं नृपतिशार्दूल याममित्राधदर्शनात् ॥ ३-२३८-२० (२५३०३)
किंनु तस्य सुखं न स्यादाश्रमे यो धनंजयम् ।
अभिवीक्षेत सिद्धार्थो वल्कलाजिनवाससम् ॥ ३-२३८-२१ (२५३०४)
सुवाससो हि ते भार्या वल्कलाजिनसंवृताम् ।
पश्यन्तु दुःखितां कृष्णां सा च निर्विद्यतां पुनः ॥ ३-२३८-२२ (२५३०५)
विनिन्दतां तथाऽत्मानं जीवितं च धनच्युतम् ।
ग्दाराणां ते श्रियं दृष्ट्वा दीप्तामद्य जनाधिपा' ॥ ३-२३८-२३ (२५३०६)
न तथा हिसभामध्ये तस्या भवितुमर्हति ।
वैमनस्यं यथा दृष्ट्वा तव भार्याः स्वलंकृताः ॥ ३-२३८-२४ (२५३०७)
वैशंपायन उवाच। ३-२३८-२५क्ष् (२५८९)
एवमुक्त्वा तु राजानं कर्णः शकुनिना सह ।
तूर्ष्णीं बभूवतुरुभौ दाक्यान्ते जनमेजय ॥ ३-२३८-२५ (२५३०८)

इति श्रीमन्महाबारते अरण्यपर्वणि धोयात्रापर्वणि
अष्टत्रिंशदधिकद्विशततमोऽध्यायः ॥ २३८ ॥
Mahabharata - Vana Parva - Chapter Footnotes

३-२३८-४ प्रतीच्या उदीच्याश्च देशास्तद्वासिनः ।ते त्वया ॥
३-२३८-१३ नाद्रियेत नादृता ॥
३-२३८-१७ त्वा त्वाम् ॥
३-२३८-१८ समर्था सुहृदां हर्षं शत्रूणां च शोकं दातुमिति शेषः ॥
३-२३८-२० अघं दुःखम् ॥
३-२३८-२२ निर्विद्यतां जीवितादपि विरक्ता भवतु ॥

---

वन-अध्यय२३९
॥ श्रीः ॥
३.२३९. अध्यायः २३९

Mahabharata - Vana Parva - Chapter Topics
कर्णशकुन्यादिभिर्द्वैतवनगमने घोषयात्राया उपायत्वनिर्धारणम् ॥ १ ॥

Mahabharata - Vana Parva - Chapter Text

३-२३९-० (२५३०९)
वैशंपायन उवाच। ३-२३९-०क्ष् (२५९०)
कर्णस्य वचनं श्रुत्वा राजा दुर्योधनस्ततः ।
हृष्टो भूत्वापुनर्दीनो राधेयमिदमब्रवीत् ॥ ३-२३९-१ (२५३१०)
ब्रवीषि यदिदं कर्ण सर्वं मनसि मे स्थितम् ।
न त्वभ्यनुज्ञां लप्स्यामि गमने यत्रपाण्डवाः ॥ ३-२३९-२ (२५३११)
परिदेवति तान्वीरान्धृतराष्ट्रो महीपतिः ।
मन्यतेऽभ्यधिकांश्चापि तपोयोगेन पाण्डवान् ॥ ३-२३९-३ (२५३१२)
अथवाऽप्यनुबुध्येत नृपोऽस्माकं चिकीर्षितम् ।
एतामप्यायतिं रक्षन्नाभ्यनुज्ञातुमर्हति ॥ ३-२३९-४ (२५३१३)
न हि द्वैतवने किंचिद्विद्यतेऽन्यत्प्रयोजनम् ।
उन्माथनमृते तेषां वनस्थानामपि द्विषाम् ॥ ३-२३९-५ (२५३१४)
जानासिहि यथा क्षत्ता द्यूतकाल उपस्थिते ।
अब्रवीद्यच्च मां त्वां च सौबलं वचनं तदा ॥ ३-२३९-६ (२५३१५)
तानिसर्वाणि वाक्यानि यच्चान्यत्परिदेवितम् ।
विचिन्त्य निश्चय गच्छे गमनायेतराय वा ॥ ३-२३९-७ (२५३१६)
ममापि हिमहान्हर्षो यदहं भीमफल्गुनौ ।

क्लिष्टावरण्ये पश्येयं कृष्णया सहिताविति ॥ ३-२३९-८ (२५३१७)
न तथा ह्याप्नुयां प्रीतिमवाप्य वसुधामिमाम् ।
दृष्ट्वा यथा पाण्डुसुतान्वल्कलाजिनवाससः ॥ ३-२३९-९ (२५३१८)
किंनु स्यादधिकं तस्माद्यदहं द्रुपदात्मजाम् ।
द्रौपदीं कर्ण पश्येयं काषायवसनां वने ॥ ३-२३९-१० (२५३१९)
यदि मां दर्मराजश्च भीमसेनश्च पाण्डवः ।
युक्तं रपरमया लक्ष्म्या पश्येतां जीवितं भवेत् ॥ ३-२३९-११ (२५३२०)
उपायं न तु पश्यामि येन गच्छेम तद्वनम् ।
यथाचाभ्यनुजानीयाद्गच्छन्तं मां महीपतिः ॥ ३-२३९-१२ (२५३२१)
स सौबलेन सहितस्तथा दुःशासनेन च ।
उपायं पश्य रनिपुणं येन गच्छेम तद्वनम् ॥ ३-२३९-१३ (२५३२२)
अहमप्यनुगच्छामि गमनायेतराय च ।
कल्यमेव गमिष्यामि समीपं पार्थिवस्य ह ॥ ३-२३९-१४ (२५३२३)
मयि तत्रोपविष्टे तु भीष्मे च कुरुसत्तमे ।
उपायो यो भवेद्दृष्टस्तं ब्रूयाः सहसौबलः ॥ ३-२३९-१५ (२५३२४)
ततो भीष्मस्य राज्ञश्च निशम्य रगमनं प्रति ।
व्यवसायं करिष्येऽहमनुनीय पितामहम् ॥ ३-२३९-१६ (२५३२५)
तथेत्युक्त्वा तु ते सर्वेग्मुरावसथान्प्रति ।
व्युषितायां रजन्यां तु कर्णो राजानमभ्ययात् ॥ ३-२३९-१७ (२५३२६)
ततो दुर्योधनं कर्णः प्रहसन्निदमब्रवीत् ।
उपायः परिदृष्टोऽयं तं निबोधजनेश्वर ॥ ३-२३९-१८ (२५३२७)
घोषा द्वैतवने सर्वेत्वत्प्रतीक्षा नराधिप ।
घोषयात्रापदेशेन गमिष्यामो न संशयः ॥ ३-२३९-१९ (२५३२८)
उचितं हि सदा गन्तुं घोषयात्रां विशांपते ।
एवं चेत्त्वां पिता राजन्समनुज्ञातुमर्हति ॥ ३-२३९-२० (२५३२९)
तथा कथयमानौ तु घोषयात्राविनिश्चयम् ।
गान्धारराजः शकुनिरित्युवाच हसन्निव ॥ ३-२३९-२१ (२५३३०)
उपायोऽयंमया दृष्टो गमनाय निरामयः ।
अनुज्ञास्यतिनो राजा चोदयिष्यति चाप्युत ॥ ३-२३९-२२ (२५३३१)
घोषा द्वैतव्रने सर्वेत्वत्प्रतीक्षा नराधिप ।
घोषयात्रापदेशेन गमिष्यामः सरः प्रति ॥ ३-२३९-२३ (२५३३२)
ततः प्रहसिताः सर्वे तेऽन्योन्यस्य तलान्ददुः ।
तदेव च विनिश्चेत्य ददृशुः कुरुसत्तमम् ॥ ३-२३९-२४ (२५३३३)

इति श्रीमन्महाभारते अरण्यपर्वणि घोषयात्रापर्वणि
एकोनचत्वारिंशदधिकद्विशततमोऽध्यायः ॥

३-२३९-४ आयतिमुत्तरकालम् ॥
३-२३९-७ इतरायावस्थानाय ॥
३-२३९-११ लक्ष्म्या उपेतं पश्येतां चेज्जीवितं युक्तमिति संबन्धः ॥
३-२३९-१४ अह्मप्यद्यनिश्चित्य इति झ ।पाठः। कल्यं प्रातः ॥
३-२३९-१५ वचो भीष्मस्य इति झ ।पाठः ॥
३-२३९-१९ घोषा गोव्रजाः ॥
३-२३९-२२ अयमुपायो घोषयात्रैव ॥
३-२३९-२४ तलान् हस्ततलानि ॥

---

वन-अध्यय२४०
॥ श्रीः ॥
३.२४०. अध्यायः २४०

Mahabharata - Vana Parva - Chapter Topics
दुर्योधनेन घोषयात्राव्याजेनानुजादिभिः सहद्वैतवनंप्रतिरामनम् ॥ १ ॥

Mahabharata - Vana Parva - Chapter Text

३-२४०-० (२५३३४)
वैसंपायन उवाच। ३-२४०-०क्ष् (२५९१)
धृतराष्ट्रं ततः सर्वेददृशुर्जनमेजय ।
दृष्ट्वा सुखमथो राज्ञः पृष्टा राज्ञा च भारत ॥ ३-२४०-१ (२५३३५)
ततस्तैर्विहितः पूर्वं संगवो नाम वल्लवः ।
समीपस्थास्तदा गावो धृतराष्ट्रे न्यवेदयत् ॥ ३-२४०-२ (२५३३६)
अनन्तरं च राधेयः शकुनिश्च विशांपते ।
आहतुः पार्थिवश्रेष्ठं धृतराष्ट्रं जनाधिपम् ॥ ३-२४०-३ (२५३३७)
रमणीयेषु देशेषु घोषाः संप्रति कौरव ।
स्मारणे समयः प्राप्तो वत्सानामपि चाङ्कनम् ॥ ३-२४०-४ (२५३३८)
मृगया चोचिता राजन्नस्मिन्काले सुतस्यते ।
दुर्योधनस्य गमनं त्वमनुज्ञातुमर्हसि ॥ ३-२४०-५ (२५३३९)
धृतराष्ट्र उवाच। ३-२४०-६क्ष् (२५९२)
मृगया शोभना तात गवां हि समवेक्षणम् ।
विस्रम्भस्तु न गन्तव्यो वल्लवानामिति स्मरे ॥ ३-२४०-६ (२५३४०)
ते तु तत्रनरव्याघ्राः समीप इति नः श्रुतम् ।

अतो नाभ्यनुजानामि गमनं तत्र वः स्वयम् ॥ ३-२४०-७ (२५३४१)
छद्मना निर्जितास्ते तु कर्शिताश्च महावने ।
तपोनित्याश्च राधेय समर्थाश्च महारथाः ॥ ३-२४०-८ (२५३४२)
धर्मराजो न संक्रुद्ध्येद्भीमसेनस्त्वमर्षणः ।
यज्ञसेनस् दुहिता तेज एवतु केवलम् ॥ ३-२४०-९ (२५३४३)
यूयंचाप्यपराध्येयुर्दर्पमोहसमन्विताः ।
ततो विनिर्दहेयुस्ते तपसा हि समन्विताः ॥ ३-२४०-१० (२५३४४)
अथवा सायुधावीरा मन्युनाऽभिपरिप्लुताः ।
सहिता बद्धनिस्त्रिंशा दहेयुः शस्त्रतेजसा ॥ ३-२४०-११ (२५३४५)
अथ यूयं बहुत्वात्तान्नारभध्वं कथंचन ।
अनार्यं परमं तत्स्यादशक्यं तच्च वै मतम् ॥ ३-२४०-१२ (२५३४६)
उषितो हि महाबाहुरिन्द्रलोके धनंजयः ।
दिव्यान्यस्त्राण्यवाप्याथ ततः प्रत्यागतो वनं ॥ ३-२४०-१३ (२५३४७)
अकृतास्त्रेण पृथिवी जिता बीभत्सुना पुरा ।
किं पुनः सकृतास्त्रोऽद्य न हन्याद्वो महारथः ॥ ३-२४०-१४ (२५३४८)
अथवा मद्वचः श्रुत्वा तत्र यत्ता भविष्यथ ।
उद्विग्नवासा विस्रब्धा दुःखं तत्रगमिष्यथ ॥ ३-२४०-१५ (२५३४९)
अथवा सैनिकाः केचिदपकुर्युर्युधिष्ठिरे ।
तदबुद्धिकृतंकर्म दोषमुत्पादयेच्च वः ॥ ३-२४०-१६ (२५३५०)
तस्मादन्ये नरा यान्तु स्मारणायाप्तकारिणः ।
न स्वयं तत्रगमनं रोचये तव भारत ॥ ३-२४०-१७ (२५३५१)
शकुनिरुवाच। ३-२४०-१८क्ष् (२५९३)
धर्मज्ञः पाण्डवो ज्येष्ठः प्रतिज्ञातं च संसदि ।
तेन द्वादशवर्षाणि वस्तव्यानीति भारत ॥ ३-२४०-१८ (२५३५२)
अनुवृत्ताश्च रतं सर्वे पाण्डवा धर्मचारिणः ।
युधिष्ठिरस्तु कौन्तेयो न नः कोपं करिष्यति ॥ ३-२४०-१९ (२५३५३)
मृगयां चैव नो गन्तुमिच्छा संवर्धते भृशम् ।
स्मारणं तु चिकीर्षामो न तु पाण्डवदर्सनम् ॥ ३-२४०-२० (२५३५४)
न चानार्यसमाचारः कश्चित्तत्र भविष्यति ।
न च तत्र गमिष्यामो यत्र तेषां प्रतिश्रयः ॥ ३-२४०-२१ (२५३५५)
वैशंपायन उवाच। ३-२४०-२२क्ष् (२५९४)
एवमुक्तः शकुनिना धृतराष्ट्रो जनेश्वरः ।
दुर्योधनं सहामात्यमनुजज्ञे न कामतः ॥ ३-२४०-२२ (२५३५६)
अनुज्ञातस्तु गान्धारिः कर्णेन सहितस्तदा ।
निर्ययौ भरतश्रेष्ठो बलेन महता वृतः ॥ ३-२४०-२३ (२५३५७)
दुःशासनेन च तथा सौबलेन च धीमता ।

संवृतो भ्रातृभिश्चान्यैः स्त्रीभिश्चापि सहस्रशः ॥ ३-२४०-२४ (२५३५८)
तं निर्यान्तं महाबाहुं द्रष्टुं द्वैतवनं सरः ।
पौराश्चानुययुः सर्वेसहदारा वनं च तत् ॥ ३-२४०-२५ (२५३५९)
अष्टौ रथसहस्राणि त्रीणि नागायुतानि च ।
पत्तयो बहुसाहस्रा हयाश्च नवतिः शताः ॥ ३-२४०-२६ (२५३६०)
शकटापणवेशाश्च वणिजो वन्दिनस्तथा ।
नराश्च मृगयाशीलाः शतशोऽथ सहस्रशः ॥ ३-२४०-२७ (२५३६१)
ततः प्रयाणे नृपतेः सुमहानभवत्स्वनः ।
प्रावृषीव महावायोरुत्थितस्य विशांपते ॥ ३-२४०-२८ (२५३६२)
गव्यूतिमात्रेन्यवसद्राजा दुर्योधनस्तदा ।
प्रयातो वाहनैः सर्वैस्ततो द्वैतवनं सरः ॥ ३-२४०-२९ (२५३६३)

इति श्रीमन्महाभारते अरण्यपर्वणि घोषयात्रापर्वणि
चत्वारिंशदधिकद्विशततमोऽध्यायः ॥ २४० ॥
Mahabharata - Vana Parva - Chapter Footnotes

३-२४०-२ समङ्गो नाम इति झ । पाठः ॥
३-२४०-४ स्मारणे स्मरणहेतौ कर्मणि गवां संख्यापूर्वकं
वयोवर्णजातिनाम्नां लेखने ॥
३-२४०-७ ते पाण्डवाः ॥
३-२४०-९ तेजोऽग्निरेव ॥
३-२४०-२७ वेशो वेश्याजनाश्रयः ॥
३-२४०-२९ गव्यूतिः क्रोशद्वयम् ॥

---

वन-अध्यय२४१
॥ श्रीः ॥
३.२४१. अध्यायः २४१

Mahabharata - Vana Parva - Chapter Topics
द्वैतवने सरोऽभितः क्रीडास्थाननिर्माणायाज्ञसानां
दुर्योधनभृत्यानां पूर्वमेव तत्रागतैर्गन्धर्वैः प्रतिवारणम्
॥ १ ॥
भृत्यैर्गन्धर्वकृतनिवारणं निवेदितेन दुर्योधनेन
तेषामुत्सारणाय सेनाप्रेषणम् ॥ २ ॥
गन्धर्वैः परुषभाषणैर्भोपितैर्भटैर्दुर्योधनं प्रति
तन्निवेदनम् ॥ ३ ॥

३-२४१-० (२५३६४)
वैशंपायन उवाच। ३-२४१-०क्ष् (२५९५)
अथ दुर्योधनो राजा तत्रतत्र वने वसन् ।
जगाम घोषानभितस्तत्र चक्रे निवेशनम् ॥ ३-२४१-१ (२५३६५)
रमणीये समाज्ञाते सोदके समहीरुहे ।
देशे सर्वगुणोपेते चक्रुरावसथान्नराः ॥ ३-२४१-२ (२५३६६)
तथैव तत्समीपस्थान्पृथगावसथान्बहून् ।
कर्णस्य शकुनेश्चैव भ्रातॄणां चैव सर्वशः ॥ ३-२४१-३ (२५३६७)
पश्यन्तस्ते तदा गावः शतशोऽथ सहस्रशः ।
अङ्कैर्लक्षैश्च ताः सर्वा लक्षयामास पार्थिवः ॥ ३-२४१-४ (२५३६८)
अङ्कयामास वत्सांश्च जज्ञे चोपसृतांस्त्वपि ।
बालवत्साश्च यां गावः कालयामास ता अपि ॥ ३-२४१-५ (२५३६९)
अथ स स्मारणं कृत्वा लक्षयित्वा त्रिहायनान् ।
वृतो गोपालकैः प्रीतो व्याहरत्कुरुनन्दनः ॥ ३-२४१-६ (२५३७०)
स च पौरजनः सर्वः सर्वः सैनिकाश्च सहस्रशः ।
यथोपजोषं चिक्रीडुर्वने तस्मिन्यथाऽमराः ॥ ३-२४१-७ (२५३७१)
ततोऽध्वगमनाच्छ्रान्तं कुशला नृत्यवादितैः ।
धार्तराष्ट्रमुपातिष्ठन्कन्याश्चैव स्वलंकृताः ॥ ३-२४१-८ (२५३७२)
स स्त्रीगणवृतो राजा प्रहृष्टः प्रददौ वसु ।
तेभ्यो यथार्हमन्नानि पानानि विविधानि च ॥ ३-२४१-९ (२५३७३)
ततस्ते सहिताः सर्वे तरक्षून्महिषान्मृगान् ।
गवयर्क्षवराहांश्च समन्तात्पर्यवारयन् ॥ ३-२४१-१० (२५३७४)
स ताञ्छरैर्विनिर्भिद्य गजांश्च सुबहून्वने ।
रमणीयेषु देशेषु ग्राहयामास वै मृगान् ॥ ३-२४१-११ (२५३७५)
गोरसानुपयुञ्जान उपभोगांशच् भारत ।
पश्यन्स रमणीयानि वनान्युपवनानि च ॥ ३-२४१-१२ (२५३७६)
मत्तभ्रमरजुष्टानि बर्हिणाभिरुतानि च ।
अगच्छदानुपूर्व्येण पुण्यं द्वैतवनं सरः ॥ ३-२४१-१३ (२५३७७)
मत्तभ्रमरसंजुष्टं नीलकण्ठरवाकुलम् ।
सप्तच्छदसमाकीर्णं पुन्नागवकुलैर्युतम् ॥ ३-२४१-१४ (२५३७८)
ऋद्ध्या परमया युक्तो महेन्द्र इव वज्रभृत् ।
यदृच्छया च तत्रस्थो धर्मपुत्रो युधिष्ठिरः ॥ ३-२४१-१५ (२५३७९)
ईजे राजर्षियज्ञेन साद्यस्केन विशांपते ।
दिव्येन विधिना चैव वन्येन कुरुसत्तम ॥ ३-२४१-१६ (२५३८०)

गविद्भिः सहितो धीमान्ब्राह्मणैर्वनवासिभिः'।
कृत्वा निवेशमभितः सरसस्तस्य कौरव ।
द्रौपद्या सहितो धीमान्धर्मपत्न्या नराधिपः ॥ ३-२४१-१७ (२५३८१)
ततो दुर्योधनः प्रेष्यानादिदेश सहानुजः ।
आक्रीडावसथाञ्शीघ्रं कुरुध्वं सरसोऽभितः ॥ ३-२४१-१८ (२५३८२)
ते तथेत्येव कौरव्यमुक्त्वा वचनकारिणः ।
चिकीर्षन्तस्तदाक्रीडाञ्जग्मुर्द्वैतवनं सरः ॥ ३-२४१-१९ (२५३८३)
सेनाग्र्यं धार्तराष्ट्रस् प्राप्तं द्वैतवनं सरः ॥ ३-२४१-२० (२५३८४)
प्रविशन्तं वनद्वारि गन्धर्वाः समवारयन् ।
तत्र गन्धर्वराजो वै पूर्वमेव विशांपते ।
कुबेरभवनाद्राजन्नाजगाम गणावृतः ॥ ३-२४१-२१ (२५३८५)
गणैरप्सरसां चैव त्रिदशानां तथाऽऽत्मजैः ।
विहारशीलैः क्रीडार्थं तेन तत्संवृतं सरः ॥ ३-२४१-२२ (२५३८६)
तेन तत्संवृतं दृष्ट्वा ते राजपरिचारकाः ।
प्रतिजग्मुस्ततो राजन्यत्र दुर्योधनो नृपः ॥ ३-२४१-२३ (२५३८७)
स तु तेषां वचः श्रुत्वा सैनिकान्युद्धदुर्मदान् ।
प्रेषयामास कौरव्य उत्सारयत तानिति ॥ ३-२४१-२४ (२५३८८)
तस्य तद्वचनं श्रुत्वा राज्ञः सेनाग्रयायिनः ।
सरो द्वैनवनं गत्वा गन्धर्वानिदमब्रुवन् ॥ ३-२४१-२५ (२५३८९)
राजा दुर्योधनो नाम धृतराष्ट्रसुतो बली ।
चिक्रीडिषुरिहायाति तदर्थमपसर्पत ॥ ३-२४१-२६ (२५३९०)
एवमुक्तास्तु गन्धर्वाः रप्रहसन्तो विशांमपते ।
प्रत्यब्रुवंस्तान्पुरुषानिदं हि परुषं वचः ॥ ३-२४१-२७ (२५३९१)
न चेतयति वो राजा मन्दबुद्धिः सुयोधनः ।
योऽस्मानाज्ञापयत्येवं वश्यानिव दिवौकसः ॥ ३-२४१-२८ (२५३९२)
यूयं मुमूर्षवश्चापि मन्दप्रज्ञा न संशयः ।
ये तस् वचनादेवमस्मान्ब्रूथ विचेतसः ॥ ३-२४१-२९ (२५३९३)
गच्छध्वं त्वरिताः सर्वे यत्र राजा स कौरवः ।
न चेदद्यैव गच्छध्वं धर्मराजनिवेशनम् ॥ ३-२४१-३० (२५३९४)
एवमुक्तास्तु गन्धर्वै राज्ञः सेनाग्रयायिनः ।
संप्राद्रवन्यतो राजा धृतराष्ट्रसुतोऽभवत् ॥ ३-२४१-३१ (२५३९५)

इति श्रीमन्महाभारते अरण्यपर्वणि घोषयात्रापर्वणि
एकचत्वारिंशदधिकद्विशततमोऽध्यायः ॥ २४१ ॥
Mahabharata - Vana Parva - Chapter Footnotes

३-२४१-४ स ददर्श तदा गावः इति झ
। पाठः। अङ्कैश्चिह्नैः। लक्षैः संख्यानैः। लक्षा नपुंसि
संख्यायामिति मेदिनी ॥
३-२४१-५ जज्ञे ज्ञातवान् । उपसृतान् दमनार्हान् वत्सतरान्समीपागतान्वा
कालयामास संख्यातवान् ॥
३-२४१-६ त्रिहायनांस्त्रिवर्षान्वृषान् । व्याहरत् विजहार ॥
३-२४१-७ यथोपजोषं यथारुचि ॥
३-२४१-१६ साद्यस्केन एकाहसाध्येने ॥
३-२४१-२२ आत्मजैर्जयन्तादिभिः सहेति शेषः ॥

---

वन-अध्यय२४२
॥ श्रीः ॥
३.२४२. अध्यायः २४२

Mahabharata - Vana Parva - Chapter Topics
गन्धर्वैःसह कौरवाणामायोधनम् ॥ १ ॥
चित्रसेनादिभिर्विरथीकृतेन कर्णेन रणाङ्कणात्पलायनम् ॥ २ ॥

Mahabharata - Vana Parva - Chapter Text

३-२४२-० (२५३९६)
वैशंपायन उवाच। ३-२४२-०क्ष् (२५९६)
ततस्ते सहिताः सर्वे दुर्याधनमुपागमन् ।
अब्रुवंश्च महाराज यदूचुः कौरवं प्रति ॥ ३-२४२-१ (२५३९७)
गन्धर्वैर्वारिते सैन्ये धार्तराष्ट्रः प्रतापवान् ।
अमर्षपूर्णः सैन्यानि प्रत्यभाषत भारत ॥ ३-२४२-२ (२५३९८)
शासतैनानधर्मज्ञान्मम विप्रियकारिणः ।
यदि प्रक्रीडते सर्वैर्देवैः सह शचीपतिः ।
ग्वयमत्र यथा प्रीता क्रीडिष्यामो निरङ्कुशं' ॥ ३-२४२-३ (२५३९९)
दुर्योधनवचः श्रुत्वा धार्तराष्ट्रा महाबलाः ।
सर्व एवाभिसन्नद्धा योधाश्चापि सहस्रशः ॥ ३-२४२-४ (२५४००)
ततः प्रमथ्य सर्वांस्तांस्तद्वनं विविशुर्बलात् ।
सिंहनादेन महता पूरयन्तो दिशो दश ॥ ३-२४२-५ (२५४०१)
ततोऽपरैरवार्यन्त गन्धर्वैः कुरुसैनिकाः ।
ग्साम्नैव रतत्र विक्रान्ता मा साहसमिति प्रभो' ॥ ३-२४२-६ (२५४०२)
ते वार्यमाणा गन्धर्वैः साम्नैव वसुधायिप ।

ताननादृत्य गन्धर्वांस्तद्वनं विविशुर्महत् ॥ ३-२४२-७ (२५४०३)
यदि वाता न तिष्ठन्ति धार्तराष्ट्राः सराजकाः ।
ततस्ते खेचराः सर्वे चित्रसेने न्यवेदयन् ॥ ३-२४२-८ (२५४०४)
गन्धर्वराजस्तान्सर्वानब्रवीत्कौरवान्प्रति ।
अनार्याञ्शासतेत्येतांश्चित्रसेनोऽत्यमर्षणः ॥ ३-२४२-९ (२५४०५)
अनुज्ञाताश्च गन्धर्वाश्चित्रसेनेन भारत ।
प्रगृहीतायुधाः सर्वे धार्तराष्ट्रानभिद्रवन् ॥ ३-२४२-१० (२५४०६)
तान्दृष्ट्वाऽऽपततः शीघ्रान्गन्धर्वानुद्यतायुधान् ।
प्राद्रवंस्ते दिशः सर्वे धार्तराष्ट्रस्य पश्यतः ॥ ३-२४२-११ (२५४०७)
तान्दृष्ट्वा द्रवतः सर्वान्धार्तराष्ट्रान्पराङ्मुखान् ।
राधेयस्तु तदा वीरो नासीत्तत्रपराङ्मुखः ॥ ३-२४२-१२ (२५४०८)
आपतन्तीं तु संप्रेक्ष्य गन्धर्वाणां महाचमूम् ।
महता शरवर्षेण राधेयः प्रत्यवारयत् ॥ ३-२४२-१३ (२५४०९)
क्षुरप्रैर्विशिखैर्भल्लैर्वत्सदन्तैस्तथाऽऽयसैः ।
गन्धर्वाञ्शतशोऽभिघ्नँल्लघुत्वात्सूतनन्दनः ॥ ३-२४२-१४ (२५४१०)
पातयन्नुत्तमाङ्गानि गन्धर्वाणां महारथः ।
क्षणएन व्यधमत्सर्वां चित्रसेनस्य वाहिनीम् ॥ ३-२४२-१५ (२५४११)
ते वध्यमाना गन्धर्वाः सूतपुत्रेण धीमता ।
भूय एवाभ्यवर्तन्त शततशोऽथ सहस्रशः ॥ ३-२४२-१६ (२५४१२)
गन्धर्वभूता पृथिवी क्षणेन समपद्यत ।
आपतद्भिर्महावेगैश्चित्रसेनस्य सैनिकैः ॥ ३-२४२-१७ (२५४१३)
अथ दुर्योधनो राजा शकुनिश्चापि सौबलः ।
दुःशासनो विकर्णश्च ये चान्ये धृतराष्ट्रजाः ।
न्यहनंस्तत्तदा सैन्यं रथैर्गरुडनिःस्वनैः ॥ ३-२४२-१८ (२५४१४)
सैन्यमायोधितं दृष्ट्वाकर्णो राजन्न मृष्यत ॥ ३-२४२-१९ (२५४१५)
महता रथसङ्घेन रथचारेण चाप्युत ।
वैकर्तनं परीप्सन्तो गन्धर्वाः प्रत्यवारयन् ।
ततः संन्यपतन्सर्वे गन्धर्वाः कौरवं प्रति ॥ ३-२४२-२० (२५४१६)
तदा सुतुमुलं युद्धमभवद्रोमहर्षणम् ।
ततस्ते मृदवोऽभूवनगन्धर्वाः शरपीडिताः ॥ ३-२४२-२१ (२५४१७)
उच्चुक्रुशुश्च कौरव्यागन्धर्वान्प्रेक्ष्य पीडितान् ॥ ३-२४२-२२ (२५४१८)
गन्धर्वांस्त्रासितान्दृष्ट्वा चित्रसेनो ह्यमर्षणः ।
उत्पपातासनात्क्रुद्धो वधे तेषां समाहितः ॥ ३-२४२-२३ (२५४१९)
ततो मायास्त्रमास्थाय युयुधे चित्रमार्गवित् ।
गवियत्संछादयामास न ववौ तत्र मारुतः' ॥ ३-२४२-२४ (२५४२०)
हस्त्यारोहा हताः पेतुर्हस्तिभिः सह भारत ।

हयारोहाः सह हयै रथैश्च रथिनस्तदा ॥ ३-२४२-२५ (२५४२१)
पत्तयश्च तथापेतुर्विशस्ताः शरवृष्टिभिः'।
तयाऽमुह्यन्त कौरव्याश्चित्रसेनस्य मायया ॥ ३-२४२-२६ (२५४२२)
एकैको हि तदा योधो धार्तारष्ट्रस्य भारत ।
पर्यवार्यत गन्धर्वैर्दशभिर्दशभिर्युधि ॥ ३-२४२-२७ (२५४२३)
ततः संपीड्यमानास्ते बलेन महता तदा ।
प्राद्रवन्त रणे भीता यत्रराजा युधिष्ठिरः ॥ ३-२४२-२८ (२५४२४)
भज्यमानेष्वनीकेषु धार्तराष्ट्रेषु सर्वशः ।
कर्णो वैकर्तनो राजंस्तस्थौ गिरिरिवाचलः ॥ ३-२४२-२९ (२५४२५)
दुर्योधनश्च तेजस्वी शकुनिश्चापि सौबलः ।
गन्धर्वान्योधयामासुः समरे भृशविक्षताः ॥ ३-२४२-३० (२५४२६)
सर्व एव तु गन्धर्वाः शतशोऽथ सहस्रशः ।
जिघांसमानाः संरब्धाः कर्णमभ्यद्रवत्रणे ॥ ३-२४२-३१ (२५४२७)
असिभिः पट्टसैः शूलैर्गदाभिश्च महाबलाः ।
सूतपुत्रं जिघांसन्तः समन्तात्पर्यवारयन् ॥ ३-२४२-३२ (२५४२८)
अन्येऽस्य युगमच्छिन्दन्ध्वजमन्ये न्यपातयन् ।
ईषामन्ये हयानन्ये सूतमन्ये न्यपातयन् ॥ ३-२४२-३३ (२५४२९)
अन्ये च्छत्रं वरूथं च बन्धुरं च तथा परे ।
ग‍अन्ये संचूर्णयामासुश्छत्रे चाक्षौ तथा परे ॥' ३-२४२-३४ (२५४३०)
गन्धर्वा बहुसाहस्रास्तिलशो व्यधमन्रथम् ॥
ततो रथादवप्लुत्य सूतपुत्रोऽसिचर्मभृत्। ३-२४२-३५ (२५४३१)
ग‍अंसावलम्बितधनुर्धावमानो महाबलः'।
विकर्णरथमास्थाय मोक्षायाश्वानचोदयत् ॥ ३-२४२-३६ (२५४३२)

इति श्रीमन्महाभारते अरण्यपर्वणि घोषयात्रापर्वणि
द्विचत्वारिंशदधिकद्विशततमोऽध्यायः ॥ २४२ ॥
Mahabharata - Vana Parva - Chapter Footnotes

३-२४२-१९ भूयश्च योधयामासुः कृत्वा कर्णमथाग्रतः । महता
इति झ। पाठः। न मृष्यत नामृष्यत। अडभाव आर्षः ॥
३-२४२-३४ वरूथं रथगुप्तिम् । बन्धुरं रथवन्धनानि ॥

---

वन-अध्यय२४३
॥ श्रीः ॥
३.२४३. अध्यायः २४३

Mahabharata - Vana Parva - Chapter Topics

चित्ररथेन रणे पराजितस्य दुर्योधनस्य बन्धनपूर्वकं
स्वरथारोपणम् ॥ १ ॥
इतरैर्गन्धर्वैर्दुर्योधनभ्रतॄणां तद्दाराणां वन्धनम् ॥ २ ॥
दुर्योधनामात्यादिभिर्युधिष्ठिराय तन्निवेदने भीमेन तदनुमोदनम् ॥ ३ ॥

Mahabharata - Vana Parva - Chapter Text

३-२४३-० (२५४३३)
वैशंपायन उवाच। ३-२४३-०क्ष् (२५९७)
गन्धर्वैस्तु महाराज भग्ने कर्णे महारथे ।
संप्राद्रवच्चमूः सर्वा धार्तराष्ट्रस्य पश्यतः ॥ ३-२४३-१ (२५४३४)
तान्दृष्ट्वा द्रवतः सर्वान्धार्तराष्ट्रान्पराङ्मुखान् ।
दुर्योधनो महाराजो नासीत्तत्र पराङ्मुखः ॥ ३-२४३-२ (२५४३५)
तामापतन्तीं संप्रेक्ष्य गन्धर्वाणां महाचमूम् ।
महता शरवर्षेण सोऽभ्यवर्षदरिंदमः ॥ ३-२४३-३ (२५४३६)
अचिन्त्य शरवर्षं तु गन्धर्वास्तस्य तं रथम् ।
दुर्योधनं जिघांसन्तः समन्तात्पर्यवारयन् ॥ ३-२४३-४ (२५४३७)
युगमीषां वरूथं च तथैव ध्वजसारथी ।
अश्वांस्त्रिवेणुमक्षं च तिलशो व्यधमञ्छरैः ॥ ३-२४३-५ (२५४३८)
दुर्योधनं चित्रसनो विरथं पतितं भुवि ।
अभिद्रुस्य महाबाहुर्जीवग्राहमथाग्रहीत् ॥ ३-२४३-६ (२५४३९)
ग्तस्य बाहू महाराज बद्ध्वा रज्ज्वा महारथम् ।
आरोप्यस महाबाहुश्चित्रसेनो ननाद ह' ॥ ३-२४३-७ (२५४४०)
तस्मिन्गृहीते राजेन्द्र स्थितं दुःशासनं रथे ।
पर्यगृह्णन्त गन्धर्वाः परिवार्य समन्ततः ॥ ३-२४३-८ (२५४४१)
विधिशतिं चित्रसेनमादायान्ये विदुद्रुवुः ।
विन्दानुविन्दावपरे राजदारांश्च सर्वशः ॥ ३-२४३-९ (२५४४२)
सेनास्तु धार्तराष्ट्रस्य गन्धर्वैः समभिद्रुताः ।
पूर्वं प्रभग्नैः सहिताः पाण्डवानभ्ययुस्तदा ॥ ३-२४३-१० (२५४४३)
शकटापणवेशाश्च यानयुग्यं च सर्वशः ।
शरणं पाण्डवाञ्जग्मुर्ह्रियमाणे महीपतौ ॥ ३-२४३-११ (२५४४४)
सैनिका ऊचुः। ३-२४३-१२क्ष् (२५९८)
प्रियदर्शी महाबाहो धार्तराष्ट्रो महाबलः ।
गन्धर्वैर्ह्रियते राजा पार्थास्तमनुधावत ॥ ३-२४३-१२ (२५४४५)
दुःशासनो दुर्विषहो दुर्मुखो दुर्मुखो दुर्जयस्तथा ।
बद्ध्वा ह्रियन्ते गन्धर्वै राजदाराश्च सर्वशः ॥ ३-२४३-१३ (२५४४६)

इतिदुर्योधनामात्याः क्रोशन्तो राजगृद्धिनः ।
आर्ता दीनास्ततः सर्वे युधिष्ठिरमुपागमन् ॥ ३-२४३-१४ (२५४४७)
तांस्तथा व्यथितान्दीनान्भिक्षमाणान्युधिष्ठिरम् ।
वृद्धान्दुर्योधनामात्यान्भीमसेनोऽभ्यभाषत ॥ ३-२४३-१५ (२५४४८)
महता हि प्रयत्नेन संनह्य गजवाजिभिः ।
अन्यथा वर्तमानानामर्थो जातोऽयमन्यथा ॥ ३-२४३-१६ (२५४४९)
अस्माभिर्यदनुष्ठेयं गन्धर्वैस्तदनुष्ठितम् ॥ ३-२४३-१७ (२५४५०)
दुर्मन्त्रितमिदं तावद्राज्ञो दुर्द्यूतदेविनः ।
ग्दीनान्दुर्योधनस्यास्मान्द्रष्टुकामस्य दुर्मतेः' ॥ ३-२४३-१८ (२५४५१)
द्वेष्टारमन्ये क्लीवस्य घातयन्तीति नः श्रुतम् ।
इदं कृतं नः प्रत्यक्षं गन्धर्वैरतिमानुषम् ॥ ३-२४३-१९ (२५४५२)
दिष्ट्या लोके पुमानस्ति कश्चिदस्मत्प्रिये स्थितः ।
येनास्माकं हृतो भार आसीनानां सुखावहः ॥ ३-२४३-२० (२५४५३)
शीतवातातपसहांस्तपसा चैव कर्शितान् ।
समस्थो विषमस्थान्हि द्रष्टुमिच्छति दुर्मतिः ॥ ३-२४३-२१ (२५४५४)
अधर्मचारिणस्तस्य कौरव्यस्य दुरात्मनः ।
ये शीलमनुवर्तन्ति ते पश्यन्ति पराभवम् ॥ ३-२४३-२२ (२५४५५)
अधर्मो हि कृतस्तेन येनैतदुपलक्षितम् ।
अनृशंसास्तु कौन्तेयास्तत्प्रत्यक्षं ब्रवीमि वः ॥ ३-२४३-२३ (२५४५६)
एवं ब्रुवाणं कौन्तेयं भीमसेनमपस्वरम् ।
न कालः परुषस्यायमिति राजाऽभ्यभाषत ॥ ३-२४३-२४ (२५४५७)

इति श्रीमन्महाभारते अरण्यपर्वणि घोषयात्रापर्वणि
त्रिचत्वारिंशदधिकद्विशततमोऽध्यायः ॥ २४३.।
Mahabharata - Vana Parva - Chapter Footnotes

३-२४३-६ जीवग्राहं जीवन्तमेव गृहीत्वेति णमुलन्तम्
। कषादित्वादग्रहीदित्यनुप्रयोगः ॥
३-२४३-१८ राज्ञो युधिष्ठिरस्य ॥
३-२४३-१९ क्लीबस्य अशक्तत्वात् ॥
३-२४३-२३ येनैतदुपशिक्षितम् इति झ । पाठः ॥
३-२४३-२४ अपस्वरं क्रोधेन विकलवर्णं यथा स्यात्तथा ब्रुवाणम् ॥

---

वन-अध्यय२४४
॥ श्रीः ॥
३.२४४. अध्यायः २४४

Mahabharata - Vana Parva - Chapter Topics
भीमेन युधिष्ठिरंप्रति दुर्योधनकृतापनयानुस्मनारणपूर्वकं तद्विमोचनस्यानौचित्यप्रतिपादने युधिष्ठिरेण पुनस्तंप्रति तच्चोदनायामर्जुनेन तत्प्रतिज्ञानम् ॥१ ॥

Mahabharata - Vana Parva - Chapter Text

३-२४४-० (२५४५८)
यधिष्ठिर उवाच। ३-२४४-०क्ष् (२५९९)
अस्मानभिगतांस्तात भयार्ताञ्छरणैषिणः ।
कौरवान्विषमप्राप्तान्कथं ब्रूयास्त्वमीदृशम् ॥ ३-२४४-१ (२५४५९)
भवन्ति भेदा ज्ञातीनां कलहाश्च वृकोदर ।
प्रसक्तानि च वैराणि ज्ञातिधर्मो न नश्यति ॥ ३-२४४-२ (२५४६०)
यदा तु कश्चिज्ज्ञातीनां बाह्यः प्रार्थयते कुलम् ।
न मर्षयन्ति तत्सन्तो बाह्येनाभिप्रधर्षणम् ॥ ३-२४४-३ (२५४६१)
जानात्येष हि दुर्बुद्धिरस्मानिह चिरोषितान् ।
स एवं परिभूयास्मानकार्षीदिदमप्रियम् ॥ ३-२४४-४ (२५४६२)
दुर्योधनस्य ग्रहणाद्गन्धर्वेण बलाद्रणे ।
स्त्रीणां बाह्याभिमर्शाच्च हतं भवति नः कुलम् ॥ ३-२४४-५ (२५४६३)
श्चरणं च प्रपन्नानां त्राणार्थं च कुलस्य च ।
उत्तिष्ठध्वं नरव्याघ्राः सज्जीभवत मा चिरम् ॥ ३-२४४-६ (२५४६४)
अर्जुनश्च यमौ चैव त्वं च भीमापराजितः ।
मोक्षयध्वं नरव्याघ्रा ह्रियमाणं सुयोधनम् ॥ ३-२४४-७ (२५४६५)
एते रथा नरव्याघ्राः सर्वशस्त्रसमन्विताः ।
धृतराष्ट्रस्य पुत्राणां विमला काञ्चनध्वजाः ॥ ३-२४४-८ (२५४६६)
सस्वनानधिरोहध्वं नित्यसज्जानिमान्रथान् ।
इन्द्रसेनादिभिः सूतैः कृतशस्त्रैरधिष्ठितान् ॥ ३-२४४-९ (२५४६७)
एतानास्थाय वै यत्ता गन्धर्वान्योद्धुमाहवे ।
सुयोधनस्य मोक्षाय प्रयतध्वमतनद्रिताः ॥ ३-२४४-१० (२५४६८)
ग्परैः परिभवे प्राप्ते वयं पञ्चोत्तरं शतम् ।
परस्परविरोधे तु वयं पञ्चैव ते शतम् ॥' ३-२४४-११ (२५४६९)
य एव कश्चिद्राजन्यः शरणार्थमिहागतम् ।
परं शक्त्याभिरक्षेत किं पुनस्त्वं वृकोदर ॥ ३-२४४-१२ (२५४७०)
गएवमुक्तस्तु कौन्तेयः पुनर्वाक्यमभाषत ।
कोपसंरक्तनयनः पूर्ववैरमनुस्मरन् ॥ ३-२४४-१३ (२५४७१)
पुरा जतुगृहेऽनेन दग्धुमस्मान्युधिष्ठिर ।

दुर्बुद्धिर्हि कृता वीर तदा दैवेन रक्षिताः ॥ ३-२४४-१४ (२५४७२)
कालकूटविषं तीक्ष्णं भोजने मम भारत ।
उप्त्वा गङ्गां लतापाशैर्वैद्धवा च प्राक्षिपत्प्रभो ॥ ३-२४४-१५ (२५४७३)
रसातलं च संप्राप्य तदा वासुकिमञ्जसा ।
तत्र दृष्ट्वा तु राजेन्द्रपुनः प्राप्तो महीतलम् ॥ ३-२४४-१६ (२५४७४)
द्यूतकालेऽपिकौन्तेय वृजिनानि कृतनि वै ।
द्रौपद्याश्च पराभर्शः केशग्रहणमेव च ।
वस्त्रापहरणं चैव सभामध्ये कृतानि वै ॥ ३-२४४-१७ (२५४७५)
राज्यं चाच्छिद्य राजेन्द्र उक्तवान्परुषाणि नः ।
पुरा कृतानां पापानां फलं भुङ्क्ते सुयोधनः ॥ ३-२४४-१८ (२५४७६)
अस्माबिरेवकर्तव्यं धार्तराष्ट्रस्य निग्रहम् ।
अन्येन तु कृतं तद्वै मैत्र्यमस्माकमिच्छता ।
उपकारी तु गन्धर्वो मा राजन्विमना भव ॥ ३-२४४-१९ (२५४७७)
वैशंपायन उवाच। ३-२४४-२०क्ष् (२६००)
एतस्मिन्नन्तरे राजंश्चित्रसेनेन वै हृतः ।
विललाप सुदुःखार्तो नीयमानः सुयोधनः ॥ ३-२४४-२० (२५४७८)
युधिष्ठिर महाबाहो सर्वधर्मभृतांवर ।
सपुत्रान्सहदारांश्च गन्धर्वेण हृतान्बलात् ॥ ३-२४४-२१ (२५४७९)
पाण्डुपुत्र महाबाहो कौरवाणां यशस्कर'
सर्वधर्मभृतां श्रेष्ठ गन्धर्वेण हृतं बलात् ।
रक्षस्व पुरुषव्याघ्र युधिष्ठिर महायशः ॥ ३-२४४-२२ (२५४८०)
भ्रातरं ते महाबाहो बद्धवा नयति मामयम् ।
दुश्शासनं दुर्विषहं दुर्मुखं दुर्जयं तथा ॥ ३-२४४-२३ (२५४८१)
बद्धवा हरन्ति गन्धर्वा अस्मान्दारांश्च सर्वशः ।
अनुधावत मां क्षिप्रं रक्षध्वं पुरुषोत्तमाः ॥ ३-२४४-२४ (२५४८२)
यमौ मामनुधावेतां रक्षार्थं मम सायुधौ ।
कुरुवंशस्य सुमहदयशः प्राप्तमीदृशम् ।
व्यपोहयध्वं गन्धर्वाञ्जित्वा वीर्येण पाण्डवाः ॥ ३-२४४-२५ (२५४८३)
एवं विलपमानस्य कौरवस्यार्तया गिरा ।
श्रुत्वा विलापं संभ्रान्तो घृणयाऽभिपरिप्लुतः ॥ ३-२४४-२६ (२५४८४)
युधिष्ठिरः पुनर्वाक्यं भीमसेनमथाब्रवीत् ।
सुयोधनस्य मोक्षाय प्रयतध्वमतन्द्रिताः' ॥ ३-२४४-२७ (२५४८५)
क इवार्यो दयेत्प्राणानभिधावेति चोदितः ।
प्राञ्जलं शरणापन्नं दृष्ट्वा शत्रुमपि ध्रुवम् ॥ ३-२४४-२८ (२५४८६)
वरप्रदानं राज्यं च पुत्रजन्म च पाण्डवाः ।
शत्रोश्च मोक्षणं क्लेशास्त्रीणि चैकं च तत्समम् ॥ ३-२४४-२९ (२५४८७)

न ह्यस्त्यधिकमेतस्माद्यदापन्नः सुयोधनः ।
त्वद्बाहुबलमाश्रित्य जीवितं परिमार्गते ॥ ३-२४४-३० (२५४८८)
स्वयमेव प्रधावेयं यदि न स्याद्वृकोदर ।
विततो मे क्रतुर्वीर न हि मेऽत्र विचारणा ॥ ३-२४४-३१ (२५४८९)
साम्नैव तु यथा भीम मोक्षयेथाः सुयोधनम् ।
तथा सर्वैरुपायैस्त्वं यतेथाः कुरुनन्दन ॥ ३-२४४-३२ (२५४९०)
न साम्ना प्रतिपद्येत यदि गन्धर्वराडसौ ।
पराक्रमेण मृदुना मोक्षयेथाः सुयोधनम् ॥ ३-२४४-३३ (२५४९१)
अथासौ मृदुयुद्धेन न मुञ्चेद्भीम कौरवान् ।
सर्वोपायैर्पिमोच्यास्ते निगृह्य परिपन्थिनः ॥ ३-२४४-३४ (२५४९२)
एतावद्धि मया शक्यं संदेष्टुं वै वृकोदर ।
वैताने कर्मणि तते वर्तमाने च भारत ।
ग्वरप्रदानं सुमहद्याचकस्य प्रकीर्तितम्' ॥ ३-२४४-३५ (२५४९३)
वैशंपायन उवाच। ३-२४४-३६क्ष् (२६०१)
अजातसत्रोर्वचनं तच्छ्रुत्वा तु धनंजयः ।
प्रतिजज्ञे गुरोर्वाक्यं कौरवाणां विमोक्षणम् ॥ ३-२४४-३६ (२५४९४)
अर्जुन उवाच। ३-२४४-३७क्ष् (२६०२)
यदि ककसाम्ना न मोक्ष्यन्ति गन्धर्वा धृतराष्ट्रजान् ।
अद्य गन्धर्वराजस्य भूमिः पास्यति शोणितम् ॥ ३-२४४-३७ (२५४९५)
अर्जुनस्य तु तां श्रुत्वा प्रतिज्ञां सत्यवादिनः ।
कौरवाणां तदा राजन्पुनः प्रत्यागतं मनः ॥ ३-२४४-३८ (२५४९६)

इति श्रीमन्महाभारते अरण्यपर्वणि घोषयात्रापर्वणि
चतुश्चत्वारिंशदधिकद्विशततमोऽध्यायः ॥ २४४ ॥
Mahabharata - Vana Parva - Chapter Footnotes

३-२४४-२८ क इवार्यो नयेत्प्राणान् इति थ । पाठः। क इहार्यो भवेत्त्राणं इति झ। पाठः। अभिधाव याहीति चोदित आर्यः प्राणान् दयेत्। स्वप्राणेषु दयां कुर्यादित्यर्थः ॥

---

वन-अध्यय२४५
॥ श्रीः ॥
३.२४५. अध्यायः २४५

Mahabharata - Vana Parva - Chapter Topics
भीमादीनां चतुर्णां चित्रसेनादिभिर्गन्धर्वैर्युद्धम् ॥ १ ॥

३-२४५-० (२५४९७)
वैशंपायन उवाच। ३-२४५-०क्ष् (२६०३)
युधिष्ठिरवचः श्रुत्वा भीमसेनपुरोगमाः ।
प्रहृष्टवदनाः सर्वे समुत्तस्थुर्नरर्षभाः ॥ ३-२४५-१ (२५४९८)
अभेद्यानि ततः सर्वे समनह्यन्त भारत ।
जाम्बूनदविचित्राणि कवचानि महारथाः ।
आयुधानि च दिव्यानि विविधानि समादधुः ॥ ३-२४५-२ (२५४९९)
ते दंशिता रथैः सर्वे ध्वजिनः सशरासनाः ।
पाण्डवाः प्रत्यदृश्यन्त ज्वलिता इवपावकाः ॥ ३-२४५-३ (२५५००)
तान्रथान्साधुसंपन्नान्संयुक्ताञ्जवनैर्हयैः ।
आस्थाय रथशार्दूलाः शीघ्रमेव ययुस्ततः ॥ ३-२४५-४ (२५५०१)
ततः कौरवसैन्यानां प्रादुरासीन्महास्वनः ।
प्रयातान्सहितान्दृष्ट्वा पाण्डुपुत्रान्महारथान् ॥ ३-२४५-५ (२५५०२)
जितकाशिनश्च स्वचरास्त्वरिताश्च महारथाः ।
क्षणेनैव वने तस्मिन्समाजग्मुरभीतवत् ॥ ३-२४५-६ (२५५०३)
न्यवर्तन्त ततः सर्वे गन्धर्वा जितकाशिनः ।
दृष्ट्वा रथगतान्वीरान्पाण्डवांश्चतुरो रणे ॥ ३-२४५-७ (२५५०४)
तांस्तु विभ्राजितान्दृष्ट्वा लोकपालानिवोद्यतान् ।
व्यूढानीका व्यतिष्ठन्त गन्धमादनवासिनः ॥ ३-२४५-८ (२५५०५)
राज्ञस्तु वचनं श्रुत्वा धर्मपुत्रस्य धीमतः ।
क्रमेण मृदुना युद्धमुपक्रान्तं च भारत ॥ ३-२४५-९ (२५५०६)
न तु गन्धर्वराजस्य सैनिका मन्दचेतसः ।
शक्यन्ते मृदुना श्रेयः प्रतिपादयितुं तदा ॥ ३-२४५-१० (२५५०७)
ततस्तान्युधि दुर्धर्षान्सव्यसाची परंतपः ।
सान्त्वपूर्वमिदं वाक्यमुवाच खचरान्रणे ॥ ३-२४५-११ (२५५०८)
नैतद्गन्धर्वराजस्य युक्तं कर्म जुगुप्सितम् ।
परदाराभिमर्शश्च मानुषैश्च समागमः ॥ ३-२४५-१२ (२५५०९)
उत्सृजध्वं महावीर्यान्धृतराष्ट्रसुतानिमान् ।
दारांश्चैषां प्रमुञ्चध्वं धर्मराजस्य शासनात् ॥ ३-२४५-१३ (२५५१०)
त एवमुक्ता गन्धर्वाः पाण्डवेन यशस्विना ।
उत्स्मयन्तस्तदा पार्थमिदं वचनमब्रुवन् ॥ ३-२४५-१४ (२५५११)
एकस्यैव वयं तात कुर्याम वचनं भुवि ।
यस्य शासनमाज्ञाय चरामो विगतज्वराः ॥ ३-२४५-१५ (२५५१२)
तेनैकेन रकयथादिष्टं तथा वर्ताम भारत ।

न शास्ता विद्यतेऽस्माकमन्यस्तस्मात्सुरेश्वरात् ॥ ३-२४५-१६ (२५५१३)
एवमुक्तः स गन्धर्वैः कुन्तीपुत्रो धनंजयः ।
गन्धर्वान्पुनरेवैतान्वचनं प्रत्यभाषत ॥ ३-२४५-१७ (२५५१४)
यदि साम्ना न मुञ्चध्वं गन्धर्वा धृतराष्ट्रजान् ।
मोक्षयिष्यामि विक्रम्य स्वयमेव सुयोधनम् ॥ ३-२४५-१८ (२५५१५)
एवमुक्त्वा ततः पार्थः सव्यसाची धनंजयः ।
ससर्ज निशितान्बाणान्खचरान्खचरान्प्रति ॥ ३-२४५-१९ (२५५१६)
तथैव शरवर्षेण गन्धर्वास्ते बलोत्काटाः ।
पाण्डवानभ्यवर्तन्त पाण्डवाश्च दिवौकसः ॥ ३-२४५-२० (२५५१७)
ततः सुतुमुलं युद्धं गन्धर्वाणां तरस्विनाम् ।
बभूव भीमवेगानां च भात ॥ ३-२४५-२१ (२५५१८)

इति श्रीमन्महाभारते अरण्यपर्वणि घोषयात्रापर्वणि
पञ्चचत्वारिंशदधिकद्विशततमोऽध्यायः ॥ २४५ ॥
Mahabharata - Vana Parva - Chapter Footnotes

३-२४५-३ दंशिताः सन्नद्धाः ॥
३-२४५-१० श्रेयः कल्याणम् । प्रतिपादयितुं प्रापयितुम् ॥
३-२४५-१९ स्वचरान् गगनगमनान् । खचरान् गन्धर्वान् ॥

---

वन-अध्यय२४६
॥ श्रीः ॥
३.२४६. अध्यायः २४६

Mahabharata - Vana Parva - Chapter Topics
अर्जुनेन मायाशक्त्याऽन्तर्धानेन युध्यते चित्रसेनायास्रप्रयोगे सति
तेनार्जुनप्रति स्वस्य सखित्वकथनम् ॥ १ ॥
ततोऽर्जुनेनास्त्रोपसंहारे भीमादीनां युद्धोपरमपूर्वकं तेन सह
संलापः ॥ २ ॥

Mahabharata - Vana Parva - Chapter Text

३-२४६-० (२५५१९)
वैशंपायन उवाच। ३-२४६-०क्ष् (२६०४)
ततो दिव्यास्त्रसंपन्ना गन्धर्वा हेममालिनः ।
विसृजन्तः शरान्दीप्तान्समन्तात्पर्यवारयन् ॥ ३-२४६-१ (२५५२०)
चतुरः पाण्डवान्वीरान्गन्धर्वाश्च सहस्रशः ।

रणे संन्यपतन्राजंस्तदद्भुतमिवाभवत् ॥ ३-२४६-२ (२५५२१)
यथा कर्णस्य च रथो धार्तराष्ट्रस् चोभयोः ।
गन्धर्वैः शतशश्छिन्नौ तथा तेषां प्रचक्रितरे ॥ ३-२४६-३ (२५५२२)
तान्समापततो राजन्गाधर्वाञ्छतशो रणे ।
प्रत्यगृह्णन्नरव्याघ्राः शरवर्षैरनेकशः ॥ ३-२४६-४ (२५५२३)
ते कीर्यमाणाः खगमाः शरवर्षैः समन्ततः ।
न शेकुः पाण्डुपुत्राणां समीपे परिवर्तितुम् ॥ ३-२४६-५ (२५५२४)
अभिक्रुद्धानभिक्रुद्धो गन्धर्वानर्जुनस्तदा ।
लक्षयित्वाऽथ दिव्यानि महास्त्राण्युपचक्रमे ॥ ३-२४६-६ (२५५२५)
सहस्राणां सहस्राणि प्राहिणोद्यमसादनम् ।
अजेयानर्जुनः सङ्ख्ये गन्धर्वाणां बलोत्कटः ॥ ३-२४६-७ (२५५२६)
तथा भीमो महेष्वासः संयुगे बलिनांवरः ।
गन्धर्वाञ्शतशो राजञ्चघान निशितैः शरैः ॥ ३-२४६-८ (२५५२७)
माद्रीपुत्रावपि तथा युध्मानौ बलोत्कटौ ।
परिगृह्याग्रतो राजञ्जघ्नतुः शतशः परान् ॥ ३-२४६-९ (२५५२८)
तेवध्यमाना गन्धर्वा दिव्यैरस्त्रैर्महारथैः ।
उत्पेतुः खमुपादाय धृतराष्ट्रसुतांस्ततः ॥ ३-२४६-१० (२५५२९)
सतानुत्पतितानदृष्ट्वा कुन्तीपुत्रो धनंजयः ।
महता शरजालेन समन्तात्पर्यवारयत् ॥ ३-२४६-११ (२५५३०)
ते ब्रद्धाः शरजालेन शकुन्ता इव पञ्जरे
ववर्पुरर्जुनं क्रोधाद्गदाशक्त्यृष्टिवृष्टिभिः ॥ ३-२४६-१२ (२५५३१)
गदाशक्त्यृष्टिवृष्टीस्ता निहत्य परमास्त्रवित् ।
गात्राणि चाहनद्भल्लैर्गन्धर्वाणां धनंजयः ॥ ३-२४६-१३ (२५५३२)
शिरोभिः प्रपतद्भिश्च चरणैर्बाहुभिस्तथा ।
अश्मवृष्टिरिवाभाति परेषामभवद्भयम् ॥ ३-२४६-१४ (२५५३३)
ते वध्यमाना गन्धर्वाः पाण्डवेन महात्मना ।
भूमिष्ठमन्तरिक्षस्थाः शरवर्षैरवाकिरन् ॥ ३-२४६-१५ (२५५३४)
तेषां तु शरवर्षाणि सव्यसाची परंतपः ।
अस्त्रैः संवार्य तेजस्वी गन्धर्वान्प्रत्यविध्यत ॥ ३-२४६-१६ (२५५३५)
स्थूणाकर्णेन्द्रजालं च सौरं चापि तथाऽर्जुनः ।
आग्नेयं चापि सौम्यं च ससर्ज कुरुननदनः ॥ ३-२४६-१७ (२५५३६)
ते दह्यमाना गन्धर्वाः कुन्तीपुत्रस्य सायकैः ।
दैतेया इव शक्रेण विषादमगमन्परम् ॥ ३-२४६-१८ (२५५३७)
ऊर्ध्वमाक्रममाणाश्च शरजालेन वारिताः ।
विसर्पमाणा भल्लैश्च वार्यन्ते सव्यसाचिना ॥ ३-२४६-१९ (२५५३८)
गन्धर्वांस्त्रासितान्दृष्ट्वा कुन्तीपुत्रेण भारत ।

चित्रसेनो गदां गृह्य सव्यसाचिनमनाद्रवत् ॥ ३-२४६-२० (२५५३९)
तस्याभिपततस्तूर्णं गदाहस्तस्य संयुगे ।
गदां सर्वायसीं पार्थः शरैश्चिच्छेद सप्तधा ॥ ३-२४६-२१ (२५५४०)
स गदां बहुधा दृष्ट्वा कृत्तां बाणैस्तरस्विना ।
संवृत्य विद्ययाऽऽत्मानं योधयामास पाण्डवं ॥ ३-२४६-२२ (२५५४१)
अस्त्राणइ तस्य दिव्यानि संप्रयुक्तानि सर्वशः ।
दिव्यैरस्त्रैस्तदा वीरः पर्यवारयदर्जुनः ॥ ३-२४६-२३ (२५५४२)
स वार्यमाणस्तैरस्त्रैरर्जुनेन महात्मना ।
गन्धर्वराजो बलवान्माययाऽन्तर्हितस्तदा ॥ ३-२४६-२४ (२५५४३)
अन्तर्हितं तमालक्ष्य प्रहरन्तमथार्जुनः ।
ताडयामास खचरैर्दिव्यास्त्रप्रतिमन्त्रितैः ॥ ३-२४६-२५ (२५५४४)
अन्तर्धानवधं चास्य चक्रे क्रुद्धोऽर्जुनस्तदा ।
शब्दवेषं समाश्रित्य बहुरूपो धनंजयः ॥ ३-२४६-२६ (२५५४५)
रस वध्यमानस्तैरस्त्रैरर्जुनेन महात्मना ।
ततोऽस्य दर्शयामास तदाऽऽत्मानं प्रियः सखा ॥ ३-२४६-२७ (२५५४६)
चित्रसेनस्तथोवाच सखायं युधि विद्धि माम् ।
चित्रसेनमथालक्ष्य सखायमिति विस्मितः ॥ ३-२४६-२८ (२५५४७)
संजहारास्त्रमथं तत्प्रसृष्टं पाण्डवर्षभः ॥ ३-२४६-२९ (२५५४८)
दृष्ट्वा तु पाण्डवाः सर्वे संहृतास्त्रं धनंजयम् ।
संजह्रुः प्रद्रुतानश्वाञ्शरवेगान्धनूंषि च ॥ ३-२४६-३० (२५५४९)
चित्रसेनश्च भीमश्च सव्यसाची यमावपि ।
पृष्ट्वा कौशलमन्योन्यं रथेष्वेवावतस्थिरे ॥ ३-२४६-३१ (२५५५०)

इति श्रीमन्महाभारते अरण्यपर्वणि घोषयात्रापर्वणि
षट्चत्वारिंशदधिकद्विशततमोऽध्यायः ॥ २४६ ॥
Mahabharata - Vana Parva - Chapter Footnotes

३-२४६-३ तथा तेषां चतुर्णामपि रथान् छन्नान् प्रचक्रिरे गन्धर्वाः ॥
३-२४६-२० गृह्य गृहीत्वा ॥
३-२४६-२२ संवृत्य आच्याद्य । विद्यया अदर्शनशक्त्या ॥

---

वन-अध्यय२४७
॥ श्रीः ॥
३.२४७. अध्यायः २४७

Mahabharata - Vana Parva - Chapter Topics
चित्रसेनेनार्जुनंप्रति दुर्योधनबन्धने कारणाभिधानपूर्वकं

युधिष्ठिरसमीपगमनम् ॥ १ ॥
युधिष्ठिरेण गन्धर्वैर्दुर्योधनादीनां बन्धाद्विमोचनम् ॥ २ ॥
ततो दुर्योधनेन स्वपुरंप्रति प्रस्थानम् ॥ ३ ॥

Mahabharata - Vana Parva - Chapter Text

३-२४७-० (२५५५१)
वैशंपायन उवाच। ३-२४७-०क्ष् (२६०५)
ततोऽर्जुनश्चित्रसेनं प्रहसन्निदमब्रवीत् ।
मध्ये गन्धर्वसैन्यानां महेष्वासो महाद्युतिः ॥ ३-२४७-१ (२५५५२)
किं ते व्यवसितं वीर कौरवाणां विनिग्रहे ।
किमर्थं च सदारोऽयं निगृहीतः सुयोधनः ॥ ३-२४७-२ (२५५५३)
चित्रसेन उवाच। ३-२४७-३क्ष् (२६०६)
विदितोऽयमभिप्रायस्तत्रस्थेन दुरात्मनः ।
इन्द्रेण धार्तराष्ट्रस्य सकर्णस्य धनंजय ॥ ३-२४७-३ (२५५५४)
वनस्थान्भवतो ज्ञात्वा क्लिश्यमानाननर्हवत् ।
समस्थो विषमस्थांस्तान्द्रक्ष्यामीत्यनवस्थितान् ॥ ३-२४७-४ (२५५५५)
इमेऽवहसितुं प्राप्ता द्रौपदीं च यशस्विनीम् ।
ज्ञात्वा चिकीर्षितं चैषां मामुवाच सुरेश्वरः ॥ ३-२४७-५ (२५५५६)
गच्छ दुर्योधनं बद्ध्वा सहामात्यमिहानय ।
धनंजयश्च ते रक्ष्यः रसह भ्रातृभिराहवे ॥ ३-२४७-६ (२५५५७)
स च प्रियः सखा तुभ्यं शिष्यश् तव पाण्डवः ।
वचनाद्देवराजस् ततोऽस्मीहागतो द्रुतम् ॥ ३-२४७-७ (२५५५८)
अयं दुरात्मा बद्धश्च गमिष्यामि सुरालयम् ।
नेष्याम्येनं कदुरात्मानं पाकशासनशासनात् ॥ ३-२४७-८ (२५५५९)
अर्जुन उवाच। ३-२४७-९क्ष् (२६०७)
उत्सृज्यतां चित्रसेन भ्राताऽस्माकं सुयोधनः ।
धर्मराजस्य संदेशान्मम चेदिच्छसि प्रियम् ॥ ३-२४७-९ (२५५६०)
चित्रसेन उवाच। ३-२४७-१०क्ष् (२६०८)
पापोऽयं नित्यसंदुष्टो न विमोक्षणमर्हति ।
प्रलब्धा धर्मराजस्य कृष्णायाश्च धनंजय ॥ ३-२४७-१० (२५५६१)
नेदं चिकीर्षितं तस् कुन्तीपुत्रो युधिष्ठिरः ।
जानाति धर्मराजो हि श्रुत्वा कुरु यथेच्छसि ॥ ३-२४७-११ (२५५६२)
वैशंपायन उवाच। ३-२४७-१२क्ष् (२६०९)
ते सर्व एव राजनमभिजग्मुर्युधिष्ठिरम् ।
अभिगम्य च तत्सर्वं शशंसुस्तस्य चेष्टितम् ॥ ३-२४७-१२ (२५५६३)

अजातशत्रुस्तच्छ्रुत्वा गन्धर्वस्य वचस्तदा ।
मोक्षयामास तान्सर्वान्गन्धर्वान्प्रशशंस च ॥ ३-२४७-१३ (२५५६४)
गचित्रसेनस्तदा वाक्यमुवाच प्रौढया गिरा ।
मुञ्चध्वंसानुजामात्यं सदारं च सुयोधनम् ॥ ३-२४७-१४ (२५५६५)
गन्धर्वास्तु वचः श्रुत्वा चित्रसेनस्य वै द्रुतम् ।
राजानं मोचयामासुर्बद्धं निगडबन्धनैः ॥ ३-२४७-१५ (२५५६६)
सदारं सानुगामात्यं बालजालमयेन ये ।
लुछन्तश्चापि ते सर्वे युधिष्ठिरसमीपतः ॥ ३-२४७-१६ (२५५६७)
पतिता लज्जिताश्चैव तस्थुश्चाधोमुखास्तदा ।
युधिष्ठिरोपि दयया तान्समीक्ष्य तथागतान् ॥ ३-२४७-१७ (२५५६८)
दिष्ट्या भवद्भिर्बलिभिः शक्तैः सर्वैर्न हिंसितः ।
दुर्वृत्तो धार्तराष्ट्रोऽयं सामात्यज्ञातिबान्धवः ॥ ३-२४७-१८ (२५५६९)
उपकारो मसांस्तात कृतोऽयं मम खेचर ।
कुलं न परिभूतं मे मोक्षेणास्य दुरात्मनः ॥ ३-२४७-१९ (२५५७०)
आज्ञापयध्वमिष्टानि प्रीतं मां दर्शनेन वः ।
प्राप्य सर्वानभिप्रायांस्ततो व्रजत मा चिरम् ॥ ३-२४७-२० (२५५७१)
अनुज्ञातास्तु गन्धर्वाः पाण्डुपुत्रेण धीमता ।
सहाप्सरोभिः संहृष्टाश्चित्रसेनमुखा ययुः ॥ ३-२४७-२१ (२५५७२)
ग्देवलोकं ततो गत्वा गन्धर्वैः सहितस्तदा ।
न्यवेदयच्च तत्सर्वं चित्रसेनः शतक्रतोः' ॥ ३-२४७-२२ (२५५७३)
देवराडपि गन्धर्वान्मृतांस्तान्समजीवयत् ।
दिव्येनामृतवर्षेण ये हताः कौरवैर्युधि ॥ ३-२४७-२३ (२५५७४)
ज्ञातींस्तानवमुच्याथ राजदारांश्च सर्वशः ।
कृत्वा च रदुष्करं कर्म प्रीतियुक्ताश्च पाण्डवाः ॥ ३-२४७-२४ (२५५७५)
सस्त्रीकुमारैः कुरुभिः पूज्यमाना महारथाः ।
बभ्राजिरे महात्मानः क्रतुमध्ये यथाऽग्नयः ॥ ३-२४७-२५ (२५५७६)
ततो दुर्योधनं मुक्तं भ्रातृभिः सहितस्तदा ।
युधिष्ठिरस्तु प्रणयादिदं वचनमब्रवीत् ॥ ३-२४७-२६ (२५५७७)
रमा स्म तात पुनः कार्षीरीदृशं साहसं क्वचित् ।
न हि साहसकर्तारः सुखमेघन्ति भारत ॥ ३-२४७-२७ (२५५७८)
स्वस्तिमान्सहितः सर्वैर्भ्रातृभिः कुरुनन्दन ।
गृहान्व्रज यथाकामं वैमनस्यं च मा कृथाः ॥ ३-२४७-२८ (२५५७९)
वैशंपायन उवाच। ३-२४७-२९क्ष् (२६१०)
पाण्डवेनाभ्यनुज्ञानो राजा दुर्योधनस्तदा ।
अभिवाद्य धर्मपुत्रं गतेन्द्रिय इवातुरः ।
विदीर्यमाणो व्रीडावाञ्जगाम नगरं प्रति ॥ ३-२४७-२९ (२५५८०)

तस्मिन्गते कौरवेये कुन्तीपुत्रो युधिष्ठिरः ।
भ्रातृभिः सहितो वीरः पूज्यमानो द्विजातिभिः ॥ ३-२४७-३० (२५५८१)
तपोधनैश्च तैः सर्वैर्वृतः शक्र इवामरैः ।
तथा द्वैतवने तस्मिन्विजहार मुदा युतः ॥ ३-२४७-३१ (२५५८२)

इति श्रीमन्महाभारते अरण्यपर्वणि घोषयात्रापर्वणि
सप्तचत्वारिंशदधिकद्विशततमोऽध्यायः ॥ २४७ ॥
Mahabharata - Vana Parva - Chapter Footnotes

३-२४७-१० प्रलब्धा वञ्चकः ॥
३-२४७-११ इदं मदुक्तं समस्थो विषमस्थांस्तान् द्रक्ष्यामीति ॥
३-२४७-१७ युधिष्ठिरोपीति ।गन्धर्वान्प्रत्युवाचेति शेषः ॥
३-२४७-२८ वैमनस्यं वैरं केनचित्सह मा कृथाः मा कुरु ॥

---

वन-अध्यय२४८
॥ श्रीः ॥
३.२४८. अध्यायः २४८

Mahabharata - Vana Parva - Chapter Topics
दुर्योधनेन मध्येमार्गं क्वचन रमणीये देशे
सेनादिसंनिवेशनपूर्वकमवस्थानम् ॥ १ ॥
तत्रसमागतेन गन्धर्वकृते बन्धनमोचने अपरिजानता कर्णेन
भ्रमात्तस्य गन्धर्वजेतृत्वेन रूपेण प्रशसनम् ॥ २ ॥

Mahabharata - Vana Parva - Chapter Text

३-२४८-० (२५५८३)
जनमेजय उवाच। ३-२४८-०क्ष् (२६११)
शत्रुभिर्जितबद्धस् पाण्डवैश्च महात्मभिः ।
मोक्षितस्य युधा पश्चान्मानिनः सुदुरात्मनः ॥ ३-२४८-१ (२५५८४)
कत्थनस्यावलिप्तस्य गर्वितस् च नित्यशः ।
सदा च पौरुषौदार्यैः पाण्डवानवमन्यतः ॥ ३-२४८-२ (२५५८५)
दुर्योधनस् पापस्य नित्याहंकारवादिनः ।
प्रवेशो हास्तिनपुरे दुष्करः प्रतिभाति मे ॥ ३-२४८-३ (२५५८६)
तस्य लज्जानवितस्यैव शोकव्याकुलचेतसः ।
प्रवेशं विस्तरेण रत्वं वैशंपायन कीर्तय ॥ ३-२४८-४ (२५५८७)

वैशंपायन उवाच। ३-२४८-५क्ष् (२६१२)
धर्मराजनिसृष्टस्तु धार्तराष्ट्रः सुयोधनः ।
लज्जयाऽधोमुखः सीदन्नुपासर्पत्सुदुःखितः ॥ ३-२४८-५ (२५५८८)
स्वपुरं प्रययौ राजा चतुरङ्गबलानुगः ।
शोकोदहतया बुद्ध्या चिन्तयानः पराभवम् ॥ ३-२४८-६ (२५५८९)
विमुच्य पथि यानानि देशे सुयवसोदके ।
सन्निविष्टः शुभे रम्ये भूमिभागे यथेप्सितम् ।
हस्त्यश्वरथपादातं यथास्थानं न्यवेशयत् ॥ ३-२४८-७ (२५५९०)
अथोपविष्टं राजानं पर्यङ्के ज्वलनप्रभे ।
उपप्लुतं यथा सोमं राहुणा रात्रिसंक्षये ।
उपागम्याब्रवीत्कर्णो दुर्योधनमिदं तदा ॥ ३-२४८-८ (२५५९१)
दिष्ट्या जीवसि गान्धारे दिष्ट्या नः संगमः पुनः ।
दिष्ट्या त्वया जिताश्चैव गन्धर्वाः कामरूपिणः ॥ ३-२४८-९ (२५५९२)
दिष्ट्या समग्रान्पश्यामि भ्रातॄंस्ते कुरुनन्दन ।
विजिगीषून्रणे युक्तान्निर्जितारीन्महारथान् ॥ ३-२४८-१० (२५५९३)
अहं त्वभिद्रुतः सर्वैर्गन्धर्वैः पश्यतस्व ।
नाशक्नुवं स्थापयितुं दीर्यमाणां च वाहिनीम् ।
शरक्षताङ्गश्च भृशं व्यपयातोऽभिपीडितः ॥ ३-२४८-११ (२५५९४)
इदं त्वत्यद्भुतं मन्ये यद्युष्मानिह भारत ।
अरिष्टानक्षतांश्चापि सदारबलवाहनान् ।
विमुक्तान्संप्रपश्यामि युद्धात्तस्मादमानुषात् ॥ ३-२४८-१२ (२५५९५)
नैतस्य कर्ता लोकेऽस्मिन्पुमान्विद्यति भारत ।
यत्कृतं ते महाराज सह भ्रातृभिराहवे ॥ ३-२४८-१३ (२५५९६)
३-२४८-१४ (२५५९७)
एवमुक्तस्तु कर्णेन राजा दुर्योधनस्तदा ।
उवाचावाक्शिरा राजन्बाष्पगद्गदया गिरा ॥
Mahabharata - Vana Parva - Chapter Footnotes

३-२४८-२ कत्थनस्यात्मस्तुतिपरस्य ॥

---

वन-अध्यय२४९
॥ श्रीः ॥
३.२४९. अध्यायः २४९

Mahabharata - Vana Parva - Chapter Topics
दुर्योधनेन कर्णप्रति युद्धे सानुजस्य स्वस्य गन्धर्वैर्वन्धनस्य
युधिष्ठिरचोदनया मीमादिमिर्गन्धर्वाणां रणे पराजयस्य च कथनम्

३-२४९-० (२५५९८)
दुर्योधन उवाच। ३-२४९-०क्ष् (२६१३)
अजानतस्ते राधेय नाभ्यसूयाम्यहं वचः ।
जानासि त्वं जिताञ्शत्रून्गन्धर्वां स्तेजसा मया ॥ ३-२४९-१ (२५५९९)
आयोधितास्तु गन्धर्वाः सुचिरं सोदरैर्मम ।
मया सह महाबाहो कृतश्चोभयतः क्षयः ॥ ३-२४९-२ (२५६००)
मायाधिकास्त्वयुध्यन्त यदा शूरा वियद्गताः ।
तदा नो न समं युद्धमभवत्खेचरैः सह ॥ ३-२४९-३ (२५६०१)
पराजयं च प्राप्ताः स्मो रणे बन्धनमेव च ।
सभृत्यामात्यपुत्राश्च सदारबलवाहनाः ।
उच्चैराकाशमार्गेण ह्रियमाणाः सुदुःखिताः ॥ ३-२४९-४ (२५६०२)
अथ नः सैनिकाः केचिदमात्याश्च महारथाः ।
उपगम्याब्रुवन्दीनाः पाण्डवाञ्शरणप्रदान् ॥ ३-२४९-५ (२५६०३)
एष दुर्योधनो राजा धार्तराष्ट्रः सहानुजः ।
सामात्यदारो ह्रियते गन्धर्वैर्दिवमाश्रितैः ॥ ३-२४९-६ (२५६०४)
तं मोक्षयत भद्रं वः सहदारं नराधिपम् ।
परामर्शो मा भविष्यत्कुरुदारेषु सर्वशः ।
ग्इत्यब्रुवन्नणआन्मुक्ता धर्मराजमुपागताः' ॥ ३-२४९-७ (२५६०५)
एवमुक्ते तु धर्मात्मा ज्येष्ठः पाण्डुसुतस्तदा ।
प्रसाद्य सोदरान्सर्वानाज्ञापयत मोक्षणे ॥ ३-२४९-८ (२५६०६)
अथागम्य तमुद्देशं पाण्डवाः पुरुषर्षभाः ।
सान्त्वपूर्वमयाचन्त शक्ताः सन्तो महारथाः ॥ ३-२४९-९ (२५६०७)
यदा चास्मान्न मुमुचुर्गन्धर्वाः सान्त्विता अपि ।
ग्आकाशचारिणो वीरा नदन्तो जलदा इव' ॥ ३-२४९-१० (२५६०८)
ततोऽर्जुनश्च भीमश्च यमजौ च बलोत्कटौ ।
मुमुचुः शरवर्षाणि गन्धर्वान्प्रत्यनेकशः ॥ ३-२४९-११ (२५६०९)
अथ सर्वे रणं मुक्त्वा प्रयाताः खेचरा दिवम् ।
अस्मानेवाभिकर्षन्तो दीनान्मुदितमानसाः ॥ ३-२४९-१२ (२५६१०)
ततः समन्तात्पश्यामः शरजालेन वेष्टितम् ।
अमानुषाणि चास्त्राणि प्रयुञ्जानं घनंजयम् ॥ ३-२४९-१३ (२५६११)
समावृता दिशो दृष्ट्वा पाण्डवेन शितैः शरैः ।
धनंजयसखाऽऽत्मानं दर्शयामास वै तदा ॥ ३-२४९-१४ (२५६१२)

चित्रसेनः पाण्डवेन समाश्लिष्य परस्परम् ।
कुशलं परिपप्रच्छ तैः पृष्टश्चाप्यनामयम् ॥ ३-२४९-१५ (२५६१३)
ते समेत्य तथाऽन्योन्यं सन्नाहान्विप्रमुच्य च ।
एकीभूतास्ततो वीरा गन्धर्वाः सह पाण्डवैः ॥ ३-२४९-१६ (२५६१४)
ग्परस्परं समागम्य प्रीत्या परमया युतौ'।
अपूजयेतामन्योन्यं चित्रसेनधनंजयौ ॥ ३-२४९-१७ (२५६१५)

इति श्रीमन्महाभारते अरण्यपर्वणि घोषयात्रापर्वणि
एकोनपञ्चाशदधिकद्विशततमोऽध्यायः ॥ २४९ ॥
Mahabharata - Vana Parva - Chapter Footnotes

३-२४९-१ नाभ्यसूयामि दोषवदिति न मन्ये ॥

---

वन-अध्यय२५०
॥ श्रीः ॥
३.२५०. अध्यायः २५०

Mahabharata - Vana Parva - Chapter Topics
दुर्योधनेन कर्णप्रतिस्वबन्धनविषये
चित्रसेनार्जुनसंवादप्रकारकथनपूर्वकं युधिष्ठिरात्स्वस्य
यन्धमोचनकथनम् ॥ १ ॥
तथा प्रायोपवेशने निजाध्वसायकथनपूर्वकं दुःशासनंप्रति
राज्यपालनविधानम् ॥ २ ॥
कर्णेन दुर्योधनंप्रति प्रायोपवेशनान्निवर्तनाय सान्त्वोक्तिः ॥ ३ ॥

Mahabharata - Vana Parva - Chapter Text

३-२५०-० (२५६१६)
दुर्योधन उवाच। ३-२५०-०क्ष् (२६१४)
चित्रसेनं समागम्य प्रहसन्नर्जुनस्तदा ।
इदं वचनमक्लीवमब्रवीत्परवीरहा ॥ ३-२५०-१ (२५६१७)
भ्रातॄनर्हसि मे वीर मोक्तुं गन्धर्वसत्तम ।
अनर्हधर्षणा ह्रीमे जीवमानेषु पाण्डुषु ॥ ३-२५०-२ (२५६१८)
एवमुक्तस्तु गन्धर्वः पाण्डवेन महात्मना ।
उवाच यत्कर्ण वयं मन्त्रयन्तो विनिर्गताः ॥ ३-२५०-३ (२५६१९)
ग्स्थितोराज्येच्युतान्स्थानाच्छ्रियाहीनांश्रियावृतः'
द्रष्टास्मि निःसुखान्वीरान्सदारान्पाण्डवानिति ॥ ३-२५०-४ (२५६२०)

तस्मिन्नुच्चार्यमाणे तु गन्धर्वेण वचस्तथा ।
भूमेर्विवरमन्वैच्छं प्रवेष्टुं व्रीडयाऽन्वितः ॥ ३-२५०-५ (२५६२१)
युधिष्ठिरमथागम् गन्धर्वाः सह पाण्डवैः ।
अस्मद्दुर्मन्त्रितं तस्मै बद्धांश्चास्मान्न्यवेदयन् ॥ ३-२५०-६ (२५६२२)
स्त्रीसमक्षमहं दीनो बद्धः शत्रुवशं गतः ।
युधिष्ठिरस्योपहृतः किंनु दुःखमतः परम् ॥ ३-२५०-७ (२५६२३)
ये मे निराकृता नित्यं रिपुर्येषामहं सदा ।
तैर्मोक्षितोऽहं दुर्बुद्धिर्दत्तं तैरेव जीवितम् ॥ ३-२५०-८ (२५६२४)
प्राप्तः स्यां यद्यहं वीर वधं तस्मिन्महारणे ।
श्रेयस्तद्भविता मह्यं नैवंभूतस्य जीवितम् ॥ ३-२५०-९ (२५६२५)
भवेद्यशः पृथिव्यां मे ख्यातं गन्धर्वतो वधात् ।
प्राप्ताश्च पुण्यलोकाः स्युर्महेन्द्रसदनेऽक्षयाः ॥ ३-२५०-१० (२५६२६)
यत्त्वद्य मे व्यवसितं तच्छृणुध्वं नरर्षभाः ।
इह प्रायमुपासिष्ये यूयं व्रजत वै गृहान् ।
भ्रातरश्चैव मे सर्वे यान्त्वद्य स्वपुरं प्रति ॥ ३-२५०-११ (२५६२७)
कर्णप्रभृतयश्चैव सुहृदो बान्धवाश्च ये ।
दुःशासनं पुरस्कृत्य प्रयान्त्वद्य पुरं प्रति ॥ ३-२५०-१२ (२५६२८)
न ह्यहं संप्रयास्यामि पुरं शत्रुनिराकृतः ।
शत्रुमानापहो भूत्वा सुहृदां मानकृत्तथा ॥ ३-२५०-१३ (२५६२९)
'कामं रणशिरस्यद्य शत्रुभिर्वै विमानितः'।
स सुहृच्छोकदो जातः शत्रूणां हर्षवर्धनः ।
वारणाह्वयमासाद्य किं वक्ष्यामि जनाधिपम् ॥ ३-२५०-१४ (२५६३०)
भीष्मद्रोणौ कृपद्रौणी विदुरः संजयस्तथा ।
बाह्लीकः सौमदत्तिश्च ये चान्ये वृद्धसंमताः ॥ ३-२५०-१५ (२५६३१)
ब्राह्मणाः श्रेणिमुख्याश्च तथोदासीनवृत्तयः ।
किं मां वक्ष्यंति किं चापि प्रतिवक्ष्यामि तानहं ॥ ३-२५०-१६ (२५६३२)
रिपूणां शिरसि स्थित्वा तथा विक्रम्य चोरसि ।
आत्मदोषात्परिभ्रष्टः कथं वक्ष्यामि तानहम् ॥ ३-२५०-१७ (२५६३३)
दुर्विनीताः श्रियं प्राप्य विद्यामैश्वर्यमेव च ।
तिष्ठन्ति न चिरं भद्रे यथाऽहं मदगर्वितः ॥ ३-२५०-१८ (२५६३४)
अहो वत यथेदं मे कष्टं दुश्चरितं कृतम् ।
स्वयं दुर्बुद्धिना मोहाद्येन प्राप्तोस्मि संशयम् ॥ ३-२५०-१९ (२५६३५)
तस्मात्प्रायमुपासिष्ये न हिशक्ष्यामि जीवितुम् ।
चेतयानो हि को जीवेत्कृच्छ्राच्छत्रुभिरुद्धृतः ॥ ३-२५०-२० (२५६३६)
शत्रुभिश्चावहसितो मानी पौरुषवर्जितः ।
पाण्डवैर्विक्रमाढ्यैशच् सावमानमवेक्षितः ॥ ३-२५०-२१ (२५६३७)

वैशंपायन उवाच। ३-२५०-२२क्ष् (२६१५)
एवं चिन्तापरिगतो दुःशासनमथाब्रवीत् ।
दुःशासन निबोधेदं वचनं मम भारत ॥ ३-२५०-२२ (२५६३८)
प्रतीच्छ त्वं मया दत्तमभिषेकं नृपो भव ।
प्रशाधि पृथिवीं स्फीतांकर्णसौबलपालिताम् ॥ ३-२५०-२३ (२५६३९)
भ्रातॄन्पालय विस्रब्धं मरुतो वृत्रहा यथा ।
बान्धवाश्चोपजीवन्तु देवा इव शतक्रतुम् ॥ ३-२५०-२४ (२५६४०)
ब्राह्मणेषु सदा वृत्तिं कुर्वीथाश्चाप्रमादतः ।
बन्धूनां सुहृदां चैव भवेथास्त्वं गतिः सदा ॥ ३-२५०-२५ (२५६४१)
ज्ञातींश्चाप्यनुपश्येथा विष्णुर्देवगणान्यथा ।
गुरवः पालनीयास्ते गच्छ पालय मेदिनीम् ॥ ३-२५०-२६ (२५६४२)
नन्दयन्सुहृदः सर्वाञ्शात्रवांश्चावभर्त्सयन् ।
कण्ठे चैनं परिष्वज्यगम्यतामित्युवाच ह ॥ ३-२५०-२७ (२५६४३)
तस्य तद्वचनं श्रुत्वा दीनो दुशासनोऽब्रवीत् ।
अश्रुकण्ठः सुदुःखार्तः प्राञ्जलिः प्रणिपत्य च ॥ ३-२५०-२८ (२५६४४)
सगद्गदमिदं वाक्यं भ्रातरं ज्येष्ठमात्मनः ।
कप्रसीदेत्यपतद्भूमौ दूयमानेन चेतसा ॥ ३-२५०-२९ (२५६४५)
दुःखितः पादयोस्तस्य नेत्रजं जलमुत्सृजन् ।
उक्तवांश्च नरव्याघ्रो नैतदेवं भविष्यति ॥ ३-२५०-३० (२५६४६)
विदीर्यत्सकला भूमिर्द्यौश्चापि शकलीभवेत् ।
रविरात्मप्रभां जह्यात्सोमः शीतांशुतां त्यजेत् ॥ ३-२५०-३१ (२५६४७)
वायुः शैघ्र्यमथो जह्याद्धिमवांश्च हिमं त्यजेत् ।
शुष्येत्तोयं समुद्रेषु वह्निरप्युष्णतां त्यजेत् ॥ ३-२५०-३२ (२५६४८)
न चाहं त्वदृते राजन्प्रशासेयं वसुंधराम् ।
पुनःपुनः प्रसीदेति वाक्यं चेदमुवाच ह ॥ ३-२५०-३३ (२५६४९)
ग्शत्रूणां शोककृद्राजन्सुहृदां शोकनाशनः'
त्वमेव नःकुलेराजा भविष्यसि शतं समाः ॥ ३-२५०-३४ (२५६५०)
एवमुक्त्वा स राजानं सुस्वरं प्ररुरोद ह ।
पादौ संस्पृश्य मानार्हौ भ्रातुर्ज्येष्ठस्य भारत ॥ ३-२५०-३५ (२५६५१)
तथा तौ दुःखितौ दृष्ट्वा दुःशासनसुयोधनौ ।
अभिगम्य व्यथाविष्टः कर्णस्तौ प्रत्यभाषत ॥ ३-२५०-३६ (२५६५२)
विषीदथः किं कौरव्यौ बालिश्यात्प्राकृताविव ।
न शोकः शोचमानस्य विनिवर्तेत कर्हिचित् ॥ ३-२५०-३७ (२५६५३)
यदा च शोचतः शोकोव्यसनं नापकर्षति ।
सामर्थ्यं किं ततः शोके शोचमानौ प्रपश्यथः ॥ ३-२५०-३८ (२५६५४)
धृतिं गृह्णीतं मा शत्रूञ्शोचन्तौ नन्दयिष्यथः ।

कर्तव्यं हि कृतं राजन्पाण्डवैस्तव मोक्षणम् ॥ ३-२५०-३९ (२५६५५)
नित्यमेव प्रियं कार्यं राज्ञो विपयवासिभिः ।
पाल्यमानास्त्वया ते हि निवसन्ति गतज्वराः ॥ ३-२५०-४० (२५६५६)
नार्हस्येवंगते मन्युं कर्तुं प्राकृतवत्स्वयम् ।
विषण्णास्तव सोदर्यास्त्वयि प्रायं समास्थिते ॥ ३-२५०-४१ (२५६५७)
'तदलं दुःखितानेतान्कर्तुं सर्वान्नराधिप'।
उत्तिष्ठ व्रज भद्रं ते समाश्वासय सोदरान् ॥ ३-२५०-४२ (२५६५८)

इति श्रीमन्महाभारते अरण्यपर्वणि घोषयात्रापर्वणि
पञ्चाशदधिकद्विशततमोऽध्यायः ॥ २५० ॥
Mahabharata - Vana Parva - Chapter Footnotes

३-२५०-९ एवंभूतस्य जीवितं न श्रेय इति संबन्धः ॥
३-२५०-१६ श्रेणिमुख्याः शिल्पिसंघातमुख्याः प्रकृतय इत्यर्थः ॥
३-२५०-२४ विस्रब्धं सविश्वासं यथा स्यात्तथा ॥
३-२५०-२७ कर्णं चैनं परिष्वज्येति ध ।पाठः ॥
३-२५०-३२ हिमवांश्च परिप्लवेत् इति थ ।पाठः।परिव्रजेत् इति
झ।पाठः ॥
३-२५०-३८ यदि शोकेन व्यसनं नश्येत्तर्हि स कर्तव्यः नतु
तत्तथास्ति अतः शोको न कर्तव्य इत्यर्थः ॥

---

वन-अध्यय२५१
॥ श्रीः ॥
३.२५१. अध्यायः २५१

Mahabharata - Vana Parva - Chapter Topics
कर्णेन बहुधा प्रार्थनेपि दुर्योधनेन
प्रायोपवेशाध्यवसायादपरावर्तनम् ॥ १ ॥

Mahabharata - Vana Parva - Chapter Text

३-२५१-० (२५६५९)
कर्ण उवाच। ३-२५१-०क्ष् (२६१६)
राजन्नद्यावगच्छामि तवैव लघुसत्वताम् ।
'अल्पत्वं च तथा बुद्धेः कार्याणामविवेकिताम्' ॥ ३-२५१-१ (२५६६०)
किमत्र चित्रं धर्मज्ञ मोक्षितः पाण्डवैरसि ।
सद्यो वशं समापन्नः शत्रूणां शत्रुकर्शन ॥ ३-२५१-२ (२५६६१)

सेनाजीवैश्च कौरव्य तथा विषयवासिभिः ।
अज्ञातैर्यदि वा ज्ञातैः कर्तव्यं नृपतेः प्रियम् ॥ ३-२५१-३ (२५६६२)
प्रायः प्रधानाः पुरुषाः क्षोभयित्वाऽरिवाहिनीम् ।
निगृह्यन्ते चयुद्धेषु मोक्ष्यन्ते च स्वसैनिकैः ॥ ३-२५१-४ (२५६६३)
सेनाजीवाश्च ये राज्ञां विषये सन्ति मानवाः ।
तैः संगम्य नृपार्थाय यतितव्यं यथातथम् ॥ ३-२५१-५ (२५६६४)
यद्येवं पाण्डवै राजन्भवद्विषयवासिभिः ।
यदृच्छया मोक्षितोऽसि कतत्रका परिदेवना ॥ ३-२५१-६ (२५६६५)
न चैतत्साधु यद्राजन्पाण्डवास्त्वां नृपोत्तमम् ।
स्वसेनया संप्रयान्तं नानुयान्ति स्म पृष्ठतः ॥ ३-२५१-७ (२५६६६)
शूराश्च बलवन्तश्च संयुगेष्वपलायिनः ।
भवतस्ते सभायां वै प्रेष्यतां पूर्वमागताः ॥ ३-२५१-८ (२५६६७)
पाण्डवेयानि रत्नानि त्वमद्याप्युपभुञ्जसे ।
सत्वस्थान्पाण्डवान्पश्य न ते प्रायमुपाविशन् ॥ ३-२५१-९ (२५६६८)
ग्तदलं ते महाबाहो विषादं कर्तुमीदृशम्'।
उत्तिष्ठ रराजन्भद्रं ते न चिन्तां कर्तुमर्हसि ॥ ३-२५१-१० (२५६६९)
अवश्यमेव नृपते राज्ञो विषयवासिभिः ।
प्रियाण्याचरितव्यानि तत्र का परिदेवना ॥ ३-२५१-११ (२५६७०)
मद्वाक्यमेतद्राजेन्द्र यद्येवं न करिष्यसि ।
स्थास्यामीह भवत्पादौ शुश्रूषन्नरिमर्दन ॥ ३-२५१-१२ (२५६७१)
नोत्सहे जीवितुमहं त्वद्विहीनो नरर्षभः ।
प्रायोपविष्टस्तु तथा राज्ञां हास्यो भविष्यसि ॥ ३-२५१-१३ (२५६७२)
वैशंबायन उवाच। ३-२५१-१४क्ष् (२६१७)
एवमुक्तस्तु कर्णेन राजा दुर्योधनस्तदा ।
नैवोत्थातुं मनश्चक्रे स्वर्गाय कृतनिश्चयः ॥ ३-२५१-१४ (२५६७३)

इति श्रीमन्महाभारते अरण्यपर्वणि घोषयात्रापर्वणि
एकपञ्चाशदधिकद्विशततमोऽध्यायः ॥
Mahabharata - Vana Parva - Chapter Footnotes

३-२५१-८ भवतस्ते सहाया वै इति झ ।पाठः ॥

---

वन-अध्यय२५२
॥ श्रीः ॥
३.२५२. अध्यायः २५२

Mahabharata - Vana Parva - Chapter Topics
शकुन्यादिभिर्बहुधा परिसान्त्वनेपि दुर्योधनेन
प्रायोपवेशानिश्चयादनिवर्तने पातालवासिनिर्दैत्यदानवैस्तदानयनाय
जपहोमादिना कृत्यासर्जनम् ॥ १ ॥
तथा कृत्यया प्रायोपविष्टस् दुर्योधनस्य पातालंप्रत्यानयनम् ॥ २ ॥

Mahabharata - Vana Parva - Chapter Text

३-२५२-० (२५६७४)
वैशंपायन उवाच। ३-२५२-०क्ष् (२६१८)
प्रायोपविष्टं राजानं दुर्योधनममर्षणम् ।
उवाच सान्त्वयन्राजञ्शकुनिः सौबलस्तदा ॥ ३-२५२-१ (२५६७५)
सम्यगुक्तं हि कर्णेन तच्छ्रुतं कौरव त्वया ।
मया हृतां श्रियं स्फीतां तां मोहादपहासि किम् ॥ ३-२५२-२ (२५६७६)
त्वमबुद्ध्या नृपवर प्राणानुत्स्रष्टुमिच्छसि ।
अद्य वाऽप्यवगन्छामि न वृद्धाः सेवितास्त्वया ॥ ३-२५२-३ (२५६७७)
यः समुत्पतितं हर्षं दैन्यं वा न नियच्छति ।
स नश्यति श्रियं प्राप्य पात्रमाममिवाम्भसि ॥ ३-२५२-४ (२५६७८)
अतिभीरुं मृदुं क्लीबं दीर्घसूत्रं प्रमादिनम् ।
व्यसनाद्विषयाक्रान्तं न भजन्ति नृपं श्रिताः ॥ ३-२५२-५ (२५६७९)
सत्कृतस्य हि ते शोको विपरीते कथं भवेत् ।
मा कृतं शोभनं पार्थैः शोकमालम्ब्य नाशय ॥ ३-२५२-६ (२५६८०)
यत्र हर्षस्त्वया कार्यः सत्कर्तव्याश्च पाण्डवाः ।
तत्र शोचसि राजेन्द्रविपरीतमिदं तव ॥ ३-२५२-७ (२५६८१)
प्रसीदमा त्यजात्मानं तुष्टश्च सुकृतं स्मर ।
कप्रयच्छ राज्यं पार्थानां यशो धर्ममवाप्नुहि ।
क्रियामेतां समाज्ञाय कृतघ्नो न भविष्यसि ॥ ३-२५२-८ (२५६८२)
सौभ्रात्रं पाण्डवैः कृत्वा समवस्ताप्य चैव तान् ।
पित्र्यं राज्यं प्रयच्छैषां ततः सुखमवाप्स्यसि ॥ ३-२५२-९ (२५६८३)
वैशंपायन उवाच। ३-२५२-१०क्ष् (२६१९)
शकुनेस्तु वचः श्रुत्वा दुःशासनमवेक्ष्य च ।
पादयोः पतितं वीरं विकृतं भ्रातृसौहृदात् ॥ ३-२५२-१० (२५६८४)
बाहुभ्यां साधुजाताभ्यां दुःशासनमरिंदमम् ।
उत्थाप्य संपरिष्वज्य प्रीत्याऽजिघ्रत मूर्धनि ॥ ३-२५२-११ (२५६८५)
कर्णसौबलयोश्चापि संश्रुत्य वचनान्यसौ ।
निर्वेदं परमं गत्वा राजा दुर्योधनस्तदा ।

व्रीडयाऽभिपरीतात्मा नैराश्यमगमत्परम् ॥ ३-२५२-१२ (२५६८६)
सुहृदां चैव तच्छ्रुत्वा समन्युरिदमब्रवीत् ।
न धर्मधनसौख्येन नैश्वर्येण न चाज्ञया ॥ ३-२५२-१३ (२५६८७)
नैव भोगैश्च मे कार्यं मा विहन्यत गच्छत ।
निश्चितेयं मम मतिः स्थिता प्रायोपवेशने ॥ ३-२५२-१४ (२५६८८)
गच्छध्वं नगरं सर्वे पूज्याश्च गुरवो मम ।
त एवमुक्ताः प्रत्यूच् राजानमरिमर्दनम् ॥ ३-२५२-१५ (२५६८९)
या गतिस्तव राजेन्द्र साऽस्माकमपि भारत ।
कथं वा संप्रवेक्ष्यामस्त्वद्विहीनाः पुरं वयम् ॥ ३-२५२-१६ (२५६९०)
वैशंपायन उवाच। ३-२५२-१७क्ष् (२६२०)
स सुहृद्भिरमात्यैश्च भ्रातृभिः स्वजनेन च ।
बहुप्रकारमप्युक्तो निश्चयान्न व्यचाल्यत ॥ ३-२५२-१७ (२५६९१)
दर्भास्तरणमास्तीर्य निश्चयाद्धृतराष्ट्रजः ।
संस्पृश्यापः शुचिर्भूत्वा भूतले समुपस्थितः ॥ ३-२५२-१८ (२५६९२)
कुशचीराम्बरधरः परं नियममास्थितः ।
वाग्यतो राजशार्दूलः स स्वर्गगतिकाम्यया ॥ ३-२५२-१९ (२५६९३)
मनसोपचितिं कृत्वा निरस् च बहिःक्रियाः ।
ग्तस्थौप्रायोपवेशेऽथमतिं कृत्वा सुनिश्चयाम्' ॥ ३-२५२-२० (२५६९४)
अथ तं निश्चयं तस्य बुद्ध्वा दैतेयदानवाः ।
पातालवासिनो रौद्राः पूर्वं देवैर्विनिर्जिताः ॥ ३-२५२-२१ (२५६९५)
ते स्वपक्षक्षयं तं तु ज्ञात्वा दुर्योधनस्य वै ।
आह्वानाय तदा चक्रुः कर्म वैतानसंभवम् ॥ ३-२५२-२२ (२५६९६)
बृहस्पत्युशनोक्तैश्च मन्त्रैर्मन्त्रविशारदाः ।
अथर्ववेदप्रोक्तैश्च याश्चौपनिषदाः क्रियाः ।
मन्त्रजप्यसमायुक्तास्तास्तदा समवर्तयन् ॥ ३-२५२-२३ (२५६९७)
जुह्वत्यग्नौ हविः क्षीरं मन्त्रवत्सुसमाहिताः ।
ब्राह्मणा वेदवेदाङ्गपारगाः सुदृढव्रताः ॥ ३-२५२-२४ (२५६९८)
ग्अध्वर्यवो दानवानां कर्म प्रावर्तयंस्ततः' ॥ ३-२५२-२५ (२५६९९)
कर्मसिद्धौ तदा तत्र जृम्भमाणा महाद्भुता ।
कृत्या समुत्थिता राजन्किं करोमीति चाब्रवीत् ॥ ३-२५२-२६ (२५७००)
आहुर्दैत्याश्च तां तत्र सुप्रीतेनान्तरात्मना ।
प्रायोपविष्टं राजानं धार्तराष्ट्रमिहानय ॥ ३-२५२-२७ (२५७०१)
तथेति च प्रतिश्रुत्य सा कृत्या प्रययौ तदा ।
निमेषादगमच्चापि यत्र राजा सुयोधनः ॥ ३-२५२-२८ (२५७०२)
समादाय च राजानं प्रविवेश रसातलम् ।
दानवानां मुहूर्ताच्च पुरतस्तं न्यवेदयत् ॥ ३-२५२-२९ (२५७०३)

तमानीतं नृपं दृष्ट्वा रात्रौ संगत्य दानवाः ।
प्रहृष्टमनसः सर्वे किंचिदुत्फुल्ललोचनाः ॥ ३-२५२-३० (२५७०४)
ग्दृढमेनं परिष्यज्य दृष्ट्वा च कुशलं तदा'।
साभिमानमिदं वाक्यं दुर्योधनमथाब्रुवन् ॥ ३-२५२-३१ (२५७०५)

इति श्रीमन्महाभारते अरण्यपर्वणि घोषयात्रापर्वणि
द्विपञ्चाशदधिकद्विशततमोऽध्यायः ॥
Mahabharata - Vana Parva - Chapter Footnotes

३-२५२-४ पात्रं मृत्पात्रम् ।आममपक्वम् ॥
३-२५२-५ क्लीवं सामर्थ्यहीनम् ।दीर्घसूत्रं
चिरकारिणम्।प्रमादिनमनवहितम्।व्यसनात्
द्यूतपानमृगयादिरूपात्।विषयैः स्त्र्यादिभिराक्रान्तम्।त्वं तु तेषां
मध्ये प्रमादी विषयाक्रान्तश्चेति भावः ॥
३-२५२-६ पार्थैः कृतं मा नाशयेति संबन्धः ॥
३-२५२-८ आत्मानं शरीरं मा त्यज ॥
३-२५२-१० विकृतं म्लानम् ॥
३-२५२-१२ निर्वेदं जीविते वैराग्यम् ।नैराश्यं राज्यलाभे इति शेषः ॥
३-२५२-१३ समन्युः दैन्यवान् ।धर्मेण धनेन सौख्येन वा न मम
कार्यमिति संबन्धः।धर्मधनाभ्यां यत्सौख्यं तेन वा ॥
३-२५२-१४ मा विहन्यत मम संकल्पं मा नाशयत ॥
३-२५२-१९ वाग्यतो मौनी ॥
३-२५२-२० मनसा उप समीपे चितिं दाहार्थं काष्ठसंचयं
कृत्वासंकल्प्य अवश्यं मर्तव्यमिति निश्चित्येत्यर्थः ।बहिःक्रियाः
स्नानपानाद्याः ॥
३-२५२-२२ वैतानसंभवमग्निविस्तारसाध्यं नवकुण्ड्यादिविधानम् ॥
३-२५२-२३ उपनिषदि आरण्यके प्रोक्ताः औपनिषदाः ।समवर्तयन्
संप्रावर्तयन् दैतेयदानवा इतिपूर्वेण संबन्धः ॥
३-२५२-२६ कृत्या आज्ञाकरी देवता ॥

---

वन-अध्यय२५३
॥ श्रीः ॥
३.२५३. अध्यायः २५३

Mahabharata - Vana Parva - Chapter Topics
पातालवासिभिर्दैत्यदानवैर्दुर्योधनंप्रति हेतूपन्यासपूर्वकं

प्रायोपवेशननिश्चयान्निवर्तनम् ॥ १ ॥
पुनः कृत्यया दुर्योधनस्य पूर्वस्थानंप्रत्यानयनम् ॥ २ ॥
परेद्युः कर्णादिप्रार्थनया दुर्योधनेन सर्वैः सह
स्वपुरंपरत्यागमनम् ॥ ३ ॥

Mahabharata - Vana Parva - Chapter Text

३-२५३-० (२५७०६)
दानवा ऊचुः। ३-२५३-०क्ष् (२६२१)
भोः सुयोधन राजेन्द्र भरतानां कुलोद्वह ।
शूरैः परिवृतो नित्यं तथैव च महात्मभिः ॥ ३-२५३-१ (२५७०७)
अकार्षीः साहसमिदं कस्मात्प्रायोपवेशनम् ।
आत्मत्यागी ह्यधो याति वाच्यतां चायशस्करीम् ॥ ३-२५३-२ (२५७०८)
न हि कार्यविरुद्धेषु बहुपापेषु कर्मसु ।
मूलघातिषु सज्जन्ते बुद्धिमन्तो भवद्विधाः ॥ ३-२५३-३ (२५७०९)
नियच्छैनां मतिं राजन्धर्मार्थसुखनाशिनीम् ।
यशःप्रतापवीर्यघ्नीं शत्रूणां हर्षवर्धनीम् ॥ ३-२५३-४ (२५७१०)
श्रूयतां तु प्रभो तत्त्वं दिव्यतां चात्मनो नृप ।
निर्माणं च रशरीरस्य ततो धैर्यमवाप्नुहि ॥ ३-२५३-५ (२५७११)
पुरा त्व तपसाऽस्माभिर्लब्धो राजन्महेश्वरात् ।
पूर्वकायश्च ते सर्वो निर्मितो वज्रसंचयैः ॥ ३-२५३-६ (२५७१२)
अस्त्रैरभेद्यः शस्त्रैश्चाप्यधःकायश्च तेऽनघ ।
कृतः पुष्पमयो देव्या रूपतस्त्रीमनोहरः ॥ ३-२५३-७ (२५७१३)
एवमीश्वरसंयुक्तस्तव देहो नृपोत्तम ।
देव्या च राजशार्दूल दिव्यस्त्वं हि न मानुषः ॥ ३-२५३-८ (२५७१४)
क्षत्रियाश्च महावीर्या भगदत्तपुरोगमाः ।
दिव्यास्त्रविदुषः शूराः क्षपयिष्यन्ति ते रिपून् ॥ ३-२५३-९ (२५७१५)
तदलं ते विषादेन भयं तव न विद्यते ।
सहायार्थं च ते वीराः संभूता बुवि दानवाः ॥ ३-२५३-१० (२५७१६)
भीष्मद्रोणकृपादींश्च प्रवेक्ष्यन्त्यपरेऽसुराः ।
यैराविष्टा घृणां त्यक्त्वा योत्स्यन्ते तव वैरिभिः ॥ ३-२५३-११ (२५७१७)
नैव पुत्रान्न च भ्रातॄन्न पितॄन्न च बान्धवान् ।
नैव शिष्यान्न च ज्ञातीन्न बालान्त्यविरान्न च ।
युधि संप्रहरिष्यन्तो मोक्ष्यन्ति कुरुसत्तम ॥ ३-२५३-१२ (२५७१८)
निःस्नेहा दानवाविष्टाः समाक्रान्तेऽन्तरात्मनि ।
प्रहरिष्यन्ति बन्धुभ्यः स्नेहमुत्सृज्य दूरतः ॥ ३-२५३-१३ (२५७१९)

हृष्टाः पुरुषशार्दूलाः कलुषीकृतमानसाः ।
अनभिज्ञातमूलाश्च दैवाच्च विधिनिर्मितात् ।
व्याभाषमाणाश्चान्योन्यं न मे जीवन्विमोक्ष्यसे ॥ ३-२५३-१४ (२५७२०)
सर्वे शस्त्रास्त्रमोक्षेण पौरुषे समवस्थिताः ।
श्लाघमानाः कुरुश्रेष्ठ करिष्यन्ति जनक्षयम् ॥ ३-२५३-१५ (२५७२१)
तेपि पञ्च महात्मानः प्रतियोत्सन्ति पाण्डवाः ।
वधं चैषां करिष्यन्ति दैवयुक्ता महाबलाः ॥ ३-२५३-१६ (२५७२२)
दैत्यरक्षोगणाश्चैव संभूताः क्षत्रयोनिषु ।
योत्स्यन्ति युधि विक्रम्य शत्रुभिस्तव पार्थिव ॥ ३-२५३-१७ (२५७२३)
गदाभिर्मुसलैः शूलैः शस्त्रैरुच्चावचैस्तथा ।
ग्प्रहरिष्यनति ते वीरास्तवारिषु महाबलाः' ॥ ३-२५३-१८ (२५७२४)
यच्च तेऽन्तर्गतं वीर भयमर्जुनसंभवम् ।
तत्रापि विहितोऽस्माभिर्वधोपायोऽर्जुनस्य वै ॥ ३-२५३-१९ (२५७२५)
हतस्य नरकस्यात्मा कर्णमूर्तिमुपाश्रितः ।
तद्वैरं संस्मरन्वीर योत्स्यते केशवार्जुनौ ॥ ३-२५३-२० (२५७२६)
स ते विक्रमशौण्डीरो रणे पार्थं विजेष्यति ।
कर्णः प्रहरतांश्रेष्ठः सर्वांश्चारीन्महारथः ॥ ३-२५३-२१ (२५७२७)
ज्ञात्वैतच्छद्मना वज्री रक्षार्थं सव्यसाचिनः ।
कुण्डले कवचं चैव कर्णस्यापहरिष्यति ॥ ३-२५३-२२ (२५७२८)
तस्मादस्माभिरप्यत्र दैत्याः शतसहस्रशः ।
नियुक्ता राक्षसाश्चैव ये ते संशप्तका इति ।
प्रख्यातास्तेऽर्जुनं वीरं युधि हिंस्यन्ति मा शुचः ॥ ३-२५३-२३ (२५७२९)
असपत्ना त्वया हीयं भोक्तव्या वसुधा नृप ।
मा विषादं गमस्तस्मान्नैतत्त्वय्युपपद्यते ॥ ३-२५३-२४ (२५७३०)
विनष्टे त्वयि चास्माकं पक्षो हीयेत कौरव ।
गच्छ वीर न ते बुद्धिरन्या कार्या कथंचन ।
त्वमस्माकं गतिर्नित्यं देवतानां च पाण्डवाः ॥ ३-२५३-२५ (२५७३१)
वैशंपायन उवाच। ३-२५३-२६क्ष् (२६२२)
एवमुक्त्वा परिष्वज्य दैत्यास्तं राजकुञ्जरम् ।
समाश्वास्य च दुर्धर्षं पुत्रवद्दानवर्षभाः ॥ ३-२५३-२६ (२५७३२)
स्थिरां कृत्वा बुद्धिमस्य प्रियाण्युक्त्वा च भारत ।
गम्यतामित्यनुज्ञाय जयमाप्नुहि चेत्यथ ॥ ३-२५३-२७ (२५७३३)
तैर्विसृष्टं महाबाहुं कृत्या सैवानयत्पुरः ।
तमेव देशं यत्रासौ तदा प्रायमुपाविशत् ॥ ३-२५३-२८ (२५७३४)
प्रतिनिक्षिप्यतं वीरं कृत्या समभिपूज्य च ।
अनुज्ञाता च राज्ञा सा तत्रैवान्तरधीयत ॥ ३-२५३-२९ (२५७३५)

गतायामथ तस्यां तु राजा दुर्योधनस्तदा ।
स्वप्नभूतमिदं सर्वमचिन्तयत भारत ॥ ३-२५३-३० (२५७३६)
ग्संमृश्य तानि वाक्यानि दानवोक्तानि दुर्मतेः'।
विजेष्यामि रणे पाण्डूनिति चास्याभवनमतिः ॥ ३-२५३-३१ (२५७३७)
कर्णं संशप्तकांश्चैव पार्थस्यामित्रघातिनः ।
अमन्यत वधे युक्तान्समर्थांश्च सुयोधनः ॥ ३-२५३-३२ (२५७३८)
एवमाशा दृढा तस् धार्तराष्ट्रस् दुर्मतेः ।
विनिर्जये पाण्डवानामभवद्भरतर्षभ ॥ ३-२५३-३३ (२५७३९)
कर्णोऽप्याविष्टचित्तात्मा नरकस्यान्तरात्मना ।
अर्जुनस्य वधे क्रूरां करोति स्म तदा मतिम् ॥ ३-२५३-३४ (२५७४०)
संशप्तकाश्च ते वीरा राक्षसाविष्टचेतसः ।
रजस्तमोभ्यामाक्रान्ताः फाल्गुनस्य वधैषिणः ॥ ३-२५३-३५ (२५७४१)
भीष्मद्रोणकृपाद्याश्च दानवाक्रान्तचेतसः ।
न तथा पाण्डुपुत्राणां स्नेहवन्तोऽभवंस्तदा ॥ ३-२५३-३६ (२५७४२)
न चाचचक्षे कस्मैचिदेतद्राजा सुयोधनः ।
ग्कृत्ययाऽऽनाय्यकथितं यदस्य निशि दानवैः' ॥ ३-२५३-३७ (२५७४३)
दुर्योधनं निशन्ते च कर्णो वैकर्तनोऽब्रवीत् ।
स्मयन्निवाञ्जलिं कृत्वा पार्थिवं हेतुमद्वचः ॥ ३-२५३-३८ (२५७४४)
न मृतो जयते शत्रूञ्जीवन्भद्राणि पश्यति ।
मृतस्य भद्राणि कुतः कौरवेय कुतो जयः ॥ ३-२५३-३९ (२५७४५)
न कालाऽद्य विषादस्य भयस्य मरणस्य वा ।
परिष्वज्याब्रवीच्चैवनं भुजाभ्यां स महाभुजः ॥ ३-२५३-४० (२५७४६)
उत्तिष्ठ राजन्किं शेषे कस्माच्छोचसि शत्रुहन् ।
शत्रून्प्रताप्य वीर्येण स कथं मर्तुमर्हसि ॥ ३-२५३-४१ (२५७४७)
अथवा ते भयं जातं दृष्ट्वाऽर्जुनपराक्रमम् ।
सत्यंते प्रतिजानामि वधिष्यामि रणेऽर्जुनम् ॥ ३-२५३-४२ (२५७४८)
गते त्रयोदशे वर्षे सत्येनायुधमालभे ।
आनयिष्याम्यहं पार्तान्वशं तव जनाधिप ॥ ३-२५३-४३ (२५७४९)
एवमुक्तस्तु कर्णेन दैत्यानां वचनात्तथा ।
प्रणिपातेन चाप्येषामुदतिष्ठत्सुयोधनः ॥ ३-२५३-४४ (२५७५०)
दैत्यानां तद्वचः श्रुत्वा हृदि कृत्वा स्थिरां मतिम् ।
ततो मनुजशार्दूलो योजयामास वाहिनीम् ।
रथनागाश्वफलिलां पदातिजनसंकुलाम् ॥ ३-२५३-४५ (२५७५१)
गङ्गौघप्रतिमा चास्य प्रयाणे शुशुभे चमूः ॥ ३-२५३-४६ (२५७५२)
श्वेतच्छत्रैः पताकाभिश्चामरैश्च सुपाण्डुरैः ।
रथैर्नागैः पदातैश्च शुशुभेऽतीव संकुला ॥ ३-२५३-४७ (२५७५३)

व्यपेताभ्रघने काले द्यौरिवासीत्तु शारदी ।
ग्हंसपङ्क्तिसमाकीर्णा भ्रमत्सारसशोभिता' ॥ ३-२५३-४८ (२५७५४)
जयाशीर्भिर्द्विजेन्द्रैः स स्तूयमानोऽधिराजवत् ।
गृह्णन्नञ्जलिमालाश्च धार्तराष्ट्रो जनाधिपः ॥ ३-२५३-४९ (२५७५५)
सुयोधनो ययावग्रे श्रिया परमया ज्वलम् ।
कर्णेन सार्धं राजेन्द्र सौबलेन च देविना ॥ ३-२५३-५० (२५७५६)
दुःशासनादयश्चास्य भ्रातरः सर्व एव ते ।
भूरिश्रवाः सोमदत्तो माराजश्च बाह्लिकः ॥ ३-२५३-५१ (२५७५७)
रथैर्नानाविधाकारैर्हयैर्गजवरैस्तथा ।
प्रयान्तं नृपसिंहं तमनुजग्मुः कुरूद्वहाः ॥ ३-२५३-५२ (२५७५८)
ग्प्रहृष्टमनसः सर्वे दुर्योधनपुरोगमाः' ॥
कालेनाल्पेन राजेन्द्र स्वपुरं विविशुस्तदा ॥ ३-२५३-५३ (२५७५९)

इति श्रीमन्महाभारते अरण्यपर्वणि घोषयात्रापर्वणि
त्रिपञ्चाशदधिकद्विशततमोऽध्यायः ॥ २५३ ॥
Mahabharata - Vana Parva - Chapter Footnotes

३-२५३-२१ विक्रमे शत्रुजये ।शौण्डीरः समर्थः ॥
३-२५३-२७ जयमाप्नुहि चेत्युक्त्वेति शेषः ।अथ तैर्विसृष्टमिति
संबन्धः ॥
३-२५३-३४ अन्तरात्मना मनसा ॥
३-२५३-३६ पाण्डुपुत्राणामुपरीति शेषः ॥
३-२५३-४४ एषां दुःशासनादीनाम् ॥
३-२५३-४८ व्यपेतः अभ्रघनः मेघ्नविस्तारो यस्मिन् शरदीत्यर्थः ॥
३-२५३-४९ अधिराजा सार्वभौमो युधिष्ठिरस्तद्वत् ॥
३-२५३-५० देविना द्यूतरतेन ॥

---

वन-अध्यय२५४
॥ श्रीः ॥
३.२५४. अध्यायः २५४

Mahabharata - Vana Parva - Chapter Topics
भीष्मेण दुर्योधनंप्रति पाण्डवप्रशंसनपूर्वकं तैःसह
सन्धिविधानम् ॥ १ ॥
तथा कर्णस्य गर्हणम् ॥ २ ॥
दुर्योधनानुमत्या कर्णेन दिग्विजयाया निर्गमनम् ॥ ३ ॥

३-२५४-० (२५७६०)
जनमेजय उवाच। ३-२५४-०क्ष् (२६२३)
एवं गतेषु पार्थेषु वने तस्मिन्महात्मसु ।
धार्तराष्ट्रा महेष्वासाः किमकुर्वत सत्तमाः ॥ ३-२५४-१ (२५७६१)
कर्णो वैकर्तनश्चैव शकुनिश्च महाबलः ।
भीष्मद्रोणकृपाश्चैव तन्मे शंसितुमर्हसि ॥ ३-२५४-२ (२५७६२)
वैशंपायन उवाच। ३-२५४-३क्ष् (२६२४)
एवं गतेषु पार्थेषु विसृष्टे च सुयोधने ।
आगते हास्तिनपुरं मोक्षिते पाण्डुनन्दनैः ।
भीष्मोऽब्रवीन्महाराज धार्तराष्ट्रमिदं वच ॥ ३-२५४-३ (२५७६३)
उक्तं तात मया पूर्वं गच्छतस्ते तपोवनम् ।
वचनं ते न रुचितं मम तन्न कृतं च ते ॥ ३-२५४-४ (२५७६४)
ततः प्राप्तं त्वया वीर ग्रहणं शत्रुभिर्बलात् ।
मोक्षितश्चासि धर्मज्ञैः पाण्डवैर्न च लज्जसे ॥ ३-२५४-५ (२५७६५)
प्रत्यक्षं तव गान्धारे ससैन्यस् विशांपते ।
सूतपुत्रोऽपयाद्भीतो गन्धर्वाणां तदा रणात् ॥ ३-२५४-६ (२५७६६)
क्रोशतस्तव राजेन्द्र ससैन्यस्य नृपात्मज ।
ग्व्यपायात्पृष्ठतस्तस्मात्प्रेक्षमाणः पुनःपुनः ॥' ३-२५४-७ (२५७६७)
दृष्टस्ते विक्रमश्चैव पाण्डवानां महात्मनाम् ।
कर्णस्य च महाबाहो सूतपुत्रस्य दुर्मते ॥ ३-२५४-८ (२५७६८)
न चापि पादभाक्कर्णः पाण्डवानां महात्मनाम् ।
धनुर्वेदे च शौर्ये च धर्मे वा धर्मवत्सल ॥ ३-२५४-९ (२५७६९)
तस्मादहं क्षमं मन्ये पाण्डवैस्तैर्महात्मभिः ।
रसन्धिं सन्धिविदांश्रेष्ठ कुलस्यास्य विवृद्धये ॥ ३-२५४-१० (२५७७०)
एवमुक्तश्च भीष्मेण धार्तराष्ट्रो जनेश्वरः ।
प्रहस्य सहसा राजन्विप्रतस्थे ससौबलः ॥ ३-२५४-११ (२५७७१)
तं तु प्रस्थितमाज्ञाय कर्णदुःशासनादयः ।
अनुजग्मुर्महेष्वासा धार्तराष्ट्रं महाबलम् ॥ ३-२५४-१२ (२५७७२)
तांस्तु संप्रस्थितान्दृष्ट्वा भीष्मः कुरुपितामहः ।
लज्जया व्रीडितो राजञ्जगाम स्वं निवेशनम् ॥ ३-२५४-१३ (२५७७३)
गते भीष्मे महाराज धार्तराष्ट्रो जनेश्वरः ।
पुनरागम्य तं देशममन्त्रयत मन्त्रिभिः ॥ ३-२५४-१४ (२५७७४)
किमस्माकं भवेच्छ्रेयः किं कार्यमवशिष्यते ।
कथं च सुकृतं तत्स्यान्मन्त्रयामास भारत ॥ ३-२५४-१५ (२५७७५)

शकर्ण उवाच। ३-२५४-१६क्ष् (२६२५)
दुर्योधन निबोधेदं यत्त्वां वक्ष्यामि कौरव ।
भीष्मोस्मान्निन्दति सदा पाण्डवांश्च प्रशंसति ॥ ३-२५४-१६ (२५७७६)
त्वद्द्वेषाच्च महाबाहो मामपि द्वेष्टुमर्हति ।
विगर्हते च मां नित्यं त्वत्समीपे नरेश्वर ॥ ३-२५४-१७ (२५७७७)
सोऽहं भीष्मवचस्तद्वै न मृष्यामीह भारत ।
त्वत्समं यदुक्तं च भीष्मेणामित्रकर्शन ॥ ३-२५४-१८ (२५७७८)
पाण्डवानां यशो राजंस्तव निन्दां च भारत ।
अनुजानीहि मां राजन्सभृत्यबलवाहनम् ॥ ३-२५४-१९ (२५७७९)
जेष्यामि पृथिवीं राजन्सशैलवनकाननाम् ।
जिता च पाण्डवैर्भूमिश्चतुर्भिर्बलशालिभिः ॥ ३-२५४-२० (२५७८०)
तामहं ते विजेष्यामि एक एव न संशयः ।
संपश्यतु सुदुर्बुद्धिर्भीष्मः कुरुकुलाधमः ॥ ३-२५४-२१ (२५७८१)
अनिन्द्यं निन्दते यो हि अप्रशंस्यं प्रशंसति ।
स पश्यतु बलं मेऽद्य आत्मानं तु विगर्हतु ॥ ३-२५४-२२ (२५७८२)
अनुजानीहि मां राजन्ध्रुवो हि विजयस्तव ।
प्रतिजानामि ते सत्यं राजन्नायुधमालभे ॥ ३-२५४-२३ (२५७८३)
तच्छ्रुत्वा तु वचो राजन्कर्णस्य भरतर्षभ ।
प्रीत्या परमया युक्तः कर्णमाह नराधिपः ॥ ३-२५४-२४ (२५७८४)
धन्योस्म्यनुगृहीतोस्मि यस्य मे त्वं महाबलः ।
हितेषु वर्तसे नित्यं सफलंजन्म चाद्य मे ॥ ३-२५४-२५ (२५७८५)
यदा च मन्यसे वीर सर्वशत्रुनिबर्हणम् ।
तदा निर्गच्छ भद्रं ते ह्यनुशाधि च मामिति ॥ ३-२५४-२६ (२५७८६)
एवमुक्तस्तदा कर्णो धार्तराष्ट्रेण धीमता ।
सर्वमज्ञापयामास प्रायात्रिकमरिंदम ॥ ३-२५४-२७ (२५७८७)
प्रययौ च महेष्वासो नक्षत्रे शुभदैवते ।
शुभेतिथौ मुहूर्ते च पुज्यमानो द्विजातिभिः ॥ ३-२५४-२८ (२५७८८)
मङ्गलैश्च शुभैः स्नातो वाग्भिश्चापि प्रपूजितः ।
नादयन्रथघोषेण त्रैलोक्यं सचराचरम् ॥ ३-२५४-२९ (२५७८९)

इति श्रीमन्महाभारते अरण्यपर्वणि घोषयात्रापर्वणि
चतुःपञ्चासदधिकद्विशततमोऽध्यायः ॥ २५४ ॥

Mahabharata - Vana Parva - Chapter Footnotes

३-२५४-६ अपयात् अपायात् पलायितः ॥
३-२५४-१० संधिं क्षमं युक्तं मन्ये ॥

३-२५४-१५ मन्त्रयामोऽद्य यद्धितमिति झ ।ध ।पाठः ॥
३-२५४-२७ प्रायात्रिकं प्रयातुं राज्ञोऽपेक्षितं शकटापणवीथ्यादि ॥
३-२५४-२९ मङ्गलैः मङ्गलद्रव्यैः सुगन्धतैलादिभिः स्नातः
।शुभैर्नीराजनादिभिः प्रययौ इति संबन्धः ॥
क्व एतदादिः सार्धोऽध्यायो झ ।पुस्तकएव दृश्यते ॥

---

वन-अध्यय२५५
॥ श्रीः ॥
३.२५५. अध्यायः २५५

Mahabharata - Vana Parva - Chapter Topics
दिग्विजयार्थं गतेन कर्णेन सकलराजवशीकरणपूर्वकं
पुनर्हास्तिनपुरंप्रत्यागमनम् ॥१ ॥

Mahabharata - Vana Parva - Chapter Text

३-२५५-० (२५७९०)
वैशंपायन उवाच।३-२५५-०क्ष् (२६२६)
ततः कर्णो महेष्वासो बलेन महता वृतः ।
द्रुपदस्य पुरं रम्यं रुरोध भरतर्षभ ॥३-२५५-१ (२५७९१)
युद्धेन महता चैनं चक्रे वीरं वशानुगम् ।
सुवर्णं रजतं चापि रत्नानि विविधानि च ।
करं च दापयांमास द्रुपदं नृपसत्तम ॥ ३-२५५-२ (२५७९२)
तं विनिर्जित्य राजेन्द्र राजानस्तस्य येऽनुगाः ।
तान्सर्वान्वशगांश्चक्रे करं चैनानदापयत् ॥३-२५५-३ (२५७९३)
अथोत्तरां दिशं गत्वा वशे चक्रे नराधिपान् ।
भगदत्तं च निर्जित्य राधेयो गिरिमारुहत् ॥३-२५५-४ (२५७९४)
हिमवन्तं महाशैलं युध्यमानश्च शत्रुभिः ।
प्रययौ च दिशः सर्वान्नृपतीन्वशमानयत् ॥३-२५५-५ (२५७९५)
स हैमवतिकाञ्जित्वा करं सर्वानदापयत् ।
नेपालविषये ये च राजानस्तानवाजयत् ॥३-२५५-६ (२५७९६)
अवतीर्य ततः शैलात्पूर्वां दिशमभिद्रुतः ।
अङ्गान्वङ्गान्कलिङ्गांश्च शुण्डिकान्मिथिलानथ ॥३-२५५-७ (२५७९७)
मागधान्कर्कखण्डांश्च निवेश्य विषयेऽऽत्मनः ।
आवशीरांश्च योध्यांश्च अहिक्षत्रांश्च सोऽजयत् ॥३-२५५-८ (२५७९८)
पूर्वां दिशं विनिर्जित्य वत्सभूमिं तथाऽगमत् ॥ ३-२५५-९ (२५७९९)
वत्सभूमिं विनिर्जित्य केवलां मृत्तिकावतीम् ।

मोहनं पत्तनं चैव त्रिपुरीं कोसलां तथा ॥ ३-२५५-१० (२५८००)
एतान्सर्वान्विनिर्जित्य करमादाय सर्वशः ।
दक्षिणां दिशमास्थाय कर्णो जित्वा महारथान् ।
रुक्मिणं दाक्षिणात्येषु योधयामास सूतजः ॥ ३-२५५-११ (२५८०१)
स युद्धं तुमुलं कृत्वा रुक्मी प्रोवाच सूतजम् ।
प्रीतोस्मि तव राजेन्द्र विक्रमेण बलेन च ॥ ३-२५५-१२ (२५८०२)
न ते विघ्नं करिष्यामि प्रतिज्ञां समपालयम् ।
प्रीत्या चाहं प्रयच्छामि हिरण्यं यावदिच्छसि ॥ ३-२५५-१३ (२५८०३)
समेत्य रुक्मिणा कर्णः पाण्ड्यं शैलं च सोगमत् ॥ ३-२५५-१४ (२५८०४)
स केवलं रणए चैव नीलं चापि महीपतिम् ।
वेणुदारिसुतं चैव ये चान्ये नृपसत्तमाः ।
दक्षिणस्यां दिशि नृपान्करान्सर्वानदापयत् ॥ ३-२५५-१५ (२५८०५)
शैशुपालिं ततो गत्वा विजिग्ये सूतनन्दनः ।
पार्श्वस्थांश्चापि नृपतीन्वशे चक्रे महाबलः ॥ ३-२५५-१६ (२५८०६)
आवन्त्यांश्च वशे कृत्वा साम्ना च भरतर्षभ ।
वृष्णिभिः सह संम्य पश्चिमामपि निर्जयत् ॥ ३-२५५-१७ (२५८०७)
वारुणीं दिशमागम्य यावनान्वर्बरांस्तथा ।
नृपान्पश्चिमभूमिस्थान्दापयामास वै करान् ॥ ३-२५५-१८ (२५८०८)
विजित्य पृथिवीं सर्वां सपूर्वापरदक्षिणाम् ।
सम्लेच्छाटविकान्वीरः सपर्वतनिवासिनः ॥ ३-२५५-१९ (२५८०९)
भद्रान्रोहितकांश्चैव आग्रेयान्मालवानपि ।
गणान्सर्वान्विनिर्जित्य नीतिकृत्प्रहसन्निव ॥ ३-२५५-२० (२५८१०)
शशकान्यवनांश्चैव विजिग्ये सूतनन्दनः ।
नग्नजित्प्रमुखांश्चैव गणाञ्जित्वा महारथान् ॥ ३-२५५-२१ (२५८११)
एवं स पृथिवीं सर्वां वशे कृत्वा महारथः ।
विजित्य पुरुषव्याघ्रो नागसाह्वयमागमत् ॥ ३-२५५-२२ (२५८१२)
तमागतं महेष्वासं धार्तराष्ट्रो जनाधिपः ।
प्रत्युद्गत्य महाराज सभ्रातृपितृबान्धवः ॥ ३-२५५-२३ (२५८१३)
अर्चयामास विधिना कर्णमाहवशोभिनम् ।
आश्रावयच्च तत्कर्म प्रीयमाणो जनेश्वरः ॥ ३-२५५-२४ (२५८१४)
यन्न भीष्मान्न च द्रोणान्न कृपान्न च वाह्लिकात् ।
प्राप्तवानस्मि भद्रं ते त्वत्तःप्राप्तं मया हि तत् ॥ ३-२५५-२५ (२५८१५)
बहुना च किमुक्तेन शृणु कर्ण वचो मम ।
सनाथोस्मि महाबाहो त्वया नाथेन सत्तम ॥ ३-२५५-२६ (२५८१६)
न हि ते पाण्डवाः सर्वे कलामर्हन्ति षोडशीम् ।
अन्येवा पुरुषव्याघ्र राजानोऽभ्युदितोदिताः ॥ ३-२५५-२७ (२५८१७)

स भवान्धृतराष्ट्रं तं गान्धारीं च यशस्विनीम् ।
पश्य कर्ण महेष्वास अदितिं वज्रभृद्यथा ॥ ३-२५५-२८ (२५८१८)
ततो हलहलाशब्दः प्रादुरासीद्विशांपते ।
हाहाकाराश्च बहवो नगरे नागसाह्वये ॥ ३-२५५-२९ (२५८१९)
रकेचिदेनं प्रशंसन्ति निन्दन्ति स्म तथा परे ।
तूष्णीमासंस्तथा चान्ये नृपास्तत्र जनाधिप ॥ ३-२५५-३० (२५८२०)
एवं विजित्य राजेन्द्र कर्णः शस्त्रभृतांवरः ।
सपर्वतवनाकाशां ससमुद्रां सनुष्कुटाम् ॥ ३-२५५-३१ (२५८२१)
देशैरुच्चावचैः पूर्णां पत्तनैर्नगरैरपि ।
द्वीपैश्चानूपसंपूर्णैः पृथिवीं पृथिवीपते ॥ ३-२५५-३२ (२५८२२)
कालेन नातिदीर्घेण वशे कृत्वा तु पार्थिवान् ।
अक्षयं धनमादाय सूतजो नृपमभ्ययात् ॥ ३-२५५-३३ (२५८२३)
प्रविश्य च गृहं राजन्नभ्यन्तरमरिंदम ।
गान्धारीसहितं वीरो धृतराष्ट्रं ददर्श सः ॥ ३-२५५-३४ (२५८२४)
पुत्रवच्च नरव्याघ्र पादौ जग्राह धर्मवित् ।
धृतराष्ट्रेण चाश्लिष्य प्रेम्णा चापि विसर्जितः ॥ ३-२५५-३५ (२५८२५)
तदाप्रभृति राजा च शकुनिश्चापि सौबलः ।
जानाते निर्जितान्पार्थान्कर्णेन युधि भारत ॥ ३-२५५-३६ (२५८२६)

इति श्रीमन्महाभारते अरण्यपर्वणि घोषयात्रापर्वणि
पञ्चपञ्चाशदधिकद्विशततमोऽध्यायः ॥ २५५ ॥
Mahabharata - Vana Parva - Chapter Footnotes

३-२५५-७ मुण्डिकान्मिथिलानिति ख।पाठः ॥
३-२५५-१३ प्रतिज्ञां क्षत्रधर्मं समपालयं पालितवानस्मि
।रक्षत्रधर्मावेक्षयैव त्वया सह युद्धं कृतं न त्वज्जिगीषयेति
भावः ॥
३-२५५-१४ शैलं श्रीशैलम् ॥
३-२५५-२० आग्नेयान्मालवानिति ख ।पाठः ॥
३-२५५-२४ तत्कर्म कर्णविजयं पुरे उद्घोषयामास ॥
३-२५५-२७ अभ्युदित्नेभ्योपि उदिताः श्रेष्ठतमाः ॥
३-२५५-३१ आकाशः पर्वतवनयोरन्तरालम् ।सस्याद्युत्पत्तिभूमिमित्यर्थः ॥
३-२५५-३२ अनूपं सर्वतोजलं तेन संपूर्णैः ॥

---

वन-अध्यय२५६
॥ श्रीः ॥
३.२५६. अध्यायः २५६

Mahabharata - Vana Parva - Chapter Topics

दुर्योधनेन राजसूययाजनं प्रार्थितैर्ब्राह्मणैर्हेतूक्त्या
तन्निषेधनपूर्वकं तप्रति यज्ञान्तरकरणनियोजनम् ॥ १ ॥

Mahabharata - Vana Parva - Chapter Text

३-२५६-० (२५८२७)
वैशंपायन उवाच। ३-२५६-०क्ष् (२६२७)
जित्वा तु पृथिवीं राजन्सूतपुत्रो जनाधिप ।
अब्रवीत्परवीरघ्नो दुर्योधनमिदं वचः ॥ ३-२५६-१ (२५८२८)
दुर्योधन निबोधेदं यत्त्वां वक्ष्यामि कौरव ।
श्रुत्वा वाचं तथा सर्वं कर्तुमर्हस्यरिंदम ॥ ३-२५६-२ (२५८२९)
तवाद्य पृथिवी वीर निःसपत्ना नृपोत्तम ।
तां पालय यथा शक्रो हतशत्रुर्महामनाः ॥ ३-२५६-३ (२५८३०)
वैशंपायन उवाच। ३-२५६-४क्ष् (२६२८)
एवमुक्तस्तु कर्णेन कर्णं राजाऽब्रवीत्पुनः ।
न किंचिद्दुर्लभं तस्य यस् त्वं पुरुषर्षभ ॥ ३-२५६-४ (२५८३१)
सहायश्चानुरक्तश्च मदर्थं च समुद्यतः ।
अभिप्रायस्तु मे कश्चित्तं वै शृणु यथातथम् ॥ ३-२५६-५ (२५८३२)
राजसूयं पाण्डवस्य दृष्ट्वा क्रतुवरं तदा ।
कमम स्पृहा समुत्पन्ना तां संपादय सूतज ॥ ३-२५६-६ (२५८३३)
एवमुक्तस्ततः कर्णो राजानमिदमब्रवीत् ।
तवाद्य पृथिवीपाला वश्याः सर्वे नृपोत्तम ॥ ३-२५६-७ (२५८३४)
आहूयन्तां द्विजवराः संभाराश्च यथाविधि ।
संभ्रियन्तां कुरुश्रेष्ठ यज्ञोपकरणानि च ॥ ३-२५६-८ (२५८३५)
ऋत्विजश्च समाहूता यथोक्तं वेदपारगाः ।
क्रियां कुर्वन्तु ते राजन्यथाशास्त्रमरिंदम ॥ ३-२५६-९ (२५८३६)
बह्वन्नपानसंयुक्तः सुसमृद्धगुणान्वितः ।
प्रवर्ततां महायज्ञस्तवापि भरतर्षभ ॥ ३-२५६-१० (२५८३७)
एवमुक्तस्तु कर्णेन धार्तराष्ट्रो विशांपते ।
पुरोहितं समानाय्य वचनं चेदमब्रवीत् ॥ ३-२५६-११ (२५८३८)
राजसूयं क्रतुश्रेष्ठं समाप्तवरदक्षिणम् ।
आहरस्व यथाशास्त्रं यथान्यायं यथाक्रमम् ॥ ३-२५६-१२ (२५८३९)
स एवमुक्तो नृपतिमुवाच द्विजसत्तमः ॥ ३-२५६-१३ (२५८४०)
ग्ब्राह्मणैः सहितो राजन्ये तत्रासन्समागताः'।

न स शक्यः क्रतुश्रेष्ठो जीवमाने युधिष्ठिरे ।
आहर्तुं कौरवश्रेष्ठ कुले तव नृपोत्तम ॥ ३-२५६-१४ (२५८४१)
दीर्घायुर्जीवति च ते धृतराष्ट्रः पिता नृप ।
अतश्चापि विरुद्धस्ते क्रतुरेणष नृपोत्तमः ॥ ३-२५६-१५ (२५८४२)
अस्ति त्वन्यन्महत्सत्रं राजसूयसमं प्रभो ।
तेन त्वं यज राजेन्द्र शृणु चेदं वचो मम ॥ ३-२५६-१६ (२५८४३)
य इमे पृथिवीपालाः करदास्तव पार्थिव ।
ते करान्संप्रयच्छन्तु सुवर्णं च कृताकृतम् ॥ ३-२५६-१७ (२५८४४)
तेन ते क्रियतामद्यलाङ्गलं नृपसत्तम ।
यज्ञवाटस् ते भूमिः कृष्यतां तेन भारत ॥ ३-२५६-१८ (२५८४५)
तत्र यज्ञो नृपश्रेष्टः प्रभूतान्नः सुसंस्कृतः ।
प्रवर्ततां यथान्यायं सर्वतो ह्यनिवारितः ॥ ३-२५६-१९ (२५८४६)
एष ते वैष्णवो नाम यज्ञः सत्पुरुषोचितः ।
एतेन नेष्टवान्कश्चिदृतेविष्णुं पुरातनम् ॥ ३-२५६-२० (२५८४७)
राजसूयं क्रतुश्रेष्ठं स्पर्धत्येष महाक्रतुः ।
अस्माकं रोचते चैव श्रेयश्च तव भारत ॥ ३-२५६-२१ (२५८४८)
निर्विघ्नश्च भवत्येष सफला स्यात्स्पृहा तव ।
ग्तस्मादेष महाबाहो तव यज्ञः प्रवर्तताम्' ॥ ३-२५६-२२ (२५८४९)
एवमुकत्स्तु तैर्विप्रैर्धार्तराष्ट्रो महीपतिः ।
कर्णं च सौबलं चैव भ्रातॄश्चैवेदमब्रवीत् ॥ ३-२५६-२३ (२५८५०)
रोचते मे वचः कृत्स्नं ब्राह्मणानां न संशयः ।
रोचते यदि युष्माकं तस्मात्प्रब्रूत माचिरम् ॥ ३-२५६-२४ (२५८५१)
एवमुक्तास्तु ते सर्वे तथेत्यूचुर्नराधिपम् ।
संदिदेश ततोराजाव्यापारस्थान्यथाक्रमम् ॥ ३-२५६-२५ (२५८५२)
हलस्य करणे चापि व्यादिष्टाः सर्वशिल्पिनः ।
यथोक्तं च नृपश्रेष्ठ कृतं सर्वं यथाक्रमम् ॥ ३-२५६-२६ (२५८५३)

इति श्रीमन्महाभारते अरण्यपर्वणि घोषयात्रापर्वणि
षट्पञ्चाशदधिकद्विशततमोऽध्यायः ॥ २५६ ॥
Mahabharata - Vana Parva - Chapter Footnotes

३-२५६-१७ कृतं घटितमलंकारादिरूपम् । अकृतमन्यत् ॥
३-२५६-२५ व्यापारस्थान् शिल्पिनः ॥

---

वन-अध्यय२५७
॥ श्रीः ॥
३.२५७. अध्यायः २५७

Mahabharata - Vana Parva - Chapter Topics
दुर्योधनेन यज्ञसमापनानन्तरं सतहुमानं प्राहुणिकविप्रनृपेप्रषणपूर्वकं निजनगरप्रवेशनम् ॥ १ ॥

Mahabharata - Vana Parva - Chapter Text

३-२५७-० (२५८५४)
वैशंपायन उवाच। ३-२५७-०क्ष् (२६२९)
ततस्तु शिल्पिनः सर्वे कृतमूर्चुर्नराधिपम् ।
विदुरश्च महाप्राज्ञो धृतराष्ट्रे न्यवेदयत् ॥ ३-२५७-१ (२५८५५)
सज्जं क्रतुवरं राजन्कालप्राप्तं च भारत ।
सौवर्णं च कृतं सर्वं लाङ्गलं च महाधनम् ॥ ३-२५७-२ (२५८५६)
एवच्छ्रुत्वा नृपश्रेष्ठो धृतराष्ट्रो विशंपते ।
आज्ञापयामास नृपः क्रतुराजप्रवर्तनम् ॥ ३-२५७-३ (२५८५७)
ततः प्रववृते यज्ञः प्रभूतार्थः सुसंस्कृतः ।
दीक्षितश्चापि गान्धारिर्यथाशास्त्रं यथाक्रमम् ॥ ३-२५७-४ (२५८५८)
प्रहृष्टो धृतराष्ट्रश्च विदुरश्च महायशाः ।
भीष्मो द्रोणः कृपः कर्णो गान्धारी च यशस्विनी ॥ ३-२५७-५ (२५८५९)
निमन्त्रणार्थं दूतांश्च प्रेषयामास शीघ्रगान् ।
पार्थिवानां च राजेन्द्र ब्राह्मणानां तथैव च ॥ ३-२५७-६ (२५८६०)
ते प्रयाता यथोद्दिष्टा दूतास्त्वरितवाहनाः ।
तत्र कचित्प्रयान्तं तु दूतं दुःशासनोऽब्रवीत् ॥ ३-२५७-७ (२५८६१)
गच्छ द्वैतवनं शीघ्रं पाण्डवान्पापपूरुषान् ।
निमन्त्रय यथान्यायं विप्रांस्त स्मिन्वने तदा ॥ ३-२५७-८ (२५८६२)
स गत्वा पाण्डवान्सर्वानुवाचाभिप्रणम्य च ।
दुर्योधनो महाराज यजते नृपसत्तमः ॥ ३-२५७-९ (२५८६३)
स्ववीर्यार्जितमर्थौघमवाप्य कुरुसत्तमः ।
तत्र गच्छन्ति राजानो ब्राह्मणाश्च ततस्ततः ॥ ३-२५७-१० (२५८६४)
अहं तु प्रेषितो राजन्कौरवेण महात्मना ।
आमन्त्रयति वो राजा धार्तराष्ट्रो जनेश्वरः ।
मनोभिलषितं राज्ञस्तं क्रतुं द्रष्टुमर्हथ ॥ ३-२५७-११ (२५८६५)
ततो युधिष्ठिरो राजा तच्छ्रुत्वा दूतभाषितम् ।
अब्रवीन्नृपशार्दूलो दिष्ट्या राजा सुयोधनः ।
यजते क्रतुमुख्येन पूर्वेषां कीर्तिवर्धनः ॥ ३-२५७-१२ (२५८६६)
वयमप्युपयास्यामो न त्विदानीं कथंचन ।

समयः परिपाल्यो नो यावद्वर्षं त्रयोदशम् ॥ ३-२५७-१३ (२५८६७)
श्रुत्वैतद्धर्मराजस्य भीमो वचनमब्रवीत् ।
तदा तु नृपतिर्गन्ता धर्मराजो युधिष्ठिरः ॥ ३-२५७-१४ (२५८६८)
अस्त्रशस्त्रप्रदीप्तेऽग्नौ यदा तं पातयिष्यति ।
वर्षात्त्रयोदशादूर्ध्वं रणसत्रे नराधिपः ॥ ३-२५७-१५ (२५८६९)
यदा क्रोधहविर्मोक्ता धार्तराष्ट्रेषु पाण्डवः ।
आगन्तारस्तदा स्मेति वाच्यस्ते स सुयोधनः ॥ ३-२५७-१६ (२५८७०)
शेषास्तु पाण्डवा राजन्नैवोचुः किंचिदप्रियम् ।
दूतश्चापि यथावृत्तं धार्तराष्ट्रे न्यवेदयत् ॥ ३-२५७-१७ (२५८७१)
अथाजग्मुर्नरश्रेष्ठा नानाजनपदेश्वराः ।
ब्राह्मणाश्च महाभाग धार्तराष्ट्रपुरं प्रति ॥ ३-२५७-१८ (२५८७२)
ते त्वर्चिता यथाशास्त्रं यथाविधि यथाक्रमम् ।
मुदा परमया युक्ताः प्रीताश्चापि नरेश्वराः ॥ ३-२५७-१९ (२५८७३)
धृतराष्ट्रोऽपि राजेन्द्र संवृतः सर्वकौरवैः ।
हर्षेण महता युक्तो विदुरं प्रत्यभाषत ॥ ३-२५७-२० (२५८७४)
यथा सुखी जनः सर्वः क्षत्तः स्यादन्नसंयुतः ।
तुष्येत्तु यज्ञसदने तथा नीतिर्विधीयताम् ॥ ३-२५७-२१ (२५८७५)
विदुरस्तु तदाज्ञाय सर्ववर्णानरिंदम ।
यथा प्रमाणतो विद्वान्पूजयामास धर्मवित् ॥ ३-२५७-२२ (२५८७६)
भक्ष्यपेयान्नपानेन माल्यैश्चापि सुगन्धिभिः ।
वासोभिर्विविधैश्चैव योजयामास हृष्टवत् ॥ ३-२५७-२३ (२५८७७)
कृत्वा ह्यवभृथं वीरो यथाशास्त्रं यथाक्रमम् ।
सान्त्वयित्वा च राजेन्द्रो दत्त्वा च विविधं वसु ।
विसर्जयामास नपान्ब्राह्मणांश्च सहस्रशः ॥ ३-२५७-२४ (२५८७८)
विसृज्यच नृपान्सर्वान्भ्रातृभिः परिवारितः ।
विवेश हास्तिनपुरं सहितः कर्णसौबलैः ॥ ३-२५७-२५ (२५८७९)

इति श्रीमन्महाभारते अरण्यपर्वणि घोषयात्रापर्वणि
सप्तपञ्चाशदधिकद्विशततमोऽध्यायः ॥ २५७ ॥
Mahabharata - Vana Parva - Chapter Footnotes

३-२५७-२५ कर्णसौबलैः सौबलाद्यैः ॥

---

वन-अध्यय२५८
॥ श्रीः ॥
३.२५८. अध्यायः २५८

Mahabharata - Vana Parva - Chapter Topics
दुर्योधनसभायां कर्णेनार्जुवधप्रतिज्ञानम् ॥ १ ॥
चारमुखात्पाण्डवैस्तच्छ्रवणम् ॥ २ ॥

Mahabharata - Vana Parva - Chapter Text

३-२५८-० (२५८८०)
वैशंपायन उवाच। ३-२५८-०क्ष् (२६३०)
प्रविशन्तं महाराज सूतास्तुष्टुवुरच्युतम् ।
जनाश्चापि महेष्वासं तुष्टुवू राजसत्तमम् ॥ ३-२५८-१ (२५८८१)
लाजैश्चन्दनचूर्णैश्च विकीर्य च जनास्ततः ।
ऊटुर्दिष्ट्या नृपाविघ्नः समाप्तोयं क्रतुस्तव ॥ ३-२५८-२ (२५८८२)
अपरे त्वब्रुवंस्तत्रवादिकास्तं महीपतिम् ।
यौधिष्ठिरस्य यज्ञस्य न समो ह्येष ते क्रतुः ॥ ३-२५८-३ (२५८८३)
नैव तस्य क्रतोरेष कलामर्हति षोडशीम् ।
एवं तत्राब्रुवन्केचिद्वातिकास्तं जनेश्वरम् ॥ ३-२५८-४ (२५८८४)
सुहृदस्त्वब्रुवंस्तत्र अति सर्वानयं क्रतुः ।
ग्प्रवर्तितो ह्ययं राज्ञा धार्तराष्ट्रेण धीमता' ॥ ३-२५८-५ (२५८८५)
ययातिर्नहुषश्चापि मान्धाता भरतस्तथा ।
क्रतुमेनं समाहृत्य पूताः सर्वे दिवं गताः ॥ ३-२५८-६ (२५८८६)
एता वाचः शुभाः शृण्वन्सुहृदां भरतर्षभ ।
प्रविवेश पुरं हृष्टः स्ववेश्म च नराधिपः ॥ ३-२५८-७ (२५८८७)
अभिवाद्य ततः पादान्मतापित्रोर्विशांपते ।
भीष्मद्रोणकृपादीनां विदुरस्य च धीमतः ॥ ३-२५८-८ (२५८८८)
अभिवादितः कनीयोभिर्भ्रातृभिर्भ्रातृनन्दनः ।
निषसादासने मुख्ये भ्रातृभिः परिवारितः ॥ ३-२५८-९ (२५८८९)
तमुत्थाय महाराजं सूतपुत्रोऽब्रवीद्वचः ।
दिष्ट्या ते भरतश्रेष्ठ समाप्तोऽयं महाक्रतुः ॥ ३-२५८-१० (२५८९०)
हतेषु युधि पार्थेषु राजसूये तथा त्वया ।
आहृतेऽहं नरश्रेष्ठ त्वां सभाजयिता पुनः ॥ ३-२५८-११ (२५८९१)
तमब्रवीन्महाराजो धार्तराष्ट्रो महायशाः। ३-२५८-१२ (२५८९२)
सत्यमेतत्त्वयोक्तं हि पाण्डवेषु दुरात्मसु ।
निहतेषु नरश्रेष्ठ प्राप्ते चापि महाक्रतौ ।
राजसूये पुनर्वीर त्वमेवं वर्धयिष्यसि ॥ ३-२५८-१३ (२५८९३)
एवमुक्त्वा महाराज कर्णमाश्लिष्य भारत ।
राजसूयं क्रतुश्रेष्ठं चिन्तयामास कौरवः ॥ ३-२५८-१४ (२५८९४)

सोऽब्रवीत्कौरवांश्चापि पार्श्वस्थान्नृपसत्तमः ।
ग्राधेयसौबलादीन्वै धार्तराष्ट्रो महीपतिः' ॥ ३-२५८-१५ (२५८९५)
कदा तु तं क्रतुवरं राजसूयं महाधनम् ।
निहत्य पाण्डवान्सर्वानाहरिष्यामि कौरवाः ॥ ३-२५८-१६ (२५८९६)
तमब्रवीत्तदा कर्णः शृणु मे राजकुञ्जर ।
पादौ न धावये तावद्यावन्न निहतोऽर्जुनः ॥ ३-२५८-१७ (२५८९७)
कीलालजं न खादेयं करिष्ये चासुरव्रतम् ।
नास्तीति नैव वक्ष्यामि याचितो येन केचनित् ॥ ३-२५८-१८ (२५८९८)
अथोत्क्रुष्टं महेष्वासैर्धार्तराष्ट्रैर्महारथैः ।
प्रतिज्ञाते फल्गुनस्य वधे कर्णेन संयुगे ॥ ३-२५८-१९ (२५८९९)
विजितांश्चाप्यमन्यन्त पाण्डवान्धृतराष्ट्रजाः ।
ग्तदा प्रतिज्ञामारुह्य सूतपुत्रेण भाषिते' ॥ ३-२५८-२० (२५९००)
दूर्योधनोऽपि राजेन्द्र विसृज्यनरपुङ्गवान् ।
प्रविवेश गृहंश्रीमान्यथा चैत्ररथं प्रभुः ॥ ३-२५८-२१ (२५९०१)
तेऽपिसर्वे महेष्वासा जग्मुर्वेश्मानि भारत ।
ग्स्वानिस्वनि महाराज भीष्मद्रोणादयो नृपा' ॥ ३-२५८-२२ (२५९०२)
पाण्डवाश्च महेष्वासा दूतवाक्यप्रचोदिताः ।
चिन्तयन्तस्तमेवार्थं नालभन्त सुखं क्वचित् ॥ ३-२५८-२३ (२५९०३)
भूयश्च चारै राजेन्द्र प्रवृत्तिरुपपादिता ।
प्रतिज्ञा सूतपुतर्स्य विजयस्य वधं प्रति ॥ ३-२५८-२४ (२५९०४)
एतच्छ्रुत्वा धर्मसुतः समुद्विग्नो नराधिप ।
ग्अधोमुखश्चिरं तस्थौ किं कार्यमिति चिन्तयन्' ॥ ३-२५८-२५ (२५९०५)
अभेद्यकवचं मत्वा कर्णमद्भुतविक्रमम् ।
अनुस्मरंश् संक्लेशान्न शान्तिमुपजग्मिवान् ॥ ३-२५८-२६ (२५९०६)
तस्य चिन्तापरीतस्य बुद्धिर्जज्ञे महात्मनः ।
बहुव्यालमृगाकीर्णं त्यक्तुं द्वैतवनं वनम् ॥ ३-२५८-२७ (२५९०७)
धार्तराष्ट्रोऽपि नृपतिः प्रशशास वसुंधराम् ।
भ्रातृभिः सहितो वीरैर्भीष्मद्रोणकृपैस्तथा ॥ ३-२५८-२८ (२५९०८)
संगम्य सूतपुत्रेण कर्णेनाहवशोभिना ।
ग्सततं प्रीयमाणो वै देविना सौबलेन च' ॥ ३-२५८-२९ (२५९०९)
दुर्योधनः प्रिये नित्यं वर्तमानो महीभृताम् ।
पूजयामास विप्रेन्द्रान्क्रतुभिर्भूरिदक्षिणैः ॥ ३-२५८-३० (२५९१०)
भ्रातॄणां च प्रियं राजन्स चकार परंतपः ।
निश्चित्य मनसा वीरो दत्तभुक्तफलं धनम् ॥ ३-२५८-३१ (२५९११)

इति श्रीमन्महाभारते अरण्यपर्वणि घोषयात्रापर्वणि

अष्टपञ्चाशदधिकद्विशततमोऽध्यायः ॥ २५८ ॥
Mahabharata - Vana Parva - Chapter Footnotes

३-२५८-१ मागधाश्च महेष्वासं नागराश्च सहस्रशः । इति
क। थ। पाठः ॥
३-२५८-३ वादिकाः कृतानुवादिनो भूतविशेषाः । वातिकास्तमिति
झ। पाठः। वातिकाः वातरोगोपहतचेतस उचितभाषणानभिज्ञः ॥
३-२५८-११ सभाजयिता पूजयिष्यामि ॥
३-२५८-१७ धावये परेणति शेषः ॥
३-२५८-१८ कीलालजं मांसम् । असुरं सुरारहितं च व्रतं स्वनियमं
करिष्ये। मद्यं मांसं च त्यक्ष्ये इत्यर्थः ॥
३-२५८-१९ उत्कुष्टं उच्चैः शब्दः कृतः ॥

---

वन-अध्यय२५९
॥ श्रीः ॥
३.२५९. अध्यायः २५९

Mahabharata - Vana Parva - Chapter Topics
पाण्डवनिहतभूयिष्ठैर्मृगैर्युधिष्ठिरंप्रति स्वप्ने
स्थानान्तरगमनन स्वकुशलशेषीकरणप्रार्थना ॥ १ ॥
युधिष्ठिरेण भ्रातृषु स्वीयस्वप्नदर्शनकथनपूर्वकं पुनः
काम्यकवनंप्रति गमनम् ॥ २ ॥

Mahabharata - Vana Parva - Chapter Text

३-२५९-० (२५९१२)
जनमेजय उवाच। ३-२५९-०क्ष् (२६३१)
दुर्योधनं मोक्षयित्वा पाण्डुपुत्रा महाबलाः ।
किमकार्षुर्वने तस्मिंस्तन्ममाख्यातुमर्हसि ॥ ३-२५९-१ (२५९१३)
वैशंपायन उवाच। ३-२५९-२क्ष् (२६३२)
ततः शयानं कौन्तेयं रात्रौ द्वैतवन मृगाः ।
स्वप्नान्ते दर्शयामासुर्बाष्पकण्ठा युधिष्ठिरम् ॥ ३-२५९-२ (२५९१४)
तानब्रवीत्स राजेन्द्रो वेपमानान्कृताञ्जलीन् ।
ब्रूत यद्वक्तुकामाः स्थ के भवन्तः किमिष्यते ॥ ३-२५९-३ (२५९१५)
एवमुक्ताः पाण्डवेन कौन्तेयेन यशस्विना ।
प्रत्यब्रुवन्मृगास्तत्रहतशेषा युधिष्ठिरम् ॥ ३-२५९-४ (२५९१६)
वयं मृगा द्वैतवने हतशिष्टास्तु भारत ।

नोत्सीदेम महाराज क्रियतां वासपर्ययः ॥ ३-२५९-५ (२५९१७)
भवन्तो भ्रातरः शूराः सर्व एवास्त्रकोविदाः ।
कुलान्यल्पावशिष्टानि कृतवन्तो वनौकसाम् ॥ ३-२५९-६ (२५९१८)
बीजभूता वयं केचिदवशिष्टा महामते ।
विवर्धेमहि राजेन्द्र प्रसादात्ते युधिष्ठिर ॥ ३-२५९-७ (२५९१९)
तान्वेपमानान्वित्रस्तान्बीजमात्रावशेषितान् ।
मृगान्दृष्ट्वा सुदुःखार्तो धर्मराजो युधिष्ठिरः ॥ ३-२५९-८ (२५९२०)
तांस्तथेत्यब्रवीद्राजा सर्वभूतहिते रतः ।
यथा भवन्तो ब्रुवते करिष्यामि च तत्तथा ॥ ३-२५९-९ (२५९२१)
इत्येवं प्रतिबुद्धः स रात्र्यन्ते राजसत्तमः ।
अब्रवीत्सहितान्भ्रातॄन्दयापन्नो मृगान्प्रति ॥ ३-२५९-१० (२५९२२)
उक्तो रात्रौ मृगैरस्मि स्वप्नान्ते हतशेषितैः ।
तनुभूताः स्म भद्रं ते दया नः क्रियतामिति ॥ ३-२५९-११ (२५९२३)
ते सत्यमाहुः कर्तव्या दयाऽस्माभिर्वनौकसाम् ।
साष्टमासं हि नो वर्षं यदेनानुपयुंक्ष्महे ॥ ३-२५९-१२ (२५९२४)
पुनर्वहुमृगं रम्यं काम्यकं काननोत्तमम् ।
तत्रेमां वसतिं शिष्टां विहरन्तो रमेमहि ॥ ३-२५९-१३ (२५९२५)
वैशंपायन उवाच। ३-२५९-१४क्ष् (२६३३)
ततस्ते पाण्डवाः शीघ्रं प्रययुर्धर्मकोविदाः ॥ ३-२५९-१४ (२५९२६)
ब्राह्मणैः सहिता राजन्ये च तत्रसहोषिताः ।
इन्द्रसेनादिभिश्चैव प्रेष्यैरनुगतास्तदा ॥ ३-२५९-१५ (२५९२७)
ते यात्वा सुसुखैर्मार्गैः स्वन्नैः शुचिजलान्वितैः ।
ददृशुः काम्यकं पुण्यमाश्रमं तापसान्वितम् ॥ ३-२५९-१६ (२५९२८)
विविशुस्ते स्म कौरव्या वृता विप्रर्षभैस्तदा ।
तद्वनं भरतश्रेष्ठाः स्वर्गं सुकृतिनो यथा ॥ ३-२५९-१७ (२५९२९)

इति श्रीमन्महाभारते अरण्यपर्वणि मृगस्वप्नोद्भवपर्वणि
एकोनषष्ट्यधिकद्विशततमोऽध्यायः ॥ २५९ ॥

Mahabharata - Vana Parva - Chapter Footnotes

३-२५९-५ वासस्य पर्ययः वैपरीत्य नात्रवस्तव्यमित्यर्थः ॥

---

वन-अध्यय२६०

॥ श्रीः ॥

३.२६०. अध्यायः २६०

Mahabharata - Vana Parva - Chapter Topics

कदाचन काम्यकवचवासिनः पाण्डवानुपागतेन व्यासेन युधिष्ठिरंप्रति दानप्रशंसनम् ॥ १ ॥

Mahabharata - Vana Parva - Chapter Text

३-२६०-० (२५९३०)
वैशंपायन उवाच। ३-२६०-०क्ष् (२६३४)
वने निवसतां तेषां पाण्डवानां महात्मनाम् ।
वर्षाण्येकादशातीयुः कृच्छ्रेण भरतर्षभ ॥ ३-२६०-१ (२५९३१)
फलमूलाशनास्ते हि सुखार्हा दुःखमुत्तमम् ।
प्राप्तकालमनुध्यान्तः सेहिरे वरपूरुषाः ॥ ३-२६०-२ (२५९३२)
युधिष्ठिरस्तु राजर्षिरात्मकर्मापराधजम् ।
चिन्तयन्स महाबाहुर्भ्रातॄणां दुःखमुत्तमम् ॥ ३-२६०-३ (२५९३३)
न सुष्वाप सुखं राजा हृदि शल्यैरिवार्पितैः ।
दौरात्म्यमनुपश्यंस्तत्काले द्यूतोद्भवस्य हि ॥ ३-२६०-४ (२५९३४)
संस्मरन्परुषा वाचः सूतपुत्रस्य पाण्डवः ।
निःश्वासपरमो दीनो दध्रे कोपविषं महत् ॥ ३-२६०-५ (२५९३५)
अर्जुनोयमजौ चोभौ द्रौपदी च यशस्विनी ।
स च भीमो महातेजाः सर्वेषामुत्तमो बले ॥ ३-२६०-६ (२५९३६)
गचिरस्य जातं धर्मज्ञं सासूयमिव ते तदा'।
युधिष्ठिरमुदीक्षन्तः सेहुर्दुखमनुत्तमम् ॥ ३-२६०-७ (२५९३७)
अवशिष्टं त्वल्पकालं मन्वानाः पुरुषर्षभाः ।
वपुरन्यदिवाकार्पुरुत्साहामर्षचेष्टितैः ॥ ३-२६०-८ (२५९३८)
कस्यचित्त्वथ कालस्य व्यासः सत्यवतीसुतः ।
आजगाम महायोगी पाण्डवानवलोककः ॥ ३-२६०-९ (२५९३९)
तमागतमभिप्रेक्ष्यकुन्तीपुत्रो युधिष्ठिरः ।
प्रत्युद्गम्य महात्मानं प्रत्यगृह्णाद्यथाविधि ॥ ३-२६०-१० (२५९४०)
तमासीनमुपासीनः शुश्रूषुर्नियतेन्द्रियः ।
तोषयामास शौचेन व्यासं पाण्डवनन्दनः ॥ ३-२६०-११ (२५९४१)
तानवेक्ष्यकृशान्पौत्रान्वने वन्येन जीवतः ।
महर्षिरनुकम्पार्थमब्रवीद्बाष्पगद्गदम् ॥ ३-२६०-१२ (२५९४२)
युधिष्ठिर महाबाहो शृणु धर्मभृतांवर ।
नातप्ततपसो लोके प्राप्नुवन्ति महत्सुखम् ।
सुखदुःखे हि पुरुषः पर्यायेणोपसेवते ॥ ३-२६०-१३ (२५९४३)
नात्यन्तमसुखं कश्चित्प्राप्नोति पुरुषर्षभ ।
प्रज्ञावांस्त्वेव पुरुषः संयुक्तः परया धिया ॥ ३-२६०-१४ (२५९४४)

उदयास्तमयज्ञो हि न हृष्यति न शोचति ।
सुखमापतितं विन्दन्दुःखमापतितं सहन् ॥ ३-२६०-१५ (२५९४५)
कालप्राप्तमुपासीत सस्यानामिव कर्षकः ।
तपसो हि परं नास्ति तपसा विन्दते महत् ॥ ३-२६०-१६ (२५९४६)
नासाध्यं तपसः किंचिदिति बुध्यस् भारत ।
सत्यमार्जवमक्रोधः संविभागो दमः शमः ॥ ३-२६०-१७ (२५९४७)
अनसूयाऽविहिंसा च शौचमिन्द्रियसंयमः ।
साधनानि महाराज नराणां पुण्यकर्मणाम् ॥ ३-२६०-१८ (२५९४८)
अधर्मरुचयो मूढास्तिर्यग्गतिपरायणाः ।
कृच्छ्रां योनिमनुप्राप्ता न सुखं विन्दते अनाः ॥ ३-२६०-१९ (२५९४९)
इह यत्क्रियते कर्म तत्परत्रोपभुज्यते ।
ग्मूलसिक्तस्य वृक्षस्य फलं शाखासु दृश्यते'।
तस्माच्छरीरं युञ्जीत तपसा नियमेन च ॥ ३-२६०-२० (२५९५०)
यथाशक्ति प्रयच्छेत संपूज्याभिप्रणम्य च ।
काले प्राप्ते च हृष्टात्मा राजन्विगतमत्सरः ॥ ३-२६०-२१ (२५९५१)
सत्यवादी लभेतायुरनायासमथार्जवम् ।
अक्रोधनोऽनसूयश्च निर्वृतिं लभते पराम् ॥ ३-२६०-२२ (२५९५२)
दान्तः शमपरः शश्वत्परिक्लेशं न विन्दति ।
न च तप्यति दान्तात्मा दृष्ट्वा परगतां श्रियम् ॥ ३-२६०-२३ (२५९५३)
संविभक्ता च दाता च भोगवान्सुखवान्नरः ।
भवत्यहिंसकश्चैव परमारोग्यमश्नुते ॥ ३-२६०-२४ (२५९५४)
मान्यं मानयिता जन्म कुले महति विन्दति ।
ग्विन्दते सुखमत्यर्थमिह लोके परत्र च'।
व्यसनैर्न तुसंयोगं प्राप्नोति विजितेन्द्रियः ॥ ३-२६०-२५ (२५९५५)
शुभानुशयबुद्धिर्हि संयुक्तः कालधर्मणा ।
प्रादुर्भवति तद्योगात्कल्याणमतिरेव सः ॥ ३-२६०-२६ (२५९५६)
युधिष्ठिर उवाच। ३-२६०-२७क्ष् (२६३५)
भगवन्दानधर्माणआं तपसो वा महामुने ।
किंस्विद्बहुगुणं प्रेत्य किं वा दुष्करमुच्यते ॥ ३-२६०-२७ (२५९५७)
व्यास उवाच। ३-२६०-२८क्ष् (२६३६)
दानान्न दुष्करं तात पृथिव्यामस्ति किंचन ।
अर्थे च महती तृष्णा स च दुःखेन लभ्यते ॥ ३-२६०-२८ (२५९५८)
ग्राजन्प्रत्यक्षमेवैतद्दृश्यते लोकसाक्षिकम्'।
परित्यज्य प्रियान्प्राणान्प्रविशन्ति रणाजिरम् ।
तथैव प्रतिपद्यन्ते समुद्रमटवीं तथा ॥ ३-२६०-२९ (२५९५९)
कृषिगोरक्ष्यमित्येके प्रतिपद्यन्ति मानवाः ।

पुरुषाः प्रेष्यतामेके निर्गच्छन्ति धनार्थिनः ॥ ३-२६०-३० (२५९६०)
तस्माद्दुःखार्जितस्यैव परित्यागः सुदुष्करः ।
सुदुष्करतरं दानं तस्माद्दानं मतं मम ॥ ३-२६०-३१ (२५९६१)
विसेषस्त्वत्र विज्ञेयो न्यायेनोपार्जितं धनम् ।
पात्रे काले च देशे च प्रयतः प्रतिपादयेत् ॥ ३-२६०-३२ (२५९६२)
अन्यायात्समुपात्तेन दानधर्मौ धनन यः ।
कुरुते न स कर्तारं त्रायते महतो भयात् ॥ ३-२६०-३३ (२५९६३)
पात्रे दानं स्वल्पमपि काले दत्तं युधिष्ठिर ।
मनसा हि विशुद्धेन प्रेत्यानन्तफलं स्मृतम् ॥ ३-२६०-३४ (२५९६४)
ग्श्रद्धा धर्मानुगा देवी पावनी विश्वधारिणी।'
सवित्री प्रसवित्री च संसारार्णवतारिणी ॥ ३-२६०-३५ (२५९६५)
श्रद्धया धार्यते धर्मो महद्भिर्नार्थदर्शिभिः ।
सधना अपिराजानो निःश्रद्धा नरकं गताः ॥ ३-२६०-३६ (२५९६६)
निष्किंचनाश्च मुनयः श्रद्धावन्तो दिवं गताः ।
देशे काले च पात्रे च मुद्गलः श्रद्धयाऽन्वितः ।
व्रीहिद्रोणं प्रदायाथ परं पदमवाप्तवान्' ॥ ३-२६०-३७ (२५९६७)
अत्राप्युदाहरन्तीमतिहासं पुरातनम् ।
व्रीहिद्रोणपरित्यागाद्यत्फलं प्राप मुद्गलः ॥ ३-२६०-३८ (२५९६८)

इति श्रीमन्महाभारते अरण्यपर्वणि व्रीहिद्रौणिकपर्वणि
षष्ट्यधिकद्विशततमोऽध्यायः ॥ २६० ॥

Mahabharata - Vana Parva - Chapter Footnotes

३-२६०-२ ध्यान्तः ध्यायन्तः ॥
३-२६०-४ द्यूतोद्भवस् द्यूतहेतोः शकुन्यादेः ॥
३-२६०-९ अवलोककोऽवलोकितुकामः ॥
३-२६०-१४ नह्यनन्तं सुखं कश्चित् इति झ । पाठः ॥
३-२६०-१६ तपसा ज्ञानेन । महद्ब्रह्म ॥
३-२६०-२१ काले दानकाले ॥
३-२६०-२२ अनायासं क्लेशपरिहारम् । निर्वृत्तिं सुखम्। परां मोक्षाख्याम् ॥
३-२६०-२४ संविभक्ता अन्नादेर्विभागकर्ता । दाता धनादेः ॥
३-२६०-२६ शुभमेवानुशेते शुभपक्षपातिनी बुद्धिर्यस्य
। कालधर्मेण मरणेन ॥
३-२६०-२७ दानजानां धर्माणाम् । तपसः कायक्लेशकृतस्य
कृच्छ्रादेः। एत रयोर्मध्ये प्रेत्य मृत्वा किं बहुगुणं किं परलोके
श्रेष्ठमित्यर्थः ॥

३-२६०-३१ दुःखार्जितस्य धनस्येति शेषः । मतं श्रेष्ठत्वेन ॥
३-२६०-३८ द्रोणो मानविशेषस्तन्मिता व्रीहयस्तेषां दानात् ॥

---

वन-अध्यय२६१
॥ श्रीः ॥
३.२६१. अध्यायः २६१

Mahabharata - Vana Parva - Chapter Topics
मुद्गलचित्तपरीक्षणाय दुर्वाससा षट्कृत्वोयाचनेष्यविकृतमनसा
तेन तदातदाऽन्नदानेन तत्तोषणम् ॥ १ ॥
तन्महिम्ना सविमानेन देवदूतेन सशरीरस्यैव मुद्गलस्य
स्वर्गप्रत्याह्वानम् ॥ २ ॥
मुद्गलेन तंप्रति स्वर्गस्वरूपनिरूपणप्रार्थना ॥ ३ ॥

Mahabharata - Vana Parva - Chapter Text

३-२६१-० (२५९६९)
युदिष्ठिर उवाच। ३-२६१-०क्ष् (२६३७)
व्रीहिद्रोणः परित्यक्तः कथं तेन महात्मना ।
कस्मै दत्तश्च भगवन्विधिना केन चात्थ मे ॥ ३-२६१-१ (२५९७०)
प्रत्यक्षधर्मा भगवान्यस् तुष्टो हि कर्मभिः ।
सफलं तस्य जन्माहं मन्ये सद्धर्मचारिणः ॥ ३-२६१-२ (२५९७१)
व्यास उवाच। ३-२६१-३क्ष् (२६३८)
शिलोञ्छवृत्तिर्धर्मात्मा मुद्गलः संयतेन्द्रियः ।
आसीद्राजन्कुरुक्षेत्रे सत्यवागनसूयकः ॥ ३-२६१-३ (२५९७२)
अतिथिव्रती क्रियावांश्च कापोतीं वृत्तिमास्थितः ।
सत्रमिष्टीकृतंनाम समुपास्ते महातपाः ॥ ३-२६१-४ (२५९७३)
सपुत्रदारो हि मुनिः पक्षाहारो बभूव ह ।
कपोतवृत्त्या पक्षेण व्रीहिद्रोयणमुपार्जयत् ॥ ३-२६१-५ (२५९७४)
दर्शं च पौर्णमासं च कुर्वन्विगतमन्सरः ।
देवतातिथिशेषेण कुरुते देहयापनम् ॥ ३-२६१-६ (२५९७५)
तत्रेन्द्रः सहितो देवैः साक्षात्त्रिभुवनेश्वरः ।
प्रत्यृह्लान्महाराज भागं पर्वणिपर्वणि ॥ ३-२६१-७ (२५९७६)
स पर्वकाल्यं कृत्वा तु मुनिवृत्त्या समन्वितः ।
अतिथिभ्यो ददावन्नं प्रहृष्टेनान्तरात्मना ॥ ३-२६१-८ (२५९७७)
व्रीहिद्रोणस्य तत्प्रीत्या ददतोऽन्नं महात्मनः ।

ऋषेर्मात्सर्यहीनस् वर्धत्यतिथिदर्शनात् ॥ ३-२६१-९ (२५९७८)
तच्छतान्यपि भुञ्जन्ति ब्राह्मणानां मनीषिणाम् ।
मुनेस्त्यागविशुद्ध्या तु तदन्नं वृद्धिमृच्छति ॥ ३-२६१-१० (२५९७९)
तं तु रशुश्राव धर्मिष्ठं मुद्गलं संशितव्रतम् ।
दुर्वासा नृप दिग्वासास्तमथाभ्याजगाम ह ॥ ३-२६१-११ (२५९८०)
विभ्रच्चानियतं वेषमुन्मत्त इव पाण्डव ।
विकचः परुषा वाचो व्याहरन्विविधा मुनिः ॥ ३-२६१-१२ (२५९८१)
अभिगम्याथ तं विप्रमुवाच मुनिसत्तमः ।
अन्नार्थिनमनुप्राप्तं विद्धि मां मुनिसत्तम ॥ ३-२६१-१३ (२५९८२)
स्वागतं तेऽस्त्विति मुनिं मुद्गलः प्रत्यभाषत ।
पाद्यमाचमनीयं च प्रतिवेद्यान्नमुत्तमम् ॥ ३-२६१-१४ (२५९८३)
प्रादात्स तपसोपात्तं क्षुधितायातिथिप्रियः ।
उन्मत्ताय परां श्रद्धामास्थाय स धृतव्रतः ॥ ३-२६१-१५ (२५९८४)
ततस्तदन्नं रसवत्स एव क्षुधयाऽन्वितः ।
बुभुजे कृत्स्नमुन्मत्तः प्रादात्तस्मै च मुद्गलः ॥ ३-२६१-१६ (२५९८५)
भुक्त्वा चान्नं ततः सर्वमुच्छिष्टेनात्मनस्ततः ।
अथाङ्गं लिलिपेऽन्नेन यथागतमगाच्च सः ॥ ३-२६१-१७ (२५९८६)
ग्तेनैवात्मानमालिप्य हसन्गायन्प्रधावति ।
नृत्यते धावते चैव बुद्ध्या तत्क्रोशते तथा' ॥ ३-२६१-१८ (२५९८७)
एवं द्वितीये संप्राप्ते पर्वकाले मनीषिणः ।
आगम्य बुभुजे सर्वमन्नपुञ्छोपजीविनः ॥ ३-२६१-१९ (२५९८८)
निराहारस्तु स मुनिरुञ्छमार्जये पुनः ।
न चैनं विक्रियां नेतुमशकन्मुद्गलं क्षुधा ॥ ३-२६१-२० (२५९८९)
न क्रोधो न च मात्सर्यं नावमानो न संभ्रमः ।
सपुत्रदारमुञ्छन्तमाविवेश द्विजोत्तमम् ॥ ३-२६१-२१ (२५९९०)
तथा तमुञ्छधर्माणं दुर्वासा मुनिसत्तमम् ।
उपतस्थे यथाकालं षङ्कृत्वः कृतनिश्चयः ॥ ३-२६१-२२ (२५९९१)
न चास् मनसः कश्चिद्विकारो दृश्यते मुनेः ।
शुद्धसत्वस्य शुद्धं स ददृशे निर्मलं मनः ॥ ३-२६१-२३ (२५९९२)
तमुवाच ततः प्रीतः स मुनिर्मुद्गलं तदा ।
त्वत्समो नास्ति लोकेऽस्मिन्दाता मात्सर्यवर्जितः ॥ ३-२६१-२४ (२५९९३)
क्षुद्धर्मसंज्ञां प्रणुदत्यादत्ते धैर्यमेव च ।
विषयानुसारिणी जिह्वा कर्षत्येव रसान्प्रति ॥ ३-२६१-२५ (२५९९४)
आहारप्रभवाः प्राणा मनो दुर्निग्रहं चलम् ।
मनसश्चेन्द्रियाणां चाप्यैकाग्र्यं निश्चितं तपः ॥ ३-२६१-२६ (२५९९५)
श्रमेणोपार्जितं त्यक्तं न च दुःखेन चेतसा ।

तत्सर्वं भवता साधो यथावदुपपादितम् ॥ ३-२६१-२७ (२५९९६)
प्रीताः स्मोऽनुगृहीताश्च समेत्य भवता सह ।
इन्द्रियाभिजयो धैर्यं संविभागो दमः शमः ।
दया सत्यं च धर्मश्च त्वयि सर्वं प्रतिष्ठितम् ॥ ३-२६१-२८ (२५९९७)
ग्लोकाः समस्ता धर्मेण धार्यन्ते सचराचराः ।
धर्मोपि धार्यते येन धृतियुक्त त्वयाऽऽत्मना ॥ ३-२६१-२९ (२५९९८)
विशुद्धसत्वसंपन्नो न त्वदन्योस्ति कश्चन'।
जितास्ते कर्मभिर्लोकाः प्राप्तोसि परमां गतिम् ॥ ३-२६१-३० (२५९९९)
अहो दानं विघुष्टं ते सुमहत्स्वर्गवासिभिः ।
सशरीरो भवान्गन्ता स्वर्गं सुचरितव्रत ॥ ३-२६१-३१ (२६०००)
इत्येवं वदतस्तस्य तदा दुर्वाससो मुनेः ।
देवदूतो विमानेन मुद्गलं प्रत्युपस्थितः ॥ ३-२६१-३२ (२६००१)
हंससारसयुक्तेन किङ्किणीजालमालिना ।
कामगेन विचित्रेण दिव्यगन्धवता तथा ॥ ३-२६१-३३ (२६००२)
उवाच चैनं विप्रर्षिं विमानं कर्मभिर्जितम् ।
समुपारोह संसिद्धिं प्राप्तोसि परमां मुने ॥ ३-२६१-३४ (२६००३)
तमेवंवादिनमृषिर्देवदूतमुवाच ह ।
इच्छामि भवता प्रोक्तान्गुणान्स्वर्गनिवासिनां ॥ ३-२६१-३५ (२६००४)
के गुणास्तत्रवसतां किं तपः कश्च निश्चयः ।
स्वर्गे तत्रसुखं किं च दोषो वा देवदूतक ॥ ३-२६१-३६ (२६००५)
सतां साप्तपदं मित्रमाहुः सन्तः कुलोचिताः ।
मित्रतां च पुरस्कृत्य पृच्छामि त्वामहं विभो ॥ ३-२६१-३७ (२६००६)
यदत्र तथ्यं पथ्यं च तद्ब्रवीह्यविचारयन् ।
श्रुत्वा तथा करिष्यामि व्यवसायं गिरा तव ॥ ३-२६१-३८ (२६००७)

इति श्रीमन्महाभारते अरण्यपर्वणि व्रीहिद्रौणिकपर्वणि
एकषष्ट्यधिकद्विशततमोऽध्यायः ॥ २६१ ॥

Mahabharata - Vana Parva - Chapter Footnotes

३-२६१-२ प्रत्यक्षधर्मा नृणां धर्मस्य वेत्ता ।भगवान् ईश्वरः ॥
३-२६१-३ उञ्छः कणश आदानं कणिशाद्यर्जनं शिलमिति यादवः ।ते उभे वृत्तिर्जीवनं यस् स शिलोञ्छवृत्तिः ॥
३-२६१-४ कापोतींवृत्तिं अल्पसंग्रहरूपाम् ।इष्टीकृतंइष्टिभिरेव निर्वर्त्यं नतु पश्वादिना सत्रं यज्ञम् ॥
३-२६१-९ व्रीहिद्रोणमात्रं यदा सिध्यति तदा ददाति तदा च दीयमानं तद्वर्धति वर्धते ॥

३-२६१-१० ऋच्छति प्राप्नोति ॥
३-२६१-१२ विकचः हसन्मुण्डो वा ॥
३-२६१-१९ द्वितीये पक्षे ॥
३-२६१-२५ क्षुत् क्षुधा ॥
३-२६१-२७ त्यक्तुं दुःखं शुद्धेन चेतसा इति ख । झ। ध। पाठः ॥
३-२६१-३८ व्यवसायं निश्चयम् ॥

---

वन-अध्यय२६२
॥ श्रीः ॥
३.२६२. अध्यायः २६२

Mahabharata - Vana Parva - Chapter Topics
देवदूतात्स्वर्गसुखस्यास्थिरतां परिजानता मुद्गलेन स्वर्गानभिरोचनपूर्वकं देवदूतस्य स्वर्गंप्रति प्रस्थापनम् ॥ १ ॥
व्यासेन युधिष्ठिरंप्रति मुद्गलोपाख्यानकथनपूर्वकं स्वाश्रमंप्रति गमनम् ॥ २ ॥

Mahabharata - Vana Parva - Chapter Text

३-२६२-० (२६००८)
देवदूत उवाच। ३-२६२-०क्ष् (२६३९)
महर्षेऽकार्यबुद्धिस्त्वं यः स्वर्गसुखमुत्तमम् ।
संप्राप्तं प्रतिपत्तव्यं विमृशस्यबुधो यथा ॥ ३-२६२-१ (२६००९)
उपरिष्टादयं लोको योऽयं स्वरिति संज्ञितः ।
ऊर्ध्वगः सत्पथः शश्वद्देवयानचरो मुने ॥ ३-२६२-२ (२६०१०)
नातप्ततपसः पुंसो नामहायज्ञयाजिनः ।
नानृता नास्तिकाश्चैव तत्रगच्छन्ति मुद्गल ॥ ३-२६२-३ (२६०११)
धर्मात्मानो जितात्मानः शान्ता दान्ता विमत्सराः ।
दानधर्मरताः पुंसः शूराश्चाहितलक्षणाः ॥ ३-२६२-४ (२६०१२)
तत्रगच्छन्ति धर्माग्र्यं कृत्वा शमदमात्मकम् ।
लोकान्पुण्यकृतां ब्रह्मन्सद्भिराचरितान्नृभिः ॥ ३-२६२-५ (२६०१३)
देवाः साध्यास्तथा विश्वे तथैव च महर्षयः ।
यामा धामाश्च मौद्गल्य गन्धर्वाप्सरसस्तथा ॥ ३-२६२-६ (२६०१४)
एषां देवनिकायानां पृथक्पृथगनेकशः ।
भास्वन्तः कामसंपन्ना लोकास्तेजोमयाः शुभाः ॥ ३-२६२-७ (२६०१५)
त्रयस्त्रिंशत्सहस्राणि योजनानि हिरण्मयः ।
मेरुः पर्वतराड्यत्रदेवोद्यानानि मुद्गल ॥ ३-२६२-८ (२६०१६)

ग्नन्दनान्यतिरम्याणि तत्रोद्यानानि मुद्गल ।
सर्वकामफलैर्वृक्षैः शोभितानि समन्ततः' ॥ ३-२६२-९ (२६०१७)
नन्दनादीनि पुण्यानि विहाराः पुण्यकर्मणाम् ।
न क्षुत्पिपासे न ग्लानिर्न शीतोष्णे भयं तथा ॥ ३-२६२-१० (२६०१८)
बीभत्समशुभं वाऽपि रोगो वा तत्र कश्चन ।
मनोज्ञाः सर्वतो गन्धाः सुखस्पर्शाश्च सर्वशः ॥ ३-२६२-११ (२६०१९)
शब्दाः श्रुतिमनोग्राह्याः सर्वतस्तत्रवै मुने ।
न शोको न जरा तत्र नायासपरिदेवने ॥ ३-२६२-१२ (२६०२०)
ईदृशः स मुने लोकः स्वकर्मफलहेतुकः ।
सुकृतैस्तत्रपुरुषाः संभवन्त्यात्मकर्मभिः ॥ ३-२६२-१३ (२६०२१)
तैजसानि शरीराणि भवन्त्योपपद्यताम् ।
कर्मजान्येव मौद्गल्य न मातृपितृजान्युत ॥ ३-२६२-१४ (२६०२२)
रन संस्वेदो न दौर्गन्ध्यं पुरीषं मूत्रमेव च ।
तेषां न च रजोवस्त्रं बाधते तत्रवै मुने ॥ ३-२६२-१५ (२६०२३)
न म्लायन्ति स्रजस्तेषां दिव्यगन्धा मनोरमाः ।
समूह्यन्ते विमानैश्च ब्रह्मन्नेवंविधा हि ते ॥ ३-२६२-१६ (२६०२४)
ईर्ष्याशोकक्लमापेता मोहमात्सर्यवर्जिताः ।
सुखं संर्गजितस्तत्रवर्तयन्ते महामुने ॥ ३-२६२-१७ (२६०२५)
तेषां तथाविधानां तु लोकानां मुनिपुङ्गव ।
उपर्युपरि शक्रस् लोका दिव्या गुणान्विताः ॥ ३-२६२-१८ (२६०२६)
परतो ब्रह्मणस्तस्य लोकस्तेजोमयः शुभः ।
यत्र यान्त्यृषयो ब्रह्मन्पूताः स्वैः कर्मभिः शुभैः ॥ ३-२६२-१९ (२६०२७)
ऋभवो नाम तत्रान्ये देवानामपि देवताः ।
तेषां लोकाः परतरे यान्यजन्तीह देवताः ॥ ३-२६२-२० (२६०२८)
स्वयंप्रभास्ते भास्वन्तो लोकाः कामदुघाः परे ।
न तेषां स्त्रीकृतस्तापो न भोगैश्वर्यमत्सरः ॥ ३-२६२-२१ (२६०२९)
न वर्तयन्त्याहुतिभिस्ते नाप्यमृतभोजनाः ।
तथा दिव्यशरीरास्ते न च विग्रहमूर्तयः ॥ ३-२६२-२२ (२६०३०)
नासुखाः सुखकामास्ते देवदेवाः सनातनाः ।
न कल्पपरिवर्तेषु परिवर्तन्ति ते तथा ॥ ३-२६२-२३ (२६०३१)
रजरा मृत्युः कुतस्तेषां हर्षः प्रीतिः सुखं न च ।
न दुःखं न सुखं चापि रागद्वेषौ कुतो मुने ॥ ३-२६२-२४ (२६०३२)
देवानामपि मौद्गल्यकाङ्क्षिता सा गतिः परा ।
दुष्प्रापा परमा सिद्धिरगम्या कामगोचरैः ॥ ३-२६२-२५ (२६०३३)
त्रयस्त्रिंशदिमे लोकाः शेषा लोका मनीषिभिः ।
गम्यन्ते नियमैः श्रेष्ठैर्दानैर्वा विधिपूर्वकैः ॥ ३-२६२-२६ (२६०३४)

सेयं दानकृता व्युष्टिरनुप्राप्ता सुखं त्वया ।
तां रभुङ्क्ष्व सुकृतैर्लब्धां तपसा द्योतितप्रभः ॥ ३-२६२-२७ (२६०३५)
एतत्स्वर्गसुखं विप्र लोका नानाविधास्तथा ।
गुणाः स्वर्गस्य प्रोक्तास्ते दोषानपि निबोध मे ॥ ३-२६२-२८ (२६०३६)
कृस्य कर्मणस्तत्रभुज्यते यत्फलं दिवि ।
न चान्त्क्रियते कर्म मूलच्छेदेन भुज्यते ॥ ३-२६२-२९ (२६०३७)
सोऽत्रदोषो मम मतस्तस्यान्ते पतनं च यत् ।
सुखव्याप्तमनस्कानां पतनं यच्च मुद्गल ॥ ३-२६२-३० (२६०३८)
असंतोषः परीतापो दृष्ट्वा दीप्ततराः श्रियः ।
यद्भवत्यवरे स्थाने स्थितानां तत्सुदुष्करम् ॥ ३-२६२-३१ (२६०३९)
संज्ञामोहश्चपततां रजसा च प्रधर्षणम् ।
प्रम्लानेषु च माल्येषु ततः पिपतिषोर्भयम् ॥ ३-२६२-३२ (२६०४०)
आब्रह्मभवनादेते दोषा मौद्गल्य दारुणाः ।
नाकलोकेसुकृतिनां गुणास्त्वयुतशो नृणाम् ॥ ३-२६२-३३ (२६०४१)
अयं त्वन्यो गुणः श्रेष्ठश्च्युतानां स्वर्गतो मुने ।
शुभानुशययोगेन मनुष्येषूपजायते ॥ ३-२६२-३४ (२६०४२)
तत्रापि स महाभागः कुले महति जायते ।
न चेत्संबुध्यते तत्रगच्छत्यधमतां ततः ॥ ३-२६२-३५ (२६०४३)
इह यत्क्रियते कर्म तत्परत्रोपभुज्यते ।
कर्मभूमिरियं ब्रह्मन्फलभूमिरसौ मता ॥ ३-२६२-३६ (२६०४४)
श्मुद्गल उवाच। ३-२६२-३७क्ष् (२६४०)
महान्तस्तु अमी दोपास्त्वया स्वर्गस्य कीर्तिताः ।
निर्दोष एव यस्त्यन्यो लोकं तं प्रवदस्व मे ॥ ३-२६२-३७ (२६०४५)
देवदूत उवाच। ३-२६२-३८क्ष् (२६४१)
ब्रह्मणः सदनादूर्ध्वं तद्विष्णोः परमं पदम् ।
शुद्धं सनातनं ज्योतिः परं ब्रह्मेति यद्विदुः ॥ ३-२६२-३८ (२६०४६)
न तत्रविप्र गच्छन्ति पुरुषा विषयात्मकाः ।
दम्भलोभमहाक्रोधमोहद्रोहैरभिद्रुताः ॥ ३-२६२-३९ (२६०४७)
निर्ममा निरहंकारा निर्द्विन्द्वाः संयतेन्द्रियाः ।
ध्यानयोगपराश्चैव तत्रगच्छन्ति मानवाः ॥ ३-२६२-४० (२६०४८)
एतत्ते सर्वमाख्यतं यन्मां पृच्छसि मुद्गल ।
तवानुकम्पया साधो साधु गच्छाम माचिरम् ॥ ३-२६२-४१ (२६०४९)
व्यास उवाच। ३-२६२-४२क्ष् (२६४२)
एतच्छ्रुत्वा तु मौद्गल्यो वाक्यं विममृशे धिया ।
विमृश्य च मुनिश्रेष्ठो देवदूतमुवाचह ॥ ३-२६२-४२ (२६०५०)
देवदूत नमस्तेऽम्तु गच्छ तात यथासुखम् ।

महादोषेण मे कार्यं न स्वर्गेण सुखेन चा ॥ ३-२६२-४३ (२६०५१)
पतनान्ते महादुःखं परितापः सुदारुणः ।
स्वर्गभाजः पतन्तीह तस्मात्स्वर्गं न कामये ॥ ३-२६२-४४ (२६०५२)
यत्रगत्वान शोचन्ति न व्यथन्तिचलन्ति वा ।
तदहं स्थानमत्यन्तं मार्गयिष्यामि केवलम् ॥ ३-२६२-४५ (२६०५३)
इत्युक्त्वा स मुनिर्वाक्यं देवदूतंविसृज्य तम् ।
शिलोञ्छवृत्तिमुत्सृज्य शममातिष्ठदुत्तमम् ॥ ३-२६२-४६ (२६०५४)
तुल्यनिन्दास्तुतिर्भूत्वासमलोष्टाश्मकाञ्चनः ।
ज्ञानयोगेन शुद्धेन ध्याननित्यो बभूव ह ॥ ३-२६२-४७ (२६०५५)
गनिगृहीतेन्द्रियग्रामः समयोजयदात्मनि ।
युक्तचित्तं यथाऽऽत्मानं युयोज परमेश्वरे' ॥ ३-२६२-४८ (२६०५६)
ध्यानयोगाद्बलं लब्ध्वा प्राप्य बुद्धिमनुत्तमाम् ।
जगाम शाश्वतीं सिद्धिं परां निर्वाणलक्षणाम् ॥ ३-२६२-४९ (२६०५७)
तस्मात्त्वमपिकौन्तेय न शोकं कर्तुमर्हसि ।
राज्यात्स्फीतात्परिभ्रष्टस्तपसा तदवाप्स्यसि ॥ ३-२६२-५० (२६०५८)
सुखस्यानन्तरं दुःखं दुःखस्यानन्तरं सुखम् ।
पर्यायेणोपसर्पन्ते नरं नेमिमरा इव ॥ ३-२६२-५१ (२६०५९)
पितृपैतामहं राज्यंप्राप्स्यस्यमितविक्रम ।
वर्षात्रयोदशादूर्ध्वंव्येतु ते मानसो ज्वरः ॥ ३-२६२-५२ (२६०६०)
वैशंपायन उवाच। ३-२६२-५३क्ष् (२६४३)
स एवमुक्त्वाभगवान्व्यासः पाण्डवनन्दनम् ।
जगाम तपसे धीमान्पुनरेवाश्रमं प्रति ॥ ३-२६२-५३ (२६०६१)

इति श्रीमन्महाभारते अरण्यपर्वणि व्रीहिद्रौणिकपर्वणि
द्विषष्ट्यधिकद्विशततमोऽध्यायः ॥ २६२ ॥

Mahabharata - Vana Parva - Chapter Footnotes

३-२६२-२ उपरिष्टाच्च स्वर्लोकः इति ख ।झ। पाठः ॥
३-२६२-३ पुसः पुमांसः ॥
३-२६२-४ शूराश्वाहबलक्षणाः इति ख ।झ। पाठः ॥
३-२६२-६ यामा धामाश्च गणविशेषाः ॥
३-२६२-७ देवानां निकाया आलया येषु तेषां देवनिकायानाम् ॥
३-२६२-१४ उपपद्यतामुपगच्छताम् ॥
३-२६२-२६ त्रयस्त्रिंशदिमे देवा येषां लोका इति ख ।झ। पाठः ॥
३-२६२-२७ व्युष्टिः संपत्तिः ॥
३-२६२-५१ नेमि चक्रधाराम् ।अराः नामिनेमिसंधानदारूणि ॥

वन-अध्यय२६३
॥ श्रीः ॥
३.२६३. अध्यायः २६३

Mahabharata - Vana Parva - Chapter Topics
कादाचन शिष्यायुतसहितेन दुर्वाससा दुर्योधनगृहंप्रति गमनम् ॥ १ ॥
दुर्योधनन स्वपरिचर्यासंतुष्टं तत्प्रति ब्राह्मणादीनां द्रौपद्याश्च
भोजनावसाने भोजनाय पाण्डवान्प्रति गमनप्रार्थना ॥ २ ॥
दुर्वाससा तस्मै तद्वरदानपूर्वकं पाण्डवान्प्रति प्रस्थानम् ॥ ३ ॥

Mahabharata - Vana Parva - Chapter Text

३-२६३-० (२६०६२)
जनमेजय उवाच। ३-२६३-०क्ष् (२६४४)
वसत्स्वेवं वने तेषु पाण्डवेषु महात्मसु ।
रममाणएषु चित्राबिः कथाभिर्मुनिभिः सह ॥ ३-२६३-१ (२६०६३)
सूर्यदत्ताक्षयान्नेन कृष्णाया भोजनावधि ।
ब्राह्मणांस्तर्पमाणेषु ये चान्नार्थमुपागताः ।
आरण्यानां मृगाणां च मांसैर्नानाविधैरपि ॥ ३-२६३-२ (२६०६४)
धार्तराष्ट्रा दुरात्मानः सर्वे दुर्योधनादयः ।
कथं तेष्वन्ववर्तन्त पापाचारा महामुने ॥ ३-२६३-३ (२६०६५)
दःशासनस्य कर्णस्य शकुनेश्च मते स्थिताः ।
एतदाचक्ष्व भगवन्वैशंपायन पृच्छतः ॥ ३-२६३-४ (२६०६६)
वैशंपायन उवाच। ३-२६३-५क्ष् (२६४५)
श्रुत्वा तेषां तथा वृत्तिं नगरे वसतामिव ।
दुर्योधनो महाराज तेषु पापमरोचयत् ॥ ३-२६३-५ (२६०६७)
तथा तैर्निकृतिप्रज्ञैः कर्णदुःशासनादिभिः ।
नानोपायैरधं तेषु चिन्तयत्सु दुरात्मसु ॥ ३-२६३-६ (२६०६८)
अभ्यागच्छत्स धर्मात्मा तपस्वी कसुमहायशाः ।
शिष्यायुतसमोपेतो दुर्वासा नाम कामतः ॥ ३-२६३-७ (२६०६९)
तमागतमभिप्रेक्ष्य मुनिं परमकोपनम् ।
सहितो भ्रातृभिः श्रीमानातिथ्येन न्यमन्त्रयत् ॥ ३-२६३-८ (२६०७०)
विधिवत्पूजयामास स्वयं किंकरवत्स्थितः ।
अहानि कतिचित्तत्र तस्थौ स मुनिसत्तमः ॥ ३-२६३-९ (२६०७१)
तं च पर्यचरद्राजा दिवारात्रमतन्द्रितः ।
दुर्योधनो महाराज शापात्तस्य विशङ्कितः ॥ ३-२६३-१० (२६०७२)

क्षुधितोऽस्मि ददस्वान्नं शीघ्रं मम नराधिप ।
इत्युक्त्वा गच्छति स्नातुं प्रयागच्चति वै चिरात् ॥ ३-२६३-११ (२६०७३)
न भोक्ष्याम्यद्यमे नास्ति क्षुधेत्युक्त्वैत्यदर्शनम् ।
अकस्मादेत्य च ब्रूते भोजनयास्मांस्त्वरान्वितः ॥ ३-२६३-१२ (२६०७४)
कदाचिच्च निशीथे स उत्थाय निकृतौ स्थितः ।
पूर्ववत्कारयित्वाऽन्नं न भुङ्क्ते गर्हयन्स्म सः ॥ ३-२६३-१३ (२६०७५)
वर्तमाने तथा तस्मिन्यदा दुर्योधनो नृपः ।
विकृतिं नैति न क्रोधं तदा तुष्टोऽभवन्मुनिः ॥ ३-२६३-१४ (२६०७६)
आहचैनं दुराधर्षो वरदोऽस्मीति भारत ॥ ३-२६३-१५ (२६०७७)
वरं वरय भद्रं ते यत्ते मनसि वर्तते ।
मयि प्रीते तु यद्धर्म्यं नालभ्यं विद्यते तव ॥ ३-२६३-१६ (२६०७८)
वैशंपायन उवाच। ३-२६३-१७क्ष् (२६४६)
एतच्छ्रुत्वा वचस्तस्य महर्षेर्भावितात्मनः ।
अमन्यत पुनर्जातमात्मानं स सुयोधनः ॥ ३-२६३-१७ (२६०७९)
प्रागेव मन्त्रितं चासीत्कर्णदुःशासनादिभिः ।
याचनीयं मुनेस्तुष्टादिति निश्चित्य दुर्मतिः ॥ ३-२६३-१८ (२६०८०)
अतिहर्षान्वितो राजन्वरमेनमयाचत ।
शिष्यैः सह मम ब्रह्मन्यथा जातोऽतिथिर्भवान् ॥ ३-२६३-१९ (२६०८१)
अस्मत्कुले महाराजो ज्येष्ठः श्रेष्ठो युधिष्ठिरः ।
वने वसति धर्मात्मा भ्रातृभिः परिवारितः ।
गुणवाञ्शीलसंपन्नस्तस्य त्वमतिथिर्भव ॥ ३-२६३-२० (२६०८२)
यदा च राजपुत्री सा सुकुमारी यशस्विनी ।
भोजयित्वा द्विजान्सर्वान्पतींश्च वरवर्णिनी ॥ ३-२६३-२१ (२६०८३)
विश्रान्ता च स्वयं भुक्त्वा सुखासीना भवेद्यदा ।
तदा त्वं तत्रगच्छेथा यद्यनुग्राह्यता मयि ॥ ३-२६३-२२ (२६०८४)
तथा करिष्ये त्वत्प्रीत्येत्येवमुक्त्वा सुयोधनम् ।
दुर्वासा अपिविप्रेन्द्रो यथागतमगात्ततः ॥ ३-२६३-२३ (२६०८५)
कृतार्थमपि चात्मानं तदा मेने सुयोधनः ।
करेण च करं गृह्य कर्णस्य मुदितो भृशम् ॥ ३-२६३-२४ (२६०८६)
कर्णोपि भ्रातृसहितमित्युवाच नृपं मुदा ।
दुष्ट्या कामः सुसंवृत्तोदिष्ट्या कौरव वर्धसे ।
दिष्ट्या ते शत्रवो मग्ना दुस्तरे व्यसनार्णवे ॥ ३-२६३-२५ (२६०८७)
दुर्वासःक्रोधजे वह्नौ पतिताः पाण्डुनन्दनाः ।
स्वैरेव ते महापापैर्गता वै दुस्तरं तमः ॥ ३-२६३-२६ (२६०८८)
वैशंपायु उवाच। ३-२६३-२७क्ष् (२६४७)
इत्थं ते निकृतिप्रज्ञा राजन्दुर्योधनादयः ।

हसन्तः प्रीतमनसो जग्मुः स्वंस्वं निकेतनम् ॥ ३-२६३-२७ (२६०८९)

इति श्रीमन्महाभारते अरण्यपर्वणि द्रौपदीहरणपर्वणि
त्रिषष्ट्यधिकद्विशततमोऽध्यायः ॥ २६३ ॥
Mahabharata - Vana Parva - Chapter Footnotes

क इतः परं दुर्वासउपाख्यानात्मकमध्यायद्वयं झ ।पुस्तकएव
दृश्यते। ३-२६३-६ अध दुःखम् । ।
३-२६३-१६ धर्म्यै धर्मादनपेतम् ॥

---

वन-अध्यय२६४
॥ श्रीः ॥
३.२६४. अध्यायः २६४

Mahabharata - Vana Parva - Chapter Topics
दुर्वाससा दुर्योधनप्रार्थनासफलीकरणायाकाले पाण्डवान्प्रत्यन्नयाचनम्
॥ १ ॥
तथा युधिष्ठिरानुमत्या शिष्यायुतेन सह स्नानाय नदींप्रति गमनम् ॥ २ ॥
अत्रान्तरे द्रौपदीप्रार्थनया श्रीकृष्णेन तत्समीपागमनम् ॥ ३ ॥
तथा निवेदितदुर्वासोवृत्तान्तेन तेन स्वीयक्षुन्निवृत्तये
द्रौपदीप्रत्यन्नयाचनम् ॥ ४ ॥
तयाऽन्नस्य शेषाभावे निवेदितेऽन्नस्यालीमानाय्य
तत्कण्ठलग्नशाकपुलाकभक्षणएन सशिष्यस्य दुर्वाससस्तृप्तिजननम्
॥ ५ ॥
ततो भोजनाय भीमेनाह्वाने लज्जितस्य दुर्वाससो भयाच्छिष्यैः सह
पलायनम् ॥ ६ ॥

Mahabharata - Vana Parva - Chapter Text

३-२६४-० (२६०९०)
वैशंपायन उवाच। ३-२६४-०क्ष् (२६४८)
ततः कदाचिद्दुर्वासाः सुखासीनांस्तु पाण्डवान् ।
भुक्त्वा चावस्थितां कृष्णां ज्ञात्वा तस्मिन्वने मुनिः ।
अभ्यागच्छत्परिवृतः शिष्यैरयुतसंमितैः ॥ ३-२६४-१ (२६०९१)
दृष्ट्वा यान्तं तमतिथिं स च राजा युधिष्ठिरः ।
जगामाभिमुखः श्रीमान्सह भ्रातृभिरच्युतः ॥ ३-२६४-२ (२६०९२)
तस्मै बद्ध्वाञ्जलिं सम्यगुपवेश्य वरासने ।

विधिवत्पूजयित्वा तमातिथ्यन न्यमन्त्रयत् ।
आह्निकं भगवन्कृत्वा शीघ्रमेहीति चाब्रवीत् ॥ ३-२६४-३ (२६०९३)
जगाम च मुनिः सोपि स्नातुं शिष्यैः सहानघः ।
भोजयेत्सहशिष्यं मां कथमित्यविचिन्तयन् ॥ ३-२६४-४ (२६०९४)
न्यमज्जत्सलिले चापि मुनिसङ्घः समाहितः ॥ ३-२६४-५ (२६०९५)
एतस्मिन्नन्तरे राजन्द्रौपदी योपितां वरा ।
चिन्तामवाप परमामन्नहेतोः पतिव्रता ॥ ३-२६४-६ (२६०९६)
सा चिन्तयन्ती च यदा नान्नहेतुमविन्दत ।
मनसा चिन्तयामास कृष्णं कंसनिषूदनम् ॥ ३-२६४-७ (२६०९७)
कृष्णकृष्ण महाबाहो देवकीनन्दनाव्यय ।
वासुदेव जगन्नाथ प्रणतार्तिविनाशन ॥ ३-२६४-८ (२६०९८)
विश्वात्मन्विश्वजनक विश्वहर्तः प्रभोऽव्यय ।
प्रपन्नपाल गोपाल प्रजापाल परात्पर ।
आकूतीनां च चित्तीनां प्रवर्तक नताऽस्मि ते ॥ ३-२६४-९ (२६०९९)
वरेण्य वरदानन्त अगतीनां गतिप्रद ।
पुराणपुरुष प्राणमनोवृत्त्याद्यगोचर ॥ ३-२६४-१० (२६१००)
सर्वाध्यक्ष पराध्यक्ष त्वामहं शरणं गता ।
पाहि मां कृपया देव शरणागतवत्सल ॥ ३-२६४-११ (२६१०१)
नीलोत्पलदलश्याम पद्मगर्भारुणेक्षण ।
पीताम्बरपरीधान लसत्कौस्तुभभूषण ॥ ३-२६४-१२ (२६१०२)
त्वमादिरन्तो भूतानां त्वमेव च परायणम् ।
परात्परतरं ज्योतिर्विश्वात्मा सर्वतोमुखः ॥ ३-२६४-१३ (२६१०३)
त्वामेवाहुः परं बीजं निधानं सर्वसंपदाम् ।
त्वया नाथेन देवेश सर्वापद्भ्यो भयं न हि ॥ ३-२६४-१४ (२६१०४)
दुःशासनादहं पूर्वं सभायां मोचिता यथा ।
तथैव संकटादस्मान्मामुद्धर्तुमिहार्हसि ॥ ३-२६४-१५ (२६१०५)
वैशंपायन उवाच। ३-२६४-१६क्ष् (२६४९)
एवं स्तुतस्तदा देवः कृष्णया भक्तवत्सलः ।
द्रौपद्याः संकटं ज्ञात्वा देवदेवो जगत्पतिः ॥ ३-२६४-१६ (२६१०६)
पार्स्वस्थां शयने त्यक्त्वा रुक्मिणीं केशवः प्रभुः ।
तत्राजगाम त्वरितो ह्यचिन्त्यगतिरीश्वरः ॥ ३-२६४-१७ (२६१०७)
ततस्तं द्रौपदी दृष्ट्वाप्रणम्य परया मुदा ।
अब्रवीद्वासुदेवाय मुनेरागमनादिकम् ॥ ३-२६४-१८ (२६१०८)
ततस्तामब्रवीत्कृष्णः क्षुधितोस्मि भृशातुरः ।
शीघ्रं भोजय मां कृष्णे पश्चात्सर्वं करिष्यसि ॥ ३-२६४-१९ (२६१०९)
निशम्य तद्वचः कृष्णा लज्जिता वाक्यमब्रवीत् ।

स्थाल्यां भास्करदत्तायामन्नं मद्भोजनावधि ॥ ३-२६४-२० (२६११०)
भुक्तवत्यस्म्यहं देव तस्मादन्नं न विद्यते ।
ततः प्रोवाच भगवान्कृष्णां कमललोचनः ॥ ३-२६४-२१ (२६१११)
कृष्णे न नर्मकालोऽयं क्षुच्छ्रमेणातुरे मयि ।
शीघ्रं गच्छ मम स्थालीमानयित्वा प्रदर्शय ॥ ३-२६४-२२ (२६११२)
इति निर्बन्धतः स्थालीमानाय्य स यदूद्वहः ।
स्थाल्याः कण्ठेऽथ संलग्नं शाकान्नं वीक्ष्यकेशवः ॥ ३-२६४-२३ (२६११३)
उपयुज्याब्रवीदेनामनेन हरिरीश्वरः ।
विश्वात्मा प्रीयतां देवस्तुष्टश्चास्त्विति यज्ञभूक् ॥ ३-२६४-२४ (२६११४)
आकारय मुनीञ्शीघ्रं भोजनायेति चाब्रवीत् ।
भीमसेनं महाबाहुः कृष्णः क्लेशविनाशनः ॥ ३-२६४-२५ (२६११५)
ततो जगाम त्वरितो भीमसेनो महायशाः ।
आकारितुं तु तान्सर्वान्भोजनार्थं नृपोत्तम ।
स्नातुं गतान्देवनद्यां दुर्वासःप्रभृतीन्मुनीन् ॥ ३-२६४-२६ (२६११६)
ते चावतीर्णाः सलिले कृतवन्तोऽघमर्षणम् ।
दृष्ट्वोद्गारान्सान्नरसांस्तृप्त्या परमया युताः ।
उत्तीर्य सलिलात्तस्माद्दृष्टवन्तः परस्परम् ॥ ३-२६४-२७ (२६११७)
दुर्वाससमभिप्रेक्ष्यते सर्वे मुनयोऽब्रुवन् ।
राज्ञा हिकारयित्वाऽन्नं वयं स्नातुं समागताः ॥ ३-२६४-२८ (२६११८)
आकण्ठतृप्ता विप्रर्षे किंस्विद्भुञ्जामहे वयम् ।
वृथा पाकः कृतोस्माभिस्तत्र किं करवामहे ॥ ३-२६४-२९ (२६११९)
दुर्वासा उवाच। ३-२६४-३०क्ष् (२६५०)
वृथा पाकेन राजर्षेरपराधः कृतो महान् ।
माऽस्मानधाक्षुर्दृष्ट्वैव पाण्डवाः क्रूरचक्षुषा ॥ ३-२६४-३० (२६१२०)
स्मृत्वाऽनुभावं राजर्षेरम्बरीषस्य धीमतः ।
बिभेमि सुतरां विप्रा हरिपादाश्रयाज्जनात् ॥ ३-२६४-३१ (२६१२१)
पाण्डवाश्च महात्मानः सर्वे धर्मपरायणाः ।
शूराश्चकृतविद्याश्च व्रतिनस्तपसि स्थिताः ॥ ३-२६४-३२ (२६१२२)
सदाचाररता नित्यं वासुदेवपरायणाः ।
क्रुद्धास्ते निर्दहेयुर्वै तूलराशिमिवानलः ।
तत एतानपृष्ट्वैव शिष्याः शीघ्रं पलायत ॥ ३-२६४-३३ (२६१२३)
वैशंपायन उवाच। ३-२६४-३४क्ष् (२६५१)
इत्युक्तास्ते द्विजाः सर्वे मुनिना गुरुणा तदा ।
पाण्डवेभ्यो भृशं भीता दुद्रुवुस्ते दिशो दश ॥ ३-२६४-३४ (२६१२४)
भीमसेनो देवनद्यामपश्यन्मुनिसत्तमान् ।
तीर्थे ष्वितस्ततस्तस्या विचचार गवेषयन् ॥ ३-२६४-३५ (२६१२५)

तत्रस्थेभ्यस्तापसेभ्यः श्रुत्वा तांश्चैव विद्रुतान् ।
युधिष्ठिरमथाभ्येत्य तं वृत्तान्तं न्यवेदयत् ॥ ३-२६४-३६ (२६१२६)
ततस्ते पाण्डवाः सर्वे प्रयागमनकाङ्क्षिणः ।
प्रतीक्षनतः कियत्कालं जितात्मानोऽवतस्थिरे ॥ ३-२६४-३७ (२६१२७)
निशीथेऽभ्येत्य चाकस्मादस्मान्स च्छलयिष्यति ।
कथं च निस्तरेमास्मात्कृच्छ्राद्दैवोपसादितात् ॥ ३-२६४-३८ (२६१२८)
इति चिन्तापरान्दृष्ट्वा निःश्वसन्तो मुहुर्मुहुः ।
उवाच वचनं श्रीमान्कृष्णः प्रत्यक्षतां गतः ॥ ३-२६४-३९ (२६१२९)
भवतामापदं ज्ञात्वा ऋषेः परमकोपनात् ।
द्रौपद्या चिन्तितः पार्था अहं सत्वरमागतः ॥ ३-२६४-४० (२६१३०)
न भयं विद्यतेतस्मादृषेर्दुर्वाससोऽल्पकम् ।
तेजसा भवतां भीतः पूर्वमेव पलायितः ॥ ३-२६४-४१ (२६१३१)
धर्मनित्यास्तु ये केचिन्न ते सीदन्ति कर्हिचित् ।
आपृच्छे वो गमिष्यामि नियतं भद्रमस्तु वः ॥ ३-२६४-४२ (२६१३२)
वैशंपायन उवाच। ३-२६४-४३क्ष् (२६५२)
श्रुत्वेरितं केशवस्य बभूवुः स्वस्थामानसाः ।
द्रौपद्या सहिताः पार्थास्तमूचुर्विगतज्वराः ॥ ३-२६४-४३ (२६१३३)
त्वया नाथेन गोविन्द दुस्तरामापदं विभो ।
तीर्णाः प्लवमिवासाद्य मज्जमाना महार्णवे ॥ ३-२६४-४४ (२६१३४)
स्वस्ति साधय भद्रं ते इत्याज्ञातो ययौ पुरीम् ॥ ३-२६४-४५ (२६१३५)
पाण्डवाश्च महाभाग द्रौपद्या सहिताः प्रभो ।
ऊषुः प्रहृष्टमनसो विहरन्तो वनाद्वनम् ।
इति तेऽभिहितं राजन्यत्पृष्टोऽहमिह त्वया ॥ ३-२६४-४६ (२६१३६)
एवंविधान्यलीकानि धार्तराष्ट्रैर्दुरात्मभिः ।
पाण्डवेषु वनस्थेषु प्रयुक्तानि वृथाऽभवन् ॥ ३-२६४-४७ (२६१३७)

इति श्रीमन्महाभारते अरण्यपर्वणि द्रौपदीहरणपर्वणि
चतुःषष्ट्यधिकद्विशततमोऽध्यायः ॥ २६४ ॥
Mahabharata - Vana Parva - Chapter Footnotes

३-२६४-६ एतस्मिन्नन्तरे काले ॥
३-२६४-९ आकूतीनां चित्तीनां चेति चेतोवृत्तिविशेषाणाम् ॥
३-२६४-२५ सहदेव महाबाहुरिति झ । पाठः ॥
३-२६४-२६ सहदेवो महायशा इति झ । पाठः ॥
३-२६४-३५ सहदेवो देवनद्यामिति झ । पाठः ॥
३-२६४-४७ अलीकान्यहितानि ॥

वन-अध्यय२६५
॥ श्रीः ॥
३.२६५. अध्यायः २६५

Mahabharata - Vana Parva - Chapter Topics
पञ्चस्वपि पाण्डवेषु मृगयार्थे गतेषु सपरिजनेन सैन्धवेन
मार्गवशात्तदाश्रमाभिगमनम् ॥ १ ॥
तत्रद्रौपदीदर्शनक्षुभितहृदा जयद्रथेन तत्तत्वजिज्ञासया
तन्निकटं प्रतिकोटिकाश्यस् प्रेषणम् ॥ २ ॥

Mahabharata - Vana Parva - Chapter Text

३-२६५-० (२६१३८)
वैशंपायन उवाच। ३-२६५-०क्ष् (२६५३)
तस्मिन्बहुमृगेऽरण्ये अटमाना महारथाः ।
काम्यके भरतश्रेष्ठा विजह्रुस्ते यथामराः ॥ ३-२६५-१ (२६१३९)
प्रेक्षमाणा बहुविधान्वनोद्देशान्समन्ततः ।
यथर्तुकालरम्याश्चवनराजीः सुपुष्पिताः ॥ ३-२६५-२ (२६१४०)
पाण्डवा मृगयाशीलाश्चरन्तस्तन्महद्वनम् ।
विजह्नरिन्द्रप्रिमाः कंचित्कालमरिंदमाः ॥ ३-२६५-३ (२६१४१)
ततस्ते यौगपद्येन ययुः सर्वे चतुर्दिशम् ।
मृगयां पुरुषव्याघ्रा ब्राह्मणार्थे परतपाः ॥ ३-२६५-४ (२६१४२)
द्रौपदीमाश्रमे न्यस् तृणबिन्दोरनुज्ञया ।
महर्षेर्दीप्ततपसो धौम्यस्य च पुरोधसः ॥ ३-२६५-५ (२६१४३)
तस्तु राजा सिंधूनां वार्धक्षत्रिर्महायशाः ।
विवाहकामः साल्वेयान्प्रयातः सोऽभवत्तदा ॥ ३-२६५-६ (२६१४४)
महता परिबर्हेण राजयोग्येन संवृतः ।
राजभिर्बहुभिः सार्धमुपायात्काम्यकं च सः ॥ ३-२६५-७ (२६१४५)
तत्रापश्यत्प्रियां भार्यां पाण्डवानां यशस्विनीम् ।
तिष्ठन्तीमाश्रमद्वारि द्रौपदीं निर्जने वने ॥ ३-२६५-८ (२६१४६)
विभ्राजमानां वपुषा बिभ्रतीं रूपमुत्तमम् ।
भ्राजयन्तीं वनोद्देशं नीलाभ्रमिव विद्युतम् ॥ ३-२६५-९ (२६१४७)
अप्सरा देवकन्या वा माया वा देवनिर्मिता ।
इतिकृत्वाञ्जलिं सर्वे ददृशुस्तामनिन्दिताम् ॥ ३-२६५-१० (२६१४८)
तः स राजा सिन्धूनां वार्धक्षत्रिर्जयद्रथः ।

विस्मितस्त्वनवद्याङ्गीं दृष्ट्वा तां दुष्टमानसः ॥ ३-२६५-११ (२६१४९)
स कोटिकाश्यं राजानमब्रवीत्काममोहितः ।
कस्य त्वेषाऽनवद्याङ्गी यदिवाऽपिन मानुषी ॥ ३-२६५-१२ (२६१५०)
विवाहार्थो न मे कश्चिदिमां दृष्ट्वाऽतिमुन्दरीम् ।
एतामेवाहमादाय गमिष्यामि स्वमालयम् ॥ ३-२६५-१३ (२६१५१)
गच्छ जानीहि सौम्येमां कस्य वाऽत्र कुतोपि वा ।
किमर्थमागता सुभ्रूरिदं कष्टकितं वनम् ॥ ३-२६५-१४ (२६१५२)
अपि नाम वरारोहा मामेषा लोकसुन्दरी ।
भजेदद्यायतापाङ्गी सुदती तनुमध्यमा ॥ ३-२६५-१५ (२६१५३)
अप्यहं कृतकामः स्यामिमां प्राप्य वरस्त्रियम् ।
गच्छजानीहि कोन्वस्या नाथ इत्येव कोटिक ॥ ३-२६५-१६ (२६१५४)
स कोटिकाश्यस्तच्छ्रुत्वा रथात्प्रस्कन्द्य कुण्डली ।
उपेत्यपप्रच्छ तदा क्रोष्टा व्याघ्रवधूमिव ॥ ३-२६५-१७ (२६१५५)

इति श्रीमन्महाभारते अरण्यपर्वणि द्रौपदीहरणपर्वणि
पञ्चषष्ट्यधिकद्विशततमोऽध्यायः ॥ २६५ ॥
Mahabharata - Vana Parva - Chapter Footnotes

३-२६५-७ परिबर्हेण परिच्छदेन ॥
३-२६५-९ नीलाभ्रं नीलमेघम् ॥

---

वन-अध्यय२६६
॥ श्रीः ॥
३.२६६. अध्यायः २६६

Mahabharata - Vana Parva - Chapter Topics
जयद्रथचोदनया कोटिकाश्येन द्रौपदींप्रति
तत्पितृभर्तृकुलादिप्रश्नः ॥ १ ॥

Mahabharata - Vana Parva - Chapter Text

३-२६७-० (२६१५६)
कोटिक उवाच। ३-२६७-०क्ष् (२६५४)
का त्वं कदम्बस्य विनम्य शाखां
किमाश्रमे तिष्ठसि शोभमाना ।
देदीप्यमानाऽग्निशिखेव नक्तं
व्याधूयमाना पवनेन सूभ्रूः ॥ ३-२६७-१ (२६१५७)

अतीव रूपेण समन्विता त्वं
न चाप्यरण्येषु बिभेषि किंनु ।
देवी नु यक्षी यदिदानवी वा
वराप्सरा दैत्यवराङ्गना वा ॥ ३-२६७-२ (२६१५८)
वपुष्मती वोरगराजकन्या
वनेचरी वा क्षणदाचरस्त्री ।
त्वं देवराज्ञो वरुणस्य पत्नी
यमस्य सोमस्य धनेश्वरस्य ॥ ३-२६७-३ (२६१५९)
धातुर्विधातुः सवितुर्विभोर्वा
शक्रस्य वा त्वं सदनात्प्रपन्ना ।
न ह्येव नः पृच्छसि ये वयं स्म
न चापि जानीम तवेह नाथम् ॥ ३-२६७-४ (२६१६०)
वयं हि मानं तव वर्धयन्तः
पृच्छाम भद्रेप्रभवं प्रभुं च ।
आचक्ष्व बन्धूंश्च पतिं कुलं च
जातिं च यच्चेगह करोषि कार्यम् ॥ ३-२६७-५ (२६१६१)
अहं तु राज्ञः सुरथस्य पुत्रो
यं कोटिकाश्येति विदुर्मनुष्याः ।
ग्वश्येन्द्रियः सत्यरतिर्वरोरु
वृद्धोपसेवी गुरुपूजकश्च' ॥ ३-२६७-६ (२६१६२)
असौ तु यस्तिष्ठतिकाञ्चनाङ्गे
तथे हुतोऽग्निश्चयने यथैव ।
तरिगर्तराजः कमलायताक्षः
क्षेमंकरो नाम स एष वीरः ॥ ३-२६७-७ (२६१६३)
अस्मात्परस्त्वेष महाधनुष्मा-
न्पुत्रः कुलिन्दाधिपतेर्वरिष्ठः ।
निरीक्षते त्वां विपुलायताक्षः
सुपुष्पितः पर्वतवासनित्यः ॥ ३-२६७-८ (२६१६४)
असौ तु यः पुष्करिणीसमीपे
श्यामो युवा तिष्ठति दर्शनीयः ।
इक्ष्वाकुराजः सुबलस्य पुत्रः
स एव हन्ता द्विषतां सुगात्रि ॥ ३-२६७-९ (२६१६५)
यस्यानुयात्रं ध्वजिनः प्रयान्ति
सौवीरका द्वादशराजपुत्राः ।
शोणाश्वयुक्तेषु रथेषु सर्वे
मस्वेषु दीप्ता इव इव्यवाहाः ॥ ३-२६७-१० (२६१६६)

अङ्गारकः कुञ्जरो गुप्तकश्च
श्रुंजयः संजयसुप्रवृद्धौ ।
प्रभंकरोऽथ भ्रमरो रविश्च
शूरः प्रतापःकुहनश्च नाम ॥ ३-२६७-११ (२६१६७)
यं षट्सहस्रा रथिनोऽनुयान्ति
नागा हयाश्चैव पदातिनश्च ।
जयद्रथो नाम यदि श्रुतस्ते
सौवीरराजः सुभगे स एषः ॥ ३-२६७-१२ (२६१६८)
तस्यापरे भ्रातरोऽदीनसत्वा
बलाहकानीकविदारणाद्याः ।
सौवीरवीराः प्रवरा युवानो
राजानमेते बलिनोऽनुयान्ति ॥ ३-२६७-१३ (२६१६९)
एतैः सहायैरुपयाति राजा
मरुद्गणैरिन्द्र इवाभिगुप्तः ।
अजानतां ख्यापय नः सुकेशि
कस्यासि भार्या दुहिता च कस्य ॥ ३-२६७-१४ (२६१७०)

इति श्रीमन्महाभारते अरण्यपर्वणि द्रौपदीहरणपर्वणि
षट्षष्ट्यधिकद्विशतमोऽध्यायः ॥२६६ ॥
Mahabharata - Vana Parva - Chapter Footnotes

३-२६७-४ धातुः प्रजापतेः सरस्वती वा ।विधातुः कश्यपस्य रुद्रस्य
वा। अदितिः पार्वती वा। विभोर्विष्णोर्लक्ष्मीर्वा ॥
३-२६७-५ प्रभवपितरम् ।प्रभुं महान्तम्।प्रभवं भुवं चेति
ध पाठः ॥
३-२६७-७ चयने इष्टकोच्चये ॥
३-२६७-१२ पदातिनः पद्भ्यां अतितुं सततं गन्तुं शीलं येषां ते
पदातयः ॥

---

वन-अध्यय२६७
॥ श्रीः ॥
३.२६७. अध्यायः २६७

Mahabharata - Vana Parva - Chapter Topics
कोटिकाश्यप्रति द्रौपद्या जननादिस्वीयवृत्तान्तकथनम् ॥१ ॥

Mahabharata - Vana Parva - Chapter Text

३-२६७-० (२६१७१)
वैशंपायन उवाच। ३-२६७-०क्ष् (२६५५)
अथाब्रवीद्द्रौपदी राजपुत्री
पृष्टा शिबीनां कप्रवरेण तेन ।
अवेक्ष्य मन्दं प्रविमुच्य शाखां
संगृह्णती कौशिकमुत्तरीयम् ॥ ३-२६७-१ (२६१७२)
बुद्ध्याऽभिजानामि नरेनद्रपुत्र
न मादृशी त्वामभिभाष्टुमर्हति ।
न त्वेह वक्ताऽस्ति तवेह वाक्य-
मन्यो नरो वाऽप्यथवाऽपि नारी ॥ ३-२६७-२ (२६१७३)
एका ह्यहं संप्रति तेन वाचं
ददानि वै भद्र निबोध चेदम् ।
अहं ह्यरण्येकथमेकमेका
त्वामालपेयं निरता स्वधर्मे ॥ ३-२६७-३ (२६१७४)
जानामि च त्वां सुरथस्य पुत्रं
यं कोटिकाश्येति विदुर्मनुष्याः ।
तस्मादहं शैब्य तथैव तुभ्य-
माख्यामि बन्धून्प्रथितं कुलं च ॥ ३-२६७-४ (२६१७५)
अपत्यमस्मि द्रुपदस्य राज्ञः
कृष्णेति मां शैब्य विदुर्मनुष्याः ।
साऽहं वृणे पञ्च जनान्पतित्वे
ये खाण्डवप्रस्थगताः श्रुतास्ते ॥ ३-२६७-५ (२६१७६)
युधिष्ठिरो भीमसेनार्जुनौ च
माद्र्याश्च पुत्रौ पुरुषप्रवीरौ ।
ते मां निवेश्यह दिशश्चतस्रो
विबज्य पार्था मृगयां प्रयाताः ॥ ३-२६७-६ (२६१७७)
प्राचीं राजा दक्षिणां भीमसेनो
जयः प्रतीचीं यमजावुदीचीम् ।
मन्ये तु तेषां रथसत्तमानां
कालो बहुः प्राप्ता इहोपयातुम् ॥ ३-२६७-७ (२६१७८)
संमानिता यास्यथ तैर्यथेष्टं
विमुच्य वाहानवरोहयध्वम् ।
प्रियातिथिर्धर्मसुतो महात्मा
प्रीतो भविष्यत्यभिवीक्ष्य युष्मान् ॥ ३-२६७-८ (२६१७९)
एतावदुक्त्वा द्रुपदात्मजा सा

शैव्यात्मजं चन्द्रमुखी प्रतीता ।
विवेश तां पर्णशालां प्रशस्तां
संचिन्त्य तेषामतिथिस्वधर्मम् ॥ ३-२६७-९ (२६१८०)

इति श्रीमन्महाभारते अरण्यपर्वणि द्रौपदीहरणपर्वणि
सप्तषष्ट्यधिकद्विशततमोऽध्यायः ॥ २६७ ॥
Mahabharata - Vana Parva - Chapter Footnotes

३-२६७-२ अभिभाष्टुं अभिभाषितुम् । त्वामपि द्रष्टुमर्हेति ध। पाठः ॥
३-२६७-३ तेन कारणेन ॥
३-२६७-७ जयोऽर्जुनः ॥

---

वन-अध्यय२६८
॥ श्रीः ॥
३.२६८. अध्यायः २६८

Mahabharata - Vana Parva - Chapter Topics
कोटिकाश्याद्द्रौपदीतत्वंविदितवता जयद्रथेन द्रौपदीमेत्य
स्वभार्यात्वयाचनाः ॥ १ ॥

Mahabharata - Vana Parva - Chapter Text

३-२६८-० (२६१८१)
वैशंपायन उवाच। ३-२६८-०क्ष् (२६५६)
तथाऽऽसीनेषु सर्वेषु तेषु राजसु भारत ।
ग्कोटिकाश्यो जगामाशु सिन्धुराजनिवेशनम् ॥ ३-२६८-१ (२६१८२)
यदुक्तं कृष्णया सार्धं तत्सर्वं प्रत्यवेदयत् ।
कोटिकाश्यवचः श्रुत्वा शैब्यं सौवीरकोऽब्रवीत् ॥ ३-२६८-२ (२६१८३)
यदा वाचं व्याहरन्त्यामस्यां मे रमते मनः ।
सीमन्तिनीनां मुख्यायां विनिवृत्तः कथं भवान् ॥ ३-२६८-३ (२६१८४)
एतां दृष्ट्वा स्त्रियो मेऽन्या यथा शाखामृगस्त्रियः ।
प्रतिभान्ति महाबाहो सत्यमेतद्ब्रवीमि ते ॥ ३-२६८-४ (२६१८५)
दर्शनादेव हि मनस्तया मेऽपहृतं भृशम् ।
तां समाचक्ष्व कल्याणीं यदि स्याच्छैब्य मानुषी ॥ ३-२६८-५ (२६१८६)
कोटिक उवाच। ३-२६८-६क्ष् (२६५७)
एषा वै द्रौपदी कृष्णा राजपुत्री यशस्विनी ।
पञ्चानां पाण्डुपुत्राणां महिषी संमता भृशम् ॥ ३-२६८-६ (२६१८७)

सर्वेषां चैव पार्थानां प्रिया बहुमता सती ।
तया समेत्य सौवीर सौवीराभिमुखो व्रज ॥ ३-२६८-७ (२६१८८)
वैशंपायन उवाच। ३-२६८-८क्ष् (२६५८)
एवमुक्तः प्रत्युवाच पश्यामि द्रौपदीमिति ।
पतिः सौवीरसिन्धूनां दुष्टभावो जयद्रथः ॥ ३-२६८-८ (२६१८९)
स प्रविश्याश्रमं पुण्यं सिंहगोष्ठं वृको यथा ।
आत्मना सप्तमः कृष्णामिदं वचनमब्रवीत् ॥ ३-२६८-९ (२६१९०)
कुशलं ते वरारोहे भर्तारस्तेऽप्यनामयाः ।
येषां कुशलकामासि तेऽपिकच्चिदनामयाः ॥ ३-२६८-१० (२६१९१)
द्रौपद्युवाच। ३-२६८-११क्ष् (२६५९)
अपि ते कुशलं राजन्राष्ट्रे कोशे बले तथा ।
कच्चिदेकः शिबीनाढ्यान्सौवीरान्सह सिन्धुभिः ।
अनुतिष्ठसि धर्मेण ये चान्ये विदितास्त्वया ॥ ३-२६८-११ (२६१९२)
कौरव्यः कुशली राजा कुन्तीपुत्रो युधिष्ठिरः ।
अहं च भ्रातरश्चास्य यांश्चान्यान्परिपृच्छसि ॥ ३-२६८-१२ (२६१९३)
पाद्यं प्रतिगृहाणेदमासनं च नृपात्मज ।
मृगान्विता मृगीश्चैव प्रातराशं ददानि ते ॥ ३-२६८-१३ (२६१९४)
ऐणेयान्पृषतान्न्यङ्कून्हरिणाञ्शरभाञ्शशान् ।
ऋक्षान्रुरूञ्शम्बरांश्च गवयांश्च मृगान्बहून् ॥ ३-२६८-१४ (२६१९५)
वराहामहिषांश्चैव याश्चान्या मृगजातयः ।
प्रदास्यति स्वयं तुभ्यं कुन्तीपुत्रो युधिष्टिरः ॥ ३-२६८-१५ (२६१९६)
जयद्रथ उवाच। ३-२६८-१६क्ष् (२६६०)
कुशलं प्रातराशस्य सर्वं मे दित्सितं त्वया ।
एहि मे रथमारोह सुखमाप्नुहि केवलम् ॥ ३-२६८-१६ (२६१९७)
गतश्रीकान्हृतराज्यान्कृपणान्गतचेतसः ।
अरण्यवासिनः पार्थान्नानुरोद्धुं त्वमर्हसि ॥ ३-२६८-१७ (२६१९८)
नैव प्राज्ञा गतश्रीकं भर्तारमुपयुञ्जते ।
युञ्जानमनुयुञ्जीत न शरियः संक्षये वसेत् ॥ ३-२६८-१८ (२६१९९)
श्रिया विहीना राष्ट्राच्च विनष्टाः शाश्वतीः समाः ।
अलं ते पाण्डुपुत्राणां भक्त्या क्लेशमुपासितुम् ॥ ३-२६८-१९ (२६२००)
भार्या मे भव सुश्रोणि त्यजैनान्मुखमाप्नुहि ।
अखिलान्सिन्धुसौवीरानाप्नुहि त्वं मया सह ॥ ३-२६८-२० (२६२०१)
वैशंपायन उवाच। ३-२६८-२१क्ष् (२६६१)
इत्युक्ता सिन्धुराजेन वाक्यं हृदयकम्पनम् ।
कृष्णा तस्मादपाक्रामद्देशात्सभ्रुकुटीमुखी ॥ ३-२६८-२१ (२६२०२)
अवमत्यास्य तद्वांक्यमाक्षिप्य च सुमध्यमा ।

मैवमित्यब्रवीत्कृष्णा लज्जस्वेति च सैन्धवम् ॥ ३-२६८-२२ (२६२०३)
सा काङ्क्षमाणा भर्तृणामुपयातमनिन्दिता ।
विलम्बयामास परं वाक्यैर्वाक्यानि युञ्जती ॥ ३-२६८-२३ (२६२०४)
द्रैपद्युवाच। ३-२६८-२३क्ष् (२६६२)
नैवं वद महाबाहो न्याय्यं त्वं न च मन्यसे ।
पाण्डूनां धार्तराष्ट्राणां स्वसा चैव कनीयसी ॥ ३-२६८-२४ (२६२०५)
दुश्शला नाम तस्यास्त्वं भर्ता राजकुलोद्वह ।
मम भ्राता च न्याय्येन त्वया रक्ष्या महारथ ॥ ३-२६८-२५ (२६२०६)
धर्मिष्ठानां कुले जातो न धर्मं त्वमवेक्षसे ।
इत्युक्तः सिन्धुराजोथ वाक्यमुत्तरमब्रवीत् ॥ ३-२६८-२६ (२६२०७)
राज्ञां धर्मं न जानीषे स्त्रियो रत्नानि चैव हि ।
साधारणानि लोकेऽस्मिन्प्रवदन्ति मनीषिणः ॥ ३-२६८-२७ (२६२०८)
स्वसा च स्वस्रिया चैव भ्रातृभार्या तथैव च ।
सुखं गृह्णन्ति राजानस्ताश्च तत्र नृपोद्भवाः' ॥ ३-२६८-२८ (२६२०९)

इति श्रीमन्महाभारते अरण्यपर्वणि द्रौपदीहरणपर्वणि
अष्टषष्ट्यधिकद्विशततमोऽध्यायः ॥ २६८ ॥
Mahabharata - Vana Parva - Chapter Footnotes

३-२६८-३ सौवीरको जयद्रथः ॥
३-२६८-७ यदास्यां मे मनोरमते तदा भवान्कथं विनिवृत्त इति योज्यम् ॥
३-२६८-९ सिंहगोष्ठं गोष्ठमिव गोष्ठं स्थानम् ॥
३-२६८-११ अनुतिष्ठति पालयसि । विदिता लब्धाः ॥
३-२६८-१८ श्रियः संक्षये सतीति शेषः । हीनलक्ष्मीके इत्यर्थः ॥
३-२६८-१९ समाः संवत्सरान् ॥
३-२६८-२३ विलोभयामास परमिति झ । पाठः ॥

---

वन-अध्यय२६९
॥ श्रीः ॥
३.२६९. अध्यायः २६९

Mahabharata - Vana Parva - Chapter Topics
द्रौपद्या स्वाभिलाषिणो जयद्रथस्य गर्हणम् ॥ १ ॥
तथा बलात्स्ववस्त्रान्तकर्षिणस्तस्याक्षेपादधःपातनपूर्वकं स्वयमेव
तद्रथारोहणम् ॥ २ ॥

Mahabharata - Vana Parva - Chapter Text

३-२६९-० (२६२१०)
वैशंपायन उवाच। ३-२६९-०क्ष् (२६६३)
सरोषरागोपहतेन वल्गुना
सरागनेत्रेण नतोन्नतभ्रुवा ।
मुखेन विस्फूर्य सुवीरराष्ट्रपं
ततोऽब्रवीत्तं द्रुपदात्मजा पुनः ॥ ३-२६९-१ (२६२११)
यशस्विनस्तीक्ष्णविषान्महारथा-
नभिब्रुवन्मूढ न लज्जसे कथम् ।
महेन्द्रकल्पान्निरतान्स्वकर्मसु
स्तितान्समूहेष्वपि यक्षरक्षसाम् ॥ ३-२६९-२ (२६२१२)
न किंचिदार्याः प्रवदन्ति पापं
वनेचरंवा गृहमेधिनं वा ।
तपस्विनं संपरिपूर्णविद्यं
भजन्ति चैवं सुनराः सुवीर ॥ ३-२६९-३ (२६२१३)
अहं तु मन्ये तव नास्ति कश्चि-
देतादृशे क्षत्रियसंनिवेशे ।
यस्त्वद्य पातालमुखे पतन्तं
पाणौ गृहीत्वा प्रतिसंहरेत ॥ ३-२६९-४ (२६२१४)
नागं प्रभिन्नं गिरिकूटकल्प-
मुपत्यकां हैमवतीं चरन्तम् ।
दण्डीव यूथादपसेधसि त्वं
यो जेतुमाशंससि धर्मराजम् ॥ ३-२६९-५ (२६२१५)
बाल्यात्प्रसुप्तस्य महाबलस्य
सिंहस् पक्ष्माणि मुखाल्लुनासि ।
पदा समाहत्य पलायमानः
क्रुद्धं यदा द्रक्ष्यसि भीमसेनम् ॥ ३-२६९-६ (२६२१६)
महाबलं घोरतरं प्रवृद्धं
जातं हरिं पर्वतकन्दरेषु ।
प्रसुप्तमुग्रं प्रपदेन हंसि
यः क्रुद्धमायोत्स्यसि जिष्णुमुग्रम् ॥ ३-२६९-७ (२६२१७)
कृष्णोरगौ तीक्ष्णमुखौ द्विजिह्वौ
मत्तः पदा क्रामसि पुच्छदेशे ।
यः पाण्डवाभ्यां पुरुषोत्तमाभ्यां
जघन्यजाभ्यां प्रयुयुत्ससे त्वम् ॥ ३-२६९-८ (२६२१८)
यथा च वेणुः कदली नलो वा

फलन्त्यभावाय न भूतयेऽऽत्मनः ।
तथैव मां तैः परिरक्ष्यमाणा-
मादास्यसे कर्कटकीव गर्भम् ॥ ३-२६९-९ (२६२१९)
जयद्रथ उवाच। ३-२६९-१०क्ष् (२६६४)
जानामि कृष्णे विदितं ममैत-
द्यथाविधास्ते नरदेवपुत्राः ।
न त्वेवमेतेन विभीषणेन
शक्या वयं त्रासयितुं त्वयाऽद्य ॥ ३-२६९-१० (२६२२०)
वयं पुनः सप्तदशेषु कृष्णे
कुलेषु सर्वेऽनवमेषु जाताः ।
षड्भ्यो गुणेभ्योऽभ्यधिका विहीना
न्मन्यामहे द्रौपदी पाण्डुपुत्रान् ॥ ३-२६९-११ (२६२२१)
सा क्षिप्रमातिष्ठ गजं रथं वा
न वाक्यमात्रेण वयं हि शक्याः ।
आशंस वा त्वं कृपणं वदन्ती
सौवीरराजस्य पुनः प्रसादम् ॥ ३-२६९-१२ (२६२२२)
द्रौपद्युवाच। ३-२६९-१३क्ष् (२६६५)
महाबला किंत्विह दुर्बलेव
सौवीरराजस्य मताऽहमस्मि ।
नाहं प्रमाथादिह संप्रतीता
सौवीरराजं कृपणं वदेयम् ॥ ३-२६९-१३ (२६२२३)
यस्या हि कृष्णौ पदवीं चरेतां
समास्थितावेकरथे समेतौ ।
इन्द्रोऽपितां नापहरेत्कथंचि-
न्मनुष्यमात्रः कृपणः कुतोऽन्यः ॥ ३-२६९-१४ (२६२२४)
यथा विकीटी परवीरघाती
निघ्नन्रथस्थो द्विषतां मनांसि ।
मदन्तरे त्वद्ध्वजिनीं प्रवेष्टा
वक्षं दहन्नग्निरिवोष्णगेषु ॥ ३-२६९-१५ (२६२२५)
जनार्दनः सान्धकवृष्णिवीरो
महेष्वासाः केकयाश्चापि सर्वे ।
एते हि सर्वे मम राजपुत्राः
प्रहृष्टरूपाः पदवीं चरेयुः ॥ ३-२६९-१६ (२६२२६)
मौर्वीविसृष्टाः स्तनयित्नुघोषा
गाण्डीवमुक्तास्त्वतिवेगवन्तः ।
हस्तं समाहत्य धनंजयस्य

भीमाः शब्दं घोरतरं नदनति ॥ ३-२६९-१७ (२६२२७)
गाण्डीवमुक्तांश्च महाशरौघान्
पतङ्गसङ्घानिव शीघ्रवेगान् ।
यदा द्रष्टास्यर्जुनं वीर्यशालिनं
तदा स्वबुद्धिं प्रतिनिन्दितासि ॥ ३-२६९-१८ (२६२२८)
सशङ्खघोषः सतलत्रघोषो
गाण्डीवधन्वा मुहुरुद्वहंश्च ।
यदा शरानर्पयिता तवोरसि
तदा मनस्ते किमिवाभविष्यत् ॥ ३-२६९-१९ (२६२२९)
गदाहस्तं भीममभिद्रवन्तं
माद्रीपुत्रौ संपतन्तौ दिशश्च ।
अमर्षजं क्रोधविषं वमन्तौ
दृष्ट्वा चिरं तापमुपैष्यसेऽधम ॥ ३-२६९-२० (२६२३०)
यथा वाऽहं नातिचरे कथंचि-
त्पतीन्महार्हान्मनसाऽपिजातु ।
तेनाद्य सत्येन वशीकृतंत्वां
द्रष्टास्मि पार्थैः परिकृष्यमाणम् ॥ ३-२६९-२१ (२६२३१)
न संभ्रमं गन्तुमहं हि शक्ष्ये
त्वया नृशंसेन विकृष्यमाणा ।
समागताऽहं हि कुरुप्रवीरैः
पुनर्वनं काम्यकमागताऽस्मि ॥ ३-२६९-२२ (२६२३२)
वैशंपायन उवाच। ३-२६९-२३क्ष् (२६६६)
‘इत्येवमुक्तस्तु स सिन्धुनाथ-
स्तां द्रौपदीमाहविशालनेत्राम् ।
आरुह्यतामाशु रथं मदीयं
मा त्वां वलाद्दौपदिकर्षयेहम्’ ॥ ३-२६९-२३ (२६२३३)
साताननुप्रेक्ष्य विशालनेत्रा
जिघृक्षमाणानवभर्त्सयन्ती ।
प्रोवाच मा मा स्पृशतेति भीता
धौम्यं प्रचुक्रोश पुरोहितं सा ॥ ३-२६९-२४ (२६२३४)
जग्राह तामुत्तरवस्त्रदेशे
जयद्रथस्तं समवाक्षिपत्सा ।
तया समाक्षिप्ततनुः स पापः
पपात शाखीव निकृत्तमूलः ॥ ३-२६९-२५ (२६२३५)
प्रगृह्यमाणा तु महाजवेन
मुहुर्विनिःश्वस्य च राजपुत्री ।

सा मृष्यमाणा रथमारुरोह
धौम्यस्य पादावभिवाद्य कृष्णा ॥ ३-२६९-२६ (२६२३६)
धौम्य उवाच। ३-२६९-२७क्ष् (२६६७)
नेयं शक्या त्वया नेतुमविजित्य महारथान् ।
धर्मं क्षत्रस् पौराणमवेक्षस्व जयद्रथ ॥ ३-२६९-२७ (२६२३७)
क्षुद्रं कृत्वाफलंपापं त्वं प्राप्स्यसि न संशयः ।
आसाद्य पाण्डवान्वीरान्धर्मराजपुरोगमान् ॥ ३-२६९-२८ (२६२३८)
वैशंपायन उवाच। ३-२६९-२९क्ष् (२६६८)
इत्युक्तवाह्रियमाणां तां राजपुत्रीं यशस्विनीम् ।
अन्वगच्छत्तदा धौम्यः पदातिगणमध्यगः ॥ ३-२६९-२९ (२६२३९)

इति श्रीमन्महाभारते अरण्यपर्वणि द्रौपदीहरणपर्वणि
एकोनसप्तत्यधिकद्विशततमोऽध्यायः ॥ २६९ ॥
Mahabharata - Vana Parva - Chapter Footnotes

३-२६९-१ रोषेण रागो रक्तिमा तेन सहितं सरोषरागं तदुपहतं
च म्लानं च तेन । वल्गुना सुन्दरेण। नते स्वभावत उन्नते क्रोधेन
भ्रुवौ यस्यास्तथा। विस्फूर्य फूत्कारं कृत्वा। सरोषवाचोपहितेनेति
ध। पाठः ॥
३-२६९-२ अभि अभिक्रम्य ब्रुवन्
। स्थितानचलान्। यक्षादिभिरप्यजेयानित्यर्थः ॥
३-२६९-३ भषन्ति हैवं सुनराः सुवीरेति झ । पाठः ॥
३-२६९-४ क्षत्रियसंनिवेशे नृपसमाजे । पातालमुखे
महागृर्ते। प्रतिसंहरेत् प्रतिषेधेत ॥
३-२६९-५ उपत्यकामद्रिसमीपभूमिम् । दण्डी दणाडमात्रायुधो
यूथात्समूहादपसेधसि अपकर्षसि ॥
३-२६९-६ बाल्यात् मौढ्यात् पक्ष्माणि मुखोपरिस्थकेशान् । पदा समाहत्य
लुनासि छिनस्ति ॥
३-२६९-९ वेण्वादयः फलिता एव नश्यन्ति । कर्कटी च परिणतगर्भा
नश्यतीति लोकप्रसिद्धम् ॥
३-२६९-१० विभीषणेन भयप्रदर्शनेन ॥
३-२६९-११ सप्तदश अष्टौ कर्माणि नवशक्त्यादयश्च नित्यं सन्ति
येषु तानि सप्तदशानि । नित्ययोगे मत्वर्थीयोर्शआद्यच्। अनवमेषु
अनीचेषु। षड्गुणाः शौर्यतेजोधृतिदाक्षिण्यदानैश्वर्याणि ॥
३-२६९-१२ शक्याः निवारितुमिति शेषः । पुनरिति
पाण्डवापराजयानन्तरम्। त्वं मत्प्रसादं आशंस प्रार्थय ॥

३-२६९-१३ प्रमाथात निग्रहात् । प्रतीता प्रख्याता। सभायां वस्त्रराशिप्रदानेन भगवदनुग्रहीतत्वात्। महाबलाः किंत्विह दुर्बला वा सौवीरराजस्य सुताहमस्मि। साहं प्रमादादिह संप्रभीतेति ध। पाठः ॥
३-२६९-१४ कृष्णौ वासुदेवारजुनौ ॥
३-२६९-१५ मदन्तरे मन्निमित्तम् । प्रवेष्टा प्रकर्षेण वेष्टयिष्यति। उष्णगेषु निदाधेषु ॥
३-२६९-१७ गाण्डीवमुक्ताः शराइति शेषः ॥
३-२६९-१९ अभविष्यत् भविष्यतीत्यर्थे व्यत्ययेन लृङ् ॥

---

वन-अध्यय२७०
॥ श्रीः ॥
३.२७०. अध्यायः २७०

Mahabharata - Vana Parva - Chapter Topics
मृगयागतैः पाण्डवैर्दुर्निमित्तदर्शनाद्विपदाशङ्कया सत्वरं स्वाश्रमाभिगमनम् ॥ १ ॥
तदा दास्या द्रौपदीवृत्तान्तावगमेन जयद्रथपथानुगतैस्तदवलोकनेन कोपात्समुत्क्रोशनम् ॥ २ ॥

Mahabharata - Vana Parva - Chapter Text

३-२७०-० (२६२४०)
वैशंपायन उवाच। ३-२७०-०क्ष् (२६६९)
ततो दिशः संपरिवृत्य पार्था
मृगान्वराहान्महिपांस्च हन्वा ।
धनुर्धराः श्रेष्ठतमाः पृथिव्यां
पृथक्चरन्तः सहिता बभूवुः ॥ ३-२७०-१ (२६२४१)
ततो मृगव्यालजनानुकीर्णं
महावनं तद्विहगोपघुष्टम् ।
भ्रातॄंश्च तानभ्यवदद्युधिष्ठिरः
श्रुत्वा गिरो व्याहरतां मृगाणाम् ॥ ३-२७०-२ (२६२४२)
आदित्यदीप्तां दिशमभ्युपेत्य
मृगा द्विजाः क्रूरमिमे वदन्ति ।
आयासमुग्रं प्रतिवेदयन्तो
महाभयं शत्रुभिर्वाऽवमानम् ॥ ३-२७०-३ (२६२४३)
क्षिप्रं निवर्तध्वमलं मृगैर्नो

मनो हि मे दूयति दह्यते च ।
बुद्धिं समाच्छाद्य च मे समन्यु-
रुद्धूयते प्राणपतिः शरीरे ॥ ३-२७०-४ (२६२४४)
सरः सुपर्णन हृतोरगेन्द्र-
मराजकं राष्ट्रमिवेह शान्तम् ।
एवंविधं मे प्रतिभाति काम्यकं
शौण्डैर्यथा पीतसुरश्च कुम्भः ॥ ३-२७०-५ (२६२४५)
ते सैन्धवैरग्न्यनिलोग्रवेगै-
र्महाजवैर्वाजिभिरुह्यमानाः ।
युक्तैर्बृहद्भिः सुरथैर्नृवीरा-
स्तदाश्रमायाभिमुखा बभूवुः ॥ ३-२७०-६ (२६२४६)
तेषां तु गोमायुरनल्पघोषो
निवर्ततां वाममुपेत्य पार्श्वम् ।
प्रव्याहरत्तत्प्रविमृश्य राजा
प्रोवाच भीमं च धनंजयं च ॥ ३-२७०-७ (२६२४७)
यथा वदत्येप विहीनयोनिः
सालावृकोवाममुपेत्य पार्स्वम् ।
सुव्यक्तमस्मानवमत्य पापैः
कृतोऽभिमर्दः कुरुभिः प्रसह्य ॥ ३-२७०-८ (२६२४८)
एत्याथ ते तद्वनमाविशन्तो
महत्यरण्ये मृगयां चरित्वा ।
बालामपश्यन्त तदा रुदन्तीं
धात्रेयिकां प्रेष्यवधूं प्रियायाः ॥ ३-२७०-९ (२६२४९)
तामिन्द्रसेनस्त्वरितोऽभिसृत्य
रथादवप्लुत्य ततोऽभ्यधावत् ।
प्रोवाच चैनां वचनं नरेन्द्र
धात्रेयिकामार्ततरस्तदानीम् ॥ ३-२७०-१० (२६२५०)
किं रोदिषि त्वं पतिता धरण्यां
किं त मुखं शुष्यति दीनवर्णम् ।
कच्चिन्न पापैः सुनृशंसकृद्भिः
प्रमाथिता द्रौपदी राजपुत्री ।
ग्गतेष्वरण्यं हि सुतेषु पाण्डोः
कच्चित्परैर्नापकृतं वनेऽस्मिन् ॥ ३-२७०-११ (२६२५१)
पर्याकुला साधु समीक्ष्यसूत-
मभ्यापतन्तं द्रुतमिन्द्रसेनम् ।
उरो घ्नती कष्टतरं तदानी-

मुच्चैः प्रचुक्रोश हृतेति देवी ॥ ३-२७०-१२ (२६२५२)
इन्द्रसेन उवाच। ३-२७०-१३क्ष् (२६७०)
अनिन्द्यरूपा तु विशालनेत्रा
शरीरतुल्या कुरुपुङ्गवानाम् ।
ग्केनात्मनाशाय यदापनीता
छिद्रं समासाद्य नरेन्द्रपत्नी' ॥ ३-२७०-१३ (२६२५३)
यद्येव देवीं पृथिवीं प्रविष्टा
दिवं प्रपन्नाऽप्यथवा समुद्रम् ।
तस्या गमिष्यन्ति पदे हि पार्था-
स्तथा हि संतप्यति धर्मराजः ॥ ३-२७०-१४ (२६२५४)
को हीदृशानामरिमर्दनानां
क्लेशक्षमाणामपराजितानाम् ।
प्राणैः समामिष्टतमां जिहीर्षे-
दनुत्तमं रत्नमिव प्रमूढः ॥ ३-२७०-१५ (२६२५५)
न बुध्यते नाथवतीमिहाद्य
बहिश्चरं हृदयं पाण्डवानाम् ।
कस्याद्य कायं प्रतिभिद्य घोरा
महीं प्रवेक्ष्यन्ति शिताः शराग्र्याः ॥ ३-२७०-१६ (२६२५६)
मा त्वं शुचस्तां प्रति भीरु विद्धि
यथाऽद्य कृष्णा पुनरेष्यतीति ।
निहत्य सर्वान्द्विषतः समग्रा-
न्पार्थाः समेष्यनत्यथ याज्ञसेन्या ॥ ३-२७०-१७ (२६२५७)
अथाब्रवीच्चारुमुखं प्रसृज्य
धात्रेयिका सारथिमिन्द्रसेनम् ।
जयद्रथेनापहृताप्रमथ्य
पञ्चेन्द्रकल्पान्परिभूय कृष्णा ॥ ३-२७०-१८ (२६२५८)
तिष्ठन्ति वर्त्मानि नवान्यमूनि
वृक्षाश्च न म्लान्ति तथैव भग्नाः ।
आवर्तयध्वं ह्यनुयात शीघ्रं
न दूरयातैव हि राजपुत्री ॥ ३-२७०-१९ (२६२५९)
सन्नह्यध्वं सर्व एवेन्द्रकल्पा
महान्ति चारूणि च दंशनानि ।
गृह्णीत चापानि महाधनानि
शरांश्च शीघ्रं पदवीं व्रजध्वम् ॥ ३-२७०-२० (२६२६०)
पुरा हि निर्भर्त्सनदण्डमोहिता
प्रमूढचित्ता वदनेन शुष्यता ।

ददाति कस्मैचिदनर्हते तनुं
वराज्यपूर्णामिव भस्मनि स्रुचम् ॥ ३-२७०-२१ (२६२६१)
पुरा तुषाग्नाविव हूयते हविः
पुरा श्मशाने स्रगिवापविद्ध्यते ।
पुरा च सोमोऽध्वरगोऽवलिह्यते
शुना यथा विप्रजने प्रमोहिते ॥ ३-२७०-२२ (२६२६२)
ग्पुरा हि पार्थाश्च दृतौ च कापिली
प्रसिच्छते क्षीरधारा यतध्वम्'।
महत्यरण्ये मृगयां चरित्वा
पुरा सृगालो नलिनीं विगाहते ॥ ३-२७०-२३ (२६२६३)
ग्पुरा हि मन्त्राहुतिपूजितायां
हुताग्निवेद्यां बलिभुङ्निलीयते ।
श्रुतिं च सम्यक्प्रसृतां महाध्वरे
ग्राम्यो जनो यद्वदसौ न नाशयेत्' ॥ ३-२७०-२४ (२६२६४)
मा वः प्रियायाः सुनसं सुलोचनं
चन्द्रप्रभाच्छं वदनं प्रसन्नम् ।
स्पृश्याच्छुभं कश्चिदकृत्यकारी
श्वा वै पुरोडाशमिवाध्वरस्थम् ॥ ३-२७०-२५ (२६२६५)
एतानि वर्त्मान्यनुयात शीघ्रं
मा वः कालः क्षिप्रमिहात्यगाद्वै ॥ ३-२७०-२६ (२६२६६)
ग्शीघ्रं प्रधावध्वमितो नरेन्द्रा
यावन्न दूरं व्रजतीति पापः ।
प्रत्याहरध्वं द्विषतां सकाशा-
ल्लक्ष्मीमिव स्वां दयितां नृसिंहाः' ॥ ३-२७०-२७ (२६२६७)
युधिष्ठिर उवाच। ३-२७०-२८क्ष् (२६७१)
भद्रे प्रतिक्राम नियच्छ वाचं
माऽस्मत्सकाशे परुषाण्यवोचः ।
राजानो वा यदि वा राजपुत्रा
बलेन मत्ताः पञ्चतां प्राप्नुवन्ति ॥ ३-२७०-२८ (२६२६८)
वैशंपायन उवाच। ३-२७०-२९क्ष् (२६७२)
एतावदुक्त्वा प्रययुर्हि शीघ्रं
तान्येव वर्त्मान्यनुवर्तमानाः ।
मुहुर्मुहुर्व्यालवदुच्छ्वसन्तो
ज्यां विक्षिपन्तश्च महाधनुर्भ्यः ॥ ३-२७०-२९ (२६२६९)
ततोऽपश्यंस्तस्य सैन्यस्य रेणु-
मुद्धूतं वै वाजिखुरप्रणुन्नम् ।

पदातीनां मध्यगतं च धौम्यं
विक्रोशन्तं भीम पार्थेत्यभीक्ष्णम् ॥ ३-२७०-३० (२६२७०)
ते सान्त्व्य धौम्यं परिदीनसत्वाः
सुखं भवानेत्विति राजपुत्राः ।
श्येना यथैवामिषसंप्रयुक्ता
जवेन तत्सैन्यमथाभ्यधावन् ॥ ३-२७०-३१ (२६२७१)
तेषां महेन्द्रोपमविक्रमाणां
संरब्धानां धर्षणाद्याज्ञसेन्याः ।
क्रोधः प्रजज्वाल जयद्रथं च
दृष्ट्वा प्रियां तस्य रथे स्थितां च ॥ ३-२७०-३२ (२६२७२)
प्रचुक्रुशुश्चाप्यथ सिन्धुराजं
वृकोदरश्चैव धनंजयश्च ।
यमौ च राजा च महाधनुर्धरा-
स्ततो दिशः संमुमुहुः परेषाम् ॥ ३-२७०-३३ (२६२७३)

इति श्रीमन्महाभारते अरण्यपर्वणि द्रौपदीहरणपर्वणि
सप्तत्यधिकद्विशततमोऽध्यायः ॥ २७० ॥
Mahabharata - Vana Parva - Chapter Footnotes

३-२७०-२ गृगव्यालगणानुकीर्णं इति झ ।पाठः ॥
३-२७०-३ महावनं शत्रुभिर्बाध्यमानं इति झ ।पाठः ॥
३-२७०-४ समाच्छाद्य नोहयित्वा ।समन्युः दैन्यसहितः।प्राणानां
आध्यात्मिकानामिन्द्रियाणां पतिर्मुख्यः प्राणः ॥
३-२७०-६ सिन्धुदेशजैर्वाजिभिरश्वैः ।सुरथैः शोभनरथैः ॥
३-२७०-९ प्रेष्यवधूं दासीम् ॥
३-२७०-२१ पुरा यावदनर्हते तनुं न ददाति
तावच्छाघ्रमनुयातेत्युत्तरेण संबन्धः ॥
३-२७०-२८ प्रतिक्राम दूरे भव ।वरुषाणि अनर्हते तनुं ददातीत्यादीनि ॥
३-२७०-३२ धर्षणात् पराभवात् ॥

---

वन-अध्यय२७१
॥ श्रीः ॥
३.२७१. अध्यायः २७१

Mahabharata - Vana Parva - Chapter Topics
द्रौपद्या जयद्रथंप्रति तत्तल्लक्षणप्रदर्शनपूर्वकं
युधिष्ठिरादिनिर्देशः ॥१ ॥

३-२७१-० (२६२७४)
वैशंपायन उवाच। ३-२७१-०क्ष् (२६७३)
ततो घोरतरः शब्दो वने समभवत्तदा ।
भीमसेनार्जुनौ दृष्ट्वाक्षत्रियणाममर्षिणाम् ॥ ३-२७१-१ (२६२७५)
तेषां ध्वजाग्राण्यभिवीक्ष्य राजा
स्वयंदुरात्मा कुरुपुङ्गवानाम् ।
जयद्रथो याज्ञसेनीमुवाच
रथे स्थितां भानुमतीं हतौजाः ॥ ३-२७१-२ (२६२७६)
आयान्तीमे पञ्चरथा महान्तो
मन्ये च कृष्णे पतयस्तवैते ।
सा जानती ख्यापय नः सुकेशि
परंपरं पाण्डवानां रथस्थम् ॥ ३-२७१-३ (२६२७७)
द्रौपद्युवाच्। ३-२७१-४क्ष् (२६७४)
किं ते ज्ञातैर्मूढ महाधनुर्धैर-
रनायुष्यं कर्म कुत्वाऽतिघोरम् ।
एते वीराः पतयो मे समेता
न वः शेषः कश्चिदिहास्ति युद्धे ॥ ३-२७१-४ (२६२७८)
आख्यातव्यं त्वेव सर्वं मुमूर्षो-
र्मया तुभ्यं पृष्टया धर्म एषः ।
न मे व्यथा विद्यते त्वद्भयं वा
संपश्यन्त्याः सानुजं धर्मराजम् ॥ ३-२७१-५ (२६२७९)
यस् ध्वजाग्रे नदतो मृदङ्गौ
नन्दोपनन्दौ मधुरौ सुयुक्तौ ।
एनं स्वधर्मार्थविनिश्चयज्ञं
सदा जनाः कृत्यवन्तोऽनुयान्ति ॥ ३-२७१-६ (२६२८०)
य एष जाम्बूनदशुद्धगौरः ।
प्रचण्डघोणस्तनुरायताक्षः ।
एतं कुरुश्रेष्ठतमं वदन्ति
युधिष्ठिरं धर्मसुतं पतिं मे ॥ ३-२७१-७ (२६२८१)
अप्येष शत्रोः शरणागतस्य
दद्यात्प्राणान्धर्मचारी नृवीरः ।
परैह्येनं मूढ जवेन भूतये
त्वमात्मनः प्राञ्जलिर्न्यस्शस्त्रः ॥ ३-२७१-८ (२६२८२)

अथाप्येनं पश्यसि यं रथस्थं
महाभुजं सालमिव प्रवृद्धम् ।
संदष्टौष्ठं भ्रुकुटीसंहतभ्रुवं
वृकोदरो नाम पतिर्ममैषः ॥ ३-२७१-९ (२६२८३)
आजानेया बलिनः साधुदान्ता
महाबलाः शूरमुदावहन्ति ।
एतस्य कर्माण्यतिमानुषाणि
भीमेति शब्दोऽस्य ततः पृथिव्याम् ॥ ३-२७१-१० (२६२८४)
नास्यापराद्धाः शेषमवाप्नुवन्ति
नायं वैरं विस्मरते कदाचित् ।
वैरस्यान्तं संविधायोपयाति
पश्चाच्छान्तिं न च तत्तप्यतीव ॥ ३-२७१-११ (२६२८५)
धनुर्धराग्र्यो धृतिमान्यशस्वी
जितेन्द्रियो वृद्धसेवी नृवीरः ।
भ्राता च शिष्यश्च युधिष्ठिरस्य
धनंजयो नाम पतिर्ममैषः ॥ ३-२७१-१२ (२६२८६)
यो वै न कामान्न भयान्न लोभा-
त्त्यजेद्धर्मं न नृशंसं च कुर्यात् ।
स एष वैश्वानरतुल्यतेजाः
कुन्तीसुतः शत्रुसहः प्रमाथी ॥ ३-२७१-१३ (२६२८७)
यः सर्वधर्मार्तविनिश्चयज्ञो
भयार्तानां भयहर्ता मनीषी ।
ग्बन्धुप्रियः शस्त्रभृतां वरिष्ठो
महाहवेष्वप्रतिवार्यवीर्यः' ॥ ३-२७१-१४ (२६२८८)
यस्योत्तमं रूपमाहुः पृथिव्यां
यं पाण्डवाः परिरक्षन्ति सर्वे ।
प्राणैर्गरीयांसमनुव्रतं वै
स एष वीरो नकुलः पतिर्मे ॥ ३-२७१-१५ (२६२८९)
यः खड्गयोधी लघुचित्रहस्तो
महांश्च धीमान्सहदेवोऽद्वितीयः ।
यस्याद्यकर्म द्रक्ष्यसे मूढसत्व
शतक्रतोर्वा दैत्यसेनासु सङ्ख्ये ॥ ३-२७१-१६ (२६२९०)
शूरः कृतास्त्रो मतिमान्मनस्वी
प्रियंकरो धर्मसुतस्य राज्ञः ।
हुताशचन्द्रार्कसमानतेजा
जघन्यजः पाण्डवानां प्रियश्च ॥ ३-२७१-१७ (२६२९१)

बुद्ध्या समो यस् नरो न विद्यते
वक्ता तथा सत्सु विनिश्चयज्ञः ।
सएष शूरो नित्यममर्षणश्च
धीमान्प्राज्ञः सहदेवः पतिर्मे ॥ ३-२७१-१८ (२६२९२)
त्यजेत्प्राणान्प्रविशेद्धव्यवाहं
न त्वेवैष व्याहरेद्धर्मबाह्यम् ।
सदा मनस्वी क्षत्रधर्मे रतश्च
कुन्त्याः प्राणैरिष्टतमो नृवीरः ॥ ३-२७१-१९ (२६२९३)
विशीर्यनतीं नावमिवार्णवान्ते
रत्नाभिपूर्णां मकरस्य पृष्ठे ।
सेनां तवेमां हतसर्वयोधां
विक्षोभितां द्रक्ष्यसि पाण्डुपुत्रैः ॥ ३-२७१-२० (२६२९४)
इत्येते वै कथिताः पाण्डुपुत्रा
यांस्त्वं मोहादवमत्य प्रवृत्तः ।
यद्येतेभ्यो मुच्यसे रिष्टदेहः
पुनर्जन्म प्राप्स्यसे जीवितं च ॥ ३-२७१-२१ (२६२९५)
वैशंपायन उवाच। ३-२७१-२२क्ष् (२६७५)
३-२७१-२२ (२६२९६)
ततः पार्थाः पञ्चपञ्चेन्द्रकल्पा-
स्त्यक्त्वा त्रस्तान्प्राञ्जलींस्तान्पदातीन् ।
यथाऽनीकं शरवर्षान्धकारं
चक्रुः क्रुद्धाः सर्वतस्ते निगृह्य ॥
Mahabharata - Vana Parva - Chapter Footnotes

३-२७१-४ अनायुध्यमायुर्नाशकम् ॥
३-२७१-८ परैहि शरणं गच्छ । एनं धर्मराजम् ॥
३-२७१-१० आजानेया अश्वविशेषाः ॥
३-२७१-११ अपराद्धाः अपराधवन्तः ॥
३-२७१-१६ मूढसत्व मूढबुद्धे । शतक्रतोर्वा शतक्रतोरिव ॥

---

वन-अध्यय२७२
॥ श्रीः ॥
३.२७२. अध्यायः २७२

Mahabharata - Vana Parva - Chapter Topics
युधिष्ठिरादीनां जयद्रथादिभिरायोधनम् ॥ १ ॥
जयद्रथेन मीमादिभिः स्वसहायानां निधने द्रौपदीविमोचनपूर्वकं

पलायनम् ॥ २ ॥
भीमार्जुनाभ्यां परुषोक्तिपूर्वकं तदनुधावनम् ॥ ३ ॥

Mahabharata - Vana Parva - Chapter Text

३-२७२-० (२६२९७)
वैशंपायन उवाच। ३-२७२-०क्ष् (२६७६)
संतिष्ठध्वं प्रहरत तूर्णं विपरिधावत ।
इति स्म सैन्धवो राजा चोदयामास तान्नृपन् ॥ ३-२७२-१ (२६२९८)
ततो घोरतमः शब्दोरणे समभवत्तदा ।
भीमार्जुनयमान्दृष्ट्वा सैन्यानां सयुधिष्ठिरान् ॥ ३-२७२-२ (२६२९९)
शिबिसिंधुत्रिगर्तानां विषादश्चाप्यजायत ।
तान्दृष्ट्वापुरुषव्याघ्रान्व्याघ्रानिव बलोत्कटान् ॥ ३-२७२-३ (२६३००)
हेमबिन्दुं महोत्सेधां सर्वशैक्यायसीं गदाम् ।
प्रगृह्याभ्यद्रवद्भीमः सैन्धवं कालचोदितम् ॥ ३-२७२-४ (२६३०१)
तदन्तरमथावृत्य कोटिकाश्योऽभ्यहारयत् ।
महता रथवंशेन परिवार्य वृकोधरम् ॥ ३-२७२-५ (२६३०२)
शक्तितोमरनाराचैर्वीरबाहुप्रचोदितैः ।
कीर्यमाणोपि बहुभिर्न स्म भीमोऽभ्यकम्पत ॥ ३-२७२-६ (२६३०३)
गजं तु सगजारोहं पदातींश्च चतुर्दश ।
जघान गदया भीमः सैन्धवध्वजंनीमुखे ॥ ३-२७२-७ (२६३०४)
पार्थः पञ्चशताञ्शूरान्पार्वतीयान्महारथान् ।
परीप्समानः सौवीरं जघान ध्वजिनीमुखे ॥ ३-२७२-८ (२६३०५)
राजा स्वयं सुवीराणां प्रवराणां प्रहारिणाम् ।
निमेषमात्रेण शतं जघान समरे तदा ॥ ३-२७२-९ (२६३०६)
ददृशे नकुलस्तत्ररथात्प्रस्कन्द्य खड्गधृत् ।
शिरांसि पादरक्षाणां बीजवत्प्रवपन्मुहुः ॥ ३-२७२-१० (२६३०७)
सहदेवस्तु संयाय रथेन गजयोधिनः ।
पातयामास नाराचैर्द्रुमेभ्य इव बर्हिणः ॥ ३-२७२-११ (२६३०८)
ततस्त्रिगर्तः सधनुरवतीर्य महारथात् ।
गदया चतुरो वाहान्राज्ञस्तस् तदाऽवधीत् ॥ ३-२७२-१२ (२६३०९)
तमथाभ्यागतं राजा पदातिं कुन्तिनन्दनः ।
अर्धचन्द्रेण बाणएन विव्याधोरसि धर्मराट् ॥ ३-२७२-१३ (२६३१०)
स भिन्नहृदयो वीरो वक्राच्छोणितमुद्वमन् ।
पपाताभिमुखं प्राप्तश्छिन्नमूल इव द्रुमः ॥ ३-२७२-१४ (२६३११)
इन्द्रसेनद्वितीयस्तु रथात्प्रस्कन्द्य धर्मराट् ।

हताश्वः सहदेवस्य प्रतिपेदे महारथम् ॥ ३-२७२-१५ (२६३१२)
नकुलं त्वभिसंवार्य क्षेमंकरमहामुखौ ।
उभावुभतस्तीक्ष्णैः शरवर्षैरवर्षताम् ॥ ३-२७२-१६ (२६३१३)
तौ शरैरभिवर्षन्तौ जीमूताविव वार्षिकौ ।
एकैकेन विपाठेन जघ्ने माद्रवतीसुतः ॥ ३-२७२-१७ (२६३१४)
त्रिगर्तराजः सुरथस्तस्याथ गजूर्गतः ।
रथमाक्षेपयामास गजेन गजयानवित् ॥ ३-२७२-१८ (२६३१५)
नकुलस्त्वपभीस्तस्माद्रथाच्चर्मासिपाणिमान् ।
उद्भ्राम्य स्तानमास्थाय तस्थौ गिरिवाचलः ॥ ३-२७२-१९ (२६३१६)
सुरथस्तं गजवरं वधाय नकुलस्य तु ।
प्रेषयामास सक्रोधमत्युच्छ्रितकरं ततः ॥ ३-२७२-२० (२६३१७)
नकुलस्तस्य नागस्य समीपपरिवर्तिनः ।
सविषाणं भुजं मूले खड्गेन निरकृन्तत ॥ ३-२७२-२१ (२६३१८)
स विनद्यमहानादं गजः किङ्किणिभूषणः ।
पतन्नवाक्षिरा भूमौ हस्त्यारोहमपोथयत् ॥ ३-२७२-२२ (२६३१९)
स तत्कर्म महत्कृत्वा शूरो माद्रवतीसुतः ।
भीमसेनरथं प्राप्य शर्म लेभे महारथः ॥ ३-२७२-२३ (२६३२०)
भीमस्त्वापततो राज्ञः कोटिकाश्यस् संगरे ।
सूतस्य नुदतो वाहान्क्षुरेणापाहरच्छिरः ॥ ३-२७२-२४ (२६३२१)
न बुबोध हतं सूतं स राजा बाहुशालिना ।
तस्याश्वा व्यद्रवन्सङ्ख्ये हतमसूतास्ततस्ततः ॥ ३-२७२-२५ (२६३२२)
विरथं हतसूतं तं भीमः प्रहरतांवरः ।
जघान तलयुक्तेन प्रासेनाभ्येत्य पाण्डवः ॥ ३-२७२-२६ (२६३२३)
द्वादशानां तु सर्वेषां सौवीराणां धनंजयः ।
चकर्त निशितैर्भल्लैर्धनूंषि च शिरांसि च ॥ ३-२७२-२७ (२६३२४)
शिबीनिक्ष्वाकुमुख्यांश्च त्रिगर्तान्सैन्धवानपि ।
जघानातिरथः सङ्ख्ये बाणगोचरमागतान् ॥ ३-२७२-२८ (२६३२५)
सूदिताः प्रत्यदृश्यन्त बहवः सव्यसाचिना ।
सपताकाश्च मातङ्गाः सध्वजाश्च महारथाः ॥ ३-२७२-२९ (२६३२६)
प्रच्छाद्य पृथिवीं तस्थुः सर्वमायोधनं प्रति ।
शरीराण्यशिरस्कानि विदेहानि शिरांसि च ॥ ३-२७२-३० (२६३२७)
श्वगृध्रकङ्ककाकोलभासगोमायुवायसाः ।
अतृप्यंस्तत्रवीराणां हतानां मासशोणितैः ॥ ३-२७२-३१ (२६३२८)
गएवं तीक्ष्णशरज्वालैर्गाण्डीवानिलचोदितैः ।
सेनेन्धनं ददाहाशु सरोषः पार्थपावकः ॥ ३-२७२-३२ (२६३२९)
चक्राणां पतितानां च युगानां च महीपते ।

तूणीराणआं पताकानां ध्वजानां च रथैः सह ॥ ३-२७२-३३ (२६३३०)
ईषाणामनुकर्षाणां त्रिवेणूनां तथैव च ।
अक्षाणामथ योक्राणां प्रतोदानां च राशयः ॥ ३-२७२-३४ (२६३३१)
शिरसां पतितानां च कुण्डलोष्णीषधारिणाम् ।
भुजानां मकुटानां च हाराणामङ्गदैः सह ॥ ३-२७२-३५ (२६३३२)
छत्राणां व्यजनानां च चर्मणआं वर्मणां तथा ।
छिन्नानां कार्मुकाणां च पट्टसानां तथैव च ॥ ३-२७२-३६ (२६३३३)
शक्तीनामथ खङ्गानां दण्डानां सह तेमरैः ।
राशयश्चात्रदृश्यन्ते तत्रतत्र विशांपते ॥ ३-२७२-३७ (२६३३४)
पतितैश्चैव मातङ्गैः सयोधैः पर्वतोपमैः ।
हयैर्द्विधाकृतैः सार्धं सादिभिः सायुधैस्तथा ॥ ३-२७२-३८ (२६३३५)
विप्रविद्धै रथैश्चैव निहतैश्चपदातिभिः ।
अगम्यरूपा पृथिवी मांसशोणितकर्दमा' ॥ ३-२७२-३९ (२६३३६)
हतेषु तेषु वीरेषु सिन्धुराजो जयद्रथः ।
विमुच्य कृष्णां संत्रस्तः पलायनपरोऽभवत् ॥ ३-२७२-४० (२६३३७)
स तस्मिन्संकुले सैन्ये द्रौपदीमवतार्य ताम् ।
प्राणप्रेप्सुरुपाधावद्वनं तत्र नराधमः ॥ ३-२७२-४१ (२६३३८)
द्रौपदीं धर्मराजस्तु दृष्ट्वा धौम्यपुरस्कृताम् ।
माद्रीपुत्रेण वीरेण रथमारोपयत्तदा ॥ ३-२७२-४२ (२६३३९)
ततस्तद्विद्रुतं सैन्यमपयाते जयद्रथे ।
आदिश्यादिश्य नाराचैराजघान वृकोदरः ॥ ३-२७२-४३ (२६३४०)
सव्यसाची तु तं दृष्ट्वा पलायन्तं जयद्रथम् ।
वारयामास निघ्नन्तं भीमं सैन्धवसैनिकान् ॥ ३-२७२-४४ (२६३४१)
अर्जुन उवाच। ३-२७२-४५क्ष् (२६७७)
यस्यापचारात्प्राप्तोऽयमस्मान्क्लेशो दुरासदः ।
तमस्मिन्समरोद्देशे न पश्यामि जयद्रथम् ॥ ३-२७२-४५ (२६३४२)
ग्मूढं नैकृतिकं दुष्टं द्रौपद्याः क्लेशकारिणम्'।
तमेवान्विष भद्रं ते किं ते योधैर्निपातितैः ।
अनामिषमिदं कर्म कथं वा मन्यते भवान् ॥ ३-२७२-४६ (२६३४३)
वैशंपायन उवाच। ३-२७२-४७क्ष् (२६७८)
इत्युक्तो भीमसेनस्तु गुडाकेशेन धीमता ।
युधिष्ठिरमभिप्रेत्य वाग्मी वचनमब्रवीत् ॥ ३-२७२-४७ (२६३४४)
हतप्रवीरा रिपवो भूयिष्ठं विद्रुता दिशः ।
गृहीत्वा द्रौपदीं राजन्निवर्ततु भवानितः ॥ ३-२७२-४८ (२६३४५)
यमाभ्यां सह राजेन्द्र धौम्येन च महात्मना ।
प्राप्याश्रमपदं राजन्द्रौपदीं परिसान्त्वय ॥ ३-२७२-४९ (२६३४६)

न हि मे मोक्ष्यतेजीवन्मूढः सैन्धवको नृपः ।
पातालतलसंस्थोपि यदि शक्रोस्य सारथिः ॥ ३-२७२-५० (२६३४७)
युधिष्ठिर उवाच। ३-२७२-५१क्ष् (२६७९)
न हन्तव्यो महाबाहो दुरात्माऽपिस सैन्धवः ।
दुःशलामभिसंस्मृत्य गान्धारीं च यशस्विनीम् ॥ ३-२७२-५१ (२६३४८)
वैशंपायन उवाच। ३-२७२-५२क्ष् (२६८०)
तच्छ्रुत्वा द्रौपदी भीममुवाच व्याकुलेन्द्रिया ।
कुपिता ह्रीमती प्राज्ञा पती भीमार्जुनावुभौ ॥ ३-२७२-५२ (२६३४९)
कर्तव्यं चेत्प्रियं मह्यं वध्यः स पुरुषाधमः ।
सैन्धवापशदः पापो दुर्मतिः कुलपांसनः ॥ ३-२७२-५३ (२६३५०)
भार्याभिहर्ता वैरी यो यश्च राज्यहरो रिपुः ।
याचमानोऽपिसंग्रामे न मोक्तव्यः कथंचन ॥ ३-२७२-५४ (२६३५१)
इत्युक्तौ तौ नरव्याघ्रौ ययतुर्यत्र सैन्धवः ।
राजा निववृतेकृष्णामादाय सपुरोहितः ॥ ३-२७२-५५ (२६३५२)
स प्रविश्याश्रमपदमपविद्धवृसीकटम् ।
मार्कण्डेयादिभिर्विप्रैरनुकीर्णं ददर्श ह ॥ ३-२७२-५६ (२६३५३)
द्रौपदीमनुशोचद्भिर्ब्राह्मणैस्तैः समाहितैः ।
समेयाय महाप्राज्ञः सभार्य भ्रातृमध्यगः ॥ ३-२७२-५७ (२६३५४)
ते स्म तं मुदिता दृष्ट्वा पुनरप्यागतं नृपम् ।
जित्वा तान्सिनधुसौवीरान्द्रौपदीं चाहृतां पुनः ॥ ३-२७२-५८ (२६३५५)
स तैः परिवृतो राजातत्रैवोपविवेश ह ।
प्रविवेशाश्रमं कृष्णा यमाभ्यां सह भामिनी ॥ ३-२७२-५९ (२६३५६)
भीमसेनार्जुनौ चापि श्रुत्वा क्रोशगतं रिपुम् ।
स्वयमश्वांस्तुदन्तौ तौ जवेनैवाभ्यधावताम् ॥ ३-२७२-६० (२६३५७)
इदमत्यद्भुतं चात्र चकारातिरथोऽर्जुनः ।
क्रोशमात्रगतानश्वान्सैन्धवस्य जघान यत् ॥ ३-२७२-६१ (२६३५८)
स हि दिव्यास्त्रसंपन्नः कृच्छ्रकालेऽप्यसंभ्रमः ।
अकरोद्दुष्करं कर्म शरैरस्त्रानुमन्त्रितैः ॥ ३-२७२-६२ (२६३५९)
ततोऽभ्यधावतां वीरावुभौ भीमधनंजयौ ।
हताश्वं सैन्धवं भीतमेकं व्याकुलचेतसम् ॥ ३-२७२-६३ (२६३६०)
सैन्धवस्तु हतान्दृष्ट्वा तथाऽश्वान्स्वान्सुदुःखितः ।
ग्रथात्प्रस्कन्द्य पद्भ्यां वै पलायनपरोऽभवत्' ॥ ३-२७२-६४ (२६३६१)
दृष्ट्वा रविक्रमकर्माणि कुर्वाणं च धनंजयम् ।
पलायनकृतोत्साहः प्राद्रवद्येन वै वनम् ॥ ३-२७२-६५ (२६३६२)
सैन्धवं त्वमिसंप्रेक्ष्यपराक्रान्तं पलायने ।
अनुयाय महाबाहुः फल्गुनो वाक्यमब्रवीत् ॥ ३-२७२-६६ (२६३६३)

अनन वीर्येण कथं स्त्रियं प्रार्थयसे बलात् ।
राजपुत्र निवर्तस्व न ते युक्तं पलायनम् ॥ ३-२७२-६७ (२६३६४)
कथं ह्यनुचरान्हित्वा शत्रुमध्ये पलायसे ।
इत्युच्यमानः पार्थेन सैन्धवो न न्यवर्तत ॥ ३-२७२-६८ (२६३६५)
तिष्ठतिष्ठेति तं भीमः सहसाऽभ्यद्रवद्बली ।
मा वधीरिति पार्थस्तं दयावान्प्रत्यभाषत ॥ ३-२७२-६९ (२६३६६)

इति श्रीमन्महाभारते अरण्यपर्वणि द्रौपदीहरणपर्वणि
द्विसप्तत्यधिकद्विशततमोऽध्यायः ॥ २७२ ॥
Mahabharata - Vana Parva - Chapter Footnotes

३-२७२-५ अन्तरं अभ्यहारयत् भीमजयद्रथयोर्मध्ये प्रवेशेन
व्यवधानं कृतवान् । रथवंशेन रथवर्ग्रेण ॥
३-२७२-१६ क्षेमंकरसुमालवौ इति क । पाठः । क्षेमंकरमहामलौ
इति थ । ध । पाठः ॥
३-२७२-२१ सविषाणं भुजं सदन्तं शुण्डादण्डम् । मूले गण्डप्रदेशे ॥
३-२७२-२६ तलयुक्तेन मुष्टियुक्तेन ॥
३-२७२-४६ अन्विष अन्विच्छ ॥
३-२७२-५१ दुःशलां दुर्योधनभगिनीम् ॥
३-२७२-५६ अपविद्धा इतस्ततो विशीर्णा बस्यः ऋषीणामासनानि ॥
३-२७२-६५ विक्रमयुक्तानि कर्माणि ॥

---

वन-अध्यय२७३
॥ श्रीः ॥
३.२७३. अध्यायः २७३

Mahabharata - Vana Parva - Chapter Topics
भीमेन केशग्रहणेन निपातितस्य जयद्रथस्य मूर्ध्नि
पादप्रहारपूर्वकं क्षुरप्रेण पञ्चचूदीनिर्माणम् ॥ १ ॥
भीमेन बन्धनपूर्वकमानीतस्य तस्य युधिष्ठिरेण मोचनम् ॥ २ ॥
जयद्रयेन तपःप्रसादितान्महादेवादर्जुनवर्जमेकस्मिन्दिने
पाण्डवजयरूपवराऽऽदानम् ॥ ३ ॥

Mahabharata - Vana Parva - Chapter Text

३-२७३-० (२६३६७)
वैशंपायन उवाच । ३-२७३-०क्ष् (२६८१)

जयद्रथस्तु संप्रेक्ष्यभ्रातरावुद्यतायुधौ ।
प्रादावत्तूर्णमव्यग्रो जीवितेप्सुः सुदुःखितः ॥ ३-२७३-१ (२६३६८)
ग्लताभिः संवृते कक्षे किरीटं रत्नभास्वरम् ।
अपविध्यप्रधावन्तं निलीयन्तं वनान्तरे ॥ ३-२७३-२ (२६३६९)
भीमसेनस्तु तं कक्षे लीयमानं भयाकुलम् ।
मार्गमाणोऽवतीर्याशु रथाद्रत्नविभूपितात्'।
अभिद्रुत्य निजग्राहकेशपक्षे ह्यमर्षणः ॥ ३-२७३-३ (२६३७०)
समुद्यम्य च तं भीमो निष्पिपेप महीतले ।
गले गृहीत्वाराजानं पातयामास चैव ह ॥ ३-२७३-४ (२६३७१)
पुनः स जीवमानस्य तस्योत्पतितुमिच्छतः ।
पदा मूर्ध्नि महाबाहुः प्राहरद्विलपिष्यतः ॥ ३-२७३-५ (२६३७२)
तस्य जानू ददौ भमो जघ्ने चैनमरत्निना ।
स मोहमगमद्राजा प्रहारवरपीडितः ॥ ३-२७३-६ (२६३७३)
सरोषं भीमसेनं तु वारयामास फल्गुनः ।
दुःशलायाः कृतेराजा यत्त्वामाहेति कौरव ॥ ३-२७३-७ (२६३७४)
भीम उवाच। ३-२७३-८क्ष् (२६८२)
नायं पापसमाचारो मत्तो जीवितुमर्हति ।
कृष्णायास्तदनर्हायाः परिक्लेष्टा नराधमः ॥ ३-२७३-८ (२६३७५)
किंनु शक्यं मया कर्तुं यद्राजा सततं घृणी ।
त्वं च बालिशया बुद्ध्या सदैवास्मान्प्रबाधसे ॥ ३-२७३-९ (२६३७६)
एवमुक्त्वा सटास्तस्य पञ्चचक्रे वृकोदरः ।
अर्धचन्द्रेण वाणेन किंचिदब्रुवतस्तदा ॥ ३-२७३-१० (२६३७७)
विकल्पयित्वा राजानं ततः प्राह वृकोदरः ।
जीवितुं चेच्छसे मूढ हेतुं मे गदतः शृणु ॥ ३-२७३-११ (२६३७८)
दासोस्मीति त्वया वाच्यं संसत्सु च सभासु च ।
एवं चेज्जीवितं दद्यामेष युद्धजितो विधिः ॥ ३-२७३-१२ (२६३७९)
एवमस्त्विति तं राजा कृच्छ्रमाणो जयद्रथः ।
प्रोवाच पुरुषव्याघ्रं भीममाहवशोभिनम् ॥ ३-२७३-१३ (२६३८०)
तत एनं विचेष्टन्तं वद्ध्वा पार्थो वृकोदरः ।
रथमारोपयामास विसंज्ञं पांसुकुण्ठितम् ॥ ३-२७३-१४ (२६३८१)
ततस्तं रथमास्थाय भीमः पार्तानुगस्तदा ।
अग्र्यमाश्रममध्यस्थामभ्यगच्छद्युधिष्ठिरम् ॥ ३-२७३-१५ (२६३८२)
दर्शयामास भीमस्तु तदवस्थं जयद्रथम् ।
तं राजा प्राहसद्दृष्ट्वा मुच्यतामिति चाब्रवीत् ॥ ३-२७३-१६ (२६३८३)
राजानं चाब्रवीद्भीमो द्रौपद्यै कथयेति वै ।
दासभावं गतो ह्येष पाण्डूनां पापचेतनः ॥ ३-२७३-१७ (२६३८४)

तमुवाच च ततो ज्येष्ठो भ्राता सप्रणयं वचः ।
मुञ्चेममधमाचारं प्रमाणा यदि ते वयम् ॥ ३-२७३-१८ (२६३८५)
द्रौपदी चाब्रवीद्भीममभिप्रेक्ष्य युधिष्ठिरम् ।
दासोऽयंमुच्यतां रात्रस्त्वयापञ्चशिखः कृतः ॥ ३-२७३-१९ (२६३८६)
ग्एवमुक्तः स भीमस्तु भ्रात्रा चैव च कृष्णया ।
मुमोच तं महापापं जयद्रथमचेतनम्' ॥ ३-२७३-२० (२६३८७)
स मुक्तोऽभ्येत्यराजानमभिवाद्य युधिष्ठिरम् ।
ववन्दे विह्वलोराजातांश्च वृद्धान्मुनींस्तदा ॥ ३-२७३-२१ (२६३८८)
तमुवाच धृणी राजा धर्मपुत्रो युधिष्ठिरः ।
तथाजयद्रथं दृष्ट्वा गृहीतं सव्यसाचिना ॥ ३-२७३-२२ (२६३८९)
अदासो गच्छ मुक्तोसि मैवं कार्षीः पुनः क्वचित् ।
स्त्रीकामुक धिगस्तु त्वां क्षुद्रः क्षत्रसहायवान् ॥ ३-२७३-२३ (२६३९०)
एवंविधं हि क कुर्यात्त्वदनयः पुरुषाधमः ।
ग्कर्म धर्मविरुद्धं वै लोकदुष्टं च दुर्मते' ॥ ३-२७३-२४ (२६३९१)
गतसत्त्वमिव ज्ञात्वा कर्तारमशुभस्य तम् ।
संप्रेक्ष्यभरतश्रेष्ठः कृपां चक्रे नराधिपः ॥ ३-२७३-२५ (२६३९२)
धर्मे ते वर्धतां वुद्धिर्मा चाधर्मे मनः कृथाः ।
साश्व साथपादातः स्वस्ति गच्छ जयद्रथ ॥ ३-२७३-२६ (२६३९३)
एवमुक्तस्तु सव्रीजं तूष्णीं किंचिदवाङ्मुखः ।
जगाम राजा दुःखार्तो गङ्गाद्वाराय भारत ॥ ३-२७३-२७ (२६३९४)
स देवं शरणं गत्वा विरूपाक्षमुमापतिम् ।
तपश्चचार विपुलं तस्य प्रीतो वृषध्वजः ॥ ३-२७३-२८ (२६३९५)
बलिं स्वयं प्रत्यगृह्णात्प्रीयमाणस्त्रिलोचनः ।
वरं चास्मै ददौ देवः स जग्राह च तच्छृणु ॥ ३-२७३-२९ (२६३९६)
समस्तान्सरथान्पञ्चजयेयं युधि पाण्डवान् ।
इति राजाऽब्रवीद्देवं नेति देवस्तमब्रवीत् ॥ ३-२७३-३० (२६३९७)
अजय्यांश्चाप्यवध्यांश्च वारयिष्यसि तान्युधि ।
ऋतेऽर्जुनं महाबाहुं नरं नाम सुरेश्वरम् ॥ ३-२७३-३१ (२६३९८)
बदर्यां तप्ततपसं नारायणसहायकम् ।
अजितं सर्वलोकानां देवैरपि दुरासदम् ॥ ३-२७३-३२ (२६३९९)
मया दत्तं पाशुपतं दिव्यमप्रतिमं शरम् ।
अवाप लोकपालेभ्यो वज्रादीन्स महाशरान् ॥ ३-२७३-३३ (२६४००)
देवदेवो ह्यनन्तात्मा विष्णुः सुरगुरुः प्रभुः ।
प्रधानपुरुषोऽव्यक्तोविश्वात्माविश्वमूर्तिमान् ॥ ३-२७३-३४ (२६४०१)
युगान्तकाले संप्राप्ते कालाग्निर्दहते जगत् ।
सपर्वतार्णवद्वीपं सशैलवनकाननम् ।

निर्दहन्नागलोकांश्चपातालतलचारिणः ॥ ३-२७३-३५ (२६४०२)
अथान्तरिक्षे सुमहन्नानावर्णाः पयोधराः ।
घोरस्वरा विनदिनस्तटिन्मालावलम्बिनः ।
समुत्तिष्ठन्दिशः सर्वाविवर्षन्तः समन्ततः ॥ ३-२७३-३६ (२६४०३)
ततोऽग्नीं शमयामासुः संवर्ताग्निनियामकाः ।
अक्षमात्रैश्च धाराभिस्तिष्ठन्त्यापूर्य सर्वशः ॥ ३-२७३-३७ (२६४०४)
एकार्णवे तदातस्मिन्नुपशान्तचराचरे ।
नष्टचन्द्रार्कपवने ग्रहनक्षत्रवर्जिते ।
चतुर्युगसहस्रान्ते सलिलेनाप्लुता मही ॥ ३-२७३-३८ (२६४०५)
ततो नारायणाख्यस्तु सहस्राक्षः सहस्रपात् ।
सहस्रशीर्षा पुरुषः स्वप्नुकामस्त्वतीन्द्रियः ॥ ३-२७३-३९ (२६४०६)
फणासहस्रविकटं शेषं पर्यङ्कभोगिनम् ।
सहस्रमिव तिग्मांशुसंघातममितद्युतिम् ।
कुन्देन्दुहारगोक्षीरमृणालकुमुदप्रभम् ॥ ३-२७३-४० (२६४०७)
तत्रासौ भगवान्देवः स्वपञ्जलनिधौ तदा ।
नैशेन तमसा व्याप्तां स्वां रात्रिंकुरुते विभुः ॥ ३-२७३-४१ (२६४०८)
सत्वोद्रेकात्प्रबुद्धस्तु शून्यं लोकमपश्यत ।
इमं चोदाहरन्त्यत्रश्लोकं नारायणं प्रति ॥ ३-२७३-४२ (२६४०९)
आपो नारास्तत्तनव इत्यपां नाम शुश्रुमः ।
अयनं तेन चैवास्ते तेन नारायणः स्मृतः ॥ ३-२७३-४३ (२६४१०)
प्रध्यानसमकालं तुप्रजाहेतोः सनातनः ।
ध्यातमात्रे तु भगवन्नाभ्यां पद्मः समुत्थितः ॥ ३-२७३-४४ (२६४११)
ततश्चतुर्मुखो ब्रह्मा नाभिपद्माद्विनिःसृतः ।
तत्रोपविष्टः सहसा ब्रह्मा लोकपितामहः ॥ ३-२७३-४५ (२६४१२)
शून्यं दृष्ट्वा जगत्कृत्स्नं मानसानात्मनः समान् ।
ततो मरीचिप्रमुखान्महर्षीनसृजन्नव ॥ ३-२७३-४६ (२६४१३)
तेऽसृजन्सर्वभूतानि त्रसानि स्थावराणि च ।
यक्षराक्षसभूतानि पिशाचोरगमानुषान् ॥ ३-२७३-४७ (२६४१४)
सृजते ब्रह्ममूर्तिस्तु रक्षते पौरुषी तनुः ।
रौद्री भावेन शमयेत्तिस्रोऽवस्थाः प्रजापतेः ॥ ३-२७३-४८ (२६४१५)
न श्रुतं ते सिन्धुपते विष्णोरद्भुतकर्मणः ।
कथ्यमानानि मुनिभिर्ब्राह्मणैर्वेदपारगैः ॥ ३-२७३-४९ (२६४१६)
जलेन समनुप्राप्ते सर्वतः पृथिवीतले ।
तदा चैकार्णवे तस्मिननेकाकाशे प्रभुश्चरन् ॥ ३-२७३-५० (२६४१७)
निशायामिव खद्योतः प्रावृट्काले समन्ततः ।
प्रतिष्ठानाय पृथिवीं मार्गमाणस्तदाऽभवत् ॥ ३-२७३-५१ (२६४१८)

जले निमग्नां गां दृष्ट्वाचोद्धर्तुं मनसेच्छति ।
किंनु रूपमहं कृत्वासलिलादुद्धरे महीम् ॥ ३-२७३-५२ (२६४१९)
एवं संचिन्त्य मनसा दृष्ट्वा दिव्येन चक्षुषा ।
जलक्रीडाभिरुचितं वाराहं रूपमस्मरत् ॥ ३-२७३-५३ (२६४२०)
कृत्वा वराहवपुषं वाङ्मयं वेदसंमितम् ।
दशयोजनविस्तीर्णमायतं शतयोजनम् ॥ ३-२७३-५४ (२६४२१)
महापर्वतवर्ष्माभं तीक्ष्णदंष्ट्रंप्रदीप्तिमत् ।
महामेघौघनिर्घोषं नीलजीमूतसन्निभम् ॥ ३-२७३-५५ (२६४२२)
भूत्वा यज्ञवराहो वै अपः संप्राविशत्प्रभुः ।
दंष्ट्रेणैकेन चोद्धृत्यस्वे स्थाने न्यविशन्महीम् ॥ ३-२७३-५६ (२६४२३)
पुनरेव महाबाहुरपूर्वां तनुमाश्रितः ।
नरस्य कृत्वाऽर्धतनुं सिंहस्यार्धतनुं प्रभुः ॥ ३-२७३-५७ (२६४२४)
दैत्येन्द्रस्य सभां गत्वापाणिं संस्पृश्यपाणिना ।
दैत्यानामादिपुरुषः सुरारिर्दितिनन्दनः ॥ ३-२७३-५८ (२६४२५)
दृष्ट्वा चापूर्ववपुषं क्रोधात्संरक्तलोचनः ।
शूलोद्यतकरः स्रग्वी हिरण्यकशिपुस्तदा ॥ ३-२७३-५९ (२६४२६)
मेघस्तनितनिर्घोषो नीलाभ्रचयसन्निभः ।
देवारिर्दितिजो वीरो नृसिंहं समुपाद्रवत् ॥ ३-२७३-६० (२६४२७)
समुत्पत्य ततस्तीक्ष्णैर्मृगेन्द्रेण बलीयसा ।
नारसिंहेन वपुषादारितः करजैर्भृशम् ॥ ३-२७३-६१ (२६४२८)
एवं निहत्य भगवान्दैत्येनद्रं रिपुघातिनम् ।
भूयोऽन्यः पुण्डरीकाक्षः प्रभुर्लोकहिताय च ।
कश्यपस्यात्मजः श्रीमानदित्या गर्भधारितः ॥ ३-२७३-६२ (२६४२९)
पूर्णे वर्षसहस्रे तु प्रसूत भर्गमुत्तमम् ॥ ३-२७३-६३ (२६४३०)
दुर्दिनाम्भोदसदृशो दीप्ताक्षो वामनाकृतिः ।
दण्डी कमण्डलुधरः श्रीवत्सोरसि भूषितः ।
जटी यज्ञोपवीती च भगवान्बालरूपधृक् ॥ ३-२७३-६४ (२६४३१)
यज्ञवाटं गतः श्रीमान्दानवेन्द्रस्य वै तदा ।
बृहस्पतिसहायोऽसौ प्रविष्टो बलिनो मखे ॥ ३-२७३-६५ (२६४३२)
तं दृष्ट्वावामनतनुं प्रहृष्टो बलिरब्रवीत् ।
प्रीतोस्मि दर्शने विप्र ब्रूहि त्वं किं ददानिते ॥ ३-२७३-६६ (२६४३३)
एवमुक्तस्तु बलिना वामनः प्रत्युवाच ह ॥ ३-२७३-६७ (२६४३४)
स्वस्तीत्युक्त्वा बलिं देवः स्मयमानोऽभ्यभाषत ।
मेदिनीं दानवपते देहि मे विक्रमत्रयम् ॥ ३-२७३-६८ (२६४३५)
बलिर्ददौ प्रसन्नात्मा विप्रायामिततेजसे ।
ततो दिव्याद्भुततमं रूपं विक्रमतोहरेः ॥ ३-२७३-६९ (२६४३६)

विक्रमैस्त्रिभिरक्षोभ्यो जहाराशु स मेदिनीम् ।
ददौ शक्राय च महीं विष्णुर्देवः सनातनः ॥ ३-२७३-७० (२६४३७)
एष ते वामनो नाम प्रादुर्भावः प्रकीर्तितः ।
तेन देवाः प्रादुरासन्वैष्णवं चोच्यते जगत् ॥ ३-२७३-७१ (२६४३८)
असतां निग्रहार्थाय धर्मसंरक्षणाय च ।
अवतीर्णो मनुष्याणामजायत यदुक्षये ।
यं देवंविदुषोगान्ति तस्य कर्माणि सैन्दव ॥ ३-२७३-७२ (२६४३९)
अनाद्यन्तमजं देवं प्रभुंलोकनमस्कृतम् ।
यं देवं विदुषोगान्तितस् कर्माणि सैन्धव ॥ ३-२७३-७३ (२६४४०)
यमाहुरजितंकृष्णं शङ्खचक्रगदाधरम् ।
श्रीवत्सधारिणं देवं पीतकौशेयवाससम् ॥ ३-२७३-७४ (२६४४१)
प्रधानं सोऽस्त्रविदुषां तेन कृष्णन रक्ष्यते ॥ ३-२७३-७५ (२६४४२)
सहायः पुण्डरीकाक्षः श्रीमानतुलविक्रमः ।
समानस्यन्दने पार्थमास्थाय परवीरहा ॥ ३-२७३-७६ (२६४४३)
न शक्यते तेन जेतुं त्रिदशैरपि दुःसहः ।
कः पुनर्मानुषो भावो रणे पार्थं विजेष्यति ॥ ३-२७३-७७ (२६४४४)
तमेकं वर्जयित्वातु सर्वंयौधिष्ठिरं बलम् ।
चतुरः पाण्डवात्राजन्दिनैकं जेप्यसे रिपून् ॥ ३-२७३-७८ (२६४४५)
ग्तस्मात्त्वंपार्थरहितान्पाण्डवान्वारयिष्यसि ।
एतद्धि पुरुषव्याघ्र मया दत्तो वरस्तव' ॥ ३-२७३-७९ (२६४४६)
वैशंपायन उवाच। ३-२७३-८०क्ष् (२६८३)
इत्येवमुक्त्वा नृपतिं सर्वपापहरो हरः ।
उमापतिः पशुपतिर्यज्ञहा त्रिपुरार्दनः ॥ ३-२७३-८० (२६४४७)
वामनैर्विकटैः कुब्जैरुग्रश्रवणदर्शनैः ।
वृतः पारिषदैर्घोरैर्नानाप्रहरणोद्यतैः ॥ ३-२७३-८१ (२६४४८)
त्र्यम्बको राजशार्दूल भगनेत्रनिपातनः ।
उमासहायो भगवांस्तत्रैवान्तरधीयत ॥ ३-२७३-८२ (२६४४९)
एवमुक्तस्तु नृपतिः स्वमेव भवनं ययौ ।
पाण्डवाश्च वने तस्मिन्न्यवसन्काम्यके तथा ॥ ३-२७३-८३ (२६४५०)

इति श्रीमन्महाभारते अरण्यपर्वणि यजद्रथविमोक्षणपर्वणि
त्रिसप्तत्यधिकद्विशततमोऽध्यायः ॥ २७३ ॥

Mahabharata - Vana Parva - Chapter Footnotes

३-२७३-९ घृणी दयावान् ।बालिशया स्वल्पया। बाधसेशत्रुं हन्तुं
न ददासि ॥

३-२७३-१० सटाः जटाः केशसंनिवेशे मध्ये मध्येपञ्चसु स्थानेषु अर्धचन्द्रेण बाणेन क्षीरवद्वाषयामासेत्यर्थः ॥
३-२७३-११ विकत्थयित्वाराजानमिति झ । पाठः ॥
३-२७३-२९ बलिं उपहारम् ॥
३-२७३-३१ महाबाहुं देवैरपि दुरासदम् इति ध । पाठः ॥
३-२७३-३३ शृणाति हिनस्तीति शरमस्त्रम् ॥
३-२७३-३४ नारायणसहायस्याजेयत्वं वक्तुं नारायणमाहात्म्यमेवाह देवदेव इत्यादिना ॥
३-२७३-३५ कालाग्निरूपो नारायणो निदेहते ॥
३-२७३-३६ विनदिनः गर्जन्तः । समुत्तिष्ठन् समुदतिष्ठन्। उत्तिष्ठन्तीत्यर्थः ॥
३-२७३-३७ शमयामासुः पयोधरा इतिप्रपूर्वेणान्वयः । अक्षमात्रैः रथाक्षमात्राभिः स्थूलाभिः। सामान्ये नपुंसकम् ॥
३-२७३-४० अध्यतिष्ठदिति शेषः ॥
३-२७३-४३ नारायणपदंनिर्वक्ति आप इति । नराज्जाता नाराः तत्तनयः नारायणस्यैव तनवः नाराः आपः अयनं निवासस्थानं यस्य ॥
३-२७३-४५ तस्मिंश्च पद्मे पितामह उपविष्ट इतिक्रमभङ्गेन योज्यम् ॥
३-२७३-४७ त्रसानि जंगमानि ॥
३-२७३-४९ हे सिन्धुपते । ते तव श्रुतं श्रवणं नास्ति। यथो विष्णोरद्भुतकर्मणः कथ्यमानानि कर्माणि न वेत्सीति शेषः ॥
३-२७३-५३ जलक्रीडायामभिरुचितं प्रीतिर्यस्य ॥
३-२७३-५४ वराहवपुषमात्मानमिति शेषः । वाङ्मयं चतुर्वेदमयम्। वेदसंमितं वेदप्रमितयज्ञरूपम् ॥
३-२७३-५५ वर्ष्म शरीरम् ॥
३-२७३-५६ दंष्ट्रेण दंष्ट्रया न्यविशत् न्यवेशयत् ॥
३-२७३-६२ गर्भे धरितः गर्भधारितः ॥
३-२७३-६४ दुर्दिनं प्रावृट्दिनं तत्र भवोऽम्भोदः कृष्णमेघस्तत्सदृशः । श्रीवत्सेनोरसि भूषित इत्यर्थः ॥
३-२७३-६५ वाटं स्थानम् । बलिनो बलेः। अयमिकारान्त इन्नन्तश्च शब्दो दृश्यते ॥
३-२७३-६९ दिव्यं च तदद्भुततमं च रूपं बभूवेति शेषः ॥
३-२७३-७२ अवतीर्णोऽवतरणं कुर्वन्नजायत आविर्भूतः । यदुक्षये यदूनां गृहे ॥
३-२७३-७३ तस्य कर्माणि विदुषो विद्वांसः गान्ति गायन्ति ॥
३-२७३-७५ सोऽर्जुनः अस्त्रविदुषां प्रधानं श्रेष्ठः य अजितमाहुस्तेन कृष्णेन रक्ष्यते ॥

३-२७३-७७ तेन कृष्णसहायत्वेन हेतुना ।भावः पूज्यतमः।भावः
पूज्यतमे लोके इत्यनेकार्थः ॥
३-२७३-७८ दिनैकमेकदिनमेव न सर्वदा ॥
३-२७३-८३ जयद्रथोऽपि मन्दात्मा स्वमेवेति झ ।पाठः ॥

---

वन-अध्यय२७४
॥ श्रीः ॥
३.२७४. अध्यायः २७४

Mahabharata - Vana Parva - Chapter Topics
युधिष्ठिरेण मार्कण्डेयंप्रति स्वसमानदुःखिसत्ताप्रश्नः ॥१ ॥

Mahabharata - Vana Parva - Chapter Text

३-२७४-० (२६४५१)
जनमेजय उवाच।३-२७४-०क्ष् (२६८४)
एवं हृतायां कृष्णायां प्राप्य क्लेशमनुत्तमम् ।
अत ऊर्द्ध्वं नरव्याघ्राः किमकुर्वत पाण्डवाः ॥३-२७४-१ (२६४५२)
वैशंपायन उवाच।३-२७४-२क्ष् (२६८५)
एवं कृष्णां मोक्षयित्वाविनिर्जित्य जयद्रथम् ।
आसांचक्रे मुनिगणैर्धर्मराजो युधिष्टिरः ॥३-२७४-२ (२६४५३)
तेषां मध्येमहर्षीणां शृण्वतामनुशोचताम् ।
मार्कण्डेयमिदं वाक्यमब्रवीत्पाण्डुनन्दनः ॥३-२७४-३ (२६४५४)
भगवन्देवर्षीणां त्वं ख्यातो भूतभविष्यवित् ।
संशयं परिपृच्छमि च्छिन्धि मे हृदि संस्थितम् ॥३-२७४-४ (२६४५५)
द्रुपदस्य सुता ह्येषा वेदिमध्यात्समुत्थिता ।
अयोनिजा महाभागास्नुषा पाण्डोर्महात्मनः ॥३-२७४-५ (२६४५६)
मन्ये कालश्च भगवान्दैवं च दुरतिक्रमम् ।
भवितव्यं च भूतानां यस् नास्ति व्यतिक्रमः ॥३-२७४-६ (२६४५७)
कथं हि पत्नीमस्माकं धर्मज्ञां धर्मचारिणीम् ।
संस्पृशेदीदृशो भावः शुचिं स्तैन्यमिवानृतम् ॥३-२७४-७ (२६४५८)
न हि पापं कृतंकिंचित्कर्म वा निन्दितं क्वचित् ।
द्रौपद्या ब्राह्मणेष्वेव धर्मः सुचरितो महान् ॥३-२७४-८ (२६४५९)
तां जहार बलाद्राजा मूढबुद्धिर्जयद्रथः ।
तस्याः संहरणात्पापः शिरसः केशवापनम् ॥३-२७४-९ (२६४६०)
पराजयं च संग्रामे ससहाः समाप्तवान् ।

प्रत्याहृता तथाऽस्माभिर्हत्वा तत्सैन्धवं बलम् ॥ ३-२७४-१० (२६४६१)
तद्दारहरणं प्राप्तमस्माभिरवितर्कितम् ।
दुःखश्चायं वने वासो मृगयायां च जीविका ॥ ३-२७४-११ (२६४६२)
हिंसा च मृगजातीनां वनौकोभिर्वनौकसाम् ।
ज्ञातिभिर्विप्रवासश्च मिथ्याव्यवसितैरियम् ॥ ३-२७४-१२ (२६४६३)
अस्ति नूनं मया कश्चिदल्पभाग्यतरो नरः ।
भवता दृष्टपूर्वो वा श्रुतपूर्वोऽपि वा क्वचित् ॥ ३-२७४-१३ (२६४६४)

इति श्रीमन्महाभारते अरण्यपर्वणि रामोपाख्यानपर्वणि
चतुःसप्तत्यधिकद्विशततमोऽध्यायः ॥ २७४ ॥
Mahabharata - Vana Parva - Chapter Footnotes

३-२७४-६ दैवं च विधिनिर्मितमिति झ ।ध।पाठः।तत्रदैवं
धर्माधर्मौ विधिः सदसत्कर्मणी ताभ्यां निर्मितम् ॥
३-२७४-७ ईदृशो भावः परेण हरणम् ॥
३-२७४-१२ मिथ्याव्यवसितैः वृथातापसवेषधरैः ।इयं हिंसा
क्रियत इति शेषः ॥
३-२७४-१३ मया सम इतिशेषः ॥

---

वन-अध्यय२७५
॥ श्रीः ॥
३.२७५. अध्यायः २७५

Mahabharata - Vana Parva - Chapter Topics
मार्कण्डेयेन युधिष्ठिरंप्रति रामोपाख्यानकथनारम्भः ॥ १ ॥
तत्ररामाद्युत्पत्तिकथनपूर्वकं रावणोत्पत्त्युपोद्घाततया
कुबेरोत्पत्तिकथनम् ॥ २ ॥

Mahabharata - Vana Parva - Chapter Text

३-२७५-० (२६४६५)
मार्कण्डेय उवाच।३-२७५-०क्ष् (२६८६)
प्राप्तमप्रतिमं दुःखं रामेण भरतर्षभ ।
रक्षसा जानकी तस्य हृता भार्या बलीयसा ॥ ३-२७५-१ (२६४६६)
आश्रमाद्राक्षसेन्द्रेण रावणेन दुरात्मना ।
मायामास्थाय तरसा हत्वा गृध्रं जटायुषम् ॥ ३-२७५-२ (२६४६७)
प्रत्याजहार तां रामः सुग्रीवबलमाश्रितः ।

बद्धवा सेतुं समुद्रस्य दग्ध्वा लङ्कां शितैः शरैः ॥ ३-२७५-३ (२६४६८)
युधिष्ठिर उवाच। ३-२७५-४क्ष् (२६८७)
कस्मिन्नामः कुले जातः किंवीर्यः किंपराक्रमः ।
रावणः कस्य पुत्रो वा किं वैरं तस् तेन ह ॥ ३-२७५-४ (२६४६९)
एतन्मे भगवन्सर्वं सम्यगाख्यातुमर्हसि ।
ग्त्वया प्रत्यक्षोदृष्टं यथासर्वमशेषतः।'
श्रोतुमिच्छामि चरितं रामस्याक्लिष्टकर्मणः ॥ ३-२७५-५ (२६४७०)
मार्कण्डेय उवाच। ३-२७५-६क्ष् (२६८८)
अजोनामाभवद्राजा महानिक्ष्वाकुवंशजः ।
तस् पुत्रो दशरथःशश्वत्स्वाध्यायवाञ्छुचिः ॥ ३-२७५-६ (२६४७१)
अभवंस्तस्य चत्वारः पुत्रा धर्मार्थकोविदाः ।
रामलक्ष्मणशत्रुघ्ना भरतश्च महाबलः ॥ ३-२७५-७ (२६४७२)
रामस्य माता कौसल्या कैकेयी भरतस्य तु ।
सुतौ लक्ष्मणशत्रुघ्नौ सुमित्रायाः परंतपौ ॥ ३-२७५-८ (२६४७३)
विदेहराजो जनकः सीता तस्यात्मजा विमो ।
यां चकार स्वयं त्वष्टा रामस्य महिषीं प्रियाम् ॥ ३-२७५-९ (२६४७४)
एतद्रामस्य ते जन्म सीतायाश्च प्रकीर्तितम् ।
रावणस्यापि ते जन्म व्याख्यास्यामि रजनेश्वर ॥ ३-२७५-१० (२६४७५)
पितामहो रावणस्य साक्षाद्देवः प्रजापतिः ।
स्वयंभूः सर्वलोकानां प्रभुः स्रष्टा महातपाः ॥ ३-२७५-११ (२६४७६)
पुलस्त्यो नाम तस्यासीन्मानसो दयितः सुतः ।
तस्य वैश्रवणो नाम गवि पुत्रोऽभवत्प्रभुः ॥ ३-२७५-१२ (२६४७७)
पितरं स समुत्सृज्य पितामहमुपस्थितः ।
तस्य कोपात्पिता राजन्ससर्जात्मानमात्मना ॥ ३-२७५-१३ (२६४७८)
स जज्ञे विश्रवा नाम तस्यात्मार्धेन वै द्विजः ।
प्रतीकाराय सक्रोधस्ततो वैश्रवणस्य वै ॥ ३-२७५-१४ (२६४७९)
पितामहस्तुप्रीतात्मा ददौ वैश्रवणस् ह ।
अमरत्वं धनेशत्वं लोकपालत्वमेव च ॥ ३-२७५-१५ (२६४८०)
ईशानन तथा सख्यं पुत्रं च नलकूवरम् ।
राजधानीनिवेसं च लङ्कांरक्षोगणान्विताम् ॥ ३-२७५-१६ (२६४८१)
विमानं पुष्पकं नाम कामगं च ददौ प्रभुः ।
यक्षाणामाधिपत्यंच राजराजत्वमेव च ॥ ३-२७५-१७ (२६४८२)

इति श्रीमन्महाभारते अरण्यपर्वणि रामोपाख्यानपर्वणि
पञ्चसप्तत्यधिकद्विशततमोऽध्यायः ॥ २७५ ॥
Mahabharata - Vana Parva - Chapter Footnotes

३-२७५-२ रावणेन विहायसा इति थ ।ध।पाठः ॥
३-२७५-९ त्वष्टा योराममहिषीं इति थ ।ध।पाठः।त्वष्टा प्रजापतिः स्वयमेव संकल्पेन चकार नतु मैथुनद्वारा।अयोनिजामित्यर्थः ॥
३-२७५-१२ गवि गोसंज्ञायां भार्यायाम् ॥
३-२७५-१३ तस्य वैश्रवणस्य कोपात् मां त्यक्त्वा मत्पितरं सेवत इत्यतिज्वलनात् ।वैश्रवणं वाधितुं पुलस्त्यएव योगबलेन विश्रवःसंज्ञं देहान्तरं चक्रे इत्यर्थः ॥

---

वन-अध्यय२७६
॥ श्रीः ॥
३.२७६. अध्यायः २७६

Mahabharata - Vana Parva - Chapter Topics
मुनिवरेण विश्रवसा भार्यात्रये रावणादीनामुत्पादनम् ॥ १ ॥
सानुजेन रावणेन तपस्तोषितस्य ब्रह्मणो वरात्पुष्पका पहरणपूर्वकं कुबेरस्य निष्कासनेन लङ्कायां निवासः ॥ २ ॥

Mahabharata - Vana Parva - Chapter Text

३-२७६-० (२६४८३)
मार्कण्डेय उवाच। ३-२७६-०क्ष् (२६८९)
पुलस्त्यस् तु यः क्रोधादर्धदेहोऽभवन्मुनिः ।
विश्रवानाम सक्रोधं पितरं राक्षसेश्वरः। ३-२७६-१ (२६४८४)
बुबुधे तं तु सक्रोधं पितरं राक्षसेश्वरः ।
कुबेरस्तत्प्रसादार्थं यतते स्म सदा नृप ॥ ३-२७६-२ (२६४८५)
स राजराजो लङ्कायां न्यवसन्नरवाहनः ।
राक्षसीः प्रददौ तिस्रः पितुर्वै परिचारिकाः ॥ ३-२७६-३ (२६४८६)
ताः सदा तं महात्मानं संतोषयितुमुद्यताः ।
ऋषिं भरतशार्दूल नृत्यगीतविशारदाः ॥ ३-२७६-४ (२६४८७)
पुष्पोत्कटा च राका च मालिनी च विशांपते ।
अन्योन्यस्पर्धयाराजञ्श्रेयस्कामाः सुमध्यमाः ॥ ३-२७६-५ (२६४८८)
स तासां भगवांस्तुष्टो महात्मा प्रददौ वरान् ।
लोकपालोपमान्पुत्रानकैकस्या यथेप्सितान् ॥ ३-२७६-६ (२६४८९)
पुष्पोत्कटायां जज्ञाते द्वौ पुत्रौ राक्षसेश्वरौ ।
कुम्भकर्णदशग्रीवौ बलेनाप्रतिमौ भुवि ॥ ३-२७६-७ (२६४९०)

मालिन जनयामास पुत्रमेकं विभीषणम् ।
राकार्या मिथुनं जज्ञे खरः शूर्पणखा तथा ॥ ३-२७६-८ (२६४९१)
विभीषणस्तु रूपेण सर्वेभ्योऽभ्यधिकोऽभवत् ।
स बभूव महाभागो धर्मगोप्ता क्रियारतिः ॥ ३-२७६-९ (२६४९२)
दशग्रीवस्तु सर्वेषां श्रेष्ठो राक्षसपुङ्गवः ।
महोत्साहो महावीर्यो महासत्वपराक्रमः ॥ ३-२७६-१० (२६४९३)
कुम्भकर्णओ बलेनासीत्सर्वेभ्योऽभ्यधिको युधि ।
मायावी रणशौण्डश्चरौद्रश्च रजनीचरः ॥ ३-२७६-११ (२६४९४)
खरो धनुषि विक्रान्तो ब्रह्मद्विट् पिशिताशनः ।
सिद्धविघ्नकरी चापि रौद्री शूर्पणखा तदा ॥ ३-२७६-१२ (२६४९५)
सर्वे वेदविदः शूराः सर्वेसुचरितव्रताः ।
ऊषुः पित्रा सह रता गन्धमादनपर्वते ॥ ३-२७६-१३ (२६४९६)
ततो वैश्रवणं तत्र ददृशुर्नरवाहनम् ।
पित्रा सार्धं समासीनमृद्ध्या परमया युतम् ॥ ३-२७६-१४ (२६४९७)
जातामर्षास्ततस्ते तु तपसे धृतनिश्चयाः ।
ब्रह्माणं तोषयामासुर्घोरेण तपसा तदा ॥ ३-२७६-१५ (२६४९८)
अतिष्ठदेकपादेन सहस्रं परिवत्सरान् ।
वायुभक्षो दशग्रीवः पञ्चाग्निः सुसमाहितः ॥ ३-२७६-१६ (२६४९९)
अधःशायी कुम्भकर्णो यताहारो यतव्रतः ।
विभीषणः शीर्णपर्णमेकमभ्यवहारयन् ॥ ३-२७६-१७ (२६५००)
उपवासरतिर्धीमान्सदा जप्यपरायणः ।
तमेव कालमातिष्ठत्तीव्रं तप उदारधीः ॥ ३-२७६-१८ (२६५०१)
स्वरः शूर्पणखा चैव तेषां वै तप्यतां तपः ।
परिचर्यां च रक्षां च चक्रतुर्हृष्टमानसौ ॥ ३-२७६-१९ (२६५०२)
पूर्णे वर्षसहस्रेतु शिरश्छित्त्वा दशाननः ।
जुहोत्यग्नौ दुराधर्षस्तेनातुष्यज्जगत्प्रभुः ॥ ३-२७६-२० (२६५०३)
ततो ब्रह्मा स्वयं गत्वा तपसस्तान्न्यवारयत् ।
प्रलोभ्यवरदानेन सर्वानेवपृथक्पृथक् ॥ ३-२७६-२१ (२६५०४)
ब्राह्मोवाच। ३-२७६-२२क्ष् (२६९०)
प्रीतोऽस्मि वो निवर्तध्वं वरान्वृणुत पुत्रकाः ।
यद्यदिष्टमृते त्वेकममरत्वं तथाऽस्तु तत् ॥ ३-२७६-२२ (२६५०५)
यद्यदग्नौ हुतं सर्वं शिरस्ते महदीप्सया ।
तथैव तानि ते देहे भविष्यन्ति यथेप्सया ॥ ३-२७६-२३ (२६५०६)
वैरूप्यं च न ते देहे कामरूपधरस्तथा ।
भविष्यसि रणेऽरीणां विजेता न च संशयः ॥ ३-२७६-२४ (२६५०७)
रावण उवाच। ३-२७६-२५क्ष् (२६९१)

गन्धर्वदेवासुरतो यक्षराक्षसतस्तथा ।
सर्पकिंनरभूतेभ्यो न मे भूयात्पराभवः ॥ ३-२७६-२५ (२६५०८)
ब्रह्मोवाच। ३-२७६-२६क्ष् (२६९२)
य एते कीर्तिताः सर्वे न तेभ्योस्ति भयं रतव ।
ऋते मनुष्याद्भद्रं ते तथा तद्विहितं मया ॥ ३-२७६-२६ (२६५०९)
मार्कण्डेय उवाच। ३-२७६-२७क्ष् (२६९३)
एवमुक्तो दशग्रीवस्तुष्टः समभवत्तदा ।
अवमेने हि दुर्बुद्धिर्मनुष्यान्पुरुषादकः ॥ ३-२७६-२७ (२६५१०)
कुम्भकर्णमथोवाच तथैव प्रपितामहः ।
ग्वरं वृणीष्व भद्रं ते प्रीतोस्मीति पुनःपुनः'।
स वव्रे महतीं निद्रां तमसा ग्रस्तचेतनः ॥ ३-२७६-२८ (२६५११)
तथाभविष्यतीत्युक्त्वा विभीषणमुवाच ह ।
वरं वृणीष्व पुत्र त्वं प्रीतोऽस्मीति पुनःपुनः ॥ ३-२७६-२९ (२६५१२)
विभीषण उवाच। ३-२७६-२९क्ष् (२६९४)
परमापद्गतस्यापि नाधर्मे मे मतिर्भवेत् ।
अशिक्षितं च भगवन्ब्रह्मास्त्रं प्रतिभातु मे ॥ ३-२७६-३० (२६५१३)
ब्रह्मोवाच। ३-२७६-३१क्ष् (२६९५)
यस्माद्राक्षसयोनौ ते जातस्यामित्रकर्शन ।
नाधर्मे धीयते बुद्धिरमरत्वं ददानि ते ॥ ३-२७६-३१ (२६५१४)
मार्कण्डेय उवाच। ३-२७६-३२क्ष् (२६९६)
राक्षसस्तु वरंलब्ध्वा दशग्रीवो विशांपते ।
लङ्कायाश्च्यावयामास युधि जित्वा धनेश्वरम् ॥ ३-२७६-३२ (२६५१५)
हित्वास भगवाँल्लङ्कामाविशद्गन्धमादनम् ।
गन्धर्वयक्षानुगतो रक्षःकिंपुरुषैः सह ॥ ३-२७६-३३ (२६५१६)
विमानं पुष्पकं तस्य जहाराक्रम्य रावणः ।
शशाप तं वैश्रवणो न त्वामेतद्वहिष्यति ॥ ३-२७६-३४ (२६५१७)
यस्तु त्वां समरे हन्ता तमेवैतद्वहिष्यति ।
अवमत्य गुरुं मां च क्षिप्रं त्वंनभविष्यसि ॥ ३-२७६-३५ (२६५१८)
विभीषणस्तु धर्मात्मा सतां मार्गमनुस्मरन् ।
अन्वगच्छन्महाराज श्रिया परमया युतः ॥ ३-२७६-३६ (२६५१९)
तस्मै स भगवांस्तुष्टो भ्राता भ्रात्रे धनेश्वरः ।
सैनापत्यं ददौ धीमान्यक्षराक्षससेनयोः ॥ ३-२७६-३७ (२६५२०)
राक्षसाः पुरुषादाश्च पिशाचाश्च महाबलाः ।
सर्वे समेत्य राजानमभ्यषिञ्चन्दशाननम् ॥ ३-२७६-३८ (२६५२१)
दशग्रीवश्चदैत्यानां दानवानां बलोत्कटः ।
आक्रम्य रत्नान्यहरत्कामरूपी विहंगम ॥ ३-२७६-३९ (२६५२२)

रावयामास लोकान्यत्तस्माद्रावण उच्यते ।
दशग्रीवः कामबलो देवानां भयमादधत् ॥ ३-२७६-४० (२६५२३)

इति श्रीमन्महाभारते अरण्यपर्वणि रामोपाख्यानपर्वणि
,ट्सप्तत्यधिकद्विशततमोऽध्यायः ॥ २७६ ॥
Mahabharata - Vana Parva - Chapter Footnotes

३-२७६-२ पितरं विश्रवसम् । राक्षसेक्ष्वरः कुबेरो रक्षःपुरीनायकत्वात् ॥
३-२७६-५ पुष्पोत्कटा बलाका च इति ध । पाठः ॥
३-२७६-१३ पित्रा विश्रवसा ॥
३-२७६-१६ पञ्चदिक्षु चत्वार एकः सूर्य इतिपञ्चानामग्नीनां म्यगः
पञ्चाग्निः ॥
३-२७६-१७ विभीषणस्तपोऽतिष्ठदित्युत्तरेणान्वयः ॥
३-२७६-२३ महदीप्सया श्रेष्ठपदापेक्षया ॥
३-२७६-३५ रनभविष्यसि मरिष्यसि ॥
३-२७६-३६ अन्वगच्छत् कुबेरमिति शेषः ॥
३-२७६-३९ रत्नानि जातौ जातौ यदुत्कृष्टं तद्रत्नमभिधीयते
। विहंगमः खेचरः ॥
३-२७६-४० रावयामास हिंसार्थस्य रुहो रूपमिदम् ॥

---

वन-अध्यय२७७
॥ श्रीः ॥
३.२७७. अध्यायः २७७

Mahabharata - Vana Parva - Chapter Topics
रावणोपद्रितदेवगणप्रार्थितेन ब्रह्मणा श्रीहरे रामत्वेन
प्रादुर्भावनिवेदनपूर्वकं तान्प्रति तत्साहाय्यार्थं वानरादिभावेन
जननचोदना ॥ १ ॥

Mahabharata - Vana Parva - Chapter Text

३-२७७-० (२६५२४)
मार्कण्डेय उवाच। ३-२७७-०क्ष् (२६९७)
ततो ब्रह्मर्षयः सर्वे सिद्धा देवर्षयस्तथा ।
हव्यवाहं पुरस्कृत्य ब्रह्माणं शरणं गताः ॥ ३-२७७-१ (२६५२५)
अग्निरुवाच। ३-२७७-२क्ष् (२६९८)

योसौ विश्रवसः पुत्रो दशग्रीवो महाबलः ।
अवध्यो वरदानेन कृतो भगवता पुरा ॥ ३-२७७-२ (२६५२६)
स बाधते प्रजाः सर्वा विप्रकारैर्महाबलः ।
ततो नस्त्रातु भगवान्नान्यस्त्राता हि विद्यते ॥ ३-२७७-३ (२६५२७)
ब्रह्मोवाच। ३-२७७-४क्ष् (२६९९)
न स देवासुरैः शक्यो युद्धे जेतुं विभावसो ।
विहितं तत्रयत्कार्यमभितस्तस्य निग्रहः ॥ ३-२७७-४ (२६५२८)
तदर्थमवतीर्णोऽसौ मन्नियोगाच्चतुर्भुजः ।
विष्णुः प्रहरतां श्रेष्ठः स तत्कर्म करिष्यति ॥ ३-२७७-५ (२६५२९)
मार्कण्डेय उवाच। ३-२७७-६क्ष् (२७००)
पितामहस्ततस्तेषां संनिधौ शक्रमब्रवीत् ।
सर्वैर्देवगणैः सार्धं संभव त्वं महीतले ॥ ३-२७७-६ (२६५३०)
विष्णोः सहायानृक्षीषु वानरीषु च सर्वशः ।
जनयध्वं सुतान्वीरान्कामरूपबलान्वितान् ॥ ३-२७७-७ (२६५३१)
ग्ते यथोक्ता भगवता तत्प्रतिश्रुत्य शासनम् ।
ससृजुर्देवगन्धर्वाः पुत्रान्वानररूपिणः' ॥ ३-२७७-८ (२६५३२)
ततो भागानुभागेन देवगन्धर्वदानवाः ।
अवतर्तुं महीं सर्वे मन्त्रयामासुरञ्जसा ॥ ३-२७७-९ (२६५३३)
ग्अवतेरुर्महीं स्वर्गादंशैश्च सहिताः सुराः ।
ऋषयश्च महात्मानः सिद्धाश्च सह किन्नरैः ।
चारणाश्चासृजन्घोरान्वानरान्वनचारिणः ॥ ३-२७७-१० (२६५३४)
यस्य देवस्य यद्रूपं वेषस्तेजश्च यद्विधम् ।
अजायन्त समास्तेन तस्य तस्य सुतास्तदा' ॥ ३-२७७-११ (२६५३५)
तेषां समक्षं गन्धर्वीं दुन्दुभीं नाम नामतः ।
शशास वरदो देवो गच्छ कार्यार्थसिद्धये ॥ ३-२७७-१२ (२६५३६)
पितामहवचः श्रुत्वा गन्धर्वी दुन्दुभी ततः ।
मन्थरा मानुषे लोके कुब्जा समभवत्तदा ॥ ३-२७७-१३ (२६५३७)
शक्रप्रभृतयश्चैव सर्वे ते सुरसत्तमाः ।
वानरर्क्षवरस्त्रीषु जनयामासुरात्मजान् ॥ ३-२७७-१४ (२६५३८)
तेऽन्ववर्तन्पितॄन्सर्वे यशसा च बलेन च ।
भेत्तारो गिरिशृङ्गाणां सालतालशिलायुधाः ॥ ३-२७७-१५ (२६५३९)
वज्रसंहननाः सर्वेसर्वेऽमोघबलास्तथा ।
कामवीर्यबलाश्चैवसर्वे बुद्धिविशारदाः ॥ ३-२७७-१६ (२६५४०)
नागायुतसमप्राणा वायुवेगसमा जवे ।
यथेच्छविनिपाताश्च केचिदत्र वनौकसः ॥ ३-२७७-१७ (२६५४१)
एवं विधाय तत्सर्वं भगवाँल्लोकभावनः ।

मन्थरां बोधयामास यद्यत्कार्यं त्वया तथा ॥ ३-२७७-१८ (२६५४२)
सा तद्वच समाज्ञाय तथा चक्रे मनोजवा ।
इतश्चेतश्च गच्छन्ती वैरसंधुक्षणे रता ॥ ३-२७७-१९ (२६५४३)

इति श्रीमन्महाभारते अरण्यपर्वणि रामोपाख्यानपर्वाणि
सप्तसप्तत्यधिकद्विशततमोऽध्यायः ॥ २७७ ॥
Mahabharata - Vana Parva - Chapter Footnotes

३-२७७-३ विप्रकारैर्विविधैः प्रकारैः ॥
३-२७७-१५ ओजसा तेजसा युक्तान्यशसा इति थ । ध। पाठः ॥
३-२७७-१६ वज्रसंहननाः वज्रवद्दृढाङ्गाः ॥
३-२७७-१७ यत्रेच्छकनिवसाश्च इति ख । झ। पाठः। यत्रेच्छा
तत्रैव निवासो येषां ते यत्रेच्छकनिवासाः ॥
३-२७७-१८ यद्यत्कार्यं कैकेयीप्रलोभनं रामप्रव्राजनादि च ॥
३-२७७-१९ संधुक्षणे दीपने ॥

---

वन-अध्यय२७८
॥ श्रीः ॥
३.२७८. अध्यायः २७८

Mahabharata - Vana Parva - Chapter Topics
रामेण स्वस्य यौवराज्याभिषेचनोद्युक्ते दशरथे मन्थराबोधितायाः
कैकय्या वचनात्सीतालक्ष्मणाभ्यां सह वनगमनम् ॥ १ ॥
तथा लक्ष्मणकरेण शूर्पणखावैरूप्यकरणपूर्वकं खरादिहननम् ॥ २ ॥
ततः क्रुद्धेन रावणेन रामविप्रचिकीर्षया मारीचसमीपंप्रति गमनम्
॥ ३ ॥

Mahabharata - Vana Parva - Chapter Text

३-२७८-० (२६५४४)
युधिष्ठिर उवाच। ३-२७८-०क्ष् (२७०१)
उक्तं भगवता जन्म रामादीनां पृथक्पृथक् ।
प्रस्थानकारणं ब्रह्मञ्श्रोतुमिच्छामि कथ्यताम् ॥ ३-२७८-१ (२६५४५)
कथं दाशरथी वीरौ भ्रातरौ रामलक्ष्मणौ ।
प्रस्तापितौ वने ब्रह्मन्मैथिली च यशस्विनी ॥ ३-२७८-२ (२६५४६)
मार्कण्डेय उवाच। ३-२७८-३क्ष् (२७०२)
जातपुत्रो दशरथः प्रीतिमानभवन्नृप ।

क्रियारतिर्धर्मरतः सततं वृद्धसेविता ॥ ३-२७८-३ (२६५४७)
क्रमेण चास्य ते पुत्रा व्यवर्धन्त महौजसः ।
वेदेषु सरहस्येषु धनुर्वेदेषु पारगाः ॥ ३-२७८-४ (२६५४८)
चरितब्रह्मचर्यास्ते कृतदाराश्च पार्तिव ।
दृष्ट्वा रामं दशरथः प्रीतिमानभवत्सुखी ॥ ३-२७८-५ (२६५४९)
ज्येष्ठो रामोऽभवत्तेषां रमयामास हि प्रजाः ।
मनोहरतया धीमान्पितुर्हृदयनन्दनः ॥ ३-२७८-६ (२६५५०)
ततः स राजा मतिमान्मत्वाऽऽत्मानं वयोधिकम् ।
मन्त्रयामास सचिवैर्मन्त्रज्ञैश्च पुरोहितैः ॥ ३-२७८-७ (२६५५१)
अभिषेकाय रामस्य यावैराज्येन भारत ।
प्राप्तकालं च ते सर्वे मेनिरे मन्त्रिसत्तमाः ॥ ३-२७८-८ (२६५५२)
लोहिताक्षं महाबाहुं मत्तमातङ्गगामिनम् ।
कम्बुग्रीवं महोरस्कं नीलकुञ्चितमूर्धजम् ॥ ३-२७८-९ (२६५५३)
दीप्यमानं श्रिया वीरं शक्रादनवरं बले ।
पारगं सर्वधर्माणां बृहस्पतिसमं मतौ ॥ ३-२७८-१० (२६५५४)
सर्वानुरक्तप्रकृतिं सर्वविद्याविशारदम् ।
जितेन्द्रियममित्राणामपि दृष्टिमनोहरम् ॥ ३-२७८-११ (२६५५५)
नियन्तारमसाधूनां गोप्तारं धर्मचारिणाम् ।
धृतिमन्तमनाधृष्यं जेतारमपराजितम् ॥ ३-२७८-१२ (२६५५६)
पुत्रं राजा दशरथः कौसल्यानन्दवर्धनम् ।
संदृश्यपरमां प्रीतिमगच्छत्कुलनन्दनम् ॥ ३-२७८-१३ (२६५५७)
चिन्तयंश्च महातेजा गुणान्रामस्य वीर्यवान् ।
अभ्यभाषत भद्रं ते प्रीयमाणः पुरोहितम् ॥ ३-२७८-१४ (२६५५८)
अद् पुष्यो निशि ब्रह्मन्पुण्यं योगमुपैष्यति ।
संभाराः संभ्रियन्तां मे रामश्चोपनिमन्त्र्यताम् ॥ ३-२७८-१५ (२६५५९)
ग्श्व एवपुष्यो भविता यत्ररामः सुतो मया ।
यौवराज्येऽभिषेक्तव्यः पौरेषु सहमन्त्रिभिः' ॥ ३-२७८-१६ (२६५६०)
इति तद्राजवचनं प्रतिश्रुत्याथ मन्थरा ।
कैकेयीमभिगम्येदं काले वचनमब्रवीत् ॥ ३-२७८-१७ (२६५६१)
अद्य कैकेयि दौर्भाग्यं राज्ञा ते ख्यापितं महत् ।
आशीविषस्त्वां संक्रुद्धश्छन्नो दशति दुर्भगे ॥ ३-२७८-१८ (२६५६२)
सुभगा खलु कौसल्या यस्याः पुत्रोऽभिषेक्ष्यते ।
कुतो हि तव सौभाग्यं यस्याः पुत्रो न राज्यभाक् ॥ ३-२७८-१९ (२६५६३)
सा तद्वचनमाज्ञाय सर्वाभरणभूषिता ।
वेदी विलग्नमध्येन बिभ्रती रूपमुत्तमम् ॥ ३-२७८-२० (२६५६४)
वविक्ते पतिमासाद्य हसन्तीव शुचिस्मिता ।

राजानं तर्जयन्तीव मधुरं वाक्यमब्रवीत् ॥ ३-२७८-२१ (२६५६५)
सत्यप्रतिज्ञ यन्मे त्वं काममेकं विसृष्टवान् ।
उपाकुरुष्व तद्राजंस्तस्मान्मुञ्चस्व संकटात् ।
ग्तदद्य कुरु सत्यं मे वरं वरद भूपते' ॥ ३-२७८-२२ (२६५६६)
राजोवाच। ३-२७८-२५क्ष् (२७०३)
वरं ददानि ते हन्त तद्गृहाण यदिच्छसि ।
अवध्यो वध्यतां कोद्य वध्यः कोऽद्य विमुच्यतां ॥ ३-२७८-२३ (२६५६७)
धनं ददानि कस्याद् ह्रियतां कस्यरवापुनः ।
ब्राह्मणस्वादिहान्यत्रयत्किंचिद्वित्तमस्ति मे ॥ ३-२७८-२४ (२६५६८)
पृथिव्यां राजराजोस्मि चातुर्वर्ण्यस् रिता ।
यस्तेऽभिलपितः कामो ब्रूहि कल्याणि माचिरं ॥ ३-२७८-२५ (२६५६९)
सातद्वचनमाज्ञाय परिगृह्य नराधिपम् ।
आत्मनो बलमाज्ञाय तत एनमुवाच ह ॥ ३-२७८-२६ (२६५७०)
आभिषेचनिकं यत्ते रामार्थमुपकल्पितम् ।
भरतस्तदवाप्नोतु वनं गच्छतु राघवः ॥ ३-२७८-२७ (२६५७१)
ग्नव पञ्च च वर्षाणि दण्डकारण्यमाश्रितः ।
चीराजिनजटाधारी रामो भवतु तापसः' ॥ ३-२७८-२८ (२६५७२)
स तं राजा वरं श्रुत्वा विप्रियं दारुणोदयम् ।
दुःखार्तो भरतश्रेष्ठ न किंचिद्व्याजहार ह ॥ ३-२७८-२९ (२६५७३)
ततस्तथोक्तं पितरं रामो विज्ञाय वीर्यवान् ।
वनं प्रतस्थे धर्मात्मा राजा सत्यो भवत्विति ॥ ३-२७८-३० (२६५७४)
तमन्वगच्छल्लक्ष्मीवान्धनुष्माँल्लक्ष्मणस्तदा ।
सीता च भार्या भद्रं ते वैदेही जनकात्मजा ॥ ३-२७८-३१ (२६५७५)
ततो वनं गतेरामे राजा दशरथस्तदा ।
समयुज्यत देहस्य कालपर्यायधर्मणा ॥ ३-२७८-३२ (२६५७६)
रामं तु गतमाज्ञाय राजानं च तथागतम् ।
अनार्या भरतं देवी कैकेयी वाक्यमब्रवीत् ॥ ३-२७८-३३ (२६५७७)
गतोदशरथः स्वर्गं वनस्थौ रामलक्ष्मणौ ।
गृहाण राज्यंविपुलं क्षेमं निहतकण्टकम् ॥ ३-२७८-३४ (२६५७८)
तामुवाच स धर्मात्मा नृशंसं बत ते कृतम् ।
पतिं हत्वाकुलं चेदमुत्साद्य धनलुब्धया ॥ ३-२७८-३५ (२६५७९)
अयशः पातयित्वा मे मूर्ध्नि त्वं कुलपांसने ।
सकामा भव मे मातरित्युक्त्वा प्ररुरोद ह ॥ ३-२७८-३६ (२६५८०)
स चारित्रं विशोध्याथ सर्वप्रकृतिसन्निधौ ।
अन्वयाद्भ्रातरं रामं विनिवर्तनलालसः ॥ ३-२७८-३७ (२६५८१)
कौसल्यां च सुमित्रां च कैकेयीं च सुदुःखितः ।

अग्रे प्रस्थाप्य यानैः स शत्रुघ्नसहितो ययौ ॥ ३-२७८-३८ (२६५८२)
वसिष्ठवामदेवाभ्यां विप्रैश्चान्यैः सहस्रशः ।
पौरजानपदैः सार्धं रामानयनकाङ्क्षया ॥ ३-२७८-३९ (२६५८३)
ददर्श चित्रकूटस्थं स रामं सहलक्ष्मणम् ।
तापसानामलंकारं धारयन्तं धनुर्धरम् ॥ ३-२७८-४० (२६५८४)
ग्उवाच प्राञ्जलिर्भूत्वाप्रणिपत्य रघूत्तमम् ।
शशंस मरणं राज्ञः सोऽनाथांश्चापि कोसलान् ॥ ३-२७८-४१ (२६५८५)
नाथ त्वं प्रतिपद्यस्व स्वराज्यमिति चोक्तवान् ॥ ३-२७८-४२ (२६५८६)
स तस्य वचनं श्रुत्वा रामः परमदुःखितः ।
चकार देवकल्पस्य पितुः स्नात्वोदकक्रियाम् ॥ ३-२७८-४३ (२६५८७)
अब्रवीत्स तदारामो भ्रातरं भ्रातृवत्सलम् ।
पादुके मे भविष्येते राज्यगोप्त्र्यौ परंतप ।
एवमस्त्विति तं प्राह भरतः प्रणतस्तदा' ॥ ३-२७८-४४ (२६५८८)
विसर्जितः स रामेण पितुर्वचनकारिणा ।
नन्दिग्रामेऽकरोद्राज्यं पुरस्कृत्यास्य पादुके ॥ ३-२७८-४५ (२६५८९)
रामस्तु पुनराशङ्क्य पौरजानपदागमम् ।
प्रविवेश महारण्यं शरभङ्गाश्रमं प्रति ॥ ३-२७८-४६ (२६५९०)
सत्कृत्य शरभङ्गं स दण्डकारण्यमाश्रितः ।
नदीं गोदावरीं रम्यामाश्रित्य न्यवसत्तदा ॥ ३-२७८-४७ (२६५९१)
वसतस्तस्य रामस्य ततः शूर्पणखाकृतम् ।
खरेणासीन्महद्वैरं जनस्थाननिवासिना ॥ ३-२७८-४८ (२६५९२)
रक्षार्थं तापसानां तु राघवो धर्मवत्सलः ।
चतुर्दशसहस्राणि जघान भुवि राक्षसान् ॥ ३-२७८-४९ (२६५९३)
दूषणं च स्वरं चैवनिहत्य सुमहाबलौ ।
चक्रे क्षेमं पुनर्धीमान्धर्मारण्यं स राघवः ॥ ३-२७८-५० (२६५९४)
हतेषु तेषु रक्षःसु ततः शूर्पणखा पुनः ।
ययौ निकृत्तनासोष्ठी लङ्कां भ्रातुर्निवेशनम् ॥ ३-२७८-५१ (२६५९५)
ततो रावणमभ्येत्य राक्षसी दुःखमूर्च्छिता ।
पपात पादयोर्भ्रातुः संशुष्करुधिरानना ॥ ३-२७८-५२ (२६५९६)
तां तथा विकृतां दृष्ट्वा रावणः क्रोधमूर्च्छितः ।
उत्पपातासनात्क्रुद्धो दन्तैर्दन्तानुपस्पृशन् ॥ ३-२७८-५३ (२६५९७)
स्वानमात्यान्विसृज्याथ विविक्ते तामुवाच सः ।
केनास्येवं कृता भद्रे मामचिन्त्यावमत्य च ॥ ३-२७८-५४ (२६५९८)
कः शूलं तीक्ष्णमासाद्य सर्वगात्रेषु सेवते ।
कः शिरस्यग्निमाधाय विश्वस्तः स्वपते सुखम् ॥ ३-२७८-५५ (२६५९९)
आशीविषं घोरतरं पादेन स्पृशतीह कः ।

सिंहं केसरिणं मत्तः स्पृष्ट्वा दंष्ट्रासु तिष्ठति ॥ ३-२७८-५६ (२६६००)
इत्येवं ब्रुवतस्तस्य नेत्रेभ्यस्तेजसोऽर्चिषः ।
निश्चेरुर्दह्यतो रात्रौ वृक्षस्येव स्वरन्ध्रतः ॥ ३-२७८-५७ (२६६०१)
तस्य तत्सर्वमाचख्यौ भगिनी रामविक्रमम् ।
खरदूषणसंयुक्तं राक्षसानां पराभवम् ॥ ३-२७८-५८ (२६६०२)
ग्ततो ज्ञातिवधं श्रुत्वा रावणः कालचोदितः ।
रामस्य वधमाकाङ्क्षन्मारीचं मनसागमत्' ॥ ३-२७८-५९ (२६६०३)
स निश्चित्यततः कृत्यं सागरं लवणाकरम् ।
ऊर्ध्वमाचक्रमे राजा विधाय नगरे विधिम् ॥ ३-२७८-६० (२६६०४)
त्रिकूटं समतिक्रम्य कालपर्वतमेव च ।
ददर्श मकरावासं गम्भीरोदं महोदधिम् ॥ ३-२७८-६१ (२६६०५)
तमतीत्याथ गोकर्णमभ्यगच्छद्दशाननः ।
दयितं स्तानमव्यग्रं शूलपाणेर्महात्मनः ॥ ३-२७८-६२ (२६६०६)
तत्राभ्यगच्छन्मारीचं पूर्वामात्यं दशाननः ।
पुरा रामभयादेव तापसं प्रियजीवितम् ॥ ३-२७८-६३ (२६६०७)

इति श्रीमन्महाभारते अरण्यपर्वणि रामोपाख्यानपर्वणि
अष्टसप्तत्यधिकद्विशततमोऽध्यायः ॥ २७८ ॥
Mahabharata - Vana Parva - Chapter Footnotes

३-२७८-६ रामपदंनिर्वक्ति ज्येष्ठ इति ॥
३-२७८-११ सर्वशः अनुरक्ताः प्रकृतयः प्रजा यस्मिंस्तं
सर्वानुरक्तप्रकृतिम् ॥
३-२७८-१४ भद्रं ते इति युधिष्ठिरं प्रति आशीर्वचनम् ।पुरोहितं
वसिष्ठम् ॥
३-२७८-१५ अद्य पुण्या तिथिर्ब्रह्मन्पुष्ययोगमुपैष्यतीति ध ।पाठः ॥
३-२७८-२१ प्रणयं व्यञ्जयन्तीव इति झ ।पाठः ॥
३-२७८-२२ कामं वरं उपाकुरुष्व देहि ।संकटात् कष्ठात् ॥
३-२७८-३२ कालपर्यायधर्मणा मृत्युना ॥
३-२७८-३३ आनाय्य भरतं देवी इति झ।पाठः ॥
३-२७८-३७ चारित्र्यं विशोष्य इदं कैकेय्यैव कृतं नतु मयेति
प्रदर्श्य ॥
३-२७८-५६ सिंहं हिंस्रम् ।केसरिणं सटावन्तं मृगराजम् ॥
३-२७८-५७ तस्य स्रोतोभ्यइति झ
।पाठः।स्रोतोभ्यश्चुरादिरन्ध्रेभ्यः।तेजसोर्चिषोऽग्नेर्ज्वालाः ॥
३-२७८-५८ खरदूषणसंयुक्तं तत्पराभवसहितम् ॥

वन-अध्यय२७९
॥ श्रीः ॥
३.२७९. अध्यायः २७९

Mahabharata - Vana Parva - Chapter Topics
रावणेन भिक्षवेषधारणपूर्वकं मारीचेन मृगरूपधारिणा सह रामाश्रमाभिगमनम् ॥ १ ॥
मृगग्रहणाय सीताचोदनया तदनुधाविना रामेण राक्षसबुद्ध्या मृगहननम् ॥ २ ॥
म्रियमाणस्य मारीचस्यहासीते लक्ष्मणेति रामस्वरसमानस्वरश्रदणएन विषण्णाया- सीताया- परुषभाषणश्रवणाल्लक्ष्मणेन राममार्गानुसरणम् ॥ ३ ॥
अत्रान्तरे रावणेन निजरूपधारणपूर्वकं सीतापहरणम् ॥ ४ ॥

Mahabharata - Vana Parva - Chapter Text

३-२७९-० (२६६०८)
मार्कण्डेय उवाच। ३-२७९-०क्ष् (२७०४)
मारीचस्त्वथ संभ्रान्तो दृष्ट्वा रावणमागतम् ।
पूजयामास सत्कारैः फलमूलादिभिस्ततः ॥ ३-२७९-१ (२६६०९)
विश्रान्तं चैनमासीनमन्वासीनः स राक्षसः ।
उवाच प्रश्रितं वाक्यं वाक्यज्ञो वाक्यकोविदम् ॥ ३-२७९-२ (२६६१०)
न ते प्रकृतिमान्वर्णः कच्चित्क्षेमं पुरे तव ।
कच्चित्प्रकृतयः सर्वा भजन्ते त्वां यथा पुरा ॥ ३-२७९-३ (२६६११)
किमिहागमने चापि कार्यं ते राक्षसेश्वर ।
कृतमित्येव तद्विद्धि यद्यपि स्यात्सुदुष्करम् ॥ ३-२७९-४ (२६६१२)
शशंस रावणस्तस्मै तत्सर्वं रामचेष्टितम् ।
समासेनैव कार्याणि क्रोधामर्षसमन्वितः ॥ ३-२७९-५ (२६६१३)
मारीचस्त्वब्रवीच्छ्रुत्वा समासेनैव रावणम् ।
अलं ते राममासाद्य वीर्यज्ञो ह्यस्मि तस्य वै ॥ ३-२७९-६ (२६६१४)
बाणवेगं हि कस्तस्य शक्तः सोढुं महात्मनः ।
प्रव्रज्यायां हि मे हेतुः स एव पुरुषर्षभः ।
विनाशमुखमेतत्ते केनाख्यातं दुरात्मना ॥ ३-२७९-७ (२६६१५)
तमुवाचाथ सक्रोधो रावणः परिभर्त्सयन् ।
अकुर्वतोऽस्मद्वचनं स्यान्मृत्युरपि ते ध्रुवम् ॥ ३-२७९-८ (२६६१६)

मरीचश्चिन्तयामास विशिष्टान्मरणं वरम् ।
अवश्यं मरणे प्राप्ते करिष्याम्यस्य यन्मतम् ॥ ३-२७९-९ (२६६१७)
ततस्तं प्रत्युवाचाथ मारीचो रक्षसांवरम् ।
किं ते साह्यं मया कार्यं करिष्याम्यवशोपि तत् ॥ ३-२७९-१० (२६६१८)
तमब्रवीद्दशग्रीवो गच्छ सीतां प्रलोभय ।
रत्नशृङ्गो मृगो भूत्वा रत्नचित्रतनूरुहः ॥ ३-२७९-११ (२६६१९)
ध्रुवं सीता समालक्ष्यत्वां रामं चोदयिष्यति ।
अपक्रान्ते च काकुत्स्थे सीता वश्या भविष्यति ॥ ३-२७९-१२ (२६६२०)
तामादायापनेष्यामि ततः स नभविष्यति ।
भार्यावियोगाद्दुर्बुद्धिरेतत्साह्यं कुरुष्व मे ॥ ३-२७९-१३ (२६६२१)
इत्येवमुक्तोमारीचः कृत्वोदकमथात्मनः ।
रावणं पुरतो यान्तमन्वगच्छत्सुदुःखितः ॥ ३-२७९-१४ (२६६२२)
ततस्तस्याश्रमं गत्वारामस्याक्लिष्टकर्मणः ।
चक्रतुस्तद्यथा सर्वमुभौ यत्पूर्वमन्त्रितम् ॥ ३-२७९-१५ (२६६२३)
रावणस्तु यतिर्भूत्वा मुण्डः कुण्डीत्रिदण्डधृत् ।
मृगश्चभूत्वामारीचस्तं देशमुपजग्मतुः ॥ ३-२७९-१६ (२६६२४)
दर्शयामास मारीचो वैदेहीं मृगरूपधृत् ।
चोदयामास तस्यार्थे सा रामं विधिचोदिता ॥ ३-२७९-१७ (२६६२५)
रामस्तस्याः प्रियं कुर्वन्धनुरादाय सत्वरः ।
रक्षार्थे लक्ष्मणं न्यस्य प्रययौ मृगलिप्सया ॥ ३-२७९-१८ (२६६२६)
स धन्वी बद्धतूणीरः खड्गगोधाङ्गुलित्रवान् ।
अन्वधावन्मृगं रामो रुद्रस्तारामृगं यथा ॥ ३-२७९-१९ (२६६२७)
सोऽन्तर्हितः पुनस्तस्य दर्शनं राक्षसो व्रजन् ।
चकर्ष महदध्वानं रामस्तं वुबुधे ततः ॥ ३-२७९-२० (२६६२८)
निशाचरं विदित्वा तं राघवः प्रतिभानवान् ।
अमोघं शरमादाय जघान मृगरूपिणम् ॥ ३-२७९-२१ (२६६२९)
स रामवाणाभिहतः कृत्वा रामस्वरं तदा ।
हा सीते लक्ष्मणेत्येवं चुक्रोशार्तस्वरेण ह ॥ ३-२७९-२२ (२६६३०)
शुश्राव तस्य वैदेही ततस्तां करुणां गिरम् ।
साप्रापतत्ततः सीता तामुवाचाथ लक्ष्मणः ॥ ३-२७९-२३ (२६६३१)
अलं ते शङ्कया भीरु को रामं प्रहरिष्यति ।
मुहूर्ताद्द्रक्ष्यसे रामं भर्तारं त्वं शुचिस्मितम् ॥ ३-२७९-२४ (२६६३२)
इत्युक्ता सा प्ररुदती पर्यशङ्कत लक्ष्मणम् ।
हता वै स्त्रीस्वभावेन शुद्धचारित्रभूषणा ॥ ३-२७९-२५ (२६६३३)
सा तं परुषमारब्धा वक्तुं साध्वी पतिव्रता ।
नैष कामो भवेन्मूढ यं त्वं प्रार्थयसे हृदा ॥ ३-२७९-२६ (२६६३४)

अप्यहंशस्त्रमादाय हन्यामात्मानमात्मना ।
पतेयं गिरिशृङ्गाद्वा विशेयं वा हुताशनम् ॥ ३-२७९-२७ (२६६३५)
रामं भर्तारमुत्सुज्यन त्वहं त्वां कथञ्चन ।
निहीनमुपतिष्ठेयं शार्दूली क्रोष्टुकं यथा ॥ ३-२७९-२८ (२६६३६)
एतादृशं वचः श्रुत्वा लक्ष्मणः प्रियराघ्नव ।
पिधायकर्णौ सद्वृत्तः प्रस्थितो येन राघवः ॥ ३-२७९-२९ (२६६३७)
स रामस्य पदंगृह्य प्रससार धनुर्धरः ।
अवीक्षमाणो विम्बोष्ठीं प्रययौ लक्ष्मणस्तदा ॥ ३-२७९-३० (२६६३८)
एतस्मिन्नन्तरे रक्षो रावणः प्रत्यदृश्यत ।
अभव्यो भव्यरूपेण भस्मच्छन्न इवानलः ॥ ३-२७९-३१ (२६६३९)
यतिवेपप्रतिच्छन्नो जिहीर्षुस्तामनिन्दिताम् ।
ग्उपागच्छत्स वैदेहीं रावणः पापनिश्चयः' ॥ ३-२७९-३२ (२६६४०)
सा तमालक्ष्यसंप्राप्तं धर्मज्ञा जनकात्मजा ।
निमन्त्रयामास तदा फलमूलाशनादिभिः ॥ ३-२७९-३३ (२६६४१)
अवमत्यततः सर्वं स्वं रूपं प्रत्यपद्यत ।
सान्त्वयामास वैदेहीं कामी राक्षसपुङ्गवः ॥ ३-२७९-३४ (२६६४२)
सीते राक्षसराजोऽहंरावणो नाम विश्रुतः ।
मम लङ्कापुरी नाम्ना रम्या पारे महोदधेः ॥ ३-२७९-३५ (२६६४३)
तत्र त्वं नरनारीषु शोभिष्यसि मया सह ।
भार्या मे भव सुश्रोणि तापसं त्यज राघवम् ॥ ३-२७९-३६ (२६६४४)
एवमादीनि वाक्यानि श्रुत्वा तस्याथ जानकी ।
पिधाय कर्णौ सुश्रोणी मैवमित्यब्रवीद्वचः ॥ ३-२७९-३७ (२६६४५)
प्रपतेद्द्यौः सनक्षत्रा पृथिवी शकलीभवेत् ।
ग्शुष्येत्तोयनिधौ तोयं चन्द्रः शीतांशुतां त्यजेत् ॥ ३-२७९-३८ (२६६४६)
उष्णांशुत्वमथो जह्यादादित्यो वह्निरुष्णताम्'।
त्यक्त्वाशैत्यं भजेन्नाहं त्यजेयंरघुनन्दनम् ॥ ३-२७९-३९ (२६६४७)
कथं हि भिन्नकरटं पद्मिनं वनगोचरम् ।
उपस्थाय महानागं करेणुः सूकरं स्पृशेत् ॥ ३-२७९-४० (२६६४८)
कथं हि पीत्वा माध्वीकं पीत्वा च मधुमाधवीम् ।
लोभं सौवीरके कुर्यान्नारी काचिदिति स्मरेः ॥ ३-२७९-४१ (२६६४९)
इति सा तं समाभाष्य प्रविवेशाश्रमं ततः ।
क्रोधात्प्रस्फुरमाणौष्ठी विधुन्वाना करौ मुहुः ॥ ३-२७९-४२ (२६६५०)
तामधिद्रुत्य सुश्रोणीं रावणः प्रत्यषेधयत् ॥ ३-२७९-४३ (२६६५१)
भर्त्सयित्वातु रूक्षेण स्वरेण गतचेतनाम् ।
मूर्धजेषु निजग्राह ऊर्ध्वमाचक्रमे ततः ॥ ३-२७९-४४ (२६६५२)
तां ददर्श ततो गृध्रो जटायुर्गिरिगोचरः ।

रुदतीं रामरामेति ह्रियमाणां तपस्विनीम् ॥ ३-२७९-४५ (२६६५३)

इति श्रीमन्महाभारते अरण्यपर्वणि रामोपाख्यानपर्वणि
एकोनाशीत्यधिकद्विशततमोऽध्यायः ॥ २७९ ॥
Mahabharata - Vana Parva - Chapter Footnotes

३-२७९-६ राममासाद्यालं रामं नैवासादयेरित्यर्थः ॥
३-२७९-१४ उदकमौर्ध्वदेहिकम् ॥
३-२७९-१९ गोधा ज्याधातवारणं अङ्गुलित्रं च तद्वान् । तारामृगं
तारारूपं मृगम्। प्रजापतिः स्वां दुहितरं मृगो भूत्वा जगाम तस्य
रुद्रः शिरोऽच्छिनत्तदेतन्मृगशीर्षं नाम नक्षत्रम् ॥
३-२७९-२५ पर्यशतृत लक्ष्मणो मय्यभिलाषवानिति शङ्कामकरोत् ॥
३-२७९-२६ नैव कालो हयं मूडति क थ । ध पाठः ॥
३-२७९-४० भिन्नकरटं भिन्नगण्डस्थलंमत्तम् । करेणुर्हस्तिनी ॥
३-२७९-४१ माध्वीकं मधुपुष्पजं मद्यम् मुमाधवीं क्षौद्रजां सुराम्
। सौवीरं काञ्जिकम् ॥

---

वन-अध्यय२८०
॥ श्रीः ॥
३.२८०. अध्यायः २८०

Mahabharata - Vana Parva - Chapter Topics
सीतामादाय गच्छता रावणेन निरोधकत्यजटायुषो युद्धे हननपूर्वकं
लङ्काप्रवेशः ॥ १ ॥
मृगहननपूर्वकं प्रतिनिवृत्तेन रामेण मध्येमार्गं संगतस्य
लक्ष्मणस्य विजने सीतात्यजनेन हेतुना गर्हणपूर्वकं स्वावासगमनम्
॥ २ ॥
सीतान्वेषिणा सलक्ष्मणेन रामेण मार्गे स्वग्राहिणः कबन्धस्य वधः ॥ ३ ॥
कबन्धदेहान्निर्गतेन गन्धर्वेण रामंप्रति पम्पातटे सुग्रीवंप्रति
गमनचोदना ॥ ४ ॥

Mahabharata - Vana Parva - Chapter Text

३-२८०-० (२६६५४)
मार्कण्डेय उवाच। ३-२८०-०क्ष् (२७०५)
सखा दशरथस्यासीज्जटायुररुणात्मजः ।
गृध्रराजो महावीरः संपातिर्यस् सोदरः ॥ ३-२८०-१ (२६६५५)

स ददर्श तदा सीतां रावणाङ्कगतां स्नुषाम् ।
सक्रोधोऽभ्यद्रवत्पक्षी रावणं राक्षसेश्वरम् ॥ ३-२८०-२ (२६६५६)
अथैनमब्रवीद्गृध्रो मुञ्चमुञ्चेति मैथिलीम् ।
ध्रियमाणे मयि कथं हरिष्यसि निशाचर ॥ ३-२८०-३ (२६६५७)
न हिमे मोक्ष्यसे जीवन्यदि नोत्सृजसे वधूम् ।
उक्त्वैवं राक्षसेन्द्रं तं चकर्त नखरैर्भृशम् ॥ ३-२८०-४ (२६६५८)
पक्षतुण्डप्रहारैश्च शतशो जर्जरीकृतम् ।
चक्षार रुधिरं भूरि गिरिः प्रस्रवणैरिव ॥ ३-२८०-५ (२६६५९)
स वध्यमानो गृध्रेण रामप्रियहितैषिणा ।
खड्गमादाय चिच्छेद भुजौ तस् पतत्रिणः ॥ ३-२८०-६ (२६६६०)
निहत्य गृध्रराजं सभिन्नाभ्रशिखरोपमम् ।
ऊर्ध्वमाचक्रमे सीतां गृहीत्वाऽङ्केन राक्षसः ॥ ३-२८०-७ (२६६६१)
यत्रयत्रतु वैदेही पश्यत्याश्रममण्डलम् ।
सरोवा सरितो वाऽपि तत्र मुञ्चति भूषणम् ॥ ३-२८०-८ (२६६६२)
सा ददर्श गिरिप्रस्थे पञ्च वानरपुङ्गवान् ।
तत्र वासो महद्दिव्यमुत्ससर्ज मनस्विनी ॥ ३-२८०-९ (२६६६३)
तत्तेषां वानरेन्द्राणां पपात पवनोद्धतम् ।
मध्ये सुपीतं पञ्चानां विद्युन्मेघान्तरे यथा ॥ ३-२८०-१० (२६६६४)
अचिरेणातिचक्राम खेचरः खे चरन्निव ।
ददर्शाथ पुरीं रम्यां बहुद्वारां मनोरमाम् ॥ ३-२८०-११ (२६६६५)
प्राकारवप्रसंबाधां निर्मितां विश्वकर्मणा ।
प्रविवेशपुरीं लङ्कां ससीतो राक्षसेश्वरः ॥ ३-२८०-१२ (२६६६६)
एवं हृतायां वैदेह्यां रामो हत्वा महामृगम् ।
निवृत्तो ददृशे दूराद्भ्रातरं लक्ष्मणं तदा ॥ ३-२८०-१३ (२६६६७)
कथमुत्सृज्य वैदेहीं वने राक्षससेविते ।
इति तं भ्रातरं दृष्ट्वा प्राप्तोऽसीति व्यगर्हयत् ॥ ३-२८०-१४ (२६६६८)
मृगरूपधरेणाथ रक्षसासोपकर्षणम् ।
भ्रातुरागमनं चैवचिन्तयन्पर्यतप्यत ॥ ३-२८०-१५ (२६६६९)
गर्हयन्नेव रामस्तु त्वरितस्तं समासदत् ।
अपि जीवति वैदेहीमिति पश्यामि लक्ष्मण ॥ ३-२८०-१६ (२६६७०)
तस् तत्सर्वमाचख्यौ सीताया लक्ष्मणो वचः ।
यदुक्तवत्यसदृशं वैदेही पश्चिमं वचः ॥ ३-२८०-१७ (२६६७१)
दह्यमानेन तु हृदा रामोऽभ्यपतदाश्रमम् ।
स ददर्श रतदा गृध्रं निहतं पर्वतोपमम् ॥ ३-२८०-१८ (२६६७२)
राक्षसं शङ्कमानस्तं विकृष्य बलवद्धनुः ।
अभ्यधावत काकुत्स्थस्ततस्तं सहलक्ष्मणः ॥ ३-२८०-१९ (२६६७३)

स तावुवाच तेजस्वी सहितौ रामलक्ष्मणौ ।
गृध्रराजेस्मि भद्रंवां सखा दशरथस् वै ॥ ३-२८०-२० (२६६७४)
तस्य तद्वचनं श्रुत्वा संगृह्य धनुषी शुभे ।
कोयं पितरमस्माकं नाम्नाऽऽहेत्यूचतुश्च तौ ॥ ३-२८०-२१ (२६६७५)
ततो ददृशतुस्तौ तं छिननपक्षद्वयं खगम् ।
तयोः शशंस गृध्रस्तु सीतार्थे रावणाद्वधम् ॥ ३-२८०-२२ (२६६७६)
अपृच्छद्राघवो गृध्रं रावणः कां दिशं गतः ।
तस् गृध्रः शिरःकम्पैराचचक्षे ममार च ॥ ३-२८०-२३ (२६६७७)
दक्षिणामिति काकुत्स्थो विदित्वाऽस्य तदिङ्गितम् ।
संस्कारं लम्भयामास सखायं पूजयन्पितुः ॥ ३-२८०-२४ (२६६७८)
ततो दृष्ट्वाऽऽश्रमपदं व्यपविद्धबृसीकटम् ।
विध्वस्तकलशं शून्यं गोमायुशतसंकुलम् ॥ ३-२८०-२५ (२६६७९)
दुःखशोकसमाविष्टौ वैदेहीहरणार्दितौ ।
जग्मतुर्दण्डकारण्यं दक्षिणेन परंतपौ ॥ ३-२८०-२६ (२६६८०)
वने महति तस्मिंस्तु रामः सौमित्रिणा सह ।
ददर्श मृगयूथनि द्रवमाणानि सर्वशः ॥ ३-२८०-२७ (२६६८१)
शब्दं च घोरं सत्वानां दावाग्नरिववर्धतः ।
अपश्येतां मुहूर्ताच्च कबन्धं घोरदर्शनम् ॥ ३-२८०-२८ (२६६८२)
मेघपर्वतसंकाशं सालस्कन्धं महाभूजम् ।
उरोगतविशालाक्षं महोदरमहामुखम् ॥ ३-२८०-२९ (२६६८३)
यदृच्छयाथ तद्रक्षः करे जग्राह लक्ष्मणम् ।
विषादमगमत्सद्यः सौमित्रिरथ भारत ॥ ३-२८०-३० (२६६८४)
स राममभिसंप्रेक्ष्य कृष्यते येन तन्मुखम् ।
विषण्णश्चाब्रवीद्रामं पश्यावस्थामिमां मम ॥ ३-२८०-३१ (२६६८५)
हरणं चैववैदेह्या मम चायमुपप्लवः ।
राज्यभ्रंशश्च भवतस्तातस्य मरणं तथा ॥ ३-२८०-३२ (२६६८६)
नाहं त्वां मह वैदेह्या समेतं कोसलागतम् ।
द्रक्ष्यामि प्रथिते राज्येपितृपैतामहे स्थितम् ॥ ३-२८०-३३ (२६६८७)
द्रक्ष्यन्त्यार्यस्य धन्या ये कुशलाजशमीदलैः ।
अभिषिक्तस् वदनं सोमं शान्तघनं यथा ॥ ३-२८०-३४ (२६६८८)
एवं बहुविधं धीमान्विललाप स लक्ष्मणः ।
तमुवाचाथकाकुत्स्थः संभ्रमेष्वप्यसंभ्रमः ॥ ३-२८०-३५ (२६६८९)
मा विषीद नरव्याघ्र नैष कश्चिन्मयि स्थिते ।
ग्शक्तो धर्षयितुं वीर सुमित्रानन्दवर्धन'।
छिन्ध्यस्य दक्षिणं बाहुं छिन्नः सव्यो मया भुजः ॥ ३-२८०-३६ (२६६९०)
इत्येवं वदता तस् भुजो रामेण पातितः ।

खङ्गेन भृशतीक्ष्णेन निकृत्तस्तिलकाण्डवत् ॥ ३-२८०-३७ (२६६९१)
ततोऽस्य दक्षिणं बाहुं स्वङ्गेनाजघ्निवान्बली ।
सौमित्रिरपि संप्रेक्ष्यभ्रातरं राघवं स्थितम् ॥ ३-२८०-३८ (२६६९२)
पुनर्जघान पार्श्वे वै तद्रक्षो लक्ष्मणो भृशम् ।
गतासुरपतद्भूमौ कबन्धः सुमहांस्ततः ॥ ३-२८०-३९ (२६६९३)
तस्य देहाद्विनिःसृत्य पुरुषो दिव्यदर्शनः ।
ददृशे दिवमास्थाय दिवि सूर्य इव ज्वलन् ॥ ३-२८०-४० (२६६९४)
पप्रच्छ रामस्तं वाग्मी कस्त्वं प्रब्रूहि पृच्छतः ।
कामया किमिदं चित्रमाश्चर्यं प्रतिभाति मे ॥ ३-२८०-४१ (२६६९५)
तस्याचचक्षेगन्धर्वोविश्वावसुरहं नृप ।
प्राप्तो ब्राह्मणशपेन योनिं राक्षससेविताम् ॥ ३-२८०-४२ (२६६९६)
रावणेन हृतासीता लङ्कायां संनिवेशिता ।
सुग्रीवमभिगच्छस्वस ते साह्यं करिष्यति ॥ ३-२८०-४३ (२६६९७)
एषा पम्पा शिवजला हंसकारण्डवायुता ।
ऋश्यमूकस्य शैलस्य संनिकर्षे तटाकिनी ॥ ३-२८०-४४ (२६६९८)
वसते तत्रसुग्रीवश्चतुर्भिः सचिवैः सह ।
भ्राता बानरराजस् वालिनो हेममालिनः ॥ ३-२८०-४५ (२६६९९)
तेन त्वं सहसंगम्य दुःखमूलं निवेदय ।
समानशीलो भवतः साहाय्यं स करिष्यति ॥ ३-२८०-४६ (२६७००)
एतावच्छक्यमस्माभिर्वक्तुं द्रष्टासि जानकीम् ।
ध्रुवं वानरराजस् विदितो रावणालयः ॥ ३-२८०-४७ (२६७०१)
इत्युक्त्वाऽन्तर्हितो दिव्यः पुरुषः स महाप्रभः ।
विस्मयं जग्मतुश्चोभौ प्रवीरौ रामलक्ष्मणौ ॥ ३-२८०-४८ (२६७०२)

इति श्रीमन्महाभारते अरण्यपर्वणि रामोपाख्यानपर्वणि
अशीत्यधिकद्विशततमोऽध्यायः ॥

Mahabharata - Vana Parva - Chapter Footnotes

३-२८०-३ ध्रियमाणे जीवति ॥
३-२८०-४ नखरैः नखैः ॥
३-२८०-५ चक्षार सुस्राव ॥
३-२८०-७ अङ्केन उत्सङ्गेन ॥
३-२८०-९ गिरिप्रस्थे पर्वतशिखरे ॥
३-२८०-१२ प्राकारः परिधिभित्तिः वप्रस्तद्बाह्यं वेणुमयं दुर्गं
ताभ्यां संबाधा दुर्गमा ॥
३-२८०-१४ कथं प्राप्तोसीति संबन्धः ॥

३-२८०-२० वां युवयोः ॥
३-२८०-२१ आहवृते ॥
३-२८०-२९ उरसि नेत्रे उदरे मुखं च यस्य । कबन्धः शोर्षहीनः पुमान् ॥
३-२८०-३१ येन यतस्तन्मुखं ततः कृष्यते ॥
३-२८०-४१ कामया इच्छया ॥
३-२८०-४४ पम्पा नामतः । तटाकिनी सरसी ॥

---

वन-अध्यय२८१
॥ श्रीः ॥
३.२८१. अध्यायः २८१

Mahabharata - Vana Parva - Chapter Topics
रामण सुग्रीवेण सख्यकरणपूर्वकं वालिहननम् ॥ १ ॥
रावणेनाशोकवने सीतानिवेशनपूर्वकं तद्वशीकरणाय राक्षसीनां नियोजनम् ॥ २ ॥
तत्र त्रिजटया रामरावणयोरिष्टानिष्टसूचकस्वदृष्टस्वाप्नप्रकारकथनेन सीतायाः परिसान्त्वनम् ॥ ३ ॥

Mahabharata - Vana Parva - Chapter Text

३-२८१-० (२६७०३)
मार्कण्डेय उवाच। ३-२८१-०क्ष् (२७०६)
ततोऽविदूरे नलिनीं रप्रभूतकमलोत्पलाम् ।
सीताहरणदुःखार्तः पम्पां रामः समासदत् ॥ ३-२८१-१ (२६७०४)
मारुतेन सुशीतेन सुखेनामृतगन्धिना ।
सेव्यमानो वने तस्मिञ्जगाम मनसा प्रियाम् ॥ ३-२८१-२ (२६७०५)
विललाप सराजेन्द्रस्तत्रकान्तानुस्मरन् ।
कामबाणाभिसंतप्तं सौमित्रिस्तमथाब्रवीत् ॥ ३-२८१-३ (२६७०६)
न त्वामेवंविधो भावः स्प्रष्टुमर्हति मानद ।
आत्मवन्तमिव व्याधिः पुरुषंवृद्धसेविनम् ॥ ३-२८१-४ (२६७०७)
प्रवृत्तिरुपलब्धा ते वैदेह्या रावणस्य च ।
तां त्वं पुरुषकारेण बुद्ध्या चैवोपपादय ॥ ३-२८१-५ (२६७०८)
अभिगच्छाव सुग्रीवं शैलस्थं हरिपुङ्गवम् ।
मयि शिष्ये च भृत्ये च सहाये च समाश्वस ॥ ३-२८१-६ (२६७०९)
एवं बहुविधैर्वाक्यैर्लक्ष्मणेन स राघवः ।
उक्तः प्रकृतिमापेदे कार्ये चानन्तरोऽभवत् ॥ ३-२८१-७ (२६७१०)

निषेव्य वारि पम्पायास्तर्पयित्वा पितृनपि ।
प्रतस्थतुरभौ वीरौ भ्रातरौ रामलक्ष्मणौ ॥ ३-२८१-८ (२६७११)
तावृश्यमूकमभ्येत्य बहुमूलफलद्रुमम् ।
गिर्यग्रे वानरान्पञ्वीरौ ददृशतुस्तदा ॥ ३-२८१-९ (२६७१२)
सुग्रीवः प्रेषयामास सचिवं वानरं तयोः ।
बुद्धिमन्तं हनूमन्तं हिमवन्तमिव स्थितम् ॥ ३-२८१-१० (२६७१३)
तेन संभाष्य पूर्वं तौ सुग्रीवमभिजग्मतुः ।
रसख्यं वानरराजेन चक्रे रामस्तदा नृप ॥ ३-२८१-११ (२६७१४)
ग्ततः सीतां हृतां श्रुत्वा सुग्रीवो वालिना कृतम् ।
दुःखमाख्यातवान्सर्वं रामायामिततेजसे' ॥ ३-२८१-१२ (२६७१५)
तद्वासो दर्शयामास तस् कार्ये निवेदिते ।
वानराणां तु यत्सीता ह्रियमाणा व्यपासृजत् ॥ ३-२८१-१३ (२६७१६)
तत्प्रत्ययकरं लब्ध्वा सुग्रीवं प्लवगाधिपम् ।
पृथिव्यां वानरैश्वर्ये स्वयंरामोऽभ्यषेचयत् ॥ ३-२८१-१४ (२६७१७)
प्रतिजज्ञे चकाकुत्स्थः समरे वालिनो वधम् ।
सुग्रीवश्चापि वैदेह्याः पुनरानयनं नृप ॥ ३-२८१-१५ (२६७१८)
इत्येवं समयं कृत्वाविश्वास्य च परस्परम् ।
अभ्येत्य सर्वकिष्किन्धां तस्थुर्युद्धाभिकाङ्क्षिणः ॥ ३-२८१-१६ (२६७१९)
सुग्रीवः प्राप्यकिष्किन्धां ननादौघनिभस्वनः ।
नसाय् तन्ममृषे वाली तारा तं प्रत्यषेधयत् ॥ ३-२८१-१७ (२६७२०)
यथानदतिसुग्रीवो बलवानेष वानरः ।
मन्ये चाश्रयवान्प्राप्तो न त्वं निष्क्रान्तुमर्हसि ॥ ३-२८१-१८ (२६७२१)
हेममाली ततो वाली तारां ताराधिपाननाम् ।
प्रोवाच वचनं वाग्मी तां वानरपतिः पतिः ॥ ३-२८१-१९ (२६७२२)
सर्वभूतरुतज्ञा शृणु सर्वं कपीश्वर ॥
केन चाश्रयवान्प्राप्तो ममैप भ्रातृगन्धिकः ॥ ३-२८१-२० (२६७२३)
चिन्तयित्वा मुहूर्तं तु तारा ताराधिपप्रभा ।
पतिमित्यब्रवीत्प्राज्ञा शृणु सर्वं कपीश्वर ॥ ३-२८१-२१ (२६७२४)
हृतदारो महासत्वोरामो दशरथात्मजः ।
रतुल्यारिमित्रतां प्राप्तः सुग्रीवेण धनुर्धरः ॥ ३-२८१-२२ (२६७२५)
भ्राता चास्य महाबाहुः सौमित्रिरपराजितः ।
लक्ष्मणो नाम मेधावी स्थितः कार्यार्थसिद्धये ॥ ३-२८१-२३ (२६७२६)
मैन्दश्च द्विविदश्चापि हनूमांश्चानिलात्मजः ।
जाम्बवानृक्षराजश्च सुग्रीवसचिवाः स्थिताः ॥ ३-२८१-२४ (२६७२७)
सर्व एते महात्मानो बुद्धिमन्तो महाबलाः ।
अलं तव विनाशाय रामवीर्यव्यपाश्रयाः ॥ ३-२८१-२५ (२६७२८)

तस्यास्तदाक्षिप्य वचो हितमुक्तं कपीश्वरः ।
पर्यशङ्कत तामीर्षुः सुग्रीवगतमानसाम् ॥ ३-२८१-२६ (२६७२९)
तारां परुषमुक्त्वा तु निर्जगाम गुहामुखात् ।
स्थितं माल्यवतोऽभ्याशे सुग्रीवं सोभ्यभाषत ॥ ३-२८१-२७ (२६७३०)
असकृत्त्वं मया क्लीव निर्जितो जीवितप्रियः ।
मुक्तो गच्छसि दुर्बुद्धे कथंकारं रणे पुनः ॥ ३-२८१-२८ (२६७३१)
इत्युक्तः प्राहसुग्रीवो भ्रातरं हेतुमद्वचः ।
प्राप्तकालममित्रघ्नं रामं सम्बोधयन्निव ॥ ३-२८१-२९ (२६७३२)
हृतराज्यस्य मे राजन्हृतदारस्य च त्वया ।
किं मे जीवितसामर्थ्यमिति विद्धि समागतम् ॥ ३-२८१-३० (२६७३३)
एवमुक्त्वाबहुविधं ततस्तौ सन्निपेततुः ।
समरे वालिसुग्रीवौ सालतालशिलायुधौ ॥ ३-२८१-३१ (२६७३४)
उभौ जघ्नतुरन्योन्यमुभौ भूमौ निपेततुः ।
उभौ ववल्गतुश्चित्रं मुष्टिभिश्च निजघ्नतुः ॥ ३-२८१-३२ (२६७३५)
उभौ रुधिरसंसिक्तौ नखदन्तपरिक्षतौ ।
शुशुभाते तदा वीरौ पुष्पिताविव किंशुकौ ॥ ३-२८१-३३ (२६७३६)
न विशेषस्तयोर्युद्धे यदा कश्चन दृश्यते ।
सुग्रीवस् तदा मालां हनुमान्कण्ठ आसजत् ॥ ३-२८१-३४ (२६७३७)
स मालया तदा वीरः शुशुभे कण्ठसक्तया ।
श्रीमानिव महाशैलो मलयो मेघमालया ॥ ३-२८१-३५ (२६७३८)
कृतचिह्नं तु सुग्रीवं रामो दृष्ट्वा महाधनुः ।
विचकर्ष धनुःश्रेष्ठं वालिमुद्दिश्य लक्षयन् ॥ ३-२८१-३६ (२६७३९)
विष्फारस्तस् धनुषो यन्त्रस्येव तदा बभौ ।
वितत्रास तदा वाली शरेणाभिहतो हृदि ॥ ३-२८१-३७ (२६७४०)
स भिन्नहृदयो वाली वक्राच्छोणितमुद्वमन् ।
ददर्शावस्थितं रामं ततः सौमित्रिणा सह ॥ ३-२८१-३८ (२६७४१)
गर्हयित्वास काकुत्स्थं पपात भुवि मूर्च्छितः ।
तारा ददर्श तं भूमौ तारापतिमिव च्युतम् ॥ ३-२८१-३९ (२६७४२)
हते वालिनि सुग्रीवः किष्किन्धां प्रत्यपद्यत ।
तां तारापतिमुखीं तारां निपतितेश्वराम् ॥ ३-२८१-४० (२६७४३)
रामस्तु चतुरो मासान्पृष्ठे माल्यवतः शुभे ।
निवासमकरोद्धीमान्सुग्रीवेणाभ्युपस्थितः ॥ ३-२८१-४१ (२६७४४)
रावणोऽपिपुरीं गत्वालङ्कां कामबलात्कृतः ।
सीतां निवेशयामास भवने नन्दनोपमे ॥ ३-२८१-४२ (२६७४५)
अशोकवनिकाभ्यासे तापसास्रमसन्निभे ।
भर्तृस्मरणतन्वङ्गी तापसीवेषधारिणी ॥ ३-२८१-४३ (२६७४६)

उपवासतपःशीला ततः सा पृथुलेक्षणा ।
उवास दुःखवसतिं फलमूलकृताशना ॥ ३-२८१-४४ (२६७४७)
दिदेश राक्षसीस्तत्ररक्षणे राक्षसाधिपः ।
प्रासासिशूलपरशुमुद्गरालातधारिणीः ॥ ३-२८१-४५ (२६७४८)
द्व्यक्षीं त्र्यक्षीं ललाटक्षीं दीर्घजिह्वामजिह्विकाम् ।
त्रिस्तनीमेकपादां च त्रिजटामेकलोचनाम् ॥ ३-२८१-४६ (२६७४९)
एताश्चान्याश्च दीप्ताक्ष्यः करभोत्कटमूर्धजाः ।
परिवार्यासते सीतां दिवारात्रमतन्द्रिताः ॥ ३-२८१-४७ (२६७५०)
तास्तु तामायतापाङ्गीं पिशाच्यो दारुणस्वराः ।
तर्जयन्ति सदा रौद्राः परुषव्यञ्जनस्वराः ॥ ३-२८१-४८ (२६७५१)
खादाम पाटयामैनां तिलशः प्रविभज्यताम् ।
येयं भर्तारमस्माकमवमत्येह जीवति ॥ ३-२८१-४९ (२६७५२)
इत्येवं परिभर्त्सन्तीस्त्रासयानाः पुनः पुनः ।
भर्तृशोकसमाविष्टा निःश्वस्येदमुवाच ताः ॥ ३-२८१-५० (२६७५३)
आर्याः खादत मां शीघ्रं न मे लोभोस्ति जीविते ।
विना तं पुण्डरीकाक्षं नीलकुञ्चितमूर्धजम् ॥ ३-२८१-५१ (२६७५४)
अद्यैवाहं निराहारा जीवितप्रियवर्जिता ।
शोषयिष्यामि गात्राणि बल्ली तलगता यथा ॥ ३-२८१-५२ (२६७५५)
न त्वन्यमभिगच्छेयं पुमांसं राघवादृते ।
इति जानीत सत्यं मेक्रियतां यदनन्तरम् ॥ ३-२८१-५३ (२६७५६)
तस्यास्तद्वचनं श्रुत्वा राक्षस्यस्ताः खरस्वनाः ।
आख्यातुं राक्षसेन्द्राय जग्मुस्तत्सर्वमादितः ॥ ३-२८१-५४ (२६७५७)
गतासु तासु सर्वासु त्रिजटा नाम राक्षसी ।
सान्त्वयामास वैदेहीं धर्मज्ञा प्रियवादिनी ॥ ३-२८१-५५ (२६७५८)
सीते वक्ष्यामि ते किंचिद्विश्वासं कुरु मे सखि ।
भयं त्वं त्यज वामोरु शृणु चेदं वचो मम ॥ ३-२८१-५६ (२६७५९)
अविन्ध्यो नाम मेधावी वृद्धो राक्षसपुङ्गवः ।
स रामस्य हितान्वेषी त्वदर्थे मामचूचुदत् ॥ ३-२८१-५७ (२६७६०)
सीता मद्वचनाद्वाच्या समाश्वास्य प्रसाद्य च ।
भर्ता तेकुशली रामोलक्ष्मणानुगतो बली ॥ ३-२८१-५८ (२६७६१)
सख्यं वानरराजेन शक्रप्रतिमतेजसा ।
कृतवान्राघवः श्रीमांस्त्वदर्थे च समुद्यतः ॥ ३-२८१-५९ (२६७६२)
मा च ते भूद्भयं भीरु रावणाल्लोकगर्हितात् ।
नलकूबरशापेन रक्षिता ह्यसि नन्दिनि ॥ ३-२८१-६० (२६७६३)
शप्तो ह्येष पुरा पापो वधूं रम्भां परामृशन् ।
न शक्नोत्यवशां नारीमुपैतुमजितेन्द्रियः ॥ ३-२८१-६१ (२६७६४)

क्षिप्रमेष्यति ते भर्ता सुग्रीवेणाभिरक्षितः ।
सौमित्रिसहितो धीमांस्त्वां चेतो मोक्षयिष्यति ॥ ३-२८१-६२ (२६७६५)
स्वप्ना हि सुमहाघोरा दृष्टा मेऽनिष्टदर्शनाः ।
विनाशायास्य दुर्बुद्धेः पौलस्त्यस्य कुलस्य च ॥ ३-२८१-६३ (२६७६६)
दारुणो ह्येष दुष्टात्मा क्षुद्रकर्मा निशाचरः ।
स्वभावाच्छीलदोषेण सर्वेषां भयवर्धनः ॥ ३-२८१-६४ (२६७६७)
स्पर्धते सर्वदेवैर्यः कालोपहतचेतनः ।
मया विनासलिङ्गानि स्वप्ने दृष्टानि तस्य वै ॥ ३-२८१-६५ (२६७६८)
तैलाभिषिक्तो विकचो मज्जनप्के दशाननः ।
असकृत्स्वरयुक्ते तु रथे नृत्यन्निव स्थितः ॥ ३-२८१-६६ (२६७६९)
कुम्भकर्णादयश्चेमे नग्नाः पतितमूर्धजाः ।
गच्छन्ति दक्षिणामाशां रक्तमाल्यानुलेपनाः ॥ ३-२८१-६७ (२६७७०)
श्वेतातपत्रः सोष्णीषः शुक्लमाल्यानुलेपनः ।
श्वेतपर्वतमारूढ एक एव विभीषणः ॥ ३-२८१-६८ (२६७७१)
सचिवाश्चास्य चत्वारः शुक्लमाल्यानुलेपनाः ।
श्वेतपर्वतमारूढा मोक्ष्यन्तेऽस्मान्महाभयात् ॥ ३-२८१-६९ (२६७७२)
रामस्यास्त्रेण पृथिवी परिक्षिप्ता ससागरा ।
यशसा पृथिवीं कृत्स्नां पूरयिष्यति ते पतिः ॥ ३-२८१-७० (२६७७३)
हस्तिसक्थिसमारूढो भुञ्जानो मधुपायसम् ।
लक्ष्मणश्च मया दृष्टो दिधक्षुः सर्वतो दिशम् ॥ ३-२८१-७१ (२६७७४)
रुदती रुधिरार्द्राङ्गी व्याघ्रेण परिरक्षिता ।
असकृत्त्वं मया दृष्टा गच्छन्ती दिशमुत्तराम् ॥ ३-२८१-७२ (२६७७५)
हर्षमेष्यसि वैदेहि क्षिप्रं भर्त्रा समन्विता ।
राघवेण सहभ्रात्रा सीते त्वमचिरादिव ॥ ३-२८१-७३ (२६७७६)
इत्येतन्मृगशावाक्षी तच्छ्रुत्वा त्रिजटावचः ।
बभूवाशावती बाला पुनर्भर्तृसमागमे ॥ ३-२८१-७४ (२६७७७)
तावदभ्यागता रौद्र्यः पिशाच्यस्ताःसुदारुणाः ।
ददृशुस्तां त्रिजटया सहासीनां यथापुरम् ॥ ३-२८१-७५ (२६७७८)

इति श्रीमन्महाभारते अरण्यपर्वणि रामोपाख्यानपर्वणि
एकाशीत्यधिकद्विशततमोऽध्यायः ॥ २८१ ॥
Mahabharata - Vana Parva - Chapter Footnotes

३-२८१- अविदूरे समीपे । नलिनीं पुष्करिणीम् ॥
३-२८१-२ अमृतगन्धिनाऽमृतसदृशेन ॥
३-२८१-५ उपपादय सफलीकुरु ॥

३-२८१-७ अनन्तरः संलग्नुः ॥
३-२८१-९ ऋश्यमूकं पर्वतम् ॥
३-२८१-१७ ओघो जनवृन्दस्तन्निभः स्वनो यस्य ॥
३-२८१-१८ आश्रयवान् परबलाश्रितः ॥
३-२८१-२६ ईर्षुरीर्ष्यालुः ॥
३-२८१-२८ मुक्तो गच्छसि दुर्बुद्धे कथं घोरे पुनरिति क
। पाठः। मुक्तो ज्ञातिरिति ज्ञात्वा का त्वरा मरणे पुनः इति झ। पाठः
॥
३-२८१-३० जीवितसामर्थ्यं जीवनस्य श्लाघ्यत्वम् ॥
३-२८१-४७ करभोत्कटमूर्धजाः उष्ट्रसदृशकेश्यः ॥
३-२८१-४८ परुषव्यञ्जनखरात्मकाः शब्दा यासां ताः ॥
३-२८१-५२ व्याली तालगता ययेति ख झ पाठः ॥
३-२८१-६१ वधूं स्नुषाम् ॥
३-२८१-७० परिक्षिप्ता व्याप्ता ॥

---

वन-अध्यय२८२
॥ श्रीः ॥
३.२८२. अध्यायः २८२

Mahabharata - Vana Parva - Chapter Topics
रावणेन सीतासमीपमेत्य बहुधाप्रलोभनेऽप्यविकृतमानसया तया प्रत्याख्याने स्वावासंप्रतिगमनम् ॥ १ ॥

Mahabharata - Vana Parva - Chapter Text

३-२८२-० (२६७७९)
मार्कण्डेय उवाच। ३-२८२-०क्ष् (२७०७)
ततस्तां भर्तृशोकार्तां दीनां मलिनवाससम् ।
मणिशेषाभ्यलंकारां रुदतीं च पतिव्रताम् ॥ ३-२८२-१ (२६७८०)
राक्षसीभिरुपास्यन्तीं समासीनां शिलातले ।
रावणःकामबाणार्तो ददर्शोपससर्प च ॥ ३-२८२-२ (२६७८१)
देवदानवगन्धर्वयक्षकिंपुरुषैर्युधि ।
अजितोशोकवनिकां ययौ कन्दर्पपीडितः ॥ ३-२८२-३ (२६७८२)
दिव्याम्बरधरः श्रीमन्सुमृष्टमणिकुण्डलः ।
विचित्रमाल्यमुकुटो वसन्त इव मूर्तिमान् ॥ ३-२८२-४ (२६७८३)
न कल्पवृक्षसदृशोयत्नादपि विभूषितः ।
श्मशानचैत्यद्रुमवद्भूषितोऽपि भयंकरः ॥ ३-२८२-५ (२६७८४)

स तस्यास्तनुमध्यायाः समीपे रजनीचरः ।
ददृशे रोहिणीमेत्य शनैश्चर इव ग्रैहः ॥ ३-२८२-६ (२६७८५)
स तामामन्त्र्य सुश्रोणीं पुष्पकेतुशराहतः ।
इदमित्यब्रवीद्वाक्यं त्रस्तां रौहीमिवाबलाम् ॥ ३-२८२-७ (२६७८६)
सीते पर्याप्तमेतावत्कृतोभर्तुरनुग्रहः ।
प्रसादं कुरु तन्वङ्गि क्रियतां परिकर्म ते ॥ ३-२८२-८ (२६७८७)
भजस्वमां वरारोहे महार्हाभरणाम्बरा ।
भवमे सर्वनारीणामुत्तमा वरवर्णिनी ॥ ३-२८२-९ (२६७८८)
सन्ति मे देवक्न्याश्च गन्धर्वाणआं च योषितः ।
सन्ति दानवन्याश् दैत्यानां चापि योषितः ।
ग्तासामद्यविशालाक्षि सर्वासां मे भवोत्तमा ॥ ३-२८२-१० (२६७८९)
चतुर्दश पिशाचीनां कोट्यो मे वचने स्थिताः ।
द्विस्तावत्पुरुषादानां रक्षसां भीमकर्मणाम् ॥ ३-२८२-११ (२६७९०)
ततो मे त्रिगुणा यक्षा ये मद्वचनकारिणः ।
केचिदेव धनाध्यक्षं भ्रातरं मे समाश्रिताः ॥ ३-२८२-१२ (२६७९१)
गन्दर्वाप्सरसो भद्रे मामापानगतं सदा ।
उपतिष्ठन्ति वामोरु यथैव भ्रातरं मम ॥ ३-२८२-१३ (२६७९२)
पुत्रोऽहमपि विप्रर्षेः साक्षाद्विश्रवसो मुनेः ।
पञ्चमो लोकपालानामिति मे प्रथितं यशः ॥ ३-२८२-१४ (२६७९३)
दिव्यानि भक्ष्यभोज्यानि पानानि विविधानि च ।
यथैव त्रिदशेशस्यतथैव मम भामिनि ॥ ३-२८२-१५ (२६७९४)
क्षीयतां दुष्कृतं कर्म वनवासकृतं तव ।
भार्या मे भवसुश्रोणि यथा मण्डोदरीतथा ॥ ३-२८२-१६ (२६७९५)
इत्युक्ता तेन वैदेही परिवृत्य सुभानना ।
तृणमनतरतः कृत्वातमुवाच निशाचरम् ॥ ३-२८२-१७ (२६७९६)
अशिवेनातिवामोरूरजस्रं नेत्रवारिणा ।
स्तनावपतितौ बाला संहतावभिवर्षती ॥ ३-२८२-१८ (२६७९७)
ग्व्यवस्थाप्यकथंचित्सा विषादादतिमोहिता'।
उवाच वाक्यं तं क्षुद्रं वैदेही पतिदेवता ॥ ३-२८२-१९ (२६७९८)
असकृद्वदतो वाक्यमीदृशं राक्षसेश्वर ।
विषादयुक्तमेतत्ते मया श्रुतमभाग्यया ।
तद्भद्रमुख भद्रं ते मानसं विनिवर्त्यताम् ॥ ३-२८२-२० (२६७९९)
परदाराऽस्म्यलभ्या च सततं च पतिव्रता ।
न चैवौपयिकी भार्य मानुषी तव राक्षस ॥ ३-२८२-२१ (२६८००)
विवशां धर्षयित्वच कां त्वं प्रीतिमवाप्स्यसि ।
न च पालयसे धर्मं लोकपालसमः कथम् ॥ ३-२८२-२२ (२६८०१)

भ्रातरं राजराजं तं महेश्वरसखं प्रभुम् ।
धनेश्वरं व्यपदिशन्कथं त्विह न लज्जसे ॥ ३-२८२-२३ (२६८०२)
इत्युक्त्वा प्रारुदत्सीता कम्पयन्ती पयोधरौ ।
शिरोधरां च तन्वङ्गी मुखं प्रच्छाद्यवाससा ॥ ३-२८२-२४ (२६८०३)
तस्य रुदत्या भामित्या दीर्घा वेणी सुसयता ।
ददृशे स्वसिता स्निग्धा काली व्यालीव मूर्धनि ॥ ३-२८२-२५ (२६८०४)
श्रुत्वा तद्रावणो वाक्यं सीतयोक्तं सुनिषुरम् ।
प्रत्याख्यातोऽपिदुर्मेधाः पुनरेवाब्रवीद्वचः ॥ ३-२८२-२६ (२६८०५)
काममङ्गनि मे सीते दुनोतु मकरध्वजः ।
नत्वामकामां सुश्रोणीं समेष्ये चारुहासिनीं ॥ ३-२८२-२७ (२६८०६)
किंनु शक्यं मया कर्तुं यत्त्वमद्यापिमानुषम् ।
आहारभूतमस्माकं राममेवानुरुध्यसे ॥ ३-२८२-२८ (२६८०७)
इत्युक्त्वा तामनिन्द्याङ्गीं स राक्षसमहेश्वरः ।
तत्रैवान्तर्हितो भूत्वा जगामाभिमतां दिशम् ॥ ३-२८२-२९ (२६८०८)
राक्षसीभिः परिवृतावैदेही शोककर्शिता ।
सेव्यमाना त्रिजटया तत्रैव न्यवसत्तदा ॥ ३-२८२-३० (२६८०९)

इति श्रीमन्महाभारते अरण्यपर्वणि रामोपाख्यानपर्वणि
द्व्यशीत्यधिकद्विशततमोऽध्यायः ॥ २८२ ॥
Mahabharata - Vana Parva - Chapter Footnotes

३-२८२-२ उपास्यन्तीमुपास्यमानाम् ॥
३-२८२-७ रौहीं हरिणीम् ॥
३-२८२-८ परिकर्म वस्त्राभरणादिना प्रसाधनम् ॥
३-२८२-२० विनिवर्त्यतां मत्त इति शेषः ॥
३-२८२-२१ औपयिकी उपयोगाही ॥

---

वन-अध्यय२८३
॥ श्रीः ॥
३.२८३. अध्यायः २८३

Mahabharata - Vana Parva - Chapter Topics
रामेण शरदागमेऽपिविपयासक्त्यास्वानुपसर्पिणं सुग्रीवप्रति
लक्ष्मणप्रेषणम् ॥ १ ॥
सुग्रीवेण सहरामास्तिकमागतेन लक्ष्मणेन तंप्रति सीतान्वेषणाय
सुग्रीवकृतवानरप्रेपणनिवेदनम् ॥ २ ॥

ततो लङ्कापुरात्प्रतिनिवृत्तेन हनुमताऽङ्गदादिभिः सह मधुवनभङ्गपूर्वकंरामाय सीतावृत्तान्तादिनिवेदनपूर्वकं तद्दत्तचूडामणिदानम् ॥ ३ ॥

Mahabharata - Vana Parva - Chapter Text

३-२८३-० (२६८१०)
मार्कण्डेय उवाच। ३-२८३-०क्ष् (२७०८)
राघवः सहसौमित्रिः सुग्रीवेणाभिपालितः ।
वसनमाल्यवतः पृष्ठे ददर्श विमलं नभः ॥ ३-२८३-१ (२६८११)
सदृष्ट्वाविमले व्योम्नि निर्मलं शसलक्षणम् ।
ग्रहनक्षत्रताराभिरनुयान्तममित्रहा ॥ ३-२८३-२ (२६८१२)
कुमुदोत्पलपद्मानां गन्धमादाय वायुना ।
महीधरस्थः शीतेन सहसाप्रतिबोधितः ॥ ३-२८३-३ (२६८१३)
प्रभाते लक्ष्मणं वीरमभ्यभाषत दुर्मनाः ।
सीतां संस्मृत् यधर्मात्मा रुद्धां राक्षसवेश्मनि ॥ ३-२८३-४ (२६८१४)
गच्छ लक्ष्मण जानीहि किष्किंदायां कपीश्वरम् ।
प्रमत्तं ग्राम्यधर्मेषु कृतघ्नं स्वार्थपण्डितम् ॥ ३-२८३-५ (२६८१५)
योसौ कुलाधमो मूढो मया राज्येऽभिषेचितः ।
सर्ववानरगोपुच्छा यमृक्षाश्च भजन्ति वै ॥ ३-२८३-६ (२६८१६)
यदर्थं निहतो बाली मया रघुकुलोद्वह ।
त्वया सहमहाबाहो किष्किन्धोपवने तदा ॥ ३-२८३-७ (२६८१७)
कृतघ्नं तमहं मन्ये वानरापशदं भुवि ।
यो मामेवंगतो मूढो न जानीतेऽद्य लक्ष्मण ॥ ३-२८३-८ (२६८१८)
असौ मन्ये न जानीते समयप्रतिपालनम् ।
कृतोपकारं मां नूनमवमत्याल्पया धिया ॥ ३-२८३-९ (२६८१९)
यदितावदनुद्युक्तः शेते कामसुखात्मकः ।
नेतव्यो वालिमार्गेण सर्वभूतगतिं त्वया ॥ ३-२८३-१० (२६८२०)
अथापि घटतेऽस्माकमर्थे वानरपुङ्गवः ।
तमादायैव काकुत्स्थ त्वरावान्भव माचिरम् ॥ ३-२८३-११ (२६८२१)
इत्युक्तो लक्ष्मणो भ्रात्रा गुरुवाक्यहिते रतः ।
प्रतस्थे रुचिरं गृह्य समार्गणगुणं धनुः ॥ ३-२८३-१२ (२६८२२)
किष्किन्धाद्वारमासाद्यप्रविवेशानिवारितः ।
सक्रोध इतितं मत्वाराजा प्रत्युद्ययौ हरिः ॥ ३-२८३-१३ (२६८२३)
तं सदारोविनीतात्मा सुग्रीवः प्लवगाधिपः ।
पूजया प्रतिजग्राह प्रीयमाणस्तदर्हया ॥ ३-२८३-१४ (२६८२४)

तमब्रवीद्रामवचः सौमित्रिरकुतोभयः ।
स तत्सर्वमशेषेण श्रुत्वा प्रह्वः कृताञ्जलिः ॥ ३-२८३-१५ (२६८२५)
सभृत्यदारो राजेन्द्रसुग्रीवो वानराधिपः ।
इदमाह वचः प्रीतो लक्ष्मणं नरकुञ्जरम् ॥ ३-२८३-१६ (२६८२६)
नास्मि लक्ष्मण दुर्मेधा नाकृतज्ञो न निर्घृणः ।
श्रूयतां यः प्रयत्नो मे सीतापर्येषणे कृतः ॥ ३-२८३-१७ (२६८२७)
दिशः प्रस्थापिताः सर्वेविनीता हरयो मया ।
सर्वेषां च कृतः कालो मासेऽभ्यागमने पुनः ॥ ३-२८३-१८ (२६८२८)
यैरियं सवना साद्रिः सपुरा सागराम्बरा ।
विचेतव्या मही वीर सग्रामनगराकरा ॥ ३-२८३-१९ (२६८२९)
स मासः पञ्चरात्रेण पूर्णो भवितुमर्हति ।
ततः श्रोष्यसि रामेण सहितः सुमहत्प्रियम् ॥ ३-२८३-२० (२६८३०)
इत्युक्तो लक्ष्मणत्तेन कवानरेनद्रेण धीमता ।
त्यक्त्वारोषमदीनात्मा सुग्रीवं प्रत्यपूजयत् ॥ ३-२८३-२१ (२६८३१)
सरामं सहसुग्रीवो माल्यवत्पुष्ठमास्थितम् ।
भिगम्योदयं तस्य कार्यस्य प्रत्यवेदयत् ॥ ३-२८३-२२ (२६८३२)
इत्येवंवानरेनद्रास्ते समाजन्मुः सहस्रशः ।
दिशस्तिस्रो विचित्याथ न तु ये दक्षिणां गताः ॥ ३-२८३-२३ (२६८३३)
आचख्युस्तत्र रामाय महीं सागरमेखलाम् ।
विचितां न तु वैदेह्या दर्शनं रावणस् वा ॥ ३-२८३-२४ (२६८३४)
गतास्तु दक्षिणामाशां ये वै वानरपुङ्गवाः ।
आशावांस्तेषु काकुत्स्थः प्राणानार्तोऽभ्यधारयत् ॥ ३-२८३-२५ (२६८३५)
द्विमासोपरमे काले व्यतीते प्लवगास्ततः ।
सुग्रीवमभिगम्येदं त्वरिता वाक्यमब्रुवन् ॥ ३-२८३-२६ (२६८३६)
रक्षितंवालिना यत्तत्स्फीतं मधुवनं महत् ।
त्वया च प्लवगश्रेष्ठ तद्भुङ्क्ते पवनात्मजः ॥ ३-२८३-२७ (२६८३७)
वालिपुत्रोऽङ्गदश्चैव ये चान्ये प्लवगर्षभाः ।
विचेतुं दक्षिणामाशां राजन्प्रस्थापितास्त्वया ॥ ३-२८३-२८ (२६८३८)
तेषामपनयं श्रुत्वा मेने सकृतकृत्यताम् ।
कृतार्थानां हि भृत्यानामेतद्भवति चेष्टितम् ॥ ३-२८३-२९ (२६८३९)
स तद्रामाय मेधावी शशंस प्लवगर्षभः ।
रामश्चाप्यनुमानेन मेने दृष्टां तु मैथिलीम् ॥ ३-२८३-३० (२६८४०)
हनुमत्प्रमुखाश्चापि विश्रान्तास्ते प्लवङ्गमाः ।
अभिजग्मुर्हरीन्द्रं तं रामलक्ष्मणसन्निधौ ॥ ३-२८३-३१ (२६८४१)
गतिं च मुखवर्णं च दृष्ट्वारामो हनूमतः ।
अगमत्प्रत्ययं भूयो दृष्टा सीतेति भारत ॥ ३-२८३-३२ (२६८४२)

हनूमत्प्रमुखास्ते तु वानराः पूर्णमानसाः ।
प्रणेमुर्विधिवद्रामं सुग्रीवं लक्ष्मणं तथा ॥ ३-२८३-३३ (२६८४३)
तानुवाचानतान्रामः प्रगृह्य सशरं धनुः ।
अपि मां जीवयिष्यध्वमपि वः कृतकृत्यता ॥ ३-२८३-३४ (२६८४४)
अपि राज्यमयोध्यायां कारयिष्याम्यहं पुनः ।
निहत्यसमरे शत्रूनाहृत्यजनकात्मजाम् ॥ ३-२८३-३५ (२६८४५)
अमोक्षयित्वावैदेहीमहत्वा च रणे रिपून् ।
हृतदारोऽवधूतश्चनाहं जीवितुमुत्सहे ॥ ३-२८३-३६ (२६८४६)
इत्युक्तवचनं रामं प्रत्युवाचानिलात्मजः ।
प्रियमाख्यामि ते राम दृष्टा सा जानकी मया ॥ ३-२८३-३७ (२६८४७)
विचित्य दक्षिणामाशां सपर्वतवनाकराम् ।
श्रान्ताः काले व्यतीते स्म दृष्टवन्तो महागुहां ॥ ३-२८३-३८ (२६८४८)
प्रविशामो वयं तां तु बहुयोजनमायताम् ।
अन्धकारां सुविपिनां गहनां कीटसेविताम् ॥ ३-२८३-३९ (२६८४९)
गत्वा सुमहदध्वानमादित्यस् प्रभां ततः ।
दृष्टवन्तः स्म तत्रैवभवनं दिव्यमन्तरा ॥ ३-२८३-४० (२६८५०)
गयस् किल दैत्यस् तदा सद्मेश्म राघव ।
तत्रप्रभावती नाम तपोऽतप्यत तापसी ॥ ३-२८३-४१ (२६८५१)
तया दत्तानि भोज्यानिपानानिविविधानि च ।
भुकत्वा लब्धबलाः सन्तस्तयोक्तेन पथा ततः ॥ ३-२८३-४२ (२६८५२)
निर्याय तस्मादुद्देशात्पश्यामो लवणाम्भसः ।
समीपे सह्यमलयौ दर्दुरं च महागिरिम् ॥ ३-२८३-४३ (२६८५३)
ततो मलयमारुह्य पश्यन्तो वरुणालयम् ।
कविषण्णा व्यथिताः खिन्ना निराशा जीविते भृशम् ॥ ३-२८३-४४ (२६८५४)
अनेकशतविस्तीर्णं योजनानां महोदधिम् ।
तिमिनक्रझषावासं चिन्तयन्तः सुदुःखिताः ॥ ३-२८३-४५ (२६८५५)
तत्रानशनसंकल्पं कृत्वाऽऽसीना वयं तदा ।
ततः कथान्ते गृध्रस्य जटायोरभवत्कथा ॥ ३-२८३-४६ (२६८५६)
ततः पर्वतशृङ्गाभं घोररूपं भयावहम् ।
पक्षिणं दृष्टवन्तः स्म वैनतियेमिवापरम् ॥ ३-२८३-४७ (२६८५७)
सोऽस्मानतर्कयद्भोक्तुमथाभ्येत्य वचोऽब्रवीत् ।
भोः क एष मम भ्रातुर्जटायोः कुरुते कथाम् ॥ ३-२८३-४८ (२६८५८)
संपातिर्नाम तस्याहं ज्येष्ठो भ्राता खगाधिपः ।
अन्योन्यस्पर्धया रूढावावामदित्यसत्पदम् ॥ ३-२८३-४९ (२६८५९)
ततो दग्धाविमौ पक्षौ न दग्धौ तु जटायुषः ।
तस्मान्मे चिरदृष्टः स भ्राता गृध्रपतः प्रियः ॥ ३-२८३-५० (२६८६०)

निर्दग्धपक्षः पतितो ह्यहमस्मिन्महागिरौ ।
ग्द्रष्टुं वीरं न शक्नोमि भ्रातरं वै जटायुषम्' ॥ ३-२८३-५१ (२६८६१)
तस्यैवं वदतोऽस्माभिर्हतो भ्राता निवेदितः ।
व्यसनं भवतश्चेदं संक्षेपाद्वै निवेदितम् ॥ ३-२८३-५२ (२६८६२)
स सम्पातिस्तदा राजञ्श्रुत्वासुमहदप्रियम् ।
विषण्णचेताः पप्रच्छ पुनरस्मानरिंदम ॥ ३-२८३-५३ (२६८६३)
कः सरामः कथं सीता जटायुश्च कथं हतः ।
इच्छामि सर्वमेवैतच्छ्रोतुं प्लवगसत्तमाः ॥ ३-२८३-५४ (२६८६४)
तस्याहं सर्वमेवैतद्भवतो व्यसनागमम् ।
प्रायोपवेशने चैवहेतुं विस्तरशोऽब्रुवम् ॥ ३-२८३-५५ (२६८६५)
सोऽस्मानाश्वासयामास वाक्येनानेन पक्षिराट् ।
रावणो विदितो मह्यं लङ्का चास्य महापुरी ॥ ३-२८३-५६ (२६८६६)
दृष्टापारे समुद्रस्य त्रिकूटगिरिकन्दरे ।
भवित्री तत्र वैदेही न रमेऽस्त्यत्रविचारणा ॥ ३-२८३-५७ (२६८६७)
इतितस्य वचः श्रुत्वा वयमुत्थाय सत्वराः ।
सागरक्रमणे मन्त्रं मन्त्रयामः परंतप ॥ ३-२८३-५८ (२६८६८)
नाध्यवास्यद्यदा कश्चित्सागरस्य विलङ्घनम् ।
ततः पितरमाविश्य पुप्लुवेऽहंमहार्णवम् ।
शतयोजनविस्तीर्णं निहत्य जलराक्षसीम् ॥ ३-२८३-५९ (२६८६९)
उपवासतपःशीला भर्तृदर्शनलालसा ।
जटिला मलदिग्धाङ्गीकृश दीना तपस्विन ॥ ३-२८३-६० (२६८७०)
निमित्तैस्तामहं सीतामुपलभ्य पृथग्विधैः ।
उपसृत्याब्रवं चार्यामभिगम्य रहोगताम् ॥ ३-२८३-६१ (२६८७१)
सीते रामस्य दूतोऽहंवानरोमारुतात्मजः ।
त्वद्दर्शनमभिप्रप्सुरिह प्राप्तो विहायसा ॥ ३-२८३-६२ (२६८७२)
राजपुत्रौ कुशलिनौ भ्रातरौ रामलक्ष्मणौ ।
सर्वशाखामृगेन्द्रेण सुग्रीवेणाभिपालितौ ॥ ३-२८३-६३ (२६८७३)
कुशलंत्वाब्रवीद्रामःसीते सौमित्रिणा सह ।
सखिभावाच् सुग्रीवः कुशलं त्वाऽनुपृच्छति ॥ ३-२८३-६४ (२६८७४)
क्षिप्रमेष्यति ते भर्ता सर्वशाखामृगैः सह ।
प्रत्ययं कुरु मे देवि वानरोऽस्मि न राक्षसः ॥ ३-२८३-६५ (२६८७५)
मुहूर्तमिवच ध्यात्वा सीता मां प्रत्युवाच ह ।
अवैमि त्वांहनूमन्तमविन्ध्यवचनादहम् ॥ ३-२८३-६६ (२६८७६)
अविन्ध्यो हि महाबाहो राक्षसो वृद्धसंमतः ।
कथितस्तेन सुग्रीवस्त्वद्विधैः सचिवैर्वृतः ॥ ३-२८३-६७ (२६८७७)
गम्यतामिति चोक्त्वा मां सीता पादादिमं मणिम् ।

घारिता येन वैदेही कालमेतमनिन्दिता ॥ ३-२८३-६८ (२६८७८)
प्रत्ययार्थं कथां चेमां कथयामास जानकी ।
क्षिप्तामिषीकां काकाय चित्रकूटे महागिरौ ॥ ३-२८३-६९ (२६८७९)
भवता पुरुषव्याघ्र प्रत्यभिज्ञानकारणात् ।
गएकाक्षिविकलः काकः सुदुष्टात्मा कृतस्त्ववै' ॥ ३-२८३-७० (२६८८०)
ग्राहयित्वाऽहमात्मानं ततो दग्ध्वाच तां पुरीम् ।
संप्राप्त इतितं रामः प्रियवादिनमार्चयत् ॥ ३-२८३-७१ (२६८८१)

इति श्रीमन्महाभारते अरण्यपर्वणि रामोपाख्यानपर्वणि
त्र्यशीत्यधिकद्विशततमोऽध्यायः ॥ २८३ ॥
Mahabharata - Vana Parva - Chapter Footnotes

३-२८३-५ ग्राम्यधर्मेषु मैथुनादिषु निमित्तभूतेषु
। प्रमत्तमसावधानम् ॥
३-२८३-१२ गुरोर्वाक्ये हिते च रतस्तत्परः ॥
३-२८३-२६ सयोरुपरमः समाप्तिर्यस्मिस्तस्मिन्काले ॥
३-२८३-३५ कारयिष्यामि स्वार्थे णिच् ॥
३-२८३-४९ सत्पदं गतवन्ताविति शेषः ॥
३-२८३-६८ धरिता जीवनं प्राप्ता ॥

---

वन-अध्यय२८४
॥ श्रीः ॥
३.२८४. अध्यायः २८४

Mahabharata - Vana Parva - Chapter Topics
वानरसनापतिभिः स्वस्वसैन्यैः सहरामसुग्रीवोपासनम् ॥ १ ॥
वानरसेनाभिः सह सागरतीरमुपागतेन रामेण सेनानां सागरतरणाय
समुद्राराधनार्थं नियमेन दर्भसंस्तरे शयनम् ॥ २ ॥
सागरेण रामंप्रति स्वप्ने स्वात्मप्रदर्शनपूर्वकं नलेन
सेतुनिर्मापणचोदना ॥ ३ ॥
रामेण शरणार्थिनो विभीषणस्य लङ्काराज्येऽभिषेचनपूर्वकं
सेतुमार्गेण सैन्यैः सह लङ्कागमनम् ॥ ४ ॥

Mahabharata - Vana Parva - Chapter Text

३-२८४-० (२६८८२)
मार्कण्डेय उवाच। ३-२८४-०क्ष् (२७०९)

ततस्तत्रैवरामस्य समासीनस्य तैः सह ।
समाजग्मुः कपिश्रेष्ठाः सुग्रीववचनात्तदा ॥ ३-२८४-१ (२६८८३)
वृतः कोटिसहस्रेण वानराणां तरस्विनाम् ।
श्वशुरो वालिनः श्रीमान्सुषेणो राममभ्ययात् ॥ ३-२८४-२ (२६८८४)
कोटीशतवृतोवाऽपिगजो गवय एव च ।
वानरेन्द्रौ महावीर्यौ पृथक्पृथगदृश्यताम् ॥ ३-२८४-३ (२६८८५)
षष्टिकोटिसहस्राणि प्रकर्षन्प्रत्यदृश्यत ।
गोलाङ्गूलो महाराज गवाक्षो भीमदर्शनः ॥ ३-२८४-४ (२६८८६)
गन्धमादनवासी तु प्रथितो गन्धमादनः ।
कोटीशतसहस्राणि हरीणां समकर्षत ॥ ३-२८४-५ (२६८८७)
पनसो नाम मेधावी वानरःसुमहाबलः ।
कोटीर्दश द्वादश च त्रिंशत्पञ्च प्रकर्षति ॥ ३-२८४-६ (२६८८८)
श्रीमान्दधिमुखो नाम हरिवृद्धोऽतिवीर्यवान् ।
प्रचकर्ष महासैनयं हरीणां भीमतेजसाम् ॥ ३-२८४-७ (२६८८९)
कृषणानां मुखपुण्ड्राणामृक्षाणां भीमकर्मणाम् ।
कोटीर्दश द्वादश च त्रिंशत्पञ्च प्रकर्षति ॥ ३-२८४-८ (२६८९०)
एते चान्ये च बहवो हरियूथपयूथपाः ।
असङ्ख्येया महाराज समीयू रामकारणात् ॥ ३-२८४-९ (२६८९१)
गिरिकूटनिभाङ्गानां सिंहानामिव गर्जताम् ।
श्रूयते तुमुलः शब्दस्तत्रतत्रप्रधावताम् ॥ ३-२८४-१० (२६८९२)
गिरिकूटनिभाः क्वचित्केचिन्महिषसन्निभाः ।
शरदभ्रप्रतीकाशाः केचिद्धिङ्गुलकाननाः ॥ ३-२८४-११ (२६८९३)
उत्पतन्तः पतन्तश्च प्लवमानाश्च वानराः ।
उद्धुन्वन्तोऽपरे रेणून्समाजग्मुः समन्ततः ॥ ३-२८४-१२ (२६८९४)
सवानरमहासैन्यः पूर्णसागरसन्निभः ।
निवेशमकरोत्तत्रसुग्रीवानुमते तदा ॥ ३-२८४-१३ (२६८९५)
ततस्तेषु हरीन्द्रेषु समावृत्तेषु सर्वशः ।
तिथौ प्रशस्ते नक्षत्रे मुहूर्ते चाभिपूजिते ॥ ३-२८४-१४ (२६८९६)
तेन व्यूढेन सैन्येन लोकानुद्वर्तयन्निव ।
प्रययौ राघवः श्रीमान्सुग्रीवसहितस्तदा ॥ ३-२८४-१५ (२६८९७)
मुखमासीत्तु सैन्यस्य हनूमान्मारुतात्मजः ।
जघनं पालयामास सौमित्रिरकुतोभयः ॥ ३-२८४-१६ (२६८९८)
बद्धगोधाङ्गुलित्रणौ राघवौ तत्रजग्मतुः ।
वृतौ हरिमहामात्रैश्चन्द्रसूर्यौ ग्रहैरिव ॥ ३-२८४-१७ (२६८९९)
प्रबभौ हरिसैन्यं तत्सालतालशिलायुधम् ।
सुमहच्छालिभवनं यथा सूर्योदयं प्रति ॥ ३-२८४-१८ (२६९००)

नलनीलाङ्गदक्राथमैन्दद्विविदपालिता ।
ययौ सुमहती सेना राघवस्यार्थसिद्धये ॥ ३-२८४-१९ (२६९०१)
विविधेषु प्रशस्तेषु बहुमूलफलेषु च ।
प्रभूतमधुमांसेषु वारिमत्सु विवेषु च ॥ ३-२८४-२० (२६९०२)
निवसन्ती निराबाधा तथैवगिरिसानुषु ।
उपायाद्धिरिसेना सा क्षारोदमथ मागरम् ॥ ३-२८४-२१ (२६९०३)
द्वितीयसागरनिमं तद्बलंबहुलध्वजम् ।
वेलावनं समासाद् निवासमकरोत्तदा ॥ ३-२८४-२२ (२६९०४)
ततो दाशरथिः श्रीमान्सुग्रीवं प्रत्यभाषत ।
मध्ये वानरमुख्यानां प्राप्तकालमिदं वचः ॥ ३-२८४-२३ (२६९०५)
उपायः कोनु भवतां मतः सागरलङ्घने ।
इयं हि महती सेना सागरश्चातिदुस्तरः ॥ ३-२८४-२४ (२६९०६)
तत्रान्ये व्याहरन्ति स्म वानराः पटुमानिनः ।
समर्था लङ्घने सिन्दोर्न तत्कृत्स्नस्य वानराः ॥ ३-२८४-२५ (२६९०७)
केचिन्नौभिर्व्यवस्यन्ति केचिच्च विविधैः प्लवैः ।
नेति रामस्तु तानसर्वान्सान्त्वयन्प्रत्यभाषत ॥ ३-२८४-२६ (२६९०८)
शतयोजनविस्तारं न शक्ताः सर्ववानराः ।
क्रान्तुं तोयनिधिं वीरानैषा वो नैष्ठिकी मतिः ॥ ३-२८४-२७ (२६९०९)
नावो न सन्ति सेनाया बह्व्यस्तारयितुं तथा ।
वणिजामुपघातं च कथमस्मद्विधश्चरेत् ॥ ३-२८४-२८ (२६९१०)
विस्तीर्णं चैव नः सैन्यं हन्याच्छिद्रेण वै परः ।
प्लवोडुपप्रतारश्चनैवात्रमम रोचते ॥ ३-२८४-२९ (२६९११)
अहं त्विमं जलनिधिं समारप्स्याम्युपायतः ।
प्रतिशेष्याम्युपवसन्दर्शयिष्ति मां ततः ॥ ३-२८४-३० (२६९१२)
न चेद्दर्शयिता मार्गं धक्ष्याम्यनमहं ततः ।
महास्त्रैरप्रतिहतैरत्यग्निपवनोज्ज्वलैः ॥ ३-२८४-३१ (२६९१३)
इत्युक्त्वा सहसौमित्रिरुपस्पृश्याथ राघवः ।
प्रतिशिस्ये जलनिधं विधिवत्कुशसंस्तरे ॥ ३-२८४-३२ (२६९१४)
सागरस्तु ततः स्वप्ने दर्शयामास राघवम् ।
देवो नदनदीमर्ता श्रीमान्यादोगणैर्वृतः ॥ ३-२८४-३३ (२६९१५)
कौसल्यामातरित्येवमाभाष्य मधुरं वचः ।
इदमित्याह रत्नानामाकरैः शतशो वृतः ॥ ३-२८४-३४ (२६९१६)
ब्रूहि किं तेकरोम्यत्रसाहाय्यं पुरुषर्षभ ।
ऐक्ष्वाको ह्यस्मि ते ज्ञाती राम सत्यपराक्रमः ।
एवमुक्तः समुद्रेण रामो वाक्यमथाब्रवीत् ॥ ३-२८४-३५ (२६९१७)
मार्गमिच्छामि सैन्यस्य दत्तं नदनदीपते ।

येन गत्वादशग्रीवं हन्याम कुलपांसनम् ।
ग्राक्षसंसानुबन्धं तं मम भार्यापहारिणम्' ॥ ३-२८४-३६ (२६९१८)
यद्येवं याचतो मार्गं न प्रदास्यति मे भवान् ।
शरैस्त्वां शोषयिष्यामि दिव्यास्त्रयतिमन्त्रितैः ॥ ३-२८४-३७ (२६९१९)
इत्येवंब्रुवतः श्रुत्वारामस्य वरुणालयः ।
उवाचव्यथितोवाक्यमितिबद्धाञ्जलिःस्थितः ॥ ३-२८४-३८ (२६९२०)
नेच्छामि प्रतिघातं ते नास्मि विघ्नकरस्तव ।
शृणु चेदं वचोराम श्रुत्वा कर्तव्यमाचर ॥ ३-२८४-३९ (२६९२१)
यदि दास्यामि ते मार्गं सैन्यस् व्रजतोऽऽज्ञया ।
अन्येऽप्याज्ञापयिष्यन्ति मामेवं धनुषोबलात् ॥ ३-२८४-४० (२६९२२)
अस्तित्वत्रनलो नाम वानरः शिल्पिसंमतः ।
त्वष्टुः काकुत्स्थ तनयो बलवान्विश्वकर्मणः ॥ ३-२८४-४१ (२६९२३)
स यत्काष्ठं तृणं वाऽपिशिलां वा क्षेप्स्यते मयि ।
सर्वं तद्धारयिष्यामि स ते सेतुर्भविष्यति ॥ ३-२८४-४२ (२६९२४)
इत्युक्त्वाऽन्तर्हिते तस्मिन्रामो नलमुवाच ह ।
कुरु सेतुं समुद्रे त्वंशक्तो ह्यसि मतो मम ॥ ३-२८४-४३ (२६९२५)
तेनोपायेन काकुत्स्थः सतुबन्धमकारयत् ।
दशयोजनविस्तारमायतं शतयोजनम् ॥ ३-२८४-४४ (२६९२६)
नलसेतुरिति ख्यातो योऽद्यापि प्रथितो भुवि ।
रामस्याज्ञां पुरस्कृत्य धार्यते गिरिसंनिभः ॥ ३-२८४-४५ (२६९२७)
तत्रस्थं स तु धर्मात्मा समागच्चद्विभीषणः ।
भ्राता वै राक्षसेन्द्रस्य चतुर्भिः सचिवैः सह ॥ ३-२८४-४६ (२६९२८)
प्रतिजग्राह रामस्तं स्वागतेन महामनाः ।
सुग्रीवस्य तु शङ्काऽभूत्प्रणिधिः स्यादिति स्मह ॥ ३-२८४-४७ (२६९२९)
राघवः सत्यचेष्टाभिः सम्यक्व चरितेङ्गितैः ।
यदा तत्त्वेन तुष्टोऽभूत्तत एनमपूजयत् ॥ ३-२८४-४८ (२६९३०)
सर्वराक्षसराज्येचाप्यभ्यपिञ्चद्विभीषणम् ।
चक्रे च मन्त्रसचिवं सहृदंलक्ष्मणस् च ॥ ३-२८४-४९ (२६९३१)
विभीषणमते चैव सोऽत्यक्रामन्महार्णवम् ।
ससैन्यः सेतुना तेन मार्गेणैव नराधिपः ॥ ३-२८४-५० (२६९३२)
ततो गत्वासमासाद्य लङ्कोद्यानान्यनेकशः ।
भेदयामास कपिभिर्महान्ति च बहूनि च ॥ ३-२८४-५१ (२६९३३)
तत्रास्तां रावणामात्यौ राक्षसौ शुकसारणौ ।
चरौ वानररूपेण तौ जग्राह विभीषणः ॥ ३-२८४-५२ (२६९३४)
प्रतिपन्नौ यदा रूपं राक्षसं तौ निशाचरौ ।
दर्शयित्वा ततः सैन्यं रामः पश्चादवासृजत् ॥ ३-२८४-५३ (२६९३५)

निवेश्योपवने सैन्यं स शूरः प्राज्यवानरम् ।
प्रेषयामास दुत्येन रावणस्य ततोऽङ्गदम् ॥ ३-२८४-५४ (२६९३६)

इति श्रीमन्महाभारते अरण्यपर्वणि रामोपाख्यानपर्वणि
चतुरशीत्यधिकद्विशततमोऽध्यायः ॥ २८४ ॥
Mahabharata - Vana Parva - Chapter Footnotes

३-२८४-८ मुखे पुण्ड्रस्तिलकं येषां ते ।ललाटे ऊर्ध्वपुण्ड्राकारेण
चिह्नेन चिह्नितानाम् ॥
३-२८४-१० शिरीषकुसुमाभानां सिंहानामिति ध ।पाठः ॥
३-२८४-१८ शालिभिर्भातीति शालिभं तच्चतद्वनं पक्वजलिभवनं
तद्वत्पीतवर्णमित्यर्थः ॥
३-२८४-२९ प्लवः अलाबुघटादिमयं तरणसाधनम् ।उडुपं रक्षुद्रनौका
ताभ्यां प्रतारस्तरणम् ॥
३-२८४-३० समारप्स्यामि आराधयिष्यामि ॥
३-२८४-३४ मधुरं वच इदंशृण्वित्याहेति शेषेण योज्यम् ॥
३-२८४-४० आज्ञायेति च्छेदः ।पूर्वरूपमार्षम् ॥
३-२८४-४७ प्रणिधिश्छलकृत गुप्तचारो वा ॥
३-२८४-५० मासेनैव नराधिप इति झ ।पाठ ॥

---

वन-अध्यय२८५
॥ श्रीः ॥
३.२८५. अध्यायः २८५

Mahabharata - Vana Parva - Chapter Topics
अङ्गदेन रावणाय रामसंदंशनिवेदनपूर्वकंपुना रामसमीपागमनम् ॥ १ ॥
वानरै रामाज्ञया लङ्काप्राकारादिविभेदनपूर्वकं राक्षसैः सह
योधनम् ॥ २ ॥
ततो रामेण स्वसेनानामवहारः ॥ ३ ॥

Mahabharata - Vana Parva - Chapter Text

३-२८५-० (२६९३७)
मार्कण्डेय उवाच। ३-२८५-०क्ष् (२७१०)
प्रभूतान्नोदकेतस्मिन्बहुमूलफले वने ।
सेनां निवेश्य काकुत्स्थो विधिवत्पर्यरक्षत ॥ ३-२८५-१ (२६९३८)
रावणः संविधं चक्रे लङ्कायां शास्त्रनिर्मिताम् ।

प्रकृत्यैवदुराधर्षा दृढप्राकारतोरणा ॥ ३-२८५-२ (२६९३९)
अगाधतोयाः परिखा मीननक्रसमाकुलाः ।
बभूवुः सप्त दुर्धर्षाः स्वादिरैः शङ्कुभिश्चिताः ॥ ३-२८५-३ (२६९४०)
कर्णाटयन्त्रा दुर्धर्षा बभूवुः सहुडोपलाः ।
साशीविषघटायोधाः ससर्जरसपांसवः ॥ ३-२८५-४ (२६९४१)
मुसलालातनाराचतोमरासिपरश्वथैः ।
अन्विताश्वशतघ्नीभिः समधूच्छिष्टमुद्गराः ॥ ३-२८५-५ (२६९४२)
पुरद्वारेषु सर्वेषु गुल्माः स्थावरजङ्गमाः ।
बभूवुः पत्तिबहुलाः प्रभूतगजवाजिनः ॥ ३-२८५-६ (२६९४३)
अङ्गदस्त्वथ लङ्कायां द्वारदेशमुपागतः ।
विदितो रराक्षसेन्द्रस्य प्रविवेशगतव्यथः ॥ ३-२८५-७ (२६९४४)
मध्ये राक्षसकोटीनां बह्वीनां सुमहाबलः ।
शुशुभे मेघमालाभिरादित्य इव संवृतः ॥ ३-२८५-८ (२६९४५)
ससमासाद्य पौलस्त्यममात्यैरभिसंवृतम् ।
रामसंदेशमामन्त्र्य वाग्मी वक्तुं प्रचक्रमे ॥ ३-२८५-९ (२६९४६)
आह त्वां राघवो राजन्कोसलेन्द्रो महायशाः ।
प्राप्तकालमिदं वाक्यं तदादत्स्व सुदुर्मते। ३-२८५-१० (२६९४७)
अकृतात्मानमासाद्य राजानमनये रतम् ।
विनश्यन्त्यनयाविष्टा देशाश्च नगराणि च ॥ ३-२८५-११ (२६९४८)
त्वयैकेनापराद्धं मे सीतामाहरता बलात् ।
वधायानपराद्धानामन्येषां तद्भविष्यति ॥ ३-२८५-१२ (२६९४९)
ये त्वया बलदर्पाभ्यामाविष्टेन वनेचराः ।
ऋषयोहिंसिताः पूर्वंदेवाश्चाप्यवमानिताः ॥ ३-२८५-१३ (२६९५०)
राजर्षयश्च निहता रुदत्यश्चाहृताः स्त्रियः ।
तदिदं समनुप्राप्तं फलंतस्यानयस्य ते ॥ ३-२८५-१४ (२६९५१)
हन्तास्मि त्वां सहामात्यैर्युध्यस्व पुरुषो भव ।
पश्य मे धनुषो वीर्यं मानुषस् निशाचर ॥ ३-२८५-१५ (२६९५२)
मुच्यतां जानकी सीता न मे मोक्ष्यमसि कर्हिचित् ।
अराक्षसमिमं लोकंकर्ताऽस्मि निशितैः शरैः ॥ ३-२८५-१६ (२६९५३)
इतितस् ब्रुवाणस् दूतस् परुषं वचः ।
श्रुत्वा न ममृषे राजा रावणः क्रोधमूर्च्छितः ॥ ३-२८५-१७ (२६९५४)
हङ्गितज्ञास्ततो भर्तुश्चत्वारो रजनीचराः ।
चतुर्ष्वङ्गेषु जगृहुः शार्दूलमिव पक्षिणः ॥ ३-२८५-१८ (२६९५५)
तांस्तथाङ्गेषु संसक्तानङ्गदो रजनीचरान् ।
आदायैव खमुत्पत्य प्रासादतलमाविशत् ॥ ३-२८५-१९ (२६९५६)
वेगेनोत्पततस्तस्य पेतुस्ते रजनीचराः ।

भुवि संभिन्नहृदयाः प्रहारवरपीडिताः ॥ ३-२८५-२० (२६९५७)
संसक्तोहर्म्यशिखरात्तस्मात्पुनरवापतत् ।
लङ्घयित्वा पुरं लङ्कां सुवेलस्य समीपतः ॥ ३-२८५-२१ (२६९५८)
कोसलेन्द्रमथागम्य सर्वमावेद्य वानरः ।
विशश्राम स तेजस्वी राघवेणाभिनन्दितः ॥ ३-२८५-२२ (२६९५९)
ततः सर्वाभिसारेण हरीणां वातरंहसाम् ।
भेदयामास लङ्कायाः ग्राकारं रघुनन्दनः ॥ ३-२८५-२३ (२६९६०)
विभीषणर्क्षाधिपती पुरस्कृत्याथ लक्ष्मणः ।
दक्षिणं नगरद्वारमवामृद्गाद्दुरासदम् ॥ ३-२८५-२४ (२६९६१)
करभारुणगात्राणां हरीणां युद्धशालिनाम् ।
कोटीशतसहस्रेण लङ्कामभ्यपतत्तदा ॥ ३-२८५-२५ (२६९६२)
प्रलम्बबाहूरुकरजङ्घान्तरविलम्बिनाम् ।
ऋक्षाणआं धूम्रवर्णानां तिस्रः कोट्यो व्यवस्थिताः ॥ ३-२८५-२६ (२६९६३)
उत्पतद्भिः पतद्भिश्च निपतद्भिश्च वानरैः ।
नादृश्यत तदा सूर्यो रजसा नाशितप्रभः ॥ ३-२८५-२७ (२६९६४)
शालिप्रसूनसदृशैः शिरीपकुसुमप्रभैः ।
तरुणादित्यसदृशैः शणगौरैश्च वैनरैः ॥ ३-२८५-२८ (२६९६५)
प्राकारं ददृशुस्ते तु समन्तात्कपिलीकृतम् ।
राक्षसा विस्मिता राजन्सस्त्रीवृद्धाः समन्ततः ॥ ३-२८५-२९ (२६९६६)
बिभिदुस्ते मणिस्तम्भान्कर्णाट्टशिखराणि च ।
भग्नोन्मथितशृङ्गाणि यन्त्राणि च विचिक्षिपुः ॥ ३-२८५-३० (२६९६७)
परिगृह्य शतघ्नीश्च सचक्राः सगुडोपलाः ।
चिक्षिपुर्भुजवेगेन लङ्कामध्येमहास्वनाः ॥ ३-२८५-३१ (२६९६८)
प्राकारस्थाश्चये केचिन्निशाचरगणास्तथा ।
प्रदुद्रुवुस्ते शतशः कपिभिः समभिद्रुताः ॥ ३-२८५-३२ (२६९६९)
ततस्तु राजवचनाद्राक्षसाः कामरूपिणः ।
निर्ययुर्विकृताकाराः सहस्रशतसङ्घशः ॥ ३-२८५-३३ (२६९७०)
शस्त्रवर्षाणि वर्षन्तो द्रावयित्वा वनौकसः ।
प्राकारं शोभयन्तस्ते परं विस्मयमास्थिताः ॥ ३-२८५-३४ (२६९७१)
स मापराशिसदृशैर्बभूव क्षणादाचरैः ।
कृतो निर्वानरो भूयः प्राकारो भीमदर्शनैः ॥ ३-२८५-३५ (२६९७२)
पेतुः शलविभिन्नाङ्गा बहवो वानरर्पभाः ।
स्तम्भतोरणभग्नाश्चपेतुस्तत्रनिशाचराः ॥ ३-२८५-३६ (२६९७३)
केशाकेश्यभवद्युद्धं रक्षसां वानरैः सह ।
नखैर्दन्तैश्च वीराणां खादतां वै परस्परम् ॥ ३-२८५-३७ (२६९७४)
निष्टनन्तो ह्युभयतस्तत्र वानरराक्षसाः ।

हतानिपतिता भूमौ न मुञ्चन्ति परस्परम् ॥ ३-२८५-३८ (२६९७५)
रामस्तु शरजालानिववर्ष जलदो यथा ।
तानिलङ्कां समासाद्य जघ्नुस्तान्रजनीचरान् ॥ ३-२८५-३९ (२६९७६)
सौमित्रिरपि नाराचैर्दृढधन्वा जितक्लमः ।
आदिश्यादिश्य दुर्गस्थान्पातयामास राक्षसान् ॥ ३-२८५-४० (२६९७७)
ततः प्रत्यवहारोऽभूत्सैन्यानां राधवाज्ञया ।
कृते विमर्दे लङ्कायां लब्धलक्ष्योजयोत्तरः ॥ ३-२८५-४१ (२६९७८)

इति श्रीमन्महाभारते अरण्यपर्वणि रामोपाख्यानपर्वणि
पञ्चाशीत्यधिकाद्विशततमोऽध्यायः ॥ २८५ ॥

Mahabharata - Vana Parva - Chapter Footnotes

३-२८५-२ संविधं सम्यग्विद्धयान्त्यनया तां यात्रादिसंपत्तिम् ॥
३-२८५-४ सहुडाः सोपलाश्च ।हुढं मूत्राद्युत्सर्जनार्थं
शृङ्गम्।उपलाः प्रक्षेप्या गोलकाः।कपाटयन्त्रदुर्धर्षा इति
झ।पाठः ॥
३-२८५-५ समधूच्छिष्टमुद्गराः ।मधूच्छिष्टं क्षौद्रं मधु ॥
३-२८५-६ गुल्माः गुप्तोपवेशनस्थानानि ॥
३-२८५-७ गतव्यथो निर्भयः ॥
३-२८५-९ आमन्त्र्य हेरावण इति संबोध्य ॥
३-२८५-१० तदादत्स्व कुरुष्व चेति झ।पाठः ॥
३-२८५-२३ सर्वाभिसारः युपगत्सर्वेषामभिसारो यत्नस्तेन ॥
३-२८५-२४ ऋक्षाधिपतिर्जाम्बवान् ॥
३-२८५-२५ करभो मणिबन्धादिकनिष्ठान्तं हस्तप्रदेशस्तद्वदरुणाः ॥
३-२८५-२८ शणो गोणीसूत्रोपादानवीरुत् ॥
३-२८५-३० कर्णस्तिर्यग्यानं तेन प्रकारेण यत्पाषाणादिविस्तरेण क्रियते
तत्तद्गृहविशेषं कर्णाट्टमिति वदन्ति ॥
३-२८५-३६ स्तम्भतः स्तम्भैर्वानरोपात्तैः ।रणे भग्ना रणभग्नाः ॥
३-२८५-३७ केशाकेशि अन्योन्यं केशेषु गृहीत्वा प्रवृत्तम् ॥
३-२८५-३८ निष्टनन्तःशब्दं कुर्वन्तः ॥
३-२८५-४० आदिश्य संमुखीकृत्येत्यर्थः ॥
३-२८५-४१ प्रत्यवहारः शिविरंप्रति गमनम् ।लब्धा आयुधैः प्राप्ता
लक्ष्या वेध्यायस्मिन्नवन्ध्यप्रहार इतियावत्।जयोत्तरो जयोत्कर्षवान् ॥

---

वन-अध्यय२८६
॥ श्रीः ॥

३.२८६. अध्यायः २८६

Mahabharata - Vana Parva - Chapter Topics
रामलक्ष्मणादीनां रावणेन्द्रजिदादिभिः सह द्वन्द्वयुद्धम् ॥ १ ॥

Mahabharata - Vana Parva - Chapter Text

३-२८६-० (२६९७९)
मार्कण्डेय उवाच। ३-२८६-०क्ष् (२७११)
ततो निविशमानांस्तान्सैनिकान्रावणानुगाः ।
अभिजग्मुर्गणाऽनके पिशाचक्षुद्ररक्षसाम् ॥ ३-२८६-१ (२६९८०)
पर्वणः पतनो जम्भः खरः क्रोधवशो हरिः ।
प्ररुजश्चारुजश्चैव प्रघसश्चैवमादयः ॥ ३-२८६-२ (२६९८१)
ततोऽभिपततां तेषामदृश्यानां दुरात्मनाम् ।
अन्तर्धानवधं तज्ज्ञश्चकार स विभीषणः ॥ ३-२८६-३ (२६९८२)
ते दृश्यमाना हरिभिर्बलिभिर्दूरपातिभिः ।
निहताः सर्वशो राजन्महीं जग्मुर्गतासवः ॥ ३-२८६-४ (२६९८३)
अमृष्यमाणः सबलो रावणो निर्ययावथ ।
राक्षसानां बलैर्घोरैः पिशाचानांच संवृतः ॥ ३-२८६-५ (२६९८४)
युद्धशास्त्रविधानज्ञ उशना इव चापरः ।
व्यूह्यचौशनसं व्यूहं हरीनभ्यवहारयत् ॥ ३-२८६-६ (२६९८५)
राघवस्तु विनिर्यान्तं व्यूढानीकं दशाननम् ।
बार्हस्पत्यं विधं कृत्वा प्रतिव्यूह्य ह्यदृश्यत ॥ ३-२८६-७ (२६९८६)
समेत्य युयुधे तत्र ततो रामेण रावणः ।
युयुधे लक्ष्मणश्चापि तथैवेन्द्रजिता सह ॥ ३-२८६-८ (२६९८७)
विरूपाक्षेण सुग्रीवस्तारेण च निस्वर्वटः ।
पौण्ड्रेण च नलस्तत्र पदुशः पनसेन च ॥ ३-२८६-९ (२६९८८)
विषह्यं यं हि यो मेने स स तेन समेयिवान् ।
युयुधे युद्धवेलायां स्वबाहुबलमाश्रितः ॥ ३-२८६-१० (२६९८९)
स संप्रहारो ववृधे भीरूणां भयवर्धनः ।
रोमसंहर्षणो घोरः पुरा देवासुरे यथा ॥ ३-२८६-११ (२६९९०)
रावणो राममानर्च्छच्छक्तिशूलासिवृष्टिभिः ।
निशितैरायसैस्तीक्ष्णै रावणं चापि राघवः ॥ ३-२८६-१२ (२६९९१)
तथैवेन्द्रजितं यत्तं लक्ष्मणो मर्मभेदिभिः ।
इन्द्रजिच्चापि सौमित्रिं बिभेद बहुभिः शरैः ॥ ३-२८६-१३ (२६९९२)
विभीषणः प्रहस्तं च प्रहस्तश्च विभीषणम् ।

खगपत्रैः शरैस्तीक्ष्णैरभ्यवर्षद्गतव्यथः ॥ ३-२८६-१४ (२६९९३)
तेषां बलवतामासीन्महास्त्राणां समागमः ।
विव्यथुः सकला येन त्रयो लोकाश्चराचराः ॥ ३-२८६-१५ (२६९९४)

इति श्रीमन्महाभारते अरण्यपर्वणि रामोपाख्यानपर्वणि
षडशीत्यधिकद्विशततमोऽध्यायः ॥ २८६ ॥
Mahabharata - Vana Parva - Chapter Footnotes

३-२८६-१ गणा अनेके इति च्छेदः ॥
३-२८६-३ अन्तर्धानवधमन्तर्धानशक्तेर्नाशम् ॥
३-२८६-६ हरीन् वानरान् । अभ्यवहारयदावेष्टितवान् ॥
३-२८६-१२ आनच्छर्दपीडयत् ॥

---

वन-अध्यय२८७
॥ श्रीः ॥
३.२८७. अध्यायः २८७

Mahabharata - Vana Parva - Chapter Topics
विभीषणहनुमद्भयां प्रहस्तधूम्राक्षवधश्रवणनिर्विण्णेन रावणेन
युद्धाय कुम्भकर्णप्रेषणम् ॥ १ ॥

Mahabharata - Vana Parva - Chapter Text

३-२८७-० (२६९९५)
मार्कण्डेय उवाच। ३-२८७-०क्ष् (२७१२)
ततः प्रहस्तः सहसा समभ्येत्य विभीषणम् ।
गदया ताडयामास विनद्य रणकर्कशम् ॥ ३-२८७-१ (२६९९६)
स तयाऽभिहतो धीमान्गदया भीमवेगया ।
नाकम्पत महाबाहुर्हिमवानिव सुस्थिरः ॥ ३-२८७-२ (२६९९७)
ततः प्रगृह्यविपुलां शतघण्टां विभीषणः ।
अनुमन्त्र्य महाशक्तिं चिक्षेपास् शिरः प्रति ॥ ३-२८७-३ (२६९९८)
पतन्त्या स तया वेगाद्राक्षसोऽशनिवेगया ।
हृतोत्तामङ्गो ददृशे वातरुग्ण इव द्रुमः ॥ ३-२८७-४ (२६९९९)
तं दृष्ट्वा निहतं सङ्ख्ये प्रहस्तं क्षणदाचरम् ।
अभिदुद्राव धूम्राक्षो वेगेन महता कपीन् ॥ ३-२८७-५ (२७०००)
तस् मेघोपमं सैन्यमापतद्भीमदर्शनम् ।
दृष्ट्वैव सहसा दीर्णा रणे वानरपुङ्गवाः ॥ ३-२८७-६ (२७००१)

ततस्तान्सहसा दीर्णान्दृष्ट्वा वानरपुङ्गवान् ।
निर्ययौ कपिशार्दूलो हनूमान्मारुतात्मजः ॥ ३-२८७-७ (२७००२)
तं दृष्ट्वाऽवस्थितं सङ्ख्ये हरयः पवनात्मजम् ।
महत्या त्वरया राजत्संन्यवर्तन्त सर्वशः ॥ ३-२८७-८ (२७००३)
ततः शब्दो महानासीत्तुमुलो रोमहर्षणः ।
रामरावणसैन्यानामन्योन्यमभिधावताम् ॥ ३-२८७-९ (२७००४)
तस्मिन्प्रवृत्ते संग्रामे घोरे रुधिरकर्दमे ।
क्षूम्राक्षः कपिसैन्यं तद्द्रावयामास पत्रिभिः ॥ ३-२८७-१० (२७००५)
तं स रक्षोमहामात्रमापतन्तं सपत्नजित् ।
प्रतिजग्राह हनुमांस्तरसा पवनात्मजः ॥ ३-२८७-११ (२७००६)
तयोर्युद्धमभूदधोरं हरिराक्षसवीरयोः ।
जीगीषतोर्युधाऽन्योन्यमिन्द्रप्रह्लादयोरिवं ॥ ३-२८७-१२ (२७००७)
कगदाभिः परिघैश्चैव राक्षसो जघ्निवान्कपिम् ।
कपिश्च जघ्निवान्नः सस्कन्धविटपैर्द्रुमैः ॥ ३-२८७-१३ (२७००८)
ततस्तमतिकोपेन साश्वं सरथसारथिम् ।
धूम्राक्षमवधीत्क्रुद्धो हनूमान्मारुतात्मजः ॥ ३-२८७-१४ (२७००९)
ततस्तं निहतं दृष्ट्वा धूम्राक्षं राक्षसोत्तमम् ।
हरयो जातविश्रम्भा जघ्नुरन्ये च सैनिकान् ॥ ३-२८७-१५ (२७०१०)
ते वध्यमाना हरिभिर्बलिभिर्जितकाशिभिः ।
राक्षसा भग्नसंकल्पा लङ्कामभ्यपतन्भयात् ॥ ३-२८७-१६ (२७०११)
तेऽभिपत्य पुरं भग्ना हतशेषा निशाचराः ।
सर्वं राज्ञे यथावृत्तं रावणाय न्यवेदयन् ॥ ३-२८७-१७ (२७०१२)
श्रुत्वा तु रावणस्तेभ्यः प्रहस्तं निहतं युधि ।
धूम्राक्षं च महेष्वासं ससैन्यं सहराक्षसैः ॥ ३-२८७-१८ (२७०१३)
सुदीर्घमिव निःश्वस्य समुत्पत्य वरासनात् ।
उवाच कुम्भकर्णस्य कर्मकालोऽयमागतः ॥ ३-२८७-१९ (२७०१४)
इत्येवमुक्त्वा विविधैर्वादित्रैः सुमहास्वनैः ।
शयानमतिनिद्रालुं कुम्भकर्णमबोधयत् ॥ ३-२८७-२० (२७०१५)
प्रबोध्य महता चैनं यत्नेनाऽऽगतसाध्वसः ।
स्वस्थमासीनमव्यग्रं विनिद्रं राक्षसाधिपः ।
ततोऽब्रवीद्दशग्रीवः कुम्भकर्णं महाबलम् ॥ ३-२८७-२१ (२७०१६)
धन्योसि यस्य ते निद्रा कुम्भकर्णेयमीदृशी ।
य इदं दारुणं कालं न जानीषे महाभयम् ॥ ३-२८७-२२ (२७०१७)
एष तीर्त्वाऽर्णवं रामः सेतुना हरिभिः सह ।
अवमत्येह नः सर्वान्करोति कदनं महत् ॥ ३-२८७-२३ (२७०१८)
मया त्वपहृता भार्या सीता नामास्य जानकी ।

तां नेतुं स इहायातो बद्ध्वा सेतुं महार्णवे ॥ ३-२८७-२४ (२७०१९)
तेन चैव प्रहस्तादिर्महान्नः स्वजनो हतः ।
तस्य नान्यो निहन्ताऽस्ति त्वामृतेशत्रुकर्शन ॥ ३-२८७-२५ (२७०२०)
सदंशितोऽभिनिर्याहि त्वमद्य बलिनांवर ।
रामादीन्समरे सर्वाञ्जहि शत्रूनरिंदम ॥ ३-२८७-२६ (२७०२१)
दूषणावरजौ चैव वज्रवेगप्रमाथिनौ ।
तौ त्वां बलेन महता सहितावनुयास्यतः ॥ ३-२८७-२७ (२७०२२)
इत्युक्त्वा राक्षसपतिः कुम्भकर्णं तरस्विनम् ।
संदिदेशेतिकर्तव्ये वज्रवेगप्रमाथिनौ ॥ ३-२८७-२८ (२७०२३)
तथ्त्युक्त्वा युतौ वीरौ रावणं दूषाणानुजौ ।
कुम्भकर्णं पुरस्कृत्य तूर्णं निर्ययतुः पुरात् ॥ ३-२८७-२९ (२७०२४)

इति श्रीमन्महाभारते अरण्यपर्वणि रामोपाख्यानपर्वणि
सप्ताशीत्यधिकद्विशततमोऽध्यायः ॥ २८७ ॥
Mahabharata - Vana Parva - Chapter Footnotes

३-२८७-११ रक्षोमहामात्रं रक्षःश्रेष्ठम् ॥
३-२८७-२१ आगतसाध्वसः जातभयः ॥

---

वन-अध्यय२८८
॥ श्रीः ॥
३.२८८. अध्यायः २८८

Mahabharata - Vana Parva - Chapter Topics
लक्ष्मणेन कुम्भकर्णवधः ॥ १ ॥
हनुमन्नीलाक्ष्यां वज्रवेगप्रमाथिनोर्वधः ॥ २ ॥

Mahabharata - Vana Parva - Chapter Text

३-२८८-० (२७०२५)
मार्कण्डेय उवाच। ३-२८८-०क्ष् (२७१३)
ततो निर्याय स्वपुरात्कुम्भकर्णः सहानुगः ।
अपश्यत्कपिसैन्यं रतज्जितकाश्यग्रतः स्थितम् ॥ ३-२८८-१ (२७०२६)
स वीक्षमाणस्तत्सैन्यं रामदर्शनकाङ्क्षया ।
अपश्यच्चापि सौमित्रिं धनुष्पाणिं व्यवस्थितम् ॥ ३-२८८-२ (२७०२७)
तमभ्येत्याशु हरयः परिवव्रुः समन्ततः ।
ग्शैलवृक्षायुधा नादानमुञ्चन्भीषणास्ततः' ॥ ३-२८८-३ (२७०२८)

अभ्यघ्नंश्च महाकायैर्बहुभिर्जगतीरुहैः ।
करजैरतुदंश्चान्ये विहाय भयमुत्तमम् ॥ ३-२८८-४ (२७०२९)
बहुधा युध्यमानास्ते युद्धमार्गैः प्लवंगमाः ।
नानाप्रहरणैर्भीमै राक्षसेन्द्रमताडयन् ॥ ३-२८८-५ (२७०३०)
स ताड्यमानः प्रहसन्भक्षयामास वानरान् ।
बलं चण्डबलाख्यं च वज्रबाहुं च वानरम् ॥ ३-२८८-६ (२७०३१)
तद्दृष्ट्वा व्यथनं कर्म कुम्भकर्णस्य रक्षसः ।
उदक्रोशन्परित्रस्तास्तारप्रभृतयस्तदा ॥ ३-२८८-७ (२७०३२)
तानुच्चैः क्रोशतः सैन्याञ्श्रुत्वा स हरियूथपान् ।
अभिदुद्राव सुग्रीवः कुम्भकर्णमपेतभीः ॥ ३-२८८-८ (२७०३३)
ततो निपत्य वेगेन कुम्भकर्णं महामना ।
सालेन जघ्निवान्मूर्ध्नि बलेन कपिकुञ्जरः ॥ ३-२८८-९ (२७०३४)
स महात्मा महावेगः कुम्भकर्णस् मूर्धनि ।
बिभेद सालं सुग्रीवो न चैवाव्यथयत्कपिः ॥ ३-२८८-१० (२७०३५)
ततो विनद्यसहसा सालस्पर्शविबोधितः ।
दोर्भ्यामादाय सुग्रीवं कुम्भकर्णोऽहरद्बलात् ॥ ३-२८८-११ (२७०३६)
ह्रियमाणं तु सुग्रीवं कुम्भकर्णेन रक्षसा ।
अवेक्ष्याभ्यद्रवद्वीरः सौमित्रिर्मित्रनन्दनः ॥ ३-२८८-१२ (२७०३७)
सोऽभिपत्य महर्वेगं रुक्मपुङ्कं महाशरम् ।
प्राहिणोत्कुम्भकर्णाय लक्ष्मणः परवीरहा ॥ ३-२८८-१३ (२७०३८)
स तस्य देहावरणं भित्त्वा देहं च सायकः ।
जगाम दारयन्भूमिं रुधिरेण समुक्षितः ॥ ३-२८८-१४ (२७०३९)
तथा स भिन्नहृदयः समुत्सृज्य कपीश्वरम् ।
ग्वेगेन महताऽऽविष्टस्तिष्ठतिष्ठेति चाब्रवीत् ॥ ३-२८८-१५ (२७०४०)
कुम्भकर्णो महेष्वासः प्रगृहीतशिलायुधः ।
अभिदुद्राव सौमित्रिमुद्यम्य महतीं शिलाम् ॥ ३-२८८-१६ (२७०४१)
तस्याभिपततस्तूर्णं क्षुराभ्यामुच्छ्रितौ करौ ।
चिच्छेद निशिताग्राभ्यां स बभूव चतुर्भुजः ॥ ३-२८८-१७ (२७०४२)
तानप्यस् भुजान्सर्वान्प्रगृहीतशिलायुधान् ।
क्षुरैश्चिच्छेदलघ्वस्त्रं सौमित्रिः प्रतिदर्शयन् ॥ ३-२८८-१८ (२७०४३)
स बभूवातिकायश्च बहुपादशिरोभुजः ।
तं ब्रह्मास्त्रेण सौमित्रिर्ददाराद्रिचयोपमम् ॥ ३-२८८-१९ (२७०४४)
स पपात महावीर्यो दिव्यास्त्राभिहतो रणे ।
महाशनिविनिर्दग्धः पादपोऽङ्कुरवानिव ॥ ३-२८८-२० (२७०४५)
तं दृष्ट्वा वृत्रसंकाशं कुम्भकर्णं तरस्विनम् ।
गतासुं पतितं भूमौ राक्षसाः प्राद्रवन्भयात् ॥ ३-२८८-२१ (२७०४६)

तथातान्द्रवतो योधान्दृष्ट्वा तौ दूषणानुजौ ।
अवस्थाप्याथ सौमित्रिं संक्रुद्धावभ्यधावताम् ॥ ३-२८८-२२ (२७०४७)
तावाद्रवन्तौ संक्रुद्धौ वज्रवेगप्रमाथिनौ ।
अभिजग्राह सौमित्रिर्विनद्योभौ पतत्रिभिः ॥ ३-२८८-२३ (२७०४८)
ततः सुतुमुलं युद्धमभवद्रोमहर्षणम् ।
दूषणानुजयोः पार्थ लक्ष्मणस् च धीमतः ॥ ३-२८८-२४ (२७०४९)
महता शरवर्षेण राक्षसौ सोऽभ्यवर्पत ।
तं चापिवीरौ संक्रुद्धावुभौ तौ समवर्षताम् ॥ ३-२८८-२५ (२७०५०)
मुहूर्तमेवमभवद्वज्रवेगप्रमाथिनोः ।
सौमित्रेश्च महाबाहोः संप्रहारः सुदारुणः ॥ ३-२८८-२६ (२७०५१)
अथाद्रिशृङ्गमादाय हनुमान्मारुतात्मजः ।
अभिद्रुत्याददे प्राणान्वज्रवेगस्य रक्षसः ॥ ३-२८८-२७ (२७०५२)
नीलश्च महता ग्राव्णा दूपणावरजं हरिः ।
प्रमाथिनमभिद्रुत्य प्रममाथ महाबलः ॥ ३-२८८-२८ (२७०५३)
ततः प्रावर्तत पुनः संग्रामः कटुकोदयः ।
रामरावणसैन्यानामन्योन्यमभिधावताम् ॥ ३-२८८-२९ (२७०५४)
शतसो नैर्ऋतान्वन्या जघ्नुर्वन्यांश्च नैर्ऋताः ।
नैर्ऋतास्तत्रवध्यन्ते प्रायेण न तु वानराः ॥ ३-२८८-३० (२७०५५)

इति श्रीमन्महाभारते अरण्यपर्वणि रामोपाख्यानपर्वणि
अष्टाशीत्यधिकद्विशततमोऽध्यायः ॥ २८८ ॥
Mahabharata - Vana Parva - Chapter Footnotes

३-२८८-१ जितकाशि दृढमुष्टि ।काशिर्मुष्टिः प्रकाशनादिति यास्क ॥
३-२८८-३० वन्या वनेचरा वानराः ॥

---

वन-अध्यय२८९
॥ श्रीः ॥
३.२८९. अध्यायः २८९

Mahabharata - Vana Parva - Chapter Topics
लक्ष्मणएन्द्रजितोर्युद्धम् ॥ १ ॥
अङ्गदेनेन्द्रजिद्रथभङ्गे मायया तस्यान्तर्धाने च रामेणापि
तत्रागमनम् ॥ २ ॥

Mahabharata - Vana Parva - Chapter Text

३-२८९-० (२७०५६)
मार्कण्डेय उवाच। ३-२८९-०क्ष् (२७१४)
ततः श्रुत्वाहतं सङ्ख्ये कुम्भकर्णं सहानुगम् ।
प्रहस्तं च महेष्वासं धूम्राक्षं चातितेजसम् ॥ ३-२८९-१ (२७०५७)
पुत्रमिनद्रजितं वीरं रावणः प्रत्यभाषत ।
जहिराममित्रघ्न सुग्रीवं च सलक्ष्मणम् ॥ ३-२८९-२ (२७०५८)
त्वया हि मम सत्पुत्र यशो दीप्तमुपार्जितम् ।
जित्वावज्रधरं सङ्ख्ये सहस्राक्षं शचीपतिम् ॥ ३-२८९-३ (२७०५९)
अन्तर्हितः प्रकाशो वा दिव्यैर्दत्तवरैः शरैः ।
जहि शत्रूनमित्रघ्न मम शस्त्रभृतांवर ॥ ३-२८९-४ (२७०६०)
रामलक्ष्मणसुग्रीवाः शरस्पर्शं न तेऽनघ ।
समर्थाः प्रतिसोढुं च कुतस्तदनुयायिनः ॥ ३-२८९-५ (२७०६१)
अगता या प्रहस्तेन कुम्भकर्णेन चानघ ।
खरस्यापचितिः सङ्ख्ये तां गच्छ त्वे महाभुज ॥ ३-२८९-६ (२७०६२)
त्वमद्य निशितैर्बाणैर्हत्वा शत्रून्ससैनिकान् ।
प्रतिनन्दय मां पुत्र पुरा जित्वेव वासवम् ॥ ३-२८९-७ (२७०६३)
इत्युक्तः स तथेत्युक्त्वा रथमास्थाय दंशिथः ।
प्रययाविन्द्रजिद्राजंस्तूर्णमायोधनं प्रति ॥ ३-२८९-८ (२७०६४)
ततो विश्राव्य विस्पष्टं नाम राक्षसपुङ्गवः ।
आह्वयामास समरे लक्ष्मणं शुभलक्षणम् ॥ ३-२८९-९ (२७०६५)
तं लक्ष्मणोऽभ्यधावच्च प्रगृह्य सशरं धनुः ।
त्रासयंस्तलघोषेण सिंहः क्षुद्रमृगं यथा ॥ ३-२८९-१० (२७०६६)
तयोः समभवद्युद्धं सुमहज्जयगृद्धिनोः ।
दिव्यास्त्रविदुपोस्तीव्रमन्योन्यस्पर्धिनोस्तदा ॥ ३-२८९-११ (२७०६७)
रावणिस्तु यदा नैनं विशेषयति सायकैः ।
ततो गुरुतरं यत्नमातिष्ठद्बलिनां वरः ॥ ३-२८९-१२ (२७०६८)
तत एवं महावेगैरर्दयामास तोमरैः ।
तानागतान्स चिच्छेद सौमित्रिर्निशितैः शरैः ॥ ३-२८९-१३ (२७०६९)
ते निकृत्ताः शरैस्तीक्ष्णैर्न्यपतन्धरणीतले ।
ग्साधका रावणेराजौ शतशः शकलीकृताः ॥ ३-२८९-१४ (२७०७०)
तमङ्गदो वालिसुतः श्रीमानुद्यम्य पादपम् ।
अभिद्रुत्य महावेगस्ताडयामास मूर्धनि ॥ ३-२८९-१५ (२७०७१)
तस्येन्द्रजिदसंभ्रान्तः प्रासेनोरसि वीर्यवान् ।
प्रहर्तुमैच्छत्तं चास्य प्रासं चिच्छेद लक्ष्मणः ॥ ३-२८९-१६ (२७०७२)
तमभ्याशगतं वीरमङ्गदं रावणात्मजः ।
गदयाऽताडयत्सव्ये पार्श्वेवानरपुङ्गवम् ॥ ३-२८९-१७ (२७०७३)

तमचिन्त्य प्रहारं स बलवान्वालिनः सुतः ।
ससर्जेन्द्रजितः क्रोधात्सालस्कन्धं तथाङ्गदः ॥ ३-२८९-१८ (२७०७४)
सोऽङ्गदेन रुपोत्सृष्टो वधायेन्द्रजितस्तरुः ।
जघानेन्द्रजितः पार्थ रथं साश्वं ससारथिम् ॥ ३-२८९-१९ (२७०७५)
ततो हताश्वात्प्रस्कन्द्य रथात्स हतसारथिः ।
तत्रैवान्तर्दधे राजन्मायया रावणात्मजः ॥ ३-२८९-२० (२७०७६)
अन्तर्हितं विदित्वा तं बहुमायं च राक्षसम् ।
रामस्तं देशमागम्य तत्सैन्यं पर्यरक्षत ॥ ३-२८९-२१ (२७०७७)
स राममुद्दिश्य शरैस्ततो दत्तवरैस्तदा ।
विव्याध सर्वगात्रेषु लक्ष्मणं च महाबलम् ॥ ३-२८९-२२ (२७०७८)
तमदृश्यंशरैः शूरौ माययाऽन्तर्हितं तदा ।
योधयामासतुरुभौ रावणिं रामलक्ष्मणौ ॥ ३-२८९-२३ (२७०७९)
स रुषा सर्वगात्रेषु तयोः पुरुषसिंहयोः ।
व्यसृजत्सायकान्भूयः शतशोऽथ सहस्रशः ॥ ३-२८९-२४ (२७०८०)
तमदृश्यं विचिन्वन्तः सृजन्तमनिशं शरान् ।
हरयो विविशुर्व्योम प्रगृह्य महतीः शिलाः ॥ ३-२८९-२५ (२७०८१)
तांश्च तौ चाप्यदृश्यः सशरैर्विव्याध राक्षसः ।
स भृशं ताडयामास रावणिर्मायया वृतः ॥ ३-२८९-२६ (२७०८२)
तौ शरैरर्दितौ वीरौ भ्रारौ रामलक्ष्मणौ ।
पेततुर्गगनाद्भूमिं सूर्याचन्द्रमसाविव ॥ ३-२८९-२७ (२७०८३)

इति श्रीमन्महाभारते अरण्यपर्वणि रामोपाख्यानपर्वणि
एकोननवत्यधिकद्विशततमोऽध्यायः ॥ २८९ ॥
Mahabharata - Vana Parva - Chapter Footnotes

३-२८९-१८ रासर्ज उत्सृष्टवान् । सालस्कन्धं महास्कन्धं तरुम् ॥
३-२८९-२६ तान् हरीन् । तौ च रामलक्ष्मणौ ॥

---

वन-अध्यय२९०
॥ श्रीः ॥
३.२९०. अध्यायः २९०

Mahabharata - Vana Parva - Chapter Topics
इन्द्रजिच्छरजालबन्धेन मोहाधिगमपूर्वकं भूमौ पतितयो
रामलक्ष्मणयोर्विभीषणेन प्रज्ञानास्त्रेण मोहापनोदनम् ॥ १ ॥
तथा सुग्रीवेण महौषध्या तयोर्विशल्यीकरणम् ॥ २ ॥

ततो रामादीनां नेत्रेषु
कुबेरदूतानीतजलमार्जनेनातीन्द्रियवनस्तुदर्शनशक्त्युदयः ॥ ३ ॥
ततः पुनरुपागतस्येन्प्रजितो लक्ष्मणेन वधः ॥ ४ ॥
ततः पुत्रवधामर्षेण सीतावधोद्यतस्य रावणस्याविन्ध्याख्येन
वृद्धामात्येन साम्ना ततो विनिवर्तनम् ॥ ५ ॥

Mahabharata - Vana Parva - Chapter Text

३-२९०-० (२७०८४)
मार्कण्डेय उवाच। ३-२९०-०क्ष् (२७१५)
तावुभौ पतितौ दृष्ट्वा भ्रातरौ रामलक्ष्मणौ ।
बबन्ध रावणिर्भूयः शरैर्दत्तवरैस्तदा ॥ ३-२९०-१ (२७०८५)
तौ वीरौ शरजालेन बद्धाविन्द्रजिता रणे ।
रेजतुः पुरुषव्याघ्रौ शकुन्ताविव पञ्जरे ॥ ३-२९०-२ (२७०८६)
दृष्ट्वा निपतितौ भूमौ सर्वाङ्गेषु शराचितौ ।
सुग्रीवः कपिभिः सार्धं परिवार्योपतस्तिवान् ॥ ३-२९०-३ (२७०८७)
सुषेणमैन्दद्विविदैः कुमुदेनाङ्गदेन च ।
हनुमननीलतारैश्च नलेन च कपीश्वरः ॥ ३-२९०-४ (२७०८८)
ततस्तं देशमागम्य कृतकर्मा विभीषणः ।
बोधयामास तौ वीरौ प्रज्ञास्त्रेण प्रमोहितौ ॥ ३-२९०-५ (२७०८९)
विशल्यौ चापि सुग्रीवः क्षणेनैतौ चकार ह ।
विशल्यया महौषध्या दिव्यमन्त्रप्रयुक्तया ॥ ३-२९०-६ (२७०९०)
तौ लब्धसंज्ञौ नृवरौ विशल्यावुदतिष्ठताम् ।
उभौ गतक्लमौ चास्तां णेनैतौ महारथौ ॥ ३-२९०-७ (२७०९१)
ततो विभीषणः पार्थ राममिक्ष्वाकुनन्दनम् ।
उवाच विज्वरं दृष्ट्वा कृताञ्जलिरिदं वचः ॥ ३-२९०-८ (२७०९२)
अयमम्भो गृहीत्वातु राजराजस् शासनात् ।
गुह्कोऽभ्यागतः श्लेतात्त्वत्सकाशमरिंदम ॥ ३-२९०-९ (२७०९३)
इदमम्भः कुबेरस्ते महाराज प्रयच्छति ।
अन्तर्हितानां भूतानां दर्शनार्थं परंतप ॥ ३-२९०-१० (२७०९४)
अनेन मृष्टनयनो भूतान्यन्तर्हितान्युत ।
भवान्द्रक्ष्यति यस्मै च भवानेतत्प्रदास्यति ॥ ३-२९०-११ (२७०९५)
तथेति रामस्तद्वारि प्रतिगृह्याभिसंस्कृतम् ।
चकार नेत्रयोः शौचं लक्ष्मणश्च महामनाः ॥ ३-२९०-१२ (२७०९६)
सुग्रीवजाम्बवन्तौ चहनुमानङ्गदस्तथा ।
मैन्दद्विविदनीलाश्च प्रायः प्लवगसत्तमाः ॥ ३-२९०-१३ (२७०९७)

तथासमभवच्चापि यदुवाच विभीषणः ।
क्षणेनातीन्द्रियाण्येषां चक्षुंष्यासन्युधिष्ठिर ॥ ३-२९०-१४ (२७०९८)
इन्द्रजित्कृतकर्मा तु पित्रे कर्म तदाऽऽत्मनः ।
निवेद्य पुनरागच्छत्त्वरयाऽऽजिशिरःप्रति ॥ ३-२९०-१५ (२७०९९)
तमागतं तु संक्रुद्धं पुनरेव युयुत्सया ।
अभिदुद्राव सौमित्रिर्विभीषणमते स्थितः ॥ ३-२९०-१६ (२७१००)
अकृताह्निकमेवैनं जिघांसुर्जितकाशिनम् ।
शरैर्जघान संक्रुद्धः कृतसंज्ञोऽथ लक्ष्मणः ॥ ३-२९०-१७ (२७१०१)
तयोः समभवद्युद्धं तदाऽन्योन्यं जीगीषतोः ।
अतीव चित्रमाश्चर्यं शक्रप्रह्लादयोरिव ॥ ३-२९०-१८ (२७१०२)
अविध्यदिन्द्रजित्तीक्ष्णैः सौमित्रिं मर्मभेदिभिः ।
सौमित्रिश्चानलस्पर्शैरविध्यद्रावणिं शरैः ॥ ३-२९०-१९ (२७१०३)
सौमित्रिशरसंस्पर्शाद्रावणिः क्रोधमूर्च्छितः ।
असृजल्लक्ष्मणायाष्टौ शरानाशीविषोपमान् ॥ ३-२९०-२० (२७१०४)
तस्येषून्पावकस्पर्शैः सौमित्रिः पत्रिभिस्त्रिभिः ।
ग्वारयामास नाराचैः सौमित्रिर्मित्रनन्दनः ॥ ३-२९०-२१ (२७१०५)
असृजल्लक्ष्मणश्चाष्टौ राक्षसाय शरान्पुनः'।
तथा तं न्यहनद्वीरस्तन्मे निगदतः शृणु ॥ ३-२९०-२२ (२७१०६)
एकेनास्य धनुष्मन्तं बाहुं देहादपातयत् ।
द्वितीयेन तु बाणेन भुजमन्यमपातयत् ॥ ३-२९०-२३ (२७१०७)
तृतीयेन तु बाणेन शितधारेण भास्वता ।
जहार सुनसं चापि शिरो ज्वलितकुण्डलम् ॥ ३-२९०-२४ (२७१०८)
विनिकृत्तभुजस्कन्धः कबन्धाकृतिदर्शनः ।
ग्पपात वसुधायां तु छिन्नमूल इवद्रुमः' ॥ ३-२९०-२५ (२७१०९)
तं हत्वासूतमप्यस्त्रैर्जघान बलिनंवरः ।
लङ्कां प्रवेशयामासुस्तं रथं वाजिनस्तदा ॥ ३-२९०-२६ (२७११०)
ददर्श रावणस्तं च रथं पुत्रविनाकृतम् ।
स पुत्रं निहतं श्रुत्वा त्रासात्संभ्रान्तमानसः। ३-२९०-२७ (२७१११)
रावणः शोकमोहार्तो वैदेहीं हन्तुमुद्यतः ॥
ङ्गमादाय दुष्टात्मा जवेनाभिपपात ह ॥ ३-२९०-२८ (२७११२)
तं दृष्ट्वातस्य दुर्बुद्धेरविन्ध्यः पापनिश्चयम् ।
शमयामास संक्रुद्धं श्रूयतां येन हेतुना ॥ ३-२९०-२९ (२७११३)
महाराज्येस्थितो दीप्ते न स्त्रियं हन्तुमर्हसि ।
हतैवैषा यदा स्त्री च कबन्धनस्था च ते वशे ॥ ३-२९०-३० (२७११४)
न चैषा दहभेदेन हतास्यादिति मे मतिः ।
जहि भर्तारमेवास्या हते तस्मिन्हता भवेत् ॥ ३-२९०-३१ (२७११५)

न हि ते विक्रमे तुल्यः साक्षादपि शतक्रतुः ।
असकृद्धि त्वया सन्द्रास्त्रासितास्त्रिदसा युधि ॥ ३-२९०-३२ (२७११६)
एवं बहुविधैर्वाक्यैरविन्ध्यो रावणं तदा ।
क्रुद्धं संशमयामास जगृहे च स तद्वचः ॥ ३-२९०-३३ (२७११७)
निर्याणे स मतिं कृत्वा नियन्तारं क्षपाचरः ।
आज्ञापयामास तदारथो मे कल्प्यतामिति ॥ ३-२९०-३४ (२७११८)

इति श्रीमन्महाभारते अरण्यपर्वणि रामोपाख्यानपर्वणि
नवत्यधिकद्विशततमोऽध्यायः ॥ २९० ॥
Mahabharata - Vana Parva - Chapter Footnotes

३-२९०-१४ अतीन्द्रियाण्यतीन्द्रियार्थग्राहकाणि ॥
३-२९०-१७ कृतसंज्ञ विभीषणेन संकेतितः ॥
३-२९०-३४ निधायासिं क्षपाचर इति झ । पाठः। निधाय बद्ध्वा। असिं
खड्गम् ॥

---

वन-अध्यय२९१
॥ श्रीः ॥
३.२९१. अध्यायः २९१

Mahabharata - Vana Parva - Chapter Topics
इन्द्रजिद्वधक्रोधाद्रावणेन त्वयमेव युद्धाय रामंप्रत्यभियानम् ॥ १ ॥
तदा इन्द्रेण रामाय मातलिसनायस्य निजरथस्य प्रेषणम् ॥ २ ॥
श्रीरामेण मायायोधिनो रावणस्य ब्रह्मास्त्रेण हननम् ॥ ३ ॥

Mahabharata - Vana Parva - Chapter Text

३-२९१-० (२७११९)
मार्कण्डेय उवाच। ३-२९१-०क्ष् (२७१६)
ततः क्रुद्धो दशग्रीवः प्रिये पुत्रे निपातिते ।
निर्ययौ रथमास्थाय हेमरत्नविभूषितम् ॥ ३-२९१-१ (२७१२०)
संवृतोराक्षसैर्घोरैर्विविधायुधपाणिभिः ।
अभिदुद्राव रामं स पोथयन्हरियूथपान् ॥ ३-२९१-२ (२७१२१)
तमाद्रवन्तं संक्रुद्ध मैन्दनीलनलाङ्गदाः ।
हनुमाञ्जाम्बवांश्चैव ससैन्याः पर्यवारयन् ॥ ३-२९१-३ (२७१२२)
ते दशग्रीवसैन्यं तदृक्षवानरपुङ्गवाः ।

द्रुमैर्विध्वंसयांचक्रुर्दशग्रीवस्य पश्यतः ॥ ३-२९१-४ (२७१२३)
ततः स्वसैन्यमालोक्य वध्यमानमरातिभिः ।
मायावी चासृजन्मायां रावणो राक्षसाधिपः ॥ ३-२९१-५ (२७१२४)
तस्य देहविनिष्क्रान्ताः शतशोऽथ सहस्रशः ।
राक्षसाः प्रत्यदृश्यन्त शरशक्त्यृष्टिपाणयः ॥ ३-२९१-६ (२७१२५)
तान्रामो जघ्निवान्सर्वान्दिव्येनास्त्रेण राक्षसान् ।
अथ भूयोपि मायां स व्यदधाद्राक्षसाधिपः ॥ ३-२९१-७ (२७१२६)
कृत्वा रामस् रूपाणि लक्ष्मणस्य च भारत ।
अभिदुद्राव रामं च लक्ष्मणं च दशाननः ॥ ३-२९१-८ (२७१२७)
ततस्ते राममर्च्छन्तो लक्ष्मणं च क्षपाचराः ।
अभिपेतुस्तदा रामं प्रगृहीतशरासनाः ॥ ३-२९१-९ (२७१२८)
तां दृष्ट्वाराक्षसेन्द्रस् मायामिक्ष्वाकुनन्दनः ।
उवाच रामः सौमित्रिमसंभ्रान्तो बृहद्वचः ॥ ३-२९१-१० (२७१२९)
जहीमान्राक्षसान्पापानात्मनः प्रतिरूपकान् ।
इत्युक्त्वाऽभ्यहनद्रामो लक्ष्मणश्चात्मरूपकान् ॥ ३-२९१-११ (२७१३०)
ततो हर्यश्वयुक्तेन रथेनादित्यवर्चसा ।
उपतस्थे रणे रामं मातलिः शक्रसारथिः ॥ ३-२९१-१२ (२७१३१)
मातलिरुवाच। ३-२९१-१३क्ष् (२७१७)
अयं हर्यश्वयुग्जैत्रो मघोनः स्यन्दनोत्तमः ।
ग्त्वदर्थमिह संप्राप्तः संदेशाद्वै शतक्रतोः' ॥ ३-२९१-१३ (२७१३२)
अनेन शक्रः काकुत्स्थ समरे दैत्यदानवान् ।
शतशः पुरुषव्याघ्र रथोदारेण जघ्निवान् ॥ ३-२९१-१४ (२७१३३)
तदनन नरव्याघ्र मया यत्तेन संयुगे ।
स्यन्दनेन जहिक्षिप्रं रावणं मा चिरं कृथाः ॥ ३-२९१-१५ (२७१३४)
इत्युक्तो राघवस्तथ्यं वचोऽशङ्कत मातलेः ।
मायैषाराक्षसस्येति तमुवाच विबीषणः ॥ ३-२९१-१६ (२७१३५)
नेयं माया नरव्याघ्ररावणस् दुरात्मनः ।
तदातिष्ठ रथंशीघ्रमिमसैन्द्रं महाद्युते ॥ ३-२९१-१७ (२७१३६)
ततः प्रहृष्टः काकुत्स्थस्तथेत्युक्त्वा विभीषणम् ।
रथेनाभिपपाताथ दशग्रीवं रुषाऽन्वितः ॥ ३-२९१-१८ (२७१३७)
हाहाकुतानि भूतानि रावणे समभिद्रुते ।
सिंहनादाः सपटहादिति दिव्यास्तथाऽनदन् ॥ ३-२९१-१९ (२७१३८)
श्दशकन्धरराजसून्वोस्तथा युद्धमभून्महत् ।
अलब्धोपममन्यत्रतयोरेव तथाऽभवत् ॥ ३-२९१-२० (२७१३९)
सरामाय महाघोरं विससर्ज निशाचरः ।
शूलमिन्द्राशनिप्रख्यं ब्रह्मदण्डभिवोद्यतम् ॥ ३-२९१-२१ (२७१४०)

तच्छूलं सत्वरं रामश्चिच्छेद निशितैः शरैः ।
तद्दृष्ट्वा दुष्करं कर्म रावणं भयमाविशत् ॥ ३-२९१-२२ (२७१४१)
ततः क्रुद्धः ससर्जाशु दशग्रीवः शिताञ्छरान् ।
सहस्रायुतशो रामे शस्त्राणि विविधानि च ॥ ३-२९१-२३ (२७१४२)
ततो भुशुण्डीः शूलानि मुसलानि परश्वथान् ।
शक्तीश्च विविधाकाराः शतघ्नीश्च शितान्क्षुरान् ॥ ३-२९१-२४ (२७१४३)
तां मायांविविधां दृष्ट्वा दशग्रीवस्य रक्षसः ।
भयात्प्रदुद्रुवुः सर्वे वानराः सर्वतोदिशम् ॥ ३-२९१-२५ (२७१४४)
ततः सुपत्रं सुमुखंहेमपुङ्गं शरोत्तमम् ।
तूणादादाय काकुत्स्थो ब्रह्मास्त्रेण युयोज ह ॥ ३-२९१-२६ (२७१४५)
तं प्रेक्ष्यबाणं रामेण ब्रह्मास्त्रेणानुमन्त्रितम् ।
जहृषुर्देवगन्धर्वा दृष्ट्वा शक्रपुरोगमाः ॥ ३-२९१-२७ (२७१४६)
अल्पावशेषमायुश्च ततोऽमन्यन्त रक्षसः ।
ब्रह्मास्त्रोदीरणाच्छत्रोर्देवदानवकिंनराः ॥ ३-२९१-२८ (२७१४७)
ततः ससर्ज तं रामः शरमप्रतिमौजसम् ।
रावणान्तकरं घोरं ब्रह्मदण्डमिवोद्यतम् ॥ ३-२९१-२९ (२७१४८)
मुक्तमात्रेण रामेण दूराकृष्टेन भारत ।
स तेन राक्षसश्रेष्ठः सरथः साश्वसारथिः ।
प्रजज्वाल महाज्वालेनाग्निनाभिपरिप्लुतः ॥ ३-२९१-३० (२७१४९)
ततः प्रहृष्टास्त्रिदशाः सहगन्धर्वचारणाः ।
निहतं रावणं दृष्ट्वा रामेणाक्लिष्टकर्मणा ॥ ३-२९१-३१ (२७१५०)
तत्यजुस्तं महाभागं पञ्चभूतानि रावणम् ।
भ्रंशितः सर्वलोकेषु स हि ब्रह्मास्त्रतेजसा ॥ ३-२९१-३२ (२७१५१)
शरीरधातवो ह्यस् मासं रुधिरमेव च ।
नेशुर्ब्रह्मास्त्रनिर्दग्दा न च भस्माप्यदृश्यत ॥ ३-२९१-३३ (२७१५२)

इति श्रीमन्महाभारते अरण्यपर्वणि रामोपाख्यानपर्वणि
एकनवत्यधिकद्विशततमोऽध्यायः ॥ २९१ ॥
Mahabharata - Vana Parva - Chapter Footnotes

३-२९१-८ रामस्य रूपं कृत्वालक्ष्मणमभिदुद्राव लक्ष्मणस्य रूपं
कृत्वा राममिति येजना ॥
३-२९१-३२ पञ्चभूतानि तत्यजुर्मृत इत्यर्थः ॥

---

वन-अध्यय२९२
॥ श्रीः ॥
३.२९२. अध्यायः २९२

Mahabharata - Vana Parva - Chapter Topics
रावणवधानन्तरमविन्ध्यनाम्ना राक्षसवृद्धेन रामसमीपंप्रति
सीताया आनयनम् ॥ १ ॥
सूतया स्वशीलशङ्किनो रामस्यानङ्गीकारवचनश्रवणेन बूमौ पतनम्
॥ २ ॥
अन्तरिक्षगतैर्ब्रह्मादिभिः सीतायाः सौशील्यख्यापनपूर्वकं रामंप्रति
तद्ग्रहणचोदना ॥ ३ ॥
रामेण सीतालक्ष्मणादिभिः सहायोध्यांप्रति प्रस्थानम् ॥ ४ ॥
दूत्येन भरतंप्रति हनुमत्प्रेषणपूर्वकं नन्दिग्राममागतेन रामेण
भरताधिभिः सहायोध्यांप्रत्यागमनम् ॥ ५ ॥
वसिष्ठादिभिः सीतया सह राज्येऽभिपिक्तेन रामेण
सुग्रीवविभीषणादीनां सबहुमानं स्वस्वपुरप्रेषणपूर्वकं प्रजापालनम्
॥ ६ ॥

Mahabharata - Vana Parva - Chapter Text

३-२९२-० (२७१५३)
मार्कण्डेय उवाच। ३-२९२-०क्ष् (२७१८)
स हत्वा रावयणं क्षुद्रं राक्षसेनद्रं सुरद्विषम् ।
बभूव हृष्टः ससुहृद्रामः सौमित्रिणा सह ॥ ३-२९२-१ (२७१५४)
ततो हते दशग्रीवे देवाः सर्षिपुरोगमाः ।
आशीर्भिर्जययुक्ताभिरानर्चुस्तं महाभुजम् ॥ ३-२९२-२ (२७१५५)
रामं कमलपत्राक्षं तुष्टुवुः सर्वदेवताः ।
गन्धर्वाः पुष्पवर्षैश्च वाग्भिश्च त्रिदशालयाः ॥ ३-२९२-३ (२७१५६)
पूजयित्वा रणे रामं प्रतिजग्मुर्यथागतम् ।
तन्महोत्सवसंकाशमासीदाकाशमच्युत ॥ ३-२९२-४ (२७१५७)
ततो हत्वा दशग्रीवं लङ्कां रामो महायशाः ।
विभीषणाय प्रददौ प्रभुः परपुरंजयः ॥ ३-२९२-५ (२७१५८)
ततः सीतां पुरस्कृत्य विभीषणपुरस्कृताम् ।
अविन्ध्यो नाम सुप्रज्ञो वृद्धामात्यो विनिर्ययौ ॥ ३-२९२-६ (२७१५९)
उवाच च महात्मानं काकुत्स्थं दैन्यमास्थितम् ।
प्रतीच्छ देवीं सद्वृत्तां महात्मञ्जानकीमिति ॥ ३-२९२-७ (२७१६०)
एतच्छ्रुत्वा वचस्तस्मादवतीर्य रथोत्तमात् ।
बाष्पेणापिहितां सीतां ददर्शेक्ष्वाकुनन्दनः ॥ ३-२९२-८ (२७१६१)
तां दृष्ट्वा चारुसर्वाङ्गीं यानस्थां शोककर्शिताम् ।

मलोपचितसर्वाङ्गीं जटिलां कृष्णवाससम् ॥ ३-२९२-९ (२७१६२)
उवाच रामो वैदेहीं परामर्शविशङ्कितः ।
ग्लक्षयित्वेङ्गितं सर्वं प्रियं तस्यै निवेद्य सः' ॥ ३-२९२-१० (२७१६३)
गच्छ वैदेहि मुक्ता त्वं यत्कार्यं तनमया कृतम् ।
मामासाद्यपतिं भद्रे न त्वं राक्षसवेश्मनि ।
जरां व्रजेथा इतिमे निहतोसौ निशाचरः ॥ ३-२९२-११ (२७१६४)
कथं ह्यस्मद्विधो जातु जानन्धर्मविनिश्चयम् ।
परहस्तगतां नारीं मुहूर्तमपि धारयेत् ॥ ३-२९२-१२ (२७१६५)
सुवृत्तामसुवृत्तां वाऽप्यहं त्वामद्य मैथिलि ।
नोत्सहे परिभोगाय श्वावलीढं हविर्यथा ॥ ३-२९२-१३ (२७१६६)
ततः सा सहसा बाला तच्छ्रुत्वा दारुणं वचः ।
पपात देवी व्यथिता निकृत्ता कदली यथा ॥ ३-२९२-१४ (२७१६७)
योप्यस्या हर्षसंभूतो मुखरागः पुराऽभवत् ।
क्षणेन सपुनर्नष्टो निःश्वासादिव दर्पणे ॥ ३-२९२-१५ (२७१६८)
ततस्ते हरयः सर्वे तच्छ्रुत्वा रामभाषितम् ।
गतासुकल्पा निश्चेष्टा बभूवुः सहलक्ष्मणाः ॥ ३-२९२-१६ (२७१६९)
ततो देवो विशुद्धात्मा विमानेन चतुर्मुखः ।
पद्मयोनिर्जगत्स्रष्टा दर्शयामास राघवम् ॥ ३-२९२-१७ (२७१७०)
शक्रश्चाग्निश्च वायुश्चयमो वरुण एव च ।
यक्षाधिपश्च भगवांस्तथा सप्तर्षयोऽमलाः ॥ ३-२९२-१८ (२७१७१)
राजा दशरथश्चैव दिव्यभास्वरमूर्तिमान् ।
विमानेन महार्हेण हंसयुक्तेन भास्वता ॥ ३-२९२-१९ (२७१७२)
ततोऽन्तरिक्षं तत्सर्वंदेवगन्धर्वसंकुलम् ।
शुशुभे तारकाचित्रं शरदीव नभस्तलम् ॥ ३-२९२-२० (२७१७३)
तत उत्थाय वैदेही तेषां मध्ययशस्विनी ।
उवाच वाक्यं कल्याणी रामं पृथुलवक्षसम् ॥ ३-२९२-२१ (२७१७४)
राजपुत्र न ते कोपं करोमि विदिताहि मे ।
गतिः स्त्रीणां नराणां च शृणु चदं वचो मम ॥ ३-२९२-२२ (२७१७५)
अन्तश्चरतिभूतानां मातरिश्वा सदागतिः ।
स मे विमुञ्चतु प्राणान्यदि पापं चराम्यहम् ॥ ३-२९२-२३ (२७१७६)
अग्निरापस्तथाऽऽकाशं पृथिवी वायुरेव च ।
विमुञ्चन्तु मम प्राणान्यदि पापं चराम्यहम् ॥ ३-२९२-२४ (२७१७७)
यथाऽहं त्वदृतेवीर नान्यंस्वप्नेऽप्यचिन्तयम् ।
तथा मे देव निर्दिष्टस्त्वमेव हि पतिर्भव ॥ ३-२९२-२५ (२७१७८)
ततोऽन्तरिक्षे वागासीत्सुभगा लोकसाक्षिणी ।
पुण्यासंहर्षणी तेषां वानराणां महात्मनाम् ॥ ३-२९२-२६ (२७१७९)

वायुरुवाच। ३-२९२-२७क्ष् (२७१९)
बोभो राघव सत्यं वै वायुरस्मि सदागतिः ।
अपापा मैथिली राजन्संगच्छसहभार्यया ॥ ३-२९२-२७ (२७१८०)
अग्निरुवाच। ३-२९२-२८क्ष् (२७२०)
अहमन्तःशरीरस्थो भूतानां रघुनन्दन ।
सुसूक्ष्ममपि काकुत्स्थ मैथिलीनापराध्यति ॥ ३-२९२-२८ (२७१८१)
वरुण उवाच। ३-२९२-२९क्ष् (२७२१)
रसावै मत्प्रसूता हि भूतदेहेषु राघव ।
अहंवै त्वां प्रब्रवीमि मैथिली प्रतिगृह्यताम् ॥ ३-२९२-२९ (२७१८२)
यम उवाच। ३-२९२-३०क्ष् (२७२२)
ग्धर्मोऽहमस्मि काकुत्स्थ साक्षी लोकस्य कर्मणाम् ।
शुभाशुभानां सीतेयमपापा प्रतिगृह्यताम्' ॥ ३-२९२-३० (२७१८३)
ब्रह्मोवाच। ३-२९२-३१क्ष् (२७२३)
पुत्र नैतदिहाश्चर्यं त्वयि राजर्षिधर्मणि ।
साधो सद्वृत्त काकुत्स्थ शृणु चेदं वचो मम ॥ ३-२९२-३१ (२७१८४)
शत्रुरेष त्वया वीर देवगनधर्वभोगिनाम् ।
यक्षाणां दानवानां च महर्षीणां च पातितः ॥ ३-२९२-३२ (२७१८५)
अवध्यः सर्वभूतानां मत्प्रसादात्पुराऽभवत् ।
कस्माच्चित्कारणात्पापः कंचित्कालमुपेक्षितः ॥ ३-२९२-३३ (२७१८६)
वधार्थमात्मनस्तेन हृता सीता दुरात्मना ।
नलकूबरशापेन रक्षा चास्याः कृता मया ॥ ३-२९२-३४ (२७१८७)
यदि ह्यकामामासेवेत्स्तरियमन्यामपि ध्रुवम् ।
शतधाऽस्य फलेन्मूर्धा इत्युक्तः सोभवत्पुरा ॥ ३-२९२-३५ (२७१८८)
नात्रशङ्का त्वया कार्या प्रतीच्छेमां महामते ।
कृतं त्वया महत्कार्यं देवानाममितप्रभ ॥ ३-२९२-३६ (२७१८९)
दशरथ उवाच। ३-२९२-३७क्ष् (२७२४)
प्रीतोस्मि वत्स भद्रं ते पिता दशरथोस्मि ते ।
अनुजानामि राज्यं च प्रशाधि पुरुषोत्तम ॥ ३-२९२-३७ (२७१९०)
राम उवाच। ३-२९२-३८क्ष् (२७२५)
अभिवादयेत्वां राजेन्द्र यदि त्वं जनको मम ।
गमिष्यामि पुरीं रम्यामयोध्यां शासनात्तव ॥ ३-२९२-३८ (२७१९१)
मार्कण्डेय उवाच। ३-२९२-३९क्ष् (२७२६)
तमुवाच पिता भूयः प्रहृष्टो भरतर्षभ ।
गच्छायोध्यां प्रशाधि त्वंराम रक्तान्तलोचन ।
संपूर्णानीहवर्षाणि चतुर्दश महाद्युते ॥ ३-२९२-३९ (२७१९२)
ततो देवान्नमस्कृत्य मुहृद्भिरभिनन्दितः ।

महेन्द्रइव पौलोम्या भार्यया स समेयिवान् ॥ ३-२९२-४० (२७१९३)
ततो वरं ददौ तस्मै ह्यविन्ध्याय परंतपः ।
त्रिजटां चार्थमानाभ्यां योजयामास राक्षसीम् ॥ ३-२९२-४१ (२७१९४)
तमुवाच ततो ब्रह्मा देवैः शक्रपुरोगमैः ।
कौसल्यामातरिष्टांस्ते वरानद्य ददानि कान् ॥ ३-२९२-४२ (२७१९५)
वव्रेरामः स्थितिं धर्मे शत्रुभिश्चापराजयम् ।
राक्षसैर्निहतानां च वानराणां समुद्भवम् ॥ ३-२९२-४३ (२७१९६)
ततस्ते ब्रह्मणा प्रोक्ते तथेतिवचने तदा ।
समुत्तस्थुर्महाराज वानरा लब्धचेतसः ॥ ३-२९२-४४ (२७१९७)
सीता चापि महाभागा वरं हनुमते ददौ ।
रामकीर्त्या समं पुत्र जीवितं ते भविष्यति ॥ ३-२९२-४५ (२७१९८)
दिव्यास्त्वामुपभोगाश्च मत्प्रसादकृताः सदा ।
उपस्थास्यन्ति हनुमन्निति स्म हरिलोचन ॥ ३-२९२-४६ (२७१९९)
ततस्ते प्रेक्षमाणानां तेपामक्लिष्टकर्मणाम् ।
अन्तर्धानं ययुर्देवाः सर्वे शक्रपुरोगमाः ॥ ३-२९२-४७ (२७२००)
दृष्ट्वा रामं तु जानक्या संगतं शक्रसारथिः ।
उवाच परमप्रीतसुहृन्मध्य इदं वचः ॥ ३-२९२-४८ (२७२०१)
देवगन्धर्वयक्षाणां मानुषासुरभोगिनाम् ।
अपनीतं त्वया दुःखमिदं सत्यपराक्रम ॥ ३-२९२-४९ (२७२०२)
सदेवासुरगनधर्वा यक्षराक्षसपन्नगाः ।
कथयिष्यन्ति लोकास्त्वां यावद्भूमिर्धरिष्यति ॥ ३-२९२-५० (२७२०३)
इत्येवमुक्त्वाऽनुज्ञाप्यरामं शस्त्रभृतांवरम् ।
संपूज्यापाक्रमत्तेन रथेनादित्यवर्चसा ॥ ३-२९२-५१ (२७२०४)
ततःसीतां पुरस्कृत्य रामः सौमित्रिणा सह ।
सुग्रीवप्रमुखैश्चैव सहितः सर्ववानरैः ॥ ३-२९२-५२ (२७२०५)
विधाय रक्षां लङ्कायां विभीषणपुरस्कृतः ।
संततार पुनस्तेन सेतुना मकरालयम् ॥ ३-२९२-५३ (२७२०६)
पुष्पकेण विसानन खेचरेण विराजता ।
कामगेन यथामुख्यैरमात्यैः संवृतो वसी ॥ ३-२९२-५४ (२७२०७)
ततस्तीरे समुद्रस्यं यत्रशिश्य स पार्थिवः ।
तत्रैवोवास धर्मात्मा सहितः सर्ववानरैः ॥ ३-२९२-५५ (२७२०८)
अथैनान्राघवः काले समानीयाभिपूज्य च ।
विसर्जयामास तदा रत्नैः संतोष्य सर्वशः ॥ ३-२९२-५६ (२७२०९)
गतेषु वानरेन्द्रेषु गोपुच्छर्क्षेषु तेषु च ।
सुग्रीवसहितो रामः किष्किन्दां पुनरागमत् ॥ ३-२९२-५७ (२७२१०)
विभीषणेनानुगतः सुग्रीवसहितस्तदा ।

पुष्पकेण विमानेन वैदेह्या दर्शयन्वनम् ॥ ३-२९२-५८ (२७२११)
किष्किन्धां तु समासाद्यरामः प्रहरतांवरः ।
अङ्गदं कृतकर्माणं यौवराज्येऽभ्यषेचयत् ॥ ३-२९२-५९ (२७२१२)
ततस्तैरेव सहितो रामः सौमित्रिणा सह ।
यथागतेन मार्गेण प्रययौ स्वपुरं प्रति ॥ ३-२९२-६० (२७२१३)
अयोध्यां स समासाद्यपुरीं राष्ट्रपतिस्ततः ।
भरताय हनूमन्तं दूतं प्रास्थापयद्द्रुतम् ॥ ३-२९२-६१ (२७२१४)
लक्षयित्वेङ्गितं सर्वंप्रियं तस्मै निवेद्य वै ।
वायुपुत्रे पुनः प्राप्ते नन्दिग्राममुपाविशत् ॥ ३-२९२-६२ (२७२१५)
सतत्रमलदिग्धाङ्गं भरतं चीरवाससम् ।
ग्नन्दिग्रामगतंरामः सशत्रुघ्नं सराघवः'।
अग्रतःपादुके कृत्वा ददर्शासीनमासने ॥ ३-२९२-६३ (२७२१६)
समेत्यभरतेनाथ शत्रुघ्नेन च वीर्यवान् ।
राघवः सहसौमित्रिर्मुमुदे भरतर्षभ ॥ ३-२९२-६४ (२७२१७)
ततो भरतशत्रुघ्नौ समेतौ गुरुणा तदा ।
वैदेह्या दर्शनेनोभौ प्रहर्षं समवापतुः ॥ ३-२९२-६५ (२७२१८)
तस्मै तद्भरतो राज्यमागतायातिसत्कृतम् ।
न्यासं निर्यातयामास युक्तः परमया मुदा ॥ ३-२९२-६६ (२७२१९)
ततस्तं वैष्णवे शूरं नक्षत्रेऽभिजितेऽहनि ।
वसिष्ठो वामदेवश्च सहितावभ्यषिञ्चताम् ॥ ३-२९२-६७ (२७२२०)
सोभिषिक्तः कपिश्रेष्ठं सुग्रीवं ससुहृज्जनम् ।
विभीषणं च पौलस्त्यमन्वजानाद्गृहान्प्रति ॥ ३-२९२-६८ (२७२२१)
अभ्यर्च्य विविधै रत्नैः प्रीतियुक्तौ मुदा युतौ ।
समाधायेतिकर्तव्यं दुःखेन विससर्ज ह ॥ ३-२९२-६९ (२७२२२)
पुष्पकं च विमानं तत्पूजयित्वा स राघवः ।
प्रादाद्वैश्रवणायैव प्रीत्या स रघुनन्दनः ॥ ३-२९२-७० (२७२२३)
ततो देवर्षिसहितः सरितं गोमतीमनु ।
शताश्वमेधानाजह्रे जारूथ्यान्स निरर्गलान् ॥ ३-२९२-७१ (२७२२४)

इति श्रीमन्महाभारते अरण्यपर्वणि रामोपाख्यानपर्वणि
द्विनवत्यधिकद्विशततमोऽध्यायः ॥ २९२ ॥

Mahabharata - Vana Parva - Chapter Footnotes

३-२९२-३ त्रिदशालयः स्वर्गस्तत्स्थाः ॥
३-२९२-५५ यत्र शिश्ये पूर्वं समुद्रप्रार्थनार्थं शयनं कृतवान् ॥
३-२९२-६२ लक्षयित्वेङ्गितैः सर्वैरिति ध पाटः ॥

३-२९२-६५ गुरुणा रामेण ॥
३-२९२-६७ वैष्णवे नक्षत्रेश्रवणे ॥
३-२९२-७१ जारूथ्यान् त्रिगुणदक्षिणानित्यर्जुनमिश्रः ॥

---

वन-अध्यय२९३
॥ श्रीः ॥
३.२९३. अध्यायः २९३

Mahabharata - Vana Parva - Chapter Topics
मार्कण्डेयेन स्वस्यानुपमदुःखानुभवितृत्वबुद्ध्या शोचतोयुधिष्ठिरस्य रामोपाख्यानकथनपूर्वकं हेतूपन्यासेन शोकापनोदनम् ॥ १ ॥

Mahabharata - Vana Parva - Chapter Text

३-२९३-० (२७२२५)
मार्कण्डेय उवाच। ३-२९३-०क्ष् (२७२७)
एवमेतन्महाबाहो रामेणामिततेजसा ।
प्राप्तं व्यसनमत्युग्रं वनवासकृतं पुरा ॥ ३-२९३-१ (२७२२६)
मा शुचः परुषव्याघ्र क्षत्रियोसि परंतप ।
बाहुवीर्याश्रयेमार्गे वर्तसे दीप्तनिर्णये ॥ ३-२९३-२ (२७२२७)
न हि ते वृजिनं किंचिद्दृश्यते परमण्वपि ।
अस्मिन्मार्गे निपीदेयुः सेन्द्रा अपि सुरासुराः ॥ ३-२९३-३ (२७२२८)
संहत्य निहतोवृत्रो मरुद्भिर्वज्रपाणिना ।
नमुचिश्चैवदुर्धर्षो दीर्गजिह्वा चराक्षसी ॥ ३-२९३-४ (२७२२९)
सहायवति सर्वार्थाः सतिष्ठन्तीह सर्वशः ।
किंनु तस्याजितं सङ्ख्ये यस् भ्राता धनंजयः ॥ ३-२९३-५ (२७२३०)
अयं च बलिनांश्रेष्ठो भीमो भीमपराक्रमाः ।
युवानौ च महेष्वासौ वीरौ माद्रवतीसुतौ ॥ ३-२९३-६ (२७२३१)
एभिः सहायैः कस्मात्त्वं विषीदसि परंतप ।
य इमे वज्रिणः सेनां जयेयुः समरुद्गणाम् ॥ ३-२९३-७ (२७२३२)
त्वमप्येभिर्महेष्वासैः सहायैर्देवरूपिभिः ।
विजेष्यसि रणे सर्वानमित्रान्भरतर्षभ ॥ ३-२९३-८ (२७२३३)
इतश्च त्वमिमां पश्यसैन्धवेन दुरात्मना ।
बलिना वीर्यमत्तेन हृतामेभिर्महात्मभिः ॥ ३-२९३-९ (२७२३४)
आनीतां द्रौपदीं कृष्णां कृत्वा कर्म सुदुष्करम् ।
जयद्रथं च राजानं विजितं वशमागतम् ॥ ३-२९३-१० (२७२३५)

असहायेन रामेण वैदेही पुनराहृता ।
हत्वासङ्ख्ये दशग्रीवं राक्षसं भीमविक्रमम् ॥ ३-२९३-११ (२७२३६)
यस् शाखामृगामित्राण्यृक्षाः कालमुखास्तथा ।
जात्यन्तरगता राजन्नेतद्बुद्ध्याऽनुचिन्तय ॥ ३-२९३-१२ (२७२३७)
तस्मात्सर्वं कुरुश्रेष्ठ मा शुचो भरतर्षभ ।
त्वद्विधा हि महात्मानो न शोचन्ति परंतप ॥ ३-२९३-१३ (२७२३८)
वैशंपायन उवाच। ३-२९३-१४क्ष् (२७२८)
एवमाश्वासितो राजामार्कण्डेयेन धीमता ।
त्यक्त्वा दुःखमदीनात्मा पुनरप्येनमब्रवीत् ॥ ३-२९३-१४ (२७२३९)

इति श्रीमन्महाभारते अरण्यपर्वणि रामोपाख्यानपपर्वणि
त्रिनवत्यधिकद्विशततमोऽध्यायः ॥ २९४ ॥
Mahabharata - Vana Parva - Chapter Footnotes

३-२९३-२ दीप्तनिर्णये असंदिग्धे प्रत्यक्षफले ॥

---

वन-अध्यय२९४
॥ श्रीः ॥
३.२९४. अध्यायः २९४

Mahabharata - Vana Parva - Chapter Topics
मार्कण्डेयेन युधिष्ठिरंप्रति सावित्र्युपाख्यानकथनारम्भः ॥ १ ॥
अस्वपतिनाम्नो मद्रराजस्य
स्वीयव्रतचर्यासंतुष्टसावित्रीदेवीप्रसादात्सावित्रीनामककन्याजननम्
॥ २ ॥
यौवनस्य्यातया पित्राज्ञया वृद्दामात्यैः सह राजर्षीणामाश्रमेषु
स्वोधितवरान्वेषणम् ॥ ३ ॥

Mahabharata - Vana Parva - Chapter Text

३-२९४-० (२७२४०)
युधिष्ठिर उवाच। ३-२९४-०क्ष् (२७२९)
नात्मानमनुशोचामि नेमान्भ्रातॄन्महामुने ।
हरणं चापि राज्यस् यथेमां द्रुपदात्मजाम् ॥ ३-२९४-१ (२७२४१)
द्यूते दुरात्मभिः क्लिष्टाः कृष्णया तारिता वयम् ।
जयद्रथेन चपुनर्वनाच्चापि हृता बलात् ॥ ३-२९४-२ (२७२४२)
अस्ति सीमन्तिनी काचिद्दृष्टपूर्वाऽपिवा श्रुता ।

पतिव्रता महाभागा यथेयं द्रुपदात्मजा ॥ ३-२९४-३ (२७२४३)
मार्कण्डेय उवाच। ३-२९४-४क्ष् (२७३०)
शृणु राजन्कुलस्त्रीणां महाभाग्यं युधिष्ठिर ।
सर्वमेतद्यथाप्राप्तं सावित्र्या राजकन्यया ॥ ३-२९४-४ (२७२४४)
आसीन्मद्रेषु धर्मात्मा राजा परमधार्मिकः ।
ब्रह्मण्यश्च महात्मा च सत्यसन्धो जितेन्द्रियः ॥ ३-२९४-५ (२७२४५)
यज्वा दानपतिर्दक्षः पौरजानपदप्रियः ।
पार्थिवोऽश्वपतिर्नाम सर्वभूतहिते रतः ॥ ३-२९४-६ (२७२४६)
क्षमावाननपत्यश्च सत्यवाग्विजितेन्द्रियः ।
अतिक्रान्तेन वयसा संतापमुपजग्मिवान् ॥ ३-२९४-७ (२७२४७)
अपत्योत्पादनार्थं च तीव्रं नियममास्थितः ।
काले परिमिताहारो ब्रहमचारी जितेन्द्रियः ॥ ३-२९४-८ (२७२४८)
हुत्वा शतसहस्रं स सावित्र्या राजसत्तम ।
षष्ठेषष्ठे तदाकाले बभूव मितमोजनः ॥ ३-२९४-९ (२७२४९)
एतेन नियमेनासीद्वर्षाण्यष्टादशैव तु ।
पूर्णे त्वष्टादशे वर्षे सावित्री तुष्टिमभ्यगात् ॥ ३-२९४-१० (२७२५०)
रूपिणी तु तदा राजन्दर्शयामास तं नृपम् ।
अग्निहोत्रात्समुत्थाय हर्षेण महताऽन्विता ॥ ३-२९४-११ (२७२५१)
उवाच चैनं वरदा वचनं पार्थिवं तदा ।
सा तमश्वपतिं राजन्सावित्री नियमे स्थितम् ॥ ३-२९४-१२ (२७२५२)
ब्रह्मचर्येण शुद्धेन दमेन नियमेन रच ।
सर्वात्मना च भक्त्या च तुष्टाऽस्मि तव पार्थिवाः ॥ ३-२९४-१३ (२७२५३)
वरं वृणीष्वाश्वपते मद्रराज यदीप्सितम् ।
न प्रामादश्च धर्मेषु कर्तव्यस्ते कथंचन ॥ ३-२९४-१४ (२७२५४)
अश्वपतिरुवाच। ३-२९४-१५क्ष् (२७३१)
अपत्यार्थः समारम्भः कृतो धर्मेप्सया मया ।
पुत्रा मे बहवो देवि भवेयुः कुलभावनाः ॥ ३-२९४-१५ (२७२५५)
तुष्टाऽसि यदि मे देवि वरमेतं वृणोम्यहम् ।
संतां परमो धर्म इत्याहुर्मां द्विजातयः ॥ ३-२९४-१६ (२७२५६)
सावित्र्युवाच। ३-२९४-१७क्ष् (२७३२)
पूर्वमेव मया राजन्नभिप्रायमिमं तव ।
ज्ञात्वा पुत्रार्थमुक्तो वै भगवांस्ते पितामहः ॥ ३-२९४-१७ (२७२५७)
प्रसादाच्चैव तस्मात्ते स्वयं विहितवत्यहम् ।
कन्या तेजस्विनी सौम्य क्षिप्रमेव भविष्यति ॥ ३-२९४-१८ (२७२५८)
उत्तरं च न ते किंचिद्व्याहर्तव्यं कथंचन ।
पितामहनियोगेन तुष्टा ह्येतद्ब्रवीमि ते ॥ ३-२९४-१९ (२७२५९)

स तथेति प्रतिज्ञाय सावित्र्या वचनं नृपः ।
प्रसादयामास पुनः क्षिप्रमेतद्भविष्यति ॥ ३-२९४-२० (२७२६०)
अन्तर्हितायां सावित्र्यां जगाम स्वपुरं नृपः ।
स्वराज्ये चावसद्वीरः प्रजा धर्मेण पालयन् ॥ ३-२९४-२१ (२७२६१)
कस्मिंश्चित्तु गते काले स राजा नियतव्रतः ।
ज्येष्ठायां धर्मचारिण्यां महिष्यां कगर्भमादधे ॥ ३-२९४-२२ (२७२६२)
राजपुत्र्यास्तु गर्भः स मानव्या भरतर्षभ ।
व्यर्धतं तदा शुक्ले तारापतिरिवाम्बरे ॥ ३-२९४-२३ (२७२६३)
प्राप्ते काले तु सुषुवे कन्यां राजीवलोचनाम् ।
क्रियाश्च तस्या मुदितश्चक्रे च नृपसत्तमः ॥ ३-२९४-२५असावित्र्या
प्रीतया दत्ता साव्व्या हुतया ह्यपि ।
सावित्रीत्येव नामास्याश्चक्रुर्विप्रास्तथा पिता ॥ ३-२९४-२४ (२७२६४)
सा विग्रहवतीव श्रीव्यवर्धत नृपात्मजा ।
कालेन चापि सा कन्या यौवनस्ता बभूव ह ॥ ३-२९४-२६ (२७२६५)
तां सुमध्यां पृथुश्रोणीं प्रतिमां काञ्चनीमिव ।
प्राप्तेयं रदेवकन्येति दृष्ट्वा संमेनिरे जनाः ॥ ३-२९४-२७ (२७२६६)
तां तु पद्मपलाशाक्षीं ज्वलन्तीमिव तेजसा ।
न कश्चिद्वरयामास तेजसा प्रतिवारितः ॥ ३-२९४-२८ (२७२६७)
अथोपोष्य शिरःस्नाता देवतामभिगम्य सा ।
हुत्वाग्निं विधिवद्विप्रान्वाचयामास पर्वणि ॥ ३-२९४-२९ (२७२६८)
ततः सुमनसः शेषाः प्रतिगृह्य महात्मनः ।
पितुः समीपमगमद्देवी श्रीरिव रूपिणी ॥ ३-२९४-२० (२७२६९)
साऽभिवाद्य पितुः पादौ शेषाः पूर्वं निवेद्य च ।
कृताञ्जलिर्वरारोहा नृपतेः पार्श्वमास्थिता ॥ ३-२९४-३१ (२७२७०)
यौवनस्थां तु तां दृष्ट्वा स्वां सुतां देवरूपिणीम् ।
अयाच्यमानां च वरैर्नृपतिर्दुःखितोऽभवत् ॥ ३-२९४-३२ (२७२७१)
राजोवाच। ३-२९४-३३क्ष् (२७३३)
पुत्रि प्रदानकालस्ते न च कश्चिद्वृणोति माम् ।
स्वयमन्विच्छ भर्तारं गुणैः सदृशमात्मनः ॥ ३-२९४-३३ (२७२७२)
प्रार्थितः पुरुषो यश्च स निवेद्यस्त्वया मम ।
विमृश्याहं प्रदास्यामि वरय त्वं यथेप्सितम् ॥ ३-२९४-३४ (२७२७३)
श्रुतं हि धर्मशास्त्रेषु पठ्यमानं द्विजातिभिः ।
तथा त्वमपिकल्याणि गदतो मे वचः शृणु ॥ ३-२९४-३५ (२७२७४)
अप्रदाता पिता वाच्यो वाच्यश्चानुपयन्पतिः ।
मृते पितरि पुत्रश्च वाच्यो मातुररक्षिता ॥ ३-२९४-३६ (२७२७५)
इदं मे वचनं क्षुत्वा भर्तुरन्वेषणे न्वर ।

देवतानां यथा याच्यो न भवेयं तथा कुरु ॥ ३-२९४-३७ (२७२७६)
एवमुक्त्वा दुहितरं तथा वृद्धांश्च मन्त्रिणः ।
व्यादिदेशानुयात्रं च गम्यतां चेत्यचोदयत् ॥ ३-२९४-३८ (२७२७७)
साऽभिवाद्य पितुः पादौ व्रीडितेव मनस्विनी ।
पितुर्वचनमाज्ञाय निर्जगामाविचारितम् ॥ ३-२९४-३९ (२७२७८)
सा हैमं रथमास्थाय स्थविरैः सचिवैर्वृता ।
तपोवनानिरम्याणि राजर्षीणां जगाम ह ॥ ३-२९४-४० (२७२७९)
मान्यानां तत्र वृद्धानां कृत्वा पादाभिवादनम् ।
वनानि क्रमशस्तात सर्वाण्येवाभ्यगच्छत ॥ ३-२९४-४१ (२७२८०)
एवं तीर्थेषु सर्वेषु धनोत्सर्गं नृपात्मजा ।
कुर्वी द्विजमुख्यानां तंतं देशं जगाम ह ॥ ३-२९४-४२ (२७२८१)

इति श्रीमन्महाभारते अरण्यपर्वणि पतिव्रतामाहात्म्यपर्वणि
चतुर्नवत्यधिकद्विशततमोऽध्यायः ॥ २९४ ॥
Mahabharata - Vana Parva - Chapter Footnotes

३-२९४-९ सावित्र्या सावित्री सवितृकन्या तद्दैवत्यवा ऋचा रसा च
। सोर्मा वधूयुरभवदित्यादिः । षष्ठेकाले अष्टधाविभक्तस्याह्नः
षष्ठेशे ॥
३-२९४-१९ उत्तरं पुत्रार्थं प्रार्थनावचनम् ॥
३-२९४-२० प्रतिज्ञायाङ्गोकृत्य ॥
३-२९४-२३ मानव्या मनुपुत्र्याः ॥
३-२९४-२८ प्रतिवारितोऽभिभूतः ॥
३-२९४-३० सुमनस इष्टदेवतायाः । शोषाः प्रसादपूर्वकं दत्तानि माल्यानि ॥
३-२९४-३२ अयाच्यमानां तु नरैरिति ध । पाठः ॥
३-२९४-३४ प्रार्थित इच्छितः ॥
३-२९४-३६ वाच्यो निन्द्यः । अनुपयन् ऋतावगच्छन ॥
३-२९४-३८ अनुयात्रां यात्रोपकरणं वाहनादि ॥

---

वन-अध्यय२९५
॥ श्रीः ॥
३.२९५. अध्यायः २९५

Mahabharata - Vana Parva - Chapter Topics
मनसा स्वानुगुणनिर्धारणपूर्वकं वनादागतया सावित्र्या नारदेन सह
संभाषमाणस्य पितुरन्तिकमेत्य तयोः पादाभिवादनम् ॥ १ ॥

नारदसंनिधौ पित्रा पृष्टया तथा द्युमत्सेनसूनोः सत्यवतः
पठित्वेन मनसा वरणकथनम् ॥ २ ॥
पित्रा नारदवचनात्तस्याल्पायुष्ट्वनिवेदनपूर्वकं वरान्तरवरणं
चोदितयापि तया स्वाध्यवसायादनिवर्तनम् ॥ ३ ॥
राज्ञापि तस्या निर्वन्धान्नारदवचनाच्च तस्मा एव तस्या
दानाध्यवसानम् ॥ ४ ॥

Mahabharata - Vana Parva - Chapter Text

३-२९५-० (२७२८२)
मार्कण्डेय उवाच। ३-२९५-०क्ष् (२७३४)
अथ मद्राधिपो राजा नारदेन समागतः ।
उपविष्टः सभामध्ये कथायोगेन भारत ॥ ३-२९५-१ (२७२८३)
ततोऽभिगम्य तीर्थानि सर्वाण्येवाश्रमांस्तथा ।
आजगाम पितुर्वेश्म सावित्री सह मन्त्रिभिः ॥ ३-२९५-२ (२७२८४)
नारदेन सहासीनं सा दृष्ट्वा पितरं शुभा ।
उभयोरेव शिरसा चक्रे पादाभिवादनम् ॥ ३-२९५-३ (२७२८५)
नारद उवाच। ३-२९५-४क्ष् (२७३५)
क्व गताऽभूत्सुतेयं ते कुतश्चैवागता नृप ।
किमर्थं युवतीं भद्र न चैनां संप्रयच्छसि ॥ ३-२९५-४ (२७२८६)
अश्वपतिरुवाच। ३-२९५-५क्ष् (२७३६)
कार्येण खल्वनेनैव प्रेषिताद्यैव चागता ।
एतस्याः शृणु देवर्षे भर्तारं योऽनया वृतः ॥ ३-२९५-५ (२७२८७)
मार्कण्डेय उवाच। ३-२९५-६क्ष् (२७३७)
सा ब्रूहि विस्तरेणेति पित्रा संयोदिता शुभा ।
तदैव तस्य वचनं प्रतिगृह्येदमब्रवीत् ॥ ३-२९५-६ (२७२८८)
आसीत्साल्वेषु धर्मात्मा क्षत्रियः पृथिवीपतिः ।
द्युमत्सेन इति ख्यातः पश्चाच्चान्धो बभूव ह ॥ ३-२९५-७ (२७२८९)
विनष्टचक्षुषस्तस्य बालपुत्रस्य धीमतः ।
सामीप्येन हृतं राज्यं छिद्रेऽस्मिन्पूर्ववैरिणा ॥ ३-२९५-८ (२७२९०)
स बालवत्सया सार्धं भार्यया प्रस्थितो वनम् ।
महारण्यं गतश्चापि पस्तेपे महाव्रतः ॥ ३-२९५-९ (२७२९१)
तस्य पुत्रः पुरे जातः संवृद्धश्च तपोवने ।
सत्यवाननुरूपो मे भर्तेति मनसा वृतः ॥ ३-२९५-१० (२७२९२)
नारद उवाच। ३-२९५-११क्ष् (२७३८)
अहो वत महत्पापं सावित्र्या नृपते कृतम् ।

अजानन्त्या यदनया गुणवान्सत्यवान्वृतः ॥ ३-२९५-११ (२७२९३)
सत्यं वदत्यस्य पिता सत्यं माता प्रभाषते ।
तथाऽस् ब्राह्मणाश्चक्रुर्नामैतत्सत्यवानिति ॥ ३-२९५-१२ (२७२९४)
बालस्याश्वाः प्रियाश्चास्य करोत्यश्वांश्च मृन्मयान् ।
चित्रेऽपि विलिखत्यश्वांश्चित्राश्व इति चोच्यते ॥ ३-२९५-१३ (२७२९५)
राजोवाच। ३-२९५-१४क्ष् (२७३९)
अपीदानीं स तेजस्वी बुद्धिमान्वा नृपात्मजः ।
क्षमावानपि वा शूरः सत्यवान्पितृवत्सलः ॥ ३-२९५-१४ (२७२९६)
नारद उवाच। ३-२९५-१५क्ष् (२७४०)
विवस्वानिव तेजस्वी वृहस्पतिसमो मतौ ।
महेन्द्र इवन वीरश्च वसुधेव क्षमान्वितः ॥ ३-२९५-१५ (२७२९७)
अश्वपतिरुवाच। ३-२९५-१६क्ष् (२७४१)
अपि राजात्मजो दाता ब्रह्मण्यश्चापि सत्यवान् ।
रूपवानप्युदारो वाऽप्यथवा प्रियदर्शनः ॥ ३-२९५-१६ (२७२९८)
नारद उवाच। ३-२९५-१७क्ष् (२७४२)
सांकृते रन्तिदेवस् स्वशक्त्या दानतः समः ।
ब्रह्मण्यः सत्यवादी च शिबिरौशीनरो यथा ॥ ३-२९५-१७ (२७२९९)
ययातिरिव चोदारः सोमवत्प्रियदर्शनः ।
रूपेणान्यतमोऽश्विभ्यां द्युमत्सेनसुतो बली ॥ ३-२९५-१८ (२७३००)
ग्स वदान्यः स तेजस्वीधीमांश्चैव क्षमान्वितः'।
स दान्तः स मृदुः शूरः स सत्यः संयतेन्द्रियः ।
सन्मैत्रः सोनसूयश्च स ह्रीमान्द्युतिमांश्च सः ॥ ३-२९५-१९ (२७३०१)
नित्यशश्चार्जवं तस्मिन्धृतिस्तत्रैव च ध्रुवा ।
संक्षेपतस्तपोवृद्धैः शीलवृद्धैश्च कथ्यते ॥ ३-२९५-२० (२७३०२)
अश्वपतिरुवाच। ३-२९५-२१क्ष् (२७४३)
गुणैरुपेतं सर्वैस्तं भगवन्प्रब्रवीषि मे ।
दोषानप्यस्य मे ब्रूहि यदि सन्तीह केचन ॥ ३-२९५-२१ (२७३०३)
नारद उवाच। ३-२९५-२२क्ष् (२७४४)
एक एवास्य दोषो हि गुणानाक्रम्य तिष्ठति ।
स च दोषः प्रयत्नेन न शक्यमतिवर्तितुम् ॥ ३-२९५-२२ (२७३०४)
एको दोषोऽस्ति नान्योऽस्य सोद्यप्रभृति सत्यवान् ।
संवत्सरेण क्षीणायुर्देहन्यासं करिष्यति ॥ ३-२९५-२३ (२७३०५)
राजोवाच। ३-२९५-२४क्ष् (२७४५)
एहि सावित्रि गच्छस्व अन्यं वरय शोभने ।
तस्य दोषो महानेको गुणानाक्रम्य च स्थितः ॥ ३-२९५-२४ (२७३०६)
यथा मे भगवानाह नारदो देवसत्कृतः ।

संवत्सरेण सोऽल्पायुर्देहन्यासं करिष्यति ॥ ३-२९५-२५ (२७३०७)
सावित्र्युवाच। ३-२९५-२६क्ष् (२७४६)
सकृदंशो निपतति सकृत्कन्या प्रदीयते ।
स कृदाह ददानीति त्रीण्येतानि सकृत्सकृते ॥ ३-२९५-२६ (२७३०८)
दीर्घायुरथवाऽल्पायुः सगुणो निर्गुणोऽपि वा ।
सकृद्वृतो मया भर्ता न द्वितीयं वृणोम्यहम् ॥ ३-२९५-२७ (२७३०९)
मनसा निश्चयं कृत्वाततो वाचाऽभिधीयते ।
क्रियते कर्मणा पश्चात्प्रमाणं मे मनस्ततः ॥ ३-२९५-२८ (२७३१०)
नारद उवाच। ३-२९५-२९क्ष् (२७४७)
स्थिरा बुद्धिर्नरश्रेष्ठ सावित्र्या दुहितुस्तव ।
नैषा वारयितुं शक्या धर्मादस्मात्कथंचन ॥ ३-२९५-२९ (२७३११)
नान्यस्मिन्पुरुषे सन्ति ये सत्यवति वै गुणाः ।
प्रदानमेव तस्मान्मे रोचते दुहितुस्तव ॥ ३-२९५-३० (२७३१२)
राजोवाच। ३-२९५-३१क्ष् (२७४८)
अविचाल्यमेतदुक्तं तथ्यं च भवता वचः ।
करिष्याम्येतदेवं च गुरुर्हि भगवान्मम ॥ ३-२९५-३१ (२७३१३)
नारद उवाच। ३-२९५-३२क्ष् (२७४९)
अविघ्नमस्तु सावित्र्याः प्रदाने दुहितुस्तव ।
साधयिष्याम्यहं तावत्सर्वेषां भद्रमस्तु वः ॥ ३-२९५-३२ (२७३१४)
मार्कण्डेय उवाच। ३-२९५-३३क्ष् (२७५०)
एवमुक्त्वा स्वमुत्पत्य नारदस्त्रिदिवं गतः ।
राजाऽपि दुहितुः सज्जं वैवाहिकमकारयत् ॥ ३-२९५-३३ (२७३१५)

इति श्रीमन्महाभारते अरण्यपर्वणि पतिव्रतामाहात्म्यपर्वणि
पञ्चनवत्यधिकद्विशततमोऽध्यायः ॥ २९५ ॥

Mahabharata - Vana Parva - Chapter Footnotes

३-२९५-१ कथायोगेन कथाप्रसङ्गेन ॥
३-२९५-८ सामीप्येन समीपवासिना । छिद्रे अन्धत्वे सति ॥
३-२९५-१० स्यवान्नामतः ॥
३-२९५-१४ तेजस्वी प्रभाववान् ॥
३-२९५-१७ सांकृतेः संकृतिपुत्रस्य ॥
३-२९५-२२ आक्रम्य अभिभूय ॥
३-२९५-२६ अंशः काष्ठपाषाणादेः शकलः सकृन्निपतति । कृतस्य करणं नास्तीत्यर्थः ॥
३-२९५-३१ एतत् सावित्र्या वचनं अविचाल्यं भवता च तथ्यं उक्तम् ॥

वन-अध्यय२९६
॥ श्रीः ॥
३.२९६. अध्यायः २९६

Mahabharata - Vana Parva - Chapter Topics
अश्वपतिना राज्ञा द्युमत्सेनाश्रममेत्य सत्यवते स्वपुत्र्याः सावित्र्या रदानेन वैवाहिकोत्सवनिर्वर्तनपूर्वकं स्वनगरागमनम् ॥१ ॥

Mahabharata - Vana Parva - Chapter Text

३-२९६-० (२७३१६)
मार्कण्डेय उवाच। ३-२९६-०क्ष् (२७५१)
अथ कन्याप्रदाने स तमेवार्थं विचिन्तयन् ।
समानित्ये च तत्सर्वंभाण्डं वैवाहिकं नृपः ॥ ३-२९६-१ (२७३१७)
ततो वृद्धान्द्विजान्सर्वानृत्विक्सभ्यपुरोहितान् ।
समाहूय दिने पुण्ये प्रययौ सह कन्यया ॥ ३-२९६-२ (२७३१८)
मेध्यारण्यं स गत्वा च द्युमत्सेनाश्रमं नृपः ।
पद्भयामेव द्विजैः सार्धं राजर्षिं तमुपागमत् ॥ ३-२९६-३ (२७३१९)
तत्रापश्यन्महाभागं सालवृक्षमुपाश्रितम् ।
कौश्यां बृस्यां समासीनं चक्षुर्हीनं नृपं तदा ॥ ३-२९६-४ (२७३२०)
स राजा तस्य राजर्षेः कृत्वापूजां यथाऽर्हतः ।
वाचा सुनियतो भूत्वा चकारात्मनिवेदनम् ॥ ३-२९६-५ (२७३२१)
तस्यार्घ्यमासं चैव गां चावेद्यस धर्मवित् ।
किमागमनमित्येवं राजा राजानमब्रवीत् ॥ ३-२९६-६ (२७३२२)
तस्य सर्वमभिप्रायमितिकर्तव्यतां च ताम् ।
सत्यवन्तं समुद्दिश्य सर्वमेव न्यवेदयत् ॥ ३-२९६-७ (२७३२३)
सावित्री नाम राजर्षे कन्येयं मम शोभना ।
तां स्वधर्मेण धर्मज्ञ स्नुषार्थे त्वं गृहाण मे ॥ ३-२९६-८ (२७३२४)
द्युमत्सेन उवाच। ३-२९६-८क्ष् (२७५२)
च्युताः स्म राज्याद्वनवासमाश्रिता-
श्चराम धर्मं नियतास्तपस्विनः ।
कथं त्वनर्हा वनवासमाश्रमे
सहिष्यति क्लेशमिमं सुता तव ॥ ३-२९६-९ (२७३२५)
अश्वमतिरुवाच। ३-२९६-१०क्ष् (२७५३)
सुखं च दुःखं च भवाभवात्मकं

यदा विजानाति सुताऽहमेव च ।
न मद्विधे युज्यतेवाक्यमीदृशं
विनिश्चयेनाभिगतोस्मि ते नृप ॥ ३-२९६-१० (२७३२६)
आशां नार्हसि मे हन्तुं सौहृदात्प्रणतस्य च ।
अभितश्चागतं प्रेम्णा प्रत्याख्यातुं न माऽर्हसि ॥ ३-२९६-११ (२७३२७)
अनुरूपो हि युक्तश्च त्वं ममाहं तवापि च ।
स्नुषां प्रतीच्छ मे कन्यां भार्यां सत्यवतस्ततः ॥ ३-२९६-१२ (२७३२८)
द्युमत्सेन उवाच। ३-२९६-१३क्ष् (२७५४)
पूर्वमेवाभिलषितः संबन्धो मे त्वया सह ।
भ्रष्टराज्यस्त्वहमिति तत एतद्विचारितम् ॥ ३-२९६-१३ (२७३२९)
अभिप्रायस्त्वयं यो मे पूर्वमेवाभिकाङ्क्षितः ।
स निर्वर्ततु मेऽद्यैव काङ्क्षितो ह्यसि मेऽतिथिः ॥ ३-२९६-१४ (२७३३०)
ततः सर्वान्समानाय्य द्विजानाश्रमवासिनः ।
यथाविधि समुद्वाहं कारयामासतुर्नृपौ ॥ ३-२९६-१५ (२७३३१)
दत्त्वा सोऽश्वपतिः कन्यां यथार्हं सपरिच्छदम् ।
ययौ स्वमेव भवनं युक्तः परमया मुदा ॥ ३-२९६-१६ (२७३३२)
सत्यवानपि तां भार्यां लब्ध्वा सर्वगुणान्विताम् ।
मुमुदे सा रच रतं लब्ध्वा भर्तारं मनसेप्सितम् ॥ ३-२९६-१७ (२७३३३)
गते पितरि सर्वाणि संन्यस्याभरणानि सा ।
जगृहेवल्कलान्येव वस्त्रं काषायमेव च ॥ ३-२९६-१८ (२७३३४)
परिचारैर्गुणैश्चैव प्रश्रयेण दमेन च ।
सर्वकामक्रियाभिश्च सर्वेषां तुष्टिमादधे ॥ ३-२९६-१९ (२७३३५)
श्वश्रूं शरीरसत्कारैः सर्वैराच्छादनादिभिः ।
श्वशुरं देवसत्कारैर्वाचः संयमनेन च ॥ ३-२९६-२० (२७३३६)
तथैव प्रियवादेन नैपुणेन शमेन च ।
रहश्चैवोपचारेण भर्तारं पर्यतोषयत् ॥ ३-२९६-२१ (२७३३७)
एवं तत्राश्रमे तेषां तदा निवसतां सताम् ।
कालस्तपस्यतां कश्चिदपाक्रामत भारत ॥ ३-२९६-२२ (२७३३८)
सावित्र्याग्लायमानायास्तिष्ठन्त्यास्तु दिवानिशम ।
नारदेन यदुक्तं तद्वाक्यं मनसि वर्तते ॥ ३-२९६-२३ (२७३३९)

इति श्रीमन्महाभारते अरण्यपर्वणि पतिव्रतामाहात्म्यपर्वणि
षण्णवत्यधिकद्विशततमोऽध्यायः ॥ २९६ ॥
Mahabharata - Vana Parva - Chapter Footnotes

३-२९६-१ वैवाहिकं भाण्डं विवाहोचितमुपकरणम् ॥

३-२९६-४ कौश्यां रकुशमय्यां बृस्यामासने ॥
३-२९६-५ आत्मनिवेदनमश्वपतिरहमिति ज्ञापनम् ॥
३-२९६-१० भवाभवात्मकमुत्पत्तिविनाशात्मकम् । ते त्वां प्रति ॥
३-२९६-११ मा माम् ॥
३-२९६-१४ निर्वर्ततु निष्पद्यताम् ॥
३-२९६-१६ सपरिच्छदं पारिवर्हसहितम् ॥
३-२९६-१९ परिचारैः सेवनैः । गुणैः शीलसत्यादिभिः। प्रश्रयेण स्नेहेन। दमेन जितेन्द्रियतया। सर्वकामक्रियाभिः सर्वेषामिष्टसंपादनेन ॥

---

वन-अध्यय२९७
॥ श्रीः ॥
३.२९७. अध्यायः २९७

Mahabharata - Vana Parva - Chapter Topics
कदाचन नारदनिर्दिष्टेसत्यवतो मृतिदिवसे सावित्र्या परशुहस्तस्य वनंगच्छतो भर्तुरनुगमनम् ॥ १ ॥

Mahabharata - Vana Parva - Chapter Text

३-२९७-० (२७३४०)
मार्कण्डेय उवाच। ३-२९७-०क्ष् (२७५५)
ततः काले बहुतिथे व्यतिक्रान्ते कदाचन ।
प्राप्तः स कालो मर्व्यं यत्रसत्यवता नृप ॥ ३-२९७-१ (२७३४१)
गणयन्त्याश्च सावित्र्या दिवसदिवसे गते ।
यद्वाक्यं नारदेनोक्तं वर्तते हृदि नित्यशः ॥ ३-२९७-२ (२७३४२)
चतुर्थेऽहनि मर्तव्यमिति संचिन्त्य भामिनी ।
व्रतं त्रिरात्रमुद्दिश्य दिवारात्रं स्थिताऽभवत् ॥ ३-२९७-३ (२७३४३)
ग्त्रयोदश्यां चोपवासं प्रतिपत्सु च पारणम् ।
आयुष्यं वर्धते भर्तुर्व्रतेनानि भारत' ॥ ३-२९७-४ (२७३४४)
तं श्रुत्वा रकनियमं तस्या भृशं दुःखान्वितो नृपः ।
उत्थाय वाक्यं सावित्रीमब्रवीत्परिसान्त्वयन् ॥ ३-२९७-५ (२७३४५)
अतितीव्रोऽयमारम्भस्त्वयाऽऽरब्धो नृपात्मजे ।
तिसृणां वसतीनां हि स्तानं परमदुश्चरम् ॥ ३-२९७-६ (२७३४६)
सावित्र्युवाच। ३-२९७-७क्ष् (२७५६)
न कार्यस्तात संतापः पारयिष्याम्यहं व्रतम् ।
व्यसंसायकृतं हीदं व्यवसायश्च कारणम् ॥ ३-२९७-७ (२७३४७)

द्युमत्सेन उवाच। ३-२९७-८क्ष् (२७५७)
व्रतं भिन्धीति वक्तुं त्वां नास्मि शक्तः कथंचन ।
पारयस्वेति वचनं युक्तमस्मद्विधो वदेत् ॥ ३-२९७-८ (२७३४८)
मार्कण्डेय उवाच। ३-२९७-९क्ष् (२७५८)
एवमुक्त्वा द्युमत्सेनो विरराम महामनाः ।
तिष्ठन्ती चैव सावित्री काण्ठभूतेव लक्ष्यते ॥ ३-२९७-९ (२७३४९)
श्वोभूते भर्तृमरणे सावित्र्या भरतर्षभ ।
दुःखान्वितायास्तिष्ठन्त्याः सा रात्रिर्व्यत्यवर्तत ॥ ३-२९७-१० (२७३५०)
अद्य तद्दिवसं चेति हुत्वा दीप्तं हुताशनम् ।
युगमात्रोदिते सूर्येकृत्वा पौर्वाङ्णिकीः क्रियाः ॥ ३-२९७-११ (२७३५१)
ग्व्रतं समाप्यसावित्री स्नात्वा शुद्धा यशस्विनी'।
ततः सर्वान्द्विजान्वृद्धाञ्श्वश्रूं श्वशुरमेव च ।
अभिवाद्यानुपूर्व्येण प्राञ्जलिर्नियता स्थिता ॥ ३-२९७-१२ (२७३५२)
अवैधव्याशिषस्ते तु सावित्र्यर्थं हिताः शुभाः ।
ऊचुस्तपस्विनः सर्वे तपोवननिवासिनः ॥ ३-२९७-१३ (२७३५३)
एवमस्त्विति सावित्री ध्यानयोगपरायणा ।
मनसा ता गिरः सर्वाः प्रत्यगृह्णात्तपस्विनी ॥ ३-२९७-१४ (२७३५४)
तं कालं तं मुहूर्तं च प्रतीक्षन्ती नृपात्मजा ।
यथोक्तं नारदवचश्चिन्तयन्ती सुदुःखिता ॥ ३-२९७-१५ (२७३५५)
ततस्तु श्वश्रूश्वशुरावूचतुस्तां नृपात्मजाम् ।
एकान्तमास्थितां वाक्यं प्रीत्या भरतसत्तम ॥ ३-२९७-१६ (२७३५६)
व्रतं यथोपदिष्टं तु तथा तत्पारितं त्वया ।
आहारकालः संप्राप्तः क्रियतां यदनन्तरम् ॥ ३-२९७-१७ (२७३५७)
सावित्र्युवाच। ३-२९७-१८क्ष् (२७५९)
अस्तं गते मयाऽऽदित्ये भोक्तव्यं कृतकामया ।
एष मे हृदि संकल्पः समयश्च कृतो मया ॥ ३-२९७-१८ (२७३५८)
मार्कण्डेय उवाच। ३-२९७-१९क्ष् (२७६०)
एवं संभाषमाणायाः सावित्र्या भोजनं प्रति ।
स्कन्धे परशुमादाय सत्यवान्प्रस्थितो वनम् ॥ ३-२९७-१९ (२७३५९)
सावित्री त्वाह भर्तारं नैकस्त्वं गन्तुमर्हसि ।
सह त्वया गमिष्यामि न हित्वां हातुमुत्सहे ॥ ३-२९७-२० (२७३६०)
सत्यवानुवाच। ३-२९७-२१क्ष् (२७६१)
वनं न गतपूर्वं ते दुःख पन्थाश्च भामिनि ।
व्रतोपवासक्षामा च कथं पद्भ्यां गमिष्यसि ॥ ३-२९७-२१ (२७३६१)
सावित्र्युवाच। ३-२९७-२२क्ष् (२७६२)
उपवासान्न मे ग्लानिर्नास्ति चापि परिश्रमः ।

गमने च कृतोत्साहां प्रतिषेद्धुं न माऽर्हसि ॥ ३-२९७-२२ (२७३६२)
सत्यवानुवाच। ३-२९७-२३क्ष् (२७६३)
यदि ते गमनोत्साहः करिष्यामि तव प्रयम् ।
मम त्वामन्त्रय गुरून्न मां दोषः स्पृशेदयम् ॥ ३-२९७-२३ (२७३६३)
मार्कण्डेय उवाच। ३-२९७-२४क्ष् (२७६४)
साऽभिवाद्याब्रवीच्छ्वश्रूं श्वशुरं च महाव्रता ।
अयं गच्छति मे भर्ता फलाहारो महावनम् ॥ ३-२९७-२४ (२७३६४)
इच्छेयमभ्यनुज्ञाता आर्यया श्वशुरेण ह ।
अनेन सह निर्गन्तुं न मेऽद्य विरहः क्षमः ॥ ३-२९७-२५ (२७३६५)
गुर्वग्निहोत्रार्तकृतेप्रस्थितश्च सुतस्तव ।
न निवार्यो निवार्यः स्यादन्यथा प्रस्थितो वनम् ॥ ३-२९७-२६ (२७३६६)
संवत्सरः किंचिदूनो न निष्क्रान्ताऽहमाश्रमात् ।
वनं कुसुमितं द्रष्टुं परं कौतूहलं हि मे ॥ ३-२९७-२७ (२७३६७)
द्युमत्सेन उवाच। ३-२९७-२८क्ष् (२७६५)
यदा प्रभृति सावित्री पित्रा दत्ता स्नाषु मम ।
नानयाऽभ्यर्थनायुक्तमुक्तपूर्वं स्मराम्यहम् ॥ ३-२९७-२८ (२७३६८)
तदेषा लभतां कामं यथाभिलषितं वधूः ।
अप्रमादश्च कर्तव्यः पुत्रि सत्यवतः पथि ॥ ३-२९७-२९ (२७३६९)
मार्कण्डेय उवाच। ३-२९७-३०क्ष् (२७६६)
उभाभ्यामभ्यनुज्ञाता सा जगाम यशस्विनी ।
सहभर्त्रा हसन्तीव हृदयेन विदूयता ॥ ३-२९७-३० (२७३७०)
सा वनानि विचित्राणि रमणीयानि सर्वशः ।
मयूरगणजुष्टानि ददर्श विपुलेक्षणा ॥ ३-२९७-३१ (२७३७१)
नदीः पुण्यवहाश्चैव पुष्पितांश्च नगोत्तमान् ।
सत्यवानाह पश्येति सावित्रीं मधूरं वचः ॥ ३-२९७-३२ (२७३७२)
नीरीक्षमाणा भर्तारं सर्वावस्थमनिन्दिता ।
मृतमेव हिं मेने काले मुनिवचः स्मरन् ॥ ३-२९७-३३ (२७३७३)
अनुव्रजन्ती भर्तारं जगाम मृदुगामिनी ।
द्विधेव हृदयं कृत्वा तं च कालमवेक्षती ॥ ३-२९७-३४ (२७३७४)

इति श्रीमन्महाभारते अरण्यपर्वणि पतिव्रतामाहात्म्यपर्वणि सप्तनवत्यधिकद्विशततमोऽध्यायः ॥ २९७ ॥

Mahabharata - Vana Parva - Chapter Footnotes

३-२९७-६ वसतीनां स्थानं भोजनत्रयनिरोधः । उपवसतीत्यादौ वसतेस्तादर्थ्यदर्शनात् ॥

३-२९७-७ पारयिष्यामि समापयिष्यामि ।व्यवसायकृतमुद्योगकृतम् ॥
३-२९७-११ रकयुगं हस्तचतुष्कं तावदुदिते उपरि याते ॥
३-२९७-३३ सर्वावस्थमतन्द्रिता इति क ।थ।पाठः।स्मरन्निति व्यत्ययेन पुंस्त्वम् ॥

---

वन-अध्यय२९८
॥ श्रीः ॥
३.२९८. अध्यायः २९८

Mahabharata - Vana Parva - Chapter Topics
सावित्र्या सह वनं प्रविष्टेन सत्यवता फलाहरणपूर्वकं काष्ठविपाटनम् ॥ १ ॥
तथा शिरोवेदनादूनतया काष्ठपाटनादुपरमपूर्वकं भार्योत्सङ्गे शिरोनिधानेन भूतले शयनम् ॥ २ ॥
ततः सत्यवतोऽसुहरणाय समागतं यमं दृष्टवत्या सावित्र्या साञ्जलिबन्धं तदागमनप्रयोजनप्रश्नः ॥ ३ ॥
यमेन तांप्रतितत्कथनपूर्वकं पाशबन्धनेन सत्यवतस्तदीयशरीरादपकर्षणपूर्वकं स्वलोकंप्रति प्रस्थानम् ॥ ४ ॥
तमनुगच्छन्त्याः सावित्र्याः स्तुतिवचनसंतुष्टेन यमेन तस्यै वरदानपूर्वकं वन्धविमोचनेन सत्यवतो विसर्जनम् ॥ ५ ॥
ततः पुनरुज्जीवितेन सत्यवता सावित्र्यासह पुताश्रमंप्रति प्रस्थानम् ॥ ६ ॥

Mahabharata - Vana Parva - Chapter Text

३-२९८-० (२७३७५)
मार्कण्डेय उवाच। ३-२९८-०क्ष् (२७६७)
अथ भार्यासहायः स फलान्यादाय वीर्यवान् ।
कठिनं पूरयामास ततः काण्ठान्यपाटयत् ॥ ३-२९८-१ (२७३७६)
तस्य पाटयतः काष्ठं स्वेदो वै समजायत ।
व्यायामेन च तेनास्य जज्ञे शिरसि वेदना ॥ ३-२९८-२ (२७३७७)
सोऽभिगम्य प्रियां भार्यामुवाच श्रमपीडितः ।
व्यायामेन ममानेन जाता शिरसि वेदना ॥ ३-२९८-३ (२७३७८)
अङ्गानि चैव सावित्रि हृदयं दूयतीव च ।
अस्वस्थमिव चात्मानं लक्षये मितभाषिणि ॥ ३-२९८-४ (२७३७९)
शूलैरिव शिरो विद्धमिदं संलक्षयाम्यहम् ।
ग्भ्रमन्तीव दिशः सर्वाश्चक्रारूढं मनो मम'।

तत्स्वप्तुमिच्छे कल्याणि न स्तातुं शक्तिरस्ति मे ॥ ३-२९८-५ (२७३८०)
सा समासाद्य सावित्री भर्तारमुपगम्य च ।
उत्सङ्गेऽस्य शिर कृत्वा निषसाद महीतले ॥ ३-२९८-६ (२७३८१)
ततः सा नारदवचो विमृशन्ती तपस्विनी ।
तं मुहूर्तं क्षणं वेलां दिवसं च युयोज ह ॥ ३-२९८-७ (२७३८२)
ग्हन्त प्राप्तः स कालोऽयमिति चिन्तापरा सती'।
मुहूर्तादेव चापश्य्पुरुषं रक्तवाससम् ।
वद्धमौलिं वपुष्मन्तमादित्यसमतेजसम् ॥ ३-२९८-८ (२७३८३)
श्यामावदातं रक्ताक्षं पाशहस्तं भयावहम् ।
स्थितं सत्यवतः पार्श्वे निरीक्षन्तं तमेव च ॥ ३-२९८-९ (२७३८४)
तं दृष्ट्वासहसोत्थाय भर्तुन्यस्य शनैः शिरः ।
कृताञ्जलिरुवाचार्ता हृदयेन प्रवेपती ॥ ३-२९८-१० (२७३८५)
दैवतंत्वाभिजानामि वपुरेतद्ध्यमानुषम् ।
कामया ब्रूहि देवेश कस्त्वं किंच चिकीर्षसि ॥ ३-२९८-११ (२७३८६)
यम उवाच। ३-२९८-१२क्ष् (२७६८)
पतिव्रताऽसि सावित्रि तथैव च तपोन्विता ।
अस्त्वामभिभाषामि विद्धि मां त्वं शुभे यमम् ॥ ३-२९८-१२ (२७३८७)
अयं ते रसत्यवान्भर्ता क्षीणायुः पार्थिवात्मजः ।
नेष्यामि तमहं बद्ध्वा विद्ध्येतन्मे चीकिर्षितं ॥ ३-२९८-१३ (२७३८८)
सावित्र्युवाच। ३-२९८-१३क्ष् (२७६९)
श्रूयते भगवन्दूतास्तवागच्छन्ति मानवान् ।
नेतुं किल भवान्कस्मादागतोसि स्वयं प्रभो ॥ ३-२९८-१४ (२७३८९)
मार्कण्डेय उवाच। ३-२९८-१५क्ष् (२७७०)
इत्युक्तः पितृराजस्तां भगवान्स्वचिकीर्षितम् ।
यथावत्सर्वमाख्यातुं तत्प्रियार्थं प्रचक्रमे ॥ ३-२९८-१५ (२७३९०)
अयं च धर्मसंयुक्तो रूपवान्गुणसागरः ।
नार्हो मत्पुरुषैर्नेतुमतोस्मि स्वयमागतः ॥ ३-२९८-१६ (२७३९१)
ततः सत्यवतः कायात्पाशबद्धं वशंगतम् ।
अङ्गुष्ठमात्रं पुरुषं निश्चकर्ष यमो बलात् ॥ ३-२९८-१७ (२७३९२)
ततः समुद्धृतप्राणं गतश्वासं हतप्रभम् ।
निरविचेष्टंशरीरं तद्बभूवाप्रियदर्सनम् ॥ ३-२९८-१८ (२७३९३)
यमस्तु तं ततो बद्ध्वा प्रयातो दक्षिणामुखः ।
सावित्री चैव दुःखार्ता यममेवान्वगच्छत ॥ ३-२९८-१९ (२७३९४)
ग्भर्तुः शरीररां च विधाय हि तपस्विनी ।
भर्तारमनुगच्छन्ती तथावस्थं सुमध्यमा'।
नियमव्रतसंसिद्धा महाभागा पतिव्रता ॥ ३-२९८-२० (२७३९५)

यम उवाच। ३-२९८-२१क्ष् (२७७१)
निवर्त गच्छ सावित्रि कुरुष्वास्यौर्ध्वदैहिकम् ।
कृतंभर्तुस्त्वयाऽऽनृण्यं यावद्गम्यं गतं त्वया ॥ ३-२९८-२१ (२७३९६)
सावित्र्युवाच। ३-२९८-२२क्ष् (२७७२)
यत्र मे नीयते भर्ता स्वयं वा यत्र गच्छति ।
मया च तत्र गन्तव्यमेष धर्मः सनातनः ॥ ३-२९८-२२ (२७३९७)
तपसा गुरुभक्त्या च भर्तुः स्नेहाद्व्रतेन च ।
तव चैव प्रसादेन न मे प्रतिहता गतिः ॥ ३-२९८-२३ (२७३९८)
प्राहुः साप्तपदं मैत्रं बुधास्तत्त्वार्थदर्शिनः ।
मित्रतां च पुरस्कृत्य किंचिद्वक्ष्यामि तच्छृणु ॥ ३-२९८-२४ (२७३९९)
नानात्मवन्तस्तु वने चरन्ति
धर्मं च वासं च परिश्रमं च ।
विज्ञानतो धर्ममुदाहरन्ति
तस्मात्सन्तो धर्ममाहुः प्रधानम् ॥ ३-२९८-२५ (२७४००)
एकस्य धर्मेण सतां मतेन
सर्वेस्म तं मार्गमनुप्रपन्नाः ।
मा वै द्वितीयं मा तृतीयं च वाञ्छे
तस्मात्सन्तो धर्ममाहुः प्रधानम् ॥ ३-२९८-२६ (२७४०१)
यम उवाच। ३-२९८-३७क्ष् (२७७३)
निवर्त तुष्टोस्मि तवानया गिरा
स्वराक्षरव्यञ्जनहेतुयुक्तया ।
वरं वृणीष्वेहविनाऽस्य जीवितं
ददानि ते सर्वमनिन्दिते वरम् ॥ ३-२९८-२७ (२७४०२)
सावित्र्युवाच। ३-२९८-२८क्ष् (२७७४)
च्युतः स्वराज्याद्वनवासमाश्रितो
विनष्टचक्षुः श्वशुरो ममाश्रमे ।
स लब्धचक्षुर्बलवान्भवेन्नृप-
स्तव प्रसादाज्ज्वलनार्कसंनिभः ॥ ३-२९८-२८ (२७४०३)
यम उवाच। ३-२९८-२९क्ष् (२७७५)
ददानि तेऽहं तमनिन्दिते वरं
यथा त्वयोक्तं भविता च तत्तथा ।
तवाध्वना ग्लानिमिवोपलक्षये
निवर्त गच्छस्व न ते श्रमो भवेत् ॥ ३-२९८-२९ (२७४०४)
सावित्र्युवाच। ३-२९८-३०क्ष् (२७७६)
श्रमः कुतो भर्तृसमीपतो हिमे
यतो हि भर्ता मम सा गतिर्ध्रुवा ।

यतः पतिं नमेष्यसि तत्र मे गतिः
सुरेश भूयश्च वचो निबोध मे ॥ ३-२९८-३० (२७४०५)
सतां सकृत्संगतमीप्सितं परं
ततः परं मित्रमिति प्रचक्षते ।
न चाफलं सत्पुरुषेण संगतं
ततः सतां संनिवसेत्समागमे ॥ ३-२९८-३१ (२७४०६)
यम उवाच। ३-२९८-३२क्ष् (२७७७)
मनोनुकूलं बुधबुद्धिवर्धनं
त्वया यदुक्तं वचनं हिताश्रयम् ।
विना पुनः सत्यवतोस्य जीवितं
वरं द्वितीयं वरयस्व भामिनि ॥ ३-२९८-३२ (२७४०७)
सावित्र्युवाच। ३-२९८-३३क्ष् (२७७८)
हृतंपुरा मे श्वशुरस्य धीमतः
स्वमेव राज्यंलभतां स पार्थिवः ।
कजह्यात्स्वधर्मान्न च मे गुरुर्यथा
द्वितीयमेतद्वरयामि ते वरम् ॥ ३-२९८-३३ (२७४०८)
यम उवाच। ३-२९८-३४क्ष् (२७७९)
स्वमेवं राज्यं प्रतिपत्स्यतेऽचिरा-
न्न च स्वधर्मात्परिहीयते नृपः ।
कृतेन कामेन मया नृपात्मजे
निवर्त गच्छस्व न ते श्रमो भवेत् ॥ ३-२९८-३४ (२७४०९)
सावित्र्युवाच। ३-२९८-३५क्ष् (२७८०)
प्रजास्त्वयैता नियमेन संयता
नियम्य चैता नयसे निकामया ।
ततो यमत्वं तव देव विश्रुतं
निबोध चेमां गिरमीरितां मया ॥ ३-२९८-३५ (२७४१०)
अद्रोहः सर्वभूतेषु कर्मणा मनसा गिरा ।
अनुग्रहश्च दानं च सतां धर्मः सनातनः ॥ ३-२९८-३६ (२७४११)
एवंप्रायश्च लोकोऽयं मनुष्याः शक्तिपेशलाः ।
सन्तस्त्वेवाप्यमित्रेषु दयां प्राप्तेषु कुर्वते ॥ ३-२९८-३७ (२७४१२)
यम उवाच। ३-२९८-३८क्ष् (२७८१)
पिपासितस्येव भवेद्यथा पय-
स्तथा त्वया वाक्यमिदं समीरितम् ।
विना पुनः सत्यवतोऽस्य जीवितं
वरं वृणीष्वेह शुभे यदिच्छसि ॥ ३-२९८-३८ (२७४१३)
सावित्र्युवाच। ३-२९८-३९क्ष् (२७८२)

ममानपत्यः पृथिवीपतिः पिता
भवत्पितुः पुत्रशतं तथौरसम् ।
कुलस्य संतानकरं च यद्भवे-
त्तृतीयमेतद्वरयामि ते वरम् ॥ ३-२९८-३९ (२७४१४)
यम उवाच। ३-२९८-४०क्ष् (२७८३)
कुलस्य संतानकरं सुवर्चसं
शतं सुतानां पितुरस्तु ते शुभे ।
कृतेन कामेन नराधिपात्मजे
निवर्त दूरं हि पथस्त्वमागता ॥ ३-२९८-४० (२७४१५)
साविञ्युवाच। ३-२९८-४१क्ष् (२७८४)
न दूरमेतन्मम भर्तृसन्निधौ
मनो हि मे दूरतरं प्रधावति ।
अथ व्रजन्नेव गिरं समुद्यतां
मयोच्यमानां शृणु भूय एव च ॥ ३-२९८-४१ (२७४१६)
विवस्वतस्त्वं तनयञ्च प्रतापवां-
स्ततो हि वैवस्वत उच्यसे बुधैः ।
समेन धर्मेण चरन्ति ताः प्रजा-
स्ततस्तवेहेवर धर्मराजता ॥ ३-२९८-४२ (२७४१७)
आत्मन्यपि न विश्वासस्तथा भवति सत्सु यः ।
तस्मात्सत्सु विशेपेण सर्वः प्रणयमिच्छति ॥ ३-२९८-४३ (२७४१८)
सौहदात्सर्वभूतानां विश्वासो नाम जायते ।
तस्मात्सत्सु विशेपेण विश्वासं कुरुते जनः ॥ ३-२९८-४४ (२७४१९)
यव उवाच। ३-२९८-४५क्ष् (२७८५)
उदाहृतंते वचनं यदङ्गने
शुभे न तादृक् त्वदृते श्रुतं मया ।
अनेन तुष्टोस्मि विनाऽस्य जीवितं
वरं चतुर्थं वरयस्व गच्छ च ॥ ३-२९८-४५ (२७४२०)
साविञ्युवाच। ३-२९८-४६क्ष् (२७८६)
ममात्मजं सत्यवतस्तथौरसं
भवेदुभाभ्यामिह यत्कुलोद्वहम् ।
शतं सुतानां बलवीर्यशालिना-
मिदंचतुर्थं वरयामि ते वरम् ॥ ३-२९८-४६ (२७४२१)
यम उवाच। ३-२९८-४७क्ष् (२७८७)
शतं सुतानां बलवीरय्शालिनां
भविष्यति प्रीतिकरं तवाबले ।
परिश्रमस्ते न भवेन्नृपात्मजे

निवर्त दूरं हि पथस्त्वमागता ॥ ३-२९८-४७ (२७४२२)
सावित्र्युवाच। ३-२९८-४८क्ष् (२७८८)
सतां सदा शाश्वतधर्मवृत्तिः
सन्तो न सीदन्ति न च व्यथन्ति ।
सतां सद्भिर्नाफलः संगमोस्ति
सद्भयो भयंनानुवर्तन्ति सन्तः ॥ ३-२९८-४८ (२७४२३)
सन्तो हि सत्येन नयन्ति सूर्यं
सन्तो भूमिं तपसा धारयन्ति ।
सन्तो गतिर्भूतभव्यस् राज-
न्सतां मध्ये नावसीदन्ति सन्तः ॥ ३-२९८-४९ (२७४२४)
आर्यजुष्टमिदं वृत्तमिति विज्ञाय शाश्वतम् ।
सन्तः परार्थं कुर्वाणा नावेक्षन्ति प्रतिक्रियाः ॥ ३-२९८-५० (२७४२५)
न च प्रसादः सत्पुरुषेषु मोघो
न चाप्यर्थो नश्यति नापि मानः ।
यस्मादेतन्नियतं सत्सु नित्यं
तस्मात्सन्तो रक्षितारो भवन्ति ॥ ३-२९८-५१ (२७४२६)
यम उवाच। ३-२९८-५२क्ष् (२७८९)
यथायथा भाषसि धर्मसंहितं
मनोनुकूलं सुपदं महार्थवत् ।
तथातथा मे त्वयि भक्तिरुत्तमा
वरं वृणीष्वाप्रतिमं पतिव्रते ॥ ३-२९८-५२ (२७४२७)
सावित्र्युवाच। ३-२९८-५३क्ष् (२७९०)
न तेऽपवर्गः सुकृताद्विना कृत-
स्तथा यथाऽन्येषु वरेषु मानद ।
वरं वृणे जीवतु सत्यवानयं
यथा मृता ह्येवमहं पतिं विना ॥ ३-२९८-५३ (२७४२८)
न कामये भर्तविनाकृता सुखं
न कामये भर्तृविनाकृता दिवम् ।
नकामये भर्तविनाकृता श्रियं
न भर्तृहीना व्यवसामि जीबितुम् ॥ ३-२९८-५४ (२७४२९)
वरातिसर्गः शतपुत्रता मम
त्वयैव दत्तो ह्रियते च मे पतिः ।
वरं वृणे जीवतु सत्यवानयं
तवैव सत्यं वचनं भविष्यति ॥ ३-२९८-५५ (२७४३०)
मार्कण्डेय उवाच। ३-२९८-५६क्ष् (२७९१)
तथेत्युक्त्वा तु तं पाशं मुक्त्वा वैवस्वतो यमः ।

धर्मराजः प्रहृष्टात्मा सावित्रीमिदमब्रवीत् ॥ ३-२९८-५६ (२७४३१)
एष भद्रे मया मुक्तो भर्ता ते कुलनन्दिनि ।
ग्तोषितोऽहं त्वया साध्वि वाक्यैर्धर्मार्तसंहितैः' ॥ ३-२९८-५७ (२७४३२)
अरोगस्व नेयश्च सिद्धार्थः स भविष्यि ।
चतुर्वर्षशतायुश्च त्वया सार्धमवाप्स्यति ॥ ३-२९८-५८ (२७४३३)
इष्ट्वा यज्ञैश्च धर्मेण ख्यातिं लोके गमिष्यति ।
त्वयि पुत्रशतं चैव सत्यवाञ्जनयिष्यति ॥ ३-२९८-५९ (२७४३४)
ते चापि सर्वे राजानः क्षत्रियाः पुत्रपौत्रिणः ।
ख्यातास्त्वन्नामधेयाश्चभविष्यन्तीह शाश्वताः ॥ ३-२९८-६० (२७४३५)
पितुश्च ते पुत्रशतं भविता तव मातरि ।
मालव्यां मालवा नाम शाश्वताः पुत्रपौत्रिणः ।
भ्रातरस्ते भविष्यन्ति क्षत्रियास्त्रिदशोपमाः ॥ ३-२९८-६१ (२७४३६)
एवं तस्यै वरं दत्त्वा धर्मराजः प्रतापवान् ।
निवर्तयित्वा सावित्रीं स्वमेव भवनं ययौ ॥ ३-२९८-६२ (२७४३७)
सावित्र्यपि यमे याते भर्तारं प्रतिलभ्य च ।
जगाम तत्र यत्रास्या भर्तुः शावं कलेवरम् ॥ ३-२९८-६३ (२७४३८)
सा भूमौ प्रेक्ष्यभर्तारमुपसृत्योपगृह्य च ।
उत्सङ्गे शिर आरोप्य भूमावुपविवेश ह ॥ ३-२९८-६४ (२७४३९)
संज्ञां चस पुनर्लब्ध्वा सावित्रीमभ्यभाषत ।
प्रोष्यागत इव प्रेम्णा पुनःपुनरुदीक्ष्यवै ॥ ३-२९८-६५ (२७४४०)
सुचिरं बत सुप्तोस्मि किमर्थं नावबोधितः ।
क्व चासौ पुरुषः श्यामो योसौ मां संचकर्षह ॥ ३-२९८-६६ (२७४४१)
सावित्र्युवाच। ३-२९८-६७क्ष् (२७९२)
सुचिरं त्वंप्रसुप्तोसि ममाङ्के पुरुषर्षभ ।
गतः स भगवान्देवः प्रजासंयमनो यमः ॥ ३-२९८-६७ (२७४४२)
विश्रान्तोसि महाभाग विनिद्रश्च नृपात्मज ।
यदि शक्यं समुत्तिष्ठ विगाढां पश्य शर्वरीम् ॥ ३-२९८-६८ (२७४४३)
मार्कण्डेय उवाच। ३-२९८-६९क्ष् (२७९३)
उपलभ्यततः संज्ञां सुखसुप्त इवोत्थितः ।
दिशः सर्वा वनान्तांश्च निरीक्ष्योवाच सत्यवान् ॥ ३-२९८-६९ (२७४४४)
फलाहारोस्मि निष्क्रान्तस्त्वया सह सुमध्यमे ।
ततः पाटयतः काष्ठं शिरसो मे रुजाऽभवत् ॥ ३-२९८-७० (२७४४५)
शिरोभितापसंतप्तः स्थातुं चिरमशक्नुवन् ।
तवोत्सङ्गे प्रसुप्तोस्मि इति सर्वं स्मरे शुभे ॥ ३-२९८-७१ (२७४४६)
त्वयोपगूढस्य च मे निद्रयाऽपहृतं मनः ।
ततोऽपश्यं तमो घोरं पुरुषं च महौजसम् ॥ ३-२९८-७२ (२७४४७)

तद्यदि त्वं विजानासि किं तद्ब्रूहि सुमध्यमे ।
स्वप्नो मे यदिवा दृष्टो यदि वा सत्यमेव तत् ॥ ३-२९८-७३ (२७४४८)
तमुवाचाथ सावित्री रजनी व्यवगाहते ।
श्वस्ते सर्वंयथावृत्तमाख्यास्यामि नृपात्मज ॥ ३-२९८-७४ (२७४४९)
उत्तिष्ठोत्तिष्ठ भद्रं ते पितरौ पश्य सुव्रत ।
विगाढा रजनी चेयं निवृत्तश्च दिवाकरः ॥ ३-२९८-७५ (२७४५०)
नक्तंचराश्चरन्त्येते हृष्टाः क्रूराभिभाषिणः ।
श्रूयन्ते पर्णशब्दाश्च मृगाणां चरतां वने ॥ ३-२९८-७६ (२७४५१)
एता घोरं शिवा नादान्दिशं दक्षिणपश्चिमाम् ।
आस्थाय विरुवन्त्युग्राः कम्पयन्त्यो मनो मम ॥ ३-२९८-७७ (२७४५२)
सत्यवानुवाच। ३-२९८-७८क्ष् (२७९४)
वनं प्रतिभयाकारं घनेन तमसा वृतम् ।
न विज्ञास्यसि पन्थानं गन्तुं चैव न शक्ष्यसि ॥ ३-२९८-७८ (२७४५३)
सावित्र्युवाच। ३-२९८-७९क्ष् (२७९५)
अस्मिन्न वने दग्धे शुष्कवृक्षः स्थितो ज्वलन् ।
वायुना धम्यमानोत्र दृश्यतेऽग्निः क्वचित्क्वचित् ॥ ३-२९८-७९ (२७४५४)
ततोऽग्निमानयित्वेह ज्वालयिप्यामि सर्वतः ।
काष्ठानीमानि सन्तीह जहि संतापमात्मनः ॥ ३-२९८-८० (२७४५५)
यदि नोत्सहसे गन्तुं सरुजं त्वां हि लक्षये ।
न च ज्ञास्यसि पन्थानं तमसा संवृते वने ॥ ३-२९८-८१ (२७४५६)
श्वः प्रभाते वने दृश्ये यास्यावोऽनुमते तव ।
वसावेह क्षपामेकां रुचितं यदि तेऽनघ ॥ ३-२९८-८२ (२७४५७)
सत्यवानुवाच। ३-२९८-८३क्ष् (२७९६)
शिरोरुजा निवृत्ता मे स्वस्थान्यङ्गानि लक्षये ।
मातापितृभ्यामिच्छामि संयोगं त्वत्प्रसादजम् ॥ ३-२९८-८३ (२७४५८)
न कदाचिद्विकाले हि गतपूर्वोहमाश्रमात् ।
अनागतायां सन्ध्यायां माता मे प्ररुणद्धि माम् ॥ ३-२९८-८४ (२७४५९)
दिवाऽपिमयि निष्क्रान्ते सन्तप्येते गुरू मम ।
विचिनोति हि मां तातः सहैवाश्रमवासिभिः ॥ ३-२९८-८५ (२७४६०)
मात्रा पित्रा च सुभृशं दुःखिताभ्यामहं पुरा ।
उपालब्धश्च बहुशश्चिरेणागच्छसीति हि ॥ ३-२९८-८६ (२७४६१)
कात्ववस्था तयोरद्य मदर्थमिति चिन्तये ।
तयोरदृश्ये मयि च महद्दुःखं भविष्यति ॥ ३-२९८-८७ (२७४६२)
पुरा मामूचतुश्चैव रात्रावस्रायमाणकौ ।
भृशं सुदुःखितौ वृद्धौ बहुशः प्रीतिसंयुतौ ॥ ३-२९८-८८ (२७४६३)
त्वया हीनौ न जीवाव मुहूर्तमपि पुत्रक ।

यावद्धरिष्यसे पुत्र तावन्नौ जीवितं ध्रुवम् ॥ ३-२९८-८९ (२७४६४)
वृद्धयोरन्धयोर्दृष्टिस्त्वयि वंशः प्रतिष्ठिः ।
त्वयि पिण्डश्च कीर्तिश्च सन्तानश्चावयोरिति ॥ ३-२९८-९० (२७४६५)
माता वृद्धा पिता वृद्धस्तयोर्यष्टिरहं किल ।
तौ रात्रौ मामपश्यन्तौ कामवस्थां गमिष्यतः ॥ ३-२९८-९१ (२७४६६)
निद्रायाश्चाभ्यसूयामि यस्या हेतोः पिता मम ।
माता च संशयं प्राप्ता मत्कृतेऽनपकारिणी ॥ ३-२९८-९२ (२७४६७)
अहं च संशयं प्राप्तः कृच्छ्रामापदमास्थितः ।
मातापितृभ्यां हि विना नाहं जीवितुमुत्सहे ॥ ३-२९८-९३ (२७४६८)
व्यक्तमाकुलया बुद्ध्या प्रज्ञाचक्षुः पिता मम ।
एकैकमस्यां वेलायां पृच्छत्याश्रमवासिनम् ॥ ३-२९८-९४ (२७४६९)
नात्मानमनुशोचामि यथाऽहंपितरं शुभे ।
भर्तारं चाप्यनुगतां मातरं भृशदुःखिताम् ॥ ३-२९८-९५ (२७४७०)
मत्कृते न हि तावद्य सन्तापं परमेष्यतः ।
जीवन्तावनुजीवामि भर्तव्यौ तौ मयेति ह ॥ ३-२९८-९६ (२७४७१)
तयोः प्रियं मे कर्व्यमिति जीवामि चाप्यहम् ।
ग्परमं दैवतं तौ मे पूजनीयौ सदा मया ।
तयोस्तु मे सदाऽस्त्येवं व्रतमेतत्पुरातनम्' ॥ ३-२९८-९७ (२७४७२)
मार्कण्डेय उवाच। ३-२९८-९८क्ष् (२७९७)
एवमुक्त्वा स धर्मात्मा गुरुभक्तो गुरुप्रियः ।
उच्छ्रित्य बाहू दुःखार्तः सुस्वरं प्ररुरोद ह ॥ ३-२९८-९८ (२७४७३)
ततोऽब्रवीत्तथा दृष्ट्वाभर्तारं शोककर्शितम् ।
प्रमृज्याश्रूणि पाणिभ्यां सावित्री धर्मचारिणी ॥ ३-२९८-९९ (२७४७४)
यदि मेऽस्ति तपस्तप्तं यदि दत्तं हुतं यदि ।
श्वश्रूश्वशुरभर्तॄणां मम पुण्याऽस्तु शर्वरी ॥ ३-२९८-१०० (२७४७५)
न स्मराम्युक्तपूर्वं वै स्वैरेष्वप्यनृतां गिरम् ।
तेन सत्येन तावद्य ध्रियेतां श्वशुरौ मम ॥ ३-२९८-१०१ (२७४७६)
सत्यवानुवाच। ३-२९८-१०२क्ष् (२७९८)
कामये दर्शनं पित्रोर्याहि सावित्रि माचिरम् ।
ग्अपिनाम गुरू तौ हि पश्येयं ध्रियमाणकौ' ॥ ३-२९८-१०२ (२७४७७)
पुरा मातुः पितुर्वाऽपियदि पश्यामि विप्रियम् ।
न जीविष्ये वरारोहे सत्येनात्मानमालभे ॥ ३-२९८-१०३ (२७४७८)
यदि धर्मे च ते बुद्धिर्मां चेज्जीवन्तमिच्छसि ।
मम प्रियं वा कर्तव्यं गच्छावाश्रममन्तिकात् ॥ ३-२९८-१०४ (२७४७९)
मार्कण्डेय उवाच। ३-२९८-१०५क्ष् (२७९९)
सावित्री तत उत्थाय केशान्संम्य भामिनी ।

पतिमुत्थापयामास बाहुभ्यां परिगृह्य वै ॥ ३-२९८-१०५ (२७४८०)
उत्ताय सत्यवांश्चापि प्रमृज्याङ्गानि पाणिना ।
सर्वा दिशः समालोक्य कठिने दृष्टिमादधे ॥ ३-२९८-१०६ (२७४८१)
तमुवाचाथसावित्री श्वः फलानि हरिष्यसि ।
योगक्षेमार्थमेतं ते नेष्यामि परशुं त्वहम् ॥ ३-२९८-१०७ (२७४८२)
कृत्वा कठिनभारं सा वृक्षशाखावलम्बिनम् ।
गृहीत्वा परशुं भर्तुः सकाशे पुनरागमत् ॥ ३-२९८-१०८ (२७४८३)
वामे स्कन्धे तु वामोरूर्भर्तुर्बाहुं निवेश्य च ।
दक्षिणएन परिष्वज्य जगाम गजगामिनी ॥ सत्यवानुवाच। ३-२९८-१०९ (२७४८४)
अभ्यासगमनाद्भीरु पन्थानो विदिता मम ।
वृक्षान्तरालोकितया ज्योत्स्नया चापि लक्षये ॥ ३-२९८-११० (२७४८५)
आगतौ स्वः पथा येन फलान्यवचितानि च ।
यथागतं शुभे गच्छ पन्थानं मा विचारय ॥ ३-२९८-१११ (२७४८६)
पलाशखण्डे चैतस्मिन्पन्था व्यावर्तते द्विधा ।
तस्योत्तरेण यः पन्थास्तेन गच्छ त्वरस्व च ॥ ३-२९८-११२ (२७४८७)
स्वस्थोस्मि बलवानस्मि दिदृक्षुः पितरावुभौ ।
ब्रुवन्नेव त्वरायुक्तः सम्प्रायादाश्रमं प्रति ॥ ३-२९८-११३ (२७४८८)

इति श्रीमन्महाभारते अरण्यपर्वणि पतिव्रतामाहात्म्यपर्वणि
अष्टनवत्यधिकद्विशततमोऽध्यायः ॥ २९८ ॥
Mahabharata - Vana Parva - Chapter Footnotes

३-२९८-१ कठिनं स्तालीम् ॥
३-२९८-७ युयोज अनुचिन्तितवती ॥
३-२९८-८ पुरुषं पीतवाससमिति क । थ। पाठः ॥
३-२९८-११ कामया इच्छया ॥
३-२९८-२५ अनात्मवन्तः अजितेन्द्रियाः । वने धर्मं यज्ञादिरूपं
न चरन्ति। जितेनद्रिया एव वने ग्रामे वा यज्ञादीन्स्त्रीसंबद्धान्
धर्मान्कुर्वन्ति। तेन गृहस्थवानप्रस्थयोः संग्रहः। वासं
गुरुकुलवासं ब्रह्मचर्यम्। परिश्रमं परित्यागरूपमाश्रमं
संन्यासम्। विज्ञानतः चतुर्थ्यर्थे सार्वविभक्तिकस्तसिः। धर्मस्य
फलं आत्मविज्ञानमित्यर्थः ॥
३-२९८-२६ एतेषामाश्रमधर्माणां समुच्चयं वारयति एकस्येति
। चतुर्णामन्यतमस्यैकस्याश्रमस्य धर्मेण सतां मतेन
दम्भादिरहितश्रद्धया सम्यगनुष्ठितेनेत्यर्थः। सर्वे तं

मार्गं ज्ञानमार्गं प्रपन्नाः प्राप्ताः अतो धर्मं च वासं
च प्रतिश्रयं चेति पाठक्रमापेक्षया द्वितीयं नैष्ठिकं
गुरुकुलवासं दाराऽकरणरूपं तृतीयं पारिव्राज्यं दारादित्यागरूपं
वा न वाञ्छे। ज्ञानहेतोः प्रधानभूतस्य धर्मस्याद्येपि
सिद्धेरित्यर्थः। मद्भर्तुर्हरणेनावयोर्धर्मं मा नाशयेति भावः ॥
३-२९८-२७ निवर्त निवर्तस्व ।स्वर
उदात्तादिः। अक्षरमकारादि। व्यञ्जनं ककारादि। एतद्युक्तत्वेन वाक्यस्य
शब्दतो निर्दोषत्वमुक्तम्। हेतुयुक्तत्वेन युक्तियुक्तत्वमप्युक्तम् ॥
३-२९८-३३ गुरुः श्वशुरः ॥
३-२९८-४२ समेन शत्रुमित्रादितारतम्यहीनेन तव धर्मेण प्रशासनेन
ताः प्रजाश्चरन्ति ।त्वदाज्ञावशगा इत्यर्थः। अतएव तव नाम
धर्मराज इति। धर्मेणैव राजते धर्मोऽस्य राजत इतिवा ॥
३-२९८-४३ लौकिकेष्वपि विश्रामं कुर्यन्निष्टसिद्धिं प्राप्नोति किमुत
त्वयि धर्मराजे इत्याशयेनाह आत्मन्यपीति ।सर्वः प्रणमते नर इति
क। ध। पाठः ॥
३-२९८-४५ ते त्वया ॥
३-२९८-४८ शाश्वतो धर्मः पत्युः सकाशादेवापत्योत्पादनं सतां
मादृशानां दाराणां तत्रैव वृत्तिः ।ननु गतायुषि पत्यौ कथं
तत् स्यादित्यत आह संत इति। वरं दत्त्वा सन्तो नव्यथन्ति नापि सीदन्ति
किंतु उक्तं निर्वहन्त्येवेत्यर्थः। अत्यन्ताशक्येऽर्थे कथं स्यादित्यत
आह सतामिति। सतामशक्यमपि नास्ति। भंयचान्यस्य तेभ्यो नास्तीति
तत्त्वतोहं निर्भयास्मीति भावः ॥
३-२९८-४९ त्वयापि सत्यं स्वीयं रक्षणीयमित्याह सन्तो हीति
।भूतभव्यस्य भूतस्य भविष्यस्य च ॥
३-२९८-५१ एतत् त्रयं प्रसादोऽर्थो मानश्च ।दरिद्रस्य प्रसादो
नार्थाय। श्रीमतां प्रसादोऽर्थकृदपि न मानदः। सतां तु मानद
इति। खले तु प्रसाद एव नास्ति। अतस्त्रयं त्वय्येव स्तितमिति त्वं
रक्षितास्माकं भवेति भावः ॥
३-२९८-५३ ते त्वत्तः ।अपवर्गः पुत्रफलप्राप्तिः सुकृताद्विना
समीचीनाद्दाम्पत्ययोगादृतेक्षेत्रजादिपुत्रार्पणेन न कृतोनिष्पादितो
भवति। यथान्येषु वरेषु भर्तृषु मदयन्त्यां वशिष्ठस्येव न
तद्वत्। यस्मादेवं तस्माद्वरं वृणे ॥
३-२९८-५४ व्यवसामि शक्नोमि ॥
३-२९८-६० त्वन्नामधेयाः सावित्रा इति ॥
३-२९८-८८ अस्नायमाणकौ रुदन्तौ ॥
३-२९८-८९ नौ आवयोः ॥

३-२९८-९४ प्रज्ञाचक्षुरन्धः ॥
३-२९८-१०१ ध्रियेतां जीवेताम् । श्वशुरौ श्वश्रूश्वशुरौ ॥
३-२९८-१०६ कठिने फलपूर्णे पात्रे ॥
३-२९८-१०८ कृत्त्वा आच्छिद्य आदायेत्यर्थः ॥
३-२९८-१०९ जगात्यमृदुभामिनी इति थ । पाठः ॥

---

वन-अध्यय२९९
॥ श्रीः ॥
३.२९९. अध्यायः २९९

Mahabharata - Vana Parva - Chapter Topics
अकस्माच्चक्षुर्लाभितुष्टनापि पुत्रानागमविषण्णेन द्युमत्सेनन तत्रतत्रतदन्वेषणम् ॥ १ ॥
ऋषिगणेन शुभनिमित्तज्ञापनेन समाश्वासिते तस्मिन्सावित्र्यासह सत्यवता पितुराश्रमाभिगमनम् ॥ २ ॥
मुनिगणाय सावित्र्या वने वृत्तवृत्तान्तनिवेदनम् ॥ ३ ॥

Mahabharata - Vana Parva - Chapter Text

३-२९९-० (२७४८९)
मार्कण्डेय उवाच। ३-२९९-०क्ष् (२८००)
एतस्मिन्नेव काले तु द्युमत्सेनो महाबलः ।
लब्धचक्षुः प्रसन्नायां दृष्ट्यां सर्वं ददर्श ह ॥ ३-२९९-१ (२७४९०)
स सर्वानाश्रमान्गत्वा शैब्यया सह भार्यया ।
पुत्रहेतोः परामार्तिं जगाम भरतर्षभ ॥ ३-२९९-२ (२७४९१)
तावाश्रमान्नदीश्चैववनानि च सरांसि च ।
तस्यां निशि विचिन्वन्तौ दम्पती परिजग्मतुः ॥ ३-२९९-३ (२७४९२)
श्रुत्वा शब्दं तु यं कंचिदुन्मुखौ सुतशङ्कया ।
सावित्रीसहितोऽभ्येति सत्यवानित्यभाषताम् ॥ ३-२९९-४ (२७४९३)
भिन्नैश्च परुषैः पादैः सव्रणैः शोणितोक्षितैः ।
कुशकणाटकविद्धाङ्गावुनमत्ताविव धावतः ॥ ३-२९९-५ (२७४९४)
ततोऽभिसृत्य तैर्विप्रैः सर्वैराश्रमवासिभिः ।
परिवार्य समाश्वास्य तावानीतौ स्वमाश्रमम् ॥ ३-२९९-६ (२७४९५)
तत्रभार्यासहायः स वृतो वृद्धैस्तपोधनैः ।
आश्वासितोपि चित्रार्थैः पूर्वराजकथाश्रयैः ॥ ३-२९९-७ (२७४९६)
ततस्तौ पुनराश्वस्तौ वृद्धौ पुत्रदिदृक्षया ।
बाल्यवृत्तानि पुत्रस्य सावित्र्या दर्शनानि च ।

शोकं जग्मतुरन्योन्यं स्मरन्तौ भृशदुःखितौ ॥ ३-२९९-८ (२७४९७)
हापुत्र हासाध्वि वधु क्वासिक्वासीत्यरोदताम् ।
ब्राह्मणः सत्यवाक्येषामुवाचेदं तयोर्वचः ॥ ३-२९९-९ (२७४९८)
सुवर्चा उवाच। ३-२९९-१०क्ष् (२८०१)
यथास्य भार्या सावित्री तपसा च दमेन च ।
आचारेण च संयुक्ता तथा जीवति सत्यवान् ॥ ३-२९९-१० (२७४९९)
गौतम उवाच। ३-८३-२९९क्ष् (२८०२)
वेदाः साङ्गा मयाऽधीतास्तपो मे संचितं महत् ।
कौमारब्रह्मचर्यं च गुरवोऽग्निश्च तोषिताः ॥ ३-२९९-११ (२७५००)
समाहितेन चीर्णानि सर्वाण्येव व्रतानि मे ।
वायुभक्षोपवासश्च कृतोमे विधिवत्सदा ॥ ३-२९९-१२ (२७५०१)
अनेन तपसा वेद्मि सर्वं परचीकीर्षितम् ।
सत्यमेतन्निबोधध्वं ध्रियते सत्यवानिति ॥ ३-२९९-१३ (२७५०२)
शिष्य उवाच। ३-२९९-१४क्ष् (२८०३)
उपाध्यायस्य मे वक्त्राद्यथा वाक्यं विनिःसृतम् ।
नैव जातु भवेन्मिथ्या तथा जीवति सत्यवान् ॥ ३-२९९-१४ (२७५०३)
ऋषय ऊचुः। ३-२९९-१५क्ष् (२८०४)
यथाऽस्य भार्या सावित्री सर्वैरेव सुलक्षणैः ।
अवैधव्यकरैर्युक्ता तथा जीवति सत्यवान् ॥ ३-२९९-१५ (२७५०४)
भारद्वाज उवाच। ३-२९९-१६क्ष् (२८०५)
यथाऽस्य भार्या सावित्री तपसा च दमेन च ।
आचारेण च संयुक्ता तथा जीवति सत्यवान् ॥ ३-२९९-१६ (२७५०५)
दाल्भ्या रउवाच। ३-२९९-१७क्ष् (२८०६)
यथा दृष्टिः प्रवृत्ता ते सावित्र्याश्च यथा व्रतम् ।
गताऽऽहारमकृत्वैव तथा जीवति सत्यवान् ॥ ३-२९९-१७ (२७५०६)
आपस्तम्ब उवाच। ३-२९९-१८क्ष् (२८०७)
यथा वदन्ति शान्तायां दिशि वै मृगपक्षिणः ।
पार्थिवीं चैववृद्धिं ते तथा जीवति सत्यवान् ॥ ३-२९९-१८ (२७५०७)
धौम्य उवाच। ३-२९९-१९क्ष् (२८०८)
सर्वैर्गुणैरुपेतस्ते यथा पुत्रो जनप्रियः ।
दीर्घायुर्लक्षणोपेतस्तथा जीवति स्यवान् ॥ ३-२९९-१९ (२७५०८)
मार्कण्डेय उवाच। ३-२९९-२०क्ष् (२८०९)
एवमाश्वासितस्तैस्तु सत्यवाग्भिस्तपस्विभिः ।
तांस्तान्विगणयन्सर्वांस्ततः स्थिर इवाभवत् ॥ ३-२९९-२० (२७५०९)
ततो मुहूर्तात्सावित्री भर्त्रा सत्वता सह ।
आजगामाश्रमं रात्रौ प्रहृष्टा प्रविवेश ह ॥ ३-२९९-२१ (२७५१०)

ग्दृष्ट्वा चोत्पतिताः सर्वेहर्षं जग्मुश्च ते द्विजाः ।
कण्ठं माता पिता चास्य समालिङ्ग्याभ्यरोदतां' ॥ ३-२९९-२२ (२७५११)
ब्राह्मणा ऊचुः। ३-२९९-२३क्ष् (२८१०)
पुत्रेण संगतं त्वां तु चक्षुष्मन्तं निरीक्ष्य च ।
सर्वे वयं वै पृच्छामो वृद्धिं वै पृथिवीपते ॥ ३-२९९-२३ (२७५१२)
समागमेन पुत्रस्य सावित्र्या दर्शनेन च ।
चक्षुषश्चात्मनो लाभात्त्रिभिर्दिष्ट्या विवर्धसे ॥ ३-२९९-२४ (२७५१३)
सर्वैरस्माभिरुक्तं यत्तथा तन्नात्रसंशयः ।
भूयोभूयः समृद्धिस्ते क्षिप्रमेव भविष्यति ॥ ३-२९९-२५ (२७५१४)
मार्कण्डेय उवाच। ३-२९९-२६क्ष् (२८११)
ततोऽग्निं तत्र संज्वाल्य द्विजास्ते सर्व एव हि ।
उपासांचक्रिरे पार्थ द्युमत्सेनं महीपतिम् ॥ ३-२९९-२६ (२७५१५)
शैव्या च सत्यवांश्चैव सावित्री चैकतः स्थिताः ।
सर्वैस्तैरभ्यनुज्ञाता विशोका समुपाविशन् ॥ ३-२९९-२७ (२७५१६)
ततो राज्ञा सहासीनाः सर्वे ते वनवासिनः ।
जातकौतूहलाः पार्थ पप्रच्छुर्नृपतेः सुतम् ॥ ३-२९९-२८ (२७५१७)
प्रागेव नागतं कस्मात्सभार्येण त्वया विभो ।
विरात्रे चागतं कस्मात्कोनु बन्धस्तवाभवत् ॥ ३-२९९-२९ (२७५१८)
संतापितः पिता माता वयं चैव नृपात्मज ।
कस्मादिति न जानीमस्तत्सर्वं वक्तुमर्हिसि ॥ ३-२९९-३० (२७५१९)
सत्यवानुवाच। ३-२९९-३१क्ष् (२८१२)
पित्राऽहमभ्यनुज्ञातः सावित्रीसहितो गतः ।
अथ मेऽभूच्छिरोदुःखं वने काष्ठानि भिन्दतः ॥ ३-२९९-३१ (२७५२०)
सुप्तश्चाहं वेदनया चिरमित्युपलक्षये ।
तावत्कालं न च मया सुप्तपूर्वं कदाचन ॥ ३-२९९-३२ (२७५२१)
सर्वेषामेव भवतां संतापो मा भवेदिति ।
अतो विरात्रागमनं नान्यदस्तीह कारणम् ॥ ३-२९९-३३ (२७५२२)
गौतम उवाच। ३-२९९-३४क्ष् (२८१३)
अकस्माच्चक्षुः प्राप्तिर्द्युमत्सेनस्य ते पितुः ।
नास्य त्वं कारणं वेत्सि सावित्री वक्तुमर्हति ॥ ३-२९९-३४ (२७५२३)
श्रोतुमिच्छामि सावित्रि त्वं हि वेत्थ परावरम् ।
त्वां हि जानामि सावित्रि सावित्रीमिव तेजसा ॥ ३-२९९-३५ (२७५२४)
त्वमत्र हेतुं जानीषे तस्मात्सत्यं निरुच्यताम् ।
रहस्यं यदि ते नास्ति किंचिदत्र वदस्व नः ॥ ३-२९९-३६ (२७५२५)
सावित्र्युवाच। ३-२९९-३७क्ष् (२८१४)
एवमेतद्यथा वेत्थ संकल्पो नान्यथा हि वः ।

न हि किंचिद्रहस्यं मे श्रूयतां तथ्यमेव यत् ॥ ३-२९९-३७ (२७५२६)
मृत्युर्मे पत्युराख्यातो नारदेन महात्मना ।
स चाद्य दिवसः प्राप्तस्ततो नैनं जहाम्यहम् ॥ ३-२९९-३८ (२७५२७)
सुप्तं चैनं साक्षादुपागच्छत्सकिंकरः ।
स एनमनयद्बद्ध्वा दिशं पितृनिषेविताम् ॥ ३-२९९-३९ (२७५२८)
अस्तौषं तमहं देवं सत्येन वचसा विभुम् ।
पञ्च वै तेन मे दत्ता वराः शृणुत तान्मम ॥ ३-२९९-४० (२७५२९)
चक्षुषी च स्वराज्यंच द्वौ वरौ श्वशुरस्य मे ।
लब्धं पितुः पुत्रशतं पुत्राणां चात्मनः शतम् ॥ ३-२९९-४१ (२७५३०)
चतुर्वर्षशतायुर्मे भर्ता लब्धश्च सत्यवान् ।
भर्तुर्हि जीवितार्थं तु मया चीर्णं त्विदं व्रतम्। ३-२९९-४२ (२७५३१)
एतत्सर्वं मयाऽऽख्यातं कारणं विस्तरण वः ।
यथावृत्तं सुखोदर्कमिदं दुःखं महन्मम ॥ ३-२९९-४३ (२७५३२)
ऋषय ऊचुः। ३-२९९-४४क्ष् (२८१५)
निमज्ज्मानं व्यसनैरभिद्रुतं
कुलं नरन्द्रस्य तमोमये ह्रदे ।
त्वया सुशीलव्रतपुण्यया कुलं
रसमुद्धृतं साध्वि पुनः कुलीनया ॥ ३-२९९-४४ (२७५३३)
मार्कण्डेय उवाच। ३-२९९-४५क्ष् (२८१६)
तथा प्रशस्य ह्यभिपूज्य चैव
वरस्त्रियं तामृषयः समागताः ।
नरेन्द्रमामन्त्र्य सपुत्रभञ्जसा
शिवेन रजग्मुर्मुदिताः स्वमालयम् ॥ ३-२९९-४५ (२७५३४)

इति श्रीमन्महाभारते अरण्यपर्वणि पतिव्रतामाहात्म्यपर्वणि
एकोनत्रिशततमोऽध्यायः ॥ २९९ ॥
Mahabharata - Vana Parva - Chapter Footnotes

३-२९९-५ भिन्नौर्विदीर्णैः । परुषैः कर्कशैः ॥
३-२९९-१२ कुशलानि च यानि मे इति ध पाठः ॥
३-२९९-१८ शान्तायां प्रसन्नायाम् ॥
३-२९९-२९ विरात्रे बहुरात्रे काले आगतं आगमनम् ॥

---

वन-अध्यय३००
॥ श्रीः ॥
३.३००. अध्यायः ३००

Mahabharata - Vana Parva - Chapter Topics

साल्वदेशीयैर्द्युमत्सेनंप्रति न्मन्त्रिणा
तच्छत्रुनिषर्हणनिवेदनपूर्वकं निजनगरंप्रत्यागमनप्रार्थना
॥ १ ॥
सभार्येण द्युमत्सेनेन सावित्रीसत्यवद्भ्यां सह
मुनिगणाभिवादनादिपूर्वकं स्वपुरप्रत्यागमनम् ॥ २ ॥

Mahabharata - Vana Parva - Chapter Text

३-३००-० (२७५३५)
मार्कण्डेय उवाच। ३-३००-०क्ष् (२८१७)
तस्यां रात्र्यां व्यतीतायामुदिते सूर्यमण्डले ।
कृतपौर्वाह्णिकाः सर्वे समेयुस्ते तपोधनाः ॥ ३-३००-१ (२७५३६)
तदेव सर्वं सावित्र्या महाभाग्यं महर्षयः ।
द्युम्सेनाय नातृप्यन्कथयन्तः पुनः पुनः ॥ ३-३००-२ (२७५३७)
ततः प्रकृतयः सर्वाः साल्वेभ्योऽभ्यागा नृपम् ।
आचख्युर्निहतं चैव स्वेनामात्येन तं द्विषम् ॥ ३-३००-३ (२७५३८)
तं मन्त्रिणा हतं प्रोच्य ससहायं सबान्धवम् ।
न्यवेदयन्यथावृत्तं विद्रुतं च द्विषद्बलम् ॥ ३-३००-४ (२७५३९)
ऐकमत्यं च सर्वस्य जनस्य स्वं नृपं प्रति ।
सचक्षुर्वाऽप्यचक्षुर्वा स नो राजा भवत्विति ॥ ३-३००-५ (२७५४०)
अनेन निश्चयेनेह वयं प्रस्थापिता नृप ।
प्राप्तानीमानि यानानि चतुरङ्गं च ते बलम् ॥ ३-३००-६ (२७५४१)
प्रयाहि राजन्भद्रं ते घुष्टस्ते नगरे जयः ।
अध्यास्स्व चिररात्राय पितृपैतामहं पदम् ॥ ३-३००-७ (२७५४२)
मार्कण्डेय उवाच। ३-३००-८क्ष् (२८१८)
चक्षुष्मन्तं च तं दृष्ट्वा राजानं वपुषाऽन्वितम् ।
मूर्ध्ना निपतिताः सर्वेविस्मयोत्फुल्ललोचनाः ॥ ३-३००-८ (२७५४३)
तोऽभिवाद्य तान्वृद्धान्द्विजानाश्रमवासिनः ।
तैश्चाभिपूजितः सर्वैः प्रययौ नगरं प्रति ॥ ३-३००-९ (२७५४४)
शैव्या च सह सावित्र्या स्वास्तीर्णेन सुवर्चसा ।
नरयुक्तेन यानेन प्रययौ सेनया वृता ॥ ३-३००-१० (२७५४५)
ततोऽभिषिषिचुः प्रीत्या द्युमत्सेनं पुरोहिताः ।
पुत्रं चास्य महात्मानं यौवराज्येऽभ्यषेचयन् ॥ ३-३००-११ (२७५४६)
ततः कालेन महता सावित्र्याः कीर्तिवर्धनम् ।

तद्वै पुत्रशतं जज्ञे शूराणामनिवर्तिनाम् ॥ ३-३००-१२ (२७५४७)
भ्रातृणां सोदराणां च तथैवास्याभवच्छतम् ।
मद्राधिपस्याश्वपतेर्मालव्यां सुमहाबलम् ॥ ३-३००-१३ (२७५४८)
एवमात्मा पिता माता श्वश्रूः श्वशुर एव च ।
भर्तुः कुलं च सावित्र्या सर्वं कृच्छ्रात्समुद्धृतं ॥ ३-३००-१४ (२७५४९)
तथैवैषा हि कल्याणी द्रौपदी शीलसंमता ।
तारयिष्यति वः सर्वान्सावित्रीव कुलाङ्गना ॥ ३-३००-१५ (२७५५०)
वैशंपायन उवाच। ३-३००-१६क्ष् (२८१९)
एवं स पाण्डवस्तेन अनुनीतो महात्मना ।
विशोको विज्वरो राजन्काम्यके न्यवसत्तदा ॥ ३-३००-१६ (२७५५१)
यश्चेदं शृणुयाद्भक्त्या सावित्र्याख्यानमुत्तमम् ।
स सुखी सर्वसिद्धार्थो न दुःखं प्राप्नुयान्नरः ॥ ३-३००-१७ (२७५५२)

इति श्रीमन्महाभारते अरण्यपर्वणि पतिव्रतामाहात्म्यपर्वणि
त्रिशततमोऽध्यायः ॥ ३०० ॥
Mahabharata - Vana Parva - Chapter Footnotes

३-३००-७ चिररात्राय बहुकालम् ॥
३-३००-१७ सर्पसिद्धार्थो रदीर्घमायुरवाप्नुयात् इति क ।पाठः ॥

---

वन-अध्यय३०१
॥ श्रीः ॥
३.३०१. अध्यायः ३०१

Mahabharata - Vana Parva - Chapter Topics
सूर्येण स्वप्ने कर्णप्रति इन्द्रेण रपाण्डवप्रियचिकीर्षया
भाविकवचकुणाडलयाचनानिवेदनपूर्वकं तदानप्रतिपेधवचनम्
॥ १ ॥
कर्णेन सूर्यप्रति हेतूक्तिपूर्वकमिन्द्राय तद्दानप्रतिज्ञानम् ॥ २ ॥

Mahabharata - Vana Parva - Chapter Text

३-३०१-० (२७५५३)
जनमेजय उवाच। ३-३०१-०क्ष् (२८२०)
यत्तत्तदा महद्ब्रह्मँल्लोमशो वाक्यमब्रवीत् ।
इन्द्रस्य वचनादेव पाण्डुपुत्रं युधिष्ठिरम् ॥ ३-३०१-१ (२७५५४)
यच्चापि ते भयं तीव्रं न च कीर्तयसे क्वचित् ।

तच्चाप्यपहरिष्यामि धनंजय इतो गते ॥ ३-३०१-२ (२७५५५)
किंनु रतज्जपतांश्रेष्ठ कर्णं प्रति महद्भयम् ।
आसीन्न च स धर्मात्मा कथयामास कस्यचित् ॥ ३-३०१-३ (२७५५६)
वैशंपायन उवाच। ३-३०१-४क्ष् (२८२१)
अहं ते राजशार्दूल कथयामि कथामिमाम् ।
पृच्छतो भरतश्रेष्ठ शुश्रूषस्व गिरं मम ॥ ३-३०१-४ (२७५५७)
द्वादशे समतिक्रान्ते वर्षे प्राप्ते त्रयोदशे ।
पाण्डूनां हितकृच्छक्रः कर्णं भिक्षितुमुद्यतः ॥ ३-३०१-५ (२७५५८)
अभिप्रायमथो ज्ञात्वा महेन्द्रस्य विभावसुः ।
कुण्डलार्थे महाराज सूर्यः कर्णमुपागतः ॥ ३-३०१-६ (२७५५९)
महार्हे शयने वीरं स्पर्द्ध्यास्तरणसंवृते ।
शयानमतिविश्वस्तं ब्रह्मण्यं सत्यवादिनम् ॥ ३-३०१-७ (२७५६०)
स्वप्नान्ते निशि राजेन्द्र दर्शयामास रश्मिवान् ।
कृपया परयाऽऽविष्टः पुत्रस्नेहाच्च भारत ॥ ३-३०१-८ (२७५६१)
ब्राह्मणो वेदविद्भूत्वा सूर्यो योगर्द्धिरूपवान् ।
हितार्थमब्रवीत्कर्णं सान्त्वपूर्वमिदं वचः ॥ ३-३०१-९ (२७५६२)
कर्ण मद्वचनं तात शृणु सत्यभृतांवर ।
ब्रुवतोऽद्य महाबाहो सौहृदात्परमं हितम् ॥ ३-३०१-१० (२७५६३)
उपायास्यति शक्रस्त्वां पाण्डवानां हितेप्सया ।
ब्राह्मणच्छद्मना कर्ण कुण्डलोपजिहीर्षया ॥ ३-३०१-११ (२७५६४)
विदितं तेन शीलं ते सर्वस्य जगतस्तथा ।
यथा त्वं भिक्षितः सद्भिर्ददास्येव न याचसे ॥ ३-३०१-१२ (२७५६५)
त्वं हि तात ददास्येव ब्राह्मणेभ्यः प्रयाचितम् ।
वित्तं यच्चान्यदप्याहुर्न प्रत्याख्यासि कस्यचित् ॥ ३-३०१-१३ (२७५६६)
त्वां तु चैवंविधं ज्ञात्वा स्वयं वै पाकशासनः ।
आगन्ता रकुण्डलार्थाय कवचं चैव भिक्षितुम् ॥ ३-३०१-१४ (२७५६७)
तस्मै प्रयाचमानाय न देये कुण्डले त्वया ।
अनुनेयः परं शक्त्या श्रेय एतद्धि ते परम् ॥ ३-३०१-१५ (२७५६८)
कुण्डलार्थेऽब्रुवंस्तात कारणैर्बहुभिस्त्वया ।
अन्यैर्बहुविधैर्वित्तैः सन्निवार्यः पुनःपुनः ॥ ३-३०१-१६ (२७५६९)
रत्नैः स्त्रीभिस्तथा गोभिर्धनैर्बहुविधैरपि ।
निदर्शनैश्च बहुभिः कुण्डलेप्सुः पुरंदरः ॥ ३-३०१-१७ (२७५७०)
यदि दास्यसि कर्ण त्वं सहजे कुण्डले शुभे ।
आयुषः प्रक्षयं गत्वा मृत्योर्वशमुपैष्यसि ॥ ३-३०१-१८ (२७५७१)
कवचेन समायुक्तः कुण्डलाभ्यां च मानद ।
अवध्यस्त्वं रणेऽरीणामिति विद्धि वचो मम ॥ ३-३०१-१९ (२७५७२)

अमृतादुत्थितं ह्येतदुभयं रत्नसंमितम् ।
तस्माद्रक्ष्यं त्वया कर्ण जीवितं चेत्प्रियं तव ॥ ३-३०१-२० (२७५७३)
कर्ण उवाच। ३-३०१-२०क्ष् (२८२२)
को मामेवं भवान्प्राह दर्शयन्सौहृदं परम् ।
कामया भगवन्ब्रूहि को भवान्द्विजवेषधृक् ॥ ३-३०१-२१ (२७५७४)
ब्रह्मण उवाच। ३-३०१-२२क्ष् (२८२३)
अहं तात सहस्रांशुः सौहृदात्त्वां निदर्शये ।
कुरुष्वैतद्वयो मे त्वमेतच्छ्रेयः परं हि ते ॥ ३-३०१-२२ (२७५७५)
कर्ण उवाच। ३-३०१-२३क्ष् (२८२४)
श्रेय एव ममात्यन्तं यस्य मे गोपतिः प्रभुः ।
प्रवक्ताऽद्य हितान्वेषी शृणु चेदं वचो मम ॥ ३-३०१-२३ (२७५७६)
प्रसादये त्वां वरदं प्रणयाच्च ब्रवीम्यहम् ।
न निवार्यो व्रतादस्मादहं यद्यस्मि ते प्रियः ॥ ३-३०१-२४ (२७५७७)
व्रतं वै मम लोकोऽयं वेत्ति कृत्स्नं विभावसो ।
यथाऽहं द्विजमुख्येभ्यो दद्यां प्राणानपिध्रुवम् ॥ ३-३०१-२५ (२७५७८)
यद्यागच्छति मां शक्रो ब्राह्मणच्छद्मना वृतः ।
हितार्थं पाण्डुपुत्राणां खेचरोत्तम भिक्षितुम् ॥ ३-३०१-२६ (२७५७९)
दास्यामि विबुधश्रेष्ठ कुण्डले वर्म चोत्तमम् ।
न मे कीर्तिः प्रणश्येत त्रिषु लोकेषु विश्रुता ॥ ३-३०१-२७ (२७५८०)
मद्विधस्यायशस्यं हि न युक्तं प्राणरक्षणम् ।
युक्तं हि यशसा युक्तं मरणं लोकसंमतम् ॥ ३-३०१-२८ (२७५८१)
सोहमिन्द्राय दास्यामि कुण्डले सह वर्मणा ।
यदि मां बलवृत्रघ्नो भिक्षार्थमुपयास्यति ॥ ३-३०१-२९ (२७५८२)
हितार्थं पाण्डुपुत्राणां कुण्डले मे प्रयाचितुम् ।
तन्मे कीर्तिकरं लोके तस्याकीर्तिर्भविष्यति ॥ ३-३०१-३० (२७५८३)
वृणोमि कीर्तिं लोके हि जीवितेनापि भानुमन् ।
कीर्तिमानश्नुते स्वर्गं हीनकीर्तिस्तु नश्यति ॥ ३-३०१-३१ (२७५८४)
कीर्तिर्हि पुरुषं लोके संजीवयति मातृवत् ।
अकीर्तिर्जीवितं हन्ति जीवतोपि शरीरिणः ॥ ३-३०१-३२ (२७५८५)
अयंपुराणः श्लोको हि स्वयं गीतो विभावसो ।
धात्रा लोकेश्वर यथा कीर्तिरायुर्नरस्य ह ॥ ३-३०१-३३ (२७५८६)
पुरुषस्य परे लोके कीर्तिरेव परायणम् ।
इह लोके विशुद्धा च कीर्तिरायुर्विवर्धनी ॥ ३-३०१-३४ (२७५८७)
सोहं शरीरजे दत्त्वा कीर्तिं प्राप्स्यामि शाश्वतीम् ।
दत्त्वा च विधिवद्दानं ब्राह्मणेभ्यो यथाविधि ॥ ३-३०१-३५ (२७५८८)
हुत्वा शरीरं रसंग्रामे कृत्वा कर्म सुदुष्करम् ।

विजित्य च परानाजौ यशः प्राप्स्यामि केवलम् ॥ ३-३०१-३६ (२७५८९)
भीतानामभयं दत्त्वा संग्रामे जीवितार्थिनाम् ।
वृद्धान्बालान्द्विजातींश्च मोक्षयित्वा महाभयात् ॥ ३-३०१-३७ (२७५९०)
प्राप्स्यामि परमं लोके यशः स्वर्ग्यमनुत्तमम् ।
जीवितेनापि मे रक्ष्या कीर्तिस्तद्विद्धि मे व्रतम् ॥ ३-३०१-३८ (२७५९१)
सो हं दत्त्वा मघवते भिक्षामेतामनुत्तमाम् ।
ब्राह्मणच्छद्मिने देव लोके गन्ता परां गतिम् ॥ ३-३०१-३९ (२७५९२)

इति श्रीमन्महाभारते अरण्यपर्वणि कुण्डलाहरणपर्वणि
एकाधिकत्रिशततमोऽध्यायः ॥ ३०१ ॥
Mahabharata - Vana Parva - Chapter Footnotes

३-३०१-६ विभावसुः विशिष्टा भाः दीप्तिः सैव वसु धनं यस्
तादृशः सूर्यः ॥
३-३०१-७ स्पर्ध्यं विमर्दसहं स्पृहणीयं वा ॥
३-३०१-८ स्वप्रान्ते स्वाप्नमध्ये ॥

---

वन-अध्यय३०२
॥ श्रीः ॥
३.३०२. अध्यायः ३०२

Mahabharata - Vana Parva - Chapter Topics
सूर्येण हेतुकथनपूर्वकं पुनरिन्द्राय कवचकुण्डलदानप्रतिषेधोक्तिः ॥१ ॥

Mahabharata - Vana Parva - Chapter Text

३-३०२-० (२७५९३)
सूर्य उवाच। ३-३०२-०क्ष् (२८२५)
माऽहितं कर्ण कार्षीस्त्वमात्मनः सुहृदां तथा ।
पुत्राणामथ भार्याणामथो मातुरथो पितुः ॥ ३-३०२-१ (२७५९४)
शरीरस्याविरोधेन प्राणिनां प्राणभृद्वर ।
इष्यते यशसः प्राप्तिः कीर्तिश्च त्रिदिवे स्थिरा ॥ ३-३०२-२ (२७५९५)
यस्त्वं प्राणविरोधेन कीर्तिमिच्छसि शाश्वतीम् ।
सा ते प्राणान्समादाय गमिष्यति न संशयः ॥ ३-३०२-३ (२७५९६)
जीवतां कुरुते कार्यं पिता माता सुतास्तथा ।
ये चान्ये बान्धवाः केचिल्लोकेऽस्मिन्पुरुषर्षभ ॥ ३-३०२-४ (२७५९७)
राजानश्च नरव्याघ्र पौरुषेण निबोध तत् ।

कीर्तिश्च जीवतः साध्वी पुरुषस्य महाद्युते ॥ ३-३०२-५ (२७५९८)
मृतस्य कीर्त्या किं कार्यं भस्मीभूतस्य देहिनः ।
मृतः कीर्तिं न जानीते जीवन्कीर्तिं समश्नुते ॥ ३-३०२-६ (२७५९९)
मृतस्य कीर्तिर्मर्त्यस्य यथा माला गतायुषः ।
अहं तु त्वां ब्रवीम्येतद्भक्तोसीति हितेप्सया ॥ ३-३०२-७ (२७६००)
भक्तिमन्तो हि मे रक्ष्या इत्येतेनापि हेतुना ।
भक्तोयं परया भक्त्या मामित्येव महाभुज ॥ ३-३०२-८ (२७६०१)
ममापि भक्तिरुत्पन्ना स त्वं कुरु वचो मम ।
अस्ति चात्र परं किंचिदध्यात्मं देवनिर्मितम् ।
अतश्च त्वां ब्रवीम्येतत्क्रियतामविशङ्कया ॥ ३-३०२-९ (२७६०२)
देवगुह्यं त्वया ज्ञातुं न शक्यं पुरुषर्षभ ।
नस्मान्नाख्यामि ते गुह्यं काले वेत्स्यति तद्भवान् ॥ ३-३०२-१० (२७६०३)
पुनरुक्तं च वक्ष्यामि त्वं राधेय निबोध तत् ।
माऽस्मै ते कुण्डले दद्या भिक्षिते वज्रापाणिना ॥ ३-३०२-११ (२७६०४)
शोभसे कुण्डलाभ्यां च रुचिराभ्यां महाद्युते ।
विशाखयोर्मध्यगतः शशीव विमले दिवि ॥ ३-३०२-१२ (२७६०५)
कीर्तिश्च जीवतः साध्वी पुरुषस्येति विद्धि तत् ।
प्रत्याख्येयस्त्वया तात कुण्डलार्थे सुरेश्वरः ॥ ३-३०२-१३ (२७६०६)
ग्पाण्डवानां हिते युक्तो भिक्षन्ब्राह्मणवेषधृत्'।
शक्त्या बहुविधैर्वाक्यैः कुण्डलेप्सा त्वयाऽनघ ।
विहन्तुं देवराजस् हेतुयुक्तैः पुनःपुनः ॥ ३-३०२-१४ (२७६०७)
उपपत्त्युपपन्नार्थैर्माधुर्यकृतभूषणैः ।
पुरंदरस्य कर्ण त्वं बुद्धिमेतामपानुद ॥ ३-३०२-१५ (२७६०८)
त्वं हि नित्यं नरव्याघ्र स्पर्धसे सव्यसाचिना ।
सव्यसाची त्वया चेह युधि शूरः समेष्यति ॥ ३-३०२-१६ (२७६०९)
न तु त्वामर्जुनः शक्तः कुण्डलाभ्यां समन्वितम् ।
विजेतुं युधि यद्यस्य स्वयमिन्द्रः शरो भवेत् ॥ ३-३०२-१७ (२७६१०)
तस्मान्न देये शक्राय त्वयैते कुण्डले शुभे ।
संग्रामे यदि निर्जेतुं कर्ण कामयसेऽर्जुनम् ॥ ३-३०२-१८ (२७६११)

इति श्रीमन्महाभारते अरण्यपर्वणि कुण्डलाहरणपर्वणि
द्व्यधिकत्रिशततमोऽध्यायः ॥ ३०२ ॥

Mahabharata - Vana Parva - Chapter Footnotes

३-३०२-४ जीवतां पत्रादीनां कार्यं प्रयोजनं परिष्वङ्गादिजं सुखं
पित्रादिः कुरुते लभते ॥

३-३०२-८ मां मम ॥
३-३०२-१२ विशाखयोः विशाखानक्षत्रस्य द्वे भास्वरे तारे तयोर्मध्ये गतः पूर्णचन्द्रः ॥
३-३०२-१४ विद्धन्तुं शक्येति संबन्धः ॥

---

वन-अध्यय३०३
॥ श्रीः ॥
३.३०३. अध्यायः ३०३

Mahabharata - Vana Parva - Chapter Topics
कर्णएन सूर्यंप्रति सानुनयं शक्राय कवचकुण्डलदानेऽभ्यनुज्ञाप्रार्थना ॥ १ ॥
सूर्येण कर्णंप्रति शक्राच्छक्तिग्रहणचोदनापूर्वकं कुण्डलादिदानाभ्यनुज्ञानम् ॥ २ ॥

Mahabharata - Vana Parva - Chapter Text

३-३०३-० (२७६१२)
कर्ण उवाच। ३-३०३-०क्ष् (२८२६)
भगवन्तमहं भक्तो यथा मां वेत्थ गोपते ।
तथा परमतिग्मांशो नास्त्यदेयं कथंचन ॥ ३-३०३-१ (२७६१३)
न मे दारा न मेपुत्रा न चात्मा सुहृदो न च ।
तथेष्टा वै सदा भक्त्या यथा त्वं गोपते मम ॥ ३-३०३-२ (२७६१४)
इष्टानां च महात्मानो भक्तानां च न संशयः ।
कुर्वन्ति भक्तिमिष्टां च जानीषे त्वं च भास्कर ॥ ३-३०३-३ (२७६१५)
इष्टो भक्तश्च मे कर्णो न चान्यद्दैवतं दिवि ।
जानीत इतिवै कृत्वा भगवानाह मद्धितम् ॥ ३-३०३-४ (२७६१६)
भूयश्च शिरसा याचे प्रसाद्य च पुनःपुनः ।
इति ब्रवीमि तिग्मांशो त्वं तु मे क्षन्तुमर्हसि ॥ ३-३०३-५ (२७६१७)
बिभेमि न तथा मृत्योर्यथा बिभ्येऽनृतादहम् ।
विशेषेण द्विजातीनां सर्वेषां सर्वदा सताम् ॥ ३-३०३-६ (२७६१८)
प्रदाने जीवितस्यापि न मेऽत्रास्ति विचारणा ।
यच्च मामात्थ देव त्वं पाण्डवं फल्गुनं प्रति ॥ ३-३०३-७ (२७६१९)
व्येतु संतापजं दुःखं तव भास्कर मानसम् ।
अर्जुनप्रतिमं चैव विजेष्यामि रणेऽर्जुनम् ॥ ३-३०३-८ (२७६२०)
तवापि विदितं देव ममाप्यस्त्रबलं महत् ।
जामदग्न्यादुपात्तं यत्तथा द्रोणान्महात्मनः ॥ ३-३०३-९ (२७६२१)

इदं त्वमनुजानीहि सुरश्रेष्ठ व्रतं मम ।
भिक्षते वज्रिणे दद्यामपि जीवितमात्मनः ॥ ३-३०३-१० (२७६२२)
सूर्य उवाच। ३-३०३-११क्ष् (२८२७)
यदि तात ददास्येते वज्रिणे कुण्डले शुभे ।
त्वमप्येनमथो ब्रूया विजयार्थं महाबल ॥ ३-३०३-११ (२७६२३)
नियमेन प्रदद्यास्त्वं कुण्डलेवै शतक्रतोः ।
अवध्यो ह्यसि भूतानां कुण्डलाभ्यां समन्वितः ॥ ३-३०३-१२ (२७६२४)
अर्जुनन विनाशं हि तव दानवसूदनः ।
प्रार्तयानो रणे वत्स कुण्डले ते जिहीर्षति ॥ ३-३०३-१३ (२७६२५)
स त्वमप्येनमाराध्य सूनृताभिः पुनः पुनः ।
अभ्यर्थयेथा देवेशममोघार्थं पुरंदरम् ॥ ३-३०३-१४ (२७६२६)
अमोघां देहि मे शक्तिममित्रविनिबर्हिणीम् ।
दास्यामि ते सहस्राक्ष कुण्डले वर्म चोत्तमम् ॥ ३-३०३-१५ (२७६२७)
इत्येव नियमेन त्वं दद्याः शक्राय कुण्डले ।
तया त्वं कर्ण संग्रामे हनिष्यसि रणे रिपून् ॥ ३-३०३-१६ (२७६२८)
नाहत्वा हि महाबाहो शत्रूनेति करं पुनः ।
सा शक्तिर्देवराजस्य शतशोऽथ सहस्रशः ॥ ३-३०३-१७ (२७६२९)
वैशंपायन उवाच। ३-३००-१८क्ष् (२८२८)
एवमुक्त्वा सहस्रांशुः सहसाऽन्तरधीयत ।
ग्कर्णस्तु बुबुधे राजन्स्वप्नान्ते प्रव्यथन्निव ॥ ३-३०३-१८ (२७६३०)
प्रतिबुद्धस्तु राधेयः स्वप्नं संचिन्त्य भारत ।
चकार निश्चयं राजञ्शक्त्यर्थं वदतांवर ॥ ३-३०३-१९ (२७६३१)
यदि मामिन्द्र आयाति कुण्डलार्थं परन्तप ।
शक्त्या तस्मै प्रदास्यामि कुण्डले वर्म चैव ह ॥ ३-३०३-२० (२७६३२)
स कृत्वा प्रातरुत्थाय कार्याणि भरतर्षभ ।
ब्राह्मणान्वाचयित्वा च यथाकार्यमुपाक्रमत् ॥ ३-३०३-२१ (२७६३३)
विधिना राजशार्दूल मुहूर्तमजपत्तदा'।
ततः सूर्याय जप्यान्ते कर्णः स्वप्नं न्यवेदयत् ॥ ३-३०३-२२ (२७६३४)
यथा दृष्टं यथातत्त्वं यथोक्तमुभयोर्निसि ।
तत्सर्वमानुपूर्व्येण शशंसास्मै वृषस्तदा ॥ ३-३०३-२३ (२७६३५)
तच्छ्रुत्वा भगवान्देवो भानुः स्वर्भानुसूदनः ।
उवाच तं तथेत्येव कर्णं सूर्यः स्मयन्निव ॥ ३-३०३-२४ (२७६३६)
ततस्तत्त्वमिति ज्ञात्वा राधेयः परवीरहा ।
शक्तिमेवाभिकाङ्क्षन्वै वासवं प्रत्यपालयत् ॥ ३-३०३-२५ (२७६३७)

इति श्रीमन्महाभारते अरण्यपर्वणि कुण्डलाहरणपर्वणि

त्र्यधिकत्रिशततमोऽध्यायः ॥ ३०३ ॥

Mahabharata - Vana Parva - Chapter Footnotes

३-३०३-२३ अस्मै सूर्याय ।वृषः ऋणः ॥
३-३०३-२४ स्वर्भानुसूदनः राहुदमनः ॥

---

वन-अध्यय३०४
॥ श्रीः ॥
३.३०४. अध्यायः ३०४

Mahabharata - Vana Parva - Chapter Topics
स्वावासे दुर्वाससमावासयता कुन्तिभोजेन तत्परिचर्यायै कुन्त्या नियोजनम्
॥ १ ॥

Mahabharata - Vana Parva - Chapter Text

३-३०४-० (२७६३८)
जनमेजय उवाच। ३-३०४-०क्ष् (२८२९)
किं तद्गुह्यं न चाख्यातं कर्णायेहोष्णरश्मिना ।
कीदृशेकुण्डले ते च कवचं रचैव कीदृशम् ॥ ३-३०४-१ (२७६३९)
कुतश्च कवचं तस्यं कुण्डलेचैव सत्तम ।
एतदिच्छाम्यहं श्रोतुं तन्मे ब्रूहि तपोधन ॥ ३-३०४-२ (२७६४०)
वैशंपायन उवाच। ३-३०४-३क्ष् (२८३०)
अहं राजन्ब्रवीम्येतत्तस्य गुह्यं विभावसोः ।
यादृशे कुण्डले ते च कवचं वैव यादृशम् ॥ ३-३०४-३ (२७६४१)
कुन्तिभोजं पुरा राजन्ब्राह्मणः पर्युपस्थितः ।
तिग्मतेजा महान्प्रांशुः श्मश्रुदण्डजटाधरः ॥ ३-३०४-४ (२७६४२)
दर्सनीयोऽनवद्याङ्गस्तेजसा प्रज्वलन्निव ।
मधुपिङ्गो मधुरवाक्तपःस्वाध्यायभूषणः ॥ ३-३०४-५ (२७६४३)
स राजानं कुन्तिभोजमब्रवीत्सुमहातपाः ।
भिक्षामिच्छामि वै भोक्तुं तव गेहे विमत्सर ॥ ३-३०४-६ (२७६४४)
न मे व्यलीकं कर्तव्यं त्वया वा तव चानुगैः ।
एवं वत्स्यामि ते गेहे यदि ते रोचतेऽनघ ॥ ३-३०४-७ (२७६४५)
यथाकामं च गच्छेयमागच्छेयं तथैव च ।
शय्यासने च मे राजन्नापराध्येत कश्चन ॥ ३-३०४-८ (२७६४६)
तमब्रवीत्कुन्तिभोजः प्रीतियुक्तमिदं वचः ।

एवमस्तु परंचेति पुनश्चैवमथाब्रवीत् ॥ ३-३०४-९ (२७६४७)
मम कन्या महाप्राज्ञ पृथा नाम यशस्विनी ।
शीलवृत्तान्विता साध्वी नियताऽनवमानिनी ॥ ३-३०४-१० (२७६४८)
उपस्थास्यति सा त्वां वै पूजयाऽनवमत्य च ।
तस्याश्च शीलवृत्तेन तुष्टिं समुपयास्यसि ॥ ३-३०४-११ (२७६४९)
एवमुक्त्वा तु तं विप्रमभिपूज्य यथाविधि ।
उवाच कन्यामभ्येत्य पृथां पृथुललोचनाम् ॥ ३-३०४-१२ (२७६५०)
अयं वत्से महाभागो ब्राह्मणो वस्तुमिच्छति ।
मम गेहे मया चास्य तथेत्येवं प्रतिश्रुतम् ॥ ३-३०४-१३ (२७६५१)
त्वयि वत्से परायत्तं ब्राह्मणस्याभिराधनम् ।
तन्मे वाक्यममिथ्या त्वं कर्तुमर्हसि कर्हिचित् ॥ ३-३०४-१४ (२७६५२)
अयं तपस्वी भगवान्स्वाध्यायनियतो द्विजः ।
यद्यद्ब्रूयान्महातेजास्तत्तद्देयमात्सरात् ॥ ३-३०४-१५ (२७६५३)
ब्राह्मणा हि परं तेजो ब्राह्मणा हि परं तपः ।
ब्राह्मणानां नमस्कारैः सूर्यो दिवि विराजते ॥ ३-३०४-१६ (२७६५४)
अमानयन्हि दाण्डक्यो वातापिश्च महासुरः ।
निहतो ब्रह्मदण्डेन तालजङ्घस्तथैव च ।
ग्वैन्ध्याद्रिश्च समुद्रश्च नहुषश्च विहिंसितः' ॥ ३-३०४-१७ (२७६५५)
सोयं वत्से महाभार आहितस्त्वयि सांप्रतम् ।
त्वं सदा नियता कुर्या ब्राह्मणस्याभिराधनम् ॥ ३-३०४-१८ (२७६५६)
जानामि प्रणिधानं ते बाल्यात्प्रभृति नन्दिनि ।
ब्राह्मणेष्विह सर्वेषु गुरुबन्धुषु चैव ह ॥ ३-३०४-१९ (२७६५७)
तथा प्रेष्येषु सर्वेषु मित्रसंबन्धिमातृषु ।
मयि चैव यथावत्त्वंसर्वमावृत्य वर्तसे ॥ ३-३०४-२० (२७६५८)
न ह्यतुष्टो जनोऽस्तीह पुरे चान्तःपुरे च ते ।
सम्यग्वृत्त्याऽनवद्याङ्गि तव भृत्यजनेष्वपि ॥ ३-३०४-२१ (२७६५९)
संदेष्टव्यां तु मन्ये त्वां द्विजातिं कोपनं प्रति ।
पृथे बालेति कृत्वा वै सुता चासिममेति च ॥ ३-३०४-२२ (२७६६०)
वृष्णीनां च कुले जाता शूरस् दयिता सुता ।
दत्ता प्रीतिमता मह्यं पित्रा बाला पुरास्वयम् ॥ ३-३०४-२३ (२७६६१)
वसुदेवस् भगिनी सुतानां प्रवरा मम ।
अग्र्यमग्रे प्रतिज्ञाय तेनासि दुहिता मम ॥ ३-३०४-२४ (२७६६२)
तादृशे हि कुले जाता कुले मम विवर्धिता ।
सुखात्सुखमनुप्राप्ता ह्रदाद्ध्रदमिवापगा ॥ ३-३०४-२५ (२७६६३)
दौष्कुलेया विशेषेण कथंचित्प्रग्रहं गताः ।
बालभावाद्विकुर्वन्ति प्रायशः प्रमदाः शुभे ॥ ३-३०४-२६ (२७६६४)

पृथे राजकुले जन्म रूपं चापि तवाङ्गुतम् ।
तेन तेनासि संपन्ना समुपेता च भामिनि ॥ ३-३०४-२७ (२७६६५)
सा त्वं दर्पं परित्यज्य दम्भं मानं च भामिनि ।
आराध्यवरदं विप्रं श्रेयसा योक्ष्यसे पृथे ॥ ३-३०४-२८ (२७६६६)
एवं प्राप्स्यसि कल्याणि कल्याणमनघे ध्रुवम् ।
कोपिते च द्विजश्रेष्ठे कुत्स्नं दह्येत मे कुलम् ॥ ३-३०४-२९ (२७६६७)

इति श्रीमन्महाभारते अरण्यपर्वणि कुण्डलाहरणपर्वणि
चतुरधिकत्रिशततमोऽध्यायः ॥ ३०४ ॥
Mahabharata - Vana Parva - Chapter Footnotes

३-३०४-११ अनवमत्य अवमानमकृत्वा ॥
३-३०४-१३ वस्तुं वासं कर्तुम् ॥
३-३०४-१९ प्रणिधानं चित्तैकाग्र्यम् ॥
३-३०४-२० आवृत्यव्याप्य ॥
३-३०४-२४ अग्र्यं अग्रे देयं मया प्रथममपत्यं तुभ्यं देयमिति
प्रतिज्ञातमित्यर्थः ॥
३-३०४-२५ ह्रदमिवागतेति झ ।पाठः ॥
३-३०४-२६ दौष्कुलेयाः दुष्कुले जाताः ।प्रग्रहं निर्वन्यं गताः
प्राप्ताः विकुर्वन्ति दौष्ठ्यं कुर्वन्ति ॥

---

वन-अध्यय३०५
॥ श्रीः ॥
३.३०५. अध्यायः ३०५

Mahabharata - Vana Parva - Chapter Topics
कुन्त्या सावधानं परिचर्यया दुर्वाससः परितोपणम् ॥ १ ॥

Mahabharata - Vana Parva - Chapter Text

३-३०५-० (२७६६८)
कुन्त्युवाच। ३-३०५-०क्ष् (२८३१)
ब्राह्मणं यन्त्रिता राजन्नुपस्थास्यामि पूजया ।
यथाप्रतिज्ञं राजेन्द्रन च मिथ्या ब्रवीम्यहम् ॥ ३-३०५-१ (२७६६९)
एष चैव स्वभावो मे पूजयेयं द्विजानिति ।
तव चैव प्रियं कार्यं श्रेयश्च परमं मम ॥ ३-३०५-२ (२७६७०)
यद्येवैष्यति सायाह्ने यदि प्रातरथो निशि ।

यद्यर्धरात्रे भगवान्न मे कोपं करिष्यति ॥ ३-३०५-३ (२७६७१)
लाभो ममैष राजेन्द्र यद्वैपूजयितुं द्विजान् ।
आदेशे तव तिष्ठन्ती हितं कुर्यां नरोत्तम ॥ ३-३०५-४ (२७६७२)
विस्रब्धो भवराजेन्द्र न व्यलीकं द्विजोत्तमः ।
वसन्प्राप्स्यति ते गेहे सत्यमेतद्ब्रवीमि ते ॥ ३-३०५-५ (२७६७३)
यत्प्रियं च द्विजस्यास्य हितं चैव तवानघ ।
यतिष्यामि तथा राजन्व्येतु ते मानसो ज्वरः ॥ ३-३०५-६ (२७६७४)
ब्राह्मणा हि महाभागाः पूजिताः पृथिवीपते ।
तारणाय समर्थाः स्युर्विपरीते वधाय च ॥ ३-३०५-७ (२७६७५)
रसाऽहमेतद्विजानन्ती तोषयिष्ये द्विजोत्तमम् ।
न मत्कृतेव्यथां राजन्प्राप्स्यसि द्विजसत्तमात् ॥ ३-३०५-८ (२७६७६)
अपराधेऽपि राजेन्द्र राज्ञामश्रेयसे द्विजाः ।
भवन्ति च्यवनो यद्वत्सुकन्यायाः कृते पुरा ॥ ३-३०५-९ (२७६७७)
नियमेन परेणाहमुपस्थास्ये द्विजोत्तमम् ।
यथा त्वया नरेन्द्रेदं भाषितं ब्राह्मणं प्रति ॥ ३-३०५-१० (२७६७८)
एवं ब्रुवन्तीं बहुशः परिष्वज्य समर्थ्य च ।
इतिचेति च कर्तव्यं राजा सर्वमथादिशत् ॥ ३-३०५-११ (२७६७९)
एवमेतत्त्वया भद्रे कर्तव्यमविशङ्कया ।
मद्धितार्थं तथाऽऽत्मार्थंकुलार्थं चाप्यनिन्दिते ॥ ३-३०५-१२ (२७६८०)
एवमुक्त्वा तु तां कन्यां कुन्तिभोजो महायशाः ।
पृथां परिददौ तस्मै द्विजाय द्विजवत्सलः ॥ ३-३०५-१३ (२७६८१)
इयं ब्रह्मन्मम सुता बाला सुखविवर्धिता ।
अपराध्येत यत्किंचिन्न कार्यं हृदि तत्त्वया ॥ ३-३०५-१४ (२७६८२)
द्विजातयो महाभागा वृद्धबालतपस्विषु ।
भवन्त्यक्रोधनाः प्रायो ह्यपराद्धेषु नित्यदा ॥ ३-३०५-१५ (२७६८३)
सुमहत्यपराधेऽपि क्षान्तिः कार्या द्विजातिभिः ।
यथाशक्ति यथोत्साहं पूजा ग्राह्या द्विजोत्तम ॥ ३-३०५-१६ (२७६८४)
तथेति ब्राह्मणेनोक्ते स राजा प्रीतमानसः ।
हंसचन्द्रांशुसंकाशं गृहमस्मै न्यवेदयत् ॥ ३-३०५-१७ (२७६८५)
तत्राग्निशरणे क्लृप्तमासनं तस्य भानुमत् ।
आहारादि च सर्वं तत्तथैव प्रत्यवेदयत् ॥ ३-३०५-१८ (२७६८६)
निक्षिप्य राजपुत्री तु तन्द्रीं मानं तथैव च ।
आतस्थे परमं यत्नं ब्राह्मणस्याभिराधने ॥ ३-३०५-१९ (२७६८७)
तत्रसा ब्राह्मणं गत्वा पृथा शौचपरा सती ।
विधिवत्परिचारार्हं देववत्पर्यतोषयत् ॥ ३-३०५-२० (२७६८८)

इति श्रीमन्महाभारते अरण्यपर्वणि कुण्डलाहरणपर्वणि
पञ्चाधिकत्रिशततमोऽध्यायः ॥ ३०५ ॥
Mahabharata - Vana Parva - Chapter Footnotes

३-३०५-१ यन्त्रिता नियमयुक्ता ॥
३-३०५-५ विस्रब्धो विश्वस्तः । रव्यलीकमप्रियम् ॥
३-३०५-१८ अग्निशरणे अग्निगृहे ॥
३-३०५-१९ तन्द्रीं आलस्यम् ॥
३-३०५-२० परिचारार्हं पूजार्हम् ॥

---

वन-अध्यय३०६
॥ श्रीः ॥
३.३०६. अध्यायः ३०६

Mahabharata - Vana Parva - Chapter Topics
कुन्तीपरिचर्यासंतुष्टेन दुर्वाससा तांप्रति अभीप्सितार्थवरणचोदना ॥ १ ॥
तथा किंचिदप्यवृण्वन्त्यै तस्यै स्वयमेव
सकलदेववशीकरणदक्षस्य मन्त्रस्योपदेशः ॥ २ ॥
ततस्तेन कुन्तिभोजामन्त्रणपूर्वकमन्तर्धानम् ॥ ३ ॥

Mahabharata - Vana Parva - Chapter Text

३-३०६-० (२७६८९)
वैशंपायन उवाच। ३-३०६-०क्ष् (२८३२)
सा तु कन्या महाराज ब्राह्मणं संशितव्रतम् ।
तोषयामास शुद्धेन मनसा संशितव्रता ॥ ३-३०६-१ (२७६९०)
प्रातरेष्याम्यथेत्युक्त्वा कदाचिद्द्विजसत्तमः ।
तत आयाति राजेन्द्र सायं रात्रावथो पुनः ॥ ३-३०६-२ (२७६९१)
तं च सर्वासु वेलासु भक्ष्यभोज्यप्रतिश्रयैः ।
पूजयामास सा कन्या वर्धमानैस्तु सर्वदा ॥ ३-३०६-३ (२७६९२)
अन्नादिसमुदाचारः शय्यासनकृतस्तथा ।
दिवसेदिवसे तस्य वर्धते न तु हीयते ॥ ३-३०६-४ (२७६९३)
निर्भर्त्सनापवादैश्च तथैवाप्रियया गिरा ।
ब्राह्मणस्य पृथा राजन्न चकाराप्रियं तदा ॥ ३-३०६-५ (२७६९४)
स्वप्नकाले पुनश्चैति न चैति बहुशो द्विजः ।
सुदुर्लभमपि ह्यन्नं दीयतामिति सोऽब्रवीत् ॥ ३-३०६-६ (२७६९५)

कृतमेव च तत्सर्वं यथा तस्मै न्यवेदयत् ।
शिष्यवत्पुत्रवच्चैव स्वसृवच्च सुसंयता ॥ ३-३०६-७ (२७६९६)
यथोपजोषं राजेन्द्र द्विजातिप्रवरस्य सा ।
प्रीतिमुत्पादयामास कन्यारत्नमनिन्दिता ॥ ३-३०६-८ (२७६९७)
तस्यास्तु शीलवृत्तेन तुतोष द्विजसत्तमः ।
अवधानेन भूयोऽस्याः परं यत्नमथाकरोत् ॥ ३-३०६-९ (२७६९८)
तां प्रभाते च सायं च पिता पप्रच्छ भारत ।
अपितुष्यतिते पुत्रि ब्राह्मणः परिचर्यया ॥ ३-३०६-१० (२७६९९)
तं सा परममित्येवप्रत्युवाच यशस्विनी ।
ततः प्रीतिमवापाग्र्यां कुन्तिभोजो महामनाः ॥ ३-३०६-११ (२७७००)
ततः संवत्सरे पूर्णे यदाऽसौ जपतांवरः ।
नापश्यद्दुष्कृतंकिंचित्पृथायाः सौहृदे रतः ॥ ३-३०६-१२ (२७७०१)
ततः प्रीतमना भूत्वा स एनां ब्राह्मणोऽब्रवीत् ।
प्रीतोस्मि परमं भद्रे परिचारेण ते शुभे ॥ ३-३०६-१३ (२७७०२)
वरान्वृणीष्व कल्याणि दूरापान्मानुपैरिह ।
यैस्त्वं सीमन्तिनीः सर्वायशसाऽभिभविष्यसि ॥ ३-३०६-१४ (२७७०३)
कुन्त्युवाच। ३-३०६-१५क्ष् (२८३३)
कृतानि मम सर्वाणि सस्या मे वेदवित्तम ।
त्वं प्रसन्नः पिता चैव कृतं विप्र वरैर्मम ॥ ३-३०६-१५ (२७७०४)
ब्राह्मण उवाच। ३-३०६-१६क्ष् (२८३४)
यदि नेच्छसि मत्तस्त्वं वरं भद्रे शुचिस्मिते ।
इमं मन्त्रं गृहाण त्वमाह्वानाय दिवौकसाम् ॥ ३-३०६-१६ (२७७०५)
यंयं देवं त्वमेतेन मन्त्रेणावाहयिष्यसि ।
तेनतेन वशे भद्रे स्थातव्यं ते भविष्यति ॥ ३-३०६-१७ (२७७०६)
अकामो वा सकामो वा स समेष्यति ते वशे ।
विबुधो मन्त्रसंभ्रान्तो वाक्यैर्भृत्य इवानतः ॥ ३-३०६-१८ (२७७०७)
वैशंपायन उवाच। ३-३०६-१९क्ष् (२८३५)
न शशक द्वितीयं सा प्रत्याख्यातुमनिन्दिता ।
तं वै द्विजातिप्रवरं तदा शापभयान्नृप ॥ ३-३०६-१९ (२७७०८)
ततस्तामनवद्याङ्गीं ग्राहयामास स द्विजः ।
मन्त्रग्रामं तदा राजन्नथर्वशिरसि श्रुतम् ॥ ३-३०६-२० (२७७०९)
तं प्रदाय तु राजेन्द्र कुन्तिभोजमुवाच ह ।
उपितोस्मि सुखं राजन्कन्यया परितोपितः ॥ ३-३०६-२१ (२७७१०)
तवगेहे सुविहितः सदा सुप्रतिपूजितः ।
साधयिष्यामहे तावदित्युक्त्वाऽन्तरधीयत ॥ ३-३०६-२२ (२७७११)
स तु राजा द्विजं दृष्ट्वा तत्रैवान्तर्हितं तदा ।

बभूव विस्मयाविष्टः पृथां च समपूजयत् ॥ ३-३०६-२३ (२७७१२)

इति श्रीमन्महाभारते अरण्यपर्वणि कुण्डलाहरणपर्वणि
षडधिकविशततमोऽद्यायः ॥ ३०६ ॥
Mahabharata - Vana Parva - Chapter Footnotes

३-३०६-३ प्रतिश्रयैः आश्रयैः शयनासनाद्यैः ॥
३-३०६-४ अन्नादिना समुदाचारः समुपसर्पणम् ॥
३-३०६-८ यथोपजोपं प्रियमनतिक्रम्य ॥
३-३०६-९ शीलं शमादि ।वृत्तं परिचर्या।अस्याः पृथायाः
श्रोयोर्थं अवधानेन समाधिकाले यत्नमकरोत्।यत्नेन तस्याः कल्याणं
चिन्तितवानित्यर्थः ॥
३-३०६-१९ द्वितीयं द्वितीयवारम् ।न शशाक द्विजातिं सा इति
थ।ध।पाटः ॥
३-३०६-२२ विहितः विशेषेण हितस्तृप्तः ॥

---

वन-अध्यय३०७
॥ श्रीः ॥
३.३०७. अध्यायः ३०७

Mahabharata - Vana Parva - Chapter Topics
कदाचन ऋतुस्नातया सूर्यमनलोकयन्त्या कुन्त्या दुर्वाससा
दत्तमत्रपरीक्षणाय तदाह्वानम् ॥१ ॥
मन्त्रबलादुपागतेन रविणा स्वेन सङ्गमनङ्गीकुर्वन्त्याः कुन्त्या
विभीषिकापूर्वकं सङ्गायानुनयनम् ॥२ ॥

Mahabharata - Vana Parva - Chapter Text

३-३०७-० (२७७१३)
वैशंपायन उवाच।३-३०७-०क्ष् (२८३६)
गते तस्मिन्द्विजश्रेष्ठे कस्मिंश्चित्कालपर्यये ।
चिन्तयामास सा कन्या मन्त्रग्रामबलाबलम् ॥३-३०७-१ (२७७१४)
अयं वै कीदृशस्तेन मम दत्तो हमात्मना ।
मन्त्रग्रामो बलं तस्य ज्ञास्ये नातिचिरादिति ॥३-३०७-२ (२७७१५)
एवं संचिन्तयन्ती सा ददर्शर्तुं यदृच्छया ।
व्रीडिता साऽभवद्बाला कन्याभावे रजस्वला ॥३-३०७-३ (२७७१६)

ततो हर्म्यतलस्था सा महार्हशयनोचिता ।
प्राच्यां दिशि समुद्यन्तं ददर्शादित्यमण्डलम् ॥ ३-३०७-४ (२७७१७)
तत्र बद्धमनोदृष्टिरभवत्सा सुमध्यमा ।
न चातप्यत रूपेण भानोः सन्ध्यागतस्य सा ॥ ३-३०७-५ (२७७१८)
तस्या दृष्टिरभूद्दिव्या साऽपश्यद्दिव्यदर्शनम् ।
आमुक्तकवचं देवं कुण्डलाभ्यां विभूषितम् ॥ ३-३०७-६ (२७७१९)
तस्याः कौतूहरलं त्वासीन्मन्त्रं प्रति नराधिप ।
आह्वानमकरोत्साऽथ तस्य देवस्य भामिनी ॥ ३-३०७-७ (२७७२०)
प्राणानुपस्पृश्य तदा ह्याजुहाव दिवाकरम् ।
आजगाम ततो राजंस्त्वरमाणो दिवाकरः ॥ ३-३०७-८ (२७७२१)
मधुपिङ्गो महाबाहुः कम्बुग्रीवो हसन्निव ।
अङ्गदी बद्धमुकुटो दिशः प्रज्वालयन्निव ॥ ३-३०७-९ (२७७२२)
योगात्कृत्वा द्विधाऽऽत्मानमाजगाम तताप च ।
आबभाषे ततः कुन्तीं साम्ना परमबल्गुना ॥ ३-३०७-१० (२७७२३)
आगतोस्मि वशं भद्रे तव मन्त्रबलात्कृतः ।
किं करोमि वशो राज्ञि ब्रूहि कर्ता तदस्मि ते ॥ ३-३०७-११ (२७७२४)
कुन्त्युवाच। ३-३०७-१२क्ष् (२८३७)
गम्यतां भगवंस्तत्र यत एवागतो ह्यसि ।
कौतूहलात्समाहूतः प्रसीद भगवन्निति ॥ ३-३०७-१२ (२७७२५)
सूर्य उवाच। ३-३०७-१३क्ष् (२८३८)
गमिष्येऽहं यथा मा त्वं ब्रवीषि तनुमध्यमे ।
न तु देवं समाहूय न्याय्यं प्रेषयितुं वृथा ॥ ३-३०७-१३ (२७७२६)
तवाभिसन्धि सुभगे रसूर्यात्पुत्रो भवेदिति ।
वीर्येणाप्रतिमो लोके कवची कुण्डलीति च ॥ ३-३०७-१४ (२७७२७)
सा त्वमात्मप्रदानं वै कुरुष्व गजगामिनि ।
उत्पत्स्यति हि पुत्रस्ते यथासंकल्पमङ्गने ।
अथ गच्छाम्यहं भद्रे त्वया संगम्य सुस्मिते ॥ ३-३०७-१५ (२७७२८)
यदि त्वंवचनं नाद्य करिष्यसि मम प्रियम् ।
शप्स्ये कन्येऽन्यथा क्रुद्धो ब्राह्मणं पितरं च ते ॥ ३-३०७-१६ (२७७२९)
त्वत्कृते तान्प्रधक्ष्यामि सर्वानपि न संशयः ।
पितरं चैव ते मूढं यो न वेत्ति तवानयम् ॥ ३-३०७-१७ (२७७३०)
तस् च ब्राह्मणस्याद्य योसौ मन्त्रमदात्तव ।
शीलवृत्तमविज्ञाय धास्यामि विनयं परम् ॥ ३-३०७-१८ (२७७३१)
एते हि विबुधाः सर्वेपुरंदरमुखा दिवि ।
त्वया प्रलब्धं पश्यन्ति स्मयन्त इव मां शुभे ॥ ३-३०७-१९ (२७७३२)
पश्य चैनान्सुरगणान्दिव्यं चक्षुरिदं हि ते ।

पूर्वमेव मया दत्तं दृष्टवत्यसि येन माम् ॥ ३-३०७-२० (२७७३३)
वैशंपायन उवाच। ३-३०७-२१क्ष् (२८३९)
ततोऽपश्यत्रिदशान्राजपुत्री
सर्वानव स्वेषु धिष्ण्येषु खस्थान् ।
प्रभावन्तं भानुमन्तं महान्तं
यथाऽऽदित्यं रोचमानांस्तथैव ॥ ३-३०७-२१ (२७७३४)
सा तान्दृष्ट्वा त्रिदशानेव बाला
सूर्यं देवी वचनं प्राह भीता ।
गच्छ त्वं वै गोपते स्वं विमानं
कन्याभावाद्दुःख एवापचारः ॥ ३-३०७-२२ (२७७३५)
पिता माता गुरवश्चैवयेऽन्ये
देहस्यास्य प्रभवन्ति प्रदाने ।
नाहं धर्मं लोपयिष्यामि लोके
स्त्रीणां वृत्तं पूज्यते देहरक्षा ॥ ३-३०७-२३ (२७७३६)
मया मन्त्रबलं ज्ञातुमाहूतस्त्वं विभावसो ।
बाल्याद्बालेति तत्कृत्वा क्षन्तुमर्हसि मे विभो ॥ ३-३०७-२४ (२७७३७)
सूर्य उवाच। ३-३०७-२५क्ष् (२८४०)
बालेति कृत्वाऽनुनयं तवाहं
ददानि नान्यानुनयं लभेत ।
आत्मप्रदानं कुरु कुन्तिकन्ये
शान्तिस्तवैवं हि भवेच्च भीरु ॥ ३-३०७-२५ (२७७३८)
न चापि गन्तुं युक्तं हि मया मिथ्याकृतेन वै ।
असमेत्य त्वया भीरु मन्त्राहूतेन भामिनि ॥ ३-३०७-२६ (२७७३९)
गमिष्याम्यनवद्याङ्गि लोके समवहास्यताम् ।
ग्गच्छेयमेव सुश्रोणि गतोऽहं वै निराकृतः'।
सर्वेषां विबुधानां च वक्तव्यः स्यां तथा शुभे ॥ ३-३०७-२७ (२७७४०)
३-३०७-२८ (२७७४१)
सा त्वं मया समागच्छ पुत्रं लप्स्यसि माध्शम् ।
विशिष्टा सर्वलोकेषु भविष्यसि न संशय ॥
Mahabharata - Vana Parva - Chapter Footnotes

३-३०७-३ ॠतुं रजः ॥
३-३०७-८ प्राणान् इन्द्रियाणि चक्षुःश्रोत्रादीनि उपस्पृश्य ।जलेन सम्यगाचम्येत्यर्थः ॥
३-३०७-११ किं करोम्यवशो राज्ञि इति थ ।ध।पाठः ॥
३-३०७-१३ यथाहं गमिष्ये तथा मा मां ब्रवीषि नतु तद्योग्यमित्याह

नत्विति । वृथा प्रसादमप्राप्य ॥
३-३०७-१४ तवाभिसन्धिं सुभगे कुर्यां पुत्रः इति थ । ध। पाठः ॥
३-३०७-१६ ब्राह्मणं दुर्वाससम् ॥
३-३०७-१८ विनयं दण्डं धास्यामि धारयिष्यामि ॥
३-३०७-२२ अपचारोऽपराधः कृतः । व्रीडमानेव बालेति झ। पाठः ॥

---

वन-अध्यय३०८
॥ श्रीः ॥
३.३०८. अध्यायः ३०८

Mahabharata - Vana Parva - Chapter Topics
कुन्त्या सङ्गमन्तरा दुश्शकानुनये भास्करे कृच्छ्रात्तदङ्गीकरणम् ॥ १ ॥
सूर्येण पुनः कन्यात्वलाभरूपवरदानपूर्वकं तस्यां गर्भाधानम् ॥ २ ॥

Mahabharata - Vana Parva - Chapter Text

३-३०८-० (२७७४२)
वैशंपायन उवाच। ३-३०८-०क्ष् (२८४१)
सा तु कन्या बहुविधं ब्रुवन्ती मधुरं वचः ।
अनुनेतुं सहस्रांशुं न शशाक मनस्विनी ॥ ३-३०८-१ (२७७४३)
न शशाक यदा बाला प्रत्याख्यातुं तमोनुदम् ।
भीता शापात्ततो राजन्दध्यौ दीर्घमथान्तरम् ॥ ३-३०८-२ (२७७४४)
अनागसः पितुः शापो ब्राह्मणस्य तथैव च ।
मन्निमित्तः कथं न स्यात्क्रुद्धादस्माद्विभावसोः ॥ ३-३०८-३ (२७७४५)
बालेनापि सता मोहाद्भृशं सापह्नवान्यपि ।
नाऽभ्यासादयितव्यानि तेजांसि च तपांसि च ॥ ३-३०८-४ (२७७४६)
साहमद्य भृशं भीता गृहीत्वा च करे भृशम् ।
कथं त्वकार्यं कुर्यां वै प्रदानं ह्यात्मनः स्वयम् ॥ ३-३०८-५ (२७७४७)
सा वै शापपरित्रस्ता बहु चिन्तयती हृदा ।
मोहेनाभिपरीताङ्गी स्मयमाना पुनःपुनः ॥ ३-३०८-६ (२७७४८)
तं देवमब्रवीद्भीता बन्धूनां राजसत्तम ।
व्रीडाविह्वलया वाचा शापत्रस्ता विशांपते ॥ ३-३०८-७ (२७७४९)
पिता मे ध्रियते देव माता चान्ये च बान्धवाः ।
न तेषु ध्रियमाणएषु विदिलोपो भवेदयम् ॥ ३-३०८-८ (२७७५०)
त्वया तु संगमो देव यदि स्याद्विधिवर्जितः ।
मन्निमित्तं कुलस्यास्य लोकेऽकीर्तिर्न संशयः ॥ ३-३०८-९ (२७७५१)
अथवा धर्ममेतं त्वं मन्यसे तपतांवर ।

ऋते प्रदानाद्बन्धुभ्यस्तव कामं करोम्यहम् ॥ ३-३०८-१० (२७७५२)
आत्मप्रदानं दुर्धर्ष तव कृत्वासती त्वहम् ।
त्वयि धर्मो यशश्चैव कीर्तिरायुश्च देहिनाम् ॥ ३-३०८-११ (२७७५३)
सूर्य उवाच। ३-३०८-१२क्ष् (२८४२)
न ते पिता न ते माता गुरवो वा शुचिस्मिते ।
प्रभवन्ति प्रदाने ते भद्रं ते शृणु मे वचः ॥ ३-३०८-१२ (२७७५४)
सर्वान्कामयते यस्मात्कनेर्धातोश्च भामिनि ।
तस्मात्कन्येह सुश्रोणी स्वतन्त्रा वरवर्णिनि ॥ ३-३०८-१३ (२७७५५)
नाधर्मश्चरितः कश्चित्त्वया भवति भामिनि ।
अधर्मंकुत एवाहं वरेयं लोककाम्यया ॥ ३-३०८-१४ (२७७५६)
अनावृताः स्त्रियः सर्वा नराश्च वरवर्णिनि ।
स्वभाव एष लोकानां विकारोऽन्य इति स्मृतः ॥ ३-३०८-१५ (२७७५७)
सा मया सहसंगम्य पुनः कन्या भविष्यसि ।
पुत्रश्च ते महावाहुर्भविष्यति न संशयः ॥ ३-३०८-१६ (२७७५८)
कुन्त्युवाच। ३-३०८-१७क्ष् (२८४३)
यदि पुत्रो मम भवेत्त्वत्तः सर्वतमोनुद ।
कुण्डली कवची शूरो महाबाहुर्महाबलः ।
ग्अस्तु मे सङ्गमो देव अनेन समयेन ते' ॥ ३-३०८-१७ (२७७५९)
सूर्य उवाच। ३-३०८-१८क्ष् (२८४४)
भविष्यति महाबाहुः कुण्डली दिव्यवर्मभृत् ।
उभयं चामृतमयं तस् भद्रे भविष्यति ॥ ३-३०८-१८ (२७७६०)
कुन्त्युवाच। ३-३०८-१९क्ष् (२८४५)
यद्यतदमृतादस्ति कुण्डले वर्म चोत्तमम् ।
मम पुत्रस्य यं वै त्वं मत्त उत्पादयिष्यसि ॥ ३-३०८-१९ (२७७६१)
अस्तु मे सङ्गमो देव यथोक्तं भगवंस्त्वया ।
त्वद्वीर्यरूपसत्वौजा धर्मयुक्तो भवेत्स च ॥ ३-३०८-२० (२७७६२)
सूर्य उवाच। ३-३०८-२१क्ष् (२८४६)
अदित्या कुण्डले राज्ञि दत्ते मे मत्तकाशिनि ।
तस्मै दास्यामि वामोरु वर्म चैवेदमुत्तमम् ॥ ३-३०८-२१ (२७७६३)
वैशंपायन उवाच। ३-३०८-२२क्ष् (२८४७)
परमं भगवन्नेवं सङ्गमिष्ये त्वया सह ।
यदि पुत्रो भवेदेवं यथा वदसि गोपते ॥ ३-३०८-२२ (२७७६४)
वैशंपायन उवाच। ३-३०८-२३क्ष् (२८४८)
तथेत्युक्त्वा तु तां कुन्तीमाविवेश विहंगमः ।
स्वर्भानुशत्रुर्योगात्मा नाभ्यां पस्पर्श चैव ताम् ॥ ३-३०८-२३ (२७७६५)
तत सा विह्वलेवासीत्कन्या सूरय्स् तेजसा ।

पपात चाथ सा देवी शयने मूढचेतना ॥ ३-३०८-२४ (२७७६६)
सूर्य उवाच। ३-३०८-२५क्ष् (२८४९)
साधयिष्यामि सुश्रोणि पुत्रं वै जनयिष्यसि ।
सर्वशस्त्रभृतांश्रेष्ठं कन्या चैव भविष्यसि ॥ ३-३०८-२५ (२७७६७)
वैशंपायन उवाच। ३-३०८-२६क्ष् (२८५०)
ततः सा व्रीडिता बाला तदा सूर्यमथाब्रवीत् ।
एवमस्त्विति राजेन्द्रप्रस्थितं भूरिवर्चसम् ॥ ३-३०८-२६ (२७७६८)
इतिस्मोक्ता कुन्तिराजात्मजा सा
विवस्वन्तं याचमाना सलज्जा ।
तस्मिन्पुण्ये शयनीये पपात
मोहाविष्टा वेपमाना लतेव ॥ ३-३०८-२७ (२७७६९)
तिग्मांशुस्तां तेजसा मोहयित्वा
योगेनाविश्यात्मसंस्थां चकार ।
न चैवैनां दूषयामास भानुः
संज्ञां लेभे भूय एवात बाला ॥ ३-३०८-२८ (२७७७०)

इति श्रीमन्महाभारते अरण्यपर्वणि कुण्डलाहरणपर्वणि
राष्टाधिकत्रिशततमोऽध्यायः ॥ ३०८ ॥
Mahabharata - Vana Parva - Chapter Footnotes

३-३०८-२ दध्यौ चिन्तितवती ।अन्तरं कालम् ॥
३-३०८-४ बालेनाल्पवयसापि सता साधुना मोहाच्चित्तपारवश्यात्
तेजासि सूर्यादीनि तपांसि दुर्वासआदीनि नाभ्यासादयितव्यान्यत्यन्तं
प्रत्यासत्तिविषयाणि न कर्तव्यानि ॥
३-३०८-७ बन्धूनां बन्धुभ्य इत्यर्थः ॥
३-३०८-८ ध्रियते जीवति ॥
३-३०८-१२ प्रभवन्ति स्वाम्यमर्हन्ति ॥
३-३०८-१३ कामयते सर्वानिति कन्येति कन्याशब्दनिर्वचनम् ॥
३-३०८-१४ तत्रहेतुः लोककाम्यया लोकप्रियया कामवत्तया ॥
३-३०८-१५ अन्यो विवाहनियमादिर्विकारः ॥
३-३०८-१८ अमृतमयं सहजं वर्म ॥
३-३०८-२६ प्रस्थितं संगमायोपक्रन्तम् ३-३०८-२८
आत्मसंस्थांवचनवशाम् ।एनां न दूषयामास। कन्यात्वस्थापनेनेति
शेषः ॥

---

वन-अध्यय३०९
॥ श्रीः ॥

३.३०९. अध्यायः ३०९

Mahabharata - Vana Parva - Chapter Topics
कतिपयकालातिपाते कर्णस्य सहजकवचकुण्डलधारणएन कुन्त्यां जननम् ॥ १ ॥
कुन्त्या धात्र्यासह मन्त्रपूर्वकं जातमात्रस् गर्भस्य मञ्जूषायां निक्षेपपूर्वकमश्वनद्यां विसर्जनम् ॥ २ ॥
सगर्भाया मञ्जूषायाः क्रमेण चर्मण्वतीयमुनाद्वारा गङ्गायां प्लवनेन चम्पापुरीप्रवेशः ॥ ३ ॥

Mahabharata - Vana Parva - Chapter Text

३-३०९-० (२७७७१)
वैशंपायन उवाच। ३-३०९-०क्ष् (२८५१)
ततो गर्भः समभवत्पृथायाः पृथिवीपते ।
शुक्ले दशोत्तरे पक्षे तारापतिरिवाम्बरे ॥ ३-३०९-१ (२७७७२)
सा बान्धवभयाद्बाला गर्भं तं विनिगूहती ।
धारयामास सुश्रोणी न चैनां बुबुधे जनः ॥ ३-३०९-२ (२७७७३)
न हि तां वेद नार्यन्या काचिद्धात्रेयिकामृते ।
कन्यापुरगतां बालां निपुणां परिरक्षणे ॥ ३-३०९-३ (२७७७४)
ततः कालेन सा गर्भं सुषुवे वरवर्णिनी ।
कन्यैव तस्य देवस्य प्रसादादमरप्रभम् ॥ ३-३०९-४ (२७७७५)
तथैवाबद्धकवचं कनकोज्ज्वलकुण्डलम् ।
हर्यक्षं वृषभस्कन्धं यथास्य पितरं तथा ॥ ३-३०९-५ (२७७७६)
जातमात्रं च तं गर्भं धात्र्या संमन्त्र्य भामिनी ।
ग्उत्स्रष्टुकामा तं गर्भं कारयामास भारत। ३-३०९-६ (२७७७७)
मञ्जूषां शिल्पिभिस्तूर्णं सुनद्धां सुप्रतिष्ठिताम् ॥
प्लवैर्बहुविधैर्बद्धां प्लवनार्थं जले नृप ।
अजिनैर्मृदुभिश्चैवं संस्तीर्णशयनां तथा'॥ ३-३०९-७ (२७७७८)
मञ्जूषायां समाधाय स्वास्तीर्णायां समन्ततः ।
मधूच्चिष्टस्थितायां तं सुखायां रुदती तथा ।
श्लक्ष्णायां सुपिधानायामश्वनद्यामवासृजत् ॥ ३-३०९-८ (२७७७९)
जानती चाप्यकर्तव्यं कन्याया गर्भधारणम् ।
पुत्रस्नेहेन सा राजन्करुणं पर्यदेवयत् ॥ ३-३०९-९ (२७७८०)
समुत्सृजन्ती मञ्जूपामश्वनद्यां तदा जले ।
उवाच रुदतीकुन्ती यानि वाक्यानि तच्छृणु ॥ ३-३०९-१० (२७७८१)

स्वस्ति तेऽस्त्वान्तरिक्षेभ्यः पार्थिवेभ्यश्च पुत्रक ।
दिव्येभ्यश्चैव भूतेभ्यस्तथा तोयचराश्च ये ॥ ३-३०९-११ (२७७८२)
शिवास्ते सन्तु पन्थानो मा च ते परिपन्थिनः ।
आगताश्च तथा पुत्र भवन्त्यद्रोहचेतसः ॥ ३-३०९-१२ (२७७८३)
पातु त्वां वरुणो राजा सलिले सलिलेश्वरः ।
अन्तरिक्षेऽन्तरिक्षस्थः पवनः सर्वगस्तथा ॥ ३-३०९-१३ (२७७८४)
पिता त्वां पातु सर्वत्र तपनस्तपतांवरः ।
येन दत्तोसि मे पुत्र दिव्येन विधिना किल ॥ ३-३०९-१४ (२७७८५)
आदित्या वसवो रुद्राः साध्या विश्वे च देवताः ।
मरुतश्च सहेन्द्रेण दिशश्च सदिदीश्वराः ॥ ३-३०९-१५ (२७७८६)
रक्षन्तु त्वां सुराः सर्वे समेषु विषमेषु च ।
वेत्स्यामि त्वांविदेशेपि कवचेनाभिसूचितम् ॥ ३-३०९-१६ (२७७८७)
धन्यस्ते पुत्र जनरको देवो भानुर्विभावसुः ।
स्त्वां द्रक्ष्यति दिव्येन चक्षुषा वाहिनीगतम् ॥ ३-३०९-१७ (२७७८८)
धन्या सा प्रमदा या त्वां पुत्रत्वे कल्पयिष्यति ।
यस्यास्त्वं तृषितः पुत्र स्तनं पास्यसि देवज ॥ ३-३०९-१८ (२७७८९)
कोनु स्वप्नस्तया दृष्टो या त्वामादित्यवर्चसम् ।
दिव्यवर्मसमायुक्तं दिव्यकुण्डलभूषितम् ॥ ३-३०९-१९ (२७७९०)
पद्मायतविशालाक्षं पद्मताम्रदलोज्ज्वलम् ।
सुललाटं सुकेशान्तं पुत्रत्वे कल्पयिष्यति ॥ ३-३०९-२० (२७७९१)
धन्या द्रक्ष्यन्ति पुत्र त्वां भूमौ संसर्पमाणकम् ।
अव्यक्तकलवाक्यानि वदन्तं रेणुगुण्ठितम् ॥ ३-३०९-२१ (२७७९२)
धन्या द्रक्ष्यन्ति पुत्र त्वां पुनर्यौवनगोचरम् ।
हिमवद्वनसंभूतं सिंहं केसरिणं यथा ॥ ३-३०९-२२ (२७७९३)
एवं बहुविधं राजन्विलप्य करुणं पृथा ।
अवामृजतमज्जूषामश्वनद्यां तदा जले ॥ ३-३०९-२३ (२७७९४)
रुदती पुत्रशोकार्ता निशीथे कमलेक्षणा ।
धात्र्या सह पृथा राजन्पुत्रदर्शनलालसा ॥ ३-३०९-२४ (२७७९५)
विसर्जयित्वा मञ्जूषां संबोधनभयात्पितुः ।
विवेश राजभवनं पुनः शोकातुरा ततः ॥ ३-३०९-२५ (२७७९६)
मञ्जूषा त्वश्वनद्याः सा ययौ चर्मयण्वतीं नदीम् ।
चर्मण्वत्याश्चयमुनां ततो गङ्गां जगाम ह ॥ ३-३०९-२६ (२७७९७)
गङ्गायाः सूतविषयं चम्पामनुययौ पुरीम् ।
स मञ्जूषागतो गर्भस्तरङ्गैरुह्यमानकः ॥ ३-३०९-२७ (२७७९८)
अमृतादुत्थितं दिव्यं तनुवर्म सकुण्डलम् ।
धारयामास तं गर्भं दैवं च विधिनिर्मितम् ॥ ३-३०९-२८ (२७७९९)

एतद्गुह्यं महाराज सूर्यस्यासीन्महात्मनः ।
स सूर्यसंभवो गर्भः कुन्त्या गर्भेण धारितः' ॥ ३-३०९-२९ (२७८००)

इति श्रीमन्महाभारते अरण्यपर्वणि कुण्डलाहरणपर्वणि
नवाधिकत्रिशततमोऽध्यायः ॥ ३०९ ॥
Mahabharata - Vana Parva - Chapter Footnotes

३-३०९-१ दशोत्तरे एकादशे शुक्ले पक्षे प्रतिपदि चन्द्रइव बाल
उद्भूतः ।माघशुक्लप्रतिपदि कर्णनिषेकजन्मेत्यर्थः ॥
३-३०९-५ हर्यक्षं सिंहनेत्रम् ॥
३-३०९-६ गर्भं प्रति संमन्त्र्येत्यध्याहारेणान्वयः ॥
३-३०९-८ मधूच्छिष्टं सिक्थकम् ।मयनमिति भाषायाम्।तेन स्थितायां
सर्वतोलिप्तायां मञ्जूषायाम्।जलप्रवेशो न भवेदित्यर्थः ॥
३-३०९-१२ आगमाश्च तथा सन्तु दिव्येन विधिना तव इति थ
।ध।पाठः।आगमाश्च तथा पान्तु इति क।पाठः ॥
३-३०९-२८ दैवं कर्तृ ।गर्भं
सकुण्डलं वर्म धारयामासेत्यन्वयः।गर्भं
कवचकुण्डलधारकंचकारेत्यर्थः।विधिना ईश्वरेण निर्मितम् ॥

---

वन-अध्यय३१०
॥ श्रीः ॥
३.३१०. अध्यायः ३१०

Mahabharata - Vana Parva - Chapter Topics
स्नानाय भार्यया सह गङ्गां गतेनाधिरथनाम्ना सूतेन
तत्रोत्प्लवमानायाः सगर्भमञ्जूषाया ग्रहणम् ॥ १ ॥
तथा मञ्जूषोद्घाटने दृष्टस्य गर्भस्य स्वपुत्रतया परिकल्पनेन
नामकरणादिपूर्वकंप्रीत्या पोषणम् ॥ २ ॥
कर्णेन परशुरामादिभ्योऽस्त्रग्रहणपूर्वकं दुर्योधनेन सख्यकरणम्
॥ ३ ॥

Mahabharata - Vana Parva - Chapter Text

३-३१०-० (२७८०१)
वैशंपायन उवाच। ३-३१०-०क्ष् (२८५२)
एतस्मिन्नेव काले तु धृतराष्ट्रस्य वै सखा ।
सूतोऽधिरथ इत्येव सदारो जाह्नवीं ययौ ॥ ३-३१०-१ (२७८०२)

तस्य भार्याऽभवद्राजन्रूपेणासदृशी भुवि ।
राधा नाम महाभागा न सा पुत्रमविन्दत ।
अपत्यार्थे परं यत्नमकरोच्च विशेषतः ॥ ३-३१०-२ (२७८०३)
सा ददर्शाथ मञ्जूषामुह्यमानां यदृच्छया ।
दत्तरक्षाप्रतिसरामन्वालम्भनशोभनाम् ॥ ३-३१०-३ (२७८०४)
ऊर्मीतरङ्गैर्जाह्नव्याः समानीतामुपह्वरम् ।
ग्विवर्तमानां बहुशः पुनःपुनरितस्ततः ॥ ३-३१०-४ (२७८०५)
ततः सा वायुना राजन्स्रोतसा च बलीयसा ।
उपानीतो यतः सूतः सभार्यो जलमाश्रितः' ॥ ३-३१०-५ (२७८०६)
सा तु कौतूहलात्प्राप्तां ग्राहयामास भामिनी ।
ततो निवेदयामास सूतस्याधिरथस्य वै ॥ ३-३१०-६ (२७८०७)
स तामुद्धृत्य मञ्जूषामुत्सार्य जलमन्तिकात् ।
यन्त्रैरुद्घाटयामास सोऽपश्यत्तत्रबालकम् ॥ ३-३१०-७ (२७८०८)
मृष्टकुण्डलयुक्तेन वदनेन विराजितम् ।
ग्परिम्लानमुखं बालं रुदन्तं क्षुधितं भृशम् ॥ ३-३१०-८ (२७८०९)
स तु तं परया लक्ष्म्या दृष्ट्वा युक्तं वरात्मजम्'।
स सूतो भार्यया सार्धं विस्मयोत्फुल्ललोचनः ।
अङ्कमारोप्य तं बालं भार्यां वचनमब्रवीत् ॥ ३-३१०-९ (२७८१०)
इदमत्यद्भुतं भीरु यतो जातोस्मि भामिनि ।
दृष्टवान्देवगर्भोऽयं मन्येऽस्माकमुपागतः ॥ ३-३१०-१० (२७८११)
अनपत्यस्य पुत्रोऽयं देवैर्दत्तो ध्रुवं मम ।
इत्युक्त्वा तं ददौ पुत्रं राधायै स महीपते ॥ ३-३१०-११ (२७८१२)
रप्रतिजग्राह तं राधा विधिवद्दिव्यरूपिणम् ।
पुत्रं कमलगर्भाभं देवगर्भं श्रिया वृतम् ॥ ३-३१०-१२ (२७८१३)
ग्स्तन्यं समस्रवच्चास्य दैवादित्थ निश्चयः'।
पुपोष चैनं विधिवद्ववृधे स च वीर्यवान् ।
ततः प्रभृति चाप्यन्ये प्राभवन्नौरसाः सुताः ॥ ३-३१०-१३ (२७८१४)
ग्नामकर्म च चक्रुस्ते कुण्डले तस् दृश्यते ।
कर्ण इत्येव तं बालं दृष्ट्वा कर्णं सकुण्डलम्' ॥ ३-३१०-१४ (२७८१५)
वसुवर्मधरं दृष्ट्वा तं बालं हेमकुण्डलम् ।
नामास्य वसुषेणेति ततश्चक्रुर्द्विजातयः ॥ ३-३१०-१५ (२७८१६)
एवं स सूतपुत्रत्वं जगामामितविक्रमः ।
वसुषेण इतिख्यातो वृष इत्येव च प्रभुः ॥ ३-३१०-१६ (२७८१७)
सूतस्य ववृधेऽङ्गेषु ज्येष्ठः पुत्रः स वीर्यवान् ।
चारेण विदितश्चासीत्पृथया दिव्यवर्मभृत् ॥ ३-३१०-१७ (२७८१८)
सूतस्त्वधिरथः पुत्रं विवृद्धं समयेन तम् ।

दृष्ट्वा प्रस्थापयामास पुरं वारणसाह्वयम् ॥ ३-३१०-१८ (२७८१९)
तत्रोपसदनं चक्रे द्रोणस्येष्वस्त्रकर्मणि ।
सख्यं दुर्योधनेनैवमगमत्स च वीर्यवान् ॥ ३-३१०-१९ (२७८२०)
द्रोणात्कृपाच्च रामाच्च सोऽस्त्रग्रामं चतुर्विधम् ।
लब्ध्वा लोकेऽभवत्ख्यातः परमेष्वासतां गतः ॥ ३-३१०-२० (२७८२१)
संधाय धार्तराष्ट्रेण पार्थानां विप्रिये रतः ।
योद्धुमाशंसते नित्यं फल्गुनेन महात्मना ॥ ३-३१०-२१ (२७८२२)
सदा हि तस् स्पर्धाऽऽसीदर्जुनन विशांपते ।
अर्जुनस्य च कर्णेन यतो द्वन्द्वं बभूव ह ॥ ३-३१०-२२ (२७८२३)
एतद्गुह्यं महाराज सूर्यस्यासीन्न संशयः ।
यः सूर्यसंभवः कर्णः कुर्यात्प्रतिकुले रतः ॥ ३-३१०-२३ (२७८२४)
तं तु कुण्डलिनं दृष्ट्वा वर्मणा च समन्वितम् ।
अवध्यं समरे मत्वा पर्यतप्यद्युधिष्ठिरः ॥ ३-३१०-२४ (२७८२५)
यदा च कर्णो राजेन्द्र भानुमन्तं दिवाकरम् ।
स्तौति मध्यंदिने प्राप्ते प्राञ्जलिः सलिलोत्थितः ॥ ३-३१०-२५ (२७८२६)
तत्रैनमुपतिष्ठन्ति ब्राह्मणा धनहेतुना ।
नादेयं तस्य तत्काले किंचिदस्ति द्विजातिषु ॥ ३-३१०-२६ (२७८२७)
तमिन्द्रो ब्राह्मणो भूत्वा भिक्षां देहीत्युपस्थितः ।
स्वागतं चेति राधेयस्तमथ प्रत्यभाषत ॥ ३-३१०-२७ (२७८२८)

इति श्रीमन्महाभारते अरण्यपर्वणि कुण्डलाहरणपर्वणि
दशाधिकत्रिशततमोऽध्यायः ॥ ३१० ॥
Mahabharata - Vana Parva - Chapter Footnotes

३-३१०-३ दत्तो रक्षार्थं प्रतिसरो दूर्वाकङ्कणादिरूपो यस्यां तामा
। अन्वालम्भनं कुङ्कुमहस्तदानम् ॥
३-३१०-५ उपह्वरं समीपम् ॥
३-३१०-७ उत्सार्य परतो नीत्वा ॥
३-३१०-१५ वसुवर्म स्वर्णकवचनम् ॥
३-३१०-१७ अङ्गेषु जनपदविशेषेषु ॥
३-३१०-१९ उपसदनं गुरूपसदनम् ॥
३-३१०-२० परमेष्वासतां महाधनुर्धरताम् ॥

---

वन-अध्यय३११
॥ श्रीः ॥
३.३११. अध्यायः ३११

Mahabharata - Vana Parva - Chapter Topics

इन्द्रेण ब्राह्मणवेपधारणेन कर्णप्रति कवचकुण्डलयाचनम्
॥ तस्येन्द्रत्वं जानता कर्णेन तस्माच्छक्तिग्रहणपूर्वकं तस्मै कवचकुण्डलदानम् ॥

Mahabharata - Vana Parva - Chapter Text

३-३११-० (२७८२९)
वैशंपायन उवाच। ३-३११-०क्ष् (२८५३)
देवराजमनुप्राप्तं ब्राह्मणच्छद्मनाऽऽवृतम् ।
दृष्ट्वास्वागतमित्याह न बुबोधास्य मानसम् ॥ ३-३११-१ (२७८३०)
हिरण्यकण्ठीः प्रमदा ग्रामान्वा बहुगोकुलान् ।
किं ददानीति तं विप्रमुवाचाधिरथिस्ततः ॥ ३-३११-२ (२७८३१)
ब्राह्मण उवाच। ३-३११-३क्ष् (२८५४)
हिरण्यकण्ठ्यः प्रमदा यच्चान्यत्प्रीतिवर्धनम् ।
नाह दत्तमिहेच्छामि तदर्थिभ्यः प्रदीयताम् ॥ ३-३११-३ (२७८३२)
यदेतत्सहजं वर्म कुण्डले च तवानघ ।
एतदुत्कृत्य मे देहि यदि सत्यव्रतो भवान् ॥ ३-३११-४ (२७८३३)
एतदिच्छाम्यहं भिक्षां त्वया दत्तां परंतप ।
एष मे सर्वलाभानां लाभः परमको मतः ॥ ३-३११-५ (२७८३४)
कर्ण उवाच। ३-३११-६क्ष् (२८५५)
अवनिं प्रमदा गाश्च निर्वापं बहुवार्षिकम् ।
तत्ते विप्र प्रदास्यामि न तु वर्म सकुण्डलम् ॥ ३-३११-६ (२७८३५)
वैशंपायन उवाच। ३-३११-७क्ष् (२८५६)
एवं बहुविधैर्वाक्यैर्वार्यमाणः स तु द्विजः ।
रकर्णेन भरतश्रेष्ठ नान्यं वरमयाचत ॥ ३-३११-७ (२७८३६)
सान्त्वितश्च यथाशक्ति पूजितश्च यथाविधि ।
न चान्यं स द्विजश्रेष्ठः कामयामास वै वरम् ॥ ३-३११-८ (२७८३७)
यदा नान्य प्रवृणुते वरं वै द्विजसत्तमः ।
ग्विनाऽस् सहजं वर्म कुण्डले च विशांपते'।
तदैनमब्रवीद्भूयो राधेयः प्रहसन्निव ॥ ३-३११-९ (२७८३८)
सहजं वर्म मे विप्र कुण्डले चामृतोद्भवे ।
तेनावध्योस्मि लोकेषु ततो नैतज्जहाम्यहम् ॥ ३-३११-१० (२७८३९)
विशालं पृथिवीराज्यं क्षेमं निहतकण्टकम् ।
प्रतिगृह्णीष्व मत्तस्त्वं साधु ब्राह्मणपुङ्गव ॥ ३-३११-११ (२७८४०)
कुण्डलाभ्यां विमुक्तोऽहंवर्मणा सहजेन च ।

दमनीयो भविष्यामि शत्रूणां द्विजसत्तम ॥ ३-३११-१२ (२७८४१)
वैशंपायन उवाच। ३-३११-१२क्ष् (२८५७)
यदन्यं न वरं वव्रे भगवान्पाकशासनः ।
ततः प्रहस् कर्णस्तं पुनरित्यब्रवीद्वचः ॥ ३-३११-१३ (२७८४२)
विदितो देवदेवेश प्रागेवासि मम प्रभो ।
न तु न्याय्यं मया दातुं तव शक्र वृथा वरम् ॥ ३-३११-१४ (२७८४३)
त्वं हि देवेश्वरः साक्षात्त्वया देयो वरो मम ।
अन्येषां चैव भूतानामीश्वरो ह्यसि भूतकृत् ॥ ३-३११-१५ (२७८४४)
यदि दास्यामि ते देव कुण्डले कवचं तथा ।
वध्यतामुपयास्यामि त्वं च शक्रावहास्यताम् ॥ ३-३११-१६ (२७८४५)
तस्माद्विनिमयं कृत्वा कुण्डलेवर्म चोत्तमम् ।
हरस्व शक्रकामं मे न दद्यामहमन्यथा ॥ ३-३११-१७ (२७८४६)
शक्र उवाच। ३-३११-१८क्ष् (२८५८)
विदितोऽहं रवेः पूर्वमायानेव तवान्तिकम् ।
तेन ते सर्वमाख्यातमेवमेतन्न संशयः ॥ ३-३११-१८ (२७८४७)
काममस्तु तथा तात तव कर्ण यथेच्छसि ।
वर्जयित्वा तु मे वज्रं प्रवृणीष्व यथेच्छसि ॥ ३-३११-१९ (२७८४८)
वैशंपायन उवाच। ३-३११-२०क्ष् (२८५९)
ततः कर्णः प्रहृष्टस्तु उपसंगम्य वासवम् ।
अमोघां शक्तिमभ्येत्य वव्रे सम्पूर्णमानसः ॥ ३-३११-२० (२७८४९)
ऋण उवाच। ३-३११-२१क्ष् (२८६०)
वर्मणा कुण्डलाभ्यां च शक्तिं मे देहि वासव ।
अमोघां शत्रुसङ्घानां घातिनीं पृथनामुखे ॥ ३-३११-२१ (२७८५०)
ततः सञ्चिन्त्य मनसा मुहूर्तमिव वासवः ।
शक्त्यर्थं पृथिवीपाल कर्णं वाक्यमथाब्रवीत् ॥ ३-३११-२२ (२७८५१)
कुण्डले मे प्रयच्छस्व वर्म चैव शरीरजम् ।
गृहाण कर्ण शक्तिं त्वमनेन समयेन च ॥ ३-३११-२३ (२७८५२)
अमोघा हन्ति शतशः शत्रून्मम करच्युता ।
पुनश्च पाणिमभ्येति मम दैत्यान्विनिघ्नतः ॥ ३-३११-२४ (२७८५३)
सेयं तव करप्राप्ता हत्वैरकं रिपुमूर्जितम् ।
गर्जन्तं प्रतपन्तं च मामेवैष्यति सूतज ॥ ३-३११-२५ (२७८५४)
कर्ण उवाच। ३-३११-२५क्ष् (२८६१)
एकमेवाहमिच्छामि रिपुं हन्तुं महाहवे ।
गर्जन्तंप्रतपन्तं च यतो मम भयं भवेत् ॥ ३-३११-२६ (२७८५५)
इन्द्र उवाच। ३-३११-२७क्ष् (२८६२)
एकं हनिष्यसि रिपुं गर्जन्तं बलिनं रणे ।

त्वं तु यं प्रार्थयस्येकं रक्ष्यते स महात्मना ॥ ३-३११-२७ (२७८५६)
यमाहुर्वेदविद्वांसो वराहमपराजितम् ।
नारायणमचिन्त्यं च तेन कृष्णेन रक्ष्यते ॥ ३-३११-२८ (२७८५७)
कर्ण उवाच। ३-३११-२९क्ष् (२८६३)
ग्एवमेतद्यथाऽऽत्थ त्वं दानवानां निषूदन ।
वधिष्यामि रणे शत्रुं यो मे स्थाता पुरस्सरः' ॥ ३-३११-२९ (२७८५८)
एवमप्यस्तु भगवन्नेकवीरवधे मम ।
अमोघां देहि मे शक्तिं यथा हन्यां प्रतापिनम् ॥ ३-३११-३० (२७८५९)
उत्कृत्य तु प्रदास्यामि कुण्डले कवचं च ते ।
निकृत्तेषु तु गात्रेषु न मे बीभत्सता भवेत् ॥ ३-३११-३१ (२७८६०)
इन्द्र उवाच। ३-३११-३२क्ष् (२८६४)
न ते बीभत्सता कर्ण भविष्यति कथञ्चन ।
व्रणश्चैव न गात्रेषु यस्त्वं नानृतमिच्छसि ॥ ३-३११-३२ (२७८६१)
यादृशस्ते पितुर्वर्णस्तेजश्च वदतांवर ।
तादृशेनैव वर्णेन त्वं कर्ण भविता पुनः ॥ ३-३११-३३ (२७८६२)
विद्यमानेषु शस्त्रेषु यद्यमोघामसंशये ।
प्रमत्तो मोक्ष्यसे चापि त्वय्येवैषा पतिष्यति ॥ ३-३११-३४ (२७८६३)
कर्ण उवाच। ३-३११-३५क्ष् (२८६५)
संशयं परमं प्राप्य विमोक्ष्ये वासवीमिमाम् ।
यथा मामौत्थ शक्र त्वं सत्यमेतद्ब्रवीमि ते ॥ ३-३११-३५ (२७८६४)
वैशंपायन उवाच। ३-३११-३६क्ष् (२८६६)
ततः शक्तिं प्रज्वलितां प्रतिगृह्य विशांपते ।
शस्त्रं गृहीत्वा निशितं सर्वगात्राण्यकृन्तत ॥ ३-३११-३६ (२७८६५)
ततो देवा मानवा दानवाश्च
निकृन्तन्तं कर्णमात्मानमेव ।
दृष्ट्वा सर्वे सिंहनादान्प्रणेदु-
र्न ह्यस्यासीन्मुखजो वै विकारः ॥ ३-३११-३७ (२७८६६)
ततो दिव्या दुन्दुभयः प्रणेदुः
पपातोच्चैः पुष्पवर्षं च दिव्यम् ।
दृष्ट्वा कर्णं शस्त्रसंकृत्तगात्रं
महुश्चापि स्मयमानं नृवीरम् ॥ ३-३११-३८ (२७८६७)
ततश्छित्त्वा कवचं दिव्यमङ्गा-
त्तथैवार्द्रं प्रददौ वासवाय ।
तथोत्कृत्य प्रददौ कुण्डले ते
कर्णात्तस्मात्कर्मणा तेन कर्णः ॥ ३-३११-३९ (२७८६८)
ग्ततो देवो मुदितो वज्रपाणि-

र्दृष्ट्वा कर्णं शस्त्रनिकृत्तगात्रम्'।
ततः शक्रः प्रहसन्वञ्चयित्वा
कर्णं लोके यशसा योजयित्वा ।
कृतंकार्यं पाण्डवनां हि भेने
ततः पश्चाद्दिवमेवोत्पपात ॥ ३-३११-४० (२७८६९)
श्रुत्वा कर्णं मुषितं धार्तराष्ट्रा
दीनाः सर्वे भग्नदर्पा इवासन् ।
तां रचावस्थां गमितं सूतपुत्रं
श्रुत्वा पार्था जहृपुः काननस्थाः ॥ ३-३११-४१ (२७८७०)
जनमेजय उवाच। ३-३११-४२क्ष् (२८६७)
क्वस्ता वीराः पाण्डवास्ते बभूवुः
कुतश्चैते श्रुतवन्तः प्रियं तत् ।
किं वाऽकार्षुर्द्वादशेऽब्दे व्यतीते
तन्मे सर्वं भगवान्व्याकरोतु ॥ ३-३११-४२ (२७८७१)
वैशंपायन उवाच। ३-३११-४३क्ष् (२८६८)
लब्ध्वा कृष्णां सैन्धवं द्रावयित्वा
विप्रैः सार्धं काम्यकादाश्रमात्ते ।
मार्कण्डेयाच्छ्रुतवन्तः पुराणं
कदेवर्षीणआं चरितं विस्तरेण ॥ ३-३११-४३ (२७८७२)
ग्प्रत्याजग्मुः सरथाः सानुयात्राः
सर्वैः सार्धं सूतपौरोगवैस्ते ।
ततो ययुर्द्वैतवनं नृवीरा
निस्तीर्यैवं वनवासं समग्रम्' ॥ ३-३११-४४ (२७८७३)

इति श्रीमन्महाभारते अरण्यपर्वणि कुण्डलाहरणपर्वणि
एकादशाधिकत्रिशततमोऽध्यायः ॥ ३११ ॥
Mahabharata - Vana Parva - Chapter Footnotes

३-३११-३ यच्चान्यत्पादवन्धनम् इति ध । पाठः ॥
३-३११-६ अवनि गृहार्थम् । निवापं न्युप्यते बीजमम्मिन्निति
क्षेत्रम्। बहुवर्पिकं यावज्जीविकवृत्तिरूपम् ॥
३-३११-१८ आयानेव आगच्छन्नेव ॥
३-३११-३९ कृणाति हिनस्ति कृन्तति छिनत्ति वा अङ्गानीति कर्ण इत्यर्थः ॥

---

वन-अध्यय३१२
॥ श्रीः ॥

## ३.३१२. अध्यायः ३१२

Mahabharata - Vana Parva - Chapter Topics
युधिष्ठिरादिभिः काम्यकवनात्पुनर्द्वैतवनंप्रत्यागमनम् ॥ १ ॥
तत्रकेनचिन्मृगेण तरुसङ्घर्षवशात्स्वविपाणलग्नेन
ब्राह्मणस्यारणिना सह पलायनम् ॥ ब्राह्मणप्रार्थनया तदानयनाय
पाण्डवैस्तदनुधावनम् ॥ ततस्तौः सुदूरं स्वापकर्पणपूर्वकमन्तर्हिते
तस्मिन्श्रान्त्या वटमूले समुपवेशनम् ॥
Mahabharata - Vana Parva - Chapter Text

३-३१२-० (२७८७४)
जनमेजय उवाच। ३-३१२-०क्ष् (२८६९)
एवं हृतायां भार्यायां प्राप्य क्लेशमनुत्तमम् ।
प्रतिपद्य ततः कृष्णां किमकुर्वत पाण्डवाः ॥ ३-३१२-१ (२७८७५)
वैशंपायन उवाच। ३-३१२-२क्ष् (२८७०)
एवं हृतायां कृष्णायां प्राप्य क्लेशमनुत्तमम् ।
विहाय काम्यकं राजा सह भ्रातृभिरच्युतः ॥ ३-३१२-२ (२७८७६)
पुनर्द्वैतवनं रम्यमाजगाम युधिष्ठिरः ।
स्वादुमूलफलं रम्यं विचित्रबहुपादपम् ॥ ३-३१२-३ (२७८७७)
अनुभुक्तफलाहाराः सर्व एव मिताशनाः ।
न्यवसन्पाण्डवास्तत्रकृष्णया सह भार्यया ॥ ३-३१२-४ (२७८७८)
वसन्द्वैतवने राजा कुन्तीपुत्रो युधिष्ठिरः ।
भीमसेनोऽर्जुनश्चैव माद्रीपुत्रौ च पाण्डवौ ॥ ३-३१२-५ (२७८७९)
ब्राह्मणार्थे पराक्रान्ता धर्मात्मानो यतव्रताः ।
क्लेशमार्च्छन्त विपुलं सुखोदर्कं परंतपाः ॥ ३-३१२-६ (२७८८०)
तस्मिन्प्रतिवसन्तस्ते यत्प्रापुः कुरुसत्तमाः ।
वने क्लेशं सुखोदर्कं तत्प्रवक्ष्यामि ते शृणु ॥ ३-३१२-७ (२७८८१)
अरणीसहितं भाण्डं ब्राह्मणस्य तपस्विनः ।
मृगस् घर्षणस्य विपाणे समसज्जत ॥ ३-३१२-८ (२७८८२)
तदादाय गतो राजंस्त्वरमाणो महामृगः ।
आश्रमान्तरितः शीघ्रं प्लवमानो महाजवः ॥ ३-३१२-९ (२७८८३)
ह्रियमाणं तु तं दृष्ट्वा स विप्रः कुरुसत्तम ।
त्वरितोऽभ्यागमत्तत्राग्निहोत्रपरीप्सया ।
ग्तेषां तु वसतां तत्र पाण्डवानां महारथम्' ॥ ३-३१२-१० (२७८८४)
अजातशत्रुमासीनं भ्रातृभिः सहितं वने ।
आगम्य ब्राह्मणस्तूर्णं संतप्तश्चेदमब्रवीत् ॥ ३-३१२-११ (२७८८५)

अरणीसहितं भाण्डं समासक्तं वनस्पतौ ।
मृगस्य घर्षमाणस्य विषाणे समसज्जत ॥ ३-३१२-१२ (२७८८६)
तमादाय गतो राजंस्त्वरमाणो महामृगः ।
आश्रमात्त्वरितः शीघ्रं प्लवमानो महाजवः ॥ ३-३१२-१३ (२७८८७)
तस्य गत्वा पदं राजन्नासाद्य च महामृगम् ।
अग्निहोत्रं न लुप्येत तदानयत पाण्डवाः ॥ ३-३१२-१४ (२७८८८)
ब्राह्मणस्य वचः श्रुत्वा सन्तप्तोऽथ युधिष्ठिरः ।
धनुरादाय कौन्तेयः प्राद्रवद्भ्रातृभिः सह ॥ ३-३१२-१५ (२७८८९)
सन्नद्धा धन्विनः सर्वे प्राद्रवन्नरपुङ्गवाः ।
ब्राह्मणार्थे यतन्तस्ते शीघ्रमन्वगमन्मृगम् ॥ ३-३१२-१६ (२७८९०)
कर्णिनालीकनाराचानुत्सृजन्तो महारथाः ।
नाविध्यन्पाण्डवास्तत्र पश्यन्तो मृगमन्तिकात् ॥ ३-३१२-१७ (२७८९१)
तेषां प्रयतमानानां नादृश्यत महामृगः ।
अपश्यन्तोमृगं श्रान्ता दुःखं प्राप्ता मनस्विनः ॥ ३-३१२-१८ (२७८९२)
शीतलच्छायमागमय् न्यग्रोधं गहने वने ।
क्षुत्पिपासापरीताङ्गाः पाण्डवाः समुपाविशन् ॥ ३-३१२-१९ (२७८९३)
तेषां समुपविष्टानां नकुलो दुःखितस्तदा ।
अब्रवीद्भ्रातरं श्रेष्ठममर्षात्कुरुनन्दनम् ॥ ३-३१२-२० (२७८९४)
नास्मिन्कुले जातु ममज्ज धर्मो
न चालस्यादर्थलोपो बभूव ।
अनुत्तराः सर्वभूतेषु भूप
संप्राप्ताः स्मः संशयं किंनु राजन् ॥ ३-३१२-२१ (२७८९५)

इति श्रीमन्महाभारते अरण्यपर्वणि आरण्येयपर्वणि
द्वादशाधिकत्रिशततमोऽध्यायः ॥ ३१२ ॥

Mahabharata - Vana Parva - Chapter Footnotes

३-३१२-८ अरणीसहितं मन्थं इति झय पाठः । अरणी
उत्तराधरेऽग्निमथनकाष्ठे रताभ्यां रसहितं मन्थं
निर्मथनदण्डम् ॥
३-३१२-९ आश्रमान्तरितः आश्रमदूरगतः ॥
३-३१२-१४ पदं मार्गे चिह्नं गत्या प्राप्थ । तेनैव पथा तदानयत ॥
३-३१२-२१ धर्मो न ममज्ज धर्मलोपोऽर्थलोपश्च नाभूत्
। आलस्यादित्युपचर्यते। त्वयि अनुत्तराः प्रतिवाक्यरहिताः सर्वभूतेषु
कार्यार्थे उपस्थिते ओमित्येव वदामो नतु वाक्यान्तरमित्यर्थः। संशयं
ब्राह्मणस्य कर्मलोपनिमित्तं दोषम् ॥

वन-अध्यय३१३
॥ श्रीः ॥
३.३१३. अध्यायः ३१३

Mahabharata - Vana Parva - Chapter Topics
पिपासितेषु पाण्डवेषु युधिष्ठिरनियोगाद्वृक्षाग्रमधिरूढेन नकुलेन नातिदूरे किंचित्सरोविलोकनम् ॥ पानीयानयमाय सरोगतेषु नकुलादिषु यक्षवचनावमत्या पानीयपानेन दीर्घनिद्राश्रवणादनागतेषु युधिष्ठिरेणापि तत्सरोगमनम् ॥
Mahabharata - Vana Parva - Chapter Text

३-३१३-० (२७८९६)
युधिष्ठिर उवाच। ३-३१३-०क्ष् (२८७१)
नापदामस्ति मर्यादा न निमित्तं न कारणम् ।
धर्मस्तु विभजत्यर्थमुभयोः पुण्यपापयोः ॥ ३-३१३-१ (२७८९७)
भीम उवाच। ३-३१३-२क्ष् (२८७२)
प्रातिकाम्यनयत्कृष्णां सभायां प्रेष्यवत्तदा ।
न मया निहतस्तत्रतेन प्राप्ताः स्म संशयम् ॥ ३-३१३-२ (२७८९८)
अर्जुन उवाच। ३-३१३-३क्ष् (२८७३)
वाचस्तीक्ष्णास्थिभेदिन्यः सूतपुत्रेण भाषिताः ।
अतितीव्रा मया क्षान्तास्तेन प्राप्ताः स्म संशयं ॥ ३-३१३-३ (२७८९९)
सहदेव उवाच। ३-३१३-४क्ष् (२८७४)
शकुनिस्त्वां यदाऽजैषीदक्षद्यूतेन भारत ।
स मया न हतस्तत्रतेन प्राप्ताः स्म संशयम् ॥ ३-३१३-४ (२७९००)
वैशंपायन उवाच। ३-३१३-५क्ष् (२८७५)
ततो युधिष्ठिरो राजा नकुलं वाक्यमब्रवीत् ।
आरुह्य वृक्षं माद्रेय निरीक्षस्व दिशो दश ॥ ३-३१३-५ (२७९०१)
पानीयमन्तिके पश्य वृक्षान्वाप्युदकाश्रयान् ।
एते हि भ्रातरः श्रान्तास्तव तात पिपासिताः ॥ ३-३१३-६ (२७९०२)
नकुलस्तु तथेत्युक्त्वा भ्रातुर्ज्येऽष्ठस्य शासनात् ।
तत उत्थाय मतिमाञ्शीघ्रमारुह्य पादपम् ।
अब्रवीद्भ्रांतरं ज्येष्मभिवीक्ष्य समन्ततः ॥ ३-३१३-७ (२७९०३)
पश्यामि बहुलान्राजन्वृक्षानुदकसंश्रयान् ।
सारसानां च निर्ह्रादस्तत्रोदकमसंशयम् ॥ ३-३१३-८ (२७९०४)
ततोऽब्रवीत्सत्यधृतिः कुन्तीपुत्रो युधिष्ठिरः ।

गच्छ सौम्य ततः शीघ्रं तूर्णैः रपानीयमानय ॥ ३-३१३-९ (२७९०५)
नकुलस्तु तथेत्युक्त्वा भ्रातुर्ज्येष्ठस्य शासनात् ।
प्राद्रवद्यत्र पानीयं शीघ्रं चैवान्वपद्यत ॥ ३-३१३-१० (२७९०६)
स दृष्ट्वा विमलं तोयं सारसैः परिवारितम् ।
पातुकामस्ततो वाचमन्तरिक्षात्स शुश्रुवे ॥ ३-३१३-११ (२७९०७)
यक्ष उवाच। ३-३१३-१२क्ष् (२८७६)
मा तात साहसं कार्षीर्मम पूर्वपरिग्रहः ।
प्रश्नानुक्त्वा तु माद्रेय ततः पिब हरस्व च ॥ ३-३१३-१२ (२७९०८)
अनादृत्य तु तद्वाक्यं नकुलः सुपिपासितः ।
अपिबच्छीतलं तोयं पीत्वा च निपपात ह ॥ ३-३१३-१३ (२७९०९)
चिरायमाणे नकुले कुन्तीपुत्रो युधिष्ठिरः ।
अब्रवीद्भ्रातरं वीरं सहदेवमरिंदमम् ॥ ३-३१३-१४ (२७९१०)
भ्राता चिरायते तात सहदेव तवाग्रजः ।
तं चैवानय सोदर्यं पानीयं च त्वमानय ॥ ३-३१३-१५ (२७९११)
सहदेवस्तथेत्युक्त्वा तां दिशं प्रत्यपद्यत ।
ददर्श च हतं भूमौ भ्रातरं नकुलं तदा ॥ ३-३१३-१६ (२७९१२)
भ्रातृशोकाभिसंतप्तस्तृषया च प्रपीडितः ।
अभिदुद्राव रपानीयं ततो वागभ्यभाषत ॥ ३-३१३-१७ (२७९१३)
मा तात साहसं कार्षीर्मम पूर्वपरिग्रहः ।
प्रश्नानुक्त्वा यथाकामं पिबस्व च हरस्व च ॥ ३-३१३-१८ (२७९१४)
अनादृत्य तु तद्वाक्यं सहदेवः पिपासितः ।
अपिबच्छीतलं तोयं पीत्वा च निपपात ह ॥ ३-३१३-१९ (२७९१५)
अथाब्रवीत्स विजयं कुन्तीपुत्रो युधिष्ठिरः ।
भ्रातरौ ते चिरगतौ बीभत्सो शत्रुकर्शन ॥ ३-३१३-२० (२७९१६)
तौ चैवानय भद्रं ते पानीयं च त्वमानय ।
त्वं हि नस्तात सर्वेषां दुःखितानामपाश्रयः ॥ ३-३१३-२१ (२७९१७)
एवमुक्तो गुडाकेशः प्रगृह्य सशरं धनुः ।
आमुक्तखड्गो मेधावी तत्सरः प्रत्यपद्यत ॥ ३-३१३-२२ (२७९१८)
यतः पुरुषशार्दूलौ पानीयहरणे गतौ ।
तौ ददर्श हतौ तत्रभ्रातरौ श्वेतवाहनः ॥ ३-३१३-२३ (२७९१९)
ग्विगतासू नरव्याघ्रौ शयानौ वसुधातले'।
प्रसुप्ताविव तौ दृष्ट्वा नरसिंहः सुदुःखितः ।
धनुरुद्यम्य कौन्तेयो व्यलोकयत तद्वनम् ॥ ३-३१३-२४ (२७९२०)
नापश्यत्तत्रकिंचित्स भूतमस्मिन्महावने ।
सव्यसाची पिपासार्तः पानीयं सोऽभ्यधावत ॥ ३-३१३-२५ (२७९२१)
अभिधावंस्ततो वाचमन्तरिक्षात्स शुश्रुवे ।

यत्त्वमिच्छसि पानीयं नैतच्छक्यं बलात्त्वया ॥ ३-३१३-२६ (२७९२२)
कौन्तेय यदि वै प्रश्नान्मयोक्तान्प्रतिवक्ष्यसि ।
ततः पास्यसि पानीयं हरिष्यसि च भारत ॥ ३-३१३-२७ (२७९२३)
वारितस्त्वब्रवीत्पार्थो दृश्यमानो निवारय ।
यावद्बाणैर्विनिर्भिन्नः पुनर्नैवं वदिष्यसि ॥ ३-३१३-२८ (२७९२४)
एवमुक्त्वा ततः पार्थः शरैरस्त्रानुमन्त्रितैः ।
प्रववर्ष रदिशः कृत्स्नाः शब्दवेधं च दर्शयन् ।
कर्णिनालीकनाराचानुत्सृजन्भरतर्षभः। ३-३१३-२९ (२७९२५)
स त्वमोघानिषून्मुक्त्वा तृष्णयाऽभिप्रपीडितः ।
अनेकैरिषुसंघातैरन्तरिक्षे ववर्ष ह ॥ ३-३१३-३० (२७९२६)
यक्ष उवाच। ३-३१३-३१क्ष् (२८७७)
किं विधानेन ते पार्थ प्रश्नानुक्त्वा पयः पिब ।
अनुक्त्वा च पिबन्प्रश्नान्पीत्वैव नभविष्यसि ॥ ३-३१३-३१ (२७९२७)
स च मोघानिषून्दृष्ट्वातृष्णया च प्रपीडितः ।
अवज्ञायैव तां वाचं पीत्वैव निपपात् ह ॥ ३-३१३-३२ (२७९२८)
अथाब्रवीद्भीमसेनं कुनतीपुत्रो युधिष्ठिरः ।
नकुलः सहदेवश्च बीभत्सुश्च परंतप ॥ ३-३१३-३३ (२७९२९)
चिरंगतास्तोयहेतोर्न चागच्छन्ति भारत ।
तांश्चैवानय भद्रं ते पानीयं च त्वमानय ॥ ३-३१३-३४ (२७९३०)
भीमसेनस्तथेत्युक्त्वा तं देशं प्रत्यपद्यत ।
रयत्रते पुरुषव्याघ्रा भ्रातरोस्य निपातिताः ॥ ३-३१३-३५ (२७९३१)
तान्दृष्ट्वा दुःखितो भीमस्तृषया च प्रपीडितः ।
अमन्यत महाबाहुः कर्म तद्यक्षरक्षसाम् ॥ ३-३१३-३६ (२७९३२)
सचिन्तयामास तदा योद्धव्यं ध्रुवमद्य मे ।
पास्यामि तावत्पानीयमिति पार्थो वृकोदरः ॥ ३-३१३-३७ (२७९३३)
ततोऽभ्यधावत्पानीयं पिपासुः पुरुषर्षभः ॥ ३-३१३-३८ (२७९३४)
यक्ष उवाच। ३-३१३-३९क्ष् (२८७८)
मा तात साहसंकार्षीर्मम पूर्वपरिग्रहः ।
प्रश्नानुक्त्वा तु कौन्तेय ततः पिब हरस्व च ॥ ३-३१३-३९ (२७९३५)
एवमुक्तस्तदा भीमो यक्षेणामिततेजसा ।
अनुक्त्वैव तु तान्प्रश्नान्पीत्वैव निपपात ह ॥ ३-३१३-४० (२७९३६)
ततः कुन्तीसुतो राजा प्रचिन्त्य पुरुषर्षभः ।
ग्आत्मनाऽऽत्मानमन्विष्य विचारमकरोत्प्रभुः ॥ ३-३१३-४१ (२७९३७)
ततश्चिरगतान्भ्रातृनथाऽऽज्ञाय युधिष्ठिरः ।
चिरायमाणान्बहुशः पुनः पुनरुवाचह ॥ ३-३१३-४२ (२७९३८)
किंस्विद्वनमिदं दग्धं किंखिद्दृष्टो मृतो भवेत् ।

प्रहरन्तो महाभूतं शप्तास्तेनाथ तेऽपतन् ॥ ३-३१३-४३ (२७९३९)
न पश्यन्त्यथवा वीराः पानीयं यत्रते गताः ।
अन्विच्छद्भिर्वने तोयं कालोऽयमतिपातितः ॥ ३-३१३-४४ (२७९४०)
किंनु तत्कारणं येन नायान्ति पुरुषर्षभाः ।
गच्छाम्येषां पदं द्रष्टुमिति कृत्वा युधिष्ठिरः' ॥ ३-३१३-४५ (२७९४१)
समुत्थाय महाबुद्धिर्दह्यमानेन चेतसा ।
व्यपेतजननिर्घोषं प्रविवेश महावनम् ॥ ३-३१३-४६ (२७९४२)
रुरुभिश्च वराहैश्च पक्षिभिश्च निषेवितम् ।
नीलभास्वरवर्णैश्च पादपैरुशोभितम् ॥ ३-३१३-४७ (२७९४३)
भ्रमरैरुपगीतं च पक्षिभिश् समन्ततः ।
ग्मृदुशाड्वलसंकीर्णभूमिभागं मनोहरम्' ॥ ३-३१३-४८ (२७९४४)
स गच्छन्कानने तस्मिन्हेमजालपरिष्कृतम् ।
ददर्श तत्सरः श्रीमान्विश्वकर्मकृतं यथा ॥ ३-३१३-४९ (२७९४५)
उपेतं नलिनीजालैः सिन्धुवारैः सचेतसैः ।
केतकैः करवीरैश्च पिप्पलैश्चैव संवृतम् ॥ ३-३१३-५० (२७९४६)
ग्ततो धर्मसुतः श्रीमान्भ्रातृदर्शनलालसः'।
श्रमार्तस्तदुपागम्य सरो दृष्ट्वाऽथ विस्मितः ॥ ३-३१३-५१ (२७९४७)

इति श्रीमन्महाभारते अरण्यपर्वणि आरणेयपर्वणि
त्रयोदशाधिकत्रिशततमोऽध्यायः ॥ ३१३ ॥

Mahabharata - Vana Parva - Chapter Footnotes

३-३१३-१ रूपं विभजति ॥
३-३१३-२ प्रेष्यवत् प्रेष्यामिव ॥
३-३१३-१२ साहसं जलपानरूपम् ।परिग्रहो नियमः।यो
मत्प्रश्नान्वदेत्स एवेतः पयः पिबेद्धरेद्धेति ॥
३-३१३-२८ दृश्यमानो भूत्वेति शेषः ॥
३-३१३-३१ विधानन यत्नेन ।रनभविष्यसि मरिष्यसि ॥
३-३१३-४९ हमजालानि हेमवर्णानि केसराणि तैः परिष्कृतं मण्डितम् ॥
३-३१३-५० सिन्धुवारैर्जलजविशेषैः ॥

---

वन-अध्यय३१४
॥ श्रीः ॥
३.३१४. अध्यायः ३१४

Mahabharata - Vana Parva - Chapter Topics
युधिष्ठिरेण सरस्तीरशायिनां भ्रातृणामबलोकनेन सकरुणं

परिदेवनपूर्वकं पानीयपानाय प्रयतनम् ॥ १ ॥
तथा यक्षेण स्वीयप्रश्नानामुत्तरदानमन्तरा जलपानस्य
दुश्शकत्वकथनेन तत्प्रतिपेधने तेषां समुचितोत्तरदानम् ॥ २ ॥
ततस्तुष्टेन यक्षेण भीमादीनां चतुर्णामुज्जीवनम् ॥ ३ ॥

Mahabharata - Vana Parva - Chapter Text

३-३१४-० (२७९४८)
वैशंपायन उवाच। ३-३१४-०क्ष् (२८७९)
स ददर्श हतान्भ्रातॄँल्लोकपालानिव च्युतान् ।
युगान्ते समनुप्राप्ते शक्रवैश्रवणोपमान् ॥ ३-३१४-१ (२७९४९)
विनिकीर्णधनुर्बाणं दृष्ट्वा निहतमर्जुनम् ।
भीमसेनं यमौ चैव निर्विचेष्टान्गतायुषः ॥ ३-३१४-२ (२७९५०)
सदीर्घमुष्णं निःश्वस्य शोकबाष्पपरिप्लुतः ।
तान्दृष्ट्वा पतितान्भ्रातॄन्सर्वांश्चिन्तासमन्वितः। ३-३१४-३ (२७९५१)
ननु त्वया महाबाहो प्रतिज्ञातं वृकोदर ।
सुयोधनस्य भेत्स्यामि गदया सक्थिनी रणे ॥ ३-३१४-४ (२७९५२)
व्यर्थं तदद्य मे सर्वं त्वयि वीरे निपातिते ।
महात्मनि महाबाहो कुरूणां कीर्तिवर्धने ॥ ३-३१४-५ (२७९५३)
मनुष्यसंभवा वाचो विधर्मिण्यः प्रतिश्रुताः ।
भवतांदिव्यवाचस्तु ता भवन्तु कथं मृपा ॥ ३-३१४-६ (२७९५४)
देवाश्चापि यदाऽवोचन्मूतके त्वां धनंजय ।
सहस्राक्षादनवरः कुन्ति पुत्रस्तवेति वै ॥ ३-३१४-७ (२७९५५)
उत्तरे पारियात्रे च जगुर्भूतानि सर्वशः ।
विप्रनष्टां श्रियं चैषामाहर्ता पुनरोजसा ॥ ३-३१४-८ (२७९५६)
नास्य जेता रणे कश्चिदजेता नैष कस्यचित् ।
सोयं मृत्युवशं यातः कथं जिष्णुर्महाबलः ॥ ३-३१४-९ (२७९५७)
अयंममाशां संहत्य शेते भूमौ धनंजयः ।
आश्रित्ययं वयं नाथं दुःखान्येतानिसेहिम ॥ ३-३१४-१० (२७९५८)
रणे प्रगल्भौ वीरौ चसदा शत्रुनिबर्हणौ ।
कथं रिपुवशं यातौ कुन्तीपुत्रौ महाबलौ ।
यौ सर्वास्त्राप्रतिहतौ भीमसेनधनंजयौ ॥ ३-३१४-११ (२७९५९)
अश्मसारमयं नूनं हृदयं मम दुर्हृदः ।
यमौ यदेतौ दृष्ट्वाऽद्य पतितौ नावदीर्यते ॥ ३-३१४-१२ (२७९६०)
शास्त्रज्ञा देशकालज्ञास्तपोयुक्ताः क्रियान्विताः ।
अकृत्वा सदृशं कर्म किं शेध्वं पुरुषर्षभाः ॥ ३-३१४-१३ (२७९६१)

अविक्षतशरीराश्चाप्यप्रमृष्टशरासनाः ।
असंज्ञा भुवि संगम्य किं शेष्वमपराजिताः ॥ ३-३१४-१४ (२७९६२)
सानूनिवाद्रेः संसुप्तान्दृष्ट्वा भ्रातृन्महामतिः ।
सुखं प्रसुप्तान्प्रस्विन्नः खिन्नः कष्टां दशां गतः ॥ ३-३१४-१५ (२७९६३)
एवमेवेदमित्युक्त्वा धर्मात्मा स नरेश्वरः ।
शोकसागरमध्यस्थो दध्यौ कारणमाकुलः ॥ ३-३१४-१६ (२७९६४)
इतिकर्तव्यतां चेति देशकालविभागवित् ।
नाभिपेदे महाबाहुश्चिन्तयानो महामतिः ॥ ३-३१४-१७ (२७९६५)
अथसंस्तभ्य धर्मात्मा तदाऽऽत्मानं तपःसुतः ।
एवंविलप्य बहुधा धर्मपुत्रो युधिष्ठिरः ।
बुद्ध्या विचिन्तयामासवीराः केन निपातिताः ॥ ३-३१४-१८ (२७९६६)
नैषां शस्त्रप्रहारोस्ति पदं नेहास्ति कस्यचित् ।
भूतं महदेदं मन्ये भ्रातरो येन मे हताः ॥ ३-३१४-१९ (२७९६७)
एकाग्रं चिन्तयिष्यामि पीत्वा वेत्स्यामि वा जलम् ।
ग्भ्रातॄणां न्र्यसनं घोरं सममेव महात्मनाम्' ॥ ३-३१४-२० (२७९६८)
स्यात्तु दुर्योधनेनेदमुपांशु परिकल्पितम् ।
गान्धारराजरचितं सततं जिह्मवुद्धिना ॥ ३-३१४-२१ (२७९६९)
यस् कार्यमकार्यं वा सममेव भवत्युत ।
कस्तस्य विश्वसेद्वीरो दुष्कृतेरकृतात्मनः ॥ ३-३१४-२२ (२७९७०)
अथवा पुरुषैर्गूढैः प्रयोगोऽयंदुरात्मनः ।
भवेदिति महाबुद्धिर्बहुधा समचिन्तयत् ॥ ३-३१४-२३ (२७९७१)
ग्आचार्यं किंनु वक्ष्यामि कृपं भीष्ममहं नु किम् ।
विदुरं किंनु वक्ष्यामि बृहस्पतिसमं नये ॥ ३-३१४-२४ (२७९७२)
अम्बां च किंनु वक्ष्यामि सर्वदा दुःखभागिनीम् ।
दृष्ट्वा मां भ्रातृभिर्हीनं पृच्छन्तीं पुत्रगृद्धिनीम्
॥ ३-३१४-२५ (२७९७३)
यदा त्वं भ्रातृभिः सर्वैः शक्रतुल्यपराक्रमैः ।
सार्धं वनं गतो वीरैः कथमेकस्त्वमागतः' ॥ ३-३१४-२६ (२७९७४)
कस्य किंनु विषेणेदमुदकं दूपितं यथा ।
मृतानामपि चैतेषां विकृतं नैव जायते ।
मुखवर्णाः प्रसन्ना मे भ्रातॄणामित्यचिन्तयत् ॥ ३-३१४-२७ (२७९७५)
एकैकशश्चौघबलानिमान्पुरुपसत्तमान् ।
कोऽन्यः प्रतिसमासेत कालान्तकयमादृते ॥ ३-३१४-२८ (२७९७६)
एतेन व्यवसायेन तत्तोयं व्यवगाढवान् ।
पातुकामश्च तत्तोयमन्तरिक्षात्स शुश्रुवे ॥ ३-३१४-२९ (२७९७७)
यक्ष उवाच। ३-३१४-३०क्ष् (२८८०)

अहं बकः शैवलमत्स्यभक्षो
नीता मया प्रेतवशं तवानुजाः ।
त्वं पञ्चमो भविता राजपुत्र
न चेत्प्रश्नान्पृच्छतो व्याकरोपि ॥ ३-३१४-३० (२७९७८)
मा तात साहसंकार्षीर्मम पूर्वपरिग्रहः ।
प्रश्नानुक्त्वा तु कौन्तेय ततः पिब हरस्व च ॥ ३-३१४-३१ (२७९७९)
युधिष्ठिर उवाच। ३-३१४-३२क्ष् (२८८१)
रुद्राणां वा वसूनां वामरुतां वा प्रधानभाक् ।
पृच्छामि को भवान्देवो नैतच्छकुनिना कृतम् ॥ ३-३१४-३२ (२७९८०)
हिमवान्पारियात्रश्च विन्ध्यो भलय एव च ।
चत्वारः पर्वताः केन पातिता भुवि तेजसा ॥ ३-३१४-३३ (२७९८१)
त्वयाऽतीव महत्कर्म कृतं च बलिनांवर ।
गविनिघ्नता महेष्वासांश्चतुरोपि ममात्मजान्' ॥ ३-३१४-३४ (२७९८२)
यान्न देवान गन्धर्वानासुराश्च न राक्षसाः ।
विपहेरन्महायुद्धे कृतं ते तन्महाद्भुतम् ॥ ३-३१४-३५ (२७९८३)
न ते जानामि यत्कार्यं नाभिजानामि काङ्क्षित्तम् ।
कौतूहलं महज्जातं साध्वसं चागतं मम ॥ ३-३१४-३६ (२७९८४)
येनास्स्युद्विग्नहृदयः समुत्पन्नशिरोज्वरः ।
पृच्छामि भगवंस्तस्मात्को भवानिह तिष्ठति ॥ ३-३१४-३७ (२७९८५)
यक्ष उवाच। ३-३१४-३८क्ष् (२८८२)
यक्षोऽहमस्मि भद्रं ते नास्मि पक्षी जलेचरः ।
मयैते निहता सर्वे भ्रातरस्ते निवारिताः ॥ ३-३१४-३८ (२७९८६)
वैशंपायन उवाच। ३-३१४-३९क्ष् (२८८३)
ततस्तामशिवां श्रुत्वावाचं स परुपाक्षराम् ।
यक्षस् ब्रुवतो राजन्नाकम्पत तदाऽऽस्थितः ॥ ३-३१४-३९ (२७९८७)
विरूपाक्षं महाकायं यक्षं तालसमुच्छ्रयम् ।
ज्वलनार्कप्रतीकाशमधृष्यं पर्वतोपमम् ॥ ३-३१४-४० (२७९८८)
सेतुमाश्रित्य तिष्ठन्तं ददृश भरतर्षभः ।
मेघगम्भीरनादेन तर्जयन्तं महास्वनम् ॥ ३-३१४-४१ (२७९८९)
गउवाच यक्षः कौन्तेयं भ्रातृशोकप्रपीडितम्' ॥ ३-३१४-४२ (२७९९०)
इमे तेभ्रातरो राजन्वार्यमाणआ मयाऽसकृत् ।
बलात्तोयं जिहीर्षन्तस्ततो वै मृदिता मया ।
न पेयमुदकं राजन्प्राणानिह परीप्सता ॥ ३-३१४-४३ (२७९९१)
पार्थ मा साहसं कार्षीर्मम पूर्वपरिग्रहः ।
प्रश्नानुक्त्वा तु कौन्तेय ततःपिब हरस्व च ॥ ३-३१४-४४ (२७९९२)
यूधिष्ठिर उवाच। ३-३१४-४५क्ष् (२८८४)

न चाहं कामये यक्ष तव पूर्वपरिग्रहम् ॥ ३-३१४-४५ (२७९९३)
कामं नैतत्प्रसंसन्ति सन्तो हि पुरुषाः सदा ।
यदात्मना स्वमात्मानं प्रशंसेत्पुरुषर्षभ ।
यथाप्रज्ञं तु ते प्रश्नान्प्रतिवक्ष्यामि पृच्छ माम् ॥ ३-३१४-४६ (२७९९४)
यक्ष उवाच। ३-३१४-४७क्ष् (२८८५)
किंस्विदादित्यमुन्नयति के च तस्याभितश्चराः ।
कश्चैनमस्तं नयतिकस्मिंश्च प्रतितिष्ठति ॥ ३-३१४-४७ (२७९९५)
युधिष्ठिर उवाच। ३-३१४-४८क्ष् (२८८६)
ब्रह्मादित्यमुन्नयति देवास्तस्याभितश्चराः ।
धर्मश्चास्तं नयति च सत्ये च प्रतितिष्ठति ॥ ३-३१४-४८ (२७९९६)
यक्ष उवाच। ३-३१४-२९क्ष् (२८८७)
केन स्विच्छ्रोत्रियो भवति केन स्विद्विन्दते महत् ।
केन स्विद्द्वितीयवान्भवतिराजन्केन च बुद्दिमान् ॥ ३-३१४-४९ (२७९९७)
युधिष्ठिर उवाच। ३-३१४-५०क्ष् (२८८८)
श्रुतेन श्रोत्रियो भति रतपसा विन्दते महत् ।
धृत्या द्वितीयवान्भवति बुद्धिमान्वृद्धसेवया ॥ ३-३१४-५० (२७९९८)
यक्ष उवाच। ३-३१४-५१क्ष् (२८८९)
किं ब्राह्मणानां देवत्वं कश्च धर्मः सतामिव ।
कश्चैषां मानुषो भावः किमेषामसतामिव ॥ ३-३१४-५१ (२७९९९)
युधिष्ठिर उवाच। ३-३१४-५२क्ष् (२८९०)
स्वाध्याय एषां देवत्वं तप एषां सतामिव ।
मरणं मानुषो भावः परिवादोऽसतामिव ॥ ३-३१४-५२ (२८०००)
यक्ष उवाच। ३-३१४-५३क्ष् (२८९१)
किं क्षत्रियाणां देवत्वं कश्च धर्मः सतामिव ।
कश्चैषां मानुषो भावः किमेषामसतामिव ॥ ३-३१४-५३ (२८००१)
युधिष्ठिर उवाच। ३-३१४-५४क्ष् (२८९२)
इष्वस्त्रमेषां देवत्वं यज्ञ एषां सतामिव ।
भयं वै मानुषो भावः परित्यागोऽसतामिव ॥ ३-३१४-५४ (२८००२)
यक्ष उवाच। ३-३१४-५५क्ष् (२८९३)
किमेकं यज्ञियं साम किमेकं यज्ञियं यजुः ।
का चैषां वृणुते यज्ञं कां यज्ञो नातिवर्तते ॥ ३-३१४-५५ (२८००३)
युधिष्ठिर उवाच। ३-३१४-५६क्ष् (२८९४)
प्राणो वै यज्ञियंसाम मनो वै यज्ञियं यजुः ।
ऋगेका वृणुते यज्ञं तां यज्ञो नातिवर्तते ॥ ३-३१४-५६ (२८००४)
यक्ष उवाच। ३-३१४-५७क्ष् (२८९५)
किंस्विदावपतां श्रेष्ठं रकिंस्विन्निवपतां वरम् ।

किंस्वित्प्रतिष्ठमानानां किस्वित्प्रसवतांवरम् ॥ ३-३१४-५७ (२८००५)
युधिष्ठिर उवाच। ३-३१४-५८क्ष् (२८९६)
वर्षमावपतां श्रेष्ठं बीजं निवपतां वरम् ।
गावः प्रतिष्ठमानानां पुत्रः प्रसवतां वरः ॥ ३-३१४-५८ (२८००६)
यक्ष उवाच। ३-३१४-५९क्ष् (२८९७)
इन्द्रियार्थाननुभवन्बुद्धिमाँल्लोकपूजितः ।
संमतः सर्वभूतानामुच्छ्वसन्को न जीवति ॥ ३-३१४-५९ (२८००७)
युधिष्ठिर उवाच। ३-३१४-६०क्ष् (२८९८)
देवतातिथिभृत्यानां पितॄणामात्मनश्च यः ।
न निर्वपति पञ्चानामुच्छ्वसन्न स जीवति ॥ ३-३१४-६० (२८००८)
यक्ष उवाच। ३-३१४-६१क्ष् (२८९९)
किंस्विद्गुरुतरं भूमेः किंस्विदुच्चतरं च स्वात् ।
किंस्विच्छीघ्रतरं वायोः किंस्विद्बहुतरं तृणात् ॥ ३-३१४-६१ (२८००९)
युधिष्ठिर उवाच। ३-३१४-६२क्ष् (२९००)
माता गुरुतरा भूमेः खात्पितोच्चतरस्तथा ।
मनः शीघ्रतरं वाताच्चिन्ता बहुतरी तृणात् ॥ ३-३१४-६२ (२८०१०)
यक्ष उवाच। ३-३१४-६३क्ष् (२९०१)
किंस्वित्सुप्तं न निमिषति किंस्विज्जातं न चेङ्गते ।
कस्यस्विद्धृदयं नास्तिकास्विद्वेगेन वर्धते ॥ ३-३१४-६३ (२८०११)
युधिष्ठिर उवाच। ३-३१४-६४क्ष् (२९०२)
मत्स्यः सुप्तो न निमिषत्यण्डं जातं न चेङ्गते ।
अश्मनो हृदयंनास्ति नदी वेगेन वर्धते ॥ ३-३१४-६४ (२८०१२)
अक्ष उवाच। ३-३१४-६५क्ष् (२९०३)
किंस्वित्प्रवसतो मित्रं किंस्विन्मित्रं गृहे सतः ।
आतुरस् च किं मित्रं किंस्विन्मित्रं मरिष्यतः ॥ ३-३१४-६५ (२८०१३)
युधिष्ठिर उवाच। ३-३१४-६६क्ष् (२९०४)
विद्या प्रवसतो मित्रं भार्या मित्रं गृहे सतः ।
आतुरस्य भिषङ्भित्रं दानं मित्रं मरिष्यतः ॥ ३-३१४-६६ (२८०१४)
यक्ष उवाच। ३-३१४-६७क्ष् (२९०५)
कोऽतिथिः सर्वभूतानां किं स्विद्धर्मं सनातनम् ।
अमृतं किंस्विद्राजेन्द्रकिंस्वित्सर्वमिदं जगत् ॥ ३-३१४-६७ (२८०१५)
युधिष्ठिर उवाच। ३-३१४-६८क्ष् (२९०६)
अतिथिः सर्वभूतानामग्निः सोमो गवामृतम् ।
सनातनोऽमृतो धर्मो वायुः सर्वमिदं जगत् ॥ ३-३१४-६८ (२८०१६)
यक्ष उवाच। ३-३१४-६९क्ष् (२९०७)
किंस्विदेको विचरते जातः को जायते पुनः ।

किंस्विद्धिमस्य भैषज्यं किंस्विदावपनं महत् ॥ ३-३१४-६९ (२८०१७)
युधिष्ठिर उवाच। ३-३१४-७०क्ष् (२९०८)
सूर्य एको विचरते यन्द्रमा जायते पुनः ।
अग्निर्हमस्य भैषज्यं भूमिरावपनं महत् ॥ ३-३१४-७० (२८०१८)
यक्ष उवाच। ३-३१४-७१क्ष् (२९०९)
किंस्विदेकपदं धर्म्यं किंस्विदेकपदं यशः ।
किंस्विदेकपदं स्वर्ग्यं किंस्विदेकपदं सुखम् ॥ ३-३१४-७१ (२८०१९)
युधिष्ठिर उवाच। ३-३१४-७२क्ष् (२९१०)
दाक्ष्यमेकपदं धर्म्यं दानमेकपदं यशः ।
सत्यमेकपदं स्वर्ग्यं शीलमेकपदंसुखम् ॥ ३-३१४-७२ (२८०२०)
यक्ष उवाच। ३-३१४-७३क्ष् (२९११)
किंस्विदात्मा मनुष्यस् किंस्विद्दैवकृतः सखा ।
उपजीवनं किस्विदस् किंस्विदस्य परायणम् ॥ ३-३१४-७३ (२८०२१)
युधिष्ठिर उवाच। ३-३१४-७४क्ष् (२९१२)
पुत्र आत्मा मनुष्यस्य भार्या दैवकृतः सखा ।
उपजीवनं च पर्जन्यो दानमस् परायणम् ॥ ३-३१४-७४ (२८०२२)
यक्ष उवाच। ३-३१४-७५क्ष् (२९१३)
धन्यानामुत्तमं किंस्विद्धनानां स्यात्किमुत्तमम् ।
लाभानामुत्तमं किंस्यात्सुखानां स्यात्किमुत्तमं ॥ ३-३१४-७५ (२८०२३)
धन्यानामुत्तमं दाक्ष्यंधनानामुत्तमं श्रुतम् ।
लाभानां श्रेय आरोग्यं सुखानां तुष्टिरुत्तमा ॥ ३-३१४-७६ (२८०२४)
यक्ष उवाच। ३-३१४-७७क्ष् (२९१४)
किंस्विद्धर्मपरंलके कश्च धर्मः सदाफलः ।
किं नियम्य न शोचन्ति कैश् सन्धिर्न जीर्यते ॥ ३-३१४-७७ (२८०२५)
युधिष्ठिर उवाच। ३-३१४-७८क्ष् (२९१५)
आनृशंस्यं परं धर्मात्रेताधर्मः सदाफलः ।
मनो यम्य न शोचन्ति सन्धिः सद्भिर्न जीर्यते ॥ ३-३१४-७८ (२८०२६)
यक्ष उवाच। ३-३१४-७९क्ष् (२९१६)
किंनु हित्वाप्रियो भवति किंनु हित्वा न शोचति ।
किंनु हित्वाऽर्थवान्भवति किंनु हित्वा सुखी भवेत् ॥ ३-३१४-७९ (२८०२७)
युधिष्ठिर उवाच। ३-३१४-८०क्ष् (२९१७)
मानं हित्वाप्रियो भवति क्रोधं हित्वा न शोचति ।
कामं हित्वाऽर्थवान्भवति लोमं हित्वा सुखी भवेत् ॥ ३-३१४-८० (२८०२८)
यक्ष उवाच। ३-३१४-८१क्ष् (२९१८)
किमर्थं ब्राह्मणे दानं किमर्थं नटनर्तके ।
किमर्थं चैव भृत्येषु किमर्थं चैव राजसु ॥ ३-३१४-८१ (२८०२९)

युधिष्ठिर उवाच। ३-३१४-८२क्ष् (२९१९)
धर्मार्थं ब्राह्मणे दानं यशोर्थं नटनर्तके ।
भृत्येषु सङ्ग्रहार्थं च भयार्थं चैव राजसु ॥ ३-३१४-८२ (२८०३०)
यक्ष उवाच। ३-३१४-८३क्ष् (२९२०)
अज्ञानेनावृतोलोकस्तमसा न प्रकाशते ।
लोभात्त्यजतिमित्राणि सङ्गात्स्वर्गं न गच्छति ॥ ३-३१४-८३ (२८०३१)
युधिष्ठिर उवाच। ३-३१४-८४क्ष् (२९२१)
अज्ञानेनावृतोलोकस्तमसा न प्रकाशते ।
लोभात्त्यजतिमित्राणि सङ्गात्स्वर्गं न गच्छति ॥ ३-३१४-८४ (२८०३२)
यक्ष उवाच। ३-३१४-८५क्ष् (२९२२)
मृत कथं स्यात्पुरुषः कथं राष्ट्रं मृतं भवत् ।
श्राद्धं मृतंकथं वा स्यात्कथं यज्ञा मृतो भवेत् ॥ ३-३१४-८५ (२८०३३)
युधिष्ठिर उवाच। ३-३१४-८६क्ष् (२९२३)
मृतो दरिद्रः पुरुषोमृतंराष्ट्रमराजकम् ।
मृतमश्रोत्रियं श्राद्धं मृतो यज्ञस्त्वदक्षिणः ॥ ३-३१४-८६ (२८०३४)
यक्ष उवाच। ३-३१४-८७क्ष् (२९२४)
का दिक्किमुदकंपार्थ किमन्नं किंच वै विषम् ।
श्राद्धस् कालमाख्याहि ततः पिब हरस्व च ॥ ३-३१४-८७ (२८०३५)
युधिष्ठिर उवाच। ३-३१४-८८क्ष् (२९२५)
सन्तो दिग्जलमाकाशं गौरन्नं ब्राह्मणं विषम् ।
श्राद्धस्य ब्राह्मणः कालः कथं वा यक्ष मन्यसे ॥ ३-३१४-८८ (२८०३६)
यक्ष उवाच। ३-३१४-८९क्ष् (२९२६)
तपः किंलक्षणं प्रोक्तं को दमश्च प्रकीर्तितः ।
क्षमा च का परा प्रोक्ता का च ह्रीः परिकीर्तिता ॥ ३-३१४-८९ (२८०३७)
युधिष्ठिर उवाच। ३-३१४-९०क्ष् (२९२७)
तपः स्वधर्मवर्तित्वं मनसो दमनं दमः ।
क्षमा द्वन्द्वसहिष्णुत्वंह्रीरकार्यनिवर्तनम् ॥ ३-३१४-९० (२८०३८)
यक्ष उवाच। ३-३१४-९१क्ष् (२९२८)
किं ज्ञानं प्रोच्यते राजन्कः शमश्च प्रकीर्तितः ।
दया च का परा प्रोक्ता किं चार्जवमुदाहृतम् ॥ ३-३१४-९१ (२८०३९)
युधिष्ठिर उवाच। ३-३१४-९२क्ष् (२९२९)
ज्ञानं तत्त्वार्थसम्बोधः शमश्चित्तप्रशान्तता ।
दयासर्वसुखैपित्वमार्जवं समचित्तता ॥ ३-३१४-९२ (२८०४०)
यक्ष उवाच। ३-३१४-९३क्ष् (२९३०)
कः शत्रुर्दुर्जयः पुंसां कश्चव्याधिरनन्तकः ।
कीदृशश्च स्मृतः साधुरसाधुः कीदृशः स्मृतः ॥ ३-३१४-९३ (२८०४१)

युधिष्ठिर उवाच। ३-३१४-९४क्ष् (२९३१)
क्रोधः सुदुर्जयः शत्रुर्लोभोव्याधिरनन्तकः ।
सर्वभूतहितः साधुरसाधुर्निर्दयः स्मृतः ॥ ३-३१४-९४ (२८०४२)
यक्ष उवाच। ३-३१४-९५क्ष् (२९३२)
को मोहः प्रोच्यते राजन्कश् मानः प्रकीर्तितः ।
किमालस्यं च विज्ञेयं कश्चशोकः प्रकीर्तितः ॥ ३-३१४-९५ (२८०४३)
युधिष्ठिर उवाच। ३-३१४-९६क्ष् (२९३३)
मोहो हिधर्ममूढ़तवंमानस्त्वात्माभिमानिता ।
धर्मनिष्क्रियताऽऽलस्यं शोकस्त्वज्ञानमुच्यते ॥ ३-३१४-९६ (२८०४४)
यक्ष उवाच। ३-३१४-९७क्ष् (२९३४)
किं स्थैर्यमृषिभिः प्रोक्तं किं च धैर्यमुदाहृतम् ।
स्नानं च किं परं प्रोक्तं दानं च किमिहोच्यते ॥ ३-३१४-९७ (२८०४५)
युधिष्ठि उवाच। ३-३१४-९८क्ष् (२९३५)
स्वधर्मे स्थिरता स्थैर्यं धैर्यमिन्द्रियनिग्रहः ।
स्नानं मनोमलत्यागो दानं वै भूतरक्षणम् ॥ ३-३१४-९८ (२८०४६)
यक्ष उवाच। ३-३१४-९९क्ष् (२९३६)
कः पण्डिः पुमान्ज्ञेयो नास्तिकः कश्च उच्यते ।
को मूर्खः कश्चकामः स्यात्को मत्सर इति स्मृतः ॥ ३-३१४-९९ (२८०४७)
युधिष्ठिर उवाच। ३-३१४-१००क्ष् (२९३७)
धर्मज्ञः पण्डितो ज्ञेयो नास्तिको मूर्ख उच्यते ।
कामः संसारहेतुश्च हृत्तापो मत्सरः स्मृतः ॥ ३-३१४-१०० (२८०४८)
यक्ष उवाच। ३-३१४-१०१क्ष् (२९३८)
कोऽहंकार यइतिप्रोक्तः कश्च दम्भः प्रकीर्तितः ।
किं तद्दैवं परं प्रोक्तं किं तत्पैशुन्यमुच्यते ॥ ३-३१४-१०१ (२८०४९)
युधिष्ठिर उवाच। ३-३१४-१०२क्ष् (२९३९)
महाऽज्ञानमहंकारो दम्भो धर्मो ध्वजोच्छ्रयः ।
दैवं रदानफलं प्रोक्तं पैशुन्यं परदूषणम् ॥ ३-३१४-१०२ (२८०५०)
यक्ष उवाच। ३-३१४-१०३क्ष् (२९४०)
धर्मश्चार्थश्च कामश्च परस्परविरोधिनः ।
एषां नित्यविरुद्धानां कथमेकत्र संगमः ॥ ३-३१४-१०३ (२८०५१)
युधिष्ठिर उवाच। ३-३१४-१०४क्ष् (२९४१)
यदा धर्मश्भार्या च परस्परवशानुगौ ।
तदा धर्मार्थकामानां त्रयाणामपि संगमः ॥ ३-३१४-१०४ (२८०५२)
यक्ष उवाच। ३-३१४-१०५क्ष् (२९४२)
अक्षयोनरकः केन प्राप्यते भरतर्षभ ।
एतन्मे पृच्छतः प्रश्नं तच्छीघ्रं वक्तुमर्हसि ॥ ३-३१४-१०५ (२८०५३)

युधिष्ठिर उवाच। ३-३१४-१०६क्ष् (२९४३)
रब्राह्मणं स्वयमाहूय याचमानमकिंचनम् ।
पश्चान्नास्तीति योब्रूयात्सोक्षयंनरकं व्रजेत् ॥ ३-३१४-१०६ (२८०५४)
वेदेषु धर्मशास्त्रेषु मिथ्या यो वै द्विजातिषु ।
देवेषु पितृध्रमेषु सोऽक्षयंनरकं व्रजेत् ॥ ३-३१४-१०७ (२८०५५)
विद्यमाने धने लोभाद्दानभोगविवर्जितः ।
पश्चान्नास्तीति यो ब्रूयात्सोक्षयं नरकं व्रजेत् ॥ ३-३१४-१०८ (२८०५६)
यक्ष उवाच। ३-३१४-१०९क्ष् (२९४४)
राजन्कुलेन वृत्तेन स्वाध्यायेन श्रुतेन वा ।
ब्राह्मण्यं केन भवति प्रब्रूह्येतत्सुनिश्चितम् ॥ ३-३१४-१०९ (२८०५७)
युधिष्ठिर उवाच। ३-३१४-११०क्ष् (२९४५)
शृणु यक्ष कुलं तात न स्वाध्यायो न च श्रुतम् ।
कारणं हि द्विजत्वेच वृत्तमेव न संशयः ॥ ३-३१४-११० (२८०५८)
वृत्तं यत्नेन संरक्ष्यं ब्राह्मणेन विशेषतः ।
अक्षीणवृत्तो न क्षीणो वृत्ततस्तु हतो हतः ॥ ३-३१४-१११ (२८०५९)
पठकाः पाठकाश्चैव ये चान्ये शास्त्रचिन्तकाः ।
सर्वे व्यसनिनो मूर्खा यः क्रियावान्स पण्डितः ॥ ३-३१४-११२ (२८०६०)
चतुर्वेदोऽपि दुर्वृत्तः स शूद्रादतिरिच्यते ।
योऽग्निहोत्रपोर दान्तः स ब्राह्मण इति स्मृतः ॥ ३-३१४-११३ (२८०६१)
यक्ष उवाच। ३-३१४-११४क्ष् (२९४६)
प्रियवचनवादी किं लभते
विमृशितकार्यकरः किं लभते ।
बहुमित्रकरः किं लभते
धर्मे रतः किं लभते कथय ॥ ३-३१४-११४ (२८०६२)
युधिष्ठिर उवाच। ३-३१४-११५क्ष् (२९४७)
प्रियवचनवादी प्रीयो भवति
विमृशितकार्यकरोऽधिकं जयति ।
बहुमित्रकरः सुखं वसत
यश्च धर्मरतः स गतिं लभते ॥ ३-३१४-११५ (२८०६३)
यक्ष उवाच। ३-३१४-११६क्ष् (२९४८)
कोमोदतेकिमाश्चर्यं कः पन्थाः का च वार्तिका ।
वद मे चतुरः प्रश्नान्मृता जीवन्तु बान्धवाः ॥ ३-३१४-११६ (२८०६४)
युधिष्ठिर उवाच ३-३१४-११७क्ष् (२९४९)
पञ्चमेऽहनि षष्ठे वा शाकं पचति स्वे गृहे ।
अनृणी रचाप्रवासी चस वारिचर मोदते ॥ ३-३१४-११७ (२८०६५)
अहन्यहनि भूतानि गच्छन्तीह यमालयम् ।

शेषाः स्थावरमिच्छन्ति किमाश्चर्यमतः परम् ॥ ३-३१४-११८ (२८०६६)
तर्कोऽप्रतिष्ठः श्रुतयो विभिन्ना
नैको मुनिर्यस्य मतं प्रमाणम् ।
धर्मस्य तत्त्वं निहितं गुहायां
महाजनो येन गतःस पन्था ॥ ३-३१४-११९ (२८०६७)
पृथ्वी विभाण्डं गगनं पिघानं
सूर्याग्निना रात्रिदिवेन्धनेन ।
मासर्तुदर्वीपरिघट्टनेन
भूतानि कालः पचतीति वार्ता ॥ ३-३१४-१२० (२८०६८)
यक्ष उवाच। ३-३१४-१२१क्ष् (२९५०)
व्याख्याता मे त्वया प्रश्ना यथातत्वं परंतप ।
पुरुषं त्विदानींव्याख्याहि यश्च सर्वधनी नरः ॥ ३-३१४-१२१ (२८०६९)
युधिष्टिर उवाच। ३-३१४-१२२क्ष् (२९५१)
दिवं स्पृशति भूमिं च शब्दः पुण्येन कर्मणा ।
यावत्स शब्दो भवति तावत्पुरुष उच्यते ॥ ३-३१४-१२२ (२८०७०)
तुल्ये प्रियाप्रिये यस् सुखदुःखे तथैव च ।
अतीतानागते चोभे सवै पुरुष उच्येत ॥ ३-३१४-१२३ (२८०७१)
ग्समत्वं यस्य सर्वेषु निस्पृहः शान्तमानसः ।
सुप्रसन्नः सदा योगी स वै सर्वधनी नरः' ॥ ३-३१४-१२४ (२८०७२)
यक्ष उवाच। ३-३१४-१२५क्ष् (२९५२)
व्याख्यातः पुरुषो राजन्यश्च सर्वधनी नरः ।
तस्मात्त्वमेकं भ्रातृणां यमिच्छसि स जीवतु ॥ ३-३१४-१२५ (२८०७३)
युधिष्ठिर उवाच। ३-३१४-१२६क्ष् (२९५३)
श्यामो य एष रक्ताक्षो बृहत्साल इवोत्थितः ।
व्यूढोरस्को महाबाहुर्नकुलो यक्ष जीवतु ॥ ३-३१४-१२६ (२८०७४)
यक्ष उवाच। ३-३१४-१२७क्ष् (२९५४)
प्रियस्ते भीमसेनोऽयमर्जुनो वः परायणम् ।
त्वं कस्मान्नकुलं राजन्सापत्नं जीवमिच्छसि ॥ ३-३१४-१२७ (२८०७५)
यस् नागसहस्रेण दशसङ्ख्येन वै बलम् ।
तुल्यंतं भीममुत्सृज्य नकुलं जीवमिच्छसि ॥ ३-३१४-१२८ (२८०७६)
तथैनं मनुजाः प्राहुर्भीमसेनं प्रियं तव ।
अथ कनानुभावेन सापत्नं जीवमिच्छसि ॥ ३-३१४-१२९ (२८०७७)
यस्य बाहुबलंसर्वेपाण्डवाः समुपासते ।
अर्जुनं तमपाहाय नकुलं जीवमिच्छसि ॥ ३-३१४-१३० (२८०७८)
युधिष्टिर उवाच। ३-३१४-१३१क्ष् (२९५५)
धर्म एव हतो हन्ति ध्रमो रक्षति रक्षितः ।

तस्माद्धर्मं न त्यजामि मा नो धर्मो हतोऽवधीत् ॥ ३-३१४-१३१ (२८०७९)
आनृशंस्यं परो धर्मः परमार्थाच्चमे मतम् ।
आनृशंस्यं चिकीर्षामि नकुलो यक्ष जीवतु ॥ ३-३१४-१३२ (२८०८०)
धर्मशीलः सदा राजाइतिमां मानवा विदुः ।
स्वधर्मान्न चलिष्यामि नकुलो यक्ष जीवतु ॥ ३-३१४-१३३ (२८०८१)
कुन्ती चैव तु माद्री च द्वे भार्ये तु पितुर्मम ।
उभे सपुत्रे स्यातां वै इतिमे धीयते मतिः ॥ ३-३१४-१३४ (२८०८२)
यथा कुन्ती तथा माद्री विशेषो नास्ति मे तयोः ।
मातृभ्यां सममिच्छामि नकुलो यक्ष जीवतु ॥ ३-३१४-१३५ (२८०८३)
यक्ष उवाच। ३-३१४-१३६क्ष् (२९५६)
३-३१४-१३६ (२८०८४)
यस् तेऽर्थाच्च कामच्च आनृशंस्यं परं मतम् ।
तस्मात्ते भ्रातरः सर्वे जीवन्तु भरतर्षभ ॥
Mahabharata - Vana Parva - Chapter Footnotes

३-३१४-६ बिधर्भिण्योऽनृताः ॥
३-३१४-९ न कस्यचिदजेताऽपितु सर्वस्यैव जेता ॥
३-३१४-१० आशां राज्याशाम् ।संहत्य विनाश्य ॥
३-३१४-१६ दध्यौ कारणं मरणहेतुं विचारितवान् ॥
३-३१४-१८ तपःसुतः धर्मपुत्रः ॥
३-३१४-२२ दुष्कृतेःपापाकर्मणः ॥
३-३१४-२८ ओघवलान् महाप्रवाहयेगान् ।प्रतिसमासेत प्रतियुद्ध्येत्
करोति यस्तादृशो यनऋ कालान्तकयमस्तस्मात् ॥
३-३१४-३२ प्रयानभाक् प्राधान्यभाक् ॥
३-३१४-३४ अतीव ते महदितिपाठे ते तथ ॥
३-३१४-४८ वेदास्तस्याभितश्चरा इति अधर्मस्तमस्तं नयतीति क
।च।ध।पाठः ॥
३-३१४-४९ केन द्वितयो भवतीति ध ।पाठः ॥
३-३१४-५४ परित्याग आर्तानामिति शेषः ।दानमेषां सतामिवति क।पाठः ॥
३-३१४-५५ का चैका वृश्चत इति क ।ध।पाटः ॥
३-३१४-५६ वागेका वृश्चतेऽयज्ञमिति क ।पाठः ॥
३-३१४-६० न निर्वपति न प्रयच्छति देवतादिभ्यः ॥
३-३१४-६२ उक्तसाधनाशक्तेन मातापित्रोः शुश्रूषा
मनोनिरोधस्तृणवत्तुच्छायाश्चिन्तायस्त्यागश्च कर्तव्य इत्याह
किंस्विद्गुर्विति ।बहुतरं नृणामिति ध।पाठः।बहुतरी तृणादिति
ध।पाठः ॥

३-३१४-६४ किंस्विज्जातं नचोपति इति झ ।पाठः ॥
३-३१४-६६ सार्तः प्रवसतो मित्रमिति झ ।पाठः ॥
३-३१४-७० एकपदं एकमेव पर्यवसानस्थानम् ।दाक्ष्ये कृत्स्ने धर्मः पर्यवसित इत्यर्तः।एवमुत्तरत्र ॥
३-३१४-८७ प्रार्थनाविषं इति झ ।पाठः ॥
३-३१४-१२६ जीवं जीवन्तम् ॥
३-३१४-१२८ अनुभावेन नकुलगतसामर्थ्येन ॥
३-३१४-१३० नः अस्मान्मावधीत् ॥
३-३१४-१३१ आनृशंस्यं अवैषम्यम् ।परमार्थात् सत्यात् ॥
३-३१४-१३३ धीयते निश्चिनुते ॥
३-३१४-१३५ यस्मात्ते पार्थ धर्माच्च इति थ ।ध।पाठः ॥

---

वन-अध्यय३१५
॥ श्रीः ॥
३.३१५. अध्यायः ३१५

Mahabharata - Vana Parva - Chapter Topics
Mahabharata - Vana Parva - Chapter Text

३-३१५-० (२८०८५)
वैशंपायन उवाच। ३-३१५-०क्ष् (२९५७)
ततस्ते यक्षवचनादुदतिष्ठन्त पाण्डवः ।
क्षुत्पिपासे च सर्वेषां क्षणेन व्यपगच्छताम् ॥ ३-३१५-१ (२८०८६)
युधिष्ठि उवाच। ३-३१५-२क्ष् (२९५८)
सरस्येकेन पादेन तिष्ठन्तमपराजितम् ।
पृच्छामि को भवान्देवो न मे यक्षो मतो भवान् ॥ ३-३१५-२ (२८०८७)
बसूनां वा भवानेको रुद्राणामथवा भवान् ।
अथवा मरुतां श्रेष्ठो वज्री वा त्रिदशेश्वरः ॥ ३-३१५-३ (२८०८८)
मम हि भ्रातर इमे सहस्रशतयोधिनः ।
तं योधं न प्रपश्यामि येन सर्वे निपातिताः ॥ ३-३१५-४ (२८०८९)
सुखं प्रति प्रबुद्दानामिन्द्रियाण्युपलक्षये ।
स भवान्सुहृदोस्माकमथवा नः पिता भवान् ॥ ३-३१५-५ (२८०९०)
यक्ष उवाच। ३-३१५-६क्ष् (२९५९)
अहंते जनकस्तात धर्मो मृदुपराक्रम ।
त्वां रदिदृक्षुरनुप्राप्तो विद्धि मां भरतर्षभ ॥ ३-३१५-६ (२८०९१)
यशः सत्यंदमः शौचमार्जवं ह्रीरचापलम् ।
दानं तपो ब्रह्मचर्यमित्येतास्तनवो मम ॥ ३-३१५-७ (२८०९२)

अहिंसा समता शान्तिस्तपः शौचममत्सरः ।
द्वाराण्येतानि मे विद्धि प्रियो ह्यसि सुतो मम ॥ ३-३१५-८ (२८०९३)
दिष्ट्या पञ्चसु रक्तोसि दिष्ट्या ते षट्पदी जिता ।
द्वे पूर्वे मध्यमे द्वे च द्वे शान्ते सांपरायिके ॥ ३-३१५-९ (२८०९४)
धर्मोऽहमिति भद्रं ते जिज्ञासुस्त्वामिहागतः ।
आनृशंस्येन तुष्टोस्मि वरं दास्यामि तेऽनघ ॥ ३-३१५-१० (२८०९५)
वरं वृणीष्व राजेन्द्रदाता ह्यस्मि तवानघ ।
ये हि मे पुरुषा भक्ता न तेषामस्ति दुर्गतिः ॥ ३-३१५-११ (२८०९६)
युधिष्ठिर उवाच। ३-३१५-१२क्ष् (२९६०)
अरणी तु हृतायस्य मृगेण वदतांवर ।
तस्याग्नयो न लुप्येरन्प्रथमोऽस्तु वरो मम ॥ ३-३१५-१२ (२८०९७)
धर्म उवाच। ३-३१५-१३क्ष् (२९६१)
आरणेयमिदं तस्य ब्राह्मणस्य हृतं मया ।
मृगवेषेण कौन्तेय जिज्ञालार्थं तवानघ ॥ ३-३१५-१३ (२८०९८)
वैशंपायन उवाच। ३-३१५-१४क्ष् (२९६२)
ददानीत्येव भगवानुत्तरं प्रत्यपद्यत ।
अन्यं वरय भद्रं ते वरं त्वममरोपम ॥ ३-३१५-१४ (२८०९९)
युधिष्टिर उवाच। ३-३१५-१५क्ष् (२९६३)
वर्षाणि द्वादशारण्ये त्रयोदशमुपस्थितम् ।
तत्रनो नाभिजानीयुर्वसतो मनुजाः क्वचित् ॥ ३-३१५-१५ (२८१००)
ददानीत्येव भगवानुत्तरं प्रत्यपद्यत ।
भूयश्चाश्वासयामास कौन्तेयं सत्यविक्रमम् ॥ ३-३१५-१६ (२८१०१)
यद्यपि स्वेन रूपेण चरिष्यथ महीमिमाम् ।
न वो विज्ञास्यते कश्चित्रिषु लोकेषु भारत ॥ ३-३१५-१७ (२८१०२)
वर्षंत्रयोदशमिदं मत्प्रसादात्कुरूद्वहाः ।
विराटनगरे गूढा अविज्ञाताश्चरिष्यथ ॥ ३-३१५-१८ (२८१०३)
यद्वः संकल्पितं रूपं मनसा यस् यादृशम् ।
तादृशं तादृशं सर्वे छन्दतो धारयिष्यथ ॥ ३-३१५-१९ (२८१०४)
अरणीसहितं भाण्डं ब्राह्मणाय प्रयच्छत ।
जिज्ञासार्थं मया ह्येतदाहृतंमृगरूपिणा ॥ ३-३१५-२० (२८१०५)
प्रवृणीष्वापरं सौम्य वरमिष्टं ददानि ते ।
न तृप्यामि नरश्रेष्ठ प्रयच्छन्वै वरांस्तथा ॥ ३-३१५-२१ (२८१०६)
तृतीयं गृह्यतां पुत्र वरमप्रतिमं महत् ।
त्वं हि मत्प्रभवो राजन्विदुरश्चममांशजः ॥ ३-३१५-२२ (२८१०७)
जुधिष्टिर उवाच। ३-३१५-२३क्ष् (२९६४)
देवदेवो मया दृष्टो भवान्साक्षात्सनातनः ।

यं ददासि वरं तुष्टस्तं ग्रहीष्याम्यहं पितः ॥ ३-३१५-२३ (२८१०८)
जयेयं लोभमोहौ च क्रोधं चाहं सदा विभो ।
दाने तपसि सत्ये च मनो मे सततं वेत् ॥ ३-३१५-२४ (२८१०९)
धर्म उवाच। ३-३१५-२५क्ष् (२९६५)
रउपपन्नो गुणैरेतैः स्वभावेनासि पाण्डव ।
भवान्धर्मः पुनश्चैव यथोक्तं ते भविष्यति ॥ ३-३१५-२५ (२८११०)
वैशंवायन उवाच। ३-३१५-२६क्ष् (२९६६)
इत्युक्त्वान्तऽर्दधे धर्मो भगबाँल्लोकभावनः ।
समेताः पाण्डवाश्चैव सुखसुप्ता मनस्विनः ॥ ३-३१५-२६ (२८१११)
उपेत्यचाश्रमं वीराः सर्व एव गतक्लमाः ।
आरणेयं ददुस्तस्मै ब्राह्मणाय तपस्विने ॥ ३-३१५-२७ (२८११२)
इदं समुत्थानसमागतं मह-
त्पितुश्चपुत्रस्य च कीर्तिवर्धनम् ।
पठन्नरः रस्याद्विजितेन्द्रियो वशी
सपुत्रपौत्रः शतपर्षभाग्भवेत् ॥ ३-३१५-२८ (२८११३)
न चाप्यधर्मे न सुहृद्विभेदने
परस्वहारे परदारमर्शने ।
कदर्यभावे न रमेनेमनः सदा
नृणां सदाख्यानमिदं विजानताम् ॥ ३-३१५-२९ (२८११४)

इति श्रीमन्महाभारते शतसाहस्रिकायां संहितायां वैयासिक्यां अरण्यपर्वणि आरणेयपर्वणि पञ्चदशाधिकत्रिशततमोऽध्यायः ॥ ३१५ ॥
आरणेयपर्व समाप्तम् । । २१ ॥ समाप्तमिदमरण्यपर्व च ॥ ३ ॥ अतः परं विराटपर्व भविष्यति। तस्यायमाद्यः श्लोकः। जनमेयज उवाच। कथं विराटनगरे मम पूर्वपितामहाः। अज्ञातवासमुषिता दुर्योधनभयार्दिताः ॥

Mahabharata - Vana Parva - Chapter Footnotes

३-३१५-५ सुहृदः सुहृत् । छान्दसमदन्तत्वम् ॥
३-३१५-९ पञ्चस्वात्मदर्शनसाधनेषु शान्तो दान्त उपरतस्तितिक्षुः समाहितो भूत्वेति श्रुत्युक्तेषु शमादिषु । दिष्ट्या पूर्वपुण्यवशाद्रक्तोसि तस्य फलं च षट्पदीजयः। पद्यन्ते प्राप्नुवन्ति देहिनमिति पदानि षडूर्मयो योशनायापिपासे शोकं मोहं जरां मृत्युमत्येतीति श्रुत्युक्तः। तेषां षण्णां पदानां समाहारः षट्पदी सा त्वया जिता। तेषु पदेषु द्वे पदे पूर्वे

जातमात्रस्य ह्यशनायापिपासे प्रथमं भवतः। द्वे मध्ये
शोकमोहौ। शोक इष्टवियोगजश्चित्तस्य संतापः। मोहोऽतिपापेन
कार्याकार्यप्रतिसंधानशून्यत्वम्। एते मध्ये मध्यमे वयसि
प्राप्नुतः। सांपरायिके जरामृत्यू उत्तरे वयस्युपतिष्ठतः। संपरायः
परलोकस्तं प्रति नेतुमुदिते सांपरायिके ॥
३-३१५-१५ अरण्ये गतानीति शेषः । नोऽस्मान् ॥
३-३१५-१९ छन्दत उच्छ्रातः ॥
३-३१५-२७ आरणेयमरणीसंपुटम् ॥
३-३१५-२८ समुत्थानसमागतं भीमादीनां समुत्थानं च रधर्मराजेन
सह समागतं संमेलनं चेति समाहारः । पितुर्धर्मस्य। पुत्रस्
युधिष्ठिरस्य। चात् समागतमिति समासैकदेशभूतमप्यनुवर्तते ॥
३-३१५-२९ कदर्यभावे कार्पण्ये । सदाख्यानं सुभाख्यानम् ॥

---

# ॥ ४ विराटपर्व ॥

४. विराटपर्व

विरतपर्व-अध्यय००१
॥ श्रीः ॥
४.१. अध्यायः १

Mahabharata - Virata Parva - Chapter Topics
युधिष्ठिरेण ब्राह्मणाय मृगापहृतारणिभाण्डप्रत्यर्पणम् ॥ १ ॥
धौम्येन ब्राह्मणमध्ये दुर्योधनापनयादिकथनेन शोचतो
युधिष्ठिरस्य दुःखानुभवविषये देवादिनिदर्शनप्रदर्शनेन
परिसान्त्वनम् ॥ २ ॥
पाण्डवैः स्वसहचरब्राह्मणाभ्यनुज्ञानसंपादनेन तद्वितर्जनपूर्वकं
धौम्येनसह मन्त्राय क्वचिदुपवेशनम् ॥ ३ ॥

Mahabharata - Virata Parva - Chapter Text

४-१-० (२८११५)
॥ श्रीवेदव्यासाय नमः ॥ ४-१-०क्ष् (२९६७)
नारायणं नमस्कृत्य नरं चैव नरोत्तमम् ।
देवीं सरस्वतीं व्यासं ततो जयमुदीरयेत् ॥ ४-१-१ (२८११६)
॥ जनमेजय उवाच ।
कथं विराटनगरे मम पूर्वपितामहाः ।
अज्ञातवासमुषिता दुर्योधनभयार्दिताः ॥ ४-१-२क्ष् (२९६८)
पतिव्रता महाभागा सततं सुखभागिनी ।
द्रौपदी सा कथं ब्रह्मन्नज्ञाता दुःखिताऽवसत् ॥ ४-१-२ (२८११७)
ते च ब्राह्मणमुख्याश्च सूतपौरोगवैः सह ।
अज्ञातवासमुषिताः कथं च परिचारकाः ॥ ४-१-३ (२८११८)
वैशंपायन उवाच। ४-१-४क्ष् (२९६९)
यथा विराटनगरे तव पूर्वपितामहाः ।
अज्ञातवासमुषितास्तावद्वक्ष्यामि तच्छृणु ॥ ४-१-४ (२८११९)
तथा स तान्वराँल्लब्ध्वा धर्मराजो युधिष्ठिरः ।

गत्वाऽऽश्रमं ब्राह्मणेभ्य आचख्यौ वृत्तमात्मनः ॥ ४-१-५ (२८१२०)
कथयित्वा च तत्सर्वं ब्राह्मणेभ्यो युधिष्ठिरः ।
अरणीसहितं भाण्डं ब्राह्मणाय न्यवेदयत् ॥ ४-१-६ (२८१२१)
ततो युधिष्ठिरो राजा कुन्तीपुत्रो दृढव्रतः ।
समाहूयानुजान्सर्वानिति होवाच भारत ॥ ४-१-७ (२८१२२)
द्वादशेमानि वर्षाणि राष्ट्राद्विप्रोषिता वयम् ।
छद्मना हृतराज्याश्च निस्वाश्च बहुशः कृताः ॥ ४-१-८ (२८१२३)
उषिताश्च वने वासं यथा द्वादश वत्सरान् ।
अज्ञातचर्यां वत्स्यामश्छन्ना वर्षं त्रयोदशम् ॥ ४-१-९ (२८१२४)
वैशंपायन उवाच। ४-१-१०क्ष् (२९७०)
धर्मेण तेऽभ्यनुज्ञाताः पाण्डवाः सत्यविक्रमाः ।
अज्ञातवासं वत्स्यन्तश्छन्ना वर्षं त्रयोदशम् ॥ ४-१-१० (२८१२५)
उपोपविश्य विद्वांसः स्नातकाः संशितव्रताः ।
ये तत्र ब्राह्मणा आसन्वनवाससहायिनः ।
ये च भक्ता वसन्ति स्म वनवासे तपस्विनः ॥ ४-१-११ (२८१२६)
तानब्रुवन्महात्मानो हृष्टाः प्राञ्जलयः स्थिताः ।
अभ्यनुज्ञापयिष्यन्तस्तान्प्रवासे धृतव्रताः ॥ ४-१-१२ (२८१२७)
विदितं भवतां सर्वं धार्तराष्ट्रैर्यथा वयम् ।
छद्मना हृतराज्याश्च निस्वाश्च बहुशः कृताः ॥ ४-१-१३ (२८१२८)
उषिताश्च वने वासं यथा द्वादशवत्सरान् ।
भवद्भिरेव सहिता वन्याहारा द्विजोत्तमाः ॥ ४-१-१४ (२८१२९)
अज्ञातवाससमयं शेषं वर्षं त्रयोदशम् ।
तद्वत्स्यामो वयं छन्नास्तदनुज्ञातुमर्हथ ॥ ४-१-१५ (२८१३०)
सुयोधनश्च दुष्टात्मा कर्णश्च सहसौबलः ।
जानन्तो विषमं कुर्युरस्मास्वत्यन्तवैरिणः ॥ ४-१-१६ (२८१३१)
युक्तचाराश्च यत्ताश्च दाये स्वस्य जनस्य च ।
दुरात्मनां हि कस्तेषां विश्वासं गन्तुमर्हति ॥ ४-१-१७ (२८१३२)
अपि नस्तद्भवेद्भूयो यद्वयं ब्राह्मणैः सह ।
समस्तेषु च राष्ट्रेषु स्वराज्यस्था भवेम हि ॥ ४-१-१८ (२८१३३)
इत्युक्त्वा दुःखशोकार्तः शुचिर्धर्मसुतस्तदा ।
संमूर्च्छितोऽभवद्राजा सास्रकण्ठो युधिष्ठिरः ॥ ४-१-१९ (२८१३४)
तमथाश्वासयन्सर्वे ब्राह्मणा भ्रातृभिः सह ॥ ४-१-२० (२८१३५)
प्रबुध्य दुःखमोहार्तो धौम्यं धर्मभृतांवरम् ।
प्रावैक्षत तदा राजा साश्रुकण्ठो युधिष्ठिरः ॥ ४-१-२१ (२८१३६)
अथ धौम्योऽब्रवीद्वाक्यं महार्थं नृपतिं तदा ।
आश्वासयंस्तं स नृपं भ्रातॄंश्च ब्राह्मणैः सह ॥ ४-१-२२ (२८१३७)

राजन्विद्वान्भवान्दान्तः सत्यसन्धो जितेन्द्रियः ।
नैवंविधाः प्रमुह्यन्ति धीराः कस्यांचिदापदि ॥ ४-१-२३ (२८१३८)
देवैरप्यापदः प्राप्ताश्छन्नैश्च बहुभिस्तदा ।
तत्रतत्र सपत्नानां निग्रहार्थं महात्मभिः ॥ ४-१-२४ (२८१३९)
दितिपुत्रैर्हृते राज्ये देवराजः सुदुःखितः ।
ब्रह्माणं तोषयिष्यंश्च ब्रह्मरूपं विधाय च ॥ ४-१-२५ (२८१४०)
इन्द्रेण निषधं प्राप्य गिरिप्रस्थाह्वये पुरे ।
छन्नेनोष्य कृतं कर्म द्विषतां बलनिग्रहे ॥ ४-१-२६ (२८१४१)
प्रसादाद्ब्रह्मणो राजन्दितेः पुत्रान्महाबलान् ।
निर्जित्य तरसा शत्रून्पुनर्लोकाञ्जुगोप च ॥ ४-१-२७ (२८१४२)
विष्णुनाऽश्मगिरिं प्राप्य तदा दित्यां निवत्स्यता ।
गर्भे वधार्थं दैत्यानामज्ञातेनोषितं चिरम् ॥ ४-१-२८ (२८१४३)
प्रोष्य वामनरूपेण च्छन्नेन ब्रह्मचारिणा ।
बलेर्यथा हृतं राज्यं विक्रमैस्तच्च ते श्रुतम् ॥ ४-१-२९ (२८१४४)
और्वेण वसता छन्नमूरौ ब्रह्मर्षिणा तदा ।
यत्कृतं तात लोकेषु तच्च सर्वं श्रुतं त्वया ॥ ४-१-३० (२८१४५)
प्रच्छन्नेनापि सर्वत्र हरिणा वृत्रनिग्रहे ।
वज्रं प्रविश्य शक्रस्य यत्कृतं तच्च ते श्रुतम् ॥ ४-१-३१ (२८१४६)
हुताशनेन यच्चापः प्रविश्य च्छन्नमूषितम् ।
विबुधानां हि यत्कर्म कृतं तच्चापि ते श्रुतम् ॥ ४-१-३२ (२८१४७)
यथा विवस्वता तात छन्नेनोत्तमतेजसा ।
निर्दग्धाः शत्रवः सर्वे वसता गवि वर्षशः ॥ ४-१-३३ (२८१४८)
विष्णुना वसता चात्र गृहे दशरथस्य वै ।
दशग्रीवो हतश्छन्नं संयुगे भीमकर्मणा ॥ ४-१-३४ (२८१४९)
एवमेते महात्मानः प्रच्छन्नास्तत्रतत्र हि ।
अजयञ्छात्रवान्मुख्यांस्तथा त्वमपि जेष्यसि ॥ ४-१-३५ (२८१५०)
वैशंपायन उवाच। ४-१-३६क्ष् (२९७१)
इति धौम्येन धर्मज्ञो वाक्यैः स परिहर्षितः ।
शान्तबुद्धिः पुनर्भूत्वा व्यष्टम्भत युधिष्ठिरः ॥ ४-१-३६ (२८१५१)
अथाब्रवीन्महाबाहुर्भीमसेनो महाबलः ।
राजानं बलिनां श्रेष्ठो गिरा संपरिहर्षयन् ॥ ४-१-३७ (२८१५२)
अवेक्षय महाराज तव गाण्डीवधन्वना ।
धर्मार्थपरया बुद्ध्या न किंचित्साहसं कृतम् ॥ ४-१-३८ (२८१५३)
सहदेवो मया नित्यं नकुलश्च निवारितौ ।
शक्तौ विध्वंसने तेषां शत्रुघ्नौ भीमविक्रमौ ॥ ४-१-३९ (२८१५४)
न वयं वर्त्म हास्यामो यस्मिन्योक्ष्यति नो भवान् ।

तद्विधत्तां भवान्सर्वं क्षिप्रं जेष्यामहे परान् ॥ ४-१-४० (२८१५५)
इत्युक्तो भीमसेनेन धर्मराजो युधिष्ठिरः ।
सुखोपविष्टो विद्वद्भिस्तापसैः संशितव्रतैः ॥ ४-१-४१ (२८१५६)
ये तद्भक्त्याऽभवंस्तस्मिन्वनवासे तपस्विनः ।
तानब्रवीन्महाप्राज्ञः शिष्टान्राजा कृताञ्जलिः ।
अभ्यनुज्ञापयिष्यन्वै तस्मिन्वासे धृतव्रतः ॥ ४-१-४२ (२८१५७)
विदितं भवतां सर्वे धार्तराष्ट्रैर्यथा वयम् ।
संमन्त्राहृतराज्याश्च निस्स्वाश्च बहुशः कृताः ।
उषिताः स्मो वने कृच्छ्रं तथा वर्षाणि द्वादश ॥ ४-१-४३ (२८१५८)
अज्ञातचर्यासमयं शेषं वर्षं त्रयोदशम् ।
तद्वत्स्यामः क्वचिच्छन्नास्तदनुज्ञातुमर्हथ ॥ ४-१-४४ (२८१५९)
इत्युक्ता धर्मराजेन ब्राह्मणाः परमाशिषः ।
प्रयुज्यापृच्छ्य भरतान्यथास्वं प्रययुर्गृहान् ॥ ४-१-४५ (२८१६०)
सर्वे वेदविदो मुख्या यतयो मुनयस्तदा ।
आशीरुक्त्वा यथान्यायं पुनर्दर्शनकाङ्क्षिणः ॥ ४-१-४६ (२८१६१)
ते तु भृत्याश्च दूताश्च शिल्पिनः परिचारकाः ।
अनुज्ञाप्य यथान्यायं पुनर्दर्शनकाङ्क्षिणः ॥ ४-१-४७ (२८१६२)
सह धौम्येन विद्वांसस्तथा ते पञ्च पाण्डवाः ।
उत्थाय प्रययुर्वीराः कृष्णामादाय भारत ॥ ४-१-४८ (२८१६३)
क्रोशमात्रमतिक्रम्य तस्माद्वासान्निमित्ततः ।
श्वोभूते मनुजव्याघ्राश्छन्नवासार्थमुद्यताः ॥ ४-१-४९ (२८१६४)
पृथक् शास्त्रविदः सर्वे सर्वे मन्त्रविशारदाः ।
सन्धिविग्रहतत्वज्ञा मन्त्राय समुपाविशन् ॥ ॥ ४-१-५० (२८१६५)

इति श्रीमन्महाभारते विराटपर्वणि पाण्डवप्रवेशपर्वणि
प्रथमोऽध्यायः ॥ १ ॥
Mahabharata - Virata Parva - Chapter Footnotes

४-१-१अयमध्यायो झो पुस्तके वनपर्वान्तिमाध्यायतया वर्तते ।विराटो ।

---

विरतपर्व-अध्यय००२
॥ श्रीः ॥
४.२. अध्यायः २

Mahabharata - Virata Parva - Chapter Topics
युधिष्ठिरेण भ्रातृभिः सह मन्त्रणेन विराटनगरे निवासनिर्धारणम्
॥ १ ॥

तथा स्वस्य यतिवेषपरिग्रहेण विराटसभास्तारीभवनकथनम् ॥ २ ॥

Mahabharata - Virata Parva - Chapter Text

४-२-० (२८१६६)
वैशंपायन उवाच । ४-२-०क्ष् (२९७२)
निवृत्तवनवासास्ते सत्यसन्धा मनस्विनः ।
अकुर्वत पुनर्मन्त्रं सह धौम्येन पाण्डवाः ॥ १ ॥ ४-२-१ (२८१६७)
अथाब्रवीद्धर्मराजः कुन्तीपुत्रो युधिष्ठिरः ।
भ्रातॄन्कृष्णां च संप्रेक्ष्य धौम्यं च कुरुनन्दनः ॥ २
॥ ४-२-२ (२८१६८)
द्वादशेमानि वर्षाणि राज्याद्विप्रोषिता वयम् ।
त्रयोदशोऽयं संप्राप्तः कृच्छ्रात्परमदुर्वसः ।
स साधु कौन्तेय इतो वासमर्जुन रोचय ॥ ३ ॥ ४-२-३ (२८१६९)
त्रयोदशमिदं प्राप्तं क्वनु वत्स्यामहेऽर्जुन ।
अबुद्धा धार्तराष्ट्रैश्च समग्राः सह कृष्णया ॥ ४ ॥ ४-२-४ (२८१७०)
अर्जुन उवाच। ४-२-५क्ष् (२९७३)
तस्यैव वरदानेन धर्मस्य मनुजाधिप ।
अज्ञाता विचरिष्यामो नराणां भरतर्षभ ॥ ५ ॥ ४-२-५ (२८१७१)
यानि राष्ट्राणि वासाय कीर्तयिष्यामि कानिचित् ।
रमणीयानि गुप्तानि तेषां किंचित्तु रोचय ॥ ६ ॥ ४-२-६ (२८१७२)
रम्या जनपदाः सन्ति बहवस्त्वभितः कुरून् ।
पाञ्चालाश्चैव मत्स्याश्च साल्ववैदेहबाह्लिकाः ।
दशार्णाः शूरसेनाश्च कलिङ्गा मागधा अपि ॥ ७ ॥ ४-२-७ (२८१७३)
विराटनगरं चापि श्रूयते शत्रुसूदन ।
रमणीयं जनाकीर्णं सुभिक्षं स्फीतमेव च ॥ ८ ॥ ४-२-८ (२८१७४)
नानाराष्ट्राणि चान्यानि श्रूयन्ते सुबहूनि च ।
यत्र ते रोचते राजंस्तत्र गच्छामहे वयम् ॥ ९ ॥ ४-२-९ (२८१७५)
कतमस्मिञ्जनपदे महाराज निवत्स्यसि ।
मा विषादे मनः कार्यं राज्यभ्रंश इति क्वचित् ॥ १० ॥ ४-२-१० (२८१७६)
युधिष्ठिर उवाच। ४-२-११क्ष् (२९७४)
एवमेतन्महाबाहो यथा स भगवान्प्रभुः ।
अब्रवीत्सर्वभूतेशस्तथैतन्न तदन्यथा ॥ ११ ॥ ४-२-११ (२८१७७)
अवश्यं त्वेव वासार्थं रमणीयं शिवं सुखम् ।
संमन्त्र्य सहितैः सर्वैर्द्रव्यमकुतोऽभयम् ॥ १२ ॥ ४-२-१२ (२८१७८)
मात्स्यो विराटो बलवानभिरक्तोथ पाण्डवान् ।

धर्मशीलो वदान्यश्च वृद्धः सत्स्वपि संमतः ॥ १३ ॥ ४-२-१३ (२८१७९)
गुणवाँल्लोकविख्यातो दृढभक्तिर्जितेन्द्रियः ।
तत्र मे रोचते पार्थ मत्स्यराजान्तिकेऽनघ ॥ १४ ॥ ४-२-१४ (२८१८०)
विराटनगरे तात मासान्द्वादशसंमितान् ।
कुर्वन्तस्तस्य कर्माणि वसामो यदि रोचते ॥ १५ ॥ ४-२-१५ (२८१८१)
यानियानि च कर्माणि तस्य शक्ष्यामहे वयम् ।
कर्तुं यो यत्स तत्कर्म ब्रवीतु कुरुनन्दन ॥ १६ ॥ ४-२-१६ (२८१८२)
अर्जुन उवाच ॥ ४-२-१६क्ष् (२९७५)
नरदेव कथं कर्म तस्य राष्ट्रे करिष्यसि ।
मनुजेन्द्र विराटस्य रंस्यसे केन कर्मणा ॥ १७ ॥ ४-२-१७ (२८१८३)
अक्लिष्टवेषधारी च धार्मिको ह्यनसूयकः ।
न तवाभ्युचितं कर्म नृशंसं नापि कैतवम् ॥ १८ ॥ ४-२-१८ (२८१८४)
सत्यवागसि याज्ञीको लोभक्रोधविवर्जितः ।
मृदुर्वदान्यो ह्रीमांश्च धार्मिकः सत्यविक्रमः ॥ १९ ॥ ४-२-१९ (२८१८५)
स राजंस्तपसा क्लिष्टः कथं तस्य करिष्यसि ।
न दुःखमुचितं किंचिद्राजन्पापमतेर्यथा ।
स इमामापदं प्राप्य कथं घोरां तरिष्यसि ॥ २० ॥  ४-२-२० (२८१८६)
वैशंपायन उवाच। ४-२-२१क्ष् (२९७६)
अर्जुनेनैवमुक्तस्तु प्रत्युवाच युधिष्ठिरः ।
शृणु त्वं यत्करिष्यामि कर्म वै कुरुनन्दन ॥ २१ ॥ ४-२-२१ (२८१८७)
विराटं समनुप्राप्य राजानं मात्स्यनन्दनम् ।
सभास्तारो भविष्यामि विराटस्येति मे मतिः ॥ २२ ॥ ४-२-२२ (२८१८८)
कङ्को नाम ब्रुवाणोऽहं मताक्षः साधुदेविता ।
वैडूर्यान्काञ्चनान्दानान्स्फाटिकान्राजतानपि ॥ २३ ॥ ४-२-२३ (२८१८९)
कृष्णाक्षाँल्लोहिताक्षांश्च निवप्स्यामि मनोरमान् ।
अरिष्टान्राजगोलिङ्गान्दर्शनीयान्सुवर्चसः ॥ २४ ॥ ४-२-२४ (२८१९०)
लोहिताश्वाश्मगर्भांश्च सन्ति तात धनानि मे ।
दर्शनीयाः सभानन्दाः कुशलैः साधुनिष्ठिताः ॥ २५ ॥ ४-२-२५ (२८१९१)
अप्येतान्पाणिना स्पृष्ट्वा संप्रहृष्यन्ति मानवाः ॥ २६ ॥  ४-२-२६ (२८१९२)
तान्विकीर्य समे देशे रमणीये विपांसुले ।
देविष्यामि यथाकामं स विहारो भविष्यति ॥ २७ ॥ ४-२-२७ (२८१९३)
कङ्को नाम्ना परिव्राट् च विराटस्य सभासदः ।
ज्योतिषे शकुनज्ञाने निमित्ते चाक्षकौशले ।
ब्राह्मे वेदे मयाऽधीते वेदाङ्गेषु च सर्वशः ॥ २८ ॥  ४-२-२८ (२८१९४)
धर्मकामार्थमोक्षेषु नीतिशास्त्रेषु पारगः ।
पृष्टोऽहं कथयिष्यामि राज्ञः प्रियतमं वचः ॥ २९ ॥ ४-२-२९ (२८१९५)

आसं युधिष्ठिरस्याहं पुरा प्राणसमः सखा ।
इति वक्ष्यामि राजानं यदि मामनुयोक्ष्यते ॥ ३० ॥ ४-२-३० (२८१९६)
विराटनगरे छन्न एवं युक्तः सदा वसे ।
इत्येवं मे प्रतिज्ञातं विचरिष्याम्यहं यथा ॥ ३१ ॥ ४-२-३१ (२८१९७)

इति श्रीमन्महाभारते विराटपर्वणि पाण्डवप्रवेशपर्वणि
द्वितीयोऽध्यायः ॥ २ ॥

---

विरतपर्व-अध्यय००३
॥ श्रीः ॥
४.३. अध्यायः ३

Mahabharata - Virata Parva - Chapter Topics
भीमेन युधिष्ठिरंप्रति स्वस्य सूदवेषपरिग्रहेण
विराटभवने निवासकथनम् ॥ अर्जुनेन युधिष्ठिरंप्रति स्वेन
नपुंसकवेषपरिग्रहेण राजकन्यानाटनादिकथनम् ॥
Mahabharata - Virata Parva - Chapter Text

४-३-० (२८१९८)
वैशंपायन उवाच। ४-३-०क्ष् (२९७७)
एवं निर्दिश्य चात्मानं निश्वसन्नुष्णमार्तिजम् ।
विमुञ्चन्नश्रु नेत्राभ्यां भीमसेनमुवाच ह ॥ ४-३-१ (२८१९९)
भीमसेन कथं कर्म मात्स्यराष्ट्रे करिष्यसि ।
हत्वा क्रोधवशांस्तत्र पर्वते गन्धमादने ॥ ४-३-२ (२८२००)
यक्षान्क्रोधाभिताम्राक्षान्राक्षसांश्चापि पौरुषात् ।
प्रादाः पाञ्चालकन्यायै पद्मानि सुबहून्यपि ॥ ४-३-३ (२८२०१)
बकं राक्षसराजानं भीषणं पुरुषादकम् ।
जघ्निवानसि कौन्तेय ब्राह्मणार्थमरिन्दम ।
क्षेमा चाभयसंवीता सैकचक्रा त्वया कृता ॥ ४-३-४ (२८२०२)
हिडिम्बं च महावीर्यं किर्मीरं चैव राक्षसम् ।
त्वया हत्वा महाबाहो वनं निष्कण्टकं कृतम् ॥ ४-३-५ (२८२०३)
आपदं चापि संप्राप्ता द्रौपदी चारुहासिनी ।
जटासुरवधं कृत्वा वयं च परिमोक्षिताः ॥ ४-३-६ (२८२०४)
मत्स्यराजांन्तिके तात वीर्यपूर्णोऽत्यमर्षणः ।
वृकोदर विराटस्य बलीयान्दुर्बलीयसः ।
समीपे नगरे तस्य वत्स्यसे केन कर्मणा ॥ ४-३-७ (२८२०५)

भीम उवाच। ४-३-८क्ष् (२९७८)
सूदोऽहं वललो नाम्ना सूपकारो नराधिप ।
उपस्थास्यामि राजानं विराटमिति रोचये ॥ ४-३-८ (२८२०६)
रसान्नानाविधांश्चापि स्वादूंश्च मधुरांस्तथा ।
सूपांश्चापि करिष्यामि कुशलोस्मि महानसे ॥ ४-३-९ (२८२०७)
कृतपूर्वाणि यान्यस्य व्यञ्जनानि सुशिक्षितैः ।
तान्यप्यभिभविष्यामि प्रीतिं संजनयन्नहम् ॥ ४-३-१० (२८२०८)
पूर्वमप्राशितांस्तेन कर्ता रसगुणान्वितान् ।
स्वादु व्यञ्जनमास्वाद्य मात्स्यः प्रीतो भविष्यति ॥ ४-३-११ (२८२०९)
आहरिष्यामि दारूणां पाटितानां शतंशतम् ।
राजा कर्माणि मे दृष्ट्वा न मां परिभविष्यति ॥ ४-३-१२ (२८२१०)
ये च तस्य महामल्लाः समरेष्वपराजिताः ।
कृतप्रतापा बहुशो राज्ञः प्रत्यायिता बले ॥ ४-३-१३ (२८२११)
रङ्गोपजीविनः सर्वे परेषां च भयावहाः ।
तानहं निहनिष्यामि रतिं राज्ञः प्रवर्तयन् ॥ ४-३-१४ (२८२१२)
न च तान्युध्यमानोऽहं नयिष्ये यमसादनम् ।
तथा तान्निहनिष्यामि जीविष्यन्ति यथाऽऽतुराः ॥ ४-३-१५ (२८२१३)
वृषो वा महिषो वापि नागो वा षाष्टिहायनः ।
सिंहो व्याघ्रो ग्रहीतव्यो भविष्यति न संशयः ॥ ४-३-१६ (२८२१४)
तान्सर्वान्दुर्ग्रहानन्यैराशीविषविषोपमान् ।
बलादहं ग्रहीष्यामि मत्स्यराजस्य पश्यतः ॥ ४-३-१७ (२८२१५)
आरालिका वा सूदा वा येऽस्य युक्ता महानसे ।
तानहं प्रीणयिष्यामिं मनुष्यान्स्तेन कर्मणा ॥ ४-३-१८ (२८२१६)
आरालिको गोविकर्ता सूपकर्ता नियोधकः ।
आसं युधिष्ठिरस्याहमिति वक्ष्यामि मानवान् ॥ ४-३-१९ (२८२१७)
आत्मानमात्मना रक्षंश्चरिष्यामि विशांपते ।
इत्येवं च प्रतिज्ञातं विचरिष्याम्यहं यथा ।
विराटनगरे च्छन्नो विराटस्य समीपतः ॥ ४-३-२० (२८२१८)
युधिष्ठिर उवाच। ४-३-२१क्ष् (२९७९)
अग्निर्ब्राह्मणरूपेण प्रच्छन्नोऽन्नमयाचत ।
महाशनं ब्राह्मणं मां प्रमुञ्चार्जुन खाण्डवे ॥ ४-३-२१ (२८२१९)
संशुश्रुवे च धर्मात्मा यस्तमर्थं चकार ह ।
तस्मै ब्राह्मणरूपाय हुताशाय महायशाः ।
विजित्यैकरथेनेन्द्रं हत्वा पन्नगराक्षसान् ॥ ४-३-२२ (२८२२०)
यस्तु देवान्मनुष्यांश्च सर्वानेकरथोऽजयत् ।
स भीमधन्वा श्वेताश्वः पाण्डवः किं करिष्यति ॥ ४-३-२३ (२८२२१)

आशीविषसमस्पर्शो नागानामिव वासुकिः ।
दृष्टीविष इवाहीनामग्निस्तेजस्विनामिव ॥ ४-३-२४ (२८२२२)
समुद्र इव सिन्धूनां शैलानां हिमवानिव ।
महेन्द्र इव देवानां दानवानां बलिर्यथा ॥ ४-३-२५ (२८२२३)
सुप्रतीको गजेन्द्राणां युग्यानां तुरगो यथा ।
कुबेर इव यक्षाणां मृगाणां केसरी यथा ॥ ४-३-२६ (२८२२४)
राक्षसानां दशग्रीवो दैत्यानामिव शम्बरः ।
रुद्राणामिव कापाली विष्णुर्बलवतामिव ॥ ४-३-२७ (२८२२५)
रोषामर्षसमायुक्तो भुजङ्गानां च तक्षकः ।
वायुवेगबलोद्धूतो गरुडः पततामिव ॥ ४-३-२८ (२८२२६)
तपतामिव चादित्यः प्रजानां ब्राह्मणो यथा ।
ह्रदानामिव पातालं पर्जन्यो नर्दतामिव ॥ ४-३-२९ (२८२२७)
आयुधानां वरो वज्रः ककुद्मांश्च गवां वरः ।
धृतराष्ट्रश्च नागानां हस्तिष्वैरावतो यथा ॥ ४-३-३० (२८२२८)
पुत्रः प्रियाणामधिको भार्या च सुहृदां वरा ।
गिरीणां प्रवरो मेरुर्देवानां मधुसूदनः ।
ग्रहाणां प्रवरश्चन्द्रः सरसां मानसो यथा ॥ ४-३-३१ (२८२२९)
यथैतानि विशिष्टानि स्वस्यां जात्यां वृकोदर ।
एवं युवा गुडाकेशः श्रेष्ठः सर्वधनुष्मताम् ॥ ४-३-३२ (२८२३०)
सोयमिन्द्रादनवमो वासुदेवाच्च भारत ।
उषित्वा पञ्च वर्षाणि सहस्राक्षस्य वेश्मनि ।
ब्रह्मचारी व्रते युक्तः सर्वशस्त्रभृतांवरः ॥ ४-३-३३ (२८२३१)
अवाप चास्त्रमस्त्रज्ञः सर्वज्ञः सर्वसंमतः ।
क्षिप्रं चाणु विचित्रं च ध्रुवं च वदतां वरः ॥ ४-३-३४ (२८२३२)
अनुज्ञातः सुरेन्द्रेण पुनः प्रत्यागतो महीम् ।
धार्तराष्ट्रविनाशाय पाण्डवानां जयाय च ॥ ४-३-३५ (२८२३३)
यं मन्ये द्वादशं रुद्रमादित्यानां त्रयोदशम् ।
वसूनां नवमं मन्ये गिरीणामष्टमः स्मृतः ॥ ४-३-३६ (२८२३४)
यस्य दीर्घौ समौ बाहू ज्याघातेन किणीकृतौ ।
दक्षिणश्चैव सव्यश्च बाहू अनडुहो यथा। ४-३-३७ (२८२३५)
तलाङ्गुलित्राभ्युचितौ नागराजकरोपमौ ।
पीनौ परिघसङ्काशौ मृदुताम्रतलौ शुभौ ॥ ४-३-३८ (२८२३६)
श्यामो युवा गुडाकेशो दर्शनीयश्च पाण्डवः ।
गाण्डीवधन्वा श्वेताश्वः किरीटी वानरध्वजः ॥ ४-३-३९ (२८२३७)
किंरूपधारी किंकर्मा किंचेष्टः किंपरायणः ।
बीभत्सुर्भीमधन्वा च किं करिष्यति चार्जुनः ।

कुन्तीपुत्रो विराटस्य रमते केन कर्मणा ॥ ४-३-४० (२८२३८)
अर्जुन उवाच। ४-३-४१क्ष् (२९८०)
इमौ किणीकृतौ बाहू ज्याघाततलपीडनात् ।
नित्यं कञ्चुकसंछन्नौ नान्यथा गोप्तुमुत्सहे ॥ ४-३-४१ (२८२३९)
किं तु कार्यवशादेतदाचरिष्यामि कुत्सितम् ॥ ४-३-४२ (२८२४०)
बाहू मे भरतश्रेष्ठ महालाञ्छनलक्षितौ ।
ज्याघातेन महान्तौ मे गूहितुं नान्यथोत्सहे ॥ ४-३-४३ (२८२४१)
उभौ कम्बू प्रतीमुच्य कुण्डले परिपातुके ।
वेणीकृतशिरा भूत्वा भविष्यामि बृहन्नला ॥ ४-३-४४ (२८२४२)
पठन्नाख्यायिकां नाम स्त्रीभावेन पुनः पुनः ।
प्रजानां समुदाचारं बहुनर्मकृतं वदन् ।
रमयिष्यामि राजानमन्यं चान्तःपुरे जनम् ॥ ४-३-४५ (२८२४३)
नृत्तं गीतं च वादित्रं दिव्यं च विविधं तथा ।
शिक्षयिष्याम्यहं राजन्विराटनगरे स्त्रियः ॥ ४-३-४६ (२८२४४)
स्त्रीभावसमुदाचारान्नृत्तगीतकथाश्रयैः ।
छादयिष्यामि राजेन्द्र माययाऽऽत्मानमात्मना ॥ ४-३-४७ (२८२४५)
युधिष्ठिरस्य गेहेऽस्मिन्द्रौपद्याः परिचारिका ।
उषिताऽस्मीति वक्ष्यामि धर्मराजस्य संमता ॥ ४-३-४८ (२८२४६)
उर्वश्याश्चापि शापेन प्राप्तोस्मि नृप षण्डताम् ।
शक्रप्रसादान्मुक्तोऽहं वर्षादूर्ध्वं त्रयोदशात् ।
इत्येतन्मे प्रतिज्ञातं विचरिष्याम्यहं यथा ॥ ४-३-४९ (२८२४७)
एतेन विधिना छन्नः कृतकेन यथा नलः ।
विहरिष्यामि राजेन्द्र विराटस्य पुरे सुखम् ॥ ४-३-५० (२८२४८)
युधिष्ठिर उवाच। ४-३-५१क्ष् (२९८१)
वासुदेवसमो लोके यशसा विक्रमेण च ।
सोयं राज्ये विराटस्य भवने भरतर्षभः ॥ ४-३-५१ (२८२४९)
मेरुः प्रच्छादित इव वसन्वज्रोण मुष्टिना ।
आख्याता षण्डकोस्मीति प्रतिज्ञातं हि पातकं ॥ ॥ ४-३-५२ (२८२५०)

इति श्रीमन्महाभारते विराटपर्वणि पाण्डवप्रवेशपर्वणि तृतीयोऽध्यायः ॥

---

विरतपर्व-अध्यय००४
॥ श्रीः ॥
४.४. अध्यायः ४

युधिष्ठिरंप्रति नकुलेन विराटनगरे अश्वपालकतया स्वस्य निवासकथनम् ॥१ ॥
सहदेवेन गोपालकतया स्वस्य निवासकथनम् ॥ २ ॥
द्रौपद्या सैरन्ध्रीभावेन स्वस्य निवासकथनम् ॥ ३ ॥

Mahabharata - Virata Parva - Chapter Text

४-४-० (२८२५१)
वैशंपायन उवाच । ४-४-०क्ष् (२९८२)
इत्येवमुक्त्वा पुरुषप्रवीरस्तथार्जुनो धर्मभृतां वरिष्ठः ।
वाक्यं तथासौ ॥॥ भूयो नृपोऽपरं भ्रातर ॥बभाषे ४-४-१ (२८२५२)
किंकर्मा किंसमाचारो नकुलोयं भविष्यति ।
सुकुमारश्च शूरश्च दर्शनीयः सुखोचितः ॥ ४-४-२ (२८२५३)
अदुःखार्हश्च बालश्च लालितश्चापि नित्यशः ।
सोयमार्तश्च शान्तश्च किं नु रोचयतात्त्विह ॥ ४-४-३ (२८२५४)
किं त्वं नकुल कुर्वाणस्तस्य तात चरिष्यसि ।
कर्म तत्त्वं समाचक्ष्व राज्ये तस्य महीपतेः ॥ ४-४-४ (२८२५५)
नकुल उवाच। ४-४-५क्ष् (२९८३)
अश्वाध्यक्षो भविष्यामि विराटस्येति मे मतिः ।
दामग्रन्थीति नाम्नाऽहं कर्मैतत्सुप्रियं मम ॥ ४-४-५ (२८२५६)
दामग्नन्थी परिज्ञातः कुशलो दामकर्मणि ।
न मां परिभविष्यन्ति जना जात्विह कर्हिचित् ॥ ४-४-६ (२८२५७)
कुशलोत्स्म्यश्वशिक्षायां तथैवाश्वचिकित्सने ।
प्रियाश्च सततं मेऽश्वाः कुरुराजा यथा तव ॥ ४-४-७ (२८२५८)
न मां परिभविष्यन्ति किशोरा वडवास्तथा ।
न दुष्टाश्च भविष्यन्ति पृष्ठे धुरि च मद्गताः ॥ ४-४-८ (२८२५९)
द्रक्ष्यन्ति ये च मां केचिद्विराटनगरे जनाः ।
तेभ्य एवं प्रवक्ष्यामि विहरिष्याम्यहं यथा ॥ ४-४-९ (२८२६०)
पाण्डवेन ह्यहं तात अश्वेष्वधिकृतः पुरा ।
इति तस्य पुरे छन्नश्चरिष्यामि महीपते ।
इत्येतद्वः प्रतिज्ञातं विहरिष्याम्यहं यथा ॥ ४-४-१० (२८२६१)
वैशंपायन उवाच। ४-४-११क्ष् (२९८४)
नकुलेनैवमुक्तस्तु धर्मराजोऽब्रवीद्वचः ।
बृहस्पतिसमो बुद्ध्या नयेनोशनसा समः ॥ ४-४-११ (२८२६२)
मन्त्रैर्नानाविधैर्नीतः पथ्येषु परिनिष्ठितः ।
सुप्रणीतः सुमार्गस्थो राजतन्त्रमवाप यः ॥ ४-४-१२ (२८२६३)

न चास्य स्खलितं किंचिद्ददृशुस्तद्विदो जनाः ।
सुनीतिज्ञश्च शूरश्च सर्वमन्त्रविशारदः ॥ ४-४-१३ (२८२६४)
अधिको मातुरस्माकं कुन्त्याः प्रियतमः सदा ।
सहदेव कथं कर्म तस्य राज्ञः करिष्यसि ।
किं वा त्वं तात कुर्वाणः प्रच्छन्नो विचरिष्यसि ॥ ४-४-१४ (२८२६५)
सहदेव उवाच। ४-४-१५क्ष् (२९८५)
गोसङ्ख्याता भविष्यामि विराटस्येति रोचये ।
प्रतिभोक्ता च दोग्धा च सङ्ख्यानकुशलो गवाम् ।
तन्त्रीपालेति मे नाम स्वयं प्रोक्तं भविष्यति ॥ ४-४-१५ (२८२६६)
अयोगा बहुलाः पुष्टाः क्षीरवत्यो बहुप्रजाः ।
निष्पन्नसत्त्वाः सुभृता ह्यपेतज्वरकिल्विषाः ॥ ४-४-१६ (२८२६७)
दृष्टचोरभया नित्यं व्याधिव्याघ्रविवर्जिताः ।
गावः सुसहिता राजन्निरुद्विग्ना निरामयः ॥ ४-४-१७ (२८२६८)
भविष्यन्ति मया गुप्ता विराटनगरे तदा ।
निपुणत्वं चरिष्यामि प्रीतिरत्र परा हि मे ॥ ४-४-१८ (२८२६९)
अहं हि भवता गोषु प्रहितः सतत पुरा ।
तत्र मे कौशलं सर्वमनुबद्धं विशांपते ॥ ४-४-१९ (२८२७०)
लक्षणं चरितं चैव गवां यच्चापि मङ्गलम् ।
सत्सर्वं मे सुविदितमन्यच्चापि विशांपते ॥ ४-४-२० (२८२७१)
वृषभानपि जानामि राजन्पूजितलक्षणान् ।
येषां मूत्रमुपाघ्राय अपि वन्ध्या प्रसूयते ॥ ४-४-२१ (२८२७२)
सोऽहमेवं चरिष्यामि प्रीतिरत्र परा हि मे ।
विराटनगरे गूढो रंस्येऽहं तेन कर्मणा ॥ ४-४-२२ (२८२७३)
तोषयिष्ये च राजानां मा भूच्चिन्ता तवानघ ।
न च मां वेत्स्यति परस्तत्ते रोचतु पार्थिव ।
इत्येतद्वः प्रतिज्ञातं विचरिष्याम्यहं यथा ॥ ४-४-२३ (२८२७४)
युधिष्ठिर उवाच। ४-४-२४क्ष् (२९८६)
केनात्र कर्मणा कृष्णा द्रौपदी विचरिष्यति ।
न हि किंचिद्विजानाति कर्म कर्तुं यथा स्त्रियः ॥ ४-४-२४ (२८२७५)
माल्यागन्धानलङ्कारान्वस्त्राणि विविधानि च ।
एतान्येवाभिजानाति यथाजाता च भामिनी ॥ ४-४-२५ (२८२७६)
पतिव्रता महाभागा कथं नु विचरिष्यति ।
इयं तु नः प्रिया भार्या प्राणेभ्योपि गरीयसी ॥ ४-४-२६ (२८२७७)
मातेव परिपाल्या च पूज्या ज्येष्ठा स्वसेव च ।
सुकुमारी सुशीला च राजपुत्री यशस्विनी ।
कथं वत्स्यति कल्याणी विराटनगरे सती ॥ ४-४-२७ (२८२७८)

द्रौपद्युवाच। ४-४-२८क्ष् (२९८७)
अहं वत्स्यामि राजेन्द्र निर्वृतो भव पार्थिव ।
यथा ते मत्कृते शोको न भवेन्नृपते शृणु ।
यथा तु मां न जानन्ति यत्करिष्याम्यहं प्रभो ॥ ४-४-२८ (२८२७९)
छन्ना वत्स्याम्यहं यन्मां न विजानन्ति केचन ।
वृत्तं तच्च समाख्यास्ये शर्म तेस्तु विशांपते ॥ ४-४-२९ (२८२८०)
सैरन्ध्रीजातिसंपन्ना नाम्नाऽहं व्रतचारिणी ।
भविष्यामि महाराज विराटस्येति मे मतिः ॥ ४-४-३० (२८२८१)
सैरन्ध्र्यो रक्षिताः स्त्रीणां भुजिष्याः सन्ति भारत ।
एकपत्न्यः स्त्रियश्चैता इति लोकस्य निश्चयः ॥ ४-४-३१ (२८२८२)
साऽहं ब्रुवाणा सैरन्ध्री कुशला केशकर्मणि ।
प्रमदाहरिका लोके पुरुषाणां प्रवासिनाम् ॥ ४-४-३२ (२८२८३)
युधिष्ठिरस्य वै गेहे द्रौपद्याः परिचारिका ।
उषिताऽस्मीति वक्ष्यामि पृष्टा राज्ञा च भारत ।
आत्मगुप्ता चरिष्यामि यन्मां त्वं परिपृच्छसि ॥ ४-४-३३ (२८२८४)
नाहं तत्र भविष्यामि दुर्भरा राजवेश्मनि ।
कृत्वा चैव सदा रक्षां व्रतेनैव नराधिप ॥ ४-४-३४ (२८२८५)
सुदेष्णां प्रत्युपस्थास्ये राजभार्यां यशस्विनीम् ।
सा रक्षिष्यति मां प्राप्तां मा ते भूद्दुःखमीदृशम् ॥ ४-४-३५ (२८२८६)
अथ गुप्ता चरिष्यामि युष्माभिस्तत्र तस्थुषी ।
इत्येवं वः प्रतिज्ञातं विहरिष्याम्यहं यथा ॥ ४-४-३६ (२८२८७)
युधिष्ठिर उवाच। ४-४-३७क्ष् (२९८८)
यथा नो दुर्हृदः पापा भवन्ति सुखिनः पुनः ।
कुर्यास्तथा त्वं कल्याणि लक्षयेयुर्न ते जनाः ॥ ४-४-३७ (२८२८८)
४-४-३८ (२८२८९)
कल्याणं भाषसे कृष्णे यथा कौलेयकी तथा ।
न पापमभिजानासि साध्वी साधुव्रते स्थिता ॥

---

विरतपर्व-अध्यय००५
॥ श्रीः ॥
४.५. अध्यायः ५

Mahabharata - Virata Parva - Chapter Topics
पाण्डवैरिन्द्रसेनादीन्प्रति द्वारकादिगमनचोदना ॥ १ ॥
पाण्डवान्प्रति धौम्येन राजगृहवासप्रकारानुशासनम् ॥ २ ॥

Mahabharata - Virata Parva - Chapter Text

४-५-० (२८२९०)
युधिष्टिर उवाच। ४-५-०क्ष् (२९८९)
कर्माण्युक्तानि युष्माभिर्यानि तानि चरिष्यथ ।
मम चापि यथा बुद्धिरुचिता हि विनिश्चयात् ॥ ४-५-१ (२८२९१)
पुरोहितोऽयमस्माकमग्निहोत्राणि रक्षतु ।
सूतपौरोगवैः सार्धं द्रुपदस्य निवेशने ॥ ४-५-२ (२८२९२)
इन्द्रसेनमुखाश्चेमे रथानादाय केवलान् ।
यान्तु द्वारवतीं शीघ्रमिति मे वर्तते मतिः ॥ ४-५-३ (२८२९३)
इमाश्च नार्यो द्रौपद्याः सर्वाश्च परिचारिका ।
पाञ्चालानेव गच्छन्तु सूतपौरोगवैः सह ॥ ४-५-४ (२८२९४)
सर्वैरपि च वक्तव्यं न प्राज्ञायन्त पाण्डवाः ।
अर्धरात्रे महात्मानो भिक्षादान्ब्राह्मणानपि ।
गता ह्यस्मानपाहाय सर्वे द्वैतवनादिति ॥ ४-५-५ (२८२९५)
वैशंपायन उवाच। ४-५-६क्ष् (२९९०)
एवं तेऽन्योन्यमामन्त्र्य कर्माण्युक्त्वा पृथक्पृथक् ।
धौम्यमामन्त्रयामासुः स च तान्मन्त्रमब्रवीत् ॥ ४-५-६ (२८२९६)
तानन्वशात्स धर्मात्मा सर्वधर्मविशेषवित् ।
धौम्यः पुरोहितो राजन्पाण्डवान्पुरुषर्षभान् ॥ ४-५-७ (२८२९७)
धौम्य उवाच। ४-५-८क्ष् (२९९१)
विदितं वै यथा सर्वं लोके वृत्तमिदं नृप ।
विदिते चापि वक्तव्यं सुहृद्भिरनुरागतः ॥ ४-५-८ (२८२९८)
अतोऽहमभिवक्ष्यामि हेतुमात्रं निबोधत ।
हन्तेमां राजवसतिं राजपुत्रा ब्रवीमि वः ।
यथा राजकुलं प्राप्य चरन्प्रोष्य न रिष्यति ॥ ४-५-९ (२८२९९)
दुर्वासमेव कौरव्य जातेन कुरुवेश्मनि ।
अमानितेन मानार्हं गूढेन परिवत्सरम् ॥ ४-५-१० (२८३००)
दिष्टद्वारो लभेद्द्रष्टुं राजस्वेषु न विश्वसेत् ।
न चानुशिष्याद्राजानमपृच्छन्तं कदाचन ॥ ४-५-११ (२८३०१)
तूष्णीं त्वेनमुपासीत काले समभिपूजयेत् ॥ ४-५-१२ (२८३०२)
असूयन्ति हि राजानो जनाननृतवादिनः ।
तथैव चावमन्यन्ते मन्त्रिणं वादिनं मृषा ॥ ४-५-१३ (२८३०३)
विदिते चास्य कुर्वीत कार्याणि सुलघून्यपि ।
एवं विचरतो राज्ञि न क्षतिर्जायते क्वचित् ॥ ४-५-१४ (२८३०४)
पाण्डवाग्निरयं लोके सर्वशस्त्रमयो महान ।
भर्ता गोप्ता च भूतानां राजा पुरुषविग्रहः ॥ ४-५-१५ (२८३०५)

सर्वात्मना वर्तमानं यथा दोषो न संस्पृशेत् ।
राजानमुपतिष्ठन्तं तस्य वृत्तं निबोधत ॥ ४-५-१६ (२८३०६)
क्षत्रियं चैव सर्पं च ब्राह्मणं च बहुश्रुतम् ।
नावमन्येत मेधावी कृशानपि कदाचन ॥ ४-५-१७ (२८३०७)
एतत्रयं च पुरुषं निर्दहेदवमानितम् ।
राजा तस्माद्बुधैर्नित्यं पूजनीयः प्रयत्नतः ॥ ४-५-१८ (२८३०८)
नातिवर्तेत मर्यादां पुरुषो राजसंमतः ।
व्यवहारं पुनर्लोके मर्यादां पण्डिता विदुः ॥ ४-५-१९ (२८३०९)
न हि पुत्रं न नप्तारं न भ्रातरमरिन्दम ।
समतिक्रान्तमर्यादं पूजयन्ति पराधिपाः ॥ ४-५-२० (२८३१०)
गच्छन्नपि परां भूतिं भूमिपालनियोजितः ।
जात्यन्ध इव मन्येत मर्यादामनुचिन्तयन् ॥ ४-५-२१ (२८३११)
धृष्टो द्वारं सदा पश्यन्न च राजसु विश्वसेत् ।
तदेवासनमन्विच्छेद्यत्र नाभिलषेत्परः ॥ ४-५-२२ (२८३१२)
यत्रोपविष्टः संकल्पं नोपहन्याद्बलीयसः ।
तदासनं राजकुले ईप्सेत पुरुषो वसन् ॥ ४-५-२३ (२८३१३)
यथैनं यत्र चासीनं शङ्कयेद्दुष्टचरिणम् ।
न तत्रोपविशेज्जातु यो राजवसतिं वसेत् ॥ ४-५-२४ (२८३१४)
स्वभूमौ काममासीत तिष्ठेद्वा राजसन्निधौ ।
न त्वेवासनमन्यस्य प्रार्थयेत कदाचन ॥ ४-५-२५ (२८३१५)
परासनगतं ह्येनं परस्य परिचारकाः ।
परिषद्यपकर्षेयुः परिहास्येत शत्रुभिः ॥ ४-५-२६ (२८३१६)
नित्यं विप्रतिषिद्धं तत्पुरस्तादासनं मतम् ।
अर्थार्थं हि यदा भृत्यो राजानमुपतिष्ठते ॥ ४-५-२७ (२८३१७)
दक्षिणं वाऽथ वामं वा भागमाश्रित्य पण्डितः ।
तिष्ठेद्विनीतवद्राजन्न पुरस्तान्न पृष्ठतः ।
राक्षिणामात्तशस्त्राणां पश्चात्स्थानं विधीयते ॥ ४-५-२८ (२८३१८)
मातृगोत्रे स्वगोत्रे वा नाम्ना शीलेन वा पुनः ।
संग्रहार्थं मनुष्याणां नित्यमाभाषिता भवेत् ॥ ४-५-२९ (२८३१९)
पूज्यमानोपि यो राज्ञा नरो न प्रतिपूजयेत् ।
नैनमाराधयेज्जातु शास्ता शिष्यानिवालसान् ॥ ४-५-३० (२८३२०)
नास्य युग्यं न पर्यङ्कं नासनं न रथं तथा ।
आरोहेत्संमतोऽस्मीति यो राजवसतिं वसेत् ॥ ४-५-३१ (२८३२१)
यो वै गृहेभ्यः प्रवसन्क्रियमाणमनुस्मरन् ।
उत्थाने नित्यसंकल्पो निस्तन्द्रीः संघतात्मवान् ॥ ४-५-३२ (२८३२२)
परीतः क्षुत्पिपासाभ्यां विहाय परिदेवनम् ।

दुःखेन सुखमन्विच्छेद्यो राजवसतिं वसेत् ॥ ४-५-३३ (२८३२३)
अन्येषु प्रेष्यमाणेषु पुरस्ताद्धीर उत्पतेत् ।
करिष्याम्यहमित्येव यः स राजसु सिध्यति ॥ ४-५-३४ (२८३२४)
उष्णे वा यदि वा शीते रात्रौ वा यदि वा दिवा ।
आदिष्टो न विकल्पेत यः स राजसु सिद्ध्यति ॥ ४-५-३५ (२८३२५)
नैव प्राप्तोऽवमन्येत सदाऽमात्यो विशारदः ।
मानं प्राप्तो न हृष्येत न व्यथेच्च विमानितः ।
ऋदुर्मृदुः सत्यवादो यः स राजसु सिद्ध्यति ॥ ४-५-३६ (२८३२६)
नैव लाभाद्धर्षमियान्न व्यथेच्च विमानितः ।
समः पूर्णतुलेव स्याद्यो राजवसतिं वसेत् ॥ ४-५-३७ (२८३२७)
अल्पेच्छो धृतिमान्राजञ्छायेवानुगतः सदा ।
दक्षः प्रदक्षिणो धीरः स राजवसतिं वसेत् ॥ ४-५-३८ (२८३२८)
इतिहासपुराणज्ञः कुशलः सत्कथासु च ।
वदान्यः सत्यवाक्वापि यो राजवसतिं वसेत् ॥ ४-५-३९ (२८३२९)
न मिथो भाषितं राज्ञो मनुष्येषु प्रकाशयेत् ।
यं चासूयन्ति राजानः पुरुषं नो वदेच्च तम् ॥ ४-५-४० (२८३३०)
नैषां कर्मसु संयुक्तो धनं किंचिदुपस्पृशेत् ।
प्राप्नुयादाददानो वा बन्धं वा वधमेव वा ॥ ४-५-४१ (२८३३१)
हुल्योपस्थितयोः पश्य मम चान्यस्य चोभयोः ।
अन्यं पुष्णाति मद्धीनमिति धीरो न मुह्यति ॥ ४-५-४२ (२८३३२)
श्रेयांसं हि परित्यज्य वैद्यं कर्मणिकर्मणि ।
पापीयांसं प्रकुर्वीरञ्शीलमेषां तथाविधम् ॥ ४-५-४३ (२८३३३)
नैषां दारेषु कुर्वीत प्राज्ञो मैत्रीं कथंचन ।
रक्षणं तु न सेवेत यो राजवसतिं वसेत् ॥ ४-५-४४ (२८३३४)
यदा ह्यभिसमीक्षेत प्रेष्यं स्त्रीभिः समागतम् ।
बुद्धिः परिभवेत्तस्य राजा शङ्केत वा पुनः ॥ ४-५-४५ (२८३३५)
शङ्कितस्य पुनः स्त्रीषु कस्य भृत्यस्य भूमिपः ।
जीवितं साधु मन्येत प्रकृतिस्थो बलात्कृतः ॥ ४-५-४६ (२८३३६)
हर्षवस्तुषु चाप्यत्र वर्तमानेषु केषु चित् ।
नातिगाढं प्रहृष्येत तान्येवास्यानुपूजयेत् ॥ ४७ ॥ ४-५-४७ (२८३३७)
हर्षाद्धि मन्दः पुरुषः स्वैरं कुर्वीत वैकृतम् ।
तदस्यान्तःपुरे वृत्तमीक्षां कुर्वीत भूमिपः ॥ ४-५-४८ (२८३३८)
अन्तःपुरगतं ह्येनं स्त्रियः क्लीबाश्च सर्वतः ।
वर्तमानं यथावच्च कुत्सयेयुरसंशयम् ॥ ४-५-४९ (२८३३९)
तस्माद्गम्भीरमात्मानं कृत्वा हर्षं नियम्य च ।
नित्यमन्तःपुरे राज्ञो न वृत्तं कीर्तयेद्बहिः ॥ ४-५-५० (२८३४०)

यथा हि सुमहामन्त्रो भिद्यमानो हरेत्सुखम् ।
एवमन्तःपुरे वृत्तं श्रूयमाणं बहिर्भवेत् ॥ ४-५-५१ (२८३४१)
या तु वृत्तिरबाह्यानां बाह्यानामपि केवलम् ।
उभयेषां समस्तानां शृणु राजोपजीविनाम् ॥ ४-५-५२ (२८३४२)
न स्त्रियो जातु मन्येत बाह्ये वाभ्यन्तरेऽपि वा ।
अनुजीविनां नरेन्द्रस्तु सृजेद्धि सुमहद्भयम् ॥ ४-५-५३ (२८३४३)
मत्वाऽस्य प्रियमात्मानं राजरत्नानि राजवत् ।
अराजा राजयोग्यानि नोपयुञ्जीत पण्डितः ॥ ४-५-५४ (२८३४४)
अराजानं हि रत्नानि राजकान्तानि राजवत् ।
भुञ्जानं तं नरं राजा न तितिक्षेत जीवितम् ॥ ४-५-५५ (२८३४५)
तस्मादव्यक्तभोगेन भोक्तव्यं भूतिमिच्छता ।
तुल्यभोगं हि राजा तु भृत्यं कोपेन योजयेत् ॥ ४-५-५६ (२८३४६)
न चापत्येन संप्रीतिं राज्ञः कुर्वीत केनचित् ।
अधिक्षिप्तमनर्थं च द्वेष्यं च परिवर्जयेत् ॥ ४-५-५७ (२८३४७)
एतां हि सेवमानस्य नरसीमां चतुर्विधाम् ।
द्विधा विच्छिद्यते मूलं राजमूलोपसेविनः ॥ ४-५-५८ (२८३४८)
एतैस्तु विपरीता या नरसीमा नराधमैः ।
तथा कुर्वीत संसर्गं न विरोधं कथंचन ॥ ४-५-५९ (२८३४९)
बन्धुभिश्च नरेन्द्रस्य बलवद्भिश्च मानवैः ।
साधु मन्येत संसर्गं न विरोधं कथंचन ॥ ४-५-६० (२८३५०)
ताभ्यां तु नरसीमाभ्यां विरुद्धस्याल्पतेजसः ।
प्रथमं छिद्यते मूलं द्वितीयं जायते भयम् ॥ ४-५-६१ (२८३५१)
उद्धतानां च यो वेषः कुहकानां च यो भवेत् ।
राजवेषं च विस्पष्टं सेवमानो न वर्धते ।
इतराभ्यां तु वेषाभ्यां परिहास्येत बान्धवैः ॥  ४-५-६२ (२८३५२)
अपुंभिश्चैव पुंभिश्च स्त्रीभिः स्त्रीदर्शिभिर्नरैः ।
शक्ये सति न संभाषां जातु कुर्वीत कर्हिचित् ॥ ४-५-६३ (२८३५३)
प्रतिसंभाषमाणो हि त्रिभिरेतैरचेतनः ।
श्येनः पेशीमिवादत्ते पुरुषो भूतिमात्मनः ॥ ४-५-६४ (२८३५४)
ये च राज्ञाऽभिसत्कारं लभेरन्कारणादिव ।
तैश्च सामन्तदूतैश्च न संसज्येत कर्हिचित् ॥ ४-५-६५ (२८३५५)
न चान्याचरितां भूमिमसंदिष्टो महीपतेः ।
उपसेवेत मेधावी यो राजवसतिं वसेत् ॥ ४-५-६६ (२८३५६)
न च संदर्शने राज्ञां प्रबन्धमभिसंजपेत् ।
अपि चैतद्दरिद्राणां व्यलीकस्थानमुत्तमम् ॥ ४-५-६७ (२८३५७)
अर्थकामा च या नारी राजानं स्यादुपस्थिता ।

अनुजीवी तथायुक्तां निध्यायन्दुष्यते च सः ॥ ४-५-६८ (२८३५८)
तस्मान्नारीं न निध्यायेत्तथायुक्तां विचक्षणः ।
तथा क्षुतं च वातं च निष्ठीवं चाचरेच्छनैः ॥ ४-५-६९ (२८३५९)
न नर्मसु हसेज्जातु मूढवृत्तिर्हि सा स्मृता ।
स्मितं तु मृदुपूर्वेण दर्शयीत प्रसादजम् ॥ ४-५-७० (२८३६०)
न चाक्षौ न भुजौ जातु न च वाक्यं समाक्षिपेत् ।
न च तिर्यगवेक्षेत चक्षुर्भ्यां सम्यगाचरेत् ॥ ४-५-७१ (२८३६१)
भ्रुकुटिं च न कुर्वीत न चाङ्गुष्ठैर्लिखेन्महीम् ।
न च गाढं विजृम्भेत जातु राज्ञः समीपतः ॥ ४-५-७२ (२८३६२)
न प्रशंसेन्ना चासूयेत्प्रियेषु च हितेषु च ।
स्तूयमानेषु वा तत्र दूष्यमानेषु वा पुनः ॥ ४-५-७३ (२८३६३)
अथ संदृश्यमानेषु प्रियेषु च हितेषु च ।
श्रूयमाणेषु वाक्येषु वर्णयेदमृतं यथा ॥ ४-५-७४ (२८३६४)
न राज्ञः प्रतिकूलानि सेवमानः सुखी भवेत् ।
पुत्रो वा यदि वा भ्राता यद्यप्यात्मसमो भवेत् ॥ ४-५-७५ (२८३६५)
अप्रमत्तो हि राजानं रञ्जयेच्छीलसंपदा ।
उत्थानेन तु मेधावी शौचेन विविधेन च ॥ ४-५-७६ (२८३६६)
स्नानं हि वस्त्रशुद्धिश्च शारीरं शौचमुच्यते ।
असक्तिः प्राकृतार्थेषु द्वितीयं शौचमुच्यते ॥ ४-५-७७ (२८३६७)
राजा भोजो विराट् सम्राट् क्षत्रियो भूपतिर्नृपः ।
य एतैः स्तूयते शब्दैः कस्तं नार्चितुमर्हति ॥ ४-५-७८ (२८३६८)
तस्माद्भक्त्या च युक्तः सन्सत्यवादी जितेन्द्रियः ।
मेधावी धृतिमान्प्राज्ञः संश्रयीत महीपतिम् ॥ ४-५-७९ (२८३६९)
कृतज्ञं प्राज्ञमक्षुद्रं दृढभक्तिं जितेन्द्रियम् ।
वर्धमानं स्थितं स्थाने संश्रयीत महीपतिम् ॥ ४-५-८० (२८३७०)
एष वः समुदाचारः समुद्दिष्टो यथाविधि ।
यथार्थान्संप्रपत्स्यन्ते पार्थ राजोपजीविनः ॥ ४-५-८१ (२८३७१)
संवत्सरमिमं तावदेवंशीला बुभूषथः ।
ततः स्वविषयं प्राप्य यथाकामं चरिष्यथ ॥ ४-५-८२ (२८३७२)
वैशंपायन उवाच। ४-५-८३क्ष् (२९९२)
तं तथेत्यब्रुवन्पार्थाः पितृकल्पं यशस्विनम् ।
प्रहृष्टाश्चाभिवाद्यैनमुपातिष्ठन्परंतपाः ॥ ४-५-८३ (२८३७३)
तेषां प्रतिष्ठमानानां मन्त्रांश्च ब्राह्मणोऽजपत् ।
भवाय राज्यलाभाय वीर्याय विजयाय च ॥ ४-५-८४ (२८३७४)
ततोऽब्रवीदसौ विप्रो वाचमाशीः प्रयुज्य च ।
स्वद्रव्यप्रतिलाभाय शत्रूणां मर्दनाय च ॥ ४-५-८४ (२८३७५)

स्वस्ति वोस्तु शिवः पन्था द्रक्ष्यामि पुनरागतान् ।
इत्युक्ता हृष्टमनसो गुरुणा तेन धीमता। ४-५-८५ (२८३७६)
युधिष्ठिरमुखाः सर्वे गन्तुं समुपचक्रमुः ॥ ॥ ४-५-८६ (२८३७७)

इति श्रीमन्महाभारते विराटपर्वणि पाण्डवप्रवेशपर्वणि
पञ्चमोऽध्यायः ॥ ५ ॥
Mahabharata - Virata Parva - Chapter Footnotes

४-५-१५ पाण्डवाग्निरिति पाण्डवेति छेदः । राजा
पुरुषविग्रहोऽग्निरित्यन्वयः ॥
१५ ॥
४-५-६१ प्रथमं छिद्यते निद्रा इति थो धो पाठः ॥
६१ ॥

---

विरतपर्व-अध्यय००६
॥ श्रीः ॥
४.६. अध्यायः ६

Mahabharata - Virata Parva - Chapter Topics
पाण्डवैर्धौम्यविसर्जनपूर्वकं विराटनगरसमीपगमनम् ॥१ ॥

Mahabharata - Virata Parva - Chapter Text

४-६-० (२८३७८)
वैशंपायन उवाच। ४-६-०क्ष् (२९९३)
तेऽग्निं प्रदक्षिणं कृत्वा ब्राह्मणं च पुरोहितम् ।
अभिवाद्य ततः सर्वे प्रस्थातुमुपचक्रमुः ॥१ ॥४-६-१ (२८३७९)
युधिष्ठिर उवाच। ४-६-२क्ष् (२९९४)
अनुशिष्टोस्मि भद्रं ते नैतद्वक्ताऽस्ति कश्चन ।
कुन्तीमृते मातरं नः पितरं च यशस्विनम् ॥२ ॥४-६-२ (२८३८०)
यदेवानन्तरं कार्यं तद्भवान्वक्तुमर्हति ।
तारणाय तु दुःखस्य प्रस्थानाय भवाय च ॥३ ॥४-६-३ (२८३८१)
वैशंपायन उवाच। ४-६-४क्ष् (२९९५)
तेषां प्रतिष्ठमानानां धौम्यो मन्त्रानथाजपत् ।
सर्वविघ्नप्रशमनानर्थसिद्धिकरांस्तथा ।
ततः पावकमुज्ज्वाल्य मन्त्रहव्यपुरुस्कृतम् ॥४ ॥ ४-६-४ (२८३८२)
याज्ञसेनीं पुरस्कृत्य सर्व एव महारथाः ।

प्राद्रवन्सह धौम्येन बद्धशस्त्रा वनाद्वनम् ॥ ५ ॥ ४-६-५ (२८३८३)
ते वीरा बद्धनिस्त्रिंशा धनुर्बाणकलापिनः ।
अगच्छन्भीमधन्वानः काम्यकाद्यमुनां नदीम् ॥ ६ ॥ ४-६-६ (२८३८४)
उत्तरेण दशार्णानां पाञ्चालान्दक्षिणेन तु ।
अन्तरेण यकृल्लोम्नः शूरसेनांश्च पाण्डवाः ॥ ७ ॥ ४-६-७ (२८३८५)
ते तस्या दक्षिणं तीरमन्वगच्छन्पदातयः ।
ततः प्रत्यक्प्रयातास्ते संक्रामन्तो वनाद्वनम् ॥ ८ ॥ ४-६-८ (२८३८६)
वसाना वनदुर्गेषु रमणीयेषु धन्विनः ।
पल्वलेषु च रम्येषु नदीनां संगमेषु च ॥ ९ ॥ ४-६-९ (२८३८७)
द्रुमान्नानाविधाकारान्नानाविधलताकुलान् ।
कुसुमाढ्यान्मनःकान्ताञ्शुभगन्धान्मनोरमान् ॥ १० ॥ ४-६-१० (२८३८८)
पार्था निरीक्षमाणाश्च तान्द्रुमान्पुष्पशालिनः ।
जिघ्रन्तः पुष्पगन्धांश्च फलगन्धान्मनोरमान् ॥ ११ ॥ ४-६-११ (२८३८९)
विध्यन्तो मृगजातानि महेष्वासा महाबलाः ।
उपित्वा द्वादशसमा वने परपुरंजयाः ।
लुब्धान्ब्रुवाणा मात्स्यस्य विपयं प्राविशंस्तदा ॥ १२ ॥ ४-६-१२ (२८३९०)
तत्र धौम्यं महेष्वासाः पाण्डवेया व्यसर्जयन् ।
अग्निहोत्रं परिचरन्सोऽबुद्धोऽवसदाश्रमे ॥ १३ ॥ ४-६-१३ (२८३९१)
ततस्तेषु प्रयातेषु पाण्डवेषु महात्मसु ।
इन्द्रसेनमुखाश्चैव यथोक्तं प्राप्य निर्वृताः ।
रथानश्वांश्च रक्षन्तः सुखमूषुः सुसंवृताः ॥ १४ ॥ ४-६-१४ (२८३९२)
ततो जनपदं प्राप्य कृष्णा राजानमब्रवीत् ॥ १५ ॥ ४-६-१५ (२८३९३)
पश्यैकपद्यो दृश्यन्ते क्षेत्रे गोष्ठं समाश्रिताः ।
वृक्षांश्चोपवनोपेतान्ग्रामाणां नगरस्य च ॥ १६ ॥ ४-६-१६ (२८३९४)
व्यक्तं दूरे विराटम ।आजधानी भविष्यति ।
वसामेहापरां रात्रिं बलवान्मे परिश्रमः ॥ १७ ॥ ४-६-१७ (२८३९५)
युधिष्ठिर उवाच। ४-६-१८क्ष् (२९९६)
इमां कमलपत्राक्षीं द्रौपदीं माद्रिनन्दन ।
मुहूर्तं परिगृह्यैनां घाहुभ्यां नकुल व्रज ॥ १८ ॥ ४-६-१८ (२८३९६)
ततोऽदूरे विराटस्य नगरं भरतर्षभ ।
राजधान्यां निवत्स्यामः प्रमुक्तमिव नो वनम् ॥ १९ ॥ ४-६-१९ (२८३९७)
नकुल उवाच। ४-६-२०क्ष् (२९९७)
पूर्वाह्णे मृगयां कृत्वा मया विद्धा मृगा वने ।
अटवी च मया दूरं धृता मृगवधेप्सुना ॥ २० ॥ ४-६-२० (२८३९८)
विषमा ह्यतिदुर्गा च वेगवत्परिधावता ।
सोहं धर्माभितप्तो वै नैनामादातुमुत्सहे ॥ २१ ॥ ४-६-२१ (२८३९९)

युधिष्ठिर उवाच। ४-६-२२क्ष् (२९९८)
सहदेव त्वमादाय मुहूर्तं द्रौपदीं नय ।
राजधान्यां निवत्स्यामः सुमुक्तमिव नो वनम् ॥ २२ ॥ ४-६-२२ (२८४००)
सहदेव उवाच । ४-६-२३क्ष् (२९९९)
अहमप्यस्मि तृषितः क्षुधया परिपीडितः ।
परिश्रान्तश्च भद्रं ते नैनामादातुमुत्सहे ॥ २३ ॥ ४-६-२३ (२८४०१)
युधिष्ठिर उवाच । ४-६-२४क्ष् (३०००)
एहि वीर विशालाक्ष वीरसिंह इवार्जुन ।
इमां कमलपत्राक्षीं द्रौपदीं द्रुपदात्मजाम् ॥ २४ ॥ ४-६-२४ (२८४०२)
परिगृह्य मुहूर्तं त्वं बाहुभ्यां कुशलं व्रज ।
राजधान्यां निवत्स्यामः प्रमुक्तमिव नो वनम् ॥ २५ ॥ ४-६-२५ (२८४०३)
वैशंपायन उवाच। ४-६-२६क्ष् (३००१)
गुरोर्वचनमाज्ञाय संप्रहृष्टो जितेन्द्रियः ।
बाहुभ्यां परिगृह्याथ राजपुत्रीमनिन्दिताम् ।
प्रवव्राज महाबाहुरर्जुनः प्रियदर्शनाम् ॥ २६ ॥ ४-६-२६ (२८४०४)
जटिलो वल्कलधरः शततूणीधनुर्धरः ।
स्कन्धे कृत्वा वरारोहां बालामायतलोचनाम् । ४-६-२७ (२८४०५)
आनीय नगराभ्याशमवातारयदर्जुनः ॥ २७ ॥ ॥ ४-६-२८ (२८४०६)

इति श्रीमन्महाभारते विराटपर्वणि पाण्डवप्रवेशपर्वणि
षष्ठोऽध्यायः ॥ ६ ॥

---

विरतपर्व-अध्यय००७
॥ श्रीः ॥
४.७. अध्यायः ७

Mahabharata - Virata Parva - Chapter Topics
पाण्डवैर्वनमध्ये श्मशानसंनिहिते शमीवृक्षे स्वायुधनिक्षेपः ॥ १ ॥
तथा स्वेषां साङ्केतिकनामकल्पनेन विराटनगरपरिसरगमनम् ॥ २ ॥

Mahabharata - Virata Parva - Chapter Text

४-७-० (२८४०७)
वैशंपायन उवाच। ४-७-०क्ष् (३००२)
स राजधानीं संप्राप्य पार्थिवोऽर्जुनमब्रवीत् ।
इमानि पुरुषव्याघ्र आयुधानि परंतप ।
कस्मिन्न्यासयितव्यानि गुप्तिश्चैषां कथं भवेत् ॥ १ ॥ ४-७-१ (२८४०८)

सायुधा हि वयं तात प्रवेक्ष्यामः पुरं यदि ।
समुद्वेगं जनस्यास्य करिष्यामो न संशयः ॥ २ ॥ ४-७-२ (२८४०९)
गाण्डीवं हि नरव्याघ्र त्रिषु लोकेषु विश्रुतम् ।
कथं नाविष्कृताः स्यामो धार्तराष्ट्रस्य मारिष ॥ ३ ॥ ४-७-३ (२८४१०)
यदीद ॥ धनुरादाय चरेम सजने पुरे ।
क्षिप्र नः प्रतिजानीयुर्मनुष्या नात्र संशयः ॥ ४ ॥ ४-७-४ (२८४११)
एकस्मिन्नपि विज्ञाते समयं नो व्यतीत्य च ।
भूयो द्वादशवर्षाणि प्रविशेम वनं वयम् ॥ ५ ॥ ४-७-५ (२८४१२)
तस्मात्सर्वाणि शस्त्राणि प्रच्छाद्यान्यत्र यत्र वा ।
प्रविशेम पुरश्रेष्ठं तथा सम्यक्कृतं भवेत् ॥ ६ ॥ ४-७-६ (२८४१३)
वैशंपायन उवाच। ४-७-७क्ष् (३००३)
अजातशत्रोर्वचनं श्रुत्वा चैव महायशाः ।
उवाच धर्मपुत्रं तमर्जुनः परवीरहा ॥ ७ ॥ ४-७-७ (२८४१४)
इयं वने मनुष्येन्द्र महती दृश्यते शमी ।
भीमशाखा दुरारोहा श्मशानस्य समीपतः ॥ ८ ॥ ४-७-८ (२८४१५)
उत्पथे चापि जातेयं मनुष्यैर्न निषेव्यते ।
विपुलाऽऽकीर्णशाखा च वायसैरुपसेविता ॥ ९ ॥ ४-७-९ (२८४१६)
स्नेहानुबद्धां पश्यामि दुरारोहामिमां शमीम् ॥ १० ॥ ४-७-१० (२८४१७)
समीपे च श्मशानस्य गृहं नास्य विशेषतः ।
समासज्यायुधान्यस्यां गच्छामो नगरं नृप ॥ ११ ॥ ४-७-११ (२८४१८)
न चास्यां चारयिष्यन्ति मनुष्याः पार्थ केचन ॥ १२ ॥ ४-७-१२ (२८४१९)
धनुर्भिः पुरुषं कृत्वा चर्मकेशास्थिसंवृतम् ।
उद्बन्धमिव कृत्वा च धनुर्ज्यापाशसंवृतम् ।
अस्यामायुधमासज्य गच्छाम नगरं वयम् ॥ १३ ॥ ४-७-१३ (२८४२०)
एवं परिहरिष्यन्ति मनुष्या वनचारिणः ।
अत्रैवं नावबुध्यन्ते मनुष्याः केचिदायुधम् ॥ १४ ॥ ४-७-१४ (२८४२१)
वैशंपायन उवाच । ४-७-१५क्ष् (३००४)
एवमुक्त्वा स राजानं धर्मात्मानं धनञ्जयः ।
प्रचक्रमे निधानाय शश्त्राणां भरतर्षभ ॥ १५ ॥ ४-७-१५ (२८४२२)
तानि सर्वाणि संनह्य पञ्च पञ्चाचलोपमाः ।
आयुधानि कलापांश्च निस्त्रिंशानतुलप्रभान् ॥ १६ ॥ ४-७-१६ (२८४२३)
ततो युधिष्ठिरो राजा सहदेवमुवाच ह ।
आरुह्येमां शमीं वीर निधत्स्वेहायुधानि नः ॥ १७ ॥ ४-७-१७ (२८४२४)
इति संदिश्य तं पार्थः पुनरेव धनञ्जयम् ।
अब्रवीदायुधानीह निधातुं भरतर्षभः ॥ १८ ॥ ४-७-१८ (२८४२५)
वैशंपायन उवाच। ४-७-१९क्ष् (३००५)

येन देवान्मनुष्यांश्च पिशाचोरगराक्षसान् ।
निवातकवचांश्चापि पौलोमांश्च परंतपः ।
कालकेयांश्च दुर्धाषान्सर्वांश्चैकरथोऽजयत् ॥ १९ ॥ ४-७-१९ (२८४२६)
स्फीताञ्जनपदांश्चान्यानजयत्कुरुनन्दनः ।
तदुदग्रं महाघोरं सपत्नगणमूदनम् ।
अपज्यमकरोत्पार्थो गाण्डीवं च भयंकरम् ॥ २० ॥ ४-७-२० (२८४२७)
येन वीरः कुरुक्षेत्रमभ्यरक्षत्परंतपः ।
जृम्भिते च धनुःश्रेष्ठे न्यासार्थं नृपसत्तमः ॥ २१ ॥ ४-७-२१
(२८४२८)
धर्मपुत्रो महातेजाः सर्वलोकवशंकरम् ।
भुजङ्गभोगसदृशं मणिकाञ्चनभूषितम् ॥ २२ ॥ ४-७-२२ (२८४२९)
वित्रासनं दानवानां राक्षसानां च नित्यशः ।
धनूरत्नं महातेजा जृम्भयामास पाण्डवः ॥ २३ ॥ ४-७-२३ (२८४३०)
पाञ्चालान्येन संग्रामे भीमसेनोऽजयत्पुरा ।
प्रत्यषेधद्बहूनेकः सपत्नांश्चापि दिग्जये ॥ २४ ॥ ४-७-२४ (२८४३१)
निशम्य यस्य विष्कारं विद्रवन्ति रणे परे ।
पर्वतस्येव दीर्णस्य विस्फोटमशनेरिव ॥ २५ ॥ ४-७-२५ (२८४३२)
सैन्धवं येन राजानं जित्वा क्रुद्धः परामृशत् ।
येन क्रोधवशाञ्जघ्ने पर्वते गन्धमादने ॥ २६ ॥ ४-७-२६ (२८४३३)
दिव्यं सौगन्धिकं पुष्पं येनाजैषीत्स पाण्डवः ।
त्रिगर्तान्येन संग्रामे जित्वा त्रैगर्तमानयत् ॥ २७ ॥ ४-७-२७ (२८४३४)
इन्द्राशनिसमस्पर्शं वज्रहाटकभूषितम् ।
ज्यापाशं धनुषस्तस्य भीमसेनोऽवतारयत् ॥ २८ ॥ ४-७-२८ (२८४३५)
नकुलं पुनराहूय धर्मराजो युधिष्ठिरः ।
उवाच येन संग्रामे सर्वशत्रूञ्जिघांससि ॥ २९ ॥ ४-७-२९ (२८४३६)
सुराष्ट्राञ्जितवान्येन शार्ङ्गगाण्डीवसन्निभम् ।
सुवर्णविकृतं सारमिन्द्रायुधनिभं वरम् ॥ ३० ॥ ४-७-३० (२८४३७)
तवानुरूपं सुकृतं चापमेतदलङ्कृतम् ।
तद्ध्वंसयित्वा ज्यापाशं निधातुं धनुराहर ॥ ३१ ॥ ४-७-३१ (२८४३८)
वैशंपायन उवाच। ४-७-३२क्ष् (३००६)
अजयत्पश्चिमामाशां धनुषा येन पाण्डवः ।
माद्रीपुत्रो महाबाहुस्ताम्रास्यो मितभाषिता ॥ ३२ ॥ ४-७-३२ (२८४३९)
तस्य मौर्वीमपाकर्षच्छूरः संक्रन्दनो युधि ।
कुले नास्ति समो रूपे यस्येति नकुलः स्मृतः ॥ ३३ ॥ ४-७-३३ (२८४४०)
सहदेवं च संप्रेक्ष्य पुनर्धर्मसुतोऽब्रवीत् ।
कलिङ्गान्द्राक्षिणात्यांश्च मागधांश्चाजिशोभनः ॥ ३४ ॥ ४-७-३४ (२८४४१)

येनैव शत्रून्समरे अधाक्षीररिमर्दन ।
तत्स्रंसयित्वा ज्यापाशं निधातुं धनुराहर ॥ ३५ ॥ ४-७-३५ (२८४४२)
वैशंपायन उवाच। ४-७-३६क्ष् (३००७)
दक्षिणां दक्षिणाचारो दिशं येनाजयत्प्रभुः ।
अपज्यमकरोद्वीरः सहदेवस्तदायुधम् ॥ ३६ ॥ ४-७-३६ (२८४४३)
दीप्तान्खण्डांश्च सुदृढान्सुतीक्ष्णान्कनकत्सरून् ।
विविधान्क्षुरनाराचान्निस्त्रिंशांश्च शरानपि ।
आयुधानि कलापांश्च गदाश्च निदधुः सह ॥ ३७ ॥ ४-७-३७ (२८४४४)
अथाब्रवीद्धर्मराजः सहदेवं परन्तपः ।
आरुह्येमां शमीं वीर निधत्स्वेहायुधानि नः ॥ ३८ ॥ ४-७-३८ (२८४४५)
इदं गोमृगमभ्याशे गतसत्वमचेतनम् ।
एतदुत्कृत्य वै वीर धनूंपि परिवेष्टय ॥ ३९ ॥ ४-७-३९ (२८४४६)
एवमुक्तो महाबाहुः सहदेवो यथोक्तवत् ।
शमीमारुह्य त्वरितो धनूंपि परिवेष्टयत् ॥ ४० ॥ ४-७-४० (२८४४७)
शीतवातातपभयाद्दर्पत्राणाय दुर्जयः ।
तानि वीरो यथा जानन्निरावाधानि सर्वशः ।
पुनः पुनः सुसंवेष्ट्य कृत्वा सुकृतमावरम् ॥ ४१ ॥ ४-७-४१ (२८४४८)
यत्र चापश्यत स वै तिरोवर्पाणि वर्पति ।
तत्र तानि दृढैः पाशैः सुगाढं पर्यवन्धत ॥ ४२ ॥ ४-७-४२ (२८४४९)
ततः परमदूरस्थमुञ्छवृत्तिकलेवरम् ।
प्रायोपवेशनाच्छुष्कं स्नायुचर्मास्थिसंयुतम् ॥ ४३ ॥ ४-७-४३ (२८४५०)
तच्चानीय धनुर्मध्ये निबबन्धु पाण्डवाः ।
उपायकुशलाः सर्वे प्रणदन्तः समब्रुवन् ॥ ४४ ॥ ४-७-४४ (२८४५१)
अस्य बद्धस्य दौर्गन्ध्यान्मनुष्या वनचारिणः ।
दूरात्परिहरिष्यन्ति सशवेयं शमी इति ॥ ४५ ॥ ४-७-४५ (२८४५२)
अथाब्रवीन्महाराजो धर्मात्मा स युधिष्ठिरः ।
रज्जुभिः सुकृतं प्राज्ञ विनिर्वध्नीहि पाण्डव ॥ ४६ ॥ ४-७-४६ (२८४५३)
यानि चात्र विशालानि रूढमूलानि मन्यसे ।
तेपामुपरि बध्नीहि इदं विप्रकलवरम् ॥ ४७ ॥ ४-७-४७ (२८४५४)
वैशंपायन उवाच। ४-७-४८क्ष् (३००८)
तच्छ्रुत्वा सहदेवस्तु पर्यबध्नत तच्छवम् ॥ ४८ ॥ ४-७-४८ (२८४५५)
युधिष्ठिरः शुचिर्भूत्वा मनसाऽभिप्रणम्य च ।
ब्रह्माणामिन्द्रं वरदं कुबेरं वरुणानिलौ ॥ ४९ ॥ ४-७-४९ (२८४५६)
रुद्रं यमं च विष्णुं च सोमार्कौ धर्ममेव च ।
पृथिवीमन्तरिक्षं च दिशश्चोपदिशस्तथा ।
वसूश्चं मरुतश्चैव ज्वलनं चातितेजसम् ॥ ५० ॥ ४-७-५० (२८४५७)

दिवाचरा रात्रिचराणि वाऽपि यानीह भूतान्यनुकीर्तितानि ।
तेभ्यो नमस्कृत्य च सुव्रतेभ्यः प्रणम्य तेपां शरणं गतोऽहम्
॥ ५१ ॥ ४-७-५१ (२८४५८)
सर्वायुधानीह महाबलानि न्यासं महादेवसमीपतो वै ।
न्यस्याम्यहं वायुसमीपतश्च वनस्पतीनां च सपर्वतानाम् ॥ ५२
॥ ४-७-५२ (२८४५९)
एष न्यासो मया दत्तः सोमसूर्यानिलान्तिके ।
मम पार्थस्य वा देयं पूर्णे वर्षे त्रयोदशे ॥ ५३ ॥ ४-७-५३ (२८४६०)
नेदं भीमे प्रदातव्यमयं क्रुद्धो वृकोदरः ।
आमर्षान्नित्यसंक्रुद्धो धृतराष्ट्रसुतान्प्रति ।
अपूर्णकाले प्रहरेत्क्रोधसंजातमत्सरः ॥ ५४ ॥ ४-७-५४ (२८४६१)
पुनः प्रवेशो नः स्यात्तु वनवासाय सर्वदा ।
समये परिपूर्णे तु धार्तराष्ट्रान्निहन्महे ॥ ५५ ॥ ४-७-५५ (२८४६२)
एष चार्थश्च धर्मश्च कामः कीर्तिरलं यशः ।
मदायत्तमिदं सर्वं जीवितं च न संशयः ॥ ५६ ॥ ४-७-५६ (२८४६३)
वैशंपायन उवाच। ४-७-५७ (२८४६४)
दैवतेभ्यो नमस्कृत्य शमीं कृत्वा प्रदक्षिणम् ।
नगरं गन्तुमायाताः सर्वे ते भ्रातरः सह ॥ ५७ ॥ ४-७-५७ (२८४६५)
आगोपालाविपालेभ्यः कर्षकेभ्यः परंतप ।
आजग्मुर्नगराभ्याशं दर्शयन्तः पुनः पुनः ॥ ५८ ॥ ४-७-५८ (२८४६६)
अशीतिशतवर्षेयं माताऽस्माकमिहान्तिके ।
बहुकालपरीणामा मृत्योस्तु वशमेयुपी ।
न चाग्निसंस्कारमियं प्रापिता कुलधर्मतः ॥ ५९ ॥ ४-७-५९ (२८४६७)
यः समासाद्यते कश्चित्तस्मिन्देशे यदृच्छया ।
तमेवमृचुर्धर्मज्ञाः कुलधर्मो न ईदृशः ॥ ६० ॥ ४-७-६० (२८४६८)
विश्रावयन्तस्ते हृष्टा दिशः सर्वा व्यनादयन् ।
स्वर्गतेयमिहास्माकं जननी शोकविह्वला ॥ ६१ ॥ ४-७-६१ (२८४६९)
वने विचरमाणानां लुब्धानां वनचारिणाम् ।
कुलधर्मोऽयमस्माकं पूर्वैराचरितः पुरा ॥ ६२ ॥ ४-७-६२ (२८४७०)
एवं ते सुकृतं कृत्वा समन्तादवघुष्य च ।
भीमसेनोऽर्जुनश्चैव माद्रीपुत्रावुभावपि ॥ ६३ ॥ ४-७-६३ (२८४७१)
युधिष्ठिरश्च कृष्णा च राजपत्नी सुमध्यमा ।
ततो यथासमाज्ञप्तं नगरं प्राविशंस्तदा ॥ ६४ ॥ ४-७-६४ (२८४७२)
मत्स्यराज्ञो विराटस्य समीपं वस्तुमञ्जसा ।
अज्ञातचर्यां चरितुं वर्षं राष्ट्रे त्रयोदशम् ॥ ६५ ॥ ४-७-६५ (२८४७३)
अतश्छन्नानि नामानि चकारैषां युधिष्ठिरः ।

जयो जयेशो विजयो जयत्सेनो जयद्बलः। ४-७-६६ (२८४७४)
आपत्सु नामभिस्त्वेतैः समाह्वामः परस्परम् ॥ ६६ ॥
ततो यथाप्रतिज्ञाभिः प्राविशन्नगरं महत्। ४-७-६७ (२८४७५)
अज्ञातचर्यां वत्स्यन्तो राष्ट्रे वर्षं त्रयोदशम् ॥ ६७ ॥ ॥
४-७-६८ (२८४७६)

इति श्रीमन्महाभारते विराटपर्वणि पाण्डवप्रवेशपर्वणि
सप्तमोऽध्यायः ॥ ७ ॥

---

विरतपर्व-अध्यय००८
॥ श्रीः ॥
४.८. अध्यायः ८

Mahabharata - Virata Parva - Chapter Topics
विराटनगरं गच्छता युधिष्ठिरेण दुर्गायाः स्तवनम् ॥ १ ॥

Mahabharata - Virata Parva - Chapter Text

४-८-० (२८४७७)
श्वैशंपायन उवाच। ४-८-०क्ष् (३००९)
विराटनगरं रम्यं गच्छमानो युधिष्ठिरः ।
अस्तुवन्मनसा देवीं दुर्गां त्रिभुवनेश्वरीम् ॥ १ ॥ ४-८-१ (२८४७८)
यशोदागर्भसंभूतां नारायणवरप्रियाम् ।
नन्दगोपकुले जातां मङ्गल्यां कुलवर्धनीम् ॥ २ ॥ ४-८-२ (२८४७९)
कंसविद्रावणकरीमसुराणां क्षयंकरीम् ।
शिलातटविनिक्षिप्तामाकाशं प्रति गामिनीम् ॥ ३ ॥ ४-८-३ (२८४८०)
वासुदेवस्य भगिनीं दिव्यमाल्यविभूषिताम् ।
दिव्याम्बरधरां देवीं खड्गखेटकधारिणीम् ॥ ४ ॥ ४-८-४ (२८४८१)
भारावतरणे पुण्ये ये स्मरन्ति सदा शिवाम् ।
तान्वै तारयते पापात्पङ्के गामिव दुर्बलाम् ॥ ५ ॥ ४-८-५ (२८४८२)
स्तोतुं प्रचक्रमे भूयो विविधैः स्तोत्रसंभवैः ।
आमन्त्र्य दर्शनाकाङ्क्षी राजा देवीं सहानुजः ॥ ६ ॥ ४-८-६ (२८४८३)
नमोस्तु वरदे कृष्णे कुमारि ब्रह्मचारिणि ।
बालार्कसदृशाकारे पूर्णचन्द्रनिभानने ॥ ७ ॥ ४-८-७ (२८४८४)
चतुर्भुजे चतुर्वक्त्रे पीनश्रोणिपयोधरे ।
मयूरपिच्छवलये केयूराङ्गदधारिणि ॥ ८ ॥ ४-८-८ (२८४८५)
भासि देवि यथा पद्मा नारायणपरिग्रहः ।

स्वरूपं ब्रह्मचर्यं च विशदं तव खेचरि ॥ ९ ॥ ४-८-९ (२८४८६)
कृष्णच्छविसमा कृष्णा संकर्षणसमानना ।
बिभ्रती विपुलौ बाहु शक्रध्वजसमुच्छ्रयौ ॥ १० ॥ ४-८-१० (२८४८७)
पात्री च पङ्कजी घण्टी स्त्री विशुद्धा च या भुवि ।
पाशं धनुर्महाचक्रं विविधान्यायुधानि च ॥ ११ ॥ ४-८-११ (२८४८८)
कुण्डलाभ्यां सुपूर्णाभ्यां कर्णाभ्यां च विभूषिता ।
चन्द्रविस्पर्धिना देवि मुखेन त्वं विराजसे ॥ १२ ॥ ४-८-१२ (२८४८९)
मुकुटेन विचित्रेण केशबन्धेन शोभिना ।
भुजङ्गाभोगवासेन श्रोणिसूत्रेण राजता ॥ १३ ॥ ४-८-१३ (२८४९०)
विभ्राजसे चाऽऽबद्धेन भोगेनेवेह मन्दरः ।
ध्वजेन शिखिपिच्छानामुच्छ्रितेन विराजसे ॥ १४ ॥ ४-८-१४ (२८४९१)
कौमारं व्रतमास्थाय त्रिदिवं पावितं त्वया ।
तेन त्वं स्तूयसे देवि त्रिदशैः पूज्यसेऽपि च ॥ १५ ॥ ४-८-१५ (२८४९२)
त्रैलोक्यरक्षणार्थाय महिषासुरनाशिनि ।
प्रसन्ना मे सुरश्रेष्ठे दयां कुरु शिवा भव ॥ १६ ॥ ४-८-१६ (२८४९३)
जया त्वं विजया चैव संग्रामे च जयप्रदा ।
ममापि विजयं देहि वरदा त्वं च सांप्रतम् ॥ १७ ॥ ४-८-१७ (२८४९४)
विन्ध्ये चैव नगश्रेष्ठे तव स्थानं हि शाश्वतम् ।
कालि कालि महाकालि शीधुमांसपशुप्रिये ॥ १८ ॥ ४-८-१८ (२८४९५)
कृतानुयात्रा भूतैस्त्वं वरदा कामचारिणी ।
भारावतारे ये च त्वां संस्मरिष्यन्ति मानवाः ॥ १९ ॥ ४-८-१९ (२८४९६)
प्रणमन्ति च ये त्वां हि प्रभाते तु नरा भुवि ।
न तेषां दुर्लभं किंचित्पुत्रतो धनतोपि वा ॥ २० ॥ ४-८-२० (२८४९७)
दुर्गात्तारयसे दुर्गे तत्त्वं दुर्गा स्मृता जनैः ।
कान्तारेष्ववसन्नानां मग्नानां च महार्णवे ।
दस्युभिर्वा निरुद्धानां त्वं गतिः परमा नृणाम् ॥ २१ ॥ ४-८-२१ (२८४९८)
जलप्रतरणे चैव कान्तारेष्वटवीषु च ।
ये स्मरन्ति महादेवि न च सीदन्ति ते नराः ॥ २२ ॥ ४-८-२२ (२८४९९)
त्वं कीर्तिः श्रीर्धृतिः सिद्धिर्ह्रीर्विद्या संततिर्मतिः ।
संध्या रात्रिः प्रभा निद्रा ज्योत्स्ना कांतिःक्षमादया ॥ २३ ॥ ४-८-२३ (२८५००)
नृणां च बन्धनं मोहं पुत्रनाशं धनक्षयम् ।
व्याधिं मृत्युं भयं चैव पूजिता नाशयिष्यसि ॥ २४ ॥ ४-८-२४ (२८५०१)
सोहं राज्यात्परिभ्रष्टः शरणं त्वां प्रपन्नवान् ।
प्रणतश्च यथा मूर्ध्ना तव देवि सुरेश्वरि ॥ २५ ॥ ४-८-२५ (२८५०२)
त्राहि मां पद्मपत्राक्षि सत्ये सत्या भवस्व नः ।
शरणं भव मे दुर्गे शरण्ये भक्तवत्सले ॥ २६ ॥ ४-८-२६ (२८५०३)

एवं स्तुता हि सा देवी दर्शयामास पाण्डवम् ।
उपगम्य तु राजानमिदं वचनमब्रवीत् ॥ २७ ॥ ४-८-२७ (२८५०४)
देव्युवाच । ४-८-२८क्ष् (३०१०)
शृणु राजन्महाबाहो मदीयं वचनं प्रभो ।
भविष्यत्यचिरादेव संग्रामे विजयस्तव ॥ २८ ॥ ४-८-२८ (२८५०५)
मम प्रसादान्निर्जित्य हत्वा कौरववाहिनीम् ।
राज्यं निष्कण्टकं कृत्वा भोक्ष्यसे मेदिनीं पुनः ॥ २९ ॥ ४-८-२९ (२८५०६)
भ्रातृभिः सहितो राजन्प्रीतिं प्राप्स्यसि पुष्कलाम् ।
मत्प्रसादाच्च ते सौख्यमारोग्यं च भविष्यति ॥ ३० ॥ ४-८-३० (२८५०७)
ये च संकीर्तयिष्यन्ति लोके विगतकल्मषाः ।
तेषां तुष्टा प्रदास्यामि राज्यमायुर्वपुः सुतम् ॥ ३१ ॥ ४-८-३१ (२८५०८)
प्रवासे नगरे वाऽपि संग्रामे शत्रुसंकटे ।
अटव्यां दुर्गकान्तारे सागरे गहने गिरौ ॥ ३२ ॥ ४-८-३२ (२८५०९)
ये स्मरिष्यन्ति मां राजन्यथाऽहं भवता स्मृता ।
न तेषां दुर्लभं किंचितस्मिँल्लोके भविष्यति ॥ ३३ ॥ ४-८-३३ (२८५१०)
इदं स्तोत्रवरं भक्त्या शृणुयाद्वा पठेत वा ।
तस्य सर्वाणि कार्याणि सिद्धिं यास्यन्ति पाण्डवाः ॥ ३४ ॥ ४-८-३४ (२८५११)
मत्प्रसादाच्च वः सर्वान्विराटनगरे स्थितान् ।
न प्रज्ञास्यन्ति कुरको नरा वा तन्निवासिनः ॥ ३५ ॥ ४-८-३५ (२८५१२)
इत्युक्त्वा वरदा देवी युधिष्ठिरमरिंदमम् ।
रक्षां कृत्वा च पाण्डूनां तत्रैवान्तरधीयत ॥F ३६ ॥ ॥ ४-८-३६ (२८५१३)

इति श्रीमन्महाभारते विराटपर्वणि पाण्डवप्रवेशपर्वणि
अष्टमोऽध्यायः ॥ ८ ॥

Mahabharata - Virata Parva - Chapter Footnotes

४-८-३ शिलातटे कंसेनैव विनिक्षिप्ता सती आकाशं गता ताम् ॥
३ ॥
४-८-६ स्तोत्रार्थमेव संभव उद्भवो येषां नाम्नां वरदे इत्यादीनांतैः
। आमन्त्र्य संबोध्य ॥
६ ॥
४-८-९ पद्मा लक्ष्मीं अत एव नारायणपरिग्रहो विष्णुकान्ता ॥
९ ॥
४-८-१० कृष्णच्छविर्नीलमेघस्तेन समा अत एव कृष्णा
। अष्टभुजामाह बिभ्रतीति। विपुलौ वराभयप्रदत्वेन ऊर्जितौ द्वौ
बाहू ॥

१० ॥
४-८-११ तत एकः पात्री पात्रवान्पङ्कजी पङ्कजवान् घण्टी घण्टावान्
पञ्चमः पाशं धनुर्महाचक्रं च बिभ्रतीति पूर्वेणान्वयः ॥
११ ॥

---

विरतपर्व-अध्यय००९
॥ श्रीः ॥
४.९. अध्यायः ९

Mahabharata - Virata Parva - Chapter Topics
युधिष्ठिरेण यतिवेषपरिग्रहेण विराटसभाप्रवेशः ॥ १ ॥
प्रत्युत्थानादिना सत्कृतेन युधिष्ठिरेण विराटभवने निवासः ॥ २ ॥

Mahabharata - Virata Parva - Chapter Text

४-९-० (२८५१४)
वैशंपायन उवाच। ४-९-०क्ष् (३०११)
ततस्तु ते पुण्यजलां शिवां शुभां महर्षिगन्धर्वनिषेवितोदकाम् ।
त्रिलोककान्तामवतीर्य जाह्नवीमृषींश्च देवांश्च पितृनतपर्यन्
॥ १ ॥ ४-९-१ (२८५१५)
वरप्रदानं ह्यनुचिन्त्य पार्थिवे हुत्वाऽग्निहोत्रं कृतजप्यमङ्गलः ।
दिशं तथैन्द्रीमभितः प्रपेदिवान्कृताञ्जलिर्धर्ममुपाह्वयच्छनैः
॥ २ ॥ ४-९-२ (२८५१६)
युधिष्ठिर उवाच। ४-९-३क्ष् (३०१२)
वरप्रदानं मम दत्तवान्पिता प्रसन्नचेता वरदः प्रजापतिः ।
जलार्थिनो मे तृषितस्य सोदरा मया प्रयुक्ता विविशुर्जलाशयम् ॥ ३
॥ ४-९-३ (२८५१७)
निपातिता यक्षवरेण ते वने महाहवे वज्रभृतेव दानवाः ।
मया च गत्वा वरदो हि तोषितो विवक्षता प्रश्नसमुच्चयं गुरुः
॥ ४ ॥ ४-९-४ (२८५१८)
स मे प्रसन्नो भगवान्वरं ददौ परिष्वजंश्चाह तथैव सौहृदात् ।
वृणीष्व यद्वाञ्छसि पाण्डुनन्दन स्थितोऽन्तरिक्षे वरदोऽस्मि पश्य
माम् ॥ ५ ॥ ४-९-५ (२८५१९)
स वै मयोक्तो वरदः पिता प्रभुः सदैव मे धर्मरता मतिर्भवेत् ।
इमे च जीवन्तु ममानुजाः प्रभो वयं स्वरूपं च जयं तथाऽऽप्नुमः
॥ ६ ॥ ४-९-६ (२८५२०)
क्षमा च कीर्तिश्च यथेप्सितं भवेद्व्रतं तु सत्यं च समाप्तिरेव च ।

वरो ममैषोस्तु यथाऽनुकीर्तितो न तन्मृषा देववृषो यथाऽब्रवीत्
॥ ७ ॥ ४-९-७ (२८५२१)
वैशंपायन उवाच। ४-९-८क्ष् (३०१३)
इत्येवमुक्त्वा धर्मात्मा धर्ममेवानुचिन्तयन् ।
तदैव तत्प्रसादेन रूपमेवाभवत्स्वयम् ॥ ८ ॥ ४-९-८ (२८५२२)
स वै द्विजातिस्तरुणस्त्रिदण्डभृत्कमण्डलूष्णीषधरो व्यजायत ।
सुरक्तमाञ्जिष्ठवराम्बरः शिखी पवित्रपाणिर्ददृशे तदाऽद्भुतम्
॥ ९ ॥ ४-९-९ (२८५२३)
तथैव तेषामपि धर्मचारिणां यथोचिताहार्भरणाम्बरस्रजः ।
क्षणेन राजन्नभवन्महात्मनां प्रशस्तधर्माग्र्यफलाभिकाङ्क्षिणाम्
॥ १० ॥ ४-९-१० (२८५२४)
नवेन रूपेण विशांपतिर्युतस्त्वथर्वरूपेण बभौ प्रतापवान् ।
निबद्धवैडूर्यसितान्सकाञ्चनान्नृपस्तथाऽक्षान्परिवेष्ट्य वाससः
॥ ११ ॥ ४-९-११ (२८५२५)
ततो विराटं प्रथमं युधिष्ठिरो ददर्श दूरात्सुसमृद्धतेजसम् ।
अनन्ततेजोज्वलितं हुताशनं दुरासदं तीक्ष्णविषं यथोरगम् ॥ १२
॥ ४-९-१२ (२८५२६)
सभासदं प्राञ्जलिभिर्जनैर्वृतं विचित्रनानाविधशस्त्रपाणिभिः ।
उपायनौघैः प्रविशद्भिराचितं द्विजैश्च
शिक्षाक्षरमन्त्रधारिभिः ॥ १३ ॥ ४-९-१३ (२८५२७)
गजैरुदीर्णं तुरगैश्च सङ्कुलं मृगद्विपैः कुब्जगणैः समावृतम् ।
सितोच्छ्रितोष्णीषनिरुद्धमूर्धजं विचित्रवैडूर्यविकारकुण्डलम् ।
विराटमायाच्च युधिष्ठिरस्तदा बृहस्पतिः शक्रमिव त्रिविष्टपे
॥ १४ ॥ ४-९-१४ (२८५२८)
तमाव्रजन्तं प्रसमीक्ष्य पाण्डवं विराटराजो मुदितेन चक्षुषा ।
पप्रच्छ चैनं स नराधिपो मुहुर्द्विजाश्च ये चास्य सभासदस्तदा
॥ १५ ॥ ४-९-१५ (२८५२९)
विराट उवाच । ४-९-१६क्ष् (३०१४)
को वा विजानाति पुराऽस्य दर्शनं युवा सभां योऽयमुपैति मामिकाम् ।
रूपेण सारेण विराजयन्महीं श्रिया ह्ययं वैश्रवणो द्विजो यथा ॥ १६
॥ ४-९-१६ (२८५३०)
मृगेन्द्रराड्वारणयूथपोपमः प्रभात्ययं काञ्चनपर्वतो यथा ।
विराजते पावकसूर्यसन्निभं सचन्द्रनक्षत्र इवांशुमान्ग्रहः ॥ १७
॥ ४-९-१७ (२८५३१)
न दृश्यतेऽस्यानुचरो न कुञ्जरो न चोष्णरश्म्यावरणं समुच्छ्रितम् ।
न कुण्डलं नाङ्गदमस्य न स्रजो विचित्रिताङ्गश्च रथश्चतुर्युजः

॥ ३८ ॥ ४-९-१८ (२८५३२)
क्षात्रं च रूपं हि बिभर्त्ययं भृशं गजेन्द्रशार्दूलमहर्षभोपमः ।
अभ्यागतोऽस्माननलंकृतोपि सन् विरोचते भानुरिवाचिरोदितः ॥ १९
॥ ४-९-१९ (२८५३३)
विभात्ययं क्षत्रिय एव सर्वथा विराट इत्येवमुवाच तं प्रति ।
ससागरान्तामयमद्य मेदिनीं प्रशासितुं चार्हति वासवोपमः ॥ २०
॥ ४-९-२० (२८५३४)
नाक्षत्रियो नूनमयं भविष्यति मूर्धाभिषिक्तः प्रतिभाति मां प्रति ।
तुल्यं हि रूपं प्रतिदृश्यतेऽस्य गजस्य सिंहस्य तथर्षभस्य
॥ २१ ॥ ४-९-२१ (२८५३५)
यमेष कामं परिमार्गते द्विजः स चास्य सर्वः क्रियतामसंशयम् ।
प्रियं च मे दर्शनमीदृशे जने द्विजेषु मुख्येषु तथाऽतिथिष्वपि
॥ २२ ॥ ४-९-२२ (२८५३६)
धनेषु रत्नेष्वथ गोषु वेश्मसु प्रकामतो मे विचरत्ववारितः
॥ २३ ॥ ४-९-२३ (२८५३७)
वैशंपायन उवाच । ४-९-२४क्ष् (३०१५)
एवं ब्रुवाणस्तमनन्ततेजसं विराजमानं सहसोत्थितो नृपः ।
अन्येन रूपेण समीपमागतं त्रिदण्डकुण्ड्यङ्कुशशिक्यपाणिनम् ॥ २४
॥ ४-९-२४ (२८५३८)
समुत्थिता सा हि सभा सपार्थिवा सविप्रराजन्यविशा सशूद्रका ।
सभागत प्रेक्ष्य तपन्तमर्चिषां विनिःसृतं राहुमुखाद्यथा रविम्
॥ २५ ॥ ४-९-२५ (२८५३९)
स तेन पूर्वं जयतां भवानिह द्विजातिनोक्तोऽभिमुखः कृताञ्जलिः ।
जयं जयार्हेण समेत्य वर्धितो विराटराजो ह्यभिवादयच्च तम् ॥ २६
॥ ४-९-२६ (२८५४०)
तमब्रवीत्प्राञ्जलिरेष पार्थिवो विराटराजो मधुराक्षरं वचः ।
प्राप्तः कुतस्त्वं भगवन्किमिच्छसि क्व यास्यसे किं करवाणि ते द्विज
॥ २७ ॥ ४-९-२७ (२८५४१)
श्रुतं च शीलं च कुलं च शंस मे गोत्रं तथा नाम च देशमेव ते ।
सत्यप्रतिज्ञा हि भवन्ति साधवो विशेषतः प्रव्रजिता द्विजातयः
॥ २८ ॥ ४-९-२८ (२८५४२)
यथाऽनुरूपं प्रचरामि ते त्वहं न चावमन्ता न तवाभिभाषितम् ।
अपूजिता ह्यग्निसमा द्विजातयः कुलं दहेयुः सविषा इवोरगाः ॥ २९
॥ ४-९-२९ (२८५४३)
सर्वां च भूमिं तव दातुमुत्सहे सदण्डकोशां विसृजामि ते पुरम् ।
कस्यासि राज्ञो विषयादिहागतः किं कर्म चात्राचरसि द्विजोत्तम ॥ ३०

॥ ४-९-३० (२८५४४)
वैशंपायन उवाच। ४-९-३१क्ष् (३०१६)
एवं ब्रुवाणं तमुवाच पार्थिवं युधिष्ठिरो धर्ममवेक्ष्य चासकृत् ।
सत्यं वचः को न्विह वक्तुमुत्सहेद्यथाप्रतिज्ञं तु शृणुष्व
पार्थिव ॥ ३१ ॥ ४-९-३१ (२८५४५)
श्रुतं च शीलं च कुलं च कर्म च शृणुष्व मे जन्म च
देशमेव च ।
गुरूपदेशान्नियमाच्च मे व्रतं कुलक्रमार्थं पितृभिर्नियोजितम्
॥ ३२ ॥ ४-९-३२ (२८५४६)
द्विजो व्रतेनास्मि न च स्वतः प्रभो संमुण्डितः प्रव्रजितस्त्रिदण्डभृत् ।
इदं शरीरं मम पश्य मानुषं समावृतं पञ्चभिरेव धातुभिः
॥ ३३ ॥ ४-९-३३ (२८५४७)
ममेह पञ्चेन्द्रियगात्रदर्शिनो वदन्ति पञ्चैव पितॄन्यथा श्रुतिः ।
मनुष्यजातित्वमचिन्तयन्नहं न चास्मि तुल्यः पितृभिः स्वभावतः
॥ ३४ ॥ ४-९-३४ (२८५४८)
कङ्को हि नाम्ना विषयं तवागतो व्रती द्विजातिः स्वकृतेन कर्मणा ।
द्यूतप्रसङ्गादधनोऽस्मि राजन्सत्यप्रतिज्ञा व्रतिनश्चरामः ॥ ३५
॥ ४-९-३५ (२८५४९)
युधिष्ठिरस्यापि सखाऽभवं पुरा गृहप्रवेशी च शरीरमेव च ।
गृहे च तस्योपितवानहं सुखं राजाऽस्मि तस्य स्वपुरेऽभवं पुरा
॥ ३६ ॥ ४-९-३६ (२८५५०)
ममाज्ञया तत्र विचेरुरङ्गना मम प्रियार्थं दमयन्ति वाजिनः ।
मया कृतं तस्य पुरे तु यत्पुरा न तत्कदाचित्कृतवाञ्जनोऽन्यथा
॥ ३७ ॥ ४-९-३७ (२८५५१)
सोहं पुरा तस्य वयस्समः सखा चरामि सर्वां वसुधां सुदुःखितः ।
न तु प्रशान्तिं क्वचिदाप्तवानहं व्रतोपदेशान्नियमेन भारिकः ॥ ३८
॥ ४-९-३८ (२८५५२)
वैयाघ्रपद्योस्मि नरेन्द्र गोत्रतस्तदेव सौख्यं मृगयामहे वयम् ।
कृतज्ञभावेन मयाऽनुकीर्तितं युधिष्ठिरस्यात्मसमस्य चेष्टितम्
॥ ३९ ॥ ४-९-३९ (२८५५३)
इमं हि मोक्षाश्रममास्थितस्य मे युधिष्ठिरस्तुल्यगुणो भवानपि ।
न मेऽस्ति माता न पिता न बान्धवा न मेऽस्ति रूपं न रतिर्न सन्ततिः
॥ ४० ॥ ४-९-४० (२८५५४)
सुखं च दुःखं च हि तुल्यमद्य मे प्रियाप्रिये तुल्यगते गतागते ।
मुक्तोस्मि कामाच्च धनाच्च सांप्रतं त्वदाश्रये वस्तुमिहाभ्युपागतः
॥ ४१ ॥ ४-९-४१ (२८५५५)

संवत्सरेणेह समाप्यते त्विदं मम व्रतं दुष्करकर्मकारिणः ।
ततो भवन्तं परितोष्य कर्मभिः पुनर्व्रजिष्ये च कुतूहलं यतः
॥ ४२ ॥ ४-९-४२ (२८५५६)
अक्षान्निवप्तुं कुशलोस्म्यहं सदा पराजितः शकुनिरुतानि चिन्तयन् ।
मृगद्विजानां च रुतानि चिन्तयन्निराश्रयः प्रव्रजितोस्मि भिक्षुकः
॥ ४३ ॥ ४-९-४३ (२८५५७)
वैशंपायन उवाच । ४-९-४४क्ष् (३०१७)
तेनैवमुक्ते वचने नराधिपः कृताञ्जलिः प्रव्रजितं विलोक्य च ।
अथाब्रवीद्धृष्टमनाः शुभाक्षरं मनोनुगं सर्वसभागतं वचः
॥ ४४ ॥ ४-९-४४ (२८५५८)
ददामि ते हन्त वरं यदीप्सितं प्रशाधि मत्स्यान्यदि मन्यते भवान् ।
प्रिया हि धूर्ता मम चाक्षकोविदास्त्वं चापि देवो मम राज्यमर्हसि
॥ ४५ ॥ ४-९-४५ (२८५५९)
समानयानासनवस्त्रभोजनं प्रभूतमाल्याभरणानुलेपनम् ।
स सार्वभौमोपम सर्वदाऽर्हसि प्रियं हि मन्ये तव नित्यदर्शनम्
॥ ४६ ॥ ४-९-४६ (२८५६०)
ये त्वाऽभिधावेयुरनर्थपीडिता द्विजातिमुख्या यदि वेतरे जनाः ।
सर्वाणि कार्याण्यहमर्थितस्त्वया तेषां करिष्यामि न मेऽत्र संशयः
॥ ४७ ॥ ४-९-४७ (२८५६१)
ममान्तिके यश्च तवाप्रियं चरेत्प्रवासये तं परिचिन्त्य मानवम् ।
यच्चापि किंचिद्वसु विद्यते मम प्रभुर्भवांस्तस्य वशी वसेह च
॥ ४८ ॥ ४-९-४८ (२८५६२)
युधिष्ठिर उवाच। ४-९-४९क्ष् (३०१८)
अतोऽभिलाषः परमो न विद्यते न मे जितं किंचन धारये धनम् ।
न भोजनं किंचन संस्पृशेयं हविष्यभोजी निशि च क्षितीशयः
॥ ४९ ॥ ४-९-४९ (२८५६३)
व्रतोपदेशात्समयो हि नैष्ठिको न क्रोधितव्यं नरदेव कस्यचित् ।
एवंप्रतिज्ञस्य ममेह भूपते निवासबुद्धिर्भविता तु नान्यथा ॥ ५०
॥ ४-९-५० (२८५६४)
एवं वरं मात्स्य वृणे प्रदापितं कृति भविष्यामि वरेण तेऽनघ
॥ ५१ ॥ ४-९-५१ (२८५६५)
वैशंपायन उवाच। ४-९-५२क्ष् (३०१९)
एवं तु राज्ञः प्रथमः समागमो बभूव मात्स्यस्य युधिष्ठिरस्य च ।
विराटराजस्य हि तेन सङ्गमो बभूव विष्णोरिव वज्रपाणिना ॥ ५२
॥ ४-९-५२ (२८५६६)
तमासनस्थं प्रियरूपदर्शनं निरीक्षमाणो न ततर्प भूमिपः ।

सभां च तां प्रज्वलयन्युधिष्ठिरः श्रिया यथा शक्रइव
त्रिविष्टपम् ॥ ५३ ॥ ४-९-५३ (२८५६७)
एवं स लब्ध्वा नृपतिः समागमं विराटराजेन नरर्षभस्तदा ।
उवास वीरः परमार्चितः सुखी न चास्य कश्चिच्चरितं बुबोध तत्
॥ ५४ ॥ ॥ ४-९-५४ (२८५६८)

इति श्रीमन्महाभारते विराटपर्वणि पाण्डवप्रवेशपर्वणि
नवमोऽध्यायः ॥ ९ ॥
Mahabharata - Virata Parva - Chapter Footnotes

४-९-६ वयश्च रूपं च बलं तथाऽऽप्नुयुरिति थो धो पाठः ॥
६ ॥
४-९-२४ अन्येन रूपेण यतिवेषेण आगतं दृष्ट्वेति शेषः ॥
२४ ॥

---

विरतपर्व-अध्यय०१०
॥ श्रीः ॥
४.१०. अध्यायः १०

Mahabharata - Virata Parva - Chapter Topics
भीमेन सूदवेषपरिग्रहेण विराटसभाप्रवेशः ॥ १ ॥
विराटेन भीमस्य पाकाधिकारे नियोजनम् ॥ २ ॥

Mahabharata - Virata Parva - Chapter Text

४-१०-० (२८५६९)
वैशंपायन उवाच । ४-१०-०क्ष् (३०२०)
अथापरस्यां दिशि भीमदर्शनो वृकोदरोऽदृश्यत सिंहविक्रमः ।
असिप्रवेके प्रतिमुच्य शाणिते खजां च दर्वीं च करेण धारयन् ॥ १
॥ ४-१०-१ (२८५७०)
त्वचं च गोचर्ममयीं सुमर्दितां समुक्षितां पानकरागषाडवैः ।
किलासमालम्ब्य करेण चायसं सशृङ्गिबेरार्द्रकभूस्तृणाङ्कुरम्
॥ २ ॥ ४-१०-२ (२८५७१)
गम्भीररूपः परमेण तेजसा रविर्यथा लोकमिमं प्रकाशयन् ।
स कृष्णवासा गिरिराजसारवान् स मत्स्यराजं समुपेत्य तस्थिवान् ॥ ३
॥ ४-१०-३ (२८५७२)
सभागतो वारणयूथपोपमस्तमिस्रहा रात्रिमिवावभासयन् ।

सहस्रनेत्रावरजान्तकोपमस्त्रिलोकपालाधिपतिर्यथा हरिः ॥ ४
॥ ४-१०-४ (२८५७३)
तमाव्रजन्तं गजयूथपोपमं निरीक्षमाणो नवसूर्यवर्चसम् ।
भयात्समुद्विग्नविपण्णचेतनो दिशश्च सर्वाः प्रसमीक्ष्य चासकृत्
॥ ५ ॥ ४-१०-५ (२८५७४)
तमेकवस्त्रं परसैन्यवारणं सभाऽविदूरान्नृपतिर्नृपात्मजम् ।
समीक्ष्य वैक्लब्यमुपेयिवाञ्शनैर्जनाश्च भीताः परिसर्पिरे भृशम्
॥ ६ ॥ ४-१०-६ (२८५७५)
अथाब्रवीन्मात्स्यपतिः सभागतान् भृशातुरोष्णं परिनिश्वसन्निव ।
कोऽयं युवा वारणराजसन्निभः सभामभिप्रैति हि मामिकामिमाम् ॥ ७
॥ ४-१०-७ (२८५७६)
को वा विजानाति पुराऽस्य दर्शनं मृगेन्द्रशार्दूलगतिं हि मामकः ।
व्यूढान्तरांसो मृगराडिवोत्कटो य एष दिव्यः पुरुषः प्रकाशते ॥ ८
॥ ४-१०-८ (२८५७७)
राजश्रिया ह्येष विभाति राजवद्विरोचते रुक्मगिरिप्रभोपमः ।
नाक्षत्रियो नूनमयं भविष्यति सहस्रनेत्रप्रतिमस्तथा ह्यसौ ॥ ९
॥ ४-१०-९ (२८५७८)
रूपेण यश्चाप्रतिमो ह्ययं महान्महीमिमां शत्रः इवाभिपालयेत् ।
नाभूमिपोऽयं हि रतिर्ममेति च च्युतः समृद्ध्या नभसीव नाहुषः
॥ १० ॥ ४-१०-१० (२८५७९)
वैशंपायन उवाच। ४-१०-११क्ष् (३०२१)
वितर्कमाणस्य च तस्य पाण्डवः सभामतिक्रम्य वृकोदरोऽब्रवीत् ।
जयेति राजानमभिप्रमोदयन्सुखेन सभ्यं च सभागतं जनम् ॥ ११
॥ ४-१०-११ (२८५८०)
ततो नृपं वाक्यमुवाच पाण्डवो यथाऽनुपूर्व्यात्कृपयान्वितोत्तरम् ।
त्वां जीवितुं शत्रुहन्नागतोऽहं त्वमेव लोके परमो हि संश्रयः
॥ १२ ॥ ४-१०-१२ (२८५८१)
नरेन्द्र शूद्रोस्मि चतुर्थवर्णभाग्गुरूपदेशात्परिचारकर्मकृत् ।
जानामि सूपांश्च रसांश्च संस्कृतान्मांसान्यपूपांश्च पचामि शोभनान् ।
रागप्रकाराश्च बहून्फलाश्रयान्महानसे मे न समोस्ति सूपकृत्
॥ १३ ॥ ४-१०-१३ (२८५८२)
वैशंपायन उवाच । ४-१०-१४क्ष् (३०२२)
तमब्रवीन्मत्स्यपतिः प्रहृष्टवत्प्रियं प्रगल्भं मधुरं विनीतवत् ।
न शूद्रतां कांचन लक्षयामि ते कुबेरचन्द्रेन्द्रदिवाकरप्रभ
॥ १४ ॥ ४-१०-१४ (२८५८३)
हुताशनाशीविषतुल्यतेजसो न कर्म ते योग्यमिदं महानसे ।

न सूपकारो भवितुं त्वमर्हसि सुपर्णगन्धर्वमहोरगोपम ॥ १५
॥ ४-१०-१५ (२८५८४)
अनीककर्णाग्रधरो ध्वजी रथी भवाद्य मे वारणवाहिनीपतिः ।
न नीचकर्मा भवितुं त्वमर्हसि प्रशासितुं भूमिमिमां त्वमर्हसि
॥ १६ ॥ ४-१०-१६ (२८५८५)
भीम उवाच । ४-१०-१७क्ष् (३०२३)
चतुर्थवर्णोस्म्यहमुग्रशासन न वै वृणे त्वामहमीदृशं पदम् ।
जात्याऽस्मि शूद्रो बललेति नाम्ना जिजीविषुस्त्वद्विषयं समागतः ॥ १७
॥ ४-१०-१७ (२८५८६)
युधिष्ठिरस्यास्मि महानसे पुरा बभूव सर्वप्रभुरन्नपानदः ।
अथापि मामुत्सृजसे महीपते व्रजाम्यहं यावदितो यथागतम् ॥ १८
॥ ४-१०-१८ (२८५८७)
त्वमन्नसंस्कारविधौ प्रशाधि मां भवामि तेऽहं नरदेव सूपकृत् ।
बलेन तुल्यश्च न विद्यते मया नियुद्धशीलोस्मि सदा हि पार्थिव
॥ १९ ॥ ४-१०-१९ (२८५८८)
गजांश्च सिंहांश्च समेयिवानहं सदा करिष्यामि तवानघ प्रियम् ।
न नीचकर्मा तव मादृशः प्रभो बलस्य नेताऽप्यबलो भवेदिति
॥ २० ॥ ४-१०-२० (२८५८९)
स्वकर्मतुष्टाश्च वयं नराधिप प्रशाधि मां सूदपदे यदीच्छसि ।
ये सन्ति मल्ला बलवीर्यसंमतास्तानेव योत्स्यामि तवाभिहर्षयन् ॥ २१
॥ ४-१०-२१ (२८५९०)
वैशंपायन उवाच। ४-१०-२२क्ष् (३०२४)
तमेवमुक्ते वचने नराधिपः प्रत्यब्रवीन्मत्स्यपतिः प्रहृष्टवत् ।
सोहं न मन्ये तव कर्म तत्समं समुद्रनेमिं पृथिवीं त्वमर्हसि
॥ २२ ॥ ४-१०-२२ (२८५९१)
त्रिलोकपालो हि यथा विराजसे तथाऽद्य मे विष्णुरिवातिरोचसे ।
यथा तु कामस्तव तत्तथा कृतं महानसे मे भव मे पुरस्कृतः ।
नराश्च मे तत्र मया सदाऽर्चिता भवाद्य तेषामधिपो मया कृतः
॥ २३ ॥ ४-१०-२३ (२८५९२)
तथा स भीमो विहितो महानसे विराटराजस्य बभूव वै प्रियः ।
उवास राजन्न च तं पृथग्जनो बुबोध तस्यानुचरश्च कश्चन
॥ २४ ॥ ॥ ४-१०-२४ (२८५९३)

इति श्रीमन्महाभारते विराटपर्वणि पाण्डवप्रवेशपर्वणि
दशमोऽध्यायः ॥ १० ॥

---

विरतपर्व-अध्यय०११

॥ श्रीः ॥

## ४.११. अध्यायः ११

Mahabharata - Virata Parva - Chapter Topics

अर्जुनेन षण्डवेषपरिग्रहेण विराटसभाप्रवेशः ॥ १ ॥
विराटेनार्जुनस्य कन्यानाटने नियोजनम् ॥ २ ॥

Mahabharata - Virata Parva - Chapter Text

४-११-० (२८५९४)
वैशंपायन उवाच। ४-११-०क्ष् (३०२५)
अथापरोऽदृश्यत वर्णवान्युवा स्त्रीवेषधारी समलंकृतो भृशम् ।
प्रवालचित्रे प्रविमुच्य कुण्डले उभे च कम्बू परिपातुके तथा ॥ १
॥ ४-११-१ (२८५९५)
कृष्णे च रक्ते च निबध्य वाससी शरीरवाञ्शुक्रबृहस्पतिप्रभः ।
बहूंश्च दीर्घांश्च विकीर्य मूर्धजान्महाभुजो मत्तगजेन्द्रविक्रमः
॥ २ ॥ ४-११-२ (२८५९६)
क्लैब्येन वेषेण न भति भाति च ग्रहाभिपन्नो नभसीव चन्द्रमाः ।
गतेन चोर्वी परिकम्पयंस्तदा विराटमासाद्य सभासमीपतः ॥ ३
॥ ४-११-३ (२८५९७)
तं प्रेक्ष्य राजोपगतं सभातले व्याजाप्रतिच्छन्नममित्रमर्दनम् ।
विराजमानं सुरराजवर्चसं सुतं सुरेन्द्रस्य गजेन्द्रविक्रमम् ॥ ४
॥ ४-११-४ (२८५९८)
सर्वानपृच्छच्च समीपचारिणः कुतोऽयमायाति न मे पुरा श्रुतः ।
न चैनमूचुर्विदितं नरास्तदा सविस्मयं वाक्यमिदं नृपोऽब्रवीत्
॥ ५ ॥ ४-११-५ (२८५९९)
विराट उवाच। ४-११-६क्ष् (३०२६)
गजेन्द्रलीलो मृगराजगामी वृषेक्षणो देवसुतोग्रतेजाः ।
पीनांसबाहुः कनकावदातः कोऽयं नरो मे नगरं प्रविष्टः ॥ ६
॥ ४-११-६ (२८६००)
किमेष देवेन्द्रसुतः किमेष ब्रह्मात्मजो वा किमयं स्वयंभूः ।
उमासुतो वैश्रवणात्मजो वा प्रेक्ष्यैनमासीदिति मे वितर्कः ॥ ७
॥ ४-११-७ (२८६०१)
वैशंपायन उवाच। ४-११-८क्ष् (३०२७)
सभामतिक्रम्य स वासवोपमो निरीक्षमाणो बहुभिः सभागतैः ।
स तत्र राजनममित्रहाऽब्रवीद्बृहन्नलाहं नरदेव नर्तकी ॥ ८

॥ ४-११-८ (२८६०२)
वेणीं प्रकुर्यां रुचिरे च कुण्डले ग्रथे स्रजः प्रावरणानि संहरे ।
स्नानं चरेयं विमृजे च दर्पणं विशेषकेष्वेव च कौशलं
मम ॥ ९ । ४-११-९ (२८६०३)
क्लीबेषु बालेषु जनेषु नर्तने शिक्षाप्रदानेषु च योग्यता मम ।
करोमि वेणीषु च पुष्पपूरकं न मे स्त्रियः कर्मणि कौशलाधिकाः
॥ १० ॥ ४-११-१० (२८६०४)
इत्यर्जुनस्तं नरदेवमोजसा विज्ञाप्य तस्थौ विधिनाऽऽत्मनः क्रियाम् ।
तमब्रवीत्प्रांशुमुदीक्ष्य विस्मितो विराटराजोपसृतं महायशाः ॥ ११
॥ ४-११-११ (२८६०५)
नार्हस्तु वेषोऽयमनूर्जितस्ते नापुंस्त्वमर्हं नरदेवसिंह ।
तवैव वेषः शुभवेषभूषणैर्विभूषितो भूतपतेरिव प्रभो
॥ १२ ॥ ४-११-१२ (२८६०६)
विभाति भानोरिव रश्मिमालिनो घनावरुद्धे गगने घनैरिव ।
धनुर्हि मन्ये तव शोभयेद्भुजौ तथाहि पीनावतिमात्रमायतौ ॥ १३
॥ ४-११-१३ (२८६०७)
प्रगृह्य चापं त्वनुरूपमात्मनो रक्षस्व देशं पुरमद्य सुस्थिरः ।
पुत्रेण तुल्यो भव मे बृहन्नले वृद्धोस्मि वित्तं प्रतिपादयामि ते
॥ १४ ॥ ४-११-१४ (२८६०८)
त्वं रक्ष मे सर्वमिदं पुरं प्रभो न षण्डतां कांचन लक्षयामि ते ।
प्रशाधि मत्स्यांस्तरसा विवर्धयन्ददामि राज्यं तव सत्यवागहम्
॥ १५ ॥ ४-११-१५ (२८६०९)
वैशंपायन उवाच। ४-११-१६क्ष् (३०२८)
तस्याग्रतः स्वानि धनूंषि पार्थिवो बहूनि दीर्घाणि च वर्णवन्ति च ।
ददौ स सज्यानि बलान्वितानि जिज्ञासमानः किमयं करिष्यति ॥ १६
॥ ४-११-१६ (२८६१०)
ततोऽर्जुनः क्लीबतरं वचोऽब्रवीन्न मे धनुर्धारितमीदृशं विभो ।
न चापि दृष्टं धनुरीदृशं क्वचिन्न मादृशाः सन्ति धनुर्धरा
भुवि ॥ १७ ॥ ४-११-१७ (२८६११)
नृत्याम गायामि च वादयाम्यहं प्रानर्तने कौशलनैपुणं मम ।
तदुत्तरायाः परिधत्स्व नर्तने भवामि देव्या नरदेव नर्तकी ॥ १८
॥ ४-११-१८ (२८६१२)
विराट उवाच। ४-११-१९क्ष् (३०२९)
ददामि ते तं हि वरं बृहन्नले सुतां हि मे नर्तय याश्च तादृशीः ।
ततो विराटः स्वयमाह्वयत्सुतां नराधिपस्तां च सुमध्यसुन्दरीम् ॥ १९
॥ ४-११-१९ (२८६१३)

उवाच चैनां मुदितेन चेतसा बृहन्नला नाम सखी भवत्वियम् ।
सुगात्रि संप्रीतिसुबद्धसौहृदा तवाङ्गने प्राणसमा च नित्यदा ॥ २०
॥ ४-११-२० (२८६१४)
प्रकामभक्ष्याभरणाम्बरा शुभा चरत्वियं सर्वजनेष्ववारिता ।
न दुष्कुलानामियमाकृतिर्भवेन्न वृत्तभेदी भवतीदृशो जनः
॥ २१ ॥ ४-११-२१ (२८६१५)
वैशंपायन उवाच। ४-११-२२क्ष् (३०३०)
संमन्त्र्य राजा विविधैः स्वमन्त्रिभिः परीक्ष्य चैनं प्रमदाभिराशु वै ।
अपुंस्त्वमप्यस्य निशम्य च स्थिरं ततः कुमारीपुरमुत्ससर्ज तम्
॥ २२ ॥ ४-११-२२ (२८६१६)
स शिक्षयामास च गीतवदनं सुतां विराटस्य धनंजयः प्रभुः ।
सखीश्च तस्याः परिचारिकास्तथा प्रियश्च तस्याः स बभूव पाण्डवः
॥ २३ ॥ ४-११-२३ (२८६१७)
तथा स तत्रैव धनंजयोऽवसत्प्रियाणि कुर्वन्त्सह ताभिरात्मवान् ।
तथा गतं तत्र न जज्ञिरे जना बहिश्चरा वाऽप्यथवेतरे जनाः
॥ २४ ॥ ॥ ४-११-२४ (२८६१८)

इति श्रीमन्महाभारते विराटपर्वणि पाण्डवप्रवेशपर्वणि
एकादशोऽध्यायः ॥ ११ ॥

---

विरतपर्व-अध्यय०१२
॥ श्रीः ॥
४.१२. अध्यायः १२

Mahabharata - Virata Parva - Chapter Topics
नकुलेन विराटमेत्य स्वस्याश्वशास्त्रे कौशलाभिधानम् ॥ १ ॥
विराटेन नकुलस्याश्वपालने नियोजनम् ॥ २ ॥

Mahabharata - Virata Parva - Chapter Text

४-१२-० (२८६१९)
वैशंपायन उवाच। ४-१२-०क्ष् (३०३१)
अथापरोऽदृश्यत पाण्डवः प्रभुर्विराटराजे तुरगान्समीक्षति ।
तमापतन्तं ददृशुः पृथग्जनाः प्रमुक्तमभ्रादिव चन्द्रमण्डलम्
॥ १ ॥ ४-१२-१ (२८६२०)
स वै हयानैक्षत तानितस्ततः समीक्षमाणं च ददर्श मत्स्यराट् ।
दृष्ट्वा तथैनं स कुरूत्तमं तमः पप्रच्छ तान्सर्बसभासदस्तदा

॥ २ ॥ ४-१२-२ (२८६२१)
को वा विजानाति पुराऽस्य दर्शनं योऽयं युवाऽभ्येति हि मासिकां सभाम् ।
प्रियो हि मे दर्शनतोपि संमतो ब्रवीतु कश्चिद्यदि दृष्टवानिमम्
॥ ३ ॥ ४-१२-३ (२८६२२)
अयं हयान्पश्यति मामकान्मुहुर्ध्रुवं हयज्ञो भविता विचक्षणः ।
प्रवेश्यतामेष समीपमाशु वै विभाति वीरो हि यथाऽमरस्तथा ॥ ४
॥ ४-१२-४ (२८६२३)
वितर्कयत्येव हि मत्स्यराजनि त्वरन्कुरूणामृषभः सभामगात् ।
ततः प्रणम्योपनतः कुरूत्तमो विराटराजानमुवाच पार्थिवम् ॥ ५
॥ ४-१२-५ (२८६२४)
तवागतोऽहं पुरमद्य भूपते जिजीविषुर्वेतनभोजनार्थिकः ।
तवाश्वबन्धः सुभृतो भवाम्यहं कुरुष्व मामश्वपतिं यदीच्छसि
॥ ६ ॥ ४-१२-६ (२८६२५)
विराट उवाच। ४-१२-७क्ष् (३०३२)
ददानि यानानि धनानि वेतनं न चाश्वसूतो भवितुं त्वमर्हसि ।
कुतोसि कस्यामि कथं त्वमागतो ब्रवीहि शिल्पं तव विद्यते च यत्
॥ ७ ॥ ४-१२-७ (२८६२६)
नकुल उवाच। ४-१२-८क्ष् (३०३३)
पञ्चानां पाण्डुपुत्राणां ज्येष्ठो राजा युधिष्ठिरः ।
तेनाहमश्वेषु पुरा प्रकृतः शत्रुकर्शन ॥ ८ ॥ ४-१२-८ (२८६२७)
अश्वानां प्रकृतिं वेद्मि विनयं चापि सर्वशः ।
दुष्टानां प्रतिपत्तिं च कृत्स्नं चैव चिकित्सितम् ॥ ९ ॥ ४-१२-९ (२८६२८)
न कातरं स्यान्मम वाजिवाहनं न मेऽस्ति दुष्टा बडवा कुतो हयः ।
जानंस्तु मामाह स चापि पाण्डवो युधिष्ठिरो ग्रन्थिकमेव नामतः
॥ १० ॥ ४-१२-१० (२८६२९)
मातलिरिव देवपतेर्दशरथनृपतेः सुमत्र इव यन्ता ।
सुमह इव जामदग्रेस्तथैव तव शिक्षयाम्यश्वान् ॥ ११ ॥ ४-१२-११ (२८६३०)
युधिष्ठिरस्य राजेन्द्र नरराजस्य शासनात् ।
शतसाहस्रकोटीनामश्वानामस्मि रक्षिता ॥ १२ ॥ ४-१२-१२ (२८६३१)
विराट उवाच। ४-१२-१३क्ष् (३०३४)
यदस्ति किंचिन्मम वाजिवाहनं तदस्तु सर्वं त्वदधीनमद्य वै ।
ये चापि केचिन्मम वाजियोधास्त्वदाश्रयाः सारथयश्च सन्तु मे ॥ १३
॥ ४-१२-१३ (२८६३२)
इदं तवेष्टं विहितं सुरोपम ।ड यत्ते प्रसमीक्षितं वरम् ।
॥ऽनुरूपं हयकर्म दृश्यते विभाति राजेव न कर्म वाजिनाम् ॥ १४
॥ ४-१२-१४ (२८६३३)

युधिष्ठिरस्यैव हि दर्शनेन मे समं तवेदं प्रियदर्श दर्शनम् ।
कथं नु भृत्यैः स विनाकृतो वने चरत्यनिन्द्यो रमते च पाण्डवः
॥ १५ ॥ ४-१२-१५ (२८६३४)
वैशंपायन उवाच । ४-१२-१६क्ष् (३०३५)
तथा स गन्धर्ववरोपमो युवा विराटराज्ञा मुदितेन पूजितः ।
न चैवमन्येऽपि विदुः कथंचन प्रियाभिरामं विचरन्तमन्तरा
॥ १६ ॥ ॥ ४-१२-१६ (२८६३५)

इति श्रीमन्महाभारते विराटपर्वणि पाण्डवप्रवेशपर्वणि
द्वादशोऽध्यायः ॥ १२ ॥

---

विरतपर्व-अध्यय०१३
॥ श्रीः ॥
४.१३. अध्यायः १३

Mahabharata - Virata Parva - Chapter Topics
सहदेवेन गोपालवेषधारणेन विराटंप्रति गमनम् ॥ १ ॥
विराटेन सहदेवस्य गोपालने नियोजनम् ॥ २ ॥

Mahabharata - Virata Parva - Chapter Text

४-१३-० (२८६३६)
वैशंपायन उवाच। ४-१३-०क्ष् (३०३६)
अथापरोऽदृश्यत वै शशी यथा हुतो हविर्भिर्हि यथाऽध्वरे शिखी ।
तथा समालक्ष्यत चारुदर्शनः प्रकाशयन्सूर्य इवाचिरोदितः ॥ १
॥ ४-१३-१ (२८६३७)
तमाव्रजन्तं सहदेवमग्रणीर्नृपो विराटो नचिरात्समैक्षत ।
प्रैक्षन्त तं तत्र पृथक्समागताः सभागताः सर्वमनोहरप्रभम् ।
युवानमायान्तममित्रकर्शनं प्रमुक्तमभ्रादिव चन्द्रमण्डलम् ॥ २ ॥
४-१३-२ (२८६३८)
यष्ट्या प्रमाणान्वितया सुदर्शनं दामानि पाशं च निबद्धय पृष्ठतः ।
मौर्वी च तन्त्रीं महतीं सुसंहितां बालैश्च तारैर्बहुभिः
समावृताम् ॥ ३ ॥ ४-१३-३ (२८६३९)
स चापि राजानमुवाच वीर्यवान्कुरुष्व मां पार्थिव गोष्ववस्थितम् ।
मया हि गुप्ताः पशवो भवन्तु ते प्रसन्ननिद्राः प्रभवोस्मि वल्लवः
॥ ४ ॥ ४-१३-४ (२८६४०)
न श्वापदेभ्यो न च रोगतो भयं न चापि दावान्न च तस्कराद्भयम् ।

पयःप्रभूता बहुला निरामया भवन्ति गावः सुभृता नराधिप ॥ ५
॥ ४-१३-५ (२८६४१)
निशम्य राजा सहदेवभाषितं निरीक्ष्य माद्रीसुतमभ्यनन्दत् ।
उवाच हृष्टो मुदितेन चेतसा न बल्लवत्वं त्वयि वीर लक्षये ॥ ६ ।
४-१३-६ (२८६४२)
धैर्याद्वपुः क्षात्रमिवेह ते दृढं प्रकाशते कौरववंशजस्य वा ।
नापण्डितेयं तव दृश्यते तनुर्भवेह राज्ये मम मन्त्रधर्मभृत्
॥ ७ ॥ ४-१३-७ (२८६४३)
प्रशाधि मत्स्यान्सहराजकानिमान्बृहस्पतिः शत्रुयुतानिवामरान् ।
बलं च मे रक्ष सुवेष सर्वशो गृहाण खड्गं प्रतिरूपमात्मः
॥ ८ ॥ ४-१३-८ (२८६४४)
अनीककर्णाग्रधरो बलस्य मे प्रभुर्भवानस्तु गृहाण कार्मुकम् ॥ ९ ।
४-१३-९ (२८६४५)
वैशंपायन उवाच। ४-१३-१०क्ष् (३०३७)
विराटराज्ञाऽभिहितः कुरूत्तमः प्रशस्य राजानमभिप्रणम्य च ।
उवाच मत्स्यप्रवरं महापतिः शृणुष्व राजन्मम वाक्यमुत्तमम्
॥ १० ॥ ४-१३-१० (२८६४६)
बालो ह्यहं जातिविशेषदूषितः कुतोऽद्य मे नीतिषु युक्तमन्त्रता ।
स्वकर्मतुष्टाश्च वयं नराधिप प्रशाधि मां गोपरिरक्षणेऽनघ
॥ ११ ॥ ४-१३-११ (२८६४७)
वैश्योस्मि नाम्नाऽहमरिष्टनेमिर्गोसङ्ख्य आसं कुरुपुङ्गवानाम् ।
वस्तुं त्वयीच्छामि विशांवरिष्ठ तान्राजसिंहान्न हि वेद्मि पार्थान्
॥ १२ ॥ ४-१३-१२ (२८६४८)
न जीवितुं शक्यमतोऽन्यकर्मणा न च त्वदन्यो मम रोचते विभो
॥ १३ ॥ ४-१३-१३ (२८६४९)
विराट उवाच। ४-१३-१४क्ष् (३०३८)
त्वं ब्राह्मणो वा यदि वाऽपि भूमिपः समुद्रनेमीश्वररूपवानसि ।
आचक्ष्व तत्वं त्वममित्रकर्शन न बल्लवत्वं त्वयि विद्यते समम्
॥ १४ ॥ ४-१३-१४ (२८६५०)
कस्यामि राज्ञो विषयादिहागतः किं चापि शिल्पं तव विद्यते कृतम् ।
कथं त्वमस्मासु निवत्स्यसे सदा वदस्व किं चापि तवेह वेतनम् ॥ १५
॥ ४-१३-१५ (२८६५१)
सहदेव उवाच। ४-१३-१६क्ष् (३०३९)
पञ्चानां पाण्डुपुत्राणां ज्येष्ठो राजा युधिष्ठिरः ।
तस्याष्टौ शतसाहस्रं गवां वर्गाः शतंशतम् ॥ १६ ॥ ४-१३-१६ (२८६५२)
अपरे दशसाहस्रा द्विस्तावन्तस्तथा परे ।

तेषां गोसङ्ख्य आसं वै तन्त्रीपालेति मां विदुः ॥१७ ॥ ४-१३-१७ (२८६५३)
भूतं भव्यं भविष्यच्च यच्चान्यद्गोगतं क्वचित् ।
न मेऽस्त्यविदितं किंचित्समन्ताद्दशयोजनम् ॥१८ ॥ ४-१३-१८ (२८६५४)
गुणाः सुविदिता ह्यासन्मया तस्य महात्मनः ।
आसीच्च स मया तुष्टः कुरुराजो युधिष्ठिरः ॥१९ ॥ ४-१३-१९ (२८६५५)
अनेन गणिता गावो दुर्विज्ञेया महत्तराः ।
बहुक्षीरतरास्ता वै बह्व्यः सत्यः सपुत्रिकाः ॥२० ॥ ४-१३-२० (२८६५६)
क्षिप्रं च गावो बहुला भवन्ति न तासु रोगो भवतीह कश्चित् ।
तैस्तैरुपयैर्विदितं मयैतदेतानि शिल्पानि मयि स्थितानि ॥२१
॥ ४-१३-२१ (२८६५७)
ऋषभानपि जानामि राजन्पूजितलक्षणान् ।
येषां मूत्रमुपाघ्राय वन्ध्या अपि प्रसूयते ॥२२ ॥ ४-१३-२२ (२८६५८)
वैशंपायन उवाच। ४-१३-२३क्ष् (३०४०)
मत्स्याधिपो हर्षकलेन चेतसा माद्रीसुतं पाण्डवमभ्यभाषत ।
नैवानुमन्ये तव कर्म कुत्सितं महीं समग्राममभिपातुमर्हसि ॥२३
॥ ४-१३-२३ (२८६५९)
अथ त्विदानीं तव रोचते विभो यथेष्टतो गव्यमवेक्ष मामकम् ।
त्वदर्पणा मे पशवो भवन्तु वै पशून्सपालान्भवते ददाम्यहम् ॥२४
॥ ४-१३-२४ (२८६६०)
शतं सहस्राणि गवां हि सन्ति वर्णस्यवर्णस्य पृथग्गणानाम् ।
ददामि तेऽहं वरमीप्सितं च यत्त्वदर्पणा मे पशवो भवन्त्विति
॥२५ ॥ ४-१३-२५ (२८६६१)
वैशंपायन उवाच। ४-१३-२६क्ष् (३०४१)
एवं विराटेन समेत्य पाण्डवो लब्ध्वा च गोबल्लवतां यथेष्टतः ।
अज्ञातचर्यामवसन्महात्मा यथा रविश्चास्तगिरिं प्रविष्टः ॥२६
॥ ४-१३-२६ (२८६६२)
एवं विराटे न्यवसंश्च पाण्डवा यथा प्रतिज्ञाभिरमोघविक्रमाः ।
अबुद्धचर्यां चरितुं यथातथं समुद्रनेमीमभिशास्तुमुद्यताः ॥२७
॥ ॥ ४-१३-२७ (२८६६३)

इति श्रीमन्महाभारते विराटपर्वणि पाण्डवप्रवेशपर्वणि
त्रयोदशोऽध्यायः ॥१३ ॥

---

विरतपर्व-अध्यय०१४
॥ श्रीः ॥
४.१४. अध्यायः १४

Mahabharata - Virata Parva - Chapter Topics
द्रौपद्या सैरन्ध्रीवेषधारणेन सुदेष्णागृहे निवासः ॥१ ॥

Mahabharata - Virata Parva - Chapter Text

४-१४-० (२८६६४)
वैशंपायन उवाच ।४-१४-०क्ष् (३०४२)
ततः कृष्णा सुकेशी सा दर्शनीया शुचिस्मिता ।
वेणीकेशान्समुत्क्षिप्य पीनवृत्तकुचा शुभा ।
जुगूहे दक्षिणे पार्श्वे मृदूनसितलोचना ॥१ ॥ ४-१४-१ (२८६६५)
वासश्च परिधायैकं कृष्णा सुमलिनं महत् ।
कृत्वा वेषं च सैरन्ध्र्याः कृष्णा व्यचरदार्तवत् ॥२ ॥४-१४-२
(२८६६६)
प्रविष्टा नगरं भीरूः सैरन्ध्रीवेषसंयुता ।
तां नराः परिधावन्तः स्त्रियश्च समुपाद्रवन् ॥३ ॥४-१४-३ (२८६६७)
अपृच्छंस्ते च तां दृष्ट्वा का त्वं किं च चिकीर्षसि ।
सा तानुवाच राजेन्द्र सैरन्ध्र्यहमुपागता ।
कर्म चेच्छामि वै कर्तुं तस्य या मां भरिष्यति ॥४ ॥ ४-१४-४ (२८६६८)
वैशंपायन उवाच।४-१४-५क्ष् (३०४३)
तस्या रूपेण वेषेण श्लक्ष्णया च गिरा तथा ।
न श्रद्दधानास्तां देवीमन्नहेतोरुपस्थिताम् ॥५ ॥४-१४-५ (२८६६९)
विराटस्य तु कैकेयी भार्या परमसंमता ।
आलोकयन्ती ददृशे प्रासादाद्द्रुपदात्मजाम् ॥६ ॥४-१४-६ (२८६७०)
सा समीक्ष्य तथारूपामनाथामेकवाससम् ।
स्त्रीभिश्च पुरुषैश्चापि सर्वतः परिवारिताम् ॥७ ॥४-१४-७ (२८६७१)
विराटभार्या तां देवी कारुण्याज्जातसंभ्रमा ।
अप्रेषयत्समीपस्थाः स्त्रियो वृद्धाश्च तत्पराः ॥८ ॥४-१४-८ (२८६७२)
अपनीय ततः सर्वा आनयध्वमिहैव ताम् ।
यदा दृष्टा मया साध्वी कम्पते मे मनस्तदा ।
तस्माच्छीघ्रमिहानाय दर्शयध्वं यदीच्छथ ॥९ ॥ ४-१४-९ (२८६७३)
तास्तथोक्ता उपागम्य द्रौपदीं परिसंगताः ।
आनीय सर्वथा त्वेनामब्रुवन्मधुराक्षरम् ॥१० ॥४-१४-१० (२८६७४)
भद्रे त्वां द्रष्टुमिच्छन्ती सुदेष्णा हर्म्यभूतले ।
त्वदर्थं प्रैषयच्चास्मान्द्रष्टुं तां त्वं यदीच्छसि ।
आयाह्यस्माभिरेवाद्य रक्ष्यमाणा यथेष्टतः ॥११ ॥ ४-१४-११ (२८६७५)
तच्छ्रुत्वा द्रौपदी तासां वचनं वाक्यकोविदा ।

ईप्सितर्थातिलाभेन हृष्टाऽऽयाता गृहोत्तमम् ॥१२ ॥ ४-१४-१२ (२८६७६)
राजवेश्म ह्युपाक्रम्य यत्राग्र्यमहिषी स्थिता ।
सुदेष्णामगमत्कृष्णा राजभार्यां यशस्विनीम् ॥१३ ॥ ४-१४-१३ (२८६७७)
कृष्णान्केशान्मृदून्दीर्घान्समुद्ग्रथ्यासितेक्षणा ।
कुञ्चिताग्रांस्तु सूक्ष्माग्रान्दर्शनीयान्निबध्य च ।
जुगूहे दक्षिणे पार्श्वे मृदूनायतलोचना ॥१४ ॥ ४-१४-१४ (२८६७८)
सा प्रविश्य विराटस्य द्रौपद्यन्तःपुरं शुभा ।
ह्रीनिषेवान्विता बाला कम्पमाना लतेव सा ॥१५ ॥ ४-१४-१५ (२८६७९)
अभिगम्य च सुश्रोणी सर्वलक्षणसंयुता ।
ददर्शावस्थितां हैमे पीठे रत्नपरिच्छदे ॥१६ ॥ ४-१४-१६ (२८६८०)
रक्तसूक्ष्माम्बरधरां मेघे सौदामिनीमिव ।
नानावर्णविचित्रां च सर्वाभरणभूषिताम् ॥१७ ॥ ४-१४-१७ (२८६८१)
सुभ्रूं सुकेशीं सुश्रोणीं कुब्जवामनमध्यगाम् ।
बहुपुष्पोपकीर्णायां भूम्यां वेदिमिवाध्वरे ॥१८ ॥ ४-१४-१८ (२८६८२)
सुदेष्णां राजमहिषीं सर्वालंकारभूषिताम् ।
श्रीमतीं राजपुत्रीणां शतेन परिवारिताम् ॥१९ ॥ ४-१४-१९ (२८६८३)
ताः सर्वा द्रौपदीं दृष्ट्वा सन्तप्ताः परमाङ्गनाः ।
परितश्चोपतस्थुस्ताः सहसोत्थाय चासनात् ॥२० ॥ ४-१४-२० (२८६८४)
निरीक्षमाणाः सर्वास्ताः शचीं देवीमिवागताम् ।
गूढगुल्फां वरारोहां कृष्णां ताम्रायतेक्षणाम् ।
अतिसर्वानवद्याङ्गीं नतगात्रीं सुमध्यमाम् ॥२१ ॥ ४-१४-२१ (२८६८५)
न ह्रस्वां नातिमहतीं जातां बहुतृणे वने ।
ऋश्यरोहीमिवानिन्द्यां सुकेशीं मृगलोचनाम् ॥२२ ॥ ४-१४-२२ (२८६८६)
तां मृगीमिव वित्रस्तां यूथभ्रष्टामिव द्विपाम् ।
लक्ष्मीमिव विशालाक्षीं विद्यामिव यशस्विनीम् ॥२३ ॥ ४-१४-२३ (२८६८७)
रोहिणीमिव ताराणां दीप्तामग्निशिखामिव ।
पार्वतीमिव रुद्राणीं वेलामिव महोदधेः ॥२४ ॥ ४-१४-२४ (२८६८८)
सुलभामिव नागीनां मृगीणामिव किन्नरीम् ।
गङ्गामिव विशुद्धाङ्गीं शारदीमिव शर्वरीम् ॥२५ ॥ ४-१४-२५ (२८६८९)
तामचिन्त्यतमां लोके इलामिव यशस्विनीम् ।
सावित्रीमिव दुर्धर्षां ब्राह्म्या लक्ष्म्या समन्वितां ॥२६ ॥ ४-१४-२६ (२८६९०)
सीतामिव सतीं शुद्धामरुन्धतीमिव प्रियाम् ।
सुदेष्णा पर्यपृच्छत्तां विस्मयोत्फुल्ललोचना ॥२७ ॥ ४-१४-२७ (२८६९१)
का त्वं सर्वानवद्याङ्गि कुतोसि त्वमिहागता ।
कस्य वा त्वं विशालाक्षि किं वा ते करवाण्यहम् ॥२८ ॥ ४-१४-२८ (२८६९२)
गूढगुल्फा समानोरुस्त्रिगम्भीरा षडुन्नता ।

स्निग्धा पञ्चसु रक्तेषु हंसगद्गदभाषिणी ॥ २९ ॥ ४-१४-२९ (२८६९३)
शुकेशी सुस्वरा श्यामा पीनश्रोणीपयोधरा ।
अरालपक्ष्मनयना बिम्बोष्ठी तनुमध्यमा ॥ ३० ॥ ४-१४-३० (२८६९४)
कम्बुग्रीवा गूढसिरा पूर्णचन्द्रनिभानना ।
दानवी किन्नरी वा त्वं गन्धर्वी वनदेवता ॥ ३१ ॥ ४-१४-३१ (२८६९५)
अप्सरा वाऽसि नागी वा तारा वा त्वं विलासिनी ।
अलम्बुसा मिश्रकेशी पुण्डरीकाऽथ मालिनी ॥ ३२ ॥ ४-१४-३२ (२८६९६)
तेनतेनैव संपन्ना काश्मीरीव तुरंगमा ।
इन्द्राणी त्वथ रुद्राणी स्वधा वाऽप्यथवा रतिः ॥ ३३ ॥ ४-१४-३३ (२८६९७)
देवि देवेषु विख्याता ब्रूहि का त्वमिहागता ।
तव ह्यनुपमं रूपं भूषणैरपि वर्जितम् ॥ ३४ ॥ ४-१४-३४ (२८६९८)
त्वां सृष्ट्वोपरतं मन्ये लोककर्तारमीश्वरम् ।
न तृप्यन्ति स्त्रियो दृष्ट्वा का न पुंसां रतिर्भवेत् ॥ ३५ ॥ ४-१४-३५
(२८६९९)
प्रवालपुष्पस्तबकैराचिता वनदेवताः ।
त्वामेव हि निरीक्षन्ते विस्मिता रूपसंपदा ॥ ३६ ॥ ४-१४-३६ (२८७००)
अन्तःपुरगता नार्यो मृगाः पक्षिगणा नराः ।
सर्वे त्वामेव कल्याणि निरीक्षन्ते सुविस्मिताः ॥ ३७ ॥ ४-१४-३७ (२८७०१)
न त्वादृशी काचन मे त्रिषु लोकेषु सुन्दरी ।
दृष्टपूर्वा श्रुता वाऽपि चक्षुपा विद्यते शुभा ॥ ३८ ॥ ४-१४-३८ (२८७०२)
द्रौपद्युवाच। ४-१४-३९क्ष् (३०४४)
नास्ति देवी न गन्धर्वी न यक्षी न च किन्नरी ।
सैरन्ध्री नाम मे जातिर्वन्यमूलफलाशना ॥ ३९ ॥ ४-१४-३९ (२८७०३)
पतीनां प्रेक्षमाणानां कस्मिंश्चित्कारणान्तरे ।
केशपाशे परामृष्टा साऽहं त्रस्ता वनं गता ॥ ४० ॥ ४-१४-४० (२८७०४)
तत्र द्वादशवर्षाणि वन्यमूलफलाशना ।
चराम्यनिलया सुभ्रूः सा तवान्तिकमागता ॥ ४१ ॥ ४-१४-४१ (२८७०५)
जानामि केशान्ग्रथितुं विचित्रान्ग्रथितुं मणीन् ।
मल्लिकोत्पलपद्मानां जानामि ग्रथितुं स्रजः ॥ ४२ ॥ ४-१४-४२ (२८७०६)
सिन्धुवारकजातीनां रचयाम्यवतंसकान् ।
पत्रं मृगाङ्कमगरुं पिषे च हरिचन्दनम् ।
ग्रथयिष्यामि चित्राश्च स्रजः परमशोभनाः ॥ ४३ ॥ ४-१४-४३ (२८७०७)
आराधनं सत्यभामां कृष्णस्य महिषीं प्रियाम् ।
कृष्णां च भार्यां पार्थानां नारीणामुत्तमां तथा ॥ ४४ ॥ ४-१४-४४ (२८७०८)
तथाऽस्मि सुभ्रुवा चाहमिष्टलाभेन तोषिता ।
मालिनी चेति मे नाम स्वयं देवी चकार ह ।

कृष्णा कमलपत्राक्षी सा मे प्राणसमा सखी ॥ ४५ ॥ ४-१४-४५ (२८७०९)
न चाहं चिरमिच्छामि क्वचिद्वस्तुं शुभानने ।
व्रतं किलैतदस्माकं कुलधर्मोऽयमीदृशः ॥ ४६ ॥ ४-१४-४६ (२८७१०)
योऽस्माकं तु हरेद्द्रव्यं देशं वसनमेव वा ।
न क्रोद्धव्यं किलास्माभिरस्मद्गुरुरमर्षणः ॥ ४७ ॥ ४-१४-४७ (२८७११)
साऽहं वनानि दुर्गाणि तीर्थानि च सरांसि च ।
शैलांश्च विविधान्रम्यान्सरितश्च समुद्रगाः ॥ ४८ ॥ ४-१४-४८ (२८७१२)
भर्तृशोकपरीताङ्गी भर्तृसब्रह्मचारिणी ।
विचरामि महीं दुर्गां यत्र सायंनिवेशना ॥ ४९ ॥ ४-१४-४९ (२८७१३)
वीरपत्नी यदा देवी चरमाणेषु भर्तृषु ।
साऽहं विवत्सा विधिना गन्धमादनपर्वतात् ।
शृणोमि तव सौशील्यं भर्तुर्मधुरभाषिणि ॥ ५० ॥ ४-१४-५० (२८७१४)
माहात्म्यं च ततः श्रुत्वा ब्राह्मणानां समीपतः ।
त्वामुपस्थातुमिच्छामि ततश्चाहमिहागता ॥ ५१ ॥ ४-१४-५१ (२८७१५)
गुरवो मम धर्मश्च वायुः शक्रस्तथाऽश्विनौ ।
तेषां प्रसादाच्च न मां कश्चिद्धर्षयते पुमान् ॥ ५२ ॥ ४-१४-५२ (२८७१६)
वैशंपायन उवाच। ४-१४-५३क्ष् (३०४५)
एवमुक्त्वा सुदेष्णां तां कृताञ्जलिपुटा स्थिता ।
साऽब्रवीद्विस्मयाविष्टा द्रौपदीं योषितां वराम् ॥ ५३ ॥ ४-१४-५३ (२८७१७)
न भरेयमहं भद्रे संशयो मम विद्यते ।
राजा त्वयं हि त्वां दृष्ट्वा मतिं पापां करिष्यति ॥ ५४ ॥ ४-१४-५४ (२८७१८)
साऽहं त्वां न क्षमां मन्ये वसन्तीमिह वेश्मनि ।
एष दोषोस्ति सुश्रोणि कथं वाभीरु मन्यसे ॥ ५५ ॥ ४-१४-५५ (२८७१९)
स्थिता राजकुले नार्यो याश्चेमा मम वेश्मनि ।
त्वामेवैकां निरीक्षन्ते विस्मयाद्वरवर्णिनि ॥ ५६ ॥ ४-१४-५६ (२८७२०)
वृक्षांश्चोपस्थितान्पश्य य इमे मम वेश्मनि ।
विनमन्ते हि त्वां दृष्ट्वा पुमांसं कं न लोभयेः ॥ ५७ ॥ ४-१४-५७ (२८७२१)
बिभर्षि परमं रूपमतिमानुषमद्भुतम् ।
तिर्यग्योनिगताश्चापि निरीक्षन्ते सविस्मयाः ।
तव रूपमनिन्द्याङ्गि किं पुनर्मानवा भुवि ॥ ५८ ॥ ४-१४-५८ (२८७२२)
राजा विराटः सुश्रोणि दृष्ट्वा ते परमं वपुः ।
मां विहाय वरारोहे त्वां गच्छेत्सर्वचेतसा ॥ ५९ ॥ ४-१४-५९ (२८७२३)
यं हि त्वमनवद्याङ्गी नरमायतलोचने ।
सुप्रसन्ना हि वीक्षेथाः स कामवरागो भवेत् ॥ ६० ॥ ४-१४-६० (२८७२४)
सुस्नाताऽलंकृता हि त्वं यमीक्षेथा हि मानुषम् ।
ग्लानिर्न तस्य दुःखं वा न तन्द्रिर्न पराजयः ॥ ६१ ॥ ४-१४-६१ (२८७२५)

न शोको न च सन्तापो न क्रोधो नानृतं वदे ।
यं त्वं सर्वातवद्याङ्गि भजेथाः समलंकृता ॥ ६२ ॥ ४-१४-६२ (२८७२६)
न व्याधिर्न जरा तस्य न तृष्णा न क्षुधा भवेत् ।
यस्य त्वं वशगा सुभ्रु भवेरङ्कगता सती ॥ ६३ । ४-१४-६३ (२८७२७)
पञ्चत्वमपि संप्राप्तं यं च त्वं परिपस्वजेः ।
बाहुभ्यामनुरूपाभ्यां स जीवेदिति मे मतिः ॥ ६४ ॥ ४-१४-६४ (२८७२८)
यस्य हि त्वं भवेर्भार्या यं च हृष्टा परिष्वजेः ।
अतिजीवेस्य सर्वेषु देवेष्विव पुरन्दरः ॥ ६५ ॥ ४-१४-६५ (२८७२९)
अध्यारोहेद्यथा वृक्षं यथा वाऽऽरुह्य तक्षति ।
राजवेश्मनि वामोरु ननु स्यास्त्वं तथा मम ॥ ६६ ॥ ४-१४-६६ (२८७३०)
यथा कर्कटकी गर्भमाधत्ते मृत्युमात्मनः ।
तथाविधमहं मन्ये तव सुभ्रु समागमम् ॥ ६७ ॥ ४-१४-६७ (२८७३१)
अनुमानये त्वां सैरन्ध्रि नावमन्ये कथंचन ।
भर्तृशीलभयाद्भद्रे तव वासं न रोचये ॥ ६८ ॥ ४-१४-६८ (२८७३२)
सैरन्ध्र्युवाच। ४-१४-६९क्ष् (३०४६)
नाहं शक्या विराटेन यद्वा चान्येन केनचित् ।
देवगन्धर्वयक्षैर्वा द्रष्टुं दुष्टेन चेतसा ॥ ६९ ॥ ४-१४-६९ (२८७३३)
गन्धर्वाः पालयन्ते मां सुकुलाः पञ्च सुव्रताः ।
पुत्रा देवादिदेवानां सूर्यपावकवर्चसः ॥ ७० ॥ ४-१४-७० (२८७३४)
यश्च दुःशीलवान्मर्त्यो मां स्पृशेद्दुष्टचेतसा ।
स तामेव निशां शीघ्रं शयीत मुसलैर्हतः ॥ ७१ ॥ ४-१४-७१ (२८७३५)
यस्यापि हि शतं पूर्णं बान्धवानां भवेदपि ।
सहस्रं वा विशालाक्षि कोटिर्वापि सहस्रिका ।
दुष्टचित्तश्च मां ब्रूयान्न स जीवेत्तवाग्रतः ॥ ७२ ॥ ४-१४-७२ (२८७३६)
न तस्य त्रिदशा देवा नासुरा न च पन्नगाः ।
तेभ्यो गन्धर्वराजेभ्यस्त्राणं कुर्युरसंशयम् ॥ ७३ ॥ ४-१४-७३ (२८७३७)
सुदेष्णे विश्वस त्वं मां स्वजने बान्धवेऽपि वा ।
नाहं शक्या नरैर्द्रष्टुं न च मे वृत्तमीदृशम् ॥ ७४ ॥ ४-१४-७४
(२८७३८)
यो मे न दद्यादुच्छिष्टं न च पादौ प्रधावयेत् ।
प्रीयेरंस्तेन वासेन गन्धर्वाः पतयो मम ॥ ७५ ॥ ४-१४-७५ (२८७३९)
यो हि मां पुरुषो गृद्ध्येद्यथाऽन्याः प्राकृतस्त्रियः ।
तामेव स इमां रात्रिं प्रविशेदपरां तनुम् ॥ ७६ ॥ ४-१४-७६ (२८७४०)
न चाप्यहं चालयितुं शक्या केनचिदङ्गने ।
दुःखशीलाश्च गन्धर्वास्त इमे बलिनः प्रियाः ।
एवं निवसमानायां मयि मा ते भयं हि भूत् ॥ ७७ ॥ ४-१४-७७ (२८७४१)

वैशंपायन उवाच। ४-१४-७८क्ष् (३०४७)
एवमुक्ता तु सैरन्ध्र्या सुदेष्णा वाक्यमब्रवीत् ।
वसेह मयि कल्याणि यदि ते वृत्तमीदृशम् ॥ ७८ ॥ ४-१४-७८ (२८७४२)
कश्च ते दातुमुच्छिष्टं पुमानर्हति भामिनि ।
प्रसारयेच्च कः पादौ लक्ष्मीं दृष्ट्वैव बुद्धिमान् ॥ ७९
॥ ४-१४-७९ (२८७४३)
एवमाचारसंपन्ना एवं देवपरायणा ।
रक्ष्या त्वमसि भूतानां सावित्रीवद्विजन्मनाम् ॥ ८० ॥ ४-१४-८० (२८७४४)
देवता इव कल्याणि पूजिता वरवर्णिनी ।
वस भद्रे मयि प्रीता प्रीतिर्हि मयि वर्तते ।
सर्वकामैः प्रमुदिता निरुद्विग्नमनाः सुखम् ॥ ८१ ॥ ४-१४-८१ (२८७४५)
वैशंपायन उवाच। ४-१४-८२क्ष् (३०४८)
सुदेष्णयैवमुक्ता सा संप्रीता चारुहासिनी ।
निर्विशङ्का विराटस्य विवेशान्तःपुरं सुखम् ॥ ८२ ॥ ४-१४-८२ (२८७४६)
याज्ञसेनी सुदेष्णां तु शुश्रूषन्ती विशांपते ।
अवसत्परिचारार्हा सुदुःखं जनमेजय ॥ ८३ ॥ ४-१४-८३ (२८७४७)
एवं विराटे न्यवसंस्तु पाण्डवाः कृष्णा तथाऽन्तःपुरमेत्य शोभना ।
अज्ञातचर्यां प्रतिरुद्धमानसा यथाऽग्नयो भस्मनि गूढतेजसः
॥ ८४ ॥ ॥ ४-१४-८४ (२८७४८)

इति श्रीमन्महाभारते विराटपर्वणि पाण्डवप्रवेशपर्वणि
चतुर्दशोऽध्यायः ॥ १४ ॥
Mahabharata - Virata Parva - Chapter Footnotes

४-१४-१ समुत्क्षिप्य वल्गिताग्रानानिन्दितानिति खो थो धो पाठः ॥
१ ॥
चतुर्दशोऽध्यायः ॥
१४ ॥

---

विरतपर्व-अध्यय०१५
॥ श्रीः ॥
४.१५. अध्यायः १५

Mahabharata - Virata Parva - Chapter Topics
अथ समयपलनपर्व ॥ २ ॥
पाण्डवैः स्वस्वव्यापारैर्विराटपरितोपणम् ॥ १ ॥
भीमेन शङ्करोत्सवे महामल्लमारणम् ॥ २ ॥

४-१५-० (२८७४९)
जनमेजय उवाच। ४-१५-०क्ष् (३०४९)
एवं विराटनगरे वसन्तः सत्यविक्रमाः ।
अत ऊर्ध्वं नरव्याघ्राः किमकुर्वत पाण्डवाः ॥ १ ॥ ४-१५-१ (२८७५०)
वैशंपायन उवाच। ४-१५-२क्ष् (३०५०)
एवं ते न्यवसंस्तत्र प्रच्छन्नाः कुरुनन्दनाः ।
आराधयन्तो राजानां यदकुर्वत तच्छृणु ॥ २ ॥ ४-१५-२ (२८७५१)
युधिष्ठिरः सभास्तारः सभ्यानामभवत्प्रियः ।
तथैव च विराटस्य सपुत्रस्य विशांपते ॥ ३ ॥ ४-१५-३ (२८७५२)
स ह्यक्षहृदयज्ञस्तान्क्रीडयामास पाण्डवः ।
अक्षबद्धान्यथाकामं सूत्रबद्धानिव द्विजान् ॥ ४ ॥ ४-१५-४ (२८७५३)
अज्ञातं च विराटस्य विजित्य वसु धर्मराट् ।
भ्रातृभ्यः पुरुषव्याघ्रो यथेष्टं संप्रयच्छति ॥ ५ ॥ ४-१५-५ (२८७५४)
भीमसेनोपि मांसानि भक्ष्याणि विविधानि च ।
अतिसृष्टानि मत्स्येन विक्रीणन्निव भ्रातृषु ॥ ६ ॥ ४-१५-६ (२८७५५)
वासांसि परिजीर्णानि लब्धान्यन्तःपुरेऽर्जुनः ।
विक्रीणन्निव सर्वेभ्यः पाण्डवेभ्यः प्रयच्छति ॥ ७ ॥ ४-१५-७ (२८७५६)
नकुलोपि धनं लब्ध्वा कृते कर्मणि वाजिनाम् ।
तुष्टे तस्मिन्नरपतौ पाण्डवेभ्यः प्रयच्छति ॥ ८ ॥ ४-१५-८ (२८७५७)
सहदेवोपि गोपानां वेषमास्थाय पाण्डवः ।
दधि क्षीरं घृतं चैव पाण्डवेभ्यः प्रयच्छति ॥ ९ ॥ ४-१५-९ (२८७५८)
कृष्णा तु सर्वान्भ्रातॄंस्तान्निरीक्षन्ती तपस्विनी ।
यथा पुनरविज्ञाता तथा चरति भामिनी ॥ १० ॥ ४-१५-१० (२८७५९)
एवं संभावयन्तस्ते तदाऽन्योन्यं महारथाः ।
विराटनगरे चेरुः पुनर्गर्भधृता इव ॥ ११ ॥ ४-१५-११ (२८७६०)
साशङ्का धार्तराष्ट्रस्य भयात्पाण्डुसुतास्तदा ।
प्रेक्षमाणास्तदा कृष्णामूपुश्छन्ना नराधिप ॥ १२ ॥ ४-१५-१२ (२८७६१)
अथ मासे चतुर्थे तु शङ्करस्य महोत्सवः ।
आसीत्समृद्धो मत्स्येषु पुरुषाणां सुसंमतः ॥ १३ ॥ ४-१५-१३ (२८७६२)
तत्र मल्लाः समापेतुर्दिग्भ्यो राजन्सहस्रशः ॥ १४ ॥ ४-१५-१४ (२८७६३)
महाकाया महावीर्याः कालकेया इवासुराः ।
वीर्योन्मत्ता बलोदग्रा राज्ञा समभिपूजिताः ॥ १५ ॥ ४-१५-१५ (२८७६४)
सिंहस्कन्धकटिग्रीवाः स्ववदाता मनस्विनः ।

असकृल्लब्धलक्षास्ते रङ्गे पार्थिवसन्निधौ ॥ १६ ॥ ४-१५-१६ (२८७६५)
तेषामेको महानासीत्सर्वमल्लानथाह्वयत् ।
व्यावल्गमानो ददृशे गर्जितोद्गतिभिः स्थितः ॥ १७ ॥ ४-१५-१७ (२८७६६)
वित्रस्तमनसः सर्वे मल्लास्ते हतचेतसः ।
अवाङ्मुखाश्च भीताश्च मल्लाश्चान्ये विचेतसः ॥ १८ ॥ ४-१५-१८ (२८७६७)
व्यसुत्वमपरे चैव वाञ्छन्ति प्रतिविह्वलाः ।
गां प्रवेष्टुमथेच्छन्ति खं गन्तुमिव चोत्थिताः ॥ १९ ॥ ४-१५-१९ (२८७६८)
त्रस्ताः शान्ता विषणाङ्गा निःशब्दं विह्वलेक्षणाः ।
विराटराजमल्लास्ते भग्नदर्पा हतप्रभाः ॥ २० ॥ ४-१५-२० (२८७६९)
मल्लेन्द्रनिहताः सर्वे न किंचित्प्रवदन्ति ते ।
मल्ल उद्वीक्ष्य तान्मल्लांस्रस्तान्वाक्यमुवाचह ॥ २१ ॥ ४-१५-२१ (२८७७०)
आगतं मल्लराजं मां कृत्स्ने पृथिविमण्डले ।
सिंहव्याघ्रगणैः सार्धं क्रीडन्तं विद्धि भूपते ॥ २२ ॥ ४-१५-२२ (२८७७१)
मल्लेन्द्रस्य वचः श्रुत्वा बलदर्पसमन्वितम् ।
विराटो वीक्ष्य तान्मल्लांस्त्रस्तान्वाक्यमुवाच ह ॥ २३ ॥ ४-१५-२३ (२८७७२)
अनेन सह मल्लेन को योद्धुं शक्तिमान्नरः ॥ २४ ॥ ४-१५-२४ (२८७७३)
इत्युक्तास्ते विराटेन सर्वे मल्ला विशांपते ।
तूष्णीमासंस्ततो राजा क्रोधाविष्ट उवाच ह ॥ २५ ॥ ४-१५-२५ (२८७७४)
ग्रामांश्च वेतनान्येपां मल्लानां हारयाम्यहम् ।
ततो युधिष्ठिरोऽवादीच्छ्रुत्वा मात्स्यपतेर्वचः ॥ २६ ॥ ४-१५-२६ (२८७७५)
अस्ति मल्लो महाराज मया दृष्टो युधिष्ठिरे ।
अनेन सह मल्लेन योद्धुं शक्नोति भूपते ॥ २७ ॥ ४-१५-२७ (२८७७६)
योसौ मल्लो मया दृष्टः पूर्वं यौधिष्ठिरे पुरे ।
सोयं मल्लो वसत्येप राजंस्तव महानसे ॥ २८ ॥ ४-१५-२८ (२८७७७)
वैशंपायन उवाच। ४-१५-२९क्ष् (३०५१)
युधिष्ठिरवचः श्रुत्वा व्यक्तमाहेति पार्थिवः ।
सोप्यथाहूयतां क्षिप्रं योद्धुं मल्लेन संप्रति ॥ २९ ॥ ४-१५-२९ (२८७७८)
भीमसेनो विराटेन आहूतश्चोदितस्तथा ।
योद्धुं ततोऽब्रवीद्वाक्यं योद्धुं शक्नोमि भूपते ॥ ३० ॥ ४-१५-३० (२८७७९)
नरेन्द्र ते प्रभावेन श्रिया शक्त्या च शासनात् ।
अनेन सह मल्लेन योद्धुं राजेन्द्र शक्नुयाम् ॥ ३१ ॥ ४-१५-३१ (२८७८०)
युधिष्ठिरकृतं ज्ञात्वा श्रिया तव विशांपते ।
महादेवस्य भक्त्या च तं मल्लं पातयाम्यहम् ॥ ३२ ॥ ४-१५-३२ (२८७८१)
वैशंपायन उवाच। ४-१५-३३क्ष् (३०५२)
चोदितो भीमसेनस्तु मल्लमाहूय मण्डले ।
योद्धुं व्यवस्थितो वीरो रेणुं संमृज्य हस्तयोः ।

मत्तो गज इवान्यं तु योद्धुं समुपचक्रमे ॥ ३३ ॥ ४-१५-३३ (२८७८२)
अथ सूदेन तं मल्लं योधयामास मत्स्यराट् ॥ ३४ ॥ ४-१५-३४ (२८७८३)
नोद्यमानस्तदा भीमो दुःखेनेवाकरोन्मतिम् ।
न हि शक्नोम्यशक्तोपि प्रत्याख्यातुं नराधिपं ॥ ३५ ॥ ४-१५-३५ (२८७८४)
ततः स पुरुषव्याघ्रः शार्दूलशिथिलं चरन् ।
प्रविवेश महारङ्गं विराटमभिहर्षयन् ॥ ३६ ॥ ४-१५-३६ (२८७८५)
बवन्ध कक्षां कौन्तेयस्ततः संहर्षयञ्जनम् ।
ततस्तु वृत्रसङ्काशं भीमो मल्लं समाह्वयत् ॥ ३७ ॥ ४-१५-३७ (२८७८६)
जीमूतं नाम तं तत्र मल्लप्रख्यातविक्रमम् ।
कक्षे मल्लं गृहीत्वाऽथ ननाद बहु सिंहवत् ॥ ३८ ॥ ४-१५-३८ (२८७८७)
तावुभौ सुमहोत्साहावुभौ भीमपराक्रमौ ।
मत्ताविव महाकायौ वारणौ षष्ठिहायनौ ॥ ३९ ॥ ४-१५-३९ (२८७८८)
ततस्तौ नरशार्दूलौ बाहुयुद्धं समीयतु ।
वीरौ परमसंहृष्टावन्योन्यजयकाङ्क्षिणौ ॥ ४० ॥ ४-१५-४० (२८७८९)
उभौ परमसंहृष्टौ बलेनातिबलावुभौ ।
अन्योन्यस्यान्तरं प्रेप्सू परस्परजयैषिणौ ॥ ४१ ॥ ४-१५-४१ (२८७९०)
कृतप्रतिकृतैश्चित्रैर्बाहुभिश्च सुसङ्कटैः ।
सन्निपातावधूतैश्च प्रमाथोन्मथनैस्तथा ॥ ४२ ॥ ४-१५-४२ (२८७९१)
क्षेपणैर्मुष्टिभिश्चैव वराहोद्धूतनिस्स्वनैः ।
तलैर्वज्रनिपातैश्च प्रसृष्टाभिस्तथैव च ॥ ४३ ॥ ४-१५-४३ (२८७९२)
शलाकानखपातैश्च पादोद्धूतैश्च दारुणैः ।
जानुभिश्चाश्मनिर्घोषैः शिरोभिश्चावघट्टनैः ॥ ४४ ॥ ४-१५-४४ (२८७९३)
तद्युद्धमभवद्घोरमशस्त्रं बाहुतेजसा ।
बलप्राणेन शूराणां समाजोत्सवसन्निधौ ॥ ४५ ॥ ४-१५-४५ (२८७९४)
अरज्यत जनः सर्वः सोत्क्रुष्टनिनदोत्थितः ।
बलिनोः संयुगे राजन्वृत्रवासवयोरिव ॥ ४६ ॥ ४-१५-४६ (२८७९५)
प्रकर्षणाकर्षणयोरभ्याकर्षविकर्षणैः ।
आकर्षतुरथान्योन्यं जानुभिश्चापि जन्घतुः ॥ ४७ ॥ ४-१५-४७ (२८७९६)
ततः शब्देन महता भर्त्सयन्तौ परस्परम् ।
व्यूढोरस्कौ दीर्घभुजौ नियुद्धकुशलावुभौ ।
बाहुभिः समसज्जेतामायसैः परिघैरिव ॥ ४८ ॥ ४-१५-४८ (२८७९७)
उत्पपाताथ वेगेन मल्लं कक्षे गृहीतवान् ।
पार्श्वे निगृह्य हस्तेन पातयामास मल्लकम् ॥ ४९ ॥ ४-१५-४९ (२८७९८)
चकर्ष दोर्भ्यामुत्पात्य भीमो मल्लममित्रहा ।
निनदं तमभिक्रोशञ्शार्दूल इव वारणम् ॥ ५० ॥ ४-१५-५० (२८७९९)
समुद्यम्य महाबाहुर्भ्रामयामास वीर्यवान् ।

ततो मल्लाश्च मत्स्याश्च विस्मयं चक्रिरे परम् ॥ ५१ ॥ ४-१५-५१ (२८८००)
भ्रामयित्वा शतगुणं गतसत्वमचेतनम् ।
प्रत्यपिंषन्महाबाहुर्मल्लं भुवि वृकोदरः ॥ ५२ ॥ ४-१५-५२ (२८८०१)
तस्मिन्विनिहते वीरे जीमूते लोकविश्रुते ।
विराटः परमं हर्षमगच्छद्बान्धवैः सह ॥ ५३ ॥ ४-१५-५३ (२८८०२)
प्रहर्षात्प्रददौ वित्तं बहु राज महामनाः ।
वललाय महारङ्गे यथा वैश्रवणस्तथा ॥ ५४ ॥ ४-१५-५४ (२८८०३)
एवं स सुबहून्मल्लान्पुरुषांश्च महाबलान् ।
विनिघ्नन्मत्स्यराजस्य प्रीतिमाहरदुत्तमाम् ॥ ५५ ॥ ४-१५-५५ (२८८०४)
यदाऽस्य तुल्यः पुरुषो न कश्चितत्र विद्यते ।
ततो व्याघ्रैश्च सिंहैश्च द्विरदैश्चाप्ययोधयत् ॥ ५६ ॥ ४-१५-५६
(२८८०५)
विराटेन प्रदत्तानि चित्राणि विविधानि च ।
स्थितेभ्यः पुरुषेभ्यश्च दत्त्वा द्रव्याणि जग्मिवान् ॥ ५७ ॥ ४-१५-५७ (२८८०६)
पुनरन्तःपुरगतः स्त्रीणां मध्ये वृकोदरः ।
योध्यते स विराटस्य गजैः सिंहैर्महाबलैः ॥ ५८ ॥ ४-१५-५८ (२८८०७)
बीभत्सुरपि गीतेन नृत्तेनापि च पाण्डवः ।
विराटं तोषयामास सर्वाश्चान्तःपुरस्त्रियः ॥ ५९ ॥ ४-१५-५९ (२८८०८)
अश्वैर्विनीतैर्जवनैस्तत्रतत्र समागतः ।
तोपयामास राजानं नकुलो नृपसत्तमम् ।
तस्मै प्रदेयं प्रायच्छत्प्रीतो राजा धनं बहु ॥ ६० ॥ ४-१५-६० (२८८०९)
विनीतान्वृपभान्दृष्ट्वा सहदेवस्य चाभितः ।
धनं ददौ बहुविधं विराटः पुरुषर्षभः ॥ ६१ ॥ ४-१५-६१ (२८८१०)
द्रौपदी प्रेक्ष्य तान्सर्वान्क्लिश्यमानान्महारथान् ।
नातिप्रीतमना राजन्निश्वासपरमाऽभवत् ॥ ६२ ॥ ४-१५-६२ (२८८११)
एवं ते न्यवसंस्तत्र प्रच्छन्नाः पुरुषर्षभाः ।
कर्माणि तस्य कुर्वाणा विराटनृपतेस्तदा ॥ ६३ ॥ ॥ ४-१५-६३ (२८८१२)

इति श्रीमन्महाभारते विराटपर्वणि समयपालनपर्वणि
पञ्चदशोऽध्यायः ॥ १५ ॥ ॥ समाप्तं चेदं समयपालनपर्व
॥ २ ॥

Mahabharata - Virata Parva - Chapter Footnotes

४-१५-४२ कृतप्रतिकृतादयो मल्लयुद्धविशेषाः ॥

विरतपर्व-अध्यय०१६
॥ श्रीः ॥
४.१६. अध्यायः १६

Mahabharata - Virata Parva - Chapter Topics
द्रौपद्या स्वात्मानं कामयमानस्य कीचकस्य परुषभाषणैः
प्रत्याख्यानम् ॥ १ ॥

Mahabharata - Virata Parva - Chapter Text

४-१६-० (२८८१३)
वैशंपायन उवाच। ४-१६-०क्ष् (३०५३)
वसमानेषु पार्थेषु मत्स्यस्य नगरे तदा ।
महारथेषु च्छन्नेषु मासा दश समाययुः ॥ १ ॥ ४-१६-१ (२८८१४)
याज्ञसेनी सुदेष्णां तु शुश्रूषन्ती विशांपते ।
आवसत्परिचारार्हा सुदुःखं जनमेजय ॥ २ ॥ ४-१६-२ (२८८१५)
तथा चरन्ती पाञ्चाली सुदेष्णाया निवेशने ।
ता देवीं तोपयामास तथा चान्तःपुरस्त्रियः ॥ ३ ॥ ४-१६-३ (२८८१६)
तस्मिन्वर्षे गतप्राये कीचकस्तु महाबलः ।
सेनापतिर्विराटस्य ददर्श द्रुपदात्मजाम् ॥ ४ ॥ ४-१६-४ (२८८१७)
तां दृष्ट्वा देवगर्भायां चरन्तीं देवतामिव ।
कीचकः कामयामास कामबाणप्रपीडितः ॥ ५ ॥ ४-१६-५ (२८८१८)
स तु कामाग्निसंतप्तः सुदेष्णामभिगम्य वै ।
प्रहसन्निव सेनानीरिदं वचनमब्रवीत् ॥ ६ ॥ ४-१६-६ (२८८१९)
नेयं मया जातु पुरेह दृष्टा राज्ञी विराटस्य निवेशने शुभा ।
रूपेण चोन्मादयतीव मां भृशं गन्धेन जाता मदिरेव भामिनी ॥ ७
॥ ४-१६-७ (२८८२०)
का देवरूपा हृदयंगमा शुभे ह्याचक्ष्व मे कस्य कुतोत्र शोभने ।
चित्तं हि निर्मथ्य करोति मां वशे न चान्यदत्रौपधमस्ति मे मतम्
॥ ८ ॥ ४-१६-८ (२८८२१)
अहो तवेयं परिचारिका शुभा प्रत्यग्ररूपा प्रतिभाति मामियम् ।
अयुक्तरूपं हि करोति कर्म ते प्रशास्तु मां यच्च ममास्ति किंचन
॥ ९ ॥ ४-१६-९ (२८८२२)
प्रभूतनागाश्वरथं महाजनं समृद्धियुक्तं बहुपानयोजनम् ।
मनोहरं काञ्चनचित्रभूषणं गृहं महच्छोभयतामियं मम

॥ १० ॥ ४-१६-१० (२८८२३)
ततः सुदेष्णामनुमन्त्र्य कीचकस्ततः समभ्येत्य नराधिपात्मजाम् ।
उवाच कृष्णामभिसान्त्वयंस्तदा मृगेन्द्रकन्यामिव जम्बुको वने
॥ ११ ॥ ४-१६-११ (२८८२४)
का त्वं कस्यासि कल्याणि कुतो वा त्वं वरानने ।
प्राप्ता विराटनगरं तत्त्वमाचक्ष्व शोभने ॥ १२ ॥ ४-१६-१२ (२८८२५)
रूपमग्र्यं तथा कान्तिः सौकुमार्यमनुत्तमम् ।
कान्त्या विभाति वक्त्रं ते शशाङ्क इव निर्मलं ॥ १३ ॥ ४-१६-१३ (२८८२६)
नेत्रे सुविपुले सुभ्रु पद्मपत्रनिभेशुभे ।
वाक्यं ते चारुसर्वाङ्गि परपुष्टरुतोपमम् ॥ १४ ॥ ४-१६-१४ (२८८२७)
एवंरूपा मया नारी काचिदन्या महीतले ।
न दृष्टपूर्वा सुश्रोणि यादृशी त्वमनिन्दिते ॥ १५ ॥ ४-१६-१५ (२८८२८)
लक्ष्मीः पद्मालया का त्वमथ भूतिः सुमध्यमे ।
ह्रीः श्रीः कीर्तिरथो कान्तिरासां का त्वं वरानने ॥ १६ ॥ ४-१६-१६ (२८८२९)
अतीव रूपिणी किं त्वमनङ्गविहारिणी ।
अतीव भ्राजसे सुभ्रु प्रभेवेन्दोरनुत्तमा ॥ १७ ॥ ४-१६-१७ (२८८३०)
अपि चेक्षणपक्ष्माणां स्थितज्योत्स्नोपमं शुभम् ।
दिव्यांशुरश्मिभिर्वृत्तं दिव्यकान्तिमनोरमम् ॥ १८ ॥ ४-१६-१८ (२८८३१)
निरीक्ष्य वक्त्रचन्द्रं ते लक्ष्म्याऽनुपमया युतम् ।
कृत्स्ने जगति को नेह कामस्य वशगो भवेत् ॥ १९ ॥ ४-१६-१९ (२८८३२)
हारालंकारयोग्यौ तु स्तनौ चोभौ शुभोभनौ ।
सुजातौ सहितौ लक्ष्म्या पीनौ वृत्तौ निरन्तरौ ॥ २० ॥ ४-१६-२० (२८८३३)
कुड्मलाम्बुरुहाकारौ तव सुभ्रु पयोधरौ ।
कामप्रतोदाविव मां तुदतश्चारुहासिनि ॥ २१ ॥ ४-१६-२१ (२८८३४)
वलीविभङ्गचतुरं स्तनभारविनामितम् ।
कराग्रसंमितं मध्यं तवेदं तनुमध्यमे ॥ २२ ॥ ४-१६-२२ (२८८३५)
दृष्ट्वैव चारुजघनं सरित्पुलिनसंनिभम् ।
कामव्याधिरसाध्यो मामप्याक्रामति भामिनि ॥ २३ ॥ ४-१६-२३ (२८८३६)
जज्वाल चाग्निमदनो दावाग्निरिव निर्दयः ।
त्वत्सङ्गमाभिसंकल्पविवृद्धो मां दहत्ययम् ॥ २४ ॥ ४-१६-२४ (२८८३७)
आत्मप्रदानवर्षेण संगमाम्भोधरेण च ।
शमयस्व वरारोहे ज्वलन्तं मन्मथानलम् ॥ २५ ॥ ४-१६-२५ (२८८३८)
मच्चित्तोन्मादनकरा मन्मथस्य शरोत्कराः ।
त्वत्सङ्गमाशानिशितास्तीव्राः शशिनिभानने ।
मह्यं विदार्य हृदयमिदं निर्दयवेगिताः ॥ २६ ॥ ४-१६-२६ (२८८३९)
प्रविष्टा ह्यसितापाङ्गि प्रचण्डाश्चण्डदारुणाः ।

अत्युन्मादसमारम्भाः प्रीत्युन्मादकरा मम ।
आत्मप्रदानसंभोगैर्मामुद्धर्तुमिहार्हसि ॥ २७ ॥ ४-१६-२७ (२८८४०)
चित्रमाल्याम्बरधरा सर्वाभरणभूषिता ।
कामं प्रकामं सेव त्वं मया सह विलासिनि ॥ २८ ॥ ४-१६-२८ (२८८४१)
नार्हसीहासुखं वस्तुं सुखार्हा सुखवर्जिता ।
प्राप्नुह्यनुत्तमं सौख्यं मत्तस्त्वं मत्तगामिनि ॥ २९ ॥ ४-१६-२९ (२८८४२)
स्वादून्यमृतकल्पानि पेयानि विविधानि च ।
पिबमाना मनोज्ञानि रममाणा यथासुखम् ॥ ३० ॥ ४-१६-३० (२८८४३)
भोगोपचारान्विविधान्सौभाग्यं चाप्यनुत्तमम् ।
पानं पिब महाभागे भोगैश्चानुत्तमैः शुभैः ॥ ३१ ॥ ४-१६-३१ (२८८४४)
इदं हि रूपं प्रथमं तवानघे निरर्थकं केवलमद्य भामिनि ।
अधार्यमाणा स्नगिवोत्तमा शुभा न शोभसे सुन्दरि शोभना सती ॥ ३२
॥ ४-१६-३२ (२८८४५)
त्यजामि दारान्मम ये पुरातना भवन्तु दास्यस्तव चारुहासिनि ।
अहं च ते सुन्दरि दासवत्स्थितः सदा भविष्ये वशगो वरानने ॥ ३३
॥ ॥ ४-१६-३३ (२८८४६)

इति श्रीमन्महाभारते विराटपर्वणि कीचकवधपर्वणि षोडशोऽध्यायः
॥ १६ ॥

---

विरतपर्व-अध्यय०१७
॥ श्रीः ॥
४.१७. अध्यायः १७

Mahabharata - Virata Parva - Chapter Topics
द्रौपद्या स्वात्मानं कामयमानस्य कीचकस्य परुषभाषणैः
प्रत्याख्यानम् ॥ १ ॥

Mahabharata - Virata Parva - Chapter Text

४-१७-० (२८८४७)
वैशंपायन उवाच। ४-१७-०क्ष् (३०५४)
एवमुक्ताऽनवद्याङ्गी कीचकेन दुरात्मना ।
द्रौपदी तमुवाचेदं सैरन्ध्रीवेषधारिणी ॥ १ ॥ ४-१७-१ (२८८४८)
अप्रार्थनीयामिहं मां सूतपुत्राभिमन्यसे ।
निहीनवर्णां सैरेन्ध्रीं बीभत्सां केशकारिणीम् ॥ २ ॥ ४-१७-२ (२८८४९)
परदाराऽस्मि भद्रं ते न युक्तं तव सांप्रतम् ।

दयिताः प्राणिनां दारा धर्मं समनुचिन्तय ॥ ३ ॥ ४-१७-३ (२८८५०)
परदारे न ते बुद्धिर्जातु कार्या कथंचन ।
विवर्जनं ह्यकार्याणामेतत्सुपुरुषव्रतम् ॥ ४ ॥ ४-१७-४ (२८८५१)
मिथ्याभिगृध्नो हि नरः पापात्मा मोहमास्थितः ।
अयशः प्राप्नुयाद्घोरं महद्वा प्राप्नुयाद्भयम् ॥ ५ ॥ ४-१७-५ (२८८५२)
वैशंपायन उवाच। ४-१७-६क्ष् (३०५५)
एवमुक्तस्तु सैरन्ध्र्या कीचकः काममोहितः ।
जानन्नपि सुदुर्बुद्धिः परदाराभिमर्शने ॥ ६ ॥ ४-१७-६ (२८८५३)
दोषान्बहून्प्राणहरान्सर्वलोकविगर्हितान् ।
प्रोवाचेदं सुदुर्बुद्धिर्द्रौपदीमजितेन्द्रियः ॥ ७ ॥ ४-१७-७ (२८८५४)
नार्हस्येवं वरारोहे प्रत्याख्यातुं वरानने ।
मां मन्मथसमाविष्टं त्वत्कृते चारुहासिनि ॥ ८ ॥ ४-१७-८ (२८८५५)
प्रत्याख्याय च मां भीरु वशगं प्रियवादिनम् ।
नूनं त्वमसितापाङ्गि पश्चात्तापं करिष्यसि ॥ ९ ॥ ४-१७-९ (२८८५६)
अहं हि सुभ्रु राज्यस्य कृत्स्नस्यास्य सुमध्यमे ।
प्रभुर्वासयिता चैव वीर्ये चाप्रतिमः क्षितौ ॥ १० ॥ ४-१७-१० (२८८५७)
पृथिव्यां मत्समो नास्ति कश्चिदन्यः पुमानिह ।
रूपयौवनसौभाग्यैर्भोगैश्चानुत्तमैः शुभैः ॥ ११ ॥ ४-१७-११ (२८८५८)
सर्वकामसमृद्धेषु भोगेष्वनुपमेष्विह ।
भोक्तव्येषु च कल्याणि कस्माद्दास्ये रता ह्यसि ॥ १२ ॥ ४-१७-१२ (२८८५९)
मया दत्तमिदं राज्यं स्वामिन्यसि शुभानने ।
भजस्व मां वरारोहे भुङ्क्ष्व भोगाननुत्तमान् ॥ १३ ॥ ४-१७-१३ (२८८६०)
एवमुक्ता तु सा साध्वी कीचकेनाशुभं वचः ।
कीचकं प्रत्युवाचेदं गर्हयन्त्यस्य तद्वचः ॥ १४ ॥ ४-१७-१४ (२८८६१)
सैरन्ध्र्युवाच। ४-१७-१५क्ष् (३०५६)
मा सूतपुत्र मुह्यस्व माऽद्य त्यक्ष्यस्व जीवितम् ।
जानीहि पञ्चभिर्घोरैर्नित्यं मामभिरक्षिताम् ॥ १५ ॥ ४-१७-१५ (२८८६२)
न चाप्यहं त्वया लभ्या गन्धर्वाः पतयो मम ।
ते त्वां निहन्युः कुपिताः साध्वलं मा व्यनीनशः ॥ १६ ॥ ४-१७-१६ (२८८६३)
अशक्यरूपं पुरुषैरध्वानं गन्तुमिच्छसि ॥ १७ ॥ ४-१७-१७ (२८८६४)
यथा निश्चेतनो बालः कूलस्थः कूलमुत्तरम् ।
तर्तुमिच्छति मन्दात्मा तथा त्वं कर्तुमिच्छसि ॥ १८ ॥ ४-१७-१८ (२८८६५)
अन्तर्महीं वा यदि वोर्ध्वमुत्पतेः समुद्रपारं यदि वा प्रधावसि ।
तथापि तेषां न विमोक्षमर्हसि प्रमाथिनो देवसुता हि खेचराः ॥ १९
॥ ४-१७-१९ (२८८६६)
त्वं कालरात्रीमिव कश्चिदातुरः किं मां दृढं पार्थयसेऽद्य कीचक ।

किं मातुरङ्के शयितो यथा शिशुश्चन्द्रं जिघृक्षुरिव मन्यसे
हि माम् ॥ २० ॥ ४-१७-२० (२८८६७)
तेषां प्रियां प्रार्थयतो न ते भुवि गत्वा दिवं वा शरणं भविष्यति ।
न वर्तते कीचक ते दृशा शुभं या तेन संजीवनमर्थयेत सा
॥ २१ ॥ ॥ ४-१७-२१ (२८८६८)

इति श्रीमन्महाभारते विराटपर्वणि कीचकवधपर्वणि
सप्तदशोऽध्यायः ॥ १७ ॥
Mahabharata - Virata Parva - Chapter Footnotes

४-१७-१६ भूतिः ईश्वरी ऐश्वर्याभिमानिनी देवता ॥
१६ ॥
४-१७-१७ अनङ्गाङ्गविहारिणी रतिरित्यर्थः ॥
१७ ॥
४-१७-१८ ईक्षणपक्ष्माणां नेत्रपक्ष्मणां स्मितं ईषदुन्मीलं तदेव
ज्योत्स्नोपम मनस आह्लादकरम् ॥
१८ ॥
४-१७-२० सुजातौ उन्नतौ । निरन्तरौ पृथत्वात्सांश्लिष्टौ ॥
२० ॥
४-१७-२१ कुड्भलेति मुकुलीभूतपद्माकारौ ॥
२१ ॥
४-१७-२४ अग्निमदनो मदनाग्निः ॥
२४ ॥
४-१७-२८ कामं स्मरम् । प्रकाममतिशयितम् ॥
२८ ॥

---

विरतपर्व-अध्यय०१८
॥ श्रीः ॥
४.१८. अध्यायः १८

Mahabharata - Virata Parva - Chapter Topics
कीचकेन सुदेष्णांप्रति द्रौपद्याः स्ववशीकरणप्रार्थना ॥ १ ॥
सुदेष्णया कीचके सुराहरणव्याजेन तद्गृहंप्रति
द्रौपदीप्रेषणप्रतिज्ञानम् ॥ २ ॥
तथा बलात्कारेण द्रौपद्याः सुरानयनाय कीचकगृहंप्रति
गमनचोदना ॥ ३ ॥

४-१८-० (२८८६९)
वैशंपायन उवाच। ४-१८-०क्ष् (३०५७)
प्रत्याख्यातश्च पाञ्चाल्या कीचकः काममोहितः ।
प्रविश्य राजभवनं भगिन्या अग्रतः स्थितः ॥ १ ॥ ४-१८-१ (२८८७०)
सोभिवीक्ष्य सुकेशान्तां सुदेष्णां भगिनीं प्रियाम् ।
अमर्यादेन कामेन घोरेणाभिपरिप्लुतः ॥ २ ॥ ४-१८-२ (२८८७१)
स तु मूर्ध्नर्यञ्जलिं कृत्वा भगिन्याश्चरणावुभौ ।
संमोहाभिहतस्तूर्णं वातोद्धूत इवार्णवः ॥ ३ ॥ ४-१८-३ (२८८७२)
स प्रोवाच सुदुःखार्तो भगिनीं निश्वसन्मुहुः ।
अव्यक्तमृदुना साम्ना शुष्यता च पुनःपुनः ॥ ४ ॥ ४-१८-४ (२८८७३)
यथा सुदेष्णे सैरन्ध्र्या संगच्छेयं सकामया ।
तथा शीघ्रं कुरुष्वाद्य माऽहं प्राणान्प्रहासिषम् ॥ ५ ॥ ४-१८-५ (२८८७४)
यदीयमनवद्याङ्गी न मामद्यापि काङ्क्षते ।
चेतसाऽभिप्रसन्नेन गतोस्मि यमसादनम् ॥ ६ ॥ ४-१८-६ (२८८७५)
वैशंपायन उवाच। ४-१८-७क्ष् (३०५८)
तमुवाच परिष्वज्य सुदेष्णा भ्रातरं प्रियम् ।
भ्रातुर्जीवितरक्षार्थं समाश्वास्यासितेक्षणा ॥ ७ ॥ ४-१८-७ (२८८७६)
शरणागतेयं सुश्रोणी मया दत्ताभया च सा ।
शुभाचारा च भद्रं ते नैनां वक्तुमिहोत्सहे ॥ ८ ॥ ४-१८-८ (२८८७७)
एषा हि शक्या नान्येन स्प्रष्टुं पापेन चेतसा ।
गन्धर्वाः किल पञ्चेमां रक्षन्ति रमयन्ति च ॥ ९ ॥ ४-१८-९ (२८८७८)
एवमेषा ममाचष्टे तथा प्रथमसंगमे ।
तथैव गजनासोरूः सत्यमाह ममान्तिके ।
ते हि क्रुद्धा महात्मानो नाशयेयुर्हि जीवितम् ॥ १० ॥ ४-१८-१० (२८८७९)
राजा चैव समीक्ष्यैनां संमोहं गतवानिह ।
मया च सत्यवचनैरनुनीतो महीपतिः ॥ ११ ॥ ४-१८-११ (२८८८०)
सोप्येनामनिशं दृष्ट्वा मनसैवाभ्यनन्दत ।
भयाद्गन्धर्वमुख्यानां जीवितस्योपघातिनाम् ।
मनसाऽपि ततस्त्वेनां न चिन्तयति पार्थिवः ॥ १२ ॥ ४-१८-१२ (२८८८१)
ते हि क्रुद्धा महात्मानो गरुडानिलतेजसः ।
दहेयुरपि लोकांस्त्रीन्युगान्तेष्विव भास्करः ॥ १३ ॥ ४-१८-१३ (२८८८२)
सैनन्ध्र्या ह्येतदाख्यातं मम तेषां महद्बलम् ।
तव चाहमिदं गुह्यं स्नेहाद्वक्ष्यामि बन्धुवत् ॥ १४ ॥ ४-१८-१४ (२८८८३)
मा गमिष्यसि वै कृच्छ्रां गतिं परमदुर्गमाम् ।

बलिनस्ते रुजं कुर्युः कुलस्य च धनस्य च ॥ १५ ॥ ४-१८-१५ (२८८८४)
तस्मान्नास्यां मनः कर्तुं यदि प्राणा प्रियास्तव ।
न चिन्तयेथा मागास्त्वं मत्प्रियं च यदीच्छसि ॥ १६ ॥ ४-१८-१६ (२८८८५)
वैशंपायन उवाच। ४-१८-१७क्ष् (३०५९)
एवमुक्तस्तु दुष्टात्मा भगिनीं कीचकोऽब्रवीत् ।
गन्धर्वाणां शतं वाऽपि सहस्रमयुतानि वा ।
अहमेको वधिष्यामि गन्धर्वान्पञ्च किं पुनः ॥ १७ ॥ ४-१८-१७ (२८८८६)
न च त्वमभिजानीषे स्त्रीणां गुह्यमनुत्तमम् ।
पुत्रं वा किल पौत्रं वा भ्रातरं वा मनस्विनम् ॥ १८ ॥ ४-१८-१८ (२८८८७)
रहसीह नरं दृष्ट्वा नानागन्धविभूषितम् ।
योनिरुत्स्विद्यते स्त्रीणां सतीनामपि च श्रुतम् ॥ १९ ॥ ४-१८-१९ (२८८८८)
मां निरीक्ष्यानुलिप्ताङ्गं सर्वाभरणभूषितम् ।
वशमेष्यति सैरन्ध्री मन्मथेनाभिपीडिता ।
सा त्वं दृष्ट्वा ब्रूहि चैनां मम चेज्जीवितं प्रियं ॥ २० ॥
४-१८-२० (२८८८९)
वैशंपायन उवाच। ४-१८-२१क्ष् (३०६०)
एवमुक्ता सुदेष्णा तु शोकेनाभिप्रपीडिता ।
अहो दुःखमहो कृच्छ्रमहो पापमिति स्मह ॥ २१ ॥ ४-१८-२१ (२८८९०)
प्रारुदद्भृशदुःखार्ता विपाकं तस्य वीक्ष्य सा ।
पातालेषु पतत्येष विलपन्बडवामुखे ॥ २२ ॥ ४-१८-२२ (२८८९१)
त्वत्कृते विनशिष्यन्ति भ्रातरः सुहृदश्च मे ।
किंनु शक्यं मया कर्तुं यत्त्वमेवमभिप्लुतः ॥ २३ ॥ ४-१८-२३ (२८८९२)
न च श्रेयोऽभिजानीषे काममेवानुवर्तसे ।
ध्रुवं गतायुस्त्वं पाप यदेवं काममोहितः ।
अकर्तव्ये हि मां पापे नियुनङ्क्षि नराधम ॥ २४ ॥ ४-१८-२४ (२८८९३)
अपि चैतत्पुरा प्रोक्तं निपुणैर्मनुजोत्तमैः ।
एकस्तु कुरुते पापं स्वजातिस्तेन हन्यते ॥ २५ ॥ ४-१८-२५ (२८८९४)
गतस्त्वं धर्मराजस्य विषयं नात्र संशयः ।
अदूषितमिदं सर्वं स्वजनं घातयिष्यसि ॥ २६ ॥ ४-१८-२६ (२८८९५)
एतत्तु मे दुःखतरं येनाहं भ्रातृसौहृदात् ।
विदितार्था करिष्यामि तुष्टो भव कुलक्षये ॥ २७ ॥ ४-१८-२७ (२८८९६)
गच्छ शीघ्रमितस्त्वं हि स्वमेव भवनं शुभम् ।
किंचित्कार्यं समुद्दिश्य सुरामन्नं च कारय ॥ २८ ॥ ४-१८-२८ (२८८९७)
कृते चान्ने सुरायां च प्रेषयिष्यसि मे पुनः ।
तामहं प्रेषयिष्यामि मध्वन्नार्थं तवान्तिकम् ॥ २९ ॥ ४-१८-२९ (२८८९८)
ततः संप्रेषितामेनां विजने निरवग्रहाम् ।

सान्त्वयेथा यथान्यायं यदि साम सहिष्यति ॥ ३० ॥ ४-१८-३० (२८८९९)
सद्यः कृतमिदं सर्वं शेषमत्रानुचिन्तय ॥ ३१ ॥ ४-१८-३१ (२८९००)
वैशंपायन उवाच। ४-१८-३२क्ष् (३०६१)
सुदेष्णयैवमुक्तस्तु कीचकः कालचोदितः ।
त्वरमाणः प्रचक्राम स्वगृहं राजवेश्मनः ॥ ३२ ॥ ४-१८-३२ (२८९०१)
आगम्य च गृहं रम्यं सुरामन्नं चकार ह ।
अजैडकं च सुकृतं बहु चोच्चावचान्मृगान् ॥ ३३ ॥ ४-१८-३३ (२८९०२)
भक्षांश्च विविधाकारान्बहूंश्चोच्चावचांस्तदा ।
कारयामास कुशलैरन्नपानैः सुसंस्कृतम् ॥ ३४ ॥ ४-१८-३४ (२८९०३)
त्वरावान्कालपाशेन कण्ठे बद्धः पशुर्यथा ।
नावबुध्यत मूढात्मा मरणं समुपस्थितम् ॥ ३५ ॥ ४-१८-३५ (२८९०४)
आनीतायां सुरायां तु कृते चान्ने सुसंस्कृते ।
कीचकः पुनरागम्य सुदेष्णां वाक्यमब्रवीत् ॥ ३६ ॥ ४-१८-३६ (२८९०५)
मधु मांसं च बहुधा भक्ष्याश्च बहुधा कृताः ।
सुदेष्णे ब्रूहि सैरन्ध्रीं यथा सा मे गृहं व्रजेत् ॥ ३७ ॥ ४-१८-३७ (२८९०६)
केनचित्त्वद्य कार्येण त्वर शीघ्रं मम प्रियम् ।
अहं हि शरणं देवं प्रतिपद्ये वृषध्वजम् ।
समागमं मे सैरन्ध्र्या मरणं वा दिशेति वै ॥ ३८ । ४-१८-३८ (२८९०७)
वैशंपायन उवाच। ४-१८-३९क्ष् (३०६२)
सा तमाह विनिःश्वस्य प्रतिगच्छ स्वकं गृहम् ।
एषाऽहमपि सैरन्ध्रीं सुरार्थे तूर्णमादिशे ॥ ३९ ॥ ४-१८-३९ (२८९०८)
एवमुक्तस्तु पापात्मा कीचकस्त्वरितः पुनः ।
स्वगृहं प्राविशत्तूर्णं सैरन्ध्रीगतमानसः ॥ ४० ॥ ४-१८-४० (२८९०९)
कीचकं तु गतं ज्ञात्वा त्वरमाणं स्वकं गृहम् ।
सैरन्ध्रीं तत आहूय सदेष्णा वाक्यमब्रवीत् ॥ ४१ ॥ ४-१८-४१ (२८९१०)
गच्छ सैरन्ध्रि मत्प्रीत्यै कीचकस्य निवेशनम् ।
सुरामानय सुश्रोणि तृषिताऽहं विलासिनि ॥ ४२ ॥ ४-१८-४२ (२८९११)
वैशंपायन उवाच। ४-१८-४३क्ष् (३०६३)
सुदेष्णयैवमुक्ता सा निःश्वसन्ती नृपात्मजा ।
अब्रवीच्छोकसन्तप्ता नाहं तत्र व्रजामि वैः ॥ ४३ ॥ ४-१८-४३ (२८९१२)
सूतपुत्रो हि मां भद्रे कामात्मा चाभिमन्यते ।
न गच्छेयमहं तस्य राजपुत्रि निवेशनम् ।
त्वमेव भद्रे जानासि यथा स निरपत्रपः ॥ ४४ ॥ ४-१८-४४ (२८९१३)
समयश्च कृतो भद्रे यथा प्रथमसंगमे ।
तथा निवसमानायां यथाऽहं नान्यचारिणी ॥ ४५ ॥ ४-१८-४५ (२८९१४)
कीचकश्च सुकेशान्ते मूढो मदनगर्वितः ।

स मामिह गतां दृष्ट्वा व्यवस्यति निराकृतिम् ।
कथं नु वै तत्र गतां मर्षयेन्मामबान्धवाम् ॥ ४६ ॥ ४-१८-४६ (२८९१५)
बह्व्यः सन्ति तव प्रेष्या राजपुत्रि वशानुगाः ।
अन्यां प्रेषय कैकेयि संरक्ष्याऽहमिह त्वया ॥ ४७ ॥ ४-१८-४७ (२८९१६)
कीचकस्यालयं देवि न यामि भयकम्पिता ।
यद्यदन्यच्च मे कर्म करोमि च सुदुष्करम् ॥ ४८ ॥ ४-१८-४८ (२८९१७)
एवमुक्ता तु पाञ्चाल्या दैवयोगेन कैकयी ।
तां विराटस्य माहिषी क्रुद्धा भूयोऽन्वशासत ॥ ४९ ॥ ४-१८-४९ (२८९१८)
कीचकं चैव गच्छ त्वं बलात्कारे चोदिता ।
नास्ति मेऽन्या त्वया तुल्या सा त्वं शीघ्रतरं व्रज ॥ ५० ॥ ४-१८-५० (२८९१९)
अवश्यं त्वेव गन्तव्यं किमर्थं मां विवक्षसि ।
शीघ्रं गच्छ त्वरस्वेति मत्प्रीतिवशमाचर ॥ ५१ ॥ ४-१८-५१ (२८९२०)
न हीदृशो मम भ्राता किं त्वं समभिशङ्कसे ।
उक्त्वा चैनां बलाच्चैव विनियुज्य प्रभुत्वतः ॥ ५२ ॥ ४-१८-५२ (२८९२१)
भाजनं प्रददौ चास्यै सपिधानं हिरण्मयम् ।
या सुजाता सुगन्धा च तामानय सुरामिति ॥ ५३ ॥ ४-१८-५३ (२८९२२)
सा शङ्कमाना रुदती वेपन्ती द्रुपदात्मजा ।
दैवतेभ्यो नमस्कृत्वा श्वशुरेभ्यस्तथाऽब्रवीत् ॥ ५४ ॥ ४-१८-५४ (२८९२३)
यथाऽहमन्यं पार्थेभ्यो नाभिजानापि मानवम् ।
तेन सत्येन मां दृष्ट्वा कीचको मा वशं नयेत् ॥ ५५ ॥ ४-१८-५५ (२८९२४)
यथाऽहं पाण्डुपुत्रेभ्यः पञ्चभ्यो नान्यगामिनी ।
तेन सत्येन मां दृष्ट्वा कीचको मा वशं नयेत् ॥ ५६ ॥ ॥ ४-१८-५६ (२८९२५)

इति श्रीमन्महाभारते विराटपर्वणि कीचकवधपर्वणि
अष्टादशोऽध्यायः ॥ १८ ॥ ---------
Mahabharata - Virata Parva - Chapter Footnotes

४-१८-२ अभिमन्यसे कामयसे ॥
२ ॥
४-१८-५ मिथ्याभिगृध्नः वितथाभिनिवेशी । महद्भयं मृत्युम् ॥
५ ॥
४-१८-२० मन्यसे लिप्ससे शिशोश्चन्द्रवदहं तव दुर्लभास्मीति भावः ॥
२० ॥
४-१८-२१ या स्वीयं अर्थयेत कामयेत शुभेच्छारूपा तव नास्तीत्यर्थः
। तेन च शुभेन परदारनिवृत्तिरूपेण कामितेन संजीवनं भवतीति
शेषः। अन्यथा मरिष्यसीत्यर्थः ॥

विरतपर्व-अध्यय०१९
॥ श्रीः ॥
४.१९. अध्यायः १९

Mahabharata - Virata Parva - Chapter Topics
कीचकगृहंप्रति प्रस्थितया द्रौपद्या तेन स्वस्यादूषणाय सूर्यादिदेवताप्रार्थना ॥ १ ॥
सूर्येण तद्रक्षणाय निगूढस्य रक्षसः प्रेषणम् ॥ २ ॥
कीचकेन द्रौपदींप्रति स्ववशीभवनयाचनम् ॥ ३ ॥
तथा तदनङ्गीकाररोषात्तस्याः पादेन ताडनम् ॥ ४ ॥
सूर्यदूतेन रक्षसा कीचकस्य भूमौ निपातनम् ॥ ५ ॥
युधिष्ठिरेन कीचकजिघांसोर्भीमस्य संकेतेन प्रतिषेधनम् ॥ ६ ॥

Mahabharata - Virata Parva - Chapter Text

४-१९-० (२८९२६)
वैशंपायन उवाच। ४-१९-०क्ष् (३०६४)
अकीर्तयत सुश्रोणी धर्मं शक्रं दिवाकरम् ।
मारुतं चाश्विनौ देवौ कुबेरं वरुणं यमम् ॥ १ ॥ ४-१९-१ (२८९२७)
रुद्रमग्निं भगं विष्णुं स्कन्दं पूषणमेव च ।
सावित्रीसहितं चापि ब्रह्माणं पर्यकीर्तयत् ॥ २ ॥ ४-१९-२ (२८९२८)
इत्येवं मृगशवाक्षी सुश्रोणी धर्मचारिणी ।
उपातिष्ठत सा सूर्यं मुहूर्तमबला तदा ॥ ३ ॥ ४-१९-३ (२८९२९)
तदस्यास्तनुमध्यायाः सर्वं सूर्योऽवबुद्धवान् ।
अन्तर्हितं ततस्तस्या रक्षो रक्षार्थमादिशत् ॥ ४ ॥ ४-१९-४ (२८९३०)
तच्चैनां नाजहात्तत्र सर्वावस्थास्वनिन्दिताम् ॥ ५ ॥ ४-१९-५ (२८९३१)
प्रतस्थे सा सुकेशान्ता त्वरमाणा पुनःपुनः ।
विलम्बमाना विवशा कीचकस्य निवेशनम् ॥ ६ ॥ ४-१९-६ (२८९३२)
तां मृगीमिव वित्रस्तां दृष्ट्वा कृष्णां समागताम् ।
उत्पपातासनात्तूर्णं नावं लब्ध्वेव पारगः ॥ ७ ॥ ४-१९-७ (२८९३३)
श्लक्ष्णं चोवाच वाक्यं स कीचकः काममूर्च्छितः ।
स्वागतं ते सुकेशान्ते सुव्युष्टा रजनी मम ॥ ८ ॥ ४-१९-८ (२८९३४)
स्वामिनी त्वमनुप्राप्ता चिरस्य भवनं शुभे ।
कुरुष्व च मयि प्रीतिं वशं चोपानयस्व माम् ॥ ९ ॥ ४-१९-९ (२८९३५)
प्रतिगृह्णीष्व मे भोगांस्त्वदर्थमुपकल्पितान् ।

सर्वरत्नमयीं मालां कुण्डले च हिरण्मये ॥ १० । ४-१९-१० (२८९३६)
वासांसि चन्दनं माल्यं धूपशुद्धां च वारुणीम् ।
प्रतिगृह्णीष्व भद्रं ते विहर त्वं यथेच्छसि ।
प्रीत्या मे कुरु मद्माक्षि प्रसादं प्रियदर्शने ॥ ११ ॥ ४-१९-११ (२८९३७)
स्वास्तीर्णमस्ति शयनं सितसूक्ष्मोत्तरच्छदम् ।
अत्रारुह्य मया सार्धं पिबेमां वरवारुणीम् ॥ १२ ॥ ४-१९-१२ (२८९३८)
भजस्व मां विशालाक्षि भर्ता ते सदृशोस्म्यहम् ।
उपसर्प वरारोहे मेरुमर्कप्रभा यथा ॥ १३ ॥ ४-१९-१३ (२८९३९)
वैशंपायन उवाच। ४-१९-१४क्ष् (३०६५)
स मूढः कीचकस्तत्र प्राप्तां राजीवलोचनाम् ।
अब्रवीद्द्रौपदीं दृष्ट्वा दुरात्मा ह्यात्मसंमतः ॥ १४ ॥ ४-१९-१४ (२८९४०)
कीचकेनैवमुक्ता सा द्रौपदी वरवर्णिनी ।
अब्रवीत्तमनाचारं नेदृशं वक्तुमर्हसि ॥ १५ ॥ ४-१९-१५ (२८९४१)
नाहं शक्या त्वया स्प्रष्टुं श्वपचेनेव ब्राह्मणी ।
गन्तुमिच्छसि दुर्बुद्धे गतिं दुर्गतरान्तराम् ॥ १६ ॥ ४-१९-१६ (२८९४२)
यत्र गच्छन्ति बहवः परदाराभिमर्शकाः ।
नराः संभिन्नमर्यादाः कीटवच्चाशुभाश्रयाः ॥ १७ ॥ ४-१९-१७ (२८९४३)
अप्रैषीन्मां सुराहारीं सुदेष्णा त्वन्निवेशनम् ।
तस्यै नयिष्ये मदिरां भगिनी तृषिता तव ॥ १८ ॥ ४-१९-१८ (२८९४४)
पिपासिता च कैकेयी तूर्णं मामादिशत्ततः ।
दीयतां मे सुरा शीघ्रं सूतपुत्र व्रजाम्यहम् ॥ १९ ॥ ४-१९-१९ (२८९४५)
कीचक उवाच। ४-१९-२०क्ष् (३०६६)
अन्या भद्रे हरिष्यन्ति राजपुत्र्याः सुरामिमाम् ।
किं त्वं यास्यसि कल्याणि मदर्थं त्वमिहागता ॥ २० ॥ ४-१९-२० (२८९४६)
वैशंपायन उवाच। ४-१९-२१क्ष् (३०६७)
इत्युक्त्वा दक्षिणे पाणौ सूतपुत्रः परामृशत् ।
सा गृहीता विधून्वन्ती भूमौ निक्षिप्य भाजनम् ।
सभां शरणमाधावद्यत्र राजा युधिष्ठिरः ॥ २१ ॥ ४-१९-२१ (२८९४७)
तां कीचकः प्रधावन्तीं केशपक्षे परामृशत् ।
पातयित्वा तु तां भूमौ सूतपुत्रः पदाऽवधीत् ॥ २२ ॥ ४-१९-२२ (२८९४८)
सभायां पश्यतो राज्ञो विराटस्य महात्मनः ।
ब्राह्मणानां च वृद्धानां क्षत्रियाणां च पश्यतां ॥ २३ ॥ ४-१९-२३
(२८९४९)
तस्याः पादाभितप्ताया मुखाद्रुधिरमास्रवत् ॥ २४ ॥ ४-१९-२४ (२८९५०)
ततो दिवाकरेणाशु राक्षसः संनियोजितः ।
स कीचकमपोवाह वातवेगेन भारत ॥ २५ ॥ ४-१९-२५ (२८९५१)

स पपात तदा भूमौ रक्षोबलसमीरितः ।
विघूर्णमानो निश्चेष्टश्छिन्नमूल इव द्रुमः ॥ २६ ॥ ४-१९-२६ (२८९५२)
तां दृष्ट्वा तत्र ते सभ्या हाहाभूताः समन्ततः ।
न युक्तं सूतपुत्रेति कीचकेति च तेऽवदन् ।
किमियं वध्यते बाला कृपणा चाप्यबान्धवा ॥ २७ ॥ ४-१९-२७ (२८९५३)
तस्यामासन्हि ते पार्थाः सभायां भ्रातरस्तथा ।
अमृष्यमाणाः कृष्णायाः कीचकेन पदा वधं ॥ २८ ॥ ४-१९-२८ (२८९५४)
तां दृष्ट्वा भीमसेनस्य क्रोधादास्रमवर्तत ।
धूमोच्छ्वासः समभवन्नेत्रे चोच्छ्रितपक्ष्मणी ।
सस्वेदा भ्रुकुटी चोग्रा ललाटे समवर्तत ॥ २९ ॥ ४-१९-२९ (२८९५५)
तस्य भीमो वधप्रेप्सुः कीचकस्य दुरात्मनः ।
दन्तैर्दन्तांस्तदा रोषान्निष्पिपेष महामनाः ॥ ३० ॥ ४-१९-३० (२८९५६)
भूयः संचरितः क्रुद्धः सहसोत्थाय चासनात् ।
निरैक्षत द्रुमं दीर्घं राजानं चाप्यवैक्षत ॥ ३१ ॥ ४-१९-३१ (२८९५७)
वधमाकाङ्क्षमाणं तं कीचकस्य दुरात्मनः ।
आकारेणैव भीमं स प्रत्यपेधद्युधिष्ठिरः ॥ ३२ ॥ ४-१९-३२ (२८९५८)
तस्य राजा शनैः संज्ञां कुन्तीपुत्रो युधिष्ठिरः ।
चकार भीमसेनस्य रोषाविष्टस्य धीमतः ॥ ३३ ॥ ४-१९-३३ (२८९५९)
प्रत्याख्यानं तदा चाह कङ्को नाम युधिष्ठिरः ॥ ३४ ॥ ४-१९-३४ (२८९६०)
सूद मा साहसं कार्षीः फलितोऽयं वनस्पतिः ।
नात्र शुष्काणि काष्ठानि सन्ति यानि च कानि च ॥ ३५ ॥ ४-१९-३५ (२८९६१)
यदि ते दारुकृत्यं स्यान्निष्क्रम्य नगराद्बहिः ।
समूलं शातयेर्वृक्षं श्रमस्ते न भविष्यति ॥ ३६ ॥ ४-१९-३६ (२८९६२)
यस्य चार्द्रस्य वृक्षस्य शीतच्छायां समाश्रयेत् ।
न तस्य पर्णे द्रुह्येत पूर्ववृत्तमनुस्मरन् ॥ ३७ ॥ ४-१९-३७ (२८९६३)
न क्रोधकालसमयः सूद मा चापलं कृथाः ।
अपूर्णोऽयं द्विपक्षोनो नेदं बलवतां बहु ॥ ३८ ॥ ४-१९-३८ (२८९६४)
अथाङ्गुष्ठेनावमृद्नादङ्गुष्ठं तत्र धर्मराट् ।
प्रबोधनभयाद्राज्ञो भीमं तं प्रत्यषेधयत् ॥ ३९ ॥ ४-१९-३९ (२८९६५)
भीमसेनस्तु तद्वाक्यं श्रुत्वा परपुरञ्जयः ।
सहसोत्पतितं क्रोधं न्ययच्छद्धृतिमान्बलात् ।
इङ्गितज्ञः स तु भ्रातुस्तूष्णीमासीद्वृकोदरः ॥ ४० ॥ ४-१९-४० (२८९६६)
भीमस्य च समारम्भं दृष्ट्वा राज्ञोऽस्य चेष्टितम् ।
द्रौपदी चाधिकं क्रोधात्प्रारुदत्सा पुनःपुनः ॥ ४१ ॥ ४-१९-४१ (२८९६७)
कीचकेनानुगमनात्कृष्णा ताम्रायतेक्षणा ।
सभाद्वारमुपगम्य रुदन्ती वाक्यमब्रवीत् ॥ ४२ ॥ ४-१९-४२ (२८९६८)

अवेक्षमाणा सुश्रोणी पतींस्तान्दीनचेतसः ।
आकारं परिरक्षन्ती प्रतिज्ञां धर्मसंयुताम् ।
दह्यमानेव रौद्रेण चक्षुषा द्रुपदात्मजा ॥ ४३ ॥ ४-१९-४३ (२८९६९)
प्रजारक्षणशीलानां राज्ञां ह्यमिततेजसाम् ।
कार्याऽनुपालनं नित्यं धर्मे सत्ये च तिष्ठताम् ॥ ४४ ॥ ४-१९-४४ (२८९७०)
स्वप्रजायां प्रजायां च विशेषं नाधिगच्छताम् ।
प्रियेष्वपि च वध्येषु समत्वं ये समाश्रिताः ॥ ४५ ॥ ४-१९-४५ (२८९७१)
विवादेषु प्रवृत्तेषु समं कार्यानुदर्शिना ।
राज्ञा धर्मासनस्थेन जितौ लोकावुभावपि ॥ ४६ ॥ ४-१९-४६ (२८९७२)
राजन्धर्मासनस्थो हि रक्ष मां त्वमनागसम् ॥ ४७ ॥ ४-१९-४७ (२८९७३)
अहं त्वनपराध्यन्ती कीचकेन दुरात्मना ।
पश्यतस्ते महाराज हता पादेन दासिवात् ॥ ४८ ॥ ४-१९-४८ (२८९७४)
त्वत्समक्षं नृपश्रेष्ठ निष्पिष्टा वसुधातले ।
अनागसं कृपार्हां मां स्त्रियं त्वं परिपालय ॥ ४९ ॥ ४-१९-४९ (२८९७५)
रक्ष मां कीचकाद्भीतां धर्मं रक्ष नरेश्वर ।
मत्स्याधिप प्रजा रक्ष पिता पुत्रानिवौरसान् ॥ ५० ॥ ४-१९-५० (२८९७६)
यस्त्वधर्मेण कार्याणि मोहात्मा कुरुते नृपः ।
अचिरात्तं दुरात्मानं वशे कुर्वन्ति शत्रवः ॥ ५१ ॥ ४-१९-५१ (२८९७७)
मत्स्यानां कुलजस्त्वं हि तेषां सत्यं परायणम् ।
त्वं किलैवंविधो जातः कुले धर्मपरायणे ॥ ५२ ॥ ४-१९-५२ (२८९७८)
अतस्त्वाहमभिक्रन्दे शरणार्थं नराधिप ।
त्राहि मामद्य राजेन्द्र कीचकात्पापपूरुषात् ॥ ५३ ॥ ४-१९-५३ (२८९७९)
अनाथामिह मां ज्ञात्वा कीचकः पुरुषाधमः ।
प्रहरत्येव नीचात्मा न तु धर्ममवेक्षते ॥ ५४ ॥ ४-१९-५४ (२८९८०)
अकार्याणामनारम्भात्कार्याणामनुपालनात् ।
प्रजासु ये सुवृत्तास्ते स्वर्गमायान्ति भूमिपाः ॥ ५५ ॥ ४-१९-५५ (२८९८१)
कार्याकार्यविशेषज्ञाः कामकारेण पार्थिवाः ।
प्रजासु किल्बिषं कृत्वा नरकं यान्त्यधोमुखाः ॥ ५६ ॥ ४-१९-५६ (२८९८२)
नैव यज्ञैर्न वा दानैर्न गुरोरुपसेवनात् ।
प्राप्नुवन्ति तथा धर्मं यथा कार्यानुपालनात् ॥ ५७ ॥ ४-१९-५७ (२८९८३)
अपि चेदं पुरा ब्रह्मा प्रोवाचेन्द्राय पृच्छते ।
द्वन्द्वं कार्यमकार्यं च लोके चासीत्परं यथा ॥ ५८ ॥ ४-१९-५८ (२८९८४)
धर्माधर्मौ पुनर्द्वन्द्वं विनियुक्तमथापि वा ।
क्रियाणामक्रियाणां च प्रापणे पुण्यपापयोः ॥ ५९ ॥ ४-१९-५९ (२८९८५)
प्रजायां सृज्यमानायां पुरा ह्येतदुदाहृतम् ।
एतद्वो मानुषाः सम्यक्कार्यं द्वन्द्वत्रयं भुवि ॥ ६० ॥ ४-१९-६० (२८९८६)

अस्मिन्सुनीते दुर्नीते लभते कर्मजं फलम् ।
कल्याणकारी कल्याणं पापकारी च पापकम् ॥ ६१ ॥ ४-१९-६१ (२८९८७)
तेन गच्छति संसर्गं स्वर्गाय नरकाय वा ।
सुकृतं दुष्कृतं वाऽपि कृत्वा मोहेन मानवः ।
पश्चात्तापेन तप्येत स्वबुद्ध्या मरणं गतः ॥ ६२ ॥ ४-१९-६२ (२८९८८)
एवमुक्त्वा परं वाक्यं विससर्ज शतक्रतुम् ।
शक्रोप्यापृच्छ्य ब्रह्माणं देवराज्यमपालयत् ॥ ६३ ॥ ४-१९-६३ (२८९८९)
यथोक्तं देवराजेन ब्रह्मणा परमेष्ठिना ।
तथा त्वमपि राजेन्द्र कार्याकार्ये स्थिरो भव ॥ ६४ ॥ ॥ ४-१९-६४ (२८९९०)

इति श्रीमन्महाभारते विराटपर्वणि कीचकवधपर्वणि
एकोनविंशोऽध्यायः ॥ १९ ॥
Mahabharata - Virata Parva - Chapter Footnotes

४-१९-१७ कीटवच्च गुहाश्रया इति को थो पाठः ॥
१७ ॥

---

विरतपर्व-अध्यय०२०
॥ श्रीः ॥
४.२०. अध्यायः २०

Mahabharata - Virata Parva - Chapter Topics
विराटेन कीचकस्य दण्डाप्रयोगाद्रुष्ट्या द्रौपद्या तंप्रत्युपालम्भनम् ॥ १ ॥
युधिष्ठिरेण द्रौपद्याः सान्त्वनम् ॥ २ ॥
द्रौपद्याऽज्ञानादिव स्वशोकहेतुं पृच्छन्तीं सुदेष्णांप्रति
गन्धर्वैः कीचकवधस्य भावित्वकथनम् ॥ ३ ॥

Mahabharata - Virata Parva - Chapter Text

४-२०-० (२८९९१)
वैशंपायन उवाच। ४-२०-०क्ष् (३०६८)
एवं विलपमानायां पाञ्चाल्यां मत्स्यपुङ्गवः ।
अशक्तः कीचकं तत्र शासितुं बलदर्पितम् ।
विराटराजः मूतं तु सान्त्वेनैव न्यवारयत् ॥ १ ॥ ४-२०-१ (२८९९२)
कीचकं मत्स्यराजेन कृतागसमनिन्दिता ।
नापराधानुरूपेण दण्डेन प्रतिपादितम् ॥ २ ॥ ४-२०-२ (२८९९३)
पाञ्चालराजस्य सुता दृष्ट्वा सुरसुतोपमा ।

धर्मज्ञा व्यवहाराणां कीचके कृतकिल्बिषे ।
पुनः प्रोवाच राजानं स्मरन्ती धर्ममुत्तमम् ॥ ३ ॥ ४-२०-३ (२८९९४)
संप्रेक्ष्य च वरारोहा सर्वांस्तत्र सभासदः ।
राजानुवर्तनपरान्कीचकं च कृतागसम् ।
विराटं चाह पाञ्चाली दुःखेनाविष्टचेतना ॥ ४ ॥ ४-२०-४ (२८९९५)
न राजन्राजवत्किंचित्समाचरसि कीचके ।
दस्यूनामिव ते धर्मो न सत्सु परिवर्तते ॥ ५ ॥ ४-२०-५ (२८९९६)
न कीचकः स्वधर्मस्थो न च मत्स्यः कथंचन ।
सभासदोऽप्यधर्मज्ञा य इमं पर्युपासते ॥ ६ ॥ ४-२०-६ (२८९९७)
न धर्मं कीचको वेत्ति राजभृत्यास्तथैव च ।
न राजा विनयं ब्रूते अमात्याश्च न जानते ॥ ७ ॥ ४-२०-७ (२८९९८)
नोपालभे त्वां नृपते विराटं नृपसंसदि ।
नाहमेतेन युक्ता वै हन्तुं मात्स्य तवान्तिके ॥ ८ ॥ ४-२०-८ (२८९९९)
सभासदस्तु पश्यन्तु कीचकं धर्मलङ्घिनम् ।
विराटनृपते पश्य मामनाथामनागसम् ॥ ९ ॥ ४-२०-९ (२९०००)
न साम फलते दुष्टे दुष्टे दण्डः प्रयुज्यते ॥ १० ॥ ४-२०-१० (२९००१)
अदण्ड्यान्दण्डयन्राजा दण्ड्यांश्चैवाप्यदण्डयन् ।
स राजा न भवेल्लोके राजशब्दस्य भाजनम् ॥ ११ ॥ ४-२०-११ (२९००२)
दीनान्धकृपणाशक्तपङ्गुकुब्जजडादिकान् ।
अनाथबालवृद्धांश्च पुरुषान्वा स्त्रियोऽपि वा ।
दुष्टचोराभिभूतांश्च पालयेदवनीपतिः ॥ १२ ॥ ४-२०-१२ (२९००३)
अनाथानां च नाथः स्यादपितॄणां पिता नृपः ।
माता भवेदमातॄणामगुरूणां गुरुर्भवेत् ।
अगतीनां गती राजा नृणां राजा परायणम् ॥ १३ ॥ ४-२०-१३ (२९००४)
विशेषतः परैर्दुष्टैः परामृष्टं नरोत्तमः ।
स्त्रियं साध्वीमनाथां च पालयेत्स्वसुतामिव ॥ १४ ॥ ४-२०-१४ (२९००५)
त्वद्गृहावसतिं राजन्नेतावत्कालपर्ययम् ।
अधिकां त्वत्सुतायाश्च पश्य मां कीचकाहतां ॥ १५ ॥ ४-२०-१५ (२९००६)
विराट उवाच। ४-२०-१६क्ष् (३०६९)
परोक्षं नाभिजानामि विग्रहं युवयोरहम् ।
अर्थतत्त्वमविज्ञाय किं स्यादकुशलं मम ॥ १६ ॥ ४-२०-१६ (२९००७)
द्रौपद्युवाच। ४-२०-१७क्ष् (३०७०)
येषां न वैरी स्वपिति पदा भूमिमुपस्पृशन् ।
तेषां मां मानिनीं भार्यां सूतपुत्रः पदाऽवधीत् ॥ १७ ॥ ४-२०-१७ (२९००८)
ये च दद्युर्न याचेयुर्ब्रह्मण्याः सत्यवादिनः ।
येषां दुन्दुभिनिर्घोषो ज्याघोषः श्रूयते भृशम् ।

तेषां मां दयितां भार्यां सूतपुत्रः पदाऽवधीत् ॥ १८ ॥ ४-२०-१८ (२९००९)
तेजस्विनस्तथा क्षान्ता बलवन्तश्च मानिनः ।
महेष्वासा रणे शूरा गर्विता मानतत्पराः ।
तेषां मां मानिनीं भार्यां सूतपुत्रः पदाऽवधीत् ॥ १९ ॥ ४-२०-१९ (२९०१०)
सर्वलोकमिमं हन्युर्यदि क्रुद्धा महाबलाः ।
तेषां मां दयितां भार्यां सूतपुत्रः पदाऽवधीत् ॥ २० ॥ ४-२०-२० (२९०११)
येषां नास्ति समः कश्चिद्वीर्ये सत्ये बले दमे ।
तेषां मां दयितां भार्यां सूतपुत्रः पदाऽवधीत् ॥ २१ ॥ ४-२०-२१ (२९०१२)
येषां न सदृशः कश्चिद्धनाद्यैर्भुवि मानवः ।
तेषां मां दयितां भार्यां सूतपुत्रः पदाऽवधीत् ॥ २२ ॥ ४-२०-२२ (२९०१३)
तवाग्रतो विशेषेण प्रजानां च हितैषिणः ।
पश्यतो निहता राजंस्तेनेह जगतीपते ॥ २३ ॥ ४-२०-२३ (२९०१४)
शरणं ये प्रपन्नानां भवन्ति शरणार्थिनाम् ।
चरन्ति लोके प्रच्छन्नाः क्वनु तेऽद्य महाबलाः ॥ २४ ॥ ४-२०-२४ (२९०१५)
कथं ते सूतपुत्रेण वध्यमानां प्रियां सतीम् ।
मर्षयन्ति यथा क्लीबा बलवन्तोऽतितेजसः ॥ २५ ॥ ४-२०-२५ (२९०१६)
क्वनु तेषाममर्षश्च वीर्यं तेषां च तद्बलम् ।
न परीप्सन्ति ये भार्यां वध्यमानां दुरात्माना ॥ २६ ॥ ४-२०-२६ (२९०१७)
मयाऽपि शक्यं किं कर्तुं विराटे धर्मदूषणे ।
मां मर्षयति यः पश्यन्वध्यमानामनागसम् ॥ २७ ॥ ४-२०-२७ (२९०१८)
धर्मो विद्धो ह्यधर्मेण सभां यत्रोपतिष्ठति ।
न चेद्विशल्यः क्रियते सर्वे विद्धाः सभासदः ॥ २८ ॥ ४-२०-२८ (२९०१९)
यत्र धर्मो ह्यधर्मेम सत्यं यत्रानृतेन च ।
हन्यते प्रेक्षमाणानां हतास्तत्र सभासदः ॥ २९ ॥ ४-२०-२९ (२९०२०)
वैशंपायन उवाच। ४-२०-३०क्ष् (३०७१)
तस्यास्तत्कृपणं श्रुत्वा सैरन्ध्र्याः परिदेवितम् ।
ततः सभ्यास्तु ते सर्वे भूयः कृष्णामपूजयन् ।
साधुसाध्विति चाप्याहुः कीचकं चाप्यगर्हयन् ॥ ३० ॥ ४-२०-३० (२९०२१)
केचित्कृष्णां प्रशंसन्ति केचिन्निन्दन्ति कीचकम् ।
केचिन्निन्दन्ति राजानं केचिद्देवीं च तां नराः ॥ ३१ ॥ ४-२०-३१ (२९०२२)
सभ्या ऊचुः । ४-२०-३२क्ष् (३०७२)
यस्येयं चारुसर्वाङ्गी भार्या स्यादायतेक्षणा ।
परो लाभश्च तस्य स्यान्न स शोचेत्कदाचन ॥ ३२ ॥ ४-२०-३२ (२९०२३)
यस्या गात्रं शुभं पीनं मुखं जयति पङ्कजम् ।
गतिर्हंसं स्मितं कुन्दं सौषा नार्हति पद्वधम् ॥ ३३ ॥ ४-२०-३३ (२९०२४)
द्वात्रिंशद्दशना यस्याः श्वेता मांसनिबन्धनाः ।

स्निग्धाश्च मृदवः केशाः सैषा नार्हति पद्वधम् ॥ ३४ ॥ ४-२०-३४ (२९०२५)
पद्मं चक्रं ध्वजं शङ्खं प्रासादो मकरस्तथा ।
यस्याः पाणितले सन्ति सैषा नार्हति पद्वधम् ॥ ३५ ॥ ४-२०-३५ (२९०२६)
आवर्ताः खलु चत्वारः सर्वे चैव प्रदक्षिणाः ।
समं गात्रं शुभं स्निग्धं यस्या नार्हति पद्वधम् ॥ ३६ ॥ ४-२०-३६ (२९०२७)
अच्छिद्रहस्तपादा च अच्छिद्रदशना च या ।
कन्या कमलपत्राक्षी कथमर्हति पद्वधम् ॥ ३७ ॥ ४-२०-३७ (२९०२८)
सेयं लक्षणसंपन्ना पूर्णचन्द्रनिभानना ।
सुरूपिणी सुवदना नेयं योग्या पदा वधम् ॥ ३८ ॥ ४-२०-३८ (२९०२९)
देवदेवीव सुभगा शक्रदेवीव शोभना ।
अप्सरा इव सारूप्यान्नेयं योग्या पदा वधम् ॥ ३९ ॥ ४-२०-३९ (२९०३०)
इति स्मापूजसंस्तत्र कृष्णां प्रेक्ष्य सभासदः ॥ ४० ॥ ४-२०-४० (२९०३१)
सा विनिःश्वस्य सुश्रोणी भूमावन्तर्मुखी स्थिता ।
तूष्णीमासीत्तदा दृष्ट्वा विवक्षन्तं युधिष्ठिरम् ॥ ४१ ॥ ४-२०-४१ (२९०३२)
युधिष्ठिरस्य कोपात्तु ललाटे स्वेद आस्रवत् ।
अब्रवीद्धर्मपुत्रोऽथ सैरन्ध्रीं महिषीं प्रियाम् ।
कृष्णां तत्र नृपाभ्याशे परिव्राजकरूपधृत् ॥ ४२ ॥ ४-२०-४२ (२९०३३)
गच्छ सैरन्ध्रि मा भैस्त्वं सुदेष्णाया निवेशनम् ।
राजा ह्ययं धर्मशीलो विराटः परलोकभीः ।
यतस्त्वां न परित्राति सत्ये धर्मपथे स्थितः ॥ ४३ ॥ ४-२०-४३ (२९०३४)
भर्तारमनुरुन्धन्त्यः क्लिश्यन्ते वीरपत्नयः ।
शुश्रूषया क्लिश्यमानाः पतिलोकं जयन्त्युत ॥ ४४ ॥ ४-२०-४४ (२९०३५)
मन्ये न कालः क्रोधस्य पश्यन्ति पतयस्तव ।
तेन त्वां नाभिधावन्ति गन्धर्वाः सूर्यवर्चसः ॥ ४५ ॥ ४-२०-४५ (२९०३६)
श्रूयन्तां ते सुकेशान्ते मोक्षधर्माश्रयाः कथाः ।
यथा धर्मः कुलस्त्रीणां दृष्टो धर्मानुरोधनात् ॥ ४६ ॥ ४-२०-४६ (२९०३७)
नास्ति यज्ञः स्त्रियाः कश्चिन्न श्राद्धं नाप्युपोषणम् ।
या तु भर्तारि शुश्रूषा सा स्वर्गायाभिजायते ॥ ४७ ॥ ४-२०-४७ (२९०३८)
पिता रक्षति कौमारे भर्ता रक्षति यौवने ।
पुत्रस्तु स्थाविरे भावे न स्त्री स्वातन्त्र्यमर्हति ॥ ४८ ॥ ४-२०-४८ (२९०३९)
भीरु भर्तृभयात्पत्न्यो न क्रुध्यन्ति कदाचन ।
बहुभिश्च परिक्लेशैरवज्ञाताश्च शत्रुभिः ।
अनन्यभावाः शुद्धाश्च पुण्यलोकं जयन्त्युत ॥ ४९ ॥ ४-२०-४९ (२९०४०)
न क्रोधकालं नियतं पश्यन्ति पतयस्तव ।
न क्रुद्धान्प्रतियायाद्वै पतींस्ते वृत्रहा अपि ।

तेन त्वां नाभिधावन्ति गन्धर्वाः कामरूपिणः ॥ ५० ॥  ४-२०-५० (२९०४१)
यदि ते समयः कश्चित्कृतो ह्यायतलोचने ।
तं स्मरस्व क्षमाशीले क्षमा धर्मो ह्यनुत्तमः ॥ ५१ ॥ ४-२०-५१ (२९०४२)
क्षमा धर्मः क्षमा सत्यं क्षमा दानं क्षमा तपः ।
क्षमावतामयं लोकः परलोकः क्षमावताम् ॥ ५२ ॥ ४-२०-५२ (२९०४३)
द्वांशिनो द्वादशाङ्गस्य चतुर्विंशतिपर्वणः ।
कस्त्रिषष्ठिशतारस्य मासोनस्याक्षमी भवेत् ॥ ५३ ॥ ४-२०-५३ (२९०४४)
गच्छ सैरन्ध्रि गन्धर्वाः करिष्यन्ति तव प्रियम् ।
व्यपनेष्यन्ति ते दुःखं येन ते विप्रियं कृतम् ॥ ५४ ॥ ४-२०-५४ (२९०४५)
इत्येवमुक्ते तिष्ठन्तीं पुनरेवाह धर्मराट् ।
विघ्नं करोषि वै भद्रे दीव्यतां राजसंसदि ॥ ५५ ॥ ४-२०-५५ (२९०४६)
तस्मात्त्वमपि सुश्रोणि शैलूषीव विभासि नः ।
एवमुक्ता तु सा भर्त्रा समुद्वीक्ष्याब्रवीदिदम् ॥ ५६ ॥ ४-२०-५६ (२९०४७)
सत्यमुक्तं त्वया विद्वञ्शैलूषीं विद्धि मां पुनः ।
शैलूषकस्य तस्याहं येषां ज्येष्ठोऽक्षकोविदः ॥ ५७ ॥ ४-२०-५७ (२९०४८)
एवमुक्त्वा वरारोहा परिमृज्याननं शुभम् ।
केशान्विमुक्तान्संयम्य रुधिरेण समुक्षितान् ॥ ५८ । ४-२०-५८ (२९०४९)
पांसुकुण्ठितसर्वाङ्गी गजराजवधूरिव ।
प्रतस्थे नागनासोरूर्भर्तुराज्ञाय शासनम् ॥ ५९ ॥ ४-२०-५९ (२९०५०)
विमुक्ता मृगशावाक्षी निरन्तरपयोधरा ।
प्रभा नक्षत्रराजस्य कालमेघैरिवावृता ॥ ६० ॥ ४-२०-६० (२९०५१)
यस्यार्थे पाण्डवेयास्तु त्यजेयुरपि जीवितम् ।
तां ते दृष्ट्वा तथा कृष्णां क्षमिणो धर्मचारिणः ।
समयं नातिवर्तन्ते वेलामिव महोदधिः ॥ ६१ ॥  ४-२०-६१ (२९०५२)
सा प्रविश्य प्रवेपन्ती सुदेष्णाया निवेशनम् ।
रुदन्ती चारुसर्वाङ्गी तस्यास्तस्थावथाग्रतः ॥ ६२ ॥ ४-२०-६२ (२९०५३)
तामुवाच विराटस्य महिषी शाठ्यमास्थिता ।
किमिदं पद्मसंकाशं सुदन्तोष्ठाक्षिनासिकम् ॥ ६३ ॥ ४-२०-६३ (२९०५४)
रुदन्त्या अवमृष्टास्रं पूर्णेन्दुसमवर्चसम् ।
बिम्बोष्ठं कृष्णताराभ्यामत्यन्तरुचिरप्रभम् ।
नयनाभ्यामजिह्माभ्यां मुखं ते मुञ्चते जलम् ॥ ६४ ॥  ४-२०-६४ (२९०५५)
कस्त्वाऽवधीद्वरारोहे कस्माद्रोदिषि शोभने ।
को विप्रयुज्यते दारैः सपुत्रैः सहबान्धवैः ॥ ६५ ॥ ४-२०-६५ (२९०५६)
कस्याद्य राजा कुपितो वधमाज्ञापयिष्यति ।
ब्रूहि किं ते प्रियं कर्म कं त्यजे घातयामि वा ॥ ६६ ॥ ४-२०-६६ (२९०५७)
वैशंपायन उवाच। ४-२०-६७क्ष् (३०७३)

तां निःश्वस्याब्रवीत्कृष्णा जानन्ती नाम पृच्छसि ।
भ्रातुस्त्वं मामनुप्रेष्य किमेवं हि विकत्थसे ॥ ६७ ॥ ४-२०-६७ (२९०५८)
कीचको माऽवधीत्तत्र सुराहारीमितोगताम् ।
सभायां पश्यतो राज्ञो यथा वै निर्जने वने ॥ ६८ ॥ ४-२०-६८ (२९०५९)
सुदेष्णोवाच। ४-२०-६९क्ष् (३०७४)
घातयामि सुदन्तोष्ठि कीचकं यदि मन्यसे ।
भ्राता यद्येष मे व्यक्तं योऽतीतो धर्मचारिणीम् ।
यस्त्वां कामाभिभूतात्मा दुर्लभामवमन्यते ॥ ६९ ॥ ४-२०-६९ (२९०६०)
द्रौपद्युवाच। ४-२०-७०क्ष् (३०७५)
अद्यैव तं हनिष्यन्ति येषामागस्करो हि सः ।
मन्येऽहमद्य वा श्वो वा परलोकं गमिष्यति ॥ ७० ॥ ४-२०-७० (२९०६१)
भ्रातुः प्रयच्छ त्वरिता जीवच्छ्राद्धं त्वमद्य वै ।
सुहृष्टं कुरु वै चैनं नासून्मन्ये धरिष्यति ॥ ७१ ॥ ४-२०-७१ (२९०६२)
तेषां हि मम भर्तॄणां पञ्चानां धर्मचारिणाम् ।
एको दुर्धषणोऽत्यर्थं बले चाप्रतिमो भुवि ॥ ७२ ॥ ४-२०-७२ (२९०६३)
निर्मनुष्यमिमं लोकं कुर्यात्क्रुद्धो निशामिमाम् ।
न स संक्रुध्यते तावद्गन्धर्वः कामरूपधृत् ॥ ७३ ॥ ४-२०-७३ (२९०६४)
नूनं ज्ञास्यति यावद्वै ममैतत्पादघातनम् ।
तत्क्षणात्कीचकः पापः सपुत्रभ्रातृबान्धवः ।
विनशिष्यति दुष्टात्मा यथा दुष्कृतकर्मकृत् ॥ ७४ ॥ ४-२०-७४ (२९०६५)
अपि चैतत्पुरा प्रोक्तं निपुणैर्मनुजोत्तमैः ।
एकस्तु कुरुते पापं कालपाशवशं गतः ।
नीचेनात्मापराधेन कुलं तेन विनश्यति ॥ ७५ ॥ ४-२०-७५ (२९०६६)
वैशंपायन उवाच। ४-२०-७६क्ष् (३०७६)
सुदेष्णामेवमुक्त्वा तु सैरन्ध्री दुःखमोहिता ।
कीचकस्य वधार्थाय व्रतदीक्षामुपागमत् ॥ ७६ ॥ ४-२०-७६ (२९०६७)
अभ्यर्थिता च नारीभिर्मानिता च सुदेष्णया ।
न च स्नाति न चाश्नाति न पांसून्परिमार्जति ।
रुधिरक्लिन्नवदना बभूव मृदितेक्षणा ॥ ७७ ॥ ४-२०-७७ (२९०६८)
तां तथा शोकसन्तप्तां दृष्ट्वा प्ररुदितां स्त्रियः ।
कीचकस्य वधं सर्वा मनोभिश्च शशंसिरे ॥ ७८ ॥ ॥ ४-२०-७८ (२९०६९)

इति श्रीमन्महाभारते विराटपर्वणि कीचकवधपर्वणि विंशोऽध्यायः
॥ २० ॥

---

विरतपर्व-अध्यय०२१
॥ श्रीः ॥

## ४.२१. अध्यायः २१

Mahabharata - Virata Parva - Chapter Topics
वैशंपायनेन जनमेजयंप्रति कीचकोत्पत्तिप्रकारादिकथनम् ॥ १ ॥

Mahabharata - Virata Parva - Chapter Text

४-२१-० (२९०७०)
जनमेजय उवाच। ४-२१-०क्ष् (३०७७)
अहो दुःखतरं प्राप्ता कीचकेन पदा हता ।
पतिव्रता महाभागा द्रौपदी योषितांवरा ॥ १ ॥ ४-२१-१ (२९०७१)
दुःशलां स्मारयन्ती सा भर्तॄणां भगिनीं शुभाम् ।
नाशपत्सिन्धुराजं सा बलात्कारेण वाहिता ॥ २ ॥ ४-२१-२ (२९०७२)
किमर्थमिह संप्राप्ता कीचकेन दुरात्मना ।
नाशपत्तं महाभागा कृष्णा पादेन ताडिता ॥ ३ ॥ ४-२१-३ (२९०७३)
तेजोराशिरियं देवी धर्मज्ञा सत्यवादिनी ।
केशपांशे परामृष्टा मर्षयन्ती ह्यशक्तवत् ॥ ४ ॥ ४-२१-४ (२९०७४)
नैतत्कारणमल्पं हि श्रोतुकामोऽस्मि सत्तम ।
कृष्णायास्तु परिक्लेशान्मनो मे दूयते भृशम् ॥ ५ ॥ ४-२१-५ (२९०७५)
कस्य वंशे समुद्भूतः स च दुर्ललितो मुने ।
बलोन्मत्तः कथं चासीत्स्यालो मात्स्यस्य कीचकः ॥ ६ ॥ ४-२१-६ (२९०७६)
दृष्ट्वापि तां प्रियां भार्यां सूतपुत्रेण ताडिताम् ।
नैव चुक्षुभिरे वीराः किमकुर्वन्त तं प्रति ॥ ७ ॥ ४-२१-७ (२९०७७)
वैशंपायन उवाच। ४-२१-८क्ष् (३०७८)
त्वदुक्तोऽयमनुप्रश्नः कुरूणां कीर्तिवर्धनः ।
एतत्सर्वं यथा वक्ष्ये विस्तरेणेह पार्थिव ॥ ८ ॥ ४-२१-८ (२९०७८)
ब्राह्मण्यां क्षत्रियाञ्जातः सूतो भवति पार्थिव ।
प्रातिलोम्येन जातानां स ह्येको द्विज एव तु ॥ ९ ॥ ४-२१-९ (२९०७९)
रथकारमितीमं हि क्रियायुक्तं द्विजन्मनाम् ।
क्षत्रियादवरो वैश्याद्विशिष्ट इति चक्षते ॥ १० ॥ ४-२१-१० (२९०८०)
सह सूतेन संबन्धः कृतः पूर्वं नराधिपैः ।
तेन तु प्रातिलोम्येन राजशब्दो न लभ्यते ॥ ११ ॥ ४-२१-११ (२९०८१)
तेषां तु सूतविषयः सूतानां नामतः कृतः ।
उपजीव्यं च यत्क्षेत्रं राजन्सूतेन वै पुरा ॥ १२ ॥ ४-२१-१२ (२९०८२)
सूतानामधिपो राजा केकयो नाम विश्रुतः ।
राजकन्यासमुद्भूतः सारथ्येऽनुपमोऽभवत् ॥ १३ ॥ ४-२१-१३ (२९०८३)

पुत्रास्तस्य कुरुश्रेष्ठ मालव्यां जज्ञिरे तदा ।
कीचका इति विख्याताः शतं षट् चैव भारत ॥ १४ ॥ ४-२१-१४ (२९०८४)
तेषामासीद्बलश्रेष्ठः कीचकः सर्वजित्प्रभो ।
अग्रजो बलसंमत्तस्तेनासीत्सूतषट्शतम् ॥ १५ ॥ ४-२१-१५ (२९०८५)
मालव्या एव कौरव्य तत्र ह्यवरजाऽभवत् ।
तस्यां केकयराज्ञस्तु सुदेष्णा दुहिताऽभवत् ॥ १६ ॥ ४-२१-१६ (२९०८६)
तां विराटस्य मात्स्यस्य केकयः प्रददौ मुदा ।
सुरथायां मृतायां तु कौसल्यां श्वेतमातरि ॥ १७ ॥ ४-२१-१७ (२९०८७)
श्वेते विनष्टे शङ्खे च गते मातुलवेश्मनि ।
सुदेष्णां महिषीं लब्ध्वा राज दुःखमपानुदत् ॥ १८ ॥ ४-२१-१८ (२९०८८)
उत्तरं चोत्तरां चैव विराटात्पृथिवीपते ।
सुदेष्णा सुषुवे देवी कैकेयी कुलवृद्धये ॥ १९ ॥ ४-२१-१९ (२९०८९)
मातृष्वसृसुतां राजन्कीचकस्तामनिन्दिताम् ।
सदा परिचरन्प्रीत्या विराटे न्यवसत्सुखी ॥ २० ॥ ४-२१-२० (२९०९०)
भ्रातरश्चास्य विक्रान्ताः सर्वे च तमनुव्रताः ।
विराटस्यैव संहृष्टा बलं कोशं त्ववर्धयन् ॥ २१ ॥ ४-२१-२१ (२९०९१)
कालेया नाम ते दैत्याः प्रायशो भुवि विश्रुताः ।
जज्ञिरे कीचका राजन्बाणो ज्येष्ठस्तथाऽभवत् ॥ २२ ॥ ४-२१-२२ (२९०९२)
स हि सर्वास्त्रसंपन्नो बलवान्भीमविक्रमः ।
कीचको नष्टमर्यादो बभूव भयदो नृणाम् ॥ २३ ॥ ४-२१-२३ (२९०९३)
तं प्राप्य बलसंमत्तं विराटः पृथिवीपतिः ।
जिगाय सर्वांश्च रिपून्यथेन्द्रो दानवान्पुरा ॥ २४ ॥ ४-२१-२४ (२९०९४)
मेखलांश्च त्रिगर्तांश्च दशार्णांश्च कशेरुकान् ।
मालवांश्चैव यवनान्सिलिन्दान्काशिकोसलान् ॥ २५ ॥ ४-२१-२५ (२९०९५)
करदांश्च निषिद्धांश्च शिवान्मचुलकांस्तथा ।
पुलिन्दांश्च कलिङ्गांश्च तङ्कणान्परतङ्कणान् ॥ २६ ॥ ४-२१-२६ (२९०९६)
अन्ये च बहवः शूरा नानाजनपदेश्वराः ।
कीचकेन रणे भग्ना विद्रवन्ति दिशो दश ॥ २७ ॥ ४-२१-२७ (२९०९७)
तमेवंवीर्यसंपन्नं नागायुतसमं बले ।
विराटस्तत्र सेनायाश्चकार पतिमात्मनः ॥ २८ ॥ ४-२१-२८ (२९०९८)
विराटभ्रातरश्चैव दश दाशरथेः समाः ।
ते चैनानन्ववर्तन्त कीचकान्बलवत्तरान् ॥ २९ ॥ ४-२१-२९ (२९०९९)
एवंविधबलो भीमः कीचकस्ते च तद्विधाः ।
राज्ञः स्याला महात्मानो विराटस्य हितैषिणः ॥ ३० ॥ ४-२१-३० (२९१००)
एतत्ते कथितं सर्वं कीचकस्य पराक्रमम् ।
द्रौपदी न शशापैनं यस्मात्तद्वदतः शृणु ॥ ३१ ॥ ४-२१-३१ (२९१०१)

रक्षन्ति हि तपः क्रोधादृषयो न शपन्ति च ।
जानन्ती तद्यथातत्त्वं द्रौपदी न शशाप तम् ॥ ३२ ॥ ४-२१-३२ (२९१०२)
क्षमा धर्मः क्षमा दानं क्षमा यज्ञः क्षमा तपः ।
क्षमा सत्यं क्षमा शीलं क्षमा सर्वमिति श्रुतिः ॥ ३३ ॥ ४-२१-३३ (२९१०३)
क्षमावतामयं लोकः परश्चैव क्षमावताम् ।
एतत्सर्वं विजानन्ती सा क्षमामन्वपद्यत ॥ ३४ ॥ ४-२१-३४ (२९१०४)
भर्तॄणां मतमाज्ञाय क्षमिणां धर्मचारिणाम् ।
नाशपत्तं विशालाक्षी सती शक्ताऽपि भारत ॥ ३५ ॥ ४-२१-३५ (२९१०५)
पाण्डवाश्चापि ते सर्वे द्रौपदीं प्रेक्ष्य दुःखिताम् ।
क्रोधाग्निनाऽप्यदह्यन्त तदा लज्जाव्यपेक्षया ॥ ३६ ॥ ४-२१-३६ (२९१०६)
अथ भीमो महाबाहुः मूदयिष्यंस्तु कीचकम् ।
वारितो धर्मपुत्रेण वेलयेव महोदधिः ॥ ३७ ॥ ४-२१-३७ (२९१०७)
संधार्य मनसा रोषं दिवारात्रं विनिश्वसन् ।
महानसे तदा कृच्छ्रात्सुष्वाप रजनीं च ताम् ॥ ३८ ॥ ॥ ४-२१-३८ (२९१०८)

इति श्रीमन्महाभारते विराटपर्वणि कीचकवधपर्वणि
एकविंशोऽध्यायः ॥ २१ ॥

---

विरतपर्व-अध्यय०२२
॥ श्रीः ॥
४.२२. अध्यायः २२

Mahabharata - Virata Parva - Chapter Topics
कीचकं जिघांसन्त्या द्रौपद्या रात्रौ महानसमेत्य स्वपतो भीमस्य
प्रबोधनम् ॥ १ ॥
तथा कीचकमारणाभावे स्वप्राणविमोक्षणप्रतिज्ञानम् ॥ २ ॥
तथा युधिष्ठिरादीन्प्रति प्रत्येकं नामनिर्देशपूर्वकमनुशोचनम् ॥ ३ ॥

Mahabharata - Virata Parva - Chapter Text

४-२२-० (२९१०९)
वैशंपायन उवाच। ४-२२-०क्ष् (३०७९)
सा सूतपुत्राभिहता राजपुत्री सुदुःखिता ।
वधं कृष्णा परीप्सन्ती सूतपुत्रस्य भामिनी ॥ १ ॥ ४-२२-१ (२९११०)
जगामावासमेवाथ तदा सा द्रुपदात्मजा ।
कृत्वा शौचं यथान्यायं कृष्णा सा तनुमध्यमा ॥ २ ॥ ४-२२-२ (२९१११)
गात्राणि वाससी चैव प्रक्षाल्य सलिलेन सा ।

चिन्तयामास रुदती तस्य दुःखस्य निर्णयम् ॥ ३ ॥ ४-२२-३ (२९११२)
किं करोमि क्व गच्छामि कथं कार्यं भवेन्मम ।
इत्येवं चिन्तयित्वा सा भीमं तं मनसाऽगमत् ।
अन्यः कर्ता विना भीमान्न मेऽद्य मनसेप्सितम् ॥ ४ ॥ ४-२२-४ (२९११३)
प्रादुर्भूते क्षणे रात्रौ विहाय शयनं स्वकम् ।
दुःखेन महता युक्ता मानसेन मनस्विनी ।
प्राद्रवन्नाथमिच्छन्ती तथा नाथवती सती ॥ ५ ॥ ४-२२-५ (२९११४)
सा वै महानसं प्राप्य भीमसेनं सुचिस्मिता ।
उपासर्पत पाञ्चाली वासितेव महागजम् ॥ ६ ॥ ४-२२-६ (२९११५)
सर्वश्वेतेव माहेयी वने वृद्धा त्रिहायणी ।
महर्षभं यथा सुप्तमर्थिनी वननिर्झरे ।
संप्रसुप्तं तथा सिंहिं मृगराजवधूरिव ॥ ७ ॥ ४-२२-७ (२९११६)
अभिप्रसार्य बाहुभ्यां पतिं सुप्तं समाश्लिषत् ।
सुजातं गोमतीतीरे सालं वल्लीव पुष्पिता ॥ ८ ॥ ४-२२-८ (२९११७)
परिस्पृस्य च पाणिभ्यां पतिं सुप्तमबोधयत् ।
श्रीरिवान्या महोत्साहं सुप्तं विष्णुमिवार्णवे ।
क्षौमावदाते शयने शयानं वृषभेक्षणम् ॥ ९ ॥ ४-२२-९ (२९११८)
यथा शची देवराजं रुद्राणी शंकरं यथा ।
ब्रह्माणमिव सावित्री देवसेना गुहं यथा ॥ १० ॥ ४-२२-१० (२९११९)
दिशागजसमाकारं गजं गजवधूरिव ।
भीमं प्राबोधयत्कान्ता लक्ष्मीर्दामोदरं यथा ॥ ११ ॥ ४-२२-११ (२९१२०)
वीणेव मधुरालापा स्वरं गान्धारमाश्रिता ।
अभ्यभाषत पाञ्चाली कौरवं पाण्डुनन्दनम् ॥ १२ ॥ ४-२२-१२ (२९१२१)
उत्तिष्ठोत्तिष्ठ किं शेषे भीमसेन मृतो यथा ।
न मृतः स हि पापीयान्भार्यामालम्ब्य जीवति ॥ १३ ॥ ४-२२-१३ (२९१२२)
तस्मिञ्जीवति पापिष्ठे सेनावाहे मम द्विषि ।
तत्कर्म कृतवत्यद्य कथं निद्रां निषेवसे ॥ १४ ॥ ४-२२-१४ (२९१२३)
वैशंपायन उवाच। ४-२२-१५क्ष् (३०८०)
सुखसुप्तश्च तं शब्दं निशम्य स वृकोदरः ।
संवेदितः कुरुश्रेष्ठः तोत्रैरिव महागजः ॥ १५ ॥ ४-२२-१५ (२९१२४)
स वै विहाय शयनं यस्मिन्सुप्तः प्रबोधितः ।
उदतिष्ठदमेयात्मा पर्यङ्के सोत्तरच्छदे ॥ १६ ॥ ४-२२-१६ (२९१२५)
उपवेश्य च दुर्धर्पः पाञ्चालकुलवर्धनीम् ।
अथाब्रवीद्राजपुत्रीं कौरव्यो महिषीं प्रियाम् ॥ १७ ॥ ४-२२-१७ (२९१२६)
केनार्थेन च संप्राप्ता त्वरितेव ममान्तिकम् ।
न ते प्रकृतिमान्वर्णः कृशा त्वमभिलक्ष्यसे ॥ १८ ॥ ४-२२-१८ (२९१२७)

प्रकाशं यदि वा गुह्यं सर्वमाख्यातुमर्हसि ।
आचक्ष्व त्वमशेषेण सर्वं विद्यामहं यथा ॥ १९ ॥ ४-२२-१९ (२९१२८)
सुखं वा यदि वा दुःखं शुभं वा यदि वाऽशुभम् ।
यद्यप्यसुकरं कर्म कृतमित्यवधारय ॥ २० ॥ ४-२२-२० (२९१२९)
अहमेव हि ते कृष्णे विश्वास्यः सर्वकर्मसु ।
अहमापत्सु चापि त्वां मोक्षयामि पुनः पुनः ॥ २१ ॥ ४-२२-२१ (२९१३०)
शीघ्रमुक्त्वा यथाकामं यत्ते कार्यं विवक्षितम् ।
गच्छ वै शयनायैव यावदन्यो न बुध्यते ॥ २२ ॥ ४-२२-२२ (२९१३१)
वैशंपायन उवाच। ४-२२-२३क्ष् (३०८१)
सा लज्जमाना भीता च अधोमुखमुखी ततः ।
नोवाच किंचिद्वचनं बाष्पदूषितलोचना ॥ २३ ॥ ४-२२-२३ (२९१३२)
अथाब्रवीद्भीमपराक्रमो बली वृकोदरः पाण्डवमुख्यसंमतः ।
प्रब्रूहि किं ते करवाणि सुन्दरि प्रियं प्रिये वारणमत्तगामिनि ॥ २४
॥ ४-२२-२४ (२९१३३)
द्रौपद्युवाच। ४-२२-२५क्ष् (३०८२)
अशोच्यता कुतस्तस्या यस्या भर्ता युधिष्ठिरः ।
जानन्सर्वाणि दुःखानि किं मां भीमानुपृच्छसि ॥ २५ ॥ ४-२२-२५ (२९१३४)
यन्मां दासीप्रवादेन प्रातिकामी तदाऽनयत् ।
सभायां परिषन्मध्ये तन्मे मर्माणि कृन्तति ॥ २६ ॥ ४-२२-२६ (२९१३५)
विकृष्टा हास्तिनपुरे सभायां राजसंसदि ।
दुःशासनेन केशान्ते परामृष्टा रजस्वला ॥ २७ ॥ ४-२२-२७ (२९१३६)
क्षत्रियैस्तत्र कर्णाद्यैर्दृष्टा दुर्योधनेन च ।
श्वशुराभ्यां च भीष्मेण विदुरेण च धीमता ।
द्रोणेन च महाबाहो कृपेण च परंतप ॥ २८ ॥ ४-२२-२८ (२९१३७)
साऽहं श्वशुरयोर्मध्ये भ्रातृमध्ये च पाण्डव ।
केशे गृहीत्वा च सभां नीता जीवति वै त्वयि ॥ २९ ॥ ४-२२-२९ (२९१३८)
विप्रयुक्ता ततश्चाहं वने राज्याद्वनं गता ।
साऽहं वने दुर्वसतिं वसती त्वध्वकर्शिता ।
जटासुरपरिक्लेशात्प्राप्तापि सुमहद्भयम् ॥ ३० ॥ ४-२२-३० (२९१३९)
पार्थिवस्य सुता नाम कानु जीवेन मादृशी ।
अनुभूय भृशं दुःखमन्यत्र द्रौपदीं प्रभो ॥ ३१ ॥ ४-२२-३१ (२९१४०)
वनवासगता चाहं सैन्धवेन दुरात्मना ।
परामृष्टा द्वितीयं च सोढुमुत्सहते तु का ॥ ३२ ॥ ४-२२-३२ (२९१४१)
पद्भयां पर्यचरं चाहं देशान्विषमसंस्थितान् ।
दुर्गाञ्श्वापदसंकीर्णांस्त्वयि जीवति पाण्डवे ॥ ३३ ॥ ४-२२-३३ (२९१४२)
ततोऽहं द्वादशे वर्षे वन्यमूलफलाशना ।

इदं पुरमनुप्राप्ता सुदेष्णापरिचारिका ।
परस्त्रियमुपातिष्ठे सत्यधर्मपरायणा ॥ ३४ ॥  ४-२२-३४ (२९१४३)
गोशीर्षकं पद्मकं च हरिश्यामं च चन्दनम् ।
नित्यं पिषे विराटस्य त्वयि जीवति पाण्डव ॥ ३५ ॥ ४-२२-३५ (२९१४४)
साऽहं बहूनिः दुःखानि गणयामि न ते कृते ॥ ३६ ॥  ४-२२-३६ (२९१४५)
मत्स्यराजसमक्षं तु तस्य धूर्तस्य पश्यतः ।
कीचकेन पदा स्पृष्टा का नु जीवेत मादृशी ॥ ३७ ॥ ४-२२-३७ (२९१४६)
एवं बहुविधैर्दुःखैः क्लिश्यमाना च पाण्डव ।
न मां जानासि कौन्तेय किं फलं जीवितेन मे ॥ ३८ ॥ ४-२२-३८ (२९१४७)
द्रुपदस्य सुता चाहं धृष्टद्युम्नस्य चानुजा ।
अग्निकुण्डात्समुद्भूता नोर्व्यां जातु चराम्यहम् ॥ ३९ ॥ ४-२२-३९ (२९१४८)
कीचकं चेन्न हन्यास्त्वं ग्रीवां बद्धवा जले म्रिये ।
विषमालेड्य पास्यामि प्रवेक्ष्याम्यथवाऽनलं ॥ ४० ॥ ४-२२-४० (२९१४९)
आत्मानं नाशयिष्यामि वृक्षमारुह्य वा पते ।
शस्त्रेणाङ्गं च भेत्स्यामि किं फलं जीवितेन मे ॥ ४१ ॥ ४-२२-४१ (२९१५०)
योऽयं राज्ञो विराटस्य कीचको नाम भारत ।
सेनानीः पुरुषव्याघ्र स्यालः परमदुर्मतिः ॥ ४२ ॥ ४-२२-४२ (२९१५१)
स मां सैरन्ध्रिवेषेण वसन्तीं राजवेश्मनि ।
नित्यमेवाह दुष्टात्मा भार्या मम भवेति वै ॥ ४३ ॥ ४-२२-४३ (२९१५२)
तेनैवमुच्यमानाया वधार्हेणारिसूदन ।
कालेनेव फलं पक्वं हृदयं मे विदीर्यते ॥ ४४ ॥ ४-२२-४४ (२९१५३)
शरणं भव कौन्तेय मा स्म गच्छे युधिष्ठिरम् ।
निरुद्योगं निरामर्षं निर्वीर्यमरिमर्दन ॥ ४५ ॥ ४-२२-४५ (२९१५४)
मा स्म सीमन्तिनी काचिज्जनयेत्पुत्रमीदृशम् ॥ ४६ ॥  ४-२२-४६ (२९१५५)
विजानामि तवामर्षं बलं वीर्यं च पाण्डव ।
ततोऽहं परिदेवामि चाग्रतस्ते महाबल ॥ ४७ ॥ ४-२२-४७ (२९१५६)
यथा यूथपतिर्मत्तः कुञ्जरः षाष्टिहायनः ।
भूमौ निपतितं बिल्वं पद्भ्यमाक्रम्य पीडयेत् ॥ ४८ ॥ ४-२२-४८ (२९१५७)
तथैव च शिरस्तस्य निपात्य धरणीतले ।
वामेन पुरुषव्याघ्र मर्द मादेन पाण्डव ॥ ४९ ॥ ४-२२-४९ (२९१५८)
स चेदुद्यन्तमादित्यं प्रातरुत्थाय पश्यति ।
कीचकः शर्वरीं व्युष्टां नाहं जीवितुमुत्सहे ॥ ५० ॥ ४-२२-५० (२९१५९)
शापितोसि मम प्राणैः सुकृतेनार्जुनस्य च ।
युधिष्ठिरस्य पादाभ्यां यमयोर्जीवितेन च ।
कीचकस्य वधं नाद्य प्रतिजानासि भारत ॥ ५१ ॥  ४-२२-५१ (२९१६०)
भ्रात च विगर्हस्व ज्येष्ठं दुर्द्यूतदेविनम् ।

यस्मास्मि कर्मणा प्राप्ता दुःखमेतदनन्तकम् ॥ ५२ ॥ ४-२२-५२ (२९१६१)
येषां मुख्यतमो ज्येष्ठो भवेत्तु कुलपांसनः ।
भ्रातरं परमन्वीयुस्तेऽपि शालीनबुद्धयः ॥ ५३ ॥ ४-२२-५३ (२९१६२)
को हि राज्यं परित्यज्य सपुत्रपशुबान्धवम् ।
प्रव्रजेत महारण्यमजिनैः परिवारितः ॥ ५४ ॥ ४-२२-५४ (२९१६३)
यदि निष्कसहस्राणि यद्वाऽन्यत्सारवद्धनम् ।
सायं प्रातरदेविष्यदपि संवत्सरायुतम् ॥ ५५ ॥ ४-२२-५५ (२९१६४)
रुक्मं हिरण्यं वासांसि यानं युग्यमजाविकम् ।
अश्वाश्वतरसङ्घाश्च न जातु क्षयमाव्रजेत् ॥ ५६ ॥ ४-२२-५६ (२९१६५)
सोयं द्यूतप्रवादेन श्रियश्चैवावरोपितः ।
तूष्णीमास्ते यथा मूढः स्वानि कर्माणि चिन्तयन् ॥ ५७ ॥ ४-२२-५७ (२९१६६)
पुरा दशसहस्राणि दन्तिनां वाजिनामपि ।
यं यान्तमनुयान्ति स्म सोयं द्यूतेन जीवति ॥ ५८ ॥ ४-२२-५८ (२९१६७)
तथा शतसहस्राणि स्त्रीणाममिततेजसाम् ।
उपासते स्म राजानमिन्द्रप्रस्थे युधिष्ठिरम् ॥ ५९ ॥ ४-२२-५९ (२९१६८)
शतं दासीसहस्राणां यस्य नित्यं महानसे ।
पात्रहस्ता दिवारात्रमतिथीन्भोजयन्त्युत ॥ ६० ॥ ४-२२-६० (२९१६९)
एष निष्कसहस्राणि दत्त्वा प्रातर्दिनेदिने ।
द्यूतजेन ह्यनर्थेन महता समुपावृतः ॥ ६१ ॥ ४-२२-६१ (२९१७०)
एनं सुस्वरसंपन्ना बहवः सूतमागधाः ।
सुप्तं प्रातरुपातिष्ठन्सुमृष्टमणिकुण्डलाः ॥ ६२ ॥ ४-२२-६२ (२९१७१)
श्सहस्रं वालखिल्यानां सहस्रमुदवासिनाम् ।
सहस्रमश्मकुट्टानां सहस्रं वायुभोजिनाम् ॥ ६३ ॥ ४-२२-६३ (२९१७२)
सहस्रं मुनिपत्नीनां सहस्रं ब्रह्मचारिणाम् ।
सहस्रं मौनशीलानां सहस्रं गृहमेधिनाम् ॥ ६४ ॥ ४-२२-६४ (२९१७३)
हंसाः परमहंसाश्च योगिनश्च द्विजातयः ।
कुटीरकाः परिव्राजो ये चान्ये वनचारिणः ॥ ६५ ॥ ४-२२-६५ (२९१७४)
संविभक्तात्मकाश्चैव बहवश्चोर्ध्वरेतसः ।
चतुर्वेदविदो विप्राः शिक्षामीमांसपारगाः ।
क्रमपाठाश्च ये विप्राः सामाध्यायनिकाश्च ये ॥ ६६ ॥ ४-२२-६६ (२९१७५)
सहस्रमृषयो यस्य नित्यमासन्सभासदः ।
तपःश्रुतोपसंपन्नाः सर्वकामैरुपास्थिताः ॥ ६७ ॥ ४-२२-६७ (२९१७६)
अन्धान्वृद्धाननाथांस्तु सर्वराष्ट्रेषु दुःखितान् ।
बिभर्त्यन्नार्थिनो नित्यमानृशंस्याद्युधिष्ठिरः ॥ ६८ ॥ ४-२२-६८ (२९१७७)
स एष निलयं प्राप्तो मत्स्यस्य परिचारकः ।
सभायां विनतो राज्ञः कङ्को नाम युधिष्ठिरः ॥ ६९ ॥ ४-२२-६९ (२९१७८)

इन्द्रप्रस्थे निवसतः समये यस्य पार्थिवाः ।
आसन्बलिकराः सर्वे सोन्येभ्यो भृतिमिच्छति ॥ ७० ॥ ४-२२-७० (२९१७९)
पार्थिवाः पृथिवीपाला यस्यासन्वशवर्तिनः ।
स वशे विवशो राज्ञां परेषामद्य वर्तते ॥ ७१ ॥ ४-२२-७१ (२९१८०)
संप्राप्य पृथिवीं कृत्स्नां रश्मिवानिव तेजसा ।
सोद्य राज्ञो विराटस्य सभास्तारो युधिष्ठिरः ॥ ७२ ॥ ४-२२-७२ (२९१८१)
यमुपासत राजानं सभायामृषिसत्तमाः ।
तमुपासीनमद्यान्यं पश्य पाण्डव पाण्डवम् ॥ ७३ ॥ ४-२२-७३ (२९१८२)
अनवद्यं महाप्राज्ञं जीवितार्थेन संवृतम् ।
दृष्ट्वा कस्य न दुःखं स्याद्धर्मराजं युधिष्ठिरम् ॥ ७४
॥ ४-२२-७४ (२९१८३)
उपास्ते स्म सभायां यं कृत्स्नाऽपि च वसुन्धरा ।
तमुपासीनमद्यान्यं पश्य भारत भारतम् ॥ ७५ ॥ ४-२२-७५ (२९१८४)
एवं बहुविदैर्दुःखैः पीड्यमानामनाथवत् ।
शोकसागरमध्यस्थां किं मां भीम न पश्यसि ॥ ७६ ॥ ४-२२-७६ (२९१८५)
इदं तु मे दुःखतरं यत्त्वां वक्ष्यामि भारत ।
न मेऽभ्यसूया कर्तव्या दुःखादेतद्ब्रवीम्यहम् ॥ ७७ ॥ ४-२२-७७ (२९१८६)
शार्दूलैर्महिषैर्नागैरगारे योत्स्यसे सदा ।
कैकेय्याः प्रेक्षमाणायास्तदा मे कश्मलोऽभवत् ॥ ७८ ॥ ४-२२-७८ (२९१८७)
हसन्त्यन्तःपुरे नार्यो मम चेष्टां निरीक्ष्य च ॥ ७९ ॥ ४-२२-७९ (२९१८८)
तत उत्थाय कैकेयी सर्वास्ताः प्रत्यभाषत ।
प्रेक्ष्य मामनवद्याङ्गीं कश्मलाभिहतामिव ॥ ८० ॥ ४-२२-८० (२९१८९)
स्नेहात्संवासजादेव तदा वै चारुहासिनी ।
युध्यमानं महावीर्यमिमं समनुशोचति ॥ ८१ ॥ ४-२२-८१ (२९१९०)
कल्याणरूपा सैरन्ध्री वललश्चापि सुन्दरः ।
स्त्रीणां चित्तं हि दुर्ज्ञेयं युक्तरूपौ हि मे मतौ ॥ ८२ ॥ ४-२२-८२ (२९१९१)
सैरन्ध्री प्रियसंवासान्नित्यं करुणवादिनी ।
अस्मिन्राजकुले चैतौ तुल्यकालनिवासिनौ ॥ ८३ ॥ ४-२२-८३ (२९१९२)
इति ब्रुवाणा वाक्यानि सा मां नित्यमजीजपत् ।
क्रुध्यन्तीं मां च संप्रेक्ष्य पर्यशङ्कत मां त्वयि ॥ ८४
॥ ४-२२-८४ (२९१९३)
तस्यां तथा ब्रुवन्त्यां तु भीमो भीमपराक्रमः ।
नोवाच किंचिद्वचनं संरम्भाद्रक्तलोचनः ॥ ८५ ॥ ४-२२-८५ (२९१९४)
ज्ञात्वा-तु रुषितं भीमं द्रौपदी पुनरब्रवीत् ।
शोके यौधिष्ठिरे मग्ना नाहं जीवितुमुत्सहे ॥ ८६ ॥ ४-२२-८६ (२९१९५)
यंस्तु देवान्मनुष्यांश्च सर्वानेकरथोऽजयत् ।

सोयं राज्ञो विराटस्य कन्यानां नर्तको युवा ।
आस्ते वेषप्रतिच्छन्नः कन्यानां परिचारकः ॥ ८७ ॥ ४-२२-८७ (२९१९६)
योऽतर्पयदमेयात्मा खाण्डवे जातवेदसम् ।
सोऽन्तःपुरगतः पार्थः कूपेऽग्निरिव संवृतः ॥ ८८ ॥ ४-२२-८८ (२९१९७)
यस्माद्भयममित्राणां सदैव पुरुषर्षभात् ।
स लोकपरिभूतेन वेषेणास्ते धनंजयः ॥ ८९ ॥ ४-२२-८९ (२९१९८)
यस्य ज्यातलनिर्घोषात्समकम्पन्त शत्रवः ।
षण्डरूपं वहन्तं तं गीतं नृत्तावलम्बनम् ।
कुर्वन्तमर्जुनं दृष्ट्वा न मे स्वास्थ्यं मनो व्रजेत् ॥ ९० ॥
४-२२-९० (२९१९९)
स्त्रियो गीतस्वरात्तस्य मुदिताः पर्युपासते ॥ ९१ ॥ ४-२२-९१ (२९२००)
किरीटं सूर्यसंकाशं यस्य मूर्धन्यशोभत ।
वेणीविकृतकेशान्तः सोऽयमद्य धनंजयः ॥ ९२ ॥ ४-२२-९२ (२९२०१)
यस्मिन्नस्त्राणि दिव्यानि समस्तानि महात्मनि ।
आधारः सर्वविद्यानां यो धारयति कुण्डले ॥ ९३ ॥ ४-२२-९३ (२९२०२)
यं वै राजसहस्राणि तेजसाऽप्रतिमं भुवि ।
समरे नातिवर्तन्ते वेलामिव महोर्मयः ॥ ९४ ॥ ४-२२-९४ (२९२०३)
सोयं राज्ञो विराटस्य कन्यानां नर्तको युवा ।
आस्ते वेषप्रतिच्छन्नः कन्यानां परिचारकः ॥ ९५ ॥ ४-२२-९५ (२९२०४)
यस्य स्म रथनिर्घोषात्समकम्पत मेदिनी ।
सपर्वतवनाकाशा सहस्थावरजङ्गमा ॥ ९६ ॥ ४-२२-९६ (२९२०५)
यस्मिञ्जाते महेष्वासे कुन्त्याः प्रीतिरवर्धत ।
न स शोचति मामद्य भीमसेन तवानुजः ॥ ९७ ॥ ४-२२-९७ (२९२०६)
विभूषितमलंकारैः कुण्डलैः परिपातुकैः ।
कम्बुपाणिमथायान्तं दृष्ट्वा सीदति मे मनः ॥ ९८ ॥ ४-२२-९८ (२९२०७)
वेणीविकृतकेशान्तं भीमधन्वानमर्जुनम् ।
कन्यापरिवृतं दृष्ट्वा शोकं गच्छति मे मनः ॥ ९९ ॥ ४-२२-९९ (२९२०८)
यदा ह्येनं परिवृतं कन्याभिर्देवरूपिणम् ।
प्रच्छन्नमिव मातङ्गं परिपूर्णं करेणुभिः ॥ १०० ॥ ४-२२-१०० (२९२०९)
मात्स्यं पार्थं च गायन्तं विराटं समुपस्थितम् ।
पश्यामि तूर्यमध्यस्थं दृष्ट्वा मुह्यति मे मनः ॥ १०१ ॥ ४-२२-१०१
(२९२१०)
नूनमार्या न जानाति कृच्छ्रं प्राप्तं धनंजयम् ।
अजातशत्रुं कौरव्यं मग्नं द्युर्द्यूतदेविनम् ॥ १०२ ॥ ४-२२-१०२ (२९२११)
ऐन्द्रवारुणवायव्यब्रह्माग्नेयैः सवैष्णवैः ।
अग्नीन्संतर्पयन्पार्थः सर्वशत्रुनिबर्हणः ।

दिव्यैरस्त्रैरमेयात्मा सर्वांश्चैकरथोऽजयत् ॥१०३ ॥ ४-२२-१०३ (२९२१२)
कौबेरं वैष्णवं शैवमस्त्राण्यन्यानि भारत ।
दर्शयन्नस्त्रवीर्यं च वासुदेवसहायवान् ॥१०४ ॥ ४-२२-१०४ (२९२१३)
दिव्यं गान्धर्वमस्त्रं च वायव्यमथ वैष्णवम् ।
ब्राह्मं पाशुपतं चैव स्थूणाकर्णं च दर्शयन् ॥१०५ ॥ ४-२२-१०५
(२९२१४)
पौलोमान्कालकेयांश्च इन्द्रशत्रून्महाबलान् ।
निवातकवचैः सार्धं घोरानेकरथोऽजयत् ।
सोन्तःपुरगतः पार्थः कूपेऽग्निरिव संवृतः ॥१०६ ॥ ४-२२-१०६ (२९२१५)
यो वै महातपः कुर्वन्महाबलपराक्रमः ।
युद्धेन तोषयामास शंकरं शूलपाणिनम् ॥१०७ ॥ ४-२२-१०७ (२९२१६)
कन्यापुरगतं दृष्ट्वा गोष्ठेष्विव महावृषम् ।
स्त्रीवेषविकृतं पार्थं कुन्तीं गच्छति मे मनः ॥१०८ ॥ ४-२२-१०८
(२९२१७)
यः स्त्रीभिर्नित्यसंपन्नो रूपेणास्त्रेण मेधया ।
सोऽश्वबन्धो विराटस्य पश्य कालस्य पर्ययम् ॥१०९ ॥ ४-२२-१०९ (२९२१८)
राजकन्याश्च वेश्याश्च विशां दुहितरश्च याः ।
सर्वाः सारयुता नार्यो दामग्रन्थिवशं गताः ।
प्रेष्यकर्मणि तं दृष्ट्वा शोचामि विलपामि च ॥१२० ॥ ४-२२-११० (२९२१९)
विराटमुपतिष्ठन्तं दर्शयन्तं च वाजिनम् ।
अभ्यकीर्यन्त बृन्दानि दामग्रन्थिमुदीक्षितुम् ।
विनयन्तं जवेनाश्वान्धर्मराजस्य पश्यतः ॥१११ ॥ ४-२२-१११ (२९२२०)
किंनु मां मन्यसे पार्थ सुखितेति परन्तप ।
तथा दृष्ट्वा यवीयांसं सहदेवं युधांपतिम् ॥११२ ॥ ४-२२-११२ (२९२२१)
तं दृष्ट्वा गोषु गोसङ्घ्यं वत्सचर्मक्षितीशयम् ।
दुःखशोकपरीताङ्गी पाण्डुभूताऽस्मि पाण्डव ॥११३ ॥ ४-२२-११३ (२९२२२)
सहदेवस्य वृत्तानि चिन्तयन्ती पुनःपुनः ।
न पश्यामि महाभाग सहदेवस्य दुःष्कृतम् ।
यस्मादेवंविधं क्लेशं प्राप्नुयात्सत्यविक्रमः ॥११४ ॥ ४-२२-११४ (२९२२३)
दूयामि भरतश्रेष्ठ दृष्ट्वा ते भ्रातरं प्रियम् ।
गोषु गोवृषसंकाशं मात्स्येनापि निवेशितम् ॥११५ ॥ ४-२२-११५ (२९२२४)
संरब्धतररक्ताक्षं गोपालानां पुरोगमम् ।
विराटमभिनन्दन्तं वित्ते मे भवति ज्वरः ॥११६ ॥ ४-२२-११६ (२९२२५)
सहदेवं हि मे नित्यं वीरमार्या प्रशंसति ।
महाभिजनसंपन्नो नीतिमान्कुलवानपि ॥११७ ॥ ४-२२-११७ (२९२२६)
हीनिषेवो ह्यनवमो धार्मिकश्च प्रियश्च मे ।

स तेऽरण्येषु वोढव्यः पाञ्चालि रजनीष्वपि ॥११८ ॥ ४-२२-११८ (२९२२७)
सुकुमारश्च शूरश्च राजानं चाप्यनुव्रतः ।
ज्येष्ठापचायिनं वीरं स्वयं पाञ्चालि भोजयेः ॥११९ ॥ ४-२२-११९ (२९२२८)
इत्युवाच हि मां कुन्ती रुदती पुत्रगृद्धिनी ।
प्रव्रजन्तं महारण्यं तं परिष्वज्य तिष्ठती ॥१२० ॥ ४-२२-१२० (२९२२९)
तं दृष्ट्वा गोषु गोपालवेषमास्थाय धिष्ठितम् ।
सहदेवं युधांश्रेष्ठं किंनु जीवामि पाण्डवः ॥१२१ ॥ ४-२२-१२१ (२९२३०)
एवं दुःखशताविष्टा युधिष्ठिरनिमित्ततः ॥१२२ ॥ ४-२२-१२२ (२९२३१)
पुनः प्रतिविशिष्टानि दुःखानि शृणु भारत ।
वर्धन्ते मयि कौन्तेय वक्ष्याम्यन्यानि तानि वै ॥१२३ ॥ ४-२२-१२३ (२९२३२)
युष्मासु ध्रियमाणेषु दुःखानि विविधान्युत ।
शोषयन्ति शरीरं मे किंनु दुःखतरं ततः ॥१२४ ॥ ४-२२-१२४ (२९२३३)
४-२२-१२५ (२९२३४)
एकभर्ता तु या नारी सा सुखेनैव वर्तते ।
पञ्च मे पतयः सन्ति मम दुःखमनन्तकम् ॥१२५ ॥

Mahabharata - Virata Parva - Chapter Footnotes

४-२२-७ सर्वश्वेता बकी इति नीलकण्ठः ॥
७ ॥
४-२२-१० तथा इति खो पाठः ॥
१० ॥
४-२२-१३ नाभृतस्य हि पापीयान्भार्यामालभ्य जीवतीति झो पाठः ॥
१३ ॥
४-२२-५४ महारण्यमनुजैः परिवारितः इति खो पाठः ॥
५४ ॥( इमे चत्वारः श्लोकाः धो पुस्तक एव वर्तन्ते ॥)

---

विरतपर्व-अध्यय०२३
॥ श्रीः ॥
४.२३. अध्यायः २३

Mahabharata - Virata Parva - Chapter Topics
द्रौपद्या भीमंप्रति स्ववैभवानुस्मारणेन परिशोचनपूर्वकं
कीचकहननचोदना ॥१ ॥

Mahabharata - Virata Parva - Chapter Text

४-२३-० (२९२३५)
द्रौपद्युवाच। ४-२३-०क्ष् (३०८३)
अहं सैरन्ध्रिवेषेण वसन्ती राजवेश्मनि ।
वशगाऽस्मि सुदेष्णाया अक्षधूर्तस्य कारणात् ॥ १ ॥ ४-२३-१ (२९२३६)
विक्रियां पश्य मे तीव्रां राजपुत्र्याः परन्तप ।
आसे कालमुपासीना सर्वदुःखसहा पुनः ॥ २ ॥ ४-२३-२ (२९२३७)
अनित्याः खलु मर्त्यानामर्थाश्च व्यसनानि च ।
इति मत्वा प्रतीक्षामि भर्तॄणामुदयं पुनः ॥ ३ ॥ ४-२३-३ (२९२३८)
चक्रवत्परिवर्तन्ते ह्यर्थाश्च व्यसनानि च ।
इति कृत्वा प्रतीक्षामि भर्तॄणामुदयं पुनः ॥ ४ ॥ ४-२३-४ (२९२३९)
य एव हेतुर्भवति पुरुषस्य जयावहः ।
पराजये च हेतुः स इति च प्रतिपालये ॥ ५ ॥ ४-२३-५ (२९२४०)
दत्त्वा याचन्ति पुरुषा हत्वा हन्यन्त एव ते ।
पातयित्वा च पात्यन्ते परैरिति च मे श्रुतम् ॥ ६ ॥ ४-२३-६ (२९२४१)
न दैवस्यातिभारोस्ति न चैवास्यातिवर्तनम् ।
इति चाप्यागमं भूयो दैवस्य प्रतिपालये ॥ ७ ॥ ४-२३-७ (२९२४२)
स्थितं पूर्वं जलं यत्र न पुनस्तत्र तिष्ठति ।
इति पर्यायमिच्छन्ति प्रतीक्षाम्युदयं पुनः ॥ ८ ॥ ४-२३-८ (२९२४३)
दैवेन किल यस्यार्थः सुनीतोपि विपद्यते ।
सदा दैवागमे यत्नस्तेन कार्यो विजानता ॥ ९ ॥ ४-२३-९ (२९२४४)
किंनु मे वचनस्याद्य कथितस्य प्रयोजनम् ।
पृच्छ मां दुःखितामेनामपृष्टाऽपि ब्रवीमि ते ॥ १० ॥ ४-२३-१० (२९२४५)
महिषी पाण्डुपुत्राणां दुहिता द्रुपदस्य च ।
इमामवस्थां संप्राप्ता मदन्या का जिजीविषेत् ॥ ११ ॥ ४-२३-११ (२९२४६)
कुरून्परिहरन्सर्वान्पाञ्चालानपि भारत ।
पाण्डवेयांश्च संप्राप्तो मम शोको ह्यरिन्दम ॥ १२ ॥ ४-२३-१२ (२९२४७)
भ्रातृभिः श्वशुरैः पुत्रैर्बहुभिः परिवारिता ।
एवं समुदिता नारी कान्वेयं दुःखभागिनी ॥ १३ ॥ ४-२३-१३ (२९२४८)
नूनं बालतया धातुर्मया वै विप्रियं कृतम् ।
तस्य प्रभावाद्दुर्नीतं प्राप्ताऽस्मि भरतर्षभ ॥ १४ ॥ ४-२३-१४ (२९२४९)
वर्णं विकारमपि मे पश्य पाण्डव यादृशम् ।
ईदृशो मे न तत्रासीद्दुःखे परमके पुरा ॥ १५ ॥ ४-२३-१५ (२९२५०)
त्वमेव भीम जानीषे यन्मे पार्थ सुखं पुरा ।
साऽहं दासीत्वमापन्ना न शान्तिं मनसा लभे ॥ १६ ॥ ४-२३-१६ (२९२५१)
तद्दैविकमिदं मन्ये यत्र पार्थो धनञ्जयः ।
भीमधन्वा महारङ्गे चास्ते शान्त इवानलः ॥ १७ ॥ ४-२३-१७ (२९२५२)

अशक्या वेदितुं पार्थ प्राणिनां वै गतिर्नरैः ।
विनिपातमिमं पश्य युष्माकमविचिन्तितम् ॥ १८ ॥ ४-२३-१८ (२९२५३)
यस्या मम मुखप्रेक्षा यूयमिन्द्रसमाः सदा ।
सा प्रेक्ष्य मुखमन्यासामवराणां वरा सती ॥ १९ ॥ ४-२३-१९ (२९२५४)
पश्य पाण्डव मेऽवस्थां यथा नार्हामि वै तथा ।
युष्मासु ध्रियमाणेषु पाञ्चालेषु च मानद ॥ २० ॥ ४-२३-२० (२९२५५)
यस्याः सागरपर्यन्ता पृथिवी वशवर्तिनी ।
आसीत्साऽद्य सुदेष्णायाः पाञ्चाली वशवर्तिनी ॥ २१ ॥ ४-२३-२१ (२९२५६)
यस्याः पुरश्चरा ह्यासन्पृष्ठतश्चानुगामिनः ।
साहमद्य सुदेष्णायाः पुरः पश्चाच्च गामिनी ॥ २२ ॥ ४-२३-२२ (२९२५७)
इदं तु दुःखं कौन्तेय ममासह्यं निबोध तत् ।
या न जातु स्वयं पिंषे गात्रोद्वर्तनमात्मनः ।
अन्यत्र कुन्त्या भद्रं ते सा पिनष्म्यद्य चन्दनं ॥ २३ ॥ ४-२३-२३ (२९२५८)
पश्य कौन्तेय पाणी मे नैवं वै भवतः पुरा ।
इत्यस्मै दर्शयामास किणवन्तौ करावुभौ ॥ २४ ॥ ४-२३-२४ (२९२५९)
बिभेमि कुन्त्या या नाऽहं युष्माकं वा कदाचन ।
साऽद्याग्रतो विराटस्य भीता तिष्ठामि किंकरी ॥ २५ ॥ ४-२३-२५ (२९२६०)
किंनु वक्ष्यति सम्राण्मां वर्णकः सुकृतो न वा ।
नान्यपिष्टं विराटस्य चन्दनं किल रोचते ॥ २६ ॥ ४-२३-२६ (२९२६१)
वैशंपायन उवाच। ४-२३-२७क्ष् (३०८४)
सा कीर्तयन्ती दुःखानि भीमसेनस्य भामिनी ।
रुरोद शनकैः कृष्णा भीमस्योरस्समाश्रिता ॥ २७ ॥ ४-२३-२७ (२९२६२)
सा बाष्पकलया वाचा निश्वसन्ती पुनःपुनः ।
हृदयं भीमसेनस्य घटयन्तीदमब्रवीत् ॥ २८ ॥ ४-२३-२८ (२९२६३)
नाल्पं कृतं मया भीम देवानां किल्बिषं पुरा ।
अभाग्या या तु जीवामि मर्तव्ये सति पाण्डव ॥ २९ ॥ ४-२३-२९ (२९२६४)
कीचकं चेन्न हन्यास्त्वं स्वात्मानं नाशयाम्यहम् ।
विषमालोड्य पास्यामि प्रवेक्ष्याम्यथवाऽनलम् ।
अभाग्याऽहमपुण्याऽहं नित्यदुःखा च विक्लवा ॥ ३० ॥ ४-२३-३० (२९२६५)
पापे निपतितायाश्च किं फलं जीवितेन मे ।
इत्यस्मै दर्शयामास किणबद्धौ करावुभौ ॥ ३१ ॥ ४-२३-३१ (२९२६६)
ततस्तस्याः करौ पीनौ किणबद्धौ वृकोदरः ।
मुखमानीय वेपन्त्या रुरोद परवीरहा ॥ ३२ ॥ ४-२३-३२ (२९२६७)
तौ गृहीत्वा च कौन्तेयो बाष्पमुत्सृज्य वीर्यवान् ।
ततः परमदुःखार्त इदं वचनमब्रवीत् ॥ ३२ ॥ ॥ ४-२३-३३ (२९२६८)

इति श्रीमन्महाभारते विराटपर्वणि कीचकवधपर्वणि
त्रयोविंशोऽध्यायः ॥ २३ ॥
Mahabharata - Virata Parva - Chapter Footnotes

४-२३-६ मानयित्वा च मान्यन्ते नरा दैवविपर्यये इति थो पाठः ॥
६ ॥

---

विरतपर्व-अध्यय०२४
॥ श्रीः ॥
४.२४. अध्यायः २४

Mahabharata - Virata Parva - Chapter Topics
द्रौपदीभीमसंवादः ॥ १ ॥
द्रौपद्या भीमंप्रति हटात्कीचकसंहारचोदना ॥ २ ॥

Mahabharata - Virata Parva - Chapter Text

४-२४-० (२९२६९)
वैशंपायन उवाच। ४-२४-०क्ष् (३०८५)
आश्वासयंस्तां पाञ्चालीं भीमसेन उवाच ह ।
शृणु भद्रे वरारोहे क्रोधात्तत्र तु चिन्तितम् ॥ १ ॥ ४-२४-१ (२९२७०)
त्वं वै सभागतां दृष्ट्वा मात्स्यानां कदनं महत् ।
कर्तुकामेन भद्रं ते वृक्षश्चावेक्षितो मया ॥ २ ॥ ४-२४-२ (२९२७१)
तत्र मां धर्मराजस्तु कटाक्षेण न्यवारयत् ।
तज्ज्ञात्वाऽवाङ्भुखस्तूष्णीमास्थितोस्मि महानसं ॥ ३ ॥ ४-२४-३ (२९२७२)
शृणुष्वान्यत्प्रतिज्ञातं यद्वदामीह भामिनि ।
धिगस्तु मे बाहुबलं गाण्डीवं फल्गुनस्य च ।
यत्ते रक्तौ पुरा भूत्वा पाणी कृतकिणाविमौ ॥ ४ ॥ ४-२४-४ (२९२७३)
तदद्य मां तु तपति यत्कृतं न मया पुरा ।
सभायां स्म विराटस्य करोमि कदनं महत् ॥ ५ ॥ ४-२४-५ (२९२७४)
तत्र मे कारणं भाति कौन्तेयो यत्प्रतीक्षते ।
तदहं तस्य विज्ञाय स्थितो धर्मस्य शासने ॥ ६ ॥ ४-२४-६ (२९२७५)
यच्च राज्यात्प्रच्यवनं कुरूणामवधश्च यः ।
सुयोधनस्य कर्णस्य शकुनेः सौबलस्य च ॥ ७ ॥ ४-२४-७ (२९२७६)
दुःशासनस्य पापस्य यन्मया न हृतं शिरः ।
तन्मां दहति कल्याणि हृदि शल्यमिवार्पितम् ॥ ८ ॥ ४-२४-८ (२९२७७)
अपि चान्यद्वरारोहे स्मरिष्यसि वचो मम ।

पुण्ये तीरे सरस्वत्या यत्प्रतिष्ठाम संगताः ।
तत्राहमब्रवं कृष्णे सर्वक्लेशाननुस्मरन् ॥९ ॥ ४-२४-९ (२९२७८)
न चाहमनुगच्छेयं धर्मराजं युधिष्ठिरम् ।
धनञ्जयं च पाञ्चालि माद्रिपुत्रौ च भ्रातरौ ।
कृत्वैतां च मतिं कृष्णे युधिष्ठिरमगर्हयम् ॥१० ॥ ४-२४-१०
(२९२७९)
परुषं वचनं श्रुत्वा मम धर्मात्मजस्तदा ।
ह्रीमान्वाक्यमहीनार्थं ब्रुवन्राजा युधिष्ठिरः ।
सर्वानन्वनयद्भ्रातॄन्मुनेर्धौम्यस्य पश्यतः ॥११ ॥ ४-२४-११ (२९२८०)
मा रोदी राज्ञि लोकानां सर्वागमगुणान्विता ।
रक्षितव्यं सहास्माभिः सत्यमप्रतिमं भुवि ॥१२ ॥ ४-२४-१२ (२९२८१)
अनुनीतेषु चास्मासु अनुनीता त्वमप्यसि ।
मा धर्मं जहि सुश्रोणि क्रोधं जहि महामते ॥१३ ॥ ४-२४-१३ (२९२८२)
इमं तु समुपालम्भं त्वत्तो राजा युधिष्ठिरः ।
शृणुयाद्यदि कल्याणि कृत्स्नं जह्यात्स जीवितं ॥१४ ॥ ४-२४-१४ (२९२८३)
धनञ्जयो वा सुश्रोणि यमौ चापि सुमध्यमे ।
लोकान्तरगतेष्वेषु नाहं शक्ष्यामि जीवितुम् ॥१५ ॥ ४-२४-१५ (२९२८४)
धर्मं शृणुष्व पाञ्चालि यत्ते वक्ष्यामि मानिनि ॥१६ ॥ ४-२४-१६ (२९२८५)
दुहिता जनकस्यासीद्वैदेही यदि ते श्रुता ।
पतिमन्वचरत्सीता महारण्यनिवासिनम् ॥१७ ॥ ४-२४-१७ (२९२८६)
वसन्ती च महारण्ये रामस्य महिषी प्रिया ।
रावणेन हृता सीता राक्षसीभिश्च तर्जिता ।
सा क्लिश्यमाना सुश्रोणी राममेवान्वपद्यत ॥१८ ॥ ४-२४-१८ (२९२८७)
लोपामुद्रा तथा भीरु भर्तारमृषिसत्तमम् ।
भगवन्तमगस्त्यं सा वनायैवान्वपद्यत ॥१९ ॥ ४-२४-१९ (२९२८८)
सुकन्या नाम शर्यातेर्भार्गवच्यवनं वने ।
वल्मीकभूतं साध्वी तमन्वपद्यत भामिनी ॥२० ॥ ४-२४-२० (२९२८९)
नालायनी चेन्द्रसेना रूपेणाप्रतिमा भुवि ।
पतिमन्वचरद्वृद्धं पुरा वर्षसहस्रिणम् ॥२१ ॥ ४-२४-२१ (२९२९०)
नलं राजानमेवाथ दमयन्ती वनान्तरे ।
अन्वगच्छत्पुरा कृष्णे तथा भर्तॄंस्त्वमन्वगाः ॥२२ ॥ ४-२४-२२ (२९२९१)
यथैताः कीर्तिता नार्यो रूपवत्यः पतिव्रताः ।
तथा त्वमपि कल्याणि सर्वैः समुदिता गुणैः ॥२३ ॥ ४-२४-२३ (२९२९२)
मा दीर्घं क्षम कालं त्वं त्रिंशद्रात्रमनिन्दिते ।
पूर्णे त्रयोदशे वर्षे राज्ञां राज्ञी भविष्यसि ॥२४ ॥ ४-२४-२४ (२९२९३)
सत्येन ते शपे चाहं भविता नान्यथेति च ॥२५ ॥ ४-२४-२५ (२९२९४)

सर्वासां परमस्त्रीणां प्रामाण्यं कर्तुमर्हसि ।
सर्वेषां च नरेन्द्राणां मूर्ध्नि स्थास्यसि भामिनि ॥ २६ ॥ ४-२४-२६ (२९२९५)
भर्तृभक्त्या च वृत्तेन भोगानाप्स्यसि दुर्लभान् ।
यातायां तु प्रतिज्ञायां महान्तं भोगमाप्नुयाः ॥ २७ ॥ ४-२४-२७ (२९२९६)
गुरुभक्तिकृतं ज्ञात्वा राज्ञां मूर्ध्नि स्थिता भवेः ॥ २८ ॥
४-२४-२८ (२९२९७)
द्रौपद्युवाच। ४-२४-२९क्ष् (३०८६)
आर्तप्रलापा कौन्तेय न राजानमुपालभे ।
अपारयन्त्या दुःखानि कृतं बाष्पप्रमोचनम् ॥ २९ ॥ ४-२४-२९ (२९२९८)
इदं तु दुःखं कौन्तेय ममासद्यं निबोध तत् ॥ ३० ॥ ४-२४-३० (२९२९९)
योऽयं राज्ञो विराटस्य सूतपुत्रस्तु कीचकः ।
स्यालो नाम प्रवादेन भोजस्त्रैगर्तदेशजः ॥ ३१ ॥ ४-२४-३१ (२९३००)
त्यक्तधर्मो नृशंसश्च सर्वार्थेषु च वल्लभः ।
नित्यमेवाह दुष्टात्मा भार्या मे भव शोभने ।
अविनीतः सुदुष्टात्मा मामनाथेति चिन्तयन् ॥ ३२ ॥ ४-२४-३२ (२९३०१)
किमुक्तेन व्यतीतेन भीमसेन महाबल ।
प्रत्युपस्थितकालस्य कार्यस्यानन्तरो भव ॥ ३३ ॥ ४-२४-३३ (२९३०२)
ममेह भीम कैकेयी रूपाद्धि भयशङ्किता ।
नित्यमुद्विजते राजा कथं नेयादिमामिति ॥ ३४ ॥ ४-२४-३४ (२९३०३)
तस्या विदित्वा तं भावं स्वयं चानृतदर्शनः ।
कीचकोपि च दुष्टात्मा पुनः प्रार्थयते च मां ॥ ३५ ॥ ४-२४-३५ (२९३०४)
तमहं कुपिता भीम पुनः कोपं नियम्य च ।
अब्रवं कामसंमूढमात्मानं रक्ष कीचक ॥ ३६ ॥ ४-२४-३६ (२९३०५)
गन्धर्वाणामहं भार्या पञ्चानां महिषी प्रिया ।
ते त्वां निहन्युर्दुर्धर्षाः शूराः साहसकारिणः ॥ ३७ ॥ ४-२४-३७ (२९३०६)
एवमुक्तस्तु दुष्टात्मा कीचकः प्रत्युवाच ह ।
नाहं बिभेमि सैरन्ध्रि गन्धर्वाणां शुचिस्मिते ॥ ३८ ॥ ४-२४-३८ (२९३०७)
शतं सहस्रमपि वा गन्धर्वाणामहं रणे ।
समागतं हनिष्यामि त्वं भीरु कुरु मे क्षणम् ॥ ३९ ॥ ४-२४-३९ (२९३०८)
इत्युक्ता चाब्रवं सूतं कामातुरमहं पुनः ।
न त्वं प्रतिबलस्तेषां गन्धर्वाणां यशस्विनाम् ॥ ४० ॥ ४-२४-४० (२९३०९)
धर्मे स्थिताऽस्मि सततं कुलशीलसमन्विता ।
नेच्छामि किंचिद्वध्यं त्वां तस्माज्जीवसि कीचक ॥ ४१ ॥ ४-२४-४१ (२९३१०)
एवमुक्तस्तु दुष्टात्मा प्रहस्य स्वनवत्ततः ।
न तिष्ठति स सन्मार्गे न च धर्मं बुभूषति ॥ ४२ ॥ ४-२४-४२ (२९३११)
पापात्मा पापकारी च कामराजवशानुगः ।

अविनीतश्च दुष्टात्मा प्रत्याख्यातः पुनः पुनः ॥ ४३ ॥ ४-२४-४३ (२९३१२)
दर्शनेदर्शने हन्याद्यदि जह्यां च जीवितम् ।
धर्मे प्रयतमानानां महान्धर्मो नशिष्यति ॥ ४४ ॥ ४-२४-४४ (२९३१३)
समयं रक्षमाणानां दारा वो न भवन्ति च ।
भार्याजां रक्ष्यमाणायां प्रजा भवति रक्षिता ।
प्रजायां रक्ष्यमाणायामात्मा भवति रक्षितः ॥ ४५ ॥ ४-२४-४५ (२९३१४)
वंदतां वर्णधर्मांश्च ब्राह्मणानां च मे श्रुतम् ।
क्षत्रियस्य सदा धर्मो नान्यो दस्युनिबर्हणात् ॥ ४६ ॥ ४-२४-४६ (२९३१५)
पश्यतो धर्मराजस्य कीचको माऽन्वधावत ।
तवेव च समक्षं वै भीमसेन महाबल ॥ ४७ ॥ ४-२४-४७ (२९३१६)
त्वया चाहं परित्राता भीम तस्माज्जटासुरात् ॥ ४८ ॥ ४-२४-४८ (२९३१७)
जयद्रथं तथैव त्वमजैषीर्भ्रातृभिः सह ।
जहीममपि पापिष्ठं योयं मामवमन्यते ।
कीचको राजवाल्लभ्याच्छोककृन्मम भारत ॥ ४९ ॥ ४-२४-४९ (२९३१८)
कीचकं कामसन्तप्तं भिन्धि कुम्भमिवाश्मनि ।
यो निमित्तमनर्थानां बहूनां मम भारत ॥ ५० ॥ ४-२४-५० (२९३१९)
तं चेञ्जीवन्तमादित्यः प्रातरभ्युदयिष्यति ।
विषमालोड्य पास्यामि मा कीचकवशंगमम् ॥ ५१ ॥ ४-२४-५१ (२९३२०)
श्रेयो हि मरणं मह्यं भीमसेन तवाग्रतः ।
इत्युक्त्वा प्रारुदत्कृष्णा भीमस्योरसि संश्रिता ॥ ५२ ॥ ४-२४-५२ (२९३२१)
भीमश्च तां परिष्वज्य महत्सान्त्वं प्रयुज्य च ।
कीचकं मनसाऽगच्छत्सृक्किणी परिलेलिहन् ॥ ५३ ॥ ४-२४-५३ (२९३२२)
आश्वासयित्वा बहुशो भृशमार्तां सुमध्यमाम् ।
हेतुतत्वार्थसंयुक्तैर्वचोभिर्द्रुपदात्मजाम् ॥ ५४ ॥ ४-२४-५४ (२९३२३)
प्रमृज्य वदनं तस्याः पाणिनाऽश्रुसमाकुलम् ।
उवाच चैनां दुःखार्तां भीमः क्रोधसमन्वितः ॥ ५५ ॥ ॥ ४-२४-५५ (२९३२४)

इति श्रीमन्महाभारते विराटपर्वणि कीचकवधपर्वणि
चतुर्विंशोऽध्यायः ॥ २४ ॥

Mahabharata - Virata Parva - Chapter Footnotes

४-२४-२४ मा दीर्घं क्षम कालं त्वं मासमर्धं च संमितमिति झो पाठः ॥
२४ ॥
४-२४-२६ प्राधान्यं कर्तुमर्हसि इति खो पाठः ॥
२६ ॥
४-२४-३३ दुःखस्यान्तकरो भवेति धो पाठः ॥

विरतपर्व-अध्यय०२५
॥ श्रीः ॥
४.२५. अध्यायः २५

Mahabharata - Virata Parva - Chapter Topics
द्रौपद्या भीमवचनात्कीचकंप्रति नर्तनशालाया उभयोः समागमे
संकेतस्थानत्वनिर्धारणेन रात्रौ तत्रागमनचादना ॥ १ ॥

Mahabharata - Virata Parva - Chapter Text

४-२५-० (२९३२५)
भीम उवाच। ४-२५-०क्ष् (३०८७)
तथा भद्रे करिष्यामि यथा त्वं भीरु भाषसे ।
अद्यैनं सूदयिष्यामि कीचकं सह बान्धवैः ॥ १ ॥ ४-२५-१ (२९३२६)
अस्याः प्रदोषे शर्वर्याः कुरुष्वानेन संविदम् ।
दुःखं शोकं च निर्धूय याज्ञसेनि शुचिस्मिते ॥ २ ॥ ४-२५-२ (२९३२७)
यैषा नर्तनशालेह मत्स्यराजेन कारिता ।
दिवात्र कन्या नृत्यन्ति रात्रौ यान्ति तथा गृहं ॥ ३ ॥ ४-२५-३ (२९३२८)
तत्रास्ति शयनं भीरु दृढाङ्गं सुप्रतिष्ठितम् ।
तत्रैनं दर्शयिष्यामि पूर्वप्रेतान्पितामहान् ।
त्वद्दर्शनसमुत्थेन कामेनाकुलितेन्द्रियम् ॥ ४ ॥ ४-२५-४ (२९३२९)
संकेतं सूतपुत्रस्य कारयस्व शुभानने ।
यथा परे न पश्येयुः कुर्वन्तीं तेन संविदम् ॥ ५ ॥ ४-२५-५ (२९३३०)
तथा कुरुष्व कल्याणि यथा सन्निहितो भवेत् ।
तथा कुर्याश्च संकेतं सूतपुत्रस्य संवृतम् ॥ ६ ॥ ४-२५-६ (२९३३१)
आवयोः संगमं भीरु यथा मार्त्यो न बुध्यति ।
कीचकस्य विनाशाय तथा कुरु नृपात्मजे ॥ ७ ॥ ४-२५-७ (२९३३२)
वैशंपायन उवाच । ४-२५-८क्ष् (३०८८)
तत्र तौ कथयित्वा तु बाष्पमुत्सृज्य दुःखितौ ।
रात्रिशेषं तमत्युग्रं धारयामासतुर्हृदि ॥ ८ ॥ ४-२५-८ (२९३३३)
भीमेन च प्रतिज्ञाते कीचकस्य वधे तदा ।
द्रौपदी च सुदेष्णायाः प्रविवेश पुनर्गृहम् ॥ ९ ॥ ४-२५-९ (२९३३४)
तस्यां रजन्यां व्युष्टायां प्रातरुत्थाय कीचकः ।
गत्वा राजकुलायैव द्रौपदीमिदमब्रवीत् ॥ १० ॥ ४-२५-१० (२९३३५)
यत्त्वाऽहं पश्यतो राज्ञः पातयित्वा पदाऽहनम् ।

न कंचिल्लभसे नाथमभिपन्ना बलीयसा ॥ ११ ॥ ४-२५-११ (२९३३६)
प्रवादेन तु मात्स्यानामयं राजेति चोच्यते ।
अहमेव हि राजा वै मात्स्यानां वाहिनीपतिः ॥ १२ ॥ ४-२५-१२ (२९३३७)
सा सुखं प्रतिपद्यस्व दासो भीरु भवामि ते ।
न ह्यहं त्वामृते भीरु चिरं जीवितुमुत्सहे ॥ १३ ॥ ४-२५-१३ (२९३३८)
अहन्यहनि सुश्रोणि शतनिष्कं ददामि ते ।
दासीशतं च ते दद्यां दासानामपि चापरम् ॥ १४ ॥ ४-२५-१४ (२९३३९)
रथांश्चाश्वतरीयुक्तानस्तु नौ भीरु संगमः ।
सुदासानां सहस्रं च महिषाणां सहस्रकम् ॥ १५ ॥ ४-२५-१५ (२९३४०)
अन्तःपुरसहस्रं च हेमकूटसहस्रकम् ।
तुभ्यं दास्यामि सर्वाणि राजार्हाण्यम्बराणि च ॥ १६ ॥ ४-२५-१६ (२९३४१)
द्रौपद्युवाच। ४-२५-१७क्ष् (३०८९)
एतन्मे वचनं सत्यं प्रतिपद्यस्व कीचक ।
न ते सखा वा भ्राता वा जानीयात्संगमं मया ॥ १७ ॥ ४-२५-१७ (२९३४२)
अनुप्रवादाद्भीताऽस्मि गन्धर्वाणां यशस्विनाम् ।
अनुबोधाद्धनर्थः स्यादयशश्च महद्भवेत ।
एतन्मे प्रतिजानीहि ततोऽहं वशगा तव ॥ १८ ॥ ४-२५-१८ (२९३४३)
कीचक उवाच। ४-२५-१९क्ष् (३०९०)
एवमेतत्करिष्यामि यथा सुश्रोणि भाषसे ।
एकोऽहमागमिष्यामि शून्यमावसथं तव ॥ १९ ॥ ४-२५-१९ (२९३४४)
समागमार्थं रम्भोरु त्वया मदनदर्पितः ।
यथा त्वां नैव पश्येयुर्गन्धर्वाः सूर्यवर्चसः ॥ २० ॥ ४-२५-२० (२९३४५)
द्रौपद्युवाच। ४-२५-२१क्ष् (३०९१)
यदेतन्नर्तनागारं मात्स्यराजेन कारितम् ।
दिवात्र कन्या नृत्यन्ति रात्रौ यान्ति स्वकं गृहं ॥ २१ ॥ ४-२५-२१ (२९३४६)
निशायां तत्र गच्छेथा गन्धर्वास्तन्न जानते ।
तत्र दोषः परिहृतो भविष्यति न संशयः ॥ २२ ॥ ४-२५-२२ (२९३४७)
एकस्त्वं नर्तनागारं रात्रौ संकेतमाव्रज ।
तत्राहं भविता तुभ्यं वशगा नात्र संशयः ॥ २३ ॥ ४-२५-२३ (२९३४८)
कीचक उवाच। ४-२५-२४क्ष् (३०९२)
तथा भद्रे करिष्यामि यथा त्वं भीरु वक्ष्यसि ।
एकः सन्नर्तनागारमागमिष्यामि भामिनि ।
समागमार्थं सुश्रोणि शपे च सुकृतेन मे ॥ २४ ॥ ४-२५-२४ (२९३४९)
यथा त्वां नावबुध्यन्ति गन्धर्वा वरवर्णिनि ।
सत्यं ते प्रतिजानामि गन्धर्वेभ्यो न ते भयम् ।
अलंकरिष्याम्यद्याहं त्वत्समागमनाय वै ॥ २५ ॥ ४-२५-२५ (२९३५०)

वासांसि च विचित्राणि मनोज्ञानि तवापि च ।
यथा मां न त्यजेथास्त्वं तथ रंस्ये त्वया सह ॥ २६ ॥ ४-२५-२६ (२९३५१)
द्रौपद्युवाच। ४-२५-२७क्ष् (३०९३)
तथा चेदप्यहं सूत दर्शयिष्यामि ते सुखम् ।
यन्नानुभूतं भवता जन्मप्रभृति कीचक ॥ २७ ॥ ४-२५-२७ (२९३५२)
वैशंपायन उवाच। ४-२५-२८क्ष् (३०९४)
तमर्थमपि जल्पन्त्या द्रौपद्याः कीचकस्य ह ।
क्षणमात्रं तदभवन्मासेनैव समं नृप ॥ २८ ॥ ४-२५-२८ (२९३५३)
कीचकोऽथ गृहं गत्वा भृशं हर्षपरिप्लुतः ।
सैरन्ध्रीरूपिणीं मूढो मृत्युं तां नावबुद्धवान् ॥ २९ ॥ ४-२५-२९ (२९३५४)
गन्धाभरणमाल्येषु व्यासक्तः स विशेषतः ।
अलंचक्रे तदाऽऽत्मानं सत्वरः काममोहितः ॥ ३० ॥ ४-२५-३० (२९३५५)
तस्य तत्कुर्वतः कर्म कालो दीर्घ इवाभवत् ।
अनुचिन्तयतश्चापि तामेवायतलोचनाम् ॥ ३१ ॥ ४-२५-३१ (२९३५६)
आसीदभ्यधिका चापि श्रीः श्रियं प्रमुमुक्षतः ।
निर्वाणकाले दीपस्य वर्तीमिव दिधक्षतः ॥ ३२ ॥ ४-२५-३२ (२९३५७)
कृतसंप्रत्ययस्तस्याः कीचकः काममोहितः ।
नाजानात्पतनं स्वस्य चिन्तयंस्तां शुभाननाम् ॥ ३३ ॥ ४-२५-३३ (२९३५८)
ततस्तु द्रौपदी गत्वा भीमसेनं महानसे ।
उपातिष्ठत कल्याणी कौरव्यं पतिमन्तिकात् ॥ ३४ ॥ ४-२५-३४ (२९३५९)
तमुवाच सुकेशान्ता कीचकस्य कृतो मया ।
सङ्गमो नर्तनागारे यथाऽवोचः परन्तप ॥ ३५ ॥ ४-२५-३५ (२९३६०)
कालेन नियतं बद्धः कामेन च बलात्कृतः ।
शून्यं स नर्तनागारमागमिष्यति कीचकः ।
एको निशि महाबाहो कीचकं तं निषूदय ॥ ३६ ॥ ४-२५-३६ (२९३६१)
तं मूतपुत्रं कौन्तेय कीचकं मददर्पितम् ।
गत्वा त्वं नर्तनागारं निर्जीवं कुरु पाण्डव ॥ ३७ ॥ ४-२५-३७ (२९३६२)
गर्वितः मूतपुत्रोऽसौ गन्धर्वानवमन्यते ।
स त्वं प्रहरतांश्रेष्ठ नालं नाग इवोद्धर ॥ ३८ ॥ ४-२५-३८ (२९३६३)
अस्रं दुःखाभिभूताया मम मार्जस्व भारत ।
बाहुवीर्यानुरूपं च दर्शयाद्य पराक्रमम् ।
आत्मनश्चैव भद्रं ते कुरु मानं कुलस्य च ॥ ३९ ॥ ४-२५-३९ (२९३६४)
भीम उवाच। ४-२५-४०क्ष् (३०९५)
स्वागतं ते वरारोहे यन्मां वेदयसे प्रियम् ।
नह्यस्य कंचिदिच्छामि सहायं वरवर्णिनि ॥ ४० ॥ ४-२५-४० (२९३६५)
सा मे प्रीतिस्त्वयाऽऽख्याता कीचकस्य समागमे ।

हत्वा हिडिम्बं या प्रीतिर्ममासीत्सा शुचिस्मिते ॥ ४१ ॥ ४-२५-४१ (२९३६६)
सत्यं भ्रातॄंश्च पुत्रांश्च पुरस्कृत्य शपामि ते ।
कीचकं निहनिष्यामि वृत्रं देवपतिर्यथा ॥ ४२ ॥ ४-२५-४२ (२९३६७)
प्रसह्य निहनिष्यामि केशवः केशिनं यथा ।
रहस्यं वा प्रकाशं वा सूदयिष्यामि कीचकम् ॥ ४३ ॥ ४-२५-४३ (२९३६८)
अहं भद्रे हनिष्यामि कीचकं मदनान्वितम् ।
यस्त्वां कामाभिभूतात्मा दुर्लभामभिमन्यते ॥ ४४ ॥ ४-२५-४४ (२९३६९)
अथ चेदवबुध्यन्ति सूतपुत्रं मया हतम् ।
निर्मनुष्यं करिष्यामि मत्स्यानामिदमालयम् ॥ ४५ ॥ ४-२५-४५ (२९३७०)
मया हतांश्चेन्मात्स्यांस्तु धार्तराष्ट्रो विबुध्यति ।
दुर्योधनं ततो हत्वा सानुबन्धं सबान्धवम् ।
कुरुणामखिलं राज्यं प्रतिपत्स्यामि भामिनि ॥ ४६ ॥ ४-२५-४६ (२९३७१)
नाहं शक्तोऽनुनयितुं कुन्तीपुत्रं युधिष्ठिरम् ।
कामं सत्यमुपासीत कुन्तीपुत्रो युधिष्ठिरः ।
काममन्ये ह्युपासन्तु विनीता धर्मचारिणः ॥ ४७ ॥ ४-२५-४७ (२९३७२)
त्वां तु दुःखमिदं प्राप्तां नाहं शक्नोम्युपेक्षितुम् ।
निर्वृता भव पाञ्चालि कीचकस्य वधात्पुनः ॥ ४८ ॥ ४-२५-४८ (२९३७३)
द्रौपद्युवाच। ४-२५-४९क्ष् (३०९६)
कीचकस्य वधं भीम यदि जानन्ति नागराः ।
त्वया कृतं महाबाहो नाहं जीवितुमुत्सहे ॥ ४९ ॥ ४-२५-४९ (२९३७४)
कथं सत्याच्च नापेयाद्राजाऽयं मत्कृते प्रभो ।
निशि गूढं तथा भीम कीचकं तं निपातय ॥ ५० ॥ ४-२५-५० (२९३७५)
अनुबुद्धे हि कौन्तेयो धर्मराजो युधिष्ठिरः ।
पुनर्वनं व्रजेद्धीमाननुजैः परिवारितः ॥ ५१ ॥ ४-२५-५१ (२९३७६)
कश्च धर्मपरं ज्येष्ठमतिवर्तेत भारत ।
भीम भीताऽस्मि संबोधात्साधु मा चापलं कृथाः ॥ ५२ ॥ ४-२५-५२ (२९३७७)
यथा न कश्चिज्जानीते सूतपुत्रं त्वया हतम् ।
तथा कुरुष्व कौरव्य बलवन्नरिमर्दन ।
अदृश्यमानस्त्वंतस्य भिन्धि प्राणानरिन्दम ॥ ५३ ॥ ॥ ४-२५-५३ (२९३७८)

इति श्रीमन्महाभारते विराटपर्वणि कीचकवधपर्वणि
पञ्चविंशोऽध्यायः ॥ २५ ॥

---

विरतपर्व-अध्यय०२६
॥ श्रीः ॥
४.२६. अध्यायः २६

Mahabharata - Virata Parva - Chapter Topics
भीमेन कीचकागमनात्पूर्वमेव नर्तनागारमेत्य शय्यायां शयनम् ॥ १ ॥
पश्चात्समागतेन कीचकेन भीमंप्रति द्रौपदी बुद्ध्या
संस्पर्शनपूर्वकं संभाषणम् ॥ २ ॥
भीमेन नियुद्धेन कीचकमारणम् ॥ ३ ॥
पश्चाद्द्रौपद्या समाह्वानादुपकीचकानां तत्र समागमनम् ॥ ४ ॥

Mahabharata - Virata Parva - Chapter Text

४-२६-० (२९३७९)
भीम उवाच। ४-२६-०क्ष् (३०९७)
तथा भद्रे करिष्यामि यथा त्वं भीरु भाषसे ।
अदृश्यमानस्तस्याहं तमिस्रायां सकुण्डलम् ॥ १ ॥ ४-२६-१ (२९३८०)
नागो बिल्वमिवाक्रम्य पोथयिष्यामि तच्छिरः ।
अलभ्यामिच्छतस्तस्य कीचकस्य दुरात्मनः ॥ २ ॥ ४-२६-२ (२९३८१)
मया यदुक्तं पाञ्चालि धर्मराजसुतं प्रति ।
कोपादृते किमन्यत्तु नानुवर्तेत को नृपम् ॥ ३ ॥ ४-२६-३ (२९३८२)
वैशंपायन उवाच। ४-२६-४क्ष् (३०९८)
एवमुक्तवा महाबाहुस्तत्र पाण्डवनन्दनः ।
अर्धरात्रे तदोत्थाय सत्ववान्भीमविक्रमः ॥ ४ ॥ ४-२६-४ (२९३८३)
अवदातेन मृदुना पटेनाच्छादितस्तथा ।
द्रौपदीं पृष्ठतः कृत्वा यत्रासीन्नर्तनालयः ॥ ५ ॥ ४-२६-५ (२९३८४)
स भीमः प्रथमं गत्वा तमिस्रायामुपाविशत् ।
मृगं सिंह इवादृश्यः प्रत्याकाङ्क्षत्स कीचकम् ॥ ६ ॥ ४-२६-६ (२९३८५)
कीचकस्तु शिरःस्नातो निशायां समलंकृतः ।
सङ्केतमगमत्तूर्णं शून्यागारमपावृतम् ॥ ७ ॥ ४-२६-७ (२९३८६)
तदेव नर्तनागारं पाञ्चाली यदभाषत ।
तां मन्यमानः संकेते सैरन्ध्रीं काममोहितः ॥ ८ ॥ ४-२६-८ (२९३८७)
प्रविश्य नर्तनागारं ततस्तं पुरुषर्षभम् ।
पूर्वागतं भीमसेनं दृप्तमप्रतिमजसम् ॥ ९ ॥ ४-२६-९ (२९३८८)
शयानं शयने तत्र मृत्युं मूढः परामृशत् ।
जाज्वल्यमानं कोपेन कृष्णाधर्षणजेन च ॥ १० ॥ ४-२६-१० (२९३८९)
एकान्ते भीममासाद्य कीचकः कालचोदितः ।
हर्षोन्मथितचित्तात्मा स्मयमानोऽभ्यभाषत ॥ ११ ॥ ४-२६-११ (२९३९०)
प्रहितं ते मया भद्रे बहुवित्तं शुचिस्मिते ।
त्वयि तिष्ठतु तत्सर्वं यथाऽसि स्वयमागता ॥ १२ ॥ ४-२६-१२ (२९३९१)

अकस्मान्मां प्रशंसन्ति सदा गृहगताः स्त्रियः ।
बलवान्दर्शनीयश्च नान्यस्ते सदृशः पुमान् ॥ १३ ॥ ४-२६-१३ (२९३९२)
अहं रूपेण संपन्नः स्नातो गुरुविभूषितः ।
नित्यमेव प्रियः स्त्रीणां सौभाग्यात्प्रियदर्शनः ।
रूपस्य तन्मया प्राप्तं फलं कमललोचने ॥ १४ ॥ ४-२६-१४ (२९३९३)
भीम उवाच। ४-२६-१५क्ष् (३०९९)
दिष्ट्या त्वं दर्शनीयोसि दिष्ट्याऽऽत्मानं प्रशंससि ॥ १५ ॥
४-२६-१५ (२९३९४)
त्वयाऽपीदृग्गुणा नारी रूपशीलसमन्विता ।
अदृष्टपूर्वा पश्य त्वं यतो जानासि सूतज ।
द्रक्ष्यसि त्वं मुहूर्तेन यथेयं स्त्री गुणान्विता ॥ १६ ॥ ४-२६-१६ (२९३९५)
उपरंस्यसि कामाच्च शीघ्रं त्वं स्प्रष्टुमर्हसि ।
ईदृशस्तु त्वया स्पर्शः स्पृष्टपूर्वो न कर्हिचित् ॥ १७ ॥ ४-२६-१७
(२९३९६)
स्पर्शं वेत्सि विदग्धस्त्वं कामधर्मविचक्षणः ।
स्त्रीणां प्रीतिकरो नान्यस्त्वत्समः पुरुषस्त्विह ॥ १८ ॥ ४-२६-१८ (२९३९७)
वैशंपायन उवाच। ४-२६-१९क्ष् (३१००)
इत्युक्त्वा तं महाबाहुर्भीमो भीमपराक्रमः ।
सहसोत्पत्य कौन्तेयः प्रहस्येदमुवाच ह ॥ १९ ॥ ४-२६-१९ (२९३९८)
अद्य त्वां भगिनी पापं कृष्यमाणं मया भुवि ।
द्रक्ष्यतेऽद्रिप्रतीकाशं सिंहेनेव महागजम् ॥ २० ॥ ४-२६-२० (२९३९९)
निराबाधा त्वयि हते सैरन्ध्री विचरिष्यति ।
सुखमेव चरिष्यन्ति सैरन्ध्र्याः पतयः सदा ॥ २१ ॥ ४-२६-२१ (२९४००)
ततो जग्राह केशेषु माल्यवत्सु सुगन्धिषु ॥ २२ ॥ ४-२६-२२ (२९४०१)
गृहीत्वा कीचकं भीमो विरराज महाबलः ।
गृहीत्वा ग्रासकामस्तु सिंहः क्षुद्रमृगं यथा ॥ २३ ॥ ४-२६-२३ (२९४०२)
स केशेषु परामृष्टो बलेन बलिनां वरः ।
आक्षिप्य केशान्वेगेन बाह्वोर्जग्राह पाण्डवम् ॥ २४ ॥ ४-२६-२४ (२९४०३)
बाहुयुद्धं तयोरासीत्क्रुद्धयोर्नरसिंहयोः ।
वसन्ते वासिताहेतोर्बलिनोर्नागयोरिव ॥ २५ ॥ ४-२६-२५ (२९४०४)
कीचकानां तु मुख्यस्य नराणामुत्तमस्य च ।
वालिसुग्रीवयोर्भ्रात्रोः पुरेव कपिसिंहयोः ॥ २६ ॥ ४-२६-२६ (२९४०५)
शार्दूलाविव गर्जन्तौ तार्क्ष्यनागाविवोद्यतौ ।
समयत्नौ समक्रोधौ पतितौ भीमकीचकौ ॥ २७ ॥ ४-२६-२७ (२९४०६)
गजाविव मदोन्मत्तौ नदन्तौ पतितौ क्षितौ ।
वृषभाविव वल्मीकं मृद्नन्तौ समविक्रमौ ।।२८ ॥ ४-२६-२८ (२९४०७)

ईषदागलितं चापि क्रोधाच्चावाङ्मुखं स्थितम् ।
कीचको बलवान्भीमं जानुभ्यां पातयद्भुवि ॥ २९ ॥ ४-२६-२९ (२९४०८)
पातितो भीमसेनस्तु कीचकेन बलीयसा ।
उत्पपाताथ वेगेन दण्डाहत इवोरगः ॥ ३० ॥ ४-२६-३० (२९४०९)
स्पर्धया च बलोन्मत्तौ तावुभौ भीमकीचकौ ।
निश्शब्दं पर्यकर्षेतामन्योन्यस्य विनिर्जये ॥ ३१ ॥ ४-२६-३१ (२९४१०)
ततस्तद्भवनश्रेष्ठं प्राकम्पत तदा भृशम् ।
तौ क्रोधवशमापन्नावन्योन्यमभिजघ्नतुः ॥ ३२ ॥ ४-२६-३२ (२९४११)
तलाभ्यां भीमसेनेन वक्षस्यभिहतो बली ।
कीचको रोषरक्ताक्षो न चचाल पदात्पदम् ॥ ३३ ॥ ४-२६-३३ (२९४१२)
मुहूर्तमशकत्सोढुं वेगं तस्य महात्मनः ।
कीचको भीमसेनेन पश्चात्पश्चादहीयत ॥ ३४ ॥ ४-२६-३४ (२९४१३)
तं हीयमानं विज्ञाय भीमसेनो महाबलः ।
वक्षस्यानीय वेगेन प्रममाथ विचेतसम् ॥ ३५ ॥ ४-२६-३५ (२९४१४)
क्रोधाविष्टो विनिश्वस्य पुनश्चैनं वृकोदरः ।
जग्राह जयतांश्रेष्ठः केशेष्वेव भृशं तदा ॥ ३६ ॥ ४-२६-३६ (२९४१५)
गृहीत्वा कीचकं भीमो विरराज महाबलः ।
आमिषार्थे गृहीत्वैव शार्दूलो मृगयूथपम् ॥ ३७ ॥ ४-२६-३७ (२९४१६)
पुनश्चातिबलस्तत्र कीचको बलदर्पितः ।
व्यायच्छन्नेव दुर्धर्षः पाण्डवेन तरस्विना ॥ ३८ ॥ ४-२६-३८ (२९४१७)
मुष्टिना भीमसेनेन शिरस्यभिहतो भृशम् ।
कीचको वृत्तरक्ताक्षो गतासुरपतद्भुवि ॥ ३९ ॥ ४-२६-३९ (२९४१८)
आस्ये पाणी च पादौ च शिरोग्रीवां सकुण्डलाम् ।
काये प्रवेशयामास मृदित्वाऽङ्गानि सर्वशः ॥ ४० ॥ ४-२६-४० (२९४१९)
स तं मथितसर्वाङ्गं मांसपिण्डमथाकरोत् ॥ ४१ ॥ ४-२६-४१ (२९४२०)
तत्राग्निं स्वयमुज्ज्वाल्य पाणिसंघर्षजं बली ।
कष्णायै दर्शयामास भीमसेनो महाबलः ॥ ४२ ॥ ४-२६-४२ (२९४२१)
उवाच च महातेजा द्रौपदीं योषितां वराम् ।
त्वयि कामुकमत्यन्तं पापिनं पारदारिकम् ।
पश्यैनमेहि पाञ्चालि कामुकोऽयं मया हतः ॥ ४३ ॥ ४-२६-४३ (२९४२२)
प्रार्थयन्ते सुकेशान्ते ये त्वां शीलसमन्विताम् ।
एवं स्वपन्ति ते भीरु शेतेऽयं कीचको यथा ।
यस्त्वामभ्यहनद्भद्रे पदा भूमौ निपात्य च ॥ ४४ ॥ ४-२६-४४ (२९४२३)
एवमुक्त्वा महाबाहुर्गन्धर्वेण हतं तदा ।
विज्ञापनार्थमन्येषां विरराम महाहवम् ॥ ४५ ॥ ४-२६-४५ (२९४२४)
तथा स कीचकं हत्वा गत्वा रोषस्य निष्कृतिम् ।

आमन्त्र्य द्रौपदीं पश्चात्क्षिप्रमायान्महानसम् ॥ ४६ ॥ ४-२६-४६ (२९४२५)
स्नात्वाऽनुलेपनं कृत्वा व्यापूर्य च मनोरथम् ।
सुखोपविष्टः शयने भीमो भीमपराक्रमः ॥ ४७ ॥ ४-२६-४७ (२९४२६)
ततः कृष्णा यदा मेने गतं भीमं महानसम् ।
कीचकं घातयित्वा च द्रौपदी योषितां वरा ।
प्रहृष्टा गतसंत्रासा सभापालानुवाच ह ॥ ४८ ॥ ४-२६-४८ (२९४२७)
कीचको निहतः शेते गन्धर्वैः पतिभिर्मम ।
परस्त्रीकामसंतप्तं समागच्छन्त पश्यत ॥ ४९ ॥ ४-२६-४९ (२९४२८)
तच्छ्रुत्वा भाषितं तस्या नर्तनागाररक्षिणः ।
सहसैव समुत्तस्थुरुल्कामादाय सर्वशः ॥ ५० ॥ ४-२६-५० (२९४२९)
तस्यास्तं निहतं श्रुत्वा कीचकस्य सहोदराः ।
ततो गत्वा तु तद्वेश्म कीचकं विनिपातितम् ।
गतासुं ददृशुर्भूमौ रुधिरेण समुक्षितम् ॥ ५१ ॥ ४-२६-५१ (२९४३०)
पार्ष्णिपामिशिरोहीनं दृष्ट्वा ते विस्मिताऽभवन् ॥ ५२ ॥ ४-२६-५२ (२९४३१)
क्वास्य ग्रीवा क्व चरमौ क्व पामी क्व शिरः क्व दृक् ।
इति स्म ते परीक्षन्ते गन्धर्वेण हतं तदा ॥ ५३ ॥ ४-२६-५३ (२९४३२)
अमानुषं कृतं कर्म तं दृष्ट्वा विनिपातितम् ।
निरीक्षन्ते ततः सर्वे परं विस्मयमागताः ॥ ५४ ॥ ॥ ४-२६-५४ (२९४३३)

इति श्रीमन्महाभारते विराटपर्वणि कीचकवधपर्वणि
षड्विंशोऽध्यायः ॥ २६ ॥

---

विरतपर्व-अध्यय०२७
॥ श्रीः ॥
४.२७. अध्यायः २७

Mahabharata - Virata Parva - Chapter Topics
भ्रातृवधामर्पितैरुपकीचकैः पाञ्चाल्याः कीचकेन सह
चरमविमानसमारोपणेन श्मशानप्रापणम् ॥ १ ॥
द्रौपदीसमाक्रन्दनिनदश्रवणात्पितृवनमुपागतवता
भीमेनोपकीचकानां पञ्चाधिकशतस्य पञ्चताप्रापणम् ॥ २ ॥
भीमेन द्रौपद्याः पतिव्रतोपाख्यानकथनात्समाश्वासनेन
स्वावासप्रेपणपूर्वकं महानसप्रवेशः ॥ ३ ॥

Mahabharata - Virata Parva - Chapter Text

४-२७-० (२९४३४)
वैशंपायन उवाच। ४-२७-०क्ष् (३१०१)
तत्काले तु समागम्य सर्वे तत्रास्य बान्धवाः ।
रुरुदुः कीचकं दृष्ट्वा परिवार्योपतस्थिरे ॥१ । ४-२७-१ (२९४३५)
सर्वे संहृष्टरोमाणः संत्रस्ताः प्रेक्ष्य कीचकम् ।
तथा संभुग्नसर्वाङ्गं कूर्मं स्थल इवोद्धृतम् ॥ २ ॥ ४-२७-२ (२९४३६)
पोथितं भीमसेनेन महेन्द्रेणेव दानवम् ।
कीचकं बलसंमत्तं दुर्धर्षं येन केन चित् ॥ ३ ॥ ४-२७-३ (२९४३७)
गन्धर्वेण हतं श्रुत्वा कीचकं पुरुषर्षभम् ।
संस्कारयितुमिच्छन्तो बहिर्नेतुं प्रचक्रमुः ॥ ४ ॥ ४-२७-४ (२९४३८)
अपश्यन्नथ ते कृष्णां मूतपुत्राः समागताः ।
अदूरादनवद्याङ्गीं स्तम्भमालिङ्ग्य तिष्ठतीम् ॥ ५ ॥ ४-२७-५ (२९४३९)
समागतेषु सूतेषु तानुवाचोपकीचकः ।
हसन्निव पदाऽमर्षान्निर्दहन्निव चक्षुषा ॥ ६ ॥ ४-२७-६ (२९४४०)
हन्यतां शीघ्रमसती यत्कृते कीचको हतः ।
अथवा नैव हन्तव्या दह्यतां कामिना सह ॥ ७ ॥ ४-२७-७ (२९४४१)
मृतस्यापि प्रियं कार्यं सूतपुत्रस्य सर्वथा ।
इयं हि दुष्टचरिता मम भ्रातुरमित्रिणी ॥ ८ ॥ ४-२७-८ (२९४४२)
यत्कृते मरणं प्राप्तो नेयं जीवितुमर्हति ।
सहेयं दह्यतां सूता आमन्त्र्य च जनाधिपम् ।
हतस्यापि हि गन्धर्वैः कीचकस्य प्रियं भवेत् ॥ ९ ॥ ४-२७-९ (२९४४३)
वैशंपायन उवाच ॥ ४-२७-१०क्ष् (३१०२)
ततो विराटमासाद्य सूताः प्राञ्जलयोऽब्रुवन् ।
कीचकोऽयं हतः शेते गन्धर्वैः कामरूपिभिः ॥ १० ॥ ४-२७-१० (२९४४४)
सैरन्ध्र्या घातितो रात्रौ तं दहेम सहानया ।
मानिताः स्मस्त्वया वीर तदनुज्ञातुमर्हसि ॥ ११ ॥ ४-२७-११ (२९४४५)
पराक्रमं तु सूतानां ज्ञात्वा राजाऽन्वमन्यत ।
सैरन्ध्र्याः सूतपुत्रेण सह दाहं नराधिपः ॥ १२ ॥ ४-२७-१२ (२९४४६)
ततस्ते समनुज्ञाताः सर्वे तत्रास्य बान्धवाः ।
रुरुदुः कीचकं दृष्ट्वा परिवार्याभितः स्थिताः ॥ १३ ॥ ४-२७-१३ (२९४४७)
आरोप्य कृष्णां सह कीचकेन निबध्य केशेषु च पादयोश्च ।
ते चापि सूता वचनैरवोचन्नुद्दिश्य चैनामभिवीक्ष्य कृष्णाम्
॥ १४ ॥ ४-२७-१४ (२९४४८)
यस्याः कृतेऽयं निहतो महात्मा तस्माद्धि सा कीचकमार्गमेतु ।
अवार्यसत्वेन च कीचकेन गतासुना सुन्दरी स्वर्गलोकम् ॥ १५
॥ ४-२७-१५ (२९४४९)

सा तेन कृष्णा शयने निबद्धा यशस्विनी चैव मनस्विनी च ।
अनार्यसत्त्वेन महार्यसत्त्वा गतासुना सा प्ररुरोद कृष्णा ।
विलम्बमाना विवशा हि दुष्टैस्तत्रैव पर्यङ्कवरे शुभाङ्गी ॥१६ ॥
४-२७-१६ (२९४५०)
ह्रियमाणाऽथ सुश्रोणी सूतपुत्रैरनिन्दिता ।
प्राक्रोशन्नाथमिच्छन्ती कृष्णा नाथवती सती ॥१७ ॥ ४-२७-१७ (२९४५१)
मृतेन सह बद्धाङ्गी निराशा जीविते तदा ।
श्मशानाभिमुखं नीता करेणुरिव रौति सा ॥१८ ॥ ४-२७-१८ (२९४५२)
द्रौपद्युवाच। ४-२७-१९क्ष् (३१०३)
जयो जयेशो विजयो जयत्सेनो जयद्बलः ।
त मे वाचं विजानन्तु सूतपुत्रा नयन्ति माम् ॥१९ ॥ ४-२७-१९ (२९४५३)
येषां दुन्दुभिनिर्घोषो ज्याघोषः श्रूयते महान् ।
ते मे वाचं विजानन्तु सूतपुत्रा नयन्ति माम् ॥२० ॥ ४-२७-२० (२९४५४)
येषां ज्यातलनिर्घोषो विस्फूर्जितमिवाशनेः ।
अश्रूयत महान्युद्धे भीमघोपस्तरस्विनाम् ॥२१ ॥ ४-२७-२१ (२९४५५)
रथघोपश्च बलवान्गन्धर्वाणां तरस्विनाम् ।
ते मे वाचं बिजानन्तु सूतपुत्रा नयन्ति माम् ॥२२ ॥ ४-२७-२२ (२९४५६)
येषां वीर्यमतुल्यं तु शक्रस्येव बलं यशः ।
राजसिंहा इवाग्यास्ते मां जानन्तु सुदुःखितां ॥२३ ॥ ४-२७-२३ (२९४५७)
इत्यस्याः कृपणा वाचः कृष्णायाः परिदेविताः ।
श्रुत्वैवाभ्युत्थितो भीमः शयनादविचारयन् ॥२४ ॥ ४-२७-२४ (२९४५८)
भीम उवाच। ४-२७-२५क्ष् (३१०४)
अहं सैरन्ध्रि ते वाचः शृणोमि तव भाषिताः ।
तस्मात्ते सूतपुत्रेभ्यो न भयं जातु विद्यते ॥२५ ॥ ४-२७-२५ (२९४५९)
वैशंपायन उवाच। ४-२७-२६क्ष् (३१०५)
इत्युक्त्वा स महाबाहुर्विजजृम्भे जिघांसया ॥२६ ॥ ४-२७-२६ (२९४६०)
ततः स व्यायतं बद्ध्वा वस्त्रं विपरिवेष्ट्य च ।
अद्वारेणाभ्यवस्कन्द्य निर्जगाम बहिस्तदा ॥२७ ॥ ४-२७-२७ (२९४६१)
स लङ्घयित्वा प्राकारमारुह्य तरसा द्रुमम् ।
श्मशानाभिमुखः प्रायाद्यत्र ते कीचका गताः ॥२८ ॥ ४-२७-२८ (२९४६२)
स लङ्घयित्वा प्राकारं निःसृत्य च पुरोत्तमात् ।
जवेनोत्पतितो भीमः सूतानामग्रतस्तदा ॥२९ ॥ ४-२७-२९ (२९४६३)
चितासमीपं गत्वा स तत्रापश्यन्महाबलः ।
तालमात्रं महास्कन्धमूर्ध्वशुष्कं वनस्पतिम् ॥३० ॥ ४-२७-३० (२९४६४)
तं नागवदुपक्रम्य बाहुभ्यां परिरभ्य च ।
वृक्षमुत्पाटयामास भीमो भीमपराक्रमः ॥३१ ॥ ४-२७-३१ (२९४६५)

ततो वृक्षं दशव्यामं निष्पत्रमकरोत्तदा ॥ ३२ ॥ ४-२७-३२ (२९४६६)
तं महाकायमुद्यम्य भ्रामयित्वा च वेगितः ।
प्रगृह्याभ्यपतत्सूतान्दण्डपाणिरिवान्तकः ॥ ३३ ॥ ४-२७-३३ (२९४६७)
ऊरुवेगेन तस्याथ न्यग्रोधाश्वत्थकिंशुकाः ।
भूमौ निपतिता वृक्षाः संभग्नास्तत्र शेरते ॥ ३४ ॥ ४-२७-३४ (२९४६८)
तं सिंहमिव संक्रुद्धं दृष्ट्वा गन्धर्वमागतम् ।
वित्रेसुश्च तदा सूता विपादभयपीडिताः ॥ ३५ ॥ ४-२७-३५ (२९४६९)
तमन्तकमिव क्रुद्धं गन्धर्वभयशङ्किताः ।
दिधक्षन्तस्तथा ज्येष्ठं भ्रातरं चोपकीचकाः ।
परस्परमथोचुस्ते विषादभयमोहिताः ॥ ३६ ॥ ४-२७-३६ (२९४७०)
गन्धर्वो बलवानेति क्रुद्ध उद्यम्य पादपम् ।
प्रबुद्धाः सुमहाभागा गन्धर्वाः सूर्यवर्चसः ।
सैरन्ध्री मुच्यतां शीघ्रं भयं नो महदागतम् ॥ ३७ ॥ ४-२७-३७ (२९४७१)
वैशंपायन उवाच। ४-२७-३८क्ष् (३१०६)
ते दृष्ट्वाऽथ समाविद्धं भीमसेनेन पादपम् ।
विमुच्य द्रौपदीं त्रस्ताः प्राद्रवन्नगरं प्रति ॥ ३८ ॥ ४-२७-३८ (२९४७२)
द्रवतस्तांश्च संप्रेक्ष्य स वज्री दानवानिव ।
अथ भीमः समुत्पत्य द्रवतां पुरतोऽभवत् ॥ ३९ ॥ ४-२७-३९ (२९४७३)
ते तं दृष्ट्वा भयोद्विग्ना निश्चेष्टाः समवस्थिताः ॥ ४० ॥
४-२७-४० (२९४७४)
दृष्ट्वा ताञ्शतसङ्ख्यकान्स वज्री दानवानिव ।
एकेनैव प्रहारेण दश सप्त च विंशतिम् ।
अष्टादश च पञ्चाशञ्जघान स वृकोदरः ॥ ४१ ॥ ४-२७-४१ (२९४७५)
शतं पञ्चाधिकं भीमः प्राहिणोद्यमसादनम् ।
वृक्षेणैकेन राजेन्द्र प्रभञ्जनसुतो बली ।
वायुवेगसमः श्रीमान्सर्वान्सूतानशेषतः ॥ ४२ ॥ ४-२७-४२ (२९४७६)
तान्निहत्य महाबाहुर्भीमसेनो महाबलः ।
आश्वासयत्तदा कृष्णां प्रतिमुच्य च बन्धनात् ॥ ४३ ॥ ४-२७-४३ (२९४७७)
उवाच श्लक्ष्णया वाचा पाञ्चालीं भरतर्षभः ।
अश्रुपूर्णमुखीं भीतामुद्धरन्स वृकोदरः ॥ ४४ ॥ ४-२७-४५अश
मा खिदस्त्वं(क्र) याज्ञसेनि पातिव्रत्यव्रते स्थिता ।
पातिव्रत्ये स्थिता नारी व्रतं रक्षेत्सदाऽत्मनः ॥ ४५ ॥ ४-२७-४४ (२९४७८)
पुरा स्त्री देवरातस्य पतिप्रीता शिरोमणिः ।
कदाचिद्भर्तृरूपेण रक्षसाऽपहृता सती ॥ ४६ ॥ ४-२७-४६ (२९४७९)
कस्यचित्सरसस्तीरे तां निवेश्य स राक्षसः ।
तद्भर्तृरूपं संत्यज्य रक्षो भूत्वा सुदारुणम् ॥ ४७ ॥ ४-२७-४७ (२९४८०)

साम्ना दानेन भेदेन सा यदा नान्वमन्यत ।
तदा तां पातयित्वा स मैथुनायोपचक्रमे ॥ ४८ ॥ ४-२७-४८ (२९४८१)
ततः सा धैर्यमास्थाय विवरं त ददौ तदा ।
ततः स खङ्गमुत्कृष्य भीषयामास तां सतीम् ॥ ४९ ॥ ४-२७-४९ (२९४८२)
साऽपि त्यक्तभया साध्वी प्राणत्यागे सुनिश्चिता ।
प्रतिज्ञामकरोत्कृष्णे पातिव्रत्यपरायणा ॥ ५० ॥ ४-२७-५० (२९४८३)
आराधितो यदि मया भर्ता मे दैवतं महत् ।
कर्मणा मनसा वाचा गुरवस्तोषिता मया ।
तेन सत्येन योनिर्मे भवत्वद्य शिला दृढा ॥ ५१ ॥ ४-२७-५१ (२९४८४)
एवं तया प्रतिज्ञाते तद्योनिः सा शिलाऽभवत् ।
अन्तरा नाभिजान्वोर्यत्तत्सर्वं च शिलाऽभवत् ॥ ५२ ॥ ४-२७-५२ (२९४८५)
ततः स खङ्गमुद्धृत्य वेगेनास्याः शिरोऽहरत् ॥ ५३ ॥ ४-२७-५३ (२९४८६)
जया नाम सखी साऽभूत्पार्वत्या नखमांसवत् ।
तस्मात्पतिव्रतायाश्च दुःखमल्पं सुखं बहु ॥ ঘ ॥ ५४ ॥ ४-२७-५४ (२९४८७)
एवं ते भीरु वध्यन्ते ये त्वां हिंसन्ति मानवाः ।
गच्छ त्वं नगरं कृष्णे न भयं विद्यते तव ॥ ५५ ॥ ४-२७-५५ (२९४८८)
अन्येन त्वं पथा शीघ्रं सुदेष्णाया निवेशनम् ।
अन्येनाहं गमिष्यामि विराटस्य महानसम् ।
यथा नौ नावबुध्येरन्नात्रावेवं व्यवस्थितौ ॥ ५६ ॥ ४-२७-५६ (२९४८९)
वैशंपायन उवाच। ४-२७-५७क्ष् (३१०७)
साऽगच्छन्नगरं कृष्णा भीमेनाश्वासिता सती ॥ ५७ ॥
कृतकृत्या सुदेष्णाया भवनं शुभलक्षणा । ४-२७-५७ (२९४९०)
शचीव नहुषे शप्ते प्रविवेश त्रिविष्टपम् ॥ ५८ ॥
भीमोऽप्यमितवीर्यस्तु बलवानरिमर्दनः। ४-२७-५८ (२९४९१)
सर्वांस्तान्कीचकांस्तत्र हत्वा धर्मात्मजानुजः ॥ ५९ ॥
निःशेषं कीचकान्हत्वा रामो रात्रिचरानिव। ४-२७-५९ (२९४९२)
जितशत्रुरदीनात्मा प्रविवेश पुरं ततः ॥ ६० ॥
पञ्चाधिकं शतं तत्र निहतं तेन भारत। ४-२७-६० (२९४९३)
महावनमिव छिन्नं शिश्ये विगलितद्रुमम् ॥ ६१ ॥
एवं ते निहता राजञ्शतं पञ्चोपकीचकाः। ४-२७-६१ (२९४९४)
स च सेनापतिः सूत इत्येतत्सूतषट्शतम् ॥ ६२ ॥
न गन्धर्वभयाकिंचिद्वक्तुं कीचकबान्धवाः । ४-२७-६२ (२९४९५)
अशक्नुवन्तस्तां तत्र भयादप्यभिवीक्षितुम् ॥ ६३ ॥
विराटनगरे चापि सर्वे मात्स्याः समागताः । ४-२७-६३ (२९४९६)
काल्यं पञ्चशतं चैतानपश्यन्सारथीन्हतान् ॥ ६४ ॥
तद्दृष्ट्वा महदाश्चर्यं नरा नार्यश्च नागराः। ४-२७-६४ (२९४९७)

विस्मयं परमं गत्वा नोचुः किंचन भारत ॥ ६५ ॥ ॥ ४-२७-६५ (२९४९८)

इति श्रीमन्महाभारते विराटपर्वणि कीचकवधपर्वणि
सप्तविंशोऽध्यायाः ॥ २७ ॥
Mahabharata - Virata Parva - Chapter Footnotes

४-२७-४५ क़इमे १० श्लोकाः घो पुस्तक एव दृश्यन्ते ॥
४-२७-६३ तां द्रौपदीमभिवीक्षितुमपि अशक्नुवन्तः कीचकबान्धवाः
तांप्रति किंचिद्वक्तुं नाशक्नुवन्नित्यध्याहारेण योजना ॥
६३ ॥

---

विरतपर्व-अध्यय०२८
॥ श्रीः ॥
४.२८. अध्यायः २८

Mahabharata - Virata Parva - Chapter Topics
पौरैर्विराटंप्रति सानुजकीचकनिधननिवेदनपूर्वकं
नगराद्द्रौपदीनिष्कासनप्रार्थना ॥ १ ॥
सुदेष्णया विराटनियोगाद्द्रौपदीं प्रति स्वपुरान्निर्गमनचोदना ॥ २ ॥
तथा द्रौपद्या मासावधिस्ववासाभ्यनुज्ञानप्रार्थनायां तदङ्गीकरणम् ॥ ३ ॥

Mahabharata - Virata Parva - Chapter Text

४-२८-० (२९४९९)
वैशंपायन उवाच। ४-२८-०क्ष् (३१०८)
ते दृष्ट्वा निहतान्सूतान्भीमसेनेन भारत ।
पौराश्च सहिताः सर्वे राज्ञे गत्वा न्यवेदयन् ।
गन्धर्वेण हता राजन्सूतपुत्राः परश्शतम् ॥ १ ॥ ४-२८-१ (२९५००)
यथा वज्रेण दीर्णं वै पर्वतस्य महच्छिरः ।
विनिकार्णाः प्रदृश्यन्ते तथा सूता महीतले ॥ २ ॥ ४-२८-२ (२९५०१)
सैरन्ध्री चापि मुक्ता सा पुनरायाति ते गृहम् ।
सर्वं संशयितं राजन्नगरं ते भविष्यति ॥ ३ ॥ ४-२८-३ (२९५०२)
तथारूपा हि सैरन्ध्री गन्धर्वाश्च महाबलाः ।
पुंसामिष्टश्च विषयो मैथुनाय न संशयः ॥ ४ ॥ ४-२८-४ (२९५०३)
यथा सैरन्ध्रिदोषेण नेदं राजन्पुरं तव ।
विनाशमेति वै क्षिप्रं तथा साधु विधीयताम् ॥ ५ ॥ ४-२८-५ (२९५०४)
सर्वाङ्गसौष्ठवयुतां रूपलावण्यशालिनीम् ।

पश्यतामनिमेषेण चक्षुषा वनितां शुभाम् ।
मनसश्चक्षुषश्चैव प्रतिबन्धो न विद्यते ॥ ६ ॥ ४-२८-६ (२९५०५)
तस्मात्तां यः पुमान्दृष्ट्वा रूपेणाप्रतिमां भुवि ।
गच्छेत्कामवशं मूढो गन्धर्वैः स निहन्यते ॥ ७ ॥ ४-२८-७ (२९५०६)
निष्कासयैनां भवनात्पुराच्चैव विशेषतः ।
कालः प्रविश्य सैरन्ध्रीं पुरं नाशयते ध्रुवम् ॥ ८ ॥ ४-२८-८ (२९५०७)
वैशंपायन उवाच। ४-२८-९क्ष् (३१०९)
तेषां तद्वचनं श्रुत्वा विराटो वाहिनीपतिः ।
अब्रवीत्क्रियतामेषां सूतानामपरक्रिया ॥ ९ ॥ ४-२८-९ (२९५०८)
एकस्मिन्नेव ते सर्वे सुसमिद्धे हुताशने ।
दह्यन्तां कीचकाः सर्वे सर्वगन्धैश्च सर्वशः ॥ १० ॥ ४-२८-१० (२९५०९)
इत्युक्त्वा परमोद्विग्निः प्रविश्यान्तःपुरं शुभम् ।
सुदेष्णां चाब्रवीद्राजा महिषीं जातसाध्वसः ॥ ११ ॥ ४-२८-११ (२९५१०)
सैरन्ध्रीमागतां ब्रूया ममैव वचनादिह ।
गच्छ सैरन्ध्रि भद्रं ते यथाकामं चराधुना ।
बिभेति राजा सैरन्धि गन्धर्वेभ्यः पराभवात् ॥ १२ ॥ ४-२८-१२ (२९५११)
न हि तामुत्सहे वक्तुं स्वयं गन्धर्वरक्षिताम् ।
स्त्रियास्त्वदोषस्तां वक्तुमतस्त्वां प्रब्रवीम्यहम् ॥ १३ ॥ ४-२८-१३ (२९५१२)
वैशंपायन उवाच। ४-२८-१४क्ष् (३११०)
एकस्मिन्नेव ते सर्वे सुसमिद्धे हुताशने ।
अदहन्कीचकान्सर्वान्संस्कारैश्चैव सर्वशः ॥ १४ ॥ ४-२८-१४ (२९५१३)
अथ मुक्ता भयात्कृष्णा सूतपुत्रान्निरस्य च ।
मोक्षिता भीमसेनेन जगाम नगरं प्रति ॥ १५ ॥ ४-२८-१५ (२९५१४)
त्रासितेव मृगी बाला शार्दूलेन मनस्विनी ।
सा तु गात्राणि वासश्च प्रक्षाल्य प्रविवेश ह ॥ १६ ॥ ४-२८-१६ (२९५१५)
तां दृष्ट्वा पुरुषा राजन्प्राद्रवन्त दिशो दश ।
गन्धर्वाणां भयत्रस्ताः केचिद्दृष्टिं न्यमीलयन् ॥ १७ ॥ ४-२८-१७ (२९५१६)
प्रदुद्रुवुश्चाप्यपरे तथा जना हस्तैश्च चक्षूंषि पिधाय मोहिताः ।
मा पश्यत स्मेति च तां ब्रुवन्तस्तथा जनाश्चुक्रुशुरार्तरूपाः ॥ १८
॥ ४-२८-१८ (२९५१७)
तामद्य यः पश्यति रूपशालिनीं शयीत भग्नोऽत्र यथैव कीचकाः ।
इति ब्रुवन्तो भयविग्नचेतसो भयेन गन्धर्वगतेन मोहिताः ॥ १९
॥ ४-२८-१९ (२९५१८)
ततो महानसद्वारे भीमसेनमवस्थितम् ।
ददर्श राजन्पाञ्चाली यथा मत्तं महाद्विपम् ॥ २० ॥ ४-२८-२० (२९५१९)
सोपहासं तु शनकैः संज्ञाभिरिदमब्रवीत् ।

नमो गन्धर्वराजाय येनास्मि परिमोक्षिता ॥ २१ ॥ ४-२८-२१ (२९५२०)
कीचकेभ्यो विनिर्दोषामनाथां वसतीं गृहे ।
यो मां रक्षति सन्त्रस्तां गन्धर्वाय नमोस्तु ते ॥ २२ ॥ ४-२८-२२ (२९५२१)
भीम उवाच। ४-२८-२३क्ष् (३१११)
ये यस्या विचरन्तीह पुरुषा वशवर्तिनः ।
तेषां च वशगा नित्यं विचर त्वं यथेष्टतः ॥ २३ ॥ ४-२८-२३ (२९५२२)
ये पुरा विचरन्तीह पुरुषा वशवर्तिनः ।
तस्यास्ते वचनं श्रुत्वा ह्यनृणा विहरन्त्वितः ॥ २४ ॥ ४-२८-२४ (२९५२३)
वैशंपायन उवाच। ४-२८-२५क्ष् (३११२)
तयोस्तद्वचनं श्रुत्वा जज्ञिरे नेतरे जनाः ।
ततः पाञ्चालराजस्य सुता चापि जगाम ह ॥ २५ ॥ ४-२८-२५ (२९५२४)
ततः सा नर्तनागारे धनंजयमपश्यत ।
राज्ञः कन्या विराटस्य नर्तयन्तं महाभुजम् ॥ २६ ॥ ४-२८-२६ (२९५२५)
ततस्ता नर्तनागाराद्विनिष्क्रम्य सहार्जुनाः ।
कन्या ददृशुरायान्तीं कृष्णां क्लिष्टामनागसम् ॥ २७ ॥ ४-२८-२७ (२९५२६)
कान्या ऊचुः। ४-२८-२८क्ष् (३११३)
दिष्ट्या सैरन्ध्रि मुक्ताऽसि दिष्ट्याऽसि पुनरागता ।
दिष्ट्या च निहताः सूता ये त्वां क्लिश्यन्त्यनागसम् ॥ २८ ॥ ४-२८-२८ (२९५२७)
बृहन्नलोवाच। ४-२८-२९क्ष् (३११४)
कथं सैरन्ध्रि मुक्ताऽसि कथं पापाश्च ते हताः ।
इच्छामि ते कथां श्रोतुं कथयस्व यथातथम् ॥ २९ ॥ ४-२८-२९ (२९५२८)
सैरन्ध्युवाच। ४-२८-३०क्ष् (३११५)
बृहन्नले किंनु तव सैरन्ध्र्या कार्यमद्य वै ।
या त्वं रंस्यसि कल्याणि सदा कन्यापुरे सुखं ॥ ३० ॥ ४-२८-३० (२९५२९)
न हि दुःख समाप्नोषि सैरन्ध्री यदुपाश्नुते ।
सुखेन वर्तसे येह न तद्दुःखमवाप्यते ।
तेन मां दुःखितामेवं पृच्छसि प्रहसन्त्यपि ॥ ३१ ॥ ४-२८-३१ (२९५३०)
बृहन्नलोवाच। ४-२८-३२क्ष् (३११६)
बृहन्नलाऽपि कल्याणि दुःखमाप्नोत्यनन्तकम् ।
तिर्यग्योनिगतेवेयं न चैनामवबुध्यसे ॥ ३२ ॥ ४-२८-३२ (२९५३१)
त्वया सहोषिता चास्मि त्वं च सर्वैः सहोषिता ।
त्वत्तः कृच्छ्रतरं वासं वसेयमहमङ्गने ।
क्लिश्यन्त्यां त्वयि सुश्रोणि कोनु दुःखं न चिन्तयेत्। ॥ ३३ ॥
४-२८-३३ (२९५३२)
न तु केनचिदन्यन्तं कस्यचिद्धृदयं क्वचित् ।
वेदितुं शक्यते नूनं तेन मां नावबुध्यसे ॥ ३४ ॥ ४-२८-३४ (२९५३३)

वैशंपायन उवाच। ४-२८-३५क्ष् (३११७)
ततः सहैव कन्याभिर्द्रौपदी राजवेश्म तत् ।
प्रविवेश सुदेष्णायाः समीपमनसूयिनी ॥ ३५ ॥ ४-२८-३५ (२९५३४)
तामब्रवीद्राजपत्नी विराटवचनादिदम् ।
सैरन्ध्रि गम्यतां शीघ्रं यत्र कामयसे गतिम् ।
राजा बिभेति सैरन्ध्रि गन्धर्वेभ्यः पराभवात् ॥ ३६ ॥ ४-२८-३६ (२९५३५)
त्वं चापि तरुणी सुभ्रू रूपेणाप्रतिमा भुवि ।
चित्तानि च नृणां भद्रे रक्तानि स्पर्शजे सुखे ॥ ३७ ॥ ४-२८-३७ (२९५३६)
तस्मात्त्वत्तो भयं मह्यं राष्ट्रस्य नगरस्य च ।
गच्छाद्यैव यथेष्टं त्वं नगराद्यत्र रंस्यसे ॥ ३८ ॥ ४-२८-३८ (२९५३७)
त्वन्निमित्तं शुभे मह्यं सर्वो बन्धुजनो हतः ।
नृशंसा खलु ते बुद्धिर्भ्रातॄणां मे कृतो वधः ॥ ३९ ॥ ४-२८-३९
(२९५३८)
तस्माद्गन्धर्वराजेभ्यो भयमद्य प्रवर्तते ।
यथेष्टं गच्छ सैरन्ध्रि स्वस्ति चेह यथा भवेत् ॥ ४० ॥ ४-२८-४०
(२९५३९)
वैशंपायन उवाच। ४-२८-४१क्ष् (३११८)
सुदेष्णाया वचः श्रुत्वा सैरन्ध्री चेदमब्रवीत् ।
त्रयोदशाहमात्रं तु राजा क्षाम्यतु भामिनि ॥ ४१ ॥ ४-२८-४१ (२९५४०)
कृतकृत्या भविष्यन्ति गन्धर्वास्ते न संशयः ।
ततो मामुपनेष्यन्ति करिष्यन्ति च ते प्रियम् ॥ ४२ ॥ ४-२८-४२ (२९५४१)
ध्रुवं च श्रेयसा राजा योक्ष्यते सह बान्धवैः ।
राज्ञः कृतोपकाराश्च कृतज्ञाश्च सदा शुभे ।
साधवश्च बलोत्सिक्ताः कृतप्रतिकृतेप्सवः ॥ ४३ ॥ ४-२८-४३ (२९५४२)
अर्थिनी मा ब्रवीत्येषा यद्वातद्वेति चिन्तय ।
भरस्व तदहर्मात्रं तत्ते श्रेयो भविष्यति ॥ ४४ ॥ ४-२८-४४ (२९५४३)
वैशंपायन उवाच। ४-२८-४५क्ष् (३११९)
तस्यास्तद्वचनं श्रुत्वा कैकेयी दुःखमोहिता ।
उवाच द्रौपदीमार्ता भ्रातृव्यसनकर्शिता ॥ ४५ ॥ ४-२८-४५ (२९५४४)
वस भद्रे यथेष्टं त्वं त्वामहं शरणं गता ।
त्रायस्व मम भर्तारं पुत्रांश्चैव विशेषतः ॥ ४६ ॥ ४-२८-४६ (२९५४५)
इत्युक्तवा राजशार्दूल राज्ञे सर्वं न्यवेदयत् ।
त्रिंशद्रात्रिमिमां भीरुः कृतकृत्या निवासये ॥ ४७ ॥ ४-२८-४७ (२९५४६)

इति श्रीमन्महाभारते विराटपर्वणि कीचकवधपर्वणि
अष्टाविंशोऽध्यायः ॥ २८ ॥

Mahabharata - Virata Parva - Chapter Footnotes

४-२८-१ गन्धर्वैर्निहता राजन्निति खो थो धो पाठो ॥
१ ॥
४-२८-५ तथा नीतिर्विधीयतामिति धो पाठः ॥
५ ॥

---

विरतपर्व-अध्यय०२९
॥ श्रीः ॥
४.२९. अध्यायः २९

Mahabharata - Virata Parva - Chapter Topics
पाण्डवान्वेषणाय क्रमेण विराटपुरमागतैश्चारैर्हास्तिनपुरमेत्य
दुर्योधनंप्रति स्वेषां पाण्डवानवगतिनिवेदनपूर्वकं
कीचकवधनिवेदनम् ॥ १ ॥

Mahabharata - Virata Parva - Chapter Text

४-२९-० (२९५४७)
वैशंपायन उवाच। ४-२९-०क्ष् (३१२०)
कीचके तु हते राजा विराटः परवीरहा ।
शोकमाहारयत्तीव्रं सामात्यः सपुरोहितः ॥ १ ॥ ४-२९-१ (२९५४८)
कीचकस्य वधं घोरं सानुजस्य विशांपते ।
अत्याहितं चिन्तयित्वा व्यस्मयन्त पृथग्जनाः ॥ २ ॥ ४-२९-२ (२९५४९)
तस्मिन्पुरे जनपदे जजल्पुश्चापि सर्वशः ।
वीर्यवान्दयितो राज्ञो दर्पोत्सिक्तश्च कीचकः ॥ ३ ॥ ४-२९-३ (२९५५०)
सांपराये परिक्रुष्टो बलवान्दुर्जयो रणे ।
आसीत्प्रहर्ता शत्रूणां दारदर्शी च दुर्मतिः ।
स हतः किल गन्धर्वैः सैरन्ध्रीकारणान्निशि ॥ ४ ॥ ४-२९-४ (२९५५१)
इत्यजल्पन्महाराज कीचकस्य विनाशनम् ।
देशेदेशे मनुष्याश्च विस्मितः कीचके हते ॥ ५ ॥ ४-२९-५ (२९५५२)
अथ वैः धार्तराष्ट्रेण प्रयुक्ता ये बहिश्चराः ।
मृगयित्वा बहून्देशान्ग्रामांश्च नगराणि च ॥ ६ ॥ ४-२९-६ (२९५५३)
संविधाय यथाऽऽदिष्टं यथादेशं प्रदर्शकाः ।
कृतसंकेतनाः सर्वे न्यवर्तन्त पुरं ततः ॥ ७ ॥ ४-२९-७ (२९५५४)
आगम्य हास्तिनपुरं धार्तराष्ट्रमरिन्दमम् ।
तत्र दृष्ट्वा तु राजानं कौरव्यं धृतराष्ट्रजम् ॥ ८ ॥ ४-२९-८ (२९५५५)

द्रोणकर्णकृपैः सार्धं भीष्मेण च महात्मना ।
संगतं भ्रातृभिः सार्धं त्रिगर्तैश्च महारथैः ॥ ९ ॥ ४-२९-९
(२९५५६)
प्रणम्य शिरसा भूमौ वर्धयित्वा जयाशिषा ।
आसीनं सूर्यसंकाशे काञ्चने परमासने ॥ १० ॥ ४-२९-१० (२९५५७)
उपास्यमानं सचिवैर्मरुद्भिरिव वासवम् ।
विद्वद्भिर्गायकैः सार्धं कविभिः स्तुतिपाठकैः ॥ ११ ॥ ४-२९-११ (२९५५८)
अनेकैरपि राजन्यैः सेवितं सपरिच्छदैः ।
दुर्योधनं सभामध्ये आसीनमिदमब्रुवन् ॥ १२ ॥ ४-२९-१२ (२९५५९)
कृतोऽस्माभिः परो यत्नस्तेषामन्वेषणे सदा ।
पाण्डवानां मनुष्येन्द्र तस्मिन्महति कानने ॥ १३ ॥ ४-२९-१३ (२९५६०)
निर्जने व्यालसंकीर्णे नानाभ्रमरसंकुले ।
लताप्रतानगहने नानागुल्मसमावृते ॥ १४ ॥ ४-२९-१४ (२९५६१)
न च विद्मो गता येन पार्थाः सुदृढविक्रमाः ।
मार्गमाणाः पदन्यासमाश्रमेषु वनेषु च ॥ १५ ॥ ४-२९-१५ (२९५६२)
गिरिकूटेषु तुङ्गेषु नानाजनपदेषु च ।
जनाकीर्णेषु देशेषु चत्वरेषु पुरेषु च ॥ १६ ॥ ४-२९-१६ (२९५६३)
नरेन्द्र सहसा नष्टान्नैव विद्म च पाण्डवान् ।
अत्यन्तादर्शनान्नष्टा भद्रं तुभ्यं नरर्षभ ॥ १७ ॥ ४-२९-१७ (२९५६४)
गिरीणां कूटकुञ्जेषु कन्दरोदरसानुषु ।
नदीप्रस्रवणेष्वेव ह्रदेषु च सरस्सु च ॥ १८ ॥ ४-२९-१८ (२९५६५)
गह्वरेषु च दुर्गेषु ग्रामेषू पवनेषु च ।
दुर्विज्ञेया गतिस्तेषां मृग्यतेऽस्माभिरेव च ॥
गजव्याघ्रसमीपेषु सिंहान्ते शरभान्तरे ॥ १९ ॥ ४-२९-१९ (२९५६६)
वत्मन्यन्विच्छमानास्तु रथानां रथिसत्तम ।
कंचित्कालं मनुष्येन्द्र सूताननुगता वयम् ॥ २० ॥ ४-२९-२० (२९५६७)
मृगयित्वा यथान्यायं विदितार्थाश्च तत्वतः ।
प्राप्ता द्वारवतीं सूता विना पार्थैः परंतप ॥ २१ ॥ ४-२९-२१ (२९५६८)
न तत्र कृष्णा राजेन्द्र पाण्डवाश्च महाव्रताः ।
नरदेव यथोद्दिष्टं न च विद्मात्र पाण्डवान् ॥ २२ ॥ ४-२९-२२ (२९५६९)
निर्वृतो भव नष्टास्ते स्वस्थो भव परंतप ।
सर्वथैव प्रनष्टास्ते नमस्ते भरतर्षभ ॥ २३ ॥ ४-२९-२३ (२९५७०)
सर्वा च पृथिवी कृत्स्ना सशैलवनकानना ।
सराष्ट्रनगरग्रामा पत्तनैश्च समन्विता ।
अन्वेषिता च सर्वत्र न च पश्यामा पाण्डवान् ॥ २४ ॥ ४-२९-२४ (२९५७१)
पुनः शाधि मनुष्येन्द्र अत ऊर्ध्वं विशांपते ।

अन्वेषणे पाण्डवानां भूयः किं करवामहे ॥ २५ ॥ ४-२९-२५ (२९५७२)
इमां च नः प्रियां वीर वाचं भद्रवतीं शृणु ॥ २६ ॥ ४-२९-२६ (२९५७३)
येन त्रिगर्ता निहता बलेन बहुशो नृप ।
सूतेन राज्ञो मत्स्यस्य कीचकेन बलीयसा ।
स हतः पतितः शेते गन्धर्वैर्निशि भारत ॥ २७ ॥ ४-२९-२७ (२९५७४)
स्यालो राज्ञो विराटस्य सेनापतिरुदारधीः ।
सुदेष्णायानुजः क्रूरः शूरो वीरो गतव्यथः ॥ २८ ॥ ४-२९-२८ (२९५७५)
उत्साहवान्महावीर्यो नीतिमान्बलवानपि ।
युद्धज्ञो रिपुवीर्यघ्नःक सिंहतुल्यपराक्रमः ॥ २९ ॥ ४-२९-२९ (२९५७६)
प्रजारक्षणदक्षश्च शत्रुग्रहणशक्तिमान् ।
विजितारिर्महायुद्धे प्रचण्डो मानतत्परः ॥ ३० ॥ ४-२९-३० (२९५७७)
नरनारीमनोह्लादी धीरो वाग्मी रणप्रियः ।
पुण्यकर्माऽर्थकामानां भाजनं मनुजोत्तमः ॥ ३१ ॥ ४-२९-३१ (२९५७८)
स हतो निशि गन्धर्वैः स्त्रीनिमित्तं नराधिप ।
अमृष्यमाणो दुष्टात्मा निशीथे सह सोदरैः ।
सुहृदश्चास्य निहता योधाश्च प्रहरैर्हताः ॥ ३२ ॥ ४-२९-३२ (२९५७९)
गन्धर्वाणां च महिषी काचिदस्ति नितम्बिनी ।
सैरन्ध्री नाम तां दृप्तो दुष्टात्माऽकामयद्बली ॥ ३३ ॥ ४-२९-३३ (२९५८०)
इत्येवं श्रुतमस्माभिर्गन्धर्वैर्निहतो निशि ॥ ३४ ॥ ४-२९-३४ (२९५८१)
बान्धवैर्बहुभिः सार्धं कीचको निहतो यतः ।
अद्यप्रभृति राजेन्द्र पाण्डवान्वेषणं प्रति ।
चारांश्च सर्वतश्चर्तुं प्रेषयेति मतिर्हि नः ॥ ३५ ॥ ४-२९-३५ (२९५८२)
निहतो निशि गन्धर्वैर्दुष्टात्मा भ्रातृभिः सह ।
एतावच्छ्रुतमस्माभिर्भद्रं तेऽस्तु नराधिप ॥ ३६ ॥ ४-२९-३६ (२९५८३)
प्रियमेतदुपश्रुत्य शत्रूणां च पराभवम् ।
कृतकृत्यश्च कौरव्य विधत्स्व यदनन्तरम् ॥ ३७ ॥ ॥ ४-२९-३७ (२९५८४)

इति श्रीमन्महाभारते विराटपर्वणि ग्रोग्रहणपर्वणि
एकोऽनत्रिंशोऽध्यायः ॥ २९ ॥

---

विरतपर्व-अध्यय०३०
॥ श्रीः ॥
४.३०. अध्यायः ३०

Mahabharata - Virata Parva - Chapter Topics
दुर्योधनादिभिः पाण्डवान्वेषणाय समालोचनम् ॥ १ ॥

४-३०-० (२९५८५)
वैशंपायन उवाच। ४-३०-०क्ष् (३१२१)
ततो दुर्योधनो राजा श्रुत्वा तेषां वचस्तदा ।
चिरमन्तर्मना भूत्वा इदमाह सभासदः ॥ १ ॥ ४-३०-१ (२९५८६)
अशक्यं खलु कार्यस्य गतिं ज्ञातुं हि तत्वतः ।
तस्मात्सर्वे परीक्षध्वं क्वनु स्युः पाण्डवा गताः ॥ २ ॥ ४-३०-२ (२९५८७)
अल्पावशिष्टः कालस्तु गतो भूयिष्ठ एव च ।
तेषामज्ञातचर्यायामस्मिन्वर्षे त्रयोदशे ॥ ३ ॥ ४-३०-३ (२९५८८)
अपि वर्षस्य शेषं ते ह्यतीयुरिह पाण्डवाः ।
निवृत्तसमयास्ते हि सत्यव्रतपरायणाः ॥ ४ ॥ ४-३०-४ (२९५८९)
क्षरन्त इव नागेन्द्राः सर्वे ह्याशीविषोपमाः ।
दुःखाद्भवेयुः संरब्धाः कौरवान्प्रति ते ध्रुवम् ॥ ५ ॥ ४-३०-५ (२९५९०)
विज्ञातव्या मनुष्येन्द्रास्तर्कया सुप्रणीतया ।
निपुणैश्चारपुरुषैः प्राज्ञैर्दक्षैः सुसंवृतैः ॥ ६ ॥ ४-३०-६ (२९५९१)
अज्ञातसमये ज्ञाताः कृच्छ्ररूपसमाश्रिताः ।
प्रविशेयुर्जितक्रोधास्तावदेव पुनर्वनम् ॥ ७ ॥ ४-३०-७ (२९५९२)
तस्मात्क्षिप्रं विचिन्वध्वं यथा चात्यन्तमव्ययम् ।
राज्यं निर्द्वन्द्वमव्यग्रं निःसपत्नं चिरं भवेत् ॥ ८ ॥ ४-३०-८ (२९५९३)
दुर्योधनेनैवमुक्ते वचनेऽतीव दुःखिना ।
ततः कर्णोऽब्रवीद्वाक्यं सत्यधर्मार्थसंयुतम् ॥ ९ ॥ ४-३०-९ (२९५९४)
एते पुनर्न गच्छन्तु अन्ये गच्छन्तु भारत ।
शीघ्रवृत्ता नरा योग्या निपुणाश्छन्नचारिणः ॥ १० ॥ ४-३०-१० (२९५९५)
चरन्तु देशान्विविधान्स्फीताञ्जनपदाकुलान् ।
तत्र गोष्ठीषु रम्यासु सिद्धा ब्राह्मणरूपिणः ॥ ११ ॥ ४-३०-११ (२९५९६)
परिवाहेषु तीर्थेषु विविधेष्वाकरेषु च ।
अन्वेष्टव्या मनुष्येन्द्र पाण्डवाश्छन्नचारिणः ॥ १२ ॥ ४-३०-१२ (२९५९७)
नदीकुञ्जेषु तीर्थेषु ग्रामेषु नगरेषु च ।
आश्रमेषु च रम्येषु पर्वतेषु गुहासु च ॥ १३ ॥ ४-३०-१३ (२९५९८)
विज्ञातव्या मनुष्येन्द्र तर्कया सुविनूतया ।
विविधैस्तत्परैः सम्यङ्विपुणैस्तज्ज्ञसंमतैः ॥ १४ ॥ ४-३०-१४ (२९५९९)
अथाग्रजानन्तरजो भ्रातुः प्रियहिते रतः ।
ज्येष्ठं दुःशासनस्तत्र भ्राता भ्रातरमब्रवीत् ॥ १५ ॥ ४-३०-१५ (२९६००)
येषु नः प्रत्ययो राजंश्चारेषु मनुजाधिप ।
ते यान्तु दत्तदेया वै भूयस्तान्परिमार्गितुम् ॥ १६ ॥ ४-३०-१६ (२९६०१)

यदाह कर्णो राजेन्द्र सर्वमेतदवेक्ष्यताम् ।
यथोद्दिष्टं चराः सर्वे मृगयन्तु यतस्ततः ॥ १७ ॥ ४-३०-१७ (२९६०२)
घ्राणैः पश्यन्ति पशवो वेदैरेव द्विजोत्तमाः ।
चारैः पश्यन्ति राजानश्चक्षुर्भ्यामितरे जनाः ॥ १८ ॥ ४-३०-१८ (२९६०३)
यथोक्ताश्चारपुरुषा मृगयन्तु पुनःपुनः ।
एते चान्ये च बहवो देशांश्च नगराणि च ॥ १९ ॥ ४-३०-१९ (२९६०४)
न हि तेषां गतिर्वासः प्रवृत्तिर्वोपलभ्यते ।
अत्यन्तं वा निगूढास्ते पारं वोर्मिमतो गताः ॥ २० ॥ ४-३०-२० (२९६०५)
व्यालैर्वाऽपि महारण्ये भक्षिताः शूरमानिनः ।
द्वीपं वा परमं प्राप्ता गिरिदुर्गवनेष्वपि ॥ २१ ॥ ४-३०-२१ (२९६०६)
हीनदर्पा निराशास्ते भक्षिता वाऽपि राक्षसैः ।
अथवा विषमं प्राप्य विनष्टाः शाश्वतीः समाः ॥ २२ ॥ ४-३०-२२ (२९६०७)
तस्मान्मानसमव्यग्रं कृत्वाऽऽत्मानं नियम्य च ।
कुरु कार्यं महोत्साहं मन्यसे यन्नराधिप ॥ २३ ॥ ॥ ४-३०-२३ (२९६०८)

इति श्रीमन्महाभारते विराटपर्वणि गोग्रहणपर्वणि त्रिंशोऽध्यायः ॥ ३० ॥

---

विरतपर्व-अध्यय०३१
॥ श्रीः ॥
४.३१. अध्यायः ३१

Mahabharata - Virata Parva - Chapter Topics
द्रोणेन दुर्योधनंप्रति पाण्डवानां धार्मिकत्वादिगुणशालितया
विनाशाभावनिर्धारणेन तदन्वेषणविधानम् ॥ १ ॥
भीष्मेण पाण्डवावासदेशस्य लक्षणाभिधानपूर्वकं तेषां
दुर्ज्ञेयत्वस्यापि कथनेन तैः सह सन्धिविधानम् ॥ २ ॥

Mahabharata - Virata Parva - Chapter Text

४-३१-० (२९६०९)
वैशंपायन उवाच। ४-३१-०क्ष् (३१२२)
अथाऽब्रवीत्सभामध्ये द्रोणः सूक्ष्मार्थदर्शिवान् ।
न तादृशा विनश्यन्ति नापि यान्ति पराभवम् ॥ १ ॥ ४-३१-१ (२९६१०)
शूराश्च कृतविद्याश्च बुद्धिमन्तो जितेन्द्रियाः ।
धर्मज्ञाः सत्यसन्धाश्च युधिष्ठिरमनुव्रताः ॥ २ ॥ ४-३१-२ (२९६११)
नीतिधर्मार्थतत्वज्ञं पितृवच्च समाहितम् ।

धर्मे स्थितं सत्यधृतिं ज्येष्ठं श्रेष्ठापचायिनम् ॥ ३
॥ ४-३१-३ (२९६१२)
अनुव्रता महात्मानो भ्रातरो भ्रातरं प्रियम् ।
अजातशत्रुं श्रीमन्तं सर्वभ्रातॄननुव्रतम् ॥ ४ ॥ ४-३१-४ (२९६१३)
तेषां तथाविधेयानां निभृतानां महात्मनाम् ।
किमर्थं नीतिमान्प्राज्ञः श्रेयो नैषां करिष्यति ॥ ५ ॥ ४-३१-५ (२९६१४)
तस्माद्यत्नात्परीक्षध्वं न तावत्समयो गतः ।
न ते विनाशमृच्छेयुरिति मे नैष्ठिकी मतिः ॥ ६ ॥ ४-३१-६ (२९६१५)
चिन्त्यतां चैव यत्कार्यं तच्च क्षिप्रमकालिकम् ।
क्रियतां साधु संचिन्त्य वासश्चैषां प्रचिन्त्यतां ॥ ७ ॥ ४-३१-७ (२९६१६)
यथा च पाण्डुपुत्राणां सर्वार्थेषु धृतात्मनाम् ।
प्रवृत्तिरुपलभ्येत तथा नीतिर्विधीयताम् ॥ ८ ॥ ४-३१-८ (२९६१७)
सर्वोपायैर्यतस्व त्वं यथा पश्यसि पाण्डवान् ।
दुर्ज्ञेयाः खलु शूरास्ते रक्ष्या नित्यं च दैवतैः ॥ ९ ॥ ४-३१-९ (२९६१८)
शुद्धात्मा मानवान्पार्थः सत्यवान्नीतिमाञ्शुचिः ।
तेजोराशिभिरापूर्णो दहेदपि च चक्षुषा ॥ १० ॥ ४-३१-१० (२९६१९)
तस्माद्यत्नश्च क्रियतां भूयश्च मृगयामहे ।
ब्राह्मणैश्चारकैः सिद्धैस्तापसैर्निपुणैरपि ॥ ११ ॥ ४-३१-११ (२९६२०)
विविधैस्तत्परैः सम्यङ्क्विर्भीकैस्तज्ज्ञसंमतैः ।
अन्वेष्टव्या मनुष्येन्द्र पाण्डवाश्छन्नचारिणः ॥ १२ ॥ ४-३१-१२ (२९६२१)
ततः शान्तनवो धीमान्भारतानां पितामहः ।
श्रुतवान्देशकालज्ञो नीतिमांश्च महामतिः ॥ १३ ॥ ४-३१-१३ (२९६२२)
तस्मिन्नुपरते वाक्ये आचार्यस्य महात्मनः ।
अनन्तरमुवाचेदं वाक्यं हेत्वर्थसंमितम् ॥ १४ ॥ ४-३१-१४ (२९६२३)
युधिष्ठिरे समायुक्तां धर्मज्ञे धर्मसंहिताम् ।
पाण्डवे नित्यमव्यग्रां गिरं भीष्मः समाददे ॥ १५ ॥ ४-३१-१५ (२९६२४)
असत्सु दुर्लभां नित्यं सतां चाभिमतां सद ।
भीष्मस्त्वभ्यवदत्तत्र गिरं साधुभिरर्चिताम् ॥ १६ ॥ ४-३१-१६ (२९६२५)
यथा नो ब्राह्मणोऽवादीदाचार्यः सर्वधर्मवित् ।
श्रुतवृत्तोपसंपन्ना नाशं नायान्ति पाण्डवाः ॥ १७ ॥ ४-३१-१७ (२९६२६)
सर्वलक्षणसंपन्नाः साधुवृत्तसमन्विताः ।
वृद्धानुशासने यत्ताः सत्यधर्मपरायणाः ॥ १८ ॥ ४-३१-१८ (२९६२७)
समयं समयज्ञास्ते पालयन्तः शुभव्रताः ।
न विषीदन्ति ते पार्था उद्वहन्तः सतां धुरम् ॥ १९ ॥ ४-३१-१९ (२९६२८)
तपसा चैव गुप्तास्ते स्ववीर्येण च पाण्डवाः ।
न नाशमभिगच्छेयुरिति मे नैष्ठिकी मतिः ॥ २० ॥ ४-३१-२० (२९६२९)

क्षत्रधर्मरता नित्यं केशवानुगताः सदा ।
प्रवीरपुरुषास्ते वै महात्मानो महाबलाः ॥ २१ ॥ ४-३१-२१ (२९६३०)
तत्र बुद्धिं प्रवक्ष्यामि पाण्डवान्वेषणे शृणु ।
न तु नीतिः सुनीतस्य शक्यते वेदितुं परैः ॥ २२ ॥ ४-३१-२२ (२९६३१)
यत्तु शक्यमिहास्माभिस्तान्वै संचिन्त्य पाण्डवान् ।
बुद्ध्या प्रणेतुं तत्तेऽहं प्रवक्ष्यामि निबोध तत् ॥ २३ ॥ ४-३१-२३ (२९६३२)
न त्वियं साधु वक्तव्या तस्य नीतिः कथंचन ।
वृद्धानुशासने तात तिष्ठतः सत्यशीलिनः ॥ २४ ॥ ४-३१-२४ (२९६३३)
अयुक्तं तु मया वक्तुं तुल्या मे कुरुपाण्डवाः ।
निवासं पाण्डुपुत्राणां संचिन्त्य च वदाम्यहम् ।
बहुना किं प्रलापेन यतो धर्मस्ततो जयः ॥ २५ ॥ ४-३१-२५ (२९६३४)
अवश्यं तु नियुक्तेन सभामध्ये विवक्षता ।
यथार्हमिह वक्तव्यं सर्वथा धर्मलिप्सया ॥ २६ ॥ ४-३१-२६ (२९६३५)
यत्र नाहं तथा मन्ये यथाऽन्ये मेनिरे जनाः ।
निवासं पाण्डुपुत्राणां शृणुष्वं मनुजाधिप ॥ २७ ॥ ४-३१-२७ (२९६३६)
श्भ्रातृभिः सहितो वीरैः कृष्णया च महायशाः ।
किमर्थं स महाराजो नात्मश्रेयो भविष्यति ॥ २८ ॥ ४-३१-२८ (२९६३७)
पाण्डवो निकृतः पूर्वं यथावद्विदितं तव ।
क्लेशितश्च पुरे नित्यं राज्यकामैश्च सांप्रतम् ।
छन्नश्चरति तस्मात्स प्रकृत्या नीतिमान्नृपः ॥ २९ ॥ ४-३१-२९ (२९६३८)
वर्षमेकं सुसंच्छन्नमुष्य वासमनुत्तमम् ।
आयाति चोदये काले क्षिप्रं दक्ष्यसि पाण्डवं ॥ ३० ॥ ४-३१-३० (२९६३९)
सोदरैः सहितं वीरं द्रौपद्या च परंतप ।
संविधत्स्व महाबाहो यथा नः स्यात्सुखोदयः ॥ ३१ ॥ ४-३१-३१ (२९६४०)
यस्मिन्स राजा वसति च्छन्नः सत्त्वभृतांवरः ।
भविष्यन्ति नरास्तत्र रागमोहविवर्जिताः ॥ ३२ ॥ ४-३१-३२ (२९६४१)
नाधयो हि महाराज न व्याधिः क्षत्रियर्षभघ ।
पुरे जनपदे वाऽपि यत्र राजा युधिष्ठिरः ॥ ३३ ॥ ४-३१-३३ (२९६४२)
दानशीलो वदान्यश्च निभृतो ह्रीनिषेवकः ।
प्रियवाक्सत्यवाक्शूरो धर्मशीलो जितेन्द्रियः ।
हृष्टः पुष्टः शुचिर्दक्षो यत्र राजा युधिष्ठिरः ॥ ३४ ॥
४-३१-३४ (२९६४३)
नासूयको न चापीर्ष्युर्नाभिमानी न मत्सरी ।
भविष्यति जनस्तत्र स्वयं धर्ममनुव्रतः ॥ ३५ ॥ ४-३१-३५ (२९६४४)
ब्रह्मघोषाश्च भूयांसः पुण्यशब्दास्तथैव च ।
क्रतवश्च भविष्यन्ति भूयांसो भूरिदक्षिणाः ॥ ३६ ॥ ४-३१-३६ (२९६४५)

सदा च तत्र पर्जन्यः सम्यग्वर्षी न संशयः ।
संपन्नसस्या च मही भविष्यति निरामया ॥ ३७ ॥ ४-३१-३७ (२९६४६)
रसवन्ति च धान्यानि गुणवन्ति फलानि च ।
गन्धवन्ति च माल्यानि शुभशब्दा च भारती ॥ ३८ ॥ ४-३१-३८ (२९६४७)
वायुश्च सुखसंस्पर्शो यत्र राजा युधिष्ठिरः ।
नीरोगास्तत्र विद्यन्ते वधबन्धा न सन्ति च ॥ ३९ ॥ ४-३१-३९ (२९६४८)
न चोरा न च दण्डाश्च न च बाधा भवन्त्युत ।
नाशक्ता न च दुष्टाश्च यत्र राजा युधिष्ठिरः ॥ ४० ॥ ४-३१-४० (२९६४९)
भयं च नाविशेत्तत्र निष्प्रतीपं च दर्शनम् ।
बहुक्षीरास्तथा गावः सुपुष्टाश्च सुदोहनाः ॥ ४१ ॥ ४-३१-४१ (२९६५०)
पयांसि दधिसर्पींषि रसवन्ति हितानि च ।
सलिलानि प्रसन्नानि सर्वे भावाश्च शोभनाः ॥ ४२ ॥ ४-३१-४२ (२९६५१)
गुणवन्ति च पानानि भोज्यानि विविधानि च ।
तत्र देशे भविष्यन्ति यत्र राजा युधिष्ठिरः ॥ ४३ ॥ ४-३१-४३ (२९६५२)
रसाः स्पर्शाश्च गन्धाश्च शब्दाश्चापि गुणान्विताः ।
दृश्यानि च प्रसन्नानि यत्र राजा युधिष्ठिरः ॥ ४४ ॥ ४-३१-४४ (२९६५३)
धर्माश्च तत्र सर्वैस्तु सेविताश्च द्विजातिभिः ।
स्वैःस्वैर्गुणैश्च संयुक्ता कस्मिन्वर्षे त्रयोदशे ।
देशे तस्मिन्भविष्यन्ति तत पाण्डवसंश्रिते ॥ ४५ ॥ ४-३१-४५ (२९६५४)
संप्रीतिमाञ्जनस्तत्र संतुष्टः शुचिरव्ययः ।
देवतातिथिभूयांस्तु सर्वभूतानुरागवान् ॥ ४६ ॥ ४-३१-४६ (२९६५५)
इष्टदानमहोत्साहा नित्यं धर्मपरायणाः ।
व्यक्तवाक्यास्ततस्तात शुभकल्याणमङ्गलाः ॥ ४७ ॥ ४-३१-४७ (२९६५६)
शुभत्विषः शुभेच्छाश्च नित्यतुष्टाः श्रियाऽन्विताः ।
भविष्यन्ति जनास्तत्र यत्र राजा युधिष्ठिरः ॥ ४८ ॥ ४-३१-४८ (२९६५७)
नित्योत्सवप्रमुदितो नित्यहृष्टः श्रिया वृतः ।
भविष्यति निवासोऽयं यत्र राजा युधिष्ठिरः ॥ ४९ ॥ ४-३१-४९ (२९६५८)
धर्मज्ञः स तु दुर्ज्ञेयः सर्वज्ञैश्च द्विजातिभिः ।
किंपुनः प्राकृतैस्तात पार्थो विज्ञायते क्वचित् ॥ ५० ॥ ४-३१-५० (२९६५९)
यस्मिन्सत्यं धृतिर्दानं परा शान्तिर्ध्रुवा क्षमा ।
ह्रीः श्रीः कीर्तिः परं तेज आनृशंस्यमथार्जवम् ॥ ५१ ॥ ४-३१-५१ (२९६६०)
तस्मान्निवासः पार्थानां चिन्त्यतां यद्ब्रवीमि वः ।
गतिर्वा परमा तत्र नोत्सहे वक्तुमन्यथा ॥ ५२ ॥ ४-३१-५२ (२९६६१)
एवमेतत्तु संचिन्त्य यत्कृत्यं साधु मन्यसे ।
तत्क्षिप्रं कुरु कौरव्य यद्येतच्छ्रद्दधासि मे ।
कुलस्य हि क्षमं तात यदहं प्रब्रवीमि ते ॥ ५३ ॥ ॥ ४-३१-५३ (२९६६२)

इति श्रीमन्महाभारते विराटपर्वणि गोग्रहणपर्वणि एकत्रिंशोऽध्यायः
॥ ३१ ॥

---

विरतपर्व-अध्यय०३२
॥ श्रीः ॥
४.३२. अध्यायः ३२

Mahabharata - Virata Parva - Chapter Topics
दुर्योधनेन कीचकवधस्य भीमसेनकृतत्वसंभावनया पाण्डवानां
तत्र स्थितिसंभावना ॥ १ ॥
तथा भीष्माद्यनुमत्या सुशर्मणो विराटनगरंप्रति प्रेषणम् ॥ २ ॥
सुशर्मणा विराटनगरमेत्य दक्षिणभागे गोग्रहम् ॥ ३ ॥

Mahabharata - Virata Parva - Chapter Text

४-३२-० (२९६६३)
वैशंपायन उवाच। ४-३२-०क्ष् (३१२३)
ततः शारद्वतो वाक्यमित्युवाच कृतस्तदा ।
युक्तं प्राप्तं च वृद्धेन पाण्डवान्प्रति भापितम् ॥ १ ॥ ४-३२-१ (२९६६४)
धर्मार्थसहितं श्लक्ष्णं सर्वं सत्यं सहेतुकम् ।
तत्रानुरूपं भीष्मस्य ममापि वचनं शृणु ॥ २ ॥ ४-३२-२ (२९६६५)
तेषां चैव गतिस्तत्र निवासश्चानुचिन्त्यताम् ।
नीतिर्विधीयतां तत्र सांप्रतं या हिता भवेत् ॥ ३ ॥ ४-३२-३ (२९६६६)
नावज्ञेयो रिपुस्तात प्राकृतोऽपि बुभूषता ।
किं पुनः पाण्डवाः शूरा विद्वांसो बलिनस्तथा ॥ ४ ॥ ४-३२-४ (२९६६७)
तस्मात्सत्रं प्रविष्टेषु पाण्डवेषु महात्मसु ।
गूढभावेषु छन्नेषु काले चोदयमागते ॥ ५ ॥ ४-३२-५ (२९६६८)
स्वराष्ट्रे परराष्ट्रे च ज्ञातव्यं बलमात्मनः ।
उदयः पाण्डवानां च प्राप्तकालो न संशयः ॥ ६ ॥ ४-३२-६ (२९६६९)
निवृत्तसमयाः पार्था महात्मानो महाबलाः ।
महोत्साहा भविष्यन्ति पाण्डवा ह्यमितौजसः ॥ ७ ॥ ४-३२-७ (२९६७०)
तस्माद्बलं च कोशं च नातिश्चापि विधीयताम् ।
यथा कालोदये प्राप्ते सम्यक् तैः संदधामहे ॥ ८ ॥ ४-३२-८ (२९६७१)
यत्र यन्मन्यसे श्रेयो बुध्यस्व बलमात्मनः ।
नियतं सर्वमित्रेषु बलवत्स्वबलेषु च ॥ ९ ॥ ४-३२-९ (२९६७२)
सारं फल्गु बलं ज्ञात्वा मध्यस्थं चापि भारत ।

स्वराष्ट्रपरराष्ट्रेषु ज्ञातव्यं बलमात्मनः ॥ १० ॥ ४-३२-१० (२९६७३)
अप्रहृशष्टं प्राहृष्टं वा संदधाम तथा परैः ।
साम्ना दानेन भेदेन दण्डेन बलिकर्मणा ॥ ११ ॥ ४-३२-११ (२९६७४)
न्यायेनाक्रम्य च परान्बलाच्चानम्य दुर्बलान् ।
सान्त्वयित्वा च मित्राणि बलं चाभाष्यतां सुखम् ॥ १२ ॥ ४-३२-१२ (२९६७५)
स्वकोशबलसंवृद्धः सम्यक्सिद्धिमवाप्स्यसि ।
योत्स्यसे चापि बलिभिररिभिः प्रत्युपस्थितैः ।
अन्यैस्त्वं पाण्डवैर्वाऽपि हीनैः स्वबलवाहनैः ॥ १३ ॥ ४-३२-१३ (२९६७६)
एवं सर्वं विनिश्चित्य व्यवहर्तासि न्यायतः ।
यथाकालं मनुष्येन्द्र चिरं सुखमवाप्स्यसि ॥ १४ ॥ ४-३२-१४ (२९६७७)
भीष्माद्रोणकृपैरुक्ते कर्णदुःशासनादिभिः ।
ततो दुर्योधनो वाक्यं श्रुत्वा तेषां महात्मनाम् ।
मुहूर्तमनुसंचिन्त्य सचिवानिदमब्रवीत् ॥ १५ ॥ ४-३२-१५ (२९६७८)
श्रुतमेतन्मया पूर्वं कथासु जनसंसदि ।
धीराणां शास्त्रविदुषां प्राज्ञानां मतिनिश्चये ।
कृतिनां सारफल्गुत्वे जानामि नयचक्षुषा ॥ १६ ॥ ४-३२-१६ (२९६७९)
सत्वे बाहुबले धैर्ये प्राणे शारीरसंभवे ।
सांप्रतं मानुषे लोके सदैत्यनरराक्षसे ॥ १७ ॥ ४-३२-१७ (२९६८०)
चत्वारस्तु नरव्याघ्रा बले शक्रोपमा भुवि ।
उत्तमाः प्राणिनां तेषां नास्ति कश्चिद्बले ममः ॥ १८ ॥ ४-३२-१८ (२९६८१)
बलदेवश्च भीमश्च मद्रराजश्च वीर्यवान् ।
चतुर्थः कीचकस्तेषां पञ्चमं नानुशुश्रुमः ॥ १९ ॥ ४-३२-१९ (२९६८२)
अन्योन्यानन्तरबलाः परस्परजयैपिणः ।
बाहूयुद्धमभीप्सन्तो नित्यं संरब्धमानसाः ॥ २० ॥ ४-३२-२० (२९६८३)
तेनाहमवगच्छामि प्रत्ययेन वृकोदरम् ।
मनस्यभिनिविष्टं मे व्यक्तं जीवन्ति पाण्डवाः ॥ २१ ॥ ४-३२-२१ (२९६८४)
तत्राहं कीचकं मन्ये भीमसेनेन मारितम् ।
सैरन्ध्रीं द्रौपदीं मन्ये नात्र कार्या विचारणा ॥ २२ ॥ ४-३२-२२ (२९६८५)
शङ्के कृष्णानिमित्तं तु भीमसेनेन कीचकः ।
गन्धर्वव्यपदेशेन हतो निशि महाबलः ॥ २३ ॥ ४-३२-२३ (२९६८६)
को हि शक्तः परो भीमात्कीचकं हन्तुमोजसा ।
शस्त्रं विना बाहुबलात्तथा सर्वाङ्गचूर्णने ॥ २४ ॥ ४-३२-२४ (२९६८७)
मर्दितुं वा तथा तीव्रं चर्ममांसास्थिचूर्णनम् ।
रूपमन्यत्समास्थाय भीमस्यैतद्विचेष्टितम् ॥ २५ ॥ ४-३२-२५ (२९६८८)
ध्रुवं कृष्णानिमित्तं तु भीमसेनेन सूतजाः ।
गन्धर्वव्यपदेशेन हता निशि न संशयः ॥ २६ ॥ ४-३२-२६ (२९६८९)

पितामहेन ये चोक्ता देशस्य च जनस्य च ।
गुणास्ते मत्स्यराष्ट्रेषु बहुशोऽपि मया श्रुताः ॥ २७ ॥ ४-३२-२७ (२९६९०)
विराटनगरे मन्ये पाण्डवाश्छन्नचारिणः ।
निवसन्ति पुरे रम्ये तत्र यात्रा विधीयताम् ॥ २८ ॥ ४-३२-२८ (२९६९१)
मत्स्यराष्ट्रं गमिष्यामो ग्रहीष्यामश्च गोधनम् ।
गृहीते गोधने नूनं तेऽपि योत्स्यन्ति पाण्डवाः ॥ २९ ॥ ४-३२-२९ (२९६९२)
अपूर्णे समये चापि यदि पश्येम पाण्डवान् ।
द्वादशान्यानि वर्षाणि प्रवेक्ष्यन्ति पुनर्वनम् ॥ ३० ॥ ४-३२-३० (२९६९३)
तस्मादन्यतरेणापि लाभोऽस्माकं भविष्यति ।
कोशवृद्धिरिहास्माकं शत्रूणां निधनं भवेत् ॥ ३१ ॥ ४-३२-३१ (२९६९४)
कथं सुयोधनं गच्छेद्युधिष्ठिरभृतः पुरा ।
एतच्चापि वदत्येष मात्स्यः परिभवान्मयि ॥ ३२ ॥ ४-३२-३२ (२९६९५)
तस्मात्कर्तव्यमेतद्वै तत्र यात्रा विधीयताम् ।
एतत्सुनीतं मन्येऽहं सर्वेषां यदि रोचते ॥ ३३ ॥ ४-३२-३३ (२९६९६)
वैशंपायन उवाच। ४-३२-३४क्ष् (३१२४)
ततो राजा त्रिगर्तानां सुशर्मा रथयूथपः ।
पूर्वमाभाष्य कर्णेन तथा दुःशासनेन च ।
प्राप्तकालमिदं वाक्यमुवाच त्वरितो बली ॥ ३४ ॥ ४-३२-३४ (२९६९७)
असकृन्निकृतः पूर्वं मात्स्यसाल्वेयकेकयैः ।
सूतेनैव च मात्स्यस्य कीचकेन पुनः पुनः ॥ ३५ ॥ ४-३२-३५ (२९६९८)
बाधितो बन्धुभिः सार्धं बलाद्बलवता विभो ।
स कर्णमभिवीक्ष्याथ दुर्योधनमभाषत ॥ ३६ ॥ ४-३२-३६ (२९६९९)
राष्ट्रं ममासकृद्राजन्राज्ञा मात्स्येन बाधितम् ॥ ३७ ॥ ४-३२-३७ (२९७००)
प्रणेता कीचकस्तस्य बलोत्सिक्तोऽभवन्पुरा ।
अमर्षी दुर्जयो जेता प्रख्यातबलपौरुषः ।
स हतस्तत्र गन्धर्वैः पापकर्मा नृशंसकृत् ॥ ३८ ॥ ४-३२-३८ (२९७०१)
तस्मिन्विनिहते राजन्हीनदर्पो निराश्रयः ।
भविष्यति निरुत्साहो विराट इति मे मतिः ॥ ३९ ॥ ४-३२-३९ (२९७०२)
तत्र यात्रा मम मता यदि ते रोचतेऽनघ ।
कौरवाणां च सर्वेषां कर्णस्य च महात्मनः ॥ ४० ॥ ४-३२-४० (२९७०३)
एतत्कार्यमहं मन्ये परमात्ययिकं महत् ।
राष्ट्रं तस्याभियास्यामो धनधान्यसमाकुलम् ॥ ४१ ॥ ४-३२-४१ (२९७०४)
आददामोऽस्य रत्नानि विविधानि वसूनि च ।
ग्रामान्राष्ट्राणि वा तस्य हरिष्यामो विभागशः ॥ ४२ ॥ ४-३२-४२ (२९७०५)
अथवा गोसहस्राणि बहूनि शुभदर्शन ।
विविधानि हरिष्यामः प्रतीपीड्य पुरं बलात् ॥ ४३ ॥ ४-३२-४३ (२९७०६)

कौरवैः सह संगमय त्रिगर्तैश्च विशांपते ।
गास्तस्यापहरिष्यामः सह सर्वैर्महारथैः ॥ ४४ ॥ ४-३२-४४ (२९७०७)
सन्धिं वा तेन कृत्वा तु निबध्नीमोऽस्य पौरुषम् ।
हत्वा चास्य चमूं कृत्स्नां वशमेवानयामहे ॥ ४५ ॥ ४-३२-४५ (२९७०८)
तं वशे न्यायतः कृत्वा सुखं वत्स्यामहे वयम् ।
भवतां बलवृद्धिश्च भविष्यति न संशयः ॥ ४६ ॥ ४-३२-४६ (२९७०९)
वैशंपायन उवाच। ४-३२-४७क्ष् (३१२५)
तच्छ्रुत्वा वचनं तस्य कर्णो राजानमब्रवीत् ॥ ४७ ॥ ४-३२-४७ (२९७१०)
सूक्तं सुशर्मणा वाक्यं प्राप्तकालमिदं वचः ।
तस्मात्क्षिप्रं विनिर्यामो योजयित्वा वरूथिनीं ॥ ४८ ॥ ४-३२-४८ (२९७११)
यदेतत्तेऽभिरुचितं मम चैतद्धि रोचते ।
प्रविभज्य च सैन्यानि यथा वा मन्यते भवान् ॥ ४९ । ४-३२-४९ (२९७१२)
प्रज्ञावान्कुलवृद्धश्च सर्वेषां नः पितामहः ।
आचार्यश्च कृपो विद्वाञ्शकुनिश्चापि सौबलः ॥ ५० ॥ ४-३२-५० (२९७१३)
मन्यन्ते ते यथा सर्वे तथा यात्रा विधीयताम् ।
संमन्त्र्य चाशु गच्छामः साधनार्थं महीपते ॥ ५१ ॥ ४-३२-५१ (२९७१४)
किंनु नः पाण्डवैः कार्यं हीनार्थबलपौरुषैः ।
अत्यन्तं हि प्रनष्टास्ते प्राप्ता वाऽपि यमक्षयम् ॥ ५२ ॥ ४-३२-५२ (२९७१५)
तद्भवांश्चतुरङ्गेण बलेन महता वृतः ।
विराटनगरं यातु सर्वसैन्येन भारत ।
आदास्यामोऽथ गास्तस्य विविधानि वसूनि च ॥ ५३ ॥ ४-३२-५३ (२९७१६)
वैशंपायन उवाच। ४-३२-५४क्ष् (३१२६)
ततो दुर्योधनो राजा वचः श्रुत्वा तु तस्य तत् ।
वैकर्तनस्य कर्णस्य क्षिप्रमाज्ञापयत्स्वयम् ।
शासने नित्ययुक्तं तु दुःशासनमनन्तरम् ॥ ५४ ॥ ४-३२-५४ (२९७१७)
दुर्योधन उवाच। ४-३२-५५क्ष् (३१२७)
सह वृद्धैस्तु संमन्त्र्य क्षिप्रं योजय वाहिनीम् ।
यथोद्देशं तु गच्छामः सहिताः सर्वकौरवैः ॥ ५५ ॥ ४-३२-५५ (२९७१८)
सुशर्मा तु यथोद्दिष्टं देशं यातु महारथः ।
त्रिगर्तैः सहितः सर्वैः प्रख्यातबलपौरुषैः ।
प्रागेव हि सुसंयत्तो विराटनगरं प्रति ॥ ५६ ॥ ४-३२-५६ (२९७१९)
जघन्यतो वयं तत्र यास्यामो दिवसान्तरे ।
विषयं मत्स्यराजस्य सुसमृद्धं सुसंहितम् ॥ ५७ ॥ ४-३२-५७ (२९७२०)
सुशर्मणा गृहीते तु मत्स्यराजस्य गोधने ।
विराटः सैन्यमादाय त्रिगर्तैः सह योत्स्यति ॥ ५८ ॥ ४-३२-५८ (२९७२१)
अपरं दिवसं गास्तु तत्र गृह्णन्तु कौरवाः ।

गवार्थे पाण्डवास्तत्र योत्स्यन्ति कुरुभिः सह ॥ ५९ ॥ ४-३२-५९ (२९७२२)
तथा गत्वा यथोद्देशं विराटनगरान्तिके ।
क्षिप्रं गोष्ठं समासाद्य गृह्णन्तु विपुलं धनम् ॥ ६० ॥ ४-३२-६० (२९७२३)
गवां शतसहस्राणि श्रीमन्ति गुणवन्ति च ।
वयमस्य निगृह्णीमो द्विधा कृत्वा च वाहिनीम् ॥ ६१ ॥ ४-३२-६१ (२९७२४)
वैशंपायन उवाच। ४-३२-६२क्ष् (३१२८)
ते स्म गत्वा यथोद्दिष्टं देशं मत्स्यमहीपतेः ।
संनद्धा रथिनः सर्वे सपताका बलोत्कटाः ।
प्रतिवैरं चिकीर्षन्तो गोषु गृद्धा महाबलाः ॥ ६२ ॥ ४-३२-६२ (२९७२५)
आदत्त गाः सुशर्माऽथ कृष्णपक्षस्य चाष्टमीम् ॥ ६३ ॥ ४-३२-६३
(२९७२६)
अपरे दिवसे सर्वे राजन्संभूय कौरवाः ।
नवम्यां ते न्यगृह्णन्त गोकुलानि सहस्रशः ।
कौरवास्तु महावीर्या मत्स्यानां विषयान्तरे ॥ ६४ ॥ ॥ ४-३२-६४ (२९७२७)

इति श्रीमन्महाभारते विराटपर्वणि गोग्रहणपर्वणि द्वात्रिंशोऽध्यायः
॥ ३२ ॥
Mahabharata - Virata Parva - Chapter Footnotes

४-३२-३१ तस्मादनन्तरेणापि लाभोऽस्माकमिति धो पाठः ।तस्मात्
गोग्रहणात अनन्तरेण युद्धायागतपाण्डवदर्शनेन ॥
३१ ॥
४-३२-३२ युधिष्ठिरभृतः युधिष्ठिरो भृतो येन विराटेनेति
बहुव्रीहिः ॥
३२ ॥
४-३२-६३ कृष्णपक्षस्य सप्तमीमिति अष्टम्यां तेऽन्यगृह्णन्तेति
चो थो पाठः ॥
६३ ॥
४-३२- ६४ विषयान्तरे उत्तरभागे ॥
६४ ॥

---

विरतपर्व-अध्यय०३३
॥ श्रीः ॥
४.३३. अध्यायः ३३

Mahabharata - Virata Parva - Chapter Topics
गोपैर्दुतृतरमाद्गुत्य विराटंप्रति सुशर्मणा गोगहणनिवेदनम् ॥ १ ॥

विराटादिभिर्युद्धाय निर्गमोद्यमः ॥ २ ॥
युधिष्ठिरेण विराटंप्रति स्वेषां युद्धकौशलनिवेदनेन भ्रातृभिः
सह समराभियानम् ॥ ३ ॥

Mahabharata - Virata Parva - Chapter Text

४-३३-० (२९७२८)
वैशंपायन उवाच। ४-३३-०क्ष् (३१२९)
ततस्तेषां महाराज तत्रैवामिततेजसाम् ।
छद्मलिङ्गप्रविष्टानां पाण्डवानां महात्मनाम् ॥ १ ॥ ४-३३-१ (२९७२९)
व्यतीतः समयः सम्यग्विराटनगरे सताम् ।
कुर्वतां तस्य कर्माणि वीराटस्य महीपतेः ॥ २ ॥ ४-३३-२ (२९७३०)
कीचके तु हते राजा विराटः परवीरहा ।
परां संभावनां चक्रे कुन्तीपुत्रे युधिष्ठिरे ॥ ३ ॥ ४-३३-३ (२९७३१)
ततस्त्रयोदशस्वान्ते तस्य वर्षस्य भारत ।
शुशर्मणा गृहीतं तु गोधनं तरसा बहु ॥ ४ ॥ ४-३३-४ (२९७३२)
ततः शब्दो महानासीद्रेणुश्च दिवमस्पृशत् ।
शङ्खदुन्दुभिघोषश्च भेरीणां च महास्वनः ।
गवाश्वरथनागानां निश्वनश्च पदातिनाम् ॥ ५ ॥ ४-३३-५ (२९७३३)
एवं तैस्त्वभिनिर्याय मत्स्यराजस्य गोधने ।
त्रिगर्तैर्गृह्यमाणे तु गोपालाः प्रत्यषेधयन् ॥ ६ ॥ ४-३३-६ (२९७३४)
अथ त्रिगर्ता बहवः परिगृह्य धनं बहु ।
परिक्षिप्य हयैः शीघ्रै रथव्रातैश्च भारत ।
गोपालान्प्रत्ययुध्यन्त रणे कृत्वा जये धृतिम् ॥ ७ ॥ ४-३३-७ (२९७३५)
ते हन्यमाना बहुभिः प्रासतोमरपाणिभिः ।
गोपाला गोकुले भक्ता वारयामासुरोजसा ॥ ८ ॥ ४-३३-८ (२९७३६)
परश्वथैश्च मुसलैर्भिण्डिपालैश्च मुद्गरैः ।
गोपालाः कर्षणैश्चित्रैर्जघ्नुरश्वान्समन्ततः ॥ ९ ॥ ४-३३-९ (२९७३७)
ते हन्यमानाः संक्रुद्धास्त्रिगर्ता रथयोधिनः ।
विसृज्य शरवर्षाणि गोपानद्रावयन्बलात् ॥ १० ॥ ४-३३-१० (२९७३८)
हन्यमानेषु गोपेषु विमुखेषु विशांपते ।
ततो युवानः संभीताः श्वसन्तो रेणुगुण्ठिताः ॥ ११ ॥ ४-३३-११ (२९७३९)
जवेन महता चैव गोपालाः पुरमाव्रजन् ।
विराटनगरं प्राप्य नरा राजानमब्रुवन् ॥ १२ ॥ ४-३३-१२ (२९७४०)
सभायां राजशार्दूलमासीनं पाण्डवैः सह ।
शूरैः परिवृतं योधैः कुण्डलाङ्गदधारिभिः ॥ १३ ॥ ४-३३-१३ (२९७४१)

सद्भिश्च पण्डितैः सार्धं मन्त्रिभिश्चापि संवृतम् ।
दृष्ट्वा शीघ्रं तु गोपाला विराटमिदमब्रवन् ॥ १४ ॥ ४-३३-१४ (२९७४२)
अस्मान्युधि विनिर्जित्य परिभूय सबान्धवान् ।
षष्टिं गवां सहस्राणि त्रिगर्ताः कालयन्ति ।
ता निवर्तय राजेन्द्र मा नेशुः पशवस्तव ॥ १५ ॥ ४-३३-१५ (२९७४३)
वैशंपायन उवाच। ४-३३-१६क्ष् (३१३०)
श्रुत्वा तु वचनं तेषां गोपालानामरिंदमः ।
स राजा महतीं सेनां मात्स्यानां समवाहयत् ।
रथनागाश्वकलिलां पत्तिध्वजसमाकुलाम् ॥ १६ ॥ ४-३३-१६ (२९७४४)
राजानो राजपुत्राश्च तनुत्राण्यथ भेजिरे ।
भानुमन्ति विवातानि सूपसेव्यानि भागशः ॥ १७ ॥ ४-३३-१७ (२९७४५)
पृथक्काञ्चनसन्नाहान्रथेष्वश्वानयोजयन् ।
उत्कृष्य पाशान्मौर्वीणां शूराश्चापेष्वयोजयन् ॥ १८ ॥ ४-३३-१८ (२९७४६)
दृढमायसगर्भं तु कवचं तप्तकाञ्चनम् ।
विराटस्य प्रियो भ्राता शतानीकोऽभ्यहारयत् ॥ १९ ॥ ४-३३-१९ (२९७४७)
सर्वभारसहं वर्म कल्याणपटलं दृढम् ।
शतानीकादवरजो मदिराक्षोऽभ्यहारयत् ॥ २० ॥ ४-३३-२० (२९७४८)
उत्सेधे यस्य पद्मानि शतं सौगन्धिकानि च ।
मृष्टहाटकपर्यन्तं सूर्यदत्तोऽभ्यहारयत् ॥ २१ ॥ ४-३३-२१ (२९७४९)
दृढमायसगर्भं च श्वेतं रुक्मपरिष्कृतम् ।
विराटस्य सुतो ज्येष्ठो वीरः शङ्खोऽभ्यहारयत् ॥ २२ ॥ ४-३३-२२ (२९७५०)
शतसूर्यं शतावर्तं शतबिन्दु शताक्षिमत् ।
अभेद्यकल्पं मत्स्यानां राजा कवचमाहरत् ॥ २३ ॥ ४-३३-२३ (२९७५१)
ततो नानातनुत्राणि स्वानिस्वानि महाबलाः ।
युयुत्सवोऽभ्यनह्यन्त देवकल्पाः प्रहारिणः ॥ २४ ॥ ४-३३-२४ (२९७५२)
सोपस्करेषु शुभ्रेषु महत्सु च महारथाः ।
पृथक्काञ्चनसन्नाहान्रथेष्वश्वानयोजयन् ॥ २५ ॥ ४-३३-२५ (२९७५३)
सूर्यचन्द्रप्रतीकाशे मणिहेमविभूषिते ।
महाप्रमाणं मत्स्यस्य ध्वजमुच्छ्रियते रथे ॥ २६ ॥ ४-३३-२६ (२९७५४)
ध्वजान्बहुविधाकारान्सौवर्णान्हेममालिनः ।
यथास्वं क्षत्रियाः शूरा रथेषु समयोजयन् ॥ २७ ॥ ४-३३-२७ (२९७५५)
रथेषु युज्यमानेषु कङ्को राजानमब्रवीत् ।
मया ह्यस्त्रं चतुर्वर्गमवाप्तमृषिसत्तमात् ॥ २८ ॥ ४-३३-२८ (२९७५६)
दंशितो रथमास्थाय पदं निर्याम्यहं गवाम् ।
अयं च बलवाञ्छूरो वललो दृश्यतेऽनघ ॥ २९ ॥ ४-३३-२९ (२९७५७)
गोसङ्ख्यमश्वबन्धं च संयोजय रथेषु वैः ।

नैतेन जातु युध्येयुर्गवार्थमिति मे मतिः ॥ ३० ॥ ४-३३-३० (२९७५८)
वैशंपायन उवाच। ४-३३-३१क्ष् (३१३१)
अथ मात्स्योऽब्रवीद्राजा शतानीकं जघन्यजम् ।
कङ्कश्च वललः सूदो दामग्रन्थिश्च वीर्यवान् ॥ ३१ ॥ ४-३३-३१ (२९७५९)
तन्त्रिपालश्च गोसङ्ख्यो यथा ते पुरुषर्षभाः ।
शूराः सुवीराः पुरुषा नागराजवरोपमाः ।
युद्ध्येयुरिति मे बुद्धिर्वर्तते नात्र संशयः ॥ ३२ ॥ ४-३३-३२ (२९७६०)
एतेषामपि दीयन्तां रथा ध्वजपताकिनः ।
कवचानि विचित्राणि दृढानि च लघूनि च ॥ ३३ ॥ ४-३३-३३ (२९७६१)
प्रतिमुञ्चन्तु गात्रेषु दीयन्तामायुधानि च ।
नेमे जातु न युद्ध्येयुरिति मे धीयते मतिः ॥ ३४ ॥ ४-३३-३४ (२९७६२)
वैशंपायन उवाच। ४-३३-३५क्ष् (३१३२)
तच्छ्रुत्वा नृपतेर्वाक्यं शीघ्रं त्वरितमानसः ।
शतानीकः स पार्थभ्यो रथान्राजन्समादिशत् ॥ ३५ ॥ ४-३३-३५ (२९७६३)
सहदेवाय राज्ञे च भीमाय नकुलाय च ।
तान्दृष्ट्वा सहसा सूता राजभक्तिपुरस्कृताः ॥ ३६ ॥ ४-३३-३६ (२९७६४)
निर्दिष्टा नरदेवेन रथाञ्छीघ्रमयोजयन् ।
कवचानि विचित्राणि नवानि च दृढानि च ॥ ३७ ॥ ४-३३-३७ (२९७६५)
विराटः प्रददौ यानि तेषामक्लिष्टकर्मणाम् ।
तान्यामुच्य शरीरेषु दंशितास्ते महारथाः ॥ ३८ ॥ ४-३३-३८ (२९७६६)
तरस्विनश्छन्नरूपाः सर्वशस्त्रविशारदाः ।
रथान्हेमपरिष्कारान्समास्थाय महारथाः ।
पाण्डवा निर्ययुर्हृष्टा दंशिता राजसत्तम ॥ ३९ ॥ ४-३३-३९ (२९७६७)
विराटमन्वयुः पश्चात्सहिताः कुरुपुङ्गवाः ।
चत्वारो भ्रातरः शूराः पाण्डवाः सत्यविक्रमाः ॥ ४० ॥ ४-३३-४० (२९७६८)
दीर्घानां च दृढानां च धनुषां ते यथाबलम् ।
उत्कृष्य पाशान्मौर्वीणां वीराश्चापेष्वयोजयन् ॥ ४१ ॥ ४-३३-४१ (२९७६९)
ततः सुवाससः सर्वे वीराश्चन्दनरूषिताः ।
चोदिता नरदेवेन क्षिप्रमश्वानचोदयन् ॥ ४२ ॥ ४-३३-४२ (२९७७०)
ते हया हेमसंच्छन्ना बृहन्तः साधुवाहिनः ।
चोदिताः प्रत्यदृश्यन्त पत्रिणामिव पङ्क्तयः ॥ ४३ ॥ ४-३३-४३ (२९७७१)
भीमरूपाश्च मातङ्गाः प्रभिन्नकरटामुखाः ।
स्वारूढा युद्धकुशलैर्महामात्राधिरोहिताः ॥ ४४ ॥ ४-३३-४४ (२९७७२)
क्षरन्त इव जीमूताः सुदन्ताः षाष्टिहायनाः ।
राजानमन्वयुः पश्चात्क्रामन्त इव पर्वताः ॥ ४५ ॥ ४-३३-४५ (२९७७३)
दृढायुधजनाकीर्णं रथाश्वगजसंकुलम् ।

तद्बलाग्रं विराटस्य शक्रस्येव तदा बभौ ॥ ४६ ॥ ४-३३-४६ (२९७७४)
तं प्रयान्तं महाराज निनीषन्तं गवां पदम् ।
विशारदानां वैश्यानां प्रकृष्टानां तदा नृप ॥ ४७ ॥ ४-३३-४७ (२९७७५)
विंशतिस्तु सहस्राणि नराणामनुयायिनाम् ।
अष्टौ रथसहस्राणि दश नागशतानि च ।
विंशच्चाश्वसहस्राणि मात्स्यानां त्वरितं ययुः ॥ ४८ ॥ ४-३३-४८ (२९७७६)
तदनीकं विराटस्य शुशुभेऽतीव भारत ।
वसन्ते बहुपुष्पाढ्यं काननं चित्रितं यथा ॥ ४९ ॥ ॥ ४-३३-४९ (२९७७७)

इति श्रीमन्महाभारते विराटपर्वणि गोग्रहाणपर्वणि
त्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥

---

विरतपर्व-अध्यय०३४
॥ श्रीः ॥
४.३४. अध्यायः ३४

Mahabharata - Virata Parva - Chapter Topics
विराटसुशर्मसैन्ययोर्युद्धम् ॥ १ ॥
युधिष्ठिरादिनिहतानां परिसङ्ख्यानम् ॥ २ ॥
विराटसुशर्मणोर्युद्धम् ॥ ३ ॥

Mahabharata - Virata Parva - Chapter Text

४-३४-० (२९७७८)
वैशंपायन उवाच। ४-३४-०क्ष् (३१३३)
निर्याय नगराच्छूरा व्यूढानीकाः प्रहारिणः ।
त्रिगर्तानस्पृशन्मात्स्याः सूर्येऽस्तंगमिते सति ॥ १ ॥ ४-३४-१ (२९७७९)
ते त्रिगर्ताश्च मात्स्याश्च व्यूढानीकाः प्रहारिणः ।
अन्योन्यमभिवर्तन्ते गोषु गृद्धा महाबलाः ॥ २ ॥ ४-३४-२ (२९७८०)
भीमाश्च मत्तमातङ्गास्तोमराङ्कुशचोदिताः ।
ग्रामणीयैः समारूढाः कुशलैर्हस्तिसादिभिः ॥ ३ ॥ ४-३४-३ (२९७८१)
तेषां समागमो घोरस्तुमुलो रोमहर्षणः ।
घ्नतां परस्परं राजन्यमराष्ट्रविवर्धनः ॥ ४ ॥ ४-३४-४ (२९७८२)
देवासुरसमो राजन्नासीत्सूर्येऽवलम्बति ।
पदातिरथनागेन्द्रहयारोहबलौघवान् ॥ ५ ॥ ४-३४-५ (२९७८३)
अन्योन्यमभ्यापततां निघ्नतां चेतरेतरम् ।
उदतिष्ठद्रजो भौमं न प्राज्ञायत किंचन ॥ ६ ॥ ४-३४-६ (२९७८४)

पक्षिणश्चापतन्भूमौ सैन्येन रजसा वृताः ।
इषुभिर्व्यतिसर्पद्भिरादित्योऽन्तरधीयत ॥ ७ ॥ ४-३४-७ (२९७८५)
खद्योतैरिव संयुक्तमन्तरिक्षमजायत ॥ ८ ॥ ४-३४-८ (२९७८६)
रुक्मपृष्ठानि चापानि विचेरुर्विद्युतो यथा ।
नर्दतां लोकवीराणां सव्यं दक्षिणमस्यताम् ॥ ९ ॥ ४-३४-९ (२९७८७)
रथा रथैः समाजग्मुः पत्तयश्च पदातिभिः ।
सादिनः सादिभिर्जग्मुर्गजैश्चापि महागजाः ॥ १० ॥ ४-३४-१० (२९७८८)
असिभिः पट्टसैश्चापि शक्तिभिस्तोमरैरपि ।
संरब्धाः समरे योधा निजघ्नुरितरेतरम् ॥ ११ ॥ ४-३४-११ (२९७८९)
निघ्नन्तः समरेऽन्योन्यं हृष्टाः परिघपाणयः ।
न शेकुरतिसंक्रुद्धाः शूराः कर्तुं पराङ्भुखम् ॥ १२ ॥ ४-३४-१२ (२९७९०)
रक्ताधरोष्टं सुनसं क्लृप्तश्मश्रु स्वलंकृतम् ।
अदृश्यत शिरश्छिन्नं रजोविध्वस्तकुण्डलम् ॥ १३ ॥ ४-३४-१३ (२९७९१)
दृश्यन्ते तत्र गात्राणि वीरैश्छिन्नानि सर्वशः ।
सालस्कन्धनिकाशानि क्षत्रियाणा महामृधे ॥ १४ ॥ ४-३४-१४ (२९७९२)
नागभोगनिकाशैश्च बाहुभिश्चन्दनोक्षितैः ।
आकीर्णा वसुधा तत्र शिरोभिश्च सकुण्डलैः ॥ १५ ॥ ४-३४-१५ (२९७९३)
यथा वा वाससी श्लक्ष्णे महारजतरञ्जिते ।
बिभ्रती युवती श्यामा तद्वद्भाति वसुन्धरा ॥ १६ ॥ ४-३४-१६ (२९७९४)
उपाशाम्यद्रजो भौमं रुधिरेण प्रवर्षता ।
कश्मलं प्राविशद्धोरं निर्मर्यादमवर्तत ॥ १७ ॥ ४-३४-१७ (२९७९५)
युधिष्ठिरोऽपि धर्मात्मा भ्रातृभिः सहितस्तदा ।
व्यूहं कृत्वा विराटस्य अन्वयुध्यत पाण्डवः ॥ १८ ॥ ४-३४-१८ (२९७९६)
आत्मानं श्येनवत्कृत्वा तुण्डमासीद्युधिष्ठिरः ।
पक्षौ यमौ च भवतः पुच्छमासीद्वृकोदरः ॥ १९ ॥ ४-३४-१९ (२९७९७)
सहस्रं न्यहनत्तत्र कुन्तीपुत्रो युधिष्ठिरः ।
भीमसेनस्तु संक्रुद्धः सर्वशस्त्रभृतांवरः ।
द्विसहस्रं रथान्वीरः परलोकं प्रवेशयत् ॥ २० ॥ ४-३४-२० (२९७९८)
नकुलस्त्रिशतं जघ्ने सहदेवश्चतुःशतम् ।
शतानीकः शतं जघ्ने मदिराश्वश्चतुःशतम् ॥ २१ ॥ ४-३४-२१ (२९७९९)
प्रहृष्टां महतीं सेनां त्रिगर्तानां महाबलौ ।
आर्च्छतां बहुसंरब्धौ केशाकेशि रथारथि ॥ २२ ॥ ४-३४-२२ (२९८००)
लक्षयित्वा त्रिगर्तानां तौ प्रविष्टौ महाचमूम् ।
जग्मतुः सूर्यदत्तश्च वललश्चापि पृष्ठतः ॥ २३ ॥ ४-३४-२३ (२९८०१)
शङ्खो विराटपुत्रश्च महेष्वासो महाबलः ।
विनिघ्नन्समरे शूरान्प्रविवेश महाचमूम् ॥ २४ ॥ ४-३४-२४ (२९८०२)

विराटस्तत्र संग्रामे हत्वा पञ्चशतं रथान् ।
कुञ्जराणां शतं चैव सहस्रं वाजिनां तथा ॥ २५ ॥ ४-३४-२५ (२९८०३)
चरन्स विविधान्मार्गान्रथेन रथिनांवरः ।
त्रिगर्तानां सुशर्माणमार्च्छद्रुक्मरथं रणे ॥ २६ ॥ ४-३४-२६ (२९८०४)
तौ तु प्राहरतां तत्र महेष्वासौ महाबलौ ।
अन्योन्यमभिनिघ्नन्तौ गोषु गोवृषभाविव ॥ २७ ॥ ४-३४-२७ (२९८०५)
राजसिंहौ सुसंरब्धौ विरेजतुरमर्षणौ ।
कृतास्त्रौ निशितैर्बाणैरसिशक्तिपरश्वथैः ॥ २८ ॥ ४-३४-२८ (२९८०६)
ततो रथाभ्यां रथिनौ व्यतीयातां समन्ततः ।
शरान्ससृजतुः शीघ्रं तोयधारा घनाविव ॥ २९ ॥ ४-३४-२९ (२९८०७)
अन्योन्यमभिसंरब्धौ दन्ताभ्यामिव कुञ्जरौ ।
कृतास्त्रौ निशितैर्बाणैर्दारयामासतू रणे ॥ ३० ॥ ४-३४-३० (२९८०८)
मात्स्यो राजा सुशर्माणं विव्याध निशितैः शरैः ।
पञ्चभिः पञ्चभिर्बाणैर्विव्याध चतुरो हयान् ॥ ३१ ॥ ४-३४-३१ (२९८०९)
द्वाभ्यां सूतं च विव्याध केतुं च त्रिभिराशुगैः ।
तथैव मात्स्यराजं तु सुशर्मा युद्धदुर्मदः ।
पञ्चाशद्भिः शितैर्बाणैविव्याध परमास्त्रवित् ॥ ३२ ॥ ४-३४-३२ (२९८१०)
तयोर्बलानि राजेन्द्र समस्तानि महारणे ।
नाजानन्त तदाऽन्योन्यं प्रदोषे रजसा वृते ॥ ३३ ॥ ॥ ४-३४-३३ (२९८११)

इति श्रीमन्महाभारते विराटपर्वणि गोग्रहणपर्वणि
चतुस्त्रिंशोऽध्यायः ॥ ३४ ॥

---

विरतपर्व-अध्यय०३५
॥ श्रीः ॥
४.३५. अध्यायः ३५

Mahabharata - Virata Parva - Chapter Topics
सुशर्मणा युद्धे विराटस्य ग्रहणम् ॥ १ ॥
भीमेन युधिष्ठिरचोदनया विराटस्य मोचनपूर्वकं सुशर्मणो
बन्धनम् ॥ २ ॥
युधिष्ठिरेण करुणया सुशर्मणो विमोक्षणम् ॥ ३ ॥

Mahabharata - Virata Parva - Chapter Text

४-३५-० (२९८१२)
वैशंपायन उवाच। ४-३५-०क्ष् (३१३४)

तमसाऽभिप्लुते लोके रजसा चैव भारत ।
व्यतिष्ठन्त मुहूर्तं ते व्यूढानीकाः प्रहारिणम् ॥ १ ॥ ४-३५-१ (२९८१३)
ततोऽन्धकारं प्रणुदन्नुदतिष्ठन्निशाकरः ।
कुर्वाणो विमलां रात्रिं दर्शयन्क्षत्रियान्रणे ॥ २ ॥ ४-३५-२ (२९८१४)
ततः प्रकाशमासाद्य पुनर्युद्धमवर्तत ।
घोररूपं तदा तेषामवेक्ष्य तु परस्परम् ॥ ३ ॥ ४-३५-३ (२९८१५)
तथैव तेषां तुमुलानि तानि क्रुद्धानि चान्योन्यमभिद्रवन्ति ।
गदासिपट्टैश्च परश्वथैश्च प्रासैश्च तीक्ष्णाग्रसुधौतधारैः
॥ ४ ॥ ४-३५-४ (२९८१६)
बलं तु मात्स्यस्य बलेन राजा सर्वं त्रिगर्ताधिपतिः सुशर्मा ।
प्रमथ्य जित्वा च निपीड्य मत्स्यान्विराटमोजस्विनमभ्यधावत् ॥ ५
॥ ४-३५-५ (२९८१७)
मत्ताविव वृषौ तौ तु गजाविव मदोद्धतौ ।
सिंहाविव गजग्राहौ शक्रवृत्राविवोद्धतौ ॥ ६ ॥ ४-३५-६ (२९८१८)
उभौ तुल्यबलोत्साहावुभौ तुल्यपराक्रमौ ।
उभौ तुल्यास्त्रविक्षेपावुभौ युद्धविशारदौ ॥ ७ ॥ ४-३५-७ (२९८१९)
तौ निहत्य पृथग्धुर्यानुभयोः पार्ष्णिसारथी ।
आस्तां तुल्यधनुर्ग्राहौ कृष्णकंसाविवोद्धतौ ॥ ८ ॥ ४-३५-८ (२९८२०)
ततः सुशर्मा त्रैगर्तः सह भ्रात्रा सुवर्मणा ।
अभ्यद्रवन्मत्स्यराजं रथव्रातेन सर्वशः ॥ ९ ॥ ४-३५-९ (२९८२१)
ततो रथाभ्यां प्रस्कन्द्य भ्रातरौ क्षत्रियर्षभौ ।
गदापाणी सुसंरब्धौ समभ्यद्रवतां जवात् ॥ १० ॥ ४-३५-१० (२९८२२)
सुशर्मा परवीरघ्नो बलवान्वीर्यवान्गदी ।
विरथं मत्स्यराजानं जीवग्राहमथाग्रहीत् ॥ ११ ॥ ४-३५-११ (२९८२३)
तमुन्मथ्य सुशर्मा तु युवतीमिव कामुकः ।
स्यन्दनं स्वं समारोप्य प्रययौ भीमविक्रमः ॥ १२ ॥ ४-३५-१२ (२९८२४)
तस्मिन्गृहीते विरथे विराटे बलवत्तरे ।
बलं सर्वं विभग्नं तन्निरुत्साहं निराशकम् ॥ १३ ॥ ४-३५-१३ (२९८२५)
प्राद्रवन्त भयान्मात्स्यास्त्रिगर्तैरर्दिता रणे ।
विदिक्षुः दिक्षु सर्वासु पलायन्ति च यान्ति च ॥ १४ ॥ ४-३५-१४ (२९८२६)
तेषु विद्रांव्यमाणेषु कुन्तीपुत्रो युधिष्ठिरः ।
अभ्यभाषत धर्मात्मा भिमसेनमरिन्दमम् ॥ १५ ॥ ४-३५-१५ (२९८२७)
मात्स्यराजस्त्रिगर्तेन परामृष्टः सुशर्मणा ।
तं मोक्षय महाबाही मा गमद्द्विषतां वशम् ॥ १६ ॥ ४-३५-१६ (२९८२८)
भीमसेनः महाबाहो गृहीतं तु सुशर्मणा ।
त्रायस्व मोचय क्षिप्रमस्मत्प्रीतिकरं नृपम् ॥ १७ ॥ ४-३५-१७ (२९८२९)

उषिताः स्म सुखं सर्वे सर्वकामैः सुपूजिताः ।
भीमसेन त्वया कार्या तस्य वातस्य निष्कृतिः ॥ १८ ॥ ४-३५-१८ (२९८३०)
वैशंपायन उवाच। ४-३५-१९क्ष् (३१३५)
तं तथावादिनं तत्र भीमसेनो महाबलः ।
अभ्यभाषत दुर्धर्षो रणमध्ये युधिष्ठिरम् ॥ १९ ॥ ४-३५-१९ (२९८३१)
अहमेनं परित्रास्ये शासनात्तव पार्थिव ।
पश्येदं सुमहत्कर्म युध्यतो मम शत्रुभिः ॥ २० ॥ ४-३५-२० (२९८३२)
स्वबाहुबलमाश्रित्य परेषामसमं रणे ।
एकान्तमाश्रितो राजंस्तिष्ठ त्वं भ्रातृभिः सह ॥ २१ ॥ ४-३५-२१ (२९८३३)
अयं वृक्षो महाशाखो गिरिमात्रो वनस्पतिः ।
अहमेनं समारुज्य पोथयिष्यामि शात्रवान् ॥ २२ ॥ ४-३५-२२ (२९८३४)
वैशंपायन उवाच। ४-३५-२३क्ष् (३१३६)
तं मत्तमिव मातङ्गं वीक्षमाणं वनस्पतिम् ।
अब्रवीद्भ्रातरं वीरं धर्मराजो युधिष्ठिरः ॥ २३ ॥ ४-३५-२३ (२९८३५)
भीम मा साहसं कार्षीस्तिष्ठत्वेष वनस्पतिः ॥ २४ ॥ ४-३५-२४ (२९८३६)
मा त्वां वृक्षेण कर्माणि कुर्वन्तमतिमानुषम् ।
जनाः समवबुध्येरन्भीमोऽयमिति भारत ॥ २५ ॥ ४-३५-२५ (२९८३७)
मा ग्रहीस्त्वमिमं वृक्षं सिंहनादं च मा नद ।
कर्मणा सिंहनादेन विज्ञास्यन्ति जना ध्रुवम् ॥ २६ ॥ ४-३५-२६ (२९८३८)
इमं वृक्षं गृहीत्वा त्वं नेमां सेनामभिद्रव ।
वृक्षं च त्वां रुजन्तं वै विज्ञास्यति जनो ध्रुवं ॥ २७
॥ ४-३५-२७ (२९८३९)
अन्यदेवायुधं गृह्य प्रतिपद्यस्व मानुषम् ।
चापं वा यदि वा शक्तिं निस्त्रिंशं वा परश्वथम् ॥ २८ ॥ ४-३५-२८ (२९८४०)
यदेव मानुषं भीम भवेदन्यैरलक्षितम् ।
तदेवायुधमादाय मोचयाशु महीतिम् ॥ २९ ॥ ४-३५-२९ (२९८४१)
यमौ च चक्ररक्षौ ते भवितारौ महाबलौ ।
व्यायच्छतस्ते समरे मत्स्यराजं परीप्सतः ॥ ३० ॥ ४-३५-३० (२९८४२)
वैशंपायन उवाच। ४-३५-३१क्ष् (३१३७)
भ्रातुर्वचनमादाय भीमो वृक्षं विसृज्य च ।
चापमादाय संप्राप्तो रथमास्थाय पाण्डवः ॥ ३१ ॥ ४-३५-३१ (२९८४३)
व्यमुञ्चच्छरवर्षाणि सतोय इव तोयदः ।
तं भीमो भीमकर्माणं शुशर्माणमथाऽऽद्रवत् ॥ ३२ ॥ ४-३५-३२ (२९८४४)
विराटमभिवीक्ष्यैनं तिष्ठितिष्ठेति चावदत् ॥ ३३ ॥ ४-३५-३३ (२९८४५)
सुशर्मा चिन्तयामास कालान्तकयमोपमम् ।
तिष्ठतिष्ठेति भाषन्तं पृष्ठतो रथपुङ्गवः ॥ ३४ ॥ ४-३५-३४

(२९८४६)
पश्यतां सुमहत्कर्म महद्युद्धमुपस्थितम् ।
परावृत्तो धनुर्गृह्य सुशर्मा भ्रातृभिः सह ॥ ३५ ॥ ४-३५-३५ (२९८४७)
निमेषान्तरमात्रेण भीमसेनेन ते रथाः ।
रथानां च गजानां च वाजिनां च ससादिनां ॥ ३६ ॥ ४-३५-३६ (२९८४८)
सहस्रशतसंघाताः शूराणामुग्रधन्विनाम् ।
पातिता भीमसेनेन विराटस्य समीपतः ॥ ३७ ॥ ४-३५-३७ (२९८४९)
पत्तयो निहतास्तेषां गदां गृह्य महात्मना ॥ ३८ ॥ ४-३५-३८ (२९८५०)
तद्दृष्ट्वा तादृशं युद्धं सुशर्मा युद्धदुर्मदः ।
चिन्तयामास मनसा किं शेषं हि बलस्य मे ॥ ३९ ॥ ४-३५-३९ (२९८५१)
अपरो दृश्यते सैन्ये पुरा मग्नो महाबले ।
आकर्णपूर्णेन तदा धनुषा प्रत्यदृश्यत ॥ ४० ॥ ४-३५-४० (२९८५२)
सुशर्मा सायकांस्तीक्ष्णान्क्षिपते च पुनःपुनः ॥ ४१ ॥ ४-३५-४१ (२९८५३)
ततः समस्तास्ते सर्वे तुरगानभ्यचोदयन् ।
दिव्यमस्त्रं विकुर्वाणास्त्रिगर्तान्प्रत्यमर्षणाः ॥ ४२ ॥ ४-३५-४२ (२९८५४)
तान्निवृत्तरथान्दृष्ट्वा पाण्डवास्तां महाचमूम् ।
वैराटिः परमक्रुद्धो युयुधे परमाद्भुतम् ॥ ४३ ॥ ४-३५-४३ (२९८५५)
त्रिगर्ताः समभिक्रम्य अयुध्यन्त जयैषिणः ।
तान्भीमसेनः संक्रुद्धः सर्वशस्त्रभृतांवरः ।
वैराटिः परमक्रुद्धो युयुधे परमाद्भुतम् ॥ ४४ ॥ ४-३५-४४ (२९८५६)
सहस्रं प्राहिणीद्राजा कुन्तीपुत्रो युधिष्ठिरः ।
नकुलश्चापि सप्तैव शतानि प्राहिणोच्छरैः ॥ ४५ ॥ ४-३५-४५ (२९८५७)
शतानि त्रीणि शूराणां सहदेवः प्रतापवान् ।
युधिष्ठिरसमादिष्टो निजघ्ने पुरुषर्षभः ॥ ४६ ॥ ४-३५-४६ (२९८५८)
प्रविश्य महतीं सेनां त्रिगर्तानां महाबलः ।
क्षोभयन्सर्वभूतानि सिंहः क्षुद्रमृगानिव ॥ ४७ ॥ ४-३५-४७ (२९८५९)
ततो युधिष्ठिरो राजा त्वरमाणो महाबलः ।
अभिद्रुत्य सुशर्माणं शरैरभ्यहनद्भृशम् ॥ ४८ ॥ ४-३५-४८ (२९८६०)
सुशर्माऽपि सुसंक्रुद्धस्त्वराणो युधिष्ठिरम् ।
अविध्यद्दशभिर्बाणैश्चतुर्भिश्चतुरो हयान् ॥ ४९ ॥ ४-३५-४९ (२९८६१)
ततो राजन्क्षिप्रकारी कुन्तीऽपुत्रो वृकोदरः ।
समासाद्य सुशर्माणमश्वांस्तस्य न्यपातयत् ॥ ५० ॥ ४-३५-५० (२९८६२)
पृष्ठगोषौ च तस्याथ हत्वा परमसायकैः ।
अथास्य सारथिं क्रुद्धो रथोपस्थादपतयत् ॥ ५१ ॥ ४-३५-५१ (२९८६३)
चक्ररक्षस्तु शूरश्च शोणाश्वो नाम नामतः ।
स भयाद्विरथं दृष्ट्वा त्रैगर्तं व्याजहात्तदा ॥ ५२ ॥ ४-३५-५२ (२९८६४)

ततो विराटः प्रस्कन्द्य रथादथ सुशर्मणः ।
गदामस्य परामृश्य तमेवाभ्यहनद्बली ॥ ५३ ॥ ४-३५-५३ (२९८६५)
स चचार गदापाणिर्वृद्धोऽपि तरुणो यथा ॥ ५४ ॥ ४-३५-५४ (२९८६६)
भीमस्तु भीमसंकाशो रथात्प्रस्कन्द्य वीर्यवान् ।
उत्प्लुत्य गत्वा वेगेन तद्रथे विनिपत्य च ।
सुशर्मणः शिरोऽगृह्णात्पुनराश्वास्य युध्यतः ॥ ५५ ॥ ४-३५-५५ (२९८६७)
अग्राद्गिरेर्विनिक्षिप्य सिंहः क्षुद्रमृगं यथा ।
ऊर्ध्वमुत्प्लृत्य मार्जार आखोर्यद्वच्छिरो रुषा ॥ ५६ ॥ ४-३५-५६ (२९८६८)
समुद्यम्य तु रोषात्तं निष्पिपेष महीतले ।
यदा मूर्ध्नि महाबाहुः प्राहरद्विलपिष्यतः ॥ ५७ ॥ ४-३५-५७ (२९८६९)
तस्य जानु ददौ भीमो जघ्ने चैनमरत्निना ।
स मोहमगमद्राजा प्रहारवरपीडितः ॥ ५८ ॥ ४-३५-५८ (२९८७०)
तस्मिन्वीरे गृहीते तु त्रिगर्तानां महारथे ।
अभज्यत बलं सर्वं त्रिगर्तानां भयातुरम् ॥ ५९ ॥ ४-३५-५९ (२९८७१)
निवृत्य गास्ततः सर्वाः पाण्डुपुत्रा महारथाः ।
अवजित्य सुशर्माणं धनं चादाय सर्वशः ॥ ६० ॥ ४-३५-६० (२९८७२)
स्वबाहुबलसंपन्ना ह्रीनिषेवा यतव्रताः ।
विराटस्य महात्मानः परिक्लेशविनाशनाः ।
स्थिताः समक्षं ते सर्वे त्वथ भीमोऽभ्यभाषत ॥ ६१ ॥ ४-३५-६१
(२९८७३)
नायं पापसमाचारो मत्तो जीवितुमर्हति ।
किंनु शक्यं मया कर्तुं यद्राजा सततं घृणी ।
गले गृहीत्वा राजानमानीय विवशं वशम् ॥ ६२ ॥ ४-३५-६२ (२९८७४)
तत एनं विचेष्टन्तं बद्ध्वा पार्थो वृकोदरः ।
रथमारोपयामास विसंज्ञं पांसुगुण्ठितम् ॥ ६३ ॥ ४-३५-६३ (२९८७५)
अभ्येत्य रणमध्यस्थमभ्यगच्छद्युधिष्ठिरम् ।
दर्शयामास भीमस्तु सुशर्माणं नराधिपम् ॥ ६४ ॥ ४-३५-६४ (२९८७६)
प्रोवाच पुरुषव्याघ्रो भीममाहवशोभिनम् ।
तं राजा प्राहसद्दृष्ट्वा मुच्यतां वै नराधमः ॥ ६५ ॥ ४-३५-६५ (२९८७७)
एवमुक्तोऽब्रवीद्भीमः सुशर्माणं महाबलम् ।
जीवितुं चेच्छसे मूढ हेतुं मे गदतः शृणु ॥ ६६ ॥ ४-३५-६६ (२९८७८)
दासोस्मीति त्वया वाच्यं संसत्सु च सभासु च ।
एवं ते जीवितं दद्यामेष युद्धजितो विधिः ॥ ६७ ॥ ४-३५-६७ (२९८७९)
तमुवाच ततो ज्येष्ठो भ्राता सप्रणयं वचः ।
मुञ्चमुञ्चाधमाचारं प्रमाणं यदि ते वयम् ॥ ६८ ॥ ४-३५-६८ (२९८८०)
दासभावं गतो ह्येष विराटस्य महीपतेः ।

अदासो गच्छ मुक्तोसि मैवं कार्षीः कदाचन ॥ ६९ ॥ ४-३५-६९ (२९८८१)
एवमुक्ते तु सव्रीडः सुशर्माऽसीदधोमुखः ।
स मुक्तोऽभ्येत्य राजानमभिवाद्य प्रतस्थिवान् ॥ ७० ॥ ४-३५-७० (२९८८२)
विसृज्य तु सुशर्माणं पाण्डवास्ते हतद्विषः ।
स्वबाहुबलसंपन्ना ह्रीनिषेवा यतव्रताः ।
संग्रामशिरसो मध्ये तां रात्रिं सुखिनोऽवसन् ॥ ७१ ॥ ४-३५-७१ (२९८८३)
॥ श्रीमन्महाभारते विराटपर्वणि गोग्रहणपर्वणि
पञ्चत्रिंशोऽध्यायः ॥ ३५ ॥
Mahabharata - Virata Parva - Chapter Footnotes

४-३५-२ नन्दयन्क्षत्रियानिति थो पाठः ॥
२ ॥

---

विरतपर्व-अध्यय०३६
॥ श्रीः ॥
४.३६. अध्यायः ३६

Mahabharata - Virata Parva - Chapter Topics
युधिष्ठिरचोदनया विराटप्रेषितैर्दूतैर्नगरमेत्य जयोद्घोषणम् ॥ १ ॥

Mahabharata - Virata Parva - Chapter Text

४-३६-० (२९८८४)
वैशंपायन उवाच। ४-३६-०क्ष् (३१३८)
ततो विराटः कौन्तेयानतिमानुषविक्रमान् ।
अर्चयामास वित्तेन मानेन च महारथान् ।
वचसा चैव सान्त्वेन स्नेहेन च मुदाऽन्वितः ॥ १ ॥ ४-३६-१ (२९८८५)
विराट उवाच। ४-३६-२क्ष् (३१३९)
यथैव मम रत्नानि युष्माकं तानि वै तथा ।
कार्यं कुरुत तैः सर्वैर्यथाकामं यथासुखम् ॥ २ ॥ ४-३६-२ (२९८८६)
ददाम्यलंकृताः कन्या वसूनि विविधानि च ।
मनसा चाप्यभिप्रेतं यद्वः शत्रुनिबर्हणाः ॥ ३ ॥ ४-३६-३ (२९८८७)
युष्माकं विक्रमादद्य मुक्तोऽहं स्वस्तिमानिह ।
तस्माद्भवन्तो मत्स्यानामीश्वराः सर्व एव हि ॥ ४ ॥ ४-३६-४ (२९८८८)
वैशंपायन उवाच। ४-३६-५क्ष् (३१४०)
तं तथावादिनं तत्र कौरवेयाः पृथक्पृथक् ।
ऊचुः प्रहृष्टमनसो युधिष्ठिरपुरोगमाः ॥ ५ ॥ ४-३६-५ (२९८८९)

प्रतिनन्दामहे वाचं सर्वथैव विशांपते ।
एतावताऽद्य प्रीताःस्मो यत्त्वं मुक्तोसि शत्रुभिः ॥ ६ ॥ ४-३६-६ (२९८९०)
यत्त्वं मुक्तोसि शत्रुभ्यो ह्येतत्कार्यं हितं हि नः ।
न किंचित्कार्यमस्माकं न धनं मृगयामहे ॥ ७ ॥ ४-३६-७ (२९८९१)
अथाब्रवीत्प्रीतमना मात्स्यराजो युधिष्ठिरम् ।
निर्भरः प्रीतिपूरेण हर्षगद्गदया गिरा ॥ ८ ॥ ४-३६-८ (२९८९२)
पुनरेव महाबाहुर्विराटो राजसत्तमः ।
एहि त्वामभिषेक्ष्यामि मत्स्यराजस्तु नो भवान् ॥ ९ ॥ ४-३६-९ (२९८९३)
मनसा चाप्यभिप्रेतं यत्ते शत्रुनिबर्हण ।
तत्तेऽहं संप्रदास्यामि सर्वमर्हति नो भवान् ॥ १० ॥ ४-३६-१० (२९८९४)
रत्नानि गाः सुवर्णं च मणिमुक्तमथापि वा ।
वैयाघ्रपद्य विप्रेन्द्र सर्वथैव नमोस्तु ते ॥ ११ ॥ ४-३६-११ (२९८९५)
त्वत्कृते ह्यद्य पश्यामि राज्यमात्मानमेव च ।
यतश्च जातः संरम्भः स च शत्रुर्वशं गतः ॥ १२ ॥ ४-३६-१२ (२९८९६)
ततो युधिष्ठिरो मात्स्यं पुनरेवाब्रवीद्वचः ।
प्रतिनन्दामि ते वाचं मनोज्ञां मात्स्य भाषितां ॥ १३ ॥ ४-३६-१३ (२९८९७)
आनृशंस्यपरो नित्यं सुमुखः सततं भवान् ।
पुनरेव विराटश्च राजा कङ्कमभाषत ॥ १४ ॥ ४-३६-१४ (२९८९८)
अहो शूद्रस्य कर्माणि वललस्य द्विजोत्तम ।
सोहं शूद्रेण संग्रामे वललेनाभिरक्षितः ॥ १५ ॥ ४-३६-१५ (२९८९९)
त्वत्कृते सर्वमेवैतदुपपन्नं ममानघ ।
वरं वृष्णीष्व भद्रं ते ब्रूहि किं करवाणि ते ॥ १६ ॥ ४-३६-१६ (२९९००)
ददामि ते महाप्रीत्या रत्नान्युच्चावचान्यहम् ।
शयनासनयानानि कन्याश्च समलंकुताः ॥ १७ ॥ ४-३६-१७ (२९९०१)
हस्त्यश्वरथसङ्घाश्च राष्ट्राणि विविधानि च ।
एतानि च मम प्रीत्या प्रतिगृह्ण ममान्तिके ॥ १८ ॥ ४-३६-१८ (२९९०२)
वैशंपायन उवाच। ४-३६-१९क्ष् (३१४१)
तं तथावादिनं तत्र कौरव्यः प्रत्यभाषत ।
एषैव तु मम प्रीतिर्यत्त्वं मुक्तोसि शत्रुभिः ॥ १९ ॥ ४-३६-१९ (२९९०३)
प्रतीतश्चेत्पुरं तुष्टः प्रविशाद्य परंतप ।
दारैः पुत्रैश्च संश्लिष्य सा हि प्रीतिर्ममातुला ॥ २० ॥ ४-३६-२० (२९९०४)
सुशर्माणं तु राजेन्द्र सभृत्यबलवाहनम् ।
विसर्जय नरश्रेष्ठं वरमेतदहं वृणे ॥ २१ ॥ ४-३६-२१ (२९९०५)
वैशंपायन उवाच। ४-३६-२२क्ष् (३१४२)
एवमुक्ते तु कङ्केन विराटो राजसत्तमः ।
प्रत्युवाच ततः कङ्कं सुशर्मा यातु चेष्टतः ॥ २२ ॥ ४-३६-२२ (२९९०६)

कङ्क उवाच। ४-३६-२३क्ष् (३१४३)
गच्छन्तु दूतास्त्वरिता नगरं तव पार्थिव ।
सुहृदां प्रियमाख्यातुं घोषयन्तु च ते जयम् ॥ २३ ॥ ४-३६-२३ (२९९०७)
ततस्तद्वचनान्मात्स्यो दूतान्राजा समादिशत् ।
आचक्षध्वं पुरं सत्वा संग्रामे विजयं मम ॥ २४ ॥ ४-३६-२४ (२९९०८)
कुमार्यः समलंकृत्य प्रयागच्छन्तु मे पुरात् ।
वादित्राणि च सर्वाणि गणिकाश्च स्वलंकृताः ।
प्रत्यायान्तु च मे शीघ्रं नागराः सर्व एव ते ॥ २५ ॥ ४-३६-२५ (२९९०९)
एवमुक्तास्तथा दूता रात्रौ यात्वा तु केवलम् ।
ततोऽन्तरे चानुषिता दूताः शीघ्रानुयायिनः ॥ २६ ॥ ४-३६-२६ (२९९१०)
नगरं प्राविशंस्ते वै सूर्ये सम्यगथोदिते ।
विराटनगरं प्राप्य शीघ्रं नान्दीमघोषयन् ।
पताकोच्छ्रयमाल्याढ्यं पुरमप्रतिमं यथा ॥ २७ ॥ ॥ ४-३६-२७ (२९९११)

इति श्रीमन्महाभारते विराटपर्वणि गोग्रहणपर्वणि षट्त्रिंशोऽध्यायः
॥ ३६ ॥

---

विरतपर्व-अध्यय०३७
॥ श्रीः ॥
४.३७. अध्यायः ३७

Mahabharata - Virata Parva - Chapter Topics
दुर्योधनेन भीष्मद्रोणादिभिः सह विराटनगरमेत्य उत्तरभागे गवां
ग्रहणम् ॥ १ ॥
गोपालेन केनचित्पुरमेत्योत्तरंप्रति कुरुभिर्गोग्रहणस्य निवेदनम् ॥ २ ॥

Mahabharata - Virata Parva - Chapter Text

४-३७-० (२९९१२)
वैशंपायन उवाच। ४-३७-०क्ष् (३१४४)
याते त्रिगर्तान्मात्स्ये तु पशूंस्तान्वै परीप्सति ।
दुर्योधनः सहामात्यैर्विराट पुरमभ्यगात् ॥ १.। ४-३७-१ (२९९१३)
भीष्मद्रोणौ च कर्णश्च कृपश्च परमास्त्रवित् ।
द्रौणिश्च सौबलश्चैव तथा दुःशासनः शलः ॥ २ ॥ ४-३७-२ (२९९१४)
विविंशतिर्विकर्णश्च चित्रसेनश्च वीर्यवान् ।
दुःसहो दुर्मुखश्चैव एते चान्ये महारथाः ॥ ३ ॥ ४-३७-३ (२९९१५)
सर्वे मत्स्यानुपागम्य विराटस्य महीपतेः ।

गोपान्विद्राव्य तरसा गोधनं जह्रुरोजसा ॥ ४ ॥ ४-३७-४ (२९९१६)
गवां शतसहस्राणि कुरवः कालयन्ति च ।
महता रथवंशेन परिगृह्य समन्ततः ॥ ५ ॥ ४-३७-५ (२९९१७)
गोपालानां तु घोषेषु हन्यतां तैर्महारथैः ।
आरावः सुमहानासीत्संप्रहारे भयंकरे ॥ ६ ॥ ४-३७-६ (२९९१८)
गवाध्यक्षस्तु संत्रस्तो रथमास्थाय सत्वरः ।
जगाम नगरायैव परिक्रोशंस्तदाऽऽर्तवत् ॥ ७ ॥ ४-३७-७ (२९९१९)
स प्रविश्य पुरं राज्ञो नृपवेश्माभ्ययात्ततः ।
अवतीर्य रथात्तूर्णमाख्यातुं प्रविवेश ह ॥ ८ ॥ ४-३७-८ (२९९२०)
दृष्ट्वा भूमिंजयं नाम पुत्रं मात्स्यस्य मानिनम् ।
तस्मै च सर्वमाचष्ट राष्ट्रस्य पशुकर्षणम् ॥ ९ ॥ ४-३७-९ (२९९२१)
गवां शतसहस्राणि कुरबः कालयन्ति ते ।
प्रतिजेतुं समुत्तिष्ठ गोधनं राष्ट्रवर्धन ॥ १० ॥ ४-३७-१० (२९९२२)
राजपुत्र हितप्रेप्सुः क्षिप्रं निर्याहि वै स्वयम् ।
त्वां हि मत्स्यो महीपालः शून्यपालमिहाकरोत् ॥ ११ ॥ ४-३७-११ (२९९२३)
त्वां वै परिषदो मध्ये श्लाघते स नराधिपः ।
पुत्रो ममानुरूपश्च शूरश्चेति कुलोद्वहः ॥ १२ ॥ ४-३७-१२ (२९९२४)
इष्वस्त्रनिपुणो योधः सदा वीरश्च मे सुतः ।
समर्थः समरे योद्धुं कौरवैः सह तादृशै ॥ १३ ॥ ४-३७-१३ (२९९२५)
तस्य तत्सत्यमेवास्तु मनुष्येन्द्रस्य भाषितम् ।
जयश्च नियतो युद्धे कौरवाश्च ध्रुवं हताः ॥ १४ ॥ ४-३७-१४ (२९९२६)
आवर्तय कुरूञ्जित्वा पशून्पशुपतिर्यथा ।
निर्दहैषामनीकानि भीमेन शरतेजसा ॥ १५ ॥ ४-३७-१५ (२९९२७)
धनुश्च्युतै रुक्मपुङ्खैश्चित्रैः संनतपर्वभिः ।
द्विषतां भिन्ध्यनीकानि गजानामिव यूथपः ॥ १६ ॥ ४-३७-१६ (२९९२८)
पाशोपधानां ज्यातन्त्रीं चापदण्डां महास्वनाम् ।
शरवर्णां धनुर्वीणां शत्रुमध्ये प्रवादय ॥ १७ ॥ ४-३७-१७ (२९९२९)
निर्याहि नगराच्छीघ्रं राजपुत्र किमास्यते ।
श्वेताः काञ्चनसंनाहा रथे युज्यन्तु ते हयाः ।
ध्वजं च सिहं सौवर्णमुच्छ्रयस्व तथा विभो ॥ १८ ॥ ४-३७-१८ (२९९३०)
रुक्मपुङ्खाः प्रसन्नाग्रा मुक्ता हस्तवता त्वया ।
छादयन्तु शराः सूर्यं राज्ञमायुर्निरोधकाः ॥ १९ ॥ ४-३७-१९ (२९९३१)
रणे जित्वा कुरून्सर्वान्वज्रपाणिरिवासुरान् ।
यशो महदवाप्य त्वं प्रविरोदं पुरं पुनः ॥ २० ॥ ४-३७-२० (२९९३२)
त्वं हि राष्ट्रस्य परमा गतिर्मात्स्यपतेः सुतः ।
गतिमन्तो भवन्त्वद्य सर्वे विषयवासिनः ॥ २१ ॥ ४-३७-२१ (२९९३३)

यथा हि पाण्डुपुत्राणामर्जुनो जयतांवरः ।
एवमेव गतिर्नूनं भवान्विपयवासिनाम् ॥ २२ ॥ ॥ ४-३७-२२ (२९९३४)

इति श्रीमन्महाभारते विराटपर्वणि गोग्रहणपर्वणि
सप्तत्रिंशोऽध्यायः ॥ ३७ ॥
Mahabharata - Virata Parva - Chapter Footnotes

४-३७-१७ पाशोपधानां पाशौ मौर्वीप्रान्तद्वयगतौ तावेव उपाधाने
वीणायां तन्त्रीसंधानार्थं कीलविशेषौ यस्यां सा ताम् । शरवर्णा
शरास्ततो निःसरन्तस्त एव वर्णाः शब्दवत्त्वसामान्यात्स्वरस्पर्शादयो
यस्याम् ॥
१७ ॥

---

विरतपर्व-अध्यय०३८
॥ श्रीः ॥
४.३८. अध्यायः ३८

Mahabharata - Virata Parva - Chapter Topics
उत्तरे समुचितसारथेरभावेन खिद्यमाने अर्जुनेन द्रौपदींप्रति
उत्तराय बृहन्नलायाः सारथ्यकौशलनिवेदनचोदना ॥ १ ॥
भ्रातृचोदितया उत्तरया बृहन्नलांप्रति
उत्तररथसारथ्यकरणप्रार्थना ॥ २ ॥
उत्तरेण सारथीभूतेनार्जुनेन सह कुरून्प्रति रणायाभियानम् ॥ ३ ॥

Mahabharata - Virata Parva - Chapter Text

४-३८-० (२९९३५)
वैशंपायन उवाच। ४-३८-०क्ष् (३१४५)
महाजनसमक्षं तु स्त्रीणां मध्ये विशेषतः ।
गवाध्यक्षेण संप्रोक्तो विराटतनयस्तदा ॥ १ ॥ ४-३८-१ (२९९३६)
स्त्रीमध्य उक्तस्तेनासौ वाक्यं तेजःप्रवर्धनम् ।
अन्तःपुरे श्लाघमान इदं वचनमब्रवीत् ॥ २ ॥ ४-३८-२ (२९९३७)
उत्तर उवाच। ४-३८-३क्ष् (३१४६)
अद्याहमनुगच्छेयं दृढधन्वा गवां पदम् ।
यदि मे सारथिः कश्चिद्भवेदश्वेषु कोविदः ॥ ३ ॥ ४-३८-३ (२९९३८)
तमेव नाधिगच्छामि यो मे यन्ता समो भवेत् ।
पश्यध्वं सारथिं शीघ्रं मम युक्तं प्रयास्यतः ॥ ४ ॥ ४-३८-४ (२९९३९)

अष्टाविंशतिरात्रं वा मासं वा नूनमन्ततः ।
यत्तदासीन्महायुद्धं तत्र मे सारथिर्हतः ॥ ५ ॥ ४-३८-५ (२९९४०)
यद्यहं त्वधिगच्छेयं यो मे यन्ता भवेद्युधि ।
त्वरावानद्य यास्यामि समुच्छ्रितमहाध्वजः ॥ ६ ॥ ४-३८-६ (२९९४१)
विगाह्य तत्परानीकं गजवाजिरथाकुलम् ।
शस्त्रप्रतापान्निर्वीर्यान्कुरूञ्जित्वाऽऽनये पशून् ॥ ७ ॥ ४-३८-७ (२९९४२)
दुर्योधनं विकर्णं च कर्णं वैकर्तनं कृपम् ।
द्रोणं च सह पुत्रेण महेष्वासान्समागतान् ॥ ८ ॥ ४-३८-८ (२९९४३)
विद्रावयित्वा संग्रामे दानवान्मघवानिव ।
अनेनैव मुहूर्तेन पुनः प्रत्यानये पशून् ॥ ९ ॥ ४-३८-९ (२९९४४)
शून्यमाज्ञाय कुरवः प्रयान्त्यादाय गोधनम् ।
किं न शक्यं च तैः कर्तुं यदहं तत्र नाभवम् ॥ १० ॥ ४-३८-१० (२९९४५)
पश्ययुरद्य मे वीर्यं कुरवस्ते समागताः ।
किंनु पार्थोऽर्जुनः साक्षादिति मंस्यन्ति मां परे ॥ ११ ॥ ४-३८-११ (२९९४६)
वैशंपयान उवाच। ४-३८-१२क्ष् (३१४७)
तस्य तद्वचनं श्रुत्वा स्त्रीषु चात्मप्रशंसनम् ।
नामर्षयत पाञ्चाली बीभत्सोः परिकीर्तनम् ॥ १२ ॥ ४-३८-१२ (२९९४७)
श्रुत्वा तदर्जुनो वाक्यमुत्तरेण प्रभाषितम् ।
अतीतसमये काले प्रियां भार्यामभाषत ॥ १३ ॥ ४-३८-१३ (२९९४८)
द्रुपदस्य सुतां राज्ञः पाञ्चालीं रूपसंमताम् ।
सत्यार्जवगुणोपेतां भर्तुः प्रियहितैषिणीम् ।
उवाच रहसि प्रीतः कृष्णां सर्वार्थकोविदः ॥ १४ ॥ ४-३८-१४ (२९९४९)
उत्तरां ब्रूहि पाञ्चालि गत्वा क्षिप्रं शुचिस्मिते ॥ १५ ॥ ४-३८-१५ (२९९५०)
इयं किल पुरा युद्धे खाण्डवे सव्यसाचिनः ।
सारथिः पाण्डुपुत्रस्य पार्थस्य तु बृहन्नला ।
महाञ्जयो भवेद्युद्धे सा चेद्यन्ता बृहन्नला ॥ १६ ॥ ४-३८-१६ (२९९५१)
वैशंपायन उवाच। ४-३८-१७क्ष् (३१४८)
सा चोदिता तदा ह्येन ह्यर्जुनेन शुचिस्मिता ।
पाञ्चाली च तदाऽऽगम्य उत्तराया निवेशनम् ॥ १७ ॥ ४-३८-१७ (२९९५२)
ज्ञात्वा तु समयान्मुक्तं चन्द्रं राहुमुखादिव ।
युधिष्ठिरं धर्मपरं सत्यार्जवपथे स्थितम् ॥ १८ ॥ ४-३८-१८ (२९९५३)
अमर्षयन्ती तद्दुःखं कृष्णा कमललोचना ।
उत्तरामाह वचनं सखीमध्ये विलासिनीम् ॥ १९ ॥ ४-३८-१९ (२९९५४)
योऽयं युवा वारणयूथपोपमो बृहन्नलाऽस्मीति जनोऽभ्यभाषत ।
पुराऽपि पार्थस्य स सारथिस्तदा धनुर्धराणां प्रवरस्य मन्ये ॥ २०
॥ ४-३८-२० (२९९५५)

एतेन वा सारथिना तदाऽर्जुनः सदेवगन्धर्वमहासुरोरगान् ।
सर्वाणि भूतान्यजयस्तस वीर्यवानतर्पयच्चापि हिरण्यरेतसम् ॥ २१
॥ ४-३८-२१ (२९९५६)
यदस्य संस्थामपि तस्य संयुगे जानामि वीर्यं परवीरमध्यगम् ।
संगृह्य रश्मीनपि चास्य वीर्यवानादाय चापं प्रययौ रथे स्थितः
॥ २२ ॥ ४-३८-२२ (२९९५७)
न सर्वभूतानि न देवदानवा न चापि सर्वे कुरवः समागताः ।
धनं हरेयुस्तव जातु धन्विनो बृहन्नला तूत्तरसारथिर्यदि ॥ २३
॥ ४-३८-२३ (२९९५८)
धनुष्यनवमश्चासीत्तस्य शिष्यो महात्मनः ।
सुदृष्टपूर्वो हि मया चरन्त्या पाण्डवालये ॥ २४ ॥ ४-३८-२४ (२९९५९)
स चानेन सहायेन खाण्डवं चादहत्पुरा ।
अर्जुनस्य तदाऽनेन संगृहीता हयोत्तमाः ॥ २५ ॥ ४-३८-२५ (२९९६०)
तेन सारथिना पार्थः सर्वभूतानि सर्वशः ।
अजयत्खाण्डवप्रस्थे न हि यन्ताऽस्ति तादृशः ॥ २६ ॥ ४-३८-२६ (२९९६१)
वैशंपायन उवाच। ४-२८-२७क्ष् (३१४९)
ततः सैरन्ध्रिसहिता उत्तरा भ्रातुरब्रवीत् ।
अभ्यर्थयैनां सारथ्ये वीर शीघ्रं बृहन्नलाम् ॥ २७ ॥ ४-३८-२७ (२९९६२)
शिक्षितैषा हि सारथ्ये नर्तने गीतवादिते ।
सैरन्ध्र्याह महाप्राज्ञा स्तुवन्ती वै बृहन्नलाम् ॥ २८ ॥ ४-३८-२८ (२९९६३)
उत्तर उवाच। ४-३८-२९क्ष् (३१५०)
सैरन्ध्रि जानासि मम व्रतं हि क्लीबेन पुंसा न हि संवदाम्यहम् ।
सोहं न शक्ष्यामि बृहन्नलां शुभे वक्तुं स्वयं यच्छ हयान्ममेति
॥ २९ ॥ ४-३८-२९ (२९९६४)
सैरन्ध्र्युवाच। ४-३८-३०क्ष् (३१५१)
भयकाले तु संप्राप्ते न व्रतं नाव्रतं पुनः ।
यथा दुःखं प्रतरति कर्तुं युक्तं चरेद्बुधः ।
इति धर्मविदः प्राहुस्तस्माद्वाच्या बृहन्नला ॥ ३० ॥ ४-३८-३० (२९९६५)
येयं कुमारी सुश्रोणी भगिनी ते यवीयसी ।
अस्यास्तु वचनं वीर करिष्यति न संशयः ॥ ३१ ॥ ४-३८-३१ (२९९६६)
यदि ते सारथिः सा स्यात्कुरून्सर्वान्न संशयः ।
जित्वा गाश्च समादाय ध्रुवमागमनं भवेत् ॥ ३२ ॥ ४-३८-३२ (२९९६७)
वैशंपायन उवाच। ४-३८-३३क्ष् (३१५२)
एवमुक्तः स सैरन्ध्र्या भगिनीं प्रत्यभाषत ।
गच्छ त्वमनवद्याङ्गि तामानय बृहन्नलाम् ॥ ३३ ॥ ४-३८-३३ (२९९६८)
सा प्राद्रवत्काञ्चनमाल्यधारिणी ज्येष्ठेन भ्रात्रा प्रहिता यशस्विनी ।

भ्रातुर्नियोगं तु निशम्य सुभ्रुः शुभानना हाटकवज्रभूषिता ॥ ३४
॥ ४-३८-३४ (२९९६९)
सा वज्रमुक्तामणिहेमकुण्डला मृदुक्रमा भ्रातृनियोगचोदिता ।
प्रदक्षिणावर्ततनुः शिखण्डिनी पद्मानना पद्मदलायताक्षी ॥ ३५
॥ ४-३८-३५ (२९९७०)
तन्वी समाङ्गी मृदुमन्द्रलोचना मात्स्यस्य राज्ञो दुहिता विलासिनी ।
सा नर्तनागारमरालपक्ष्मा शतह्रदा मेघमिवान्वपद्यत ॥ ३६
॥ ४-३८-३६ (२९९७१)
सा नागनासोपमसंहितोरूरनिन्दिता वेदिविलग्नमध्या ।
आसाद्य तस्थौ वरमाल्यधारिणी पार्थं शुभा नागवधूरिव द्विपम्
॥ ३७ ॥ ४-३८-३७ (२९९७२)
तामागतामायतताम्रलोचनामवेक्ष्य पार्थः समयेऽभ्यभाषत ॥ ३८ ॥
४-३८-३८ (२९९७३)
किमागता काञ्चनमाल्यधारिणी सुगात्रि किंचित्त्वरिताऽसि सुभ्रु ।
किं ते मुखं सुन्दरि न प्रसन्नमाचक्ष्व शीघ्रं मम चारुहासिनि
॥ ३९ ॥ ४-३८-३९ (२९९७४)
वैशंपायन उवाच। ४-३८-४०क्ष् (३१५३)
सा वज्रवैडूर्यविकारकुण्डला विनिद्रपद्मोत्पलपन्नगन्धिनी ।
प्रसन्नताराधिपसंनिभानना पार्थे कुमारी वचनं बभाषे ॥ ४०
॥ ४-३८-४० (२९९७५)
उत्तरोवाच। ४-३८-४१क्ष् (३१५४)
हरन्ति वित्तं कुरवाः पितुर्मे शतं सहस्राणि गवां बृहन्नले ।
सा भ्रातुरश्वान्मम संयमस्व पुरा परे दूरतरं हरन्ति गाः ॥ ४१
॥ ४-३८-४१ (२९९७६)
सैरन्ध्रिराख्याति बृहन्नले त्वां सुशिक्षिता संग्रहणे रथाश्वयोः ।
अहं मरिष्यामि न मेऽत्र संशयो मया वृता तत्र न चेद्गमिष्यसि
॥ ४२ ॥ ४-३८-४२ (२९९७७)
वैशंपायन उवाच। ४-३८-४३क्ष् (३१५५)
तथा नियुक्तो नरदेवकन्यया नरोत्तमः प्रीतमना धनञ्जयः ।
उवाच पार्थः शुभमन्द्रया गिरा शुभाननां शुक्लदतीं शुचिस्मिताम्
॥ ४३ ॥ ४-३८-४३ (२९९७८)
गच्छामि यत्रेच्छसि चारुहासिनि हुताशनं प्रज्वलितं विशामि वा ।
इच्छामि तेऽहं वरगात्रि जीवितं करोमि किं ते प्रियमद्य सुन्दरि ।
न मत्कृते द्रक्ष्यसि तत्पुरं प्रिये वैवस्वतं प्रेतपतेर्महाभयम्
॥ ४४ ॥ ४-३८-४४ (२९९७९)
वैशंपायन उवाच । ४-३८-४५क्ष् (३१५६)

एतावदुक्त्वा कुरुवीरपुङ्गवो विलासिनीं शुक्लदतीं शुचिस्मिताम् ।
बृहन्नलारूपविभूषिताननो विराटपुत्रस्य समीपमाव्रजत् ॥ ४५
॥ ४-३८-४५ (२९९८०)
तथा व्रजन्तं वरभूषणैर्वृतं महाप्रभं वारणयूथपोपमम् ।
गजेन्द्रबाहुं कमलायतेक्षणं कवाटवक्षस्थलमुन्नतांसम् ॥ ४६
॥ ४-३८-४६ (२९९८१)
तमागतं पार्थममित्रकर्शनं महाबलं नागमिव प्रमाथिनम् ।
वैराटिरामन्त्र्य ततो बृहन्नलां गवां निनीषन्पदमुत्तरोऽब्रवीत्
॥ ४७ ॥ ४-३८-४७ (२९९८२)
तमाव्रजन्तं त्वरितं प्रभिन्नमिव कुञ्जरम् ।
अन्वगच्छद्विशालाक्षी गजं गजवधूरिव ॥ ४८ ॥ ४-३८-४८ (२९९८३)
दूरादेव तु संप्रेक्ष्य राजपुत्रोऽभ्यभाषत ।
त्वया सारथिना पार्थः खाण्डवेऽग्निमतर्पयत् ॥ ४९ ॥ ४-३८-४९ (२९९८४)
पृथिवीं चाजयत्कृत्स्नां कुन्तीपुत्रो धनञ्जयः ।
सैरन्ध्री त्वां ममाचष्ट सा हि जानाति पाण्डवान् ॥ ५० ॥ ४-३८-५० (२९९८५)
देवेन्द्रसारथिर्वीरो मातलिः ख्यातविक्रमः ।
सुमहो जामदग्नेश्च विष्णोर्यन्ता च दारुकः ॥ ५१ ॥ ४-३८-५१ (२९९८६)
सुमन्त्रो वा दाशरथेः सूर्ययन्ता तथाऽरुणः ।
सर्वे सारथयः ख्याता न बृहन्नलया समाः ॥ ५२ ॥ ४-३८-५२ (२९९८७)
इत्युक्तोऽहं च सैरन्ध्र्या तेन त्वामाह्वयामि वै ।
आहुता त्वं मया सार्धं योद्धुं याहि बृहन्नले ॥ ५३ ॥ ४-३८-५३ (२९९८८)
दूराद्दूरतरं गावो भवन्ति कुरुभिर्हृताः ।
तथोक्ता प्रत्युवाचेदं राजपुत्रं बृहन्नला ॥ ५४ ॥ ४-३८-५४ (२९९८९)
का शक्तिर्मम सारथ्यं कर्तुं संग्राममूर्धनि ।
नृत्तं वा यदि वा गीतं वादित्रं वा पृथग्विधम् ।
तत्करिष्यामि भद्रं ते सारथ्यं तु कुतो मम ॥ ५५ ॥ ४-३८-५५ (२९९९०)
उत्तर उवाच। ४-३८-५६क्ष् (३१५७)
त्वं नर्तको वा यदि वाऽपि गायकः क्षिप्रं तनुत्रं परिधत्स्व भानुमत् ।
अभीक्ष्णमाहुस्तव कर्म पौरुषं स्त्रियः प्रशंसन्ति ममाद्य चान्तिके
॥ ५६ ॥ ४-३८-५६ (२९९९१)
वैशंपायन उवाच। ४-३८-५७क्ष् (३१५८)
इत्येवमुक्त्वा नृपसूनुसत्तमस्तदा स्मयित्वाऽर्जुनमभ्यनन्दयत् ।
अथोत्तरः पारशवं शताक्षिमत्सुवर्णचित्रं परिगृह्य भानुमत्
॥ ५७ ॥ ४-३८-५७ (२९९९२)
बृहन्नलायै प्रददौ स्वयं तदा विराटपुत्रः परवीरघातिने ।
तदाज्ञया मात्स्यसुतस्य वीर्यवानकर्तुकामेव समाददे तदा ॥ ५८

॥ ४-३८-५८ (२९९९३)
बृहन्नलोवाच। ४-३८-५९क्ष् (३१५९)
यद्यस्ति च रणे शौर्यं शक्यः स्याद्दिद्विषतां वधः ।
अहं त्वामभिगच्छामि यत्र त्वं यासि तत्र भो ॥ ५९ ॥ ४-३८-५९ (२९९९४)
वैशंपायन उवाच। ४-३८-६०क्ष् (३१६०)
ततः स नर्मसंयुक्तमकरोत्पाण्डवो बहु ।
उत्तरायाः प्रमुखतः सर्वं जानन्नरिन्दमः ॥ ६० ॥ ४-३८-६० (२९९९५)
तमाददानं प्रमदा जहासिरे ह्यधोमुखं वीरवरोऽभ्यधारयत् ।
ततस्तिरश्चीनकृतं सपत्नहा ह्यधोमुखं कवचमथाभ्यकर्षत
॥ ६१ ॥ ४-३८-६१ (२९९९६)
सम्यक्प्रजानन्नपि सत्यविक्रमो ह्यज्ञातवत्सर्वकुरुप्रवीरः ।
ऊर्ध्वं क्षिपन्वीरतरोऽभ्यधारयत्पुनश्च यन्ता कवचं धनञ्जयः
॥ ६२ ॥ ४-३८-६२ (२९९९७)
एवंप्रकाराणि बहूनि कुर्वति तस्मिन्कुमार्यः प्रमदा जहासिरे ।
तथापि कुर्वन्तममित्रकर्शनं नैवोत्तरः पर्यभवद्धनञ्जयम्
॥ ६३ ॥ ४-३८-६३ (२९९९८)
तं राजपुत्रः समनाहयत्स्वयं जाम्बूनदान्तेन शुभेन वर्मणा ।
कृशानुतप्तप्रतिमेन भास्वता जाज्वल्यमानेन सहस्ररश्मिना ॥ ६४
॥ ४-३८-६४ (२९९९९)
अथास्य शीघ्रं प्रसमीक्ष्य भोजयद्रथे हयान्काञ्चनजालसंवृतान् ।
सुवर्णजालान्तरयोक्तभूषणं सिंहं च सौवर्णमुपाश्रयद्रथे ॥ ६५
॥ ४-३८-६५ (३००००)
धनूंषि च विचित्राणि बाणांश्च रुचिरान्बहून् ।
आयुधानि च वै तत्र रथोपस्थे च स न्यसत् ॥ ६६ ॥ ४-३८-६६ (३०००१)
आरुह्य प्रययौ वीरः सबृहन्नलसारथिः ।
अथोत्तरा च कन्याश्च स ख्यश्चैवाब्रुवंस्तदा ॥ ६७ ॥ ४-३८-६७ (३०००२)
बृहन्नले आनयेथा वासांसि रुचिराणि नः ।
पाञ्चालिकार्थं सूक्ष्माणि रत्नानि विविधानि च ।
विजित्य संग्रामगतान्भीष्मद्रोणमुखान्कुरून् ॥ ६८ ॥ ४-३८-६८ (३०००३)
अथ ता ब्रुवतीः कन्याः सहिताः कुरुनन्दनः ।
प्रत्युवाच हसन्पार्थो मेघदुन्दुभिनिस्वनः ॥ ६९ ॥ ४-३८-६९ (३०००४)
यद्युत्तरोऽयं संग्रामे विजेष्यति महारथान् ।
अथाहरिष्ये वासांसि सूक्ष्माण्याभरणानि च ॥ ७० ॥ ४-३८-७० (३०००५)
वैशंपायन उवाच। ४-३८-७१क्ष् (३१६१)
अथोत्तरो वर्म महाप्रभावं सुवर्णवैडूर्यपरिष्कृतं शुभम् ।
आमुच्य वीरः प्रययौ रथोत्तमं धनञ्जयं सारथिनं प्रगृह्य

॥ ७१ ॥ ४-३८-७१ (३०००६)
तमुत्तरं प्रेक्ष्य रथोत्तमे स्थितं बृहन्नलां चैव महाजनस्तदा ।
स्त्रियश्च कन्याश्च द्विजाश्च सुव्रताः प्रदक्षिणं
मङ्गलिनोऽभ्यपूजयन् ॥ ७२ ॥ ४-३८-७२ (३०००७)
यदर्जुनस्यर्षभतुल्यगामिनः पुराऽभवत्खाण्डवदाहमङ्गलम् ।
कुरून्समासाद्य रणे बृहन्नले सहोत्तरेणास्तु तवाद्य मङ्गलम् ॥ ७३
॥ ॥ ४-३८-७३ (३०००८)

इति श्रीमन्महाभारते विराटपर्वणि ग्रोग्रहणपर्वणि
अष्टत्रिंशोऽध्यायः ॥ ३८ ॥
Mahabharata - Virata Parva - Chapter Footnotes

४-३८-३५ शिखण्डिनी मयूरपिच्छालंकारवती ॥
३५ ॥

---

विरतपर्व-अध्यय०३९
॥ श्रीः ॥
४.३९. अध्यायः ३९

Mahabharata - Virata Parva - Chapter Topics
उत्तरेण कुरुसेनावलोकनमात्रेण रथादवस्कन्द्य भयात्पलायनम् ॥ १ ॥
तमनुधाविनाऽर्जुनेन तस्य केशपाशे ग्रहणेन परिसान्त्वनपूर्वकं
पुना रथारोपणम् ॥ २ ॥
तथा तेन सह गाण्डीवाद्यानयनाय शमींप्रति गमनम् ॥ ३ ॥

Mahabharata - Virata Parva - Chapter Text

४-३९-० (३०००९)
वैशंपायन उवाच। ४-३९-०क्ष् (३१६२)
स राजधान्य निर्याय वैराटिरकुतोभयः ।
प्रयाहीत्यब्रवीत्सूतं यत्र ते कुरवो गताः ॥ १ ॥ ४-३९-१ (३००१०)
समवेतान्कुरून्सर्वाञ्जिगीषूनवजित्य वै ।
गाश्चैताः क्षिप्रमादाय पुनरेष्याम्यहं पुरम् ॥ २ ॥ ४-३९-२ (३००११)
ततस्तांश्चोदयामास सदश्वान्पाण्डुनन्दनः ॥ ३ ॥ ४-३९-३ (३००१२)
ते हया नरसिंहेन चोदिता वातरंहसः ।
आलिखन्त इवाकाशमूहुः काञ्चनमालिनः ॥ ४ ॥ ४-३९-४ (३००१३)
नातिदूरमथो गत्वा मात्स्यपुत्रधनञ्जयौ ।

अवैक्षेतामवित्रस्तौ कुरूणां बलिनां बलम् ॥ ५ ॥ ४-३९-५ (३००१४)
श्मशानमभितो गत्वा शूरौ ददृशतुःकुरून् ॥ ६ ॥
तदनीकं महत्तेषां विस्तृतं सागरोपमम् । ४-३९-६ (३००१५)
सर्पमाणमिवाकाशे वनं बहुलपादपम् ॥ ७ ॥
ददृशे पार्थिवो रेणुर्जनितस्तेन सर्पता। ४-३९-७ (३००१६)
दृष्टिप्रणाशो भूतानां दिवस्पृक्कुरुसत्तम ॥ ८ ॥
तदनीकमथो वीक्ष्य गजाश्वरथसंकुलम् । ४-३९-८ (३००१७)
कर्णदुर्योधनकृपैर्गुप्तं शान्तनवेन च ।
द्रोणेन सह पुत्रेण महेष्वासेन धीमता ॥ ९ ॥ ४-३९-९ (३००१८)
हृष्टरोमा भयोद्विग्नो निमील्य स्वदृशौ तदा ।
कम्पमानशरीरश्च पार्थं वैराटिरब्रवीत् ॥ १० ॥ ४-३९-१० (३००१९)
नोत्सहे कुरुभिर्योद्धुं रोमहर्षं हि पश्य मे ।
बहुप्रवीरमत्युग्रं देवैरपि दुरासदम् ।
प्रतियोद्धुं न शक्नोमि कुरुसैन्यं भयानकम् ॥ ११ ॥ ४-३९-११ (३००२०)
नाशंसे भारतीं सेनां प्रवेष्टुं भीमकार्मुकाम् ।
देवैरपि सहेन्द्रेण न शक्यं किंपुनर्नरैः ॥ १२ ॥ ४-३९-१२ (३००२१)
रथनागाश्वकलिलं पत्तिध्वजसमाकुलम् ।
दृष्ट्वैव हि परानीकं मनः प्रव्यथतीव मे ॥ १३ ॥ ४-३९-१३ (३००२२)
यत्र द्रोणश्च भीष्मश्च कृपः कर्णो विविंशतिः ।
अश्वत्थामा विकर्णश्च सोमदत्तश्च बाह्लिकः ।
दुर्योधनस्तथा राजा वीरो दुर्मर्षणः परः ॥ १४ ॥ ४-३९-१४ (३००२३)
नीतिमन्तो महेष्वासाः सर्वे युद्धविशारदाः ।
मत्ता इव महानागा युक्तध्वजपताकिनः ॥ १५ ॥ ४-३९-१५ (३००२४)
नीतिमन्तो महेष्वासाः सर्वार्थकृतनिश्चयाः ।
ताञ्जेतुं समरे शूरान्दुर्बुद्धिरहमागतः ॥ १६ ॥ ४-३९-१६ (३००२५)
दृष्ट्वैव हि कुरून्सर्वान्व्यूढानीकान्प्रहारिणः ।
हृषितानि च रोमाणि कश्मलेनाहतं मनः ॥ १७ ॥ ४-३९-१७ (३००२६)
वैशंपायन उवाच। ४-३९-१७क्ष् (३१६३)
दृष्ट्वा तु महतीं सेनां कुरूणां दृढधन्विनाम् ।
परिदेवयते मन्दः सकाशे सव्यसाचिनः ॥ १८ ॥ ४-३९-१८ (३००२७)
त्रिगर्तान्मे पिता यातः शून्ये वै प्रणिधाय माम् ।
सर्वां सेनामुपादाय न मे सन्तीह सैनिकाः ॥ १९ ॥ ४-३९-१९ (३००२८)
अहमेको बहून्बालः कृतास्त्रानकृतश्रमः ।
प्रतियोद्धुं न शक्नोति निवर्तय बृहन्नले ॥ २० ॥ ४-३९-२० (३००२९)
वैशंपायन उवाच। ४-३९-२१क्ष् (३१६४)
तं तथा वादिनं तत्र बीभत्सुः प्रत्यभाषत ।

संप्रहस्य पुनस्तं वै सर्वलोकमहारथः ॥ २१ ॥ ४-३९-२१ (३००३०)
भयेन दीनरूपोऽसि द्विषतां हर्षवर्धनः ।
न च तावत्कृतं किंचित्परैः कर्म रणाजिरे ॥ २२ ॥ ४-३९-२२ (३००३१)
स्वयमेव च मामात्थ नय मां कौरवान्प्रति ।
सोहं त्वां तत्र नेष्यामि यत्रैते बहुला ध्वजाः ॥ २३ ॥ ४-३९-२३ (३००३२)
मध्यमामिषगृध्रूनां कुरूणामाततायिनाम् ।
नेष्यामि त्वां महाबाहो मा त्वं हि विमना भव ।
समुद्रमिव गम्भीरं कुरुसैन्यमरिन्दम ॥ २४ ॥ ४-३९-२४ (३००३३)
स्त्रीसकाशे प्रतिज्ञाय पुरुषाणां हि शृण्वताम् ।
विकत्थमानो निर्यात्वा ब्रूषि किं नात्र युद्ध्यसे ॥ २५ ॥ ४-३९-२५ (३००३४)
तथा स्त्रीषु प्रतिश्रुत्य पौरुषं पुरुषेषु च ।
रथमारुह्य निर्यात्वा किमर्थं नावबुध्यसे ॥ २६ ॥ ४-३९-२६ (३००३५)
न चेद्विजित्य गास्त्वं हि नगरं प्रतियास्यसि ।
प्रहसिष्यन्ति वीरास्त्वां नरा नार्यश्च संगताः ॥ २७ ॥ ४-३९-२७ (३००३६)
अहमप्यस्मि सैरन्ध्र्या स्तुतः सारथ्यकर्मणि ।
नाहं शक्नोम्यनिर्जित्य गाः प्रयातुं पुरं प्रति ॥ २८ ॥ ४-३९-२८ (३००३७)
स्तोत्रेण चैव सैरन्ध्र्यास्तव वाक्येन चोदितः ।
कथं न युद्ध्येयमहं कुरूनेतान्स्थिरो भव ॥ २९ ॥ ४-३९-२९ (३००३८)
उत्तर उवाच। ४-३९-३०क्ष् (३१६५)
कामं हरन्तु मात्स्यानां भूयांसः कुरवो धनम् ।
प्रहसन्तु च मां नार्यो नरा वाऽपि बृहन्नले ॥ ३० ॥ ४-३९-३० (३००३९)
संग्रामेण न मे कार्यं गावो गच्छन्तु चापि मे ।
नगरं च प्रवेक्ष्यामि पश्यतस्ते बृहन्नले ॥ ३१ ॥ ४-३९-३१ (३००४०)
वैशंपायन उवाच। ४-३९-३२क्ष् (३१६६)
इत्युक्त्वा प्राद्रवद्भीतो रथात्प्रस्कन्द्य कुण्डली ।
त्यक्त्वा मानं सुसंत्रस्तो विसृज्य सशरं धनुः ॥ ३२ ॥ ४-३९-३२ (३००४१)
अर्जुन उवाच। ४-३९-३३क्ष् (३१६७)
नैष शूरैः स्मृतो धर्मः क्षत्रियस्य पलायनम् ।
श्रेयो हि मरणं युद्धे न भीतस्य पलायनम् ॥ ३३ ॥ ४-३९-३३ (३००४२)
वैशंपायन उवाच। ४-३९-३४क्ष् (३१६८)
एवमुक्त्वा तु कौरव्यः सोऽवप्लुत्य रथोत्तमात् ।
तमन्वधावद्धावन्तं राजपुत्रं धनञ्जयः ।
दीर्घां वेणीं विधून्वानः साधु रक्ते च वाससी ॥ ३४ ॥ ४-३९-३४ (३००४३)
विक्रमन्तं पदन्यासैर्नमयन्तं च भूतलम् ।
विधूय वेणीं धावन्तमजानन्तोऽर्जुनं तदा ।
सैनिकाः प्राहसन्केचिद्योषिद्रूपमवेक्ष्य तम् ॥ ३५ ॥ ४-३९-३५ (३००४४)

तं च शीघ्रं प्रधावन्तं संप्रेक्ष्य कुरवोऽब्रुवन् ।
कोऽयं धावत्यसङ्गेन पूर्वं मुक्त्वा रथोत्तमम् ॥ ३६ ॥ ४-३९-३६ (३००४५)
क एष वेषसंच्छन्नो भस्मनेव हुताशनः ।
किंचिदस्य यथा पुंसः किंचिदस्य यथा स्त्रियः ॥ ३७ ॥ ४-३९-३७ (३००४६)
इत्येवं सैनिकाः प्राहुर्द्रोणस्तानिदमब्रवीत् ।
आचार्यः कुरुपाण्डूनां मतौ शुक्राङ्गिरोपमः ॥ ३८ ॥ ४-३९-३८ (३००४७)
किं विचारेण वः कार्यमेतेनानुसृतेन वा ।
धावन्तमनुधावंश्च निर्भयो भयविप्लुतम् ।
वेणीकलापं निर्धूय प्रविभाति नरर्षभः ॥ ३९ ॥ ४-३९-३९ (३००४८)
आकारमर्जुनस्येव क्लीबरूपं बिभर्ति च ।
रूपेण पार्थसदृशः स्त्रीवेषसमलंकृतः ॥ ४० ॥ ४-३९-४० (३००४९)
तदेवैतच्छिरोग्रीवं तौ बाहू परिघोपमौ ।
तत्तदेवास्य विक्रान्तं नायमन्यो धनञ्जयात् ॥ ४१ ॥ ४-३९-४१ (३००५०)
अमरेष्विव देवेन्द्रो मनुष्येषु धनञ्जयः ।
एकः कोस्मानुपायायादन्यो लोके धनञ्जयात् ॥ ४२ ॥ ४-३९-४२ (३००५१)
द्रोणेन चैवमुक्तस्तु कर्णः प्रोवाच बुद्धिमान् ।
एकः पुत्रो विराटस्य शून्ये संनिहितः पुरे ॥ ४३ ॥ ४-३९-४३ (३००५२)
स एष किल निर्यातो बालभावान्न पौरुषात् ।
क्लीबं वै सारथिं कृत्वा निर्यातो नगराद्बहिः ॥ ४४ ॥ ४-३९-४४ (३००५३)
छन्नं सत्रेण वै नूनं जानीध्वं यान्तमर्जुनम् ।
ते हि नः प्रतिसंयातुं संग्रामे न हि शक्नुयुः ।
कथमेकतरस्तेषां समस्तान्योधयेत्कुरून् ॥ ४५ ॥ ४-३९-४५ (३००५४)
उत्तरः सारथिं कृत्वा निर्यातो नगराद्बहिः ।
स नो मन्ये ध्वजं दृष्ट्वा भीत एष पलायति ॥ ४६ ॥ ४-३९-४६ (३००५५)
कृप उवाच। ४-३९-४७क्ष् (३१६९)
नूनं तमेव धावन्तं जिघृक्षति धनञ्जयः ।
सारथिं ह्युत्तरं कृत्वा स्वयं योद्धुमिहेच्छति ॥ ४७ ॥ ४-३९-४७ (३००५६)
वैशंपायन उवाच। ४-३९-४८क्ष् (३१७०)
इति स्म कुरवः सर्वे विमृशन्तः पृथक्पृथक् ।
न च व्यवसितुं वीरा अर्जुनं शक्नुवन्ति ते ॥ ४८ ॥ ४-३९-४८ (३००५७)
दुर्योधन उवाचेदं सैनिकान्रथसत्तमान् ।
अर्जुनो वासुदेवो वा रामः प्रद्युम्न एव वा ।
ते हि नः प्रतिसंयातुं संग्रामे न हि शक्नुयुः ॥ ४९ ॥ ४-३९-४९ (३००५८)
अन्यो वै क्लीबरूपेण यद्यागच्छेद्गवां पदम् ।
शस्त्रैस्तीक्ष्णैरर्पयित्वा पातयिष्यामि भूतले ।
कथमेकतरस्तेषां समस्तान्योधयेत्कुरून् ॥ ५० ॥ ४-३९-५० (३००५९)

वैशंपायन उवाच। ४-३९-५१क्ष् (३१७१)
छन्नं तथा तं वेषेण पाण्डवं प्रेक्ष्य सैनिकाः ।
अर्जुनेति च नेत्येव न व्यवस्यन्ति ते पुनः ।
इति स्म कुरवः सर्वे विमृशन्तः पुनः पुनः ॥ ५१ ॥ ४-३९-५१ (३००६०)
दृढेवधी महासत्त्वः शक्रतुल्यपराक्रमः ।
अद्यागच्छति चेद्योद्धुं सर्वं संशयितं बलम् ॥ ५२ ॥ ४-३९-५२ (३००६१)
न चाप्यन्यतरं तत्र व्यवस्यन्ति धनञ्जयात् ॥ ५३ ॥ ४-३९-५३ (३००६२)
उत्तरं तु प्रधावन्तमनुद्रुत्य धनञ्जयः ।
गत्वा शतपदं तूर्णं केशपक्षे परामृशत् ॥ ५४ ॥ ४-३९-५४ (३००६३)
मा मा गृहाण भद्रं ते दासोऽहं ते बृहन्नले ।
इति वादिनमेवाशु धावन्तं तरसाऽग्रहीत् ।
विराटपुत्रं बीभत्सुर्बलवानरिमर्दनः ॥ ५५ ॥ ४-३९-५५ (३००६४)
सोऽर्जुनेन परामृष्टः पर्यदेवयदार्तवत् ।
बहुलं कृपणं चैव वित्तं प्रावेदयद्बहु ॥ ५६ ॥ ४-३९-५६ (३००६५)
सुवर्णमणिमुक्तानां यद्यदिच्छसि दद्मि ते ।
हस्तिनोश्वान्रथान्गावः स्त्रियश्च समलङ्कृताः ॥ ५७ ॥ ४-३९-५७ (३००६६)
शातकुम्भस्य शुद्धस्य श्रेष्ठस्य रजतस्य च ।
ददामि शतनिष्कं ते मुञ्च मां त्वं बृहन्नले ॥ ५८ ॥ ४-३९-५८ (३००६७)
षष्टिं स्वलंकृताः कन्या ग्राममेकं ददामि ते ।
मुञ्च मां त्वं भृशं दीनं विह्वलं भयकम्पितम् ॥ ५९ ॥ ४-३९-५९
(३००६८)
मणीनष्टौ च वैडूर्यान्हेमबद्धान्महाप्रभान् ।
हेमदण्डप्रतिच्छन्नं रथं युक्तं तु वाजिभिः ॥ ६० ॥ ४-३९-६० (३००६९)
मत्तांश्च दश मातङ्गान्मुञ्च मां त्वं बृहन्नले ।
गमिष्यामि पुरं षण्ड द्रष्टुं मातरमद्य ताम् ॥ ६१ ॥ ४-३९-६१ (३००७०)
एकोऽहमेव मे मातुः कुमारः किं ब्रुवे ततः ।
विधिरेवंविधे काले त्वद्वशं कुरुते हि माम् ॥ ६२ ॥ ४-३९-६२ (३००७१)
मात्स्यस्य पुत्रो बालोऽहं तेन चास्मि सुपोषितः ।
मातृपार्श्वशयानोऽहमस्पृष्टातपवायुमान् ॥ ६३ ॥ ४-३९-६३ (३००७२)
अदृष्टबालयुद्धोऽहं कुतस्ते कुरवः कुतः ।
मातृपार्श्वं गमिष्यामि मुञ्च मां त्वं बृहन्नले ॥ ६४ ॥ ४-३९-६४
(३००७३)
प्रलयार्णवसंकाशं दृश्यते कौरवं बलम् ॥ ६५ ॥ ४-३९-६५ (३००७४)
स्त्रीणां मध्येऽहमज्ञानाद्वीर्यशौर्याङ्कितां गिरम् ।
उक्तो यौवनगर्वेण को जेतुं शक्नुयात्कुरून् ।
अमुक्त्वा मां यदि नयेर्मरिष्यामि तवाग्रतः ॥ ६६ ॥ ४-३९-६६ (३००७५)

वैशंपायन उवाच। ४-३९-६७क्ष् (३१७२)
एवमादीनि वाक्यानि विलपन्तमचेतसम् ।
प्रसभं पुरुषव्याघ्रो रथस्यान्तिकमानयत् ॥ ६७ ॥ ४-३९-६७ (३००७६)
अथैनमब्रवीत्पार्थो भयार्तं नष्टचेतसम् ॥ ६८ ॥ ४-३९-६८ (३००७७)
अहं योत्स्यामि कौरव्यैर्हयान्संयच्छ मेति माम् ।
आददानः किमर्थं त्वं पलायनपरोऽभवः ॥ ६९ ॥ ४-३९-६९ (३००७८)
युध्यस्व कौरवैः सार्धं विजयस्ते भविष्यति ।
यस्य यन्तास्म्यहं युद्धे संयच्छामि हयोत्तमान् ।
राज्ञो वा राजपुत्रस्य तस्य युद्धे जयो ध्रुवम् ॥ ७० ॥ ४-३९-७० (३००७९)
सर्वथोत्तर युध्यस्व यन्त्रा सह मया कुरून् ।
जित्वा महीं यशः प्राप्य भोक्ष्यसे सकलामिमाम् ॥ ७१ ॥ ४-३९-७१ (३००८०)
हतो वा प्राप्ससे स्वर्गं न श्रेयस्ते पलायनम् ॥ ७२ ॥ ४-३९-७२ (३००८१)
अद्य सर्वान्कुरूञ्जित्वा यथा जयमवाप्स्यसि ।
तथाऽहं प्रयतिष्येऽत्र सहायोऽत्र मतो ह्यहम् ॥ ७३ ॥ ४-३९-७३ (३००८२)
यदि नोत्सहसे योद्धुं शत्रुभिः शत्रुकर्शन ।
एहि मे त्वं हयान्यच्छ युध्यमानस्य शत्रुभिः ॥ ७४ ॥ ४-३९-७४ (३००८३)
प्रयाह्येतद्रथानीकं मद्बाहुपरिरक्षितः ।
अप्रधृष्यतमं घोरं गुप्तं घोरैर्महारथैः ।
मा भैस्त्वं राजपुत्राग्र्य क्षत्रियोसि परंतप ॥ ७५ ॥ ४-३९-७५ (३००८४)
अहं तैः कुरुभिर्योत्स्ये प्रत्यानेष्यामि ते पशून् ।
प्रविशैतद्रथानीकमप्रधृष्यं दुरासदम् ॥ ७६ ॥ ४-३९-७६ (३००८५)
यन्ता भव नरश्रेष्ठ योत्स्येऽहं कुरुभिः सह ।
शूरान्समरचण्डांश्च नयिष्ये यमसादनम् ॥ ७७ ॥ ४-३९-७७ (३००८६)
वैशंपायन उवाच। ४-३९-७८क्ष् (३१७३)
एवं ब्रुवाणो वैराटिं बीभत्सुरपराजितः ।
समाश्वास्य भयार्तं तमुत्तरं भरतर्षभः ॥ ७८ ॥ ४-३९-७८ (३००८७)
इतस्ततो विवेष्टन्तमकामं भयपीडितम् ।
रथमारोपमायास पार्थः परपुरंजयः ॥ ७९ ॥ ४-३९-७९ (३००८८)
तमारोप्य रथोपस्थे विलपन्तं धनञ्जयः ।
गाण्डीवं धनुरादातुमुपायात्तां शमीं प्रति। ४-३९-८० (३००८९)
उत्तरं तं समाश्वास्य कृत्वा यन्तारमर्जुनः ॥ ८० ॥ ॥ ४-३९-८१ (३००९०)

इति श्रीमन्महाभारते विराटपर्वणि गोग्रहणपर्वणि
एकोनचत्वारिंशोऽध्यायः ॥ ३९ ॥

---

विरतपर्व-अध्यय०४०
॥ श्रीः ॥

४.४०. अध्यायः ४०

Mahabharata - Virata Parva - Chapter Topics
उत्तरेणार्जनचोदनया शमीमारुह्य धनुरादानम् ॥१ ॥

Mahabharata - Virata Parva - Chapter Text

४-४०-० (३००९१)
वैशंपायन उवाच। ४-४०-०क्ष् (३१७४)
तं दृष्ट्वा क्लीबरूपेण रथस्थं रथिपुङ्गवम् ।
शमीमभिमुखं यान्तं रथमारोप्य चोत्तरम् ॥ ४-४०-१ (३००९२)
द्रोणभीष्मादयः शूराः कुरूणां रथिसत्तमाः ।
वित्रस्तमनसस्त्रासन्धनञ्जयकृताद्भयात् ॥ ४-४०-२ (३००९३)
तानवेक्ष्य हतोत्साहानुत्पातानपि चाद्भुतान् ।
गुरुः शस्त्रभृतांश्रेष्ठो भारद्वाजोऽभ्यभाषत ॥ ४-४०-३ (३००९४)
स्वराश्च वाताः संयान्ति रूक्षाः परुषनिस्वनाः ।
भस्मवर्षप्रकाशेन तमसा संवृतं नभः ॥ ४-४०-४ (३००९५)
रूक्षवर्णाश्च जलदा दृश्यन्तेऽद्भुतदर्शनाः ।
निःसरन्ति च कोशेभ्यः शस्त्राणि विविधानि च ॥ ४-४०-५ (३००९६)
शिवाश्च विनदन्त्येता दीप्तायां दिशि दारुणाः ।
हयाश्चाश्रूणि मुञ्चन्ति ध्वजाः कम्पन्त्यकम्पिताः ॥ ४-४०-६ (३००९७)
यादृशान्यत्र दृश्यन्ते रूपाणि विविधानि च ।
यत्ता भवन्तस्तिष्ठन्तु युद्धं स्यात्समुपस्थितम् ॥ ४-४०-७ (३००९८)
रक्षध्वमपि राजानं व्यूहध्वं वाहिनीमपि ।
वैशसं च प्रतीक्षध्वं रक्षध्वं चापि गोधनम् ॥ ४-४०-८ (३००९९)
एष वीरो महेष्वासः सर्वशस्त्रभृतांवरः ।
आगतः क्लीबवेषेण पार्थो नास्त्यत्र संशयः ॥ ४-४०-९ (३०१००)
एतावदुक्त्वा वचनं भीष्ममालोक्य चाब्रवीत् ॥ ४-४०-१० (३०१०१)
नदीज लङ्केशवनारिकेतुर्नगाह्वयो नाम नगारिसूनुः ।
गत्या सुरेशः क्वचिदङ्गनेव गुरुर्बभाषे वचनं तदानीम्
॥ ४-४०-११ (३०१०२)
वैशंपायन उवाच। ४-४०-१२क्ष् (३१७५)
इत्युक्त्वा संज्ञया द्रोणस्तूष्णीमासीद्द्विशांपते ।
भारद्वाजवचः श्रुत्वा गाङ्गेयः संज्ञयाऽब्रवीत् ॥ ४-४०-१२ (३०१०३)
अतीतं चक्रमस्माकं विषयान्तरमागताः ।
अतीतः समयश्चोक्त अस्माभिर्यः सभातले ।

न भयं शत्रुतः कार्यं शङ्कां त्यज नरर्षभ ॥ ४-४०-१३ (३०१०४)
देवव्रतेनैवमुक्ते वचने हितकारिणा ।
दुर्योधनमथालोक्य संज्ञया द्रोण अब्रवीत् ॥ ४-४०-१४ (३०१०५)
एष वीरो महेष्वासः सर्वशस्त्रभृतांवरः ।
आगतः क्लीबरूपेण पार्थो नास्त्यत्र संशयः ॥ ४-४०-१५ (३०१०६)
एष पार्थो हि विक्रान्तः सव्यसाची परन्तपः ।
ये जेतारो महीपानाममुना कुरवो हताः ॥ ४-४०-१६ (३०१०७)
यस्मिञ्जाते मही कृत्स्ना निर्भरोच्छ्वासिताऽभवत् ।
येन मे दक्षिणा दत्ता बद्ध्वा द्रुपदमोजसा ॥ ४-४०-१७ (३०१०८)
विद्ध्वा वियद्गतं लक्ष्यं विनिर्जित्य च पार्थिवान् ।
निर्जिता येन पाञ्चाली पुरा येन स्वयंवरे ॥ ४-४०-१८ (३०१०९)
खाण्डवे येन संतृप्तो वह्निर्जित्वा सुरासुरान् ।
परिणीता सुभद्रा च येन निर्जित्य यादवान् ॥ ४-४०-१९ (३०११०)
निर्जितो येन युद्धेन त्रिपुरारिः स्मरार्दनः ॥ ४-४०-२० (३०१११)
गत्वा त्रिविष्टपं येन जितेन्द्रा दानवा युधि ।
निवातकवचा राजन्दानवानां त्रिकोटयः ।
निर्जिताः कालकेयाश्च हिरण्यपुरवासिनः ॥ ४-४०-२१ (३०११२)
येन त्वं मोचितो बद्धश्चित्रसेनेन तद्वने ॥ ४-४०-२२ (३०११३)
येन गत्वोत्तरं मेरोरानिनाय महद्धनम् ।
याजितो धर्मसूनुश्च नृपान्सर्वान्विजित्य च ॥ ४-४०-२३ (३०११४)
यस्मिञ्शौर्यं च वीर्यं च तेजो धैर्यं पराक्रमः ।
औदार्यं चैव गाम्भीर्यं श्रीर्ह्रीर्धर्मो दयाऽऽर्जवम् ।
एवमादिगुणोपेतः सोयं पार्थो न संशयः ॥ ४-४०-२४ (३०११५)
नाजित्वा विनिवर्तेत सर्वानपि मरुद्गणान् ॥ ४-४०-२५ (३०११६)
क्लेशितश्च वने शूरो वासवेन च शिक्षितः ।
अमर्षवशमापन्नो योत्स्यते नात्र संशयः ।
न ह्यस्य प्रतियोद्धारमन्यं पश्यामि कौरव ॥ ४-४०-२६ (३०११७)
महादेवोपि पार्थेन श्रूयते युद्धतोषितः ।
किरातवेषप्रच्छन्नो गिरौ हिमवति प्रभुः ॥ ४-४०-२७ (३०११८)
इत्येवंवादिनं द्रोणं कर्णः क्रुद्धोऽभ्यभाषत ॥ ४-४०-२८ (३०११९)
सदा भवान्फल्गुनस्य गुणानस्मासु कत्थसे ।
न चार्जुनः कलापूर्णो मम दुर्योधनस्य वा ॥ ४-४०-२९ (३०१२०)
दुर्योधन उवाच। ४-४०-३०क्ष् (३१७६)
यद्येष पार्थो राधेय कृतं कार्यं भवेन्मम ।
ज्ञाताः पुनश्चरिष्यन्ति द्वादशान्यांश्च वत्सरान् ॥ ४-४०-३० (३०१२१)
अथवा कश्चिदेवान्यः क्लीबरूपेण देवराट् ।

शरैरेनं सुनिशितैः पातयिष्यामि भूतले ॥ ४-४०-३१ (३०१२२)
वैशंपायन उवाच। ४-४०-३२क्ष् (३१७७)
तस्मिन्वदति तां वाचं धार्तराष्ट्रे परन्तपे ।
भीष्मो द्रोणः कृपो द्रौणिः पौरुषं तदपूजयन् ॥ ४-४०-३२ (३०१२३)
तां शमीमभिसंगम्य पार्थो वैराटिमब्रवीत् ।
सुखसंवर्धितं पित्रा समराणामकोविदम् ॥ ४-४०-३३ (३०१२४)
एहि भूमिंजयारुह्य वैराटे महतीं शमीम् ।
समादिष्टो मया क्षिप्रं धनुर्गाण्डीवमानय ॥ ४-४०-३४ (३०१२५)
नेमानीष्वासनानीह सोढुं शक्ष्यन्ति मे बलम् ।
नालं भारं गुरुं भेत्तुं कुञ्जरं वा प्रमर्दितुम् ॥ ४-४०-३५ (३०१२६)
मम वा बाहुविक्षेपं शत्रूनिह विजेष्यतः ।
नेच्छामि तैरहं कर्तुं कर्म वैजयिकं त्विह ॥ ४-४०-३६ (३०१२७)
अतिसूक्ष्माणि ह्रस्वानि सर्वाणि च मृदूनि च ।
आयुधानि महाबाहो तवैतानि महाबल ॥ ४-४०-३७ (३०१२८)
तस्माद्भूमिंजयारुह्य शमीमेतां पलाशिनीम् ।
अस्यां हि पाण्डुपुत्राणां धनूंषि निहितात्युत ॥ ४-४०-३८ (३०१२९)
युधिष्ठिरस्य भीमस्य बीभत्सोर्यमयोस्तथा ।
ध्वजा शराश्च शूराणां दिव्यानि कवचानि च ॥ ४-४०-३९ (३०१३०)
अत्रैव तु महावीर्यं धनुः पार्थस्य गाण्डिवम् ।
एकं शतसहस्रेण संमितं राष्ट्रवर्धनम् ॥ ४-४०-४० (३०१३१)
व्यायामसहमत्यर्थं तृणराजसमं महत् ।
सर्वायुधमहामात्रं सर्वारिक्षयकारकम् ॥ ४-४०-४१ (३०१३२)
सुवर्णविकृतं दिव्यं श्लक्ष्णमायतमव्रणम् ।
अलं भारं गुरुं सोढुं वारुणं च सुदर्शनम् ॥ ४-४०-४२ (३०१३३)
तादृशान्येव सर्वाणि बलवन्ति दृढानि च ।
युधिष्ठिरस्य भीमस्य बीभत्सोर्यमयोस्तथा ।
प्रथितानि विशिष्टानि दुर्दशानि भवन्त्युत ॥ ४-४०-४३ (३०१३४)
उत्तर उवाच। ४-४०-४४क्ष् (३१७८)
शरीरमिह चासक्तं शम्यां शुष्कं पुरा किल ।
तदहं राजपुत्रः सन्स्पृशेयं पाणिना कथम् ॥ ४-४०-४४ (३०१३५)
न मामेवंविधं कर्म कारयस्व बृहन्नले ।
कथं वा शक्यते कर्तुं बुद्ध्या त्वं मन्यसे कथं ॥ ४-४०-४५ (३०१३६)
नैवंविधं मया युक्तमालब्धुं क्षत्रयोनिना ।
महता राजपुत्रेण मन्त्रयज्ञविदा सता ॥ ४-४०-४६ (३०१३७)
स्पृष्टवन्तं शरीरं मां शववाहमिवाशुचिम् ।
कथं वा व्यवहार्यं वै कुर्वीथास्त्वं बृहन्नले ॥ ४-४०-४७ (३०१३८)

वैशंपायन उवाच। ४-४०-४८क्ष् (३१७९)
तमुवाच ततः शूरः पार्थं परपुंरजयः ।
दायादं सर्वमत्स्यानां कुले जातं विशारदम् ॥ ४-४०-४८ (३०१३९)
जानामि त्वां महाप्राज्ञ शुभं जात्या कुलेन च ।
कथं नु पापकं कर्म ब्रूयां त्वाऽहं परन्तप ॥ ४-४०-४९ (३०१४०)
व्यवहार्यश्च राजेन्द्र शुद्धश्चैव भविष्यसि ।
धनूंष्येतानि मा भैस्त्वं शरीरं नात्र विद्यते ॥ ४-४०-५० (३०१४१)
दायादं मत्स्यराजस्य कुले जातं मनस्विनम् ।
कथं वा नन्दितं कर्म कारये त्वां नृपात्मज ॥ ४-४०-५१ (३०१४२)
वैशंपायन उवाच। ४-४०-५२क्ष् (३१८०)
एवमुक्तः स पार्थेन रथात्प्रस्कन्द्य कुण्डली ।
आरुरोह शमीवृक्षं वैराटिरवशस्तदा ॥ ४-४०-५२ (३०१४३)
तमन्वशासच्छत्रुघ्नो रथे तिष्ठन्धनञ्जयः ।
अवरोपय वृक्षाग्राद्धनूंष्येतानि माचिरम् ॥ ४-४०-५३ (३०१४४)
सोपहृत्य महार्हाणि धनूंषि पृथुवक्षसाम् ।
परिवेष्टनपत्राणि विमुच्य समुपानयत् ॥ ४-४०-५४ (३०१४५)
परिवेष्टनमेतेषां सर्वं मुञ्चस्व माचिरम् ।
तेषां संनहनीयानि परिमुच्य परन्तपः ।
अपश्यत्तत्र गाण्डीवं चतुर्भिरपरैः सह ॥ ४-४०-५५ (३०१४६)
तेषां विमुच्यमानानां धनुषामर्कवर्चसाम् ।
विनिश्चेरुः प्रभा दिव्या ग्रहाणामुदयेष्विव ॥ ४-४०-५६ (३०१४७)
स तेषां रूपमालेक्य भोगिनामिव दृम्भताम् ।
हृष्टरोमा भयोद्विग्नः प्रवेपिततनुस्तदा ॥ ४-४०-५७ (३०१४८)
अर्जुनेन समाश्वस्तः किंचिद्धृष्टो नृपात्मजः ।
तेषां संदर्शनाभ्यासं स्पर्शाभ्यासं पुनः पुनः ॥ ५८ ॥ ४-४०-५८ (३०१४९)
आमील्य पुनरुन्मील्य स्पृष्ट्वास्पृष्ट्वा चकार सः ।
सम्यग्घुण्टस्तदाऽऽश्वस्तः क्षणेन समपद्यत ॥ ५९ ॥ ४-४०-५९ (३०१५०)
संस्पृश्य तानि चापानि भानुमन्ति बृहन्ति च ।
वैराटिरर्जुनं राजन्निदं वचनमब्रवीत् ॥ ६० ॥ ॥ ४-४०-६० (३०१५१)

इति श्रीमन्महाभारते विराटपर्वणि गोग्रहणपर्वणि
चत्वारिंशोऽध्यायः ॥ ४० ॥

Mahabharata - Virata Parva - Chapter Footnotes

४-४०-११ नगारिसूनुः ।एषोऽङ्गनावेषधरः किरीटी जित्वाऽव
यं नेष्यति चाद्य गा व इति झो पाठः। हे नदीज गाङ्गेय भीष्म,

लङ्केशस्य रावणस्य वनं तस्यारिर्नाशको हनूमान् स केतुर्ध्वजो यस्य
सः लङ्केशवनारिकेतुः । नगो ग्वृक्षस्तदाह्लयः वृक्षनामा। अर्जुन
इत्यर्थः। शैलवृक्षौ नगावगावित्यमरः। नगारिरिन्द्रस्तस्य
सूनुः । किरीटी तन्नामा यं जित्वा वः युष्माकं गाः धेनूः नेष्यति तं
दुर्योधनं अव पालय ॥
११ ॥
४-४०-४६ आलब्धुं स्प्रष्टुम् ॥
४६ ॥
॥
चत्वारिंशोऽध्यायः ॥

---

विरतपर्व-अध्यय०४१
॥ श्रीः ॥
४.४१. अध्यायः ४१

Mahabharata - Virata Parva - Chapter Topics
पाण्डवकार्मुकाद्यवलोकनविस्मितेनोत्तरकुमारेणार्जुनंप्रति
तत्तदायुधवर्णनपूर्वकं तत्तत्स्वामिनां प्रश्नः ॥ १ ॥

Mahabharata - Virata Parva - Chapter Text

४-४१-० (३०१५२)
उत्तर उवाच। ४-४१-०क्ष् (३१८१)
सारथे किमिदं दिव्यं नागो वा यदि वा धनुः ।
सौवर्णान्यत्र पद्मानि शतपत्राणि भागशः ।
कुशाग्निप्रतितप्तानि भानुमन्ति बृहन्ति च ॥ ४-४१-१ (३०१५३)
बिन्दवश्चात्र सौवर्णा मणिप्रोताः समन्ततः ।
शशिसूर्यप्रभाः पृष्ठे भान्ति रुक्मपरिष्कृताः ॥ ४-४१-२ (३०१५४)
पुष्पाण्यत्र सुवर्णानि शतपत्राणि भागशः ।
विस्मापनीयरूपं च भीमं भीमप्रदर्शनम् ॥ ४-४१-३ (३०१५५)
नीलोत्पलनिभं कस्य शातकुम्भपरिष्कृतम् ।
ऋषभा यस्य सौवर्णाः पृष्ठे तिष्ठन्ति शृङ्गिणः ॥ ४-४१-४ (३०१५६)
तालप्रमाणं कस्येदं मणिरुक्मविभूषितम्
हाटकस्य सुवर्णस्य यस्मिञ्शाखामृगा दश ॥ ४-४१-५ (३०१५७)
दुरानमं महादीर्घं सुरूपं दुष्प्रधर्षणम् ।
कस्येदमीदृशं चित्रं धनुः सर्वे च दंशिताः ॥ ४-४१-६ (३०१५८)
चन्द्रार्कविमलाभासः सुरूपाः सुप्रदर्शनाः ।

हंसाः पृष्ठं श्रिता यस्य कुशाग्निप्रतिमार्चिषः ।
शार्ङ्गगाण्डीवसदृशं कस्येदं सारथे धनुः ॥ ४-४१-७ (३०१५९)
चतुर्तं काञ्चनवपुर्भाति विद्युद्वर्णोपमम् ।
नीलोपलिप्तमच्छिद्रं जातरूपमयं धनुः ।
मत्स्यश्चास्य हिरण्यस्य पृष्ठे तिष्ठन्ति दंशिताः ॥ ४-४१-८ (३०१६०)
शक्रचापोपमं दिव्यं कस्येदं सारथे धनुः ।
उच्छ्रितं फणिवद्दिव्यं सारवत्त्वाद्दुरानमम् ॥ ४-४१-९ (३०१६१)
सहस्रगोधाः सौवर्णा द्वीपिनश्च चतुर्दश ।
बर्हिणश्चात्र सौवर्णाः शतचन्द्रार्कभूषिताः ।
जाम्बूनदविचित्राङ्गं कस्येदं पञ्चमं धनुः ॥ ४-४१-१० (३०१६२)
कस्येमे क्षुरनाराचाः सहस्रं लोमवापिनः ।
प्रक्षिप्तास्तीक्ष्णतुण्डाग्रा उपासङ्गे हिरण्मये ॥ ४-४१-११ (३०१६३)
हारिद्रवर्णाः कस्येमे शिता पञ्चशतं शराः ।
आशीविषसमस्पर्शाः शिताश्चाजिंहगा दृढाः ॥ ४-४१-१२ (३०१६४)
विपाठाः पृथवः कस्य गृध्रपत्रार्धवाजिताः ।
वराहकर्णास्तीक्ष्णाग्राः कस्येमे रुचिराः शराः ॥ ४-४१-१३ (३०१६५)
वज्राशनिसमस्पर्शा वैश्वानरशिखार्चिषः ।
सुवर्णपुङ्खास्तीक्ष्णाग्राः कस्य सप्तशतं शराः ॥ ४-४१-१४ (३०१६६)
कस्यायं सायको दीर्घो गव्ये कोशे च दंशितः ।
कस्य दण्डो दृढः श्लक्ष्णो रुचिरोऽयं प्रकाशते ॥ ४-४१-१५ (३०१६७)
वैयाघ्रकोशः कस्यायं दिव्यः शङ्खो महाप्रभः ।
कस्यार्थमसयश्चैते पञ्च शार्दूललक्षणाः ॥ ४-४१-१६ (३०१६८)
कस्यायं निर्मलः खङ्गो द्वीपिचर्मनिवासितः ।
नीलोत्पलसवर्णोऽयं कस्य खङ्गः पृथुर्महान् ॥ ४-४१-१७ (३०१६९)
मृगेन्द्रचर्मावसितस्तीक्ष्णधारः सुनिर्मलः ।
ऋषभाजिनकोशस्तु कस्य खङ्गो महानयम् ॥ ४-४१-१८ (३०१७०)
यस्यापिधाने दृश्यन्ते सूर्याः पञ्च परिष्कृताः ।
कस्यायं विपुलः खङ्गः शृङ्गत्सरुमनोहरः ॥ ४-४१-१९ (३०१७१)
निहितः पार्षते कोशे तैलधौतः समाहितः ।
प्रमाणवर्णयुक्तश्च कस्य खङ्गो महानयम् ।
एतेन प्रतिविद्धः सञ्जीवेत्कश्चिन्न कुञ्जरः ॥ ४-४१-२० (३०१७२)
निर्दिशस्व यथामार्गं मया पृष्टा बृहन्नले ।
विस्मयो मे परो जातो दृष्ट्वा सर्वमिदं महत् ॥ ॥ ४-४१-२१ (३०१७३)

इति श्रीमन्महाभारते विराटपर्वणि गोग्रहणपर्वणि
एकचत्वारिंशोऽध्यायः ॥ ४१ ॥

विरतपर्व-अध्यय०४२
॥ श्रीः ॥
४.४२. अध्यायः ४२

Mahabharata - Virata Parva - Chapter Topics
अर्जुनेनोत्तरंप्रति युधिष्ठिराद्यायुधानां पृथक्पृथङ्निर्देशेन तत्तत्स्वामिकत्वकथनम् ॥ १ ॥

Mahabharata - Virata Parva - Chapter Text

४-४२-० (३०१७४)
वैशंपायन उवाच। ४-४२-०क्ष् (३१८२)
अत्तरेणैवमुक्तस्तु पार्थो वैराटिमब्रवीत् ।
मृद्धा प्रत्याययन्वाचा भीतं शङ्कावशं गतम् ॥ ४-४२-१ (३०१७५)
अर्जुन उवाच। ४-४२-२क्ष् (३१८३)
अत्त्वया प्रथमं पृष्टं शत्रुसेनाङ्गमर्दनम् ।
पार्थस्येदं धनुर्दिव्यं गाण्डीवमिति विश्रुतम् ॥ ४-४२-२ (३०१७६)
अभेद्यमभयं श्रीमद्दिव्यमच्छेद्यमव्रणम् ।
सर्वायुधमहामात्रं शातकुम्भमयं धनुः ॥ ४-४२-३ (३०१७७)
एतच्छतसहस्रेण संमितं राष्ट्रवर्धनम् ।
देवदानवगन्धर्वैः पूजितं शाश्वतीः समाः ॥ ४-४२-४ (३०१७८)
येन देवासुरान्पार्थः सर्वान्विषहते रणे ।
एतद्वर्षसहस्रं तु ब्रह्मा पूर्वमधारयत् ॥ ४-४२-५ (३०१७९)
उमापतिश्चतुःषष्टिं शक्रोऽशीतिं च पञ्च च ।
सोमः पञ्चसहस्राणि तथा च वरुणः शतम् ॥ ४-४२-६ (३०१८०)
तस्माच्च वरुणादग्निः प्रेम्णा प्राहृत्य तच्छुभम् ।
अग्निना प्रातिभाव्येन दत्तं पार्थाय गाण्डिवम् ।
पञ्चषष्टिं च वर्षाणि कौन्तेयो धारयिष्यति ॥ ४-४२-७ (३०१८१)
एवंवीर्यं महावेतेतच्च धनुरुत्तमम् ।
नीलोत्पलसमं राज्ञः कौरव्यस्य महात्मनः ॥ ४-४२-८ (३०१८२)
बिन्दवश्चात्र सौवर्णाः पृष्ठे साधुनियोजिताः ।
विश्रुतं भीमसेनस्य जातरूपग्रहं दृढम् ॥ ४-४२-९ (३०१८३)
सहस्रगोधाः सौवर्णा द्वीपिनश्च चतुर्दश ।
ऋषभा यत्र सौवर्णाः पृष्ठे तिष्ठन्ति शृङ्गिणः ॥ ४-४२-१० (३०१८४)
येन भीमोऽजयत्कृत्स्नां दिशं प्राचीं परंतपः ।
पृष्ठे विभक्ताः शोभन्ते कुशाग्निप्रतिदीपिताः ॥ ४-४२-११ (३०१८५)

पूजितं सुरमर्त्येषु प्रथितं धनुरुत्तमम् ।
तालप्रमाणं भीमस्य रत्नरुक्मविभूषितम् ॥ ४-४२-१२ (३०१८६)
दुरानमं महद्दीर्घं सुरूपं दुष्प्रधर्षणम् ।
बर्हिणश्चात्र सौवर्णाः शतचन्द्रकभूषणाः ॥ ४-४२-१३ (३०१८७)
नकुलस्य धनुस्त्वेतन्माद्रीपुत्रस्य धीमतः ।
एतेन सदृशं चित्रं धनुरेतद्यवीयसः ।
हारिद्रवर्णं राज्ञस्तु कौरव्यस्य महात्मनः ॥ ४-४२-१४ (३०१८८)
विपाठा भीमसेनस्य गिरीणामपि दारणाः ।
सुप्रभाः सुमहाकायास्तीक्ष्णाग्राः सुतरां दृढाः ।
भीमेन प्रहिता ह्येते वारणानां निवारणाः ॥ ४-४२-१५ (३०१८९)
सुवर्णदण्डरुचिराः कालदण्डोपमाः शुभाः ।
नकुलस्य शरा ह्येते वज्राशनिसमप्रभाः ॥ ४-४२-१६ (३०१९०)
यांश्च त्वं पृच्छसे दीप्तान्समधारान्समाहितान् ।
वराहकर्णास्तीक्ष्णाग्राः सहदेवस्य ते शराः ॥ ४-४२-१७ (३०१९१)
यस्त्वयं सायको दीर्घो गव्ये कोशे च दंशितः ।
पार्थस्यायं महाघोरः सर्वभारसहो महान् ॥ ४-४२-१८ (३०१९२)
यस्त्वयं निर्मलः खड्गो द्वीपिचर्मणि दंशितः ।
राज्ञो युधिष्ठिरस्यायं कुन्तीपुत्रस्य धीमतः । ४-४२-१९ (३०१९३)
वैयाघकोशो भीमस्य पञ्चशार्दूललक्षणः ।
वारणानां सुदृप्तानां शिक्षितः स्कन्धशातने ॥ ४-४२-२० (३०१९४)
नीलोत्पलसवर्णाभः खड्गः पार्थस्य धीमतः ।
मृगेन्द्रचर्मपिहितस्तीक्ष्णधारः सुनिर्मलः ॥ ४-४२-२१ (३०१९५)
दर्शनीयः सुतीक्ष्णाग्रः कुन्तीपुत्रस्य धीमतः ।
अर्जुनस्यैष निस्त्रिंशः परसैन्याग्रदूषणः ॥ ४-४२-२२ (३०१९६)
यस्त्वयं पार्षते कोशे निक्षिप्तो रुचिरत्सरुः ॥
नकुलस्यैष निस्त्रिंशो वैश्वानरसमप्रभः ॥ ४-४२-२३ (३०१९७)
यस्त्वयं पिङ्गलः खड्गश्चित्रो मणिमयत्सरुः ।
सहदेवस्य खड्गोऽयं भारसाहोऽतिदंशितःक ।
भीमस्यायं महादण्डः सर्वामित्रविनाशनः ॥ ४-४२-२४ (३०१९८)
वैशंपायन उवाच। ४-४२-२४क्ष् (३१८४)
भेदतो ह्यर्जुनस्तूर्णं कथयामास तत्त्वतः ।
आयुधानि कलापांश्च निस्त्रिंशांश्चातुलप्रभान् ॥ ॥ ४-४२-२५ (३०१९९)

इति श्रीमन्महाभारते विराटपर्वणि गोग्रहणपर्वणि
द्विचत्वारिंशोऽध्यायः ॥ ४२ ॥

---

विरतपर्व-अध्यय०४३

॥ श्रीः ॥

४.४३. अध्यायः ४३

Mahabharata - Virata Parva - Chapter Topics

अर्जुनेनोत्तरंप्रति स्वस्यार्जुनत्वकथनपूर्वकं कङ्कादीनां युधिष्ठिरादित्वकथनम् ॥ १ ॥
तत्प्रत्ययार्थं स्वनामदशककथनपूर्वकं तन्निर्वचनम् ॥ २ ॥

Mahabharata - Virata Parva - Chapter Text

४-४३-० (३०२००)
वैशंपायन उवाच। ४-४३-०क्ष् (३१८५)
एतस्मिन्नन्तरे पार्थं न मूढात्मा व्यजानत ।
विराटपुत्रः प्रभुखे पप्रच्छ पुनरेव तम् ॥ ४-४३-१ (३०२०१)
सुवर्णरुचिराण्येषामायुधानि महात्मनाम् ।
रुचिराणि प्रकाशन्ते पार्थानामाशुकारिणाम् ॥ ४-४३-२ (३०२०२)
क्वनु ते पाण्डवाः शूराः संग्रामेष्वपराजिताः ।
येषामिमानि दीप्तानि श्रिया दीप्यन्ति भान्ति च। ४-४३-३ (३०२०३)
कस्मिन्वसन्ति देशे च धर्मज्ञा बन्धुवत्सलाः ।
क्व धर्मराजः कौन्तेयो धर्मपुत्रो युधिष्ठिरः ॥ ४-४३-४ (३०२०४)
धर्मशीलश्च धर्मात्मा धर्मवान्धर्मवित्सुधीः ।
धर्माध्यक्षो धर्मपुत्रो धर्मज्ञो धर्ममूर्तिमान् ॥ ४-४३-५ (३०२०५)
धर्मनिष्ठो धर्मकर्ता धर्मगोप्ता सुधर्मकृत् ।
सत्यार्जवक्षमाधारो घृणी धर्मपरायणः ॥ ४-४३-६ (३०२०६)
भीमसेनार्जुनौ चापि सर्वे ते मातुला मम ।
नकुलः सहदेवो वा सर्वास्त्रकुशलौ रणे ॥ ४-४३-७ (३०२०७)
सर्व एव महात्मानः सर्वामित्रविनाशनाः ।
राज्यमक्षैः पराजित्य नः श्रूयन्ते वनं गताः ॥ ४-४३-८ (३०२०८)
द्रौपदी चापि पाञ्चाली स्त्रीरत्नमिति मे श्रुता ।
जिता चाक्षैस्तदा कृष्णा तानेवान्वगमद्वने ॥ ४-४३-९ (३०२०९)
उत्सृज्य राज्यं धर्म्यं ते नः श्रूयन्ते वनं गताः ॥ ४-४३-१० (३०२१०)
पाण्डवान्यदि जानीषे क्वनु ते धर्मचारिणः ।
क्वनु वा निवसन्तीति सत्यं ब्रूहि बृहन्नले ॥ ४-४३-११ (३०२११)
किमर्थमागतान्यत्र शस्त्रास्त्राणि महात्मनाम् ।
कथं ज्ञातानि भवता तथा मे ब्रूहि शोभने ॥ ४-४३-१२ (३०२१२)
वैशंपायन उवाच। ४-४३-१३क्ष् (३१८६)

ततः प्रहस्य बीभत्सुः कौन्तेयः श्वेतवाहनः ।
उवाच राजपुत्रं तमुत्तरं शृणु मे वचः ॥ ४-४३-१३ (३०२१३)
मा भैस्त्वं राजशार्दूल सर्वं ते वर्णयाम्यहम् ।
नात्र भेतव्यमद्यापि राजपुत्र यथातथा ॥ ४-४३-१४ (३०२१४)
वयं ते पाण्डवा नाम वनवासस्य पारगाः ।
अतीते द्वादशे वर्षे च्छन्नवासमिहोषिताः ।
तस्मादशङ्कितमनाः शृणुष्वावहितोत्तर ॥ ४-४३-१५ (३०२१५)
अहमस्म्यर्जुनो नाम कङ्को नाम युधिष्ठिरः ।
भीमसेनस्तु वललः पितुस्ते रसपाचकः ।
अश्वबन्धस्तु नकुलः सहदेवस्तु गोपतिः ॥ ४-४३-१६ (३०२१६)
सैरन्ध्रीं द्रौपदीं विद्धि यदर्थे कीचको हतः ।
भीमसेनेन दुर्वृत्तः सहभ्रातृभिराहवे ॥ ४-४३-१७ (३०२१७)
श्रुत्वैतद्वचनं जिष्णोर्विस्मयस्फारितेक्षणः ।
पश्यन्ननिमिषः पार्थं शनैर्वाचमुवाच ह ॥ ४-४३-१८ (३०२१८)
उत्तर उवाच। ४-४३-१९क्ष् (३१८७)
दश पार्थस्य नामानि श्रूयन्ते मे कथासु च ।
प्रब्रूयास्तानि यदि मे श्रद्दध्यां सर्वमेव ते ॥ ४-४३-१९ (३०२१९)
अर्जुन उवाच। ४-४३-२०क्ष् (३१८८)
अहं तर्हि तवाचक्षे दश नामानि तानि मे ।
वैराटे शृणु तानि त्वं यानि पूर्वं श्रुतानि ते ।
ईशानो विदधे देवस्त्रिदिवस्येश्वरो दिवि ॥ ४-४३-२० (३०२२०)
अर्जुनः फल्गुनो जिष्णुः किरीटी श्वेतवाहनः ।
बीभत्सुर्विजयः पार्थः सव्यसाची धनञ्जयः ।
एतानि मम नामानि स्थापितानि सुरोत्तमैः ॥ ४-४३-२१ (३०२२१)
उत्तर उवाच। ४-४३-२२क्ष् (३१८९)
गुणतो दश नामानि समवेतानि पाण्डवे ।
चरन्ति लोके ख्यातानि विदितानि ममावघ ॥ ४-४३-२२ (३०२२२)
केनासि विजयो नाम केनासि श्वेतवाहनः ।
सव्यसाची च केनासि जिष्णुर्बीभत्सुरेव च ॥ ४-४३-२३ (३०२२३)
अर्जुनः फल्गुनः पार्थः किरीटी केन सारथे ।
धनञ्जयश्च केनासि शीघ्रं वद बृहन्नले ॥ ४-४३-२४ (३०२२४)
श्रुता मे तस्य वीरस्य केवला नामहेतवः ।
इतस्ततश्चलत्येतन्मनो मे चञ्चलं त्वयि ।
अर्जुनो वा भवान्नेति वद शीघ्रं बृहन्नले ॥ ४-४३-२५ (३०२२५)
अर्जुन उवाच। ४-४३-२६क्ष् (३१९०)
सर्वाञ्जित्वा जनपदान्धनं चाच्छिद्य सर्वशः ।

मध्ये धनस्य तिष्ठन्तं तन्मामाहुर्धनञ्जयम् ॥ ४-४३-२६ (३०२२६)
अभिप्रयामि संग्रामे यदाऽहं युद्धदुर्मदान् ।
अजित्वा न निवर्तेयं तेन वै विजयं विदुः ॥ ४-४३-२७ (३०२२७)
श्वेताः काञ्चनसन्नाहा रथे युज्यन्ति मे हयाः ।
शत्रुभिर्युध्यमानस्य तेनाहं श्वेतवाहनः ॥ ४-४३-२८ (३०२२८)
किरीटं सूर्यसंकाशं भ्राजते मे शिरोगतम् ।
रणमध्ये रथस्थस्य सूर्यपावकसन्निभम् ॥ ४-४३-२९ (३०२२९)
अच्छेद्यं रुचिरं चित्रं जाम्बूनदपरिष्कृतम् ।
इन्द्रदत्तमनाहार्यं तेनाहुर्मां किरीटिनम् ॥ ४-४३-३० (३०२३०)
न कुर्यां कर्म बीभत्सं युध्यमानः कदाचन ।
तेन देवमनुष्येषु बीभत्सुरिति मां विदुः ॥ ४-४३-३१ (३०२३१)
उभौ मे तुल्यकर्माणौ गाण्डीवस्य विकर्षणे ।
भुजौ मे भवतः सङ्ख्ये परसैन्यविनाशिनौ ।
तयोः सव्योऽधिकस्तस्मात्सव्यसाचीति मां विदुः ॥ ४-४३-३२ (३०२३२)
पृथिव्यां सागरान्तायां वर्णो मे दुर्लभः समः ।
शुद्धत्वाद्रूपवत्त्वाच्च तेन मामार्जुनं विदुः ॥ ४-४३-३३ (३०२३३)
उत्तराभ्यां तु पूर्वाभ्यां फल्गुनीभ्यामहं दिवा ।
जातो हिमवतः पृष्ठे तेन मां फल्गुनं विदुः ॥ ४-४३-३४ (३०२३४)
यो ममाङ्गे व्रणं कुर्याद्भ्रातुर्ज्येष्ठस्य पश्यतः ।
युधिष्ठिरस्य रुधिरं दर्शयेद्वा कदाचन ।
पराभवमहं तस्य कुले कुर्यां न संशयः ॥ ४-४३-३५ (३०२३५)
योत्स्यामि तैरहं सर्वैर्न मे तेभ्यः पराभवः ।
तेन देवमनुष्येषु जिष्णुर्नामास्मि विश्रुतः ॥ ४-४३-३६ (३०२३६)
माता मम पृथा नाम तेन मां पार्थमब्रुवन् ॥ ४-४३-३७ (३०२३७)
देवदानवगन्धर्वपिशाचोरगराक्षसान् ।
अहं पुरा रणे जित्वा खाण्डवेऽग्निमतर्पयम् ॥ ४-४३-३८ (३०२३८)
हुताशनं तर्पयित्वा सहितः शार्ङ्गधन्वना ।
श त्रिविष्टपगतौक्ष दृष्ट्वा पितामहमहेश्वरौ ॥ ४-४३-३९ (३०२३९)
मूर्च्छया पतितं भूमावागतौ देवसत्तमौ ।
दृष्ट्वा तौ वरदौ देवौ संज्ञां लब्ध्वोत्थितः पुनः ॥ ४-४३-४० (३०२४०)
मूर्ध्ना हि प्रणतं भूमौ तौ देवौ वरदौ वरौ ।
कृष्णेत्येकादशं नाम प्रीत्या मे चक्रतुस्तदा ।
तुष्टौ च मम वीर्येण कर्मणा चाभिराधितौ ॥ ४-४३-४१ (३०२४१)
सर्वदेवैः परिवृतौ भूयो मां स्वयमूचतुः ।
वरं तात वृणीष्वेति यं प्रार्थयसि पाण्डव ॥ ४-४३-४२ (३०२४२)
ततोऽहमस्त्राण्यलभं दिव्यानि च दृढानि च ।

ब्राह्मं पाशुपतं चैव स्थूणाकर्णं च दुर्जयम् ।
ऐन्द्रं वारुणमाग्नेयं वायव्यमथ वैष्णवम् ॥ ४-४३-४३ (३०२४३)
ततोऽहमजयं भूयो रथेनैन्द्रेण दुर्जयान् ।
मातलिं सारथिं कृत्वा निवातकवचान्रणे ।
अवध्यकवचांन्देवैर्वरदृप्तान्महासुरान् ॥ ४-४३-४४ (३०२४४)
तिस्रः कोटीर्दानवानां संयुगेष्वनिवर्तिनाम् ।
एको निर्जित्य संग्रामे भूयो देवानतोषयम् ॥ ४-४३-४५ (३०२४५)
ततो मे भगवानिन्द्रः किरीटमददात्स्वयम् ।
देवाश्च शङ्खमददुः शत्रुसैन्यनिवारणम् ॥ ४-४३-४६ (३०२४६)
अहं पारे समुद्रस्य हिरण्यपुरवासिनाम् ।
हत्वा षष्टिं सहस्राणि जयं संप्राप्तवान्रणे ॥ ४-४३-४७ (३०२४७)
असंभ्रान्तो रथे तिष्ठन्सहस्रेषु शतेषु च ।
शत्रुमध्ये दुराधर्षो न मुह्यन्ति च मे दिशः ॥ ४-४३-४८ (३०२४८)
अहं गन्धर्वराजेन ह्रियमाणं सुयोधनम् ।
भ्रातृभिः सहितं तात गन्धर्वैः समरे जितम् ।
चतुर्दश सहस्राणि हत्वा चैनममोचयम् ॥ ४-४३-४९ (३०२४९)
एतानि मम नामानि योऽहन्यहनि कीर्तयेत् ।
तं न पश्यन्ति सत्त्वानि न तं निघ्नन्ति शत्रवः ॥ ४-४३-५० (३०२५०)
अद्य पश्य महाबाहो मम वीर्यं सुदुःसहम् ।
मा भैर्विगतसंत्रासः कुरूनेतान्समागतान् ॥ ४-४३-५१ (३०२५१)
सुयोधनस्य मिषतः कर्णस्य च कृपस्य च ।
पितामहस्य भीष्मस्य द्रौणेर्द्रोणस्य च स्वयम् ।
सर्वानेव कुरूञ्जित्वा प्रत्यानेष्यामि ते पशून्ঃ ॥ ॥ ४-४३-५२ (३०२५२)

इति श्रीमन्महाभारते विराटपर्वणि गोग्रहणपर्वणि
त्रिचत्वारिंशोऽध्यायः ॥ ४३ ॥

Mahabharata - Virata Parva - Chapter Footnotes

४-४३-३१ बीभत्सुरिति भदि कल्याणे सुखे चेत्यस्य सनि रूपम् ॥
४-४३-३२ सव्येन वामेनापि हस्तेन सचितुं ज्याकर्षणादिक्रियायां
संबद्धुं शीलमस्येति सव्यसाची ॥
४-४३-३३ अर्जुन इति ऋज गतिस्थानार्जनोपार्जनेष्वित्यत उनन्प्रत्यये
भवति ।दीप्तिमत्त्वात्समत्वात् शुद्धकर्मकरत्वाच्चार्जुन इत्यर्थः ॥
४-४३-३४ उत्तराभ्यां फल्गुनीभ्यां नक्षत्राभ्यामिति झो पाठः
।नक्षत्रान्यां ताराभ्यां तत्र स्थिते चन्द्र इत्यर्थः ॥
॥

त्रिचत्वारिंशोऽध्यायः ॥
४३ ॥

---

विरतपर्व-अध्यय०४४
॥ श्रीः ॥
४.४४. अध्यायः ४४

Mahabharata - Virata Parva - Chapter Topics
उत्तरेण बृहन्नलाया अर्जुनत्वविज्ञानेन
तंप्रत्यज्ञानमूलकभूतपूर्वस्वापराधक्षमापनम् ॥ १ ॥
अर्जुनेनोत्तरंप्रति स्वस्य क्लैब्यप्राप्तिहेतुकथनम् ॥ २ ॥
तथोत्तरस्य सारथीकरणापूर्वकं रथारोहणेन रणायाभियानम् ॥ ३ ॥

Mahabharata - Virata Parva - Chapter Text

४-४४-० (३०२५३)
वैशंपायन उवाच। ४-४४-०क्ष् (३१९१)
ततः पार्थं स वैराटिः प्राञ्जलिस्त्वभ्यवादयत् ।
अहं भूमिंजयो नाम प्रणतोस्मि धनंजय ॥ ४-४४-१ (३०२५४)
दिष्ट्या त्वां पार्थ पश्यामि स्वागतं ते धनंजय ।
लोहिताक्ष महाबाहो नागराजवरोपम ॥ ४-४४-२ (३०२५५)
यदज्ञानादवोचं त्वां प्रमादेन नरोत्तम ।
अकृत्वा हृदये सर्वं क्षन्तुमर्हसि तन्मम ॥ ४-४४-३ (३०२५६)
यतस्त्वया कृतं पूर्वं चित्रं कर्म सुदुष्करम् ।
अतो भयं व्यपेतं मे प्रीतिश्च परमा त्वयि ॥ ४-४४-४ (३०२५७)
दासोऽहं ते भविष्यामि पश्य मामनुकम्पया ॥ ४-४४-५ (३०२५८)
या प्रतिज्ञा कृता पूर्वं तव सारथ्यकारणात् ।
सेयं प्रतिज्ञा पूर्णा मे हर्षश्चार्जुन जायते ॥ ४-४४-६ (३०२५९)
देवेन्द्रतनयस्येह सारथिः स्यां महामृधे ।
इति पूर्वं कृताऽस्माभिः प्रतिज्ञा युद्धदुर्मद ॥ ४-४४-७ (३०२६०)
प्रतिज्ञा मम संपूर्णा तव सारथ्यकारणात् ।
मनस्स्वास्थ्यं च मे जातं जातं भाग्यं च मे महत् ॥ ४-४४-८ (३०२६१)
आस्थाय विपुलं वीर रथं सारथिना मया ।
दुर्योधनं च जित्वाऽऽजौ निवर्तय पशून्मम ॥ ४-४४-९ (३०२६२)
अर्जुन उवाच। ४-४४-१०क्ष् (३१९२)
प्रीतोस्मि राजपुत्राद्य न भयं विद्यते तव ।

सर्वान्नुदामि ते शत्रून्रणे रणविशारद ॥ ४-४४-१० (३०२६३)
स्वस्थो भव महान्युद्धे पश्य मां शत्रुभिः सह ।
युध्यमानं विमर्देऽस्मिन्कुर्वाणं भैरवं रवम् ॥ ४-४४-११ (३०२६४)
गाण्डीवं देवदत्तं च शरान्कनकभूषणान् ।
एतान्सर्वानुपासङ्गान्क्षिप्रं बध्नीहि मे रथे ।
एकं चाहर निस्त्रिंशं जातरूपपरिष्कृतम् ॥ ४-४४-१२ (३०२६५)
अहं वै कुरुभिर्योत्स्ये मोक्षयिष्यामि ते पशून् ।
तोषयिष्यामि राजानं प्रवेक्ष्यामि पुरं पुनः ॥ ४-४४-१३ (३०२६६)
संकल्पागाधपरिधं बाहुप्राकारतोरणम् ।
त्रिदण्डतूणसंबाधं नैकध्वजसमाकुलम् ॥ ४-४४-१४ (३०२६७)
ज्याक्षेपनिनदारावं नेमीनिनददुन्दुभिः ।
शरजालवितानाढ्यमाक्ष्वेडितमहास्वनम् ।
नगरं ते मया गुप्तं रथोपस्थं भविष्यति ॥ ४-४४-१५ (३०२६८)
अधिष्ठितो मया सङ्ख्ये रथो गाण्डीवधन्विना ।
अजय्यः शत्रुसैन्यानां वैराटे व्येतु ते भयम् ॥ ४-४४-१६ (३०२६९)
उत्तर उवाच। ४-४४-१७क्ष् (३१९३)
बहुना किं प्रलापेन शृणु मे परमं वचः ।
नाहं बिभेमि कौन्तेय साक्षादपि शतक्रतोः ॥ ४-४४-१७ (३०२७०)
यमवायुकुबेरेभ्यो द्रोणभीष्मशतादपि ।
बिभेमि नाहमेतेभ्यो जानामि त्वां स्थिरं युधि ।
केशवेनापि संग्रामे साक्षादिन्द्रेण वा समम् ॥ ४-४४-१८ (३०२७१)
इदं तु चिन्तयन्नेव परिमुह्यामि केवलम् ।
निश्चयं नाधिगच्छामि नावगच्छामि किंचन ॥ ४-४४-१९ (३०२७२)
एवं वराङ्गरूपस्य लक्षणैः सूचितस्य च ।
केन कर्मविपाकेन क्लीबत्वं त्वामुपागतम् ॥ ४-४४-२० (३०२७३)
मन्ये त्वां क्लीबरूपेण चरन्तं शूलपाणिनम् ।
गन्धर्वराजप्रतिमं देवं वाऽपि शतक्रतुम् ॥ ४-४४-२१ (३०२७४)
अर्जुन उवाच। ४-४४-२२क्ष् (३१९४)
भ्रातुर्नियोगाज्ज्येष्ठस्य संवत्सरमिदं व्रतम् ।
चरामि ब्रह्मचर्यं वै सत्यमेतद्ब्रवीमि ते ॥ ४-४४-२२ (३०२७५)
नास्मि क्लीबो महाबाहो परवान्धर्मसंयुतः ।
उर्वशीशापसंभूतं क्लैब्यं समुपसंस्थितम् ॥ ४-४४-२३ (३०२७६)
पुराऽहमाज्ञया भ्रातुर्ज्येष्ठस्यास्मि सुरालयम् ।
प्राप्तवानुर्वशी दृष्टा सुधर्मायां मया तदा ॥ ४-४४-२४ (३०२७७)
नृत्यन्तीं परमं रूपं बिभ्रतीं वज्रिसन्निधौ ।
अपश्यं तामनिमिषं कूटस्थामन्वयस्य मे ॥ ४-४४-२५ (३०२७८)

रात्रौ समागता मह्यं शयनं रन्तुमिच्छया ।
अहं तामभिवाद्यैव मातृसत्कारमाचरम् ॥ ४-४४-२६ (३०२७९)
सा च मामशपत्क्रुद्धा शिखण्डी त्वं भवेति वै ।
श्रुत्वा तमिन्द्रो मामाह मा भैस्त्वं पार्थ षण्डता ॥ ४-४४-२७ (३०२८०)
उपकारो भवेत्तुभ्यमज्ञातवसतौ पुरा ।
इतीन्द्रो मामनुग्राह्य ततः प्रेषितवान्वृषा ॥ ४-४४-२८ (३०२८१)
तदिदं समनुप्राप्तं व्रतं चीर्णं मयाऽनघ ।
समाप्तव्रतमुत्तीर्णं विद्धि मां त्वं नृपात्मज ॥ ४-४४-२९ (३०२८२)
उत्तर उवाच। ४-४४-३०क्ष् (३१९५)
परमोऽनुग्रहो मेऽद्य यत्प्रतर्को न मे वृथा ।
न हीदृशाः क्लीबरूपा भवन्ति तु नरोत्तमाः ॥ ४-४४-३० (३०२८३)
सहायवानस्मि रणे युद्धयेयममरैरपि ।
साध्वसं तत्प्रनष्टं मे किं करोमि ब्रवीहि मे ॥ ४-४४-३१ (३०२८४)
अहं ते संग्रहीष्यामि हयाञ्शत्रुनिर्बहण ।
शिक्षितो ह्यस्मि सारथ्ये निष्ठितः पुरुषर्षभ ॥ ४-४४-३२ (३०२८५)
दारुको वासुदेवस्य यथा शक्रस्य मातलिः ।
तथा मां विद्धि सारथ्ये शिक्षितं नरपुङ्गव ॥ ४-४४-३३ (३०२८६)
अश्वा ह्येते महाबाहो तवैवाहवदुर्जयाः ।
योग्या रथवरे युक्ताः प्राणवन्तो जितश्रमाः ॥ ४-४४-३४ (३०२८७)
यस्य यातेन पश्यन्ति भूमौ क्षिप्तं पदंपदम् ।
दक्षिणां यो धुरं वोढा सुग्रीवोण समो हयः ॥ ४-४४-३५ (३०२८८)
योऽयं हयो धुर्यवरो वामां वहति शोभनः ।
तं मन्ये मेघपुष्पस्य जवेन सदृशं हयम् ॥ ४-४४-३६ (३०२८९)
योऽयं वहति वै पार्ष्णिं दक्षिणामञ्चितोद्यतः ।
वलाहकादभिमतस्तेजसा वीर्यवत्तरः ॥ ४-४४-३७ (३०२९०)
योऽयं काञ्चनसन्नाहो वामं वहति शोभनः ।
धुर्यं शैब्यस्य तं मन्ये जवेन बलवत्तरम् ॥ ४-४४-३८ (३०२९१)
त्वामेवायं रथो वोढुं संग्रामेऽर्हति धन्विनम् ।
त्वं चे ॥ रथमास्थाय योद्धुमर्हो मतो मम ।
शर्वशत्रुभिरायातो देवराज इवासुरैः ॥ ४-४४-३९ (३०२९२)
वैशंपायन उवाच। ४-४४-४०क्ष् (३१९६)
ततो रथादवस्कन्द्य वीर्यवानरिमर्दनः ।
प्रणम्य देवान्गाण्डीवमादाय रुरुचे श्रिया ॥ ४-४४-४० (३०२९३)
ततो विमुच्य बाहुभ्यां सङ्खचूडानि पाण्डवः ।
तौ च दुन्दुभिसन्नादौ प्रतिबद्धय तलावुभौ ॥ ४-४४-४१ (३०२९४)
इन्द्रदत्ते च ते दिव्ये उद्धृत्यामुच्य कुण्डले ।

श्लक्ष्णान्केशान्मृदून्स्निग्धाञ्श्वेतेनोद्ग्रथ्य वाससा ॥ ४-४४-४२ (३०२९५)
अथासौ प्राङ्मुखो भूत्वा शुचिः प्रयतमानसः ।
अभिदध्यौ महाबाहुः सर्वास्त्राणि रथोत्तमे ॥ ४-४४-४३ (३०२९६)
ऊचुश्च पार्थं सर्वाणि प्राञ्जलीनि नृपात्मजम् ।
इमानि स्मो महोदार किङ्कराणीन्द्रनन्दन ॥ ४-४४-४४ (३०२९७)
प्रणिपत्य ततः पार्थः समालभ्य च पाणिना ।
सर्वाणि मानसानीह भवतेत्यभ्यभाषत ॥ ४-४४-४५ (३०२९८)
प्रतिगृह्य ततोऽस्त्राणि प्रहृष्टवदनोऽभवत् ।
अधिज्यं तरसा कृत्वा गाण्डीवं व्याक्षिपद्धनुः ॥ ४-४४-४६ (३०२९९)
तस्य विक्षिप्यमाणस्य धनुषोऽभून्महास्वनः ।
यथा शैलस्य महतः शैलानाक्षिप्य जघ्नुषः ॥ ४-४४-४७ (३०३००)
सनिर्घाताऽभवद्भूमिर्दिक्षु वायुर्ववौ भृशम् ।
भ्रान्तद्विजं खमभवत्प्राकम्पन्त महाद्रुमाः ॥ ४-४४-४८ (३०३०१)
तं शब्दं कुरवो राजन्विस्फोटमशनेरिव ।
तार्क्ष्यं शब्दमिव श्रुत्वा वित्रेसुर्दीनमानसाः ॥ ४-४४-४९ (३०३०२)
यथेन्द्रो व्याक्षिपद्भीमं विस्फोटमशनेर्भुवि ।
तथाऽर्जुनो धनुःश्रेष्ठं बाहुभ्यामाक्षिपद्बली ॥ ४-४४-५० (३०३०३)
महाशनिमहाशब्दसदृशो ज्यास्वनो महान् ।
शत्रून्वीरांश्च संतर्ज्य निग्रहस्थो रथे स्थितः ॥ ४-४४-५१ (३०३०४)
उत्तर उवाच। ४-४४-५२क्ष् (३१९७)
एकस्त्वं पाण्डवश्रेष्ठ बहूनोतान्महारथान् ।
कथं जेष्यसि संग्रामे सर्वशस्त्रास्त्रपारगान् ॥ ४-४४-५२ (३०३०५)
असहायो सि कोन्तेय ससहायाश्च कौरवाः ।
अत एव महाबाहो भीतस्तिष्ठामि तेऽग्रतः ॥ ४-४४-५३ (३०३०६)
वैशंपायन उवाच। ४-४४-५४क्ष् (३१९८)
उवाच पार्थो मा भैषीः प्रहस्य स्वनवत्तदा ॥ ४-४४-५४ (३०३०७)
युध्यमानस्य मे वीर गन्धर्वैः सुमहाबलैः ।
सहायो घोषयात्रायां कस्तदासीत्सखा मम ॥ ४-४४-५५ (३०३०८)
तथा प्रतिभये तस्मिन्देवदानवसंकुले ।
खाण्डवे युध्यमानस्य कस्तदासीत्सखा मम ॥ ४-४४-५६ (३०३०९)
निवातकवचैः सार्धं पौलोमैश्च महाबलैः ।
युध्यतो देवराजार्थे कः सहायस्तदाऽभवत् ॥ ४-४४-५७ (३०३१०)
स्वयंवरे तु पाञ्चाल्या राजभिः सह संयुगे ।
युध्यतो बहुभिस्तात कः सहायस्तदाऽभवत् ॥ ४-४४-५८ (३०३११)
उपजीव्य गुरुं द्रोणं शुक्रं वैश्रवणं यमम् ।
वरुणं पावकं चैव कृपं कृष्णं च माधवम् ।

पिनाकपाणिनं चैव कथमेतान्न योधये ॥ ४-४४-५९ (३०३१२)
रथं वाहय मे शीघ्रं व्येतु ते मानसो ज्वरः ॥ ॥ ४-४४-६० (३०३१३)

इति श्रीमन्महाभारते विराटपर्वणि गोग्रहणपर्वणि
चतुश्चत्वारिंशोऽध्ययः ॥ ४४ ॥

---

विरतपर्व-अध्यय०४५
॥ श्रीः ॥
४.४५. अध्यायः ४५

Mahabharata - Virata Parva - Chapter Topics
अर्जुनेन युद्धप्रस्थानसमये उत्तररथात्सिंहध्वजस्यावरोपणपूर्वकं
स्वध्यानसंनिहितस्य हनुमद्धवजस्य रथे स्थापनम् ॥ १ ॥
तथा स्वशङ्खादिशब्दश्रवणवित्रस्तस्योत्तरस्य समाश्वासनपूर्वकं
रणायाभियानम् ॥ २ ॥

Mahabharata - Virata Parva - Chapter Text

४-४५-० (३०३१४)
वैशंपायन उवाच। ४-४५-०क्ष् (३१९९)
उत्तरं सांरथिं कृत्वा शमीं कृत्वा प्रदक्षिणम् ।
आयुधं सर्वमादाय ततः प्रायाद्धनञ्जयः ॥ ४-४५-१ (३०३१५)
ध्वजं च सिंहं मात्स्यस्य भ्रातॄणामायुधानि च ।
प्रणिधाय शमीमध्ये प्रयातुमुपचक्रमे ॥ ४-४५-२ (३०३१६)
ततः काञ्चनलाङ्गूलं ध्वजं वानरलक्षणम् ।
दिव्यं मायामयं युक्तं विहितं विश्वकर्मणा ।
मनसा चिन्तयामास प्रसादं पावकस्य च ॥ ४-४५-३ (३०३१७)
स च तच्चिन्तितं ज्ञात्वा ध्वजे भूतान्ययोजयत् ।
रथे वानरमुच्छ्रित्य गाण्डीवं व्याक्षिपद्धनुः ॥ ४-४५-४ (३०३१८)
सपताकं विचित्राङ्गं सोपासङ्गं महाबलम् ।
खात्पपात रथे तूर्णं दिव्यरूपं मनोरमम् ॥ ४-४५-५ (३०३१९)
रथमास्थाय बीभत्सुः कौन्तेयः श्वेतवाहनः ।
बद्धासिः सतलत्राणः प्रगृहीतशरासनः ।
ततः प्रायादुदीचीं स कपिप्रवरकेतनः ॥ ४-४५-६ (३०३२०)
सैन्याभ्याशं स संप्राप्य गृहीत्वा शङ्खमुत्तमम् ।
स्वनवन्तं महाशब्दं देवदत्तं धनञ्जयः ।
शशाङ्करूपं बीभत्सुः प्राध्मापयदरिंदमः ॥ ४-४५-७ (३०३२१)

श शशाङ्ककुन्दधवलं मुखे निक्षिप्य वासविः ।
उच्छ्वसद्गण्डयुगलं सिराल्याचितफालकम् ॥ ४-४५-८ (३०३२२)
आरक्तनिम्ननयनं ह्रस्वस्थूलशिरोधरम् ।
अतिश्लिष्टोदरोरस्कं तिर्यगाननशोभितम् ॥ ४-४५-९ (३०३२३)
यावत्स्वशक्तिसामग्र्यं त्रैलोक्यं क्षोभयन्निव ।
मरुद्भिर्दशभिश्चैव प्राध्मापयदरिंदमः ६ ॥ ४-४५-१० (३०३२४)
शङ्खशब्दोस्य सोत्यर्थं श्रूयते कालमेघवत् ॥ ४-४५-११ (३०३२५)
तस्य शङ्खस्य शब्देन धनुपो निस्वनेन च ।
वानरस्य निनादेन रथनेमिस्वनेन च ।
जङ्गमस्य भयं घोरमकरोत्पाकशासनिः ॥ ४-४५-१२ (३०३२६)
शङ्खशब्देन पार्थस्य मुखेनाश्वाः पतन्क्षितौ ।
उत्तरश्चापि संत्रस्थो रथोपस्थ उपाविशत् ॥ ४-४५-१३ (३०३२७)
अथाश्वान्रश्मिभिः पार्थः समुद्यम्य परंतपः ।
अभ्राजत रथोपस्थे भानुर्मेराविवोत्तरे ॥ ४-४५-१४ (३०३२८)
शङ्खघोषेण वित्रस्तं ज्याघातेन च मूर्छितम् ।
उत्तरं संपरिष्वज्य समाश्वासयदर्जुनः ॥ ४-४५-१५ (३०३२९)
मा भैस्त्वं राजपुत्राग्य्य क्षत्रियोसि परन्तप ।
कथं पुरुषशार्दूल शत्रुमध्ये विषीदसि ॥ ४-४५-१६ (३०३३०)
श्रुतास्ते शङ्खशब्दाश्च भेरीशब्दाश्च सर्वशः ।
कुञ्जराणां च निनदा व्यूढानीकेषु नित्यशः ॥ ४-४५-१७ (३०३३१)
स त्वं कथमिवानेन शङ्खशब्देन भीषितः ।
विपण्णरूपो वित्रस्तः पुरुषः प्राकृतो यथा ॥ ४-४५-१८ (३०३३२)
उत्तर उवाच। ४-४५-१९क्ष् (३२००)
श्रुता मे शङ्खशब्दाश्च भेरीशब्दाश्च नित्यशः ।
कुञ्जराणां च निनदा व्यूढानीकेषु तिष्ठतः ॥ ४-४५-१९ (३०३३३)
नैवंविधाः शङ्खशब्दाः पुरा जातु मया श्रुताः ।
ध्वजस्य चापि रूपं मे दृष्टपूर्वं नहीदृशम् ।
धनुषश्चापि घोषश्च श्रुतपूर्वो न मे क्वचित् ॥ ४-४५-२० (३०३३४)
अस्य शङ्खस्य शब्देन धनुषो निस्वनेन च ।
अमानुषाणां शब्देन भूतानां निस्वसेन च ।
रथनेमिप्रणादेन मनो कमे मुह्यते भृशम् ॥ ४-४५-२१ (३०३३५)
व्याकुलाश्च दिशः सर्वा हृदयं व्यथतीव च ।
ध्वजेन पिहिताः सर्वा दिशो न प्रतिभान्ति मे ।
गाण्डीवस्य च शब्देन कर्णौ मे बधिरीकृतौ ॥ ४-४५-२२ (३०३३६)
वैशंपायन उवाच। ४-४५-२३क्ष् (३२०१)
पुनर्ध्वजं पुनः शङ्खं धनुश्चैव पुनः पुनः ।

स मूढचेता वैराटिरर्जुनं समुदैक्षत ॥ ४-४५-२३ (३०३३७)
स मुहूर्तं प्रयातं तु पार्थो वैराटिमब्रवीत् ॥ ४-४५-२४ (३०३३८)
स्थिरो भव महाबाहो संज्ञां चात्मानमानय ।
एकान्ते रथमास्थाय पद्भ्यां त्वमवपीड्य च ।
दृढं च रश्मीन्संयच्छ शङ्खं ध्मास्याम्यहं पुनः ॥
४-४५-२५ (३०३३९)
एवमुक्त्वा महाबाहुः सव्यसाची परन्तपः ।
ततः शङ्खमुपाध्मासीद्दारयन्निव पर्वतान् ।
गुहा गिरीणां च तदा दिशः शैलांस्तथैव च ॥ ४-४५-२६ (३०३४०)
ज्याघोषं तलघोषं च कृत्वा भूतान्यमोहयत् ।
उत्तरश्चापि संलीनो रथोपस्थ उपाविशत् ।
तं समाश्वासयामास पुनरेव धनञ्जयः । ४-४५-२७ (३०३४१)
तस्य शङ्खस्य शब्देन रथनेमिस्वनेन च ।
गाण्डीवस्य च शब्देन पृथिवी समकम्पत ॥ ॥ ४-४५-२८ (३०३४२)

इति श्रीमन्महाभारते विराटपर्वणि गोग्रहणपर्वणि
पञ्चचत्वारिंशोऽध्यायः ॥ ४५ ॥

---

विरतपर्व-अध्यय०४६
॥ श्रीः ॥
४.४६. अध्यायः ४६

Mahabharata - Virata Parva - Chapter Topics
द्रोणेनार्जुनशङ्खनादादिना तस्यार्जुनत्वनिर्धारणेन दुर्योधनंप्रति
तन्निवेदनपूर्वकं दुर्निमित्तप्रदर्शनम् ॥ १ ॥

Mahabharata - Virata Parva - Chapter Text

४-४६-० (३०३४३)
वैशंपायन उवाच। ४-४६-०क्ष् (३२०२)
भारद्वाजस्ततो द्रोणः सर्वशस्त्रभृतांवरः ।
राजानं चाह संप्रेक्ष्य दुर्योधनमरिंदमः ॥ ४-४६-१ (३०३४४)
यथा रथस्य निर्घोषो यथा शङ्ख उदीर्यते ।
कम्पते च यथा भूमिर्नैषोन्यः सव्यसाचिनः ॥ ४-४६-२ (३०३४५)
औत्पातिकमिदं राजन्निमित्तं भवतीह नः ।
न हि पश्यामि विजयं सैन्येऽस्माकं परन्तप ॥ ४-४६-३ (३०३४६)
शस्त्राणि न प्रकाशन्ते न प्रहृष्यन्ति वाहनाः ।

अग्नयश्च न भासन्ते सुसमिद्धा न शोभनाः ॥ ४-४६-४ (३०३४७)
प्रत्यादित्यं च नः सर्वे मृगा घोरा नदन्ति च ।
शकुनाश्चापसव्याश्च वेदयन्ति महाभयम् ॥ ४-४६-५ (३०३४८)
गोमायुरेष सैन्यानां रुदन्मध्येन धावति ।
चाषा नदन्ति चाकाशे वेदयन्तो महद्भयम् ॥ ४-४६-६ (३०३४९)
भवतां चैव रोमाणि प्रहृष्टानीव लक्षये ॥ ४-४६-७ (३०३५०)
अनुष्णाङ्गाश्च संस्विन्ना जृम्भन्ते चाप्यभीक्ष्णशः ।
विष्कम्भन्ति च मातङ्गा मुञ्चन्त्यश्रूणि वाजिनः ।
सदा मूत्रं पुरीषं च उत्सृजन्ति पुनः पुनः ॥ ४-४६-८ (३०३५१)
लोहितार्द्रा च पृथिवी दिशः सर्वाः प्रधूमिताः ।
न च सूर्यः प्रतपति महद्वेदयते भयम् ॥ ४-४६-९ (३०३५२)
हस्तिनश्चापि वित्रस्ता योधाश्चापि वितत्रसुः ।
पराभूता च वः सेना न कश्चिद्योद्धुमिच्छति ॥ ४-४६-१० (३०३५३)
विषण्णमुखभूयिष्ठाः सर्वे योधा विचेतसः ।
दिशं ते दक्षिणां सर्वे विप्रेक्षन्ते पुनः पुनः ॥ ४-४६-११ (३०३५४)
मृगाश्च पक्षिणश्चैव सव्यमेव पतन्ति नः ।
वादित्रोद्घुष्टघोषाश्च न च गाढं स्वनन्ति च ।
ध्वजाग्रेषु निलीयन्ते वायसास्तन्न शोभनम् ॥ ४-४६-१२ (३०३५५)
यथा मेघस्य निनदो गम्भीरस्तूर्णमायतः ।
श्रूयते रथनिर्घोषो नायमन्यो धनञ्जयात् ॥ ४-४६-१३ (३०३५६)
अश्वानां स्वनतां शब्दो वहतां पाकशासनिम् ।
वानरस्य रथे दिव्यो निस्वनः श्रूयते महान् ॥ ४-४६-१४ (३०३५७)
शङ्खशब्देन पार्थस्य कर्णौ मे बधिरीकृतौ ।
सर्वसैन्यं च वित्रस्तं नायमन्यो धनञ्जयात् ॥ ४-४६-१५ (३०३५८)
राजानमग्रतः कृत्वा दुर्योधनमरिन्दमम् ।
गाः प्रस्थाप्य च तिष्ठामो व्यूढानीकाः प्रहारिणः ।
प्रविभज्य त्रिधा सेनां समुच्छ्रित्य ध्वजानपि ॥ ४-४६-१६ (३०३५९)
शितैर्बाणैः प्रताप्येमां चमूमेष धनञ्जयः ।
मूर्ध्नि सर्वनरेन्द्राणां वामपादं करिष्यति ॥ ४-४६-१७ (३०३६०)
न ह्येष शक्यो बीभत्सुर्जेतुं देवासुरैरपि ।
दिक्षु गुल्मा निवेश्यन्तां यत्ता योत्स्यामहेऽर्जुन ॥ ॥ ४-४६-१८ (३०३६१)

इति श्रीमन्महाभारते विराटपर्वणि गोग्रहणपर्वणि
षट्चत्वारिंशोऽध्यायः ॥ ४६ ॥

---

विरतपर्व-अध्यय०४७

॥ श्रीः ॥

४.४७. अध्यायः ४७

Mahabharata - Virata Parva - Chapter Topics

द्रोणवचनादर्जुनस्यार्जुनत्वावधारणेन विषादात्तूष्णींभूतेषु स्वीयेषु दुर्योधनेन द्रोणानादरपूर्वकं तान्प्रति समरप्रोत्साहनम् ॥ १.।

Mahabharata - Virata Parva - Chapter Text

४-४७-० (३०३६२)
वैशंपायन उवाच। ४-४७-०क्ष् (३२०३)
ततो दुर्योधनो राजा समरे भीष्ममब्रवीत् ।
द्रोणं च रथिशार्दूलं कृपं च सुमहाबलम् ॥ ४-४७-१ (३०३६३)
उक्तोऽयमर्थ आचार्य मया कर्णेन चासकृत् ।
पुनरेव च वक्ष्यामि न हि तृप्यामि तद्ब्रुवन् ॥ ४-४७-२ (३०३६४)
पराजितैर्विवस्तव्यं तैश्च द्वादशवत्सरान् ।
वने जनपदेऽज्ञातैरेष एव पणो हि नः ॥ ४-४७-३ (३०३६५)
तेषां न तावन्निर्वृत्तो वत्सरः स त्रयोदशः ।
अज्ञातवासे बीभत्सुरथास्माभिः परिश्रुतः ॥ ४-४७-४ (३०३६६)
अनिर्वृत्ते तु निर्वासे यदि बीभत्सुरागतः ।
पुनर्द्वादशवर्षाणि वने वत्स्यन्ति पाण्डवाः ॥ ४-४७-५ (३०३६७)
लोभाद्वा ते न जानीयुरस्मान्वा मोह आविशत् ।
हीनातिरिक्तमेतेषां भीष्मो वेदितुमर्हति ॥ ४-४७-६ (३०३६८)
अर्थानां हि पुनर्द्वैधे नित्यं भवति संशयः ।
अन्यथा चिन्तितो ह्यर्थः पुनर्भवति चान्यथा ॥ ४-४७-७ (३०३६९)
उत्तरं मार्गमाणानां मात्स्यसेनां युयुत्सताम् ।
यदि बीभत्सुरायातः किंतु कृत्यमतः परम् ॥ ४-४७-८ (३०३७०)
त्रिगर्तानां कृतं कार्यं पाण्डवानां च मार्गणम् ।
विप्रकारैर्हि मात्स्येन सुशर्मा बाधित पुरा ॥ ४-४७-९ (३०३७१)
तेषां भयाभिपन्नानां वस्तानां त्राणभिच्छताम् ।
अभयं याचमानानां तदाऽस्माभिः परिश्रुतम् ॥ ४-४७-१० (३०३७२)
प्रथमं वैर्ग्रहीतव्यं मात्स्यानां गोधनं महत् ।
अष्टम्याश्चापराह्ले तु इति नस्तैः समाहितम् ॥ ४-४७-११ (३०३७३)
नवम्यां पुनरस्माभिः सूर्यस्योदयनं प्रति ।
इमा गावो ग्रहीतव्या याते मत्स्ये गवांपदम् ॥ ४-४७-१२ (३०३७४)
इत्येवं निश्चयोऽस्माकं मन्त्रोऽभून्नागसाह्वये ।
पाण्डवानां परिज्ञाने सर्वेषां नः परस्परम् ॥ ४-४७-१३ (३०३७५)

ते वा गाश्च नयिष्यन्ति यदि वा स्युः पराजिताः ।
अस्मान्वाऽप्यतिसन्धाय कुर्युर्मात्स्येन संगतिम् ॥ ४-४७-१४ (३०३७६)
अथवा तानुपादाय मात्स्यो जानपदैः सह ।
सर्वथा सेनया सार्धमस्मानेष युयुत्सति ॥ ४-४७-१५ (३०३७७)
तेषामेको महावीर्यः कश्चिदेव पुनःसरः ।
अस्माञ्जेतुमिहायातो मात्स्यो वाऽपि स्वयं भवेत् ॥ ४-४७-१६ (३०३७८)
यद्येष राजा मात्स्यानां यदि बीभत्सुरागतः ।
सर्वैर्योद्धव्यमस्माभिरिति नः समयः कृतः ॥ ४-४७-१७ (३०३७९)
अथ कस्मात्स्थिता ह्येते रथेषु रथिसत्तमाः ।
भीष्मद्रोणकृपाः कर्णो विकर्णो द्रौणिरेव च ।
संभ्रान्तमनसः सर्वे प्राप्ते ह्यस्मिन्धनञ्जये ॥ ४-४७-१८ (३०३८०)
नान्यत्र युद्धाच्छ्रेयोस्ति तथाऽऽत्मा प्रणिधीयताम् ।
सर्वलोकेन वा युद्धं देवैर्वाऽस्तु सवासवैः ॥ ४-४७-१९ (३०३८१)
अनाच्छिन्ने धनेऽस्माकमथ शक्रेण वज्रिणा ।
यमेन वाऽपि संग्रामे को हास्तिनपुरं व्रजेत् ॥ ४-४७-२० (३०३८२)
शरैरभिप्रणुन्नानां भग्नानां गहने वने ।
को हि जीवेत्पदातीनां भवेदश्वेषु संशयः ॥ ४-४७-२१ (३०३८३)
आचार्यं पृष्ठतः कृत्वा तथा नीतिर्विधीयताम् ।
जानामि च मतं तेषामतस्त्रासयतीव नः ॥ ४-४७-२२ (३०३८४)
अर्जुने चापि संप्रीतिमधिकामुपलक्षये ।
तथा दृष्ट्वा हि बीभत्सुमुपायान्तं प्रशंसति ।
यथा सेना न भज्येत तथा नीतिर्विधीयताम् ॥ ४-४७-२३ (३०३८५)
अदेशिका ह्यरण्येऽस्मिन्कृच्छ्रे शत्रुवशं गता ।
यथा न विभ्रमेत्सेना तथा नीतिर्विधीयताम् ॥ ४-४७-२४ (३०३८६)
अश्वानां हेषितं श्रुत्वा का प्रशंसा भवेत्परे ।
स्थाने वाऽपि व्रजन्तो वा सदा हेषन्ति वाजिनः ॥ ४-४७-२५ (३०३८७)
सदा च वायवो वान्ति नित्यं वर्षति वासवः ।
स्तनयित्नोश्च निर्घोषः श्रूयते बहुशस्तथा ॥ ४-४७-२६ (३०३८८)
भीषयन्पाण्डवेयेभ्यो भवान्सर्वानिमाञ्जनान् ।
प्रमुखे सर्वसैन्यानामबद्धं बहु भाषते ॥ ४-४७-२७ (३०३८९)
यथैवाश्वान्मार्गमाणास्तानेवाभिपरीप्सवः ।
हेषितानीव शृण्वन्ति तदिदं भवतस्तथा ॥ ४-४७-२८ (३०३९०)
किमत्र कार्यं पार्थस्य कथं वा स प्रशस्यते ।
अन्यत्र कामाद्द्वेषाद्वा रोषाद्वाऽस्मासु केवलम् ॥ ४-४७-२९ (३०३९१)
आचार्या वै कारुणिकाः प्राज्ञाश्चापायदर्शिनः ।
नैते महाहवे घोरे संप्रष्टव्याः कथंचन ॥ ४-४७-३० (३०३९२)

प्रासादेषु विचित्रेषु गोष्ठीपानाशनेषु च ।
कथा विचित्राः कुर्वाणाः पण्डितास्तत्र सोभनः ॥ ४-४७-३१ (३०३९३)
बहून्याश्चर्यरूपाणि कुर्वते जनसंसदि ।
इष्वस्त्रे चापसंधाने पण्डितास्तत्र शोभनाः ॥ ४-४७-३२ (३०३९४)
परेषां विवरज्ञाने मनुष्याचरितेषु च ।
अन्नसंस्कारदोषेषु पण्डितास्तत्र शोभनाः ॥ ४-४७-३३ (३०३९५)
पण्डितान्पृष्ठतः कृत्वा परेषां गुणवादिनः ।
विधीयतां तथा नीतिर्यथा वध्येत वै परः ॥ ४-४७-३४ (३०३९६)
गावश्चैताः प्रतिष्ठन्तां सेनां व्यूहन्तु माचिरम् ।
आरक्षाश्च विधीयन्तां यत्र योत्स्यामहे परैः ॥ ॥ ४-४७-३५ (३०३९७)

इति श्रीमन्महाभारते विराटपर्वणि गोग्रहणपर्वणि
सप्तचत्वारिंशोऽध्यायः ॥ ४७ ॥
Mahabharata - Virata Parva - Chapter Footnotes

४-४७-११ सप्तम्याश्चापराह्णे त्विति नवम्यां पुनरस्माभिरिति च थो पाठः ॥
॥
सप्तचत्वारिंशोऽध्यायः ॥
४७ ॥

---

विरतपर्व-अध्यय०४८
॥ श्रीः ॥
४.४८. अध्यायः ४८

Mahabharata - Virata Parva - Chapter Topics
कर्णेनात्मश्लाघनपूर्वकमर्जुनपराभवनमिथ्याप्रतिज्ञानम् ॥ १ ॥

Mahabharata - Virata Parva - Chapter Text

४-४८-० (३०३९८)
कर्ण उवाच। ४-४८-०क्ष् (३२०४)
सर्वानायुष्मतो भीतान्संत्रस्तानिव लक्षये ।
अयुद्धमनसश्चैव सर्वांश्चैवानवस्थितान् ॥ ४-४८-१ (३०३९९)
यद्येष जामदग्न्यो वा यदि वेन्द्रः पुरंदरः ।
वासुदेवेन सहितो यदि बीभत्सुरागतः ।
अहमेनं निरोत्स्यामि वेलेव वरुणालयम् ॥ ४-४८-२ (३०४००)
रुक्मपुङ्खाः प्रसन्नाग्रा मुक्ता हस्तवता मया ।

छादयन्तु शारः सूर्यं पार्थस्यायुर्निरोधकाः ॥ ४-४८-३ (३०४०१)
मम चापप्रमुक्तानां शराणां नतपर्वणाम् ।
निवृत्तिर्गच्छतां नास्ति सर्पाणां श्वसतामिव ॥ ४-४८-४ (३०४०२)
शराणां पुङ्खसक्तानां मौर्व्याऽभिहतयोर्भृशम् ।
श्रूयते तलयोः शब्दो भेर्योराहतयोरिव ॥ ४-४८-५ (३०४०३)
एकैकं चतुरः पञ्च क्वचित्पष्टिं क्वचिच्छतम् ।
हतान्पश्यत मात्स्यानामिषुभिर्निहतान्रथान् ॥ ४-४८-६ (३०४०४)
मद्बाहुमुक्तैरिषुभिस्तैलधौतैः पतत्रिभिः ।
खद्योतैरिव संपृक्तमन्तरिक्षं विराजताम् ॥ ४-४८-७ (३०४०५)
ध्वजाग्राद्वानरस्तस्य भल्लेनाभिहतो मया ।
अद्यैव पततां भूमौ विनदन्भैरवान्रवान् ॥ ४-४८-८ (३०४०६)
शत्रोर्मयाभिपन्नानां भूतानां ध्वजवासिनाम् ।
दिशः प्रतिष्ठमानानामस्तु शब्दो दिवं गतः ॥ ४-४८-९ (३०४०७)
क्रुद्धेनास्त्रं मया मुक्तं निर्दहेत्पृथिवीमिमाम् ।
स्थितं संग्रामशिरसि पार्थमेकाकिनं किमु ॥ ४-४८-१० (३०४०८)
समाहितश्च बीभत्सुर्वर्षाण्यष्टौ च पञ्च च ।
जातस्नेहश्च युद्धस्य मयि संदर्शयिष्यति ॥ ४-४८-११ (३०४०९)
पात्रीभूतस्तु कौन्तेयो ब्राह्मणो गुणवानिव ।
शरमालां स गृह्णातु मत्प्रसृष्टां स्वधामिव ॥ ४-४८-१२ (३०४१०)
एष चापि महेष्वासस्त्रिषु लोकेषु विश्रुतः ।
अहं चापि नरश्रेष्ठादर्जुनान्नावमः क्वचित् ॥ ४-४८-१३ (३०४११)
मम हस्तप्रमुक्तानां शराणां नतपर्वणाम् ।
निवृत्तिर्गच्छतां नास्ति वैश्वानरशिखार्चिषाम् ॥ ४-४८-१४ (३०४१२)
इतश्चेतश्च मुक्तानां शराणां नतपर्वणाम् ।
तुगुलः श्रूयतां नादः षट्पदां गायतामिव ॥ ४-४८-१५ (३०४१३)
अन्तरा संपतद्भिस्तु गृध्रपत्रैः शिलाशितैः ।
शलभानामिवाकाशे छाया संप्रति दृश्यताम् ॥ ४-४८-१६ (३०४१४)
अद्य मत्कार्मुकोत्सृष्टाः शिताः पार्थस्य मर्मगाः ।
शरीरमुपसर्पन्तु वल्मीकमिव पन्नगाः ॥ ४-४८-१७ (३०४१५)
बर्हिबर्हिणराजानां बर्हिणां बर्हिणामिव ।
पततां पततां घोषः पततां पततामिव ॥ ४-४८-१८ (३०४१६)
अद्य त्वहमृणान्मोक्ष्ये यन्मया तत्प्रतिश्रुतम् ।
धार्तराष्ट्रस्य तत्काले निहत्य समरेऽर्जुनम् ॥ ४-४८-१९ (३०४१७)
इन्द्राशनिसमस्पर्शं महेन्द्रसमविक्रमम् ।
अर्दयिष्याम्यहं पार्थमुल्काभिरिव कुञ्जरम् ॥ ४-४८-२० (३०४१८)
शरजालमहाज्वालमसिशक्तिगदेन्धनम् ।

निर्दहन्तमनीकानि शमयिष्येऽर्जुनानलम् ॥ ४-४८-२१ (३०४१९)
रथादतिरथं लोके सर्वशस्त्रभृतांवरम् ।
विवशं पार्थमादास्ये गरुत्मानिव पन्नगम् ॥ ४-४८-२२ (३०४२०)
क्षुद्रकैर्विविधैर्भल्लैर्निपतद्भिश्च मामकैः ।
संमूढचेताः कौन्तेयः कर्तव्यं नाभिपद्यताम् ॥ ४-४८-२३ (३०४२१)
अद्य दुर्योधनस्याहं शोकं हृदि चिरं स्थितम् ।
समूलमपनेष्यामि हरन्पार्थशिरः शरैः ॥ ४-४८-२४ (३०४२२)
अद्य मत्कार्मुकोत्सृष्टैर्भल्लैश्च नतपर्वभिः ।
हताश्वं विरथं पार्थं पौरुषे पर्यवस्थितम् ।
निश्वसन्तं यथा नागमद्य पश्यन्तु कौरवाः ॥ ४-४८-२५ (३०४२३)
जामदग्न्यान्मया लब्धं दिव्यास्त्रमृषिसत्तमात् ।
तदुपाश्रित्य वीर्यं च युध्येयमपि वासवम् ॥ ४-४८-२६ (३०४२४)
ध्वजाग्रे वानरस्तिष्ठन्भल्लेन निहतो मया ।
अद्यैव पततां भूमौ विनदन्भैरवान्रवान् ॥ ४-४८-२७ (३०४२५)
कामं गच्छन्तु कुरवो गाः प्रगृह्य परंतपाः ।
रथेषु वाऽपि तिष्ठन्तो युद्धं पश्यन्तु मामकम् ॥ ॥ ४-४८-२८ (३०४२६)

इति श्रीमन्माहाभारते विराटपर्वणि गोग्रहणपर्वणि
अष्टचत्वारिंशोऽध्यायः ॥ ४८ ॥
Mahabharata - Virata Parva - Chapter Footnotes

४-४८-१८ बर्हिणां बहिणामिव एकैकस्य पृष्ठेपृष्ठे गच्छतां
मयूराणां मयूराणामिव बर्हिबर्हिणराजानां बर्हिणो मयूरस्य बर्हिणैः
शरमूले पत्ररूपेण स्थितमयूरपत्रैः राजानां राजमानानां
। राजृदीप्ताविति धातोः कर्त्रर्थे पचाद्यचि कृते रूपनिष्पत्तिः
। पततां पततां एकैकस्य शरस्य पृष्ठे पृष्ठे निपततां
शराणां घोषः पततां मालारूपेण निपतमानानां पततां पक्षिणां
घोष इव अखिलैः श्रूयतामिति योग्यक्रियाध्याहारेण संबन्धः । यद्वा
बर्हिणां बर्हवतां उत्पन्नबर्हाणामित्यर्थः । बर्हिणं मयूराणामिव
पततां पततां पुंखानुपुंखतया क्षणेक्षणे पततां पततां शराणां
घोषः पततां पक्षिणां घोष इव पततां दिशिदिशि पततामिति
लोडन्तक्रिया। सर्वैः श्रूयतामिति भावः । बर्हिबर्हिणवाजानामिति टो
थो धो पाठः ॥
१८ ॥
॥
अष्टचत्वारिंशोऽध्यायः ॥

विरतपर्व-अध्यय०४९
॥ श्रीः ॥
४.४९. अध्यायः ४९

Mahabharata - Virata Parva - Chapter Topics
कृपेणार्जुनचरित्रप्रशंसनपूर्वकं कर्णगर्हणम् ॥ १ ॥
तथा स्वेषु एकैकेनार्जुनस्य दुर्जयत्वकथनपूर्वकं
संभूयाभियाननिर्धारणम् ॥ २ ॥

Mahabharata - Virata Parva - Chapter Text

४-४९-० (३०४२७)
वैशंपायन उवाच। ४-४९-०क्ष् (३२०५)
तस्य तद्वचनं श्रुत्वा नीतिशास्त्रविशारदः ।
आचार्यः कुरुवीराणां कृपः शारद्वतोऽब्रवीत् ॥ ४-४९-१ (३०४२८)
सदैव तव राधेय युद्धे क्रूरतरा मतिः ।
नार्थानां प्रकृतिं वेत्सि नानुबन्धमवेक्षसे ॥ ४-४९-२ (३०४२९)
नया हि बहवः सन्ति शास्त्राण्याश्रित्य चिन्तिताः ।
तेषां युद्धं सुपापिष्ठं वेदयन्ति पुराविदः ॥ ४-४९-३ (३०४३०)
देशकालेन संयुक्तं युद्धं विजयदं भवेत् ।
हीनकालं तदेवेह अनर्थायोपकल्पते ॥ ४-४९-४ (३०४३१)
देशे काले च विक्रान्तं कल्याणाय विधीयते ।
आनुकूल्येन कार्याणामुत्तरं तु विधीयते ॥ ४-४९-५ (३०४३२)
भारं हि रथकारस्य न व्यवस्यन्ति पण्डिताः ।
परिचिन्त्य तु पार्थेन संनिपातो न नः क्षमः ॥ ४-४९-६ (३०४३३)
एको हि शत्रून्समरे समर्थः प्रतिबाधितुम् ।
एकः कुरूनभ्यरक्षदेकश्चाग्निमतर्पयत् ॥ ४-४९-७ (३०४३४)
एकश्च पञ्च वर्षाणि ब्रह्मचर्यमधारयत् ।
एकः सुभद्रामारोप्य द्वैरथे कृष्णमाह्वयम् ॥ ४-४९-८ (३०४३५)
सैन्धवं वनवासे तु जित्वा कृष्णामथानयत् ।
एकश्च पञ्च वर्षाणि शक्रादस्त्राण्यशिक्षत ॥ ४-४९-९ (३०४३६)
एकः सपत्नाञ्जित्वा तु कुरूणामकरोद्यशः ।
एको गन्धर्वराजानं चित्रसेनमरिन्दमः ।
विजिग्ये तरसा सङ्ख्ये सेनां चास्य सुदुर्जयाम् ॥ ४-४९-१० (३०४३७)
पाञ्चाली श्रीमती प्राप्ता क्षत्रं जित्वा स्वयंवरे ।

आदाय गतवान्पार्थो भवान्क्वनु गतस्तदा ॥ ४-४९-११ (३०४३८)
तथा निवातकवचाः कालकेयाश्च दानवाः ।
दैवतैरप्यवध्यास्ते एकेन युधि पातिताः ॥ ४-४९-१२ (३०४३९)
एकेन हि त्वया कर्ण किं नामेह कृतं पुरा ।
एकैकेन यथा तेषां भूमिपाला वशे कृताः ॥ ४-४९-१३ (३०४४०)
इन्द्रोपि हि न पार्थेन संयुगे योद्धुमर्हति ।
यस्तेनाशंसते योद्धुं कर्तव्यं तस्य भेषजम् ॥ ४-४९-१४ (३०४४१)
आशीविषस्य क्रुद्धस्य पाणिमुद्यम्य दक्षिणम् ।
अवमुच्य प्रदेशिन्या दंष्ट्रामादातुमिच्छसि ॥ ४-४९-१५ (३०४४२)
अथवा कुञ्जरं मत्तमेकमेकचरं वने ।
निरङ्कुशं समारुह्य नगरं यातुमिच्छसि ॥ ४-४९-१६ (३०४४३)
समिद्धं पावकं चापि घृतमेदोवसाहुतम् ।
घृताक्तश्चीरवासास्त्वं मध्येनोत्सर्तुमिच्छसि ॥ ४-४९-१७ (३०४४४)
आत्मानं यः समाबध्य कण्ठे बद्ध्वा तथा शिलाम् ।
समुद्रं प्रतरेद्दोर्भ्यां तत्र किं कर्ण पौरुषम् ॥ ४-४९-१८ (३०४४५)
अकृतास्त्रः कृतास्त्रं वै बलवन्तं सुदुर्बलः ।
तादृशं कर्ण यः पार्थं योद्धुमिच्छेत्स दुर्मतिः ॥ ४-४९-१९ (३०४४६)
अस्माभिरेव निकृतो वर्षाणीह त्रयोदश ।
सिंहः पाशविनिर्मुक्तो न नः शेषं करिष्यति ॥ ४-४९-२० (३०४४७)
एकान्ते पार्थमासीनं कूपेऽग्निमिव संवृतम् ।
अज्ञानादभ्यवस्कन्द्य प्राप्ताः स्मो भयमुत्तमम् ॥ ४-४९-२१ (३०४४८)
उत्सृष्टं तूलराशौ तु एकोऽग्निं शमयेत्कथम् ।
सह युद्ध्यामहे पार्थमागतं युद्धदुर्मदम् ॥ ४-४९-२२ (३०४४९)
यत्ता वयं पराक्रान्ता व्यूढानीकाः प्रहारिणः ।
युद्धायावस्थितं पार्थमागतं पाकशासनिम् ॥ ४-४९-२३ (३०४५०)
यत्ताः सर्वे रथश्रेष्ठं परिवार्य समन्ततः ।
षड्रथाः परिकीर्यन्तां वज्रपाणिमिवासुराः ॥ ४-४९-२४ (३०४५१)
द्रोणो दुर्योधनो भीष्मो भवान्द्रौणिस्तथा वयम् ।
सर्वे युद्ध्यामहे पार्थं कर्ण मा साहसं कृथाः ॥ ४-४९-२५ (३०४५२)
न ह्यसंगत्य समरे पार्थं जेष्यामहे वयम् ।
संगत्य समरे पार्थं सर्वे जेष्यमाहे वयम् ॥ २६ ॥ ॥ ४-४९-२६ (३०४५३)

इति श्रीमन्महाभारते विराटपर्वणि गोग्रहणपर्वणि
एकोनपञ्चाशोऽध्यायः ॥ ४९ ॥

Mahabharata - Virata Parva - Chapter Footnotes

४-४९-६ भारं हीति । यथा रथकारेण दिव्योऽयं मया निर्मितो रथः सुदृढाङ्गः अनेन त्वं देवानपि सर्वथा जेष्यसीत्युक्ते तद्वचसि भारं दत्त्वा देशकालानुकूल्यमनपेक्ष्यैव न व्यवस्यन्ति। योद्धुमेति शेषः। एवं त्वद्वचसि भारं दत्त्वा देशाद्यानुकूल्यमनवेक्ष्य कथमस्माभिर्योद्धव्यम्। तवतु वचनं रथकारवचनवदर्शशून्यमिति भावः ॥
६ ॥
४-४९-१० एकः संयमिनीं जित्वा इति धो पाठः ॥
१० ॥
॥
एकोनपञ्चाशोऽध्यायः ॥
४९ ॥

---

विरतपर्व-अध्यय०५०
॥ श्रीः ॥
४.५०. अध्यायः ५०

Mahabharata - Virata Parva - Chapter Topics
कृपेण स्वगर्हणममृष्यता कर्णेन तदुपालम्भः ॥ १ ॥
तदसहिष्णुनाऽश्वत्थाम्ना सममोंद्धाटनं कर्णदुर्योधनोपालम्भः ॥ २ ॥

Mahabharata - Virata Parva - Chapter Text

४-५०-० (३०४५४)
वैशंपायन उवाच। ४-५०-०क्ष् (३२०६)
कृपस्य वचनं श्रुत्वा कर्णो राजन्युधांपतिः ।
पुनः प्रोवाच संरब्धो गर्हयन्ब्राह्मणं कृपम् ॥ ४-५०-१ (३०४५५)
कर्ण उवाच। ४-५०-२क्ष् (३२०७)
लक्षयाम्यहमाचार्यं भयाद्भक्तिं गतं रिपौ ।
भीतेन हि न योद्धव्यमहं योत्स्ये धनञ्जयम् ॥ २ ॥ ४-५०-२ (३०४५६)
ननु वारुणमाग्नेयं याम्यं वायव्यमेव च ।
अस्त्रं ब्रह्मशिरश्चैव सत्वहीनस्य ते वृथा ॥ ४-५०-३ (३०४५७)
मित्रकार्यं कृतमिदं पितापुत्रैर्महारथैः ।
भर्तृपिण्डश्च निर्विष्टो यथेष्टं गन्तुमर्हथ ॥ ४-५०-४ (३०४५८)
भिक्षां हरस्व नित्यं त्वं यज्ञाननुचरस्व च ।
आमन्त्रणानि भुङ्क्षाद्य माऽस्मान्युद्धेन भीषय ॥ ४-५०-५ (३०४५९)
भार्गवास्त्रं मया मुक्तं निर्दहेत्पृथिवीमिमाम् ।

किं पुनः पाण्डुपुत्राणामेकमर्जुनमाहवे ॥ ४-५०-६ (३०४६०)
आगमिष्यन्ति पदवीं मात्स्याः पाण्डवमाश्रिताः ।
कीचकानां तु बलिनां शत्रुसेनावमर्दिनाम् ॥ ४-५०-७ (३०४६१)
तानहं निहनिष्यामि भवता गम्यतां गृहम् ।
किं वेदवादिनां कार्यं परस्नेहानुभाषिणाम् ॥ ४-५०-८ (३०४६२)
तस्य तद्वचनं श्रुत्वा अश्वत्थामा प्रतापवान् ।
उवाच वदतांश्रेष्ठो दुर्योधनमवेक्ष्य च ॥ ४-५०-९ (३०४६३)
न च तावज्जिता गावो न च सीमान्तरं गताः ।
न हास्तिनपुरं प्राप्तास्त्वं च कर्ण विकत्थसे ॥ ४-५०-१० (३०४६४)
बहूनि धर्मशास्त्राणि पठन्ति द्विजसत्तमाः ।
तेषु किंस्विदिदं दृष्टं द्यूते जीयेत यन्नृपः ॥ ४-५०-११ (३०४६५)
संग्रामान्विपुलाञ्जित्वा लब्धा च विपुलं धनम् ।
विजित्य च महीं कृत्स्नां नेह कत्थन्ति पण्डिताः ॥ ४-५०-१२ (३०४६६)
पचत्यग्निरवाक्यस्तु तूष्णीं भाति दिवाकरः ।
तूष्णीं धारयते लोकान्वसुधा सचराचरान् ॥ ४-५०-१३ (३०४६७)
चातुर्वर्ण्यस्य कर्माणि विहितानि महर्षिभिः ।
धनं यैरधिगन्तव्यं यच्च कुर्वन्न दुष्यति ॥ ४-५०-१४ (३०४६८)
अधीत्य ब्राह्मणो वेदान्याजयेत यजेत वा ।
क्षत्रियो धनमाहृत्य यजेतैव न याजयेत् ॥ ४-५०-१५ (३०४६९)
वैश्योऽधिगम्य वित्तानि वार्ताकर्माणि कारयेत् ॥ ४-५०-१६ (३०४७०)
शूद्रः शुश्रूषणं कुर्यात्रिषु वर्णेषु नित्यशः ।
वन्दनायोगविधिभिर्वैतसीं वृत्तिमाश्रितः ॥ ४-५०-१७ (३०४७१)
वर्तमाना यथाशास्त्रं प्राप्य चापि महीमिमाम् ।
प्रकुर्वन्ति महाभागा यज्ञान्सुविपुलानपि ॥ ४-५०-१८ (३०४७२)
का जातिस्तेषु सूतेयं केऽपि मन्त्राः क्रियाश्च काः ।
केयं वर्णेषु या राज्ञो वक्तृभोक्तृनियन्तृषु ॥ ४-५०-१९ (३०४७३)
वैशंपायन उवाच। ४-५०-२०क्ष् (३२०८)
दुर्योधनमभिप्रेक्ष्य कर्णं च कुरुसंसाद ।
अश्वत्थामा भृशं क्रुद्धो दुर्योधनमतर्जयत् ॥ ४-५०-२० (३०४७४)
प्राप्य द्यूतेन को राज्यं क्षत्रियः स्तोष्टुमर्हति ।
तथा नृशंसरूपोयं धार्तराष्ट्रश्च निर्घृणः ॥ ४-५०-२१ (३०४७५)
तथाऽधिगम्य वित्तानि को विकत्थेद्विचक्षणः ।
निकृत्या वञ्चनायोगैश्चरन्वैतंसिको यथा ॥ ४-५०-२२ (३०४७६)
कतमद्द्वैरथं युद्धं यत्राजैषीर्धनञ्जयम् ।
नकुलं सहदेवं वा धनं येषां त्वया हृतम् ॥ ४-५०-२३ (३०४७७)
युधिष्ठिरो जितः कस्मिन्भीमश्च बलिनांवरः ।

इन्द्रप्रस्थं त्वया कस्मिन्संग्रामे निर्जितं पुरा ॥ ४-५०-२४ (३०४७८)
तथैव कतमद्युद्धं यस्मिन्कृष्णा जिता त्वया ।
एकवस्त्रा सभां नीता क्षुद्रकर्मन्रजस्वला ॥ ४-५०-२५ (३०४७९)
मूलमेषां महत्कृत्तं सारार्थी चन्दनं यथा ।
क्षुद्रं कर्म समास्थाय तत्र किं विदुरोऽब्रवीत् ॥ ४-५०-२६ (३०४८०)
यथाशक्ति मनुष्याणाममर्षं लक्षयामहे ।
अन्येषामपि सत्वानामपि कीटपिपीलिकैः ॥ ४-५०-२७ (३०४८१)
द्रौपद्याः संपरिक्लेशं न क्षन्तुं पाण्डवोऽर्हति ।
क्षयाय धार्तराष्ट्राणां प्रादुर्भूतो धनञ्जयः ॥ ४-५०-२८ (३०४८२)
त्वं पुनः पण्डितो भूत्वा ह्याचार्यं क्षेप्तुमिच्छसि ।
वैरान्तकरणो जिष्णुर्न नः शेषं करिष्यति ॥ ४-५०-२९ (३०४८३)
नैव देवा न गन्धर्वा नासुरा न च राक्षसाः ।
भयादिह न युद्ध्येरन्पाण्डुपुत्रेण धीमता ॥ ४-५०-३० (३०४८४)
यं यमेकोपि संक्रुद्धः संग्रामे निपतिष्यति ।
वृक्षं गरुडवद्वेगाद्विनिहत्यान्तमेष्यति ॥ ४-५०-३१ (३०४८५)
त्वत्तो विशिष्टं वीर्येण धनुष्यमरराट्समम् ।
वासुदेवसमं युद्धे तं पार्थं को न पूजयेत् ॥ ४-५०-३२ (३०४८६)
देवं दैवेन युद्ध्येत मानुपेण च मानुपम् ।
अस्त्रं ह्यस्त्रेण यो हन्यात्कोऽर्जुनेन समः पुमान् ॥ ४-५०-३३ (३०४८७)
पुत्रादनवमः शिष्य इति धर्मविदो विदुः ।
एतेनापि निमित्तेन प्रियो द्रोणस्य पाण्डवः ॥ ४-५०-३४ (३०४८८)
यथा त्वमकरोर्द्यूतमिन्द्रप्रस्थं यथाऽहरः ।
यथाऽनैषीः सभां कृष्णां तथा युध्यस्व पाण्डवं ॥ ४-५०-३५ (३०४८९)
अयं ते मातुलः प्राज्ञः क्षत्रधर्मस्य कोविदः ।
दुर्द्यूतदेवी गान्धारः शकुनिर्युद्ध्यतामिह ॥ ४-५०-३६ (३०४९०)
नाक्षान्क्षिपति गाण्डीवं न कृतं द्वापरं न च ।
ज्वलतो निशितान्बाणांस्तांस्तान्क्षिपति गाण्डिवं ॥ ४-५०-३७ (३०४९१)
न हि गाण्डीवनिर्मुक्ता गृध्रपक्षाः सुतेजनाः ।
नान्तरेष्ववतिष्ठन्ते गिरीणामपि दारणाः ॥ ४-५०-३८ (३०४९२)
अन्तकः पवनो मृत्युस्तथाऽग्निर्बडवामुखः ।
कुर्युरेते क्वचिच्छेषं न तु क्रुद्धो धनञ्जयः ॥ ४-५०-३९ (३०४९३)
यथा सभायां द्यूतं त्वं मातुलेन महाकरोः ।
तथा युद्धस्व संग्रामे सौबलेन सुरक्षितः ॥ ४-५०-४० (३०४९४)
युद्ध्यतां काममाचार्यो नाहं योत्स्ये धनञ्जयम् ।
मत्स्यो ह्यस्माभिरायोध्यो यद्यागच्छेद्गवांपदम् ॥ ॥ ४-५०-४१ (३०४९५)

इति श्रीमन्महाभारते विराटपर्वणि गोग्रहणपर्वणि पञ्चाशोऽध्यायः
॥ ५० ॥
Mahabharata - Virata Parva - Chapter Footnotes

४-५०-१४ यदुक्तं ब्राह्मणानां भोजनादावेव कौशलं न युद्ध इति
तत्र तवापि वैश्यत्वान्न युद्धे सामर्थ्यमस्तीति दर्शयिष्यन्वर्णानां
कर्माणि विभजते चातुर्वर्ण्यस्येत्यादिना ॥
१४ ॥
४-५०-२२ वैतंसिको व्याधः ॥
२२ ॥
४-५०-२६ अनृतं द्यूतं कुर्वता धार्तराष्ट्रेण धर्मस्य मूलं कृत्तं
छिन्नं । तत्र तदा विदुरः किमब्रवीत् क्षयमूलं द्यूतमिति तत्स्मरेति
शेषः ॥
२६ ॥
४-५०-३७ चकारात् त्रेतानि समुच्चीयते । कृतादयो
द्यूतशास्त्रप्रसिद्धाः पाशकाः ॥
३७ ॥
॥
पञ्चाशोऽध्यायः ॥
५० ॥

---

विरतपर्व-अध्यय०५१
॥ श्रीः ॥
४.५१. अध्यायः ५१

Mahabharata - Virata Parva - Chapter Topics
कर्णकृतद्रोणकृपाधिक्षेपसंक्रुद्धमश्वत्थामानं प्रति भीष्मेण
द्रोणादिप्रशंसनपूर्वकं परिसान्त्वनम् ॥ १ ॥
दुर्योधनेन भीष्मकर्णाभ्यां सह कृपद्रोणक्षमापनम् ॥ २ ॥

Mahabharata - Virata Parva - Chapter Text

४-५१-० (३०४९६)
वैशंपायन उवाच। ४-५१-०क्ष् (३२०९)
ततः शान्तनवस्तत्र धर्मार्थकुशलं हितम् ।
दुर्योधनमिदं वाक्यमब्रवीत्कुरुसंसदि ॥ ४-५१-१ (३०४९७)
साधु पश्यति वै द्रोणः कृपः साध्वनुपश्यति ।

आचार्यपुत्रः सहजं निश्चितं साधु भाषते ॥ ४-५१-२ (३०४९८)
कर्णस्तु क्षत्रधर्मेण केवलं योद्धुमिच्छति ।
आचार्यो नावमन्तव्यः पुरुषेण विजानता ।
देशकालौ तु संप्रेक्ष्य योद्धव्यमिति मे मतिः ॥ ४-५१-३ (३०४९९)
यस्य सूर्यसमाः पञ्च सपत्नाः स्युः प्रहारिणः ।
कथमभ्युदये तेषां न प्रमुह्येत पण्डितः ॥ ४-५१-४ (३०५००)
स्वार्थे सर्वे विमुह्यन्ति येऽपि धर्मविदो जनाः ।
तस्मात्तत्वं न जानाति यत्तु कार्यं नराधिपः ॥ ४-५१-५ (३०५०१)
धार्तराष्ट्रोपि दुर्बुद्धिः पश्यन्नपि धनञ्जयम् ।
नैव पश्यति नाघ्राति मन्दः क्रोधवशं गतः ॥ ४-५१-६ (३०५०२)
वैशंपायन उवाच। ४-५१-७क्ष् (३२१०)
एवमुक्त्वा तु राजानं पुनर्द्रौणिमुवाच ह ।
प्राञ्जलिर्भरतश्रेष्ठः साम्ना बुद्धिमतांवरः ॥ ४-५१-७ (३०५०३)
कर्णो हि यदवोचत्त्वां तेजस्संजननाय तत् ।
आचार्यपुत्रः क्षमतां महत्कार्यमुपस्थितम् ॥ ४-५१-८ (३०५०४)
नायं कालो विरोधस्य कौन्तेये समुपस्थिते ।
क्षन्तव्यं भवता सर्वमाचार्येण कृपेण च ॥ ४-५१-९ (३०५०५)
भवतां हि कृतास्त्रत्वं यथाऽऽदित्ये प्रभा तथा ।
यथा चन्द्रमसो लक्ष्मीः सर्वथा नापकृष्यते ।
एवं भवत्सु ब्राह्मण्यं ब्रह्मास्त्रं च प्रतिष्ठितम् ॥ ४-५१-१० (३०५०६)
चत्वार एकतो वेदाः क्षात्रमेकत्र दृश्यते ।
नैतत्समस्तमुभयं कस्मिंश्चिदनुशुश्रुम ।
अन्यत्र भारताचार्यात्सुपुत्रादिति मे मतिः ॥ ४-५१-११ (३०५०७)
वेदान्ताश्च पुराणानि इतिहासं पुरातनम् ।
जामदग्न्यमृते राजन्को द्रोणादधिको भवेत् ॥ ४-५१-१२ (३०५०८)
ब्रह्मास्त्रं चैव वेदाश्च नैतदन्यत्र दृश्यते ॥ ४-५१-१३ (३०५०९)
आचार्यपुत्रः क्षमतां नायं कालो विभेदने ।
सर्वे संहत्य युद्ध्यामः पाकशासनिमागतम् ॥ ४-५१-१४ (३०५१०)
बलस्य व्यसनानीह यान्युक्तानि मनीषिभिः ।
मुख्यो भेदोहि तेषां तु पापिष्ठो विदुषां मतः ॥ ४-५१-१५ (३०५११)
अश्वत्थामोवाच। ४-५१-१६क्ष् (३२११)
नैवं न्याय्यमिदं वाच्यमस्माकं पुरुषर्षभ ।
किंतु रोषपरीतेन गुरुणा भाषिता गुणाः ॥ ४-५१-१६ (३०५१२)
शत्रोरपि गुणा ग्राह्या दोषा वाच्या गुरोरपि ।
सर्वथा सर्वयत्नेन पुत्रे शिष्ये हितं वदेत् ॥ ४-५१-१७ (३०५१३)
आचार्य एष क्षमतां शान्तिरत्र विधीयताम् ।

अभिद्यमाने तु गुरौ निवृत्तं रोषकारितम् ॥ ४-५१-१८ (३०५१४)
वैशंपायन उवाच। ४-५१-१९क्ष् (३२१२)
ततो दुर्योधनो द्रोणं क्षमयामास भारत ।
सह कर्णेन भीष्मेण कृपं चैव महाबलम् ॥ ४-५१-१९ (३०५१५)
द्रोण उवाच। ४-५१-२०क्ष् (३२१३)
यदेतत्प्रथमं वाक्यं भीष्मः शान्तनवोऽब्रवीत् ।
तेनैवाहं प्रसन्नो वै परमत्र विधीयताम् ॥ ४-५१-२० (३०५१६)
यथा दुर्योधनं पार्थो नोपसर्पति संगरे ।
साहसाद्यदि वा मोहात्तथा नीतिर्विधीयताम् ॥ ४-५१-२१ (३०५१७)
वनवासे ह्यनिर्वृत्ते दर्शयेन्न धनञ्जयः ।
धनं चालभमानोऽत्र नाद्य तत्क्षन्तुमर्हति ॥ ४-५१-२२ (३०५१८)
यथा नायं समायुञ्ज्याद्धार्तराष्ट्रं कथंचन ।
न च सेनां पराजय्यात्तथा नीतिर्विधीयताम् ॥ ४-५१-२३ (३०५१९)
उक्तं दुर्योधनेनापि पुरस्ताद्वाक्यमीदृशम् ।
तदनुस्मृत्य गाङ्गेय यथावद्वक्तुमर्हसि ॥ ॥ ४-५१-२४ (३०५२०)

इति श्रीमन्महाभारते विराटपर्वणि गोग्रहणपर्वणि
एकपञ्चाशोऽध्यायः ॥ ५१ ॥
Mahabharata - Virata Parva - Chapter Footnotes

४-५१-२१ यथा दुर्योधनो राजा न गच्छेत्कांचिदापदमिति टो थो पाठः
।यथा नायशसा युक्तो धार्तराष्ट्रः कथंचनेति धो पाठः ॥
२१ ॥
॥
एकपञ्चाशोऽध्यायः ॥
५१ ॥

---

विरतपर्व-अध्यय०५२
॥ श्रीः ॥
४.५२. अध्यायः ५२

Mahabharata - Virata Parva - Chapter Topics
भीष्मेण दुर्योधनंप्रति हेतूपन्यासपूर्वकं युधिष्ठिरंप्रति
श्रुतवनवासादिकालस्य परिसमाप्तिकथनम् ॥ १ ॥
भीष्मेणार्जुनपराक्रमप्रशंसनपूर्वकं पाण्डवैः सह संधिविधानेपि
दुर्योधनेन तत्प्रतिषेधनम् ॥ २ ॥
भीष्मेण द्रोणवचनाद्गोभिः सह दुर्योधनस्य प्रस्थापनपूर्वकं

सेनाया व्यूहीकरणेन समराभियानम् ॥ ३ ॥

Mahabharata - Virata Parva - Chapter Text

४-५२-० (३०५२१)
भीष्म उवाच। ४-५२-०क्ष् (३२१४)
कलाः काष्ठाश्च युज्यन्ते मुहूर्ताश्च दिनानि च ।
अर्धमासाश्च मासाश्च नक्षत्राणि ग्रहास्तथा ॥ ४-५२-१ (३०५२२)
ऋतवश्चापि युज्यन्ते तथा संवत्सरा अपि ।
एवं कालविभागेन कालचक्रं प्रवर्तते ॥ ४-५२-२ (३०५२३)
तेषां कालातिरेकेण ज्योतिषां च व्यतिक्रमात् ।
पञ्चमे पञ्चमे वर्षे द्वौ मासावधिमासकौ ॥ ४-५२-३ (३०५२४)
एषामभ्यधिका मासाः पञ्च च द्वादश क्षपाः ।
त्रयोदशानां वर्षाणामिति मे वर्तते मतिः ॥ ४-५२-४ (३०५२५)
पूर्वेद्युरेव निर्वृत्तस्ततो बीभत्सुरागतः ॥ ४-५२-५ (३०५२६)
सर्वं यथावच्चरितं यद्यदेभिः प्रतिश्रुतम् ।
एवमेतद्ध्रुवं ज्ञात्वा ततो बीभत्सुरागतः ॥ ४-५२-६ (३०५२७)
सर्वे पञ्च महात्मानः सर्वे धर्मार्थकोविदाः ।
येषां युधिष्ठिरो राजा कस्माद्धर्मेऽपराध्नुयुः ॥ ४-५२-७ (३०५२८)
कामात्क्रोधाच्च लोभाच्च कामक्रोधभयादपि ।
स्नेहाद्वा यदि वा मोहाद्धर्मं नात्येति धर्मजः ॥ ४-५२-८ (३०५२९)
अलुब्धाश्चैव कौन्तेयाः कृतवन्तश्च दुष्करम् ।
न चापि केवलं राज्यमिच्छेयुस्ते ह्यधर्मतः ॥ ४-५२-९ (३०५३०)
तदैव ते हि विक्रान्तुमीषुः कौरवनन्दनाः ।
धर्मपाशनिबद्धास्तु न चेलुः क्षत्रियव्रतात् ॥ ४-५२-१० (३०५३१)
यश्चानृत इति ख्यातः स च गच्छेत्पराभवम् ।
वृणुयुर्मार्णं पार्था नानृतत्वं कथंचन ॥ ४-५२-११ (३०५३२)
प्राप्ते तु काले स्वानर्थान्नोत्सृजेयुर्नरर्षभाः ।
अपि वज्रभृता गुप्तांस्तथावीर्या हि पाण्डवाः ॥ ४-५२-१२ (३०५३३)
प्रतियुद्ध्येम समरे सर्वशस्त्रभृतांवरम् ॥ ४-५२-१३ (३०५३४)
तस्माद्यदत्र कल्याणं लोके सद्भिरनुष्ठितम् ।
तत्संविधीयतां शीघ्रं मा वो ह्यर्थोऽभ्यगात्परम् ॥ ४-५२-१४ (३०५३५)
न हि पश्यामि संग्रामे कदाचिदपि कौरव ।
एकान्तसिद्धिं राजेन्द्र संप्राप्तश्च धनञ्जयः ॥ ४-५२-१५ (३०५३६)
संप्रवृत्ते तु संग्रामे भावाभावौ जयाजयौ ।
अवश्यमेकं स्पृशतो दृष्टमेतदसंशयम् ॥ ४-५२-१६ (३०५३७)

तस्माद्युद्धोपचरितं कर्म वा धर्मसंहितम् ।
क्रियतामाशु राजेन्द्र संप्राप्तश्च धनञ्जयः ॥ ४-५२-१७ (३०५३८)
एको हि समरे पार्थः पृथिवीं निर्दहेच्छरैः ।
भ्रातृभिः सहितो भूत्वा किं पुनः कौरवान्रणे ।
तस्मात्सन्धिं कुरुश्रेष्ठ कुरुष्व यदि मन्यसे ॥ ४-५२-१८ (३०५३९)
दुर्योधन उवाच। ४-५२-१९क्ष् (३२१५)
नाहं राज्यं प्रदास्यामि पाण्डवेभ्यः पितामह ।
ग्रामं सेनां च दासांश्च स्वल्पं द्रव्यमपि प्रभो ।
युद्धोपचारिकं यत्तु तत्सर्वं संविधीयताम् ॥ ४-५२-१९ (३०५४०)
वैशंपायन उवाच। ४-५२-२०क्ष् (३२१६)
भीष्मस्योपरते वाक्ये तथा दुर्योधनस्य च ।
प्राप्तमर्थ्यं च यद्वाक्यं द्रोणश्चाह द्विजोत्तमः ॥ ४-५२-२० (३०५४१)
यत्तु युद्धोपचरितं भवेद्वा धर्मसंहितम् ।
कस्त्वया सदृशो लोके भूयस्त्वं वक्तुमर्हसि ॥ ४-५२-२१ (३०५४२)
अत्र या मामिका बुद्धिः श्रूयतां यदि रोचते ।
सर्वथा हि मया श्रेयो वक्तव्यं कुरुनन्दन ॥ ४-५२-२२ (३०५४३)
राजा बलचतुर्भागं क्षिप्रमादाय गच्छतु ।
ततोऽपरश्चतुर्भागो गाः समादाय गच्छतु ।
वयं चार्धेन सैन्यस्य प्रतियोत्स्याम पाण्डवम् ॥ ४-५२-२३ (३०५४४)
अहं भीष्मश्च कर्णश्च अश्वत्थामा कृपस्तथा ।
प्रतियोत्स्याम बीभत्सुमागतं कृतनिश्चयम् ॥ ४-५२-२४ (३०५४५)
एवं राजा सुगुप्तः स्यान्न क्लैब्यं गन्तुमर्हति ।
मत्स्यं वा पुनरायातमथवापि शतक्रतुम् ।
अहमावारयिष्यामि वेलेव मकरालयम् ॥ ४-५२-२५ (३०५४६)
वैशंपायन उवाच। ४-५२-२६क्ष् (३२१७)
तद्वाक्यं रुरुचे तेषां द्रोणेनोक्तं महात्मना ।
तथाहि कृतवान्राजा कौरवाणामनन्तरम् ॥ ४-५२-२६ (३०५४७)
भीष्मः प्रस्थाप्य राजानं गोधनं तदनन्तरम् ।
सेनामुख्यान्व्यवस्थाप्य व्यूहितुं संप्रचक्रमे ॥ ४-५२-२७ (३०५४८)
द्रोणस्योपरते वाक्ये भीष्मः प्रोवाच बुद्धिमान् ।
आचार्य मध्ये तिष्ठ त्वमश्वत्थामा तु सव्यतः ।
कृपः शारद्वतो धीमान्पार्श्वं रक्षतु दक्षिणम् ॥ ४-५२-२८ (३०५४९)
विकर्णश्च महावीर्यो दुर्मुखश्च परन्तपः ।
शकुनिः सौबलश्चैव दुःसहश्च महाबलः ।
द्रोणस्य पार्श्वमजिताः पालयन्तु महाबलाः ॥ ४-५२-२९ (३०५५०)
अग्रतः सूतपुत्रस्तु कर्णस्तिष्ठतु दंशितः ।

अहं सर्वस्य सैन्यस्य पश्चात्स्थास्यामि पालयन् ॥ ४-५२-३० (३०५५१)
सर्वे महारथाः शूरा महेष्वासा महाबलाः ।
युद्ध्यन्तु पाण्डवश्रेष्ठमागतं यत्नतो युधि ॥ ४-५२-३१ (३०५५२)
वैशंपायन उवाच। ४-५२-३२क्ष् (३२१८)
अभेद्यं परसैन्यानां व्यूहं व्यूह्य कुरूत्तमः ।
वज्रगर्भं व्रीहिमुखं पद्मचन्द्रार्धमण्डलम् ॥ ४-५२-३२ (३०५५३)
तस्य व्यूहस्य पश्चार्धे भीष्मश्चाथोद्यतायुधः ।
सौवर्णं तालमुच्छ्रित्य रथे तिष्ठन्नशोभत ॥ ॥ ४-५२-३३ (३०५५४)

इति श्रीमन्महाभारते विराटपर्वणि गोग्रहणपर्वणि
द्विपञ्चाशोऽध्यायः ॥ ५२ ॥
Mahabharata - Virata Parva - Chapter Footnotes

४-५२-१८ तस्माद्यद्धोचितं कर्मेति धो पाठः ॥
१८ ॥
४-५२-३२ पद्मगर्भमिति थो पाठः ॥
३२ ॥
॥
द्विपञ्चाशोऽध्यायः ॥
५२ ॥

---

विरतपर्व-अध्यय०५३
॥ श्रीः ॥
४.५३. अध्यायः ५३

Mahabharata - Virata Parva - Chapter Topics
इन्द्रेण सुदर्शननामनि कामगामिनि प्रासादे
देवगणसमारोपणपूर्वकमर्जुनकुरुरणावलोकनाय गगनाङ्गणावतरणम्
॥ १ ॥

Mahabharata - Virata Parva - Chapter Text

४-५३-० (३०५५५)
वैशंपायन उवाच। ४-५३-०क्ष् (३२१९)
ततः सुदर्शनं नाम प्रासादं हरिवाहनः ।
सर्वान्देवान्समारोप्य प्रययो यत्र पाण्डवः ॥ ४-५३-१ (३०५५६)
स्थूणाराजिसहस्रं तु यत्र मध्ये प्रतिष्ठितम् ।

तत्र सूर्यपथेऽतिष्ठद्विमला महती सभा ॥ ४-५३-२ (३०५५७)
आदित्या वसवो रुद्रा अश्विनौ च मरुद्गणाः ।
तत्र श्वेतानि चक्राणि काञ्चनस्फाटिकानि च ॥ ४-५३-३ (३०५५८)
तथा चित्राणि छत्राणि दिव्यरूपाणि भारत ।
मणिरत्नविचित्राणि नानारूपाणि भागशः ।
आकाशे सह दृश्यन्ते भानुमन्ति शुभानि च ॥ ४-५३-४ (३०५५९)
अग्नेरिन्द्रस्य सोमस्य यमस्य वरुणस्य च ।
तथा धातुर्विधातुश्च मित्रस्य धनदस्य च ।
रुद्रस्य विष्णो सवितुस्त्रिदशानां तथैव च ॥ ४-५३-५ (३०५६०)
काञ्चनानि च दामानि विविधाश्चोत्तमस्रजः ।
दिव्यपुष्पाभिसवीतास्तत्र चित्राणि भेजिरे ॥ ४-५३-६ (३०५६१)
तस्मिंस्तु राजन्प्रासादे दिव्यरत्नविभूषिते ।
दिव्यगन्धसमायुक्ताः स्रजो दिव्याश्चकाशिरे ॥ ४-५३-७ (३०५६२)
दिव्यश्च वायुः प्रववौ गन्धमादाय सर्वशः ।
ऋतवः पुष्पमादाय समतिष्ठन्त भारत ॥ ४-५३-८ (३०५६३)
प्रजानां पतयः सप्त सप्त चैव महर्षभः ।
तत्र देवर्षयश्चैव देवराजं दिवौकसः ।
इन्द्रेण सहिताः सर्वे त्रिदशाश्च व्यवस्थिताः ॥ ४-५३-९ (३०५६४)
न पङ्को न रजस्तत्र प्रविवेश कथंचन ।
आदित्यश्च विरूक्षोत्र नातिवेलमिवातपत् ॥ ४-५३-१० (३०५६५)
दिव्यगन्धं समादाय वायुस्तत्राभिगच्छति ।
आकाशं च दिशः सर्वा दर्शनीयमदृश्यत ॥ ४-५३-११ (३०५६६)
तत्र देवाः समारुह्य तं दिव्यं सर्वतःप्रभम् ।
अम्बरे विमलेऽतिष्ठन्प्रासादं कामगामिनम् ॥ ४-५३-१२ (३०५६७)
तत्र राजर्षयश्चैव समारुह्य दिवौकसः ।
श्वेतो राजा वसुमनास्तथा भद्रः प्रदर्शनः ॥ ४-५३-१३ (३०५६८)
नृगो ययातिर्नहुपो मान्धात भरतः कुरुः ।
अष्टकश्च शिबिश्चोभौ स च राजा पुरूरवाः ॥ ४-५३-१४ (३०५६९)
डम्भोद्भवः कार्तवीर्यो ह्यर्जुनः सगरस्तथा ।
दिलीपः केरलः पूरुः शर्यातिः सोमकस्तदा ॥ ४-५३-१५ (३०५७०)
हरिश्चन्द्रश्च तेजस्वी रघुर्दशरथस्तथा ।
भगीरथश्च राजर्षिः सर्वे च जनमेजय ॥ ४-५३-१६ (३०५७१)
पाण्डुश्चैव महाराजश्चामरव्यजनोज्ज्वलः ।
छत्रेण ध्रियमाणेन राजसूयश्रिया वृतः ॥ ४-५३-१७ (३०५७२)
एते चान्ये च बहवः पुण्यशीलाः शुचिव्रताः ।
कीर्तिमन्तो महावीर्यास्तत्रैवासन्दिवि स्थिताः ॥ ४-५३-१८ (३०५७३)

गणाश्चाप्सरसां सर्वे गन्धर्वाश्चापि सर्वशः ।
दैत्यराक्षसयक्षाश्च सुपर्णाः पन्नगास्तथा ॥ ४-५३-१९ (३०५७४)
वासवप्रमुखाः सर्वे देवाश्च सगणेश्वराः ।
आसंस्तत्र समारूढाः संग्रामं तं दिदृक्षवः ॥ ४-५३-२० (३०५७५)
४-५३-२१ (३०५७६)
इत्यम्बरे व्यवस्थाय प्रासादस्था दिवौकसः ।
एकस्य च बहूनां च युद्धं द्रष्टुं व्यवस्थिताः ॥

---

विरतपर्व-अध्यय०५४
॥ श्रीः ॥
४.५४. अध्यायः ५४

Mahabharata - Virata Parva - Chapter Topics
सेनामध्ये दुर्योधनमनवलोकयताऽर्जुनेनोत्तरंप्रति तत्पदवीमनु रथयापनचोदना ॥ १ ॥
तथा बाणाभ्यां द्रोणाद्यभिवादनपूर्वकं ताभ्यामेव कर्णमूले कुशलप्रश्नः ॥ २ ॥
द्रोणेन तत्कौशलश्लाघनम् ॥ ३ ॥

Mahabharata - Virata Parva - Chapter Text

४-५४-० (३०५७७)
वैशंपायन उवाच। ४-५४-०क्ष् (३२२०)
तथा व्यूढेष्वनीकेषु कौरवेयैर्महारथैः ।
उपायादर्जुनस्तूर्णं रथघोषेण नादयन् ॥ ४-५४-१ (३०५७८)
ददृशुस्ते ध्वजाग्रं वै शुश्रुवुश्च रथस्वनम् ।
दोधूयमानस्य भृशं गाण्डीवस्य च निस्वनम् ॥ ४-५४-२ (३०५७९)
त्रिकोशमात्रं गत्वा तु पाण्डवः श्वेतवाहनः ।
संनामुखमभिप्रेक्ष्य पार्थो वैराटिमब्रवीत् ॥ ४-५४-३ (३०५८०)
राजानं नात्र पश्यामि रथानीके व्यवस्थितम् ।
दक्षिणं पक्षमादाय कुरुवो यान्त्युदङ्भुंखाः ॥ ४-५४-४ (३०५८१)
उत्सृज्यैतद्रथानीकं महेष्वासाभिरक्षितम् ।
गवाग्रमभितो याहि यावत्पश्यामि मे रिपुम् ॥ ४-५४-५ (३०५८२)
गवाग्रमभितो गत्वा गाश्चैवाशु निवर्तय ।
यावदेते निवर्तन्ते कुरवो जवमास्थिताः ।
तावदेव पशून्सर्वान्निवर्तिष्ये तवाभिभो ॥ ४-५४-६ (३०५८३)

वैशंपायन उवाच। ४-५४-७क्ष् (३२२१)
इत्युक्त्वा समरे पार्थो वैराटिमपराजितः ।
सव्यं पक्षमनुप्राप्य जवेनाश्वानचोदयत् ॥ ४-५४-७ (३०५८४)
ततोऽभ्यवादयत्पार्थो भीष्मं शान्तनवं कृपम् ।
द्वाभ्यांद्वाभ्यां तथाऽऽचार्यं द्रोणं प्रथमतः क्रमात् ॥ ४-५४-८ (३०५८५)
द्रोणं कृपं च भीष्मं च पृषत्कैरभ्यवादयत् ।
ततस्तत्सर्वमालोक्य द्रोणो वचनमब्रवीत् ॥ ४-५४-९ (३०५८६)
महारथमनुप्राप्तं दृष्ट्वा गाण्डीवधन्विनम् ।
न कश्चिद्योद्धिमिच्छेत न च गुप्तं स्वजीवितम् ।
अयं वीरश्च शूरश्च दुर्धर्षश्चैव संयुगे ॥ ४-५४-१० (३०५८७)
एतद्ध्वजाग्रं पार्थस्य दूरतः प्रतिदृश्यते ।
मेघःक सविद्युत्स्तनितो रोरवीति च वानरः ॥ ४-५४-११ (३०५८८)
आस्थाय च रथं याति गाण्डीवं विक्षिपन्धनुः ॥ ४-५४-१२ (३०५८९)
अश्वानां स्तनतां शब्दो वहतां पाकशासनिम् ।
रथस्याम्बुधरस्येव श्रूयते भृशदारुणः ॥ ४-५४-१३ (३०५९०)
दारयन्निव तेजस्वी वसुधां वासवात्मजः ।
एष दृष्ट्वा रथानीकमस्माकमरिमर्दनः। ४-५४-१४ (३०५९१)
श्रीमान्वदान्यो धृतिमान्तत्करोति च पाण्डवः ॥
इमौ बाणावनुप्राप्तौ पादयोः प्रत्युपस्थितौ । ४-५४-१५ (३०५९२)
रथस्याग्रे निखातौ मे चित्रपुङ्खावजिह्मगौ ॥
इमौ चाप्यपरौ बाणावभितः कर्णमूलयोः । ४-५४-१६ (३०५९३)
संस्पृशन्तावतिक्रान्तौ पृष्ट्वेवानामयं भृशम् ॥
चिरदृष्टोऽयमस्माभिर्धर्मज्ञो बान्धवप्रियः । ४-५४-१७ (३०५९४)
अतीव ज्वलते लक्ष्म्या पाण्डुपुत्रः प्रतापवान् ॥
निरुष्य च वने वामं कृत्वा कर्म सुदुष्करम् । ४-५४-१८ (३०५९५)
अभिवादयते पार्थः पूजयन्मामरिंदमः ॥
अमर्षेण हि संपूर्णो दुःखेन प्रतिबोधितः। ४-५४-१९ (३०५९६)
अद्येमां भारतीं सेनामेको नाशयते ध्रुवम् ॥
द्व्यधिकं दशमुष्य वत्सराणां स्वजनेनाविदितस्त्रयोदशं च ।
४-५४-२० (३०५९७)
ज्वलते रथमास्थितः किरीटी तम इव रात्रिजमभ्युदस्य सूर्यः ॥
रथी शरी चारुमाली निषङ्गी शङ्खी पताकी कवची किरीटी।
४-५४-२१ (३०५९८)
खड्गी च धन्वी च विराजतेऽयं शिखीव यज्ञेषु घृतेन सिक्तः
॥ ॥ ४-५४-२२ (३०५९९)

इति श्रीमन्महाभारते विराटपर्वणि गोग्रहणपर्वणि
चतुःपञ्चाशोऽध्यायः ॥ ५४ ॥

---

विरतपर्व-अध्यय०५५
॥ श्रीः ॥
४.५५. अध्यायः ५५

Mahabharata - Virata Parva - Chapter Topics
अर्जुनेन सेनामध्ये सुयोधनानवलोकनेन तस्य गवामादानेन
गमनसंभावनया रथेन गवाग्रं प्रत्यभियानम् ॥ १ ॥
भीष्मेण पार्थभावविज्ञानात्सेनया सह तमनुधावनम् ॥ २ ॥
गवान्तिकमुपगतवताऽर्जुनेन तद्रक्षिणां बाणगणैरभिहननेन गवां
विनिवर्तनम् ॥ ३ ॥

Mahabharata - Virata Parva - Chapter Text

४-५५-० (३०६००)
वैशंपायन उवाच। ४-५५-०क्ष् (३२२२)
तमदूरमुपायान्तं दृष्ट्वा पाण्डवमर्जुनम् ।
नारयः प्रेक्षितुं शेकुस्तपन्तं हि यथा रविम् ॥ ४-५५-१ (३०६०१)
स तं दृष्ट्वा रथानीकं पार्थः सारथिमब्रवीत् ।
इषुपातमात्रे सेनायाः स्थापयाश्वानरिंदम ।
यावत्समीक्षे व्यूहेऽस्मिन्मम शत्रुं सुयोधनम् ॥ ४-५५-२ (३०६०२)
रक्तवैडूर्यविकृतं मणिप्रवरभूषितम् ।
परं जानाम्यहं तस्य ध्वजं दूरात्समुच्छ्रितम् ॥ ४-५५-३ (३०६०३)
यद्येनमिह पश्यामि दुर्बुद्धिमतिमानिनम् ।
यमाय प्रेषयिष्यामि सहायः स्याद्यदीश्वरः ॥ ४-५५-४ (३०६०४)
सर्वानन्याननादृत्य दृष्ट्वा तमतिमानिनम् ।
सिंहः क्षुद्रमृगस्येव पतिष्ये तस्य मूर्धनि ॥ ४-५५-५ (३०६०५)
हनिष्यामि तमेवाद्य शरैर्गाण्डीवनिःसृतैः ।
तस्मिन्हते भविष्यन्ति सर्व एव पराजिताः ॥ ४-५५-६ (३०६०६)
शरैश्च शमयिष्येऽहं धार्तराष्ट्रं ससौबलम् ।
असभ्यानां च वक्तारं कुरूणां किल किल्विषम् ॥ ४-५५-७ (३०६०७)
राजानं नेह पश्यामि निरापिषमिदं बलम् ।
अभिद्रेव ह राजानं व्यक्तमित्यत्र निर्भयः ॥ ४-५५-८ (३०६०८)
आस्थितो मध्यमाचार्योप्यश्वत्थामाऽप्यनन्तरम् ।
कृपकर्णौ पुरस्तात्तु महेष्वासौ व्यवस्थितौ ॥ ४-५५-९ (३०६०९)

भूरिश्रवाः सोमदत्तो बाह्लीकश्च जयद्रथः ।
दक्षिणं पक्षमाश्रित्य स्थिता युद्धविशारदाः ॥ ४-५५-१० (३०६१०)
साल्वराजो द्युमत्सेनो वृषसेनश्च सौबलः ।
दशार्णश्चैव कालिङ्गो वामं पक्षं समाश्रितः ॥ ४-५५-११ (३०६११)
पृष्ठतः कुरुमुख्यश्च भीष्मस्तिष्ठति दंशितः ।
सोऽर्धसैन्येन बलवान्सर्वेषां नः पितामहः ॥ ४-५५-१२ (३०६१२)
दुर्योधनं न पश्यामि क्व नु राजा स तिष्ठति ।
उत्सृंज्यैतद्रथानीकं याहि यत्र सुयोधनः ॥ ४-५५-१३ (३०६१३)
तं हत्वा संनिवर्तिष्ये गाः स आदाय गच्छति ।
गवाग्रमभितो याहि यत्र राजा भविष्यति ॥ ४-५५-१४ (३०६१४)
वैशंपायन उवाच। ४-५५-१५क्ष् (३२२३)
इत्युक्त्वा समरे पार्थो वैराटिमपराजितः ।
संस्पृशानो धनुर्दिव्यं त्वरमाणोऽगमत्तदा ॥ ४-५५-१५ (३०६१५)
ततो भीष्मोऽब्रवीद्वाक्यं कुरुमध्ये परंतपः ।
चिरदृष्टोऽयमस्माभिर्धर्मज्ञो बान्धवप्रियः । ४-५५-१६ (३०६१६)
अतीव ज्वलते लक्ष्म्या पाकशासनिरागतः ।
एष दुर्योधनं पार्थो मार्गते निकृतिं स्मरन् ॥ ४-५५-१७ (३०६१७)
सेनामत्यर्थमालोक्य त्वरते ग्रहणेऽस्य च ।
मृगं सिंह इवादातुमीक्षते पाकशासनिः ॥ ४-५५-१८ (३०६१८)
नैषोऽन्तरेण राजानं बीभत्सुः स्थातुमर्हति ।
तस्य पार्ष्णि ग्रहीष्यामो जवेनाभिप्रधावतः ॥ ४-५५-१९ (३०६१९)
न ह्येनमभिसंक्रुद्धमेको युद्ध्येत संयुगे ।
अन्यो देवान्महादेवात्कृष्णाद्वा देवकीसुतात् ।
आचार्याच्च सपुत्राद्वा भारद्वाजान्महारथात् ॥ ४-५५-२० (३०६२०)
किं नो गावः करिष्यन्ति द्रव्यं वा विपुलं तथा ।
दुर्योधनः पार्थगतः पुरा प्राणान्विमुञ्चति ॥ ४-५५-२१ (३०६२१)
वैशंपायन उवाच। ४-५५-२२क्ष् (३२२४)
इत्युक्त्वा समरे भीष्मः सेनया सह कौरवः ।
अन्वधावत्तदा पार्थं धार्तराष्ट्रस्य रक्षणे ॥ ४-५५-२२ (३०६२२)
विक्रोशमात्रं यात्वा तु पार्थो वैराटिमब्रवीत् ।
इषुपातमात्रे सेनायाः स्थापयाश्वानरिंदम ॥ ४-५५-२३ (३०६२३)
एतदग्रं गवां दृष्टं मन्दं वाहय सारथे ।
याह्युत्तरेण सेनाया गाश्चैव प्रविभज्य च ॥ ४-५५-२४ (३०६२४)
परिक्षिप्य गवां यूथमत्र योत्स्ये सुयोधनम् ।
गच्छन्ति सत्वरा गावः सगोपाः परिमोचय ॥ ४-५५-२५ (३०६२५)
तत्र गत्वा पशून्वीर सगोपान्परिमोचय ।

अन्तरेण च सेनायाः प्राङ्मुखो गच्छ चोत्तर ॥ ४-५५-२६ (३०६२६)
इमे त्वतिरथाः सर्वे मम वीर्यपराक्रमम् ।
पश्यन्तु कुरवो युद्धे महेन्द्रस्येव दानवाः ॥ ४-५५-२७ (३०६२७)
वैशंपायन उवाच। ४-५५-२८क्ष् (३२२५)
ततः स रथिनां श्रेष्ठो नाम विश्राव्य चात्मनः ।
निशिताग्राञ्शरांस्तीक्ष्णान्मुमोचांतकसन्निभान् ॥ ४-५५-२८ (३०६२८)
शलभैरिव चाकाशं धाराभिरिव पर्वतम् ।
निरावकाशमभवच्छरैः क्षिप्तैः किरीटिना ॥ ४-५५-२९ (३०६२९)
विकीर्यमाणास्तु शरैस्ते योधा धार्तराष्ट्रिकाः ।
गाश्चैव न च पश्यन्ति पार्थमुक्तैरजिह्मगैः ॥ ४-५५-३० (३०६३०)
सा चापि बहुला सेना पार्थबाणाभिपीडिता ।
नापश्यद्विवृतां भूमिं नान्तरिक्षं दिशोपि वा ॥ ४-५५-३१ (३०६३१)
अर्जुनस्तु तदा हृष्टो दर्शयन्वीर्यमात्मनः ।
पीडयामास सैन्यानि गाण्डीवप्रसृतैः शरैः ॥ ४-५५-३२ (३०६३२)
तेषां नैवापयाने च नाभियाने भवन्मतिः ।
शीघ्रतामेव पार्थस्य पूजयन्तस्तु विस्मिताः ॥ ४-५५-३३ (३०६३३)
चन्द्रावदातं सामुद्रं कुरुसैन्यभयंकरम् ।
ततः शङ्खमुपाध्मासीद्दिद्विषतां रोमहर्षणम् ।
ज्याघोषं तलघोषं च कृत्वा भूतान्यमोहयत् ॥ ४-५५-३४ (३०६३४)
तस्य शङ्खस्य शब्देन धनुषो निस्वनेन च ।
शब्देनामानुषाणां च भूतानां ध्वजवासिनाम् ।
वियद्गतानां देवानां मानुषाणां रवेण च ॥ ४-५५-३५ (३०६३५)
ऊर्ध्वं पुच्छं विधून्वाना हेममाणाः समन्ततः ।
गावः सवत्साः संत्रस्ता निवृत्ता दक्षिणां दिशं ॥ ४-५५-३६ (३०६३६)
ततः स समरे शूरो बीभत्सुः शत्रुपूगहा ।
गोपालांश्चोदयामास गावश्चोदयतेति च ॥ ४-५५-३७ (३०६३७)
उत्तरं चाह बीभत्सुर्हर्षयन्पाण्डुनन्दनः ।
गवामग्रं समीक्षस्व गश्चैवाशु निवर्तय ॥ ४-५५-३८ (३०६३८)
यावदेते निवर्तन्ते कुरवो जवमास्थिताः ।
याह्युत्तरेण गाश्चैताः सैन्यानां च नृपात्मज ॥ ४-५५-३९ (३०६३९)
पश्यन्तु कुरवः सर्वे मम वीर्यपराक्रमम् ॥ ४-५५-४० (३०६४०)
वैशंपायन उवाच ।
ते लाभमिव मन्वानाः कुरवोऽर्जुनमाहव। ४-५५-४१क्ष् (३२२६)
दृष्टवा यान्तमदूरस्थं क्षिप्रमभ्यपतन्रथैः ॥
हस्त्यश्वपरिवारेण महताऽभिविराजता। ४-५५-४१ (३०६४१)
योधैः प्रासासिहस्तैश्च चापबाणोद्यतायुधैः ॥

तान्यनीकान्यशोभन्त कुरूणामाततायिनाम्। ४-५५-४२ (३०६४२)
संसर्पन्त इवाकाशे विद्युत्वन्तो वलाहकाः ॥
तानि दृष्ट्वाऽप्यनीकानि निवर्तितरथानि च। ४-५५-४३ (३०६४३)
पार्थोऽपि वायुवद्घोरं सैन्याग्रं व्यधुनोच्छरैः ॥
तां शत्रुसेनां तरसा प्रणुद्य गाश्चापि जित्वा धनुषा परेण।
४-५५-४४ (३०६४४)
दुर्योधनायाभिमुखं प्रयान्तं कुरुप्रवीराः सहसाऽभ्यगच्छन् ॥
गोषु प्रयातासु जवेन मात्स्यान्किरीटिनं प्रीतियुतं च दृष्ट्वा।
४-५५-४५ (३०६४५)
पशून्समादाय ततो निवृत्ता गोपाः समस्ताः प्रययुश्च राष्ट्रम् ॥ ॥
४-५५-४६ (३०६४६)

इति श्रीमन्महाभारते विराटपर्वणि गोग्रहणपर्वणि
पञ्चपञ्चासोऽध्यायः ॥ ५५ ॥

---

विरतपर्व-अध्यय०५६
॥ श्रीः ॥
४.५६. अध्यायः ५६

Mahabharata - Virata Parva - Chapter Topics
अर्जुनेनोत्तरंप्रति
द्रोणकर्णादिरथानामसाधारणध्वजचिह्नप्रदर्शनपूर्वकं
तत्तन्नामनिर्देशेन तत्तत्पराक्रमवर्णनम् ॥ १ ॥

Mahabharata - Virata Parva - Chapter Text

४-५६-० (३०६४७)
वैशंपायन उवाच। ४-५६-०क्ष् (३२२७)
ततस्त्रीणि सहस्राणि रथानां च धनुष्मताम् ।
घोराणि कुरुवीराणां पर्यकीर्यन्त भारत ॥ ४-५६-१ (३०६४८)
कर्णो रथसहस्रेण प्रत्यगृह्णाद्धनञ्जयम् ।
भीष्मः शान्तनवो धीमान्सहस्रेण पुरस्कृतः ॥ ४-५६-२ (३०६४९)
तथा रथसहस्रेण भ्रातृभिः परिवारितः ।
पश्चाद्दुर्योधनोऽतिष्ठद्यशसा च श्रिया ज्वलन् ॥ ४-५६-३ (३०६५०)
अतिष्ठन्निवकाशेषु पादाताः सह वाजिभिः ।
भीमरूपाश्च मातङ्गास्तोमराङ्कुशचोदिताः ॥ ४-५६-४ (३०६५१)
तानि दृष्ट्वा ह्यनीकानि विततानि महात्मनाम् ।

वैराटिमुत्तरं तं तु प्रत्यभाषत पाण्डवः ॥ ४-५६-५ (३०६५२)
जाम्बूनदमयी वेदी ध्वजाग्रे यस्य दृश्यते ।
शोणाश्वाश्वा रथे युक्ता द्रोण एष प्रकाशते ॥ ४-५६-६ (३०६५३)
आचार्यो निपुणो धीमान्ब्रह्मविच्छूरसत्तमः ।
आहवे चाप्रतिद्वन्द्वो दूरपाती महारथः ॥ ४-५६-७ (३०६५४)
सुप्रसन्नो महावीरः कुरुष्वैनं प्रदक्षिणम् ।
अत्रैव चाविरोधेन एष धर्मः सनातनः ॥ ४-५६-८ (३०६५५)
यदि मे प्रहरेद्द्रोणः शरीरे मे प्रहृष्यतः ।
ततोऽस्मिन्प्रहरिष्यामि नान्यथा बुद्धिरस्ति मे ॥ ४-५६-९ (३०६५६)
भारताचार्यमुख्येन ब्राह्मणेन महात्मना ।
तेन मे युध्यमानस्य मन्दं वाहय सारथे ॥ ४-५६-१० (३०६५७)
ध्वजाग्रे सिंहलाङ्गूलो दिक्षु सर्वासु शोभते ।
भारताचार्यपुत्रस्तु सोऽश्वत्थामा विराजते ॥ ४-५६-११ (३०६५८)
ध्वजाग्रं दृश्यते यत्र बालसूर्यसमप्रभम् ।
दुर्जयः सर्वसैन्यानां देवैरपि सवासवैः ।
तेन मे युध्यमानस्य मन्दं वाहय सारथे ॥ ४-५६-१२ (३०६५९)
ध्वजाग्रे गोवृषो यस्य काञ्चनोऽभिविराजते ।
आचार्यवरमुख्यस्तु कृप एष महारथः ॥ ४-५६-१३ (३०६६०)
द्रोणेन च समो वीर्ये पितुर्मे परमः सखा ।
तेन मे युध्यमानस्य मन्दं वाहय सारथे ॥ ४-५६-१४ (३०६६१)
यस्य काञ्चनकम्बूभिर्हस्तिकक्ष्यापरिष्कृतः ।
ध्वजः प्रकाशते दूराद्रथे विद्युद्गणोपमः ॥ ४-५६-१५ (३०६६२)
एष वैकर्तनः कर्णः प्रतिमानं धनुष्मताम् ।
दृढवैरी सदाऽस्माकं नित्यं कटुकभाषणः ॥ ४-५६-१६ (३०६६३)
यस्याश्रयबलादेव धार्तराष्ट्रः ससौबलः ।
अस्मान्निरस्य राज्याच्च पुनरद्यापि योत्स्यति ॥ ४-५६-१७ (३०६६४)
एष वै स्पर्धते नित्यं मया सह सुदुर्जयः ।
जामदग्न्यस्य रामस्य शिष्यो ह्येष महारथः ॥ ४-५६-१८ (३०६६५)
सर्वास्त्रकुशलः कर्णः सर्वशस्त्रभृतांवरः ।
युद्धेऽप्रतिमवीर्यश्च दृढवेधी पराक्रमी ॥ ४-५६-१९ (३०६६६)
अद्याहं युद्धमेतेन करिष्ये सूतबन्धुना ।
द्रष्टा त्वमावयोर्युद्धं बलिवासवयोरिव ॥ ४-५६-२० (३०६६७)
महारथेन शूरेण सूतपुत्रेण धन्विना ।
तेन मे युध्यमानस्य शीघ्रं वाहय सारथे ॥ ४-५६-२१ (३०६६८)
यस्य चैव रथोपस्थे नागो मणिमयो ध्वजः ।
एष दुर्योधनस्तत्र कौरवो यशसा वृतः ॥ ४-५६-२२ (३०६६९)

लब्धलक्षो दृढं वेधी लघुहस्तः प्रतापवान् ।
तेन मे युध्यमानस्य शीघ्रं वाहय सारथे ॥ ४-५६-२३ (३०६७०)
यस्तु श्वेतावदातेन पञ्चतालेन केतुना ।
वैडूर्यमयदण्डेन तालवृक्षेण राजते ॥ ४-५६-२४ (३०६७१)
हस्तावापी बृहद्धन्वा सेनां तिष्ठति हर्षयन् ।
रामेण जामदग्न्येन द्वैरथेनाजितः पुरा ॥ ४-५६-२५ (३०६७२)
शीघ्रश्च लगुवेधी च लघुहस्तः प्रतापवान् ।
एष शान्तनवो भीष्मः सर्वेषां नः पितामहः ॥ ४-५६-२६ (३०६७३)
ककुदः सर्वसैन्यानां सर्वशस्त्रभृतांवरः ।
जयश्रियाऽवबद्धस्तु सुयोधनवशानुगः ।
पश्चादेष प्रयातव्यो न मे विघ्नकरो भवेत् ॥ ४-५६-२७ (३०६७४)
इत्येतांस्त्वरितः पार्थः कथयित्वा तु चोत्तरे ।
रूपतश्चिह्नतश्चैव युद्धाय त्वरते पुनः ॥ ॥ ४-५६-२८ (३०६७५)

इति श्रीमन्महाभारते विराटपर्वणि गोग्रहणपर्वणि
षट्पञ्चाशोऽध्यायः ॥ ५६ ॥
Mahabharata - Virata Parva - Chapter Footnotes

४-५६-९ शरीरे प्रहरिष्यतः इति नान्यया युद्धमस्ति मे इति चो धो पाठः ॥
९ ॥

---

विरतपर्व-अध्यय०५७
॥ श्रीः ॥
४.५७. अध्यायः ५७

Mahabharata - Virata Parva - Chapter Topics
अर्जुनस्य भीष्मद्रोणादिभिः सह युद्धम् ॥ १ ॥
अर्जुनेन कर्णस्य पराभवः ॥ २ ॥

Mahabharata - Virata Parva - Chapter Text

४-५७-० (३०६७६)
वैशंपायन उवाच। ४-५७-०क्ष् (३२२८)
अश्वत्थामा ततस्तत्र कर्णं संप्रेक्ष्य वीर्यवान् ।
उवाच स्मयमानोऽसौ सूतपुत्रमरिन्दमम् ॥ ४-५७-१ (३०६७७)
कर्ण यस्त्वं सभामध्ये बह्वबद्धं विकत्थसे ।
न मे युधि समोऽस्तीति तदिदं प्रत्युपस्थितम् ॥ ४-५७-२ (३०६७८)

एषोऽन्तक इव क्रुद्धः सर्वभूतावमर्दनः ।
संग्रामशिरसो मध्ये दृम्भते केसरी यथा ॥ ४-५७-३ (३०६७९)
शूरोसि यदि संग्रामे दर्शयस्व सभां विना ॥ ४-५७-४ (३०६८०)
यद्यशक्तोसि संग्रामे पार्थेनाद्भुतकर्मणा ।
पुनरेव सभां गत्वा धार्तराष्ट्रेण धीमता ।
मातुलं परिगृह्याशु मन्त्रयस्व यथासुखम् ॥ ४-५७-५ (३०६८१)
वैशंपायन उवाच। ४-५७-६क्ष् (३२२९)
एवमुक्तस्तथा कर्णः क्रोधादुद्धृत्य लोचने ।
द्रोणपुत्रमिदं वाक्यमुवाच कुरुसन्निधौ ॥ ४-५७-६ (३०६८२)
नाहं बिभेमि बीभत्सोर्न कृष्णाद्देवकीसुतात् ।
पाण्डवेभ्योपि सर्वेभ्यः क्षत्रधर्ममनुव्रतः ॥ ४-५७-७ (३०६८३)
सत्वाधिकानां पुंसां तु धनुर्वेदोपजीविनाम् ।
गर्जतां जायते दर्पः स्वरश्च न विषीदति ॥ ४-५७-८ (३०६८४)
पश्यत्वाचार्यपुत्रो मामर्जुनेनातिरंहसा ।
युध्यमानं सुसंयुक्तं जयो वै मय्यवस्थितः ॥ ४-५७-९ (३०६८५)
वैशंपायन उवाच। ४-५७-१०क्ष् (३२३०)
ततः प्रहस्य बीभत्सुः कौन्तेयः श्वेतवाहनः ।
दिव्यमस्त्रं विकुर्वाणः प्रत्ययाद्रथिसत्तमः ॥ ४-५७-१० (३०६८६)
महात्मानं मन्दबुद्धिर्निश्वसन्धृतराष्ट्रजः ।
उवाच स महाराज राजा दुर्योधनस्तदा ॥ ४-५७-११ (३०६८७)
न विद्मो ह्यर्जुनं तत्र वसन्तं मत्स्यवेश्मनि ।
तेनेदं कर्ण मत्स्यानामग्रहीष्म धनं बहु ॥ ४-५७-१२ (३०६८८)
एवं चेत्तर्हि गच्छामो विसृजन्तो धनं बहु ।
अयशो नातिवर्तेत लोकयोरुभयोरपि ॥ ४-५७-१३ (३०६८९)
किं च युद्धात्परं नास्ति क्षत्रियाणां सुखावहम् ।
तस्मात्पार्थेन संग्रामं कुर्महे न पलायनम् ॥ ४-५७-१४ (३०६९०)
एतावदुक्त्वा राजा वै ह्यभियानमियेष सः ।
तथा दशसहस्राणि वीराणां हि धनुष्मताम् ।
अभ्यद्रवंस्तदा पार्थं शलभा इव पावकम् ॥ ४-५७-१५ (३०६९१)
वर्मिता वाजिनस्तत्र संभृताश्च पदातिभिः ।
भीमरूपाश्च मातङ्गास्तोमराङ्कुशपाणिभिः । ४-५७-१६ (३०६९२)
अधिष्ठिताः सुसंयत्तैर्हस्तिशिक्षाविशारदैः ।
अभ्यद्रवन्सुसंक्रुद्धाश्चापहस्तोद्यतायुधाः ॥ ४-५७-१७ (३०६९३)
पञ्च चैनं रथोदग्रास्त्वरिताः पर्यवारयन् ।
द्रोणो भीष्मश्च कर्णश्च कुरुराजश्च वीर्यवान् ॥ ४-५७-१८ (३०६९४)
अश्वत्थामा महाबाहुर्धनुर्वेदपरायणः ।

इषूंश्च सम्यगस्यन्तो जीमूता इव वार्षिकाः ॥ ४-५७-१९ (३०६९५)
ते लाभमिव मन्वानाः प्रत्यगृह्णन्धनंजयम् ।
शरौघानभिवर्षन्तो नादयन्तो दिशो दश ॥ ४-५७-२० (३०६९६)
ततः प्रहस्य बीभत्सुः कौन्तेयः श्वेतवाहनः ।
दिव्यमस्त्रं प्रकुर्वाणः प्रत्ययाद्रथिसत्तमान् ॥ ४-५७-२१ (३०६९७)
यथा रश्मिभिरादित्यः प्रच्छादयति मेदिनीम् ।
तथा गाण्डीवनिर्मुक्तैः शरैराच्छादयद्दिशः ॥ ४-५७-२२ (३०६९८)
न रथानां न चाश्वानां न ध्वजानां न वर्मिणाम् ।
अतिविद्धैः शितैर्बाणैरासीदद्व्यङ्गुलिरन्तरम् ॥ ४-५७-२३ (३०६९९)
दैवयोगाद्धि पार्थस्य हयानामुत्तरस्य च ।
शिक्षाबलोपपन्नत्वादस्त्राणां वै परिक्रमात् ।
ध्वजगाण्डीवयोश्चापि दैव्या शक्त्या च मायया ॥ ४-५७-२४ (३०७००)
इतस्ततश्च संयाने दूरे वाऽप्यथवाऽन्तिके ।
दुर्गे विषमजाते वा स्थले निम्ने तथा क्षितौ ।
न च रुध्येद्गतिस्तस्य रथस्य मनसो यथा ॥ ४-५७-२५ (३०७०१)
समरेषु तु विद्वांसस्तस्य तांस्तान्परिक्रमान् ।
वीर्यमत्यद्भुतं दृष्ट्वा तथा पार्थस्य तद्बलम् ।
त्रेसुरेवं परे भीताः पराङ्मुखरथा अपि। ४-५७-२६ (३०७०२)
कालाग्निमिव बीभत्सुं निर्दहन्तमिव प्रजाः ।
नारयः प्रेक्षितुं शेकुर्ज्वलन्तमिव पावकम् ॥ ४-५७-२७ (३०७०३)
तानि भिन्नान्यनीकानि रेजुरर्जुनमार्गणैः ।
तिग्मांशोश्च घनाभ्राणि व्याप्तानीव गभस्तिभिः ॥ ४-५७-२८ (३०७०४)
अशोकाना वनानीव सञ्चितैः कुसुमैः शुभैः ।
पार्थः संरञ्जयामास रुधिरेणाकुलं बलम् ॥ ४-५७-२९ (३०७०५)
सहस्रशोऽर्जुनशरैश्छिन्नान्युच्चावचानि च ।
छत्राणि च पताकाश्च खेऽभ्युवाह सदागतिः ॥ ४-५७-३० (३०७०६)
ये ह्यर्जुनबलत्रस्ताः परिपेतुर्दिशो दश ।
रथात्तं देशमुत्सृज्य पार्थच्छिन्नयुगा हयाः ॥ ४-५७-३१ (३०७०७)
निकृत्तपूर्वचरणास्ते निपेतुः शितैः शरैः ।
शिरोभिः प्रथमं जग्मुर्मेदिनीं जघनैर्हयाः ॥ ४-५७-३२ (३०७०८)
चक्षुर्नासाविषाणेषु दन्तवेष्टेषु च द्विपान् ।
मर्मस्वन्येषु चाहत्य तथा निघ्नन्गजोत्तमाः ॥ ४-५७-३३ (३०७०९)
कौरवाणां गजानां च शरीरैर्गतचेतसाम् ।
क्षणेन संवृता भूमिर्मेघैरिव नभस्थलम् ॥ ४-५७-३४ (३०७१०)
अस्त्रैर्दिव्यैर्महाबाहुरर्जुनः प्रहसन्निव ।
बडबामुखसंभूतः कालाग्निरिव संवृतः ॥ ४-५७-३५ (३०७११)

यथा युगान्तसमये सर्वं स्थावरजङ्गमम् ।
कालपक्वमशेषेण धक्ष्येदुग्रशिखः शिखी ॥ ४-५७-३६ (३०७१२)
तद्वत्पार्थोऽस्त्रतेजोभिर्धनुषो निस्वनेन च ।
दैवाद्वीर्याच्च बीभत्सुस्तस्मिन्दौर्योधने बले ॥ ४-५७-३७ (३०७१३)
रणे शक्तिममित्राणां प्रणीयोपनिनाय सः ।
चेष्टां प्रायेण भूतानां रात्रिः प्राणभृतामिव ॥ ४-५७-३८ (३०७१४)
सोऽतीयात्सहसा शत्रून्सहसा तेऽभिपेदिरे ।
शीघ्रादूरं दृढामोघमस्त्रमस्यातिमानुषम् ।
दृष्ट्वा ते कौरवा भीता अतिमानुषविक्रमम् ॥ ४-५७-३९ (३०७१५)
खगपत्राभिसंवीतैः खाविष्टैः खगमैरिव ।
अर्जुनस्य खमावव्रे लोहितप्राणपैः खगैः ॥ ४-५७-४० (३०७१६)
अर्जुनेन विनिर्मुक्ताः शरा गाण्डीवधन्वना ।
तार्क्ष्यवेगा इवाकाशे ससञ्जुः परमर्मसु ॥ ४-५७-४१ (३०७१७)
वर्माणि सारथिंश्चैव हेमजालानि वाजिनाम् ।
किरीटं सूर्यसंकाशं वैयाघ्रमथ चर्म च ॥ ४-५७-४२ (३०७१८)
ततः सर्वाणि गात्राणि रथस्य द्विषतां शरैः ।
नीहारेणेव भूतानि छन्नानीह चकाशिरे ॥ ४-५७-४३ (३०७१९)
सकृदेव न तं शेकुः कथमभ्यसितुं परे ।
अनभ्यस्तः पुनस्तैर्हि रथः सोभिपपात तान् ॥ ४-५७-४४ (३०७२०)
तच्छरा द्विट्शरीरेषु यथा च न ससञ्जिरे ।
द्विधाऽनीकेषु बीभत्सोर्न ससञ्ज रथस्तथा ॥ ४-५७-४५ (३०७२१)
स तद्धि क्षोभयामास विगाह्यारिबलं रथी ।
अनन्तवेगो भुजगः क्रीडन्निव महार्णवे ॥ ४-५७-४६ (३०७२२)
अस्यतो नित्यमत्यर्थं सर्वघोषाधिकस्तथा ।
संनादः श्रूयते भूतैर्धनुषश्च किरीटिनः ॥ ४-५७-४७ (३०७२३)
संच्छिन्नास्तत्र मातङ्गा बाणैरल्पान्तरान्तरैः ।
संस्यूतास्तत्र दृश्यन्ते मेघा इव गभस्तिभिः ॥ ४-५७-४८ (३०७२४)
दिशोऽनुभ्रमतः सर्वा सव्यदक्षिणमस्यतः ।
सततं दृश्यते युद्धे सायकासनमण्डलम् ॥ ४-५७-४९ (३०७२५)
पतन्त्यरूपेषु यथा चक्षूंषि न कदाचन ।
नालक्ष्येषु शराः पेतुस्तस्य गाण्डीवधन्वनः ॥ ४-५७-५० (३०७२६)
महागजसहस्रस्य युगपन्मृद्नतो वनम् ।
कौन्तेयरथमार्गस्तु रणे घोरतरोऽभवत् ॥ ४-५७-५१ (३०७२७)
नूनं पार्थजयैषित्वाच्छक्रः सर्वामरैः सह ।
हन्त्यस्मानिति मन्यन्ते पार्थेनैवार्दिताः परे ॥ ४-५७-५२ (३०७२८)
घ्नन्तमत्यर्थमहितान्सव्यसाचिनमाहवे ।

कालमर्जुनरूपेण ग्रसन्तमिव च प्रजाः ॥ ४-५७-५३ (३०७२९)
कुरुसेनाशरीराणि पार्थेनानाहतान्यपि ।
पेतुः पार्थहतानीव पार्थकर्मानुदर्शनात् ॥ ४-५७-५४ (३०७३०)
ओषधीनां शिरांसीव कालपक्तिसमन्वयात् ।
अवनेमुः कुरूणां हि शिरांस्यर्जुनजाङ्ख्यात् ॥ ४-५७-५५ (३०७३१)
चकार चार्जुनः क्रोधाद्विमुखान्नुषितानपि ॥ ४-५७-५६ (३०७३२)
अर्जुनेनापि भिन्नानि बलाग्नाणि पुनः क्वचित् ।
चक्रुर्लोहितधाराभिर्धरणीं लोहितोत्तराम् ॥ ४-५७-५७ (३०७३३)
लोहितेनापि संपृक्तैः पांसुभिः पवनोद्धतैः ।
तेनैव च समुद्धूतैः सूक्ष्मैर्लोहितबिन्दुभिः ॥ ४-५७-५८ (३०७३४)
लोहितार्द्रैः प्रहरणैः प्रभग्ना लोहितोक्षिताः ।
लोहितेषु निमग्नास्ते निहताश्च किरीटिना ॥ ४-५७-५९ (३०७३५)
बभूवुर्लोहितास्तत्र भृशमादित्यरश्मयः ।
आकाशं तत्क्षणेनासीत्सन्ध्याभ्रमिव लोहितं ॥ ४-५७-६० (३०७३६)
अप्यस्तं प्राप्य चादित्यो निवर्तेत न पाण्डवः ।
निवर्तन्ते न जित्वारिं नित्यजल्पविचक्षणाः ॥ ४-५७-६१ (३०७३७)
तान्सर्वान्समरे शूरान्पौरुषे पर्यवस्थितान् ।
दिव्यैरस्त्रैरमोघात्मा सर्वानाच्र्छेद्धनुर्धरान् ॥ ४-५७-६२ (३०७३८)
स तु द्रोणं त्रिसप्तत्या नाराचानां समार्पयत् ।
अशीत्या शकुनिं चैव द्रौणिमप्याशु सप्तभिः ॥ ४-५७-६३ (३०७३९)
दुःसहं दशभिर्बाणैरर्जुनः समविध्यत ।
दुश्यासनं द्वादशभिः कृपं शारद्वतं त्रिभिः ।
भीष्मं शान्तनवं षष्ट्या प्रत्यविध्यत्स्तनान्तरे ॥ ४-५७-६४ (३०७४०)
स कर्णं कर्णिनाऽविध्यत्पीतेन निशितेन च ।
वासविर्द्विषतां मध्ये विव्याध परमेषुणा ॥ ४-५७-६५ (३०७४१)
स कर्णं सतनुत्राणं निर्भिद्य निशितः शरः ।
अगच्छद्दानयन्भूमिं चोदितो दृढधन्वना ॥ ४-५७-६६ (३०७४२)
ततोऽस्य वाहान्व्यहनच्चतुर्भिश्चतुरः क्षुरैः ।
सारथेश्च शिरः कायादपाहरदरिन्दमः ।
अर्धचन्द्रेण चिच्छेद चापं तस्य करे स्थितम् ॥ ४-५७-६७ (३०७४३)
तस्मिन्विद्धे महाभागे कर्णे सर्वास्त्रपारगे ।
हताश्वसूते विरथे ततोऽनीकमभज्यत ॥ ॥ ४-५७-६८ (३०७४४)

इति श्रीमन्महाभारते विराटपर्वणि गोग्रहणपर्वणि
सप्तपञ्चाशोऽध्यायः ॥ ५७ ॥

---

विरतपर्व-अध्यय०५८

॥ श्रीः ॥
४.५८. अध्यायः ५८

Mahabharata - Virata Parva - Chapter Topics
अर्जुनेन रणे विकर्णादिपराभवनपूर्वकं कर्णानुजहननम् ॥ १ ॥
अर्जुनपराजितेन कर्णेन रणाङ्कणादपयानम् ॥ २ ॥

Mahabharata - Virata Parva - Chapter Text

४-५८-० (३०७४५)
वैशंपायन उवाच। ४-५८-०क्ष् (३२३१)
तत्प्रभग्नं बलं सर्वं विपुलौघस्वनं तथा ।
भीष्ममासाद्य संतस्थौ वेलामिव महोदधिः ॥ ४-५८-१ (३०७४६)
तानि सर्वाणि गाङ्गेयः समाश्वास्य परंतपः ।
ततो व्यूह्य महाबाहुः समरेष्वपराजितः ॥ ४-५८-२ (३०७४७)
रथनागाश्वकलिकं युयुजे युद्धकोविदः ।
अभेद्यं परसैन्यानां शूरैरपि समीक्षितम् ॥ ४-५८-३ (३०७४८)
आचार्यदुर्योधनसूतपुत्रैः कृपेण भीष्मेण च पालितानि ।
अवध्यकल्पानि दुरासदानि रथाश्वमातङ्गसमाकुलानि च ॥ ४-५८-४ (३०७४९)
तेषामनीकानि किरीटमाली व्यूढानि दृष्ट्वा विपुलध्वजानि ।
गाण्डीवधन्वा द्विषतां निहन्ता वैराटिमामन्त्र्य ततोऽभ्युवाच
॥ ४-५८-५ (३०७५०)
सुसंगृहीतैरथ रश्मिभिस्त्वं हयान्नियम्य प्रसमीक्ष्य यत्तः ।
संप्रेषयाशु प्रतिवीरमेनं वैकर्तनं योधयितुं वृणोमि ॥ ४-५८-६
(३०७५१)
यां हस्तिकक्ष्यां बहुधा विचित्रां स्तम्भे रथे पश्यसि दर्शनीयाम् ।
विवर्तमानां ज्वलनप्रकाशां वैकर्तनस्यैतदनीकमग्र्यम् ॥ ४-५८-७ (३०७५२)
एतेन शीघ्रं प्रतिपादयेमान् श्वेतान्हयान्काञ्चनजालकक्ष्यान् ।
सर्वं जवं तत्र विदर्शयिष्ये ह्यासादयैतद्रथवीरवृन्दम्
॥ ४-५८-८ (३०७५३)
गजो गजनेव हि योद्धुकामो मया सदा काङ्क्षति सूतपुत्रः ।
तमेव मां प्रापय सूतपुत्रं दुर्योधनोपाश्रयजातदर्पम् ।
तं पातयिष्यामि रथस्य मध्ये सहस्रनेत्रोऽशनिनेव वृत्रम् ॥
४-५८-९ (३०७५४)
वैशंपायन उवाच। ४-५८-१०क्ष् (३२३२)
स तैर्हयैर्जातजवैर्बृहद्भिः पुत्रो विराटस्य हिरण्यकक्ष्यैः ।

विध्वंसयंस्तद्रथिनामनीकं ततोऽवहत्पाण्डवमाजिमध्ये ॥ ४-५८-१० (३०७५५)
तमापतन्तं परमेण तेजसा समीक्ष्य वैकर्तनमभ्यरक्षन् ।
अभ्यद्रवंस्ते रथवीरवृन्दा व्याघ्रेण चाक्रान्तमिवर्षभं रणे
॥ ४-५८-११ (३०७५६)
चित्राङ्गदश्चित्ररथश्च वीरः संग्रामजिद्दुःसहचित्रसेनौ ।
विविंशतिर्दुर्मुखदुर्जयौ च विकर्णदुःशासनसौबलाश्च ।
शोणो निषेधश्च तमन्वयुस्ते वैकर्तनं शीघ्रतरं युवानः ॥
४-५८-१२ (३०७५७)
पुत्रा ययुस्ते सहसोदराश्च वैकर्तनं पार्थगतं समीक्ष्य ।
प्रगृह्य चापानि महाबला रणे धनंजयं पर्यकिरञ्शरार्चिभिः
॥ ४-५८-१३ (३०७५८)
तेषां धनुर्ज्याकृतनैकतन्त्रीं प्रासोपवीणां शरसङ्घकोणाम् ।
कराग्रयन्त्रां स्थिरचापदण्डां वीणामुपावादयदाशु पार्थः ॥ ४-५८-१४
(३०७५९)
तस्मिंस्तु युद्धे तुमुले प्रवृत्ते पार्थं विकर्णोऽतिरथं रथेन ।
विपाठवर्षेण कुरुप्रवीरो भीमेन भीमानुजमाससाद ॥ ४-५८-१५ (३०७६०)
ततो विकर्णस्य धनुर्विकृत्य जाम्बुनदेनोपहितं दृढज्यम् ।
न्यपातयत्तद्ध्वजमस्य विद्ध्वा छिन्नध्वजः सोऽप्यपयाञ्जवेन
॥ ४-५८-१६ (३०७६१)
तं शात्रवाणां गणवाधितारं कर्माणि कुर्वाणममानुपाणि ।
शत्रुंतपो वैरममृष्यमाणः समार्पयत्कूर्मनखेन पार्थम्
॥ ४-५८-१७ (३०७६२)
स तेन राज्ञाऽतिरथेन विद्धो विगाहमानो ध्वजिनीं पेरपाम् ।
शत्रुंतपं पञ्चभिराशु विद्ध्वा ततोऽस्य सूतं दशभिर्जघान
॥ ४-५८-१८ (३०७६३)
ततः स विद्धो भरतर्षभेण बाणेन कायावरणातिगेन ।
गतासुराजौ निपपात राजन्नगो नगाग्रादिव वातरुग्णः ॥ ४-५८-१९ (३०७६४)
रथर्षभास्ते तु रथर्षभेण वीरा रणे वीरतरेण भग्नाः ।
चकम्पिरे वातवशेन काले प्रकम्पितानीव महावनानि ॥ ४-५८-२० (३०७६५)
हताश्च पार्थेन नरप्रवीरा भूमौ युवानः सुष्नुपुः सुवेषाः ।
वसुप्रदा वासवतुल्यवीर्याः पराजिता वासवजेन सङ्ख्ये ।
सुवर्णकार्ष्णायसवर्मनद्धा नागा यथा हैमवते प्रवृद्धाः ॥
४-५८-२१ (३०७६६)
तथा स शत्रून्समरे विनिघ्नन् गाण्डीवधन्वा पुरुषप्रवीरः ।
चचार सङ्ख्ये विदिशो दिशश्च दहन्निवाग्निर्वनमातपान्ते
॥ ४-५८-२२ (३०७६७)

सुजीर्णपर्णानि यथा वसन्ते विशातयित्वा तु रजो नुदन्खे ।
तथा सपत्नान्विकिरन्किरीटी चचार सङ्ख्येऽतिरथो रथेन
॥ ४-५८-२३ (३०७६८)
शोणाश्ववाहस्य हयान्निहत्य वैकर्तनभ्रातुरदीनसत्वः ।
एकेन संग्रामजितः शरेण शिरो जहाराथ किरीटमाली ॥ ४-५८-२४ (३०७६९)
तस्मिन्हते भ्रातरि सूतपुत्रो वैकर्तनो वीर्यमदप्रतापी ।
प्रगृह्य दन्ताविव नागराजो महाबलः सिंहमिवाजगाम ॥ ४-५८-२५ (३०७७०)
स पाण्डवं द्वादशभिः पृषत्कैर्वैकर्तनः पार्थमुपाजघान् ।
विव्याध गात्रेषु हयांश्च सर्वान्विराटपुत्रं च शरैर्विजघ्ने
॥ ४-५८-२६ (३०७७१)
तमापतन्तं समरे किरीटी वैकर्तनं सर्वसमृद्धतेजाः ।
प्रच्छादयामास महाधनुष्मान्न्यषेधयच्छत्रुगणांश्च वीरः
॥ ४-५८-२७ (३०७७२)
निहत्य कर्णस्य ततः किरीटी पुरश्चरांश्चापि च पृष्ठगोपान् ।
समीपमभ्यागमदप्रमेयो वितत्य पक्षौ गरुडो यथोरगम् ॥ ४-५८-२८ (३०७७३)
तावुत्तमौ सर्वधनुर्धराणां महाबलौ सर्वसपत्नसाहौ ।
कर्णं च पार्थं च निशम्य युद्धे दिदृक्षमाणाः कुरवोऽवतस्थुः
॥ ४-५८-२९ (३०७७४)
तं पाण्डवः स्पष्टमुदीर्णकोपं कृतागसं कर्णमुदीक्ष्य कोपात् ।
क्षणेन साश्वं सरथं ससूतमन्तर्दधे मेघ इवातिवृष्ट्या
॥ ४-५८-३० (३०७७५)
ततः सयुग्याः सरथाः सनागा योधा विनेदुर्भरतर्षभाणाम् ।
अन्तर्हितं भीष्ममुखाः समीक्ष्य किरीटिना कर्णरथं पृषत्कैः
॥ ४-५८-३१ (३०७७६)
स चापि तानर्जुनबाहुमुक्ताञ्शराञ्शरौघैः प्रतिहत्य तूर्णम् ।
बभौ महात्मा सधनुः सबाणः सविष्फुलिङ्गोऽग्निरिवाथ कर्णः
॥ ४-५८-३२ (३०७७७)
ततस्तु जज्ञे करतालघोषः सशङ्खभेरीपणवाकुलस्तु ।
प्रक्ष्वेलितास्फोटितसिंहनादैर्वैकर्तनं पूजयतां कुरूणाम् ॥ ४-५८-३३
(३०७७८)
आधूतलाङ्गूलमहापताकं रथोत्तमं श्रेष्ठतमं कुरूणाम् ।
ततः सगाण्डीवकृतप्रणादं किरीटिनं प्रेक्ष्य ननाद कर्णः
॥ ४-५८-३४ (३०७७९)
पार्थोपि वैकर्तनमर्दयित्वा साश्वं सकेतुं सरथं ससूतम् ।
ननाद हर्षात्सहसा किरीटी पितामहं द्रोणकृपौ च दृष्ट्वा
॥ ४-५८-३५ (३०७८०)

सिषेच पार्थं बहुभिः शरौघैर्वैकर्तनः संयति तीक्ष्णवेगैः ।
वैकर्तनश्चापि किरीटमाली प्रच्छादयामास शितैः शरौघैः
॥ ४-५८-३६ (३०७८१)
तयोरमोघन्सृजतोः शरौघानस्त्रज्ञयोरास महान्विमर्दः ।
राहुप्रमुक्ताविव चन्द्रसूर्यौ क्षणान्तरेणानुददर्श लोकः ॥ ४-५८-३७
(३०७८२)
हतास्तु पार्थेन रथप्रवीरा भूमौ युवानः सुपुपुः सुकेशाः ।
सुवर्णलोहायसवर्मगात्रा वृक्षा यथा हैमवते निकृत्ताः ॥ ४-५८-३८
(३०७८३)
तथा स शत्रून्समरे विनिघ्नन्गाण्डीवधन्वा व्यधमत्सपत्नान् ।
चचार सङ्ख्ये विदिशो दिशश्च दहन्निवाग्निर्वनमातपान्ते
॥ ४-५८-३९ (३०७८४)
सुशीर्णपर्णानि यथा वसन्ते विधूनयन्वायुरिवाल्पसारान् ।
तथा सपत्नान्विधमन्किरीटी चचार सङ्ख्येऽतिरथो रथेन
॥ ४-५८-४० (३०७८५)
शत्रूनिवेन्द्रः समरे किरीटी विद्रावयंस्तद्रथवीरबृन्दम् ।
प्राच्छादयच्चरुकिरीटमाली वरेषुभिः शत्रुगणाननेकान् ॥ ४-५८-४१ (३०७८६)
कर्णं तदोवाच किरीटमाली शूरः कुरूणां प्रवरोऽभिगर्जन् ॥
४-५८-४२ (३०७८७)
कर्ण यस्त्वं सभामध्ये बह्वबद्धं प्रभाषसे ।
न मे युधि समोस्तीति तदिदं प्रत्युपस्थितम् ॥ ४-५८-४३ (३०७८८)
सभायां पौरुषं प्रोच्य धर्ममुत्सृज्य केवलम् ।
कर्तुमिच्छसि यत्कर्म तन्मन्ये दुष्करं त्वया। ४-५८-४४ (३०७८९)
यत्त्वया कथितं पूर्वं नास्ति मत्सम इत्यपि ।
तत्सत्यं कुरु राधेय कुरुमध्ये मया सह ॥ ४-५८-४५ (३०७९०)
सभायां यस्तु पाञ्चालीं क्लिश्यमानां तदा त्वया ।
दृष्टवानस्मि तस्याद्य फलमश्नुहि केवलम् ॥ ४-५८-४६ (३०७९१)
धर्मपाशनिबद्धेन यन्मया मर्षितं तव ।
तस्य पापस्य राधेय फलं प्राप्नुहि दुर्मते ॥ ४-५८-४७ (३०७९२)
एहि कर्ण मया सार्धमिहाद्य कुरु वैशसम् ।
प्रेक्षका कुरवः सन्तु सर्वे ते सहसैनिकाः ॥ ४-५८-४८ (३०७९३)
इदानीमेव तावत्त्वमपयातो रणान्मम ।
कस्माज्जीवसि राधेय निहतस्त्वनुजस्तव ॥ ४-५८-४९ (३०७९४)
यो भ्रातरं पातयित्वा कस्त्यक्त्वा च रणाजिरम् ।
त्वदन्यः पुरुषः सत्सु ब्रूयादेवं व्यवस्थितः ॥ ४-५८-५० (३०७९५)
कर्ण उवाच। ४-५८-५१क्ष् (३२३३)

ब्रवीषि वाचा यत्पार्थ कर्मणा तत्समाचर ।
विशेषितो हि त्वं वाचा कर्मणाप्रतिमं भुवि ॥ ४-५८-५१ (३०७९६)
यत्त्वया मर्षितं पूर्वं तदशक्तेन मर्षितम् ।
इति गृह्णीम ते पार्थ तमदृष्ट्वा पराक्रमम् ॥ ४-५८-५२ (३०७९७)
धर्मपाशनिबद्धेन यत्त्वया मर्षितं पुरा ।
तथैव बद्धमात्मानमबद्ध इति मन्यसे ॥ ४-५८-५३ (३०७९८)
न हि तावद्वने वासो यथोक्तं चरितस्त्वया ।
क्लिष्टस्त्वमर्थलोभात्तु समयं छेत्तुमिच्छसि ॥ ४-५८-५४ (३०७९९)
यदि चेन्द्रः स्वयं पार्थ तव युद्ध्येत कारणात् ।
तथाऽपिन व्यथा काचिन्मम स्याद्विक्रमिष्यतः ॥ ४-५८-५५ (३०८००)
अयं कौन्तेयकामस्ते नचिरात्समुपस्थितः ।
योत्स्यसे हि मया सार्धमत्र पश्यामि ते बलम् ॥ ४-५८-५६ (३०८०१)
वैशंपायन उवाच। ४-५८-५७क्ष् (३२३४)
इति कर्णो ब्रुवन्नेव बीभत्सुमपराजितम् ।
अभ्ययाद्विसृजन्बाणान्कायावरणभेदिनः ॥ ४-५८-५७ (३०८०२)
प्रतिजग्राह तान्पार्थः प्रीयमाणो महारथः ॥ ४-५८-५८ (३०८०३)
शरवर्षेण महता पर्जन्य इव वृष्टिमान् ।
अभीयाय हि बीभत्सुर्गाण्डीवं विक्षिपन्धनुः ॥ ४-५८-५९ (३०८०४)
जिघांसुः समरे कर्णं विससर्ज शरान्बहून् ।
तान्कर्णः प्रतिजग्राह वायुवेगमिवाचलः ॥ ४-५८-६० (३०८०५)
तयोर्दैवासुरसमः सन्निपातोऽभवन्महान् ।
किरतोः शरजालानि कृत्स्नं व्योम निरन्तरं ॥ ४-५८-६१ (३०८०६)
उत्पेतुर्मेघजालानि घोररूपाणि सर्वशः ।
ववर्ष च रजो भौमं कर्णपार्थसमागमे ॥ ४-५८-६२ (३०८०७)
न स्म सूर्यः प्रतपति न च वाति समीरणः ।
शरप्रच्छादितं व्योम छायाभूतमिवाभवत् ॥ ४-५८-६३ (३०८०८)
गाण्डीवस्य च निर्घोषः कर्णस्य धनुषस्तथा ।
दह्यतामिव वेणूनामासीत्परमदारुणः ॥ ४-५८-६४ (३०८०९)
अर्जुनस्तु हयान्नागान्रथांश्च विनिपातयन् ।
क्षोभयामास तत्सैन्यं कर्णं विव्याध चासकृत् ॥ ४-५८-६५ (३०८१०)
ततः पार्थो महाबाहुः कर्णस्य धनुरच्छिनत् ।
छिन्नधन्वा ततः कर्णः शक्तिं चिक्षेप वेगवान्
तां शक्तिं समरे पार्थश्चिच्छेद निशितैः शरैः ॥ ४-५८-६६ (३०८११)
ततो निपेतुर्बहुशो राधेयस्य पदानुगाः ।
तांश्च गाण्डीवनिर्मुक्तैः प्राहिणोद्यमसादनम् ॥ ४-५८-६७ (३०८१२)
अशेरतावृत्य महीं समग्रां पार्थेषुमार्गे निहता द्विपेन्द्राः ।

हिरण्यकक्ष्यां शरजालचित्रा यथा नगाः पावकजालनद्धाः ॥ ४-५८-६८
(३०८१३)
तं शत्रुसेनाङ्गनिबर्हणानि कर्माणि कुर्वाणममानुषाणि ।
वैकर्तनः पूर्वममृष्यमाणः समार्पयल्लक्ष्यमिवाशु पार्थम्
॥ ४-५८-६९ (३०८१४)
ततश्चतुर्भिस्तुरगान्विकृष्य विव्याध कर्णोऽथ धनंजयस्य ।
षड्भिश्च सूतं दशभिर्हयांश्च षष्ट्या च पार्थं त्रिभिरस्य
केतुम् ॥ ४-५८-७० (३०८१५)
सविष्फुलिङ्गोज्ज्वलभीमघोषः कोपेन्धनः केतुशिखः शरार्चिः ।
कर्णाग्निरस्त्रानिलभीमवातो बभौ दिधक्षन्निव पार्थकक्षम्
॥ ४-५८-७१ (३०८१६)
स्वनेमिशङ्खस्वनभीमघोषश्चलत्पताकोज्ज्वलभीमविद्युत् ।
पार्थाम्बुदः शस्त्रशराम्बुधारः कर्णानलं संशमयांचकार
॥ ४-५८-७२ (३०८१७)
तेनातिविद्धः समरे किरीटी प्रबोधितः सिंह इव प्रसुप्तः ।
गाण्डीवधन्वा प्रवरः कुरूणां प्रतत्वरे कर्णवधाय जिष्णुः
॥ ४-५८-७३ (३०८१८)
स ब्राह्ममस्त्रं समरे किरीटी प्रादुश्चकाराद्भुतवीर्यकर्मा ।
सन्तापयन्कर्णरथं शरौघैर्लोकानिमान्त्सूर्य इवांशुमाली ॥ ४-५८-७४
(३०८१९)
स हस्तिनेवाभिहतो गजेन्द्रः प्रगृह्य भल्लान्निशितान्निषङ्गात् ।
आकर्णपूर्णे तु धनुर्विकृष्य विव्याध बाणैरथ सूतपुत्रम्
॥ ४-५८-७५ (३०८२०)
अथास्य बाहू सशिरो ललाटं ग्रीवामुरः स्कन्धभुजान्तरं च ।
कर्णस्य पार्थो युधि निर्बिभेद वज्रैरिवाद्रिं भगवान्महेन्द्रः
॥ ४-५८-७६ (३०८२१)
स पार्थमुक्तानविषह्य बाणान् गजो गजेनेव जितस्तरस्वी ।
विहाय संग्रामशिरोपयातो वैकर्तनः पार्थशराभितप्तः ॥ ७७
॥ ॥ ४-५८-७७ (३०८२२)

इति श्रीमन्महाभारते विराटपर्वणि गोग्रहणपर्वणि
अष्टपञ्चाशोऽध्यायः ॥ ५८ ॥

Mahabharata - Virata Parva - Chapter Footnotes

४-५८-२३ वायुर्यथा खे आकाशे रजो नुदन् चरति तथेत्यध्याहारेण योजना ॥
२३ ॥

४-५८-३० कर्णमुदीक्ष्य हर्षादिति धो पाठः ॥
३० ॥

---

विरतपर्व-अध्यय०५९
॥ श्रीः ॥
४.५९. अध्यायः ५९

Mahabharata - Virata Parva - Chapter Topics
द्रोणार्जुनयोर्युद्धवर्णनम् ॥ १ ॥
अर्जुनबाणाहतिविषपणे द्रोणे अश्वत्थाम्ना
तद्रक्षणायार्जुनप्रत्यभियानम् ॥ २ ॥
अत्रान्तरेऽर्जुनदत्तावकाशेन द्रोणेन रणादपयानम् ॥ ३ ॥

Mahabharata - Virata Parva - Chapter Text

४-५९-० (३०८२३)
वैशंपायन उवाच। ४-५९-०क्ष् (३२३५)
जितं वैकर्तनं दृष्ट्वा पार्थो वैराटिमब्रवीत् ।
स्थिरो भव त्वं संग्रामे जयोऽस्माकं नृपात्मजः ॥ ४-५९-१ (३०८२४)
यावच्छङ्खमुपाध्यास्ये द्विषतां रोमहर्षणम् ।
अविक्लबमसंभ्रान्तमव्यक्तहृदयेक्षणम्। ४-५९-२ (३०८२५)
याहि शीघ्रं यतो द्रोणो ममाचार्यो रणे स्थितः ॥
तथा संक्रीडमानस्य अर्जुनस्य रणाजिरे। ४-५९-३ (३०८२६)
बलं सत्वं च तेजश्च लाघवं च व्यवर्धत ॥
तच्चाद्भुतमभिप्रेक्ष्य भयमुत्तरमाविशत् ॥ ४-५९-४ (३०८२७)
उत्तर उवाच। ४-५९-५क्ष् (३२३६)
अस्त्राणां तव दिव्यानां शरौघान्क्षिपतः शितान् ।
मनो मे मुह्यतेऽत्यर्थं तव दृष्ट्वा पराक्रमम् ॥ ४-५९-५ (३०८२८)
द्वैधीभूतं मनो मह्यं भयाद्भरतसत्तम ।
अदृष्टपूर्वं पश्यामि तव गाण्डीवनिस्वनम् ॥ ४-५९-६ (३०८२९)
तव बाहुबलं चैव धनुः कर्षयतो बहु ।
तव तेजो दुराधर्षं यथा विष्णोस्त्रिविक्रमे ॥ ४-५९-७ (३०८३०)
वैशंपायन उवाच। ४-५९-८क्ष् (३२३७)
तमुत्तरश्चित्रमवेक्ष्य गाण्डिवं शरांश्च मुक्तान्सहसा किरीटिना ।
भीतोऽब्रवीदर्जुनमाजिमध्ये नाहं तवाश्वान्विषहे नियन्तुम् ॥ ४-५९-८
(३०८३१)
तमब्रवीत्किंचिदिव प्रहस्य गाण्डीवधन्वा द्विषतां निहन्ता ।

मया सहायेन कुतोऽस्ति ते भयं प्रेह्युत्तराश्वाननुमन्त्र्य वाहय
॥ ४-५९-९ (३०८३२)
वैशंपायन उवाच। ४-५९-१०क्ष् (३२३८)
आश्वासितस्तेन धनंजयेन वैराटिरश्वान्प्रतुतोदय शीघ्रम् ।
धनंजयश्चापि विकृष्य चापं विष्फारयामास महेन्द्रकल्पः
॥ ४-५९-१० (३०८३३)
उत्तरं चैव बीभत्सुरब्रवीत्पुनरर्जुनः ।
न भेतव्यं मया सार्धं तात संग्राममूर्धनि ॥ ४-५९-११ (३०८३४)
राजपुत्रोऽसि ते भद्रं कुले महति मात्स्यके ।
जातस्त्वं क्षत्रियकुले न विषीदितुमर्हसि ॥ ४-५९-१२ (३०८३५)
धृतिं कृत्वा सुविपुलां राजपुत्र रथं मम ।
युध्यमानस्य संग्रामे राजभिः सह वाहय ॥ ४-५९-१३ (३०८३६)
उक्त्वा तमेवं बीभत्सुरर्जुनः पुनरब्रवीत् ।
पाण्डवो रथिनां श्रेष्ठो भारद्वाजं समीक्ष्य तु ॥ ४-५९-१४ (३०८३७)
यत्रैषा काञ्चनी वेदिर्दृश्यतेऽग्निशिखोपमा ।
उच्छ्रिता काञ्चने दण्डे पताकाभिरलंकृता ॥ ४-५९-१५ (३०८३८)
तत्र मां वह भद्रं ते द्रोणं योत्स्यामि सत्तमम् ।
भारद्वाजेन योत्स्येऽहमाचार्येण महात्मना ॥ ४-५९-१६ (३०८३९)
अमी शोणाः प्रकाशन्ते तुरगाः साधुवाहिनः ।
मुक्ता रथवरे तस्य सर्वशिक्षाविशारदाः ॥ ४-५९-१७ (३०८४०)
यतो रथवरे शूरः सर्वशस्त्रभृतांवरः ।
स्निग्धवैडूर्यसंकाशस्ताम्राक्षः प्रियदर्शनः ॥ ४-५९-१८ (३०८४१)
आदित्य इव तेजस्वी बलवीर्यसमन्वितः ।
सर्वलोकधनुःश्रेष्ठः सर्वलोकेषु पूजितः ।
अङ्गिरोशनसोस्तुल्यो नये बुद्धिमतांवरः ॥ ४-५९-१९ (३०८४२)
चत्वारो निखिला वेदाः साङ्गोपाङ्गाः सलक्षणाः ।
धनुर्वेदश्च कार्त्स्न्येन ब्राह्मं चास्त्रं प्रतिष्ठितम् ॥ ४-५९-२० (३०८४३)
पुराणमितिहासश्च अर्थविद्या च मानवम् ।
भारद्वाजे समस्तानि सर्वाण्येतानि सांप्रतम् ॥ ४-५९-२१ (३०८४४)
क्षमा दमश्च सत्यं च तेजो मार्दवमार्जवम् ।
प्रतिष्ठिता गुणा यस्मिन्बहवो द्विजसत्तमे ॥ ४-५९-२२ (३०८४५)
यस्याहमिष्टः सततं मम चेष्टः सदा च सः ।
क्षत्रधर्मं पुरस्कृत्य तेन योत्स्ये हि सांप्रतम् ॥ ४-५९-२३ (३०८४६)
आचार्यं प्रापयेदानीं ममोत्तर महारथम् ।
अपरं पश्य संग्राममद्भुतं मम तस्य च ॥ ४-५९-२४ (३०८४७)
उत्तरस्त्वेवमुक्तोऽश्वांश्चोदयामास तं प्रति ।

आजगामार्जुनरथो भारद्वाजरथं प्रति ॥ ४-५९-२५ (३०८४८)
तमापतन्तं वेगेन पाण्डवं सरथं रणे ।
द्रोणोप्यभ्यद्रवत्पार्थं मतो मत्तमिव द्विपम् ॥ ४-५९-२६ (३०८४९)
स तु रुक्मरथं दृष्ट्वा कौन्तेयः समभिद्रुतम् ।
आचार्यं तं महाबाहुः प्राञ्जलिर्वाक्यमब्रवीत् ॥ ४-५९-२७ (३०८५०)
उषिताः स्मो वने वासं प्रतिकर्मचिकीर्षवः ।
कोपं नार्हसि नः कर्तुं सदा समरदुर्जय ॥ ४-५९-२८ (३०८५१)
अहं तु ताडितः पूर्वं प्रहरेयं तवानघ ।
इति मे वर्तते बुद्धिस्तद्भवान्क्षन्तुमर्हति ॥ ४-५९-२९ (३०८५२)
ततः प्राध्मापयच्छङ्खं भेरीपटहवादितम् ।
व्यक्षोभत बलं सर्वमुद्धूतमिव सागरम् ॥ ४-५९-३० (३०८५३)
वैशंपायन उवाच। ४-५९-३१क्ष् (३२३९)
ततस्तु प्राहिणोद्द्रोणः शरानथ स विंशतिम् ।
अप्राप्तानेव तान्पार्थश्चिच्छेद कृतहस्तवान् ॥ ४-५९-३१ (३०८५४)
ततः शरसहस्रेण रथं पार्थस्य वीर्यवान् ।
अवाकिरत्ततो द्रोणः शीघ्रहस्तं प्रदर्शयन् ॥ ४-५९-३२ (३०८५५)
एवं प्रववृते युद्धं भारज्वाजकिरीटिनोः ॥ ४-५९-३३ (३०८५६)
अश्वाञ्शोणान्महावेगान्हंसवर्णैस्तु वाजिभिः ।
मिश्रितान्समरे दृष्ट्वा व्यस्मयन्त पृथग्जनाः ॥ ४-५९-३४ (३०८५७)
रथं रथेन पार्थस्य समाहत्य परंतपः ।
हर्षयुक्तस्तदाऽऽचार्यः प्रत्यगृह्णात्स पाण्डवम् ॥ ४-५९-३५ (३०८५८)
समाश्लिष्टाविवान्योन्यं द्रोणपाण्डवयोर्ध्वजौ ।
दृष्ट्वा प्राकम्पत मुहुर्भारतानां महाचमूः ॥ ४-५९-३६ (३०८५९)
तत्तु युद्धं प्रववृते ह्याचार्यस्यार्जुनस्य च ।
विमुञ्चतोः शरानुग्रान्विशिखान्दीप्ततेजसः ॥ ४-५९-३७ (३०८६०)
तौ वीरौ वीर्यसंपन्नौ दृष्ट्वा समरमूर्धनि ।
आचार्यशिष्यौ रथिनौ कृतवीर्यौ तरस्विनौ ॥ ४-५९-३८ (३०८६१)
उभौ विश्रुतकर्माणावुभौ श्रमगतौ जये ।
उभावतिरथौ लोके ह्युभौ परपुंरजयौ ।
क्षिपन्तौ शरजालानि क्षत्रियान्मोह आविशत् ॥ ४-५९-३९ (३०८६२)
व्यस्मयन्त नराः सर्वे द्रोणार्जुनसमागमे ।
नराणां ब्रुवतां वाक्यं श्रूयते स महास्वनः ॥ ४-५९-४० (३०८६३)
द्रोणं हि समरे कोऽन्यो योद्धुमर्हत्यथार्जुनात् ।
रौद्रः क्षत्रियधर्मोऽयं गुरं वै यदयोधयत् ॥ ४-५९-४१ (३०८६४)
इत्यब्रुवञ्जनास्तत्र संग्रामशिरसि स्थिताः ।
तौ समीक्ष्य तु संरब्धौ सन्निकृष्टौ महारथौ ॥ ४-५९-४२ (३०८६५)

छाद्येतां शरौघैस्तावन्योन्यमुपराजितौ ।
संयुगे संचकाशेतां कालसूर्याविवोदितौ ॥ ४-५९-४३ (३०८६६)
विष्फार्य च महाचापं हेमपृष्ठं दुरासदम् ।
संरब्धस्तु तदा द्रोणः प्रत्ययुध्यत फल्गुनम् ॥ ४-५९-४४ (३०८६७)
स सायकमयैर्जालैरर्जुनस्य रथं प्रति ।
भानुमद्भिः शिलाधौतैर्बाणैः प्राच्छादयद्दिशः ॥ ४-५९-४५ (३०८६८)
अर्जुनस्तु तदा द्रोणं महावेगैर्महारथः ।
विव्याध शतशो बाणैर्धाराभिरिव पर्वतम् ॥ ४-५९-४६ (३०८६९)
कालमेघ इवोष्णान्ते फल्गुनः समवाकिरत् ॥ ४-५९-४७ (३०८७०)
तस्य जाम्बूनदमयैश्चितरैश्चापच्युतैः शरैः ।
प्राच्छादयद्रथश्रेष्ठं भारद्वाजोऽर्जुनस्य वै ॥ ४-५९-४८ (३०८७१)
तथैव दिव्यं गाण्डीवं धनुरानम्य चार्जुनः ।
शत्रुघ्नं वेगवत्सृष्टं भारसाधनमुत्तमम् ॥ ४-५९-४९ (३०८७२)
शोभते स्म महाबाहुर्गाण्डीवं विक्षिपन्धनुः ।
शरांश्च विसृजंश्चित्रान्सुवर्णविकृतान्बहून् ॥ ४-५९-५० (३०८७३)
प्राच्छादयदमेयात्मा भारद्वाजरथं प्रति ।
द्रोणचापविनिर्मुक्तान्बाणान्बाणैरवारयत् ॥ ४-५९-५१ (३०८७४)
सरथोऽप्यचरत्पार्थः प्रेक्षणीयो महारथः ।
युगपद्दिक्षु सर्वासु सर्वतोऽस्त्राण्यवासृजम् ॥ ४-५९-५२ (३०८७५)
आददानं शरान्घोरान्संदधानं च पाण्डवम् ।
विसृजन्तं च कौन्तेयं न स्म पश्यन्ति लाघवाम् ॥ ४-५९-५३ (३०८७६)
एकच्छायमिवाकाशं बाणैश्चक्रे समन्ततः ।
नादृश्यत ततो द्रोणो नीहारेणेव पर्वतः ॥ ४-५९-५४ (३०८७७)
मरीचिविकचस्येव राजन्भानुमतो वपुः ।
आसीत्पार्थस्य सुमहद्वपुः शरशतार्चितम् ॥ ४-५९-५५ (३०८७८)
क्षिपतः शरजालानि कौन्तेयस्य महात्मनः ।
तान्विधूय शरान्घोरान्द्रोणोऽपि समितिंजयः ।
बभासे तिमिरं व्योम्नि विधूय सविता यथा ॥ ४-५९-५६ (३०८७९)
अग्निचक्रोपमं घोरं मण्डलीकृतमाहवे ।
विकृष्य सुमहच्चापं मेघस्तनितनिस्वनम् ।
असकृत्मुञ्चतो बाणान्ददृशुः कुरवो युधि ॥ ४-५९-५७ (३०८८०)
दिक्षु सर्वासु विपुलः शुश्रुवेऽथ जनैस्तदा ।
द्रोणस्यापि धनुर्घोषो विद्युत्स्तनितनिस्वनः ।
अभवद्विस्मयकरः सैन्यानां भरतर्षभ ॥ ४-५९-५८ (३०८८१)
तप्तजाम्बूनदमयैर्दीप्तैरग्निसमैः शरैः ।
प्राच्छादयदमेयात्मा दिशः सूर्यस्य च प्रभाम् ॥ ४-५९-५९ (३०८८२)

ततः काञ्चनपङ्खानां शराणां नतपर्वणाम् ।
वियद्गतानां चरतां दृश्यन्ते बहवो व्रजाः ॥ ४-५९-६० (३०८८३)
शरासनात्तु द्रोणस्य प्रभवन्ति स्म सायकाः ।
एको दीर्घ इवाभान्तः प्रदृश्यन्ते महाशराः ।
आकाशे समदृश्यन्त हंसानामिव पङ्क्तयः ॥ ४-५९-६१ (३०८८४)
एवं सुवर्णविकृतान्विमुञ्चन्तौ शरान्बहून् ।
आकाशं संवृतं वीरावुल्काभिरिव चक्रतुः ॥ ४-५९-६२ (३०८८५)
तयोः शराश्च विबभुः कङ्कबर्हिणवाससः ।
पङ्क्त्यः शरदि मत्तानां सारसानामिवाम्बरे ॥ ४-५९-६३ (३०८८६)
तत्तु युद्धं महाघोरं तयोः संरब्धयोरभूत् ।
अत्यद्भुतमचिन्त्यं च वृत्रवासवयोरिव ॥ ४-५९-६४ (३०८८७)
महागजाविवासाद्य विषाणाग्रैः परस्परम् ।
शरैः पूर्णायतोत्सृष्टैरन्योन्यमभिजघ्नतुः ॥ ४-५९-६५ (३०८८८)
अथ त्वाचार्यमुख्येन शरान्सृष्टाञ्शिलाशितान् ।
अवारयच्छितैर्बाणैरर्जुनो जयतांवरः ॥ ४-५९-६६ (३०८८९)
दर्शयन्नैन्द्रमात्मानमुग्रमुग्रपराक्रमः ।
इषुभिस्तूर्णमाकाशं बहुभिश्च समावृणोत्। ४-५९-६७ (३०८९०)
जिघांसन्तं नरव्याघ्रमर्जुनं भीमदर्शनम् ।
विव्याध निशितैर्द्रोणः शरैः सन्नतपर्वभिः ॥ ४-५९-६८ (३०८९१)
हृष्टः समभवद्द्रोणो रणशौण्डः प्रतापवान् ।
अर्जुनेन समं क्रीडञ्शरैः सन्नतपर्वभिः ॥ ४-५९-६९ (३०८९२)
तौ व्यदारयतां शूरौ सन्नद्धौ रणशोभिनौ ।
उदीरयन्तौ दिव्यानि ब्राह्माद्यस्त्राणि भागशः ॥ ४-५९-७० (३०८९३)
पार्थस्तु समरे शूरो दर्शयन्वीर्यमात्मनः ।
स मह्यस्त्रैर्महात्मानं द्रोणं प्राच्छादयच्छरैः ॥ ४-५९-७१ (३०८९४)
अस्त्रैरस्त्राणि संवार्य पार्थो द्रोणमवारयत् ॥ ४-५९-७२ (३०८९५)
तयोरासीत्संप्रहारः क्रुद्धयोर्नरसिंहयोः ।
अमृष्यमाणयोः सङ्ख्ये बलिवासवयोरिव ॥ ४-५९-७३ (३०८९६)
दर्शयेतां महास्राणि भारद्वाजार्जुनौ रणे ॥ ४-५९-७४ (३०८९७)
ऐन्द्रं वायव्यमाग्नेयमस्त्रमस्त्रेण पाण्डवः ।
मुक्तंमुक्तं द्रोणचापाद्ग्रमते स्म पुनः पुनः ॥ ४-५९-७५ (३०८९८)
एवं शूरौ महेष्वासौ विसृजन्तौ शिलाशितान् ।
एकच्छायमकुर्वातां गगनं शरवृष्टिभिः ॥ ४-५९-७६ (३०८९९)
ततोऽर्जुनेन मुक्तानां पततां च शरीरिपु ।
पर्वतेष्विव वज्राणां शराणां श्रूयते स्वनः ॥ ४-५९-७७ (३०९००)
ततो नागा रथाश्वाश्च सादिनश्च विशांपते ।

शोणिताक्ताश्च दृश्यन्ते पुष्पिता इव किंशुकाः ॥ ४-५९-७८ (३०९०१)
बाहुभिश्च सकेयूरैर्निकृत्तैश्च महारथैः ।
सुवर्णाचित्रैः कवचैर्ध्वजैश्च विनिपातितैः ॥ ४-५९-७९ (३०९०२)
योधैश्च निहतैस्तत्र पार्थबाणाभिपीडितैः ।
बलमासीत्सुसंभ्रान्तं द्रोणार्जुनसमागमे ॥ ४-५९-८० (३०९०३)
विधून्वानौ तु तौ वीरौ धनुषी भारसाधने ।
प्राच्छादयेतामन्योन्यं दिधक्षन्तौ वरेषुभिः ॥ ४-५९-८१ (३०९०४)
अथान्तरिक्षे नादोऽभूद्द्रोणं तत्र प्रशंसताम् ।
दुष्करं कृतवान्द्रोणो यदर्जुनमयोधयत् ॥ ४-५९-८२ (३०९०५)
प्रमाथिनं महावीर्यं दृढमुष्टिं दुरासदम् ।
जेतारं सर्वदैत्यानां सर्वेषां च महारथम् ॥ ४-५९-८३ (३०९०६)
अविभ्रमं च शिक्षां च लाघवं दूरपातनम् ।
पार्थस्य समरे दृष्ट्वा द्रोणस्यासीच्च विस्मयः ॥ ४-५९-८४ (३०९०७)
तत्प्रवृत्तं चिरं घोरं तयोर्युद्धं महात्मनोः ।
अवर्तत महारौद्रं लोकसंक्षोभकरकम् ॥ ४-५९-८५ (३०९०८)
अथ गाण्डीवमुद्यम्य दिव्यं धनुरमर्षणः ।
विचकर्ष रणे पार्थो बाहुभ्यां भरतर्षभः ॥ ४-५९-८६ (३०९०९)
तस्य बाणमयं वर्षं शलभानामिवाभवत् ।
न च बाणान्तरे तस्य वायुः शक्नोति सर्पितुम् ॥ ४-५९-८७ (३०९१०)
अभीक्ष्णं संदधानस्य बाणानुत्सृजतस्तथा ।
नान्तरं ददृशे किंचित्पार्थस्यापततोपी च ॥ ४-५९-८८ (३०९११)
युद्धे तु कृतशीघ्रास्त्रे वर्तमाने सुदारुणे ।
शीघ्राच्छीघ्रतरं पार्थः शरानन्यानुदैरयत् ॥ ४-५९-८९ (३०९१२)
ततः शरसहस्राणि शराणां नतपर्वणाम् ।
युगपत्प्रापतंस्तत्र द्रोणस्य रथमन्तिकात् ॥ ४-५९-९० (३०९१३)
विकीर्यमाणे द्रोणे तु शरैर्गाण्डीवधन्वना ॥
हाहाकारो महानासीत्सैन्यानां भरतर्षभ ॥ ४-५९-९१ (३०९१४)
पाण्डवस्य तु शीघ्रास्त्रं मघवा समपूजयत् ।
गन्धर्वाप्सरसश्चैव ये च तत्र समागताः ॥ ४-५९-९२ (३०९१५)
द्रोणं युद्धार्णवे मग्नं दृष्ट्वा पुत्रः प्रतापवान् ।
ततो वृन्देन महता रथिनां रथियूथपः ।
आचार्यपुत्रस्तु शरैः पाण्डवं प्रत्यवारयत् ॥ ४-५९-९३ (३०९१६)
अश्वत्थामा तु तत्कर्म हृदयेन महात्मनः ।
पूजयामास पार्थस्य कोपं चास्य तदाऽकरोत् ॥ ४-५९-९४ (३०९१७)
स भन्युवशमापन्नः पार्थमभ्यद्रवद्रणे ।
किरञ्शरसहस्राणि पर्जन्य इव वृष्टिमान् ॥ ४-५९-९५ (३०९१८)

आवृत्य च महाबाहुर्यतो द्रोणस्ततोऽभवत् ।
अन्तरं प्रददौ पार्थो द्रोणस्य व्यपसर्पितुम् ॥ ४-५९-१६ (३०९१९)
स तु लब्धान्तरस्तूर्णमपायाज्जवनैर्हयैः ।
छिन्नवर्मध्वजरथो निकृत्तः परमेषुभिः ॥ ४-५९-१७ (३०९२०)
पराजिते तदा द्रोणे द्रोणपुत्रः समागतः ।
सदण्ड इव रक्ताक्षः कृतान्तः समरे स्थितः ॥ ॥ ४-५९-१८ (३०९२१)

इति श्रीमन्महाभारते विराटपर्वणि गोग्रहणपर्वणि
एकोनषष्टितमोऽध्यायः ॥ ५९ ॥

---

विरतपर्व-अध्यय०६०
॥ श्रीः ॥
४.६०. अध्यायः ६०

Mahabharata - Virata Parva - Chapter Topics
अर्जुनेन द्रोणिपराभवनम् ॥ १ ॥

Mahabharata - Virata Parva - Chapter Text

४-६०-० (३०९२२)
वैशंपायन उवाच। ४-६०-०क्ष् (३२४०)
तं पार्थः प्रतिजग्राह वायुवेगमिवाचलः ।
शरजालेन महता वर्षमाण इवाम्बुदः ॥ ४-६०-१ (३०९२३)
तयोर्देवासुरसमः सन्निपातो महानभूत् ।
किरतोः शरजालानि वृत्रवासवयोरिव ॥ ४-६०-२ (३०९२४)
न स्म सूर्यस्तदा भाति न च वाति समीरणः ।
शरगाढे कृते व्योम्नि छायाभूतमिवाभवत् ॥ ४-६०-३ (३०९२५)
महांश्चटचटाशब्दो योधयोर्युध्यमानयोः ।
दह्यतामिव वेणूनामासीत्परमदारुणः ॥ ४-६०-४ (३०९२६)
हयांस्तस्यार्जुनः सङ्ख्ये कृतवानल्पतेजसाः ।
ते राजन्न प्रजानन्ति दिशं कांचन मोहिताः ॥ ४-६०-५ (३०९२७)
ततो द्रौणिर्महावीर्यः पार्थस्य विचरिष्यतः ।
विवरं सूक्ष्ममालोक्य ज्यां नुनोद क्षुरेण सः ॥ ४-६०-६ (३०९२८)
तदस्यापूजयन्देवाः कर्म दृष्ट्वाऽतिमानुषम् ।
न शक्तोऽन्यः पुमान्स्थातुमृते द्रौणेर्धनंजयम् ॥ ४-६०-७ (३०९२९)
ततो द्रौणिर्धनुर्व्यस्य व्यपक्रम्य नरर्षभः ।
पुनरप्यभ्यहन्पार्थं हृदये कङ्कपत्रिभिः । ४-६०-८ (३०९३०)

ततः पार्थो महाबाहुः प्रहसन्स्वनवत्तदा ।
योजयामास च तदा मौर्व्या गाण्डीवमोजसा ॥ ४-६०-९ (३०९३१)
तं दृष्ट्वा ऋद्धमायान्तं प्रभिन्नमिव कुञ्जरम् ।
ऋद्धः समाह्वयामास द्रौणिर्युद्धाय भारत ॥ ४-६०-१० (३०९३२)
ततोऽर्धचन्द्रपाहृत्य तेन पार्थः समाहतः ।
चिच्छेद तस्य चापं च सूतं चाश्वं च तेजसा ।
विव्याध निशितैश्चापि शरैराशीविपोपमैः ॥ ४-६०-११ (३०९३३)
सोऽन्यं रथं समास्थाय प्रत्यायाद्रथिपुङ्गवः ।
वारणेनेव मत्तेन मत्तो वारणयूथपः ॥ ४-६०-१२ (३०९३४)
ततः प्रववृते युद्धं पृथिव्यामेकवीरयोः ।
रणमध्ये द्वयोरेव सुमहद्रोमहर्षणम् ॥ ४-६०-१३ (३०९३५)
तौ वीरौ कुरवः सर्वे ददृशुर्विस्मयान्विताः ।
युध्यमानौ महात्मानौ द्विरदाविव संगतौ ॥ ४-६०-१४ (३०९३६)
तौ समाजघ्नतुर्वीरौ परस्परजयैषिणौ ।
शरै राशीविषाकारैर्ज्वलद्भिरिव पावकैः ॥ ४-६०-१५ (३०९३७)
अक्षयाविषुधी दिव्यौ पाण्डवस्य महात्मनः ।
तेन पार्थो रणे शूरस्तस्थौ गिरिरिवाचलः ॥ ४-६०-१६ (३०९३८)
अश्वत्थाम्नः पुनर्बाणाः क्षिप्रमभ्यस्यतो रणे ।
जग्मुः परिक्षयं शीघ्रमभूत्तेनाधिकोऽर्जुनः ॥ ॥ ४-६०-१७ (३०९३९)

इति श्रीमन्महाभारते विराटपर्वणि गोग्रहणपर्वणि षष्टितमोऽध्यायः
॥ ६० ॥

---

विरतपर्व-अध्यय०६१
॥ श्रीः ॥
४.६१. अध्यायः ६१

Mahabharata - Virata Parva - Chapter Topics
अर्जुनेन युगपद्द्रोणादिभिः सह यद्धम् ॥ १ ॥

Mahabharata - Virata Parva - Chapter Text

४-६१-० (३०९४०)
वैशंपायन उवाच। ४-६१-०क्ष् (३२४१)
एतस्मिन्नन्तरे तत्र महावीर्यपराक्रमः ।
आजगाम महाबाहुः कृपः शस्त्रभृतांवरः ।
अर्जुनं प्रतियोद्धुं वै युद्धकामो महारथः। ४-६१-१ (३०९४१)

अथं द्रौणे रथं त्यक्त्वा कृपस्य रथमुत्तमम् ।
आजगामार्जुनस्तूर्णं सूर्यवैश्वानरप्रभम् ॥ ४-६१-२ (३०९४२)
तौ वीर सूर्यसंकाशौ योत्स्यमानौ महारथौ ।
वार्षिकाविव जीमूतौ व्यरोचेतां व्यवस्थितौ ॥ ४-६१-३ (३०९४३)
श्रगृह्य गाण्डिवं लोके विश्रुतं पुनरर्जुनः ।
अभ्ययाद्भरतश्रेष्ठो विनिघ्नञ्शरमालया ॥ ४-६१-४ (३०९४४)
कृपश्च धनुरादाय तथैवार्जुनमभ्यगाम् ॥ ४-६१-५ (३०९४५)
प्रगृह्य बलवच्चापं नाराचान्रक्तभोजनान् ।
कृपः पार्थाय चिक्षेप शंतशोऽथ सहस्रशः ॥ ४-६१-६ (३०९४६)
जीमूत इव धर्मान्ते शरवर्पं विमुञ्चति ।
नन्दयन्सुहृदः सर्वान्प्रत्ययुध्यत फल्गुनम् ॥ ४-६१-७ (३०९४७)
विकृष्य बलवच्चापं पाण्डवोऽमितविक्रमः ।
चचार समरे पार्थश्चित्रमार्गान्विदर्शयन् ॥ ४-६१-८ (३०९४८)
सर्वांश्चैव दिशो बाणैः प्रदिशश्च महाबलः ।
एकच्छायमिवाकाशं सर्वतः कृतवान्प्रभुः ॥ ४-६१-९ (३०९४९)
प्राच्छादयदमेयात्मा पार्थः शरशतैः कृपम् ।
उद्गतः समरे मेघो धाराभिरिव पर्वतम् ॥ ४-६१-१० (३०९५०)
स शरैरर्पितः क्रुद्धः शितैरग्निशिखोपमैः ।
कृपो बभूव समरे विधूमोऽग्निरिव ज्वलंम् ॥ ४-६१-११ (३०९५१)
ततः शरसहस्रेण पार्थमप्रतिमौजसम् ।
अर्दयित्वा महाबाहुर्ननाद समरे कृपः ॥ ४-६१-१२ (३०९५२)
ततः कनकपुङ्खेन शरेण नतपर्वणा ।
बिभेद समरे पार्थः कृपस्य ध्वजमुत्तमम् ॥ ४-६१-१३ (३०९५३)
ततः पश्चान्महातेजा नाराचान्सूर्यसन्निभान् ।
जग्राह समरे पार्थो भूयो बहुशिलीमुखान् ॥ ४-६१-१४ (३०९५४)
तैस्तदार्तीं महाबाहुः कृपस्य रथरक्षिणः ।
जघान क्षत्रियश्रेष्ठो युध्यमानान्महारथान् ॥ ४-६१-१५ (३०९५५)
चन्द्रकेतुः सुकेतुश्च चित्राश्वो मणिमांस्तद ।
मुञ्जमौलिश्च विक्रान्तो हेमवर्णो भयावहः ॥ ४-६१-१६ (३०९५६)
सुरथोऽतिरथश्चैव सुपेणोऽरिष्ट एव च ।
नृकेतुश्च सहानीकास्ते निषेदुर्गतासवः ॥ ४-६१-१७ (३०९५७)
तान्निहत्य ततः पार्थो निमेपादिव भारत ।
पुनरन्यान्समाधत्त त्रयोदश शिलीमुखान् ॥ ४-६१-१८ (३०९५८)
अथास्य युगमेकेन चतुर्भिश्चतुरो हयान् ।
षष्ठेन तु शिरः सङ्ख्ये कृपस्य रथसारथेः ॥ ४-६१-१९ (३०९५९)
त्रिभिस्त्रिवेणुं बलवान्द्वाभ्यामक्षं महाबलः ।

द्वादशेन तु भल्लेन कृपस्य सशरं धनुः ॥ ४-६१-२० (३०९६०)
छित्त्वा वज्रनिकाशेन फल्गुनः प्रहसन्निव ।
त्रयोदशेनेन्द्रसमः प्रत्यविध्यत्स्तनान्तरे ॥ ४-६१-२१ (३०९६१)
स छिन्नधन्वा विरथो हताश्वो हतसारथिः ।
अथ शक्तिं परामृश्य सूर्यवैश्वानरप्रभाम् ।
चिक्षेप सहसा क्रुद्धः पार्थायाद्भुतकर्मणे ॥ ४-६१-२२ (३०९६२)
तामर्जुनस्तथारूपां शक्तिं हेमपरिष्कृताम् ।
रुरोध सायकैस्तीक्ष्णैरर्धचन्द्रमुखैश्च ताम् ॥ ४-६१-२३ (३०९६३)
आपतन्तीं महोल्काभां चिच्छेद दशभिः शरैः ।
सापतद्दशधा भूमौ पार्थेन निहता शरैः ॥ ४-६१-२४ (३०९६४)
शक्त्यां तु विनिकृत्तायां विरथः शरपीडितः ।
गदापाणिरवप्लुत्य रथात्तूर्णममित्रहा ।
गदां चिक्षेप सहसा पार्थायामिततेजसे ॥ ४-६१-२५ (३०९६५)
सा च मुक्ता गदा गुर्वी रूपेणास्य परिष्कृता ।
अर्जुनस्य शरैर्नुन्ना प्रतिमार्गं जगाम सा ॥ ४-६१-२६ (३०९६६)
अथ खड्गं समुद्धृत्य शतचन्द्रं च भानुमत् ।
इयेष पाण्डवं हन्तुं कृपो लघुपराक्रमः ॥ ४-६१-२७ (३०९६७)
स शरद्वत्सुतस्तूर्णं महाचार्यः सुशिक्षितः ।
खेचरेव चचारकैः क्रमाच्चर्मासिधृग्भुवि ॥ ४-६१-२८ (३०९६८)
ततः क्षुरप्रैः कौन्तेयो दशभिः खड्गचर्मणी ।
निमेषादिव चिच्छेद तदद्भुतमिवाभवत् ॥ ४-६१-२९ (३०९६९)
विषण्णवदमस्तत्र विनाशात्खड्गचर्मणोः ।
दन्तैर्दन्तच्छदान्दष्ट्वा चुकोप हृदि दीर्घवत् ॥ ४-६१-३० (३०९७०)
भवत्विति पुनश्चोक्त्वा युद्धापगमनोद्यतः ।
अश्वत्थाम्नस्तु स रथं कृपः समभिपुप्लुवे ।
स्वस्रीयस्य महातेजा जग्राह च धनुः पुनः ॥ ४-६१-३१ (३०९७१)
एतस्मिन्नन्तरे क्रुद्धो भीष्मो द्रोणमथाब्रवीत् ।
दृष्ट्वा कृपं फल्गुनेन पीडितं चोर्जितं च तम् ॥ ४-६१-३२ (३०९७२)
एकैकमस्मान्संग्रामे पराजयति फल्गुनः ।
अहं द्रोणश्च कर्णश्च द्रौणिर्गौतम एव च ।
अन्ये च बहवः शूरा वयं जेष्याम वासविम् ॥ ४-६१-३३ (३०९७३)
समागम्य ततः सर्वे भीष्मद्रोणमुखा रथाः ।
अर्जुनं सहसा युक्ताः प्रत्ययुध्यन्त भारत ॥ ४-६१-३४ (३०९७४)
स सायकमयैर्जालैः सर्वतस्तान्महारथान् ।
प्राच्छादयच्छरौघैस्तान्नीहार इव पर्वतान् ॥ ४-६१-३५ (३०९७५)
नदद्भिश्च महानागैर्हेषमाणैश्च वाजिभिः ।

भेरीशङ्खनिनादैश्च स शब्दस्तुमुलोऽभवत् ॥ ४-६१-३६ (३०९७६)
नागाश्वकायान्निर्भिद्य लौहानि कवचानि च ।
पार्थस्य शरवर्षाणि न्यपतञ्शतशः क्षितौ ॥ ४-६१-३७ (३०९७७)
त्वरमाणः शरानस्यन्पाण्डवस्तु प्रकाशते ।
मध्यंदिनगतोऽर्चिष्माञ्छरदीव दिवाकरः ॥ ४-६१-३८ (३०९७८)
अविषह्य शरान्सर्वे पार्थचापच्युतान्रणे ।
उदक्प्रयान्ति विध्वस्ता रथेभ्यो रथिनस्तदा ।
सादिनश्चाश्वपृष्ठेभ्यो भूमौ चापि पदातयः ॥ ४-६१-३९ (३०९७९)
शरैस्तु ताड्यमानानां कवचानां महात्मनाम् ।
ताम्रराजतलौहानां प्रादुरासीन्महास्वनः ॥ ४-६१-४० (३०९८०)
छन्नमायोधनं जज्ञे शरीरैर्गतचेतसाम् ।
श्रान्त्या गलितशस्त्राणां पतताम‍श्वसादिनाम् ॥ ४-६१-४१ (३०९८१)
शून्यान्कुर्वन्रथोपस्थान्मानवैरास्तृणोन्महीम् ।
प्रनृत्यन्निव संग्रामे चापहस्ते धनंजयः ॥ ४-६१-४२ (३०९८२)
शिरांस्यपातयत्सङ्ख्ये क्षत्रियाणां नरर्षभः ।
श्रुत्वा गाण्डीवनिर्घोषं विष्णूजितमिवाशने ।
त्रस्तानि सर्वसैन्यानि व्यलीयन्त च भागश ॥ ४-६१-४३ (३०९८३)
कुण्डलोष्णीषधारीणि जातरूपस्रजानि च ।
पतितानि स्म दृश्यन्ते शिरांसि करणमूर्धनि ॥ ४-६१-४४ (३०९८४)
विशिखोन्मथितैर्गात्रैर्बाहुभिश्च सकार्मुकैः ।
सहस्ताभरणैश्चान्यैः प्रच्छन्ना भाति मेदिनी ॥ ४-६१-४५ (३०९८५)
शिरसां पात्यमानानां समरे निशितैः शरैः ।
अश्मवृष्टिरिवाकाशादभवद्भरतर्षभ ॥ ४-६१-४६ (३०९८६)
दर्शयित्वा तदाऽऽत्मानं रौद्रं रौद्रपराक्रमः ।
जघान समरे शूराञ्छतशोऽथ सहस्रशः ॥ ४-६१-४७ (३०९८७)
तथावरुद्धश्चारण्ये दशवर्षाणि त्रीणि च ।
क्रोधाग्निमुत्ससर्जाजौ धार्तराष्ट्रेषु पाण्डवः ॥ ४-६१-४८ (३०९८८)
तस्य तद्दहतः सैन्यं दृष्ट्वा चास्य पराक्रमम् ।
सर्वे शान्तिपरा योधा धार्तराष्ट्रस्य भारत ॥ ४-६१-४९ (३०९८९)
यथा नलवनं नागः प्रभिन्नः षष्टिहायनः ।
एवं सर्वानपामृद्नादर्जुनः शस्त्रतेजसा ॥ ४-६१-५० (३०९९०)
विद्राव्य च ततः सैन्यं त्रासयित्वा महारथान् ।
अर्जुनो जयतांश्रेष्ठः पर्यावर्तत भारत ॥ ४-६१-५१ (३०९९१)
तस्य मार्गान्विचरतो निघ्नतश्च रणाजिरे ।
प्रावर्तत नदी घोरा शोणितान्त्रतरङ्गिणी ॥ ४-६१-५२ (३०९९२)
अस्थिशैवालसंबाधां संग्रामे पार्थनिर्मिताम् ।

शरचापप्लवां घोरां मांसशोणितकर्दमाम् ॥ ४-६१-५३ (३०९९३)
रथोडुपां चान्त्रसर्पां केशशैवालशाड्वलाम् ।
करवालासिपाठीनां चामरोर्ष्णीषफेनिलाम् ॥ ४-६१-५४ (३०९९४)
अश्वग्रीवामहावर्तां कबन्धजलमानुषाम् ।
काककङ्करुतां तीव्रां सारसक्रौञ्चनादिताम् ॥ ४-६१-५५ (३०९९५)
सिंहनादमहानादां शङ्खस्वनमहास्वनाम् ।
वीरोत्तमाङ्गपद्माढ्यां शरचापमहानलाम् ॥ ४-६१-५६ (३०९९६)
पदातिमत्स्यकलुषां गजशीर्षककच्छपाम् ।
गोमायुगसंघुष्टां मांसमज्जाभिकर्दमाम् ॥ ४-६१-५७ (३०९९७)
प्रावर्तयन्नदीं घोरां पिशाचगणसेविताम् ।
अपारामनिवासां च रक्तोदां सर्वतो वृताम् ॥ ४-६१-५८ (३०९९८)
अभीक्ष्णमकरोत्पार्थो नदीमुत्तमशोणिताम् ।
गजवर्ममहाद्वीपामश्वदेहमहाशिलाम् ॥ ४-६१-५९ (३०९९९)
पदातिदेहसंघाटां रथावलिमहातरुम् ।
केशशाद्वलसंछन्नां सुतरां भीतिदां नृणाम् ॥ ४-६१-६० (३१०००)
अगाधरक्तोदवहां यमसागरगामिनीम् ।
दुस्तरां भीरुमर्त्यानां शूराणां सुतरां नृप ।
प्रावर्तयन्नदीमेवं भीषणां पाकशासनिः ॥ ४-६१-६१ (३१००१)
तस्याददानस्य शरान्सन्दधानस्य मुञ्चतः ।
विकर्षतश्च गाण्डीवं न किंचिद्ददृशेऽन्तरम् ॥ ॥ ४-६१-६२ (३१००२)

इति श्रीमन्महाभारते विराटपर्वणि गोग्रहणपर्वणि एकषष्टितमोऽध्यायः ॥
Mahabharata - Virata Parva - Chapter Footnotes

४-६१-२८ स्वेचरः इवेतिच्छेदः ॥

---

विरतपर्व-अध्यय०६२
॥ श्रीः ॥
४.६२. अध्यायः ६२

Mahabharata - Virata Parva - Chapter Topics
रणाय भीष्मार्जुनयोः समागमे देवैस्तयोः प्रशंसनम् ॥ १ ॥

Mahabharata - Virata Parva - Chapter Text

४-६२-० (३१००३)
वैशंपायन उवाच। ४-६२-०क्ष् (३२४२)

एवं विद्राव्य तत्सैन्यं पार्थो भीष्ममुपाद्रवत् ।
त्रस्तेषु सर्वसैन्येषु कौरव्यस्य महात्मनः ॥ ४-६२-१ (३१००४)
बाणान्धनुषि संधाय चतुरः पाकशासनिः ।
भीष्मं च प्राहिणोद्गीतस्तं द्वाभ्यामभ्यवादयत् ॥ ४-६२-२ (३१००५)
तस्य कर्णान्तिकं गत्वा द्वावब्रूतां च कौशलम् ।
सोऽप्याशीरवदद्गीष्मः कौन्तेयो जयतामिति ॥ ४-६२-३ (३१००६)
नरसिंहमुपायान्तं जिगीषन्तं परान्रणे ।
वृषसेनोऽभ्ययात्तूर्णं योद्धुकामो धनंजयम् ॥ ४-६२-४ (३१००७)
वैकर्तनात्मजो वीरः संग्रामे लोकविश्रुतः ।
शौर्यवीर्यादिभिः कर्णाद्बिम्बाद्बिम्ब इवोद्धृतः ॥ ४-६२-५ (३१००८)
आत्मना युध्यतस्तस्य वृषसेनस्य पाण्डवः ।
मुहूर्तं तस्य तद्दृष्ट्वा हस्तलाघवपौरुषे ।
तुतोष च ततः पार्थो वृषसेनपराक्रमम् ॥ ४-६२-६ (३१००९)
तस्य पार्थस्तदा क्षिप्रं क्षुरधारेण कार्मुकम् ।
न्यकृन्यद्गृध्रपत्रेण जाम्बूनदपरिष्कृतम् ॥ ४-६२-७ (३१०१०)
अथैनं पञ्चभिर्भूयः प्रत्यविध्यत्स्तनान्तरे ।
स पार्थबाणाभिहतो रथात्प्रस्कन्द्य दुद्रुवे ॥ ४-६२-८ (३१०११)
दुःशासनो विकर्णश्च शकुनिश्च विविंशतिः ।
आयान्तं भीमधन्वानं पर्यकीर्यन्त पाण्डवम् ॥ ४-६२-९ (३१०१२)
तेषां पार्थो रणे क्रुद्धः शरैः सन्नतपर्वभिः ।
युगं ध्वजं शरासं च चिच्छेद तरसा रणे ॥ ४-६२-१० (३१०१३)
ते निकृत्तध्वजाः सर्वे छिन्नकार्मुकवेष्टनाः ।
रणमध्यादपययुः पार्थबाणाभिपीडिताः ॥ ४-६२-११ (३१०१४)
ततः प्रहस्य बीभत्सुर्वैराटिमिदमब्रवीत् ।
एतं मे प्रापयेदानीं तालं सौवर्णमुच्छ्रितम् ॥ ४-६२-१२ (३१०१५)
मेघमध्ये यथा विद्युदुज्ज्वलन्ती पुनः पुनः ।
असौ शान्तनवो भीष्मस्तत्र याहि परंतप ॥ ४-६२-१३ (३१०१६)
अस्त्राणि तस्य दिव्यानि दर्शयिष्यामि संयुगे ।
घोररूपाणि चित्राणि लघूनि च गुरूणि च ॥ ४-६२-१४ (३१०१७)
अस्माकं पोषको नित्यमाबाल्यान्मत्स्यभूमिप ।
श्रेयस्कामी सदाऽस्माकं योगक्षेमकरः सदा ॥ ४-६२-१५ (३१०१८)
तस्याङ्के विर्धितो बाल्ये तद्योत्स्येऽनेन सांप्रतम् ।
अस्माकं धार्तराष्ट्राणां शमकामो दिवानिशम् ॥ ४-६२-१६ (३१०१९)
वैशंपायन उवाच। ४-६२-१७ (३१०२०)
तस्य तद्वचनं श्रुत्वा वैराटिः पार्थसारथिः ।
वाहयच्चोदितस्तेन रथं भीष्मरथं प्रति ॥ ४-६२-१७ (३१०२१)

तं रथं चोदितं दृष्ट्वा फल्गुनस्य रथोत्तमम् ।
वायुनेव महामेघं सहसाऽभिसमीरितम् ।
तं प्रत्ययाच्च गाङ्गेयो रथेनादित्यवर्चसा ॥ ४-६२-१८ (३१०२२)
आयान्तमर्जुनं दृष्ट्वा भीष्मः परपुंजयः ।
प्रत्युज्जगाम युद्धार्थी महर्षभमिवर्षभः ॥ ४-६२-१९ (३१०२३)
तथा हि गुप्त एतेषां दुराधर्षः पितामहः ।
हन्यमानेषु योधेषु धनंजयमुपाद्रवत् ॥ ४-६२-२० (३१०२४)
प्रगृह्य कार्मुकश्रेष्ठं जातरूपपरिष्कृतम् ।
शरानादाय तीक्ष्णाग्रान्मर्मदेहप्रमाथिनः ॥ ४-६२-२१ (३१०२५)
पाण्डुरेणातपत्रेण ध्रियमाणेन मूर्धनि ।
शुशुभे स नरव्याघ्रो गिरिः सूर्योत्तरे यथा ॥ ४-६२-२२ (३१०२६)
प्राध्माप्य शङ्खं गाङ्गेयो धार्तराष्ट्रान्प्रहर्षयन् ।
प्रदक्षिणमुपावृत्य बीभत्सुं प्रत्यवारयत् ॥ ४-६२-२३ (३१०२७)
तमवेक्ष्य समायान्तं कौन्तेयः परवीरहा ।
प्रत्यगृह्णादमेयात्मा प्रियातिथिमिवागतम् ।
देवदत्तं महाशङ्खं प्रदध्मौ युधि वीर्यवान् ॥ ४-६२-२४ (३१०२८)
तौ शङ्खनादावत्यर्थं भीष्मपाण्डवयोस्तदा ।
नादयामासतुर्द्यां च खं च भूमिं च सर्वशः ॥ ४-६२-२५ (३१०२९)
अन्तरिक्षे च जल्पन्ति सर्वे देवाः सवासवाः ।
यदर्जुनः कुरून्सर्वान्प्राकृन्तच्छस्त्रतेजसा ॥ ४-६२-२६ (३१०३०)
कुरुश्रेष्ठाविमौ वीरौ रणे भीष्मधनंजयौ ।
सर्वास्त्रकुशलौ वीरावप्रमत्तौ रणे सदा ॥ ४-६२-२७ (३१०३१)
उभौ देवमनुष्येषु विश्रुतौ स्वपराक्रमैः ।
उभौ परमसंरब्धावुभौ दीप्तधनुर्धरौ ॥ ४-६२-२८ (३१०३२)
समागतौ नरव्याघ्रौ व्याघ्राविव तरस्विनौ ।
उभौ सदृशकर्माणौ सूर्यस्याग्नेश्च भारत ॥ ४-६२-२९ (३१०३३)
वासुदेवस्य सदृशौ कार्तवीर्यसमावुभौ ।
उभौ विश्रुतकर्माणावुभौ शूरौ महाबलौ ।
सर्वास्त्रविदुषां श्रेष्ठौ सर्वशस्त्रभृतां वरौ ॥ ४-६२-३० (३१०३४)
अग्नेरिन्द्रस्य सोमस्य यमस्य वरुणस्य च ॥
अनयोः सदृशं वीर्यं मित्रस्य वरुणस्य च ॥ ४-६२-३१ (३१०३५)
को वा कुन्तीसुतं युद्धे द्वैरथेनोपयास्यति ।
ऋते शान्तनवादन्यः क्षत्रियो भुवि विद्यते ॥ ४-६२-३२ (३१०३६)
इति संपूजयामासुर्भीष्मं दृष्ट्वाऽर्जुनं गतम् ।
तं रणे संप्रहृष्यन्तं दृष्ट्वा देवाः सवासवाः ॥ ४-६२-३३ (३१०३७)
अथ बहुविधतूर्यशङ्खघोषैर्विविधरवैः सह सिंहनादमिश्रैः ।

कुरुवृषभमपूजयत्कुरूणां बलममराधिपसैन्यसप्रभं तत्
॥ ॥ ४-६२-३४ (३१०३८)

इति श्रीमन्महाभारते विराटपर्वणि गोग्रहणपर्वणि द्विषष्टितमोऽध्यायः ॥

---

विरतपर्व-अध्यय०६३
॥ श्रीः ॥
४.६३. अध्यायः ६३

Mahabharata - Virata Parva - Chapter Topics
अर्जुनेन भीष्मपराजयः ॥१ ॥

Mahabharata - Virata Parva - Chapter Text

४-६३-० (३१०३९)
वैशंपायन उवाच। ४-६३-०क्ष् (३२४३)
ततो भीष्मः शरानष्टौ ध्वजे पार्थस्य वीर्यवान् ।
समार्पयन्महावेगाज्ज्वलतः पन्नगानिव ॥ ४-६३-१ (३१०४०)
ते ध्वजं पाण्डुपुत्रस्य समासाद्य पतत्रिणः ।
ध्वजस्थं कपिमाजघ्नुः ध्वजाग्रनिलयांश्च तान् ॥ ४-६३-२ (३१०४१)
सारथिं च हयांश्चास्य विव्याध दशभिः शरैः ।
उरस्यताडयत्पार्थं त्रिभिरेवायसैः शरैः ॥ ४-६३-३ (३१०४२)
ततोऽर्जुनः शरैस्तीक्ष्णैर्विद्ध्वा कुरुपितामहम् ।
ध्वजं च सारथिं चापि विव्याध दशभिः शरैः ॥ ४-६३-४ (३१०४३)
तद्युद्धमभवद्धोरं रोमहर्षणमद्भुतम् ।
भीष्मस्य सह पार्थेन बलिवासवयोरिव ॥ ४-६३-५ (३१०४४)
सन्ततं शरजालाभिराकाशं समपद्यत ।
अम्बुदैरिव धाराभिस्तयोः कार्मुकनिःसृतैः ॥ ४-६३-६ (३१०४५)
भल्लैर्भल्लाः समाहत्य कुरुपाण्डवयो रणे ।
अन्तरिक्षे व्यराजन्त खद्योताः प्रावृषीव हि ॥ ४-६३-७ (३१०४६)
अग्निवक्रोपमं घोरं मण्डलीकृतमाहवे ।
गाण्डीवमभवज्जिष्णोः सव्यं दक्षिणमस्यतः ॥ ४-६३-८ (३१०४७)
पर्वतं वारिधाराभिश्छादयन्निव तोयदः ।
अर्जुनश्छादयद्भीष्मं शरवर्षैरनेकशः ॥ ४-६३-९ (३१०४८)
तां समुद्रमिवोद्भूतां शरवृष्टिं समुद्यताम् ।
व्यधमत्सायकैर्भीष्मः सोर्जुनं च न्यवारयत् ॥ ४-६३-१० (३१०४९)

ततस्तानि विसृष्टानि शरजालानि सङ्घशः ।
आहतानि व्यशीर्यन्तं अर्जुनस्य रथं प्रति ॥ ४-६३-११ (३१०५०)
ततः कनकपुङ्खाग्रैः शितैः संनतपर्वभिः ।
पतद्भिः खगवाजैश्च द्यौरासीत्संवृता शरैः ॥ ४-६३-१२ (३१०५१)
ततः प्रासृजदुग्राणि शरजालानि पाण्डवः ।
तावन्ति शरजालानि भीष्मः पार्थाय प्राहिणोत् ॥ ४-६३-१३ (३१०५२)
साश्वं ससूतं सरथं स पार्थं समाचिनोद्गारतो वत्सदन्तैः ।
प्रच्छादयामास दिशश्च सर्वा नभश्च बाणैस्तपनीयपुङ्खैः
॥ ४-६३-१४ (३१०५३)
ततो देवर्षिगन्धर्वाः साधुसाध्वित्यपूजयन् ।
दुष्करं कृतवान्भीष्मो यदर्जुनमवारयत् ॥ ४-६३-१५ (३१०५४)
बलवानर्जुनो दक्षः क्षिप्रकारी च पाण्डवः ।
कोऽन्यः समर्थः पार्थस्य वेगं धारयितुं रणे ॥ ४-६३-१६ (३१०५५)
ऋते शान्तनवाद्भीष्मात्कृष्णाद्वा देवकीसुतात् ।
आचार्यवरमुख्याद्वा भारद्वाजान्महाबलात् ॥ ४-६३-१७ (३१०५६)
अस्त्रैरस्त्राणि संवार्य क्रीडतः पुरुषोत्तमौ ।
चक्षूंषि सर्वभूतानां मोदयन्तौ महाबलौ ॥ ४-६३-१८ (३१०५७)
प्राजापत्यं तथैवैन्द्रमाग्नेयं च सुदारुणम् ।
कौबेरं वारुणं चैव याम्यं वायव्यमेव च ।
प्रयुञ्जानौ महात्मानौ समरे तौ विरेजतुः ॥ ४-६३-१९ (३१०५८)
विस्मितान्यथ भूतानि तौ दृष्ट्वा संयुगे तदा ।
साधु पार्थ महाबाहो साधु भीष्मेति चाब्रुवन् ॥ ४-६३-२० (३१०५९)
नैतदन्यो मनुष्येषु प्रदर्शयितुमाहवे ।
महास्त्राणां संप्रयोगं समरे भीष्मपार्थयोः ॥ ४-६३-२१ (३१०६०)
एवं सर्वास्त्रविदुषोरस्त्रयुद्धमवर्तत ॥ ४-६३-२२ (३१०६१)
अथ जिष्णुरुदावृत्य शितधारेण कार्मुकम् ।
न्यकृन्तद्गृध्रपत्रेण शातकुम्भपरिष्कृतम् ॥ ४-६३-२३ (३१०६२)
निमेषान्तरमात्रेण भीष्मोऽन्यत्कार्मुकं रणे ।
समादाय नरव्याघ्रः सज्यं चक्रे महाबलः ॥ ४-६३-२४ (३१०६३)
शरांश्च सुबहुन्क्रुद्धो मुमोचाशु धनंजये ।
अर्जुनोपि शरांस्तीक्ष्णान्भीष्माय निशितान्बहून् ।
चिक्षेप च महातेजास्तथा भीष्मश्च पाण्डवे ॥ ४-६३-२५ (३१०६४)
तयोर्दिव्यास्त्रविदुषोरस्यतोरनिशं शरान् ।
न विशेषस्तदा राजन्दृश्यते सुमहात्मनोः ॥ ४-६३-२६ (३१०६५)
अथावृणोद्दश दिशः शरैरतिरथस्तदा ।
किरीटमाली कौन्तेयः शूरं शान्तनवं तथा ॥ ४-६३-२७ (३१०६६)

अतीव पाण्डवो भीष्मं भीष्मश्चातीव पाण्डवम् ।
बभूव तत्र सङ्केऽस्मिन्लोके राजंस्तदद्भुतम् ॥ ४-६३-२८ (३१०६७)
पाण्डवेन हताः शूरा भीष्मस्य रथरक्षिणः ।
शेरते स्म महाबाहो कौन्तेयस्याभितो रथम् ॥ ४-६३-२९ (३१०६८)
ततो गाण्डीवनिर्मुक्ता निरमित्रं चिकीर्षवः ।
असक्ताः पुङ्खसंसक्ताः श्वेतवाहनपत्रिणः ॥ ४-६३-३० (३१०६९)
निष्पतन्तो रथात्तस्य धौता हैरण्यवाससः ।
आकाशे प्रत्यदृश्यन्त हंसानामिव पङ्क्तयः ॥ ४-६३-३१ (३१०७०)
तस्य तद्दिव्यमस्त्रं हि प्रगाढं चित्रमस्यतः ।
प्रेक्षन्ते स्मान्तरिक्षस्थाः सर्वे देवाः सवासवाः ॥ ४-६३-३२ (३१०७१)
तं दृष्ट्वा परमप्रीतो गन्धर्वश्चित्रमद्भुतम् ।
शशंस देवराजाय चित्रसेनः प्रतापवान् ॥ ४-६३-३३ (३१०७२)
पश्येमानरिनिर्दारान्संसक्तानिव गच्छतः ।
चित्ररूपमिदं जिष्णोर्दिव्यमस्त्रमुदीर्यतः ॥ ४-६३-३४ (३१०७३)
नेदं मनुष्याः श्रद्दध्युर्न हीदं तेषु विद्यते ।
सौराणां च महास्त्राणां विचित्रोऽयं समागमः ॥ ४-६३-३५ (३१०७४)
मध्यन्दिनगतं सूर्यं प्रतपन्तमिवाम्बरे ।
न शक्नुवन्ति सैन्यानि पाण्डवं प्रसमीक्षितुम् ॥ ४-६३-३६ (३१०७५)
उभौ विश्रुतकर्माणावुभौ शूरौ महीक्षिताम् ।
उभौ विचित्रकर्माणावुभौ युधि दुरासदौ ॥ ४-६३-३७ (३१०७६)
इत्युक्तो देवराजस्तु पार्थभीष्मसमागमम् ।
पूजयामास दिव्येन पुष्पवर्षेण भारत ॥ ४-६३-३९अश्अश्वत्थामा
ततोऽभ्येत्य द्रुतं कर्णमभाषत ।
अहमेको हनिष्यामि समेतान्सर्वपाण्डवान् ॥ ४-६३-३८ (३१०७७)
इति कर्म समक्षं मे सभामध्ये त्वयोदितम् ।
न तु तत्कृतमेकस्माद्भीतो धावसि सूतज ॥ ४-६३-४० (३१०७८)
वैचित्रवीर्यजाः सर्वे त्वामाश्रित्य पृथासुतान् ।
जेतुमिच्छन्ति संग्रामे भवान्युध्यस्व फल्गुनम् ॥ ४-६३-४१ (३१०७९)
अश्वत्थामोदितं वाक्यं श्रुत्वा दुर्योधनस्तदा ।
प्रत्युवाच रुषा द्रौणिं कर्णप्रियचिकीर्षया ॥ ४-६३-४२ (३१०८०)
मा मानभङ्गं विप्रेन्द्र कुरु विश्रुतकर्मणः ।
मानभङ्गेन राज्ञां तु बलहानिर्भविष्यति ॥ ४-६३-४३ (३१०८१)
शूरा वदन्ति संग्रामे वाचा कर्माणि कुर्वते ।
पराक्रमन्ति संग्रामे स्वस्य वीर्यानुसारतः ॥ ४-६३-४४ (३१०८२)
तस्मात्तं नार्हति भवान्गर्हितुं शूरसंमतम् ।
राज्ञैवमुक्तः स द्रौणिर्गतरोषोऽभवत्तदा ॥ ४-६३-४५ (३१०८३)

ततो भीष्मः शान्तनवो बाणान्पार्श्वे समार्पयत् ।
अस्यतः प्रतिसन्धाय विवृतं सव्यसाचिनः ४-६३-४६ (३१०८४)
ततः प्रसह्य बीभत्सुः पृथुधारेण कार्मुकम् ।
न्यकृन्तद्गृध्रपत्रेण भीष्मस्यामिततेजसः ॥ ४-६३-४७ (३१०८५)
अथैनं दशभिः पश्चात्प्रत्यविध्यत्स्तनान्तरे ।
यतमानं पराक्रान्तं कुन्तीपुत्रो धनञ्जयः ॥ ४-६३-४८ (३१०८६)
स पीडितो महाबाहुर्गृहीत्वा रथकूबरम् ।
गाङ्गेयो युधि दुर्धर्षस्तस्थौ दीप इवातुरः ॥ ४-६३-४९ (३१०८७)
तं विसंज्ञमपोवाह संयन्ता रथवाजिनाम् ।
उपदेशमनुस्मृत्य रक्षमाणो महारथम् ॥ ४-६३-५० (३१०८८)
पराक्रमे च शौर्ये च वीर्ये सत्त्वे बले रणे ।
शस्त्रास्त्रेषु च सर्वेषु लाघवे दूरपातने ॥ ४-६३-५१ (३१०८९)
यस्य नास्ति समो लोके पितृदत्तवरश्च यः ।
जितश्रमो जितारातिर्निस्तन्द्रिः खेदवर्जितः ।
यः स्वेच्छामरणः शूरः पितृशुश्रूषणे रतः ॥ ४-६३-५२ (३१०९०)
दुर्योधनहितार्थाय युद्ध्वा पार्थेन संगरे ।
पृथासुतहितार्थाय पराजित इवाभवत् ॥ ॥ ४-६३-५३ (३१०९१)

इति श्रीमन्महाभारते विराटपर्वणि गोग्रहणपर्वणि त्रिषष्टितमोऽध्यायः ॥

---

विरतपर्व-अध्यय०६४
॥ श्रीः ॥
४.६४. अध्यायः ६४

Mahabharata - Virata Parva - Chapter Topics
अर्जुनेन द्रोणादिपञ्चरथान्प्रत्यभियानम् ॥१ ॥

Mahabharata - Virata Parva - Chapter Text

४-६४-० (३१०९२)
वैशंपायन उवाच। ४-६४-०क्ष् (३२४४)
भीष्मं विजित्य संग्रामे कुरूणां मिषतां रणे ।
ततो युद्धमनाः प्रायात्पार्थः पञ्च महारथान् ॥ ४-६४-१ (३१०९३)
आददानश्च नाराचान्विमृशन्निषुधी अपि ।
संस्पृशानश्च गाण्डीवं भूयः कर्णं समभ्यगाम् ॥ ४-६४-२ (३१०९४)
द्रौणिरुवाच। ४-६४-३क्ष् (३२४५)

कर्ण यत्तत्सभामध्ये बह्वबद्धं प्रभाषसे ।
न मे युधि समोऽस्तीति तदिदं प्रत्युपस्थितम् ॥ ४-६४-३ (३११०९५)
एषोऽन्तक इव क्रुद्धः सर्वभूतावमर्दनः ।
अदूरात्प्रत्युपस्थाय जृम्भते केसरी यथा ।
न पलायस्व शूरश्चेत्स्थित्वा युध्यस्व फल्गुनम् ॥ ४-६४-४ (३११०९६)
कर्ण उवाच। ४-६४-५क्ष् (३२४६)
नाहं बिभेमि बीभत्सोः कृष्णाद्वा देवकीसुतात् ।
पाण्डवेभ्योपि सर्वेभ्यः क्षत्रधर्ममनुव्रतः ॥ ४-६४-५ (३११०९७)
सत्वाधिकानां शूराणां धनुर्वेदोपजीविनाम् ।
दर्शनाञ्जायते दर्पः स्वरश्च न विषीदति ॥ ४-६४-६ (३११०९८)
पश्यत्वाचार्यपुत्रो मामर्जुनेन समं युधि ।
युध्यमानं सुसंयुक्तं दैवं तु दुरतिक्रमम् ॥ ४-६४-७ (३११०९९)
अश्वत्थामोवाच। ४-६४-८क्ष् (३२४७)
को दोषः कर्ण शूराणां वाचा साकं हि पौरुषम् ।
विद्यते यदि तल्लोके गुणोत्तरमिहोच्यते ॥ ४-६४-८ (३१११००)
युव्यस्व त्वमभीः पार्थं प्रपलायस्व मा रणात् ।
उक्तं वचः स्मरन्कर्ण नाहमित्यादि संयुगे ॥ ४-६४-९ (३१११०१)
वैशंपायन उवाच। ४-६४-१०क्ष् (३२४८)
तं समन्ताद्रथाः पञ्च परिवार्य धनञ्जयम् ।
त इषून्सम्यगस्यन्तो मुमुक्षन्तोपि जीवितात् ॥ ४-६४-१० (३१११०२)
ते लाभमिव मन्वानाः क्षिप्रमाच्छ्र्न्धनञ्जयम् ।
शरौघान्सम्यगस्यन्तो जीमूता इव वार्षिकाः ॥ ४-६४-११ (३१११०३)
बहुभिर्निशितैर्बाणैर्विविधैर्लोमवापिभिः ।
आद्रवन्प्रत्यवस्थाय प्रत्यविध्यन्धनञ्जयम् ॥ ४-६४-१२ (३१११०४)
ततः प्रहस्य बीभत्सुः सर्वशस्त्रभृतांवरः ।
दिव्यमस्त्रं विकुर्वाणः प्रत्ययाद्रथसत्तमान् ॥ ४-६४-१३ (३१११०५)
यथा रश्मिभिरादित्यः प्रच्छादयति मेदिनीम् ।
एवं गाण्डीवनिर्मुक्तैः शरैः प्राच्छादयद्दिशः ॥ ४-६४-१४ (३१११०६)
न रथानां न नगानां न ध्वजानां न वाजिनाम् ।
अविद्धं निशितैर्बाणैरासीद्द्व्यङ्गुलमन्तरम् ॥ ४-६४-१५ (३१११०७)
सर्वे शान्तिपरा योधाः स्वचित्तं नाभिजज्ञिरे ।
हस्तिनोऽश्वाश्च वित्रस्ता व्यवलीयन्त भारत ॥ ४-६४-१६ (३१११०८)
यथा नलवनं नागः प्रभिन्नः षाष्टिहायनः ।
एवं सर्वानपामृद्नादर्जुनः शस्त्रतेजसा ॥ ४-६४-१७ (३१११०९)
गाण्डीवस्य तु घोषेण पृथिवी समकम्पत ।
मनांसि धार्तराष्ट्राणामप्यकृन्तद्धनञ्जयः ॥ ४-६४-१८ (३११११०)

ततो विगाह्य सैन्यानां मध्यं शस्त्रभृतांवरः ।
सारथिं समरे शूरस्त्वभ्यभाषत वीर्यवान् ॥ ४-६४-१९ (३११११)
संनियम्य हयानेतान्मन्दं वाहय सारथे ।
आचार्यपुत्रं समरे योधयिष्येऽपराजितम् ॥ ४-६४-२० (३१११२)
पुरा ह्येष मया युक्तः स मे भवति पृष्ठतः ॥
एवमुक्तेऽर्जुनेनासावश्वत्थामरथं प्रति। ४-६४-२१ (३१११३)
विराटपुत्रो जवनान्भृशमश्वानचोदयत् ॥ ४-६४-२२ (३१११४)
कर्ण उवाच ।
एषोपयाति बीभत्सुर्व्यथितो गाढवेदनः। ४-६४-२३क्ष् (३२४९)
तं तु तत्रैव यास्यामि नासौ मुच्येत जीवितात् ॥ ४-६४-२३ (३१११५)
द्रोण उवाच। ४-६४-२४क्ष् (३२५०)
नासौ भयेन निर्यातो महात्मा पाकशासनिः ।
नैवं भीता निवर्तन्ते न पुनर्गाढवेदनाः ॥ ४-६४-२४ (३१११६)
यद्येनमभिसंरब्धं पुनरेवाभियास्यसि ।
बहून्यस्त्राणि जानीते न पुनर्मोक्ष्यते भवान् ॥ ४-६४-२५ (३१११७)
दिष्ट्या दुर्योधनो मुक्तो दिष्ट्या गावः पलायिताः ।
मुक्तो दिष्ट्या च संग्रामे किं रणेन करिष्यसि ॥ ४-६४-२६ (३१११८)
क्रोशमात्रमपाक्रम्य बलमन्वानयामहे ।
अन्वागतबलाः पार्थं पुनरेवाभियास्यथ ॥ ॥ ४-६४-२७ (३१११९)

इति श्रीमन्महाभारते विराटपर्वणि गोग्रहणपर्वणि
चतुःषष्टितमोऽध्यायः ॥

---

विरतपर्व-अध्यय०६५
॥ श्रीः ॥
४.६५. अध्यायः ६५

Mahabharata - Virata Parva - Chapter Topics
अर्जुनेनोत्तरंप्रति भीष्मादिसकाशे रथप्रापणप्रेरणापूर्वकं
तदाप्यायनाय स्वपराक्रमप्रकथनम् ॥१ ॥
तदा दुःशासनादिपराभवनपूर्वकं भीष्मादिभिः सहायोधनम् ॥ २ ॥

Mahabharata - Virata Parva - Chapter Text

४-६५-० (३११२०)
वैशंपायन उवाच। ४-६५-०क्ष् (३२५१)
कर्णं पराजितं दृष्ट्वा पार्थो वैराटिमब्रवीत् ।

एतं मां प्रापयेदानीं रथवृन्दं प्रहारिणाम् ॥ ४-६५-१ (३११२१)
यत्र शान्तनवो भीष्मः सर्वेषां नः पितामहः ।
सुयुद्धं काङ्क्षमाणो वै रथे तिष्ठति दंशितः ॥ ४-६५-२ (३११२२)
तालो वै काञ्चनो यत्र वज्रवैडूर्यभूषितः ।
अतीव समरे भाति मातरिश्वप्रकम्पितः ॥ ४-६५-३ (३११२३)
दारुणं प्रहरिष्यामि रथबृन्दानि धन्विनाम् ।
आदास्याम्यहमेतेषां धनुर्ज्याविष्टनानि च ॥ ४-६५-४ (३११२४)
अस्यन्तं दिव्यमस्त्राणि चित्रमुत्तर पश्यसि ॥ ४-६५-५ (३११२५)
शतह्रदां जृम्भमाणां मेघस्थां प्रावृषीव च ।
सुवर्णपृष्ठं गाण्डीवं पश्यन्तु कुरवो मम ॥ ४-६५-६ (३११२६)
दक्षिणेनाथ वामेन कतमेन स्विदस्यति ।
इति मां शत्रवः सर्वे न विज्ञास्यन्ति सारथे ॥ ४-६५-७ (३११२७)
अस्त्रोदकां हयावर्तां नागनक्रां रथह्रदाम् ।
नदीं प्रस्कन्दयिष्यामि परलोकापहारिणीम् ॥ ४-६५-८ (३११२८)
पाणिपादशिरःपृष्ठबाहुशङ्खचराचरम् ।
वनं कुरूणां छेत्स्यामि भल्लैः सन्नतपर्वभिः ॥ ४-६५-९ (३११२९)
तूणीशयाः सुपुङ्खाग्रा विशिखा दुन्दुभिस्वनाः ।
मया प्रमुक्ताः संग्रामे कुरून्धक्ष्यन्ति सायकाः ॥ ४-६५-१० (३११३०)
ध्वजवृक्षं शरतृणं नागाश्वश्वापदाकुलम् ।
रथसिंहगणैर्युक्तं धनुर्वल्लिसमाकुलम् ।
वनमादीपयिष्यामि कुरूणामस्त्रतेजसा ॥ ४-६५-११ (३११३१)
जयतो भारतीं सेनामेकस्य मम संयुगे ।
शतं मार्गा भविष्यन्ति पावकस्येव कानने ॥ ४-६५-१२ (३११३२)
मया चक्रमिवाविद्धं सैन्यं द्रक्ष्यसि केवलम् ।
तानहं रथनीडेभ्यः परलोकाय शात्रवान् ।
एकः प्रद्रावयिष्यामि चक्रपाणिरिवासुरान् ॥ ४-६५-१३ (३११३३)
असंभ्रान्तो रथे तिष्ठन्समेषु विषमेषु च ।
मार्गमावृत्य तिष्ठन्तमपि भेत्स्यामि पर्वतम् ॥ ४-६५-१४ (३११३४)
अहमिन्द्रस्य संग्रामे द्विषतो बलदर्पितान् ।
मातलिं सारथिं कृत्वा निवातकवचान्रणे ।
हतवान्सर्वतः सर्वान्धावतो युध्यतस्तदा ॥ ४-६५-१५ (३११३५)
निवातकवचान्हत्वा गाण्डीवास्त्रैः सहस्रशः ।
परं पारे समुद्रस्य हिरण्यपुरमारुजम् ॥ ४-६५-१६ (३११३६)
हत्वा षष्टिसहस्राणि रथानामुग्रधन्विनाम् ।
पौलोमान्कालकेयांश्च समरे भृशदारुणान् ।
असुरानहनं घोरान्रौद्रेणास्त्रेण सारथे ॥ ४-६५-१७ (३११३७)

अहमिन्द्राद्दृढां मुष्टिं ब्रह्मणः क्षिप्रहस्तताम् ।
प्रगाढनिपुणं चित्रमतिवृद्धं प्रजापतेः ॥ ४-६५-१८ (३११३८)
रौद्रं रुद्रादहं वेद्मि वारुणं वरुणादपि ।
सौर्यं सूर्यादहं वेद्मि याम्यं दण्डधरादपि ॥ ४-६५-१९ (३११३९)
अस्त्रमाग्नेयमग्नेश्च वायव्यं मातरिश्वनः ।
अन्यैर्दैवैरहं प्राप्तः को मां विषहते पुमान् ॥ ४-६५-२० (३११४०)
अद्य गाण्डीवनिर्मुक्तैःशरौघै रोमहर्षणैः ।
कुरूणां पातयिष्यामि रथवृन्दानि धन्विनाम् ॥ ४-६५-२१ (३११४१)
वैशंपायन उवाच। ४-६५-२२क्ष् (३२५२)
एवमाश्वासितस्तेन वैराटिः सव्यसाचिना ।
व्यगाहत रथानीकं भीमं भीष्मस्य वाजिभिः ॥ ४-६५-२२ (३११४२)
रथिसिंहमनाधृष्यं जिगीषन्तं परान्रणे ।
अभ्यधावत्तदैवोग्रो ज्यां विकर्षन्धनञ्जयः ॥ ४-६५-२३ (३११४३)
दुःशासनोऽभ्ययात्तूर्णमर्जुनं भरतर्षभः ॥ ४-६५-२४ (३११४४)
अन्येऽपि चित्राभरणा युवानो मृष्टकुण्डलाः ।
अभ्ययुर्भीमधन्वानो मौर्वी पर्यस्य बाहुभिः ॥ ४-६५-२५ (३११४५)
दुःशासनो विकर्णश्च वृषसेनो विविंशतिः ।
अभीता भीमधन्वानं पाण्डवं पर्यवारयन् ॥ ४-६५-२६ (३११४६)
तस्य दुःशासनः षष्टिं वामपार्श्वे समार्पयत् ।
अस्यतः प्रतिसन्धाय कुन्तीपुत्रस्य धीमतः ॥ ४-६५-२७ (३११४७)
पुनश्चैव स भल्लेन विद्ध्वा वैराटिमुत्तरम् ।
द्वितीयेनार्जुनं वीरं प्रत्यविध्यत्स्तनान्तरे ॥ ४-६५-२८ (३११४८)
तस्य जिष्णुरुदावृत्य क्षुरधारेण कार्मुकम् ।
प्राकृन्तद्गृध्रपत्रेण जातरूपपरिष्कृतम् ॥ ४-६५-२९ (३११४९)
अथैनं पञ्चभिर्बाणैः प्रत्यविध्यत्स्तनान्तरे ।
सोपयातो रथोपस्थात्पार्थबाणाभिपीडितः ॥ ४-६५-३० (३११५०)
सर्वा दिशश्चाभ्यपतद्बीभत्सुरपाराजितः ।
तं विकर्णः शरैस्तीक्ष्णैर्गृध्रपक्षैः शिलाशितैः ।
विव्याध परवीरघ्नमर्जुनं धृतराष्ट्रजः ॥ ४-६५-३१ (३११५१)
ततस्तमपि कौन्तेयः शरेण नतपर्वणा ।
ललाटेऽभ्यहनद्गाढं स विद्धः प्राद्रवद्भयात् ॥ ४-६५-३२ (३११५२)
ततः पार्थमुपाद्रुत्य दुस्सहः सविविंशतिः ।
अवाकिरच्छरैस्तीक्ष्णैः परीप्सन्भ्रातरं रणे ॥ ४-६५-३३ (३११५३)
तावुभौ गृध्रपत्राभ्यां निशिताभ्यां धनञ्जयः ।
विव्याध युगपद्व्यग्रस्तयोर्वाहानसूदयत् ॥ ४-६५-३४ (३११५४)
तौ हताश्वौ तु विद्धाङ्गौ धृतराष्ट्रात्मजावुभौ ।

अभिपत्य रथैरन्यैरपनीतौ पदानुगैः ॥ ४-६५-३५ (३११५५)
व्यद्रावयदशेषांश्च धृतराष्ट्रसुतांस्तदा ।
विद्राव्य च रणे पार्थो रणभूमिं व्यराजयत् ॥ ४-६५-३६ (३११५६)
किरीटमाली कौन्तेयो लब्धलक्षः प्रतापवान् ।
पातयन्नुत्तमाङ्गानि बाहूंश्च परिघोपमान् ॥ ४-६५-३७ (३११५७)
अशेरत महावीराः शतशो रुक्ममालिनः ॥ ४-६५-३८ (३११५८)
कमलदिनकरेन्दुसन्निभैः सितदशनैः सुमुखाक्षिनासिकैः ।
रुचिरमकरकुण्डलैर्मही पुरुषशिरोभिरथास्तृता बभौ ॥ ४-६५-३९ (३११५९)
सुनसं चारुदीप्ताश्वं क्लृप्तश्मश्रु स्वलंकृतम् ।
अदृश्यत शिरश्छिन्नमनेकं हेमकुण्डलम् ॥ ४-६५-४० (३११६०)
एवं तत्प्रहतं सैन्यं समन्तात्प्रद्रुतं भयात् ॥ ४-६५-४१ (३११६१)
अथ दुर्योधनः कर्णः सौबलः शकुनिस्तदा ।
द्रोणश्च द्रोणपुत्रश्च कृपश्चातिरथो रणे ॥ ४-६५-४२ (३११६२)
सहिता विजयं तत्र योधयन्तो महारथाः ।
विष्फारयन्तश्चापानि बलवन्ति महाबलाः ॥ ४-६५-४३ (३११६३)
ततः कीर्णपताकेन रथेनादित्यवर्चसा ।
पुनरावृत्य मार्गस्थं ददृशुर्वानरध्वजम् ॥ ४-६५-४४ (३११६४)
ते महास्त्रैर्महेष्वासाः परिवार्य धनञ्जयम् ।
अभ्यवर्षन्सुसंक्रुद्धा महामेघा इवाचलम् ॥ ४-६५-४५ (३११६५)
शरौघान्सम्यगस्यन्तो जीमूता इव शारदाः ।
युद्धे तस्थुर्महावीर्याः प्रतपन्तः किरीटिनम् ॥ ४-६५-४६ (३११६६)
इषुभिर्बहुभिस्तूर्णं निशितैर्लोमवापिभिः ।
अदूरात्प्रत्यवस्थाय पाण्डवं समयोधयन् ॥ ४-६५-४७ (३११६७)
ततः प्रहस्य बीभत्सुस्तमैन्द्रं पञ्चवार्षिकम् ।
अस्त्रमादित्यसंकाशं गाण्डीवे समयोजयत् ॥ ४-६५-४८ (३११६८)
नाक्षणां न च चक्राणां न रथानां न वाजिनाम् ।
अङ्गुलाद्व्यङ्गुलाद्वापि विवृतं प्रत्यदृश्यत ॥ ४-६५-४९ (३११६९)
यथा रश्मिभिरादित्यो वृणुते सर्वतो दिशम् ।
एवं किरीटिना मुक्तं सर्वं प्राच्छादयञ्जगत् ॥ ४-६५-५० (३११७०)
यथा बलाहके विद्युत्पावको वा शिलोच्चये ।
तथा गाण्डीवमभवच्चक्राभुधमिवाततम् ॥ ४-६५-५१ (३११७१)
यथा वर्षति पर्जन्यो विद्युत्पतति पर्वते ।
विस्फूर्जिता दिशः सर्वा ज्वलद्गाण्डीवमावृणोत् ॥ ४-६५-५२ (३११७२)
त्रस्ताश्च रथिनःक सर्वे चैन्द्रमस्त्रं विकुर्वति ।
सर्वे शान्तिपरा योधाः स्वचित्तं नाभिजज्ञिरे ।

सहिता द्रोणभीष्माभ्यां प्रमोहगतचेतनाः ॥ ४-६५-५३ (३११७३)
तानि सर्वाणि सैन्यानि भग्नानि भरतर्षभ ।
प्राद्रवन्त दिशः सर्वा भयाद्वै सव्यसाचिनः ॥ ॥ ४-६५-५४ (३११७४)

इति श्रीमन्महाभारते विराटपर्वणि गोग्रहणपर्वणि
पञ्चषष्टितमोऽध्यायः ॥

---

विरतपर्व-अध्यय०६६
॥ श्रीः ॥
४.६६. अध्यायः ६६

Mahabharata - Virata Parva - Chapter Topics
अर्जुनेन भीतमुत्तरंप्रति समाश्वासनपूर्वकं दुर्योधनंप्रति
रथयापनचोदना ॥१.।तथा स्वबाणाभिघातासहनेन पलायमानं
तंप्रति सोपहासमाह्वानम् ।२ ॥

Mahabharata - Virata Parva - Chapter Text

४-६६-० (३११७५)
अर्जुन उवाच। ४-६६-०क्ष् (३२५३)
दक्षिणामेव तु दिशं हयानुत्तर वाहय ।
पुरा सार्थी भवत्येषामयं शब्दोऽत्र तिष्ठताम् ॥ ४-६६-१ (३११७६)
अश्वत्थाम्नः प्रतिरथं प्राचीमुद्याहि सारथे ।
अचिराद्द्रष्टुमिच्छामि गुरुपुत्रं यशस्विनम् ॥ ४-६६-२ (३११७७)
वैशंपायन उवाच। ४-६६-३क्ष् (३२५४)
मोहयित्वा तु तान्सर्वान्धनुर्घोषेण पाण्डवः ।
प्रसव्यं चैवमावृत्य क्रोशार्धं प्राद्रवत्तदा ॥ ४-६६-३ (३११७८)
यथा सततगो वायुः सुपर्णश्चापि शीघ्रगः ।
तथा पार्थरथः शीघ्रमाकाशे पर्यवर्तत ॥ ४-६६-४ (३११७९)
मुहूर्तोपरते शब्दे प्रतियाते धनञ्जये ।
हस्त्यश्वरथपादातं पुरस्कृत्य महारथाः ॥ ४-६६-५ (३११८०)
द्रोणभीष्ममुखाः सर्वे सैन्यानां जघने ययुः ।
यत्ताः पार्थमपश्यन्तः सहिताः शरविक्षताः ॥ ४-६६-६ (३११८१)
सैनिका ऊचुः । ४-६६-७क्ष् (३२५५)
दिष्ट्या दुर्योधनो मुक्तः सैन्यं भूयिष्ठमागतम् ।
क्रोशमात्रमतिक्रम्य बलमन्वानयामहे ।
यात यत्र वनं गुल्मं नदीमन्वश्मकां प्रति ॥ ४-६६-७ (३११८२)

वैशंपायन उवाच। ४-६६-८क्ष् (३२५६)
अथ दुर्योधनो दृष्ट्वा भग्नं स्वं बलमाहवे ।
अमृष्यमाणः क्रोधेन प्रतिमार्गन्धनञ्जयम् ॥ ४-६६-८ (३११८३)
न्यवर्तत कुरुश्रेष्ठ स्वेनानीकेन संवृतः ।
वार्यमाणो दुराधर्षैर्भीष्मद्रोणकृपैर्भृशम् ॥ ४-६६-९ (३११८४)
ततोऽर्जुनश्चित्रमुदारवेगं समीक्ष्य गाण्डीवमुवाच वाक्यम् ।
भोगीन्द्रकल्पं भुवनेषु रूढमभेद्यमच्छेद्यमदाह्यमाजौ
॥ ४-६६-१० (३११८५)
इदं त्विदानीमनयं कुरूणां शिवं धनुः शत्रुनिबर्हणं च ।
अत्याशुगं वेगवदाशुकर्तृ अवारणीयं महते रणाय ॥ ४-६६-११ (३११८६)
प्रदारणं शत्रुवरूथिनीनामनीकजित्संयति वज्रकल्पम् ।
वैधव्यदं शत्रुनितम्बिनीनां मुखप्रदं कौरववंशजानाम्
॥ ४-६६-१२ (३११८७)
प्रयाहि यत्रैष सुयोधनो हि तं पातयिष्यामि शरैः सुतीक्ष्णैः ।
आचार्यपुत्रं च सुयोधनं च पितामहं सूतसुतं च सङ्ख्ये ।
द्रोणं कृपं चैव निवार्य सर्वाञ्शिरो हरिष्यामि सुयोधनस्य ॥
४-६६-१३ (३११८८)
वैशंपायन उवाच। ४-६६-१४क्ष् (३२५७)
तदुत्तरश्चित्रमुदारवेगं धनुश्च दृष्ट्वा निशिताञ्शरांश्च ।
भीतोऽब्रवीदर्जुनमाजिमध्ये नाहं तवाश्वान्विषहे नियन्तुम् ॥ ४-६६-१४
(३११८९)
तमब्रवीन्मात्स्यसुतं प्रहस्य गाण्डीवधन्वा द्विषतां निहन्ता ।
मया सहायेन कुतो भयं ते प्रेह्युत्तराश्वानुपमन्त्रयस्व ॥ ४-६६-१५ (३११९०)
आश्वासितस्तेन धनञ्जयेन वैराटिरश्वानतुदञ्जवेन ।
विष्फारयंस्तद्धनुरुग्रवेगं युयुत्समानः पुनरेव जिष्णुः ॥ ४-६६-१६
(३११९१)
गाण्डीवशब्देन तु तत्रतत्र भूमौ निषेदुर्बहवोऽतिवेलम् ।
शङ्खस्य शब्देन तु वानरस्य शब्देन ते योधवराः समन्तात्
॥ ४-६६-१७ (३११९२)
अर्जुन उवाच। ४-६६-१८क्ष् (३२५८)
एषोऽतिमानी धृतराष्ट्रपुत्रः सेनामुखे सर्वसमृद्धतेजाः ।
पराजयं नित्यममृष्यमाणो निवर्तते युद्धमनाः पुरस्तात् ॥ ४-६६-१८
(३११९३)
तमेव याहि प्रसमीक्ष्य युक्तः सुयोधनं तत्र सहानुजं च ॥
४-६६-१९ (३११९४)
वैशंपायन उवाच। ४-६६-२०क्ष् (३२५९)

तमापतन्तं प्रसमीक्ष्य सर्वे कुरुप्रवीराः सहसाऽभ्यगच्छन् ।
प्रहस्य वीरः स तु तानतीत्य दुर्योधने द्वौ निचखान बाणौ
॥ ४-६६-२० (३११९५)
तेनार्दितो नाग इव प्रभिन्नः पार्थेन विद्धो धृतराष्ट्रपुत्रः ।
युयुत्समानोऽतिरथेन सङ्ख्ये स्वयं विगृह्यार्जुनमाससाद ॥ ४-६६-२१
(३११९६)
स भीमधन्वानमुदग्रवेगो धनञ्जयं शत्रुशतैरजेयम् ।
आकर्णपूर्णायतचोदितेन भल्लेन विव्याध ललाटमध्ये ॥ ४-६६-२२ (३११९७)
स तेन बाणेन समर्पितेन जाम्बूनदाभेन सुसंहितेन ।
रराज पार्थो रुधिरं क्षरन्वै यथैकरश्मिर्भगवान्दिवार्कः
॥ ४-६६-२३ (३११९८)
अथास्य बाणेन विदारितस्य प्रादुर्वभूवास्रमजस्रमुष्णम् ।
सा तस्य जाम्बूनदपुष्पचित्रा मालेव धाराऽभिविराजते स्म ॥ ४-६६-२४
(३११९९)
स तेन बाणाभिहतस्तरस्वी दुयोधनेनोद्धतमन्युवेगः ।
शरानुपादाय विषाग्निकल्पान्विव्याध राजानमदीनसत्वः ॥ ४-६६-२५ (३१२००)
दुर्योधनश्चापि तमुग्रतेजाः पार्थश्च दुर्योधनमेकवीरः ।
अन्योन्यमाजौ पुरुषप्रवीरौ सम समाजघ्नतुराजमीढौ ॥ ४-६६-२६ (३१२०१)
ततः प्रभिन्नेन महागजेन महीधराभेन पुनर्विकर्णः ।
रथैश्चतुर्भिर्गजपादरक्षैः कुन्तीसुतं पाण्डवमभ्यधावत्
॥ ४-६६-२७ (३१२०२)
तमापतन्तं त्वरितं गजेन्द्रं धनञ्जयः कुम्भललाटमध्ये ।
आकर्णपूर्णेन दृढायसेन बाणेन विव्याध भृशं तु वीरः
॥ ४-६६-२८ (३१२०३)
पार्थेन सृष्टः स तु गृध्रपत्रो ह्यापुङ्खदेशं प्रविवेश नागम् ।
विदार्य शैलप्रवरप्रकाशं यथाऽशनिः पर्वतमिन्द्रसृष्टः
॥ ४-६६-२९ (३१२०४)
शरप्रतप्तः स तु नागराजः प्रवेपिताङ्गो व्यथितान्तरात्मा ।
संसीदमानो निपपात भूमौ वज्राहतं शृङ्गमिवाचलस्य ॥ ४-६६-३०
(३१२०५)
निपातिते दन्तिवरे पृथिव्यां त्रासाद्विकर्णः सहसाऽवतीर्य ।
तूर्णं पदान्यष्टशतानि गत्वा विविंशतेः स्यन्दनमारुरोह ॥ ४-६६-३१
(३१२०६)
निहत्य नागं तु शरेण तेन वज्रोपमेनाद्रिवरप्रकाशम् ।
तथाविधेनैव शरेण पार्थो दुर्योधनं वक्षसि निर्बिभेद
॥ ४-६६-३२ (३१२०७)

हते गजे राजनि चैव भिन्ने भग्ने विकर्णे च सपादरक्षे ।
गाण्डीवमुक्तैर्विशिखैः प्रभिन्नास्ते योधमुख्याः सहसा प्रजग्मुः
॥ ४-६६-३३ (३१२०८)
दृष्ट्वैव बाणेन हतं च नागं योधांश्च सर्वान्नृपतिर्निरीक्ष्य ।
रथं समावृत्य कुरग्नवीरो रणात्प्रदुद्राव यतो न पार्थः
॥ ४-६६-३४ (३१२०९)
तं भीतरूपं त्वरितं व्रजन्तं दुर्योधनं शत्रुगणावमर्दी ।
अन्वाह्वयद्योद्धुमनाः किरीटी बाणाभिविद्धं रुधिरं वमन्तम् ॥ ४-६६-३५
(३१२१०)
तस्मिन्महेष्वासवरेऽतिविद्धे धनञ्जयेनाप्रतिमेन युद्धे ।
सर्वाणि सैन्यानि भयार्दितानि त्रासं ययुः पार्थमुदीक्ष्य तानि
॥ ४-६६-३६ (३१२११)
ततस्तु ते शान्तिपराश्च सर्वे दृष्ट्वाऽर्जुनं नागमिव प्रभिन्नम् ।
उच्चैर्नदन्तं बलमत्तमाजौ मध्ये स्थितं सिंहमिवर्षभाणाम्
॥ ४-६६-३७ (३१२१२)
गाण्डीवशब्देन तु पाण्डवस्य योधा निपेतुः सहसा रथेभ्यः ।
भयार्दिताः पार्थशराभितप्ताः सिंहाभिपन्ना इव वारणेन्द्राः
॥ ४-६६-३८ (३१२१३)
संरक्तनेत्रः पुनरिन्द्रकर्मा वैकर्तनं द्वादशभिः पृषत्कैः ।
वित्रास्य तेषां द्रवतां समैक्षद्दुःशासनं चैकरथेन पार्थः
॥ ४-६६-३९ (३१२१४)
कर्णोऽब्रवीत्पार्थशराभितप्तो दुर्योधनं दुष्प्रसहं च दृष्ट्वा ।
दृष्टोऽर्जुनोऽयं प्रतियाम शीघ्रं श्रेयो विधास्याम इतो गतेन
॥ ४-६६-४० (३१२१५)
मन्ये त्वया तात कृतं च कार्यं यदर्जुनोऽस्माभिरिहाद्य दृष्टः ।
भूयो वनं गच्छतु सव्यसाची पश्यामि पूर्णं समयं न तेषाम्
॥ ४-६६-४१ (३१२१६)
वैशंपायन उवाच। ४-६६-४२क्ष् (३२६०)
शरार्दितास्ते युधि पाण्डवेन प्रससुरन्योन्यमथाह्वयन्तः ।
कर्णोऽब्रवीदापतत्येष जिष्णुर्दुर्योधनं संपरिवार्य यामः
॥ ४-६६-४२ (३१२१७)
सर्वास्त्रविद्वारणयूथपाभः काले प्रहर्ता युधि शात्रवाणाम् ।
अयं च पार्थः पुनरागतो नो मूलं च रक्ष्यं भरतर्षभाणाम्
॥ ४-६६-४३ (३१२१८)
समीक्ष्य पार्थं तरसाऽऽपतन्तं दुर्योधनः कालमिवात्तशस्त्रम् ।
भयार्तरूपः शरणं प्रपेदे द्रोणं च कर्णं च कृपं च भीष्मम्

॥ ४-६६-४४ (३१२१९)
तं भीतरूपं शरणं व्रजन्तं दुर्योधनं शत्रुसहो निषङ्गी ।
इत्यब्रवीत्प्रीतमनाः किरीटी बाणाभितप्तं रुधिरं वमन्तम् ॥ ४-६६-४५ (३१२२०)
विहाय कीर्तिं च यशश्च लोके युद्धात्परावृत्य पलायसे किम् ।
न नन्दयिष्यन्ति तवाहतानि तूर्याणि युद्धादवरोपितस्य ॥ ४-६६-४६ (३१२२१)
न भोक्ष्यसे सोऽद्य महीं समग्रां यानानि वस्त्राण्यथ भोजनानि ।
कल्याणगन्धीनि च चन्दनानि युद्धात्परावृत्य तु भोक्ष्यसे किम् ।
सुवर्णमाल्यानि च कुण्डलानि हारांश्च वैडूर्यकृतोपधानान् ॥
४-६६-४७ (३१२२२)
च्युतरा युद्धान्न तु शङ्खशब्दास्तथा भविष्यन्ति तवाद्य पाप ।
न भोगहेतोर्वरचन्दनं च स्त्रियश्च मुख्या मधुरप्रलापाः ।
युद्धात्प्रयातस्य नरेन्द्रसूनो परे च लोके फलिता न चेह ॥
४-६६-४८ (३१२२३)
युधिष्ठिरस्यास्मि निदेशकारी पार्थस्तृतीयो युधि च स्थिरोस्मि ।
तदर्थमावृत्य मुखं प्रयच्छनरेन्द्रवृत्तं स्मर धार्तराष्ट्रः
॥ ४-६६-४९ (३१२२४)
मोघं तवैतद्भुवि नामधेयं दुर्योधनेतीह कृतं पुरस्तात् ।
दुर्योधनस्त्वं प्रथितोसि नाम्ना सुयोधनः सन्निकृतिप्रधानः ।
४-६६-५० (३१२२५)
न ते पुरस्तादथ पृष्ठतो वा पश्यामि दुर्योधन रक्षितारम् ।
परीप्स युद्धेन कुरुप्रवीर प्राणान्मया बाणबलाभितप्तान् ॥ ॥ ४-६६-५१
(३१२२६)

इति श्रीमन्महाभारते विराटपर्वणि गोग्रहणपर्वणि
षट्षष्टितमोऽध्यायः ॥
Mahabharata - Virata Parva - Chapter Footnotes

४-६६-५० सुयोधनस्त्वं निकृतिप्रधान इति खो पाठः ॥
५० ॥

---

विरतपर्व-अध्यय०६७
॥ श्रीः ॥
४.६७. अध्यायः ६७

Mahabharata - Virata Parva - Chapter Topics
सोपहासमर्जुनसमाहूतेन दुर्योधनेन पुनः परावृत्याभियानम् ॥ १ ॥
भीष्मादिभिस्तद्रक्षणाय परितोऽवस्थानम् ॥ २ ॥

अर्जुनेन तैः सह चिरं प्रयुध्य पश्चात्संमोहनास्त्रप्रयोगः ॥ ३ ॥
उत्तरेणार्जुनचोदनयाऽस्त्रमोहितानां द्रोणादीनां वस्त्रापहरणम् ॥ ४ ॥
अर्जुनेन बाणैर्भीष्माद्यभिवादनम् ॥ ५ ॥

Mahabharata - Virata Parva - Chapter Text

वैशंपायन उवाच ।
आहूयमानस्तु स तेन सङ्ख्ये महात्मना वै धृ
निवर्तितश्चापि गिराङ्कुशेन गजो मदोन्मत्त इवाङ्कुशेन ॥ ४-६७-१ (३१२२७)
सोमृष्यमाणो वचसाऽभिमृष्टो महारथेनातिरथस्तरस्वी ।
ततः स पर्याववृते रथेन भोगी यथा पादतलाभिमृष्टः
॥ ४-६७-२ (३१२२८)
ततो दुर्योधनः क्रुद्धो विक्षिपन्धनुरुत्तमम् ।
धृतिं कृत्वा सुविपुलां प्रत्युवाच पनञ्जयम् ॥ ४-६७-३ (३१२२९)
सोहमिन्द्रादभिक्रुद्धान्न बिभेमीह भारत ।
भुक्त्वा सुविपुलं राज्यं वित्तानि च सुखानि च ।
किमर्थं युद्धसमये पलापिष्ये नरोत्तम ॥ ४-६७-४ (३१२३०)
एवमुक्त्वा महाराजः प्रत्ययुध्यत भारत ।
संन्यवर्तत शीघ्राश्वस्तोत्रार्दित इव द्विपः ॥ ४-६७-५ (३१२३१)
आक्रान्तभोगस्तेजस्वी धनुर्वक्र इवोरगः ।
रथं रथेन संगम्य योधयामास पाण्डवम् ॥ ४-६७-६ (३१२३२)
तं प्रेक्ष्य कर्णः परिवर्तमानं निवृत्य संस्तम्भितसर्वगात्रम् ।
दुर्योधनं दक्षिणतोऽन्वरक्षत्पार्थान्महाबाहुरधिज्यधन्वा
॥ ४-६७-७ (३१२३३)
गान्धारराजः शकुनिर्निवृत्य द्रौणिश्च सर्वास्त्रविदां वरिष्ठः ।
ररक्षतुः कौरवमभ्युपेत्य पार्थान्नृवीरौ युधि सव्यतश्च
॥ ४-६७-८ (३१२३४)
भीष्मस्ततः शान्तनवो विवृत्य हिरण्यकक्ष्यांस्त्वरया तुरंगान् ।
दुर्योधनं पश्चिमतो ररक्ष पार्थान्महाबाहुरधिज्यधन्वा ॥ ४-६७-९
(३१२३५)
द्रोणः कृपश्चैव विविंशतिश्च दुःशासनश्चैव निवृत्य शीघ्रम् ।
सर्वे पुरस्तात्प्रणिधाय बाणान्दुर्योधनार्थं त्वरिताऽभ्युपेयुः
॥ ४-६७-१० (३१२३६)
सर्वाण्यनीकानि निवर्तितानि संप्रेक्ष्य पूर्णौघनिभानि पार्थः ।
हंसो महामेघमिवापतन्तं धनञ्जयः प्रत्यपतत्तरस्वी ॥ ४-६७-११ (३१२३७)
ते सर्वतः संपरिवार्य पार्थमस्त्राणि दिव्यानि समाददानाः ।

ववर्षुरभ्येत्य शरैः समग्रैर्मेघा यथा भूधरमम्बुवेगैः
॥ ४-६७-१२ (३१२३८)
ततोऽस्रमस्त्रेण निवार्य तेषां गाण्डीवधन्वा कुरुपुङ्गवानाम् ।
संमोहनं शत्रुसहोऽन्यदस्त्रं प्रादुश्चकारैन्द्रमवारणीयम्
॥ ४-६७-१३ (३१२३९)
ततो दिशश्चानुदिशो निवार्य शरैः सुघोरैर्निशितैः सुपुङ्खैः ।
गाण्डीवशब्देन मनांसि तेषां महाबलं प्रवथयांचकार ॥ ४-६७-१४ (३१२४०)
ततः पुनर्भीमरवं निगृह्य दोर्भ्यां महाशङ्खमुदारघोषम् ।
व्यनादयन्संप्रदिशो दिशः खं भुवं च पार्थो द्विषतां निहन्ता
॥ ४-६७-१५ (३१२४१)
संमोहनास्त्रप्रभवैः शरौघैर्विनष्टदेहाश्च निपत्य योधाः ।
निःसत्ववेगाः कुरुराजसैन्याः कुडयोपमास्तस्थुरनीहमानाः ॥ ४-६७-१६ (३१२४२)
ते शङ्खनादेन कुरुप्रवीराः संमोहिताः पार्थसमीरितेन ।
उत्सृज्य चापानि दुरासदानि सर्वे तदा मोहपरा बभूवुः ॥ ४-६७-१७ (३१२४३)
ततो विसंज्ञानि परेषु पार्थः संस्मृत्य संदेशमथोत्तरायाः ।
निर्याहि वाहादिति मात्स्यपुत्रमुवाच यावत्कुरवो विसंज्ञाः ॥ ४-६७-१८ (३१२४४)
आचार्यशारद्वतयोः सुशुक्ले कर्णस्य पीतं रुचिरं च वस्त्रम् ।
द्रौणेश्च राज्ञश्च तथैव नीले वस्त्रे समादत्स्व नरप्रवीर
॥ ४-६७-१९ (३१२४५)
भीष्मस्य संज्ञां तु तथैव मन्ये जानाति मेऽस्त्रप्रतिघातमेषः ।
एतस्य वाहान्कुरु सव्यतस्त्वमेवं प्रयातव्यममूढसंज्ञैः ॥ ४-६७-२०
(३१२४६)
रश्मीन्समुत्सृज्य ततो महात्मा रथादवप्लुत्य विराटपुत्रः ।
वस्त्राण्युपादाय महारथानां नानाविधान्यद्भुतवर्णकानि ॥ ४-६७-२१ (३१२४७)
महान्ति चीनांशुदुकूलकानि पट्टांशुकानि विविधानि मनोज्ञकानि ।
हारांश्च राज्ञां मणिभूषणानि सुवर्णनिष्काभरणानि मारिष
॥ ४-६७-२२ (३१२४८)
माणिक्यबाह्वङ्गदकङ्कणानि अन्यानि राज्ञां मणिभूषणानि ।
वस्त्राण्युपादाय महारथानां तूर्णं पुनः खं रथमारुरोह ॥ ४-६७-२३
(३१२४९)
राज्ञश्च सर्वान्कृतसंनिकाशान्संमोहनास्त्रेण विसंज्ञकल्पान् ।
नासाग्रविन्यस्तकराङ्गुलीकः पार्थो जहास स्मयमानचेताः ॥ ४-६७-२४ (३१२५०)
ततोऽन्वशात्तांश्चतुरः सदश्वान्पुत्रो विराटस्य हिरण्यकक्ष्यान् ।
ते तद्व्यतीयुर्द्विषतामनीकं श्वेता वहन्तोऽर्जुनमाजिमध्यात्
॥ ४-६७-२५ (३१२५१)
तथा प्रयान्तं पुरुषप्रवीरं भीष्मः शरैरभ्यहनत्तरस्वी ।

स चापि भीष्मस्य हयान्निहत्य विव्याध भीष्मं दशभिः पृषत्कैः
॥ ४-६७-२६ (३१२५२)
ततोऽर्जुनो भीष्ममपास्य युद्धे विद्धवाऽस्य यन्तारमरिष्टधन्वा ।
तस्थौ विमुक्तो रथवृन्दमध्याद्राहुं विदार्येव सहस्ररश्मिः
॥ ४-६७-२७ (३१२५३)
लब्ध्वा तु संज्ञां पुरुषप्रवीरः पार्थं निरीक्ष्याथ महेन्द्रकल्पम् ।
रणात्प्रमुक्तं पुरुषप्रवीरं स धार्तराष्ट्रस्त्वरितो बभाषे
॥ ४-६७-२८ (३१२५४)
अयं कथंचिद्भवतो विमुक्तस्तं वै प्रबध्नीत यथा न मुच्येत् ।
तमब्रवीच्छान्तनवः प्रहस्य क्व ते गता बुद्धिरभूत्क्व वीर्यम्
॥ ४-६७-२९ (३१२५५)
शान्तिं परां प्राप्य यथा स्थितस्त्वमुत्सृज्य बाणांश्च धनुश्च चित्रम् ।
न त्वेव बीभत्सुरलं नृशंसं कर्तुं न पापेऽस्य मनो निविष्टम्
॥ ४-६७-३० (३१२५६)
जह्यान्न धर्मं त्रिदिवस्य हेतोः सर्वे तु तस्मान्न हता रणेऽस्मिन् ।
क्षिप्रं कुरून्याहि कुरुप्रवीर विजित्य गाश्च प्रतियातु पार्थः
॥ ४-६७-३१ (३१२५७)
संमोहनास्त्रप्रतिमोहिताः स्थ यूयं न जानीथ धनापहारम् ।
पश्यामि वस्त्राभरणानि राजन्विराटपुत्रेण समाहृतानि ॥ ४-६७-३२ (३१२५८)
नृपेषु सर्वेषु च मोहितेषु हन्तुं यदीच्छेत्स हनिष्यतीति ।
तदा तु धर्मात्मतया नृवीरो न चाहनद्वो बलभित्तनूजः ॥ ४-६७-३३
(३१२५९)
भाग्येन युष्मानवधीन्न पार्थः संधिं कुरूणामनुमन्यमानः ।
तद्यात यूयं सहसैनिकैस्तैर्हतावशिष्टैर्गजसाह्वयं पुरम्
॥ ४-६७-३४ (३१२६०)
वैशंपायन उवाच। ४-६७-३५क्ष् (३२६१)
दुर्योधनस्तस्य निशम्य वाक्यं पितामहस्यात्महितं प्रशस्य ।
अतीतकामो युधि सोऽत्यमर्षी राजा विनिश्वस्य बभूव तूष्णीम्
॥ ४-६७-३५ (३१२६१)
तद्भीष्मवाक्यं हि निशम्य सर्वे धनञ्जयाग्निं च विवर्धमानम् ।
निवर्तनायैव मतिं निदध्युर्दुर्योधनं तं परिरक्षमाणाः ॥ ४-६७-३६
(३१२६२)
तान्प्रस्थितान्प्रीतमनाः समर्थो धनञ्जयः सर्वकुरुप्रवीरः ।
आमन्त्र्य वीरोऽनुययौ मुहूर्तं गाण्डीवघोषेण विनद्य लोकम् ॥ ४-६७-३७
(३१२६३)
तेषामनीकानि निरीक्ष्य पार्थो विकीर्णयानध्वजकार्मुकाणि ।

गाण्डीवधन्वा प्रहसन्कुरूणां शङ्खं प्रदध्मौ बलवान्बलेन
॥ ४-६७-३८ (३१२६४)
ते शङ्खशब्दं तुमुलं निशम्य ध्वजस्य शब्दं च ततोऽन्तरिक्षे ।
गाण्डीवशब्देन मुहुर्मुहुस्ते भीता ययुः सर्वधनं विहाय ॥ ४-६७-३९ (३१२६५)
तानर्जुनो दूरतरं विभज्य धनं च सर्वं निखिलं निवर्त्य ।
आपृच्छ्य तान्दूरमनुप्रयात्वा धनञ्जयस्तत्र कुरून्महात्मा ।
गुरूंश्च सर्वानभिवाद्य बाणैर्न्यवर्ततोदग्रमनाः शरैः सह ॥
४-६७-४० (३१२६६)
पितामहं शान्तनवं महात्मा द्वाभ्यां शराभ्यामभिवाद्य वीरः ।
द्रोणं कृपं चैव कुरूंश्च मान्याञ्शरैश्च सर्वानभिवाद्य सङ्ख्ये ।
दुर्योधनस्योत्तमरत्नचित्रं चिच्छेद पार्थो मकुटं शरौघैः ॥
४-६७-४१ (३१२६७)
अराजवंशस्य किमर्थमेतन्नित्यं न धार्यं मकुटं त्वयेति ।
संपातितं भूमितले सरत्नं प्रीतस्तुतो मात्स्यसुतो बभूव ॥ ४-६७-४२ (३१२६८)
धनञ्जयं नागमिव प्रभिन्नं विजित्य शत्रून्परिवर्तमानम् ।
गास्ता विजित्याभिमुखं प्रयान्तं न शक्नुवन्तः कुरवः प्रयाताः
॥ ४-६७-४३ (३१२६९)
धनञ्जयं सिंहमिवात्तशस्त्रं गा वै विजित्याभिमुखं प्रयान्तम् ।
उदीक्षितुं पार्थिवास्ते न शेकुर्यथैव मध्याह्नगतं हि सूर्यम्
॥ ४-६७-४४ (३१२७०)
रक्तानि वासांसि च तानि गृह्य रणोत्कटो नाग इव प्रभिन्नः ।
जित्वा च वैराटिमुवाच पार्थः प्रहृष्टरूपो रथिनां वरिष्ठः
॥ ४-६७-४५ (३१२७१)
आवर्तयाश्वान्पशवो जितास्ते याताः परे प्रैहि पुरं प्रहृष्टः ।
उद्घुष्यतां ते विजयोऽद्य शीघ्रं गात्रं तु ते सेवतु माल्यगन्धः ।
माता तु ते नन्दतु बान्धवाश्च त्वामद्य दृष्ट्वा समुदीर्णहर्षम् ॥ ॥
४-६७-४६ (३१२७२)

इति श्रीमन्महाभारते विराटपर्वणि गोग्रहणपर्वणि सप्तषष्टितमोऽध्यायः ॥

Mahabharata - Virata Parva - Chapter Footnotes

४-६७-११ पूर्णौघनिभानि पूर्वनदीप्रवाहसदृशानि ॥
११ ॥
४-६७-१६ अनीहमानाः अचेष्टमानाः ॥
१६ ॥
४-६७-१८ यावद्विसंज्ञास्तावन्निर्याहीत्यध्याहारेण योजना ॥

१८ ॥
४-६७-१९ आदस्त्व गृहाण ॥
१९ ॥
४-६७-२० अमूढसंज्ञैः अस्माभिरिति शेषः ।सव्यतस्त्वमेवं हि धममाहुर्जितस्येति धो पाठः ॥
२० ॥
४-६७- २५ संनिकाशान् कृतं कृतकं प्रतिमादि निश्चेष्टतया तत्सदृशानित्यर्थः ॥
२५ ॥
४-६७-४५ हिमत्वा च वैराटिमुवाचेति पाठान्तरम् ॥
४५ ॥

---

विरतपर्व-अध्यय००
॥ श्रीः ॥
४.६८. अध्यायः

Mahabharata - Virata Parva - Chapter Topics
अर्जुनेनोत्तरंप्रति युधिष्ठिरादितत्वप्रकाशनप्रतिषेधनम् ॥ १ ॥
तथा श्मशानमेत्य शमीतरौ गाण्डिवादिनिधानपूर्वकं पुनर्बृहन्नलावेषपरिग्रहेण सारथ्यकरणम् ॥ २ ॥
उत्तरेणार्जुनचोदनया स्वजयोद्धोषणाय नगरंप्रति दूतप्रेषणम् ॥ ३ ॥

Mahabharata - Virata Parva - Chapter Text

४-६८-० (३१२७३)
वैशंपायन उवाच। ४-६८-०क्ष् (३२६२)
ततो विजित्य संग्रामे कुरुगोवृषभेक्षणः ।
समानयामास तदा विराटस्य धनं महत् ॥ ४-६८-१ (३१२७४)
मतषु च प्रभग्नेषु धार्तराष्ट्रेषु सर्वशः ।
वनान्निष्क्रम्य गहनाद्बहवः कुरुसैनिकाः ।
भयात्संत्रस्तमनसः समाजग्मुस्ततस्ततः ॥ ४-६८-२ (३१२७५)
मुक्तकेशाः प्रदृश्यन्ते स्थिताः प्राञ्जलयस्तदा ।
क्षुत्पिणसापरिश्रान्ता विदेशस्था विचेतसः ।
ऊचुः प्राञ्जलयः सर्वे पार्थ किं करवामहे ॥ ४-६८-३ (३१२७६)
प्राणानन्तर्मनोयातान्प्रयाचिष्यामहे वयम् ।
वयं चार्जुन ते दासा ह्यनुरक्ष्या ह्यनाथकाः ॥ ४-६८-४ (३१२७७)
अर्जुन उवाच। ४-६८-५क्ष् (३२६३)

अनाथान्दुःखितान्दीनान्कृशान्वृद्धान्पराजितान् ।
न्यस्तशस्त्रान्निराशांश्च नाहं हन्मि कृताञ्जलीन् ॥ ४-६८-५ (३१२७८)
भवन्तो यान्तु विस्रब्धा निर्भया अमृता यथा ।
मम पादरजोलक्ष्म्या जीवन्तु सुचिरं भुवि ॥ ४-६८-६ (३१२७९)
तस्य तामभयां वाचं श्रुत्वा योधाः समागताः ।
आयुः कीर्तियशोभिस्ते तमाशीर्भिरवर्धयन् ॥ ४-६८-७ (३१२८०)
ततो निवृत्ताः कुरवो यग्नाश्च दिवमास्थिताः ।
प्रयाताः सर्वतस्तत्र नमस्कृत्य धनञ्जयम् ॥ ४-६८-८ (३१२८१)
एवं दत्ताभयास्तेन ततो याताः कुरून्प्रति ॥ ४-६८-९ (३१२८२)
स कर्म कृत्वा परमार्यकर्मा निहत्य शत्रून्द्विषतां निहन्ता ।
यातो महामेघ इवातपान्ते विद्राव्य पार्थः कुरुसैन्यमेकः ॥ ४-६८-१० (३१२८३)
तं मात्स्यपुत्रं द्विषतां निहन्ता वचोऽब्रवीत्संपरिगृह्य राजन् ॥
४-६८-११ (३१२८४)
पितुः सकाशे तव तात सर्वे वसन्ति पार्था विदितं त्वयेति ।
तान्मास्म शंसीर्नगरं प्रविश्य भीतः प्रणश्येत्स च मत्स्यराजः
॥ ४-६८-१२ (३१२८५)
मया जिता सा ध्वजिनी कुरूणां मया हि गावो विजिता द्विषद्भ्यः ।
एवं तु कामं नगरं प्रविश्य त्वमात्मना कर्म कृतं ब्रवीहि
॥ ४-६८-१३ (३१२८६)
र उवाच । ४-६८-१४क्ष् (३२६४)
यत्ते कृतं कर्म न वारणीयं तत्कर्म कर्तुं मम नास्ति शक्तिः ।
न त्वां प्रवक्ष्यामि पितुः सकाशे यावन्न मां वक्ष्यसि सव्यसाचिन्
॥ ४-६८-१४ (३१२८७)
पायन उवाच। ४-६८-१५क्ष् (३२६५)
स शत्रुसेनां तरसा विजित्य आच्छिद्य सर्वं तु धनं कुरूणाम् ।
श्मशानमागम्य पुनः शमीं तामभ्येत्य तस्थौ शरविक्षताङ्गः
॥ ४-६८-१५ (३१२८८)
ततः स वह्निप्रतिमो महाकपिः सहैव भूतैर्दिवमुत्पपात ।
तथा च माया विहिता बभूव सा ध्वजं च सिंहं युयुजे रथे पुनः
॥ ४-६८-१६ (३१२८९)
निधाय तच्चायुधमाजिमर्दनः कुरूत्तमानामिषुधीन्ध्वजांस्तथा ।
प्रायात्स मात्स्यो नगरं प्रवेष्टुं किरीटिना सारथिना महात्मा ॥ ४-६८-१७
(३१२९०)
पार्थश्च कृत्वा परमार्यकर्म निहत्य शत्रून्द्विषतां निहन्ता ।
विधाय भूयश्च तथैव वेषं जग्राह रश्मीन्पुनरुत्तरस्य ।
बृहन्नलारूपमथो विधाय प्रायात्य मात्स्यो नगरं प्रवेष्टुम् ॥

४-६८-१८ (३१२९१)
वैशंपायन उवाच। ४-६८-१९क्ष् (३२६६)
ततो निवृत्ताः कुरवः प्रभग्नाः शममास्थिताः ।
परस्परमवेक्ष्यैव जग्मुस्ते हृतवाससः ॥ ४-६८-१९ (३१२९२)
पन्थानमुपसंगम्य फल्गुनो वाक्यमब्रवीत् ।
राजपुत्र प्रपद्यस्व धनानीमानि सर्वशः ।
गोकुलानि महाबाहो वीरगोपालकैः सह ॥ ४-६८-२० (३१२९३)
ततोऽपराह्ने यास्यामो विराटनगरं प्रति ।
आश्वास्य पाययित्वा च परिप्लाव्य च वाजिनः। ४-६८-२१ (३१२९४)
गच्छन्तु त्वरितं दूता गोपालाः प्रेषितास्त्वया ।
नगरे प्रियमाख्यातुं घोषयन्तु च ते जयम् ॥ ४-६८-२२ (३१२९५)
उत्तरस्त्वरमाणोऽथ दूतानाज्ञापयत्ततः ।
वचनादर्जुनस्यैव ह्याचक्षध्वं जयं मम ॥ ४-६८-२३ (३१२९६)
४-६८-२४ (३१२९७)
मया जिता सा ध्वजिनी कुरुणं
मया च गावो विजिता द्विषद्भ्यः ।
एवं तु कामं नगरं प्रविश्य
मयाऽऽत्मना कर्म कृतं ब्रवीत ॥

---

विरतपर्व-अध्यय०६९
॥ श्रीः ॥
४.६९. अध्यायः ६९

Mahabharata - Virata Parva - Chapter Topics
विराटेन युधिष्ठिरादिभिः सह सुशर्मादिजयानन्तरं पुसंप्रत्यागमनम्
॥ १.। तथा उत्तरस्य कुरुविजयाय सहबृहन्नलया गमनश्रवणेन
तद्रक्षणाय सेनाचोदना ॥ २ ॥
अत्रान्तरे विराटाय दूतैरुत्तरजनिवेदनम् ॥ ३ ॥

Mahabharata - Virata Parva - Chapter Text

४-६९-० (३१२९८)
वैशंपायन उवाच। ४-६९-०क्ष् (३२६७)
स विजित्य धनं चापि विराटो वाहिनीपतिः ।
प्राविशन्नगरं हृष्टश्चतुर्भिः सह पाण्डवैः ॥ ४-६९-१ (३१२९९)
जित्वा त्रिगर्तान्संग्रामे गाश्चैवानाय्य केवलाः ।
अशोभत महाराजः सह पार्थैः श्रिया वृतः ॥ ४-६९-२ (३१३००)

तमासनगत वीरं सुहृदां प्रीतिवर्धनम् ।
तपतस्थुः प्रकृतयः समन्ताद्ब्राह्मणैः सह ॥ ४-६९-३ (३१३०१)
सभाजितः सभासद्भिः प्रतिनन्द्य स मत्स्यराट् ।
विसर्जयामास तदा द्विजांश्च प्रकृतीस्तथा ॥ ४-६९-४ (३१३०२)
ततः स राजा मात्स्यानां विराटो वाहिनीपतिः ।
प्रविश्यान्तःपुरं रम्यं स्त्रीशतैरुपशोभितम् ।
उत्तरं तत्र नापश्यत्क्व यात इति चाब्रवीत् ॥ ४-६९-५ (३१३०३)
आचख्युस्तत्र संहृष्टाः स्त्रियः कन्याश्च वेश्मनि ।
अन्तःपुरचराश्चैव कुरुभिर्गोधनं हृतम् ॥ ४-६९-६ (३१३०४)
ताञ्जेतुमभिसंरब्ध एक एवातिसाहसात् ।
बृहन्नलासहायश्च निर्यातः पृथिवींजयः ॥ ४-६९-७ (३१३०५)
उपयातानतिरथान्द्रोणं शान्तनवं कृपम् ।
कर्णं दुर्योधनं चैव द्रोणपुत्रं च षड्रथान् ॥ ४-६९-८ (३१३०६)
ततो विराटः परमाभितप्तः
पुत्रं निशम्यैकरथेन यातम् ।
बृहन्नलासारथिमाजिमर्दनं
प्रोवाच सर्वानथ मन्त्रिमुख्यान् ॥ ४-६९-९ (३१३०७)
गवां शतसहस्राणि उभिभूय ममात्मजम् ।
कुरवः कालयन्ति स्म सर्वे युद्धविशारदाः ॥ ४-६९-१० (३१३०८)
तस्माद्गच्छतु मे योधा बलेन महता वृताः ।
उत्तरस्य परीप्सार्थं ये त्रिगर्तैरविक्षताः ॥ ४-६९-११ (३१३०९)
वैशंपायन उवाच। ४-६९-१२क्ष् (३२६८)
हयांश्च नागांश्च रथांश्च शीघ्रं
वादित्रसङ्घांश्च ततः प्रभूतान् ।
प्रस्थापयामास सुतस्य हेतो-
र्विचित्रचित्राभरणोपपन्नान् ॥ ४-६९-१२ (३१३१०)
एवं स राजा मात्स्यानां महानक्षोहिणीपतिः ।
व्यादिदेशाथ स क्षिप्रं वाहिनीं चतुरङ्गिणीम् ॥ ४-६९-१३ (३१३११)
कुमारमाशु जानीत यदि जीवति वा नवा ।
यस्य यन्ता गतः षण्डो मन्येऽहं स न जीवति ॥ ४-६९-१४ (३१३१२)
तमब्रवीद्धर्मसुतो विराट-
मार्तं विदित्वा कुरुभिः प्रतप्तम् ।
बृहन्नला सारथिश्चेन्नरेन्द्र
परे न नेष्यन्ति तवाद्य गाश्च ॥ ४-६९-१५ (३१३१३)
सर्वान्महीपान्सहितान्कुरूंश्च
तथैव देवासुरनागयक्षान् ।

अलं विजेतुं समरे सुतस्ते
अनुष्ठितः सारथिना हि तेन ॥ ४-६९-१६ (३१३१४)
सर्वथा कुरवश्चापि ये चान्ये वसुधाधिपाः ।
त्रिगर्तान्निर्जिताञ्श्रुत्वा न स्थास्यन्ति कथंचन ॥ ४-६९-१७ (३१३१५)
वैशंपायन उवाच। ४-६९-१८क्ष् (३२६९)
अथोत्तरेण प्रहिता दूतास्ते शीघ्रगामिनः ।
विराटनगरं प्राप्य जयं प्रावेदयंस्तदा ॥ ४-६९-१८ (३१३१६)
राजानं वृतमाचख्युर्मन्त्रिभिर्जयमुत्तमम् ।
पराजयं कुरूणां च उपायान्तं तथोत्तरम् ॥ ४-६९-१९ (३१३१७)
सर्वा विनिर्जिता गावः कुरवश्च पराजिताः ।
उत्तरः सह सूतेन कुशली च परंतपः ॥ ४-६९-२० (३१३१८)
कङ्क उवाच। ४-६९-२१क्ष् (३२७०)
दिष्ट्या ते निर्जिता गावः कुरवश्च पराजिताः ।
दिष्ट्या ते विजयी पुत्रः श्रूयते पार्थिवर्षभः ॥ ४-६९-२१ (३१३१९)
नाद्भुतं त्विह मन्येऽहं यत्ते पुत्रोऽजयत्कुरून् ।
ध्रुव एव जयस्तस्य यस्य यन्ता बृहन्नला ॥ ४-६९-२२ (३१३२०)
देवेन्द्रसारथिश्चैव मातलिः ख्यातविक्रमः ।
कृष्णस्य सारथिश्चैव न बृहन्नलया समौ ॥ ४-६९-२३ (३१३२१)
वैशंपायन उवाच। ४-६९-२४क्ष् (३२७१)
ततो विराटो नृपतिः संप्रहृष्टतनूरुह ।
श्रुत्वा तु विजयं तस्य कुमारस्यामितौजसः ।
संतोषयित्वा दूतांस्तान्धनरत्नैश्च सर्वशः ॥ ४-६९-२४ (३१३२२)
गते त्वनुजने तस्मिन्दूतवाक्यं निशम्य च ।
उत्तरस्य जयात्प्रीतो विराटः प्रत्यभाषत ॥ ४-६९-२५ (३१३२३)
राजमार्गाः क्रियन्तां वै पताकाभिरलंकृताः ।
पुष्पोपहारैरर्च्यतां देवताश्चापि सर्वशः ॥ ४-६९-२६ (३१३२४)
कुमारा योधमुख्याश्च गणिकाश्च स्वलंकृताः ।
वादित्राणि च सर्वाणि प्रत्युद्यान्तु सुतं मम ॥ ४-६९-२७ (३१३२५)
भवन्तु ते लब्धजये सुते मे
पौराश्च मर्त्याश्च परे च नार्यः ।
ते शुक्लवस्त्राः प्रभवन्तु मार्गे
सुगन्धमाल्याभरणाश्च नार्यः ॥ ४-६९-२८ (३१३२६)
भजन्तु सर्वा गणिकाः सुतं मे
नार्यश्च कन्याः सहसैनिकाश्च ।
स्वलंकृतास्ताः सुभगाः सुवेषाः
पुत्रस्य पन्थानमनुव्रजन्तु ॥ ४-६९-२९ (३१३२७)

घण्टापणवकाः शीघ्रं मत्तमारुह्य कुञ्जरम् ।
शृङ्गाटकेषु सर्वेषु समाख्यान्तु जयं मम् ॥ ४-६९-३० (३१३२८)
उत्तरा च कुमारीभिर्बह्वाभरणभूषिता ।
सखीं विजितसंग्रामां प्रत्युद्यातु बृहन्नलाम् ॥ ४-६९-३१ (३१३२९)
श्रुत्वा तु वचनं तस्य पार्थिवस्य महात्मन ।
तथैव चक्रुः संहृष्टाः पौराः स्वस्तिकपाणयः ॥ ४-६९-३२ (३१३३०)
मूताश्च सर्वे सहमागधाश्च
हृष्टा विराटस्य पुरे जनौघाः ।
भेर्यश्च तूर्याणि च वारिजाश्च
वेपैः परार्ध्यैः प्रमदाजनाश्च ॥ ४-६९-३३ (३१३३१)
वन्दिप्रवादाः पणवादिकाश्च
तथैव वाद्यानि च वंशशब्दाः ।
कांस्यं सतालं मधुरं च गीत-
मादाय नार्यो नगरान्निरीयुः ॥ ४-६९-३४ (३१३३२)
प्रत्युद्ययुः पुत्रमनन्तवीर्यं
ते ब्राह्मणाः शान्तिपराः प्रधानाः ।
स्वाध्यायवेदाध्ययनक्रमज्ञाः
स्वस्तिक्रियागीतजपप्रधानाः ॥ ॥ ४-६९-३५ (३१३३३)

इति श्रीमन्महाभारते विराटपर्वणि गोग्रहणपर्वणि
एकोनसप्ततितमोऽध्यायः ॥

---

विरतपर्व-अध्यय०७०
॥ श्रीः ॥
४.७०. अध्यायः ७०

Mahabharata - Virata Parva - Chapter Topics
उत्तरजयश्रवणहृष्टेन विराटेन युधिष्ठिरेण सह द्यूतदेवनम् ॥ १ ॥
विराटेनोत्तरप्रशंसने कङ्केन बृहन्नलया कुरुपराजयकथनम् ॥ २ ॥
ततो रुष्टेन विराटेन कङ्कस्य कर्णमूलेऽक्षेणाभिहननम् ॥ ३ ॥
सैरन्ध्र्या क्षतात्प्रस्रवतो रक्तस्य निजोत्तरीयेण ग्रहणम् ॥ ४ ॥
तथा विराटेन तद्ग्रहणकारणप्रश्ने तत्कथनम् ॥ ५ ॥

Mahabharata - Virata Parva - Chapter Text

४-७०-० (३१३३४)
वैशंपायन उवाच । ४-७०-०क्ष् (३२७२)

प्रस्थाप्य सेनां कन्याश्च गणिकाश्च स्वलंकृताः ।
मत्स्यराजो महाराजः प्रहृष्ट इदमब्रवीत् ॥ ४-७०-१ (३१३३५)
त्रिगर्ताः कुरवः सर्वे संग्रामे निर्जिता मया ।
प्रविश्यान्तःपुरं हृष्टा द्यूतं दीव्याम ब्राह्मण ॥ ४-७०-२ (३१३३६)
अक्षानाहर सैरन्ध्रि आसनं चोपकल्पय ।
आदाय व्यजनं त्वं च पार्श्वतोऽनन्तरा भव ॥ ४-७०-३ (३१३३७)
तं तथावादिनं दृष्ट्वा पाण्डवः प्रत्यभापत ।
न देवितव्यं हृष्टेन कितवेनेति नः श्रुतम् ॥ ४-७०-४ (३१३३८)
न त्वामद्य मुदा युक्तमहं देवितुमुत्सहे ।
प्रियं तु ते चिकीर्पामि वर्ततां यदि रोचते ।
द्यूतं कर्तुं न वाञ्छामि नरेन्द्र जनसंसदि ॥ ४-७०-५ (३१३३९)
विराट उवाच। ४-७०-६क्ष् (३२७३)
स्त्रियो गावो हिरण्यं च यच्चान्यद्वसु किंचन ।
न मे किंचित्त्वया कार्यमन्तरेणापि देवितम् ॥ ४-७०-६ (३१३४०)
कङ्क उवाच। ४-७०-७क्ष् (३२७४)
किं ते द्यूतेन राजेन्द्र बहुदोषेण मानद ।
देवने बहवो दोषास्तस्मात्तत्परिवर्जयेत् ॥ ४-७०-७ (३१३४१)
श्रुतो वा यदि वा दृष्टो धर्मराजो युधिष्ठिरः ।
स राज्यं धनमक्षय्यं पणमेकममन्यत ॥ ४-७०-८ (३१३४२)
कृष्णां च भार्यां दयितां भ्रातॄंश्च त्रिदशोपमान् ।
निःसंशयं स कितवः पश्चात्तप्यति पाण्डवः ॥ ४-७०-९ (३१३४३)
विविधानां च रत्नानां धनानां च पराजये ।
अभीप्सितविनाशश्च वाक्पारुष्यमनन्तरम् ॥ ४-७०-१० (३१३४४)
अविश्वास्यं बुधैर्नित्यमेकाह्ना द्रव्यनाशनम् ।
द्यूते हारितवान्सर्वं तस्माद्द्यूतं न रोचये ॥ ४-७०-११ (३१३४५)
अथवा मन्यसे राजन्दीव्याव यदि रोचते ।
एवमाभाष्य वाक्यैस्तु क्रीडतस्तौ नरोत्तमौ ॥ ४-७०-१२ (३१३४६)
प्रवर्तमाने द्यूते तु मात्स्यः पाण्डवमब्रवीत् ॥ ४-७०-१३ (३१३४७)
पश्य पुत्रेण मे युद्धे तादृशाः कुरवो जिताः ।
कुरवोऽतिरथाः सर्वे देवैरपि सुदुर्जयाः ॥ ४-७०-१४ (३१३४८)
ततोऽब्रवीद्धर्मराजो द्यूते मात्स्यं युधिष्ठिरः ।
दिष्ट्या ते विजिता गावः कुरवश्च पराजिताः ॥ ४-७०-१५ (३१३४९)
अत्यद्भुततमं मन्ये उत्तरश्चेत्कूरूञ्जयेत् ।
यन्ता बृहन्नला यस्य स कथंचिद्विजेष्यते ॥ ४-७०-१६ (३१३५०)
ततो विराटः क्षुभितो मन्युना च परिप्लुतः ।
उवाच वचनं क्रुद्धः परिव्राजमनन्तरम् ॥ ४-७०-१७ (३१३५१)

तादृशेन तु योधेन महेष्वासेन धीमता ।
कुरवो निर्जिता युद्धे तत्र किं ब्राह्मणाद्भुतम् ॥ ४-७०-१८ (३१३५२)
युधिष्ठिर उवाच। ४-७०-१९क्ष् (३२७५)
समं षण्डेन मे पुत्रं ब्रह्मबन्धो प्रशंससि ।
वाच्यावाच्यं न जानीषे नूनं मामवमन्यसे ॥ ४-७०-१९ (३१३५३)
विराट उवाच। ४-७०-२०क्ष् (३२७६)
समं षण्डेन मे पुत्रं ब्रह्मबन्धो प्रशंससि ।
वाच्यावाच्यं न जानीषे नूनं मामवमन्यसे ॥ ४-७०-२० (३१३५४)
पुमांसो बहवो दृष्टाः सूताश्च बहवो मया ।
विक्रम्य यन्ता योद्धा च न मे दृष्टः कदाचन ॥ ४-७०-२१ (३१३५५)
विप्रियं न चरेद्राज्ञामनुकूलं प्रियं वदेत् ।
आचरन्विप्रियं राज्ञां न जातु सुखमेधते ॥ ४-७०-२२ (३१३५६)
वयस्यत्वात्तु ते सर्वमपराधमिमं क्षमे ।
नेदृशीं प्रवदर्वाचं यदि जीवितुमिच्छसि ॥ ४-७०-२३ (३१३५७)
वैशंपायन उवाच। ४-७०-२४क्ष् (३२७७)
ततोऽब्रवीत्पुनः कङ्कः प्रहस्य कुरुवर्धनः ।
बृहन्नलाया सजेन्द्र धुष्यतां नगरे जयः ॥ ४-७०-२४ (३१३५८)
उत्तरेण तु सारथ्यं कृतं नूनं भविष्यति ।
निमित्तं किंचिदुत्पन्नं तर्कश्चापि दृढो मम ।
यतो जानामि राजेन्द्र नान्यथा तद्भविष्यति ॥ ४-७०-२५ (३१३५९)
कुरवोऽपि महावीर्या देवैरपि सुदुर्जयाः ।
ससोमवरुणादित्यैः सयक्षेशहुताशनैः ॥ ४-७०-२६ (३१३६०)
यत्र शान्तनवो भीष्मो द्रोणकर्णौ सुदुर्जयौ ।
अश्वत्थामा विकर्णश्च सोमदत्तो जयद्रथः ॥ ४-७०-२७ (३१३६१)
भूरिश्रवाः शलो भूरिर्जलसन्धिश्च वीर्यवान् ।
दुर्योधनो दुष्प्रसहो दुःशासनविविंशती ॥ ४-७०-२८ (३१३६२)
वृषसेनोऽश्ववेगश्च वायुवेगसुवर्चसौ ।
बाह्लीकः शूरसेनश्च युयुत्सुश्च परन्तपः ॥ ४-७०-२९ (३१३६३)
सौबलः शकुनिश्चैव द्युमत्सेनश्च साल्वराट् ।
अन्ये च बहवः शूरा नानाजनपदेश्वराः ॥ ४-७०-३० (३१३६४)
कृपेणाचार्यमुख्येन सहिताः कुरवो नृपाः ।
सज्जकार्मुकनिस्त्रिंशा रथिनो रथयूथपाः ।
अन्ये चैव महावीर्या राजपुत्रा महारथाः ॥ ४-७०-३१ (३१३६५)
मरुद्गणैः परिवृतः साक्षादपि पुरंदरः ।
तद्बलं न जयेत्क्रुद्धो भीष्मद्रोणादिभिर्वृतम् ॥ ४-७०-३२ (३१३६६)
कस्तद्बृहन्नलादन्यो मनुष्यः प्रतियोत्स्यति ।

यस्य बाहुबले तुल्यो न भविष्यति कश्चन ॥ ४-७०-३३ (३१३६७)
अतीव समरं दृष्ट्वा हर्षो यस्याभिवर्धते ।
किमेवं पुरुषो लोको दिवि वा भुवि विद्यते ॥ ४-७०-३४ (३१३६८)
वैशंपायन उवाच। ४-७०-३५क्ष् (३२७८)
तेन संक्षुभितो राजा दीर्यमाणेन चेतसा ।
अब्रवीद्वचनं क्रूरमजानन्वै युधिष्ठिरम् ॥ ४-७०-३५ (३१३६९)
कङ्क मा ब्रूहि मे वाक्यं प्रतिकूलं द्विजोत्तम ।
बहुशः प्रतिषिद्धस्त्वं न च वाचं नियच्छसि ॥ ४-७०-३६ (३१३७०)
नियन्ता चेन्न विद्येत न कश्चिद्धर्ममाचरेत् ।
इति प्रक्षुभितो राजा सोऽक्षेणाभ्यहनङ्कृशम् ॥ ४-७०-३७ (३१३७१)
तस्य तक्षकभोगाभं बाहुमुत्क्षिप्य दक्षिणम् ।
विराटः प्राहनत्क्रुद्धः कर्णमाश्रित्य दक्षिणम् ॥ ४-७०-३८ (३१३७२)
मुखे युधिष्ठिरं कोपान्मैवमित्यवभर्त्सयन् ।
बलवत्प्रतिविद्धस्य नस्तः शोणितमास्रवत् ॥ ४-७०-३९ (३१३७३)
अक्षेणाभिहतो राजा विराटेन युधिष्ठिरः ।
तूष्णीमासीन्महाबाहुः कृष्णां पश्यन्सुदुःखिताम् ॥ ४-७०-४० (३१३७४)
तस्य रक्तोत्पलनिभं शिरसः शोणितं तदा ।
प्रावर्तत महाबाहोरभिघातान्महात्मनः ॥ ४-७०-४१ (३१३७५)
तदप्राप्तं महीं पार्थः पाणिभ्यां समधारयत् ।
अवैक्षत च धर्मात्मा द्रौपदीं पार्श्वतः स्थिताम् ॥ ४-७०-४२ (३१३७६)
सा वेदनामभिज्ञाय भर्तुश्चित्तवशानुगा ।
सा विषण्णा च भीता च क्रुद्धा च द्रुपदात्मजा ॥ ४-७०-४३ (३१३७७)
बाष्पं नियम्य कृच्छ्रेण भर्तुर्निःश्रेयसैषिणी ।
उत्तरीयेण सूक्ष्मेण तूर्णं जग्राह शोणितम् ॥ ४-७०-४४ (३१३७८)
निगृह्य रक्तं वस्त्रेण सैरन्ध्री दुःखमोहिता ।
सौवर्णं गृह्य भृङ्गारं शोणितं तदपामृजत् ।
युधिष्ठिरस्य राजेन्द्र द्रुपदेन्द्रसुता तदा ॥ ४-७०-४५ (३१३७९)
विराट उवाच। ४-७०-४६क्ष् (३२७९)
सैरन्ध्रि किमिदं रक्तमुत्तरीयेण गृह्यते ।
कोत्र हेतुर्विशालाक्षि तन्मप्राचक्ष्व तत्वतः ॥ ४-७०-४६ (३१३८०)
सैरन्ध्र्युवाच। ४-७०-४७क्ष् (३२८०)
रक्तबिन्दनि यावन्ति कङ्कस्य धरणीतले ।
तावद्वर्षाणि राष्ट्रे ते अनावृष्टिर्भविष्यति ॥ ४-७०-४७ (३१३८१)
एतन्निमित्तं मात्स्येन्द्र कङ्कस्य रुधिरं मया ।
गृहीतमुत्तरीयेण विनाशो मा भवेत्तव ॥ ४-७०-४८ (३१३८२)
यतीशं यो विहन्येत तस्यायुर्विनशिष्यति ।

यो यतीशं नियम्येत सहस्रं यातना यमे ॥ ४-७०-४९ (३१३८३)
यतौ रक्तं दर्शयति यावत्पांसुरगृह्यत ।
तावन्तः पितृलोकस्थाः पितरः प्रपतन्त्यधः ॥ ४-७०-५० (३१३८४)
इति ज्ञात्वा विराटेन्द्र धृतं रक्तं च वाससा ।
मया तव हितार्थाय त्वयि प्रणयकारणात् ॥ ॥ ४-७०-५१ (३१३८५)

इति श्रीमन्महाभारते विराटपर्वणि गोग्रहणपर्वणि सप्ततितमोऽध्यायः ॥
Mahabharata - Virata Parva - Chapter Footnotes

४-७०-१० धनानां च विना ॥॥।
वाक्पारुष्यं चाभवदिति शेषपूरणेन योजना ॥
१० ॥
४-७०-१९ किं किमपि ॥
१९ ॥
४-७०-४७ धरणीतले पतेयुरिति शेषः ॥
४७ ॥
४-७०-४८ नियम्येत नियमयेत् तस्येति शेषः ॥
४९ ॥
४-७०-५० अगृह्यत गृह्येत रक्तेनेति ॥
५० ॥
४-७०-५१ इतीममर्थम् ॥
५१ ॥

---

विरतपर्व-अध्यय०७१
॥ श्रीः ॥
४.७१. अध्यायः ७१

Mahabharata - Virata Parva - Chapter Topics
अर्जुनकुरुयुद्धदिदृक्षया समागतैर्देवैरर्जुनं श्लाघमानैः
सद्भिः पुनः स्वर्गंप्रति गमनम् ॥ १ ॥
उत्तरेण सवादिन्नगोषं पौरैः प्रत्युद्गम्यमानेन स्वनगरप्रवेशनम् ॥ २ ॥

Mahabharata - Virata Parva - Chapter Text

४-७१-० (३१३८६)
जनमेजय उवाच। ४-७१-०क्ष् (३२८१)
युद्धं तु मानुषं द्रष्टुमागतास्त्रिदशाः पुरा ।

किमकुर्वन्त ते पश्चात्कथयस्व ममानघ ॥ ४-७१-१ (३१३८७)
वैशंपायन उवाच। ४-७१-२क्ष् (३२८२)
वासवप्रमुखाः सर्वे देवाः सर्षिपुरोगमाः ।
यक्षगन्धर्वसङ्घाश्च गणा अप्सरसां तथा ॥ ४-७१-२ (३१३८८)
युद्धं तु मानुषं दृष्ट्वा कुरूणां फल्गुनस्य च ।
एकस्य च बहूनां च रौद्रमत्युग्रदर्शनम् ॥ ४-७१-३ (३१३८९)
अस्त्राणामथ दिव्यानां प्रयोगानथ संग्रहान् ।
लघु सुष्ठु च चित्रं च कृतीनां च प्रयत्नतः ॥ ४-७१-४ (३१३९०)
भीष्मं शारद्वतं द्रोणं कर्णं गाण्डीवधन्वना ।
जितानन्यान्भूमिपालान्दृष्ट्वा जग्मुर्दिवौकसः ॥ ४-७१-५ (३१३९१)
सर्वे ते परितुष्टाश्च प्रशस्य च मुहुर्मुहुः ।
असङ्गतिना तेन विमानेनाशुगामिना ।
प्रतिजग्मुरसङ्गास्ते त्रिदिवं च दिवौकसः ॥ ४-७१-६ (३१३९२)
शक्रकुरवो निर्जिताः सर्वे भीष्मद्रोणकृपादयः ।
अजय्यास्त्रिदशैः सर्वैः सेन्द्रैः सर्वैः सुरासुरैः ।
पार्थेनैकेन संग्रामे विस्मयो नो महानहो ॥ ४-७१-७ (३१३९३)
कस्मिन्मुहूर्ते संजातः कस्य धर्मस्य वा फलम् ॥ ४-७१-८ (३१३९४)
किमाश्चर्यं फल्गुनेऽस्मिन्यो रुद्रेण न्ययोधयत् ।
निवातकवचानाजौ यस्त्रिंशत्कोटिसंमितान् ॥ ४-७१-९ (३१३९५)
तस्य चैतत्किमाश्चर्यं स्तुवन्त इति ते सुराः ।
जग्मुः सुरालयं हृष्टा विस्मयाविष्टचेतसः ॥ऽ ४-७१-१० (३१३९६)
कुरवोऽर्जुनबाणैश्च ताडिताः शरविक्षताः ।
कुरूनभिमुखां याताः समग्रबलवाहनाः ॥ ४-७१-११ (३१३९७)
विराटनगराच्चैव गजाश्वरथसंकुलाः ।
योधैः क्षत्रियदायादैर्बलवद्भिरधिष्ठिताः ॥ ४-७१-१२ (३१३९८)
विराटप्रहिता सेना नगराच्छीघ्रयायिनी ।
उत्तरं सह सूतेन प्रत्ययात्तमरिन्दमम् ॥ ४-७१-१३ (३१३९९)
तस्मिंस्तूर्यशताकीर्णे हस्त्यश्वरथसंकुले ।
प्रहर्षः स्त्रीकुमाराणां तुमुलः समपद्यत ॥ ४-७१-१४ (३१४००)
अर्जुनस्तु ततो दृष्ट्वा सैन्यरेणुं समुत्थितम् ।
सैन्यध्वजं निशम्याथ वैराटिं समभाषत ॥ ४-७१-१५ (३१४०१)
नगरे तुमुलः शब्दो रेणुश्चाक्रमते नभः ।
किंनु खल्वपयातास्ते कुरवो नगरं गताः ॥ ४-७१-१६ (३१४०२)
ते चैव निर्जिताऽस्माभिर्महेष्वासाः सुतेजसः ।
आमुञ्च कवचं वीर चोदयस्व च वाजिनः ।
जवेनाभिप्रपद्यस्व विराटनगरं प्रति ॥ ४-७१-१७ (३१४०३)

न तावत्तलनिर्घोषं गाण्डीवस्य च निस्वनम् ।
ध्वजं वा दर्शयिष्यामि अथवा स्वजनो भवेत् ॥ ४-७१-१८ (३१४०४)
उत्तर उवाच। ४-७१-१९क्ष् (३२८३)
सेनाग्रमेतन्मात्स्यानां गणिकाश्च स्वलंकृताः ।
कन्या रथेषु दृश्यन्ते योधा विविधवाससः ॥ ४-७१-१९ (३१४०५)
उत्तरामत्र पश्यामि सखीभिः परिवारिताम् ।
अनीकिन्यः प्रदृश्यन्ते हस्तिनोश्वाश्च वर्मिताः ॥ ४-७१-२० (३१४०६)
रथिनश्च पदाताश्च बहवो न च शस्त्रिणः ।
विराटवचनात्सर्वे संहृष्टाः प्रतिभान्ति मे ।
न च मेऽत्र प्रतीघातश्चित्तस्य स्वजने यथा ॥ ४-७१-२१ (३१४०७)
वैशंपायन उवाच। ४-७१-२२क्ष् (३२८४)
ततः शीघ्रं समासाद्य उत्तरं स्वजनो बहु ।
परस्परममित्रघ्नं सस्वजे तं समागतम् ॥ ४-७१-२२ (३१४०८)
जना ऊचुः। ४-७१-२३क्ष् (३२८५)
प्रीतिमान्पुरुषव्याघ्रो हर्षयुक्तः पुनः पुनः ।
दिष्ट्या जयसि भद्रं ते दिष्ट्या सूतो बृहन्नलाः ।
दिष्ट्या संग्राममागम्य भयं तव न किंचन ॥ ४-७१-२३ (३१४०९)
उत्तर उवाच। ४-७१-२४क्ष् (३२८६)
अजैषीदेष जाञ्जिष्णुः कुरूनेकरथो रणे ।
एतस्यक बाहुवीर्यं तद्येन गावो जिता मया ।
कुरवो निर्जिता यस्मात्सग्रामेऽमिततेजसः ॥ ४-७१-२४ (३१४१०)
अकार्षीदेष तत्कर्म देवपुत्रोपमो युवा ।
एष तत्पुरुषव्याघ्रो विक्षोभ्य कुरुमण्डलम् ।
गावः प्रसह्य विजिता रणे मां चाभ्यपालयत् ॥ ४-७१-२५ (३१४११)
वैशंपायन उवाच। ४-७१-२६क्ष् (३२८७)
उत्तरस्य वचः श्रुत्वा शंसमानस्य चार्जुनम् ।
चोदिता राजपुत्रेण जयं मङ्गलवादिनः ॥ ४-७१-२६ (३१४१२)
ततो गन्धैश्च माल्यैश्च धूपैश्च वसुसंभृतैः ।
कन्याः पार्थममित्रघ्नं किरन्त्यः समपूजयन् ॥ ४-७१-२७ (३१४१३)
आपूर्यमाणो माल्यैश्च गन्धैश्च विविधैः शुभैः ।
संपूज्यमानो लोकेन नगरद्वारमागमत् ॥ ४-७१-२८ (३१४१४)
भेर्यश्च तूर्याणि च वेणवश्च
विचित्रवेषाः प्रमदाजनाश्च ।
पुरो विराटस्य महाबलस्य
निष्क्रम्य भूमिंजयमभ्यनन्दनम् ॥ ४-७१-२९ (३१४१५)
प्रशस्यमानस्तु जयेन तत्र

पुत्रो विराटस्य न हृष्यति स्म ।
संभाष्यमाणस्तु जयेन तत्र
सोऽन्तर्मनाः पाण्डवमीक्षमाणः ॥ ४-७१-३० (३१४१६)
पुत्र्यै विराटस्य ततो वराणि
वस्त्राण्यदात्पाण्डुसुतः सखीभ्यः ।
सभाजयंश्चापि समागतास्ता
दृष्ट्वा जयं तच्च बलं कुमार्यः ॥ ॥ ४-७१-३१ (३१४१७)

इति श्रीमन्महाभारते विराटपर्वणि गोग्रहणपर्वणि एकसप्ततितमोऽध्यायः ॥
Mahabharata - Virata Parva - Chapter Footnotes

४-७१-७ क़इमे श्लोकाः थो पुस्तकमात्रे वर्तन्ते ।

---

विरतपर्व-अध्यय०७२
॥ श्रीः ॥
४.७२. अध्यायः ७२

Mahabharata - Virata Parva - Chapter Topics
उत्तरेण राजाभ्यनुज्ञयाऽन्तःपुरमेत्य तदभिवादनम् ॥ १ ॥
युधिष्ठिरघ्रणावलोकनभीतोत्तरचोदनया विराटेन
युधिष्ठिरक्षमापनम् ॥ २ ॥
ततोऽर्जुनस्यान्तःप्रवेशः ॥ ३ ॥
उत्तरस्यैव जेतृत्वभ्रमहृष्टेन विराटेन तत्प्रशंसनम् ॥ ४ ॥
तेन तंतपि कस्यचिद्देवपुत्रस्यैव जेतृत्वकथनम् ॥ ५ ॥
ततोऽर्जुनेनोत्तराप्रभृतिभ्यः कुरुवस्त्रप्रदानम् ॥ ६ ॥

Mahabharata - Virata Parva - Chapter Text

४-७२-० (३१४१८)
वैशंपायन उवाच। ४-७२-०क्ष् (३२८८)
सभाज्यमानः पौरैश्च स्त्रीभिर्जानपदैरपि ।
आसाद्यान्तःपुरद्वारं पित्रे संप्रत्यवेदयत् ॥ ४-७२-१ (३१४१९)
ततो द्वाःस्थः समासाद्य प्रणिपत्य कृताञ्जलिः ।
वर्धयित्वा जयाशीर्भिरिदं वचनमब्रवीत् ॥ ४-७२-२ (३१४२०)
राजन्पृथुयशस्तुभ्यं जित्वा शत्रून्समागतः ।
उत्तरः सह सूतेन द्वारि तिष्ठति वारितः ॥ ४-७२-३ (३१४२१)
कुमारो योधमुख्यैस्च गणिकाभिस्च संवृतः ।

पौरजानपदैर्युक्तः पूज्यमानो जयाशिषाः ॥ ४-७२-४ (३१४२२)
ततो हृष्टो महीपालः क्षत्तारमिदमब्रवीत् ।
प्रवेशयोभौ तौ तूर्णं दर्शनेप्सुरहं तयोः ॥ ४-७२-५ (३१४२३)
क्षत्तारं कुरुराजस्तु शनैः कर्ण उपाजपत् ।
उत्तरः प्रविशत्वेको न प्रवेश्या बृहन्नलाः ॥ ४-७२-६ (३१४२४)
तस्य हि महाबाहोर्व्रतं नित्यं महात्मनः ।
यो ममाङ्गे व्रणं कुर्याच्छोणितं वा प्रदर्शयेत् ।
अन्यत्र संग्रामगतान्न स जीवेत्कथंचन ॥ ४-७२-७ (३१४२५)
व्यक्तं भृसं सुसंक्रुद्धो मां दृष्ट्वैव सशोणितम् ।
विराटमिह सामात्यं हन्यात्सबलावाहनम् ॥ ४-७२-८ (३१४२६)
इन्द्रं वापि कुबेरं वा यमं वा वरुणं तथा ।
मम शोणितकर्तारं मृद्नीयात्किं पुनर्नरम् ॥ ४-७२-९ (३१४२७)
क्षणमात्रं तु तत्रैव द्वारि तिष्ठतु वीर्यवान् ।
इति प्रोवाच धर्मात्मा युधिष्ठिर उदारधीः ॥ ४-७२-१० (३१४२८)
इत्युक्त्वा क्षमया युक्तो धर्मराजो घृणान्वितः ।
सभायां सह मात्स्येन तूष्णीमुपविवेश ह ॥ ४-७२-११ (३१४२९)
ततो राजसुतो ज्येष्ठः प्राविशत्पृथिवींजयः ।
ववन्दे स पितुः पादौ कङ्कं चाप्युपतिष्ठत ॥ ४-७२-१२ (३१४३०)
पश्यन्युधिष्ठिरं दृष्ट्या वक्रया चरणौ पितुः ।
अभिवाद्य ततो दृष्ट्वा कङ्कस्य रुधिरप्लुतम् ।
हृदयेऽदह्यत तदा मृत्युग्रस्त इवोत्तरः ॥ ४-७२-१३ (३१४३१)
ततो रुधिरसिक्ताङ्गमनेकाग्रमनागसम् ।
भूमावेकान्त आसीनं सैरन्ध्र्या समुपासितम् ।
ततः पप्रच्छ राजानं त्वरमाण इवोत्तरः ॥ ४-७२-१४ (३१४३२)
केनायं ताडितः कङ्कः केन पापमिदं कृतम् ।
को वा जिगमिषुर्मृत्युं केन स्पृष्टः पदोरगः ॥ ४-७२-१५ (३१४३३)
श्रोत्रियो ब्राह्मणश्रेष्ठ इन्द्रासनरतिक्षमः ।
पूजनीयोऽभिवाद्यश्च न प्रबाध्योऽयमीदृशः ॥ ४-७२-१६ (३१४३४)
वैशंपायन उवाच। ४-७२-१७क्ष् (३२८९)
स पुत्रस्य वचः श्रुत्वा विराटो राष्ट्रवर्धनः ।
प्रत्युवाचोत्तरं वाक्यं साध्वसाद्धूवस्तमानसः ॥ ४-७२-१७ (३१४३५)
पुत्र ते विजयं श्रुत्वा प्रहृष्टोऽहं मुदा भृशम् ।
अक्षक्रीडनयाऽनेन कालक्षेपमकारिषम् ॥ ४-७२-१८ (३१४३६)
तत्राजयत्कुरून्सर्वानुत्तरो राष्ट्रवर्धनः ।
इत्युक्तं हि मया पुत्र नेति कङ्को बृहन्नला ।
अजयत्सा कुरून्सर्वानिति मामब्रवीन्मुहुः ॥ ४-७२-१९ (३१४३७)

प्रशंसिते मया पुत्र विजये तव विश्रुते ।
बृहन्नलाया विजयं कङ्कोऽस्तुवत वै रुषा ॥ ४-७२-२० (३१४३८)
मया प्रशस्यमाने तु त्वयि पण्डं प्रशंसति ।
बृहन्नलाप्रशंसाभिरभ्यसूयमहं तदा ।
ताडितोऽयं मया पुत्र दुरात्मा शत्रुपक्षकृत् ॥ ४-७२-२१ (३१४३९)
ताडितोऽयं यतिः कङ्क इत्युक्तं तद्वचोत्तरः ।
श्रुत्वा पितुर्भृशं क्रुद्धः पितरं वाक्यमब्रवीत् ॥ ४-७२-२२ (३१४४०)
अकार्यं ते कृतं राजन्क्षिप्रमेष प्रसाद्यताम् ।
मा त्वा ब्रह्मविषं घोरं समूलमुपनिर्दहेत् ॥ ४-७२-२३ (३१४४१)
यावन्न क्षयमायाति कुलं सर्वमशेषनः ।
स्फीतं वृद्धं च मात्स्यानामयं तावत्प्रसाद्यताम् ॥ ४-७२-२४ (३१४४२)
प्रणम्य पादयोरस्य दण्डवत्क्षितिमण्डले ।
प्रगृह्य पादौ पाणिभ्यामयं तावत्प्रसाद्यताम् ॥ ४-७२-२५ (३१४४३)
दक्षेण पाणिना स्पृष्ट्वा शपे त्वां क्षपितं मया ।
इति यावद्वदेत्कङ् अयं तावत्प्रसाद्यताम् ॥ ४-७२-२६ (३१४४४)
स पुत्रस्य वचः श्रुत्वा विराटः साध्वसाकुलः ।
क्षमयामास कौन्तेयं छन्नं ब्राह्मणवर्चसा ॥ ४-७२-२७ (३१४४५)
क्षमयन्तं तु राजानं पाण्डवः प्रत्यभाषत ।
चिरं क्षान्तं मया राजन्मन्युर्मम न विद्यते ॥ ४-७२-२८ (३१४४६)
यदि स्म तत्पतेद्भूमौ रुधिरं मम पार्थिव ।
सराष्ट्रस्त्वमिहोच्छेदमापद्येथा नरर्षभ ॥ ४-७२-२९ (३१४४७)
न दूषयामि राजेन्द्र यस्तु हन्याददूषकम् ।
फलं तस्य महाराज क्षिप्रं दारुणमाप्नुयात् ॥ ४-७२-३० (३१४४८)
वैशंपायन उवाच। ४-७२-३१क्ष् (३२९०)
शोणिते तु व्यतिक्रान्ते प्रविवेश बृहन्नला ।
अभिवाद्य महाराजं कङ्कं चाप्युपतिष्ठत ॥ ४-७२-३१ (३१४४९)
क्षमयित्वा तु कौरव्यं रणादुत्तरमागतम् ।
परिष्वज्य दृढं राजा प्रवेश्य भवनोत्तमम् ।
प्रशशंस ततो मात्स्यः शृण्वतः सव्यसाचिनः ॥ ४-७२-३२ (३१४५०)
विराट उवाच। ४-७२-३३क्ष् (३२९१)
त्वया दायादवानस्मि कैकेयीनन्दिवर्धन ।
त्वया मे सदृशः पुत्रो न भूतो न भविष्यति ॥ ४-७२-३३ (३१४५१)
पदं पदसहस्रेण यश्चरन्नापराध्नुयात् ।
तेन कर्णेन ते तात कथमासीत्समागमः ॥ ४-७२-३४ (३१४५२)
रणे यं प्रेक्ष्य सीदन्ति हृतवीर्यपराक्रमाः ।
कृपेन तेन ते तात कथमासीत्समागमः ॥ ४-७२-३५ (३१४५३)

यस्य तद्विश्रुतं लोके महद्वृत्तमनुत्तमम् ।
पितुः कृते कृतं घोरं ब्रह्मचर्यमनुत्तमम् ॥ ४-७२-३६ (३१४५४)
योऽयोधीत्समरे रामं जामदग्न्यं प्रतापिनम् ।
भीष्मोसौ पुरुषव्याघ्र न च युद्धे पराजितः ॥ ४-७२-३७ (३१४५५)
पराक्रमी च दुर्धर्षो विद्वाञ्शूरो जितेन्द्रियः ।
दृढवेधी क्षिप्रकारी विश्रुतः सर्वकर्मसु ॥ ४-७२-३८ (३१४५६)
तेन ते सह भीष्मेण कुरुवृद्धेन संयुगे ।
युद्धमासीत्कथं तात सर्वमेतद्ब्रवीहि मे ॥ ४-७२-३९ (३१४५७)
पर्वतं यो विनिर्भिन्द्याद्राजपुत्रो वरेषुभिः ।
दुर्योधनेन ते तात कथमासीत्समागमः ॥ ४-७२-४० (३१४५८)
आचार्यो वृष्णिरीराणां पाञ्चालानां च यः प्रभुः ।
कुरूणां पाण्डवानां च सर्वक्षत्रस्य यो गुरुः ॥ ४-७२-४१ (३१४५९)
सर्वशस्त्रभृतां श्रेष्ठः सर्वलोकेषु विश्रुतः ।
तेन द्रोणेन ते तात कथमासीत्समागमः ॥ ४-७२-४२ (३१४६०)
आचार्यपुत्रो यः शूरो द्रोणादनवमो रणे ।
तेन वीरेण ते तात कथमासीत्समागमः ॥ ४-७२-४३ (३१४६१)
सर्वे चैव महावीर्या धार्तराष्ट्रः महारथाः ।
तैस्तैर्वीरैश्च ते तात कथमासीत्समागमः ॥ ४-७२-४४ (३१४६२)
उत्तर उवाच। ४-७२-४५क्ष् (३२९२)
न मया निर्जिता गावो न मया कुरवो जिताः ।
कृतं च कर्म तत्सर्वं देवपुत्रेण केनचित् ॥ ४-७२-४५ (३१४६३)
स हि भीतं द्रवन्तं मां भीष्मद्रोणमुखान्कुरून् ।
दृष्ट्वा विषण्णं संग्रामे देवपुत्रो न्यवारयत् ॥ ४-७२-४६ (३१४६४)
स हि तिष्ठन्रथोपस्थे वज्रपाणिनिभो युवा ।
तेन ते निर्जिता गावस्तेन ते कुरवो जिताः ॥ ४-७२-४७ (३१४६५)
तस्य तत्कर्म वीरस्य न मया तात तत्कृतम् ।
स हि शारद्वतं द्रोणं द्रोणपुत्रं च वीर्यवान् ट
सूतपुत्रं च भीष्मं च चकार विमुखाञ्शरैः ॥ ४-७२-४८ (३१४६६)
दुर्योदनं च समरे प्रभिन्नमिव कुञ्जरम् ।
प्रभग्नमब्रवीद्भीतं राजपुत्रं महाबलम् ॥ ४-७२-४९ (३१४६७)
न हास्तिनपुरे त्राणं तव पश्यामि किंचन ।
न हास्तिनपुरे भोगा भोक्तुं शक्याः पलायता ॥ ४-७२-५० (३१४६८)
व्यायामेन परीप्सस्व जीवितं कौरवात्मज ।
न मोक्ष्यसे पलायंस्त्वं लोके युद्धमना भव ।
पृथिवीं भोक्ष्यसे जित्वा हतो वा स्वर्गमाप्स्यसि ॥ ४-७२-५१ (३१४६९)
स निवृत्तो नरव्याघ्रो मुञ्चन्वज्रनिभाञ्शरान् ।

सचिवैः संवृतो राजा भीष्मद्रोणकृपादिभिः ।
ततो मे रोमहर्षोऽभूदूरुस्तम्भश्च मेऽभवत् ॥ ४-७२-५२ (३१४७०)
यदभूद्धनसंकाशमनीकं व्यधमच्छरैः ।
तत्प्रपुद्य रथानीकं सिंहदर्पसमो युवा ।
तान्कुरुन्द्रावयद्राजन्रणे नाग इव श्वसन् ॥ ४-७२-५३ (३१४७१)
एकेन तेन शूरेण षड्रथाः परिनिर्जिताः ।
शार्दूलेनेव मत्तेन मृगास्तृणचरा यथा ॥ ४-७२-५४ (३१४७२)
हयानां च गजानां च शूराणां च धनुष्मताम् ।
निहतानि सहस्राणि भग्ना च कुरुवाहिनी ॥ ४-७२-५५ (३१४७३)
सूतपुत्रं शतैर्विद्ध्वा हयान्हत्वा महारथः ।
अस्त्रेण मोहयित्वा तं रक्तवस्त्रं समाददे ॥ ४-७२-५६ (३१४७४)
चतुर्भिः पुनरानर्च्छद्भीष्मं शान्तनवं शरैः ।
स तं विद्ध्वा हयांश्चाशु नास्य वस्त्रं समाददे ॥ ४-७२-५७ (३१४७५)
दुर्योधनं च बलवान्बाणैर्विव्याध सप्तभिः ।
तं स विद्ध्वा हयांश्चास्य पीतवस्त्रं समाददे ॥ ४-७२-५८ (३१४७६)
द्रोणं कृपं च बलवान्सोमदत्तं जयद्रथम् ।
भूरिश्रवसमिन्द्राभं शकुनिं च महारथम् ॥ ४-७२-५९ (३१४७७)
त्रिभिस्त्रिभिः स विद्ध्वा तु दुःशासनमुखानपि ।
विविधानि च वस्त्राणि महार्हाण्याजहार सः ॥ ४-७२-६० (३१४७८)
द्वाभ्यां शराभ्यां विद्ध्वाऽथ तथाऽऽचार्यसुतं रणे ।
चापं छित्त्वा विकर्णस्य नीले चादत्त वाससी ॥ ४-७२-६१ (३१४७९)
विराट उवाच। ४-७२-६२क्ष् (३२९३)
क्व स वीरो महाबाहुर्देवपुत्रो महायशाः ।
यो ममामोचयत्पुत्रं कुरुभिर्ग्रस्तमाहवे ॥ ४-७२-६२ (३१४८०)
इच्छामि तममित्रघ्नं द्रष्टुमर्चितुमेव च ।
येन मे त्वं च गावश्च मोक्षिता देवसूनुना ॥ ४-७२-६३ (३१४८१)
तस्मै दास्यामि तां पुत्रीं ग्रामांश्चैव तु हाटकान् ।
स्फुरितं कटिसूत्रं च स्त्रीसहस्रशतानि च ॥ ४-७२-६४ (३१४८२)
उत्तर उवाच। ४-७२-६५क्ष् (३२९४)
अन्तर्धानं गतस्तात देवपुत्रः प्रतापवान् ।
अद्य श्वो वा परश्वो वा मन्ये प्रादुर्भविष्यति ॥ ४-७२-६५ (३१४८३)
वैशंपायन उवाच। ४-७२-६६क्ष् (३२९५)
एवमाख्यायमानस्तु छन्नं सत्रेण पाण्डवम् ।
वसन्तं तं तु नाज्ञासीद्विराटः पार्थमर्जुनम् ॥ ४-७२-६६ (३१४८४)
ततः पार्थोऽभ्यनुज्ञातो विराटेन महात्मना ।
सह पुत्रेण मात्स्यस्य मन्त्रयित्वा धनंजयः ॥ ४-७२-६७ (३१४८५)

इत्येवं ब्रूहि राजानं विराटं समुपस्थितम् ।
इत्युक्त्वा सहसा पार्थः प्रविश्यान्तःपुरं शुभम् ।
ददौ वस्त्राणि रन्तानि विराटदुहितुः स्वयम् ॥ ४-७२-६८ (३१४८६)
उत्तरा तु महार्हाणि वस्त्राण्याभरणानि च ।
प्रगृह्य तानि सर्वाणि प्रीता सानुचराऽभवत् ॥ ॥ ४-७२-६९ (३१४८७)

इति श्रीमन्महाभारते विराटपर्वणि गोग्रहणपर्वणि द्विसप्ततितमोऽध्यायः ॥
Mahabharata - Virata Parva - Chapter Footnotes

४-७२-५ क्षत्तारं सारथिम् ॥
५ ।४-७२-६ कर्ण उपाजपत् कर्णे इति च्छेदः ॥
६ ॥
४-७२-७ ममाङ्ग इति मम युधिष्ठिरस्य ।संग्रामाय गतात् गमनात् ॥
७ ॥
४-७२-१३ रुधिरप्लुतं रुधिरस्रावम् ॥
१३ ॥
४-७२-१४ अनेकाग्रं व्यग्रम् ।युधिष्ठिरं दृष्ट्वा राजानं
पप्रच्छेत्यन्वयः ॥
१४ ॥
४-७२- २२ तद्वचः इति च्छेदः संधिरार्षः ॥
२२ ॥
४-७२-३० तस्येति ।स इति शेषः।स हन्ता तस्य स्वकृतहननस्य ॥
३० ।४-७२-३१ उपतिष्ठत उपातिष्ठत असेवत ॥
३१ ॥
४-७२- ३३ दायादवान्पुत्रवान् ॥
३३ ।४-७२-३४ पदसहस्रेण लक्ष्यसहस्रार्थम् ।हेत्वर्थे
तृतीया।युगपत्सहस्रलक्ष्याणि वेद्धुमित्यर्थः।चरन् बाणैः ।पदं
एकमपि लक्ष्यं नापराध्नुयात् लक्ष्यात् च्युतसायको न भवेदित्यर्थः ॥
३४ ॥
४-७२-४७ तिष्ठन् अयुध्यतेति शेषः ॥
४७ ॥
४-७२-५२ स निवृत्तोऽभूदित्यन्वयः ॥
५२ ॥
४-७२-५३ सिंहेन दर्पे रामः ।द्रावयत् ॥॥॥॥॥।
५३ ॥
४-७२-५४ तृणचरास्तृणभक्षकाः ॥

५४ ॥
४-७२-६६ सत्रेण वेषान्तरेण ॥
६६ ॥
४-७२-६८ श्व इतो ब्रूहि राजानं विराट ॥॥ॅहेति शो पाठः ॥
६८ ॥

---

विरतपर्व-अध्यय०७३
॥ श्रीः ॥
४.७३. अध्यायः ७३

Mahabharata - Virata Parva - Chapter Topics
भीमार्जुनादिभी रात्रौ युधिष्ठिरसमीपगमनम् ॥ १ ॥
युधिष्ठिरेण सहर्षं स्वानभिभाषणे अर्जुनेन भीमंप्रति
तत्कारणप्रश्नः ॥ २ ॥
युधिष्ठिरेण तं प्रति विराटेनाक्षताडनस्य तत्कारणत्वकथनम् ॥ ३ ॥
भीमादिभिः क्रोधाद्विराटवधाध्यवसाये युधिष्ठिरेण हेतुकथनेन
तत्प्रतिषेधनम् ॥ ४ ॥

Mahabharata - Virata Parva - Chapter Text

४-७३-० (३१४८८)
वैशंपायन उवाच। ४-७३-०क्ष् (३२९६)
प्रदाय वस्त्राणि किरीटमाली
विराटगेहे मुदितः सखीभ्यः ।
कृत्वा महर्तर्म तदाऽऽजिमध्ये
दिदृक्षया सोऽभिजगाम पार्थम् ॥ ४-७३-१ (३१४८९)
तं प्रेक्षमाणस्त्वथ धर्मराजं
पप्रच्छ पार्थोऽथ स भीमसेनम् ।
किं धर्मराजो हि यथापुरं मां
मुखं प्रतिच्छाद्य न चाह किंचित् ॥ ४-७३-२ (३१४९०)
तमेवमुक्त्वा परिशङ्कमानं
दृष्ट्वाऽर्जुनं भीमसेनं च राजा ।
तदाऽब्रवीत्तावभिवीक्ष्य राज-
न्युधिष्ठिरस्तत्परिमृज्य रक्तम् ॥ ४-७३-३ (३१४९१)
दुरात्मना त्वय्यभिपूज्यमाने
विराटराज्ञाऽभिहतोऽस्मि पार्थ ।
तस्मात्प्रहाराद्रुधिरस्य बिन्दू-

न्पश्यन्न चेमे पृथिवीं स्पृशेयुः ।
इति प्रतिच्छाद्य मुखं ततोऽहं
मन्युं नियच्छन्नुपविष्ट आसम् ॥ ४-७३-४ (३१४९२)
शुभार्हे राष्ट्रं न खिलीकृतं भवे-
द्वयं तु यस्मिन्सुखिनोऽभवाम ।
क्रुद्धे तु वीरे त्वयि चाप्रतीते
राजा विराटो न लभेत शर्म ॥ ४-७३-५ (३१४९३)
अजानता तेन च शौर्यमाजौ
छन्नस्य सत्रेण बलं च पार्थ ।
इदं विराटेन मयि प्रयुक्तं
त्वां वीक्षमाणो न गतोस्मि हर्षम् ॥ ४-७३-६ (३१४९४)
वैशंपायन उवाच ४-७३-७क्ष् (३२९७)
तेनाप्रमेयेन महाबलेन
तस्मिंस्तथोक्ते शममास्थितेन ।
तं भीमसेनो बलवानमर्षी
धनंजयं क्रुद्धमुवाच वाक्यम् ॥ ४-७३-७ (३१४९५)
न पार्थ नित्यं क्षमकालमाह
बृहस्पतिर्ज्ञानवतां वरिष्ठः ।
क्षमीह सर्वैः परिभूयतेसौ
यथा भुङ्गो विषवीर्यहीनः ॥ ४-७३-८ (३१४९६)
विराटमद्यैव निहत्य शीघ्रं
सपुत्रपौत्रं सकुलं ससैन्यम् ।
योक्ष्यामहे धर्मसुतं च राज्ये
अद्यैव शीघ्रं त्वरिरेष मात्स्यः ॥ ४-७३-९ (३१४९७)
अनेन पाञ्चालसुताऽथ कृष्णा
उपेक्षिता कीचकेनाभियुक्ता ।
तस्मादयं नार्हति राजशब्दं
राजा भव त्वं नृप पार्थवीर्यात् ॥ ४-७३-१० (३१४९८)
राजा कुरूणां च युधिष्ठिरोऽयं
मात्स्येषु राजा भवतु प्रवीरः
तं मात्स्यदेहं शतधा भिनद्मि
पूर्णोदकं कुम्भमिवाश्मनीह ॥ ४-७३-११ (३१४९९)
अर्जुन उवाच। ४-७३-१२क्ष् (३२९८)
भवतः क्षमया राजन्त्सर्वे दोषाश्च नोऽभवन् ।
तं मात्स्यं सबलं हत्वा सपुत्रज्ञातिबान्धवम् ।
पश्चाच्चैव कुरून्सर्वान्हनिष्यामि न संशयः ॥ ४-७३-१२ (३१५००)

भीमसेनश्च ये चान्ये तथैवेति तमब्रुवन् ॥ ४-७३-१३ (३१५०१)
तमब्रवीद्धर्मसुतो महात्मा
क्षमी वदान्यः कुपितं च भीमम् ।
न प्रत्युपस्थास्यति चेत्सदारः
प्रसादने सम्यगथास्तु वध्यः ॥ ४-७३-१४ (३१५०२)
न हन्तव्यो दुरात्माऽयं विराटश्चापि तेऽर्जुन ॥ ४-७३-१५ (३१५०३)
श्वः प्रभाते प्रवेक्ष्यामः सभां सिंहासनेष्वपि ।
राजवेषेण संयुक्ताः स्थानमस्व स्वलंकृताः ॥ ४-७३-१६ (३१५०४)
विराटो यदि तत्रस्थान्राजालङ्कारशोभितान् ।
राजलक्षणसंपन्नान्यदि तत्र न मंस्यते ।
पश्चाद्धन्यामहे पार्थ विराटं सहबान्धवम् ॥ ४-७३-१७ (३१५०५)
इतिकर्तव्यतां सर्वे मन्त्रयित्वा तु पाण्डवाः ।
न्यवसंश्चैव तां रात्रिं धर्मज्ञा धर्मवत्सलाः ॥ ४-७३-१८ (३१५०६)
सहपुत्रेण मात्स्यः स संप्रहृष्टो नराधिपः ।
तां रात्रिमवसत्प्रीतः संप्रहृष्टेन चेतसा ॥ ॥ ४-७३-१९ (३१५०७)

इति श्रीमन्महाभारते विराटपर्वणि गोग्रहणपर्वणि त्रिसप्ततितमोऽध्यायः ॥

---

विरतपर्व-अध्यय०७४
॥ श्रीः ॥
४.७४. अध्यायः ७४

Mahabharata - Virata Parva - Chapter Topics
कुरुविजयदिनात्परेद्युः प्रभाते युधिष्ठिरादिभी राजलक्षणधारणेन
सिंहासनादिषूपवेशनम् ॥ १ ॥
ततः सहोत्तरेण सभामागतवता विराटेन युधिष्ठिरंप्रति
राजासनोपवेशनाक्षेपः ॥ २ ॥
अर्जुनेन तंप्रति युधिष्ठिरस्य याथातथ्यकथनेन
तदीयगुणानुवर्णनपूर्वकं तस्य राजासनारोहणार्हत्वप्रतिपादनम् ॥ ३ ॥

Mahabharata - Virata Parva - Chapter Text

वैशंपायन उवाच ।
ततो द्वितीये दिवसे भ्रातरः पञ्च पाण्डवाः ।
स्नाताः शुक्लाम्बरधराः सर्वे सुचरितव्रताः ॥ ४-७४-१ (३१५०८)
युधिष्ठिरं पुरस्कृत्य सर्वाभरणभूषिताः ।

अभिपन्ना महाभागा भ्राजमाना महारथाः ॥ ४-७४-२ (३१५०९)
विराटस्य सभां प्राप्य भूमिपालासनेषु ते ।
निषेदुः पावकप्रख्याः सत्रे धिष्ण्येष्विवाग्नयः ॥ ४-७४-३ (३१५१०)
तेषु तत्रोपविष्टेषु विराटः पृथिवीपतिः ।
तस्यां रात्र्यां व्यतीतायां प्रातःकृत्यं समाप्य च ॥ ४-७४-४ (३१५११)
गोसुवर्णादिकं दत्त्वा ब्राह्मणेभ्यो यथाविधि ।
आजगाम सभां राजा उत्तरेण सह प्रभो ॥ ४-७४-५ (३१५१२)
स तान्दृष्ट्वा महासत्वाञ्ज्वलतः पावकानिव ।
राजवेषानुपादाय पार्थिवो विस्मितोऽभवत्। ४-७४-६ (३१५१३)
किमिदं को विधिस्त्वेष भयार्त इव पार्थिवः ।
पुरुषप्रवरान्दृष्ट्वा विषादमगमन्नृपः ॥ ४-७४-७ (३१५१४)
अथ मात्स्योऽब्रवीत्कङ्कं देवराजमिव स्थितम् ।
मरुद्गणैरुपासीनं त्रिदशानामिवेश्वरम् ॥ ४-७४-८ (३१५१५)
स किलाक्षनिवापस्त्वं सभास्तारो मया कृतः ।
अथ राजासने कस्मादुपविष्टोऽस्यलंकृतः ॥ ४-७४-९ (३१५१६)
वैशंपायन उवाच। ४-७४-१०क्ष् (३२९९)
परिहासेच्छया राज्ञो विराटस्य निशम्य तत् ।
स्मयमानोऽब्रवीद्वाक्यमर्जुनः परवीरहा ॥ ४-७४-१० (३१५१७)
इन्द्रस्यार्धासनं राजन्नयमारोढुमर्हति ।
ब्रह्मण्यः श्रुतवांस्त्यागी सर्वलोकाभिपूजितः ॥ ४-७४-११ (३१५१८)
एष विग्रहवान्धर्म एष वीर्यवतां वरः ।
एष बुद्ध्याधिको लोके तपसां च परायणम् ॥ ४-७४-१२ (३१५१९)
एषोऽस्त्रं विविधं वेत्ति त्रैलोक्ये सचराचरे ।
न चैवान्यः पुमान्वेत्ति न वेत्स्यति कदाचन ॥ ४-७४-१३ (३१५२०)
न देवा नासुराः केचिन्न मनुष्या न राक्षसाः ।
गन्धर्वयक्षप्रवराः सकिन्नरमहोरगाः ॥ ४-७४-१४ (३१५२१)
दीर्घदर्शी महातेजाः पौरजानपदप्रियः ।
पाण्डवानामतिरथो यज्ञधर्मपरो वशी ॥ ४-७४-१५ (३१५२२)
महर्षिकल्पो राजर्षिः सर्वलोकेषु विश्रुतः ।
बलवान्धृतिमान्दक्षः सत्यवादी जितेन्द्रियः ॥ ४-७४-१६ (३१५२३)
धनैश्च संचयैश्चैव शक्रवैश्रवणोपमः ।
यथा मनुर्महातेजा लोकानां परिरक्षिता ।
एवमेव महातेजाः प्रजानुग्रहकारकः ॥ ४-७४-१७ (३१५२४)
अयं कुरूणामृषभः कुन्तीपुत्रो युधिष्ठिरः ।
यस्य कीर्तिः स्थिता लोके सूर्यस्येवोद्यतः प्रभा ॥ ४-७४-१८ (३१५२५)
संसरन्ति दिशः सर्वा यशसोस्य गभस्तयः ।

उदितस्येव सूर्यस्य तेजसोऽनुगभस्तयः ॥ ४-७४-१९ (३१५२६)
एनं त्रिंशत्सहस्राणि कुञ्जराणां तरस्विनाम् ।
अन्वयुः पृष्ठतो राजन्यावदध्यावसत्कुरून् ॥ ४-७४-२० (३१५२७)
त्रिंशच्चैव सहस्राणि रथानां रथिनां वरम् ।
सदश्वैरुपसंपन्नाः पृष्ठतोऽनुययुस्तदा ॥ ४-७४-२१ (३१५२८)
वाजिनां च शतं राजन्त्सहस्राण्ययुतानि च ।
इममष्टशतं सूताः सुमृष्टमणिकुण्डलाः ।
तुष्टुवुर्मागधैः सार्धं पुरा शक्रमिवर्षयः ॥ ४-७४-२२ (३१५२९)
इमं नित्यपुमातिष्ठन्कुरवः किंकरास्तदा ।
सर्वे च नृप राजानं धनेश्वरमिवामराः ॥ ४-७४-२३ (३१५३०)
एष सर्वान्महीपालान्करमाहारयत्तदा ।
वैश्यानिव महाराज विवशान्स्ववशानपि ॥ ४-७४-२४ (३१५३१)
अष्टाशीतिसहस्राणि स्नातकानां महात्मनाम् ।
उपजीवन्ति राजानमेनं सुचरितव्रताः ॥ ४-७४-२५ (३१५३२)
एष वृद्धाननाथांश्च व्यङ्गान्पङ्गूंश्च वामनान् ।
पुत्रवत्पालयामास प्रजाधर्मेण चाभिभूः ॥ ४-७४-२६ (३१५३३)
एष धर्मे दमे चैव दाने सत्ये रतः सदा ।
महाप्रसादो ब्रह्मण्यः सत्यवादी च पार्थिवः ॥ ४-७४-२७ (३१५३४)
श्रीमत्संपत्प्रभावेन तप्यते यस्य कौरवः ।
रगणः सह कर्णेन सौबलेन च वीर्यवान् ॥ ४-७४-२८ (३१५३५)
गुणा न शक्याः संख्यातुमेतस्यैव नरेश्वर ।
एष धर्मपरो नित्यमनृशंसः सुशीलवान् ॥ ४-७४-२९ (३१५३६)
एवं युक्तो महाराजा पाण्डवः पुरुषर्षभः ।
कथं नार्हति राजार्हमासनं पृथिवीपतिः ॥ ॥ ४-७४-३० (३१५३७)

इति श्रीमन्महाभारते विराटपर्वणि वैवाहिकपर्वणि
चतुःसप्ततितमोऽध्यायः ॥

---

विरतपर्व-अध्यय०७५
॥ श्रीः ॥
४.७५. अध्यायः ७५

Mahabharata - Virata Parva - Chapter Topics
अर्जुनेन विराटप्रश्नाद्बल्लादीनां भीमसेनादित्वकथनम् ॥ १ ॥
उत्तरेण विराटंप्रति तत्तल्लक्षणाभिधानपूर्वकं युधिष्ठिरादीनां
निर्देशः ॥ २ ॥
तथाऽर्जुनपराक्रमवर्णनम् ॥ ३ ॥

ततो विराटेन सप्रणामं युधिष्ठिरादिप्रसादनम् ॥ ४ ॥

Mahabharata - Virata Parva - Chapter Text

४-७५-० (३१५३८)
विराट उवाच। ४-७५-०क्ष् (३३००)
यद्येष राजा कौरव्यः कुन्तीपुत्रो युधिष्ठिरः ।
कतमोऽस्यार्जुनो भ्राता भीमश्च कतमो बली ॥ ४-७५-१ (३१५३९)
नकुलः सहदेवो वा द्रौपदी वा यशस्विनी ।
यदा ह्यक्षैर्जिता ह्येते नान्तरा श्रूयते कथा ॥ ४-७५-२ (३१५४०)
अर्जुन उवाच। ४-७५-३क्ष् (३३०१)
य एष बललोऽभूत्ते सूपकारश्च ते नृप ।
एष भीमो महाभाग भीमवेगपराक्रमः ॥ ४-७५-३ (३१५४१)
एष क्रोधवशान्हत्वा पर्वते गन्धमादने ।
सौगन्धिकानि पुष्पाणि कृष्णार्थे समुपानयत् ॥ ४-७५-४ (३१५४२)
गन्धर्व एष वै हन्ता कीचकानां दुरात्मनाम् ।
व्याघ्रानृक्षान्गजांश्चैव हतवांश्च पुरे तव ॥ ४-७५-५ (३१५४३)
हिडिम्बं च बकं चैव किर्मीरं च जटासुरम् ।
हत्वा निष्कण्टकं चक्रे अरण्यं सर्वतः शुभम् ॥ ४-७५-६ (३१५४४)
यश्चासीदश्वबन्धस्ते नकुलोऽयं परन्तप ।
गोसङ्ख्यः सहदेवश्च माद्रीपुत्रौ महाबलौ ॥ ४-७५-७ (३१५४५)
शृङ्गारवेषारणौ रूपवन्तौ मनस्विनौ ।
नानारथसहस्राणां समर्थौ भरतर्षभौ ॥ ४-७५-८ (३१५४६)
एषा पद्मपलाशाक्षी सुमध्या चारुहासिनी ।
सैरन्ध्री द्रौपदी राजन्यकृते कीचका हताः ॥ ४-७५-९ (३१५४७)
द्रुपदस्य प्रिया पुत्री धृष्ट्युम्नस्य चानुजा ।
अग्निकुण्डात्समुद्भूता द्रौपदी त्ववगम्यताम् ॥ ४-७५-१० (३१५४८)
भीम उवाच। ४-७५-११क्ष् (३३०२)
अस्त्रज्ञो दुर्लभः कश्चित्केवलं पृथिवीमनु ।
धनुर्भृतामतिश्रेष्ठः कौन्तेयोयं धनंजयः ॥ ४-७५-११ (३१५४९)
एतेन खाण्डवं तस्य ह्यकामस्य शतक्रतोः ।
दग्धं नागवनं चैव सह नागैर्नराधिप ॥ ४-७५-१२ (३१५५०)
वर्षं च शरवर्षेण वारितं दुर्जयेन वै ।
करमाहारिताः सर्वे पार्थिवाः पृथिवीतले ॥ ४-७५-१३ (३१५५१)
स्त्रीवेषं कृतवानेष तव राजन्निवेशने ।
बृहन्नलेति यामाहुरर्जुनं जयतांवरम् ॥ ४-७५-१४ (३१५५२)

उषिताःस्म सुखं सर्वे तव राजन्निवेशने ।
अज्ञातवासे निभृता गर्भवास इव प्रजाः ॥ ४-७५-१५ (३१५५३)
वैशंपायन उवाच। ४-७५-१६क्ष् (३३०३)
यदाऽर्जुनेन ते वीराः कथिताः पञ्च पाण्डवाः ।
पुनरेव च तान्पार्थान्दर्शयामास चोत्तरः ॥ ४-७५-१६ (३१५५४)
उत्तर उवाच। ४-७५-१७क्ष् (३३०४)
य एष जाम्बूनदशुद्धगौर-
तनुर्महान्सिंह इव प्रवद्धः ।
प्रचण्डघोणः पृथुदीर्घनेत्र-
स्ताम्रायताक्षः कुरुराज एषः ॥ ४-७५-१७ (३१५५५)
अयं पुनर्मत्तगजेन्द्रगामी
प्रतप्तचामीकरशुद्धगौरः ।
पृथ्वायतांसो गुरुदीर्घबाहु-
र्वृकोदरः पश्यत पश्यतैनम् ॥ ४-७५-१८ (३१५५६)
यस्त्वेव पार्श्वेऽस्य महाधनुष्मा-
ञ्श्यामो युवा वारणयूथपोपमः ।
सिंहोन्नतांसो गजराजगामी
पद्मायताक्षोऽर्जुन एष वीरः ॥ ४-७५-१९ (३१५५७)
राज्ञः समीपे पुरुषोत्तमौ तु
यमाविमौ विष्णुमहेन्द्रकलौ ।
मनुष्यलोके सकले समोऽस्ति
ययोर्न रूपे न बले न शीले ॥ ४-७५-२० (३१५५८)
आभ्यां तु पार्श्वे कनकोत्तमाङ्गी
यैषा प्रभा मूर्तिमतीव गौरी ।
नीलोत्पलाभा सुरदेवतेव
कृष्णा स्थिता मूर्तिमतीव लक्ष्मीः ॥ ४-७५-२१ (३१५५९)
वैशंपायन उवाच। ४-७५-२२क्ष् (३३०५)
एवं निवेद्य तान्पार्थान्पाण्डवान्पञ्च भूपतेः ।
ततोऽर्जुनस्य वैराटिः कथयामास विक्रमम् ॥ ४-७५-२२ (३१५६०)
अयं स द्विषतां मध्ये मृगाणामिव केसरी ।
अचरद्रथबृन्देषु निघ्नंस्तेषां परावरान् ॥ ४-७५-२३ (३१५६१)
अनेन विद्धा मातङ्गा महामेघोपमास्तदा ।
हिरण्यकक्ष्याः संग्रामे दन्ताभ्यामगमन्महीम् ४-७५-२४ (३१५६२)
अनेन विजिता गावो निर्जिताः कुरवो युधि ।
अस्य शङ्खस्य शब्देन कर्णौ मे बधिरीकृतौ ॥ ४-७५-२५ (३१५६३)
जायते रोमर्षो मे संस्मृत्यास्य धनुर्ध्वनिम् ।

ध्वजस्य वानरं भूतैराक्रोशन्तं सहानुगैः ॥ ४-७५-२६ (३१५६४)
नाददानं शरान्घोरान्न मुञ्चन्तं शरोत्करान् ।
न कार्मुकं विकर्षन्तमेनं पश्यामि संयुगे ॥ ४-७५-२७ (३१५६५)
एतद्धनुःप्रमुक्ताश्च शराः पुङ्खानुपुङ्खिनः ।
नालक्ष्येषु रणे पेतुर्नाराचा रक्तभोजनाः ॥ ४-७५-२८ (३१५६६)
तीक्ष्णनाराचसंकृत्तशिरोबाहूरुवक्षसाम् ।
कलेबराणि दृश्यन्ते योधानां साश्वसादिनां ॥ ४-७५-२९ (३१५६७)
अनेन तटिनी तत्र शोणिताम्बुप्रवाहिनी ।
प्रवर्तिता भीमरूपा यां स्मृत्वाऽद्यापि मे मनः ।
प्रकम्पते चण्डवायुकम्पिता कदली यथा ॥ ४-७५-३० (३१५६८)
अनेन राजन्वीरेण भीष्मद्रोणमुखा रथाः ।
दुर्योधनेन सहिता निर्जिता भीमकर्मणा ॥ ४-७५-३१ (३१५६९)
अयं भीतं द्रवन्तं मां देवपुत्रो न्यवारयत् ।
यस्य बाहुबलेनास्मि जीवन्प्रत्यागतः पुरम् ॥ ४-७५-३२ (३१५७०)
वैशंपायन उवाच। ४-७५-३३क्ष् (३३०६)
तस्य तद्वचनं श्रुत्वा मात्स्यराजः प्रतापवान् ।
धनंजयं परिष्वज्य पाण्डवानथ सर्वशः ॥ ४-७५-३३ (३१५७१)
धर्मराजं नमस्कृत्य राजा राज्येऽभिषेचितम् ।
नातृप्यद्दर्शने तेषां विराटो वाहिनीपतिः ॥ ४-७५-३४ (३१५७२)
संप्रीयमाणो राजानां युधिष्ठिरमथाब्रवीत् ।
दिष्ट्या भवन्तः संप्राप्ताः सर्वे कुशलिनो वनात् ।
दिष्ट्या विचरितं कृच्छ्रमज्ञातं च दुरात्मभिः ॥
इदं राज्यं च वः सर्वं यच्चापि वसु किंचन ।
विभक्तमेतद्भवतां नोत्कण्ठां कर्तुमर्हथ ।
अविभक्तं भवद्भिर्मे न सन्देहो नराधिपाः ॥ ॥ ४-७५-३५ (३१५७३)

इति श्रीमन्महाभारते विराटपर्वणि वैवाहिकपर्वणि
पञ्चसप्ततितमोऽध्यायः ॥

---

विरतपर्व-अध्यय०७६
॥ श्रीः ॥
४.७६. अध्यायः ७६

Mahabharata - Virata Parva - Chapter Topics
उत्तरेण विराटंप्रति युधिष्ठिरादिकृतोपकारस्मारणपूर्वकमुत्तरायाः
प्रदानेन तत्प्रसादनचोदना ॥ १ ॥
युधिष्ठिरेणोत्तराया पुरस्कारेण सप्रणामं प्रसादयते

विराटायाभयप्रदानम् ॥ २ ॥

Mahabharata - Virata Parva - Chapter Text

४-७६-० (३१५७४)
वैशंपायन उवाच। ४-७६-०क्ष् (३३०७)
विराटस्य वचः श्रुत्वा पार्थिवस्य महात्मनः ।
उत्तरः प्रत्युवाचेदमभिपन्नो युधिष्ठिरे ॥ ४-७६-१ (३१५७५)
प्रसादनं प्राप्तकालं पाण्डवस्याभिरोचये ।
तेजस्वी बलवाञ्शूरो राजराजेश्वरः प्रभुः ॥ ४-७६-२ (३१५७६)
उत्तरां च स्वसारं मे पार्थस्यामित्रकर्शन ।
प्रणिपत्य प्रयच्छामस्ततः शिष्टा भवामहे। ४-७६-३ (३१५७७)
वयं च सर्वे सामात्याः कुन्तीपुत्रं युधिष्ठिरम् ।
प्रसाद्याभ्युपतिष्ठामो राजन्किं करवागहे ॥ ४-७६-४ (३१५७८)
राजंस्त्वमसि संग्रामे गृहीतस्तेन मोक्षितः ।
एतेषां बाहुवीर्येण गावश्च विजितास्त्वया ॥ ४-७६-५ (३१५७९)
कुरवो निर्जिता यस्मात्संग्रामेऽमिततेजसः ।
एष तत्सर्वमकरोत्कुन्तीपुत्रो युधिष्ठिरः ॥ ४-७६-६ (३१५८०)
अर्च्याः पूज्याश्च मान्याश्च प्रत्युत्थेयाश्च पाण्डवाः ।
अर्वार्हाश्चाभिवाद्याश्च प्राप्तकालं च मे मतम् ॥ ४-७६-७ (३१५८१)
पूज्यतां पूजनीयाश्च महाभागाश्च पाण्डवाः ।
न ह्येते कुपिता शेषं कुर्युराशीविषोपमाः ॥ ४-७६-८ (३१५८२)
तस्माच्छीघ्रं प्रपद्येम कुन्तीपुत्रं युधिष्ठिरम् ।
प्रसादयाम्यहं तत्र सह पार्थैर्महात्मभिः ॥ ४-७६-९ (३१५८३)
उत्तरामग्रतः कृत्वा शिरःस्नातां कृताञ्जलिः ।
जानाम्यहमिदं सर्वमेषां तु बलपौरुषम् ।
कुले च जन्म महति फल्गुनस्य च विक्रमम् ॥ ४-७६-१० (३१५८४)
वैशंपायन उवाच। ४-७५-११क्ष् (३३०८)
उत्तरात्पाण्डवाञ्श्रुत्वा विराटो रिपुसूदनः ।
उत्तरं चापि संप्रेक्ष्य प्राप्तकालमचिन्तयत् ॥ ४-७६-११ (३१५८५)
ततो विराटः सामात्यः सहपुत्रः सबान्धवः ।
उत्तरामग्रतः कृत्वा शिरःस्नातां कृताञ्जलिः ।
भूमौ निपतितस्तूर्णं पाण्डवस्य समीपतः ॥ ४-७६-१२ (३१५८६)
विराट उवाच। ४-७६-१३क्ष् (३३०९)
प्रसीदतु महाराजो धर्मपुत्रो युधिष्ठिरः ।
प्रच्छन्नरूपवेषत्वान्नाग्निर्दृष्टस्तृणैर्वृतः ॥ ४-७६-१३ (३१५८७)

शिरसाऽभिप्रपन्नोस्मि सपुत्रपरिचारकः ॥ ४-७६-१४ (३१५८८)
यदस्माभिरजानद्भिरधिक्षिप्तो महीपतिः ।
अवमत्य कृतं सर्वमज्ञानात्प्राकृते यथा ।
क्षन्तुमर्हसि तत्सर्वं धर्मज्ञो धर्मवत्सल ॥ ४-७६-१५ (३१५८९)
यदिदं मामकं राष्ट्रं पुरं राज्यं च पार्थिव ।
सदण्डकोशं विसृजे तव वश्योस्मि पार्थिव ।
वयं च सर्वे सामात्या भवन्तं शरणं गताः ॥ ४-७६-१६ (३१५९०)
वैशंपायन उवाच। ४-७६-१७क्ष् (३३१०)
तं धर्मराजः पतितं महीतले
सबन्धुवर्गं प्रसमीक्ष्य पार्थिवम् ।
उवाच वाक्यं परलोकदर्शनः
प्रनष्टमन्युर्गतशोकमत्सरः ॥ ४-७६-१७ (३१५९१)
न मे भयं पार्थिव विद्यते मयि
प्रतीतरूपोस्म्यनुचिन्त्य मानसम् ।
एतत्त्वया सम्यगिहोपपादितं
द्विजैरमात्यैः सदृशैश्च पाण्डितैः ।
इमां च कन्यां समलंकृतां भृशं
समीक्ष्य तुष्टोस्मि नरेन्द्रसत्तम ॥ ४-७६-१८ (३१५९२)
क्षान्तमेतन्महाबाहो यन्मां वदसि पार्थिव ।
न चैव किंचित्पश्यामि विकृतं ते नराधिप ॥ ४-७६-१९ (३१५९३)
वैशंपायन उवाच। ४-७६-२०क्ष् (३३११)
ततो विराटः परमामितुष्टः
समेत्य राज्ञा समयं चकार ।
राज्यं च सर्वं विससर्ज तस्मै
सदण्डकोशं सपुरं महात्मा ॥ ॥ ४-७६-२० (३१५९४)

इति श्रीमन्महाभारते विराटपर्वणि वैवाहिकपर्वणि
षट्सप्ततितमोऽध्यायः ॥
Mahabharata - Virata Parva - Chapter Footnotes

४-७६-१ अभिपन्नोऽपराधं कृतवान् ॥
१ ॥
४-७६-३ ततस्तुष्टा भवन्तु ते इति थो पाठः ॥
३ ॥

---

विरतपर्व-अध्यय०७७
॥ श्रीः ॥

## ४.७७. अध्यायः ७७

Mahabharata - Virata Parva - Chapter Topics

विराटेनार्जुनंप्रति स्वकुमार्या उत्तराया भार्यात्वेन प्रतिग्रहणप्रार्थने
तंप्रत्यर्जुनेन सहेतुकथनं स्नुषात्वेन परिग्रहाङ्गीकरणम् ॥ १ ॥
दुर्योधनेन युधिष्ठिरंप्रति दूतमुखेन
त्रयोदशवत्सरस्यासंपूर्तावेवार्जुनेनात्मप्रकाशनात्पुनर्वनवास-
विधेयतानिवेदनम् ॥ २ ॥
युधिष्ठिरेण तंप्रति तेनैव दूतेन भीष्ममुखात्संदेहस्य
परिहरणीयताप्रतिवेदनम् ॥ ३ ॥
भीष्मेण विचार्य निर्धारणपूर्वकं संकेतकालस्य पूर्णत्वोक्तिः ॥ ४ ॥

Mahabharata - Virata Parva - Chapter Text

४-७७-० (३१५९५)
विराट उवाच। ४-७७-०क्ष् (३३१२)
यच्च वक्ष्याम्यहं तेऽद्य मा शङ्केथा युधिष्ठिर ।
इदं सनगरं राष्ट्रं सजनं सवधूजनम् ।
युष्यभ्यं संप्रदास्यामि भोक्ष्याम्युच्छिष्टमेव च ॥ ४-७७-१ (३१५९६)
अहं वद्धश्चिरं राजन्भुक्तभोगश्चिरं सुखम् ।
राज्यं दत्त्वा तु युष्मभ्यं प्रव्रजिष्यामि काननम् ॥ ४-७७-२ (३१५९७)
उत्तरां प्रतिगृह्णातु सव्यसाची धनंजयः ।
अयं ह्यौपयिको भर्ता तस्याः पुरुषसत्तमः ॥ ४-७७-३ (३१५९८)
वैशंपायन उवाच। ४-७७-४क्ष् (३३१३)
एवमुक्तो धर्मराजः पार्थपैक्षद्धनंजयम् ।
ईक्षितं चार्जुनो ज्ञात्वा मात्स्यं वचनमब्रवीत् ॥ ४-७७-४ (३१५९९)
वयं वनान्तरात्प्राप्ता न ते राज्यं गृहामहे ।
किंतु दुर्योधनादीनां राज्ञां राज्यं गृहामहे ॥ ४-७७-५ (३१६००)
प्रतिगृह्णाम्यहं राजन्स्नुषं दुहितरं तव ।
युक्तो ह्यावां हि संबन्धो मात्स्यभारतवंशयोः ॥ ४-७७-६ (३१६०१)
विराट उवाच। ४-७७-७क्ष् (३३१४)
किमर्थं पाण्डवश्रेष्ठ भार्यां दुहितरं मम ।
प्रतिग्रहीतुं नेमां त्वं मया दत्तमिहेच्छसि ॥ ४-७७-७ (३१६०२)
अर्जुन उवाच। ४-७७-८क्ष् (३३१५)
अन्तःपुरेऽहमुषितः सदा पश्यन्सुतां तव ।
सहस्यं च प्रकाशं च विश्वस्ता पितृवन्मयि ॥ ४-७७-८ (३१६०३)

प्रियो बहुमतश्चाहं नर्तने गीतवादिते ।
आचार्यवच्च मां नित्यं मन्यते दुहिता तव ॥ ४-७७-९ (३१६०४)
वयस्यया तया राजन्सह संवत्सरोषितः ।
अतिशङ्का ततोऽस्थाने तव लोकस्य च प्रभो ॥ ४-७७-१० (३१६०५)
तस्मादामन्त्रये त्वाऽद्य पुत्रार्थं मे विशांपते ।
सुद्धं जितेन्द्रियं मन्ये तस्याः शुद्धिः कृता मया ॥ ४-७७-११ (३१६०६)
स्नुषायां दुहितुर्वापि पुत्रे चात्मनि वा पुनः ।
अतिशङ्कां न पश्यामि तेन शुद्धिर्भविष्यति ॥ ४-७७-१२ (३१६०७)
अभिषङ्गादहं भीतो मिथ्याचारात्परंतप ।
स्नुषार्थमुत्तरां राजन्प्रतिगृह्णामि ते सुताम् ॥ ४-७७-१३ (३१६०८)
स्वस्त्रीयो वासुदेवस्य साक्षाद्देवसुतो यथा ।
दयितश्चक्रहस्तस्य बलवानस्त्रकोविदः ॥ ४-७७-१४ (३१६०९)
अभिमन्युर्गहाबाहुः पुत्रो मम विशांपते ।
जामाता तव युक्तो वै भर्ता च दुहितुस्तव ॥ ४-७७-१५ (३१६१०)
विराट उवाच। ४-७७-१६क्ष् (३३१६)
उपपन्नं कुरुश्रेष्ठे कुन्तीपुत्रे धनंजये ।
सदैव धर्मनित्यश्च ज्ञातज्ञानश्च पाण्डवः ॥ ४-७७-१६ (३१६११)
यत्कृत्यं मन्यसे पार्थ क्रियतां तदनन्तरम् ।
सर्वे कामाः समृद्धा मे संबन्धी यस्य मेऽर्जुनः ॥ ४-७७-१७ (३१६१२)
वैशंपायन उवाच। ४-७७-१८क्ष् (३३१७)
एवं ब्रुवति राजेन्द्रे कुन्तीपुत्रो युधिष्ठिरः ।
अन्वजानत संबन्धं समये कृष्णमात्स्ययोः ॥ ४-७७-१८ (३१६१३)
दूतान्सर्वेषु मित्रेषु वासुदेवे च भारत ।
प्रेषयामास कौन्तेयो विराटश्च महीपतिः । ४-७७-१९ (३१६१४)
प्रतिगृह्य स्नुषार्थं वै दर्शयन्व्रतमात्मनः ।
शीलशौचसमाचारं लोकस्यावेद्य फल्गुनः ॥ ४-७७-२० (३१६१५)
लोके विख्याप्य माहात्म्यं यशश्च स परंतपः ।
कृतार्थः शुचिरव्यग्रस्तुष्टिमानभवत्तदा ॥ ४-७७-२१ (३१६१६)
युधिष्ठिर उवाच। ४-७७-२२क्ष् (३३१८)
राजन्प्रीतोस्मि भद्रं ते सखा मेऽसि परन्तप ।
सुखमध्युषिताः सर्वे अज्ञातास्त्वयि पार्थिव ॥ ४-७७-२२ (३१६१७)
वैशंपायन उवाच। ४-७७-२३क्ष् (३३१९)
विराटनगरे राजा धर्मात्मा संशितव्रतः ।
पूजितश्चाभिषिक्तश्च रत्नैश्च शतशोर्चितः ॥ ४-७७-२३ (३१६१८)
तथा ब्रुवन्तं प्रसमीक्ष्य राजा
परं प्रहृष्टः स्वजनेन तेन ।

स्नेहात्परिष्वज्य नृपो भुजाभ्यां
ददौ महार्थं कुरुपाण्डवानाम् ॥ ४-७७-२४ (३१६१९)
युद्धात्प्रयाताः कुरवो हि मार्गे
समेत्य सर्वे हितमेव तत्र ।
आचार्यपुत्रः शकुनिश्च राजा
दुर्योधनः सूतपुत्रश्च कर्णः ।
संमन्त्र्य राजन्सहिताः समर्थाः
समादिशन्दूतमथो समग्राः ॥ ४-७७-२५ (३१६२०)
युधिष्ठिरश्चापि सुसंप्रहृष्टो
दुर्योधनाद्दूतमपश्यदागतम् ।
स चाब्रवीद्धर्मराजं समेत्य
युधिष्ठिरं पाण्डवमुग्रवीर्यम् ॥ ४-७७-२६ (३१६२१)
धनञ्जयेनासि पुनर्वनाय
प्रव्राजितः समये तिष्ठ पार्थः ।
त्रयोदशे ह्येव किरीटमाली
संवत्सरे पाण्डवेयोऽद्य दृष्टः ॥ ४-७७-२७ (३१६२२)
वैशंपायन उवाच। ४-७७-२८क्ष् (३३२०)
ततोऽब्रवीद्धर्मसुतः प्रहस्य
क्षिप्रं गत्वा ब्रूहि सुयोधनं तम् ।
पितामहः शान्तनवो ब्रवीतु
पूर्णो न पूर्णोऽद्य त्रयोदशो नः ॥ ४-७७-२८ (३१६२३)
संवत्सरात्ते तु धनञ्जयेन
विष्फारितं गाण्डिवमाजिमध्ये ।
पूर्णो न पूर्णो न इति ब्रवीतु
यदस्य सत्यं मम तत्प्रमाणम् ॥ ४-७७-२९ (३१६२४)
तेनैवमुक्तः स निवृत्य दूतो
दुर्योधनं प्राप्य शशंस तत्त्वम् ॥ ४-७७-३० (३१६२५)
समेत्य दूतेन स राजपुत्रो
दुर्योधनो मन्त्रयामास तत्र ।
भीष्मेण कर्णेन कृपेण चैव
द्रोणेन भूरिश्रवसा च सार्धम् ॥ ४-७७-३१ (३१६२६)
संमन्त्र्य रात्रौ बहुभिः सुहृद्भि-
र्भीष्मोऽब्रवीद्धार्तराष्ट्रं महात्मा ।
तीर्णप्रतिज्ञेन धनंजयेन
विष्फारितं गाण्डिवमाजिमध्ये ॥ ४-७७-३२ (३१६२७)
वैशंपायन उवाच। ४-७७-३३क्ष् (३३२१)

नेच्छन्त्यसत्येन सुरेन्द्रलोकं
पाण्डोः सुता ब्रह्मणश्चापि लोकम् ।
तथ्यं च ते पथ्यमहं ब्रवीमि
स्वर्ग्यं यशस्यं परलोकपथ्यम् ॥ ४-७७-३३ (३१६२८)
कुन्तीसुतैस्त्वं समुपैहि सन्धिं
भुङ्क्ष्व स्वराज्यं सह पाण्डवेयैः ।
युध्यस्व नोचेत्स्थिरबुद्धिराजौ
कुन्तीसुतैर्यद्यपि राज्यमिच्छेः ॥ ४-७७-३४ (३१६२९)
आन्तं न शक्यं कपटेन भोक्तुं
राज्यं परेषां महतां बलीनाम् ।
जित्वा शत्रून्भुङ्क्ष्व राज्यं समग्रं
हतो भवान्भोक्ष्यति वज्रिलोकम् ॥ ४-७७-३५ (३१६३०)
वैशंपायन उवाच। ४-७७-३६क्ष् (३३२२)
ततः स भागीरथिसूनुवाक्यं
निशम्य गान्धारितनूद्भवो नृपः ।
उवाच भीष्मं प्रमुखे च पित्रो-
र्महीं न दद्यामणुमात्रिकामपि ।
निहन्मि पाण्डूदरसंभवान्वा
हतोस्मि तैर्वा सुरलोकमेमि ॥ ४-७७-३६ (३१६३१)
ते धार्तराष्ट्राः समयं निशम्य
तीर्णप्रतिज्ञस्य धनंजयस्य
संचिन्त्य सर्वे सहिताः सुहृद्भिः
सपार्थिवाः स्वानि गृहाणि जग्मुः ॥ ॥ ४-७७-३७ (३१६३२)

इति श्रीमन्महाभारते विराटपर्वणि वैवाहिकपर्वणि
सप्तसप्ततितमोऽध्यायः ॥

Mahabharata - Virata Parva - Chapter Footnotes

४-७७-६ आवां आवयोः ॥
६ ॥

---

विरतपर्व-अध्यय०७८
॥ श्रीः ॥
४.७८. अध्यायः ७८

Mahabharata - Virata Parva - Chapter Topics

अज्ञातवासपरिसमापनानन्तरमुपप्लाव्यनगरे वसद्भिः

पाण्डवैर्दूतमुखेन समाहूतै रामकृष्णादिभिः
सुभद्राभिमन्युप्रभृतिभिः सहोपप्लाव्यं प्रत्यागमनम् ॥ १ ॥
तथा द्रौपदेयादिभिः सह द्रुपदादिभिरागमनम् ॥ २ ॥
तत उत्तरयाऽभिमन्योरुद्वाहः ॥ ३ ॥

Mahabharata - Virata Parva - Chapter Text

४-७८-० (३१६३३)
वैशंपायन उवाच। ४-७८-०क्ष् (३३२३)
ततस्त्रयोदशे वर्षे निवृत्ते पञ्च पाण्डवाः ।
उपप्लाव्ये विराटस्य वासं चक्रुः पुरोत्तमे ॥ ४-७८-१ (३१६३४)
दूतान्मित्रेषु सर्वेषु ज्ञातिसंबन्धिकेष्वपि ।
प्रेषयामास कौन्तेयो विराटश्च महीपतिः ॥ ४-७८-२ (३१६३५)
तेषु तत्रोपविष्टेषु प्रेषितेषु ततस्ततः ।
तत्रागमन्महाबाहुर्वनमाली बलानुजः ॥ ४-७८-३ (३१६३६)
तस्मिन्काले निशम्याथ दूतवाक्यं जनार्दनः ।
दयितं स्वस्त्रियं पुत्रं सुभद्रायाः सुमानितम् ।
अभिमन्युं समादाय रामेण सहितस्तदा ॥ ४-७८-४ (३१६३७)
सर्वयादवमुख्यैश्च संवृतः परवीरहा ।
शङ्खदुन्दुभिनिर्घोषैर्विराटनगरं ययौ ॥ ४-७८-५ (३१६३८)
कृतवर्मा च हार्दिक्यो युयुधानश्च सात्यकिः ।
अनाधृष्टिस्तथाऽक्रूरः सांबो निशठ एव च ।
प्रद्युम्नश्च महाबाहुरुल्मुकश्च महाबलः ॥ ४-७८-६ (३१६३९)
अभिमन्युमुपादाय सह मात्रा परन्तपाः ।
कृष्णेन सहिताः सर्वे पाण्डवान्द्रष्टुमागताः ॥ ४-७८-७ (३१६४०)
इन्द्रसेनादयश्चैव रथैस्तैः सुसमाहितैः ।
उपेयुः सहिताः सर्वे परिसंवत्सरोषिताः ॥ ४-७८-८ (३१६४१)
दशनागसहस्राणि हयानां द्विगुणं तथा ।
रथानां नियुतं पूर्णं निखर्वं च पदातयः ॥ ४-७८-९ (३१६४२)
वृष्ण्यन्धकाश्च शतशो भोजाश्च परमौजसः ।
अन्युर्वृष्णिशार्दूलं वासुदेवं महाबलम् ॥ ४-७८-१० (३१६४३)
वासुदेवं तथाऽऽयान्तं श्रुत्वा पाण्डुसुतास्तदा ।
मात्स्येन सहिताः सर्वे प्रत्युद्याता जनार्दनम् ॥ ४-७८-११ (३१६४४)
शङ्खदुन्दुभिनिर्घोषैर्मङ्गलैश्च जनार्दनम् ।
ववन्दुर्मुदिताः सर्वे पादयोस्तस्य पाण्डवाः ।
मात्स्येन सहिताः सर्वे आनन्दाश्रुपरिप्लुताः ॥ ४-७८-१२ (३१६४५)

पाण्डवा ऊचुः। ४-७८-१३क्ष् (३३२४)
तव कृष्ण प्रसादाद्वै वर्षाण्येतानि सर्वशः ।
त्रयोदशोपि दाशार्ह यथा स समयः कृतः ॥ ४-७८-१३ (३१६४६)
उषिताः स्मो जगन्नाथ त्वं नाथो नो जनार्दन ।
रक्षस्व देवदेवेश त्वामार्य शरणं गताः ॥ ४-७८-१४ (३१६४७)
वैशंपायन उवाच। ४-७८-१५क्ष् (३३२५)
तान्वन्दमानान्सहसा परिष्वज्य जनार्दनः ।
विराटस्य सहायांस्तान्सर्वयादवसंवृतः ॥ ४-७८-१५ (३१६४८)
यथार्हं पूजयामास मुदा परमया युतः ।
वृष्णिवीराश्च तान्सर्वान्यथार्हं प्रतिपेदिरे ॥ ४-७८-१६ (३१६४९)
कृष्णा च देवकीपुत्रं ववन्दे पादयोस्तथा ।
तामुद्यम्य सुकेशान्तां नयने परिमृज्य च ।
उवाच वाक्यं देवेशः सर्वयादवसन्निधौ ॥ ४-७८-१७ (३१६५०)
मा शोकं कुरु कल्याणि धार्तराष्ट्रान्समाहितान् ।
अचिराद्धातयित्वाऽहं पार्थेन सहितः क्षितिम् ॥ ४-७८-१८ (३१६५१)
युधिष्ठिराय दास्यामि यातु ते मानसो ज्वरः ।
अभिमन्युना च पार्थेनरौक्मिणेयेन ते शपे ॥ ४-७८-१९ (३१६५२)
सत्यमेतद्वचो मह्यमवैहि त्वमनिन्दिते ।
इत्युक्त्वा तां विसृज्याथ प्रीयमाणो युधिष्ठिरम् ।
अन्वास्त वृष्णिशार्दूलः सह वृष्ण्यन्धकैस्तथा ॥ ४-७८-२० (३१६५३)
काशिराजश्च शैब्यश्च भजमानौ युधिष्ठिरम् ।
अक्षौहिणीभ्यां सहितावागतौ पृथिवीपती ॥ ४-७८-२१ (३१६५४)
अक्षौहिणीभिः पाञ्चालस्तिसृभिश्च महाबलः ।
द्रौपद्याश्च सुता वीराः शिखण्डी चापराजितः ॥ ४-७८-२२ (३१६५५)
धृष्टद्युम्नश्च दुर्धर्षः सर्वशस्त्रभृतांवरः ।
उपप्लाव्यं ययुः शीघ्रं पाण्डवार्थे महाबलाः ॥ ४-७८-२३ (३१६५६)
ततः शतसहस्राणि प्रयुतान्यर्बुदानि च ।
समीपमभिवर्तन्ते योधा यौधिष्ठिरं बलम् ॥ ४-७८-२४ (३१६५७)
समुद्रमिव धर्मान्ते स्रोतःश्रेष्ठाः पृथक्पृथक् ।
आपूरयन्महीपाला यज्वानो भूरिदक्षिणैः ।
वेदावभृथसंपन्नाः शूराः सर्वे तनुत्यजः ॥ ४-७८-२५ (३१६५८)
तानागतानभिप्रेक्ष्य पार्थो ज्ञानभृतां वरः ।
पूजयामास विधिवद्यथार्हं राजसत्तमान् ॥ ४-७८-२६ (३१६५९)
पारिबर्हं ददौ कृष्णः पाण्डवानां महात्मनाम् ।
स्त्रियो वासांसि रत्नानि पृथक्पृथगनेकशः ॥ ४-७८-२७ (३१६६०)
राजानो राजपुत्राश्च निवृत्ते समये तथा ।

यथार्हं पाण्डवश्रेष्ठैरवर्तन्ताभिपूजिताः ।
आसन्प्रहृष्टमनसः पारिबर्हं ददुस्तदा ॥ ४-७८-२८ (३१६६१)
सर्वेषु समवेतेषु राजभिर्वृष्णिभिः सह ।
विवाहो विधवद्राजन्ववृधे कुरुमात्स्ययोः ॥ ४-७८-२९ (३१६६२)
ततः शङ्खा मृदङ्गाश्च गोमुखा डिण्डिमास्तदा ।
अभिमन्योर्विवाहे तु नेदुर्मात्स्यस्य वेश्मनि ॥ ४-७८-३० (३१६६३)
उच्चावचान्मृगाञ्जघ्नुर्मेध्यांश्च शतशस्तथा ।
भक्ष्यान्नभोज्यपानानि प्रभूतान्यभ्यहारयन् ॥ ४-७८-३१ (३१६६४)
गायनाख्यानशीलाश्च नटा वैतालिकास्तथा ।
स्तुवन्तस्तानुपातिष्ठन्सूताश्च सह मागधैः ॥ ४-७८-३२ (३१६६५)
स्त्रियो वृद्धास्तरुण्यश्च उत्सवे तस्य मङ्गले ।
द्रौपद्यन्तःपुरे चैव विराटस्य गृहे स्त्रियः ॥ ४-७८-३३ (३१६६६)
सुदेष्णां तु पुरस्कृत्य मत्स्यानामपि च स्त्रियः ।
आजग्मुश्चारुपीनाङ्ग्यः सुमृष्टमणिकुण्डलाः ॥ ४-७८-३४ (३१६६७)
वर्णोपपन्नास्ता नार्यो रूपवन्तयः स्वलंकृताः ।
सर्वासामभवत्कृष्णा रूपेण वपुषाऽधिका ॥ ४-७८-३५ (३१६६८)
परिवार्योत्तरां श्लाघ्यां राजपुत्रीमलंकृताम् ।
सुतामिव महेन्द्रस्य पुरस्कृत्योपतस्थिरे ॥ ४-७८-३६ (३१६६९)
भृङ्गारुं तु समादाय सौवर्णं जलपूरितम् ।
पार्थस्य हस्ते सहसा सुतामिन्दीवरेक्षणाम् ।
स्नुषार्थं प्राक्षिपद्वारि विराटो वाहिनीपतिः ॥ ४-७८-३७ (३१६७०)
तां प्रत्यगृह्णाकौन्तेयः सुतस्यार्थे महामनाः ।
सौभद्रास्यानवद्याङ्गो विराटतनयां तदा ॥ ४-७८-३८ (३१६७१)
तत्रातिष्ठद्गृहीत्वा तु रूपमिन्द्रास्य धारयन् ।
स्नुषां तां परिगृह्णानः कुन्तीपुत्रो युधिष्ठिरः ॥ ४-७८-३९ (३१६७२)
द्रुपदश्च विराटश्च शिखण्डी च महाबलः ।
युयुधानश्च शैब्यश्च धृष्टद्युम्नश्च सात्यकिः ॥ ४-७८-४० (३१६७३)
सप्तैतेऽक्षौहिणीपाला यज्वानो भूरिदक्षिणाः ।
पाण्डवं परिवार्यैते निवेशं चक्रिरे तदा ॥ ४-७८-४१ (३१६७४)
तत्रस्थायां तु सेनायां मात्स्यो धर्मभृतांवरः ।
प्रीतो दुहितरं गृह्य प्रददावभिमन्यवे ॥ ४-७८-४२ (३१६७५)
प्रतिगृह्योत्तरां पार्थः पुरस्कृत्य जनार्दनम् ।
विवाहं कारयामास सौभद्रस्य महात्मनः ॥ ४-७८-४३ (३१६७६)
ततो विवाहो ववृधे स्फीतः सर्वगुणान्वितः ।
सौभद्रस्याद्भुतं कर्म पितुस्तव पितुस्तदा ॥ ४-७८-४४ (३१६७७)
धौम्यः शिष्यैः परिवृतो जुहावाग्नौ विधानतः ।

अग्निं प्रदक्षिणीकुर्वन्सौभद्रः पाणिमग्रहीत् ॥ ४-७८-४५ (३१६७८)
ततः पार्थाय संहृष्टो मात्स्यराजो धनं महत् ।
तस्मै शतसहस्राणि हयानां वातरंहसाम् ॥ ४-७८-४६ (३१६७९)
द्वे च नागशते मुख्ये धनं बहुविधं तदा ।
प्रादान्मात्स्यपतिर्हृष्टः कन्याधनमनुत्तमम् ॥ ४-७८-४७ (३१६८०)
पारिबर्हं च पार्थेभ्यः प्रददौ मत्स्यपुङ्गवः ।
कृष्णेन सह कौन्तेयः प्रत्यगृह्णात्प्रभूतवत् ॥ ४-७८-४८ (३१६८१)
कृते विवाहे तु तदा धर्मपुत्रो युधिष्ठिरः ।
ब्राह्मणेभ्यो ददौ वित्तं यदुपाहरदच्युतः ॥ ४-७८-४९ (३१६८२)
गोसहस्राणि वस्त्राणि रत्नानि विविधानि च ।
भूषणानि च सर्वाणि यानानि शयनानि च ॥ ४-७८-५० (३१६८३)
नागरान्प्रीतिभिर्दिव्यैस्तर्पयामास भूपतिः ॥ ४-७८-५१ (३१६८४)
तन्महोत्सवसंकाशं हृष्टपुष्टजनाकुलम् ।
नगरं मत्स्यराजस्य शुशुभे भरतर्षभ ॥ ४-७८-५२ (३१६८५)
पुरोहितैरमात्यैश्च पौरैर्जानपदैः सह ।
विराटो नृपतिः श्रीमान्सौभद्रायाभिमन्यवे ।
तां सुतामुत्तरां दत्त्वा मुमुदे परमं तदा ॥ ४-७८-५३ (३१६८६)
जनमेजय उवाच। ४-७८-५४क्ष् (३३२६)
वृत्ते विवाहे हृष्टात्मा यदुवाच युधिष्ठिरः ।
तत्सर्वं कथयस्वेह कृतवन्तो यदुत्तरम् ॥ ॥ ४-७८-५४ (३१६८७)

इति श्रीमन्महाभारते शतसाहस्त्रिकायां संहितायां वैयासिक्यां
विराटपर्वणि वैवाहिकपर्वणि अष्टसप्ततितमोऽध्यायः
॥ ॥ वैवाहिकपर्व समाप्तम् ॥ ५ ॥ ॥ समाप्तं च विराटपर्व ॥ ४ ॥
Mahabharata - Virata Parva - Chapter Footnotes

अतः परमुद्योगपर्व भविष्यति । तस्यायमाद्यः श्लोकः । कृत्वा
विवाहं तु कुरुप्रवीरा। स्तदाऽभिमन्योर्मुदिताः सपक्षाः। विश्रम्य
रात्रावुषसि प्रतीताः। सभां विराटस्य ततोऽभिजग्मुः ॥
इदं विराटपर्व कुंभघोणस्थेन टीओ आरो कृष्णाचार्येण टीओ
आरो व्यासाचार्येण च मुंबय्यां निर्णयसागरमुद्रायन्त्रे मुद्रापितम्
। शकाब्दाः १८३१ सन १९०९.

---

# .. udyogaparva 05 Kumbhaghonam Edition ..
## ॥ ५ उद्योगपर्व ॥

५. उद्योगपर्व

उद्योगपर्व-अध्यय००१
॥ श्रीः ॥
५.१. अध्यायः १

Mahabharata - Udyoga Parva - Chapter Topics
विराटसभां प्रविष्टेषु राजसु श्रीकृष्णेन
पाण्डववृत्तान्तकथनपूर्वकं धृतराष्ट्रंप्रति
दूतप्रेषणनिर्धारणम् ॥ १ ॥

Mahabharata - Udyoga Parva - Chapter Text

५-१-० (३१६८८)
श्रीवेदव्यासाय नमः। ५-१-०क्ष् (३३२७)
नारायणं नमस्कृत्य नरं चैव नरोत्तमम् ।
देवीं सरस्वतीं चैव ततो जयमुदीरयेत् ॥ ५-१-१ (३१६८९)
वैशंपायन उवाच। ५-१-१क्ष् (३३२८)
कृत्वा विवाहं तु कुरुप्रवीरा-
स्तदाऽभिमन्योर्मुदिताः सपक्षाः ।
विश्रम्य रात्रावुषसि प्रतीताः
सभां विराटस्य ततोऽभिजग्मुः ॥ ५-१-१ (३१६९०)
सभा तु सा मत्स्यपतेः समृद्धा
मणिप्रवेकोत्तमरत्नचित्रा ।
न्यस्तासना माल्यवती सुगन्धा
तामभ्ययुस्ते नरराजवर्याः ॥ ५-१-२ (३१६९१)
अथासनान्याविशतां पुरस्ता-
दुभौ विराटद्रुपदौ नरेन्द्रौ ।
वृद्धौ च मान्यौ पृथिवीपतीनां
पित्रा समं तमजनार्दनौ च ॥ ५-१-३ (३१६९२)
पाञ्चालराजस्य समीपतस्तु

शिनिप्रवीरः सहरौहिणेयः
मत्स्यस्य राज्ञस्तु सुसन्निकृष्टौ
जनार्दनश्चैव युधिष्ठिरश्च ॥ ५-१-४ (३१६९३)
सुताश्च सर्वे द्रुपदस्य राज्ञो
भीमार्जुनौ माद्रवतीसुतौ च ।
प्रद्युम्नसाम्बौ च युधि प्रवीरौ
विराटपुत्रैश्च सहाभिमन्युः ॥ ५-१-५ (३१६९४)
सर्वे च शूराः पितृभिः समाना
वीर्येण रूपेण बलेन चैव ।
उपाविशन्द्रौपदेयाः कुमाराः
सुवर्णचित्रेषु वरासनेषु ॥ ५-१-६ (३१६९५)
तथोपविष्टेषु महारथेषु
विराजमानाभरणाम्बरेषु
रराज सा राजवती समृद्धा
ग्रहैरिव द्यौर्विमलैरुपेता ॥ ५-१-७ (३१६९६)
ततः कथास्ते समवाययुक्ताः
कृत्वा विचित्राः पुरुषप्रवीराः ।
तस्थुर्मुहूर्तं परिचिन्तयन्तः
कृष्णं नृपास्ते समुदीक्षमाणाः ॥ ५-१-८ (३१६९७)
कथान्तमासाद्य च माधवेन
संघट्टिताः पाण्डवकार्यहेतोः ।
ते राजसिंहाः सहिता ह्यश्रृण्व-
न्वाक्यं महार्थं सुमहोदयं च ॥ ५-१-९ (३१६९८)
श्रीकृष्ण उवाच।५-१-१०क्ष् (३३२९)
सर्वैर्भवद्भिर्विदितं यथाऽयं
युधिष्ठिरः सौबलेनाक्षवत्याम् ।
जितो निकृत्याऽपहृतं च राज्यं
वनप्रवासे समयः कृतश्च ॥ ५-१-१० (३१६९९)
शक्तैर्विजेतुं तरसा महीं च
सत्ये स्थितैः सत्यरथैर्यथावत् ।
पाण्डोः सुतैस्त्रद्व्रतमुग्ररूपं
वर्षाणि षट् सप्त च चीर्णमग्र्यैः ॥ ५-१-११ (३१७००)
त्रयोदशश्चैव सुदुस्तरोऽय-
मज्ञायमानैर्भवतां समीपे ।
क्लेशानसह्यान्विविधान्सहद्भि-
र्महात्मभिश्चापि वने निविष्टम् ।

एतैः परप्रेष्यनियोगयुक्तै-
रिच्छद्भिराप्तं स्वकुलेन राज्यम् ॥ ५-१-१२ (३१७०१)
एवं गते धर्मसुतस्य राज्ञो
दुर्योधनस्यापि च यद्धितं स्यात् ।
तच्चिन्तयध्वं कुरुपाण्डवानां
धर्म्यं च युक्तं च यशस्करं च ॥ ५-१-१३ (३१७०२)
अधर्मयुक्तं न च कामयेत
राज्यं सुराणामपि धर्मराजः ।
धर्मार्थयुक्तं तु महीपतित्वं
ग्रामेऽपि कस्मिंश्चिदयं बुभूषेत् ॥ ५-१-१४ (३१७०३)
पित्र्यं हि राज्यं विदितं नृपाणां
यथाऽपकृष्टं धृतराष्ट्रपुत्रैः ।
मिथ्योपचारेण यथा ह्यनेन
कृच्छ्रं महत्प्राप्तमसह्यरूपम् ॥ ५-१-१५ (३१७०४)
न चापि पार्थो विजितो रणे तैः
स्वतेजसा धृतराष्ट्रस्य पुत्रैः ।
तथाऽपि राजा सहितः सुहृद्भि-
रभीप्सतेऽनामयमेव तेषाम् ॥ ५-१-१६ (३१७०५)
यत्तु स्वयं पाण्डुसुतैर्विजित्य
समाहृतं भूमिपतीन्प्रपीड्य
तत्प्रार्थयन्ते पुरुषप्रवीराः
कुन्तीसुता माद्रवतीसुतौ च ॥ ५-१-१७ (३१७०६)
बलाभियुक्तैर्विविधैरुपायैः
संप्रार्थिता हन्तुममित्रसङ्घैः ।
राज्यं जिहीर्षद्भिरसद्भिरुग्रैः
सर्वं च तद्वो विदितं यथावत् ॥ ५-१-१८ (३१७०७)
तेषां च लोभं प्रसमीक्ष्य वृद्धं
धर्मज्ञतां चापि युधिष्ठिरस्य ।
संबन्धितां चापि समीक्ष्य तेषां
मतिं कुरुध्वं सहिताः पृथक्च । ५-१-१९ (३१७०८)
इमे च सत्येऽभिरताः सदैव
तं पालयित्वा समयं यथावत् ।
अतोऽन्यथा तैरुपचर्यमाणा
हन्युः समेतान्धृतराष्ट्रपुत्रान् ॥ ५-१-२० (३१७०९)
तैर्विप्रकारं च निशम्य कार्ये
सुहृज्जनास्तान्परिवारयेयुः ।

युद्धेन बाधेयुरिमांस्तथैवं
तैर्बाध्यमाना युधि तांश्च हन्युः ॥ ५-१-२१ (३१७१०)
तथाऽपि नेमेऽल्पतयाऽसमर्था-
स्तेषां जयायेति भवेन्मतिर्वः ।
समेत्य सर्वे सहिताः सुहृद्भि-
स्तेषां विनाशाय यतेयुरेव ॥ ५-१-२२ (३१७११)
दुर्योधनस्यापि मतं यथाव-
न्न ज्ञायते किं नु करिष्यतीति
अज्ञायमाने च मते परस्य
मन्त्रस्य पारं कथमभ्युपेमः ॥ ५-१-२३ (३१७१२)
तस्मादितो गच्छतु धर्मशीलः
शुचिः कुलीनः पुरुषोऽप्रमत्तः ।
दूतः समर्थः प्रशमाय तेषां
राज्यार्धदानाय युधिष्ठिरस्य ॥ ५-१-२४ (३१७१३)
निशम्य वाक्यं तु जनार्दनस्य
धर्मार्थयुक्तं मधुरं समं च ।
समाददे वाक्यमथाग्रजोऽस्य
संपूज्य वाक्यं तदतीव राजन् ॥ ॥ ५-१-२५ (३१७१४)

इति श्रीमन्महाभारते उद्योगपर्वणि सेनोद्योगपर्वणि प्रथमोऽध्यायः ॥
Mahabharata - Udyoga Parva - Chapter Footnotes

५-१-१ प्रतीताः प्रबुद्धाः ॥
१ ॥
५-१-३ आविशतामुपविष्टौ । पित्रा बसुदेवेन ॥
३ ॥
५-१-१० अक्षवत्यां द्यूतक्रीडायाम् ॥
१० ॥
५-१-११ सत्यं रथवदारोढुं योग्यं योषाम् ॥
११ ॥
५-१-१४ बभूषेत् प्राप्तुमिच्छेत् । तङ्भाव आर्षः ॥
१४ ॥
५-१-१६ अनामयं कुशलम् ॥
१६ ॥
५-१-२० अतो राज्यार्धप्रदानात् ॥
२० ॥

उद्योगपर्व-अध्यय००२
॥ श्रीः ॥
५.२. अध्यायः २

Mahabharata - Udyoga Parva - Chapter Topics
बलरामेण कृष्णमतानुमोदनपूर्वकं स्वस्य दुर्योधने पक्षपताविष्करणम् ॥१ ॥

Mahabharata - Udyoga Parva - Chapter Text

५-२-० (३१७१५)
बलदेव उवाच। ५-२-०क्ष् (३३३०)
श्रुतं भवद्भिर्गदपूर्वजस्य
वाक्यं यथा धर्मवदर्थवच्च ।
अजातशत्रोश्च हितं च युक्तं
दुर्योधनस्यापि तथैव राज्ञः ॥ ५-२-१ (३१७१६)
अर्धं हि राज्यस्य विसृज्य वीराः
कुन्तीसुतास्तस्य कृते यतन्ते ।
प्रदाय चार्धं धृतराष्ट्रपुत्रः
सुखी सहास्माभिरतीव मोदेत् ॥ ५-२-२ (३१७१७)
लब्ध्वा हि राज्यं पूरुषप्रवीराः
सम्यक्प्रवृत्तेषु परेषु चैव ।
ध्रुवं प्रशान्ताः सुखमाविशेयु-
स्तेषां प्रशान्तिश्च हितं प्रजानाम् ॥ ५-२-३ (३१७१८)
दुर्योधनस्यापि मतं च वेत्तुं
वक्तुं च वाक्यानि युधिष्ठिरस्य ।
प्रियं च मे स्याद्यदि तत्र कश्चि-
द्व्रजेच्छमार्थं कुरुपाण्डवानाम् ॥ ५-२-४ (३१७१९)
स भीष्ममामन्त्र्य कुरुप्रवीरं
वैचित्रवीर्यं च महानुभावम् ।
द्रोणं सपुत्रं विदुरं कृपं च
गान्धारराजं च समूतपुत्रम् ॥ ५-२-५ (३१७२०)
सवे च येऽन्ये धृतराष्ट्रपुत्रा
बलप्रधाना निगमप्रधानाः ।
स्थिताश्च धर्मेषु यथा स्वकेषु
लोकप्रवीराः श्रुतशीलवृद्धाः ॥ ५-२-६ (३१७२१)

एतेषु सर्वेषु समागतेषु
पौरेषु वृद्धेषु च संगतेषु ।
ब्रवीतु वाक्यं प्रणिपातयुक्तं
कुन्तीसुतस्यार्थकरं यथा स्यात् ॥ ५-२-७ (३१७२२)
सर्वास्ववस्थासु च ते न कोप्या
ग्रस्तो हि सोऽर्थो बलमाश्रितैस्तैः ।
प्रियाभ्युपेतस्य युधिष्ठिरस्य
द्यूते प्रसक्तस्य हृतं च राज्यम् ॥ ५-२-८ (३१७२३)
निवार्यमाणश्च कुरुप्रवीरः
सर्वैः सुहृद्भिर्ह्यमप्यतज्ज्ञः ।
स दीव्यमानः प्रतिदीव्य चैनं
गान्धारराजस्य सुतं मताक्षम् ॥ ५-२-९ (३१७२४)
हित्वा हि कर्णं च सुयोधनं च
समाह्वयद्देवितुमाजमीढः ।
दुरोदरास्तत्र सहस्रशोऽन्ये
युधिष्ठिरो यान्विषहेत जेतुम् ॥ ५-२-१० (३१७२५)
उत्सृज्य तान्सौबलमेव चायं
समाह्वयत्तेन जितोऽक्षवत्याम् ।
स दीव्यमानः प्रतिदेवनेन
अक्षेषु नित्यं स्वपराङ्मुखेषु ॥ ५-२-११ (३१७२६)
संरम्भमाणो विजितः प्रसह्य
तत्रापराधः शकुनेर्न कश्चित् ।
तस्मात्प्रणम्यैव वचो ब्रवीतु
वैचित्रवीर्यं बहुसामयुक्तम् ॥ ५-२-१२ (३१७२७)
तथा हि शक्यो धृतराष्ट्रपुत्रः
स्वार्थे नियोक्तुं पुरुषेण तेन ।
अयुद्धमाकाङ्क्षत कौरवाणां
साम्नैव दुर्योधनमाश्वसध्वम् ॥ ५-२-१३ (३१७२८)
साम्ना जितोऽर्थोऽर्थकरो भवेत
युद्धेऽनयो भविता नेह सोऽर्थः ॥ ५-२-१४ (३१७२९)
एवं ध्रुवत्येव मधुप्रवीरे
शिनिप्रवीरः सहसोत्पपात
तच्चापि वाक्यं परिनिन्द्य तस्य
समाददे वाक्यमिदं समुन्युः ॥ ॥ ५-२-१५ (३१७३०)

इति श्रीमन्महाभारते उद्योगपर्वणि सेनोद्योगपर्वणि द्वितीयोऽध्यायः ॥

५-२-१६ (३१७३१)
Mahabharata - Udyoga Parva - Chapter Footnotes

५-२-३ राज्यं राज्यार्धम् ॥
३ ॥
५-२-६ बलं चतुरङ्गम् । निगमो नीतिशास्त्रं ते उभे प्रधानं योषाम् ॥
५-२-१० दुरोदराः द्यूतकाराः ॥
५-२-१२ संरम्भमाणः हठं कुर्वाणः ॥

---

उद्योगपर्व-अध्यय००३
॥ श्रीः ॥
५.३. अध्यायः ३

Mahabharata - Udyoga Parva - Chapter Topics
सात्यकिना बलरामवचनप्रतिक्षेपपूर्वकं दुर्योधननिग्रहनिर्धारणम्
॥ १ ॥

Mahabharata - Udyoga Parva - Chapter Text

५-३-० (३१७३२)
सात्यकिरुवाच। ५-३-०क्ष् (३३३१)
यादृशः पुरुषस्यात्मा तादृशं संप्रभाषते ।
यथारूपोऽन्तरात्मा ते तथारूपं प्रभाषते ॥ ५-३-१ (३१७३३)
सन्ति वै पुरुषाः शूराः सन्ति कापुरुषास्तथा ।
उभावेतौ दृढौ पक्षौ दृश्येते पुरुषान्प्रति ॥ ५-३-२ (३१७३४)
एकस्मिन्नेव जायेते कुले क्लीबमहाबलौ ।
फलाफलवती शाखे यथैकस्मिन्वनस्पतौ ॥ ५-३-३ (३१७३५)
नाभ्यसूयामि ते वाक्यं ब्रुवतो लाङ्गलध्वज ।
ये तु शृण्वन्ति ते वाक्यं तानसूयामि माधव ॥ ५-३-४ (३१७३६)
कथं हि धर्मराजस्य दोषमल्पमपि ब्रुवन् ।
लभते परिषन्मध्ये व्याहर्तुमकुतोभयः ॥ ५-३-५ (३१७३७)
समाहूय महात्मानं जितवन्तोऽक्षकोविदाः ।
अनक्षज्ञं यथाऽश्रद्धं तेषु धर्मजयः कुतः। ५-३-६ (३१७३८)
यदि कुन्तीसुतं गेहे क्रीडन्तं भ्रातृभिः सह ।
अभिगम्य जयेयुस्ते तत्तेषां धर्मतो भवेत् ॥ ५-३-७ (३१७३९)
समाहूय तु राजानं क्षत्रधर्मरतं सदा ।

निकृत्या जितवन्तस्ते किं नु तेषां परं शुभम् ॥ ५-३-८ (३१७४०)
कथं प्रणिपतेच्चायमिह कृत्वा पणं परम् ।
वनवासाद्विमुक्तस्तु प्राप्तः पैतामहं पदम् ॥ ५-३-९ (३१७४१)
यद्ययं परवित्तानि कामयेत युधिष्ठिरः ।
एवमप्ययमत्यन्तं परान्नार्हति याचितुम् ॥ ५-३-१० (३१७४२)
कथं च धर्मयुक्तास्ते न च राज्यं जिहीर्षवः ।
निवृत्तवनवासांस्तान्य आहुर्विदिता इति ॥ ५-३-११ (३१७४३)
अनुनीता हि भीष्मेण द्रोणेन विदुरेण च ।
न व्यवस्यन्ति पाण्डूनां प्रदातुं पैतृकं वसु ॥ ५-३-१२ (३१७४४)
अहं तु तान्छितैर्बाणैरनुनीय रणे बलात् ।
पादयोः पातयिष्यामि कौन्तेयस्य महात्मनः ॥ ५-३-१३ (३१७४५)
अथ ते न व्यवस्यन्ति प्रणिपाताय धीमतः ।
गमिष्यन्ति सहामात्या यमस्य सदनं प्रति ॥ ५-३-१४ (३१७४६)
न हि ते युयुधानस्य संरब्धस्य युयुत्सतः ।
वेगं समर्थाः संसोढुं वज्रस्येव महीधराः ॥ ५-३-१५ (३१७४७)
को हि गाण्डीवधन्वानं कश्च चक्रायुधं युधि ।
मां चापि विषहेत्क्रुद्धं कश्च भीमं दुरासदम् ॥ ५-३-१६ (३१७४८)
यमौ च दृढधन्वानौ यमकल्पौ महाद्युती ।
विराटद्रुपदौ वीरौ यमकालोपमद्युती ॥ ५-३-१७ (३१७४९)
को जिजीविषुरासादेद्धृष्टद्युम्नं च पार्षतम् ।
पञ्चैतान्पाण्डवेयांस्तु द्रौपद्याः कीर्तिवर्धनान् ॥ ५-३-१८ (३१७५०)
समप्रमाणान्पाण्डूनां समवीर्यान्मदोत्कटान् ।
सौभद्रं च महेष्वासममरैरपि दुःसहम् ॥ ५-३-१९ (३१७५१)
गदप्रद्युम्नसाम्बांश्च कालसूर्यानलोपमान् ।
ते वयं धृतराष्ट्रस्य पुत्रं शकुनिना सह ॥ ५-३-२० (३१७५२)
कर्णं चैव निहत्याजावभिषेक्ष्याम पाण्डवम् ।
नाधर्मो विद्यते कश्चिच्छत्रून्हत्वाऽऽततायिनः ॥ ५-३-२१ (३१७५३)
अधर्म्यमयशस्यं च शात्रवाणां प्रयाचनम् ।
हृद्गतस्तस्य यः कामस्तं कुरुध्वमतन्द्रिताः ॥ ५-३-२२ (३१७५४)
धार्तराष्ट्रो ह्ययुद्धेन न राज्यं दातुमिच्छति ।
अद्य पाण्डुसुतो राज्यं लभतां वा युधिष्ठिरः ।
निहता वा रणे सर्वे स्वप्स्यन्ति वसुधातले ॥ ॥ ५-३-२३ (३१७५५)

इति श्रीमन्महाभारते उद्योगपर्वणि सेनोद्योगपर्वणि तृतीयोऽध्यायः ॥

Mahabharata - Udyoga Parva - Chapter Footnotes

५-३-३ फलाफलावती ।सुपो लुक् आर्षः पूर्वसवर्णो वा ॥
३ ॥

---

उद्योगपर्व-अध्यय००४
॥ श्रीः ॥
५.४. अध्यायः ४

Mahabharata - Udyoga Parva - Chapter Topics
द्रुपदेन सात्यकिमतानुमोदनेन राज्ञामाह्वानाय
दूतप्रस्थनकथनपूर्वकं स्वपुरोहितस्य धृतराष्ट्रंप्रति
प्रेषणकथनम् ॥ १ ॥

Mahabharata - Udyoga Parva - Chapter Text

५-४-० (३१७५६)
द्रुपद उवाच। ५-४-०क्ष् (३३३२)
एवमेतन्महाबाहो भविष्यति न संशयः ।
न हि दुर्योधनो राज्यं मधुरेण प्रदास्यति ॥ ५-४-१ (३१७५७)
अनुवर्त्स्यति तं चापि धृतराष्ट्रः सुतप्रियः ।
भीष्मद्रोणौ च कार्पण्यान्मौर्ख्याद्राधेयसौबलौ ॥ ५-४-२ (३१७५८)
बलदेवस्य वाक्यं तु मम ज्ञाने न युज्यते ।
एतद्धि पुरुषेणाग्रे कार्यं सुनयमिच्छता ॥ ५-४-३ (३१७५९)
न तु वाच्यो मृदुवचो धार्तराष्ट्रः कथंचन ।
नहि मार्दवसाध्योऽसौ पापबुद्धिर्मतो मम ॥ ५-४-४ (३१७६०)
गर्दभे मार्दवं कुर्याद्गोषु तीक्ष्णं समाचरेत् ।
मृदु दुर्योधने वाक्यं यो ब्रूयात्पापचेतसि ॥ ५-४-५ (३१७६१)
मृदुं वै मन्यते पापो भाषमाणमशक्तिकम् ।
हितमर्थं न जानीयादबुद्धिर्मार्दवे सति ॥ ५-४-६ (३१७६२)
एतच्चैव करिष्यामो यत्नश्च क्रियतामिह ।
प्रस्थापयाम मित्रेभ्यो बलान्युद्योजयन्तु नः ॥ ५-४-७ (३१७६३)
शल्यस्य धृष्टकेतोश्च जयत्सेनस्य वा विभो ।
केकयानां च सर्वेषां दूता गच्छन्तु शीघ्रगाः ॥ ५-४-८ (३१७६४)
स च दुर्योधनो नूनं प्रेषयिष्यति सर्वशः ।
पूर्वाभिपन्नाः सन्तश्च भजन्ते पूर्वचोदनम् ॥ ५-४-९ (३१७६५)
तत्वरध्वं नरेन्द्राणां पूर्वमेव प्रचोदने ।
महद्धि कार्यं वोढव्यमिति मे वर्तते मतिः ॥ ५-४-१० (३१७६६)
शल्यस्य प्रेष्यतां शीघ्रं ये च तस्यानुगा नृपाः ।

भगदत्ताय राज्ञे च पूर्वसागरवासिने ॥ ५-४-११ (३१७६७)
अमितौजसे तथोग्राय हार्दिक्यायान्धकाय च ।
दीर्घप्रज्ञाय शूराय रोचमानाय वा विभो ॥ ५-४-१२ (३१७६८)
आनीयतां बृहन्तश्च सेनाबिन्दुश्च पार्थिवः ।
सेनजित्प्रतिबिन्ध्यश्च चित्रवर्मा सुवास्तुकः ॥ ५-४-१३ (३१७६९)
बाह्लीको मुञ्जकेशश्च चैद्याधिपतिरेव च ।
सुपार्श्वश्च सुबाहुश्च पौरवश्च महारथः ॥ ५-४-१४ (३१७७०)
शकानां पह्लवानां कर्णवेष्टश्च पार्थिवः ॥
सुरारिश्च नदीजश्च कर्णवेष्टश्च पार्थिवः ॥ ५-४-१५ (३१७७१)
नीलश्च वीरधर्मा च भूमिपालश्च वीर्यवान् ।
दुर्जयो दन्तवक्रश्च रुक्मी च जनमेजयः ॥ ५-४-१६ (३१७७२)
आषाढो वायुवेगश्च पूर्वपाली च पार्थिवः ।
भूरितेजा देवकश्च एकलव्यः सहात्मजैः ॥ ५-४-१७ (३१७७३)
कारूषकाश्च राजानः क्षेमधूर्तिश्च वीर्यवान् ।
काम्भोजा ऋषिका ये च पश्चिमानूपकाश्च ये ॥ ५-४-१८ (३१७७४)
जयत्सेनश्च काश्यश्च तथा पञ्चनदा नृपाः ॥
जानकिश्च दुर्धर्षः पार्वतीयाश्च ये नृपाः ॥ ५-४-१९ (३१७७५)
जानकिश्च सुशर्मा च मणिमान्योतिमत्सकः ।
पांशुराष्ट्राधिपश्चैव धृष्टकेतुश्च वीर्यवान् ॥ ५-४-२० (३१७७६)
तुण्डश्च दण्डधारश्च बृहत्सेनश्च वीर्यवान् ।
अपराजितो निषादश्च श्रेणिमान्वसुमानपि ॥ ५-४-२१ (३१७७७)
बृहद्बलो महौजाश्च बाहुः परपुरंजयः ।
समुद्रसेनो राजा च सह पुत्रेण वीर्यवान् ॥ ५-४-२२ (३१७७८)
उद्भवः क्षेमकश्चैव वाटधानश्च पार्थिवः ।
श्रुतायुश्च दृढायुश्च साल्वपुत्रश्च वीर्यवान् ॥ ५-४-२३ (३१७७९)
कुमारश्च कलिङ्गानामीश्वरो युद्धदुर्मदः ।
एतेषां प्रेष्यतां शीघ्रमेतद्धि मम रोचते ॥ ५-४-२४ (३१७८०)
अयं च ब्राह्मणो विद्वान्मम राजन्पुरोहितः ।
प्रेष्यतां धृतराष्ट्राय वाक्यमस्मै प्रदीयताम् ॥ ५-४-२५ (३१७८१)
यथा दुर्योधनो वाच्यो यथा सान्तनवो नृपः ।
धृतराष्ट्रो यथा वाच्यो द्रोणश्च रथिनां वरः ॥ ॥ ५-४-२६ (३१७८२)

इति श्रीमन्महाभारते उद्योगपर्वणि सेनोद्योगपर्वणि चतुर्थोऽध्यायः ॥

Mahabharata - Udyoga Parva - Chapter Footnotes

५-४-२ कार्पण्यात् तदन्नभक्षणेन दैन्यात् ॥

उद्योगपर्व-अध्यय००५
॥ श्रीः ॥
५.५. अध्यायः ५

Mahabharata - Udyoga Parva - Chapter Topics
श्रीकृष्णेन द्रुपदवाक्यप्रशंसनपूर्वकं राज्ञां धृतराष्ट्रस्य
च दूतपुरोहितप्रेषणं संदिश्य द्वारकांप्रति गमनम् ॥ १ ॥
विराटद्रुपददूताहूदानां राज्ञामागमनम् ॥ २ ॥
दुर्योधनदूताहूतानां च राज्ञामागमनम् ॥ ३ ॥

Mahabharata - Udyoga Parva - Chapter Text

५-५-० (३१७८३)
वैशंपायन उवाच। ५-५-०क्ष् (३३३३)
द्रुपदेनैवमुक्ते तु वाक्ये वाक्यविदां वरः ।
वसुदेवसुतस्तत्र पृष्णिसिंहोऽब्रवीदिदम् ॥ ५-५-१ (३१७८४)
उपपन्नमिदं वाक्यं सोमकानां धुरंधरे ।
अर्थसिद्धिकरं राज्ञः पाण्डवस्यामितौजसः ॥ ५-५-२ (३१७८५)
एतच्च पूर्वं कार्यं नः सुनीतिमभिकाङ्क्षताम् ।
अन्यथा ह्याचरन्कर्म पुरुषः स्यात्सुबालिशः ॥ ५-५-३ (३१७८६)
किं तु संबन्धकं तुल्यमस्माकं कुरुपाण्डुषु ।
यथेष्टं वर्तमानेषु पाण्डवेषु च तेषु च ॥ ५-५-४ (३१७८७)
ते विवाहार्थमानीता वयं सर्वे तथा भवान् ।
कृते विवाहे मुदिता गमिष्यामो गृहान्प्रति ॥ ५-५-५ (३१७८८)
भवान्वृद्धतमो राज्ञां वयसा च श्रुतेन च ।
शिष्यवत्ते वयं सर्वे भवामेह न संशयः ॥ ५-५-६ (३१७८९)
भवन्तं धृतराष्ट्रश्च सततं बहु मन्यते ।
आचार्ययोः सखा चासि द्रोणस्य च कृपस्व च ॥ ५-५-७ (३१७९०)
स भवान्प्रेषयत्वद्य पाण्डवार्थकरं वचः ।
सर्वेषां निश्चितं तन्नः प्रेषयिष्यति यद्भवान् ॥ ५-५-८ (३१७९१)
यदि तावच्छमं कुर्यन्न्यायेन कुरुपुङ्गवः ।
न भवेत्कुरुपाण्डूनां सौभ्रात्रेण महान्क्षयः ॥ ५-५-९ (३१७९२)
अथ दर्पान्वितो मोहान्न कुर्याद्धृतराष्ट्रजः ।
अन्येषां प्रेषयित्वा च पश्चादस्मान्सभाह्वये ॥ ५-५-१० (३१७९३)
ततो दुर्योधनो मन्दः सहामात्यः सबान्धवः ।

निष्ठामापत्स्यते मूढः क्रुद्धे गाण्डीवधन्वनि ॥ ५-५-११ (३१७९४)
वैशंपायन उवाच। ५-५-१२क्ष् (३३३४)
ततः सत्कृत्य वार्ष्णेयं विराटः पृथिवीपतिः ।
गृहान्प्रस्थापयामास सगणं सहबान्धवम् ॥ ५-५-१२ (३१७९५)
द्वारकं तु गते कृष्णे युधिष्ठिरपुरोगमाः ।
चक्रुः साङ्ग्रामिकं सर्वं विराटश्च महीपतिः ॥ ५-५-१३ (३१७९६)
ततः संप्रेषयामास विराटः सह बान्धवैः ।
सर्वेषां भूमिपालानां द्रुपदश्च महीपतिः ॥ ५-५-१४ (३१७९७)
वचनात्कुरुसिंहानां मत्स्यपाञ्चालयोश्च ते ।
समाजग्मुर्महीपालाः संप्रहृष्टा महाबलाः ॥ ५-५-१५ (३१७९८)
तच्छ्रुत्वा पाण्डुपुत्राणां समागच्छन्महद्बलम् ।
धृतराष्ट्रसुताश्चापि समानिन्युर्महीपतीन् ॥ ५-५-१६ (३१७९९)
समाकुला मही राजन्कुरुपाण्डवकारणात् ।
तदा समभवत्कृत्स्ना संप्रयाणे महीक्षिताम् ॥ ५-५-१७ (३१८००)
संकुला च तदा भूमिश्चतुरङ्गबलान्विता ।
बलानि तेषां वीराणामागच्छन्ति ततस्ततः ॥ ५-५-१८ (३१८०१)
चालयन्तीव गां देवीं सपर्वतवनामिमाम् ।
ततः प्रज्ञावयोवृद्धं पाञ्चाल्यः स्वपुरोहितम् ।
कुरुभ्यः प्रेषयामास युधिष्ठिरमते स्थितः ॥ ॥ ५-५-१९ (३१८०२)

इति श्रीमन्महाभारते उद्योगपर्वणि सेनोद्योगपर्वणि पञ्चमोऽध्यायः ॥
Mahabharata - Udyoga Parva - Chapter Footnotes

५-५-४ संबन्धकं तुल्यमिति ।पाण्डवेषु कुन्तीद्वारा ।कुरुषु दुर्योधनकन्यायाः साम्बेनाहरणात् ॥
५-५-११ निष्ठां नाशम् ॥

---

उद्योगपर्व-अध्यय००६
॥ श्रीः ॥
५.६. अध्यायः ६

Mahabharata - Udyoga Parva - Chapter Topics
द्रुपदेन धृतराष्ट्रंप्रति स्वपुरोहितप्रेषणम् ॥ १ ॥
पुरोहितस्य हास्तिनपुरगमनम् ॥ २ ॥

Mahabharata - Udyoga Parva - Chapter Text

५-६-० (३१८०३)
द्रुपद उवाच। ५-६-०क्ष् (३३३५)
भूतानां प्राणिनः श्रेष्ठाः प्राणिनां बुद्धिजीविनः ।
बुद्धिमत्सु नराः श्रेष्ठा नरेष्वपि द्विजातयः ॥ ५-६-१ (३१८०४)
द्विजेषु वैद्याः श्रेयांसो वैद्येषु कृतबुद्धयः ।
कृतबुद्धिषु कर्तारः कर्तृषु ब्रह्मवादिनः ॥ ५-६-२ (३१८०५)
स भवान्कृबुद्धीनां प्रधान इति मे मतिः ।
कुलेन च विशिष्टोऽसि वयसा च श्रुतेन च ।
प्रज्ञया सदृशश्चासि शुक्रेणाङ्गिरसेन च ॥ ५-६-३ (३१८०६)
विदितं चापि ते सर्वं यथावृत्तः स कौरवः ।
पाण्डवश्च यथावृत्तः कुन्तीपुत्रो युधिष्ठिरः ॥ ५-६-४ (३१८०७)
धृतराष्ट्रस्य विदिते वञ्चिताः पाण्डवाः परैः ।
विदुरेणानुनीतोऽपि पुत्रमेवानुवर्तते ॥ ५-६-५ (३१८०८)
शकुनिर्बुद्धिपूर्वं हि कुन्तीपुत्रं समाह्वयत् ।
अनक्षज्ञं मताक्षः सन्क्षत्रवृत्ते स्थितं शुचिम् ॥ ५-६-६ (३१८०९)
ते तथा वञ्चयित्वा तु धर्मराजं युधिष्ठिरम् ।
न कस्यांचिदवस्थायां राज्यं दास्यन्ति वै स्वयम् ॥ ५-६-७ (३१८१०)
भवांस्तु धर्मसंयुक्तं धृतराष्ट्रं ब्रुवन्वचः ।
मनांसि तस्य योधानां ध्रुवमावर्तयिष्यति ॥ ५-६-८ (३१८११)
विदुरश्चापि तद्वाक्यं साधयिष्यति तावकम् ।
भीष्मद्रोणकृपादीनां भेदं संजनयिष्यति ॥ ५-६-९ (३१८१२)
अमात्येषु च भिन्नेषु योधेषु विमुखेषु च ।
पुनरेकत्र करणं तेषां कर्म भविष्यति ॥ ५-६-१० (३१८१३)
एतस्मिन्नन्तरे पार्थाः सुखमेकाग्रबुद्धयः ।
सेनाकर्म करिष्यन्ति द्रव्याणां चैव सञ्चयम् ॥ ५-६-११ (३१८१४)
भिद्यमानेषु च स्वेषु लम्बमाने तथा त्वयि ।
न तथा ते करिष्यन्ति सेनाकर्म न संशयः ॥ ५-६-१२ (३१८१५)
एतत्प्रयोजनं चात्र प्राधान्येनोपलभ्यते ।
संगत्या धृतराष्ट्रश्च कुर्याद्धर्म्यं वचस्तव ॥ ५-६-१३ (३१८१६)
स भवान्धर्मयुक्तश्च धर्म्यं तेषु समाचरन् ।
कृपालुषु परिक्लेशान्पाण्डवीयान्प्रकीर्तयन् ॥ ५-६-१४ (३१८१७)
वृद्धेषु कुलधर्मं च ब्रुवन्पूर्वैरनुष्ठितम् ।
विभेत्स्यति मनांस्येषमिति मे नात्र संशयः ॥ ५-६-१५ (३१८१८)
न च तेभ्यो भयं तेऽस्ति ब्राह्मणो ह्यसि वेदवित् ।
दूतकर्मणि युक्तश्च स्थविरश्च विशेषतः ॥ ५-६-१६ (३१८१९)
स भवान्पुष्ययोगेन मुहूर्तेन जयेन च ।

कौरवेयान्प्रयात्वाशु कौन्तेयस्यार्थसिद्धये ॥ ५-६-१७ (३१८२०)
वैशंपायन उवाच। ५-६-१८क्ष् (३३३६)
तथाऽनुशिष्टः प्रययौ द्रुपदेन महात्मना ।
पुरोधा वृत्तसंपन्नो नगरं नागसाह्वयम् ॥ ५-६-१८ (३१८२१)
शिष्यैः परिवृतो विद्वान्नीतिशास्त्रार्थकोविदः ।
पाण्डवानां हितार्थाय कौरवान्प्रतिजग्मिवान् ॥ ॥ ५-६-१९ (३१८२२)

इति श्रीमन्महाभारते उद्योगपर्वणि सेनोद्योगपर्वणि षष्ठोऽध्यायः ॥
Mahabharata - Udyoga Parva - Chapter Footnotes

५-६-२ वैद्याः विद्यावन्तः । कृतबुद्धयः सिद्धान्तज्ञाः ॥
२ ॥

---

उद्योगपर्व-अध्यय००७
॥ श्रीः ॥
५.७. अध्यायः ७

Mahabharata - Udyoga Parva - Chapter Topics
दुर्योधनार्जुनयोः कृष्णदर्शनाय यदृच्छया युगपत् द्वारकागमनम्
॥ १ ॥
अर्जुनेन सारथ्येन वरयित्वा तेन सह युधिष्ठिरसमीपगमनम् ॥ २ ॥
दुर्योधनेन नारायणाह्वयकृष्णकुमारानादाय कृतवर्मणासह
स्वपुरगमनम् ॥ ३ ॥

Mahabharata - Udyoga Parva - Chapter Text

५-७-० (३१८२३)
वैशंपायन उवाच। ५-७-०क्ष् (३३३७)
पुरोहितं ते प्रस्थाप्य नगरं नागसाह्वयम् ।
दूतान्प्रस्थापयामासुः पार्थिवेभ्यस्ततस्ततः ॥ ५-७-१ (३१८२४)
प्रस्थाप्य दूतानन्यत्र द्वारकां पुरुषर्षभः ।
स्वयं जगाम कौरव्यः कुन्तीपुत्रो धनञ्जयः ॥ ५-७-२ (३१८२५)
गते द्वारवतीं कृष्ण बलदेवे च माधवे ।
सह वृष्ण्यन्धकैः सर्वैर्भोजैश्च शतशस्तदा ॥ ५-७-३ (३१८२६)
सर्वमागमयामास पाण्डवानां विचेष्टितम् ।
धृतराष्ट्रात्मजो राजा गूढैः प्रणिहितैश्चरैः ॥ ५-७-४ (३१८२७)
स श्रुत्वा माधवं यान्तं सदश्वैरनिलोपमैः ।

बलेन नातिमहता द्वारकामभ्ययात्पुरीम् ॥ ५-७-५ (३१८२८)
तमेव दिवसं चापि कौन्तेयः पाण्डुनन्दनः ।
आनर्तनगरीं रम्यां जगामाशु धनञ्जयः ॥ ५-७-६ (३१८२९)
तौ यात्वा पुरुषव्याघ्रौ द्वारकां कुरुनन्दनौ ।
सुप्तं ददृशतुः कृष्णं शयानं चाभिजग्मतुः ॥ ५-७-७ (३१८३०)
दुर्योधनस्तु प्रथमं वासुदेवमुपाश्रयत् ।
उच्छीर्षतश्च कृष्णस्य निषसाद वरासने ॥ ५-७-८ (३१८३१)
ततः किरीटी तस्यानु प्रविवेश महामनाः ।
पश्चार्धे तु स कृष्णस्य प्रह्वोऽतिष्ठत्कृताञ्जलिः ॥ ५-७-९ (३१८३२)
प्रतिबुद्धः स वार्ष्णेयो ददर्शाग्रे किरीटिनाम् ।
सिंहासनगतं पश्चात्परिवृत्य च दृष्टवान् ॥ ५-७-१० (३१८३३)
स तयोः स्वागतं कृत्वा यथावत्प्रतिपूज्य तौ ।
तदागमनजं हेतुं पप्रच्छ मधुसूदनः ॥ ५-७-११ (३१८३४)
ततो दुर्योधनः कृष्णामुवाच प्रहसन्निव ।
विग्रहेऽस्मिन्भवान्साह्यं मम दातुमिहार्हति ॥ ५-७-१२ (३१८३५)
समं हि भवतः सख्यं मम चैवार्जुनेऽपि च ।
तथा संबन्धकं तुल्यमस्माकं त्वयि माधव ॥ ५-७-१३ (३१८३६)
अहं चाभिगतं सन्तो भजन्ते पूर्वसारिणः ॥
त्वं च श्रेष्ठतमो लोके सतामद्य जनार्दन । ५-७-१४ (३१८३७)
सततं संमतश्चैव सद्वृत्तमनुपालय ॥ ५-७-१५ (३१८३८)
कृष्ण उवाच। ५-७-१६क्ष् (३३३८)
भवानभिगतः पूर्वमत्र मे नास्ति संशयः ।
दृष्टस्तु प्रथमं राजन्मया पार्थो धनञ्जयः ॥ ५-७-१६ (३१८३९)
तव पूर्वाभिगमनात्पूर्वं चाप्यस्य दर्शनात् ।
साहाय्यमुभयोरेव करिष्यामि सुयोधन ॥ ५-७-१७ (३१८४०)
प्रवारणं तु बालानां पूर्वं कार्यमिति श्रुतिः ।
तस्मात्प्रवारणं पूर्वमर्हः पार्थो धनञ्जयः ॥ ५-७-१८ (३१८४१)
मत्संहननतुल्यानां गोपानामर्बुदं महत् ।
नारायणा इति ख्याताः सर्वे संग्रामयोधिनः ॥ ५-७-१९ (३१८४२)
ते वा युधि दुराधर्षा भवन्त्वेकस्य सैनिकाः ।
अयुध्यमानः संग्रामे न्यस्तशस्त्रोऽहमेकतः ॥ ५-७-२० (३१८४३)
आभ्यामन्यतरं पार्थ यत्ते हृद्यतरं मतम् ।
तद्वृणीतां भवानग्रे प्रवार्यस्त्वं हि धर्मतः ॥ ५-७-२१ (३१८४४)
ग एतद्विदित्वा कौन्तेय विचार्य च पुनः पुनः ।
तान्वा वरय साहाय्ये मां साचिव्येऽथवा पुनः ' ५-७-२२ (३१८४५)
वैशंपायन उवाच। ५-७-२३क्ष् (३३३९)

एवमुक्तस्तु कृष्णेन कुन्तीपुत्रे धनञ्जयः ।
अयुध्यमानं संग्रामे वरयामास केशवम् ॥ ५-७-२३ (३१८४६)
नारायणममिघ्नं कामाज्जातमजं नृषु ।
सर्वक्षत्रस्य पुरतो देवदानवयोरपि ॥ ५-७-२४ (३१८४७)
दुर्योधनस्तु तत्सैन्यं सर्वमावरयत्तदा ।
सहस्राणां महस्रं तु योधानां प्राप्य भारत ॥ ५-७-२५ (३१८४८)
कृष्णं चापहृतं ज्ञात्वा संप्राप परमां मुदम् ।
दुर्योधनस्तु तत्सैन्यं सर्वमादाय पार्थिवः ॥ ५-७-२६ (३१८४९)
ततोऽभ्ययाद्भीमबलो रौहिणेयं महाबलम् ।
सर्वं चागमने हेतुं स तस्मै संन्यवेदयत् ।
प्रत्युवाच ततः शौरिर्धार्तराष्ट्रमिदं वचः ॥ ५-७-२७ (३१८५०)
बलदेव उवाच। ५-७-२८क्ष् (३३४०)
विदितं ते नरव्याघ्र सर्वं भवितुमर्हति ।
यन्मयोक्तं विराटस्य पुरा वैवाहिके तदा ॥ ५-७-२८ (३१८५१)
निगृह्योक्तो हृषीकेशस्त्वदर्थं कुरुनन्दन ।
मया संबन्धकं तुल्यमिति राजन्पुनःपुनः ॥ ५-७-२९ (३१८५२)
न च तद्वाक्यमुक्तं वै केशवं प्रत्यपद्यत ।
न चाहमुत्सहे कृष्णं विना स्थातुमपि क्षणम् ॥ ५-७-३० (३१८५३)
नाहं सहायः पार्थस्य नापि दुर्योधनस्य वै ।
इति मे निश्चिता बुद्धिर्वासुदेवमवेक्ष्य ह ॥ ५-७-३१ (३१८५४)
जातोऽसि भारते वंशे सर्वपार्थिवपूजिते ।
गच्छ युध्यस्व धर्मेण क्षात्रेण पुरुषर्षभ ॥ ५-७-३२ (३१८५५)
वैशंपायन उवाच। ५-७-३३क्ष् (३३४१)
इत्येवमुक्तस्तु तदा परिष्वज्य हलायुधम् ।
कृष्णं चापि महाबाहुमामन्त्र्य भरतर्षभ ॥ ५-७-३३ (३१८५६)
सोऽभ्ययात्कृतवर्माणं धृतराष्ट्रसुतो नृपः ।
कृतवर्मा ददौ तस्य सेनामक्षौहिणीं तदा ॥ ५-७-३४ (३१८५७)
स तेन सर्वसैन्येन भीमेन कुरुनन्दनः ।
वृतः परिययौ हृष्टः सुहृदः संप्रहर्षयन् ॥ ५-७-३५ (३१८५८)
ततः पीताम्बरधरो जगत्स्रष्टा जनार्दनः ।
गते दुर्योधने कृष्णः किरीटिनमथाब्रवीत् ॥ ५-७-३६ (३१८५९)
अयुध्यमानः कां बृद्धिमास्थायाहं वृतस्त्वया । ५-७-३७ (३१८६०)
अर्जुन उवाच ।
भवान्समर्थस्तान्सर्वान्निहन्तुं नात्र संशयः ।
निहन्तुमहमप्येकः समर्थः पुरुषर्षभः ॥ ५-७-३७क्ष् (३३४२)
भवांस्तु कीर्तिमाँल्लोके तद्यशस्त्वां गमिष्यति ।

यशसां चाहमप्यर्थी तस्मादसि मया वृतः ॥ ५-७-३८ (३१८६१)
सारथ्यं तु त्वया कार्यमिति मे मानसं सदा ।
चिररात्रेप्सितं कामं तद्भवान्कर्तुमर्हति ॥ ५-७-३९ (३१८६२)
वासुदेव उवाच। ५-७-४०क्ष् (३३४३)
उपपन्नमिदं पार्थ यत्स्पर्धसि मया सह ।
सारथ्यं ते करिष्यामि कामः संपद्यतां तव ॥ ५-७-४० (३१८६३)
वैशंपायन उवाच। ५-७-४१क्ष् (३३४४)
एवं प्रमुदितः पार्थः कृष्णेन सहितस्तदा ।
वृतो दाशार्हप्रवरैः पुनरायाद्युधिष्ठिरम् ॥ ॥ ५-७-४१ (३१८६४)

इति श्रीमन्महाभारते उद्योगपर्वणि सेनोद्योगपर्वणि सप्तमोऽध्यायः ॥
Mahabharata - Udyoga Parva - Chapter Footnotes

५-७-१० प्रवारणं ईप्सितसादानम् । पूर्वमर्हः त्वत्तः
कनिष्ठत्वादित्यर्थः ॥
१० ॥

---

उद्योगपर्व-अध्यय००८
॥ श्रीः ॥
५.८. अध्यायः ८

Mahabharata - Udyoga Parva - Chapter Topics
पाण्डवान्प्रत्यागच्छतः शल्यस्य मार्गे भ्रमाद्दुर्योधनसभाप्रवेशः ॥ १ ॥
तद्भृत्यकृतोपचारतुष्टेन तेन पारितोषिकदाने प्रति श्रुते
गूढेनसता दुर्योधनेन प्रकटीभूय साहाय्यवरणम् ॥ २ ॥
पाण्डवानुपगम्य दुर्योधनवञ्चनां कथितवता शल्येन
युधिष्ठिराभ्यर्थनया कर्णस्य सारथ्यकरणेन
तेजोवधकरणप्रतिज्ञानम् ॥ ३ ॥

Mahabharata - Udyoga Parva - Chapter Text

५-८-० (३१८६५)
वैशंपायन उवाच। ५-८-०क्ष् (३३४५)
शल्यः श्रुत्वा तु दूतानां सैन्येन महता वृतः ।
अभ्यात्पाण्डवान्राजन्सह पुत्रैर्महारथैः ॥ ५-८-१ (३१८६६)
तस्य सेनानिवेशोऽभूदध्यर्धमिव योजनम् ।
तथा हि विपुलां सेनां बिभर्ति स नरर्षभः ॥ ५-८-२ (३१८६७)

अक्षौहिणीपती राजन्महावीर्यपराक्रमाः ।
विचित्रकवचाः शूरा विचित्रध्वजकार्मुकाः ॥ ५-८-३ (३१८६८)
विचित्राभरणाः सर्वे विचित्ररथवाहनाः ।
विचित्रस्रग्धराः सर्वे विचित्राम्बरभूषणाः ॥ ५-८-४ (३१८६९)
स्वदेशवेषाभरणा वीराः शतसहस्रशः ।
तस्य सेनाप्रणेतारो बभूवुः क्षत्रियर्षभाः ॥ ५-८-५ (३१८७०)
व्यथयन्निव भूतानि कम्पयन्निव मेदिनीम् ।
शनैर्विश्रामयन्सेनां स ययौ यत्र पाण्डवः ॥ ५-८-६ (३१८७१)
ततो दुर्योधनः श्रुत्वा महात्मानं महारथम् ।
उपायान्तमभिद्रुत्य स्वयमानर्च भरत ॥ ५-८-७ (३१८७२)
कारयामास पूजार्थं तस्य दुर्योधनः सभाः ।
रमणीयेषु देशेषु रत्नचित्राः स्वलङ्कृताः ॥ ५-८-८ (३१८७३)
शिल्पिभिर्विविधैश्चैव क्रीडास्तत्र प्रयोजिताः ।
तत्र माल्यानि मांसानि भक्ष्यं पेयं च सत्कृतम् ॥ ५-८-९ (३१८७४)
कूपाश्च विविधाकारा औदकानि गृहाणि च ॥
स ताः सभाः समासाद्य पूज्यमानो यथाऽमरः । ५-८-१० (३१८७५)
दुर्योधनस्य सचिवैर्देशे देशे समन्ततः ॥
आजगाम सभामन्यां देवावसथवर्चसम् । ५-८-११ (३१८७६)
स तत्र विषयैर्युक्तैः कल्याणैरतिमानुषैः ॥
मेनेऽभ्यधिकमात्मानमवमेने पुरन्दरम्। ५-८-१२ (३१८७७)
पप्रच्छ स ततः प्रेष्यान्प्रहृष्टः क्षत्रियर्षभः ॥
युधिष्ठिरस्य पुरुषाः केऽत्र चक्रुः सभा इमाः । ५-८-१३ (३१८७८)
आनीयन्तां सभाकाराः प्रदेयार्हा हि मे मताः ॥
प्रदेयमेषां दास्यामि कुन्तीपुत्रोऽनुमन्यताम्। ५-८-१५अ ततः
प्रहृष्टं राजानं ज्ञात्वा ते सचिवास्तदा'
दुर्योधनाय तत्सर्वं कथयन्ति स्म विस्मिताः ॥ ५-८-१४ (३१८७९)
संप्रहृष्टो यदा शल्यो दिदित्सुरपि जीवितम् ।
गूढो दुर्योधनस्तत्र दर्शयामास मातुलम् ॥ ५-८-१६ (३१८८०)
तं दृष्ट्वा मद्रराजश्च ज्ञात्वा यत्नं च तस्य तम् ।
परिष्वज्याब्रवीत्प्रीत इष्टोऽर्थो ध्रियतामिति ॥ ५-८-१७ (३१८८१)
दुर्योधन उवाच। ५-८-१८क्ष् (३३४६)
सत्यवाग्भव कल्याण वरो वै मम दीयताम् ।
सर्वसेनाप्रणेता वै भवान्भवितुमर्हति ॥ ५-८-१८ (३१८८२)
यथैव पाण्डवास्तुभ्यं तथैव भवतो ह्यहम् ।
अनुमान्यं च पाल्यं च भक्तं च भज मां विभो ॥ ५-८-१९ (३१८८३)
वैशंपायन उवाच। ५-८-२०क्ष् (३३४७)

कृतमित्यब्रवीच्छल्यः किमन्यत्क्रियतामिति ।
कृतमित्येव गान्धारिः प्रत्युवाच पुनःपुनः ॥ ५-८-२० (३१८८४)
शल्य उवाच। ५-८-२१क्ष् (३३४८)
गच्छ दुर्योधन पुरं स्वकमेव नरर्षभ ।
अहं गमिष्ये द्रष्टुं वै युधिष्ठिरमरिंदमम् ॥ ५-८-२१ (३१८८५)
दृष्ट्वा युधिष्ठिरं राजन्क्षिप्रमेष्ये नराधिप ।
अवश्यं चापि द्रष्टव्यः पाण्डवः पुरुषर्षभः ॥ ५-८-२२ (३१८८६)
दुर्योधन उवाच। ५-८-२३क्ष् (३३४९)
क्षिप्रामागम्यतां राजन्पाण्डवं वीक्ष्य पार्थिव ।
त्वय्यधीनाः स्म राजेन्द्र वरदानं स्मरस्व नः ॥ ५-८-२३ (३१८८७)
शल्य उवाच। ५-८-२४क्ष् (३३५०)
क्षिप्रमेष्यामि भद्रं ते गच्छस्व स्वपुरं नृप ।
ग दृष्ट्वा तु पाण्डवान्राजन्न मिथ्या कर्तुमुत्सहे ॥ ५-८-२४ (३१८८८)
वैशंपायन उवाच। ५-८-२५क्ष् (३३५१)
पर्यष्वजेतामन्योन्यं शल्यदुर्योधनावुभौ ॥ ५-८-२५ (३१८८९)
स तथा शल्यमामन्त्र्य पुरायात्स्वकं पुरम् ।
शल्यो जगाम कौन्तेयानाख्यातुं कर्म तस्य तत् ॥ ५-८-२६ (३१८९०)
उपप्लाव्यं स गत्वा तु स्कन्धावारं प्रविश्य च ।
पाण्डवानथ तान्सर्वाञ्शल्यस्तत्र ददर्श ह ॥ ५-८-२७ (३१८९१)
चिरात्तु दृष्ट्वा राजानं मातुलं समितिञ्जयम् ।
आसनेभ्यः समुत्पेतुः सर्वे सहयुधिष्ठिराः ॥ ५-८-२८ (३१८९२)
तथा भीमार्जुनौ हृष्टौ स्वस्त्रीयौ च यमावुभौ ।
द्रौपदी च सुभद्रा च अभिमन्युश्च भारत ॥ ५-८-२९ (३१८९३)
समेत्य च महापाहुं शल्यं पाण्डुसुतस्तदा ।
पाद्यमर्घ्यं च गां चैव प्रतिग्राह्य पुरोधसा ॥ ५-८-३० (३१८९४)
कताञ्जलिरदीनात्मा धर्मात्मा शल्यमब्रवीत् ।
स्वागतं तेऽस्तु वै राजन्नेतदासनमास्यताम् ॥ ५-८-३१ (३१८९५)
ततो न्यषीदच्छल्यश्च काञ्चने परमासने ।
तत्र पाद्यथार्घ्यं च न्यवेदयत पाण्डवः ॥ ५-८-३२ (३१८९६)
शल्य उवाच। ५-८-३३क्ष् (३३५२)
दुःखस्यैतस्य महतो धार्तराष्ट्रकृतस्य वै ।
अवाप्स्यसि फलं राजन्हत्वा शत्रून्परन्तप ॥ ५-८-३३ (३१८९७)
विदितं ते महाराज लोकतन्त्रं नराधिप ।
तस्माल्लोककृतं किञ्चित्तव तात न विद्यते ॥ ५-८-३४ (३१८९८)
वैशंपायन उवाच। ५-८-३५क्ष् (३३५३)
निवेद्य चार्घ्यं विधिवन्मद्रराजाय भारत ।

कुशलं पाण्डवोऽपृच्छच्छल्यं सर्वसुखावहम् ॥ ५-८-३५ (३१८९९)
स तैः परिवृतः सर्वैः पाण्डवैर्धर्मचारिभिः ।
आसने चोपविष्टः स शल्यः पार्थमथाब्रवीत् ॥ ५-८-३६ (३१९००)
शल्य उवाच। ५-८-३७क्ष् (३३५४)
कुशलं राजशार्दूल सर्वत्र कुरुनन्दन ।
अरण्यवासाद्दिष्ट्याऽसि विमुक्तो जयतां वर ॥ ५-८-३७ (३१९०१)
दुष्करं ते कृतं राजन्निर्जने गहने वने ।
भ्रातृभिः सह कौन्तेय कृष्णाया चानयाऽनघ ॥ ५-८-३८ (३१९०२)
अज्ञातवासं घोरं च वसता दुष्करं कृतम् ।
दुःखमेव कुतः सौख्यं राज्यभ्रष्टस्य भारत ॥ ५-८-३९ (३१९०३)
सत्ये तपसि दाने च तव बुद्धिर्युधिष्ठिर ।
क्षमा दमश्चाहिंसा च सत्यं चैव युधिष्ठिर ॥ ५-८-४० (३१९०४)
अद्भुतश्च पुनर्लोकस्त्वयि राजन्प्रतिष्ठितः ।
मृदुर्वदान्यो ब्रह्मण्यो दान्तो धर्मपरायणः ॥ ५-८-४१ (३१९०५)
धर्मास्ते विदिता राजन्बहवो लोकसाक्षिकाः ।
सर्वं जगदिदं तात विदितं ते परन्तप ॥ ५-८-४२ (३१९०६)
मुदितश्च पुनर्लोकस्त्वयि राजन्प्रतिष्ठिते ।
दिष्ट्या कृच्छ्रमिदं राजन्पारितं भरतर्षभ ॥ ५-८-४३ (३१९०७)
दिष्ट्या पश्यामि राजेन्द्र धर्मात्मानं सहानुगम् ।
निस्तीर्णदुष्करं राजंस्त्वां धर्मनिचयं प्रभो ॥ ५-८-४४ (३१९०८)
वैशंपायन उवाच। ५-८-४५क्ष् (३३५५)
ततोऽस्याकथयद्राजा दुर्योधनसमागमम् ।
तच्च शुश्रूषितं सर्वं वरदानं च भारत ॥ ५-८-४५ (३१९०९)
युधिष्ठिर उवाच। ५-८-४६क्ष् (३३५६)
सुकृतं ते कृतं राजन्प्रहृष्टेनान्तरात्मना ।
दुर्योधनस्य यद्वीर त्वया वाचा प्रतिश्रुतम् ॥ ५-८-४६ (३१९१०)
एकं त्विच्छामि भद्रं ते क्रियमाणं महीपते ।
राजन्नकर्तव्यमपि कर्तुमर्हसि सत्तम ॥ ५-८-४७ (३१९११)
मम त्ववेक्षया वीर शृणु विज्ञापयामि ते ।
भवानिह महाराज वासुदेवसमो युधि ॥ ५-८-४८ (३१९१२)
कर्णार्जुनाभ्यां संप्राप्ते द्वैरथे राजसत्तम ।
कर्णस्य भवता कार्यं सारथ्यं नात्र संशयः ॥ ५-८-४९ (३१९१३)
तत्र पाल्योऽर्जुनो राजन्यदि मत्प्रियमिच्छसि ।
तेजोवधश्च ते कार्यः सौतेरस्मज्जयावहः ।
अकर्तव्यमपि ह्येतत्कर्मुमर्हसि मातुल ॥ ५-८-५० (३१९१४)
शल्य उवाच। ५-८-५१क्ष् (३३५७)

श्रृणु पाण्डव भद्रं ते यद्ब्रवीषि महात्मनः ।
तेजोवधनिमित्तं मां सूतपुत्रस्य सङ्गमे ॥ ५-८-५१ (३१९१५)
अहं तस्य भविष्यामि सङ्ग्रामे सारथिर्ध्रुवम् ।
वासुदेवेन हि समं नित्यं मां सोऽभिमन्यतो ॥ ५-८-५२ (३१९१६)
तस्याहं कुरुशार्दूल प्रतीपमहितं वचः ।
ध्रुवं संकथयिष्यामि योद्धुकामस्य संयुगे ॥ ५-८-५३ (३१९१७)
यथा स हृतदर्पश्च हृततेजाश्च पाण्डव ।
भविष्यति सुखं हन्तुं सत्यमेतद्ब्रवीमि ते ॥ ५-८-५४ (३१९१८)
एवमेतत्करिष्यामि यथा तात त्वमात्थ माम् ।
यच्चान्यदपि शक्ष्यामि तत्करिष्यामि ते प्रियम् ॥ ५-८-५५ (३१९१९)
यच्च दुःखं त्वया प्राप्तं द्यूते वै कृष्णया सह ।
परुषाणि च वाक्यानि सूतपुत्रकृतानि वै ॥ ५-८-५६ (३१९२०)
जटासुरात्परिक्लेशः कीचकाच्च महाद्युते ।
द्रौपद्याऽधिगतं सर्वं दमयन्त्या यथाऽशुभम् ॥ ५-८-५७ (३१९२१)
सर्वं दुःखमिदं वीर सुखोदर्कं भविष्यति ।
नात्र मन्युस्त्वया कार्यो विधिर्हि बलवत्तरः ॥ ५-८-५८ (३१९२२)
दुःखानि हि महात्मानः प्राप्नुवन्ति युधिष्ठिर ।
देवैरपि हि दुःखानि प्राप्तानि जगतीपते ॥ ५-८-५९ (३१९२३)
इन्द्रेण श्रूयते राजन्सभार्येण महात्मना ।
अनुभूतं महद्दुःखं देवराजेन भारत ॥ ॥ ५-८-६० (३१९२४)

इति श्रीमन्महाभारते उद्योगपर्वणि सेनोद्योगपर्वणि अष्टमोऽध्यायः ॥
Mahabharata - Udyoga Parva - Chapter Footnotes

५-८-२७ उपप्लाव्यं विराटनगरस्य प्रदेशविशेषम् ।स्कन्धावारं
सेनानिवेशस्थानम् ॥
५-८-५३ प्रतीपं प्रसङ्गप्रतिकूलम् ।अहितं परिणामविरुद्धम् ॥
५-८-५८ मन्युर्दैन्यम् ॥

---

उद्योगपर्व-अध्यय००९
॥ श्रीः ॥
५.९. अध्यायः ९

Mahabharata - Udyoga Parva - Chapter Topics
शल्येन इन्द्रस्यापि दुःखानुभवे कथिते युधिष्ठिरपृच्छया तेन
विस्तरेण तत्कथनोपक्रमः ॥ १ ॥
इन्द्रजिघांसया त्वष्ट्रा सृष्टस्य त्रिशिरसो विश्वरूपस्य

तपोभङ्गाय इन्द्रेण अप्सरसां प्रेषणम् ॥ २ ॥
अप्सरोभिस्तस्याधर्षणीयत्वे ज्ञाते इन्द्रेण वज्रपातनात्तस्य हननम् ॥ ३ ॥
हतेपि तस्मिन् जीवतीव दृश्यमाने भयादिन्द्रप्रार्थनया यदृच्छया
आगतेन तक्ष्णा तच्छिरश्छेदनम् ॥ ४ ॥
विश्वरूपहननकुपितेन त्वष्ट्रा पुनरिन्द्रवधाय वृत्रस्योत्पादनम् ॥ ५ ॥
वृत्रेणेन्द्रे पराजिते सेन्द्राणां देवानां विष्णुं प्रति गमनम् ॥ ६ ॥

Mahabharata - Udyoga Parva - Chapter Text

५-९-० (३१९२५)
युधिष्ठिर उवाच। ५-९-०क्ष् (३३५८)
कथमिन्द्रेण राजेन्द्र सभार्येण महात्मना ।
दुःखं प्राप्तं परं घोरमेतदिच्छामि वेदितुम् ॥ ५-९-१ (३१९२६)
शल्य उवाच। ५-९-२क्ष् (३३५९)
शृणु राजन्पुरावृत्तमितिहासं पुरातनम् ।
सभार्येण यथा प्राप्तं दुःखमिन्द्रेण भारत ॥ ५-९-२ (३१९२७)
त्वष्टा प्रजापतिर्ह्यासीद्देवश्रेष्ठो महातपाः ।
स पुत्रं वै त्रिशिरसमिन्द्रद्रोहात्किलासृजत् ॥ ५-९-३ (३१९२८)
ऐन्द्रं स प्रार्थयत्स्थानं विश्वरूपो महाद्युतिः ।
तैस्त्रिभिर्वदनैर्घोरैः सूर्येन्दुज्वलनोपमैः ॥ ५-९-४ (३१९२९)
वेदानेकेन सोऽधीते सुरामेकेन चापिबत् ।
एकेन च दिशः सर्वाः पिबन्निव निरीक्षते ॥ ५-९-५ (३१९३०)
स तपस्वी मुदुर्दान्तो धर्मे तपसि चोद्यतः ।
तपस्तस्य महत्तीव्रं सुदुश्चरमरिन्दम ॥ ५-९-६ (३१९३१)
तस्य दृष्ट्वा तपोवीर्यं सत्यं चामिततेजसः ।
विषादमगमच्छक्र इन्द्रोऽयं मा भवेदिति ॥ ५-९-७ (३१९३२)
कथं सज्जेच्च भोगेषु न च तप्येन्महत्तपः ।
विवर्धमानस्त्रिशिराः सर्वं हि भुवनं ग्रसेत् ॥ ५-९-८ (३१९३३)
इति संचिन्त्य बहुधा बुद्धिमान्भरतर्षभ ।
आज्ञापयत्सोऽप्सरसस्त्वष्टृपुत्रप्रलोभने ॥ ५-९-९ (३१९३४)
यथा स सज्जेत्त्रिशिराः कामभोगेषु वै भृशम् ।
क्षिप्रं कुरुत गच्छध्वं प्रलोभयत माचिरम् ॥ ५-९-१० (३१९३५)
शृङ्गारवेषाः सुश्रोण्यो हारैर्युक्ता मनोहरैः ।
हावभावसमायुक्ताः सर्वाः सौन्दर्यशोभिताः ॥ ५-९-११ (३१९३६)
प्रलोभयत भद्रं वः शमयध्वं भयं मम ।
अस्वस्थं ह्यात्मनात्मानं लक्षयामि वराङ्गनाः ॥ ५-९-१२ (३१९३७)

भयं तन्मे महाघोरं क्षिप्रं नाशयताबलाः । ५-९-१३ (३१९३८)
अप्सरस ऊचुः ।
तथा यत्नं करिष्यामः शक्र तस्य प्रलोभने ।
यथा नावाप्स्यसि भयं तस्माद्बलनिषूदन ॥ ५-९-१३क्ष् (३३६०)
निर्दहन्निव चक्षुर्भ्यां योऽसावास्ते तपोनिधिः ।
तं प्रलोयितुं देव गच्छामः सहिता वयम् ॥ ५-९-१४ (३१९३९)
यतिष्यामो वशे कर्तुं व्यपनेतुं च ते भयम् । ५-९-१५ (३१९४०)
शल्य उवाच ।
इन्द्रेण तास्त्वनुज्ञाता जग्मुस्त्रिशिरसोऽन्तिकम् ।
तत्र ता विविधैर्भावैर्लोभयन्त्यो वराङ्गनाः ॥ ५-९-१५क्ष् (३३६१)
नृत्तं संदर्शयामासुस्तथैवाङ्गेषु सौष्ठवम् ।
नाभ्यगच्छत्प्रहर्षं ताः स पश्यन्सुमहातपाः ॥ ५-९-१६ (३१९४१)
इन्द्रियाणि वशे कृत्वा पूर्णसागरसन्निभः ।
तास्तु यत्नं परं कृत्वा पुनः शक्रमुपस्थिताः ॥ ५-९-१७ (३१९४२)
कृताञ्जलिपुटाः सर्वा देवराजमथाब्रुवन् ।
न स शक्यः सुदुर्धर्षो धैर्याच्चालयितुं प्रभो ॥ ५-९-१८ (३१९४३)
यत्ते कार्यं महाभाग क्रियतां तदनन्तरम् ।
संपूज्याप्सरसः शक्रो विसृज्य च महामतिः ॥ ५-९-१९ (३१९४४)
चिन्तयामास तस्यैव वधोपायं युधिष्ठिर ।
स तूष्णीं चिन्तयन्वीरो देवराजः प्रतापवान् ॥ ५-९-२० (३१९४५)
विनिश्चितमतिर्धीमान्वधे त्रिशिरसोऽभवत् ।
वज्रमस्य क्षिपाम्यद्य स क्षिप्रं नभविष्यति ॥ ५-९-२१ (३१९४६)
शत्रुः प्रवृद्धो नोपेक्ष्यो दुर्बलोऽपि बलीयसा ।
शास्त्रबुद्ध्या विनिश्चित्य कृत्वा बुद्धिं वधे दृढाम् ॥ ५-९-२२ (३१९४७)
अथ वैश्वानरनिभं घोररूपं भयावहम् ।
मुमोच वज्रं संक्रुद्धः शक्रस्त्रिशिरसं प्रति ॥ ५-९-२३ (३१९४८)
स पपात हतस्तेन वज्रेण दृढमाहतः ।
पर्वतस्येव शिखरं प्रणुन्नं मेदिनीतले ॥ ५-९-२४ (३१९४९)
तं तु वज्रहतं दृष्ट्वा शयानमचलोपमम् ।
न शर्म लेभे देवेन्द्रो दीपिततस्तस्य तेजसा ॥ ५-९-२५ (३१९५०)
हतोऽपि दीप्ततेजाः स जीवन्निव हि दृश्यते ।
घातितस्य शिरांस्याजौ जीवन्तीवाद्भुतानि वै ॥ ५-९-२६ (३१९५१)
ґ शिरांसि तस्याजायन्त त्रीण्येव शकुनास्त्रयः ।
तित्तिरिः कलविङ्कश्च तथैव च कपिञ्जलः ।
विश्वरूपशिरांस्येव जायन्ते तानि भारत ' ॥ ५-९-२७ (३१९५२)
ततोऽतिभीतगात्रस्तु शक्र आस्ते विचारयन् ।

अथाजगाम परशुं स्कन्धेनादाय वर्धकिः ॥ ५-९-२८ (३१९५३)
तदरण्यं महाराज यत्रास्तेऽसौ निपातितः ।
स भीतस्तत्र तक्षाणं घटमानं शचीपतिः ॥ ५-९-२९ (३१९५४)
अपश्यदब्रवीच्चैनं सत्वरं पाकशासनः ।
क्षिप्रं छिन्धि शिरांस्यस्य कुरुष्व वचनं मम ॥ ५-९-३० (३१९५५)
तक्षोवाच। ५-९-३१क्ष् (३३६२)
महास्कन्धो भृशं ह्येष परशुर्नभविष्यति ।
कर्तुं चाहं न शक्ष्यामि कर्म राद्भिर्विगर्हितम् ॥ ५-९-३१ (३१९५६)
इन्द्र उवाच। ५-९-३२क्ष् (३३६३)
मा भैस्त्वं शीघ्रमेतद्वै कुरुष्व वचनं मम ।
मत्प्रसादाद्धि ते शस्त्रं वज्रकल्पं भविष्यति ॥ ५-९-३२ (३१९५७)
तक्षोवाच। ५-९-३३क्ष् (३३६४)
कं भवन्तमहं विद्यां घोरकर्माणमद्य वै ।
एतदिच्छाम्यहं श्रोतुं तत्त्वेन कथयस्व मे ॥ ५-९-३३ (३१९५८)
इन्द्र उवाच। ५-९-३४क्ष् (३३६५)
अहमिन्द्रो देवराजस्तक्षन्विदितमस्तु ते ।
कुरुष्वैतद्यथोक्तं मे तक्षन्माऽत्र विचारय ॥ ५-९-३४ (३१९५९)
ग मया हि निहतः शेते त्रिशिरास्त्वं च विद्धि वै। ५-९-३५ (३१९६०)
वैशंपायन उवाच ।
स प्रह्वः प्राञ्जलिर्भूत्वा इदं वचनमब्रवीत्' ॥ ५-९-३५क्ष् (३३६६)
क्रूरेण नापत्रपसे कथं शक्रेह कर्मणा ।
ऋषिपुत्रमिमं हत्वा ब्रह्महत्याभयं न ते ॥ ५-९-३६ (३१९६१)
शक्र उवाच। ५-९-३७क्ष् (३३६७)
पश्चाद्धर्मं चरिष्यामि पावनार्थं सुदुश्चरम् ।
शत्रुरेष महावीर्यो वज्रेण निहतो मया ॥ ५-९-३७ (३१९६२)
अद्यापि चाहमुद्विग्नस्तक्षन्नस्माद्बिभेमि वै ।
क्षिप्रं छिन्धि शिरांसि त्वं करिष्येऽनुग्रहं तव ॥ ५-९-३८ (३१९६३)
शिरः पशोस्ते दास्यन्ति भागं यज्ञेषु मानवाः ।
एष तेऽनुग्रहस्तक्षन्क्षिप्रं कुरु मम प्रियम् ॥ ५-९-३९ (३१९६४)
शल्य उवाच। ५-९-४०क्ष् (३३६८)
एतच्छ्रुत्वा तु तक्षा स महेन्द्रवचनात्तदा ।
शिरांस्यथ त्रिशिरसः कुठारेणाच्छिनत्तदा ॥ ५-९-४० (३१९६५)
निकृत्तेषु ततस्तेषु निष्क्रामन्नण्डजास्त्वथ ।
कपिञ्जलास्तित्तिराश्च कलविङ्काश्च सर्वशः ॥ ५-९-४१ (३१९६६)
येन वेदानधीते स्म पिबते सोममेव च ।
तस्माद्वक्राद्विनिश्चेरुः क्षिप्रं तस्य कपिञ्जलाः ॥ ५-९-४२ (३१९६७)

येन सर्वा दिशो राजन्पिबन्निव नीरीक्षते ।
तस्माद्वक्त्राद्विनिश्चेरुस्तित्तिरास्तस्य पाण्डव ॥ ५-९-४३ (३१९६८)
यत्सुरापं तु तस्यासीद्वक्त्रं त्रिशिरसस्तदा ।
कलविङ्काः समुत्पेतुः श्येनाश्च भरतर्षभ ॥ ५-९-४४ (३१९६९)
ततस्तेषु निकृत्तेषु विज्वरो मघवानथ ।
ग्तक्षणे तथा वरं दत्त्वा प्रहृष्टस्त्रिदशेश्वरः ॥' ५-९-४५ (३१९७०)
जगाम त्रिदिवं देवस्तक्षाऽपि स्वगृहान्ययौ ।
मेने कृतार्थमात्मानं हत्वा शत्रुं सुरारिहा ॥ ५-९-४६ (३१९७१)
ग तक्षापि स्वगृहं गत्वा नैव शंसति कस्यचित् ।
अथैनं नाभिजानन्ति वर्षमेकं तथागतम् ॥ ५-९-४७ (३१९७२)
अथ संवत्सरे पूर्णे भूताः पशुपतेः प्रभो ।
तमाक्रोशन्त मघवान्नः प्रभुर्ब्रह्महा इति। ५-९-४८ (३१९७३)
तत इन्द्रो व्रतं घोरमाचरत्पाकशासनः ।
तपसा च सुसंयुक्तः सह देवैर्मरुद्गणैः ॥ ५-९-४९ (३१९७४)
समुद्रेषु पृथिव्यां च वनस्पतिषु स्त्रीषु च ।
विभज्य ब्रह्महत्यां च तान्वरैरप्ययोजयत् ॥ ५-९-५० (३१९७५)
वरदस्तु वरं दत्त्वा पृथिव्यै सागराय च ।
वनस्पतिभ्यः स्त्रीभ्यश्च ब्रह्महत्यां नुनोद ताम् ॥ ५-९-५१ (३१९७६)
ततस्तु शुद्धो भगवान्देवैर्लोकैश्च पूजितः ।
इन्द्रस्थानमुपातिष्ठत्पूज्यमानो महर्षिभिः' ॥ ५-९-५२ (३१९७७)
त्वष्टा प्रजापतिः श्रुत्वा शक्रेणाथ हतं सुतम् ।
क्रोधसंरक्तनयन इदं वचनमब्रवीत् ॥ ५-९-५३ (३१९७८)
त्वष्टोवाच। ५-९-५४क्ष् (३३६९)
तप्यमानं तपो नित्यं क्षान्तं दान्तं जितेन्द्रियम् ।
विनाऽपराधेन यतः पुत्रं हिंसितवान्मम ॥ ५-९-५४ (३१९७९)
तस्माच्छक्रविनाशाय वृत्रमुत्पादयाम्यहम् ।
लोकाः पश्यन्तु मे वीर्यं तपसश्च बलं महम् ।
स च पश्यतु देवेन्द्रो दुरात्मा पापचेतनः ॥ ५-९-५५ (३१९८०)
उपस्पृश्य ततः क्रुद्धस्तपस्वी सुमहायशाः ।
अग्नौ हुत्वा समुत्पाद्य घोरं वृत्रमुवाच ह ॥ ५-९-५६ (३१९८१)
इन्द्रशत्रो विवर्धस्व प्रभावात्तपसो मम ।
सोऽवर्धत दिवं स्तब्ध्वा सूर्यवैश्वानरोपमः ॥ ५-९-५७ (३१९८२)
किं करोमीति चोवाच कालसूर्य इवोदितः ।
शक्रं जहीति चाप्युक्तो जगाम त्रिदिवं ततः ॥ ५-९-५८ (३१९८३)
ततो युद्धं समभवद्वृत्रवासवयोर्महत् ।
संक्रुद्धयोर्महाघोरं प्रसक्तं कुरुसत्तम ॥ ५-९-५९ (३१९८४)

ततो जग्राह देवेन्द्रं वृत्रो वीरः शतक्रतुम् ।
अपावृत्याक्षिपद्वक्त्रे शक्रं कोपसमन्वितः ॥ ५-९-६० (३१९८५)
ग्रस्ते वृत्रेण शक्रे तु संभ्रान्तास्त्रिदिवेश्वराः ।
असृजंस्ते महासत्वा जृम्भिकां वृत्रनाशिनीम् ॥ ५-९-६१ (३१९८६)
विजृम्भमाणस्य ततो वृत्रस्यास्यादपावृतात् ।
स्वान्यङ्गान्यभिसंक्षिप्य निष्क्रान्तो बलनाशनः ॥ ५-९-६२ (३१९८७)
ततः प्रभृति लोकस्य जृम्भिका प्राणिसंश्रिता ।
जहृषुश्च सुराः सर्वे शक्रं दृष्ट्वा विनिःसृतम् ॥ ५-९-६३ (३१९८८)
ततः प्रववृते युद्धं वृत्रवासवयोः पुनः ।
संरब्धयोस्तदा घोरं सुचिरं भरतर्षभ ॥ ५-९-६४ (३१९८९)
यदा व्यवर्धत रणे वृत्रो बलसमन्वितः ।
त्वष्टुस्तेजोबलाविद्धस्तदा शक्रो न्यवर्तत। ५-९-६५ (३१९९०)
निवृत्ते च तदा देवा विषादमगमन्परम् ।
समेत्य सह शक्रेण त्वष्टुस्तेजोविमोहिताः ॥ ५-९-६६ (३१९९१)
अमन्त्रयन्त ते सर्वे मुनिभिः सह भारत ।
किं कार्यमिति वै राजन्विचिन्त्य भयमोहिताः ॥ ५-९-६७ (३१९९२)
जग्मुः सर्वे महात्मानं मनोभिर्विष्णुमव्ययम् ।
उपविष्टा मन्दराग्रे सर्वे वृत्रवधेप्सवः ॥ ॥ ५-९-६८ (३१९९३)

इति श्रीमन्महाभारते उद्योगपर्वणि सेनोद्योगपर्वणि नवमोऽध्यायः ॥
Mahabharata - Udyoga Parva - Chapter Footnotes

५-९-११ हावाः शृङ्गारचेष्टाः । भावाः चित्तविकारा हर्षादयस्तर्युक्ताः ॥
५-९-१६ सौषवं सौन्दर्यम् । प्रहर्ष लब्धभोयोऽस्मीति तोषम् ॥
५-९-२८ वर्धकिः तक्षा ॥
५-९-३१ नभविष्यति नङ्क्ष्यति ॥
५-९-५६ ठपस्पृश्य आचम्य ॥
५-९-६० अपावृत्य मुखं संप्रसार्य ॥

---

उद्योगपर्व-अध्यय०१०
॥ श्रीः ॥
५.१०. अध्यायः १०

Mahabharata - Udyoga Parva - Chapter Topics
विष्णवाज्ञया ऋषिभिर्वृत्रस्य आसुधाद्यवध्यत्ववरदानपूर्वकं
इन्द्रवृत्रयोः सन्धिकरणम् ॥ १ ॥
कदाचन समुद्रतीरे वृत्रं दृष्टवता इन्द्रेण वृत्रोपरि सवज्रे

फेने प्रक्षिप्ते तत्प्रविष्टेन विष्णुना वृत्रहननम् ॥ २ ॥
वृत्रवधजन्यब्रह्महत्यापीडितस्येन्द्रस्य स्वर्गात्प्रवासः ॥ ३ ॥

Mahabharata - Udyoga Parva - Chapter Text

५-१०-० (३१९९४)
इन्द्र उवाच। ५-१०-०क्ष् (३३७०)
सर्वं व्याप्तमिदं देवा वृत्रेण जगदव्ययम् ।
न ह्यस्य सदृशं किञ्चित्प्रतिघाताय यद्भवेत् ॥ ५-१०-१ (३१९९५)
समर्थो ह्यभवं पूर्वमसमर्थोऽस्मि सांप्रतम् ।
कथं नु कार्यं भद्रं वो दुर्धर्षः स हि मे मतः ॥ ५-१०-२ (३१९९६)
तेजस्वी च महात्मा च युद्धे चामितविक्रमः ।
ग्रसेत्त्रिभुवनं सर्वं सदेवासुरमानुषम् ॥ ५-१०-३ (३१९९७)
तस्माद्विनिश्चयमिमं शृणुध्वं त्रिदिवौकसः ।
विष्णोः क्षयमुपागम्य समेत्य च महात्मना ॥ ५-१०-४ (३१९९८)
तेन संमन्त्र्य वेत्स्यामो वधोपायं दुरात्मनः । ५-१०-५ (३१९९९)
शल्य उवाच ।
एवमुक्ते मघवता देवाः शर्षिगणास्तदा ।
शरण्यं शरमं देवं जग्मुर्विष्णुं महाबलम् ॥ ५-१०-५क्ष् (३३७१)
ऊचुश्च सर्वे देवेशं विष्णुं वृत्रभयार्दिताः ।
त्रयो लोकास्त्वया क्रान्तास्त्रिभिर्विक्रमणैः पुरा ॥ ५-१०-६ (३२०००)
अमृतं चाहृतं विष्णो दैत्याश्च निहता रणे ।
बलिं बद्धवा महादैत्यं शक्रो देवाधिपः कृतः ॥ ५-१०-७ (३२००१)
त्वं प्रभुः सर्वदेवानां त्वया सर्वमिदं ततम् ।
त्वं हि देवो महादेव सर्वलोकनमस्कृतः ॥ ५-१०-८ (३२००२)
गतिर्भव त्वं देवानां सेन्द्राणाममरोत्तम ।
जगद्व्याप्तमिदं सर्वं वृत्रेणासुरसूदन ॥ ५-१०-९ (३२००३)
विष्णुरुवाच। ५-१०-१०क्ष् (३३७२)
अवश्यं करणीयं मे भवतां हितमुत्तमम् ।
तस्मादुपायं वक्ष्यामि यथाऽसौ नभविष्यति ॥ ५-१०-१० (३२००४)
गच्छध्वं सर्षिगन्धर्वा यत्रासौ विश्वरूपधृक् ।
साम तस्य प्रयुञ्जध्वं तत एनं विजेष्यथ ॥ ५-१०-११ (३२००५)
भविष्यति जयो देवाः शक्रस्य मम तेजसा ।
अदृश्यश्च प्रवेक्ष्यामि वज्रे ह्यस्यायुधोत्तमे ॥ ५-१०-१२ (३२००६)
गच्छध्वमृषिभिः सार्धं गन्धर्वैश्च सुरोत्तमाः ।
वृत्रस्य सह शक्रेण सन्धिं कुरुत माचिरम् ॥ ५-१०-१३ (३२००७)

शल्य उवाच। ५-१०-१४क्ष् (३३७३)
एवमुक्ते तु देवेन ऋषयस्त्रिदशास्तथा ।
ययुः समेत्य सहिताः शक्रं कृत्वा पुरःसरम् ॥ ५-१०-१४ (३२००८)
समीपमेत्य च यदा सर्व एव महौजसः ।
तं तेजसा प्रज्वलितं प्रतपन्तं दिशो दश ॥ ५-१०-१५ (३२००९)
ग्रसन्तमिव लोकांस्त्रीन्सूर्याचन्द्रमसौ यथा ।
ददृशुस्ते ततो वृत्रं शक्रेण सह देवताः ॥ ५-१०-१६ (३२०१०)
ऋषयोऽथ ततोऽभ्येत्य वृत्रमूचुः प्रियं वचः ।
व्याप्तं जगदिदं सर्वं तेजसा तव दुर्जय ॥ ५-१०-१७ (३२०११)
न च शक्नोषि निर्जेतुं वासवं बलिनां वर ।
युध्यतोश्चापि वां कालो व्यतीतः सुमहानिह ॥ ५-१०-१८ (३२०१२)
पीड्यन्ते च प्रजाः सर्वाः सदेवासुरमानुषाः ।
सख्यं भवतु ते वृत्र शक्रेण सह नित्यदा ॥ ५-१०-१९ (३२०१३)
अवाप्स्यसि सुखं त्वं च शक्रलोकांश्च शाश्वतान् ।
ऋषिवाक्यं निशम्याथ वृत्रःस तु महाबलः ॥ ५-१०-२० (३२०१४)
उवाच तानृषीन्सर्वान्प्रणम्य शिरसाऽसुरः ।
सर्वे यूयं महाभागा गन्धर्वाश्चैव सर्वशः ॥ ५-१०-२१ (३२०१५)
यद्ब्रूथ तच्छ्रुतं सर्वं ममापि श्रृणुतानघाः ।
सन्धिः कथं वै भविता मम शक्रस्य चोभयोः ।
तेजसोर्हि द्वयोर्देवाः सख्यं वै भविता कथम् ॥ ५-१०-२२ (३२०१६)
ऋषय ऊचुः । ५-१०-२३क्ष् (३३७४)
सकृत्सतां सङ्गतमीप्सितव्यं
ततः परं भविता भव्यमेव ।
नातिक्रामेत्सत्पुरुषेण सङ्गतं
तस्मात्सतां संगतमीप्सितव्यम् ॥ ५-१०-२३ (३२०१७)
दृढं सतां सङ्गतं चापि नित्यं
ब्रूयाच्चार्थं ह्यर्थकृच्छ्रेषु धीराः ।
महार्थवत्सत्पुरुषेण सङ्गतं
तस्मात्सन्तं न जिघांसेत धीरः ॥ ५-१०-२४ (३२०१८)
इन्द्रः सतां संमतश्च निवासश्च महात्मनाम् ।
सत्यवादी ह्यनिन्द्यश्च धर्मवित्सूक्ष्मनिश्चयः ॥ ५-१०-२५ (३२०१९)
तेन ते सह शक्रेण सन्धिर्भवतु नित्यदा ।
एवं विश्वासमागच्छ मा ते भूद्बुद्धिरन्यथा ॥ ५-१०-२६ (३२०२०)
शल्य उवाच। ५-१०-२७क्ष् (३३७५)
महर्षिवचनं श्रुत्वा तानुवाच महाद्युतिः ।
अवश्यं भगवन्तो मे माननीयास्तपस्विनः ॥ ५-१०-२७ (३२०२१)

ब्रवीमि यदहं देवास्तत्सर्वं क्रियते यदि ।
ततः सर्वं करिष्यामि यदूचुर्मां दिवौकसः ॥ ५-१०-२८ (३२०२२)
न शुष्केण न चाद्रेण नाश्मना न च दारुणा ।
न शस्त्रेण न चास्त्रेण न दिवा न तथा निशि ॥ ५-१०-२९ (३२०२३)
वध्यो भवेयं विप्रेन्द्राः शक्रस्य सह दैवतैः ।
एवं मे रोचते सन्धिः शक्रेण सह नित्यदा ॥ ५-१०-३० (३२०२४)
बाढमित्येव ऋषयस्तमूचुर्भरतर्षभ ।
एवं वृत्ते तु सन्धाने वृत्रः प्रमुदितोऽभवत् ॥ ५-१०-३१ (३२०२५)
ग ततः सन्धिं मिथः कृत्वा ऋषयो दीप्ततेजसः ।
शक्रस्य सह वृत्रेण पुनर्जग्मुर्यथागतम् '॥ ५-१०-३२ (३२०२६)
युक्तः सदाऽभवच्चापि शक्रो हर्षसमन्वितः ।
वृत्रस्य वधसंयुक्तानुपायानन्वचिन्तयत् ॥ ५-१०-३४अग
अभिसन्धिर्महेन्द्रस्य सन्धिकर्मणि यः कृतः ।
ऋषिभिस्त्वीरितं यच्च महेन्द्रस्तदनुस्मरन् ॥' ५-१०-३३ (३२०२७)
छिद्रान्वेषी समुद्विग्नः सदा वसति देवराट् ।
स कदाचित्समुद्रान्ते समपश्यन्महासुरम् ॥ ५-१०-३५ (३२०२८)
सन्ध्याकाल उपावृत्ते मुहूर्ते चातिदारुणे ।
ततः संचिन्त्य भगवान्वरदानं महात्मनः ॥ ५-१०-३६ (३२०२९)
सन्ध्येयं वर्तते रौद्रा न रात्रिर्दिवसं न च ।
वृत्रश्चावश्यवध्योऽयं मम सर्वहरो रिपुः ॥ ५-१०-३७ (३२०३०)
यदि वृत्रं न हन्म्यद्य वञ्चयित्वा महासुरम् ।
महाबलं महाकायं न मे श्रेयो भविष्यति ॥ ५-१०-३८ (३२०३१)
एवं संचिन्तयन्नेव शक्रो विष्णुमनुस्मरन् ।
अथ फेनं तदाऽपश्यत् समुद्रे पर्वतोपमप् ॥ ५-१०-३९ (३२०३२)
नायं युष्को न चाद्रोऽयं न च शस्त्रमिदं तथा ।
एनं क्षेप्स्यामि वृत्रस्य क्षणादेव नशिष्यति ॥ ५-१०-४० (३२०३३)
सवज्रमथ फेनं तं क्षिप्रं वृत्रे निसृष्टवान् ।
प्रविश्य फेनं तं विष्णुरथ वृत्रं व्यनाशयत् ॥ ५-१०-४१ (३२०३४)
निहते तु ततो वृत्रे दिशो वितिमिराऽभवन् ।
प्रववौ च शिवो वायुः प्रजाश्च जहृषुस्तथा ॥ ५-१०-४२ (३२०३५)
ततो देवाः सगन्धर्वा यक्षरक्षोमहोरगाः ।
ऋषयश्च महेन्द्रं तमस्तुवन्विविधैः स्तवैः ॥ ५-१०-४३ (३२०३६)
नमस्कृतः सर्वभूतैः सर्वभूतान्यसान्त्वयत् ।
हत्वा शत्रुं प्रहृष्टात्मा वासवः सह दैवतैः ॥ ५-१०-४४ (३२०३७)
विष्णुं त्रिभुवनश्रेष्ठं पूजयामास धर्मवित् ।
ततो हते महावीर्ये वृत्रे देवभयङ्करे ॥ ५-१०-४५ (३२०३८)

अनृतेनाभिभूतोऽभूच्छक्रः परमदुर्मनाः ।
त्रैशीर्षयाऽभिभूतश्च स पूर्वं ब्रह्महत्यया ॥ ५-१०-४६ (३२०३९)
ग महादेवस्य भूतैश्च स पुनर्ब्रह्महा इति ।
आक्रुष्टो निर्भयैर्भूयो व्रीडितो बलवृत्रहा '॥ ५-१०-४७ (३२०४०)
सोऽन्तमाश्रित्य लोकानां नष्टसंज्ञो विचेतनः ।
न प्राज्ञायत देवेन्द्रस्त्वभिभूतः स्वकर्मभिः ॥ ५-१०-४८ (३२०४१)
प्रतिच्छन्नोऽवसच्चाप्सु चेष्टमान इवोरगः ।
ततः प्रनष्टे देवेन्द्रे ब्रह्महत्या भयार्दिते ॥ ५-१०-४९ (३२०४२)
भूमिः प्रध्वस्तसंकाशा निर्वृक्षा शुष्ककानना ।
विच्छिन्नस्रोतसो नद्यः सरांस्यनुदकानि च ॥ ५-१०-५० (३२०४३)
संक्षोभश्चापि सत्वानामनावृष्टिकृतोऽभवत् ।
देवाश्चापि भृशं त्रस्तास्तथा सर्वे महर्षयः ॥ ५-१०-५१ (३२०४४)
अराजकं जगत्सर्वमभिभूतमुपद्रवैः ।
ततो भीताऽभवन्देवाः को नो राजा भवेदिति ॥ ५-१०-५२ (३२०४५)
दिवि देवर्षयश्चापि देवराजविनाकृताः ।
न स्म कश्चन देवानां राज्ये वै कुरुते मतिम् ॥ ॥ ५-१०-५३ (३२०४६)

इति श्रीमन्महाभारते उद्योगपर्वणि सेनोद्योगपर्वणि दशमोऽध्यायः ॥
Mahabharata - Udyoga Parva - Chapter Footnotes

५-१०-४ क्षयं गृहम् ॥
४ ॥

---

उद्योगपर्व-अध्यय०११
॥ श्रीः ॥
५.११. अध्यायः ११

Mahabharata - Udyoga Parva - Chapter Topics
ऋषिभिर्देवैश्च नहुपस्य वरदानपूर्वकमिन्द्रराज्ये अभिषेचनम् ॥ १ ॥
कदाचन स्वावलीकनेन कलुषितमनसा नहुपेण काम्यमानायै इन्द्राण्यै
बृहस्पतिना अभयप्रदानम् ॥ २ ॥

Mahabharata - Udyoga Parva - Chapter Text

५-११-० (३२०४७)
शल्य उवाच। ५-११-०क्ष् (३३७६)
ऋषयोऽथाब्रुवन्सर्वे देवाश्च त्रिदिवेश्वराः ।

अयं वै नहुपः श्रीमान्देवराज्येऽभिषिच्यताम् ॥ ५-११-१ (३२०४८)
तेजस्वी च यशस्वी च धार्मिकश्चैव नित्यदा ।
ते गत्वा त्वब्रुवन्सर्वे राजा नो भव पार्थिव ॥ ५-११-२ (३२०४९)
स तानुवाच नहुषो देवानृपिगणांस्तथा ।
पितृभिः सहितान्राजन्परिप्सन्हितमात्मनः ॥ ५-११-३ (३२०५०)
दुर्बलोऽहं न मे शक्तिर्भवतां परिपालने ।
बलवाञ्जायतां कश्चिद्बलं शक्रे हि नित्यदा ॥ ५-११-४ (३२०५१)
तमब्रुवन्पुनः सर्वे देवा ऋषिपुरोगमाः ।
अस्माकं तपसा युक्तः पाहि राज्यं त्रिविष्टपे ॥ ५-११-५ (३२०५२)
परस्परभयं घोरमस्माकं हि न संशयः ।
अभिषिच्यस्व राजेन्द्र भव राजा त्रिविष्टपे ॥ ५-११-६ (३२०५३)
देवदानवयक्षाणामृषीणां रक्षसां तथा ।
पितृगन्धर्वभूतानां चक्षुर्विषयवर्तिनाम्। ५-११-७ (३२०५४)
तेज आदास्यसे पश्यन्बलवांश्च भविष्यसि ।
धर्मं पुरस्कृत्य सदा सरवलोकाधिपो भव ॥ ५-११-८ (३२०५५)
ब्रह्मर्षींश्चापि देवांश्च गोपायस्व त्रिविष्टपे । ५-११-९ (३२०५६)
शल्य उवाच ।
अभिषिक्तः स राजेन्द्र ततो राजा त्रिविष्टपे ॥ ५-११-९क्ष् (३३७७)
धर्मं पुरस्कृत्य तदा सर्वलोकाधिपोऽभवत् ।
सुदुर्लभं वरं लब्ध्वा प्राप्य राज्यं त्रिविष्टपे ॥ ५-११-१० (३२०५७)
धर्मात्मा सततं भूत्वा कामात्मा समपद्यत ।
देवोद्यानेषु सर्वेषु नन्दनोपवनेषु च ॥ ५-११-११ (३२०५८)
कैलासे हिमवत्पृष्ठे मन्दरे श्वेतपर्वते ।
सह्ये महेन्द्रे मलये समुद्रेषु सरित्सु च ॥ ५-११-१२ (३२०५९)
अप्सरोभिः परिवृतो देवकन्यासमावृतः ।
नहुषो देवराजोऽथ क्रीडन्बहुविधं तदा ॥ ५-११-१३ (३२०६०)
श्रृण्वन्दिव्या बहुविधाः कथाः श्रुतिमनोहराः ।
वादित्राणि च सर्वाणि गीतं च मधुरस्वनम् ॥ ५-११-१४ (३२०६१)
विश्वावसुर्नारदश्च गन्धर्वाप्सरसां गणाः ।
ऋतवः षट्च देवेन्द्रं मूर्तिमन्त उपस्थिताः ॥ ५-११-१५ (३२०६२)
मारुतः सुरभिर्वाति मनोज्ञः सत्वशीतलः ।
एवं विक्रीडतस्तस्य नहुषस्य दुरात्मनः ॥ ५-११-१६ (३२०६३)
संप्राप्ता दर्शनं देवी शक्रस्य महिषी प्रिया ।
स तां संदृश्य दुष्टात्मा प्राह सर्वान्सभासदः ॥ ५-११-१७ (३२०६४)
इन्द्रस्य महिषी देवी कस्मान्मां नोपतिष्ठति ।
अहमिन्द्रोऽस्मि देवानां लोकानां च तथेश्वरः ॥ ५-११-१८ (३२०६५)

आगच्छतु शची मह्यं क्षिप्रमद्य निवेशनम् ।
तच्छ्रुत्वा दुर्मना देवी बृहस्पतिमुवाच ह ॥ ५-११-१९ (३२०६६)
रक्ष मां नहुषाद्ब्रह्मंस्त्वामस्मि शरणं गता ।
सर्वलक्षणसंपन्नां ब्रह्मंस्त्वं मां प्रभाषसे ॥ ५-११-२० (३२०६७)
देवराजस्य दयितामत्यन्तं सुखभागिनीम् ।
अवैधव्येन युक्तां चाप्येकपत्नीं पतिव्रदाम् ॥ ५-११-२१ (३२०६८)
उक्तवानसि मां पूर्वमृतां तां कुरु वै गिरम् ।
नोक्तपूर्वं च भगवन्मृषा ते किंचिदीश्वर ॥ ५-११-२२ (३२०६९)
तस्मादेतद्भवेत्सत्यं त्वयोक्तं द्विजसत्तम ।
बृहस्पतिरथोवाच इन्द्राणीं भयमोहिताम् ॥ ५-११-२३ (३२०७०)
यदुक्तासि मया देवि सत्यं तद्भविता ध्रुवम् ।
द्रक्ष्यसे देवराजं तमिन्द्रं शीघ्रमिहागतम् ॥ ५-११-२४ (३२०७१)
न भेतव्यं च नहुषात्सत्यमेतद्ब्रवीमि ते ।
समानयिष्ये शक्रेण नचिराद्भवतीमहम् ॥ ५-११-२५ (३२०७२)
अथ शुश्राव नहुष इन्द्राणीं शरणीं गताम् ।
बृहस्पतेरङ्गिरसश्चुक्रोध स नृपस्तदा ॥ ॥ ५-११-२६ (३२०७३)

इति श्रीमन्महाभारते उद्योगपर्वणि सेनोद्योगपर्वणि एकादशोऽध्यायः ॥
Mahabharata - Udyoga Parva - Chapter Footnotes

५-११-२ नोऽस्माकं राजा भव ॥
२ ॥

---

उद्योगपर्व-अध्यय०१२
॥ श्रीः ॥
५.१२. अध्यायः १२

Mahabharata - Udyoga Parva - Chapter Topics
नहु षप्रसादनाय देवादिभिः प्रार्थितेनापि बृहस्पतिना शच्या
अत्याजनम् ॥ १ ॥
बृहस्पत्यनुमत्या समयकरणाय शच्यानहुषसमीपगमनम् ॥ २ ॥

Mahabharata - Udyoga Parva - Chapter Text

५-१२-० (३२०७४)
शल्य उवाच। ५-१२-०क्ष् (३३७८)
क्रुद्धं तु नहुषं दृष्ट्वा देवा ऋषिपुरोगमाः ।

अब्रुवन्देवराजानं नहुषं घोरदर्शनम् ॥ ५-१२-१ (३२०७५)
देवराज जहि क्रोधं त्वयि क्रुद्धे जगद्विभो ।
त्रस्तं सासुरगन्धर्वं सकिंनरमहोरगम् ॥ ५-१२-२ (३२०७६)
जहि क्रोधमिमं साधो न कुप्यन्ति भवद्विधाः ।
परस्य पत्नी सा देवी प्रसीदस्व सुरेश्वर ॥ ५-१२-३ (३२०७७)
निवर्तय मनः पापात्परदाराभिमर्शनात् ।
देवराजोऽसि भद्रं ते प्रजा धर्मेण पालय ॥ ५-१२-४ (३२०७८)
एवमुक्तो न जग्राह तद्वचः काममोहितः ।
अथ देवानुवाचेदमिन्द्रं प्रति सुराधिपः ॥ ५-१२-५ (३२०७९)
अहल्या धर्षिता पूर्वमृषिपत्नी यशस्विनी ।
जीवतो भर्तुरिन्द्रेण स वः किं न निवारितः ॥ ५-१२-६ (३२०८०)
बहूनि च नृशंसानि कृतानीन्द्रेण वै पुरा ।
वैधर्म्याण्युपधाश्चैव स वः किं न निवारितः ॥ ५-१२-७ (३२०८१)
उपतिष्ठतु देवी मामेतदस्या हितं परम् ।
युष्माकं च सदा देवाः शिवमेवं भविष्यति ॥ ५-१२-८ (३२०८२)
देवा ऊचुः। ५-१२-९क्ष् (३३७९)
इन्द्राणीमानयिष्यामो यथेच्छसि दिवस्पते ।
जहि क्रोधमिमं वीर प्रीतो भव सुरेश्वर ॥ ५-१२-९ (३२०८३)
शल्य उवाच। ५-१२-१०क्ष् (३३८०)
इत्युक्त्वा तं तदा देवा ऋषिभिः सह भारत ।
जग्मुर्बृहस्पतिं वक्तुमिन्द्राणीं चाशुभं वचः ॥ ५-१२-१० (३२०८४)
जानीमः शरणं प्राप्तामिन्द्राणीं तव वेश्मनि ।
दत्ताभयां च विप्रेन्द्र त्वया देवर्षिसत्तम ॥ ५-१२-११ (३२०८५)
ते त्वां देवाः सगन्धर्वा ऋषयश्च महाद्युते ।
प्रसादयन्ति चेन्द्राणी नहुषाय प्रदीयताम् ॥ ५-१२-१२ (३२०८६)
इन्द्राद्विशिष्टो नहुषो देवराजो महाद्युतिः ।
वृणोत्विमं वरारोहा भर्तृत्वे वरवर्णिनी ॥ ५-१२-१३ (३२०८७)
एवमुक्ते तु सा देवी बाष्पमुत्सृज्य सस्वनम् ।
उवाच रुदती दीना बृहस्पतिमिदं वचः ॥ ५-१२-१४ (३२०८८)
नाहमिच्छामि नहुषं पतिं देवर्षिसत्तम ।
शरणागतास्मि ते ब्रह्मंस्त्रायस्व महतो भयात् ॥ ५-१२-१५ (३२०८९)
बृहस्पतिरुवाच। ५-१२-१६क्ष् (३३८१)
शरणागतं न त्यजेयमिन्द्राणि मम निश्चयः ।
धर्मज्ञां सत्यशीलां च न त्यजेयमनिन्दिते ॥ ५-१२-१६ (३२०९०)
नाकार्यं कर्तुमिच्छामि ब्राह्मणः सन्विशेषतः ।
श्रुतधर्मा सत्यशीलो जानन्धर्मानुशासनम् ॥ ५-१२-१७ (३२०९१)

नाहमेतत्करिष्यामि गच्छध्वं वै सुरोत्तमाः ।
अस्मिंश्चार्थे पुरा गीतं ब्रह्मणा श्रूयतामिदम् ॥ ५-१२-१८ (३२०९२)
न तस्य बीजं रोहति रोहकाले
न तस्य वर्षं वर्षति वर्षकाले ।
भीतं प्रपन्नं प्रददाति शत्रवे
न स त्रातारं लभते त्राणमिच्छन् ॥ ५-१२-१९ (३२०९३)
मोघमन्नं विन्दति चाप्यचेताः
स्वर्गाल्लोकाद्भ्रश्यति नष्टचेष्टः ।
भीतं प्रपन्नं प्रददाति यो वै
न तस्य हव्यं प्रतिगृह्णन्ति देवाः ॥ ५-१२-२० (३२०९४)
प्रमीयते चास्य प्रजा ह्यकाले
सदा विवासं पितरोऽस्य कुर्वते ।
भीतं प्रपन्नं प्रददाति शत्रवे
सेन्द्रा देवाः प्रहरन्त्यस्य वज्रम् ॥ ५-१२-२१ (३२०९५)
एतदेवं विजानन्वै न दास्यामि शचीमिमाम् ।
इन्द्राणीं विश्रुतां लोके शक्रस्य महिषीं प्रियां ॥ ५-१२-२२ (३२०९६)
अस्या हितं भवेद्यच्च मम चापि हितं भवेत् ।
क्रियतां तत्सुरश्रेष्ठा नहि दास्याम्यहं शचीम् ॥ ५-१२-२३ (३२०९७)
शल्य उवाच। ५-१२-२४क्ष् (३३८२)
अथ देवाः सगन्धर्वा गुरुमाहुरिदं वचः ।
कथं सुनीतं नु भवेन्मन्त्रयस्व बृहस्पते ॥ ५-१२-२४ (३२०९८)
बृहस्पतिरुवाच। ५-१२-२५क्ष् (३३८३)
नहुषं याचतां देवी किंचित्कालान्तरं शुभा ।
इन्द्राणि हितमेतद्धि तथाऽस्माकं भविष्यति ॥ ५-१२-२५ (३२०९९)
बहुविघ्नः सुराः कालः कालः कालं नयिष्यति ।
गर्वितो बलवांश्चापि नहुषो वरसंश्रयात् ॥ ५-१२-२६ (३२१००)
शल्य उवाच। ५-१२-२७क्ष् (३३८४)
ततस्तेन तथोक्ते तु प्रीता देवास्तथाब्रुवन् ।
ब्रह्मन्साध्विदमुक्तं ते हितं सर्वं दिवौकसाम् ॥ ५-१२-२७ (३२१०१)
एवमेतद्द्विजश्रेष्ठ देवी चेयं प्रसाद्यताम् ।
ततः समस्ता इन्द्राणीं देवाश्चाग्निपुरोगमाः ॥ ५-१२-२८ (३२१०२)
ऊचुर्वचनमव्यग्रा लोकानां हितकाम्यया। ५-१२-२९ (३२१०३)
देवा ऊचुः ।
त्वया जगदिदं सर्वं धृतं स्थावरजङ्गमम् ।
एकपत्न्यसि सत्या च गच्छस्व नहुषं प्रति ॥ ५-१२-२९क्ष् (३३८५)
क्षिप्रं त्वामभिकामश्च विनशिष्यति पापकृत् ।

नहुषो देवि शक्रश्च सुरैश्वर्यमवाप्स्यति ॥ ५-१२-३० (३२१०४)
एवं विनिश्चयं कृत्वा इन्द्राणी कार्यसिद्धये ।
अभ्यगच्छत सव्रीडा नहुषं घोरदर्शनम् ॥ ५-१२-३१ (३२१०५)
दृष्ट्वा तां नहुषश्चापि वयोरूपसमन्विताम् ।
समहृष्यत दुष्टात्मा कामोपहतचेतनः ॥ ॥ ५-१२-३२ (३२१०६)

इति श्रीमन्महाभारते उद्योगपर्वणि सेनोद्योगपर्वणि द्वादशोऽध्यायः ॥
Mahabharata - Udyoga Parva - Chapter Footnotes

५-१२-७ वैधर्म्याणि त्वाष्ट्रवधादीनि । उपधाः वृत्रसख्यादीनि छलानि ॥
५-१२-२० अचेताः दुर्बलचित्तः ॥
५-१२-२५ कालान्तरं कालावधिम् ॥

---

उद्योगपर्व-अध्यय०१३
॥ श्रीः ॥
५.१३. अध्यायः १३

Mahabharata - Udyoga Parva - Chapter Topics
शच्या नहुषंप्रति इन्द्रस्यान्वेषणेऽप्यपरिज्ञाने त्वामुपस्थास्य
इति समयकरणम् ॥ १ ॥
देवैर्विष्णवाज्ञया इन्द्रस्य ब्रह्महत्यापनोदनाय अश्वमेधयाजनम् ॥ २ ॥
ध्वस्तपाप्मनोपीन्द्रस्य पुनर्नहुषभयाददर्शने शोचन्त्या शच्या
उपश्रुतिदेवीपूजनम् ॥ ३ ॥

Mahabharata - Udyoga Parva - Chapter Text

५-१३-० (३२१०७)
शल्य उवाच। ५-१३-०क्ष् (३३८६)
अथ तामब्रवीद्दृष्ट्वा नहुषो देवराट् तदा ।
त्रयाणामपि लोकानामहमिन्द्रः शुचिस्मिते ॥ ५-१३-१ (३२१०८)
भजस्व मां वरारोहे पतित्वे वरवर्णिनि ।
एवमुक्ता तु सा देवी नहुषेण पतिव्रता ॥ ५-१३-२ (३२१०९)
प्रावेपत भयोद्विग्ना प्रवाते कदली यथा ।
प्रणम्य सा हि ब्रह्माणं शिरसा तु कृताञ्जलिः ॥ ५-१३-३ (३२११०)
देवराजमथोवाच नहुषं घोरदर्शनम् ।
कालमिच्छाम्यहं लब्धुं त्वत्तः कंचित्सुरेश्वर ॥ ५-१३-४ (३२१११)
न हि विज्ञायते शक्रः किं वा प्राप्तः क्व वा गतः ।

तत्त्वमेतत्तु विज्ञाय यदि न ज्ञायते प्रभो ॥ ५-१३-५ (३२११२)
ततोऽहं त्वामुपस्थास्ये सत्यमेतद्ब्रवीमि ते ।
एवमुक्तः स इन्द्राण्या नहुषः प्रीतिमानभूत् ॥ ५-१३-६ (३२११३)
नहुष उवाच। ५-१३-७क्ष् (३३८७)
एवं भवतु सुश्रोणि यथा मामिह भाषसे ।
ज्ञात्वा चागमनं कार्यं सत्यमेतदनुस्मरेः ॥ ५-१३-७ (३२११४)
नहुषेण विसृष्टा च निश्चक्राम ततः शुभा ।
बृहस्पतिनिकेतं च सा जगाम यशस्विनी ॥ ५-१३-८ (३२११५)
तस्याः संश्रुत्य च वचो देवाश्चाग्निपुरोगमाः ।
चिन्तयामासुरेकाग्राः शक्रार्थं राजसत्तम ॥ ५-१३-९ (३२११६)
देवदेवेन शङ्गम्य विष्णुना प्रभविष्णुना ।
ऊचुश्चैनं समुद्विग्ना वाक्यं वाक्यविशारदाः ॥ ५-१३-१० (३२११७)
ब्रह्मवध्याभिभूतो वै शक्रः सुरगणेश्वरः ।
गतिश्च नस्त्वं देवेश पूर्वजो जगतः प्रभुः ॥ ५-१३-११ (३२११८)
रक्षार्थं सर्वभूतानां विष्णुत्वमुपजग्मिवान् ।
त्वद्वीर्यनिहते वृत्रे वासवो ब्रह्महत्यया ॥ ५-१३-१२ (३२११९)
वृतः सुरगणश्रेष्ठ मोक्षं तस्य विनिर्दिश ।
तेषां तद्वचनं श्रुत्वा देवानां विष्णुरब्रवीत् ॥ ५-१३-१३ (३२१२०)
मामेव यजतां शक्रः पावयिष्यामि वज्रिणम् ।
पुण्येन हयमेधेन मामिष्ट्वा पाकशासनः ॥ ५-१३-१४ (३२१२१)
पुनरेष्यति देवानामिन्द्रत्वमकुतोभयः ।
स्वकर्मभिश्च नहुषो नाशं यास्यति दुर्मतिः ॥ ५-१३-१५ (३२१२२)
किंचित्कालमिदं देवा मर्षयध्वमतन्द्रिताः ।
श्रुत्वा विष्णोः शुभां सत्यां वाणींताममृतोपमाम्। ५-१३-१६ (३२१२३)
ततः सर्वे सुरगणाः सोपाध्यायाः सहर्षिभिः ।
यत्र शक्रो भयोद्विग्नस्तं देशमुपचक्रमुः ॥ ५-१३-१७ (३२१२४)
तत्राश्वमेधः सुमहान्महेन्द्रस्य महात्मनः ।
ववृते पावनार्थं वै ब्रह्महत्यापहो नृप ॥ ५-१३-१८ (३२१२५)
विभज्य ब्रह्महत्यां तु वृक्षेषु च नदीषु च ।
पर्वतेषु पृथिव्यां च स्त्रीषु चैव युधिष्ठिर ॥ ५-१३-१९ (३२१२६)
संविभज्य च भूतेषु विसृज्य च सुरेश्वरः ।
विज्वरो धूतपाप्मा च वासवोऽभवदात्मवान् ॥ ५-१३-२० (३२१२७)
अकम्प्यं नहुषं स्थानाद्दृष्ट्वा बलनिषूदनः ।
तेजोघ्नं सर्वभूतानां वरदानाच्च दुःसहम् ॥ ५-१३-२१ (३२१२८)
ततः शचीपतिर्देवः पुनरेव व्यनश्यत ।
अदृश्यः सर्वभूतानां कालाकाङ्क्षी चचार ह ॥ ५-१३-२२ (३२१२९)

प्रनष्टे तु ततः शक्रे शची शोकसमन्विता ।
हा शक्रेति तदा देवी विललाप सुदुःखिता ॥ ५-१३-२३ (३२१३०)
यदि दत्तं यदि हुतं गुरवस्तोषिता यदि ।
एकभर्तृत्वमेवास्तु सत्यं यद्यस्ति वा मयि ॥ ५-१३-२४ (३२१३१)
पुण्यां चेमामहं दिव्यां प्रवृत्तामुत्तरायणे ।
देवीं रात्रिं नमस्यामि सिध्यतां मे मनोरथः ॥ ५-१३-२५ (३२१३२)
प्रयता च निशां देवीमुपातिष्ठत तत्र सा ।
पतिव्रतात्वात्सत्येन सोपश्रुतिमथाकरोत् ॥ ५-१३-२६ (३२१३३)
यत्रास्ते देवराजोऽसौ तं देशं दर्शयस्व मे ।
इत्याहोपश्रुतिं देवीं सत्यं सत्येन दृश्यताम् ॥ ॥ ५-१३-२७ (३२१३४)

इति श्रीमन्महाभारते उद्योगपर्वणि सेनोद्योगपर्वणि त्रयोदशोऽध्यायः ॥
Mahabharata - Udyoga Parva - Chapter Footnotes

५-१३-१२ विष्णुत्वं व्यापकत्वम् ॥
१२ ॥
५-१३-२६ आकरोत् आकारितवती ॥
२६ ॥

---

उद्योगपर्व-अध्यय०१४
॥ श्रीः ॥
५.१४. अध्यायः १४

Mahabharata - Udyoga Parva - Chapter Topics
स्तुत्या प्रत्यक्षीभूतया उपश्रुतिदेव्यासह पद्मनालभेदनेन तद्विवरं
गतया शच्या तत्रस्थेन्द्रदर्शनम् ॥ १ ॥
तथा इन्द्रं स्तुत्वा नहुषवृत्तान्तकथनम् ॥ २ ॥

Mahabharata - Udyoga Parva - Chapter Text

५-१४-० (३२१३५)
शल्य उवाच। ५-१४-०क्ष् (३३८८)
अथैनां रूपिणी साध्वीमुपातिष्ठदुपश्रुतिः ।
तां वयोरूपसंपन्नां दृष्ट्वा देवीमुपस्थिताम् ॥ ५-१४-१ (३२१३६)
इन्द्राणी संप्रहृष्टात्मा संपूज्यैनामथाब्रवीत् ।
इच्छामि त्वामहं ज्ञातुं का त्वं ब्रूहि वरानने ॥ ५-१४-२ (३२१३७)
उपश्रुतिरुवाच। ५-१४-३क्ष् (३३८९)

उपश्रुतिरहं देवि तवान्तिकमुपागता ।
दर्शनं चैव संप्राप्ता तव सत्येन भामिनि ॥ ५-१४-३ (३२१३८)
पतिव्रता च युक्ता च यमेन नियमेन च ।
दर्शयिष्यामि ते शक्रं देवं वृत्रनिषूदनम् ॥ ५-१४-४ (३२१३९)
क्षिप्रमन्वेहि भद्रं ते द्रक्ष्यसे सुरसत्तमम् ।
ततस्तां प्रस्थितां देवीमिन्द्राणी सा समन्वगात् ॥ ५-१४-५ (३२१४०)
देवारण्यान्यतिक्रम्य पर्वतांश्च बहूंस्ततः ।
हिमवन्तमतिक्रम्य उत्तरं पार्श्वमागमत् ॥ ५-१४-६ (३२१४१)
समुद्रं च समासाद्य बहुयोजनविस्तृतम् ।
आससाद महाद्वीपं नानाद्रुमलतावृतम् ॥ ५-१४-७ (३२१४२)
तत्रापश्यत्सरो दिव्यं नानाशकुनिभिर्वृतम् ।
शतयोजनविस्तीर्णं तावदेवायतं शुभम् ॥ ५-१४-८ (३२१४३)
तत्र दिव्यानि पद्मानि पञ्चवर्णानि भारत ।
षट्पदैरुपगीतानि प्रफुल्लानि सहस्रशः ॥ ५-१४-९ (३२१४४)
सरसस्तस्य मध्ये तु पद्मिनी महती शुभा ।
गौरेणोन्नतनालेन पद्मेन महता वृता ॥ ५-१४-१० (३२१४५)
पद्मस्य भित्त्वा नालं च विवेश सहिता तया ।
बिसतन्तुप्रविष्टं च तत्रापश्यच्छतक्रतुम् ॥ ५-१४-११ (३२१४६)
तं दृष्ट्वा च सुसूक्ष्मेण रूपेणावस्थितं प्रभुम् ।
सूक्ष्मरूपधरा देवी बभूवोपश्रुतिश्च सा ॥ ५-१४-१२ (३२१४७)
इन्द्रं तुष्टाव चेन्द्राणी विश्रुतैः पूर्वकर्मभिः ।
स्तूयमानस्ततो देवः शचीमाह पुरन्दरः ॥ ५-१४-१३ (३२१४८)
किमर्थमसि संप्राप्ता विज्ञातश्च कथं त्वहम् ।
ततः सा कथयामास नहुषस्य विचेष्टितम् ॥ ५-१४-१४ (३२१४९)
इन्द्रत्वं त्रिषु लोकेषु प्राप्य वीर्यसमन्वितः ।
दर्पाविष्टश्च दुष्टात्मा मामुवाच शतक्रतो ॥ ५-१४-१५ (३२१५०)
उपतिष्ठेति स क्रूरः कालं च कृतवान्मम ।
यदि न त्रास्यसि विभो करिष्यति स मां वशे ॥ ५-१४-१६ (३२१५१)
एतेन चाहं संप्राप्ता द्रुतं शक्र तवान्तिकम् ।
जहि रौद्रं महाबाहो नहुषं पापनिश्चयम् ॥ ५-१४-१७ (३२१५२)
प्रकाशयस्व चात्मानं दैत्यदानवसूदन ।
तेजः समाप्नुहि विभो देवराज्यं प्रशाधि च ॥ ॥ ५-१४-१८ (३२१५३)

इति श्रीमन्महाभारते उद्योगपर्वणि सेनोद्योगपर्वणि चतुर्दशोऽध्यायः ॥
Mahabharata - Udyoga Parva - Chapter Footnotes

५-१४-१६ त्रास्यसि पालयिष्यसि ॥
१६ ॥

---

उद्योगपर्व-अध्यय०१५
॥ श्रीः ॥
५.१५. अध्यायः १५

Mahabharata - Udyoga Parva - Chapter Topics
इन्द्रबोधितशचीवचनात् नहुषेण अगस्त्यादिसप्तर्षीणां स्वशिबिकायां
वाहकतया योजनम् ॥ १ ॥
शचीप्रार्थनया बृहस्पतिना होमेन संतोष्याग्नोरिन्द्रान्वेषणाय
प्रेषणम् ॥ २ ॥
अग्निना बृहस्पतिंप्रति जलवर्जं
सर्वत्रान्वेषणेपीन्द्रानधिगमकथनम् ॥ ३ ॥

Mahabharata - Udyoga Parva - Chapter Text

५-१५-० (३२१५४)
शल्य उवाच। ५-१५-०क्ष् (३३९०)
एवमुक्तः स भगवाञ्शच्या तां पुनरब्रवीत् ।
विक्रमस्य न कालोऽयं नहुषो बलवत्तरः ॥ ५-१५-१ (३२१५५)
विवर्द्धितश्च ऋषिभिर्हव्यकव्यैश्च भामिनि ।
नीतिमत्र विधास्यामि देवि तां कर्तुमर्हसि ॥ ५-१५-२ (३२१५६)
गुह्यं चैतत्त्वया कार्यं नाख्यातव्यं शुभे क्वचित् ।
गत्वा नहुषमेकान्ते ब्रवीहि च सुमध्यमे ॥ ५-१५-३ (३२१५७)
ऋषियानेन दिव्येन मामुपैहि जगत्पते ।
एवं तव वशे प्रीता भविष्यामीति तं वद ॥ ५-१५-४ (३२१५८)
इत्युक्ता देवराजेन पत्नी सा कमलेक्षणा ।
एवमस्त्वित्यथोक्त्वा तु जगाम नहुषं प्रति ॥ ५-१५-५ (३२१५९)
नहुषस्तां ततो दृष्ट्वा सस्मितो वाक्यमब्रवीत् ।
स्वागतं ते वरारोहे किं करोमि शुचिस्मिते ॥ ५-१५-६ (३२१६०)
भक्तं मां भज कल्याणि किमिच्छसि मनस्विनि ।
तव कल्याणि यत्कार्यं तत्करिष्ये सुमध्यमे ॥ ५-१५-७ (३२१६१)
न च व्रीडा त्वया कार्या सुश्रोणि मयि विश्वसेः ।
सत्येन वै पशे देवि करिष्ये वचनं तव ॥ ५-१५-८ (३२१६२)
इन्द्राण्युवाच। ५-१५-९क्ष् (३३९१)
यो मे कृतस्त्वया कालस्तमाकाङ्क्षे जगत्पते ।

ततस्त्वमेव भर्ता मे भविष्यसि सुराधिम ॥ ५-१५-९ (३२१६३)
कार्यं च हृदि मे यत्तद्देवराजावधारय ।
वक्ष्यामि यदि मे राजन्प्रियमेतत्करिष्यसि ॥ ५-१५-१० (३२१६४)
वाक्यं प्रणयसंयुक्तं ततः स्यां वशगा तव ।
इन्द्रस्य वाजिनो वाहा हस्तिनोऽथ रथास्तथा ॥ ५-१५-११ (३२१६५)
इच्छाम्यहमथापूर्वं वाहनं ते सुराधिप ।
यन्न विष्णोर्न रुद्रस्य न सुराणां न रक्षसाम् ॥ ५-१५-१२ (३२१६६)
वहन्तु त्वां महाभागा ऋषयः सङ्गता विभो ।
सर्वे शिबिकया राजन्नेतद्धि मम रोचते ॥ ५-१५-१३ (३२१६७)
नासुरेषु न देवेषु तुल्यो भवितुमर्हसि ।
सर्वेषां तेज आदत्से स्वेन वीर्येण दर्शनात् ॥ ५-१५-१४ (३२१६८)
न ते प्रमुखतः स्थातुं कश्चिच्छक्नोति वीर्यवान् । ५-१५-१५ (३२१६९)
शल्य उवाच ।
एवमुक्तस्तु नहुषः प्राहृष्यत तदा किल ।
उवाच वचनं चापि सुरेन्द्रस्तामनिन्दिताम् ॥ ५-१५-१५क्ष् (३३९२)
नहुष उवाच। ५-१५-१६क्ष् (३३९३)
अपूर्वं वाहनमिदं त्वयोक्तं वरवर्णिनि ।
दृढं मे रुचिरं देवि त्वद्वशोऽस्मि वरानने ॥ ५-१५-१६ (३२१७०)
न ह्यल्पवीर्यो भवति यो वाहान्कुरुते मुनीन् ।
अहं तपस्वी बलवान्भूतभव्यभवत्प्रभुः ॥ ५-१५-१७ (३२१७१)
मयि क्रुद्धे जगन्न स्यान्मयि सर्वं प्रतिष्ठितम् ।
देवदानवगन्धर्वाः किन्नरोरगराक्षसाः ॥ ५-१५-१८ (३२१७२)
न मे क्रुद्धस्य पर्याप्ताः सर्वे लोकाः शुचिस्मिते ।
चक्षुषा यं प्रपश्यामि तस्य तेजो हराम्यहम् ॥ ५-१५-१९ (३२१७३)
ग अहमिन्द्रोऽस्मि देवानां लोकानां च महेश्वरः ।
मयि हव्यं च कव्यं च लोकाश्चैव सनातनाः ।'
तस्मात्ते वचनं देवि करिष्यामि न संशयः ॥ ५-१५-२० (३२१७४)
सप्तर्षयो मां वक्ष्यन्ति सर्वे ब्रह्मर्षयस्तथा ।
पश्य माहात्म्ययोगं मे ऋद्धिं च वरवर्णिनि ॥ ५-१५-२१ (३२१७५)
शल्य उवाच। ५-१५-२२क्ष् (३३९४)
एवमुक्त्वा तु तां देवीं विसृज्य च वराननाम् । ५-१५-२२ब्ग् अथ
संचिन्त्य नहुषो बलवीर्येण भारत ॥ ५-१५-२२ (३२१७६)
विसृज्य सुप्रतीकं च नागमैरावतं तथा ।
हंसयुक्तं विमानं च हरियुक्तं तथा रथम् ॥ ५-१५-२३ (३२१७७)
स तु दर्पेण महता परिभूय महामुनीन्।'
विमाने योजयित्वा च ऋषीन्नियमामास्थितान् ॥ ५-१५-२४ (३२१७८)

अब्रह्मण्यो बलोपेतो मत्तो मदबलेन च ।
कामवृत्तः स दुष्टात्मा वाहयामास तानृषीन् ॥ ५-१५-२५ (३२१७९)
नहुषेण विसृष्टा च बृहस्पतिमथाब्रवीत् ।
समयोऽल्पावशेषो मे नहुषेणेह यः कृतः ॥ ५-१५-२६ (३२१८०)
शक्रं मृगय शीघ्रं त्वं भक्तायाः कुरु मे दयाम् ।
बाढमित्येव भगवान्बृहस्पतिरुवाच ताम् ॥ ५-१५-२७ (३२१८१)
न भेतव्यं त्वया देवि नहुषाद्दुष्टचेतसः ।
न ह्येष स्थास्यति चिरं गत एष नराधमः ॥ ५-१५-२८ (३२१८२)
अधर्मज्ञो महर्षीणां वाहनाच्च हतः शुभे ।
इष्टिं चाहं करिष्यामि विनाशायास्य दुर्मतेः ॥ ५-१५-२९ (३२१८३)
शक्रं चाधिगमिष्यामि माभैस्त्वं भद्रमस्तु ते ।
ततः प्रज्वाल्य विधिवज्जुहाव परमं हविः ॥ ५-१५-३० (३२१८४)
बृहस्पतिर्महातेजा देवराजोपलब्धये ।
हुत्वाऽग्निं सोब्रवीद्राजञ्छक्र अन्विष्यतामिति ॥ ५-१५-३१ (३२१८५)
तस्माच्च भगवान्देवः स्वयमेव हुताशनः ।
स्त्रीवेषमद्भुतं कृत्वा तत्रैवान्तरधीयत ॥ ५-१५-३२ (३२१८६)
स दिशः प्रदिशश्चैव पर्वतांश्च वनानि च ।
पृथिवीं चान्तरिक्षं च विचित्याथ मनोगतिः ।
निमेषान्तरमात्रेण बृहस्पतिमुपागमत् ॥ ५-१५-३३ (३२१८७)
अग्निरुवाच। ५-१५-३४क्ष् (३३९५)
बृहस्पते न पश्यामि देवराजमिह क्वचित् ।
आपः शेषाः सदा चापः प्रवेष्टुं नोत्सहाम्यहम् ॥ ५-१५-३४ (३२१८८)
न मे तत्र गतिर्ब्रह्मन्किमन्यत्करवाणि ते ।
तमब्रवीद्देवगुरुरपो विश महाद्युते ॥ ५-१५-३५ (३२१८९)
अग्निरुवाच। ५-१५-३६क्ष् (३३९६)
नापः प्रवेष्टुं शक्ष्यामि क्षयो मेऽत्र भविष्यति ।
शरणं त्वां प्रपन्नोऽस्मि स्वस्ति तेस्तु महाद्युते ॥ ५-१५-३६ (३२१९०)
अद्भ्योऽग्निर्ब्रह्मतः क्षत्रमश्मनो लोहमुत्थितम् ।
तेषां सर्वत्रगं तेजः स्वासु योनिषु शाम्यति ॥ ॥ ५-१५-३७ (३२१९१)

इति श्रीमन्महाभारते उद्योगपर्वणि सेनोद्योगपर्वणि पञ्चदशोऽध्यायः ॥
Mahabharata - Udyoga Parva - Chapter Footnotes

५-१५-२१ मां वक्ष्यन्ति मम वहनं करिष्यन्ति ॥
२१ ॥

---

उद्योगपर्व-अध्यय०१६

॥ श्रीः ॥
५.१६. अध्यायः १६

Mahabharata - Udyoga Parva - Chapter Topics
बृहस्पतिना ब्राह्ममन्त्रसंवर्धितेनाग्निना पद्मनालस्येन्द्रं दृष्ट्वा
बृहस्पतये तन्निवेदनम् ॥ १ ॥
बृहस्पतिना तत्र गत्वा इन्द्रे स्तूयमाने कुबेरादीनां तत्रागमनम् ॥ २ ॥
इन्द्रेण नहुषजये साहाय्यायाग्नेर्भागदानपूर्वकं कुबेरादीनां
तत्ताद्दिगाधिपत्येऽभिषेचनम् ॥ ३ ॥

Mahabharata - Udyoga Parva - Chapter Text

५-१६-० (३२१९२)
बृहस्पतिरुवाच। ५-१६-०क्ष् (३३९७)
त्वमग्रे सर्वदेवानां मुखं त्वमसि हव्यवाट् ।
त्वमन्तः सर्वभूतानां गूढश्चरसि साक्षिवत् ॥ ५-१६-१ (३२१९३)
त्वामाहुरेकं कवयस्त्वामाहुस्त्रिविधं पुनः ।
त्वया त्यक्तं जगच्चेदं सद्यो नश्येद्धुताशन ॥ ५-१६-२ (३२१९४)
कृत्वा तुभ्यं नमो विप्राः स्वकर्मविजितां गतिम् ।
गच्छन्ति सह पत्नीभिः सुतैरपि च शाश्वतीम् ॥ ५-१६-३ (३२१९५)
त्वमेवाग्ने हव्यवाहस्त्वमेव परमं हविः ।
यजन्ति सत्रैस्त्वामेव यज्ञैश्च परमाध्वरैः ॥ ५-१६-४ (३२१९६)
सृष्ट्वा लोकांस्त्रीमिमान्हव्यवाह
प्राप्ते काले पचसि पुनः समिद्धः ।
त्वं सर्वस्य भुवनस्य प्रसूति-
स्त्वमेवाग्ने भवसि पुनः प्रतिष्ठा ॥ ५-१६-५ (३२१९७)
त्वामग्ने जलदानाहुर्विद्युतश्च मनीषिणः ।
वहन्ति सर्वभूतानि त्वत्तो निष्क्रम्य हेतयः ॥ ५-१६-६ (३२१९८)
त्वय्यापो निहिताः सर्वास्त्वयि सर्वमिदं जगत् ।
न तेऽस्त्यविदितं किंचित्रिषु लोकेषु पावक ॥ ५-१६-७ (३२१९९)
स्वयोनिं भजते सर्वो विशस्वापोऽविशङ्कितः ।
अहं त्वां वर्धयिष्यामि ब्राह्मैर्मन्त्रैः सनातनैः ॥ ५-१६-८ (३२२००)
एवं स्तुतो हव्यवाट् स भगवान्कविरुत्तमः ।
बृहस्पतिमथोवाच प्रीतिमान्वाक्यमुत्तमम् ।
दर्शयिष्यामि ते शक्रं सत्यमेतद्ब्रवीमि ते ॥ ५-१६-९ (३२२०१)
शल्य उवाच। ५-१६-१०क्ष् (३३९८)

प्रविष्यापस्ततो वह्निः ससमुद्राः सपल्वलाः ।
आससाद सरस्तच्च गूढो यत्र शतक्रतुः ॥ ५-१६-१० (३२२०२)
अथ तत्रापि पद्मानि विचिन्वन्भरतर्षभ ।
अपश्यत्स तु देवेन्द्रं बिसमध्यगतं तदा ॥ ५-१६-११ (३२२०३)
आगत्य च ततस्तूर्णं तमाचष्ट बृहस्पतेः ।
अणुमात्रेण वपुषा पद्मतन्त्वाश्रितं प्रभुम् ॥ ५-१६-१२ (३२२०४)
गत्वा देवर्षिगन्धर्वैः सहितोऽथ बृहस्पतिः ।
पुराणैः कर्मभिर्देवं तुष्टाव बलसूदनम् ॥ ५-१६-१३ (३२२०५)
महाऽसुरो हतः शक्र नमुचिर्दारुणस्त्वया ।
शम्बरश्च बलश्चैव तथोभौ घोरविक्रमौ ॥ ५-१६-१४ (३२२०६)
शतक्रतो विवर्धस्व सर्वाञ्शत्रून्निषूदय ।
उत्तिष्ठ शक्र संपश्य देवर्षींश्च समागतान् ॥ ५-१६-१५ (३२२०७)
महेन्द्र दानवान्हत्वा लोकास्त्रातास्त्वया विभो ।
अपां फेनं समासाद्य विष्णुतेजोतिबृंहितम् ।
त्वया वृत्रो हतः पूर्वं देवराज जगत्पते ॥ ५-१६-१६ (३२२०८)
त्वं सर्वभूतेषु शरण्य ईड्य-
स्त्वया समं विद्यते नेह भूतम् ।
त्वया धार्यन्ते सर्वभूतानि शक्र
त्वं देवानां महिमानं चकर्थ ॥ ५-१६-१७ (३२२०९)
पाहि सर्वांश्च लोकांश्च महेन्द्र बलमाप्नुहि ।
एवं संस्तूयमानश्च सोऽवर्धत शनैः शनैः ॥ ५-१६-१८ (३२२१०)
स्वं चैव वपुरास्थाय बभूव स बलान्वितः ।
अब्रवीच्च गुरुं देवो बृहस्पतिमवस्थितम् ॥ ५-१६-१९ (३२२११)
किं कार्यमवशिष्टं वो हतस्त्वाष्ट्रो महासुरः ।
वृत्रश्च सुमहाकायो यो वै लोकाननाशयत् ॥ ५-१६-२० (३२२१२)
बृहस्पतिरुवाच। ५-१६-२१क्ष् (३३९९)
मानुषो नहुषो राजा देवर्षिगणतेजसा ।
देवराज्यमनुप्राप्तः सर्वान्नो बाधते भृशम् ॥ ५-१६-२१ (३२२१३)
इन्द्र उवाच। ५-१६-२२क्ष् (३४००)
कथं च नहुषो राज्यं देवानां प्राप दुर्लभम् ।
तपसा केन वा युक्तः किंवीर्यो वा बृहस्पते ।
ग तत्सर्वं कथय त्वं मे यथेन्द्रत्वमुपेयिवान् ॥ ५-१६-२२ (३२२१४)
बृहस्पतिरुवाच। ५-१६-२३क्ष् (३४०१)
त्वयि प्रनष्टे देवेश विश्वं प्रव्यथितं जगत् ।
परस्परभयोद्विग्नं बभूवार्तमराजकम् ॥ ५-१६-२३ (३२२१५)
ततो देवैः सगन्धर्वैः सर्षिसङ्घैः सपावकैः ।

मानुषो नहुषो राजा देवराज्येऽभिषेचितः ॥५-१६-२४ (३२२१६)
देवा भीताः शक्रमकामयन्त
त्वया त्यक्तं महदैन्द्रं पदं तत् ।
तदा देवाः पितरोऽथर्षयश्च
गन्धर्वमुख्याश्च समेत्य सर्वे ॥ ५-१६-२५ (३२२१७)
गत्वाऽब्रुवन्नहुषं तत्र शक्र
त्वं नो राजा भव भुवनस्य गोप्ता ।
तानब्रवीन्नहुषो नास्मि शक्त
आप्यायध्वं तपसा तेजसा माम् ॥ ५-१६-२६ (३२२१८)
एवमुक्तैर्वर्द्धितश्चापि देवै
राजाऽभवन्नहुषो घोरवीर्यः ।
त्रैलोक्ये च प्राप्य राज्यं महर्षी-
न्कृत्वा वाहान्याति लोकान्दुरात्मा ॥ ५-१६-२७ (३२२१९)
तेजोहरं दृष्टिविषं सुघोरं
मा त्वं पश्येर्नहुषं वै कदाचित् ।
देवाश्च सर्वे नहुषं भृशार्ता
न पश्यन्ते गूढरूपाश्चरन्तः ॥ ५-१६-२८ (३२२२०)
शल्य उवाच।५-१६-२९क्ष् (३४०२)
एवं वदत्यङ्गिरसां वरिष्ठे
बृहस्पतौ लोकपालः कुबेरः ।
वैवस्वतश्चैव यमः पुराणो
दवेश्च सोमो वरुणश्चाजगाम ॥ ५-१६-२९ (३२२२१)
ते वै समागम्य महेन्द्रमूचु-
र्दिष्ट्या त्वाष्ट्रो निहतश्चैव वृत्रः ।
दिष्ट्या च त्वां कुशलिनमक्षतं च
पश्यामो वै निहतारिं च शक्र ॥ ५-१६-३० (३२२२२)
स तान्यथावच्च हि लोकपाला-
न्समेत्स वै प्रीतमना महेन्द्रः ।
उवाच चैनान्प्रतिभाष्य शक्रः
संचोदयिष्यन्नहुषस्यान्तरेण ॥ ५-१६-३१ (३२२२३)
राजा देवानां नहुषो घोररूप-
स्तत्र साह्यं दीयतां मे भवद्भिः ।
ते चाब्रुवन्नहुषो घोररूपो
दृष्टीविषस्तस्य बिभीम ईश ॥ ५-१६-३२ (३२२२४)
त्वं चेद्राजानं नहुषं पराजये-
स्ततो वयं भागमर्हाम शक्र ।

इन्द्रोऽब्रवीद्भवतु भवानपां पति-
र्यमः कुबेरश्च मयाभिषेकम् ॥ ५-१६-३३ (३२२२५)
संप्राप्नुवन्त्वद्य सहैव दैवतै
रिपुं जयाम तं नहुषं घोरदृष्टिम् ।
ततः शक्रं ज्वलनोऽप्याह भाग
प्रयच्छ मह्यं तव साह्यं करिष्ये ।
तमाह शक्रो भविताऽग्ने तवापि
चेन्द्राग्न्योर्वै भाग एको महाक्रतौ ॥ ५-१६-३४ (३२२२६)
शल्य उवाच। ५-१६-३५क्ष् (३४०३)
एवं संचिन्त्य भगवान्महेन्द्रः पाकशासनः ।
कुबेरं सर्वयक्षाणां धनानां च प्रभुं तथा ॥ ५-१६-३५ (३२२२७)
वैवस्वतं पितॄणां च वरुणं चाप्यपां तथा ।
आधिपत्यं ददौ शक्रः सत्कृत्य वरदस्तथा ॥ ॥ ५-१६-३६ (३२२२८)

इति श्रीमन्महाभारते उद्योगपर्वणि सेनोद्योगपर्वणि षोडशोऽध्यायः ॥
Mahabharata - Udyoga Parva - Chapter Footnotes

५-१६-६ हेतयः ज्वालाः ॥
५-१६-३१ नहुषस्यान्तरेण अन्तरं भेदः ।बुद्धिभेदार्थमित्यर्थः ॥

---

उद्योगपर्व-अध्यय०१७
॥ श्रीः ॥
५.१७. अध्यायः १७

Mahabharata - Udyoga Parva - Chapter Topics
लोकपालैः सह नहुषनिषूदनोपायं मन्त्रयन्तमिन्द्रमेत्य भगस्त्येन
नहुषस्य देवराज्यात्परिभ्रंशनिवेदनम् ॥ १ ॥

Mahabharata - Udyoga Parva - Chapter Text

५-१७-० (३२२२९)
शल्य उवाच। ५-१७-०क्ष् (३४०४)
अथ संचिन्तयानस्य देवराजस्य धीमतः ।
नहुषस्य वधोपायं लोकपालैः सदैवतैः ॥ ५-१७-१ (३२२३०)
तपस्वी तत्र भगवानगस्त्यः प्रत्यदृश्यत ।
सोऽब्रवीदर्च्य देवेन्द्रं दिष्ट्या वै वर्धते भवान् ॥ ५-१७-२ (३२२३१)

विश्वरूपविनाशेन वृत्रासुरवधेन च ।
दिष्ट्याद्य नहुषो भ्रष्टो देवराज्यात्पुरन्दर ॥ ५-१७-३ (३२२३२)
दिष्ट्या हतारिं पश्यामि भवन्तं वलसूदन। ५-१७-४ (३२२३३)
इन्द्र उवाच ।
स्वागतं ते महर्षेऽस्तु प्रीतोऽहं दर्शनात्तत ।
पाद्यमाचमनीयं च गामर्घ्यं च प्रतीच्छ मे ॥ ५-१७-४क्ष् (३४०५)
शल्य उवाच। ५-१७-५क्ष् (३४०६)
पूजितं चोपविष्टं तमासेन मुनिसत्तमम् ।
पर्यपृच्छत देवेशः प्रहृष्टो ब्राह्मणर्षभम् ॥ ५-१७-५ (३२२३४)
श्रोतुमिच्छामि भगवन्कथ्यमानं द्विजोत्तम ।
परिभ्रष्टः कथं स्वर्गान्नहुषः पापनिश्चयः ॥ ५-१७-६ (३२२३५)
अगस्त्य उवाच। ५-१७-७क्ष् (३४०७)
शृणु शक्र प्रियं वाक्यं यथा राजा दुरात्मवान् ।
स्वर्गाद्भ्रष्टो दुराचारो नहुषो बलदर्पितः ॥ ५-१७-७ (३२२३६)
श्रमार्ताश्च वहन्तस्तं नहुषं पापकारिणम् ।
देवर्षयो महाभागास्तथा ब्रह्मर्षयोऽमलाः ॥ ५-१७-८ (३२२३७)
पप्रच्छुर्नहुषं देवं संशयं जयतां वर ।
य इमे ब्रह्मणा प्रोक्ता मन्त्रा वै प्रोक्षणे गवाम् ॥ ५-१७-९ (३२२३८)
एते प्रमाणं भवत उताहो नेति वासव ।
नहुषो नेति तानाह तमसा मूढचेतनः ॥ ५-१७-१० (३२२३९)
ऋषय ऊचुः। ५-१७-११क्ष् (३४०८)
अधर्मे संप्रवृत्तस्त्वं धर्मं न प्रतिपद्यसे ।
प्रमाणमेतदस्माकं पूर्वं प्रोक्तं महर्षिभिः ॥ ५-१७-११ (३२२४०)
अगस्त्य उवाच। ५-१७-१२क्ष् (३४०९)
ततो विवदमानः स मुनिभिः सह वासव ।
अथ मामस्पृशन्मूर्ध्नि पादेनाधर्मपीडितः ॥ ५-१७-१२ (३२२४१)
तेनाभूद्धततेजाश्च निःश्रीकश्च महीपतिः ।
ततस्तं तमसा विग्नमवोचं भृशपीडितम् ॥ ५-१७-१३ (३२२४२)
यस्मात्पूर्वैः कृतं राजन्ब्रह्मर्षिभिरनुष्ठितम् ।
अदुष्टं दूषयसि मे यच्च मूर्ध्न्यस्पृशः पदा ॥ ५-१७-१४ (३२२४३)
यच्चापि त्वमृषीन्मूढ ब्रह्मकल्पान्दुरासदान् ॥ ५-१७-१५ (३२२४४)
वाहान्कृत्वा वाहयसि तेन स्वर्गाद्धतप्रभः ।
ध्वंस पाप परिभ्रष्टः क्षीणपुण्यो महीतले ॥ ५-१७-१६ (३२२४५)
दशवर्षसहस्राणि सर्परूपधरो महान् ।
विचरिष्यसि पूर्णेषु पुनः स्वर्गमवाप्स्यसि ॥ ५-१७-१७ (३२२४६)
ग दृष्ट्वा युधिष्ठिरं नाम तव वंशसमुद्भवम् ।

निहतो ब्रह्मशापेन प्रपद्यस्व त्रिविष्टपम् ॥' ५-१७-१८ (३२२४७)
एवं भ्रष्टो दुरात्मा स देवराज्यादरिन्दम ।
दिष्ट्या वर्धामहे शक्र हतो ब्रह्मर्षिकण्टकः ॥ ५-१७-१९ (३२२४८)
त्रिविष्टपं प्रपद्यस्व पाहि लोकाञ्शचीपते ।
जितेन्द्रियो जितामित्रः स्तूयमानो महर्षिभिः ॥ ५-१७-२० (३२२४९)
शल्य उवाच। ५-१७-२१क्ष् (३४१०)
ततो देवा भृशं तुष्टा महर्षिगणसंवृताः ।
पितरश्चैव यक्षाश्च भुजगा राक्षसास्तथा ॥ ५-१७-२१ (३२२५०)
गन्धर्वा देवकन्याश्च सर्वे चाप्सरसां गणाः ।
सरांसि सरितः शैलाः सागराश्च विशांपते ॥ ५-१७-२२ (३२२५१)
उपागम्याब्रुवन्सर्वे दिष्ट्या वर्धसि शत्रुहन् ।
हतश्च नहुषः पापो दिष्ट्यागस्त्येन धीमता ।
दिष्ट्या पापसमाचारः कृतः सर्पो महीतले ॥ ॥ ५-१७-२३ (३२२५२)

इति श्रीमन्महाभाते उद्योगपर्वणि सेनोद्योगपर्वणि सप्तदशोऽध्यायः ॥

---

उद्योगपर्व-अध्यय०१८
॥ श्रीः ॥
५.१८. अध्यायः १८

Mahabharata - Udyoga Parva - Chapter Topics
इन्द्रेण पुनर्देवलोकमेत्य त्रैलोक्यराज्यपालनम् ॥ १ ॥
शल्येन इन्द्रवत्तान्तकथनपूर्वकं युधिष्ठिरादीनाश्वास्य
पुनर्दुर्योधनसमीपगमनम् ॥ २ ॥

Mahabharata - Udyoga Parva - Chapter Text

५-१८-० (३२२५३)
शल्य उवाच। ५-१८-०क्ष् (३४११)
ततः शक्रः स्तूयमानो गन्धर्वाप्सरसां गणैः ।
ऐरावतं समारुह्य द्विपेन्द्रं लक्षणैर्युतम् ॥ ५-१८-१ (३२२५४)
पावकः सुमहातेजा महर्षिश्च बृहस्पतिः ।
यमश्च वरुणश्चैव कुबेरश्च धनेश्वरः ॥ ५-१८-२ (३२२५५)
सर्वैर्देवैः परिवृतः शक्रो वृत्रनिषूदनः ।
गन्धर्वैरप्सरोभिश्च यातस्त्रिभुवनं प्रभुः ॥ ५-१८-३ (३२२५६)
स समेत्य महेन्द्राण्या देवराजः शतक्रतुः ।

मुदा परमया युक्तः पालयामास देवराट् ॥ ५-१८-४ (३२२५७)
ततः स भगवांस्तत्र अङ्गिराः समदृश्यत ।
अथर्ववेदमन्त्रैश्च देवेन्द्रं समपूजयत् ॥ ५-१८-५ (३२२५८)
ततस्तु भगवानिन्द्रः संहृष्टः समपद्यत ।
वरं च प्रददौ तस्मै अथर्वाङ्गिरसे तदा ॥ ५-१८-६ (३२२५९)
अथर्वाङ्गिरसं नाम वेदेऽस्मिन्वै भविष्यति ।
उदाहरणमेतद्धि यज्ञभागं च लप्स्यसे। ५-१८-७ (३२२६०)
एवं संपूज्य भगवानथर्वाङ्गिरसं तदा ।
व्यसर्जयन्महाराज देवराजः शतक्रतुः ॥ ५-१८-८ (३२२६१)
संपूज्य सर्वांस्त्रिदशानृषींश्चापि तपोधनान् ।
इन्द्रः प्रमुदितो राजन्धर्मेणापालयत्प्रजाः ॥ ५-१८-९ (३२२६२)
एवं दुःखमनुप्राप्तमिन्द्रेण सह भार्यया ।
अज्ञातवासश्च कृतः शत्रूणां वधकाङ्क्षया ॥ ५-१८-१० (३२२६३)
नात्र मन्युस्त्वया कार्यो यत्क्लिष्टोऽसि महावने ।
द्रौपद्या सह राजेन्द्र भ्रातृभिश्च महात्मभिः ॥ ५-१८-११ (३२२६४)
एवं त्वमपि राजेन्द्र राज्यं प्राप्स्यसि भारत ।
वृत्रं हत्वा यथा प्राप्तः शक्रः कौरवनन्दन ॥ ५-१८-१२ (३२२६५)
दुराचारश्च नहुषो ब्रह्मद्विट् पापचेतनः ।
अगस्त्यशापाभिहतो विनष्टः शाश्वतीः समाः ॥ ५-१८-१३ (३२२६६)
एवं तव दुरात्मानः शत्रवः शत्रुसूदन ।
क्षिप्रं नाशं गमिष्यन्ति कर्णदुर्योधनादयः ॥ ५-१८-१४ (३२२६७)
ततः सागरपर्यन्तां भोक्ष्यसे मेदिनीमिमाम् ।
भ्रातृभिः सहितो वीर द्रौपद्या च सहानया ॥ ५-१८-१५ (३२२६८)
उपाख्यानमिदं शक्रविजयं वेदसंमितम् ।
राज्ञा व्यूढेष्वनीकेषु श्रोतव्यं जयमिच्छता। ५-१८-१६ (३२२६९)
तस्मात्संश्रावयामि त्वां विजयं जयतां वर ।
संस्तूयमाना वर्धन्ते महात्मानो युधिष्ठिर ॥ ५-१८-१७ (३२२७०)
क्षत्रियाणामभावोयं युधिष्ठिर महात्मनाम् ।
दुर्योधनापराधेन भीमार्जुनबलेन च ॥
सङ्ग्रामे संक्षयो घोरो भविष्यत्यचिरादिव ॥ ५-१८-१८ (३२२७१)
आख्यानमिन्द्रविजयं य इदं नियतः पठेत् ।
धूतपाप्मा जितस्वर्गः परत्रेह च मोदते ॥ ५-१८-१९ (३२२७२)
न चारिजं भयं तस्य नापुत्रो वा भवेन्नरः ।
नापदं प्राप्नुयात्कांचिद्दीर्घमायुश्च विन्दति ।
सर्वत्र दयमाप्नोति न कदाचित्पराजयम् ॥ ५-१८-२० (३२२७३)
वैशंपायन उवाच। ५-१८-२१क्ष् (३४१२)

एवमाश्वासितो राजा शल्येन भरतर्षभ ।
पूजयामास विधिवच्छल्यं धर्मभृतां वरः ॥ ५-१८-२१ (३२२७४)
श्रुत्वा तु शल्यवचनं कुन्तीपुत्रो युधिष्ठिरः ।
प्रत्युवाच महाबाहुर्मद्रराजमिदं वचः ॥ ५-१८-२२ (३२२७५)
भवान्कर्णस्य सारथ्यं करिष्यति न संशयः ।
तत्र तेजोवधः कार्यः कर्णस्यार्जुनसंस्तवैः ॥ ५-१८-२३ (३२२७६)
शल्य उवाच। ५-१८-२४क्ष् (३४१३)
एवमेतत्करिष्यामि यथा मां संप्रभाषसे ।
यच्चान्यदपि शक्ष्यामि तत्करिष्याम्यहं तव ॥ ५-१८-२४ (३२२७७)
वैशंपायन उवाच। ५-१८-२५क्ष् (३४१४)
ततस्त्वामन्त्र्य कौन्तेयाञ्छल्यो मद्राधिपस्तदा ।
जगाम सबलः श्रीमान्दुर्योधनमरिन्दम ॥ ॥ ५-१८-२५ (३२२७८)

इति श्रीमन्महाभारते उद्योगपर्वणि सेनोद्योगपर्वणि अष्टादशोऽध्यायः ॥

---

उद्योगपर्व-अध्यय०१९
॥ श्रीः ॥
५.१९. अध्यायः १९

Mahabharata - Udyoga Parva - Chapter Topics
सात्यकिप्रमुखानां राज्ञां स्वस्वसेनाऽऽनयनपूर्वकं युधिष्ठिरं
प्रत्यागमनम् ॥ १ ॥
भगदत्तादीनां राज्ञां दुर्योधनसाहाय्यकरणाय आगमनम् ॥ २ ॥

Mahabharata - Udyoga Parva - Chapter Text

५-१९-० (३२२७९)
वैशंपायन उवाच। ५-१९-०क्ष् (३४१५)
युयुधानस्ततो वीरः सात्वतानां महारथः ।
महता चतुरङ्गेण बलेनागाद्युधिष्ठिरम् ॥ ५-१९-१ (३२२८०)
तस्य योधा महावीर्या नानादेशसमागताः ।
नानाप्रहरणा वीराः शोभयांचक्रिरे बलम् ॥ ५-१९-२ (३२२८१)
परश्वथैर्भिण्डिपालैः शूलतोमरमुद्गरैः ।
परिघैर्यष्टिभिः पाशैः करवालैश्च निर्मलैः ॥ ५-१९-३ (३२२८२)
खङ्गकार्मुकनिर्यूहैः शरैश्च विविधैरपि ।
तैलधौतैः प्रकाशद्भिस्तदशोभत वै बलम् ॥ ५-१९-४ (३२२८३)

तस्य मेघप्रकाशस्य सौवर्णैः शोभितस्य च ।
बभूव रूपं सैन्यस्य मेघस्येव सविद्युतः ॥ ५-१९-५ (३२२८४)
अक्षौहिणी तु सा सेना तदा यौधिष्ठिरं बलम् ।
प्रविश्यान्तर्दधे राजन्सागरं कुनदी यथा ॥ ५-१९-६ (३२२८५)
तथैवाक्षौहिणीं गृह्य चेदीनामृषभो बली ।
धृष्टकेतुरुपागच्चत्पाण्डवानमितौजसः ॥ ५-१९-७ (३२२८६)
मागधश्च जयत्सेनो जारासन्धिर्महाबलः ।
अक्षौहिण्यैव सैन्यस्य धर्मराजमुपागमत् ॥ ५-१९-८ (३२२८७)
तथैव पाण्ड्यो राजेन्द्र सागरानूपवासिभिः ।
वृतो बहुविधैर्योधैर्युधिष्ठिरमुपागमत् ॥ ५-१९-९ (३२२८८)
तस्य सैन्यमतीवासीत्तस्मिन्बलसमागमे ।
प्रेक्षणीयतरं राजन्सुवेषं बलवत्तदा ॥ ५-१९-१० (३२२८९)
ग केकयाश्च नरव्याघ्राः सोदराः पञ्च पार्थिवाः ।
संहर्षयन्तः कौन्तेयोनक्षौहिण्या समागताः ॥' ५-१९-११ (३२२९०)
द्रुपदस्याप्यभूत्सेना नानादेशसमागतैः ।
शोभिता पुरुषैः शूरैः पुत्रैश्चास्य महारथैः ॥ ५-१९-१२ (३२२९१)
तथैव राजा मत्स्यानां विराटो वाहिनीपतिः ।
पार्वतीयैर्महीपालैः सहितः पाण्डवानयात् ॥ ५-१९-१३ (३२२९२)
इतश्चेतश्च पाण्डूनां समाजग्मुर्महात्मनाम् ।
अक्षौहिण्यस्तु सप्तैव विविधध्वजसङ्कुलाः ॥ ५-१९-१४ (३२२९३)
युयुत्समानाः कुरुभिः पाण्डवान्समहर्षयन् ।
तथैव धार्तराष्ट्रस्य हर्षं समभिर्धयन् ॥ ५-१९-१५ (३२२९४)
भगदत्तो महीपालः सेनामक्षौहिणीं ददौ ।
तस्य चीनैः किरातैश्च काञ्चनैरिव संवृतम् ॥ ५-१९-१६ (३२२९५)
बभौ बलमनाधृष्यं कर्णिकारवनं यथा ।
तथा भूरिश्रवाः शूरः शल्यश्च कुरुनन्दन ॥ ५-१९-१७ (३२२९६)
दुर्योधनमुपायातावक्षौहिण्या पृथक्पृथक् ।
कृतवर्मा च हार्दिक्यो भोजान्धककुकुरैः सह ॥ ५-१९-१८ (३२२९७)
अक्षौहिण्यैव सेनाया दुर्योधनमुपागमत् ।
तस्य तैः पुरुषव्याघ्रैर्वनमालाधरैर्बलम् ॥ ५-१९-१९ (३२२९८)
अशोभत यथा मत्तैर्वनं प्रक्रीडितैर्गजैः ।
जयद्रथमुखाश्चान्ये सिन्धुसौवीरवासिनः ॥ ५-१९-२० (३२२९९)
आजग्मुः पृथिवीपालाः कम्पयन्त इवाचलान् ।
तेषामक्षौहिणी सेना बहुला विबभौ तदा ॥ ५-१९-२१ (३२३००)
विधूयमानो वातेन बहुरूप इवाम्बुदः ।
सुदक्षिणश्च काम्भोजो यवनैश्च शकैस्तथा ॥ ५-१९-२२ (३२३०१)

उपाजगाम कौरव्यमक्षौहिण्या विशांपते ।
तस्य सेनासमावायः शलभानामिवाबभौ ॥ ५-१९-२३ (३२३०२)
स च संप्राप्य कौरव्यं तत्रैवान्तर्दधे तदा ।
तथा महिष्मतीवासी नीलो नीलायुधैः सह ॥ ५-१९-२४ (३२३०३)
महीपालो महावीर्यैर्दक्षिणापथवासिभिः ।
आवन्त्यौ च महीपालौ महाबलसुसंवृतौ ॥ ५-१९-२५ (३२३०४)
पृथगक्षौहिणीभ्यां तावभियातौ सुयोधनम् ।
ततस्ततस्तु सर्वेषां भूमिपानां महात्मनाम् ॥ ५-१९-२६ (३२३०५)
तिस्रोऽन्याः समवर्तन्त वाहिन्यो भरतर्षभ ।
एवमेकादशावृत्ताः सेना दुर्योधनस्य ताः ॥ ५-१९-२७ (३२३०६)
युयुत्समानाः कौन्तेयान्नानाध्वजसमाकुलाः ।
न हास्तिनपुरे राजन्नवकाशोऽभवत्तदा ॥ ५-१९-२८ (३२३०७)
राज्ञां स्वबलमुख्यानां प्राधान्येनापि भारत ।
ततः पञ्चनदं चैव कृत्स्नं च कुरुजाङ्गलम् ॥ ५-१९-२९ (३२३०८)
तथा रोहितकारण्यं मरुभूमिश्च केवला ।
अहिच्छत्रं कालकूटं गङ्गाकूलं च भारत ॥ ५-१९-३० (३२३०९)
वारणं वाटधानं च यामुनश्चैव पर्वतः ।
एष देशः सुविस्तीर्णः प्रभूतधनधान्यवान् ॥ ५-१९-३१ (३२३१०)
बभूव कौरवेयाणां बलेनातीव संवृतः ।
तत्र सैन्यं तथा युक्तं ददर्श स पुरोहितः ॥ ५-१९-३२ (३२३११)
यः स पाञ्चालराजेन प्रेषितः कौरवान्प्रति ॥ ॥ ५-१९-३३ (३२३१२)

इति श्रीमन्महाभारते उद्योगपर्वणि सेनोद्योगपर्वणि एकोनविंशोऽध्यायः ॥

Mahabharata - Udyoga Parva - Chapter Footnotes

५-१९-१ युयुधानः सात्यकिः ॥
५-१९-१९ वनमाला आपादलम्बिनी माला ५-१९-२३ समावायः समूहः ॥
५-१९-३० अहिच्छत्रादयः प्रदेशविशेषाः ॥

---

उद्योगपर्व-अध्यय०२०
॥ श्रीः ॥
५.२०. अध्यायः २०

Mahabharata - Udyoga Parva - Chapter Topics

हस्तिनपुरंगतेन द्रुपदपुरोहितेन राज्ञां सभामध्ये
द्रुपदवचनकथनम् ॥ १ ॥

५-२०-० (३२३१३)
वैशंपायन उवाच। ५-२०-०क्ष् (३४१६)
स च कौरव्यमासाद्य द्रुपदस्य पुरोहितः ।
सत्कृतो धृतराष्ट्रेण भीष्मेण विदुरेण च ॥ ५-२०-१ (३२३१४)
सर्वकौशल्यमुक्त्वाऽऽदौ पृष्ट्वा चैवमनामयम् ।
सर्वसेनाप्रणेतॄणां मध्ये वाक्यमुवाच ह ॥ ५-२०-२ (३२३१५)
सर्वैर्भवद्भिर्विदितो राजधर्मः सनातनः ।
वाक्योपादानहेतोस्तु वक्ष्यामि विदिते सति ॥ ५-२०-३ (३२३१६)
धृतराष्ट्रश्च पाण्डुश्च सुतावेकस्य विश्रुतौ ।
तयोः समानं द्रविणं पैतृकं नात्र संशयः ॥ ५-२०-४ (३२३१७)
धृतराष्ट्रस्य ये पुत्राः प्राप्तं तैः पैतृकं वसु ।
पाण्डुपुत्राः कथं नाम न प्राप्ताः पैतृकं वसु ॥ ५-२०-५ (३२३१८)
वनं गतैः पाण्डवेयैर्विदितं वः पुरा यथा ।
न प्राप्तं पैतृकं द्रव्यं धृतराष्ट्रेण यद्धृतम् ॥ ५-२०-६ (३२३१९)
प्राणान्तिकैरप्युपायैः प्रयतद्भिरनेकशः ।
शेषवन्तो न शकिता नेतुं वै यमसादनम् ॥ ५-२०-७ (३२३२०)
पुनश्च वर्धितं राज्यं स्वबलेन महात्मभिः ।
छद्मनाऽपहृतं क्षुद्रैर्धार्तराष्ट्रैः ससौबलैः ॥ ५-२०-८ (३२३२१)
तदप्यनुमतं कर्म यथा युक्तमनेन वै ।
वासिताश्च महारण्ये वर्षाणीह त्रयोदश ॥ ५-२०-९ (३२३२२)
सभायां क्लेशितैर्वीरैः सहभार्यैस्तथा भृशम् ।
अरण्ये विविधाः क्लेशाः संप्राप्तास्तैः सुदारुणाः ॥ ५-२०-१० (३२३२३)
तथा विराटनगरे योन्यन्तरगतैरिव ।
प्राप्तः परमसंक्लेशो यथा पापैर्महात्मभिः ॥ ५-२०-११ (३२३२४)
ते सर्वं पृष्ठतः कृत्वा तत्पूर्वं कर्म किल्विषम् ।
साम्नैव कुरुभिः सन्धिमिच्छन्ति कुरुपुङ्गवाः ॥ ५-२०-१२ (३२३२५)
तेषां च वृत्तमाज्ञाय वृत्तं दुर्योधनस्य च ।
अनुनेतुमिहार्हन्ति धार्तराष्ट्रं सुहृज्जनाः ॥ ५-२०-१३ (३२३२६)
न हि ते विग्रहं वीराः कुर्वन्ति कुरुभिः सह ।
अविनाशेन लोकस्य काङ्क्षन्ते पाण्डवाः स्वकम् ॥ ५-२०-१४ (३२३२७)
यश्चापि धार्तराष्ट्रस्य हेतुः स्याद्विग्रहं प्रति ।
स च हेतुर्न मन्तव्यो बलीयांसस्तथा हि ते ॥ ५-२०-१५ (३२३२८)
अक्षौहिण्यश्च सप्तैव धर्मपुत्रस्य सङ्गताः ।

युयुत्समानाः कुरुभिः प्रतीक्षन्तेऽस्य शासनम् ॥ ५-२०-१६ (३२३२९)
अपरे पुरुषव्याघ्राः सहस्राक्षौहिणीसमाः ।
सात्यकिर्भीमसेनश्च यमौ च सुमहाबलौ ॥ ५-२०-१७ (३२३३०)
एकादशैताः पृतना एकतश्च समागताः ।
एकतश्च महाबाहुर्बहुरूपी धनञ्जयः ॥ ५-२०-१८ (३२३३१)
यथा किरीटी सर्वाभ्यः सेनाभ्यो व्यतिरिच्यते ।
एवमेव महाबाहुर्वासुदेवो महाद्युतिः ॥ ५-२०-१९ (३२३३२)
बहुलत्वं च सेनानां विक्रमं च किरीटिनः ।
बुद्धिमत्त्वं च कृष्णस्य बुद्ध्वा युध्येत को नरः ॥ ५-२०-२० (३२३३३)
ते भवन्तो यथाधर्मं यथासमयमेव च ।
प्रयच्छन्तु प्रदातव्यं मा वः कालोऽत्यगादयम् ॥ ॥ ५-२०-२१ (३२३३४)

इति श्रीमन्महाभारते उद्योगपर्वणि सञ्जययानपर्वणि विंशोऽध्यायः ॥
Mahabharata - Udyoga Parva - Chapter Footnotes

५-२०-३ वाक्येति ।भवद्भिः किंचिद्वक्तव्यमतो हेतोरित्यर्थः ॥
५-२०-७ शेषवन्तः आयुःशेषयुक्ताः ॥

---

उद्योगपर्व-अध्यय०२१
॥ श्रीः ॥
५.२१. अध्यायः २१

Mahabharata - Udyoga Parva - Chapter Topics
भीष्मेण पुरोहितवाक्येऽनुमोदिते कर्णेन तदाक्षेपपूर्वकं
सङ्केतकालस्य सशेषतया पुनर्वनवासादिना तत्समापने राज्यदानोक्तिः
॥ १ ॥
भीष्मेण कर्णाधिक्षेपः ॥ २ ॥
धृतराष्ट्रेण पाण्डवान्प्रति स्वेन सञ्जयप्रेषणकथनपूर्वकं
पुरोहितस्य प्रतियापनम् ॥ ३ ॥

Mahabharata - Udyoga Parva - Chapter Text

५-२१-० (३२३३५)
वैशंपायन उवाच। ५-२१-०क्ष् (३४१७)
तस्य तद्वचनं श्रुत्वा प्रज्ञावृद्धो महाद्युतिः ।
संपूज्यैनं यथाकालं भीष्मो वचनमब्रवीत् ॥ ५-२१-१ (३२३३६)
दिष्ट्या कुशलिनः सर्वे सह दामोदरेण ते ।

दिष्ट्या सहायवन्तश्च दिष्ट्या धर्मे च ते रताः ॥ ५-२१-२ (३२३३७)
दिष्ट्या च सन्धिकामास्ते भ्रातरः कुरुनन्दनाः ।
दिष्टा न युद्धमनसः पाण्डवाः सह बान्धवैः ॥ ५-२१-३ (३२३३८)
भवता सत्यमुक्तं तु सर्वमेतन्न संशयः ।
अतितीक्ष्णं तु ते वाक्यं ब्राह्मण्यादिति मे मतिः ॥ ५-२१-४ (३२३३९)
असंशयं क्सेशितास्ते वने चेह च पाण्डवाः ।
प्राप्ताश्च धर्मतः सर्वं पितुर्धनमसंशयम् ॥ ५-२१-५ (३२३४०)
किरीटि बलवान्पार्थः कृतास्त्रश्च महारथः ।
को हि पाण्डुसुतं युद्धे विषहेत धनञ्जयम् ॥ ५-२१-६ (३२३४१)
अपि वज्रधरः साक्षात्किमुतान्ये धनुर्भृतः ।
त्रयाणामपि लोकानां समर्थ इति मे मतिः ॥ ५-२१-७ (३२३४२)
वैशंपायन उवाच। ५-२१-८क्ष् (३४१८)
भीष्मे ब्रुवति तद्वाक्यं धृष्टमाक्षिप्य मन्युना ।
दुर्योधनं समालोक्य कर्णो वचनमब्रवीत् ॥ ५-२१-८ (३२३४३)
न तत्राविदितं ब्रह्मँल्लोके भूतेन केनचित् ।
पुनरुक्तेन किं तेन भाषितेन पुनः पुनः ॥ ५-२१-९ (३२३४४)
दुर्योधनार्थे शकुनिर्द्यूते निर्जितवान्पुरा ।
समयेन गतोऽरण्यं पाण्डुपुत्रो युधिष्ठिरः ॥ ५-२१-१० (३२३४५)
स तं समयमाश्रित्य राज्यं नेच्छति पैतृकम् ।
बलमाश्रित्य मत्स्यानां पाञ्चालानां च मूर्खवत् ॥ ५-२१-११ (३२३४६)
दुर्योधनो भयाद्विद्वन्न दद्यात्पादमन्ततः ।
धर्मतस्तु महीं कृत्स्नां प्रदद्याच्छत्रवेऽपि च ॥ ५-२१-१२ (३२३४७)
यदि काङ्क्षन्ति ते राज्यं पितृपैतामहं पुनः ।
यथाप्रतिज्ञं कालं तं चरन्तु वनमाश्रिताः ॥ ५-२१-१३ (३२३४८)
ततो दुर्योधनस्याङ्के वर्तन्तामकुतोभयाः ।
अधार्मिकीं तु मा बुद्धिं मौर्ख्यात्कुर्वन्तु केवलात् ॥ ५-२१-१४ (३२३४९)
अथ ते धर्ममुत्सृत्य युद्धमिच्छन्ति पाण्डवाः ।
आसाद्येमान्कुरुश्रेष्ठान्स्मरिष्यन्ति वचो मम ॥ ५-२१-१५ (३२३५०)
भीष्म उवाच। ५-२१-१६क्ष् (३४१९)
किं नु राधेय वाचा ते कर्म तत्स्मर्तुमर्हसि ।
एक एव यदा पार्थः षड्रथाञ्जितवान्युधि ॥ ५-२१-१७अग विराटनगरे धीरः किं त्वं तत्रैव नागतः'।
बहुशो जीयमानस्य कर्म दृष्टं तदैव ते ॥ ५-२१-१६ (३२३५१)
न चेदेवं करिष्यामो यदयं ब्राह्मणोऽब्रवीत् ।
ध्रुवं युधि हतास्तेन भक्षयिष्याम पांसुकान्। ५-२१-१८ (३२३५२)
ग दुर्योधनः सहामात्यो विनङ्क्ष्यति न संशयः ॥ ५-२१-१९ (३२३५३)

वैशंपायन उवाच ।
धृतराष्ट्रस्ततो भीष्ममनुमान्य प्रसाद्य च ।
अवभर्त्स्य च राधेयमिदं वचनमब्रवीत् ॥ ५-२१-१९क्ष् (३४२०)
अस्मद्धितं वाक्यमिदं भीष्मः शान्तनवोऽब्रवीत् ।
पाण्डवानां हितं चैव सर्वस्य जगतस्तथा ॥ ५-२१-२० (३२३५४)
चिन्तयित्वा तु पार्थेभ्यः प्रेषयिष्यामि सञ्जयम् ।
स भवान्प्रतियात्वद्य पाण्डवानेव माचिरम् ॥ ५-२१-२१ (३२३५५)
स तं सत्कृत्य कौरव्यः प्रेषयामास पाण्डवान् ।
सभामध्ये समाहूय सञ्जयं वाक्यमब्रवीत् ॥ ॥ ५-२१-२२ (३२३५६)

इति श्रीमन्महाभारते उद्योगपर्वणि सञ्जययानपर्वणि एकविंशोऽध्यायः ॥
Mahabharata - Udyoga Parva - Chapter Footnotes

५-२१-८ धृष्टं धर्षणायुक्तं यथा स्यात्तथा ॥
८ ।

---

उद्योगपर्व-अध्यय०२२
॥ श्रीः ॥
५.२२. अध्यायः २२

Mahabharata - Udyoga Parva - Chapter Topics
धृतराष्ट्रेण यथाक्रमं दुर्योधनपाण्डवनिन्दाप्रशंसनपूर्वकं
पाण्डवान्प्रति सञ्जयप्रेषणम् ॥ १ ॥

Mahabharata - Udyoga Parva - Chapter Text

५-२२-० (३२३५७)
धृतराष्ट्र उवाच। ५-२२-०क्ष् (३४२१)
प्राप्तानाहुः सञ्जय पाण्डुपुत्रा-
नुपप्लव्ये तान्विजानीहि गत्वा ।
अजातशत्रुं च सभाजयेथा
दिष्ट्या वनाद्ग्राममुपस्थितस्त्वम् ॥ ५-२२-१ (३२३५८)
सर्वान्वदेः सञ्जय स्वस्तिमन्तः
कृच्छ्रं वासमतदर्हा निरुष्य ।
तेषां शान्तिर्विद्यतेऽस्मासु शीघ्रं
मिथ्यापेतानामुपकारिणां सताम् ॥ ५-२२-२ (३२३५९)
नाहं क्वचित्सञ्जय पाण्डवानां

मिथ्यावृत्तिं कांचन जात्वपश्यम् ।
सर्वां श्रियं ह्यात्मवीर्येण लब्धां
पर्याकार्षुः पाण्डवा मह्यमेव ॥ ५-२२-३ (३२३६०)
दोषं ह्येषां नाध्यगच्छं परीच्छ-
न्सूक्ष्मं कंचिद्येन गर्हेय पार्थान् ।
धर्मार्थाभ्यां कर्म कुर्वन्ति नित्यं
सुखप्रिये नानुरुध्यन्ति कामात् ॥ ५-२२-४ (३२३६१)
धर्मं शीतं क्षुत्पिपासे तथैव
निद्रां तन्द्रीं क्रोधहर्षौ प्रमादम् ।
धृत्या चैव प्रज्ञया चाभिभूय
धर्मार्थयोगान्प्रयतन्ति पार्थाः ॥ ५-२२-५ (३२३६२)
त्यजन्ति मित्रेषु धनानि काले
न संवासाज्जीर्यति तेषु मैत्री ।
यथार्हमानार्थकरा हि पार्था-
स्तेषां द्वेष्टा नास्त्याजमीढस्य पक्षे ।
अन्यत्र पापाद्विषमान्मन्दबुद्धे-
र्दुर्योधनात्क्षुद्रतराच्च कर्णात् ॥ ५-२२-६ (३२३६३)
ґ पुत्रो मह्यं मृत्युवशं जगाम
दुर्योधनः सञ्जय रागबुद्धिः।'
तेषां हीमौ हीनसुखप्रियाणां
महात्मनां संजनयतो हि तेजः ॥ ५-२२-७ (३२३६४)
उत्थानवीर्यः सुखमेधमानो
दुर्योधः सुकृतं मन्यते तत् ।
तेषां भागं यच्च मन्येत बालः
शक्यं हर्तुं जीवतां पाण्डवानाम् ॥ ५-२२-८ (३२३६५)
यस्यार्जुनः पदवीं केशवश्च
वृकोदरः सात्यकोऽजातशत्रोः ।
माद्रीपुत्रौ सृञ्जयाश्चापि यान्ति
पुरा युद्धात्साधु तस्य प्रदानम् ॥ ५-२२-९ (३२३६६)
सह्येवैकः पृथिवीं सव्यसाची
गाण्डीवधन्वा प्रणुदेद्रथस्थः ।
तथा जिष्णुः केशवोऽप्यप्रधृष्यो
लोकत्रयस्याधिपतिर्महात्मा ॥ ५-२२-१० (३२३६७)
तिष्ठेत कस्तस्य मर्त्यः पुरस्ता-
द्यः सर्वलोकेषु वरेण्य एकः ।
पर्जन्यघोषान्प्रवपञ्शरौघा-

न्पतङ्गसङ्घानिव शीघ्रवेगान् ॥ ५-२२-११ (३२३६८)
दिशं ह्युदीचीमपि चोत्तरान्कुरून्
गाण्डीवधन्वैकरथो जिगाय ।
धनं चैपामाहरत्सव्यसाची
सेनानुगान्द्रविडांश्चैव चक्रे ॥ ५-२२-१२ (३२३६९)
यश्चैव देवान्खाण्डवे सव्यसाची
गाण्डीवधन्वा प्रजिगाय सेन्द्रान् ।
उपाहरत्पाण्डवो जातवेदसे
यशो मानं वर्धयन्पाण्डवानाम् ॥ ५-२२-१३ (३२३७०)
गदाभृतां नास्ति समोऽत्र भीमा-
द्धस्त्यारोहो नास्ति समश्च तस्य ।
रथेऽर्जुनादाहुरहीनमेनं
बाह्वोर्वलेनायुतनागवीर्यम् ॥ ५-२२-१४ (३२३७१)
सुशिक्षितः कृतवैरस्तरस्वी
दहेत्क्षुद्रांस्तरसा धार्तराष्ट्रान् ।
सदाऽत्यमर्षी न वलात्स शक्यो
युद्धे जेतुं वासवेनापि साक्षात् ॥ ५-२२-१५ (३२३७२)
सुतेजसौ वलिनौ शीघ्रहस्तौ
सुशिक्षितौ भ्रातरौ फाल्गुनेन ।
श्येनौ यथा पक्षिपूगान्रुजन्तौ
माद्रीपुत्रौ शेपयेतां न शत्रून् ॥ ५-२२-१६ (३२३७३)
एतद्बलं पूर्णमस्माकमेवं
यत्सत्यं तान्प्राप्य नास्तीति मन्ये ।
तेषां मध्ये वर्तमानस्तरस्वी
धृष्टद्युम्नः पाण्डवानामिहैकः ॥ ५-२२-१७ (३२३७४)
सहामात्यः सोमकानां प्रबर्हः
सन्त्यक्तात्मा पाण्डवार्थे श्रुतो मे ।
अजातशत्रुं प्रसहेत कोऽन्यो
येषां स स्यादग्रणीर्वृष्णिसिंह ॥ ५-२२-१८ (३२३७५)
सहोषितश्चरितार्थो वयस्थो
मात्स्येयानामधिपो वै विराटः ।
स वै सपुत्रः पाण्डवार्थे च शश्व-
द्युधिष्ठिरे भक्त इति श्रुतं मे ॥ ५-२२-१९ (३२३७६)
अवरुद्धा रथिनः केकयेभ्यो
महेष्वासा भ्रातरः पञ्च सन्ति ।
केकयेभ्यो राज्यमाकाङ्क्षमाणा

युद्धार्थिनश्चानुवसन्ति पार्थान् ॥ ५-२२-२० (३२३७७)
सर्वांश्च वीरान्पृथिवीपतीनां
समागतान्पाण्डवार्थे निविष्टान् ।
शूरानहं भक्तिमतः शृणोमि
प्रीत्या युक्तान्संश्रितान्धर्मराजन् ॥ ५-२२-२१ (३२३७८)
गिर्याश्रया दुर्गनिवासिनश्च
योधाः पृथिव्यां कुलजातिशुद्धाः ।
म्लेच्छाश्च नानायुधवीर्यवन्तः
समागताः पाण्डवार्थे निविष्टाः ॥ ५-२२-२२ (३२३७९)
पाण्ड्यश्च राजा समितीन्द्रकल्पो
योधप्रवीरैर्बहुभिः समेतः ।
समागतः पाण्डवार्थे महात्मा
लोकप्रवीरोऽप्रतिवीर्यतेजाः ॥ ५-२२-२३ (३२३८०)
अस्त्रं द्रोणादर्जुनाद्वासुदेवा-
त्कृपाद्भीष्माद्येन कृतं शृणोमि ।
यं तं कार्ष्णिप्रतिममाहुरेकं
स सात्यकिः पाण्डवार्थे निविष्टः ॥ ५-२२-२४ (३२३८१)
उपाश्रिताश्चेदिकरूशकाश्च
सर्वोद्योगैर्भूमिपालाः समेताः ।
तेषां मध्ये सूर्यमिवातपन्तं
श्रिया वृतं चेदिपतिं ज्वलन्तम् ॥ ५-२२-२५ (३२३८२)
अस्तम्भनीयं युधि मन्यमान्यो
ज्यां कर्षतां श्रेष्ठतमं पृथिव्याम् ।
सर्वोत्साहं क्षत्रियाणां निहत्य
प्रसह्य कृष्णस्तरसा संममर्द ॥ ५-२२-२६ (३२३८३)
यशोमानौ वर्धयन्पाण्डवानां
पुराऽभिनच्छिशुपालं समीक्ष्य ।
यस्य सर्वे वर्धयन्ति स्म मानं
करूशराजप्रमुखा नरेन्द्राः ॥ ५-२२-२७ (३२३८४)
तमसह्यं केशवं तत्र मत्वा
सुग्रीवयुक्तेन रथेन कृष्णम् ।
संप्राद्रवंश्चेदिपतिं विहाय
सिंहं दृष्ट्वा क्षुद्रमृगा इवान्ये ॥ ५-२२-२८ (३२३८५)
यस्तं प्रतीपस्तरसा प्रत्युदीया-
दाशंसमानो द्वैरथे वासुदेवम् ।
सोऽशेत कृष्णेन हतः परासु-

र्वातेनेवोन्मथितः कर्णिकारः ॥ ५-२२-२९ (३२३८६)
पराक्रमं मे यदवेदयन्त
तेषामर्थे सञ्जय केशवस्य ।
अनुस्मरंस्तस्य कर्माणि विष्णो-
र्गावल्गणे नाधिगच्छामि शान्तिम् ॥ ५-२२-३० (३२३८७)
न जातु ताञ्छत्रुरन्यः सहेत
येषां स स्यादग्रणीर्वृष्णिसिंहः ।
प्रवेपते मे हृदयं भयेन
श्रुत्वा कृष्णावेकरथे समेतौ ॥ ५-२२-३१ (३२३८८)
न चेद्गच्छेत्सङ्गरं मन्दबुद्धि-
स्ताभ्यां लभेच्छर्म तदा सुतो मे ।
नो चेत्कुरून्सञ्जय निर्दहेता-
मिन्द्राविष्णू दैत्यसेनां यथैव ॥ ५-२२-३२ (३२३८९)
मते हि मे शक्रसमो धनञ्जयः
सनातनो वृष्णिवीरश्च विष्णुः ।
धर्मारामो ह्रीनिषेवस्तरस्वी
कुन्तीपुत्रः पाण्डवोऽजातशत्रुः ॥ ५-२२-३३ (३२३९०)
दुर्योधनेन निकृतो मनस्वी
नो चेत्क्रुद्धः प्रदहेद्धार्तराष्ट्रान् ।
नाहं तथा ह्यर्जुनाद्वासुदेवा-
द्भीमाद्वाऽहं यमयोर्वा बिभेमि ॥ ५-२२-३४ (३२३९१)
यथा राज्ञः क्रोधदीप्तस्य सूत
मन्योरहं भीततरः सदैव ।
महातपा ब्रह्मचर्येण युक्तः
सङ्कल्पोऽयं मानसस्तस्य सिद्ध्येत् ॥ ५-२२-३५ (३२३९२)
तस्य क्रोधं सञ्जयाहं समीक्ष्य
स्थाने जानन्भृशमस्म्यद्य भीतः ।
स गच्छ शीघ्रं प्रहितो रथेन
पाञ्चालराजस्य चमूनिवेशनम् ॥ ५-२२-३६ (३२३९३)
अजातशत्रुं कुशलं स्म पृच्छेः
पुनः पुनः प्रीतियुक्तं वदेस्त्वम् ।
जनार्दनं चापि समेत्य तात
महामात्रं वीर्यवतामुदारम् ॥ ५-२२-३७ (३२३९४)
अनामयं मद्वचनेन पृच्छे-
र्धृतराष्ट्रः पाण्डवैः शान्तिमीप्सुः ।
न तस्य किंचिद्वचनं न कुर्यात्

कुन्तीपुत्रो वासुदेवस्य सूत ॥ ५-२२-३८ (३२३९५)
प्रियश्चैषामात्मसमश्च कृष्णो
विद्वांश्चैषां कर्मणि नित्ययुक्तः ।
समानीतान्पाण्डवान्सृञ्जयांश्च
जनार्दनं युयुधानं विराटम् ॥ ५-२२-३९ (३२३९६)
अनामयं मद्वचनेन पृच्छेः
सर्वांस्तथा द्रौपदेयांश्च पञ्च ।
यद्यत्तत्र प्राप्तकलं परेभ्य-
स्त्वं मन्येथा भारतानां हितं च
तद्भाषेथाः सञ्जय राजमध्ये ५-२२-४० (३२३९७)
५-२२-४०फ़"
न मूर्च्छयेद्यन्न च युद्धहेतुः ॥ ॥

इति श्रीमन्महाभारते उद्योगपर्वणि सञ्जययानपर्वणि द्वाविंशोऽध्यायः ॥
Mahabharata - Udyoga Parva - Chapter Footnotes

५-२२-२ स्वस्तिमन्तो वयमिति सर्वान्वदेः ।कृच्छ्रं निरुष्यापि तेषां शान्तिरक्रोधोऽस्मासु विद्यते। मिथ्यापेतानां निष्कपटानाम् ॥ २ ॥
५-२२-३ मह्यं पर्याकार्षुः मदर्थं परित आनीतवन्तः ॥
५-२२-४ धर्मार्थाभ्यां धर्मार्थं अर्थार्थं ५-२२-७ तेजः क्रोधम् ॥
५-२२-९ तस्य तस्मै ।प्रदानं भागप्रदानम् ॥
५-२२-१० जिष्णुर्जयशीलः ॥
५-२२-१३ जातवेदसे उपाहरत् खाण्डवमिति विपरिणामेनानुषङ्गः ॥
५-२२-२० अवरुद्धाः बहिर्निः सारिताः ॥
५-२२-२४ कार्ष्णिः प्रद्युम्नस्तत्तुल्यम् ॥
५-२२-२५ चेदिपतिं शिशुपालम् ।कृष्णो ममर्देत्युत्तरेणान्वयः ॥
५-२२-२९ आशं समानो जयमिति शेषः ॥
५-२२-३० यत् यतः ।अवेदयन्त ज्ञापितवन्तः ।चारा इति शेषः ॥
५-२२-३१ कृष्णौ वासुदेवार्जुनौ ॥
५-२२-३४ निकृतो वञ्चितः ।मनस्वी जितमनाः ॥
५-२२-३६ स्थाने जानन् युक्तं पश्यन् ॥
५-२२-३७ महामात्रं महाभागम् ॥
५-२२-३८ शान्तिमीप्सुरस्तीति वदेत्यध्याहारः ॥
५-२२-४० मूर्च्छयेत् वर्धयेत् ।क्रोधमिति शेषः ॥

---

उद्योगपर्व-अध्यय०२३

॥ श्रीः ॥
५.२३. अध्यायः २३

Mahabharata - Udyoga Parva - Chapter Topics
सञ्जयेनोपप्लाव्यं गत्वा पाण्डवान्प्रति
धृतराष्ट्रकृतकुशलप्रश्नकथनम् ॥ १ ॥
युधिष्ठिरेण सञ्जयंप्रति धृतराष्ट्रादीनां कुशलादिप्रश्नः ॥ २ ॥

Mahabharata - Udyoga Parva - Chapter Text

५-२३-० (३२३९८)
वैशंपायन उवाच। ५-२३-०क्ष् (३४२२)
राज्ञस्तु वचनं श्रुत्वा धृतराष्ट्रस्य सञ्जयः ।
उपप्लाव्यं ययौ द्रष्टुं पाण्डवानमितौजसः ॥ ५-२३-१ (३२३९९)
स तु राजानमासाद्य कुन्तीपुत्रं युधिष्ठिरम् ।
अभिवाद्य ततः पूर्वं सूतपुत्रोऽभ्यभाषत ॥ ५-२३-२ (३२४००)
गवल्गणिः सञ्जयः सूतसूनु-
रजातशत्रुमवदत्प्रतीतः ।
दिष्ट्या राजंस्त्वामरोगं प्रपश्ये
सहायवन्तं च महेन्द्रकल्पम् ॥ ५-२३-३ (३२४०१)
अनामयं पृच्छति त्वाम्बिकेयो
वृद्धो राजा धृतराष्ट्रो मनीषी ।
कच्चिद्भीमः कुशली पाण्डवाग्र्यो
धनञ्जयस्तौ च माद्रीतनूजौ ॥ ५-२३-४ (३२४०२)
कच्चित्कृष्णा द्रौपदी राजपुत्री
सत्यव्रता वीरपत्नी सुपुत्रा ।
मनस्विनी यत्र च वाञ्छसि त्व-
मिष्टान्कामान्भारत स्वस्तिकामः ॥ ५-२३-५ (३२४०३)
युधिष्ठिर उवाच। ५-२३-६क्ष् (३४२३)
गावल्गणे सञ्जय स्वागतं ते
प्रीतात्माऽहं त्वाऽभिनन्दामि सूत ।
अनामयं प्रतिमाने तवाहं
सहानुजैः कुशली चास्मि विद्वन् ॥ ५-२३-६ (३२४०४)
चिरादिदं कुशलं भारतस्य
श्रुत्वा राज्ञः कुरुवृद्धस्य सूत ।
मन्ये साक्षाद्दृष्टमहं नरेन्द्रं

दृष्ट्वैव त्वां सञ्जय प्रीतियोगात् ॥ ५-२३-७ (३२४०५)
पितामहो नः स्थविरो मनस्वी
महाप्राज्ञः सर्वधर्मोपपन्नः ।
सकौरव्यः कुशली तात भीष्मो
यथापूर्वं वृत्तिरस्त्यस्य कच्चित् ॥ ५-२३-८ (३२४०६)
कच्चिद्राजा धृतराष्ट्रः सपुत्रो
वैचित्रवीर्यः कुशली महात्मा ।
महाराजो बाह्लिकः प्रातिपेयः
कच्चिद्विद्वान्कुशली सूतपुत्र ॥ ५-२३-९ (३२४०७)
स सोमदत्तः कुशली तात कच्चि-
द्भूरिश्रवाः सत्यसन्धः शलश्च ।
द्रोणः सपुत्रश्च कृपश्च विप्रो
महेष्वासाः कच्चिदेतेऽप्यरोगाः ॥ ५-२३-१० (३२४०८)
सर्वे कुरुभ्यः स्पृहयन्ति सञ्जय
धनुर्धरा ये पृथिव्यां प्रधानाः ।
महाप्रज्ञाः सर्वशास्त्रावदाता
धनुर्भृतां मुख्यतमाः पृथिव्याम् ॥ ५-२३-११ (३२४०९)
कच्चिन्मानं तात लभन्त एते
धनुर्भृतः कचिदेतेऽप्यरोगाः ।
येषां राष्ट्रे निवसति दर्शनीयो
महेष्वासः शीलवान्द्रोणपुत्रः ॥ ५-२३-१२ (३२४१०)
वैश्यापुत्रः कुशली तात कच्चित्
महाप्राज्ञो राजपुत्रो युयुत्सुः ।
कर्णो मानी कुशली तात कच्चित्
सुयोधनो यस्य मन्दो विधेयः ॥ ५-२३-१३ (३२४११)
स्त्रियो वृद्धा भारतानां जनन्यो
महादास्यो दासभार्याश्च सूत ।
वध्वः पुत्रा भागिनेया भगिन्यो
दौहित्रा वा कच्चिदप्यव्यलीकाः ॥ ५-२३-१४ (३२४१२)
कच्चिद्राजा ब्राह्मणानां यथावत्
प्रवर्तते पूर्ववत्तात वृत्तिम् ।
कच्चिद्दायान्मामकान्धार्तराष्ट्रो
द्विजातीनां सञ्जय नोपहन्ति ॥ ५-२३-१५ (३२४१३)
कच्चिद्राजा धृतराष्ट्रः सपुत्र
उपेक्षते ब्राह्मणातिक्रमान्वै ।
स्वर्गस्य कच्चिन्न तथा वर्त्मभूता-

मुपेक्षते तेषु सदैव वृत्तिम् ॥ ५-२३-१६ (३२४१४)
एतञ्ज्योतिश्चोत्तमं जीवलोके
शुक्लं प्रजानां विहितं विधात्रा ।
ते चेद्दोषं न नियच्छन्ति मन्दाः
कृत्स्नो नाशो भविता कौरवाणाम् ॥ ५-२३-१७ (३२४१५)
कच्चिद्राजा धृतराष्ट्रः सपुत्रो
बुभूषते वृत्तिममात्यवर्गे ।
कच्चिन्न भेदेन जिजीविषन्ति
सुहृद्रूपा दुर्हृदश्चैकमत्यात् ॥ ५-२३-१८ (३२४१६)
कच्चिन्न पापं कथयन्ति तात
ते पाण्डवानां कुरवः सर्व एव ।
द्रोणः सपुत्रश्च कृपश्च वीरो
नास्मासु पापानि वदन्ति कच्चित् ॥ ५-२३-१९ (३२४१७)
कच्चिद्राज्ये धृतराष्ट्रं सपुत्रं
समेत्याहुः कुरवः सर्व एव ।
कच्चिद्दृष्ट्वा दस्युसङ्घान्समेता-
न्स्मरन्ति पार्थस्य युधां प्रणेतुः ॥ ५-२३-२० (३२४१८)
मौर्वीभुजाग्रप्रहितान्स्म तात
दोधूयमानेन धनुर्धरेण ।
गाण्डीवनुन्नांस्तनयित्नुघोषा-
नजिह्मगान्कच्चिदनुस्मरन्ति ॥ ५-२३-२१ (३२४१९)
न चापश्यं कंचिदहं पृथिव्यां
योधं समं वाऽधिकमर्जुनेन ।
यस्यैकषष्टिर्निशितास्तीक्ष्णधाराः
सुवाससः समंतो हस्तवापः ॥ ५-२३-२२ (३२४२०)
गदापाणिर्भीमसेनस्तरस्वी
प्रवेपयञ्छत्रुसङ्घाननीके ।
नागः प्रभिन्न इव नड्वलेषु
चंक्रम्यते कच्चिदेनं स्मरन्ति ॥ ५-२३-२३ (३२४२१)
माद्रीपुत्रः सहदेवः कलिङ्गान्
समागतानजयद्दन्तकूरे ।
वामेनास्यन्दक्षिणेनैव यो वै
महाबलं कच्चिदेनं स्मरन्ति ॥ ५-२३-२४ (३२४२२)
पुरा जेतुं नकुलः प्रेषितोऽयं
शिबींस्त्रिगर्तान्सञ्जय पश्यतस्ते ।
दिशं प्रतीचीं वशमानयन्मे

माद्रीसुतं कच्चिदेनं स्मरन्ति ॥ ५-२३-२५ (३२४२३)
पराभवो द्वैतवने य आसी-
द्दुर्मन्त्रिते घोपयात्रागतानाम् ।
यत्र मन्दाञ्छत्रुवशं प्रयाता-
नमोचयद्भीमसेनो जयश्च ॥ ५-२३-२६ (३२४२४)
अहं पश्चादर्जुनमभ्यरक्षं
माद्रीपुत्रौ भीमसेनोऽप्यरक्षत् ।
गाण्डीवधन्वा शत्रुसङ्घानुदस्य
स्वस्त्यागमत्कच्चिदेनं स्मरन्ति ॥ ५-२३-२७ (३२४२५)
न कर्मणा साधुनैकेन नूनं
सुखं शक्यं वै भवतीह सञ्जय ।
सर्वात्मना परिजेतुं वयं चे-
न्न शक्नुमो धृतराष्ट्रस्य पुत्रम् ॥ ॥ ५-२३-२८ (३२४२६)

इति श्रीमन्महाभारते उद्योगपर्वणि सञ्जययानपर्वणि त्रयोविंशोऽध्यायः ॥
Mahabharata - Udyoga Parva - Chapter Footnotes

५-२३-११ कुरुभ्यः स्पृहयन्ति कच्चिदित्यनुषङ्गः ॥
५-२३-१४ अव्यलीकाः निष्कपटाः ॥
५-२३-१५ वृत्तिं जीविकां दातुमिति शेषः ।दायान्मद्दत्तान् ग्रामादीन् ॥
५-२३-१७ एतद्ब्रह्मणानां वृत्तः पालनं ज्योतिः परलोकप्रकाशकं
जीवलोके इह शुक्लं यशस्करम् ।दोषं लोभं ब्राह्मणवृत्त्युपघातेन
न नियच्छन्ति ॥
५-२३-१८ बुभूपते प्रापयितुमिच्छति ॥
५-२३-२१ मौर्व्याः भुजः कौटिल्यं तस्य अग्रमिवाग्रं शरसंधानदेशः
ततः प्रहितान् प्रेषितान् ॥
५-२३-२२ सुवाससः सुषुङ्गा ।हस्तवापो हस्तक्षेपः ।एकषष्टिर्वाणा
अस्य एतेन। ॥।
॥॥
इत्यर्थः ॥
५-२३-२३ नङ्वलेषु सतृणेषु स्थलेषु ॥
२३ ॥
५-२३-२४ दन्तकूरे संप्रागे ॥
२४ ॥
५-२३-२६ जयः अर्जुनः ॥

॥ श्रीः ॥

५.२४. अध्यायः २४

Mahabharata - Udyoga Parva - Chapter Topics

सञ्जयेन युधिष्ठिरप्रश्नानामुत्तरदानपूर्वकं
धृतराष्ट्रसन्देशश्रवणविधानम् ॥ १ ॥

Mahabharata - Udyoga Parva - Chapter Text

५-२४-० (३२४२७)
सञ्जय उवाच। ५-२४-०क्ष् (३४२४)
यथाऽऽत्थ मे पाण्डव तत्तथैव
कुरून्कुरुश्रेष्ठ जनं च पृच्छसि ।
अनामयास्तात मनस्विनस्ते
कुरुश्रेष्ठान्पृच्छसि पार्थ यांस्त्वम् ॥ ५-२४-१ (३२४२८)
सन्त्येव वृद्धाः साधवो धार्तराष्ट्रे
सन्त्येव पापाः पाण्डव तस्य विद्धि ।
दद्याद्रिपुभ्योऽपि हि धार्तराष्ट्रः
कुतो दायांल्लोपयेद्ब्राह्मणानाम् ॥ ५-२४-२ (३२४२९)
यद्युष्मासु वर्ततेऽसावधर्म्य-
मद्रुग्धेषु द्रुग्धवत्तन्न साधु ।
मित्रध्रुक् स्याद्धृतराष्ट्रस्य पुत्रो
युष्मान्द्विपन्साधुवृत्तानसाधुः ॥ ५-२४-३ (३२४३०)
स चापि जानाति भृशं च तप्यते
शोचत्यन्तः स्थविरोऽजातशत्रो ।
शृणोति हि ब्राह्मणानां समेत्य
मित्रद्रोहः पातकेभ्यो यरीयान् ॥ ५-२४-४ (३२४३१)
स्मरन्ति तुभ्यं नरदेव सङ्गमे
युद्धे च जिष्णोश्च युधां प्रणेतुः ।
समुद्धुष्टे दुन्दुभिशङ्खशब्दे
गदापाणिं भीमसेनं स्मरन्ति ॥ ५-२४-५ (३२४३२)
माद्रीसुतौ चापि तथाऽऽजिमध्ये
सर्वा दिशः संपतन्तौ स्मरन्ति ।
सेनां वर्षन्तौ शरवैपरजमं
महारथौ समरे दुष्प्रकम्पौ ॥ ५-२४-६ (३२४३३)
न त्वेव मन्ये पुरुषस्य राज-

न्ननागतं ज्ञायते यद्भविष्यम् ।
त्वं चेत्तथा सर्वधर्मोपपन्नः
प्राप्तः क्लेशं पाण्डव कृच्छ्ररूपम् ।
त्वमेवैतत्कृच्छ्रगतश्च भूयः
समीकुर्याः प्रज्ञयाऽजातशत्रो ॥ ५-२४-७ (३२४३४)
न कामार्थं सन्त्यजेयुर्हि धर्मं
पाण्डोः सुताः सर्व एवेन्द्रकल्पाः ।
त्वमेवैतत्प्रज्ञयाऽजातशत्रो
समीकुर्या येन शर्माप्नुयुस्ते ॥ ५-२४-८ (३२४३५)
धार्तराष्ट्राः पाण्डवाः सृञ्जयाश्च
ये चाप्यन्ते सन्निविष्टा नरेन्द्राः ।
यन्मां ब्रवीद्धृतराष्ट्रो निशाया-
मजातशत्रो वचनं पिता ते ॥ ५-२४-९ (३२४३६)
सहामात्यः सहपुत्रश्च राजन्
समेत्य तां वाचमिमां निबोध ॥ ॥ ५-२४-१० (३२४३७)

इति श्रीमन्महाभारते उद्योगपर्वणि सञ्जययानपर्वणि चतुर्विंशोऽध्यायः ॥
Mahabharata - Udyoga Parva - Chapter Footnotes

५-२४-४ गरीयानिति ॥४॥
५-२४-५ ॥५॥
५-२४-७ अनागतं अज्ञातं अदृष्टमित्यर्थः ॥

---

उद्योगपर्व-अध्यय०२५
॥ श्रीः ॥
५.२५. अध्यायः २५

Mahabharata - Udyoga Parva - Chapter Topics
सञ्जयेन युद्धनिन्दापूर्वकं पाण्डवैः शमस्वीकारस्य
भीष्मधृतराष्ट्राद्यभिमतत्वकथनम् ॥१ ॥

Mahabharata - Udyoga Parva - Chapter Text

५-२५-० (३२४३८)
युधिष्ठिर उवाच। ५-२५-०क्ष् (३४२५)
समागताः पाण्डवाः सृञ्जयाश्च

जनार्दनो युयुधानो विराटः ।
यत्ते वाक्यं धृतराष्ट्रानुशिष्टं
गावल्गणे ब्रूहि तत्सूतपुत्र ॥ ५-२५-१ (३२४३९)
संजय उवाच। ५-२२-२क्ष् (३४२६)
अजातशत्रुं च वृकोदरं च
धनञ्जयं माद्रवतीसुतौ च ।
आमन्त्रये वासुदेवं च शौरिं
युयुधानं चेकितानं विराटम् ॥ ५-२५-२ (३२४४०)
पञ्चालानामधिपं चैव वृद्धं
धृष्टद्युम्नं पार्षतं याज्ञसेनिम् ।
सर्वे वाचं शृणुतेमां मदीयां
वक्ष्यामि यां भूतिमिच्छन्कुरूणाम् ॥ ५-२५-३ (३२४४१)
शमं राजा धृतराष्ट्रोऽभिनन्द-
न्नयोजयत्त्वरमाणो रथं मे ।
सभ्रातृपुत्रस्वजनस्य राज्ञ-
स्तद्रोचतां पाण्डवानां शमोऽस्तु ॥ ५-२५-४ (३२४४२)
सर्वैर्धर्मैः समुपेतास्तु पार्थाः
संस्थानेन मार्दनेवार्जवेन ।
जाताः कुले ह्यनृशंसा वदान्या
ह्रीनिषेवाः कर्मणां निश्चयज्ञाः ॥ ५-२५-५ (३२४४३)
न युज्यते कर्म युष्मासु हीनं
सत्वं हि वस्तादृशं भीमसेनाः ।
उद्भासते ह्यञ्जनबिन्दुवत्त-
च्छुभ्रे वस्त्रे यद्भवेत्किल्बिषं वः ॥ ५-२५-६ (३२४४४)
सर्वक्षयो दृश्यते यत्र कृत्स्नः
पापोदयो भावसंस्थः कुरूणाम् ।
कस्तत्र कुर्याञ्जातु कर्म प्रजानन्
पराजयो यत्र समो जयश्च ॥ ५-२५-७ (३२४४५)
ते वै धन्या यैः कृतं ज्ञातिकार्यं
ते वै पुत्राः सुहृदो बान्धवाश्च ।
उपक्रुष्टं जीवितं सन्त्यजेयु-
र्यतः कुरूणां नियतो वै भवः स्यात् ॥ ५-२५-८ (३२४४६)
ते चेत्कुरूननुशिष्याथ पार्था
निर्णीय सर्वान्द्विषतो निगृह्य ।
समं वस्तज्जीवितं मृत्युन स्या-
द्यज्जीवध्वं ज्ञातिवधेन साधु ॥ ५-२५-९ (३२४४७)

को ह्येव युष्मान्सह केशवेन
सचेकितानान्पार्षतबाहुगुप्तान् ।
ससात्यकीन्विषहेत प्रजेतुं
लब्ध्वाऽपि देवान्सचिवान्सहेन्द्रान् ॥ ५-२५-१० (३२४४८)
को वा कुरून्द्रोणभीष्माभिगुप्ता-
नश्वत्थाम्ना शल्यकृपादिभिश्च ।
रणे विजेतुं विषहेत राजन्
राधेयगुप्तान्सह भूमिपालैः ॥ ५-२५-११ (३२४४९)
महद्बलं धार्तराष्ट्रस्य राज्ञः
को वै शक्तो हन्तुमक्षीयमाणः ।
सोऽहं जये चैव पराजये च
निःश्रेयसं नाधिगच्छामि किंचित् ॥ ५-२५-१२ (३२४५०)
कथं हि नीचा इव दौष्कुलेया
निर्धर्मार्थं कर्म कुर्युश्च पार्थाः ।
सोऽहं प्रसाद्य प्रणतो वासुदेवं
पञ्चालानामधिपं चैव वृद्धम् ॥ ५-२५-१३ (३२४५१)
कृताञ्जलिः शरणं वः प्रपद्ये
कथं स्वस्ति स्यात्कुरुसृञ्जयानाम् ।
न ह्येवमेवं वचनं वासुदेवो
धनञ्जयो वा जातु किंचिन्न कुर्यात् ॥ ५-२५-१४ (३२४५२)
प्रणान्दद्याद्याचमानः कुतोऽन्य-
देतद्विद्वन्साधनार्थं ब्रवीमि ।
एतद्राज्ञो भीष्मपुरोगमस्य
मतं यद्वः शान्तिरिहोत्तमा स्यात् ॥ ॥ ५-२५-१५ (३२४५३)

इति श्रीमन्महाभारते उद्योगपर्वणि सञ्जययानपर्वणि
पञ्चविंशोऽध्यायः ॥

Mahabharata - Udyoga Parva - Chapter Footnotes

५-२५-४ रथमयोजयत् ।इह आगन्तुम्। राज्ञः तत् वचनं पाण्डवानां
रोचतां ततश्च शमोऽस्तु ॥
४ ॥
५-२५-५ संस्थानेनाकारेण ।मार्दवेन कृपया। आर्जवेन
अकौटिल्येन। अनृशंसाः अनुग्राः ।ह्रीनिषेवाः लज्जापरायणाः ॥
५ ॥
५-२५-६ हीनं हिंस्रं सत्त्वं बुद्धिसत्वं साधुत्वं वा ।भीमसेनाः

भीषणसैन्याः ॥
६ ॥
५-२५-७ यत्र सङ्ग्रामे भावसंस्थः स इति शेषः ॥
७ ॥
५-२५-८ ज्ञातीनां दुर्योधनादीनां कार्यं घोषयात्रायां गन्धर्वेभ्यो मोचनादिकं उपक्रुष्टं निन्दितम् ॥
८ ॥
५-२५-९ निर्णीय निश्चयं कृत्वा । निगृह्य हत्वेत्यर्थः ॥
९ ॥
५-२५-१२ निःश्रेयसं निश्चयम् ॥
१२ ॥
५-२५-१३ निर्धर्मार्थं धर्मार्थयोर्विरुद्धं कम कथं कुर्युः । प्रणतः अस्मीति शेषः ॥
१३ ॥
५-२५-१४ साधनार्थं संधिकार्यस्य सिद्ध्यर्थं ब्रवीमि नतु युष्मान् भीषयामीत्यर्थः ॥
१५ ॥

---

उद्योगपर्व-अध्यय०२६
॥ श्रीः ॥
५.२६. अध्यायः २६

Mahabharata - Udyoga Parva - Chapter Topics
युधिष्ठिरेण स्वपरयोः शुभाशुभाभिसन्धिकथनपूर्वकं स्वस्याजय्यत्वमभिधाय इन्द्रप्रस्थे राज्यदाने शान्तिकथनम् ॥ १ ॥

Mahabharata - Udyoga Parva - Chapter Text

५-२६-० (३२४५४)
युधिष्ठिर उवाच। ५-२६-०क्ष् (३४२७)
कां नु वाचं सञ्जय मे शृणोषि ।
युद्धैषिणीं येन युद्धाद्बिभेषि ।
अयुद्धं वै तात युद्धाद्गरीयः
कस्तल्लब्ध्वा जातु युद्ध्येत सूत ॥ ५-२६-१ (३२४५५)
अकुर्वतश्चेत्पुरुषस्य सञ्जय
सिद्ध्येत्सङ्कल्पो मनसा यं यमिच्छेत् ।
न कर्म कुर्याद्विदितं ममैत-

दन्यत्र युद्धाद्बहु यल्लघीयः ॥ ५-२६-२ (३२४५६)
कुतो युद्धं जातु नरोऽवगच्छे-
त्को देवशप्तो हि वृणीत युद्धम् ।
सुखैषिणः कर्म कुर्वन्ति पार्था
धर्मादहीनं यच्च लोकस्य पथ्यम् ॥ ५-२६-३ (३२४५७)
धर्मोदयं सुखमाशंसमानाः
कृच्छ्रोपायं तत्त्वतः कर्म दुःखम् ।
सुखं प्रेप्सुर्विजिघांसुश्च दुःखं
कर्मारभेद्यच्च धर्मानपेतम् ॥ ५-२६-४ (३२४५८)
क इन्द्रियाणां प्रीतिवशानुरानां
कर्माभिज्ञः स्वशरीरं दुनोति ।
यया प्रमुक्तो न करोति दुःखं
तृष्णां त्यजेत्सर्वधर्मादपेताम् ॥ ५-२६-५ (३२४५९)
यथेध्यमानस्य समिद्धतेजसो
भूयो बलं वर्धते पावकस्य ।
कामार्थलाभेन तथैव भूयो
न तृप्यते सर्पिषेवाग्निरिद्धः ।
संपश्येमं भोगचयं महान्तं
सहास्माभिर्धृतराष्ट्रस्य राज्ञः ॥ ५-२६-६ (३२४६०)
नाश्रेयानीश्वरो विग्रहाणां
नाश्रेयान्वै गीतशब्दं श्रृणोति ।
नाश्रेयान्वै सेवते माल्यगन्धा-
न्न चाप्यश्रेयाननुलेपनानि ॥
नाश्रेयान्वै प्रावारान्संविवस्ते
कथं त्वस्मान्संप्रणुदेत्कुरुभ्यः ॥ ५-२६-७ (३२४६१)
अत्रैव स्यादवुधस्यैव कामः ।
प्रायः शरीरे हृदयं दुनोति ॥ ५-२६-८ (३२४६२)
स्वयं राजा विषमस्थः परेषु
सामर्थ्यमन्विच्छति तन्न साधु ।
यथाऽऽत्मनः पश्यति वृत्तमेव
तथा परेतामपि सोऽभ्युपैति ॥ ५-२६-९ (३२४६३)
आसन्नमग्निं तु निदाघकाले
गम्भीरकक्षे गहने विसृज्य ।
यथा विवृद्धं वायुवशेन शोचे-
त्क्षेमं मुमुक्षुः शिशिरव्यपाये ॥ ५-२६-१० (३२४६४)
प्राप्तैश्वर्यो धृतराष्ट्रोऽद्य राजा

लालप्यते सञ्जय कस्य हेतोः ।
प्रगृह्य दुर्बुद्धिमनार्जवे रतं
पुत्रं मन्दं मूढममन्त्रिणं तु ॥ ५-२६-११ (३२४६५)
अनाप्तवच्चाप्ततमस्य वाचः
सुयोधनो विदुरस्यावमत्य ।
सुतस्य राजा धृतराष्ट्रः प्रियैषी
संबुध्यमानो विशतेऽधर्ममेव ॥ ५-२६-१२ (३२४६६)
मेधाविनं ह्यर्थकामं कुरूणां
बहुश्रुतं वाग्मिनं शीलवन्तम् ।
स तं राजा धृतराष्ट्रः कुरुभ्यो
न सस्मार विदुरं पुत्रकाम्यात् ॥ ५-२६-१३ (३२४६७)
मानघ्नस्यासौ मानकामस्य चेर्षोः
संरम्भिणश्चार्थधर्मातिगस्य ।
दुर्भाषिणो मन्युवशानुगस्य
कामात्मनो दौर्हृदैर्भावितस्य ॥ ५-२६-१४ (३२४६८)
अनेयस्याश्रेयसो दीर्घमन्यो-
र्मित्रद्रुहः सञ्जय पापबुद्धेः ।
सुतस्य राजा धृतराष्ट्रः प्रियैषी
प्रपश्यमानः प्राजहाद्धर्मकामौ ॥ ५-२६-१५ (३२४६९)
तदैव मे सञ्जय दीव्यतोऽभू-
न्मतिः कुरूणामागतः स्यादभावः ।
काव्यां वाचं विदुरो भाषमाणो
न विन्दते यद्धार्तराष्ट्रात्प्रशंसाम् ॥ ५-२६-१६ (३२४७०)
क्षत्तुर्यदा नान्ववर्तन्त बुद्धिं
कृच्छ्रं कुरून्सूत तदाऽभ्याजगाम ।
यावत्प्रज्ञामन्ववर्तन्त तस्य
तावत्तेषां राष्ट्रवृद्धिर्बभूव ॥ ५-२६-१७ (३२४७१)
तदर्थलुब्धस्य निबोध मेऽद्य
ये मन्त्रिणो धार्तराष्ट्रस्य सूत ।
दुःशासनः शकुनिः सूतपुत्रो
गावल्गणे पश्य संमोहमस्य ॥ ५-२६-१८ (३२४७२)
सोऽहं न पश्यामि परीक्षमाणः
कथं स्वस्ति स्यात्कुरुसृञ्जयानाम् ।
आत्तैश्वर्यो धृतराष्ट्रः परेभ्यः
प्रव्राजिते विदुरे दीर्घदृष्टौ ॥ ५-२६-१९ (३२४७३)
आशंसते वै धृतराष्ट्रः सपुत्रो

महाराज्यमसपत्नं पृथिव्याम् ।
तस्मिञ्शमः केवलं नोपलभ्यः
सर्वं स्वकं मद्गते मन्यतेऽर्थम् ॥ ५-२६-२० (३२४७४)
यत्तत्कर्णो मन्यते पारणीयं
युद्धे गृहीतायुधमर्जुनं वै ।
आसंश्च युद्धानि पुरा महान्ति
कथं कर्णो नाभवद्द्वीप एषाम् ॥ ५-२६-२१ (३२४७५)
कर्णश्च जानाति सुयोधनश्च
द्रोणश्च जानाति पितामहश्च ।
अन्ये च ये कुरवस्तत्र सन्ति
यथाऽर्जुनान्नास्त्यपरो धनुर्धरः ॥ ५-२६-२२ (३२४७६)
जानन्त्येतन्कुरवः सर्व एव
ये चाप्यन्ये भूमिपालाः समेताः ।
दुर्योधने राज्यमिहाभवद्यथा
अरिन्दमे फाल्गुनेऽविद्यमाने ॥ ५-२६-२३ (३२४७७)
तेनानुबन्धं मन्यते धार्तराष्ट्रः
शक्यं हर्तुं पाण्डवानां ममत्वम् ।
किरीटिना तालमात्रायुधेन
तद्वेदिना संयुगं तत्र गत्वा ॥ ५-२६-२४ (३२४७८)
गाण्डीवविष्फारितशब्दमात्रं
श्रुत्वैव ते धार्तराष्ट्रा म्रियन्ते ।
क्रुद्धं न चेदीक्षते भीमसेनं
सुयोधनो मन्यते सिद्धमर्थम् ॥ ५-२६-२५ (३२४७९)
इन्द्रोऽप्येतन्नोत्सहेत्तात हर्तु-
मैश्वर्यं नो जीवति भीमसेने ।
धनञ्जये नकुले चैव सूत
तथा वीरे सहदेवेऽसहिष्णौ ॥ ५-२६-२६ (३२४८०)
सचेदेतां प्रतिपद्येत बुद्धिं
वृद्धो राजा सह पुत्रेण सूत ।
एवं रणे पाण्डवकोपदग्धा
न नश्येयुः सञ्जय धार्तराष्ट्राः ॥ ५-२६-२७ (३२४८१)
जानामि त्वं क्लेशमस्मासु वृत्तं
त्वां पूजयन्मञ्जयाहं क्षमेयम् ।
वच्चास्माकं कौरवैर्भूतपूर्वं
या नो वृत्तिधार्तराष्ट्रे तदाऽऽसीत् ॥ ५-२६-२८ (३२४८२)
अद्यापि सा तत्र तथैव वर्ततां

यान्ति गमिष्यामि यथा न्वमात्थ ।
द्वन्द्राप्रव्ये भवतु ममैव राज्यं
सूयोधनो यच्छतु भाग्नाग्यः ॥ ॥ ५-२६-२९ (३२४८३)

इति श्रीमन्महाभारते उद्योगपर्वणि सञ्जययानपर्वणि षड्विंशोऽध्यायः ॥
Mahabharata - Udyoga Parva - Chapter Footnotes

५-२६-३ अहीनं अनपगतम् ॥
३ ॥
५-२६-६ उक्तमर्थं प्रकृते योजयति संपश्येति ।अस्माभिरित्यत्र धार्तराष्ट्रान् अन्तर्भाव्याह ।पञ्चाधिकेन पुत्रशतेन सह धृतराष्ट्रस्य भोगं महान्तं पश्य। अथापि कृत्स्नं स्वस्यैव भवत्विति बुद्ध्याऽस्मान् राज्याद्दूरीकृत्य ततो भोगात् तृप्तिं न लभत इति भावः ॥
६ ॥
५-२६-७ पितृव्यनिन्दादोषाद्भीतः पुनराह नाश्रेयानिति ।यः पुण्यवत्तरः स विग्रहाणामीश्वरो भवति परैः सह विरोधं कृत्वा स्वोत्कर्षं करोति। अन्यस्तु तेनैव नश्यति। अतः स पुण्यवत्तर एव। अस्मद्दोषात्तु वयं वने दुःखमनुभवामो नतु परापराधेनेति भावः ।प्रावारान् दिव्यवासांसि संविवस्ते परिधत्ते। अन्यधा अश्रेयांश्चेद्राजा तर्हि अस्मान् कुरुभ्यः कथं संप्रणुदेत् दूरीकुर्यात्। शत्रूणां राज्याद्भ्रंशनं हि पुण्यवतामेव कर्म नाश्रेयसामिति भावः ॥
७ ॥
५-२६-८ अत्रेति यद्यप्येवं तथापि अन्तर्दाहकरोऽयं कामः अबुधस्य दुर्योधनादेरेव उचितो न बुधस्यास्मदादेरित्यर्थः ।शरीरे शरीरमध्ये स्थितं हृदयं दुनोति खेदयति ॥
८ ॥
५-२६-९ अबुधत्वमेवाह स्वयमिति ।विषमस्थः संकटस्थः सन् परेषु कर्णादिषु आत्मनो वृत्तं अशक्तत्वं तथा परेषां कर्णादीनामपि स दुर्योधनोऽभ्युपैति ॥
९ ॥
५-२६-१० गम्भीरकक्षे बहुतृणे गहने वने ।क्षेमं शोचेत् मम सुखं नास्तीति शोकं कुर्यात्। मुमुक्षुः तस्माद्दाहादात्मानं मोचयितुमिच्छुः ।शिशिरव्यापाये वसन्ते। तत्रापि निदाघकाले दाहकाले मध्याह्ने ॥

१० ॥
५-२६-११ लालप्यते दीनवद्भाषते । मन्दं अभाग्यम् ॥
५-२६-१२ विदुरस्य वाचोऽवमत्य सुतस्य प्रियैषी अधर्ममेव
संविशते आश्रयते ॥
५-२६-१३ कुरुभ्यः कुरूणां हितार्थम् । न सस्मार
नादृतवान्। पुत्रकाम्यात् पुत्रलोभात् ॥१३ ॥
५-२६-१४ असौ राजा सुतस्य प्रियैषी धर्मकामौ प्राजहात् त्यक्तवानिति
द्वयोः संबन्धः । ईर्षोः परोत्कर्षासहिष्णोः । संरम्भिणः क्रोधिनः
मन्युवशानुगस्य दैन्यभाजां कर्णादीनामनुगस्य। दौर्हृदैः पापैः
भावितस्य पूजितस्य ॥
१४ ॥
५-२६-१५ अनेयस्य अशिक्षणीयस्य । अश्रेय सः अभाग्यस्य प्रपश्यमानः
पश्यन्नपि ॥
१५ ॥
५-२६-२० तस्मिन् लुब्धे शमः न उपलभ्यः यः मन्नते मम वनंप्रति
गमने सति सर्वं स्वकमेवार्थं मन्यते इति योज्यम् ॥
२० ॥
५-२६-२१ पारणीयं जेतुं शक्यम् । युद्धानि गोग्रहृदौ आसन्। द्वीपो
द्वीपवत् युद्धप्रवाहेण उह्यमानस्याश्रयः ॥
२१ ॥
५-२६-२४ अनुबन्धं बध्नातीति बन्धो राज्यादिः तमनुमूल्य वर्तमानं
पाण्डवानां ममत्वं धार्तराष्ट्रो हर्तुं शक्यमन्यते । किंकृत्वा
। तेन किरीटिना सह तत्र राज्ये निमित्ते सति संयुगं संग्रामं गत्वा
प्राप्य । तालो हस्तचतुष्टयं तद्वदिना धनुर्विद्यावेदिना ॥
२४ ॥
५-२६-२७ एतां बुद्धिं राज्यस्य अप्रदाने नाशोऽस्तीत्येवंरूपाम् ॥
२७ ॥
५-२६-२८ भूतपूर्वं भीमबन्धनजतुगृहदाहादि ॥
२८ ॥
५-२६- ५-२६- ५-२६- ५-२६- ५-२६-

---

उद्योगपर्व-अध्यय०२७
॥ श्रीः ॥
५.२७. अध्यायः २७

Mahabharata - Udyoga Parva - Chapter Topics
सञ्जयेन युधिष्ठिरंप्रति युद्धे दोषोद्भावनपूर्वकं

परैभोगाप्रदानेपि शमाश्रयगम्यैव ॥॥क्कथनम् ॥१ ॥

Mahabharata - Udyoga Parva - Chapter Text

५-२७-० (३२४८४)
सञ्जय उवाच। ५-२७-०क्ष् (३४२८)
धर्मनित्या पाण्डव ते विचेष्टा
लोके श्रुता दृश्यते चापि पार्थ ।
महाश्रावं जीवित चाप्यनित्यं
संपश्य त्वं पाण्डव मा व्यनीनशः ॥ ५-२७-१ (३२४८५)
नचेद्भागं कुरवोऽन्यत्र युद्धा-
त्प्रयच्छेरंस्तुभ्यमजातशत्रो ।
भैक्षचर्यामन्धकवृष्णिराज्ये
श्रेयो मन्ये न तु युद्धेन राज्यम् ॥ ५-२७-२ (३२४८६)
अल्पकालं जीवितं यन्मनुष्ये
महास्रावं नित्यदुःखं चलं च ।
भूयश्च तद्यशसो नानुरूपं
तस्मात्पापं पाण्डव मा कृथास्त्वम् ॥ ५-२७-३ (३२४८७)
कामा मनुष्यं प्रसजन्त एते
धर्मस्य ये विघ्नमूलं नरेन्द्र ।
पूर्वं नरस्तान्मतिमान्प्रणिघ्नन्
लोके प्रशंसां लभतेऽनवद्याम् ॥ ५-२७-४ (३२४८८)
निबन्धनी ह्यर्थतृष्णेह पार्थ
तामिच्छतां बाध्यते धर्म एव ।
धर्मं तु यः प्रणृणीते स बुद्धः
कामे गृध्नो हीयतेऽर्थानुरोधात् ॥ ५-२७-५ (३२४८९)
धर्मं कृत्वा कर्मणां तात मुख्यं
महाप्रतापः सवितेव भाति ।
हीनो हि धर्मेण महीमपीमां
लब्ध्वा नरः सीदति पापबुद्धिः ॥ ५-२७-६ (३२४९०)
वेदोऽधीतश्चरितं ब्रह्मचर्यं
यज्ञैरिष्टं ब्राह्मणेभ्यश्च दत्तम् ।
परं स्थानं मन्यमानेन भूय
आत्मा दत्तो वर्षपूगं सुखेभ्यः ॥ ५-२७-७ (३२४९१)
सुखप्रिये सेवमानोऽतिवेलं
योगाभ्यासे यो न करोति कर्म ।

वित्तक्षये हीनसुखोऽतिवेलं
दुःखं शेते कामवेगप्रणुन्नः ॥ ५-२७-८ (३२४९२)
एवं पुनर्ब्रह्मचर्याऽप्रसक्तो
हित्वा धर्मं यः प्रकरोत्यधर्मम् ।
अश्रद्दधत्परलोकाय मूढो
हित्वा देहं तप्यते प्रेत्य मन्दः ॥ ५-२७-९ (३२४९३)
न कर्मणां विप्रणाशोऽस्त्यमुत्र
पुण्यानां वाऽप्यथवा पापकानाम् ।
पूर्वं कर्तुर्गच्छति पुण्यपापं
पश्चात्त्वेनमनुयात्येव कर्ता ॥ ५-२७-१० (३२४९४)
न्यायोपेतं ब्राह्मणेभ्योऽथ दत्तं
श्रद्धापूतं गन्धरसोपपन्नम् ।
अन्वाहार्येषूत्तमदक्षिणेषु
तथारूपं कर्म विख्यायते ते ॥ ५-२७-११ (३२४९५)
इह क्षेत्रे क्रियते पार्थ कार्यं
न वै किंचित्क्रियते प्रेत्य कार्यम् ।
कृतं त्वया पारलोक्यं च कर्म
पुण्यं महत्सद्भिरतिप्रशस्तम् ॥ ५-२७-१२ (३२४९६)
जहाति मृत्युं च जरां भयं च
न क्षुत्पिपासे मनसोऽप्रियाणि ।
न कर्तव्यं विद्यते तत्र किंचि-
दन्यत्र वै चेन्द्रियप्रीणनाद्धि ॥ ५-२७-१३ (३२४९७)
एवंरूपं कर्मफलं नरेन्द्र
मातापित्रोर्हृदयस्याप्रियेण ।
त्यज क्रोधं पाण्डव हर्षजं च
लोकावुभौ मा प्रहासीश्चिराया ॥ ५-२७-१४ (३२४९८)
अन्तं गत्वा कर्मणां या प्रशंसा
सत्यं दमं चार्जवमानृशंस्यम् ।
अश्वमेधं राजसूयं तथेष्ट्वा
पापस्यान्तं कर्मणो मा पुनर्गाः ॥ ५-२७-१५ (३२४९९)
तच्चेदेवं द्वेषरूपेण पार्थाः
करिष्यध्वं कर्म पापं चिराय ।
निवसध्वं वर्षपूगान्वनेषु
दुःखं वासं पाण्डवा धर्म एव ॥ ५-२७-१६ (३२५००)
प्रव्रज्यया यातयित्वा पुरस्ता-
दात्माधीनं यद्बलं ते तदाऽसीत् ।

नित्यं च वश्याः सचिवास्तवेमे
जनार्दनो युयुधानश्च वीरः ॥ ५-२७-१७ (३२५०१)
मत्स्यो राजा रुक्मरथः सपुत्रः
प्रहारिभिः सहपुत्रैर्विराटः ।
राजानस्ते ये विजिताः पुरस्ता-
त्त्वामेव ते संश्रयेयुः समस्ताः ॥ ५-२७-१८ (३२५०२)
महासहायः प्रतपन्बलस्थः
पुरस्कृतो वासुदेवार्जुनाभ्याम् ।
वरान्हनिष्यन्द्विषतो रङ्गमध्ये
व्यनेष्यथा धार्तराष्ट्रस्य दर्पम् ॥ ५-२७-१९ (३२५०३)
बलं कस्माद्वर्धयित्वा परस्य
निजान्कस्मात्कर्शयित्वा सहायान् ।
निरुष्य कस्माद्वर्षपूगान्वनेषु
युयुत्ससे पाण्डव हीनकाले ॥ ५-२७-२० (३२५०४)
अप्राज्ञो वा पाण्डव युद्ध्यमानो-
ऽधर्मज्ञो वा भूतिमथोऽभ्युपैति ।
प्रज्ञावान्वा बुद्ध्यमानोऽपि धर्मं
संस्तम्भाद्वा सोऽपि भूतेरपैति ॥ ५-२७-२१ (३२५०५)
नाधर्मे ते धीयते पार्थ बुद्धि-
र्न संरम्भात्कर्म चकर्थ पापम् ।
आत्थ किं तत्कारणं यस्य हेतोः
प्रज्ञाविरुद्धं कर्म चिकीर्षसीदम् ॥ ५-२७-२२ (३२५०६)
अव्याधिजं कटुकं शीर्षरोगि
यशोमुषं पापफलोदयं वा ।
सतां पेयं यन्न पिबन्त्यसन्तो
मन्युं महाराज पिब प्रशाम्य ॥ ५-२७-२३ (३२५०७)
पापानुबन्धं को नु तं कामयेत
क्षमैव ते ज्यायसी नोत भोगाः ।
यत्र भीष्मः शान्तनवो हतः स्या-
द्यत्र द्रोणः सहपुत्रो हतः स्यात् ॥ ५-२७-२४ (३२५०८)
कृपः शल्यः सौमदत्तिर्विकर्णो
विविंशतिः कर्णदुर्योधनौ च ।
एतान्हत्वा कीदृशं तत्सुखं स्या-
द्यद्विन्देथास्तदनुब्रूहि पार्थ ॥ ५-२७-२५ (३२५०९)
लब्ध्वाऽपीमां पृथिवीं सागरान्तां
जरामृत्यू नैव हि त्वं प्रजह्याः ।

प्रियाप्रिये सुखदुःखे च राज-
न्नैवं विद्वान्नैव युद्धं कुरु त्वम् ॥ ५-२७-२६ (३२५१०)
अमात्यानां यदि कामस्य हेतो-
रेवं युक्तं कर्म चिकीर्षसि त्वम् ।
अपक्रमेः स्वं प्रदायैव तेषां
मागास्त्वं वै देवयानात्पथोऽद्य ॥ ॥ ५-२७-२७ (३२५११)

इति श्रीमन्महाभारते उद्योगपर्वणि सञ्जययानपर्वणि सप्तविंशोऽध्यायः ॥

Mahabharata - Udyoga Parva - Chapter Footnotes

५-२७-१ महान् श्रावः श्रवणं यण महाकीर्तीत्यर्थः । मा व्यनीनशः क्रोधेन धार्तराष्ट्रन् मा नाशय ॥
१ ॥
५-२७-४ प्रसजन्ते स्पृशन्ति ॥
४ ॥
५-२७-५ गृघ्नः स्पृहावान् ॥
५ ॥
५-२७-६ कर्मणां अर्थकामाद्यर्थानां मध्ये ॥
६ ॥
५-२७-७ परं स्थानं परलोकं मन्यमानेन मानयता । पर्षपूगं वर्षगणम् । तत्रत्यसुखेभ्यस्तदर्थं त्वया आत्मापि दत्तः ॥
७ ॥
५-२७-८ सुखप्रिये भोगान् पुत्रादींश्च सेवमानः । योगाभ्यासे चित्तवृत्तिनिरोधमभ्यसितुं कर्म आसनप्राणायामादिकं न करोति ॥
८ ॥
५-२७-९ धर्मं च यज्ञादिरूपं हित्वा यः अधर्ममेव प्रकरोति संचिनोति ॥
९ ॥
५-२७-१० कृतं कर्म भोगं विना आत्मज्ञानं विना वा न नश्यतीत्यर्थः ॥
१० ॥
५-२७-११ अन्वाहार्येष्वित्यनेन श्रौतमिष्ट्यादिकं लक्ष्यते । तत्रहि अन्वाहार्यो दक्षिणात्वेन दीयते ॥
११ ॥
५-२७-१२ कार्यं धर्मः । प्रेत्य मृत्वा ॥
१२ ॥
५-२७-१३ परलोके कर्म नास्तीत्याह जहातीति ॥
१३ ॥

५-२७-१४ अत्र कर्म कुर्वन् कामवशादमुत्र फलं न प्रार्थयेतेत्यर्थः ।कर्मजं फलं त्यक्त्वा परेण वैराग्येण संपन्नो मोक्षार्थं योगाभ्यासमेव कुरुष्व किं राज्येन बन्धुनाशलभ्येनेत्यर्थः ॥
१४ ॥
५-२७-१६ तच्चेदिति ।भो पार्थाः भो पाण्डवाः तत्पापं कर्म गोत्रवधरूपं द्वेषरूपेण चिराय प्रागेव चेत्करिष्यध्वं तर्हि यद्वने वर्षपूगान् दुःखं वासं निवसध्वं तद्धर्म एवेति यत्तत्पदाध्याहारेण योज्यम्।राज्यार्थं सर्वलोकनाशमिच्छतां भवतां दुर्योधनेन यो वनवासः कारितः स धर्म एवेत्यर्थः ॥
१६ ॥
५-२७-१७ पुरस्तात् प्रव्रजनकाले एव यत् यतः पुरस्तादपि एतद्बलं आत्माधीनमेवासीत् ।ज्ञातिवधेनापि राज्यसुखमावश्यकं चेत्तर्हि पूर्वमेव सहायसत्वात्कुतो न युद्धं कृतमिति एतदादिश्लोकचतुष्टयर्थः ॥
१७ ॥
५-२७-२० हीनकाले गते काले इत्यर्थः ॥
२० ॥
५-२७-२१ सर्वथापि युद्धं न कर्तव्यं जयपराजययोरव्यवस्थितत्वादित्याह अप्राह इति ।भूतेरपैति दैवादिति शेषः ॥
२१ ॥
५-२७-२३ अव्याधिजं कटुकं पित्तादिकं विनाप्यरोचकम् ।यशोमुषं यशोहरम्।पेयं गिलनीयम्।मन्युं क्रोधम्।प्रशाम्य शान्तो भव ॥
२३ ॥
५-२७-२७ देवयानात्पथोऽर्चिरादिमार्गादपुनरावृत्तिफलात् गोत्रद्रोहेण मागा इत्यर्थः ॥
२७ ॥

---

उद्योगपर्व-अध्यय०२८
॥श्रीः ॥
५.२८. अध्यायः २८

Mahabharata - Udyoga Parva - Chapter Topics
युधिष्ठिरेण सञ्जयंप्रति धर्माधर्मनिर्णयस्य इतरासाधारणतया स्वस्य धर्मरहस्यज्ञश्रीकृष्णवचनानुययित्वकथनम् ॥१ ॥

Mahabharata - Udyoga Parva - Chapter Text

५-२८-० (३२५१२)
युधिष्ठिर उवाच। ५-२८-०क्ष् (३४२९)
असंशयं सञ्जय सत्यमेत-
द्धर्मो वरः कर्मणां यत्त्वमात्थ ।
ज्ञात्वा तु मां सञ्जय गर्हयेस्त्वं
यदि धर्मं यद्यधर्मं चरामि ॥ ५-२८-१ (३२५१३)
यत्राधर्मो धर्मरूपाणि धत्ते
धर्मः कृत्स्नो दृश्यतोऽधर्मरूपः ।
बिभ्रद्धर्मो धर्मरूपं तथा च
विद्वांसस्तं संप्रपश्यन्ति बुद्ध्या ॥ ५-२८-२ (३२५१४)
एवं तथैवापदि लिङ्गमेत-
द्धर्माधर्मौ नित्यवृत्ती भजेताम् ।
आद्यं लिङ्गं यस्य तस्य प्रमाण-
मापद्धर्मं सञ्जय तं निबोध ॥ ५-२८-३ (३२५१५)
लुप्तायां तु प्रकृतौ येन कर्म
निष्पादयेत्तत्परीप्सेद्विहीनः ।
प्रकृतिस्थश्चापदि वर्तमान
उभौ गर्ह्यौ भवतः सञ्जयैतौ ॥ ५-२८-४ (३२५१६)
अविनाशमिच्छतां ब्राह्मणानां
प्रायश्चित्तं विहितं यद्विधात्रा ।
संपश्येथाः कर्मसु वर्तमानान्
विकर्मस्थान्सञ्जय गर्हयेस्त्वम् ॥ ५-२८-५ (३२५१७)
मनीषिणां सत्त्विच्छेदनाय
विधियते सत्सु वृत्तिः सदैव ।
अब्राह्मणाः सन्ति तु ये न वैद्याः
सर्वोत्सङ्गं साधु मन्येत तेभ्यः ॥ ५-२८-६ (३२५१८)
तदध्वानः पितरो ये च पूर्वे
पितामहा ये च तेभ्यः परेऽन्ये ।
यज्ञैषिणो ये च हि कर्म कुर्यु-
र्नान्यं ततो नास्तिकोऽस्मीति मन्ये ॥ ५-२८-७ (३२५१९)
यत्किंचनेदं वित्तमस्यां पृथिव्यां
यद्देवानां त्रिदशानां परं यत् ।
प्राजापत्यं त्रिदिवं ब्रह्मलोकं
नाधर्मतः सञ्जय कामयेयम् ॥ ५-२८-८ (३२५२०)
धर्मेश्वरः कुशलो नीतिमांश्चा-

प्युपासिता ब्राह्मणानां मनीषी ।
नानाविधांश्चैव महाबलांश्च
राजन्यभोजाननुशास्ति कृष्णः ॥ ५-२८-९ (३२५२१)
यदि ह्यहं विसृजत्साम गर्ह्यो
नियुध्यमानो यदि जह्यां स्वधर्मम् ।
महायशाः केशवस्तद्ब्रवीतु
वासुदेवस्तूभयोरर्थकामः ॥ ५-२८-१० (३२५२२)
शैनेयोऽयं चेदयश्चान्धकाश्च
वार्ष्णेयभोजाः कुकुराः सृञ्जयाश्च ।
उपासीना वासुदेवस्य बुद्धिं
निगृह्य शत्रून्सुहृदो नन्दयन्ति ॥ ५-२८-११ (३२५२३)
वृष्ण्यन्धका ह्युग्रसेनादयो वै
कृष्णप्रणीताः सर्व एवेन्द्रकल्पाः ।
मनस्विनः सत्यपरायणाश्च
महाबला यादवा भोगवन्तः ॥ ५-२८-१२ (३२५२४)
काश्यो बभ्रुः श्रियमुत्तमां गतो
लब्ध्वा कृष्णं भ्रातरमीशितारम् ।
यस्मै कामान्वर्षति वासुदेवो
ग्रीष्मात्यये मेघ इव प्रजाऽभ्यः ॥ ५-२८-१३ (३२५२५)
ईदृशोऽयं केशवस्तात विद्वान्
विद्धि ह्येनं कर्मणां निश्चयज्ञम् ।
प्रियश्च नः साधुतमश्च कृष्णो
नातिक्रामे वचनं केशवस्य ॥ ५-२८-१४ (३२५२६)

इति श्रीमन्महाभारते उद्योगपर्वणि सञ्जययानपर्वणि अष्टाविंशोऽध्यायः ॥
Mahabharata - Udyoga Parva - Chapter Footnotes

५-२८-२ धर्माधर्मपरीक्षायां त्रैविध्यमाह यत्रेति । यत्र पुरुषे दम्भादिमति अधर्मः अभिचारार्थं मन्त्रजपादिः धर्म इत्येवान्ये जानन्ति। तथा प्रच्छन्नयोगिनि दत्तात्रेयादौ धर्मो रागद्वेषादिशून्यतारूपो योगधर्मोऽपि उन्मत्तवदाचरणादधर्मरूप इव दृश्यते। यत्र वसिष्ठादौ धर्मः धर्मरूप एव। यद्यपि चाण्डालादौ अधर्मोऽप्यधर्मरूप एवास्ति तथापि तस्यानुपादेयत्वान्त्रयमेव विचार्यम्। एतच्च त्वथापि विदुषा मयि विचार्यमित्याशयः ॥ २ ॥
५-२८-३ आपत्कालवशाद्धर्माधर्मयोर्व्यत्यासो जायत इत्याह

एवमिति ।एतदेवंरूपं लोकप्रत्यक्षं लिङ्गं ब्राह्मणस्य
स्वाध्यायप्रवचनादि।क्षत्रियस्य शौर्यादि।वैश्यस्य
कृष्यादि ।तत्तथैव यथोक्तमेव।तथापि नित्यवृत्ती
नित्यं वर्तेते तौ नित्यवृत्ती धर्माधर्मौ तल्लिङ्गं
भजेताम्।अयं भावः।क्षत्रलिङ्गं ब्राह्मणवैश्ययोरापदि
धर्मः अनापद्यधर्मः ।तथा चैकस्यैव लिङ्गस्य वर्णान्तरे
अवस्थाभेदाद्धर्मत्वमधर्मत्वं च नित्यमिति।तत्रापि विशेषमाह
आद्यमिति।आद्यं ब्राह्मणलिङ्गं याजनादि यस्यास्ति ब्राह्मणस्य तस्यैव
तत् प्रमाणं अव्यभिचारि।आपद्यपि क्षत्रियेण याजनाध्यापनादिकं
न कर्तव्यमित्यर्थः।एवं विधं तं आपद्धर्मं शास्त्रान्निबोध
बुध्यस्व ॥
३ ॥
५-२८-४ प्रकृतिः जीविकाहेतुभूतं धनम् ।तच्च क्षत्रियस्य
भूमिशस्त्रादिकम्।वैश्यस्य धपश्वादिकम्।तस्मिन्सर्वात्मना नष्टे
सति येन कर्म संध्योपासनादिकं निष्पादयेत् तत् भिक्षाटनादिकमपि
परिप्सेत्कर्तुमिच्छेत्।अन्यथा जीविकाया अभावात्कर्मलोपः
प्राणनाशश्च स्यादतोऽत्यन्तापदि तावान् विप्रधमाऽपीतरैरनुष्ठेय
एव।प्रकृतिस्थश्चेति।आपदि आपद्धर्मे प्रकृतिस्थोऽपि
यद्यापद्धर्ममनुसरेत्स लोभाद्गर्ह्याः।आपत्स्थोऽपि यदि प्राकृतं
धरममनुसरेत्स जीवनलोपात् कुटुम्बहिंसया च गर्ह्य इत्यर्थः।यो
न कर्मेति को डो पाठः ॥
४ ॥
५-२८-५ यत् यस्माद्धेतोः ।विधात्रा अविनाशं
ब्राह्मण्यविनाशाभावमिच्छतां ब्राह्मणानां आपदुत्तीर्णानां प्रायश्चित्तं
विहितम्।तस्माद्धएतोरापदि अन्यस्यान्यधर्माश्रयणं प्रसक्तमेवेति
ज्ञायते।अत एव एवचक्रायागस्माभिः कृतं भिक्षाटनं
नानुमितमित्यर्थः।एवमनापदि कर्मसु वर्तमानान् आपदि च
विकर्मस्थान् संपश्येथाः सम्यगेवेदमिति पश्येथाः।अन्यथा तु
आपदि कर्मस्थान् आत्मपरहिंस्रान् अनापदि विकर्मस्थांश्चतिलुब्धान्
विहर्गयेस्त्वम्।आपद्येतान्कर्मसु इति को डो पाठः ॥
५ ॥
५-२८-६ किंच मनीषिणां मनसः निग्रहं नाशं कर्तुमिच्छताम्
।ईष गतिहिंसादर्शनेष्वित्यस्य रूपम्।सत्त्विच्छेदनाय
सत्त्वस्य बुद्धिसत्त्वस्य चिदात्मना सह एकलोलीभूतस्य
विच्छेदनाय मुञ्जेषीकान्यायेन पृथक्करणाय सत्सु सतां
गृहेषु वृत्तिर्जीविका शास्त्रे विधीयते।वेदानिमं लोकममुं

च परित्यज्यात्मनात्मानमन्विच्छेदितिश्रुत्यात्मान्वेषणाय
सर्वसंन्यासपूर्वकं भिक्षाचर्यविधानात्। न ब्राह्मी वृत्तिः
कस्यापि निन्द्या। येतु अब्रह्माणा अपि वैद्याः विद्यानिष्ठाः न भवन्ति
तेषां भिक्षाचर्यस्याविधानात् तेभ्यः तेषामर्थे सर्वोत्सङ्गं
सर्वेषामुत्सङ्गं समीपं स्वधर्मसंयोगं आपदनापदोरुचितं साधु
मन्येत। सर्वोच्छेदमिति को डो पाठे तेभ्यस्तेषामर्थे भिक्षाद्यटनं
सर्वधर्मोच्छेदाय मन्येतेत्यर्थः ॥
६ ।५-२८-७ तदधान इति। पित्रादयः यज्ञैषिणो ये ते सर्वे
तदध्वानः स एव मयोक्तोऽध्वा मार्गो येषां ते तदध्वानोऽभूवन्। हि
प्रसिद्धम्। ये च कर्म न कुर्युः संन्यासिन इत्यर्थः। ते सर्वे
तदध्वानः। अहमपि आस्तिकेऽस्मिति ततोऽन्यं अध्वानं न मन्ये ॥
७ ॥
५-२८-९ धर्मेश्वरः धर्मफलस्य दाता ॥
९ ॥
५-२८-१२ कृष्णप्रणीताः कृष्णेनैव नीतिपथं नीताः ॥
१२ ॥

---

उद्योगपर्व-अध्यय०२९
॥ श्रीः ॥
५.२९. अध्यायः २९

Mahabharata - Udyoga Parva - Chapter Topics
श्रीकृष्णेन स्वस्य कुरुपाण्डेषु तुल्यवृत्तित्वकथनपूर्वकं
कर्मणामवश्यानुष्ठेयत्वसमर्थनम् ॥ १ ॥
तथा सञ्जयंप्रति दुर्योधनादिकृत्यनयस्मारणपूर्वकं स्वस्य
सन्ध्यर्थं तत्रागमनकथनम् ॥ २ ॥
तथा पाण्डवानां शमाशमान्यतरपक्षानुसारित्वकथनपूर्वकं
धृतराष्ट्रंप्रति यथाभिलषितकरणकथनचोदनम् ॥ ३ ॥

Mahabharata - Udyoga Parva - Chapter Text

५-२९-० (३२५२७)
वासुदेव उवाच। ५-२९-०क्ष् (३४३०)
अविनाशं सञ्जय पाण्डवाना-
मिच्छाम्यहं भूतिमेषां प्रियं च ।
तथा राज्ञो धृतराष्ट्रस्य सूत
समाशंसे बहुपुत्रस्य वृद्धिम् ॥ ५-२९-१ (३२५२८)

कामो हि मे सञ्जय नित्यमेव
नान्यद्ब्रूयां तान्प्रति शाम्यतेति ।
राज्ञश्च हि प्रियमेतच्छृणोमि
मन्ये चैतत्पाण्डवानां समक्षम् ॥ ५-२९-२ (३२५२९)
सुदुष्करस्तत्र शमो हि नूनं
प्रदर्शितः सञ्जय पाण्डवेन ।
यस्मिन्गृद्धो धृतराष्ट्रः सपुत्रः
कस्मादेषां कलहो नावमूर्च्छेत् ॥ ५-२९-३ (३२५३०)
न त्वं धर्मं विचरं सञ्जयेह
मत्तश्च जानामि युधिष्ठिराच्च
अथो कस्मात्सञ्जय पाण्डवस्य
उत्साहिनः पूरयतः स्वकर्म ॥ ५-२९-४ (३२५३१)
यथाख्यातमावमतः कुटुम्बे
पुरा कस्मान्साधुविलोपमात्थ ।
अस्मिन्विधौ वर्तमाने यथाव-
दुच्चावचा मतयो ब्राह्मणानाम् ॥ ५-२९-५ (३२५३२)
कर्मणाऽऽहुः सिद्धिमेके परत्र
हित्वा कर्म विद्यया सिद्धिमेके ।
नाभुञ्जानो भक्ष्यभोज्यस्य तृप्ये-
द्विद्वानपीह विहितं ब्राह्मणानाम् ॥ ५-२९-६ (३२५३३)
या वै विद्याः साधयन्तीह कर्म
तासां फलं विद्यते नेतरासाम् ।
तत्रेह वै दृष्टफलं तु कर्म
पीत्वोदकं शाम्यति तृष्णयाऽऽर्तः ॥ ५-२९-७ (३२५३४)
सोऽयं विधिर्विहितः कर्मणैव
संवर्तते सञ्जय तत्र कर्म ।
तत्र योऽन्यत्कर्मणः साधु मन्ये-
न्मोघं तस्यालपितं दुर्बलस्य ॥ ५-२९-८ (३२५३५)
कर्मणाऽमी भान्ति देवाः परत्र
कर्मणैवेह प्लवते मातरिश्वा ।
अहोरात्रे विदधत्कर्मणैव
अतन्द्रितो नित्यमुदेति सूर्यः ॥ ५-२९-९ (३२५३६)
मासार्धमासानथ नक्षत्रयोगा-
नतन्द्रितश्चन्द्रमाश्चाभ्युपैति ।
अतन्द्रितो दहते जातवेदाः
समिद्ध्यमानः कर्म कुर्वन्प्रजाभ्यः ॥ ५-२९-१० (३२५३७)

अतन्द्रिता भारमिमं महान्तं
बिभर्ति देवी पृथिवी वलेन ।
अतन्द्रिताः शीघ्रसपो वहन्ति
सन्तर्पयन्त्यः सर्वभूतानि नद्यः ॥ ५-२९-११ (३२५३८)
अतन्द्रितो वर्षति भूरितेजाः
सन्नादयन्नन्तरिक्षं दिशश्च ।
अतन्द्रितो ब्रह्मचर्यं चचार
श्रेष्ठत्वमिच्छन्बलभिद्देवतानाम् ॥ ५-२९-१२ (३२५३९)
हित्वा सुखं मनसश्च प्रियाणि
तेन शक्रः कर्मणा श्रैष्ठ्यमाप ।
सत्यं धर्मं पालयन्नप्रमत्तो
दमं तितिक्षां समतां प्रियं च ॥ ५-२९-१३ (३२५४०)
एतानि सर्वाण्युपसेवमानो
यो देवराज्यं मघवान्प्राप मुख्यम् ।
बृहस्पतिर्ब्रह्मचर्यं चचार
समीहितः संशिमात्मा यथावत् ॥ ५-२९-१४ (३२५४१)
हित्वा सुख प्रतिरुध्येन्द्रियाणि
तेन देवानामगमद्गौरवं सः ।
तथा नक्षत्राणि कर्मणाऽमुत्र भान्ति
रुद्रादित्या वसवोऽथापि विश्वे ॥ ५-२९-१५ (३२५४२)
यमो राजा वैश्रवणः कुबेरो
गन्धर्वयक्षाप्सरसश्च सूत ।
ब्रह्मविद्यां ब्रह्मचर्यं क्रियां च
निपेवमाणा ऋषयोऽमुत्र भान्ति ॥ ५-२९-१६ (३२५४३)
जानन्निमं सर्वलोकस्य धर्मं
विप्रेन्द्राणां क्षत्रियाणां विशां च ।
स कस्मात्त्वं जानतां ज्ञानवान्सन्
व्यायच्छसेक सञ्जय कौरवार्थे ॥ ५-२९-१७ (३२५४४)
आम्नायेषु नित्यसंयोगमस्य
तथाऽश्वमेधे राजसूये च विद्धि ।
संयुज्यते धनुपा वर्मणा च
हस्त्यश्वाद्यै रथशस्त्रैश्च भूयः ॥ ५-२९-१८ (३२५४५)
ते चेदिमे कौरवाणामुपाय-
मवगच्छेयुवधेनैव पार्थाः ।
धर्मत्राणं पुण्यमेषां कृतं स्या-
दार्ये वृत्ते भीमसेनं निगृह्य ॥ ५-२९-१९ (३२५४६)

ते चेत्पित्र्ये कर्मणि वर्तमाना
आपद्येरन्दिष्टवशेन मृत्युम् ।
यथाशक्त्यापूरयन्तः स्वकर्म
तदप्येषां निधनं स्यात्प्रशस्तम् ॥ ५-२९-२० (३२५४७)
उताहो त्वं मन्यसे शाम्यमेव
राज्ञां युद्धे वर्तते धर्मतन्त्रम् ।
अयुद्धे वा वर्तते धर्मतन्त्रं
तथैव ते वाचमिमां श्रृणोमि ॥ ५-२९-२१ (३२५४८)
चातुर्वर्ण्यस्य प्रथमं संविभाग-
मवेक्ष्य त्वं सञ्जय स्वं च कर्म ।
निशम्याथो पाण्डवानां च कर्म
प्रशंस वा निन्द वा या मतिस्ते ॥ ५-२९-२२ (३२५४९)
अधीयीत ब्राह्मणो वै यजेत
दद्यादीयात्तीर्थमुख्यानि चैव ।
अध्याप्रयेद्याजयेच्चापि याज्यान्
प्रतिग्रहान्वा विहितान्प्रतीच्छेत् ॥ ५-२९-२३ (३२५५०)
ग अधीयीत क्षत्रियोऽथो यजेत
दद्याद्धनं न तु याचेत किंचित् ।
न याजयेन्न तु चाध्यापयीत
एवं स्मृतः क्षत्रधर्मः पुराणः ॥' ५-२९-२४ (३२५५१)
तथा राजन्यो रक्षणं वै प्रजानां
कृत्वा धर्मेणाप्रमत्तोऽथ दत्त्वा ।
यज्ञैदिष्ट्वा सर्ववेदानधीत्य
दारान्कृवा पुण्यकृदावसेद्गृहान् ॥ ५-२९-२५ (३२५५२)
स धर्मात्मा धर्ममधीत्य पुण्यं
यदृच्छया व्रजति ब्रह्मलोकम् ।
वैश्योऽधीत्य कृषिगोरक्षपण्यै-
र्वित्तं चिन्वन्पालयन्नप्रमत्तः ॥ ५-२९-२६ (३२५५३)
प्रियं कुर्वन्ब्राह्मणक्षत्रियाणां
धर्मशीलः पुण्यकृदावसेद्गृहान् ।
परिचर्या वन्दनं ब्राह्मणानां
नाधीयीत प्रतिषिद्धोऽस्य यज्ञः ।
नित्योत्थितो भूतयेऽतन्द्रितः स्या-
देवं स्मृतः शूद्रधर्मः पुराणः ॥ ५-२९-२७ (३२५५४)
एतान्राजा पालयन्नप्रमत्तो
नियोजयन्सर्ववर्णान्स्वधर्मे ।

अकामात्मा समवृत्तिः प्रजासु
नाधार्मिकाननुरुध्येत कामात् ॥ ५-२९-२८ (३२५५५)
श्रेयांस्तस्माद्यदि विद्येत कश्चि-
दभिज्ञातः सर्वधर्मोपपन्नः ।
स तं द्रष्टुमनुशिष्यन्प्रजानां
न चैतद्बुध्येदिति तस्मिन्नसाधुः ॥ ५-२९-२९ (३२५५६)
यदा गृध्येत्परभूतौ नृशंसो
विधिप्रकोपाद्बलमाददानः ।
ततो राज्ञामभवद्युद्धमेत-
त्तत्र जातं वर्म शस्त्रं धनुश्च ।
इन्द्रेणैतद्दस्युवधाय कर्म
उत्पादितं वर्म शस्त्रं धनुश्च ॥ ५-२९-३० (३२५५७)
तत्र पुण्यं दस्युवधेन लभ्यते
सोऽयं दोषः कुरुभिस्तीव्ररूपः ।
अधर्मज्ञैर्धर्ममबुध्यमानैः
प्रादुर्भूतः सञ्जय साधु तन्न ॥ ५-२९-३१ (३२५५८)
तत्र राजा धृतराष्ट्रः सपुत्रो
धर्म्यं हरेत्पाण्डवानामकस्मात् ।
नावेक्षन्ते राजधर्मं पुराणं
तदन्वयाः कुरवः सर्व एव ॥ ५-२९-३२ (३२५५९)
स्तेनो हरेद्यत्र धनं ह्यदृष्टः
प्रसह्य वा यत्र हरेत दृष्टः ।
उभौ गर्ह्यौ भवतः सञ्जयैतौ
किं वै पृथक्त्वं धृतराष्ट्रस्य पुत्रे ॥ ५-२९-३३ (३२५६०)
सोऽयं लोभान्मन्यते धर्ममेतं
यमिच्छति क्रोधवशानुगामी ।
भागः पुनः पाण्डवानां निविष्ट-
स्तं नः कस्मादाददीरन्परे वै ॥ ५-२९-३४ (३२५६१)
अस्मिन्पदे युध्यतां नो वधोऽपि
श्लाघ्यः पित्र्यं पपराज्याद्विशिष्टम् ।
एतान्धर्मान्कौरवाणां पुराणा-
नाचक्षीथाः सञ्जय राजमध्ये ॥ ५-२९-३५ (३२५६२)
एते मदान्मृत्युवशाभिपन्नाः
समानीता धार्तराष्ट्रेण मूढाः ।
इदं पुनः कर्म पापीय एव
सभामध्ये पश्य वत्तं कुरूणाम् ॥ ५-२९-३६ (३२५६३)

प्रियं भार्यां द्रौपदीं पाण्डवानां
यशस्विनीं शीलवृत्तोपपन्नाम् ।
यदुपैक्षन्त कुरवो भीष्ममुख्याः
कामानिगेनोपरुद्धां व्रजन्तीम् ॥ ५-२९-३७ (३२५६४)
तां चेत्तदा ते सकुमारवृद्धा
अवारयिष्यन्कुरवः समेताः ।
मम प्रियं धृतराष्ट्रोऽकरिष्यत्
पुत्राणां च कृतमस्याभविष्यत् ॥ ५-२९-३८ (३२५६५)
दुःशासनः प्रतिलोम्यान्निनाय
सभामध्ये श्वशुराणां च कृष्णाम् ।
सा तत्र नीता करुणं व्यपेक्ष्य
नान्यं क्षत्तुर्नाथमवाप किंचित् ॥ ५-२९-३९ (३२५६६)
कार्पण्यादेव सहितास्तत्र भूपा
नाशक्नुवन्प्रतिवक्तुं सभायाम् ।
एकः क्षत्ता धर्म्यमर्थं ब्रुवाणो
धर्मबुद्ध्या प्रत्युवाचाल्पबुद्धिम् ॥ ५-२९-४० (३२५६७)
अबुद्ध्वा त्वं धर्ममेतं सभाया-
अथेच्छसे पाण्डवस्योपदेष्टुम् ।
कृष्णा त्वेतत्कर्म चकार शुद्धं
सुदुष्करं तत्र सभां समेत्य ॥ ५-२९-४१ (३२५६८)
येन कृच्छ्रात्पाण्डवानुज्जहार
तथाऽऽत्मानं नौरिव सागरौघात् ।
यत्राब्रवीत्सूतपुत्रः सभायां
कृष्णां स्थितां श्वशुराणां समीपे ॥ ५-२९-४२ (३२५६९)
न ते गतिर्विद्यते याज्ञसेनि
प्रपद्येथा धार्तराष्ट्रस्य वेश्म ।
पराजितास्ते पतयो न सन्ति
पतिं चान्यं भामिनि त्वं वृणीष्व ॥ ५-२९-४३ (३२५७०)
यो बीभत्सोर्हृदये प्रोत आसी-
दस्थि छिन्दन्मर्मघाती सुघोरः ।
कर्णाच्छरो वाङ्भयस्तिग्मतेजाः
प्रतिष्ठितो हृदये फाल्गुनस्य ॥ ५-२९-४४ (३२५७१)
कृष्णाजिनानि परिधित्समानान्
दुःशासनः कटुकान्यभ्यभाषत् ।
एते सर्वे षण्डतिला विनष्टाः
क्षयं गता नरकं दीर्घकालम् ॥ ५-२९-४५ (३२५७२)

गान्धारराजः शकुनिर्निकृत्या
यदब्रवीद्द्यूतकाले स पार्थम् ।
पराजितो नकुलः किं तवास्ति
कृष्णया त्वं दीव्य वै याज्ञसेन्या ।
जानासि त्वं सञ्जय सर्वमेतत्
द्यूते वाक्यं गर्ह्यमेवं यथोक्तम् ॥ ५-२९-४६ (३२५७३)
स्वयं त्वहं प्रार्थये तत्र गन्तुं
समाधातुं कार्यमेतद्विपन्नम् ।
ग जानासि त्वं धार्तराष्ट्रस्य मोहं
दुरात्मनः पापवशानुगस्य ' ॥ ५-२९-४७ (३२५७४)
अहापयित्वा यदि पाण्डवार्थं
शमं कुरूणामपि चेच्छकेयम् ।
पुण्यं च मे स्याच्चरितं महोदयं
मुच्येरंश्च कुरवो मृत्युपाशात् ॥ ५-२९-४८ (३२५७५)
अपि मे वाचं भाषमाणस्य काव्यां
धर्मारामामर्थवतीमहिंस्राम् ।
अवेक्षेरन्धार्तराष्ट्राः समक्षं
मां च प्राप्तं कुरवः पूजयेयुः ॥ ५-२९-४९ (३२५७६)
अतोऽन्यथा रथिना फाल्गुनेन
भीमेन चैवाहवदंशितेन ।
बलोत्सिक्तान्धार्तराष्ट्रांश्च विद्धि
प्रदह्यमानान्कर्मणा स्वेन पापान् ॥ ५-२९-५० (३२५७७)
पराजितान्पाण्डवेयांस्तु वाचो
रौद्रा रूक्षा भाषते धार्तराष्ट्रः ।
गदाहस्तो भीमसेनोऽप्रमत्तो
दुर्योधनं स्मारयिता हि काले ॥ ५-२९-५१ (३२५७८)
सुयोधनो मन्युमयो महाद्रुमः
स्कन्धः कर्णः शकुनिस्तस्य शाखाः ।
दुःशासनः पुष्कफले समृद्धे
मूलं राजा धृतराष्ट्रोऽमनीषी ॥ ५-२९-५२ (३२५७९)
युधिष्ठिरो धर्ममयो महाद्रुमः
स्कन्धोऽर्जुनो भीमसेनोऽस्य शाखाः ।
माद्रीपुत्रौ पुष्पफले समृद्धे
मूलं त्वहं ब्रह्म च ब्राह्मणाश्च ॥ ५-२९-५३ (३२५८०)
ग वनं राजा धृतराष्ट्रः सपुत्रः
सिंहा वने सञ्जय पाण्डवेयाः ।

सिंहाभिगुप्तं न वनं विनश्येत्
सिंहो न नश्येत वनाभिगुप्तः ॥ ५-२९-५४ (३२५८१)
निर्वनो वध्यते सिंहो निःसिंहं वध्यते वनम् ।
तस्मात्सिंहो वनं रक्षेद्वनं सिंहं च पालयेत् ॥' ५-२९-५५ (३२५८२)
वनं राजा धृतराष्ट्रः वने व्याघ्राश्च पाण्डवाः ।
मा वनं छिन्धि सव्याघ्रं व्याघ्रा नेशुर्वनं विना ॥ ५-२९-५६ (३२५८३)
निर्वनो वध्यते व्याघ्रो निर्व्याघ्रं छिद्यते वनम् ।
तस्माद्व्याघ्रो वनं रक्षेद्वयं व्याघ्रं च पालयेत् ॥ ५-२९-५७ (३२५८४)
लताधर्मा धार्तराष्ट्राः सालाः सञ्जय पाण्डवाः ।
न लता वर्धते जातु महाद्रुममनाश्रिता ॥ ५-२९-५८ (३२५८५)
स्थिताः शुश्रूषितुं पार्थाः स्थिता योद्धुमरिन्दमाः ।
यत्कृत्यं धृतराष्ट्रस्य तत्करोतु नराधिपः ॥ ५-२९-५९ (३२५८६)
स्थिताः शमे महात्मानः पाण्डवा धर्मचारिणः ।
योधाः समर्थास्तद्विद्वन्नाचक्षीथा यथातथम् ॥ ॥ ५-२९-६० (३२५८७)

इति श्रीमन्महाभारते उद्योगपर्वणि सञ्जययानपर्वणि
एकोनत्रिंशोऽध्यायः ॥
Mahabharata - Udyoga Parva - Chapter Footnotes

५-२९-२ शाम्यतेति वचनादन्यत्तान्प्रति न ब्रूयाम् । पाण्डवानां
समक्षं राज्ञो युधिष्ठिराच्च एतदेव शृणोमि। अहं च एतन्मन्ये
मानयामि ॥
२ ॥
५-२९-३ तत्र राज्ये निमित्ते । गृद्धः लिप्सावान् । एवं सति एषां
कौरवाणां कस्माद्धेतोः कलहः नावमूर्च्छेत् ॥
३ ॥
५-२९-४ विचरं विचलितम् । पूरयतः पालयतः ॥
४ ॥
५-२९-५ यथाख्यातं प्रसिद्धिमनतिक्रम्य आवसतः अधितिष्टतः
साधुविलोपं धर्मलोपं युधिष्ठिरे कस्माद्धेतोः आत्थ उक्तवान् त्वम्
। अस्मिन्विधौ ॥
५ ॥
५-२९-१७ व्यायच्छसे निग्रहं करोषि ॥
१७ ॥
५-२९-१८ विद्या धर्मः शौर्यं च युधिष्ठिरे पुष्कलमस्तीति
नायमन्येन शिक्षणीयो जेतुं वा शक्य इत्यर्थः ॥

१८ ॥
५-२९-१९ कौरवाणां अवधेन उपायम् । राज्यप्राप्ताविति शेषः। एषां एतैः। भीमसेनं आर्ये वृत्ते अहिंसायां निगृह्य पुण्यमेव कृतं स्यात् ॥
१९ ॥
५-२९-२१ शाम्यमेव शमः कार्यएवेति मन्यसे तर्हि धर्ममन्त्रं धर्मानुष्ठानं युद्धपक्षेऽस्ति उत अयुद्धपक्षे । तयोर्मध्ये यदेव वक्ष्यसि तथैव ते वाचं श्रृणोमि करिष्यामीत्यर्थः ॥
२१ ॥
५-२९-२६ सः क्षत्रियः अधीत्य प्राप्य ॥
२६ ॥
५-२९-२९ तस्मात् राज्ञः श्रेयान् प्रशस्ततरः अभिज्ञातः ज्ञानतः धर्मतश्च यदि कश्चिदस्ति स तं युधिष्ठिरं प्रजानां कर्मणि षष्ठी । प्रजाः द्रष्टुं राज्यं प्राप्तुमित्यर्थः। अनुशिष्यन् अनुशासितुमिच्छत् एतन्मदुक्तं धर्मजातं युधिष्ठिरेऽस्तीति बुध्येत्। नच तस्मिन्नसाधुः युधिष्ठिरेऽसाधुरधर्मो न चास्तीत्यपि बुध्येत् ॥
२९ ॥
५-२९-३० परभूतौ परैश्वर्ये नृशंसश्चोरकल्पो राजा विधिप्रकोषात् दैवप्रातकूल्यात् गृद्धयेत् । ततो हेतोः राज्ञां परस्परं युद्धं समभवत् । कर्म युद्धम्। वर्म कवचम्। शस्त्रं खङ्गादि धनुश्चेति ॥
३० ॥
५-२९-३१ कुरुभिर्निमित्तभूतैरयं दोषः वञ्जनारूपः प्रादुर्भूतः ॥
३१ ॥
५-२९-३२ धर्म्यं धर्मादागतं पित्र्यं राज्यम् । तदन्वयास्तदनुसारिणः ॥
३२ ॥
५-२९-३३ पृथक्त्वं स्तेनादन्यत्वम् ॥
३३ ॥
५-२९-३४ एतं छलेन राज्यापहारम् । निविष्टः वनवासादूर्ध्वं राज्यं ग्राह्यमिति कौरवेषु न्यासरूपेण स्थितः तं भागं नः अस्माकं परे कस्मात् आददीरन् गृहीतवन्तः ॥
३४ ॥
५-२९-३५ पदे पदनीये अवश्यग्राह्ये भागे निमित्ते ॥
३५ ॥
५-२९-३७ कामानुगेन रजसा । उपरुद्धां गृहकर्मतो निरुद्धाम् ॥

३७ ॥
५-२९-३९ प्रातिलोम्यात् अक्रमेण ॥
३९ ॥
५-२९-४० कार्पण्यात् दैन्यात् ॥
४० ॥
५-२९-४१ पाण्डवस्य धर्मं उपदेष्टुं इच्छसे ॥
४१ ॥
५-२९-४७ विपन्नं नष्टं समाधातं समीकर्तुम् ॥
४७ ॥
५-२९-४८ शकेयं शक्तश्चेत्स्याम् ॥
४८ ॥
५-२९-४९ काव्यां शोक्रीम् ॥
४९ ॥
५-२९-५१ रौद्राः मर्मच्छिदः । रूक्षाः निःस्नेहाः। भाषते द्यूतावसानेऽभाषत ॥
५१ ॥
५-२९-५३ ब्रह्म वेदः ॥
५३ ॥

---

उद्योगपर्व-अध्यय०३०
॥ श्रीः ॥
५.३०. अध्यायः ३०

Mahabharata - Udyoga Parva - Chapter Topics
सञ्जयेन गमनाय युधिष्ठिराद्यामन्त्रणम् ॥ १ ॥
युधिष्ठिरेण सञ्जयंप्रति आभीष्मं आखञ्जकुब्जं सर्वेषु यथायोग्यं वन्दनादिपूर्वकं स्वस्य कुशलनिवेदनचोदनम् ॥ २ ॥
तथा दुर्योधनंप्रति सन्धिविग्रहान्यतरपक्षस्वीकरणाभ्यनुज्ञानकथनचोदनम् ॥ ३ ॥

Mahabharata - Udyoga Parva - Chapter Text

५-३०-० (३२५८८)
सञ्जय उवाच। ५-३०-०क्ष् (३४३१)
आमन्त्रये त्वां नरदेवदेव
गच्छाम्यहं पाण्डव स्वस्ति तेऽस्तु ।
कच्चिन्न वाचा वृजिनं हि किंचि-

दुच्चारितं मे मनसोऽभिषङ्गात् ॥ ५-३०-१ (३२५८९)
जनार्दनं भीमसेनार्जुनौ च
माद्रीसुतौ सात्यकिं चेकितानम् ।
आमन्त्र्य गच्छामि शिवं सुखं वः
सौम्येन मां पश्यत चक्षुषा नृपाः ॥ ५-३०-२ (३२५९०)
युधिष्ठिर उवाच। ५-३०-३क्ष् (३४३२)
अनुज्ञातः सञ्जय स्वस्ति गच्छ
न नः स्मरस्यप्रियं जातु विद्वन् ।
विद्मश्च त्वां ते च वयं च सर्वे
शुद्धात्मानं मध्यगतं सभास्थम् ॥ ५-३०-३ (३२५९१)
आप्तो दूतः सञ्जय सुप्रियोऽसि
कल्याणवाक् शीलवांस्तृप्तिमांश्च ।
न मुह्येस्त्वं सञ्जय जातु मत्या
न च क्रुद्ध्येरुच्यमानोऽपि तत्त्वम् ॥ ५-३०-४ (३२५९२)
न मर्मगां जातु वक्ताऽसि रूक्षां
नोपश्रुतिं कटुकां नोति शुष्काम् ।
धर्मारामामर्थवतीमहिंस्रा-
मेतां वाचं तव जानीम सूत ॥ ५-३०-५ (३२५९३)
त्वमेव नः प्रियतमोऽसि दूत
इहागच्छेद्विदुरो वा द्वितीयः ।
अभीक्ष्णदृष्टोऽसि पुरातनस्त्वं
धनञ्जयस्यात्मसमः सखाऽसि ॥ ५-३०-६ (३२५९४)
इतो गत्वा सञ्जय क्षिप्रमेव
उपातिष्ठेथा ब्राह्मणान्ये तदर्हाः ।
विशुद्धवीर्यांश्चरणोपपन्नाः
कुले जाताः सर्वधर्मोपपन्नाः ॥ ५-३०-७ (३२५९५)
स्वाध्यायिनो ब्राह्मणा भिक्षवश्च
तपस्विनो ये च नित्या वनेषु ।
अभिवाद्य तान्मद्वचनेन वृद्धां-
स्तथैव तान्कुशलं तात पृच्छेः ॥ ५-३०-८ (३२५९६)
पुरोहितं धृतराष्ट्रस्य राज्ञ-
स्तथाचार्यानृत्विजो ये च तस्य ।
तांश्चैवत्वं सहितान्वै यथावत्
सङ्गच्छेथाः कुशलेनैव सूत ॥ ५-३०-९ (३२५९७)
अश्रोत्रिया ये च वसन्ति वृद्धा
मनस्विनः शीलबलोपपन्नाः ।

आशंसन्तोऽस्माकमनुस्मरन्तो
यथाशक्ति धर्ममात्रां चरन्तः ॥ ५-३०-१० (३२५९८)
श्लाघस्व मां कुशलिनं स्म तेभ्यो
ह्यनामयं तात पृच्छेर्जघन्यम् ।
ये जीव्ति व्यवहारेण राष्ट्रे
पशूंश्च ये पालयन्तो वसन्ति ।
ग कृषीवला बिभ्रति ये च लोकं
तेषां सर्वषां कुशलं स्म पृच्छेः ॥' ५-३०-११ (३२५९९)
आचार्य इष्टो नयगो विधेयो
वेदानभीप्सन्ब्रह्मचर्यं चचार ।
योऽस्त्रं चतुष्पात्पुनरेव चक्रे
द्रोणः प्रसन्नोऽभिवाद्यस्त्वयासौ ॥ ५-३०-१२ (३२६००)
अधीतविद्यश्चरणोपपन्नो
योऽस्त्रं चतुष्पात्पुनरेव चक्रे ।
गन्धर्वपुत्रप्रतिमं तरस्विनं
तमश्वत्थामानं कुशलं स्म पृच्छेः ॥ ५-३०-१३ (३२६०१)
शारद्वतस्यावसथं स्म गत्वा
महारथस्यात्मविदां वरस्य ।
त्वं मामभीक्ष्णं परिकीर्तयन्वै
कृपस्य पादौ सञ्जय पाणिना स्पृशेः ॥ ५-३०-१४ (३२६०२)
यस्मिन्शौर्यमानृशंस्यं तपश्च
प्रज्ञा शीलं श्रुतरूपे धृतिश्च ।
पादौ गृहीत्वा कुरुसत्तमस्य
भीष्मस्य मां तत्र निवेदयेथाः ॥ ५-३०-१५ (३२६०३)
प्रज्ञाचक्षुर्यः प्रणेता कुरूणां
बहुश्रुतो वृद्धसेवी मनीषी ।
तस्मै राज्ञे स्थविरायाभिवाद्य
आचक्षीथाः सञ्जय मामरोगम् ॥ ५-३०-१६ (३२६०४)
ज्येष्ठः पुत्रो धृतराष्ट्रस्य मन्दो
मूर्खः शठः सञ्जय पापशीलः ।
यस्यापवादः पृथिवीं याति सर्वां
सुयोधनं कुशलं तात पृच्छेः ॥ ५-३०-१७ (३२६०५)
भ्राता कनीयानपि तस्य मन्द-
स्तथाशीलः सञ्जय सोपि शश्वत् ।
महेष्वासः शूरतमः कुरूणां
दुःशासनः कुशलं तात वाच्यः ॥ ५-३०-१८ (३२६०६)

यस्य कामो वर्तते नित्यमेव
नान्यः शमाद्भारतानामिति स्म ।
स बाह्लिकानामृषभो मनीषी
पुनर्यथा माऽभिवदेत्प्रसन्नः ॥ ५-३०-१९ (३२६०७)
ग भूरिश्रवास्तात निपातयोधी
महेष्वासो रथिनामुत्तमोऽग्र्यः ।
गत्वा स्म तं मद्वचनेन ब्रूयाः
शल्यं तथा मद्वचनात्प्रतीतः ॥ ५-३०-२० (३२६०८)
महेष्वासो रथिनामुत्तमोऽग्र्यः
समः शलो रक्षिता पृष्ठमस्य ।
ह्रीनिषेवो देविता यो मताक्षः
सत्यव्रतः पुरुमित्रो जयश्च ।
ये प्रस्थानं तत्र मे नाभ्यनन्दं-
स्तेषां सर्वेषां कुशलं तात पृच्छेः ॥' ५-३०-२१ (३२६०९)
गुणैरनेकैः प्रवरैश्च युक्तो
विज्ञानवान्नैव च निष्ठुरो यः ।
स्नेहादमर्षं सहते सदैव
स सोमदत्तः पूजनीयो मतो मे ॥ ५-३०-२२ (३२६१०)
अर्हत्तमः कुरुषु सौमदत्तिः
स नो भ्राता संजय मत्सखा च ।
महेष्वासो रथिनामुत्तमोऽर्हः
सहामात्यः कुशलं तस्य पृच्छेः ॥ ५-३०-२३ (३२६११)
ये चैवान्ये कुरुमुख्या युवानः
पुत्राः पौत्रा भ्रातरश्चैव ये नः ।
यंयमेषां मन्यसे येन योग्यं
तत्तत्प्रोच्यानामयं सूत वाच्याः ॥ ५-३०-२४ (३२६१२)
ये राजानः पाण्डवायोधनाय
समानीता धार्तराष्ट्रेण केचित् ।
वशातयः साल्वकाः केकयाश्च
तथाम्बष्ठा ये त्रिगर्ताश्च मुख्याः ॥ ५-३०-२५ (३२६१३)
प्राच्योदीच्या दाक्षिण्यात्याश्च शूरा-
स्तथा प्रतीच्याः पार्वतीयाश्च सर्वे ।
अनृशंसाः शीलवृत्तोपपन्ना-
स्तेषां सर्वेषां कुशलं सूत पृच्छेः ॥ ५-३०-२६ (३२६१४)
हस्त्यारोहा रथिनः सादिनश्च
पदातयश्चार्यसङ्घा महान्तः ।

आख्याय मां कुशलिनं स्म नित्य-
मनामयं परिपृच्छेः समग्रान् ॥ ५-३०-२७ (३२६१५)
तथा राज्ञो ह्यर्थयुक्तानमात्यान्
दौवारिकान्ये च सेनां नयन्ति ।
आयव्ययं ये गमयन्ति नित्य-
मर्थांश्च ये महतश्चिन्तयन्ति ॥ ५-३०-२८ (३२६१६)
वृन्दारकं कुरुमध्येष्वमूढं
महाप्रज्ञं सर्वधर्मोपपन्नम् ।
न तस्य युद्धं रोचते वै कदाचि-
द्वैश्यापुत्रं कुशलं तात पृच्छेः ॥ ५-३०-२९ (३२६१७)
निकर्तने देवने योऽद्वितीय-
श्छन्नोपधः साधुदेवी मताक्षः ।
यो दुर्जयो देवरथेन सङ्ख्ये
स चित्रसेनः कुशलं तात वाच्यः ॥ ५-३०-३० (३२६१८)
गान्धारराजः शकुनिः पार्वतीयो
निकर्तने योऽद्वितीयोऽक्षदेवी ।
मानं कुर्वन्धार्तराष्ट्रस्य सूत
मिथ्याबुद्धेः कुशलं तात पृच्छेः ॥ ५-३०-३१ (३२६१९)
यः पाण्डवानेकरथेन वीरः
समुत्सहत्यप्रधृष्यान्विजेतुम् ।
यो मुह्यतां मोहयिताऽद्वितीयो
वैकर्तनः कुशलं तस्य पृच्छेः ॥ ५-३०-३२ (३२६२०)
स एव भक्तः स गुरुः स भर्ता
स वै पिता स च माता सुहृच्च ।
अगाधबुद्धिर्विदुरो दीर्घदर्शी
स नो मन्त्री कुशलं तं स्म पृच्छेः ॥ ५-३०-३३ (३२६२१)
वृद्धाः स्त्रियो याश्च गुणोपपन्ना
ज्ञायन्ते नः सञ्जय मातरस्ताः ।
ताभिः सर्वाभिः सहिताभिः समेत्य
स्त्रीभिः सवृद्धाभिरभिवादं वदेथाः ॥ ५-३०-३४ (३२६२२)
कच्चित्पुत्रा जीवपुत्राः सुसम्य-
ग्वर्तन्ते वो वृत्तिमनृशंसरूपाः ।
इति स्मोत्का सञ्जय ब्रूहि पश्चा-
दजातशत्रुः कुशली सपुत्रः ॥ ५-३०-३५ (३२६२३)
राज्ञो भार्याः सञ्जय वेत्थ तत्र
तासां सर्वासां कुशलं तात पृच्छेः ।

सुसंगुप्ताः सुरभयोऽनवद्याः
कच्चिद्गृहानावसथाप्रमत्ताः ॥ ५-३०-३६ (३२६२४)
कच्चिद्वृत्तिं श्वशुरेषु भद्राः
कल्याणीं वर्तध्वमनृशंसरूपाम् ।
यथा च वः स्युः पतयोऽनुकूला-
स्तथा वृत्तिमात्मनः स्थापयध्वम् ॥ ५-३०-३७ (३२६२५)
या नः स्नुषाः सञ्जय वेत्थ तत्र
प्राप्ताः कुलेभ्यश्च गुणोपपन्नाः ।
प्रजावत्यो ब्रूहि समेत्य ताश्च
युधिष्ठिरो वोऽभ्यवदत्प्रसन्नः ॥ ५-३०-३८ (३२६२६)
कन्याः स्वजेथाः सदनेषु सञ्जय
अनामयं मद्वचनेन पृष्ट्वा ।
कल्याणा वः सन्तु पतयोऽनुकूला
यूयं पतीनां भवतानुकूलाः ॥ ५-३०-३९ (३२६२७)
अलङ्कृता वस्त्रवत्यः सुगन्धा
अबीभत्साः सुखिता भोगवत्यः ।
लघु यासां दर्शनं वाक्व लघ्वी
वेशस्त्रियः कुशलं तात पृच्छेः ॥ ५-३०-४० (३२६२८)
दास्यः स्युर्या ये च दासाः कुरूणां
तदाश्रया बहवः कुब्जखञ्जाः ।
आख्याय मां कुशलिनं स्म तेभ्यो-
ऽप्यनामयं परिपृच्छेर्जघन्यम् । ५-३०-४१ (३२६२९)
कच्चिद्वृत्तिं वर्तते वै पुराणीं
कच्चिद्भोगान्दार्तराष्ट्रो ददाति ।
अङ्गहीनान्कृपणान्वामनान्वा
यानानृशंस्याद्धार्तराष्ट्रो बिभर्ति ॥ ५-३०-४२ (३२६३०)
अन्धाश्च सर्वे बधिरास्तथैव
हस्ताजीवा बहवो येऽत्र सन्ति ।
आख्याय मां कुशलिनं स्म तेभ्यो-
ऽप्यनामयं परिपृच्छेर्जघन्यम् ॥ ५-३०-४३ (३२६३१)
मा भैष्ट दुःखेन कुजीवितेन
नूनं कृतं परलोकेषु पापम् ।
निगृह्य शत्रून्सुहृदोऽनुगृह्य
वासोभिरन्नेन च वो भरिष्ये ॥ ५-३०-४४ (३२६३२)
ग न चाप्येतच्छक्यमेकेन वक्तुं
नानादेशा बहवो जातिसङ्घाः ।

विप्रोषितो बालवदद्रष्टुमिच्छ-
न्नमस्येऽहं सञ्जय भैमसेनान् ।
ते मे यथा वाचमिमां यथोक्तां
त्वयोच्यमानां श्रृणुयुक्तथा कुरु ॥ ५-३०-४५ (३२६३३)
सन्त्येव मे ब्राह्मणेभ्यः कृतानि
भावीन्यथो नो बत वर्तयन्ति ।
तान्पश्यामि युक्तरूपांस्तथैव
तामेव सिद्धिं श्रावयेथा नृपं तम् ॥ ५-३०-४६ (३२६३४)
ये चानाथा दुर्बलाः सर्वकाल-
मात्मन्येव प्रयतन्तेऽथ मूढाः ।
तांश्चापि त्वं कृपणान्सर्वथैव
ह्यस्मद्वाक्यात्कुशलं तात पृच्छेः ॥ ५-३०-४७ (३२६३५)
ये चाप्यन्ये संश्रिता धार्तराष्ट्रा-
न्नानादिग्भ्योऽभ्यागताः सूतपुत्र ।
दृष्ट्वा तांश्चैवार्हतश्चापि सर्वा-
न्संपृच्छेथाः कुशलं चाव्ययं च ॥ ५-३०-४८ (३२६३६)
एवं सर्वानागताभ्यागतांश्च
राज्ञो दूतान्सर्वदिग्भ्योभ्युपेतान् ।
पृष्ट्वा सर्वान्कुशलं तांश्च सूत
पश्चादहं कुशली तेषु वाच्यः ॥ ५-३०-४९ (३२६३७)
न हीदृशाः सन्त्यपरे पृथिव्यां
ये योधका धार्तराष्ट्रेण लब्धाः ।
धर्मस्तु नित्यो मम धर्म एव
महाबलः शत्रुनिबर्हणाय ॥ ५-३०-५० (३२६३८)
इदं पुनर्वचनं धार्तराष्ट्रं
सुयोधनं सञ्जय श्रावयेथाः ।
यस्ते शरीरे हृदयं दुनोति
कामः कुरूनसपत्नोऽनुशिष्याम् ॥ ५-३०-५१ (३२६३९)
न विद्यते युक्तिरेतस्य काचि-
न्नैवं विधास्यामि यथा प्रियं ते ।
ददस्व वा शक्रपुरीं ममैव
युध्यस्व वा भारतमुख्यवीर ॥ ॥ ५-३०-५२ (३२६४०)

इति श्रीमन्महाभारते उद्योगपर्वणि सञ्जयानपर्वणि त्रिंशोऽध्यायः ॥

Mahabharata - Udyoga Parva - Chapter Footnotes

५-३०-१ अभिषङ्गात् आवेशात् ॥
५-३०-५ उपश्रुतिं वार्ताम् । रूक्षां मर्मगाम्। कटुकां नीरसाम् ॥
५ ॥
५-३०-७ चरणं ब्रह्मचर्येणाध्ययनम् ॥
५-३०-१० अश्रोत्रियाः अत्रैवर्णिकाः शूद्रादयः । धर्ममात्रां धर्मलेशं जरन्तः ॥
५-३०-११ श्लाघ्यस्व स्तुहि । जघन्यं पश्चातेभ्यस्तेषां अनामयं पृच्छेः। व्यवहारेण वाणिज्यादिना पालयन्तः स्थानाधिकारिणः ॥
५-३०-१२ चतुष्पात् मन्त्र उपचारः प्रयोगः संहारश्चेति चत्वारः पादा अस्येति अस्त्रम् ॥
५-३०-१३ गन्धर्वेति सौन्दर्यं संगीतं च तस्मिन् द्योतितम् ॥
५-३०-२५ पाण्डवायोधनाय पाण्डवैः सह युद्धाय ॥
५-३०-२९ वृन्दारकं श्रेष्ठम् ॥
५-३०-३० निकर्तनेऽर्थापहारे । छन्नोपधो गुप्तछलः ॥
५-३०-३२ मुह्यतां धार्तराष्ट्राणाम् ॥
५-३०-४० शीघ्रहारि । वेशस्त्रियो वेश्याः ॥
५-३०-४४ शत्रून् धार्तराष्ट्रान् निगृह्य वः युष्मान् भरिष्ये पोषयिष्ये इति ब्रूया इति शेषः ॥
४४ । ५-३०-४६ मे मया कृतानि वत्सरदेयानि नो वर्तयन्ति न चालयन्ति। त्वदीया अधिकारिणः तान्यहं यथा यथावत्पश्यमि तथैव तां सिद्धिं त्वद्दत्तं सम्यक् परिपालयामीति दूतद्वारा मां श्रावयेथा इति तं नृपं दुर्योधनं ब्रूहीति शेषः ॥
४६ ॥
५-३०-४७ आत्मन्येव प्रयतन्ते न तु कर्तुं शक्नुवन्ति ॥
५-३०-५० नित्यः अविनाशिफलः ॥
५० ॥
५-३०-५२ युक्तिः संभावना एतस्यार्थस्य न विद्यते । शक्रपुरीं इन्द्रप्रस्थम् ॥
५२ ॥

---

उद्योगपर्व-अध्यय०३१
॥ श्रीः ॥
५.३१. अध्यायः ३१

Mahabharata - Udyoga Parva - Chapter Topics
युधिष्ठिरेण सञ्जयंप्रति धृतराष्ट्रभीष्मयोरभिवादनपूर्वकं सन्धिकरणविज्ञापननिवेदनचोदनम् ॥ १ ॥

तथा दुर्योधनंप्रति तत्कृतानयोपेक्षणकथनपूर्वकं ग्रामपञ्चकदानेन सन्धिकरणसन्देशः ॥ २ ॥

Mahabharata - Udyoga Parva - Chapter Text

५-३१-० (३२६४१)
युधिष्ठिर उवाच। ५-३१-०क्ष् (३४३३)
उत सन्तमसन्तं वा बालं वृद्धं च सञ्जय ।
उताबलं बलीयांसं धाता प्रकुरुते वशे ॥ ५-३१-१ (३२६४२)
उत बालाय पाण्डित्यं पण्डितायोत बालताम् ।
ददाति सर्वमीशानः पुरस्ताच्छुक्रमुच्चरन् ॥ ५-३१-२ (३२६४३)
बलं जिज्ञासमानस्य आचक्षीथा यथातथम् ।
अथ मन्त्र मन्त्रयित्वा याथातथ्येन हृष्टवत् ॥ ५-३१-३ (३२६४४)
गावल्गणे कुरून्गत्वा धृतराष्ट्रं महाबलम् ।
अभिवाद्योपसंगृह्य ततः पृच्छेरनामयम् ॥ ५-३१-४ (३२६४५)
ब्रूयाश्चैनं त्वमासीनं कुरुभिः परिवारितम् ।
तवैव राजन्वीर्येण सुखं जीवन्ति पाण्डवाः ॥ ५-३१-५ (३२६४६)
तव प्रसादाद्बालास्ते प्राप्ता राज्यमरिन्दम ।
राज्ये तान्स्थापयित्वाऽग्रे नोपेक्षस्व विनश्यतः ॥ ५-३१-६ (३२६४७)
सर्वमप्येतदेकस्य नालं सञ्जय कस्यचित् ।
तात संहत्य जीवामो द्विषतां मा वशं गमः ॥ ५-३१-७ (३२६४८)
तथा भीष्मं शान्तनवं भारतानां पितामहम् ।
शिरसाऽभिवदेथास्त्वं मम नाम प्रकीर्तयन् ॥ ५-३१-८ (३२६४९)
अभिवाद्य च वक्तव्यस्ततोऽस्माकं पितामहः ।
भवता शन्तनोर्वंशो निमग्नः पुनरुद्धृतः ॥ ५-३१-९ (३२६५०)
स त्वं कुरु तथा तात स्वमतेन पितामह ।
यथा जीवन्ति ते पौत्राः प्रीतिमन्तः परस्परम् ॥ ५-३१-१० (३२६५१)
तथैव विदुरं ब्रूयाः कुरूणां मन्त्रधारिणम् ।
अयुद्धं सौम्य भाषस्व हितकामो युधिष्ठिरे ॥ ५-३१-११ (३२६५२)
अथ दुर्योधनं ब्रूया राजपुत्रममर्षणम् ।
मध्ये कुरूणामासीनमनुनीय पुनः पुनः ॥ ५-३१-१२ (३२६५३)
अपापां यदुपैक्षस्त्वं कृष्णामेतां सभागताम् ।
तद्दुःखमतितिक्षाम मा वधीष्म कुरूनिति ॥ ५-३१-१३ (३२६५४)
एवं पूर्वापरान्क्लेशानतितिक्षन्त पाण्डवाः ।
बलीयांसोऽपि सन्तो यत्तत्सर्वं कुरवो विदुः ॥ ५-३१-१४ (३२६५५)
यन्नः प्रव्राजयेः सौम्य अजिनैः प्रतिवासितान् ।

तद्दुःखमतितिक्षाम मा वधीषय कुरूनिति ॥ ५-३१-१५ (३२६५६)
यत्कुन्तीं समतिक्रम्य कृष्णां केशेष्वधर्षयत् ।
दुःशासनस्तेऽनुमते तच्चास्माभिरुपेक्षितम् ॥ ५-३१-१६ (३२६५७)
अथोचितं स्वकं भागं लभेमहि परन्तप ।
निवर्तय परद्रव्याद्बुद्धिं गृद्धां नरर्षभ ॥ ५-३१-१७ (३२६५८)
शान्तिरेवं भवेद्राजन्प्रीतिश्चैव परस्परम् ।
राज्यैकदेशमपि नः प्रयच्छ शममिच्छताम् ॥ ५-३१-१८ (३२६५९)
अविस्थलं वृकस्थलं माकन्दीं वारणावतम् ।
अवसानं भवत्वत्र किंचिदेकं च पञ्चमम् ॥ ५-३१-१९ (३२६६०)
भ्रातॄणां देहि पञ्चानां पञ्च ग्रामान्सुयोधन ।
शान्तिर्नोस्तु महाप्राज्ञ ज्ञातिभिः सह सञ्जय ॥ ५-३१-२० (३२६६१)
भ्राता भ्रातरमन्वेतु पिता पुत्रेण युज्यताम् ।
स्मयमानाः समायान्तु पाञ्चालाः कुरुभिः सह ॥ ५-३१-२१ (३२६६२)
अक्षतान्कुरु पाञ्चालान्पश्येयमिति कामये ।
सर्वे सुमनसस्तात शाम्याय भरतर्षभ ॥ ५-३१-२२ (३२६६३)
अलमेव शमायास्मि तथा युद्धाय सञ्जय ।
धर्मार्थयोरलं चाहं मृदवे दारुणाय च ॥ ॥ ५-३१-२३ (३२६६४)

इति श्रीमन्महाभारते उद्योगपर्वणि सञ्जययानपर्वणि एकत्रिंशोऽध्यायः ॥
Mahabharata - Udyoga Parva - Chapter Footnotes

५-३१-१ सन्तं साधुम् । असन्तं दुष्टम् । धाता ईश्वरः ॥
१ ॥
५-३१-२ शुक्रं बीजभूतं प्राचीनं कर्म उच्चरन् उद्दीपयन् ॥
२ ॥
५-३१-७ सर्वं ब्रह्माण्डम् । संहत्य एकीभूय ॥
७ ॥
५-३१-१३ अतितिक्षाम क्षान्तवन्तो वयम् तत्र हेतुः मां वधीष्मेति ॥
१३ ॥
५-३१-१७ गृद्धां लुब्धाम् ॥
१७ ॥
५-३१-१८ अवसानं वसतिस्थानम् ॥

---

उद्योगपर्व-अध्यय०३२
॥ श्रीः ॥
५.३२. अध्यायः ३२

Mahabharata - Udyoga Parva - Chapter Topics

पाण्डवानुज्ञातेन सञ्जयेन रात्रौ धृतराष्ट्रमुपगम्य
अभिवादनपूर्वकं युधिष्ठिरकृतकुशलप्रश्नादिकथनम् ॥ १ ॥
तथा धृतराष्ट्रं विगर्ह्य युधिष्ठिरवत्तनस्य
श्वःकथनकथनपूर्वकं स्वभवनगमनम् ॥ २ ॥

Mahabharata - Udyoga Parva - Chapter Text

वैशंपायन उवाच ।
ग धर्मराजस्य वचनं श्रुत्वा पार्थो धनञ्जयः ।
उवाच सञ्जयं तत्र वासुदेवस्य शृण्वतः ॥ ५-३२-१ (३२६६५)
पितामहं शान्तनवं धृतराष्ट्रं च सञ्जय ।
द्रोणं सपुत्रं शल्यं च महाराजं च बाह्लिकम् ॥ ५-३२-२ (३२६६६)
विकर्णं सोमदत्तं च शकुनिं चैव सौबलम् ।
विविंशतिं चित्रसेनं जयत्सेनं च सञ्जय ।
भगदत्तं तथा चैव शूरं रणकृतां वरम् ॥ ५-३२-३ (३२६६७)
ये चाप्यन्ये कुरवस्तत्र सन्ति
राजानश्चेद्भूमिपालाः समेताः ।
युयुत्सवः सैन्धवाः पार्थिवाश्च
समानीता धार्तराष्ट्रेण सूत ॥ ५-३२-४ (३२६६८)
यथान्यायं कुशलं वन्दनं च
समागमे मद्वचनेन वाच्याः ।
ततो ब्रूयाः सञ्जय राजमध्ये
दुर्योधनं पापकृतां प्रधानम् ॥ ५-३२-५ (३२६६९)
एवं प्रतिष्ठाप्य धनञ्जयस्तं
ततोऽर्थवद्धर्मवच्चापि पार्थः ।
उवाच वाक्यं स्कवजनप्रहर्षं
वित्रासनं धृतराष्ट्रात्मजानाम् ॥ ५-३२-६ (३२६७०)
अर्जुनेन समादिष्टस्तथेत्सुक्त्वा तु सञ्जयः ।
पार्थानामन्त्रयामास केशवं च यशस्विनम् ॥' ५-३२-७ (३२६७१)
अनुज्ञातः पाण्डवेन प्रययौ सञ्जयस्तदा ।
शासनं धृतराष्ट्रस्यक सर्वं कृत्वा महात्मनः ॥ ५-३२-८ (३२६७२)
ग तदा तु सञ्जयः क्षिप्रमेकाहेन परन्तपः ।
याति स्म हास्तिनपुरं निशाकाले परन्तप ॥' ५-३२-९ (३२६७३)
संप्राप्य हास्तिनपुरं शीघ्रमश्वैर्महाजवैः ।
अन्तःपुरं समास्थाय द्वाःस्थं वचनमब्रवीत् ॥ ५-३२-१० (३२६७४)

आचक्ष्व धृतराष्ट्रास्य द्वाऽस्थ मां समुपागतम् ।
सकाशात्पाण्डुपुत्राणां सञ्जयं माचिरं कृथाः ॥ ५-३२-११ (३२६७५)
॥।ति चेदभिवदेस्त्वं हि द्वाःस्थ
॥॥ विशेयं विदितो भूमिपस्य ।
॥॥ द्यमत्रात्ययिकं हि मेऽस्ति
॥॥। स्थोऽथ श्रुत्वा नृपतिं जगाद ॥ ५-३२-१२ (३२६७६)
द्वाःस्थ उवाच। ५-३२-१३क्ष् (३४३४)
सञ्जयोऽयं भूमिपते नमस्ते
दिदृक्षया द्वारमुपागतस्ते ।
प्राप्तो दूतः पाण्डवानां सकाशात्
प्रशाधि राजन्किमयं करोतु ॥ ५-३२-१३ (३२६७७)
धृतराष्ट्र उवाच। ५-२३-१४क्ष् (३४३५)
आचक्ष्व मां कुशलिनं कल्पमस्मै
प्रवेश्यतां स्वागतं सञ्जयाय
न चाहमेतस्य भवाम्यकल्पः
स मे कस्माद्द्वारि तेष्ठेच्च सक्तः ॥ ५-३२-१४ (३२६७८)
वैशंपायन उवाच। ५-२३-१५क्ष् (३४३६)
ततः प्रविश्यानुमते नृपस्य
महद्वेश्म प्राज्ञशूरार्यगुप्तम् ।
सिंहासनस्थं पार्थिवमाससाद
वैचित्रवीर्यं प्राञ्जलिः सूतपुत्रः ॥ ५-३२-१५ (३२६७९)
संजय उवाच। ५-३२-१६क्ष् (३४३७)
सञ्जयोऽहं भूमिपते नमस्ते
प्राप्तोऽस्मि गत्वा नरदेव पाण्डवान् ।
अभिवाद्य त्वां पाण्डुपुत्रो मनस्वी
युधिष्ठिरः कुशलं चान्वपृच्छत् ॥ ५-३२-१६ (३२६८०)
स ते पुत्रान्पृच्छति प्रीयमाणः
कच्चित्पुत्रैः प्रीयसे नप्तृभिश्च ।
तथा सुहृद्भिः सचिवैश्च राजन्
ये चापि त्वामुपजीवन्ति तैश्च ॥ ५-३२-१७ (३२६८१)
धृतराष्ट्र उवाच। ५-३२-१८क्ष् (३४३८)
अभिनन्द्य त्वां तात वदामि सञ्जय
अजातशत्रुं च सुखेन पार्थम् ।
कच्चित्स राजा कुशली सपुत्रः
सहामात्यः सानुजः कौरवाणाम् ॥ ५-३२-१८ (३२६८२)
सञ्जय उवाच। ५-३२-१९क्ष् (३४३९)

सहामात्य कुशली पाण्डुपुत्रो
बुभूषते यच्च तेऽग्रे त्मनाऽभूत्
निर्णीक्तधर्मार्थकरो मनस्वी
बहुश्रुतो दृष्टिमाञ्शीलवांश्च ॥ ५-३२-१९ (३२६८३)
परो धर्मः पाण्डवस्यानृशंस्यं
धर्मः परो वित्तचयान्मतोऽस्य ।
सुखप्रियेऽधर्महीनेऽनपार्थे
नु रुध्यते भारत तस्य बुद्धिः ॥ ५-३२-२० (३२६८४)
परप्रयुक्तः पुरषो विचेष्टते
सूत्रप्रोता दारुमयीव योषा ।
इमं दृष्ट्वा नियमं पाण्डवस्य
मन्ये परं कर्म दैवं मनुष्यात् ॥ ५-३२-२१ (३२६८५)
इमं च दृष्ट्वा तव कर्म दोषं
पापोदर्कं घोरमवर्णरूपम् ।
यावत्परः कामयतेऽतिवेलं
तावन्नरोऽयं लभते प्रशंसाम् ॥ ५-३२-२२ (३२६८६)
अजातशत्रुस्तु विहाय पापं
जीर्णां त्वचं सर्प इवासमर्थाम् ।
विरोचते ह्यार्यवृत्तेन वीरो
युधिष्ठिरस्त्वयि पापं विसृज्य ॥ ५-३२-२३ (३२६८७)
हन्तात्मनः कर्म निबोध राजन्
धर्मार्थयुक्तादार्यवृत्तादपेतम् ।
उपक्रोशं चेह गतोऽसि राजन्
भूयश्च पापं प्रसजेदमुत्र ॥ ५-३२-२४ (३२६८८)
स त्वमर्थं संशयितं विना तै-
राशंससे पुत्रवशानुगोऽस्य ।
अधर्मशब्दश्च महान्पृथिव्यां
नेदं कर्म त्वत्समं भारताग्र्य ॥ ५-३२-२५ (३२६८९)
हीनप्रज्ञो दौष्कुलेयो नृशंसो
दीर्घं वैरी क्षत्रविद्यास्वधीरः ।
एवंधर्मानापदः संश्रयेयु-
र्हीनवीर्यो यश्च भवेदशिष्टः ॥ ५-३२-२६ (३२६९०)
कुले जातो बलवान्यो यशस्वी ।
बहुश्रुतः सुखजीवी यतात्मा ।
धर्माधर्मौ ग्रथितौ यो बिभर्ति
स ह्यस्य दिष्टस्य वशादुपैति ॥ ५-३२-२७ (३२६९१)

कथं हि मन्त्राग्र्यधरो मनीषी
धर्मार्थयोरापदि संप्रणेता ।
एवमुक्तः सर्वमन्त्रैरहीनो
नरो नृशंसं कर्म कुर्यादमूढः ॥ ५-३२-२८ (३२६९२)
तव ह्यमी मन्त्रविदः समेत्य
समासते कर्मसु नित्ययुक्ताः ।
तेषांमयं बलवान्निश्चयस्च
कुरुक्षये नियमेनोदपादि ॥ ५-३२-२९ (३२६९३)
अकालिकं कुरवो नाभविष्यन्
पापेन चेत्पापमजातशत्रुः
इच्छेञ्जातु त्वयि पापं विसृज्य
निन्दा चेयं तव लोकेऽभविष्यत् ॥ ५-३२-३० (३२६९४)
किमन्यत्र विषयादीश्वराणां
यत्र पार्थः परलोकं स्म द्रष्टुम् ।
अत्यक्रामत्स तथा संमतः स्या-
न्न संशयो नास्ति मनुष्यकारः ॥ ५-३२-३१ (३२६९५)
एतान्गुणान्कर्मकृतानवेक्ष्य
भावाभावौ वर्तमानावनित्यौ ।
बलिर्हि राजा पारमविन्दमानो
नान्यत्कालात्कारणं तत्र मेने ॥ ५-३२-३२ (३२६९६)
चक्षुःश्रोत्रे नासिका त्वक् च जिह्वा
ज्ञानस्यैतान्यायतनानि जन्तोः ।
तानि प्रीतान्येव तृष्णाक्षयान्ते
तान्यव्यथो दुःखहीनः प्रणुद्यात् ॥ ५-३२-३३ (३२६९७)
नत्वेव मन्ये पुरुषस्य कर्म
सवर्तते सुप्रयुक्तं यथावत् ।
मातुः पितुः कर्मणाभिप्रसूतः
संवर्धते विधिवद्भोजनेन ॥ ५-३२-३४ (३२६९८)
प्रियाप्रिये सुखदुःखे च राज-
न्निन्दाप्रशंसे च भजन्त एव ।
परस्त्वेनं गर्हयतेऽपराधे
प्रशंसते साधुवृत्तं तमेव ॥ ५-३२-३५ (३२६९९)
स त्वां गर्हे भारतानां विरोधा-
दन्तो नूनं भविताऽयं प्रजानाम् ।
नोचेदिदं तव कर्मापराधात्
कुरून्दहेत्कृष्णवर्त्मेव कक्षम् ॥ ५-३२-३६ (३२७००)

त्वमेवैको जातु पुत्रस्य राजन्
वशं गत्वा सर्वलोके नेरन्द्र ।
कामात्मनः श्लाघनो द्यूतकाले
नागाः शमं पश्य विपाकमस्य ॥ ५-३२-३७ (३२७०१)
अनाप्तानां सङ्ग्रहात्त्वं नरेन्द्र
तथाऽऽप्तानां निग्रहाच्चैव राजन् ।
भूमिं स्फीतां दुर्बलत्वादनन्ता-
मशक्तस्त्वं रक्षितुं कौरवेय ॥ ५-३२-३८ (३२७०२)
अनुज्ञातो रथवेगावधूतः
श्रान्तोऽभिपद्ये शयनं नृसिंह ।
प्रातः श्रोतारः कुरवः सभाया-
मजातशत्रोर्वचनं समेताः ॥ ५-३२-३९ (३२७०३)
धृतराष्ट्र उवाच। ५-३२-४०क्ष् (३४४०)
अनुज्ञातोऽस्यावसथं परेहि
प्रपद्यस्व शयनं सूतपुत्र ।
प्रातः श्रोतारः कुरवः सभाया-
मजातशत्रोर्वचनं त्वयोक्तम् ॥ ॥ ५-३२-४० (३२७०४)

इति श्रीमन्महाभारते उद्योगपर्वणि सञ्जययानपर्वणि
द्वात्रिंशोऽध्यायः ॥ ॥ समाप्तं चेदं सञ्जययानपर्व ॥
Mahabharata - Udyoga Parva - Chapter Footnotes

५-३२-८ ॥॥॥
गच्छेत्युक्तः ॥
८ ॥
५-३२-१२ आत्ययिकं आवश्यकम् ॥
१२ ॥
५-३२-१४ कल्पं दृढम् । अकल्पः दर्शने असमर्थः । सक्तः निरुद्धः ॥
५-३२-१५ प्राज्ञाः शूराः आर्याः साधवश्च तैर्गुप्तम् ॥
५-३२-१७ नप्तृभिः पुत्रस्य पुत्रैः ॥
५-३२-१८ अजातशत्रुं सुखेन अभिनन्द्य त्वां प्रति वदामि ॥
५-३२-१९ ते तव अग्रे यत् त्मनः आत्मनः राज्यधनादिकं अभूत् तत्
बुभूषते प्राप्तुमिच्छति । निर्णिक्तौ दोषमलहीनौ धर्मार्थौ करोतीति
स तथा। मनस्वी उदारः । दृष्टिमान् क्रान्तदर्शी ॥
५-३२-२० परो मुख्यः । आनृशंस्यं दया ततः रोषऽमुख्यः
वित्तचयात् जात इति शेषः। वित्तसाध्यः सत्रदानादिः। किंच

तस्य बुद्धिः अनपार्थे न अपार्थे निष्प्रयोजने सप्रयोजने
सुखप्रिये। संधिरार्षः। नु निश्चितं । रुध्यते अनुरुध्यते। अन्नादिजं
देहपुष्टिसुखं पुत्रादि प्रियं च स परोपकारार्थमेवानुरुध्यते न
कामकारेणेत्यर्थः ॥
५-३२-२१ परेण ईश्वरेण प्रयुक्तः । नियमं निग्रहं मनुष्यात्
मनुष्याकारात् दैवं ऐश्वरं कर्म परं श्रेष्ठं मन्ये ॥
५-३२-२२ अवर्णरूपं अवर्णनीयरूपं अवाच्यमित्यर्थः । यावत्परः
उत्कृष्टः शत्रुः कामयते तिष्ठत्वयं कंचित्कालमितीच्छति
तावदपरो नरः प्रशंसा लभते ॥
५-३२-२५ तैर्विना एकाकिना संशयितं दुर्लभमपि आशंससे प्राप्तुम्
। अस्य तव महान् पृथिव्यां अधर्मशब्दोऽकीर्तिर्भवेत्। त्वत्समं
तव युक्तम् ॥
५-३२-२६ एवंधर्मान् ईदृशधर्मयुक्तान् पुरुषान् ॥
५-३२-२७ सहि स एव दिष्टस्य वशात् भाग्यवशात् अस्य
कुलेजातत्वादिगुणजातस्य । कर्मणि षष्टी। इदं गुणषद्कमुपैति
प्राप्नोति । त्वं तु कुले जातोपि केवलं अनृतोपजीवित्वात्
गुणानत्रहीनोऽसीति भावः ॥
५-३२-२८ मन्त्र एव अग्र्यः श्रेष्ठो येषां ते मन्त्राग्र्यः भीष्मादयः
तेषां धरो धर्ता । तैरेवं उक्तरीत्या द्यूतं मा कुर्वित्युक्तः कथं
नृशंसं कर्म पाण्डवप्रव्राजनं कुर्यान्न कथमपीत्यर्थः ॥
५-३२-२९ अमी कर्णादयः । तेषां कुरुक्षये कुरुक्षयनिमित्तं अयं
राज्यं न देयमिति निश्चयः नियमेन उदपादि उत्पन्नः ॥
५-३२-३० अकालिकं अकस्मादेव कुरवो नाभविष्यन् नष्टाःस्युः । तव
पापेन कर्मणा प्रेरितोऽजातशत्रुः त्वयि पापं इच्छेच्चेत्। नन्वेवं
तर्हि तस्य गोत्रवधदोषः स्यादित्याशङ्क्याह त्वयीति। स्वनाशहेतुं
अधर्मं कुर्वति त्वयि चोरे इव पापं विसृज्य रादा
निष्पापोऽनिन्द्यश्च स्यादित्यर्थः ॥
५-३२-३१ ईश्वराणां देवानां विषयादन्यत्र किम् । सर्वं
देवाधीनमित्यर्थः। यत्र यतः पार्थोऽर्जुनः परलोकं द्रष्टुं
अत्यक्रामत्। इमं लोकं सशरीर एव त्यक्तवान्। स तादृशः
नारदादिवदुभयलोकसंचारयोग्यत्वेन साधूनां संमतोऽपि यदि तथा
वनवसेन क्लेशसहः स्यात् तदा मनुष्यकारो नास्तीत्यस्मिन्नर्थे संशयो
न ॥
५-३२-३२ एतानिति । एतान् शौर्यादीन् गुणान् कर्मकृतान्कर्मानुसारेण
वृद्धिह्राययुक्तान् अवेक्ष्य अत एव भावाभावौ ऐश्वर्यानैश्वर्ये
अनित्यौ आगमापायिनौ च अवेक्ष्य बलिराजा पूर्वपूर्वकर्मकारणपारं

अन्तं अविन्दमानः सन् कालात् ईश्वरादन्यत्कारणं
अभ्युदयादिहेतुरन्यत्किंचिन्नास्तीति मेने ॥
३२ ॥
५-३२-३३ अतः सर्वस्य देवायत्तत्वात् तृष्णाक्षयेणैव इन्द्रियप्रीतिः
संपादनीया नतु नानायत्नसाध्यतत्तद्वीषयसमर्पणेनेत्याह चक्षुरिति
। ननु स्वस्वविषयालाभे तेषां कथं प्रीतिः स्यादित्याशङ्क्य तानि
निरोधान्येवेत्याह तानीति। अव्यथः लाभालाभादौ वैषम्यहीनः प्रणुद्यात्
स्वस्वगोचरेभ्यो निवर्तयेत् ॥
५-३२-३४ एतद्दूषयति नत्विति । एव प्राप्ते सति अन्ये आहुः। तदेवाह
पुरुषस्येति। संवर्तते सम्यक् फलवत् वर्तते। तदेवाह
मातुरिति। कर्माभावे जन्मबृद्धी न स्यातामित्यर्थः ५-३२-३६ किंच
नोचेदिति। इयं मया उच्यमानं कर्म पाण्डवेभ्यो राज्यांशप्रदानात्मकं
तव नोचेत् संमतमिति शेषः। तर्हि तवापराधात कृष्णवर्त्माग्निः
कक्षं यथा दहति एवं कृष्णवर्त्मा कृष्ण एव मार्ग इव
सुखप्रापको यस्य स कृष्णवर्त्माऽर्जुनः कुरून् दहेदित्यावृत्त्या
योज्यम् ॥
५-३२-३७ श्लाघनः आत्मानं कृतार्थं मन्वानः । नागाः न गतवानसि ॥
५-३२-३८ अनाप्तानां कर्णादीनाम् । आप्तानां विदुरादीनाम्। निग्रहात् दूरीकरणात् ॥
५-३२-३९ अवधूतस्तिरस्कृतः । अत एव श्रान्तः। प्रपद्ये प्राप्नुयाम् ॥
५-३२-४० आवसथं गृहम् । परेहि गच्छ। प्रपद्यस्व सेवस्व ॥

---

उद्योगपर्व-अध्यय०३३
॥ श्रीः ॥
५.३३. अध्यायः ३३

Mahabharata - Udyoga Parva - Chapter Topics
धृतराष्ट्रेण रात्रौ विदुरानयनम् ॥ १ ॥
चिन्तया प्रजागरंगतेन धृतराष्ट्रेण दुर्योधनादिसुखोपायप्रश्ने
विदुरेण नीतिकथन पूर्वकं पाण्डवेभ्यो राज्यदानस्य तदुपायत्वकथनम्
॥ २ ॥

Mahabharata - Udyoga Parva - Chapter Text

५-३३-० (३२७०५)
वैशंपानय उवाच। ५-३३-०क्ष् (३४४१)
द्वाःस्थं प्राह महाप्राज्ञो धृतराष्ट्रो महीपतिः ।

विदुरं द्रष्टुमिच्छामि तमिहानय मा चिरम् ॥ ५-३३-१ (३२७०६)
प्रहितो धृतराष्ट्रेण दूतः क्षत्तारमब्रवीत् ।
ईश्वरस्त्वां महाराजो महाप्राज्ञ दिदृक्षति ॥ ५-३३-२ (३२७०७)
एवमुक्तस्तु विदुरः प्राप्य राजनिवेशनम् ।
अब्रवीद्धृतराष्ट्राय द्वाःस्थं मां प्रतिवेदय ॥ ५-३३-३ (३२७०८)
द्वाःस्थ उवाच। ५-३३-४क्ष् (३४४२)
विदुरोऽयमनुप्राप्तो राजेन्द्र तव शासनात् ।
द्रष्टुमिच्छति ते पादौ किं करोतु प्रशाधि माम् ॥ ५-३३-४ (३२७०९)
धृतराष्ट्र उवाच। ५-३३-५क्ष् (३४४३)
प्रवेशय महाप्रज्ञं विदुरं दीर्घदर्शिनम् ।
अहं हि विदुरस्यास्य नाकल्पो जातु दर्शने ॥ ५-३३-५ (३२७१०)
द्वाःस्थ उवाच। ५-३३-६क्ष् (३४४४)
प्रविशान्तःपुरं क्षत्तर्महारादजस्य धीमतः ।
न हि ते दर्शनेऽकल्पो जातु राजाऽब्रवीद्धि माम् ॥ ५-३३-६ (३२७११)
वैशंपायन उवाच। ५-३३-७क्ष् (३४४५)
ततः प्रविश्य विदुरो धृतराष्ट्रनिवेशनम् ।
अब्रवीत्प्राञ्जलिर्वाक्यं चिन्तयानं नराधिपम् ॥ ५-३३-७ (३२७१२)
विदुरोऽहं महाप्राज्ञ संप्राप्तस्तव शासनात् ।
यदि किंचन कर्तव्यमयमस्मि प्रशाधि माम् ॥ ५-३३-८ (३२७१३)
धृतराष्ट्र उवाच। ५-३३-९क्ष् (३४४६)
सञ्जयो विदुर प्राप्तो गर्हयित्वा च मां गतः ।
अजातशत्रोः श्वो वाक्यं सभामध्ये स वक्ष्यति ॥ ५-३३-९ (३२७१४)
तस्याद्य कुरुवीरस्य न विज्ञातं वचो मया ।
तन्मे दहति गात्राणि तदकार्षीत्प्रजागरम् ॥ ५-३३-१० (३२७१५)
आग्रतो दह्यमानस्य श्रेयो यदनुपश्यसि ।
तद्ब्रूहि त्वं हि नस्तात धर्मार्थकुशलो ह्यसि ॥ ५-३३-११ (३२७१६)
यतः प्राप्तः सञ्जयः पाण्डवेभ्यो
न मे यथावन्मनसः प्रशान्तिः ।
सर्वेन्द्रियाण्यप्रकृतिं गतानि
किं वक्ष्यतीत्येव मेऽद्य प्रचिन्ता ॥ ५-३३-१२ (३२७१७)
ग तन्मे ब्रूहि विदुर त्वं यथाव-
न्मनीषितं सर्वमजातशत्रोः ।
यथा न नस्तात हितं भवेच्च
प्रजाश्च सर्वाः सुखिता भवेयुः ॥' ५-३३-१३ (३२७१८)
विदुर उवाच। ५-३३-१४क्ष् (३४४७)
अभियुक्तं बलवता दुर्बलं हीनसाधनम् ।

हृतस्वं कामिनं चोरमाविशन्ति प्रजागराः ॥ ५-३३-१४ (३२७१९)
कच्चिदेतैर्महादोषैर्न स्पृष्टोऽसि नराधिप ।
कच्चिच्च परवित्तेषु गृद्धयन्न परितप्यसे ॥ ५-३३-१५ (३२७२०)
धृतराष्ट्र उवाच। ५-३३-१६क्ष् (३४४८)
श्रोतुमिच्छामि ते धर्म्यं परं नैश्रेयसं वचः ।
अस्मिन्नादर्षिवंशे हि त्वमेकः प्राज्ञसंमतः ॥ ५-३३-१६ (३२७२१)
विदुर उवाच। ५-३३-१७क्ष् (३४४९)
राजा लक्षणसंपन्नस्त्रैलोक्यस्याधिपो भवेत् ।
प्रेष्यस्ते प्रेषितश्चैव धृतराष्ट्र युधिष्ठिरः ॥ ५-३३-१७ (३२७२२)
विपरीततरश्च त्वं भागधेये न संमतः ।
अर्चिषां प्रक्षयाच्चैव धर्मात्मा धर्मकोविदः ॥ ५-३३-१८ (३२७२३)
आनृशंस्यादनुक्रोशाद्धर्मात्सत्यात्पराक्रमात् ।
गुरुत्वात्त्वयि संप्रेक्ष्य बहून्क्लेशांस्तितिक्षते ॥ ५-३३-१९ (३२७२४)
दुर्योधने सौबले च कर्णे दुःशासने तथा ।
एतेष्वैश्वर्यमाधाय कथं त्वं भूतिमिच्छसि ॥ ५-३३-२० (३२७२५)
आत्मज्ञानं समारम्भस्तितिक्षा धर्मनित्यता ।
यमर्थान्नापकर्षन्ति स वै पण्डित उच्यते ॥ ५-३३-२१ (३२७२६)
ग एकस्माद्वृक्षाद्यज्ञपात्राणि राज-
न्स्रुक्व द्रोणी पेठनीपीडने च ।
एतस्माद्राजन्ब्रुवतो मे निबोध
एकस्माद्धि जायतेऽसच्च सच्च ॥ ५-३३-२२ (३२७२७)
निषेवते प्रशस्तानि निन्दितानि न सेवते ।
अनास्तिकः श्रद्दधान एतत्पण्डितलक्षणम् ॥ ५-३३-२३ (३२७२८)
क्रोधो हर्षश्च दर्पश्च ह्रीः स्तम्भो मान्यमानिता ।
यमर्थान्नापकर्षन्ति स वै पण्डित उच्यते ॥ ५-३३-२४ (३२७२९)
यस्य कृत्यं न जानन्ति मन्त्रं वा मन्त्रितं परे ।
कृतमेवास्य जानन्ति स वै पण्डित उच्यते ॥ ५-३३-२५ (३२७३०)
यस्य कृत्यं न विघ्नन्ति शीतमुष्णं भयं रतिः ।
समृद्धिरसमृद्धिर्वा स वै पण्डित उच्यते ॥ ५-३३-२६ (३२७३१)
यस्य संसारिणी प्रज्ञा धर्मार्थावनुवर्तते ।
कामादर्थं वृणीते यः स वै पण्डित उच्यते ॥ ५-३३-२७ (३२७३२)
यथाशक्ति चिकीर्षन्ति यथाशक्ति च कुर्वते ।
किंचिदवमन्यन्ते नराः पण्डितबुद्धयः ॥ ५-३३-२८ (३२७३३)
क्षिप्रं विजानाति चिरं श्रृणोति
विज्ञाय चार्थं भजते न कामात् ।
नासंपृष्टो व्युपयुङ्क्ते परार्थे

तत्प्रज्ञानं प्रथमं पण्डितस्य ॥ ५-३३-२९ (३२७३४)
नाप्राप्यमभिवाञ्छन्ति नष्टं नेच्छन्ति शोचितुम् ।
आपत्सु च न मुह्यन्ति नराः पण्डितबुद्धयः ॥ ५-३३-३० (३२७३५)
निश्चित्य यः प्रक्रमते नान्तर्वसति कर्मणः ।
अवन्ध्यकालो वश्यात्मा स वै पण्डित उच्यते ५-३३-३१ (३२७३६)
आर्यकर्मणि रज्यन्ते भूतिकर्माणि कुर्वते
हितं च नाभ्यसूयन्ति पण्डिता भरतर्षभ ॥ ५-३३-३२ (३२७३७)
न हृष्यत्यात्मसंमाने नावमानेन तप्यते ।
गाङ्गो ह्रद इवाक्षोभ्यो यः स पण्डित उच्यते ॥ ५-३३-३३ (३२७३८)
तत्त्वज्ञः सर्वभूतानां योगज्ञः सर्वकर्मणाम् ।
उपायज्ञो मनुष्याणां नरः पण्डित उच्यते ॥ ५-३३-३४ (३२७३९)
प्रवृत्तवाक् चित्रकथ ऊहवान्प्रतिभानवान् ।
आशु ग्रन्थस्य वक्ता च यः स पण्डित उच्यते ॥ ५-३३-३५ (३२७४०)
श्रुतं प्रज्ञानुगं यस्य प्रज्ञा चैव श्रुतानुगा ।
असंभिन्नार्यमर्यादः पण्डिताख्यां लभेत सः ॥ ५-३३-३६ (३२७४१)
ग अर्थं महान्तमासाद्य विद्यामैश्वर्यमेव च ।
विचरत्यसमुन्नद्धो यः स पण्डित उच्यते '॥ ५-३३-३७ (३२७४२)
अश्रुतश्च समुन्नद्धो दरिद्रश्च महामनाः ।
अर्थांश्चाकर्मणा प्रेप्सुर्मूढ इत्युच्यते बुधैः ॥ ५-३३-३८ (३२७४३)
स्वमर्थं यः परित्यज्य परार्थमनुतिष्ठति ।
मिथ्या चरति मित्रार्थे यश्च मूढः स उच्यते ॥ ५-३३-३९ (३२७४४)
अकामान्कामयति यः कामयानान्परित्यजेत् ।
बलवन्तं च यो द्वेष्टि तमाहुर्मूढचेतसम् ॥ ५-३३-४० (३२७४५)
अमित्रं कुरुते मित्रं मित्रं द्वेष्टि हिनस्ति च ।
कर्म चारभते दुष्टं तमाहुर्मूढचेतसम् ॥ ५-३३-४१ (३२७४६)
संसारयति कृत्यानि सर्वत्र विचिकित्सते ।
चिरं करोति क्षिप्रार्थे स मूढो भरतर्षभ ॥ ५-३३-४२ (३२७४७)
श्राद्धं पितृभ्यो न ददाति दैवतानि न चार्चति ।
सुहृन्मित्रं न लभते तमाहुर्मूढचेतसम् ॥ ५-३३-४३ (३२७४८)
अनाहूतः प्रविशति अपृष्टो बहु भाषते ।
अविश्वस्ते विश्वसिति मूढचेता नराधमः ॥ ५-३३-४४ (३२७४९)
परं क्षिपति दोषेण वर्तमानः स्वयं तथा ।
यश्च क्रुध्यत्यनीशानः स च मूढतमो नरः ॥ ५-३३-४५ (३२७५०)
आत्मनो बलमाज्ञाय धर्मार्थपरिवर्जितम् ।
अलभ्यमिच्छन्नैष्कर्म्यान्मूढबुद्धिरिहोच्यते ॥ ५-३३-४६ (३२७५१)
अशिष्यं शास्ति यो राजन्यश्च शिष्यं न शास्ति च ।

कदर्यं भजते यश्च तमाहुर्मूढचेतसम् ॥ ५-३३-४७ (३२७५२)
एकः संपन्नमाश्नाति वस्ते वासश्च शोभनम् ।
योऽसंविभज्य भृत्येभ्यः को नृशंसतरस्ततः ॥ ५-३३-४८ (३२७५३)
एकः पापानि कुरुते फलं भुङ्क्ते महाजनः ।
भोक्तारो विप्रमुच्यन्ते कर्ता दोषेण लिप्यते ॥ ५-३३-४९ (३२७५४)
एकं हन्यान्न वा हन्यादिषुर्मुक्तो धनुष्मता ।
बुद्धिर्बुद्धिमतोत्सृष्टा हन्याद्राष्ट्रं सराजकम् ॥ ५-३३-५० (३२७५५)
एकया द्वे विनिश्चित्य त्रींश्चतुर्भिर्वशे कुरु ।
पञ्च जित्वा विदित्वा षट् सप्त हित्वा सुखी भवा ॥ ५-३३-५१ (३२७५६)
एकं विषरसो हन्ति शस्त्रेणैकश्च वध्यते ।
सराष्ट्रं सप्रजं हन्ति राजानं मन्त्रविप्लवः ॥ ५-३३-५२ (३२७५७)
एकः स्वादु न भुञ्जीत एकश्चार्थान्न चिन्तयेत् ।
एको न गच्छेदध्वानं नैकः सुप्तेषु जागृयात् ॥ ५-३३-५३ (३२७५८)
एकमेवाद्वितीयं तद्यद्राजन्नावबुध्यसे ।
सत्यं स्वगस्य सोपानं पारावारस्य नौरिव ॥ ५-३३-५४ (३२७५९)
एकः क्षमावतां दोषो द्वितीयो नोपपद्यते ।
यदेनं क्षमया युक्तमशक्तं मन्यते जनः ॥ ५-३३-५५ (३२७६०)
सोऽस्य दोषो न मन्तव्यः क्षमा हि परमं बलम् ।
क्षमा गुणो ह्यशक्तानां शक्तानां भूषणं क्षमा ॥ ५-३३-५६ (३२७६१)
क्षमा वशीकृतीर्लोके क्षमया किं न साध्यते ।
शान्तिखड्गः करे यस्य किं करिष्यति दुर्जनः ॥ ५-३३-५७ (३२७६२)
अतृणे पतितो वह्निः स्वयमेवोपशाम्यति ।
अक्षमावान्परं दोषैरात्मानं चैव योजयेत् ॥ ५-३३-५८ (३२७६३)
एको धर्मः परं श्रेयः क्षमैका शान्तिरुत्तमा ।
विद्यैका परमा तृप्तिरहिंसैका सुखावहा ॥ ५-३३-५९ (३२७६४)
द्वाविमौ ग्रसते भूमिः सर्पो बलिशयानिव ।
राजानं चाविरोद्धारं ब्राह्मणं चाप्रवासिनम् ॥ ५-३३-६० (३२७६५)
द्वे कर्मणी नरः कुर्वन्नस्मिँल्लोके विरोचते ।
अब्रुवन्परुषं किंचिदसतोऽनर्चयंस्तथा ॥ ५-३३-६१ (३२७६६)
द्वाविमौ पुरुषव्याघ्र परप्रत्ययकारिणौ ।
स्त्रियः कामितकामिन्यो मूर्खाः पूजितपूजकाः ॥ ५-३३-६२ (३२७६७)
द्वाविमौ कण्टकौ तीक्ष्णौ शरीरपरिशोषिणौ ।
यश्चाधनः कामयते यश्च कुप्यत्यनीश्वरः ॥ ५-३३-६३ (३२७६८)
द्वावेव न विराजेते विपरीतेन कर्मणा ।
गृहस्थश्च निरारम्भः कार्यवांश्चैव भिक्षुकः ॥ ५-३३-६४ (३२७६९)
द्वाविमौ पुरुषौ राजन्स्वर्गस्योपरि तिष्ठतः ।

प्रभुश्च क्षमया युक्तो दरिद्रश्च प्रदानवान् ॥ ५-३३-६५ (३२७७०)
न्यायागतस्य द्रव्यस्य बोद्धव्यौ द्वावतिक्रमौ ।
अपात्रे प्रतिपत्तिश्च पात्रे चात्प्रतिपादनम् ॥ ५-३३-६६ (३२७७१)
द्वावभ्यसि निवेष्टव्यौ गले बध्वा दृढां शिलाम् ।
धनवन्तमदातारं दरिद्रं चातपस्विनम् ॥ ५-३३-६७ (३२७७२)
द्वाविमौ पुरुषव्याघ्र सूर्यमण्डलभेदिनौ ।
परिव्राड्योगयुक्तश्च रणे चाभिमुखो हतः ॥ ५-३३-६८ (३२७७३)
त्रयो न्याया मनुष्याणां श्रूयन्ते भरतर्षभ ।
कनीयान्मध्यमः श्रेष्ठ इति वेदविदो विदुः ॥ ५-३३-६९ (३२७७४)
त्रिविधाः पुरुषा राजन्नुत्तमाधममध्यमाः ।
नियोजयेद्यथावत्तांस्त्रिविधेष्वेव कर्मसु ॥ ५-३३-७० (३२७७५)
त्रय एवाधना राजन्भार्या दासस्तथा सुतः ।
यत्ते समधिगच्छन्ति यस्यैते तस्य तद्धनम् ॥ ५-३३-७१ (३२७७६)
हरणं च परस्वानां परदाराभिमर्शनम् ।
सुहृदश्च परित्यागस्त्रयो दोषाः क्षयावहाः ॥ ५-३३-७२ (३२७७७)
त्रिविधं नरकस्येदं द्वारं नाशनमात्मनः ।
कामः क्रोधस्तथा लोभस्तस्मादेतत्रयं त्यजेत् ॥ ५-३३-७३ (३२७७८)
वरप्रदानं राज्यं च पुत्रजन्म च भारत ।
शत्रोश्च मोक्षणं कृच्छ्रात्रीणि चैकं च तत्समम् ॥ ५-३३-७४ (३२७७९)
भक्तं च भजमानं च तवास्मीति च वादिनम् ।
त्रीनेताञ्छरणं प्राप्तान्विषमेऽपि कन सन्त्यजेत् ॥ ५-३३-७५ (३२७८०)
चत्वारि राज्ञा तु महाबलेन
वर्ज्यान्याहुः पण्डितस्तानि विद्यात् ।
अल्पप्रज्ञैः सह मन्त्रं न कुर्या-
न्न दीर्घसूत्रैरलसैश्चारणैश्च ॥ ५-३३-७६ (३२७८१)
चतवारि ते तात गृहे वसन्तु
श्रियाऽभिजुष्टस्य गृहस्थधर्मे ।
वृद्धो ज्ञातिरवसन्नः कुलीनः
सखा दरिद्रो भगिनी चानपत्या ॥ ५-३३-७७ (३२७८२)
चत्वार्याह महाराज साद्यस्कानि बृहस्पतिः ।
पृच्छते त्रिदशेन्द्राय तानीमानि निबोध मे ॥ ५-३३-७८ (३२७८३)
देवतानां च सङ्कल्पमनुभावं च धीमताम् ।
विनयं कृतविद्यानां विनाशं पापकर्मणाम् ॥ ५-३३-७९ (३२७८४)
चत्वारि कर्माण्यभयंकराणि
भयं प्रयच्छन्त्ययथाकृतानि ।
मानाग्निहोत्रमुत मानमौनं

मानेनाधीतमुत मानयज्ञः ॥ ५-३३-८० (३२७८५)
पञ्चाग्नयो मनुष्येण परिचर्याः प्रयत्नतः ।
पिता माताग्निरात्मा च गुरुश्च भरतर्षभ ॥ ५-३३-८१ (३२७८६)
पञ्चैव पूजयँल्लोके यशः प्राप्नोति केवलम् ।
देवान्पितॄन्मनुष्यांश्च भिक्षूनतिथिपञ्चमान् ॥ ५-३३-८२ (३२७८७)
पञ्च त्वाऽनुगमिष्यन्ति यत्र यत्र गमिष्यसि ।
मित्राण्यमित्रा मध्यस्था उपजीव्योपजीविनः । ५-३३-८३ (३२७८८)
पञ्चेन्द्रियस्य मर्त्यस्य छिद्रं चेदेकमिन्द्रियम् ।
ततोऽस्य स्रवति प्रज्ञा दृतेः पात्रादिवोदकम् ॥ ५-३३-८४ (३२७८९)
षड्दोषाः पुरुषेणेह हातव्या भूतिमिच्छता ।
निद्रा तन्द्री भयं क्रोध आलस्यं दीर्घसूत्रता । ५-३३-८५ (३२७९०)
षडिमान्पुरुषो जह्याद्भिन्नां नावमिवार्णवे ।
अप्रवक्तारमाचार्यमनधीयानमृत्विजम् ॥ ५-३३-८६ (३२७९१)
अरक्षितारं राजानं भार्यां चाप्रियवादिनीम् ।
ग्रामकामं च गोपालं वनकामं च नापितम् ॥ ५-३३-८७ (३२७९२)
षडेव तु गुणाः पुंसा न हातव्याः कदाचन ।
सत्यं दानमनालस्यमनसूया क्षमा धृतिः ॥ ५-३३-८८ (३२७९३)
अर्थागमो नित्यमरोगिता च
प्रिया च भार्या प्रियवादिनी च ।
वश्यश्च पुत्रोऽर्थकरी च विद्या
षड्जीवलोकस्य सुखानि राजन् ॥ ५-३३-८९ (३२७९४)
षण्णामात्मनि नित्यानामैश्वर्यं योऽधिगच्छति ।
न स पापैः कुतोऽनर्थैर्युज्यते विजितेन्द्रियः ॥ ५-३३-९० (३२७९५)
षडिमे षट्सु जीवन्ति सप्तमो नोपलभ्यते ।
चोराः प्रमत्ते जीवन्ति व्याधितेषु चिकित्सकाः ॥ ५-३३-९१ (३२७९६)
प्रमदाः कामयानेषु यजमानेषु याजकाः ।
राजा विवदमानेषु नित्यं मूर्खेषु पण्डिताः ॥ ५-३३-९२ (३२७९७)
षडिमानि विनश्यन्ति मुहूर्तमनवेक्षणात् ।
गावः सेवा कृषिर्भार्या विद्या वृषलसङ्गतिः ॥ ५-३३-९३ (३२७९८)
षडेते ह्यवमन्यन्ते नित्यं पूर्वोपकारिणम् ।
आचार्यं शिक्षिताः शिष्याः कृतदाराश्च मातरं ॥ ५-३३-९४ (३२७९९)
नारीं विगतकामास्तु कृतार्थाश्च प्रयोजकम् ।
नावं निस्तीर्णकान्तारा नातुराश्च चिकित्सकं ॥ ५-३३-९५ (३२८००)
आरोग्यमानृण्यमविप्रवासः
सद्भिर्मनुष्यैः सह संप्रयोगः ।
स्वप्रत्यया वृत्तिरभीतवासः

षट् जीवलोकस्य सुखानि राजन् ॥ ५-३३-९६ (३२८०१)
ईर्षुर्घृणी नसन्तुष्टः क्रोधनो नित्यशङ्कितः ।
परभाग्योपजीवी च षडेते नित्यदुःखिताः ॥ ५-३३-९७ (३२८०२)
सप्त दोषाः सदा राज्ञा हातव्या व्यसनोदयाः ।
प्रायशो यैर्विनश्यन्ति कृतमूला अपीश्वराः ॥ ५-३३-९८ (३२८०३)
स्त्रियोऽक्षा मृगया पानं वाक्पारुष्यं च पञ्चमम् ।
महच्च दण्डपारुष्यमर्थदूषणमेव च ॥ ५-३३-९९ (३२८०४)
अष्टौ पूर्वनिमित्तानि नरस्य विनशिष्यतः ।
ब्राह्मणान्प्रथमं द्वेष्टि ब्राह्मणैश्च विरुध्यते ॥ ५-३३-१०० (३२८०५)
ब्राह्मणस्वानि चादत्ते ब्राह्मणांश्च जिघांसति ।
रमते निन्दया चैषां प्रशंसां नाभिनन्दति ॥ ५-३३-१०१ (३२८०६)
नैनान्स्मरति कृत्येषु याचितश्चाभ्यसूयति ।
एतान्दोषान्नरः प्राज्ञो बुद्ध्या बुध्वा विसर्जयेत् ॥ ५-३३-१०२ (३२८०७)
अष्टाविमानि हर्षस्य नवनीतानि भारत ।
वर्तमानानि दृश्यन्ते तान्येव स्वसुखान्यपि ॥ ५-३३-१०३ (३२८०८)
समागमश्च सखिभिर्महांश्चैव धनागमः ।
पुत्रेण च परिष्वङ्गः सन्निपातश्च मैथुने ॥ ५-३३-१०४ (३२८०९)
समये च प्रियालापः स्वयूथ्येषु समुन्नतिः ।
अभिप्रेतस्य लाभश्च पूजा च जनसंसदि ॥ ५-३३-१०५ (३२८१०)
अष्टौ गुमाः पुरुषं दीपयन्ति
प्रज्ञा च कौल्यं च दमः श्रुतं च ।
पराक्रमश्चाबहुभाषिता च
दानं यथाशक्ति कृतज्ञता च ॥ ५-३३-१०६ (३२८११)
नवद्वारमिदं वेश्म त्रिस्थूणं पञ्चसाक्षिकम् ।
क्षेत्रज्ञाधिष्ठितं विद्वान्यो वेद स परः कविः ॥ ५-३३-१०७ (३२८१२)
दश धर्मं न जानन्ति धृतराष्ट्र निबोध तान् ।
मत्तः प्रमत्त उन्मत्तः श्रान्तः क्रुद्धो बुभुक्षितः ॥ ५-३३-१०८ (३२८१३)
त्वरमाणश्च लुब्धश्च भीतः कामी च ते दश ।
तस्मादेतेषु भावेषु न प्रसज्जेत पण्डितः ॥ ५-३३-१०९ (३२८१४)
अत्रैवोदाहरन्तीममितिहासं पुरातनम् ।
पुत्रार्थमसुरेन्द्रेण गीतं चैव सुधन्वना ॥ ५-३३-११० (३२८१५)
यः काममन्यू प्रजहाति राजा
पात्रे प्रतिष्ठापयते धनं च ।
विशेषविच्छ्रुतवान्क्षिप्रकारी
तं सर्वलोकः कुरुते प्रमाणम् ॥ ५-३३-१११ (३२८१६)
जानाति विश्वासयितुं मनुष्यान्

विज्ञातदोषेषु दधाति दण्डम् ।
जानाति मात्रां च तथा क्षमां च
तं तादृशं श्रीर्जुषते समग्रा ॥ ५-३३-११२ (३२८१७)
सुदुर्बलं नावजानाति कंचि-
द्युक्तो रिपुं सेवते बुद्धिपूर्वम् ।
न विग्रहं रोचयते बलस्थैः
काले च यो विक्रमते स धीरः ॥ ५-३३-११३ (३२८१८)
प्राप्याप ॥ न व्यथते कदाचि-
दुद्योगमान्वच्छति चाप्रमत्तः ।
दुःखं च काले सहते महात्मा
धुरन्धरस्तस्य जिताः सपत्नाः ॥ ५-३३-११४ (३२८१९)
अनर्थकं विप्रवासं गृहेभ्यः
पापैः सन्धिं परदाराभिमर्शम् ।
दम्भं स्तैन्यं पैशुनं मद्यमानं
न सेवते यः स सुखी सदैव ॥ ५-३३-११५ (३२८२०)
न संरम्भेणारभते त्रिवर्ग-
माकारितः शंसति तत्त्वमेव ।
न मित्रार्थे रोचयते विवादं
नापूजितः कुप्यति चाप्यमूढः ॥ ५-३३-११६ (३२८२१)
न योऽभ्यसूयत्सयनुकम्पते च
न दुर्बलः प्रातिभाव्यं करोति ।
नात्याह किंचित्क्षमते विवादं
सर्वत्र तादृग्लभते प्रशंसाम् ॥ ५-३३-११७ (३२८२२)
यो नोद्धतं कुरुते जातु वेषं
न पौरुषेणापि विकत्थतेऽन्यान् ।
न मूर्च्छितः कटुकान्याह किंचि-
त्प्रियं सदा तं कुरुते जनो हि ॥ ५-३३-११८ (३२८२३)
न वैरमुद्दिपयति प्रशान्तं
न दर्पमारोहति शान्तिमेति ।
न दुर्गतोऽस्मीति करोत्यकार्यं
तमार्यशीलं परमाहुरार्याः ॥ ५-३३-११९ (३२८२४)
न स्वे सुखे वै कुरुते प्रहर्षं
नान्यस्य दुःखे भवति प्रहृष्टः ।
दत्त्वा न पश्चात्कुरुतेऽनुतापं
स कथ्यते सत्पुरुषार्यशीलः ॥ ५-३३-१२० (३२८२५)
देशाचारान्समयाञ्जातिधर्मान्

बुभूषते यः स परावरज्ञः ।
स यत्र तत्राभिगतः सदैव
महाजनस्याधिपत्यं करोति ॥ ५-३३-१२१ (३२८२६)
दम्भं मोहं मत्सरं पापकृत्यं
राजद्विष्टं पैशुनं पूगवैरम् ।
मत्तोन्मत्तैर्दुर्जनैश्चापि वादं
यः प्रज्ञावान्वर्जयेत्स प्रधानः ॥ ५-३३-१२२ (३२८२७)
दमं शौचं दैविकं मङ्गलानि
प्रायश्चित्तान्विविधाँल्लोकवादान् ।
एतानि यः कुरुते नैत्यकानि
तस्योत्थानं देवता राधयन्ति ॥ ५-३३-१२३ (३२८२८)
समैर्विवाहं कुरुते न हीनैः
समैः सख्यं व्यवहारं कथां च ।
गुणैर्विशिष्टांश्च पुरो दधाति
विपश्चितस्तस्य नयाः सुनीताः ॥ ५-३३-१२४ (३२८२९)
मितं भुङ्क्ते संविभज्याश्रितेभ्यो
मितं स्वपित्यमितं कर्म कृत्वा ।
ददात्यमित्रेष्वपि याचितः सं-
स्तमात्मवन्तं प्रजहत्यनर्थाः ॥ ५-३३-१२५ (३२८३०)
चिकीर्षितं विप्रकृतं च यस्य
नान्ये जनाः कर्म जानन्ति किंचित् ।
मन्त्रे गुप्ते सम्यगनुष्ठिते च
नाल्पोऽप्यस्य च्यवते कश्चिदर्थः ॥ ५-३३-१२६ (३२८३१)
यः सर्वभूतप्रशमे निविष्टः
सत्यो मृदुर्मानकृच्छुद्धभावः
अतीव स ज्ञायते ज्ञातिमध्ये
महामणिर्जात्य इव सप्रन्नः ॥ ५-३३-१२७ (३२८३२)
य आत्मनाऽपत्रपते भृशं नरः
स सर्वलोकस्य गुरुर्भवत्युत
अनन्तजेजाः सुमनाः समाहितः
स तेजसा सूर्य इवावभासते ॥ ५-३३-१२८ (३२८३३)
वने जाताः शापदग्धस्य राज्ञः
पाण्डोः पुत्राः पञ्च पञ्चेन्द्रकल्पाः ।
त्वयैव बाला वर्धिताः शिक्षिताश्च
तवादेशं पालयन्त्याम्बिकेय ॥ ५-३३-१२९ (३२८३४)
प्रदायैषामुचितं तातराज्यं

सुखी पुत्रैः सहितो मोदमानः ।
न देवानां नापि च मानुषाणां
भविष्यसि त्वं गर्हणीयो नरेन्द्र ॥ ॥ ५-३३-१३० (३२८३५)

इति श्रीमन्महाभारते उद्योगपर्वणि प्रजागरपर्वणि त्रयस्त्रिंशोऽध्यायः ॥
Mahabharata - Udyoga Parva - Chapter Footnotes

५-३३-५ अकल्पो न किंतु कल्पः समर्थ एव । सर्वदा विदुरसंदर्शनं
मय अप्रत्याख्येयमित्यर्थः ॥
५-३३-१० प्रजागरं निद्राया अभावम् ॥
५-३३-१२ यतः यदा प्राप्तः सञ्जयस्तदारभ्येत्यर्थः । प्रचिन्ता
प्रकृष्टा चिन्ता ॥
५-३३-१४ अभियुक्तमित्यर्धोपात् एकः त्रयोऽन्ये च प्रदागरावेशभाजनानि ॥
५-३३-१५ गृद्धयन् लिप्सावान् ॥
५-३३-१७ प्रेष्यः प्रकर्षेण एषणीयः प्रार्थ्य इतियावत् । ते त्वया
प्रेषितो वनमिति शेषः ॥
५-३३-१८ विपरीतः राजलक्षणहीनः सर्वेषां द्वेष्यः । भागधेये
राज्यांशे । अर्चिषां नेत्ररश्मीनां प्रक्षयात्। न संमतस्त्वं
धर्मात्मापि सन्निति उपहासः ॥
५-३३-१९ आनृशंस्यात् क्रूरत्वाभावात् । अनुक्रोशात् दयालुत्वात्। तितिक्षते
युधिष्ठिर इति शेषः ॥
५-३३-२० एतेष्विति । एतेषामधीनो भूत्वेत्यर्थः ॥
५-३३-२१ एतेषु पाण्डित्यं नास्तीति वक्तुं पाण्डितलक्षणान्याह
आत्मज्ञानमित्यादिना । आत्मज्ञानं शास्त्रीयापेक्षम्। समारम्भः
शक्त्यपेक्षः । तितिक्षा वैराग्यापेक्षा। धर्मनित्यता
श्रद्धापेक्षा। एतानि अयथाभूतानि मूढान् पुरुषार्थात् भ्रंशयन्ति
नतु पण्डितानित्यर्थः ॥
५-३३-२३ अनास्तिकः परलोकाद्यस्तीति जानन् । श्रद्दधानः श्रद्धा
गुरुवेदवाक्यादिषु फलावश्यंभावनिश्चयस्तद्वान् ॥
५-३३-२४ दर्पः परावज्ञानम् । स्तम्भः असन्नतिः। मान्यमानिता मान्यं
मानार्हं आत्मानं मन्यत इति मान्यमानी तस्य भावस्तत्ता ॥
५-३३-२७ संसारिणी स्वभावतोऽनवस्तितापि कामात् ऐहिक सुखात्
उभयलोकसुखावहं धर्ममर्थं वृणीते स पण्डितः । कामो
धर्मार्थापेक्षया निकृष्ट इत्यर्थः। कामादिति। यस्तु कामं त्यक्त्वा
अर्थं वृणीते सः अर्थार्थी मोक्षादेव सर्वं अर्थं विन्दति ज्ञानफले
मोक्षे कृत्स्नस्यार्थस्यान्तर्भावात् स जनकादितुल्यः अतः पण्डित

उच्यते ॥
५-३३-२९ चिरं शृणोति ज्ञानदार्ढ्याय असंपृष्टः
यथावदपृष्टः । व्युपयुङ्क्ते वाग्व्ययं करोति। परार्थे विषये
प्रज्ञानं चिह्नम् ॥
५-३३-३१ निश्चित्य स्वयत्नमाध्यत्वम् । कर्मणः अन्तर्मध्ये न वसति
नोपरमते किंतु समापयत्येव । अवन्ध्यकालः सर्वदा सप्रयोजनमेव
कर्माचरन् ॥
५-३३-३२ आर्याः शिष्टाःक तद्योग्यकर्मणि । भूरितैश्वर्यं
तत्प्राप्त्यर्थं कर्माणि ॥
५-३३-३४ योगो रचनाप्रकारः । उपायस्तदर्थसाग्री। मनुष्याणां मध्ये
स नरः पण्डितः ॥
५-३३-३५ प्रवृत्तवाक् अकुण्ठितवचनः । चित्रकथो लोककथाभिज्ञः
। ऊहस्तर्कः। प्रतिभानं तत्कालस्फूर्तिः ॥
५-३३-३६ प्रज्ञानुगं बुद्धिवश्यम् । श्रुतानुगा शास्त्रानुसारिणी ॥
५-३३-३८ महामनाः अधिकेच्छावान् । अकर्मणा हीनकर्मणा द्यूतादिनेत्यर्थः ॥
५-३३-४२ संसारयति भृत्यादिद्वारा प्रवर्तयति ॥
५-३३-४६ नैष्कर्म्यात् अयत्नतः ॥
५-३३-४७ कदर्यं अदातारम् ॥
५-३३-५१ एकया बुद्ध्या । द्वे कार्याकार्ये विनिश्चित्य सम्यगवधार्य। त्रीन्
मित्रोदासीनशत्रून्। चतुर्भिः सामदानभेददण्डैः। मित्रं
साम्नैव दानभेदाभ्यामुदासीनम् सर्वैः शत्रुं वशीकुरु । पञ्च
इन्द्रियाणि जित्वा। षड्विवदित्वा संधिविग्रहादीन् ज्ञात्वा। सप्त
हित्वा-स्त्रियोऽक्षा मृगया पानं वाक्पारुष्यं च पञ्चमम्। महच्च
दण्डपारुष्यमर्थदूषणमेव चेति सप्त हेयानि त्यक्त्वा सुखी भव ॥
५-३३-५४ सत्यं यथार्थभाषणम् । पारावारस्य समुद्रस्य ॥
५-३३-६९ यद्धं कनीयान् । भेददाने मध्यमः। साम उत्तमः ५-३३-७१
त्वयिसति त्वत्पुत्रोऽधनोऽतस्त्वमेव पाण्डवानां राज्यं दातुं
प्रभुरसीत्यर्थः ॥
५-३३-७५ शरणं गृहम् । विषमेपि संकटेपि ॥
५-३३-७६ दीर्घसूत्रैः क्षिप्रसाध्ये कार्ये चिरं कुर्वद्भिः । अलसैः
करिष्यामीति कालगमकैः। चारणैः स्तावकैः। अरणैरितिच्छेदो
कवा। रणविरोधिभिर्द्यूताद्यासक्तैरित्यर्थः ॥
५-३३-७७ वृद्धः कुलधर्मानुपदिशति । कुलीनः शिशून् आचारं
ग्राहयति। सखा हितं वदति। भगिनी धनं रक्षति ॥
५-३३-७८ साद्यस्कानि सद्यःफलानि ॥
५-३३-७९ देवताः स्वर्गभाजः । स्वर्गपदार्थश्च- यन्न

दुःखेन संभिन्नं न च ग्रस्तमनन्तरम्। अभिलाषोपनीतं
च तत्सुखं स्वःपदास्पदम् इत्येवंरूपः। अतस्ते
सत्यसंकल्पाः। धीमतामगस्त्यादीनामनुभावं
समुद्रपानादिप्रभावम्। तेपि देवतुल्या इत्यर्थः। विनयोपि
गुरुप्रसादकरत्वेन सद्यःफलः। विनाशहेतुः कर्मापि चौर्यादिकं
तच्च त्वय्येवास्ति। तव सर्वं कर्म मानार्थमेवेति भाः। पापकर्मणां
विनाशनं विनाशयितुः सद्यःफलम् ॥
५-३३-८२ पितॄन् अग्निष्वात्तादीन् गोत्रप्रवर्तकानृषींश्च । मनुष्यान्
पित्रादीन् ॥
५-३३-८३ त्वा त्वाम् । उपजीव्याः गुरवः । इह लोके साधिता मित्रादयाः। इह
परलोके जन्मान्तरे वा स्वं स्वं कार्यं कुर्वन्तीत्यर्तः ॥
५-३३-८४ दृतेश्चर्ममयाज्जलपात्रात् ५-३३-८८ गोपालस्य ग्रामे
वासे वनवाससाध्यस्य गोरक्षणस्याभावः । नापितस्य वने वासे ग्रामे
तत्कार्याभाव इति भावः ॥
५-३३-९० षण्णामिति । आत्मनि चित्ते नित्यानां षण्णाम्- कामक्रोधौ
शोकमोहौ मदमानौ च षट्पदीत्युक्तानाम्। ऐश्वर्यं वशित्वम् ॥
५-३३-९५ नातुराः अरोगाः ॥
५-३३-९६ स्वप्रत्यया स्वनिश्चयपूर्विका वृत्तिवर्तनं नतु
गतानुगतिकयेत्यर्थः ॥
५-३३-१०० द्वेष्टि मनसानिष्टं चिन्तयति । विरुध्यते कर्मणा ॥
५-३३-१०४ सन्निपातः समरतं (न्नगर्भः) ॥
५-३३-१०७ त्रिस्थूणं वातपित्तश्लेष्माणः स्थूणायरू ॥॥
पञ्च साक्षिवदुदासीनाः शब्दादयो ग्राह्या यस्मिन् । क्षेत्रज्ञाधि ॥॥॥।
वीवाधिष्ठितम् ॥
१०७ ॥
५-३३-१०८ मत्ते मद्यादिना । प्रमत्तो
विषयान्तरासक्तयाऽनवहितः। उन्मत्ते धातुदोषात् ॥
५-३३-११२ मात्रा उपराधानुसारेण दण्डप्रमाणम् । ब्राह्मणादौ अपराधस्य
क्षगां च ज ॥ति ॥
५-३३-११३ युक्तः छि ॥पेक्षणि हितः ॥
११३ ॥
५-३३-११४ संभ्य ॥क्रोध न च स्त्रियोऽर्थे यतते विवादं इति
को पाठः । ५-३३-११६ न ॥॥॥इति । खो पाठः। मात्रार्थे अल्पार्थे
इति ॥॥॥
५-३३-११. प्रातिभाव्यं प्रतिकूलो भावः चित्ताभिप्राया ॥॥॥।
प्रातिभाव्यं विरोधम् । अत्याह अतिकम्य ब्रवीति ॥

५-३३-१२२ दम्भं परवच्चनेच्छया धर्मानुष्ठानम् ॥
५-३३-१२७ जात्य अभिजातः उत्तमे आकरे जातः ॥
५-३३-१२८ आत्मना अपत्रपते परैरज्ञातेऽपि स्वव्यलीके स्वयमेव लज्जते ॥

---

उद्योगपर्व-अध्यय०३४
॥ श्रीः ॥
५.३४. अध्यायः ३४

Mahabharata - Udyoga Parva - Chapter Topics
धृतराष्ट्रेण दुर्योधनादिश्रेयस्साधनप्रश्ने विदुरेण
नीतिकथनपूर्वकं युधिष्ठिराय राज्यदानस्य तत्साधनत्वकथनम्
॥ १ ॥

Mahabharata - Udyoga Parva - Chapter Text

५-३४-० (३२८३६)
धृतराष्ट्र उवाच। ५-३४-०क्ष् (३४५०)
जाग्रतो दह्यमानस्य यत्कार्यमनुपश्यसि ।
तद्ब्रूहि त्वं हि नस्तात धर्मार्थकुशलः शुचिः ॥ ५-३४-१ (३२८३७)
तस्माद्यथावद्विदुर प्रशाधि
प्रज्ञापूर्वं सर्वमजातशत्रोः ।
यन्मन्यसे पथ्यमदीनसत्व
श्रेयस्करं ब्रूहि तद्वै कुरूणाम् ॥ ५-३४-२ (३२८३८)
पापाशङ्की पापमेवानुपश्यन्
पृच्छामि त्वां व्याकुलेनात्मनाहम् ।
कजे तन्मे ब्रूहि तत्पं यथाव-
न्मनीषितं सर्वमजातशत्रोः ॥ ५-३४-३ (३२८३९)
विदुर उवाच। ५-३४-४क्ष् (३४५१)
शुभं वा यदि वा पापं द्वेष्यं वा यदि वा प्रियम् ।
नापृष्टः कस्यचिद्ब्रूयाद्यः स नेच्छेत्पराभवम् ॥ ५-३४-४ (३२८४०)
तस्माद्वक्ष्यामि ते राजन्हितं यत्स्यान्कुरून्प्रति ।
वचः श्रेयस्करं धर्म्यं ब्रुवतस्तन्निबोध मे ॥ ५-३४-५ (३२८४१)
मिथ्योपेतानि कर्माणि सिद्ध्येतादीनि भारत ।
अनुपायप्रयुक्तानि मा स्म ते ॥।मनः कृथाः ॥ ५-३४-६ (३२८४२)
तथैव योगविहितं यत्तु कर्म न सिध्यति ।
उपाययुक्तं मेधावी न तत्र ग्लपयेन्मनः ॥ ५-३४-७ (३२८४३)

अनुबन्धानवेक्षेत सानुबन्धेषु कर्मसु ।
संप्रधार्य च कुर्वीत सहसा न समाचरेत् ॥ ५-३४-८ (३२८४४)
अनुबन्धं च संप्रेक्ष्य विपाकं चैव कर्मणाम् ।
उत्थानमात्मनश्चैव धीरः कुर्वीत वा न वा ॥ ५-३४-९ (३२८४५)
यः प्रमाणं न जानाति स्थाने वृद्धौ तथा क्षये ।
कोशे जनपदे दण्डे न स राज्येऽवतिष्ठते ॥ ५-३४-१० (३२८४६)
यस्त्वेतानि प्रमाणानि यथोक्तान्यनुपश्यति ।
युक्तो धर्मार्थयोर्ज्ञाने स राज्यमधिगच्छति ॥ ५-३४-११ (३२८४७)
न राज्यं प्राप्तमित्येव वर्तितव्यमसांप्रतम् ।
श्रियं ह्यविनयो हन्ति जरा रूपमिवोत्तमम् ॥ ५-३४-१२ (३२८४८)
भक्ष्योत्तमप्रतिच्छन्नं मत्स्यो बडिशमायसम् ।
अन्नाभिलाषी ग्रसते नानुबन्धमवेक्षते ॥ ५-३४-१३ (३२८४९)
यच्छक्यं ग्रसितुं ग्रस्यं ग्रस्तं परिणमेच्च यत् ।
हितं च परिणामे यत्तदाद्यं भूतिमिच्छता ॥ ५-३४-१४ (३२८५०)
वनस्पतेरपक्वानि फलानि प्रचिनोति यः ।
स नाप्नोति रसं तेभ्यो बीजं चास्य विनश्यति ॥ ५-३४-१५ (३२८५१)
यस्तु पक्वमुपादत्ते काले परिणतं फलम् ।
फलाद्रसं स लभते बीजाच्चैव फलं पुनः ॥ ५-३४-१६ (३२८५२)
यथा मधु समादत्ते रक्षन्पुष्पाणि षट्पदः ।
तद्वदर्थान्मनुष्येभ्य आदद्यादविहिंसया ॥ ५-३४-१७ (३२८५३)
पुष्पं पुष्पं विचिन्वीत मूलच्छेदं न कारयेत् ।
मालाकार इवारामे न यथाङ्गारकारकः ॥ ५-३४-१८ (३२८५४)
किं नु मे स्यादिदं कृत्वा किं नु मे स्यादकुर्वतः ।
इति कर्माणि सञ्चिन्त्य कुर्याद्वा पुरुषो न वा ॥ ५-३४-१९ (३२८५५)
अनारभ्या भवन्त्यर्थाः केचिन्नित्यं यथाऽगताः ।
कृतः पुरुषकारोऽहि भवेद्येषु निरर्थकः ॥ ५-३४-२० (३२८५६)
ग अनर्थे चैव निरतमर्थे चैव पराङ्भुखम् ।
न तं भर्तारमिच्छन्ति षण्ढं पतिमिव स्त्रियः ॥ ५-३४-२१ (३२८५७)
प्रसादो निष्फलो यस्य क्रोधश्चापि निरर्थकः ।
न तं भर्तारमिच्छन्ति षण्ढं पतिमिव स्त्रियः ॥ ५-३४-२२ (३२८५८)
कांश्चिदर्थान्नरः प्राज्ञो लघुमूलान्महाफलान् ।
क्षिप्रमारभते कर्तुं न दीर्घयति तादृशान् ॥ ५-३४-२३ (३२८५९)
ऋजु पश्यति यः सर्वं चक्षुषा नु पिबन्निव ।
आसीनमपि तूष्णीकमनुरज्यन्ति तं प्रजाः ॥ ५-३४-२४ (३२८६०)
सुपुष्पितः स्यादफलः फलितः स्याद्दुरारुहः ।
अपक्वः पक्वसङ्काशो न तु शीर्येत कर्हिचित् ॥ ५-३४-२५ (३२८६१)

चक्षुषा मनसा वाचा कर्मणा च चतुर्विधम् ।
प्रसादयति यो लोकं तं लोकोऽनुप्रसीदति ॥ ५-३४-२६ (३२८६२)
यस्मात्रस्यन्ति भूतानि मृगव्याधान्मृगा इव ।
सागरान्तामपि महीं लब्ध्वा स परिहीयते ॥ ५-३४-२७ (३२८६३)
पितृपैतामहं राज्यं प्राप्यापि स्वेन कर्मणा ।
वायुरभ्रमिवासाद्य भ्रंशयत्यनये स्थितः ॥ ५-३४-२८ (३२८६४)
धर्ममाचरतो राज्ञः सद्भिश्चरितमादितः ।
वसुधा वसुसंपूर्णा वर्धते भूतिवर्धनी ॥ ५-३४-२९ (३२८६५)
अथ संत्यजतो धर्ममधर्मं चानुतिष्ठतः ।
प्रतिसंवेष्टते भूमिरग्नौ चर्माहितं यथा। ५-३४-३० (३२८६६)
य एव यत्नः क्रियते परराष्ट्रविमर्दने ।
स एव यत्नः कर्तव्यः स्वराष्ट्रपरिपालने । ५-३४-३१ (३२८६७)
धर्मेण राज्यं विन्देत धर्मेण परिपालयेत् ।
धर्ममूलां श्रियं प्राप्य न जहाति न हीयते ॥ ५-३४-३२ (३२८६८)
अप्युन्मत्तात्प्रलपतो बालाच्च परिजल्पतः ।
सर्वतः सारमादद्यादश्मभ्य इव काञ्चनम् ॥ ५-३४-३३ (३२८६९)
सुव्याहृतानि महतां सुकृतानि ततस्ततः ।
सञ्चिन्वन्धीर आसीत शिलाहारी शिलं यथा ॥ ५-३४-३४ (३२८७०)
गन्धेन गावः पश्यन्ति वेदैः पश्यन्ति ब्राह्मणाः ।
चारैः पश्यन्ति राजानश्चक्षुर्भ्यामितरे जनाः ॥ ५-३४-३५ (३२८७१)
भूयांसं लभते क्लेशं या गौर्भवति दुर्दुहा ।
अथ या सुदुघा राजन्नैव तां वितुदन्त्यपि ॥ ५-३४-३६ (३२८७२)
यदतप्तं प्रणमति न तत्सन्तापमर्हति ।
यच्च स्वयं नतं दारु न तत्संनामयेद्बुधः ॥ ५-३४-३७ (३२८७३)
एतयोपमया धीरः सन्नमेत बलीयसे ।
इन्द्राय स प्रणमते नमते यो बलीयसे ॥ ५-३४-३८ (३२८७४)
पर्जन्यनाथाः पशवो राजानो मन्त्रिबान्धवाः ।
पतयो बान्धवाः स्त्रीणां ब्राह्मणा वेदबान्धवाः ॥ ५-३४-३९ (३२८७५)
सत्येन रक्ष्यते धर्मो विद्या योगेन रक्ष्यते ।
मृजया रक्ष्यते रूपं कुलं वृत्तेन रक्ष्यते ॥ ५-३४-४० (३२८७६)
मानेन रक्ष्यते धान्यमश्वान्रक्षेदनुक्रमात् ।
अभीक्ष्णदर्शनाद्गावः स्त्रियो रक्ष्याः कुचेलतः ॥ ५-३४-४१ (३२८७७)
न कुलं वृत्तहीनस्य प्रमाणमिति मे मतिः ।
अन्तेष्वपि हि जातानां वृत्तमेव विशिष्यते ॥ ५-३४-४२ (३२८७८)
य ईर्षुः परवित्तेषु रूपे वीर्ये कुलान्वये ।
सुखसौभाग्यसत्कारे तस्य व्याधिरनन्तकः ॥ ५-३४-४३ (३२८७९)

अकार्यकरणाद्भीतः कार्याणां च विवर्जनात् ।
अकाले मन्त्रभेदाच्च येन माद्येन्न तत्पिबेत् ॥ ५-३४-४४ (३२८८०)
विद्यामदो धनमदस्तृतीयोऽभिजनो मदः ।
मदा एतेऽवलिप्तानामेत एव सतां दमाः ॥ ५-३४-४५ (३२८८१)
असन्तोऽभ्यर्थिताः सद्भिः क्वचित्कार्ये कदाचन ।
मन्यन्ते सन्तमात्मानमसन्तमपि विश्रुतम् ॥ ५-३४-४६ (३२८८२)
गतिरात्मवतां सन्तः सन्त एव सतां गतिः ।
असतां च गतिः सन्तो न त्वसन्तः सतां गतिः ॥ ५-३४-४७ (३२८८३)
जिता सभा वस्त्रवता मिष्टाशा गोमता जिता ।
अध्वा जितो यानवता सर्वं शीलवता जितम् ॥ ५-३४-४८ (३२८८४)
शीलं प्रधानं पुरुषे तद्यस्येह प्रणश्यति ।
न तस्य जीवितेनार्थो न धनेन न बन्धुभिः ॥ ५-३४-४९ (३२८८५)
आढ्यानां मांसपरमं मध्यानां गोरसोत्तरम् ।
तैलोत्तरं दरिद्राणां भोजनं भरतर्षभ ॥ ५-३४-५० (३२८८६)
संपन्नतरमेवान्नं दरिद्रा भुञ्जते सदा ।
क्षुत्स्वादुतां जनयति सा चाढ्येषु सुदुर्लभा ॥ ५-३४-५१ (३२८८७)
प्रायेण श्रीमतां लोके भोक्तुं शक्तिर्न विद्यते ।
जीर्यन्त्यपि हि काष्ठानि दरिद्राणां महीपते ॥ ५-३४-५२ (३२८८८)
अवृत्तिर्भयमन्त्यानां मध्यानां मरणाद्भयम् ।
उत्तमानां तु मर्त्यानामवमानात्परं भयम् ॥ ५-३४-५३ (३२८८९)
ऐश्वर्यमदपापिष्ठा मदाः पानमदादयः ।
ऐश्वर्यमदमत्तो हि नो पतित्वाऽवबुध्यते ॥ ५-३४-५४ (३२८९०)
इन्द्रियौरिन्द्रियार्थेषु वर्तमानैरनिग्रहैः ।
तैरयं ताप्यते लोको नक्षत्राणि ग्रहैरिव ॥ ५-३४-५५ (३२८९१)
यो जितः पञ्चवर्गेण सहजेनात्मकर्षिणा ।
आपदस्तस्य वर्धन्ते शुक्लपक्ष इवोडुराट् ॥ ५-३४-५६ (३२८९२)
अविजित्य य आत्मानममात्यान्विजिगीषते ।
अमित्रान्वा जितामात्यः सोऽवशः परिहीयते ॥ ५-३४-५७ (३२८९३)
आत्मानमेव प्रथमं द्वेष्यरूपेण योजयेत् ।
ततोऽमात्यानमित्रांश्च न मोघं विजिगीषते ॥ ५-३४-५८ (३२८९४)
वश्येन्द्रियं जितामात्यं धृतदण्डं विकारिषु ।
परीक्ष्यकारिणं धीरमत्यन्तं श्रीर्निषेवते ॥ ५-३४-५९ (३२८९५)
रथः शरीरं पुरुषस्य राज-
न्नात्मा नियन्तेन्द्रियाण्यस्य चाश्वाः ।
तैरप्रमत्तः कुशली सदश्वै-
र्दान्तैः सुखं याति रथीव धीरः ॥ ५-३४-६० (३२८९६)

एतान्यनिगृहीतानि व्यापादयितुमप्यलम् ।
अविधेया इवादान्ताः सरथं सारथिं हयम् ॥ ५-३४-६१ (३२८९७)
अनर्थमर्थतः पश्यन्नर्थं चैवाप्यनर्थतः ।
इन्द्रियैरजितैर्बालः सुदुःखं मन्यते सुखम् ॥ ५-३४-६२ (३२८९८)
धर्मार्थौ यः परित्यज्य स्यादिन्द्रियवशानुगः ।
श्रीप्राणधनदारेभ्यः क्षिप्रं स परिहीयते ॥ ५-३४-६३ (३२८९९)
अर्थानामीश्वरो यः स्यादिन्द्रियाणामनीश्वरः ।
इन्द्रियाणामनैश्वर्यादैश्वार्याद्भ्रश्यते हि सः ॥ ५-३४-६४ (३२९००)
आत्मनात्मानमन्विच्छेन्मनोबुद्धीन्द्रियैर्यतैः ।
आत्मा ह्येवात्मनो बन्धुरात्मैव रिपुरात्मनः ॥ ५-३४-६५ (३२९०१)
बन्धुरात्मात्मनस्तस्य येनैवात्मात्मना जितः ।
स एव नियतो बन्धुः स एव नियतो रिपुः ॥ ५-३४-६६ (३२९०२)
क्षुद्राक्षेणेव जालेन झपावपिहितावुरू ।
कामश्च राजन्क्रोधश्च तौ प्रज्ञानं विलुम्पतः ॥ ५-३४-६७ (३२९०३)
समवेक्ष्येह धर्मार्थौ संभारान्योऽधिगच्छति ।
स वै संभृतसंभारः सततं सुखमेधते ॥ ५-३४-६८ (३२९०४)
यः पञ्चाभ्यन्तराञ्शत्रूनविजित्य मनोमयान् ।
जिगीषति रिपूनन्यान्रिपवोऽभिभवन्ति तम् ॥ ५-३४-६९ (३२९०५)
दृश्यन्ते हि महात्मानो बध्यमानाः स्वकर्मभिः ।
इन्द्रियाणामनीशत्वाद्राजानो राज्यविभ्रमैः ॥ ५-३४-७० (३२९०६)
असंत्यागात्पापकृतामपापां-
स्तुल्यो दण्डः स्पृशते मिश्रभावात् ।
शुष्केणार्द्रं दह्यते मिश्रभावा-
त्तस्मात्पापैः सह सन्धिं न कुर्यात् ॥ ५-३४-७१ (३२९०७)
निजानुत्पततः शत्रून्पञ्च पञ्चप्रयोजनान् ।
यो मोहान्न निगृह्णाति तमापद्ग्रसते नरम् ॥ ५-३४-७२ (३२९०८)
अनसूयार्जवं शौचं सन्तोषः प्रियवादिता ।
दमः सत्यमनायासो न भवन्ति दुरात्मनाम् ॥ ५-३४-७३ (३२९०९)
आत्मज्ञानमानायासस्तितिक्षा धर्मनित्यता ।
वाक्चैव गुप्ता दानं च नैतान्यन्त्येषु भारत ॥ ५-३४-७४ (३२९१०)
आक्रोशपरिवादाभ्यां विहिंसन्त्यबुधा बुधान् ।
वक्ता पापमुपादत्ते क्षममाणो विमुच्यते ॥ ५-३४-७५ (३२९११)
हिंसा बलमसाधूनां राज्ञां दण्डविधिर्बलम् ।
शुश्रूषा तु वलं स्त्रीणां क्षमा गुणवतां बलम् ॥ ५-३४-७६ (३२९१२)
वाक्संयमो हि नृपते सुदुष्करतमो मतः ।
अर्थवच्च विचित्रं च न शक्यं बहु भाषितुम् ॥ ५-३४-७७ (३२९१३)

अभ्यावहति कल्याणं विविधं वाक् सुभाषिता ।
सैव दुर्भाषिता राजन्ननर्थायोपपद्यते ॥ ५-३४-७८ (३२९१४)
रोहते सायकैर्विद्धं वनं परशुना हतम् ।
वाचा दुरुक्तं बीभत्सं न संरोहति वाक्क्षतम् ॥ ५-३४-७९ (३२९१५)
कर्णिनालीकनाराचान्निर्हरन्ति शरीरतः ।
वाक्छशल्यस्तु न निर्हर्तुं शक्यो हृदिशयो हि सः ॥ ५-३४-८० (३२९१६)
वाक्सायका वदनान्निष्पतन्ति
यैराहतः शोचति रात्र्यहानि ।
परस्य नामर्मसु ते पतन्ति
तान्पण्डितो नावसृजेत्परेभ्यः ॥ ५-३४-८१ (३२९१७)
यस्मै देवाः प्रयच्छन्ति पुरुषाय पराभवम् ।
बुद्धिं तस्यापकर्षन्ति सोऽवाचीनानि पश्यति ॥ ५-३४-८२ (३२९१८)
बुद्धौ कलुषभूतायां विनाशे प्रत्युपस्थिते ।
अनयो नयसङ्काशो हृदयान्नापसर्पति ॥ ५-३४-८३ (३२९१९)
सेयं बुद्धिः परीता ते पुत्राणां भरतर्षभ ।
पाण्डवानां विरोधेन न चैनानवबुध्यसे ॥ ५-३४-८४ (३२९२०)
राजा लक्षणसंपन्नस्त्रैलोक्यस्यापि यो भवेत् ।
शिष्यस्ते शासिता सोऽस्तु धृतराष्ट्र युधिष्ठिरः ॥ ५-३४-८५ (३२९२१)
अतीव सर्वान्पुत्रांस्ते भागधेयपुरस्कृतः ।
तेजसा प्रज्ञया चैव युक्तो धर्मर्थतत्त्ववित् ॥ ५-३४-८६ (३२९२२)
अनुक्रोशादानृशंस्याद्योऽसौ धर्मभृतां वरः ।
गौरवात्तव राजेन्द्र बहून्क्लेशांस्तितिक्षति ॥ ॥ ५-३४-८७ (३२९२३)

इति श्रीमन्महाभारते उद्योगपर्वणि प्रजागरपर्वणि चतुस्त्रिंशोऽध्यायः ॥
Mahabharata - Udyoga Parva - Chapter Footnotes

५-३४-१ दह्यमानस्य चिन्ताग्निनेति ॥॥॥
॥
५-३४-२ अजातशत्रोः पथ्ये कुरूणां च श्रेयस्करम् ॥
५-३४-३ पापाशङ्की भाविदुःखादुद्विजन् । पापं स्वकृतं पर्वापराधं पश्यन् ॥
५-३४-६ मिथ्योपेतानि कपटद्युतादीनि । अनुपप्यैः असदपायैः प्रयुक्तानि दुःखफलानीत्यर्थः ॥
५-३४-८ अनुबन्धान् प्रयोजनानि ॥
५-३४-१२ असांप्रतं अयुक्तं यथा स्यात्तथा न वर्तितव्यम् ॥
५-३४-१३ मुखे मुष्टिमन्ते मृत्युदं कर्म न कर्तव्यमित्यर्थः

। अनुबन्धे पश्चाद्बन्धम् ॥
५-३४-१४ आद्यं भक्षणीयम् ॥
५-३४-१८ अङ्गारकारको हि मूलत उत्कृत्य काष्ठं दहति । अङ्गार इङ्गालः ॥
५-३४-२० अनारभ्याः प्रबलैः सह वैरादयः । अगताः कदाचिदप्यप्राप्ताः ॥
५-३४- २३ लघुमूलान् अल्पोपायनान् ॥
५-३४- २५ सुपुष्पितः वाचा चक्षुषा चानुग्रहं दर्शयन्नपि अफलः स्यात् । भृत्ये न धनेन वर्धयेत्। सफलोपि सन् दुरारुहः भृत्यवश्यो न भवेत्। अपक्व इति। अन्तर्बलहीनोऽपि बलवत्तां बहिः प्रकाशयेदेवेत्यर्थः ॥
५-३४-२६ कर्मणा दानेन । लोकं भृत्यवर्गम् ॥
५-३४-२९ आदितः आदिकालात् सद्भिराचरितं धर्ममाचरत इत्यन्वयः ॥
५-३४-३० प्रतिसंवेष्टते संकुचति । बहुफलं न प्रयच्छतीत्यर्थः ॥
५-३४-३२ न जहाति श्रियम् ॥
५-३४-३४ सुव्याहृतानि पाण्डित्यवचनानि सुकृतानि तदुपदिष्टकर्माणि । शिलं कणिशाद्यर्जनम् ॥
५-३४-४० योगेन अभ्यासेन । मृजया उद्वर्तनेन ॥
५-३४-४१ अनुक्रमः व्यायामशिक्षादिः । मानं द्रोणादि ॥
५-३४-४२ प्रमाणं धर्मस्य कारणम् ॥
५-३४-४४ अकाले इष्टसिद्धए प्राक् भीतः स्यात् । येन माद्येत् लोभादिना तन्न पिबेत् नाश्नयेत् ॥
५-३४-४५ अभिजनः सहायः ॥
५-३४-५१ संपन्नं मिष्टम् ॥
५-३४-५३ शीलाभावे सत्सु अवमानो महान् क्लेश इत्याह अवृत्तीति ॥
५-३४-५४ ऐश्वर्यमदः पापिष्ठो निन्दिततमो येभ्यस्ते पानमदादयो मदाः ॥
५-३४-५५ इन्द्रियार्थेषु शब्दादिषु ग्रहैः सूर्यादिभिः ॥
५-३४-५६ पञ्चवर्गः श्रोत्रादिगणः ॥
५-३४-५८ आत्मानं मनः ॥
५-३४-६१ व्यापादयितुं नाशयितुम् । अविधेयाः अवशाः ॥
५-३४-६२ अर्थतोऽर्थहेतोः । अनर्थतः अन्यायतः ॥
५-३४-६७ क्षुद्राक्षेण सूक्ष्मच्छिद्रेण प्रज्ञानं तौ नाशयतः । जालमिव महामीनावित्यर्थः ॥
५-३४-६८ समवेक्ष्य अनुरुध्य । संभारान् जयसाधनानि ॥
५-३४-७० राजानो रावणादयः । राज्यविभ्रमैः ऐश्वर्यविलासैः । स्वकर्मभिः सीताहरणादिभिः ॥
५-३४-७२ पञ्च इन्द्रियाणि पञ्चप्रयोजनानि शब्दश्रवणादीनि येषां

तान् ।उत्पततः उत्पथेन गच्छतः ॥
५-३४-७३ अनायासः अचाञ्चल्यम् ॥
५-३४-७४ तितिक्षा द्वन्द्वसहनशीलता ।वाक्गुप्ता असंबद्धप्रलापाद्रक्षिता।अन्त्येषु नीचेषु ॥
५-३४-७५ आक्रोशो रूक्षभाषणम् ।परिवादो निन्दा ॥
५-३४-७७ वाक्यसंयमो नियतं वचनम् ।विचित्रं चमत्कारयुक्तम् ॥
५-३४-७९ बीभत्सं निन्दितं यतो न संरोहति ॥
५-३४-८० कर्णी कर्णाकृतिफलको बाणः ।नालीकः नलिकया प्रक्षेप्यो बाणः।निर्हरन्ति निःसारयन्ति ॥
५-३४-८१ नामर्मसु किंतु मर्मस्येव ॥
५-३४-८२ अवाचीनानि नीचकर्माणि ॥
५-३४-८५ शिष्यस्ते त्वदाज्ञकारी ।शासिता पृथिव्याः ॥
५-३४-८६ भागधेये राज्यांशे पुरस्कृतः ५-३४-८७ अनुक्रोशात् दयालुत्वात् ।आनृशंस्यात् अक्रौर्यात् ॥

---

उद्योगपर्व-अध्यय०३५
॥ श्रीः ॥
५.३५. अध्यायः ३५

Mahabharata - Udyoga Parva - Chapter Topics
विदुरेण धृतराष्ट्रंप्रति सुधन्वविरोचनसंवादादिकथनपूर्वकं पाण्डवेषु पुत्रतौल्येन वृत्तिविधानम् ॥१ ॥

Mahabharata - Udyoga Parva - Chapter Text

५-३५-० (३२९२४)
धृतराष्ट्र उवाच।५-३५-०क्ष् (३४५२)
ब्रूहि भूयो महाबुद्धे धर्मार्थसहितं वचः ।
श्रृण्वतो नास्ति मे तृप्तिर्विचित्राणीह भाषसे ॥५-३५-१ (३२९२५)
विदुर उवाच।५-३५-२क्ष् (३४५३)
सर्वतीर्थेषु वा स्नानं सर्वभूतेषु चार्जवम् ।
उभे त्वेते समे स्यातामार्जवं वा विशिष्यते। ५-३५-२ (३२९२६)
आर्जवं प्रतिपद्यस्व पुत्रेषु सततं विभो ।
इह कीर्तिं परां प्राप्य प्रेत्य स्वर्गमवाप्स्यसि ॥५-३५-३ (३२९२७)
यावत्कीर्तिर्मनुष्यस्य पुण्या लोके प्रगीयते ।
तावत्स पुरुषव्याघ्र स्वर्गलोके महीयते ॥५-३५-४ (३२९२८)
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।

विरोचनस्य संवादं केशिन्यर्थे सुधन्वना ॥ ५-३५-५ (३२९२९)
स्वयंवरे स्थिता कन्या केशिनी नाम नामतः ।
रूपेणाप्रतिमा राजन्विशिष्टपतिकाम्यया ॥ ५-३५-६ (३२९३०)
विरोचनोऽथ दैतेयस्तदा तत्राजगाम ह ।
प्राप्तुमिच्छंस्ततस्तत्र दैत्येन्द्रं प्राह केशिनी ॥ ५-३५-७ (३२९३१)
केशिन्युवाच। ५-३५-८क्ष् (३४५४)
किं ब्राह्मणाः स्विच्छ्रेयांसो दितिजाः स्विद्विरोचन
अथ केन स्म पर्यङ्कं सुधन्वा नाधिरोहति ॥ ५-३५-८ (३२९३२)
विरोचन उवाच। ५-३५-९क्ष् (३४५५)
प्राजापत्यास्तु वै श्रेष्ठा वयं केशिनि सत्तमाः ।
अस्माकं खल्विमे लोकाः के देवाः के द्विजातयः ५-३५-९ (३२९३३)
केशिन्युवाच। ५-३५-१०क्ष् (३४५६)
इहैवावां प्रतीक्षाव उपस्थाने विरोचन ।
सुधन्वा प्रातरागन्ता पश्येयं वां समागतौ ॥ ५-३५-१० (३२९३४)
विरोचन उवाच। ५-३५-११क्ष् (३४५७)
तथा भद्रे करिष्यामि यथा त्वं भीरु भाषसे ।
सुधन्वानं च मां चैव प्रातर्द्रष्टासि सङ्गतौ ॥ ५-३५-११ (३२९३५)
विदुर उवाच। ५-३५-१२क्ष् (३४५८)
अतीतायां च शर्वर्यामुदिते सूर्यमण्डले ।
अथाजगाम तं देशं सुधन्वा राजसत्तम ।
विरोचनो यत्र विभो केशिन्या सहितः स्थितः ॥ ५-३५-१२ (३२९३६)
सुधन्वा च समागच्छत्प्राह्लादिं केशिनीं तथा ।
समागतं द्विजं दृष्ट्वा केशिनी भरतर्षभ ।
प्रत्युत्थायासनं तस्मै पाद्यमर्घ्यं ददौ पुनः ॥ ५-३५-१४अ इति
होवाच वचनं विरोचनमनुत्तमम् ।
आस्स्व तल्पे हि सौवर्णे प्राह्लादे ब्राह्मणस्त्वहम् ॥' ५-३५-१३ (३२९३७)
अन्वालभे हिरण्मयं प्राह्लादे ते वरासनम् ।
एकत्वमुपसंपन्नो नत्वासोऽहं त्वया सह ॥ ५-३५-१५ (३२९३८)
विरोचन उवाच। ५-३५-१६क्ष् (३४५९)
तवार्हते तु फलकं कूर्चं वाप्यथवा बृसी ।
सुधन्वन्न त्वमर्होऽसि मया सह समासनम् ॥ ५-३५-१६ (३२९३९)
सुधन्वोवाच। ५-३५-१७क्ष् (३४६०)
पितापुत्रौ सहासीतां द्वौ विप्रौ क्षत्रियावपि ।
वृद्धौ वैश्यौ च शूद्रौ च न त्वन्यावितरेतरम् ॥ ५-३५-१७ (३२९४०)
पिता हि ते समासीनमुपासीतैव मामधः ।
बालः सुखैधितो गेहे न त्वं किञ्चन बुध्यसे ॥ ५-३५-१८ (३२९४१)

विरोचन उवाच। ५-३५-१९क्ष् (३४६१)
हिरण्यं च गवाश्वं च यद्वित्तमसुरेषु नः ।
सुधन्वन्विपणे तेन प्रश्नं पृच्छाव ये वुदुः ॥ ५-३५-१९ (३२९४२)
सुधन्वोवाच। ५-३५-२०क्ष् (३४६२)
हिरण्यं च गवाश्वं च तवैवास्तु विरोचन ।
प्राणयोस्तु पणं कृत्वा प्रश्नं पृच्छाव ये विदुः ॥ ५-३५-२० (३२९४३)
विरोचन उवाच। ५-३५-२१क्ष् (३४६३)
आवां कुत्र गमिष्यावः प्राणयोर्विपणे कृते ।
न तु देवेष्वहं स्थाता न मनुष्येषु कर्हिचित् ॥ ५-३५-२१ (३२९४४)
सुधन्वोवाच। ५-३५-२२क्ष् (३४६४)
पितरं ते गमिष्यावः प्राणयोर्विपणे कृपे ।
पुत्रस्यापि स हेतोर्हि प्रह्लादो नानृतं वदेत् ॥ ५-३५-२२ (३२९४५)
विदुर उवाच। ५-३५-२३क्ष् (३४६५)
एवं कृतपणौ क्रुद्धौ तत्राभिजग्मतुस्तदा ।
विरोचनसुधन्वानौ प्रह्लादौ यत्र तिष्ठति ॥ ५-३५-२३ (३२९४६)
प्रह्लाद उवाच। ५-३५-२४क्ष् (३४६६)
इमौ तौ संप्रदृश्येते याभ्यां न चरितं सह ।
आशीविषाविव क्रुद्धावेकमार्गाविहागतौ ॥ ५-३५-२४ (३२९४७)
किं वै सहैवं चरथो न पुरा चरथः सह ।
विरोचनैतत्पृच्छामि किं ते सख्यं सुधन्वना ॥ ५-३५-२५ (३२९४८)
विरोचन उवाच। ५-३५-२६क्ष् (३४६७)
न मे सुधन्वना सख्यं प्राणयोर्विपणावहे ।
प्रह्लाद तत्त्वं पृच्छामि मा प्रश्नमनृतं वदेः ॥ ५-३५-२६ (३२९४९)
प्रह्लाद उवाच। ५-३५-२७क्ष् (३४६८)
उदकं मधुपर्कं चाप्यानयन्तु सुधन्वने ।
ब्रह्मन्नभ्यर्चनीयोऽसि श्वेता गौः पीवरी कृता ॥ ५-३५-२७ (३२९५०)
सुधन्वोवाच। ५-३५-२८क्ष् (३४६९)
उदकं मधुपर्कं च प्रश्नवाचार्पितं मम ।
प्रह्लद त्वं तु मे तथ्यं प्रश्नं प्रब्रूहि पृच्छतः ।
किं ब्राह्मणाः स्विच्छ्रेयांस उताहो स्विद्विरोचनः ५-३५-२८ (३२९५१)
प्रह्लाद उवाच। ५-३५-२९क्ष् (३४७०)
ग न कल्माषो न कपिलो न कृष्णो न च लोहितः ।
अणीयान्क्षुरधारायाः को धर्मं वक्तुमर्हिति ॥ ५-३५-२९ (३२९५२)
अभिवाद्यो भवान्ब्रह्मन्साक्ष्ये चैव नियोजितः ।'
पुत्र एको मम ब्रह्मंस्त्वं च साक्षादिहास्थितः ।
तयोर्विवदतोः प्रश्नं कथमस्मद्विधो वदेत् ॥ ५-३५-३० (३२९५३)

सुधन्वोवाच। ५-३५-३१क्ष् (३४७१)
ग यदेतत्त्वं न वक्ष्यसि यदि वापि विवक्ष्यसि ।
प्रह्लाद प्रश्नमतुलं मूर्धा ते विफलिष्यति ॥ ५-३५-३१ (३२९५४)
विदुर उवाच। ५-३५-३२क्ष् (३४७२)
आदित्येन सहायान्तं प्रह्लादो हंसमब्रवीत् ।
धृतराष्ट्र महाप्राज्ञ सर्वज्ञं सर्वदर्शिनम् ॥ ५-३५-३२ (३२९५५)
प्रह्लाद उवाच। ५-३५-३३क्ष् (३४७३)
पुत्रो वाऽन्यो भवेद्ब्रह्मन्साक्ष्ये चापि भवेत्स्थितः ।
तयोर्विवदतोर्हंस कथं धर्मः प्रवर्तते ॥ ५-३५-३३ (३२९५६)
हंस उवाच।' ५-३५-३४क्ष् (३४७४)
गां प्रदद्यादौरसाय यद्वान्यत्स्यात्प्रियं धनम् ।
द्वयोर्विवदतो राजन्प्रश्नं सत्यं यथा वदेत् ॥ ५-३५-३४ (३२९५७)
प्रह्लाद उवाच। ५-३५-३५क्ष् (३४७५)
अथ यो नैव प्रब्रूयात्सत्यं वा यदि वाऽनृतम् ।
हंस तत्वं च पृच्छामि कियदेनः करोति सः ॥ ५-३५-३५ (३२९५८)
गहंस उवाच ५-३५-३६क्ष् (३४७६)
पृष्टो धर्मं न विब्रूयाद्गोकर्णशिथिलं चरन् ।
धर्माद्भ्रश्यति राजंस्तु नास्य लोकोऽस्ति न प्रजाः । ५-३५-३६ (३२९५९)
धर्म एतान्संरुजति यथा नद्यस्तु कूलजान् ।
ये धर्ममनुपश्यन्तस्तूष्णीं ध्यायन्त आसते ॥ ५-३५-३७ (३२९६०)
श्रेष्ठोऽर्धं तु हरेत्तत्र भवेत्पादश्च कर्तरि ।
पादस्तेषु सभासत्सु यत्र निन्द्यो न निन्द्यते ॥ ५-३५-३८ (३२९६१)
अनेना भवति श्रेष्ठो मुच्यन्तेऽपि सभासदः ।
कर्तारमेनो गच्छेद्वा निन्द्यो यत्र हि निन्द्यते ॥ ५-३५-३९ (३२९६२)
प्रह्लाद उवाच। ५-३५-४०क्ष् (३४७७)
मोहाद्वा चैव कामाद्वा मिथ्यावादं यदि ब्रुवन् ।
धृतराष्ट्र तत्वं पृच्छामि दुर्विवक्ता तु किं वसेत् ॥ ५-३५-४० (३२९६३)
हंस उवाच।' ५-३५-४१क्ष् (३४७८)
यां रात्रिमधिविन्ना स्त्री यां चैवाक्षपराजितः ।
यां च भाराभितप्ताङ्गो दुर्विवक्ता तु तां वसेत् ॥ ५-३५-४१ (३२९६४)
नगरे प्रतिरुद्धः सन्बहिर्द्वारि बुभुक्षितः ।
अमित्रान्भूयसः पश्यन्दुर्विवक्ता तु तां वसेत् ॥ ५-३५-४२ (३२९६५)
यां च रात्रिमभिद्ध्ग्धो यां च मित्रे प्रियेऽनृते ।
सर्वस्वेन च हीनो यो दुर्विवक्ता तु तां वसेत् ॥ ५-३५-४३ (३२९६६)
पञ्च पश्वनृते हन्ति दश हन्ति गवानृते ।
शतमश्वानृते हन्ति सहस्रं पुरुषानृते ॥ ५-३५-४४ (३२९६७)

हन्ति जातानजातांश्च हिरण्यार्थेऽनृतं वदन् ।
सर्वं भूम्यनृते हन्ति मा स्म भूम्यनृतं वदेः ॥ ५-३५-४५ (३२९६८)
प्रह्लाद उवाच। ५-३५-४६क्ष् (३४७९)
मत्तः श्रेयानङ्गिरा वै सुधन्वा त्विद्विरोचन ।
मातास्य श्रेयसी मातुस्तस्मात्त्वं तेन वै जितः ॥ ५-३५-४६ (३२९६९)
विरोचन सुधन्वाऽयं प्राणानामीश्वरस्तव ।
सुधन्वन्पुनरिच्छामि त्वया दत्तं विरोचनम् ॥ ५-३५-४७ (३२९७०)
सुधन्वोवाच। ५-३५-४८क्ष् (३४८०)
यद्धर्ममवृणीथास्त्वं न कामादनृतं वदीः ।
पुनर्ददामि ते पुत्रं तस्मात्प्रह्लाद दुर्लभम् ॥ ५-३५-४८ (३२९७१)
एष प्रह्लाद पुत्रस्ते मया दत्तो विरोचनः ।
पादप्रक्षालनं कुर्यात्कुमार्याः सन्निधौ मम ॥ ५-३५-४९ (३२९७२)
विदुर उवाच। ५-३५-५०क्ष् (३४८१)
तस्माद्राजेन्द्र भूम्यर्थे नानृतं वक्तुमर्हसि ।
मा गमः ससुतामात्यो नाशं पुत्रार्थमब्रुवन् ॥ ५-३५-५० (३२९७३)
न देवा यष्टिमादाय रक्षन्ति पशुपालवत् ।
यं तु रक्षितुमिच्छन्ति बुद्ध्या संयोजयन्ति तम् ॥ ५-३५-५१ (३२९७४)
यथायथा हि पुरुषः कल्याणे कुरुते मनः ।
तथातथाऽस्य सर्वार्थाः सिद्ध्यन्ते नात्र संशयः ॥ ५-३५-५२ (३२९७५)
नैनं छन्दांसि वृजिनात्तारयन्ति
मायाविनं मायया वर्तमानम् ।
नीडं शकुन्ता इव जातपक्षा-
श्छन्दांस्येनं प्रजहत्यन्तकाले ॥ ५-३५-५३ (३२९७६)
मद्यपानं कलहं पूगवैरं
भार्यापत्योरन्तरं ज्ञातिभेदम् ।
राजद्विष्टं स्त्रीपुंसयोर्विवादं
वर्ज्यान्याहुर्यश्च पन्थाः प्रदुष्टः ॥ ५-३५-५४ (३२९७७)
सामुद्रिकं वणिजं चोरपूर्वं
शलाकधूर्तं च चिकित्सकं च ।
अरिं च मित्रं च कुशीलवं च
नैतान्साक्ष्ये त्वधिकुर्वीत सप्त ॥ ५-३५-५५ (३२९७८)
मानाग्निहोत्रमुत मानमौनं
मानेनाधीतमुत मानयज्ञः ।
एतानि चत्वार्यभयङ्कराणि
भयं प्रयच्छन्त्ययथाकृतानि ॥ ५-३५-५६ (३२९७९)
अगारदाही गरदः कुण्डाशी सोमविक्रयी ।

पर्वकारश्च सूची च मित्रध्रुक्पारदारिकः ॥ ५-३५-५७ (३२९८०)
भ्रूणहा गुरुतल्पी च यश्च स्यात्पानपो द्विजः ।
अतितीक्ष्णश्च कारुश्च नास्तिको वेदनिन्दकः ॥ ५-३५-५८ (३२९८१)
स्रुवप्रग्रहणो व्रात्यः कीनाशश्चात्मवानपि ।
रक्षेत्युक्तश्च यो हिंस्यात्सर्वे ब्रह्महभिः समाः ॥ ५-३५-५९ (३२९८२)
तृणोल्कया ज्ञायते जातरूपं
वृत्तेन भद्रो व्यवहारेण साधुः ।
शूरो भयेष्वर्थकृच्छ्रेषु धीरः
कृच्छ्रेष्वापत्सु सुहृदश्चारयश्च ॥ ५-३५-६० (३२९८३)
जरा रूपं हरति हि धैर्यमाशा
मृत्युः प्राणान्धर्मचर्यामसूया ।
क्रोधः श्रियं शीलमनार्यसेवा
ह्रियं कामः सर्वमेवाभिमानः । ५-३५-६१ (३२९८४)
न क्रोधिनोऽर्थो न नृशंमस्य मित्रं
क्रूगस्य न स्त्री सुखिनो न विद्या ।
न कामिनो ह्रीरलसस्य न श्रीः
सर्वं तु न स्यादनवस्थितस्य ॥ ५-३५-६२ (३२९८५)
श्रीर्मङ्गलान्प्रभवति प्रागल्भ्यात्संप्रवर्धते ।
दाक्ष्यात्तु कुरुते मूलं संयमान्प्रतितिष्ठति ॥ ५-३५-६३ (३२९८६)
अष्टौ गुणाः पुरुषं दीपयन्ति
प्रज्ञा च कौल्यं च दमः श्रुतं च ।
पराक्रमश्चाबहुभाषिता च
दानं यथाशक्ति कृतज्ञता च ॥ ५-३५-६४ (३२९८७)
एतान्गुणांस्तत महानुभावा-
नेको गुणः संश्रयते प्रसह्य
राजा यदा सत्कुरुते मनुष्यं
सर्वान्गुणानेप गुणोतिभाति ॥ ५-३५-६५ (३२९८८)
अष्टौ नृपेमानि मनुष्यलोके
स्वर्गस्य लोकस्य निदर्शनानि ।
चत्वार्येपामन्ववेतानि सद्भि-
श्चत्वारि चैपामनुयान्ति सन्तः ॥ ५-३५-६६ (३२९८९)
यज्ञो दानमध्ययनं तपश्च
चत्वार्येतान्यन्ववेतानि सद्भिः ।
दमः सत्यमार्जवमानृशंस्यं
चत्वार्येतान्यनुयान्ति सन्तः ॥ ५-३५-६७ (३२९९०)
इज्याध्ययनदानानि तपः सत्यं क्षमा घृणा ।

अलोभ इति मार्गोऽयं धर्मस्याष्टविधः स्मृतः ॥ ५-३५-६८ (३२९९१)
तत्र पूर्वचतुर्वर्गो दम्भार्थमपि सेव्यते ।
उत्तरश्च चतुर्वर्गो नामहात्मसु तिष्ठति ॥ ५-३५-६९ (३२९९२)
न सा सभा यत्र न सन्ति वृद्धा
न ते वृद्धा ये न वदन्ति धर्मम् ।
नासौ धर्मो यत्र न सत्यमस्ति
न तत्सत्यं यच्छलेनानुविद्धम् ॥ ५-३५-७० (३२९९३)
सत्यं रूपं श्रुतं विद्या कौल्यं शीलं बलं धनम् ।
शौर्यं च चित्रभाष्यं च दशेमे स्वर्गयोनयः ॥ ५-३५-७१ (३२९९४)
पापं कुर्वन्पापकीर्तिः पापमेवाश्नुते फलम् ।
पुण्यं कुर्वन्पापकीर्तिः पुण्यमत्यन्तमश्नुते ॥ ५-३५-७२ (३२९९५)
तस्मात्पापं न कुर्वीत पुरुषः शंसितव्रतः ।
पापं प्रज्ञां नाशयति क्रियमाणं पुःन पुःनः ॥ ५-३५-७३ (३२९९६)
वृद्धप्रज्ञः पापमेव नित्यमारभते नरः ।
पुण्यं प्रज्ञां वर्धयति क्रियमाणं पुनः पुनः ॥ ५-३५-७४ (३२९९७)
वृद्धप्रज्ञः पुण्यमेव नित्यमारभते नरः ।
पुण्यं कुर्वन्पुण्यकीर्तिः पुण्यं स्थानं स्म गच्छति ।
तस्मात्पुण्यं निषेवेत पुरुषः सुसमाहितः ॥ ५-३५-७५ (३२९९८)
असूयको दन्दशूको निष्ठुरो वैरकृच्छठः ।
स कृच्छ्रं महदाप्नोति नचिरात्पापमाचरन् ॥ ५-३५-७६ (३२९९९)
अनसूयुः कृतप्रज्ञः शोभनान्याचरन्सदा ।
नकृच्छ्रं महदाप्नोति सर्वत्र च विरोचते ॥ ५-३५-७७ (३३०००)
प्रज्ञामेवागमयति यः प्राज्ञेभ्यः स पण्डितः ।
प्राज्ञो ह्यवाप्य धर्मार्थौ शक्नोति सुखमेधितुम् ॥ ५-३५-७८ (३३००१)
दिवसेनैव तत्कुर्याद्येन रात्रौ सुखं वसेत् ।
अष्टमासेन तत्कुर्याद्येन वर्षाः सुखं वसेत् ॥ ५-३५-७९ (३३००२)
पूर्वे वयसि तत्कुर्याद्येन वृद्धः सुखं वसेत् ।
यावज्जीवं तु तत्कुर्याद्येन प्रेत्य सुखं वसेत् ॥ ५-३५-८० (३३००३)
जीर्णमन्नं प्रशंसन्ति भार्यां च गतयौवनाम् ।
शूरं विजितसङ्ग्रामं गतपारं तपस्विनम् ॥ ५-३५-८१ (३३००४)
धनेनाधर्मलब्धेन यच्छिद्रमपिधीयते ।
असंवृतं तद्भवति ततोऽन्यदवदीर्यते ॥ ५-३५-८२ (३३००५)
गुरुरात्मवतां शास्ता शास्ता राजा दुरात्मनाम् ।
अन्तः प्रच्छन्नपापानां शास्ता वैवस्वतो यमः ॥ ५-३५-८३ (३३००६)
ऋषीणां च नदीनां च कुलानां च महात्मनाम् ।
प्रभवो नाधिगन्तव्यः स्त्रीणां दुश्चरितस्य च ॥ ५-३५-८४ (३३००७)

द्विजातिपूजाभिरतो दाता ज्ञातिषु चार्जवी ।
क्षत्रियः शीलभाग्राजंश्चिरं पालयते महीम् ॥ ५-३५-८५ (३३००८)
सुवर्णपुष्पां पृथिवीं चिन्वन्ति पुरुषास्त्रयः ।
शूरश्च कृतविद्यश्च यश्च जानाति सेवितुम् ॥ ५-३५-८६ (३३००९)
बुद्धिश्रेष्ठानि कर्माणि बाहुमध्यानि भारत ।
तानि जङ्घाजघन्यानि भारप्रत्यवराणि च ॥ ५-३५-८७ (३३०१०)
दुर्योधनेऽथ शकुनौ मूढे दुःशासने तथा ।
कर्णे चैश्वर्यमाधाय कथं त्वं भूतिमिच्छसि ॥ ५-३५-८८ (३३०११)
सर्वैर्गुणैरुपेतास्तु पाण्डवा भरतर्षभ ।
पितृवत्त्वयि वर्तन्ते तेषु वर्तस्व पुत्रवत् ॥ ॥ ५-३५-८९ (३३०१२)

इति श्रीमन्महाभारते उद्योगपर्वणि प्रजागरपर्वणि पञ्चत्रिंशोऽध्यायः ॥

Mahabharata - Udyoga Parva - Chapter Footnotes

५-३५-२ आर्जवं अवैषम्यम् ॥
५-३५-१० इहस्थाने उपस्थाने मामुपस्थातुम् । वां दैत्यब्राह्मणौ अहं पश्येयम् ॥
५-३५-१३ समागच्छत् उभयोः संमुखं अगच्छत् ॥
५-३५-१४ विरोचनेन सौवर्णे पीठे मया सह उपवेश्यतामिति प्रार्थितः सुधन्वा उवाच ॥
५-३५-१५ अन्वालभे स्पृशाम्येव ॥
५-३५-१६ फलकं काष्ठपीठं । कूर्चं। बृसी वर्तितदर्भमयं पीठं वा। तव अर्हते योग्यं भवति ॥
५-३५-१८ उपासीत सेवते । अधः स्थित्वेति शेषः ॥
५-३५-१९ प्रश्नं आवयोः कः श्रेष्ठ इति प्रश्नम् । ये विदुस्तान् पृच्छाव ॥
५-३५-२४ सह न चरितं वैरात् ॥
५-३५-२७ पीवरी पुष्टा । कृता मधुपर्कार्थं उपकल्पिता ॥
५-३५-३० नियोजितः अहमिति शेषः ॥
५-३५-३९ पगच्छेदिति ङो पाठः ॥
५-३५-४० किं वसेत् कथं वसेत् ॥
५-३५-४१ अधिविन्ना कृतसपत्नीका स्त्री तां रात्रिं वसेत्तद्वद्दुःखं प्राप्नुयात् ५-३५-४४ पञ्च पूर्वजान् पश्वनृते अजादिपशुहिंसार्थमनृते उक्ते सति हन्ति नाशयति परलोकात् च्यावयति । एवमुत्तरत्र ॥
५-३५-४६ अङ्गिराः सुधन्वनः पिता । त्वत् त्वत्तः ॥

५-३५-४९ पादप्रक्षालनं हरिद्रया पादधावनम् ।कुमार्याः केशिन्याः ।विवाहे दंपत्योः परस्परं हरिद्रया पादधावनं कुर्वन्तीति प्रसिद्धम्।अस्यैव भार्या केशिनी भवत्वित्यर्थः ॥
५-३५-५० अब्रुवन्सत्यमिति शेषः ॥
५-३५-५३ छन्दांसि वेदाः ५-३५-५४ अन्तरं वियोगम् ।विवादं वैरप्रवर्तनम् ॥
५-३५- ५५ सामुद्रिकं हस्तरेखादिपरीक्षकम् ।वणिजं चोरपूर्वं पूर्वं चोरः पश्चाद्विणिक्रभूतः तं कूटतुलावन्तं वा।शलाकधूर्तं शलाकया पाशादिना वा शकुनादिकमुक्त्वा योऽन्यान् वञ्चयति तम्।अरिं विपरीतसाक्ष्यभयात्।मित्रं परीक्षकाणमविश्वासात्।कुशीवलं कुत्सितं शीलं वाति अनुसरतीति तम्।नर्तकीदासं विटोन्मत्तादिकं वा ।५-३५-५३ सत्कर्मद्वारापि तस्य साधुत्वं न मन्तव्यमित्याह मानेति।मानः लोकेषु उत्कर्षः तदर्थान्यग्निहोत्रादीनि भयदानीत्यर्थः।मौनं ध्यानम् ॥
५-३५-५७ कुण्डाशी भगभक्षः ।जीवति भर्तरि जाराज्जातः कुण्डस्तदन्नाशी।सोमविक्रयी प्रसिद्धः।पर्वकारः शरकृत् आयुधमात्रकर्तेत्यर्थः।सूची सूचको नक्षत्रादीनां परदोषाणां च।ज्यौतिषिकः पिशुनो वा ।५-३५-५८ कारुः अशुचिः।नास्तिकः परलोकादिद्वेषी ॥
५-३५-५९ स्रुवप्रग्रहणो ग्रामपुरोहितः ।व्रात्यः अतीतोपनयनकालः पतितसावित्रीको वा।कीनाशः कर्षकः।आत्मवान्समर्थोपि यो रक्षेत्युक्तो हिंस्यात् ॥
५-३५-६० तृणोल्कया तृणज्वालया जातरूपं रूपवद्वस्त ज्ञायतेऽन्धकारे सति ।भद्रे वृषः धर्म इतियावत्।वृत्तेन शीलेन सोस्ति नास्तीति ज्ञायते।व्यवहारेण अहिंसादिप्रधानेन ।कृच्छ्रेषु दुर्भिक्षादिसंकटेषु ॥
५-३५-६३ श्रीरिति ।दाक्ष्यं शीघ्रकारित्वम् ॥
५-३५-६५ एष गुणो राजसत्कारः ॥
५-३५-६६ इमानि वक्ष्यमाणानि ।अन्ववेतानि नित्यसंवद्धानि।अनुयान्ति यत्नेन भजन्ति ॥
५-३५-७१ रूपं विनयमुद्रा ।श्रुतं अध्ययनम्।विद्या देवताद्युपासनम्।चित्रभाष्यं युक्तियुक्तं वचनम् ॥
५-३५-७६ दन्दशूको मर्मच्छेत्ता ।निष्ठुरः अप्रियवाक्।नचिरात् शीघ्रम् ॥
५-३५-७७ नकृच्छ्रं सुखम् ॥
५-३५-७८ आगमयति आनयति ॥
५-३५-७९ वर्षा इत्यत्यन्तसंयोगे द्वितीया ॥
५-३५-८१ गतपारं प्राप्ततत्त्वम् ॥

५-३५-८२ परिपाकसुखं कर्म त्वत्पुत्रा न कुर्वन्ति अन्यायेन च सुखं लिप्सन्ति तत्तु विपरीतमेवेत्याह धनेनेति ॥
५-३५-८३ आत्मवतां जितचित्तानाम् । प्रच्छन्नपापो दुर्योधनः ।

---

उद्योगपर्व-अध्यय०३६
॥ श्रीः ॥
५.३६. अध्यायः ३६

Mahabharata - Udyoga Parva - Chapter Topics
विदुरेण धृतराष्ट्रंप्रति आत्रेयेण साध्यान्प्रत्युपदिष्टनीतिकथनम् ॥ १ ॥
तथा महाकुललक्षणाद्यभिधानपूर्वकं पाण्डवैः सह सन्धिकरणविधानम् ॥ २ ॥

Mahabharata - Udyoga Parva - Chapter Text

विदुर उवाच ।
अत्रैवोदाहरन्तीममितिहासं पुरातनम् ।
आत्रेयस्य च संवादं साध्यानां चेति नः श्रुतम् ॥ ५-३६-१ (३३०१३)
चरन्तं हंसरूपेण महर्षिं संशितव्रतम् ।
साध्या देवा महाप्राज्ञं पर्यपृच्छन्त वै पुरा ॥ ५-३६-२ (३३०१४)
साध्या ऊचुः । ५-३६-३क्ष् (३४८२)
साध्या देवा वयमेते महर्षे
दृष्ट्वा भवन्तं न शक्नुमोऽनुमातुम् ।
श्रुतेन धीरो बुद्धिमांस्त्वं मतो नः
काव्यां वाचं वक्तुमर्हस्युदाराम् ॥ ५-३६-३ (३३०१५)
हंस उवाच। ५-३६-४क्ष् (३४८३)
एतत्कार्यममराः संश्रुतं मे
धृतिः शमः सत्यधर्मानुवृत्तिः ।
ग्रन्थिं विनीय हृदयस्य सर्वं
प्रियाप्रिये चात्मसमं नयीत ॥ ५-३६-४ (३३०१६)
आक्रुश्यमानो नाक्रोशेन्मन्युरेव तितिक्षतः ।
आक्रोष्टारं निर्दहति सुकृतं चास्य विन्दति ॥ ५-३६-५ (३३०१७)
नाक्रोशी स्यान्नावमानी परस्य
मित्रद्रोही नोत नीचोपसेवी ।
न चाभिमानी न च हीनवृत्तो
रूक्षां वाचं रुशतीं वर्जयीत ॥ ५-३६-६ (३३०१८)
मर्माण्यस्थीनि हृदयं तथासू-

न्रूक्षा वाचो निर्दहन्तीह पुंसाम् ।
तस्माद्वाचमुशतीं रूक्षरूपां
धर्मारामो नित्यशो वर्जयीत ॥ ५-३६-७ (३३०१९)
अरुन्तुदं परुषं रूक्षवाचं
वाक्कण्टकैर्वितुदन्तं मनुष्यान् ।
विद्यादलक्ष्मीकतमं जननां
मुखे निबद्धां निर्ऋतिं वै वहन्तम् ॥ ५-३६-८ (३३०२०)
परश्चेदेनमभिविद्धयेत बाणै-
र्भृशं सुतीक्ष्णैरनलार्कदीप्तैः ।
विरिच्यमानोऽप्यतिरिच्यमानो
विद्यात्कविः सुकृतं मे दधाति ॥ ५-३६-९ (३३०२१)
यदि सन्तं सेवति यद्यसन्तं
तपस्विनं यदि वा स्तेनमेव ।
वासो यथा रङ्गवशं प्रयाति
तथा स तेषां वशमभ्युपैति ॥ ५-३६-१० (३३०२२)
अतिवादं न प्रवदेन्न वादये-
द्यो नाहतः प्रतिहन्यान्न घातयेत् ।
हन्तुं च यो नेच्छति पापकं वै
तस्मै देवाः स्पृहयन्त्यागताय ॥ ५-३६-११ (३३०२३)
अव्याहृतं व्याहृताच्छ्रेय आहुः
सत्यं वदेद्व्याहृतं तद्द्वितीयम् ।
प्रियं वदेद्व्याहृतं तत्तृतीयं
धर्म्यं वदेद्व्याहृतं तच्चतुर्थम् ॥ ५-३६-१२ (३३०२४)
यादृशैः सन्निविशते यादृशांश्चोपसेवते ।
यादृगिच्छेच्च भवितुं तादृग्भवति पूरुषः ॥ ५-३६-१३ (३३०२५)
यतो यतो निवर्तते ततस्ततो विमुच्यते ।
निवर्तनाद्धि सर्वतो न वेत्ति दुःखमण्वपि ॥
न जीयते चानुजिगीषतेऽन्या-
न्न वैरकृच्चाप्रतिघातकश्च । ५-३६-१४ (३३०२६)
निन्दाप्रशंसासु समस्वभावो
न शोचते हृष्यति नैव चायम् ॥ ५-३६-१५ (३३०२७)
भावमिच्छति सर्वस्य नाभावे कुरुते मनः ।
सत्यवादी मृदुर्दान्तो यः स उत्तमपूरुषः ॥ ५-३६-१६ (३३०२८)
नानर्थकं सान्त्वयति प्रतिज्ञाय ददाति च ।
रन्ध्रं परस्य जानाति यः स मध्यमपूरुषः ॥ ५-३६-१७ (३३०२९)
दुःशासनस्तूपहतोऽभिशस्तो

नावर्तते मन्युवशात्कृतघ्नः ।
न स्यचिन्मित्रमथो दुरात्मा
कलाश्चैता अधमस्येह पुंसः ॥
न श्रद्दधाति कल्याणं परेभ्योऽप्यात्मशङ्कितः ।
निराकरोति मित्राणि यो वै सोऽधमपूरुषः ॥ ५-३६-१८ (३३०३०)
उत्तमानेव सेवेत प्राप्तकाले तु मध्यमान् ।
अधमांस्तु न सेवेत य इच्छेद्भूतिमात्मनः ॥ ५-३६-२० (३३०३१)
प्राग्नोति वै वित्तमसद्बलेन
नित्योत्थानात्प्रज्ञया पौरुषेण ।
न त्वेव सम्यग्लभते प्रशंसां
न वृत्तमाप्नोति महाकुलानाम् ॥ ५-३६-२१ (३३०३२)
धृतराष्ट्र उवाच। ५-३६-२२क्ष् (३४८४)
महाकुलेभ्यः स्पृहयन्ति देवा
धर्मार्थनित्याश्च बहुश्रुताश्च ।
पृच्छामि त्वां विदुरं प्रश्नमेतं
भवन्ति वै कानि महाकुलानि ॥ ५-३६-२२ (३३०३३)
विदुर उवाच। ५-३६-२३क्ष् (३४८५)
तपो दमो ब्रह्मवित्त्वं तितिक्षा ।
इज्या विवाहाः सान्त्वनं चान्नदानम् ।
अष्टावेते नित्यमेवं भवन्ति
सतां गुणास्तानि महाकुलानि ॥ ५-३६-२३ (३३०३४)
येषां न वृत्तं व्यथते न योनि-
श्चित्तप्रसादेन चरन्ति धर्मम् ।
ये कीर्तिमिच्छन्ति कुले विशिष्टां
त्यक्तानृतास्तानि महाकुलानि ॥ ५-३६-२४ (३३०३५)
अनिज्यया कुविवाहैर्वेदस्योत्सादनेन च ।
कुलान्यकुलतां यान्ति ब्राह्मणातिक्रमेण च ॥ ५-३६-२५ (३३०३६)
देवद्रव्यनिनाशेन ब्रह्मस्वहरणेन च ।
कुलान्यकुलतां यान्ति ब्राह्मणातिक्रमेण च ॥ ५-३६-२६ (३३०३७)
ब्राह्मणानां परिभवात्परिवादाच्च भारत ।
कुलान्यकुलतां यान्ति न्यासापहरणेन च ॥ ५-३६-२७ (३३०३८)
कुलानि समुपेताननि गोभिः पुरुषतोऽर्थतः ।
कुलसंख्यां न गच्छन्ति यानि हीनानि वृत्ततः ॥ ५-३६-२८ (३३०३९)
वृत्ततस्त्वविहीनानि कुलान्यल्पधनान्यपि ।
कुलसङ्ख्यां च गच्छन्ति कर्षन्ति च महद्यशः ॥ ५-३६-२९ (३३०४०)
वृत्तं यत्नेन संरक्षेद्वित्तमेति च याति च ।

अक्षीणो वित्ततः क्षीणो वृत्ततस्तु हतो हतः ॥ ५-३६-३० (३३०४१)
गोभिः पशुभिरश्वैश्च कृष्या च सुसमृद्धया ।
कुलानि न प्ररोहन्ति यानि हीनानि वृत्ततः ॥ ५-३६-३१ (३३०४२)
मा नः कुले वैरकृत्कश्चिदस्तु
राजा बद्धो मा परस्वापहारी ।
मित्रद्रोही नैकृतिकोऽनृती वा
पूर्वाशी वा पितृदेवातिथिभ्यः ॥ ५-३६-३२ (३३०४३)
यश्च नो ब्राह्मणान्हन्याद्यश्च नो ब्राह्मणान् द्विषेत् ।
न नः स समितिं गच्छेद्यश्च नो निर्वपेत्कृषिम् ॥ ५-३६-३३ (३३०४४)
तृणानि भूमिरुदकं वाक्चतुर्थी च सूनृता ।
सतामेतानि गेहेषु नोच्छिद्यन्ते कदाचन ॥ ५-३६-३४ (३३०४५)
श्रद्धया परया राजन्नुपनीतानि सत्कृतिम् ।
प्रवृत्तानि महाप्राज्ञ धर्मिणां पुण्यकर्मिणाम् ॥ ५-३६-३५ (३३०४६)
सूक्ष्मोऽपि भारं नृपते स्यन्दनो वै
शक्तो वोढुं न तथाऽन्ये महीजाः ।
एवं युक्ता भारसहा भवन्ति
महाकुलीना न तथान्ये मनुष्याः ॥ ५-३६-३६ (३३०४७)
न तन्मित्रं यस्य कोपाद्बिभेति
यद्वा मित्रं शङ्कितेनोपचर्यम् ।
यस्मिन्मित्रे पितरीवाश्वसीत
तद्वै मित्रं सङ्गतानीतराणि ॥ ५-३६-३७ (३३०४८)
यः कश्चिदप्यसंबद्धो मित्रसावेन वर्तते ।
स एव बन्धुस्तन्मित्रं सा गतिस्तत्परायणम् ॥ ५-३६-३८ (३३०४९)
चलचित्तस्य वै पुंसो वृद्धाननुपसेवतः ।
पारिप्लवमतेर्नित्यमध्रुवो मित्रसङ्ग्रहः ॥ ५-३६-३९ (३३०५०)
चलचित्तमनात्मानमिन्द्रियाणां वशानुगम् ।
अर्थाः समभिवर्तते हंसाः शुष्कं सरो यथा ॥ ५-३६-४० (३३०५१)
अकस्मादेव कुप्यन्ति प्रसीदन्त्यनिमित्ततः ।
शीलमेतदसाधूनामभ्रं पारिप्लवं यथा ॥ ५-३६-४१ (३३०५२)
सत्कृताश्च कृतार्थाश्च मित्राणां न भवन्ति ये ।
तान्मृतानपि क्रव्यादाः कृतघ्नान्नोपभुञ्जते ॥ ५-३६-४२ (३३०५३)
अर्थयेदेव मित्राणि सति वाऽसति वा धने ।
नानर्थयन्प्रजानाति मित्राणां सारफल्गुताम् ॥ ५-३६-४३ (३३०५४)
सन्तापाद्भ्रश्यते रूपं सन्तापाद्भ्रश्यते बलम् ।
सन्तापाद्भ्रश्यते ज्ञानं सन्तापाद्व्याधिमृच्छति ॥ ५-३६-४४ (३३०५५)
अनवाप्यं च शोकेन शरीरं चोपतप्यते ।

अमित्राश्च प्रहृष्यन्ति मा स्म शोके मनः कृथाः ॥ ५-३६-४५ (३३०५६)
पुनर्नरो म्रियते जायते च
पुनर्नरो हीयते वर्धते च ।
पुनर्नरो याचति याच्यते च
पुनर्नरः शोचति शोच्यते च ॥ ५-३६-४६ (३३०५७)
सुखं च दुःखं च भवाभवौ च
लाभालाभौ मरणं जीवितं च ।
पर्यायशः सर्वमेते स्पृशन्ति
तस्माद्धीरो न च हृष्येन्न सोचेत् ॥ ५-३६-४७ (३३०५८)
चलानि हीमानि षडिन्द्रियाणि
तेषां यद्यद्वर्धते यत्रयत्र ।
ततस्ततः स्रवते बुद्धिरस्य
च्छिद्रोदकुम्भादिव नित्यमम्भः ॥ ५-३६-४८ (३३०५९)
धृतराष्ट्र उवाच। ५-३६-४९क्ष् (३४८६)
तनुरुद्धः शिखी राजा मिथ्योपचरितो मया ।
मन्दानां मम पुत्राणां युद्धेनान्तं करिष्यति ॥ ५-३६-४९ (३३०६०)
नित्योद्विग्नमिदं सर्वं नित्योद्विग्नमिदं मनः ।
यत्तत्पदमनुद्विग्नं तन्मे वद महामते ॥ ५-३६-५० (३३०६१)
विदुर उवाच। ५-३६-५१क्ष् (३४८७)
नान्यत्र विद्यातपसो नान्यत्रेन्द्रियनिग्रहात् ।
नान्यत्र लोभसन्त्यागाच्छान्तिं पश्यामि तेऽनघ ॥ ५-३६-५१ (३३०६२)
बुद्ध्या भयं प्रणुदति तपसा विन्दते महत् ।
गुरुशुश्रूषया ज्ञानं शान्तिं भोगेन विन्दति ॥ ५-३६-५२ (३३०६३)
अनाश्रिता दानपुण्यं वेदपुण्यमनाश्रिताः ।
रागद्वेषविनिर्मुक्ता विचरन्तीह मोक्षिणः ॥ ५-३६-५३ (३३०६४)
स्वधीतस्य सुयुद्धस्य सुकृतस्य च कर्मणः ।
तपसश्च सुतप्तस्य तस्यान्ते सुखमेधते ॥ ५-३६-५४ (३३०६५)
स्वास्तीर्णानि शयनानि प्रपन्ना
न वै भिन्ना जातु निद्रां लभन्ते ।
न स्त्रीषु राजन्रतिमाप्नुवन्ति
न मागधैः स्तूयमाना न सूतैः ॥ ५-३६-५५ (३३०६६)
न वै भिन्ना जातु चरन्ति धर्मं
न वै सुखं प्राप्नुवन्तीह भिन्नाः ।
न वै भिन्ना गौरवं प्राप्नुवन्ति
न वै भिन्नाः प्रशमं रोचयन्ति ॥ ५-३६-५६ (३३०६७)
न वै तेषां स्वदते पथ्यमुक्तं

योगक्षेमं कल्पते नैव तेषाम् ।
भिन्नानां वै मनुजेन्द्र परायणं
न विद्यते किञ्चिदन्यद्विनाशात् ॥ ५-३६-५७ (३३०६८)
संपन्नं गोषु संभाव्यं संभाव्यं ब्राह्मणे तपः ।
संभाव्यं चापलं स्त्रीषु संभाव्यं ज्ञातितो भयं ॥ ५-३६-५८ (३३०६९)
तन्तवोऽप्यायता नित्यं तनवो बहुलाः समाः ।
बहून्बहुत्वादायासान्सहन्तीत्सुपमा सताम् ॥ ५-३६-६९ (३३०७०)
धूमायन्ते व्यपेतानि ज्वलन्ति सहितानि च ।
धृतराष्ट्रोल्मुकानीव ज्ञातयो भरतर्षभ ॥ ५-३६-६० (३३०७१)
ब्राह्मणेषु च ये शूराः स्त्रीषु ज्ञातिषु गोषु च ।
वृन्तादिव फलं पक्वं धृतराष्ट्र पतन्ति ते ॥ ५-३६-६१ (३३०७२)
महानप्येकजो वृक्षो बलवान्सुप्रतिष्ठितः ।
प्रसह्य एव वातेन सस्कन्धो मर्दितुं क्षणात् ॥ ५-३६-६२ (३३०७३)
अथ ये सहिता वृक्षाः सङ्घशः सुप्रतिष्ठिताः ।
ते हि शीघ्रतमान्वातान्सहन्तेन्योन्यसंश्रयात् ॥ ५-३६-६३ (३३०७४)
एवं मनुष्यमप्येकं गुणैरपि समन्वितम् ।
शक्यं द्विषन्तो मन्यन्ते वायुर्द्रुममिवैकजम् ॥ ५-३६-६४ (३३०७५)
अन्योन्यसमुपष्टम्भादन्योन्यापाश्रयेण च ।
ज्ञातयः संप्रवर्धन्ते सरसीवोत्पलान्युत ॥ ५-३६-६५ (३३०७६)
अवध्या ब्राह्मणा गावो ज्ञातयः शिशिवः स्त्रियः ।
येषां चान्नानि भुञ्जीत ये च स्युःक शरणागताः ।
महत्यप्यपराधेऽपि तेषां दण्डो विसर्जनम् ॥ ५-३६-६६ (३३०७७)
न मनुष्ये गुणः कश्चिद्राजन्सधनतामृते ।
अनातुरत्वाद्भद्रं ते मृतकल्पा हि रोगिणः ॥ ५-३६-६७ (३३०७८)
अव्याधिजं कटुकं शीर्षरोगि
पापानुबन्धं परुषं तीक्ष्णमुष्णम् ।
सतां पेयं यन्न पिबन्त्यसन्तो
मन्युं महाराज पिब प्रशाम्य ॥ ५-३६-६८ (३३०७९)
रोगार्दिता न फलान्याद्रियन्ते
न वै लभन्ते विषयेषु तत्त्वम् ।
दुःखोपेता रोगिणो नित्यमेव
न बुध्यन्ते धनभोगान्नसौख्यम् ॥ ५-३६-६९ (३३०८०)
पुरा ह्युक्तं नाकरोस्त्वं वचो मे
द्यूते जितां द्रौपदीं प्रेक्ष्य राजन् ।
दुर्योधनं वारयेत्यक्षवत्यां
कितवत्वं पण्डिता वर्जयन्ति ॥ ५-३६-७० (३३०८१)

न तद्बलं यन्मृदुना विरुध्यते
सूक्ष्मो धर्मस्तरसा सेवितव्यः ।
प्रध्वंसिनी क्रूरसमाहिता श्री-
र्मृदुप्रौढा गच्छति पुत्रपौत्रान् ॥ ५-३६-७१ (३३०८२)
धार्तराष्ट्राः पाण्डवान्पालयन्तु
पाण्डोः सुतास्तव पुत्रांश्च पान्तु ।
एकारिमित्राः कुरवो ह्येककार्या
जीवन्तु राजन्सुखिनः समृद्धाः ॥ ५-३६-७२ (३३०८३)
मेढीभूतः कौरवाणां त्वमद्य
त्वय्याधीनं कुरुकुलमाजमीढ ।
पार्थान्बालान्वनवासप्रतप्ता-
न्गोपायस्व स्वं यशस्तात रक्षन् ॥ ५-३६-७३ (३३०८४)
सन्धत्स्व त्वं कौरव पाण्डुपुत्रै-
र्मा नेऽन्तरं रिपवः प्रार्थयन्तु ।
सत्ये स्थितास्ते नरदेव सर्वे
दुर्योधनं स्थापय त्वं नरेन्द्र ॥ ॥ ५-३६-७४ (३३०८५)

इति श्रीमन्महाभारते उद्योगपर्वणि प्रजागरपर्वणि षट्त्रिंशोऽध्यायः ॥
Mahabharata - Udyoga Parva - Chapter Footnotes

५-३६-२ हंसरूपेण परिव्राजकरूपेण ॥
५-३६-३ अनुमातुं लिङ्गेन ज्ञातम् । काव्यां विद्वल्लक्षणाभिधायिनीम् ॥
५-३६-४ मे मया संश्रुतम् । गुरुभ्य इति शेषः। तदेवाह धृतिरिति ॥
५-३६-५ नाक्रोशेत् न शपेत् । यतस्तितिक्षतो मन्युः क्रोध एव
आक्रोष्टारं दहति ॥
५-३६-८ निर्ऋतिं अलक्ष्मीं मृत्युं वा ॥
५-३६-९ बाणैः वाग्बाणैः विरिव्यमानः तनूक्रियमाणः । दधाति पुष्णाति ॥
५-३६-१० रङ्गस्य नीलादेर्वशं नीलतादिकम् ॥
५-३६-११ अतिप्रोक्तोपि न वदेत् वादयेद्वा । अनाहतो नैव
प्रतिहन्यात्। आहतोपि पापकं हन्तारं यदि हन्तुं नेच्छेत् स देवानामपि
प्रेष्ठो भवतीत्यर्थः ॥
५-३६-१२ अव्याहृतं मौनम् । ततोपि श्रेयः सत्यवचनम्। सत्यमपि
प्रियं चेत् ततोऽपि श्रेयः। तदपि धर्मादनपेतं चेत्
श्रेष्ठतममित्यर्थः ॥
५-३६-१५ अस्यामवस्थायां पुरुषस्य न किंचिद्दुःखादिकमस्तीत्याह न
जीयते चेति ॥

५-३६-१६ भावं कल्याणम् ।अभावे अकल्याणे ॥
५-३६-१७ अनर्थकं मिथ्या न सांत्वयति ॥
५-३६-१८ दुःशासनः दुष्टं शासनं यस्य ।एताः कलाः चित्तस्य अधमस्यैव ॥
५-३६-१९ परेभ्यः गरुभ्यः ।आत्मन्येव शङ्कितः विश्वासहीनः ॥
५-३६-२३ तपः कृच्छ्रचान्दायणादि ।दम इन्द्रियजयः। तानि महाकुलानि विद्धि ॥
५-३६-२४ न व्यथते न चलति ।योनिः पित्रादयोपि ॥
५-३६-२८ गोभिर्वाग्भिर्विद्ययेत्यर्थः ।पुरुषतः सत्पुरुषैः अर्थतः धनैश्च कुलानि कुलसंख्यां कुलेषु गणनां समुपेतानि भवन्ति ॥
५-३६-२९ वृत्ततः धर्मेण ।कर्षन्ति आहरन्ति ॥
५-३६-३१ गोभिर्विद्याभिः ॥
५-३६-३२ नैकृतिकः कपटी ।वैरकृदादयः कुलघ्ना इत्यर्थः ॥
५-३६-३३ निर्वपेत् कुर्यात् ॥
५-३६-३५ सत्कृतिं सत्कारं कर्तुं प्रवृत्तानि तृणादीनि ॥
५-३६-३६ स्यान्दनः रथयोग्यो वृक्षः ।युक्ताः स्यन्दनवदविकलाः ॥
५-३६-३७ सङ्गतानि संबन्धमात्राणि ॥
५-३६-३८ बन्धुः संबन्धी ।मित्रं उपकारकृत् ॥
५-३६-३९ पारिप्लवमतेः भ्रान्तस्य ॥
५-३६-४१ अभ्रं मेघः ॥
५-३६-४२ मित्राणां हितायेति शेषः ॥
५-३६-४३ अनर्थयन्प्रार्थनाशून्यः ॥
५-३६-४५ अनवाप्यं न प्राप्यम् ।शोकेन शोकमात्रेण। इष्टमिति शेषः ॥
५-३६-४७ सर्वं पुरुषम् ॥
५-३६-४९ तनुः शरीरमभिव्यक्तिस्थानं काष्टं तत्र रुद्धोऽनभिव्यक्तः शिखी अग्निस्तथायं राजा धर्मेण रुद्धः ।तनुना सूक्ष्मेण धर्मेण वा रुद्धः ॥
५-३६-५२ विन्दते महत्सद्गुरुशास्त्रादिकं लभते ।ततो गुरुशुश्रूषया ज्ञानं ग्रन्थजम्। योगेन सर्वचित्तवृत्तिनिरोधेन शान्तिम् ॥
५-३६-५३ दानपुण्यं दानजं पुण्यं ।वेदपुण्यं वेदोक्तयागाद्यनुष्ठानजं पुण्यं तत्तत्फलमित्यर्थः ॥
५-३६-५४ तस्यान्ते स्वधीतादीनां कर्मणामन्ते ॥
५-३६-५७ योगः अलब्धलाभः ।क्षेमं लब्धपरिपालनम् ।तदुभयम् ॥
५-३६-५८ संपन्नं क्षीरादिसंपत्तिः ॥
५-३६-६२ एकजः एकाकी ।प्रसह्यः शक्यः ॥
५-३६-६७ सधनतां ऋते विना ।अनातुरत्वात् ऋते च ॥

५-३६-६८ प्रशाम्य शान्तिं क्षमां प्राप्नुहि ॥
५-३६-६९ फलानि पुत्रपश्वादीनि । तत्त्वमिष्टानिष्टविवेकं पित्तोपहतरसनत्वात्। एवं सर्वत्र। भोगः स्त्र्यादिसङ्गः। धनादिजं सुखं लब्धमपि न बुध्यन्ते। अतः संतापं जागरादिद्वारा रोगोत्पादकं त्यजेत्यर्थः ॥
५-३६-७० कितवत्वं द्यूतप्रियत्वम् ॥
५-३६-७३ मेढीभूतः खलस्तम्भीभूतः स्वयं निर्व्यापारोपि परितः संचरमाणानां बलीवर्दानामिव पुत्राणां यथेष्टप्रचारनिरोधकः ॥
५-३६-७४ अन्तरं भेदम् । स्थापय युद्धान्निवर्तयस्व ॥

---

उद्योगपर्व-अध्यय०३७
॥ श्रीः ॥
५.३७. अध्यायः ३७

Mahabharata - Udyoga Parva - Chapter Topics
धृतराष्ट्रेण अल्पायुष्ट्वकारणप्रश्ने विदुरेण तदभिधाय नीतिकथनपूर्वकं कुरुपाण्डवसन्धिकरणविधानम् ॥ १ ॥

Mahabharata - Udyoga Parva - Chapter Text

५-३७-० (३३०८६)
विदुर उवाच। ५-३७-०क्ष् (३४८८)
सप्तदशेमान्राजेन्द्र मनुः स्वायंभुवोऽब्रवीत् ।
वैचित्रवीर्य पुरुषानाकाशं मुष्टिभिर्घ्नतः ॥ ५-३७-१ (३३०८७)
तानेवेन्द्रस्य च धनुरनाम्यं नमतो ब्रवीत् ।
अथो मरीचिनः पादानग्राह्यान्गृह्णतस्तथा ॥ ५-३७-२ (३३०८८)
यश्चाशिष्यं शास्ति वै यश्च तुष्ये-
द्यश्चातिवेलं भजते द्विषन्तम् ।
स्त्रियश्च यो रक्षति भद्रमश्नुते
यश्चायाच्यं याचते कत्थते वा ॥ ५-३७-३ (३३०८९)
यश्चाभिजातः प्रकरोत्यकार्यं
यश्चाबलो बलिना नित्यवैरी ।
अश्रद्दधानाय च यो ब्रवीति
यश्चाकाम्यं कामयते नरेन्द्र । ५-३७-४ (३३०९०)
वध्वाऽवहासं श्वशुरो मन्यते यो
वध्वाऽवसन्नभयो मानकामः ।
परक्षेत्रे निर्वपति यश्च बीजं

स्त्रियं च यः परिवदतेऽतिवेलम् ॥ ५-३७-५ (३३०९१)
यश्चापि लब्ध्वा न स्मरामीति वादी
दत्त्वा च यः कत्थति याच्यमानः ।
यश्चासतः सान्त्वमुपानयीत
एतान्नयन्ति निरयं पाशहस्ताः ॥ ५-३७-६ (३३०९२)
यस्मिन्यथा वर्तते यो मनुष्य-
स्तस्मिंस्तथा वर्तितव्यं स धर्मः ।
मायाचारो मायया वर्तितव्यः
साध्वाचारः साधुना प्रत्युपेयः ॥ ५-३७-७ (३३०९३)
जरा रूपं हरति हि धैर्यमाशा
मृत्युः प्राणान्धर्मचर्यामसूया
कामो ह्रियं वृत्तमनार्यसेवा
क्रोधः श्रियं सर्वमेवाभिमानः ॥ ५-३७-८ (३३०९४)
धृतराष्ट्र उवाच। ५-३७-९क्ष् (३४८९)
शतायुरुक्तः पुरुषः सर्ववेदेषु वै यदा ।
नाप्नोत्यथ च तत्सर्वमायुः केनेह हेतुना ॥ ५-३७-९ (३३०९५)
विदुर उवाच। ५-३७-१०क्ष् (३४९०)
अतिमानोऽतिवादश्च तथाऽत्यागो नराधिप ।
क्रोधश्चात्मविधित्सा च मित्रद्रोहश्च तानि षट् ॥ ५-३७-१० (३३०९६)
एत एवासयस्तीक्ष्णाः कृन्तन्त्यायूंषि देहिनाम् ।
एतानि मानवान्घ्नन्ति न मृत्युर्भद्रमस्तु ते ॥ ५-३७-११ (३३०९७)
विश्वस्तस्यैति यो दारान्यश्चापि गुरुतल्पगः ।
वृषलीपतिर्द्विजो यश्च पानपश्चैव भारत ॥ ५-३७-१२ (३३०९८)
आदेशकृद्वृत्तिहन्ता द्विजानां प्रेषकश्च यः ।
शरणागतहा चैव सर्वे ब्रह्महणः समाः ।
एतैः समेत्य कर्तव्यं प्रायश्चित्तमिति श्रुतिः ॥ ५-३७-१३ (३३०९९)
गृहीतवाक्यो नयविद्वदान्यः
शेषान्नभोक्ता ह्यविहिंसकश्च ।
नानर्थकृत्याकुलितः कृतज्ञः
सत्यो मृदुः स्वर्गमुपैति विद्वान् ॥ ५-३७-१४ (३३१००)
सुलभाः पुरुषा राजन्सततं प्रियवादिनः ।
अप्रियस्य तु पथ्यस्य वक्ता श्रोता च दुर्लभः ॥ ५-३७-१५ (३३१०१)
यो हि धर्मं समाश्रित्य हित्वा भर्तुः प्रियाप्रिये ।
अप्रियाण्याह पथ्यानि तेन राजा सहायवान् ॥ ५-३७-१६ (३३१०२)
त्यजेत्कुलार्थे पुरुषं ग्रामस्यार्थे कुलं त्यजेत् ।
ग्रामं जनपदस्यार्थे आत्मार्थे पृथिवीं त्यजेत् ॥ ५-३७-१७ (३३१०३)

आपदर्थे धनं रक्षेद्दारान्रक्षेद्धनैरपि ।
आत्मानं सततं रक्षेद्दारैरपि धनैरपि ॥ ५-३७-१८ (३३१०४)
द्यूतमेतत्पुरा कल्पे दृष्टं वैरकरं नृणाम् ।
तस्माद्द्यूतं न सेवेत हास्यार्थमपि बुद्धिमान् ॥ ५-३७-१९ (३३१०५)
उक्तं मया द्यूतकालेऽपि राज-
न्नेदं युक्तं वचनं प्रातिपेय ।
तदौषधं पथ्यमिवातुरस्य
न रोचते तव वैचित्रवीर्य ॥ ५-३७-२० (३३१०६)
काकैरिमांश्चित्रबर्हान्मयूरान्
पराजयेथाः पाण्डवान्धार्तराष्ट्रैः ।
हित्वा सिंहान्क्रोष्टुकान्गूहमानः
प्राप्ते काले शोचिता त्वं नरेन्द्रः ॥ ५-३७-२१ (३३१०७)
यस्तात न क्रुध्यति सर्वकालं
भृत्यस्य भक्तस्य हिते रतस्य ।
तस्मिन्भृत्या भर्तरि विश्वसन्ति
न चैनमापत्सु परित्यजन्ति ॥ ५-३७-२२ (३३१०८)
न भृत्यानां वृत्तिसंरोधनेन
राज्यं धनं सञ्जिघृक्षेदपूर्वम् ।
त्यजन्ति ह्येनं वञ्चिता वै विरुद्धाः
स्निग्धा ह्यमात्या परिहीनभोगाः ॥ ५-३७-२३ (३३१०९)
कृत्यानि पूर्वं परिसङ्ख्याय सर्वा-
ण्यायव्यये चानुरूपां च वृत्तिम् ।
सङ्गृह्णीयादनुरूपान्सहायान्
सहायसाध्यानि हि दुष्कराणि ॥ ५-३७-२४ (३३११०)
अभिप्रायं यो विदित्वा तु भर्तुः
सर्वाणि कार्याणि करोत्यतन्द्री ।
वक्ता हितानामनुरक्त आर्यः
शक्तिज्ञ आत्मेव हि सोऽनुकम्प्यः ॥ ५-३७-२५ (३३१११)
वाक्यं तु यो नाद्रियतेऽनुशिष्टः
प्रत्याह यश्चापि नियुज्यमानः ।
प्रज्ञाभिमानी प्रतिकूलवादी
त्याज्यः स तादृक् त्वरयैव भृत्यः ॥ ५-३७-२६ (३३११२)
अस्तब्धमक्लीबमदीर्घसूत्रं
सानुक्रोशं श्लक्ष्णमहार्यमन्यैः ।
अरोगजातीयमुदारवाक्यं
दूतं वदन्त्यष्टगुणोपपन्नम् ॥ ५-३७-२७ (३३११३)

न विश्वासाञ्जातु परस्य गेहे
गच्छेन्नरश्चेतयानो विकाले ।
न चत्वरे निशि तिष्ठेन्निगूढो
न राजकाम्यां योषितं प्रार्थयीत ॥ ५-३७-२८ (३३११४)
न निह्नवं मन्त्रगतस्य गच्छे-
त्संसृष्टमन्त्रस्य कुसङ्गतस्य ।
न च ब्रूयान्नाश्वसिमि त्वयीति
सकारणं व्यपदेशं तु कुर्यात् ॥ ५-३७-२९ (३३११५)
घृणी राजा पुंश्चली राजभृत्यः
पुत्रो भ्राता विधवा बालपुत्रा ।
सेनाजीवी चोद्धृतभूरिरेव
व्यवहारेषु वर्जनीयाः स्युरेते ॥ ५-३७-३० (३३११६)
अष्टौ गुणाः पुरुषं दीपयन्ति
प्रज्ञा च कौल्यं च श्रुतं दमश्च ।
पराक्रमश्चाबहुभाषिता च
दानं यथाशक्ति कृतज्ञता च ॥ ५-३७-३१ (३३११७)
एतान्गुणांस्तात महानुभावा-
नेको गुणः संश्रयते प्रसह्य ।
राजा यदा सत्कुरुते मनुष्यं
सर्वान्गुणनेष गुणो बिभर्ति ॥ ५-३७-३२ (३३११८)
गुणा दश स्नानशीलं भजन्ते
बलं रूपं स्वरवर्णप्रशुद्धिः ।
स्पर्शश्च गन्धश्च विशुद्धता च
श्रीः सौकुमार्यं प्रवराश्च नार्यः ॥ ५-३७-३३ (३३११९)
गुणाश्च षण्मितभुक्तं भजन्ते
आरोग्यमायुश्च बलं सुखं च ।
अनाविलं चास्य भवत्यपत्यं
न चैनमाद्यून इति क्षिपन्ति ॥ ५-३७-३४ (३३१२०)
अकर्मशीलं च महाशनं च
लोकद्विष्टं बहुमायं नृशंसम् ।
अदेशकालज्ञमनिष्टवेष-
मेतान्गृहे न प्रतिवासयेत ॥ ५-३७-३५ (३३१२१)
कदर्यमाक्रोशकमश्रुतं च
वनौकसं धूर्तममान्यमानिनम् ।
निष्ठूरिणं कृतवैरं कृतघ्न-
मेतान्भृशार्तोपि न जातु याचेत् ॥ ५-३७-३६ (३३१२२)

संक्लिष्टकर्माणमतिप्रमादं
नित्यानृतं चादृढभक्तिकं च ।
विसृष्टरागं पटुमानिनं चा-
प्येतान्न सेवेत नराधमान्षट् ॥ ५-३७-३७ (३३१२३)
सहायबन्धना ह्यर्थाः सहायाश्चार्थबन्धनाः। ५-३७-३८
अन्योन्यबन्धनावेतौ विनान्योन्यं न सिद्ध्यतः ॥ ५-३७-३८ (३३१२४)
उत्पाद्य पुत्राननृणांश्च कृत्वा
वृत्तिं च तेभ्योऽनुविधाय कांचित् ।
स्थाने कुमारीः प्रतिपाद्य सर्वा
अरण्यसंस्थोऽथ मुनिर्बुभूषेत् ॥ ५-३७-३९ (३३१२५)
हितं यत्सर्वभूतानामात्मनश्च सुखावहम् ।
तत्कुर्यादीश्वरो ह्येतन्मूलं सर्वार्थसिद्धये ॥ ५-३७-४० (३३१२६)
वृद्धिः प्रभावस्तेजश्च सत्वमुत्थानमेव च ।
व्यवसायश्च यस्य स्यात्तस्यावृत्तिभयं कुतः ॥ ५-३७-४१ (३३१२७)
पश्य दोषान्पाण्डवैर्विग्रहे त्वं
यत्र व्यथेयुरपि देवाः सशक्राः ।
पुत्रैर्वैरं नित्यमुद्विग्नवासो
यशःप्रणाशो द्विषतश्च हर्षः ॥ ५-३७-४२ (३३१२८)
भीष्मस्य कोपस्तव चैवेन्द्रकल्प
द्रोणस्य राज्ञश्च युधिष्ठिरस्य ।
उत्सादयेल्लोकमिमं प्रवृद्धः
श्वेतो ग्रहस्तिर्यगिवापतन्खे ॥ ५-३७-४३ (३३१२९)
तव पुत्रशतं चैव कर्णः पञ्च च पाण्डवाः ।
पृथिवीमनुशासेयुरखिलां सागराम्बराम् ॥ ५-३७-४४ (३३१३०)
धार्तराष्ट्रा वनं राजन्व्याघ्राः पाण्डुसुता मताः ।
मा वनं छिन्धि सव्याघ्रं मा व्याघ्रा नीनशन्वनात् ॥ ५-३७-४५ (३३१३१)
न स्याद्वनमृते व्याघ्रान्व्याघ्रा न स्युर्ऋते वनम् ।
वनं हि रक्ष्यते व्याघ्रैर्व्याघ्रान्रक्षति काननम् ॥ ५-३७-४६ (३३१३२)
न तथेच्छन्ति कल्याणान्परेषां वेदितुं गुणान् ।
यथेषां ज्ञातुमिच्छन्ति नैर्गुण्यं पापचेतसः ॥ ५-३७-४७ (३३१३३)
अर्थसिद्धिं परामिच्छन्धर्ममेवादितश्चरेत् ।
नहि धर्मादपैत्यर्थः स्वर्गलोकादिवामृतम् ॥ ५-३७-४८ (३३१३४)
यस्यात्मा विरतः पापात्कल्याणे च निवेशितः ।
तेन सर्वमिदं बुद्धं प्रकृतिर्विकृतिश्च या ॥ ५-३७-४९ (३३१३५)
यो धर्ममर्थं कामं च यथाकालं निषेवते ।
धर्मार्थकामसंयोगं सोऽमुत्रेह च विन्दति ॥ ५-३७-५० (३३१३६)

सन्नियच्छति यो वेगमुत्थितं क्रोधहर्षयोः ।
स श्रियो भाजनं राजन्यश्चापत्सु न मुह्यति ॥ ५-३७-५१ (३३१३७)
बलं पञ्चविधं नित्यं पुरुषाणां निबोध मे ।
यत्तु बाहुबलं नाम प्रथमं बलमुच्यते ॥ ५-३७-५२ (३३१३८)
अमात्यलाभो भद्रं ते द्वितीयं बलमुच्यते ।
तृतीयं धनलाभं तु बलमाहुर्मनीषिणः ॥ ५-३७-५३ (३३१३९)
यत्त्वस्य सहजं राजन्पितृपैतामहं बलम् ।
अभिजातबलं नाम तच्चतुर्थं बलं स्मृतम् ॥ ५-३७-५४ (३३१४०)
येन त्वेतानि सर्वाणि सङ्गृहीतानि भारत ।
यद्बलानां बलं श्रेष्ठं तत्प्रज्ञाबलमुच्यते ॥ ५-३७-५५ (३३१४१)
महते योऽपकाराय नरस्य प्रभवेन्नरः ।
तेन वैरं समासज्य दूरस्थोऽस्मीति नाश्वसेत् ॥ ५-३७-५६ (३३१४२)
स्त्रीषु राजसु सर्पेषु स्वाध्यायप्रभुशत्रुषु ।
भोगेष्वायुषि विश्वासं कः प्राज्ञः कर्तुमर्हति ॥ ५-३७-५७ (३३१४३)
प्रज्ञाशरेणाभिहतस्य जन्तो-
श्चिकित्सकाः सन्ति न चौषधानि ।
न होममन्त्रा न च मङ्गलानि
नाथर्वणा नाप्यगदाः सुसिद्धाः ॥ ५-३७-५८ (३३१४४)
सर्पश्चाग्निश्च सिंहश्च कुलपुत्रश्च भारत ।
नावज्ञेया मनुष्येण सर्वे ह्येतेऽतितेजसः ॥ ५-३७-५९ (३३१४५)
अग्निस्तेजो महल्लोके गूढस्तिष्ठति दारुषु ।
न चोपयुङ्क्ते तद्दारु यावन्नोद्दीप्यते परैः ॥ ५-३७-६० (३३१४६)
स एव खलु दारुभ्यो यदा निर्मथ्य दीप्यते ।
तद्दारु च वनं चान्यन्निर्दहत्याशु तेजसा ॥ ५-३७-६१ (३३१४७)
एवमेव कुले जाताः पावकोपमतेजसः ।
क्षमावन्तो निराकाराः काष्ठेऽग्निरिव शेरते ॥ ५-३७-६२ (३३१४८)
लताधर्मा त्वं सपुत्रः सालः पाण्डुसुता मताः ।
न लता वर्धते जातु महाद्रुममनाश्रिता ॥ ५-३७-६३ (३३१४९)
वनं राजंस्तव पुत्रोऽम्बिकेय
सिंहान्वने पाण्डवांस्तात विद्धि ।
सिंहैर्विहीनं हि वनं विनश्येत्
सिंहा विनश्येयुर्ऋते वनेन ॥ ॥ ५-३७-६४ (३३१५०)

इति श्रीमन्महाभारते उद्योगपर्वणि प्रजागरपर्वणि सप्तत्रिंशोऽध्यायः ॥

Mahabharata - Udyoga Parva - Chapter Footnotes

५-३७-२ नमतः नामयतः ।मरीचिनः मरीचिमतः
सूर्यचन्द्रादेः। व्रीह्यादित्वान्मत्वर्थीय इनिः। पादान् रश्मीन् ॥
५-३७-३ अशिष्यं शासनानर्हम् ।तुष्येत् अल्पलाभेनेति
शेषः। भद्रमश्नुत इति। शत्रुसेवया स्त्रीरक्षया च यो
भद्रमश्नुते तौ द्वौ मूर्खावित्यर्थः। नो रक्षतीति ङ पाठः ॥
३ ॥
५-३७-४ अभिजातः कुलीनः ॥
५-३७-५ श्वशुरः सन् यो वध्वा पुत्रभार्यया सह अवहासं परिहासं
तत्पित्रादिभिरिव मन्यते स एकादशः ।वध्वा स्नुषया भूतया
अवसन्नभयो नष्टभयः वधूपित्रादिभिरापदि त्रातोपि तत्रैव मानं
कामयते यः स द्वादशो मूर्खः। वध्वावासमिति ङो पाठः ॥
५-३७-१० अत्यागः अतिशयितमागोऽपराधः ।आत्मविधित्सोति पोषणार्थस्य
धाञः सनि रूपम्। आत्मपोषणेच्छा शिश्नोदरपरायणतेत्यर्थः ॥
५-३७-११ असयः खड्गाः ।भद्रमस्तु ते एतेषां षण्णांत्यागेन तव
पुत्राः शतायुषो भवन्त्वित्यर्थः ॥
५-३७-१२ वृषली शूद्रा ।द्विजस्त्रैवर्णिकः। पानपः मद्यपः ॥
५-३७-१३ आदेशकृत् ग्रामणीः ।प्रेषकः द्विजान् दास्ये
नियोजयन्। समेत्य संसृज्य ५-३७-२४ परिसङ्ख्याय
साध्यासाध्यनिश्चयं कृत्वा। तथा वृत्तिं भृत्यजीविकां
आयव्ययानुरूपां कृत्वेत्यर्थः ॥
५-३७-२७ अदीर्घसूत्रं क्षिप्रकारिणम् ॥
५-३७-२९ किंतु मम किंचित्कार्यमस्तीति ।तथा व्यपदेशं व्याजं
कृत्वा तादृशान्मन्त्रादपसरेदेवेत्यर्थः ॥
५-३७-३० एते व्यवहरे धनदानादौ वर्जनीयाः द्रव्यनाशभयात
।एतेभ्यो न ग्राह्यं च। अधमर्णो घृणी लज्जावांश्चेदतिनिर्बन्धेन
याच्यमानः प्राणानेव जह्यात् ॥
५-३७-३४ मितभुक्तं मितभोजिनम् ।आद्यूनो बहुभोजी ॥
५-३७-३६ कदर्यं अदातारम् ॥
५-३७-३७ संक्लिष्टकर्माणं आततायिनम् ॥
५-३७-४१ अवृत्तिर्जीविकाया अभावः ॥
५-३७-४३ श्वेतो ग्रहः धूमकेतुः ॥
५-३७-५४ अभिजातबलं कुलबलम् ॥
५-३७-५९ कुलपुत्रो ज्ञातिः ॥
५-३७-६२ कुले जाताः पाण्डवाः ॥
५-३७-६३ सालाः महावृक्षः ॥

उद्योगपर्व-अध्यय०३८
॥ श्रीः ॥
५.३८. अध्यायः ३८

Mahabharata - Udyoga Parva - Chapter Topics
विदुरेण धृतराष्ट्रंप्रति नीतिकथनपूर्वकं पाण्डवेभ्यो राज्याप्रदाने दुर्योधनस्य राज्यभ्रंशकथनम् ॥१ ॥

Mahabharata - Udyoga Parva - Chapter Text

५-३८-० (३३१५१)
विदुर उवाच। ५-३८-०क्ष् (३४९१)
ऊर्ध्वं प्राणा ह्युत्क्रामन्ति यूनः स्थविर आयति ।
प्रत्युत्थानाभिवादाभ्यां पुनस्तान्प्रतिपद्यते ॥ ५-३८-१ (३३१५२)
पीठं दत्त्वा साधवेऽभ्यागताय
आनीयापः परिनिर्णिज्य पादौ ।
सुखं पृष्ट्वा प्रतिवेद्यात्मसंस्थां
ततो दद्यादन्नमवेक्ष्य धीरः ॥ ५-३८-२ (३३१५३)
यस्योदकं मधुपर्कं च गां च
न मन्त्रवित्प्रतिगृह्णाति गेहे ।
लोभाद्भयादथ कार्पण्यतो वा
तस्यानर्थं जीवितमाहुरर्याः ॥ ५-३८-३ (३३१५४)
चिकित्सकः शल्यकर्तावकीर्णी
स्तेनः क्रूरो मद्यपो भ्रूणहा च ।
सेनाजीवी श्रुतिविक्रायकश्च
भृशं प्रियोऽप्यतिथिर्नोदकार्हः ॥ ५-३८-४ (३३१५५)
अविक्रेयं लवणं पक्वमन्नं
दधि क्षीरं मधु तैलं घृतं च ।
तिला मांसं फलमूलानि शाकं
रक्तं वासः सर्वगन्धा गुडाश्च ॥ ५-३८-५ (३३१५६)
अरोषणो यः समलोष्टाश्मकाञ्चनः
प्रहीणशोको गतसन्धिविग्रहः ।
निन्दाप्रशंसोपरतः प्रियाप्रिये
त्यजन्नुदासीनवदेष भिक्षुकः ॥ ५-३८-६ (३३१५७)
नीवारमूलेङ्गुदशाकवृत्तिः
सुसंयतात्माग्निकार्येषु चोद्यः ।

वने वसन्नतिथिष्वप्रमत्तो
धुरन्धरः पुण्यकृदेष तापसः ॥ ५-३८-७ (३३१५८)
अपकृत्य बुद्धिमतो दूरस्थोऽस्मीति नाश्वसेत् ।
दीर्घौ बुद्धिमतो बाहू याभ्यां हिंसति हिंसितः ॥ ५-३८-८ (३३१५९)
न विश्वसेदविश्वस्ते विश्वस्ते नातिविश्वसेत् ।
विश्वासाद्भयमुत्पन्नं मूलान्यपि निकृन्तति ॥ ५-३८-९ (३३१६०)
अनीर्षुर्गुप्तदारश्च संविभागी प्रियंवदः ।
श्लक्ष्णो मधुरवाक्स्त्रीणां न चासां वशगो भवेत् ॥ ५-३८-१० (३३१६१)
पूजनीया महाभागाः पुण्याश्च गृहदीप्तयः ।
स्त्रियः श्रियो गृहस्योक्तास्तस्माद्रक्ष्या विशेषतः ॥ ५-३८-११ (३३१६२)
पितुरन्तःपुरं दद्यान्मातुर्दद्यान्महानसम् ।
गोषु चात्मसमं दद्यात्स्वयमेव कृषिं व्रजेत् ।
भृत्यैर्वाणिज्यचारं च पुत्रैः सेवेत च द्विजान् ॥ ५-३८-१२ (३३१६३)
अद्भ्योऽग्निर्ब्रह्मतः क्षत्रमश्मनो लोहमुत्थितम् ।
तेषां सर्वत्रगं तेजः स्वासु योनिषु शाम्यति ॥ ५-३८-१३ (३३१६४)
नित्यं सन्तं कुले जाताः पावकोपमतेजसः ।
क्षमावन्तो निराकाराः काष्ठेऽग्निरिव शेरते ॥ ५-३८-१४ (३३१६५)
यस्य मन्त्रं न जानन्ति बाह्याश्चाभ्यन्तराश्च ये ।
स राजा सर्वतश्चक्षुश्चिरमैश्वर्यमश्नुते ॥ ५-३८-१५ (३३१६६)
करिष्यन्न प्रभाषेत कृतान्येव तु दर्शयेत् ।
धर्मकामार्थकार्याणि तथा मन्त्रो न भिद्यते ॥ ५-३८-१६ (३३१६७)
गिरिपृष्ठमुपारुह्य प्रासादं वा रहोगतः ।
अरण्ये निःशलाके वा तत्र मन्त्रोऽभिधीयते ॥ ५-३८-१७ (३३१६८)
नासुहृत्परमं मन्त्रं भारतार्हति वेदितुम् ।
अपण्डितो वापि सुहृत्पण्डितो वाप्यनात्मवान् ॥ ५-३८-१८ (३३१६९)
नापरीक्ष्य महीपालः कुर्यात्सचिवमात्मनः ।
अमात्ये ह्यर्थलिप्सा च मन्त्ररक्षणमेव च ॥ ५-३८-१९ (३३१७०)
कृतानि सर्वकार्याणि यस्य पारिषदा विदुः ।
धर्मे चार्थे च कामे च स राजा राजसत्तमः। ५-३८-२० (३३१७१)
गूढमन्त्रस्य नृपतेस्तस्य सिद्धिरसंशयम् ॥
अप्रशस्तानि कार्याणि यो मोहादनुतिष्ठति। ५-३८-२१ (३३१७२)
स तेषां विपरिभ्रंशाद्भ्रश्यते जीवितादपि ॥
कर्मणां तु प्रशस्तानामनुष्ठानं सुखावहम्। ५-३८-२२ (३३१७३)
तेषामेवाननुष्ठानं पश्चात्तापकरं मतम् ॥
अनधीत्य यथा वेदान्न विप्रः श्राद्धमर्हति । ५-३८-२३ (३३१७४)
एवमश्रुतषाड्गुण्यो न मन्त्रं श्रोतुमर्हति ॥

स्थानवृद्धिक्षयज्ञस्य षाड्गुण्यविदितात्मनः। ५-३८-२४ (३३१७५)
अनवज्ञातशीलस्य स्वाधीना पृथिवी नृप ॥
अमोघक्रोधहर्षस्य स्वयं कृत्वान्ववेक्षिणः। ५-३८-२५ (३३१७६)
आत्मप्रत्ययकोशस्य वसुदैव वसुन्धरा ॥
नाममात्रेणा तुष्येत छत्रेण च महीपतिः। ५-३८-२६ (३३१७७)
भृत्येभ्यो विसृजेदर्थान्नैकः सर्वहरो भवेत् ॥
ब्राह्मणं ब्राह्मणो वेद भर्ता वेद स्त्रियं तथा। ५-३८-२७ (३३१७८)
अमात्यं नृपतिर्वेद राजा राजानमेव च ॥
न शत्रुर्वशमापन्नो मोक्तव्यो वध्यतां गतः। ५-३८-२८ (३३१७९)
न्यग्भूत्वा पर्युपासीत वध्वं हन्याद्बले सति ॥
अहताद्धि भयं तस्माज्जायते नचिरादिव ॥ ५-३८-२९ (३३१८०)
दैवतेषु प्रयत्नेन राजसु ब्राह्मणेषु च ।
नियन्तव्यः सदा क्रोधो वृद्धबालातुरेषु च ॥ ५-३८-३० (३३१८१)
निरर्थं कलहं प्राज्ञो वर्जयेन्मूढसेवितम् ।
कीर्तिं च लभते लोके न चानर्थेन युज्यते ॥ ५-३८-३१ (३३१८२)
प्रसादो निष्फलो यस्य क्रोधश्चापि निरर्थकः ।
न तं भर्तारमिच्छन्ति षण्ढं पतिमिव स्त्रियः ॥ ५-३८-३२ (३३१८३)
न बुद्धिर्धनलाभाय न जाड्यमसमृद्धये ।
लोकपर्यायवृत्तान्तं प्राज्ञो जानाति नेतरः ॥ ५-३८-३३ (३३१८४)
विद्याशीलवयोवृद्धान्बुद्धिवृद्धांश्च भारत ।
धनाभिजातवृद्धांश्च नित्यं मूढोऽवमन्यते ॥ ५-३८-३४ (३३१८५)
अनार्यवृत्तमप्राज्ञमसूयकमधार्मिकम् ।
अनर्थाः क्षिप्रमायान्ति वाग्दुष्टं क्रोधनं तथा ॥ ५-३८-३५ (३३१८६)
अविसंवादनं दानं समयस्याव्यतिक्रमः ।
आवर्तयन्ति भूतानि सम्यक्प्रणिहिता च वाक् ॥ ५-३८-३६ (३३१८७)
अविसंवादको दक्षः कृतज्ञो मतिमानृजुः ।
अपि संक्षीणकोशोऽपि लभते परिवारणम् ॥ ५-३८-३७ (३३१८८)
धृतिः शमो दमः शौचं कारुण्यं वागनिष्ठुरा ।
मित्राणां चानभिद्रोहः सप्तैताः समिधः श्रियः ॥ ५-३८-३८ (३३१८९)
असंविभागी दुष्टात्मा कृतघ्नो निरपत्रपः ।
तादृङ्वराधिपो लोके वर्जनीयो नराधिप ॥ ५-३८-३९ (३३१९०)
न च रात्रौ सुखं शेते ससर्प इव वेश्मनि ।
यः कोपयति निर्दोषं सदोषोऽभ्यन्तरं जनम् ॥ ५-३८-४० (३३१९१)
येषु दुष्टेषु दोषः स्याद्योगक्षेमस्य भारत ।
सदा प्रसादनं तेषां देवतानामिवाचरेत् ॥ ५-३८-४१ (३३१९२)
येऽर्थाः स्त्रीषु समायुक्ताः प्रमत्तपतितेषु च ।

ये चानार्ये समासक्ताः सर्वे ते संशयं गताः ॥ ५-३८-४२ (३३१९३)
यत्र स्त्री यत्र कितवो बालो यत्रानुशासिता ।
मज्जन्ति तेऽवशा राजन्नद्यामश्मप्लवा इव ॥ ५-३८-४३ (३३१९४)
प्रयोजनेषु ये सक्ता न विशेषेषु भारत ।
तानहं पण्डितान्मन्ये विशेषा हि प्रसङ्गिनः ॥ ५-३८-४४ (३३१९५)
यं प्रशंसन्ति कितवा यं प्रशंसन्ति चारणाः ।
यं प्रशंसन्ति बन्धक्यो न स जीवति मानवः ॥ ५-३८-४५ (३३१९६)
हित्वा तान्परमेष्वासान्पाण्डवानमितौजसः ।
आहितं भारतैश्वर्यं त्वया दुर्योधने महत् ॥ ५-३८-४६ (३३१९७)
तं द्रक्ष्यसि परिभ्रष्टं तस्मात्त्वमचिरादिव ।
ऐश्वर्यमदसंमूढं बलिं लोकत्रयादिव ॥ ॥ ५-३८-४७ (३३१९८)

इति श्रीमन्महाभारते उद्योगपर्वणि प्रजागरपर्वणि अष्टत्रिंशोऽध्यायः ॥
Mahabharata - Udyoga Parva - Chapter Footnotes

५-३८-१ आयति आगच्छति ॥
५-३८-२ निर्णिज्य प्रक्षाल्य ।आत्मसंस्थां स्वस्थितिम् ॥
५-३८-४ अवकीर्णी नष्टब्रह्मचर्यः ।नोदकार्ह उदकमात्रानर्होऽपि
अतिथिः भृशं प्रियः ॥
५-३८-१५ सर्वतश्चक्षुश्चारैः परमन्त्रं जानन् ॥
५-३८-१७ निःशलाके रहसि ॥
५-३८-२० पारिषादः सभासदः ॥
५-३८-२३ षाड्गुण्यं षण्णां
संधिविग्रहयानासनद्वैधीभावसमाश्रयाणां समूहः न श्रुतो येन
सः ॥
५-३८-२५ आत्मनैव प्रत्ययो ज्ञानं यस्य स्वयमेव ज्ञातकोशस्य ॥
५-३८-२६ नाममात्रेणैव राजा भवेत् ।भोगांस्तु भृत्यैः समानानेव
भुञ्जीत ॥
५-३८-३६ आवर्तयन्ति शत्रूनपि स्वीयान्कुर्वन्ति ।प्रणिहिता प्रयुक्ता ॥
५-३८-३७ परिवारणं परिवारान् भृत्यमित्रादीन् ॥
५-३८-३८ समिधः उद्दीपिकाः ॥
५-३८-३९ असंविभागी पोष्येभ्योऽदत्त्वा स्वयं भुञ्जानः ॥
५-३८-४४ ये भृत्याः विशेषा आधिक्यानि ।प्रसङ्गिनः प्रसङ्गः
संघर्षस्तत्कारिणः ॥

---

उद्योगपर्व-अध्यय०३९
॥ श्रीः ॥

५.३९. अध्यायः ३९

Mahabharata - Udyoga Parva - Chapter Topics
विदुरेण धृतराष्ट्रंप्रति ज्ञातिसंग्रहे गुणवर्णनपूर्वकं पुनः
कुरुपाण्डवेषु साम्येन वर्तनविधानम् ॥ १ ॥

Mahabharata - Udyoga Parva - Chapter Text

५-३९-० (३३१९९)
धृतराष्ट्र उवाच। ५-३९-०क्ष् (३४९२)
अनीश्वरोऽयं पुरुषो भवाभवे
सूत्रप्रोता दारुमयीव योषा ।
धात्रा तु दिष्टस्य वशे कृतोऽयं
तस्माद्वद त्वं श्रवणे धृतोऽहम् ॥ ५-३९-१ (३३२००)
विदुर उवाच। ५-३९-२क्ष् (३४९३)
अप्राप्तकालं वचनं बृहस्पतिरपि ब्रुवन् ।
लभते बुध्य्वज्ञानमवमानं च भारत ॥ ५-३९-२ (३३२०१)
प्रियो भवति दानेन प्रियवादेन चापरः ।
मन्त्रमूलबलेनान्यो यः प्रियः प्रिय एव सः ॥ ५-३९-३ (३३२०२)
द्वेष्यो न साधुर्भवति न मेधावी न पण्डितः ।
प्रिये शुभानि कार्याणि द्वेष्ये पापानि चैव ह ॥ ५-३९-४ (३३२०३)
उक्तं मया जातमात्रेऽपि राजन्
दुर्योधनं त्यज पुत्रं त्वमेकम् ।
तस्य त्यागात्पुत्रशतस्य वृद्धि-
रस्यात्यागात्पुत्रशतस्य नाशः ॥ ५-३९-५ (३३२०४)
न वृद्धिर्बहुमन्तव्या या वृद्धिः क्षयमावहेत् ।
क्षयोऽपि बहुमन्तव्यो यः क्षयो वृद्धिमावहेत् ॥ ५-३९-६ (३३२०५)
न स क्षयो महाराज यः क्षयो वृद्धिमावहेत् ।
क्षयः स त्विह मन्तव्यो यं लब्ध्वा बहु नाशयेत् ॥ ५-३९-७ (३३२०६)
समृद्धा गुणतः केचिद्भवन्ति धनतोऽपरे ।
धनवृद्धान्गुणैर्हीनान्धृतराष्ट्र विवर्जय ॥ ५-३९-८ (३३२०७)
धृतराष्ट्र उवाच। ५-३९-९क्ष् (३४९४)
सर्वं त्वमायतीयुक्तं भाषसे प्राज्ञसंमतम् ।
न चोत्सहे सुतं त्यक्तुं यतो धर्मस्ततो जयः ॥ ५-३९-९ (३३२०८)
विदुर उवाच। ५-३९-१०क्ष् (३४९५)
अतीव गुणसंपन्नो न जातुः विनयान्वितः ।

सुसूक्ष्ममपि भूतानामुपमर्दमुपेक्षते ॥ ५-३९-१० (३३२०९)
परापवादनिरताः परदुःखोदयेषु च ।
परस्परविरोधे च यतन्ते सततोत्थिताः ॥ ५-३९-११ (३३२१०)
सदोषं दर्शनं येषां संवासे सुमहद्भयम् ।
अर्थादाने महान्दोषः प्रदाने च महद्भयम् ॥ ५-३९-१२ (३३२११)
ये वै भेदनशीलास्तु सकामा निस्त्रपाः शठाः ।
ये पापा इति विख्याताः संवासे पिरिगर्हिताः ॥ ५-३९-१३ (३३२१२)
युक्ताश्चान्यैर्महादोषैर्ये नरास्तान्विवर्जयेत् ।
निवर्तमाने सौहार्दे प्रीतिर्नीचे प्रणश्यति ॥ ५-३९-१४ (३३२१३)
या चैव फलनिर्वृतिः सौहृदे चैव यत्सुखम् ।
यतते चापवादाय यत्नमारभते क्षये ॥ ५-३९-१५ (३३२१४)
अल्पेऽप्यपकृते मोहान्न शान्तिमधिगच्छति ।
तादृशैः सङ्गतं नीचैर्नृशंसैरकृतात्मभिः ।
निशाम्य निपुणं बुद्ध्या विद्वान्दूराद्विवर्जयेत् ॥ ५-३९-१६ (३३२१५)
यो ज्ञातिमनुगृह्णाति दरिद्रं दीनमातुरम् ।
स पुत्रपशुभिर्वृद्धिं श्रेयश्चानन्त्यमश्नुते ॥ ५-३९-१७ (३३२१६)
ज्ञातयो वर्धनीयास्तैर्य इच्छन्त्यात्मनः शुभम् ॥ ५-३९-१८ (३३२१७)
कुलवृद्धिं च राजेन्द्र तस्मात्साधु समाचरं ।
श्रेयसा योक्ष्यते राजन्कुर्वाणो ज्ञातिसत्क्रियां ॥ ५-३९-१९ (३३२१८)
विगुणा ह्यपि संरक्ष्या ज्ञातयो भरतर्षभ ।
किंपुनर्गुणवन्तस्ते त्वत्प्रसादाभिकाङ्क्षिणः ॥ ५-३९-२० (३३२१९)
प्रसादं कुरु वीराणां पाण्डवानां विशांपते ।
दीयतां ग्रामकाः केचित्तेषां वृत्त्यर्थमीश्वर ॥ ५-३९-२१ (३३२२०)
एवं लोके यशः प्राप्तं भविष्यति नराधिप ।
वृद्धेन हि त्वया कार्यं पुत्राणां तात शासनम् ॥ ५-३९-२२ (३३२२१)
मया चापि हितं वाच्यं विद्धि मां त्वद्धितैषिणम् ।
ज्ञातिभिर्विग्रहस्तात न कर्तव्यः शुभार्थिना ।
सुखानि सह भोज्यानि ज्ञातिभिर्भरतर्षभ ॥ ५-३९-२३ (३३२२२)
संभोजनं संकथनं संप्रीतिश्च परस्परम् ।
ज्ञातिभिः सह कार्याणि न विरोधः कदाचन ॥ ५-३९-२४ (३३२२३)
ज्ञातयस्तारयन्तीह ज्ञातयो मज्जयन्ति च ।
सुवृत्तास्तारयन्तीह दुर्वृत्ता मज्जयन्ति च ॥ ५-३९-२५ (३३२२४)
सुवृत्तो भव राजेन्द्र पाण्जवान्प्रति मानद ।
अधर्षणीयः शत्रूणां तैर्वृतस्त्वं भविष्यति ॥ ५-३९-२६ (३३२२५)
श्रीमन्तं ज्ञातिमासाद्य यो ज्ञातिरवसीदति ।
दिग्धहस्तं मृग इव स एनस्तस्य विन्दति ॥ ५-३९-२७ (३३२२६)

पश्चादपि नरश्रेष्ठ तव तापो भविष्यति ।
तान्वा हतान्सुतान्वापि श्रुत्वा तदनुचिन्तय ॥ ५-३९-२८ (३३२२७)
येन खट्वां समारूढः परितप्येत कर्मणा ।
आदावेन न तत्कुर्यादध्रुवे जीविते सति ॥ ५-३९-२९ (३३२२८)
न कश्चिन्नापनयते पुमानन्यत्र भार्गवात् ।
शेषसंप्रतिपत्तिस्तु बुद्धिमत्स्वेव तिष्ठति ॥ ५-३९-३० (३३२२९)
दुर्योधनेन यद्येतत्पापं तेषु पुरा कृतम् ।
त्वया तत्कुलवृद्धेन प्रत्यानेयं नरेश्वर ॥ ५-३९-३१ (३३२३०)
तांस्त्वं पदे प्रतिष्ठाप्य लोके विगतकल्मषः ।
भविष्यसि नरश्रेष्ठ पूजनीयो मनीषिणाम् ॥ ५-३९-३२ (३३२३१)
सुव्याहृतानि धीराणां फलतः परिचिन्त्य यः ।
अध्यवस्यति कार्येषु चिरं यशसि तिष्ठति ॥ ५-३९-३३ (३३२३२)
असम्यगुपयुक्तं हि ज्ञानं सुकुशलैरपि ।
उपलभ्यं चाविदितं विदितं चाननुष्ठितम् ॥ ५-३९-३४ (३३२३३)
पापोदयफलं विद्वान्यो नारभति वर्धते ॥ ५-३९-३५ (३३२३४)
यस्तु पूर्वकृतं पापमविमृश्यानुवर्तते ।
अगाधपङ्के दुर्मेधा विषमे विनिपात्यते ॥ ५-३९-३६ (३३२३५)
मन्त्रभेदस्य षट् प्राज्ञो द्वाराणीमानि लक्षयेत् ।
अर्थसन्ततिकामश्च रक्षेदेतानि नित्यशः ॥ ५-३९-३७ (३३२३६)
मदं स्वप्नपविज्ञानमाकारं चात्मसंभवम् ।
दुष्टामात्येषु विश्रम्भं दूताच्चाकुशलादपि ॥ ५-३९-३८ (३३२३७)
द्वाराण्येतानि यो ज्ञात्वा संवृणोति सदा नृप ।
त्रिवर्गाचरणे युक्तः स शत्रूनधितिष्ठति ॥ ५-३९-३९ (३३२३८)
नवै श्रुतमविज्ञाय वृद्धाननुपसेव्य वा ।
धर्मार्थौ वेदुतुं शक्यौ बृहस्पतिसमैरपि ॥ ५-३९-४० (३३२३९)
नष्टं समुद्रे पतितं नष्टं वाक्यमशृण्वति ।
अनात्मनि श्रुतं नष्टं नष्टं हुतमनग्निकम् ॥ ५-३९-४१ (३३२४०)
मत्या परीक्ष्य मेधावी बुद्ध्या संपाद्य चासकृत् ।
श्रुत्वा दृष्ट्वाथ विज्ञाय प्राज्ञैर्मैत्रीं समाचरेत् ॥ ५-३९-४२ (३३२४१)
अकीर्तिं विनयो हन्ति हन्त्यनर्थं पराक्रमः ।
हन्ति नित्यं क्षमा क्रोधमाचारो हन्त्यलक्षणम् ॥ ५-३९-४३ (३३२४२)
परिच्छदेन क्षेत्रेण वेश्मना परिचर्यया ।
परीक्षेत कुलं राजन्भोजनाच्छादनेन च ॥ ५-३९-४४ (३३२४३)
उपस्थितसय कामस्य प्रतिवादो न विद्यते ।
अपि निर्मुक्तदेहस्य कामरक्तस्य किं पुनः ॥ ५-३९-४५ (३३२४४)
प्राज्ञोपसेविनं वैद्यं धार्मिकं प्रियदर्शनम् ।

मित्रवन्तं सुवाक्यं च सुहृदं परिपालयेत् ॥ ५-३९-४६ (३३२४५)
दुष्कुलीनः कुलीनो वा मर्यादां यो न लङ्घयेत् ।
धर्मापेक्षी मृदुर्ह्रीमान्स कुलीनशताद्वरः ॥ ५-३९-४७ (३३२४६)
ययोश्चित्तेन वा चित्तं निभृतं निभृतेन वा ।
समेति प्रज्ञया प्रज्ञा तयोर्मैत्री न जीर्यति ॥ ५-३९-४८ (३३२४७)
दुर्बुद्धिमकृतप्रज्ञं छन्नं कूपं तृणैरिव ।
विवर्जयीत मेधावी तस्मिन्मैत्री प्रणश्यति ॥ ५-३९-४९ (३३२४८)
अवलिप्तेषु मूर्खेषु रौद्रसाहसिकेषु च ।
तथैवापेतधर्मेषु न मैत्रीमाचरेद्बुधः ॥ ५-३९-५० (३३२४९)
कृतज्ञं धार्मिकं सत्यमक्षुद्रं दृढभक्तिकम् ।
जितेन्द्रियं स्थितं स्थित्यां मित्रमित्यभिवाञ्छति ॥ ५-३९-५१ (३३२५०)
इन्द्रियाणामनुत्सर्गो मृत्युनापि विशिष्यते ।
अत्यर्थं पुनरुत्सर्गः सादयेद्दैवतानपि ॥ ५-३९-५२ (३३२५१)
मार्दवं सर्वभूतानामनसूया क्षमा धृतिः ।
आयुष्याणि बुधाः प्राहुर्मित्राणां चाविमानना ॥ ५-३९-५३ (३३२५२)
अपनीतं सुनीतेन योऽर्थं प्रत्यानिनीपते ।
मतिमास्थाय सुदृढां तदकापुरुषव्रतम् ॥ ५-३९-५४ (३३२५३)
आयत्यां प्रतिकारज्ञस्तदात्वे दृढनिश्चयः ।
अतीते कार्यशेषज्ञो नरोऽर्थैर्न प्रहीयते ॥ ५-३९-५५ (३३२५४)
कर्मणा मनसा वाचा यदभीक्ष्णं निषेवते ।
तदेवापहरत्येनं तस्मात्कल्याणमाचरेत् ॥ ५-३९-५६ (३३२५५)
मङ्गलालम्भनं योगः श्रुतमुत्थानमार्जवम् ।
भूतिमेतानि कुर्वन्ति सतां चाभीक्ष्णदर्शनम् ॥ ५-३९-५७ (३३२५६)
अनिर्वेदः श्रियो मूलं लाभस्य च शुभस्य च ।
महान्भवत्यनिर्विण्णः सुखं चानन्त्यमश्नुते ॥ ५-३९-५८ (३३२५७)
नातः श्रीमत्तरं किंचिदन्यत्पथ्यतमं मतम् ।
प्रभविष्णोर्यथा तात क्षमा सर्वत्र सर्वदा ॥ ५-३९-५९ (३३२५८)
क्षमेदशक्तः सर्वस्य शक्तिमान्धर्मकारणात् ।
अर्थानर्थौ समौ यस्य तस्य नित्यं क्षमा हिता ॥ ५-३९-६० (३३२५९)
यत्सुखं सेवमानोऽपि धर्मार्थाभ्यां न हीयते ।
कामं तदुपसेवेत न मूढव्रतमाचरेत् ॥ ५-३९-६१ (३३२६०)
दुःखार्तेषु प्रमत्तेषु नास्तिकेष्वलसेषु च ।
न श्रीर्वसत्यदान्तेषु ये चोत्साहविवर्जिताः ॥ ५-३९-६२ (३३२६१)
आर्जवेन नरं युक्तमार्जवात्सव्यपत्रपम् ।
अशक्तं मन्यमानास्तु धर्षयन्ति कुबुद्धयः ॥ ५-३९-६३ (३३२६२)
अत्यार्यमतिदातारमतिशूरमतिव्रतम् ।

प्रज्ञाभिमानिनं चैव श्रीर्भयान्नोपसर्पति ॥ ५-३९-६४ (३३२६३)
न चातिगुणवत्स्वेषा नात्यन्तं निर्गुणेषु च ।
नेषा गुणान्कामयते नैर्गुण्यान्नानुरज्यते ।
उन्मत्ता गौरिवान्धा श्रीः क्वचिदेवावतिष्ठते ॥ ५-३९-६५ (३३२६४)
अग्निहोत्रफला वेदाः शीलवृत्तफलं श्रुतम् ।
रतिपुत्रफला नारी दत्तभुक्तफलं धनम् ॥ ५-३९-६६ (३३२६५)
अधर्मोपार्जितैरर्थैर्यः करोत्यौर्ध्वदेहिकम् ।
न स तस्य फलं प्रेत्य भुङ्क्तेऽर्थस्य दुरागमात् ॥ ५-३९-६७ (३३२६६)
कान्तारे वनदुर्गेषु कृच्छ्रास्वापत्सु संभ्रमे ।
उद्यतेषु च शस्त्रेषु नास्ति सत्ववतां भयम् ॥ ५-३९-६८ (३३२६७)
उत्थानं संयमो दाक्ष्यमप्रमादो धृतिः स्मृतिः ।
समीक्ष्य च समारम्भो विद्धि मूलं भवस्य तु ॥ ५-३९-६९ (३३२६८)
तपो बलं तापमानां ब्रह्म ब्रह्मविदां बलम् ।
हिंसा बलमसाधूनां क्षमा गुणवतां बलम् ॥ ५-३९-७० (३३२६९)
अष्टौ तान्यव्रतघ्नानि आपो मूलं फलं पयः ।
हविर्ब्राह्मणकाम्या च गुरोर्वचनमौषधम् ॥ ५-३९-७१ (३३२७०)
न तत्परस्य सन्दध्यात्प्रतिकूलं यदात्मनः ।
सङ्ग्रहेणैव धर्मः स्यात्कामादन्यः प्रवर्तते ॥ ५-३९-७२ (३३२७१)
अक्रोधेन जयेत्क्रोधमसाधुं नाधुना जयेत् ।
जयेत्कदर्यं दानेन जयेन्मत्येन चानृतम् ॥ ५-३९-७३ (३३२७२)
स्त्रीधूर्तकेऽलसे भीरौ चण्डे पुरुषमानिनि ।
चोरे कृतघ्ने विश्वासो न कार्यो न च नास्तिके ॥ ५-३९-७४ (३३२७३)
अभिवादनशीलप्य नित्यं वृद्धोपसेविनः ।
चत्वारि संप्रवर्धन्ते कीर्तिरापुर्यशो बलम् ॥ ५-३९-७५ (३३२७४)
अतिक्लेशेन येऽथोः स्वधर्मस्यानिक्रमेण वा ।
अरेर्वा प्रणिपातेन मा ॥ तेषु मनः कृथाः ॥ ५-३९-७६ (३३२७५)
अविद्यः पुरुषः शोच्यः शोच्यं मैथुनमप्रजम् ।
निराहाराः प्रजाः शोच्याः शोच्यं राष्ट्रमराजकं ॥ ५-३९-७७ (३३२७६)
अध्वा जरा देहवतां पर्वतानां जलं जरा ।
असंभोगो जरा स्त्रीणां वाक्छल्यं मनसो जरा ॥ ५-३९-७८ (३३२७७)
अनाम्नायमला वेदा ब्राह्मणस्याव्रतं मलम् ।
मलं पृथिव्या वाह्लीकाः पुरुषस्यानृतं मलम् ॥ ५-३९-७९ (३३२७८)
कौतूहलमला साध्वी विप्रवासमलाः स्त्रियः ॥ ५-३९-८० (३३२७९)
सुवर्णस्य मलं रूप्यं रूप्यस्यापि मलं त्रपु ।
ज्ञेयं त्रपुमलं सीमं सीसस्यापि मलं मलम् ॥ ५-३९-८१ (३३२८०)
न स्वप्नेन जयेन्निद्रां न कामेन जयेत्स्त्रियः ।

नेन्धनेन जयेदग्निं न पानेन सुरां जयेत् ॥ ५-३९-८२ (३३२८१)
यस्य दानजितं मित्रं शत्रवो युधि निर्जिताः ।
अन्नपानजिता दाराः सफलं तस्य जीवितम् ॥ ५-३९-८३ (३३२८२)
सहस्रिणोऽपि जीवन्ति जीवन्ति शतिनस्तथा ।
धृतराष्ट्र विमुञ्चेच्छां न कथञ्चिन्न जीव्यते ॥ ५-३९-८४ (३३२८३)
यत्पृथिव्यां व्रीहियवं हिरण्यं पशवः स्त्रियः ।
नालमेकस्य तत्सर्वमिति पश्यन्न मुह्यति ॥ ५-३९-८५ (३३२८४)
राजन्भूयो ब्रवीमि त्वां पुत्रेषु सममाचर ।
समता यदि ते राजन्स्वेषु पाण्डुसुतेषु वा ॥ ॥ ५-३९-८६ (३३२८५)

इति श्रीमन्महाभारते उद्योगपर्वणि प्रजागरपर्वणि
एकोनचत्वारिंशोऽध्यायः ॥
Mahabharata - Udyoga Parva - Chapter Footnotes

५-३९-१ भवाभवे ऐश्वर्यानैश्वर्ये ।दिष्टस्य दैवस्य।वदैव
नतु म दूषयेति भावः।धृतः धृतिमान् ॥
५-३९-२ बुद्ध्यवज्ञानं अवज्ञातबुद्धित्वम् ॥
५-३९-९ आयतीयुक्तं उदर्के हितम् ॥
५-३९-१५ फलनिर्वृत्तिः सुखं च प्रणश्यति ।आरभते नीच इति
शेषः ॥
५-३९-१६ सङ्गतं संबन्धम् ।निशाम्य विचार्य ॥
५-३९-२७ दिग्धहस्तं विषाक्तबाणहस्तम् ।स श्रीमान् एनस्तस्य
ज्ञातेरवसादजं पापं विन्दति।मृगवधजं पापं व्याध इवेत्यर्थः
॥
५-३९-२९ खट्वां समारूढश्चिन्तागारं प्रविष्टः ॥
५-३९-३० भार्गवात् शुक्रादन्यत्र नीतिशास्त्रकर्तारं शुक्रं विहाय
अन्यः कश्चिदपि न अपनयते इति न अपितु सर्वोऽप्यपनयते अनीतिं
करोति ।अतः यत् अतीतं तत् अतीतमेव।शेषस्य तत्कालोचितस्य अर्थस्य
प्रतिपत्तिः विचारः कर्तव्य इत्यर्थः ॥
५-३९-३१ प्रत्यानेयं प्रतिकर्तव्यम् ॥
५-३९-३३ अध्यवस्यति निश्चयं करोति ॥
५-३९-३४ सुकुशलैरप्युपयुक्तं उपदिष्टं तत् ज्ञानं असम्यगेव
।यतः उपलभ्यं ज्ञेयं तेन अविदितं न ज्ञातं ।ज्ञातं वा तत्
नानुष्ठितम्।मदुक्तं त्वयि निष्फलमेवेति भावः ॥
५-३९-३५ पापोदयफलं पापहेतुभूतप्रयोजनकं कर्म यो नारभते
स वर्धते ॥

५-३९-३६ पापमेवानुवर्तते सततं करोति ।पङ्के नारके ॥
५-३९-३८ अविज्ञानं परकीयगुप्तचारादेरज्ञानम् ।आत्मसंभवं आकारं नेत्रवक्त्रविकारादिकम् ॥
५-३९-३९ मन्त्रभेदस्य द्वाराणि संवृणोति पिदधाति ॥
५-३९-४० श्रुतं शास्त्रम् ॥
५-३९-४४ परिच्छदः भोग्यवस्तुसामग्री ।क्षेत्रेण जन्मस्थानेन।कुग्रामवासिषु प्रायेण विवेकाभावात्।परिचर्यया आचारेण ॥
५-३९-४६ वैद्यं विद्यावन्तम् ॥
५-३९-५२ इन्द्रियाणां उत्सर्गो विषयेषु प्रवृत्तिः ।अनुत्सर्गो विषयेभ्यो निवृत्तिः।सा मृत्युतुल्या दुरनुष्ठेयेत्यर्थः ॥
५-३९-५३ आयुष्याणि आयुष्कराणि ॥
५-३९-५४ अपनीतं नाशितम् ॥
५-३९-५५ आयत्यां आगामिति काले दुःखस्य प्रतीकारज्ञः तदात्वे वर्तमाने दृढनिश्चयः ॥
५-३९-५७ मङ्गलानां दधिदूर्वागवादीनां आलम्भनं स्पर्शः ।योगः सहायसंपत।उत्थानं उद्यमःक ॥
५-३९-५८ अनिर्वेदः उद्योगात् अनुपरमः ॥
५-३९-६१ मूढव्रतं आहारादौ अतिनिर्बन्धम् ॥
५-३९-६२ अदान्तेषु लिप्साहीनेषु ॥
५-३९-६७ और्ध्वदेहिकं परलोकसाधनं यज्ञदानादि ॥
५-३९-६९ संयमः इन्द्रियाणां निग्रहः ।भवस्य ऐश्वर्यस्य ॥
५-३९-७१ ब्राह्मणकाम्या ब्राह्मणस्य इच्छा इत्येत्यर्थः ॥
५-३९-७३ संदध्यात् कुर्यात् ॥
५-३९-७३ साधुना ॥।
५-३९-७८ स्त्रीधूर्तके स्त्रियां धुते चेत्येकवद्भावः ॥
५-३९-७९ वाह्लीकाः पञ्चानां सिन्धुषष्टानां नदीनां यत्र संगमः वाह्लीका नाम ते देशाः ॥
५-३९-८० विप्रवासः प्रवासः ॥
५-३९-८२ स्वप्नेन शयनेन ॥
५-३९-८६ यदि ते स्वेषु पुत्रेषु पाण्डवेषु च समतास्ति तर्हि सर्वेषु सममेवाचर ॥

---

उद्योगपर्व-अध्यय०४०
॥ श्रीः ॥
५.४०. अध्यायः ४०

Mahabharata - Udyoga Parva - Chapter Topics
विदुरेण धृतराष्ट्रं प्रति तत्तद्वर्णवर्मणां तैत्तैश्चवश्यानुष्ठेयत्वकथनपूर्वकं युधिष्ठिरस्य राज्यं प्रदाय क्षात्रधर्मे नियोजनचोदनम् ॥ १ ॥

Mahabharata - Udyoga Parva - Chapter Text

५-४०-० (३३२८६)
विदुर उवाच। ५-४०-०क्ष् (३४९६)
योऽभ्यर्चितः मद्भिरसज्जमानः
करोत्यर्थं शक्तिमहापयित्वा ।
क्षिप्रं यशस्तं समुपैति मन्त-
मलं प्रसन्ना हि सुखाय सन्तः ॥ ५-४०-१ (३३२८७)
महान्तमप्यर्थमधर्मयुक्तं
यः मन्त्यजत्यनपाकृष्ट एव ।
सुखं सुदुःखान्यवमुच्य शेते
जीर्णां त्वचं सर्प इवावमुच्य ॥ ५-४०-२ (३३२८८)
अनृते च समुत्कर्षो राजगामि च पैशुनम् ।
गुरोश्चालीकनिर्बन्धः समानि ब्रह्महत्यया ॥ ५-४०-३ (३३२८९)
असूयैकपदं मृत्युरतिवादः श्रियो वधः ।
अशुश्रूषा त्वरा श्लाघा विद्यायाः शत्रवस्त्रः ॥ ५-४०-४ (३३२९०)
आलस्यं मदमोहौ च चापलं गोष्ठिरेव च ।
स्तब्धता चाभिमानित्वं तथा त्यागित्वमेव च ॥ ५-४०-५ (३३२९१)
एते वै सप्त दोषाः स्युः सदा विद्यार्थिनां मताः ।
सुखार्थिनः कुतो विद्या नास्ति विद्यार्थिनः सुखं ।
सुखार्थी वा त्यजेद्विद्यां विद्यार्थी वा त्यजेत्सुखम् ॥ ५-४०-६ (३३२९२)
नाग्निस्तृप्यति काष्ठानां नापगानां महोदधिः ।
नान्तकः सर्वभूतानां न पुंसां वामलोचना ॥ ५-४०-७ (३३२९३)
आशा धृतिं हन्ति समृद्धिमन्तकः
क्रोधः श्रियं हन्ति यशः कदर्यता ।
अपालनं हन्ति पशूंश्च राज-
न्नेकः क्रुद्धो ब्राह्मणो हन्ति राष्ट्रम् ॥ ५-४०-८ (३३२९४)
अजाश्च कांस्यं रजतं च नित्यं
मध्वाकर्षः शकुनिः श्रोत्रियश्च ।
वृद्धो ज्ञातिरवसन्नः कुलीन
एतानि ते सन्तु गृहे सदैव ॥ ५-४०-९ (३३२९५)

अजोक्षा चन्दनं वीणा आदर्शो मधुसर्पिषी ।
विषमौदुम्बरं शङ्खः स्वर्णनाभोऽथ रोचना ॥ ५-४०-१० (३३२९६)
गृहे स्थापयितव्यानि धन्यानि मनुरब्रवीत् ।
देवब्राह्मणपूजार्थमतिथीनां च भारत ॥ ५-४०-११ (३३२९७)
इदं च त्वां सर्वपरं ब्रवीमि
पुण्यं पदं तात महाविशिष्टम् ।
न जातु कामान्न भयान्न लोभा-
द्धर्मं जह्याज्जीविस्यापि हेतोः ॥ ५-४०-१२ (३३२९८)
नित्यो धर्मः सुखदुःखे त्वनित्ये
जीवो नित्यो धातुरस्य त्वनित्यः ।
त्यक्त्वाऽनित्यं प्रतितिष्ठस्व नित्ये
संतुष्य सन्तोषपरा हि सन्तः ॥ ५-४०-१३ (३३२९९)
महाबलान्पश्य महानुभावान्
प्रशास्य भूमिं धनधान्यपूर्णाम् ।
राज्यानि हित्वा विपुलांश्च भोगान् ।
गतान्नरेन्द्रान्वशमन्तकस्य ॥ ५-४०-१४ (३३३००)
मृतं पुत्रं दुःखपुष्टं मनुष्या
उत्क्षिप्य राजन्स्वगृहान्निर्हरन्ति ।
तं मुक्तकेशाः करुणं रुदन्ति
चितामध्ये काष्ठमिव क्षिपन्ति ॥ ५-४०-१५ (३३३०१)
अन्यो धनं प्रेतगतस्य भुङ्क्ते
वयांसि चाग्निश्च शरीरधातून् ।
द्वाभ्यामयं सह गच्छत्यमुत्र
पुण्येन पापेन च वेष्ट्यमानः ॥ ५-४०-१६ (३३३०२)
उसृज्य विनिवर्तन्ते ज्ञातयः सुहृदः सुताः ।
अपुष्पानफलान्वृक्षान्यथा तात पतत्रिणः ॥ ५-४०-१७ (३३३०३)
अग्नौ प्रास्तं तु पुरुषं कर्मान्वेति स्वयं कृतम् ।
तस्मात्तु पुरुषो यत्नाद्धर्मं सञ्चिनुयाच्छनैः ॥ ५-४०-१८ (३३३०४)
अस्माल्लोकादूर्ध्वममुष्य चाधो
महत्तमस्तिष्ठति ह्यन्धकारम् ।
तद्वै महामोहनमिन्द्रियाणां
बुद्ध्यस्व मा त्वां प्रलभेत राजन् ॥ ५-४०-१९ (३३३०५)
इदं वचः शक्ष्यसि चेद्यथाव-
न्निशम्य सर्वं प्रतिपत्तुमेव ।
यशः परं प्राप्स्यसि जीवलोके
भयं नचामुत्र नचेह तेऽस्ति ॥ ५-४०-२० (३३३०६)

आत्मा नदी भारत पुण्यतीर्था
सत्योदया धृतिकूला दयोर्मिः ।
तस्यां स्नातः पूयते पुण्यकर्मा
पुण्यो ह्यात्मा नित्यमलोभ एव ॥ ५-४०-२१ (३३३०७)
कामक्रोधग्राहवतीं पञ्चेन्द्रियजलां नदीम् ।
नावं धृतिमयीं कृत्वा जन्मदुर्गाणि संतर ॥ ५-४०-२२ (३३३०८)
प्रज्ञावृद्धं धर्मवृद्धं स्वबन्धुं
विद्यावृद्धं वयसा चापि वृद्धम् ।
कार्याकार्ये पूजयित्वा प्रसाद्य
यः संपृच्छेन्न स मुह्येत्कदाचित् ॥ ५-४०-२३ (३३३०९)
धृत्या शिश्नोदरं रक्षेत्पाणिपादं च चक्षुषा ।
चक्षुःश्रोत्रे च मनसा मनो वाचं च कर्मणा ॥ ५-४०-२४ (३३३१०)
नित्योदकी नित्ययज्ञोपवीती
नित्यस्वाध्यायी पतितान्नवर्जी ।
सत्यं ब्रुवन्गुरवे कर्म कुर्व-
न्न ब्राह्मणश्च्यवते ब्रह्मलोकात् ॥ ५-४०-२५ (३३३११)
अधीत्य वेदान्परिसंस्तीर्य चाग्नी-
निष्ट्वा यज्ञैः पालयित्वा प्रजाश्च ।
गोब्राह्मणार्थं शस्त्रपूतान्तरात्मा
हतः सङ्ग्रामे क्षत्रियः स्वर्गमेति ॥ ५-४०-२६ (३३३१२)
वैश्योऽधीत्य ब्राह्मणान्क्षत्रियांश्च
धनैः काले संविभज्याश्रितांश्च ।
त्रेतापूतं धूममाघ्राय पुण्यं
प्रेत्य स्वर्गे दिव्यसुखानि भुङ्क्ते ॥ ५-४०-२७ (३३३१३)
ब्रह्म क्षत्रं वैश्यवर्णं च शूद्रः
क्रमेणैतान्न्यायतः पूजयानः ।
तुष्टेष्वेतेष्वव्यथो दग्धपाप-
स्त्यक्त्वा देहं स्वर्गसुखानि भुङ्क्ते ॥ ५-४०-२८ (३३३१४)
चातुर्वर्ण्यस्यैष धर्मस्तवोक्तो
हेतुं चानुब्रुवतो मे निबोध ।
क्षात्राद्धर्माद्धीयते पाण्डुपुत्र-
स्तं त्वं राजन्राजधर्मे नियुङ्क्ष ॥ ५-४०-२९ (३३३१५)
धृतराष्ट्र उवाच। ५-४०-३०क्ष् (३४९७)
एवमेतद्यथा त्वं मामनुशासनि नित्यदा ।
ममापि च मतिः सौम्य भवत्येवं यथात्थ माम् ॥ ५-४०-३० (३३३१६)
सा तु बुद्धिः कृताप्येवं पाण्डवान्प्रति मे सदा ।

दुर्योधनं समासाद्य पुनर्विपरिवर्तते ॥ ५-४०-३१ (३३३१७)
न दिष्टमभ्यतिक्रान्तुं शक्यं भूतेन केनचित् ।
दिष्टमेव ध्रुवं मन्ये पौरुषं तु निरर्थकम् ॥ ॥ ५-४०-३२ (३३३१८)

इति श्रीमन्महाभारते उद्योगपर्वणि प्रजागरपर्वणि
चत्वारिंशोऽध्यायः ॥ ॥ समाप्तमिदं प्रजागरपर्व ॥ -------
Mahabharata - Udyoga Parva - Chapter Footnotes

५-४०-१ प्रमन्नः सन्तः साधवः सुखाय अलं सुखं दातुं पर्याप्ताः ॥
५-४०-४ एकपदं सर्वात्मना ॥
५-४०-५ मदमोहौ एकीकृत्य सप्त ॥
५-४०-९ आकर्षः विषादीनाम् ॥
५-४०-१० अजेन सहितः उक्षा अजोक्षा । औदुम्बरं ताम्रमयं
पात्रजातम् । विषं लोहमिति सर्वज्ञः । स्वर्णनाभः शालग्रामः
। दक्षिणावर्तः शङ्खः । ५-४०-११ धन्यानि मङ्गलावहानि ॥
५-४०-१२ महाविशिष्टं महेन उत्सवेन अविशिष्टं समानं
माङ्गलिकमित्यर्थः ॥
५-४०-१९ अस्माल्लोकादूर्ध्वं स्वर्गे । अमुष्य अमुष्मात् स्वर्गात् । प्रलभेत
स्पृशेत् ॥
५-४०-२० प्रतिपत्तुं ज्ञातुं शक्ष्यसि चेदिति संबन्धः ॥
५-४०-२१ पुण्यमपि किं नित्य मलोभ एव । वैराग्यात्र परं पुण्यमित्यर्थः ॥
५-४०-२४ मनो वाचं च विद्ययेति ङ पाठः ॥
५-४०-२५ नित्योदकी यथाकालं स्नानाचमनपरः ॥

---

उद्योगपर्व-अध्यय०४१
॥ श्रीः ॥
५.४१. अध्यायः ४१

Mahabharata - Udyoga Parva - Chapter Topics
धृतराष्ट्रेण पुनर्धर्मरहस्यकथनं चोदितेन विदुरेण स्वस्य
शूद्रयोनिजातत्वेन तत्कथनानौचित्यकथनम् ॥ १ ॥
तथा स्मरण मात्रसंनिहितं सनत्सुजातंप्रति धृतराष्ट्राय
तत्वोपदेशप्रार्थना ॥ २ ॥

Mahabharata - Udyoga Parva - Chapter Text

५-४१-० (३३३१९)

धृतराष्ट्र उवाच। ५-४१-०क्ष् (३४९८)
अनुक्तं यदि ते किञ्चिद्वाचा विदुर विद्यते ।
तन्मे शुश्रूषतो ब्रूहि विचित्राणि हि भाषसे ॥ ५-४१-१ (३३३२०)
विदुर उवाच। ५-४१-२क्ष् (३४९९)
धृतराष्ट्र कुमारो वै यः पुराणः सनातनः ।
तनत्सुजातः प्रोवाच मृत्युर्नास्तीति भारत ॥ ५-४१-२ (३३३२१)
स ते गुह्यान्प्रकाशांश्च सर्वान्हृदयसंश्रयान् ।
प्रवक्ष्यति महाराज सर्वबुद्धिमतां वरः ॥ ५-४१-३ (३३३२२)
धृतराष्ट्र उवाच। ५-४१-४क्ष् (३५००)
किं त्वं न वेद तद्भूयो यन्मे ब्रूयात्सनातनः ।
त्वमेव विदुर ब्रूहि प्रज्ञाशेषोऽस्ति चेत्तव ॥ ५-४१-४ (३३३२३)
विदुर उवाच। ५-४१-५क्ष् (३५०१)
शूद्रयोनावहं जातो नातोऽन्यद्वक्तुमुत्सहे ।
कुमारस्य तु याबुद्धिर्वेद तां शाश्वतीमहम् ॥ ५-४१-५ (३३३२४)
ब्राह्मीं हि योनिमापन्नः सगुह्यमपि यो वदेत् ।
न तेन गर्ह्यो देवानां तस्मादेतद्ब्रवीमि ते ॥ ५-४१-६ (३३३२५)
धृतराष्ट्र उवाच। ५-४१-७क्ष् (३५०२)
ब्रवीहि विदुर त्वं मे पुराणं तं सनातनम् ।
कथमेतेन देहेन स्यादिहैव समागमः ॥ ५-४१-७ (३३३२६)
वैशंपायन उवाच। ५-४१-८क्ष् (३५०३)
चिन्तयामास विदुरस्तमृषिं शंसितव्रतम् ।
स च तच्चिन्तितं ज्ञात्वा दर्शयामास भारत ॥ ५-४१-८ (३३३२७)
स चैनं प्रतिजग्राह विधिदृष्टेन कर्मणा ।
सुखोपविष्टं विश्रान्तमथैनं विदुरोऽब्रवीत् ॥ ५-४१-९ (३३३२८)
भगवन्संशयः कश्चिद्धृतराष्ट्रस्य मानसः ।
यो न शक्यो मया वक्तुं त्वमस्मै वक्तुमर्हसि ॥ ५-४१-१० (३३३२९)
यं श्रत्वाऽयं मनुष्येन्द्रः सर्वदुःखातिगो भवेत् ॥ ५-४१-११ (३३३३०)
लाभालाभौ प्रियद्वेष्यौ यथैनं न जरान्तकौ ।
विषहेरन्भयामर्षौ क्षुत्पिपासे मदोद्भवौ ।
अरतिश्चैव तन्द्री च कामक्रोधौ क्षयोदयौ ॥ ॥ ५-४१-१२ (३३३३१)

इति श्रीमन्महाभारते उद्योगपर्वणि सनत्सुजातपर्वणि
एकचत्वारिंशोऽध्यायः ॥

Mahabharata - Udyoga Parva - Chapter Footnotes

५-४१-२ सनुत्कुम्मरः प्रोवाचेति को पाठः ॥

५-४१-४ तमहं नाभिजानामि तत्वतो वै सनातनमिति को पाठो ॥
५-४१-१२ विषहेरन् बाधेरन् । अमर्षः असहिष्णुता । उद्भव
उत्कृष्टैश्वर्यं ॥

---

उद्योगपर्व-अध्यय०४२
॥ श्रीः ॥
५.४२. अध्यायः ४२

Mahabharata - Udyoga Parva - Chapter Topics
सनत्सुजातेन धृतराष्ट्रंप्रति तत्त्वोपदेशः ॥ १ ॥

Mahabharata - Udyoga Parva - Chapter Text

५-४२-० (३३३३२)
वैशंपायन उवाच। ५-४२-०क्ष् (३५०४)
ततो राजा धृतराष्ट्रो मनीषी
संपूज्य वाक्यं विदुरेरितं तत् ।
सनत्सुजातं रहिते महात्मा
पप्रच्छ बुद्धिं परमां बुभूषन् ॥ ५-४२-१ (३३३३३)
धृतराष्ट्र उवाच। ५-४२-२क्ष् (३५०५)
सनत्सुजात यदिमं शृणोमि
न मृत्युरस्तीति तवोपदेशम् ।
देवासुरा ह्याचरन्ब्रह्मचर्य-
ममृत्यवे तत्कतरन्नु सत्यम् ॥ ५-४२-२ (३३३३४)
सनत्सुजात उवाच। ५-४२-३क्ष् (३५०६)
अमृत्युं कर्मणा केचिन्मृत्युर्नास्तीति चापरे ।
शृणु मे ब्रुवतो राजन्यथैतन्मा विशङ्किथाः ॥ ५-४२-३ (३३३३५)
उभे सत्ये क्षत्रियाद्य प्रवृत्ते
मोहो मृत्युः संमतोऽयं कवीनाम् ।
प्रमादं वै मृत्युमहं ब्रवीमि
तथाऽप्रमादममृतत्वं ब्रवीमि ॥ ५-४२-४ (३३३३६)
प्रमादाद्वै असुराः पराभव-
न्नप्रमादाद्ब्रह्मभूताः सुराश्च ।
नैव मृत्युर्व्याघ्र इवात्ति जन्तू-
न्न ह्यस्य रूपमुपलभ्यते हि ॥ ५-४२-५ (३३३३७)
यमं त्वेके मृत्युमतोऽन्यमाहु-
रात्मावासममृतं ब्रह्मचर्यम् ।

पितृलोके राज्यमनुशास्ति देवः
शिवः शिवानामशिवोऽशिवानाम् ॥ ५-४२-६ (३३३३८)
अस्यादेशान्निःसरते नराणां
क्रोधः प्रमादो लोभरूपश्च मृत्युः ।
अहं गतेनैव चरन्विमार्गा-
न्न चात्मनो योगमुपैति कश्चित् ॥ ५-४२-७ (३३३३९)
ते मोहितास्तद्वशे वर्तमाना
इतः प्रेतास्तत्र पुनः पतन्ति ।
ततस्तान्देवा अनुविप्लवन्ते
अतो मृत्युर्मरणादभ्युपैति ॥ ५-४२-८ (३३३४०)
कर्मोदये कर्मफलानुरागा-
स्तत्रानु ते यान्ति न तरन्ति मृत्युम् ।
सदर्थयोगानवगमात्समन्ता-
त्प्रवर्तते भोगभोगेन देही ॥ ५-४२-९ (३३३४१)
तद्वै महामोहनमिन्द्रियाणां
मिथ्यार्थयोगस्य गतिर्हि नित्या ।
मिथ्यार्थयोगाभिहतान्तरात्मा
स्मरन्नुपास्ते विषयान्समन्तात् ॥ ५-४२-१० (३३३४२)
अभिध्या वै प्रथमं हन्ति लोकान्
कामक्रोधावनुगृह्याशु पश्चात् ।
एते बालान्मृत्यवे प्रापयन्ति
धीरास्तु धैर्येण तरन्ति मृत्युम् ॥ ५-४२-११ (३३३४३)
सोऽभिध्यायन्नुत्पतिष्णन्निहन्या-
दनादरेणाप्रतिबुध्यमानः ।
नैनं मृत्युर्मृत्युरिवात्ति भूत्वा
एवं विद्वान्यो विनिहन्ति कामान् ॥ ५-४२-१२ (३३३४४)
कामानुसारी पुरुषः कामाननु विनश्यति ।
कामान्व्युदस्य धुनुते यत्किञ्चित्पुरुषो रजः ॥ ५-४२-१३ (३३३४५)
तमोप्रकाशो भूतानां नरकोऽयं प्रदृश्यते ।
मुह्यन्त इव धावन्ति गच्छन्तः श्वभ्रमुन्मुखाः ॥ ५-४२-१४ (३३३४६)
अमूढवृत्तेः पुरुषस्येह कुर्या-
त्किं वै मृत्युस्तार्ण इवास्य व्याघ्रः ।
अमन्यमानः क्षत्रिय किञ्चिदन्य-
न्नाधीयते तार्ण इवास्य सर्पः ॥ ५-४२-१५ (३३३४७)
क्रोधाल्लोभान्मोहभयान्तरात्मा
स वै मृत्युस्त्वच्छरिरे य एषः ।

एवं मृत्युं जायमानं विदित्वा
ज्ञाने तिष्ठन्न बिभेतीह मृत्योः ।
विनश्यते विषये तस्य मृत्यु-
र्मृत्योर्यथा विषयं प्राप्य मर्त्यः ॥ ५-४२-१६ (३३३४८)
धृतराष्ट्र उवाच। ५-४२-१७क्ष् (३५०७)
यानेवाहुरिज्यया साधुलोकान्
द्विजातीनां पुण्यतमान्सनातनात् ।
तेषां परार्थं कथयन्तीह वेदा
एतद्विद्वान्नैति कथं नु कर्म ॥ ५-४२-१७ (३३३४९)
सनत्सुजात उवाच। ५-४२-१८क्ष् (३५०८)
एवं ह्यविद्वानुपयाति तत्र
तत्रार्थजातं च वदन्ति वेदाः ।
सवेह आयाति परं परात्मा
प्रयाति मार्गेण निहत्य मार्गान् ॥ ५-४२-१८ (३३३५०)
धृतराष्ट्र उवाच। ५-४२-१९क्ष् (३५०९)
कोऽसौ नियुङ्क्ते तमजं पुराणं
स चेदिदं सर्वमनुक्रमेण ।
किं वास्य कार्यमथवा सुखं च
तन्मे विद्वन्ब्रूहि सर्वं यथावत् ॥ ५-४२-१९ (३३३५१)
सनत्सुजात उवाच। ५-४२-२०क्ष् (३५१०)
दोषो महानत्र विभेदयोगे
ह्यनादियोगेन भवन्ति नित्याः ।
तथास्य नाधिक्यमपैति किञ्चि-
दनादियोगेन भवन्ति पुंसः ॥ ५-४२-२० (३३३५२)
य एतद्वा भगवान्स नित्यो
विकारयोगेन करोति विश्वम् ।
तथाच तच्छक्तिरिति स्म मन्यते ।
तथार्थयोगेन भवन्ति वेदाः ॥ ५-४२-२१ (३३३५३)
धृतराष्ट्र उवाच। ५-४२-२२क्ष् (३५११)
यस्माद्धर्मान्नाचरन्तीह केचि-
त्तथा धर्मान्केचिदिहाचरन्ति ।
धर्मः पापेन प्रतिहन्यते स्वि-
दुताहो धर्मः प्रतिहन्ति पापम् ॥ ५-४२-२२ (३३३५४)
सनत्सुजात उवाच। ५-४२-२३क्ष् (३५१२)
तस्मिन्स्थितौ वाप्युभयं हि नित्यं
ज्ञानेन विद्वान्प्रतिहन्ति सिद्धम् ।

तथान्यथा पुण्यमुपैति देही
तथागतं पापमुपैति सिद्धम् ॥ ५-४२-२३ (३३३५५)
गत्वोभयं कर्मणा युज्यते स्थिरं
शुभस्य पापस्य स चापि कर्मणा ।
धर्मेण पापं प्रणुदतीह विद्वान्
धर्मो बलीयानिति तत्र विद्धिः ॥ ५-४२-२४ (३३३५६)
धृतराष्ट्र उवाच।५-४२-२५क्ष् (३५१३)
यानिहाहुः स्वस्य धर्मस्य लोका-
न्द्विजातीनां पुण्यकृतां सनातनान् ।
तेषां क्रमान्कथय ततोऽपि चान्या-
न्नैतद्विद्वन्वेत्तुमिच्छामि कर्म ॥ ५-४२-२५ (३३३५७)
सनत्सुजात उवाच।५-४२-२६क्ष् (३५१४)
येषां व्रतेऽथ विस्पर्धा बले बलवतामिव ।
ते ब्राह्मणा इतः प्रेत्य स्वर्गे यान्ति प्रकाशताम् ॥५-४२-२६ (३३३५८)
येषां धर्मे च विस्पर्धा तेषां जज्ज्ञानसाधनम् ।
ते ब्राह्मणा इतो मुक्ताः स्वर्गं यान्ति त्रिविष्टपम् ॥५-४२-२७ (३३३५९)
तस्य सम्यक्समाचारमाहुर्वेदविदो जनाः ।
नैनं मन्येत भूयिष्ठं बाह्यमाभ्यन्तरं जनम् ॥५-४२-२८ (३३३६०)
यत्र मन्येत भूयिष्ठं प्रावृषीव तृणोदकम् ।
अन्नं पानं ब्राह्मणस्य तज्जीवोन्नानुसंज्वरेत् ॥५-४२-२९ (३३३६१)
यत्राकथयमानस्य प्रयच्छत्यशिवं भयम् ।
अतिरिक्तमिवाकुर्वन्स श्रेयान्नेतरो जनः ॥५-४२-३० (३३३६२)
यो वा कथयमानस्य ह्यात्मानं नानुसंज्वरेत् ।
ब्रह्मस्वं नोपभुञ्जीत तदन्नं संमतं सताम् ।
कुशवल्कलचेलाद्यं ब्रह्मस्वं योगिनो विदुः ॥ ५-४२-३१ (३३३६३)
यथा खं वान्तमश्नाति श्वा वै नित्यमभूतये ।
एवं ते वान्तमश्नन्ति स्ववीर्यस्योपसेवनात् ॥५-४२-३२ (३३३६४)
नित्यमज्ञातचर्या मे इति मन्येत ब्राह्मणः ।
ज्ञातीनां तु वसन्मध्ये नैवं विन्देत किञ्चन ॥५-४२-३३ (३३३६५)
कोह्येवमन्तरात्मानं ब्राह्मणो हन्तुमर्हति ।
निर्लिङ्गमचलं शुद्धं सर्वद्वन्द्वविवर्जितम् ॥५-४२-३४ (३३३६६)
योऽन्यथा सन्तमात्मानमन्यथा प्रतिपद्यते ।
किं तेन न कृतं पापं चोरेणात्मापहारिणा ॥५-४२-३५ (३३३६७)
अश्रान्तः स्यादनादाता संमतो निरुपद्रवः ।
शिष्टो न शिष्टवत्स स्याद्ब्राह्मणो ब्रह्मवित्कविः ॥५-४२-३६ (३३३६८)
अनाढ्या मानुषे वित्ते आढ्या दैवे तथा क्रतौ ।

ते दुर्धर्षा दुष्प्रकम्प्यास्तान्विद्याद्ब्रह्मणस्तनुम् ॥ ५-४२-३७ (३३३६९)
सर्वान्स्विष्टकृतो देवान्विद्याद्य इह कश्चन ।
न स मानो ब्राह्मणस्य तस्मिन्प्रयतते स्वयम् ॥ ५-४२-३८ (३३३७०)
यमप्रयतमानं तु मानयन्ति समाहिताः ।
न मान्यमानो मन्येत नावमानेऽतिसंज्वरेत् ॥ ५-४२-३९ (३३३७१)
लोकः स्वभाववृत्तिर्हि निमेषोन्मेषवत्सदा ।
विद्वांसो मानयन्तीह इति मन्येत मानितः ॥ ५-४२-४० (३३३७२)
अधर्मनिपुणा मुढा लोके मायाविशारदाः ।
न मान्यं मानयिष्यन्ति एवं मन्येत मानितः ॥ ५-४२-४१ (३३३७३)
न वै मानं च मौनं च सहितौ वसतः सदा ।
अयं हि लोको मानस्य असौ मौनस्य तद्विदुः ॥ ५-४२-४२ (३३३७४)
श्रीर्हि मानार्थसंवासा सा चापि परिपन्थिनी ।
ब्राह्मी सुदुर्लभा श्रीर्हि प्रज्ञाहीनेन क्षत्रिय ॥ ५-४२-४३ (३३३७५)
द्वाराणि तस्येह वदन्ति सन्तो
बहुप्रकाराणि दुराधराणि ।
सत्यार्जवे ह्रीर्दमशौचविद्या
षण्मानमोहप्रतिबन्धनानि ॥ ॥ ५-४२-४४ (३३३७६)

इति श्रीमन्महाभारते उद्योगपर्वणि सनत्सुजातपर्वणि
द्विचत्वारिंशोऽध्यायः ॥

---

उद्योगपर्व-अध्यय०४३
॥ श्रीः ॥
५.४३. अध्यायः ४३

Mahabharata - Udyoga Parva - Chapter Topics
सनत्सुजातेन धृतराष्ट्रंप्रति तत्त्वोपदेशः ॥ १ ॥

Mahabharata - Udyoga Parva - Chapter Text

५-४३-० (३३३७७)
धृतराष्ट्र उवाच। ५-४३-०क्ष् (३५१५)
कस्यैष मौनः कतरन्नु मौनं
प्रब्रूहि विद्वन्निह मौनभावम् ।
मौनेन विद्वानुत याति मौनं
कथं मुने मौनमिहाचरन्ति ॥ ५-४३-१ (३३३७८)
सनत्सुजात उवाच। ५-४३-२क्ष् (३५१६)

यतो न वेदा मनसा सहैन-
मनुप्रविशन्ति ततोऽथ मौनम् ।
यत्रोत्थितो वेदशब्दस्तथायं
स तन्मयत्वेन विभाति राजन् ॥ ५-४३-२ (३३३७९)
धृतराष्ट्र उवाच। ५-४३-३क्ष् (३५१७)
ऋचो यजूंषि यो वेद सामवेदं च वेद यः ।
पापानि कुर्वन्पापेन लिप्यते किं न लिप्यते ॥ ५-४३-३ (३३३८०)
सनत्सुजात उवाच। ५-४३-४क्ष् (३५१८)
नैनं सामान्यृचो वापि न यजूंष्यविचक्षणम् ।
त्रायन्ते कर्मणः पापान्न ते मिथ्या ब्रवीम्यहम् ॥ ५-४३-४ (३३३८१)
न च्छन्दांसि वृजिनात्तारयन्ति
मायाविनं मायया सर्वमानम् ।
नीडं शकुन्ता इव जातपक्षा-
श्छन्दांस्येनं प्रजहत्यन्तकाले ॥ ५-४३-५ (३३३८२)
धृतराष्ट्र उवाच। ५-४३-६क्ष् (३५१९)
न चेद्वेदा वेदविदं त्रातुं शक्ता विचक्षण ।
अथ कस्मात्प्रलापोऽयं ब्राह्मणानां सनातनः ॥ ५-४३-६ (३३३८३)
सनत्सुजात उवाच। ५-४३-७क्ष् (३५२०)
तस्यैव नामादिविशेषरूपै-
रिदं जगद्भाति महानुभाव ।
निर्दिश्य सम्यक्प्रवदन्ति वेदा-
स्तद्विश्ववैरूप्यमुदाहरन्ति ॥ ५-४३-७ (३३३८४)
तदर्थयुक्तं तप एतदिज्या
ताभ्यामसौ पुण्यमुपैति विद्वान् ।
पुण्येन पापं विनिहत्य पश्चा-
त्संजायते ज्ञानविदीपितात्मा ॥ ५-४३-८ (३३३८५)
ज्ञानेन चात्मानमुपैति विद्वा-
नथान्यथा वर्गफलानुकाङ्क्षी ।
अस्मिन्कृतं तत्परिगृह्य सर्व-
ममुत्र भुङ्क्ते पुनरेति मार्गम् ॥ ५-४३-९ (३३३८६)
अस्मिँल्लोके तपस्तप्तं फलमन्यत्र भुज्यते ।
ब्राह्मणानामिमे लोका वृद्धे तपसि संयताः ॥ ५-४३-१० (३३३८७)
ग ब्राह्मणानां तपः स्वृद्धमन्येषां तावदेव तत् ।
एतत्समृद्धमत्यृद्धं तपो भवति केवलम् ॥' ५-४३-११ (३३३८८)
धृतराष्ट्र उवाच। ५-४३-१२क्ष् (३५२१)
कथं समृद्धमप्यृद्धं तपो भवति केवलम् ।

सनत्सुजात तद्ब्रूहि यथा विद्याम तद्वयम् ॥ ५-४३-१२ (३३३८९)
सनत्सुजात उवाच। ५-४३-१३क्ष् (३५२२)
निष्कल्मषं तपस्त्वेतत्केवलं परिचक्षते ।
एतत्समृद्धमप्यृद्धं तपो भवति केवलम् ॥ ५-४३-१३ (३३३९०)
तपोमूलमिदं सर्वं यन्मां पृच्छसि क्षत्रिय ।
तपसा वेदविद्वांसः परं त्वमृतमाप्नुयुः ॥ ५-४३-१४ (३३३९१)
धृतराष्ट्र उवाच। ५-४३-१५क्ष् (३५२३)
कल्मषं तपसो ब्रूहि श्रुतं निष्कल्मषं तपः ।
सनत्सुजात येनेदं विद्यां गुह्यं सनातनम् ॥ ५-४३-१५ (३३३९२)
सनत्सुजात उवाच। ५-४३-१६क्ष् (३५२४)
क्रोधादयो द्वादश यस्य दोषा-
स्तथा नृशंसानि दश त्रि राजन् ।
धर्मादयो द्वादशैते पितॄणां
शास्त्रे गुणा ये विदिता द्विजानाम् ॥ ५-४३-१६ (३३३९३)
क्रोधः कामो लोभमोहौ विधित्सा-
ऽकृपाऽसूये मानशोकौ स्पृहा च ।
ईर्ष्या जुगुप्सा च मनुष्यदोषा
वर्ज्याः सदा द्वादशैते नराणाम् ॥ ५-४३-१७ (३३३९४)
एकैकमेते राजेन्द्र मनुष्यान्पर्युपासते ।
लिप्समानोन्तरं तेषां मृगाणामिव लुब्धकः ॥ ५-४३-१८ (३३३९५)
विकत्थनः स्पृहयालुर्मनस्वी
बिभ्रत्कोषं चपलो रोषणश्च ।
एतान्पापाः षण्णराः पापधर्मान्
प्रकुर्वते नो त्रसन्तः सुदुर्गे ॥ ५-४३-१९ (३३३९६)
संभोगसंविद्विषमोऽतिमानी
दत्तानुतापी कृपणो बलीयान् ।
वर्गप्रशंसी वनितासु द्वेष्टा
एते परे सप्त नृशंसवर्गाः ॥ ५-४३-२० (३३३९७)
धर्मश्च सत्यं च दमस्तपश्च
आमात्सर्यं ह्रीस्तितिक्षानसूया ।
यज्ञश्च दानं च धृतिः श्रुतं च
व्रतानि वै द्वादश ब्राह्मणस्य ॥ ५-४३-२१ (३३३९८)
यस्त्वेतेभ्यः प्रभवेद्द्वादशभ्यः
सर्वामपीमां पृथिवीं स शिष्यात् ।
त्रिभिर्द्वाभ्यामेकतो वार्थितो य-
स्तस्य स्वमस्तीति स वेदितव्यः ॥ ५-४३-२२ (३३३९९)

दमस्त्यागोऽप्रमादश्च एतेष्वमृतमाहितम् ।
तानि सत्यमुखान्याहुर्ब्राह्मणा ये मनीषिणः ॥ ५-४३-२३ (३३४००)
दमोऽष्टादशदोषः स्यात्प्रातिकूल्यं कृते भवेत् ।
अनृतं चाभ्यसूया च कामार्थौ च तथा स्पृहा ॥ ५-४३-२४ (३३४०१)
क्रोधः शोकस्तथा तृष्णा लोभः पैशून्यमेव च ।
मत्सरश्च विहिंसा च परितापस्तथाऽरतिः ॥ ५-४३-२५ (३३४०२)
अपस्मारश्चातिवादस्तथा संभावनात्मनि ।
एतैर्विमुक्तो दोषैर्यः स दान्तः सद्भिरुच्यते ॥ ५-४३-२६ (३३४०३)
मदोऽष्टादशदोषः स्यात्त्यागो भवति षड्विधः ।
विपर्ययाः स्मृता एते मददोषा उदाहृताः ।
दोषा दमस्य ये प्रोक्तास्तान्दोषान्परिवर्जयेत् ॥ ५-४३-२७ (३३४०४)
श्रेयांस्तु षड्विधस्त्यागस्तृतीयो दुष्करो भवेत् ।
तेन दुःखं तरत्येव भिन्नं तस्मिञ्जितं कृते ॥ ५-४३-२८ (३३४०५)
श्रेयांस्तु षड्विधस्त्यागः श्रियं प्राप्य न हृष्यति ।
इष्टापूर्ते द्वितीयं स्यान्नित्यवैराग्ययोगतः ॥ ५-४३-२९ (३३४०६)
कामत्यागश्च राजेन्द्र स तृतीय इति स्मृतः ॥
अप्यवाच्यं वदन्त्येतं स तृतीयो गुणः स्मृतः ॥ ५-४३-३० (३३४०७)
त्यक्तैर्द्रव्यैर्यद्भवति नोपयुक्तैश्च कामतः ।
न च द्रव्यैस्तद्भवति नोपयुक्तैश्च कामतः ॥ ५-४३-३१ (३३४०८)
न च कर्मस्वसिद्धेषु दुःखं ते न च न ग्लपेत् ।
सर्वैरेव गुणैर्युक्तो द्रव्यवानपि यो भवेत् ॥ ५-४३-३२ (३३४०९)
अप्रिये च समुत्पन्ने व्यथां जातु न गच्छति ।
इष्टान्पुत्रांश्च दारांश्च न याचेत कदाचन ॥ ५-४३-३३ (३३४१०)
अर्हते याचमानाय प्रदेयं तच्छुभं भवेत् ।
अप्रमादी भवेदेतैः स चाप्यष्टगुणो भवेत् ॥ ५-४३-३४ (३३४११)
सत्यं ध्यानं समाधानं चोद्यं वैराग्यमेव च ।
अस्तेयं ब्रह्मचर्यं च तथाऽसंग्रहमेव च ॥ ५-४३-३५ (३३४१२)
एवं दोषा मदस्योक्तास्तान्दोषान्परिवर्जयेत् ।
तथा त्यागोऽप्रमादश्च स चाप्यष्टगुणो मतः ॥ ५-४३-३६ (३३४१३)
अष्टौ दोषाः प्रमादस्य तान्दोषान्परिवर्जयेत् ।
इन्द्रियेभ्यश्च पञ्चभ्यो मनसश्चैव भारत ।
अतीतानागतेभ्यश्च मुक्त्युपेतः सुखी भवेत् ॥ ५-४३-३७ (३३४१४)
सत्यात्मा भव राजेन्द्र सत्ये लोकाः प्रतिष्ठिताः ।
तांस्तु सत्यमुखानाहुः सत्ये ह्यमृतमाहितम् ॥ ५-४३-३८ (३३४१५)
निवृत्तेनैव दोषेण तपो व्रतमिहाचरेत् ।
एतद्धातृकृतं वृत्तं सत्यमेव सतां व्रतम् ॥ ५-४३-३९ (३३४१६)

दोषैरेतैर्वियुक्तस्तु गुणैरेतैः समन्वितः ।
एतत्समृद्धमत्यर्थं तपो भवति केवलम् ॥ ५-४३-४० (३३४१७)
यन्मां पृच्छसि राजेन्द्र संक्षेपात्प्रब्रवीमि ते ।
एतत्पापहरं पुण्यं जन्ममृत्युजरापहम् ॥ ५-४३-४१ (३३४१८)
धृतराष्ट्र उवाच। ५-४३-४२क्ष् (३५२५)
आख्यानपञ्चमैर्वेदैर्भूयिष्ठं कथ्यते जनः ।
तथा चान्ये चतुर्वेदास्त्रिधेदाश्च तथा परे ॥ ५-४३-४२ (३३४१९)
द्विवेदाश्चैकवेदाश्चाप्यनृचश्च तथा परे ।
तेषां तु कतरः स स्याद्यमहं वेद वै द्विजम् ॥ ५-४३-४३ (३३४२०)
सनत्सुजात उवाच। ५-४३-४४क्ष् (३५२६)
एकस्य वेस्याज्ञानाद्वेदास्ते बहवः कृताः ।
सत्यस्यैकस्य राजेन्द्र सत्ये कश्चिदवस्थितः ॥ ५-४३-४४ (३३४२१)
एवं वेदमविज्ञाय प्राज्ञोऽहमिति मन्यते ।
दानमध्ययनं यज्ञो लोभादेतत्प्रवर्तते ॥ ५-४३-४५ (३३४२२)
सत्यात्प्रच्यवमानानां सङ्कल्पो वितथो भवेत् ।
ततो यज्ञः प्रतायेत सत्यस्यानवधारणात् ॥ ५-४३-४६ (३३४२३)
मनसान्यस्य भवति वाचान्यस्याथ कर्मणा ।
सङ्कल्पसिद्धः पुरुषः सङ्कल्पानधितिष्ठति ॥ ५-४३-४७ (३३४२४)
अनैभृत्येन चैतस्य दीक्षितव्रतमाचरेत् ।
नामैतद्धातुनिर्वृत्तं सत्यमेव सतां परम् ॥ ५-४३-४८ (३३४२५)
ज्ञानं वै नाम प्रत्यक्षं परोक्षं जायते तपः ।
विद्याद्बहु पठन्तं तु द्विजं वै बहुपाठिनम् ॥ ५-४३-४९ (३३४२६)
तस्मात्क्षत्रिय मा मंस्था जल्पितेनैव वै द्विजम् ।
य एव सत्यान्नापैति स ज्ञेयो ब्राह्मणस्त्वया ॥ ५-४३-५० (३३४२७)
छन्दांसि नाम क्षत्रिय तान्यथर्वा
पुरा जगौ महर्षिसङ्घ एषः
छन्दोविदस्ते य उत नाधीतवेदा
न वेदवेद्यस्य विदुर्हि तत्त्वम् ॥ ५-४३-५१ (३३४२८)
छन्दांसि नाम द्विपदां वरिष्ठ
स्वच्छन्दयोगेन भवन्ति तत्र ।
छन्दोविदस्ते न च तानधीत्य
गता न वेदस्य न वेद्यमार्याः ॥ ५-४३-५२ (३३४२९)
न वेदानां वेदिता कश्चिदस्ति
कश्चित्त्वेतान्बुद्ध्यते वापि राजन् ।
यो वेद वेदान्न स वेद वेद्यं
सत्ये स्थितो यस्तु स वेद वेद्यम् ॥ ५-४३-५३ (३३४३०)

न वेदानां वेदिता कश्चिदस्ति
वेद्येन वेदं न विदुर्न वेद्यम् ।
यो वेद वेदं स च वेद वेद्यं
यो वेद वेद्यं न स वेद सत्यम् ॥ ५-४३-५४ (३३४३१)
यो वेद वेदान्स च वेद वेद्यं
न तं विदुर्वेदविदो न वेदाः ।
तथापि वेदेन विदन्ति वेदं
ये ब्राह्मणा वेदविदो भवन्ति ॥ ५-४३-५५ (३३४३२)
धामांशभागस्य तथा हि वेदा
यथा च शाखा हि महीरुहस्य ।
संवेदने चैव यथामनन्ति
तस्मिन्हि सत्ये परमात्मनोऽर्थे ॥ ५-४३-५६ (३३४३३)
अभिजानामि ब्राह्मणं व्याख्यातारं विचक्षणम् ।
यश्छिन्नविचिकित्सः स व्याचष्टे सर्वसंशयान् ॥ ५-४३-५७ (३३४३४)
नास्य पर्येषणं गच्छेत्प्रचीनं नोत दक्षिणम् ।
नार्वाचीनं कुतस्तिर्यङ्नादिशन्तु कथञ्चन ॥ ५-४३-५८ (३३४३५)
तस्य पर्येषणं गच्छेत्प्रत्यर्थिषु कथञ्चन ।
अविचिन्वन्निमं वेदे तपः पश्यति तं प्रभुम् ॥ ५-४३-५९ (३३४३६)
तूष्णींभूत उपासीत न चेष्टेन्मनसापि च ।
उपावर्तस्व तद्ब्रह्म अन्तरात्मनि विश्रुतम् ॥ ५-४३-६० (३३४३७)
मौनान्न स मुनिर्भवति नारण्यवसनान्मुनिः ।
स्वलक्षणं तु यो वेद स मुनिः श्रेष्ठ उच्यते ॥ ५-४३-६१ (३३४३८)
सर्वार्थानां व्याकरणाद्वैयाकरण उच्यते ।
तन्मूलतो व्याकरणं व्याकरोतीति तत्तथा ॥ ५-४३-६२ (३३४३९)
प्रत्यक्षदर्शी लोकानां सर्वदर्शी भवेन्नरः ।
सत्ये वै ब्राह्मणस्तिष्ठंस्तद्विद्वान्सर्वविद्भवेत् ॥ ५-४३-६३ (३३४४०)
धर्मादिषु स्थितोऽप्येवं क्षत्रिय ब्रह्म पश्यति ।
वेदानां चानुपूर्व्येण एतद्बुद्ध्या ब्रवीमि ते ॥ ५-४३-६४ (३३४४१)
॥इति श्रीमन्महाभारते उद्योगपर्वणि सनत्सुजातपर्वणि
त्रिचत्वारिंशोऽध्यायः ॥

---

उद्योगपर्व-अध्यय०४४
॥ श्रीः ॥
५.४४. अध्यायः ४४

Mahabharata - Udyoga Parva - Chapter Topics
सनत्सुजातेन धृतराष्ट्रंप्रति सत्त्वोपदेशः ॥ १ ॥

५-४४-० (३३४४२)
धृतराष्ट्र उवाच। ५-४४-०क्ष् (३५२७)
सनत्सुजात यामिमां परां त्वं
ब्राह्मीं वाचं वदसे विश्वरूपाम् ।
परां हि कामेन सुदुर्लभां कथां
प्रब्रूहि मे वाक्यमिदं कुमार । ५-४४-१ (३३४४३)
सनत्सुजात उवाच। ५-४४-२क्ष् (३५२८)
नैतद्ब्रह्म त्वरमाणेन लभ्यं
यन्मां पृच्छन्नतिहृष्यस्यतीव ।
बुद्धौ विलीने मनसि प्रचिन्त्य
विद्या हि सा ब्रह्मचर्येण लभ्या ॥ ५-४४-२ (३३४४४)
धृतराष्ट्र उवाच। ५-४४-३क्ष् (३५२९)
अत्यन्तविद्यामिति यत्सनातनीं
ब्रवीषि त्वं ब्रह्मचर्येण सिद्धाम् ।
अनारभ्यां वसतीह कार्यकाले
कथं ब्राह्मण्यममृतत्वं लभेत ॥ ५-४४-३ (३३४४५)
सनत्सुजात उवाच। ५-४४-४क्ष् (३५३०)
अव्यक्तविद्यामभिधास्ये पराणीं
बुद्ध्या च तेषां ब्रह्मचर्येण सिद्धाम् ।
यां प्राप्यैनं मर्त्यलोकं त्यजन्ति
या वै विद्या गुरुवृद्धेषु नित्या ॥ ५-४४-४ (३३४४६)
धृतराष्ट्र उवाच। ५-४४-५क्ष् (३५३१)
ब्रह्मचर्येण या विद्या शक्या वेदितुमञ्जसा ।
तत्कथं ब्रह्मचर्यं स्यादेतद्ब्रह्मन्ब्रवीहि मे ॥ ५-४४-५ (३३४४७)
सनत्सुजात उवाच। ५-४४-६क्ष् (३५३२)
आचार्ययोनिमिह ये प्रविश्य
भूत्वा गर्भे ब्रह्मचर्यं चरन्ति ।
इहैव ते शास्त्रकारा भवन्ति
प्रहाय देहं परमं यान्ति योगम् ॥ ५-४४-६ (३३४४८)
अस्मिँल्लोके वै जयन्तीह कामा-
न्ब्राह्मीं स्थितिं ह्यनुतितिक्षमाणाः ।
त आत्मानं निर्हरन्तीह देहा-
न्मुञ्जादिषीकामिव सत्वसंस्थाः ॥ ५-४४-७ (३३४४९)

शरीरमेतौ कुरुतः पिता माता च भारत ।
आचार्यशास्ता या जातिः सा पुण्या साऽऽजराऽमम  ५-४४-८ (३३४५०)
यः प्रावृणोत्यवितथेन वर्णा-
नृतं कुर्वन्नमृतं संप्रयच्छम् ।
तं मन्येत पितरं मातरं च
तस्मै न द्रुह्येत्कतमस्य जानन् ॥ ५-४४-९ (३३४५१)
गुरुं शिष्यो नित्यमभिवादयीत
स्वाध्यायमिच्छेच्छुचिरप्रमत्तः ।
मानं न कुर्यान्नादधीत रोप-
मेप प्रथमो ब्रह्मचर्यस्य पादः ॥ ५-४४-१० (३३४५२)
शिष्यवृत्तिक्रमेणैव विद्यामाप्नोति यः शुचिः ।
ब्रह्मचर्यव्रतस्यास्य प्रथमः पाद उच्यते ॥ ५-४४-११ (३३४५३)
आचार्यस्य प्रियं कुर्यात्प्राणैरपि धनैरपि ।
कर्मणा मनसा वाचा द्वितीयः पाद उच्यते ॥ ५-४४-१२ (३३४५४)
समा गुरौ यथा वृत्तिर्गरुपत्न्यां तथा चरेत् ।
तत्पुत्रे च तथा कुर्वन्द्वितीयः पाद उच्यते ॥ ५-४४-१३ (३३४५५)
आचार्येणात्मकृतं विजानन्
ज्ञात्वा चार्थं भावितोऽस्मीत्यनेन ।
यन्मन्यते तं प्रति हृष्टबुद्धिः
स वै तृतीयो ब्रह्मचर्यस्य पादः ॥ ५-४४-१४ (३३४५६)
नाचार्यस्यानपाकृत्य प्रवासं
प्राज्ञः कुर्वीत नैतदहं करोमि ।
इतीव मन्येत न भाषयेत
स वै चतुर्थो ब्रह्मचर्यस्य पादः ॥ ५-४४-१५ (३३४५७)
कालेन पादं लभते तथार्थं
ततश्च पादं गुरुयोगतश्च ।
उत्साहयोगेन च पादमृच्छे-
च्छास्त्रेण पादं च ततोऽभियाति ॥ ५-४४-१६ (३३४५८)
धर्मादयो द्वादश यस्य रूप-
मन्यानि चाङ्गानि तथा बलं च ।
आचार्ययोगे फलतीति चाहु-
र्ब्रह्मार्थयोगेन च ब्रह्मचर्यम् ॥ ५-४४-१७ (३३४५९)
एवं प्रवृत्तो यदुपालभेत वै
धनमाचार्याय तदनुप्रयच्छेत् ।
स तां वृत्तिं बहुगुणामेवमेति
गुरोः पुत्रे भवति च वृत्तिरेषा ॥ ५-४४-१८ (३३४६०)

एवं वसन्सर्वतो वर्धतीह
बहून्पुत्रांल्लभते च प्रतिष्ठाम् ।
वर्षन्ति चास्मै प्रदिशो दिशश्च
वसत्यस्मिन्ब्रह्मचर्ये जनाश्च ॥ ५-४४-१९ (३३४६१)
एतेन ब्रह्मंचर्येण देवा देवत्वमाप्नुवन् ।
ऋषयश्च महाभागा ब्रह्मलोकं मनीषिणः ॥५-४४-२० (३३४६२)
गन्धर्वाणामनेनैव रूपमप्सरसमभूत् ।
एतेन ब्रह्मचर्येण सूर्योऽप्यह्नाय जायते ॥५-४४-२१ (३३४६३)
आकाङ्क्ष्यार्थस्य संयोगाद्रसभेदार्थिनामिव ।
एवं ह्येते समाज्ञाय तादृग्भावं गता इमे ॥५-४४-२२ (३३४६४)
य आश्रयेत्पावयेच्चापि राज-
न्सर्वं शरीरं तपसा तप्यमानः ।
एतेन वै बाल्यमभ्येति विद्वान्
मृत्युं तथा स जयत्यन्तकाले ॥ ५-४४-२३ (३३४६५)
अन्तवतः क्षत्रिय ते जयन्ति
लोकाञ्जनाः कर्मणा निर्मलेन ।
ब्रह्मैव विद्वांस्तेन चाभ्येति सर्वं
नान्यः पन्था अयनाथ विद्यते ॥ ५-४४-२४ (३३४६६)
धृतराष्ट्र उवाच।५-४४-२५क्ष् (३५३३)
आभाति शुक्लमिव लोहितमि-
वाथो कृष्णमथाञ्जनं काद्रवं वा ।
सद्ब्रह्मणः पश्यति योऽत्र विद्वा-
न्कथं रूपं तदमृतमक्षरं पदम् ॥ ५-४४-२५ (३३४६७)
सनत्सुजात उवाच।५-४४-२६क्ष् (३५३४)
आभाति शुक्लमिव लोहितमि-
वाथो कृष्णमायसमर्कवर्णम् ।
न पृथिव्यां तिष्ठति नान्तरिक्षे
नैतत्समुद्रे सलिलं बिभर्ति ॥ ५-४४-२६ (३३४६८)
न तारकासु न च विद्युदाश्रितं
न चाभ्रेषु दृश्यते रूपमस्य ।
न चापि वायौ न च देवतासु
नैतच्चन्द्रे दृश्यते नोत सूर्ये ॥ ५-४४-२७ (३३४६९)
नैवर्क्षु तन्न यजुष्षु नाप्यथर्वसु
न दृश्यते वै विमलेषु सामसु ।
रथन्तरे बार्हद्रथे वापि राज-
न्महाव्रते नैव दृश्येद्ध्रुवं तत् ॥ ५-४४-२८ (३३४७०)

अपारणीयं तमसः परस्ता-
त्तदन्तकोऽप्येति विनाशकाले ।
अणीयो रूपं क्षुरधारया समं
महच्च रूपं तद्वै पर्वतेभ्यः ॥ ५-४४-२९ (३३४७१)
सा प्रतिष्ठा तदमृतं लोकास्तद्ब्रह्म तद्यशः ।
भूतानि जज्ञिरे तस्मात्प्रलयं यान्ति तत्र हि ॥ ५-४४-३० (३३४७२)
अनामयं तन्महदुद्यतं यशो
वाचो विकारं कवयो वदन्ति ।
यस्मिञ्जगत्सर्वमिदं प्रतिष्ठितं
ये तद्विदुरमृतास्ते भवन्ति ॥ ५-४४-३१ (३३४७३)
ग तदेतदह्ना संस्थितं भाति सर्वं
तदात्मवित्पश्यति ज्ञानयोगात् ।
तस्मिञ्जगत्सर्वमिदं प्रतिष्ठितं
ये तद्विदुरमृतास्ते भवन्ति ॥' ॥ ५-४४-३२ (३३४७४)

इति श्रीमन्महाभारते उद्योगपर्वणि सनत्सुजातपर्वणि
चतुश्चत्वारिंशोऽध्यायः ॥

---

उद्योगपर्व-अध्यय०४५
॥ श्रीः ॥
५.४५. अध्यायः ४५

Mahabharata - Udyoga Parva - Chapter Topics
सनत्सुजातेन धृतराष्ट्रंप्रति तत्वोपदेशः ॥ १ ॥

Mahabharata - Udyoga Parva - Chapter Text

५-४५-० (३३४७५)
सनत्सुजात उवाच। ५-४५-०क्ष् (३५३५)
शोकः क्रोधश्च लोभश्च कामो मानः परासुता ।
ईर्ष्या मोहो विवित्सा च कृपाऽसूया जुगुप्सुता ॥ ५-४५-१ (३३४७६)
द्वादशैते महादोषा मनुष्यप्राणनाशनाः ।
एकैकमेते राजेन्द्र मनुष्यान्पर्युपासते ।
यौराविष्टो नरः पापं मूढसंज्ञो व्यवस्यति ॥ ५-४५-२ (३३४७७)
स्पृहयालुरुग्रः परुषो वा वदान्यः
क्रोधं बिभ्रन्मनसा वै विकत्थी ।
नृशंसधर्माः षडिमे जना वै

प्राप्याप्यर्थं नोत सभाजयन्ते ॥ ५-४५-३ (३३४७८)
संभोगसंविद्विषमोऽतिमानी
दत्त्वा विकत्थी कृपणो दुर्बलश्च ।
बहुप्रशंकसी वनिताद्विट् सदैव
सप्तैवोक्ताः पापशीला नृशंसाः ॥ ५-४५-४ (३३४७९)
धर्मश्च सत्यं च तपो दमश्च
अमात्सर्यं ह्रीस्तितिक्षानसूया ।
दानं श्रुतं चैव धृतिः क्षमा च
महाव्रता द्वादश ब्राह्मणस्य ॥ ५-४५-५ (३३४८०)
यो नैतेभ्यः प्रच्यवेद्द्वादशभ्यः
सर्वामपीमां पृथिवीं स शिष्यात् ।
त्रिभिर्द्वाभ्यामेकतो वार्थितो यो
नास्य स्वमस्तीति च वेदितव्यम् ॥ ५-४५-६ (३३४८१)
दमस्त्यागोऽथाप्रमाद इत्येतेष्वमृतं स्थितम् ।
एतानि ब्रह्ममुख्यानां ब्राह्मणानां मनीषिणाम् ॥ ५-४५-७ (३३४८२)
सद्वाऽसद्वा परीवादे ब्राह्मणस्य न शस्यते ।
नरकप्रतिष्ठास्ते स्युर्य एवं कुरुते जनाः ॥ ५-४५-८ (३३४८३)
मदोऽष्टादशदोषः स स्यात्पुरा योऽप्रकीर्तितः ।
लोकद्वेष्यं प्रतिकूल्यमभ्यसूया मृषावचः ॥ ५-४५-९ (३३४८४)
कामक्रोधौ पारतन्त्र्यं परिवादोऽथ पैशुनम् ।
अर्थहानिर्विवादश्च मात्सर्यं प्राणिपीडनम् ॥ ५-४५-१० (३३४८५)
ईर्ष्या मोदोऽतिवादश्च संज्ञानाशोऽभ्यसूयिता ।
तस्मात्प्राज्ञो न माद्येत सदा ह्येतद्विगर्हितम् ॥ ५-४५-११ (३३४८६)
सौहृदे वै षड्गुणा वेदितव्यः
प्रिये हृष्यन्त्यप्रिये च व्यथन्ते ।
स्यादात्मनः सुचिरं याचते यो
ददात्ययाच्यमपि देयं खलु स्यात् ।
इष्टान्पुत्रान्विभवान्स्वांश्च दारा-
नभ्यर्थितश्चार्हति शुद्धभावः ॥ ५-४५-१२ (३३४८७)
त्यक्तद्रव्यः संवसेन्नेह कामा-
द्भिङ्क्ते कर्मस्वाशिषं बाधते च ॥ ५-४५-१३ (३३४८८)
द्रव्यवान्गुणवानेवं त्यागी भवति सात्विकः ।
पञ्चभूतानि पञ्चभ्यो निवर्तयति तादृशः ॥ ५-४५-१४ (३३४८९)
एतत्समृद्धमप्यृद्धं तपो भवति केवलम् ।
सत्वात्प्रच्यवमानानां सङ्कल्पेन समाहितम् ॥ ५-४५-१५ (३३४९०)
यतो यज्ञः प्रवर्धन्ते मत्यस्यैवावरोधनात् ।

मनसान्यस्य भवति वाच्यन्यस्याथ कर्मणा ॥ ५-४५-१६ (३३४९१)
सङ्कल्पसिद्धं पुरुषमसङ्कल्पोऽधितिष्ठति ।
ब्राह्मणस्य विशेषेण किञ्चान्यदपि मे श्रृणु ॥ ५-४५-१७ (३३४९२)
अध्यापयेन्महदेतद्यशस्यं
वाचो विकराः कवयो वदन्ति ।
अस्मिन्योगे सर्वमिदं प्रतिष्ठितं
ये तद्विदुरमृतास्ते भवन्ति ॥ ५-४५-१८ (३३४९३)
न कर्मणा सुकृतेनैव राजन्
सत्यं जयेज्जुहुयाद्वा यजेद्वा ।
नैतेन वालोऽमृत्युमभ्येति राजन्
रतिं चासौ न लभत्यन्तकाले ॥ ५-४५-१९ (३३४९४)
तृष्णीमेक उपासीत चेष्टेत मनसापि न ।
तथा संस्तुतिनिन्दाभ्यां प्रीतिरोषौ विवर्जयेत् ॥ ५-४५-२० (३३४९५)
अत्रैव तिष्ठन्क्षत्रिय ब्रह्माविशति पश्यति ।
वेदेषु चानुपूर्व्येण एतद्विद्वन्ब्रवीमि ते ॥ ॥ ५-४५-२१ (३३४९६)

इति श्रीमन्महाभारते उद्योगपर्वणि सनत्सुजातपर्वणि
पञ्चचत्वारिंशोऽध्यायः ॥

---

उद्योगपर्व-अध्यय०४६
॥ श्रीः ॥
५.४६. अध्यायः ४६

Mahabharata - Udyoga Parva - Chapter Topics
सनत्सुजातेन धृतराष्ट्रंप्रति तत्वोपदेशः ॥ १ ॥

Mahabharata - Udyoga Parva - Chapter Text

५-४६-० (३३४९७)
सनत्सुजात उवाच। ५-४६-०क्ष् (३५३६)
यत्तच्छुक्रं महज्ज्योतिर्दीप्यमानं महद्यशः ।
तद्वै देवा उपासते तस्मात्सूर्यो विराजते ।
योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम् ॥ ५-४६-१ (३३४९८)
शुक्राद्ब्रह्म प्रभवति ब्रह्म शुक्रेण वर्धते ।
तच्छुकं ज्योतिषां मध्येऽतप्तं तपति तापनम् ।
योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम् ॥ ५-४५-२ (३३४९९)
आपोऽथाद्भ्यः सलिलस्य मध्ये

उभौ देवौ शिश्रियातेऽन्तरिक्षे ।
अतन्द्रितः सवितुर्विवस्वा-
नुभौ बिभर्ति पृथिवीं दिवं च ॥
योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम् ॥ ५-४६-३ (३३५००)
उभौ च देवौ पृथिवीं दिवं च
दिशः शुक्रो भुवनं बिभर्ति ।
तस्माद्दिशः सरितश्च स्रवन्ति
तस्मात्समुद्रा विहिता महान्ताः ॥
योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम् ॥ ५-४६-४ (३३५०१)
चक्रे रथस्य तिष्ठन्तोऽध्रुवस्याव्ययकर्मणः ।
केतुमन्तं वहन्त्यश्वास्तं दिव्यमजरं दिवि ।
योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम् ॥ ५-४६-५ (३३५०२)
न सादृश्ये तिष्ठति रूपमस्य
न चक्षुषा पश्यति कश्चिदेनम् ।
मनीषयाथो मनसा हृदा च
य एनं विदुरमृतास्ते भवन्ति ॥
योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम् ॥ ५-४६-६ (३३५०३)
द्वादशपूगां सरितं पिबन्तो देवरक्षिताम् ।
मध्वीक्षन्तश्च ते तस्याः संचरन्तीह घोराम् ।
योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम् ॥ ५-४६-७ (३३५०४)
तदर्धमासं पिबति संचितं भ्रमरो मधु ।
ईशानः सर्वभूतेषु हविर्भूतमकल्पयत् ।
योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम् ॥ ५-४६-८ (३३५०५)
हिरण्यपर्णमश्वत्थमभिपद्य ह्यपक्षकाः ।
ते तत्र पक्षिणो भूत्वा प्रपतन्ति यथादिशम् ।
योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम् ॥ ५-४६-९ (३३५०६)
पूर्णात्पूर्णान्युद्धरन्ति पूर्णात्पूर्णानि चक्रिरे ।
हरन्ति पूर्णात्पूर्णानि पूर्णमेवावशिष्यते ।
योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम् ॥ ५-४६-१० (३३५०७)
तस्माद्वै वायुरायातस्तस्मिंश्च प्रयतः सदा ।
तस्मादग्निश्च सोमश्च तस्मिंश्च प्राण आततः ॥ ५-४६-११ (३३५०८)
सर्वमेव ततो विद्यात्तत्तद्वक्तुं न शक्नुमः ।
योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम् ॥ ५-४६-१२ (३३५०९)
अपानं गिरपि प्राणः प्राणं गिरति चन्द्रमाः ।
आदित्यो गिरते चन्द्रमादित्यं गिरते परः ।
योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम् ॥ ५-४६-१३ (३३५१०)

एकं पादं नोत्क्षिपति सलिलाद्धंस उच्चरन् ।
तं चेत्सन्ततमूर्ध्वाय न मृत्युर्नामृतं भवेत् ।
योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम् ॥ ५-४६-१४ (३३५११)
अङ्गुष्ठमात्रः पुरुषोऽन्तरात्मा
लिङ्गस्य योगेन स याति नित्यम् ।
तमीशमीड्यमनुकल्पमाद्यं
पश्यन्ति मूढा न विराजमानम् ॥
योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम् ॥ ५-४६-१५ (३३५१२)
असाधना वापि ससाधना वा
समानमेतद्दृश्यते मानुषेषु ।
समानमेतदमृतस्येतरस्य
मुक्तास्तत्र मध्व उत्सं समापुः ॥
योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम् ॥ ५-४६-१६ (३३५१३)
उभौ लोकौ विद्यया व्याप्य याति
तदा हुतं चाहुतमग्निहोत्रम् ।
मा ते ब्राह्मी लघुतामादधीत
प्रज्ञानं स्यान्नाम धीरा लभन्ते ॥
योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम् ॥ ५-४६-१७ (३३५१४)
एवंरूपो महात्मा स पावकं पुरुषो गिरन् ।
यो वै तं पुरुषं वेद तस्येहार्थो न रिष्यते ।
योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम् ॥ ५-४६-१८ (३३५१५)
यः सहस्रं सहस्राणां पक्षान्संतत्य संपतेत् ।
मध्यमे मध्य आगच्छेदपिचेत्स्यान्मनोजवः ।
योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम् ॥ ५-४६-१९ (३३५१६)
न दर्शने तिष्ठति रूपमस्य
पश्यन्ति चैनं सुविशुद्धसत्वाः ।
हितो मनीषी मनसा न तप्यते
ये प्रव्रजेयुरमृतास्ते भवन्ति ॥
योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम् ॥ ५-४६-२० (३३५१७)
गूहन्ति सर्पा इव गह्वराणि
स्वशिक्षया स्वेन वृत्तेन मर्त्याः ।
तेषु प्रमुह्यन्ति जना विमूढा
यथाध्वानं मोहयन्ते भयाय ॥
योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम् ॥ ५-४६-२१ (३३५१८)
नाहं सदाऽसत्कृतः स्यां न मृत्यु-
र्न चामृत्युरमृतं मे कुतः स्यात् ।

सत्यानृते सत्यसमानबन्धे
सतश्च योनिरतसतश्चैक एव ॥
योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम् ॥ ५-४६-२२ (३३५१९)
न साधुना नोत असाधुना वा-
ऽसमानमेतद्दृश्यते मानुषेषु ।
समानमेतदमृतस्य विद्या-
देवं युक्तो मधु तद्वै परीप्सेत् ॥
योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम् ॥ ५-४६-२३ (३३५२०)
नास्यातिवादा हृदयं तापयन्ति
नानधीतं नाहुतमग्निहोत्रम् ।
मनो ब्राह्मी लघुतामादधीत
प्रज्ञां चास्मै नाम धीरा लभन्ते ॥
योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम् ॥ ५-४६-२४ (३३५२१)
एवं यः सर्वभूतेषु आत्मानमनुपश्यति ।
अन्यत्रान्यत्र युक्तेषु किं स शोचेत्ततः परम् । ५-४६-२५ (३३५२२)
यथोदपाने महति सर्वतः संप्लुतोदके ।
एवं सर्वेषु वेदेषु आत्मानमनुजानतः ॥ ५-४६-२६ (३३५२३)
अङ्गुष्ठमात्रः पुरुषो महात्मा
न दृश्यतेऽसौ हृदि संनिविष्टः ।
अजश्चरो दिवारात्रमतन्द्रितश्च
स तं मत्वा कविरास्ते प्रसन्नः ॥ ५-४६-२७ (३३५२४)
अहमेव स्मृतो माता पिता पुत्रोऽस्म्यहं पुनः ।
आत्माहमपि सर्वस्य यच्च नास्ति यदस्ति च ॥ ५-४६-२८ (३३५२५)
पितामहोऽस्मि स्थविरः पिता पुत्रश्च भारत ।
ममैव यूयमात्मस्था न मे यूयं न वो ह्यहम् ॥ ५-४६-२९ (३३५२६)
आत्मैव स्थानं मम जन्म चात्मा
ओतप्रोतोऽहमजरप्रतिष्ठः ।
अजश्चरो दिवारात्रमतन्द्रितोऽहं
मां विज्ञाय कविरास्ते प्रसन्नः ॥ ५-४६-३० (३३५२७)
अणोरणीयान्सुमनाः सर्वभूतेषु जाग्रति ।
पितरं सर्वभूतेषु पुष्करे निहितं विदुः ॥ ॥ ५-४६-३१ (३३५२८)

इति श्रीमन्महाभारते उद्योगपर्वणि सनत्सुदजातपर्वणि
षट्चत्वारिंशोऽध्यायः ॥ ॥ समाप्तमिदं सनत्सुजातपर्व ॥

उद्योगपर्व-अध्यय०४७
॥ श्रीः ॥
५.४७. अध्यायः ४७

Mahabharata - Udyoga Parva - Chapter Topics
पाण्डववचनशुश्रूषया धृतराष्ट्रादीनां सभाप्रवेशः ॥ १ ॥
सञ्जयेन धृतराष्ट्राय पाण्डवान्प्रति तत्सन्देशकथनम् ॥ २ ॥
श्रीकृष्णवाक्यकथनं चोदितेन सञ्जयेन स्वस्य
कृष्णार्जुनान्तःपुरप्रवेशकथनपूर्वकं तत्कथनम् ॥ ३ ॥

Mahabharata - Udyoga Parva - Chapter Text

५-४७-० (३३५२९)
वैशंपायन उवाच। ५-४७-०क्ष् (३५३७)
एवं सनत्सुजातेन विदुरेण च धीमता ।
सार्धं कथयतो राज्ञः सा व्यतीयय सर्वरी ॥ ५-४७-१ (३३५३०)
तस्यां रजन्यां व्युष्टायां राजानः सर्व एव ते ।
सभामाविविशुर्हृष्टाःक सूतस्योपदिदृक्षया ॥ ५-४७-२ (३३५३१)
शुश्रूषमाणाः पार्थानां वाचो धर्मार्थसंहिताः ।
धृतराष्ट्रमुखाः सर्वे ययू राजन्सभां शुभाम् ॥ ५-४७-३ (३३५३२)
सुधावदातां विस्तीर्णां कनकाजिरभूषिताम् ।
चन्द्रप्रभां सुरुचिरां सिक्तां चिन्दनवारिणा ॥ ५-४७-४ (३३५३३)
रुचिरैरासनैः स्तीर्णां काञ्चनैर्दारवैरपि ।
अश्मसारमयैर्दान्तैःक स्वास्तीर्णैः सोत्तरच्छदैः ॥ ५-४७-५ (३३५३४)
भीष्मो द्रोणः कृपः शल्यः कृतवर्मा जयद्रथः ।
अश्वत्थामा विकर्णश्च सोमदत्तश्च बाह्लिकः । ५-४७-६ (३३५३५)
विदुरश्च महाप्राज्ञो युयुत्सुश्च महारथः ।
सर्वे च सहिताः शूराः पार्थिवा भरतर्षभ ।
धृतराष्ट्रं पुरस्कृत्य विविशुस्तां सभां शुभाम् ॥ ५-४७-७ (३३५३६)
दुःशासनश्चित्रसेनः शकुनिश्चापि सौबलः ।
दुर्मुखो दुःसहः कर्ण उलूकोऽथ विविंशतिः ॥ ५-४७-८ (३३५३७)
कुरुराजं पुरस्कृत्य दुर्योधनममर्षणम् ।
विविशुस्तां सभां राजन्सुराः शक्रसदो यथा ॥ ५-४७-९ (३३५३८)
आविशद्भिस्तदा राजञ्शूरैः परिघबाहुभिः ।
शुशुभे सा सभा रजन्सिंहैरिव गिरेर्गुहा ॥ ५-४७-१० (३३५३९)
ते प्रविश्य महेष्वासाः सभां सर्वे महौजसः ।

आसनानि विचित्राणि भेजिरे सूर्यवर्चसः ॥ ५-४७-११ (३३५४०)
आसनस्थेषु सर्वेषु तेषु राजसु भारत ।
द्वाःस्थो निवेदयामास सूतपुत्रमुपस्थितम् ॥ ५-४७-१२ (३३५४१)
अयं सरथ आयाति योऽयासीत्पाण्डवान्प्रति ।
दूतो नस्तूर्णमायाति सैन्धवैः साधुवाहिभिः ॥ ५-४७-१३ (३३५४२)
।।पेयाय स तु क्षिप्रं रथात्प्रस्कन्द्य कुण्डली ।
प्रविवेश सभां पूर्णां महीपालैर्महात्मभिः ॥ ५-४७-१४ (३३५४३)
सञ्जय उवाच। ५-४७-१५क्ष् (३५३८)
प्राप्तोऽस्मि पाण्डवान्गत्वा तं विजानीत कौरवाः ।
यथावयः कुरून्सर्वान्प्रतिनन्दन्ति पाण्डवाः ॥ ५-४७-१५ (३३५४४)
अभिवादयन्ति वृद्धांश्च वयस्यांश्च वयस्यवत् ।
पुनश्चाभ्यवदन्पार्थाः प्रतिपूज्य यथावयः ॥ ५-४७-१६ (३३५४५)
यथाहं धृतराष्ट्रेण शिष्टः पूर्वमितो गतः ।
अब्रवं पाण्डवान्गत्वा नात्र किञ्चन हापितम् ॥ ५-४७-१७ (३३५४६)
ग धृतराष्ट्र उवाच। ५-४७-१८क्ष् (३५३९)
पृच्छामि त्वां सञ्जय राजमध्ये
यदब्रवीद्वाक्यमदीनसत्वः ।
जनार्दनस्तात युधां प्रणेता
दुरात्मनां जीवितच्छिन्महात्मा ॥ ५-४७-१८ (३३५४७)
सञ्जय उवाच। ५-४७-१९क्ष् (३५४०)
आगुल्फेभ्योऽभिसंवीतः प्रयतोऽहं कृताञ्जलिः ।
शुद्धान्तं प्राविशं राजन्नाख्यातो नरसिंहयोः ॥ ५-४७-१९ (३३५४८)
न चाभिमन्युर्न यमौ तं देशमभिजग्मतुः ।
यत्र कृष्णौ च कृष्णा च सत्यभामा च भामिनी ॥ ५-४७-२० (३३५४९)
उभौ मध्वासवक्षीबौ वरचन्दनरूषितौ ।
स्त्रग्विणौ वरवस्त्राङ्गौ वराभरणभूषितौ ॥ ५-४७-२१ (३३५५०)
नैकरत्नविचित्रं च काञ्चनं च वरासनम् ।
नानास्तरणसंस्तीर्णं यत्रासाते नरर्षभौ ॥ ५-४७-२२ (३३५५१)
सत्याङ्कमुपधानं तु कृत्वा शेते जनार्दनः ।
अर्जुनाङ्कगतौ पादौ केशवस्योपलक्षये ।
अर्जुनस्य च कृष्णायाः शुभायाश्चाङ्कगावुभौ ॥ ५-४७-२३ (३३५५२)
काञ्चनं पादपीठं तु पार्थो वै प्रादिशन्मुदा ।
दासीभ्यामाहृतं मह्यं स्पृष्ट्वा भूमावुपाविशम् ॥ ५-४७-२४ (३३५५३)
ऊर्ध्वरेखाङ्कितौ पादौ पार्थस्य शुभलक्षणौ ।
पादपीठादपहृतौ धारयेतां वरस्त्रियौ ॥ ५-४७-२५ (३३५५४)
न नूनं कल्मषं किञ्चिन्मम कर्मसु विद्यते ।

स्त्रीरत्नाभ्यां समेतौ यन्मिथो मामभ्यभाषताम् ॥ ५-४७-२६ (३३५५५)
विस्मयो मे महानासीदास्त्रं मे बहुसङ्गतम् ।
हृष्टानि चैव रोमाणि दृष्ट्वा तौ सहितावुभौ ॥ ५-४७-२७ (३३५५६)
श्यामौ बृहन्तौ तरुणौ नागाविव समुच्छ्रितौ ।
एकशय्यागतौ दृष्ट्वा भयं मे महदाविशत् ॥ ५-४७-२८ (३३५५७)
ततोऽभ्यचिन्तयं तत्र दृष्ट्वा तौ पुरुषर्षभौ ।
सङ्कल्पो धर्मराजस्य नानवाप्योऽस्ति कश्चन ।
निदेशगाविमौ यस्य नरनारायणावुभौ ॥ ५-४७-२९ (३३५५८)
सत्कृतश्चान्नपानाभ्यामाच्छन्नो लब्धसत्क्रियः ।
अञ्जलिं मूर्ध्नि सन्धाय सन्देशं चाभ्यचोदयम् ॥ ५-४७-३० (३३५५९)
धनुर्धरोचितेनाथ पाणिनैकं सलक्षणम् ।
पादमानाययत्पार्थः केशवस्य यशस्विनः ॥ ५-४७-३१ (३३५६०)
इन्द्रकेतुरिवोत्थाय दिव्याभरणभूषितः ।
इन्द्रवीर्योपमः कृष्णः संविष्टो माऽभ्यभाषत ॥ ५-४७-३२ (३३५६१)
स वाचं वदतां श्रेष्ठ आददे वचनक्षमाम् ।
दीपनीं धार्तराष्ट्राणां मृदुपूर्वां सुदारुणाम् ॥ ५-४७-३३ (३३५६२)
बहिश्चरस्य प्राणस्य प्रियस्य प्रियकारिणः ।
मतिमान्मतिमास्थाय केशवः सन्दधे वचः ॥ ५-४७-३४ (३३५६३)
वचनं वचनज्ञस्य शिक्षाक्षरसमन्वितम् ।
मनःप्रह्लादनं श्रेष्ठं पश्चाद्धृदयतापनम् ॥ ५-४७-३५ (३३५६४)
श्रीभगवानुवाच। ५-४७-३६क्ष् (३५४१)
सञ्जयैतद्वचो ब्रूयाः प्राप्य क्षत्रियसंसदम् ।
श्रृण्वतः कुरुवृद्धस्य आचार्यस्य च धीमतः ॥ ५-४७-३६ (३३५६५)
अर्थांस्त्यजत पार्थेषु सुखमाप्नुत कामजम् ।
प्रियं प्रियेभ्यश्चरत राजा हि त्वरते जये ॥ ५-४७-३७ (३३५६६)
यजध्वं विविधैर्यज्ञैर्दक्षिणाश्च प्रयच्छत ।
पुत्रैर्दारैश्च मोदध्वमागतं वो महद्भयम् ॥ ५-४७-३८ (३३५६७)
ऋणं प्रवृद्धमिव मे हृदयान्नापसर्पति ।
गोविन्देति यदाक्रन्दत्कृष्णा मां दूरवासिनम् ॥ ५-४७-३९ (३३५६८)
तेजोमयं दुराधर्पं बिभ्रता गाण्डिवं धनुः ।
मद्द्वितीयेन पार्थेन वैरं वः प्रत्युपस्थितम् ॥ ५-४७-४० (३३५६९)
कृष्णस्यैतद्वचः श्रुत्वा महन्मे भयमाविशत् ।
तव पुत्रस्य लोभं च वर्धमानं प्रपश्यतः ॥ ५-४७-४१ (३३५७०)
सोमेन्द्रसदृशौ वीरौ तौ मन्दो नावबुध्यते ।
भीष्मद्रोणाश्रयाच्चैव कर्णस्य च विकत्थनात् '॥ ॥ ५-४७-४२ (३३५७१)

इति श्रीमन्महाभारते उद्योगपर्वणि यानसन्धिपर्वणि
सप्तचत्वारिंशोऽध्यायः ॥

---

उद्योगपर्व-अध्यय०४८
॥ श्रीः ॥
५.४८. अध्यायः ४८

Mahabharata - Udyoga Parva - Chapter Topics
सञ्जयेन धृतराष्ट्रंप्रति
श्रीकृष्णमहिमादिप्रतिपादकानामर्जुनवचसां विस्तरेण कथनम्
॥ १ ॥

Mahabharata - Udyoga Parva - Chapter Text

५-४८-० (३३५७२)
धृतराष्ट्र उवाच। ५-४८-०क्ष् (३५४२)
पृच्छामि त्वां सञ्जय राजमध्ये
किमब्रवीद्वाक्यमदीनसत्वः ।
धनञ्जयस्तात युधां प्रेणता
दुरात्मनां जीवितच्छिन्महात्मा ॥ ५-४८-१ (३३५७३)
सञ्जय उवाच। ५-४८-२क्ष् (३५४३)
दुर्योधनो वाचमिमां श्रृणोतु
यदब्रवीदर्जुनो योत्स्यमानः ।
युधिष्ठिरस्यानुमते महात्मा
धनञ्जयः श्रृण्वतः केशवस्य ॥ ५-४८-२ (३३५७४)
अवित्रस्तो बाहुवीर्यं विजान-
न्नुपह्वरे वासुदेवस्य धीरः ।
अवोचन्मां योत्स्यमानः किरीटी
मध्ये ब्रूया धार्तराष्ट्रं कुरूणाम् ॥ ५-४८-३ (३३५७५)
संश्रृण्वतस्तस्य दुर्भाषिणो वै
दुरात्मनः सूतपुत्रस्य सूत ।
यो योद्धुमाशंसति मां सदैव
मन्दप्रज्ञः कालपक्वोऽतिमूढः ॥ ५-४८-४ (३३५७६)
ये वै राजानः पाण्डवायोधनाय
समानीताः श्रृण्वतां चापि तेषाम् ।
यथा समग्रं वचनं मयोक्तं
सहामात्यं श्रावयेथा नृपं तत ॥ ५-४८-५ (३३५७७)

यथा नूनं देवराजस्य देवाः
शुश्रूषन्ते वज्रहस्तस्य सर्वे ।
तथाऽश्रृण्वन्पाण्डवाः सृञ्जयाश्च
किरीटिना वाचमुक्तां समर्थाम् ॥ ५-४८-६ (३३५७८)
इत्यब्रवीदर्जुनो योत्स्यमानो
गाण्डीवधन्वा लोहितपद्मनेत्रः ।
न चेद्राज्यं मुञ्चति धार्तराष्ट्रो
यधिष्ठिरस्याजमीढस्य राज्ञः ॥ ५-४८-७ (३३५७९)
अस्ति नूनं कर्म कृतं पुरस्ता-
दनिर्विष्टं पापकं धार्तराष्ट्रैः ।
येषां युद्धं भीमसेनार्जुनाभ्यां
तथाश्विभ्यां वासुदेवेन चैव ॥ ५-४८-८ (३३५८०)
शैनयेन ध्रुवमात्तायुधेन
धृष्टद्युम्नेनाथ शिखण्डिना च ।
युधिष्ठिरेणेन्द्रकल्पेन चैव
योऽपध्यानान्निर्दहेद्गां दिवं च ॥ ५-४८-९ (३३५८१)
तैश्चेद्योद्धुं मन्यते धार्तराष्ट्रो
निर्वृत्तोऽर्थः सकलः पाण्डवानाम् ।
मा तत्कार्षीः पाण्डवस्यार्थहेतो-
रुपैहि युद्धं यदि मन्यसे त्वम् ॥ ५-४८-१० (३३५८२)
यां तां वने दुःखशय्यामवात्सी-
त्प्रव्राजितः पाण्डवो धर्मचारी ।
आप्नोतु तां दुःखतरामनर्था-
मन्त्यां शय्यां धार्तराष्ट्रः पराशुः ॥ ५-४८-११ (३३५८३)
ह्रिया ज्ञानेन तपसा दमेन
शौर्येणाथो धर्मगुप्त्या धनेन ।
अन्यायवृत्तिः कुरु पाण्डवे या-
नध्यातिष्ठद्धार्तराष्ट्रो दुरात्मा ॥ ५-४८-१२ (३३५८४)
मायोपधं प्रतिधानार्जवाभ्यां
तपोदमाभ्यां धर्मगुप्त्या बलेन ।
सत्यं ब्रुवन्प्रतिपन्नो नृपो न-
स्तितिक्षमाणः क्लिश्यमानोऽतिवेलम् ॥ ५-४८-१३ (३३५८५)
यदा ज्येष्ठः पाण्डवः संशितात्मा
क्रोधं यत्तं वर्षपूगान्सुघोरम् ।
अवस्त्रष्टा कुरुपूद्वृत्तचेता-
स्तदा युद्धं धार्तराष्ट्रोऽन्वतप्स्यत् ॥ ५-४८-१४ (३३५८६)

कृष्णवर्त्मेव ज्वलितः समिद्धो
यथा दहेत्कक्षमग्निर्निदाघे ।
एवं दग्धा धार्तराष्ट्रस्य सेनां
युधिष्ठिरः क्रोधदीप्तोन्ववेक्ष्य ॥ ५-४८-१५ (३३५८७)
यदा द्रष्टा भीमसेनं रथस्थं
गदाहस्तं क्रोधविषं वमन्तम् ।
अमर्षणं पाण्डवं भीमवेगं
तदा युद्धं धार्तराष्ट्रोऽन्वतप्स्यत् ॥ ५-४८-१६ (३३५८८)
सेनागगं दंशितं भीमसेनं
सुलक्षणं वीरहणं परेषाम् ।
घ्नन्तं चमूमन्तकसन्निकाशं
तदा स्मर्ता वचनस्यातिमानी ॥ ५-४८-१७ (३३५८९)
यदा द्रष्टा भीमसेनेन नागा-
न्निपातितान्गिरिकूटप्रकाशान् ।
किम्भैरिवासृग्वमतो भिन्नकुम्भां-
स्तदा युद्धं धार्तराष्ट्रोऽन्वतप्स्यत् ॥ ५-४८-१८ (३३५९०)
महासिंहो गा इव संप्रविश्य
गदापाणिर्धार्तराष्ट्रानुपेत्य ।
यदा भीमो भीमरूपो निहन्ता
तदा युद्धं धार्तराष्ट्रोऽन्वतप्स्यत् ॥ ५-४८-१९ (३३५९१)
महाभये वीतभयः कृतास्त्रः
समागमे शत्रुबलावमर्दी ।
सकृद्रथेनाप्रतिमान्रथौघा-
न्पदातिसङ्घान्गदयाभिनिघ्नन् ॥ ५-४८-२० (३३५९२)
सैन्याननेकांस्तरसा विगृह्ण-
न्यदा छेत्ता धार्तराष्ट्रस्य सैन्यम् ।
छिन्दन्वनं परशुनेव शूर-
स्तदा युद्धं धार्तराष्ट्रोऽन्वतप्स्यत् ॥ ५-४८-२१ (३३५९३)
तृणप्रायं ज्वलनेनेव दग्धं
ग्रामं यथा धार्तराष्ट्रान्समीक्ष्य ।
पक्वं सस्यं वैद्युतेनेव दग्धं
परासिक्तं विपुलं स्वं बलौघम् ॥ ५-४८-२२ (३३५९४)
हतप्रवीरं विमुखं भयार्तं
पराङ्मुखं प्रायशोऽनष्टयोधम् ।
शस्त्रार्चिषा भिमसेनेन दग्धं
तदा युद्धं धार्तराष्ट्रोऽन्वतप्स्सत् ॥ ५-४८-२३ (३३५९५)

उपासङ्गानाचरेद्दक्षिणेन
वराङ्गानां नकुलश्चित्रयोधी ।
यदा रथाग्र्यो रथिनः प्रचेता
तदा युद्धं धार्तराष्ट्रोऽन्वतप्स्यत् ॥ ५-४८-२४ (३३५९६)
सुखोचितो दुःखशय्यां वनेषु
दीर्घं कालं नकुलो यामशेत ।
आशीविषः क्रुद्ध इवोद्वमन्विषं
तदा युद्धं धार्तराष्ट्रोऽन्वतप्स्यत् ॥ ५-४८-२५ (३३५९७)
त्यक्तात्मानः पार्थिवायोधनाय
समादिष्टा धर्मराजेन सूत ।
रथैः शुभ्रैः सैन्यमभिद्रवन्तो
दृष्ट्वा पश्चात्तप्स्यते धार्तराष्ट्रः ॥ ५-४८-२६ (३३५९८)
शिशून्कृतास्त्रानशिशुप्रकाशान्
यदा द्रष्टा कौरवः पञ्च शूरान् ।
त्यक्त्वा प्राणान्कौरवानाद्रवन्त-
स्तदा युद्धं धार्तराष्ट्रोऽन्वतप्स्यत् ॥ ५-४८-२७ (३३५९९)
यथा शक्रो दानवनाशनार्थं
सुवर्णतारं रथमुत्तमाश्वैः ।
दान्तैर्युक्तं सहदेवोऽधिरूढः
शिरांसि राज्ञां क्षेप्स्यते मार्गणौघैः ॥ ५-४८-२८ (३३६००)
महाभये संप्रवृत्ते रथस्थं
विवर्तमानं समरे कृतास्त्रम् ।
सर्वा दिशः सपतन्तं समीक्ष्य
तदा युद्धं धार्तराष्ट्रोऽन्वतप्स्यत् ॥ ५-४८-२९ (३३६०१)
ह्रीनिषेवो निपुणः सत्यवादी
महाबलः सर्वधर्मोपपन्नः ।
गान्धारिमार्च्छंस्तुमुले क्षिप्रकारी
क्षेप्ता जनान्सहदेवस्तरस्वी ॥ ५-४८-३० (३३६०२)
यदा द्रष्टा द्रौपदेयान्महेषून्
शूरान्कृतास्त्रान्रथयुद्धकोविदान् ।
आशीविषान्घोरविषानिवायत-
स्तदा युद्धं धार्तराष्ट्रोऽन्वतप्स्यत् ॥ ५-४८-३१ (३३६०३)
यदाभिमन्युः परवीरघाती
शरैः परान्मेघ इवाभिवर्षन् ।
विगाहिता कृष्णसमः कृतास्त्र-
स्तदा युद्धं धार्तराष्ट्रोऽन्वतप्स्यत् ॥ ५-४८-३२ (३३६०४)

यदा द्रष्टा बालमबालवीर्यं
द्विषच्चमूं मृत्युमिवोत्पतन्तम् ।
सौभद्रमिन्द्रप्रतिमं कृतास्त्रं
तदा युद्धं धार्तराष्ट्रोऽन्वतप्स्यत् ॥ ५-४८-३३ (३३६०५)
प्रभद्रकाः शीघ्रतरा युवानो
विशारदाः सिंहसमानवीर्याः ।
यदा क्षेप्तारो धार्तराष्ट्रान्ससैन्यां-
स्तदा युद्धं धार्तराष्ट्रोऽन्वतप्स्यत् ॥ ५-४८-३४ (३३६०६)
वृद्धौ विराटद्रुपदौ महारथौ
पथक्कमूभ्यामभिवर्तमानौ ।
यदा द्रष्टारौ धार्तराष्ट्रान्ससैन्यां-
स्तदा युद्धं धार्तराष्ट्रोऽन्वतप्स्यत् ॥ ५-४८-३५ (३३६०७)
यदा कृतास्त्रो द्रुपदः प्रचिन्वन्
शिरांसि यूनां समरे रथस्थः ।
क्रूद्धः शरैश्छेत्स्यति चापमुक्तै-
स्तदा युद्धं धार्तराष्ट्रोऽन्वतप्स्यत् ॥ ५-४८-३६ (३३६०८)
यदा विराटः परवीरघाती
रथान्तरे शत्रुचमूं प्रवेष्टा ।
मात्स्यैः सार्धमनृशंसरूपै-
स्तदा युद्धं धार्तराष्ट्रोऽन्वतप्स्यत् ॥ ५-४८-३७ (३३६०९)
ज्येष्ठं मात्स्यमनृसंसार्यरूपं
विराटपुत्रं रथिनं पुरस्तात् ।
यदा द्रष्टा दंशितं पाण्डवार्थे
तदा युद्धं धार्तराष्ट्रोऽन्वतप्स्यत् ॥ ५-४८-३८ (३३६१०)
रणे हते कौरवाणां प्रवीरे
शिखण्डिना शन्तनोर्वै तनूजे ।
न जातु नः शत्रवो धारयेयु-
रशंशयं सत्यमेतद्ब्रवीति ॥ ५-४८-३९ (३३६११)
यदा शिखण्डी रथिनः प्रचिन्वन्
भीष्मं रथेनाभियाता वरूथी ।
दिव्यैर्हयैरवमृद्नन् रथौघां-
स्तदा युद्धं धार्तराष्ट्रोऽन्वतप्स्यत् ॥ ५-४८-४० (३३६१२)
यदा द्रष्टा सृञ्जयानामनीके
धृष्टद्नुम्नं प्रमुखे रोचमानम् ।
अस्त्रं यस्मै गुह्यमुवाच धीमा-
न्द्रोणस्तदा तप्स्यति धार्तराष्ट्रः ॥ ५-४८-४१ (३३६१३)

यदा स सेनापतिरप्रमेयः
परामृद्नन्निषुभिर्धार्तराष्ट्रान् ।
द्रोणं रणे शत्रुसहोभियाता
तदा युद्धं धार्ताराष्ट्रोऽन्वतप्स्यत् ॥ ५-४८-४२ (३३६१४)
ह्रीमान्मनीपी बलवान्मनस्वी
स लक्ष्मीवान्सोमकानां प्रबर्हः ।
न जातु तं शत्रवोऽन्ये सहेर-
न्योपां स स्यादग्रणीर्वृष्णिसिंहः ॥ ५-४८-४३ (३३६१५)
इदं च ब्रूया मा वृणीष्वेति लोके
युद्धेऽद्वितीयं सचिवं रथस्थम् ।
शिनेर्नप्तारं प्रवृणीम सात्यकिं
महाबलं वीतभयं कृतास्त्रम् ॥ ५-४८-४४ (३३६१६)
महोरस्को दीर्घबाहुः प्रमाथी
युद्धेऽद्वितीयः परमास्त्रवेदी ।
शिनेर्नप्ता तालमात्रायधोऽयं
महारथो वीतभयः कृतास्त्रः ॥ ५-४८-४५ (३३६१७)
यदा शिनीनामधिपो मयोक्तः
शरैः परान्मेघ इव प्रवर्षन् ।
प्रच्छादयिष्यत्यरिहा योधमुख्यां-
स्तदा युद्धं धार्तराष्ट्रोऽन्वतप्स्यत् ॥ ५-४८-४६ (३३६१८)
यदा धृतिं कुरुते योत्स्यमानः
स दीर्घबाहुर्दृढधन्वा महात्मा ।
सिंहस्येव गन्धमाघ्राय गावः
संचेष्टन्ते शत्रवोऽस्माद्रणाग्रे ॥ ५-४८-४७ (३३६१९)
स दीर्घबाहुर्दृढधन्वा महात्मा
भिन्द्याद्गिरीन्संहरेत्सर्वलोकान् ।
अस्त्रे कृती निपुणः क्षिप्रहस्तो
दिवि स्थितः सूर्य इवाभिभाति ॥ ५-४८-४८ (३३६२०)
चित्रः सूक्ष्मः सुकृतो यादवस्य
अस्त्रे योगो वृष्णिसिंहस्य भूयान् ।
यथाविधं योगमाहुः प्रशस्तं
सर्वैर्गुणैः सात्यकिस्तैरुपेतः ॥ ५-४८-४९ (३३६२१)
हिरण्मयं श्वेतहयैश्चतुर्भि-
र्यदा युक्तं स्यन्दनं माधवस्य ।
द्रष्टा युद्धे सात्यकेर्धार्तराष्ट्र-
स्तदा तप्स्यत्यकृतात्मा स मन्दः ॥ ५-४८-५० (३३६२२)

यदा रथं हेममणिप्रकाशं
श्वेताश्वयुक्तं वानरकेतुमुग्रम् ।
दृष्ट्वा ममाप्यास्थितं केशवेन
तदा तप्स्यत्यकृतात्मा स मन्दः ॥ ५-४८-५१ (३३६२३)
यदा मौर्व्यास्तलनिष्पेपमुग्रं
महाशब्दं वज्रनिष्पेपतुल्यम् ।
विद्यूयमानस्य महारणे मया
स गाण्डिवस्य श्रोष्यति मन्दबुद्धिः ॥ ५-४८-५२ (३३६२४)
तदा मूढो धृतराष्ट्रस्य पुत्र-
स्तप्ता युद्धे दुर्मतिर्दुःसहायः ।
दृष्ट्वा सैन्यं बाणवर्षान्धकारे
प्रभज्यन्तं गोकुलवद्रणाग्रे ॥ ५-४८-५३ (३३६२५)
बलाहकादुच्चरतः सुभीमा-
न्विद्युत्स्फुलिङ्गानिव घोररूपान् ।
सहस्रघ्नान्द्विषतां सङ्गरेषु
अस्थिच्छिदो मर्मभिदः सुपुङ्खान् ॥ ५-४८-५४ (३३६२६)
यदा द्रष्टा ज्यामुखाद्बाणसङ्घान्
गाण्डीवमुक्तानापततः शिताग्रान् ।
हयान्गजान्वर्मिणश्चाददानां-
स्तदा युद्धं धार्तराष्ट्रोऽन्वतप्स्यत् ॥ ५-४८-५५ (३३६२७)
यदा मन्दः परबाणान्विमुक्ता-
न्ममेषुभिर्ह्रियमाणान्प्रतीपम् ।
तिर्यग्विध्य च्छिद्यमानान्पृषत्कै-
स्तदा युद्धं धार्तराष्ट्रोऽन्वतप्स्यत् ॥ ५-४८-५६ (३३६२८)
यदा विपाठा मद्भुजविप्रमुक्ता
द्विजाः फलानीव महीरुहाग्रात् ।
प्रचेतार उत्तमाङ्गानि यूनां
तदा युद्धं धार्तराष्ट्रोऽन्वतप्स्यत् ॥ ५-४८-५७ (३३६२९)
यदा द्रष्टा पततः स्यन्दनेभ्यो
महागजेभ्योऽश्वगतान्सुयोधनान् ।
शरैर्हतान्पातितांश्चैव रङ्गे
तदा युद्धं धार्तराष्ट्रोऽन्वतप्स्यत् ॥ ५-४८-५८ (३३६३०)
असंप्राप्तानस्त्रपथं परस्य
यदा द्रष्टा नश्यतो धार्तराष्ट्रान् ।
अकुर्वतः कर्म युद्धे समन्ता-
त्तदा युद्धं धार्तराष्ट्रोऽन्वतप्स्यत् ॥ ५-४८-५९ (३३६३१)

पदातिसङ्घान्रथसङ्घान्समन्ता-
द्व्यात्ताननः काल इवाततेषुः ।
प्रणोत्स्यामि ज्वलितैर्बाणवर्षैः
शत्रूंस्तदा तप्स्यति मन्दबुद्धिः ॥ ५-४८-६० (३३६३२)
सर्वा दिशः संपतता रथेन
रजोध्वस्तं गाण्डिवेन प्रकृत्तम् ।
यदा द्रष्टा स्वबलं संप्रमूढं
तदा पश्चात्तप्स्यति मन्दबुद्धिः ॥ ५-४८-६१ (३३६३३)
कान्दिग्भूतं छिन्नगात्रं विसंज्ञं
दुर्योधनो द्रक्ष्यति सर्वसैन्यम् ।
हताश्ववीराग्र्यनरेन्द्रनागं
पिपासितं श्रान्तपत्रं भयार्तम् ॥ ५-४८-६२ (३३६३४)
आर्तस्वरं हन्यमानं हतं च
विकीर्णकेशास्थिकपालसङ्घम् ।
प्रजापतेः कर्म यथार्थनिष्ठितं
तदा दृष्ट्वा तप्स्यति मन्दबुद्धिः ॥ ५-४८-६३ (३३६३५)
यदा रथे गाण्डिवं वासुदेवं
दिव्यं शङ्खं पाञ्चजन्यं हयांश्च ।
तूणावक्षय्यौ देवदत्तं च मां च
दृष्ट्वा युद्धे धार्तराष्ट्रोऽन्वतप्स्यत् ॥ ५-४८-६४ (३३६३६)
उद्वर्तयन्दस्युसङ्घान्समेतान्
प्रवर्तयन्युगमन्यद्युगान्ते ।
यदा धक्ष्याम्यग्निवत्कौरवेयां-
स्तदा तप्ता धृतराष्ट्रः सपुत्रः ॥ ५-४८-६५ (३३६३७)
सभ्राता वै सहसैन्यः सभृत्यो
भ्रष्टैश्वर्यः क्रोधवशोऽल्पचेताः ।
दर्पस्यान्ते निहतो वेपमानः
पश्चान्मन्दस्तप्स्यति धार्तराष्ट्रः ॥ ५-४८-६६ (३३६३८)
पूर्वाह्णे मां कृतजप्यं कदाचि-
द्विप्रः प्रोवाचोदकान्ते मनोज्ञम् ।
कर्तव्यं ते दुष्करं कर्म पार्थ
योद्धव्यं कते शत्रुभिः सव्यसाचिन् ॥ ५-४८-६७ (३३६३९)
इन्द्रो वा ते हरिवान्वज्रहस्तः
पुरस्ताद्यातु समरेऽरीन्विनिघ्नन् ।
सुग्रीवयुक्तेन रथेन वा ते
पश्चात्कृष्णो रक्षतु वासुदेवः ॥ ५-४८-६८ (३३६४०)

वज्रे चाहं वज्रहस्तान्महेन्द्रा-
दस्मिन्युद्धे वासुदेवं सहायम् ।
स मे लब्धो दस्युवधाय कृष्णो
मन्ये चेतद्विहितं दैवतेर्मे ॥ ५-४८-६९ (३३६४१)
अयुद्ध्यमानो मनसापि यस्य
जयं कृष्णः पुरुषस्याभिनन्देत् ।
एवं सर्वान्स व्यतीयादमित्रान्
सेन्द्रान्देवान्मानुषे नास्ति चिन्ता ॥ ५-४८-७० (३३६४२)
स बाहुभ्यां सागरमुत्तितीर्षे-
न्महोदधिं सलिलस्याप्रमेयम् ।
तेजस्विनं कृष्णमत्यन्तशूरं
युद्धेन यो वासुदेवं जिगीषेत् ॥ ५-४८-७१ (३३६४३)
गिरिं य इच्छेत्तु तलेन भेत्तुं
शिलोच्चयं श्वेतमतिप्रमाणम् ।
तस्यैव पाणिः सनखो विशीर्ये-
न्न चापि किञ्चित्स गिरेस्तु कुर्यात् ॥ ५-४८-७२ (३३६४४)
अग्निं समिद्धं शमयेद्भुजाभ्यां
चन्द्रं च सूर्यं च निवारयेत ।
हरेद्देवानाममृतं प्रसह्य
युद्धेन यो वासुदेवं जिगीषेत् ॥ ५-४८-७३ (३३६४५)
यो रुक्मिणीमेकरथेन भोज-
नुत्साद्य राज्ञः समरे प्रसह्य ।
उवाह भार्यां यशसा ज्वलन्तीं
यस्यां जज्ञे रौक्मिणेयो महात्मा ॥ ५-४८-७४ (३३६४६)
अयं गान्धारांस्तरसा संप्रमथ्य
जित्वा पुत्रान्नग्नजितः समग्रान्
बद्धं मुमोच विनदन्तं प्रसह्य
सुदर्शनं वै देवतानां ललामम् ॥ ५-४८-७५ (३३६४७)
अयं कवाटे निजघान पाण्ड्यं
तथा कलिङ्गान्दन्तवक्रं ममर्द ।
अनेन दग्धा वर्षपूगान्विनाथा
वाराणसी नगरी संबभूव ॥ ५-४८-७६ (३३६४८)
अयं स्म युद्धे मन्यतेऽन्यैरजेयं
तमेकलव्यं नाम निषादराजम् ।
वेगेनैव शैलमभिहत्य जम्भः
शेते स कृष्णेन हतः परासुः ॥ ५-४८-७७ (३३६४९)

तथोग्रसेनस्य सुतं सुदुष्टं
वृष्ण्यन्धकानां मध्यगतं सभास्थम् ।
अपातयद्बलदेवद्वितीयो
हत्वा ददौ चोग्रसेनाय राज्यम् ॥ ५-४८-७८ (३३६५०)
अयं सौभं योधयामास स्वस्थं
विभीषणं मायया साल्वराजम् ।
सौभद्वारि प्रत्यगृह्णाच्छतघ्नीं
दोर्भ्यां क एनं विषहेत मर्त्यः ॥ ५-४८-७९ (३३६५१)
प्राग्ज्योतिषं नाम बभूव दुर्गं
पुरं घोरमसुराणामसह्यम् ।
महाबलो नरकस्तत्र भौमो
जहारादित्या मणिकुण्डले शुभे ॥ ५-४८-८० (३३६५२)
न तं देवाः सह शक्रेण शेकुः
समागता युधि मृत्योरभीताः ।
दृष्ट्वा च तं विक्रमं केशवस्य
बलं तथैवास्त्रमवारणीयम् ॥ ५-४८-८१ (३३६५३)
जानन्तोऽस्य प्रकृतिं केशवस्य
न्ययोजयन्दस्युवधाय कृष्णम् ।
स तत्कर्म प्रतिशुश्राव दुष्कर-
मैश्वर्यवान्सिद्धिषु वासुदेवः ॥ ५-४८-८२ (३३६५४)
निर्मोचने षट्सहस्राणि हत्वा
संच्छिद्य पाशान्सहसा क्षुरान्तान् ।
मुरं हत्वा विनिहत्यौघरक्षो
निर्मोचनं चापि जगाम वीरः ॥ ५-४८-८३ (३३६५५)
तत्रैव तेनास्य बभूव युद्धं
महाबलेनातिबलस्य विष्णोः ।
शेते स कृष्णेन हतः परासु-
र्वातेनेव मथितः कर्णिकारः ॥ ५-४८-८४ (३३६५६)
आहृत्य कृष्णो मणिकुण्डले ते
हत्वा च भौमं नरकं मुर च ।
श्रिया वृतो यशसा चैव विद्वा-
न्प्रत्याजगामाप्रतिमप्रभावः ॥ ५-४८-८५ (३३६५७)
अस्मै वराण्यददंस्तत्र देवा
दृष्ट्वा भीमं कर्म कृतं रणे तत् ।
श्रमश्च ते युध्यमानस्य न स्या-
दाकाशे चाप्सु च ते क्रमः स्यात् ॥ ५-४८-८६ (३३६५८)

शस्त्राणि गात्रे न च ते क्रमेर-
न्नित्येव कृष्णश्च ततः कृतार्थः ।
एवं रूपे वासुदेवेऽप्रमेये
महाबले गुणसंपत्सदैव ॥ ५-४८-८७ (३३६५९)
तमसह्यं विष्णुमनन्तवीर्य-
माशंसते धार्तराष्ट्रो विजेतुम् ।
सदा ह्येनं तर्कयते दुरात्मा
तच्चाप्ययं सहतेऽस्मान्समीक्ष्य ॥ ५-४८-८८ (३३६६०)
पर्यागतं मम कृष्णस्य चैव
यो मन्यते कलहं संप्रसह्य ।
शक्यं हर्तुं पाण्डवानां ममत्वं
तद्वेदिता संयुगं तत्र गत्वा ॥ ५-४८-८९ (३३६६१)
नमस्कृत्वा शान्तनवाय राज्ञे
द्रोणायाथो सहपुत्राय चैव ।
शारद्वतायाप्रतिद्वन्द्विने च
योत्स्याम्यहं राज्यमभीप्समानः ॥ ५-४८-९० (३३६६२)
धर्मेणाप्तं निधनं तस्य मन्ये
यो योत्स्यते पाण्डवैर्धर्मचारी ।
मिथ्या ग्लहे निर्जिता वै नृशंसैः
संवत्सरान्वै द्वादश राजपुत्राः ॥ ५-४८-९१ (३३६६३)
वासः कृच्छ्रो विहितश्चाप्यरण्ये
दीर्घं कालं चैकमज्ञातवर्षम् ।
ते हि कस्माज्जीवतां पाण्डवानां
नन्दिष्यन्ते धार्तराष्ट्राः पदस्थाः ॥ ५-४८-९२ (३३६६४)
ते चेदस्मान्युध्यमानाञ्जयेयु-
र्देवैर्महेन्द्रप्रमुखैः सहायैः ।
धर्मादधर्मश्चरितो गरीयां-
स्ततो ध्रुवं नास्ति कृतं च साधु ॥ ५-४८-९३ (३३६६५)
न चेदिदं पौरुषं कर्मबद्धं
न चेदस्मान्मन्यतेऽसौ विशिष्टान् ।
आशंसेऽहं वासुदेवद्वितीयो
दुर्योधनं सानुबन्धं निहन्तुम् ॥ ५-४८-९४ (३३६६६)
न चेदिदं कर्म नरेन्द्र वन्ध्यं
न चेद्भवेत्सुकृतं निष्फलं वा ।
इदं च तच्चाभिसमीक्ष्य नूनं
पराजयो धार्तराष्ट्रस्य साधुः ॥ ५-४८-९५ (३३६६७)

प्रत्यक्षं वः कुरवो यद्ब्रवीमि
युद्ध्यमाना धार्तराष्ट्रा न सन्ति ।
अन्यत्र युद्धात्कुरवो यदि स्यु-
र्न युद्धे वै शेष इहास्ति कश्चित् ॥ ५-४८-९६ (३३६६८)
हत्वा त्वहं धार्तराष्ट्रान्सकर्णा-
न्राज्यं कुरूणामवजेता समग्रम् ।
यद्वः कार्यं तत्कुरुध्वं यथास्व-
मिष्टान्दरानात्मभोगान्भजध्वम् ॥ ५-४८-९७ (३३६६९)
अप्येवं नो ब्राह्मणाः सन्ति वृद्धा
बहुश्रुताः शीलवन्तः कुलीनाः ।
सांवत्सरा ज्योतिषि चाभियुक्ता
नक्षत्रयोगेषु च निश्चयज्ञाः ॥ ५-४८-९८ (३३६७०)
उच्चावचं दैवयुक्तं रहस्यं
दिव्याः प्रश्ना मृगचक्रा मुहूर्ताः ।
क्षयं महान्तं कुरुसृञ्जयानां
निवेदयन्ते पाण्डवानां जयं च ॥ ५-४८-९९ (३३६७१)
यथा हि नो मन्यतेऽजातशत्रुः
संसिद्धार्थो द्विपतां निग्रहाय ।
जनार्दनश्चाप्यपरोक्षविद्यो
न संशयं पश्यति वृष्णिसिंहः ॥ ५-४८-१०० (३३६७२)
अहं तथैनं खलु भाविरूपं
पश्यामि बुद्धया स्वयमप्रमत्तः ।
दृष्टिश्च मे न व्यथते पुराणी
संयुध्यमाना धार्तराष्ट्रा न सन्ति ॥ ५-४८-१०१ (३३६७३)
अनालब्धं जृम्भति गाण्डिवं धनु-
रनाहता कम्पति मे धनुर्ज्या ।
बाणाश्च मे तूणमुखाद्विसृत्य
मुहुर्मुहुर्गन्तुमुशन्ति चैव ॥ ५-४८-१०२ (३३६७४)
खङ्गः कोशान्निःसरति प्रसन्नो
हित्वेव जीर्णासुरगस्त्वचं स्वाम् ।
ध्वजे वाचो रौद्ररूपा भवन्ति
कदा रथो योक्ष्यते ते किरीटिन् ॥ ५-४८-१०३ (३३६७५)
गोमायुसङ्घाश्च नदन्ति रात्रौ
रक्षांस्यथो निष्पतन्त्यन्तरिक्षात् ।
मृगाः श्रृगालाः शितिकण्ठाश्च काका
गृध्रा बकाश्चैव तरक्षवश्च ॥ ५-४८-१०४ (३३६७६)

सुवर्णपत्राश्च पतन्ति पञ्चा-
दृष्ट्वा रथं श्वेतहयप्रयुक्तम् ।
अहं ह्येकः पार्थिवान्सर्वयोधान्
शरान्वर्षन्मृत्युलोकं नयेयम् ॥ ५-४८-१०५ (३३६७७)
समादेदानः पृथगस्त्रमार्गा-
न्यथाप्रिरिद्धो गहनं निदाघे ।
स्थूणाकर्णं पाशुपतं महास्त्रं
ब्राह्मं चास्त्रं यच्च शक्रोऽप्यदान्मे ॥ ५-४८-१०६ (३३६७८)
वधे धृतो वेगवतः प्रमुञ्च-
न्नाहं प्रजाः किञ्चिदिहावशिष्ये ।
शान्तिं लप्स्ये परमो ह्येप भावः
स्थिरो मम ब्रूहि गावल्गणे तान् ॥ ५-४८-१०७ (३३६७९)
ये वैजय्याः समरे सूत लब्ध्वा
देवानपीन्द्रग्रमुखान्समेतात् ।
तैर्मन्मते कलहं संप्रसह्य
स धार्तराष्ट्रः पश्यत मोहमस्य ॥ ५-४८-१०८ (३३६८०)
वृद्धो भीष्मः शान्तनवः कृपश्च
द्रोणः सपुत्रो विदुरश्च धीमान् ।
एते सर्वे यद्वदन्ते तदस्तु
आयुष्मन्तः कुरवः सन्तु सर्वे ॥ ॥ ५-४८-१०९ (३३६८१)

इति श्रीमन्महाभारते उद्योगपर्वणि यानसन्धिपर्वणि
अष्टचत्वारिंशोऽध्यायः ॥

Mahabharata - Udyoga Parva - Chapter Footnotes

५-४८-८ कर्म पापम् । अनिर्विष्टं अनुपभुक्तम्। अश्विभ्यां अश्विपुत्राभ्याम् ॥
५-४८-९ अपध्यानात अपकारचिन्तनमात्रात् । गां पृथ्वीम् ॥
५-४८-१२ त्वं एतावत्कुर्वित्याह ह्रियेति । यान्
लोकान् अन्यायवृत्तिर्धार्तराष्ट्रोऽध्यतिष्ठत् तान्
ह्रीप्रभृतिनिर्गुणैरुपलक्षिते पाण्डवे अनुरक्तान् कुरु ॥
५-४८-१३ मायया कपटेन उपधीयन्ते उपस्थाप्यन्ते इति
मायोपधश्चलवादः तम् । प्रतिपन्नः प्राप्तः प्रणिधानादिभिरुपेतः
सत्यं ब्रुवंश्च नः नृपः अतिवेलं क्लिश्यमानोपि तितिक्षमाण एवास्ते
इति शेषः ॥
५-४८-१४ क्रोध अवस्त्रष्टा उत्स्रक्ष्यति । अन्वतप्स्यत्
शोचिष्यति। आर्षोलकारव्यत्ययः ॥

५-४८-१५ कृष्णवर्त्मा दाहेन कृष्णीकृतभूभाग इति प्राञ्चः
। दग्धा धक्ष्यति ॥
५-४८-२२ तृणप्रायं तृणगृहमयं ग्रामम् । परासिक्तं दूरे निरस्तम् ॥
५-४८-२४ वराङ्गानां शिरसाम् । उपासङ्गान् उच्चयान् । दक्षिणेन
कुशलेन अनायासेनेति यावत्। आचरेत् कुर्यात्। रथिनः योधान्। प्रचेता
कूटीकरिष्यति ॥
५-४८-२५ दुःखशय्यां अशेतेत्युत्तरं तां यदा स्मरिष्यतीति शेषः ॥
५-४८-२८ सुवर्णस्य तारो दीर्घतन्तुः तम्
। अतिवेगादलातचक्रवत्सुवर्णरेखातुल्यमित्यर्थ- ॥
५-४८-३१ आयतः आगच्छतः ॥
५-४८-३४ क्षेप्तारः क्षेप्स्यन्ति ॥
५-४८-३९ धारयेयुः जीवेयुः ॥
५-४८-४० वरूथी रथगुप्तिमान् ॥
५-४८-४३ स वृष्णिसिंहः कृष्णाः येषामग्रणीः स्यात् तेभ्योऽन्ये
तं न सहेरन् ॥
५-४८-४४ राज्यं च मा वृणीष्व मा प्रार्थयस्व इति ब्रूयाः
। दुर्योधनं प्रतीत्यर्थात्। यतः वयं युद्धेऽद्वितयं सहायं सत्यकिं
प्रवृणीम वृतवन्त- ॥
५-४८-४९ वृष्णिसिंहस्य कृष्णस्य यथाविधं यादृक्प्रकारं
योगमाहुः तैः सर्वैर्गुणैः सात्यकिरुपेतः ॥
५-४८-५५ आददानान् ग्रसमानान् ॥
५-४८-५७ प्रचेतारः राशीकरिष्यन्ति ॥
५-४८-५९ अस्त्रपथं असंप्राप्तान् । अस्त्रं दृष्ट्वैव नश्यत इत्यर्थः
५-४८-६० प्रणोत्स्यामि दूरीकरिष्यामि ॥
५-४८-६२ कान्दिग्भूतं भयेन पलायितम् । श्रान्तपत्रं श्रान्तवाहनम् ॥
५-४८-६३ यथा वाजपेये प्रजापतिदैवत्याः सप्तदश पशवो विशस्यन्ते
तद्वद्बहूनामिहापि विशसनं कृतम् ॥
५-४८-६४ देवदत्तं अर्जुनस्य शङ्खम् ॥
५-४८-६७ उदूकान्ते संध्यावन्दनाचमनान्ते ॥
५-४८-७१ सागरं सगरैर्वर्धितम् । सलिलस्य महोदधिं जलसमुद्रम् ॥
५-४८-७५ सुदर्शनं नाम राजानम् । ललामं ललामभूतः कृष्णः ॥
५-४८-७६ कवाटे नगरभेदे ॥
५-४८-७७ अयं सुयोधनः । यथा जम्भो दैत्यः शैलं वेगेन अभिहत्य
हतः शेते तद्वत् ॥
५-४८-८० भौमो भूमिपुत्रः ॥
५-४८-८३ निर्मिचने नगरे । क्षुरान्तान् तीक्ष्णधारान् लोहमयानित्यर्थः ॥

५-४८-९३ साधु कृतं सत्कर्म नास्ति ।निष्पलत्वात् वृथैव धर्म इत्यर्थः ॥
५-४८-९४ कर्मबद्धं न मन्यते चेदित्योकृष्य योज्यम् ॥
५-४८-९५ इदं राज्यस्याप्रदानं इदानींतनम् ।तच्च राज्यात् निःसारणं तदार्नीतनं अभिसमीक्ष्य आलोच्य।पापवशात्पराजय एव तस्येत्यर्थः ॥
५-४८-९९ मृगचक्रा मृगसमूहाः ॥
५-४८-१०८ विजयः कर्म येषां ते वैजय्याः ।देवानपि लब्ध्वा विजयवन्त एवेत्यर्थः ॥

---

उद्योगपर्व-अध्यय०४९
॥ श्रीः ॥
५.४९. अध्यायः ४९

Mahabharata - Udyoga Parva - Chapter Topics
भीष्मेण दुर्योधनंप्रति कृष्णार्जुनयोः नरनारायणतादात्म्यकथनपूर्वकं तद्विरोधे कुरूणां विनाशकथनम् ॥ १ ॥
तथा मर्मोद्धाटनपूर्वकं कर्णगर्हणम् ॥ २ ॥
धृतराष्ट्रेण भीष्मद्रोणवचनानादरणे सर्वकुरूणां स्वजीवितनैराश्याधिगमः ॥ ३ ॥

Mahabharata - Udyoga Parva - Chapter Text

५-४९-० (३३६८२)
वैशंपायन उवाच।५-४९-०क्ष् (३५४४)
समवेतेषु सर्वेषु तेषु राजसु भारत ।
दुर्योधनमिदं वाक्यं भीष्मः शान्तनवोऽब्रवीत् ॥ ५-४९-१ (३३६८३)
बृहस्पतिश्चोशना च ब्रह्माणं पर्युपस्थितौ ।
मरुतश्च सहेन्द्रेण वसवश्चाग्निना सह ॥ ५-४९-२ (३३६८४)
आदित्याश्चैव साध्याश्च ये च सप्तर्षयो दिवि ।
विश्वावसुश्च गन्धर्वः शुभाश्चाप्सरसां गणाः ॥ ५-४९-३ (३३६८५)
नमस्कृत्योपजग्मुस्ते लोकवृद्धं पितामहम् ।
परिवार्य च विश्वेशं पर्यासत दिवौकसः ॥ ५-४९-४ (३३६८६)
तेषां मनश्च तेजश्चाप्याददानाविवौजसा ।
पूर्वदेवौ व्यतिक्रान्तौ नरनारायणावृषी ॥ ५-४९-५ (३३६८७)
बृहस्पतिस्तु पप्रच्छ ब्रह्माणं काविमाविति ।

भवन्तं नोपतिष्ठेते तौ नः शंस पितामह ॥ ५-४९-६ (३३६८८)
ब्रह्मोवाच। ५-४९-७क्ष् (३५४५)
यावेतौ पृथिवीं द्यां च भासयन्तौ तपस्विनौ ।
ज्वलन्तौ रोचमानौ च व्याप्यातीतौ महाबलौ ॥ ५-४९-७ (३३६८९)
नरनारायणावेतौ लोकाल्लोकं समास्थितौ ।
ऊर्जितौ स्वेन तपसा महासत्वपराक्रमौ ॥ ५-४९-८ (३३६९०)
एतौ हि कर्मणा लोकं नन्दयामासतुर्ध्रुवम् ।
द्विधाभूतौ महाप्राज्ञौ विद्धि ब्रह्मन्परन्तपौ ।
असुराणां विनाशाय देवगन्धर्वपूजितौ ॥ ५-४९-९ (३३६९१)
वैशंपायन उवाच। ५-४९-१०क्ष् (३५४६)
जगाम शक्रस्तच्छ्रुत्वा यत्र तौ तेपतुस्तपः ।
सार्धं देवगणैः सर्वैर्बृहस्पतिपुरोगमैः ॥ ५-४९-१० (३३६९२)
तदा देवासुरे युद्धे भये जाते दिवौकसाम् ।
अयाचत महात्मानौ नरनारायणौ वरम् ॥ ५-४९-११ (३३६९३)
तावब्रूतां वृणीष्वेति तदा भरतसत्तम ।
अथैतावब्रवीच्छक्रः साह्यं नः क्रियतामिति ॥ ५-४९-१२ (३३६९४)
ततस्तौ शक्रमब्रूतां करिष्यावो यदिच्छसि ।
ताभ्यां च सहितः शक्रो विजिग्ये दैत्यदानवान् ॥ ५-४९-१३ (३३६९५)
नर इन्द्रस्य संग्रामे हत्वा शत्रून्परन्तपः ।
पौलोमान्कालखञ्जांश्च सहस्राणि शतानि च ॥ ५-४९-१४ (३३६९६)
एष भ्रान्ते रथे तिष्ठन्भल्लेनापाहरच्छिरः ।
जम्भस्य ग्रसमानस्य तदा ह्यर्जुन आहवे ॥ ५-४९-१५ (३३६९७)
एष पारे समुद्रस्य हिरण्यपुरमारुजत् ।
हत्वा षष्टिं सहस्राणि निवातकवचान्रणे ॥ ५-४९-१६ (३३६९८)
एष देवान्सहेन्द्रेण जित्वा परपुरञ्जयः ।
अतर्पयन्महाबाहुरर्जुनो जातवेदसम् ॥ ५-४९-१७ (३३६९९)
नारायणस्तथैवात्र भूयसोऽन्याञ्जघान ह ।
एवमेतौ महावीर्यौ तौ पश्यत समागतौ ॥ ५-४९-१८ (३३७००)
वासुदेवार्जुनौ वीरौ समवेतौ महारथौ ।
नरनारायणौ देवौ पूर्वदेवाविति श्रुतिः ॥ ५-४९-१९ (३३७०१)
अजेयौ मानुषे लोके सेन्द्रैरपि सुरासुरैः ।
एष नारायणः कृष्णः फाल्गुनश्च नरः स्मृतः ।
नारायणो नरश्चैव सत्त्वमेकं द्विधा कृतम् ॥ ५-४९-२० (३३७०२)
एतौ हि कर्मणा लोकानश्नुवातेऽक्षयान्ध्रुवान् ।
तत्रतत्रैव जायेते युद्धकाले पुनःपुनः ॥ ५-४९-२१ (३३७०३)
तस्मात्कर्मैव कर्तव्यमिति होवाच नारदः ।

एतद्धि सर्वमाचष्ट वृष्णिचक्रस्य वेदवित् ॥ ५-४९-२२ (३३७०४)
शङ्खचक्रगदाहस्तं यदा द्रक्ष्यसि केशवम् ।
पर्याददानं चास्त्राणि भीमधन्वानमर्जुनम् ॥ ५-४९-२३ (३३७०५)
सनातनौ महात्मानौ कृष्णावेकरथे स्थितौ ।
दुर्योधन तदा तात स्मर्तासि वचनं मम ॥ ५-४९-२४ (३३७०६)
नोचेदयमभावः स्यात्कुरूणां प्रत्युपस्थितः ।
अर्थाच्च तात धर्माच्च तव बुद्धिरुपप्लुता ॥ ५-४९-२५ (३३७०७)
न चेद्ग्रहीष्यसे वाक्यं श्रोतामि सुबहून्हतान् ।
तवैव हि मतं सर्वे कुरवः पर्युपासते ॥ ५-४९-२६ (३३७०८)
त्रयाणामेव च मतं तत्त्वमेकोऽनुमन्यसे ।
रामेण चैव शप्तस्य कर्णस्य भरतर्षभ ॥ ५-४९-२७ (३३७०९)
दुर्जातेः सुतपुत्रस्य शकुनेः सौबलस्य च ।
तथा क्षुद्रस्य पापस्य भ्रातुर्दुःशासनस्य च ॥ ५-४९-२८ (३३७१०)
कर्ण उवाच। ५-४९-२९क्ष् (३५४७)
नैवमायुष्मता वाच्यं यन्मामात्थ पितामह ।
क्षत्रधर्मे स्थितो ह्यस्मि स्वधर्मादनपेयिवान् ॥ ५-४९-२९ (३३७११)
किञ्चान्यन्मयि दुर्वृत्तं येन मां परिगर्हसे ।
न हि मे वृजिनं किञ्चिद्धार्तराष्ट्रा विदुः क्वचित् ॥ ५-४९-३० (३३७१२)
नाचरं वृजिनं किञ्चिद्धार्तराष्ट्रस्य नित्यशः ।
अहं हि पाण्डवान्सर्वान्हनिष्यामि रणे स्थितान् ॥ ५-४९-३१ (३३७१३)
प्राग्विरुद्धैः शमं सद्भिः कथं वा क्रियते पुनः ।
राज्ञो हि धृतराष्ट्रस्य सर्वं कार्यं प्रियं मया ।
तथा दुर्योधनस्यापि स हि राज्ये समाहितः ॥ ५-४९-३२ (३३७१४)
वैशंपायन उवाच। ५-४९-३३क्ष् (३५४८)
कर्णस्य तु वचः श्रुत्वा भीष्मः शान्तनवः पुनः ।
धृतराष्ट्रं महाराजमाभाष्येदं वचोऽब्रवीत् ॥ ५-४९-३३ (३३७१५)
यदयं कत्थते नित्यं हन्ताहं पाण्डवानिति ।
नायं कलापि संपूर्णा पाण्डवानां महात्मनाम् ॥ ५-४९-३४ (३३७१६)
अनयो योयमागन्ता पुत्राणां ते दुरात्मनाम् ।
तदस्य कर्म जानीहि सूतपुत्रस्य दुर्मतेः ॥ ५-४९-३५ (३३७१७)
एतमाश्रित्य पुत्रस्ते मन्दबुद्धिः सुयोधनः ।
अवामन्यत तान्वीरान्देवपुत्रानरिन्दमान् ॥ ५-४९-३६ (३३७१८)
किञ्चाप्येतेन तत्कर्म कृतपूर्वं सुदुष्करम् ।
तैर्यथा पाण्डवैः सर्वैरेकैकेन कृतं पुरा ॥ ५-४९-३७ (३३७१९)
दृष्ट्वा विराटनगरे भ्रातरं निहतं प्रियम् ।
धनञ्जयेन विक्रम्य किमनेन तदा कृतम् ॥ ५-४९-३८ (३३७२०)

ग सर्वे ह्यस्त्रविदः शूराः सर्वे प्राप्ता महद्यशः ।
अपि सर्वामरैश्वर्यं त्यजेयुर्न पुनर्जयम् ॥' ५-४९-३९ (३३७२१)
सहितान्हि कुरून्सर्वानभियातो धनञ्जयः ।
प्रमथ्य चाच्छिनद्वासः किमयं प्रोषितस्तदा ॥ ५-४९-४० (३३७२२)
गन्धर्वैर्घोषयात्रायां ह्रियते यत्सुतस्तव ।
क्व तदा सूतपुत्रोऽभूद्य इदानीं वृषायते ॥ ५-४९-४१ (३३७२३)
ननु तत्रापि भीमेन पार्थेन च महात्मना ।
यमाभ्यामेव संगम्य गन्धर्वास्ते पराजिताः ॥ ५-४९-४२ (३३७२४)
एतान्यस्य मृषोक्तानि बहूनि भरतर्षभ ।
विकत्थनस्य भद्रं ते सदा धर्मार्थलोपिनः ॥ ५-४९-४३ (३३७२५)
वैशंपायन उवाच। ५-४९-४४क्ष् (३५४९)
भीष्मस्य तु वचः श्रुत्वा भारद्वाजो महामताः ।
धृतराष्ट्रमुवाचेदं राजमध्येऽभिपूजयन् ॥ ५-४९-४४ (३३७२६)
यदाह भरतश्रेष्ठो भीष्मस्तत्क्रियतां नृप ।
न काममवलिप्तानां वचनं कर्तुमर्हसि ॥ ५-४९-४५ (३३७२७)
पुरा युद्धात्साधु मन्ये पाण्डवैः सह सङ्गतम् ।
यद्वाक्यमर्जुनेनोक्तं सञ्जयेन निवेदितम् ॥ ५-४९-४६ (३३७२८)
सर्वं तदभिजानामि करिष्यति च पाण्डवः ।
न ह्यस्य त्रिषु लोकेषु सदृशोऽस्ति धनुर्धरः ॥ ५-४९-४७ (३३७२९)
वैशंपायन उवाच। ५-४९-४८क्ष् (३५५०)
अनादृत्य तु तद्वाक्यमर्थवद्द्रोणभीष्मयोः ।
ततः स सञ्जयं राजा पर्यपृच्छत पाण्डवान् ॥ ५-४९-४८ (३३७३०)
तदैव कुरवः सर्वे निराशा जीवितेऽभवन् ।
भीष्मद्रोणौ यदा राजा न सम्यगनुभाषते ॥ ॥ ५-४९-४९ (३३७३१)

इति श्रीमन्महाभारते उद्योगपर्वणि यानसन्धिपर्वणि
एकोनपञ्चाशोऽध्यायः ॥

Mahabharata - Udyoga Parva - Chapter Footnotes

५-४९-१६ आरुजत् पीडितवान् ॥
५-४९-४१ वृषायते कर्णो भवति ॥

---

उद्योगपर्व-अध्यय०५०
॥ श्रीः ॥
५.५०. अध्यायः ५०

Mahabharata - Udyoga Parva - Chapter Topics

धृतराष्ट्रेण पाण्डवानां किमुपजीवनेन रणोद्योग इति पृष्टस्य सञ्जयस्य पाण्डवप्रभावानुस्मरणेन मूर्छा ॥ १ ॥
लब्धसंज्ञेन सञ्जयेन पाण्डवानां कृष्णानुगृहीतस्वसामर्थ्येन राज्ञां साहाय्येन च समरोद्यम इति कथनम् ॥ २ ॥

Mahabharata - Udyoga Parva - Chapter Text

५-५०-० (३३७३२)
धृतराष्ट्र उवाच। ५-५०-०क्ष् (३५५१)
किमसौ पाण्डवो राजा धर्मपुत्रोऽभ्यभाषत ।
श्रुत्वेह बहुलाः सेनाः प्रीत्यर्थं नः समागताः ॥ ५-५०-१ (३३७३३)
किमसौ चेष्टते सूत योत्स्यमानो युधिष्ठिरः ।
के वास्य भ्रातृपुत्राणां पश्यन्त्याज्ञेप्सवो सुखम् ॥ ५-५०-२ (३३७३४)
के स्विदेनं वारयन्ति युद्धाच्छाम्येति वा पुनः ।
निकृत्या कोपितं मन्दैर्धर्मज्ञं धर्मचारिणम् ॥ ५-५०-३ (३३७३५)
सञ्जय उवाच। ५-५०-४क्ष् (३५५२)
राज्ञो मुखमुदीक्षन्ते पाञ्चालाः पाण्डवैः सह ।
युधिष्ठिरस्य भद्रं ते स सर्वाननुशास्ति च ॥ ५-५०-४ (३३७३६)
पृथग्भूताः पाण्डवानां पाञ्चालानां रथव्रजाः ।
आयान्तमभिनन्दन्ति कुन्तीपुत्रं युधिष्ठिरम् ॥ ५-५०-५ (३३७३७)
नभः सूर्यमिवोद्यन्तं कौन्तेयं दीप्ततेजसम् ।
पाञ्चालाः प्रतिनन्दन्ति तेजोराशिमिवोदितम् ॥ ५-५०-६ (३३७३८)
आगोपालाविपालाश्च नन्दमाना युधिष्ठिरम् ।
पाञ्चालाः केकया मत्स्याः प्रतिनन्दति पाण्डवम् ॥ ५-५०-७ (३३७३९)
ब्राह्मण्यो राजपुत्र्यश्च विशां दुहितरश्च याः ।
क्रीडन्त्योभिसमायान्ति पार्थं सन्नद्धमीक्षितुम् ॥ ५-५०-८ (३३७४०)
धृतराष्ट्र उवाच। ५-५०-९क्ष् (३५५३)
सञ्जयाचक्ष्व येनास्मान्पाडवा अभ्ययुञ्जत ।
धृष्टद्युम्नस्य सैन्येन सोमकानां बलेन च ॥ ५-५०-९ (३३७४१)
वैशंपायन उवाच। ५-५०-१०क्ष् (३५५४)
गवल्गणिस्तु तत्पृष्टः सभायां कुरुसंसदि ।
निःश्वस्य सुभृशं दीर्घं मुहुः सञ्चिन्तयन्निव ॥ ५-५०-१० (३३७४२)
तत्रानिमित्ततो वैवात्सुतं कश्मलमाविशत् ।
तदाचचक्षे विदुरः सभायां राजसंसदि ॥ ५-५०-११ (३३७४३)
सञ्जयोऽयं महाराज मूर्छितः पतितो भुवि ।
वाचं न सृजते कांचिद्धीनप्रज्ञोऽल्पचेतनः ॥ ५-५०-१२ (३३७४४)

धृतराष्ट्र उवाच। ५-५०-१३क्ष् (३५५५)
अपश्यत्सञ्जयो नूनं कुन्तीपुत्रान्महारथान् ।
तैरस्य पुरुषव्याघ्रैर्भृशमुद्वेजितं मनः ॥ ५-५०-१३ (३३७४५)
वैशंपायन उवाच। ५-५०-१४क्ष् (३५५६)
सञ्जयश्चेतनां लब्ध्वा प्रत्याश्वस्येदमब्रवीत् ।
धृतराष्ट्रं महाराज सभायां कुरुसंसदि ॥ ५-५०-१४ (३३७४६)
सञ्जय उवाच। ५-५०-१५क्ष् (३५५७)
दृष्टवानस्मि राजेन्द्र कुन्तीपुत्रान्महारथान् ।
मत्स्यराजगृहावासनिरोधेनावकर्शितान् ॥ ५-५०-१५ (३३७४७)
श्रृणु यैर्हि महाराज पाण्डवा अभ्ययुञ्जत ।
धृष्टद्युम्नेन वीरेण युद्धे वस्तेऽभ्ययुञ्जत ॥ ५-५०-१६ (३३७४८)
यो नैव रोषान्न भयान्न लोभान्नार्थकारणात् ।
न हेतुवादाद्धर्मात्मा सत्यं जह्यात्कदाचन ॥ ५-५०-१७ (३३७४९)
यः प्रमाणं महाराज धर्मे धर्मभृतां वरः ।
अजातशत्रुणा तेन पाण्डवा अभ्ययुञ्जत ॥ ५-५०-१८ (३३७५०)
यस्य बाहुबले तुल्यः पृथिव्यां नास्ति कश्चन ।
यो वै सर्वान्महीपालान्वशे चक्रे धनुर्धरः ।
यः काशीनङ्गमगधान्कलिङ्गांश्च युधाजयत् ॥ ५-५०-१९ (३३७५१)
तेन वो भीमसेनेन पाण्डवा अभ्ययुञ्जत ।
यस्य वीर्येण सहसा चत्वारो भुवि पाण्डवाः ॥ ५-५०-२० (३३७५२)
निःसृत्य जतुगेहाद्वै हिडिम्बात्पुरुषादकात् ।
यश्चैषामभवद्द्वीपः कुन्तीपुत्रो वृकोदरः ॥ ५-५०-२१ (३३७५३)
याज्ञसेनीमथो यत्र सिन्धुराजोपकृष्टवान् ।
तत्रैषामभवद्द्वीपः कुन्तीपुत्रो वृकोदरः ॥ ५-५०-२२ (३३७५४)
यश्च तान्सङ्गतान्सर्वान्पाण्डवान्वारणावते ।
दह्यतो मोचयामास तेन वस्तेऽभ्ययुञ्जत ॥ ५-५०-२३ (३३७५५)
कृष्णायां चरता प्रीतिं येन क्रोधवशा हताः ।
प्रविश्य विषयं घोरं पर्वतं गन्धमादनम् ॥ ५-५०-२४ (३३७५६)
यस्य नागायुतैर्वीर्यं भुजयोः सारमर्पितम् ।
तेन वो भीमसेनेन पाण्डवा अभ्ययुञ्जत ॥ ५-५०-२५ (३३७५७)
कृष्णद्वितीयो विक्रम्य तुष्ट्यर्थं जातवेदसः ।
अजयद्यः पुरा वीरो युध्यमानं पुरन्दरम् ॥ ५-५०-२६ (३३७५८)
यः स साक्षान्महादेवं गिरिशं शूलपाणिनम् ।
तोषयामास युद्धेन देवदेवमुमापतिम् ॥ ५-५०-२७ (३३७५९)
यश्च सर्वान्वशे चक्रे लोकपालान्धनुर्धरः ।
तेन वो विजयेनाजौ पाण्डवा अभ्ययुञ्जत ॥ ५-५०-२८ (३३७६०)

यः प्रतीचीं दिशं चक्रे वशे म्लेच्छगणायुताम् ।
स तत्र नकुलो योद्धा चित्रयोधी व्यवस्थितः ॥ ५-५०-२९ (३३७६१)
तेन वो दर्शनीयेन वीरेणातिधनुर्भृता ।
माद्रीपुत्रेण कौरव्य पाण्डवा अभ्ययुञ्जत ॥ ५-५०-३० (३३७६२)
यः काशीनङ्गमगधान्कलिङ्गांश्च युधाजयत् ।
तेन वः सहदेवेन पाण्डवा अभ्ययुञ्जत ॥ ५-५०-३१ (३३७६३)
यस्य वीर्येण सदृशाश्चत्वारो भुवि मानवाः ।
अश्वत्थामा धृष्टकेतू रुक्मी प्रद्युम्न एव च ॥ ५-५०-३२ (३३७६४)
तेन वः सहदेवेन युद्धं राजन्महात्ययमा ।
यवीयसा नृवीरेण माद्रीनन्दिकरेण च ॥ ५-५०-३३ (३३७६५)
तपश्चचार या घोरं काशिकन्या पुरा सती ।
भीष्मस्य वधमिच्छन्ती प्रेत्यापि भरतर्षभ ॥ ५-५०-३४ (३३७६६)
पाञ्चालस्य सुता जज्ञे दैवाच्च स पुनः पुमान् ।
स्त्रीपुंसीः पुरुषव्याघ्र यः स वेद गुणागुणान् ॥ ५-५०-३५ (३३७६७)
॥ कलिङ्गान्समापेदे पाञ्चाल्यो युद्धदुर्मदः ।
शिखण्डिना वः कुरवः कृतास्त्रेणाभ्ययुञ्जत ॥ ५-५०-३६ (३३७६८)
यं यक्षः पुरुषं चक्रे भीष्मस्य निधनेच्छया ।
महेष्वासेन रौद्रेण पाण्डवा अभ्ययुञ्जत ॥ ५-५०-३७ (३३७६९)
महेष्वासा राजपुत्रा भ्रातरः पञ्च केकयाः ।
आमुक्तवचाः शूरास्तैश्च वस्तेऽभ्ययुञ्जत ॥ ५-५०-३८ (३३७७०)
यो दीर्घबाहुः क्षिप्रास्त्रो धृतिमान्सत्यविक्रमः ।
तेन वो वृष्णिवीरेण युयुधानेन सङ्गरः ॥ ५-५०-३९ (३३७७१)
य आसीच्छरणं काले पाण्डवानां महात्मनाम् ।
रणे तेन विराटेन भविता वः समागमः ॥ ५-५०-४० (३३७७२)
यः स काशिपती राजा वाराणस्यां महारथः ।
स तेषामभवद्योद्धा तेन वस्तेऽभ्ययुञ्जत ॥ ५-५०-४१ (३३७७३)
शिशुभिर्दुर्जयैः सङ्ख्ये द्रौपदेयैर्महात्मभिः ।
आशीविषसमस्पर्शैः पाण्डवा अभ्ययञ्जत ॥ ५-५०-४२ (३३७७४)
यः कृष्णासदृशो वीर्ये युधिष्ठिरसमो दमे ।
तेनाभिमन्युना सङ्ख्ये पाण्डवा अभ्ययुञ्जत ॥ ५-५०-४३ (३३७७५)
यश्चैवाप्रतिमो वीर्ये धृष्टकेतुर्महायशाः ।
दुःसहः समरे क्रुद्धः शैशुपालिर्महारथः ॥ ५-५०-४४ (३३७७६)
तेन वश्चेदिराजेन पाण्डवा अभ्ययुञ्जत ।
अक्षौहिण्या परिवृतः पाण्डवान्योभिसंश्रितः ॥ ५-५०-४५ (३३७७७)
यः संश्रयः पाण्डवानां देवानामिव वासवः ।
तेन वो वासुदेवेन पाण्डवा अभ्ययुञ्जत ॥ ५-५०-४६ (३३७७८)

यथा चेदिपतेर्भ्राता शरभो भरतर्षभ ।
करकर्षेण सहितस्ताभ्यां वस्तेऽभ्ययुञ्जत ॥ ५-५०-४७ (३३७७९)
तारासन्धिः सहदेवो जयत्सेनश्च तावुभौ ।
युद्धे प्रतिरथे वीरौ पाण्डवार्थे व्यवस्थितौ ॥ ५-५०-४८ (३३७८०)
द्रुपदश्च महातेजा बलेन महता वृतः ।
त्यक्तात्मा पाण्डवार्थाय सोत्स्यमानो व्यवस्थितः ॥ ५-५०-४९ (३३७८१)
एते चान्ये च बहवः प्राच्योदीच्या महीक्षितः ।
शतशो यानुपाश्रिता धर्मराजो व्यवस्थितः ॥ ॥ ५-५०-५० (३३७८२)

इति श्रीमन्महाभारते उद्योगपर्वणि यानसन्धिपर्वणि पञ्चशोऽध्यायः ॥
Mahabharata - Udyoga Parva - Chapter Footnotes

५-५०-४७ करकर्षेण करकर्षसंज्ञेन भ्रात्रा ॥

---

उद्योगपर्व-अध्यय०५१
॥ श्रीः ॥
५.५१. अध्यायः ५१

Mahabharata - Udyoga Parva - Chapter Topics
धृतराष्ट्रस्य सञ्जयाग्रे भीमसेनप्रतापानुस्मरणेन परिशोचनम् ॥ १ ॥

Mahabharata - Udyoga Parva - Chapter Text

५-५१-० (३३७८३)
धृतराष्ट्र उवाच। ५-५१-०क्ष् (३५५८)
सर्व एते महोत्साहा ये त्वया परिकीर्तिताः ।
एकतस्त्वेव ते सर्वे समेता भीम एकतः ॥ ५-५१-१ (३३७८४)
भीमसेनाद्धि मे भूयो भयं सञ्जायते महत् ।
क्रुद्धादमर्षणात्तात व्याघ्रादिव महारुरोः ॥ ५-५१-२ (३३७८५)
जागर्मि रात्रयः सर्वा दीर्घमुष्णं च निःश्वसन् ।
भीतो वृकोदरात्तात सिंहात्पशुरिवापरः ॥ ५-५१-३ (३३७८६)
न हि तस्य महाबाहोः शक्रप्रतिमतेजसः ।
सैन्येऽस्मिन्प्रतिपश्यामि य एनं विषहेद्युधि ॥ ५-५१-४ (३३७८७)
अमर्षणश्च कौन्तेयो दृढवैरश्च पाण्डवः ।
अनर्महासी सोन्मादस्तिर्यक्प्रेक्षी महास्वनः ॥ ५-५१-५ (३३७८८)
महावेगो महोत्साहो महाबाहुर्महाबलः ।

मन्दानां मम पुत्राणां युद्धेनान्तं करिष्यति ॥ ५-५१-६ (३३७८९)
उरुग्राहगृहीतानां गदां बिभ्रद्वृकोदरः ।
कुरूणामृषभो युद्धे दण्डपाणिरिवान्तकः ॥ ५-५१-७ (३३७९०)
अष्टाश्रिमायसीं घोरां गदां काञ्चनभूषणाम् ।
मनसाहं प्रपश्यामि ब्रह्मदण्डमिवोद्यतम् ॥ ५-५१-८ (३३७९१)
यथा मृगाणां यूथेषु सिंहो जातबलश्चरेत् ।
मामकेषु तथा भीमो बलेषु विचरिष्यति ॥ ५-५१-९ (३३७९२)
सर्वेषां मम पुत्राणां स एकः क्रूरविक्रमः ।
बह्वाशी विप्रतीपश्च बाल्येपि रभसः सदा ॥ ५-५१-१० (३३७९३)
उद्वेपते मे हृदयं ये मे दुर्योधनादयः ।
बाल्येऽपि तेन युद्ध्यन्तो वारणेनेव मर्दिताः ॥ ५-५१-११ (३३७९४)
तस्य वीर्येण संक्लिष्टा नित्यमेव सुता मम ।
स एव हेतुर्भेदस्य भीमो भीमपराक्रमः ॥ ५-५१-१२ (३३७९५)
ग्रसमानमनीकानि नरवारणवाजिनाम् ।
पश्यामीवाग्रतो भीमं क्रोधमूर्छितमाहवे ॥ ५-५१-१३ (३३७९६)
अस्त्रे द्रोणार्जुनसमं वायुवेगसमं जवे ।
महेश्वरसमं क्रोधे को हन्याद्भीममाहवे ॥ ५-५१-१४ (३३७९७)
सञ्जयाचक्ष्व मे शूरं भीमसेनममर्षणम् । ५-५१-१५ब्
॥॥॥॥॥ येऽहं यत्तेन रिपुघातिना ।
॥॥। सर्वे पुत्राः मम मनस्विना ॥ ५-५१-१५ (३३७९८)
येन भीमबला यक्षा राक्षसाश्च पुरा हताः ।
कथं तस्य रणे वेगं मानुषः प्रसहिष्यति ॥ ५-५१-१६ (३३७९९)
न स जातु वशे तस्थौ मम बाल्येऽपि सञ्जय ।
किं पुनर्मम दुष्पुत्रैः क्लिष्टः संप्रति पाण्डवः ॥ ५-५१-१७ (३३८००)
निष्ठुरो रोषणोऽत्यर्थं भज्येतापि न संनमेत् ।
तिर्यक्प्रेक्षी संहतभ्रूः कथं शाम्येद्वृकोदरः ॥ ५-५१-१८ (३३८०१)
शूरस्तथाऽप्रतिबलो गौरस्ताल इवोन्नतः ।
प्रमाणतो भीमसेनः प्रादेशेनाधिकोऽर्जुनात् ॥ ५-५१-१९ (३३८०२)
जवेन वाजिनोऽत्येति बलेनात्येति कुञ्जरान् ।
अव्यक्तजल्पी मध्वक्षो मध्यमः पाण्डवो बली ॥ ५-५१-२० (३३८०३)
इति बाल्ये श्रुतः पूर्वं मया व्यासमुखात्पुरा ।
रूपतो वीर्यतश्चैव याथातथ्येन पाण्डवः ॥ ५-५१-२१ (३३८०४)
आयसेन स दण्डेन रथन्नागान्नरान्हयान् ।
हनिष्यति रणे क्रुद्धो रौद्रः क्रूरपराक्रमः ॥ ५-५१-२२ (३३८०५)
अमर्षी नित्यसंरब्धो भीमः प्रहरतां वरः ।
मया तात प्रतीपानि कुर्वन्पूर्वं विमानितः ॥ ५-५१-२३ (३३८०६)

निष्कर्णामायसीं स्थूलां सुपार्श्वां काञ्चनीं गदाम् ।
शतघ्नीं शतनिर्ह्रादां कथं शक्ष्यन्ति मे सुताः ॥ ५-५१-२४ (३३८०७)
अपारमप्लवागाधं समुद्रं शरवेधनम् ।
भीमसेनमयं दुर्गं तात मन्दास्तितीर्षवः ॥ ५-५१-२५ (३३८०८)
क्रोशतो मे न श्रृण्वन्ति बालाः पण्डितमानिनः ।
विषमं न हि मन्यन्ते प्रापतं मधुदर्शिनः ॥ ५-५१-२६ (३३८०९)
संयुगे ये गमिष्यन्ति नररूपेण मृत्युना ।
नियतं चोदिता धात्रा सिंहेनेव महामृगाः ॥ ५-५१-२७ (३३८१०)
शैक्यां तात चतुष्किष्कुं षडश्रिममितौजसम् ।
प्रहितां दुःखसंस्पर्शां कथं शक्ष्यन्ति मे सुताः ॥ ५-५१-२८ (३३८११)
गदां भ्रामयतस्तस्य भिन्दतो हस्तिमस्तकान् ।
सृक्किणी लेलिहानस्य बाष्पमुत्सृजतो मुहुः ॥ ५-५१-२९ (३३८१२)
उद्दिश्य नागान्पततः कुर्वतो भैरवान्रवान् ।
प्रतीपं पततो मत्तान्कुञ्जरान्प्रति गर्जतः ॥ ५-५१-३० (३३८१३)
विगाह्य रथमार्गेषु वरानुद्दिश्य निघ्नतः ।
अग्नेः प्रज्वलितस्येव अपि मुच्येत मे प्रजा ॥ ५-५१-३१ (३३८१४)
वीथीं कुर्वन्महाबाहुर्द्रावयन्मम वाहिनीम् ।
नृत्यन्निव गदापाणिर्युगान्तं दर्शयिष्यति ॥ ५-५१-३२ (३३८१५)
प्रभिन्न इव मातङ्गः प्रभञ्जन्पुष्पितान्द्रुमान् ।
प्रवेक्ष्यति रणे सेनां पुत्राणां मे वृकोदरः ॥ ५-५१-३३ (३३८१६)
कुर्वन्रथान्विपुरुषान्विसारथिहयध्वजान् ।
आरुजन्पुरुषव्याघ्रो रथिनः सादिनस्तथा ॥ ५-५१-३४ (३३८१७)
गङ्गावेग इवानूपांस्तीरजान्विविधान्द्रुमान् ।
प्रभङ्क्ष्यति रणे सेनां पुत्राणां मम सञ्जय ॥ ५-५१-३५ (३३८१८)
वधं नूनं गमिष्यन्ति भीमसेनभयार्दिताः ।
मम पुत्राश्च भृत्याश्च राजानश्चैव सञ्जय ॥ ५-५१-३६ (३३८१९)
येन राजा महावीर्यः प्रविश्यान्तःपुरं पुरा ।
वासुदेवसहायेन जरासन्धो निपातितः ॥ ५-५१-३७ (३३८२०)
कृत्स्नेयं पृथिवी देवी जरासन्धेन धीमता ।
मागधेन्द्रेण बलिना वशे कृत्वा प्रतापिता ॥ ५-५१-३८ (३३८२१)
भीष्मप्रतापात्कुरवो नयेनान्धकवृष्णयः ।
यन्न तस्य वशे जग्मुः केवलं दैवमेव तत् ॥ ५-५१-३९ (३३८२२)
स गत्वा पाण्डुपुत्रेण तरसा बाहुशालिना ।
अनायुधेन वीरेण निहतः किं ततोऽधिकम् ॥ ५-५१-४० (३३८२३)
दीर्घकालसमासक्तं विशमाशीविषो यथा ।
स मोक्ष्यति रणे तेजः पुत्रेषु मम सञ्जय ॥ ५-५१-४१ (३३८२४)

महेन्द्र इव वज्रेण दानवान्देवसत्तमः ।
भीमसेनो गदापाणिः सूदयिष्यति मे सुतान् ॥ ५-५१-४२ (३३८२५)
अविषह्यमनावार्यं तीव्रवेगपराक्रमम् ।
पश्यामीवातिताम्राक्षमापतन्तं वृकोदरम् ॥ ५-५१-४३ (३३८२६)
अगदस्याप्यधनुषो विरथस्य विवर्मणः ।
बाहुभ्यां युध्यमानस्य कस्तिष्ठेदग्रतः पुमान् ॥ ५-५१-४४ (३३८२७)
भीष्मो द्रोणश्च विप्रोऽयं कृपः शारद्वतस्तथा ।
जान्त्येते यथैवहं वीर्यज्ञस्तस्य धीमतः ॥ ५-५१-४५ (३३८२८)
आर्यव्रतं तु जानन्तः सङ्गरान्तं विधित्सवः ।
सेनामुखेषु स्थास्यन्ति मामकानां नरर्षभाः ॥ ५-५१-४६ (३३८२९)
बलीयः सर्वतो दिष्टं पुरुषस्य विशेषतः ।
पश्यन्नपि जयं तेषां न नियच्छामि यत्सुतान् ॥ ५-५१-४७ (३३८३०)
ते पुराणं महेष्वासा मार्गमैन्द्रं समास्थिताः ।
त्यक्ष्यन्ति तुमुले प्राणान्रक्षन्तः पार्थिवं यशः ॥ ५-५१-४८ (३३८३१)
यथैषां मामकास्तात तथैषां पाण्डवा अपि ।
पौत्रा भीष्मस्य शिष्याश्च द्रोणस्य च कृपस्य च ॥ ५-५१-४९ (३३८३२)
ये त्वस्मदाश्रयं किञ्चिद्दत्तमिष्टं च सञ्जय ।
तस्यापचितिमार्यत्वात्कर्तारः स्थविरास्त्रयः ॥ ५-५१-५० (३३८३३)
आददानस्य शस्त्रं हि क्षत्रधर्मं परीप्सतः ।
निधनं क्षत्रियस्याजौ वरमेवाहुरुत्तमम् ॥ ५-५१-५१ (३३८३४)
स वै शोचामि सर्वान्वै ये युयुत्सन्ति पाण्डवैः ।
विक्रुष्टं विदुरोणादौ तदेतद्भयमागतम् ॥ ५-५१-५२ (३३८३५)
न तु मन्ये विघाताय ज्ञानं दुःखस्य सञ्जय ।
भवत्यतिबलं ह्येतज्ज्ञानस्याप्युपघातकम् ॥ ५-५१-५३ (३३८३६)
ऋषयो ह्यपि निर्मुक्ताः पश्यन्तो लोकसङ्ग्रहान् ।
सुखैर्भवन्ति सुखिनस्तथा दुःखेन दुःखिताः ॥ ५-५१-५४ (३३८३७)
किं पुनर्मोहमासक्तस्तत्र तत्र सहस्रधा ।
पुत्रेषु राज्यदारेषु पौत्रेष्वपि च बन्धुषु ॥ ५-५१-५५ (३३८३८)
संशये तु महत्यस्मिन्किं नु मे क्षममुत्तरम् ।
विनाशं ह्येव पश्यामि कुरूणामनुचिन्तयन् ॥ ५-५१-५६ (३३८३९)
द्यूतप्रमुखमाभाति कुरूणां व्यसनं महत् ।
मन्देनैश्वर्यकामेन लोभात्पापमिदं कृतम् ॥ ५-५१-५७ (३३८४०)
मन्ये पर्यायधर्मोऽयं कालस्यात्यन्तगामिनः ।
चक्रे प्रधिरिवासक्तो नास्य शक्यं पलायितुम् ॥ ५-५१-५८ (३३८४१)
किं नु कुर्यां कथं कुर्यां क्व नु गच्छामि सञ्जय ।
एते नश्यन्ति कुरवो मन्दाः कालवशं गताः ॥ ५-५१-५९ (३३८४२)

अवशोऽहं तदा तात पुत्राणां निहते शते ।
श्रोष्यामि निनदं स्त्रीणां कथं मां मरणं स्पृशेत् ॥ ५-५१-६० (३३८४३)
यथा निदाघे ज्वलनः समद्धो
दहेत्कक्षं वायुना चोद्यमानः ।
गदाहस्तः पाण्डवो वै तथैव
हन्ता मदीयान्सहितोऽर्जुनेन ॥ ॥ ५-५१-६१ (३३८४४)

इति श्रीमन्महाभारते उद्योगपर्वणि यानसन्धिपर्वणि एकपञ्चाशोऽध्यायः ॥
Mahabharata - Udyoga Parva - Chapter Footnotes

५-५१-७ उरुग्राहः महानिर्बन्धस्तेन गृहीतानां वशीकृतानाम् ॥
५-५१-१० रभसः वेगवान् ॥
५-५१-२१ पुरा पुराणम् ॥
५-५१-२४ निष्कर्णां अवक्राम् ।शतनिर्ह्रादां महाशब्दवतीम् ॥
५-५१-२८ शैक्यां शिक्यस्थाम् ॥
५-५१-३५ अनूपान् सजलदेशे स्थितान् ॥
५-५१-४४ अगदस्य गदाहीनस्य ॥
५-५१-५८ पर्यायधर्मः विपरीतधर्मः ।प्रधिर्नेमिः।अस्य कालवशस्य
।तृतीयार्थे षष्ठी ॥

---

उद्योगपर्व-अध्यय०५२
॥ श्रीः ॥
५.५२. अध्यायः ५२

Mahabharata - Udyoga Parva - Chapter Topics
धृतराष्ट्रेण अर्जुनप्रतापानुवर्णनपूर्वकं परिशोचनम् ॥१ ॥

Mahabharata - Udyoga Parva - Chapter Text

५-५२-० (३३८४५)
धृतराष्ट्र उवाच।५-५२-०क्ष् (३५५९)
यस्य वै नानृता वाचः कदाचिदनुशुश्रुम ।
त्रैलोक्यमपि तस्य स्याद्योद्धा यस्य धनञ्जयः ॥५-५२-१ (३३८४६)
तस्यैव च न पश्यामि युधि गाण्डीवधन्वनः ।
अनिशं चिन्तयानोऽपि यः प्रतीयाद्रथेन तम् ॥५-५२-२ (३३८४७)
अस्यतः कर्णिनालीकान्मार्गणान्हृदयच्छिदः ।
प्रत्येता न समः कश्चिद्युधि गाण्डीवधन्वनः ॥५-५२-३ (३३८४८)

द्रोणाकर्णौ प्रतीयातां यदि वीरौ नरर्षभौ ।
कृतास्त्रौ बलिनां श्रेष्ठौ समरेष्वपराजितौ ॥ ५-५२-४ (३३८४९)
महान्स्यात्संशयो लोके न त्वस्ति विजयो मम ।
घृणी कर्णः प्रमादी च आचार्यः स्थविरो गुरुः ॥ ५-५२-५ (३३८५०)
समर्थो बलवान्पार्थो दृढधन्वा जितक्लमः ।
भवेत्सुतुमुलं युद्धं सर्वशोऽप्यपराजयः ॥ ५-५२-६ (३३८५१)
सर्वे ह्यस्त्रविदः शूराः सर्वे प्राप्ता महद्यशः ।
अपि सर्वामरैश्वर्यं त्यजेयुर्न पुनर्जयम् ॥ ५-५२-७ (३३८५२)
वधे नूनं भवेच्छान्तिस्तयोर्वा फाल्गुनस्य च ।
न तु हन्तार्जुनस्यास्ति जेता चास्य न विद्यते ॥ ५-५२-८ (३३८५३)
मन्युस्तस्य कथं शाम्येन्मन्दान्प्रति य उत्थितः ।
अन्येऽप्यस्त्राणि जानन्ति जीयन्ते च जयन्ति च ।
एकान्तविजयस्त्वेव श्रूयते फाल्गुनस्य ह ॥ ५-५२-९ (३३८५४)
त्रयस्त्रिंशत्समाहूय खाण्डवेऽग्निमतर्पयत् ।
जिगाय च सुरान्सर्वान्नास्य विद्मः पराजयम् ॥ ५-५२-१० (३३८५५)
यस्य यन्ता हृषीकेशः शीलवृत्तसमो युधि ।
ध्रुवस्तस्य जयस्तात यथेन्द्रस्य जयस्तथा ॥ ५-५२-११ (३३८५६)
कृष्णावेकरथे यत्तावधिज्यं गाण्डिवं धनुः ।
युगपत्त्रीणि तेजांसि समेतान्यनुशुश्रुम ॥ ५-५२-१२ (३३८५७)
नैवास्ति नो धनुस्तदृङ्व योद्धा न च सारथिः ।
तच्च मन्दा न जानन्ति दुर्योधनवशानुगाः । ५-५२-१३ (३३८५८)
शेषयेदशनिर्दीप्तो विपतन्मूर्ध्नि सञ्जय ।
न तु शेषं शरास्तात कुर्युरस्ताः किरीटिना ॥ ५-५२-१४ (३३८५९)
अपि चास्यन्निवाभाति निघ्नन्निव धनञ्जयः ।
उद्धरन्निव कायेभ्यः शिरांसि शरवृष्टिभिः ॥ ५-५२-१५ (३३८६०)
अपि बाणमयं तेजः प्रदीप्तमिव सर्वतः ।
गाण्डीवोत्थं दहेताजौ पुत्राणां मम वाहिनी ॥ ५-५२-१६ (३३८६१)
अपि सा रथघोषेण भयार्ता सव्यसाचिनः ।
वित्रस्ता बहुधा सेना भारती प्रतिभाति मे ॥ ५-५२-१७ (३३८६२)
यथा कक्षं महानग्निः प्रदहेत्सर्वतश्चरन् ।
महार्चिरनिलोद्धूतस्तद्वद्धक्ष्यति मामकान् ॥ ५-५२-१८ (३३८६३)
यदोद्वमन्निशितान्बाणसङ्घां-
स्तानाततायी समरे किरीटी ।
सृष्टोऽन्तकः सर्वहरो विधात्रा
यथा भवेत्तद्वदपारणीयः ॥ ५-५२-१९ (३३८६४)
यदा ह्यभीक्ष्णं सुबहून्प्रकारान्

श्रोतास्मि तानावसथे कुरूणाम् ।
तेषां समन्ताच्च तथा रणाग्रे
क्षयः किलायं भरतानुपैति ॥ ॥ ५-५२-२० (३३८६५)

इति श्रीमन्महाभारते उद्योगपर्वणि यानसन्धिपर्वणि द्विपञ्चाशोऽध्यायः ॥
Mahabharata - Udyoga Parva - Chapter Footnotes

५-५२-५ प्रमादी अन्ते विद्यां न स्मरिष्यतीति भावः ॥
५-५२-१४ अस्ताः क्षिप्ताः ॥

---

उद्योगपर्व-अध्यय०५३
॥ श्रीः ॥
५.५३. अध्यायः ५३

Mahabharata - Udyoga Parva - Chapter Topics
धृतराष्ट्रेण कुरून्प्रति पाण्डवानां
बलवत्सहायसंपन्नत्वादिगुणसमृद्धिकथनपूर्वकं शान्त्यर्थं
स्वेन प्रयतनाभिधानम् ॥ १ ॥

Mahabharata - Udyoga Parva - Chapter Text

५-५३-० (३३८६६)
धृतराष्ट्र उवाच। ५-५३-०क्ष् (३५६०)
यथैव पाण्डवाः सर्वे पराक्रान्ता जिगीषवः ।
तथौभिसरास्तेषां त्यक्तात्मानो जये धृताः ॥ ५-५३-१ (३३८६७)
॥॥[इ पराक्रान्तानाचक्षीथाः परान्मम ।
पाञ्चालान्केकयान्मत्स्यान्मागधान्वत्सभूमिपान् ॥ ५-५३-२ (३३८६८)
यश्च सेन्द्रानिमाँल्लोकानिच्छन्कुर्याद्वशे बली ।
स स्रष्टा जगतः कृष्णः पाण्डवानां जये धृतः ॥ ५-५३-३ (३३८६९)
समस्तामर्जुनाद्विद्यां सात्यकिः क्षिप्रमाप्तवान् ।
शैनेयः समरे स्थाता बीजवत्प्रवपञ्शरान् ॥ ५-५३-४ (३३८७०)
धृष्टद्युम्नश्च पाञ्चाल्यः क्रूरकर्मा महारथः ।
मामकेषु रणं कर्ता बलेषु परमास्त्रवित् ॥ ५-५३-५ (३३८७१)
युधिष्ठिरस्य च क्रोधादर्जुनस्य च विक्रमात् ।
मयाभ्यां भीमसेनाच्च भयं मे तात जायते ॥ ५-५३-६ (३३८७२)
अमानुषं मनुष्येन्द्रैर्जालं विततमन्तरा ।
न मे सैन्यास्तरिष्यन्ति ततः क्रोशामि सञ्जय ॥ ५-५३-७ (३३८७३)

दर्शनीयो मनस्वी च लक्ष्मीवान्ब्रह्मवर्चसी ।
मेधावी सुकृतप्रज्ञो धर्मात्मा पाण्डुनन्दनः ॥ ५-५३-८ (३३८७४)
मित्रामात्यैः सुसंपन्नः संपन्नो युद्धयोजकैः ।
भ्रातृभिः श्वशुरैर्वीरैरुपपन्नो महारथैः ॥ ५-५३-९ (३३८७५)
धृत्या च पुरुषव्याघ्रो नैभृत्येन च पाण्डवः ।
अनुशंसो वदान्यश्च ह्रीमान्सत्यपराक्रमः ॥ ५-५३-१० (३३८७६)
बहुश्रुतः कृतात्मा च वृद्धसेवी जितेन्द्रियः ।
तं सर्वगुणसंपन्नं समिद्धमिव पावकम् ॥ ५-५३-११ (३३८७७)
तपन्तमभि को मन्दः पतिष्यति पतङ्गवत् ।
पाण्डवाग्निमनावार्यं मुमूर्षुर्नष्टचेतनः ॥ ५-५३-१२ (३३८७८)
तनुरुच्चः शिखी राजा मिथ्योपचरितो मया ।
मन्दानां मम पुत्राणां युद्धेनान्तं करिष्यति ॥ ५-५३-१३ (३३८७९)
तैरयुद्धं साधु मन्ये कुरवस्तन्निबोधत ।
युद्धे विनाशः कृत्स्नस्य कुलस्य भविता ध्रुवम् ॥ ५-५३-१४ (३३८८०)
एषा मे परमा बुद्धिर्यया शाम्यति मे मनः ।
यदि त्वयुद्धमिष्टं वो वयं शान्त्यै यतामहे ॥ ५-५३-१५ (३३८८१)
न तु नः क्लिश्यमानानामुपेक्षेत युधिष्ठिरः ।
जुगुप्सति ह्यधर्मेण मामेवोद्दिश्य कारणम् ॥ ॥ ५-५३-१६ (३३८८२)

इति श्रीमन्महाभारते उद्योगपर्वणि यानसन्धिपर्वणि त्रिपञ्चाशोऽध्यायः ॥
Mahabharata - Udyoga Parva - Chapter Footnotes

५-५३-१ अभिसराः पुरोगाः ॥
५-५३-१० नैभृत्येन मन्त्रगुप्त्या ॥

---

उद्योगपर्व-अध्यय०५४
॥ श्रीः ॥
५.५४. अध्यायः ५४

Mahabharata - Udyoga Parva - Chapter Topics
सञ्जयेन पाण्डवेषु जयसाधनसामग्रीमभिधाय तेषु
धार्तराष्ट्रकृतापकारनुस्मारणपूर्वकं धृतराष्ट्रगर्हणम् ॥ १ ॥

Mahabharata - Udyoga Parva - Chapter Text

५-५४-० (३३८८३)
सञ्जय उवाच। ५-५४-०क्ष् (३५६१)

एवमेतन्महाराज यथावदसि भारत ।
युद्धे विनाशः क्षत्रस्य गाण्डीवेन प्रदृश्यते ॥ ५-५४-१ (३३८८४)
इदं तु नाभिजानामि तव धीरस्य नित्यशः ।
यत्पुत्रवशमागच्छेस्तत्त्वज्ञः सव्यसाचिनः ॥ ५-५४-२ (३३८८५)
नैष कालो महाराज तव शश्वत्कृतागसः ।
त्वया ह्येवादितः पार्था निकृता भरतर्षभ ॥ ५-५४-३ (३३८८६)
पिता श्रेष्ठः सुहृद्यश्च सम्यक्प्रणिहितात्मवान् ।
आस्थेयं हि हितं तेन न द्रोग्धा गुरुरुच्यते ॥ ५-५४-४ (३३८८७)
इदं जितमिदं लब्धमिति श्रुत्वा पराजितान् ।
द्यूतकाले महाराज स्मरसे स्म कुमारवत् ॥ ५-५४-५ (३३८८८)
परुषाण्युच्यमानांश्च पुरा पार्थानुपेक्षसे ।
कृत्स्नं राज्यं जयन्तीति प्रपातं नानुपश्यसि ॥ ५-५४-६ (३३८८९)
पित्र्यं राज्यं महाराज कुरवस्ते सजाङ्गलाः ।
अथ वीरैर्जितामुर्वीमखिलां प्रत्यपद्यथाः ॥ ५-५४-७ (३३८९०)
बाहुवीर्यार्जिता भूमिस्तव पार्थैर्निवेदिता ।
मयेदं कृतमित्येव मन्यसे राजसत्तम ॥ ५-५४-८ (३३८९१)
ग्रस्तान्गन्धर्वराजेन मज्जतो ह्यप्लवेऽम्भसि ।
आनिनाय पुनः पार्थः पुत्रांस्ते राजसत्तम ॥ ५-५४-९ (३३८९२)
कुमारवच्च स्मयसे द्यूते विनिकृतेषु यत् ।
पाण्डवेषु वने राजन्प्रव्रजत्सु पुनःपुनः ॥ ५-५४-१० (३३८९३)
प्रवर्षतः शरव्रातानर्जुनस्य शितान्बहून् ।
अप्यर्णवा विशुष्येयुः किं पुनर्मांसयोनयः ॥ ५-५४-११ (३३८९४)
अस्यतां फाल्गुनः श्रेष्ठो गाण्डीवं धनुषां वरम् ।
केशवः सर्वभूतानामायुधानां सुदर्शनम् ।
वानरो रोचमानश्च केतुः केतुमतां वरः ॥ ५-५४-१२ (३३८९५)
एवमेतानि स रथो वहते सह यो रणे ।
क्षपयिष्यति नो राजन्कालचक्रमिवोद्यतम् ॥ ५-५४-१३ (३३८९६)
तस्याद्य वसुधा राजन्निखिला भरतर्षभ ।
यस्य भीमार्जिनौ योधौ स राजा राजसत्तम ॥ ५-५४-१४ (३३८९७)
तथा भीमहतप्रायां मज्जन्तीं तव वाहिनीम् ।
दुर्योधनमुखा दृष्ट्वा क्षयं यास्यन्ति कौरवाः ॥ ५-५४-१५ (३३८९८)
न भीमार्जुनयोर्भीता लप्स्यन्ते विजयं विभो ।
तव पुत्रा महाराज राजानश्चानुसारिणः ॥ ५-५४-१६ (३३८९९)
मत्स्यास्त्वामद्य नार्चन्ति पञ्चालाश्च सकेकयाः ।
साल्वेयाः शूरसेनाश्च सर्वे त्वामवजानते ॥ ५-५४-१७ (३३९००)
पार्थं ह्येते गताः सर्वे वीर्यज्ञास्तस्य धीमतः ।

भक्त्या ह्यस्य विरुध्यन्ते तव पुत्रैः सदैव ते ॥ ५-५४-१८ (३३९०१)
अनर्हानेव तु वधे धर्मयुक्तान्विकर्मणा ।
योऽक्लेशयत्पाण्डुपुत्रान्यो विद्वेष्ट्यधुनापि वै ॥ ५-५४-१९ (३३९०२)
सर्वोपायैर्नियन्तव्यः सानुगः पापपुरुषः ।
तव पुत्रो महाराज नानुशोचितुमर्हसि ॥ ५-५४-२० (३३९०३)
अपरोहं महाराज साक्षाच्चैनं ब्रवीम्यहम् ।
द्यूतकाले मया चोक्तं विदुरेण च धीमता ॥ ५-५४-२१ (३३९०४)
यदिदं ते विलपितं पाण्डवान्प्रति भारत ।
अनीशेनैव राजेन्द्र सर्वमेतन्निरर्थकम् ॥ ॥ ५-५४-२२ (३३९०५)

इति श्रीमन्महाभारते उद्योगपर्वणि यानसन्धिपर्वणि
चतुःपञ्चाशोऽध्यायः ॥
Mahabharata - Udyoga Parva - Chapter Footnotes

५-५४-३ एष कालः कलनावुद्धिस्तव नैव स्थास्यति ॥
३ ।

---

उद्योगपर्व-अध्यय०५५
॥ श्रीः ॥
५.५५. अध्यायः ५५

Mahabharata - Udyoga Parva - Chapter Topics
दुर्योधनेन धृतराष्ट्रंप्रति कृष्णादिभिः
कुरुसमुच्छेदप्रतिज्ञापूर्वकपाण्डवसमाश्वासनश्रवणचकिताय
स्वस्मै भीष्मादिभिरभयप्रदानकथनम् ॥ १ ॥
तथा स्वपरपक्षयोः बलाबलनिरूपणपूर्वकं धृतराष्ट्रंप्रति
समाश्वासनम् ॥ २ ॥

Mahabharata - Udyoga Parva - Chapter Text

५-५५-० (३३९०६)
दुर्योधन उवाच। ५-५५-०क्ष् (३५६२)
न भेतव्यं महाराज न शोच्या भवतां वयम् ।
समर्थाः स्म पराञ्जेतुं बलिनः समरे विभो ॥ ५-५५-१ (३३९०७)
वने प्रव्राजितान्पार्थान्यदायान्मधुसूदनः ।
महता बलचक्रेण परराष्ट्रावमर्दिना ॥ ५-५५-२ (३३९०८)
केकया धृष्टकेतुश्च धृष्टद्युम्नश्च पार्षत ।

राजानश्चान्वयुः पार्थान्बहवोऽन्येऽनुयायिनः ॥ ५-५५-३ (३३९०९)
इन्द्रप्रस्थस्य चादूरात्समाजग्मुर्महारथाः ।
व्यगर्हयंश्च संगम्य भवन्तं कुरुभिः सह ॥ ५-५५-४ (३३९१०)
ते युधिष्ठिरमासीनमजिनैः प्रतिवासितम् ।
कृष्णप्रधानाः संहत्य पर्युपासन्त भारत ॥ ५-५५-५ (३३९११)
प्रत्यादनं च राज्यस्य कार्यमूचुर्नराधिपाः ।
भवतः सानुबन्धस्य समुच्छेदं चिकीर्षवः ॥ ५-५५-६ (३३९१२)
श्रुत्वा चैवं मयोस्तास्तु भीष्मद्रोणकृपास्तदा ।
ज्ञातिक्षयभयाद्राजन्भीतेन भरतर्षभ ॥ ५-५५-७ (३३९१३)
ततः स्थास्यन्ति समये पाण्डवा इति मे मतिः ।
समुच्छेदं हि नः कृत्स्नं वासुदेवश्चिकीर्षति ॥ ५-५५-८ (३३९१४)
ऋते च विदुरात्सर्वे यूयं वध्या मता मम ।
धृतराष्ट्रस्तु धर्मज्ञो न वध्यः कुरुसत्तमः ॥ ५-५५-९ (३३९१५)
समुच्छेदं च कृत्स्नं नः कृत्वा तात जनार्दनः ।
एकराज्यं कुरूणां स्म चिकीर्षति युधिष्ठिरे ॥ ५-५५-१० (३३९१६)
तत्र किं प्राप्तकालं नः प्रणिपातः पलायनम् ।
प्राणान्वा संपरित्यज्य प्रतियुध्यामाहे परान् ॥ ५-५५-११ (३३९१७)
प्रतियुद्धे तु नियतः स्यादस्माकं पराजयः ।
युधिष्ठिरस्य सर्वे हि पार्थिवा वशवर्तिनः ॥ ५-५५-१२ (३३९१८)
विरक्तराष्ट्राश्च वयं मित्राणि कुपितानि नः ।
धिक्कृताः पार्थिवैः सर्वैः स्वजनेन च सर्वशः ॥ ५-५५-१३ (३३९१९)
प्रणिपाते न दोषोस्ति सन्धिर्नः शाश्वतीः समाः ।
पितरं त्वेव शोचामि प्रज्ञानेत्रं जनाधिपम् ॥ ५-५५-१४ (३३९२०)
मत्कृते दुःखमापन्नं क्लेशं प्राप्तमनन्तकम् ।
कृतं हि तव पुत्रैश्च परेषामवरोधनम् ।
मत्प्रयार्थं पुरैवैतद्विदितं ते नरोत्तम ॥ ५-५५-१५ (३३९२१)
ते राज्ञो धृतराष्ट्रस्य सामात्यस्य महारथाः ।
वैरं प्रतिकरिष्यन्ति कुलोच्छेदेन पाण्डवाः ॥ ५-५५-१६ (३३९२२)
ततो द्रोणोऽब्रवीद्भीष्मः कृपो द्रौणिश्च भारत ।
मत्वा मां महतीं चिन्तामास्थितंव्यथितेन्द्रियं ॥ ५-५५-१७ (३३९२३)
अभिद्रुग्धाः परे चेन्नो न भेतव्यं परन्तप ।
असमर्थाः परे जेतुमस्मान्युधि समास्थितान् ॥ ५-५५-१८ (३३९२४)
एकैकशः समर्थाः स्मो विजेतुं सर्वपार्थिवान् ।
आगच्छन्तु विनेष्यामो दर्पमेषां शितैः शरैः ॥ ५-५५-१९ (३३९२५)
पुरैकेन हि भीष्मेण विजिताः सर्वपार्थिवाः ।
मृते पितर्यतिक्रुद्धो रथेनैकेन भारत ॥ ५-५५-२० (३३९२६)

जघान सुबहूंस्तेषां संरब्धः कुरुसत्तमः ।
ततस्ते शरणं जग्मुर्देवव्रतमिमं भयात् ॥ ५-५५-२१ (३३९२७)
स भीष्मः सुसमर्थोऽयमस्माभिः सहितो रणे ।
परान्विजेतुं तस्मात्ते व्येतु भीर्भरतर्षभ ॥ ५-५५-२२ (३३९२८)
इत्येषां निश्चयो ह्यासीत्तत्कालेऽमिततेजसाम् ।
पुरा तेषां पृथिवी कृत्स्नासीद्वशवर्तिनी ॥ ५-५५-२३ (३३९२९)
अस्मान्पुनरमी नाद्य समर्था जेतुमाहवे ।
छिन्नपक्षाः परे ह्यद्य वीर्यहीनाश्च पाण्डवाः ॥ ५-५५-२४ (३३९३०)
अस्मत्संस्था च पृथिवी वर्तते भरतर्षभ ।
एकार्थाः सुखदुःखेषु समानीताश्च पार्थिवाः ॥ ५-५५-२५ (३३९३१)
अप्यग्निं प्रविशेयुस्ते समुद्रं वा परन्तप ।
मदर्थं पार्थिवाः सर्वे तद्विद्धि कुरुसत्तम ॥ ५-५५-२६ (३३९३२)
उन्मत्तमिव चापि त्वां प्रहसन्तीह दुःखितम् ।
विलपन्तं बहुविधं भीतं परविकत्थने ॥ ५-५५-२७ (३३९३३)
एषां ह्येकैकशो राज्ञां समर्थं पाण्डवान्प्रति ।
आत्मानं मन्यते सर्वो व्येतु ते भयमागतम् ॥ ५-५५-२८ (३३९३४)
जेतुं समग्रां सेनां मे वासवोऽपि न शक्नुयात् ।
हन्तुमक्षय्यरूपेयं ब्रह्मणोऽपि स्वयंभुवः ॥ ५-५५-२९ (३३९३५)
युधिष्ठिरः पुरं हित्वा पञ्चग्रामान्स याचते ।
भीतो हि मामकात्सैन्यात्प्रभावाच्चैव मे विभो ॥ ५-५५-३० (३३९३६)
समर्थं मन्यसे यच्च कुन्तीपुत्रं वृकोदरम् ।
तन्मिथ्या न हि मे कृत्स्नं प्रभावं वेत्सि भारत ॥ ५-५५-३१ (३३९३७)
मत्समो हि गदायुद्धे पृथिव्यां नास्ति कश्चन ।
नासीत्कश्चिदतिक्रान्तो भविता न च कश्चन ॥ ५-५५-३२ (३३९३८)
युक्तो दुःखोषितश्चाहं विद्यापारगतस्तथा ।
तस्मान्न भीमान्नान्येभ्यो भयं मे विद्यते क्वचित् ॥ ५-५५-३३ (३३९३९)
दुर्योधनसमो नास्ति गदायामिति निश्चयः ।
सङ्कर्षणस्य भवने यत्तदैनमुपावसम्। ५-५५-३४ (३३९४०)
युद्धे सङ्कर्षणसमो बलेनाभ्यधिको भुवि ।
गदाप्रहारं भीमो मे न जातु विषहेद्युधि ॥ ५-५५-३५ (३३९४१)
एकं प्रहारं यं दद्यां भीमाय रुषितो नृप ।
स एवैनं नयोद्घोरः क्षिप्रं वैवस्वतक्षयम् ॥ ५-५५-३६ (३३९४२)
इच्छेयं च गदाहस्तं राजन्द्रष्टुं वृकोदरम् ।
सुचिरं प्रार्थितो ह्येष मम नित्यं मनोरथः ॥ ५-५५-३७ (३३९४३)
गदया निहतो ह्याजौ मया पार्थो वृकोदरः ।
विशीर्णगात्रः पृथिवीं परासुः प्रपतिष्यति ॥ ५-५५-३८ (३३९४४)

गदाप्रहाराभिहतो हिमवानपि पर्वतः ।
सकृन्मया विदीर्येत गिरिः शतसहस्रधा ॥ ५-५५-३९ (३३९४५)
स चाप्येतद्विजानाति वासुदेवार्जुनौ तथा ।
दुर्योधनसमो नास्ति गदायामिति निश्चयः ॥ ५-५५-४० (३३९४६)
तत्ते वृकोदरमयं भयं व्येतु महाहवे ।
व्यपनेष्याम्यहं ह्येनं मा राजन्विमना भव ॥ ५-५५-४१ (३३९४७)
तस्मिन्मया हते क्षिप्रमर्जुनं बहवो रथाः ।
तुल्यरूपा विशिष्टाश्च क्षेप्स्यन्ति भरतर्षभ ॥ ५-५५-४२ (३३९४८)
भीष्मो द्रोणः कृपो द्रौणिः कर्णो भूरिश्रवास्तथा ।
प्राग्ज्योतिषाधिपः शल्यः सिन्धुराजो जयद्रथः ॥ ५-५५-४३ (३३९४९)
एकैक एषां शक्तस्तु हन्तुं भारत पाण्डवान् ।
समेतास्तु क्षणेनैतान्नेष्यन्ति यमसादनम् ॥ ५-५५-४४ (३३९५०)
समग्रा पार्थिवी सेना पार्थमेकं धनञ्जयम् ।
कस्मादशक्ता निर्जेतुमिति हेतुर्न विद्यते ॥ ५-५५-४५ (३३९५१)
शरव्रातैस्तु भीष्मेण शतशो निचितोऽवशः ।
द्रोणद्रौणिकृपैश्चैव गन्ता पार्थो यमक्षयम् ॥ ५-५५-४६ (३३९५२)
पितामहोऽपि गाङ्गेयः शान्तनोरधि भारत ।
ब्रह्मर्पिसदृशो जज्ञे देवैरपि सुदुःसहः ॥ ५-५५-४७ (३३९५३)
न हन्ता विद्यते चापि राजन्भीष्मस्य कश्चन ।
पित्रा ह्युक्तः प्रसन्नेन नाकामस्त्वं मरिष्यसि ॥ ५-५५-४८ (३३९५४)
ब्रह्मर्षेश्च भरद्वाजाद्द्रोणो द्रोण्यामजायत ।
द्रोणाज्जज्ञे महाराज द्रौणिश्च परमास्त्रवित् ॥ ५-५५-४९ (३३९५५)
कृपश्चाचार्यमुख्योयं महर्षेर्गौतमादपि ।
शरस्तम्बोद्भवः श्रीमानवध्य इति मे मतिः ॥ ५-५५-५० (३३९५६)
अयोनिजास्त्रयो ह्येते पिता माता च मातुलः ।
अश्वत्थाम्नो महारात स च शूरः स्थितो मम ॥ ५-५५-५१ (३३९५७)
सर्व एते महाराज देवकल्पा महारथाः ।
शक्रस्यापि व्यथां कुर्युः संयुगे भरतर्षभ ॥ ५-५५-५२ (३३९५८)
नैतेषामर्जुनः शक्त एकैकं प्रतिवीक्षितुम् ।
सहितास्तु नरव्याघ्रा हनिष्यन्ति धनञ्जयम् ॥ ५-५५-५३ (३३९५९)
भीष्माद्रोणकृपाणां च तुल्यः कर्णो मतो मम ।
अनुज्ञातश्च रामेण मत्समोऽसीति भारत ॥ ५-५५-५४ (३३९६०)
कुण्डले रुचिरे चास्तां कर्णस्य सहजे शुभे ।
ते शच्यर्थं महेन्द्रेण याचितः स परन्तपः ॥ ५-५५-५५ (३३९६१)
अमोघया महाराज शक्त्या परमभीमया ।
तस्य शक्त्योपगूढस्य कस्माज्जीवेद्धनञ्जयः ॥ ५-५५-५६ (३३९६२)

विजयो मे ध्रुवं राजन्फलं पाणाविवाहितम् ।
अभिव्यक्तः परेषां च कृत्स्नो भुवि पराजयः । ५-५५-५७ (३३९६३)
अह्ना ह्येकेन भीष्मोयं प्रयुतं हन्ति भारत ।
तत्समाश्च महेष्वासा द्रोणद्रौणिकृपा अपि ॥ ५-५५-५८ (३३९६४)
संशप्तकानां वृन्दानि क्षत्रियाणां परन्तप ।
अर्जुनं वयमस्मान्वा निहन्यात्कपिकेतनः ॥ ५-५५-५९ (३३९६५)
तांश्चालमिति मन्यन्ते सव्यसाचिवधे धृताः ।
पार्थिवाः स भवांस्तेभ्यो ह्यकस्माद्व्यथते कथम् ॥ ५-५५-६० (३३९६६)
भीमसेने च निहते कोऽन्यो युध्येत भारत ।
परेषां तन्ममाचक्ष्व यदि वेत्थ परन्तप ॥ ५-५५-६१ (३३९६७)
पञ्च ते भ्रातरः सर्वे धृष्टद्युम्नोऽथ सात्यकिः ।
परेषां सप्त ये राजन्योधाः सारं बलं मतम् ॥ ५-५५-६२ (३३९६८)
अस्माकं तु विशिष्टा ये भीष्मद्रोणकृपादयः ।
द्रौणिर्विकर्तनः कर्णः सोमदत्तोथ बाह्लिकः ॥ ५-५५-६३ (३३९६९)
प्राग्ज्योतिषाधिपः शल्य आवन्त्यौ च जयद्रथः ।
दुःशासनो दुर्मखश्च दुःसहश्च विशांपते ॥ ५-५५-६४ (३३९७०)
श्रुतायुश्चित्रसेनश्च पुरुमित्रो विविंशतिः ।
शलो भूरिश्रवाश्चैव विकर्णश्च तवात्मजः ॥ ५-५५-६५ (३३९७१)
अक्षौहिण्यो हि मे राजन्दशैका च समाहृताः ।
न्यूना परेषां सप्तैव कस्मान्मे स्यात्पराजयः ॥ ५-५५-६६ (३३९७२)
बलं त्रिगुणतो हीनं योध्यं प्राह बृहस्पतिः ।
परेभ्यस्त्रिगुणा चेयं मम राजन्ननीकिनी ॥ ५-५५-६७ (३३९७३)
गुणहीनं परेषां च बहु पश्यामि भारत ।
गुणोदयं बहुगुणमात्मनश्च विशांपते ॥ ५-५५-६८ (३३९७४)
एतत्सर्वं समाज्ञाय बलाग्र्यं मम भारत ।
न्यूनतां पाण्डवानां च न मोहं गन्तुमर्हसि ॥ ५-५५-६९ (३३९७५)
इत्युक्त्वा सञ्जयं भूयः पर्यपृच्छत भारत ।
विवित्सुः प्राप्तकालानि ज्ञात्वा परपुरञ्जयः ॥ ॥ ५-५५-७० (३३९७६)

इति श्रीमन्महाभारते उद्योगपर्वणि यानसन्धिपर्वणि
पञ्चपञ्चाशत्तशोऽध्यायः ॥

Mahabharata - Udyoga Parva - Chapter Footnotes

५-५५-१८ नः अस्माभिः परेचेत् यद्यपि अभिद्रुग्धाः द्रोहविषयं नीताः तथापि न भेतव्यम् ॥
५-५५-३३ युक्तोऽभियोगवान् । दुःखोषित गुरुकुले ॥

५-५५-३४ उपावसं शिध्यत्वेन पर्यचरम् ।५-५५-५९ हन्यामेति
वदन्तीति शेषः ॥
५-५५-६० तान् संशप्तकान् अलं अर्जुनवधे पर्याप्ता इति मन्यन्ते ॥
५-५५-६७ त्रिगुणतस्त्र्यंशेन हीनम् । त्रिगुणा त्र्यंशेनाधिका ॥
५-५५-७० विवित्सुः विज्ञातुमिच्छुः । प्राप्तकालानि कर्माणि ॥
५-५५- ५-५५- ५-५५- ५-५५-

---

उद्योगपर्व-अध्यय०५६
॥ श्रीः ॥
५.५६. अध्यायः ५६

Mahabharata - Udyoga Parva - Chapter Topics
सञ्जयेन पाण्डवभावं बुभुत्सुं दुर्योधनंप्रति तेषां
युद्धोत्कण्ठाकथनपूर्वकं तद्रथाश्ववर्णनम् ॥ १ ॥

Mahabharata - Udyoga Parva - Chapter Text

५-५६-० (३३९७७)
दुर्योधन उवाच। ५-५६-०क्ष् (३५६३)
अक्षौहिणीः सप्त लब्ध्वा राजभिः सह सञ्जय ।
किंस्विदिच्छति कौन्तेयो युद्धप्रेप्सुर्युधिष्ठिरः ॥ ५-५६-१ (३३९७८)
सञ्जय उवाच। ५-५६-२क्ष् (३५६४)
अतीव मुदितो राजन्युद्धप्रेप्युर्युधिष्ठिरः ।
भीमसेनार्जुनौ चोभौ यमावपि न बिभ्यतः ॥ ५-५६-२ (३३९७९)
रथं तु दिव्यं कौन्तेयः सर्वा विभ्राजयन्दिशः ।
मन्त्रं जिज्ञासमानः सन्बीभत्सुः समयोजयत् ॥ ५-५६-३ (३३९८०)
तमपश्याम सन्नद्धं मेघं विद्युद्युतं यथा ।
समन्तात्समभिध्या हृष्यमाणोऽभ्यभाषत ।
पूर्वरूपमिदं पश्य वयं जेष्याम सञ्जय ॥ ५-५६-४ (३३९८१)
बीभत्सुर्मां यथोवाच तथाऽवैम्यहमप्युत ॥ ५-५६-५ (३३९८२)
दुर्योधन उवाच। ५-५६-६क्ष् (३५६५)
प्रशंसस्यभिनन्दंस्तान्पार्थानक्षपराजितान् ।
अर्जुनस्य रथे ब्रूहि कथमश्वाः कथं ध्वजाः ॥ ५-५६-६ (३३९८३)
सञ्जय उवाच। ५-५६-७क्ष् (३५६६)
भौमनः सह शक्रेण बहुचित्रं विशांपते ।
रूपाणि कल्पयामास त्वष्टा धाता सदा विभो ॥ ५-५६-७ (३३९८४)
ध्वजे हि तस्मिन्रूपाणि चक्रुस्ते देवमायया ।

महाधनानि दिव्यानि महान्ति च लघूनि च ॥५-५६-८ (३३९८५)
भीमसेनानुरोधायक हनूमान्मारुतात्मजः ।
आत्मप्रतिकृतिं तस्मिन्ध्वज आरोपयिष्यति ॥५-५६-९ (३३९८६)
सर्वा दिशो योजनमात्रमन्तरं
सतिर्यगूर्ध्वं च रुरोध वै ध्वजः ।
न संसज्जेत्तरुभिः संवृतोऽपि
तथा हि माया विहिता भौमनेन ॥ ५-५६-१० (३३९८७)
यथाऽऽकाशे शक्रधनुः प्रकाशते
न चैकवर्णं न च वेद्मि किं नु तत् ।
तथा ध्वजो विहितो भौमनेन
बह्वाकारं दृश्यते रूपमस्य ॥ ५-५६-११ (३३९८८)
यथाऽग्निधूमो दिवमेति रुद्ध्वा ।
वर्णान्बिभ्रत्तैजसांश्चित्ररूपान् ।
तथा ध्वजो विहितो भौमनेन
न चेद्भारो भविता नोत रोधः ॥ ५-५६-१२ (३३९८९)
श्वेतास्तस्मिन्वातवेगाः सदश्वा
दिव्या युक्ताश्चित्ररथेन दत्ताः ।
भुव्यन्तरिक्षे दिवि वा नरेन्द्र
येषां गतिर्हीयते नात्र सर्वा ।
शतं यत्तत्पूर्यते नित्यकालं
हतंहतं दत्तवरं पुरस्तात् ५-५६-१३ (३३९९०)
तथा राज्ञो दन्तवर्णा बृहन्तो
रथे युक्ता भान्ति तद्वीर्यतुल्याः ।
ऋक्षप्रख्या भीमसेनस्य वाहा
रथे वायोस्तुल्यवेग बभूवुः ॥ ५-५६-१४ (३३९९१)
कल्माषाङ्गास्तित्तिरिचित्रपृष्ठा
भ्रात्रा दत्ताः प्रीयता फाल्गुनेन ।
भ्रातुर्वीरस्य स्वैस्तुरङ्गैर्विशिष्टा
मुदा युक्ताः सहदेवं वहन्ति ॥ ५-५६-१५ (३३९९२)
माद्रीपुत्रं नकुलं त्वाजमीढं
महेन्द्रदत्ता हरयो वाजिमुख्याः ।
समा वायोर्बलवन्तस्तरस्विनो
वहन्ति वीरं वृत्रशत्रुं यथेन्द्रम् । ५-५६-१६ (३३९९३)
तुल्याश्चैभिर्वयसा विक्रमेण
महाजवाश्चित्ररूपाः सदश्वाः ।
सौभद्रादीन्द्रौपदेयान्कुमारान्

वहन्त्यश्वा देवदत्ता बृहन्तः ॥ ॥ ५-५६-१७ (३३९९४)

इति श्रीमन्महाभारते उद्योगपर्वणि यानसन्धिपर्वणि
षट्पञ्चाशोऽध्यायः ॥

Mahabharata - Udyoga Parva - Chapter Footnotes

५-५६-३ मन्त्रं अस्त्रप्रयोजकं जिज्ञासमानः परीक्षितुमिच्छन् ॥
५-५६-७ भौमनो विश्वकर्मा ।धाता प्रजापतिः ॥
५-५६-८ ते त्वष्टृशक्रधातारः रूपाणि चक्रुः ॥
५-५६-१० रुरोध स्वतेजसेति शेषः ॥
५-५६-१२ भारो रथे रोधुः द्वारादौ द्वयमपि न भवेत् ॥
५-५६-१३ यत्तत् अश्वानां शतं हतंहतं पुनःपुनः
कतिपयाश्वहननेपि भावात् शतं पूर्यते ।यतः पुरस्ताद्दत्तवरम् ॥
५-५६-१७ देवदत्ताः चित्ररथेन दत्ताः ॥

---

उद्योगपर्व-अध्यय०५७
॥ श्रीः ॥
५.५७. अध्यायः ५७

Mahabharata - Udyoga Parva - Chapter Topics

पृष्टेन सञ्जयेन धृतराष्ट्रं प्रति पाण्डवसहायानां
राज्ञां नामनिर्देशपूर्वकं तैः कुरुसेनागतानां स्वस्वदध्यतया
विभजनकथनम् ॥१ ॥
दुर्योधनेन सञ्जयवचनश्रवणेन क्रोशन्तं धृतराष्ट्रमाक्षिप्य
स्वपक्षीयाणां प्रतापप्रशंसनम् ॥२ ॥
पुनस्सञ्जयेन धृष्टद्युम्नदन्त्रोवचनपूर्वकं युद्धनिषेधनम् ॥३ ॥

Mahabharata - Udyoga Parva - Chapter Text

५-५७-० (३३९९५)
धृतराष्ट्र उवाच।५-५७-०क्ष् (३५६७)
कांस्तत्र सञ्जयापश्यः प्रीत्यर्थेन समागतान् ।
ये योत्स्यन्ते पाण्डवार्थे पुत्रस्य मम वाहिनीम् ॥५-५७-१ (३३९९६)
सञ्जय उवाच।५-५७-२क्ष् (३५६८)
मुख्यमन्धकवृष्णीनामपश्यं कृष्णमागतम् ।
चेकितानं च तत्रैव युयुधानं च सात्यकिम् ॥५-५७-२ (३३९९७)
पृथगक्षौहिणीभ्यां तु पाण्डवानभिसंश्रितौ ।

महारथौ समाख्यातावुभौ पुरुषमानिनौ ॥ ५-५७-३ (३३९९८)
अक्षौहिण्याऽथ पाञ्चाल्यो दशभिस्तनयैर्वृतः ।
सत्यजित्प्रमुखैर्वीरैर्धृष्टद्युम्नपुरोगमैः । ५-५७-४ (३३९९९)
द्रुपदो वर्धयन्मानं शिखण्डिपरिपालितः ।
उपायात्सर्वसैन्यानां प्रतिच्छाद्य तदा वपुः ॥ ५-५७-५ (३४०००)
विराटः सह पुत्राभ्यां शङ्खेनैवोत्तरेण च ।
सूर्यदत्तादिभिर्वीरैर्मदिराक्षपुरोगमैः ॥ ५-५७-६ (३४००१)
सहितः पृथिवीपालो भ्रातृभिस्तनयैस्तथा ।
अक्षौहिण्यैव सैन्यानां वृतः पार्थं समाश्रितः ॥ ५-५७-७ (३४००२)
जारासन्धिर्मागधश्च धृष्टकेतुश्च चेदिराट् ।
पृथक्पृथगनुप्राप्तौ पृथगक्षौहिणीवृतौ ॥ ५-५७-८ (३४००३)
केकया भ्रातरः पञ्च सर्वे लोहितकध्वजाः ।
अक्षौहिणीपरिवृताः पाण्डवानभिसंश्रिताः ॥ ५-५७-९ (३४००४)
एतानेतावतस्तत्र तानपश्यं समागतान् ।
ये पाण्डवार्थे योत्स्यन्ति धार्तराष्ट्रस्य वाहिनीम् ॥ ५-५७-१० (३४००५)
यो वेद ग्मानुषं व्यूहं दैवं गान्धर्वमासुरम् ।
स तत्र सेनाप्रमुखे धृषटद्युम्नो महारथः ॥ ५-५७-११ (३४००६)
भीष्मः शान्तनवो राजन्भागः क्लृप्तः शिखण्डिनः
तं विराटोऽनुसंयाता सार्धं मत्स्यैः प्रहारिभिः ॥ ५-५७-१२ (३४००७)
ज्येष्ठस्य पाण्डुपुत्रस्य भागो मद्राधिपो बली ।
तौ तु तत्राब्रुवन्केचिद्विषमौ नो मताविति ॥ ५-५७-१३ (३४००८)
दुर्योधनः सहसुतः सार्धं भ्रातृशतेन च ।
प्राच्याश्च दाक्षिणात्याश्च भीमसेनस्य भागतः ॥ ५-५७-१४ (३४००९)
अर्जुनस्य तु भागेन कर्णो वैकर्तनो मतः ।
अश्वत्थामा विकर्णश्च सैन्धवश्च जयद्रथः ॥ ५-५७-१५ (३४०१०)
अशक्याश्चैव ये केचित्पृथिव्यां शूरमानिनः ।
सर्वांस्तानर्जुनः पार्थः कल्पयामास भागतः ॥ ५-५७-१६ (३४०११)
महेष्वांसा राजपुत्रा भ्रातरः पञ्च केकयाः ।
केकयानेव भागेन कृत्वा योत्स्यन्ति संयुगे ॥ ५-५७-१७ (३४०१२)
तेषामेव कृतो भागो मालवाः साल्वकास्तथा ।
त्रिगर्तानां च वै मुख्यौ यौ तौ संशप्तकाविति ॥ ५-५७-१८ (३४०१३)
दुर्योधनसुताः सर्वे तथा दुःशासनस्य च ।
सौभद्रेण कृतो भागो राजा चैव बृहद्बलः ॥ ५-५७-१९ (३४०१४)
द्रौपदेया महेष्वासाः सुवर्णविकृतध्वजाः ।
धृष्टद्युम्नमुखा द्रोणमभियास्यन्ति भारत ॥ ५-५७-२० (३४०१५)
चेकितानः सोमदत्तं द्वैरथे योद्धुमिच्छति ।

भोजं तु कृतवर्माणं युयुधानो युयुत्सति ॥ ५-५७-२१ (३४०१६)
सहदेवस्तु माद्रेयः शूरः संक्रन्दनो युधि ।
स्वमंशं कल्पयामास श्यालं ते सुबलात्मजम् ॥ ५-५७-२२ (३४०१७)
उलूकं चैव कैतव्यं ये च सारस्वता गणाः ।
नकुलः कल्पयामास भागं माद्रवतीसुतः ॥ ५-५७-२३ (३४०१८)
ये चान्ये पार्थिवा राजन्प्रत्युद्यास्यन्ति सङ्गरे ।
समाह्वानेन तांश्चापि पाण्डुपुत्रा अकल्पयन् ॥ ५-५७-२४ (३४०१९)
एवमेषामनीकानि प्रविभक्तानि भागशः ।
यत्ते कार्यं सपुत्रस्य क्रियतां तदकालिकम् ॥ ५-५७-२५ (३४०२०)
धृतराष्ट्र उवाच। ५-५७-२६क्ष् (३५६९)
न सन्ति सर्वे पुत्रा मे मूढा दुर्द्यूतदेविनः ।
येषां युद्धं बलवता भीमेन रणमूर्धनि ॥ ५-५७-२६ (३४०२१)
राजानः पार्थिवाः सर्वे प्रोक्षिताः कालधर्मणा ।
गाण्डीवाग्निं प्रवेक्ष्यन्ति पतङ्गा इव पावकम् ॥ ५-५७-२७ (३४०२२)
विद्रुतां वाहिनीं मन्ये कृतवैरैर्महात्मभिः ।
तां रणे केऽनुयास्यन्ति प्रभग्नां पाण्डवैर्युधि ॥ ५-५७-२८ (३४०२३)
सर्वे ह्यतिरथाः शूराः कीर्तिमन्तः प्रतापिनः ।
सूर्यपावकयोस्तुल्यास्तेजसा समितिंजयाः ॥ ५-५७-२९ (३४०२४)
येषां युधिष्ठिरो नेता गोप्ता च मधुसूदनः ।
योधौ च पाण्डवौ वीरौ सव्यसाचिवृकोदरौ ॥ ५-५७-३० (३४०२५)
नकुलः सहदेवश्च धृष्टद्युम्नश्च पार्षतः ।
सात्यकिर्द्रुपदश्चैव धृष्टकेतुश्च सानुजः ॥ ५-५७-३१ (३४०२६)
उत्तमौजाश्च पाञ्चाल्यो युधामन्युश्च दुर्जयः ।
शिखण्डी क्षत्रदेवश्च तथा वैराटिरुत्तरः ॥ ५-५७-३२ (३४०२७)
काशयश्चेदयश्चैव मत्स्याः सर्वे च सृञ्जयाः ।
विराटपुत्रो बभ्रुश्च पाञ्चालाश्च प्रभद्रकाः ॥ ५-५७-३३ (३४०२८)
येषांमिन्द्रोऽप्यकामानां न हरेत्पृथिवीमिमाम् ।
वीराणां रणधीराणां ये भिन्द्युः पर्वतानपि ॥ ५-५७-३४ (३४०२९)
तान्सर्वगुणसंपन्नानमनुष्यप्रतापिनः ।
क्रोशतो मम दुष्पुत्रो योद्धुमिच्छति सञ्जय ॥ ५-५७-३५ (३४०३०)
दुर्योधन उवाच। ५-५७-३६क्ष् (३५७०)
उभौ स्व एकजातीयौ तथोभौ भूमिगोचरौ ।
अथ कस्मात्पाण्डवानामेकतो मन्यसे जयम् ॥ ५-५७-३६ (३४०३१)
पितामहं च द्रोणं च कृपं कर्णं च दुर्जयम् ।
जयद्रथं सोमदत्तमश्वत्थामानमेव च ॥ ५-५७-३७ (३४०३२)
सुतेजसो महेष्वासानिन्द्रोऽपि सहितोऽमरैः ।

अशक्तः समरे जेतुं किं पुनस्तात पाण्डवाः ॥ ५-५७-३८ (३४०३३)
सर्वे च पृथिवीपाला मदर्थे तात पाण्डवान् ।
आर्याः शस्त्रभृतः शूराः समर्थाः प्रतिबाधितुं ॥ ५-५७-३९ (३४०३४)
न मामकान्पाण्डवास्ते समर्थाः प्रतिवीक्षितुम् ।
पराक्रान्तो ह्यहं पाण्डून्सपुत्रान्योद्धुमाहवे ॥ ५-५७-४० (३४०३५)
मत्प्रियं पार्थिवाः सर्वे ये चिकीर्षन्ति भारत ।
ते तानावारयिष्यन्ति ऐणेयानिव तन्तुना ॥ ५-५७-४१ (३४०३६)
महता रथवंशेन शरजालैश्च मामकैः ।
अभिद्रुता भविष्यन्ति पाञ्चालाः पाण्डवैः सह ॥ ५-५७-४२ (३४०३७)
धृतराष्ट्र उवाच। ५-५७-४३क्ष् (३५७१)
उन्मत्त इव मे पुत्रो विलपत्येष सञ्जय ।
न हि शक्तो रमे जेतुं धर्मराजं युधिष्ठिरम् ॥ ५-५७-४३ (३४०३८)
जानाति हि यथा भीष्मः पाण्डवानां यशस्विनाम् ।
बलवत्तां सपुत्राणां धर्मज्ञानां महात्मनाम् ॥ ५-५७-४४ (३४०३९)
यतो नारोचयदयं विग्रहं तैर्महात्मभिः ।
किं तु सञ्जय मे ब्रूहि पुनस्तेषां विचेष्टितम् ॥ ५-५७-४५ (३४०४०)
कस्तांस्तरस्विनो भूयः सन्दीपयति पाण्डवान् ।
अर्चिष्मतो महेष्वासान्हविषा पावकानिव ॥ ५-५७-४६ (३४०४१)
सञ्जय उवाच। ५-५७-४७क्ष् (३५७२)
धृष्टद्युम्नः सदैवैतान्सन्दीपयति भारत ।
युद्ध्यध्वमिति माभैष्ट युद्धाद्भरतसत्तमाः ॥ ५-५७-४७ (३४०४२)
ये केचित्पार्थिवास्तत्र धार्तराष्ट्रेण संवृताः ।
युद्धे समागमिष्यन्ति तुमुले शस्त्रसङ्कुले ॥ ५-५७-४८ (३४०४३)
तान्सर्वानाहवे क्रुद्धान्सानुबन्धान्समागतान् ।
अहमेकः समादास्ये तिमिर्यत्स्यानिवोदकात् ॥ ५-५७-४९ (३४०४४)
भीष्मं द्रोणं कृपं कर्णं द्रौणिं शल्यं सुयोधनम् ।
एतांश्चापि निरोत्स्यामि वेलेव मकरालयम् ॥ ५-५७-५० (३४०४५)
तथा ब्रुवन्तं धर्मात्मा प्राह राजा युधिष्ठिरः ।
तव धैर्यं च वीर्यं च पाञ्चालः पाण्डवैः सह ॥ ५-५७-५१ (३४०४६)
सर्वे समधिरूढाः स्म सङ्ग्रामान्नः समुद्धर ।
जानामि त्वां महाबाहो क्षत्रधर्मे व्यवस्थितम् ॥ ५-५७-५२ (३४०४७)
समर्थमेकं पर्याप्तं कौरवाणां विनिग्रहे ।
पुरस्तादुपयातानां कौरवाणां युयुत्सताम् ॥ ५-५७-५३ (३४०४८)
भवत्ता यद्विधातव्यं तन्नः श्रेयः परंतप ।
सङ्ग्रामादपयातानां भग्नानां शरणैषिणाम् ॥ ५-५७-५४ (३४०४९)
पौरुषं दर्शयञ्शूरो यस्तिष्ठेदग्रतः पुमान् ।

क्रीणीयात्तं सहस्रेण इति नीतिमतां मतम् ॥५-५७-५५ (३४०५०)
स त्वं शूरश्च वीरश्च विक्रान्तश्च नरर्षभ ।
भयार्तानां परित्राता संयुगेषु न संशयः ॥५-५७-५६ (३४०५१)
एवं ब्रुवति कौन्तेये धर्मात्मनि युधिष्ठिरे ।
धृष्टद्युम्न उवाचेदं मां वचो गतसाध्वसम् ।
सर्वाञ्जनपदान्सूत योधा दुर्योधनस्य ये ॥ ५-५७-५७ (३४०५२)
सबाह्लिकान्कुरून्ब्रूयाः प्रातिपेयाञ्शरद्वतः ।
सूतपुत्रं तथा द्रोणं सहपुत्रं जयद्रथम् ॥५-५७-५८ (३४०५३)
दुःशासनं विकर्णं च तथा दुर्योधनं नृपम्
भीष्मं च ब्रूहि गत्वा त्वमाशु गच्छ च माचिरम् ॥ ५-५७-५९ (३४०५४)
युधिष्ठिरः साधुनैवाभ्युपेयो
मा वोऽवधीदर्जुनो देवगुप्तः ।
राज्यं दद्धवं धर्मराजस्य तूर्णं
याचध्वं वै पाण्डवं लोकवीरम् ॥ ५-५७-६० (३४०५५)
नैतादृशो हि योधोऽस्ति पृथिव्यामिह कश्चन ।
यथाविधः सव्यसाची पाण्डवः सत्यविक्रमः ॥५-५७-६१ (३४०५६)
देवैर्हि संभृतो दिव्यो रथो गाण्डीवधन्वनः ।
न सजेयोमनुष्येण मा स्म कृद्धवं मनो युधि ॥ ॥५-५७-६२ (३४०५७)

इति श्रीमन्महाभारते उद्योगपर्वणि यानसन्धिपर्वणि
सप्तपञ्चाशत्तमोऽध्यायः ॥
Mahabharata - Udyoga Parva - Chapter Footnotes

५-५७-२५ अकालिकं कालबिलम्बं विना ॥
५-५७-२७ प्रोक्षिताः पशुवद्वधार्थं संस्कृताः ॥
५-५७-४१ ऐणेयान् हरिणशावान् ।तन्तुनापाशेन ॥
५-५७-५८ शरद्वतः आयुष्मतः विरुद्धलक्षणया गतायुष इत्यर्थः ॥
५-५७-६० दद्धं ददत ॥
५-५७-६२ कृद्धवं कुरुध्वम् ॥

---

उद्योगपर्व-अध्यय०५८
॥ श्रीः ॥
५.५८. अध्यायः ५८

Mahabharata - Udyoga Parva - Chapter Topics
धृतराष्ट्रेण युद्धस्य भीष्माद्यनभिमतत्वाभिधाने
दुर्योधनेन भीष्माद्यनपेक्षणेन कर्णदुश्शासनसहायेन स्वेनैव

पाण्डवहननप्रतिज्ञा ॥ १ ॥
पुनर्धृतराष्ट्रेण दुर्योधनगर्हणम् ॥ २ ॥

Mahabharata - Udyoga Parva - Chapter Text

५-५८-० (३४०५८)
धृतराष्ट्र उवाच। ५-५८-०क्ष् (३५७३)
क्षत्रतेजा ब्रह्मचारी कौमारादपि पाण्डवः ।
तेन संयुगमेष्यन्ति मन्दा विलपतो मम ॥ ५-५८-१ (३४०५९)
दुर्योधन निवर्तस्व युद्धाद्भरतसत्तम ।
न हि युद्धं प्रशंसन्ति सर्वावस्थमरिन्दम ॥ ५-५८-२ (३४०६०)
अलमर्धं पृथिव्यास्ते सहामात्यस्य जीवितुम् ।
प्रयच्छ पाण्डुपुत्राणां यथोचितमरिन्दम ॥ ५-५८-३ (३४०६१)
एतद्धि कुरवः सर्वे मन्यन्ते धर्मसंहितम् ।
यत्त्वं प्रशान्तिं मन्येथाः पाण्डुपुत्रैर्महात्मभिः ॥ ५-५८-४ (३४०६२)
अङ्गेमां समवेक्षस्व पुत्र स्वामेव वाहिनीम् ।
जात एष तवाभावस्त्वं तु मोहान्न बुद्ध्यसे ॥ ५-५८-५ (३४०६३)
न त्वहं युद्धमिच्छामि नैतदिच्छति बाह्लिकः ।
न च भीष्मो न च द्रोणो नाश्वत्थामा न सञ्जयः ॥ ५-५८-६ (३४०६४)
न सोमदत्तो न शलो न कृपो युद्धमिच्छति ।
सत्यव्रतः पुरुमित्रो जयो भूरिश्रवास्तथा ॥ ५-५८-७ (३४०६५)
येषु संप्रतितिष्ठेयुः कुरवः पीडिताः परैः ।
ते युद्धं नाभिनन्दन्ति तत्तुभ्यं तात रोचताम् ॥ ५-५८-८ (३४०६६)
न त्वं करोषि कामेन कर्णः कारयिता तव ।
दुःशासनश्च पापात्मा शकुनिश्चापि सौबलः ॥ ५-५८-९ (३४०६७)
दुर्योधन उवाच। ५-५८-१०क्ष् (३५७४)
नाहं भवति न द्रोणे नाश्वत्थाम्नि न सञ्जये ।
न भीष्मे न काम्भोजे न कृपे न च बाह्लिके ॥ ५-५८-१० (३४०६८)
सत्यव्रते पुरुमित्रे भूरिश्रवसि वा पुनः ।
अन्येषु वा तावकेषु भारं कृत्वा समाह्वयम् ॥ ५-५८-११ (३४०६९)
अहं च तात कर्णश्च रणयज्ञं वितत्य वै ।
युधिष्ठिरं पशुं कृत्वा दीक्षितौ भरतर्षभ ॥ ५-५८-१२ (३४०७०)
रथो वेदी स्रुवः खड्गो गदा स्रुक् कवचोऽजिनम् ।
चातुर्होत्रं च धुर्या मे शरा दर्भा हविर्यशः ॥ ५-५८-१३ (३४०७१)
आत्मयज्ञेन नृपते इष्ट्वा वैवस्वतं रणे ।
विजित्य च समेष्यावो हतामित्रौ श्रिया वृतौ ॥ ५-५८-१४ (३४०७२)

अहं च तात कर्णश्च भ्राता दुःशासनश्च मे ।
एते वयं हनिष्यामः पाण्डवान्समरे त्रयः ॥ ५-५८-१५ (३४०७३)
अहं हि पाण्डवान्हत्वा प्रशास्ता पृथिवीमिमाम् ।
मां वा हत्वा पाण्डुपुत्रा भोक्तारः पृथिवीमिमां ॥ ५-५८-१६ (३४०७४)
त्यक्तं मे जीवितं राज्यं धनं सर्वं च पार्थिव ।
न जातु पाण्डवैः सार्धं वसेयमहमच्युत ॥ ५-५८-१७ (३४०७५)
यावद्धि सूच्यास्तीक्ष्णाया विध्येदग्रेण मारिष ।
तावदप्यपरित्याज्यं भूमेर्नः पाण्डवान्प्रति ॥ ५-५८-१८ (३४०७६)
धृतराष्ट्र उवाच। ५-५८-१९क्ष् (३५७५)
सर्वान्वस्तात शोचामि त्यक्तो दुर्योधनो मया ।
ये मन्दमनुयास्यध्वं यान्तं वैवस्वतक्षयम् ॥ ५-५८-१९ (३४०७७)
रुरूणामिव यूथेषु व्याघ्राः प्रहरतां वराः ।
वरान्वरान्हनिष्यन्ति समेता युधि पाण्डवाः ॥ ५-५८-२० (३४०७८)
प्रतीपमिव मे भाति युयुधानेन भारती ।
व्यस्ता सीमन्तिनी ग्रस्ता प्रमृष्टा दीर्घबाहुना ॥ ५-५८-२१ (३४०७९)
संपूर्णं पूरयन्भूयो धनं पार्थस्य माधवः ।
शैनेयः समरे स्थाता बीजवत्प्रवपञ्शरान् ॥ ५-५८-२२ (३४०८०)
सेनामुखे प्रयुद्धानां भीमसेनो भविष्यति ।
तं सर्वे संश्रयिष्यन्ति प्राकारमकुतोभयम् ॥ ५-५८-२३ (३४०८१)
यदा द्रक्ष्यसि भीमेन कुञ्जरान्विनिपातितान् ।
विशीर्णदन्तान्गिर्याभान्भिन्नकुम्भान्सशोणितान् ॥ ५-५८-२४ (३४०८२)
तानभिप्रेक्ष्य सङ्ग्रामे विशीर्णानिव पर्वतान् ।
भीतो भीमस्य संस्पर्शात्स्मर्तासि वचनस्य मे ॥ ५-५८-२५ (३४०८३)
निर्दग्धं भीमसेनेन सैन्यं रथहयद्विपम् ।
गतिमग्नेरिव प्रेक्ष्य स्मर्तासि वचनस्य मे ॥ ५-५८-२६ (३४०८४)
महद्वो भयमागामि न चेच्छाम्यथ पाण्डवैः ।
गदया भीमसेनेन हताः शममुपैष्यथ ॥ ५-५८-२७ (३४०८५)
महावनमिव च्छिन्नं यदा द्रक्ष्यसि पातितम् ।
बलं कुरूणां भीमेन तदा स्मर्तासि मे वचः ॥ ५-५८-२८ (३४०८६)
वैशंपायन उवाच। ५-५८-२९क्ष् (३५७६)
एतावदुक्त्वा राजा तु सर्वांस्तान्पृथिवीपतीन् ।
अनुभाष्य महाराज पुनः पप्रच्छ सञ्जयम् ॥ ॥ ५-५८-२९ (३४०८७)

इति श्रीमन्महाभारते उद्योगपर्वणि यानसन्धिपर्वणि
अष्टपञ्चाशत्तमोऽध्यायः ॥

५-५८-१३ चाचुर्होत्रं चतुर्णां होतॄणां ऋत्विजां समाहारः ॥
५-५८-२१ भारती सेना प्रतीपं व्यस्ता सीमन्तिनीव भाति ॥

---

उद्योगपर्व-अध्यय०५९
॥ श्रीः ॥
५.५९. अध्यायः ५९

Mahabharata - Udyoga Parva - Chapter Topics
पुनः पृष्टेन सञ्जयेन धृतराष्ट्रंप्रति अर्जुनवाक्यकथनम् ॥ १ ॥

Mahabharata - Udyoga Parva - Chapter Text

५-५९-० (३४०८८)
धृतराष्ट्र उवाच। ५-५९-०क्ष् (३५७७)
ब्रूहि सञ्जय यच्छेषं वासुदेवादनन्तरम् ।
यजर्जुन उवाच त्वां परं कौतूहलं हि मे ॥ ५-५९-१ (३४०८९)
सञ्जय उवाच। ५-५९-२क्ष् (३५७८)
वासुदेववचः श्रुत्वा कुन्तीपुत्रो धनञ्जयः ।
उवाच काले दुर्धर्षो वासुदेवस्य शृण्वतः ॥ ५-५९-२ (३४०९०)
पितामहं शान्तनवं धृतराष्ट्रं च सञ्जय ।
द्रोणं कृपं च शल्यं च महाराजं च बाह्लिकम् ॥ ५-५९-३ (३४०९१)
द्रौणिं च सौमदत्तिं च शकुनिं चापि सौबलम् ।
दुश्शासनं शलं चैव पुरुमित्रं विविंशतिम् ॥ ५-५९-४ (३४०९२)
विकर्णं चित्रसेनं च जयत्सेनं च पार्थिवम् ।
विन्दानुविन्दावावन्त्यौ दुर्मुखं चापि पौरवम् ॥ ५-५९-५ (३४०९३)
सैन्धवं दुस्सहं चैव भूरिश्रवसमेव च ।
भगदत्तं च राजानं जलसन्धं च पौरवम् ॥ ५-५९-६ (३४०९४)
ये चाप्यन्ये पार्थिवास्तत्र योद्धुं
समागताः कौरवाणां प्रियार्थम् ।
मुमूर्षवः पाण्डवाग्नौ प्रदीप्ते
समानीता धार्तराष्ट्रोण सूत ॥ ५-५९-७ (३४०९५)
यथान्यायं कुशलं वन्दनं च
समागता मद्वचनेन वाच्याः ॥ ५-५९-८ (३४०९६)
इदं ब्रूवाः सञ्जय राजमध्ये
दुर्योधनं पापकृतां प्रधानम् ।
अमर्षणं दुर्मतिं राजपुत्रं

पापात्मानं धार्तराष्ट्रं सुलुब्धम् ।
सर्वं ममैतद्वचनं समग्रं
सहामात्यं सञ्जय श्रावयेथाः ॥ ५-५९-९ (३४०९७)
एवं परिष्वज्य धनञ्जयो मां
ततोऽर्थवद्धर्मवच्चापि वाक्यम् ।
प्रोवाचेदं वासुदेवं समीक्ष्य
पार्थो धीमाँल्लोहितान्तायताक्षः ॥ ५-५९-१० (३४०९८)
यथाश्रुतं ते वदतो महात्मनो
यदुप्रवीरस्य वचः समाहितम् ।
तथैव वाच्यं भवतापि मद्वचः
समागतेषु क्षितिपेषु सर्वशः ॥ ५-५९-११ (३४०९९)
शराग्निधूमे रथनेमिनादिते
धनुस्स्त्रुवेणास्त्रबलापहारिणा ।
यथा न होमः क्रियते महामृधे
तथा समेत्य प्रयतध्वमादृताः ॥ ५-५९-१२ (३४१००)
न चेत्प्रयच्छध्वममित्रघातिनो
युधिष्ठिरस्यार्धमभीप्सितं स्वकम् ।
नयामि वः साश्वपदातिकुञ्जरा-
न्दिशं पितॄणामशिवां शितैः शरैः ॥ ५-५९-१३ (३४१०१)
ततोऽहमामन्त्र्य चतुर्भुजं हरिं
धनञ्जयं चैव नमस्य सत्वरम् ।
जवेन संप्राप्त इहामरद्युते
तवान्तिकं प्रापयितुं वचो महत् ॥ ॥ ५-५९-१४ (३४१०२)

इति श्रीमन्महाभारते उद्योगपर्वणि यानसन्धिपर्वणि
एकोनषष्टितमोऽध्यायः ॥

---

उद्योगपर्व-अध्यय०६०
॥ श्रीः ॥
५.६०. अध्यायः ६०

Mahabharata - Udyoga Parva - Chapter Topics
धृतराष्ट्रेण दुर्योधनं प्रति स्वपरपक्षयोः बलाबलविमर्शनेन
पाण्डवेषु पुत्रप्रेम्णा धर्मादिदेवानां साहाय्यकरमाभिधानपूर्वकं
स्वस्य शमाभिरोचनवचनम् ॥१ ॥

Mahabharata - Udyoga Parva - Chapter Text

५-६०-० (३४१०३)
वैशंपायन उवाच। ५-६०-०क्ष् (३५७९)
सञ्जयस्य वचः श्रुत्वा प्रज्ञाचक्षुर्जनेश्वरः ।
ततः सङ्ख्यातुमारेभे तद्वचो गुणदोषतः ॥ ५-६०-१ (३४१०४)
प्रसङ्ख्याय च सौक्ष्म्येण गुणदोषान्विचक्षणः ।
यथावन्मतितत्त्वेन जयकामः सुतान्प्रति ॥ ५-६०-२ (३४१०५)
बलाबलं विनिश्चित्य याथातथ्येन बुद्धिमान् ।
ग्यदा तु मेने भूयिष्ठं तद्वचो गुणदोषतः ॥ ५-६०-३ (३४१०६)
पुनरेव कुरूणां च पाण्डवानां च बुद्धिमान् ।
शक्तिं शङ्ख्यातुमारेभे तदा वै मनुजाधिपः ॥ ५-६०-४ (३४१०७)
देवमानुषयोः शक्त्या तेजसा चैव पाण्डवान् ।
कुरूञ्शक्त्याऽल्पतरया दुर्योधनमथाब्रवीत् ॥ ५-६०-५ (३४१०८)
दुर्योधनेयं चिन्ता मे शश्वन्न व्युपशाम्यति ।
सत्यं ह्येतदहं मन्ये प्रत्यक्षं नानुमानतः ॥ ५-६०-६ (३४१०९)
आत्मजेषु परं स्नेहं सर्वभातिनि कुर्वते ।
प्रियामि चैषां कुर्वन्ति यथाशक्ति हितानि च ॥ ५-६०-७ (३४११०)
एवमेवोपकर्तॄणां प्रायशो लक्षयामहे ।
इच्छन्ति बहुलं सन्तः प्रतिकर्तुं महत्प्रियम् ॥ ५-६०-८ (३४१११)
अग्निः साचिव्यर्ता स्यात्खाण्डवे तत्कृतं स्मरन् ।
अर्जुनस्यापि भीमेऽस्मिन्कुरुपाण्डुसमागमे ॥ ५-६०-९ (३४११२)
जातिगृद्ध्याऽभिपन्नाश्च पाण्डवानामनेकशः ।
धर्मादयः समेष्यन्ति समाहूता दिवौकसः ॥ ५-६०-१० (३४११३)
भीष्मद्रोणकृपादीनां भयादशनिसन्निभम् ।
रिरक्षिषन्तः संरभ्यं गमिष्यन्तीति मे मतिः ॥ ५-६०-११ (३४११४)
ते देवैः सहिताः पार्था न शक्याः प्रतिवीक्षितुम् ।
मानुषेण नरव्याघ्रा वीर्यवन्तोऽस्त्रपारगाः ॥ ५-६०-१२ (३४११५)
दुरासदं यस्य दिव्यं गाण्डीवं धनुरुत्तमम् ।
वारुणौ चाक्षयौ दिव्यौ शरपूर्णौ महेषुधी ॥ ५-६०-१३ (३४११६)
वानरश्च ध्वजे दिव्यो निःसङ्गे धूमवद्गतिः ।
रथश्च चतुरन्तायां यस्य नास्ति समः क्षितौ ॥ ५-६०-१४ (३४११७)
महामेघनिभश्चापि निर्घोषः श्रूयते जनैः ।
महाशनिसमः शब्दःत शात्रवाणां भयंकरः ॥ ५-६०-१५ (३४११८)
यं चातिमानुषं वीर्ये कृत्स्नो लोको व्यवस्यति ।
देवानामपि जेतारं यं विदुः पार्थिवा रणे ॥ ५-६०-१६ (३४११९)
शतानि पञ्च चैवेषून्यो गृह्णन्नैव दृश्यते ।

निमेषान्तरमात्रेण मुञ्चन्दूरं च पातयन् ॥ ५-६०-१७ (३४१२०)
यमाह भीष्मो द्रोणश्च कृपो द्रौणिस्तथैव च ।
मद्रराजस्तथा शल्यो मध्यस्था ये च मानवाः ॥ ५-६०-१८ (३४१२१)
युद्धायावस्थितं पार्थं पार्थिवैरतिमानुषैः ।
अशक्यं रथशार्दूलं पराजेतुमरिंदमम् ॥ ५-६०-१९ (३४१२२)
क्षिपत्येकेन वेगेन पञ्चबाणशतानि यः ।
सदृशं बाहुवीर्येण कार्तवीर्यस्य पाण्डवम् ॥ ५-६०-२० (३४१२३)
तमर्जुनं महेष्वासं महेन्द्रोपेन्द्रविक्रमम् ।
निघ्नन्तमिव पश्यामि विमर्देऽस्मिन्महाहवे ॥ ५-६०-२१ (३४१२४)
इत्येवं चिन्तयन्कृत्स्नमहोरात्राणि भारत ।
अनिद्रो निःसुखश्चास्मि कुरूणां शमचिन्तया ॥ ५-६०-२२ (३४१२५)
क्षयोदयोऽयं सुमहान्कुरूणां प्रत्युपस्थितः ।
अस्य चेत्कलहन्यान्तः शमादन्यो न विद्यते ॥ ५-६०-२३ (३४१२६)
शमो मे रोचते नित्यं पार्थैस्तात न विग्रहः ।
कुरुभ्यो हि सदा मन्ये पाण्डवाञ्शक्तिमत्तरान् ॥ ॥ ५-६०-२४ (३४१२७)

इति श्रीमन्महाभारते उद्योगपर्वणि यानसन्धिपर्वणि षष्टितमोऽध्यायः ॥

Mahabharata - Udyoga Parva - Chapter Footnotes

५-६०-५ शक्त्या परिच्छिद्येति शेषः ॥
५-६०-९ भीमे भयंकरे ॥
५-६०-१० जातिगृद्ध्या जन्मग्रहणाद्धेतोः युधिष्ठिरादीनां पितरो धर्मादयोपि तेषां सहायाः सन्ति ॥

---

उद्योगपर्व-अध्यय०६१
॥ श्रीः ॥
५.६१. अध्यायः ६१

Mahabharata - Udyoga Parva - Chapter Topics

दुर्योधनेन सहेतुकं पाण्डवानां देवैः साहाय्यकरणपक्षप्रतिक्षेपः ॥ १ ॥
तथा जलस्तम्भनादिस्वसामर्थ्यभिधानपूर्वकं स्वेन पाण्डवपराजयकरणाभिधानम् ॥ २ ॥

Mahabharata - Udyoga Parva - Chapter Text

५-६१-० (३४१२८)

वैशंपायन उवाच। ५-६१-०क्ष् (३५८०)
पितुरेतद्वचः श्रुत्वा धार्तराष्ट्रोऽत्यमर्षणः ।
आधाय विपुलं क्रोधं पुनरेवेदमब्रवीत् ॥ ५-६१-१ (३४१२९)
अशक्या देवसचिवाः पार्थाः स्युरिति यद्भवान् ।
मन्यते तद्भयं व्येतु भवतो राजसत्तम ॥ ५-६१-२ (३४१३०)
अकामद्वेषसंयोगाल्लोभद्रोहाच्च भारत ।
उपेक्षया च भावानां देवा देवत्वमाप्नुवन् ॥ ५-६१-३ (३४१३१)
इति द्वैपायेनो व्यासो नारदश्च महातपाः ।
जामदग्न्यश्च रामो नः कथामकथयत्पुरा ॥ ५-६१-४ (३४१३२)
नैव मानुषवद्देवाः प्रवर्तन्ते कदाचन ।
कामात्क्रोधात्तथा लोभाद्द्वेषाच्च भरतर्षभ ॥ ५-६१-५ (३४१३३)
यदा ह्यग्निश्च वायुश्च धर्म इन्द्रोऽश्विनावपि ।
कामयोगात्प्रवर्तेरन्न पार्था दुःखमाप्नुयुः ॥ ५-६१-६ (३४१३४)
तस्मान्न भवता चिन्ता कार्यैषा स्यात्कथंचन ।
दैवेष्वपेक्षका ह्येते शश्वद्भावेषु भारत ॥ ५-६१-७ (३४१३५)
अथ चेत्कामसंयोगाद्द्वेषो लोभश्च लक्ष्यते ।
देवेषु दैवप्रामाण्यान्नैषां तद्विक्रमिष्यति ॥ ५-६१-८ (३४१३६)
मयाऽभिमन्त्रतः शश्वज्जातवेदाः प्रशाम्यति ।
दिधक्षुः सकलाँल्लोकान्परिक्षिप्य समन्ततः ॥ ५-६१-९ (३४१३७)
यद्वा परमकं तेजो येन युक्ता दिवौकसः ।
ममाप्यनुपमं भूयो देवेभ्यो विद्धि भारत ॥ ५-६१-१० (३४१३८)
विदीर्यमाणां वसुधां गिरीणां शिखराणि च ।
लोकस्य पश्यतो राजन्स्थापयाम्यभिमन्त्रणात् ॥ ५-६१-११ (३४१३९)
चेतनाचेतनस्यास्य जङ्गमस्थावरस्य च ।
विनाशाय समुत्पन्नमहं घोरं महास्वनम् ॥ ५-६१-१२ (३४१४०)
अश्मवर्षं च वायुं च शमयामीह नित्यशः ।
जगतः पश्यतोऽभीक्ष्णं भूतानामनुकम्पया ॥ ५-६१-१३ (३४१४१)
स्तम्भितास्वप्सु गच्छन्ति मया रथपदातयः ।
देवासुराणां भावानामहमेकः प्रवर्तिता ॥ ५-६१-१४ (३४१४२)
अक्षौहिणीभिर्यान्देशान्यामि कार्येण केनचित् ।
तत्रापो मे प्रवर्तन्ते यत्र यत्राभिकामये ॥ ५-६१-१५ (३४१४३)
भयानकानि विषये व्यालादीनि न सन्ति मे ।
मन्त्रगुप्तानि भूतानि न हिंसन्ति यंकराः ॥ ५-६१-१६ (३४१४४)
निकामवर्षी पर्जन्यो राजन्विषयवासिनाम् ।
धर्मिष्ठाश्च प्रजाः सर्वा ईतयश्च न सन्ति मे ॥ ५-६१-१७ (३४१४५)
अश्विनावथ वाय्वग्नी मरुद्भिः सह वृत्रहा ।

धर्मश्चैव मया द्विष्टान्नोत्सहन्तेऽभिरक्षितुम् ॥ ५-६१-१८ (३४१४६)
यदि ह्येते समर्थाः स्युर्मद्द्विषस्त्रातुमञ्जसा ।
न स्म त्रयोदश समाः पार्था दुःखमवाप्नुयुः ॥ ५-६१-१९ (३४१४७)
नैव देवा न गन्धर्वा नासुरा न च राक्षसाः ।
शक्तास्त्रातुं मया द्विष्टं सत्यमेतद्ब्रवीमि ते ॥ ५-६१-२० (३४१४८)
दयभिध्याम्यहं शश्वच्छुभं वा यदि वाऽशुभम् ।
नैतद्विपन्नपूर्वं मे मित्रेष्वरिषु चोभयोः ॥ ५-६१-२१ (३४१४९)
भविष्यतीदमिति वा यद्ब्रवीमि परन्तप ।
नान्यथा भूतपूर्वं च सत्यवागिति मां विदुः ॥ ५-६१-२२ (३४१५०)
लोकसाक्षिकमेतन्मे माहात्म्यं दिक्षु विश्रुतम् ।
आश्वासनार्थं भवतः प्रोक्तं न श्लाघया नृप ॥ ५-६१-२३ (३४१५१)
न ह्यहं श्लाघनो राजन्भूतपूर्वः कदाचन ।
असदाचरितं ह्येतद्यदात्मानं प्रशंसति ॥ ५-६१-२४ (३४१५२)
पाण्डवांश्चैव मत्स्यांश्च पाञ्चालान्केकयैः सह ।
सात्यकिं वासुदेवं च श्रोतासि विजितान्मया ॥ ५-६१-२५ (३४१५३)
सरितः सागरं प्राप्य यथा नश्यन्ति सर्वशः ।
तथैव ते विनङ्क्ष्यन्ति मामासाद्य सहान्वयाः ॥ ५-६१-२६ (३४१५४)
परा बुद्धिः परं तेजो वीर्यं च परमं मम ।
परा विद्या परो योगो मम तेभ्यो विशिष्यते ॥ ५-६१-२७ (३४१५५)
पितामहश्च द्रोणश्च कृपः शल्यः शलस्तथा ।
अस्त्रेषु यत्प्रजानन्ति सर्वं तन्मयि विद्यते ॥ ५-६१-२८ (३४१५६)
इत्युक्ते सञ्जयं भूयः पर्यपृच्छत भारत ।
ज्ञात्वा युयुत्सोः कार्याणि प्राप्तकालमरिन्दमः ॥ ॥ ५-६१-२९ (३४१५७)

इति श्रीमन्महाभारते उद्योगपर्वणि यानसन्धिपर्वणि
एकषष्टितमोऽध्यायः ॥
Mahabharata - Udyoga Parva - Chapter Footnotes

५-६१-३ अकामेति कामद्वेषयोरसंयोगात् । लोभद्रोहात् लोभे द्रोहकरणात्,
लोभत्यागादित्यर्थः ॥
५-६१-७ एते देवाः दैवेषु भावेषु शमदमादिषु शश्वदपेक्षका
उपक्षेमाणः नत्वासुरेषु कामक्रोधादिषु ॥
५-६१-८ कामादिमता कृतमपि निष्फलं भविष्यतीत्यर्थः ॥
५-६१-२९ अभिध्यामि चिन्तयामि ॥

---

उद्योगपर्व-अध्यय०६२
॥ श्रीः ॥

## ५.६२. अध्यायः ६२

Mahabharata - Udyoga Parva - Chapter Topics

कर्णेन धृतराष्ट्रमनादृत्य पाण्डवहननप्रतिज्ञानम् ॥ १ ॥
तथा भीष्माधिक्षिप्तेन तेन युद्धे भीष्मशमनावधि शस्त्रन्यासं प्रतिज्ञाय स्वभवनगमनम् ॥ २ ॥
भीष्मेण प्रत्यहं अयुतयोधवधप्रतिज्ञा ॥ ३ ॥

Mahabharata - Udyoga Parva - Chapter Text

५-६२-० (३४१५८)
वैशंपायन उवाच। ५-६२-०क्ष् (३५८१)
तथा तु पृच्छन्तमतीव पार्थं
वैचित्रवीर्यं तमचिन्तयित्वा ।
उवाच कर्णो धृतराष्ट्रपुत्रं
प्रहर्षयन्संसदि कौरवाणाम् ॥ ५-६२-१ (३४१५९)
मिथ्या प्रतिज्ञाय मया यदस्त्रं
रामात्कृतं ब्रह्ममयं पुरस्तात् ।
विज्ञाय तेनास्मि तदैवमुक्त-
स्ते नान्तकाले प्रतिभास्यतीति ॥ ५-६२-२ (३४१६०)
महापराधे ह्यपि यन्न तेन
महर्षिणाऽहं गुरुणा च शप्तः ।
शक्तः प्रदग्धुं ह्यपि तिग्मतेजाः
ससागरामप्यवनिं महर्षिः ॥ ५-६२-३ (३४१६१)
प्रसादितं ह्यस्य मया मनोऽभू-
च्छुश्रूषया स्वेन च पौरुषेण
तदस्ति चास्त्रं मम सावशेषं
तस्मात्समर्थोऽस्मि ममैष भारः ॥ ५-६२-४ (३४१६२)
निमेषमात्रात्तमृषेः प्रसाद-
मवाप्य पाञ्चालकरूशमत्स्यान् ।
निहत्य पार्थान्सह पुत्रपौत्रै-
र्लोकानहं शस्त्रजितान्प्रपत्स्ये ॥ ५-६२-५ (३४१६३)
पितामहस्तिष्ठतु ते समीपे
द्रोणश्च सर्वे च नरेन्द्रमुख्याः ।
ऋषिप्रसादेन बलेन गत्वा
पार्थान्हनिष्यामि ममैष भारः ॥ ५-६२-६ (३४१६४)

एवं ब्रुवन्तं तमुवाच भीष्मः
किं कत्थसे कालपरीतबुद्धे ।
न कर्ण जानासि यथा प्रधाने
हते हताः स्युर्धृतराष्ट्रपुत्राः ॥ ५-६२-७ (३४१६५)
यत्खाण्डवं दाहयता कृतं हि
कृष्णद्वितीयेन धनञ्जयेन ।
श्रुत्वैव तत्कर्म नियन्तुमात्मा
युक्तस्त्वया वै सहबान्धवेन ॥ ५-६२-८ (३४१६६)
यां चापि शक्तिं त्रिदशाधिपस्ते
ददौ महात्मा भगवान्महेन्द्रः ।
भस्मीकृतां तां समरे विशीर्णां
चक्राहतां द्रक्ष्यसि केशवेन ॥ ५-६२-९ (३४१६७)
यस्ते शरः सर्पमुखो विभाति
सदाऽग्र्यमाल्यैर्महितः प्रयत्नात् ।
स पाण्डुपुत्राभिहतः शरौघैः
सह त्वया यास्यति कर्ण नाशम् ॥ ५-६२-१० (३४१६८)
बाणस्य भौमस्य च कर्ण हन्ता
किरीटिनं रक्षति वासुदेवः ।
यस्त्वादृशानां च वरीयसां च
हन्ता रिपूणां तुमुले प्रगाढे ॥ ५-६२-११ (३४१६९)
कर्ण उवाच। ५-६२-१२क्ष् (३५८२)
असंशयं वृष्णिपतिर्यथोक्त-
स्तथा च भूयांश्च ततो महात्मा ।
अहं यदुक्तः परुषं तु किंचि-
त्पितामहस्तस्य फलं शृणोतु ॥ ५-६२-१२ (३४१७०)
न्यस्यामि शस्त्राणि न जातु सङ्ख्ये
पितामहो द्रक्ष्यति मां सभायाम् ।
त्वयि प्रशान्ते तु मम प्रभावं
द्रक्ष्यन्ति सर्वे भुवि भूमिपालाः ॥ ५-६२-१३ (३४१७१)
वैशंपायन उवाच। ५-६२-१४क्ष् (३५८३)
इत्येवमुक्त्वा स महाधनुष्मान्
हित्वा सभां स्वं भवनं जगाम ।
भीष्मस्तु दुर्योधनमेव राजन्
मध्ये कुरूणां प्रहसन्नुवाच ॥ ५-६२-१४ (३४१७२)
सत्यप्रतिज्ञः किल सूतपुत्र-
स्तथा कस भारं विषहेत कस्मात् ।

व्यूहं प्रतिव्यूह्य शिरांसि भित्त्वा
लोकक्षयं पश्यत भीमसेनात् ॥ ५-६२-१५ (३४१७३)
आवन्त्यकालिङ्गजयद्रथेषु
चेदिध्वजे तिष्ठति बाह्लिके च ।
अहं हनिष्यामि सदा परेषां
सहस्रशश्चायुतशश्च योधान् ॥ ५-६२-१६ (३४१७४)
यदैव रामे भगवत्यनिन्द्ये
ब्रह्मब्रुवाणः कृतवांस्तदस्त्रम् ।
तदैव धर्मश्च तपश्च नष्टं
वैकर्तनस्याधमपूरुषस्य ॥ ५-६२-१७ (३४१७५)
वैशंपायन उवाच। ५-६२-१८क्ष् (३५८४)
तथोक्तवाक्ये नृपतीन्द्र भीष्मे
निक्षिप्य शस्त्राणि गते च कर्णे ।
वैचित्रवीर्यस्य सुतोऽल्पबुद्धि-
र्दुर्योधनः शान्तनवं बभाषे ॥ ॥ ५-६२-१८ (३४१७६)

इति श्रीमन्महाभारते उद्योगपर्वणि यानसन्धिपर्वणि
द्विषष्टितमोऽध्यायः ॥
Mahabharata - Udyoga Parva - Chapter Footnotes

५-६२-१ तथेति पार्थं पृच्छन्तं वैचित्रवीर्यं अचिन्तयित्वेति
संबन्धः ॥
५-६२-४ सावशेषं मम आयुरस्ति
। अतोऽन्तकालस्यानुपस्थितत्वात्तदस्त्रं ममास्तीति अहं समर्थोऽस्मि
अर्जुनं जेतुमित्यर्थः ॥
५-६२-५ प्रपत्स्ये प्रापयिष्ये ॥
५-६२-७ प्रधाने त्वयि हते सति सर्वे हताः स्युरत आत्मानं
गोपायेत्युपहासः ॥
५-६२-१७ ब्रह्मब्रुवाणः ब्राह्मणोऽहमिति वदन् ॥

---

उद्योगपर्व-अध्यय०६३
॥ श्रीः ॥
५.६३. अध्यायः ६३

Mahabharata - Udyoga Parva - Chapter Topics
दुर्योधनेन भीष्माभिमतपाण्डवजयपक्षप्रतिक्षेपः ॥ १ ॥

तथा भीष्मादिनैरपेक्ष्येण कर्णादुश्शासनसङ्गतेन आत्मनैव पाण्डवनिधनप्रतिज्ञा ॥ २ ॥
विदुरेण दमप्रशंसनम् ॥ ३ ॥

Mahabharata - Udyoga Parva - Chapter Text

५-६३-० (३४१७७)
दुर्योधन उवाच। ५-६३-०क्ष् (३५८५)
सदृशानां मनुष्येषु सर्वेषां तुल्यजन्मनाम् ।
कथमेकान्ततस्तेषां पार्थानां मन्यसे जयम् ॥ ५-६३-१ (३४१७८)
वयं च तेऽपि तुल्या वै वीर्येण च पराक्रमैः ।
समेन वयसा चैव प्रातिभेन श्रुतेन च ॥ ५-६३-२ (३४१७९)
अस्त्रेण योधयुग्या च शीघ्रत्वे कौशले तथा ।
सर्वे स्म समजातीयाः सर्वे मानुषयोनयः ॥ ५-६३-३ (३४१८०)
पितामह विजानीषे पार्थेषु विजयं कथम् ।
नाहं भवति न द्रोणे न कृपे न च बाह्लिके ॥ ५-६३-४ (३४१८१)
अन्येषु च नरेन्द्रेषु पराक्रम्य समारभे ।
अहं वैकर्तनः कर्णो भ्राता दुःशासनश्च मे ॥ ५-६३-५ (३४१८२)
पाण्डवान्समरे पञ्च हनिष्यामः शितैः शरैः ।
ततो राजन्महायज्ञैर्विविधैर्भूरिदक्षिणैः ॥ ५-६३-६ (३४१८३)
ब्राह्मणांस्तर्पयिष्यामि गोभिरश्वैर्धनेन च ।
यदा परिकरिष्यन्ति ऐणेयानिव तन्तुना ।
अतरित्रानिव जले बाहुभिर्मामका रणे ॥ ५-६३-७ (३४१८४)
पश्यन्तस्ते परांस्तत्र रथनागसमाकुलान् ।
तदा दर्पं विमोक्ष्यन्ति पाण्डवाः स च केशवः ॥ ५-६३-८ (३४१८५)
ग्सुखान्यवाप्य सहिताः कृत्वा कर्म सुदुस्तरम् ।
विस्रब्धास्तु भविष्यामः प्राप्ते काले गतज्वराः ॥ ५-६३-९ (३४१८६)
वैशंपायन उवाच। ५-६३-१०क्ष् (३५८६)
अथाब्रवीन्महाराजो धृतराष्ट्रः सुदुर्मनाः ।
विदुरं विदुषां श्रेष्ठं सर्वपार्थिवसंनिधौ ॥ ५-६३-१० (३४१८७)
धृतराष्ट्र उवाच। ५-६३-११क्ष् (३५८७)
मोहितो मृत्युपाशेन कालस्य वशमागतः ।
तात कर्णेन सहितः पुत्रो दुर्योधनो मम ॥' ५-६३-११ (३४१८८)
विदुर उवाच। ५-६३-१२क्ष् (३५८८)
इह निःश्रेयसं प्राहुर्वृद्धा निश्चितदर्शिनः ।
ब्राह्मणस्य विशेषेण दमो धर्मः सनातनः ॥ ५-६३-१२ (३४१८९)

तस्य दानं क्षमा सिद्धिर्यथावदुपपद्यते ।
दमो दानं तपो ज्ञानमधीतं चानुवर्तते ॥ ५-६३-१३ (३४१९०)
दमस्तेजो वर्धयति पवित्रं दम उत्तमम् ।
विपाप्मा वृद्धतेजास्तु पुरुषो विन्दते महत् ॥ ५-६३-१४ (३४१९१)
क्रव्याद्भ्य इव भूतानामदान्तेभ्यः सदा भयम् ।
येषां च प्रतिषेधार्थं क्षत्रं सृष्टं स्वयंभुवा ॥ ५-६३-१५ (३४१९२)
आश्रमेषु चतुर्ष्वाहुर्दममेवोत्तमं व्रतम् ।
तस्य लिङ्गं प्रवक्ष्यामि येषां समुदयो दमः ॥ ५-६३-१६ (३४१९३)
क्षमा धृतिरहिंसा च समता सत्यमार्जवम् ।
इन्द्रियाभिजयो धैर्यं मार्दवं ह्रीरचापलम् ॥ ५-६३-१७ (३४१९४)
अकार्पण्यमसंरम्भः सन्तोषं श्रद्दधानता ।
एतानि यस्य राजेन्द्र स दान्तः पुरुषः स्मृतः ॥ ५-६३-१८ (३४१९५)
कामो लोभश्च दर्पश्च मन्युर्निद्रा विकत्थनम् ।
मान ईर्ष्या च शोकश्च नैतद्दान्तो निषेवते ।
अजिह्ममशठं शुद्धमेतद्दान्तस्य लक्षणम् ॥ ५-६३-१९ (३४१९६)
अलोलुपस्तथाऽल्पेप्सुः कामानामविचिन्तिता ।
समुद्रकल्पः परुषः स दान्तः परिकीर्तितः ॥ ५-६३-२० (३४१९७)
सुवृत्तः शीलसंपन्नः प्रसन्नात्माऽत्मविद्बुधः ।
प्राप्येह लोके संमानं सुगतिं प्रेत्य गच्छति ॥ ५-६३-२१ (३४१९८)
अभयं यस्य भूतेभ्यः सर्वेषामभयं यतः ।
स वै परिणतप्रज्ञः प्रख्यातो मनुजोत्तमः ॥ ५-६३-२२ (३४१९९)
सर्वभूतहितो मैत्रस्तस्मान्नोद्विजते जनः ।
समुद्र इव गम्भीरः प्रज्ञातृप्तः प्रशाम्यति ॥ ५-६३-२३ (३४२००)
कर्मणाऽचरितं पूर्वं सद्भिराचरितं च यत् ।
तदेवास्थाय मोदन्ते दान्ताः शमपरायणाः ॥ ५-६३-२४ (३४२०१)
नैष्कर्म्यं वा समास्थाय ज्ञानतृप्तो जितेन्द्रियः ।
कालाकाङ्क्षी चरँल्लोके ब्रह्मभूयाय कल्पते ॥ ५-६३-२५ (३४२०२)
शकुनीनामिवाकाशे पदं नैवोपलभ्यते ।
एवं प्रज्ञानतृप्तस्य मुनेर्वर्त्म न दृश्यते ॥ ५-६३-२६ (३४२०३)
उत्सृज्यैव गृहान्यस्तु मोक्षमेवाभिमन्यते ।
लोकास्तेजोमयास्तस्य कल्पन्ते शाश्वता दिवि ॥ ॥ ५-६३-२७ (३४२०४)

इति श्रीमन्महाभारते उद्योगपर्वणि यानसन्धिपर्वणि
त्रिषष्टितमोऽध्यायः ॥

Mahabharata - Udyoga Parva - Chapter Footnotes

५-६३-२ प्रातिभेन समयस्फूर्त्या ॥
५-६३-३ योधयुग्या शूरसमृद्ध्या ॥
५-६३-७ तरित्रा नौरक्षकाः कर्णधारादयः तद्गहितान् तद्वत् मामकास्तान् रणे बाहुभ्यां परिहरिष्यन्ति ॥
५-६३-१६ समुदयः उदयहेतु ॥

---

उद्योगपर्व-अध्यय०६४
॥ श्रीः ॥
५.६४. अध्यायः ६४

Mahabharata - Udyoga Parva - Chapter Topics
विदुरेण शकुनिदृष्टान्तेन ज्ञातिभिर्विरोधस्यानर्थहेतुत्वकथनम् ॥ १ ॥
तथा किरातदृष्टान्तप्रदर्शनेन अत्याशाया अनर्थहेतुताकथनम् ॥ २ ॥
तथा युद्धे जयपराजययोरव्यवस्थिततत्वाभिधानम् ॥ ३ ॥

Mahabharata - Udyoga Parva - Chapter Text

५-६४-० (३४२०५)
विदुर उवाच। ५-६४-०क्ष् (३५८९)
शकुनीनामिहार्थाय पाशं भूमावयोजयत् ।
कश्चिच्छाकुनिकस्तात पूर्वेषामिति शुश्रुम् ॥ ५-६४-१ (३४२०६)
तस्मिंस्तौ शकुनौ बद्धौ युगपत्सहचारिणौ ।
तावुपादाय तं पाशं जग्मतुः खचरावुभौ ॥ ५-६४-२ (३४२०७)
तौ विहायसमाक्रान्तौ दृष्ट्वा शाकुनिकस्तदा ।
अन्वधावदनिर्विण्णो येन येन स्म गच्छतः ॥ ५-६४-३ (३४२०८)
तथा तमनुधावन्तमृगयुं शकुनार्थिनम् ।
आश्रमस्थो मुनिः कश्चिद्ददर्शाथ कृताह्निकः ॥ ५-६४-४ (३४२०९)
तावन्तरिक्षगौ शीघ्रमनुयान्तं महीचरम् ।
श्लोकेनानेन कौरव्य पप्च्छ स मुनिस्तदा ॥ ५-६४-५ (३४२१०)
विचित्रमिदमाश्चर्यं मृगहन्प्रतिभाति मे ।
प्लवमानौ हि खचरौ पदातिरनुधावसि ॥ ५-६४-६ (३४२११)
शाकुनिक उवाच। ५-६४-७क्ष् (३५९०)
पाशमेकमुभावेतौ सहितौ हरतो मम ।
यत्र वै विवदिष्येते तत्र मे वशमेष्यतः ॥ ५-६४-७ (३४२१२)
विदुर उवाच। ५-६४-८क्ष् (३५९१)
तौ विवादमनुप्राप्तौ शकुनौ मृत्युसन्धितौ ।

विगृह्य च सुदुर्बुद्धी पृथिव्यां संनिपेततुः ॥ ५-६४-८ (३४२१३)
तौ युध्यमानौ संरब्धौ मृत्युपाशवशानुगौ ।
उपसृत्य प्रमत्तौ तौ जग्राह मृगहा तदा ॥ ५-६४-९ (३४२१४)
एवं ये ज्ञातयोऽर्थेषु मिथो गच्छन्ति विग्रहम् ।
ते मृत्युवशमायान्ति शकुनाविव विग्रहात् ॥ ५-६४-१० (३४२१५)
संभोजनं संकथनं संप्रश्नोऽथ समागमः ।
एतानि ज्ञातिकार्याणि न विरोधः कदाचन ॥ ५-६४-११ (३४२१६)
ये स्म काले सुमनसः सर्वे वृद्धानुपासते ।
सिंहगुप्तमिवारण्यमप्रधृष्या भवन्ति ते ॥ ५-६४-१२ (३४२१७)
येऽर्थं सन्ततमासाद्य दीना इव समासते ।
श्रियं ते संप्रयच्छन्ति द्विषद्भ्यो भरतर्षभ ॥ ५-६४-१३ (३४२१८)
धूमायन्ते व्यपेतानि ज्वलन्ति सहितानि च ।
धृतराष्ट्रोल्मुकानीव ज्ञातयो भरतर्षभ ॥ ५-६४-१४ (३४२१९)
इदमन्यत्प्रवक्ष्यामि यथा दृष्टं गिरौ मया ।
श्रुत्वा तदपि कौरव्य यथा श्रेयस्तथा कुरु ॥ ५-६४-१५ (३४२२०)
वयं किरातैः सहिता गच्छामो गिरिमुत्तरम् ।
ब्राह्मणैर्देवकल्पैश्च विद्याजम्भकवार्तिकैः ॥ ५-६४-१६ (३४२२१)
कुञ्चभूतं गिरिं सर्वमभितो गन्धमादनम् ।
दीप्यमानौषधिगणं सिद्धगन्धर्वसेवितम् ॥ ५-६४-१७ (३४२२२)
तत्रापश्याम वै सर्वे मधु पीतकमाक्षिकम् ।
मरुप्रपाते विषमे निविष्टं कुम्भसंमितम् ॥ ५-६४-१८ (३४२२३)
आशीविषै रक्ष्यमाणं कुबेरदयितं भृशम् ।
यत्प्राप्य पुरुषो मर्त्योऽप्यमरत्वं नियच्छति ॥ ५-६४-१९ (३४२२४)
अचक्षुर्लभते चक्षुर्वृद्धो भवति वै युवा ।
इति ते कथयन्तिस्म ब्राह्मणा जम्भसाधकाः ॥ ५-६४-२० (३४२२५)
ततः किरातास्तद्दृष्ट्वा प्रार्थयन्तो महीपते ।
विनेशुर्विषमे तस्मिन्ससर्पे गिरिगह्वरे ॥ ५-६४-२१ (३४२२६)
तथैव तव पुत्रोऽयं पृथिवीमेक इच्छति ।
मधु पश्यति संमोहात्प्रपातं नानुपश्यति ॥ ५-६४-२२ (३४२२७)
दुर्योधनो योद्धुमनाः समरे सव्यसाचिना ।
न च पश्यामि तेजोस्य विक्रमं वा तथाविधम् ॥ ५-६४-२३ (३४२२८)
एकेन रथमास्थाय पृथिवी येन निर्जिता ।
भीष्मद्रोणप्रभृतयः सन्त्रस्ताः साधुयायिनः ॥ ५-६४-२४ (३४२२९)
विराटनगरे भग्नाः किं तत्र तव दृश्यताम् ।
प्रतीक्षमाणो यो वीरः क्षमते वीक्षितं तव ॥ ५-६४-२५ (३४२३०)
द्रुपदो मत्स्यराजश्च सङ्क्रुद्धश्च धनञ्जयः ।

न शेषयेयुः समरे वायुयुक्ता इवाग्नयः ॥ ५-६४-२६ (३४२३१)
अङ्के कुरुष्व राजानं धृतराष्ट्र युधिष्ठिरम् ।
युध्यतोर्हि द्वयोर्युद्धे नैकान्तेन भवेज्जयः ॥ ॥ ५-६४-२७ (३४२३२)

इति श्रीमन्महाभारते उद्योगपर्वणि यानसन्धिपर्वणि
चतुःषष्टितमोऽध्यायः ॥
Mahabharata - Udyoga Parva - Chapter Footnotes

५-६४-१६ विद्याजम्भकवार्तिकाः । विद्या मन्त्रयन्त्रादिरूपा। जम्भक
औषधसाधनानि तद्वार्ताप्रियाः ॥
५-६४-१७ कुञ्जभूतं सर्वतो लताभिः परिवृतम् ॥

---

उद्योगपर्व-अध्यय०६५
॥ श्रीः ॥
५.६५. अध्यायः ६५

Mahabharata - Udyoga Parva - Chapter Topics
धृतराष्ट्रेण दुर्योधनंप्रति अर्जुनस्य
श्रीकृष्णपरमप्रेमास्पदतया दुर्जयत्वभिधानपूर्वकं पाण्डवैः
सह सन्धिविधानम् ॥ १ ॥

Mahabharata - Udyoga Parva - Chapter Text

५-६५-० (३४२३३)
धृतराष्ट्र उवाच। ५-६५-०क्ष् (३५९२)
दुर्योधन विजानीहि यत्त्वां वक्ष्यामि पुत्रक ।
उत्पथं मन्यसे मार्गमनभिज्ञ इवाध्वगः ॥ ५-६५-१ (३४२३४)
पञ्चानां पाण्डुपुत्राणां यत्तेजः प्रजिहीर्षसि ।
पञ्चानामिव भूतानां महतां लोकधारिणाम् ॥ ५-६५-२ (३४२३५)
युधिष्ठिरं हि कौन्तेयं परं धर्ममिहास्थितम् ।
परां गतिमसंप्रेत्य न त्वं जेतुमिहार्हसि ॥ ५-६५-३ (३४२३६)
भीमसेनं च कौन्तेयं यस्य नास्ति समो बले ।
रणान्तकं तर्जयसे महावातमिव द्रुमः ॥ ५-६५-४ (३४२३७)
सर्वशस्त्रभृतां श्रेष्ठं मेरुं सिखरिणामिव ।
युधि गाण्डिवधन्वानं को नु युध्येत बुद्धिमान् ॥ ५-६५-५ (३४२३८)
धृष्टद्युम्नश्च पाञ्चाल्यः कमिवाद्य न शातयेत् ।
शत्रुमध्ये शरान्मुञ्चन्देवराडशनीमिव ॥ ५-६५-६ (३४२३९)

सात्यकिश्चापि दुर्धर्षः संमतोऽन्धकवृष्णिषु ।
ध्वंसयिष्यति ते सेनां पाण्डवेयहिते रतः ॥ ५-६५-७ (३४२४०)
यः पुनः प्रतिमानेन त्रींल्लोकानतिरिच्यते ।
तं कृष्णं पुण्डरीकाक्षं को नु युद्ध्येत बुद्धिमान् ॥ ५-६५-८ (३४२४१)
एकतो ह्यस्य दाराश्च ज्ञातयश्च सबान्धवाः ।
आत्मा च पृथिवी चेयमेकतश्च धनञ्जयः ॥ ५-६५-९ (३४२४२)
वासुदेवोऽपि दुर्धर्षो यतात्मा यत्र पाण्डवः ।
अविषह्यं पृथिव्यापि तद्बलं यत्र केशवः ॥ ५-६५-१० (३४२४३)
तिष्ठ तात सतां वाक्ये सुहृदामर्थवादिनाम् ।
वृद्धं शान्तनवं भीष्मं तितिक्षस्व पितामहम् ॥ ५-६५-११ (३४२४४)
मां च ब्रुवाणं शुश्रूष कुरूणामर्थदर्शिनम् ।
द्रोणं कृपं विकर्णं च महाराजं च बाह्लिकम् ॥ ५-६५-१२ (३४२४५)
एते ह्यपि यतैवाहं मन्तुमर्हसि तांस्तथा ।
सर्वे धर्मविदो ह्येते तुल्यस्नेहाश्च भारत ॥ ५-६५-१३ (३४२४६)
यत्तद्विराटनगरे सह भ्रातृभिरग्रतः ।
उत्सृज्य गाः सुसन्त्रस्तं बलं ते समशीर्यत ॥ ५-६५-१४ (३४२४७)
यच्चैव नगरे तस्मिञ्श्रूयते महदद्भुतम् ।
एकस्य च बहूनां च पर्याप्तं तन्निदर्शनम् ॥ ५-६५-१५ (३४२४८)
अर्जुनस्तत्तथाकार्षीत्किं पुनः सर्व एव ते ।
स भ्रातॄनभिजानीहि वृत्त्या तं प्रतिपादय ॥ ॥ ५-६५-१६ (३४२४९)

इति श्रीमन्महाभारते उद्योगपर्वणि यानसन्धिपर्वणि
पञ्चषष्टितमोऽध्यायः ॥

Mahabharata - Udyoga Parva - Chapter Footnotes

५-६५-१ उत्पथं अमार्गमेव मार्गं त्वन्यसे ॥
५-६५-६ न शातयेत् न छिन्द्यात् ॥
५-६५-८ प्रतिमानेन तुल्यत्वेन ॥
५-६५-११ भीष्मं तितिक्षस्य तद्वाक्यं गृहाणेत्यर्थः ॥
५-६५-१६ वृत्त्या राज्यार्धदानेन प्रतिपादय संभावय ॥

---

उद्योगपर्व-अध्यय०६६
॥ श्रीः ॥
५.६६. अध्यायः ६६

Mahabharata - Udyoga Parva - Chapter Topics
दुर्योधनेन धृतराष्ट्रवत्तनानभिनन्दने राज्ञां निर्गमनम् ॥ १ ॥

धृतराष्ट्रेण स्वपरसेनयोः सारासारकथनचोदितेन सञ्जयेन व्यासगान्धारीसन्निधौ कथनकथनम् ॥ २ । श्रीव्यासेन सञ्जयंप्रति धृतराष्ट्रप्रश्नस्योत्तरदानाभ्यनुज्ञानम् ॥ ३ ।
Mahabharata - Udyoga Parva - Chapter Text

५-६६-० (३४२५०)
वैशंपायान उवाच। ५-६६-०क्ष् (३५९३)
दुर्योधने धार्तराष्ट्रे तद्वचो नाभिनन्दति ।
तूष्णींभूतेषु सर्वेषु समुत्तस्थुर्नरर्षभाः ॥ ५-६६-१ (३४२५१)
उत्थितेषु महाराज पृथिव्यां सर्वराजसु ।
रहिते सञ्जयं राजा परिप्रष्टुं प्रचक्रमे ॥ ५-६६-२ (३४२५२)
आशंसमानो विजयं तेषां पुत्रवशानुगः ।
आत्मनश्च परेषां च पाण्डवानां च निश्चयम् ॥ ५-६६-३ (३४२५३)
धृतराष्ट्र उवाच। ५-६६-४क्ष् (३५९४)
गावल्गणे ब्रूहि नः सारफल्गु
स्वेसनायं यावदिहास्ति किंचित् ।
त्वं पाण्डवानां निपुणं वेत्थ सर्वं
किमेषां ज्यायः किमु तेषां कनीयः ॥ ५-६६-४ (३४२५४)
त्वमेतयोः सारवित्सर्वदर्शी
धर्मार्थयोर्निपुणो निश्चयज्ञः ।
स मे पृष्टः सञ्जय ब्रूहि सर्वं
युध्यमानाः कतरेऽस्मिन्न सन्ति ॥ ५-६६-५ (३४२५५)
सञ्जय उवाच। ५-६६-६क्ष् (३५९५)
न त्वां ब्रूयां रहिते जातु किंचि-
दसूया हि त्वां प्रविशेत राजन् ।
आनयस्व पितरं महाव्रतं
गान्धारीं च महिषीमाजमीढ ॥ ५-६६-६ (३४२५६)
तो तेऽसूयां विनयेतां नरेन्द्र
धर्मज्ञौ तौ निपुणौ निश्चयज्ञौ ।
तयोस्तु त्वां सन्निधौ तद्वदेयं
कृत्स्नं मतं केशवपार्थयोर्यत् ॥ ५-६६-७ (३४२५७)
वैशंपायन उवाच। ५-६६-८क्ष् (३५९६)
इत्युक्तेन च गान्धारी व्यासश्चात्राजगामह ।
आनीतौ विदुरेणेह सभां शीघ्रं प्रवेशितौ ॥ ५-६६-८ (३४२५८)
ततस्तन्मतमाज्ञाय सञ्जयस्यात्मजस्य च ।
अभ्युपेत्य महाप्राज्ञः कृष्णद्वैपायनोऽब्रवीत् ॥ ५-६६-९ (३४२५९)

व्यास उवाच। ५-६६-१०क्ष् (३५९७)
संपृच्छते धृतराष्ट्राय सञ्जय
आचक्ष्व सर्वं यावदेषोऽनुयुङ्क्ते ।
सर्वं यावद्वेत्थ तस्मिन्यथाव-
द्याथातथ्यं वासुदेवेऽर्जुने च ॥ ॥ ५-६६-१० (३४२६०)

इति श्रीमन्महाभारतो उद्योगपर्वणि यानसन्धिपर्वणि
षट्षष्टितमोऽध्यायः ॥
Mahabharata - Udyoga Parva - Chapter Footnotes

५-६६-३ परेषां तटस्थानाम् ॥
५-६६-५ युध्यमाना न सन्ति उदासीना इत्यर्थः ॥
५-६६-६ पितरं व्यासम् ॥

---

उद्योगपर्व-अध्यय०६७
॥ श्रीः ॥
५.६७. अध्यायः ६७

Mahabharata - Udyoga Parva - Chapter Topics
सञ्जयेन धृतराष्ट्रंप्रति सारभूतात्सर्वस्मादपि श्रीकृष्णस्य
सारतरत्वकथनम् ॥ १ ॥

Mahabharata - Udyoga Parva - Chapter Text

५-६७-० (३४२६१)
सञ्जय उवाच। ५-६७-०क्ष् (३५९८)
अर्जुनो वासुदेवश्च धन्विनौ परमार्थितौ ।
कामादन्यत्र संभूतौ सर्वभावाय संमितौ ॥ ५-६७-१ (३४२६२)
व्यामान्तरं समास्थय यथामुक्तं मनस्विनः ।
चक्रं तद्वासुदेवस्य मायया वर्तते विभो ॥ ५-६७-२ (३४२६३)
सापह्नवं कौरवेषु पाण्डवानां सुसंमतम् ।
सारासारबलं ज्ञातुं तेजःपुञ्जावभासितम् ॥ ५-६७-३ (३४२६४)
नरकं शम्बरं चैव कंसं चैद्यं च माधवः ।
जितवान्घोरसङ्काशान्क्रीडन्निव महाबलः ॥ ५-६७-४ (३४२६५)
पृथिवीं चान्तरिक्षं च द्यां चैव पुरुषोत्तमः ।
मनसैव विशिष्टात्मा नयत्यात्मवशं वशी ॥ ५-६७-५ (३४२६६)
भूयो भूयो हि यद्राजन्पृच्छसे पाण्डवान्प्रति ।

सारासारबलं ज्ञातुं तत्समासेन मे शृणु ॥ ५-६७-६ (३४२६७)
एकतो वा जगत्कृत्स्नमेकतो वा जनार्दनः ।
सारतो जगतः कृत्स्नादतिरिक्तो जनार्दनः ॥ ५-६७-७ (३४२६८)
भस्म कुर्याज्जगदिदं मनसैव जनार्दनः ।
न तु कृत्स्नं जगच्छक्तं किञ्चित्कर्तुं जनार्दने ॥ ५-६७-८ (३४२६९)
यतः सत्यं यतो धर्मो यतो ह्रीरार्जवं यतः ।
ततो भवति गोविन्दो यतः कृष्णस्ततो जयः ॥ ५-६७-९ (३४२७०)
पृथिवीं चान्तरिक्षं च दिवं च पुरुषोत्तमः ।
विचेष्टयति भूतात्मा क्रीडन्निव जनार्दनः ॥ ५-६७-१० (३४२७१)
स कृत्वा पाण्डवान्सत्रं लोकं संमोहयन्निव ।
अधर्मनिरतान्मूढान्दग्धुमिच्छति ते सुतान् ॥ ५-६७-११ (३४२७२)
कालचक्रं जगच्चक्रं युगचक्रं च केशवः ।
आत्मयोगेन भगवान्परिवर्तयतेऽनिशम् ॥ ५-६७-१२ (३४२७३)
कालस्य च हि मृत्योश्च जङ्गमस्थावरस्य च ।
ईष्टे हि भगवानेकः सत्यमेतद्ब्रवीमि ते ॥ ५-६७-१३ (३४२७४)
ईशन्नपि महायोगी सर्वस्य जगतो हरिः ।
कर्माण्यारभते कर्तुं कीनाश इव दुर्बलः ॥ ५-६७-१४ (३४२७५)
तेन वञ्चयते लोकान्मायायोगेन केशवः ।
ये तमेव प्रपद्यन्ते न ते मुह्यन्ति मानवाः ॥ ॥ ५-६७-१५ (३४२७६)

इति श्रीमन्महाभारते उद्योगपर्वणि यानसन्धिपर्वणि
सप्तषष्टितमोऽध्यायः ॥

Mahabharata - Udyoga Parva - Chapter Footnotes

५-६७-२ व्यामान्तरं प्रसारितयोर्हस्तयोर्यावान्विस्तारः पञ्चहस्तमितः
तावत् अन्तरं मध्यप्रमाणं यस्य तद्व्यामान्तरम् । यथामुक्तं यथा
यथारूपं यावत्प्रमाणं चिन्तितं तावत्प्रमाणं भूत्वा यत् मुक्तं
भवति। मायया दुर्लक्ष्यरूपेणेत्यर्थः ॥
५-६७-३ सापह्नवं ससंहारम् । अत एव पाण्डवानां सुसंमतम् ॥
५-६७-११ सत्रं व्याजम् । सत्रमाच्छादने यज्ञे सदादाने च कैतवे
इति विश्वः ॥
५-६७-१४ ईसन्नपि ईशानोपि । कीनाश कर्षकः ॥

---

उद्योगपर्व-अध्यय०६८
॥ श्रीः ॥
५.६८. अध्यायः ६८

Mahabharata - Udyoga Parva - Chapter Topics
भगवद्वेदनसाधनं पृष्टेन सञ्जयेन धृतराष्ट्रंप्रति
तत्कथनम् ॥ १ ॥
श्रीव्यासेन धृतराष्ट्रंप्रति सञ्जयाद्भगवद्वेदनाभ्यनुज्ञा ॥ २ ॥

Mahabharata - Udyoga Parva - Chapter Text

५-६८-० (३४२७७)
धृतराष्ट्र उवाच। ५-६८-०क्ष् (३५९९)
कथं त्वं माधवं वेत्थ सर्वलोकमहेश्वरम् ।
कथमेनं न वेदाहं तन्ममाचक्ष्व सञ्जय ॥ ५-६८-१ (३४२७८)
सञ्जय उवाच। ५-६८-२क्ष् (३६००)
श्रृणु राजन्न ते विद्या मम विद्या न हीयते ।
विद्याहीनस्तमोध्वस्तो नाभिजानाति केशवम् ॥ ५-६८-२ (३४२७९)
विद्यया तात जानामि त्रियुगं मधुसूदनम् ।
कर्तारमकृतं देवं भूतानां प्रभवाप्ययम् ॥ ५-६८-३ (३४२८०)
धृतराष्ट्र उवाच। ५-६८-४क्ष् (३६०१)
गावल्गणेऽत्र का भक्तिर्या ते नित्या जनार्दने ।
यया त्वमभिजानासि त्रियुगं मधुसूदनम् ॥ ५-६८-४ (३४२८१)
सञ्जय उवाच। ५-६८-५क्ष् (३६०२)
मायां न सेवे भद्रं ते न वृथाधर्ममाचरे ।
शुद्धभावं गतो भक्त्या शास्त्राद्वेद्मि जनार्दनम् ॥ ५-६८-५ (३४२८२)
धृतराष्ट्र उवाच। ५-६८-६क्ष् (३६०३)
दुर्योधन हृषीकेशं प्रपद्यस्व जनार्दनम् ।
आप्तो नः सञ्जयस्तात शरणं गच्छ केशवम् ॥ ५-६८-६ (३४२८३)
दुर्योधन उवाच। ५-६८-७क्ष् (३६०४)
भगवान्देवकीपुत्रो लोकांश्चेन्निहनिष्यति ।
प्रवदन्नर्जुने सख्यं नाहं गच्छेऽद्य केशवम् ॥ ५-६८-७ (३४२८४)
धृतराष्ट्र उवाच। ५-६८-८क्ष् (३६०५)
अवाग्गान्धारि पुत्रस्ते गच्छत्येष सुदुर्मतिः ।
ईर्षुर्दुरात्मा मानी च श्रेयसां वचनातिगः ॥ ५-६८-८ (३४२८५)
गान्धार्युवाच। ५-६८-९क्ष् (३६०६)
ऐश्वर्यकाम दुष्टात्मन्वृद्धानां शासनातिग ।
ऐश्वर्यजीतिते हित्वा पितरं मां च बालिश ॥ ५-६८-९ (३४२८६)
वर्धयन्दुर्हृदां प्रीतिं मां च शोकेन वर्धयन् ।
निहतो भीमसेनेन स्मर्तासि वचनं पितुः ॥ ५-६८-१० (३४२८७)

व्यास उवाच। ५-६८-११क्ष् (३६०७)
प्रियोऽसि राजन्कृष्णस्य धृतराष्ट्र निबोध मे ।
यस्य ते सञ्जयो दूतो यस्त्वां श्रेयसि योक्ष्यते ॥ ५-६८-११ (३४२८८)
जानात्येष हृषीकेशं पुराणं यच्च वै परम् ।
शुश्रूषमाणमैकाग्र्यं मोक्ष्यते महतो भयात् ॥ ५-६८-१२ (३४२८९)
वैचित्रवीर्य पुरुषाः क्रोधहर्षसमावृताः ।
सिता बहुविधैः पाशैर्ये न तुष्टाः स्वकैर्धनैः ॥ ५-६८-१३ (३४२९०)
यमस्य वशमायान्ति काममूढाः पुनः पुनः ।
अन्धनेत्रा यथैवान्धा नीयमानाः स्वकर्मभिः ॥ ५-६८-१४ (३४२९१)
एष एकायनः पन्था येन यान्ति मनीषिणः ।
तं दृष्ट्वा मृत्युमत्येति महांस्तत्र न सज्जति ॥ ५-६८-१५ (३४२९२)
धृतराष्ट्र उवाच। ५-६८-१६क्ष् (३६०८)
अङ्ग सञ्जय मे शंस पन्थानमकुतोभयम् ।
येन गत्वा हृषीकेशं प्राप्नुयां सिद्धिमुत्तमाम् ॥ ५-६८-१६ (३४२९३)
सञ्जय उवाच। ५-६८-१७क्ष् (३६०९)
नाकृतात्मा कृतात्मानं जातु विद्याज्जनार्दनम् ।
आत्मनस्तु क्रियोपायो नान्यत्रेन्द्रियनिग्रहात् ॥ ५-६८-१७ (३४२९४)
इन्द्रियाणामुदीर्णानां कामत्यागोऽप्रमादतः ।
अप्रमादोऽविहिंसा च ज्ञानयोनिरसंशयम् ॥ ५-६८-१८ (३४२९५)
इन्द्रियाणां यमे यत्तो भव राजन्नतन्द्रितः ।
बुद्धिश्च ते मा च्युवतु नियच्छैनां यतस्ततः ॥ ५-६८-१९ (३४२९६)
एतज्ज्ञानं विदुर्विप्रा ध्रुवमिन्द्रियधारणम् ।
एतज्ज्ञानं च पन्थाश्च येन यान्ति मनीषिणः ॥ ५-६८-२० (३४२९७)
अप्राप्यः केशवो राजन्निन्द्रियैरजितैर्नृभिः ।
आगमाधिगमाद्योगाद्वशी तत्त्वे प्रसीदति ॥ ॥ ५-६८-२१ (३४२९८)

इति श्रीमन्महाभारते उद्योगपर्वणि यानसन्धिपर्वणि
अष्टषष्टितमोऽध्यायः ॥

Mahabharata - Udyoga Parva - Chapter Footnotes

५-६८-४ भक्तिः आराध्यत्वेन ज्ञानं एच्च कीदृशम् ॥
५-६८-५ वृथाधर्मं भगवदर्पणं विना न चरामि । शुद्धभावं
मनसः कामक्रोधादिराहित्येन नैर्मल्यम् ॥
५-६८-१२ ऐकाग्र्यं शुश्रूषमाणं सेवमानं त्वां मोक्ष्यते मोचयिष्यति ॥
५-६८-१३ सिताः बद्धाः । पाशैः कामादिभिः ॥
५-६८-१४ अन्धनेत्रा अन्धश्चासौ नेता च तेन ॥

५-६८-१७ आत्मनः स्वस्य इन्द्रियनिग्रहादन्यत्र इन्द्रियनिग्रहंविना क्रियायागादिरूपा उपायः प्राप्त्युपायो नास्ति ॥
५-६८-२१ योगात् चित्तवृत्तिनिरोधात् । वशी ईश्वरः। तत्त्वे स्वयाथात्म्ये विषये। प्रसीदति ज्ञानदानेन अनुगृह्णाति ॥

---

उद्योगपर्व-अध्यय०६९
॥ श्रीः ॥
५.६९. अध्यायः ६९

Mahabharata - Udyoga Parva - Chapter Topics
सञ्जयेन धृतराष्ट्रंप्रति वासुदेवादिभगवन्नामनिर्वचनम् ॥ १ ॥
तथा सन्ध्यर्थं श्रीकृष्णागमनकथनम् ॥ २ ॥

Mahabharata - Udyoga Parva - Chapter Text

५-६९-० (३४२९९)
धृतराष्ट्र उवाच। ५-६९-०क्ष् (३६१०)
भूयो मे पुण्डरीकाक्षं सञ्जयाचक्ष्व पृच्छतः ।
नामकर्मार्थवित्तात प्राप्नुयां पुरुषोत्तमम् ॥ ५-६९-१ (३४३००)
सञ्जय उवाच। ५-६९-२क्ष् (३६११)
श्रुतं मे वासुदेवस्य नामनिर्वचनं शुभम् ।
यावत्तत्राभिजानेऽहमप्रमेयो हि केशवः ॥ ५-६९-२ (३४३०१)
वसनात्सर्वभूतानां वसुत्वाद्देवयोनितः ।
वासुदेवस्ततो वेद्यो बृहत्त्वाद्विष्णुरुच्यते ॥ ५-६९-३ (३४३०२)
मौनाद्ध्यानाच्च योगाच्च विद्धि भारत माधवम् ।
सर्वतत्त्वलयाच्चैव मधुहा मधुसूदनः ॥ ५-६९-४ (३४३०३)
कृषिर्भूवाचकः शब्दो गश्च निर्वृतिवाचकः ।
विष्णुस्तद्भावयोगाच्च कृष्णो भवति सात्वतः ॥ ५-६९-५ (३४३०४)
पुण्डरीकं परं धाम नित्यमक्षयमव्ययम् ।
तद्भावात्पुण्डरीकाक्षो दस्युत्रासाज्जानार्दनः ॥ ५-६९-६ (३४३०५)
यतः सत्वं न च्यवते यच्च यत्वान्न हीयते ।
सात्वतः सात्वतस्तस्मादार्षभाद्वृषभेक्षणः ॥ ५-६९-७ (३४३०६)
न जायते जनित्राऽयमजस्तस्मादनीकजित् ।
देवानां स्वप्रकाशत्वाद्दमाद्दामोदरो विभुः ॥ ५-६९-८ (३४३०७)
हर्षात्सुखात्सुखैश्वर्याद्धृषीकेशत्वमश्नुते ।
बाहुभ्यां रोदसी बिभ्रन्महाबाहुरिति स्मृतः ॥ ५-६९-९ (३४३०८)

अघो न क्षीयते जातु यस्मात्तस्मादधोक्षजः ।
नराणामयनाच्चापि ततो नारायणः स्मृतः ॥ ५-६९-१० (३४३०९)
पूरणात्सदनाच्चापि ततोऽसौपुरुषोत्तमः ।
असतश्च सतश्चैव सर्वस्य प्रभवाप्ययात् ।
सर्वस्य च सदा ज्ञानात्सर्वमेतं प्रचक्षते ॥ ५-६९-११ (३४३१०)
सत्ये प्रतिष्ठितः कृष्णः सत्यमत्र प्रतिष्ठितम् ।
सत्यात्सत्यं तु गोविन्दस्तस्मात्सत्योपि नामतः ॥ ५-६९-१२ (३४३११)
विष्णुर्विक्रमणाद्देवो जयनाज्जिष्णुरुच्यते ।
शाश्वतत्वादनन्तश्च गोविन्दो वेदनाद्गवाम् ॥ ५-६९-१३ (३४३१२)
अतत्त्वं कुरुते तत्त्वं तेन मोहयते प्रजाः ॥ ५-६९-१४ (३४३१३)
एवंविधो धर्मनित्यो भगवान्मधुसूदनः ।
आगन्ता हि महाबाहुरानृशंस्यार्थमच्युतः ॥ ॥ ५-६९-१५ (३४३१४)

इति श्रीमन्महाभारते उद्योगपर्वणि तयानसन्धिपर्वणि
ऊनसप्ततितमोऽध्यायः ॥

Mahabharata - Udyoga Parva - Chapter Footnotes

५-६९-२ यावदभिजाने तावत् । वदामीति शेषः। वस्तुतस्तु सः अप्रमेयः ॥
५-६९-३ वसत्यस्मिन् भुवनमिति वासुः दीर्घश्छान्दसः । स चासौ
देवश्च वासुदेवः । बृहत्त्वाद्व्यापकत्वात् वेवेष्टि व्याप्नोति सर्वमिति
विष्णुः। वृषत्वादिष्णुरपच्यते इति ख्रो पाठः। वृषत्वात्
अभीष्टसेन्नकत्वात् इति रत्नगर्भः ॥
५-६९-४ मौनं मुनेः कर्म मननं । मौनं च ध्यानं च ताभ्यां
विषयतया युक्तो माधवः। सर्वतत्तवानि पृथिव्यादयो विषयाः। तेच
सुखसाधनतया मधुशब्देनोक्ताः। तेषां लयात् संहर्तृत्वात् मधुहा
मधुसूदनश्चेति नामद्वयम् ॥
५-६९-५ कृषिरितिशब्दो भूवाचकः कृष्यते सस्यार्थमिति व्युत्पत्त्या
। भूमिलोकस्थाप्राणिसुखस्य यो भाव उत्पादनं तत्कर्तृत्वात्कृष्णो
भवति ॥
५-६९-६ पुण्डरीकं हृदयकमलं धाम वासस्थानं तत्र
सन्नपि अक्षो न क्षीयते हन्यते वेति पुण्डरीकाक्षः
। तथाच श्रुतिर्नाच जरयैतज्जीर्यति न
वधेनास्य हन्यत इति हृत्पद्म। दोषैर्जरानाशादिभिः
परमात्मनोऽस्पृष्टत्वमाह। दस्युत्रासात् जनं दस्युजनं अर्दयति
पीडयतीति जनार्दन इत्यर्थः ॥
५-६९-७ सत्त्वं बलं । आर्षं वेदस्तेन भातीत्यार्षभ औपनिषदः

पुरुषः। उपनिषद्वेद्यत्वाद्योगात् वृषभेक्षणः। तथाचायं योगः
वृषं धर्मं भासयतीति वृषभो वेदस्तदेव ईक्षणं चक्षुरिव
ज्ञापकं यस्य सः वृषभेक्षण इति ॥
५-६९-८ जनित्रा पित्रा न जायत इत्यजः ।अनीकजित्सेनाजित्
कृष्णः। देवानां स्वप्रकाशत्वात्। ऋगतावित्यस्मादुत्पूर्वात् अप्। उत्
उत्कर्षेण ऋच्छति प्रकाशत इति उदरः। दमोस्यास्तीति दामः
दामश्चासावुदरश्चेति दामोदरः ॥
५-६९-९ हर्षात् हृषिः सुखात्कं सुखैश्वर्यादीशः
।महीति च्छान्दसं रोदस्योर्नाम। मह्यौ बाह्वोर्यस्य स
तथा। ईकाराकारश्छान्दसः ॥
५-६९-१० जातुशब्दार्थे जकारः ॥
५-६९-११ पुरयतीति पुरुः ।सीदन्त्यस्मिन्निति सः तस्मात्पुरुषः
स चासावुत्तमश्च पुरुषोत्तमः ।असतःक कारणस्म
सतः कार्यस्य प्रभवाप्ययात् उत्पत्तिप्रलयस्थानचात्
सर्वशब्दस्तत्प्रभवाप्ययहेतावुपचारात्प्रवर्तते ॥
५-६९-१२ सत्ये धर्मे ॥
५-६९-१३ विशेषेण क्रमणात् व्यापनान् ।एवं जयतीति जिष्णुः
शाश्वतत्वात् शश्वद्भवत्वात्। गवामिन्द्रियाणां वेदनात् प्रकाशात्
गोविन्दः ॥
५-६९-१५ धर्मे नित्यं सन्निधानात् धर्मनित्यः आगन्ता आगमिष्यति
।आनृशंस्यमहिंसा कुरुपाण्डवयोः तदर्थम् ॥

---

उद्योगपर्व-अध्यय०७०
॥ श्रीः ॥
५.७०. अध्यायः ७०

Mahabharata - Udyoga Parva - Chapter Topics
श्रीकृष्णागमनश्रवणहृष्टेन धृतराष्ट्रेण
चक्षुष्मत्प्रशंसनपूर्वकं श्रीकृष्णनुणानुवर्णनम् ॥१ ॥

Mahabharata - Udyoga Parva - Chapter Text

५-७०-० (३४३१५)
धृतराष्ट्र उवाच। ५-७०-०क्ष् (३६१२)
चक्षुष्मतां वै स्पृहयामि सञ्जय
द्रक्ष्यन्ति ये वासुदेवं समीपे ।

विभ्राजमानं वपुषा परेण
प्रकाशयन्तं प्रदिशो दिशश्च ॥ ५-७०-१ (३४३१६)
ईरयन्तं भारतीं भारताना-
मभ्यर्चनीयां शङ्करीं सृञ्जयानाम् ।
बुभूषद्भिर्ग्रहणीयामनिन्द्यां
परासूनामग्रहणीयरूपाम् ॥ ५-७०-२ (३४३१७)
समुद्यन्तं सात्वतमेकवीरं
प्रणेतारमृषभं यादवानाम् ।
निहन्तारं क्षोभणं शात्रवाणां
मुञ्चन्तं च द्विषतां वै यशांसि ॥ ५-७०-३ (३४३१८)
द्रष्टारो हि कुरवस्तं समेता
महात्मानं शत्रुहणं वरेण्यम् ।
ब्रुवन्तं वाचमनृशंसरूपां
वृष्णिश्रेष्ठं मोहयन्तं मदीयान् ॥ ५-७०-४ (३४३१९)
ऋषिं सनातनतमं विपश्चितं
वाचःसमुद्रं कलशं यतीनाम् ।
अरिष्टनेमिं गरुडं सुपर्णं
हरिं प्रजानां भुवनस्य धाम ॥ ५-७०-५ (३४३२०)
सहस्रशीर्षं पुरुषं पुराण-
मनादिमध्यान्तमनन्तकीर्तिम् ।
शुक्रस्य धातारमजं च नित्यं
परं परेषां शरणं प्रपद्ये ॥ ५-७०-६ (३४३२१)
त्रैलोक्यनिर्माणकरं जनित्रं
देवासुराणामथ नागरक्षसाम् ।
नराधिपानां विदुषां प्रधान-
मिन्द्रानुजं तं शरणं प्रपद्ये ॥ ॥ ५-७०-७ (३४३२२)

इति श्रीमन्महाभारते उद्योगपर्वणि यानसन्धिपर्वणि सप्ततितमोऽध्यायः ॥
Mahabharata - Udyoga Parva - Chapter Footnotes

५-७०-१ चक्षुष्मतां भाग्याय स्पृहयामि ॥
५-७०-५ अरिष्टः अहिंसितः नेमिः पादो यस्य सः अरिष्टनेमिः ॥
५-७०-७ निर्माणं रचना ।जनित्रं जनयितारम् ॥
५-७०-

---

उद्योगपर्व-अध्यय०७१
॥ श्रीः ॥

५.७१. अध्यायः ७१

Mahabharata - Udyoga Parva - Chapter Topics
युधिष्ठिरेण श्रीकृष्णंप्रति सन्ध्यर्थं
हास्तिनपुरगामनप्रार्थनासूचकवचनोपन्यासः ॥ १ ॥
श्रीकृष्णेन तत्र स्वस्य गमनकथनम् ॥ २ ॥

Mahabharata - Udyoga Parva - Chapter Text

५-७१-० (३४३२३)
ग जनमेजय उवच। ५-७१-०क्ष् (३६१३)
प्रयाते सञ्जये साधौ कौरवान्प्रति वै तदा ।
किं चक्रुः पाण्डवास्तत्र मम पूर्वपितामहाः ॥ ५-७१-१ (३४३२४)
एतत्सर्वं द्विजश्रेष्ठ विस्तरं मम सत्तम ।
कथयस्व प्रयत्नेन श्रोतुमिच्छामि पण्डित ॥ ५-७१-२ (३४३२५)
वैशंपायन उवाच। ५-७१-३क्ष् (३६१४)
सञ्जये प्रतियाते तु धर्मराजो युधिष्ठिरः ।
अर्जुनं भीमसेनं च माद्रीपुत्रौ च भारत ॥ ५-७१-३ (३४३२६)
विराटं द्रुपदं चैव केकयानां महारथान् ।
अब्रवीदुपसङ्गम्य शङ्खचक्रगदाधरम् ।
अभियाचामहे गत्वा प्रयातुं कुरुसंसदम् ॥ ५-७१-४ (३४३२७)
यथा भीष्मेण द्रोणेन बाह्लीकेन च धीमता ।
अन्यैश्च कुरुभिः सार्धं न युध्येमहि संयुगे ॥ ५-७१-५ (३४३२८)
एष नः प्रथमः कल्प एतन्निश्रेय उत्तमम् ।
एवमुक्ताः सुमनसस्तेऽभिजग्मुर्जनार्दनम् ॥ ५-७१-६ (३४३२९)
पाण्डवैः सह राजानो मरुत्वन्त इवामराः ।
तदा च दुःसहाः सर्वे सदस्यास्ते नरर्षभाः ॥ ५-७१-७ (३४३३०)
जनार्दनं समासाद्य कुन्तीपुत्रो युधिष्ठिरः ।
अब्रवीत्परवीरघ्नं दाशार्हं पाण्डुनन्दनः ॥' ५-७१-८ (३४३३१)
अयं स कालः संप्राप्तो मित्राणां मित्रवत्सल ।
न च त्वदन्यं पश्यामि यो न आपत्सु तारयेत् ॥ ५-७१-९ (३४३३२)
त्वां हि माधवमाश्रित्य निर्भया मोघदर्पितम् ।
धार्तराष्ट्रं सहामात्यं स्वयं समनुयुङ्क्ष्महे ॥ ५-७१-१० (३४३३३)
यथा हि सर्वास्वापत्सु पासि वृष्णीनरिन्दम् ।
तथा ते पाण्डवा रक्ष्याः पाह्यस्मान्महतो भयात् ॥ ५-७१-११ (३४३३४)
श्रीभगवानुवाच। ५-७१-१२क्ष् (३६१५)

अयमस्मि महाबाहो ब्रूहि यत्ते विवक्षितम् ।
करिष्यामि हि तत्सर्वं यत्त्वं वक्ष्यसि भारत ॥ ५-७१-१२ (३४३३५)
युधिष्ठिर उवाच। ५-७१-१३क्ष् (३६१६)
श्रुतं ते धृतराष्ट्रस्य सपुत्रस्य चिकीर्षितम् ।
एतद्धि सकलं कृष्ण सञ्जयो मां यदब्रवीत् ॥ ५-७१-१४अ
मृदुपूर्वं साममिश्रं सममुग्रं च माधव ।
न कर्तुं न्यायमास्थाय गर्हिताश्च ततो वयम् ॥' ५-७१-१३ (३४३३६)
तन्मतं धृतराष्ट्रस्य सोऽस्यात्मा विवृतान्तरः ।
यथोक्तं दूत आचष्टे वध्यः स्यादन्यथा ब्रुवन् ॥ ५-७१-१५ (३४३३७)
अप्रदानेन राज्यस्य शान्तिमस्मासु मार्गति ।
लुब्धः पापेन मनसा चरन्नसममात्मनः ॥ ५-७१-१६ (३४३३८)
यत्तद्द्वादशवर्षाणि वनेषु ह्युषिता वयम् ।
छद्मना शरदं चैकां धृतराष्ट्रस्य शासनात् ॥ ५-७१-१७ (३४३३९)
स्थाता नः समये तस्मिन्धृतराष्ट्र इति प्रभो ।
नाहास्म समयं कृष्ण तद्धि नो ब्राह्मणा विदुः ॥ ५-७१-१८ (३४३४०)
गृद्धो राजा धृतराष्ट्रः स्वधर्मं नानुपश्यति ।
वश्यत्वात्पुत्रगृद्धित्वान्मन्दस्यान्वेति शासनं ॥ ५-७१-१९ (३४३४१)
सुयोधनमते तिष्ठन्राजाऽस्मासु जनार्दन ।
मिथ्याचरति लुब्धः संश्चरन्हि प्रियमात्मनः ॥ ५-७१-२० (३४३४२)
इतो दुःखतरं किं नु यदहं मातरं ततः ।
संविधातुं न शक्नोमि मित्राणां वा जनार्दन ॥ ५-७१-२१ (३४३४३)
काशिभिश्चेदिपाञ्चालैर्मत्स्यैश्च मधुसूदन ।
भवता चैव नाथेन पञ्च ग्रामा वृता मया ॥ ५-७१-२२ (३४३४४)
अविस्थलं वृकस्थलं माकन्दी वारणावतम् ।
अवसानं च गोविन्द कंचिदेवात्र पञ्चम् ॥ ५-७१-२३ (३४३४५)
पञ्च नस्तात दीयन्तां ग्रामा वा नगराणि वा ।
वसेम सहिता येषु मा च नो भरता नशन् ॥ ५-७१-२४ (३४३४६)
न च तानपि दुष्टात्मा धार्तराष्ट्रोऽनुमन्यते ।
स्वाम्यमात्मनि मत्वाऽसावतो दुःखतरं नु किं ॥ ५-७१-२५ (३४३४७)
कुले जातस्य वृद्धस्य परवित्तेषु गृद्ध्यतः ।
लोभः प्रज्ञानमाहन्ति प्रज्ञा हन्ति हता ह्रियं ॥ ५-७१-२६ (३४३४८)
ह्रीर्हता बाधते धर्मं धर्मो हन्ति हतः श्रियम् ।
श्रीर्हता पुरुषं हन्ति पुरुषस्याधं वधः ॥ ५-७१-२७ (३४३४९)
अधनाद्धि निवर्तन्ते ज्ञातयः सुहृदो द्विजाः ।
अपुष्पादफलाद्वृक्षाद्यथा कृष्ण पतत्रिणः ॥ ५-७१-२८ (३४३५०)
एतच्च मरणं तात उन्मत्तपतितादिव ।

ज्ञातयो विनिवर्तन्ते प्रेतसत्वादिवासवः ॥ ५-७१-२९ (३४३५१)
नातः पापीयसीं कांचिदवस्थां शम्बरोऽब्रवीत् ।
यत्र नैवाऽद्य न प्रातर्भोजनं प्रतिदृश्यते ॥ ५-७१-३० (३४३५२)
धनमाहुः परं धर्मं धने सर्वं प्रतिष्ठितम् ।
जीवन्ति धनिनो लोके मृता ये त्वधना नराः ॥ ५-७१-३१ (३४३५३)
ये धनादपकर्षन्ति नरं स्वबलमास्थिताः ।
ते धर्ममर्थं कामं च प्रमथ्नन्ति नरं च तम् ॥ ५-७१-३२ (३४३५४)
एतामवस्थां प्राप्यैके मरणं वव्रिरे जनाः ।
ग्रामायैके वनायैके नाशायैके प्रवव्रजुः ॥ ५-७१-३३ (३४३५५)
उन्मादमेके पुष्यन्ति यान्त्यन्ये द्विषतां वशम् ।
दास्यमेके च गच्छन्ति परेषामर्थहेतुना ॥ ५-७१-३४ (३४३५६)
आपदेवास्य मरणात्पुरुषस्य गरीयसी ।
श्रियो विनाशस्तद्धयस्य निमित्तं धर्मकामयोः ॥ ५-७१-३५ (३४३५७)
यदस्य धर्म्यं मरणं शाश्वतं लोकवर्त्मवत् ।
समन्तात्सर्वभूतानां न तदत्येति कश्चन ॥ ५-७१-३६ (३४३५८)
न तथा बाध्यते कृष्ण प्रकृत्या निर्धनो जनः ।
यथा भद्रां श्रियं प्राप्य तया हीनः सुखैधितः ॥ ५-७१-३७ (३४३५९)
स तदाऽऽत्मापराधेन संप्राप्तो व्यसनं महत् ।
सेन्द्रान्गर्हयते देवान्नात्मानं च कथंचन ॥ ५-७१-३८ (३४३६०)
न चास्य सर्वशास्त्राणि प्रभवन्ति निबर्हणे ।
सोऽभिक्रुध्याति भृत्यानां सुहृदश्चाभ्यसूयति ॥ ५-७१-३९ (३४३६१)
तत्तदा मन्युरेवैति स भूयः संप्रमुह्यति ।
स मोहवशमापन्नः क्रूरं कर्म निषेवते ॥ ५-७१-४० (३४३६२)
पापकर्मतया चैव सङ्करं तेन पुष्यति ।
सङ्करो नरकायैव सा काष्ठा पापकर्मणाम् ॥ ५-७१-४१ (३४३६३)
न चेत्प्रबुध्यते कृष्ण नरकायैव गच्छति ।
तस्य प्रबोधः प्रज्ञैव प्रज्ञाचक्षुस्तरिष्यति ॥ ५-७१-४२ (३४३६४)
प्रज्ञालाभे हि पुरुषः शास्त्राण्येवान्ववेक्षते ।
शास्त्रनिष्ठः पुनर्धर्मं तस्य ह्रीरङ्गमुत्तमम् ॥ ५-७१-४३ (३४३६५)
ह्रीमान्हि पापं प्रद्वेष्टि तस्य श्रीरभिवर्धते ।
श्रीमान्स यावद्भवति तावद्भवति पूरुषः ॥ ५-७१-४४ (३४३६६)
धर्मनित्यः प्रशान्तात्मा कार्ययोगवहः सदा ।
नाधर्मे कुरुते बुद्धिं न च पापे प्रवर्तते ॥ ५-७१-४५ (३४३६७)
अह्रीको वा विमूढो वा नैव स्त्री न पुनः पुमान् ।
नास्याधिकारो धर्मेऽस्ति यथा शूद्रस्तथैव सः ॥ ५-७१-४६ (३४३६८)
ह्रीमानवति देवांश्च पितॄनात्मानमेव च ।

तेनामृतत्वं व्रजति सा काष्ठा पुण्यकर्मणाम् ॥ ५-७१-४७ (३४३६९)
तदिदं मयि ते दृष्टं प्रत्यक्षं मधुसूदन ।
यथा राज्यात्परिभ्रष्टो वसामि वसतीरिमाः ॥ ५-७१-४८ (३४३७०)
ते वयं न श्रियं हातुमलं न्यायेन केनचित् ।
अत्र नो यतमानानां वधश्चेदपि साधु तत् ॥ ५-७१-४९ (३४३७१)
तत्र नः प्रथमः कल्पो यद्वयं ते च माधव ।
प्रशान्ताः समभूताश्च श्रियं तामश्नुवीमहि ॥ ५-७१-५० (३४३७२)
तत्रैषा परमा काष्ठा रौद्रकर्मक्षयोदया ।
यद्वयं कौरवान्हत्वा तानि राष्ट्राण्यवाप्नुमः ॥ ५-७१-५१ (३४३७३)
ये पुनः स्युरसंबद्धा अनार्याः कृष्ण शत्रवः ।
तेषामप्यवधः कार्यः किंपुनर्ये स्युरीदृशाः ॥ ५-७१-५२ (३४३७४)
ज्ञातयश्चैव भूयिष्ठाः सहाया गुरवश्च नः ।
तेषां वधोऽतिपापीयान्किं नु युद्धेऽस्ति शोभनम् ॥ ५-७१-५३ (३४३७५)
पापः क्षत्रियधर्मोऽयं वयं च क्षत्रबन्धवः ।
स नः स्वधर्मोऽधर्मो वा वृत्तिरन्या विगर्हिता ॥ ५-७१-५४ (३४३७६)
शूद्रः करोति शुश्रूषां वैश्मा वै पण्यजीविकाः ।
वयं वधेन जीवामः कपालं ब्राह्मणैर्वृतम् ॥ ५-७१-५५ (३४३७७)
क्षत्रियः क्षत्रियं हन्ति मत्स्यो मत्स्येन जीवति ।
श्वा श्वानं हन्ति दाशार्ह पश्य धर्मो यथागतः ॥ ५-७१-५६ (३४३७८)
युद्धे कृष्ण कलिर्नित्यं प्राणाः सीदन्ति संयुगे ।
बलं तु नीतिमाधाय युध्ये जयपराजयौ ॥ ५-७१-५७ (३४३७९)
नात्मच्छन्देन भूतानां जीवितं मरणं तथा ।
नाप्यकाले सुखं प्राप्यं दुःखं वाऽपि यदूत्तम ॥ ५-७१-५८ (३४३८०)
एको ह्यपि बहून्हन्ति घ्नन्त्येकं बहवोऽप्युत ।
शूरं कापुरुषो हन्ति अयशस्वी यशस्विनम् ॥ ५-७१-५९ (३४३८१)
जयो नैवोभयोर्दृष्टो नोभयोश्च पराजयः ।
तथैवापचयो दृष्टो व्यपयाने क्षयव्ययौ ॥ ५-७१-६० (३४३८२)
सर्वथा वृजिनं युद्धं को घ्नन्न प्रतिहन्यते ।
हतस्य च हृषीकेश समौ जयपराजयौ ॥ ५-७१-६१ (३४३८३)
पराजयश्च मरणान्मन्ये नैव विशिष्यते ।
यस्य स्याद्विजयः कृष्ण तस्यप्यपचयो ध्रुवम् ॥ ५-७१-६२ (३४३८४)
अन्ततो दयितं घ्नन्ति केचिदप्यपरे जनाः ।
तस्याङ्गबलहीनस्य पुत्रान्भ्रातॄनपश्यतः ॥ ५-७१-६३ (३४३८५)
निर्वेदो जीविते कृष्ण सर्वतश्चोपजायते ।
ये ह्येव धीरा ह्रीमन्त आर्याः करुणवेदिनः ॥ ५-७१-६४ (३४३८६)
त एव युद्धे हन्यन्ते यवीयान्मुच्यते जनः ।

हत्वाऽप्यनुशयो नित्यं परानपि जनार्दन ॥ ५-७१-६५ (३४३८७)
अनुबद्धश्च पापोऽत्र शेषश्चाप्यवशिष्यते ।
शेषो हि बलमासाद्य न शेषमनुशेषयेत् ॥ ५-७१-६६ (३४३८८)
सर्वोच्छेदे च यतते वैरस्यान्तविधित्सया ।
जयो वैरं प्रसृजति दुःखमास्ते पराजितः ॥ ५-७१-६७ (३४३८९)
सुखं प्रशान्तः स्वपिति हित्वा जयपराजयौ ।
जातवैरश्च पुरुषो दुःखं स्वपिति नित्यदा ॥ ५-७१-६८ (३४३९०)
अनिर्वृत्तेन मनसा ससर्प इव वेश्मनि ।
उत्सादयति यः सर्वं यशसा स विमुच्यते ॥ ५-७१-६९ (३४३९१)
अकीर्तिं सर्वभूतेषु शाश्वतीं स नियच्छति ।
न हि वैराणि शाम्यन्ति दीर्घकालधृतान्यपि ॥ ५-७१-७० (३४३९२)
आख्यातारश्च विद्यन्ते पुमांश्चेद्विद्यते कुले ।
न चापि वैरं वैरेण केशव व्युपशाम्यति ॥ ५-७१-७१ (३४३९३)
हविषाऽग्निर्यथा कृष्ण भूय एवाभिवर्धते ।
अतोऽन्यथा नास्ति शान्तिर्नित्यमन्तरमन्ततः ॥ ५-७१-७२ (३४३९४)
अन्तरं लिप्समानानामयं दोषो निरन्तरः ।
पौरुषे यो हि बलवानाधिर्हृदयबाधनः ।
तस्य त्यागेन वा शान्तिर्मरणेनापि वा भवेत् ॥ ५-७१-७३ (३४३९५)
अथवा मूलघातेन द्विषतां मधुसूदन ।
फलनिर्वृत्तिरिद्धा स्यात्तन्नृशंसतरं भवेत् ॥ ५-७१-७४ (३४३९६)
या तु त्यागेन शान्तिः स्यात्तदृते वध एव सः ।
संशयाच्च समुच्छेदाद्द्विषतामात्मनस्तथा ॥ ५-७१-७५ (३४३९७)
न च त्यक्तुं तदिच्छामो न चेच्छामः कुलक्षयम् ।
अत्र या प्रणिपातेन शान्तिः सैव गरीयसी ॥ ५-७१-७६ (३४३९८)
सर्वथा यतमानानामयुद्धमभिकाङ्क्षताम् ।
सान्त्वे प्रतिहते युद्धं प्रसिद्धं नापराक्रमः ॥ ५-७१-७७ (३४३९९)
प्रतिघातेन सान्त्वस्य दारुणं संप्रवर्तते ।
तच्छुनामिव संपाते पण्डितैरुपलक्षितम् ॥ ५-७१-७८ (३४४००)
लाङ्गूलचालनं क्ष्वेडा प्रतिवाचो विवर्तनम् ।
दन्तदर्शनमारावस्ततो युद्धं प्रवर्तते ॥ ५-७१-७९ (३४४०१)
तत्र यो बलवान्कृष्ण जित्वा सोत्ति तदामिषम् ।
एवमेव मनुष्येषु विशेषो नास्ति कश्चन ॥ ५-७१-८० (३४४०२)
सर्वथा त्वेतदुचितं दुर्बलेषु बलीयसाम् ।
अनादरो विरोधश्च प्रणिपाती हि दुर्बलः ॥ ५-७१-८१ (३४४०३)
पिता राजा च वृद्धश्च सर्वथा मानमर्हति ।
तस्मान्मान्यश्च पूज्यश्च धृतराष्ट्रो जनार्दन ॥ ५-७१-८२ (३४४०४)

पुत्रस्नेहश्च बलवान्धृतराष्ट्रस्य माधव ।
स पुत्रवशमापन्नः प्रणिपातं प्रहास्यति ॥ ५-७१-८३ (३४४०५)
तत्र किं मन्यसे कृष्ण प्राप्तकालमनन्तरम् ।
कथमर्थाच्च धर्माच्च न हीयेमहि माधव ॥ ५-७१-८४ (३४४०६)
ईदृशेऽत्यर्थकृच्छ्रेऽस्मिन्कमन्यं मधुसूदन ।
उपसंप्रष्टुमर्हामि त्वामृते पुरुषोत्तम ॥ ५-७१-८५ (३४४०७)
प्रियश्च प्रियकामश्च गतिज्ञः सर्वकर्मणाम् ।
को हि कृष्णास्ति नस्त्वादृक्सर्वनिश्चयवित्सुहृत् ॥ ५-७१-८६ (३४४०८)
वैशंपायन उवाच। ५-७१-८७क्ष् (३६१७)
एवमुक्तः प्रत्युवाच धर्मराजं जनार्दनः ।
उभयोरेव वामर्थे यास्यामि कुरुसंसदम् ॥ ५-७१-८७ (३४४०९)
शमं तत्र लभेयं चेद्युष्मदर्थमहापयन् ।
पुण्यं मे सुमहद्राजंश्चरितं स्यान्महाफलम् ॥ ५-७१-८८ (३४४१०)
मोचयेयं मृत्युपाशात्संरब्धान्कुरुसृञ्जयान् ।
पाण्डवान्धार्तराष्ट्रांश्च सर्वां च पृथिवीमिमाम् ॥ ५-७१-८९ (३४४११)
युधिष्ठिर उवाच। ५-७१-९०क्ष् (३६१८)
न ममैतन्मतं कृष्ण यत्त्वं यायाः कुरून्प्रति ।
सुयोधनः सूक्तमपि न करिष्यति ते वचः ॥ ५-७१-९० (३४४१२)
समेतं पार्थिवं क्षत्रं दुर्योधनवशानुगम् ।
तेषां मध्यावतरणं तव कृष्ण न रोचये ॥ ५-७१-९१ (३४४१३)
न हि नः प्रीणयेद्द्रव्यं न देवत्वं कुतः सुखम् ।
न च सर्वामरैश्वर्यं तव द्रोहेण माधव ॥ ५-७१-९२ (३४४१४)
श्रीभगवानुवाच। ५-७१-९३क्ष् (३६१९)
जानाम्येतां महाराज धार्तराष्ट्रस्य पापताम् ।
अवाच्यास्तु भविष्यामः सर्वलोके महीक्षितां ॥ ५-७१-९३ (३४४१५)
न चापि मम पर्याप्ताः सहिताः सर्वपार्थिवाः ।
क्रुद्धस्य संयुगे स्थातुं सिंहस्येवेतरे मृगाः । ५-७१-९४ (३४४१६)
अथ चेत्ते प्रवर्तेरन्मयि किंचिदसांप्रतम् ।
निर्दहेयं कुरून्सर्वानिति मे धीयते मतिः ॥ ५-७१-९५ (३४४१७)
न जातु गमनं पार्थ भवेत्तत्र निरर्थकम् ।
अर्थप्राप्तिः कदाचित्स्यादन्ततो वाप्यवाच्यता  ५-७१-९६ (३४४१८)
ग एवमुक्तः प्रत्युवाच धर्मराजो जनार्दनम् ।
भ्रातॄणां समवेतानां सकाशे पुरुषोत्तमम् ' ॥ ५-७१-९७ (३४४१९)
युधिष्ठिर उवाच। ५-७१-९८क्ष् (३६२०)
यत्तुभ्यं रोचते कृष्ण स्वस्ति प्राप्नुहि कौरवान् ।
कृतार्थं स्वस्तिमन्तं त्वां द्रक्ष्यामि पुनरागतम् ॥ ५-७१-९८ (३४४२०)

विष्वक्सेन कुरून्गत्वा भरताञ्शमयन्प्रभो ।
यथा सर्वे सुमनसः सह स्याम सुचेतसः ॥ ५-७१-९९ (३४४२१)
भ्राता चासि सखा चासि बीभत्सोर्मम च प्रियः ।
सौहृदेनाविशङ्क्योऽसि स्वस्ति प्राप्नुहि भूतये ॥ ५-७१-१०० (३४४२२)
अस्मान्वेत्थ परान्वेत्थ वेत्थार्थान्वेत्थ भाषितुम् ।
यद्यदस्मद्धितं कृष्ण तत्तद्वाच्यः सुयोधनः ॥ ५-७१-१०१ (३४४२३)
यद्यद्धर्मेण संयुक्तमुपपद्येद्धितं वचः ।
तत्तत्केशव भाषेथाः सान्त्वं वा यदि वेतरत् ॥ ॥ ५-७१-१०२ (३४४२४)

इति श्रीमन्महाभारते उद्योगपर्वणि भगवद्यानपर्वणि
एकसप्ततितमोऽध्यायः ॥

Mahabharata - Udyoga Parva - Chapter Footnotes

५-७१-१० अनुयुहक्ष्महे प्रार्थयामहे ॥
५-७१-१५ विवृतान्तरः प्रकाशित्तभावः ॥
५-७१-१७ छद्मनः अज्ञातचर्यया ॥
५-७१-१८ स्थातास्थास्यति ।नः अस्माकम्।तस्मिन् चतुर्दशे दर्षे स्वं
राज्यं गृह्णीतेत्यस्मिन्।न अहास्म न त्यक्तवन्तो वयम् ॥
५-७१-२१ मातरं संविधातुं सम्यक् पोषयितुम् ।मित्राणां कर्मणिषष्ठी ॥
५-७१-२३ अवसीयते संस्थीयतेऽस्मिन्नित्यवसानम् यावज्जीवकं वासस्थानम् ॥
५-७१-२४ नः अस्माकं कृते भरताः भरतवंश्या भीष्मादयः मानशन्
मानश्यन्तु ॥
५-७१-२८ द्विजाः अर्थिनः ॥
५-७१-२९ प्रेतसत्वात् प्रगतबुद्धेर्मृतादित्यर्थः ॥
५-७१-३१ धर्मं धर्मकारणम् ।सर्वं यज्ञदानादि ॥
५-७१-३५ आपत्पदार्थमाह श्रियो विनाश इति ।तद्धि श्रीर्हि ॥
५-७१-४० तत्तदा सर्वदेत्यर्थः ॥
५-७१-४८ इदं ह्रीमन्तं ।ते त्वया ॥
५-७१-५५ कपालं भिक्षापात्रम् ॥
५-७१-५७ नीतिमेव बलं कृत्वा युध्ये योत्स्ये ।जयपराजयौ तु
आत्मच्छन्देन स्वेच्छया न भवतः।तथा तद्वत् भूतानां जीवितं
मरणं च स्वेच्छया न स्तः ॥
५-७१-५८ नीतिमेव बलं कृत्वा युध्ये योत्स्ये ।जयपराजयौ तु
आत्मच्छन्देन स्वेच्छया न भवतः।तथा तद्वत् भूतानां जीवितं
मरणं च स्वेच्छया न स्तः ॥
५-७१-६५ अनुशयः पश्चात्तापः ॥

५-७१-६६ शेषः शत्रोः ।शेषं स्वस्य ॥
५-७१-६९ अनिर्वृत्तेन अस्वस्थेन ॥
५-७१-७२ अत इति ।यतः अन्तरं छिद्रं नित्यं अपरिहार्थं अतो हेतोः अन्ततोऽन्यथा स्वस्य शत्रोर्वा नाशं विना शान्तिर्नास्ति ॥
५-७१-७३ अयं दोषः नाशाख्यः ॥
५-७१-७४ इद्धा प्रदीप्ता ॥
५-७१-७५ त्यागेन राज्यस्येतिः शेषः ।तदृते राज्यं विना। द्विषतां संशयात् किं शत्रवश्छिद्रे भ्रष्टश्छिद्रे प्रहरिष्यन्ति उत उपेक्षां करिष्यन्तीत्येवंरूपात् ।आत्मनः भ्रष्टश्रीकस्य सद्यः समुच्छेदात् नाशसंभवात्। अतो राज्यत्यागो न युक्त इति भावः ॥
५-७१-७८ दारुणं युद्धम् तच्छुनामिव निन्द्यमित्यर्थः ॥
५-७१-७९ क्ष्वेडा ध्विकौटिल्यम् ।विवर्तनं भूमौ लुष्ठनम्। दन्तदर्शनं मुखस्य व्यादानेन ॥
५-७१-८३ प्रहास्यति न स्वीकरिष्यति ॥
५-७१-९९ तथा वदेति शेषः ॥

---

उद्योगपर्व-अध्यय०७२
॥ श्रीः ॥
५.७२. अध्यायः ७२

Mahabharata - Udyoga Parva - Chapter Topics
श्रीकृष्णेन युधिष्ठिरंप्रति युद्धपक्षस्थिरीकरणपूर्वकं लोकसंशयनिरासाय शमार्थं प्रयतनकथनम् ॥१ ॥

Mahabharata - Udyoga Parva - Chapter Text

५-७२-० (३४४२५)
श्रीभगवानुवाच। ५-७२-०क्ष् (३६२१)
सञ्जयस्य श्रुतं वाक्यं भवतश्च श्रुतं मया ।
सर्वं जानाम्यभिप्रायं तेषां च भवतश्च यः ॥ ५-७२-१ (३४४२६)
तव धर्माश्रिता बुद्धिस्तेषां वैराश्रया मतिः ।
यदयुद्धेन लभ्येत तत्ते बहुमतं भवेत् ॥ ५-७२-२ (३४४२७)
न चैवं नैष्ठिकं कर्म क्षत्रियस्य विशांपते ।
आहुराश्रमिणः सर्वे न भैक्षं क्षत्रियश्चरेत् ॥ ५-७२-३ (३४४२८)
जयो वधो वा सङ्ग्रामे धात्राऽऽदिष्टः सनातनः ।
स्वधर्मः क्षत्रियस्यैष कार्पण्यं न प्रशत्यते ॥ ५-७२-४ (३४४२९)
न हि कार्पण्यमास्थाय शक्या वृत्तिर्युधिष्ठिर ।

विक्रमस्व महाबाहो जहि शत्रून्परन्तप ॥ ५-७२-५ (३४४३०)
अतिगृद्धाः कृतस्नेहा दीर्घकालं सहोषिताः ।
कृतमित्राः कृतबला धार्तराष्ट्राः परन्तप ॥ ५-७२-६ (३४४३१)
न पर्यायोऽस्ति यत्साम्यं त्वयि कुर्युर्विशांपते ।
बलवत्तां हि मन्यन्ते भीष्मद्रोणकृपादिभिः ॥ ५-७२-७ (३४४३२)
यावच्च मार्दवेनैतान्राजन्नुपचरिष्यसि ।
तावदेते हरिष्यन्ति तव राज्यमरिन्दम ॥ ५-७२-८ (३४४३३)
नानुक्रोशान्न कार्पण्यान्न च धर्मार्थकारणात् ।
अलं कर्तुं धार्तराष्ट्रास्तव काममरिन्दम ॥ ५-७२-९ (३४४३४)
एतदेव निमित्तं ते धार्तराष्ट्रो यथा त्वयि ।
नान्वतप्यत कोपेन तव कृत्वाऽपि दुष्करम् ॥ ५-७२-१० (३४४३५)
पितामहस्य द्रोणस्य विदुरस्य च धीमतः ।
ब्राह्मणानां च साधूनां राज्ञश्च नगरस्य च ॥ ५-७२-११ (३४४३६)
पश्यतां कुरुमुख्यानां सर्वेषामेव तत्त्वतः ।
दानशीलं मृदुं दान्तं धर्मशीलमनुव्रतम् ॥ ५-७२-१२ (३४४३७)
यत्त्वामुपधिना राजन्द्यूते वञ्चितवांस्तदा ।
न चापत्रपते तेन नृशंसः स्वेन कर्मणा ॥ ५-७२-१३ (३४४३८)
तथाशीलसमाचारे राजन्मा प्रणयं कृथाः ।
वध्यास्ते सर्वलोकस्य किं पुनस्तव भारत ॥ ५-७२-१४ (३४४३९)
वाग्भिस्त्वप्रतिरूपाभिरतुदत्त्वां सहानुजम् ।
श्लाघमानः प्रहृष्टः सन्भ्रातृभिः सह भाषते ॥ ५-७२-१५ (३४४४०)
एतावत्पाण्डवानां हि नास्ति किंचिदिह स्वकम् ।
नामधेयं च गोत्रं च तदप्येषां न शिष्यते ॥ ५-७२-१६ (३४४४१)
कालेन महता चैषां भविष्यति पराभवः ।
प्रकृतिं ते भजिष्यन्ति नष्टप्रकृतयो मयि ॥ ५-७२-१७ (३४४४२)
दुःशासनेन पापेन तदा द्यूते प्रवर्तिते ।
अनाथवत्तदा देवी द्रौपदी सुदुरात्मना ॥ ५-७२-१८ (३४४४३)
आकृष्य केशे रुदती सभायां राजसंसदि ।
भीष्मद्रोणप्रमुखतो गौरिति व्याहृता मुहुः ॥ ५-७२-१९ (३४४४४)
भवता वारिताः सर्वे भ्रातरो भीमविक्रमाः ।
धर्मपाशनिबद्धाश्च न किंचित्प्रतिपेदिरे ॥ ५-७२-२० (३४४४५)
एताश्चान्याश्च परुषा वाचः स समुदीरयन् ।
श्लाघते ज्ञातिमध्ये स्म त्वयि प्रव्रजिते वनम् ॥ ५-७२-२१ (३४४४६)
ये तत्रासन्समानीतास्ते दृष्ट्वा त्वामनागसम् ।
अश्रुकण्ठा रुदन्तश्च सभायामासते सदा ॥ ५-७२-२२ (३४४४७)
न चैनमभ्यनन्दंस्ते राजानो ब्राह्मणैः सह ।

सर्वे दुर्योधनं तत्र निन्दन्ति स्म सभासदः ॥ ५-७२-२३ (३४४४८)
कुलीनस्य च या निन्दा वधो वाऽमित्रकर्शन ।
महागुणो वधो राजन्न तु निन्दा कुजीविका ॥ ५-७२-२४ (३४४४९)
तदैव निहतो राजन्यदैव निरपत्रपः ।
निन्दितश्च महाराज पृथिव्यां सर्वराजभिः ॥ ५-७२-२५ (३४४५०)
ईषत्करो वधस्तस्य यस्य चारित्रमीदृशम् ।
प्रस्कुन्देन प्रतिस्तब्धश्छिन्नमूल इव द्रुमः ॥ ५-७२-२६ (३४४५१)
वध्यः सर्प इवानार्यः सर्वलोकस्य दुर्मतिः ।
जह्येन त्वममित्रघ्न मा राजन्विचिकित्सिथाः ॥ ५-७२-२७ (३४४५२)
सर्वथा त्वत्क्षमं चैतद्रोचते च ममानघ ।
यत्त्वं पितरि भीष्मे च प्रणिपातं समाचरेः ॥ ५-७२-२८ (३४४५३)
अहं तु सर्वलोकस्य गत्वा छेत्स्यामि संशयम् ।
येषामस्ति द्विधाभावो राजन्दुर्योधनं प्रति ॥ ५-७२-२९ (३४४५४)
मध्ये राज्ञामहं तत्र प्रातिपौरुषिकान्गुणान् ।
तव सङ्कीर्तयिष्यामि ये च तस्य व्यतिक्रमाः ॥ ५-७२-३० (३४४५५)
ब्रुवतस्तत्र मे वाक्यं धर्मार्थसहितं हितम् ।
निशम्य पार्थिवाः सर्वे नानाजनपदेश्वराः ॥ ५-७२-३१ (३४४५६)
त्वयि संप्रतिपत्स्यन्ते धर्मात्मा सत्यवागिति ।
तस्मिंश्चाधिगमिष्यन्ति यथा लोभादवर्तत ॥ ५-७२-३२ (३४४५७)
गर्हयिष्यामि चैवैनं पौरजानपदेष्वपि ।
वृद्धबालानुपादाय चातुर्वर्ण्ये समागते ॥ ५-७२-३३ (३४४५८)
शमं वै याचमानस्त्वं नाधर्मं तत्र लप्स्यसे ।
कुरून्विगर्हयिष्यन्ति धृतराष्ट्रं च पार्थिवाः ॥ ५-७२-३४ (३४४५९)
तस्मिंल्लोकपरित्यक्ते किं कार्यमवशिष्यते ।
हते दुर्योधने राजन्यदन्यत्क्रियतामिति ॥ ५-७२-३५ (३४४६०)
यात्वा चाहं कुरून्सर्वान्युष्मदर्थमहापयन् ।
यतिष्ये प्रशमं कर्तुं लक्षयिष्ये च चेष्टितम् ॥ ५-७२-३६ (३४४६१)
कौरवाणां प्रवृत्तिं च गत्वा युद्धाधिकारिकाम् ।
निशम्य विनिवर्तिष्ये जयाय तव भारत ॥ ५-७२-३७ (३४४६२)
सर्वथा युद्धमेवाहमाशंसापि परैः सह ।
निमित्तानि हि सर्वाणि तथा प्रादुर्भवन्ति मे ॥ ५-७२-३८ (३४४६३)
मृगाः शकुन्ताश्च वदन्ति घोरं
हस्त्यश्वमुख्येषु निशामुखेषु ।
घोराणि रूपाणि तथैव चाग्नि-
र्वर्णान्बहून्पुष्यति घोररूपान् ॥ ५-७२-३९ (३४४६४)
मनुष्यलोकक्षयकृत्सुघोरो

नो चेदनुप्राप्त इहान्तकः स्यात् ।
शस्त्राणि यन्त्रं कवचान्रथांश्च
नागान्हयांश्च प्रतिपादयित्वा ॥ ५-७२-४० (३४४६५)
योधाश्च सर्वे कृतनिश्चयास्ते
भवन्तु हस्त्यश्वरथेषु यत्ताः ।
साङ्ग्रामिकं ते यदुपार्जनीयं
सर्वं समग्रं कुरु तन्नरेन्द्र ॥ ५-७२-४१ (३४४६६)
दुर्योधनो न ह्यलमद्य दातुं
जीवंस्तवैतन्नृपते कथंचित् ।
यत्ते पुरस्तादभवत्समृद्धं
द्यूते हृतं पाण्डवमुख्य राज्यम् ॥ ॥ ५-७२-४२ (३४४६७)

इति श्रीमन्महाभारते उद्योगपर्वणि भगवद्यानपर्वणि
द्विसप्ततितमोऽध्यायः ॥
Mahabharata - Udyoga Parva - Chapter Footnotes

५-७२-३ नैष्ठिकं कर्म यावज्जीवं ब्रह्मचर्यं पारिव्राज्यं च
। विहितमिति शेषः ॥
५-७२-४ कार्पण्यं ग्रामपञ्चकं देहीति दीनवचनम् ॥
५-७२-५ वृत्तिः जीविका कर्तुमिति शेषः ॥
५-७२-६ अतिगृद्धाः अत्यन्तलुब्धाः ॥
५-७२-७ पर्याय उपायः । यद्येन बलवत्तां स्वस्येति शेषः ॥
५-७२-९ अनुक्रोशात् भवत्सु कृपातः । कार्पण्यात् स्वस्य दैन्यात्। अलं
कर्तुं पूर्णं कर्तुं न समर्थाः ॥
५-७२-१० निमित्तं अशमे कारणम् ॥
५-७२-१७ प्रकृतिं पञ्चताम् । मयि मत्समीपे नष्टा प्रकृतिः
शौर्यादिरूपः स्वभावो येषाम् ॥
५-७२-१९ गौरिव सर्वभोज्येत्युपहासो गौर्गौरिति ॥
५-७२-२६ प्रस्कृन्देन चक्राकारया वेदिकया ॥
५-७२-२९ द्विधाभावः अयं साधुरसाधुर्वेति संशयः ॥
५-७२-३० प्रातिपौरुषिकान् सर्वपुरुषसाधारणान् ॥
५-७२-३५ हते निन्द्यतया नष्टप्राये ॥
५-७२-३६ यात्वा गत्वा ॥
५-७२-३७ निशम्य आलोच्य ॥
५-७२-४० तर्हि एतन्न स्यादिति शेषः । प्रतिपादयित्वा सज्जीकृत्य ॥

॥ श्रीः ॥
५.७३. अध्यायः ७३

Mahabharata - Udyoga Parva - Chapter Topics
भीमसेनेन श्रीकृष्णंप्रति दुर्योधनस्य दुराराध्यत्वकथनपूर्वकं यथाकथंचित् शमस्वावश्यकर्तव्यत्ककथनम् ॥ १ ॥

Mahabharata - Udyoga Parva - Chapter Text

५-७३-० (३४४६८)
भीम उवाच। ५-७३-०क्ष् (३६२२)
यथायथैव शान्तिः स्यात्कुरूणां मधुसूदन ।
तथातथैव भाषेथा मा स्म युद्धेन भीषयेः ॥ ५-७३-१ (३४४६९)
अमर्षी जातसंरम्भः श्रेयोद्वेषी महामनाः ।
नोग्रं दुर्योधनो वाच्यः साम्नैवेनं समाचरेः ॥ ५-७३-२ (३४४७०)
प्रकृत्या पापसत्वश्च तुल्यचेतास्तु दस्युभिः ।
ऐश्वर्यमदमत्तश्च कृतवैरश्च पाण्डवैः ॥ ५-७३-३ (३४४७१)
अदीर्घदर्शी निष्ठूरी क्षेप्ता क्रूरपराक्रमः ।
दीर्घमन्युरनेयश्च पापात्मा निकृतिप्रियः ॥ ५-७३-४ (३४४७२)
म्रियेतापि न भज्येत नैव जह्यात्स्वकं मतम् ।
तादृशेन शमः कृष्ण मन्ये परमदुष्करः ॥ ५-७३-५ (३४४७३)
सुहृदामप्यवाचीनस्त्यक्तधर्मा प्रियानृतः ।
प्रतिहन्त्ये सुहृदां वाचश्चैव मनांसि च ॥ ५-७३-६ (३४४७४)
स मन्युवशमापन्नः स्वभावं दुष्टमास्थितः ।
स्वभावात्पापमभ्येति तृणैश्छन्न इवोरगः ॥ ५-७३-७ (३४४७५)
दुर्योधनो हि यत्सेनः सर्वथा विदितस्तव ।
यच्छीलो यत्स्वभावश्च यद्बलो यत्पराक्रमः ॥ ५-७३-८ (३४४७६)
पुरा प्रसन्नाः कुरवः सहपुत्रास्तथा वयम् ।
इन्द्रज्येष्ठा इवाभूम मोदमानाः सबान्धवाः ॥ ५-७३-९ (३४४७७)
दुर्योधनस्य क्रोधेन भरता मधुसूदन ।
धक्ष्यन्ते शिशिरापाये वनानीव हुताशनैः ॥ ५-७३-१० (३४४७८)
अष्टादशेमे राजानः प्रख्यात मधुसूदन ।
ये समुच्चिच्छिदुर्ज्ञातीन्सुहृदश्च सबान्धवान् ॥ ५-७३-११ (३४४७९)
असुराणां समृद्धानां ज्वलतामिव तेजसा ।
पर्यायकाले धर्मस्य प्राप्ते कलिरजायत ॥ ५-७३-१२ (३४४८०)

हैहयानामुदावर्तो नीपानां जनमेजयः ।
बहुलस्तालजङ्घानां कृमीणामुद्धतो वसुः ॥ ५-७३-१३ (३४४८१)
अजबिन्दुः सुवीराणां सुराष्ट्राणां रुषर्द्धिकः ।
अर्कजश्च बलीहानां चीनानां धौतमूलकः ॥ ५-७३-१४ (३४४८२)
हयग्रीवो विदेहानां वरयुश्च महौजसाम् ।
बाहुः सुन्दरवंशानां दीप्ताक्षाणां पुरूरवाः ॥ ५-७३-१५ (३४४८३)
सहजश्चेदिमत्स्यानां प्रवीराणां वृषध्वजः ।
धारणश्चन्द्रवत्सानां मुकुटानां विगाहनः ॥ ५-७३-१६ (३४४८४)
शमश्च नन्दिवेगानामित्येते कुलपांसनाः ।
युगान्ते कृष्ण संभूताः कुलेषु पुरुषाधमाः ॥ ५-७३-१७ (३४४८५)
अप्ययं नः कुरूणां स्याद्युगान्ते कालसंभृतः ।
दुर्योधनः कुलाङ्गारो जघन्यः पापपूरुषः ॥ ५-७३-१८ (३४४८६)
तस्मान्मृदु शनैर्ब्रूया धर्मार्थसहितं हितम् ।
कामानुबद्धं बहुलं नोग्रमुग्रपराक्रमम् ॥ ५-७३-१९ (३४४८७)
अपि दुर्योधनं कृष्ण सर्वे वयमधश्चराः ।
नीचैर्भूत्वाऽनुयास्यामो मा स्म नो भरता नशन् ॥ ५-७३-२० (३४४८८)
अप्युदासीनवृत्तिः स्याद्यथा नः कुरुभिः सह ।
वासुदेव तथा कार्यं न कुरूननयः स्पृशेत् ॥ ५-७३-२१ (३४४८९)
वाच्यः पितामहो वृद्धो ये च कृष्ण समासदः ।
भ्रातॄणामस्तु सौभ्रात्रं धार्तराष्ट्रः प्रशाम्यताम् ॥ ५-७३-२२ (३४४९०)
अहमेतद्ब्रवीम्येवं राजा चैव प्रशंसति ।
अर्जुनो नैव युद्धार्थी भूयसी हि दयाऽर्जुने ॥ ॥ ५-७३-२३ (३४४९१)

इति श्रीमन्महाभारते उग्योगपर्वणि भगवद्यानपर्वणि
त्रिसप्ततितमोऽध्यायः ॥

Mahabharata - Udyoga Parva - Chapter Footnotes

५-७३-४ निष्ठूरी निष्ठुरवाक् । क्षेप्ता निन्दकः । अनेयः
शिक्षयितुमयोग्यः ॥
५-७३-६ अवाचीनो विपरीतः ॥
५-७३-१२ पर्यायकाले धर्मान्तकाले ॥
५-७३-१९ कामानुबद्धं बहुलं बाहुल्येन तस्य चित्तानुसारी ॥

---

उद्योगपर्व-अध्यय०७४
॥ श्रीः ॥
५.७४. अध्यायः ७४

Mahabharata - Udyoga Parva - Chapter Topics
श्रीकृष्णेन भीमंप्रति तत्प्रतिज्ञानुस्मारणपूर्वकं युद्धप्रोत्साहनम्
॥ १ ॥

Mahabharata - Udyoga Parva - Chapter Text

५-७४-० (३४४९२)
वैशंपायन उवाच। ५-७४-०क्ष् (३६२३)
एतच्छ्रुत्वा महाबाहुः केशवः प्रहसन्निव ।
अभूतपूर्वं भीमस्य मार्दवोपहितं वचः ॥ ५-७४-१ (३४४९३)
गिरेरिव लघुत्वं तच्छीतत्वमिव पावके ।
मत्वा रामानुजः शौरिः शार्ङ्गधन्वा वृकोदरम् ॥ ५-७४-२ (३४४९४)
सन्तेजसंस्तदा वाग्भिर्मातरिश्वेव पावकम् ।
उवाच भीममासीनं कृपयाऽभिपरिप्लुतम् ॥ ५-७४-३ (३४४९५)
श्रीभगवानुवाच। ५-७४-४क्ष् (३६२४)
त्वमन्यदा भीमसेन युद्धमेव प्रशंससि ।
वधामिनन्दिनः क्रूरान्धार्तराष्ट्रन्मिमर्दिषुः ॥ ५-७४-४ (३४४९६)
न च स्वपिषि जागर्षि न्युब्जः शेषे परन्तप ।
घोरामशान्तां रुशतीं सदा वाचं प्रभाषसे ॥ ५-७४-५ (३४४९७)
निःश्वसन्नग्निवत्तेन सन्तप्तः स्वेन मन्युना ।
अप्रशान्तमना भीम सधूम इव पावकः ॥ ५-७४-६ (३४४९८)
एकान्ते निःश्वसञ्शेपे भारार्त इव दुर्बलः ।
अपि त्वां केचिदुन्मत्तं मन्यन्तेऽतद्विदो जनाः ॥ ५-७४-७ (३४४९९)
आरुज्य वृक्षान्निर्मूलान्गजः परिरुजन्निव ।
निघ्नन्पद्भिः क्षितिं भीम निष्टनन्परिधावसि ॥ ५-७४-८ (३४५००)
नास्मिञ्जने न रमसे रहः क्षिपसि पाण्डव ।
नान्यं निशि दिवा चापि कदाचिदभिनन्दसि ॥ ५-७४-९ (३४५०१)
अकस्मात्स्मयमानश्च रहस्यास्से रुदन्निव ।
जान्वोर्मूर्धानमाधाय चिरमास्ते प्रमीलितः ॥ ५-७४-१० (३४५०२)
भ्रुकिटिं च पुनः कुर्वन्नोष्ठौ च विदशन्निव ।
अभीक्ष्णं दृश्यसे भीम सर्वं तन्मन्युकारितम् ॥ ५-७४-११ (३४५०३)
यथा तपुरस्तात्सविता दृश्यते शुक्रमुच्चरन् ।
यथा च पश्चान्निर्मुक्तो ध्रुवं पर्येति रश्मिवान् ॥ ५-७४-१२ (३४५०४)
तथा सत्यं ब्रवीम्येतन्नास्ति तस्य व्यतिक्रमः ।
हन्ताहं गदयाभ्येत्य दुर्योधनममर्पणम् ॥ ५-७४-१३ (३४५०५)

इति स्म मध्ये भ्रातृणां सत्येनालभसे वदाम् ।
तस्य ते प्रशमे बुद्धिर्ध्रियतेऽद्य परन्तप ॥ ५-७४-१४ (३४५०६)
अहो युद्धाभिकाङ्क्षाणां युद्धकाल उपस्थिते ।
चेतांसि विप्रतीपानि यत्त्वां भीभीम विन्दति ॥ ५-७४-१५ (३४५०७)
अहो पार्थ निमित्तानि विपरीतानि पश्यसि ।
स्वप्नान्ते जागरान्ते च तस्मात्प्रशममिच्छसि ॥ ५-७४-१६ (३४५०८)
अहो नाशंससे किंचित्पुंस्त्वं क्लीब इवात्मनि ।
कश्मलेनाभिपन्नोऽसि तेन ते विकृतं मनः ॥ ५-७४-१७ (३४५०९)
उद्वेपते ते हृदयं मनस्ते प्रतिसीदति ।
ऊरुस्तम्भगृहीतोऽसि तस्मात्प्रशममिच्छसि ॥ ५-७४-१८ (३४५१०)
अनित्यं किल मर्त्यस्य पार्थ चित्तं चलाचलम् ।
वातवेगप्रचलिता अष्ठीला शाल्मलेरिव ॥ ५-७४-१९ (३४५११)
तवैषा विकृता बुद्धिर्गवां वागिव मानुषी ।
मनांसि पाण्डुपुत्राणां मज्जयत्यप्लवानिव ॥ ५-७४-२० (३४५१२)
इदं मे महादाश्चर्यं पर्वतस्येव सर्पणम् ।
यदीदृशं प्रभाषेथा भीमसेनासमं वचः ॥ ५-७४-२१ (३४५१३)
स दृष्ट्वा स्वानि कर्माणि कुले जन्म च भारत ।
उत्तिष्ठस्व विषादं मा कृथा वीर स्थिरो भव ॥ ५-७४-२२ (३४५१४)
न चैतदनुरूपं ते यत्ते ग्लानिररिन्दम ।
यदोजसा न लभते क्षत्रियो न तदश्नुते ॥ ॥ ५-७४-२३ (३४५१५)

इति श्रीमन्महाभारते उद्योगपर्वणि भगवद्यानपर्वणि
चतुःसप्ततितमोऽध्यायः ॥
Mahabharata - Udyoga Parva - Chapter Footnotes

५-७४-६ अग्निवत् अग्निनेव ॥
५-७४-८ आरुज्य भङ्क्त्वा ॥
५-७४-९ अस्मिन्वने । जनेन ब्राह्मणरामूहेन। क्षिपसि नपसि कालमिति शेषः ॥
५-७४-१२ शुक्रं तेजः । निर्मुक्तोऽस्तं गतः। ध्रुवं निश्चयं पुनः पर्येति मेरुं पुनःपुनः प्रदक्षिणीकरोति ॥
५-७४-१९ अष्ठीला फलान्तर्ग्रन्थिः । सा च शाल्मलेः केवलं तूलमयी भवति ॥

---

उद्योगपर्व-अध्यय०७५
॥ श्रीः ॥
५.७५. अध्यायः ७५

Mahabharata - Udyoga Parva - Chapter Topics

भीमेन कृष्णंप्रति स्वसामर्थ्यकथनपूर्वकं स्वस्य शमकामनायाः कृपामूलकत्वकथनम् ॥ १ ॥

Mahabharata - Udyoga Parva - Chapter Text

५-७५-० (३४५१६)
वैशंपायन उवाच। ५-७५-०क्ष् (३६२५)
तथोक्तो वासुदेवेन नित्यमन्युरमर्षणः ।
सदश्ववत्समाधावद्बभाषे तदनन्तरम् ॥ ५-७५-१ (३४५१७)
भीमसेन उवाच। ५-७५-२क्ष् (३६२६)
अन्यथा मां चिकीर्षन्तमन्यथा मन्यसेऽच्युत ।
प्रणीतभावमत्यर्थं युधि सत्यपराक्रमम् ॥ ५-७५-२ (३४५१८)
वेत्सि दाशार्ह सत्यं मे दीर्घकालं सहोषितः ।
उत वा मां न जानासि प्लवन्ह्रद इवाप्लवे ॥ ५-७५-३ (३४५१९)
तस्मादनभिरुपाभिर्वाग्भिर्मां त्वं समर्च्छसि ।
कथं हि भीमसेनं मां जानन्कश्चन माधव ॥ ५-७५-४ (३४५२०)
ब्रूयादप्रतिरूपाणि यथा मां वक्तमर्हसि ।
तस्मादिदं प्रवक्ष्यामि वचनं वृष्णिनन्दन ॥ ५-७५-५ (३४५२१)
आत्मनः पौरुषं चैव बलं च न समं परैः ।
सर्वथाऽनार्यकर्मैतत्प्रशंसा स्वयमात्मनः ॥ ५-७५-६ (३४५२२)
अतिवादापविद्धस्तु वक्ष्यामि बलमात्मनः ।
पश्येमे रोदसी कृष्ण ययोरासन्निमाः प्रजाः ॥ ५-७५-७ (३४५२३)
अचले चाप्रतिष्ठे चाप्यनन्ते सर्वमातरौ ।
यदीमे सहसा क्रुद्धे समेयातां शिले इव ॥ ५-७५-८ (३४५२४)
अहमेते निगृह्णीयां बाहुभ्यां सचसाचरे ।
पश्यैतदन्तरं बाह्वोर्महापरिघयोरिव ॥ ५-७५-९ (३४५२५)
य एतत्प्राय मुच्येत न तं पश्यामि पुरूषम् ।
हिमवांश्च समुद्रश्च वज्री वा बलमित्स्वयम् ॥ ५-७५-१० (३४५२६)
मयाभिपन्नं त्रायेरन्बलमास्थाय न त्रयः ।
युद्धार्हान्क्षत्रियान्सर्वान्पाण्डवेष्वाततायिनः ॥ ५-७५-११ (३४५२७)
अधः पादतलेनैतानधिष्ठास्यामि भूतले ।
न हि त्वं नाभिजानासि मम विक्रममच्युत ॥ ५-७५-१२ (३४५२८)
यथा मया विनिर्जित्य राजानो वशगाः कृताः ।
अथ चेन्मां न जानासि सूर्यस्येवोद्यतः प्रभाम् ॥ ५-७५-१३ (३४५२९)

विगाढे युधि संबाधे वेत्स्यसे मां जनार्दन ।
परुषैराक्षिपसि किं व्रणं सूच्येव चानघ ॥ ५-७५-१४ (३४५३०)
यथामति ब्रवीम्येतद्विद्धि मामधिकं ततः ।
द्रष्टासि युधि संबाधे प्रवृत्ते वैशसेऽहनि ॥ ५-७५-१५ (३४५३१)
मया प्रणुन्नान्मातङ्गात्न्थिनः सादनस्तथा ।
तथा नरानभिक्रुद्धं निघ्नन्तं क्षत्रियर्षभान् ॥ ५-७५-१६ (३४५३२)
द्रष्टा मां त्वं च लोकश्च विकर्षन्तं वरान्वरान् ।
न मे सीदन्ति गात्राणि न ममोद्विपते मनः ॥ ५-७५-१७ (३४५३३)
सर्वलोकादभिक्रुद्धान्न भयं विद्यते मम ।
किं तु सौहृदमेवैतत्कृपया मधुसूदन ।
सर्वांस्तितिक्षे संक्लेशान्मा स्म नो भरता नशन् ॥ ॥ ५-७५-१८ (३४५३४)

इति श्रीमन्महाभारते उद्योगपर्वणि भगवद्यानपर्वणि
पञ्चसप्ततितमोऽध्यायः ॥
Mahabharata - Udyoga Parva - Chapter Footnotes

५-७५-१ समाधावत् तीव्रवेगं यथा स्यात्तथा ॥
५-७५-३ ह्रदे प्लवन् पारमिवेति शेषः ॥
५-७५-१४ संबाधे संकीर्णे ॥
५-७५-१५ वैशसे विशसनवति ॥

---

उद्योगपर्व-अध्यय०७६
॥ श्रीः ॥
५.७६. अध्यायः ७६

Mahabharata - Udyoga Parva - Chapter Topics
श्रीकृष्णेन भीमंप्रति स्वस्य तन्महिमाभिज्ञत्वमभिधाय
तत्प्रशंसनपूर्वकं स्वोक्तेः तेजस्सन्दीपनार्थत्वकथनम् ॥ १ ॥

Mahabharata - Udyoga Parva - Chapter Text

५-७६-० (३४५३५)
श्रीभगवानुवाच। ५-७६-०क्ष् (३६२७)
भावं जिज्ञासमानोऽहं प्रणयादिदमब्रवम् ।
न चाक्षेपान्न पाण्डित्यान्न क्रोधान्न विवक्षया ॥ ५-७६-१ (३४५३६)
वेदाहं तव माहात्म्यसुत ते वेद यद्बलम् ।
उत ते वेद कर्माणि न त्वां परिभवाम्यहम् ॥ ५-७६-२ (३४५३७)

यथा चात्मनि कल्याणं संभावयसि पाण्डव ।
सहस्रगुणमप्येतत्त्वयि संभावयाम्यहम् ॥ ५-७६-३ (३४५३८)
यादृशे च कुले जन्म सर्वराजाभिपूजिते ।
बन्धुभिश्च सुहृद्भिश्च भीम त्वमसि तादृशः ॥ ५-७६-४ (३४५३९)
जिज्ञासन्तो हि धर्मस्य सन्दिग्धस्य वृकोदर ।
पर्यायं नाध्यवस्यन्ति देवमानुषयोर्जनाः ॥ ५-७६-५ (३४५४०)
स एव हेतुर्भूत्वा हि पुरुषस्यार्थसिद्धिषु ।
विनाशेऽपि स एवास्य सन्दिग्धं कर्म पौरुषम् ॥ ५-७६-६ (३४५४१)
अन्यथा परिदृष्टानि कविभिर्दोषदर्शिभिः ।
अन्यथा परिवर्तन्ते वेगा इव नभस्वतः ॥ ५-७६-७ (३४५४२)
सुमन्त्रितं सुनीतं च न्यायतश्चोपपादितम् ।
कृतं मानुष्यकं कर्म दैवेनापि विरुद्ध्यते ॥ ५-७६-८ (३४५४३)
दैवमप्यकृतं कर्म पौरुषेण विहन्यते ।
शीतमुष्णं तथा वर्षं क्षुत्पिपासे च भारत ॥ ५-७६-९ (३४५४४)
यदन्यद्दिष्टभावस्य पुरुषस्य स्वयं कृतम् ।
तस्मादनुपरोधश्च विद्यते तत्र लक्षणम् ॥ ५-७६-१० (३४५४५)
लोकस्य नान्यतो वृत्तिः पाण्डवान्यत्र कर्मणः ।
एवंबुद्धिः प्रवर्तेत फलं स्यादुभयान्वये ॥ ५-७६-११ (३४५४६)
य एवं कृतबुद्धिः स कर्मस्वेव प्रवर्तते ।
नासिद्धो व्यथते तस्य न सिद्धौ हर्षमश्नुते ॥ ५-७६-१२ (३४५४७)
तत्रेयमनुमात्रा मे भीमसेन विवक्षिता ।
नैकान्तसिद्धिर्वक्तव्या शत्रुभिः सह संयुगे ॥ ५-७६-१३ (३४५४८)
नातिप्रहीणरश्मिः स्यात्तथा भावविपर्यये ।
विषादमर्च्छेद् ग्लानिं वाप्येतमर्थं ब्रवीमिते ॥ ५-७६-१४ (३४५४९)
श्वोभूते धृतराष्ट्रस्य समीपं प्राप्य पाण्डव ।
यतिष्ये प्रशमं कर्तुं युष्मदर्थमहापयन् ॥ ५-७६-१५ (३४५५०)
शमं चेत्ते करिष्यन्ति ततोऽनन्तं यशो मम ।
भवतां कच कृतः कामस्तेषां च श्रेय उत्तमम् ॥ ५-७६-१६ (३४५५१)
ते चेदभिनिवेक्ष्यन्ते नाभ्युपैष्यन्ति मे वचः ।
कुरवो युद्धमेवात्र घोरं कर्म भविष्यति ॥ ५-७६-१७ (३४५५२)
अस्मिन्युद्धे भीमसेन त्वयि भारः समाहितः ।
धूरर्जुनेन धार्या स्याद्वोढव्य इतरो जनः ॥ ५-७६-१८ (३४५५३)
अहं हि यन्ता बीभत्सोर्भविता संयुगे सति ।
धनञ्जयस्यैष कामो न हि युद्धं न कामये ॥ ५-७६-१९ (३४५५४)
तस्मादाशङ्कमानोऽहं वृकोदर मतिं तव ।
गदतः क्लीबया वाचा तेजस्ते समदीदिपम् ॥ ॥ ५-७६-२० (३४५५५)

इति श्रीमन्महाभारते उद्योगपर्वणि भगवद्यानपर्वणि
षट्सप्ततितमोऽध्यायः ॥
Mahabharata - Udyoga Parva - Chapter Footnotes

५-७६-१ भावमिति  । विवक्षया त्वया स्वरूपं
वक्तव्यमितीच्छया। प्रागेव तस्य ज्ञातत्वात् ॥
१ ॥
५-७६-५ देवमानुषयोर्धर्मस्य पर्यायमिति संबन्धः ॥
५-७६-७ परिदृष्टानि कर्तव्यत्वेन निश्चितानि कार्याणि ॥
५-७६-१० दिष्टः फलभोगाय आज्ञप्तः भावः सत्ता यस्य
तत् दिष्टभावं प्रारब्धकर्म  । पञ्चम्यर्थे षष्ठी
। प्रारब्धादन्यदित्यर्थः  । पुरुषस्य पुरुषेण संचितं
यत्स्वयंकृतं कर्म तस्मादनुपरोधो जन्मान्तरे निरोधो नास्ति। तत्र
ज्ञानेन प्रायश्चित्तेन वा संचितपापानां नाशे लक्षणं ज्ञापकं
श्रुतिस्मृतिजातं विद्यते ॥
५-७६-११ कर्मणोऽन्यत्र पौरुषंविना अन्यत एकस्माद्दैवादेव
वृत्तिर्जीविका नास्ति  । एवं बुद्धिः ईदृक्ज्ञानवान्सन् प्रवर्तेत
पुरुषकारं कुर्यात्। तथा सति उभयान्वये दैवपौरुषयोः संबन्धे
फलं भवति नान्यतरत इत्यर्थः ॥
५-७६-१३ अनुमात्राऽवधारणं निश्चय इत्यर्थः ॥
५-७६-१४ प्रहीणरश्मिः निष्प्रभः  । भावः प्रारब्धं कर्म। अच्छेत्
प्राप्नुयात् ॥
५-७६-१७ ते कुरव इति संबन्धः ॥
५-७६- ५-७६- ५-७६-

---

उद्योगपर्व-अध्यय०७७
॥ श्रीः ॥
५.७७. अध्यायः ७७

Mahabharata - Udyoga Parva - Chapter Topics
अर्जुनेन सन्धिविग्रहपक्षौ प्रस्तुत्य श्रीकृष्णंप्रति यथारुचि
अन्यतरपक्षनिर्धारणकरणप्रार्थना ॥ १ ॥

Mahabharata - Udyoga Parva - Chapter Text

५-७७-० (३४५५६)

अर्जुन उवाच। ५-७७-०क्ष् (३६२८)
उक्तं युधिष्ठिरेणैव यावद्वाच्यं जनार्दन ।
तव वाक्यं तु मे श्रुत्वा प्रतिभाति परन्तप ॥ ५-७७-१ (३४५५७)
नैव प्रशममत्र त्वं मन्यसे सुकरं प्रभो ।
लोभाद्वा धृतराष्ट्रस्य दैन्याद्वा समुपस्थितात् ॥ ५-७७-२ (३४५५८)
अफलं मन्यसे वाऽपि पुरुषस्य पराक्रमम् ।
न चान्तरेण कर्माणि पौरुषेण बलोदयः ॥ ५-७७-३ (३४५५९)
तदिदं भाषितं वाक्यं तथाचन तथैव तत् ।
न चैतदेवं द्रष्टव्यमसाध्यमपि किंचन ॥ ५-७७-४ (३४५६०)
किं चैतन्मन्यसे कृच्छ्रमस्माकमवसादकम् ।
कुर्वन्ति तेषां कर्माणि येषां नास्ति फलोदयः ॥ ५-७७-५ (३४५६१)
संपाद्यमानं सम्यक्व स्यात्कर्म सफलं प्रभो ।
स तथा कृष्ण वर्तस्व यथा शर्म भवेत्परैः ॥ ५-७७-६ (३४५६२)
पाण्डवानां कुरूणां च भवान्नः प्रथमः सुहृत् ।
सुराणामसुराणां च यथा वीर प्रजापतिः ॥ ५-७७-७ (३४५६३)
कुरूणां पाण्डवानां च प्रतिपत्स्व निरामयम् ।
अस्मद्धितमनुष्ठानं मन्ये तव न दुष्करम् ॥ ५-७७-८ (३४५६४)
एवं च कार्यतामेति कार्यं तव जनार्दन ।
गमनादेवमेव त्वं करिष्यसि जनार्दन ॥ ५-७७-९ (३४५६५)
चिकीर्षितमथान्यत्ते तस्मिन्वीर दुरात्मानि ।
भविष्यति च तत्सर्वं यथा तव चिकीर्षितम् ॥ ५-७७-१० (३४५६६)
शर्म तैः सह वा नोऽस्तु तव वा यच्चिकीर्षितम् ।
विचार्यमाणो यः कामस्तव कृष्ण स नो गुरुः ॥ ५-७७-११ (३४५६७)
न स नार्हति दुष्टात्मा वधं ससुतबान्धवः ।
येन धर्मसुते दृष्टा न सा श्रीरुपमर्षिता ॥ ५-७७-१२ (३४५६८)
यच्चाप्यपश्यतोपायं धर्मिष्ठं मधुसूदन ।
उपायेन नृशंसेन हृता दुर्द्यूतदेविना ॥ ५-७७-१३ (३४५६९)
कथं हि पुरुषो जातः क्षत्रियेषु धनुर्धरः ।
समाहूतो निवर्तेत प्राणत्यागेऽप्युपस्थिते ॥ ५-७७-१४ (३४५७०)
अधर्मेण जितान्दृष्ट्वा वने प्रवृजितांस्तथा ।
वध्यतां मम वार्ष्णेय निर्गतोऽसौ सुयोधनः ॥ ५-७७-१५ (३४५७१)
न चैतदद्भुतं कृष्ण मित्रार्थे यच्चिकीर्षसि ।
क्रिया कथंच मुख्या स्यान्मृदुना चेतरेण वा ॥ ५-७७-१६ (३४५७२)
अथवा मन्यसे ज्यायान्वधस्तेषामनन्तरम् ।
तदेव क्रियतामाशु न विचार्यमतस्त्वया ॥ ५-७७-१७ (३४५७३)
जानासि हि यथैतेन द्रौपदी पापबुद्धिना ।

परिक्लिष्टा सभामध्ये तच्च तस्योपमर्षितम् ॥ ५-७७-१८ (३४५७४)
स नाम सम्यग्वर्तेत पाण्डवेष्विति माधव ।
न मे सञ्जायते बुद्धिर्बीजमुप्तमिवोषरे ॥ ५-७७-१९ (३४५७५)
तस्माद्यन्मन्यसे युक्तं पाण्डवानां हितं च यत् ।
तथाऽऽशु कुरु वार्ष्णेय यन्नः कार्यमनन्तरम् ॥ ॥ ५-७७-२० (३४५७६)

इति श्रीमन्महाभारते उद्योगपर्वणि भगवद्यानपर्वणि
सप्तसप्ततितमोऽध्यायः ॥

Mahabharata - Udyoga Parva - Chapter Footnotes

५-७७-२ दैन्याद्वा अस्मदीयात् ॥
५-७७-४ नहि युद्धं न कामये इति यत्त्वया भाषित तथाचन
तथापिच चनशब्दोऽप्यर्थे । यद्यपि ममैतदनिष्टं तथापि
त्वया यद्भाषितं तत्तथैव भविध्यतीत्यर्थः । परंतु शमोपि
तव नासाध्योऽस्तीत्याह नचेति ॥
५-७७-८ निरामयं कुशलम् ॥
५-७७-९ कार्यतां औचित्यम् । कार्यं कर्म ॥
५-७७-१४ समाहूतो द्यूतार्थम् ॥
५-७७-१५ निर्गतः निश्चयेन प्राप्तः ॥
५-७७-१६ कथंच कथमपि । मुख्या फलवती। मृदुना साम्ना। इतरेण
युद्धेन ॥

---

उद्योगपर्व-अध्यय०७८
॥ श्रीः ॥
५.७८. अध्यायः ७८

Mahabharata - Udyoga Parva - Chapter Topics

श्रीकृष्णेन अर्जुनंप्रति दण्डार्हे सुयोधने शमकरणस्य
दुश्शकत्वाभिधानपूर्वकं युधिष्ठिरगौरवेण स्वस्य तदर्थं
प्रयतनकथनम् ॥ १ ॥

Mahabharata - Udyoga Parva - Chapter Text

५-७८-० (३४५७७)
श्रीभगवानुवाच। ५-७८-०क्ष् (३६२९)
एवमेतन्महाबाहो यथा वदसि पाण्डव ।
पाण्डवानां कुरूणां च प्रतिपत्स्ये निरामयम् ।

सर्वं त्विदं ममायत्तं बीभत्सो कर्मणोर्द्वयोः ॥ ५-७८-१ (३४५७८)
क्षेत्रं हि रसवच्छुद्धं कर्मणैवोपपादितम् ।
ऋते वर्षान्न कौन्तेय जातु निर्वर्तयेत्फलम् ॥ ५-७८-२ (३४५७९)
तत्र वै पौरुषं ब्रूयुरासेकं यत्र कारितम् ।
तत्र चापि ध्रुवं पश्येच्छोषणं दैवकारितम् ॥ ५-७८-३ (३४५८०)
तदिदं निश्चित्तं बुद्ध्या पूर्वैरपि महात्मभिः ।
दैवे च मानुषे चैव संयुक्तं लोककारणम् ॥ ५-७८-४ (३४५८१)
अहं हि तत्करिष्यामि परं पुरुषकारतः ।
देवं तु न मया शक्यं कर्म कर्तुं कथंचन ॥ ५-७८-५ (३४५८२)
स हि धर्मं च लोकं च त्यक्त्वा चरति दुर्मतिः ।
न हि सन्तप्यते तेन तथारूपेण कर्मणा ॥ ५-७८-६ (३४५८३)
तथापि बुद्धिं पापिष्ठां वर्धयन्त्यस्य मन्त्रिणः ।
शकुनिः सूतपुत्रश्च भ्राता दुःशासनस्तथा ॥ ५-७८-७ (३४५८४)
स हि त्यागेन राज्यस्य न शमं समुपैष्यति ।
अन्तरेण वधं पार्थ सानुबन्धः सुयोधनः ॥ ५-७८-८ (३४५८५)
न चापि प्रणिपातेन त्यक्तुमिच्छति धर्मराट् ।
याच्यमानश्च राज्यं स न प्रजास्यति दुर्मतिः ॥ ५-७८-९ (३४५८६)
न तु मन्ये स तद्वाच्यो यद्युधिष्ठिरशातनम् ।
उक्तं प्रयोजनं यत्तु धर्मराजेन भारत ॥ ५-७८-१० (३४५८७)
तथा पापस्तु तत्सर्वं न करिष्यति कौरवः ।
तस्मिंश्चाक्रियमाणेऽसौ लोके वध्यो भविष्यति ॥ ५-७८-११ (३४५८८)
मम चापि स वध्यो हि जगतश्चापि भारत ।
तेन कौमारके यूयं सर्वे विप्रकृताः सदा ॥ ५-७८-१२ (३४५८९)
विप्रलुप्तं च वो राज्यं नृशंसेन दुरात्मना ।
न चोपशाम्यते पापः श्रियं दृष्ट्वा युधिष्ठिरे ॥ ५-७८-१३ (३४५९०)
असकृच्चाप्यहं तेन त्वत्कृते पार्थ भेदितः ।
न मया तद्गृहीतं च पापं तस्य चिकीर्षितम् ॥ ५-७८-१४ (३४५९१)
जानासि हि महाबाहो त्वमप्यस्य परं मतम् ।
प्रियं चिकीर्षमाणं च धर्मराजस्य मामपि ॥ ५-७८-१५ (३४५९२)
संजानंस्तस्य चात्मानं मम चैव परं मतम् ।
अजानन्निव मां कस्मादर्जुनाद्याभिशङ्कसे ॥ ५-७८-१६ (३४५९३)
यच्चापि परमं दिव्यं तच्चाप्यनुगतं त्वया ।
विधानं विहितं पार्थ कथं शर्म भवेत्परैः ॥ ५-७८-१७ (३४५९४)
यत्तु वाचा मया शक्यं कर्मणा वाऽपि पाण्डव ।
करिष्ये तदहं पार्थ न त्वाशंसे शमं परैः ॥ ५-७८-१८ (३४५९५)
कथं गोहरणे ह्युक्तो नैतच्छर्म तथा हितम् ।

याच्यमानो हि भीष्मेण संवत्सरगतेऽध्वनि ॥ ५-७८-१९ (३४५९६)
तदैव ते पराभूता यदा सङ्कल्पितास्त्वया ।
लवशः क्षणशश्चापि न च तुष्टः सुयोधनः ॥ ५-७८-२० (३४५९७)
सर्वथा तु मया कार्यं धर्मराजस्य शासनम् ।
विभाव्यं तस्य भूयश्च कर्म पापं दुरात्मनः ॥ ॥ ५-७८-२१ (३४५९८)

इति श्रीमन्महाभारते उद्योगपर्वणि भगवद्यानपर्वणि
अष्टसप्ततितमोऽध्यायः ॥

Mahabharata - Udyoga Parva - Chapter Footnotes

५-७८-१ द्वयोः कर्मणोः शमयुद्धयोर्मध्ये इदं अनामयम् ॥
५-७८-४ संयुक्तं आहितम् । लोककारणं लोकहितसाधनम् ॥
५-७८-१७ दिव्यं विधानं भूभारापहारार्थं स्वर्गाद्देवानामवतरणम् ॥
५-७८-१८ आशंसे संभावयामि ॥
५-७८-१९ भीष्मेण एतच्छर्म याच्यमानोपि सः हितं कथं नोक्तः
अपितु उक्तः । संवत्सरगते गतसंवत्सरे ॥
५-७८-२० संकल्पिताः वध्यत्वेन निश्चिताः ॥
५-७८-२१ विभाव्यं विचारणीयम् ॥

---

उद्योगपर्व-अध्यय०७९
॥ श्रीः ॥
५.७९. अध्यायः ७९

Mahabharata - Udyoga Parva - Chapter Topics

नकुलेन श्रीकृष्णंप्रति स्वस्य शमे अभिसन्धिप्रदर्शनपूर्वकं
सन्धिकरणस्य तेन सुशकत्वाभिधानम् ॥ १ ॥

Mahabharata - Udyoga Parva - Chapter Text

५-७९-० (३४५९९)
नकुल उवाच । ५-७९-०क्ष् (३६३०)
उक्तं बहुविधं वाक्यं धर्मराजेन माधव ।
धर्मज्ञेन वदान्येन श्रुतं चैव हि तत्त्वया ॥ ५-७९-१ (३४६००)
मतमाज्ञाय राज्ञश्च भीमसेनेन माधव ।
संशमो बाहुवीर्यं च ख्यापितं माधवात्मनः ॥ ५-७९-२ (३४६०१)
तथैव फाल्गुनेनापि यदुक्तं तत्त्वया श्रुतम् ।
आत्मनश्च मतं वीर कथितं भवताऽसकृत् ॥ ५-७९-३ (३४६०२)

सर्वमेतदतिक्रम्य श्रुत्वा परमतं भवान् ।
यत्प्राप्तकालं मन्येथास्तत्कुर्याः पुरुषोत्तम ॥ ५-७९-४ (३४६०३)
तस्मिंस्तस्मिन्निमित्ते हि मतं भवति केशव ।
प्राप्तकालं मनुष्येण क्षमं कार्यमरिन्दम ॥ ५-७९-५ (३४६०४)
अन्यथा चिन्तितो ह्यर्थः पुनर्भवति सोऽन्यथा ।
अनित्यमतयो लोके नराः पुरुषसत्तम ॥ ५-७९-६ (३४६०५)
अन्यथाबुद्धयो ह्यासन्नस्मासु वनवासिषु ।
अदृश्येष्वन्यथा कृष्ण दृश्येषु पुनरन्यथा ॥ ५-७९-७ (३४६०६)
अस्माकमपि वार्ष्णेय वने विचरतां तदा ।
न तथा प्रणयो राज्ये यथा संप्रति वर्तते ॥ ५-७९-८ (३४६०७)
निवृत्तवनवासान्नः श्रुत्वा वीर समागताः ।
अक्षौहिण्यो हि सप्ते मास्त्वत्प्रसादाज्जनार्दन ॥ ५-७९-९ (३४६०८)
इमान्हि पुरुषव्याघ्रानचिन्त्यबलपौरुषात् ।
आत्तशस्त्रान्रणे दृष्ट्वा न व्यथेदिह कः पुमान् ॥ ५-७९-१० (३४६०९)
स भवान्कुरुमध्ये तं सान्त्वपूर्वं भयोत्तरम् ।
ब्रूयाद्वाक्यं यथा मन्दो न व्यथेत सुयोधनः ॥ ५-७९-११ (३४६१०)
युधिष्ठिरं भीमसेनं बीभत्सुं चापराचितम् ।
सहदेवं च मां चैव त्वां च रामं च केशव ॥ ५-७९-१२ (३४६११)
सात्यकिं च महावीर्यं विराटं च महात्मजम् ।
द्रुपदं च महामात्यं धृष्टद्युम्नं च माधव ॥ ५-७९-१३ (३४६१२)
काशिराजं च विक्रान्तं धृष्टकेतुं च चेदिपम् ।
मांसशोणितभृन्मर्त्यः प्रतियुध्येत को युधि ॥ ५-७९-१४ (३४६१३)
स भवान्गमनादेव साधयिष्यत्यसंशयम् ।
इष्टमर्थं महाबाहो धर्मराजस्य केवलम् ॥ ५-७९-१५ (३४६१४)
विदुरश्चैव भीष्मश्च द्रोणश्च सहबाह्लिकः ।
श्रेयः समर्था विज्ञातुमुच्यमानास्त्वयाऽनघ ॥ ५-७९-१६ (३४६१५)
ते चैनमनुनेष्यन्ति धृतराष्ट्रं जनाधिपम् ।
तं च पापसमाचारं सहामात्यं सुयोधनम् ॥ ५-७९-१७ (३४६१६)
श्रोता चार्थस्य विदुरस्त्वं च वक्ता जनार्दन ।
कमिवार्थं निवर्तन्तं स्थापयेतां न वर्त्मनि ॥ ॥ ५-७९-१८ (३४६१७)

इति श्रीमन्महाभारते उद्योगपर्वणि भगवद्यानपर्वणि
एकोनाशीतितमोऽध्यायः ॥

Mahabharata - Udyoga Parva - Chapter Footnotes

५-७९-१८ अर्थं प्रयोजनम् । निवर्तन्तं भ्रश्यन्तम् ॥

॥ श्रीः ॥
५.८०. अध्यायः ८०

Mahabharata - Udyoga Parva - Chapter Topics
सहदेवेन श्रीकृष्णंप्रति कुरूणां शमाभिसन्धावपि युद्धपक्षस्यैव स्थापनकथनम् ॥ १ ॥
सात्यकिना सहदेवपक्षानुमोदने योधानां सर्षात्सिंहनादः ॥ २ ॥

Mahabharata - Udyoga Parva - Chapter Text

५-८०-० (३४६१८)
सहदेव उवाच। ५-८०-०क्ष् (३६३१)
यदेतत्कथितं राज्ञा धर्म एष सनातनः ।
यथा च युद्धमेव स्यात्तथा कार्यमरिन्दम ॥ ५-८०-१ (३४६१९)
यदि प्रसममिच्छेयुः कुरवः पाण्डवैः सह ।
तथापि युद्धं दाशार्ह योजयेथाः सहैव तैः ॥ ५-८०-२ (३४६२०)
कथं नु दृष्ट्वा पाञ्चालीं तथा कृष्ण सभागताम् ।
अवधेन प्रशाम्येत मम मन्युः सुयोधने ॥ ५-८०-३ (३४६२१)
यदि भीमार्जुनौ कृष्ण धर्मराजश्च धार्मिकः ।
धर्ममुत्सृज्य तेनाहं योद्धुमिच्छामि संयुगे ॥ ५-८०-४ (३४६२२)
ब्रूहि मद्वचनं कृष्ण सुयोधनमपण्डितम् ।
कृच्छ्रे वने वा वस्तव्यं पुरे वा नागसाह्वये ॥ ५-८०-५ (३४६२३)
सात्यकिरुवाच। ५-८०-६क्ष् (३६३२)
सत्यमाह महाबाहो सहदेवो महामतिः ।
दुर्योधनवधे शान्तिस्तस्य कोपस्य मे भवेत् ॥ ५-८०-६ (३४६२४)
न जानासि यथा दृष्ट्वा चीराजिनधरान्वने ।
तवापि मन्युरुद्भूतो दुःखितान्प्रेक्ष्य पाण्डवान् ॥ ५-८०-७ (३४६२५)
तस्मान्माद्रीसुतः शूरो यदाह रणकर्कशः ।
वचनं सर्वयोधानां तन्मतं पुरुषोत्तम ॥ ५-८०-८ (३४६२६)
वैशंपायन उवाच। ५-८०-९क्ष् (३६३३)
एवं वदि वाक्यं तु युयुधाने महामतौ ।
सुभीमः सिंहनादोऽभूद्योधानां तत्र सर्वशः ॥ ५-८०-९ (३४६२७)
सर्वे हि सर्वशो वीरास्तद्वचः प्रत्यपूजयन् ।
साधुसाध्विति शैनेयं हर्षयन्तो युयुत्सवः ॥ ॥ ५-८०-१० (३४६२८)

इति श्रीमन्महाभारते उद्योगपर्वणि भगवद्यानपर्वणि अशीतितमोऽध्यायः ॥
Mahabharata - Udyoga Parva - Chapter Footnotes

५-८०-४ यदि यद्यपि भीमादयो धार्मिकाः स्युः तथापि अहं
धर्ममुत्सृज्य तेन सह योद्धुमिच्छामि ॥

---

उद्योगपर्व-अध्यय०८१
॥ श्रीः ॥
५.८१. अध्यायः ८१

Mahabharata - Udyoga Parva - Chapter Topics
श्रीकृष्णेन द्यूतसभायां स्वानुभूतदुःसहदुःखमभिनिवेद्य रुदन्तीं
द्रौपदींप्रति सुयोधनादिनिधनप्रतिज्ञानपूर्वकं समाश्वासनम् ॥ १ ॥

Mahabharata - Udyoga Parva - Chapter Text

५-८१-० (३४६२९)
वैशंपायन उवाच। ५-८१-०क्ष् (३६३४)
राज्ञस्तु वचनं श्रुत्वा धर्मार्थसहितं हितम् ।
कृष्णा दाशार्हमासीनमब्रवीच्छोककर्शिता ॥ ५-८१-१ (३४६३०)
सुता द्रुपदराजस्य स्वसितायतमूर्धजा ।
संपूज्य सहदेवं च सात्यकिं च महारथम् ॥ ५-८१-२ (३४६३१)
भीमसेनं च संशान्तं दृष्ट्वा परमदुर्मनाः ।
अश्रुपूर्णेक्षणा वाक्यमुवाचेदं मनस्विनी ॥ ५-८१-३ (३४६३२)
विदितं ते महाबाहो धर्मज्ञ मधुसूदन ।
यथा निकृतिमास्थाय भ्रंशिताः पाण्डवाः सुखात् ॥ ५-८१-४ (३४६३३)
धृतराष्ट्रस्य पुत्रेण सामात्येन जनार्दन ।
यथा च सञ्जयो राज्ञा मन्त्रं रहसि श्रावितः ॥ ५-८१-५ (३४६३४)
युधिष्ठिरस्य दाशार्ह तच्चापि विदितं तव ।
यथोक्तः सञ्जयश्चैव तच्च सर्वं श्रुतं त्वया ॥ ५-८१-६ (३४६३५)
पञ्च नस्तात दीयन्तां ग्रामा इति महाद्युते ।
अविस्थलं वृकस्थलं माकन्दीं वारणावतम् ॥ ५-८१-७ (३४६३६)
अवसानं महाबाहो कंचिदेकं च पञ्चमम् ।
इति दुर्योधनो वाच्यः सुहृदश्चास्य केशव ॥ ५-८१-८ (३४६३७)
न चापि ह्यकरोद्वाक्यं श्रुत्वा कृष्ण सुयोधनः ।
युधिष्ठिरस्य दाशार्ह श्रीमतः सन्धिमिच्छतः ॥ ५-८१-९ (३४६३८)

अप्रदानेन राज्यस्य यदि कृष्ण सुयोधनः ।
सन्धिमिच्छेन्न कर्तव्यं तत्र गत्वा कथंचन ॥ ५-८१-१० (३४६३९)
शक्ष्यन्ति हि महाबाहो पाण्डवाः सृञ्जयैः सह ।
धार्तराष्ट्रबलं घोरं क्रुद्धं प्रतिसमासितुम् ॥ ५-८१-११ (३४६४०)
न हि साम्ना न दानेन शक्योऽर्थस्तेषु कश्चन ।
तस्मात्तेषु न कर्तव्या कृपा ते मधुसूदन ॥ ५-८१-१२ (३४६४१)
साम्ना दानेन वा कृष्ण ये न शाम्यन्ति शत्रवः ।
योक्तव्यस्तेषु दण्डः स्याज्जीवितं परिरक्षता ॥ ५-८१-१३ (३४६४२)
तस्मात्तेषु महादण्डः क्षेप्तव्यः क्षिप्रमच्युत ।
त्वया चैव महाबाहो पाण्डवैः सह सृञ्जयैः ॥ ५-८१-१४ (३४६४३)
एतत्समर्थं पार्थानां तव चैव यशस्करम् ।
क्रियमाणं भवेत्कृष्ण क्षत्रस्य च सुखावहम् ॥ ५-८१-१५ (३४६४४)
क्षत्रियेण हि हन्तव्यः क्षत्रियो लोभमास्थितः ।
अक्षत्रियो वा दाशार्ह स्वधर्ममनुतिष्ठता ॥ ५-८१-१६ (३४६४५)
अन्यत्र ब्राह्मणात्तात सर्वपापेष्ववस्थितात् ।
गुरुर्हि सर्ववर्णानां ब्राह्मणः प्रसृताग्रभुक् ॥ ५-८१-१७ (३४६४६)
यथाऽवध्ये वध्यमाने भवेद्दोषो जनार्दन ।
स वध्यस्यावधे दृष्ट इति धर्मविदो विदुः ॥ ५-८१-१८ (३४६४७)
यथा त्वां न स्पृशेदेष दोषः कृष्ण तथा कुरु ।
पाण्डवैः सह दाशर्हैः सृञ्जयैश्च ससैनिकैः ॥ ५-८१-१९ (३४६४८)
पुनरुक्तं च वक्ष्यामि विश्रम्भेण जनार्दन ।
का तु सीमन्तिनी मादृकं पृथिव्यामस्ति केशव ॥ ५-८१-२० (३४६४९)
सुता द्रुपदराजस्य वेदिमध्यात्समुत्थिता ।
धृष्टद्युम्नस्य भगिनी तव कृष्ण प्रिया सखी ॥ ५-८१-२१ (३४६५०)
आजमूढकुलं प्राप्त स्नुषा पाण्डोर्महात्मनः ।
महिषी पाण्डुपुत्राणां पञ्चेन्द्रसमवर्चसाम् ॥ ५-८१-२२ (३४६५१)
सुता मे पञ्चभिर्वीरैः पञ्च जाता महारथाः ।
अभिमन्युर्यथा कृष्ण तथा ते तव धर्मतः ॥ ५-८१-२३ (३४६५२)
साऽहं केशग्रहं प्राप्ता परिक्लिष्टा सभां गता ।
पश्यतां पाण्डुपुत्राणां त्वयि जीवति केशव ॥ ५-८१-२४ (३४६५३)
जीवत्सु पाण्डुपुत्रेषु पञ्चालेष्वथ वृष्णिषु ।
दासीभाताऽस्मि पापानां सभामध्ये व्यवस्थिता ॥ ५-८१-२५ (३४६५४)
निरमर्षेष्वचेष्टेषु प्रेक्ष्यमाणेषु पाण्डुषु ।
पाहि मामिति गोविन्द मनसा चिन्तितोसि मे ॥ ५-८१-२६ (३४६५५)
यत्र मां भगवान्राजा श्वशुरो वाक्यमब्रवीत् ।
वरं वृणीष्व पाञ्चालि वरार्हाऽसि मता मम ॥ ५-८१-२७ (३४६५६)

अदासाः पाण्डवाः सन्तु सरथाः सायुधा इति ।
मयोक्ते यत्र निर्मुक्ता वनवासाय केशव ॥ ५-८१-२८ (३४६५७)
एवंविधानां दुःखानामभिज्ञोऽसि जनार्दन ।
त्रायस्व पुण्डरीकाक्ष सभर्तृज्ञातिबान्धवान् ॥ ५-८१-२९ (३४६५८)
नन्वहं कृष्ण भीष्मस्य धृतराष्ट्रस्य चोभयोः ।
श्नुषा भवामि धर्मेण साऽहं दासीकृता बलात् ॥ ५-८१-३० (३४६५९)
धिक्पार्थस्य धनुष्मत्तां भीमसेनस्य धिग्बलम् ।
यत्र दुर्योधनः कृष्ण मुहूर्तमपि जीवति ॥ ५-८१-३१ (३४६६०)
यदि तेऽहमनुग्राह्या यदि तेऽस्ति कृपा मयि ।
धार्तराष्ट्रेषु वै कोपः सर्वः कृष्ण विधीयताम् ॥ ५-८१-३२ (३४६६१)
वैशंपायन उवाच। ५-८१-३३क्ष् (३६३५)
इत्युक्त्वा मृदुसंहारं वृजिनाग्रं सुदर्शनम् ।
सुनीलमसितापाङ्गी सर्वगन्धादिवासितम् ॥ ५-८१-३३ (३४६६२)
सर्वलक्षणसंपन्नं महाभुजगवर्चसम् ।
केशपक्षं वरारोहा गृह्य वामेन पाणिना ॥ ५-८१-३४ (३४६६३)
पद्माक्षी पुण्डरीकाक्षमुपेत्य गजगामिनी ।
अश्रुपूर्णेक्षणा कृष्णा कृष्णं वचनमब्रवीत् ॥ ५-८१-३५ (३४६६४)
अयं ते पुण्डरीकाक्ष दुःशासनकरोद्धृतः ।
स्मर्तव्यः सर्वकार्येषु परेषां सन्धिमिच्छताम् ॥ ५-८१-३६ (३४६६५)
यदि भीमार्जुनौ कृष्ण कृपणौ सन्धिकामुकौ ।
पिता मे योत्स्यते वृद्धः सह पुत्रैर्महारथैः ॥ ५-८१-३७ (३४६६६)
पञ्च चैव महावीर्याः पुत्रा मे मधुसूदन ।
अभिमन्युं पुरस्कृत्य योत्स्यन्ते कुरुभिः सह ॥ ५-८१-३८ (३४६६७)
दुःशासनभुजं श्यामं संछिन्नं पांसुकुण्ठितम् ।
यद्यहं तु न पश्यामि का शान्तिर्हृदयस्य मे ॥ ५-८१-३९ (३४६६८)
त्रयोदश हि वर्षाणि प्रतीक्षन्त्या गतानि मे ।
विधाय हृदये मन्युं प्रदीप्तमिव पावकम् ॥ ५-८१-४० (३४६६९)
विदीर्यते मे हृदयं भीमवाक्षल्यपीडितम् ।
योऽयमद्य महाबाहुर्धर्ममेवानुपश्यति ॥ ५-८१-४१ (३४६७०)
इत्युक्त्वा बाष्परुद्धेन कण्ठेनायतलोचना ।
रुरोद कृष्णा सोत्कम्पं सस्वरं बाष्पगद्गदम् ॥ ५-८१-४२ (३४६७१)
स्तनौ पीनायतश्रोणी सहितावभिवर्षती ।
द्रवीभूतमिवात्युष्णं मुञ्चन्ती वारि नेत्रजम् ॥ ५-८१-४३ (३४६७२)
तामुवाच महाबाहुः केशवः परिसान्त्वयन् ।
अचिराद्द्रक्ष्यसे कृष्णे रुदतीर्भरतस्त्रियः ॥ ५-८१-४४ (३४६७३)
एवं ता भीरु रोस्त्यन्ति निहतज्ञातिबान्धवाः ।

हतमित्रा हतबला येषां क्रुद्धाऽसि भामिनी ॥ ५-८१-४५ (३४६७४)
अहं च तत्करिष्यामि भीमार्जुनयमैः सह ।
युधिष्ठिरनियोगेन दैवाच्च विधिनिर्मितात् ॥ ५-८१-४६ (३४६७५)
धार्तराष्ट्राः कालपक्वा न चेच्छृण्वन्ति मे वचः ।
शेष्यन्ते निहता भूमौ श्वसृगालादनीकृताः ॥ ५-८१-४७ (३४६७६)
चलेद्धि हिमवाञ्शैलो मेदिनी शतधा भवेत् ।
द्यौः पतेच्च सनक्षत्रा न मे मोघं वचो भवेत् ॥ ५-८१-४९अग
शुष्येत्तोयनिधिः कृष्णे न मे मोघं वचो भवेत्।'
सत्यं ते प्रतिजानामि कृष्णे बाष्पो निगृह्यताम् ।
हतामित्राञ्श्रिया युक्तानचिदादद्रक्ष्यसे पतीन् ॥ ॥ ५-८१-४८ (३४६७७)

इति श्रीमन्महाभारते उद्योगपर्वणि भगवद्यानपर्वणि
एकाशीतितमोऽध्यायः ॥
Mahabharata - Udyoga Parva - Chapter Footnotes

५-८१-११ प्रतिसमासितुं प्रतिपक्षतया स्थातुम् ॥
५-८१-१५ समर्थं युक्तम् ॥
५-८१-१७ प्रमृतं प्रदत्तं च तदग्रं च तस्य भोक्ता प्रसृताग्रभुक् ॥
५-८१-३३ मृदुसंहारं वेणीरूपेण समाहृतमपि मृदुम् । वृजिनाग्रं
कुटिलाग्रं केशवत्सूक्ष्माग्रं वा। वृजिनः कुटिलेऽन्यवदिति
विश्वः। सुदर्शनं रमणीयम् ॥
५-८१-४५ रोत्स्यन्ति रोदिष्यन्ति ॥

---

उद्योगपर्व-अध्यय०८२
॥ श्रीः ॥
५.८२. अध्यायः ८२

Mahabharata - Udyoga Parva - Chapter Topics
युधिष्ठिरादिभिरनुगम्यमानेन श्रीकृष्णेन रथमधिरुह्य सात्यकिना
सह हास्तिनपुरंप्रति प्रस्थानम् ॥ १ ॥

Mahabharata - Udyoga Parva - Chapter Text

५-८२-० (३४६७८)
अर्जुन उवाच। ५-८२-०क्ष् (३६३६)
कुरूणामद्य सर्वेषां भवान्सुहृदनुत्तमः ।
संबन्धी दयितो नित्यमुभयोः पक्षयोरपि ॥ ५-८२-१ (३४६७९)

पाण्डवैर्धार्तराष्ट्राणां प्रतिपाद्यमनामयम् ।
समर्थः प्रशमं चैव कर्तुमर्हसि केशव ॥ ५-८२-२ (३४६८०)
त्वमित्तः पुण्डरीकाक्ष सुयोधनममर्षणम् ।
शान्त्यर्थं भ्रातरं ब्रूया यत्तद्वाच्यममित्रहन् ॥ ५-८२-३ (३४६८१)
त्वया धर्मार्थयुक्तं चेदुक्तं शिवमनामयम् ।
हितं नादास्यते बालो दिष्टस्य वशमेष्यति ॥ ५-८२-४ (३४६८२)
श्रीभगवानुवाच। ५-८२-५क्ष् (३६३७)
धर्म्यमस्मद्धितं चैव कुरूणां यदनामयम् ।
एष यास्यामि राजानं धृतराष्ट्रमभीप्सया ॥ ५-८२-५ (३४६८३)
वैशंपायन उवाच। ५-८२-६क्ष् (३६३८)
ततो व्यपेते तमसि सूर्ये विमल उद्गते ।
मैत्रे मुहूर्ते संप्राप्ते मद्वर्चिषि दिवाकरे ॥ ५-८२-६ (३४६८४)
कौमुदे मासि रेवत्यां शरदन्ते हिमागमे ।
स्फीतसस्यसुखे काले कल्यः सत्ववतां वरः ॥ ५-८२-७ (३४६८५)
मङ्गल्याः पुण्यनिर्घोषा वाचः श्रृण्वंश्च सूनृताः ।
ब्राह्मणानां प्रतीतानामृषीणामिव वासवः ॥ ५-८२-८ (३४६८६)
कृत्वा पौर्वाह्णिकं कृत्यं स्नातः शुचिरलङ्कृतः ।
उपतस्थे विवस्वन्तं पावकं च जनार्दनः ॥ ५-८२-९ (३४६८७)
ऋषभं पृष्ठ आलभ्य ब्राह्मणानभिवाद्य च ।
अग्निं प्रदक्षिणं कृत्वा पश्यन्कल्याणमग्रतः ॥ ५-८२-१० (३४६८८)
तत्प्रतिज्ञाय वचनं पाण्डवस्य जनार्दनः ।
शिनेर्नप्तारमासीनमभ्यभाषत सात्यकिम् ॥ ५-८२-११ (३४६८९)
रथ आरोप्यतां शङ्खश्चक्रं च गदया सह ।
उपासङ्गाश्च शक्त्यश्च सर्वप्रहरणानि च ॥ ५-८२-१२ (३४६९०)
दुर्योधनश्च दुष्टात्मा कर्णश्च सहसौबलः ।
न च शत्रुरवज्ञेयो दुर्बलोऽपि बलीयसा ॥ ५-८२-१३ (३४६९१)
ततस्तन्मतमाज्ञाय केशवस्य पुनःसराः ।
प्रसस्त्नुर्योजयिष्यन्तो रथं चक्रगदाभृतः ॥ ५-८२-१४ (३४६९२)
तं दीप्तमिव कालाग्निमाकाशगमिवाशुगम् ।
सूर्यचन्द्रप्रकाशाभ्यां चक्राभ्यां समलङ्कृतम् ॥ ५-८२-१५ (३४६९३)
अर्धचन्द्रैश्च चन्द्रैश्च मत्स्यैः समृगपक्षिभिः ।
पुष्पैश्च विविधैश्चित्रं मणिरत्नैश्च सर्वशः ॥ ५-८२-१६ (३४६९४)
तरुणादित्यसङ्काशं बृहन्तं चारुदर्शनम् ।
मणिहेमविचित्राङ्गं सुध्वजं सुपताकिनम् ॥ ५-८२-१७ (३४६९५)
सूपस्करमनाधृष्यं वैयाघ्रपरिवारणम् ।
यशोघ्नं प्रत्यमित्राणां यदूनां नन्दिवर्धनम् ॥ ५-८२-१८ (३४६९६)

वाजिभिः शैब्यसुग्रीवमेधपुष्पबलाहकैः ।
स्नातैः संपादयामासुः संपन्नैः सर्वसंपदा ॥ ५-८२-१९ (३४६९७)
महिमानं तु कृष्णस्य भूय एवाभिवर्धयन् ।
सुघोषः पतगेन्द्रेण ध्वजेन युयुजे रथः ॥ ५-८२-२० (३४६९८)
तं मेरुशिखरप्रख्यं मेघदुन्दुभिनिस्वनम् ।
आरुरोह रथं सौरिर्विमानमिव कामगम् ॥ ५-८२-२१ (३४६९९)
ततः सात्यकिमारोप्य प्रययौ पुरुषोत्तमः ।
पृथिवीं चान्तरिक्षं च रथघोषेण नादयन् ॥ ५-८२-२२ (३४७००)
व्यपोढाभ्रस्ततः कालः क्षणेन समपद्यत ।
शिवश्चानुववौ वायुः प्रशान्तमभवद्रजः ॥ ५-८२-२३ (३४७०१)
प्रदक्षिणानुलोमाश्च मङ्गल्या मृगपक्षिणः ।
प्रयाणे वासुदेवस्य बभूवुरनुयायिनः ॥ ५-८२-२४ (३४७०२)
मङ्गल्यार्थप्रदैः शब्दैरन्ववर्तन्त सर्वशः ।
सारसाः शतपत्राश्च हंसाश्च मधुसूदनम् ॥ ५-८२-२५ (३४७०३)
मन्त्राहुतिमहाहोमैर्हूयमानश्च पावकः ।
प्रदक्षिणशिखो भूत्वा विधूमः समपद्यत ॥ ५-८२-२६ (३४७०४)
वसिष्ठो वामदेवश्च भूरिद्युम्नो गयः क्रथः ।
शुकनारदवाल्मीका मरुत्तः कुशिको भृगुः ॥ ५-८२-२७ (३४७०५)
देवब्रह्मर्षयश्चैव कृष्णं यदुसुखावहम् ।
प्रदक्षिणमवर्तन्त सहिता वासवानुजम् ॥ ५-८२-२८ (३४७०६)
एवमेतैर्महाभागैर्महर्षिगणसाधुभिः ।
पूजितः प्रययौ कृष्णः कुरूणां सदनं प्रति ॥ ५-८२-२९ (३४७०७)
ग देवताभ्यो नमस्कृत्य ब्राह्मणान्स्वस्ति वाच्य च ।
प्रययौ पुण्डरीकाक्षः सात्यकेन सहाच्युतः ॥ ५-८२-३० (३४७०८)
तं प्रयान्तमनुप्रायात्कुन्तीपुत्रो युधिष्ठिरः ।
भीमसेनार्जुनौ चोभौ माद्रीपुत्रौ च पाण्डवौ ॥ ५-८२-३१ (३४७०९)
चेकितानश्च विक्रान्तो धृष्टकेतुश्च चेदिपः ।
द्रुपदः काशिराजश्च शिखण्डी च महारथः ॥ ५-८२-३२ (३४७१०)
धृष्टद्युम्नः सपुत्रश्च विराटः केकयैः सह ।
संसाधनार्थं प्रययुः क्षत्रियाः क्षत्रियर्षभम् ॥ ५-८२-३३ (३४७११)
ततोऽनुव्रज्य गोविन्दं धर्मराजो युधिष्ठिरः ।
राज्ञां सकाशे द्युतिमानुवाचेदं वचस्तदा ॥ ५-८२-३४ (३४७१२)
यो वै न कामान्न भयान्न लोभान्नार्थकारणात् ।
अन्यायमनुवर्तेत स्थिरबुद्धिरलोलुपः ॥ ५-८२-३५ (३४७१३)
धर्मज्ञो धृतिमान्प्राज्ञः सर्वभूतेषु केशवः ।
ईश्वरः सर्वभूतानां देवदेवः सनातनः ॥ ५-८२-३६ (३४७१४)

तं सर्वगुणसंपन्नं श्रीवत्सकृतलक्षणम् ।
संरिष्वज्य कौन्तेयः सन्देष्टुमुपचक्रमे ॥ ॥ ५-८२-३७ (३४७१५)

इति श्रीमन्महाभारते उद्योगपर्वणि भगवद्यानपर्वणि
द्व्यशीतितमोऽध्यायः ॥
Mahabharata - Udyoga Parva - Chapter Footnotes

५-८२-२ प्रतिपाद्यं संपाद्यात् ।अनामयं कुशलम् ॥
५-८२-५ अभीप्सया प्राप्तुमिच्छया ॥
५-८२-७ कौमुदे कर्तिके ॥
५-८२-११ प्रतिज्ञाय अनुस्मृत्य ॥
५-८२-१५ आकाशगः सूर्यः ॥
५-८२-१८ सूपस्करं शोभनैरुपकरणैरुपेताम् ।नन्दिवर्धनं
आनन्दवर्धनम् ॥
५-८२-१९ संपादयामासुः सज्जीकृतवन्तः ॥
५-८२-३३ संसाधनार्थं कार्यनिष्पत्त्यर्थम् ॥
५-८२- ५-८२- ५-८२-

---

उद्योगपर्व-अध्यय०८३
॥ श्रीः ॥
५.८३. अध्यायः ८३

Mahabharata - Udyoga Parva - Chapter Topics
युधिष्ठिरेण श्रीकृष्णे पृथांप्रति
कुशलप्रश्नपूर्वकस्वभिद्धादननिवेदनसमाश्वासनप्रार्थना ॥ १ ॥
श्रीकृष्णस्य मध्येमार्गं तामदग्न्यादिमहर्षिसमागमः ॥ २ ॥
महर्षिभिः श्रीकृष्णे धृतराष्ट्रादिभिः सह तत्संवादशुश्रूषया
तत्र स्वागमननिवेदनम् ॥ ३ ॥

Mahabharata - Udyoga Parva - Chapter Text

५-८३-० (३४७१६)
युधिष्ठिर उवाच। ५-८३-०क्ष् (३६३९)
या सा बाल्यात्प्रभृत्यस्मान्पर्यवर्धयताबला ।
उपवासतपःशीला सदा स्वस्त्ययने रता ॥ ५-८३-१ (३४७१७)
देवतातिथिपूजासु गुरुशुश्रूषणे रता ।
वत्सला प्रियपुत्रा च माताऽस्माकं जनार्दन ॥ ५-८३-२ (३४७१८)

सुयोधनभयाद्या नो त्रायतामित्रकर्शन ।
महतो मृत्युसंबाधुद्दुस्तरान्नौरिवार्णवात् ॥ ५-८३-३ (३४७१९)
अस्मत्कृते च सततं यया दुःखानि माधव ।
अनुभूतान्यदुःखार्हा तां स्म पृच्छेरनामयम् ॥ ५-८३-४ (३४७२०)
भृशमाश्वासयेश्चैनां पुत्रशोकपरिप्लुताम् ।
अभिवाद्य स्वजेथास्त्वं पाण्डवान्परिकीर्तयन् ॥ ५-८३-५ (३४७२१)
ऊढात्प्रभृति दुःखानि श्वशुराणामरिन्दम ।
निराकाराऽतदर्हा च पश्यन्ती दुःखमश्नुते ॥ ५-८३-६ (३४७२२)
अपि जातु स कालः स्यात्कृष्ण दुःखविपर्ययः ।
यदहं मातरं क्लिष्टां सुखं दद्यामरिन्दम ॥ ५-८३-७ (३४७२३)
प्रव्रजन्तोऽनुधावन्तीं कृपणां पुत्रगृद्धिनीम् ।
रुदतीमपहायैनामगच्छाम वयं वनम् ॥ ५-८३-८ (३४७२४)
सा नूनं म्रियते दुःखैः सा चेज्जीवति केशव ।
तथा पुत्राधिभिर्गाढमार्तामर्चय सत्कृत ॥ ५-८३-९ (३४७२५)
अभिवाद्याऽथ सा कृष्ण त्वया मद्वचवाद्विभो ।
धृतराष्ट्रश्च कौरव्यो राजानश्च वयोधिकाः ॥ ५-८३-१० (३४७२६)
भीष्मं द्रोणं कृपं चैव महाराजं च वाह्लिकम् ।
द्रौणिं च सोमदत्तं च सर्वांश्च भरतान्पृथक् ॥ ५-८३-११ (३४७२७)
ग यथावयो यथास्थानं प्रपद्यस्व जनार्दन।'
विदुरं च महाप्राज्ञं कुरूणां मन्त्रधारिणम् ।
अगाधबुद्धिं मर्मज्ञं स्वजेथा मधुसूदन ॥ ५-८३-१२ (३४७२८)
वैशंपायन उवाच। ५-८३-१३क्ष् (३६४०)
इत्युक्त्वा केशवं तत्र राजमध्ये युधिष्ठिरः ।
अनुज्ञातो निववृते कृष्णं कृत्वा प्रदक्षिणम् ॥ ५-८३-१३ (३४७२९)
व्रजन्नेव तु बीभत्सुः सखायं पुरुषर्षभम् ।
अब्रवीत्परवीरघ्नं दाशार्हमपराजितम् ॥ ५-८३-१४ (३४७३०)
यदस्माकं विभो वृत्तं पुरा वै मन्त्रनिश्चये ।
अर्धराज्यस्य गोविद विदितं सर्वराजसु ॥ ५-८३-१५ (३४७३१)
तच्चेद्दद्यादखङ्गेन सत्कृत्यानवमत्य च ।
प्रियं मे स्यान्महाबाहो मुच्येरन्महतो भयात् ॥ ५-८३-१६ (३४७३२)
अतश्चेदन्यथाकर्ता धार्तराष्ट्रोऽनुपायवित् ।
अन्तं नूनं करिष्यामि क्षत्रियाणां जनार्दन ॥ ५-८३-१७ (३४७३३)
वैशंपायन उवाच। ५-८३-१८क्ष् (३६४१)
एवमुक्ते पाण्डवेन समहृष्यद्वृकोदरः ।
मुहुर्मुहुः क्रोधवशात्प्रावेपत च पाण्डवः ॥ ५-८३-१८ (३४७३४)
वेपमानश्च कौन्तेयः प्राक्रोशन्महतो रजन् ।

धनञ्जयवचः श्रुत्वा हर्षोत्सिक्तमना भृशम् ॥ ५-८३-१९ (३४७३५)
तस्य तं निनदं श्रुत्वा संप्रावेपन्त धन्विनः ।
वाहनानि च सर्वामि शकृन्मूत्रे प्रमुस्रुवुः ॥ ५-८३-२० (३४७३६)
इत्युक्त्वा केशवं तत्र तथा चोह्वा विनिश्चयम् ।
अनुज्ञातो निववृते परिष्वज्य जनार्दनम् ॥ ५-८३-२१ (३४७३७)
तेषु राजसु सर्वेषु निवृत्तेषु जनार्दनः ।
तूर्णमभ्यगमद्धृष्टः शैब्यसुग्रीववाहनः ॥ ५-८३-२२ (३४७३८)
ते हया वासुदेवस्य दारुकेण प्रचोदिताः ।
पन्थानमाचेमुरिव ग्रसमाना इवाम्बरम् ॥ ५-८३-२३ (३४७३९)
अथापश्यन्महाबाहुर्ऋषीनध्वनि केशवः ।
ब्राह्म्या श्रिया दीप्यमानान्स्थितानुभयतः पथि ॥ ५-८३-२४ (३४७४०)
सोऽवतीर्य रथात्तूर्णमभिवाद्य जनार्दनः ।
यथावृत्तानृषीन्सर्वानभ्यभाषत पूजयन् ॥ ५-८३-२५ (३४७४१)
कच्चिल्लोकेषु कुशलं कच्चिद्धर्मः स्वनुष्ठितः ।
ब्राह्मणानां त्रयो वर्णाः कच्चित्तिष्ठन्ति शासने ।
ग पितृदेवातिथिभ्यश्च कच्चित्पूता स्वनुष्ठिताः ॥' ५-८३-२६ (३४७४२)
तेभ्यः प्रयुज्य तां पूजां प्रोवाच मधुसूदनः ।
भगवन्तः क्व संसिद्धाः कोऽवधिर्भवतामिह ॥ ५-८३-२७ (३४७४३)
किं वा कार्यं भगवतामहं किं करवाणि यः ।
केनार्थेनोपप्तंप्राप्ता भगवन्तो महीतलम् ॥ ५-८३-२८ (३४७४४)
ग एवमुक्ताः केशवेन मुनयः शंसितव्रताः ।
नारदप्रमुखाः सर्वे प्रत्यनन्दन्त केशवम् ॥ ५-८३-२९ (३४७४५)
अधश्शिराः सर्पमाली महर्षिः स हि देवलः ।
अर्वावसुः सुजानुश्च मैत्रेयः शुनको बली ५-८३-३० (३४७४६)
बको दाल्भ्यः स्थूलशिराः कृष्णद्वैपायनस्तथा ।
आपोदधौम्यो धौम्यश्च आणिमाण्डव्यकौशिकौ ॥ ५-८३-३१ (३४७४७)
दामोष्णीषस्त्रिषवणः पर्णादो घटजानुकः ।
मौञ्जायनो वायुभक्षः पाराशर्योऽथ शालिकः ॥ ५-८३-३२ (३४७४८)
शीलवानशनिर्धाता शून्यपालोऽकृतव्रणः ।
श्वेतकेतुः कहोलश्च रामश्चैव महातपाः ॥' ५-८३-३३ (३४७४९)
तमब्रवीज्जामदग्न्य उपेत्य मधुसूदनम् ।
परिष्वज्य च गोविन्दं सुरासुरपतेः सखा ॥ ५-८३-३४ (३४७५०)
देवर्षयः पुण्यकृतो ब्राह्मणाश्च बहुश्रुताः ।
राजर्षयश्च दाशार्हं मानयन्ति तपस्विनः ॥ ५-८३-३५ (३४७५१)
दैवासुरस्य द्रष्टारः पुराणस्य महामते ।
समेत पार्थिवं क्षत्रं दिदृक्षन्तश्च सर्वतः ।

सभासदश्च राजानस्त्वां च सत्यं जनार्दनम् ॥ ५-८३-३६ (३४७५२)
एतन्महत्प्रेक्षणीयं द्रुष्टुमिच्छाम केशव ॥ ५-८३-३७ (३४७५३)
धर्मार्थसहिता वाचः श्रोतुमिच्छाम माधव ।
त्वयोच्यमानाः कुरुषु राजमध्ये परन्तप ॥ ५-८३-३८ (३४७५४)
ग सभायां मधुरा वाचः शुश्रूषन्तस्त्वयेरिताः ।
कुरूणां प्रतिवाचश्च श्रोतुमिच्छाम माधव ॥' ५-८३-३९ (३४७५५)
भीष्मद्रोणादयश्चैव विदुरश्च महामतिः ।
त्वं च यादवशार्दूल सभायां वै समेष्यथ ॥ ५-८३-४० (३४७५६)
तव वाक्यानि दिव्यानि तथा तेषां च माधव ।
श्रोतुमिच्छाम गोविन्द सत्यानि च हितानि च ।
आपृष्टोऽसि महाबाहो पुनर्द्रक्ष्यामहे वयम् ॥ ५-८३-४१ (३४७५७)
याह्यविघ्नेन वै वीर द्रक्ष्यामस्त्वां सभागतम् ।
आसीनमासने दिव्ये बलतेजःसमाहितम् ॥ ५-८३-४२ (३४७५८)
वैशंपायन उवाच। ५-८३-४३क्ष् (३६४२)
प्रयान्तं देवकीपुत्रं परवीररुजो दश ।
महारथा महाबाहुमन्वयुः शस्त्रपाणयः ॥ ५-८३-४३ (३४७५९)
पदातीनां सहस्रं च सादिनां च परन्तप ।
भोज्यं च विपुलं राजन्प्रेष्याश्च शतशोपरे ॥ ॥ ५-८३-४४ (३४७६०)

इति श्रीमन्महाभारते उद्योगपर्वणि भगवद्यानपर्वणि
त्र्यशीतितमोऽध्यायः ॥
Mahabharata - Udyoga Parva - Chapter Footnotes

५-८३-६ ऊढात् विवाहात् । श्वशुराणां गृहे इति शेषः ॥
५-८३-३६ पुराणस्य दैवासुरस्य देवासुरसमुदायस्य ॥

---

उद्योगपर्व-अध्यय०८४
॥ श्रीः ॥
५.८४. अध्यायः ८४

Mahabharata - Udyoga Parva - Chapter Topics
श्रीकृष्णप्रयाणे कुरुपराजयसूचकदुर्निमित्तसमुत्पत्तिः ॥ १ ॥
श्रीकृष्णस्य शुभशकुनसमुदयः ॥ २ ॥
मार्गे तत्रतत्र विपरगणाद्यश्चर्चितस्य कृष्णस्य सायाह्ने
वृकस्थलाभिगमनम् ॥ ३ ॥
तत्रत्यद्विजव्रजपूजितस्य कृष्णस्य तद्गृहगमनागमनपूर्वकं
तान्भोजयित्वा तद्रजन्यां वृकस्थले सुखसंवासः ॥ ४ ॥

५-८४-० (३४७६१)
जनमेजय उवाच। ५-८४-०क्ष् (३६४३)
कथं प्रयातो दाशार्हो महात्मा मधुसूदनः ।
कानि वा व्रजतस्तस्य निमित्तानि महौजसः ॥ ५-८४-१ (३४७६२)
वैशंपायन उवाच। ५-८४-२क्ष् (३६४४)
तस्य प्रयाणे यान्यसन्निमित्तानि महात्मनः ।
तानि मे श्रृणु सर्वाणि दैवान्यौत्पातिकानि च ॥ ५-८४-२ (३४७६३)
अनभ्रेऽशनिनिर्घोषः सविद्युत्समजायत ।
अन्वगेव च पर्जन्यः प्रावर्षद्विघने भृशम् ॥ ५-८४-३ (३४७६४)
प्रत्यगूहुर्महानद्यः प्राङ्मुखाः सिन्धुसप्तमाः ।
विपरिता दिशः सर्वा न प्राज्ञायत किंचन ॥ ५-८४-४ (३४७६५)
प्राज्वलन्नग्नयो राजन्पृथिवी समकम्पत ।
उदपानाश्च कुम्भाश्च प्रासिञ्चञ्शतशो जलम् ॥ ५-८४-५ (३४७६६)
तमःसंवृतमप्यासीत्सर्वं जगदिदं तथा ।
न दिशो नादिशो राजन्प्रज्ञायन्तेस्म रेणुना ॥ ५-८४-६ (३४७६७)
प्रादुरासीन्महाञ्छब्दः खेशरीरमदृश्यत ।
सर्वेषु राजन्देशेषु तदद्भुतमिवाभवत् ॥ ५-८४-७ (३४७६८)
प्रामथ्नाद्धास्तिनपुरं वातो दक्षिणपश्चिमः ।
आरुजन्गणशो वृक्षान्परुषोऽशनिनिःस्वनः ॥ ५-८४-८ (३४७६९)
यत्रयत्र च वार्ष्णेयो वर्तते पथि भारत ।
तत्रतत्र सुखो वायुः सर्वं चासीत्प्रदक्षिणम् ॥ ५-८४-९ (३४७७०)
ववर्ष पुष्पवर्षं च कमलानि च भूरिशः ।
समश्च पन्था निर्दुःखो व्यपेतकुशकण्टकः ॥ ५-८४-१० (३४७७१)
संस्तुतो ब्राह्मणैर्गीर्भिस्तत्रतत्र सहस्रशः ।
अर्च्यते मधुपर्कैश्च वसुभिश्च वसुप्रदः ॥ ५-८४-११ (३४७७२)
तं किरन्ति महात्मानं वन्यैः पुष्पैः सुगन्धिभिः ।
स्त्रियः पथि समागम्य सर्वभूतहिते रतम् ॥ ५-८४-१२ (३४७७३)
स शालिभवनं रम्यं सर्वसस्यसमाचितम् ।
सुख परमधर्मिष्ठमभ्यगाद्भरतर्षभ ॥ ५-८४-१३ (३४७७४)
पश्यन्बहुपशून्ग्रामान्रम्यान्हृदयतोपणान् ।
पुराणि च व्यतिकामन्राष्ट्राणि विविधानि च ॥ ५-८४-१४ (३४७७५)
नित्यं हृष्टाः सुमनसो भारतैरभिरक्षिताः ।
नोद्विग्नाः परचक्राणां व्यसनानामकोविदाः ॥ ५-८४-१५ (३४७७६)

उपप्लाव्यादथागम्य जनाः पुरनिवासिनः ।
यथ्यतिष्ठन्त सहिता विष्वक्सेनदिदृक्षया ॥ ५-८४-१६ (३४७७७)
ते तु सर्वे समायान्तमग्निमिद्धमिव प्रभुम् ।
अर्चयामासुरर्चार्हं देशातिथिमुपस्थितम् ॥ ५-८४-१७ (३४७७८)
वृकस्थलं समासाद्य केशवः परवीरहा ।
प्रकीर्णरश्मावादित्ये व्योम्नि वै लोहितायति ॥ ५-८४-१८ (३४७७९)
ग ततो ह्यनुचरान्सर्वानुवाच मधुसूदनः ।
युधिष्ठिरस्य कार्यार्थमिह वत्स्यामहे वयम् ॥ ५-८४-१९ (३४७८०)
तस्य तन्मतमाज्ञाय चक्रुरावसथं नराः ।
क्षणेन चान्नपानानि ररावन्ति समार्जयन् ॥' ५-८४-२० (३४७८१)
अवतीर्य रथात्तूर्णं कृत्वा शौचं यथाविधि ।
रथमोचनमादिश्य सन्ध्यामुपविवेश ह ॥ ५-८४-२१ (३४७८२)
दारुकोऽपि हयान्मुक्त्वा परिचर्य च शास्त्रतः ।
मुमोच सर्वं योक्तादि मुक्त्वा चैतानवासृजत् ॥ ५-८४-२२ (३४७८३)
तस्मिन्ग्रामे प्रधानास्तु य आसन्ब्राह्मणा नृप ।
आर्याः कुलीना ह्रीमन्तो ब्राह्मीं वृत्तिमनुष्ठिताः ॥ ५-८४-२३ (३४७८४)
तेऽभिगम्य महात्मानं हृषीकेशमरिन्दमम् ।
पूजां चक्रुर्यथान्यायमाशीर्मङ्गलसंयुताम् ॥ ५-८४-२४ (३४७८५)
ते पूजयित्वा दाशार्हं सर्वलोकेषु पूजितम् ।
न्यवेदयन्त वेश्मानि गुणवन्ति महात्मने ॥ ५-८४-२५ (३४७८६)
तान्प्रभुः कृतमित्युक्ता सत्कृत्य च यथार्हतः ।
अभ्येत्य चैषां वेश्मानि पुनरायात्सहैव तैः ॥ ५-८४-२६ (३४७८७)
सुमृष्टं भोजयित्वा च ब्राह्मणांस्तत्र केशवः ।
भुक्ता च सह तैः सर्वैरवसत्तां क्षपां सुखम् ॥ ॥ ५-८४-२७ (३४७८८)

इति श्रीमन्महाभारते उद्योगपर्वमि भगवद्यानपर्वणि
चतुरशीतितमोऽध्यायः ॥

Mahabharata - Udyoga Parva - Chapter Footnotes

५-८४-२ दैवानि कशुनानि । औत्पातिकानि अशकुनानि ॥
५-८४-७ खेशरीरं छायापुरुषशरीरम् ॥
५-८४-१३ भवन्ति अस्मिन्निति भवने क्षेत्रम् ॥
५-८४-१६ उपप्लाव्यात् ग्रामात् ॥
५-८४-

---

उद्योगपर्व-अध्यय०८५
॥ श्रीः ॥

## ५.८५. अध्यायः ८५

Mahabharata - Udyoga Parva - Chapter Topics
दूतैः श्रीकृष्णागमनं ज्ञातवतो धृतराष्ट्रस्याज्ञया दुर्योधनेन
पथि तदाराधनाय तत्रतत्र सभानिर्मापणम् ॥ १ ॥
श्रीकृष्णेन तदनवलोकनेनैव गमनम् ॥ २ ॥

Mahabharata - Udyoga Parva - Chapter Text

५-८५-० (३४७८९)
वैशंपायन उवाच। ५-८५-०क्ष् (३६४५)
तदा दूतैः समाज्ञाय आयान्तं मधुसूदनम् ।
धृतराष्ट्रोऽब्रवीद्भीष्ममर्चयित्वा महाभुजम् ॥ ५-८५-१ (३४७९०)
द्रोणं च सञ्जयं चैव विदुरं च महामतिम् ।
दुर्योदनं सहामात्यं हृष्टरोमाऽब्रवीदिदम् ॥ ५-८५-२ (३४७९१)
अद्भुतं महादाश्चर्यं श्रूयते कुरुनन्दन ।
स्त्रियो बालाश्च वृद्धाश्च कथयन्ति गृहेगृहे ॥ ५-८५-३ (३४७९२)
सत्कृत्याचक्षते चान्ये तथैवान्ये समागताः ।
पृथग्वादाश्च वर्तन्ते चत्वरेषु सभासु च ॥ ५-८५-४ (३४७९३)
उपायास्यति दाशार्हः पाण्डवार्थे पराक्रमी ।
स नो मान्यश्च पूज्यश्च सर्वथा मधुसूदनः ॥ ५-८५-५ (३४७९४)
तस्मिन्हि यात्रा लोकस्य भूतानामीश्वरोऽहि सः ।
तस्मिन्धृतिश्च वीर्यं च प्रज्ञा चौजश्च माधवे ॥ ५-८५-६ (३४७९५)
स मान्यतां नरश्रेष्ठः स हि धर्मः सनातनः ।
पूजितो हि सुखाय स्यादसुखः स्यादपूजितः ॥ ५-८५-७ (३४७९६)
स चेत्तुप्यति दाशार्ह उपचरैररिन्दमः ।
कृष्णात्सर्वानभिप्रायान्प्राप्स्यामः सर्वराजसु ॥ ५-८५-८ (३४७९७)
तस्य पूजार्थमद्यैव संविधस्त्व परन्तप ।
सभाः पथि विधीयन्तां सर्वकामसमन्विताः ॥ ५-८५-९ (३४७९८)
यथा प्रीतिर्महाबाहो त्वयि जायेत तस्य वै ।
तथा कुरुष्व गान्धारे कथं वा भीष्म मन्यसे ॥ ५-८५-१० (३४७९९)
वैशंपायन उवाच। ५-८५-११क्ष् (३६४६)
ततो भीष्मादयः सर्वे धृतराष्ट्रं जनाधिपम् ।
ऊचुःक परममित्येवं पूजयन्तोऽस्य तद्वचः ॥ ५-८५-११ (३४८००)
तेषामनुमतं ज्ञात्वा राजा दुर्योधनस्तदा ।
सभावास्तूनि रम्याणि प्रदेष्टुमुपचक्रमे ॥ ५-८५-१२ (३४८०१)

ततो देशेषु देशेषु रमणीयेषु भागशः ।
सर्वरत्नसमाकीर्णाः सभाश्चक्रुरनेकशः ॥ ५-८५-१३ (३४८०२)
आसनानि विचित्राणि युतानि विविधैर्गुणैः ।
स्त्रियो गन्धानलङ्कानारान्सूक्ष्माणि वसनानि च ॥ ५-८५-१४ (३४८०३)
गुणवन्त्यन्नपानानि भोज्यानि विविधानि च ।
माल्यानि च सुगन्धीनि तानि राजा ददौ ततः ॥ ५-८५-१५ (३४८०४)
विशेवतश्च वासार्थं सभां ग्रामे वृकस्थले ।
विदधे कौरवो राजा बहुरत्नां मनोरमाम् ॥ ५-८५-१६ (३४८०५)
एतद्विधाय वै सर्वं देवार्हमतिमानुषम् ।
आचख्यौ धृतराष्ट्राय राजा दुर्योधनस्तदा ॥ ५-८५-१७ (३४८०६)
ताः सभाः केशवः सर्वा रत्नानि विविधानि च ।
असमीक्ष्यैव दाशार्ह उपायात्कुरुसद्म तत् ॥ ॥ ५-८५-१८ (३४८०७)

इति श्रीमन्महाभारते उद्योगपर्वणि भगवद्यानपर्वणि
पञ्चशीतितमोऽध्यायः ॥
Mahabharata - Udyoga Parva - Chapter Footnotes

५-८५-८ अभिप्रायान् मनोरथान् ॥

---

उद्योगपर्व-अध्यय०८६
॥ श्रीः ॥
५.८६. अध्यायः ८६

Mahabharata - Udyoga Parva - Chapter Topics
श्रीकृष्णागमनश्रवणहृष्टेन धृतराष्ट्रेण विदुरपुरतः
समेष्यते तस्मै रथगजादिवितरणप्रतिज्ञा ॥ १ ॥

Mahabharata - Udyoga Parva - Chapter Text

५-८६-० (३४८०८)
धृतराष्ट्र उवाच। ५-८६-०क्ष् (३६४७)
उपप्लाव्यादिह क्षत्तरुपायातो जनार्दनः ।
वृकस्थले निवसति स च प्रातरिहैष्यति ॥ ५-८६-१ (३४८०९)
आहुकानामधिपतिः पुरोगः सर्वसात्वताम् ।
महामना महावीर्यो महासत्वो जनार्दनः ॥ ५-८६-२ (३४८१०)
स्फीतस्य वृष्णिराष्ट्रस्य भर्ता गोप्ता च माधवः ।
त्रयाणामपि लोकानां भगवान्प्रपितामहः ॥ ५-८६-३ (३४८११)

वृष्ण्यन्धकाः सुमनसो यस्य प्रज्ञामुपासते ।
आदित्या वसवो रुद्रा यथा बुद्धिं बृहस्पतेः ॥ ५-८६-४ (३४८१२)
तस्मै पूजां प्रयोक्ष्यामि दाशार्हाय महात्मने ।
प्रत्यक्षं तव धर्मज्ञ तां मे कथयतः श्रुणु ॥ ५-८६-५ (३४८१३)
एकवर्णैः सुक्लृप्ताङ्गैर्बाह्लिजातैर्हयोत्तमैः ।
चतुर्यक्तान्रथांस्तस्मै रौक्मान्दास्यामि षोडश ॥ ५-८६-६ (३४८१४)
नित्यप्रभिन्नान्मातङ्गानीषादन्तान्प्रहारिणः ।
अष्टानुचरमेकैकमष्टौ दास्यामि कौरव ॥ ५-८६-७ (३४८१५)
दासीनामप्रजातानां शुभानां रुक्मवर्चसाम् ।
शतमस्मै प्रदास्यामि दासानामपि तावताम् ॥ ५-८६-८ (३४८१६)
आविकं च सुखस्पर्शं पार्वतीयैरुपाहृतम् ।
तदप्यस्मै प्रदास्यामि सहस्त्राणि दाशाष्ट च ॥ ५-८६-९ (३४८१७)
अजिनानां सहस्राणि चीनदेशोद्भवानि च ।
तान्यप्यस्मै प्रदास्यामि यावदर्हति केशवः ॥ ५-८६-१० (३४८१८)
दिवा रात्रौ च भात्येष सुतेजा विमलो मणिः ।
तमप्यस्मै प्रदास्यामि तमर्हति हि केशवः ॥ ५-८६-११ (३४८१९)
एकेनाभिपतत्यह्ना योजनानि चतुर्दश ।
यानमश्वतरीयुक्तं दास्ये तस्मै तदप्यहम् ॥ ५-८६-१२ (३४८२०)
यावन्ति वाहनान्यस्य यावन्तः पुरुषाश्च ते ।
ततोष्टगुणमप्यस्मै भोज्यं दास्याम्यहं सदा ॥ ५-८६-१३ (३४८२१)
मम पुत्राश्च पौत्रश्च सर्वे दुर्योधनादृते ।
प्रत्युद्यास्यन्ति दाशार्हं रथैर्मृष्टैः स्वलङ्कृताः ॥ ५-८६-१४ (३४८२२)
स्वलङ्कृताश्च कल्याण्यः पादैरेव सहस्रशः ।
वारमुख्या महाभागं प्रत्युद्यास्यन्ति केशवम् ॥ ५-८६-१५ (३४८२३)
नगरादपि याः काश्चिद्गमिष्यन्ति जनार्दनम् ।
द्रष्टुं कन्याश्च कल्याण्यस्ताश्च यास्यन्त्यनावृताः ॥ ५-८६-१६ (३४८२४)
सस्त्रीपुरुषबालं च नगरं मधुसूदनम् ।
उदीक्षतां महात्मानं भानुमन्तमिव प्रजाः ॥ ५-८६-१७ (३४८२५)
महाध्वजपताकाश्च क्रियन्तां सर्वतो दिशः ।
जलावसिक्तो विरजाः पन्थास्तस्येति चान्वशात् ॥ ५-८६-१८ (३४८२६)
दुःशासनस्य च गृहं दुर्योधनगृहाद्वरम् ।
तदद्य क्रियतां क्षिप्रं सुसंमृष्टमलङ्कृतम् ॥ ५-८६-१९ (३४८२७)
एतद्धि रुचिराकारैः प्रासादैरुपशोभितम् ।
शिवं च रमणीयं च सर्वर्तु सुमहाधनम् ॥ ५-८६-२० (३४८२८)
सर्वमस्मिन्गृहे रत्नं मम दुर्योधनस्य च ।
यद्यदर्हति वार्ष्णेयस्तत्तद्देयमसंशयम् ॥ ॥ ५-८६-२१ (३४८२९)

इति श्रीमन्महाभारते उद्योगपर्वणि भगवद्यानपर्वमि षडशीतितमोऽध्यायः ॥
Mahabharata - Udyoga Parva - Chapter Footnotes

५-८६-३ प्रपितामहः पितामहस्य ब्रह्मणोपि पिता ॥
५-८६-७ ईषा लाङ्गलदण्डस्तत्सदृशदन्तान् । अष्टौ अनुचराः यस्य गजस्य ॥
५-८६-२० सर्वर्तु सर्वे ऋतवो युगपदस्मिन्सन्तीति तथा ॥

---

उद्योगपर्व-अध्यय०८७
॥ श्रीः ॥
५.८७. अध्यायः ८७

Mahabharata - Udyoga Parva - Chapter Topics
विदुरेण धृतराष्ट्रंप्रति कृष्णाय दानप्रतिज्ञायाः मृषात्वकथनम् ॥ १ ॥
तथा सामाद्युपायैः कृष्णस्य दुर्वशत्वकथनपूर्वकं तदुक्तिसत्कारविधानम् ॥ २ ॥

Mahabharata - Udyoga Parva - Chapter Text

५-८७-० (३४८३०)
विदुर उवाच। ५-८७-०क्ष् (३६४८)
राजन्बहुमतश्चासि त्रैलोक्यस्यापि सत्तमः ।
संभावितश्च लोकस्य संमतश्चासि भारत ॥ ५-८७-१ (३४८३१)
यत्त्वमेवंगते ब्रूयाः पश्चिमे वयसि स्थितः ।
शास्त्राद्वा सुप्रतर्काद्वा सुस्थिरः स्थविरो ह्यसि ॥ ५-८७-२ (३४८३२)
लेखा शशिनिभाः सूर्ये महोर्मिरिव सागरे ।
धर्मस्त्वयि तथा राजन्निति व्यवसिताः प्रजाः ॥ ५-८७-३ (३४८३३)
सदैव भावितो लोको गुणौघैस्तव पार्थिव ।
गुणानां रक्षणे नित्यं प्रयतस्व सबान्धवः ॥ ५-८७-४ (३४८३४)
आर्जवं प्रतिपद्यस्व मा बाल्याद्ब्रहु नीनशः ।
राजन्पुत्रांश्च पौत्रांश्च सुहृदश्चैव सुप्रियान् ॥ ५-८७-५ (३४८३५)
यत्त्वं दित्ससि कृष्णाय राजन्नतिथये बहु ।
एतदन्यच्च दाशार्हः पृथिवीमपि चार्हति ॥ ५-८७-६ (३४८३६)
न तु त्वं धर्ममुद्दिश्य तस्य वा प्रियकारणात् ।

एतद्दित्ससि कृष्णाय सत्येनात्मानमालभे ॥ ५-८७-७ (३४८३७)
मायैषा सत्यमेवैतच्छद्मैतद्भूरिदक्षिणा ।
जानामि त्वन्मतं राजन्गूढं बाह्येन कर्मणा ॥ ५-८७-८ (३४८३८)
पञ्च पञ्चैव लिप्स्यन्ति ग्रामकान्पाण्डवा नृप ।
न च दित्ससि तेभ्यस्तांस्तच्छमं न करिष्यसि ॥ ५-८७-९ (३४८३९)
अर्थेन तु महाबाहुं वार्ष्णेयं त्वं जिहीर्षसि ।
अनेन चाप्युपायेन पाण्डवेभ्यो विभेत्स्यसि ॥ ५-८७-१० (३४८४०)
न च वित्तेन शक्योऽसौ नोद्यमेन न गर्हया ।
अन्यो धनञ्जयात्कर्तुमेतत्तत्त्वं ब्रवीमि ते ॥ ५-८७-११ (३४८४१)
वेद कृष्णस्य माहात्म्यं वेदास्य दृढभक्तिताम् ।
अत्याज्यमस्य जानामि प्राणैस्तुल्यं धनञ्जयम् ॥ ५-८७-१२ (३४८४२)
अन्यत्कुम्भादपांपूर्णादन्यत्पादावसेचनात् ।
अन्यत्कुशलसंप्रश्नान्नैवेक्ष्यति जनार्दनः ॥ ५-८७-१३ (३४८४३)
यत्त्वस्य प्रियमातिथ्यं मानार्हस्य महात्मनः ।
तदस्मै क्रियतां राजन्मानार्होऽसौ जनार्दनः ॥ ५-८७-१४ (३४८४४)
आशंसमानः कल्याणं कुरूनभ्येति केशवः ।
येनैव राजन्नर्थेन तदेवास्मा उपाकुरु ॥ ५-८७-१५ (३४८४५)
शममिच्छति दाशार्हस्तव दुर्योधनस्य च ।
पाण्डवानां च राजेन्द्र तदस्य वचनं कुरु ॥ ५-८७-१६ (३४८४६)
पिताऽसि राजन्पुत्रास्ते वृद्धस्त्वं शिशवः परे ।
वर्तस्व पितृवत्तेषु वर्तन्ते ते हि पुत्रवत् ॥ ॥ ५-८७-१७ (३४८४७)

इति श्रीमन्महाभारते उद्योगपर्वणि भगवद्यानपर्वणि
सप्ताशीतितमोऽध्यायः ॥

Mahabharata - Udyoga Parva - Chapter Footnotes

५-८७-४ भावितः हृष्टः ॥
५-८७-५ मा नीनशः मा नाशं प्राप्नुहि ॥
५-८७-८ माया इन्द्रजालम् । छद्म वञ्चनम् ॥
५-८७-१० विभेत्स्यसि शल्यवत्पृथक्करिष्यसि ॥
५-८७-१२ वेद विद्मि ॥
५-८७-१३ नैवेक्ष्यति नैवाङ्गीकरिष्यति ॥
५-८७-१५ उपाकुरु अर्पय ॥

---

उद्योगपर्व-अध्यय०८८
॥ श्रीः ॥
५.८८. अध्यायः ८८

Mahabharata - Udyoga Parva - Chapter Topics
दुर्योधनेन श्रीकृष्णस्य विदुरोदीरितभेदागोचरताङ्गीकरणम् ॥ १ ॥
तथा हेतूपन्यासपूर्वकं कृष्णस्योपायनदाननिषेधनम् ॥ २ ॥
भीष्मेण कृष्णस्य दुरवज्ञेयत्वकथनपूर्वकं तदुक्तस्य
कर्तव्यत्वकथनम् ॥ ३ ॥
दुर्योधनेन स्वस्य कृष्णबन्धनाध्यवसायकथने धृतराष्ट्रेण
तद्गर्हणम् ॥ ४ ॥
भीष्मेण दुर्योधनोपालम्भपूर्वकं सभातो निर्गमनम् ॥ ५ ॥

Mahabharata - Udyoga Parva - Chapter Text

५-८८-० (३४८४८)
दुर्योधन उवाच। ५-८८-०क्ष् (३६४९)
यदाह विदुरः कृष्णे सर्वं तत्सत्यमच्युते ।
अनुरक्तो ह्यसंहार्यः पार्थान्प्रति जनार्दनः ॥ ५-८८-१ (३४८४९)
यत्तत्सत्कारसंयुक्तं देयं वसु जनार्दने ।
अनेकरूपं राजेन्द्र न तद्देयं कदाचन ॥ ५-८८-२ (३४८५०)
देशः कालस्तथाऽयुक्तो न हि नार्हति केशवः ।
मंस्यत्यधोक्षजो राजन्भयादर्चति मामिति ॥ ५-८८-३ (३४८५१)
अवमानश्च यत्र स्यात्क्षत्रियस्य विशांपते ।
न तत्कुर्याद्बुधः कार्यमिति मे निश्चिता मतिः ॥ ५-८८-४ (३४८५२)
स हि पूज्यतमो लोके कृष्णः पृथुललोचनः ।
त्रयाणामपि लोकानां विदितं मम सर्वथा ॥ ५-८८-५ (३४८५३)
न तु तस्मै प्रदेयं स्यात्तथा कार्यगतिः प्रभो ।
विग्रहः समुपारब्धो न हि शाम्यत्यविग्रहात् ॥ ५-८८-६ (३४८५४)
वैशंपायन उवाच। ५-८८-७क्ष् (३६५०)
तस्य तद्वचनं श्रुत्वा भीष्मः कुरुपितामहः ।
वैचित्रवीर्यं राजानमिदं वचनमब्रवीत् ॥ ५-८८-७ (३४८५५)
सत्कृतोऽसत्कृतो वाऽपि न क्रुध्येत जनार्दनः ।
ग्नावमंस्यत्यवज्ञातॄनवज्ञातोऽपि केशवः।'
नालमेनमवज्ञातुं नावज्ञेयो हि केशवः ॥ ५-८८-८ (३४८५६)
यत्तु कार्यं महाबाहो मनसा कार्यतां गतम् ।
सर्वोपायैर्न तच्छक्यं केनचित्कर्तुमन्यथा ॥ ५-८८-९ (३४८५७)
स यद्ब्रूयान्महाबाहुस्तत्कार्यमविशङ्कया ।
वासुदेवेन तीर्थेन क्षिप्रं संशाम्य पाण्डवैः ॥ ५-८८-१० (३४८५८)

धर्म्यमर्थ्यं च धर्मात्मा ध्रुवं वक्ता जनार्दनः ।
तस्मिन्वाच्याः प्रिया वाचो भवता बान्धवैः सह ॥ ५-८८-११ (३४८५९)
दुर्योधन उवाच। ५-८८-१२क्ष् (३६५१)
न पर्याप्तोस्मि यद्राजञ्श्रियं निष्केवलामहम् ।
तैः सहेमामुपाश्नीयां यावज्जीवं पितामह ॥ ५-८८-१२ (३४८६०)
इदं तु सुमहत्कार्यं श्रुणु मे यत्समर्थितम् ।
परायणं पाण्डवानां नियच्छामि जनार्दनम् ॥ ५-८८-१३ (३४८६१)
तस्मिन्बद्धे भविष्यन्ति वृष्णयः पृथिवी तथा ।
पाण्डवाश्च विधेया मे स च प्रातरिहैष्यति ॥ ५-८८-१४ (३४८६२)
अत्रोपायान्यथा सम्यङ्ग बुद्ध्येत जनार्दनः ।
न चापायो भवेत्कश्चित्तद्भवान्प्रब्रवीतु मे ॥ ५-८८-१५ (३४८६३)
वैशंपायन उवाच। ५-८८-१६क्ष् (३६५२)
तस्य तद्वचनं श्रुत्वा घोरं कृष्णेऽभिसंहितम् ।
धृतराष्ट्रः सहामात्यो व्यथितो विमनाभवत् ॥ ५-८८-१६ (३४८६४)
ततो दुर्योधनमिदं धृतराष्ट्रोऽब्रवीद्वचः ।
मैवं वोचः प्रजापाल नैष धर्मः सनातनः ॥ ५-८८-१७ (३४८६५)
दूतश्च हि हृषीकेशः संबन्धी च प्रियश्च नः ।
अपापः कौरवेयेषु स कथं बन्धमर्हति ॥ ५-८८-१८ (३४८६६)
भीष्म उवाच। ५-८८-१९क्ष् (३६५३)
परीतस्तव पुत्रोऽयं धृतराष्ट्र सुमन्दधीः ।
वृणोत्यनर्थं नैवार्थं याच्यमानः सुहृज्जनैः ॥ ५-८८-१९ (३४८६७)
इममुत्पथि वर्तन्तं पापं पापानुबन्धिनम् ।
वाक्यानि सुहृदां हित्वा त्वमप्यस्यानुवर्तसे ॥ ५-८८-२० (३४८६८)
कृष्णमक्लिष्टकर्माणमासाद्यायं सुदुर्मतिः ।
तव पुत्रः सहामात्यः क्षणेन न भविष्यति ॥ ५-८८-२१ (३४८६९)
पापस्यास्य नृशंसस्य त्यक्तधर्मस्य दुर्मतेः ।
नोत्सहेऽनर्थसंयुक्ताः श्रोतुं वाचः कथंचन ॥ ५-८८-२२ (३४८७०)
इत्युक्त्वा भरतश्रेष्ठो वृद्धः परममन्युमान् ।
उत्थाय तस्मात्प्रातिष्ठद्भीष्मः सत्यपराक्रमः ॥ ॥ ५-८८-२३ (३४८७१)

इति श्रीमन्महाभारते उद्योगपर्वणि भगवद्यानपर्वणि
अष्टाशीतितमोऽध्यायः ॥

Mahabharata - Udyoga Parva - Chapter Footnotes

५-८८-१ असंहार्यः हर्तुमशक्यः ॥
५-८८-३ देश इति । यद्यपि केशवोऽर्चामर्हत्येव तथापि अर्चायां

देशः कालश्चायुक्त इत्यर्थः । तदेबाह मंस्यतीति ॥
५-८८-६ कार्यगतिः कर्तव्यरीतिः । अविग्रहात् आतिथ्यमात्रेण ॥
५-८८-८ नालं न पर्याप्तोऽसि ॥
५-८८-१० तीर्थेन अवतरणवर्त्मना । संशाम्य शान्तो भवः ॥
५-८८-१२ नोपाश्रीयमित्यन्वयः । निष्केवलां कृत्स्नाम् ॥

---

उद्योगपर्व-अध्यय०८९
॥ श्रीः ॥
५.८९. अध्यायः ८९

Mahabharata - Udyoga Parva - Chapter Topics
प्रातः कृताह्निकस्य श्रीकृष्णस्य वृकस्थलात्कुरुपुरमुपेत्य
धृतराष्ट्रभवनपरवेशः ॥ १ ॥
तथा धृतराष्ट्रपूजां स्वीकृत्य विदुरसदनगमनम् ॥ २ ॥

Mahabharata - Udyoga Parva - Chapter Text

५-८९-० (३४८७२)
वैशंपायन उवाच। ५-८९-०क्ष् (३६५४)
प्रातरुत्थाय कृष्णस्तु कृतवान्सर्वमाह्निकम् ।
ब्राह्मणैरभ्यनुज्ञातः प्रययौ नगरं प्रति ॥ ५-८९-१ (३४८७३)
तं प्रयान्तं महाबाहुमनुज्ञाप्य महाबलम् ।
पर्यवर्तन्त ते सर्वे वृकस्थलनिवासिनः ॥ ५-८९-२ (३४८७४)
ग प्रददौ पुण्डरीकाक्षो रत्नानि च धनानि च ।
तान्प्रस्थाप्य महाबाहुरुपायात्कुरुसंसदम् ॥' ५-८९-३ (३४८७५)
धार्तराष्ट्रास्तमायान्तं प्रत्युज्जग्मुः स्वलङ्कृताः ।
दुर्योधनादृते सर्वे भीष्मद्रोणकृपादयः ॥ ५-८९-४ (३४८७६)
पौराश्च बहुला राजन्हृषीकेशं दिदृक्षवः ।
यानैर्बहुविधैरन्ये पद्भिरेव तथाऽपरे ॥ ५-८९-५ (३४८७७)
स वै पथि समागम्य भीष्मेणाक्लिष्टकर्मणा ।
द्रोणेन धार्तराष्ट्रैश्च तैर्वृतो नगरं ययौ ॥ ५-८९-६ (३४८७८)
कृष्णसंमाननार्थं च नगरं समलङ्कृतम् ।
बभूव राजमार्गश्च बहुरत्नसमाचितः ॥ ५-८९-७ (३४८७९)
न च कश्चिद्गृहे राजंस्तदाऽऽसीद्भरतर्षभ ।
न स्त्री न वृद्धो न शिशुर्वासुदेवदिदृक्षया ॥ ५-८९-८ (३४८८०)
राजमार्गे नरास्तस्मिन्संस्तुवन्त्यवनिं गताः ।
तस्मिन्काले महाराज हृषीकेशप्रवेशने ॥ ५-८९-९ (३४८८१)

आवृतानि वरस्त्रीभिर्गृहाणि सुमहान्त्यपि ।
प्रचलन्तीव भारेण दृश्यन्तेस्म महीतले ॥ ५-८९-१० (३४८८२)
तथा च गतिमन्तस्ते वासुदेवस्य वाजिनः ।
प्रनष्टगतयोऽभूवन्राजमार्गे नरैर्वृते ॥ ५-८९-११ (३४८८३)
स गृहं धृतराष्ट्रस्य प्राविशच्छत्रुकर्शनः ।
पाण्डुरैः पुण्डरीकाक्षः प्रासादैरुपशोभितम् ॥ ५-८९-१२ (३४८८४)
तिस्रः कक्ष्या व्यतिक्रम्य केशवो राजवेश्मनः ।
वैचित्रवीर्यं राजानमभ्यगच्छदरिन्दमः ॥ ५-८९-१३ (३४८८५)
अभ्यागच्छति दाशार्हे प्रज्ञाचक्षुर्नराधिपः ।
तहैव द्रोणभीष्माभ्यामुदतिष्ठन्महायशाः ॥ ५-८९-१४ (३४८८६)
कृपश्च सोमदत्तश्च महाराजश्च बाह्लिकः ।
आसनेभ्योऽचलन्सर्वे पूजयन्तो जनार्दनम् ॥ ५-८९-१५ (३४८८७)
ततो राजानमासाद्य धृतराष्ट्रं यशस्विनम् ।
सभीष्मं पूजयामास वार्ष्णेयो वाग्भिरञ्जसा ॥ ५-८९-१६ (३४८८८)
तेषु धर्मानुपूर्वीं तां प्रयुज्य मधुसूदनः ।
यथावयः समीयाय राजभिः सह माधवः ॥ ५-८९-१७ (३४८८९)
अथ द्रोणं सबाह्लीकं सपुत्रं च यशस्विनम् ।
कृपं च सोमदत्तं च समीयाय जनार्दनः ॥ ५-८९-१८ (३४८९०)
तत्रासीदूर्जितं मृष्टं काञ्चनं महदासनम् ।
शासनाद्धृतराष्ट्रस्य तत्रोपाविशदच्युतः ॥ ५-८९-१९ (३४८९१)
अथ गां मधुपर्कं चाप्युदकं च जनार्दने ।
उपजह्रुर्यथान्यायं धृतराष्ट्रपुरोहिताः ॥ ५-८९-२० (३४८९२)
कृतातिथ्यस्तु गोविन्दः सर्वान्परिहसन्कुरून् ।
आस्ते सांबन्धिकं कुर्वन्कुरुभिः परिवारितः ॥ ५-८९-२१ (३४८९३)
सोऽर्चितो धृतराष्ट्रेण पूजितश्च महायशाः ।
राजानं समनुज्ञाप्य निरक्रामदरिन्दमः ॥ ५-८९-२२ (३४८९४)
तैः समेत्य यथान्यायं कुरुभिः कुरुसंसदि ।
विदुरावसथं रम्यमुपातिष्ठत माधवः ॥ ५-८९-२३ (३४८९५)
विदुरः सर्वकल्याणैरभिगम्य जनार्दनम् ।
अर्चयामास दाशार्हं सर्वकामैरुपस्थितम् ॥ ५-८९-२४ (३४८९६)
कृतातिथ्यं तु गोविन्दं विदुरः सर्वधर्मवित् ।
कुशलं पाण्डुपुत्राणामपृच्छन्मधुसूदनम् ॥ ५-८९-२५ (३४८९७)
प्रीयमाणस्य सुहृदो विदुरो बुद्धिसत्तमः ।
धर्मार्थनित्यस्य सतो गतरोवस्य धीमतः ॥ ५-८९-२६ (३४८९८)
तस्य सर्वं सविस्तारं पाण्डवानां विचेष्टितम् ।
क्षत्तुराचष्ट दाशार्हः सर्वं प्रत्यक्षदर्शिवान् ॥ ॥ ५-८९-२७ (३४८९९)

इति श्रीमन्महाभारते उद्योगपर्वणि भगवद्यानपर्वणि
एकोननवतितमोऽध्यायः ॥
Mahabharata - Udyoga Parva - Chapter Footnotes

५-८९-२२ पूजितः स्तुतः ॥
५-८९-२६ विदुरः पाण्डवानां विचेष्टितं तस्य तं कृष्णं प्रति
अपृच्छदित्यनुकृष्यान्वयः । षष्ठ्यो द्वितीयार्थे ॥

---

उद्योगपर्व-अध्यय०९०
॥ श्रीः ॥
५.९०. अध्यायः ९०

Mahabharata - Udyoga Parva - Chapter Topics
श्रीकृष्णस्य कुन्तीसमीपगमनम् ॥ १ ॥
कृष्णेन प्रत्येकं नामनिर्देशपूर्वकं
युधिष्ठिरादिकुशलमापृच्छ्य स्वानुभूतदुःखानुस्मरेन शोचन्त्याः
कुन्त्याः समाश्वासनम् ॥ २ ॥
तथा कुन्तीसामन्त्र्य दुर्योधनगृहगमनम् ॥ ३ ॥

Mahabharata - Udyoga Parva - Chapter Text

५-९०-० (३४९००)
वैशंपायन उवाच। ५-९०-०क्ष् (३६५५)
अथोपगम्य विदुरमपराह्णे जनार्दनः ।
पितृष्वसारं स पृथामभ्यगच्छदरिन्दमः ॥ ५-९०-१ (३४९०१)
सा दृष्ट्वा कृष्णमायान्तं प्रसन्नादित्यवर्चसम् ।
कण्ठे गृहीत्वा प्राक्रोशत्स्मरन्ती तनयान्पृथा ॥ ५-९०-२ (३४९०२)
तेषां सत्ववतां मध्ये गोविन्दं सहचारिणम् ।
चिरस्य दृष्ट्वा वार्ष्णेयं बाष्पमाहारयत्पृथा ॥ ५-९०-३ (३४९०३)
साऽब्रवीत्कृष्णमासीनं कृतातिथ्यं युधां पतिम् ।
बाष्पगद्गदपूर्णेन मुखेन परिशुष्यता ॥ ५-९०-४ (३४९०४)
एते बाल्यान्प्रभृत्येव गुरुशुश्रूषणे रताः ।
परस्परस्य सुहृदः संमताः समचेतसः ।
निकृत्या भ्रंशिता राज्याज्जनार्हा निर्जनं गताः ॥ ५-९०-५ (३४९०५)
विनीतक्रोधहर्षाश्च ब्रह्मण्याः सत्यवादिनः ।
त्यक्त्वा प्रियमुखे पार्था रुदतीमपहाय माम् ॥ ५-९०-६ (३४९०६)

अहार्षुश्च वनं यान्तः समूलं हृदयं मम ।
अतदर्हा महात्मानः कथं केशव पाण्डवाः ॥ ५-९०-७ (३४९०७)
ऊषुर्महावने तात सिंहव्याघ्रगजाकुले ।
बाला विहीनाः पित्रा ते मया सततलालिताः ॥ ५-९०-८ (३४९०८)
अपश्यन्तश्च पितरौ कथमुषूर्महावने ।
शङ्खदुन्दुभिनिर्घोषैर्मृदङ्गैर्वेणुनिस्वनैः ॥ ५-९०-९ (३४९०९)
पाण्डवाः समबोध्यन्त बाल्यात्प्रभृति केशव ।
ये स्म वारणशब्देन हयानां हेषितेन च ॥ ५-९०-१० (३४९१०)
रथनेमिनिनादैश्च व्यबोध्यन्त तदा गृहे ।
शङ्खभेरीनिनादेन वेणुवीणानुनादिना ॥ ५-९०-११ (३४९११)
पुण्याहघोषमिश्रेण पूज्यमाना द्विजातिभिः ।
वस्त्रै रत्नैरलङ्कारैः पूजयन्तो द्विजन्मनः ॥ ५-९०-१२ (३४९१२)
गीर्भिर्मङ्गलयुक्ताभिर्ब्राह्मणानां महात्मनाम् ।
अर्चितैरर्चनार्हैश्च स्तुवद्भिरभिनन्दिताः ॥ ५-९०-१३ (३४९१३)
प्रासादाग्नेष्वबोध्यन्त राङ्कवाजिनशायिनः ।
क्रूरं च निनदं श्रुत्वा श्वापदानां महावने ॥ ५-९०-१४ (३४९१४)
न स्मोपयान्ति निद्रां ते नतदर्हा जनार्दन ।
भेरीमृदङ्गनिनदैः शङ्खवैणवनिस्वनैः ॥ ५-९०-१५ (३४९१५)
स्त्रीणां गीतनिनादैश्च मधुरैर्मधुसूदन ॥
वन्दिमागधसूतैश्च स्तुवद्भिर्बोधिताः कथम् ॥ ५-९०-१६ (३४९१६)
महावनेष्वबोध्यन्त श्वापदानां रुतेन च ।
ह्रीमात्सत्यधृतिर्दान्तो भूतानामनुकम्पिता ॥ ५-९०-१७ (३४९१७)
कामद्वेषौ वशे कृत्वा सतां वर्त्मानुवर्तते ।
अम्बरीषस्य मान्धातुर्ययातेर्नहुषस्य च ॥ ५-९०-१८ (३४९१८)
भरतस्य दिलीपस्य शिबेरौशीनरस्य च ।
राजर्षीणां पुराणानां धुरं धत्ते दुरुद्वहाम् ॥ ५-९०-१९ (३४९१९)
शीलवृत्तोपसंपन्नोः धर्मज्ञः सत्यसङ्गरः ।
राजा सर्वगुणोपेतस्त्रैलोक्यस्यापि यो भवेत् ॥ ५-९०-२० (३४९२०)
अजातशत्रुर्धर्मात्मा शुद्धजाम्बूनदप्रभः ।
श्रेष्ठः कुरुषु सर्वेषु धर्मतः श्रुतवृत्ततः ।
प्रियदर्शो दीर्घभुजः कथं कृष्ण युधिष्ठिरः ॥ ५-९०-२१ (३४९२१)
यः स नागायुतप्राणो वातरंहा महाबलः ।
सामर्षः पाण्डवो नित्यं प्रियो भ्रातुः प्रियंकरः ॥ ५-९०-२२ (३४९२२)
कीचकस्य तु सज्ञातेर्यो हन्ता मधुसूदन ।
शूरः क्रोधवशानां च हिडिम्बस्य बकस्य च ॥ ५-९०-२३ (३४९२३)
पराक्रमे शक्रसमो मातरिश्वसमो बले ।

महेश्वरसमः क्रोधे भीमः प्रहरतां वरः ॥ ५-९०-२४ (३४९२४)
क्रोधं बलममर्षं च यो निधाय परंतपः ।
जितात्मा पाण्डवोऽमर्षी भ्रातुस्तिष्ठति शासने ॥ ५-९०-२५ (३४९२५)
तेजोराशिं महात्मानं वरिष्ठमभितौजसम् ।
भीमं प्रदर्शनेनापि भीमसेनं जनार्दन ॥ ५-९०-२६ (३४९२६)
तं ममाचक्ष्व वार्ष्णेय कथमद्य वृकोदरः ।
आस्ते परिघबाहुः स मध्यमः पाण्डवो बली ॥ ५-९०-२७ (३४९२७)
अर्जुनेनार्जुनो यः स कृष्ण बाहुसहस्रिणा ।
द्विबाहुः स्पर्धते नित्यमतीतेनापि केशव ॥ ५-९०-२८ (३४९२८)
क्षिपत्येकेन वेगेन पञ्चबाणशतानि यः ।
इष्वस्त्रे सदृशो राज्ञः कार्तवीर्यस्य पाण्डवः ॥ ५-९०-२९ (३४९२९)
तेजसाऽऽदित्यसदृशो महर्षिसदृशो दमे ।
क्षमया पृथिवीतुल्यो महेन्द्रसमविक्रमः ॥ ५-९०-३० (३४९३०)
आधिराज्यं महद्दीप्तं प्रथितं मधुसूदन ।
आहृतं येन वीर्येण कुरूणां सर्वराजसु ॥ ५-९०-३१ (३४९३१)
यस्य बाहुबलं सर्वे पाण्डवाः पर्युपासते ।
स सर्वरथिनां श्रेष्ठः पाण्डवः सत्यविक्रमः ॥ ५-९०-३२ (३४९३२)
यं गत्वाऽभिमुखः सङ्ख्ये न जीवन्तश्चिदाव्रजेत् ।
यो जेता सर्वभूतानामजेयो जिष्णुरच्युत ॥ ५-९०-३३ (३४९३३)
योऽपाश्रयः पाण्डवानां देवानामिव वासवः ।
स ते भ्राता सखा चैव कथमद्य धनञ्जयः ॥ ५-९०-३४ (३४९३४)
दयावान्सर्वभूतेषु ह्रीनिषेवो महास्त्रवित् ।
मृदुश्च सुकुमारश्च धार्मिकश्च प्रियश्च मे ॥ ५-९०-३५ (३४९३५)
सहदेवो महेष्वासः शूरः समितिशोभनः ।
भ्रातृणां कृष्ण शुश्रूषुर्धर्मार्थकुशलो युवा ॥ ५-९०-३६ (३४९३६)
सदैव सहदेवस्य भ्रातरो मधुसूदन ।
वृत्तं कल्याणवृत्तस्य पूजयन्ति महात्मनः ॥ ५-९०-३७ (३४९३७)
ज्येष्ठोपचायिनं वीरं सहदेवं युधां पतिम् ।
शुश्रूषुं मम वार्ष्णेय माद्रीपुत्रं प्रचक्ष्व मे ॥ ५-९०-३८ (३४९३८)
सुकुमारो युवा शूरो दर्शनीयश्च पाण्डवः ।
भ्रातॄणां चैव सर्वेषां प्रियः प्राणो बहिश्चरः ॥ ५-९०-३९ (३४९३९)
चित्रयोधी च नकुलो महेष्वासो महाबलः ।
कच्चित्स कुशली कृष्ण वत्सो मम सुखैधितः ॥ ५-९०-४० (३४९४०)
सुखोचितमदुःखार्हं सुकुमारं महारथम् ।
अपि जातु महाबाहो पश्येयं नकुलं पुनः ॥ ५-९०-४१ (३४९४१)
पक्ष्मसंपातजे काले नकुलेन विनाकृता ।

न लभामि धृतिं वीर साऽद्य जीवामि पश्य माम् ॥ ५-९०-४२ (३४९४२)
सर्वैः पुत्रैः प्रियतरा द्रौपदी मे जनार्दन ।
कुलीना रूपसंपन्ना सर्वैः समुदिता गुणैः ॥ ५-९०-४३ (३४९४३)
पुत्रलोकात्पतिलोकं वृण्वाना सत्यवादिनी ।
प्रियान्पुत्रान्परित्यज्य पाण्डवाननुरुध्यते ॥ ५-९०-४४ (३४९४४)
महाभिजनसंपन्ना सर्वकामैः सुपूजिता ।
ईश्वरी सर्वकल्याणी द्रौपदी कथमच्युत ॥ ५-९०-४५ (३४९४५)
पतिभिः पञ्चभिः शूरैरग्निकल्पैः प्रहारिभिः ।
उपपन्ना महेष्वासैर्द्रौपदी दुःखभागिनी ॥ ५-९०-४६ (३४९४६)
चतुर्दशमिदं वर्षं यन्नापश्यमरिन्दम ।
पुत्रादिभिः परिद्यूनां द्रौपदीं सत्यवादिनीम् ॥ ५-९०-४७ (३४९४७)
न नूनं कर्मभिः पुण्यैरश्नुते पुरुषः सुखम् ।
द्रौपदी चेत्तथावृत्ता नाश्नुते सुखमव्ययम् ॥ ५-९०-४८ (३४९४८)
न प्रियो मम कृष्णाया बीभत्सुर्न युधिष्ठिरः ।
भीमसेनो यमौ वापि यदपश्यं सभागताम् ॥ ५-९०-४९ (३४९४९)
न मे दुःखतरं किंचिद्भूतपूर्वं ततोऽधिकम् ।
स्त्रीधर्मिणीं द्रौपदीं यच्छ्वशुराणां समीपगाम् ॥ ५-९०-५० (३४९५०)
आनायितामनार्येण क्रोधलोभानुवर्तिना ।
सर्वे प्रैक्षन्त कुरव एकवस्त्रां सभागताम् ॥ ५-९०-५१ (३४९५१)
तत्रैव धृतराष्ट्रश्च महाराजश्च बाह्लिकः ।
कृपश्च कसोमदत्तश्च निर्विण्णाः कुरवस्तथा ॥ ५-९०-५२ (३४९५२)
तस्यां संसदि सर्वेषां क्षत्तारं पूजयाम्यहम् ।
वृत्तेन हि भवत्यार्यो न धनेन न विद्यया ॥ ५-९०-५३ (३४९५३)
तस्य कृष्ण महाबुद्धेर्गम्भीरस्य महात्मनः ।
क्षत्तुःक शीलमलङ्कारो लोकान्विष्टभ्य तिष्ठति ॥ ५-९०-५४ (३४९५४)
वैशंपायन उवाच। ५-९०-५५क्ष् (३६५६)
सा शोकार्ता च हृष्टा च दृष्ट्वा गोविन्दमागतम् ।
नानाविधानि दुःखानि सर्वाण्येवान्वकीर्तयम् ॥ ५-९०-५५ (३४९५५)
पूर्वैराचरितं यत्तत्कुराजभिररिन्दम ।
अक्षद्यूतं मृगवधः कच्चिदेषां सुखावहम् ॥ ५-९०-५६ (३४९५६)
तन्मां दहति यत्कृष्णा सभायां कुरुसन्निधौ ।
धार्तराष्ट्रैः परिक्लिष्टा यथा न कुशलं तथा ॥ ५-९०-५७ (३४९५७)
निर्वासनं च नगरात्प्रव्रज्या च परन्तप ।
नानाविधानां दुःखानामावासोऽस्मि जनार्दन ॥ ५-९०-५८ (३४९५८)
अज्ञातचर्या बालानामवरोधश्च माधव ।
न मे क्लेशतमं तत्स्यात्पुत्रैः सह परन्तप ॥ ५-९०-५९ (३४९५९)

दुर्योधनेन निकृता वर्षमद्य चतुर्दशम् ।
दुःखादपि सुखं नः स्याद्यदि पुण्यफलक्षयः ॥ ५-९०-६० (३४९६०)
न मे विशेपो जात्वासीद्धार्तराष्ट्रेषु पाण्डवैः ।
तेन सत्येन कृष्ण त्वां हतामित्रं श्रिया वृतम् ।
अस्माद्विमुक्तं सङ्ग्रामात्पश्येयं पाण्डवैः सह ॥ ५-९०-६१ (३४९६१)
नैव शक्याः पराजेतुं सर्वं ह्येषां तथाविधम् ।
पितरं त्वेव गर्हेयं नात्मानं न सुयोधनम् ॥ ५-९०-६२ (३४९६२)
येनाहं कुन्तिभोजाय धनं वृत्तैरिवार्पिता ।
बालां मामार्यकस्तुभ्यं क्रीडन्तीं कन्दुहस्तिकां ॥ ५-९०-६३ (३४९६३)
अदात्तु कुन्तिभोजाय सखा सख्ये महात्मने ।
साऽहं पित्रा च निकृता श्वशुरैश्च परन्तप ।
अत्यन्तदुःखिता कृष्ण किं जीवितफलं मम ॥ ५-९०-६४ (३४९६४)
यन्मां वागब्रवीन्नक्तं सूतके सव्यसाचिनः ।
पुत्रस्ते पृथिवीं जेता यशश्चास्य दिवं स्पृशेत् । ५-९०-६५ (३४९६५)
हत्वा कुरून्महाजन्ये राज्यं प्राप्य धनञ्जयः ।
भ्रातृभिः सह कौन्तेयस्त्रीन्मेधानाहरिष्यति ॥ ५-९०-६६ (३४९६६)
नाहं तामभ्यसूयामि नमो धर्माय वेधसे ।
कृष्णाय महते नित्यं धर्मो धारयति प्रजाः ॥ ५-९०-६७ (३४९६७)
धर्मश्चेदस्ति वार्ष्णेय यथा वागभ्यभाषत ।
त्वं चापि तत्तथा कृष्ण सर्वं संपादयिष्यसि ॥ ५-९०-६८ (३४९६८)
न मां माधव वैधव्यं नार्थनाशो न वैरिता ।
तथा शोकाय दहति यथा पुत्रैर्विना भवः ॥ ५-९०-६९ (३४९६९)
याऽहं गाण्डीवधन्वानं सर्वशस्त्रभृतां वरम् ।
धनञ्जयं न पश्यामि का शान्तिर्हृदयस्य मे ।
इतश्चतुर्दशं वर्षं यन्नापश्यं युधिष्ठिरम् ॥ ५-९०-७० (३४९७०)
धनञ्जयं च गोविन्द यमौ तं च वृकोदरम् ।
जीवनाशं प्रनष्टानां श्राद्धं कुर्वन्ति मानवाः ॥ ५-९०-७१ (३४९७१)
अर्थतस्ते मम मृतास्तेषां चाहं जनार्दना ।
ब्रूया माधव राजानं धर्मात्मानं युधिष्ठिरम् ॥ ५-९०-७२ (३४९७२)
भूयांस्ते हीयते धर्मो मा पुत्रक वृथा कृथाः ।
पराश्रया वासुदेव या जीवति घिगस्तु ताम् ॥ ५-९०-७३ (३४९७३)
वृत्तेः कार्पण्यलब्धाया अप्रतिष्ठैव ज्यायसी ।
अथो धनञ्जयं ब्रूया नित्योद्युक्तं वृकोदरम् ॥ ५-९०-७४ (३४९७४)
यदर्थं क्षत्रिया सूते तस्य कालोऽयमागतः ।
अस्मिंश्चेदागते काले मिथ्या चातिक्रमिष्यति ॥ ५-९०-७५ (३४९७५)
लोकसंभाविताः संतः सुनृशंसं करिष्यथ ।

नृशंसेन च वो युक्तांस्त्यजेयं शाश्वतीः समाः ॥ ५-९०-७६ (३४९७६)
काले हि समनुप्राप्ते त्यक्तव्यमपि जीवनम् ।
माद्रीपुत्रौ च व्यक्तव्यौ क्षत्रधर्मरतौ सदा ॥ ५-९०-७७ (३४९७७)
विक्रमेणार्जितान्भोगान्वृणीतं जीवितादपि ।
विक्रमाधिगता ह्यर्थाः क्षत्रधर्मेण जीवतः ॥ ५-९०-७८ (३४९७८)
मनो मनुष्यस्य सदा प्रीणन्ति पुरुषोत्तम ।
गत्वा ब्रूहि महाबाहो सर्वशस्त्रभृतां वरम् ॥ ५-९०-७९ (३४९७९)
अर्जुनं पाण्डवं वीरं द्रौपद्याः पदवीं चर ।
विदितौ हि तवात्यन्तं क्रुद्धौ तौ तु यथान्तकौ ॥ ५-९०-८० (३४९८०)
भीमार्जुनौ नयेतां हि देवानपि परां गतिम् ।
तयोश्चैतदवज्ञानं यत्सा कृष्णा सभां गता ॥ ५-९०-८१ (३४९८१)
दुःशासतश्च कर्णश्च परुषाण्यभ्यभाषताम् ।
दुर्योधनो भीमसेनमभ्यगच्छन्मनस्विनम् ॥ ५-९०-८२ (३४९८२)
पश्यतां कुरुमुख्यानां तस्य द्रक्ष्यति यत्फलम् ।
न हि वैरं समासाद्य प्रशाम्यति वृकोदरः ॥ ५-९०-८३ (३४९८३)
सुचिरादपि भीमस्य न हि वैरं प्रशाम्यति ।
यावदन्तं न नयति शात्रवाञ्चत्रुकर्शनः ॥ ५-९०-८४ (३४९८४)
न दुःखं राज्यहरणं न च द्यूते पराजयः ।
प्रव्राजनं तु पुत्राणां न मे तद्दुःखकारणम् ॥ ५-९०-८५ (३४९८५)
यत्तु सा बृहती श्यामा एकवस्त्रा सभां गता ।
अशृणोत्परुषा वाचः किं नु दुःखतरं ततः ॥ ५-९०-८६ (३४९८६)
स्त्रीधर्मिणी वरारोहा क्षत्रधर्मरता सदा ।
नाभ्यगच्छत्तदा नाथं कृष्णा नाथवती सती ॥ ५-९०-८७ (३४९८७)
यस्या मम सपुत्रायास्त्वं नाथो मधुसूदन ।
रामश्च बलिनां श्रेष्ठः प्रद्युम्नश्च महारथः ॥ ५-९०-८८ (३४९८८)
साऽहमेवंविधं दुःखं सहेयं पुरुषोत्तम ।
भीमे जीवति दुर्धर्षे विजये चापलायिनि ॥ ५-९०-८९ (३४९८९)
वैशंपायन उवाच। ५-९०-९०क्ष् (३६५७)
तत आश्वासयामास पुत्राधिभिरभिप्लुताम् ।
पितृष्वसारं शोचन्तीं शौरिः पार्थसखः पृथाम् ॥ ५-९०-९० (३४९९०)
वासुदेव उवाच। ५-९०-९१क्ष् (३६५८)
का नु सीमन्तिनी त्वादृग्लोकेष्वस्ति पितृष्वसः ।
शूरस्य राज्ञो दुहिता आजमीढकुलं गता ॥ ५-९०-९१ (३४९९१)
महाकुलीना भवती ह्रदाद्ध्रदमिवागता ।
ईश्वरी सर्वकल्याणी भर्त्रा परमपूजिता ॥ ५-९०-९२ (३४९९२)
वीरसूर्वीरपत्नी त्वं सर्वैः समुदिता गुणैः ।

सुखदुःखे महाप्राज्ञे त्वादृशी सोढुमर्हति ॥ ५-९०-९३ (३४९९३)
निद्रातन्द्रे क्रोधहर्षौ क्षुत्पिपासे हिमातपौ ।
एतानि पार्था निर्जित्य नित्यं वीरसुखे रताः ॥ ५-९०-९४ (३४९९४)
त्यक्तग्राम्यसुखाः पार्था नित्यं वीरसुखप्रियाः ।
न तु स्वल्पेन तुष्येयुर्महोत्साहा महाबलाः ॥ ५-९०-९५ (३४९९५)
अन्तं धीरा निषेवन्ते मध्यं ग्राम्यसुखप्रियाः ।
उत्तमांश्च परिक्लेशान्भोगांश्चातीव मानुषान् ॥ ५-९०-९६ (३४९९६)
अन्तेषु रेमिरे धीरा न ते मध्येषु रेमिरे ।
अन्तप्राप्तिं सुखं प्राहुर्दुःखमन्तरमन्तयोः ॥ ५-९०-९७ (३४९९७)
अभिवादयन्ति भवतीं पाण्डवाः सह कृष्णया ।
आत्मानं ते कुशलिनं निवेद्याहुरनामयम् ॥ ५-९०-९८ (३४९९८)
अरोगान्सर्वसिद्धार्थान्क्षिप्रं द्रक्ष्यसि पाण्डवान् ।
ईश्वरान्सर्वलोकस्य हतामित्राञ्श्रिया वृतान् ॥ ५-९०-९९ (३४९९९)
एवमाश्वासिता कुन्ती प्रत्युवाच जनार्दनम् ।
पुत्राधिभिरभिध्वस्ता निगृह्याबुद्धिजं तमः ॥ ५-९०-१०० (३५०००)
कुन्त्युवाच। ५-९०-१०१क्ष् (३६५९)
यद्यत्तेषां महाबाहो पथ्यं स्यान्मधुसूदन ।
यथायथा त्वं मन्येथाः कुर्याः कृष्ण तथातथा ॥ ५-९०-१०१ (३५००१)
अविलोपेन धर्मस्य अनिकृत्या परन्तप ।
प्रभावज्ञाऽस्मि ते कृष्ण सत्यस्याभिजनस्य च ॥ ५-९०-१०२ (३५००२)
व्यवस्थायां च मित्रेषु बुद्धिविक्रमयोस्तथा ।
त्वमेव नः कुले धर्मस्त्वं सत्यं त्वं तपो महत् ॥ ५-९०-१०३ (३५००३)
त्वं त्राता त्वं महद्ब्रह्म त्वयि सर्वं प्रतिष्ठितम् ।
यथैवात्थ तथैवैतत्त्वयि सत्यं भविष्यति ॥ ५-९०-१०४ (३५००४)
ग कुरूणां पाण्डवानां च लोकानां चापराजित ।
सर्वस्यैतस्य वार्ष्णेय गतिस्त्वमसि माधव ।
प्रभावो बुद्धिवीर्यं च तादृशं तव केशव ॥' ५-९०-१०५ (३५००५)
वैशंपायन उवाच। ५-९०-१०६क्ष् (३६६०)
तामामन्त्र्य च गोविन्दः कृत्वा चाभिप्रदक्षिणम् ।
प्रातिष्ठत महाबाहुर्दुर्योधनगृहान्प्रति ॥ ॥ ५-९०-१०६ (३५००६)

इति श्रीमन्महाभारते उद्योगपर्वणि भगवद्यानपर्वणि नवतितमोऽध्यायः ॥

Mahabharata - Udyoga Parva - Chapter Footnotes

५-९०-६ प्रियं राज्यादि ।सुखं भोगोत्थ आह्लादः ॥
५-९०-२१ प्रियो दर्शो दर्शनं यस्य ॥

५-९०-४८ तथावृत्ता पुण्यशीला ॥
५-९०-५९ अवरोधः राज्यप्रदानरूपो वृत्तिनिरोधः ॥
५-९०-६० यदि सुखं पुण्यक्षयरूपं अर्थाद्दुःखं पापक्षयरूपं
तर्हि दुःखात्पापक्षयहेतोस्तत्सुखं नः अस्माकं स्यात् । तथा च न
वयं दुःखाद्भयं प्राप्नुम इत्यर्थः ॥
५-९०-६१ अस्मात् भाविनः कुरुपाण्डवसंग्रामात् ॥
५-९०-६२ सर्वं वृत्तम् । एषां पाण्डवानां तथाविधं अविषमम् ॥
५-९०-६३ वृत्तैर्वदान्यत्वेन ख्यातैर्धनं यथा अक्लेशेनार्प्यते
तद्वत् येनाहमर्पिता । वृत्तोऽतीते दृढे ख्याते इति विश्वः । आर्यकः
पितामहः । तुभ्यं तव ॥
५-९०-६६ महाजन्ये महायुद्धे । मेधान् अश्वमेधान् ॥
५-९०-७५ अतिक्रमिष्यति अयुद्धेनेत्यर्थः ॥
५-९०-१०२ अनिकृत्या अच्छलेन ॥

---

उद्योगपर्व-अध्यय०९१
॥ श्रीः ॥
५.९१. अध्यायः ९१

Mahabharata - Udyoga Parva - Chapter Topics
दुर्योधनेन स्वगृहमागतस्य श्रीकृष्णस्य पूजापूर्वकं
भोजनायामन्त्रणम् ॥ १ ॥
दुर्योधनेन श्रीकृष्णंप्रति स्वीयान्नपानाद्य नादरणकारणप्रश्ने
कृष्णेन तत्कथनपूर्वकं विदुरगृहगमनम् ॥ २ ॥
विदुरेण सादरमन्नपानादिना श्रीकृष्णाराधनम् ॥ ३ ॥

Mahabharata - Udyoga Parva - Chapter Text

५-९१-० (३५००७)
वैशंपायन उवाच। ५-९१-०क्ष् (३६६१)
पृथामामन्त्र्य गोविन्दः कृत्वा चाभिप्रदक्षिणम् ।
दुर्योधनगृहं शौरिरभ्यगच्छदरिन्दमः ॥ ५-९१-१ (३५००८)
लक्ष्म्या परमया युक्तं पुरन्दरगृहोपमम् ।
विचित्रैरासनैर्युक्तं प्रविवेश जनार्दनः ॥ ५-९१-२ (३५००९)
तस्य कक्ष्या व्यतिक्रम्य तिस्रो द्वाःस्थैरवारितः ।
ततोऽभ्रघनसङ्काशं गिरिकूटमिवोच्छ्रितम् ॥ ५-९१-३ (३५०१०)
श्रिया ज्वलन्तं प्रासादमारुरोह महायशाः ।
तत्र राजसहस्रैश्च कुरुभिश्चाभिसंवृतम् ॥ ५-९१-४ (३५०११)

धार्तराष्ट्रं महाबाहुं ददर्शासीनमासने ।
दुःशासनं च कर्णं च शकुनिं चापि सौबलम् ॥ ५-९१-५ (३५०१२)
दुर्योधनसमीपे तानासनस्थान्ददर्श सः ।
अभ्यागच्छति दाशार्हे धार्तराष्ट्रो महायशाः ॥ ५-९१-६ (३५०१३)
उदतिष्ठत्सहामात्यः पूजयन्मधुसूदनम् ।
समेत्य धार्तराष्ट्रेण महामात्येन केशवः ॥ ५-९१-७ (३५०१४)
राजभिस्तत्र वार्ष्णेयः समागच्छद्यथावयः ।
तत्र जाम्बूनदमयं पर्यङ्कं सुपरिष्कृतम् ॥ ५-९१-८ (३५०१५)
विविधास्तरणास्तीर्णमभ्युपाविशदच्युतः ।
तस्मिन्गां मधुपर्कं चाप्युदकं च जनार्दने ॥ ५-९१-९ (३५०१६)
निवेदयामास तदा गृहान्राज्यं च कौरवः ।५-९१-१०ब्ग् आसनं
सर्वतोभद्रं सर्वरत्नविभूषितम् ॥ ५-९१-१० (३५०१७)
कृष्णार्थमेवं संसिद्धं धार्तराष्ट्रस्य शासनात्।
तत्र गोविन्दमासीनं प्रसन्नादित्यवर्चसम् ॥ ५-९१-११ (३५०१८)
उपासाञ्चक्रिरे सर्वे कुरवो राजभिः सह ।
ततो दुर्योधनो राजा वार्ष्णेयं जयतां वरम् ॥ ५-९१-१२ (३५०१९)
न्यमन्त्रयद्भोजनेन नाभ्यनन्दच्च केशवः ।
ततो दुर्योधनः कृष्णमब्रवीत्कुरुसंसदि ॥ ५-९१-१३ (३५०२०)
मृदुपूर्वं शठोदर्कं कर्णमाभाष्य कौरवः ।
कस्मादन्नानि पापानि वासांसि शयनानि च ॥ ५-९१-१४ (३५०२१)
त्वदर्थमुपनीतानि नाग्रहीस्त्वं जनार्दन ।
उभयोश्च ददत्साह्यमुभयोश्च हिते रतः ॥ ५-९१-१५ (३५०२२)
संबन्धी दयितश्चासि धृतराष्ट्रस्य माधव ।
त्वं हि गोविन्द धर्मार्थौ वेत्थ तत्त्वेन सर्वशः ।
तत्र कारणमिच्छामि श्रोतुं चक्रगदाधर ॥ ५-९१-१६ (३५०२३)
वैशंपायन उवाच।५-९१-१७क्ष् (३६६२)
स एवमुक्तो गोविन्दः प्रत्युवाच महामनाः ।
उद्यन्मेघस्वनःक काले प्रगृह्य विपुलं भुजम् ॥ ५-९१-१७ (३५०२४)
अलघूकृतमग्रस्तमनिरस्तमसंकुलम् ।
राजीवनेत्रो राजानं हेतुमद्वाक्यमुत्तमम् ॥ ५-९१-१८ (३५०२५)
कृतार्था भुञ्जते दूताः पूजां गृह्णन्ति चैव ह ।
कृतर्थं मां सहामात्यं समर्चिष्यसि भारत ॥ ५-९१-१९ (३५०२६)
एवमुक्तः प्रत्युवाच धार्तराष्ट्रो जनार्दनम् ।
न युक्तं भवताऽस्मासु प्रतिपत्तुमसांप्तम् ॥ ५-९१-२० (३५०२७)
कृतार्थं वाऽकृतार्थं वा त्वां वयं मधुसूदन ।
यतामहे पूजयितुं दाशार्ह न च शक्नुमः ॥ ५-९१-२१ (३५०२८)

न च तत्कारणं विद्मो यस्मान्नो मधुसूदन ।
पूजां कृतां प्रीयमाणो नामंस्थाः पुरुषोत्तम ॥ ५-९१-२२ (३५०२९)
वैरं नो नास्ति भवता गोविन्द न च विग्रहः ।
स भवान्प्रसमीक्ष्यैतन्नेदृशं वक्तुमर्हति ॥ ५-९१-२३ (३५०३०)
वैशंपायन उवाच। ५-९१-२४क्ष् (३६६३)
एवमुक्तः प्रत्युवाच धार्तराष्ट्रं जनार्दनः ।
अभिवीक्ष्य सहामात्यं दाशार्हः प्रहसन्निव ॥ ५-९१-२४ (३५०३१)
नाहं कामान्न संरम्भान्न द्वेषान्नार्थकारणात् ।
न हेतुवादाल्लोभाद्वा धर्मं जह्यां कथंचन ॥ ५-९१-२५ (३५०३२)
संप्रीतिभोज्यान्यन्नानि आपद्भोज्यानि वा पुनः ।
न च संप्रीयते राजन्न चैवापद्गता वयम् ॥ ५-९१-२६ (३५०३३)
गद्विषदन्नं न भोक्तव्यं द्विषन्तं नैव भोजयेत् ।
पाण्डवान्द्विषसे राजन्मम प्राणा हि पाण्डवाः ॥' ५-९१-२७ (३५०३४)
अकस्माद्द्विषसे राजञ्जन्मप्रभृति पाण्डवान् ।
प्रियानुवर्तिनो भ्रातॄन्सर्वैः समुदितान्गुणैः ॥ ५-९१-२८ (३५०३५)
अकस्माच्चैव पार्थानां द्वेषणं नोपपद्यते ।
धर्मे स्थिताः पाण्डवेयाः कस्तान्किं वक्तुमर्हति ॥ ५-९१-२९ (३५०३६)
यस्तान्द्वेष्टि स मां द्वेष्टि यस्याननु समामनु ।
ऐकात्म्यं मां गतं विद्धि पाण्डवैर्धर्मचारिभिः ॥ ५-९१-३० (३५०३७)
कामक्रोधानुवर्ती हि यो मोहाद्विरुरुत्सति ।
गुणवन्तं च यो द्वेष्टि तमाहुः पुरुषाधमम् ॥ ५-९१-३१ (३५०३८)
यः कल्याणगुणाञ्ज्ञातीन्मोहाल्लोभाद्दिदृक्षते ।
सोजितात्माऽजितक्रोधो न चिरं तिष्ठति श्रिया ॥ ५-९१-३२ (३५०३९)
अथ यो गुणसंपन्नान्हृदयस्याप्रियानपि ।
प्रियेण कुरुते वश्यांश्चिरं यशसि तिष्ठति ॥ ५-९१-३३ (३५०४०)
सर्वमेतन्न भोक्तव्यमन्नं दुष्टाभिसंहितम् ।
क्षुत्तुरेकस्य भोक्तव्यमिति मे धीयते मतिः ॥ ५-९१-३४ (३५०४१)
एवमुक्त्वा महाबाहुर्दुर्योधनममर्षणम् ।
निश्चक्राम ततः शुभ्राद्धार्तराष्ट्रनिवेशनात् ॥ ५-९१-३५ (३५०४२)
निर्याय च महाबाहुर्वासुदेवो महामनाः ।
निवेशाय ययौ वेश्म विदुरस्य महात्मनः ॥ ५-९१-३६ (३५०४३)
तमभ्यगच्छद्द्रोणश्च कृपो भीष्मोऽथ बाह्लिकः ।
कुरवश्च महाबाहुं विदुरस्य गृहे स्थितम् ॥ ५-९१-३७ (३५०४४)
त ऊचुर्माधवं वीरं कुरवो मधुसूदनम् ।
निवेदयामो वार्ष्णेय सरत्नांस्ते गृहान्वयम् ॥ ५-९१-३८ (३५०४५)
तानुवाच महातेजाः कौरवान्मधुसूदनः ।

सर्वे भवन्ते गच्छन्तु सर्वा मेऽपचितिः कृता ॥ ५-९१-३९ (३५०४६)
वैशंपायन उवाच। ५-९१-४०क्ष् (३६६४)
यातेषु कुरुषु क्षत्ता दाशार्हमपराजितम् ।
अभ्यर्चयामास तदा सर्वकामैः प्रयत्नवान् ॥ ५-९१-४० (३५०४७)
ततः क्षत्राऽन्नपानानि शुचीनि गुणवन्ति च ।
उपाहरदनेकानि केशवाय महात्मने ॥ ५-९१-४१ (३५०४८)
तैतर्पयित्वा प्रथमं ब्राह्मणान्मधुसूदनः ।
वेदविद्भयो ददौ कृष्णः परमद्रविणान्यपि ॥ ५-९१-४२ (३५०४९)
ग्भुक्तवत्सु द्विजाग्र्येषु निषण्णेषु वरासने ।
शुचिः सुप्रयतो भून्वा विदुरोऽन्नमुपारत् ॥ ५-९१-४३ (३५०५०)
श्रद्धया परया युक्त इदं वचनमब्रवीत् ।
संवृतैस्तुष्य गोविन्द एतन्नः धनम् ।
अन्यथा हि विशेषेण कस्त्वामर्चितुमर्हति ॥ ५-९१-४४ (३५०५१)
वैशंपायन उवाच। ५-९१-४५क्ष् (३६६५)
ततोऽनुयायिभिः सार्धं मरुद्भिरिव वासवः ।
विदुरान्नानि बुभुजे शुचीनि गुणवन्ति च ॥ ५-९१-४५ (३५०५२)
तं भुक्तवन्तं विविधाः सुशब्दाः सूतमागधाः ।
अभितुष्टुवुरासीनं दाशार्हमपराजितम् ॥ ॥ ५-९१-४६ (३५०५३)

इति श्रीमन्महाभारते उद्योगपर्वणि भगवद्यानपर्वणि
एकनवतितमोऽध्यायः ॥
Mahabharata - Udyoga Parva - Chapter Footnotes

५-९१-१४ शठोदर्कं शाठ्यपर्यवसानम् । आभाष्य
संबोधनोनोन्मुखीकृत्य । ५-९१-१७ प्रगृह्य उद्यम्य ॥
५-९१-२५ संरम्भात् क्रोधात् । हेतुवादात् कपटात् ॥
५-९१-३१ विरुरुत्सति विरोधं कर्तुमिच्छति ॥
५-९१-४४ संवृतैः राजानर्हतया गोपितैः ॥

---

उद्योगपर्व-अध्यय०९२
॥ श्रीः ॥
५.९२. अध्यायः ९२

Mahabharata - Udyoga Parva - Chapter Topics
रात्रौ विदुरेण श्रीकृष्णंप्रति भीष्मादिसमाश्रयणेन गर्वितस्य
दुर्योधनस्य दौश्शील्याभिलपनपूर्वकं तस्मिन् सामवचनस्य

नैष्फल्यकथनम् ॥ १ ॥
तथा दुष्टभूयिष्ठसभाप्रवेशस्य स्वानभिमतत्वकथनम् ॥ २ ॥

Mahabharata - Udyoga Parva - Chapter Text

५-९२-० (३५०५४)
वैशंपायन उवाच। ५-९२-०क्ष् (३६६६)
तं भुक्तवन्तमाश्वस्तं निशायां विदुरोऽब्रवीत् ।
नेदं सम्यग्व्यवसितं केशवागमनं तव ॥ ५-९२-१ (३५०५५)
अर्थधर्मातिगो मन्दः संरम्भी च जनार्दन ।
मानघ्नो मानकामश्च वृद्धानां शासनातिगः ॥ ५-९२-२ (३५०५६)
धर्मशास्त्रातिगो मूढो दुरात्मा प्रग्रहं गतः ।
अनेयः श्रेयसां मन्दो धार्तराष्ट्रो जनार्दन ॥ ५-९२-३ (३५०५७)
कामात्मा प्राज्ञमानी च मित्रध्रुक्सर्वशङ्किता ।
अकर्ता चाकृतज्ञश्च त्यक्तधर्मा प्रियानृतः ॥ ५-९२-४ (३५०५८)
मूढश्चाकृतबुद्धिश्च इन्द्रियाणामनीश्वरः ।
कामानुसारी कृत्येषु सर्वेष्वकृतनिश्चयः ॥ ५-९२-५ (३५०५९)
एतैश्चान्यैश्च बहुभिर्दोषैरेव समन्वितः ।
त्वयोच्यमानः श्रेयोऽपि संरम्भान्न ग्रहीष्यति ॥ ५-९२-६ (३५०६०)
भीष्मे द्रोणे कृपे कर्णे द्रोणपुत्रे जयद्रथे ।
भूयसीं वर्तते वृत्तिं न शमे कुरुते मनः ॥ ५-९२-७ (३५०६१)
निश्चितं धार्तराष्ट्राणां सकर्णानां जनार्दन ।
भीष्मद्रोणमुखान्पार्था न शक्ताः प्रतिवीक्षितुम् ॥ ५-९२-८ (३५०६२)
सेनासमुदयं कृत्वा पार्थिवं मधुसूदन ।
कृतार्थं मन्यते बाल आत्मानमविचक्षणाः ॥ ५-९२-९ (३५०६३)
एकः कर्णः पराञ्जेतुं समर्थ इति निश्चितम् ।
धार्तराष्ट्रस्य दुर्बुद्धेः स शमं नोपयास्यति ॥ ५-९२-१० (३५०६४)
संविच्च धार्तराष्ट्राणां सर्वेषामेव केशव ।
शमे प्रयतमानस्य तव सौभ्रात्रकाङ्क्षिणः ॥ ५-९२-११ (३५०६५)
न पाण्डवानामस्माभिः प्रतिदेयं यथोचितम् ।
इति व्यवसितास्तेषु वचनं स्यान्निरर्थकम् ॥ ५-९२-१२ (३५०६६)
यत्र सूक्तं दुरुक्तं च समं स्यान्मधुसूदन ।
न तत्र प्रलपेत्प्राज्ञो बधिरेष्विव गायनः ॥ ५-९२-१३ (३५०६७)
अविजानत्सु मूढेषु निर्मर्यादेषु माधव ।
तत्त्वं वाक्यं ब्रुवन्निन्द्यश्चण्डालेषु द्विजो यथा ॥ ५-९२-१४ (३५०६८)
सोऽयं बलस्थो मूढश्च न करिष्यति ते वचः ।

तस्मिन्निरर्थकं वाक्यमुक्तं संपत्स्यते तव ॥ ५-९२-१५ (३५०६९)
तेषां समुपविष्टानां सर्वेषां पापचेतसाम् ।
तव मध्यावतरणं मम कृष्ण न रोचते ॥ ५-९२-१६ (३५०७०)
दुर्बुद्धीनामशिष्टानां बहूनां दुष्टचेतसाम् ।
प्रतीपं वचनं मध्ये तव कृष्ण न रोचते ॥ ५-९२-१७ (३५०७१)
अनुपासितवृद्धत्वाच्छ्रियो दर्पाच्च मोहितः ।
वयोदर्पादमर्षाच्च न ते श्रेयो ग्रहीष्यति ॥ ५-९२-१८ (३५०७२)
बलं बलवदप्यस्य यदि वक्ष्यसि माधव ।
त्वय्यस्य महती शङ्का न करिष्यति ते वचः ॥ ५-९२-१९ (३५०७३)
नेदमद्य युधा शक्यमिन्द्रेणापि सहामरैः ।
इति व्यवसिताः सर्वे धार्तराष्ट्रा जनार्दन ॥ ५-९२-२० (३५०७४)
तेष्वेवमुपपन्नेषु कामक्रोधानुवर्तिषु ।
समर्थमपि ते वाक्यमसमर्थं भविष्यति ॥ ५-९२-२१ (३५०७५)
मध्ये तिष्ठन्हस्त्यनीकस्य मन्दो
रथाश्वयुक्तस्य बलस्य मूढः ।
दुर्योधनो मन्यते वीतभीतिः
कृत्स्ना मयेयं पृथिवी जितेति ॥ ५-९२-२२ (३५०७६)
आशंसते वै धृतराष्ट्रस्य पुत्रो
महाराज्यमसपत्नं पृथिव्याम् ।
तस्मिञ्शमः केवलो नोपलभ्यो
बद्धं सन्तं मन्यते लब्धमर्थम् ॥ ५-९२-२३ (३५०७७)
पर्यस्तेयं पृथिवी कालपक्वा
दुर्योधनार्थे पाण्डवान्योद्धुकामाः ।
समागताः सर्वयोधाः पृथिव्यां
राजानश्च क्षितिपालैः समेताः ॥ ५-९२-२४ (३५०७८)
सर्वे चैते कृतवैराः पुरस्ता-
त्त्वया राजानो हृतसाराश्च कृष्ण ।
तवोद्वेगात्संश्रिता धार्तराष्ट्रा-
न्सुसंहताः सह कर्णेन वीराः ॥ ५-९२-२५ (३५०७९)
त्यक्तात्मानः सह दुर्योधनेन
हृष्टा योद्धुं पाण्डवान्सर्वयोधाः ।
ग मृत्युर्जयो वेति कृतैकभावाः
कामात्मानो मन्युवशाविनीताः ॥'
तेषां मध्ये प्रविशेथा यदि त्वं
न तन्मतं मम दाशार्हवीर ॥ ५-९२-२६ (३५०८०)
तेषां समुपविष्टानां बहूनां दुष्टचेतसाम् ।

कथं मध्यं प्रपद्येथाः शत्रूणां शत्रुकर्शन ॥ ५-९२-२७ (३५०८१)
सर्वथा त्वं महाबाहो देवैरपि दुरुत्सहः ।
प्रभावं पौरुषं बुद्धिं जानामि तव शत्रुहन् ॥ ५-९२-२८ (३५०८२)
या मे प्रीतिः पाण्डवेषु भूयःक सा त्वयि माधव ।
प्रेम्णा च बहुमानाच्च सौहृदाच्च ब्रवीम्यहम् ॥ ५-९२-२९ (३५०८३)
या मे प्रीतिः पुष्कराक्ष त्वद्दर्शनसमुद्भवा ।
सा किमाख्यायते तुभ्यमन्तरात्माऽसि देहिनां ॥ ॥ ५-९२-३० (३५०८४)

इति श्रीमन्महाभारते उद्योगपर्वणि भगवद्यानपर्वणि
द्विनवतितमोऽध्यायः ॥

Mahabharata - Udyoga Parva - Chapter Footnotes

५-९२-३ प्रग्रहं निर्बन्धं अत्यन्ताभिनिवेशमित्यर्थः ।अनेयः
अप्रापणीयः।श्रेयसां श्रेयांसि ॥
५-९२-४ सर्वशङ्किता सर्वत्र विश्वासहीनः ॥
५-९२-७ वृत्तिं जीविकाम् ।एते युद्धेन मह्यं राज्यं
दास्यन्तीत्याशयेत्यर्थः ॥
५-९२-९ पार्थिवं पृथ्वीसंबन्धिनम् ॥
५-९२-१२ प्रतिदेयं परावृत्यदेयं ।व्यवसिताः निश्चिताः ॥
५-९२-१८ ते त्वत्तः ॥
५-९२-२३ वद्धं स्थिरां ॥

---

उद्योगपर्व-अध्यय०९३
॥ श्रीः ॥
५.९३. अध्यायः ९३

Mahabharata - Udyoga Parva - Chapter Topics

श्रीकृष्णेन विदुरवचनानुमोदनपूर्वकं स्वागमनस्य
लोकपरिवादपरिहारार्थत्वकथनम् ॥ १ ॥

Mahabharata - Udyoga Parva - Chapter Text

५-९३-० (३५०८५)
ग वैशंपायन उवाच। ५-९३-०क्ष् (३६६७)
विदुरस्य वचः श्रुत्वा प्रश्रितं पुरुषोत्तमः ।
इदं होवाच वचनं मधुरं मधुसूदनः ॥' ५-९३-१ (३५०८६)
श्रीभगवानुवाच। ५-९३-२क्ष् (३६६८)

यथा ब्रूयान्महाप्राज्ञो यथा ब्रूयाद्विचक्षणः ।
सथा वाच्यस्त्वद्विधेन भवता मद्विधः सुहृत् ॥ ५-९३-२ (३५०८७)
धर्मार्थयुक्तं तथ्यं च यथा त्वय्युपपद्यते ।
तथा वचनमुक्तोऽस्ति त्वयैतत्पितृमातृवत् ॥ ५-९३-३ (३५०८८)
सत्यं प्राप्तं च युक्तं वाऽप्येवमेव यथाऽऽत्थ माम् ।
श्रृणुष्वागमने हेतुं विदुरावहितो मम ॥ ५-९३-४ (३५०८९)
दौरात्म्यं धार्तराष्ट्रस्य क्षत्रियाणां च वैरिताम् ।
सर्वमेतदहं जानन्क्षत्तः प्राप्तोऽद्य कौरवान् ॥ ५-९३-५ (३५०९०)
पर्यस्तां पृथिवीं सर्वां साश्वां सरथकुञ्जराम् ।
यो मोचयेन्मृत्युपाशात्प्राप्नुयाद्धर्ममुत्तमम् ॥ ५-९३-६ (३५०९१)
धर्मकार्यं यतञ्शक्त्या नो चेत्प्राप्नोति मानवः ।
प्राप्तो भवति तत्पुण्यमत्र मे नास्ति संशयः ॥ ५-९३-७ (३५०९२)
मनसा चिन्तयन्पापं कर्मणा नातिरोचयन् ।
न प्राप्नोति फलं तस्येत्येवं धर्मविदो विदुः ॥ ५-९३-८ (३५०९३)
सोऽहं यतिष्ये प्रशमं क्षत्तः कर्तुममायया ।
कुरूणां सृञ्जयानां च सङ्ग्रामे विनशिष्यताम् ॥ ५-९३-९ (३५०९४)
सेयमापन्महाघोरा कुरुष्वेव समुत्थिता ।
कर्णदुर्योधनकृता सर्वे ह्येते तदन्वयाः ॥ ५-९३-१० (३५०९५)
व्यसने क्लिश्यमानं हि यो मित्रं नाभिपद्यते ।
अनुनीय यथाशक्ति तं नृशंसं विदुर्बुधाः ॥ ५-९३-११ (३५०९६)
आकेशग्रहणान्मित्रमकार्यात्संनिवर्तयन् ।
अवाच्यः कस्यचिद्भवति कृतयत्नो यथाबलम् ॥ ५-९३-१२ (३५०९७)
तत्समर्थं शुभं वाक्यं धर्मार्थसहितं हितम् ।
धार्तराष्ट्रः सहामात्यो ग्रहीतुं विदुरार्हति ॥ ५-९३-१३ (३५०९८)
हितं हि धार्तराष्ट्राणां पाण्डवानां तथैव च ।
पृथिव्यां क्षत्रियाणां च यतिष्येऽहममायया ॥ ५-९३-१४ (३५०९९)
हिते प्रयतमानं मां शङ्केद्दुर्योधनो यदि ।
हृदयस्य च मे प्रीतिरानृण्यं च भविष्यति ॥ ५-९३-१५ (३५१००)
ज्ञातीनां हि मिथो भेदे यन्मित्रं नाभिपद्यते ।
सर्वयत्नेन माध्यस्थ्यं न तन्मित्रं विदुर्बुधाः ॥ ५-९३-१६ (३५१०१)
न मां ब्रूयुरधर्मिष्ठा मूढा ह्यसुहृदस्तथा ।
शक्तो नावारयत्कृष्णः संरब्धान्कुरुपाण्डवान् ॥ ५-९३-१७ (३५१०२)
उभयोः साधयन्नर्थमहामागत इत्युत ।
तत्र यत्नमहं कृत्वा गच्छेयं नृष्ववाच्यताम् ॥ ५-९३-१८ (३५१०३)
मम धर्मार्थयुक्तं हि श्रुत्वा वाक्यमनामयम् ।
न चेदादास्यते बालो दिष्टस्य वशमेष्यति ॥ ५-९३-१९ (३५१०४)

अहापयन्पाण्डवार्थं यथाव-
च्छमं कुरूणां यदि चाचरेयम् ।
पुण्यं च मे स्याच्चरितं महात्म-
न्मुच्येरंश्च कुरवो मृत्युपाशात् ॥ ५-९३-२० (३५१०५)
अपि वाचं भाषमाणस्य काव्यां
धर्मरामामर्थवतीमहिंस्राम् ।
अवेक्षेरन्धार्तराष्ट्राः शमार्थं
मां च प्राप्तं कुरवः पूजयेयुः ॥ ५-९३-२१ (३५१०६)
न चापि मम पर्याप्ताः सहिताः सर्वपार्थिवाः ।
क्रुद्धस्य प्रमुखे स्थातुं सिंहस्येवेतरे मृगाः ॥ ५-९३-२२ (३५१०७)
वैशंपायन उवाच। ५-९३-२३क्ष् (३६६९)
इत्येवमुक्त्वा वचनं वृष्णीनामृषभस्तदा ।
शयने सुखसंस्पर्शे शिश्ये यदुसुखावहः ॥ ॥ ५-९३-२३ (३५१०८)

इति श्रीमन्महाभारते उद्योगपर्वणि भगवद्यानपर्वणि
त्रिनवतितमोऽध्यायः ॥
Mahabharata - Udyoga Parva - Chapter Footnotes

५-९३-६ पर्यस्तां अन्यथाभूताम् ॥
५-९३-७ यतन् यतमानः ॥

---

उद्योगपर्व-अध्यय०९४
॥ श्रीः ॥
५.९४. अध्यायः ९४

Mahabharata - Udyoga Parva - Chapter Topics
प्रभाते संध्यामुपतिष्ठमानं श्रीकृष्णमभ्येत्य
शकुनिदुर्योधनाभ्यां सभागमनाय प्रार्थनम् ॥ १ ॥
श्रीकृष्णस्य विदुरेण सह सभाप्रवेशः ॥ २ ॥
अन्तरिक्षगतेषु नारदादिषु श्रीकृष्णाज्ञया भीष्मेण आसनादिना
सत्कृतेषु कृष्णादीनां यथोचितमासनेषूपवेशनम् ॥ ३ ॥

Mahabharata - Udyoga Parva - Chapter Text

५-९४-० (३५१०९)
वैशंपायन उवाच। ५-९४-०क्ष् (३६७०)
तथा कथयतोरेव तयोर्बुद्धिमतोस्तदा ।

शिवा नक्षत्रसंपन्ना सा व्यतीयाय शर्वरी ॥ ५-९४-१ (३५११०)
धर्मार्थकामयुक्ताश्च विचित्रार्थपदाक्षराः ।
शृण्वतो विविधा वाचो विदुरस्य महात्मनः ॥ ५-९४-२ (३५१११)
कथाभिरनुरूपाभी रक्तस्यामिततेजसः ।
अकामस्यैव कृष्णस्य सा व्यतीयाय शर्वरी ॥ ५-९४-३ (३५११२)
ततस्तु स्वरसंपन्ना बहवः सूतमागधाः ॥
शङ्खदुन्दुभिनिर्घोषैः केशवं प्रत्यबोधयन् ॥ ५-९४-४ (३५११३)
तत उत्थाय दाशार्हऋषभः सर्वसात्वताम् ।
सर्वमावश्यकं चक्रे प्रातः कार्यं जनार्दनः ॥ ५-९४-५ (३५११४)
कृतोदकानुजप्यः स हुताग्निः समलङ्कृतः ।
ततश्चादित्यमुद्यन्तमुपातिष्ठत माधवः ॥ ५-९४-६ (३५११५)
अथ दुर्योधनः कृष्मं शकुनिश्चापि सौबलः ।
सन्ध्यां तिष्ठन्तमभ्येत्य दाशार्हमपराजितम् ॥ ५-९४-७ (३५११६)
आचक्षेतां तु कृष्णस्य धृतराष्ट्रं सभागतम् ।
कुरूश्च भीष्मप्रमुखान्राज्ञः सर्वांश्च पार्थिवान् ॥ ५-९४-८ (३५११७)
त्वामर्थयन्ते गोविन्द दिवि शक्रमिवामराः ।
तावभ्यनन्दद्गोविन्दः साम्ना परमवल्गुना ॥ ५-९४-९ (३५११८)
ततो विमल आदित्ये ब्राह्मणेभ्यो जनार्दनः ।
ददौ हिरण्यं वासांसि गाश्चाश्वांश्च परन्तपः ॥ ५-९४-१० (३५११९)
विसृष्टवन्तं रत्नानि दाशार्हमपराजितम् ।
तिष्ठन्तमुपसङ्गम्य ववन्दे सारथिस्तदा ॥ ५-९४-११ (३५१२०)
ग तस्मै रथवरो युक्तः शुशुभे लोकविश्रुतः ।
वाजिभिः शैब्यसुग्रीवमेघपुष्पबलाहकैः ॥ ५-९४-१२ (३५१२१)
शैब्यस्तु शुकपत्राभः सुग्रीवः किंशुकप्रभः ।
मेघपुष्पो मेघवर्णः पाण्डरस्तु बलाहकः ॥ ५-९४-१३ (३५१२२)
दक्षिणं चावहच्छैब्यः सुग्रीवः सव्यतोऽवहत् ।
पृष्ठवाहौ रथस्यास्तां मेघपुष्पबलाहकौ ॥ ५-९४-१४ (३५१२३)
विश्वकर्मकृताऽऽपीडा रत्नजालविभूषिता ।
आश्रिता वै रथे तस्मिन्ध्वजयष्टिरशोभत ॥ ५-९४-१५ (३५१२४)
वैनतेयः स्थितस्तस्यां प्रभाकरमिव स्पृशन् ।
तस्य सत्ववतः केतौ भुजगारिरशोभत ॥ ५-९४-१६ (३५१२५)
तस्य कीर्तिमतस्तेन भास्वरेण विराजता ।
शुशुभे स्यन्दनश्रेष्ठः पतगेन्द्रेण केतुना ॥ ५-९४-१७ (३५१२६)
रश्मिजालैः पताकाभिः सौवर्णेन च केतुना ।
बभूव स रथश्रेष्ठः कालसूर्य इवोदितः ॥ ५-९४-१८ (३५१२७)
पक्षिध्वजवितानैश्च रुक्मजालकृताङ्गणैः ।

दण्डमार्गविभागैश्च सुकृतैर्विश्वकर्मणा ॥ ५-९४-१९ (३५१२८)
प्रवालमणिशोभैश्च मुक्तावैडूर्यशोभनैः ।
किङ्किणीशतसङ्घैश्च वालजालकृतान्तरैः ॥ ५-९४-२० (३५१२९)
कार्तस्वरमयीभिश्च पद्मिनीभिरलङ्कृतः ।
शुशुभे स्यन्दनश्रेष्ठस्तापनीयैश्च पादपैः ॥ ५-९४-२१ (३५१३०)
व्याघ्रसिंहवराहैश्च गोभिश्च मृगपक्षिभिः ।
ताराभिर्भास्करैश्चापि वारणैश्च हिरण्मयैः ॥ ५-९४-२२ (३५१३१)
वज्राङ्कुशविमानैश्च कूबरावृत्तसन्धिषु ।
समुच्छ्रितमहानाभिः स्तनयित्नुमहास्वनः ॥' ५-९४-२३ (३५१३२)
ततो रथेन शुभ्रेण महता किङ्किणीकिना ।
हयोत्तमयुजा शीघ्रमुपातिष्ठत दारुकः ॥ ५-९४-२४ (३५१३३)
तमुपस्थितमाज्ञाय रथं दिव्यं महामनाः ।
महाभ्रघननिर्घोषं सर्वरत्नविभूषितम् ॥ ५-९४-२५ (३५१३४)
अग्निं प्रदक्षिणं कृत्वा ब्राह्मणांश्च जनार्दनः ।
कौस्तुभं मणिमाबध्य श्रिया परमया ज्वलन् ॥ ५-९४-२६ (३५१३५)
कुरुभिः संवृतः कृष्णो वृष्णिभिश्चाभिरक्षितः ।
आतिष्ठत रथं शौरिः सर्वयादवनन्दनः ॥ ५-९४-२७ (३५१३६)
अन्वारुरोह दाशार्हं विदुरः सर्वधर्मवित् ।
सर्वप्राणभृतां श्रेष्ठं सर्वबुद्धिमतां वरम् ॥ ५-९४-२८ (३५१३७)
ततो दुर्योधनः कृष्णं शकुनिश्चापि सौबलः ।
द्वितीयेन रथेनैनमन्वयातां परन्तपम् ॥ ५-९४-२९ (३५१३८)
सात्यकिः कृतवर्मा च वृष्णीनां चापरे रथाः ।
पृष्ठतोऽनुययुः कृष्णं गजैरश्वै रथैरपि ॥ ५-९४-३० (३५१३९)
तेषां हेमपरिष्कारैर्युक्ताः परमवाजिभिः ।
गच्छतां घोषिणश्चित्ररथा राजन्विरेजिरे ॥ ५-९४-३१ (३५१४०)
संमृष्टसंसिक्तरजः प्रतिपेदे महापथम् ।
राजर्षिचरितं काले कृष्णो धीमाञ्श्रिया ज्वलन् ॥ ५-९४-३२ (३५१४१)
ततः प्रयाते दाशार्हे प्रावाद्यन्तैकपुष्कराः ।
शङ्खाश्च दध्मिरे तत्र वाद्यान्यन्यानि यानि च ॥ ५-९४-३३ (३५१४२)
प्रवीराः सर्वलोकस्य युवानः सिंहविक्रमाः ।
परिवार्य रथं शौरेरगच्छन्त परन्तपाः ॥ ५-९४-३४ (३५१४३)
ततोऽन्ये बहुसाहस्रा विचित्राद्भुतवाससः ।
असिप्रासायुधधराः कृष्णस्यासन्पुरःसराः ॥ ५-९४-३५ (३५१४४)
गजाः पञ्चशतास्तत्र रथाश्चासन्सहस्रशः ।
प्रयान्तमन्वयुर्वीरं दाशार्हमपराजितम् ॥ ५-९४-३६ (३५१४५)
पुरं कुरूणां संवृत्तं द्रष्टुकामं जनार्दनम् ।

सबालवृद्धं सस्त्रीकं रथ्यागतमरिन्दम ॥ ५-९४-३७ (३५१४६)
वेदिकामाश्रिताभिश्च समाक्रान्तान्यनेकशः ।
प्रचलन्तीव भारेण योषिद्भिर्भवनान्युत ॥ ५-९४-३८ (३५१४७)
स पूज्यमानः कुरुभिः संश्रृण्वन्मधुराः कथाः ।
यथार्हं प्रतिसत्कुर्वन्प्रेक्षमाणः शनैर्ययौ ॥ ५-९४-३९ (३५१४८)
ततः सभां समासाद्य केशवस्यानुयायिनः ।
सशङ्खैर्वेणुनिर्घोषैर्दिशः सर्वा व्यनादयन् ॥ ५-९४-४० (३५१४९)
ततः सा समितिः सर्वा राज्ञाममिततेजसाम् ।
संप्राकम्पत हर्षेण कृष्णागमनकाङ्क्षया ॥ ५-९४-४१ (३५१५०)
ततोऽभ्याशंगते कृष्णे समहृष्यन्नराधिपाः ।
श्रुत्वां तं रथनिर्घोषं पर्जन्यनिनदोपमम् ॥ ५-९४-४२ (३५१५१)
आसाद्य तु सभाद्वारमृषभः सर्वसात्वताम् ।
अवतीर्य रथाच्छौरिः कैलासशिखरोपमात् ॥ ५-९४-४३ (३५१५२)
नवमेघप्रतीकाशां ज्वलन्तीमिव तेजसा ।
महेन्द्रसदनप्रख्यां प्रविवेश सभां ततः ॥ ५-९४-४४ (३५१५३)
पाणौ गृहीत्वा विदुरं सात्यकिं च महायशाः ।
ज्येतींष्यादित्यवद्राजन्कुरून्प्राच्छादयच्छ्रिया ॥ ५-९४-४५ (३५१५४)
अग्रतो वासुदेवस्य कर्णदुर्योधनावुभौ ।
कृष्णयः कृतवर्मा चाप्यासन्कृष्णस्य पृष्ठतः ॥ ५-९४-४६ (३५१५५)
धृतराष्ट्रं पुरस्कृत्य भीष्मद्रोणादयस्ततः ।
आसनेभ्योऽचलन्सर्वे पूजयन्तो जनार्दनम् ॥ ५-९४-४७ (३५१५६)
अभ्यागच्छति दाशार्हे प्रज्ञाचक्षुर्नरेश्वर ।
सहैव द्रोणभीष्माभ्यामुदतिष्ठन्महायशाः ॥ ५-९४-४८ (३५१५७)
उत्तिष्ठति महाराजे धृतराष्ट्रे जनेश्वरे ।
तानि राजसहस्राणि समुत्तस्थुः समन्ततः ॥ ५-९४-४९ (३५१५८)
आसनं सर्वतोभद्रं जाम्बूनदपरिष्कृतम् ।
कृष्णार्थे कल्पितं तत्र धृतराष्ट्रस्य शासनात् ॥ ५-९४-५० (३५१५९)
स्मयमानस्तु राजानं भीष्मद्रोणौ च माधवः ।
अभ्यभाषत धर्मात्मा राज्ञश्चान्यान्यथावयः ॥ ५-९४-५१ (३५१६०)
तत्र केशवमानर्चुः सम्यगभ्यागतं सभाम् ।
राजानः पार्थिवाः सर्वे कुरवश्च जनार्दनम् ॥ ५-९४-५२ (३५१६१)
तत्र तिष्ठन्स दाशार्हो राजमध्ये परन्तपः ।
अपश्यदन्तरिक्षस्थानृषीन्परपुरञ्जयः। ५-९४-५३ (३५१६२)
ततस्तानभिसंप्रेक्ष्य नारदप्रमुखानृषीन् ॥
अभ्यभाषत दाशार्हो भीष्मं शान्तनवं शनैः । ५-९४-५४ (३५१६३)
पार्थिवीं समितिं द्रष्टुमृषयोऽभ्यागता नृप ॥

निमन्त्र्यन्तामासनैश्च सत्कारेण च भूयसा । ५-९४-५५ (३५१६४)
नैतेष्वनुपविष्टेषु शक्यं केनचिदासितुम् ॥
पूजा प्रयुज्यतामाशु मुनीनां भावितात्मनाम् । ५-९४-५६ (३५१६५)
वैशंपायन उवाच। ५-९४-५७क्ष् (३६७१)
ऋषीञ्शान्तनवो दृष्ट्वा सभाद्वारमुपस्थितान् ।
त्वरमाणस्ततो भृत्यानासनानीत्यचोदयत् । ५-९४-५७ (३५१६६)
आसनान्यथ मृष्टानि महान्ति विपुलानि च ॥
मणिकाञ्चनचित्राणि समाजह्रुस्ततस्ततः । ५-९४-५८ (३५१६७)
तेषु तत्रोपविष्टेषु गृहीतार्घ्येषु भारत ॥
निषसादासने कृष्णो राजानश्च यथासनम् । ५-९४-५९ (३५१६८)
दुःशासनः सात्यकये ददावासनमुत्तमम् ॥
विविंशतिर्ददौ पीठं काञ्चनं कृतवर्मणे । ५-९४-६० (३५१६९)
अविदूरे तु कृष्णस्य कर्णदुर्योधनावुभौ ॥
एकासने महात्मानौ निषीदतुरमर्षणौ । ५-९४-६१ (३५१७०)
गान्धारराजः शकुनिर्गान्धारैरभिरक्षितः ॥
निषसादासने राजा सहपुत्रो विशांपते । ५-९४-६२ (३५१७१)
विदुरो मणिपीठे तु शुक्लस्पर्ध्याजिनोत्तरे ॥
संस्पृशन्नासनं शौरेर्महामतिरुपाविशत्। ५-९४-६३ (३५१७२)
चिरस्य दृष्ट्वा दाशार्हं राजानः सर्व एव ते ॥
अमृतस्येव नातृप्यन्प्रेक्षमाणा जनार्दनम्। ५-९४-६४ (३५१७३)
अतसीपुष्पसङ्काशः पीतवासा जनार्दनः ॥
व्यभ्राजत सभामध्ये हेम्नीवोपहितो मणिः ॥ ५-९४-६५ (३५१७४)
ततस्तूष्णीं सर्वमासीद्गोविन्दगतमानसम् ।
न तत्र कश्चित्किंचिद्वा व्याजहार पुमान्क्वचित् ॥ ॥ ५-९४-६६ (३५१७५)

इति श्रीमन्महाभारते उद्योगपर्वणि भगवद्यानपर्वणि
चतुर्नवतितमोऽध्यायः ॥

Mahabharata - Udyoga Parva - Chapter Footnotes

५-९४-३१ चित्राश्च ते रथाश्च ॥
५-९४-३३ एकपुष्कराः काहलाः ॥

---

उद्योगपर्व-अध्यय०९५
॥ श्रीः ॥
५.९५. अध्यायः ९५

Mahabharata - Udyoga Parva - Chapter Topics
श्रीकृष्णेन धृतराष्ट्रंप्रति सन्ध्यर्थं स्वस्यागमनकथनम् ॥ १ ॥
सन्धिविग्रहपक्षयोः गुणदोषपर्वनपूर्वकं पाण्डवविज्ञापननिवेदनम्
॥ २ ॥
तथा हितमुपदिश्य अन्ते यथारुचि करणाभिधानम् ॥ ३ ॥

Mahabharata - Udyoga Parva - Chapter Text

५-९५-० (३५१७६)
वैशंपायन उवाच। ५-९५-०क्ष् (३६७२)
तेष्वासीनेषु सर्वेषु तूर्ष्णींभूतेषु राजसु ।
वाक्यमभ्याददे कृष्णः सुदंष्ट्रो दुन्दुभिस्वनः ॥ ५-९५-१ (३५१७७)
जीमूत इव धर्मान्ते सर्वां संश्रावयन्सभाम् ।
धृतराष्ट्रमभिप्रेक्ष्य समभाषत माधवः ॥ ५-९५-२ (३५१७८)
श्रीभगवानुवाच। ५-९५-३क्ष् (३६७३)
कुरूणां पाण्डवानां च शमः स्यादिति भारत ।
अप्रणशेन वीराणामेतद्याचितुमागतः ॥ ५-९५-३ (३५१७९)
राजन्नान्यत्प्रवक्तव्यं तव नैःश्रेयसं वचः ।
विदितं ह्येव ते सर्वं वेदितव्यमरिन्दम ॥ ५-९५-४ (३५१८०)
इदं ह्यद्य कुलं श्रेष्ठं सर्वराजसु पार्थिव ।
श्रुतवृत्तोपसंपन्नं सर्वैः समुदितं गुणैः ॥ ५-९५-५ (३५१८१)
कृपानुकम्पा कारुण्यमानृशंस्यं च भारत ।
तथार्जवं क्षमा सत्यं कुरुष्वेतद्विशिष्यते ॥ ५-९५-६ (३५१८२)
तस्मिन्नेवंविधे राजन्कुले महति तिष्ठति ।
त्वन्निमित्तं विशेषेण नेह युक्तमसांप्रतम् ॥ ५-९५-७ (३५१८३)
त्वं हि धारयिता श्रेष्ठः कुरूणां कुरुसत्तम ।
मिथ्याप्रचरतां तात बाह्येष्वाभ्यन्तरेषु च ॥ ५-९५-८ (३५१८४)
ते पुत्रास्तव कौरव्य दुर्योधनपुरोगमाः ।
धर्मार्थौ पृष्ठतः कृत्वा प्रचरन्ति नृशंसवत् ॥ ५-९५-९ (३५१८५)
अशिष्टा गतमर्यादा लोभेन हृतचेतसः ।
स्वेषु बन्धुषु मुख्येषु तद्वेत्थ पुरुषर्षभ ॥ ५-९५-१० (३५१८६)
सेयमापन्महाघोरा कुरुष्वेव समुत्थिता ।
उपेक्ष्यमाणा कौरव्य पृथिवीं घातयिष्यति ॥ ५-९५-११ (३५१८७)
शक्या चेयं शमयितुं त्वं चेदिच्छसि भारत ।
न दुष्करो ह्यत्र शमो मतो मे भरतर्षभ ॥ ५-९५-१२ (३५१८८)
त्वय्यधीनः शमो राजन्मयि चैव विशांपते ।

पुत्रान्स्थापय कौरव्य स्थापयिष्याम्यहं परान् ॥ ५-९५-१३ (३५१८९)
आज्ञा तव हि राजेन्द्र कार्या पुत्रैः सहान्वयैः ।
हितं बलवदप्येषां तिष्ठतां तव शासने ॥ ५-९५-१४ (३५१९०)
तव चैव हितं राजन्पाण्डवानामथो हितम् ।
शमे प्रयतमानस्य तव शासनकाङ्क्षिणः ॥ ५-९५-१५ (३५१९१)
स्वयं निष्फलमालक्ष्य संविधत्स्व विशांपते ।
सहायभूता भरतास्तवैव स्युर्जनेश्वर ॥ ५-९५-१६ (३५१९२)
धर्मार्थयोस्तिष्ठ राजन्पाण्डवैरभिरक्षितः ।
न हि शक्यास्तथाभूता यत्नादपि नराधिप ॥ ५-९५-१७ (३५१९३)
न हि त्वां पाण्डवैर्जेतुं रक्ष्यमाणं महात्मभिः ।
इन्द्रोपि देवैः सहितः प्रसहेत कुतो नृपाः ॥ ५-९५-१८ (३५१९४)
यत्र भीष्मश्च द्रोणश्च कृपः कर्णो विविंशतिः ।
अश्वत्थामा विकर्णश्च सोमदत्तोऽथ बाह्लिकः ॥ ५-९५-१९ (३५१९५)
सैन्धवश्च कलिङ्गश्च काम्भोजश्च सुदक्षिणः ।
युधिष्ठिरो भीमसेनः सव्यसाची यमौ तथा ॥ ५-९५-२० (३५१९६)
सात्यकिश्च महातेजा युयुत्सुश्च महारथः ।
को नु तान्विपरीतात्मा युद्ध्येत भरतर्षभ ॥ ५-९५-२१ (३५१९७)
लोकस्येश्वरतां भूयः शत्रुभिश्चाप्यधृष्यताम् ।
प्राप्स्यसि त्वममित्रघ्न सहितः कुरुपाण्डवैः ॥ ५-९५-२२ (३५१९८)
तस्य ते पृथिवीपालास्त्वत्समाः पृथिवीपते ।
श्रेयांसश्चैव राजानः सन्धास्यन्ते परन्तप ॥ ५-९५-२३ (३५१९९)
स त्वं पुत्रैश्च पौत्रैश्च पितृभिर्भ्रातृभिस्तथा ।
सुहृद्भिः सर्वतो गुप्तः सुखं शक्ष्यसि जीवितुं ॥ ५-९५-२४ (३५२००)
एतानेव पुरोधाय यत्कृत्य च यथा पुरा ।
अखिलां भोक्ष्यसे सर्वां पृथिवीं पृथिवीपते ॥ ५-९५-२५ (३५२०१)
एतैर्हि सहितः सर्वैः पाण्डवैः स्वैश्च भारत ।
अन्यान्विजेष्यसे शत्रूनेष स्वार्थस्तवाखिलः ॥ ५-९५-२६ (३५२०२)
तैरेवोपार्जितां भूमिं भोक्ष्यसे च परन्तप ।
यदि संपत्स्यसे पुत्रैः सहामात्यैर्नराधिप ॥ ५-९५-२७ (३५२०३)
संयुगे वै महाराज दृश्यते सुमहान्क्षयः ।
क्षये चोभयतो राजन्कं धर्ममनुपश्यसि ॥ ५-९५-२८ (३५२०४)
पाण्डवैर्निहतैः सङ्ख्ये पुत्रैर्वापि महाबलैः ।
यद्विन्देथाः सुखं राजंस्तद्ब्रूहि भरतर्षभ ॥ ५-९५-२९ (३५२०५)
शूराश्च हि कृतास्त्राश्च सर्वे युद्धाभिकाङ्क्षिणः ।
पाण्डवास्तावकाश्चैव तान्रक्ष महतो भयात् ॥ ५-९५-३० (३५२०६)
न पश्येम कुरून्सर्वान्पाण्डवांश्चैव संयुगे ।

क्षीणानुभयतः शूरान्नाथिनो रथिभिर्हतान् ॥ ५-९५-३१ (३५२०७)
समवेताः पृथिव्यां हि राजानो राजसत्तम ।
अमर्षवशमापन्ना नाशयेयुरिमाः प्रजाः ॥ ५-९५-३२ (३५२०८)
त्राहि राजन्निमं लोकं न नश्येयुरिमाः प्रजाः ।
त्वयि प्रकृतिमापन्ने शेषः स्यात्कुरुनन्दन ॥ ५-९५-३३ (३५२०९)
शुक्ला वादन्या ह्रीमन्त आर्याः पुण्याभिजातयः ॥
अन्योन्यसचिवा राजंस्तान्पाहि महतो भयात् ॥ ५-९५-३४ (३५२१०)
शिवेनेमे भूमिपालाः समागम्य परस्परम् ।
सह भुक्त्वा च पीत्वा च प्रतियान्तु यथागृहम् ॥ ५-९५-३५ (३५२११)
सुवाससः स्रग्विणश्च सत्कृता भरतर्षभ ।
अमर्षं च निराकृत्य वैराणि च परन्तप ॥ ५-९५-३६ (३५२१२)
हार्दं यत्पाण्डवेष्वासीत्प्राप्तोऽस्मिन्नायुषः क्षये ।
तदेव ते भवत्वद्य सन्धत्स्व भरतर्षभ ॥ ५-९५-३७ (३५२१३)
बाला विहीनाः पित्रा ते त्वयैव परिवर्धिताः ।
तान्पालय यथान्यायं पुत्रांश्च भरतर्षभ ॥ ५-९५-३८ (३५२१४)
भवतैव हि रक्ष्यास्ते व्यसनेषु विशेषतः ।
मा ते धर्मस्तथैवार्थो नश्येत भरतर्षभ ॥ ५-९५-३९ (३५२१५)
आहुस्त्वां पाण्डवा राजन्नभिवाद्य प्रसाद्य च ।
भवतः शासनाद्दुःखसमुभूतं सहानुगैः ॥ ५-९५-४० (३५२१६)
द्वादशेमानि वर्षाणि वने निर्व्युषितानि नः ।
त्रयोदशं तथाऽज्ञातैः सजने परिवत्सरम् ॥ ५-९५-४१ (३५२१७)
स्थाता नः समये तस्मिन्पितेति कृतनिश्चयाः ।
नाहास्म समयं तात तच्च नो ब्राह्मणा विदुः ॥ ५-९५-४२ (३५२१८)
तस्मिन्नः समये तिष्ठ स्थितानां भरतर्षभ ।
नित्यं संक्लेशिता राजन्स्वराज्यांशं लभेमहि । ५-९५-४३ (३५२१९)
त्वं धर्ममर्थं संजानन्सम्यङ्वस्त्रातुमर्हसि ॥
गुरुत्वं भवति प्रेक्ष्य बहून्क्लेशांस्तितिक्ष्महे । ५-९५-४४ (३५२२०)
स भवान्मातृपितृवद्स्मासु प्रतिपद्यताम् ॥
गुरोर्गरीयसी वृत्तिर्या च शिष्यस्य भारत । ५-९५-४५ (३५२२१)
वर्तामहे त्वयि च तां त्वं च वर्तस्व नस्तथा ॥
पित्रा स्थापयितव्या हि वयमुत्पथमास्थिताः । ५-९५-४६ (३५२२२)
संस्थापय पथिप्वस्मांस्तिष्ठ धर्मे सुवर्त्मनि ॥
आहुश्चेमां परिषदं पुत्रास्ते भरतर्षभ । ५-९५-४७ (३५२२३)
धर्मज्ञेषु सभासत्सु नेह युक्तमसांप्रतम् ॥
यत्र धर्मो ह्यधर्मेण सत्यं यत्रानृतेन च। ५-९५-४८ (३५२२४)
हन्यते प्रेक्षमाणानां हतास्तत्र सभासदः ॥

विद्धो धर्मो ह्यधर्मेण सभां यत्र प्रपद्यते। ५-९५-४९ (३५२२५)
नचास्य शल्यं कृन्तन्ति विद्धास्तत्र सभासदः ॥
धर्म एतानारुजति यथा नद्यनुकूलजान् ॥ ५-९५-५० (३५२२६)
ये धर्ममनुपश्यन्तस्तूष्णीं ध्यायन्त आसते ।
ते सत्यमाहुर्धर्म्यं च न्याय्यं च भरतर्षभ ॥ ५-९५-५१ (३५२२७)
शक्यं किमन्यद्वक्तुं ते दानादन्यञ्जनेश्वर ।
ब्रुवन्तु ते महीपालाः सभायां ये समासते ॥ ५-९५-५२ (३५२२८)
धर्मार्थौ संप्रधार्यैव यदि सत्यं ब्रवीम्यहम् ।
प्रमुञ्चोमान्मृत्युपाशात्क्षत्रियान्पुरुषर्षभ ॥ ५-९५-५३ (३५२२९)
प्रशाम्य भरतश्रेष्ठ मा मन्युवशमन्वगाः ।
पित्र्यं तेभ्यः प्रदायांशं पाण्डवेभ्यो यथोचितम् ।
ततः सपुत्रः सिद्धार्थो भुङ्क्ष भोगान्परन्तप ॥ ५-९५-५४ (३५२३०)
अजातशत्रुं जानीषे स्थितं धर्मे सतां सदा ।
सपुत्रे त्वयि वृत्तिं च वर्तते यां नराधिप ॥ ५-९५-५५ (३५२३१)
दाहितश्च निरस्तश्च त्वामेवोपाश्रितः पुनः ।
इन्द्रप्रस्थं त्वयैवासौ सपुत्रेण विवासितः ॥ ५-९५-५६ (३५२३२)
स तत्र विवसन्सर्वान्वशमानीय पार्थिवान् ।
त्वन्मुखानकरोद्राजन्न च त्वामत्यवर्तत ॥ ५-९५-५७ (३५२३३)
तस्यैवं वर्तमानस्य सौबलेन जिहीर्षता ।
राष्ट्राणि धनधान्यं च प्रयुक्तः परमोपधिः ॥ ५-९५-५८ (३५२३४)
स तामवस्थां संप्राप्य कृष्णां प्रेक्ष्य सभां गताम् ।
क्षत्रधर्मादमेयात्मा नाकम्पत युधिष्ठिरः ॥ ५-९५-५९ (३५२३५)
अहं तु तव तेषां च श्रेय इच्छामि भारत ।
धर्मादर्थात्सुखाच्चैव मा राजन्नीनशः प्रजाः ॥ ५-९५-६० (३५२३६)
अनर्थमर्थं मन्वानोऽप्यर्थं चानर्थमात्मनः ।
लोभेऽतिप्रसृतान्पुत्रान्निगृह्णीष्व विशांपते ॥ ५-९५-६१ (३५२३७)
स्थिताः शुश्रूषितुं पार्थाः स्थिता योद्धुमरिन्दमाः ।
यत्ते पथ्यतमं राजंस्तस्मिंतिष्ठ परन्तप ॥ ५-९५-६२ (३५२३८)
वैशंपायन उवाच। ५-९५-६३क्ष् (३६७४)
तद्वाक्यं पार्थिवाः सर्वे हृदयैः समपूजयन् ।
न तत्र कश्चिद्वक्तुं हि वाचं प्राक्रामदग्रतः ॥ ॥ ५-९५-६३ (३५२३९)

इति श्रीमन्महाभारते उद्योगपर्वणि भगवद्यानपर्वणि
पञ्चनवतितमोऽध्यायः ॥

Mahabharata - Udyoga Parva - Chapter Footnotes

५-९५-३ आगतः अहमिति शेषः ॥
५-९५-६ कृपा परस्य सुखार्थे यत्नः ।अनुकम्पा परदुःखदर्शने त्रासः। कारुण्यं परदुःखप्रहाणार्थो यत्नः। आनृशंस्यं परदुःखाप्रदानम् ॥
५-९५-८ बाह्येषु द्यूतादिषु ।आभ्यन्तरेषु जतुगृहादिषु ॥
५-९५-११ कुरुष्वेव भवत्स्वेव नतु पाण्डवेषु ॥
५-९५-१४ एषामपि एषामेव ॥
५-९५-१५ शासनकाङ्क्षिणः पुत्रान् शासितुमिच्छतस्तव ॥
५-९५-१६ निष्फलं वैरम् ।संविधत्स्व शमं कुरु ॥
५-९५-२३ पाण्डवैः सह संधास्यन्ते सन्धिं करिष्यन्ति ॥
५-९५-२५ अखिलां निष्कण्टकाम् ॥
५-९५-३३ प्रकृतिं सत्त्वगुणम् ॥
५-९५-४२ स्थाता स्थास्यति ॥
५-९५-५० आरुजति हिनस्ति ।अनुकूलजान् कूलं कूलमनुमृत्य जातान् वृक्षादीन् ॥
५-९५-५८ परमोपधिः महच्छद्म ॥

---

उद्योगपर्व-अध्यय०९६
॥ श्रीः ॥
५.९६. अध्यायः ९६

Mahabharata - Udyoga Parva - Chapter Topics
जामदग्न्येन दम्भोद्भवोपाख्यानमाख्याय कृष्णार्जुनयोः नरनारायणस्वरूपताभिधानम् ॥१ ॥

Mahabharata - Udyoga Parva - Chapter Text

५-९६-० (३५२४०)
वैशंपायन उवाच। ५-९६-०क्ष् (३६७५)
तस्मिन्नभिहिते वाक्ये केशवेन महात्मना ।
स्तिमिता हृष्टरोमाण आसन्सर्वे सभासदः ॥ ५-९६-१ (३५२४१)
कस्स्विदुत्तरमेतेषां वक्तुमुत्सहते पुमान् ।
इति सर्वे मनोभिस्ते चिन्तयन्ति स्म पार्थिवाः ॥ ५-९६-२ (३५२४२)
तथा तेषु च सर्वेषु तूष्णींभूतेषु राजसु ।
जामदग्न्य इदं वाक्यमब्रवीत्कुरुसंसदि ॥ ५-९६-३ (३५२४३)
इमां मे सोपमां वाचं श्रृणु सत्यामशङ्कितः ।

तां श्रुत्वा श्रेय आदत्स्व यदि साध्विति मन्यसे ॥ ५-९६-४ (३५२४४)
राजा दम्भोद्भवो नाम सार्वभौमः पुराऽभवत् ।
अखिलां बुभुजे सर्वां पृथिवीमिति नः श्रुतम् ॥ ५-९६-५ (३५२४५)
स स्म नित्यं निशापाये प्रातरुत्थाय वीर्यवान् ।
ब्राह्मणान्क्षत्रियान्वैश्यान्पृच्छन्नास्ते महारथः ॥ ५-९६-६ (३५२४६)
अस्ति कश्चिद्विशिष्टो वा मद्विधो वा भवेद्युधि ।
शूद्रो वैश्यः क्षत्रियो वा ब्राह्मणो वाऽपि शस्त्रभृत् ॥ ५-९६-७ (३५२४७)
इति ब्रुवन्नन्वचरत्स राजा पृथिवीमिमाम् ।
दर्पेण महता मत्तः कञ्चिदन्यमचिन्तयन् ॥ ५-९६-८ (३५२४८)
तं च वैद्या अकृपणा ब्राह्मणाः सर्वतोऽभयाः ।
प्रत्यषेधन्त राजानं श्लाघमानं पुनः पुनः ॥ ५-९६-९ (३५२४९)
निषिध्यमानोऽप्यसकृत्पृच्छत्येव स वै द्विजान् ।
अतिमानं श्रिया मत्तं तमूचुर्ब्राह्मणास्तदा ॥ ५-९६-१० (३५२५०)
तपस्विनो महात्मानो वेदप्रत्ययदर्शिनः ।
उदीर्यमाणं राजानं क्रोधदीप्ता द्विजातयः ॥ ५-९६-११ (३५२५१)
अनेकजयिनौ शङ्कये यौ वै पुरुषसत्तमौ ।
तयोस्त्वं न समो राजन्भवितासि कदाचन ॥ ५-९६-१२ (३५२५२)
एवमुक्तः स राजा तु पुनः पप्रच्छ तान्द्विजान् ।
क्व तौ वीरौ क्वजन्मानौ किंकर्माणौ च कौ च तौ ॥ ५-९६-१३ (३५२५३)
ब्राह्मणा ऊचुः । ५-९६-१४क्ष् (३६७६)
नरो नारायणश्चैव तापसाविति नः श्रुतम् ।
आयातौ मानुषे लोके ताभ्यां युद्ध्यस्व पार्थिव ॥ ५-९६-१४ (३५२५४)
श्रूयेते तौ महात्मानौ नरनारायणावुभौ ।
तपो घोरमनिर्देश्यं तप्येते गन्धमादने ॥ ५-९६-१५ (३५२५५)
स राजा महतीं सेनां योजयित्वा षडङ्गिनीम् ।
अमृष्यमाणः संप्रायाद्यत्र तावपराजितौ ॥ ५-९६-१६ (३५२५६)
स गत्वा विषमं घोरं पर्वतं गन्धमादनम् ।
मार्गमाणोऽन्वगच्छत्तौ तापसौ वनमाश्रितौ ॥ ५-९६-१७ (३५२५७)
तौ दृष्ट्वा क्षुत्पिपासाभ्यां कृशौ धमनिसन्ततौ ।
शीतवातातपैश्चैव कर्शितौ पुरुषोत्तमौ ॥ ५-९६-१८ (३५२५८)
अभिगम्योपसङ्गृह्य पर्यपृच्छदनामयम् ।
तमर्चित्वा मूलफलैरासनेनोदकेन च ॥ ५-९६-१९ (३५२५९)
न्यमन्त्रयेतां राजानं किं कार्यं क्रियतामिति ।
ततस्तामानुपूर्वीं स पुनरेवान्वकीर्तयत् ॥ ५-९६-२० (३५२६०)
बाहुभ्यां मे जिता भूमिर्निहताः सर्वशत्रवः ।
भवद्भ्यां युद्धमाकाङ्क्षन्नुपयातोऽस्मि पर्वतम् ॥ ५-९६-२१ (३५२६१)

आतिथ्यं दीयतामेतत्काङ्क्षितं मे चिरं प्रति। ५-९६-२२ (३५२६२)
नरनारायणावूचतुः ।
अपेतक्रोधलोभोऽयमाश्रमो राजसत्तम ॥ ५-९६-२२क्ष् (३६७७)
न ह्यस्मिन्नाश्रमे युद्धं कुतः शस्त्रं कुतोऽनृजुः ।
अन्यत्र युद्धमाकाङ्क्ष बहवः क्षत्रियाः क्षितौ ॥ ५-९६-२३ (३५२६३)
राम उवाच। ५-९६-२४क्ष् (३६७८)
उच्यमानस्तथाऽपि स्म भूय एवाभ्यभाषत ।
पुनः पुनः क्षाम्यमाणः सान्त्व्यमानश्च भारत ॥ ५-९६-२४ (३५२६४)
दम्भोद्भवो युद्धमिच्छन्नाह्वयत्येव तापसौ ।
ततो नरस्त्विषीकाणां मुष्टिमादाय भारत ॥ ५-९६-२५ (३५२६५)
अब्रवीदेहि युद्ध्यस्व युद्धकामुक क्षत्रिय ।
सर्वशस्त्राणि चादत्स्व योजयस्व च वाहिनीम् ॥ ५-९६-२६ (३५२६६)
अहं हि ते विनेष्यामि युद्धश्रद्धामितः परम् ।
ग्यदाह्वयसि दर्पेण ब्राह्मणप्रमुखाञ्जनान् ॥' ५-९६-२७ (३५२६७)
दम्भोद्भव उवाच। ५-२९-१८क्ष् (३६७९)
यद्येतदस्त्रमस्मासु युक्तं तापस मन्यसे ।
एतेनापि त्वया योत्स्ये युद्धार्थी ह्यहमागतः ॥ ५-९६-२८ (३५२६८)
राम उवाच। ५-९६-२९क्ष् (३६८०)
इत्युक्त्वा शरवर्षेण सर्वतः समवाकिरत् ।
दम्भोद्भवस्तापसं तं जिवांसुः सहसैनिकः ॥ ५-९६-२९ (३५२६९)
तस्य तानस्यतो घोरानिषून्परतनुच्छिदः ।
कदर्थीकृत्य स मुनिरिषीकाभिः समार्पयत् ॥ ५-९६-३० (३५२७०)
ततोऽस्मौ प्रासृजद्घोरमैषीकमपराजितः ।
अस्त्रमप्रतिसन्धेयं तदुद्भुतमिवाभवत् ॥ ५-९६-३१ (३५२७१)
तेषामक्षीणि कर्णांश्च नासिकाश्चैव मायया ।
निमित्तवेधी स मुनिरीषीकाभिः समार्पयत् ॥ ५-९६-३२ (३५२७२)
स दृष्ट्वा श्वेतमाकाशमिषीकाभिः समाचितम् ।
पादयोर्न्यपतद्राजा स्वस्ति मेस्त्विति चाब्रवीत् ॥ ५-९६-३३ (३५२७३)
तमब्रवीन्नरो राजञ्शरण्यः शरणैषिणाम् ।
ब्रह्मण्यो भव धर्मात्मा मा च स्मैवं पुनः कृथाः ॥ ५-९६-३४ (३५२७४)
नैतादृक्पुरुषो राजन्क्षत्रधर्ममनुस्मरन् ।
मनसा नृपशार्दूल भवेत्परपुरञ्जयः ॥ ५-९६-३५ (३५२७५)
मा च दर्पसमाविष्टः वा तत्ते राजन्समाहितम् ॥
कृतप्रज्ञो वीतलोभो निरहङ्कार आत्मवान् । ५-९६-३६ (३५२७६)
दान्तः क्षान्तो मृदुः सौम्य प्रजाः पालय पार्थिव ॥
मास्म भूयः क्षिपेः कंचिदविदित्वा बलाबलम्। ५-९६-३७ (३५२७७)

अनुज्ञातः स्वस्ति गच्च मैवं भूयः समाचरेः ।
कुशलं ब्राह्मणान्पृच्छेरावयोर्वचनाद्भृशम् ॥ ५-९६-३८ (३५२७८)
ततो राजा तयोः पादावभिवाद्य महात्मनोः ।
प्रत्याजगाम स्वपुरं धर्मं चैवाचरद्भृशम् ॥ ५-९६-३९ (३५२७९)
सुमहच्चापि तत्कर्म यन्नरेण कृतं पुरा ।
ततो गुणैः सुबहुभिः श्रेष्ठो नारायणोऽभवत् ॥ ५-९६-४० (३५२८०)
तस्माद्यावद्धनुःश्रेष्ठे गाण्डीवेऽस्त्रं न युज्यते ।
तावत्त्वं मानमुत्सृज्य गच्छ राजन्धनञ्जयम् ॥ ५-९६-४१ (३५२८१)
काकुदीकं शुकं नाकमक्षिसन्तर्जनं तथा ।
सन्तानं नर्तकं घोरमास्यमोदकमष्टमम् ॥ ५-९६-४२ (३५२८२)
एतैर्विद्धाः सर्व एव मरणं यान्ति मानवाः ।
उन्मत्ताश्च विचेष्टन्ते नष्टसंज्ञा विचेतसः ॥ ५-९६-४३ (३५२८३)
ग स्वपन्ति च प्लवन्ते च च्छर्दयन्ति च मानवाः ।
मूत्रयन्ते च सततं रुदन्ति च हसन्ति च ॥' ५-९६-४४ (३५२८४)
कामक्रोधौ लोभमोहौ मदमानौ तथैव च ।
मात्सर्याहङ्कृती चैव क्रमादेत उदाहृताः ॥ ५-९६-४५ (३५२८५)
निर्माता सर्वलोकानामीश्वरः सर्वकर्मवित् ।
यस्य नारायणो बन्धुरर्जुनो दुःसहो युधि ॥ ५-९६-४६ (३५२८६)
कस्तमुत्सहते जेतुं त्रिषु लोकेषु भारत ।
वीरं कपिध्वजं जिष्णुं यस्य नास्ति समो युधि ॥ ५-९६-४७ (३५२८७)
असङ्ख्येया गुणाः पार्थे तद्विशिष्टो जनार्दनः ।
त्वमेव भूयो जानासि कुन्तीपुत्रं धनञ्जयम् ॥ ५-९६-४८ (३५२८८)
नरनारायणौ यौ तौ तावेवार्जुनकेशवौ ।
विजानीहि महाराज प्रवीरौ पुरुषोत्तमौ ॥ ५-९६-४९ (३५२८९)
यद्येतदेवं जानासि न च मामभिशङ्कसे ।
आर्यां मतिं समास्थाय शाम्य भारत पाण्डवैः ॥ ५-९६-५० (३५२९०)
अथ चेन्मन्यसे श्रेयो न मे भेदो भवेदिति ।
प्रशाम्य भरतश्रेष्ठ मा च युद्धे मनः कृथाः ॥ ५-९६-५१ (३५२९१)
भवतां च कुरुश्रेष्ठ कुलं बहुमतं भुवि ।
तत्तथैवास्तु भद्रं ते स्वार्थमेवोपचिन्तय ॥ ॥ ५-९६-५२ (३५२९२)

इति श्रीमन्महाभारते उद्योगपर्वणि भगवद्यानपर्वणि
षण्णवतितमोऽध्यायः ॥

Mahabharata - Udyoga Parva - Chapter Footnotes

५-९६-४२ काकुदीकमित्यादयोऽष्टावस्त्रजातयः ॥

५-९६-४५ अयं श्लोको बहुषु कोशेषु न दृश्यते झो पुस्तके एव दृश्यते ॥

---

उद्योगपर्व-अध्यय०९७
॥ श्रीः ॥
५.९७. अध्यायः ९७

Mahabharata - Udyoga Parva - Chapter Topics
कण्वेन सुयोधनस्य बलावलेपविलोपनाय मातलिवरान्वेषणकथाकथनारम्भः ॥ १ ॥
मातलिना गुणकेशीनामकस्वकन्याया अनुगुणवरान्वेषणाय नागलोकंप्रति प्रस्थानम् ॥ २ ॥

Mahabharata - Udyoga Parva - Chapter Text

५-९७-० (३५२९३)
वैशंपायन उवाच। ५-९७-०क्ष् (३६८१)
जामदग्न्यवचः श्रुत्वा कण्वेऽपि भगवानृषिः ।
दुर्योधनमिदं वाक्यमब्रवीत्कुरुसंसदि ॥ ५-९७-१ (३५२९४)
कण्व उवाच। ५-९७-२क्ष् (३६८२)
अक्षयश्चाव्ययश्चैव ब्रह्मा लोकपितामहः ।
तथैव भगवन्तौ तौ नरनारायणावृषी ॥ ५-९७-२ (३५२९५)
आदित्यानां हि सर्वेषां विष्णुरेकः सनातनः ।
अजय्यश्चाव्ययश्चैव शाश्वतः प्रभुरीश्वरः ॥ ५-९७-३ (३५२९६)
निमित्तमरणाश्चान्ये चन्द्रसूर्यौ मही जलम् ।
वायुरग्निस्तथाऽऽकाशं ग्रहास्तारागणास्तथा ॥ ५-९७-४ (३५२९७)
ते च क्षयान्ते जगतो हित्वा लोकत्रयं सदा ।
क्षयं गच्छन्ति वै सर्वे सृज्यन्ते च पुनः पुनः ॥ ५-९७-५ (३५२९८)
मुहूर्तमरणास्त्वन्ये मानुषा मृगपक्षिणः ।
तैर्यग्योन्याश्च ये चान्ये जीवलोकचरास्तथा ॥ ५-९७-६ (३५२९९)
भूयिष्ठेन तु राजानः श्रियं भुक्त्वाऽऽयुषः क्षये ।
तरुणाः प्रतिपद्यन्ते भोक्तुं सुकृतदुष्कृते ॥ ५-९७-७ (३५३००)
स भवान्धर्मपुत्रेण शमं कर्तुमिहार्हसि ।
पाण्डवाः कुरवश्चैव पालयन्तु वसुन्धरान् ॥ ५-९७-८ (३५३०१)
बलवानहमित्येव न मन्तव्यं सुयोधन ।
बलवन्तो बलिभ्यो हि दृश्यन्ते पूरुषर्षभ ॥ ५-९७-९ (३५३०२)
न बलं बलिनां मध्ये बलं भवति कौरव ।

बलवन्तो हि ते सर्वे पाण्डवा देवविक्रमाः । ५-९७-१० (३५३०३)
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
मातलेर्दातुकामस्य कन्यां मृगयतो वरम् ॥ ५-९७-११ (३५३०४)
मतस्त्रिलोकराजस्य मातलिर्नाम सारथिः ।
तस्यैकैव कुले मन्या रूपतो लोकविश्रुता ॥ ५-९७-१२ (३५३०५)
गुणकेशीति विख्याता नाम्ना सा देवरूपिणी ।
श्रिया च वपुषा चैव स्त्रियोऽन्याःसाऽतिरिच्यते ॥ ५-९७-१३ (३५३०६)
तस्याः प्रदानसमयं मातलिः सह भार्यया ।
ज्ञात्वा विममृशे राजंस्तत्परः परिचिन्तयन् ॥ ५-९७-१४ (३५३०७)
धिक्खल्वलघुशीलानामुच्छ्रितानां यशस्विनाम् ।
नराणां मृदुसत्वानां कुले कन्याप्ररोहणम् ॥ ५-९७-१५ (३५३०८)
मातुः कुलं पितृकुलं यत्र चैव प्रदीयते ।
कुलत्रयं संशयितं कुरुते कन्यका सताम् ॥ ५-९७-१६ (३५३०९)
देवमानुषलोकौ द्वौ मानुषेणैव चक्षुषा ।
अपगाह्यैव विचितौ न च मे रोचते वरः ॥ ५-९७-१७ (३५३१०)
कण्व उवाच। ५-९७-१८क्ष् (३६८३)
न देवान्नैव दितिजान्न गन्धर्वान्न मानुषान् ।
अरोचयद्वरकृते तथैव बहुलानृषीन् ॥ ५-९७-१८ (३५३११)
भार्यया तु स संमन्त्र्य सह रात्रौ सुधर्मया ।
मातलिर्नागलोकाय चकार गमने मतिम् ॥ ५-९७-१९ (३५३१२)
न मे देवमनुष्येषु गुणकेश्याः समो वरः ।
रूपतो दृश्यते कश्चिन्नागेषु भविता ध्रुवम् ॥ ५-९७-२० (३५३१३)
इत्यामन्त्र्य सुधर्मां स कृत्वा चाभिप्रदक्षिणम् ।
कन्यां शिरस्युपाघ्राय प्रविवेश महीतलम् ॥ ॥ ५-९७-२१ (३५३१४)

इति श्रीमन्महाभारते उद्योगपर्वणि भगवद्यानपर्वणि
सप्तनवतितमोऽध्यायः ॥

Mahabharata - Udyoga Parva - Chapter Footnotes

५-९७-७ तरुणाः अपीति शेषः । युद्धेन मरणं प्राप्नुवन्तीत्यर्थः ॥
५-९७-१० बलं सैन्यम् । बलिनां स्वाभाविकबलवतां बलं सामर्थ्यं
न भवति ॥
५-९७-११ मातलेरितिहासमिति संबन्धः ॥
५-९७-१५ उच्छ्रितानां महत्तया ख्यातानाम् ॥

---

उद्योगपर्व-अध्यय०९८

॥ श्रीः ॥

५.९८. अध्यायः ९८

Mahabharata - Udyoga Parva - Chapter Topics

पातालं गच्छतो मातलेः वरुणं गच्छता नारदेन यदृच्छया पथि समागमः ॥ १ ॥
वरुणेन सत्कृतयोस्तयोस्तमापृच्छ्य पातालं प्रति निवर्तनम् ॥ २ ॥
नारदेन मातलिंप्रति वरुणलोके तत्तद्वस्तुविशेषान्प्रदर्श्य तद्गुणवर्णनम् ॥ ३ ॥

Mahabharata - Udyoga Parva - Chapter Text

५-९८-० (३५३१५)
कण्व उवाच। ५-९८-०क्ष् (३६८४)
मातलिस्तु व्रजन्मार्गे नारदेन महर्षिणा ।
वरुणं गच्छता द्रष्टुं समागच्छद्यदृच्छया ॥ ५-९८-१ (३५३१६)
नारदोऽथाब्रवीदेनं क्व भवान्गन्तुमुद्यतः ।
स्येन वा सूत कार्येण शासनाद्वा शतक्रतोः ॥ ५-९८-२ (३५३१७)
मातलिर्नारदेनैवं संपृष्टः पथि गच्छता ।
यथावत्सर्वमाचष्ट स्वकार्यं नारदं प्रति ॥ ५-९८-३ (३५३१८)
तमुवाचाथ स मुनिर्गच्छावः सहिताविति ।
सलिलेशदिदृक्षार्थमहमप्युद्यतो दिवः ॥ ५-९८-४ (३५३१९)
अहं ते सर्वमाख्यास्ये दर्शयन्वसुधातलम् ।
दृष्ट्वा तत्र वरं कंचिद्रोचयिष्याव मातले ॥ ५-९८-५ (३५३२०)
अवगाह्य तु तौ भूमिमुभौ मातलिनारदौ ।
ददृशाते महात्मानौ लोकपालमपां पतिम् ॥ ५-९८-६ (३५३२१)
तत्र देवर्षिसदृशीं पूजां स प्राप नारदः ।
महेन्द्रसदृशीं चैव मातलिः प्रत्यपद्यत ॥ ५-९८-७ (३५३२२)
तावुभौ प्रीतमनसौ कार्यवन्तौ निवेद्य ह ।
वरुणेनाभ्यनुज्ञातौ नागलोकं विचेरतुः ॥ ५-९८-८ (३५३२३)
नारदः सर्वभूतानामन्तर्भूमिनिवासिनाम् ।
जानंश्चकार व्याख्यानं यन्तुः सर्वमशेषतः ॥ ५-९८-९ (३५३२४)
नारद उवाच। ५-९८-१०क्ष् (३६८५)
दृष्टस्ते वरुणः सूत पुत्रपौत्रसमावृतः ।
पश्योदकपतेः स्थानं सर्वतोभद्रमृद्धिमत् ॥ ५-९८-१० (३५३२५)
एष पुत्रो महाप्राज्ञो वरुणस्येह गोपतेः ।

एष वै शीलवृत्तेन शौचेन च विशिष्यते ॥ ५-९८-११ (३५३२६)
एषोऽस्य पुत्रोऽभिमतः पुष्करः पुष्करेक्षणः ।
रूपवान्दर्शनीयश्च सोमपुत्र्या वृतः पतिः ॥ ५-९८-१२ (३५३२७)
ज्योत्स्नाकालीति यामाहुर्द्वितीयां रूपतः श्रियम् ।
अदित्याश्चैव यः पुत्रो ज्येष्ठः श्रेष्ठः कृतः स्मृतः
॥ ५-९८-१३ (३५३२८)
भवनं पश्य वारुण्यं यदेतत्सर्वकाञ्चनम् ।
यत्प्राप्य सुरतां प्राप्ताः सुराः सुरपतेः सखे ॥ ५-९८-१४ (३५३२९)
एतानि हृतराज्यानां दैतेयानां स्म मातले ।
दीप्यमानानि दृश्यन्ते सर्वप्रहरणान्युत ॥ ५-९८-१५ (३५३३०)
अक्षयाणि किलैतानि विवर्तन्ते स्म मातले ।
अनुभावप्रयुक्तानि सुरैरवजितानि ह ॥ ५-९८-१६ (३५३३१)
अत्र राक्षसजात्यश्च दैत्यजात्यश्च मातले ।
दिव्यप्रहरणाश्चासन्पूर्वदैवतनिर्मिताः ॥ ५-९८-१७ (३५३३२)
अग्निरेष महार्चिष्माञ्जागर्ति वारुणे ह्रदे ।
वैष्णवं चक्रमाविद्धं विधूमेन हविष्मता ॥ ५-९८-१८ (३५३३३)
एष गाण्डीमयश्चापो लोकसंहारसंभृतः ।
रक्ष्यते दैवतैर्नित्यं यतस्तद्गाण्डिवं धनुः ॥ ५-९८-१९ (३५३३४)
एष कृत्ये समुत्पन्ने तत्तद्धारयते बलम् ।
सहस्रशतसङ्ख्येन प्राणेन सततं ध्रुवः ॥ ५-९८-२० (३५३३५)
अशास्यानपि शास्त्येष रक्षोबन्धुषु राजसु ।
सृष्टः प्रथमतश्चण्डो ब्रह्मणा ब्रह्मवादिना ॥ ५-९८-२१ (३५३३६)
एतच्छस्त्रं नरेन्द्राणां महच्चक्रे भासितम् ।
पुत्राः सलिलराजस्य धारयन्ति महोदयम् ॥ ५-९८-२२ (३५३३७)
एतत्सलिलराजस्य छत्रं छत्रगृहे स्थितम् ।
सर्वतः सलिलं शीतं जीमूत इव वर्षति ॥ ५-९८-२३ (३५३३८)
एतच्छत्रात्परिभ्रष्टं सलिलं सोमनिर्मलम् ।
तमसा मूर्छितं भाति येन नार्छति दर्शनम् ॥ ५-९८-२४ (३५३३९)
बहून्यद्भुतरूपाणि द्रष्टव्यानीह मातले ।
तव कार्योपरोधस्तु तस्माद्गच्छाव मा चिरम् ॥ ॥ ५-९८-२५ (३५३४०)

इति श्रीमन्महाभारते उद्योगपर्वणि भगवद्यानपर्वमि
अष्टनवतितमोऽध्यायः ॥
Mahabharata - Udyoga Parva - Chapter Footnotes

५-९८-९ यन्तुः यन्तारं मातलिंप्रति ॥

५-९८-११ गोपतेः वारिपतेः ॥
५-९८-१३ कृतः तन्नामकः ॥
५-९८-१४ वारुण्यं वारुण्याः सुरायाः इदं वारुण्यं सुरा विद्यते येषां ते सुराः ॥
५-९८-१६ विवर्तते प्रक्षिप्तान्यपि पुनःपुनः प्रहर्तुर्हस्तमायान्ति ॥
५-९८-१७ जात्यः जातीयाः ॥
५-९८-१८ हविष्मताऽग्निना आविद्धं रुद्धं विष्णुचक्रजमप्यत्र भयं नास्तीत्यर्थः ॥
५-९८-१९ गाण्डी खड्गाख्यः पशुविशेषः तस्य विकारो गाण्डीमयः गाण्डीमयत्वादेव तत् गाणाडीवं नाम धनुरभूत् ।गाण्डी वज्रग्रन्थिस्तन्मय इत्यन्ये ॥
५-९८-२१ रक्षोबन्धुषु रक्षस्तुल्येषु ॥
५-९८-२२ एतच्छस्त्रं धनुः ।चक्रेण चक्रादपि ॥
५-९८-२४ येन यस्मात्करणात् मूर्च्छितं अभिभूतं आवृतमितियावत् ।नार्छति न प्राप्नोति जन इति शेषः ॥

---

उद्योगपर्व-अध्यय०९९
॥ श्रीः ॥
५.९९. अध्यायः ९९

Mahabharata - Udyoga Parva - Chapter Topics
नारदेन मातलिं पातालं नीत्वा तत्रत्यवस्तुविशेषान्प्रदर्श्य तद्गुणनिरूपणम् ॥ १ ॥
मातलिना तत्र वरानभिरोचनवचनपूर्वकमन्यत्र यात्राकीर्तनम् ॥ २ ॥

Mahabharata - Udyoga Parva - Chapter Text

५-९९-० (३५३४१)
नारद उवाच। ५-९९-०क्ष् (३६८६)
एतत्तु नागलोकस्य नाभिस्थाने स्थितं पुरम् ।
पातालमिति विख्यातं दैत्यदानवसेवितम् ॥ ५-९९-१ (३५३४२)
इदमद्भिः समं प्राप्ता ये केचिद्भुवि जङ्गमाः ।
प्रविशन्तो महानादं नदन्ति भयपीडिताः ॥ ५-९९-२ (३५३४३)
अत्रासुरोऽग्निः सततं दीप्यते वारिभोजनः ।
व्यापारेण धृतात्मानं निबद्धं समबुध्यत ॥ ५-९९-३ (३५३४४)
अत्रामृतं सुरैः पीत्वा निहितं निहतारिभिः ॥
अतः सोमस्य हानिश्च वृद्धिश्चैव प्रदृश्यते ॥ ५-९९-४ (३५३४५)

अत्रादित्यो हयशिराः काले पर्वणि पर्वणि ।
उत्तिष्ठति सुवर्णाख्यो वाग्भिरापूरयञ्जगत् ॥ ५-९९-५ (३५३४६)
यस्मादलं समस्तास्ताः पतन्ति जलमूर्तयः ।
तस्मात्पातालमित्येव ख्यायते पुरमुत्तमम् ॥ ५-९९-६ (३५३४७)
ऐरावणोऽस्मात्सलिलं गृहीत्वा जगतो हितः ।
मेघेष्वामुञ्चते शीतं यन्महेन्द्रः प्रवर्षति ॥ ५-९९-७ (३५३४८)
ऐरावतो नागराजो वामनः कुमुदोऽञ्जनः ।
प्रसूताः सुप्रतीकस्य वंशे वारणसत्तमाः ॥ ५-९९-८ (३५३४९)
अत्र नानाविधाकारास्तिमयो नैकरूपिणः ।
अप्सु सोमप्रभां पीत्वा वसन्ति जलचारिणः ॥ ५-९९-९ (३५३५०)
अत्र सूर्यांशुभिर्भिन्नाः पातालतलमाश्रिताः ।
मृता हि दिवसे सूत पुनर्जीवन्ति वै निशि ॥ ५-९९-१० (३५३५१)
उदयन्नित्यशश्चात्र चन्द्रमा रश्मिबाहुभिः ।
अमृतं स्पृश्य संस्पर्शात्संजीवयतिदेहिनः ॥ ५-९९-११ (३५३५२)
अत्र तेऽधर्मनिरता बद्धाः कालेन पीडिताः ।
दैतेया निवसन्ति स्म वासवेन हृतश्रियः ॥ ५-९९-१२ (३५३५३)
अत्र भूतपतिर्नाम सर्वभूतमहेश्वरः ।
भूतये सर्वभूतानामचरत्तप उत्तमम् ॥ ५-९९-१३ (३५३५४)
अत्र गोव्रतिनो विप्राः स्वाध्यायाम्नायकर्शिताः ।
त्यक्तप्राणा जितस्वर्गा निवसन्ति महर्षयः ॥ ५-९९-१४ (३५३५५)
यत्रतत्रशयो नित्यं येनकेनचिदाशितः ।
येनकेनचिदाच्छन्नः स गोव्रत इहोच्यते ॥ ५-९९-१५ (३५३५६)
पश्य यद्यत्र ते कश्चिद्रोचते गुणतो वरः ।
वरयिष्यामि तं गत्वा यत्नमास्थाय मातले ॥ ५-९९-१६ (३५३५७)
अण्डमेतञ्जले न्यस्तं दीप्यमानमिव श्रिया ।
आप्रजानां निसर्गाद्धि नोद्भिद्यति न सर्पति ॥ ५-९९-१७ (३५३५८)
नास्य जातिं निसर्गं वा कथ्यमानं श्रृणोमि वै ।
पितरं मातरं चापि नास्य जानाति कश्चन ॥ ५-९९-१८ (३५३५९)
अतः किल महानग्निरन्तकाले समुत्थितः ।
धक्ष्यते मातले सर्वं त्रैलोक्यं सचराचरम् ॥ ५-९९-१९ (३५३६०)
मातलिस्त्वब्रवीच्छ्रुत्वा नारदस्याथ भाषितम् ।
न मेऽत्र रोचते कश्चिदन्यतो व्रज माचिरम् ॥ ॥ ५-९९-२० (३५३६१)

इति श्रीमन्महाभारते उद्योगपर्वणि भगवद्यानपर्वणि
ऊनशततमोऽध्यायः ॥

Mahabharata - Udyoga Parva - Chapter Footnotes

५-९९-२ अद्भिः समं प्राप्ताः जलवेगेनानीताः ॥
५-९९-३ व्यापारेण जगदनुग्रहरूपेण तदर्थमितियावत् । निबद्धं मर्यादायां स्थापितं ॥
५-९९-५ आदित्योऽदितेः पुत्रो विष्णुर्हयग्रीवरूपी ॥
५-९९-१४ स्वाध्यायाम्नायो वेदपाठः ॥
५-९९-१७ आप्रजानां निसर्गात् प्रयोत्पत्तिमारभ्य ॥
५-९९-१८ जातिं जन्म । निसर्गं स्वभावम् ॥

---

उद्योगपर्व-अध्यय१००
॥ श्रीः ॥
५.१००. अध्यायः १००

Mahabharata - Udyoga Parva - Chapter Topics
नारदेन दैत्यदानवायतनं हिरण्यपुरमुपेत्य मातलिंप्रति तत्र वरान्वेषणचोदनम् ॥ १ ॥
मातलिना दैत्यदानवानां देवकुलनित्यविरोधितया परपक्षानुबन्धानभिरुचिवचनम् ॥ २ ॥

Mahabharata - Udyoga Parva - Chapter Text

५-१००-० (३५३६२)
नारद उवाच। ५-१००-०क्ष् (३६८७)
हिरण्यपुरमित्येतत्ख्यातं पुरवरं महत् ।
दैत्यानां दानवानां च मायाशतविचारिणाम् ॥ ५-१००-१ (३५३६३)
अनल्पेन प्रयत्नेन निर्मितं विश्वकर्मणा ।
मयेन मनसा सृष्टं पातालतलमाश्रितम् ॥ ५-१००-२ (३५३६४)
अत्र मायासहस्राणि वविकुर्वाणा महौजसः ।
दानवा निवसन्ति स्म शूरा दत्तवराः पुरा ॥ ५-१००-३ (३५३६५)
नैते शक्रेण नान्येन यमेन वरुणेन वा ।
शक्यन्ते वशमानेतुं तथैव धनदेन च ॥ ५-१००-४ (३५३६६)
असुराः कालखञ्जाश्च तथा वुष्णुपदोद्भवाः ।
नैर्ऋता यातुधानाश्च ब्रह्मपादोद्भवाश्च ये ॥ ५-१००-५ (३५३६७)
दंष्ट्रिणो भीमवेगाश्च वातवेगपराक्रमाः ।
मायावीर्योपसंपन्ना निवसन्त्यत्र मातले ॥ ५-१००-६ (३५३६८)
निवातकवचा नाम दानवा युद्धदुर्मदाः ।
जानासि च यथा शक्रो नैताञ्शक्नोति बाधितुं ॥ ५-१००-७ (३५३६९)

बहुशो मातले त्वं च तव पुत्रश्च गोमुखः ।
निर्भग्नो देवराजश्च सहपुत्रः शचीपतिः ॥ ५-१००-८ (३५३७०)
पश्य वेश्मानि रौक्माणि मातले राजतानि च ।
कर्मणा विधियुक्तेन युक्तान्युपगतानि च ॥ ५-१००-९ (३५३७१)
वैदूर्यमणिचित्राणि प्रवालरुचिराणि च ।
अर्कस्फटिकशुभ्राणि वज्रसारोज्ज्वलानि च ॥ ५-१००-१० (३५३७२)
पार्थिवानीव चाभास्ति पद्मरागमयानि च ।
शैलानीव च दृश्यन्ते दारवाणीव चाप्युत ॥ ५-१००-११ (३५३७३)
सूर्यरूपाणि चाभान्ति दीप्ताग्निसदृशानि च ।
मणिजालविचित्राणि प्रांशूनि निबिडानि च ॥ ५-१००-१२ (३५३७४)
नैतानि शक्यं निर्देष्टुं रूपतो द्रव्यतस्तथा ।
गुणतश्चैव सिद्धानि प्रमाणगुणवन्ति च ॥ ५-१००-१३ (३५३७५)
आक्रीडान्पश्य दैत्यानां तथैव शयनान्युत ।
रत्नवन्ति महार्हाणि भाजनान्यासनानि च ॥ ५-१००-१४ (३५३७६)
जलदाभांस्तथा शैलांस्तोयप्रस्रवणानि च ।
कामपुष्पफलांश्चापि पादपान्कापचारिणः ॥ ५-१००-१५ (३५३७७)
मातले कश्चिदत्रापि रुचिरस्ते वरो भवेत् ।
अथवाऽन्यां दिशं भूमेर्गच्छाव यदि मन्यसे ॥ ५-१००-१६ (३५३७८)
मातलिस्त्वब्रवीदेनं भाषमाणं तथाविधम् ।
देवर्षे नैव मे कार्यं विप्रियं त्रिदिवौकसाम् ॥ ५-१००-१७ (३५३७९)
नित्यानुषक्तवैरा हि भ्रातरो देवदानवाः ।
परपक्षेण संबन्धं रोचयिष्याम्यहं कथम् ॥ ५-१००-१८ (३५३८०)
अन्यत्र साधु गच्छाव द्रष्टुं नार्हामि दानवान् ।
जानामि तव चात्मानं हिंसात्मकमनं तथा ॥ ॥ ५-१००-१९ (३५३८१)

इति श्रीमन्महाभारते उद्योगपर्वणि भगवद्यानपर्वणि शततमोऽध्यायः ॥
Mahabharata - Udyoga Parva - Chapter Footnotes

५-१००-११ शैलानि शिलामयानि ॥
५-१००-१४ आक्रीडान् क्रीडास्थानानि ॥
५-१००-१९ हिंसात्मकमनं हिंसाप्रधानानां दैत्यानां कमनं अपेक्षणीयम्
। जानामि तु तवात्मानमिच्छसे कलहानिति इति को पाठः ॥

---

उद्योगपर्व-अध्यय१०१
॥ श्रीः ॥
५.१०१. अध्यायः १०१

Mahabharata - Udyoga Parva - Chapter Topics

नारदेन मातलिं सुपर्णलोकमुपनीय सुपर्णवंश्यानां पक्षिणां नामनिर्देशपूर्वकं गुणानुकीर्तनम् ॥ १ ॥
तत्र वरानभिरोचने देशान्तरनयनवचनम् ॥ २ ॥

Mahabharata - Udyoga Parva - Chapter Text

५-१०१-० (३५३८२)
नारद उवाच। ५-१०१-०क्ष् (३६६८)
अयं लोकः सुपर्णानां पक्षिणां पन्नगाशिनाम् ।
विक्रमे गमने भारे नैषामस्ति परिश्रमः ॥ ५-१०१-१ (३५३८३)
वैनतेयसुतैः सूत षड्भिस्ततमिदं कुलम् ।
सुमुखेन सुनाम्ना च सुनेत्रेण सुवर्चसा ॥ ५-१०१-२ (३५३८४)
सुरुचा पक्षिराजेन सुबलेन च मातले ।
वर्धितानि प्रसृत्या वै विनाताकुलकर्तृभिः ॥ ५-१०१-३ (३५३८५)
पक्षिराजाभिजात्यानां सहस्राणि शतानि च ।
कश्यपस्य ततो वंशे जातैर्भूतिविवर्धनैः ॥ ५-१०१-४ (३५३८६)
सर्वे ह्येते श्रिया युक्ताः सर्वे श्रीवत्सलक्षणाः ।
सर्वे श्रियमभीप्सन्तो धारयन्ति बलान्युत ॥ ५-१०१-५ (३५३८७)
कर्मणा क्षत्रियाश्चैते निर्घृणा भोगिभोजिनः ।
ज्ञातिसङ्क्षयकर्तृत्वाद्ब्राह्मण्यं न लभन्ति वैः ॥ ५-१०१-६ (३५३८८)
नामानि चैषां वक्ष्यामि यथाप्राधान्यतः श्रृणु ।
मातले श्लाघ्यमेतद्धि कुलं विष्णुपरिग्रहम् ॥ ५-१०१-७ (३५३८९)
दैवतं विष्णुरेतेषां विष्णुरेव परायणम् ।
हृदि चैषां सदा विष्णुर्विष्णुरेव सदा गतिः ॥ ५-१०१-८ (३५३९०)
सुवर्णचूडो नागाशी दारुणश्चण्डतुण्डकः ।
अनिलश्चानलश्चैव विशालाक्षोऽथ कुण्डली ॥ ५-१०१-९ (३५३९१)
पङ्कजिद्वज्रविष्कम्भो वैनतेयोऽथ वामनः ।
वातवेगो दिशाचक्षुर्निमेषोऽनिमिषस्तथा ॥ ५-१०१-१० (३५३९२)
त्रिरावः सप्तरावश्च वाल्मीकिर्दीपकस्तथा ।
दैत्यद्वीपः सरिद्द्वीपः सारसः पद्मकेतनः ॥ ५-१०१-११ (३५३९३)
सुमुखश्चित्रकेतुश्च चित्रबर्हस्तथाऽनघः ।
मेषहृत्कुमुदो दक्षः सर्पान्तः सोमभोजनः ॥ ५-१०१-१२ (३५३९४)
गुरुभारः कपोतश्च सूर्यनेत्रश्चिरान्तकः ।
विष्णुधर्मा कुमारश्च परिबर्हो हरिस्तथा ॥ ५-१०१-१३ (३५३९५)

सुस्वरो मधुपर्कश्च हेमवर्णस्तथैव च ।
मालयो मातरिश्वा च निशाकरदिवाकरौ ॥ ५-१०१-१४ (३५३९६)
एते प्रदेशमात्रेण मयोक्ता गरुडात्मजाः ।
प्राधान्यतस्ते यशसा कीर्तिताः प्राणिनश्चये ॥ ५-१०१-१५ (३५३९७)
यद्यत्र न रुचिः काचिदेहि गच्छाव मातले ।
तं नयिष्यामि देशं त्वां वरं यत्रोपलप्स्यसे ॥ ॥ ५-१०१-१६ (३५३९८)

इति श्रीमन्महाभारते उद्योगपर्वणि भगवद्यानपर्वणि
एकाधिकशततमोऽध्यायः ॥
Mahabharata - Udyoga Parva - Chapter Footnotes

५-१०१-३ प्रसृत्या प्रकृष्टगत्या जवेन वृद्धिमन्तीत्यर्थः ॥

---

उद्योगपर्व-अध्यय१०२
॥ श्रीः ॥
५.१०२. अध्यायः १०२

Mahabharata - Udyoga Parva - Chapter Topics
नारदेन मातलिं रसातलमुपनीय तत्र वास्तव्यसुरभिसन्ततिगुणस्तवनम्
॥ १ ॥

Mahabharata - Udyoga Parva - Chapter Text

५-१०२-० (३५३९९)
नारद उवाच। ५-१०२-०क्ष् (३६८९)
इदं रसातलं नाम सप्तमं पृथिवीतलम् ।
यत्रास्ते सुरभिर्माता गवाममृतसंभवा ॥ ५-१०२-१ (३५४००)
क्षरन्ती सततं क्षीरं पृथिवीसारसंभवम् ।
षण्णं रसानां सारेण रसमेकमनुत्तमम् ॥ ५-१०२-२ (३५४०१)
अमृतेनाभितृप्तस्य सारमुद्गिरतः पुरा ।
पितामहस्य वदनादुदतिष्ठदनिन्दिता ॥ ५-१०२-३ (३५४०२)
यस्याः क्षीरस्य धाराया निपतन्त्या महीतले ।
ह्रदः कृतः क्षीरनिधिः पवित्रं परमुच्यते ॥ ५-१०२-४ (३५४०३)
पुष्पितस्येव फेनेन पर्यन्तमनुवेष्टितम् ।
पिबन्तो निवसन्त्यत्र फेनपा मुनिसत्तमाः ॥ ५-१०२-५ (३५४०४)
फेनपा नाम ते ख्याताः फेनाहाराश्च मातले ।
उग्रे तपसि वर्तन्ते येषां बिभ्यति देवताः ॥ ५-१०२-६ (३५४०५)

अस्याश्वतस्रो धेन्वोऽन्या दिक्षु सर्वासु मातले ।
निवसन्ति दिशां पाल्यो धारयन्त्योदिशःस्म ताः ॥ ५-१०२-७ (३५४०६)
पूर्वां दिशं धारयते सुरूपा नाम सौरभी ।
दक्षिणां हंसिका कनाम धारयत्यपरां दिशम् ॥ ५-१०२-८ (३५४०७)
पश्चिमा वारुणी दिक्च धार्यते वै सुभद्रया ।
महानुभावया नित्यं मातले विश्वरूपया ॥ ५-१०२-९ (३५४०८)
सर्वकामदुघा नाम धेनुर्धारयते दिशम् ।
उत्तरां मातले धर्म्यां तथैलविलसंश्रिताम् ॥ ५-१०२-१० (३५४०९)
आसां त पयसा मिश्रं पयो निर्मथ्य सागरे ।
मन्थानं मन्दरं कृत्वा देवैरसुरसंहितैः ॥ ५-१०२-११ (३५४१०)
अद्धुता वारुणी लक्ष्मीरमृतं चापि मातले ।
उच्चैःश्रवाश्वाश्वराजो मणिरत्नं च कौस्तुभम् ॥ ५-१०२-१२ (३५४११)
सुधाहारेषु च सुधां स्वधाभोजिषु च स्वधाम् ।
अमृतं चामृताशेषु सुरभी क्षरते पयः ॥ ५-१०२-१३ (३५४१२)
अत्र गाथा पुरा गीता रसातलनिवासिभिः ।
पौराणी श्रूयते लोके गीयते या मनीषिभिः ॥ ५-१०२-१४ (३५४१३)
न नागलोके न स्वर्गे न विमाने त्रिविष्टपे ।
परिवासः सुखस्तादृक् रसातलतले यथा ॥ ॥ ५-१०२-१५ (३५४१४)

इति श्रीमन्महाभारते उद्योगपर्वणि भगवाद्यानपर्वणि
द्व्यधिकशततमोऽध्यायः ॥
Mahabharata - Udyoga Parva - Chapter Footnotes

५-१०२-११ असुरसंहितैः असुरसहितैः ॥
५-१०२-१५ परिवासः निवासः । सुखः सुखकरः ॥
१५ ॥

---

उद्योगपर्व-अध्यय१०३
॥ श्रीः ॥
५.१०३. अध्यायः १०३

Mahabharata - Udyoga Parva - Chapter Topics
नारदेन मातलिं भोगवतीं नीत्वा वरान्वेषणचोदनम् ॥ १ ॥
तत्र सुमुखं नाम कंचन भुजगराजमभिरोचमानेन मातलिना
नारदंप्रति तस्य जन्मकर्मादिप्रश्नः ॥ २ ॥
नारदेन तस्य आर्यकनाम्नो भोगिनः पौत्रत्वे कीर्तिते मातलिना
नारदंप्रति तद्धटनाभ्यर्थना ॥ ३ ॥

५-१०३-० (३५४१५)
नारद उवाच। ५-१०३-०क्ष् (३६९०)
इयं भोगवती नाम पुरी वासुकिपालिता ।
यादृशी देवराजस्य पुरी वर्याऽमरावती ॥ ५-१०३-१ (३५४१६)
एष शेषः स्थितो नागो येनेयं धार्यते सदा ।
तपसा लोकमुख्येन प्रभावसहिता मही ॥ ५-१०३-२ (३५४१७)
श्वेताचलनिभाकारो दिव्याभरणभूषितः ।
सहस्रं धारयन्मूर्ध्ना ज्वालाजिह्वो महाबलः ॥ ५-१०३-३ (३५४१८)
इह नानाविधाकारा नानाविधविभूषणाः ।
सुरसायाः सुता नागा निवसन्ति गतव्यथाः ॥ ५-१०३-४ (३५४१९)
मणिस्वस्तिकचक्राङ्काः कमण्डलुकलक्षणाः ।
सहस्रसंख्या बलिन सर्वे रौद्राः स्वभावतः ॥ ५-१०३-५ (३५४२०)
सहस्रशिरसः केचित्केचित्पञ्चशताननाः ।
शतशीर्षास्तथा केचित्केचित्त्रिशिरसोऽपि च ॥ ५-१०३-६ (३५४२१)
द्विपञ्चशिरसः केचित्केचित्सप्तसुखास्तथा ।
महाभोगा महाकायाः पर्वताभोगभोगिनः ॥ ५-१०३-७ (३५४२२)
बहूनीह सहस्राणि प्रयुतान्यर्बुदानि च ।
नागानामेकवंशानां यथाश्रेष्ठं तु मे श्रुणु ॥ ५-१०३-८ (३५४२३)
वासुकिस्तक्षकश्चैव कर्कोटकधनञ्जयौ ।
कालीयो नहुषश्चैव कम्बलाश्वतरावुभौ ॥ ५-१०३-९ (३५४२४)
बाह्यकुण्डो मणिर्नागस्तथैवापूरणः खगः ।
वामनश्चैलपत्रश्च कुकुरः कुकुणस्तथा ॥ ५-१०३-१० (३५४२५)
आर्यको नन्दकश्चैव तथा कलशपोतकौ ।
कैलासकः पिञ्जरको नागश्चैरावतस्तथा ॥ ५-१०३-११ (३५४२६)
सुमनोमुखो दधिमुखः शङ्खो नन्दोपनन्दकौ ।
आप्तः कोटरकश्चैव शिखी निष्ठूरिकस्तथा ॥ ५-१०३-१२ (३५४२७)
तित्तिरिर्हस्तिभद्रश्च कुमुदो माल्यपिण्डकः ।
द्वौ पद्मौ पुण्डरीकश्च पुष्पो मुद्गरपर्णकः ॥ ५-१०३-१३ (३५४२८)
करवीरः पीठरकः संवृत्तो वृत्त एव च ।
पिण्डारो बिल्वपत्रश्च मूषिकादः शिरीषकः ॥ ५-१०३-१४ (३५४२९)
दिलीपः शङ्खशीर्षश्च ज्योतिष्कोऽथापराजितः ।
कौरव्यो धृतराष्ट्रश्च कुहुरः कृशकस्तथा ॥ ५-१०३-१५ (३५४३०)
विरजा धारणश्चैव सुबाहुर्मुखरो जयः ।

बधिरान्धौ विशुण्डिश्च विरसः सुरसस्तथा ॥ ५-१०३-१६ (३५४३१)
एते चान्ये च बहवः कश्यपस्यात्मजाः स्मृताः ।
मातले पश्य यद्यत्र कश्चित्ते रोचते वरः ॥ ५-१०३-१७ (३५४३२)
कण्व उवाच। ५-१०३-१८क्ष् (३६९१)
मातलिस्त्वेकमव्यग्रः सततं संनिरीक्ष्य वै ।
पप्रच्छ नारदं तत्र प्रीतिमानिव चाभवत् ॥ ५-१०३-१८ (३५४३३)
मातलिरुवाच। ५-१०३-१९क्ष् (३६९२)
स्थितो य एष पुरतः कौरव्यस्यार्यकस्य तु ।
द्युतिमान्दर्शनीयश्च कस्यैष कुलनन्दनः ॥ ५-१०३-१९ (३५४३४)
कः पिता जननी चास्य कतमस्यैष भोगिनः ।
वंशस्य कस्यैष महान्केतुभूत इव स्थितः ॥ ५-१०३-२० (३५४३५)
प्रणिधानेन धैर्येण रूपेण वयसा च मे ।
मनः प्रविष्टो देवर्षे गुणकेश्याः पतिर्वरः ॥ ५-१०३-२१ (३५४३६)
कण्व उवाच। ५-१०३-२२क्ष् (३६९३)
मातलिं प्रीतमनसं दृष्ट्वा सुमुखदर्शनात् ।
निवेदयामास तदा माहात्म्यं जन्म कर्म च ॥ ५-१०३-२२ (३५४३७)
नारद उवाच। ५-१०३-२३क्ष् (३६९४)
ऐरावतकुले जातः सुमुखो नाम नागराट् ।
आर्यकस्य मतः पौत्रो दौहित्रो वामनस्य च ॥ ५-१०३-२३ (३५४३८)
एतस्य हि पिता नागश्चिकुरो नाम मातले ।
नचिराद्वैतनेयेन पञ्चत्वमुपपादितः ॥ ५-१०३-२४ (३५४३९)
ततोऽब्रवीत्प्रीतमना मातलिर्नारदं वचः ।
एष मे रुचितस्तात जामाता भुजगोत्तमः ॥ ५-१०३-२५ (३५४४०)
क्रियतामत्र यत्नो वै प्रीतिमानस्म्यनेनेन वै ।
अस्मै नागाय वै दातुं प्रियां दुहितरं मुने ॥ ॥ ५-१०३-२६ (३५४४१)

इति श्रीमन्महाभारते उद्योगपर्वणि भगवद्यानपर्वणि
त्र्यधिकशततमोऽध्यायः ॥

---

उद्योगपर्व-अध्यय१०४
॥ श्रीः ॥
५.१०४. अध्यायः १०४

Mahabharata - Udyoga Parva - Chapter Topics
नारदेन आर्यकंप्रति पौत्रार्थं मातलिकन्यापरिग्रहचोदनम् ॥ १ ॥
आर्यकेण नारदंप्रति सुमुखजनकं भक्षितवता वैनतेयेन मासान्तरे
सुमुखभक्षणप्रतिज्ञानिवेदनम् ॥ २ ॥

मातलिना तार्क्ष्यात्सुमुखरिरक्षया सुमुखनारदाभ्यां सह शक्रसमीपगमनम् ॥ ३ ॥
नारदेन मातालेकार्यं विज्ञापितेन विष्णुना सुमुखाय अमृतवितरणाज्ञापनेपि इन्द्रेण अमृताप्रदानेनैव दीर्घायुर्दानम् ॥ ४ ॥
मातलिना सुमुखाय स्वकन्यां प्रदाय विवाहनिर्वर्तनम् ॥ ५ ॥

Mahabharata - Udyoga Parva - Chapter Text

५-१०४-० (३५४४२)
कण्व उवाच। ५-१०४-०क्ष् (३६९५)
मातलेर्वचनं श्रुत्वा नारदो मुनिसत्तमः ।
अब्रवीद्देवराजं तमार्यकं कुरुनन्दन ॥ ५-१०४-१ (३५४४३)
सूतोऽयं मातलिर्नाम शक्रस्य दयितः सुहृत् ।
शुचिः शीलगुणोपेतस्तेजस्वी वीर्यवान्बली ॥ ५-१०४-२ (३५४४४)
शक्रस्यायं सखा चैव मन्त्री सारथिरेव च ।
अल्पान्तरप्रभावश्च वासवेन रणे रणे ॥ ५-१०४-३ (३५४४५)
अयं हरिसहस्रेण युक्तं जैत्रं रथोत्तमम् ।
देवासुरेषु युद्धेषु मनसैव नियच्छति ॥ ५-१०४-४ (३५४४६)
अनेन विजितानश्वैर्दोर्भ्यां जयति वासवः ।
अनेन बलभित्पूर्वं प्रहृते प्रहरत्युत ॥ ५-१०४-५ (३५४४७)
अस्य कन्या वरारोहा रूपेणासदृशी भुवि ।
सत्यशीलगुणोपेता गुणकेशीति विश्रुता ॥ ५-१०४-६ (३५४४८)
तस्यास्य यत्नाच्चरतस्त्रैलोक्यममरद्युते ।
सुमुखो भवतः पौत्रो रोचते दुहितुः पतिः ॥ ५-१०४-७ (३५४४९)
यदि ते रोचते सम्यग्भुजगोत्तम मा चिरम् ।
क्रियतामार्यक क्षिप्रं बुद्धिः कन्यापरिग्रहे ॥ ५-१०४-८ (३५४५०)
यथा विष्णुकुले लक्ष्मीर्यथा स्वाहा विभावसोः ।
कुले तव तथैवास्तु गुणकेशी सुमध्यमा ॥ ५-१०४-९ (३५४५१)
पौत्रस्यार्थे भवांस्तस्माद्गुणकेशीं प्रतीच्छतु ।
सदृशीं प्रतिरूपस्य वासवस्य शचीमिव ॥ ५-१०४-१० (३५४५२)
पितृहीनमपि ह्येनं गुणतो वरयामहे ।
बहुमानाच्च भवतस्तथैवैरावतस्य च ॥ ५-१०४-११ (३५४५३)
सुमुखस्य गुणैश्चैव शीलशौचदमादिभिः ।
अभिगम्य स्वयं कन्यामयं दातुं समुद्यतः ।
मातलिस्तस्य संमानं कर्तुमर्हो भवानपि ॥ ५-१०४-१२ (३५४५४)

कण्व उवाच। ५-१०४-१३क्ष् (३६९६)
स तु दीनः प्रहृष्टश्च प्राह नारदमार्यकः ।
व्रियमाणे तथा पौत्रे पुत्रे च निधनं गते ॥ ५-१०४-१३ (३५४५५)
आर्यक उवाच। ५-१०४-१४क्ष् (३६९७)
मन्ये नैतद्बहुमतं महर्षे वचनं तव ।
सखा शक्रस्य संयुक्तः कस्यायं नेप्सितो भवेत् ।
कारणस्य तु दौर्बल्याच्चिन्तयामि महामुने ॥ ५-१०४-१४ (३५४५६)
अस्य देहकरस्तात मम पुत्रो महाद्युते ।
भक्षितो वैनतेयेन दुःखार्तास्तेन वै वयम् ॥ ५-१०४-१५ (३५४५७)
पुनरेव च तेनोक्तं वैनतेयेन गच्छता ।
मासेनान्येन सुमुखं भक्षयिष्य इति प्रभो ॥ ५-१०४-१६ (३५४५८)
ध्रुवं तथा तद्भविता जानीमस्तस्य निश्चयम् ।
तेन हर्षः प्रनष्टो मे सुपर्णवचनेन वै ॥ ५-१०४-१७ (३५४५९)
कण्व उवाच। ५-१०४-१८क्ष् (३६९८)
मातलिस्त्वब्रवीदेनं बुद्धिरत्र कृता मया ।
जामातृभावेन वृतः सुमुखस्तव पुत्रजः ॥ ५-१०४-१८ (३५४६०)
सोऽयं मया च सहितो नारदेन च पन्नगः ।
त्रिलोकेशं सुरपतिं गत्वा पश्यतु वासवम् ॥ ५-१०४-१९ (३५४६१)
शेषेणैवास्य कार्येण प्रज्ञास्वाम्यहमायुषः ।
सुपर्णस्य विघाते च प्रयतिष्यामि सत्तम ॥ ५-१०४-२० (३५४६२)
सुमुखश्च मया सार्धं देवेशमिगच्छतु ।
कार्यसंसाधनार्थाय स्वस्ति तेऽस्तु भुजङ्गम ॥ ५-१०४-२१ (३५४६३)
ग्कण्व उवाच। ५-१०४-२२क्ष् (३६९९)
आर्यकेणाभ्यनुज्ञाता गम्यतामिति भारत।'
ततस्ते सुमुखं गृह्य सर्व एव महौजसः ।
ददृशुः शक्रमासीनं देवराजं महाद्युतिम् ॥ ५-१०४-२२ (३५४६४)
सङ्गत्या तत्र भगवान्विष्णुरासीच्चतुर्भुजः ।
ततस्तत्सर्वमाचख्यौ नारदो मातलिं प्रति ॥ ५-१०४-२३ (३५४६५)
वैशंपायन उवाच। ५-१०४-२४क्ष् (३७००)
ततः पुरन्दरं विष्णुरुवाच भुवनेश्वरम् ।
अमृतं दीयतामस्मै क्रियताममरैः समः ॥ ५-१०४-२४ (३५४६६)
मातलिर्नारदश्चैव सुमुखश्चैव वासव ।
लभन्तां भवतः कामात्काममेतं यथेप्सितम् ॥ ५-१०४-२५ (३५४६७)
पुरन्दरोऽथ संचिन्त्य वैनतेयपराक्रमम् ।
विष्णुमेवाब्रवीदेनं भवानेव ददात्विति ॥ ५-१०४-२६ (३५४६८)
विष्णुरुवाच। ५-१०४-२७क्ष् (३७०१)

ईशस्त्वं सर्वलोकानां चराणामचराश्च ये ।
त्वया दत्तमदत्तं कः कर्तुमुत्सहते विभो ॥ ५-१०४-२७ (३५४६९)
प्रादाच्छक्रस्ततस्तस्मै पन्नगायायुरुत्तमम् ।
न त्वेनममृतप्राशं चकार बलवृत्रहा ॥ ५-१०४-२८ (३५४७०)
लब्ध्वा वरं तु सुमुखः सुमुखः संबभूव ह ।
कृतदारो यथाकामं जगाम च गृहान्प्रति ॥ ५-१०४-२९ (३५४७१)
नारदस्त्वार्यकश्चैव कृतकार्यौ मुदा युतौ ।
अभिजग्मतुरभ्यर्च्य देवराजं महाद्युतिम् ॥ ॥ ५-१०४-३० (३५४७२)

इति श्रीमन्महाभारते उद्योगपर्वणि भगवद्यानपर्वणि
चतुरधिकशततमोऽध्यायः ॥
Mahabharata - Udyoga Parva - Chapter Footnotes

५-१०४-२० अस्यायुषः शेषेण कार्येण प्रज्ञास्यामि विज्ञापयिष्यामि ॥

---

उद्योगपर्व-अध्यय१०५
॥ श्रीः ॥
५.१०५. अध्यायः १०५

Mahabharata - Udyoga Parva - Chapter Topics
सुमुखाय आयुर्दानश्रवणकुपितेन गरुडेन इन्द्रोपेन्द्रावभ्येत्य दर्पोक्तिः
॥ १ ॥
उपेन्द्रेण तार्क्ष्यदर्पविमोक्षणाय तदंसे स्वदक्षबाहुविक्षेपे
तद्वहनाक्षमेण तेन तत्क्षमापनम् ॥ २ ॥
कण्वेन सुयोधनंप्रति गरुडनिदर्शनप्रदर्शनपूर्वकं
गर्वपरिहारेण पाण्डवैः सह शमविधानम् ॥ ३ ॥
दुर्योधनेन ऊरुताजनपूर्वकं कण्वोपहासे तेन तं प्रति तव ऊरावेव
मृत्युर्भविष्यतीति शापदानम् ॥ ४ ॥

Mahabharata - Udyoga Parva - Chapter Text

५-१०५-० (३५४७३)
कण्व उवाच। ५-१०५-०क्ष् (३७०२)
गरुडस्तत्र शुश्राव यथावृत्तं महाबलः ।
आयुःप्रदानं शक्रेण कृतं नागस्य भारत ॥ ५-१०५-१ (३५४७४)
पक्षवातेन महता रुद्धवा त्रिभुवनं खगः ।

सुपर्णः परमक्रुद्धो वासवं समुपाद्रवत् ॥ ५-१०५-२ (३५४७५)
गरुड उवाच। ५-१०५-३क्ष् (३७०३)
भगवन्किमवज्ञानाद्वृत्तिः प्रतिहता मम ।
कामकारवरं दत्त्वा पुनश्चलितवानसि ॥ ५-१०५-३ (३५४७६)
निसर्गात्सर्वभूतानां सर्वभूतेश्वरेण मे ।
आहारो विहितो धात्रा किमर्थं वार्यते त्वया ॥ ५-१०५-४ (३५४७७)
वृतश्चैष महानागः स्थापितः समयश्च मे ।
अनेन च मया देव भर्तव्यः प्रसवो महान् ॥ ५-१०५-५ (३५४७८)
एतस्मिंस्तु तथाभूते नान्यं हिंसितुमुत्सहे ।
क्रीडसे कामकारेण देवराज यथेच्छकम् ॥ ५-१०५-६ (३५४७९)
सोऽहं प्राणान्विमोक्ष्यामि तथा परिजनो मम ।
ये च भृत्या मम गृहे प्रीतिमान्भव वासव ॥ ५-१०५-७ (३५४८०)
ग्कण्व उवाच। ५-१०५-८क्ष् (३७०४)
श्रुत्वा सुपर्णवचनं सुमुखो दुर्मुखस्तदा ।
त्यक्त्वा रूपं विवर्णस्तु सर्परूपधरोऽभवत् ।
गत्वा विष्णुसमीपं तु पादपीठं समाश्लिषत् ॥ ५-१०५-८ (३५४८१)
इन्द्र उवाच। ५-१०५-९क्ष् (३७०५)
न मत्कृतं वैनतेय न मां क्रोद्धुं त्वमर्हसि ।
दत्ताभयः स सुमुखो विष्णुना प्रभविष्णुना ।
श्रत्वा पुरन्दरेणोक्तमुवाच विनतासुतः ॥' ५-१०५-९ (३५४८२)
एतच्चैवाहमर्हामि भूयश्च बलवृत्रहन् ।
त्रैलोक्यस्येश्वरो योऽहं परभृत्यत्वमागतः ॥ ५-१०५-१० (३५४८३)
त्वयि तिष्ठति देवेश न विष्णुः कारणं मम ।
त्रैलोक्यराजराज्यं हि त्वयि वासव शाश्वतम् ॥ ५-१०५-११ (३५४८४)
ममापि दक्षस्य सुता जननी कश्यपः पिता ।
अहमत्युत्सहे लोकान्समन्ताद्वोढुमोजसा ॥ ५-१०५-१२ (३५४८५)
असह्यं सर्वभूतानां ममापि विपुलं बलम् ।
मयाऽपि सुमहत्कर्म कृतं दैतेयविग्रहे ॥ ५-१०५-१३ (३५४८६)
श्रुतश्रीः श्रुतसेनश्च विवस्वान्रोचनामुखः ।
प्रसुतः कालकाक्षश्च मयाऽपि दितिजा हताः ॥ ५-१०५-१४ (३५४८७)
यत्तु ध्वजस्थानगतो यत्नात्परिचराम्यहम् ।
वहामि चैवानुजं ते तेन मामवमन्यसे ॥ ५-१०५-१५ (३५४८८)
कोऽन्यो भारसहो ह्यस्ति कोऽन्योस्ति बलवत्तरः ।
मया योऽहं विशिष्टः सन्वहामीमं सबान्धवं ॥ ५-१०५-१६ (३५४८९)
अवज्ञाय तु यत्तेऽहं भोजनाद्व्यपरोपितः ।
तेन मे गौरवं नष्टं त्वत्तश्चास्माच्च वासव ॥ ५-१०५-१७ (३५४९०)

अदित्यां य इमे जाता बलविक्रमशालिनः ।
त्वमेषां किल सर्वेषां बलेन बलवत्तरः ॥ ५-१०५-१८ (३५४९१)
सोऽहं पक्षैकदेशेन वहामि त्वां गतक्लमः ।
विमृश त्वं शनैस्तात कोऽन्वत्र बलवानिति ॥ ५-१०५-१९ (३५४९२)
कण्व उवाच। ५-१०५-२०क्ष् (३७०६)
स तस्य वचनं श्रुत्वा खगस्योदर्कदारुणम् ।
अक्षोभ्यं क्षोभयंस्तार्क्ष्यमुवाच रथचक्रभृत् ॥ ५-१०५-२० (३५४९३)
गरुत्मन्मन्यसेत्मानं बलवन्तं सुदुर्बलम् ।
अलमस्मत्समक्षं ते स्तोतुमात्मानमण्डज ॥ ५-१०५-२१ (३५४९४)
त्रैलोक्यमपि मे कृत्स्नमशक्तं देहधारणे ।
अहमेवात्मनात्मानं वहामि त्वां च धारये ॥ ५-१०५-२२ (३५४९५)
ग्न त्वं वहसि मां दोर्भ्यां मोघं तव विकत्थनम् ।'
इमं तावन्ममैकं त्वं बाहुं सव्येतरं वह ।
यद्येनं धारयस्येकं सफलं ते विकत्थितम् ॥ ५-१०५-२३ (३५४९६)
इत्युक्त्वा भगवांस्तस्य स्कन्धे बाहुं समासजत् ।
ग्आरोपितं समुद्वोढुं भारं तं नाशकद्बलात् ।'
निपपात स भारार्तो विहलो नष्टचेतनः ॥ ५-१०५-२४ (३५४९७)
यावान्हि भारः कृत्स्नायाः पृथिव्याः पर्वतैः सह ।
एकस्या देहशाखायास्तावद्भारममन्यत ॥ ५-१०५-२५ (३५४९८)
न त्वेनं पीडयामास बलेन बलवत्तरः ।
ततो हि जीवितं तस्य न व्यनीनशदच्युतः ॥ ५-१०५-२६ (३५४९९)
व्यात्तास्यः स्रस्तकायश्च विचेता विह्वलः खगः ।
मुमोच पत्राणि तदा गुरुभारप्रपीडितः ॥ ५-१०५-२७ (३५५००)
स विष्णुं शिरसा पक्षी प्रणम्य विनतासुतः ।
विचेता विह्वलो दीनः किंचिद्वचनमब्रवीत् ॥ ५-१०५-२८ (३५५०१)
भगवँल्लोकसारस्य सदृशेन वपुष्मता ।
भुजेन स्वैरमुक्तेन निष्पिष्टोऽस्मि महीतले ॥ ५-१०५-२९ (३५५०२)
क्षन्तुमर्हसि मे देव विह्वलस्याल्पचेतसः ।
बलदाहविदग्धस्य पक्षिणो ध्वजवासिनः ॥ ५-१०५-३० (३५५०३)
न हि ज्ञातं बलं देव मया ते परम विभो ।
तेन मन्याम्यहं वीर्यमात्मनो न समं परैः ॥ ५-१०५-३१ (३५५०४)
कण्व उवाच। ५-१०५-३२क्ष् (३७०७)
ततश्चक्रे स भगवान्प्रसादं वै गरुत्मतः ।
मैवं भूय इति स्नेहात्तदा चैनमुवाच ह ॥ ५-१०५-३२ (३५५०५)
पादाङ्गुष्ठेन चिक्षेप सुमुखं गरुडोरसि ।
ततः प्रभृति राजेन्द्र सहसर्पेण वर्तते ॥ ५-१०५-३३ (३५५०६)

एवं विष्णुबलाक्रान्तो गर्वनाशमुपागतः ।
गरुडो बलवान्राजन्वैनतेयो महायशाः ॥ ५-१०५-३४ (३५५०७)
कण्व उवाच। ५-१०५-३५क्ष् (३७०८)
तथा त्वमपि गान्धारे यावत्पाण्डुसुतान्रणे ।
नासादयसि तान्वीरांस्तावज्जीवसि पुत्रक ॥ ५-१०५-३५ (३५५०८)
भीमः प्रहरतां श्रेष्ठो वायुपुत्रो महाबलः ।
धनञ्जयश्चेन्द्रसुतो न हन्यातां तु कं रणे ॥ ५-१०५-३६ (३५५०९)
विष्णुर्वायुश्च शक्रश्च धर्मस्तौ चाश्विनावुभौ ।
एते देवास्त्वया केन हेतुना वीक्षितुं क्षमाः ॥ ५-१०५-३७ (३५५१०)
तदलं ते विरोधेन शमं गच्छ नृपात्मज ।
वासुदेवेन तीर्थेन कुलं रक्षितुमर्हसि ॥ ५-१०५-३८ (३५५११)
प्रत्यक्षदर्शी सर्वस्य नारदोऽयं महातपाः ।
माहात्म्यस्य तदा विष्णोः सोऽयं चक्रगदाधरः ॥ ५-१०५-३९ (३५५१२)
वैशंपायन उवाच। ५-१०५-४०क्ष् (३७०९)
दुर्योधनस्तु तच्छ्रुत्वा निश्वसन्भृकुटीमुखः ।
राधेयमभिसंप्रेक्ष्य जहास स्वनवत्तदा ॥ ५-१०५-४० (३५५१३)
कदर्थीकृत्य तद्वाक्यमृषेः कण्वस्य दुर्मतिः ।
ऊरुं गजकराकारं ताडयन्निदमब्रवीत् ॥ ५-१०५-४१ (३५५१४)
यथैवेश्वरसृष्टोऽस्मि यद्भावि या च मे गतिः ।
तथा महर्षे वर्तामि किं प्रलापः करिष्यति ॥ ५-१०५-४२ (३५५१५)
ꣳ ततः कण्वोऽब्रवीत्क्रुद्धो दुर्योधनमपण्डितम् ।
यस्मादूरुं ताडयसि ऊरौ मृत्युर्भविष्यति ॥' ॥ ५-१०५-४३ (३५५१६)

इति श्रीमन्महाभारते उद्योगपर्वणि भगवद्यानपर्वणि
पञ्चाधिकशततमोऽध्यायः ॥

---

उद्योगपर्व-अध्यय१०६
॥ श्रीः ॥
५.१०६. अध्यायः १०६

Mahabharata - Udyoga Parva - Chapter Topics
निर्बन्धस्यानर्थहेतुतायां निदर्शनप्रदर्शनाय दुर्योधनंप्रति
नारदेन गालवोपाख्यानकथनारम्भः ॥ १ ॥
विश्वामित्रेण गुरुदक्षिणानिषेधनेऽपि निर्बन्धकारिणं गालवंप्रति
एकतश्श्यामकर्णश्वेताश्वशताष्टकानयननियोगः ॥ २ ॥

Mahabharata - Udyoga Parva - Chapter Text

५-१०६-० (३५५१७)
जनमेजय उवाच। ५-१०६-०क्ष् (३७१०)
अनर्थे जातिनिर्बन्धं परार्थे लोभमोहितम् ।
अनार्यकेष्वभिरतं मरणे कृतनिश्चयम् ॥ ५-१०६-१ (३५५१८)
ज्ञातीनां दुःखकर्तारं बन्धूनां शोकवर्धनम् ।
सुहृदां क्लेशदातारं द्विषतां हर्षवर्धनम् ॥ ५-१०६-२ (३५५१९)
कथं नैनं विमार्गस्थं वारयन्तीह बान्धवाः ।
सौहृदाद्वा सुहृत्स्निग्धो भगवान्वा पितामहः ॥ ५-१०६-३ (३५५२०)
वैशंपायन उवाच। ५-१०६-४क्ष् (३७११)
उक्तं भगवता वाक्यमुक्तं भीष्मेण यत्क्षमम् ।
उक्तं बहुविधं चैव नारदेनापि तच्छृणु ॥ ५-१०६-४ (३५५२१)
नारद उवाच। ५-१०६-५क्ष् (३७१२)
दुर्लभो वै सुहृच्छ्रोता दुर्लभश्च हितः सुहृत् ।
तिष्ठते हि सुहृद्यत्र न बन्धुस्तत्र तिष्ठते ॥ ५-१०६-५ (३५५२२)
श्रोतव्यमपि पश्यापि सुहृदां कुरुनन्दन ।
न कर्तव्यश्च निर्बन्धो निर्बन्धो हि सुदारुणः ॥ ५-१०६-६ (३५५२३)
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
यथा निर्बन्धतः प्राप्तो गालवेन पराजयः ॥ ५-१०६-७ (३५५२४)
विश्वामित्रं तपस्यन्तं धर्मो जिज्ञासया पुरा ।
अभ्यगच्छत्स्वयं भूत्वा वसिष्ठो भगवानृषिः ॥ ५-१०६-८ (३५५२५)
सप्तर्षीणामन्यतमं वेषमास्थाय भारत ।
बभुक्षुः क्षुधितो राजन्नाश्रमं कौशिकस्य तु ॥ ५-१०६-९ (३५५२६)
विश्वामित्रोऽथ संभ्रान्तः श्रपयामास वै चरुम् ।
परमान्नस्य यत्नेन न च तं प्रत्यपालयत् ॥ ५-१०६-१० (३५५२७)
अन्नं तेन यदा भुक्तमन्यैर्दत्तं तपस्विभिः ।
अथ गृह्यान्नमत्युष्णं विश्वामित्रोऽप्युपागमत् ॥ ५-१०६-११ (३५५२८)
भुक्तं मे तिष्ठ तावत्त्वमित्युक्त्वा भगवान्ययौ ।
विश्वामित्रस्ततो राजन्स्थित एव महाद्युतिः ॥ ५-१०६-१२ (३५५२९)
भक्तं प्रगृह्य मूर्ध्ना वै बाहुभ्यां संशितव्रतः ।
स्थितः स्थाणुरिवाभ्याशे निश्चेष्टो मारुताशनः ॥ ५-१०६-१३ (३५५३०)
तस्य शुश्रूषणे यत्नमकरोद्गालवो मुनिः ।
गौरवाद्बहुमानाच्च हार्देन प्रियकाम्यया ॥ ५-१०६-१४ (३५५३१)
अथ वर्षशते पूर्णे धर्मः पुनरुपागमत् ।
वासिष्ठं वेषमास्थाय कौशिकं भोजनेप्सया ॥ ५-१०६-१५ (३५५३२)
स दृष्ट्वा शिरसा भक्तं ध्रियमाणं महर्षिणा ।

तिष्ठता वायुभक्षेण विश्वामित्रेण धीमता ॥ ५-१०६-१६ (३५५३३)
प्रतिगृह्य ततो धर्मस्तथैवोष्णं तथा नवम् ।
भुक्त्वा प्रीतोस्मि विप्रर्षे तमुक्त्वा स मुनिर्गतः ॥ ५-१०६-१७ (३५५३४)
क्षत्रभावादपगतो ब्राह्मणत्वमुपागतः ।
धर्मस्य वचनात्प्रीतो विश्वामित्रस्तथाऽभवत् ॥ ५-१०६-१८ (३५५३५)
विश्वामित्रस्तु शिष्यस्य गालवस्य तपस्विनः ।
शुश्रूषया च भक्त्या च प्रीतिमानित्युवाच ह ॥ ५-१०६-१९ (३५५३६)
अनुज्ञातो मया वत्स यथेष्टं गच्छ गवालव ।
इत्युक्तः प्रत्युवाचेदं गालवो मुनिसत्तमम् ॥ ५-१०६-२० (३५५३७)
प्रीतो मधुरया वाचा विश्वामित्रं महाद्युतिम् ।
दक्षिणाः काः प्रयच्छामि भवते गुरुकर्मणि ॥ ५-१०६-२१ (३५५३८)
दक्षिणाभिरुपेतं हि कर्म सिद्ध्यति मानद ।
दक्षिणानां हि दाता वै अपवर्गेण युज्यते ॥ ५-१०६-२२ (३५५३९)
स्वर्गे क्रतुफलं तद्धि दक्षिणा शान्तिरुच्यते ।
किमाहरामि गुर्वर्थं ब्रवीतु भगवानिति ॥ ५-१०६-२३ (३५५४०)
स जानानस्तु भगवान्खिन्नं शुश्रूषणेन वै ।
विश्वामित्रस्तमसकृद्गच्छ गच्छेत्यचोदयत् ॥ ५-१०६-२४ (३५५४१)
असकृद्गच्छगच्छेति विश्वामित्रेण भाषितः ।
किं ददानीति बहुशो गालवः प्रत्यभाषत ॥ ५-१०६-२५ (३५५४२)
निर्बन्धतस्तु बहुशो गालवस्य तपस्विनः ।
किंचिदागतसंरम्भो विश्वामित्रोऽब्रवीदिदम् ॥ ५-१०६-२६ (३५५४३)
एकतःश्यामकर्णानां हयानां चन्द्रवर्चसाम् ।
अष्टौ शतानि मे देहि गच्छ गालव मा चिरम् ॥ ॥ ५-१०६-२७ (३५५४४)

इति श्रीमन्महाभारते उद्योगपर्वणि भगवद्यानपर्वणि
षडधिकशततमोऽध्यायः ॥

Mahabharata - Udyoga Parva - Chapter Footnotes

५-१०६-१ परार्थे परस्वनिमित्तम् ॥
५-१०६-५ सुहृत् प्रत्युपकारमनपेक्ष्य उपकर्ता ॥
५-१०६-६ श्रोतव्यं श्रोतुं युक्तम् । निर्बन्धः सत्यपि बलवद्बाधके
तत्रैवाग्रहः ॥
५-१०६-१० न प्रत्यपालयत् अन्नसिद्धिपर्यन्तं न प्रतीक्षितवान् ॥
५-१०६-११ तेन वसिष्ठेन । उपागमत् वसिष्ठसमीपम् ॥
५-१०६-१३ मूर्ध्नी बाहुभ्यां च परिगृह्य । अभ्याशे समीपे आश्रमस्य ॥
५-१०६-१४ गौरवात् गुरुत्वात् । बहुमानात् लोकपूज्यत्वात्। हार्देन प्रीत्या ॥

५-१०६-१९ शुश्रूषया सेवया । भक्त्या आराध्यत्वज्ञानेन ॥
५-१०६-२१ गुरुकर्मणि ब्रह्मचर्यव्रतसमाप्तौ सत्याम् ॥
५-१०६-२२ अपवर्गेण फलप्राप्त्या ॥
५-१०६-२३ ऋतुफलं दक्षिणाप्रद एव प्राप्नोति । शान्तिः सर्वोपद्रवहारिणी ॥
५-१०६-२७ श्यामो हरितः । एकतः बहिःप्रदेशे एव श्यामाः कर्णा येषां एकतःश्यामकर्णानाम् ॥

---

उद्योगपर्व-अध्यय१०७
॥ श्रीः ॥
५.१०७. अध्यायः १०७

Mahabharata - Udyoga Parva - Chapter Topics
विश्वामित्रोक्तलक्षणाश्वाधिगमोपायापरिज्ञानेन शोचता गालवेन स्वार्थलाभाय श्रीविष्णूपासनम् ॥ १ ॥
सुहृदा गरुडेन गालवमुपगम्य स्वेन तस्याभिमतदेशप्राणकथनम् ॥ २ ॥

Mahabharata - Udyoga Parva - Chapter Text

५-१०७-० (३५५४५)
नारद उवच। ५-१०७-०क्ष् (३७१३)
एवमुक्तस्तदा तेन विश्वामित्रेण धीमता ।
नास्ते न शेते नाहारं कुरुते गालवस्तदा ॥ ५-१०७-१ (३५५४६)
त्वगस्थिभूतो हरिणाश्चिन्ताशोकपरायणः ।
शोचमानोऽतिमात्रं स दह्यमानश्च मन्युना ।
गालवो दुःखितो दुःखाद्विललाप सुयोधन ॥ ५-१०७-२ (३५५४७)
कुतः पुष्टानि मित्राणि कुतोऽर्थाः सञ्चयः कृतः ।
हयानां चन्द्रशुभ्राणां शतान्यष्टौ कुतो मम ॥ ५-१०७-३ (३५५४८)
कुतो मे भोजने श्रद्धा सुखश्रद्धा कुतश्च मे ।
श्रद्धा मे जीवितस्यापि छिन्ना किं जीवितेन मे ॥ ५-१०७-४ (३५५४९)
अहं पारे समुद्रस्य पृथिव्या वा परं परात् ।
गत्वाऽऽत्मानं विमुञ्चामि किं फलं जीवितेन मे ॥ ५-१०७-५ (३५५५०)
अदनस्याकृतार्थस्य त्यक्तस्य विविधैः फलैः ।
ऋणं धारयमाणस्य कुतः सुखमनीहया ॥ ५-१०७-६ (३५५५१)
सुहृदां हि धनं भुक्त्वा कृत्वा प्रणयमीप्सितम् ।
प्रतिकर्तुमशक्तस्य जीवितान्मरणं वरम् ॥ ५-१०७-७ (३५५५२)
प्रतिश्रुत्य करिष्येति कर्तव्यं तदकुर्वतः ।

मिथ्यावचनदग्धस्य इष्टापूर्तं प्रणश्यति ॥ ५-१०७-८ (३५५५३)
न रूपमनृतस्यास्ति नानृतस्यास्ति सन्ततिः ।
नानृतस्याधिपत्यं च कुत एव गतिः शुभा ॥ ५-१०७-९ (३५५५४)
कुतः कृतघ्नस्य यशः कुतः स्थानं कुतः सुखम् ।
अश्रद्धेयः कृतघ्नो हि कृतघ्ने नास्ति निष्कृतिः ॥ ५-१०७-१० (३५५५५)
न जीवत्यधनः पापः कुतः पापस्य तन्त्रणम् ।
पापो ध्रुवमवाप्नोति विनाशं नाशयन्कृतम् ॥ ५-१०७-११ (३५५५६)
सोऽहं पापः कृतघ्नस्य कृपणश्चानृतोऽपि च ।
गुरोर्यः कृतकार्यः संस्तत्करोमि न भाषितम् ॥ ५-१०७-१२ (३५५५७)
सोऽहं प्राणान्विमोक्ष्यामि कृत्वा यत्नमनुत्तमम् ।
अर्थिता न मया काचित्कृतपूर्वा दिवौकसाम् ॥ ५-१०७-१३ (३५५५८)
मानयन्ति च मां सर्वे त्रिदशा यज्ञसंस्तरे ।
अहं तु विबुधश्रेष्ठं देवं त्रिभुवनेश्वरम् ।
विष्णुं गच्छाम्यहं कृष्णं गतिं गतिमतां वरम् ॥ ५-१०७-१४ (३५५५९)
भोगा यस्मात्प्रतिष्ठन्ते व्याप्य सर्वान्सुरासुरान् ।
प्रणतो द्रष्टुमिच्छामि कृष्णं योगिनमव्ययम् ॥ ५-१०७-१५ (३५५६०)
एवमुक्ते सखा तस्य गरुडो विनतात्मजः ।
दर्शयामास तं प्राह संहृष्टः प्रियकाम्यया ॥ ५-१०७-१६ (३५५६१)
सहृद्भवान्मम मतः सुहृदां च मतः सुहृत् ।
ईप्सितेनाभिलाषेण योक्तव्यो विभवे सति ॥ ५-१०७-१७ (३५५६२)
विभवश्चास्ति मे विप्र वासवावरजो द्विज ।
पूर्वमुक्तस्त्वदर्थं च कृतः कामश्च तेन मे ॥ ५-१०७-१८ (३५५६३)
५-१०७-१९ (३५५६४)
स भवानेतु गच्छाव नयिष्ये त्वां यथासुखम् ।
देशं पारं पृथिव्या वा गच्छ गालव मा चिरम् ॥
Mahabharata - Udyoga Parva - Chapter Footnotes

५-१०७-५ परं परात् दूरादपि दूरम् । आत्मानं देहम् । ५-१०७-६ अनीहया अनुद्यमेन ॥
५-१०७-७ ईप्सितं दास्यामीति विश्वासमुत्पाद्य ॥
५-१०७-८ करिष्येतीति संधिरार्षः ॥
५-१०७-९ अनृतस्य सत्यहीनस्य ॥
५-१०७-११ तन्त्रणं कुटुम्बधारणम् ॥
५-१०७-१४ अत्राहमितिपदस्य द्विरावृत्तिर्वक्तुर्वैक्लव्याददोषः ॥

---

उद्योगपर्व-अध्यय१०८

॥ श्रीः ॥
५.१०८. अध्यायः १०८

Mahabharata - Udyoga Parva - Chapter Topics
गालवंप्रति गरुडेन स्वेन तस्य पूर्वादिदिक्प्रापणकथनपूर्वकं पूर्वदिग्गुणवर्णनम् ॥ १ ॥

Mahabharata - Udyoga Parva - Chapter Text

५-१०८-० (३५५६५)
सुपर्ण उवाच। ५-१०८-०क्ष् (३७१४)
अनुशिष्टोऽस्मि देवेन गालव ज्ञानयोनिना ।
ब्रूहि कामं तु कां यामि द्रष्टुं प्रथममो दिशम् ॥ ५-१०८-१ (३५५६६)
पूर्वां वा दक्षिणां वाहमथवा पश्चिमां दिशम् ।
उत्तरां वा द्विजश्रेष्ठ कुतो गच्छामि गालव ॥ ५-१०८-२ (३५५६७)
यस्यामुदयते पूर्वं सर्वलोकप्रभावनः ।
सविता यत्र सन्ध्यायां साध्यानां वर्तते तपः ॥ ५-१०८-३ (३५५६८)
यस्यां पूर्वं मतिर्जाता यया व्याप्तमिदं जगत् ।
चक्षुषी यत्र धर्मस्य यत्र चैष प्रतिष्ठितः ॥ ५-१०८-४ (३५५६९)
कृतं यतो हुतं हव्यं सर्पते सर्वतोदिशम् ॥
एतद्द्वारं द्विजश्रेष्ठ दिवसस्य तथाऽध्वनः ॥ ५-१०८-५ (३५५७०)
अत्र पूर्वं प्रसूता वै दाक्षायण्यः प्रजाः स्त्रियः ।
यस्यां दिशि प्रवृद्धाश्च कश्यपस्यात्मसंभवाः ॥ ५-१०८-६ (३५५७१)
अदोमूला सुराणां श्रीर्यत्र शक्रोऽभ्यषिच्यत ।
सुरराज्येन विप्रर्षे देवैश्चात्र तपश्चितम् ॥ ५-१०८-७ (३५५७२)
एतस्मात्कारणाद्ब्रह्मन्पूर्वेत्येषा दिगुच्यते ।
यस्मात्पूर्वतरे काले पूर्वमेवावृतासुरैः ॥ ५-१०८-८ (३५५७३)
अत एव च सर्वेषां पूर्वामाशां प्रचक्षते ।
पूर्वं सर्वाणि कार्याणि दैवानि सुखमीप्सता ॥ ५-१०८-९ (३५५७४)
अत्र वेदाञ्जगौ पूर्वं भगवाँल्लोकभावनः ।
अत्रैवोक्ता सवित्रासीत्सावित्री ब्रह्मवादिषु ॥ ५-१०८-१० (३५५७५)
अत्र दत्तानि सूर्येण यजूंषि द्विजसत्तम ।
अत्र लब्धवरः सोमः सुरैः क्रतुषु पीयते ॥ ५-१०८-११ (३५५७६)
अत्र तृप्ता हुतवहाः स्वां योनिमुपभुञ्जते ।
अत्र पातालमाश्रित्य वरुणः श्रियमाप च ॥ ५-१०८-१२ (३५५७७)
अत्र पूर्वं वसिष्ठस्य पौराणस्य द्विजर्षभ ।

सूतिश्चैव प्रतिष्ठा च निधनं च प्रकाशते ॥ ५-१०८-१३ (३५५७८)
ओङ्कारस्यात्र जायन्ते सृतयो दशतीर्दश ।
पिबन्ति मुनयो यत्र हविर्धूमं स्म धूमपाः ॥ ५-१०८-१४ (३५५७९)
प्रोक्षिता यत्र बहवो वराहाद्या मृगा वने ।
शक्रेण यज्ञभागार्थे दैवतेषु प्रकल्पिताः ॥ ५-१०८-१५ (३५५८०)
अत्राहिताः कृतघ्नाश्च मानुषाश्चासुराश्च ये ।
उदयंस्तान्हि सर्वान्वै क्रोधाद्धन्ति विभावसुः ॥ ५-१०८-१६ (३५५८१)
एतद्द्वारं त्रिलोकस्य स्वर्गस्य च सुखस्य च ।
एष पूर्वो दिशां भागो विशावोऽत्र यदीच्छसि ॥ ५-१०८-१७ (३५५८२)
प्रियं कार्यं हि मे तस्य यस्यास्मि वचने स्थितः ।
ब्रूहि गालव यास्यामि शृणु चाप्यपरां दिशम् ॥ ॥ ५-१०८-१८ (३५५८३)

इति श्रीमन्महाभारते उद्योगपर्वणि भगवद्यानपर्वणि
अष्टाधिकशततमोऽध्यायः ॥
Mahabharata - Udyoga Parva - Chapter Footnotes

५-१०८-४ गतिर्बुद्धिः जाता प्राप्ता ।चक्षुषी आज्यभागाख्ये
अग्नीषोमदैवत्ये।धर्मस्य यज्ञस्य ॥
५-१०८-६ दाक्षायण्यः अदित्यादयः ।प्रजाः लोकान् ॥
५-१०८-९ पूर्वं पूर्वसंस्थानि ।सुखमीप्सता सुखाद्यर्थिना ॥
५-१०८-११ यजूंषि दत्तानि याज्ञवल्क्यायेति शेषः ॥
५-१०८-१२ स्वां योनिं सोमाज्यपयआदिरूपं जलम् ॥
५-१०८-१३ पूर्वं मित्रावरुणयोर्यज्ञकाले ।पौराणस्य पुराणस्य स्वार्थे
तद्धितः ।निधनं निमिशापात् ॥
५-१०८-१४ दशशतीशब्दस्य पृषोदरादिशकारलोपेन दशतीशब्दः
सहस्रवाची ।दशतीरित्यत्र वाछन्दसीति पूर्वसवर्णः।सृतयो
मार्गाः ॥
५-१०८-१६ तान् हन्ति तेषामायुरल्पीकरोतीत्यर्थः ॥

---

उद्योगपर्व-अध्यय१०९
॥ श्रीः ॥
५.१०९. अध्यायः १०९

Mahabharata - Udyoga Parva - Chapter Topics
गरुडेन गालवंप्रति दक्षिणदिग्गुणवर्णनम् ॥ १ ॥

५-१०९-० (३५५८४)
सुपर्ण उवाच। ५-१०९-०क्ष् (३७१५)
इयं विवस्वदा पूर्वं श्रौतेन विधिना किल ।
गुरवे दक्षिणा दत्ता दक्षिणेत्युच्यते च दिक् ॥ ५-१०९-१ (३५५८५)
अत्र लोकत्रयस्यास्य पितृपक्षः प्रतिष्ठितः ।
अत्रोष्मपाणां देवानां निवासः श्रूयते द्विज ॥ ५-१०९-२ (३५५८६)
अत्र विश्वे सदा देवाः पितृभिः सार्धमासते ।
इज्यमानाः स्म लोकेषु संप्राप्तास्तुल्यभागताम् ॥ ५-१०९-३ (३५५८७)
एतद्द्वितीयं देवस्य द्वारमाचक्षते द्विज ।
त्रुटिशो लवशश्चापि गण्यते कालनिश्चयः ॥ ५-१०९-४ (३५५८८)
अत्र देवर्षयो नित्यं पितृलोकर्षयस्तथा ।
तथा राजर्षयः सर्वे निवसन्ति गतव्यथाः ॥ ५-१०९-५ (३५५८९)
अत्र धर्मश्च सत्यं च कर्म चात्र निगद्यते ।
गतिरेषा द्विजश्रेष्ठ कर्मणामवसायिनाम् ॥ ५-१०९-६ (३५५९०)
एषा दिक्सा द्विजश्रेष्ठ यां सर्वः प्रतिपद्यते ।
वृता त्वनवबोधेन सुखं तेन न गम्यते ॥ ५-१०९-७ (३५५९१)
नैर्ऋतानां सहस्राणि बहून्यत्र द्विजर्षभ ।
सृष्टानि प्रतिकूलानि द्रष्टव्यान्यकृतात्मभिः ॥ ५-१०९-८ (३५५९२)
अत्र मन्दरकुञ्जेषु विप्रर्षिसदनेषु च ।
गायन्ति गाथा गन्धर्वाश्चित्तबुद्धिहरा द्विज ॥ ५-१०९-९ (३५५९३)
अत्र सामानि गाथाभिः श्रुत्वा गीतानि रैवतः ।
गतदारो गतामात्यो गतराज्यो वनं गतः ॥ ५-१०९-१० (३५५९४)
अत्र सावर्णिना चैव यवक्रीतात्मजेन च ।
मर्यादा स्थापिता ब्रह्मन्यां सूर्यो नातिवर्तते ॥ ५-१०९-११ (३५५९५)
अत्र राक्षसराजेन पौलस्त्येन महात्मना ।
रावणेन तपः कृत्वा सुरेभ्योऽमरता वृता ॥ ५-१०९-१२ (३५५९६)
अत्र वृत्तेन वृत्रोऽपि शक्रशत्रुत्वमेयिवान् ।
अत्र सर्वासवः प्राप्ताः पुनर्गच्छन्ति पञ्चधा ॥ ५-१०९-१३ (३५५९७)
अत्र दुष्कृतकर्माणो नराः पच्यन्ति गालव ।
अत्र वैतरणी नाम नदी वैतरणैर्वृता ॥ ५-१०९-१४ (३५५९८)
अत्र गत्वा सुखस्यान्तं दुःखस्यान्तं प्रपद्यते ।
अत्रावृत्तो दिनकरः सुरसं क्षरते पयः ॥ ५-१०९-१५ (३५५९९)
काष्ठां चासाद्य वासिष्ठीं हिममुत्सृजते पुनः ।
अत्राहं गालव पुरा क्षुधाऽऽर्तः परिचिन्तयन् ॥ ५-१०९-१६ (३५६००)

लब्धवान्युध्यमानौ द्वौ बृहन्तौ गजकच्छपौ ।
अत्र चक्रधनुर्नाम सूर्याज्जातो महानृषिः ॥ ५-१०९-१७ (३५६०१)
विदुर्यं कपिलं देवं येनार्ताः सगरात्मजाः ।
अत्र सिद्धाः शिवा नाम ब्राह्मणा वेदपारगाः ॥ ५-१०९-१८ (३५६०२)
अधीत्य सकलान्वेदाँल्लेभिरे मोक्षमक्षयम् ।
अत्र भोगवती नाम पुरी वासुकिपालिता ॥ ५-१०९-१९ (३५६०३)
तक्षकेण च नागेन तथैवैरावतेन च ।
अत्र निर्याणकालेऽपि तमः संप्राप्यते महत् ॥ ५-१०९-२० (३५६०४)
अभेद्यं भास्करेणापि स्वयं वा कृष्णवर्त्मना ।
एष तस्यापि ते मार्गः परिचारस्य गालव ।
ब्रूहि मे यदि गन्तव्यं प्रतीचीं शृणु चापराम् ॥ ॥ ५-१०९-२१ (३५६०५)

इति श्रीमन्महाभरते उद्योगपर्वणि भगवद्यानपर्वणि
नवाधिकशततमोऽध्यायः ॥
Mahabharata - Udyoga Parva - Chapter Footnotes

५-१०९-२ ऊष्मपाणां उष्णान्नभोजिनाम् ॥
५-१०९-३ विश्वे त्रयोदशमितो गणः ॥
५-१०९-४ द्वितीयं देवस्य धर्मस्य द्वारम् ॥
५-१०९-११ सावर्णिना अनुना । मर्यादा सूर्यरथस्य ॥
५-१०९-१३ सर्वासवः सर्वेषां प्राणा अत्र प्राप्ताः सन्तः पुनः पञ्चधा
गच्छन्ति देहं प्राप्नुवन्ति । प्राणापानादिभेदेनेत्यर्थः ॥
५-१०९-१४ वैतरणैः वैतरणीनदीसंज्ञकनरकाहैः ॥
५-१०९-१५ सुखस्यान्तं नरकम् । दुःखस्यान्तं स्वर्गसुखम्। आवृत्तः
कर्कायनगतः। तदाहि वृष्टिर्भवति ॥
५-१०९-१६ वासिष्ठीं काष्ठां उदीचीं
वसिष्ठोपलक्षितसप्तर्षिभिरधिष्ठिताम् ॥
५-१०९-२० निर्याणकाले मरणकाले । तमः आन्ध्यम् ॥
५-१०९-२१ तस्य ते तव परिचारस्य अन्वेषणस्य ॥

---

उद्योगपर्व-अध्यय११०
॥ श्रीः ॥
५.११०. अध्यायः ११०

Mahabharata - Udyoga Parva - Chapter Topics
गरुडेन गालवंप्रति पश्चिमदिग्गुणवर्णनम् ॥ १ ॥

५-११०-० (३५६०६)
सुपर्ण उवाच। ५-११०-०क्ष् (३७१६)
इयं दिग्दयिता राज्ञो वरुणस्य तु गोपतेः ।
सदा सलिलराजस्य प्रतिष्ठा चादिरेव च ॥ ५-११०-१ (३५६०७)
अत्र पश्चादहः सूर्यो विसर्जयति गाः स्वयम् ।
पश्चिमेत्यभिविख्याता दिगियं द्विजसत्तम ॥ ५-११०-२ (३५६०८)
यादसामत्र राज्येन सलिलस्य च गुप्तये ।
कश्यपो भगवान्देवो वरुणं स्माभ्यषेचयत् ॥ ५-११०-३ (३५६०९)
अत्र पीत्वा समस्तान्वै वरुणस्य रसांस्तु षट् ।
जायते तरुणः सोमः शुक्लस्यादौ तमिस्रहा ॥ ५-११०-४ (३५६१०)
अत्र पञ्चात्कृता दैत्या वायुना संयतास्तदा ।
निश्वसन्तो महावातैरर्दिताः सुषुपुर्द्विज ॥ ५-११०-५ (३५६११)
अत्र सूर्यं प्रणयिनं प्रतिगृह्णाति पर्वतः ।
अस्तो नाम यतः सन्ध्या पश्चिमा प्रतिसर्यति ॥ ५-११०-६ (३५६१२)
अतो रात्रिश्च निद्रा च निर्गता दिवसक्षये ।
जायते जीवलोकस्य हर्तुमर्धमिवायुषः ॥ ५-११०-७ (३५६१३)
अत्र देवीं दितिं सुप्तामात्मप्रसवधारिणीम् ।
विगर्भामकरोच्छक्रो यत्र जातो मरुद्गणः ॥ ५-११०-८ (३५६१४)
अत्र मूलं हिमवतो मन्दरं याति शाश्वतम् ।
अपि वर्षसहस्रेण न चास्यान्तोऽधिगम्यते ॥ ५-११०-९ (३५६१५)
अत्र काञ्चनशैलस्य काञ्चनाम्बुरुहस्य च ।
उदधेस्तीरमासाद्य सुरभिः क्षरते पयः ॥ ५-११०-१० (३५६१६)
अत्र मध्ये समुद्रस्य कबन्धः प्रतिदृश्यते ।
स्वर्भानोः सूर्यकल्पस्य सोमसूर्यौ जिघांसतः ॥ ५-११०-११ (३५६१७)
सुवर्णशिरसोऽप्यत्र हरिरोम्णः प्रगायतः ।
अदृश्यस्याप्रमेयस्य श्रूयते विपुलो ध्वनिः ॥ ५-११०-१२ (३५६१८)
अत्र ध्वजवती नाम कुमारी हरिमेधसः ।
आकाशे तिष्ठतिष्ठेति तस्थौ सूर्यस्य शासनात् ॥ ५-११०-१३ (३५६१९)
अत्र वायुस्तथा वह्निरापः खं चापि गालव ।
आह्निकं चैव नैशं च दुःखं स्पर्शं विमुञ्चति ॥ ५-११०-१४ (३५६२०)
अतःप्रभृति सूर्यस्य तिर्यगावर्तते गतिः ।
अत्र ज्योतींषि सर्वाणि विशन्त्यादित्यमण्डलम् ॥ ५-११०-१५ (३५६२१)
अष्टाविंशतिरात्रं च क्रम्य सह भानुना ।
निष्पतन्ति पुनः सूर्यात्सोमसंयोगयोगतः ॥ ५-११०-१६ (३५६२२)

अत्र नित्यं स्रवन्तीनां प्रभवः सागरोदयः ।
अत्र लोकत्रयस्यापस्तिष्ठन्ति वरुणालये ॥ ५-११०-१७ (३५६२३)
अत्र पन्नगराजस्याप्यनन्तस्य निवेशनम् ।
अनादिनिधनस्यात्र विष्णोः स्थानमनुत्तमम् ॥ ५-११०-१८ (३५६२४)
अत्रानलसखस्यापि पवनस्य निवेशनम् ।
महर्षेः कश्यपस्यात्र मारीचस्य निवेशनम् ॥ ५-११०-१९ (३५६२५)
एष ते पश्चिमो मार्गो दिग्द्वारेण प्रकीर्तितः ।
ब्रूहि गालव गच्छावो बुद्धिः का द्विजसत्तम ॥ ॥ ५-११०-२० (३५६२६)

इति श्रीमन्महाभारते उद्योगपर्वणि भगवद्यानपर्वणि
दशाधिकशततमोऽध्यायः ॥

Mahabharata - Udyoga Parva - Chapter Footnotes

५-११०-१ गोपतेः दिक्पालस्य ॥
५-११०-२ अह्नः पश्चाद्भागे गाः रश्मीन् विसर्जयति ।अतएव पश्चिमा ।५-११०-५ पश्चात्कृताः वेगेन पृष्ठतः कृताः ॥
५-११०-९ मन्दरं समुद्रे मग्नम् ।एतेन हिमवन्मूलस्य समुद्रजलस्य चाप्रमेयत्वमुक्तम् ॥
५-११०-१० काञ्चनमयानि अम्बुरुहाणि यत्र तस्य उदधेः समुद्रतुल्यस्य सरसः ॥
५-११०-१२ सुवर्णशिरसो मुनेः ।हरिरोम्णः अपलितस्य नित्यतरुणस्येत्यर्थः ॥
५-११०-१३ हरिमेधसो मुनेः कुमरी ।तिष्ठतिष्ठति सूर्यस्य शासनात् ॥
५-११०-१४ वाय्वादयोऽत्र दुःखदं शीतोष्णस्पर्शं विमुञ्चन्ति ।सदा सुखसंस्पर्शा एवेत्यर्थः ॥
५-११०-१६ सोमसंयोगयोगतः सोमसंयोगसदृशाद्योगात् ॥
५-११०-१७ स्रवन्तीनां नदीनाम् ।सागरस्य उदयः पूर्तिर्येन तादृशः प्रभवः ॥
५-११०-२० दिगद्वारेण संक्षेपप्रकारेण ॥

---

उद्योगपर्व-अध्यय१११
॥ श्रीः ॥
५.१११. अध्यायः १११

Mahabharata - Udyoga Parva - Chapter Topics

गरुडेन गालवंप्रति उत्तरदिगनुवर्णनपूर्वकं अभिमतदिगभिगमनाय स्वपृष्ठाधिरोहणविधानम् ॥ १ ॥

५-१११-० (३५६२७)
सपर्ण उवाच। ५-१११-०क्ष् (३७१७)
यस्मादुत्तार्यते पापाद्यस्मान्निश्रेयसोऽश्नुते ।
अस्मादुत्तारणबलादुत्तरेत्युच्यते द्विज ॥ १ ॥ ५-१११-१ (३५६२८)
उत्तरस्य हिरण्यस्य परिवापस्य गालव ।
मार्गः पश्चिमपूर्वाभ्यां दिग्भ्यां वै मध्यमः स्मृतः ॥ ५-१११-२ (३५६२९)
अस्यां दिशि वरिष्ठायामुत्तरायां द्विजर्षभ ।
नासौम्यो नाविधेयात्मा नाधर्मो वसते जनः ॥ ५-१११-३ (३५६३०)
अत्र नारायणः कृष्णो जिष्णुश्चैव नरोत्तमः ।
बदर्यामाश्रमपदे तथा ब्रह्मा च शाश्वतः ॥ ५-१११-४ (३५६३१)
अत्र वै हिमवत्पृष्ठे नित्यमास्ते महेश्वरः ।
ग्प्रकृत्या पुरुषः सार्धं युगान्ताग्निसमप्रभः ॥ ५-१११-५ (३५६३२)
न स दृश्यो मुनिगणैस्तथा देवैः सवासवैः ।
गन्धर्वयक्षसिद्धैर्वा नरनारायणादृते ॥ ५-१११-६ (३५६३३)
अत्र विष्णुः सहस्राक्षः सहस्रचरणोऽव्ययः ।
सहस्रशिरसः श्रीमानेकः पश्यति मायया ॥' ५-१११-७ (३५६३४)
अत्र राज्येन विप्राणां चन्द्रमाश्चाभ्यषिच्यत ।
अत्र गङ्गां महादेवः पतन्तीं गगनाच्च्युताम् ॥ ५-१११-८ (३५६३५)
प्रतिगृह्य ददौ लोके मानुषे ब्रह्मवित्तम ।
अत्र देव्या तपस्तप्तं महेश्वरपरीप्सया ॥ ५-१११-९ (३५६३६)
अत्र कामश्च रोषश्च शैलश्चोमा च संबभुः ।
अत्र राक्षसयक्षाणां गन्धर्वाणां च गालव ॥ ५-१११-१० (३५६३७)
आधिपत्येन कैलासे धनदोऽप्यभिषेचितः ।
अत्र चैत्ररथं रम्यमत्र वैखानसाश्रमः ॥ ५-१११-११ (३५६३८)
अत्र मन्दाकिनी चैव मन्दरश्च द्विजर्षभ ।
अत्र सौगन्धिकवनं नैर्ऋतैरभिरक्ष्यते ॥ ५-१११-१२ (३५६३९)
शाद्वलं कदलीस्कन्धमत्र सन्तानका नगाः ।
अत्र संयमनित्यानां सिद्धानां स्वैरचारिणाम् ॥ ५-१११-१३ (३५६४०)
विमानान्युनुरूपाणि कामभोग्यानि गालव ।
अत्र ते ऋषयः सप्त देवी चारुन्धती तथा ॥ ५-१११-१४ (३५६४१)
अत्र तिष्ठति वै रात्रिन्दिवाप्यत्रावतिष्ठते ।
अत्र यज्ञं समासाद्य ध्रुवं स्थाता पितामहः ॥ ५-१११-१५ (३५६४२)
ज्योतींषि चन्द्रसूर्यौ च परिवर्तन्ति नित्यशः ।

अत्र गङ्गामहाद्वारं रक्षन्ति द्विजसत्तम ॥ ५-१११-१६ (३५६४३)
धामा नाम महात्मानो मुनयः सत्यवादिनः ।
न तेषां ज्ञायते मूर्तिर्नाकृतिर्न तपश्चितम् ॥ ५-१११-१७ (३५६४४)
परिवर्तसहस्रामि कामभोज्यानिनि गालव ।
यथायथा प्रविशति तस्मात्परतरं नरः । ५-१११-१८ (३५६४५)
तथातथा द्विजश्रेष्ठ प्रविलीयति गालव ।
नैतत्केनचिदन्येन गतपूर्वं द्विजर्षभ ॥ ५-१११-१९ (३५६४६)
ऋते नारायणं देवं नरं वा जिष्णुमव्ययम् ।
अत्र कैलासमित्युक्तं स्थानमैलविलस्य तत् ॥ ५-१११-२० (३५६४७)
अत्र विद्युत्प्रभा नाम जज्ञिरेऽप्सरसो दश ।
अत्र विष्णुपदं नाम क्रमता विष्णुना कृतम् ॥ ५-१११-२१ (३५६४८)
त्रिलोकविक्रमे ब्रह्मन्नुत्तरां दिशमाश्रितम् ।
अत्र राज्ञा मरुतेन यज्ञेनेष्टं द्विजोत्तम ॥ ५-१११-२२ (३५६४९)
उशीरबीजे विप्रर्षे यत्र जाम्बूनदं सरः ।
जीमूतस्यात्र विप्रर्षेरुपतस्थे महात्मनः ॥ ५-१११-२३ (३५६५०)
साक्षाद्धैमवतः पुण्यो विमलः कनकाकरः ।
ब्राह्मणेषु च यत्कृत्स्नं स्वन्तं कृत्वा धनं महत् ॥ ५-१११-२४ (३५६५१)
वव्रे धनं महर्षिः स जैमूतं तद्धनं ततः ।
अत्र नित्यं दिशांपालाः सायंप्रातर्द्विजर्षभ ॥ ५-१११-२५ (३५६५२)
कस्य कार्यं किमिति वै परिक्रोशन्ति गालव ।
एवमेषा द्विजश्रेष्ठ गुणैरन्यैर्दिगुत्तरा ॥ ५-१११-२६ (३५६५३)
उत्तरेति परिख्याता सर्वकर्मस्तु चोत्तरा ।
एता विस्तरशस्तात तव शङ्कीर्तिता दिशः ॥ ५-१११-२७ (३५६५४)
चतस्रः क्रमयोगेन कामाशां गन्तुमिच्छसि ।
उद्यतोऽहं द्विजश्रेष्ठ तव दर्शयितुं दिशः ।
पृथिवीं चाखिलां ब्रह्मंस्तस्मादारोह मां द्विज ॥ ॥ ५-१११-२८ (३५६५५)

इति श्रीमन्महाभारते उद्योगपर्वणि भगवद्यानपर्वणि
एकादशाधिकशततमोऽध्यायः ॥
Mahabharata - Udyoga Parva - Chapter Footnotes

५-१११-१ यस्मादिति ।उत्तरेण पथा गतानां हि पापनाशः
स्वर्गप्राप्तेश्च भवतीति योगाद्युत्तरा उत्कृष्टतरा इयं दिगित्यर्थः
॥
५-१११-२ परिवापस्य स्थानस्य ।दिग्न्म्यामुपलक्षितः ॥
५-१११-३ अविधेयात्मा अजितचित्तः ॥

५-१११-५ प्रकृत्या पुरुषस्सार्धं इत्यारभ्य एकः पश्यति मायया
इति पर्यन्तिं सार्धश्लोकद्वयं दाक्षिणात्येषु बहुषु कोशेषु न
दृश्यते ।झो पुस्तक एव वर्तते ।प्रकृत्या उभया ॥
५-१११-७ सहस्रशिरस इत्यकारन्तः शब्दः ॥
५-१११-१७ मूर्तिः पिण्डः ।आकृतिः संस्थानविशेषः ॥
५-१११-१८ परिवर्तसहस्राणि चतुर्युगसहस्राणि ।तस्मात् हिमस्थानात् ॥
५-१११-१९ प्रविलीयति हिमेन नश्यति ॥
५-१११-२० ऐलविलस्य कुबेरस्य ॥
५-१११-२३ उशीरबीजे स्थाने ॥
५-१११-२४ कनकाकरः जीमूतस्य उप समीपे तस्थे प्रकाशं गतः
।प्रकाशनस्थेयाख्ययोश्चेति तङ् ॥
५-१११-२५ वव्रे ब्राह्मणेभ्यः ।मन्नामकमेतदस्त्विति ॥
५-१११-२६ उत्तरा उत्कृष्टतरा ॥

---

उद्योगपर्व-अध्ययः११२
॥ श्रीः ॥
५.११२. अध्यायः ११२

Mahabharata - Udyoga Parva - Chapter Topics
गरुडवेगमसहमानेन गालवेन गुरुदक्षिणानर्पणेनैव
स्वप्राणविमोक्षणशङ्कया परिशोचनम् ॥१ ॥
गरुडेन गालवंप्रति प्रागेवाभिमतानिवेदनेन अकौशलाभिलपनपूर्वकं
ऋषभाचले विश्रम्य पुनर्निवर्तनकीर्तनम् ॥२ ॥

Mahabharata - Udyoga Parva - Chapter Text

५-११२-० (३५६५६)
गालव उवाच।५-११२-०क्ष् (३७१८)
गरुत्मन्भुजगेन्द्रारे सुपर्ण विनतात्मज ।
नय मां तार्क्ष्य पूर्वेण यत्र धर्मस्य चक्षुषी ॥५-११२-१ (३५६५७)
पूर्वमेतां दिशं गच्छ या पूर्वं परिकीर्तिता ।
देवतानां हि सान्निध्यमत्र कीर्तितवानसि ॥५-११२-२ (३५६५८)
अत्र सत्यं च धर्मश्च त्वया सम्यक्प्रकीर्तितः ।
इच्छेयं तु समागन्तुं समस्तैर्दैवतैरहम् ।
भूयश्च तान्सुरान्द्रष्टुमिच्छेयमरुणानुज ॥ ५-११२-३ (३५६५९)
नारद उवाच।५-११२-४क्ष् (३७१९)
तमाह विनतासूनुरारोहस्वेति वै द्विजम् ।

आरुरोहाथ स मुनिर्गरुडं गालवस्तदा ॥ ५-११२-४ (३५६६०)
गालव उवाच। ५-११२-५क्ष् (३७२०)
क्रममाणस्य ते रूपं दृश्यते पन्नगाशन ।
भास्करस्येव पूर्वाह्णे सहस्रांशोर्विवस्वतः ॥ ५-११२-५ (३५६६१)
पक्षवातप्रणुन्नानां वृक्षाणामनुगामिनाम् ।
प्रस्थितानामिव समं पश्यामीह गतिं खग ॥ ५-११२-६ (३५६६२)
ससागरवनामुर्वी सशैलवनकाननाम् ।
आकर्षन्निव चाभासि पक्षवातेन खेचर ॥ ५-११२-७ (३५६६३)
समीननागनक्रं च खमिवारोप्यते जलम् ।
वायुना चैव महता पक्षवातेन चानिशम् ॥ ५-११२-८ (३५६६४)
तुल्यरूपाननान्मत्स्यांस्तथा तिमितिमिङ्गिलान् ।
नागाश्वनरवक्त्रांश्च पश्याम्युन्मथितानिव ॥ ५-११२-९ (३५६६५)
महार्णवस्य च रवैः श्रोत्रे मे बधिरे कृते ।
न श्रृणोमि न पश्यामि नात्मनो वेद्मि कारणम् ॥ ५-११२-१० (३५६६६)
शनैः स तु भवात्यातु ब्रह्मवध्यामनुस्मरन् ।
न दृश्यते रविस्तात न दिशो न च खं खग ॥ ५-११२-११ (३५६६७)
तम एव तु पश्यामि शरीरं ते न लक्षये ।
मणी व जात्यौ पश्यामि चक्षुषी तेऽहमण्डज ॥ ५-११२-१२ (३५६६८)
शरीरं तु न पश्यामि तव चैवात्मनश्च ह ।
पदेपदे तु पश्यामि शरीरादग्निमुत्थितम् ॥ ५-११२-१३ (३५६६९)
स मे निर्वाप्य सहसा चक्षुषी शाम्यते पुनः ।
तन्नियच्छ महावेगं गमने विनतात्मज ॥ ५-११२-१४ (३५६७०)
न मे प्रयोजनं किंचिद्गमने पन्नगाशन ।
संनिवर्त महाभाग न वेगं विषहामि ते ॥ ५-११२-१५ (३५६७१)
गुरवे संश्रुतानीह शतान्यष्टौ हि वाजिनाम् ।
एकतःश्यामकर्णानां शुभ्राणां चन्द्रवर्चसाम् ॥ ५-११२-१६ (३५६७२)
तेषां चैवापवर्गाय मार्गं पश्यामि नाण्डज ।
ततोऽयं जीवितत्यागे दृष्टो मार्गोमयाऽऽत्मनः ॥ ५-११२-१७ (३५६७३)
नैव मेऽस्ति धनं किंचिन्न धनेनान्वितः सुहृत् ।
न चार्थेनापि महता शक्यमेतद्व्यपोहितुम् ॥ ५-११२-१८ (३५६७४)
नारद उवाच। ५-११२-१९क्ष् (३७२१)
एवं बहु च दीनं च ब्रुवाणं गालवं तदा ।
प्रत्युवाच व्रजन्नेव प्रहसन्विनतात्मजः ॥ ५-११२-१९ (३५६७५)
नातिप्रज्ञोऽसि विप्रर्षे योत्मानं त्युक्तुमिच्छसि ।
न चापि कृत्रिमः कालः कालो हि परमेश्वरः ॥ ५-११२-२० (३५६७६)
किमहं पूर्वमेवेह भवता नाभिचोदितः ।

उपायोऽत्र महानस्ति येनैतदुपपद्यते ॥ ५-११२-२१ (३५६७७)
तदेष ऋषभो नाम पर्वतः सागरान्तिके ।
अत्र विश्रम्य भुक्त्वा च निवर्तिष्याव गालव ॥ ॥ ५-११२-२२ (३५६७८)

इति श्रीमन्महाभारते उद्योगपर्वणि भगवद्यानपर्वणि
द्वादशाधिकशततमोऽध्यायः ॥
Mahabharata - Udyoga Parva - Chapter Footnotes

५-११२-१२ मणी वेति इवार्थे वशब्दः ॥
५-११२-१४ निर्वाप्य मन्दीकृत्य ॥
५-११२-१५ संनिवर्त निवर्तस्व ॥
५-११२-२० योत्मानं संधिरार्षः । कृत्रिमः स्वेच्छासंपाद्यः । कालो
मृत्युः ॥

---

उद्योगपर्व-अध्यय११३
॥ श्रीः ॥
५.११३. अध्यायः ११३

Mahabharata - Udyoga Parva - Chapter Topics
ऋषभगिरिश्रृङ्गमुपगतयोः गरुडगालवयोः तत्र
शाण्डिलीनामकब्राह्मणीदर्शनम् ॥ १ ॥
तद्दत्तान्नमुपभुज्य विश्रमाय तत्र शयनम् ॥ २ ॥
सुप्तोत्थितं शिथिलपक्षबन्धं तार्क्ष्यमभिवीक्ष्य गालवेन तंप्रति
तत्कारणप्रश्नः ॥ ३ ॥
सुपर्णेन ब्राह्मण्याः विष्णावाद्यन्यतमसमीपप्रापणानुचिन्तनस्य
स्वानर्थप्राप्तिकारणत्वकथनपूर्वकं तांप्रति क्षमापनम् ॥ ४ ॥
तत्प्रसादाधिगतपक्षबलेन सुपर्णेन सह गच्छतो गालवस्य
मध्येमार्गं यदृच्छोपागतेन विश्वामित्रेण पुनरश्वानयनचोदनम्
॥ ५ ॥

Mahabharata - Udyoga Parva - Chapter Text

५-११३-० (३५६७९)
नारद उवाच। ५-११३-०क्ष् (३७२२)
ऋषभस्य ततः शृङ्गं निपत्य द्विजपक्षिणौ ।
शाण्डिलीं ब्राह्मणीं तत्र ददृशो तपोन्वितताम् ॥ ५-११३-१ (३५६८०)
अभिवाद्य सुपर्णस्तु गालवश्चाभिपूज्य ताम् ।

तया च स्वागतेनोक्तौ विष्टरे सन्निषीदतुः ॥ ५-११३-२ (३५६८१)
सिद्धमन्नं तया दत्तं बलिमन्त्रोपबृंहितम् ।
भुक्त्वा तृप्तावुभौ भूमौ सुप्तौ तावनुमोहितौ ॥ ५-११३-३ (३५६८२)
मुहूर्तात्प्रतिबुद्धस्तु सुपर्णो गमनेप्सया ।
ग तां दृष्ट्वा चारुसर्वाङ्गी तापसीं ब्रह्मचारिणीम् ॥ ५-११३-४ (३५६८३)
ग्रहीतुं हि मनश्चक्रे रूपात्साक्षादिव श्रियम् ।'
अथ भ्रष्टतनूजाङ्गमात्मानं ददृशे खगः ॥ ५-११३-५ (३५६८४)
मांसपिण्डोपमोऽभूत्स मुखपादान्वितः खगः ।
गालवस्तं तथा दृष्ट्वा विमनाः पर्यपृच्छत ॥ ५-११३-६ (३५६८५)
किमिदं भवता प्राप्तमिहागमनजं फलम् ।
वासोऽयमिह कालं तु कियन्तं नौ भविष्यति ॥ ५-११३-७ (३५६८६)
किं नु ते मनसा ध्यातमशुभं धर्मदूषणम् ।
न ह्ययं भवतः स्वल्पो व्यभिचारो भविष्यति ॥ ५-११३-८ (३५६८७)
सुपर्णोऽथाब्रवीद्विप्रं प्रध्यातं वै मया द्विज ।
इमां सिद्धामितो नेतुं तत्र यत्र प्रजापतिः ॥ ५-११३-९ (३५६८८)
यत्र देवो महादेवो यत्र विष्णुः सनातनः ।
यत्र धर्मश्च यज्ञश्च तत्रेयं निवसेदिति ॥ ५-११३-१० (३५६८९)
सोऽहं भगवतीं याचे प्रणतः प्रियकाम्यया ।
मयैतन्नाम प्रध्यातं मनसा शोचसा किल ॥ ५-११३-११ (३५६९०)
तदेवं बहुमानात्ते मयेहानीप्सितं कृतम् ।
सुकृतं दुष्कृतं वा त्वं माहात्म्यात्क्षन्तुमर्हसि ॥ ५-११३-१२ (३५६९१)
सा तौ तदाऽब्रवीत्तुष्टा पतगेन्द्रद्विजर्षभौ ।
न भेतव्यं सुपर्णोऽसि सुपर्ण त्यज संभ्रमम् ॥ ५-११३-१३ (३५६९२)
निन्दितास्मि त्वया वत्स न च निन्दां क्षमाम्यहम् ।
लोकेभ्यः सपदि भ्रश्येद्यो मां निन्देत पापकृत् ॥ ५-११३-१४ (३५६९३)
हीनयाऽलक्षणैः सर्वैस्तथाऽनिन्दितया मया ।
आचारं प्रतिगृह्णन्त्या सिद्धिः प्राप्तेयमुत्तमा ॥ ५-११३-१५ (३५६९४)
आचारः फलते धर्ममाचारः फलते धनम् ।
आचाराच्छ्रियमाप्नोति आचारो हन्त्यलक्षणम् ॥ ५-११३-१६ (३५६९५)
तदायुष्मन्खगपते यथेष्टं गम्यतामितः ।
न च ते गर्हणीयाऽहं गर्हितव्याः स्त्रियः क्वचित् ॥ ५-११३-१७ (३५६९६)
ग यदि त्वमात्मनो ह्यर्थे मां चैवादातुमिच्छसि ।
तदेव नष्टदेहस्तु स्या वै त्वं पन्नगाशन ॥ ५-११३-१८ (३५६९७)
तस्यैव हि प्रसादेन देवदेवस्य चिन्तनात् ।
त्वं तु साङ्गस्तु सञ्जातः पुनरेव भविष्यसि ॥' ५-११३-१९ (३५६९८)
भवितासि यथापूर्वं बलवीर्यसमन्वितः । ५-११३-२० (३५६९९)

नारद उवाच ।
बभूवतुस्ततस्तस्य पक्षौ द्रविणवत्तरौ ॥ ५-११३-२०क्ष् (३७२३)
अनुज्ञातस्तु शाण्डिल्या यथागतमुपागमत् ।
नैव चासादयामास तथारूपांस्तुरङ्गमान् ॥ ५-११३-२१ (३५७००)
विश्वामित्रोऽथ तं दृष्ट्वा गालवं चाध्वनि स्थितः ।
उवाच वदतां श्रेष्ठो वैनतेयस्य सन्निधौ ॥ ५-११३-२२ (३५७०१)
यस्त्वया स्वयमेवार्थः प्रतिज्ञातो मम द्विज ।
तस्य कालोऽपवर्गस्य यथा वा मन्यते भवान् ॥ ५-११३-२३ (३५७०२)
प्रतीक्षिष्याम्यहं कालमेतावन्तं तथा परम् ।
यथासंसिध्यते विप्र स मार्गस्तु निशाम्यताम् ॥ ५-११३-२४ (३५७०३)
सुपर्णोऽथाब्रवीद्दीनं गालवं भृशदुःखितम् ।
प्रत्यक्षं खल्विदानीं मे विश्वामित्रो यदुक्तवान् ॥ ५-११३-२५ (३५७०४)
तदागच्छ द्विजश्रेष्ठ मन्त्रयिष्याव गालव ।
नादत्त्वा गुरवे शक्यं कृत्स्नमर्थं त्वयाऽऽसितुम् ॥ ॥ ५-११३-२६ (३५७०५)

इति श्रीमन्महाभारते उद्योगपर्वणि भगवद्यानपर्वणि
त्रयोदशाधिकशततमोऽध्यायः ॥

Mahabharata - Udyoga Parva - Chapter Footnotes

५-११३-५ भ्रष्टतनूजं छिन्नपक्षमङ्गं यस्य तं भ्रष्टतनूजाङ्गम् ॥
५-११३-८ व्यभिचारो धर्मातिक्रमः ॥
५-११३-११ शोचता कथमियमत्र वसतीति ॥
५-११३-२० द्रविणवत्तरौ बलवत्तरौ ॥
५-११३-२३ अपवर्गस्य फलप्राप्तेः ॥
५-११३-२४ निशाम्यतां विचार्यताम् ॥

---

उद्योगपर्व-अध्यय११४

॥ श्रीः ॥

५.११४. अध्यायः ११४

Mahabharata - Udyoga Parva - Chapter Topics

गालवानुगतेन गरुडेन ययातिंगत्वा गालववृत्तान्तकथनपूर्वकं
धनयाचनम् ॥ १ ॥

Mahabharata - Udyoga Parva - Chapter Text

५-११४-० (३५७०६)

नारद उवाच। ५-११४-०क्ष् (३७२४)
अथाह गालवं दीनं सुपर्णः पततां वरः ।
निर्मितं वह्निना भूमौ वायुना शोधितं तथा ।
यस्माद्धिरण्मयं सर्वं हिरण्यं तेन चोच्यते ॥ ५-११४-१ (३५७०७)
धत्ते धारयते चेदमतस्मात्कारणाद्धनम् ।
तदेतत्रिषु लोकेषु धनं तिष्ठति शाश्वतम् ॥ ५-११४-२ (३५७०८)
नित्यं प्रोष्ठपदाभ्यां च शुक्रे धनपतौ तथा ।
मनुष्येभ्यः समादत्ते शुक्रश्चित्तार्जितं धनम् ॥ ५-११४-३ (३५७०९)
अजैकपादहिर्बुध्न्यौ रक्ष्येते धनदेन च ।
एवं न शक्यते लब्धुमलब्धव्यं द्विजर्षभ ।
ऋते च धनमश्वानां नावाप्तिर्विद्यते तव ॥ ५-११४-४ (३५७१०)
स त्वं याचात्र राजानं कंचिद्राजर्षिवंशजम् ।
अपीड्य राजा पौरान्हि यो नौ कुर्यात्कृतार्थिनौ ॥ ५-११४-५ (३५७११)
अस्ति सोमान्ववाये मे जातः कश्चिन्नृपः सखा ।
अभिगच्छावहे तं वै तस्यास्ति विभवो भुवि ॥ ५-११४-६ (३५७१२)
ययातिर्नाम राजर्षिर्नाहुषः सत्यविक्रमः ।
स दास्यति मया चोक्तो भवता चार्थितः स्वयम् ॥ ५-११४-७ (३५७१३)
विभवश्चास्य सुमहानासीद्धनपतेरिव ।
एवं गुरुधनं विद्वन्दानेनैव विशोधय ॥ ५-११४-८ (३५७१४)
तथा तौ कथयन्तौ च चिन्तयन्तौ च यत्क्षमम् ।
प्रतिष्ठाने नरपतिं ययातिं प्रत्युपस्थितौ ॥ ५-११४-९ (३५७१५)
प्रतिगृह्य च सत्कारैरर्घ्यपाद्यादिकं वरम् ।
पृष्टश्चागमने हेतुमुवाच विनतासुतः ॥ ५-११४-१० (३५७१६)
अयं मे नाहुष सखा गालवस्तपसो निधिः ।
विश्वामित्रस्य शिष्योऽभूद्वर्षाण्ययुतशो नृप ॥ ५-११४-११ (३५७१७)
सोऽयं तेनाभ्यनुज्ञात उपकारेप्सया द्विजः ।
तमाह भगवान्किं ते ददानि गुरुदक्षिणाम् ॥ ५-११४-१२ (३५७१८)
असकृत्तेन चोक्तेन किंचिदागतमन्युना ।
अयमुक्तः प्रयच्छेति जानता विभवं लघु ॥ ५-११४-१३ (३५७१९)
एकतःश्यामकर्णानां शुभ्राणां शुद्धजन्मनाम् ।
अष्टौ शतानि मे देहि हयानां चन्द्रवर्चसाम् ॥ ५-११४-१४ (३५७२०)
गुर्वर्थो दीयतामेव यदि गालव मन्यसे ।
इत्येवमाह सक्रोधो विश्वामित्रस्तपोधनः ॥ ५-११४-१५ (३५७२१)
सोऽयं शोकेन महता तप्यमानो द्विजर्षभः ।
अशक्तः प्रतिकर्तुं तद्भवन्तं शरणं गतः ॥ ५-११४-१६ (३५७२२)
प्रतिगृह्य नरव्याघ्र त्वत्तो भिक्षां गतव्यथः ।

कृत्वाऽऽपवर्गं गुरवे चरिष्यति महत्तपः ॥ ५-११४-१७ (३५७२३)
तपसः संविभागेन भवन्तमपि योक्ष्यते ।
स्वेन राजर्षितपसा पूर्णं त्वां पूरयिष्यति ॥ ५-११४-१८ (३५७२४)
यावन्ति रोमाणि हये भवन्तीह नरेश्वर ।
तावन्तो वाजिनो लोकान्प्राप्नुवन्ति महीपते ॥ ५-११४-१९ (३५७२५)
पात्रं प्रतिग्रहस्यायं दातुं पात्रं तथा भवान् ।
शङ्के क्षीरमिवासक्तं भवत्वेतत्तथोपमम् ॥ ॥ ५-११४-२० (३५७२६)

इति श्रीमन्महाभारते उद्योगपर्वणि भगवद्यानपर्वणि
चतुर्दशाधिकशततमोऽध्यायः ॥
Mahabharata - Udyoga Parva - Chapter Footnotes

५-११४-१ हिर्वह्निः वह्निशब्दघटकवर्णलोपादिना हिशब्दस्य
निष्पन्नत्वात् ।एवं रमणीयशब्दनिष्पन्नरणशब्दवाच्यो वायुः क्रमेण
ताभ्यां जातत्वाच्छोधितत्वाच्च हिरण्यमित्युच्यते।यस्माच्च सर्वं
जगत् हिरण्मयं हिरण्यप्रधानकं तेन च हिरण्यमित्युच्यत इत्यर्थः
।हिरण्यस्य हितत्वाद्रमणीयत्वाच्च जगत्पतिप्राधान्यम् ॥
५-११४-२ धत्ते पुष्णाति ।धारयते जीवयति ॥
५-११४-३ प्रोष्टपदाभ्याम् ।तस्मिन्नक्षत्रद्वये शुक्रे शुक्रवासरे
तद्योगे सति धनपतौ कुबेरस्य वृद्ध्यर्थम् ॥
५-११४-५ याच याचस्व ॥
५-११४-८ विशोधय परिहर ॥

---

उद्योगपर्व-अध्यय११५
॥ श्रीः ॥
५.११५. अध्यायः ११५

Mahabharata - Udyoga Parva - Chapter Topics
व्ययितवित्तेन ययातिना धनप्रतिनिधितया
माधवीनामकस्वकन्यकासमर्पणम् ॥ १ ॥
गरुडेन समधिगततुरगाधिगमोपायं गालवमापृच्छ्य स्वगृहगमनम्
॥ २ ॥
गालवेन सह कन्यया हर्यश्वनामकनृपसमीपमुपेत्य शुल्कार्पणेन
कन्या कलत्रीकरणकथनम् ॥ ३ ॥

Mahabharata - Udyoga Parva - Chapter Text

५-११५-० (३५७२७)
नारद उवाच। ५-११५-०क्ष् (३७२५)
एवमुक्तः सुपर्णेन तथ्यं वचनमुत्तमम् ।
विमृश्यावहितो राजा निश्चित्य च पुनः पुनः ॥ ५-११५-१ (३५७२८)
यष्टा क्रतुसहस्राणां दाता दानपतिः प्रभुः ।
ययातिः सर्वकाशीश इदं वचनमब्रवीत् ॥ ५-११५-२ (३५७२९)
दृष्ट्वा प्रियसखं तार्क्ष्यं गालवं च द्विजर्षभम् ।
निदर्शनं च तपसो भिक्षां श्लाघ्यां च कीर्तिताम् ॥ ५-११५-३ (३५७३०)
अतीत्य च नृपानन्यानादित्यकुलसंभवान् ।
मत्सकाशमनुप्राप्तावेतां बुद्धिमवेक्ष्य च ॥ ५-११५-४ (३५७३१)
अद्य मे सफलं जन्म तारितं चाद्य मे कलम् ।
अद्यायं तारितो देशो मम तार्क्ष्य त्वयाऽनघ ॥ ५-११५-५ (३५७३२)
वक्तुमिच्छामि तु सखे यथा जानासि मां पुरा ।
न तथा वित्तवानस्मि क्षीणं वित्तं च मे सखे ॥ ५-११५-६ (३५७३३)
न च शक्तोऽस्मि ते कर्तुं मोघमागमनं खग ।
न चाशामस्य विपर्षेर्वितथीकर्तुमुत्सहे ॥ ५-११५-७ (३५७३४)
पुत्रीं दास्यामि यत्कार्यमियं संपादयिष्यति ।
अभिगम्य हताशो हि निवृत्तो दहते कुलम् ॥ ५-११५-८ (३५७३५)
नातः परं वैनतेय किंचित्पापिष्ठमुच्यते ।
प्रथाशानाशनं लोके देहि नास्तीति वा वचः ॥ ५-११५-९ (३५७३६)
हताशो ह्यकृतार्थः सन्हतः संभावितो नरः ।
हिनस्ति तस्य पुत्रांश्च पौत्रांश्चाकुर्वतो हितम् ॥ ५-११५-१० (३५७३७)
तस्माच्चतुर्णां वंशानां स्थापयित्री सुता मम ।
ग्माधवी नाम तार्क्ष्येयं सर्वधर्मप्रदायिनी ॥' ५-११५-११ (३५७३८)
इयं सुरसुतप्रख्या सर्वधर्मोपचायिनी ।
सदा देवमनुष्यणामसुराणां च गालव ।
काङ्क्षिता रूपतो बाला सुता मे प्रतिगृह्यताम् ॥ ५-११५-१२ (३५७३९)
अस्याः शुल्कं प्रदास्यन्ति नृपा राज्यमपि ध्रवम् ।
किं पुनः श्यामकर्णानां हयानां द्वे चतुःशते ॥ ५-११५-१३ (३५७४०)
स भवाप्रतिगृह्णातु ममैतां माधवीं सुताम् ।
अहं दौहित्रवान्त्स्यां वै वर एष मम प्रभो ॥ ५-११५-१५अग स तस्य वचनं श्रुत्वा ब्राह्मणः शंसितव्रतः ।'
प्रतिगृह्य च तां कन्यां गालवः सह पक्षिणा ।
पुनर्द्रक्ष्याव इत्युक्त्वा प्रतस्थे सह कन्यया ॥ ५-११५-१४ (३५७४१)
उपलब्धमिदं द्वारमश्वानामिति चाण्डजः ।

उक्त्वा गालवमापृच्छ्य जगाम भवनं स्वकम् ॥ ५-११५-१६ (३५७४२)
गते पतगराजे तु गालवः सह कन्यया ।
चिन्तयानः क्षमंदाने राजानं शुल्कतोऽगमत् ॥ ५-११५-१७ (३५७४३)
सोऽगच्छन्मनसेक्ष्वाकुं हर्यश्वं राजसत्तमम् ।
अयोध्यायां महावीर्यं चतुरङ्गबलान्वितम् ॥ ५-११५-१८ (३५७४४)
कोशधान्यबलोपेतं प्रियपौरं द्विजप्रियम् ।
प्रजाभिकामं शाम्यन्तं कुर्वाणं तप उत्तमम् ॥ ५-११५-१९ (३५७४५)
तमुपागम्य विप्रः स हर्यश्वं गालवोऽब्रवीत् ।
कन्येयं मम राजेन्द्र प्रसवैः कुलवर्धिनी ॥ ५-११५-२० (३५७४६)
इयं शुल्केन भार्यार्थं हर्यश्व प्रतिगृह्यताम् ।
शुल्कं ते कीर्तयिष्यामि तच्छ्रुत्वा संप्रधार्यताम् ॥ ॥ ५-११५-२१ (३५७४७)

इति श्रीमन्महाभारते उद्योगपर्वणि भगवाद्यनपर्वणि
पञ्चदशाधिकशततमोऽध्यायः ॥

---

उद्योगपर्व-अध्यय११६
॥ श्रीः ॥
५.११६. अध्यायः ११६

Mahabharata - Udyoga Parva - Chapter Topics
हर्यश्वपृष्टेन गालवेन तं प्रति शुल्कनिवेदनम् ॥ १ ॥
हर्यश्वेन गालवंप्रति स्वस्याश्वशतद्वयवत्तया वरदाने सति
एकापत्योत्पादनेन पुनः कन्याविसर्जनोक्तिः ॥ २ ॥
माधव्या गालवंप्रति स्वस्य प्रसूत्यन्ते प्रसूत्यन्ते पुनः पुनः
कन्यात्वसंपादकविप्रवरप्राप्तिकथनम् ॥ ३ ॥
हर्यश्वेन शुक्लदानेन तस्यां वसुमनोनामकपुत्रोत्पादनम् ॥ ४ ॥
हर्यश्वेन कालान्तरे समागताय गालवाय पुनर्माधवीप्रत्यर्पणम् ॥ ५ ॥
गालवेन कामतः पुनः कन्यात्वमुपगतया तया सह दिवोदाससमीपगमनम्
॥ ६ ॥

Mahabharata - Udyoga Parva - Chapter Text

५-११६-० (३५७४८)
नारद उवाच। ५-११६-०क्ष् (३७२६)
हर्यश्वस्त्वब्रवीद्राजा विचिन्त्य बहुधा ततः ।
दीर्घमुष्णं च निश्वस्य प्रजाहेतोर्नृपोत्तमः ॥ ५-११६-१ (३५७४९)
उन्नतेषून्नता षट्सु सूक्ष्मा सूक्ष्मेषु पञ्चसु ।

गम्भीरा त्रिषु चाङ्गेषु इयं रक्ता च पञ्चसु ॥ ५-११६-२ (३५७५०)
ग्श्रोण्यौ ललाटमूरू च घ्राणं चेति षडुन्नतम् ।
सूक्ष्माण्यङ्गुलिपर्वाणि केशरोमनस्वत्वचः । ५-११६-३ (३५७५१)
स्वरः सत्वं च नाभिश्च त्रिगम्भीरं प्रचक्षते ।
पाणिपादतले रक्ते नेत्रान्तौ च नखानि च ॥ ५-११६-४ (३५७५२)
पञ्चदीर्घं चतुर्ह्रस्वं पञ्चसूक्ष्मं षडुन्नतम् ।
सप्तरक्तं त्रिविस्तीर्णं त्रिगम्भीरं प्रशकस्यते ॥ ५-११६-५ (३५७५३)
पञ्चैव दीर्घा हनुलोचनानि
बाहूरुनासाश्च सुखप्रदानि ।
ह्रस्वानि चत्वारि च लिङ्गपृष्ठे
ग्रीवा च जङ्घे च हितप्रदानि ॥ ५-११६-६ (३५७५४)
सूक्ष्माणि चत्वारि च लिङ्गपृष्ठे
ग्रीवा च जङ्घे च हितप्रदानि ॥
सूक्ष्माणि पञ्च दशनाङ्गुलिपर्वकेशा
स्त्वक्चैव वै कररुहाश्च न दुःखितानाम् ।
वक्षोऽथ कक्षो नखनासिकास्यु-
रंसत्रिकं चेति षडुन्नतानि ॥ ५-११६-७ (३५७५५)
नेत्रान्तपादकरताल्वधरोष्ठजिह्वा
रक्ता नखाश्च खलु सर्वसुखावहानि ॥' ५-११६-८ (३५७५६)
बहुदेवासुरालोका बहुगन्धर्वदर्शना ।
बहुलक्षणसंपन्ना बहुकल्याणधारिणी ॥ ५-११६-९ (३५७५७)
समर्थेयं जनयितुं चक्रवर्तिनमात्मजम् ।
ब्रूहि शुल्कं द्विजश्रेष्ठ समीक्ष्य विभवं मम ॥ ५-११६-१० (३५७५८)
गालव उवाच। ५-११६-११क्ष् (३७२७)
एकतःश्यामकर्णानां शतान्यष्टौ प्रयच्छ मे ।
हयानां चन्द्रशुभ्राणां देशजानां वपुष्मताम् ॥ ५-११६-११ (३५७५९)
ततस्तव भवित्रीयं पुत्राणां जननी शुभा ।
अरणीव हुताशानां योनिरायतलोचना ॥ ५-११६-१२ (३५७६०)
नारद उवाच। ५-११६-१३क्ष् (३७२८)
एतच्छ्रुत्वा वचो राजा हर्यश्वः काममोहितः ।
उवाच गालवं दीनो राजर्षिर्ऋषिसत्तमम् ॥ ५-११६-१३ (३५७६१)
द्वे मे शते संनिहिते हयानां यद्विधास्तव ।
एष्टव्याः शतशस्त्वन्ये चरन्ति मम वाजिनः ॥ ५-११६-१४ (३५७६२)
सोऽहमेकमपत्यं वै जनयिष्यामि गालव ।
अस्यामेतं भवान्कामं संपादयतु मे वरम् ॥ ५-११६-१५ (३५७६३)
एतच्छ्रुत्वा तु सा कन्या गालवं वाक्यमब्रवीत् ।

मम दत्तो वरः कश्चित्केनचिद्ब्रह्मवादिना ॥ ५-११६-१६ (३५७६४)
प्रसूत्यन्ते प्रसूत्यन्ते कन्यैव त्वं भविष्यसि ।
स त्वं ददस्व मां राज्ञे प्रतिगृह्य हयोत्तमान् ॥ ५-११६-१७ (३५७६५)
नृपेभ्यो हि चतुर्भ्यस्ते पूर्णान्यष्टौ शतानि वै ।
भविष्यन्ति तथा पुत्रा मम चत्वार एव च ॥ ५-११६-१८ (३५७६६)
क्रियतामुपसंहारो गुर्वर्थं द्विजसत्तम ।
एषा तावन्मम प्रज्ञा यथा वा मन्यसे द्विज ॥ ५-११६-१९ (३५७६७)
एवमुक्तस्तु स मुनिः कन्यया गालवस्तदा ।
हर्यश्वं पृथिवीपालमिदं वचनमब्रवीत् ॥ ५-११६-२० (३५७६८)
इयं कन्या नरश्रेष्ठ हर्यश्व प्रतिगृह्यताम् ।
चतुर्भागेन शुल्कस्य जनयस्वैकमात्मजम् ॥ ५-११६-२१ (३५७६९)
नारद उवाच। ५-११६-२२क्ष् (३७२९)
प्रतिगृह्य स तां कन्यां गालवं प्रतिनन्द्य च ।
समये देशकाले च लब्धवान्सुतमीप्सितम् ॥ ५-११६-२२ (३५७७०)
ततो वसुमना नाम वसुभ्यो वसुमत्तरः ।
वसुप्रख्यो नरपतिः स बभूव वसुप्रदः ॥ ५-११६-२३ (३५७७१)
अथ काले पुनर्धीमान्गालवः प्रत्युपस्थितः ।
उपसङ्गम्य चोवाच हर्यश्वं प्रीतमानसम् ॥ ५-११६-२४ (३५७७२)
जातो नृप सुतस्तेऽयं बालो भास्करसंनिभः ।
कालो गन्तुं नरश्रेष्ठ शुल्कार्थमपरं नृपम् ॥ ५-११६-२५ (३५७७३)
नारद उवाच। ५-११६-२६क्ष् (३७३०)
हर्यश्वः सत्यवचने स्थितः स्थित्वा च पौरुषे ।
दुर्लभत्वाद्धयानां च प्रददौ माधवीं पुनः ॥ ५-११६-२६ (३५७७४)
माधवी च पुनर्दीप्तां परित्यज्यनृपश्रियम् ।
कुमारी कामतो भूत्वा गालवं पृष्ठतोऽन्वगात् ॥ ५-११६-२७ (३५७७५)
त्वय्येव तावत्तिष्ठन्तु हया इत्युक्तवान्द्विजः ।
प्रययौ कन्यया सार्धं दिवोदासं प्रजेश्वरम् ॥ ॥ ५-११६-२८ (३५७७६)

इति श्रीमन्महाभारते उद्योगपर्वणि भगवद्यानपर्वणि
षोडशाधिकशततमोऽध्यायः ॥

Mahabharata - Udyoga Parva - Chapter Footnotes

५-११६-९ बहुभिर्देवैरसुरैश्च आलोकयितुं योग्या बहुदेवासुरालोका ।गन्धर्वाणां दर्शनं शास्त्रं गीतादिविद्या यस्यां सा तथा ॥

---

उद्योगपर्व-अध्यय११७
॥ श्रीः ॥

## ५.११७. अध्यायः ११७

Mahabharata - Udyoga Parva - Chapter Topics

गालवेन दिवोदासंप्रति स्वागमनकारणकथनम् ॥ १ ॥
तेन स्वस्याप्यश्वशतद्वयवत्त्वेन एकपुत्रोत्पादनकथनम् ॥ २ ॥
तथा शुल्कदानेन तस्यां प्रतर्दनाख्यसुतमुत्पाद्य कालान्तरागताय गालवाय माधवीप्रत्यर्पणम् ॥ ३ ॥

Mahabharata - Udyoga Parva - Chapter Text

५-११७-० (३५७७७)
गालव उवाच। ५-११७-०क्ष् (३७३१)
महावीर्यो महीपालः काशीनामीश्वरः प्रभुः ।
दिवोदास इति ख्यातो भैमसेनिर्नराधिपः ॥ ५-११७-१ (३५७७८)
तत्र गच्छावहे भद्रे शनैरागच्छ मा शुचः ।
धार्मिकः संयमे युक्तः सत्ये चैव जनेश्वरः ॥ ५-११७-२ (३५७७९)
नारद उवाच। ५-११७-३क्ष् (३७३२)
तमुपागम्य स मुनिर्न्यायतस्तेन सत्कृतः ।
गालवः प्रसवस्यार्थे तं नृपं प्रत्यचोदयत् ॥ ५-११७-३ (३५७८०)
दिवोदाम उवाच। ५-११७-४क्ष् (३७३३)
श्रुतमेतन्मया पूर्वं किमुक्त्वा विस्तरं द्विज ।
काङ्क्षितो हि मयैषोऽर्थः श्रुत्वैव द्विजसत्तम ॥ ५-११७-४ (३५७८१)
एतच्च मे बहुमतं यदुत्सृज्य नराधिपान् ।
मामेवमुपयातोऽसि भावि चैतदसंशयम् ॥ ५-११७-५ (३५७८२)
स एव विभवोऽसमाकमश्वानामपि गालव ।
अहमप्येकमेवास्यां जनयिष्यामि पार्थिवम् ॥ ५-११७-६ (३५७८३)
नारद उवाच। ५-११७-७क्ष् (३७३४)
तथेत्युक्त्वा द्विजश्रेष्ठः प्रादात्कन्यां महीपतेः ।
विधिपूर्वं च तां राजा कन्यां प्रतिगृहीतवान् ॥ ५-११७-७ (३५७८४)
रेमे स तस्यां राजर्षिः प्रभावत्यां यथा रविः ।
स्वाहायां च यथा वह्निर्यथा शाच्यां च वासवः ॥ ५-११७-८ (३५७८५)
यथा चन्द्रश्च रोहिण्यां यथा धूमोर्णया यमः ।
वरुणश्च यथा गौर्यां यथा चर्ध्यां धनेश्वरः ॥ ५-११७-९ (३५७८६)
यथा नारायणो लक्ष्म्यां जाह्नव्यां च यथोदधिः ।
यथा रुद्रश्च रुद्राण्यां यथा वेद्यां पितामहः ॥ ५-११७-१० (३५७८७)
अदृश्यन्त्यां च वासिष्ठो वसिष्ठश्चाक्षमालया ।

च्यवनश्च सुकन्यायां पुलस्त्यः सन्ध्यया यथा ॥ ५-११७-११ (३५७८८)
अगस्त्यश्चापि वैदर्भ्यां सावित्र्यां सत्यवान्यथा ।
यथा भृगुः पुलोमायामदित्यां कश्यपो यथा ॥ ५-११७-१२ (३५७८९)
रेणुकायां यथार्चीको हैमवत्यां च कौशिकः ।
बृहस्पतिश्च तारायां शुक्रश्च शतपर्वणा ॥ ५-११७-१३ (३५७९०)
यथा भूम्यां भूमिपतिरुर्वश्यां च पुरूरवाः ।
ऋचीकः सत्यवत्यां च सरस्वत्यां यथा मनुः ॥ ५-११७-१४ (३५७९१)
शकुन्तलायां दुष्यन्तो धृत्यां धर्मश्च शाश्वतः ।
दमयन्त्यां नलश्चैव सत्यवत्यां च नारदः ॥ ५-११७-१५ (३५७९२)
जरत्कारुर्जरत्कार्वां पुलस्त्यश्च प्रतीच्यया ।
मेनकायां यथोर्णायुस्तुम्बुरुश्चैव रम्भया ॥ ५-११७-१६ (३५७९३)
वासुकिः शतशीर्षायां कुमार्यां च धनञ्जयः ।
वैदेह्यां च यथा रामो रुक्मिण्यां च जनार्दनः ॥ ५-११७-१७ (३५७९४)
तथा तु रममाणस्य दिवोदासस्य भूपतेः ।
माधवी जनयामास पुत्रमेकं प्रतर्दनम् ॥ ५-११७-१८ (३५७९५)
अथाजगाम भगवान्दिवोदासं स गालवः ।
समये समनुप्राप्ते वचनं चेदमब्रवीत् ॥ ५-११७-१९ (३५७९६)
निर्यातयतु मे कन्यां भवांस्तिष्ठन्तु वाजिनः ।
यावदन्यत्र गच्छामि शुल्कार्थं पृथिवीपते ॥ ५-११७-२० (३५७९७)
नारद उवाच। ५-११७-२१क्ष् (३७३५)
दिवोदासोऽथ धर्मात्मा समये गालवस्य ताम् ।
कान्यां निर्यातयामास स्थितः सत्ये महीपतिः ॥ ॥ ५-११७-२१ (३५७९८)

इति श्रीमन्महाभारते उद्योगपर्वणि भगवद्यानपर्वणि
सप्तदशाधिकशततमोऽध्यायः ॥

---

उद्योगपर्व-अध्यय११८
॥ श्रीः ॥
५.११८. अध्यायः ११८

Mahabharata - Udyoga Parva - Chapter Topics
गालवेन पुनः कन्यात्वमुपगतया माधव्या सह उशीनरनृपं गत्वा
स्वागमनकारणकथनम् ॥ १ ॥
तेनाप्यश्वशतद्वयदानेन माधव्यां शिबिनामकतनयोत्पादनम् ॥ २ ॥
कालान्तरे उशीनरान्माधवीमादाय गच्छतो गालवस्य मध्येमार्गं गरुडेन
समागमः ॥ ३ ॥

५-११८-० (३५७९९)
नारद उवाच। ५-११८-०क्ष् (३७३६)
तथैव तां श्रियं त्यक्त्वा कन्या भूत्वा यशस्विनी ।
माधवी गालवं विप्रमभ्ययात्सत्यसङ्गरा ॥ ५-११८-१ (३५८००)
गालवो विमृशन्नेव स्वकार्यगतमानसः ।
जगाम भोजनगरं द्रष्टुमौशीनरं नृपम् ॥ ५-११८-२ (३५८०१)
तमुवाचाथ गत्वा स नृपतिं सत्यविक्रमम् ।
इय कन्या सुतौ द्वौ ते जनयिष्यति पार्थिवौ ॥ ५-११८-३ (३५८०२)
अस्यां भवानवाप्तार्थो भविता प्रेत्य चेह च ।
सोमार्कप्रतिसङ्काशौ जनयित्वा सुतौ नृप ॥ ५-११८-४ (३५८०३)
शुल्कं तु सर्वधर्मज्ञ हयानां चन्द्रवर्चसाम् ।
एकतःश्यामकर्णानां देयं मह्यं चतुःशतम् ॥ ५-११८-५ (३५८०४)
गुर्वर्थोऽयं समारम्भो न हयैः कृत्यमस्ति मे ।
यदि शक्यं महाराज क्रियतामविचारितम् ॥ ५-११८-६ (३५८०५)
अनपत्योऽसि राजर्षे पुत्रौ जनय पार्थिव ।
पितॄन्पुत्रप्लवेन त्वमात्मानं चैव तारय ॥ ५-११८-७ (३५८०६)
न पुत्रफलभोक्ता हि राजर्षे पात्यते दिवः ।
न याति नरकं घोरं यत्र गच्छन्त्यनात्मजाः ॥ ५-११८-८ (३५८०७)
एतच्चान्यच्च विविधं श्रुत्वा गालवभाषितम् ।
उशीनरः प्रतिवचो ददौ तस्य नराधिपः ॥ ५-११८-९ (३५८०८)
श्रुतवानस्मि ते वाक्यं यथा वदसि गालव ।
विधिस्तु बलवान्ब्रह्मन्प्रवणं हि मनो मम ॥ ५-११८-१० (३५८०९)
शते द्वे तु ममाश्वानामीदृशानां द्विजोत्तम ।
इतरेषां सहस्राणि सुबहूनि चरन्ति मे ॥ ५-११८-११ (३५८१०)
अहमप्येकमेवास्यां जनयिष्यामि गालव ।
पुत्रवद्भिर्गतं मार्गं गमिष्यामि परैरहम् ॥ ५-११८-१२ (३५८११)
मूल्येनापि समं कुर्यां तवाहं द्विजसत्तम ।
पौरजानपदार्थं तु ममार्थो नात्मभोगतः ॥ ५-११८-१३ (३५८१२)
कामतो हि धनं राजा पारक्यं यः प्रयच्छति ।
न स धर्मेण धर्मात्मन्युज्यते यशसा न च ॥ ५-११८-१४ (३५८१३)
सोऽहं प्रतिग्रहीष्यामि ददात्वेतां भवान्मम ।
कुमारीं देवगर्भाभामेकपुत्रभवाय मे ॥ ५-११८-१५ (३५८१४)
तथा तु बहुधा कन्यामुक्तवन्तं नराधिपम् ।
उशीनरं द्विजश्रेष्ठो गालवः प्रत्यपूजयत् ॥ ५-११८-१६ (३५८१५)

उशीनरं प्रतिग्राह्य गालवः प्रययौ वनम् ।
रेमे स तां समासाद्य कृतपुण्य इव श्रियम् ॥ ५-११८-१७ (३५८१६)
कन्दरेषु च शैलानां नदीनां निर्झरेषु च ।
उद्यानेषु विचित्रेषु वनेषूपवनेषु च ॥ ५-११८-१८ (३५८१७)
हर्म्येषु रमणीयेषु प्रासादशिखरेषु च ।
वातायनविमानेषु तथा गर्भगृहेषु च ॥ ५-११८-१९ (३५८१८)
ततोऽस्य समये यज्ञे पुत्रो बालरविप्रभः ।
शिबिर्नाम्नाभिविख्यातो यः स पार्थिवसत्तमः ॥ ५-११८-२० (३५८१९)
उपस्थाय स तं विप्रो गालवः प्रतिगृह्य च ।
कन्यां प्रयातस्तां राजन्दृष्टवान्विनतात्मजम् ॥ ॥ ५-११८-२१ (३५८२०)

इति श्रीमन्महाभारते उद्योगपर्वणि भगवद्यानपर्वणि
अष्टादशाधिकशततमोऽध्यायाः ॥

---

उद्योगपर्व-अध्यय११९
॥ श्रीः ॥
५.११९. अध्यायः ११९

Mahabharata - Udyoga Parva - Chapter Topics
गालवेन गरुडंप्रत्यश्वानां शतद्वयन्यूनताकथनम् ॥ १ ॥
गरुडेन तस्य दुर्लभत्वकथनपूर्वकं तत्प्रतिनिधितया माधव्या
एव दानकथनम् ॥ २ ॥
विश्वामित्रेण गालवदत्तायां माधव्यां अष्टकाख्यपुत्रमुत्पाद्य तस्याः
पुनर्गालवे पुनर्गालवे प्रत्यर्पणम् ॥ ३ ॥
गालवेन पुनर्ययातये माधवीप्रत्यर्पणम् ॥ ४ ॥

Mahabharata - Udyoga Parva - Chapter Text

५-११९-० (३५८२१)
नारद उवाच। ५-११९-०क्ष् (३७३७)
गालवं वैनतेयोऽथ प्रहसन्निदमब्रवीत् ।
दिष्ट्या कृतार्थं पश्यामि भवन्तमिह वै द्विज ॥ ५-११९-१ (३५८२२)
गालवस्तु वचः श्रुत्वा वैनतेयेन भाषितम् ।
चतुर्भागावशिष्टं तदाचख्यौ कार्यमस्य हि ॥ ५-११९-२ (३५८२३)
सुपर्णस्त्वब्रवीदेनं गालवं वदतां वरः ।
प्रयत्नस्ते न कर्तव्यो नैष संपत्स्यते तव ॥ ५-११९-३ (३५८२४)
पुरा हि कान्यकुब्जे वै गाधेः सत्यवतीं सुताम् ।

भार्यार्थे वरयत्कन्यामृचीकस्तेन भाषितः ॥ ५-११९-४ (३५८२५)
एकतःश्यामकर्णानां हयानां चन्द्रवर्चसाम् ।
भगवन्दीयताकं मह्यं महस्रमिति गालव ॥ ५-११९-५ (३५८२६)
ऋचीकस्तु तथेत्युक्त्वा वरुणस्यालयं गतः ।
अश्वतीर्थे हयाँल्लब्ध्वा दत्तवान्पार्थिवाय वै ॥ ५-११९-६ (३५८२७)
इष्ट्वा ते पुण्डरीकेण दत्ता राज्ञा द्विजातिषु ।
तेभ्यो द्वे द्वे शते क्रीत्वा प्राप्ते तैः पार्थिवैस्तदा ॥ ५-११९-७ (३५८२८)
अपराण्यपि चत्वारि शतानि द्विजसत्तम ।
नीयमानानि संतारे हृतान्यासन्नितस्ततः ॥ ५-११९-८ (३५८२९)
एवं न शक्यमप्राप्यं प्राप्तुं गालव कर्हिचित् ।
इमामश्वशताभ्यां वै द्वाभ्यां तस्मै निवेदय ॥ ५-११९-९ (३५८३०)
विश्वामित्राय धर्मात्मन्षड्भिरश्वशतैः सह ।
ततोऽसि गतसंमोहः कृतकृत्यो द्विजोत्तम ॥ ५-११९-१० (३५८३१)
गालवस्तं तथेत्युक्त्वा सुपर्णसहितस्ततः ।
आदायाश्वांश्च कन्यां च विश्वामित्रपुपागमत् ॥ ५-११९-११ (३५८३२)
अश्वानां काङ्क्षितार्थानां षडिमानि शतानि वै ।
शतद्वयेन कन्येयं भवता प्रतिगृह्यताम् ॥ ५-११९-१२ (३५८३३)
अस्यां राजर्षिभिः पुत्रा जाता वै धार्मिकास्त्रयः ।
चतुर्थं जनयत्वेकं भवानपि नरोत्तमम् ॥ ५-११९-१३ (३५८३४)
पूर्णान्येवं शतान्यष्टौ तुरगाणां भवन्तु ते ।
भवतो ह्यनृणो भूत्वा तपः कुर्यां यथासुखम् ॥ ५-११९-१४ (३५८३५)
विश्वामित्रस्तु तं दृष्ट्वा गालवं सह पक्षिणा ।
कन्यां च तां वरारोहामिदमित्यब्रवीद्वचः ॥ ५-११९-१५ (३५८३६)
किमियं पूर्वमेवेह न दत्ता मम गालव ।
पुत्रा ममैव चत्वारो भवेयुः कुलभावनाः ॥ ५-११९-१६ (३५८३७)
प्रतिगृह्णामि ते कन्यामेकपुत्रफलाय वै ।
अश्वाश्चाश्रममासाद्य चरन्तु मम सर्वशः ॥ ५-११९-१७ (३५८३८)
नारद उवाच। ५-११९-१८क्ष् (३७३८)
स तया रममाणोऽथ विश्वामित्रो महाद्युतिः ।
आत्मजं जनयामास माधवीपुत्रमष्टकम् ॥ ५-११९-१८ (३५८३९)
जातमात्रं सुतं तं च विश्वामित्रो महामुनिः ।
संयोज्यार्थैस्तथा धर्मैरश्वैस्तैः समयोजयत् ॥ ५-११९-१९ (३५८४०)
अथाष्टकः पुरं प्रायात्तदा सोमपुरप्रभम् ।
निर्यात्य कन्यां शिष्याय कौशिकोपि वनं ययौ ॥ ५-११९-२० (३५८४१)
गालवोपि सुपर्णेन सह निर्यात्य दक्षिणाम् ।
मनसाऽतिप्रतीतेन कन्यामिदमुवाच ह ॥ ५-११९-२१ (३५८४२)

जातो दानपतिः पुत्रस्त्वया शूरस्तथाऽपरः ।
सत्यधर्मरतश्चान्यो यज्वा चापि तथाऽपरः ॥ ५-११९-२२ (३५८४३)
तदागच्छ वरारोहे तारितस्ते पिता सुतैः ।
चत्वारश्चैव राजानस्तथा चाहं सुमध्यमे ॥ ५-११९-२३ (३५८४४)
नारद उवाच। ५-११९-२४क्ष् (३७३९)
गालवस्त्वभ्यनुज्ञाय सुपर्णं पन्नगाशनम् ।
पितुर्निर्यात्य तां कन्यां प्रययौ वनमेव ह ॥ ॥ ५-११९-२४ (३५८४५)

इति श्रीमन्महाभारते उद्योगपर्वणि भगवाद्यनपर्वणि
एकोनविंशत्यधिकशततमोऽध्यायः ॥
Mahabharata - Udyoga Parva - Chapter Footnotes

५-११९-८ संतारे मार्गे ॥
५-११९-१८ अष्टकं तन्नामकम् ॥
५-११९-२० निर्यात्य प्रत्यर्प्य ।शिष्याय गालवाय ॥

---

उद्योगपर्व-अध्यय१२०
॥ श्रीः ॥
५.१२०. अध्यायः १२०

Mahabharata - Udyoga Parva - Chapter Topics
ययातिना माधव्याः गङ्गायमुनासङ्गमदेशे स्वयंवरोद्घोषणेन
यक्षगन्धर्वादीनां तत्रागमनम् ॥ १ ॥
माधव्या तु सर्ववरानतिक्रम्य वनमध्ये तपश्चरणम् ॥ २ ॥
कालान्तरे स्वर्गे ययातेः बहुवर्षसहस्रावसाने सदसि
देवर्ष्याद्यवमाननेन सद्यस्तेजोहानिः ॥ ३ ॥

Mahabharata - Udyoga Parva - Chapter Text

५-१२०-० (३५८४६)
नारद उवाच। ५-१२०-०क्ष् (३७४०)
स तु राजा पुनस्तस्याः कर्तुकामः स्वयंवरम् ।
उपगम्याश्रमपदं गङ्गायामुनसङ्गमे ॥ ५-१२०-१ (३५८४७)
गृहीतमाल्यदामां तां रथमारोप्य माधवीम् ।
पूरुर्यदुश्च भगिनीमाश्रमे पर्यधावताम् ॥ ५-१२०-२ (३५८४८)
नागयक्षमनुष्याणां गन्धर्वमृगपक्षिणाम् ।
शैलद्रुमवनौकानामासीत्तत्र समागमः ॥ ५-१२०-३ (३५८४९)

नानापुरुषदेश्यानामीश्वरैश्च समाकुलम् ।
ऋषिभिर्ब्रह्मकल्पैश्च समन्तादावृतं वनम् ॥ ५-१२०-४ (३५८५०)
निर्दिश्यमानेषु तु सा वरेषु वरवर्णिनी ।
वरानुत्क्रम्य सर्वास्तान्वरं वृतवती वनम् ॥ ५-१२०-५ (३५८५१)
अवतीर्य रथात्कन्या नमस्कृत्य च बन्धुषु ।
उपगम्य वनं पुण्यं तपस्तेपे ययातिजा ॥ ५-१२०-६ (३५८५२)
उपवसैश्च विविधैर्दीक्षाभिर्नियमैस्तथा ।
आत्मनो लघुतां कृत्वा बभूव मृगचारिणी ॥ ५-१२०-७ (३५८५३)
वैदूर्याङ्कुरकल्पानि मृदूनि हरितानि च ।
चरन्ती श्लक्ष्णशष्पाणि तिक्तानि मधुराणि च ॥ ५-१२०-८ (३५८५४)
स्रवन्तीनां च पुण्यानां सुरसानि सुचीनि च ।
पिबन्ती वारिमुख्यानि शीतानि विमलानि च ॥ ५-१२०-९ (३५८५५)
वनेषु मृगराजेषु व्याघ्रविप्रोषितेषु च ।
दावाग्निविप्रयुक्तेषु शून्येषु गहनेषु च ॥ ५-१२०-१० (३५८५६)
चरन्ती हरिणैः सार्धं मृगीव वनचारिणी ।
चचार विपुलं धर्मं ब्रह्मचर्येण संवृतम् ॥ ५-१२०-११ (३५८५७)
ययातिरपि पूर्वेषां राज्ञां वृत्तमनुष्ठितः ।
बहुवर्षसहस्रायुर्युयुजे कालधर्मणा ॥ ५-१२०-१२ (३५८५८)
पुरुर्यदुश्च द्वौ वंशे वर्धमानौ नरोत्तमौ ।
ताभ्यां प्रतिष्ठितो लोके परलोके च नाहुषः ॥ ५-१२०-१३ (३५८५९)
महीपते नरपतिर्ययातिः स्वर्गमास्थितः ।
महर्षिकल्पो नृपतिः स्वर्गाग्र्यफलभुग्विभुः ॥ ५-१२०-१४ (३५८६०)
बहुवर्षसहस्राख्ये काले बहुगुणे गते ।
राजर्षिषु निषण्णेषु महीयःसु महर्धिषु ॥ ५-१२०-१५ (३५८६१)
अवमेने नरान्सर्वान्देवानृषिगणांस्तथा ।
ययातिर्मूढविज्ञानो विस्मयाविष्टचेतनः ॥ ५-१२०-१६ (३५८६२)
ततस्तं बुबुधे देवः शक्रो बलनिषूदनः ।
ते च राजर्षयः सर्वे धिग्धिगित्येवमब्रुवन् ॥ ५-१२०-१७ (३५८६३)
विचारश्च समुत्पन्नो निरीक्ष्य नहुषात्मजम् ।
कोऽन्वयं कस्य वा राज्ञः कथं वा स्वर्गमागतः ॥ ५-१२०-१८ (३५८६४)
कर्मणा केनसिद्धोऽयं क्व वाऽनेन तपश्चितम् ।
कथं वा ज्ञायते स्वर्गे केन वा ज्ञायतेऽप्युत ॥ ५-१२०-१९ (३५८६५)
एवं विचास्यन्तस्ते राजानं स्वर्गवासिनः ।
दृष्ट्वा पप्रच्छुरन्योन्यं ययातिं नृपतिं प्रति ॥ ५-१२०-२० (३५८६६)
विमानपालाः शतशः स्वर्गद्वाराभिरक्षिणः ।
पृष्टा आसनपालाश्च न जानीमेत्यथाऽब्रुवन् ॥ ५-१२०-२१ (३५८६७)

सर्वे ते ह्यावृतज्ञाना नाभ्यजानन्त तं नृपम् ।
स मुहूर्तादथ नृपो हतौजाश्चाभवत्तदा ॥ ॥ ५-१२०-२२ (३५८६८)

इति श्रीमन्महाभारते उद्योगपर्वणि भगवद्यानपर्वणि
विंशत्यधिकशततमोऽध्यायः ॥

Mahabharata - Udyoga Parva - Chapter Footnotes

५-१२०-१ सतु राजा आश्रमपदमुपगम्य कर्तुकाभः अभूदिति शेषः ॥
५-१२०-२ पर्यधावतां वरान्वेषणायेत्यर्थः ॥
५-१२०-५ वनं वनवासम् ॥
५-१२०-१० व्याघ्राणां विप्रोषितं पर्यटनं येषु ॥
५-१२०-१२ कालधर्मणा मृत्युना ॥
५-१२०-१३ नाहुषः ययातिः ॥

---

उद्योगपर्व-अध्यय१२१
॥ श्रीः ॥
५.१२१. अध्यायः १२१

Mahabharata - Udyoga Parva - Chapter Topics

ययातिंप्रति इन्द्रदूतेन पतेत्युक्तिः ॥ १ ॥
ययातेः सत्सु पतेयमिति स्वप्रार्थितेन्द्रवरेण नैमिषे यजतां स्वदौहित्राणां मध्ये भुवंप्रति पतनम् ॥ २ ॥
ययातिना तैः प्रदित्सितसुकृतफलप्रतिग्रहानभिरोचनम् ॥ ३ ॥
तत्रागतया माधव्या तेषां तद्दौहित्रमामभिधाय ययातये तेभ्यः सुकृतफलप्रदापनपूर्वकं स्वसुकृतफलार्धदानम् ॥ ४ ॥
गालवेन स्वतपोष्टमांशफलदानम् ॥ ५ ॥

Mahabharata - Udyoga Parva - Chapter Text

५-१२१-० (३५८६९)
नारद उवाच। ५-१२१-०क्ष् (३७४१)
अथ प्रचलितः स्थानादासनाच्च परिच्युतः ।
कम्पितेनेव मनसा धर्षितः शेकवह्निना ॥ ५-१२१-१ (३५८७०)
म्लानस्रग्भ्रष्टविज्ञानः प्रभ्रष्टमुकुटाङ्गदः ।
विघूर्णन्स्रस्तसर्वाङ्गः प्रभ्रष्टाभरणाम्बरः ॥ ५-१२१-२ (३५८७१)
अदृश्यमानस्तान्पश्यन्नपश्यंश्च पुनः पुनः ।

शून्यः शून्येन मनसा प्रपतिष्यन्महीतलम् ॥ ५-१२१-३ (३५८७२)
किं मया मनसा ध्यातमशुभं धर्मदूषणम् ।
येनाहं चलितः स्थानादिति राजा व्यचिन्तयत् ॥ ५-१२१-४ (३५८७३)
ते तु तत्रैव राजानः सिद्धाश्चाप्सरसस्तथा ।
अपश्यन्त निरालम्बं तं ययातिं परिच्युतम् ॥ ५-१२१-५ (३५८७४)
अथैत्य पुरुषः कश्चित्क्षीणपुण्यनिपातकः ।
ययातिमब्रवीद्राजन्देवराजस्य शासनात् ॥ ५-१२१-६ (३५८७५)
अतीव मदमत्तस्त्वं न कंचिन्नावमन्यसे ।
मानेन भ्रष्टः स्वर्गस्ते नार्हस्त्वं पार्थिवात्मज ॥ ५-१२१-७ (३५८७६)
न च प्रज्ञायसे गच्छ पतस्वेति तमब्रवीत् ।
पतेयं सत्स्विति वचस्त्रिरुक्त्का नहुषात्मजः ॥ ५-१२१-८ (३५८७७)
पतिष्यंन्तयामास गतिं गतिमतां वरः ।
एतस्मिन्नेव काले तु नैमिषे पार्थिवर्षभान् ॥ ५-१२१-९ (३५८७८)
चतुरोऽपश्यत नृपस्तेषां मध्ये पपात ह ।
प्रतर्दनो वसुमनाः शिबिरौशीनरोऽष्टकः ॥ ५-१२१-१० (३५८७९)
वाजपेयेन यज्ञेन तर्पयन्ति सुरेश्वरम् ।
तेषामध्वरजं धूमं स्वर्गद्वारमुपस्थितम् ॥ ५-१२१-११ (३५८८०)
ययातिरुपजिघ्रन्वै निपपात महीं प्रति ।
भूमौ स्वर्गे च संबद्धां नदीं धूममयीमिव ।
गङ्गां गामिव गच्छन्तीमालम्ब्य जगतीपतिः ॥ ५-१२१-१२ (३५८८१)
श्रीमत्स्ववभृथाग्र्येषु चतुर्षु प्रतिबन्धुषु ।
मध्ये निपतितो राजा लोकपालोपमेषु सः ॥ ५-१२१-१३ (३५८८२)
चतुर्षु हुतकल्पेषु राजसिंहमहाग्निषु ।
पपात मध्ये राजर्षिर्ययातिः पुण्यसङ्क्षये ॥ ५-१२१-१४ (३५८८३)
तमाहुः पार्थिवाः सर्वे दीप्यमानमिव श्रिया ।
को भवान्कस्य वा बन्धुर्देशस्य नगरस्य वा ॥ ५-१२१-१५ (३५८८४)
यक्षो वाऽप्यथवा देवो गन्धर्वो राक्षसोऽपि वा ।
न हि मानुषरूपोसि कोवार्थः काङ्क्ष्यते त्वया ॥ ५-१२१-१६ (३५८८५)
ययातिरुवाच। ५-१२१-१७क्ष् (३७४२)
ययातिरस्मि राजर्षिः क्षीणपुण्यश्च्युतो दिवः ।
पतेयं सत्स्विति ध्यायन्भवत्सु पतितस्ततः ॥ ५-१२१-१७ (३५८८६)
राजान ऊचुः । ५-१२१-१८क्ष् (३७४३)
सत्यमेतद्भवतु ते काङ्क्षितं पुरुषर्षभ ।
सर्वेषां नः क्रतुफलं धर्मश्च प्रतिगृह्यताम् ॥ ५-१२१-१८ (३५८८७)
ययातिरुवाच। ५-१२१-१९क्ष् (३७४४)
नाहं प्रतिग्रहधनो ब्राह्मणः क्षत्रियोऽह्यहम् ।

न च मे प्रवणा बुद्धिः परपुण्यविनाशने ॥ ५-१२१-१९ (३५८८८)
नारद उवाच। ५-१२१-२०क्ष् (३७४५)
एतस्मिन्नेव काले तु मृगचर्याक्रमागताम् ।
माधवीं प्रेक्ष्य राजानस्तेऽभिवाद्येदमब्रुवन् ॥ ५-१२१-२० (३५८८९)
किमागमनकृत्यं ते किं कुर्मः शासनं तव ।
आज्ञाप्या हि वयं सर्वे तव पुत्रास्तपोधने ॥ ५-१२१-२१ (३५८९०)
नारद उवाच। ५-१२१-२२क्ष् (३७४६)
तेषां तद्भाषितं श्रुत्वा माधवी परया मुदा ।
पितरं समुपागच्छद्ययातिं सा ववन्द च ॥ ५-१२१-२२ (३५८९१)
स्पृष्ट्वा मूर्धनि तान्पुत्रांस्तापसी वाक्यमब्रवीत् ।
दौहित्रास्तव राजेन्द्र मम पुत्रा न ते पराः ॥ ५-१२१-२३ (३५८९२)
इमे त्वां तारयिष्यन्ति दिष्टमेतत्पुरातनम् ।
अहं ते दुहिता राजन्माधवी मृगचारिणी ॥ ५-१२१-२४ (३५८९३)
मयाऽप्युपचितो धर्मस्ततोऽर्धं प्रतिगृह्यताम् ।
यस्माद्राजन्नराः सर्वे अपत्यफलभागिनः ॥ ५-१२१-२५ (३५८९४)
तस्मादिच्छन्ति दौहित्रान्यथा त्वं वसुधाधिप । ५-१२१-२६ (३५८९५)
नारद उवाच ।
ततस्ते पार्थिवाः सर्वे शिरसा जननीं तदा ॥ ५-१२१-२६क्ष् (३७४७)
अभिवाद्य नमस्कृत्य मातामहमथाब्रुवन् ।
उच्चैरनुपमैः स्निग्धैः स्वरैरापूर्य मेदिनीम् ।
मातामहं नृपतयस्तारयन्तो दिवश्च्युतम् । ५-१२१-२७ (३५८९६)
' राजान ऊचुः ।५-१२१-२८क्ष् (३७४८)
राजधर्मगुणोपेताः सत्यधर्मगुणान्विताः ।
दौहित्रास्ते वयं राजन्दिवमारोह पार्थिव ॥ ५-१२१-२८ (३५८९७)
नारद उवाच।' ५-१२१-२९क्ष् (३७४९)
अथाकस्मादुपगतो गालवोऽप्याह पार्थिवम् ।
तपसो मेऽष्टभागेन स्वर्गमारोहतां भवान् ॥ ॥ ५-१२१-२९ (३५८९८)

इति श्रीमन्महाभारते उद्योगपर्वणि भगवद्यानपर्वणि
एकविंशत्यधिकशततमोऽध्यायः ॥

Mahabharata - Udyoga Parva - Chapter Footnotes

५-१२१-१० शिबिरौशीनर इत्येकः ॥
५-१२१-१३ प्रतिबन्धुषु दौहित्ररूपेषु ॥
५-१२१-१५ बन्धुः पालयिता ॥
५-१२१-२९ अष्टभागेन अष्टमांशेन ॥

॥ श्रीः ॥
५.१२२. अध्यायः १२२

Mahabharata - Udyoga Parva - Chapter Topics
स्वदौहित्रादिदत्तपुण्यफलप्रभावेण पुनर्ययातेः स्वर्गगमनम् ॥ १ ॥

Mahabharata - Udyoga Parva - Chapter Text

५-१२२-० (३५८९९)
नारद उवाच। ५-१२२-०क्ष् (३७५०)
प्रत्यभिज्ञातमात्रोऽथ सद्भिस्तैर्नरपुङ्गवः ।
समारुरोह नृपतिरस्पृशन्वसुधातलम् ।
ययातिर्दिव्यसंस्थानो बभूव विगतज्वरः ॥ ५-१२२-१ (३५९००)
दिव्यमाल्याम्बरधरो दिव्याभरणभूषितः ।
दिव्यगन्धगुणोपेतो न पृथ्वीमस्पृशत्पदा ॥ ५-१२२-२ (३५९०१)
ततो वसुमनाः पूर्वमुच्चैरुच्चारयन्वचः ॥
ख्यातो दानपतिर्लोके व्याजहार नृपं तदा ॥ ५-१२२-३ (३५९०२)
प्राप्तवानस्मि यल्लोके सर्ववर्णेष्वगर्हया ।
तदप्यथ च दास्यामि तेन संयुज्यतां भवान् ॥ ५-१२२-४ (३५९०३)
यत्फलं दानशीलस्य क्षमाशीलस्य यत्फलम् ।
यच्च मे फलमाधाने तेन संयुज्यतां भवान् ॥ ५-१२२-५ (३५९०४)
ततः प्रतर्दनोऽप्याह वाक्यं क्षत्रियपुङ्गवः ।
यथा धर्मरतिर्नित्यं नित्यं युद्धपरायणः ॥ ५-१२२-६ (३५९०५)
प्राप्तवानस्मि यल्लोके क्षत्रवंशोद्भवं यशः ।
वीरशब्दफलं चैव तेन संयुज्यतां भवान् ।
यथा धर्मे रतिर्नित्यं तेन सत्येन खं व्रज ॥ ५-१२२-७ (३५९०६)
शिबिरौशीनरो धीमानुवाच मधुरां गिरम् ।
यथा बालेषु नारीषु वैवाह्येषु तथैव च ॥ ५-१२२-८ (३५९०७)
सङ्गरेषु निपातेषु तथा तद्व्यसनेषु च ।
अनृतं नोक्तपूर्वं मे तेन सत्येन खं व्रज ॥ ५-१२२-९ (३५९०८)
यथा प्राणांश्च राज्यं च राजन्कामसुखानि च ।
त्यजेयं न पुनः सत्यं तेन सत्येन खं व्रज ॥ ५-१२२-१० (३५९०९)
यथा सत्येन मे धर्मो यथा सत्येन पावकः ।
प्रीतः शतक्रतुश्चैव तेन सत्येन खं व्रज ॥ ५-१२२-११ (३५९१०)
अष्टकस्त्वथ राजर्षिः कौशिको माधवीसुतः ।

अनेकशतयज्वानं नाहुषं प्राह धर्मवित् ॥ ५-१२२-१२ (३५९११)
शतशः पुण्डरीका मे गोसवाश्चरिताः प्रभो ।
क्रतवो वाजपेयाश्च तेषां फलमवाप्नुहि ॥ ५-१२२-१३ (३५९१२)
न मे रत्नानि न धनं न तथाऽन्ये परिच्छदा ।
क्रतुष्वनुपयुक्तानि तेन सत्येन खं व्रज ॥ ५-१२२-१४ (३५९१३)
नारद उवाच। ५-१२२-१५क्ष् (३७५१)
यथायथा हि जल्पन्ति दौहित्रास्तं नराधिपम् ।
तथतथा वसुमतीं त्यक्त्वा राजा दिवं ययौ ॥ ५-१२२-१५ (३५९१४)
एवं सर्वे समस्तैस्ते राजानः सुकृतैस्तदा ।
ययातिं स्वर्गतो भ्रष्टं तारयामासुरञ्जसा ॥ ५-१२२-१६ (३५९१५)
दौहित्राः स्वेन धर्मेण यज्ञदानकृतेन वै ।
चतुर्षु राजवंशेषु संभूताः कुलवर्धनाः ।
मातामहं महाप्राज्ञं दिवमारोपयन्त ते ॥ ५-१२२-१७ (३५९१६)
राजान ऊचुः । ५-१२२-१८क्ष् (३७५२)
राजधर्मगुणोपेताः सर्वधर्मगुणान्विताः ।
दौहित्रास्ते वयं राजन्दिवमारोह पार्थिव ॥ ॥ ५-१२२-१८ (३५९१७)

इति श्रीमन्महाभारते उद्योगपर्वणि भगवद्यानपर्वणि
द्वाविंशत्यधिकशततमोऽध्यायः ॥
Mahabharata - Udyoga Parva - Chapter Footnotes

५-१२२-१ प्रत्यभिज्ञातेति ॥
५-१२२-५ आधाने अग्न्याधानोपलक्षिते श्रौतधर्मे ॥
५-१२२-९ आपत्सु संकटेषु । व्यसनेषु द्यूतादिषु । खं स्वर्गम् ॥

---

उद्योगपर्व-अध्यय१२३
॥ श्रीः ॥
५.१२३. अध्यायः १२३

Mahabharata - Udyoga Parva - Chapter Topics
स्वर्गे ययातिप्रश्नानुरोधेन पितामहेन तत्पतनकारणकथनम् ॥ १ ॥
नारदेन ययात्युपाख्यानोपसंहारपूर्वकं दुर्योधनंप्रति
गालवययातिदृष्टान्तप्रदर्शनेन निर्बन्धाभिमानत्यागपूर्वकं
पाण्डवैः सन्धिकरणविधानम् ॥ २ ॥

Mahabharata - Udyoga Parva - Chapter Text

५-१२३-० (३५९१८)
नारद उवाच। ५-१२३-०क्ष् (३७५३)
सद्भिरारोपितः स्वर्गं पार्थिवैर्भूरिदक्षिणैः ।
अभ्यनुज्ञाय दौहित्रान्ययातिर्दिवमास्थितः ॥ ५-१२३-१ (३५९१९)
अभिवृष्टश्च वर्षेण नानापुष्पसुगन्धिना ।
परिष्वक्तश्च पुण्येन वायुना पुण्यगन्धिना ॥ ५-१२३-२ (३५९२०)
अचलं स्थानमासाद्य दौहित्रफलनिर्जितम् ।
कर्मभिः स्वैरुपचितो जज्वाल परया श्रिया ॥ ५-१२३-३ (३५९२१)
उपगीतोपनृत्तश्च गन्धर्वाप्सरसां गणैः ।
प्रीत्या प्रतिगृहीतश्च स्वर्गे दुन्दुभिनिःस्वनैः ॥ ५-१२३-४ (३५९२२)
अभिष्टुतश्च विविधैर्देवराजर्षिचारणैः ।
अर्चितश्चोत्तमार्घेण दैवतैरभिनन्दितः ॥ ५-१२३-५ (३५९२३)
प्राप्तः स्वर्गफलं चैव तमुवाच पितामहः ।
निर्वृतं शान्तमनसं वचोभिस्तर्पयन्निव ॥ ५-१२३-६ (३५९२४)
चतुष्पादस्त्वया धर्मश्चितो लोक्येन कर्मणा ।
अक्षयस्तव लोकोऽयं कीर्तिश्चैवाक्षया दिवि ॥ ५-१२३-७ (३५९२५)
पुनस्त्वयैव राजर्षे स्वकृतेन विघातितम् ।
आवृतं तमसा चेतः सर्वेषां स्वर्गवासिनाम् ॥ ५-१२३-८ (३५९२६)
येन त्वां नाभिजानन्ति ततोऽज्ञातोसि पातितः ।
प्रीत्यैव चासि दौहित्रैस्तारितस्त्वमिहागतः ॥ ५-१२३-९ (३५९२७)
स्थानं च प्रतिपन्नोऽसि कर्मणा स्वेन निर्जितम् ।
अचलं शाश्वतं पुण्यमुत्तमं ध्रुवमव्ययम् ॥ ५-१२३-१० (३५९२८)
ययातिरुवाच। ५-१२३-११क्ष् (३७५४)
भगवन्संशयो मेऽस्ति कश्चितं छेत्तुमर्हसि ।
न ह्यन्यमहमर्हामि प्रष्टुं लोकपितामह ॥ ५-१२३-११ (३५९२९)
बहुवर्षसहस्रान्तं प्रजापालनवर्धितम् ।
अनेकक्रतुदानौघैरार्जितं मे महत्फलम् ॥ ५-१२३-१२ (३५९३०)
कथं तदल्पकालेन क्षीणं येनास्मि पातितः ।
भगवन्वेत्थ लोकांश्च शाश्वतान्मम निर्मितान् ।
कथं नु मम तत्सर्वं विप्रनष्टं महाद्युते ॥ ५-१२३-१३ (३५९३१)
पितामह उवाच। ५-१२३-१४क्ष् (३७५५)
बहुवर्षसहस्रान्तं प्रजापालनवर्धितम् ।
अनेकक्रतुदानौघैर्यत्त्वयोपार्जितं फलम् ॥ ५-१२३-१४ (३५९३२)
तदनेनैव दोषेण क्षीणं येनासि पातितः ।
अभिमानेन राजेन्द्र धिक्कृतः स्वर्गवासिभिः ॥ ५-१२३-१५ (३५९३३)
नायं मानेन राजर्षे न बलेन न हिंसया ।

न शाठ्येन न मायाभिर्लोको भवति शाश्वतः ॥ ५-१२३-१६ (३५९३४)
नावमान्यास्त्वया राजन्नधमोत्कृष्टमध्यमाः ।
न हि मानप्रदग्धानां कश्चिदस्ति शमः क्वचित् ॥ ५-१२३-१७ (३५९३५)
पतनारोहणमिदं कथयिष्यन्ति ये नराः ।
विषमाण्यपि ते प्राप्तास्तरिष्यन्ति न संशयः ॥ ५-१२३-१८ (३५९३६)
नारद उवाच। ५-१२३-१९क्ष् (३७५६)
एष दोषोऽभिमानेन पुरा प्राप्तो ययातिना ।
निर्बन्धताऽतिमात्रं च गालवेन महीपते ॥ ५-१२३-१९ (३५९३७)
श्रोतव्यं हितकामानां सुहृदां हितमिच्छताम् ।
न कर्तव्यो हि निर्बन्धो निर्बन्धो हि क्षयोदयः ॥ ५-१२३-२० (३५९३८)
तस्मात्त्वमपि गान्धारे मानं क्रोधं च वर्जय ।
सन्धत्स्व पाण्डवैर्वीर संरम्भं त्यज पार्थिव ॥ ५-१२३-२१ (३५९३९)
स भवान्सुहृदां पथ्यं वचो गृह्णातु माऽनृतम् ।
समर्थैर्विग्रहं कृत्वा विषमस्थो भविष्यसि ॥ ५-१२३-२२ (३५९४०)
ददाति यत्पार्थिव यत्करति
यद्वा तपस्तप्यति यज्जुहोति ।
न तस्य नाशोऽस्ति न चापकर्षो
नान्यस्तदश्नाति स एव कर्ता ॥ ५-१२३-२३ (३५९४१)
इदं महाख्यानमनुत्तमं हितं
बहुश्रुतानां गतरोषरागिणाम् ।
समीक्ष्य लोके बहुधा प्रधारितं
त्रिवर्गदृष्टिः पृथिवीमुपाश्नुते ॥ ५-१२३-२४ (३५९४२)
ग एतत्पुण्यतमं राजन्ययातेश्चरितं महत् ।
यच्छ्रुत्वा श्रावयित्वा च स्वर्गं यान्तीह मानवाः ॥' ॥ ५-१२३-२५ (३५९४३)

इति श्रीमन्महाभारते उद्योगपर्वणि भगवद्यानपर्वणि
त्रयोविंशत्यधिकशततमोऽध्यायः ॥

Mahabharata - Udyoga Parva - Chapter Footnotes

५-१२३-८ स्वकृतेन सम्यक्संपादितेन कर्मणा । मया समोऽन्यो नास्तीति
वाक्प्रयोगेण। तमसा क्रोधेन ॥
५-१२३-२४ प्रधारितं निश्चितम् ॥

---

उद्योगपर्व-अध्यय१२४
॥ श्रीः ॥
५.१२४. अध्यायः १२४

Mahabharata - Udyoga Parva - Chapter Topics

धृतराष्ट्रेण श्रीकृष्णंप्रति दुर्योधनानुनयप्रार्थन ॥ १ ॥
श्रीकृष्णेन दुर्योधनानुनयः ॥ २ ॥

Mahabharata - Udyoga Parva - Chapter Text

५-१२४-० (३५९४४)
धृतराष्ट्र उवाच। ५-१२४-०क्ष् (३७५७)
भगवन्नेवमेवैतद्यथा वदसि नारद ।
इच्छामि चाहमप्येवं न त्वीशो भगवन्नहम् ॥ ५-१२४-१ (३५९४५)
वैशंपायन उवाच। ५-१२४-२क्ष् (३७५८)
एवमुक्त्वा ततः कृष्णमभ्यभाषत कौरवः ।
स्वर्ग्यं लोक्यं च मामात्थ धर्म्यं न्याय्यं च केशव ॥ ५-१२४-२ (३५९४६)
न त्वहं स्ववशस्तात क्रियमाणं न मे प्रियम् ।
ग्न मंस्यन्ते दुरात्मानः पुत्रा मम जनार्दन ॥' ५-१२४-३ (३५९४७)
अङ्ग दुर्योधनं कृष्ण मन्दं शास्त्रातिगं मम ।
अनुनेतुं महाबाहो यतस्व पुरुषोत्तम ॥ ५-१२४-४ (३५९४८)
न श्रृणोति महाबाहो वचनं साधु भाषितम् ।
गान्धार्याश्च हृषीकेश विदुरस्य च धीमतः ।
अन्येषां चैव सुहृदां भीष्मादीनां हितैषिणाम् ॥ ५-१२४-५ (३५९४९)
स त्वं पापमतिं क्रूरं पापचित्तमचेतनम् ।
अनुशाधि दुरात्मानं स्वयं दुर्योधनं नृपम् ॥ ५-१२४-६ (३५९५०)
सुहृत्कार्यं तु सुमहत्कृतं ते स्याज्जनार्दन ॥ ५-१२४-७ (३५९५१)
वैशंपायन उवाच। ५-१२४-८क्ष् (३७५९)
ततोऽभ्यावृत्य वार्ष्णेयो दुर्योधनममर्षणम् ।
अब्रवीन्मधुरां वाचं सर्वधर्मार्थतत्त्ववित् ॥ ५-१२४-८ (३५९५२)
दुर्योधन निबोधेदं मद्वाक्यं कुरुसत्तम ।
शर्मार्थं ते विशेषेण सानुबन्धस्य भारत ॥ ५-१२४-९ (३५९५३)
महाप्रज्ञकुले जातः साध्वेतत्कर्तुमर्हसि ।
श्रुतवृत्तोपसंपन्नः सर्वैः समुदितो गुणैः ॥ ५-१२४-१० (३५९५४)
दौष्कुलेया दुरात्मानो नृशंसा निरपत्रपाः ।
त एतदीदृशं कुर्युर्यथा त्वं तात मन्यसे ॥ ५-१२४-११ (३५९५५)
धर्मार्थयुक्ता लोकेऽस्मिन्प्रवृत्तिर्लक्ष्यते सताम् ।
असतां विपरीता तु लक्ष्यते भरतर्षभ ।
विपरीता त्वियं वृत्तिरसकृल्लक्ष्यते त्वयि ॥ ५-१२४-१२ (३५९५६)
अधर्मश्चानुबन्धोऽत्र घोरः प्राणहरो महान् ।

अनिष्टश्चानिमित्तश्च न च शक्यश्च भारत ॥ ५-१२४-१३ (३५९५७)
तमनर्थं परिहरन्नात्मश्रेयः करिष्यसि ।
भ्रातॄणामथ भृत्यानां मित्राणां च परन्तप ॥ ५-१२४-१४ (३५९५८)
अधर्म्यादयशस्याच्च कर्मणस्त्वं प्रमोक्ष्यसे ॥ ५-१२४-१५ (३५९५९)
प्राज्ञैः शूरैर्महोत्साहैरात्मवद्भिर्बहुश्रुतैः ।
सन्धत्स्व पुरुषव्याघ्र पाण्डवैर्भरतर्षभ ।
तद्धितं च प्रियं चैव धृतराष्ट्रस्य धीमतः ॥ ५-१२४-१६ (३५९६०)
पितामहस्य द्रोणस्य विदुरस्य महामतेः ।
कृपस्य सोमदत्तस्य बाह्लीकस्य च धीमतः ॥ ५-१२४-१७ (३५९६१)
अश्वत्थाम्नो विकर्णस्य सञ्जयस्य विविंशतेः ।
ज्ञातीनां चैव भूयिष्ठं मित्राणां च परन्तप ॥ ५-१२४-१८ (३५९६२)
शमे शर्म भवेत्तात सर्वस्य जगतस्तथा ।
ह्रीमानसि कुले जातः श्रुतवानानृशंस्यवान् ।
तिष्ठ तात पितुः शास्त्रे मातुश्च भरतर्षभ ॥ ५-१२४-१९ (३५९६३)
एतच्छ्रेयो हि मन्यन्ते पिता यच्छास्ति भारत ।
उक्तमापद्गतः पूर्वं पितुः स्मरसि शासनम् ॥ ५-१२४-२० (३५९६४)
रोचते ते पितुस्तात पाण्डवैः सह सङ्गमः ।
सामात्यस्य कुरुश्रेष्ठ तत्तुभ्यां तात रोचताम् ॥ ५-१२४-२१ (३५९६५)
श्रुत्वा यः सुहृदां शास्त्रं मर्त्यो न प्रतिपद्यते ।
विपाकान्ते दहत्येनं किंपाकमिव भक्षितम् ॥ ५-१२४-२२ (३५९६६)
यस्तु निःश्रेयसं वाक्यं मोहान्न प्रतिपद्यते ।
स दीर्घसूत्रो हीनार्थः पश्चात्तापेन युज्यते ॥ ५-१२४-२३ (३५९६७)
यस्तु न्निःश्रेयसं श्रुत्वा प्राक्तदेवाभिपद्यते ।
आत्मनो मतमुत्सृज्य स लोके सुखमेधते ॥ ५-१२४-२४ (३५९६८)
योऽर्थकामस्य वचनं प्रातिकूल्यान्न मृष्यते ।
शृणोति प्रतिकूलानि द्विषतां वशमेति सः ॥ ५-१२४-२५ (३५९६९)
सतां मतमतिक्रम्य योऽसतां वर्तते मते ।
शोचन्ते व्यसने तस्य सुहृदो नचिरादिव ॥ ५-१२४-२६ (३५९७०)
मुख्यानमात्यानुत्सृज्य यो निहीनान्निषेवते ।
स घोरामापदं प्राप्य नोत्तारमधिगच्छति ॥ ५-१२४-२७ (३५९७१)
योऽसत्सेवी वृथाचारो न श्रोता सुहृदां सताम् ।
परान्वृणीति स्वान्द्वेष्टि तं गौस्त्यजति भारत ॥ ५-१२४-२८ (३५९७२)
तत्वं विरुद्धा तैर्वीरैस्येतत्राणमिच्छसि ।
अशिष्टेभ्योऽसमर्थेभ्यो मूढेभ्यो भरतर्षभ ॥ ५-१२४-२९ (३५९७३)
को हि शक्रसमाञ्ज्ञातीनतिक्रम्य महारथान् ।
अन्येभ्यस्त्राणमाशंसेत्त्वदन्यो भुवि मानवः ॥ ५-१२४-३० (३५९७४)

जन्मप्रभृति कौन्तेया नित्यं विनिकृतास्त्वया ।
न च ते जातु कुप्यन्ति धर्मात्मानो हि पाण्डवाः ॥ ५-१२४-३१ (३५९७५)
मिथ्योपचरितास्तात जन्मप्रभृति बान्धवाः ।
त्वयि सम्यङ्महाबाहो प्रतिपन्ना यशस्विनः ॥ ५-१२४-३२ (३५९७६)
त्वयाऽपि प्रतिपत्तव्यं तथैव भरतर्षभ ।
स्वेषु बन्धुषु मुख्येषु मा मन्युवशमन्वगाः ॥ ५-१२४-३३ (३५९७७)
त्रिवर्गयुक्तः प्राज्ञानामारम्भो भरतर्षभ ।
धर्मार्थावनुरुद्ध्यन्ते त्रिवर्गासंभवे नराः ॥ ५-१२४-३४ (३५९७८)
पृथक्च विनिविष्टानां धर्मं धीरोऽनुरुध्यते ।
मध्यमोऽर्थं कलिं बालः काममेवानुरुद्ध्यते ॥ ५-१२४-३५ (३५९७९)
इन्द्रियैः प्राकृतो लोभाद्धर्मं विप्रजहाति यः ।
कामार्थावनुपायेन लिप्समानो विनश्यति ॥ ५-१२४-३६ (३५९८०)
कामार्थौ लिप्समानस्तु धर्ममेवादितश्चरेत् ।
न हि धर्मादपैत्यर्थः कामो वाऽपि कदाचन ॥ ५-१२४-३७ (३५९८१)
उपायं धर्ममेवाहुस्त्रिवर्गस्य विशांपते ।
लिप्समानो हि तेनाशु कक्षेऽग्निरिव वर्धते ॥ ५-१२४-३८ (३५९८२)
स त्वं तातानुपायेन लिप्ससे भरतर्षभ ।
आधिराज्यं महद्दीप्तं प्रथितं सर्वराजसु ॥ ५-१२४-३९ (३५९८३)
आत्मानं तक्षति ह्येष वनं परशुना यथा ।
यः सम्यग्वर्तमानेषु मिथ्या राजन्प्रवर्तते ।
न तस्य हि मतिं छिन्द्याद्यस्य नेच्छेत्पराभवम् ॥ ५-१२४-४० (३५९८४)
अविच्छिन्नमतेरस्य कल्याणे धीयते मतिः ।
आत्मवान्नावमन्येत त्रिषु लोकेषु भारत ॥ ५-१२४-४१ (३५९८५)
अप्यन्यं प्राकृतं कञ्चित्किमु तान्पाण्डवर्षभान् ।
अमर्षवशमापन्नो न किंचिद्बुद्ध्यते जनः ॥ ५-१२४-४२ (३५९८६)
छिद्यते ह्याततं सर्वं प्रमाणं पश्य भारत ।
श्रेयस्ते दुर्जनात्तात पाण्डवैः सह सङ्गतम् ॥ ५-१२४-४३ (३५९८७)
तैर्हि संप्रीपमाणस्त्वं सर्वान्कामानवाप्स्यसि ।
पाण्डवैर्निर्मितां भूमिं भुञ्जानो राजसत्तम ॥ ५-१२४-४४ (३५९८८)
पाण्डवान्पृष्ठतः कृत्वा त्राणमाशससऽन्वतः ।
दुःशासने दुर्विषहे कर्णे चापि ससौबले ॥ ५-१२४-४५ (३५९८९)
एतेष्वैश्वर्यमाधाय भूतिमिच्छसि भारत ।
न चैते तव पर्याप्ता ज्ञाने धर्मार्थयोस्तथा ॥ ५-१२४-४६ (३५९९०)
विक्रमे चाप्यपर्याप्तः पाण्डवान्प्रति भारत ।
न हीमे सर्वराजानः पर्याप्ताः सहितास्त्वया ॥ ५-१२४-४७ (३५९९१)
क्रुद्धस्य भीमसेनस्य प्रेक्षितुं मुखमाहवे ।

इदं सनिहितं तात समग्रं पार्थिवं बलम् ॥ ५-१२४-४८ (३५९९२)
अयं भीष्मस्तथा द्रोणः कर्णश्चायं तथा कृपः ।
भूरिश्रवाः सौमदत्तिरश्वत्थामा जयद्रथः ॥ ५-१२४-४९ (३५९९३)
अशक्ताः सर्व एवैते प्रतियोद्धुं धनञ्जयम् ।
अजेयो ह्यर्जुनः सङ्ख्ये सर्वैरपि सुरासुरैः ।
मानुषैरपि गन्धर्वैर्मा युद्धे चेत आधिथाः ॥ ५-१२४-५० (३५९९४)
दृश्यतां वा पुमान्कश्चित्समग्रे पार्थिवे बले ।
योऽर्जुनं समरे प्राप्य स्वस्तिमानाव्रजेद्गृहान् ॥ ५-१२४-५१ (३५९९५)
किं ते जनक्षयेणेह कृतेन भरतर्षभ ।
यस्मिञ्जिते जितं ते स्यात्पुमानेकः स दृश्यतां ॥ ५-१२४-५२ (३५९९६)
यः सदेवान्सगन्धर्वान्सयक्षासुरपन्नगान् ।
अजयत्खाण्डवप्रस्थे कस्तं युद्धेय मानवः ॥ ५-१२४-५३ (३५९९७)
तथा विराटनगरे श्रूयते महदद्भुतम् ।
एकस्य च बहूनां च पर्याप्तं तन्निदर्शनम् ॥ ५-१२४-५४ (३५९९८)
युद्धे येन महादेवः साक्षात्सन्तोषितः शिवः ।
तमजेयमनाधृष्यं विजेतुं जिष्णुमच्युतम् ।
आशंससीह समरे वीरमर्जुनमूर्जितम् ॥ ५-१२४-५५ (३५९९९)
मद्द्वितीयं पुनः पार्थं कः प्रार्थयितुमर्हति ।
युद्धे प्रतीपमायान्तमपि साक्षात्पुरन्दरः ॥ ५-१२४-५६ (३६०००)
बाहुभ्यामुद्वहेद्भूमिं दहेत्क्रुद्ध इमाः प्रजाः ।
पातयेत्त्रिदिवाद्देवान्योऽर्जुनं समरे जयेत् ॥ ५-१२४-५७ (३६००१)
पश्य पुत्रांस्तथा भ्रातॄञ्ज्ञातीन्संबन्धिनस्तथा ।
त्वत्कृते न विनश्येयुरिमे भरतसत्तमाः ॥ ५-१२४-५८ (३६००२)
अस्तु शेषं कौरवाणां मा पराभूदिदं कुलम् ।
कुलघ्न इति नोच्येथा नष्टकीर्तिर्नराधिप ॥ ५-१२४-५९ (३६००३)
त्वामेव स्थापयिष्यन्ति यौवराज्ये महारथाः ।
महाराज्येऽपि पितरं धृतराष्ट्रं जनेश्वरम् ॥ ५-१२४-६० (३६००४)
मा तात श्रियमायान्तीमवमंस्थाः समुद्यताम् ।
अर्धं प्रदाय पार्थेभ्यो महतीं श्रियमाप्नुहि ॥ ५-१२४-६१ (३६००५)
पाण्डवैः संशमं कृत्वा कृत्वा च सुहृदां वचः ।
संप्रीयमाणो मित्रैश्च चिरं भद्राण्यवाप्स्यसि ॥ ॥ ५-१२४-६२ (३६००६)

इति श्रीमन्महाभारते उद्योगपर्वणि भगवद्यानपर्वणि
चतुर्विंशत्यधिकशततमोऽध्यायः ॥

Mahabharata - Udyoga Parva - Chapter Footnotes

५-१२४-१९ शास्त्रे शासने ॥
५-१२४-२२ किंपाकं महाकालफलम् ॥
५-१२४-२४ निःश्रेयसं कल्याणम् ॥
५-१२४-२८ गौः भूमिः ॥
५-१२४-३२ उपचरिताः प्रचारिताः ॥
५-१२४-३५ अर्थं कलि कलहहेतम ॥
५-१२४-३६ अनुपायन हीनोपायेन ॥
५-१२४-४४ निर्मितां वशीकरणेनोत्पादिताम् ॥
५-१२४-५२ यस्मिन्नर्जुने जिते सति ते तव जितं जयः स्यात् ॥

---

उद्योगपर्व-अध्यय१२५
॥ श्रीः ॥
५.१२५. अध्यायः १२५

Mahabharata - Udyoga Parva - Chapter Topics
भीष्मद्रोणाभ्यां दुर्योधनंप्रति श्रीकृष्णवचनादरणविधानम् ॥ १ ॥
तथा धृतराष्ट्रेणापि दुर्योधनंप्रति श्रीकृष्णवाक्यप्रत्याख्याने
अनर्थप्राप्तिकथनम् ॥ २ ॥

Mahabharata - Udyoga Parva - Chapter Text

५-१२५-० (३६००७)
वैशंपायन उवाच। ५-१२५-०क्ष् (३७६०)
ततः शान्तनवो भीष्मो दुर्योधनममर्षणम् ।
केशवस्य वचः श्रुत्वा प्रोवाच भरतर्षभ ॥ ५-१२५-१ (३६००८)
कृष्णेन वाक्यमुक्तोऽसि सुहृदां शममिच्छता ।
अन्वपद्यस्व तत्तात मा मन्युवशमन्वगाः । ५-१२५-२ (३६००९)
अकृत्वा वचनं तात केशवस्य महात्मनः ।
श्रेयो न जातु न सुखं न कल्याणमवाप्स्यसि ॥ ५-१२५-३ (३६०१०)
धर्म्यमर्थ्यं महाबाहुराह त्वां तात केशवः ।
तदर्थमभिपद्यस्व मा राजन्नीनशः प्रजाः ॥ ५-१२५-४ (३६०११)
ज्वलितां त्वमिमां लक्ष्मीं भारतीं सर्वराजसु ।
जीवतो धृतराष्ट्रस्य दौरात्म्याद्भ्रंशयिष्यसि ॥ ५-१२५-५ (३६०१२)
आत्मानं च सहामात्यं सपुत्रभ्रातृबान्धवम् ।
अहमित्यनया बुद्ध्या जीविताद्भ्रंशयिष्यतसि ॥ ५-१२५-६ (३६०१३)
अतिक्रामन्केशवस्य तथ्यं वचनमर्थवत् ।
पितुश्च भारतश्रेष्ठ विदुरस्य च धीमतः ॥ ५-१२५-७ (३६०१४)

मा कुलघ्नः कुपुरुषो दुर्मतिः कापथं गमः ।
मातरं पितरं चैव मा मञ्जीः शोकसागरे ॥ ५-१२५-८ (३६०१५)
अथ द्रोणोऽब्रवीत्तत्र दुर्योधनमिदं वचः ।
अमर्षवशमापन्नं निःश्वसन्तं पुनःपुनः ॥ ५-१२५-९ (३६०१६)
धर्मार्थयुक्तं वचनमाह त्वां तात केशवः ।
तथा भीष्मः शान्तनवस्तज्जुषस्व नराधिप ॥ ५-१२५-१० (३६०१७)
प्राज्ञौ मेधाविनौ दान्तावर्थकामौ बहुश्रुतौ ।
आहतुस्त्वां हितं वाक्यं तज्जुषस्व नराधिप ॥ ५-१२५-११ (३६०१८)
अनुतिष्ठ महाप्राज्ञ कृष्णभीष्मौ यदूचतुः ।
माधवं बुद्धिमोहेन माऽवमंस्थाः परन्तप ॥ ५-१२५-१२ (३६०१९)
ये त्वां प्रोत्साहयन्त्येते नैते कृत्याय कर्हिचित् ।
वैरं परेषां ग्रीवायां प्रतिमोक्ष्यन्ति संयुगे ॥ ५-१२५-१३ (३६०२०)
मा जीघनः प्रजाः सर्वाः पुत्रान्भ्रातॄंस्तथैव च ।
वासुदेवार्जुनौ यत्र विद्ध्यजेयानलं हि तान् ॥ ५-१२५-१४ (३६०२१)
एतच्चैव मतं सत्यं सुहृदोः कृष्णभीष्मयोः ।
यदि नादास्यसे तात पश्चात्तप्स्यसि भारत ॥ ५-१२५-१५ (३६०२२)
यथोक्तं जामदग्न्येन भूयानेष ततोऽर्जुनः ।
कृष्णो हि देवकीपुत्रो देवैरपि सुदुःसहः ।
किं ते सुखप्रियेणेह प्रोक्तेन भरतर्षभ ॥ ५-१२५-१६ (३६०२३)
एतत्ते सर्वमाख्यातं यथेच्छसि तथा कुरु ।
न हि त्वामुत्सहे वक्तुं भूयो भरतसत्तम ॥ ५-१२५-१७ (३६०२४)
वैशंपायन उवाच। ५-१२५-१८क्ष् (३७६१)
तस्मिन्वाक्यान्तरे वाक्यं क्षत्ताऽपि विदुरोऽब्रवीत् ।
दुर्योधनमभिप्रेक्ष्य धार्तराष्ट्रममर्षणम् ॥ ५-१२५-१८ (३६०२५)
दुर्योधन न शोचामि त्वामहं भरतर्षभ ।
इमौ तु वृद्धौ शोचामि गान्धारीं पितरं च ते ॥ ५-१२५-१९ (३६०२६)
यावनाथौ चरिष्येते त्वया नाथेन दुर्हृदा ।
हतमित्रौ हतामात्यौ लूनपक्षाविवाण्डजौ ॥ ५-१२५-२० (३६०२७)
भिक्षुकौ विचरिष्येते शोचन्तौ पृथिवीमिमाम् ।
कुलघ्नमीदृशं पापं जनयित्वा कुपूरुषम् ॥ ५-१२५-२१ (३६०२८)
अथ दुर्योधं राजा धृतराष्ट्रोऽभ्यभाषत ।
आसीनं भ्रातृभिः सार्धं राजभिः परिवारितम् ॥ ५-१२५-२२ (३६०२९)
दुर्योधन निबोधेदं शौरिणोक्तं महात्मना ।
आदत्स्व शिवमत्यन्तं योगक्षेममवदव्ययम् ॥ ५-१२५-२३ (३६०३०)
अनेन हि सहायेन कृष्णेनाक्लिष्टकर्मणा ।
इष्टान्सर्वानभिप्रायान्प्राप्स्यामः सर्वराजसु ॥ ५-१२५-२४ (३६०३१)

सुसंहतः केशवेन तात गच्छ युधिष्ठिरम् ।
चर स्वस्त्ययनं कृत्स्नं भरतानामनामयम् ॥ ५-१२५-२५ (३६०३२)
वासुदेवेन तीर्थेन तात गच्छस्व संशमम् ।
कालप्राप्तमिदं मन्ये मा त्वं दुर्योधनातिगाः ॥ ५-१२५-२६ (३६०३३)
शमं चेद्याचमानं त्वं प्रत्याख्यास्यसि केशवम् ।
त्वदर्थमभिजल्पन्तं न तवास्त्यपराभवः ॥ ॥ ५-१२५-२७ (३६०३४)

इति श्रीमन्महाभारते उद्योगपर्वणि भगवाद्यनपर्वणि
पञ्चविंशत्यधिकशततमोऽध्यायः ॥
Mahabharata - Udyoga Parva - Chapter Footnotes

५-१२५-२५ सुसंहतः सुष्ठु एकीभूतः ॥
५-१२५-२६ तीर्थेन उपायेन ॥
५-१२५-२७ अपराभवो जयः ॥

---

उद्योगपर्व-अध्यय१२६
॥ श्रीः ॥
५.१२६. अध्यायः १२६

Mahabharata - Udyoga Parva - Chapter Topics
पुनर्भीष्मद्रोणाभ्यां दुर्योधनंप्रति परेषां युद्धसंनाहात्पूर्वमेव
तैःसह शमविधानम् ॥ १ ॥

Mahabharata - Udyoga Parva - Chapter Text

५-१२६-० (३६०३५)
वैशंपायन उवाच। ५-१२६-०क्ष् (३७६२)
धृतराष्ट्रवचः श्रुत्वा भीष्मद्रोणौ समव्यथौ ।
दुर्योधनमिदं वाक्यमूचतुः शासनातिगम् ॥ ५-१२६-१ (३६०३६)
यावत्कृष्णावसन्नद्धौ यावत्तिष्ठति गाण्डिवम् ।
यावद्धौम्यो न मेधाग्नौ जुहोतीह द्विषद्बलम् ॥ ५-१२६-२ (३६०३७)
यावन्न प्रेक्षते क्रूद्धः सेनां तव युधिष्ठिरः ।
ह्रीनिषेवो महेष्वासस्तावच्छाम्यतु वैशसम् ॥ ५-१२६-३ (३६०३८)
यावन्न दृश्यते पार्थः स्वेऽप्यनीके व्यवस्थितः ।
भीमसेनो महेष्वासस्तावच्छाम्यतु वैशसम् ॥ ५-१२६-४ (३६०३९)
यावन्न चरते मार्गान्पृतनामभिधर्षयन् ।
भीमसेनो गदापाणिस्तावत्संशाम्य पाण्डवैः ॥ ५-१२६-५ (३६०४०)

यावन्न शातयत्याजौ शिरांसि गजयोधिनाम् ।
गदया वीरघातिन्या फलानीव वनस्पतेः ।
कालेन परिपक्वानि तावच्छाम्यतु वैशसम् ॥ ५-१२६-६ (३६०४१)
नकुलः सहदेवश्च धृष्टद्युम्नश्च पार्षतः ॥
विराटश्च शिखण्डी च शैशुपालिश्च दंशिताः ॥ ५-१२६-७ (३६०४२)
यावन्न प्रविशन्त्येते नक्रा इव महार्णवम् ।
कृतास्त्राः क्षिप्रमस्यन्तस्तावच्छाम्यतु वैशसम् ॥ ५-१२६-८ (३६०४३)
यावन्न सुकुमारेषु शरीरेषु महीक्षिताम् ।
गार्ध्रपत्राः पतन्त्युग्रास्तावच्छाम्यतु वैशसम् ॥ ५-१२६-९ (३६०४४)
चन्दनागुरुदिग्धेषु हारनिष्कधरेषु च ।
नोरस्सु यावद्योधानां महेष्वासैर्महेषवः ॥ ५-१२६-१० (३६०४५)
कृतस्त्रैः क्षिप्रमस्यद्भिर्दूरपातिभिरायसाः ।
अभिलक्ष्यैर्निपात्यन्ते तावच्छाम्यतु वैशसम् ॥ ५-१२६-११ (३६०४६)
अभिवादयमानं त्वां शिरसा राजकुञ्जरः ।
पाणिभ्यां प्रतिगृह्णातु धर्मराजो युधिष्ठिरः ॥ ५-१२६-१२ (३६०४७)
ध्वजाङ्कुशपताकाङ्कं दक्षिणं ते सुदक्षिणः ।
स्कन्धे निक्षिपतां बहुं शान्तये भरतर्षभ ॥ ५-१२६-१३ (३६०४८)
रत्नौषधिसमेतेन रत्नाङ्गुलितलेन च ।
उपविष्टस्य पृष्ठं ते पाणिना परिमार्जतु ॥ ५-१२६-१४ (३६०४९)
शालस्कन्धो महाबहुस्त्वां स्वजानो वृकोदरः
।५-१२६-१५ब्साम्नाऽभिवदतां चापि शान्तये भरतर्षभ ॥
५-१२६-१५ (३६०५०)
अर्जुनेन यमाभ्यां च त्रिभिस्तैरभिवादितः ।
मूर्ध्नि तान्समुपाघ्राय प्रेम्णाऽभिवद पार्थिव ॥ ५-१२६-१६ (३६०५१)
दृष्ट्वा त्वां पाण्डवैर्वीरैर्भ्रातृभिः सह संगतम् ।
यावदानन्दजाश्रूणि प्रन्मुञ्चन्तु नराधिपाः ॥ ५-१२६-१७ (३६०५२)
घुष्यतां राजधानीषु सर्वसंपन्महीक्षिताम् ।
पृथिवी भ्रातृभावेन भुज्यतां विज्वरो भव ॥ ॥ ५-१२६-१८ (३६०५३)

इति श्रीमन्महाभारते उद्योगपर्वणि भगवद्यानपर्वणि
षड्विंशत्यधिकशततमोऽध्यायः ॥

Mahabharata - Udyoga Parva - Chapter Footnotes

५-१२६-२ मेधाग्नौ संग्रामाग्नौ ।मेघो यज्ञः ॥
५-१२६-३ वैशसं वैरम् ॥

---

उद्योगपर्व-अध्यय१२७

॥ श्रीः ॥
५.१२७. अध्यायः १२७

Mahabharata - Udyoga Parva - Chapter Topics
दुर्योधनेन श्रीकृष्णंप्रति स्वस्मिन्नपराधलेशोऽपि नास्तीति कथनम्
॥ १ ॥
भीष्मादिरक्षितस्य स्वस्याजय्यत्वकथनपूर्वकं
युद्धे निधनसंभवेऽपि पाण्डवेभ्यः
सूच्यग्रपरिमितभूमेरप्यप्रदानवचनम् ॥ २ ॥

Mahabharata - Udyoga Parva - Chapter Text

५-१२७-० (३६०५४)
वैशंपायन उवाच। ५-१२७-०क्ष् (३७६३)
श्रुत्वा दुर्योधनो वाक्यमप्रियं कुरुसंसदि ।
प्रत्युवाच महाबाहुं वासुदेवं यशस्विनम् ॥ ५-१२७-१ (३६०५५)
प्रसमीक्ष्य भवानेतद्वक्तुमर्हति केशव ।
मामेव हि विशेषेण विभाष्य परिगर्हसे ॥ ५-१२७-२ (३६०५६)
भक्तिवादेन पार्थानामकस्मान्मधुसूदन ।
भवान्गर्हयति नित्यं किं समीक्ष्य बलाबलम् ॥ ५-१२७-३ (३६०५७)
भवान्क्षत्ता च राजा वाऽप्याचार्यो वा पितामहः ।
मामेव परिगर्हन्ते नान्यं कंचन पाण्डवम् ॥ ५-१२७-४ (३६०५८)
न चाहं लक्षये कंचिद्व्यभिचारमिहात्मनः ।
अथ सर्वे भवन्तो मां विद्विषन्ति सराजकाः ॥ ५-१२७-५ (३६०५९)
न चाहं कंचिदत्यर्थमपराधमरिन्दम ।
विचिन्तयन्प्रपश्यामि सुसूक्ष्ममपि केशव ॥ ५-१२७-६ (३६०६०)
प्रियाभ्युपगते द्यूते पाण्डवा मधूसूदन ।
जिताः शकुनिना राज्यं तत्र किं मम दुष्कृतम् ॥ ५-१२७-७ (३६०६१)
यत्पुनर्द्रविणं किंचित्तत्राजीयन्त पाण्डवाः ।
तेभ्य एवाभ्यनुज्ञातं तत्तद मधुसूदन ॥ ५-१२७-८ (३६०६२)
अपराधो न चास्माकं यत्ते ह्यक्षैः पराजिताः ।
अजेया जयतां श्रेष्ठ पार्थाः प्रव्राजिता वनम् ॥ ५-१२७-९ (३६०६३)
केन वाऽप्यपवादेन विरुद्ध्यन्त्यरिभिः सह ।
अशक्ताः पाण्डवाः कृष्ण प्रहृष्टाः प्रत्यमित्रवत् ॥ ५-१२७-१० (३६०६४)
किमस्माभिः कृतं तेषां कस्मिन्वा पुनरागसि ।
धार्तराष्ट्राञ्जिघांसन्ति पाण्डवाः सृञ्जयैः सह ॥ ५-१२७-११ (३६०६५)

न चापि वयमुग्रेण कर्मणा वचनेन वा ।
प्रभ्रष्टाः प्रणमामेह भयादपि शतक्रतुम् ॥ ५-१२७-१२ (३६०६६)
न च तं कृष्ण पश्यामि क्षत्रधर्ममनुष्ठितम् ।
उत्सहेत युधा जेतुं यो नः शत्रुनिबर्हण ॥ ५-१२७-१३ (३६०६७)
न हि भीष्मकृपद्रोणाः सकर्णा मधुसूदन ।
देवैरपि युधा जेतुं शक्याः किमुत पाण्डवैः ॥ ५-१२७-१४ (३६०६८)
स्वधर्ममनुपश्यन्तो यदि माधव संयुगे ।
अस्त्रेण निधनं काले प्राप्स्यामः स्वर्ग्यमेव तत् ॥ ५-१२७-१५ (३६०६९)
मुख्यश्चैवैष नो धर्मः क्षत्रियाणां जनार्दन ।
यच्छयीमहि सङ्ग्रामे शरतल्पगता वयम् ॥ ५-१२७-१६ (३६०७०)
ते वयं वीरशयनं प्राप्स्यामो यदि संयुगे ।
अप्रणम्यैव शत्रूणां न नस्तप्स्यन्ति माधव ॥ ५-१२७-१७ (३६०७१)
कश्च जातु कुले जातः क्षत्रधर्मेण वर्तयन् ।
भयाद्वृत्तिं समीक्ष्यैवं प्रणमेदिह कर्हिचित् ॥ ५-१२७-१८ (३६०७२)
उद्यच्छेदेव न नमेदुद्यमो ह्येव पौरुषम् ।
अप्यपर्वणि भज्येत न नमेदिह कर्हिचित् ॥ ५-१२७-१९ (३६०७३)
इति मातङ्गवचनं परिप्सन्ति हितेप्सवः ।
धर्माय चैव प्रणमेद्ब्राह्मणेभ्यश्च मद्विधः ॥ ५-१२७-२० (३६०७४)
अचिन्तयन्कंचिदन्यं यावज्जीवं तथा चरेत् ।
एष धर्मः क्षत्रियाणां मतमेतच्च मे सदा ॥ ५-१२७-२१ (३६०७५)
राज्यांशश्चाभ्यनुज्ञातो यो मे पित्रा पुराऽभवत् ।
न स लभ्यः पुनर्जातु मयि जीवति केशव ॥ ५-१२७-२२ (३६०७६)
यावच्च राजा ध्रियते धृतराष्ट्रो जनार्दन ।
न्यस्तशस्त्रा वयं ते वाऽप्युपजीवाम माधव ।
अप्रदेयं पुरा दत्तं राज्यं परवतो मम ॥ ५-१२७-२३ (३६०७७)
अज्ञानाद्वा भयाद्वाऽपि मयि बाले जनार्दन ।
न तदद्य पुनर्लभ्यं पाण्डवैर्वृष्णिनन्दन ॥ ५-१२७-२४ (३६०७८)
ध्रियमाणे महाबाहौ मयि संप्रति केशव ।
यावद्धि तीक्ष्णया सूच्या विद्धयेदग्रेण केशव ।
तावदप्यपरित्याज्यं भूमेर्नः पाण्डवान्प्रति ॥ ॥ ५-१२७-२५ (३६०७९)

इति श्रीमन्महाभारते उद्योगपर्वणि भगवद्यानपर्वणि
सप्तविंशत्यधिकशततमोऽध्यायः ॥

Mahabharata - Udyoga Parva - Chapter Footnotes

५-१२७-१९ अपर्वणि अप्रस्तावे ॥

उद्योगपर्व-अध्यय१२८
॥ श्रीः ॥
५.१२८. अध्यायः १२८

Mahabharata - Udyoga Parva - Chapter Topics
श्रीकृष्णेन दुर्योधनंप्रति सगर्हणं पाण्डवेषु
तत्कृतापनयानुस्मारणम् ॥ १ ॥
दुर्योधनस्य पाण्डवैरसन्धाने कौरवैर्बन्धनपूर्वकं पाण्डवेभ्यः
स्वसमर्पणप्रतिपादकदुश्शासनवचनश्रवणजकोपात् सभातो
निर्गमनम् ॥ २ ॥
कृष्णेन धृतराष्ट्रंप्रति कुलस्यार्थे दुर्योधनपरित्यागाविधानम् ॥ ३ ॥
तथा सदृष्टान्तप्रदर्शनं दुर्योधनस्य बन्धनपूर्वकं
पाण्डवेभ्यः समर्पणविधानम् ॥ ४ ॥

Mahabharata - Udyoga Parva - Chapter Text

५-१२८-० (३६०८०)
वैशंपायन उवाच ॥ ५-१२८-०क्ष् (३७६४)
ततः प्रहस्य दाशार्हः क्रोधपर्याकुलेक्षणः ।
दुर्योधनमिदं वाक्यमब्रवीत्कुरुसंसदि ॥ ५-१२८-१ (३६०८१)
लप्स्यसे वीरशयनं काममेतदवाप्स्यसि ।
स्थिरो भव सहामात्यो विमर्दो भविता महान् ॥ ५-१२८-२ (३६०८२)
यच्चैतन्मन्यसे मूढ न मे कश्चिद्व्यतिक्रमः ।
पाण्डवेष्विति तत्सर्वं निबोध त्वं नराधिप ॥ ५-१२८-३ (३६०८३)
श्रियां संतप्यमानेन पाण्डवानां महात्मनाम् ।
त्वया दुर्मन्त्रितं द्यूतं सौबलेन च भारत ॥ ५-१२८-४ (३६०८४)
कथं च ज्ञातयस्तात श्रेयांसः साधुसंमताः ।
तथाऽन्याय्यमुपस्थातुं जिह्मेनाजिह्मचारिणः ॥ ५-१२८-५ (३६०८५)
अक्षद्यूतं महाप्रज्ञ सतां मतिविनाशनम् ।
असतां तत्र जायन्ते भेदाश्च व्यसनानि च ॥ ५-१२८-६ (३६०८६)
तदिदं व्यसनं घोरं त्वया द्यूतमुखं कृतम् ।
असमीक्ष्य सदाचारान्सार्धं पापानुबन्धनैः ॥ ५-१२८-७ (३६०८७)
कश्चान्यो भ्रातृभार्यां वै विप्रकर्तुं तथार्हति ।
आनीय च सभां व्यक्तं यथोक्ता द्रौपदी त्वया ॥ ५-१२८-८ (३६०८८)
कुलीना शीलसंपन्ना प्राणेभ्योऽपि गरीयसी ।

महिषी पाण्डुपुत्राणां तथा विनिकृता त्वया ॥ ५-१२८-९ (३६०८९)
जानन्ति कुरवः सर्वे यथोक्ताः कुरुसंसदि ।
दुःशासनेन कौन्तेयाः प्रव्रजन्तः परन्तपाः ॥ ५-१२८-१० (३६०९०)
सम्यग्वृत्तेष्वलुब्धेषु सततं धर्मचारिषु ।
स्वेषु बन्धुषु कः साधुश्चरेदेवमसांप्रतम् ॥ ५-१२८-११ (३६०९१)
नृशंसानामनार्याणां तथा परुषभाषणम् ।
कर्णदुःशासनाभ्यां च त्वया च बहुशः कृतम् ॥ ५-१२८-१२ (३६०९२)
सह मात्रा प्रदग्धुं तान्बालकान्वारणावते ।
आस्थितः परमो यत्नो न समृद्धश्च तत्तव ॥ ५-१२८-१३ (३६०९३)
ऊषुश्च सुचिरं कालं प्रच्छन्नाः पाण्डवास्तदा ।
मात्रा सहैकचक्रायां ब्राह्मणस्य निवेशने ॥ ५-१२८-१४ (३६०९४)
विषेण सर्पबन्धैश्च यतिताः पाण्डवास्त्वया ।
सर्वोपायैर्विनाशाय न समृद्धं च तत्तव ॥ ५-१२८-१५ (३६०९५)
एवंबुद्धिः पाण्डवेषु मिथ्यावृत्तिः सदा भवान् ।
कथं ते नापराधोऽस्ति पाण्डवेषु महात्मसु ॥ ५-१२८-१६ (३६०९६)
गएवंवृत्तः कथं राज्ये स्थातुमर्हसि पापकृत् ।
स राज्याच्च सुखाच्चैव हास्यसे कुलपांसन ॥ ५-१२८-१७ (३६०९७)
यच्चैभ्यो याचमानेभ्यः पित्र्यमंशं न दित्सति ।
तच्च पाप प्रदाताऽसि भ्रष्टैश्वर्यो निपातितः ॥ ५-१२८-१८ (३६०९८)
कृत्वा बहून्यकार्याणि पाण्डवेषु नृशंसवत् ।
मिथ्यावृत्तिरनार्यः सन्नद्य विप्रतिपद्यसे ॥ ५-१२८-१९ (३६०९९)
मातापितृभ्यां भीष्मेण द्रोणेन विदुरेण च ।
शाम्येति मुहुरुक्तोसि न च शाम्यसि पार्थिव ॥ ५-१२८-२० (३६१००)
शमे हि सुमहाँल्लाभस्तव पार्थस्य चोभयोः ।
न च रोचयसे राजन्किमन्यद्बुद्धिलाघवात् ॥ ५-१२८-२१ (३६१०१)
न शर्म प्राप्स्यसे राजन्नुत्क्रम्य सुहृदां वचः ।
अधर्म्यमयशस्यं च क्रियते पार्थिव त्वया ॥ ५-१२८-२२ (३६१०२)
वैशंपायन उवाच। ५-१२८-२३क्ष् (३७६५)
एवं ब्रुवति दाशार्हे दुर्योधनममर्षणम् ।
दुःशासन इदं वाक्यमब्रवीत्करुसंसदि ॥ ५-१२८-२३ (३६१०३)
न चेत्सन्धास्यसे राजन्स्वेन कामेन पाण्डवैः ।
बद्ध्वा किल त्वां दास्यन्ति कुन्तीपुत्राय कौरवाः ॥ ५-१२८-२४ (३६१०४)
वैकर्तनं त्वां च मां च त्रीनेतान्मनुजर्षभ ।
पाण्डवेभ्यः प्रदास्यन्ति भीष्मो द्रोणः पिता च ते ॥ ५-१२८-२५ (३६१०५)
भ्रातुरेतद्वचः श्रुत्वा धार्तराष्ट्रः सुयोधनः ।
क्रुद्धः प्रातिष्ठतोत्थाय महानाग इव श्वसन् ॥ ५-१२८-२६ (३६१०६)

विदुरं च सोमदत्तं च महाराजं च बाह्लिकम् ।
कृपं च सोमदत्तं च भीष्मं द्रोणं जनार्दनम् ॥ ५-१२८-२७ (३६१०७)
सर्वानेताननादृत्य दुर्मतिर्निरपत्रपः ।
अशिष्टवदमर्यादो मानी मान्यावमानिता ॥ ५-१२८-२८ (३६१०८)
तं प्रस्थितमभिप्रेक्ष्य भ्रातरो मनुजर्षभम् ।
अनुजग्मुः सहामात्या राजानश्चापि सर्वशः ॥ ५-१२८-२९ (३६१०९)
सभायामुत्थितं क्रुद्धं प्रस्थितं भ्रातृभिः सह ।
दुर्योधनमभिप्रेक्ष्य भीष्मः शान्तनवोऽब्रवीत् ॥ ५-१२८-३० (३६११०)
धर्मार्थावभिसन्त्यज्य संरम्भं योऽनुमन्यते ।
हसन्ति व्यसने तस्य दुर्हृदो नचिरादिव ॥ ५-१२८-३१ (३६१११)
दुरात्मा राजपुत्रोऽयं धार्तराष्ट्रोऽनुपायवित् ।
मिथ्याभिमानी राज्यस्य क्रोधलोभवशानुगः ॥ ५-१२८-३२ (३६११२)
कालपक्वमिदं मन्ये सर्वं क्षत्रं जनार्दन ।
सर्वे ह्यनुसृता मोहात्पार्थिवाः सह मन्त्रिभिः ॥ ५-१२८-३३ (३६११३)
भीष्मस्याथ वचः श्रुत्वा दाशार्हः पुष्करेक्षणः ।
भीष्मद्रोणमुखान्सर्वानभ्यभाषत वीर्यवान् ॥ ५-१२८-३४ (३६११४)
सर्वेषां कुरुवृद्धानां महानयमतिक्रमः ।
प्रसह्य मन्दमैश्वर्ये न नियच्छन्ति यन्नृपम् ॥ ५-१२८-३५ (३६११५)
तत्र कार्यमहं मन्ये कालप्राप्तमरिन्दमाः ।
क्रियमाणे भवेच्छ्रेयस्तत्सर्वं श्रृणुतानघाः ॥ ५-१२८-३६ (३६११६)
प्रत्यक्षमेतद्भवतां यद्वक्ष्यामि हितं वचः ।
भवतामानुकूल्येन यदि रोचेत भारताः ॥ ५-१२८-३७ (३६११७)
पुत्रो वै भोजराजस्य दुराचारो ह्यनात्मवान् ।
जीवतः पितुरैश्वर्यं हृत्वा मृत्युवशं गतः ॥ ५-१२८-३८ (३६११८)
उग्रसेनसुतः कंसः परित्यक्तः स बान्धवैः ।
ज्ञातीनां हितकामेन मया शस्तो महामृधे ॥ ५-१२८-३९ (३६११९)
आहुकः पुनरस्माभिर्ज्ञातिभिश्चापि सत्कृतः ।
उग्रसेनः कृतो राजा भोजराजन्यवर्धनः ॥ ५-१२८-४० (३६१२०)
संसमेकं परित्यज्य कुलार्थे सर्वयादवाः ।
संभूय सुखमेधन्ते भारतान्धकवृष्णयः ॥ ५-१२८-४१ (३६१२१)
अपि चाप्यवदद्राजन्परमेष्ठी प्रजापतिः ।
व्यूढे देवासुरे युद्धेऽभ्युद्यतेष्वायुधेषु च ॥ ५-१२८-४२ (३६१२२)
द्वैधीभूतेषु लोकेषु विनश्यत्सु च भारत ।
अब्रवीत्तु तदा देवो भगवाँल्लोकभावनः ॥ ५-१२८-४३ (३६१२३)
पराभविष्यन्त्यसुरा दैतेया दानवैः सह ।
आदित्या वसवो रुद्रा भविष्यन्ति दिवौसकः ॥ ५-१२८-४४ (३६१२४)

देवासुरमनुष्याश्च गन्धर्वोरगराक्षसाः ।
अस्मिन्युद्धे सुसंक्रुद्धा हनिष्यन्ति परस्परम् ॥ ५-१२८-४५ (३६१२५)
ग वर्तमानं जगत्सर्वं मुहूर्तान्न भविष्यति।'
इति मत्वाऽब्रवीद्धर्मं परमेष्ठी प्रजापतिः ।
वरुणाय प्रयच्छैतान्बद्ध्वा दैतेयदानवान् ॥ ५-१२८-४६ (३६१२६)
एवमुक्तस्ततो धर्मो नियोगात्परमेष्ठिनः ।
वरुणाय ददौ सर्वान्बद्ध्वा दैतेयदानवान् ॥ ५-१२८-४७ (३६१२७)
तान्बद्ध्वा धर्मपाशैश्च स्वैश्च पाशैर्जलेश्वरः ।
वरुणः सागरे यत्तो नित्यं रक्षति दानवान् ॥ ५-१२८-४८ (३६१२८)
तथा दुर्योधनं कर्णं शकुनिं चापि सौबलम् ।
बद्ध्वा दुःशासनं चापि पाण्डवेभ्यः प्रयच्छत ॥ ५-१२८-४९ (३६१२९)
त्यजेत्कुलार्थे पुरुषं ग्रामस्यार्थे कुलं त्यजेत् ।
ग्रामं जनपदस्यार्थे आत्मार्थे पृथिवीं त्यजेत् ॥ ५-१२८-५० (३६१३०)
राजन्दुर्योधनं बद्ध्वा ततः संशाम्य पाण्डवैः ।
त्वत्कृते न विनश्येयुः क्षत्रियाः क्षत्रियर्षभ ॥ ॥ ५-१२८-५१ (३६१३१)

इति श्रीमन्महाभारते उद्योगपर्वणि भगवद्यानपर्वणि
अष्टाविंशत्यधिकशततमोऽध्यायः ॥

---

उद्योगपर्व-अध्यय१२९
॥ श्रीः ॥
५.१२९. अध्यायः १२९

Mahabharata - Udyoga Parva - Chapter Topics
विदुरेण धृतराष्ट्राज्ञया गान्धार्याः सभां प्रत्यानयनम् ॥ १ ॥
गान्धार्या दुर्योधनं पुनः सभामानाय्य तंप्रति नीतिकथ नपूर्वकं
पाण्डवैः सह शमविधानम् ॥ २ ॥

Mahabharata - Udyoga Parva - Chapter Text

५-१२९-० (३६१३२)
वैशंपायन उवाच। ५-१२९-०क्ष् (३७६६)
कृष्णस्य तु वचः श्रुत्वा धृतराष्ट्रो जनेश्वरः ।
विदुरं सर्वधर्मज्ञं त्वरमाणोऽभ्यभाषत ॥ ५-१२९-१ (३६१३३)
गच्छ तात महाप्राज्ञ गान्धारीं दीर्घदर्शिनीम् ।
आनयेह तया सार्धमनुनेष्यामि दुर्मतिम् ॥ ५-१२९-२ (३६१३४)
यदि सा न दुरात्मानं शमयेद्दुष्टचेतसम् ।

अपि कृष्णस्य सुहृदस्तिष्ठेम वचने वयम् ॥ ५-१२९-३ (३६१३५)
दुर्बुद्धेर्दुःसहायस्य शमार्थं ब्रुवती वचः ॥
अपि नो व्यसनं घोरं दुर्योधनकृतं महत् । ५-१२९-४ (३६१३६)
शमयेच्चिररात्राय योगक्षेमवदव्ययम् ।
राज्ञस्तु वचनं श्रुत्वा विदुरो दीर्घदर्शिनीम् । ५-१२९-५ (३६१३७)
आनयामास गान्धारीं धृतराष्ट्रस्य शासनात् ॥ ५-१२९-६ (३६१३८)
धृतराष्ट्र उवाच। ५-१२९-७क्ष् (३७६७)
एष गान्धारि पुत्रस्ते दुरात्मा शासनातिगः ।
ऐश्वर्यलोभादैश्वर्यं जीवितं च प्रहास्यति ॥ ५-१२९-७ (३६१३९)
अशिष्टवदमर्यादः पापैः सह दुरात्मवान् ।
सभाया निर्गतो मूढो व्यतिक्रम्य सुहृद्वचः ॥ ५-१२९-८ (३६१४०)
वैशंपायन उवाच। ५-१२९-९क्ष् (३७६८)
सा भर्तृवचनं श्रुत्वा राजपुत्री यशस्विनी ।
अन्विच्छन्ती महच्छ्रेयो गान्धारी वाक्यमब्रवीत् ॥ ५-१२९-९ (३६१४१)
आनायय सुतं क्षिप्रं राज्यकामुकमातुरम् ।
नहि राज्यमशिष्टेन शक्यं धर्मार्थलोपिना ।
आप्तुमाप्तं तथाऽपीदमविनीतेन सर्वथा ॥ ५-१२९-१० (३६१४२)
त्वं ह्येवात्र भृशं गर्ह्यो धृतराष्ट्र सुतप्रियः ।
यो जानन्पापतामस्य तत्प्रज्ञामनुवर्तसे ॥ ५-१२९-११ (३६१४३)
स एष काममन्युभ्यां प्रलब्धो लोभमास्थितः ।
अशक्योऽद्य त्वया राजन्विनिवर्तयितुं बलात् ॥ ५-१२९-१२ (३६१४४)
राष्ट्रप्रदाने मूढस्य बालिशस्य दुरात्मनः ।
दुःसहायस्य लुब्धस्य धृतराष्ट्रोऽश्नुते फलम् ॥ ५-१२९-१३ (३६१४५)
कथं हि स्वजने भेदमुपेक्षेत महीपतिः ।
भिन्नं हि स्वजनेन त्वां प्रहरिष्यन्ति शत्रवः ॥ ५-१२९-१४ (३६१४६)
या हि शक्या महाराज साम्ना भेदेन वा पुनः ।
निस्तर्तुमापदः स्वेषु दण्डं कस्तत्र पातयेत् ॥ ५-१२९-१५ (३६१४७)
वैशंपायन उवाच। ५-१२९-१६क्ष् (३७६९)
शासनाद्धृतराष्ट्रस्य दुर्योधनममर्षणम् ।
मातुश्च वचनात्क्षत्ता सभां प्रावेशयत्पुनः ॥ ५-१२९-१६ (३६१४८)
स मातुर्वचनाकाङ्क्षी प्रविवेश पुनः सभाम् ।
अभिताम्रेक्षणः क्रोधान्निश्वसन्निव पन्नगः ॥ ५-१२९-१७ (३६१४९)
तं प्रविष्टमभिप्रेक्ष्य पुत्रमुत्पथमास्थितम् ।
विगर्हमाणा गान्धारी शमार्थं वाक्यमब्रवीत् ॥ ५-१२९-१८ (३६१५०)
दुर्योधन निबोधेदं वचनं मम पुत्रक ।
हितं ते सानुबन्धस्य तथाऽऽयत्यांसुखोदयम् ॥ ५-१२९-१९ (३६१५१)

दुर्योधन यदाह त्वां पिता भरतसत्तम ।
भीष्मो द्रोणः कृपः क्षत्ता सुहृदां कुरु तद्वचः ॥ ५-१२९-२० (३६१५२)
भीष्मस्य तु पितुश्चैव मम चापचितिः कृता ।
भवेद्द्रोणमुखानां च सुहृदां शाम्यता त्वया ॥ ५-१२९-२१ (३६१५३)
न हि राज्यं महाप्राज्ञ स्वेन कामेन शक्यते ।
अवाप्तुं रक्षितुं वाऽपि भोक्तुं भरतसत्तम ॥ ५-१२९-२२ (३६१५४)
न ह्यवश्येन्द्रियो राज्यमश्नीयाद्दीर्घमन्तरम् ।
विजितात्मा तु मेधावी स राज्यमभिपालयेत् ॥ ५-१२९-२३ (३६१५५)
कामक्रोधौ हि पुरुषमर्थेभ्यो व्यपकर्षतः ।
तौ तु शत्रू विनिर्जित्य राजा विजयते महीम् ॥ ५-१२९-२४ (३६१५६)
लोकेश्वर प्रभुत्वंहि महदेतद्दुरात्मभिः ।
राज्यं नामेप्सितं स्थानं न शक्यमभिरक्षितुम् ॥ ५-१२९-२५ (३६१५७)
इन्द्रियाणि महत्प्रेप्सुर्नियच्छेदर्थधर्मयोः ।
इन्द्रियैर्नियतैर्बुद्धिर्वर्धतेऽग्निरिवेन्धनैः ॥ ५-१२९-२६ (३६१५८)
अविधेयानि हीमानि व्यापादयितुमप्यलम् ।
अविधेया इवादान्ता हयाः पथि कुसारथिम् ॥ ५-१२९-२७ (३६१५९)
अविजित्य य आत्मानममात्यान्विजिगीषते ।
अमित्रान्वाऽजितामात्यः सोऽवशः परिहीयते ॥ ५-१२९-२८ (३६१६०)
आत्मानमेव प्रथमं द्वेष्यरूपेण योजयेत् ।
ततोऽमात्यानमित्रांश्च न मोघं विजिगीषते ॥ ५-१२९-२९ (३६१६१)
वश्येन्द्रियं जितामात्यं धृतदण्डं विकारिषु ।
परीक्ष्यकारिणं धीरमत्यर्थं श्रीर्निषेवते ॥ ५-१२९-३० (३६१६२)
क्षुद्राक्षेणेव जालेन झषावपिहितावुभौ ।
कामक्रोधौ शरीरस्थौ प्रज्ञानं तौ विलुम्पतः ॥ ५-१२९-३१ (३६१६३)
याभ्यां हि देवाः स्वर्यातुः स्वर्गस्य पिदधुर्मुखम् ।
बिभ्यतोऽनुपरागस्य कामक्रोधौ स्म वर्धितौ ॥ ५-१२९-३२ (३६१६४)
कामं क्रोधं च लोभं च दम्भं दर्पं च भूमिपः ।
सम्यग्विजेतुं यो वेद स महीमभिजायते ॥ ५-१२९-३३ (३६१६५)
सततं निग्रहे युक्त इन्द्रियाणां भवेन्नृपः ।
ईप्सन्नर्थं च धर्मं च द्विषतां च पराभवम् ॥ ५-१२९-३४ (३६१६६)
कामाभिभूतः क्रोधाद्वा यो मिथ्या प्रतिपद्यते ।
स्वेषु चान्येषु वा तस्य न सहाया भवन्त्युत ॥ ५-१२९-३५ (३६१६७)
एकीभूतैर्महाप्राज्ञैः शूरैररिनिबर्हणैः ।
पाण्डवैः पृथिवीं तात भोक्ष्यसे सहितः सुखी ॥ ५-१२९-३६ (३६१६८)
यथा भीष्मः शान्तनवो द्रोणश्चापि महारथः ।
आहतुस्तात तत्सत्यमजेयौ कृष्णपाण्डवौ ॥ ५-१२९-३७ (३६१६९)

प्रपद्यष्व महाबाहुं कृष्णमक्लिष्टकारिणम् ।
प्रसन्नो हि सुखाय स्यादुभयोरेव केशवः ॥ ५-१२९-३८ (३६१७०)
सुहृदामर्थकामानां यो न तिष्ठति शासने ।
प्राज्ञानां कृतविद्यानां स नरः शत्रुनन्दनः ॥ ५-१२९-३९ (३६१७१)
न युद्धे तात कल्याणं न धर्मार्थौ कुतः सुखम् ।
न चापि विजयो नित्यं मा युद्धे चेत आधिथाः ॥ ५-१२९-४० (३६१७२)
भीष्मेण हि महाप्राज्ञ पित्रा ते बाह्लिकेन च ।
दत्तोंऽशः पाण्डुपुत्राणां भेदाद्भतैररिन्दम ॥ ५-१२९-४१ (३६१७३)
तस्य चैतत्प्रदानस्य फलमद्यानुपश्यसि ।
यद्भुङ्क्षे पृथिवीं कृत्स्नां शूरैर्निहतकण्टकाम् ॥ ५-१२९-४२ (३६१७४)
प्रयच्छ पाण्डुपुत्राणां यथोचितमरिन्दम ।
यदीच्छसि सहामात्यो भोक्तुमर्धं प्रदीयताम् ॥ ५-१२९-४३ (३६१७५)
अलमर्धं पृथिव्यास्ते महामात्यस्य जीवितुम् ।
सुहृदां वचने तिष्ठन्यशः प्राप्स्यति भारत ॥ ५-१२९-४४ (३६१७६)
श्रीमद्भिरात्मवद्भिस्तैर्बुद्धिमद्भिर्जितेन्द्रियैः ।
पाण्डवैर्विग्रहस्तात भ्रंशयेन्महतः सुखात् ॥ ५-१२९-४५ (३६१७७)
निगृह्य सुहृदां मन्युं शाधि राज्यं यथोचितम् ।
स्वमंशं पाण्डुपुत्रेभ्यः प्रदाय भरतर्षभ ॥ ५-१२९-४६ (३६१७८)
अलमङ्ग निकारोऽयं त्रयोदशसमाः कृतः ।
शमयैनं महाप्राज्ञ कामक्रोधसमेधितम् ॥ ५-१२९-४७ (३६१७९)
न चैष शक्तः पार्थानां यस्त्वदर्थमभीप्सति ।
सूतपुत्रो दृढक्रोधो भ्राता दुःशासनश्च ते ॥ ५-१२९-४८ (३६१८०)
भीष्मे द्रोणे कृपे कर्णे भीमसेने धनञ्जये ।
धृष्टद्युम्ने च संक्रुद्धे न स्युः सर्वाः प्रजा ध्रुवम् ॥ ५-१२९-४९
(३६१८१)
अमर्षवशमापन्नो मा कुरूंस्तात जीघनः ।
एषा हि पृथिवी कृत्स्ना मा गमत्त्वत्कृते वधम् ॥ ५-१२९-५० (३६१८२)
यच्च त्वं मन्यसे मूढ भीष्मद्रोणकृपादयः ।
योत्स्यन्ते सर्वशक्त्येति नैतदद्योपपद्यते ॥ ५-१२९-५१ (३६१८३)
समं हि राज्यं प्रीतिश्च स्थानं हि विदितात्मनाम् ।
पाण्डवेष्वथ युष्मासु धर्मस्त्वभ्यधिकस्ततः ॥ ५-१२९-५२ (३६१८४)
राजपिण्डभयादेते यदि हास्यन्ति जीवितम् ।
न हि शक्ष्यन्ति राजानं युधिष्ठिरमुदीक्षितुम् ॥ ५-१२९-५३ (३६१८५)
न लोभादर्थसंपत्तिर्नराणामिह दृश्यते ।
तदलं तात लोभेन प्रशाम्य भरतर्षभ ॥ ॥ ५-१२९-५४ (३६१८६)

इति श्रीमन्महाभारते उद्योगपर्वणि भगवद्यानपर्वणि
एकोनत्रिंशदधिकशततमोऽध्यायः ॥
Mahabharata - Udyoga Parva - Chapter Footnotes

५-१२९-१९ आयत्यां परिणामे ॥
५-१२९-२१ अपचितिः पूजा ॥
५-१२९-२३ दीर्घमन्तरं चेरकालम् ॥
५-१२९-२९ महद्राज्यं ।महद्राज्यविशालयोरिति विश्वः ॥
५-१२९-३१ क्षुद्राक्षेण सूक्ष्मच्छिद्रेण ॥
५-१२९-३२ याभ्यां पिदधुः तौ कामक्रोधावित्यध्याहारेण योजना ॥
५-१२९-३३ अभिजायते शास्ति ॥
५-१२९-४७ निकारः अपकारः ॥

---

उद्योगपर्व-अध्यय१३०
॥ श्रीः ॥
५.१३०. अध्यायः १३०

Mahabharata - Udyoga Parva - Chapter Topics
मातृवाक्यमनादृत्य निर्गतेन दुर्योधनेन कर्णादिभिः सहालोच्य
कृष्णबन्धननिर्धारणम् ॥१ ॥
इङ्गितज्ञेन सात्यकिना कृष्णादिषु तन्नवेदनम् ॥२ ॥
धृतराष्ट्रेण पुनर्दुर्योधनमानाय्य कृष्णस्य दुर्ग्रहत्वनिरूपणम् ॥३ ॥
विदुरेण संगृह्य कृष्ण चरित्रनिरूपणपूर्वकं दुर्योधनगर्हणम् ॥४ ॥

Mahabharata - Udyoga Parva - Chapter Text

५-१३०-० (३६१८७)
वैशंपायन उवाच।५-१३०-०क्ष् (३७७०)
तत्तु वाक्यमनादृत्य सोऽर्थवन्मातृभाषितम् ।
पुनः प्रतस्थे संरम्भात्सकाशमकृतात्मनाम् ॥५-१३०-१ (३६१८८)
ततः सभाया निर्गम्य मन्त्रयामास कौरवः ।
सौबलेन मताक्षेण राज्ञा शकुनिना सह ॥५-१३०-२ (३६१८९)
ग दुर्योधनं धार्तराष्ट्रं कर्णं दुःशासनोऽब्रवीति ।
नोचेत्सन्धास्यसे राजन्स्वेन कामेन पाण्डवैः ।
बद्ध्वैव त्वां प्रदास्यन्ति पाण्डुपुत्राय भारत ॥ ५-१३०-३ (३६१९०)
वैकर्तनं त्वां च मां च त्रीनेतान्भरतर्षभ ।
पाण्डवेभ्यः प्रदास्यन्ति भीष्मद्रोणौ पिता च ते ॥५-१३०-४ (३६१९१)

दुःशासनस्य तद्वाक्यं निशम्य भरतर्षभ ।
दुर्योधनो धार्तराष्ट्रो निश्वस्य प्रहसन्निव ॥ ५-१३०-५ (३६१९२)
एकान्तमुपसृत्येह मन्त्रं पुनरमन्त्रयत् ।
सौबलेन मताक्षेण राज्ञा शकुनिना सह ॥' ५-१३०-६ (३६१९३)
दुर्योधनस्य कर्णस्य शकुनेः सौबलस्य च ।
दुःशासनचतुर्थानामिदमासीद्विचेष्टितम् ॥ ५-१३०-७ (३६१९४)
पुराऽयमस्मान्गृह्णाति क्षिप्रकारी जनार्दनः ।
सहितो धृतराष्ट्रेण राज्ञा शान्तनवेन च ॥ ५-१३०-८ (३६१९५)
वयमेव हृषीकेशं निगृह्णीम बलादिव ।
प्रसह्य पुरुषव्याघ्रमिन्द्रो वैरोचनिं यथा ॥ ५-१३०-९ (३६१९६)
श्रुत्वा गृहीतं वार्ष्णेयं पाण्डवा हतचेतसः ।
निरुत्साहा भविष्यन्ति भग्नदंष्ट्रा इवोरगाः ॥ ५-१३०-१० (३६१९७)
अयं ह्येषां महाबाहुः सर्वेषां शर्म वर्म च ।
अस्मिन्गृहीते वरदे ऋषभे सर्वसात्वताम् ।
निरुद्यमा भविष्यन्ति पाण्डवाः सोमकैः सह ॥ ५-१३०-११ (३६१९८)
तस्माद्वयमिहैवैकं केशवं क्षिप्रकारिणम् ।
क्रोशतो धृतराष्ट्रस्य बद्ध्वा योत्स्यामहे रिपून् ॥ ५-१३०-१२ (३६१९९)
वैशंपायन उवाच। ५-१३०-१३क्ष् (३७७१)
तेषां पापमभिप्रायं पापानां दुष्टचेतसाम् ।
इङ्गितज्ञः कविः क्षिप्रमन्वबुद्ध्यत सात्यकिः ॥ ५-१३०-१३ (३६२००)
तदर्थमभिनिष्क्रम्य हार्दिक्येन सहास्थितः ।
अब्रवीत्कृतवर्माणं क्षिप्रं योजय वाहिनीम् ॥ ५-१३०-१४ (३६२०१)
व्यूढानीकः सभाद्वारमुपतिष्ठस्व दंशितः ।
यावदाख्याम्यहं चैतत्कृष्णायाक्लिष्टकारिणे ॥ ५-१३०-१५ (३६२०२)
स प्रविश्य सभां वीरः सिंहो गिरिगुहामिव ।
आचष्ट तमभिप्रायं केशवाय महात्मने ॥ ५-१३०-१६ (३६२०३)
धृतराष्ट्रं ततश्चैव विदुरं चान्वभाषत ।
तेषामेतमभिप्रायमाचचक्षे स्मयन्निव ॥ ५-१३०-१७ (३६२०४)
धर्मादर्थाच्च कामाच्च कर्म साधुविगर्हितम् ।
मन्दाः कर्तुमिहेच्छन्ति न चावाप्यं कथंचन ॥ ५-१३०-१८ (३६२०५)
पुरा विकुर्वते मूढाः पापात्मानः समागताः ।
धर्षिताः काममन्युभ्यां क्रोधलोभवशानुगाः ॥ ५-१३०-१९ (३६२०६)
इमं हि पुण्डरीकाक्षं जिघृक्षन्त्यल्पचेतसः ।
पटेनाग्निं प्रज्वलितं यथा बाला यथा जडाः ॥ ५-१३०-२० (३६२०७)
सात्यकेस्तद्वचः श्रुत्वा विदुरो दीर्घदर्शिवान् ।
धृतराष्ट्रं महाबाहुमब्रवीत्कुरुसंसदि ॥ ५-१३०-२१ (३६२०८)

राजन्परीतकालास्ते पुत्राः सर्वे परन्तप ।
असक्यमयशस्यं च कर्तुं कर्म समुद्यताः ॥ ५-१३०-२२ (३६२०९)
इमं हि पुण्डरीकाक्षमभिभूय प्रसह्य च ।
निग्रहीतुं किलेच्छन्ति सहिता वासवानुजम् ॥ ५-१३०-२३ (३६२१०)
इमं पुरुषशार्दूलमप्रधृष्यं दुरसदम् ।
आसाद्य नभविष्यन्ति पतङ्गा इव पावकम् ॥ ५-१३०-२४ (३६२११)
अयमिच्छन्हि तान्सर्वान्युध्यमानाञ्जनार्दनः ।
सिंहो नागानिव क्रुद्धो गमयेद्यमसादनम् ॥ ५-१३०-२५ (३६२१२)
न त्वयं निन्दितं कर्म कुर्यात्पापं कथंचन ।
न च धर्मादपक्रामदेच्युतः पुरुषोत्तमः ॥ ५-१३०-२६ (३६२१३)
ग यथा वाराणसी दग्धा साश्वा सरथकुञ्जरा ।
सानुबन्धस्तु कृष्णेन काशीनामृषभो हतः ॥ ५-१३०-२७ (३६२१४)
तथा नागपुरं दग्ध्वा शङ्खचक्रगदाधरः ।
स्वयं कालेश्वरो भूत्वा नाशयिष्यति कौरवान् ॥ ५-१३०-२८ (३६२१५)
पारिजातहरं ह्येनमेकं यदुसुखावहम् ।
नाभ्यवर्तत संरब्धो वृत्रहा वसुभिः सह ॥ ५-१३०-२९ (३६२१६)
प्राप्य निर्मोचने पाशान्षट्सहस्रांस्तरस्विनः ।
हतास्ते वासुदेवेन ह्युपसङ्क्रम्य कौरवान् ॥ ५-१३०-३० (३६२१७)
द्वारमासाद्य सौभस्य विधूय गदया गिरिम् ।
द्युमत्सेनः सहामात्यः कृष्णेन विनिपातितः ॥ ५-१३०-३१ (३६२१८)
शेषवत्त्वात्कुरूणां तु धर्मापेक्षी तथाऽच्युतः ।
क्षमते पुण्डरीकाक्षः शक्तः सन्पापकर्मणाम् ॥ ५-१३०-३२ (३६२१९)
एते हि यदि गोविन्दमिच्छन्ति सह राजभिः ।
अद्यैवातिथयः सर्वे भविष्यन्ति यमस्य ते ॥ ५-१३०-३३ (३६२२०)
यथा वायोस्तृणाग्रणि वशं यान्ति बलीयसः ।
तथा चक्रभृतः सर्वे वशमेष्यन्ति कौरवाः ॥ ५-१३०-३४ (३६२२१)
वैशंपायन उवाच।' ५-१३०-३५क्ष् (३७७२)
विदुरेणैवमुक्ते तु केशवो वाक्यमब्रवीत् ।
धृतराष्ट्रमभिप्रेक्ष्य सुहृदां श्रृण्वतां मिथः ॥ ५-१३०-३५ (३६२२२)
राजन्नेते यदि क्रुद्धा मां निगृह्णीयुरोजसा ।
एते वा मामहं वैनाननुजानीहि पार्थिव ॥ ५-१३०-३६ (३६२२३)
एतान्हि सर्वान्संरब्धान्नियन्तुमहमुत्सहे ।
न त्वहं निन्दितं कर्म कुर्यां पापं कथंचन ॥ ५-१३०-३७ (३६२२४)
पाण्डवार्थे हि लुभ्यन्तः स्वार्थान्हास्यन्ति ते सुताः ।
एते चेदेवमिच्छन्ति कृतकार्यो युधिष्ठिरः ॥ ५-१३०-३८ (३६२२५)
अद्यैव ह्यहमेनांश्च ये चैनाननु भारत ।

निगृह्य राजन्पार्थेभ्यो दद्यां किं दुष्कृतं भवेत् ॥ ५-१३०-३९ (३६२२६)
ग एष मे निश्चयो राजन्यद्येषोऽस्य विनिश्चयः ।
नर्दन्तु सहिताः शङ्खाः पणवानकनिस्वनैः ॥ ५-१३०-४० (३६२२७)
अनायासेन पार्थानां पर्वतां च शिवं महत् ।
निगृह्य राजन्पार्थेभ्यो दद्यां चेत्सुकृतं भवेत् ॥' ५-१३०-४१ (३६२२८)
इदं तु न प्रवर्तेयं निन्दितं कर्म भारत ।
सन्निधौ ते महाराज क्रोधजं पापबुद्धिजम् ॥ ५-१३०-४२ (३६२२९)
एष दुर्योधनो राजन्यथेच्छति तथाऽस्तु तत् ।
अहं तु सर्वांस्तनयाननुजानामि ते नृप ॥ ५-१३०-४३ (३६२३०)
एतच्छ्रुत्वा तु विदुरं धृतराष्ट्रोऽभ्यभाषत ।
क्षिप्रमानय तं पापं राज्यलुब्धं सुयोधनम् ॥ ५-१३०-४४ (३६२३१)
सहमित्रं सहामात्यं ससोदर्यं सहानुगम् ।
शक्नुयां यदि पन्थानमवतारयितुं पुनः ॥ ५-१३०-४५ (३६२३२)
ततो दुर्योधनं क्षत्ता पुनः प्रावेशयत्सभाम् ।
अकामं भ्रातृभिः सार्धं राजभिः परिवारितम् ॥ ५-१३०-४६ (३६२३३)
अथ दुरोयधनं राजा धृतराष्ट्रोऽभ्यभाषत ।
कर्णदुःशासनाभ्यां च राजभिश्चापि संवृतम् ॥ ५-१३०-४७ (३६२३४)
नृशंस पापभूयिष्ठ क्षुद्रकर्मसहायवान् ।
पापैः सहायैः संहत्य पापं कर्म चिकीर्षसि ॥ ५-१३०-४८ (३६२३५)
अशक्यमयशस्यं च सद्भिश्चापि विगर्हितम् ।
यथा त्वादृशको मूढो व्यवस्येत्कुलपांसनः ॥ ५-१३०-४९ (३६२३६)
त्वमिमं पुण्डरीकाक्षमप्रधृष्यं दुरासदम् ।
पापैः सहायैः संहत्य निग्रहीतुं किलेच्छसि ॥ ५-१३०-५० (३६२३७)
यो न शक्यो बलात्कर्तुं देवैरपि सवासवैः ।
तं त्वं प्रार्थयसे मन्द बालश्चन्द्रमसं यथा ॥ ५-१३०-५१ (३६२३८)
देवैर्मनुष्यैर्गन्धर्वैरसुरैरुरगैश्च यः ।
न सोढुं समरे शक्यस्तं न बुध्यसि केशवम् ॥ ५-१३०-५२ (३६२३९)
दुर्ग्राह्यः पाणिना वायुर्दुस्पर्शः पाणिना शशी ।
दुर्धरा पृथिवी मूर्ध्ना दुर्ग्राह्यः केशवो बलात् ॥ ५-१३०-५३ (३६२४०)
इत्युक्ते धृतराष्ट्रेण क्षत्ताऽपि विदुरोऽब्रवीत् ।
दुर्योधनमभिप्रेक्ष्य धार्तराष्ट्रममर्षणम् ॥ ५-१३०-५४ (३६२४१)
दुर्योधन निबोधेदं वचनं मम सांप्रतम् ।
सौभद्वारे वानरेन्द्रो द्विविदो नाम नामतः ।
शिलावर्षेण महता छादयामास केशवम् ॥ ५-१३०-५५ (३६२४२)
ग्रहीतुकामो विक्रम्य सर्वयत्नेन माधवम् ।
ग्रहीतुं नाशकच्चैनं तं त्वं प्रार्थयसे बलात् ॥ ५-१३०-५६ (३६२४३)

प्राग्ज्योतिषगतं शौरिं नरकः सह दानवैः ।
ग्रहीतुं नाशकत्तत्र तं त्वं प्रार्थयसे बलात् ॥ ५-१३०-५७ (३६२४४)
अनेकयुगवर्षायुर्निहत्य नरकं मृधे ।
नीत्वा कन्यासहस्राणि उपयेमे यथाविधि ॥ ५-१३०-५८ (३६२४५)
निर्मोचने षट्सहस्राः पाशैर्बद्ध्वा महासुराः ।
ग्रहीतुं नाशकंश्चैनं तं त्वं प्रार्थयसे बलात् ॥ ५-१३०-५९ (३६२४६)
अनेन हि हता बाल्ये पूतना शिशुना तदा ।
गोवर्धनो धारितश्च गवार्थे भरतर्षभ ॥ ५-१३०-६० (३६२४७)
अरिष्टो धेनुकश्चैव चाणूरश्च महाबलः ।
अश्वराजश्च निहतः कंसश्चारिष्टमाचरन् ॥ ५-१३०-६१ (३६२४८)
जरासन्धश्च वक्रश्च शिशुपालश्च वीर्यवान् ।
बाणाश्च निहतः सङ्ख्ये राजानश्च निषूदिताः ॥ ५-१३०-६२ (३६२४९)
वरुणो निर्जितो राजा पावकश्चामितौजसा ।
पारिजातं च हरता जितः साक्षाच्छचीपतिः ॥ ५-१३०-६३ (३६२५०)
एकार्णवे च स्वपता निहतौ मधुकैटभौ ।
जन्मान्तरमुपागम्य हयग्रीवस्तथा हतः ॥ ५-१३०-६४ (३६२५१)
अयं कर्ता न क्रियते कारणं चापि पौरुषे ।
यद्यदिच्छेदयं शौरिस्तत्तत्कुर्यादयत्नतः ॥ ५-१३०-६५ (३६२५२)
तं न बुध्यसि गोविन्द घोरविक्रममच्युतम् ।
आशीविषमिव क्रूद्धं तेजोराशिमनिन्दितम् ॥ ५-१३०-६६ (३६२५३)
प्रधर्षयन्महाबाहुं कृष्णमक्लिष्टकारिणम् ।
पतङ्गोऽग्निमिवासाद्य सामात्यो नभविष्यसि ॥ ॥ ५-१३०-६७ (३६२५४)

इति श्रीमन्महाभारते उद्योगपर्वणि भगवद्यानपर्वणि
त्रिंशदधिकशततमोऽध्यायः ॥
Mahabharata - Udyoga Parva - Chapter Footnotes

५-१३०-९ वैरोचनिं बलिम् ॥
५-१३०-१८ कर्म दूतनिग्रहाख्यम् ॥
५-१३०-३८ पाण्डवार्थे पाण्डवधने ॥
५-१३०-४२ इदं तु कर्म कर्तुमिति शेषः ॥
५-१३०-४९ निर्मोचने नगरविशेषे ॥

---

उद्योगपर्व-अध्यय१३१
॥ श्रीः ॥
५.१३१. अध्यायः १३१

Mahabharata - Udyoga Parva - Chapter Topics
श्रीकृष्णेन सभायां विश्वरूपप्रदर्शनम् ॥ १ ॥
कृष्णप्रसादाल्लब्धचक्षुषा धृतराष्ट्रेण कृष्णं
दृष्टवता वक्षुषा इतरेषामदि दृक्षया कृष्णवरात्पुनः
स्वचक्षुषोरन्तर्धानाधिगमः ॥ २ ॥
कृष्णेन तद्रूपोपसंहारपूर्वकं पूर्वरूपं स्वीकृत्य रथाधिरोहणेन
कुन्तीसमीपगमनम् ॥ ३ ॥

Mahabharata - Udyoga Parva - Chapter Text

५-१३१-० (३६२५५)
वैशंपायन उवाच । ५-१३१-०क्ष् (३७७३)
विदुरेणैवमुक्तस्तु केशवः शत्रुपूगहा ।
दुर्योधनं धार्तराष्ट्रमभ्यभाषत वीर्यवान् ॥ ५-१३१-१ (३६२५६)
एकोऽहमिति यन्मोहान्मन्यसे मां सुयोधन ।
परिभूय सुदुर्बुद्धे ग्रहीतुं मां चिकीर्षसि ॥ ५-१३१-२ (३६२५७)
इहैव पाण्डवाः सर्वे तथैवान्धकवृष्णयः ।
इहादित्याश्च रुद्राश्च वसवश्च महर्षिभिः ॥ ५-१३१-३ (३६२५८)
एवमुक्त्वा जाहासोच्चैः केशवः परवीरहा ।
तस्य संस्मयतः शौरेर्विद्युद्रूपा महात्मनः ।
ग्युगपच्च विनिष्पेतुः साक्षात्सर्वास्तु देवताः ॥' ५-१३१-४ (३६२५९)
अङ्गुष्ठमात्रास्त्रिदशा बभूवुः पावकार्चिषः ।
तस्य ब्रह्मा ललाटस्थो रुद्रो वक्षसि चाभवत् ॥ ५-१३१-५ (३६२६०)
लोकपाला भुजेष्वासन्नग्निरास्यादजायत ।
आदित्याश्चैव साध्याश्च वसवोऽथाश्विनावपि ॥ ५-१३१-६ (३६२६१)
मरुतश्च सहेन्द्रेण विश्वेदेवास्तथैव च ।
बभूवुश्चैव यक्षाश्च गन्धर्वोरगराक्षसाः ॥ ५-१३१-७ (३६२६२)
प्रादुरास्तां तथा दोर्भ्यां सङ्कर्षणधनञ्जयौ ।
दक्षिणेऽथार्जुनो धन्वी हली रामश्च सव्यतः ॥ ५-१३१-८ (३६२६३)
भीमो युधिष्ठिरश्चैव माद्रीपुत्रौ च पृष्ठतः ।
अन्धका वृष्णयश्चैव प्रद्युम्नपरमुखास्ततः ॥ ५-१३१-९ (३६२६४)
अग्रे बभूवुः कृष्णस्य समुद्यतमहायुधाः ।
शङ्खचक्रगदाशक्तिशार्ङ्गलाङ्गलनन्दकाः ॥ ५-१३१-१० (३६२६५)
अदृश्यन्तोद्यतान्येव सर्वप्रहरणानि च ।
नानाबाहुषु कृष्णस्य दीप्यमानानि सर्वशः ॥ ५-१३१-११ (३६२६६)
नेत्राभ्यां नासिकाभ्यां च श्रोत्राभ्यां च समन्ततः ।

प्रादुरासन्महारौद्राः सधूमाः पावकार्चिषः ॥ ५-१३१-१२ (३६२६७)
रोमकूपेषु च तथा सूर्यस्येव मरीचयः ।
ग्सहस्रचरणः श्रीमाञ्शतबाहुः सहस्रदृक् ॥' ५-१३१-१३ (३६२६८)
तस्य वै नागलोकश्च गुल्फाधो ददृशे तदा ।
चन्द्रसूर्यौ तथा नेत्रे ग्रहः वै सर्वतः स्थिताः ॥ ५-१३१-१४ (३६२६९)
ऊर्ध्वलोकाश्च सर्वेऽपि कुक्षौ तस्य व्यवस्थिताः ।
सरितः सागराश्चैव स्वेदस्तस्य महात्मनः ॥ ५-१३१-१५ (३६२७०)
अस्थीनि पर्वताः सर्वे वृक्षा रोमाणि तस्य हि ।
निमेषणं रात्र्यहनी जिह्वायां शारदा तथा ॥ ' ५-१३१-१६ (३६२७१)
तं दृष्ट्वा घोरमात्मानं केशवस्य महात्मनः ।
न्यमीलयन्त नेत्राणि राजानस्त्रस्तचेतसः ॥ ५-१३१-१७ (३६२७२)
ऋत द्रोणं च भीष्मं च विदुरं च महामतिम् ।
संजयं धृतराष्ट्रं च ऋषींश्चैव तपोधनान् ॥ ५-१३१-१८ (३६२७३)
प्रादात्तेषां स भगवान्दिव्यं चक्षुर्जनार्दनः ॥ ५-१३१-१९ (३६२७४)
ग्धृतराष्ट्राय प्रददौ भगवान्दिव्यचक्षुषी ।
ददर्श परमं रूपं धृतराष्ट्रोऽम्बिकासुतः ॥ ५-१३१-२० (३६२७५)
ततो देवाः सगन्धर्वाः किन्नराश्च महोरगाः ।
ऋषयश्च महाभागा लोकपालैः समन्विताः ।
प्रणम्य शिरसा देवं तुष्टुवुः प्राञ्जलिस्थिताः ॥ ५-१३१-२१ (३६२७६)
क्रोधं प्रभो संहर संहर स्वं
रूपं च यद्दर्शितमात्मसंस्थम् ।
यावत्त्विमे देवगणैः समेता
लोकाः समस्ता भुवि नाशमीयुः ॥ ५-१३१-२२ (३६२७७)
त्वं च कर्ता विकर्ता च त्वमेव परिरक्षसे ।
त्वया व्याप्तमिदं सर्वं जगत्स्थावरजङ्गमम् ॥ ५-१३१-२३ (३६२७८)
कियन्मात्रा महीपालाः किंवीर्याः किंपराक्रमाः ।
तेषामर्थे महाबाहो दिव्यं रूपं प्रदर्शिवान् ।
एवमुच्चारिता वाचः सह देवार्विभुं तदा ॥' ५-१३१-२४ (३६२७९)
तद्दृष्ट्वा महदाश्चर्यं माधवस्य सभातले ।
देवदुन्दुभयो नेदुः पुष्पवर्षं पपात च ॥ ५-१३१-२५ (३६२८०)
धृतराष्ट्र उवाच। ५-१३१-२६क्ष् (३७७४)
त्वमेव पुण्डरीकाक्ष सर्वस्य जगतो हितः ।
तस्मान्मे यादवश्रेष्ठ प्रसादं कर्तुमर्हसि ॥ ५-१३१-२६ (३६२८१)
भगवन्मम नेत्राभ्यामन्तर्धानं वृणे पुनः ।
भवन्तं दृष्टवानस्मि नान्यं द्रष्टुमिहोत्सहे ॥ ५-१३१-२७ (३६२८२)
ततोऽब्रवीन्महाबाहुर्धृतराष्ट्रं जनार्दनः ।

अदृश्यमाने नेत्रे द्वे भवेतां कुरुनन्दन ॥ ५-१३१-२८ (३६२८३)
तत्राद्भुतं महाराज धृतराष्ट्रस्य चक्षुषी ।
लब्धवान्वासुदेवाच्च विश्वरूपदिदृक्षया ॥ ५-१३१-२९ (३६२८४)
लब्धचक्षुषमासीनं धृतराष्ट्रं नराधिपाः ।
विस्मिता ऋषिभिः सार्धं तुष्टुवुर्मधुसूदनम् ॥ ५-१३१-३० (३६२८५)
चचाल च मही कृत्स्ना सागरश्चापि चुक्षुभे ।
विस्मयं परमं जग्मुः पार्थिवा भरतर्षभ ॥ ५-१३१-३१ (३६२८६)
ततः स पुरुषव्याघ्रः सञ्जहार वपुः स्वकम् ।
तां दिव्यामद्भुतां चित्रामृद्धिमत्तामरिन्दमः ॥ ५-१३१-३२ (३६२८७)
ततः सात्यकिमादाय पाणौ विदुरमेव च ।
ऋषिभिस्तैरनुज्ञातो निर्ययौ मधुसूदनः ॥ ५-१३१-३३ (३६२८८)
ऋषयोऽन्तर्हिता जग्मुस्ततस्ते नारदादयः ।
तस्मिन्कोलाहले वृत्ते तदद्भुतमिवाभवत् ॥ ५-१३१-३४ (३६२८९)
तं प्रस्थितमभिप्रेक्ष्य कौरवाः सह राजभिः ।
अनुजग्मुर्नरव्याघ्रं देवा इव शतक्रतम् ॥ ५-१३१-३५ (३६२९०)
अचिन्तयन्नमेयात्मा सर्वं तद्राजमण्डलम् ।
निश्चक्राम ततः शौरिः सधूम इव पावकः ॥ ५-१३१-३६ (३६२९१)
ततो रथेन शुभ्रेण महता किङ्किणीकिना ।
हेमजालविचित्रेण लघुना मेघनादिना ॥ ५-१३१-३७ (३६२९२)
सूपस्करेण शुभ्रेण वैयाघ्रेण वरूथिना ।
शैब्यसुग्रीवयुक्तेन प्रत्यदृश्यत दारुकः ॥ ५-१३१-३९अतथैव
रथमास्थाय कृतवर्मा महारथः ।
वृष्णीनां संमतो वीरो हार्दिक्यः समदृश्यत ॥ ५-१३१-३८ (३६२९३)
उपस्थितरथं शौरिं प्रयास्यन्तमरिन्दमम् ।
धृतराष्ट्रो महाराजः पुनरेवाभ्यभाषत ॥ ५-१३१-४० (३६२९४)
यावद्बलं मे पुत्रेषु पश्यतस्ते जनार्दन ।
प्रत्यक्षं ते न ते किंचित्परोक्षं शत्रुकर्शन ॥ ५-१३१-४१ (३६२९५)
कुरूणां शममिच्छन्तं यतमानं च केशव ।
विदित्वैतामवस्थां मे नातिशङ्कितुमर्हसि ॥ ५-१३१-४२ (३६२९६)
न मे पापोऽस्त्यभिप्रायः पाण्डवान्प्रति केशव ।
ज्ञातमेव हितं वाक्यं यन्मयोक्तः सुयोधनः ॥ ५-१३१-४३ (३६२९७)
जानन्ति कुरवः सर्वे राजानश्चैव पार्थिवाः ।
शमे प्रयतमानं मां सर्वयत्नेन माधव ॥ ५-१३१-४४ (३६२९८)
वैशंपायन उवाच। ५-१३१-४५क्ष् (३७७५)
ततोऽब्रवीन्महाबाहुर्धृतराष्ट्रं जनार्दनः ।
द्रोणं पितामहं भीष्मं क्षत्तारं बाह्लिकं कृपम् ॥ ५-१३१-४५ (३६२९९)

प्रत्यक्षमेतद्भवतां यद्वृत्तं कुरुसंसदि ।
यथा चाशिष्टवन्मन्दो रोषादद्य समुत्थितः ॥ ५-१३१-४६ (३६३००)
वदत्यनीशमात्मानं धृतराष्ट्रो महीपतिः ।
आपृच्छे भवतः सर्वान्गमिष्यामि युधिष्ठिरम् ॥ ५-१३१-४७ (३६३०१)
आमन्त्र्य प्रस्थितं शौरिं रथस्थं पुरुषर्षभ ।
अनुजग्मुर्महेष्वासाः प्रवीरा भरतर्षभाः ॥ ५-१३१-४८ (३६३०२)
भीष्मो द्रोणः कृपः क्षत्ता धृतराष्ट्रोऽथ बाह्लिकः ।
अश्वत्थामा विकर्णश्च युयुत्सुश्च महारथः ॥ ५-१३१-४९ (३६३०३)
ततो रथेन शुभ्रेण महता किङ्किणीकिना ।
कुरूणां पश्यतां द्रष्टुं स्वसारं स पितुर्ययौ ॥ ॥ ५-१३१-५० (३६३०४)

इति श्रीमन्महाभारते उद्योगपर्वणि भगवद्यानवर्णि
एकत्रिंशदधिकशततमोऽध्यायः ॥
Mahabharata - Udyoga Parva - Chapter Footnotes

५-१३१-२८ अदृश्यमाने दर्शनशक्तिरहिते ॥
५-१३१-३८ वरूथिना रथगुप्तिमता ॥
५-१३१-४६ मन्दो दुर्योधनः ॥

---

उद्योगपर्व-अध्यय१३२
॥ श्रीः ॥
५.१३२. अध्यायः १३२

Mahabharata - Udyoga Parva - Chapter Topics
कृष्णेन कुन्तींप्रति सप्रणामं सभावृत्तन्तकथनम् ॥ १ ॥
कुन्त्या कृष्णचोदनया तस्मिन् युधिष्ठिराय संदेशप्रेषणम् ॥ २ ।
Mahabharata - Udyoga Parva - Chapter Text

५-१३२-० (३६३०५)
वैशंपायन उवाच। ५-१३२-०क्ष् (३७७६)
प्रविश्याथ गृहं तस्याश्चरणावभिवाद्य च ।
आचख्यौ तत्समासेन यद्वृत्तं कुरुसंसदि ॥ ५-१३२-१ (३६३०६)
वासुदेव उवाच। ५-१३२-२क्ष् (३७७७)
उक्तं बहुविधं वाक्यं ग्रहणीयं सहेतुकम् ।
ऋषिभिश्चैव च मया न चासौ तद्गृहीतवान् ॥ ५-१३२-२ (३६३०७)
कालपक्वमिदं सर्वं सुयोधनवशानुगम् ।
ग सर्वक्षत्रं क्षणेनैव दह्यते पार्थवह्निना ।'

आपृच्छे भवतीं शीघ्रं प्रयास्ये पाण्डवान्प्रति ॥ ५-१३२-३ (३६३०८)
किं वाच्याः पाण्डवेयास्ते भवत्या वचनान्मया ।
तद्ब्रूहि त्वं महाप्राज्ञे शुश्रूषे वचनं तव ॥ ५-१३२-४ (३६३०९)
कुन्त्युवाच। ५-१३२-५क्ष् (३७७८)
ब्रूयाः केशव राजानं धर्मात्मानं युधिष्ठिरम् ।
भूयांस्ते हीयते धर्मो मा पुत्रक वृथा कृथाः ॥ ५-१३२-५ (३६३१०)
श्रोत्रियस्येव ते राजन्मन्दकस्याविपश्चितः ।
अनुवाकहता बुद्धिर्धर्ममेवैकमीक्षते ॥ ५-१३२-६ (३६३११)
अङ्गावेक्षस्व धर्मं त्वं यथा सृष्टः स्वयंभुवा ।
बाहुभ्यां क्षत्रियाः सृष्टा बाहुवीर्योपजीविनः ॥ ५-१३२-७ (३६३१२)
क्रूराय कर्मणे नित्यं प्रजानां परिपालने ।
श्रृणु चात्रोपमामेकां या वृद्धेभ्यः श्रुता मया ॥ ५-१३२-८ (३६३१३)
मुचुकुन्दस्य राजर्षेरददत्पृथिवीमिमाम् ।
पुरा वैश्रवणः प्रीतो न चासौ तद्गृहीतवान् ॥ ५-१३२-९ (३६३१४)
बाहुवीर्यार्जितं राज्यमश्नीयामिति कामये ।
ततो वैश्रवणः प्रीतो विस्मितः समपद्यत ॥ ५-१३२-१० (३६३१५)
मुचुकुन्दस्ततो राजा सोऽन्वशासद्वसुन्धराम् ।
बाहुवीर्यार्जितां सम्यक् क्षत्रधर्ममनुव्रतः ॥ ५-१३२-११ (३६३१६)
यं हि धर्मं चरन्तीह प्रजा राज्ञा सुरक्षिताः ।
चतुर्थं तस्य धर्मस्य राजा विन्देन भारत ॥ ५-१३२-१२ (३६३१७)
राजा चरति चेद्धर्मं देवत्वायैव कल्पते ।
स चेदधर्मं चरति नरकायैव गच्छति ॥ ५-१३२-१३ (३६३१८)
दण्डनीतिः स्वधर्मेण चातुर्वर्ण्यं नियच्छति ।
प्रयुक्तास्वामिना सम्यगधर्मेभ्यो नियच्छति ॥ ५-१३२-१४ (३६३१९)
दण्डनीत्यां यदा राजा सम्यक्कात्स्न्र्येन वर्तते ।
तदा कृतयुं नाम कालः श्रेष्ठः प्रवर्तते ॥ ५-१३२-१५ (३६३२०)
कालो वा कारणं राज्ञो राजा वा कालकारणम् ।
इति ते संशयो मा भूद्राजा कालस्य कारणम् ॥ ५-१३२-१६ (३६३२१)
राजा कृतयुगस्रष्टा त्रेताया द्वापरस्य च ।
युगस्य च चतुर्थस्य राजा भवति कारणम् ॥ ५-१३२-१७ (३६३२२)
कृतस्य करणाद्राजा स्वर्गमत्यन्तमश्नुते ।
त्रेतायाः करणाद्राजा स्वर्गं नात्यन्तमश्नुते ॥ ५-१३२-१८ (३६३२३)
प्रवर्तनाद्द्वापरस्य यथाभागमुपाश्नुते ।
कलेः प्रवर्तनाद्राजा पापमत्यन्तमश्नुते ॥ ५-१३२-१९ (३६३२४)
ततो वसति दुष्कर्मा नरके शाश्वतीः समाः ।
राजदोषेण हि जगत्स्पृश्यते जगतः स च ॥ ५-१३२-२० (३६३२५)

राजधर्मानवेक्षस्व पितृपैतामहोचितान् ।
नैतद्राजर्षिवृत्तं हि यत्र त्वं स्थातुमिच्छसि ॥ ५-१३२-२१ (३६३२६)
न हि वैक्लब्यसंसृष्ट आनृशंस्ये व्यवस्थितः ।
प्रजापालनसंभूतं फलं किंचन लब्धवान् ॥ ५-१३२-२२ (३६३२७)
न ह्येतामाशिषं पाण्डुर्न चाहं न पितामहः ।
प्रयुक्तवन्तः पूर्वं ते यया चरसि मेधया ॥ ५-१३२-२३ (३६३२८)
यज्ञो दानं तपः शौर्यं प्रज्ञा सन्तानमेव च ।
माहात्म्यं बलमोजश्च नित्यमाशंसितं मया ॥ ५-१३२-२४ (३६३२९)
नित्यं स्वाहा स्वधा नित्यं दद्युर्मानुषदेवताः ।
दीर्घमायुर्धनं पुत्रान्सम्यगाराधिताः शुभाः ॥ ५-१३२-२५ (३६३३०)
पुत्रेष्वाशासते नित्यं पितरो दैवतानि च ।
दानमध्ययनं यज्ञः प्रजानां परिपालनम् ॥ ५-१३२-२६ (३६३३१)
एतद्धर्ममधर्मं वा जन्मनैवाभ्यजायथाः ।
ते तु वैद्याः कुले जाता अवृत्त्या तात पीडिताः ॥ ५-१३२-२७ (३६३३२)
यत्र दानपतिं शूरं क्षुधिताः पृथिवीचराः ।
प्राप्य तुष्टाः प्रतिष्ठन्ते धर्मः कोऽभ्यधिकस्ततः ॥ ५-१३२-२८ (३६३३३)
दानेनान्यं बलेनान्यं तथा सूनृतयाऽपरम् ।
सर्वतः प्रतिगृह्णीयाद्राज्यं प्राप्येह धार्मिकः ॥ ५-१३२-२९ (३६३३४)
ब्राह्मणः प्रचरेद्भैक्षं क्षत्रियः परिपालयेत् ।
वैश्यो धनार्जनं कुर्याच्छूद्रः परिचरेच्च तान् ॥ ५-१३२-३० (३६३३५)
भैक्षं विप्रतिषिद्धं ते कृषिर्नैवोपपद्यते ।
क्षत्रियोऽसि क्षतात्त्राता बाहुवीर्योपजीविता ॥ ५-१३२-३१ (३६३३६)
पित्र्यमंशं महाबाहो निमग्नं पुनरुद्धर ।
साम्ना भेदेन दानेन दण्डेनाथ नयेन वा ॥ ५-१३२-३२ (३६३३७)
इतो दुःखतरं किं नु यदहं दीनबान्धवा ।
परपिण्डमुदीक्षे वै त्वां सूत्वा मित्रनन्दन ॥ ५-१३२-३३ (३६३३८)
युध्यस्व राजधर्मेण मा निमज्जीः पितामहान् ।
मा गमः क्षीणपुण्यस्त्वं सानुजः पापिकां गतिं ॥ ॥ ५-१३२-३४ (३६३३९)

इति श्रीमन्महाभारते उद्योगपर्वणि भगवद्यानपर्वणि
द्वात्रिंशदधिकशततमोऽध्यायः ॥

Mahabharata - Udyoga Parva - Chapter Footnotes

५-१३२-५ भूयान् पृथ्वीपालनजो धर्मः ॥
५-१३२-६ श्रोत्रियस्य वेदाध्यायिनः । मन्दकस्य अर्थज्ञानशून्यस्य
। अनुवाकेन अत्यन्तं वेदाक्षसंवृत्त्या हता नष्टाः ॥

५-१३२-२० जगतः दोषेण सच राजा स्पृश्यते ॥
५-१३२-२२ फलं न लब्धवान् असीति शेषः ॥
५-१३२-२५ नित्यमिति । मानुषाश्च देवताश्च सम्यगाराधिताः सत्यः
इह लोके आयुरादीनि परलोकसाधनानि स्वधादीनि सत्कर्माणि च दद्युः ॥
५-१३२-२७ एतत् मद्वाक्यं धर्मं धर्मयुक्तं अधर्मं च जन्मनैव
स्वभावत एव अभ्यजायथाः अभिजानीषे । हे कृष्ण ते तु पाण्डवास्तु
वैद्याः विद्यावन्तः ॥
५-१३२-२९ राज्य राजत्वं क्षत्रियत्वमित्यर्थः ॥

---

उद्योगपर्व-अध्यय१३३
॥ श्रीः ॥
५.१३३. अध्यायः १३३

Mahabharata - Udyoga Parva - Chapter Topics
कुन्त्या युधिष्ठिरबोधनाय कृष्णंप्रति विदुलोपाख्यानकथनम् ॥ १ ॥

Mahabharata - Udyoga Parva - Chapter Text

५-१३३-० (३६३४०)
कुन्त्युवाच। ५-१३३-०क्ष् (३७७९)
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
विदुलायाश्च संवादं पुत्रस्य च परन्तप ॥ ५-१३३-१ (३६३४१)
ततः श्रेयश्च भूयश्च यथावद्वक्तुमर्हसि ।
यशस्विनी मन्युमती कुले जाता विभावरी ॥ ५-१३३-२ (३६३४२)
क्षत्रधर्मरता दान्ता विदुला दीर्घदर्शिनी ।
विश्रुता राजसंसत्सु श्रुतवाक्या बहुश्रुता ॥ ५-१३३-३ (३६३४३)
विदुला नाम राजन्या जगर्हे पुत्रमौरसम् ।
निर्जितं सिन्धुराजेन शयानं दीनचेतसम् ॥ ५-१३३-४ (३६३४४)
विदुलोवाच। ५-१३३-५क्ष् (३७८०)
अनन्दन मया जात द्विषतां हर्षवर्धन ।
न मया त्वं न पित्रा च जातः क्वाभ्यागतोह्यसि ॥ ५-१३३-५ (३६३४५)
निर्मन्युश्चाप्यसङ्ख्येयः पुरुषः क्लीबसाधनः ।
यावज्जीवं निराशोऽसि कल्याणाय धुरं वह ॥ ५-१३३-६ (३६३४६)
माऽऽत्मानमवमन्यस्व मैनमल्पेन बीभरः ।
मनः कृत्वा सुकल्याणं मा भैस्त्वं प्रतिसंहर ॥ ५-१३३-७ (३६३४७)
उत्तिष्ठ हे कापुरुष मा शेष्वैवं पराजितः ।
अमित्रान्नन्दयन्सर्वान्निर्मानो बन्धुशोकदः ॥ ५-१३३-८ (३६३४८)

सुपूरा वै कुनदिका सुपूरो मुषिकाञ्जलिः ।
सुसंतोषः कापुरुषः स्वल्पकेनैव तुष्यति ॥ ५-१३३-९ (३६३४९)
अप्यहेरारुजन्दंष्ट्रामाश्वेव निधनं व्रज ।
अपि वा संशयं प्राप्य जीवितेऽपि पराक्रमेः ॥ ५-१३३-१० (३६३५०)
अप्यरेः श्येनवच्छिद्रं पश्येस्त्वं विपरिक्रमन् ।
विवदन्वाऽथवा तूष्णीं व्योम्नीवापरिशङ्कितः ॥ ५-१३३-११ (३६३५१)
त्वमेवं प्रेतवच्छेषे कस्माद्वज्रहतो यथा ।
उत्तिष्ठ हे कापुरुष मा स्वाप्सीः शत्रुनिर्जितः ॥ ५-१३३-१२ (३६३५२)
माऽस्तं गमस्त्वं कृपणो वि श्रूयस्व स्वकर्मणा ।
मा मध्ये मा जघन्ये त्वं माऽधो भूस्तिष्ठ गर्जितः ॥ ५-१३३-१३ (३६३५३)
अलातं तिन्दुकस्येव मुहूर्तमपि हि ज्वल ।
मा तुषाग्निरिवानर्चिर्धूमायस्व जिजीविषुः ॥ ५-१३३-१४ (३६३५४)
मुहूर्तं ज्वलितं श्रेयो न च धूमायितं चिरम् ।
मा ह स्म कस्यचिद्गेहे जनी राज्ञः स्वरीमृदुः ॥ ५-१३३-१५ (३६३५५)
कृत्वा मानुष्यकं कर्म सृत्वाऽऽजिं यावदुत्तमम् ।
धर्मस्यानृण्यमाप्नोति न चात्मानं विगर्हते ॥ ५-१३३-१६ (३६३५६)
अलब्ध्वा यदि वा लब्ध्वा नानुशोचति पण्डितः ।
आनन्तर्यं चारभते न प्राणानां धनायते ॥ ५-१३३-१७ (३६३५७)
उद्भावयस्वं वीर्यं वा तां वा गच्छ ध्रुवां गतिम् ।
धर्मं पुत्राग्रतः कृत्वा किंनिमित्तं हि जीवसि ॥ ५-१३३-१८ (३६३५८)
इष्टापूर्तं हि ते क्लीब कीर्तिश्च सकला हता ।
विच्छिन्नं भोगमूलं ते किंनिमित्तं हि जीवसि ॥ ५-१३३-१९ (३६३५९)
शत्रुर्निमज्जता ग्राह्यो जङ्घायां प्रपतिष्यता ।
विपरिच्छिन्नमूलोऽपि न विषीदेत्कथंचन ॥ ५-१३३-२० (३६३६०)
उद्यम्य धुरमुत्कर्षेदाजानेयकृतं स्मरन् ।
कुरु सत्वं च मानं च विद्धि पौरुषमात्मनः । ५-१३३-२१ (३६३६१)
उद्भावय कुलं मग्नं त्वत्कृते स्वयमेव हि ।
यस्य वृत्तं न जल्पन्ति मानवा महदद्भुतम् ॥ ५-१३३-२२ (३६३६२)
राशिवर्धनमात्रं स नैव स्त्री न पुनः पुमान् ।
दाने तपसि सत्ये च यस्य नोच्चरितं यशः ॥ ५-१३३-२३ (३६३६३)
विद्यायामर्थलाभे वा मातुरुच्चार एव सः ।
श्रुतेन तपसा वाऽपि श्रिया वा विक्रमेण वा ॥ ५-१३३-२४ (३६३६४)
जनान्योऽभिभवत्यन्यान्कर्मणा हि स वै पुमान् ।
न त्वेव जाल्मीं कापालीं वृत्तिमेषितुमर्हसि ॥ ५-१३३-२५ (३६३६५)
नृशंस्यामयशस्यां च दुःखां कापुरुषोचिताम् ।
यमेनमभिनन्देयुरमित्राः पुरुषं कृशम् ॥ ५-१३३-२६ (३६३६६)

लोकस्य समवज्ञातं निहीनासनवाससम् ।
अहोलाभकरं हीनमल्पजीवनमल्पकम् ॥ ५-१३३-२७ (३६३६७)
नेदृशं बन्धुमासाद्य बान्धवः सुखमेधते ।
अवृत्त्यैव विपत्स्यामो वयं राष्ट्रात्प्रवासिताः ॥ ५-१३३-२८ (३६३६८)
सर्वकामरसैर्हीनाः स्थानभ्रष्टा अकिंचनाः ।
अवल्गुकारिण सत्सु कुलवंशस्य नाशनम् ॥ ५-१३३-२९ (३६३६९)
कलिं पुत्रप्रवादेन सञ्जय त्वामजीजनम् ।
निरमर्षं निरुत्साहं निर्वीर्यमरिनन्दनम् ॥ ५-१३३-३० (३६३७०)
मा स्म सीमन्तिनी काचिज्जनयेत्पुत्रमीदृशम् ।
मा धूमाय ज्वलात्यन्तमाक्रम्य जहि शात्रवान् ॥ ५-१३३-३१ (३६३७१)
ज्वल मूर्धन्यमित्राणां मुहूर्तमपि वा क्षणम् ।
एतावानेव पुरुषो यदमर्षी यदक्षमी ॥ ५-१३३-३२ (३६३७२)
क्षमावान्निरमर्षश्च नैव स्त्री न पुनः पुमान् ।
संतोषो वै श्रियं हन्ति तथाऽनुक्रोश एव च ॥ ५-१३३-३३ (३६३७३)
अनुत्थानभये चोभे निरीहो नाश्नुते महत् ।
एभ्यो निकृतिपापेभ्यः प्रमुञ्चात्मानमात्मना ॥ ५-१३३-३४ (३६३७४)
आयसं हृदयं कृत्वा मृगयस्व पुनः स्वकम् ।
परं विषहते यस्मात्तस्मात्पुरुष उच्यते ॥ ५-१३३-३५ (३६३७५)
तमाहुर्व्यर्थनामानं स्त्रीवद्य इह जीवति ।
शूरस्योर्जितसत्वस्य सिंहविक्रान्तचारिणः ॥ ५-१३३-३६ (३६३७६)
दिष्टभावं गतस्यापि विषये मोदते प्रजा ।
य आत्मनः प्रियमुखे हित्वा मृगयते श्रियम् ॥ ५-१३३-३७ (३६३७७)
अमात्यानामथो हर्षमादधात्यचिरेण सः ॥ ५-१३३-३८ (३६३७८)
पुत्र उवाच। ५-१३३-३९क्ष् (३७८१)
किं नु मे मामपश्यन्त्याः पृथिव्या अपि सर्वया ।
किमाभरणकृत्यं ते किं भोगैर्जीवितेन वा । ५-१३३-३९ (३६३७९)
मातोवाच। ५-१३३-४०क्ष् (३७८२)
ग्पैरर्विहन्यमानस्य जीवितेनापि किं फलम्।'
निर्मन्युकानां ये लोका द्विषन्तस्तानवाप्नुयुः ।
ये त्वादृतात्मनां लोकाः सुहृदस्तान्व्रजन्तु नः ॥ ५-१३३-४० (३६३८०)
भृत्यैर्विहीयमानानां परपिण्डोपजीविनाम् ।
कृपणानामसत्वानां मा वृत्तिमनुवर्तिथाः ॥ ५-१३३-४१ (३६३८१)
अनु त्वां तात जीवन्तु ब्राह्मणाः सुहृदस्तथा ।
पर्यन्यमिव भूतानि देवा इव शतक्रतुम् ॥ ५-१३३-४२ (३६३८२)
यमाजीवन्ति पुरुषं सर्वभूतानि संजय ।
पक्वं द्रुममिवासाद्य तस्य जीवितमर्थवत् ॥ ५-१३३-४३ (३६३८३)

यस्य शूरस्य विक्रान्तैरेधन्ते बान्धवाः सुखम् ।
त्रिदशा इव शक्रस्य साधु तस्येह जीवितम् ॥ ५-१३३-४४ (३६३८४)
स्वबाहुबलमाश्रित्य योहि जीवति मानवः ।
स लोके लभते कीर्तिं परत्र च शुभां गतिम् ॥ ॥ ५-१३३-४५ (३६३८५)

इति श्रीमन्माभारते उद्योगपर्वणि भगवद्यानपर्वणि
त्रयस्त्रिंशदधिकशततमोऽध्यायः ॥

Mahabharata - Udyoga Parva - Chapter Footnotes

५-१३३-२ मन्युमती दैन्यवती ।विभावरी कुपिता।विभावरी रजन्यां च वक्रयोषितीति विश्वः ॥
५-१३३-५ अनन्दन कुपुत्र ।कुत्सार्थेऽत्र नञ् ।५-१३३-६ क्लीबे निर्वीर्यै साधनं बाह्वादिकं यस्य स तथा ॥
५-१३३-७ मा वीभरः मा पालय ।प्रतिसंहर भयमिति शेषः ॥
५-१३३-१० पराक्रमेः पराक्रमं कुरु ॥
५-१३३-११ विवदन् शत्रुजयार्थं अनेकान् पक्षानुद्भावयन्वा तूर्ष्णींभूतोऽरेश्छिद्रं पश्येः ।यथा व्योम्नि अपरिशङ्कितः शत्रोराधिक्याङ्ग्यमपश्यन् श्येनस्तद्वत् ॥
५-१३३-१३ विश्रूयस्व ख्यातो भव ।सामभेदौ जघन्यमध्यमौ ।दानमधमो नीच उपायः।दण्डस्तूतमः।तत्राद्यत्रयकर्ता माभूः किंतु गर्जितो दण्डयितैव भवेत्यर्थः ।ऊर्जित इति वा पाठः ॥
५-१३३-१५ कस्यचिद्राज्ञो गेहे स्वरी गर्दभीव मृदुः अकिञ्चिन्करः जायत इति जनिः पुत्रो माभूत् ॥
५-१३३-१६ आजिं संग्रामम् ॥
५-१३३-१७ प्राणानां प्राणाः बलं तत्साध्यानां कार्याणाम् ।आनन्तर्यं अविच्छेदेन कार्यधारामारभते ।न धनायते धनं आत्मनो नेच्छति।तृष्णं त्यजतीत्यर्थः ॥
५-१३३-१८ ध्रुवां गतिं मरणम्, अग्रत इत्युपहासः ।पृष्ठतः कृत्वेत्यर्थः ॥
५-१३३-२० निमज्जता प्रपतिष्यता च शत्रुर्जङ्घायां ग्राह्यः ।तेनैव सह निमज्जेत्पतेद्वेत्यर्थः ।न विषीदेत् निरुद्यमो न भवेत् ॥
५-१३३-२१ आजानेयाः जात्यश्वाः तेषां कृतं कर्म युद्धेऽनवसादरूपं ॥
५-१३३-२२ त्वत्कृते मग्नमिति संबन्धः ।५-१३३-२३ राशिवर्धनः संख्यापूरको नतु प्रयोजनान्तरार्हः ॥
५-१३३-२४ मातुः उच्चारो विष्ठा ॥
५-१३३-२६ यं एन अमित्रा अभिनन्देषु तं बन्धुं बान्धवः आसाद्य न

सुखमेधत इति तृतीयश्लोकेन संबन्धः ॥
५-१३३-२७ अहोलाभकरं अल्पेऽपि लाभे अहो लाभो जात इति विस्मयं कुर्वाणम् ॥
५-१३३-३७ दिष्टभावं मरणम् ॥

---

उद्योगपर्व-अध्यय१३४
॥ श्रीः ॥
५.१३४. अध्यायः १३४

Mahabharata - Udyoga Parva - Chapter Topics
कुन्त्या विदुलोपाख्यानकथनम् ॥ १ ॥

Mahabharata - Udyoga Parva - Chapter Text

५-१३४-० (३६३८६)
विदुलोवाच। ५-१३४-०क्ष् (३७८३)
अथैतस्यामवस्थायां पौरुषं हातुमिच्छसि ।
निहीनसेवितं मार्गं गमिष्यस्यचिरादिव ॥ ५-१३४-१ (३६३८७)
यो हि तेजो यथाशक्ति न कर्शयति विक्रमात् ।
क्षत्रियो जीविताकाङ्क्षी स्तेन इत्येव तं विदुः ॥ ५-१३४-२ (३६३८८)
अर्थवन्त्युपपन्नानि वाक्यानि गुणवन्ति च ।
नैव संप्राप्नुवन्ति त्वां मुमूर्षुमिव भेषजम् ॥ ५-१३४-३ (३६३८९)
सन्ति वै सिन्धुराजस्य सन्तुष्टा न तथा जनाः ।
दौर्बल्यादासते मूढा व्यसतौघपतीक्षिणः ॥ ५-१३४-४ (३६३९०)
सहायोपचितिं कृत्वा व्यवसाय्य ततस्ततः ।
अनुदुष्येयुरपरे पश्यन्तस्तव पौरुषम् ॥ ५-१३४-५ (३६३९१)
तैः कृत्वा सह संघातं गिरिदुर्गालयं चर ।
काले व्यसनमाकाङ्क्षन्नैवायमजरामरः ॥ ५-१३४-६ (३६३९२)
सञ्जयो नामतश्च त्वं न च पश्यामि तत्त्वयि ।
अन्वर्थनामा भव मे पुत्र मा व्यर्थनामकः ॥ ५-१३४-७ (३६३९३)
सम्यग्दृष्टिर्महाप्राज्ञो बालं त्वां ब्राह्मणोऽब्रवीत् ।
अयं प्राप्य महत्कृच्छ्रं पुनर्वृद्धिं गमिष्यति ॥ ५-१३४-८ (३६३९४)
तस्य स्मरन्ती वचनमाशंसे विजयं तव ।
तस्मात्तात ब्रवीमि त्वां वक्ष्यामि च पुनःपुनः ॥ ५-१३४-९ (३६३९५)
यस्य ह्यर्थाभिनिर्वृत्तौ भवन्त्याप्यायिताः परे ।
तस्यार्थसिद्धिर्नियता नयेष्वर्थानुसारिणः ॥ ५-१३४-१० (३६३९६)
समृद्धिरसमृद्धिर्वा पूर्वेषां मम सञ्जय ।
एवं विद्वान्युद्धमना भव मा प्रत्युपाहरः ॥ ५-१३४-११ (३६३९७)

नातः पापीयसीं कांचिदवस्थां शम्बरोऽब्रवीत् ।
यत्र नैवाद्य न प्रातर्भोजनं प्रतिदृश्यते ॥ ५-१३४-१२ (३६३९८)
पतिपुत्रवधादेतत्परमं दुःखमब्रवीत् ।
दारिद्र्यमिति यत्प्रोक्तं पर्यायमरणं हि तत् ॥ ५-१३४-१३ (३६३९९)
अहं महाकुले जाता ह्रदाद्ध्रदमिवागता ।
ईश्वरी सर्वकल्याणी भर्त्रा परमपूजिता ॥ ५-१३४-१४ (३६४००)
महार्हमाल्याभरणां सुमृष्टाम्बरवाससम् ।
पुरा हृष्टः सुहृद्वर्गो मामपश्यत्सुहृद्गताम् ॥ ५-१३४-१५ (३६४०१)
यदा मां चैव भार्यां च द्रष्टासि भृशदुर्बलाम् ।
न तदा जीवितेनार्थो भविता तव सञ्जय ॥ ५-१३४-१६ (३६४०२)
दासकर्मकरान्भृत्यानाचार्यर्त्विक्पुरोहितान् ।
अवृत्त्याऽस्मान्प्रजहतो दृष्ट्वा किं जीवितेन ते ॥ ५-१३४-१७ (३६४०३)
यदि कृत्यं न पश्यामि तवाद्याहं यथा पुरा ।
श्लाघनीयं यशस्यं च का शान्तिर्हृदयस्य मे ॥ ५-१३४-१८ (३६४०४)
नेति चेद्ब्राह्मणं ब्रूयां दीर्येत हृदयं मम ।
न ह्यद न च मे भर्ता नेति ब्राह्मणमुक्तवान् ॥ ५-१३४-१९ (३६४०५)
वयमाश्रयणीयाः स्म न श्रोतारः परस्य च ।
अन्यमासाद्य जीवन्ती परित्यक्ष्यामि जीवितम् ॥ ५-१३४-२० (३६४०६)
अपारे भव नः पारमप्लवे भव नः प्लवः ।
कुरुष्व स्थानमस्थाने मृतान्सञ्जीवयस्व नः ॥ ५-१३४-२१ (३६४०७)
सर्वे ते शत्रवः शक्या न चेज्जीवितुमर्हसि ।
अथ चेदीदृशीं वृत्तिं क्लीबामभ्युपपद्यसे ॥ ५-१३४-२२ (३६४०८)
निर्विण्णात्मा हतमना मुञ्चैतां पापजीविकाम् ।
एकशत्रुवधेनैव शूरो गच्छति विश्रुतिम् ॥ ५-१३४-२३ (३६४०९)
इन्द्रो वृत्रवधेनैव महेन्द्रः समपद्यत ।
माहेन्द्रं च ग्रहं लेभे लोकानां चेश्वरोऽभवत् ॥ ५-१३४-२४ (३६४१०)
नाम विश्राव्य वै शङ्ख्ये शत्रूनाहूय दंशितान् ।
सेनाग्रं चापि विद्राव्य हत्वा वा पुरुषं वरम् ॥ ५-१३४-२५ (३६४११)
यदैव लभते वीरः सुयुद्धेन महद्यशः ।
तदैव प्रव्यथन्तेऽस्य शत्रवो विनमन्ति च ॥ ५-१३४-२६ (३६४१२)
त्यक्त्वात्मानं रणे दक्षं शूरं कापुरुषा जनाः ।
अवशास्तर्पयन्ति स्म सर्वकामसमृद्धिभिः ॥ ५-१३४-२७ (३६४१३)
राज्यं चाप्युग्रवि भ्रंशं संशयो जीवितस्य वा ।
न लब्धस्य हि शत्रोर्वै शेषं कुर्वन्ति साधवः ॥ ५-१३४-२८ (३६४१४)
स्वर्गद्वारोपमं राज्यमथवाप्यमृतोपमम् ।
रुद्धमेकायनं मत्वा पतोल्मुक इवारिषु ॥ ५-१३४-२९ (३६४१५)

जहि शत्रून्रणे राजन्स्वधर्मनुपालय ।
मा त्वा दृशं सुकृपणं शत्रूणां भयवर्धनम् ॥ ५-१३४-३० (३६४१६)
अस्मदीयैश्च शोचिद्भिर्नदद्भिश्च परैर्वृतम् ।
अपि त्वां नानुपश्येयं दीनाद्दीनमिवास्थितम् ॥ ५-१३४-३१ (३६४१७)
हृष्य सौवीरकन्याभिः श्लाघस्वार्थैर्यथा पुरा ।
मा च सैन्धवकन्यानामवसन्नो वशं गमः ॥ ५-१३४-३२ (३६४१८)
युवा रूपेण संपन्नो विद्ययाभिजनेन च ।
यत्त्वादृशो विकुर्वीत यशस्वी लोकविश्रुतः ॥ ५-१३४-३३ (३६४१९)
अधुर्यवच्च वोढव्ये मन्ये मरणमेव तत् ।
यदि त्वामनुपश्यामि परस्य प्रियवादिनम् ॥ ५-१३४-३४ (३६४२०)
पृष्ठतोऽनुव्रजन्तं वा का शान्तिर्हृदयस्य मे ।
नास्मिञ्जातु कुले जातो गच्छेद्योन्यस्य पृष्ठतः । ५-१३४-३५ (३६४२१)
न त्वं परस्यानुचरस्तात जीवितुमर्हसि ।
अहं हि क्षत्रहृदयं वेद यत्परिशाश्वतम् ॥ ५-१३४-३६ (३६४२२)
पूर्वैः पूर्वतरैः प्रोक्तं परैः परतरैरपि ।
शाश्वतं चाव्ययं चैव प्रजापतिविनिर्मितम् ॥ ५-१३४-३७ (३६४२३)
यो वै कश्चिदिहाजातः क्षत्रियः क्षत्रधर्मवित् ।
भयाद्वृत्तिसमीक्षो वा न नमेदिह कस्यचित् ॥ ५-१३४-३८ (३६४२४)
उद्यच्छेदेव न नमेदुद्यमो ह्येव पौरुषम् ।
अप्यपर्वणि भज्येत न नमेतेह कस्यचित् ॥ ५-१३४-३९ (३६४२५)
मातङ्गो मत्त इव च परीयात्स महामनाः ।
ब्राह्मणेभ्यो नमेन्नित्यं धर्मायैव च सञ्जय ॥ ५-१३४-४० (३६४२६)
नियच्छन्नितरान्वर्णान्विनिघ्नन्सर्वदुष्कृतः ।
ससहायोऽसहायो वा यावज्जीवं तथा भवेत् ॥ ॥ ५-१३४-४१ (३६४२७)

इति श्रीमन्महाभारते उद्योगपर्वणि भगवद्यानपर्वणि
चतुस्त्रिंशदधिकशततमोऽध्यायः ।
Mahabharata - Udyoga Parva - Chapter Footnotes

५-१३४-११ पूर्वेषां मम च युद्धे
समृद्धिरसमृद्धिर्वाऽवश्यंभाविनीत्येव विद्वान् युद्धमना
भव लाभालाभौ समौ कृत्वा युध्यस्त्वेति भावः । माप्रत्युपाहरः
प्रत्युपहारं युद्धोपसंहारं माकार्षीरित्यर्थः ॥
५-१३४-१८ कृत्यं कर्तव्यं पराक्रमम् ॥
५-१३४-२० श्रोतारः पराज्ञायाः ॥
५-१३४-२२ शक्याः जेतुमिति शेषः ॥

५-१३४-२३ निर्विण्णात्मा विरक्तचित्तः ।यतो हतमना नष्टसंकल्पः
।विश्रुतिं ख्यातिम् ॥
५-१३४-२४ ग्रहं सोमपात्रम् ।प्रग्रहमिति पाठे नियमनं
नियन्तृत्वमित्यर्थः ॥
५-१३४-२७ कापुरुषाः जनाः रणे आत्मानं देहं त्यक्त्वा रणे रक्षं
शूरं समृद्धिभिस्तर्पयन्तिस्मेति संबन्धः ॥
५-१३४-२८ उग्रविभ्रंशं महाप्रपातम् ।जीवितस्य संशयो
मरणम्।लब्धस्य जितस्य।शेषं पुनः स्वल्पेन विभवेनावस्थापनम् ॥
५-१३४-२९ रुद्धं ग्रस्तं मत्वा एकायनं स्वर्गराज्ययोर्मध्ये एकं
मार्गं पत गच्छ ॥
५-१३४-३० शत्रूणां भयवर्धनं भयच्छेदनम् ।अनुग्रत्वात्
सुकृषणं दीनं त्वा त्वां मा दृशं माद्राक्षम् ॥
५-१३४-३२ हृष्य हर्षं प्राप्नुहि ।सौवीरकन्याभिः स्वदारैः
।माचेति ।सैन्धवकन्यानां शत्रुदेशजकन्यानाम् ॥
५-१३४-३३ विकुर्वीत अपसरणं कुर्वीत ॥
५-१३४-३४ अधुर्यवत् अदान्तवृषभवत् ।तत् विकारकरणम् ॥
५-१३४-३६ वेद वेद्मि ।परिशाश्वतं
सर्वथैवैकरूपम्।अक्षीणमित्यर्थः ॥
५-१३४-३७ अव्ययं अपक्षयहीनं क्षत्रहृदयं प्रोक्तमिति पूर्वेण
संबन्धः ॥
५-१३४-३८ आजातः सम्यग्जातः कुले जात इत्यर्थः ।य आजातः स
भयात्कस्यचिन्न नमेत्।वृत्तिसमीक्षो वृत्तिं समीक्षमाणो वा न
नमेत् ॥
५-१३४-४० परीयात् पर्यटनं कुर्यात् ॥
५-१३४-४१ दुष्कृतः पापिष्टान् ॥

---

उद्योगपर्व-अध्यय१३५
॥ श्रीः ॥
५.१३५. अध्यायः १३५

Mahabharata - Udyoga Parva - Chapter Topics
कुन्त्या विदुलोपाख्यानकथनम् ॥१ ॥

Mahabharata - Udyoga Parva - Chapter Text

५-१३५-० (३६४२८)
पुत्र उवाच।५-१३५-०क्ष् (३७८४)

कृष्णायसस्येव च ते संहत्य हृदयं कृतम् ।
मम मातस्त्वकरुणे वीरप्रज्ञे ह्यमर्षणे ॥ ५-१३५-१ (३६४२९)
अहो क्षत्रसमाचारो यत्र मामितरं यथा ।
नियोजयसि युद्धाय परमातेव मां तथा ॥ ५-१३५-२ (३६४३०)
ईदृशं वचनं ब्रूयाद्भवती पुत्रमेकजम् ।
किं नु ते मामपश्यन्त्याः पृथिव्या अपि सर्वया ॥ ५-१३५-३ (३६४३१)
किमाभरणकृत्येन किं भोगैर्जीवितेन वा ।
मयि वा सङ्गरहते प्रियपुत्रे विशेषतः ॥ ५-१३५-४ (३६४३२)
मातोवाच। ५-१३५-५क्ष् (३७८५)
सर्वावस्था हि विदुषां तात धर्मार्थकारणात् ।
तावेवाभिसमीक्ष्याहं सञ्जय त्वामचूजुदम् ॥ ५-१३५-५ (३६४३३)
स समीक्ष्य क्रमोपेतो मुख्यः कालोऽयमागतः ।
अस्मिंश्चेदागते काले कार्यं न प्रतिपद्यसे ॥ ५-१३५-६ (३६४३४)
असंभावितरूपस्त्वमानृशंस्यं करिष्यसि ।
तं त्वामयशसा स्पृष्टं न ब्रूयां यदि सञ्जय ॥ ५-१३५-७ (३६४३५)
खरीवात्सल्यमाहुस्तन्निःसामर्थ्यमहेतुकम् ।
सद्भिर्विगर्हितं मार्गं त्यज मूर्खनिषेवितम् ॥ ५-१३५-८ (३६४३६)
अविद्या वै महत्यस्ति यामिमां संश्रिताः प्रजाः ।
तव स्याद्यदि सद्वृत्तं तेन मे त्वं प्रियो भवेः ॥ ५-१३५-९ (३६४३७)
धर्मार्थगुणयुक्तेन नेतरेण कथञ्चन ।
दैवमानुषयुक्तेन सद्भिराचरितेन च ॥ ५-१३५-१० (३६४३८)
यो ह्येवमविनीतेन रमते पुत्रनप्तृणा ।
अनुत्थानवता चापि दुर्विनीतेन दुर्धिया ॥ ५-१३५-११ (३६४३९)
रमते यस्तु पुत्रेण मोघं तस्य प्रजाफलम् ।
अकुर्वन्तो हि कर्माणि कुर्वन्तो निन्दितानि च ॥ ५-१३५-१२ (३६४४०)
सुखं नैवेह नामुत्र लभन्ते पुरुषाधमाः ।
युद्धाय क्षत्रियः सृष्टः सञ्जयेह जयाय च ।
ग्क्रूराय कर्मणे नित्यं प्रजानां परिपालने ॥' ५-१३५-१३ (३६४४१)
जयन्वा वध्यमानो वा प्राप्नोतीन्द्रसलोकताम् ।
न शक्रभवने पुण्ये दिवि तद्विद्यते सुखम् ।
यदमित्रान्वशे कृत्वा क्षत्रियः सुखमेधते ॥ ५-१३५-१४ (३६४४२)
मन्युना दह्यमानेह पुरुषेण मनस्विना ।
निकृतेनेह बहुशः शत्रून्प्रति जिगीषया ॥ ५-१३५-१५ (३६४४३)
आत्मानं वा परित्यज्य शत्रुं वा विनिपात्य च ।
प्राप्यते नेह शान्तिर्हि नित्यमेव तु सञ्जय ।
अतोन्येन प्रकारेण शान्तिरस्य कुतो भवेत् ॥ ५-१३५-१६ (३६४४४)

इह प्राज्ञो हि पुरुषः स्वल्पमप्रियमिच्छति ।
यस्य स्वल्पं प्रियं लोके ध्रुवं तस्याल्पमप्रियम् ॥ ५-१३५-१७ (३६४४५)
प्रियाभावाच्च पुरुषो नैव प्राप्नोति शोभनम् ।
ध्रुवं चाभावमभ्येति गत्वा गङ्गेव सागरम् ॥ ५-१३५-१८ (३६४४६)
पुत्र उवाच। ५-१३५-१९क्ष् (३७८६)
नेयं मतिस्त्वया वाच्या मातः पुत्रे विशेषतः ।
कारुण्यमेव पश्य त्वं भूत्वेह जडमूकवत् ॥ ५-१३५-१९ (३६४४७)
मातोवाच। ५-१३५-२०क्ष् (३७८७)
अतो मे भूयसी नन्दिर्यदेवमनुपश्यसि ।
चोद्यं मां चोदयस्येतद्भृशं वै चोदयामि ते ॥ ५-१३५-२० (३६४४८)
अथ त्वां पूजयिष्यामि हत्वा वै सर्वसैन्धवान् ।
अहं पश्यामि विजयं कृच्छ्रभाविनमेव ते ॥ ५-१३५-२१ (३६४४९)
पुत्र उवाच। ५-१३५-२२क्ष् (३७८८)
अकोशस्यासहायस्य कुतः सिद्धिर्जयो मम ।
इत्यवस्थां विदित्वैतामात्मनात्मनि दारुणाम् ॥ ५-१३५-२२ (३६४५०)
राज्याद्भावो निवृत्तो मे त्रिदिवादिव दृष्कृतः ।
ईदृशं भवती कंचिदुपायमनुपश्यति ॥ ५-१३५-२३ (३६४५१)
तन्मे परिणतप्रज्ञे सम्यक्प्रब्रूहि पृच्छते ।
करिष्यामि हि तत्सर्वं यथावदनुशासनम् ॥ ५-१३५-२४ (३६४५२)
मातोवाच। ५-१३५-२५क्ष् (३७८९)
पुत्र नात्मावमन्तव्यः पूर्वाभिरसमृद्धिभिः ।
अभूत्वा हि भवन्त्यर्था भूत्वा नश्यन्ति चापरे ।
अमर्षेणैव चाप्यर्था नारब्धव्याः सुबालिशैः ॥ ५-१३५-२५ (३६४५३)
सर्वेषां कर्मणां तात फले नित्यमनित्यता ।
अनित्यमिति जानन्तो न भवन्ति भवन्ति च ॥ ५-१३५-२६ (३६४५४)
अथ ये नैव कुर्वन्ति नैव जातु भवन्ति ते ।
ऐकगुण्यमनीहायामभावः कर्मणां फलम् ॥ ५-१३५-२७ (३६४५५)
अथ द्वैगुण्यमीहायां फलं भवति वा नवा ।
यस्य प्रागेव विदिता सर्वार्थानामनित्यता ॥ ५-१३५-२८ (३६४५६)
नुदेद्वृद्धिसमृद्धी स प्रतिकूले नृपात्मज ।
उत्थातव्यं जागृतव्यं योक्तव्यं भूतिकर्मसु ॥ ५-१३५-२९ (३६४५७)
भविष्यतीत्येव मनः कृत्वा सततमव्यथैः ।
मङ्गलानि पुरस्कृत्य ब्राह्मणांश्चेश्वरैः सह ॥ ५-१३५-३० (३६४५८)
प्राज्ञस्य नृपतेराशु वृद्धिर्भवति पुत्रक ।
अभिवर्तति लक्ष्मीस्तं प्राचीमिव दिवाकरः ॥ ५-१३५-३१ (३६४५९)
निदर्शनान्युपायांश्च बहून्युद्धर्षणानि च ।

अनुदर्शितरूपोऽसि पश्यामि कुरु पौरुषम् ॥ ५-१३५-३२ (३६४६०)
पुरुषार्थमभिप्रेतं समाहर्तुमिहार्हसि ।
क्रुद्धान्लुब्धान्परिक्षीणानवलिप्तान्विमानितान् ॥ ५-१३५-३३ (३६४६१)
स्पर्धिनश्चैव ये केचित्तान्युक्त उपधारय ।
एतेन त्वं प्रकारेण महतो भेत्स्यसे गणान् ।
महावेग इवोद्धूतो मातरिश्वा बलाहकान् ॥ ५-१३५-३४ (३६४६२)
तेषामग्रप्रदायी स्याः कल्पोत्थायी प्रियंवदः ।
ते त्वां प्रियं करिष्यन्ति पुरोधास्यन्ति च ध्रुवम् ॥ ५-१३५-३५ (३६४६३)
यदैव शत्रुर्जानीयात्सपत्नं त्यक्तजीवितम् ।
तदैवास्मादुद्विजेत सर्पाद्वेश्मगतादिव ॥ ५-१३५-३६ (३६४६४)
तं विदित्वा पराक्रान्तं वशे न कुरुते यदि ।
निर्वादैर्निर्वदेदेनमन्ततस्तद्भविष्यति ॥ ५-१३५-३७ (३६४६५)
निर्वादादास्पदं लब्ध्वा धनवृद्धिर्भविष्यति ।
धनवन्तं हि मित्राणि भजन्ते चाश्रयन्ति च ॥ ५-१३५-३८ (३६४६६)
स्खलितार्थं पुनस्तानि सन्त्यजन्ति च बान्धवाः ।
नह्यस्मिन्नाश्रयन्ते च जुगुप्सन्ते च तादृशम् ॥ ५-१३५-३९ (३६४६७)
शत्रुं कृत्वा यः सहायं विश्वासमुपगच्छति ।
स न संभाव्यमेवैतद्यद्राज्यं प्राप्नुयादिति ॥ ॥ ५-१३५-४० (३६४६८)

इति श्रीमन्महाभारते उद्योगपर्वणि भगवद्यानपर्वणि
पञ्चत्रिंशदधिकशततमोऽध्यायः ॥
Mahabharata - Udyoga Parva - Chapter Footnotes

५-१३५-१ कृष्णायसस्य लोहस्य । संहत्य णिण्डीकृत्य ॥
५-१३५-३ एकजं अभ्रातृकम् ॥
५-१३५-५ सर्वावस्था गार्हस्थ्यादिरूपा । तावेव धर्मार्थाविव। अचूचुदं प्रेरितवत्यस्मि ॥
५-१३५-६ समीक्ष्य क्रमोपेतः द्रष्टुं योग्येन पराक्रमेण युक्तः । अस्मिन्काले चेत् कार्यं कर्तव्यं युद्धं न प्रतिपद्यसे ॥
५-१३५-७ आनृशंस्यं शत्रुषु स्वदेहे वा दयांकरिष्यसि तर्हि त्वं असंभावितरूपस्तिरस्कृतरूपो भविष्यसीति संबन्धः ॥
५-१३५-८ स्वरीति । उभयलोकानुपयुक्तेपि पुत्रे वृथा वात्सल्यं खरी करोति तद्वदहमपि स्यामित्यर्थः ॥
५-१३५-१० धर्मार्थेति । त्वया भाव्यमिति शेषः ॥
५-१३५-१५ प्रस्थातव्यमेवेति शेषः ॥
५-१३५-१७ स्वल्पमैश्वर्यं अप्रियमनिष्टं इच्छति मन्यते प्राज्ञः

। यस्य तु अल्पमेवैश्वर्यं प्रियं तस्य ध्रुवं निश्चितं तदेवाल्पं प्रियत्वेन गृहीतं अप्रियमनर्थकरं स्यात्। तेन राज्ञाऽल्पसंतुष्टेन न भवितव्यमित्यर्थः ॥
५-१३५-१८ अभावं नाशम् ॥
५-१३५-१९ पश्य हितत्वेनेति शेषःक ॥
५-१३५-२० अतो वचनात् मे मम भूयसी नन्दिः समृद्धिः भवितेति शेषः । यत् एवं कारुण्यं देहे कृपां अनुपश्यसि हितत्वेन । एवंसत्यपि त्वमेव चोद्यं पूर्वपक्षं चोदयसि प्रेरयसि कारुण्यं कुर्विति। अथापि वज्रहृदयाहं ते तुभ्यं चोदयामि ॥
५-१३५-२१ सैन्धवान् हत्वा कृच्छ्रेण भाविनं ते तव विजयं यदा पश्यामि द्रक्ष्यामि अथ त्वां पूजयिष्यामीति योजना ॥
५-१३५-२२ एतां अवस्थां दारुणामात्मनि आत्मना स्वयं विदित्वा । मे मम भावश्चित्तं राज्यान्निवृत्त इत्युत्तरेण संबन्धः ॥
५-१३५-२९ वृद्धिः पीडा । वृधु हिंसायामित्यस्य रूपम्। समृद्धिरैश्वर्यम्। आत्मनः पीडां परस्यैश्वर्यं च नुदेदित्यर्थः ॥
५-१३५-३५ तेषां क्रुद्धादीनां अग्रप्रदायी । भक्तं वेतनं च सर्वेभ्यः प्रथमं देयम्। न चेत्सद्यः कुपितास्ते त्यजेयुरित्यर्थः ॥
५-१३५-३६ एनं निर्वादैः परिनिष्ठितैर्दूतैर्निर्वदेत् परिनिष्ठां प्रापयेत् । साम्ना दानेन वा तं पर्यवस्थापयेदित्यर्थः । अन्ततः फलतः तत् शत्रोर्वशीकरणं भविष्यति ॥
५-१३५-३७ तत्रोपायमाह निर्वादादिति । एवं परिनिष्ठिततया आस्पदं स्थानं प्राप्तं चेत् शत्रुणाऽनुपद्रुतस्य धनवृद्ध्यादिकं सर्वं सेत्स्यतीत्यर्थः ॥

---

उद्योगपर्व-अध्यय१३६
॥ श्रीः ॥
५.१३६. अध्यायः १३६

Mahabharata - Udyoga Parva - Chapter Topics
विदुलोपाख्यानोपसंहारः ॥ १ ॥
विदुलोपाख्यानश्रवणफलकथनम् ॥ २ ॥

Mahabharata - Udyoga Parva - Chapter Text

५-१३६-० (३६४६९)
मातोवाच। ५-१३६-०क्ष् (३७९०)

नैव राज्ञा दरः कार्यो जातु कस्यांचिदापदि ।
अथ चेदपि दीर्णः स्यान्नैव वर्तेत दीर्णवत् ॥ ५-१३६-१ (३६४७०)
दीर्णं हि दृष्ट्वा राजानं सर्वमेवानुदीर्यते ।
राष्ट्रं बलममात्याश्च पृथक्कुर्वन्ति ते मतीः ॥ ५-१३६-२ (३६४७१)
शत्रूनेके प्रपद्यन्ते प्रजहत्यपरे पुनः ।
अन्ये तु प्रजिहीर्षन्ति ये पुरस्ताद्विमानिताः ॥ ५-१३६-३ (३६४७२)
य एवात्यन्तसुहृदस्त एनं पर्युपासते ।
अशक्तयः स्वस्तिकामा बद्धवत्सा इला इव ॥ ५-१३६-४ (३६४७३)
शोचन्तमनुशोचन्ति पतितानिव बान्धवान् ।
अपि ते पूजिताः पूर्वमपि ते सुहृदो मताः ॥ ५-१३६-५ (३६४७४)
ये राष्ट्रमभिमन्यन्ते राज्ञो व्यसनमीयुषः ।
मा दीदरस्त्वं सुहृदो मा त्वां दीर्णं प्रहासिषुः ॥ ५-१३६-६ (३६४७५)
प्रभावं पौरुषं बुद्धिं जिज्ञासन्त्या मया तव ।
विदधत्या समाश्वासमुक्तं तेजोविवृद्धये ॥ ५-१३६-७ (३६४७६)
यदेतत्संविजानासि यदि सम्यग्ब्रवीम्यहम् ।
कृत्वा सौम्यमिवात्मानं जायायोत्तिष्ठ सञ्जय ॥ ५-१३६-८ (३६४७७)
अस्ति नः कोशनिचयो महानविदितस्तव ।
तमहं वेद नान्यस्तमुपसंपादयामि ते ॥ ५-१३६-९ (३६४७८)
सन्ति नैकशता भूयः सुहृदस्तव सञ्जय ।
सुखदुःखसहा वीर संग्रामादनिवर्तिनः ॥ ५-१३६-१० (३६४७९)
तादृशा हि सहाया वै पुरुषस्य बुभूषतः ।
इष्टं जिहीर्षतः किंचित्सचिवाः शत्रुकर्शन ॥ ५-१३६-११ (३६४८०)
तस्यास्त्वीदृशकं वाक्यं श्रुत्वापि स्वल्पचेतसः ।
तमस्त्वपागमत्तस्य सुचित्रार्थपदाक्षरम् ॥ ५-१३६-१२ (३६४८१)
पुत्र उवाच। ५-१३६-१३क्ष् (३७९१)
उदके नौरियं धार्या वक्तव्यं प्रवणे मया ।
यस्य मे भवती नेत्री भविष्यद्भूतिदर्शिनी ॥ ५-१३६-१३ (३६४८२)
अहं हि वचनं त्वत्तः शुश्रूषुरपरापरम् ।
किञ्चित्किञ्चित्प्रतिवदंस्तूष्णीमासं मुहुर्मुहुः ॥ ५-१३६-१४ (३६४८३)
अतृप्यन्नमृतस्येव कृच्छ्राल्लब्धस्य बान्धवात् ।
उद्यच्छाम्येष शत्रूणां नियमार्थं जायय च ॥ ५-१३६-१५ (३६४८४)
कुन्त्युवाच। ५-१३६-१६क्ष् (३७९२)
सदश्व इव स क्षिप्तः प्रणुन्नो वाक्यसायकैः ।
तच्चकार तथा सर्वं यथावदनुशासनम् ॥ ५-१३६-१६ (३६४८५)
इदमुद्धर्षणं भीमं तेजोवर्धनमुत्तमम् ।
राजानं श्रावयेन्मन्त्री सीदन्तं शत्रुपीडितम् ॥ ५-१३६-१७ (३६४८६)

जयो नामेतिहासोऽयं श्रोतव्यो विजिगीषुणा ।
महीं विजयते क्षिप्रं श्रुत्वा शत्रूंश्च मर्दति ॥ ५-१३६-१८ (३६४८७)
इदं पुंसवनं चैव वीराजननमेव च ।
अभीक्ष्णं गर्भिणी श्रुत्वा ध्रुवं वीरं प्रजायते ॥ ५-१३६-१९ (३६४८८)
विद्याशूरं तपःशूरं दानशूरं तपस्विनम् ।
ब्राह्मया श्रिया दीप्यमानं साधुवादे च संमतम् ॥ ५-१३६-२० (३६४८९)
अर्चिष्मन्तं बलोपेतं महाभागं महारथम् ।
धृतिमन्तमनाधृष्यं जेतारमपराजितम् ॥ ५-१३६-२१ (३६४९०)
नियन्तारमसाधूनां गोप्तारं धर्मचारिणाम् ।
ईदृशं क्षत्रिया सूते वीरं सत्यपराक्रमम् ॥ ॥ ५-१३६-२२ (३६४९१)

इति श्रीमन्महाभारते उद्योगपर्वणि भगवद्यानपर्वणि
षट्त्रिंशदधिकशततमोऽध्यायः ॥
Mahabharata - Udyoga Parva - Chapter Footnotes

५-१३६-१ दरो भयम् ॥
५-१३६-४ इला धेनवः ॥
५-१३६-१० शतार्हा अनिवर्तिन इति को खो पाठः ।शतार्हाः
शतवेतनयोग्या इति रत्नगर्भः ॥
५-१३६-१२ स्वल्पचेतसोपि तस्य तमोपागमदिति संबन्धः ॥
५-१३६-१३ उदके भूरियं धार्या मर्तव्यं प्रवणे मया इति झो
पाठः ।तत्रायमर्थः। उदके मज्जन्तीव भूः पित्र्यं राज्यं
।(धूरिति पाठेपि स एवार्थः) इयं मया धार्या मग्नं राज्यं वा
उद्धर्तव्यम्। प्रवणे प्रपाते वा युद्धाख्ये वा मर्तव्यं नतु एवमेव
निर्व्यापारेण स्थेयम्। नेत्री शिक्षयित्री। उदके सूर्यवद्यस्मिन्सक्तव्यं
प्रवणे मया इति डो पाठः ॥
५-१३६-१४ अपरापरं उत्तरोत्तरम् ।प्रतिवदन् प्रतिकूलं वदन् ॥
५-१३६-१५ बान्धवात् बन्धुतः ।उद्यच्छामि उद्यमं करोमि। नियमार्थं
निग्रहार्थम् ॥
५-१३६-१९ पुंसवनं पुत्रप्रसवकरम् ॥

---

उद्योगपर्व-अध्यय१३७
॥ श्रीः ॥
५.१३७. अध्यायः १३७

Mahabharata - Udyoga Parva - Chapter Topics
कुन्त्या श्रीकृष्णे अर्जुनादीन्प्रति वक्तव्यसंदेशकथनम् ॥ १ ॥

श्रीकृष्णस्य स्वरथमारोपितेन कर्णेन सह संभाषणपूर्वकमुपप्लाव्यं प्रत्यागमनम् ॥ २ ॥

Mahabharata - Udyoga Parva - Chapter Text

५-१३७-० (३६४९२)
कुन्त्युवाच। ५-१३७-०क्ष् (३७९३)
अर्जुनं केशव ब्रूयास्त्वयि जाते स्म सूतके ।
उपोपविष्टा नारीभिराश्रमे परिवारिता ॥ ५-१३७-१ (३६४९३)
अथान्तरिक्षे वागासीद्दिव्यरूपा मनोरमा ।
सहस्राक्षसमः कुन्ति भविष्यत्येष ते सुतः । ५-१३७-२ (३६४९४)
एष जेष्यति सङ्ग्रामे कुरून्सर्वान्समागतान् ।
भीमसेनद्वितीयश्च लोकमुद्वर्तयिष्यति ॥ ५-१३७-३ (३६४९५)
पुत्रस्ते पृथिवीं जेता यशश्चास्य दिवं स्पृशेत् ।
हत्वा कुरूंश्च सङ्ग्रामे वासुदेवसहायवान् ॥ ५-१३७-४ (३६४९६)
पित्र्यमंशं प्रनष्टं च पुनरप्युद्धरिष्यति ।
भ्रातृभिः सहितः श्रीमांस्त्रीन्मेधानाहरिष्यति ॥ ५-१३७-५ (३६४९७)
स सत्यसन्धो बीभत्सुः सव्यसाची यथाच्युत ।
तथा त्वमेव जानासि बलवन्तं दुरासदम् ॥ ५-१३७-६ (३६४९८)
तथा तदस्तु दाशार्ह यथा वागभ्यभाषत ।
धर्मश्चेदस्ति वार्ष्णेय तथा सत्यं भविष्यति ॥ ५-१३७-७ (३६४९९)
त्वं चापि तत्तथा कृष्ण सर्वं संपादयिष्यसि ।
नाहं तदभ्यसूयामि यथा वागभ्यभाषत ॥ ५-१३७-८ (३६५००)
नमो धर्माय महते धर्मो धारयति प्रजाः ।
एतद्धनञ्जयो वाच्यो नित्योद्युक्तो वृकोदरः ॥ ५-१३७-९ (३६५०१)
यदर्थं क्षत्रिया सूते तस्य कालोऽयमागतः ।
न हि वैरं समासाद्य सीदन्ति पुरुषर्षभाः ॥ ५-१३७-१० (३६५०२)
विदिता ते सदा बुद्धिर्भीमस्य न स शाम्यति ।
यावदन्तं न कुरुते शत्रूणां शत्रुकर्शनः ॥ ५-१३७-११ (३६५०३)
तावदेव महापबाहुर्निशासु न सुखं लभेत् ।
सर्वधर्मविशेषज्ञां स्नुषां पाण्डोर्महात्मनः ।
ब्रूया माधव कल्याणीं कृष्ण कृष्णां यशस्विनीम् ॥ ५-१३७-१२ (३६५०४)
युक्तमेतन्महाभागे कुले जाते यशस्विनि ।
यन्मे पुत्रेषु सर्वेषु यथावत्त्वमवर्तिथाः ॥ ५-१३७-१३ (३६५०५)
माद्रीपुत्रौ च वक्तव्यौ क्षत्रधर्मरतावुभौ ।
विक्रमेणार्जितान्भोगान्वृणीतं जीवितादपि ॥ ५-१३७-१४ (३६५०६)

विक्रमाधिगता ह्यर्थाः क्षत्रधर्मेण जीवतः ।
मनो मनुष्यस्य सदा प्रीणन्ति पुरुषोत्तम ॥ ५-१३७-१५ (३६५०७)
यच्च वः प्रेक्षमाणानां सर्वधर्मोपचायिनाम् ।
पाञ्चाली परुषाण्युक्तका को नु तत्क्षन्तुमर्हति ॥ ५-१३७-१६ (३६५०८)
न राज्यहरणं दुःखं द्यूते चापि पराजयः ।
प्रव्राजनं सुतानां वा न मे तद्दुःखकारणम् ॥ ५-१३७-१७ (३६५०९)
यत्र सा बृहती श्यामा सभायां रुदती तदा ।
अश्रौषीत्परुषा वाचस्तन्मे दुःखतरं महत् ॥ ५-१३७-१८ (३६५१०)
स्त्रीधर्मिणी वरारोहा क्षत्रधर्मरता सदा ।
नाध्यगच्छत्तदा नाथं कृष्णा नाथवती सती ॥ ५-१३७-१९ (३६५११)
तं वै ब्रूहि महाबाहो सर्वशस्त्रभृतां वरम् ।
अर्जुनं पुरुषव्याघ्रं द्रौपद्याः पदवीं चर ॥ ५-१३७-२० (३६५१२)
विदितं हि तवात्यन्तं क्रुद्धाविव यमान्तकौ ।
भीमार्जुनौ नयेतां हि देवानपि परां गतिम् ॥ ५-१३७-२१ (३६५१३)
तयोश्चैतदवज्ञानं यत्सा कृष्णा सभागता ।
दुःशासनश्च यद्भीमं कटुकान्यभ्यभाषत ॥ ५-१३७-२२ (३६५१४)
पश्यतां कुरुवीराणां तच्च संस्मारयेः पुनः ।
पाण्डवान्कुशलं पृच्छेः सपुत्रान्कृष्णया सह ॥ ५-१३७-२३ (३६५१५)
मां वै कुशलिनीं ब्रूयास्तेषु भूयो जनार्दन ।
अरिष्टं गच्छ पन्थानं पुत्रान्मे प्रतिपालय ॥ ५-१३७-२४ (३६५१६)
वैशंपायन उवाच। ५-१३७-२५क्ष् (३७९४)
अभिवाद्याथ तां कृष्णः कृत्वा चापि प्रदक्षिणम् ।
निश्चक्राम महाबाहुः सिंहखेलगतिस्ततः ॥ ५-१३७-२५ (३६५१७)
ततो विसर्जयामास भीष्मादीन्कुरुपुङ्गवान् ।
आरोप्याथ रथे कर्णं प्रायात्सात्यकिना सह ॥ ५-१३७-२६ (३६५१८)
ततः प्रयाते दाशार्हे कुरवः सङ्गता मिथः ।
जजल्पुर्महदाश्चर्यं केशवे परमाद्भुतम् ॥ ५-१३७-२७ (३६५१९)
प्रमूढा पृथिवी सर्वा मृत्युपाशवशीकृता ।
दुर्योधनस्य बालिश्यान्नैतदस्तीति चाब्रुवन् ॥ ५-१३७-२८ (३६५२०)
ततो निर्याय नगरात्प्रययौ पुरुषोत्तमः ।
मन्त्रयामास च तदा कर्णेन सुचिरं सह ॥ ५-१३७-२९ (३६५२१)
विसर्जयित्वा राधेयं सर्वयादवनन्दनः ।
ततो जवेन महता तूर्णमश्वानचोदयत् ॥ ५-१३७-३० (३६५२२)
ते पिबन्त इवाकाशं दारुकेण प्रचोदिताः ।
हया जग्मुर्महावेगा मनोमारुतरंहसः ॥ ५-१३७-३१ (३६५२३)
ते व्यतीत्य महाध्वानं क्षिप्रं श्येना इवाशुगाः ।

उच्चैर्जग्मुरुपप्लाव्यं शार्ङ्गधन्वानमावहन् ॥ ॥ ५-१३७-३२ (३६५२४)

इति श्रीमन्महाभारते उद्योगपर्वणि भगवद्यानपर्वणि
सप्तत्रिंशदधिकशततमोऽध्यायः ॥

Mahabharata - Udyoga Parva - Chapter Footnotes

५-१३७-३ उद्वर्तयिष्यति आकुलीकरिष्यति । लोकं शत्रुजनम् ॥
५-१३७-५ मेधान् अश्वमेधान् ॥
५-१३७-१६ धर्मोपचायिनां धर्मवर्धनशीलानाम् ॥
५-१३७-२० पदवीं चर मार्गमनुसर ॥
५-१३७-२८ नैतदस्ति । राष्ट्रमिति शेषः ॥
५-१३७-२९ निर्याय निर्गत्य ॥
५-१३७-३२ उपप्लाव्यं विराटनगरम् ॥

---

उद्योगपर्व-अध्यय१३८
॥ श्रीः ॥
५.१३८. अध्यायः १३८

Mahabharata - Udyoga Parva - Chapter Topics

भीष्मद्रोणाभ्यां कुन्तीवाक्यं श्रुत्वा समीपस्थं दुर्योधनं प्रति
पाण्डवानां कुन्तीनिदेशानतिलङ्घित्वकथनपूर्वकं पाण्डवैः सह
सन्धिविधानम् ॥ १ ॥

Mahabharata - Udyoga Parva - Chapter Text

५-१३८-० (३६५२५)
वैशंपायन उवाच। ५-१३८-०क्ष् (३७९५)
कुन्त्यास्तु वचनं श्रुत्वा भीष्मद्रोणौ महारथौ ।
दुर्योधनमिदं वाक्यमूचतुः शासनातिगम् ॥ ५-१३८-१ (३६५२६)
श्रुतं ते पुरुषव्याघ्र कुन्त्याः कृष्णस्य संनिधौ ।
वाक्यमर्थवदत्युग्रमुक्तं धर्म्यमनुत्तमम् ॥ ५-१३८-२ (३६५२७)
तत्करिष्यन्ति कौन्तेया वासुदेवस्य संमतम् ।
न हि ते जातु शाम्येरन्नृते राज्येन कौरव ॥ ५-१३८-३ (३६५२८)
क्लेशिता हि त्वया पार्था धर्मपाशसितास्तदा ।
सभायां द्रौपदी चैव तैश्च तन्मर्षितं तव ॥ ५-१३८-४ (३६५२९)
कृतास्त्रं ह्यर्जुनं प्राप्य भीमं च कृतनिश्चयम् ।
गाण्डीवं चेषुधी चैव रथं च ध्वजमेव च ॥ ५-१३८-५ (३६५३०)

नकुलं सहदेवं च बलवीर्यसमन्वितौ ।
सहायं वासुदेवं च न क्षंस्यति युधिष्ठिरः ॥ ५-१३८-६ (३६५३१)
प्रत्यक्षं ते महाबाहो यथा पार्थेन धीमता ।
विराटनगरे पूर्वं सर्वे स्म युधि निर्जिताः ॥ ५-१३८-७ (३६५३२)
दानवा घोरकर्माणो निवातकवचा युधि ।
रौद्रमस्त्रं समादाय दग्धा वानरकेतुना ॥ ५-१३८-८ (३६५३३)
कर्णप्रभृतयश्चेमे त्वं चापि कवची रथी ।
मोक्षितो घोषयात्रायां पर्याप्तं तन्निदर्शनम् ॥ ५-१३८-९ (३६५३४)
प्रशाम्य भरतश्रेष्ठ भ्रातृभिः सह पाण्डवैः ।
रक्षेमां पृथिवीं सर्वां मृत्योर्दंष्ट्रान्तरं गताम् ॥ ५-१३८-१० (३६५३५)
ज्येष्ठो भ्राता धर्मशीलो वत्सलः श्लक्ष्णवाक्कविः ।
तं गच्छ पुरुषव्याघ्रं व्यपनीयेह किल्बिषम् ॥ ५-१३८-११ (३६५३६)
दृष्टश्चेत्त्वं पाण्डवेन व्यपनीतशरासनः ।
प्रशान्तभ्रुकुटिः श्रीमान्कृता शान्तिःकुलस्य नः ॥ ५-१३८-१२ (३६५३७)
तमभ्येत्य सहामात्यः परिष्वज्य नृपात्मजम् ।
अभिवादय राजानं यथापूर्वमरिन्दम ॥ ५-१३८-१३ (३६५३८)
अभिवादयमानं त्वां पाणिभ्यां भीमपूर्वजः ।
प्रतिगृह्णातु सौहार्दात्कुन्तीपुत्रो युधिष्ठिरः ॥ ५-१३८-१४ (३६५३९)
सिंहस्कन्धोरुबाहुस्त्वां वृत्तायतमहाभुजः ।
परिष्वजतु बाहुभ्यां भीमः प्रहरतां वरः ॥ ५-१३८-१५ (३६५४०)
कम्बुग्रीवो गुडाकेशस्ततस्त्वां पुष्करेक्षणः ।
अभिवादयतां पार्थः कुन्तीपुत्रो धनञ्जयः ॥ ५-१३८-१६ (३६५४१)
आश्विनेयौ नरव्याघ्रौ रूपेणाप्रतिमौ भुवि ।
तौ च त्वां गुरुवत्प्रेम्णा पूजया प्रत्युदीयताम् ॥ ५-१३८-१७ (३६५४२)
मुञ्चन्त्वानन्दजाश्रूणि दाशार्हप्रमुखा नृपाः ।
संगच्छ भ्रातृभिः सार्धं मानं संत्यज्य पार्थिव ॥ ५-१३८-१८ (३६५४३)
प्रशाधि पृथिवीं कृत्स्नां ततस्त्वं भ्रातृभिः सह ।
समालिङ्ग्य च हर्षेण नृपा यान्तु परस्परम् ॥ ५-१३८-१९ (३६५४४)
अलं युद्धेन राजेन्द्र सुहृदां शृणु वारणम् ।
ध्रुवं विनाशो युद्धे हि क्षत्रियाणां प्रदृश्यते ॥ ५-१३८-२० (३६५४५)
ज्योतींषि प्रतिकूलानि दारुणा मृगपक्षिणः ।
उत्पाता विविधा वीर दृश्यन्ते क्षत्रनाशनाः ॥ ५-१३८-२१ (३६५४६)
विशेषत इहास्माकं निमित्तानि विनाशने ।
उल्काभिर्हि प्रदीप्ताभिर्बाध्यते पृतना तव ॥ ५-१३८-२२ (३६५४७)
वाहनान्यप्रहृष्टानि रुदन्तीव विशांपते ।
गृध्रास्ते पर्युपासन्ते सैन्यानि च समन्ततः ॥ ५-१३८-२३ (३६५४८)

नगरं न यथापूर्वं तथा राजनिवेशनम् ।
शिवाश्चाशिवनिर्घोषा दीप्तां सेवन्ति वै दिशं ॥ ५-१३८-२४ (३६५४९)
कुरु वाक्यं पितुर्मातुरस्माकं च हितैषिणाम् ।
त्वय्यायत्तो महाबाहो शमो व्यायाम एव च ॥ ५-१३८-२५ (३६५५०)
न चेत्करिष्यसि वचः सुहृदामरिकर्शन ।
तप्स्यसे वाहिनीं दृष्ट्वा पार्थबाणप्रपीडिताम् ॥ ५-१३८-२६ (३६५५१)
भीमस्य च महानादं नदतः शुष्मिणो रणे ।
श्रुत्वा स्मर्तासि मे वाक्यं गाण्डीवस्य च निःस्वनम् ।
यद्येतदपसव्यं ते वचो मम भविष्यति ॥ ॥ ५-१३८-२७ (३६५५२)

इति श्रीमन्महाभारते उद्योगपर्वणि भगवद्यानपर्वणि
अष्टत्रिंशदधिकशततमोऽध्यायः ॥
Mahabharata - Udyoga Parva - Chapter Footnotes

५-१३८-१० प्रशाम्य प्रशमं कुरु ॥
५-१३८-२० वारणं प्रतिषेधम् ॥
५-१३८-२४ दीप्तां दिशमिति दिग्दाहाख्य उत्पात उक्तः ॥
५-१३८-२७ शुष्मिणः बलिनः । अपसव्यं विपरीतम् ॥

---

उद्योगपर्व-अध्यय१३९
॥ श्रीः ॥
५.१३९. अध्यायः १३९

Mahabharata - Udyoga Parva - Chapter Topics
Mahabharata - Udyoga Parva - Chapter Text

५-१३९-० (३६५५३)
वैशंपायन उवाच। ५-१३९-०क्ष् (३७९६)
एवमुक्तस्तु विमनास्तिर्यग्दृष्टिरधोमुखः ।
संहत्य च भ्रुवोर्मध्यं न किञ्चिद्व्याजहार ह ॥ ५-१३९-१ (३६५५४)
तं वै विमनसं दृष्ट्वा संप्रेक्ष्यान्योन्यमन्तिकात् ।
पुनरेवोत्तरं वाक्यमुक्तवन्तौ नरर्षभौ ॥ ५-१३९-२ (३६५५५)
भीष्म उवाच। ५-१३९-३क्ष् (३७९७)
शुश्रूषमनसूयं च ब्रह्मण्यं सत्यवादिनम् ।
प्रतियोत्स्यामहे पार्थमतो दुःखतरं नु किम् ॥ ५-१३९-३ (३६५५६)
द्रोण उवाच। ५-१३९-४क्ष् (३७९८)
अश्वत्थाम्नि यथा पुत्रे भूयो मम धनञ्जये ।

बहुमानः परो राजन्सन्नतिश्च कपिध्वजे ॥ ५-१३९-४ (३६५५७)
तं चेत्पुत्रात्प्रियतमं प्रतियोत्स्ये धनञ्जयम् ।
क्षात्रं धर्ममनुष्ठाय धिगस्तु क्षत्रिजीविकाम् ॥ ५-१३९-५ (३६५५८)
यस्य लोके समो नास्ति कश्चिदन्यो धनुर्धरः ।
मत्प्रसादात्स बीभत्सुः श्रेयानन्यैर्धनुर्धरैः ॥ ५-१३९-६ (३६५५९)
मित्रध्रुग्दुष्टभावश्च नास्तिकोऽथानृजुः शठः ।
न सत्सु लभते पूजां यज्ञे मूर्ख इवागतः ॥ ५-१३९-७ (३६५६०)
वार्यमाणोऽपि पापेभ्यः पापात्मा पापमिच्छति ।
चोद्यमानोऽपि पापेन शुभात्मा शुभमिच्छति ॥ ५-१३९-८ (३६५६१)
मिथ्योपचरिता ह्येते वर्तमान ह्यनुप्रिये ।
अहितत्वाय कल्पन्ते दोषा भरतसत्तम ॥ ५-१३९-९ (३६५६२)
त्वमुक्तः कुरुवृद्धेन मया च विदुरेण च ।
वासुदेवेन च तथा श्रेयो नैवाभिमन्यसे ॥ ५-१३९-१० (३६५६३)
अस्ति मे बलमित्येव सहसा त्वं तितीर्षसि ।
सग्राहनक्रमकरं गङ्गावेगमिवोष्णगे ॥ ५-१३९-११ (३६५६४)
वाससैव यथा हि त्वं प्रावृण्वानोऽभिमन्यसे ।
स्रजं त्यक्तामिव प्राप्य लोभाद्यौधिष्ठिरीं श्रियम् ॥ ५-१३९-१२ (३६५६५)
द्रौपदीसहितं पार्थं सायुधैर्भ्रातृभिर्वृतम् ।
वनस्थमपि राज्यस्थः पाण्डवं को विजेष्यति ॥ ५-१३९-१३ (३६५६६)
निदेशे यस्य राजानः सर्वे तिष्ठन्ति किङ्कराः ।
तमैलविलमासाद्य धर्मराजो व्यराजत ॥ ५-१३९-१४ (३६५६७)
कुबेरसदनं प्राप्य ततो रत्नान्यवाप्य च ।
स्फीतमाक्रम्य ते राष्ट्रं राज्यमिच्छन्ति पाण्डवाः ॥ ५-१३९-१५ (३६५६८)
दत्तं हुतमधीतं च ब्राह्मणास्तर्पिता धनैः ।
आवयोर्गतमायुश्च कृतकृत्यौ च विद्धि नौ ॥ ५-१३९-१६ (३६५६९)
त्वं तु हित्वा सुखं राज्यं मित्राणि च धनानि च ।
विग्रहं पाण्डवैः कृत्वा महद्व्यसनमाप्स्यसि ॥ ५-१३९-१७ (३६५७०)
द्रौपदी यस्य चाशास्ते विजयं सत्यवादिनी ।
तपोघोरव्रता देवी कथं जेष्यसि पाण्डवम् ॥ ५-१३९-१८ (३६५७१)
मन्त्री जनार्दनो यस्य भ्राता यस्य धनञ्जयः ।
सर्वशस्त्रभृतां श्रेष्ठः कथं जेष्यसि पाण्डवम् ॥ ५-१३९-१९ (३६५७२)
सहाया ब्राह्मणा यस्य धृतिमन्तो जितेन्द्रियाः ।
तमुग्रतपसं वीरं कथं जेष्यसि पाण्डवम् ॥ ५-१३९-२० (३६५७३)
पुनरुक्तं च वक्ष्यामि यत्कार्यं भूतिमिच्छता ।
सुहृदा मज्जमानेषु सुहृत्सु व्यसनार्णवे ॥ ५-१३९-२१ (३६५७४)
अलं युद्धेन तैर्वीरैः शाम्य त्वं कुरुवृद्धये ।

मा गमः सतुतामात्यःसमित्रश्च यमक्षयम् ॥ ॥ ५-१३९-२२ (३६५७५)

इति श्रीमन्महाभारते उद्योगपर्वणि भगवद्यानपर्वणि
एकोनचत्वारिंशदधिकशततमोऽध्यायः ॥
Mahabharata - Udyoga Parva - Chapter Footnotes

५-१३९-९ एते पाण्डवास्त्वया मिथ्योपचारिता अपि अनु पश्चात्प्रिये
वर्तमाना हि प्रसिद्धम् । तव तु दोषाः द्वेषादयः। अहितत्वाय
वैरभावाय कल्पन्ते ॥
५-१३९-११ उष्णगे उष्णातिगमे वर्षकाले ॥
५-१३९-१२ वासुदेवो यथा हि त्वां प्रवृण्वानो न मन्यते इति खो डो
पाठः । वासमेव यथाहि त्वं इति घोटो पाठः । वासवेय यथा इति को
पाठः ॥
५-१३९-१४ ऐलविलं कुबेरम् । आसाद्य रणे प्राप्य ॥

---

उद्योगपर्व-अध्यय१४०
॥ श्रीः ॥
५.१४०. अध्यायः १४०

Mahabharata - Udyoga Parva - Chapter Topics
कृष्णेन कर्णः किमुक्त इति जनमेजयप्रश्नः ॥ १ ॥
कृष्णेन कर्णप्रति तस्य कुन्तीसुतत्वरूपरहस्यकथनपूर्वकं
पाण्डवपक्षप्रवेशचोदना ॥ २ ॥

Mahabharata - Udyoga Parva - Chapter Text

५-१४०-० (३६५७६)
जनमेजय उवाच। ५-१४०-०क्ष् (३७९९)
राजपुत्रैः परिवृतस्तथा भृत्यैश्च सत्तम ।
उपारोप्य रथे कर्णं निर्यातो मधुसूदनः ॥ ५-१४०-१ (३६५७७)
किमब्रवीद्रथोपस्थे राधेयं परवीरहा ।
कानि सान्त्वानि गोविन्दः सूतपुत्रे प्रयुक्तवान् ॥ ५-१४०-२ (३६५७८)
उद्यन्मेघस्वनः काले यत्कृष्णः कर्णमब्रवीत् ।
मृदु वा यदि वा तीक्ष्णं तन्ममाचक्ष्व सर्वशः ॥ ५-१४०-३ (३६५७९)
वैशंपायन उवाच। ५-१४०-४क्ष् (३८००)
आनुपूर्व्येण वाक्यानि तीक्ष्णानि च मृदूनि च ।
प्रियाणि धर्मयुक्तानि सत्यानि च हितानि च ॥ ५-१४०-४ (३६५८०)

हृदयग्रहणीयानि राधेयं मधुसूदनः ।
यान्यब्रवीदमेयात्मा तानि मे श्रृणु भारत ॥ ५-१४०-५ (३६५८१)
वासुदेव उवाच। ५-१४०-६क्ष् (३८०१)
उपासितास्ते राधेय ब्राह्मणा वेदपारगाः ।
तत्त्वार्थं परिपृष्टाश्च नियतेनानसूयया ॥ ५-१४०-६ (३६५८२)
त्वमेव कर्ण जानासि वेदवादान्सनातनान् ।
त्वमेव धर्मशास्त्रेषु सूक्ष्मेषु परिनिष्ठितः ॥ ५-१४०-७ (३६५८३)
कानीनश्च सहोढश्च कन्यायां यश्च जायते ।
वोढारं पितरं तस्य प्राहुः शास्त्रविदो जनाः ॥ ५-१४०-८ (३६५८४)
सोऽसि कर्ण तथाजातः पाण्डोः पुत्रोसि धर्मतः ।
निश्चयाद्धर्मशास्त्राणामेहि राजा भविष्यसि ॥ ५-१४०-९ (३६५८५)
पितृपक्षे च ते पार्था मातृपक्षे च वृष्णयः ।
द्वौ पक्षावभिजानीहि त्वमेतौ पुरुषर्षभ ॥ ५-१४०-१० (३६५८६)
मया सार्धमितो यातमद्य त्वां तात पाण्डवाः ।
अभिजानन्तु कौन्तेयं पूर्वजातं युधिष्ठिरात् ॥ ५-१४०-११ (३६५८७)
पादौ तव ग्रहीष्यन्ति भ्रातरः पञ्च पाण्डवाः ।
द्रौपदेयास्तथा पञ्च सौभद्रश्चापराजितः ॥ ५-१४०-१२ (३६५८८)
राजानो राजपुत्राश्च पाण्डवार्थे समागताः ।
पादौ तव ग्रहीष्यन्ति सर्वे चान्धकवृष्णयः ॥ ५-१४०-१३ (३६५८९)
हिरण्मयांश्च ते कुम्भान्राजतान्पार्थिवांस्तथा ।
ओषध्यः सर्वबीजानि सर्वरत्नानि वीरुधः ॥ ५-१४०-१४ (३६५९०)
राजन्या राजकन्याश्चाप्यानयन्त्वाभिषेचनम् ।
षष्ठे त्वां च तथा काले द्रौपद्युपगमिष्यति ॥ ५-१४०-१५ (३६५९१)
अग्निं जुहोतु वै धौम्यः संशितात्मा द्विजोत्तमः ।
अद्य त्वामभिषिञ्चन्तु चातुर्वैद्या द्विजातयः ॥ ५-१४०-१६ (३६५९२)
पुरोहितः पाण्डवानां ब्रह्मकर्मण्यवस्थितः ।
तथैव भ्रातरः पञ्च पाण्डवाः पुरुषर्षभाः ॥ ५-१४०-१७ (३६५९३)
द्रौपदेयास्तथा पञ्च पाञ्चालाश्चेदयस्तथा ।
अहं च त्वाऽभिषेक्ष्यामि राजानं पृथिवीपतिम् ॥ ५-१४०-१८ (३६५९४)
युवराजोऽस्तु ते राजा धर्मपुत्रो युधिष्ठिरः ।
गृहीत्वा व्यजनं श्वेतं धर्मात्मा संशितव्रतः । ५-१४०-१९ (३६५९५)
उपान्वारोहतु रथं कुन्तीपुत्रो युधिष्ठिरः ।
छत्रं च ते महाश्वेतं भीमसेनो महाबलः ॥ ५-१४०-२० (३६५९६)
अभिषिक्तस्य कौन्तेयो धारयिष्यति मूर्धनि ।
किङ्किणीशतनिर्घोषं वैयाघ्रपरिवारणम् ॥ ५-१४०-२१ (३६५९७)
रथं श्वेतहयैर्युक्तमर्जुनो वाहयिष्यति ।

अभिमन्युश्च ते नित्यं प्रत्यासन्नो भविष्यति ॥ ५-१४०-२२ (३६५९८)
नकुलः सहदेवश्च द्रौपदेयाश्च पञ्च ये ।
पञ्चालाश्चानुयास्यन्ति शिखण्डी च महारथः । ५-१४०-२३ (३६५९९)
अहं च त्वाऽनुयास्यामि सर्वे चान्धकवृष्णयः ।
दाशार्हाः परिवारास्ते दाशार्णाश्च विशांपते ॥ ५-१४०-२४ (३६६००)
भुङ्क्ष्व राज्यं महाबाहो भ्रातृभिः सह पाण्डवैः ।
जपैर्होमैश्च संयुक्तो मङ्गलैश्च पृथग्विधैः ॥ ५-१४०-२५ (३६६०१)
पुरोगमाश्च ते सन्तु द्रविडाः सहकुन्तलैः ।
आन्ध्रास्तालचराश्चैव चूचुपा वेणुपास्तथा ॥ ५-१४०-२६ (३६६०२)
स्तुवन्तु त्वां च बहुभिः स्तुतिभिः सूतमागधाः ।
विजयं वसुषेणस्य घोषयन्तु च पाण्डवाः ॥ ५-१४०-२७ (३६६०३)
स त्वं परिवृतः पार्थैर्नक्षत्रैरिव चन्द्रमाः ।
प्रशाधि राज्यं कौन्तेय कुन्तीं च प्रतिनन्दय ॥ ५-१४०-२८ (३६६०४)
मित्राणि ते प्रहृष्यन्तु व्यथन्तु रिपवस्तथा ।
सौभ्रात्रं चैव तेऽद्यास्तु भ्रातृभिः सह पाण्डवैः ॥ ॥ ५-१४०-२९
(३६६०५)

इति श्रीमन्महाभारते उद्योगपर्वणि भगवद्यानपर्वणि
चत्वारिंशदधिकशततमोऽध्यायः ॥

Mahabharata - Udyoga Parva - Chapter Footnotes

५-१४०-८ यश्च यस्तु कन्यायां जायते स द्विविधः कानीनः सहोढश्च ।सहोढः विवाहादूर्ध्वं जातः।अन्यो विवाहात्प्राग्जातः ।तन्मातुर्वोढारं तस्य पितरं प्राहुः ॥

---

उद्योगपर्व-अध्यय१४१
॥ श्रीः ॥
५.१४१. अध्यायः १४१

Mahabharata - Udyoga Parva - Chapter Topics

कर्णेन कृष्णंप्रति स्वस्य पाण्डवपक्षप्रवेशे सयुक्तिकं
प्रतिबन्धकनिरूपणपूर्वकं स्वरहस्यगोपनप्रार्थनादि ॥ १ ॥

Mahabharata - Udyoga Parva - Chapter Text

५-१४१-० (३६६०६)

कर्ण उवाच। ५-१४१-०क्ष् (३८०२)
असंशयं सौहृदान्मे प्रणयाच्चाथ केशव ।
सख्येन चैव वार्ष्णेय श्रेयस्कामतयैव च ॥ ५-१४१-१ (३६६०७)
सर्वं चैवाभिजानामि पाण्डोः पुत्रोऽस्मि धर्मतः ।
निश्चयाद्धर्मशास्त्राणां यथा त्वं कृष्ण मन्यसे ॥ ५-१४१-२ (३६६०८)
कन्या गर्भं समाधत्त भास्करान्मां जनार्दन ।
आदित्यवचनाच्चैव जातं मां सा व्यसर्जयत् ॥ ५-१४१-३ (३६६०९)
सोस्मि कृष्ण तथाजातः पाण्डोः पुत्रोस्मि धर्मतः ।
कुन्त्या त्वहमपाकीर्णो यथा न कुशलं तथा ॥ ५-१४१-४ (३६६१०)
सूतो हि मामधिरथो दृष्ट्वैवाभ्यानयद्गृहान् ।
राधायाश्चैव मां प्रादात्सौहार्दान्मधुसूदन ॥ ५-१४१-५ (३६६११)
मत्स्नेहाच्चैव राधायां सद्यः क्षीरमवातरत् ।
सा मे मूत्रं पुरीषं च प्रतिजग्राह माधव ॥ ५-१४१-६ (३६६१२)
तस्याः पिण्डव्यपनयं कुर्यादस्मद्विधः कथम् ।
धर्मविद्धर्मशास्त्राणां श्रवणे सततं रतः ॥ ५-१४१-७ (३६६१३)
तथा मामभिजानाति सूतश्चाधिरथः सुतम् ।
पितरं चाभिजानामि तमहं सौहृदात्सदा ॥ ५-१४१-८ (३६६१४)
स हि मे जातकर्मादि कारयामास माधव ।
शास्त्रदृष्टेन विधिना पुत्रप्रीत्या जनार्दन ॥ ५-१४१-९ (३६६१५)
नाम वै वसुषेणेति कारयामास वै द्विजैः ।
भार्याश्चोढा मम प्राप्ते यौवने तत्परिग्रहात् ॥ ५-१४१-१० (३६६१६)
तासु पुत्राश्च पौत्राश्च मम जाता जनार्दन ।
तासु मे हृदयं कृष्ण संजातं कामबन्धनम् ॥ ५-१४१-११ (३६६१७)
न पृथिव्या सकलया न सुवर्णस्य राशिभिः ।
हर्षाद्भयाद्वा गोविन्द मिथ्या कर्तुं तदुत्सहे ॥ ५-१४१-१२ (३६६१८)
धृतराष्ट्रकुले कृष्ण दुर्योधनसमाश्रयात् ।
मया त्रयोदशसमा भुक्तं राज्यमकण्टकम् ॥ ५-१४१-१३ (३६६१९)
इष्टं च बहुभिर्यज्ञैः सहसूतैर्मयाऽसकृत् ।
आवाहाश्च विवाहाश्च सहसूतैर्मया कृताः ॥ ५-१४१-१४ (३६६२०)
मां च कृष्ण समासाद्य कृतः शस्त्रसमुद्यमः ।
दुर्योधनेन वार्ष्णेय विग्रहश्चापि पाण्डवैः ॥ ५-१४१-१५ (३६६२१)
तस्माद्रणे द्वैरथे मां प्रत्युद्यातारमच्युत ।
वृतवान्परमं कृष्ण प्रतीपं सव्यसाचिनः ॥ ५-१४१-१६ (३६६२२)
वधाद्बन्धाद्भयाद्वापि लोभाद्वापि जनार्दन ।
अनृतं नोत्सहे कर्तुं धार्तराष्ट्रस्य धीमतः ॥ ५-१४१-१७ (३६६२३)
यदि ह्यद्य न गच्छेयं द्वैरथं सव्यसाचिना ।

अकीर्तिः स्याद्धृषीकेश मम पार्थस्य चोभयोः ॥ ५-१४१-१८ (३६६२४)
असंशयं हितार्थाय ब्रूयास्त्वं मधुसूदन ।
सर्वे च पाण्डवाः कुर्युस्त्वद्वशित्वान्न संशयः ॥ ५-१४१-१९ (३६६२५)
मन्त्रस्य नियमं कुर्यास्त्वमत्र मधुसूदन ।
एतदत्र हितं मन्ये सर्वं यादवनन्दन ॥ ५-१४१-२० (३६६२६)
यदि जानाति मां राजा धर्मात्मा संयतेन्द्रियः ।
कुन्त्याः प्रथमजं पुत्रं न स राज्यं ग्रहीष्यति ॥ ५-१४१-२१ (३६६२७)
प्राप्य चापि महद्राज्यं तदहं मधुसूदन ।
स्फीतं दुर्योधनायैव संप्रदद्यामरिन्दम ॥ ५-१४१-२२ (३६६२८)
स एव राजा धर्मात्मा शाश्वतोऽस्तु युधिष्ठिरः ।
नेता यस्य हृषीकेसो योद्धा यस्य धनञ्जयः ॥ ५-१४१-२३ (३६६२९)
पृथिवी तस्य राष्ट्रं च यस्य भीमो महारथः ।
नकुलः सहदेवश्च द्रौपदेयाश्च माधव ॥ ५-१४१-२४ (३६६३०)
धृष्टद्युन्मश्च पाञ्चल्यः सात्यकिश्च महारथः ।
उत्तमौजा युधामन्युः सत्यधर्मा च सौमकिः ॥ ५-१४१-२५ (३६६३१)
चैद्यश्च चेकितानश्च शिखण्डी चापराजितः ।
इन्द्रगोपकवर्णाश्च केकया भ्रातरस्तथा ।
इन्द्रायुधसवर्णश्च कुन्तिभोजो महामनाः ॥ ५-१४१-२६ (३६६३२)
मातुलो भीमसेनस्य श्येनजिच्च महारथः ।
शङ्खः पुत्रो विराटस्य निधिस्त्वं च जनार्दन ॥ ५-१४१-२७ (३६६३३)
महानयं कृष्ण कृतः क्षत्रस्य समुदानयः ।
राज्यं प्राप्तमिदं दीप्तं प्रथितं सर्वराजसु ॥ ५-१४१-२८ (३६६३४)
धार्तराष्ट्रस्य वार्ष्णेय शस्त्रयज्ञो भविष्यति ।
अस्य यज्ञस्य वेत्ता त्वं भविष्यसि जनार्दन ॥ ५-१४१-२९ (३६६३५)
आध्वर्यवं च ते कृष्ण ऋतावस्मिन्भविष्यति ।
होता चैवात्र बीभत्सुः सन्नद्धः स कपिध्वजः ॥ ५-१४१-३० (३६६३६)
गाण्डीवं स्रुक् तथा चाज्यं वीर्यं पुंसां भविष्यति ।
ऐन्द्रं पाशुपतं ब्राह्मं स्थूणाकर्णं च माधव ।
मन्त्रास्तत्र भविष्यन्ति प्रयुक्ताः सव्यसाचिना ॥ ५-१४१-३१ (३६६३७)
अनुयातश्च पितरमधिको वा पराक्रमे ।
गीतं स्तोत्रं स सौभद्रः सम्यक् तत्र भविष्यति ॥ ५-१४१-३२ (३६६३८)
उद्गातात्र पुनर्भीमः प्रस्तोता सुमहाबलः ।
विनदन्स नरव्याघ्रो नागानीकान्तकृद्रणे ॥ ५-१४१-३३ (३६६३९)
स चैव तत्र धर्मात्मा शश्वद्राजा युधिष्ठिरः ।
जपैर्होमैश्च संयुक्तो ब्रह्मत्वं कारयिष्यति ॥ ५-१४१-३४ (३६६४०)
शङ्खशब्दाः समुरजा भेर्यश्च मधुसूदन ।

उत्कृष्टः सिंहनादश्च सुब्रह्मण्यो भविष्यति ॥ ५-१४१-३५ (३६६४१)
नकुलः सहदेवश्च माद्रीपुत्रौ यशस्विनौ ।
शामित्रं तौ महावीर्यौ सम्यक् तत्र भविष्यतः ।
ग्तौ मैत्रावरुणाग्नीध्रौ महावीर्यौ भविष्यतः ॥' ५-१४१-३६ (३६६४२)
कल्माषदण्डा गोविन्द विमला रथपङ्क्तयः ।
यूपाः समुपकल्पन्तामस्मिन्यज्ञे जनार्दन ॥ ५-१४१-३७ (३६६४३)
कर्णिनालीकनाराचा वत्सदन्तोपबृंहणाः ।
तोमराः सोमकलशाः पवित्राणि धनूंषि च ॥ ५-१४१-३८ (३६६४४)
असयोऽत्र कपालानि पुरोडाशाः शिरांसि च ।
हविस्तु रुधिरं कृष्ण तस्मिन्यज्ञे भविष्यति ॥ ५-१४१-३९ (३६६४५)
इध्माः परिधयश्चैव शक्तयो विमला गदाः ।
सदस्या द्रोणशिष्याश्च कृपस्य च शरद्वतः ॥ ५-१४१-४० (३६६४६)
इषवोऽत्र परिस्तोमा मुक्ता गाण्डीवधन्वना ।
महारथप्रयुक्ताश्च द्रोणद्रौणिप्रचोदिताः ॥ ५-१४१-४१ (३६६४७)
प्रतिप्रास्थानिकं कर्म सात्यकिस्तु करिष्यति ।
दीक्षितो धार्तराष्ट्रोऽत्र पत्नी चास्य महाचमूः ॥ ५-१४१-४२ (३६६४८)
घटोत्कचोऽत्र शामित्रं करिष्यति महाबलः ।
अतिरात्रे महाबाहो वितते यज्ञकर्मणि ॥ ५-१४१-४३ (३६६४९)
दक्षिणा त्वस्य यज्ञस्य धृष्टद्युम्नः प्रतापवान् ।
वैतानिके कर्ममुखे जातो यत्कृष्ण पावकात् ॥ ५-१४१-४४ (३६६५०)
यदब्रुवमहं कृष्ण कटुकानि स्म पाण्डवान् ।
प्रियार्थं धार्तराष्ट्रस्य तेन तप्ये ह्यकर्मणा ॥ ५-१४१-४५ (३६६५१)
यदा द्रक्ष्यसि मां कृष्ण निहतं सव्यसाचिना ।
पुनश्चितिस्तदा चास्य यज्ञस्याथ भविष्यति ॥ ५-१४१-४६ (३६६५२)
दुःशासनस्य रुधिरं यदा पास्यति पाण्डवः ।
आनर्दं नर्दतः सम्यक् तदा सूयं भविष्यति ॥ ५-१४१-४७ (३६६५३)
यदा द्रोणं च भीष्मं च पाञ्चाल्यौ पातयिष्यतः ।
तदा यज्ञावसानं तद्भविष्यति जनार्दन ॥ ५-१४१-४८ (३६६५४)
दुर्योधनं यदा हन्ता भीमसेनो महाबलः ।
तदा समाप्स्यते यज्ञो धार्तराष्ट्रस्य माधव ॥ ५-१४१-४९ (३६६५५)
स्नुषाश्च प्रस्नुषाश्चैव धृतराष्ट्रस्य सङ्गताः ।
हतेश्वरा नष्टपुत्रा हतनाथाश्च केशव ॥ ५-१४१-५० (३६६५६)
रुदन्त्यः सहगान्धार्या श्वगृध्रकुरराकुले ।
स यज्ञेऽस्मिन्नवभृथो भविष्यति जनार्दन ॥ ५-१४१-५१ (३६६५७)
विद्यावृद्धा वयोवृद्धाः क्षत्रियाः क्षत्रियर्षभ ।
वृथा मृत्युं न कुर्वीरंस्त्वत्कृते मधुसूदन ॥ ५-१४१-५२ (३६६५८)

शस्त्रेण निधनं गच्छेत्समृद्धं क्षत्रमण्डलम् ।
करुक्षेत्रे पुण्यतमे त्रैलोक्यस्यापि केशव ॥ ५-१४१-५३ (३६६५९)
तदत्र पुण्डरीकाक्ष विधत्स्व यदभीप्सितम् ।
यथा कार्त्स्न्येन वार्ष्णेय क्षत्रं स्वर्गमवाप्नुयात् ॥ ५-१४१-५४ (३६६६०)
यावत्स्थास्यन्ति गिरयः सरितश्च जनार्दन ।
तावत्कीर्तिभवः शब्दः शाश्वतोयं भविष्यति ॥ ५-१४१-५५ (३६६६१)
ब्राह्मणाः कथयिष्यन्ति महाभारतमाहवम् ।
समागमेषु वार्ष्णेय क्षत्रियाणां यशोधनम् ॥ ५-१४१-५६ (३६६६२)
समुपानय कौन्तेयं युद्धाय मम केशव ।
मन्त्रसंवरणं कुर्वन्नित्यमेव परन्तप ॥ ॥ ५-१४१-५७ (३६६६३)

इति श्रीमन्महाभारते उद्योगपर्वणि भगवद्यानपर्वणि
एकचत्वारिंशदधिकशततमोऽध्यायः ॥
Mahabharata - Udyoga Parva - Chapter Footnotes

५-१४१-४ यथा न कुलजस्तथेति को पाठः ॥
५-१४१-१४ आवाहाः कुलधर्माः ॥
५-१४१-१५ मां च । मित्रमिति शेषः ॥
५-१४१-१९ ब्रयास्त्वं पाण्डवान्प्रतीति शेषः ॥
५-१४१-२० नियमं गोपनम् ॥
५-१४१-२८ समुदानयः समुदायीकरणम् ॥
५-१४१-४१ परिस्तोमाः सोमचमसादयः ॥
५-१४१-४२ प्रतिप्रस्थाताऽध्वर्योस्तव द्वितीयः तस्य कर्म
प्रतिप्रास्थानिकम् ॥
५-१४१-४३ अतिरात्रे ऋतौ । श्लेषेण निशीथेच। घटोत्कचः
रात्रिचरत्वात् शामित्रं करिष्यति ॥
५-१४१-४६ पुनश्चितिर्यज्ञानन्तरं चयनारम्भो यज्ञविशेषेषूक्तः ॥
५-१४१-४७ आनर्दं महानादं नर्दतः । णमुलन्तं पूर्वपदम्। सूयं
सोमाभिषवः। सुत्या भविष्यतीति को पाठः ॥
५-१४१-४८ यज्ञावसानं यज्ञस्य मध्येमध्ये विरम्यावस्थानम् ॥

---

उद्योगपर्व-अध्यय१४२
॥ श्रीः ॥
५.१४२. अध्यायः १४२

Mahabharata - Udyoga Parva - Chapter Topics

कृष्णेन कर्णप्रति पाण्डवजयनिर्धारणकथनपूर्वकं भीष्मादिषु युद्धसन्नाहसंदेशकथनचोदना ॥ १ ॥

Mahabharata - Udyoga Parva - Chapter Text

५-१४२-० (३६६६४)
वैशंपायन उवाच। ५-१४२-०क्ष् (३८०३)
कर्णस्य वचनं श्रुत्वा केशवः परवीरहा ।
उवाच प्रहसन्वाक्यं स्मितपूर्वमिदं यथा ॥ ५-१४२-१ (३६६६५)
श्रीभगवानुवाच। ५-१४२-२क्ष् (३८०४)
अपि त्वां न लभेत्कर्ण राज्यलम्भोपपादनम् ।
मया दत्तां हि पृथिवीं न प्रशासितुमिच्छसि ॥ ५-१४२-२ (३६६६६)
ध्रुवो जयः पाण्डवानामितीदं
न संशयः कश्चन विद्यतेऽत्र ।
जयध्वजो दृश्यते पाण्डवस्य
समुच्छ्रितो वानरराज उग्रः । ५-१४२-३ (३६६६७)
दिव्या माया विहिता भौमनेन
समुच्छ्रिता इन्द्रकेतुप्रकाशाः ।
दिव्यानि भूतानि जयावहानि
दृश्यन्ति चैवात्र भयानकानि ॥ ५-१४२-४ (३६६६८)
न सञ्जते शैलवनस्पतिभ्य
ऊर्ध्वं तिर्यग्योजनमात्ररूपः ।
श्रीमान्ध्वजः कर्ण धनञ्जयस्य
समुच्छ्रितः पावकतुल्यरूपः ॥ ५-१४२-५ (३६६६९)
यदा द्रक्ष्यसि सङ्ग्रामे श्वेताश्वं कृष्णसारथिम् ।
ऐन्द्रमस्त्रं विकुर्वाणमुभे चाप्यग्निमारुते ॥ ५-१४२-६ (३६६७०)
गाण्डीवस्य च निर्घोषं विस्फूर्जितमिवाशनेः ।
न तदा भविता त्रेता न कृतं द्वापरं न च ॥ ५-१४२-७ (३६६७१)
यदा द्रक्ष्यसि सङ्ग्रामे कुन्तीपुत्रं युधिष्ठिरम् ।
जपहोमसमायुक्तं स्वां रक्षन्तं महाचमूम् ॥ ५-१४२-८ (३६६७२)
आदित्यमिव दुर्धर्षं तपन्तं शत्रुवाहिनीम् ।
न तदा भविता त्रेता न कृतं द्वापरं न च ॥ ५-१४२-९ (३६६७३)
यदा द्रक्ष्यसि सङ्ग्रामे भीमसेनं महाबलम् ।
दुःशासनस्य रुधिरं पीत्वा नृत्यन्तमाहवे ॥ ५-१४२-१० (३६६७४)
प्रभिन्नमिव मातङ्गं प्रतिद्विरदघातिनम् ।
न तदा भविता त्रेता न कृतं द्वापरं न च ॥ ५-१४२-११ (३६६७५)

यदा द्रक्ष्यसि सङ्ग्रामे द्रोणं शान्तनवं कृपम् ।
सुयोधनंच राजानं सैन्धवं च जयद्रथम् ॥ ५-१४२-१२ (३६६७६)
युद्धायापततस्तूर्णं वारितान्सव्यसाचिना ।
न तदा भविता त्रेता न कृतं द्वापरं न च ॥ ५-१४२-१३ (३६६७७)
यदा द्रक्ष्यसि सङ्ग्रामे माद्रीपुत्रौ महाबलौ ।
वाहिनीं धार्तराष्ट्राणां क्षोभयन्तौ गजाविव ॥ ५-१४२-१४ (३६६७८)
विगाढे शस्त्रसंपाते परवीररथारुजौ ।
न तदा भविता त्रेता न कृतं द्वापरं न च ॥ ५-१४२-१५ (३६६७९)
ब्रूयाः कर्ण इतो गत्वा द्रोणं शान्तनवं कृपम् ।
सौम्योऽयं वर्तते मासः सुप्रापयवसेन्धनः ॥ ५-१४२-१६ (३६६८०)
सर्वौषधिवनस्फीतः फलवानल्पमक्षिकः ।
निष्पङ्को रसवत्तोयो नात्युष्णशिशिरः सुखः ॥ ५-१४२-१७ (३६६८१)
सप्तमाच्चापि दिवसादमावास्या भविष्यति ।
सङ्ग्रामो युज्यतां तस्यां तामाहुः शक्रदेवताम् ॥ ५-१४२-१८ (३६६८२)
तथा राज्ञो वदेः सर्वान्ये युद्धायाभ्युपागताः ।
यद्वो मनीषितं तद्वै सर्वं संपादयाम्यहम् ॥ ५-१४२-१९ (३६६८३)
५-१४२-२० (३६६८४)
राजानो राजपुत्राश्च दुर्योधनवशानुगाः ।
प्राप्य शस्त्रेण निधनं प्राप्स्यन्ति गतिमुत्तमाम् ॥
Mahabharata - Udyoga Parva - Chapter Footnotes

५-१४२-४ भौमनेन विश्वकर्मणा ॥
५-१४२-१८ संग्रामः संग्रामसाधनकलापः ।बुज्यतां एकीभूयावतिष्ठताम् ॥

---

उद्योगपर्व-अध्ययः१४३
॥ श्रीः ॥
५.१४३. अध्यायः १४३

Mahabharata - Udyoga Parva - Chapter Topics
कर्णेन कृष्णंप्रति पृथिवीवीनाशे कशुनिदुश्शासनयोः स्वस्यच
मूलत्वकथनम् ।१ ॥
तथा पार्थधार्तराष्ट्राणां जयपराजयसूचकनिमित्तोपवर्णनपूर्वकं
कृष्णमालिङ्ग्य प्रतिनिवर्तनम् ॥ २ ॥
सात्यकिनासह कृष्णस्य उपप्लाव्यागमनम् ॥ ३ ॥

Mahabharata - Udyoga Parva - Chapter Text

५-१४३-० (३६६८५)
वैशंपायन उवाच। ५-१४३-०क्ष् (३८०५)
केशवस्य तु तद्वाक्यं कर्णः श्रुत्वा हितं शुभम् ।
अब्रवीदभिसंपूज्य कृष्णं तं मधुसूदनम् ॥ ५-१४३-१ (३६६८६)
जानन्मां किं महाबाहो संमोहयितुमिच्छसि ।
योयं पृथिव्याः कात्स्न्येन विनाशः समुपस्थितः ॥ ५-१४३-२ (३६६८७)
निमित्तं तत्र शकुनिरहं दुःशासनस्तथा ।
दुर्योधनश्च नृपतिर्धृतराष्ट्रसुतोऽभवत् ॥ ५-१४३-३ (३६६८८)
असंशयमिदं कृष्ण महद्युद्धमुपस्थितम् ।
पाण्डवानां कुरूणां च घोरं रुधिरकर्दमम् ॥ ५-१४३-४ (३६६८९)
राजानो राजपुत्राश्च दुर्योधनवशानुगाः ।
रणे शस्त्राग्निना दग्धाः प्राप्स्यन्ति यमसादनम् ॥ ५-१४३-५ (३६६९०)
स्वप्ना हि बहवो घोरा दृश्यन्ते मधुसूदन ।
निमित्तानि च घोराणि तथोत्पाताः सुदारुणाः ॥ ५-१४३-६ (३६६९१)
पराजयं धार्तराष्ट्रे विजयं च युधिष्ठिरे ।
संसन्त इव वार्ष्णेय विविधा रोमहर्षणाः ॥ ५-१४३-७ (३६६९२)
प्राजापत्यं हि नक्षत्रं ग्रहस्तीक्ष्णो महाद्युतिः ।
शनैश्चरः पीडयति पीडयन्प्राणिनोऽधिकम् ॥ ५-१४३-८ (३६६९३)
कृत्वा चाङ्गारको वक्रं ज्योष्ठायां मधुसूदन ।
अनुराधां प्रार्थयते मैत्रं संगमयन्निव । ५-१४३-९ (३६६९४)
नूनं महद्भयं कृष्ण कुरूणां समुपस्थितम् ।
विशेषेण हि वार्ष्णेय चित्रां पीडयते ग्रहः ॥ ५-१४३-१० (३६६९५)
सोमस्य लक्ष्म व्यावृत्तं राहुरर्कमुपैति च ।
दिवश्चोल्काः पतन्त्येताः सनिर्घाताः सकंपनाः ॥ ५-१४३-११ (३६६९६)
निष्टनन्ति च मातङ्गा मुञ्चन्त्यश्रूणि वाजिनः ।
पानीयं यवसं चापि नाभिनन्दन्ति माधव ॥ ५-१४३-१२ (३६६९७)
प्रादुर्भूतेषु चैतेषु भयमाहुरुपास्थितम् ।
निमित्तेषु महाबाहो दारुणं प्राणिनाशनम् ॥ ५-१४३-१३ (३६६९८)
अल्पे भुक्ते पुरीषं च प्रभूतमिह दृश्यते ।
वाजिनां वारणानां च मनुष्याणां च केशव ॥ ५-१४३-१४ (३६६९९)
धार्तराष्ट्रस्य सैन्येषु सर्वेषु मधुसूदन ।
पराभवस्य तल्लिङ्गमिति प्राहुर्मनीषिणः ॥ ५-१४३-१५ (३६७००)
प्रहृष्टं वाहनं कृष्ण पाण्डवानां प्रचक्षते ।
प्रदक्षिणा मृगाश्चैव तत्तेषां जयलक्षणम् ॥ ५-१४३-१६ (३६७०१)
अपसव्या मृगाः सर्वे धार्तराष्ट्रस्य केशव ।
वाचश्चाप्यशरीरिण्यस्तकत्पराभवलक्षणम् ॥ ५-१४३-१७ (३६७०२)

मयूराः पुण्यशकुना हंससारसचातकाः ।
जीवञ्जीवकसङ्घाश्चाप्यनुगच्छन्ति पाण्डवान् ॥ ५-१४३-१८ (३६७०३)
गृध्राः कङ्का बकाः श्येना यातुधानास्तथा वृकाः ।
मक्षिकाणां च सङ्घाता अनुधावन्ति कौरवान् ॥ ५-१४३-१९ (३६७०४)
धार्तराष्ट्रस्य सैन्येषु भेरीणां नास्ति निःस्वनः ।
अनाहताः पाण्डवानां नदन्ति पटहाः किल ॥ ५-१४३-२० (३६७०५)
उदपानाश्च नर्दन्ति यथा गोवृषभास्तथा ।
धार्तराष्ट्रस्य सैन्येषु तत्पराभवलक्षणम् ॥ ५-१४३-२१ (३६७०६)
मांसशोणितवर्षं च वृष्टं देवेन माधव ।
तथा गन्धर्वनगरं भानुमत्समुपस्थितम् ॥ ५-१४३-२२ (३६७०७)
सप्राकारं सपरिखं सवप्रं चारुतोरणम् ।
कृष्णश्च परिघस्तत्र भानुमावृत्य तिष्ठति ॥ ५-१४३-२३ (३६७०८)
उदयास्तमने संध्ये वेदयन्ती महद्भयम् ।
शिवा च वाशते घोरं तत्पराभवलक्षणम् ॥ ५-१४३-२४ (३६७०९)
एकपक्षाक्षिचरणाः पक्षिणो मधुसूदन ।
उत्सृजन्ति महद्घोरं तत्पराभवलक्षणम् ॥ ५-१४३-२५ (३६७१०)
कृष्णग्रीवाश्च शकुना रक्तपादा भयानकाः ।
सन्ध्यामिमुखा यान्ति तत्पराभवलक्षणम् ॥ ५-१४३-२६ (३६७११)
ब्राह्मणान्प्रथमं द्वेष्टि गुरूंश्च मधुसूदन ।
भृत्यान्भक्तिमतश्चापि तत्पराभवलक्षणम् ॥ ५-१४३-२७ (३६७१२)
पूर्वा दिग्लोहिताकारा शस्त्रवर्णा च दक्षिणा ।
आमपात्रप्रतीकाशा पश्चिमा मधुसूदन। ५-१४३-२८ (३६७१३)
उत्तरा शङ्खवर्णाभा दिशां वर्णा उदाहृताः ॥
प्रदीप्ताश्च दिशः सर्वा धार्तराष्ट्रस्य माधव। ५-१४३-२९ (३६७१४)
महद्भयं वेदयन्ति तस्मिन्नुत्पातदर्शने ॥
सहस्रपादं प्रासादं स्वप्नान्ते स्म युधिष्ठिरः। ५-१४३-३० (३६७१५)
अधिरोहन्मया दृष्टः सह भ्रातृभिरच्युत ॥
श्वेतोष्णीषाश्च दृश्यन्ते सर्वे वै शुक्लवाससः । ५-१४३-३१ (३६७१६)
आसनानि च शुभ्राणि सर्वेषामुपलक्षये ॥
तव चापि मया कृष्ण स्वप्नान्ते रुधिराविला । ५-१४३-३२ (३६७१७)
आन्त्रेण पृथिवी दृष्टा परिक्षिप्ता जनार्दन ॥
अस्थिसञ्चयमारूढश्चामितौजा यधिष्ठिरः । ५-१४३-३३ (३६७१८)
सुवर्णपात्र्यां संहृष्टो भुक्तवान्घृतपायसम् ॥
युधिष्ठिरो मया दृष्टो ग्रसमानो वसुन्धराम्। ५-१४३-३४ (३६७१९)
उच्चं पर्वतमारूढो भीमकर्मा वृकोदरः ।
गदापाणिर्नरव्याघ्रो ग्रसन्निव महीमिमाम् ॥ ५-१४३-३५ (३६७२०)

क्षपयिष्यति नः सर्वान्स सुव्यक्तं महारणे ।
विदितं मे हृषीकेश श्रिया परमया ज्वलन् ॥ ५-१४३-३६ (३६७२१)
पाण्डुरं गजमारूढो गाण्डीवी स धनञ्जयः ।
त्वया सार्धं हृषीकेश श्रिया परमया ज्वलन् ॥ ५-१४३-३७ (३६७२२)
यूयं सर्वे वधिष्यध्वं तत्र मे नास्ति संशयः ।
पार्थिवान्समरे कृष्ण दुर्योधनपुरोगमान् ॥ ५-१४३-३८ (३६७२३)
नकुलः सहदेवश्च सात्यकिश्च महारथः ।
शुक्लकेयूरकण्ठत्राः शुक्लमाल्याम्बरावृताः ॥ ५-१४३-३९ (३६७२४)
अधिरूढा नरव्याघ्रा नरवाहनमुत्तमम् ।
त्रय एते मया दृष्टाः पाण्डुरच्छत्रवाससः ॥ ५-१४३-४० (३६७२५)
श्वेतोष्णीषाश्च दृश्यन्ते त्रय एते जनार्दन ।
धार्तराष्ट्रेषु सैन्येषु तान्विजानीहि केशव ॥ ५-१४३-४१ (३६७२६)
अश्वत्थामा कृपश्चैव कृतवर्मा च सात्वतः ।
रक्तोष्णीषाश्च दृश्यन्ते सर्वे माधव पार्थिवाः ॥ ५-१४३-४२ (३६७२७)
उष्ट्रप्रयुक्तमारूढौ भीष्मद्रोणौ महारथौ ।
मया सार्धं महाबाहो धार्तराष्ट्रेण वा विभो ॥ ५-१४३-४३ (३६७२८)
अगस्त्यशास्तां च दिशं प्रयाताः स्म जनार्दन ।
अचिरेणैव कालेन प्राप्स्यामो यमसादनम् ॥ ५-१४३-४४ (३६७२९)
अहं चान्ये च राजानो यच्च तत्क्षत्रमण्डलम् ।
गाण्डिवाग्निं प्रवेक्ष्याम इति मे नास्ति संशयः ॥ ५-१४३-४५ (३६७३०)
कृष्ण उवाच। ५-१४३-४६क्ष् (३८०६)
अपस्थितविनाशेयं नूनमद्य वसुंधरा ।
यथा हि मे वचः कर्ण नोपैति हृदयं तव ॥ ५-१४३-४६ (३६७३१)
सर्वेषां तात भूतानां विनाशे प्रत्युपस्थिते ।
अनयो नयसङ्काशो हृदयान्नापसर्पति ॥ ५-१४३-४७ (३६७३२)
कर्ण उवाच। ५-१४३-४८क्ष् (३८०७)
अपि त्वां कृष्ण पश्यामो जीवन्तोऽस्मान्महारणात् ।
समुत्तीर्णा महाबाहो वीरक्षत्रविनाशनात् ॥ ५-१४३-४८ (३६७३३)
अथवा सङ्गमः कृष्ण स्वर्गे नो भविता ध्रुवम् ।
तत्रेदानीं समेष्यामः पुनः सार्धं त्वयानघ ॥ ५-१४३-४९ (३६७३४)
वैशंपायन उवाच। ५-१४३-५०क्ष् (३८०८)
इत्युक्त्वा माधवं कर्णः परिष्वज्य च पीडितम् ।
विसर्जितः केशवेन रथोपस्थादवातरत् ॥ ५-१४३-५० (३६७३५)
ततः स्वरथमास्थाय जाम्बूनदविभूषितम् ।
महात्मा वै निववृते राधेयो दीनमानसः ॥ ५-१४३-५१ (३६७३६)
ततः शीघ्रतरं प्रायात्केशवः सहसात्यकिः ।

पुनरुच्चारयन्वाणीं याहि याहीति सारथिम् ॥ ॥ ५-१४३-५२ (३६७३७)

इति श्रीमन्महाभारते उद्योगपर्वणि भगवद्यानपर्वणि त्रिचत्वारिंशदधिकशततमोध्यायः ॥

Mahabharata - Udyoga Parva - Chapter Footnotes

५-१४३-२१ उदपानाः कूपादयो जलाशयाः ॥
५-१४३-२३ गन्धर्वनगरं सप्राकारम् । परिघः परिवेषः । तत्राकाशे गन्धर्वनगरोपर्येव ॥
५-१४३-२४ शिवा श्रृगालः वाशते शब्दं करोति ॥
५-१४३-३० सहस्रपादं सहस्रस्तम्भम् ॥
५-१४३-३२ तव पृथिवीति संबन्धः । त्वच्छरीरमित्यर्थः । परिक्षिप्ता परिवेष्टिता ॥
५-१४३-४६ तव हृदयं कर्तृ मम वचो नोपैति नाङ्गीकरोति ॥

---

उद्योगपर्व-अध्यय१४४
॥ श्रीः ॥
५.१४४. अध्यायः १४४

Mahabharata - Udyoga Parva - Chapter Topics

विदुरेण कुन्तीसमीपे युद्धे बहुवीरविनाशानुचिन्तनेन शोचनम् ॥१ ॥
कर्णपराक्रमभीतया कुन्त्या पाण्डवान्प्रति तन्मनःप्रसादनेच्छया गङ्गातीरे कर्णसमीपगमनम् ॥ २ ॥

Mahabharata - Udyoga Parva - Chapter Text

५-१४४-० (३६७३८)
वैशंपायन उवाच। ५-१४४-०क्ष् (३८०९)
असिद्धानुनये कृष्णे कुरुभ्यः पाण्डवान्गते ।
अभिगम्य पृथां क्षत्ता शनैः शोचन्निवाब्रवीत् ॥ ५-१४४-१ (३६७३९)
जानासि मे जीवपुत्री भावं नित्यमविग्रहे ।
क्रोशतो नच गृह्णीते वचनं मे सुयोधनः ॥ ५-१४४-२ (३६७४०)
उपपन्नो ह्यसौ राजा चेदिपाञ्चालकेकयैः ।
भीमार्जुनाभ्यां कृष्णेन युयुधानयमैरपि ॥ ५-१४४-३ (३६७४१)
उपप्लाव्ये निविष्टोऽपि धर्ममेव युधिष्ठिरः ।
काङ्क्षते ज्ञातिसौहार्दाद्बलवान्दुर्बलो यथा ॥ ५-१४४-४ (३६७४२)

राजा तु धृतराष्ट्रोऽयं वयोवृद्धो न शाम्यति ।
मत्तः पुत्रमदेनैव विधर्मे पथि वर्तते ॥ ५-१४४-५ (३६७४३)
जयद्रथस्य कर्णस्य तथा दुःशासनस्य च ।
सौबलस्य च दुर्बुद्ध्या मिथो भेदः प्रपत्स्यते । ५-१४४-६ (३६७४४)
अधर्मेम हि धर्मिष्ठं ह्रियते राज्यमीदृशम् ।
येषां तेषामयं धर्मः सानुबन्धो भविष्यति ॥ ५-१४४-७ (३६७४५)
क्रियमाणे बलाद्धर्मे कुरुभिः को न संज्वरेत् ।
असाम्ना केशवे याते समुद्योक्ष्यन्ति पाण्डवाः ॥ ५-१४४-८ (३६७४६)
ततः कुरूणामनयो भविता वीरनाशनः ।
चिन्तयन्न लभे निद्रामहःसु च निशासु च ॥ ५-१४४-९ (३६७४७)
श्रुत्वा तु कुन्ती तद्वाक्यमर्थकामेन भाषितम् ।
सा निःश्वसन्ती दुःखार्ता मनसा विममर्श ह ॥ ५-१४४-१० (३६७४८)
धिगस्त्वर्थं यत्कृतेयं सुमहाञ्ज्ञातिसंक्षयः ।
वत्स्यते सुहृदां चैव युद्धेऽस्मिन्वै पराभवः ॥ ५-१४४-११ (३६७४९)
पाण्डवाश्चेदिपञ्चाला यादवाश्च समागताः ।
भारतैः सह योत्स्यन्ति किं नु दुःखमतःपरम् ॥ ५-१४४-१२ (३६७५०)
पश्ये दोषं ध्रुवं युद्धे तथाऽयुद्धे पराभवम् ।
अधनस्य मृतं श्रेयो न हि ज्ञातिक्षयो जयः ।
इति मे चिन्तयन्त्या वै हृदि दुःखं प्रवर्तते ॥ ५-१४४-१३ (३६७५१)
पितामहः शान्तनव आचार्यश्च युधां पतिः ।
कर्णश्च धार्तराष्ट्रार्थं वर्धयन्ति भयं मम ॥ ५-१४४-१४ (३६७५२)
नाचार्यः कामवाञ्शिष्यैद्रौणोयुद्ध्येत जातुचित् ।
पाण्डवेषु कथं हार्दं कुर्यान्न च पितामहः । ५-१४४-१५ (३६७५३)
अयं त्वेको वृथादृष्टिर्धार्तराष्ट्रस्य दुर्मतेः ।
मोहानुवर्ती सततं पापो द्वेष्टि च पाण्डवान् ॥ ५-१४४-१६ (३६७५४)
महत्यनर्थे निर्बन्धी बलवांश्च विशेषतः ।
कर्णः सदा पाण्डवानां तन्मे दहति संप्रति ॥ ५-१४४-१७ (३६७५५)
आशंसे त्वद्य कर्णस्य मनोऽहं पाण्डवान्प्रति ।
ग्रसादयितुमासाद्य दर्शयन्ती यथातथम् ॥ ५-१४४-१८ (३६७५६)
तोषितो भगवान्यत्र दुर्वासा मे वरं ददौ ।
आह्वानं मन्त्रसंयुक्तं वसन्त्याः पितृवेश्मनि ॥ ५-१४४-१९ (३६७५७)
साहमन्तःपुरे राज्ञः कुन्तिभोजपुरस्कृता ।
चिन्तयन्ती बहुविधं हृदयेन विदूयता ॥ ५-१४४-२० (३६७५८)
बलाबलं च मन्त्राणां ब्राह्मणस्य च वाग्बलम् ।
स्त्रीभावाद्बालभावाच्च चिन्तयन्ती पुनः पुनः ॥ ५-१४४-२१ (३६७५९)
धात्र्या विस्रब्धया गुप्ता सखीजनवृता तदा ।

दोषं परिहरन्ती च पितुश्चारित्र्यरक्षिणी ॥ ५-१४४-२२ (३६७६०)
कथं नु सुकृतं मे स्यान्नापराधवती कथम् ।
भवेयमिति संचिन्त्य ब्राह्मणं तं नमस्य च ॥ ५-१४४-२३ (३६७६१)
कौतूहलात्तु तं लब्ध्वा बालिश्यादाचरं तदा ।
कन्या सती देवमर्कमासादयमहं ततः ॥ ५-१४४-२४ (३६७६२)
योऽसौ कानीनगर्भो मे पुत्रवत्परिरक्षितः ।
कस्मान्न कुर्याद्वचनं पथ्यं भ्रातृहितं तथा ॥ ५-१४४-२५ (३६७६३)
इति कुन्ती विनिश्चित्य कार्यनिश्चयमुत्तमम् ।
कार्यार्थमभिनिश्चित्य ययौ भागीरथीं प्रति ॥ ५-१४४-२६ (३६७६४)
आत्मजस्य ततस्तस्य घृणिनः सत्यसङ्गिनः ।
गङ्गातीरे पृथापश्यज्जपस्थानमनुत्तमम् ॥ ५-१४४-२७ (३६७६५)
प्राङ्मुखस्योर्ध्वबाहोः सा पर्यतिष्ठत पृष्ठतः ।
जप्यावसानं कार्यार्थं प्रतीक्षन्ती तपस्विनी ॥ ५-१४४-२८ (३६७६६)
अतिष्ठत्सूर्यतापार्ता कर्णस्योत्तरवाससि ।
कौरव्यपत्नी वार्ष्णेयी पद्ममालेव शुष्यती ॥ ५-१४४-२९ (३६७६७)
आपृष्ठतापाज्जप्त्वा स परिवृत्त्य यतव्रतः ।
दृष्ट्वा कुन्तीमुपातिष्ठदभिवाद्य कृताञ्जलिः ॥ ५-१४४-३० (३६७६८)
यथान्यायं महातेजा मानी धर्मभृतां वरः ।
उत्स्मयन्प्रणतः प्राह कुन्तीं वैकर्तनो वृषः ॥ ॥ ५-१४४-३१ (३६७६९)

इति श्रीमन्महाभारते उद्योगपर्वणि भगवद्यानपर्वणि
चतुश्चत्वारिंशदधिकशततमोऽध्यायः ॥
Mahabharata - Udyoga Parva - Chapter Footnotes

५-१४४-८ बलाद्धर्मे पास्वण्डिनां पारदार्यं उभयसंतोषकरमिति
द्वयोरपि धर्महेतुरिति बलात्कल्पना शास्त्रबहिर्भूता
तद्वदयमपीत्यर्थः ॥
५-१४४-१० अर्थकामेन हितकामेन ॥
५-१४४-१३ पश्ये पश्यामि ।आर्षमात्मनेपदम् ॥
५-१४४-२४ आचरं तेन मन्त्रेण देवतावाहनाख्यं कार्यं कृतवती ॥
५-१४४-२९ उत्तरवाससि उत्तरीयवस्त्रच्छायायाम् ॥
५-१४४-३० आपृष्ठतापादपराह्णपर्यन्तमित्यर्थः ॥

---

उद्योगपर्व-अध्यय१४५
॥ श्रीः ॥
५.१४५. अध्यायः १४५

Mahabharata - Udyoga Parva - Chapter Topics

कुन्त्या कर्णंप्रति तस्य सूर्यात्स्वस्मिन् जननकथनपूर्वकं पाण्डवैः सह संगमचोदना ॥

Mahabharata - Udyoga Parva - Chapter Text

५-१४५-० (३६७७०)
कर्ण उवाच। ५-१४५-०क्ष् (३८१०)
राधेयोऽहमाधिरथिः कर्णस्त्वामभिवादये ।
प्राप्ता किमर्थं भवती ब्रूहि किं करवामि ते ॥ ५-१४५-१ (३६७७१)
कुन्त्युवाच। ५-१४५-२क्ष् (३८११)
कौन्तेयस्त्वं न राधेयो न तवाधिरथः पिता ।
नासि सूतकुले जातः कर्ण तद्विद्धि मे वचः ॥ ५-१४५-२ (३६७७२)
कानीनस्त्वं मया जातः पूर्वजः कुक्षिणा धृतः ।
कुन्तिराजस्य भवने पार्थस्त्वमसि पुत्रक ॥ ५-१४५-३ (३६७७३)
प्रकाशकर्मा तपनो योऽयं देवो विरोचनः ।
अजीजनत्त्वां मय्येष कर्ण शस्त्रभृतां वरम् ॥ ५-१४५-४ (३६७७४)
कुण्डली बद्धकवचो देवगर्भः श्रिया वृतः ।
जातस्त्वमसि दुर्धर्ष मया पुत्र पितुर्गृहे ॥ ५-१४५-५ (३६७७५)
स त्वं भ्रातॄनसंबुद्ध्य मोहद्यदुपसेवसे ।
धार्तराष्ट्रान्न तद्युक्तं त्वयि पुत्र विशेषतः ॥ ५-१४५-६ (३६७७६)
एतद्धर्मफलं पुत्र नराणां धर्मनिश्चये ।
यत्तुष्यन्त्यस्य पितरो माता चाप्येकदर्शिनी ॥ ५-१४५-७ (३६७७७)
अर्जुनेनार्जितां पूर्वं हृतां लोभादसाधुभिः ।
आच्छिद्य धार्तराष्ट्रेभ्यो भुङ्क्ष यौधिष्ठिरीं श्रियम् ॥ ५-१४५-८ (३६७७८)
अद्य पश्यन्तु कुरवः कर्णार्जुनसमागमम् ।
सौभ्रात्रेण समालक्ष्य संनमन्तामसाधवः । ५-१४५-९ (३६७७९)
कर्णार्जुनौ वै भवतां यथा रामजनार्दनौ ।
असाध्यं किं नु लोके स्याद्युवयोः संहितात्मनोः ॥ ५-१४५-१० (३६७८०)
कर्ण शोभिष्यसे नूनं पञ्चमिर्भ्रातृभिर्वृतः ।
देवैः परिवृतो ब्रह्मा वेद्यामिव महाध्वरे ॥ ५-१४५-११ (३६७८१)
उपपद्यो गुणैः सर्वैर्ज्येष्ठः श्रेष्ठेषु बन्धुषु ।
सूतपुत्रेति मा शब्दः पार्थस्त्वमसि वीर्यवान् ॥ ॥ ५-१४५-१२ (३६७८२)

इति श्रीमन्महाभारते उद्योगपर्वणि भगवद्यानपर्वणि

पञ्चचत्वारिंशदधिकशततमोऽध्यायः ॥
Mahabharata - Udyoga Parva - Chapter Footnotes

५-१४५-७ एकं पुत्रमेव स्नेहेन पश्यन्ती एकदर्शिनी ॥

---

उद्योगपर्व-अध्यय१४६
॥ श्रीः ॥
५.१४६. अध्यायः १४६

Mahabharata - Udyoga Parva - Chapter Topics
सूर्येण कर्णप्रति कुन्तीवचनस्वीकरणविधानम् ॥ १ ॥
कर्णेन कुन्तींप्रति सोपालम्भं दुर्योधनपरित्यागस्य
सयुक्तिकमनौचेत्यकथनपूर्वकं अर्जुनवर्जं
पाण्डवासंहरणप्रतिज्ञानम् ॥ २ ॥

Mahabharata - Udyoga Parva - Chapter Text

५-१४६-० (३६७८३)
वैशंपायन उवाच। ५-१४६-०क्ष् (३८१२)
ततः सूर्यान्निश्चरितां कर्णः शुश्राव भारतीम् ।
दुरत्ययां प्रणयिनीं पितृवद्भास्करेरिताम् ॥ ५-१४६-१ (३६७८४)
सूर्य उवाच। ५-१४६-२क्ष् (३८१३)
सत्यमाह पृथा वाक्यं कर्ण मातृवचः कुरु ।
श्रेयस्ते स्यान्नरव्याघ्र सर्वमाचरतस्तथा ॥ ५-१४६-२ (३६७८५)
वैशंपायन उवाच। ५-१४६-३क्ष् (३८१४)
एवमुक्तस्य मात्रा च स्वयं पित्रा च भानुना ।
चचाल नैव कर्णस्य मतिः सत्यधृतेस्तदा ॥ ५-१४६-३ (३६७८६)
कर्ण उवाच। ५-१४६-४क्ष् (३८१५)
न चैतच्छ्रद्दधे वाक्यं क्षत्रिये भाषितं त्वया ।
धर्मद्वारं ममैतत्स्यान्नियोगकरणं तव ॥ ५-१४६-४ (३६७८७)
अकरोन्मयि यत्पापं भवती सुमहात्ययम् ।
अपाकीर्णोऽस्मि यन्मातस्तद्यशःकीर्तिनाशनम् ॥ ५-१४६-५ (३६७८८)
अहं चेत्क्षत्रियो जातो न प्राप्तः क्षत्रसत्क्रियाम् ।
त्वत्कृते किं नु पापीयः शत्रुः कुर्यान्ममाहितम् ॥ ५-१४६-६ (३६७८९)
क्रियाकाले त्वनुक्रोशमकृत्वा त्वमिमं मम ।
हीनसंस्कारसमयमद्य मां समचूचुदः ॥ ५-१४६-७ (३६७९०)

न वै मम हितं पूर्वं मातृवच्चेष्टितं त्वया ।
सा मां संबोधयस्यद्य केवलात्महितैषिणी ॥ ५-१४६-८ (३६७९१)
कृष्णेन सहितात्को वै न व्यथेत धनंजयात् ।
कोद्य भीतं न मां विद्यात्पर्थानां समितिं गतम् ॥ ५-१४६-९ (३६७९२)
अभ्राता विदितः पूर्वं युद्धकाले प्रकाशितः ।
पाण्डवान्यदि गच्छामि किं मां क्षत्रं वदिष्यति ॥ ५-१४६-१० (३६७९३)
सर्वकामैः संविभक्तः पूजितश्च यथासुखम् ।
अहं वै धार्तराष्ट्राणां कुर्यां तदफलं कथम् ॥ ५-१४६-११ (३६७९४)
उपनह्य परैर्वैरं ये मां नित्यमुपासते ।
नमस्कुर्वन्ति च सदा वसवो वासवं यथा ॥ ५-१४६-१२ (३६७९५)
मम प्राणेन ये शत्रूञ्शक्ताः प्रतिसमासितुम् ।
मन्यन्ते ते कथं तेषामहं छिन्द्यां मनोरथम् ॥ ५-१४६-१३ (३६७९६)
मया प्लवेन संग्रामं तितीर्षन्ति दुरत्ययम् ।
अपारे पारकामा ये त्यजेयं तानहं कथम् ॥ ५-१४६-१४ (३६७९७)
अयं हि कालः संप्राप्तो धार्तराष्ट्रोपजीविनाम् ।
निर्वेष्टव्यं मया तत्र प्राणानपरिरक्षता ॥ ५-१४६-१५ (३६७९८)
कृतार्थाः सुभृता ये हि कृत्यकाले ह्युपस्थिते ।
अनवेक्ष्य कृतं पापा विकुर्वन्त्यनवस्थिताः ॥ ५-१४६-१६ (३६७९९)
राजकिल्बिषिणां तेषां भर्तृपिण्डापहारिणाम् ।
नैवायं न परो लोको विद्यते पापकर्मणाम्। ५-१४६-१७ (३६८००)
धृतराष्ट्रस्य पुत्राणामर्थे योत्स्यामि ते सुतैः ।
बलं च शक्तिं चास्थाय न वै त्वय्यनृतं वदे ॥ ५-१४६-१८ (३६८०१)
आनृशंस्यमथो वृत्तं रक्षन्सत्पुरुषोचितम् ।
अतोऽर्थकरमप्येतन्न करोम्यद्य ते वचः ॥ ५-१४६-१९ (३६८०२)
न च तेऽयं समारम्भो मयि मोघो भविष्यति ।
वध्यान्विषह्यान्संग्रामे न हनिष्यामि ते सुतान् ॥ ५-१४६-२० (३६८०३)
युधिष्ठिरं च भीमं च यमौ चैवार्जुनादृते ।
अर्जुनेन समं युद्धमपि यौधिष्ठिरे बले ॥ ५-१४६-२१ (३६८०४)
अर्जुनं हि निहत्याजौ संप्राप्तं स्यात्फलं मया ।
यशसा चापि युज्येयं निहतः सव्यसाचिना ॥ ५-१४६-२२ (३६८०५)
न ते जातु नशिष्यन्ति पुत्राः पञ्च यशस्विनि ।
निरर्जुनाः सकर्णा वा सार्जुना वा हते मयि ॥ ५-१४६-२३ (३६८०६)
इति कर्णवचः श्रुत्वा कुन्ती दुःखात्प्रवेषती ।
उवाच पुत्रमाश्लिष्य कर्णं धैर्यादकम्पनम् ॥ ५-१४६-२४ (३६८०७)
एवं वै भाव्यमेतेन क्षयं यास्यन्ति कौरवाः ।
यथा त्वं भाषसे कर्ण दैवं तु बलवत्तरम् ॥ ५-१४६-२५ (३६८०८)

त्वया चतुर्णां भ्रातॄणामभयं शत्रुकर्शन ।
दत्तं तत्प्रतिजानीहि सङ्गरप्रतिमोचनम् ॥ ५-१४६-२६ (३६८०९)
अनामयं स्वस्ति चेति पृथाथो कर्णमब्रवीत् ।
तां कर्णोऽभ्यवदत्प्रीतस्ततस्तौ जग्मतुः पृथक् ॥ ॥ ५-१४६-२७ (३६८१०)

इति श्रीमन्महाभारते उद्योगपर्वणि भगवद्यानपर्वणि
षट्चत्वारिंशदधिकशततमोऽध्यायः ॥
Mahabharata - Udyoga Parva - Chapter Footnotes

५-१४६-४ न श्रद्दधे कर्तव्यत्वेन न मन्ये ।धर्मद्वारं
विपरीतलक्षणया धर्मापगमद्वारम्।तव नियोगकरणं
त्वदाज्ञप्तार्थानुष्ठानम् ॥
५-१४६-५ सुमहात्ययं सुमहान् अत्ययो जातिभ्रंशाख्यो विनाशो यस्मात्
।अपाकीर्णस्त्यक्तः ॥
५-१४६-६ त्वत्कृते त्वत्सुखार्थं कानीनो गर्भः प्रकटो माभूदिति
हेतोरहं क्षत्रसत्क्रियां चेन्न प्राप्तस्तर्हि त्वदन्यः कः शत्रुः
किं ममाहितं पापीय इति इतोपि पापतरं कुर्यान्न कोऽपीत्यर्थः ॥
५-१४६-७ क्रियाकाले क्षत्रियोचितसंस्कारकाले ।अनुक्रोशं
दयाम्।समचूचुदः स्वकार्यार्थं प्रेरितवत्यनि ॥
५-१४६-१२ उपनह्य बध्वा ॥
५-१४६-१३ प्रतिसमासितुं जेतुम् ॥
५-१४६-१५ निर्वेष्टव्यं आनृण्यं कर्तव्यम् ॥
५-१४६-२० विषह्यान् हन्तुं शक्यानपीत्यर्थः ॥

---

उद्योगपर्व-अध्यय१४७
॥ श्रीः ॥
५.१४७. अध्यायः १४७

Mahabharata - Udyoga Parva - Chapter Topics
कृष्णेन पाण्डवान्प्रति संक्षेपेण हास्तिननगरवृत्तान्तकथनम् ॥ १ ॥
पाण्डवैः कृष्णंप्रति विस्तरेण भीष्मादिवचनकथनप्रार्थना ॥ २ ॥
कृष्णेन शमविधायकभीष्मवचनानुवादः ॥ ३ ॥

Mahabharata - Udyoga Parva - Chapter Text

५-१४७-० (३६८११)

वैशंपायन उवाच। ५-१४७-०क्ष् (३८१६)
आगम्य हास्तिनपुरादुपप्लाव्यमरिन्दमः ।
पाण्डवानां यथावृत्तं केशवः सर्वमुक्तवान् ॥ ५-१४७-१ (३६८१२)
संभाष्य सुचिरं कालं मन्त्रयित्वा पुनः पुनः ।
स्वमेव भवनं शौरिर्विश्रमार्थं जगाम ह ॥ ५-१४७-२ (३६८१३)
विसृज्य सर्वान्नृपतीन्विराटप्रमुखांस्तदा ।
पाण्डवा भ्रातरः पञ्च भानावस्तंगते सति ॥ ५-१४७-३ (३६८१४)
सन्ध्यामुपास्य ध्यायन्तस्तमेव गतमानसाः ।
आनाय्य कृष्णं दाशार्हं पुनर्मन्त्रममन्त्रयन् ॥ ५-१४७-४ (३६८१५)
युधिष्ठिर उवाच। ५-१४७-५क्ष् (३८१७)
त्वया नागपुरं गत्वा सभायां धृतराष्ट्रजः ।
किमुक्तः पुण्डरीकाक्ष तन्नः शंसितुमर्हसि ॥ ५-१४७-५ (३६८१६)
वासुदेव उवाच। ५-१४७-६क्ष् (३८१८)
मया नागपुरं गत्वा सभायां धृतराष्ट्रजः ।
तथ्यं पथ्यं हितं चोक्तो न च गृह्णाति दुर्मतिः । ५-१४७-६ (३६८१७)
युधिष्ठिर उवाच। ५-१४७-७अतस्मिन्नुत्पथमापन्ने कुरुवृद्धः पितामहः ।
किमुक्तवान्हृषीकेश दुर्योधनममर्षणम् ॥ ५-१४७-७क्ष् (३८१९)
आचार्यो वा महाभाग भारद्वाजः किमब्रवीत् ।
पितरौ धृतराष्ट्रस्तं गान्धारी वा किमब्रवीत् ॥ ५-१४७-८ (३६८१८)
पिता यवीयानस्माकं क्षत्ता धर्मविदां वरः ।
पुत्रशोकाभिसन्तप्तः किमाह धृतराष्ट्रजम् ॥ ५-१४७-९ (३६८१९)
किंच सर्वे नृपतयः सभायां ये समासते ।
उक्तवन्तो यथातत्त्वं तद्ब्रूहि त्वं जनार्दन ॥ ५-१४७-१० (३६८२०)
उक्तवान्हि भवान्सर्वं वचनं कुरुमुख्ययोः ।
धार्तराष्ट्रस्य तेषां हि वचनं कुरुसंसदि ॥ ५-१४७-११ (३६८२१)
कामलोभाभिभूतस्य मन्दस्य प्राज्ञमानिनः ।
अप्रियं हृदये मह्यं तन्न तिष्ठति केशव ॥ ५-१४७-१२ (३६८२२)
तेषां वाक्यानि गोविन्द श्रोतुमिच्छाम्यहं विभो ।
यथा च नाभिपद्येत कालस्तात तथा कुरु ।
भवान्हि नो गतिः कृष्ण भवान्नाथो भवान्गुरुः ॥ ५-१४७-१३ (३६८२३)
वासुदेव उवाच। ५-१४७-१४क्ष् (३८२०)
श्रृणु राजन्यथा वाक्यमुक्तो राजा सुयोधनः ।
मध्ये कुरूणां राजेन्द्र सभायां तन्निबोध मे ॥ ५-१४७-१४ (३६८२४)
मया विश्राविते वाक्ये जहास धृतराष्ट्रजः ।
अथ भीष्मः सुसंक्रुद्ध इदं वचनमब्रवीत् ॥ ५-१४७-१५ (३६८२५)
दुर्योधन निबोधेदं कुलार्थे यद्ब्रवीमि ते ।

तच्छ्रुत्वा राजशार्दूल स्वकुलस्य हितं कुरु ॥ ५-१४७-१६ (३६८२६)
मम तात पिता राजञ्शन्तनुर्लोकविश्रुतः ।
तस्याहमेक एवासं पुत्रः पुत्रवतां वरः ॥ ५-१४७-१७ (३६८२७)
तस्य बुद्धिः समुत्पन्ना द्वितीयः स्यात्कथं सुतः ।
एकपुत्रमपुत्रं वै प्रवदन्ति मनीषिणः ॥ ५-१४७-१८ (३६८२८)
न चोच्छेदं कुलं यायाद्विस्तीर्येच्च कथं यशः ।
तस्याहमीप्सितं बुद्ध्वा कालीं मातरमावहम् ॥ ५-१४७-१९ (३६८२९)
प्रतिज्ञां दुष्करां कृत्वा पितुरर्थे कुलस्य च ।
अराजा चोर्ध्वरेताश्च यथा सुविदितं तव ।
प्रतीतो निवसाम्येष प्रतिज्ञामनुपालयन् ॥ ५-१४७-२० (३६८३०)
तस्यां जज्ञे महाबाहुः श्रीमान्कुरुकुलोद्वहः ।
विचित्रवीर्यो धर्मात्मा कनीयान्मम पार्थिव ॥ ५-१४७-२१ (३६८३१)
स्वर्यातेऽहं पितरि तं स्वराज्ये सन्न्यवेशयम् ।
विचित्रवीर्यं राजानं भृत्यो भूत्वा ह्यधश्चरः ॥ ५-१४७-२२ (३६८३२)
तस्याहं सदृशान्दारान्राजेन्द्र समुपाहरम् ।
जित्वा पार्थिवसङ्घातमपि ते बहुशः श्रुतम् ॥ ५-१४७-२३ (३६८३३)
ततो रामेण समरे द्वन्द्वयुद्धमुपागमम् ।
स हि रामभयादेभिर्नागरैर्विप्रवासितः ॥ ५-१४७-२४ (३६८३४)
दारेष्वप्यतिसक्तश्च यक्ष्माणं समपद्यत ।
यदा त्वराजके राष्ट्रे न ववर्ष सुरेश्वरः ।
तदाभ्यधावन्मामेव प्रजाः क्षुद्भयपीडिताः ॥ ५-१४७-२५ (३६८३५)
प्रजा ऊचुः ।५-१४७-२६क्ष् (३८२१)
उपक्षीणाः प्रजाः सर्वा राजा भव भवाय नः ।
ईतीः प्रणुद भद्रं शन्तनोः कुलवर्धन ॥ ५-१४७-२६ (३६८३६)
पीड्यन्ते ते प्रजाः सर्वा व्याधिभिर्भृशदारुणैः ।
अल्पावशिष्टा गाङ्गेय ताः परित्रातुमर्हसि ॥ ५-१४७-२७ (३६८३७)
व्याधीन्प्रणुद्य वीर त्वं प्रजा धर्मेण पालय ।
त्वयि जिवती मा राष्ट्रं विनाशमुपगच्छतु ॥ ५-१४७-२८ (३६८३८)
भीष्म उवाच।५-१४७-२९क्ष् (३८२२)
प्रजानां क्रोशतीनां वै नैवाक्षुभ्यत मे मनः ।
प्रतिज्ञां रक्षमाणस्य तद्वृत्तं स्मरतस्तथा ।
ततः पौरा महाराज माता काली च मे शुभा ॥ ५-१४७-२९ (३६८३९)
भृत्याः पुरोहिताचार्या ब्राह्मणाश्च बहुश्रुताः ।
मामूचुर्भृशसंतप्ता भव राजेति सन्ततम् ॥ ५-१४७-३० (३६८४०)
प्रतीपरक्षितं राष्ट्रं त्वां प्राप्य विनशिष्यति ।
स त्वमस्मद्धितार्थं वै राजा भव महामते ॥ ५-१४७-३१ (३६८४१)

इत्युक्तः प्राञ्जलिर्भूत्वा दुःखितो भृशमातुरः ।
तेभ्यो न्यवेदयं तत्र प्रतिज्ञां पितृगोरवात् ॥ ५-१४७-३२ (३६८४२)
ऊर्ध्वरेता ह्यराजा च कुलस्यार्थे पुनः पुनः ।
विशेषतस्त्वदर्थं च धुरि मा मां नियोजय ॥ ५-१४७-३३ (३६८४३)
ततोऽहं प्राञ्जलिर्भूत्वा मातरं संप्रसादयम् ।
नाम्ब शन्तनुना जातः कौरवं वंशमुद्वहन् ॥ ५-१४७-३४ (३६८४४)
प्रतिज्ञां वितथां कुर्यामिति राजन्पुनः पुनः ।
विशेषतस्त्वदर्थं च प्रतिज्ञां कृतवानहम् ॥ ५-१४७-३५ (३६८४५)
अहं प्रेष्यश्च दासश्च तवाद्य सुतवत्सले ।
एवं तामनुनीयाहं मातरं जनसन्निधौ ॥ ५-१४७-३६ (३६८४६)
अयाचं भ्रतृदारेषु तदा व्यासं महामुनिम् ।
सह मात्रा महाराज प्रसाद्य तमृषिं महामुनिम् । ५-१४७-३७ (३६८४७)
अपत्यार्थं महाराज प्रसादं कृतवांश्च सः ।
त्रीन्स पुत्रानजनयत्तदा भरतसत्तम ॥ ५-१४७-३८ (३६८४८)
अन्धः करणहीनत्वान्न वै राजा पिता तव ।
राजा तु पाण्डुरभवन्महात्मा लोकविश्रुतः ॥ ५-१४७-३९ (३६८४९)
स राजा तस्य ते पुत्राः पितुर्दायाद्यहारिणः ।
मा तात कलहं कार्षी राज्यस्यार्धं प्रदीयताम् ॥ ५-१४७-४० (३६८५०)
मयि जीवति राज्यं कः संप्रशासेत्पुमानिह ।
मावमंस्या वचो मह्यं शममिच्छामि वः सदा ॥ ५-१४७-४१ (३६८५१)
न विशेषोऽस्ति मे पुत्र त्वयि तेषु च षार्थिव ।
मतमेतत्पितुस्तुभ्यं गान्धार्या विदुरस्य च ॥ ५-१४७-४२ (३६८५२)
श्रोतव्यं खलु वृद्धानां नाभिशङ्कीर्वचो मम ।
नाशयिष्यसि मा सर्वमात्मानं पृथिवीं तथा ॥ ॥ ५-१४७-४३ (३६८५३)

इति श्रीमन्महाभारते उद्योगपर्वणि भगवद्यानपर्वणि
सप्तचत्वारिंशदधिकशततमोऽध्यायः ॥

Mahabharata - Udyoga Parva - Chapter Footnotes

५-१४७-१३ नाभिपद्येत नातिक्रामेत ॥
५-१४७-१९ कालीं सत्यवतीम् ॥
५-१४७-२० प्रतीतः तुष्टः ॥
५-१४७-२४ विप्रवासितः दूरेस्थापितः ॥

---

उद्योगपर्व-अध्यय१४८
॥ श्रीः ॥
५.१४८. अध्यायः १४८

Mahabharata - Udyoga Parva - Chapter Topics
कृष्णेन पाण्डवान्प्रति द्रोणवाक्यानुवादः ॥ १ ॥
तथा भीष्मंप्रत्युक्तविदुरवचनानुवादः ॥ २ ॥
तथा गान्धारीवचनानुवादः ॥ ३ ॥

Mahabharata - Udyoga Parva - Chapter Text

५-१४८-० (३६८५४)
वासुदेव उवाच। ५-१४८-०क्ष् (३८२३)
भीष्मेणोक्ते ततो द्रोणो दुर्योधनमभाषत ।
मध्ये नृपाणां भद्रं ते वचनं वचनक्षमः ॥ ५-१४८-१ (३६८५५)
प्रातीपः शन्तनुस्तात कुलस्यार्थे यथा स्थितः ।
यथा देवव्रतो भीष्मः कुलस्यार्थे स्थितोऽभवत् ॥ ५-१४८-२ (३६८५६)
तथा पाण्डुर्नरपतिः सत्यसन्धो जितेन्द्रियः ।
राजा कुरूणां धर्मात्मा सुव्रतः सुसमाहिताः ॥ ५-१४८-३ (३६८५७)
ज्येष्ठाय राज्यमददद्धृतराष्ट्राय धीमते ।
यवीयसे तथा क्षत्रे कुरूणां वंशवर्धनः । ५-१४८-४ (३६८५८)
ततः सिंहासने राजन्स्थापयित्वैनमच्युतम् ॥
वनं जगाम कौरव्यो भार्याभ्यां सहितो नृपः ॥ ५-१४८-५ (३६८५९)
नीचैः स्थित्वा तु विदुर उपास्ते स्म विनीतवत् ।
प्रेष्यवत्पुरुषव्याघ्रो वालव्यजनमुत्क्षिपन् ॥ ५-१४८-६ (३६८६०)
ततः सर्वाः प्रजास्तात धृतराष्ट्रं जनेश्वरम् ।
अन्वपद्यन्त विधिवद्यथा पाण्डुं जनाधिपम् ॥ ५-१४८-७ (३६८६१)
विसृज्य धृतराष्ट्राय राज्यं स विदुराय च ।
चचार पृथिवीं पाण्डुः सर्वां परपुरञ्जयः ॥ ५-१४८-८ (३६८६२)
कोशसंवनने दाने भृत्यानां चान्ववेक्षणे ।
भरणे चैव सर्वस्य विदुरः सत्यसङ्गरः ॥ ५-१४८-९ (३६८६३)
सन्धिविग्रहसंयुक्तो राज्ञां संवाहनक्रियाः ।
अवैक्षत महातेजा भीष्मः परपुरञ्जयः ॥ ५-१४८-१० (३६८६४)
सिंहासनस्थो नृपतिर्धृतराष्ट्रो महाबलः ।
अन्वास्यमानः सततं विदुरेण महात्मना ॥ ५-१४८-११ (३६८६५)
कथं तस्य कुले जातः कुलभेदं व्यवस्यसि ।
संभूय भ्रातृभिः सार्धं भुङ्क्ष भोगाञ्जनाधिप ॥ ५-१४८-१२ (३६८६६)
ब्रवीम्यहं न कार्पण्यान्नार्थहेतोः कथञ्चन ।
भीष्मेण दत्तमिच्छामि न त्वया राजसत्तम ॥ ५-१४८-१३ (३६८६७)

नाहं त्वत्तोऽभिकाङ्क्षिष्ये वृत्त्युपायं जनाधिप ।
यतो भीष्मस्ततो द्रोणो यद्भीष्मस्त्वाह तत्कुरु ॥ ५-१४८-१४ (३६८६८)
दीयतां पाण्डुपुत्रेभ्यो राज्यार्धमरिकर्शन ।
सममाचार्यकं तात तव तेषां च मे सदा ॥ ५-१४८-१५ (३६८६९)
अश्वत्थामा यथा मह्यं तथा श्वेतहयो मम ।
बहुना किं प्रलापेन यतो धर्मस्ततो जयः ॥ ५-१४८-१६ (३६८७०)
वासुदेव उवाच। ५-१४८-१७क्ष् (३८२४)
एवमुक्ते महाराज द्रोणेनामिततेजसा ।
व्याजहार ततो वाक्यं विदुरः सत्यसङ्गरः ।
पितुर्वदनमन्वीक्ष्य परिवृत्त्य च धर्मवित् ॥ ५-१४८-१७ (३६८७१)
विदुर उवाच। ५-१४८-१८क्ष् (३८२५)
देवव्रत निबोधेदं वचनं मम भाषतः ।
प्रनष्टः कौरवो वंशस्त्वयायं पुनरुद्धृतः ॥ ५-१४८-१८ (३६८७२)
तन्मे विलपमानस्य वचनं समुपेक्षसे ।
कोयं दुर्योधनो नाम कुलेऽस्मिन्कुलपांसनः ॥ ५-१४८-१९ (३६८७३)
यस्य लोभाभिभूतस्य मतिं समनुवर्तसे ।
अनार्यस्याकृतज्ञस्य लोभेन हृतचेतसः ।
अतिक्रामति यः शास्त्रं पितुर्धर्मार्थदर्शिनः ॥ ५-१४८-२० (३६८७४)
एते नश्यन्ति कुरवो दुर्योधनकृतेन वै ।
यथा ते न प्रणश्येयुर्महाराज तथा कुरु ॥ ५-१४८-२१ (३६८७५)
मां चैव धृतराष्ट्रं च पूर्वमेव महामते ।
चित्रकार इवालेख्यं कृत्वा स्थापितवानसि ॥ ५-१४८-२२ (३६८७६)
प्रजापतिः प्रजाः सृष्ट्वा यथा संहरते तथा ।
नोपेक्षस्व महाबाहो पश्यमानः कुलक्षयम् ॥ ५-१४८-२३ (३६८७७)
अथ तेऽद्य मतिर्नष्टा विनाशे प्रत्युपस्थिते ।
वनं गच्छ मया सार्धं धृतराष्ट्रेण चैव ह ॥ ५-१४८-२४ (३६८७८)
बद्ध्वा वा निकृतिप्रज्ञं धार्तराष्ट्रं सुदुर्मतिम् ।
शाधीदं राज्यमद्याशु पाण्डवैरभिरक्षितम् ॥ ५-१४८-२५ (३६८७९)
प्रसीद राजशार्दूल विनाशो दृश्यते महान् ।
पाण्डवानां कुरूणां च राज्ञाममिततेजसाम् ॥ ५-१४८-२६ (३६८८०)
वासुदेव उवाच। ५-१४८-२७क्ष् (३८२६)
विररामैवमुक्त्वा तु विदुरो दीनमानसः ।
प्रध्यायमानः स तदा निःश्वसंश्च पुनः पुनः ॥ ५-१४८-२७ (३६८८१)
ततोऽस्य राज्ञः सुबलस्य पुत्री
धर्मार्थयुक्तं कुलनाशभीता ।
दुर्योधनं पापमतिं नृशंसं

राज्ञां समक्षं सुतमाह कोपात् ॥ ५-१४८-२८ (३६८८२)
ये पार्थिवा राजसभां प्रविष्टा
ब्रह्मर्षयो ये च सभासदोऽन्ये ।
श्रृण्वन्तु वक्ष्यामि तवापराधं
पापस्य सामात्यपरिच्छदस्य ॥ ५-१४८-२९ (३६८८३)
राज्यं कुरूणामनुरूपभोज्यं
क्रमागतो नः कुलधर्म एषः ।
त्वं पापबुद्धेऽतिनृशंसकर्मन्
राज्यं कुरूणामनयाद्विहंसि ॥ ५-१४८-३० (३६८८४)
राज्ये स्थितो धृतराष्ट्रो मनीषी
तस्यानुजो विदुरो दीर्घदर्शी ।
एतावतिक्रम्य कथं नृपत्वं
दुर्योधन प्रार्थयसेऽद्य मोहात् ॥ ५-१४८-३१ (३६८८५)
राजा च क्षत्ता च महानुभावौ
भीष्मे स्थिते परवन्तौ भवेताम् ।
अयं तु धर्मज्ञतया महात्मा
न राज्यकामो नृवरो नदीजः ॥ ५-१४८-३२ (३६८८६)
राज्य तु पाण्डोरिदमप्रधृष्यं
तस्याद्य पुत्राः प्रभवन्ति नान्ये ।
राज्यं तदेतन्निखिलं पाण्डवानां
पैतामहं पुत्रपौत्रानुगामि ॥ ५-१४८-३३ (३६८८७)
यद्वै ब्रूते कुरुमुख्यो महात्मा
देवव्रतः सत्यसन्धो मनीषी ।
सर्वं तदस्माभिरहत्य कार्यं
राज्यं स्वधर्मान्परिपालयद्भिः ॥ ५-१४८-३४ (३६८८८)
अनुज्ञया चाथ महाव्रतस्य
ब्रूयान्नृपोऽयं विदुरस्तथैव ।
कार्यं भवेत्तत्सुहृद्भिर्नियोज्यं
धर्मं पुरस्कृत्य सुदीर्घकालम् ॥ ५-१४८-३५ (३६८८९)
न्यायागतं राज्यमिदं कुरूणां
युधिष्ठिरः शास्तु वै धर्मपुत्रः ।
प्रचोदितो धृतराष्ट्रेण राज्ञा
पुरस्कृतः शान्तनवेन चैव ॥ ॥ ५-१४८-३६ (३६८९०)

इति श्रीमन्महाभारते उद्योगपर्वणि भगवद्यानपर्वणि
अष्टचत्वारिंशदधिकशततमोऽध्यायः ॥

५-१४८-४ यथा ज्येष्ठायाददत् तथा क्षत्रे विदुरायापि न्यासभूतमददादिति भावः ॥
५-१४८-९ संवननमात्मीयताकरणम् ॥
५-१४८-१७ पितुर्भीष्मस्य ॥
५-१४८-२० शास्त्रं आज्ञाम् ॥

---

उद्योगपर्व-अध्यय१४९
॥ श्रीः ॥
५.१४९. अध्यायः १४९

Mahabharata - Udyoga Parva - Chapter Topics
कृष्णेन पाण्डवान्प्रति धृतराष्ट्रेण दुर्योधनंप्रत्युक्तवचनानुवादः ॥ १ ॥

Mahabharata - Udyoga Parva - Chapter Text

५-१४९-० (३६८९१)
वासुदेव उवाच। ५-१४९-०क्ष् (३८२७)
एवमुक्ते तु गान्धार्या धृतराष्ट्रो जनेश्वरः ।
दुर्योधनमुवाचेदं राजमध्ये जनाधिप ॥ ५-१४९-१ (३६८९२)
दुर्योधन निबोधेदं यत्त्वां वक्ष्यामि पुत्रक ।
तथा तत्कुरु भद्रं ते यद्यस्ति पितृगौरवम् ॥ ५-१४९-२ (३६८९३)
सोमः प्रजापतिः पूर्वं कुरूणां वंशवर्धनः ।
सोमाद्बभूव षष्ठोऽयं ययातिर्नहुषात्मजः ॥ ५-१४९-३ (३६८९४)
तस्य पुत्रा बभूवुर्हि पञ्च राजर्षिसत्तमाः ।
तेषां यदुर्महातेजा ज्येष्ठः समभवत्प्रभुः ॥ ५-१४९-४ (३६८९५)
पूरुर्यवीयांश्च ततो योऽस्माकं वंशवर्धनः ।
शर्मिष्ठया संप्रसूतो दुहित्रा वृषपर्वणः ॥ ५-१४९-५ (३६८९६)
यदुश्च भरतश्रेष्ठ देवयान्याः सुतोऽभवत् ।
दौहित्रस्तात शुक्रस्य काव्यस्यामिततेजसः ॥ ५-१४९-६ (३६८९७)
यादवानां कुलकरो बलवान्वीर्यसंमतः ।
अवमेने स तु क्षत्रं दर्पपूर्णः सुमन्दधीः ॥ ५-१४९-७ (३६८९८)
न चातिष्ठत्पितुः शस्त्रि बलदर्पविमोहितः ।
अवमेने च पितरं भ्रातॄंश्चाप्यपराजितः ॥ ५-१४९-८ (३६८९९)

पृथिव्यां चतुरन्तायां यदुदेवाभवद्बली ।
वशे कृत्वा स नृपतीन्न्यवसन्नागसाह्वये ॥ ५-१४९-९ (३६९००)
तं पिता परमक्रुद्धो ययातिर्नहुषात्मजः ।
शशाप पुत्रं गान्धारे राज्याच्चापि व्यरोपयत् ॥ ५-१४९-१० (३६९०१)
ये चैनमन्ववर्तन्त भ्रातरो बलदर्पिताः ।
शशाप तानपि क्रुद्धो ययातिस्तनयानथ ॥ ५-१४९-११ (३६९०२)
यवीयांसं ततः पुरुं पुत्रं स्ववशवर्तिनम् ।
राज्ये निवेशयामास विधेयं नृपसत्तमः ॥ ५-१४९-१२ (३६९०३)
एवं ज्येष्ठोऽप्यथोत्सिक्तो न राज्यमभिजायते ।
यवीयांसोपि जायन्ते राज्यं वृद्धोपसेवया ॥ ५-१४९-१३ (३६९०४)
तथैव सर्वधर्मज्ञः पितुर्मम पितामहः ।
प्रतीपः पृथिवीपालस्त्रिषु लोकेषु विश्रुतः ॥ ५-१४९-१४ (३६९०५)
तस्य पार्थिवसिंहस्य राज्यं धर्मेण शासतः ।
त्रयः प्रजज्ञिरे पुत्रा देवकल्पा यशस्विनः ॥ ५-१४९-१५ (३६९०६)
देवापिरभवच्छ्रेष्ठो बाह्लीकस्तदनन्तरम् ।
तृतीयः शन्तनुस्तात धृतिमान्मे पितामहः ॥ ५-१४९-१६ (३६९०७)
देवापिस्तु महातेजास्त्वग्दोषी राजसत्तमः ।
धार्मिकः सत्यवादी च पितुः शुश्रूषणे रतः ॥ ५-१४९-१७ (३६९०८)
पौरजानपदानां च संमतः साधुसत्कृतः ।
सर्वेषां बालवृद्धानां देवापिर्हृदयङ्गमः ॥ ५-१४९-१८ (३६९०९)
वदान्यः सत्यसन्धश्च सर्वभूतहिते रतः ।
वर्तमानः पितुः शास्त्रे ब्राह्मणानां तथैव च ॥ ५-१४९-१९ (३६९१०)
बाह्लीकस्य प्रियो भ्राता शन्तनोश्च महात्मनः ।
सौभ्रात्रं च परं तेषां सहितानां महात्मनाम् ॥ ५-१४९-२० (३६९११)
अथ कालस्य पर्याये वृद्धो नृपतिसत्तमः ।
संभारानभिषेकार्थं कारयामास शास्त्रतः ॥ ५-१४९-२१ (३६९१२)
कारयामास सर्वाणि मङ्गलार्थानि वै विभुः ।
तं ब्राह्मणाश्च वृद्धाश्च पौरजानपदैः सह ॥ ५-१४९-२२ (३६९१३)
सर्वे निवारयामासुर्देवापेरभिषेचनम् ।
स तच्छ्रुत्वा तु नृपतिरभिषेकनिवारणम् ।
अश्रुकण्ठोऽभवद्राजा पर्यशोचत चात्मजम् ॥ ५-१४९-२३ (३६९१४)
एवं वदान्यो धर्मज्ञः सत्यसन्धश्च सोऽभवत् ।
प्रियः प्रजानामपि संस्त्वग्दोषेण प्रदूषितः ॥ ५-१४९-२४ (३६९१५)
हीनाङ्गं पृथिवीपालं नाभिनन्दन्ति देवताः ।
इति कृत्वा नृपश्रेष्ठं प्रत्यषेधन्द्विजर्षभाः ॥ ५-१४९-२५ (३६९१६)
ततः प्रव्यथिताङ्गोऽसौ पुत्रशोकसमन्वितः ।

ममार तं मृतं दृष्ट्वा देवापिः संश्रितो वनम् ॥ ५-१४९-२६ (३६९१७)
बाह्लीको मातुलकुलं त्यक्त्वा राज्यं समाश्रितः ।
पितृभ्रातॄन्परित्यज्य प्राप्तवान्परमर्धिमत् ॥ ५-१४९-२७ (३६९१८)
बाह्लीकेन त्वनुज्ञातः शन्तनुर्लोकविश्रुतः ।
पितर्युपरते राजन्राजा राज्यमकारयत् ॥ ५-१४९-२८ (३६९१९)
तथैवाहं मतिमता परिचिन्त्येह पाण्डुना ।
ज्येष्ठः प्रभ्रंशितो राज्याद्धीनाङ्ग इति भारत ॥ ५-१४९-२९ (३६९२०)
पाण्डुस्तु राज्यं संप्राप्तः कनीयानपि सन्नृपः ।
विनाशे तस्य पुत्राणामिदं राज्यमरिन्दम ॥ ५-१४९-३० (३६९२१)
मय्यभागिनि राज्याय कथं त्वं राज्यमिच्छसि ।
अराजपुत्रो ह्यस्वामी परस्वं हर्तुमिच्छसि ॥ ५-१४९-३१ (३६९२२)
युधिष्ठिरो राजपुत्रो महात्मा
न्यायागतं राज्यमिदं च तस्य ।
स कौरवस्यास्य कुलस्य भर्ता
प्रशासिता चैव महानुभावः ॥ ५-१४९-३२ (३६९२३)
स सत्यसन्धः स तथाऽप्रमत्तः
शास्त्रे स्थितो बन्धुजनस्य साधुः ।
प्रियः प्रजानां सुहृदानुकम्पी
जितेन्द्रियः साधुजनस्य भर्ता ॥ ५-१४९-३३ (३६९२४)
क्षमा तितिक्षा दम आर्जवं च
सत्यव्रतत्वं श्रुतमप्रमादः ।
भूतानुकम्पा ह्यनुशासनं च
युधिष्ठिरे राजगुणाः समस्ताः ॥ ५-१४९-३४ (३६९२५)
अराजपुत्रस्त्वमनार्यवृत्तो
लुब्धः सदा बन्धुषु पापबुद्धिः ।
क्रमागतं राज्यमिदं परेषां
हर्तुं कथं शक्ष्यसि दुर्विनीत ॥ ५-१४९-३५ (३६९२६)
प्रयच्छ राज्यार्धमपेतमोहः
सवाहनं त्व सपरिच्छदं च ।
ततोऽवशेषं तव जीवितस्य
सहानुजस्यैव भवेन्नरेन्द्र ॥ ॥ ५-१४९-३६ (३६९२७)

इति श्रीमन्महाभारते उद्योगपर्वणि भगवद्यानपर्वणि
एकोनपञ्चाशदधिकशततमोऽध्यायः ॥

---

उद्योगपर्व-अध्यय१५०
॥ श्रीः ॥

५.१५०. अध्यायः १५०

Mahabharata - Udyoga Parva - Chapter Topics
कृष्णेन पाण्डवान्प्रति भीष्मादिवचनमवधूय समुत्थितेन दुर्योधनेन चोदितानां राज्ञां भीष्मं पुरस्कृत्य सेनाभिः सह कुरुक्षत्रेप्रस्थानकथनम् ॥ १ ॥
तथा स्वेन सामादित्रयप्रयोगेऽप्यवशीभूते दुर्योधने दण्डस्यैव प्रयोक्तव्यत्वकथनम् ॥ २ ॥

Mahabharata - Udyoga Parva - Chapter Text

५-१५०-० (३६९२८)
भगवानुवाच। ५-१५०-०क्ष् (३८२८)
एवमुक्ते तु भीष्मेण द्रोणेन विदुरेण च ।
गान्धार्या धृतराष्ट्रेण न वै मन्दोऽन्वबुद्ध्यत ॥ ५-१५०-१ (३६९२९)
अवधूयोत्थितो मन्दः क्रोधसंरक्तलोचनः ।
अन्वद्रवन्त तं पश्चाद्राजानस्त्यक्तजीविताः ॥ ५-१५०-२ (३६९३०)
आज्ञापयच्च राज्ञस्तान्पार्थिवान्नष्टचेतसः ।
प्रयात वै कुरुक्षेत्रं पुष्योऽद्येति पुनः पुनः ॥ ५-१५०-३ (३६९३१)
ततस्ते पृथिवीपालाः प्रययुः सहसैनिकाः ।
भीष्मं सेनापतिं कृत्वा संहृष्टाः कालचोदिताः ॥ ५-१५०-४ (३६९३२)
अक्षौहिण्यो दशैका च कौरवाणां समागताः ।
तासां प्रमुखतो भीष्मस्तालकेतुर्व्यरोचत ॥ ५-१५०-५ (३६९३३)
यदत्र युक्तं प्राप्तं च तद्विधत्स्व विशांपते ।
उक्तं भीष्मेण यद्वाक्यं द्रोणेन विदुरेण च ॥ ५-१५०-६ (३६९३४)
गान्धार्या धृतराष्ट्रेण समक्षं मम भारत ।
एतत्ते कथितं राजन्यद्वृत्तं कुरुसंसदि ॥ ५-१५०-७ (३६९३५)
साम चादौ प्रयुक्तं मे राजन्सौभ्रात्रमिच्छता ।
अभेदायास्य वंशस्य प्रजानां च विवृद्धये ॥ ५-१५०-८ (३६९३६)
पुनर्भेदश्च मे युक्तो यदा साम न गृह्यते ।
कर्मानुकीर्तनं चैव देवमानुपसंहितम् ॥ ५-१५०-९ (३६९३७)
यदा नाद्रियते वाक्यं सामपूर्वं सुयोधनः ।
तदा मया समानीय भेदिताः सर्वपार्थिवाः ॥ ५-१५०-१० (३६९३८)
अद्भुतानि च घोराणि दारुणानि च भारत ।
अमानुषाणि कर्माणि दर्शितानि मया विभो ॥ ५-१५०-११ (३६९३९)
निर्भर्त्सयित्वा राज्ञस्तांस्तृणीकृत्य सुयोधनम् ।

राधेयं भीषयित्वा च सौबलं च पुनः पुनः ॥ ५-१५०-१२ (३६९४०)
द्यूततो धार्तराष्ट्राणां निन्दां कृत्वा तथा पुनः ।
भेदयित्वा नृपान्सर्वान्वाग्भिर्मन्त्रेम चासकृत् ॥ ५-१५०-१३ (३६९४१)
पुनः सामाभिसंयुक्तं संप्रदानमथाब्रुवम् ।
अभेदात्कुरुवंशस्य कार्ययोगात्तथैव च ॥ ५-१५०-१४ (३६९४२)
ते शूरा धृतराष्ट्रस्य भीष्मस्य विदुरस्य च ।
तिष्ठेयुः पाण्डवाः सर्वे हित्वा मानमधश्चराः ॥ ५-१५०-१५ (३६९४३)
प्रयच्छन्तु च ते राज्यमनीशास्ते भवन्तु च ।
यथाह राजा गाङ्गेयो विदुरश्च हितं तव ॥ ५-१५०-१६ (३६९४४)
सर्वं भवतु ते राज्यं पञ्च ग्रामान्विसर्जय ।
अवश्यं भरणीया हि पितुस्ते राजसत्तम ॥ ५-१५०-१७ (३६९४५)
एवमुक्तोऽपि दुष्टात्मा नैव भागं व्यमुञ्चत ।
दण्डं चतुर्थं पश्यामि तेषु पापेषु नान्यथा ॥ ५-१५०-१८ (३६९४६)
निर्याताश्च विनाशाय कुरुक्षेत्रं नराधिपाः ।
एतत्ते कथितं राजन्यद्वृत्तं कुरुसंसदि ॥ ५-१५०-१९ (३६९४७)
न ते राज्यं प्रयच्छन्ति विना युद्धेन पाण्डव ।
विनाशहेतवः सर्वे प्रत्युपस्थितमृत्यवः ॥ ॥ ५-१५०-२० (३६९४८)

इति श्रीमन्महाभारते उद्योगपर्वणि भगवद्यानपर्वणि
पञ्चाशदधिकशततमोऽध्यायः ॥

---

उद्योगपर्व-अध्यय१५१
॥ श्रीः ॥
५.१५१. अध्यायः १५१

Mahabharata - Udyoga Parva - Chapter Topics
युधिष्ठिरेण भ्रातॄन्प्रति कस्यचित्सेनापतित्वकल्पने
स्वस्वाभिप्रायनिवेदनचोदना ॥ १ ॥
तैः स्वस्वाभिप्रायनिवेदनानन्तरं युधिष्ठिरेण श्रीकृष्णंप्रति
तदभिप्रायनिवेदनप्रार्थना ॥ २ ॥
श्रीकृष्णेन धृष्टद्युम्नस्य सेनापतित्वेन वरणस्य
स्वाभिमतत्वकथने राज्ञां हर्षात्समुद्घोपः ॥ ३ ॥
युधिष्ठिरादीनां सर्वेषां कुरुक्षेत्रप्रवेशः ॥ ४ ॥

Mahabharata - Udyoga Parva - Chapter Text

५-१५१-० (३६९४९)

वैशंपायन उवाच। ५-१५१-०क्ष् (३८२९)
जनार्दनवचः श्रुत्वा धर्मराजो युधिष्ठिरः ।
भ्रातॄनुवाच धर्मात्मा समक्षं केशवस्य ह ॥ ५-१५१-१ (३६९५०)
श्रुतं भवद्भिर्यद्वृत्तं सभायां कुरुसंसदि ।
केशवस्यापि यद्वाक्यं तत्सर्वमवधारितम् ॥ ५-१५१-२ (३६९५१)
तस्मात्सेनाविभागं मे कुरुध्वं नरसत्तमाः ।
अक्षौहिण्यश्च सप्तैताः समेता विजयाय वै ॥ ५-१५१-३ (३६९५२)
तासां ये पतयः सप्त विख्यातास्तान्निबोधत ।
द्रुपदश्च विराटश्च धृष्टद्युम्नशिखण्डिनौ ॥ ५-१५१-४ (३६९५३)
सात्यकिश्चेकितानश्च भीमसेनश्च वीर्यवान् ।
एते सेनाप्रणेतारो वीराः सर्वे तनुत्यजः ॥ ५-१५१-५ (३६९५४)
सर्वे वेदविदः शूराः सर्वे सुचिरितव्रताः ।
ह्रीमन्तो नीतिमन्तश्च सर्वे युद्धविशारदाः ॥ ५-१५१-६ (३६९५५)
इष्वस्त्रकुशलाः सर्वे तथा सर्वास्त्रयोधिनः ।
सप्तानामपि यो नेता सेनानां प्रविभागवित् ॥ ५-१५१-७ (३६९५६)
यः सहेत रणे भीष्णं शरार्चिःपावकोपमम् ।
तं तावत्सहदेवात्र प्रब्रूहि कुरुनन्दन ।
स्वगतं पुरुषव्याघ्र को नः सेनापतिः क्षमः ॥  ५-१५१-८ (३६९५७)
सहदेव उवाच। ५-१५१-९क्ष् (३८३०)
संयुक्त एकदुःखश्च वीर्यवांश्च महीपतिः ।
यं समाश्रित्य धर्मज्ञं स्वमंशमनुयुञ्ज्महे ॥ ५-१५१-९ (३६९५८)
मत्स्यो विराटो बलवान्कृतास्त्रो युद्धदुर्मदः ।
प्रसहिष्यति सङ्ग्रामे भीष्मं तांश्च महारथान् ॥ ५-१५१-१० (३६९५९)
वैशंपायन उवाच। ५-१५१-११क्ष् (३८३१)
तथोक्ते सहदेवेन वाक्ये वाक्यविशारदः ।
नकुलोऽनन्तरं तस्मादिदं वचनमाददे ॥ ५-१५१-११ (३६९६०)
वयसा शास्त्रतो धैर्यात्कुलेनाभिजनेन च ।
ह्रीमान्बलान्वितः श्रीमान्सर्वशास्त्रविशारदः ॥ ५-१५१-१२ (३६९६१)
वेद चास्त्रं भारद्वाजाद्दुर्धर्षः सत्यसङ्गरः ।
यो नित्यं स्पर्धते द्रोणं भीष्मं चैव महाबलम् ॥ ५-१५१-१३ (३६९६२)
श्लाघ्यः पार्थिववंशस्य प्रमुखे वाहिनीपतिः ।
पुत्रपौत्रैः परिवृतः शतशाख इव द्रुमः ॥ ५-१५१-१४ (३६९६३)
यस्तताप तपो घोरं सदारः पृथिवीपतिः ।
रोषाद्द्रोणविनाशाय वीरः समितिशोभनः ॥ ५-१५१-१५ (३६९६४)
पितेवास्मान्समाधत्ते यः सदा पार्थिवर्षभः ।
श्वशुरो द्रुपदोऽस्माकं सेनाग्रं स प्रकर्षतु ॥ ५-१५१-१६ (३६९६५)

स द्रोणभीष्मावायातौ सहेदिति मतिर्मम ।
स हि दिव्यास्त्रविद्राजा सखा चाङ्गिरसो नृपः ॥ ५-१५१-१७ (३६९६६)
माद्रीसुताभ्यामुक्ते तु स्वमते कुरुनन्दनः ।
वासविर्वासवसमः सव्यसाच्यब्रवीद्वचः ॥ ५-१५१-१८ (३६९६७)
योयं तपःप्रभावेन ऋषिसन्तोषणेन च ।
दिव्यः पुरुष उत्पन्नो ज्वालावर्णो महाभुजः ॥ ५-१५१-१९ (३६९६८)
धनुष्मान्कवची खड्गी रथमारुह्य दंशितः ।
दिव्यैर्हयवरैर्युक्तमग्निकुण्डात्समुत्थितः ॥ ५-१५१-२० (३६९६९)
गर्जन्निव महामेघो रथघोषेण वीर्यवान् ।
सिंहसंहननो वीरः सिंहतुल्यपराक्रमः ॥ ५-१५१-२१ (३६९७०)
सिंहोरस्कः सिंहभुजः सिंहवक्षा महाबलः ।
सिंहप्रगर्जनो वीरः संहस्कन्धो महाद्युतिः ॥ ५-१५१-२२ (३६९७१)
शुभ्रूः सुदंष्ट्रः सुहनुः सुबाहुः सुमुखोऽकृशः ।
सुजत्रुः सुविशालाक्षः सुपादः सुप्रतिष्ठितः ॥ ५-१५१-२३ (३६९७२)
अभेद्यः सर्वशस्त्राणां प्रभिन्न इव वारणः ।
जज्ञे द्रोणविनाशाय सत्यवादी जितेन्द्रियः ॥ ५-१५१-२४ (३६९७३)
धृष्टद्युम्नमहं मन्ये सहेद्भीष्मस्य सायकान् ।
वज्राशनिसमस्पर्शान्दीप्तास्यानुरगानिव ॥ ५-१५१-२५ (३६९७४)
यमदूतसमान्वेगे निपाते पावकोपमान् ।
रामेणाजौ विषिहितान्वज्रनिष्पेषदारुणान् ॥ ५-१५१-२६ (३६९७५)
पुरुष तं न पश्यामि यः सहेत महाव्रतम् ।
धृष्टद्युम्नमृते राजन्निति मे धीयते मतिः ॥ ५-१५१-२७ (३६९७६)
क्षिप्रहस्तश्चित्रयोधी मतः सेनापतिर्मम ।
अभेद्यकवचः श्रीमान्मातङ्ग इव यूथपः
॥ ५-१५१-२९अग्अर्जुनेनैवमुक्ते तु भीमो वाक्यं समाददे।'
वधार्थं यः समुत्पन्नः शिखण्डी द्रुपदात्मजः ।
वदन्ति सिद्धा राजेन्द्र ऋषयश्च समागताः ॥ ५-१५१-२८ (३६९७७)
यस्य सङ्ग्राममध्ये तु दिव्यमस्त्रं प्रकुर्वतः ।
रूपं द्रक्ष्यन्ति पुरुषा रामस्येव महात्मनः ॥ ५-१५१-३० (३६९७८)
न तं युद्धे प्रपश्यामि यो भिन्द्यात्तु शिखण्डिनाम् ।
शस्त्रेण समरे राजन्सन्नद्धं स्यन्दने स्थितम् ॥ ५-१५१-३१ (३६९७९)
द्वैरथे समरे नान्यो भीष्मं हन्यान्महाव्रतम् ।
शिखण्डिनमृते वीरं स मे सेनापतिर्मतः ॥ ५-१५१-३२ (३६९८०)
युधिष्ठिर उवाच। ५-१५१-३३क्ष् (३८३२)
सर्वस्य जगतस्तात सारासारं बालाबलम् ।
सर्वं जानाति धर्मात्मा मतमेषां च केशवः ॥ ५-१५१-३३ (३६९८१)

यमाह कृष्णो दाशार्हः सोऽस्तु सेनापतिर्मम ।
कृतास्त्रोप्यकृतास्त्रो वा वृद्धो वा यदि वा युवा ॥ ५-१५१-३४ (३६९८२)
एष नो विजये मूलमेष तात विपर्यये ।
अत्र प्राणाश्च राज्यं च भावाभावौ सुखासुखे ॥ ५-१५१-३५ (३६९८३)
एष धाता विधाता च सिद्धिरत्र प्रतिष्ठिता ।
यमाह कृष्णो दाशार्हः सोस्तु नो वाहिनीपतिः ॥ ५-१५१-३६ (३६९८४)
ब्रवीतु वदतां श्रेष्ठो निशा समभिवर्तते ।
ततः सेनापतिं कृत्वा कृष्णस्य वशवर्तिनः ॥ ५-१५१-३७ (३६९८५)
रात्रेः शेषे व्यतिक्रान्ते प्रयास्यामो रणाजिरम् ।
अधिवासितशस्त्राश्च कृतकौतुकमङ्गलाः ॥ ५-१५१-३८ (३६९८६)
वैशंपायन उवाच। ५-१५१-३९क्ष् (३८३३)
तस्य तद्वचनं श्रुत्वा धर्मराजस्य धीमतः ।
अब्रवीत्पुण्डरीकाक्षो धनञ्जयमवेक्ष्य ह ॥ ५-१५१-३९ (३६९८७)
ममाप्येते महाराज भवद्भिर्य उदाहृताः ।
नेतारस्तव सेनाया मता विक्रान्तयोधिनः ॥ ५-१५१-४० (३६९८८)
सर्व एव समर्था हि तव शत्रुं प्रबाधितुम् ।
इन्द्रस्यापि भयं ह्येते जनयेयुर्महाहवे ॥ ५-१५१-४१ (३६९८९)
किं पुनर्धार्तराष्ट्राणां लुब्धानां पापचेतसाम् ।
मयापि हि महाबाहो त्वत्प्रियार्थं महाहवे ॥ ५-१५१-४२ (३६९९०)
कृतो यत्नो महांस्तत्र शमः स्यादिति भारत ।
धर्मस्य गतमानृण्यं न स्म वाच्या विवक्षताम् ॥ ५-१५१-४३ (३६९९१)
कृतार्थं मन्यते बाल आत्मनमविचक्षणः ।
धार्तराष्ट्रो बलस्थं च पश्यत्यात्मानमातुरः ॥ ५-१५१-४४ (३६९९२)
युज्यतां वाहिनी साधु वधसाध्या हि मे मताः ।
न धार्तराष्ट्राः शक्ष्यन्ति स्थातुं दृष्ट्वा धनञ्जयम् ॥ ५-१५१-४५
(३६९९३)
भीमसेनं च सङ्क्रुद्धं यमौ चापि यमोपमौ ।
युयुधानं द्वितीयं च धृष्टद्युम्नममर्षणम् ॥ ५-१५१-४६ (३६९९४)
अभिमन्युं द्रौपदेयान्विराटद्रुपदावपि ।
अक्षौहिणीपतींश्चान्यान्नरेन्द्रान्भीमविक्रमान् ॥ ५-१५१-४७ (३६९९५)
सारवद्बलमस्माकं दुष्प्रधर्षं दुरासदम् ।
धार्तराष्ट्रबलं सङ्ख्ये हनिष्यति न संशयः ॥ ५-१५१-४८ (३६९९६)
धृष्टद्युम्नमहं मन्ये सेनापतिमरिन्दम। ५-१५१-४९ (३६९९७)
वैशंपायन उवाच ।
एवमुक्ते तु कृष्णेन संप्राहृष्यन्नरोत्तमाः ॥ ५-१५१-४९क्ष् (३८३४)
तेषां प्रहृष्टमनसां नादः समभवन्महान् ।

योग इत्यथ सैन्यानां त्वरतां संप्रधावताम् ॥ ५-१५१-५० (३६९९८)
हयवारणशब्दाश्च नेमिघोषाश्च सर्वतः ।
शङ्खदुन्दुभिघोषाश्च तुमुलाः सर्वतोऽभवन् ॥ ५-१५१-५१ (३६९९९)
तदुग्रं सागरनिभं क्षुब्धं बलसमागमम् ।
रथपत्तिगजोदयं महोर्मिभिरिवाकुलम् ॥ ५-१५१-५२ (३७०००)
धावतामाहुयानानां तनुत्राणि च बध्नताम् ।
प्रयास्यतां पाण्डवानां ससैन्यानां समन्ततः ॥ ५-१५१-५३ (३७००१)
गङ्गेव पूर्णा दुर्धर्षा समदृश्यत वाहिनी ।
अग्रानीके भीमसेनो माद्रीपुत्रौ च दंशितौ ॥ ५-१५१-५४ (३७००२)
सौभद्रो द्रौपदेयाश्च धृष्टद्युम्नस्य पार्षतः ।
प्रभद्रकाश्च पञ्चाला भीमसेनमुखा ययुः ॥ ५-१५१-५५ (३७००३)
ततः शब्दः समभवत्सुमुद्रस्येव पर्वणि ।
हृष्टानां संप्रयातानां घोषो दिवमिवास्पृशम् ॥ ५-१५१-५६ (३७००४)
प्रहृष्टा दंशिता योधाः परानीकविदारणाः ।
तेषां मध्ये ययौ राजा कुन्तीपुत्रो युधिष्ठिरः ॥ ५-१५१-५७ (३७००५)
शकटापणवेशाश्च यानयुग्यं च सर्वशः ।
कोशं यन्त्रायुधं चैव ये च वैद्याश्चिकित्सकाः ॥ ५-१५१-५८ (३७००६)
फल्गु यच्चं बलं किंचिद्यच्चापि कृशदुर्बलम् ।
तत्सङ्गृह्य ययौ राजा ये चापि परिचारकाः ॥ ५-१५१-५९ (३७००७)
उपप्लाव्ये तु पाञ्चाली द्रौपदी सत्यवादिनी ।
सह स्त्रीभिर्निनवृते दासीदाससमावृता ॥ ५-१५१-६० (३७००८)
कृत्वा मूलप्रतीकारं गुल्मैः स्थावरजङ्गमैः ।
स्कन्धावारेण महता प्रययुः पाण्डुनन्दनाः ॥ ५-१५१-६१ (३७००९)
ददतो गां हिरण्यं च ब्राह्मणैरभिसंवृताः ।
स्तूयमाना ययू राजन्रथैर्मणिविभूषितैः ॥ ५-१५१-६२ (३७०१०)
केकया धृष्टकेतुश्च पुत्रः काश्यस्य चाभिभूः ।
श्रेणिमान्वसुदानश्च शिखण्डी चापराजितः ॥ ५-१५१-६३ (३७०११)
हृष्टास्तुष्टाः कवचिनः सशस्त्राः समलङ्कृताः ।
राजानमन्वयुः सर्वे परिवार्य युधिष्ठिरम् ॥ ५-१५१-६४ (३७०१२)
जघनार्धे विराटश्च याज्ञसेनिश्च सौमकिः ।
सुधर्मा कुन्तिभोजश्च धृष्टद्युम्नस्य चात्मजाः ॥ ५-१५१-६५ (३७०१३)
रथायुतानि चत्वारि हयाः पञ्चगुणास्तथा ।
पत्तिसैन्यं दशगुणं गजानामयुतानि षट् ॥ ५-१५१-६६ (३७०१४)
अनाधृष्टिश्चेकितानो धृष्टकेतुश्च सात्यकिः ।
परिवार्य ययुः सर्वे वासुदेवधनञ्जयौ ॥ ५-१५१-६७ (३७०१५)
आसाद्य तु कुरुक्षेत्रं व्यूढानीकाः प्रहारिणः ।

पाण्डवाः समदृश्यन्त नर्दन्तो वृषभा इव ॥ ५-१५१-६८ (३७०१६)
तेऽवगाह्य कुरुक्षेत्रं शङ्खान्दध्मुररिन्दमाः ।
तथैव दध्मतुः शङ्खं वासुदेवधनञ्जयौ ॥ ५-१५१-६९ (३७०१७)
पाञ्चजन्यस्य निर्घोषं विस्फूर्जितमिवाशनेः ।
निशम्य सर्वसैन्यानि समहृष्यन्त सर्वशः ॥ ५-१५१-७० (३७०१८)
शङ्खदुन्दुभिसंहृष्टः सिंहनादस्तरस्विनाम् ।
पृथिवीं चान्तरिक्षं च सागरांश्चान्वनादयत् ॥ ॥ ५-१५१-७१ (३७०१९)

इति श्रीमन्महाभारते उद्योगपर्वणि सैन्यनिर्याणपर्वणि
एकपञ्चाशदधिकशततमोऽध्यायः ॥
Mahabharata - Udyoga Parva - Chapter Footnotes

५-१५१-९ संयुक्तः संबन्धी ॥
५-१५१-१२ कुलेन वंशेन ।अभिजनेन स्वजनसमूहेन ॥
५-१५१-१७ अङ्गिरसो द्रोणस्य ॥
५-१५१-३८ शस्त्राणामधिवासनं गन्धाद्यैः पूजनम् ॥
५-१५१-४८ अस्माकं बलं कर्तृ ॥
५-१५१-५० योगो युद्धाय सज्जीभवनम् ॥
५-१५१-५८ शकटा अनांसि ।आपणो वणिग्वीथ्युपलक्षितं विक्रेयद्रव्यम् ॥
५-१५१-६१ मूलप्रतीकारं धनदाररक्षाम् ।गुल्मैः स्थावरैः
प्रकाररूपैः।जंगमैः परितः स्थानेस्थाने शूरसंघैः।स्कन्धावारेण
सैन्येन ॥
५-१५१-६५ जघनार्धे पश्चिमार्धे ॥
५-१५१-७० समहृष्यन्त रोमाञ्चितानि ॥

---

उद्योगपर्व-अध्यय१५२
॥ श्रीः ॥
५.१५२. अध्यायः १५२

Mahabharata - Udyoga Parva - Chapter Topics
युधिष्ठिरेण कुरुक्षेत्रे समुचितदेशे सेनानां निवेशनम् ॥ १ ॥
धृष्टद्युम्नादिभिः सर्वेषां पृथक्पृथक्षिबिरनिर्मापणम् ॥ २ ॥

Mahabharata - Udyoga Parva - Chapter Text

५-१५२-० (३७०२०)

वैशंपायन उवाच। ५-१५२-०४ (३८३५)
ततो देशे समे स्निग्धे प्रभूतयवसेन्धने ।
निवेशयामास तदा सेनां राजा युधिष्ठिरः ॥ ५-१५२-१ (३७०२१)
परिहृत्य श्मशानानि देवतायतनानि च ।
आश्रमांश्च महर्षीणां तीर्थान्यायतनानि च ॥ ५-१५२-२ (३७०२२)
मधुरानूषरे देशे शुचौ पुण्ये महामतिः ।
निवेशं कारयामास कुन्तीपुत्रो युधिष्ठिरः ॥ ५-१५२-३ (३७०२३)
ततश्च पुनरुत्थाय सुखी विश्रान्तवाहनः ।
प्रययौ पृथिवीपालैर्वृतः शतसहस्रशः ॥ ५-१५२-४ (३७०२४)
विद्राव्य शतशो गुल्मान्धार्तराष्ट्रस्य सैनिकान् ।
पर्यक्रामत्समन्ताच्च पार्थेन सह केशवः ॥ ५-१५२-५ (३७०२५)
शिबिरं मापयामास धृष्टद्युम्नश्च पार्षतः ।
सात्यकिश्च रथोदारो युयुधानश्च वीर्यवान् ॥ ५-१५२-६ (३७०२६)
आसाद्य सरितं पुण्यां कुरुक्षेत्रे हिरण्वतीम् ।
सूपतीर्थां शुचिजलां शर्करापङ्कवर्जिताम् ॥ ५-१५२-७ (३७०२७)
खानयामास परिखां केशवस्तत्र भारत ।
गुप्त्यर्थमपि चादिश्य बलं तत्र न्यवेशयत् ॥ ५-१५२-८ (३७०२८)
विधिर्यः शिबिरस्यासीत्पाण्डवानां महात्मनाम् ।
तद्विधानि नरेन्द्राणां कारयामास केशवः ॥ ५-१५२-९ (३७०२९)
प्रभूततरकाष्ठानि दुराधर्षतराणि च ।
भक्ष्यभोज्यान्नपानानि शतशोऽथ सहस्रशः ॥ ५-१५२-१० (३७०३०)
शिबिराणि महार्हाणि राज्ञां तत्र पृथक्पृथक् ।
विमानानीव राजेन्द्र निविष्टानि महीतले ॥ ५-१५२-११ (३७०३१)
तत्रासञ्शिल्पिनः प्राज्ञाः शतशो दत्तवेतनाः ।
सर्वोपकरणैर्युक्ता वैद्याः शास्त्रविशारदाः ॥ ५-१५२-१२ (३७०३२)
ज्याधनुर्वर्मशस्त्राणां तथैव मधुसर्पिषोः ।
ससर्जरकसपांसूनां राशयः पर्वतोपमाः ॥ ५-१५२-१३ (३७०३३)
बहूदकं सुयवसं तुषाङ्गारसमन्वितम् ।
शिबिरे शिबिरे राजा सञ्चकार युधिष्ठिरः ॥ ५-१५२-१४ (३७०३४)
महायन्त्राणि नाराचास्तोमराणि परश्वधाः ।
धनूंषि कवचादीनि ऋष्टयस्तूणसंयुताः ॥ ५-१५२-१५ (३७०३५)
गजाः कण्टकसन्नाहा लोहवर्मोत्तरच्छदाः ।
दृश्यन्ते तत्र गिर्याभाः सहस्रशतयोधिनः ॥ ५-१५२-१६ (३७०३६)
निविष्टान्पाण्डवांस्तत्र ज्ञात्वा मित्राणि भारत ।
अभिसस्रुर्यथादेशं सबलाः सहवाहनाः ॥ ५-१५२-१७ (३७०३७)
चरितब्रह्मचर्यास्ते सोमपा भूरिदक्षिणाः ।

जयाय पाण्डुपुत्राणां समाजग्मुर्महीक्षितः ॥ ॥ ५-१५२-१८ (३७०३८)

इति श्रीमन्महाभारते उद्योगपर्वणि सैन्यनिर्याणपर्वणि
द्विपञ्चशदधिकशततमोऽध्यायः ॥

Mahabharata - Udyoga Parva - Chapter Footnotes

५-१५२-५ गुल्मान् सैनिकसङ्घान् ॥
५-१५२-७ सूपतीर्थां शोभनोपकण्ठाम् ॥
५-१५२-९ तद्विधानि शिबिराणि ॥
५-१५२-१६ कण्टकसन्नाहाः येषां स्पर्शमात्रादपि गजान्तराणां कण्टकवेधो भवति तादृशाः सन्नाहाः कवचानि ।कण्टकैः कवचैः सन्नहनं येषामिति प्राञ्चः ॥
५-१५२-१९ अभिसम्रुरभ्याजग्मुः ॥

---

उद्योगपर्व-अध्यय१५३
॥ श्रीः ॥
५.१५३. अध्यायः १५३

Mahabharata - Udyoga Parva - Chapter Topics

कर्णादीन्प्रति दुर्योधनेन सांग्रामिकसामग्रीसंपादनचोदनम् ॥ १ ॥
तच्चोदनया राज्ञां सेनाभिः सह कुरुक्षेत्रप्रस्थानम् ॥ २ ॥

Mahabharata - Udyoga Parva - Chapter Text

जनमेजय उवाच ।
युधिष्ठिरं सहानीकमुपायान्तं युयुत्सया ।
सन्निविष्टं कुरुक्षेत्रे वासुदेवेन पालितम् ॥ ५-१५३-१ (३७०३९)
विराटद्रुपदाभ्यां च सपुत्राभ्यां समन्वितम् ।
केकयैर्वृष्णिभिश्चैव पार्थिवैः शतशो वृतम् ॥ ५-१५३-२ (३७०४०)
महेन्द्रमिव चादित्यैरभिगुप्तं महारथैः ।
श्रुत्वा दुर्योधनो राजा किं कार्यं प्रत्यपद्यत ॥ ५-१५३-३ (३७०४१)
एतदिच्छाम्यहं श्रोतुं विस्तरेण महामते ।
संभ्रमे तुमुले तस्मिन्यदासीत्कुरुजाङ्गले ॥ ५-१५३-४ (३७०४२)
व्यथयेयुरिमे देवान्सेन्द्रानपि समागमे ।
पाण्डवा वासुदेवश्च विराटद्रुपदौ तथा ॥ ५-१५३-५ (३७०४३)
धृष्टद्युम्नश्च पाञ्चाल्यः शिखण्डी च महारथः ।
युधामन्युश्च विक्रान्तो देवैरपि दुरासदः ॥ ५-१५३-६ (३७०४४)

एतदिच्छाम्यहं श्रोतुं विस्तरेण तपोधन ।
कुरूणां पाण्डवानां च यद्यदासीद्विचेष्टितम् ॥ ५-१५३-७ (३७०४५)
वैशंपायन उवाच। ५-१५३-८क्ष् (३८३६)
प्रतियाते तु दाशार्हे राजा दुर्योधनस्तदा ।
कर्णं दुःशासनं चैव शकुनिं चाब्रवीदिदम् ॥ ५-१५३-८ (३७०४६)
अकृतेनैव कार्येण गतः पार्थानधोक्षजः ।
स एनान्मन्युनाविष्टो ध्रुवं धक्ष्यत्यसंशयम् ॥ ५-१५३-९ (३७०४७)
इष्टो हि वासुदेवस्य पाण्डवैर्मम विग्रहः ।
भीमसेनार्जुनौ चैव दाशार्हस्य मते स्थितौ ॥ ५-१५३-१० (३७०४८)
अजातशत्रुरत्यर्थं भीमसेनवशानुगः ।
निकृतश्च मया पूर्वं सह सर्वैः सहोदरैः ॥ ५-१५३-११ (३७०४९)
विराटद्रुपदौ चैव कृतवैरौ मया सह ।
तौ च सेनाप्रणेतारौ वासुदेववशानुगौ ॥ ५-१५३-१२ (३७०५०)
भविता विग्रहः सोयं तुमुलो लोमहर्षणः ।
तस्मात्साङ्ग्रामिकं सर्वं कारयध्वमतन्द्रिताः ॥ ५-१५३-१३ (३७०५१)
शिबिराणि कुरुक्षेत्रे क्रियन्तां वसुधाधिपाः ।
स्वपर्याप्तावकाशानि दुरादेयानि शत्रुभिः ॥ ५-१५३-१४ (३७०५२)
आसन्नजलकोष्ठानि शतशोथ सहस्रशः ।
अच्छेद्याहारमार्गाणि बन्धोच्छ्रयचितानि च । ५-१५३-१५ (३७०५३)
विविधायुधपूर्णानि पताकाध्वजवन्ति च ।
समाश्च तेषां पन्थानः क्रियन्तां नगराद्बहिः ॥ ५-१५३-१६ (३७०५४)
प्रयाणं घुष्यतामद्य श्वोभूत इति माचिरम् । ५-१५३-१७ (३७०५५)
वैशंपायन उवाच ।
ते तथेति प्रतिज्ञाय श्वोभूते चक्रिरे तथा ॥ ५-१५३-१७क्ष् (३८३७)
हृष्टरूपा महात्मानो निवासाय महीक्षिताम् ।
ततस्ते पार्थिवाः सर्वे तच्छ्रुत्वा राजशासनम् ॥ ५-१५३-१८ (३७०५६)
आसनेभ्यो महार्हेभ्य उदतिष्ठन्नमर्षिताः ।
बाहून्परिघसङ्काशान्संस्पृशन्तः शनैः शनैः ॥ ५-१५३-१९ (३७०५७)
काञ्चनाङ्गददीप्तांश्च चन्दनागरुभूषितान् ।
उष्णीषाणि नियच्छन्तः पुण्डरीकनिभैः करैः ।
अन्तरीयोत्तरीयाणि भूषणानि च सर्वशः ॥ ५-१५३-२० (३७०५८)
ते रथान्रथिनः श्रेष्ठा हयांश्च हयकोविदाः ।
सज्जयन्ति स्म नागांश्च नागशिक्षास्वनुष्ठिताः ॥ ५-१५३-२१ (३७०५९)
अथ वर्माणि चित्राणि काञ्चनानि बहूनि च ।
विविधानि च शस्त्राणि चक्रुः सर्वाणि सर्वशः ॥ ५-१५३-२२ (३७०६०)
पदातयश्च पुरुषाः शस्त्राणि विविधानि च ।

उपाजह्रुः शरीरेषु हेमचित्राण्यनेकशः ॥ ५-१५३-२३ (३७०६१)
तदुत्सव इवोदग्रं संप्रहृष्टनरावृतम् ।
नगरं धार्तराष्ट्रस्य भारतासीत्समाकुलम् ॥ ५-१५३-२४ (३७०६२)
जनौघसलिलावर्तो रथनागाश्वमीनवान् ।
शङ्खदुन्दुभिनिर्घोषः कोशसञ्चयरत्नवान् ॥ ५-१५३-२५ (३७०६३)
चित्राभरणवर्मोर्मिः शस्त्रनिर्मलफेनवान् ।
प्रासादमालाद्रिवृतो रथ्यापणमहाह्रदः ॥ ५-१५३-२६ (३७०६४)
योधचन्द्रोदयोद्भूतः कुरुराजमहार्णवः ।
व्यदृश्यत तदा राजंश्चन्द्रोदय इवोदधिः ॥ ॥ ५-१५३-२७ (३७०६५)

इति श्रीमन्महाभारते उद्योगपर्वणि सैन्यनिर्याणपर्वणि
त्रिपञ्चाशदधिकशततमोऽध्यायः ॥
Mahabharata - Udyoga Parva - Chapter Footnotes

५-१५३-१५ आसन्नजला कोष्ठाः कक्ष्या येषु तानि तथा ।अच्छेद्यः
शत्रुभिरनिर्वार्य आहार आहरणं वस्तूनां मार्गाश्च येषु तानि
अच्छेद्याहारमार्गाणि ॥
५-१५३-२० अन्तरीयं परिधानीयम् ।उत्तरीयं प्रावरणवस्त्रम् ॥

---

उद्योगपर्व-अध्यय१५४
॥ श्रीः ॥
५.१५४. अध्यायः १५४

Mahabharata - Udyoga Parva - Chapter Topics
गुरुवधभयात् कर्तव्यमौढ्यमुपगतेन युधिष्ठिरेण
कर्तव्यनिर्धारणप्रार्थना ॥ १ ॥
कृष्णेन युद्धकरणनिर्धारणम् ॥ २ ॥
पुनर्युधिष्ठिरस्य शङ्कायां अर्जुनेन कुन्तीविदुरवचनानुस्मारणेन
तत्परिहरणम् ॥ ३ ॥

Mahabharata - Udyoga Parva - Chapter Text

५-१५४-० (३७०६६)
वैशंपायन उवाच।५-१५४-०क्ष् (३८३८)
वासुदेवस्य तद्वाक्यमनुस्मृत्य युधिष्ठिरः ।
पुनः पप्रच्छ वार्ष्णेयं कथं मन्दोऽऽब्रवीदिदम् ॥ ५-१५४-१ (३७०६७)
अस्मिन्नभ्यागते काले किंच नः क्षममच्युत ।

कथं च वर्तमाना वै स्वधर्मान्न च्यवेमहि ॥ ५-१५४-२ (३७०६८)
दुर्योधनस्य कर्णस्य शकुनेः सौबलस्य च ।
वासुदेव मतज्ञोऽसि मम सभ्रातृकस्य च ॥ ५-१५४-३ (३७०६९)
विदुरस्यापि तद्वाक्यं श्रुतं भीष्मस्य चोभयोः ।
कुन्त्याश्च विपुलप्रज्ञ प्रज्ञा कात्स्न्र्येन ते श्रुता ॥ ५-१५४-४ (३७०७०)
सर्वमेतदतिक्रम्य विचार्य च पुनः पुनः ।
क्षमं यन्नो महाबाहो तद्ब्रवीह्यविचारयन् ॥ ५-१५४-५ (३७०७१)
श्रुत्वैतद्धर्मराजस्य धर्मार्थसहितं वचः ।
मेघदुन्दुभिनिर्घोषः कृष्णो वाक्यमथाब्रवीत् ॥ ५-१५४-६ (३७०७२)
उक्तवानस्मि यद्वाक्यं धर्मार्थसहितं हितम् ।
न तु तन्निकृतिप्रज्ञे कौरव्ये प्रतितिष्ठति ॥ ५-१५४-७ (३७०७३)
न च भीष्मस्य दुर्मेधाः शृणोति विदुरस्य वा ।
मम वा भाषितं किंचित्सर्वमेवातिवर्तते ॥ ५-१५४-८ (३७०७४)
नैष कामयते धर्मं नैष कामयते यशः ।
जितं स मन्यते सर्वं दुरात्मा कर्णमाश्रितः ॥ ५-१५४-९ (३७०७५)
बन्धमाज्ञापयामास मम चापि सुयोधनः ।
न च तं लब्धवान्कामं दुरात्मा पापनिश्चयः ॥ ५-१५४-१० (३७०७६)
न च भीष्मो न च द्रोणो युक्तं तत्राहतुर्वचः ।
सर्वे तमनुवर्तन्ते ऋते विदुरमुच्युत ॥ ५-१५४-११ (३७०७७)
शकुनिः सौबलश्चैव कर्णदुःशासनावपि ।
त्वय्ययुक्तान्यभाषन्त मूढा मूढममर्षणम् ॥ ५-१५४-१२ (३७०७८)
किंच तेन मयोक्तेन यान्यभाषत कौरवः ।
संक्षेपेण दुरात्मासौ न युक्तं त्वयि वर्तते ॥ ५-१५४-१३ (३७०७९)
पार्थिवेषु न सर्वेषु य इमे तव सैनिकाः ।
यत्पापं यन्न कल्याणं सर्वं तस्मिन्प्रतिष्ठितम् ॥ ५-१५४-१४ (३७०८०)
न चापि वयमत्यर्थं परित्यागेन कर्हिचित् ।
कौरवैः शममिच्छामस्तत्र युद्धमनन्तरम् ॥ ५-१५४-१५ (३७०८१)
वैशंपायन उवाच। ५-१५४-१६क्ष् (३८३९)
तच्छ्रुत्वा पार्थिवाः सर्वे वासुदेवस्य भाषितम् ।
अब्रुवन्तो मुखं राज्ञः समुदैक्षन्त भारत ॥ ५-१५४-१६ (३७०८२)
युधिष्ठिरस्त्वभिप्रायमभिलक्ष्य महीक्षिताम् ।
योगमाज्ञापयामास भीमार्जुनयमैः सह ॥ ५-१५४-१७ (३७०८३)
ततः किलकिलाभूतमनीकं पाण्डवस्य ह ।
आज्ञापिते तदा योगे समहृष्यन्त सैनिकाः ॥ ५-१५४-१८ (३७०८४)
अवध्यानां वधं पश्यन्धर्मराजो युधिष्ठिरः ।
निश्वसन्भीमसेनं च विजयं चेदमब्रवीत् ॥ ५-१५४-१९ (३७०८५)

यदर्थं वनवासश्च प्राप्तं दुःखं च यन्मया ।
सोयमस्मानुपैत्येव परोऽनर्थः प्रयत्नतः ॥ ५-१५४-२० (३७०८६)
यस्मिन्यत्नः कृतोऽस्माभिः स नो हीनः प्रयत्नतः ।
अकृते तु प्रयत्नेऽस्मानुपावृत्तः कलिर्महान् ॥ ५-१५४-२१ (३७०८७)
कथं ह्यवध्यैः सङ्ग्रामः कार्यः सह भविष्यति ।
कथं हत्वा गुरून्वृद्धान्विजयो नो भविष्यति ॥ ५-१५४-२२ (३७०८८)
वैशंपायन उवाच। ५-१५४-२३क्ष् (३८४०)
तच्छ्रुत्वा धर्मराजस्य सव्यसाची परन्तपः ।
यदुक्तं वासुदेवेन श्रावयामास तद्वचः ॥ ५-१५४-२३ (३७०८९)
उक्तवान्देवकीपुत्रः कुन्त्याश्च विदुरस्य च ।
वचनं तत्त्वया राजन्निखिलेनावधारितम् ॥ ५-१५४-२४ (३७०९०)
न च तौ वक्ष्यतोऽधर्ममिति मे नैष्ठिकी मतिः ।
नापि युक्तं च कौन्तेय निवर्तितुमयुध्यतः ॥ ५-१५४-२५ (३७०९१)
तच्छ्रुत्वा वासुदेवोऽपि सव्यसाचिवचस्तदा ।
स्मयमानोऽब्रवीद्वाक्यं पार्थमेवमिति ब्रुवन् ॥ ५-१५४-२६ (३७०९२)
ततस्ते धृतसंकल्पा युद्धाय सह सैनिकाः ।
पाण्डवेया महाराज तां रात्रिं सुखमावसन् ॥ ॥ ५-१५४-२७ (३७०९३)

इति श्रीमन्महाभारते उद्योगपर्वणि सैन्यनिर्याणपर्वणि
चतुःपञ्चशदधिकशततमोऽध्यायाः ॥
Mahabharata - Udyoga Parva - Chapter Footnotes

५-१५४-१३ युक्तं सम्यक् ॥
५-१५४-१४ न कल्याणं अकल्याणं पापं अकल्याणं च त्वदीयेष्वविद्यमानं
सर्वं तस्मिन् दुर्योधने प्रतिष्ठितम् ॥
५-१५४-१५ परित्यागेन राज्यस्योपेक्षया शमं नेच्छामः ॥
५-१५४-१७ योगं युद्धोद्योगम् ॥
५-१५४-२० यदर्थं यन्निवृत्त्यर्थम् । अनर्थः
कुलक्षयः। प्रयत्नतो बलात् ॥
५-१५४-२५ अयुध्यतस्तव निवर्तितुमपि न युक्तम् ॥

---

उद्योगपर्व-अध्यय१५५
॥ श्रीः ॥
५.१५५. अध्यायः १५५

Mahabharata - Udyoga Parva - Chapter Topics
दुर्योधनेन स्वसेनानां अग्र्यमध्यमपाश्चात्यभेदेन त्रेधा विभजनम् ॥ १ ॥

तासां सांग्रामिकोपकरणसमृद्धिवर्णनम् ॥ २ ॥
दुर्योधनेन कृपादीनामेकादशानां
पृथक्पृथगक्षौहिण्यधिपतित्वेऽभिषेचनम् ॥ ३ ॥

Mahabharata - Udyoga Parva - Chapter Text

५-१५५-० (३७०९४)
वैशंपायन उवाच। ५-१५५-०क्ष् (३८४१)
व्युष्टायां वै रजन्यां हि राजा दुर्योधनस्ततः ।
व्यभजत्तान्यनिकानि दश चैकं च भारत ॥ ५-१५५-१ (३७०९५)
नरहस्तिरथाश्वानां सारं मध्यं च फल्गु च ।
सर्वेष्वेतेष्वनीकेषु सन्दिदेश नराधिपः ॥ ५-१५५-२ (३७०९६)
सानुकर्षाः सतूणीराः सवरूथाः सतोमराः ।
सोपासङ्गाः सशक्तीकाः सनिषङ्गाः सहर्ष्टयः । ५-१५५-३ (३७०९७)
सध्वजाः सपताकाश्च सशरासनतोमराः ।
रज्जुभिश्च विचित्राभिः सपाशाः सपरिच्छदाः ॥ ५-१५५-४ (३७०९८)
सकचग्रहविक्षेपाः सतैलगुडवालुकाः ।
साशीविषघटाः सर्वे ससर्जरसपांसवः ॥ ५-१५५-५ (३७०९९)
सघण्टफलकाः सर्वे सायोगुडजलोपलाः ॥
सशालभिन्दिपालाश्च समधूच्छिष्टमुद्गराः ॥ ५-१५५-६ (३७१००)
सकाण्डदण्डकाः सर्वे ससीरविषतोमराः ।
सशूर्पपिटकाः सर्वे सदात्राङ्कुशतोमराः ॥ ५-१५५-७ (३७१०१)
सकीलकवचाः सर्वे वाशीवृक्षादनान्विताः ।
व्याघ्रचर्मपरीवारा द्वीपिचर्मावृताश्च ते ॥ ५-१५५-८ (३७१०२)
सहर्ष्टयः सश्रृङ्गाश्च सप्रासविविधायुधाः ।
सकुठाराः सकुद्दालाः सतैलक्षौमसर्पिषः ॥ ५-१५५-९ (३७१०३)
रुक्मजालप्रतिच्छन्ना नानामणिविभूषिताः ।
चित्रानीकाः सुवपुषो ज्वलिता इव पावकाः ॥ ५-१५५-१० (३७१०४)
तथा कवचिनः शूराः शस्त्रेषु कृतनिश्चयाः ।
कुलीना हययोनिज्ञाः सारथ्ये विनिवेशिताः ॥ ५-१५५-११ (३७१०५)
बद्धारिष्टा बद्धकक्षा बद्धध्वजपताकिनः ।
बद्धाभरणनिर्यूहा बद्धचर्मासिपट्टिशाः ॥ ५-१५५-१२ (३७१०६)
चतुर्युजो रथाः सर्वे सर्वे चोत्तमवाजिनः ।
सप्रासऋष्टिकाः सर्वे सर्वे शतशरासनाः ॥ ५-१५५-१३ (३७१०७)
धुर्ययोर्हकययोरेकस्तथान्यौ पर्ष्णिसारथी ।
तौ चापि रथिनां श्रेष्ठौ रथी च हयवित्तथा ॥ ५-१५५-१४ (३७१०८)

नगराणीव गुप्तानि दुराधर्षाणि शत्रुभिः ।
आसन्रथसहस्राणि हेममालीनि सर्वशः ॥ ५-१५५-१५ (३७१०९)
यथा रथास्तथा नागा बद्धकक्षाः स्वलङ्कृताः ।
बभूवुः सप्तपुरुषा रत्नवन्त इवाद्रयः ॥ ५-१५५-१६ (३७११०)
द्वावङ्कुशधरौ तत्र द्वावुत्तमधनुर्धरौ ।
द्वौ वरासिधरौ राजन्नेकः शक्तिपिनाकधृत् ॥ ५-१५५-१७ (३७१११)
गजैर्मत्तैः समाकीर्णं सर्वमायुधकोशकैः ।
तद्बभूव बलं राजन्कौरव्यस्य महात्मनः ॥ ५-१५५-१८ (३७११२)
आमुक्तकवचैर्युक्तैः सपताकैः स्वलङ्कृतैः ।
सादिभिश्चोपपन्नास्तु तथा चायुतशो हयाः ॥ ५-१५५-१९ (३७११३)
असङ्ग्राहाः सुसंपन्ना हेमभाण्डपरिच्छदाः ।
अनेकशतसाहस्राः सर्वे सादिवशे स्थिताः ॥ ५-१५५-२० (३७११४)
नानारूपविकाराश्च नानाकवचशस्त्रिणः ।
पदातिनो नरास्तत्र बभूवुर्हेममालिनः ॥ ५-१५५-२१ (३७११५)
रथस्यासन्दश गजा गजस्य दश वाजिनः ।
नरा दश हयस्यासन्पादरक्षाः समन्ततः ॥ ५-१५५-२२ (३७११६)
रथस्य नागाः पञ्चाशन्नागस्यासञ्शतं हयाः ।
हयस्य पुरुषाः सप्त भिन्नसन्धानकारिणः ॥ ५-१५५-२३ (३७११७)
सेना पञ्चशतं नागा रथास्तावन्त एव च ।
दशसेना च पृतना पृतना दश वाहिनी ॥ ५-१५५-२४ (३७११८)
सेना च वाहिनी चैव पृतना ध्वजिनी चमूः ।
अक्षौहिणीति पर्यायैर्निरुक्ता च वरूथिनी ॥ ५-१५५-२५ (३७११९)
एवं व्यूढान्यनीकानि कौरवेयेण धीमता ।
अक्षौहिण्यो दशैका च सङ्ख्याताः सप्त चैव ह ॥ ५-१५५-२६ (३७१२०)
अक्षौहिण्यस्तु सप्तैव पाण्डवानामभूद्बलम् ।
अक्षौहिण्यो दशैका च कौरवाणामभूद्बलम् ॥ ५-१५५-२७ (३७१२१)
नराणां पञ्चपञ्चाशदेषा पत्तिर्विधीयते ।
सेनामुखं च तिस्रस्ता गुल्म इत्यभिशब्दितम् ॥ ५-१५५-२८ (३७१२२)
त्रयो गुल्मा गणस्त्वासीद्गणास्त्वयुतशोऽभवन् ।
दुर्योधनस्य सेनासु योत्स्यमानाः प्रहारिणः ॥ ५-१५५-२९ (३७१२३)
तत्र दुर्योधनो राजा शूरान्बुद्धिमतो नरान् ।
प्रसमीक्ष्य महाबाहुश्चक्रे सेनापतींस्तदा । ५-१५५-३० (३७१२४)
पृथगक्षौहिणीनां च प्रणेतॄन्नरसत्तमान् ।
विधिवत्पूर्वमानीय पार्थिवानभ्यषेचयत् ॥ ५-१५५-३१ (३७१२५)
कृपं द्रोणं च शल्यं च सैन्धवं च जयद्रथम् ।
सुदक्षिणं च काम्भोजं कृतवर्माणमेव च ॥ ५-१५५-३२ (३७१२६)

द्रोणपुत्रं च कर्णं च भूरिश्रवसमेव च ।
शकुनिं सौबलं चैव बाह्लीकं च महाबलम् ॥ ५-१५५-३३ (३७१२७)
दिवसे दिवसे तेषां प्रतिवेलं च भारत ।
चक्रे स विविधाः पूजाः प्रत्यक्षं च पुनः पुनः ॥ ५-१५५-३४ (३७१२८)
तथा विनियताः सर्वे ये च तेषां पदानुगाः ।
बभूवुः सैनिका राज्ञां प्रियं राज्ञश्चिकीर्षवः ॥ ॥ ५-१५५-३५ (३७१२९)

इति श्रीमन्महाभारते उद्योगपर्वणि सैन्यनिर्याणपर्वणि
पञ्चपञ्चाशदधिकशततमोऽध्यायः ॥

Mahabharata - Udyoga Parva - Chapter Footnotes

५-१५५-१ व्युष्टायां व्यतीतायाम् ॥
५-१५५-२ सारं पुरोगामि । मध्यं मध्यमम्। फल्गु पाश्चात्त्यम् ॥
५-१५५-३ अनुकर्षः युद्धविमर्देयस्यकस्यचिद्रथावयवस्य नष्टस्य प्रतिसमाधानार्थं यद्रथस्याधोदारुबध्यते तत् । अनुकर्षो रथाधःस्थदारुणीति भेदिनी । तूणीरो रथवाह्यो बाणकोशः । महान् निषङ्ग इति यावत्। उपासङ्गाः हयगजवाह्यास्तूणाः । निषङ्गः पत्तिवाह्यः स एव ॥
५-१५५-५ कचग्रहविक्षेपः कचेषु गृहीत्वा येन शत्रुर्विक्षिप्यते तादृशः । तैलादयः प्रपप्ताः शत्रूणामुपरि क्षिप्यन्ते । साशीविषघटाः ससर्पाः कुम्भाः । सर्जरसो रालद्रव्यमग्न्युद्दीपकम् ॥
५-१५५-६ सघण्टानि फलकानि शस्त्राग्राणि येषां ते सघण्टफलकाः । अयंसि खङ्गपट्टिशच्चुरिकादीनि। गुडजलं तप्तम्। उपला यन्त्रक्षेप्या गोलाः। शालते कत्थते शब्दं करोतीति शालः स चासौ भिन्दिपालो गोफलकः। मधूच्छिष्टं मयनं तदपि द्रवीकृत्य गुडजलवत्प्रक्षेप्यम्। मुद्गरः मुशलतुल्यो दण्डः ॥
५-१५५-७ काण्डं बाणफलकं तद्युक्तो दण्डः काण्डदण्डः इतियावत् । सीरं लाङ्गलम् । विषं प्रसिद्धं तेन युक्तास्तोमरा विषतोमराः। शूर्पाणि तप्तगुडादिप्रक्षेपार्थानि। पिटकास्तदाश्रया मञ्जूषाः अस्त्ररोधनार्था वा। दात्रां परशुप्रभृति । अङ्कुशतोमराः बदरीकण्टकतुल्यलोहकण्टकोपेतास्तोमराः ॥
५-१५५-८ कीलकवचवान् हि परेण मुष्टियुद्धे जेतुमशक्यः । वाशी काष्ठप्रच्छन्नं शस्त्रम्। वृक्षादनाः लोहकण्टककीलादीन्युपकरणानि। व्याघ्रचर्मणा द्वीपी चित्रव्याघ्रस्तच्चर्मणा च परिवृता रथा एव ॥

५-१५५-९ तैलक्षौमानि तैलाक्तवस्त्रविशेषा येषां भस्म
प्रहारस्थले दीयते । सर्पिश्च पुरातनं तदर्थमेव ॥
५-१५५-१० चित्रानीकाः चित्राणि सैन्यानि ॥
५-१५५-११ विनिवेशेता येषु रथेष्विति शेषः ॥
५-१५५-१२ बद्धानि अरिष्टानि अशुभहराणि यन्त्रौषधादीनि येषु
ते बद्धारिष्टाः । बद्धकक्षाः बद्धाः कक्षाः स्पर्धापदानि
तुरगादिशिरसि घण्टामालामौक्तिकगुच्छादीनि। बद्धानि बिरुदानि
येषु। बद्धानि आभरणानि क्षुद्रघण्टिकादीनि निर्यूहाः शिखराणि च
येषु ॥
५-१५५-१४ चतुर्युज इत्येतद्व्याचष्टे धुर्ययोरिति । धुर्ययोः
धूःसन्निहितयोः। पार्ष्णिस्पारथी चक्ररक्षौ ॥
५-१५५-१७ पिनाकः त्रिशूलम् ॥
५-१५५-२० संग्राहः हेषणपूर्वकमग्रादाभ्यामुत्प्लवनं तद्रहिताः
। यतः सुसंपन्नाः सम्यकशिक्षिताः ॥
५-१५५-२२ एकस्य रथस्य यथोक्तविभागेन दश गजाः शतं अश्वाः
सहस्रं पदातयश्च परिवार इत्यर्थः ॥
५-१५५-२३ पक्षान्तरमाह रथस्येति । एकस्य रथस्य पञ्चाशद्गदा
पञ्चसहस्रं अश्वाः पञ्चत्रिंशत्सहस्रं पदातयः परिवार
इत्यर्थः ॥
५-१५५-२४ पृतनायां तु पञ्चसहस्रं नागास्तावन्तो रथाः
पञ्चविंशतिसहस्रं नराः पञ्चदशसहस्रं अश्वाः । वाहिन्यां
पञ्चाशत्सहस्रं नागास्तावन्तो रथाः सार्धलक्षद्वयं
नराः। सार्धलक्षं अश्वा इति ज्ञेयम् ॥

---

उद्योगपर्व-अध्यय१५६
॥ श्रीः ॥
५.१५६. अध्यायः १५६

Mahabharata - Udyoga Parva - Chapter Topics
दुर्योधनेन भीष्मंप्रति सैनापत्यस्वीकारप्रार्थना ॥ १ ॥
भीष्मेण समयप्रतिज्ञाकरणपूर्वकं सैनापत्याङ्गीकारः ॥ २ ॥
दुर्योधनेन भीष्मस्य सैनापत्येऽभिषेचनपूर्वकं सेनाभिः सह
कुरुक्षेत्रगमनम् ॥ ३ ॥

Mahabharata - Udyoga Parva - Chapter Text

५-१५६-० (३७१३०)
वैशंपायन उवाच। ५-१५६-०क्ष् (३८४२)
ततः शान्तनवं भीष्मं प्राञ्जलिर्धृतराष्ट्रजः ।
सह सर्वैर्महीपालैरिदं वचनमब्रवीत् ॥ ५-१५६-१ (३७१३१)
ऋते सेनाप्रणेतारं पृतना सुमहत्यपि ।
दीर्यते युद्धमासाद्य पिपीलिकपुटं यथा ॥ ५-१५६-२ (३७१३२)
नहि जातु द्वयोर्बुद्धिः समा भवति कर्हिचित् ।
शौर्यं च वलनेतॄणां स्पर्धते च परस्परम् ॥ ५-१५६-३ (३७१३३)
श्रूयते च महाप्राज्ञ हैहयानमितौजसः ।
अभ्ययुर्ब्राह्मणाः सर्वे समुच्छ्रितकुशध्वजाः ॥ ५-१५६-४ (३७१३४)
तानभ्ययुस्तदा वैश्याः शूद्राश्चैव पितामह ।
एकतस्तु त्रयो वर्णा एकतः क्षत्रियर्षभाः ॥ ५-१५६-५ (३७१३५)
ते स्म युद्धे प्रभज्यन्ते त्रयो वर्णाः पुनः पुनः ।
क्षत्रियाश्च जयन्त्येव बहुलं चैकतो बलम् ॥ ५-१५६-६ (३७१३६)
ततस्ते क्षत्रियानेव पप्रच्छुर्द्विचसत्तमाः ।
तेभ्यः शशंसुर्धर्मज्ञा याथातथ्यं पितामह ॥ ५-१५६-७ (३७१३७)
वयमेकस्य श्रृणुमो महाबुद्धिमतो रणे ।
भवन्तस्तु पृथक्सर्वे स्वबुद्धिवशवर्तिनः ॥ ५-१५६-८ (३७१३८)
ततस्ते ब्राह्मणाश्चक्रुरेकं सेनापतिं द्विजम् ।
नये सुकुशलं शूरमजयन्क्षत्रियांस्ततः ॥ ५-१५६-९ (३७१३९)
एवं ये कुशलं शूरं हितेप्सितमकल्पषम् ।
सेनापतिं प्रकुर्वन्ति ते जयन्ति रणे रिपून् ॥ ५-१५६-१० (३७१४०)
भवानुशनसा तुल्यो हितैषी च सदा मम ।
असंहार्थः स्थितो धर्मे स नः सेनापतिर्भव ॥ ५-१५६-११ (३७१४१)
रश्मीवतामिवादित्यो वीरुधामिव चन्द्रमाः ।
कुबेर इव यक्षाणां देवानामिव वासवः ॥ ५-१५६-१२ (३७१४२)
पर्वतानां यथा मेरुः सुपर्णः पक्षिणां यथा ।
कुमार इव देवानां वसूनामिव हव्यवाट् ॥ ५-१५६-१३ (३७१४३)
भवता हि वयं गुप्ताः शत्रेणेव दिवौकसः ।
अनाधृष्या भविष्यामस्त्रिदशानामपि ध्रुवम् ॥ ५-१५६-१४ (३७१४४)
प्रयातु नो भवानग्रे देवानामिव पावकिः ।
वयं त्वामनुयास्यामः सौरभेया इवर्षभम् ॥ ५-१५६-१५ (३७१४५)
भीष्म उवाच ।अ६-१५६-१६क्ष् (३८४३)
एवमेतन्महाबाहो यथा वदसि भारत ।
यथैव हि भवन्तो मे तथैव मम पाण्डवाः ॥ ५-१५६-१६ (३७१४६)
अपि चैव मया श्रोयो वाच्यं तेषां नराधिप ।

संयोद्धव्यं तवार्थाय यथा मे समयः कृतः ॥ ५-१५६-१७ (३७१४७)
न तु पश्यामि योद्धारमात्मनः सदृशं भुवि ।
ऋते तस्मान्नरव्याघ्रात्कुन्तीपुत्राद्धनञ्जयात् ॥ ५-१५६-१८ (३७१४८)
स हि वेद महाबुद्धिर्दिव्यान्यस्त्राण्यनेकशः ।
न तु मां विवृतो युद्धे जातु युध्येत पाण्डवः ॥ ५-१५६-१९ (३७१४९)
अहं स च क्षणेनैव निर्मनुष्यमिदं जगत् ।
कुर्यावास्त्रबलेनैव ससुरासुरराक्षसम् ॥ ५-१५६-२० (३७१५०)
न त्वेवोत्सादनीया मे पाण्डोः पुत्रा जनाधिप ।
तस्माद्योधान्हनिष्यामि प्रयोगेणायुतं सदा ॥ ५-१५६-२१ (३७१५१)
एवमेषां करिष्यामि निधनं कुरुनन्दन ।
न चेत्ते मां हनिष्यन्ति पूर्वमेव समागमे ॥ ५-१५६-२२ (३७१५२)
सेनापतिस्त्वहं राजन्समयेनापरेण ते ।
भविष्यामि यथाकामं तन्मे श्रोतुमिहार्हसि ॥ ५-१५६-२३ (३७१५३)
कर्णो वा युध्यतां पूर्वमहं वा पृथिवीपते ।
स्पर्धते हि सदात्यर्थं सूतपुत्रो मया रणे ॥ ५-१५६-२४ (३७१५४)
कर्ण उवाच। ५-१५६-२५क्ष् (३८४४)
नाहं जीवति गाङ्गेये राजन्योत्स्ये कथंचन ।
हते भीष्मे तु योत्स्यामि सह गाण्डीवधन्वना ॥ ५-१५६-२५ (३७१५५)
वैशंपायन उवाच। ५-१५६-२६क्ष् (३८४५)
ततः सेनापतिं चक्रे विधिवद्भूरिदक्षिणम् ।
धृतराष्ट्रात्मजो भीष्मं सोऽभिषिक्तो व्यरोचत ॥ ५-१५६-२६ (३७१५६)
ततो भेरीश्च शङ्खांश्च शतशोऽथ सहस्रशः ।
वादयामासुव्यग्रा वादका राजशासनात् ॥ ५-१५६-२७ (३७१५७)
सिंहनादाश्च विविधा वाहनानां च निःस्वनाः ॥ ५-१५६-२८ (३७१५८)
निर्घाताः पृथिवीकम्पा गजबृंहितनिःस्वनाः ।
आसंश्च सर्वयोधानां पातयन्तो मनांस्युत ॥ ५-१५६-२९ (३७१५९)
वाचश्चाप्यशरीरिण्यो दिवश्चोल्काः प्रपेदिरे ।
शिवाश्च भयवेदिन्यो नेदुर्दीप्ततरा भृशम् ॥ ५-१५६-३० (३७१६०)
सैनापत्ये यदा राजा गाङ्गेयमभिषिक्तवान् ।
तदैतान्युग्ररूपाणि बभूवुः शतशो नृप ॥ ५-१५६-३१ (३७१६१)
ततः सेनापतिं कृत्वा भीष्मं परबलार्दनम् ।
वाचयित्वा द्विजश्रेष्ठान्गोभिर्निष्कैश्च भूरिशः ॥ ५-१५६-३२ (३७१६२)
वर्धमानो जयाशीर्भिर्निर्ययौ सैनिकैर्वृतः ।
आपगेयं पुरस्कृत्य भ्रातृभिः सहितस्तदा ॥ ५-१५६-३३ (३७१६३)
स्कन्धावारेण महता कुरुक्षेत्रं जगाम ह ॥ ५-१५६-३४ (३७१६४)
परिक्रम्य कुरुक्षेत्रं कर्णेन सह कौरवः ।

शिबिरं मापयामास समे देशे जनाधिप ॥ ५-१५६-३५ (३७१६५)
मधुरानूषरे देशे प्रभूतयवसेन्धने ।
यथैव हास्तिनपुरं तद्वच्छिबिरमाबभौ ॥ ॥ ५-१५६-३६ (३७१६६)

इति श्रीमन्महाभारते उद्योगपर्वणि सैन्यनिर्याणपर्वणि
षट्पञ्चाशदधिकशततमोऽध्यायः ॥
Mahabharata - Udyoga Parva - Chapter Footnotes

५-१५६-१५ पावकिः कार्तिकेयः ॥
५-१५६-१९ विवृतो विस्पष्टो भूत्वेत्यर्थः ॥
५-१५६-२० निर्मनुष्यं निर्जनम् ॥
५-१५६-२१ सदा प्रत्यहम् ॥
५-१५६-२९ पातयन्तः मूर्च्छितानि कुर्वन्तः ॥

---

उद्योगपर्व-अध्यय१५७
॥ श्रीः ॥
५.१५७. अध्यायः १५७

Mahabharata - Udyoga Parva - Chapter Topics
युधिष्ठिरेण श्रीकृष्णानुमत्या द्रुपदादीनां सप्तानां
पृतगक्षौहिण्याधिपत्येऽभिषेचनपूर्वकं धृष्टद्युम्नस्य
सर्वसैन्याधिपत्येऽभिषेचनम् ॥ १ ॥
बलरामस्य अक्रूरादिभिः सह पाण्डवदिदृक्षया कुरुक्षेत्रागमनम् ॥ २ ॥
युधिष्ठिरादिपूजितस्य तस्य बन्धुनिधनावलोकनासहिष्णुतया
तीर्थनिषेवणार्थं गमनम् ॥ ३ ॥

Mahabharata - Udyoga Parva - Chapter Text

५-१५७-० (३७१६७)
जनमेजय उवाच। ५-१५७-०क्ष् (३८४६)
आपगेयं महात्मानं भीष्मं शस्त्रभृतां वरम् ।
पितामहं भारतानां ध्वजं सर्वमहीक्षिताम् ॥ ५-१५७-१ (३७१६८)
बृहस्पतिसं बुद्ध्या क्षमया पृथिवीसमम् ।
समुद्रमिव गाम्भीर्ये हिमवन्तमिव स्थिरम् ॥ ५-१५७-२ (३७१६९)
प्रजापतिमिवौदार्ये तेजसा भास्करोपमम् ।
महेन्द्रमिव शत्रूणां ध्वंसनं शरवृष्टिभिः ॥ ५-१५७-३ (३७१७०)
रणयज्ञे प्रवितते सुभीमे लोमहर्षणे ।

दीक्षितं चिररात्राय श्रुत्वा तत्र युधिष्ठिरः ॥ ५-१५७-४ (३७१७१)
किमब्रवीन्महाबाहुः सर्वशस्त्रभृतां वरः ।
भीमसेनार्जुनौ वापि कृष्णो वा प्रत्यभाषत ॥ ५-१५७-५ (३७१७२)
वैशंपायन उवाच। ५-१५७-६क्ष् (३८४७)
आपद्धर्मार्थकुशलो महाबुद्धिर्युधिष्ठिरः ।
सर्वान्भ्रातॄन्समानीय वासुदेवं च शाश्वतम् ॥ ५-१५७-६ (३७१७३)
उवाच वदतां श्रेष्ठः सान्त्वपूर्वमिदं वचः ।
पर्याक्रामत सैन्यानि यत्तास्तिष्ठत दंशिताः ॥ ५-१५७-७ (३७१७४)
पितामहेन वो युद्धं पूर्वमेव भविष्यति ।
तस्मात्सप्तसु सेनासु प्रणेतॄन्मम पश्यत ॥ ५-१५७-८ (३७१७५)
कृष्ण उवाच। ५-१५७-९क्ष् (३८४८)
यथार्हति भवान्वक्तुमस्मिन्काले ह्युपस्थिते ।
तथेदमर्थवद्वाक्यमुक्तं ते भरतर्षभ ॥ ५-१५७-९ (३७१७६)
रोचते मे महाबाहो क्रियतां यदनन्तरम् ।
नायकास्तव सेनायां क्रियन्तामिह सप्त वै ॥ ५-१५७-१० (३७१७७)
वैशंपायन उवाच। ५-१५७-११क्ष् (३८४९)
ततो द्रुपदमानाय्य विराटं शिनिपुङ्गवम् ।
धृष्टद्युम्नं च पाञ्चाल्यं धृष्टकेतुं च पार्थिव ।
शिखण्डिनं च पाञ्चाल्यं सहदेवं च मागधम् ॥ ५-१५७-११ (३७१७८)
एतान्सप्त महाभागान्वीरान्युद्धाभिकाङ्क्षिणः ।
सेनाप्रणेतॄन्विधिवदभ्यषिञ्चद्युधिष्ठिरः ॥ ५-१५७-१२ (३७१७९)
सर्वसेनापतिं चात्र धृष्टद्युम्नं चकार ह ।
द्रोणान्तहेतोरुत्पन्नो य इद्धाञ्जातवेदसः ॥ ५-१५७-१३ (३७१८०)
सर्वेषामेव तेषां तु समस्तानां महात्मनाम् ।
सेनापतिपतिं चक्रे गडाकेशं धनञ्जयम् ॥ ५-१५७-१४ (३७१८१)
अर्जुनस्यापि नेता च संयन्ता चैव वाजिनाम् ।
सङ्कर्षणानुजः श्रीमान्महाबुद्धिर्जनार्दनः ॥ ५-१५७-१५ (३७१८२)
तद्दृष्ट्वोपस्थितं युद्धं समासन्नं महात्ययम् ।
प्राविशद्भवनं राज्ञः पाण्डवानां हलायुधः ॥ ५-१५७-१६ (३७१८३)
सहाक्रूरप्रभृतिभिर्गदसाम्बोद्धवादिभिः ।
रौक्मिणेयाहुकसुतैश्चारुदेष्णपुरोगमैः ॥ ५-१५७-१७ (३७१८४)
वृष्णिमुख्यैरधिगतैर्व्याघ्रैरिव बलोत्कटैः ।
अभिगुप्तो महाबाहुर्मरुद्भिरिव वासवः ॥ ५-१५७-१८ (३७१८५)
नीलकौशेयवसनः कैलासशिखरोपमः ।
सिंहखेलगतिः श्रीमान्मदरक्तान्तलोचनः ॥ ५-१५७-१९ (३७१८६)
तं दृष्ट्वा धर्मराजश्च केशवश्च महाद्युतिः ।

उदतिष्ठत्ततः पार्थो भीमकर्मा वृकोदरः ॥ ५-१५७-२० (३७१८७)
गाण्डीवधन्वा ये चान्ये राजानस्तत्र केचन ।
पूजयाञ्चक्रिरे ते वै समायान्तं हलायुधम् ॥ ५-१५७-२१ (३७१८८)
ततस्तं पाण्डवो राजा करे पस्पर्श पाणिना ।
वासुदेवपुरोगास्तं सर्व एवाभ्यवादयन् ॥ ५-१५७-२२ (३७१८९)
विराटद्रुपदौ वृद्धावभिवाद्य हलायुधः ।
युधिष्ठिरेण सहित उपाविशदरिन्दमः ॥ ५-१५७-२३ (३७१९०)
ततस्तेषूपविष्टेषु पार्थिवेषु समन्ततः ।
वासुदेवमभिप्रेक्ष्य रौहिणेयोऽभ्यभाषत ॥ ५-१५७-२४ (३७१९१)
भवितायं महारौद्रो दारुणः पुरुषक्षयः ।
दिष्टमेतद्ध्रुवं मन्ये न शक्यमतिवर्तितुम् ॥ ५-१५७-२५ (३७१९२)
तस्माद्युद्धात्समुत्तीर्णानपि वः समुहृञ्जानान् ।
अरोगानक्षतैर्देहैर्द्रष्टास्मीति मतिर्मम ॥ ५-१५७-२६ (३७१९३)
समेतं पार्थिवं क्षत्रं कालपक्वमसंशयम् ।
विमर्दश्च महान्भावी मांसशोणितकदर्दमः ॥ ५-१५७-२७ (३७१९४)
उक्तो मया वासुदेवः पुनः पुनरुपह्वरे ।
संबन्धिषु समां वृत्तिं वर्तस्व मधुसूदन ॥ ५-१५७-२८ (३७१९५)
पाण्डवा हि यथास्माकं तथा दुर्योधनो नृपः ।
तस्यापि क्रियतां साह्यं स पर्येति पुनःपुनः ॥ ५-१५७-२९ (३७१९६)
तच्च मे नाकरोद्वाक्यं त्वदर्थे मधुसूदनः ।
निर्विष्टः सर्वभावेन धनञ्जयमवेक्ष्य ह ॥ ५-१५७-३० (३७१९७)
ध्रुवो जयः पाण्डवानामिति मे निश्चिता मतिः ।
तथा ह्यभिनिवेशोऽयं वासुदेवस्य भारत ॥ ५-१५७-३१ (३७१९८)
न चाहमृत्सहे कृष्णमृते लोकमुदीक्षितुम् ।
ततोऽहमनुवर्तामि केशवस्य चिकीर्षितम् ॥ ५-१५७-३२ (३७१९९)
उभौ शिष्यौ हि मे वीरौ गदायद्धविशारदौ ।
तुल्यस्नेहोऽस्म्यतो भीते तथा दुर्योधने नृपे ॥ ५-१५७-३३ (३७२००)
तस्माद्यास्यामि तीर्थानि सरस्वत्या निषेवितुम् ।
न हि शक्ष्यामि कौरव्यान्नश्यमानानवेक्षितुम् ॥ ५-१५७-३४ (३७२०१)
वैशंपायन उवाच। ५-१५७-३५क्ष् (३८५०)
एवमुक्त्वा महाबाहुरनुज्ञातश्च पाण्डवैः ।
तीर्थयात्रां ययौ रामो निवर्त्य मधुसूदनम् ॥ ॥ ५-१५७-३५ (३७२०२)

इति श्रीमन्महाभारते उद्योगपर्वमि सैन्यनिर्याणपर्वणि
सप्तपञ्चाशदधिकशततमोऽध्यायः ॥

Mahabharata - Udyoga Parva - Chapter Footnotes

५-१५७-१३ इद्धात्प्रदीप्तात् ॥
५-१५७-१६ महात्ययं अत्यन्तं क्षयकरम् ॥
५-१५७-२४ रौहिणेयो बलरामः ॥
५-१५७-२८ उपह्वरे एकान्ते ॥

---

उद्योगपर्व-अध्यय१५८
॥ श्रीः ॥
५.१५८. अध्यायः १५८

Mahabharata - Udyoga Parva - Chapter Topics
श्रीकृषाणश्यालस्य रुक्मिणः पाण्डवानुपेत्य अर्जुनंप्रति तस्य भयविकल्पपूर्वकं दर्पास्त्वेन साहाय्यकरणोक्तिः ॥ १ ॥
अर्जुनेन तस्य प्रत्याख्यानम् ॥ २ ॥
दुर्योधनमेत्य तथाभाषिणस्तस्य तेनापि प्रत्याख्यानम् ॥ ३ ॥

Mahabharata - Udyoga Parva - Chapter Text

५-१५८-० (३७२०३)
वैशंपायन उवाच। ५-१५८-०क्ष् (३८५१)
एतस्मिन्नैव काले तु भीष्मकस्य महात्मनः ।
हिरण्यरोम्णो नृपतेः साक्षादिन्द्रसखस्य वै ॥ ५-१५८-१ (३७२०४)
आकृतीनामधिपतिर्भोजस्यातियशस्विनः ।
दाक्षिणात्यपतेः पुत्रो दिक्षु रुक्मीति विश्रुतः ॥ ५-१५८-२ (३७२०५)
यः किंपुरुषसिंहस्य गन्धमादनवासिनः ।
कृत्स्नं शिष्यो धनुर्वेदं चतुष्पादमवाप्तवान् ॥ ५-१५८-३ (३७२०६)
यो माहेन्द्रं धनुर्लेभे तुल्यं गाण्डीवतेजसा ।
शार्ङ्गेण च महाबाहुः संमितं दिव्यलक्षणम् ॥ ५-१५८-४ (३७२०७)
त्रीण्येवैतानि दिव्यानि धनूंषि दिविचारिणाम् ।
वारुणं गाण्डिवं तत्र माहेन्द्रं विजयं धनुः ।
शार्ङ्गं तु वैष्णवं प्राहुर्दिव्यं तेजोमयं धनुः ॥ ५-१५८-५ (३७२०८)
धारयामास तत्कृष्णः परसेनाभयावहम् ।
गाण्डीवं पावकाल्लेभे खाण्डवे पाकशासनिः ॥ ५-१५८-६ (३७२०९)
द्रुमाद्रुक्मी महातेजा विजयं प्रत्यपद्यत ।
संछिद्य मौरवान्पाशान्निहत्य मुरमोजसा ॥ ५-१५८-७ (३७२१०)
निर्जित्य नरकं भौममाहृत्य मणिकुण्डले ।

षोडश स्त्रीसहस्राणि रत्नानि विविधानि च ॥ ५-१५८-८ (३७२११)
प्रतिपेदे हृषीकेशः शार्ङ्गं च धनुरुत्तमम् ।
रुक्मी तु विजयं लब्ध्वा धनुर्मेघनिभस्वनम् ॥ ५-१५८-९ (३७२१२)
विभीषयन्निव जगत्पाण्डवानभ्यवर्तत ।
नामृष्यत पुरा योऽसौ स्वबाहुलगर्वितः ॥ ५-१५८-१० (३७२१३)
रुक्मिण्या हरणं वीरो वासुदेवेन धीमता ।
कृत्वा प्रतिज्ञां नाहत्वा निवर्तिष्ये जनार्दनम् ॥ ५-१५८-११ (३७२१४)
ततोऽन्वधावद्वार्ष्णेयं सर्वशस्त्रभृतां वरः ।
सेनया चतुरङ्गिण्या महत्या दूरपातया ॥ ५-१५८-१२ (३७२१५)
विचित्रायुधवर्मिण्या गङ्गयेव प्रवृद्धया ।
स समासाद्य वार्ष्णेयं योगानामीश्वरं प्रभुम् ॥ ५-१५८-१३ (३७२१६)
व्यंसितो व्रीडितो राजन्नाजगाम स कुण्डिनम् ।
यत्रैव कृष्णेन रणे निर्जितः परवीरहा ॥ ५-१५८-१४ (३७२१७)
तत्र भोजकटं नाम कृतं नगरमुत्तमम् ।
सैन्येन महता तेन प्रभूतगजवाजिना ॥ ५-१५८-१५ (३७२१८)
पुरं तद्भुवि विख्यातं नाम्ना भोजकटं नृप ।
स भोजराजः सैन्येन महता परिवारितः ॥ ५-१५८-१६ (३७२१९)
अक्षौहिण्या महावीर्यः पाण्डवान्क्षिप्रमागमत् ।
ततः स कवची धन्वी तली खड्गी शरासनी ॥ ५-१५८-१७ (३७२२०)
रथेनादित्यवर्णेन प्रविवेश महाचमूम् ।
विदितः पाण्डवेयानां वासुदेवप्रियेप्सया ॥ ५-१५८-१८ (३७२२१)
युधिष्ठिरस्तु तं राजा प्रत्युद्गम्याभ्यपूजयत् ।
स पूजितः पाण्डुपुत्रैर्यथान्यायं सुसंस्तुतः ॥ ५-१५८-१९ (३७२२२)
प्रतिगृह्य तु तान्सर्वान्विश्रान्तः सहसैनिकः ।
उवाच मध्ये वीराणां कुन्तीपुत्रं धनञ्जयम् ॥ ५-१५८-२० (३७२२३)
सहायोस्मि स्थितो युद्धे यदि भीतोसि पाण्डव ।
करिष्यामि रणे साह्यमसह्यं तव शत्रुभिः ॥ ५-१५८-२१ (३७२२४)
न हि मे विक्रमे तुल्यः पुमानस्तीह कश्चन ।
हनिष्यामिरणे भागं यन्मे दास्यसि पाण्डव ॥ ५-१५८-२२ (३७२२५)
अपि द्रोणकृपौ वीरौ भीष्मकर्णावथो पुनः ।
अथवा सर्व एवैते तिष्ठन्तु वसुधाधिपाः ॥ ५-१५८-२३ (३७२२६)
निहत्य समरे शत्रूंस्तव दास्यामि मेदिनीम् ।
इत्युक्तो धर्मराजस्य केशवस्य च संनिधौ ॥ ५-१५८-२४ (३७२२७)
श्रृण्वतां पार्थिवेन्द्राणामन्येषां चैव सर्वशः ।
वासुदेवमभिप्रेक्ष्य धर्मराजं च पाण्डवम् ।
उवाच धीमान्कौन्तेयः प्रहस्य सखिपूर्वकम् ॥ ५-१५८-२५ (३७२२८)

युध्यमानस्य मे वीर गन्धर्वैः सुमहाबलैः ।
सहायो घोषयात्रायां कस्तदासीत्सखा मम ॥ ५-१५८-२६ (३७२२९)
तथा प्रतिभये तस्मिन्देवदानवसंकुले ।
खाण्डवे युध्यमानस्य कः सहायस्तदावभवत् ॥ ५-१५८-२७ (३७२३०)
निवातकवचैर्युद्धे कालकेयैश्च दानवैः ।
तत्र मे युध्यमानस्य कः सहायस्तदाभवत् ॥ ५-१५८-२८ (३७२३१)
तथा विराटनगरे कुरुभिः सह सङ्गरे ।
युध्यतो बहुभिस्तत्र कः सहायोऽभवन्मम ॥ ५-१५८-२९ (३७२३२)
उपजीव्य रणे रुद्रं शक्रं वैश्रवणं यमम् ।
वरुणं पावकं चैव कृपं द्रोणं च माधवम् ॥ ५-१५८-३० (३७२३३)
धारयन्गाण्डिवं दिव्यं धनुस्तेजोमयं दृढम् ।
अक्षय्यशरसंयुक्तो दिव्यास्त्रपरिबृंहितः ॥ ५-१५८-३१ (३७२३४)
कौरवामां कुले जातः पाण्डोः पुत्रो विशेषतः ।
द्रोणं व्यपदिशञ्छिष्यो वासुदेवसहायवान् ॥ ५-१५८-३२ (३७२३५)
कथमस्मद्विधो ब्रूयाद्भीतोऽस्मीति यशोहरम् ।
वचनं नरशार्दूल वज्रायुधसमस्वनम् ॥ ५-१५८-३३ (३७२३६)
नास्मि भीतो महाबाहो सहायार्थश्च नास्ति मे ।
यथाकामं यथायोगं गच्छ वात्रैव तिष्ठ वा ॥ ५-१५८-३४ (३७२३७)
ग्वैशंपायन उवाच ५-१५८-३५क्ष् (३८५२)
तच्छ्रुत्वा वचनं तस्य विजयस्य च धीमतः ।'
विनिवर्त्य ततो रुक्मी सेनां सागरसंनिभाम् ।
दुर्योधनमुपागच्छत्तथैव भरतर्षभ ॥ ५-१५८-३५ (३७२३८)
तथैव चाभिगम्यैनमुवाच वसुधाधिपः ।
प्रत्याख्यातश्च तेनापि स तदा शूरमानिना ॥ ५-१५८-३६ (३७२३९)
द्वावेव तु महाराज तस्माद्युद्धादपेयतुः ।
रौहिणेयश्च वार्ष्णेयो रुक्मी च वसुधाधिप ॥ ५-१५८-३७ (३७२४०)
गते रामे तीर्थयात्रां भीष्मकस्य सुते तथा ।
उपाविशन्पाण्डवेया मन्त्राय पुनरेव च ॥ ५-१५८-३८ (३७२४१)
समितिर्धर्मराजस्य सा पार्थिवसमाकुला ।
शुशुभे तारकैश्चित्रा द्यौश्चन्द्रेणेव भारत ॥ ॥ ५-१५८-३९ (३७२४२)

इति श्रीमन्महाभारते उद्योगपर्वमि सैन्यनिर्याणपर्वणि
अष्टपञ्चाशदधिकशततमोऽध्यायः ॥

Mahabharata - Udyoga Parva - Chapter Footnotes

५-१५८-१ साक्षात्पुत्र इति संबन्धः ॥

५-१५८-२ आकूतीनां संकल्पानाम् । सत्यसंकल्प इत्यर्थः ॥
५-१५८-७ मौरवान् आन्त्रतन्तिमयान् । यैरिदानी शार्ङ्गे धनुषि ज्या क्रियते ॥
५-१५८-३० उपजीव्य आराध्य । रणे युद्धनिमित्तम् ॥
५-१५८-३२ द्रोणं अयं मम गुरुरिति व्यपदिशन् कथयन् ॥

---

उद्योगपर्व-अध्यय१५९
॥ श्रीः ॥
५.१५९. अध्यायः १५९

Mahabharata - Udyoga Parva - Chapter Topics
धृतराष्ट्रेण सञ्जयंप्रति
कुरुपाण्डवसेनयोर्वृत्तवृत्तान्तकथनचोदना ॥ १ ॥
संजयेन धृतराष्ट्रंप्रति पुरुषस्याकर्तृत्वकथनपूर्वकं स्वेन
वक्ष्यमाणबन्धुनिधनश्रवणेन शोकानधिगमोपदेशः ॥ २ ॥

Mahabharata - Udyoga Parva - Chapter Text

५-१५९-० (३७२४३)
जनमेजय उवाच। ५-१५९-०क्ष् (३८५३)
तथा व्यूढेष्वनीकेषु कुरुक्षेत्रे द्विजर्षभ ।
किमर्कुर्वंश्च कुरवः कालेनाभिप्रचोदिताः ॥ ५-१५९-१ (३७२४४)
वैशंपायन उवाच। ५-१५९-२क्ष् (३८५४)
तथा व्यूढेष्वनीकेषु यत्तेषु भरतर्षभ ।
धृतराष्ट्रो महाराज सञ्जयं वाक्यमब्रवीत् ॥ ५-१५९-२ (३७२४५)
एहि सञ्जय सर्वं मे आचक्ष्वानवशेषतः ।
सेनानिवेशे यद्वृत्तं कुरुपाण्डवसेनयोः ॥ ५-१५९-३ (३७२४६)
दिष्टमेव परं मन्ये पौरुषं चाप्यनर्थकम् ।
यदहं बुद्ध्यमानोऽपि युद्धदोषान्क्षयोदयान् ॥ ५-१५९-४ (३७२४७)
तथापि निकृतिप्रज्ञं पुत्रं दुर्द्यूतदेविनम् ।
न शक्नोमि नियन्तुं वा कर्तुं वा हितमात्मनः ॥ ५-१५९-५ (३७२४८)
भवत्येव हि मे सूत बुद्धिर्दोषानुदर्शिनी ।
दुर्योधनं समासाद्य पुनः सा परिवर्तते ॥ ५-१५९-६ (३७२४९)
एवं गते वै यद्भावि तद्भविष्यति सञ्जय ।
क्षत्रधर्मः किल रणे तनुत्यागे हि पूजितः ॥ ५-१५९-७ (३७२५०)
सञ्जय उवाच। ५-१५९-८क्ष् (३८५५)
त्वद्युक्तोऽयमनुप्रश्नो महाराज यथेच्छसि ।

न तु दुर्योधने दोषमिममाधातुमर्हसि ॥ ५-१५९-८ (३७२५१)
शृणुष्वानवशेषेण वदतो मम पार्थिव ।
य आत्मनो दुश्चरितादशुभं प्राप्नुयान्नरः ।
न स कालं न वा देवानेनसा गन्तुमर्हति ॥ ५-१५९-९ (३७२५२)
महाराज मनुष्येषु निन्द्यं यः सर्वमाचरेत् ।
स वध्यः सर्वलोकस्य निन्दितानि समाचरन् ॥ ५-१५९-१० (३७२५३)
निकारा मनुजश्रेष्ठ पाण्डवैस्त्वत्प्रतीक्षया ।
अनुभूताः सहामात्यैर्निकृतैरधिदेवने ॥ ५-१५९-११ (३७२५४)
हयानां च गजानां च राज्ञां चामिततेजसाम् ।
वैशसं समरे वृत्तं यत्तन्मे शृणु सर्वशः ॥ ५-१५९-१२ (३७२५५)
स्थिरो भूत्वा महाप्राज्ञ सर्वलोकक्षयोदयम् ।
यथाभूतं महायुद्धे श्रुत्वा मा विमना भव ॥ ५-१५९-१३ (३७२५६)
न ह्येव कर्ता पुरुषः कर्मणोः शुभपापयोः ।
अस्वतन्त्रो हि पुरुषः कार्यते दारुयन्त्रवत् ॥ ५-१५९-१४ (३७२५७)
केचिदीश्वरनिर्दिष्टाः केचिदेव यदृच्छया ।
पूर्वकर्मभिरप्यन्ये त्रैधमेतत्प्रदृश्यते ।
तस्मादनर्थमापन्नः स्थिरो भूत्वा निशामय ॥ ॥ ५-१५९-१५ (३७२५८)

इति श्रीमन्महाभारते उद्योगपर्वणि सैन्यनिर्याणपर्वणि
एकोनषष्ट्यधिकशततमोऽध्यायः ॥ ॥ समाप्तं च सैन्यनिर्याणपर्व
॥
Mahabharata - Udyoga Parva - Chapter Footnotes

५-१५९-४ क्षयस्यैव उदयो येभ्यस्तान् क्षयोदयान् ॥
५-१५९-५ निकृतिप्रज्ञं कपटविषयैव प्रज्ञा न धर्मविषया
यस्य तम् ॥
५-१५९-९ एनसा दोषेण देवान्कालं वा गुन्तुं उपलब्धुं नार्हति । न स
कालं न वा देवं वक्तुमेतदिहार्हतीति पाठेप्ययमेवार्थः ॥
५-१५९-११ निकाराः तिरस्काराः ॥

---

उद्योगपर्व-अध्यय१६०
॥ श्रीः ॥
५.१६०. अध्यायः १६०

Mahabharata - Udyoga Parva - Chapter Topics
दुर्योधनेन पृथक्पृथग्युधिष्ठिरादीन्प्रति
वक्तव्यसन्देशकथनपूर्वकमुलूकस्य पाण्डवान्प्रति दूत्येन प्रेषणम्

॥ १ ॥

Mahabharata - Udyoga Parva - Chapter Text

५-१६०-० (३७२५९)
सञ्जय उवाच। ५-१६०-०क्ष् (३८५६)
हिरण्वत्यां निविष्टेषु पाण्डवेषु महात्मसु ।
न्यविशन्त महाराज कौरवेया यथाविधि ॥ ५-१६०-१ (३७२६०)
तत्र दुर्योधनो राजा निवेस्य बलमोजसा ।
संमानयित्वा नृपतीन्न्यस्य गुल्मांस्तथैव च ॥ ५-१६०-२ (३७२६१)
आरक्षस्य विधिं कृत्वा योधानां तत्र भारत ।
कर्णं दुःशासनं चैव शकुनिं चापि सौबलम् ॥ ५-१६०-३ (३७२६२)
आनाय्य नृपतिस्तत्र मन्त्रयामास भारत ।
तत्र दुर्योधनो राजा कर्णेन सह भारत ॥ ५-१६०-४ (३७२६३)
सौबलेन च राजेन्द्र मन्त्रयित्वा नरर्षभ ।
आहूयोपह्वरे राजन्नुलूकमिदमब्रवीत् ॥ ५-१६०-५ (३७२६४)
उलूक गच्छ कैतव्य पाण्डवान्सहसोमकान् ।
गत्वा मम वचो ब्रूहि वासुदेवस्य श्रृण्वतः ॥ ५-१६०-६ (३७२६५)
इदं तत्समनुप्राप्तं वर्षपूगाभिचिन्तितम् ।
पाण्डवानां कुरूणां च युद्धं लोकभयङ्करम् ॥ ५-१६०-७ (३७२६६)
यदेतत्कत्थनावाक्यं सञ्जयो महदब्रवीत् ।
वासुदेवसहायस्य गर्जतः सानुजस्य ते ॥ ५-१६०-८ (३७२६७)
मध्ये करूणां कौन्तेय तस्य कालोयमागतः ।
यथावत्संप्रतिज्ञातं तत्सर्वं क्रियतामिति ॥ ५-१६०-९ (३७२६८)
ज्येष्टं तथैव कौन्तेयं ब्रूयास्त्यं वचनान्मम ॥ ५-१६०-१० (३७२६९)
भ्रातृभिः सहितः सर्वैः सोमकैश्च सकेकयैः ।
कथं वा धार्मिको भूत्वा त्वमधर्मे मनः कृथाः ।
य इच्छसि जगत्सर्वं नश्यमानं नृशंसवत् ॥ ५-१६०-११ (३७२७०)
अभयं सर्वभूतेभ्यो पाता त्वमिति मे मतिः ॥ ५-१६०-१२ (३७२७१)
श्रूयते हि पुरा गीतः श्लोकोऽयं भरतर्षभ ।
प्रह्लादेनाथ भद्रं ते हृते राज्ये तु दैवतैः ॥ ५-१६०-१३ (३७२७२)
यस्य धर्मध्वजो नित्यं सुरा ध्वज इवोच्छ्रितः ।
प्रच्छन्नानि च पापानि बैडालं नाम तद्व्रतम् ॥ ५-१६०-१४ (३७२७३)
अत्र ते वर्तयिष्यामि आख्यानमिदमुत्तमम् ।
कथितं नारदेनेह पितुर्मम नराधिप ॥ ५-१६०-१५ (३७२७४)
मार्जारः किल दुष्टात्मा निश्चेष्टः सर्वकर्मसु ।

ऊर्ध्वबाहुः स्थितो राजन् गङ्गातीर कदाचन ॥ ५-१६०-१६ (३७२७५)
स वै कृत्वा मनःशुद्धिं प्रत्ययार्थं शरीरिणाम् ।
करोमि धर्ममित्याह सर्वानेव शरीरिणः ॥ ५-१६०-१७ (३७२७६)
तस्य कालेन महता विस्त्रम्यं जग्मुरण्डजाः ।
समेत्य च प्रशंसन्ति मार्जारं तं विशांपते ॥ ५-१६०-१८ (३७२७७)
पूज्यमानस्तु तैः सर्वैः पक्षिभिः पक्षिभोजनः ।
आत्मकार्यं कृतं मेने चार्यायाश्च कृतं फलम् ॥ ५-१६०-१९ (३७२७८)
अथ दीर्घस्य कालस्य तं देशं मूषिका ययुः ।
ददृशुस्तं च ते तत्र धार्मिकं व्रतचारिणम् ॥ ५-१६०-२० (३७२७९)
कार्येण महता युक्तं दम्भयुक्तेन भारत ।
तेषां मतिरियं राजन्नासीत्तत्र विनिश्चये ॥ ५-१६०-२१ (३७२८०)
बहुमित्रा वयं सर्वे तेषां नो मातुलो ह्ययम् ।
रक्षां करोतु सततं वृद्धबालस्य सर्वशः ॥ ५-१६०-२२ (३७२८१)
उपगम्य तु ते सर्वे बिडालमिदमब्रुवन् ।
भवत्प्रसादादिच्छामश्चर्तुं चैव यथासुखम् ॥ ५-१६०-२३ (३७२८२)
भवान्नो गतिरव्यग्रा भवान्नः परमः सुहृत् ।
ते वयं सहिताः सर्वे भवन्तं शरणं गताः ॥ ५-१६०-२४ (३७२८३)
भवान्धर्मपरो नित्यं भवान्धर्मे व्यवस्थितः ।
स नो रक्ष महाप्रज्ञ त्रिदशानिव वज्रभृत् ॥ ५-१६०-२५ (३७२८४)
एवमुक्तस्तु तैः सर्वैर्मूषिकैः स विशांपते ।
प्रत्युवाच ततः सर्वान्मूषिकान्मूषिकान्तकृत् ॥ ५-१६०-२६ (३७२८५)
द्वयोर्योगं न पश्यामि तपसो रक्षणस्य च ।
अवश्यं तु मया कार्यं वचनं भवतां हितम् ॥ ५-१६०-२७ (३७२८६)
युष्माभिरपि कर्तव्यं वचनं मम नित्यशः ।
तपसास्मि परिश्रान्तो दृढं नियमामास्थितः ॥ ५-१६०-२८ (३७२८७)
न चापि गमने शक्तिं कांचित्पश्यामि चिन्तयन् ।
सोस्मि नेयः सदा ताता नदीकूलमितःपरम् ॥ ५-१६०-२९ (३७२८८)
तथेति तं प्रतिज्ञाय मूषिका भरतर्षभ ।
वृद्धबालमथो सर्वं मार्जाराय न्यवेदयन् ॥ ५-१६०-३० (३७२८९)
ततः स पापो दुष्टात्मा मूषिकानथ भक्षयन् ।
पीवरश्च सुवर्णश्च दृढबन्धश्च जायते ॥ ५-१६०-३१ (३७२९०)
मूषिकाणां गणश्चात्र भृशं संक्षीयतेऽथ सः ।
मार्जारो वर्धते चापि तेजोबलसमन्वितः ॥ ५-१६०-३२ (३७२९१)
ततस्ते मूषिकाः सर्वे समेत्यान्योन्यमब्रुवन् ।
मातुलो वर्धते नित्यं वयं क्षीयामहे भृशम् ॥ ५-१६०-३३ (३७२९२)
ततः प्राज्ञतमः कश्चिड्डिण्डिको नाम मूषिकः ।

अब्रवीद्वचनं राजन्मूषिकाणां महागणम् ॥ ५-१६०-३४ (३७२९३)
गच्छतां वो नदीतीरं सहितानां विशेषतः ।
पृष्ठतोऽहं गमिष्यामि सहैव मातुलेन तु ॥ ५-१६०-३५ (३७२९४)
साधु साध्विति ते सर्वे पूजयाञ्चक्रिरे तदा ।
चक्रुश्चैव यथान्यायं डिण्डिकस्य वचोऽर्थवत् ॥ ५-१६०-३६ (३७२९५)
अविज्ञानात्ततः सोऽथ डिण्डिकं ह्युपभुक्तवान् ।
ततस्ते सहिताः सर्वे मन्त्रयामासुरञ्जसा ॥ ५-१६०-३७ (३७२९६)
तत्र वृद्धतमः कश्चित्कोलिको नाम मूषिकः ।
अब्रवीद्वचनं राजञ्ज्ञातिमध्ये यथातथम् ॥ ५-१६०-३८ (३७२९७)
न मातुलो धर्मकामश्छद्ममात्रं कृता शिखा ।
न मूलफलभक्षस्य विष्ठा भवति लोमशा ॥ ५-१६०-३९ (३७२९८)
अस्य गात्राणि वर्धन्ते गणश्च परिहीयते ।
अद्य सप्ताष्टदिवसान्डिण्डिकोपि न दृश्यते ॥ ५-१६०-४० (३७२९९)
एतच्छ्रुत्वा वचः सर्वे मूषिका विप्रदुद्रुवुः ।
बिडालोपि स दुष्टात्मा जगामैव यथागतम् ॥ ५-१६०-४१ (३७३००)
तथा त्वमपि दुष्टात्मन्बैडालं व्रतमास्थितः ।
चरसि ज्ञातिषु सदा बिडालोमूषिकेष्विव ॥ ५-१६०-४२ (३७३०१)
अन्यथा किल ते वाक्यमन्यथा कर्म दृश्यते ।
दम्भनार्थाय लोकस्य वेदाश्चोपशमश्च ते ॥ ५-१६०-४३ (३७३०२)
त्यक्त्वा छद्म त्विदं राजन्क्षत्रधर्मं समाश्रितः ।
कुरु कार्याणि सर्वाणि धर्मिष्ठोऽसि नरर्षभ ॥ ५-१६०-४४ (३७३०३)
बाहुवीर्येण पृथिवीं लब्ध्वा भरतसत्तम ।
देहि दानं द्विजातिभ्यः पितृभ्यश्चयथोचितम् ॥ ५-१६०-४५ (३७३०४)
क्लिष्टाया वर्षपूगांश्च मातुर्मातृहिते स्थितः ।
प्रमार्जाश्रु रणे जित्वा संमानं परमावह ॥ ५-१६०-४६ (३७३०५)
पञ्चग्रामा वृता यत्नात्रास्माभिरपवर्जिताः ।
युध्यामहे कथं सङ्ख्ये कोपयेम च पाण्डवान् ॥ ५-१६०-४७ (३७३०६)
त्वत्कृते दुष्टभावस्य संत्यागो विदुरस्य च ।
जातुषे च गृहे दाहं स्मर तं पुरुषो भव ॥ ५-१६०-४८ (३७३०७)
यच्च कृष्णमवोचस्त्वमायान्तं कुरुसंसदि ।
अयमस्मि स्थितो राजञ्शमायसमराय च ॥ ५-१६०-४९ (३७३०८)
तस्यायमागतः कालः समरस्य नराधिप ।
एतदर्थं मया सर्वं कृतमेतद्युधिष्ठिर ॥ ५-१६०-५० (३७३०९)
किं नु युद्धात्परं लाभं क्षत्रियो बहु मन्यते ।
किंच त्वं क्षत्रियकुले जातः संप्रथितो भुवि ॥ ५-१६०-५१ (३७३१०)
द्रोणादस्त्राणि संप्राप्य कृपाच्च भरतर्षभ ।

तुल्ययोनौ समबले वासुदेवं समाश्रितः ॥ ५-१६०-५२ (३७३११)
ब्रूयास्त्वं वासुदेवं च पाण्डवानां समीपतः ।
आत्मार्थं पाण्डवार्थं च यत्तो मां प्रतियोधय ॥ ५-१६०-५३ (३७३१२)
सभामध्ये च यद्रूपं मायया कृतवानसि ।
तत्तथैव पुनः कृत्वा सार्जुनो मामभिद्रव ॥ ५-१६०-५४ (३७३१३)
इन्द्रजालं च मायां वै कुहका वापि भीषणा ।
आत्तशस्त्रस्य सङ्ग्रमे वहन्ति प्रतिगर्जनाः ॥ ५-१६०-५५ (३७३१४)
वयमप्युत्सहेम द्यां खं च गच्छेम मायया ।
रसातलं विशामोपि ऐन्द्रं वा पुरमेव तु ॥ ५-१६०-५६ (३७३१५)
दर्शयेम च रूपाणि स्वशरीरे बहून्यपि ।
न तु पर्यायतः सिद्धिर्बुद्धिमाप्नोति मानुषीम् ॥ ५-१६०-५७ (३७३१६)
मनसैव हि भूतानि धातैव कुरुते वशे ।
यद्ब्रवीषि च वार्ष्णेय धार्तराष्ट्रानहं रणे ॥ ५-१६०-५८ (३७३१७)
घातयित्वा प्रदास्यामि पार्थेभ्यो राज्यमुत्तमम् ।
आचचक्षे च मे सर्वं सञ्जयस्तव भाषितम् ।
मद्द्वितीयेन पार्थेन वैरं वः सव्यसाचिना ॥ ५-१६०-५९ (३७३१८)
स सत्यसङ्गरो भूत्वा पाण्डवार्थे पराक्रमी ।
युद्धयस्वाद्य रणे यत्तः पश्यामः पुरुषो भव ॥ ५-१६०-६० (३७३१९)
यस्तु शत्रुमभिज्ञाय शुद्धं पौरुषमास्थितः ।
करोति द्विषतां शोकं स जीवति सुजीवितम् ॥ ५-१६०-६१ (३७३२०)
अकस्माच्चैव ते कृष्ण ख्यातं लोके महद्यशः ।
अद्येदानीं विजानीमः सन्ति षण्डाः शश्रृङ्गकाः ॥ ५-१६०-६२ (३७३२१)
मद्विधो नापि नृपतिस्त्वयि युक्तः कथंचन ।
सन्नाहं संयुगे कर्तुं कंसभृत्ये विशेषतः ॥ ५-१६०-६३ (३७३२२)
तं च तूबरकं बालं बह्वाशिनमविद्यकम् ।
उलूक मद्वचो ब्रूहि असकृद्भीमसेनकम् ॥ ५-१६०-६४ (३७३२३)
विराटनगरे पार्थ यस्त्वं सूदो ह्यभूः पुरा ।
बल्लवो नाम विख्यातस्तन्ममैव हि पौरुषम् ॥ ५-१६०-६५ (३७३२४)
प्रतिज्ञातं सभामध्ये न तन्मिथ्या त्वया पुरा ।
दुःशासनस्य रुधिरं पीयतां यदि शक्यते ॥ ५-१६०-६६ (३७३२५)
यद्ब्रवीषि च कौन्तेय धार्तराष्ट्रानहं रणे ।
निहनिष्यामि तरसा तस्य कालोऽयमागतः ॥ ५-१६०-६७ (३७३२६)
त्वं हि भोज्ये पुरस्कार्यो भक्ष्ये पेये च भारत ।
क्व युद्धं क्व च भोक्तव्यं युध्यस्व पुरुषो भव ॥ ५-१६०-६८ (३७३२७)
शयिष्यसे हतो भूमौ गदामालिङ्ग्य भारत ।
तद्वृथा च सभामध्ये वल्गितं ते वृकोदर ॥ ५-१६०-६९ (३७३२८)

उलूक नकुलं ब्रूहि वचनान्मम भारत ।
युध्यस्वाद्य स्थिरो भूत्वा पश्यामस्तव पौरुषम् ॥ ५-१६०-७० (३७३२९)
युधिष्ठिरानुरागं च द्वेषं च मयि भारत ।
कृष्णायाश्च परिक्लेशं स्मरेदानीं यथातथम् ॥ ५-१६०-७१ (३७३३०)
ब्रूयास्त्वं सहदेवं च राजमध्ये वचो मम ।
युद्ध्येदानीं रणे यत्तः क्लेशान्स्मर च पाण्डव ॥ ५-१६०-७२ (३७३३१)
विराटद्रुपदौ चोभौ ब्रूयास्त्वं वचनान्मम ।
न दृष्टपूर्वा भर्तारो भृत्यैरपि महागुणैः ।
तथार्थपतिभिर्भृत्या यतः सृष्टाः प्रजास्ततः ॥ ५-१६०-७३ (३७३३२)
अश्लाघ्योऽयं नरपतिर्युवयोरिति चागतम् ॥ ५-१६०-७४ (३७३३३)
ते यूयं संहता भूत्वा तद्वधार्थं ममापि च ।
आत्मार्थं पाण्डवार्थं च प्रयुद्ध्यध्वं मया सह ॥ ५-१६०-७५ (३७३३४)
धृष्टद्युम्नं च पाञ्चाल्यं ब्रूयास्त्वं वचनान्मम ।
एष ते समयः प्राप्तो लब्धव्यश्च त्वयापि सः ॥ ५-१६०-७६ (३७३३५)
द्रोणमासाद्य समरे ज्ञास्यसे हितमुत्तमम् ।
युद्ध्यस्व समुहृत्पापं कुरु कर्म सुदुष्करम् ॥ ५-१६०-७७ (३७३३६)
शिखण्डिनमथो ब्रूहि उलूक वचनान्मम ।
स्त्रीति मत्वा महाबाहुर्न हनिष्यति कौरवः ॥ ५-१६०-७८ (३७३३७)
गाङ्गेयो धन्विनां श्रेष्ठो युद्ध्येदानीं सुनिर्भयः ।
कुरु कर्म रणे यत्तः पश्यामः पौरुषं तव ॥ ५-१६०-७९ (३७३३८)
एवमुक्त्वा ततो राजा प्रहस्योलूकमब्रवीत् ।
धनञ्जयं पुनर्ब्रूहि वासुदेवस्य श्रृण्वतः ॥ ५-१६०-८० (३७३३९)
अस्मान्वा त्वं पराजित्य प्रसाधि पृतिवीमिमाम् ।
अथवा निर्जितोस्माभी रणे वीर शयिष्यसि ॥ ५-१६०-८१ (३७३४०)
राष्ट्रान्निर्वासनक्लेशं वनवासं च पाण्डव ।
कृष्णायाश्च परिक्लेशं संस्मरन्पुरुषो भव ॥ ५-१६०-८२ (३७३४१)
यदर्थं क्षत्रिया सूते सर्वं तदिदमागतम् ।
बलं वीर्यं च शौर्यं च परं चाप्यस्त्रलाघवम् ॥ ५-१६०-८३ (३७३४२)
पौरुषं दर्शयन्युद्धे कोपस्य कुरु निष्कृतिम् ।
परिक्लिष्टस्य दीनस्य दीर्घकालोषितस्य च ।
हृदयं कस्य न स्फोटेदैश्वर्याद्भ्रंशितस्य च ॥ ५-१६०-८४ (३७३४३)
कुले जातस्य शूरस्य परिवित्तेष्वगृध्यतः ।
आस्थितं राज्यमाक्रम्य कोपं कस्य न दीपयेत् ॥ ५-१६०-८५ (३७३४४)
यत्तदुक्तं महद्वाक्यं कर्मणा तद्विभाव्यताम् ।
अकर्मणा कत्थितेन सन्तः कुपुरुषं विदुः ॥ ५-१६०-८६ (३७३४५)
अमित्राणां वशे स्थानं राज्यं च पुनरुद्धर ।

द्वावर्थौ युद्धकामस्य तस्मात्तत्कुरु पौरुषम् ॥ ५-१६०-८७ (३७३४६)
पराजितोऽसि द्यूतेन कृष्णा चानायिता सभाम् ।
शक्योऽमर्षो मनुष्येण कर्तुं पुरुषमानिना ॥ ५-१६०-८८ (३७३४७)
द्वादशैव तु वर्षाणि वने धिष्ण्याद्विवासितः ।
संवत्सरं विराटस्य दास्यमास्थाय चोषितः ॥ ५-१६०-८९ (३७३४८)
राष्ट्रान्निर्वासनक्लेशं वनवासं च पाण्डव ।
कृष्णायाश्च परिक्लेशं संस्मरन्पुरुषो भव ॥ ५-१६०-९० (३७३४९)
अप्रियाणां च वचनं प्रब्रुवत्सु पुनः पुनः ।
अमर्षं दर्शयस्व त्वममर्षो ह्येव पौरुषम् ॥ ५-१६०-९१ (३७३५०)
क्रोधो बलं तथा वीर्यं ज्ञानयोगोऽस्त्रलाघवम् ।
इह ते दृश्यतां पार्थ युद्ध्यस्व पुरुषो भव ॥ ५-१६०-९२ (३७३५१)
लोहाभिसारो निर्वृत्तः कुरुक्षेत्रमकर्दमम् ।
पुष्टास्तेऽश्वा भृता योधाः श्वो युद्ध्यस्व सकेशवः ॥ ५-१६०-९३ (३७३५२)
असमागम्य भीष्मेण संयुगे किं विकत्थसे ।
आरुरुक्षुर्यथा मन्दः पर्वतं गन्धमादनम् ॥ ५-१६०-९४ (३७३५३)
एवं कत्थसि कौन्तेय अकत्थन्पुरुषो भव ।
सूतपुत्रं सुदुर्धर्षं शल्यं च बलिनां वरम् ॥ ५-१६०-९५ (३७३५४)
द्रोणं च बलिनां श्रेष्ठं शचीपतिसमं युधि ।
अजित्वा संयुगे पार्थ राज्यं कथमिहेच्छसि ॥ ५-१६०-९६ (३७३५५)
ब्राह्मे धनुषि चाचार्यं वेदयोरन्तगं द्वयोः ।
युधि धुर्यमविक्षोभ्यमनीकचरमच्युतम् ॥ ५-१६०-९७ (३७३५६)
द्रोणं महाद्युतिं पार्थ जेतुमिच्छसि तन्मृषा ।
न हि शुश्रुम वातेन मेरुमुन्मथितं गिरिम् ॥ ५-१६०-९८ (३७३५७)
अनिलो वा वहेन्मेरुं द्यौर्वापि निपतेन्महीम् ।
युगं वा रिवर्तेत यद्येवं स्याद्यथात्थ माम् ॥ ५-१६०-९९ (३७३५८)
को ह्यस्ति जीविताकाङ्क्षी पराप्येममरिमर्दनम् ।
पार्थो वा इतरो वापि कोन्यः स्वस्ति गृहान्व्रजेत् ॥ ५-१६०-१०० (३७३५९)
कथमाभ्यामभिध्यातः संस्पृष्टो दारुणेन वा ।
रणे जीवन्प्रमुच्येत पदा भूमिपुमस्पृशन् ॥ ५-१६०-१०१ (३७३६०)
किं दर्दुरः कूपशयो यथेमां
न बुध्यसे राजचमूं समेताम् ।
दुराधर्षां देवचमूप्रकाशां
गुप्तां नरेन्द्रैस्त्रिदशैरिव द्याम् ॥ ५-१६०-१०२ (३७३६१)
प्राच्यैः प्रतीच्यैरथ दाक्षिणात्यै-
रुदीच्यकाम्भोजशकैः खशैश्च ।
साल्वैः समत्स्यैः कुरुमध्यदेश्यै-

म्लेच्छैः पुलिन्दैर्द्रविडान्ध्रकाञ्च्यैः ॥ ५-१६०-१०३ (३७३६२)
नानाजनौघं युधि संप्रवृद्धं
गाङ्गं यथा वेगमपारणीयम् ।
मां च स्थितं नानाबलस्य मध्ये
युयुत्ससे मन्द किमल्पबुद्धे ॥ ५-१६०-१०४ (३७३६३)
अक्षय्याविषुधी चैव अग्निदत्तं च ते रथम् ।
जानीमो हि रणे पार्थ केतुं दिव्यं च भारत ॥ ५-१६०-१०५ (३७३६४)
अकत्थमानो युद्धयस्व कत्थसेऽर्जुन किं बहु ।
पर्यायात्सिद्धिरेतस्य नैतत्सिध्याति कत्थनात् ॥ ५-१६०-१०६ (३७३६५)
यदीदं कत्थनाल्लोके सिध्येत्कर्म धनञ्जय ।
सर्वे भवेयुः सिद्धार्थाः कत्थने को हि दुर्गतः ॥ ५-१६०-१०७ (३७३६६)
जनामि ते वासुदेवं सहायं
जानामि ते गाण्डिवं तालमात्रम् ।
जानाम्यहं त्वादृशो नास्ति योद्धा
जानानस्ते राज्यमेतद्धरामि ॥ ५-१६०-१०८ (३७३६७)
न तु पर्यायधर्मेम सिद्धिं प्राप्नोति मानवः ।
मनसैवानुकूलानि धातैव कुरुते वशे ॥ ५-१६०-१०९ (३७३६८)
त्रयोदशसमा भुक्तं राज्यं विलपतस्तव ।
भूयश्चैव प्रशासिष्ये त्वां निहत्य सबान्धवम् ॥ ५-१६०-११० (३७३६९)
क्व तदा गाण्डिवं तेऽभूद्यत्त्वं दासपणैर्जितः ।
क्व तदा भीमसेनस्य बलमासीच्च फाल्गुन ॥ ५-१६०-१११ (३७३७०)
सगदाद्भीमसेनाद्वा फाल्गुनाद्वा सगाण्डिवात् ।
न वै मोक्षस्तदा यो भूद्विना कृष्णमनिन्दितां ॥ ५-१६०-११२ (३७३७१)
सा वो दास्ये समापन्नान्मोचयामास पार्षती ।
अमानुष्यं समापन्नान्दासकर्मण्यवस्थितान् ॥ ५-१६०-११३ (३७३७२)
अवोचं यत्षण्डतिलानहं वस्तथयमेव तत् ।
धृता हि वेमी पार्थेन विराटनगरे तदा ॥ ५-१६०-११४ (३७३७३)
सूदकर्मणि च श्रान्तं विराटस्य महानसे ।
भीमसेनेन कौन्तेय यत्तु तन्मम पौरुषम् ॥ ५-१६०-११५ (३७३७४)
एवमेव सदा दण्डं क्षत्रियाः क्षत्रिये दधुः ।
वेणीं कृत्वा षण्डवेषः कन्यां नर्तितवानसि ॥ ५-१६०-११६ (३७३७५)
न भयाद्वासुदेवस्य न चापि तव फल्गुन ।
राज्यं प्रतिप्रदास्यामि युध्यस्व सहकेशवः ॥ ५-१६०-११७ (३७३७६)
न माया हीन्द्रजालं वा कुहका वापि भीषणा ।
आत्तशस्त्रस्य सङ्ग्रामे वहन्ति प्रतिगर्जनाः ॥ ५-१६०-११८ (३७३७७)
वासुदेवसहस्रं वा फाल्गुनानां शतानि वा ।

आसाद्य माममोघेषुं द्रविष्यन्ति दिशो दश ॥ ५-१६०-११९ (३७३७८)
संयुगं गच्छ भीष्मेण भिन्धि वा शिरसा गिरिम् ।
तरस्व वा महागाधं बाहुभ्यां पुरुषोदधिम् ॥ ५-१६०-१२० (३७३७९)
शारद्वतमहामीनं विविंशतिमहोरगम् ।
बृहद्बलमहोद्वेलं सौमदत्तितिमिङ्गिलम् ॥ ५-१६०-१२१ (३७३८०)
भीष्मवेगमपर्यन्तं द्रोणग्राहदुरसदम् ।
कर्णशल्यझषावर्तं काम्भोजबडबामुखम् ॥ ५-१६०-१२२ (३७३८१)
दुःशासनौघं शलशल्यमत्स्यं
सुषेणचित्रायुधनागनक्रम् ।
जयद्रथाद्रिं पुरुमित्रगाधं
दुर्मर्षणोदं शकुनिप्रपातम् ॥ ५-१६०-१२३ (३७३८२)
शश्त्रौघमक्षय्यमभिप्रवृद्धं
यदावगाह्य श्रमनष्टचेताः ।
भविष्यसि त्वं हतसर्वबान्धव-
स्तदा मनस्ते परितापमेष्यति ॥ ५-१६०-१२४ (३७३८३)
तदा मनस्ते त्रिदिवादिवाशुचे-
र्निवर्तिता पार्थ महीप्रशासनात् ।
प्रशाम्य राज्यं हि सुदुर्लभं त्वया
बुभूषितः स्वर्ग इवातपस्विना ॥ ॥ ५-१६०-१२५ (३७३८४)

इति श्रीमन्महाभारते उद्योगपर्वणि उलूकदूतागमनपर्वणि
षष्ट्यधिकशततमोऽध्यायः ॥

Mahabharata - Udyoga Parva - Chapter Footnotes

५-१६०-३ आरक्षस्य रक्षणीयस्य द्रव्यादेः विधिं रक्षाविधानम् ॥
५-१६०-११ भ्रातृभिः सहितः कथमधर्मे मनः कृथा इति संबन्धः ॥
५-१६०-१४ भो सुरा इति देवान् प्रह्लादः सबोधयति । यस्य व्रतस्य
धर्मध्वजो धर्मचिह्नं दर्भपवित्रपाणित्वादि। उच्छ्रितः
सर्वलोकविदितः ॥
५-१६०-१७ मनःशुद्धिं हिंसातो निवृत्तिम् ॥
५-१६०-१८ विस्रम्भं विश्वासम् ॥
५-१६०-३९ शिखा जटाधारणमितियत् तच्छद्ममात्रम् ॥
५-१६०-४४ धर्मिष्ठोऽसीत्युपाहसः ॥
५-१६०-५५ कुहका कृत्या प्रतिगर्जनाः विपरीतान्कोपान् वहन्ति प्रापयन्ति
नतु भयं जनयन्तीत्यर्थ गर्जनं निनदे कोपे इति मेदिनी ॥
५-१६०-५७ पर्यायतः पर्यायो भयप्रदर्शनादिरूपः प्रकारस्तेन सिद्धिः

स्वस्य नतु भवति । तथा परोपि तेन बुद्धिं मानुषी भयात्मिकां न प्राप्नोति ॥
५-१६०-६२ सश्रृङ्गका शृङ्गं पुंस्त्वचिह्नं श्मश्रुलत्वलिङ्गवत्त्वादिकं तत्सहिताः षण्डाः निर्वीर्याः सन्ति । येषु तव शौर्यं प्रख्यातमिति भावः ॥
५-१६०-६४ तूबरकं अश्मश्रुपुरुषम् । अविद्यकं मूढम् ॥
५-१६०-७३ अर्थपतिभी राजभिः यतः कालात् तत आरम्भेत्यर्थः ॥
५-१६०-७४ मूढां यूयं मयि गुणवति स्वामिनि न संतुष्टाः स्थेति भावः ॥
५-१६०-७५ तत्तस्माद्धेतोर्मम वधार्थं च प्रयुध्द्यध्वमिति संबन्धः ॥
५-१६०-७७ पापं कर्म कुरुगुरुवाधाख्याम् । ५-१६०-८५ राज्यमाक्रम्य मादृश इति शेषः । ५-१६०-८७ स्थानं स्थितिम् । तत् स्थानराज्ययोरुद्धरणम्। पौरुषं पुरुषकर्म कुरु ॥
५-१६०-८९ धिष्ण्यात् गृहात् ॥
५-१६०-९३ लोहाभिसारः शस्त्राणां नीराजनादिकं तेषु मन्त्रेण देवतावाहनादिकं च ॥
५-१६०-९७ वेदयोः श्रुतिधनुर्वेदयोः । अन्तगं पारगम् ॥
५-१६०-९९ युगं कालचक्रम् ॥
५-१६०-१०१ आभ्यां द्रोणभीष्माभ्यां अभिध्यातो हन्तव्यत्वेन निश्चितः ॥
५-१६०-१०२ दुर्दुरो मण्डूकः ॥
५-१६०-१०६ पर्यायात् युद्धप्रकारात् ॥
५-१६०-१०९ पर्यायधर्मेम उपधर्मेण मायादिना । अथवा राजपुत्रोऽयं राज्यार्ह इति क्रमधर्मस्तेन न किंतु शौर्येणैव सिद्धिमाप्नोतीत्यर्थः । मनसा संकल्पेन धातैव कुरुते नतु मनुष्यः ॥
५-१६०-११३ अमानुष्यं नीचमनुष्यत्वम् । अल्पार्थोऽत्र नञ् ॥
५-१६०-१२१ उद्वेलो वृद्धिः ॥
५-१६०-१२५ निवर्तिता निवर्तिष्यति । बुभूषितः प्राप्तुमिष्टः ॥

---

उद्योगपर्व-अध्यय१६१
॥ श्रीः ॥
५.१६१. अध्यायः १६१

Mahabharata - Udyoga Parva - Chapter Topics
उलूकेन पाण्डवानुपेत्य युधिष्ठिरार्जुनौप्रति दुर्योधनसन्देशकथनम् ॥ १ ॥

Mahabharata - Udyoga Parva - Chapter Text

५-१६१-० (३७३८५)
सञ्जय उवाच। ५-१६१-०क्ष् (३८५७)
सेनानिवेशं संप्राप्तः कैतव्यः पाण्डवस्य ह ।
समागतः पाण्डवेयैर्युधिष्ठिरमभाषत ॥ ५-१६१-१ (३७३८६)
अभिज्ञो दूतवाक्यानां यथोक्तं ब्रुवतो मम ।
दुर्योधनसमादेशं श्रुत्वा न क्रोद्धुमर्हसि ॥ ५-१६१-२ (३७३८७)
युधिष्ठिर उवाच। ५-१६१-३क्ष् (३८५८)
उलूक न भयं तेऽस्ति ब्रूहि त्वं विगतज्वरः ।
यन्मत्तं धार्तराष्ट्रस्य लुब्धस्यादीर्घदर्शिनः ॥ ५-१६१-३ (३७३८८)
सञ्जय उवाच। ५-१६१-४क्ष् (३८५९)
ततो द्युतिमतां मध्ये पाण्डवानां महात्मनाम् ।
सृञ्जयानां च मत्स्यानां कृष्णस्य च यशस्विनः ॥ ५-१६१-४ (३७३८९)
द्रुपदस्य सपुत्रस्य विराटस्य च संनिधौ ।
भूमिपानां च सर्वेषां मध्ये वाक्यं जगाद ह ॥ ५-१६१-५ (३७३९०)
उलूक उवाच। ५-१६१-६क्ष् (३८६०)
इदं त्वामब्रवीद्राजा धार्तराष्ट्रो महामनाः ।
श्रृण्वतां कुरुवीराणां तन्निबोध युधिष्ठिर ॥ ५-१६१-६ (३७३९१)
पराजितोऽसि द्यूतेन कृष्णा चानायिता सभाम् ।
शक्योऽमर्षो मनुष्येण कर्तुं पुरुषमानिना ॥ ५-१६१-७ (३७३९२)
द्वादशैव तु वर्षाणि वने धिष्ण्याद्विवासितः ।
संवत्सरं विराटस्य दास्यमास्थाय चोषितः ॥ ५-१६१-८ (३७३९३)
अमर्षं राज्यहरणं वनवासं च पाण्डव ।
द्रौपद्याश्च परिक्लेशं संस्मरन्पुरुषो भव ॥ ५-१६१-९ (३७३९४)
अशक्तेन च यच्छप्तं भीमसेनेन पाण्डव ।
दुःशासनस्य रुधिरं पीयतां यदि शक्यते ॥ ५-१६१-१० (३७३९५)
लोहाभिसारो निर्वृत्तः कुरुक्षेत्रमकर्दमम् ।
समः पन्था भृतास्तेश्वाः श्वो युध्यस्व सकेशवः ॥ ५-१६१-११ (३७३९६)
असमागम्य भीष्मेण संयुगे किं विकत्थसे ।
आरुरुक्षुर्यथा पङ्गुः पर्वतं गन्धमादनम् ॥ ५-१६१-१२ (३७३९७)
एवं कत्थसि कौन्तेय अकत्थन्पुरुषो भव ।
सूतपुत्रं सुदुर्धर्षं शल्यं च बलिनां वरम् ॥ ५-१६१-१३ (३७३९८)
द्रोणं च बलिनां श्रेष्ठं शचीपतिसमं युधि ।
अजित्वा संयुगे पार्थ राज्यं कथमिहेच्छसि ॥ ५-१६१-१४ (३७३९९)
ब्राह्मे धनुषि चाचार्यं वेदयोरन्तगं द्वयोः ।
युधि धुर्यमविक्षोभ्यमनीकचरमच्युतम् ॥ ५-१६१-१५ (३७४००)
द्रोणं महाद्युतिं पार्थ जेतुमिच्छसि तन्मृषा ।

न हि शुश्रुम वातेन मेरुमुन्मथितं गिरिम् ॥ ५-१६१-१६ (३७४०१)
अनिलो वा वहेन्मेरुं द्यौर्वापि निपतेन्महीम् ।
युगं वा परिवर्तेत यद्येवं स्याद्यथात्थ माम् ॥ ५-१६१-१७ (३७४०२)
को ह्यस्ति जीविताकाङ्क्षी प्राप्येममरिमर्दनम् ।
गजो वाजी रथो वापि पुनः स्वस्ति गृहान्व्रजेत् ॥ ५-१६१-१८ (३७४०३)
कथमाभ्यामभिध्यातः संसृष्टो दारुणेन वा ।
रणे जीवन्विमुच्येत पदा भूमिमुपस्पृशन् ॥ ५-१६१-१९ (३७४०४)
किं दुर्दुरः कूपशयो यथेमां
न बुध्यमे राजचमूं समेताम् ।
दुराधरषां देवचमूप्रकाशां
गुप्तां नरेन्द्रैस्त्रिदशैरिव द्याम् ॥ ५-१६१-२० (३७४०५)
प्राच्यैः प्रतीच्यैरथ दाक्षिणात्यै-
रुदीच्यकाम्भोजशकैः खशैश्च ।
साल्वैः समत्स्यैः कुरुमुख्यदेश्यै-
र्म्लेच्छैः पुलिन्दैर्द्रविडान्ध्रकाञ्च्यैः ॥ ५-१६१-२१ (३७४०६)
नानाजनौघं युधि संप्रवृद्धं
नाङ्गं यथा वेगमपारकणीयम् ।
मां च स्थितं नागबलस्य मध्ये
युयुत्समे मन्द किमल्पबुद्धे ॥ ५-१६१-२२ (३७४०७)
इत्येवमुक्त्वा राजानं धर्मपुत्रं युधिष्ठिरम् ।
अभ्यवृत्य पुनर्जिष्णुमुलूकः प्रत्यभाषत ॥ ५-१६१-२३ (३७४०८)
अकत्थमानो युध्यस्व कत्थेसेऽर्जुन किं बहु ।
पर्यायात्सिद्धिरेस्य नैतत्सिध्यति कत्थनात् ॥ ५-१६१-२४ (३७४०९)
यदीदं कत्थनाल्लोके सिध्येत्कर्म धनञ्जय ।
सर्वे भवेयुः सिद्धार्थाः कत्थने को हि दुर्गतः ॥ ५-१६१-२५ (३७४१०)
जानामि ते वासुदेवं सहायं
जानामि ते गाण्डिवं तालमात्रम् ।
जानाम्येतत्त्वादृशो नास्ति योद्धा
जानानस्ते राज्यमेतद्धरामि ॥ ५-१६१-२६ (३७४११)
न तु पर्यायधर्मेण राज्यं प्राप्नोति मानुषः ।
मनसैवानुकूलानि विधाता कुरुते वशे ॥ ५-१६१-२७ (३७४१२)
त्रयोदश समा भुक्तं राज्यं विलपतस्तव ।
भूयश्चैव प्रशासिष्ये निहत्य त्वां सबान्धवम् ॥ ५-१६१-२८ (३७४१३)
क्व तदा गाण्डिवं तेऽभूद्यत्त्वं दासपणैर्जितः ।
क्व तदा भीमसेनस्य बलमासीच्च फाल्गुना ॥ ५-१६१-२९ (३७४१४)
सगदाद्भीमसेनाद्वा पार्थाद्वापि सगाण्डिवात् ।

न वै मोक्षस्तदा वोभूद्विना कृष्णामनिन्दिताम् ॥ ५-१६१-३० (३७४१५)
सा वो दास्ये समापन्नान्मोचयामास पार्षती ।
अमानुष्यं समापन्नान्दासकर्मण्यवस्थितान् ॥ ५-१६१-३१ (३७४१६)
अवोचं यत्षण्डतिलानहं वस्तथ्यमेव तत् ।
धृता हि वेणी पार्थेन विराटनगरे तदा ॥ ५-१६१-३२ (३७४१७)
सूदकर्मणि च श्रान्तं विराटस्य महानसे ।
भीमसेनेन कौन्तेय यच्च तन्मम पौरुषम् ॥ ५-१६१-३३ (३७४१८)
एवमेतत्सदां दण्डं क्षत्रियाः क्षत्रिये दधुः ।
वेणीं कृत्वा षण्डवेषः कन्यां नर्तितवानसि ॥ ५-१६१-३४ (३७४१९)
न भयाद्वासुदेवस्य न चापि तव फाल्गुन ।
राज्यं प्रतिप्रदाकस्यामि युद्धयस्व सहकेशवः ॥ ५-१६१-३५ (३७४२०)
न माया हीन्द्रजालं वा कुहका वापि भीषणा ।
आत्तशस्त्रस्य मे युद्धे वहन्ति प्रतिगर्जनाः ॥ ५-१६१-३६ (३७४२१)
वासुदेवसहस्रं वा फाल्गुनानां शतानि वा ।
आसाद्य माममोघेषुं द्रविष्यन्ति दिशो दशः ॥ ५-१६१-३७ (३७४२२)
संयुगं गच्छ भूष्मेण भिन्धि वा शिरसा गिरिम् ।
तरेमं वा महागाधं सौमदत्तितिमिङ्गिलम् ॥ ५-१६१-३८ (३७४२३)
शारद्वतमहामीनं विविंशतिमहोरगम् ।
बृहद्बलमहोद्वेलं सौमदत्तिकतिमिङ्गितम् ॥ ५-१६१-३९ (३७४२४)
भीष्मवेगमपर्यन्तं द्रोणग्राहदुरासदम् ।
कर्णशल्यझषावर्तं काम्भोजबडबासुखम् ॥ ५-१६१-४० (३७४२५)
दुःशासनौघं शलशल्यमत्स्यं
सुषेणचित्रायुधनागनक्रम् ।
जयद्रथाद्रिं पुरुमित्रगाधं
दुर्मर्षणोदं शकुनिप्रपातम् ॥ ५-१६१-४१ (३७४२६)
शस्त्रौघमक्षय्यमतिप्रवृद्धं
यदावगाह्य श्रमनष्टचेताः ।
भविष्यसि त्वं हतसर्वबान्धव-
स्तदा मनस्ते परितापमेष्यति ॥ ५-१६१-४२ (३७४२७)
तदा मनस्ते त्रिदिवादिवाशुचे-
र्निवर्तिता पार्थ महीप्रशासनात् ।
प्रशाम्य राज्यं हि सुदुर्लभं त्वया
बुभूषितः स्वर्ग इवातपस्विना ॥ ॥ ५-१६१-४३ (३७४२८)

इति श्रीमन्महाभारते उद्योगपर्वणि उलूकदूतागमनपर्वणि
एकषष्ट्यधिकशततमोऽध्यायः ॥

॥ श्रीः ॥
५.१६२. अध्यायः १६२

Mahabharata - Udyoga Parva - Chapter Topics
भीमादिभिर्दुर्योधनंप्रति उलूकद्वारा प्रतिसन्देशप्रेषणम् ॥ १ ॥

Mahabharata - Udyoga Parva - Chapter Text

५-१६२-० (३७४२९)
सञ्जय उवाच। ५-१६२-०क्ष् (३८६१)
उलूकस्त्वर्जुनं भूयो यथोक्तं वाक्यमब्रवीत् ।
आशीविषमिव क्रुद्धं तुदन्वाक्यशलाकया ॥ ५-१६२-१ (३७४३०)
तस्य तद्वचनं श्रुत्वा रुषिताः पाण्डवा भृशम् ।
प्रागेव भृशसंक्रुद्धाः कैतव्येनापि धर्षिताः ॥ ५-१६२-२ (३७४३१)
आसनेषूदतिष्ठन्त बाहूंश्चैव प्रचिक्षिपुः ।
आशीविषा इव क्रुद्धा वीक्षाञ्चक्रुः परस्परम् ॥ ५-१६२-३ (३७४३२)
अवाक्छिरा भीमसेनः समुदैक्षत कैतवम् ।
नेत्राभ्यां लोहितान्ताभ्यामाशीविष इव श्वसन् ॥ ५-१६२-४ (३७४३३)
आर्तं वातात्मजं दृष्ट्वा क्रोधेनाभिहतं भृशम् ।
उत्स्मयन्निव दाशार्हः कैतव्यं प्रत्यभाषत ॥ ५-१६२-५ (३७४३४)
प्रयाहि शीघ्रं कैतव्य ब्रूयाश्चैव सुयोधनम् ।
श्रुतं वाक्यं गृहीतोर्थो मतं यत्ते तथास्तु तत् ॥ ५-१६२-६ (३७४३५)
एवमुक्त्वा महाबाहुः केशवो राजसत्तम ।
पुनरेव महाप्राज्ञं युधिष्ठिरमुदैक्षत ॥ ५-१६२-७ (३७४३६)
सृञ्जयानां च सर्वेषां कृष्णस्य च यशस्विनः ।
द्रुपदस्य सपुत्रस्य विराटस्य च संनिधौ ॥ ५-१६२-८ (३७४३७)
भूमिपानां च सर्वेषां मध्ये वाक्यं जगाद ह ।
उलूकोऽप्यर्जुनं भूयो यथोक्तं वाक्यमब्रवीत् ॥ ५-१६२-९ (३७४३८)
आशीविषमिव क्रुद्धं तुदन्वाक्यशलाकया ।
कृष्णादींश्चैव तान्सर्वान्यथोक्तं वाक्यमब्रवीत् ॥ ५-१६२-१० (३७४३९)
उलूकस्य तु तद्वाक्यं पापं दारुणमीरितम् ।
श्रुत्वा विचुक्षुभे पार्थो ललाटं चाप्यमार्जयत् ॥ ५-१६२-११ (३७४४०)
तदवस्थं तदा दृष्ट्वा पार्थं सा समितिर्नृप ।
नामृष्यत महाराज पाण्डवानां महारथाः ॥ ५-१६२-१२ (३७४४१)
अधिक्षेपेण कृष्णस्य पार्थस्य च महात्मनः ।

श्रुत्वा ते पुरुषव्याघ्राः क्रोधाज्जज्वलुरच्युत ॥ ५-१६२-१३ (३७४४२)
धृष्टद्युम्नः शिखण्डी च सात्यकिश्च महारथः ।
केकया भ्रातरः पञ्च राक्षसश्च घटोत्कचः ॥ ५-१६२-१४ (३७४४३)
द्रौपदेयाभिमन्युश्च धृष्टकेतुश्च पार्थिवः ।
भीमसेनश्च विक्रान्तो यमजौ च महारथौ ॥ ५-१६२-१५ (३७४४४)
उत्पेतुरासनात्सर्वे क्रोधसंरक्तलोचनाः ।
बाहुन्प्रगृह्य रुचिरान्रक्तचन्दनरूषितान् ।
अङ्गदैः पारिहार्यैश्च केयूरैश्च विभूषितान् ॥ ५-१६२-१६ (३७४४५)
दन्तान्दन्तेषु निष्पिष्य सृक्किणी परिलेलिहन् ।
तेषामाकारभावज्ञः कुन्तीपुत्रो वृकोदरः ॥ ५-१६२-१७ (३७४४६)
उदतिष्ठत्स वेगेन क्रोधेन प्रज्वलन्निव ।
उद्वृत्य सहसा नेत्रे दन्तान्कटकटाय्य च ॥ ५-१६२-१८ (३७४४७)
हस्तं हस्तेन निष्पिष्य उलूकं वाक्यमब्रवीत् ।
अशक्तानामिवास्माकं प्रोत्साहननिमित्तकम् ॥ ५-१६२-१९ (३७४४८)
श्रुतं ते चवनं मूर्ख यत्त्वां दुर्योधनोऽब्रवीत् ।
तन्मे कथयतो मन्द श्रृणु वाक्यं दुरासदम् ॥ ५-१६२-२० (३७४४९)
सर्वक्षत्रस्य मध्ये तं यद्वक्ष्यसि सुयोधनम् ।
श्रृण्वतः सूतपुत्रस्य पितुश्च त्वं दुरात्मनः ॥ ५-१६२-२१ (३७४५०)
अस्माभिः प्रीतिकामैस्तु भ्रातुर्ज्येष्ठस्य नित्यशः ।
मर्षितं ते दुराचार तत्त्वं न बहु मन्यसे ॥ ५-१६२-२२ (३७४५१)
प्रेषितश्च हृषीकेशः शमाकाङ्क्षी कुरून्प्रति ।
कुलस्य हितकामेन धर्मराजेन धीमता ॥ ५-१६२-२३ (३७४५२)
त्वं कालचोदितो नूनं गन्तुकामो यमक्षयम् ।
गच्छस्वाहवमस्माभिस्तच्च श्वो भविता ध्रुवम् ॥ ५-१६२-२४ (३७४५३)
मयापि च प्रतिज्ञातो वधः सभ्रातृकस्य ते ।
स तथा भविता पाप नात्र कार्या विचारणा ॥ ५-१६२-२५ (३७४५४)
वेलामतिक्रमेत्सद्यः सागरो वरुणालयः ।
पर्वताश्च विशीर्येयुर्मयोक्तं न मृषा भवेत् ॥ ५-१६२-२६ (३७४५५)
सहायस्ते यदि यमः कुबेरो रुद्र एव वा ।
यथाप्रतिज्ञं दुर्बुद्धे प्रकरिष्यन्ति पाण्डवाः ।
दुःशासनस्य रुधिरं पाता चास्मि यथेप्सितम् ॥ ५-१६२-२७ (३७४५६)
यश्चेह प्रतिसंरब्धः क्षत्रियो माभियास्यति ।
अपि भीष्मं पुरुस्कृत्य तं नेष्यामि यमक्षयम् ॥ ५-१६२-२८ (३७४५७)
यच्चैतदुक्तं वचनं मया क्षत्रस्य संसदि ।
यथैतद्भविता सत्यं तथैवात्मानमालभे ॥ ५-१६२-२९ (३७४५८)
भीमसेनवचः श्रुत्वा सहदेवोऽप्यमर्षणः ।

क्रोधसंरक्तनयनस्ततो वाक्यमुवाच ह ॥ ५-१६२-३० (३७४५९)
शौटीरशूरसदृशमनीकजनसंसदि ।
श्रृणु पाप वचो मह्यं यद्वाच्यो हि पितात्वया ॥ ५-१६२-३१ (३७४६०)
नास्माकं भविता भेदः कदाचित्कुरुभिः सह ।
धृतराष्ट्रस्य संबन्धो यदि न स्यात्त्वया सह ॥ ५-१६२-३२ (३७४६१)
त्वं तु लोकविनाशाय धृतराष्ट्रकुलस्य च ।
उत्पन्नो वैरपुरुषः स्वकुलघ्नश्च पापकृत् ॥ ५-१६२-३३ (३७४६२)
जन्मप्रभृति चास्माकं पिता ते पापपूरुषः ।
अहितानि नृशंसानि नित्यशः कर्तुमिच्छति ॥ ५-१६२-३४ (३७४६३)
तस्य वैरानुषङ्गस्य गन्तास्म्यन्तं सुदुर्गमम् ।
अहमादौ निहत्य त्वां शकुनेः संप्रपश्यतः ॥ ५-१६२-३५ (३७४६४)
ततोऽस्मि शकुनिं हन्ता मिषतां सर्वधन्विनाम् ।
भीमस्य वचनं श्रुत्वा सहदेवस्य चोभयोः ॥ ५-१६२-३६ (३७४६५)
उवाच फाल्गुनो वाक्यं भीमसेनं स्मयन्निव ।
भीमसेन न ते सन्ति येषां वैरं त्वया सह ॥ ५-१६२-३७ (३७४६६)
मन्दा गृहेषु सुखिनो मृत्युपाशवशं गताः ।
उलूकश्च न ते वाच्यः परुषं पुरुषोत्तम ॥ ५-१६२-३८ (३७४६७)
दूताः किमपराध्यन्ते यथोक्तस्यानुभाषिणः ।
एवमुक्त्वा महाबाहुर्भीमं भीमपराक्रमम् ॥ ५-१६२-३९ (३७४६८)
धृष्टद्युम्नसुखान्वीरान्सुहृदः समभाषत ।
श्रुतं वस्तस्य पापस्य धार्तराष्ट्रस्य भाषितम् ॥ ५-१६२-४० (३७४६९)
कुत्सनं वासुदेवस्य मम चैव विशेषतः ।
श्रुत्वा भवन्तः संरब्धा अस्माकं हितकाम्यया ॥ ५-१६२-४१ (३७४७०)
प्रभावाद्वासुदेवस्य भवतां च प्रयत्नतः ।
समग्रं पार्थिवं क्षत्रं सर्वं न गणयाम्यहम् ॥ ५-१६२-४२ (३७४७१)
भवद्भिः समनुज्ञातो वाक्यमस्य यदुत्तरम् ।
उलूके प्रापयिष्यामि यद्वक्ष्यति सुयोधनम् ॥ ५-१६२-४३ (३७४७२)
श्वो भूते कत्थितस्यास्य प्रतिवाक्यं चमूमुखे ।
गाण्डीवेनाभिधास्याकमि क्लीबा हि वचनोत्तराः । ५-१६२-४४ (३७४७३)
ततस्ते पार्थिवाः सर्वे प्रशशंसुर्धनञ्जयम् ।
तेन वाक्योपचारेण विस्मिता राजसत्तमाः ॥ ५-१६२-४५ (३७४७४)
अनुनीय च तान्सर्वान्यथामान्यं यथावयः ।
धर्मराजं तदा वाक्यं तत्प्राप्यं प्रत्यभाषत ॥ ५-१६२-४६ (३७४७५)
आत्मानमवमन्वानो न हि स्यात्पार्थिवोत्तमः ।
तत्रोत्तरं प्रवक्ष्यामि तव शुश्रूषणे रतः ॥ ५-१६२-४७ (३७४७६)
उलूकं भरतश्रेष्ठ सामपूर्वमथोर्जितम् ।

दुर्योधनस्य तद्वाक्यं निशम्य भरतर्षभः ॥ ५-१६२-४८ (३७४७७)
अतिलोहितनेत्राभ्यामाशीविष इव श्वसन् ।
स्मयमान इव क्रोधात्सृक्किणी परिसंलिहन् ॥ ५-१६२-४९ (३७४७८)
जनार्दनमभिप्रेक्ष्य भ्रातॄंश्चैवेदमब्रवीत् ।
अभ्यभाषत कैतव्यं प्रगृह्य विपुलं भुजम् ॥ ५-१६२-५० (३७४७९)
उलूक गच्छ कैतव्य ब्रूहि तात सुयोधनम् ।
कृतघ्नं वैरपुरुषं दुर्मतिं कुलपांसनम् ॥ ५-१६२-५१ (३७४८०)
पाण्डवेषु सदा पाप नित्यं जिह्मं प्रवर्तते ।
स्ववीर्याद्यः पराक्रम्य पाप आह्वयते परान् ।
अभीतः पूरयन्वाक्यमेष वैः क्षत्रियः पुमान् ॥  ५-१६२-५२ (३७४८१)
स पापः क्षत्रियो भूत्वा अस्मानाहूय संयुगे ।
मान्यामान्यान्पुरस्कृत्य युद्धं मा गाः कुलाधम ॥ ५-१६२-५३ (३७४८२)
आत्मवीर्यं समाश्रिकत्य भृत्यवीर्यं च कौरव ।
आह्वयस्व रणे पार्थान्सर्वथा क्षत्रियो भव ॥ ५-१६२-५४ (३७४८३)
परवीर्यं समाश्रित्य यः समाह्वयते परान् ।
अशक्तः स्वयमादातुमेतदेव नपुंसकम् ॥ ५-१६२-५५ (३७४८४)
स त्वं परेषां वीर्येण आत्मानं बहुमन्यसे ।
कथमेवमशक्तस्त्वमस्मान्समभिगर्जसि ॥ ५-१६२-५६ (३७४८५)
कृष्ण उवाच। ५-१६२-५७क्ष् (३८६२)
मद्वचश्चापि भूयस्ते वक्तव्यः स सुयोधनः ।
श्व इदानीं प्रपद्येथाः पुरुषो भव दुर्मते ॥ ५-१६२-५७ (३७४८६)
मन्यसे यच्च मूढ त्वं न योत्स्यति जनार्दनः ।
सारथ्येन वृतः पार्थैरिति त्वं न बिभेषि च ॥ ५-१६२-५८ (३७४८७)
जघन्यकालमप्येतन्न भवेत्सर्वपार्थिवान् ।
निर्दहेयमहं क्रोधात्तृणानीव हुताशनः ॥ ५-१६२-५९ (३७४८८)
युधिष्ठिरनियोगात्तु फाल्गुनस्य महात्मनः ।
करिष्ये युध्यमानस्य सारथ्यं विजितात्मनः ॥ ५-१६२-६० (३७४८९)
यद्युत्पतसि लोकांस्त्रीन्यद्याविशसि भूतलम् ।
तत्रतत्रार्जुनरथं प्रभाते द्रक्ष्यसे पुनः ॥ ५-१६२-६१ (३७४९०)
यच्चापि भीमसेनस्य मन्यसे मोघभाषितम् ।
दुःशासनस्य रुधिरं पीतमद्यावधारय ॥ ५-१६२-६२ (३७४९१)
न त्वां समीक्षते पार्थो नापि राजा युधिष्ठिरः ।
न भीमसेनो न यमौ प्रतिकूलप्रभाषिणम् ॥ ॥ ५-१६२-६३ (३७४९२)

इति श्रीमन्महाभारते उद्योगपर्वणि उलूकदूतागमनपर्वणि
द्विषष्ट्यधिकशततमोऽध्यायः ॥

५-१६२-१२ समितिः सभा ॥
५-१६२-३१ शौटीरः सगर्वः । शूरो विक्रान्तः। मह्यं मम ॥
५-१६२-५५ नपुंसकं नपुंसकत्वं तव ॥
५-१६२-६३ समीक्षते गणयति ॥

---

उद्योगपर्व-अध्यय१६३
॥ श्रीः ॥
५.१६३. अध्यायः १६३

Mahabharata - Udyoga Parva - Chapter Topics
अर्जुनादिभिः सर्वैरुलूकद्वारा पृथक्पृथग्दुर्योधनंप्रति प्रतिसन्देशप्रेषणम् ॥ १ ॥
उलूकेन दुर्योधनंप्रति युधिष्ठिरादिप्रतिसन्देशकथनम् ॥ २ ॥
दुर्योधनाज्ञया कर्णेन सेनासु युद्धसन्नाहोद्घोषणम् ॥ ३ ॥

Mahabharata - Udyoga Parva - Chapter Text

५-१६३-० (३७४९३)
सञ्जय उवाच। ५-१६३-०क्ष् (३८६३)
दुर्योधनस्य तद्वाक्यं निशम्य भरतर्षभ ।
नेत्राभ्यामतिताम्राभ्यां कैतव्यं समुदैक्षत ॥ ५-१६३-१ (३७४९४)
स केशवमभिप्रेक्ष्य गुडाकेशो महायशाः ।
अभ्यभाषत कैतव्यं प्रगृह्य विपुलं भुजम् ॥ ५-१६३-२ (३७४९५)
स्ववीर्यं यः समाश्रित्य समाह्वयति वै परान् ।
अभीतो युध्यते शत्रून्स वै पुरुष उच्यते ॥ ५-१६३-३ (३७४९६)
परवीर्यं समाश्रित्य यः समाह्वयते परान् ।
क्षत्रबन्धुरशक्तत्वाल्लोके स पुरुषाधमः ॥ ५-१६३-४ (३७४९७)
स त्वं परेषां वीर्येण मन्यसे वीर्यमात्मनः ।
स्वयं कापुरुषो मूढ परांश्च क्षेप्तुमिच्छसि ॥ ५-१६३-५ (३७४९८)
यस्त्वं वृद्धं सर्वराज्ञां हितबुद्धिं जितेन्द्रियम् ।
मरणाय महाप्रज्ञं दीक्षयित्वा विकत्थसे ॥ ५-१६३-६ (३७४९९)
भावस्ते विदितोऽस्माभिर्दुर्बुद्धे कुलपांसन ।
न हनिष्यन्ति गाङ्गेयं पाण्डवा घृणयेति हि ॥ ५-१६३-७ (३७५००)
यस्य वीर्यं समाश्रित्य धार्तराष्ट्र विकत्थसे ।
हन्तास्मि प्रथमं भीष्मं मिषतां सर्वधन्विनाम् । ५-१६३-८ (३७५०१)

कैतव्य गत्वा भरतान्समेत्य
सुयोधनं धार्तराष्ट्रं वदस्व ।
तथेत्युवाचार्जुनः सव्यसाची
निशाव्यपाये भविता विमर्दः ॥ ५-१६३-९ (३७५०२)
यद्वा ब्रवीद्वाक्यमदीनसत्वो
मध्ये कुरून्हर्षयन्सत्यसन्धः ।
अहं हन्ता सृञ्जयानामनीकं
साल्वेयकांश्चेति ममैष भारः ।
कैतव्य गत्वा भरतान्समेत्य
सुयोधनं धार्तराष्ट्रं वदस्व ॥ ५-१६३-१० (३७५०३)
हन्यामहं द्रोणमृतेऽपि लोकं
न ते भयं विद्यते पाण्डवेभ्यः ।
ततो हि ते लब्धमतं च राज्य-
मापन्नताः पाण्डवाश्चेति भावः ॥ ५-१६३-११ (३७५०४)
स दर्पपूर्णो न समीक्षसे त्व-
मनर्थमात्मन्यपि वर्तमानम् ।
तस्मादहं ते प्रथमं समूहे
हन्ता समक्ष कुरुवृद्धमेव ॥ ५-१६३-१२ (३७५०५)
सूर्योदये युक्तसेनः प्रतीक्ष्य
ध्वजी रथी रक्षत सत्यसन्धम् ।
अहं हि वः पश्यतां द्विपमेनं
भीष्मं रथात्पातयिष्यामि बाणैः ॥ ५-१६३-१३ (३७५०६)
श्वोभूते कत्थनावाक्यं विज्ञास्यति सुयोधनः ।
आचितं शरजालेन मया दृष्ट्वा पितामहम् ॥ ५-१६३-१४ (३७५०७)
यदुक्तश्च सभामध्ये पुरुषो ह्रस्वदर्शनः ।
क्रुद्धेन भीमसेनेन भ्राता दुःशासनस्तव ॥ ५-१६३-१५ (३७५०८)
अधर्मज्ञो नित्यवैरी पापबुद्धिर्नृशंसकृत् ।
सत्यां प्रतिज्ञामचिराद्द्रक्ष्यसे तां सुयोधन ॥ ५-१६३-१६ (३७५०९)
अभिमानस्य दर्पस्य क्रोधपारुष्ययोस्तथा ।
नैष्ठुर्यस्यावलेपस्य आत्मसंभावनस्य च ॥ ५-१६३-१७ (३७५१०)
नृशंसतायास्तैक्ष्ण्यस्य धर्मविद्वेषणस्य च ।
अधर्मस्यातिवादस्य वृद्धातिक्रमणस्य च ॥ ५-१६३-१८ (३७५११)
दर्शनस्य च चक्रस्य कृत्स्नस्यापनयस्य च ।
द्रक्ष्यसि त्वं फलं तीव्रमचिरेण सुयोधन ॥ ५-१६३-१९ (३७५१२)
वासुदेवद्वितीये हि मयि क्रुद्धे नराधम ।
आशा ते जीविते मूढ राज्ये वा केन हेतुना ॥ ५-१६३-२० (३७५१३)

शान्ते भीष्मे तथा द्रोणे सूतपुत्रे च पातिते ।
निराशो जीविते राज्ये पुत्रेषु च भविष्यसि ॥ ५-१६३-२१ (३७५१४)
भ्रातॄणां निधनं श्रुत्वा पुत्राणां च सुयोधन ।
भीमसेनेन निहतो दुष्कृतानि स्मरिष्यसि ॥ ५-१६३-२२ (३७५१५)
न द्वितीयां प्रतिज्ञां हि प्रतिजानामि कैतव ।
सत्यं ब्रवीम्यहं ह्येतत्सर्वं सत्यं भविष्यति ॥ ५-१६३-२३ (३७५१६)
युधिष्ठिरोऽपि कैतव्यमुलूकमिदमब्रवीत् ।
उलूक मद्वचो ब्रूहि गत्वा तात सुयोधनम् ॥ ५-१६३-२४ (३७५१७)
स्वेन वृत्तेन मे वृत्तं नाधिगन्तुं त्वमर्हसि ।
उभयोरन्तरं वेद सूनृतानृतयोरपि ॥ ५-१६३-२५ (३७५१८)
न चाहं कामये पापमपि कीटपिपीलकयोः ।
किं पुनर्ज्ञातिषु वधं कामयेयं कथं च न ॥ ५-१६३-२६ (३७५१९)
एतदर्थं मया तात पञ्च ग्रामा वृताः पुरा ।
कथं तव सुदुर्बुद्धे न प्रेक्ष्ये व्यसनं महत् ॥ ५-१६३-२७ (३७५२०)
स त्वं कामपरीतात्मा मूढभावाच्च कत्थसे ।
तथैव वासुदेवस्य न गृह्णासि हितं वचः । ५-१६३-२८ (३७५२१)
किंचेदानीं बहूक्तेन युध्यस्व सह बान्धवैः ।
मम विप्रियकर्तारं कैतव्य सह बान्धवैः । ५-१६३-२९ (३७५२२)
मम विप्रियकर्तारं कैतव्य ब्रूहि कौरवम् ॥
श्रुतं वाक्यं गृहीतोऽर्थो मतं यत्ते तथास्तु तत्। ५-१६३-३० (३७५२३)
भीमसेनस्ततो वाक्यं भूय आह नृपात्मजम् ॥
उलूक मद्वचो ब्रूहि दुर्मतिं पापपूरुषम्। ५-१६३-३१ (३७५२४)
शठं नैकृतिकं पापं दुराचारं सुयोधनम् ॥
गृध्रोदरे वा वस्तव्यं पुरे वा नागसाह्वये । ५-१६३-३२ (३७५२५)
प्रतिज्ञातं मया यच्च सभामध्ये नराधम ॥
कर्ताहं तद्वचः सत्यं सत्येनैव शपामि ते। ५-१६३-३३ (३७५२६)
दुःशासनस्य रुधिरं हत्वा पास्याम्यहं मृधे ॥
सक्थिनी तव भंक्त्वैव हत्वा हि तव सोदनान्। ५-१६३-३४ (३७५२७)
सर्वेषां राजपुत्राणामभिमन्युरसंशयम् ।
कर्मणा तोषयिष्यामि भूयश्चैव वचः श्रृणु ॥ ५-१६३-३५ (३७५२८)
हत्वा सुयोधन त्वां वै सहितं सर्वसोदरैः ।
आक्रमिष्ये पदा मूर्ध्नि धर्मराजस्य पश्यतः ॥ ५-१६३-३६ (३७५२९)
नकुलस्तु ततो वाक्यमिदमाह महीपते ।
उलूक ब्रूहि कौरव्यं धार्तराष्ट्रं सुयोधनम् ॥ ५-१६३-३७ (३७५३०)
श्रुतं ते गदतो वाक्यं सर्वमेव यथातथम् ।
तथा कर्तास्मि कौरव्य यथा त्वमनुशासि मां ॥ ५-१६३-३९असहदेवोऽपि

नृपते इदमाह वचोऽर्थवत् ।
सुयोधन मतिर्या ते वृथैषा ते भविष्यति ॥ ५-१६३-३८ (३७५३१)
शोचिष्यसे महाराज सपुत्रज्ञातिबान्धवः ।
इमं च क्लेशमस्माकं हृष्टो यत्त्वं विकत्थसे ॥ ५-१६३-४० (३७५३२)
विराटद्रुपदौ वृद्धावुलूकमिदमूचतुः ।
दासभावं नियच्छेव साधोरिति मतिः सदा ।
तौ च दासावदासौ वा पौरुषं यस्य यादृशम् ॥ ५-१६३-४१ (३७५३३)
शिखण्डी तु ततो वाक्यमुलूकमिदमब्रवीत् ।
वक्तव्यो भवता राजा पापेष्वभिरतः सदा ॥ ५-१६३-४२ (३७५३४)
पश्य त्वं मां रणे राजन्कुर्वाणं कर्म दारुणम् ।
यस्य वीर्यं समासाद्य मन्यसे विजयं युधि ॥ ५-१६३-४३ (३७५३५)
तमहं पातयिष्यामि रथात्तव पितामहम् ।
अहं भीष्मवधात्सृष्टो नूनं धात्रा महात्मना ॥ ५-१६३-४४ (३७५३६)
सोऽहं भीष्मं हनिष्यामि मिषतां सर्वधन्विनाम् ।
धृष्टद्युम्नोऽपि कैतव्यमुलूकमिदमब्रवीत् ॥ ५-१६३-४५ (३७५३७)
सुयोधनो मम वचो वक्तव्यो नृपतेः सुतः ।
अहं द्रोणं हनिष्यामि सगणं सहबान्धवम् ॥ ५-१६३-४६ (३७५३८)
अवश्यं च मया कार्यं पूर्वेषां चरितं महत् ।
कर्ता चाहं तथा कर्म यथा नान्यः करिष्यति  ५-१६३-४७ (३७५३९)
तमब्रवीद्धर्मराजः कारुण्यार्थं वचो महत् ।
नाहं ज्ञातिवधं राजन्कामयेयं कथंचन ॥ ५-१६३-४८ (३७५४०)
तवैव दोषाद्दुर्बुद्धे सर्वमेतत्त्वनावृतम् ।
स गच्छ माचिरं तात उलूक यदि मन्यसे ॥ ५-१६३-४९ (३७५४१)
इह वा तिष्ठ भद्रं ते वयं हि तव बान्धवाः ।
उलूकस्तु ततो राजन्धर्मपुत्रं युधिष्ठिरम् ॥ ५-१६३-५० (३७५४२)
आमन्त्र्य प्रययौ तत्र यत्र राजा सुयोधनः ।
उलूकस्तत आगमक्य दुर्योधनममर्षणम् ॥ ५-१६३-५१ (३७५४३)
अर्जुनस्य समादेशं यथोक्तं सर्वमब्रवीत् ।
वासुदेवस्य भीमस्य धर्मराजस्य पौरुषम् ॥ ५-१६३-५२ (३७५४४)
नकुलस्य विराटस्य द्रुपदस्य च भारत ।
सहदेवस्य च वचो धृष्टद्युम्नशिखण्डिनोः ।
केशवार्जुनयोर्वाक्यं यथोक्तं सर्वमब्रवीत् ॥ ५-१६३-५३ (३७५४५)
कैतव्यस्य तु तद्वाक्यं निशम्य भरतर्षभः ।
दुःशासनं च कर्णं च शकुनिं चापि भारत ॥ ५-१६३-५४ (३७५४६)
आज्ञपयत राज्ञश्च बलं मित्रबलं तथा ।
यथा प्रागुदयात्सर्वे युक्तास्तिष्ठन्त्यनीकिनः ॥ ५-१६३-५५ (३७५४७)

ततः कर्णसमादिष्टा दूताः सन्त्वरिता रथैः ।
उष्ट्रवामीभिरप्यन्ये सदश्वैश्च महाजवैः ॥ ५-१६३-५६ (३७५४८)
तूर्णं परिययुः सेनां कृत्स्नां कर्णस्य शासनात् ।
आज्ञापयन्तो राज्ञश्च योगः प्रागुदयादिति ॥ ॥ ५-१६३-५७ (३७५४९)

इति श्रीमन्महाभारते उद्योगपर्वणि उलूकदूतागमनपर्वणि
त्रिष्टष्यधिकशततमोऽध्यायः ॥
Mahabharata - Udyoga Parva - Chapter Footnotes

५-१६३-६ वृद्धं बाह्लिकं भीष्मं च ॥
५-१६३-१० सत्यसंधो भीष्मः ।भीष्मवाक्यमेवाह अहं हन्तेति।हे
कैतव्य अहं हन्तेत्यादि मदीयं वाक्यं भरतान् पाण्डवान्प्रति गत्वा
वदस्व ।किं कृत्वा सुयोधनं समेत्य मदीयं संदेशं दुर्योधनाय
श्रावयित्वा पाण्डवान्प्रति कथयेत्यर्थः।तेन दुर्योधनसुखं
पाण्डवानां भयं चोदेष्यतीति भावः ॥
५-१६३-११ द्रोणमृतेपि द्रोणंविनाप्यसहाय एवाहं लोकं हन्याम् ।ततो
भीष्मवाक्यात्।ते तव भाव एवंभूतो जात इत्यर्थः ॥
५-१६३-१२ हन्ता हनिष्यामि ।कुरुवृद्धं भीष्मम् ॥
५-१६३-१३ यो युक्तसेनो ध्वजी रथी तं रक्षतेति योजना ॥
५-१६३-१९ दर्शनं कर्णादिषु जयनिश्चयः ।चक्रं सेनाया आधिक्यम्
।अपनयः अस्माकं दूरीकरणम् ।एतेषां फलं द्रक्ष्यसि ॥
५-१६३-२५ वेद विद्धि ॥
५-१६३-२७ हे सुदुर्बुद्धे तव व्यसनं मरणागमं कथमपि न प्रेक्ष्ये
इति हेतोः पञ्चग्रामा वृता इति संबन्धः ॥
५-१६३-४१ साधोः दासभावं नियच्छेव नितरां यच्छेव प्रार्थयावहे
।तौ च आवां दासावदासौवेति यस्य तव यादृशं पौरुषं तत्तथैव
श्वो द्रक्ष्याव इति शेषः ॥
५-१६३-४४ वधात् वधहेतोः ॥
५-१६३-४७ पूर्वेषां चरितं द्रोणवधेन पितृवैरप्रतियातनम् ॥
५-१६३-४९ अनावृतं विस्पष्टम् ॥

---

उद्योगपर्व-अध्यय१६४
॥ श्रीः ॥
५.१६४. अध्यायः १६४

Mahabharata - Udyoga Parva - Chapter Topics
युधिष्ठिरेण युद्धाय सेनानिर्यातनम् ॥१ ॥

धृष्टद्युम्नेन भीमादीनां दुर्योधनादिभिः सह द्वन्द्वयुद्धाय समादेशः ॥ २ ॥

Mahabharata - Udyoga Parva - Chapter Text

५-१६४-० (३७५५०)
संजय उवाच। ५-१६४-०क्ष् (३८६४)
उलूकस्य वृत्तः श्रुत्वा कुन्तीपुत्रो युधिष्ठिरः ।
सेनां नियापयामास धृष्टद्युम्नपुरोगमाम् ॥ ५-१६४-१ (३७५५१)
पदातिनीं नागवतीं रथिनीमश्वबृन्दिनीम् ।
चतुर्विधबलां भीमामकम्पां पृथिवीमिव ॥ ५-१६४-२ (३७५५२)
भीमसेनादिभिर्गुप्तां सार्जुनैश्च महारथैः ।
धृष्टद्युम्नवशां दुर्गां सागरस्तिमितोपमाम् ॥ ५-१६४-३ (३७५५३)
तस्यास्त्वग्रे महेष्वासः पाञ्चाल्यो युद्धदुर्मदः ।
द्रोणप्रेप्सुरनीकानि धृष्टद्युम्नो व्यकर्षत ॥ ५-१६४-४ (३७५५४)
यथाबलं यथोत्साहं रथिनः समुपादिशत् ।
अर्जुनं सूतपुत्राय भीमं दुर्योधनाय च ॥ ५-१६४-५ (३७५५५)
धृष्टकेतुं च शल्याय गौतमायोत्तमौजसम् ।
अश्वात्थाम्ने च नकुलं शैब्यं च कृतवर्मणे ॥ ५-१६४-६ (३७५५६)
सैन्धवाय च वार्ष्णेयं युयुधानं समादिशत् ।
शिखण्डिनं च भीष्माय प्रमुखे समकल्पयत् ॥ ५-१६४-७ (३७५५७)
सहदेवं शकुनये चेकितानं शलाय वै ।
द्रौपदेयांस्तथा पञ्च त्रिगर्तेभ्यः समादिशत् ॥ ५-१६४-८ (३७५५८)
वृषसेनाय सौभद्रं शेषाणां च महीक्षिताम् ।
स समर्थं हि तं मेने पार्थादभ्यधिकं रणे ॥ ५-१६४-९ (३७५५९)
एवं विभज्य योधांस्तान्पृथक्व सह चैव ह ।
ज्वालावर्णो महेष्वासो द्रोणमंशमकल्पयत् ॥ ५-१६४-१० (३७५६०)
धृष्टद्युम्नो महेष्वासः सेनापतिपतिस्ततः ।
विधिवद्व्यूह्य मेधावी युद्धाय धृतमानसः ॥ ५-१६४-११ (३७५६१)
यथोद्दिष्टानि सैन्यानि पाण्डवानामयोजयत् ।
जयाय पाण्डुपुत्राणां यत्तस्तस्थौ रणाजिरे ॥ ॥ ५-१६४-१२ (३७५६२)

इति श्रीमन्महाभारते उद्योगपर्वणि उलूकदूतागमनपर्वणि चतुःषष्ट्यधिकशततमोऽध्यायः ॥

Mahabharata - Udyoga Parva - Chapter Footnotes

उद्योगपर्व-अध्यय१६५
॥ श्रीः ॥
५.१६५. अध्यायः १६५

Mahabharata - Udyoga Parva - Chapter Topics
भीष्मेण दुर्योधनाय स्वसामर्थ्यकथनपूर्वकमभयप्रदानम् ॥ १ ॥
तथा दुर्योधनप्रश्नेन स्वसेनायां रथातिरथसंख्यानम् ॥ २ ॥

Mahabharata - Udyoga Parva - Chapter Text

५-१६५-० (३७५६३)
धृतराष्ट्र उवाच। ५-१६५-०क्ष् (३८६५)
प्रतिज्ञाते फाल्गुनेन वधे भीष्मस्य संयुगे ।
किमकुर्वत मे मन्दाः पुत्रा दुर्योधनादयः ॥ ५-१६५-१ (३७५६४)
हतमेव हि पश्यामि गाङ्गेयं पितरं रणे ।
वासुदेवसहायेन पार्थेन दृढधन्वना ॥ ५-१६५-२ (३७५६५)
स चापरिमितप्रज्ञस्तच्छ्रुत्वा पार्थभाषितम् ।
किमुक्तवान्महेष्वासो भीष्मः प्रहरतां वरः ॥ ५-१६५-३ (३७५६६)
सैनापत्यं च संप्राप्य कौरवाणां धुरंधरः ।
किमचेष्टत गाङ्गेयो महाबुद्धिपराक्रमः ॥ ५-१६५-४ (३७५६७)
वैशंपायन उवाच। ५-१६५-५क्ष् (३८६६)
ततस्तत्सञ्जयस्तस्मै सर्वमेव न्यवेदयत् ।
यथोक्तं कुरुवृद्धेन भीष्मेणामिततेजसा ॥ ५-१६५-५ (३७५६८)
सञ्जय उवाच। ५-१६५-६क्ष् (३८६७)
सैनापत्यमनुप्राप्य भीष्मः शान्तनवो नृप ।
दुर्योधनमुवाचेदं वचनं हर्षयन्निव ॥ ५-१६५-६ (३७५६९)
नमस्कृत्य कुमाराय सेनान्ये शक्तिपाणये ।
अहं सेनापतिस्तेऽद्य भविष्यामि न संशयः । ५-१६५-७ (३७५७०)
सेनाकर्मण्यिज्ञोऽस्मि व्यूहेषु विविधेषु च ।
कर्म कारयितुं चैव भृतानप्यभृतांस्तथा ॥ ५-१६५-८ (३७५७१)
यात्रायाने च युद्धे च तथा प्रशमनेषु च ।
भृशं वेद महाराज यथा वेद बृहस्पतिः ॥ ५-१६५-९ (३७५७२)
व्यूहानां च समारम्भान्दैवगान्धर्वमानुषान् ।
तैरहं मोहयिष्यामि पाण्डवान्व्येतु ते ज्वरः ॥ ५-१६५-१० (३७५७३)
सोऽहं योत्स्यामि तत्त्वेन पालयंस्तव वाहिनीम् ।

यथावच्छास्त्रतो राजन्व्येतु ते मानसो ज्वरः ॥ ५-१६५-११ (३७५७४)
दुर्योधन उवाच। ५-१६५-१२क्ष् (३८६८)
विद्यते मे न गाङ्गेय भयं देवासुरेष्वपि ।
समस्तेषु महाबाहो सत्यमेतद्ब्रवीमि ते ॥ ५-१६५-१२ (३७५७५)
किं पुनस्त्वयि दुर्धर्षे सैनापत्ये व्यवस्थिते ।
द्रोणे च पुरुषव्याघ्रे स्थिते युद्धाभिनन्दिनि ॥ ५-१६५-१३ (३७५७६)
भवद्भ्यां पुरुषाग्र्याभ्यां स्थिताभ्यां विजयो मम ।
न दुर्लभं कुरुश्रेष्ठ देवराज्यमपि ध्रुवम् ॥ ५-१६५-१४ (३७५७७)
रथसङ्ख्यां तु कार्त्स्न्येन परेषामात्मनस्तथा ।
तथैवातिरथानां च वेत्तुमिच्छामि कौरव ॥ ५-१६५-१५ (३७५७८)
पितामहो हि कुशलः परेषामात्मनस्तथा ।
श्रोतुमिच्छाम्यहं सर्वैः सहैभिर्वसुधाधिपैः ॥ ५-१६५-१६ (३७५७९)
भीष्म उवाच। ५-१६५-१७क्ष् (३८६९)
गान्धारे श्रृणु राजेन्द्र रथसंख्यां स्वके बले ।
ये रथाः पृथिवीपाल तथैवातिरथाश्च ये ॥ ५-१६५-१७ (३७५८०)
बहूनीह सहस्राणि प्रयुतान्यर्बुदानि च ।
रथानां तव सेनायां यथामुख्यं तु मे श्रुणु ॥ ५-१६५-१८ (३७५८१)
भवानग्रे रथोदारः सह सर्वैः सहोदरैः ।
दुःशासनप्रभृतिभिर्भ्रातृभिः शतसंमितैः ॥ ५-१६५-१९ (३७५८२)
सर्वे कृतप्रहरणाश्छेदभेदविशारदाः ।
रथोपस्थे गजस्कन्धे गदाप्रासासिचर्मणि ॥ ५-१६५-२० (३७५८३)
संयन्तारः प्रहर्तारः कृतास्त्रा भारसाधनाः ।
इष्वस्त्रे द्रोणशिष्याश्च कृपस्य च शरद्वतः ॥ ५-१६५-२१ (३७५८४)
एते हनिष्यन्ति रणे पाञ्चालान्युद्धदुर्मदान् ।
कृतकिल्बिषाः पाण्डवेयैर्धार्तराष्ट्रा मनस्विनः ॥ ५-१६५-२२ (३७५८५)
तथाऽहं भरतश्रेष्ठ सर्वसेनापतिस्तव ।
शत्रून्विध्वंसयिष्यामि कदर्थीकृत्य पाण्डवान् ॥ ५-१६५-२३ (३७५८६)
न त्वात्मनो गुणान्वक्तुमर्हामि विदितोऽस्मि ते ।
कृतवर्मा त्वयिरथो भोजः शस्त्रभृतां वरः ॥ ५-१६५-२४ (३७५८७)
अर्थसिद्धिं तव रणे करिष्यति न संशयः ।
शस्त्रविद्भिरनाधृष्यो दूरपाती दृढायुधः ॥ ५-१६५-२५ (३७५८८)
हनिष्यति चमूं तेषां महेन्द्रो दानवानिव ।
मद्रराजो महेष्वासः शल्यो मेऽतिरथो मतः ॥ ५-१६५-२६ (३७५८९)
स्पर्धते वासुदेवेन नित्यं यो वै रणेरणे ।
भागिनेयान्निजांस्त्यक्त्वा शल्यस्तेऽतिरथो मतः ।
एष योत्स्यति संग्रामे पाण्डवांश्च महारथान् ॥ ५-१६५-२७ (३७५९०)

सागरोर्मिसमैर्बाणैः प्लावयन्निव शातवान् ।
भूरिश्रवाः कृतास्त्रश्च तव चापि हितः सुहृत् ॥ ५-१६५-२८ (३७५९१)
सौमदत्तिर्महेष्वासो रथयूथपयूथपः ।
वलक्षयममित्राणां सुमहान्तं करिष्यति ॥ ५-१६५-२९ (३७५९२)
सिन्धुराजो महाराज मतो मे द्विगुणो रथाः ।
योत्स्यते समरे राजन्विक्रान्तो रथसत्तमः ॥ ५-१६५-३० (३७५९३)
द्रौपदीहरणे राजन्परिक्लिष्टश्च पाण्डवैः ।
संस्मरंस्तं परिक्लेशं योत्स्यते परवीरहा ॥ ५-१६५-३१ (३७५९४)
एतेन हि तदा राजंस्तप आस्थाय दारुणम् ।
सुदुर्लभो वरो लब्धः पाण्डवान्योद्धुमाहवे ॥ ५-१६५-३२ (३७५९५)
स एष रथशार्दूलस्तद्वैरं संस्मरन्रणे ।
योत्स्यते पाण्डवैस्तात प्राणांस्त्यक्त्वा सुदुस्त्यजान् ॥ ॥ ५-१६५-३३ (३७५९६)

इति श्रीमन्महाभारते उद्योगपर्वणि रथातिरथसंख्यानपर्वणि
पञ्चषष्ट्यधिकशततमोऽध्यायः ॥
Mahabharata - Udyoga Parva - Chapter Footnotes

५-१६५-८ भृतान् वेतनभक्षकान् । अभृतान्मैत्र्या समागतान् ॥
५-१६५-९ यात्रार्थं याने प्रयाणे प्रशमनेष्ठ परास्त्राष्णं
प्रतीकारेषु विषयेषु वेद वेञ्चि ॥

---

उद्योगपर्व-अध्यय१६६
॥ श्रीः ॥
५.१६६. अध्यायः १६६

Mahabharata - Udyoga Parva - Chapter Topics
भीष्मेण दुर्योधनसेनायां रथातिरथसंख्यानम् ॥ १ ॥

Mahabharata - Udyoga Parva - Chapter Text

५-१६६-० (३७५९७)
भीष्म उवाच। ५-१६६-०क्ष् (३८७०)
सुदक्षिणस्तु काम्भोजो रथ एकगुणो मतः ।
तवार्थसिद्धिमाकाङ्क्षन्योत्स्यते समरे परैः ॥ ५-१६६-१ (३७५९८)
एतस्य रथसिंहस्य तवार्थे राजसत्तम ।
पराक्रमं यथेन्द्रस्य द्रक्ष्यन्ति कुरवो युधि ॥ ५-१६६-२ (३७५९९)
एतस्य रथवंशे हि तिग्मवेगप्रहारिणः ।

काम्भोजानां महाराज शलभानामिवायतिः ॥ ५-१६६-३ (३७६००)
नीलो माहिष्यतीवासी नीलवर्मा रथस्तव ।
रथवंशेन कदनं शत्रूणां वै करिष्यति ॥ ५-१६६-४ (३७६०१)
कृतवैरः पुरा चैव सहदेवेन मारिष ।
योत्स्यते सततं राजंस्तवार्थे कुरुनन्दन ॥ ५-१६६-५ (३७६०२)
विन्दानुविन्दावावन्त्यौ संमतौ रथसत्तमौ ।
कृतिनौ समरे तात दृढवीर्यपराक्रमौ ॥ ५-१६६-६ (३७६०३)
एतौ तौ पुरुषव्याघ्रौ रिपुसैन्यं प्रधक्ष्यतः ।
गदाप्रासासिनाराचैस्तोमरैश्च करच्युतैः ॥ ५-१६६-७ (३७६०४)
युद्धाभिकामौ समरे क्रीडन्ताविव यूथपौ ।
यूथमध्ये महाराज विचरन्तौ कृतान्तवत् ॥ ५-१६६-८ (३७६०५)
त्रिगर्ता भ्रातरः पञ्च रथोदारा मता मम ।
कृतवैराश्च पार्थैस्ते विराटनगरे तदा ॥ ५-१६६-९ (३७६०६)
मकरा इव राजेन्द्र समुद्धततरङ्गिणीम् ।
गङ्गां विक्षोभयिष्यन्ति पार्थानां युधि वाहिनी ॥ ५-१६६-१० (३७६०७)
ते रथाः पञ्च राजेन्द्र येषां सत्यरथो मुखम् ।
एते योत्स्यन्ति सङ्ग्रामे संस्मरन्तः पुराकृतमक् ॥ ५-१६६-११ (३७६०८)
व्यलीकं पाण्डवेयेन भीमसेनानुजेन ह ।
दिशो विजयता राजञ्श्वेतवाहेन भारत ॥ ५-१६६-१२ (३७६०९)
ते हनिष्यन्ति पार्थानां तानासाद्य महारथान् ।
वरान्वरान्महेष्वासान्क्षत्रियाणां धुरंधरान् ॥ ५-१६६-१३ (३७६१०)
लक्ष्मणस्तव पुत्रश्च तथा दुःशासनस्य च ।
उभौ तौ पुरुषव्याघ्रौ संग्रामेष्वपलायिनौ ॥ ५-१६६-१४ (३७६११)
तरुणौ सुकुमारौ च राजपुत्रौ रतस्विनौ ।
युद्धानां च विशेषज्ञौ प्रणेतारौ च सर्वशः ॥ ५-१६६-१५ (३७६१२)
रथौ तौ कुरुशार्दूल मतौ मे रथसत्तमौ ।
क्षत्रधर्मरतौ वीरौ महत्कर्म करिष्यतः ॥ ५-१६६-१६ (३७६१३)
दण्डधारो महाराज रथ एको नरर्षभ ।
योत्स्यते तव सङ्ग्रामे स्वेन सैन्येन पालितः ॥ ५-१६६-१७ (३७६१४)
बृहद्बलस्तथा राजा कौसल्यो रथसत्तमः ।
रथो मम मतस्तात महावेगपराक्रमः ॥ ५-१६६-१८ (३७६१५)
एष योत्स्यति सङ्ग्रामे स्वान्बन्धून्संप्रहर्षयन् ।
उग्रायुधो महेष्वासो धार्तराष्ट्रहिते रतः ॥ ५-१६६-१९ (३७६१६)
कृपः शारद्वतो रजन्रथयूथपयूथपः ।
प्रियान्प्राणान्परित्यज्य प्रधक्ष्यति रिपूंस्तव ॥ ५-१६६-२० (३७६१७)
गौतमस्य महर्षेर्य आचार्यस्य शरद्वतः ।

कार्तिकेय इवाजयः शरस्तम्बात्सुतोऽभवत् ॥ ५-१६६-२१ (३७६१८)
एष सेनाः सुबहुला विविधायुधकार्मुकाः ।
अग्निवत्समरे तात चरिष्यति विनिर्दहन् ॥ ॥ ५-१६६-२२ (३७६१९)

इति श्रीमन्महाभारते उद्योगपर्वणि रथातिरथसंख्यानपर्वणि
षट्षत्यधिकशततमोऽध्यायः ॥
Mahabharata - Udyoga Parva - Chapter Footnotes

५-१६६-१० समुद्धततरङ्गिर्णीं उच्छ्रितपताकां सेनां
उच्छ्रिततरङ्गवतीं गङ्गां ॥

---

उद्योगपर्व-अध्यय१६७
॥ श्रीः ॥
५.१६७. अध्यायः १६७

Mahabharata - Udyoga Parva - Chapter Topics
भीष्मेण दुर्योधनसैन्यस्य रथातिरथसंख्यानम् ॥ १ ॥

Mahabharata - Udyoga Parva - Chapter Text

५-१६७-० (३७६२०)
भीष्म उवाच। ५-१६७-०क्ष् (३८७१)
शकुनिर्मातुलस्तेऽसौ रथ एको नराधिप ।
प्रयुज्य पाण्डवैर्वैरं योत्स्यते नात्र संशयः ॥ ५-१६७-१ (३७६२१)
एतस्य सेना दुर्धर्षा समरे प्रतियायिनः ।
विकृतायुधभूयिष्ठा वायुवेगसमा जवे ॥ ५-१६७-२ (३७६२२)
द्रोणपुत्रो महेष्वासः सर्वानेवातिधन्विनः ।
समरे चित्रयोधी च दृढास्त्रश्च महारथः ॥ ५-१६७-३ (३७६२३)
एतस्य हि महाराज यथा गाण्डीवधन्वनः ।
शरासनविनिर्मुक्ताः संसक्ता यान्ति सायकाः ॥ ५-१६७-४ (३७६२४)
नैष शक्यो मया वीरः संख्यातुं रथसत्तमः ।
निर्दहेदपि लोकांस्त्रीनिच्छन्नेष महारथः ॥ ५-१६७-५ (३७६२५)
क्रोधस्तेजश्च तपसा संभृतोश्रमवासिनाम् ।
द्रोणेनानुगृहीतश्च दिव्यैरस्त्रैरुदारधीः ॥ ५-१६७-६ (३७६२६)
दोषस्त्वस्य महानेको येनैव भरतर्षभ ।
न मे रथो नातिरथो मतः पार्थिवसत्तम ॥ ५-१६७-७ (३७६२७)

जीवितं प्रियमत्यर्थमायुष्कामः सदा द्विजः ।
न ह्यस्य सदृशः कश्चिदुभयोः सेनयोरपि ॥ ५-१६७-८ (३७६२८)
हन्यादेकरथेनैव देवानामपि वाहिनीम् ।
वपुष्मांस्तलघोषेण स्फोटयेदपि पर्वतान् ॥ ५-१६७-९ (३७६२९)
असंख्येयगुणो वीरः प्रहन्ता दारुणद्युतिः ।
दण्डपाणिरिवासह्यः कालवत्प्रचरिष्यति ॥ ५-१६७-१० (३७६३०)
युगान्ताग्निसमः क्रोधात्सिंहग्रीवो महाद्युतिः ।
एष भारत युद्धस्य पृष्ठं संशयमिष्यति ॥ ५-१६७-११ (३७६३१)
पिता त्वस्य महातेजा वृद्धोऽपि युवभिर्वरः ।
रणे कर्म महत्कर्ता अत्र मे नास्ति संशयः ॥ ५-१६७-१२ (३७६३२)
अस्त्रवेगानिलोद्भूतः सेनाकक्षेन्धनोत्थितः ।
पाण्डुपुत्रस्य सैन्यानि प्रधक्ष्यति रणे धृतः ॥ ५-१६७-१३ (३७६३३)
रथयूथपयूथानां यूथपोऽय नरर्षभः ।
भरद्वाजात्मजः कर्ता कर्म तीव्रं हितं तव ॥ ५-१६७-१४ (३७६३४)
सर्वमूर्धाभिषिक्तानामाचार्यः स्थविरो गुरुः ।
गच्छेदन्तं सृञ्जयानां प्रियस्त्वस्य धनञ्जयः ॥ ५-१६७-१५ (३७६३५)
नैष जातु महेष्वासः पार्थमक्लिष्टकारिणम् ।
हन्यादाचार्यकं दीप्तं संस्मृत्य गुणनिर्जितम् ॥ ५-१६७-१६ (३७६३६)
श्लाघते यं सदा वीर पार्थस्य गुणविस्तरैः ।
पुत्रादभ्यधिकं चैनं भारद्वाजोऽनुपश्यति ॥ ५-१६७-१७ (३७६३७)
हन्यादेकरथेनैव देवगन्धर्वमानुषान् ।
एकीभूतानपि रणे दिव्यैरस्त्रैः प्रतापवान् ॥ ५-१६७-१८ (३७६३८)
पौरवो राजशार्दूलस्तव राजन्महारथः ।
मतो मम रथोदारः परवीररथारुजः ॥ ५-१६७-१९ (३७६३९)
स्वेन सैन्येन महता प्रतपञ्शत्रुवाहिनीम् ।
प्रधक्ष्यति स पाञ्चालान्कक्षमग्निगतिर्यथा ॥ ५-१६७-२० (३७६४०)
सत्यश्रवा रथस्त्वेको राजपुत्रो बृहद्बलः ।
तव राजन्रिपुबले कालवत्प्रचरिष्यति ॥ ५-१६७-२१ (३७६४१)
एतस्य योधा राजेन्द्र विचित्रकवचायुधाः ।
विचरिष्यन्ति सङ्ग्रामे निघ्नन्तः शात्रवांस्तव ॥ ५-१६७-२२ (३७६४२)
वृषसेनो रथस्तेऽग्र्यः कर्णपुत्रो महारथः ।
प्रधक्ष्यति रिपूणां ते बलं तु बलिनां वरः ॥ ५-१६७-२३ (३७६४३)
जघसन्धो महातेजा राजन्रथवरस्तव ।
त्यक्ष्यते समरे प्राणान्माधवः परवीरहा ॥ ५-१६७-२४ (३७६४४)
एष योत्स्यति सङ्ग्रामे गजस्कन्धविशारदः ।
रथेन वा माहबाहुः क्षपयञ्शत्रुवाहिनीम् ॥ ५-१६७-२५ (३७६४५)

रथ एष महाराज मतो मे राजसत्तम ।
त्वदर्थे त्यक्ष्यते प्राणान्सहसैन्यो महारणे ॥ ५-१६७-२६ (३७६४६)
एष विक्रान्तयोधी च चित्रयोधी च संगरे ।
वीतभीश्चापि ते राजञ्शत्रुभिः सह योत्स्यते ॥ ५-१६७-२७ (३७६४७)
बाह्लीकोऽतिरथश्चैव समरे चानिवर्तनः ।
मम राजन्मतो युद्धे शूरो वैवस्वतोपमः ॥ ५-१६७-२८ (३७६४८)
न ह्येष समरं प्राप्य निवर्तेत कथञ्चन ।
यथा सततगो राजन्स हि हन्यात्परान्रणे ॥ ५-१६७-२९ (३७६४९)
सेनापतिर्महाराज सत्यवांस्ते महारथः ।
रणेष्वद्भुतकर्मा च रथी पररथारुजः ॥ ५-१६७-३० (३७६५०)
एतस्य समरं दृष्ट्वा न व्यथास्ति कथञ्चन ।
उत्स्मयन्नुत्पतत्येष परान्रथपथे स्थितान् ॥ ५-१६७-३१ (३७६५१)
एष चारिषु विक्रान्तः कर्म सत्पुरुषोचितम् ।
कर्ता विमर्दे सुमहत्त्वदर्थे पुरुषोत्तमः ॥ ५-१६७-३२ (३७६५२)
अलम्बुसो राक्षसेन्द्रः क्रूरकर्मा महारथः ।
हनिष्यति परान्राजन्पूर्ववैरमनुस्मरन् ॥ ५-१६७-३३ (३७६५३)
एष राक्षससैन्यानां सर्वेषां रथसत्तमः ।
मायावी दृढवैरश्च समरे विचरिष्यति ॥ ५-१६७-३४ (३७६५४)
प्राग्ज्योतिषाधिपो वीरो भगदत्तः प्रतापवान् ।
गजाङ्कुशधरश्रेष्ठो रथे चैव विशारदः ॥ ५-१६७-३५ (३७६५५)
एतेन युद्धमभवत्पुरा गाण्डीवधन्वनः ।
दिवसान्सुबहून्राजन्नुभयोर्जयगृद्धिनोः ॥ ५-१६७-३६ (३७६५६)
ततः सखायं गान्धारे मानयन्पाकशासनम् ।
अकरोत्संविदं तेन पाण्डवेन महात्मना ॥ ५-१६७-३७ (३७६५७)
एष योत्स्यति सङ्ग्रामे गजस्कन्धविशारदः ।
ऐरावतगतो राजा देवानामिव वासवः ॥ ॥ ५-१६७-३८ (३७६५८)

इति श्रीमन्महाभारते उद्योगपर्वणि रथातिरथसंख्यानपर्वणि
सप्तषष्ट्यधिकशततमोऽध्यायः ॥

Mahabharata - Udyoga Parva - Chapter Footnotes

५-१६७-६ आश्रमवासिनामृषीणां क्रोधस्तेजश्च तयोः समुदायरूप
इत्यर्थः ॥
५-१६७-११ पृष्ठं शेषम् ॥
५-१६७-३१ उत्स्मयन् हृष्यन् ॥
५-१६७-३७ संविदं मैत्रीम् ॥

उद्योगपर्व-अध्यय१६८
॥ श्रीः ॥
५.१६८. अध्यायः १६८

Mahabharata - Udyoga Parva - Chapter Topics
भीष्मेण कर्णस्यार्धरथत्वे कथिते तेन भूष्मोपालम्भनपूर्वकं
तज्जीवितावधि स्वेन युद्धाकरणप्रतिज्ञा ॥ १ ॥
भीष्मेण कर्णगर्हणे दुर्योधनेन भीष्मंप्रति सान्त्वनपूर्वकं
परसेनायां रथातिरथसंख्यानप्रार्थना ॥ २ ॥

Mahabharata - Udyoga Parva - Chapter Text

५-१६८-० (३७६५९)
भीष्म उवाच। ५-१६८-०क्ष् (३८७२)
अचलो वृषकश्चैव सहितौ भ्रातरावुभौ ।
रथौ तव दुराधर्षौ शत्रून्विध्वंसयिष्यतः ॥ ५-१६८-१ (३७६६०)
बलवन्तौ नरव्याघ्रौ दृढक्रोधौ प्रहारिणौ ।
गान्धारमुख्यौ तरुणौ दर्शनीयौ महाबलौ ॥ ५-१६८-२ (३७६६१)
सखा ते दयितो नित्यं य एष रणकर्कशः ।
उत्साहयति राजंस्त्वां विग्रहे पाण्डवैः सह ॥ ५-१६८-३ (३७६६२)
परुषः कत्थनो नीचः कर्णो वैकर्तनस्त्रव ।
मन्त्री नेता च बन्धुश्च मानी चात्यन्तमुच्छ्रितः ॥ ५-१६८-४ (३७६६३)
एष नैव रथः पूर्णो न चाप्यतिरथो रणे ।
वियुक्तः कवचेनैष सहजेन विचेतनः ॥ ५-१६८-५ (३७६६४)
कुण्डलाभ्यां च दिव्याभ्यां वियुक्तः सततं घृणी ।
अभिशापाच्च रामस्य ब्राह्मणस्य च भाषणात् ॥ ५-१६८-६ (३७६६५)
करणानां वियोगाच्च तेन मेऽर्थरथो मतः ।
नैष फाल्गुनमासाद्य पुनर्जीवन्विमोक्ष्यते ॥ ५-१६८-७ (३७६६६)
ततोऽब्रवीत्पुनर्द्रोणः सर्वशस्त्रभृतां वरः ।
एवमेतद्यथाऽऽत्थ त्वं न मिथ्यास्ति कदाचन ॥ ५-१६८-८ (३७६६७)
रणेरणेऽभिमानी च विमुखश्चापि दृश्यते ।
घृणी कर्णः प्रमादी च तेन मेऽर्धरथो मतः ॥ ५-१६८-९ (३७६६८)
संजय उवाच। ५-१६८-१०क्ष् (३८७३)
एतच्छ्रुत्वा तु राधेयः क्रोधादुत्फाल्य लोचने ।
उवाच भीष्मं राधेयस्तुदन्वाग्भिः प्रतोदवत् ॥ ५-१६८-१० (३७६६९)
पितामह यथेष्टं मां वाक्षरैरुपकृन्तसि ।

अनागसं सदा द्वेषादेवमेव पदेपदे ॥ ५-१६८-११ (३७६७०)
मर्षयामि च तत्सर्वं दुर्योधनकृतेन वै ।
त्वं तुं मां मान्यसे मन्दं यथा कापुरुषं तथा ॥ ५-१६८-१२ (३७६७१)
भवानर्धरथो मह्यं मतो वै नात्र संशयः ।
सर्वस्य जगतश्चैव गाङ्गेयो न मृषा वदेत् ॥ ५-१६८-१३ (३७६७२)
कुरूणामहितो नित्यं न च राजाऽवबुध्यते ।
को हि नाम समानेषु राजसूदारकर्मसु ॥ ५-१६८-१४ (३७६७३)
तेजोवधमिमं कुर्याद्विभेदयिषुराहवे ।
यथा त्वं गुणविद्वेषादपरागं चिकीर्षसि ॥ ५-१६८-१५ (३७६७४)
न हायनैर्न पलितैर्न वित्तैर्न च बन्धुभिः ।
महारयत्वं संख्यातुं शक्यं क्षत्रस्य कौरव ॥ ५-१६८-१६ (३७६७५)
बलज्येष्ठं स्मृतं क्षत्रं मन्त्रज्येष्ठा द्विजातयः ।
धनज्येष्ठाः स्मृता वैश्याः शूद्रास्तु वयसाऽधिकाः ॥ ५-१६८-१७ (३७६७६)
यथेच्छकं स्वयं ब्रूया रथानतिरथांस्तथा ।
कामद्वेषसमायुक्तो मोहात्प्रकुरुते भवान् ॥ ५-१६८-१८ (३७६७७)
दुर्योधन महाबाहो साधु सम्यगवेक्ष्यताम् ।
त्यज्यतां दुष्टभावोऽयं भीष्मः किल्बिषकृत्तव ॥ ५-१६८-१९ (३७६७८)
भिन्ना हि सेना नृपते दुःसन्धेया भवत्युत ।
मौला हि पुरुषव्याघ्र किमु नानासमुत्थिताः ॥ ५-१६८-२० (३७६७९)
एषां द्वैधं समुत्पन्नं योधानां युधि भारत ।
तेजोवधो नः क्रियते प्रत्यक्षेण विशेषतः ॥ ५-१६८-२१ (३७६८०)
रथानां क्वच विज्ञानं क्वच भीष्मोऽल्पचेतनः ।
अहमावारयिष्यामि पाण्डवानामनीकिनीम् ॥ ५-१६८-२२ (३७६८१)
आसाद्य माममोघेषुं गमिष्यन्ति दिशो दश ।
पाण्डवाः सहपञ्चालाः शार्दूलं वृषभा इव ॥ ५-१६८-२३ (३७६८२)
क्वच युद्धं विमर्दो वा मन्त्रे सुव्याहृतानि च ।
क्वचभीष्मो गतवयामन्दात्मा कालचोदितः ॥ ५-१६८-२४ (३७६८३)
एकाकी स्पर्धते नित्यं सर्वेण रमता सह ।
न चान्यं पुरुषं कंचिन्मन्यते मोघदर्शनः ॥ ५-१६८-२५ (३७६८४)
श्रोतव्यं खलु वृद्धानमिति शास्त्रनिदर्शनम् ।
न त्वेव ह्यतिवृद्धानां पुनर्बालाहि ते मताः ॥ ५-१६८-२६ (३७६८५)
अहमेको हनिष्यामि पाण्डवानानीकिनीम् ।
सुयुद्धे राज्यशार्दूल यशो भीष्मं गमिष्यति ॥ ५-१६८-२७ (३७६८६)
कृतः सेनापतिस्त्वेष त्वया भीष्मो नराधिप ।
सेनापतौ यशो गन्ता न तु योधान्कथञ्चन ॥ ५-१६८-२८ (३७६८७)
नाहं जीवति गाङ्गेये योत्स्ये राजन्कथञ्चन ।

हते भीष्मे तु योद्धाऽस्मि सर्वैरेव महारथैः ॥ ५-१६८-२९ (३७६८८)
भीष्म उवाच। ५-१६८-३०क्ष् (३८७४)
समुद्यतोयं भारो मे सुमहान्सागरोपमः ।
धार्तराष्ट्रस्य संग्रामे वर्षपूगाभिचिन्तितः ॥ ५-१६८-३० (३७६८९)
तस्मिन्नभ्यागते काले प्रतप्ते रोमहर्षणे ।
मिथो भेदो न मे कार्यस्तेन जीवसि सूतज ॥ ५-१६८-३१ (३७६९०)
न ह्यहं त्वद्य विक्रम्य स्थविरोऽपि शिशोस्तव ।
युद्धश्रद्धामहं छिन्द्यां जीवितस्य च सूतज ॥ ५-१६८-३२ (३७६९१)
जामदग्न्येन रामेण महास्त्राणि विमुञ्चता ।
न मे व्यथा कृता काचित्त्वं तु मे किं करिष्यसि ॥ ५-१६८-३३ (३७६९२)
कामं नैतत्प्रशंसन्ति सन्तः स्वबलसंस्तवम् ।
वक्ष्यामि तु त्वां सन्तप्तो निहीन कुलपांसन ॥ ५-१६८-३४ (३७६९३)
समेतं पार्थिवं क्षत्रं काशिराजस्वयंवरे ।
निर्जित्यैकरथेनैव याः कन्यास्तरसाहृताः ॥ ५-१६८-३५ (३७६९४)
ईदृशानां सहस्राणि विशिष्टानामथो पुनः ।
मयैकेन निरस्तानि ससैन्यानि रणाजिरे ॥ ५-१६८-३६ (३७६९५)
त्वां प्राप्य वैरपुरुषं कुरूणामनयो महान् ।
उपस्थितो विनाशाय यतस्व पुरुषो भव ॥ ५-१६८-३७ (३७६९६)
युध्यस्व समरे पार्थं येन विस्पर्धसे सह ।
द्रक्ष्यामि त्वां विनिर्मुक्तमस्माद्युद्धात्सुदुर्मते ॥ ५-१६८-३८ (३७६९७)
तमुवाच ततो राजा धार्तराष्ट्रः प्रतापवान् ।
मां समीक्षस्व गाङ्गेय कार्यं हि महदुद्यतम् ॥ ५-१६८-३९ (३७६९८)
चिन्त्यतामिदमेकाग्रं मम निःश्रेयसं परम् ।
उभावपि भवन्तौ मे महत्कर्म करिष्यतः ॥ ५-१६८-४० (३७६९९)
भूयश्च श्रोतुमिच्छामि परेषां रथसत्तमान् ।
ये चैवातिथास्तत्र ये चैव रथयूथपाः ॥ ५-१६८-४१ (३७७००)
बलाबलममित्राणां श्रोतुमिच्छामि कौरव ।
प्रभातायां रजन्यां वै इदं युद्धं भविष्यति ॥ ॥ ५-१६८-४२ (३७७०१)

इति श्रीमन्महाभारते उद्योगपर्वणि रथातिरथसंख्यानपर्वणि
अष्टषष्ट्यधिकशततमोऽध्यायः ॥

Mahabharata - Udyoga Parva - Chapter Footnotes

५-१६८-५ विचेतनः मूर्खः ॥
५-१६८-६ घृणी निन्दकः ॥
५-१६८-७ करणाना सहजकवचादीनाम् ॥

५-१६८-१३ भवान् कर्णोऽधरथो मह्यं मम मत इति गाङ्गेयो वदेत्तन्न मृषेति सर्वस्य जगतो मत इति संबन्धः ।त्वद्वाक्यात्सर्वेपि मामवमंस्यन्त इति भावः ।गाङ्गेय न मृषावदे इति खो घो पाठः ॥
५-१६८-१५ अपरायां द्वेषम् ॥
५-१६८-१८ प्रकुरुते प्रकारं भेदं कुरुते ।प्रकारस्तुल्यभेदयोरिति विश्वः ॥
५-१६८- पारंपर्यागताः तेपि भिन्नाः सन्तो दुःसधेया भवन्ति नाना पृथक्भूताः एककार्यार्थं ॥॥॥॥॥।

---

उद्योगपर्व-अध्यय१६९
॥ श्रीः ॥
५.१६९. अध्यायः १६९

Mahabharata - Udyoga Parva - Chapter Topics
भीष्मेण पाण्डवसेनायां रथातिरथसंख्यानम् ॥ १ ॥

Mahabharata - Udyoga Parva - Chapter Text

५-१६९-० (३७७०२)
भीष्म उवाच। ५-१६९-०क्ष् (३८७५)
एते रथास्तवाख्यातास्तथैवातिरथा नृप ।
ये चाप्यर्धरथा राजन्पाण्डवानामतः श्रृणु ॥ ५-१६९-१ (३७७०३)
यदि कौतूहलं तेऽद्य पाण्डवानां बले नृप ।
रथसंख्यां शृणुष्व त्वं सहैभिर्वसुधाधिपैः ॥ ५-१६९-२ (३७७०४)
स्वयं राजा रथोदारः पाण्डवः कुन्तनन्दनः ।
अग्निवत्समरे तात चरिष्यति न संशयः ॥ ५-१६९-३ (३७७०५)
भीमसेनस्तु राजेन्द्र रथोऽष्टगुणसंमितः ।
न तस्यास्ति समो युद्धे गदया सायकैरपि ॥ ५-१६९-४ (३७७०६)
नागायुतबलो मानी तेजसा न स मानुषः ।
माद्रीपुत्रो च रथिनौ द्वावेव पुरुषर्षभौ ॥ ५-१६९-५ (३७७०७)
अश्विनाविव रूपेण तेजसा च समन्वितौ ।
एते चमूमुखगताः स्मरन्तः क्लेशमुत्तमम् ॥ ५-१६९-६ (३७७०८)
रुद्रवत्प्रचरिष्यन्ति तत्र मे नास्ति संशयः ।
सर्व एव महात्मानः सालस्तम्भा इवोद्गताः ॥ ५-१६९-७ (३७७०९)
प्रादेशेनाधिकाः पुंभिरन्यैस्ते च प्रमाणतः ।
सिंहसंहननाः सर्वे पाण्डुपुत्रा महाबलाः ॥ ५-१६९-८ (३७७१०)
चरितब्रह्मचर्याश्च सर्वे तात तपस्विनः ।

ह्रीमन्तः पुरुषव्याघ्रा व्याघ्रा इव बलोत्कटाः ॥ ५-१६९-९ (३७७११)
जवे प्रहारे संमर्दे सर्व एवातिमानुषाः ।
सर्वैर्जिता महीपाला दिग्जये भरतर्षभ ॥ ५-१६९-१० (३७७१२)
न चैषां पुरुषाः केचिदायुधानि गदाः शरान् ।
विषहन्ति सदा कर्तुमधिज्यान्यपि कौरव ॥ ५-१६९-११ (३७७१३)
उद्यन्तुं वा गदा गुर्वीः शरान्वा क्षेप्तुमाहवे ।
जवे लक्ष्यस्य हरणे भोज्ये पांसुविकर्षणे ॥ ५-१६९-१२ (३७७१४)
बालैरपि भवन्तस्तैः सर्व एव विशेषिताः ।
एतत्सैन्यं समासाद्य सर्व एव बलोत्कटाः ॥ ५-१६९-१३ (३७७१५)
विध्वंसयिष्यन्ति रणे मा स्म तैः सह संगमः ।
एकैकशस्त संमर्दे हन्युः सर्वान्महीक्षितः ॥ ५-१६९-१४ (३७७१६)
प्रत्यक्षं तव राजेन्द्र राजसूये यथाभवत् ।
द्रौपद्याश्च परिक्लेशं द्यूते च परुषा गिरः ॥ ५-१६९-१५ (३७७१७)
ते स्मरन्तश्च सङ्ग्रामे चरिष्यन्ति च रुद्रवत् ।
लोहिताक्षो गुडाकेशो नारायणसहायवान् ॥ ५-१६९-१६ (३७७१८)
उभोयोः सेनयोर्वीरो रथो नास्तीति तादृशः ।
न हि देवेषु वा पूर्वं मनुष्येषूरगेषु च ॥ ५-१६९-१७ (३७७१९)
राक्षसेष्वथ यक्षेषु नरेषु कुत एव तु ।
भूतोथ वा भविष्यो वा रथः कश्चिन्मया श्रुतः ॥ ५-१६९-१८ (३७७२०)
समायुक्तो महाराज रथः पार्थस्य धीमतः ।
वासुदेवश्च संयन्ता योद्धा चैव धनञ्जयः ॥ ५-१६९-१९ (३७७२१)
गाण्डीवं च धनुर्दिव्यं ते चाश्वा वातरंहसः ।
अभेद्यं कवचं दिव्यमक्षय्यौ च महेषुधी ॥ ५-१६९-२० (३७७२२)
अस्त्रग्रामश्च माहेन्द्रो रौद्रः कौबेर एवच ।
याम्यश्च वारुणश्चैव गदाश्चोग्रप्रदर्शनाः ॥ ५-१६९-२१ (३७७२३)
वज्रादीनि च मुख्यानि नानाप्रहरणानि च ।
दानवानां सहस्राणि हिरण्यपुरवासिनाम् ॥ ५-१६९-२२ (३७७२४)
हतान्येकरथेनाजौ कस्तस्य सदृशो रथः ।
एष हन्याद्धि संरम्भी बलवान्सत्यविक्रमः ॥ ५-१६९-२३ (३७७२५)
तव सेनां महाबाहुः स्वां चैव परिपालयन् ।
अहं चैनं प्रत्युदियामाचार्यो वा धनञ्जयम् ॥ ५-१६९-२४ (३७७२६)
न तृतीयोऽस्ति राजेन्द्र सेनयोरुभयोरपि ।
य एनं शरवर्षाणि वर्षन्तमुदियाद्रथी ॥ ५-१६९-२५ (३७७२७)
जीमूत इव घर्मान्ते महावातसमीरितः ।
समायुक्तस्तु कौन्तेयो वासुदेवसहायवान् ।
तरुणश्च कृती चैव जीर्णावावामुभावपि ॥ ५-१६९-२६ (३७७२८)

वैशंपायन उवाच। ५-१६९-२७क्ष् (३८७६)
एतच्छ्रुत्वा तु भीष्मस्य राज्ञां दध्वंसिरे तदा ।
काञ्चनाङ्गदिनः पीना भुजाश्चन्दनरूषिताः ॥ ५-१६९-२७ (३७७२९)
मनोभिः सह संवेगैः संस्मृत्य च पुरातनम् ।
सामर्थ्यं पाण्डवेयानां यथा प्रत्यक्षदर्शनात् ॥ ॥ ५-१६९-२८ (३७७३०)

इति श्रीमन्महाभारते उद्योगपर्वणि रथातिरथसंख्यानपर्वणि
एकोनसप्तत्यधिकशततमोऽध्यायः ॥
Mahabharata - Udyoga Parva - Chapter Footnotes

५-१६९-१२ भोज्ये कौटिल्ये मर्मपीडने इतियावत् ।भुज कौटिल्येऽस्य
रूपम्। पांसुविकर्षणे पांसुषु विकर्षणे भूमौ मुष्टियुद्धे इत्यर्थः
॥
५-१६९-२४ प्रत्युदियां युद्धे संमुखः स्याम् ॥

---

उद्योगपर्व-अध्यय१७०
॥ श्रीः ॥
५.१७०. अध्यायः १७०

Mahabharata - Udyoga Parva - Chapter Topics
भीष्मेण पाण्डवसेनायां रथातिरथसंख्यानम् ॥ १ ॥

Mahabharata - Udyoga Parva - Chapter Text

५-१७०-० (३७७३१)
भीष्ण उवाच। ५-१७०-०क्ष् (३८७७)
द्रौपदेया महाराज सर्वे पञ्च महारथाः ।
वैराटिरुत्तरश्चैव रथोदारो मतो मम ॥ ५-१७०-१ (३७७३२)
अभिमन्युर्महाबाहू रथयूथमयूथपः ।
समः पार्थेन समरे वासुदेवेन चारिहा ॥ ५-१७०-२ (३७७३३)
लघ्वस्त्रश्चित्रयोधी च मनस्वी च दृढव्रतः ।
संस्मरन्वै परिक्लेशं स्वपितुर्विक्रमिष्यति ॥ ५-१७०-३ (३७७३४)
सात्यकिर्माधवः शूरो रथयूथपयूथपः ।
एष वृष्णिप्रवीराणाममर्षी जितसाध्वसः ॥ ५-१७०-४ (३७७३५)
उत्तमौजास्तथा राजन्रथोदारो मतो मम ।
युधामन्युश्च विक्रान्तो रथोदारो मतो मम ॥ ५-१७०-५ (३७७३६)
एतेषां बहुसाहस्रा रथा नागा हयास्तथा ।

योत्स्यन्ते ते तनूस्त्यक्त्वा कुन्तीपुत्रप्रियेप्सया ॥ ५-१७०-६ (३७७३७)
पाण्डवैः सह राजेन्द्र तव सेनासु भारत ।
अग्निमारुतवद्राजन्नाह्वयन्तः परस्परम् ॥ ५-१७०-७ (३७७३८)
अजेयौ समरे वृद्धौ विराटद्रुपदौ तथा ।
महारथौ महावीर्यौ मतौ मे पुरुषर्षभौ ॥ ५-१७०-८ (३७७३९)
वयोवृद्धावपि हि तौ क्षत्रधर्मपरायणौ ।
यतिष्येते परं शक्त्या स्थितौ वीरगते पथि ॥ ५-१७०-९ (३७७४०)
संबन्धिकेन राजेन्द्र तौ तु वीर्यबलान्वयात् ।
आर्यवृत्तौ महेष्वासौ स्नेहवीर्यसितावुभौ ॥ ५-१७०-१० (३७७४१)
कारणं प्राप्य तु नराः सर्व एव महाभुजाः ।
शूरा वा कातरा वापि भवन्ति कुरुपुङ्गव ॥ ५-१७०-११ (३७७४२)
एकायनगतावेतौ पार्थिवौ दृढधन्विनौ ।
प्राणांस्त्यक्त्वा परं शक्त्या घट्टितारौ परन्तप ॥ ५-१७०-१२ (३७७४३)
पृथगक्षौहिणीभ्यां तावुभौ संयति दारुणौ ।
संबन्धिभावं रक्षन्तौ महत्कर्म करिष्यतः ॥ ५-१७०-१३ (३७७४४)
लोकवीरौ महेष्वासौ त्यक्तात्मानौ च भारत ।
प्रत्ययं परिरक्षन्तौ महत्कर्म करिष्यतः ॥ ॥ ५-१७०-१४ (३७७४५)

इति श्रीमन्महाभारते उद्योगपर्वणि रथातिरथसंख्यानपर्वणि
सप्तत्यधिकशततमोऽध्यायः ॥

Mahabharata - Udyoga Parva - Chapter Footnotes

५-१७०-९ वीरगते वीरैरनुसृते ॥
५-१७०-१० सितौ बद्धौ ॥

---

उद्योगपर्व-अध्यय१७१
॥ श्रीः ॥
५.१७१. अध्यायः १७१

Mahabharata - Udyoga Parva - Chapter Topics

भीष्मेण पाण्डवसेनायां रथातिरथसंख्यानम् ॥ १ ॥

Mahabharata - Udyoga Parva - Chapter Text

५-१७१-० (३७७४६)
भीष्म उवाच। ५-१७१-०क्ष् (३८७८)
पाञ्चालराजस्य सुतो राजन्परपुरंजयः ।

शिखण्डी रथमुख्यो मे मतः पार्थस्य भारत ॥ ५-१७१-१ (३७७४७)
एष योत्स्यति संग्रामे नाशयन्पूर्वसंस्थितम् ।
परं यशो विप्रथयंस्तव सेनासु भारत ॥ ५-१७१-२ (३७७४८)
एतस्य बहुलाः सेनाः पाञ्चालाश्च प्रभद्रकाः ।
तेनासौ रथवंशेन महत्कर्म करिष्यति ॥ ५-१७१-३ (३७७४९)
धृष्टद्युम्नश्च सेनानीः सर्वसेनासु भारत ।
मतो मेऽतिरथो राजन्द्रोणशिष्यो महारथः ॥ ५-१७१-४ (३७७५०)
एष योत्स्यति संग्रामे सूदयन्वै परान्रणे ।
भगवानिव संक्रुद्धः पिनाकी युगसंक्षये ॥ ५-१७१-५ (३७७५१)
एतस्य तद्रथानीकं कथयन्ति रणप्रियाः ।
बहुत्वात्सागरप्रख्यं देवानामिव संयुगे ॥ ५-१७१-६ (३७७५२)
क्षत्रधर्मा तु राजेन्द्र मतो मेऽर्धरथो नृप ।
धृष्टद्युम्नस्य तनयो बाल्यान्नातिकृतश्रमः ॥ ५-१७१-७ (३७७५३)
शिशुपालसुतो वीरश्चेदिराजो महारथः ।
धृष्टकेतुर्महेष्वासः संबन्धी पाण्डवस्य ह ॥ ५-१७१-८ (३७७५४)
एष चेदिपतिः शूरः सह पुत्रेण भारत ।
महारथानां सुकरं महत्कर्म करिष्यति ॥ ५-१७१-९ (३७७५५)
क्षत्रधर्मरतो मह्यं मतः परपुरंजयः ।
क्षत्रदेवस्तु राजेन्द्र पाण्डवेषु रथोत्तमः ॥ ५-१७१-१० (३७७५६)
जयन्तश्चामितौजाश्च सत्यजिच्च महारथः ।
महारथा महात्मानः सर्वे पाञ्चालसत्तमाः ॥ ५-१७१-११ (३७७५७)
योत्स्यन्ते समरे तात संरब्धा इव कुञ्जराः ।
अजो भोजश्च विक्रान्तौ पाण्डवार्थे महारथौ ॥ ५-१७१-१२ (३७७५८)
योत्स्येते बलिनौ शूरौ परं शक्त्या यतिष्यतः ।
शीघ्रास्त्राश्चित्रयोद्धारः कृतिनो दृढविक्रमाः ॥ ५-१७१-१३ (३७७५९)
केकयाः पञ्च राजेन्द्र भ्रातरो दृढविक्रमाः ।
सर्वे चैव रथोदाराः सर्वे लोहितकध्वजाः ॥ ५-१७१-१४ (३७७६०)
काशिकः सुकुमारश्च नीलो यश्चापरो नृप ।
सूर्यदत्तश्च शङ्खश्च मदिराश्वश्च नामतः ॥ ५-१७१-१५ (३७७६१)
सर्व एव रथोदाराः सर्वे चाहवलक्षणाः ।
सर्वास्त्रविदुषः सर्वे महात्मानो मता मम ॥ ५-१७१-१६ (३७७६२)
वार्धक्षेमिर्महाराज मतो मम महारथः ।
चित्रायुधश्च नृपतिर्मतो मे रथसत्तमः ॥ ५-१७१-१७ (३७७६३)
स हि सङ्ग्रामशोभी च भक्तश्चापि किरीटिनः ।
चेकितानः सत्यधृतिः पाण्डवानां महारथौ ।
द्वाविमौ पुरुषव्याघ्रौ रथोदारौ मतौ मम ॥ ५-१७१-१८ (३७७६४)

व्याघ्रदत्तश्च राजेन्द्र चन्द्रसेनश्च भारत ।
मतौ मम रथोदारौ पाण्डवानां न संशयः ॥ ५-१७१-१९ (३७७६५)
सेनाबिन्दुश्च राजेन्द्र क्रोधहन्ता च नामतः ।
यः समो वासुदेवेन भीमसेनेन वा विभो ॥ ५-१७१-२० (३७७६६)
स योत्स्यति हि विक्रम्य समरे तव सैनिकैः ।
मां च द्रोणं कृपं चैव यथा संमन्यते भवान् ॥ ५-१७१-२१ (३७७६७)
तथा स समरश्लाघी मन्तव्यो रथसत्तमः ।
काश्यः परमशीघ्रास्त्रः श्लाघनीयो नरोत्तमः ॥ ५-१७१-२२ (३७७६८)
रथ एकगुणो मह्यं ज्ञेयः परपुरंजयः ।
अयं च युधि विक्रान्तो मन्तव्योष्टगुणो रथः ॥ ५-१७१-२३ (३७७६९)
सत्यजित्समरश्लाघी द्रुपदस्यात्मजो युवा ।
गतः सोऽतिरथत्वं हि धृष्टद्युम्नेन संमितः ॥ ५-१७१-२४ (३७७७०)
पाण्डवानां यशस्कामः परं कर्म करिष्यति ।
अनुरक्ताश्च शूरश्च रथोऽयमपरो महान् ॥ ५-१७१-२५ (३७७७१)
पाण्ड्यराजो महावीर्यः पाण्डवानां धुरंधरः ।
दृढधन्वा महेष्वासः पाण्डवानां महारथः ॥ ५-१७१-२६ (३७७७२)
श्रेणिमान्कौरवश्रेष्ठ वसुदानश्च पार्थिवः ।
उभावेतावतिरथौ मतौ परपुरंजयौ ॥ ॥ ५-१७१-२७ (३७७७३)

इति श्रीमन्महाभारते उद्योगपर्वणि रथातिरथसंख्यानपर्वणि
एकसप्तत्यधिकशततमोऽध्यायः ॥
Mahabharata - Udyoga Parva - Chapter Footnotes

५-१७१-२ नाशयन् पूर्वसंस्थितं प्राचीनं स्त्रीत्वेनावस्थानं अदर्शयन्
। पौरुषं दर्शयन्नित्यर्थः ॥
५-१७१-१३ शक्त्या क्षयिष्यत इति डो झो पाठः । क्षयिष्यतः
सामर्थ्यं दर्शयिष्यतः। ऐश्वर्यार्थोयं क्षयतिः ॥
५-१७१-१६ विदुषः विद्वांसः ॥

---

उद्योगपर्व-अध्यय१७२
॥ श्रीः ॥
५.१७२. अध्यायः १७२

Mahabharata - Udyoga Parva - Chapter Topics
भीष्मेण दुर्योधनंप्रति शिखण्डिनः स्त्रीपूर्वत्वमभिधाय तेन सह
युद्धाकरणप्रतिज्ञा ॥ १ ॥

५-१७२-० (३७७७४)
भीष्म उवाच। ५-१७२-०क्ष् (३८७९)
रोचमानो महाराज पाण्डवानां महारथः ।
योत्स्यतेऽमरवत्संख्ये परसैन्येषु भारत ॥ ५-१७२-१ (३७७७५)
पुरुजित्कुन्तिभोजश्च महेष्वासो महाबलः ।
मातुलो भीमसेनस्य स च मेऽतिरथो मतः ॥ ५-१७२-२ (३७७७६)
एष वीरो महेष्वासः कृती च निपुणश्च ह ।
चित्रयोधी च शक्तश्च मतो मे रथपुङ्गवः ॥ ५-१७२-३ (३७७७७)
स योत्स्यति हि विक्रम्य मघवानिव दानवैः ।
योधा ये चास्य विख्याताः सर्वे युद्धविशारदाः ॥ ५-१७२-४ (३७७७८)
भागिनेयकृते वीरः स करिष्यति संगरे ।
सुमहत्कर्म पाण्डूनां स्थितः प्रियहिते रतः ॥ ५-१७२-५ (३७७७९)
भैमसेनिर्महाराज हैडिम्बो राक्षसेश्वरः ।
मतो मे बहुमायावी रथयूथपयूथपः ॥ ५-१७२-६ (३७७८०)
योत्स्यते समरे तात मायावी समरप्रियः ।
ये चास्य राक्षसा वीराः सचिवा वशवर्तिनः ॥ ५-१७२-७ (३७७८१)
एते चान्ये च बहवो नानाजनपदेश्वराः ।
समेताः पाण्डवस्यार्थे वासुदेवपुरोगमाः ॥ ५-१७२-८ (३७७८२)
एते प्राधान्यतो राजन्पाण्डवस्य महात्मनः ।
रथाश्चातिरथाश्चैव ये चान्येऽर्धरथा नृप ॥ ५-१७२-९ (३७७८३)
नेष्यन्ति समरे सेनां भीमां यौधिष्ठिरीं नृप ।
महेन्द्रेणेव वीरेण पाल्यमानां किरीटिना ॥ ५-१७२-१० (३७७८४)
तैरहं समरे वीर मायाविद्भिर्जयैषिभिः ।
योत्स्यामि जयमाकाङ्क्षन्नथ वा निधनं रणे ॥ ५-१७२-११ (३७७८५)
वासुदेवं च पार्थं च चक्रगाण्डीवधारिणौ ।
सन्ध्यागताविवार्केन्दू समेष्येते रथोत्तमौ ॥ ५-१७२-१२ (३७७८६)
यं चैव ते रथोदाराः पाण्डुपुत्रस्य सैनिकाः ।
सह सैन्यानहं तांश्च प्रतीयां रणमूर्धनि ॥ ५-१७२-१३ (३७७८७)
एते रथाश्चातिरथाश्च तुभ्यं
यथाप्रधानं नृप कीर्तिता मया ।
तथा परे येऽर्धरथाश्च केचि-
त्तथैव तेषामपि कौरवेन्द्र ॥ ५-१७२-१४ (३७७८८)
अर्जुनं वासुदेवं च ये चान्ये तत्र पार्थिवाः ।
सर्वांस्तान्वारयिष्यामि यावद्द्रक्ष्यामि भारत ॥ ५-१७२-१५ (३७७८९)

पाञ्चाल्यं तु महाबाहो नाहं हन्यां शिखण्डिनम् ।
उद्यतेषमथो दृष्ट्वा प्रतियुध्यन्तमाहवे ॥ ५-१७२-१६ (३७७९०)
लोकस्तं वेद यदहं पितुः प्रियचिकीर्षया ।
प्राप्तं राज्यं परित्यज्य ब्रह्मचर्यव्रते स्थितः ॥ ५-१७२-१७ (३७७९१)
चित्राङ्गदं कौरवाणामाधिपत्येऽभ्यषेचयम् ।
विचित्रवीर्यं च शिशुं यौवराज्येऽभ्यषेचयम् ॥ ५-१७२-१८ (३७७९२)
देवव्रतत्वं विज्ञाप्य पृथिवीं सर्वराजसु ।
नैव हन्यां स्त्रियं जातु न स्त्रीपूर्वं कदाचन ॥ ५-१७२-१९ (३७७९३)
स हि स्त्रीपूर्वको राजञ्शिखण्डी यदि ते श्रुतः ।
कन्या भूत्वा पुमाञ्जातो न योत्स्ये तेन भारत ॥ ५-१७२-२० (३७७९४)
सर्वांस्त्वन्यान्हनिष्यामि पार्थिवान्भरतर्षभ ।
यान्समेष्यामि समरे न तु कुन्तीसुतान्नृप ॥ ॥ ५-१७२-२१ (३७७९५)

इति श्रीमन्महाभारते उद्योगपर्वणि रथातिरथसंख्यानपर्वणि
द्विसप्तत्यधिकशततमोऽध्यायः ॥ ॥ समाप्तं च
रथातिरथसंख्यानपर्व ॥

Mahabharata - Udyoga Parva - Chapter Footnotes

५-१७२-१९ देवव्रतत्वं ब्रह्मचारिव्रतवत्त्वम् ॥

---

उद्योगपर्व-अध्यय१७३
॥ श्रीः ॥
५.१७३. अध्यायः १७३

Mahabharata - Udyoga Parva - Chapter Topics

शिखण्डिनोऽसंहरणकारणप्रश्ने तत्कथनाय भीष्मेण
दुर्योधनंप्रति अम्बोपाख्यानकथनारम्भः ॥ १ ॥
तथा स्वयंवरे स्वेन अम्बादिकन्यात्रयहरणकथनम् ॥ २ ॥

Mahabharata - Udyoga Parva - Chapter Text

५-१७३-० (३७७९६)
दुर्योधनं उवाच। ५-१७३-०क्ष् (३८८०)
किमर्थं भरतश्रेष्ठ नैव हन्याः शिखण्डिनम् ।
उद्यतेषुमथो दृष्ट्वा समरेष्वाततायिनम् ॥ ५-१७३-१ (३७७९७)
पूर्वमुक्त्वा महाबाहो पाञ्चालान्सह सोमकैः ।

हनिष्यामीति गाङ्गेय तन्मे ब्रूहि पितामह ॥ ५-१७३-२ (३७७९८)
भीष्म उवाच। ५-१७३-३क्ष् (३८८१)
श्रृणु दुर्योधन कथां सहैभिर्वसुधाधिपैः ।
यदर्थं युधि संप्रेक्ष्य नाहं हन्यां शिखण्डिनम् ॥ ५-१७३-३ (३७७९९)
महाराजो मम पिता शान्तनुर्लोकविश्रुतः ।
दिष्टान्तमाप धर्मात्मा समये भरतर्षभ ॥ ५-१७३-४ (३७८००)
ततोऽहं भरतश्रेष्ठ प्रतिज्ञां परिपालयन् ।
चित्राङ्गदं भ्रातरं वै महाराज्येऽभ्यपेचयम् ॥ ५-१७३-५ (३७८०१)
तस्मिंश्च निधनं प्राप्ते सत्यवत्या मते स्थितः ।
विचित्रवीर्यं राजानमभ्यषिञ्चं यथाविधि ॥ ५-१७३-६ (३७८०२)
मयाऽभिषिक्तो राजेन्द्र यवीयानपि धर्मतः ।
विचित्रवीर्यो धर्मात्मा मामेव समुदैक्षत ॥ ५-१७३-७ (३७८०३)
तस्य दारक्रियां तात चिकीर्षुरहमप्युत ।
अनुरूपादिव कुलादित्येव च मनो दधे ॥ ५-१७३-८ (३७८०४)
तथाऽश्रौषं महाबाहो तिस्रः कन्याः स्वयंवरे ।
रूपेणाप्रतिमाः सर्वाः काशिराजसुतास्तदा ।
अम्बां चैवाम्बिकां चैव तथैवाम्बालिकामपि ॥ ५-१७३-९ (३७८०५)
राजानश्च समाहूताः पृथिव्यां भरतर्षभ ।
अम्बा ज्येष्ठाभवत्तासामम्बिका त्वथ मध्यमा ॥ ५-१७३-१० (३७८०६)
अम्बालिका च राजेन्द्र राजकन्या यवीयसी ।
सोऽहमेकरथेनैव गतः काशिपतेः पुरीम् ॥ ५-१७३-११ (३७८०७)
अपश्यं ता महाबाहो तिस्रः कन्याः स्वलङ्कृताः ।
राज्ञश्चैव समाहूतान्पार्थिवान्पृथिवीपते ॥ ५-१७३-१२ (३७८०८)
ततोऽहं तान्नृपान्सर्वानाहूय समरे स्थितान् ।
रथमारोपयाञ्चक्रे कन्यास्ता भरतर्षभ ॥ ५-१७३-१३ (३७८०९)
वीर्यशुल्काश्च ता ज्ञात्वा समारोप्य रथं तदा ।
अवोचं पार्थिवान्सर्वानहं तत्र समागतान् ।
भीष्मः शान्तनवः कन्या हरतीति पुनःपुनः ॥ ५-१७३-१४ (३७८१०)
ते यतध्वं परं शक्त्या सर्वे मोक्षाय पार्थिवाः ।
प्रसह्य हि हराम्येष मिषतां वो नरर्षभाः ॥ ५-१७३-१५ (३७८११)
ततस्ते पृथिवीपालाः समुत्पतुरुदायुधाः ।
योगो योग इति क्रुद्धाः सारथीनभ्यचोदयन् ॥ ५-१७३-१६ (३७८१२)
ते रथैर्गसङ्काशैर्गजैश्च गजयोधिनः ।
पुष्टैश्चाश्वैर्महीपालाः समुत्पेतुरुदायुधाः ॥ ५-१७३-१७ (३७८१३)
ततस्ते मां महीपालाः सर्व एव विशां पते ।
रथव्रातेन महता सर्वतः पर्यवारयन् ॥ ५-१७३-१८ (३७८१४)

तानहं शरवर्षेण समन्तात्पर्यवारयम् ।
सर्वान्नृपांश्चाप्यजयं देवराडिव दानवान् ॥ ५-१७३-१९ (३७८१५)
अपातयं शरैर्दीप्तैः प्रहसन्भरतर्षभ ।
तेषामापततां चित्रान्ध्वजान्हेमपरिष्कृतान् ॥ ५-१७३-२० (३७८१६)
एकैकेन हि बाणेन भूमौ पातितवानहम् ।
हयांस्तेषां गजांश्चैव सारथींश्चाप्यहं रणे ॥ ५-१७३-२१ (३७८१७)
ते निवृत्ताश्च भग्नाश्च दृष्ट्वा तल्लाघवं
मम। ५-१७३-२२ब्प्रणिपेतुश्च सर्वे वै प्रशशंसुश्च पार्थिवाः ॥
५-१७३-२२ (३७८१८)
तत आदाय ताः कन्या नृपतींश्च विसृज्य तान्।'
अथाऽहं हास्तिनपुरमायां जित्वा महीक्षितः ॥ ५-१७३-२३ (३७८१९)
ततोऽहं ताश्च कन्या वै भ्रातुरर्थाय भारत ।
तच्च कर्म महाबाहो सत्यवत्यै न्यवेदयम् ॥ ॥ ५-१७३-२४ (३७८२०)

इति श्रीमन्महाभारते उद्योगपर्वणि अम्बोपाख्यानपर्वणि
त्रिसप्तत्यधिकशततमोऽध्यायः ॥
Mahabharata - Udyoga Parva - Chapter Footnotes

५-१७३-४ दिष्टान्तं मरणम् ॥

---

उद्योगपर्व-अध्यय१७४
॥ श्रीः ॥
५.१७४. अध्यायः १७४

Mahabharata - Udyoga Parva - Chapter Topics
भीष्मेण विचित्रवीर्यस्य कन्यात्रयेण विवाहप्रयतने अम्बया स्वस्य
साल्वकामत्वकथनपूर्वकं तत्समीपगमने भीष्मंप्रत्यनुज्ञायाचनम्
॥ १ ॥

Mahabharata - Udyoga Parva - Chapter Text

५-१७४-० (३७८२१)
भीष्म उवाच। ५-१७४-०क्ष् (३८८२)
ततोऽहं भरतश्रेष्ठ मातरं वीरमातरम् ।
अभिगम्योपसंगृह्य दाशेयीमिदमब्रुवम् ॥ ५-१७४-१ (३७८२२)
इमाः काशिपतेः कन्या मया निर्जित्य पार्थिवान् ।
विचित्रवीर्यस्य कृते वीर्यशुल्का हृता इति ॥ ५-१७४-२ (३७८२३)

ततो मूर्धन्युपाघ्राय पर्यश्रुनयना नृप ।
आह सत्यवती हृष्टा दिष्ट्या पुत्र जितं त्वया ॥ ५-१७४-३ (३७८२४)
सत्यवत्यास्त्वनुमते विवाहे समुपस्थिते ।
उवाच वाक्यं सव्रीडा ज्येष्ठा काशिपतेः सुता ॥ ५-१७४-४ (३७८२५)
भीष्म त्वमसि धर्मज्ञः सर्वशास्त्रविशारदः ।
श्रुत्वा च वचनं धर्म्यं मह्यं कर्तुमिहार्हसि ॥ ५-१७४-५ (३७८२६)
मया साल्वपत्तिः पूर्वं मनसाऽभिवृतो वरः ।
तेन चास्मि वृता पूर्वं रहस्यविदिते पितुः ॥ ५-१७४-६ (३७८२७)
कथं मामन्यकामां त्वं राजधर्ममतीत्य वै ।
वासयेथा गृहे भीष्म कौरवः सन्विशेषतः ॥ ५-१७४-७ (३७८२८)
एतद्बुद्ध्या विनिश्चित्य मनसा भरतर्षभ ।
यत्क्षमं ते महाबाहो तदिहारब्धुमर्हसि ॥ ५-१७४-८ (३७८२९)
स मां प्रतीक्षते व्यक्तं साल्वराजो विशांपते ।
तस्मान्मां त्वं कुरुश्रेष्ठ समनुज्ञातुमर्हसि ॥ ५-१७४-९ (३७८३०)
कृपां कुरु महाबाहो मयि धर्मभृतां वर ।
त्वं हि सत्यव्रतो वीर पृथिव्यामिति नः श्रुतम् ॥ ॥ ५-१७४-१० (३७८३१)

इति श्रीमन्महाभारते उद्योगपर्वणि अम्बोपाख्यनपर्वणि
चतुःसप्तत्यधिकशततमोऽध्यायः ॥

Mahabharata - Udyoga Parva - Chapter Footnotes

५-१७४-१ उपसंगृह्य पादयोः पतित्वा ॥
५-१७५-५ मह्यं मम ॥

---

उद्योगपर्व-अध्यय१७५
॥ श्रीः ॥
५.१७५. अध्यायः १७५

Mahabharata - Udyoga Parva - Chapter Topics

भीष्मानुज्ञया साल्वं गताया अम्बायास्तेन परित्यागः ॥ १ ॥
अम्बया भीष्मस्य प्रतिचिकीर्षया तापसाश्रममेत्य तेषु
स्ववृत्तान्तनिवेदनम् ॥ २ ॥

Mahabharata - Udyoga Parva - Chapter Text

५-१७५-० (३७८३२)

भीष्म उवाच। ५-१७५-०क्ष् (३८८३)
ततोऽहं समनुज्ञाप्य कालीं गन्धवतीं तदा ।
मन्त्रिणश्चर्त्विजश्चैव तथैव च पुरोहितान् ।
समनुज्ञामिषं कन्यामम्बां ज्येष्ठां नराधिप ॥ ५-१७५-१ (३७८३३)
अनुज्ञाता ययौ सा तु कन्या साल्वपतेः पुरम् ।
वृद्धैर्द्विजातिभिर्गुप्ता धात्र्या चानुगता तदा ॥ ५-१७५-२ (३७८३४)
अतीत्य च तमध्वानमासमाद नराधिपम ।
सा तमासाद्य राजानं साल्वं वचनमब्रवीत् ॥ ५-१७५-३ (३७८३५)
आगताहं महाबाहो त्वामुद्दिश्य महामते ।
ग्अभिनन्दस्व मां राजन्सदा प्रियहिते रताम् ॥ ५-१७५-४ (३७८३६)
प्रतिपादय मां राजन्धर्मादींश्वर धर्मतः ।
त्वं हि मे मनसा ध्यातस्त्वया चाप्युपमन्त्रिता ॥ ५-१७५-५ (३७८३७)
भीष्म उवाच।' ५-१७५-६क्ष् (३८८४)
तामब्रवीत्साल्वपतिः स्मयन्निव विशांपते ।
त्वयाऽन्यपूर्वया नाहं भार्यार्थी वरवर्णिनि ॥ ५-१७५-६ (३७८३८)
गच्छ भद्रे पुनस्तत्र सकाशं भीष्मकस्य वै ।
नाहमिच्छामि भीष्मेण गृहीतां त्वां प्रसह्य वै ॥ ५-१७५-७ (३७८३९)
त्वं हि भीष्मेण निर्जित्य नीता प्रीतिमती तदा ।
परामृश्य महायुद्धे निर्जित्य पृथिवीपतीन् ॥ ५-१७५-८ (३७८४०)
नाहं त्वय्यन्यपूर्वायां भार्यार्थी वरवर्णिनि ।
कथमस्मद्विधो राजा परपूर्वां प्रवेशयेत् ॥ ५-१७५-९ (३७८४१)
नारीं विदितविज्ञानः परेषां धर्ममादिशन् ।
यथेष्टं गम्यतां भद्रे मा त्वां कालोऽत्यगादयम् ॥ ५-१७५-१० (३७८४२)
अम्बा तमब्रवीद्राजन्ननङ्गशरपीडिता ।
नैवं वद महीपाल नैतदेवं कथंचन ॥ ५-१७५-११ (३७८४३)
नास्मि प्रीतिमती नीता भीष्मेणामित्रकर्शन ।
बलान्नीतास्मि रुदती विद्राव्य पृथिवीपतीन् ॥ ५-१७५-१२ (३७८४४)
भजस्व मां साल्वपते भक्तां बालामनागसम् ।
भक्तानां हि परित्यागो न धर्मेषु प्रशस्यते ॥ ५-१७५-१३ (३७८४५)
साहमामन्त्र्य गाङ्गेयं समरेष्वनिवर्तिनम् ।
अनुज्ञाता च तेनैव ततोऽहं भृशमागता ॥ ५-१७५-१४ (३७८४६)
न स भीष्मो महाबाहुर्मामिच्छति विशांपते ।
भ्रातृहेतोः समारम्भो भीष्मस्येति श्रुतं मया ॥ ५-१७५-१५ (३७८४७)
भगिन्यौ मम ये नीते अम्बिकाम्बालिके नृप ।
प्रादाद्विचित्रवीर्याय गाङ्गेयो हि यवीयसे ॥ ५-१७५-१६ (३७८४८)
यथा साल्वपते नान्यं वरं यामि कथंचन ।

त्वामृते पुरुषव्याघ्र तथा मूर्धानमालभे ॥ ५-१७५-१७ (३७८४९)
न चान्यपूर्वा राजेन्द्र त्वामहं समुपस्थिता ।
सत्यं ब्रवीमि साल्वैतत्सत्येनात्मानमालभे ॥ ५-१७५-१८ (३७८५०)
भजस्व मां विशालाक्ष स्वयं कन्यामुपस्थिताम् ।
अनन्यपूर्वां राजेन्द्र त्वत्प्रसादाभिकाङ्क्षिणीम् ॥ ५-१७५-१९ (३७८५१)
तामेवं भाषमाणां तु साल्वः काशिपतेः सुताम् ।
अत्यजद्भरतश्रेष्ठ जीर्णां त्वचमिवोरगः ॥ ५-१७५-२० (३७८५२)
एवं बहुविधैर्वाक्यैर्याच्यमानस्तया नृपः ।
नाश्रद्दधत्साल्वपतिः कन्यायां भरतर्षभ ॥ ५-१७५-२१ (३७८५३)
ततः सा मन्युनाऽऽविष्टा ज्येष्ठा काशिपतेः सुता ।
अब्रवीत्साश्रुनयना बाष्पविप्लुतया गिरा ॥ ५-१७५-२२ (३७८५४)
त्वया त्यक्ता गमिष्यामि यत्र तत्र विशांपते ।
तत्र मे गतयः सन्तु सन्तः सत्यं यथा ध्रुवम् ॥ ५-१७५-२३ (३७८५५)
एवं तां भाषमाणां तु कन्यां साल्वपतिस्तदा ।
परितत्याज कौरव्य करुणं परिदेवतीम् ॥ ५-१७५-२४ (३७८५६)
गच्छ गच्छेति तां साल्वः पुनः पुनरभाषत ।
बिभेमि भीष्मात्सुश्रोणि त्वं च भीष्मपरिग्रहः ॥ ५-१७५-२५ (३७८५७)
एवमुक्ता तु सा तेन साल्वेनादीर्घदर्शिना ।
निश्चक्राम पुराद्दीना रुदती कुररी यथा ॥ ५-१७५-२६ (३७८५८)
भीष्म उवाच। ५-१७५-२७क्ष् (३८८५)
निष्क्रामन्ती तु नगराच्चिन्तयामास दुःखिता ।
पृथिव्यां नास्ति युवतिर्विषमस्थतरा मया ॥ ५-१७५-२७ (३७८५९)
बन्धुभिर्विप्रहीणास्मि साल्वेन च निराकृता ।
न च शक्यं पुनर्गन्तुं मया वारणसाह्वयम् ॥ ५-१७५-२८ (३७८६०)
अनुज्ञाता तु भीष्मेण साल्वमुद्दिश्य कारणम् ।
किं नु गर्हाम्यथात्मानमथ भीष्मं दुरासदम् ॥ ५-१७५-२९ (३७८६१)
अथवा पितरं मूढं यो मेऽकार्षीत्स्वयंवरम् ।
मयाऽयं स्वकृतो दोषो याऽहं भीष्मरथात्तदा ॥ ५-१७५-३० (३७८६२)
प्रवृत्ते दारुणे युद्धे साल्वार्थं नापतं पुरा ।
तस्येयं फलनिर्वृत्तिर्यदापन्नाऽस्मि मूढवत् ॥ ५-१७५-३१ (३७८६३)
धिग्भीष्मं धिक्क मे मन्दं पितरं मूढचेतसम् ।
येनाहं वीर्यशुल्केन पण्यस्त्रीव प्रचोदिता ॥ ५-१७५-३२ (३७८६४)
धिङ्मां धिक्साल्वराजानं धिग्धातारमथापि वा ।
येषां दुर्नीतभावेन प्राप्तास्म्यापदमुत्तमाम् ॥ ५-१७५-३३ (३७८६५)
सर्वथा भागधेयानि स्वानि प्राप्नोति मानवः ।
अनयस्यास्य तु मुखं भीष्मः शान्तनवो मम ॥ ५-१७५-३४ (३७८६६)

सा भीष्मे प्रतिकर्तव्यमहं पश्यामि सांप्रतम् ।
तपसा वा युधा वापि दुःखहेतुः स मे मतः ॥ ५-१७५-३५ (३७८६७)
को नु भीष्मं युधा जेतुमुत्सहेत महीपतिः ।
एवं सा परिनिश्चित्य जगाम नगराद्बहिः ॥ ५-१७५-३६ (३७८६८)
आश्रमं पुण्यशीलानां तापसानां महात्मनाम् ।
ततस्तामवसद्रात्रिं तापसैः परिवारिता ॥ ५-१७५-३७ (३७८६९)
आचख्यौ च यथावृत्तं सर्वमात्मनि भारत ।
विस्तरेण महाबाहो निखिलेन शुचिस्मिता ।
हरणं च विसर्गं च साल्वेन च विसर्जनम् ॥ ५-१७५-३८ (३७८७०)
ततस्तत्र महानासीद्ब्राह्मणः संशितव्रतः ।
शैखावत्यस्तपोबृद्धः शास्त्रे चारण्यके गुरुः ॥ ५-१७५-३९ (३७८७१)
आर्ता तामाह स मुनिः शैखावत्यो महातपाः ।
निःश्वसन्तीं सतीं बालां दुःखशोकपरायणाम् ॥ ५-१७५-४० (३७८७२)
एवं गते तु किं भद्रे शक्यं कर्तुं तपस्विभिः ।
आश्रमस्थैर्महाभागे तपोयुक्तैर्महात्मभिः ॥ ५-१७५-४१ (३७८७३)
सा त्वेनमब्रवीद्राजन्क्रियतां मदनुग्रहः ।
प्राव्राज्यमहमिच्छामि तपस्तप्स्यामि दुश्चरम् ॥ ५-१७५-४२ (३७८७४)
मयैव यानि कर्माणि पूर्वदेहे तु मूढया ।
कृतानि नूनं पापानि तेषामेतत्फलं ध्रुवम् ॥ ५-१७५-४३ (३७८७५)
नोत्सहे तु पुनर्गन्तुं स्वजनं प्रति तापसाः ।
प्रत्याख्याता निरानन्दा साल्वेन च निराकृता ॥ ५-१७५-४४ (३७८७६)
उपदिष्टमिहेच्छामि तापस्यं वीतकल्मषाः ।
युष्माभिर्देवसंकाशैः कृपा भवतु वो मयि ॥ ५-१७५-४५ (३७८७७)
स तामाश्वासयत्कन्यां दृष्टान्तागमहेतुभिः ।
सान्त्वयामास कार्यं च प्रतिजज्ञे द्विजैः सह ॥ ॥ ५-१७५-४६ (३७८७८)

इति श्रीमन्महाभारते उद्योगपर्वणि अम्बोपाख्यानपर्वणि
पञ्चसप्तत्यधिकशत्तमोऽध्यायः ॥

Mahabharata - Udyoga Parva - Chapter Footnotes

५-१७५-३९ शैखावत्यः शिखावान् वह्निस्तत्साध्यानि श्रौतस्मार्तकर्माणि
शैखावतानि तेषु साधुः शैखावत्यः ।आरण्यके उपनिषदि
गुरुब्रह्मविदित्यर्थः ॥
५-१७५-४६ दृष्टान्तो लौकिकोदाहरणम् ।आगमो वेदः।हेतुर्युक्तिः ॥

---

उद्योगपर्व-अध्यय१७६

॥ श्रीः ॥

५.१७६. अध्यायः १७६

Mahabharata - Udyoga Parva - Chapter Topics

अम्बांप्रति तापसेषु चिन्तयत्सु होत्रवाहनाम्नोऽम्बामातामहस्य तत्रागमनम् ॥ १ ॥
तेनाम्बायाः परशुरामंप्रति शरणागतिचोदना ॥ २ ॥
तत्र यदृच्छासमागते अकृतव्रणनाम्नि महर्षौ अम्बया स्ववृत्तन्तनिवेदनम् ॥ ३ ॥

Mahabharata - Udyoga Parva - Chapter Text

५-१७६-० (३७८७९)
भीष्म उवाच। ५-१७६-०क्ष् (३८८६)
ततस्ते तापसाः सर्वे कार्यवन्तोऽभवंस्तदा ।
तां कन्यां चिन्तयन्तस्ते किंकार्यमिति धर्मिणः ॥ ५-१७६-१ (३७८८०)
केचिदाहुः पितुर्वेश्म नीयतामिति तापसाः ।
केचिदस्यदुमालम्भे मतिं चक्रुर्हि तापसाः ॥ ५-१७६-२ (३७८८१)
केचित्साल्वपतिं गत्वा नियोज्यमिति मेनिरे ।
नेति केचिद्व्यवस्यन्ति प्रत्याख्याता हि तेन सा ॥ ५-१७६-३ (३७८८२)
एवं गते तु किं शक्यं भद्रे कर्तुं मनीषिभिः ।
पुनरूचुश्च तां सर्वे तापसाः संशितव्रताः ॥ ५-१७६-४ (३७८८३)
अलं प्रव्रजितेनेह भद्रे श्रृणु हितं वचः ।
इतो गच्छस्व भद्रं ते पितुरेव निवेशनम् ॥ ५-१७६-५ (३७८८४)
प्रतिपस्त्यति राजा स पिता ते यदनन्तरम् ।
तत्र वत्स्यसि कल्याणि सुखं सर्वगुणान्विता ॥ ५-१७६-६ (३७८८५)
न च तेऽन्या गतिर्न्याय्या भवेद्भद्रे यथा पिता ।
पतिर्वापि गतिर्नार्याः पिता वा वरवर्णिनि ।
गतिः पतिः समस्थाया विषमे च पिता गतिः ॥ ५-१७६-७ (३७८८६)
प्रव्रज्या हि सुदुःखेयं सुकुमार्या विशेषतः ।
राजपुत्र्याः प्रकृत्या चक कुमार्यास्तव भामिनि ॥ ५-१७६-८ (३७८८७)
भद्रे दोषा हि विद्यन्ते बहवो वरवर्णिनि ।
आश्रमे वै वसन्त्यास्ते न भवेयुः पितुर्गृहे ॥ ५-१७६-९ (३७८८८)
ततस्त्वन्येऽब्रुवन्वाक्यं तापसास्तां तपस्विनीम् ॥ ५-१७६-१० (३७८८९)
त्वामिहैकाकिनीं दृष्ट्वा निर्जने गहने वने ।
प्रार्थयिष्यन्तिराजानस्तस्मान्मैवं मनः कृथाः ॥ ५-१७६-११ (३७८९०)

अम्बोवाच। ५-१७६-१२क्ष् (३८८७)
न शक्यं काशिनगरं पुनर्गन्तुं पितुर्गृहान् ।
अवज्ञाता भविष्यामि बान्धवानां न संशयः ॥ ५-१७६-१२ (३७८९१)
उषितास्मि तथा बाल्ये पितुर्वेश्मनि तापसाः ।
नाहं गमिष्ये भद्रं वस्तत्र यत्र पिता मम ।
तपस्तप्तुमभीप्सामि तापसैः परिरक्षिता ॥ ५-१७६-१३ (३७८९२)
यथा परेऽपि मे लोके न स्यादेवं महात्ययः ।
दौर्भाग्यं तापसश्रेष्ठास्तस्मात्तप्स्याम्यहं तपः ॥ ५-१७६-१४ (३७८९३)
भीष्म उवाच। ५-१७६-१५क्ष् (३८८८)
इत्येवं तेषु विप्रेषु चिन्तयन्सु यथातथम् ।
राजर्षिस्तद्वनं प्राप्तस्तपस्वी होत्रवाहनः ।
ग्तां तथा भाविनीं दृष्ट्वा श्रुत्वा चोद्विग्नमानसः' ५-१७६-१५ (३७८९४)
ततस्ते तापसाः सर्वे पूजयन्ति स्म तं नृपम् ।
पूजाभिः स्वागताद्याभिरासनेनोदकेन च ॥ ५-१७६-१६ (३७८९५)
तस्योपविष्टस्य सतो विश्रान्तस्योपश्रृण्वतः ।
पुनरेव कथां चक्रुः कन्यां प्रति वनौकसः ॥ ५-१७६-१७ (३७८९६)
अम्बायास्तां कथां श्रुत्वा काशिराज्ञश्च भारत ।
राजर्षिः स महातेजा बभूवोद्विग्नमानसः ॥ ५-१७६-१८ (३७८९७)
तां तथावादिनीं श्रुत्वा दृष्ट्वा च स महातपाः ।
राजर्षिः कृपयाविष्टो महात्मा होत्रवाहनः ॥ ५-१७६-१९ (३७८९८)
स वेपमान उत्थाय मातुस्तस्याः पिता तदा ।
तां कन्यामङ्कमारोप्य पर्यश्वासयत प्रभो ॥ ५-१७६-२० (३७८९९)
स तामपृच्छत्कात्स्न्येंन व्यसनोत्पत्तिमादितः ।
सा च तस्मै यथावृत्तं विस्तरेण न्यवेदयत् ॥ ५-१७६-२१ (३७९००)
ततः स राजर्षिरभूद्दुःखशोकसमन्वितः ।
कार्यं च प्रतिपेदे तन्मनसां सुमहातपाः ॥ ५-१७६-२२ (३७९०१)
अब्रवीद्वेपमानश्च कन्यामार्तां सुदुःखितः ।
मा गाः पितुर्गृहं भद्रे मातुस्ते जनको ह्यहम् ॥ ५-१७६-२३ (३७९०२)
दुःखं छिन्द्यामहं ते वै मयि वर्तस्व पुत्रिके ।
पर्याप्तं ते मनो वत्से यदेवं परिशुष्यसि ॥ ५-१७६-२४ (३७९०३)
गच्छ मद्वचनाद्रामं जामदग्न्यं तपस्विनम् ।
रामस्ते सुमहद्दुःखं शोकं चैवापनेष्यति ॥ ५-१७६-२५ (३७९०४)
हनिष्यति रणे भीष्मं न करिष्यति चेद्वचः ।
तं गच्छ भार्गवश्रेष्ठं कालाग्निसमतेजसम् ॥ ५-१७६-२६ (३७९०५)
प्रतिष्ठापयिता स त्वां समे पथि महातपाः ।
ततस्तु सुस्वरं बाष्पसुत्सृजन्ती पुनः पुनः ॥ ५-१७६-२७ (३७९०६)

अब्रवीत्पितरं मातुः मा तदा होत्रवाहनम् ।
अभिवादयित्वा शिरसा गमिष्ये तव शासनात् ॥ ५-१७६-२८ (३७९०७)
अपि नामाद्य पश्येयमार्यं तं लोकविश्रुतम् ।
कथं च तीव्रं दुःकं मे नाशकयिष्यति भार्गवः ।
एतदिच्छाम्यहं ज्ञातुं यथा यास्यमि तत्र वैः ॥ ५-१७६-२९ (३७९०८)
होत्रवाहन उवाच। ५-१७६-३०क्ष् (३८८९)
रामं द्रक्ष्यसि भद्रे त्वं जामदग्न्यं महावने ।
उग्रे तपसि वर्तन्तं सत्यसन्धं महाबलम् ॥ ५-१७६-३० (३७९०९)
महेन्द्रं वै गिरिश्रेष्ठं रामो नित्यमुपास्ति ह ।
ऋषयो वेदविद्वांसो गन्धर्वाप्सरसस्तथा ॥ ५-१७६-३१ (३७९१०)
तत्र गच्छस्व भद्रं ते ब्रूयाश्चैनं वचो मम ।
अभिवाद्य च तं मूर्ध्ना तपोवृद्धं दृढव्रतम् ॥ ५-१७६-३२ (३७९११)
ब्रूयाश्चैनं पुनर्भद्रे यत्ते कार्यं मनीषितम् ।
मयि संकीर्तिते रामः सर्वं तत्ते करिष्यति ॥ ५-१७६-३३ (३७९१२)
मम रामः सखा वत्से प्रीतियुक्तः सुहृच्च मे ।
जमदग्निसुतो वीरः सर्वशस्त्रभृतां वरः ॥ ५-१७६-३४ (३७९१३)
एवं ब्रुवति कन्यां तु पार्थिवे होत्रवाहने ।
अकृतव्रणः प्रादुरासीद्रामस्यानुचरः प्रियः ॥ ५-१७६-३५ (३७९१४)
ततस्ते मनुयः सर्वे समुत्तस्थुः महस्रशः ।
स च राजा वयोवृद्धः सृञ्ययो होत्रवाहनः ॥ ५-१७६-३६ (३७९१५)
ततो दृष्ट्वा कृतातिथ्यमन्योन्यं ते वनौकसः ।
सहिता भरतश्रेष्ठ निषेदुः परिवार्य तम् ॥ ५-१७६-३७ (३७९१६)
ततस्ते कथयामासुः कथास्तास्ता मनोरमाः ।
धन्या दिव्याश्च राजेन्द्र प्रीतिहर्षमुदा युताः ॥ ५-१७६-३८ (३७९१७)
ततः कथान्ते राजर्षिर्महात्मा होत्रवाहनः ।
रामं श्रेष्ठं महर्षीणामपृच्छदकृतव्रणम् ॥ ५-१७६-३९ (३७९१८)
क्व संप्रति महाबाहो जामदग्न्यः प्रतापवान् ।
अकृतव्रण शक्यो वै द्रष्टुं वेदविदां वर ॥ ५-१७६-४० (३७९१९)
अकृतव्रण उवाच। ५-१७६-४१क्ष् (३८९०)
भवन्तमेव सततं रामः कीर्तयति प्रभो ।
सृञ्जयो मे प्रियसखो राजर्षिरिति पार्थिव ॥ ५-१७६-४१ (३७९२०)
इह रामः प्रभाते श्वो भवितेति मतिर्मम ।
द्रष्टस्येनमिहायान्तं तव दर्शनकाङ्क्षया ॥ ५-१७६-४२ (३७९२१)
इयं च कन्या राजर्षे किमर्थं वनमागता ।
कस्य चेयं तव च का भवतीच्छामि वेदितुम् ॥ ५-१७६-४३ (३७९२२)
होत्रवाहन उवाच। ५-१७६-४४क्ष् (३८९१)

दौहित्रीयं मम विभो काशिराजसुता प्रिया ।
ज्येष्ठा स्वयंवरे तस्थौ भगिनीभ्यां सहानध ॥ ५-१७६-४४ (३७९२३)
इयमम्बेति विख्याता ज्येष्ठा काशिपतेः सुता ।
अम्बिकाम्बालिके कन्ये कनीयस्यौ तपोधन ॥ ५-१७६-४५ (३७९२४)
समेतं पार्थिवं क्षत्रं काशिपुर्यां ततोऽभवत् ।
कन्यानिमित्तं विप्रर्षे तत्रासीदुत्सवो महान् ॥ ५-१७६-४६ (३७९२५)
तता किल महावीर्यो भीष्मः शान्तनवो नृपान् ।
अधिक्षिप्य महातेजास्तिस्त्रः कन्या जहार ताः ॥ ५-१७६-४७ (३७९२६)
निर्जित्य पृथिवीपालानथ भीष्मो जगाह्वयम् ।
आजगाम विशुद्धात्मा कन्याभिः सह भारतः ॥ ५-१७६-४८ (३७९२७)
सत्यवत्यै निवेद्याथ विवाहं समनन्तरम् ।
भ्रातुर्विचित्रवीर्यस्य समाज्ञापयत प्रभुः ॥ ५-१७६-४९ (३७९२८)
तं तु वैवाहिकं दृष्ट्वा कन्येयं समुपार्जितम् ।
अब्रवीत्तत्र गाङ्गेयं मन्त्रिमध्ये द्विजर्षभ ॥ ५-१७६-५० (३७९२९)
मया साल्वपतिर्वीरो मनसाऽभिवृतः पतिः ।
न ममार्हसि धर्मज्ञ दातुं भ्रात्रेऽन्यमानसाम् ॥ ५-१७६-५१ (३७९३०)
तच्छ्रुत्वा वचनं भीष्मः संमन्त्र्य सह मन्त्रिभिः ।
निश्चित्य विससर्जेमां सत्यवत्या मते स्थितः ॥ ५-१७६-५२ (३७९३१)
अनुज्ञाता तु भीष्मेण साल्वं सौभपतिं ततः ।
कन्येयं मुदिता तत्र काले वाचनमब्रवीत् ॥ ५-१७६-५३ (३७९३२)
विसर्जितास्मि भीष्मेण धर्मं मां प्रतिपादय ।
मनसाभिवृत्तः पूर्वं मया त्वं पार्थिवर्षम ॥ ५-१७६-५४ (३७९३३)
प्रत्याचख्यौ च साल्वोऽस्याश्चारित्रस्याभिशङ्कितः ।
सेयं तपोवनं प्राप्ता तापस्येऽभिरता भृशम् ॥ ५-१७६-५५ (३७९३४)
मया च प्रत्यभिज्ञाता वंशस्य परिकीर्तनात् ।
अस्य दुःखस्य चोत्पत्तिं भीष्ममेवेह मन्यते । ५-१७६-५६ (३७९३५)
अम्बोवाच। ५-१७६-५७क्ष् (३८९२)
भगवन्नेवमेवेह यथाह पृथिवीपतिः ।
शरीरकर्ता मातुर्मे सृञ्जयो होत्रवाहनः ॥ ५-१७६-५७ (३७९३६)
न ह्युत्सहे स्वनगरं प्रतियातुं तपोधन ।
अपमानभयाच्चैव व्रीडया च महामुने ॥ ५-१७६-५८ (३७९३७)
यत्तु मां भगवान्रामो वक्ष्यति द्विजसत्तम ।
तन्मे कार्यतमं कार्यमिति मे भगवन्मतिः ॥ ॥ ५-१७६-५९ (३७९३८)

इति श्रीमन्महाभारते उद्योगपर्वणि अम्बोपाख्यानपर्वणि
षट्सप्तत्यधिकशततमोऽध्यायः ॥

५-१७६-१४ महात्ययः सुखनाशः ।मम उद्धव उत्सव इति कोशः ॥
५-१७६-५६ उत्पत्तिं कारणम् ॥

---

उद्योगपर्व-अध्यय१७७
॥ श्रीः ॥
५.१७७. अध्यायः १७७

Mahabharata - Udyoga Parva - Chapter Topics
अकृतव्रणेन सविमर्शं भीष्मस्य प्रतीकारनिर्धारणम् ॥ १ ॥
अम्बया परेद्युरागतं जामदग्न्यंप्रति भीष्मवधप्रार्थना ॥ २ ॥

Mahabharata - Udyoga Parva - Chapter Text

५-१७७-० (३७९३९)
अकृतव्रण उवाच। ५-१७७-०क्ष् (३८९३)
दुःख द्वयोरिदं भद्रे कतरस्य चिकीर्षसि ।
प्रतिकर्तव्यमबले तत्त्वं वत्से वदस्व मे ॥ ५-१७७-१ (३७९४०)
यदि सौभपतिर्भद्रे नियोक्तव्यो मतस्तव ।
नियोक्ष्यति महात्मा स रामस्त्वद्धितकाम्यया ॥ ५-१७७-२ (३७९४१)
अथापगेयं भीष्मं त्वं रामेणेच्छसि धीमता ।
रणे विनिर्जितं द्रष्टुं कुर्यात्तदपि भार्गवः ॥ ५-१७७-३ (३७९४२)
सृञ्जयस्य वचः श्रुत्वा तव चैव शुचिस्मिते ।
यदत्र ते भृशं कार्यं तदद्यैव विचिन्त्यताम् ॥ ५-१७७-४ (३७९४३)
अम्बोवाच। ५-१७७-५क्ष् (३८९४)
अपनीतास्मि भीष्मेण भगवन्नविजानता ।
नाभिजानाति मे भीष्मो ब्रह्मन्साल्वगतं मनः ॥ ५-१७७-५ (३७९४४)
एतद्विचार्य मनसा भवानेतद्विनिश्चयम् ।
विचिनोतु यथान्यायं विधानं क्रियतां तथा ॥ ५-१७७-६ (३७९४५)
भीष्मे वा कुरुशार्दूले शाल्वराजेऽथवा पुनः ।
उभयोरेव वा ब्रह्मन्युक्तं यत्तत्समाचर ॥ ५-१७७-७ (३७९४६)
निवेदितं मया ह्येतद्दुःखमूलं यथातथम् ।
विधानं तत्र भगवन्कर्तुमर्हसि युक्तितः ॥ ५-१७७-८ (३७९४७)
अकृतव्रण उवाच। ५-१७७-९क्ष् (३८९५)
उपपदमिदं भद्रे यदेवं वरवर्णिनि ।
धर्मं प्रतिवचो ब्रूयाः श्रृणु चदं वचो मम ॥ ५-१७७-९ (३७९४८)

यदि त्वामापगेयो वै न नयेद्गजसाह्वयम् ।
साल्वस्त्वा शिरसा भीरु गृह्णीयाद्रामचोदितः ॥ ५-१७७-१० (३७९४९)
तेन त्वं निर्जिता भद्रे यस्मान्नीतासि भामिनि ।
संशयः साल्वराजस्य तेन त्वयि सुमध्यमे ॥ ५-१७७-११ (३७९५०)
भीष्मः पुरुषमानी च जितकाशी तथैव च ।
तस्मात्प्रतिक्रिया युक्ता भीष्मे कारयितुं तव ॥ ५-१७७-१२ (३७९५१)
अम्बोवाच। ५-१७७-१३क्ष् (३८९६)
ममाप्येष सदा ब्रह्मन्हृदि कामोऽभिवर्तते ।
घातयेयं यदि रणे भीष्ममित्येव नित्यदा ॥ ५-१७७-१३ (३७९५२)
भीष्मं वा साल्वराजं वा यं वा दोषेण गच्छसि ।
प्रशाधि तं महाबाहोयत्कृतेऽहं सुदुःखिता ॥ ५-१७७-१४ (३७९५३)
भीष्म उवाच। ५-१७७-१५क्ष् (३८९७)
एवं कथयतामेव तेषां स दिवसो गतः ।
रात्रिश्च भरतश्रेष्ठ सुखशीतोष्णमारुता ॥ ५-१७७-१५ (३७९५४)
ततो रामः प्रादुरासीत्प्रज्वलन्निव तेजसा ।
शिष्यैः परिवृतो राजञ्जटाचीरधरो मुनिः ॥ ५-१७७-१६ (३७९५५)
धनुष्पाणिरदीनात्मा खड्गं बिभ्रत्परश्वधी ।
विरजा राजशार्दूल सृञ्जयं सोऽभ्ययान्नृपम् ॥ ५-१७७-१७ (३७९५६)
ततस्तं तापसा दृष्ट्वा स च राजा महातपाः ।
तस्थुः प्राञ्जलयो राजन्सा च कन्या तपस्विनी ॥ ५-१७७-१८ (३७९५७)
पूजयामासुरव्यग्रा मधुपर्केण भार्गवम् ।
अर्चितश्च यथान्यायं निषसाद सहैव तैः ॥ ५-१७७-१९ (३७९५८)
ततः पूर्वव्यतीतानि कथयन्तौ स्म तावुभौ ।
आसातां जामदग्न्यश्च सृञ्जयश्चैव भारत ॥ ५-१७७-२० (३७९५९)
तथा कथान्ते राजर्षिर्भृगुश्रेष्ठं महाबलम् ।
उवाच मधुरं काले रामं वचनमर्थवत् ॥ ५-१७७-२१ (३७९६०)
रामेयं मम दौहित्री काशिराजसुता प्रभो ।
अस्याः श्रृणु यथातत्त्वं कार्यं कार्यविशारद ॥ ५-१७७-२२ (३७९६१)
परमं कथ्यतां चेति तां रामः प्रत्यभाषत ।
ततः साभ्यवदद्रामं ज्वलन्तमिव पावकम् ॥ ५-१७७-२३ (३७९६२)
ततोऽभिवाद्य चरणौ रामस्य शिरसा शुभौ ।
स्पृष्ट्वा पद्मदलाभाभ्यां पाणिभ्यामग्रतः स्थिता ॥ ५-१७७-२४ (३७९६३)
रुरोद सा शोकवती बाष्पव्याकुललोचना ।
प्रपेदे शरणं चैव शरण्यं भृगुनन्दनम् ॥ ५-१७७-२५ (३७९६४)
राम उवाच। ५-१७७-२६क्ष् (३८९८)
यथा त्वं सृंजयस्यास्य तथा मे त्वं नृपात्मजे ।

ब्रूहि यत्ते मनोदुःखं करिष्ये वचनं तव ॥ ५-१७७-२६ (३७९६५)
अम्बोवाच। ५-१७७-२७क्ष् (३८९९)
भगवञ्शरणं त्वाद्य प्रपन्नाऽस्मि महाव्रतम् ।
शोकपङ्कार्णवान्मग्नं घोरादुद्धर मां विभो ॥ ५-१७७-२७ (३७९६६)
भीष्म उवाच। ५-१७७-२८क्ष् (३९००)
तस्याश्च दृष्ट्वा रूपं च वपुश्चाभिनवं पुनः ।
सौकुमार्यं परं चैव रामश्चिन्तापरोऽभवत् ॥ ५-१७७-२८ (३७९६७)
किमियं वक्ष्यतीत्येवं विममर्श भृगूद्वहः ।
इति दध्यौ चिरं रामः कृपयाभिपरिप्लुतः ॥ ५-१७७-२९ (३७९६८)
कथ्यतामिति सा भूयो रामेणोक्ता शुचिस्मिता ।
सर्वमेव यथातत्त्वं कथयामास भार्गवे ॥ ५-१७७-३० (३७९६९)
तच्छ्रुत्वा जामदग्न्यस्तु राजपुत्र्या वचस्तदा ।
उवाच तां वरारोहां निश्चित्यार्थविनिश्चयम् ॥ ५-१७७-३१ (३७९७०)
राम उवाच। ५-१७७-३२क्ष् (३९०१)
प्रेषयिष्यामि भीष्माय कुरुश्रेष्ठाय भामिनि ।
करिष्यति वचो मह्यं श्रुत्वा च स नराधिपः ॥ ५-१७७-३२ (३७९७१)
न चेत्करिष्यति वचो मयोक्तं जाह्नवीसुतः ।
धक्ष्याम्यहं रणे भद्रे सामात्यं शस्त्रतेजसा ॥ ५-१७७-३३ (३७९७२)
अथवा ते मतिस्तत्र राजपुत्रि न वर्तते ।
यावत्साल्वपतिं वीरं योजयाम्यत्र कर्मणि ॥ ५-१७७-३४ (३७९७३)
अम्बोवाच। ५-१७७-३५क्ष् (३९०२)
विसर्जिताऽहं भीष्मेण श्रुत्वैव भृगुनन्दन ।
साल्वराजगतं भावं मम पूर्वं मनीषितम् ॥ ५-१७७-३५ (३७९७४)
सौभराजमुपेत्याहमवोचं दुर्वचं वचः ।
न च मां प्रत्यगृह्णात्स चारित्र्यपरिशङ्कितः ॥ ५-१७७-३६ (३७९७५)
एतत्सर्वं विनिश्चित्य स्वबुद्ध्या भृगुनन्दन ।
यदत्रौपयिकं कार्यं तच्चिन्तयितुमर्हसि ॥ ५-१७७-३७ (३७९७६)
मम तु व्यसनस्यास्य भीष्मो मूलं महाव्रतः ।
येनाहं वशमानीता समुत्क्षिप्य बलात्तदा ॥ ५-१७७-३८ (३७९७७)
भीष्मं जहि महाबाहो यत्कृते दुःखमीदृशम् ।
प्राप्ताहं भृगुशार्दूल चराम्यप्रियमुत्तमम् ॥ ५-१७७-३९ (३७९७८)
स हि लुब्धश्च नीचश्च जितकाशी च भार्गव ।
तस्मात्प्रतिक्रिया कर्तुं युक्ता तस्मै त्वयाऽनघ ॥ ५-१७७-४० (३७९७९)
एष मे ह्रियमाणाया भारतेन तदा विभो ।
अभवद्धृदि संकल्पो घातयेदं महाव्रतम् ॥ ५-१७७-४१ (३७९८०)
तस्मात्कामं ममाद्येमं राम संपादयानघ ।

जहि भीष्मं महाबाहो यथा वृत्रं पुरन्दरः ॥ ॥५-१७७-४२ (३७९८१)

इति श्रीमन्महाभारते उद्योगपर्वणि अम्बोपाख्यानपर्वणि सप्तसप्तत्यधिकशततमोऽध्यायः ॥

Mahabharata - Udyoga Parva - Chapter Footnotes

५-१७७-१ द्वयोः सकाशादिति शेषः ॥
५-१७७-२ नियोक्तव्यस्तव पाणिणार्थमिति शेषः ५-१७७-६ विधानं प्रतीकारम् ॥
५-१७७-२३ परमं तव विवक्षितं यत्तन्मेऽवश्यं वक्तव्यमित्यर्थः ॥

---

उद्योगपर्व-अध्यय१७८
॥ श्रीः ॥
५.१७८. अध्यायः १७८

Mahabharata - Udyoga Parva - Chapter Topics

श्रीपरशुरामेण अम्बादिभिः सह कुरुक्षेत्रं गत्वा भीष्मानयनम् ॥ १ ॥
रामेण स्वेन चोदनेपि भीष्मेण अम्बापरिग्रहानङ्गीकारे युद्धाय तस्याह्वानम् ॥ २ ॥

Mahabharata - Udyoga Parva - Chapter Text

५-१७८-० (३७९८२)
भीष्म उवाच। ५-१७८-०क्ष् (३९०३)
एवमुक्तस्तदा रामो जहि भीष्ममिति प्रभो ।
उवाच रुदतीं कन्यां चोदयन्तीं पुनः पुनः ॥ ५-१७८-१ (३७९८३)
काश्ये न कामं गृह्णामि शस्त्रं वै वरवर्णिनि ।
ऋते ब्रह्मविदां हेतोः किमन्यत्करवाणि ते ॥ ५-१७८-२ (३७९८४)
वाचा भीष्मश्च साल्वश्च मम राज्ञि वशानुगौ ।
भविष्यतोऽनवद्याङ्गि तत्करिष्यामि मा शुचः ॥ ५-१७८-३ (३७९८५)
न तु शस्त्रं ग्रहीष्यामि कथंचिदपि भामिनि ।
ऋते नियोगाद्विप्राणामेष मे समयः कृतः ॥ ५-१७८-४ (३७९८६)
अम्बोवाच। ५-१७८-५क्ष् (३९०४)
मम दुःखं भगवता व्यपनेयं यतस्ततः ।
तच्च भीष्मप्रसूतं मे तं जहीश्वर मा चिरम् ॥ ५-१७८-५ (३७९८७)
राम उवाच। ५-१७८-६क्ष् (३९०५)
काशिकन्ये पुनर्ब्रूहि भीष्मस्ते चरणावुभौ ।

शिरसा वन्दनार्होऽपि ग्रहीष्यति गिरा मम ॥ ५-१७८-६ (३७९८८)
अम्बोवाच। ५-१७८-७क्ष् (३९०६)
जहि भीष्मं रणे राम मम चेदिच्छसि प्रियम् ।
प्रतिश्रुतं च यदपि तत्सत्यं कर्तुमर्हसि ॥ ५-१७८-७ (३७९८९)
भीष्म उवाच। ५-१७८-८क्ष् (३९०७)
तयोः संवदतोरेवं राजन्नामाम्बयोस्तदा ।
अकृतव्रणो जामदग्न्यमिदं वचनमब्रवीत् ॥ ५-१७८-८ (३७९९०)
शरणागतां महाबाहो कन्यां न त्यक्तुमर्हसि ।
यदि भीष्मो रणे राम समाहूतस्त्वया मृधे ॥ ५-१७८-९ (३७९९१)
निर्जितोऽस्मीति वा ब्रूयात्कुर्याद्वा वचनं तव ।
कृतमस्या भवेत्कार्यं कन्याया भृगुनन्दन ॥
वाक्यं सत्यं च ते वीर भविष्यति कृतं विभो ।
इयं चापि प्रतिज्ञा ते तदा राम महामुने ॥ ५-१७८-१० (३७९९२)
जित्वा वै क्षत्रियान्सर्वान्ब्रह्मणेषु प्रतिश्रुता ।
ब्राह्मणः क्षत्रियो वैश्यः शूद्रश्चैव रणे यदि ॥ ५-१७८-१२ (३७९९३)
ब्रह्मद्विड्भविता तं वै हनिष्यामीति भार्गव ।
शरणार्थे प्रपन्नानां भीतानां शरणार्थिनाम् ॥ ५-१७८-१३ (३७९९४)
न शक्ष्यामि परित्यागं कर्तुं जीवन्कथंचन ।
यश्च कृत्स्नं रणे क्षत्रं विजेष्यति समागतम् ॥ ५-१७८-१४ (३७९९५)
दीप्तात्मानमहं तं च हनिष्यामीति भार्गव ।
स एवं विजयी राम भीष्मः कुरुकुलोद्वहः ।
तेन युध्यस्व सङ्ग्रमे समेत्य भृगुनन्दन ॥ ५-१७८-१५ (३७९९६)
राम उवाच। ५-१७८-१६क्ष् (३९०८)
स्मराम्यहं पूर्वकृतां प्रतिज्ञामृषिसत्तम ।
तथैव त्त करिष्यामि यथा साम्नैव लप्स्यते ॥ ५-१७८-१६ (३७९९७)
कार्यमेतन्महद्ब्रह्मन्काशिकान्यामनोगतम् ।
गमिष्यामि स्वयं कन्यामादाय यत्र सः ॥ ५-१७८-१७ (३७९९८)
यदि भीष्मो रणश्लाघी न करिष्यति मे वचः ।
हनिष्याम्येनमुद्रिक्तमिति मे निश्चिता मतिः ॥ ५-१७८-१८ (३७९९९)
न हि बाणा मयोत्सृष्टाः सज्जन्तीह शरीरिणाम् ।
कायेषु विदितं तुभ्यं पुरा क्षत्रियसंगरे ॥ ५-१७८-१९ (३८०००)
भीष्म उवाच। ५-१७८-२०क्ष् (३९०९)
एवमुक्त्वा ततो रामः सह तैर्ब्रह्मवादिभिः ।
प्रयाणाय मतिं कृत्वा समुत्तस्थौ महातपाः ॥ ५-१७८-२० (३८००१)
ततस्ते तामुषित्वा तु रजनीं तत्र तापसाः ।
हुताग्नयो जप्तजप्याः प्रतस्थुर्मज्जिघांसया ॥ ५-१७८-२१ (३८००२)

अभ्यगच्छत्ततो रामः सह तैर्ब्रह्मवादिभिः ।
कुरुक्षेत्रं महाराज कन्यया सह भारत ॥ ५-१७८-२२ (३८००३)
न्यविशन्त ततः सर्वे परिगृह्य सरस्वतीम् ।
तापसास्ते महात्मानो भृगुश्रेष्ठपुरस्कृताः ॥ ५-१७८-२३ (३८००४)
ततस्तृतीये दिवसे समे देशे व्यवस्थितः ।
प्रेषयामास मे राजन्प्राप्तोऽस्मीति महाव्रतः ॥ ५-१७८-२४ (३८००५)
तमागतमहं श्रुत्वा विषयान्तं महाबलम् ।
अभ्यगच्छं जवेनाशु प्रीत्या तेजोनिधिं प्रभुम् ॥ ५-१७८-२५ (३८००६)
गां पुरस्कृत्य राजेन्द्र ब्राह्मणैः परिवारितः ।
ऋत्विग्भिर्देवकल्पैश्च तथैव च पुरोहितैः ॥ ५-१७८-२६ (३८००७)
स मामभिगतं दृष्ट्वा जामदग्न्यः प्रतापवान् ।
प्रतिजग्राह तां पूजां वचनं चेदमब्रवीत् ॥ ५-१७८-२७ (३८००८)
राम उवाच। ५-१७८-२८क्ष् (३९१०)
भीष्म कां बुद्धिमास्थाय काशिराजसुता तदा ।
अकामेन त्वया नीता पुनश्चैव विसर्जिता ॥ ५-१७८-२८ (३८००९)
विभ्रंशिता त्वया हीयं धर्मादास्ते यशस्विनी ।
परामृष्टां त्वया हीमां को हि गन्तुमिहार्हति ॥ ५-१७८-२९ (३८०१०)
प्रत्याख्याता हि साल्वेन त्वया नीतेति भारत ।
तस्मादिमां मन्नियोगात्प्रतिगृह्णीष्व भारत ॥ ५-१७८-३० (३८०११)
स्वधर्मं पुरुषव्याघ्र राजपुत्री लभत्वियम् ।
न युक्तस्त्ववमानोऽयं राज्ञां कर्तुं त्वयाऽनघ ॥ ५-१७८-३१ (३८०१२)
भीष्म उवाच। ५-१७८-३२क्ष् (३९११)
ततस्तं वै विमनसमुदीक्ष्याहमथाब्रुवम् ।
नाहमेनां पुनर्दद्यां ब्रह्मन्भ्रात्रे कथञ्चन ॥ ५-१७८-३२ (३८०१३)
साल्वस्याहमिति प्राह पुरा मामेव भार्गव ।
मया चैवाभ्यनुज्ञाता गतेयं नगरं प्रति ॥ ५-१७८-३३ (३८०१४)
न भयान्नाप्यनुक्रोशान्नार्थलोभान्न काम्यया ।
क्षात्रं धर्ममहं जह्यमिति मे व्रतमाहितम् ॥ ५-१७८-३४ (३८०१५)
अथ मामब्रवीद्रामः क्रोधपर्याकुलेक्षणः ।
न करिष्यसि चेदेतद्वाक्यं मे नरपुङ्गव ॥ ५-१७८-३५ (३८०१६)
हनिष्यामि सहामात्यं त्वामद्येति पुनः पुनः ।
संरम्भादब्रवीद्रामः क्रोधपर्याकुलेक्षणः ॥ ५-१७८-३६ (३८०१७)
तमहं गीर्भिरिष्टाभि पुनः पुनररिन्दम ।
अयाचं भृगुशार्दूलं न चैव प्रशशाम सः ॥ ५-१७८-३७ (३८०१८)
प्रणम्य तमहं मूर्ध्ना भूयो ब्राह्मणसत्तमम् ।
अब्रुवं कारणं किं तद्यत्त्वं युद्धं मयेच्छसि ॥ ५-१७८-३८ (३८०१९)

इष्वस्त्रं मम बालस्य भवतैव चतुर्विधम् ।
उपदिष्टं महाबाहो शिष्योऽस्मि तव भार्गव ॥ ५-१७८-३९ (३८०२०)
ततो मामब्रवीद्रामः क्रोधसंरक्तलोचनः ।
जानीषे मां गुरुं भीष्म गृह्णासीमां न चैव ह ॥ ५-१७८-४० (३८०२१)
सुतां काश्यस्य कौरव्य मत्प्रियार्थं महामते ।
न हि मे विद्यते शान्तिरन्यथा कुरुनन्दन ॥ ५-१७८-४१ (३८०२२)
गृहाणेमां महाबाहो रक्षस्व कुलमात्मनः ।
त्वया विभ्रंशिता हीयं भर्तारं नाधिगच्छति ॥ ५-१७८-४२ (३८०२३)
तथा ब्रुवन्तं तमहं रामं परपुरंयम् ।
नैतदेवं पुनर्भावि ब्रह्मर्षे किं श्रमेण ते ॥ ५-१७८-४३ (३८०२४)
गुरुत्वं त्वयि संप्रेक्ष्य जामदग्न्य पुरातनम् ।
प्रसादये त्वां भगवंस्त्यक्तैषा तु पुरा मया ॥ ५-१७८-४४ (३८०२५)
को जातु परभावां हि नारीं व्यालीमिव स्थिताम् ।
वासयेत गृहे जानन्स्त्रीणां दोषो महात्ययः ॥ ५-१७८-४५ (३८०२६)
न भयाद्वासवस्यापि धर्मं जह्यां महाव्रत ।
प्रसीद मा वा यद्वा ते कार्यं तत्कुरु मा चिरम् ॥ ५-१७८-४६ (३८०२७)
अयं चापि विशुद्धात्मन्पुराणे श्रूयते विभो ।
मरुत्तेन महाबुद्धे गीतः श्लोको महात्मना ॥ ५-१७८-४७ (३८०२८)
गुरोरप्यवलिप्तस्य कार्याकार्यमजानतः ।
उत्पथं प्रतिपन्नस्य परित्यागो विधीयते ॥ ५-१७८-४८ (३८०२९)
स त्वं गुरुरिति प्रेम्णा मया संमानितो भृशम् ।
गुरुवृत्तिं न जानीषे तस्माद्योत्स्यामि वै त्वया ॥ ५-१७८-४९ (३८०३०)
गुरुं न हन्यां समरे ब्राह्मणं च विशेषतः ।
विशेषतस्तपोवृद्धमेवं क्षान्तं मया तव ॥ ५-१७८-५० (३८०३१)
उद्यतेषुमथो दृष्ट्वा ब्राह्मणं क्षत्रबन्धुवत् ।
यो हन्यात्समरे क्रुद्धं युध्यन्तमपलायिनम् ॥ ५-१७८-५१ (३८०३२)
ब्रह्महत्या न तस्य स्यादिति धर्मेषु निश्चयः ।
क्षत्रियाणां स्थितो धर्मे क्षत्रियोऽस्मि तपोधन ॥ ५-१७८-५२ (३८०३३)
यो यथा वर्तते यस्मिंस्तस्मिन्नेव प्रवर्तयन् ।
नाधर्मं समवाप्नोति न चाश्रेयश्च विन्दति ॥ ५-१७८-५३ (३८०३४)
अर्थे वा यदि वा धर्मे समर्थो देशकालवित् ।
अर्थसंशयमापन्नः श्रोयान्निःसंशयो नरः ॥ ५-१७८-५४ (३८०३५)
यस्मात्संशयितेऽप्यर्थेऽयथान्यायं प्रवर्तसे ।
तस्माद्योत्स्यामि सहितस्त्वया राम महाहवे ॥ ५-१७८-५५ (३८०३६)
पश्य मे बाहुवीर्यं च विक्रमं चातिमानुषम् ।
एवं गतेऽपि तु मया यच्छक्यं भृगुनन्दन ॥ ५-१७८-५६ (३८०३७)

तत्करिष्ये कुरुक्षेत्रे योत्स्ये विप्र त्वया सह ।
द्वन्द्वे राम यथेष्टं मे सञ्जीभव महाद्युते ॥ ५-१७८-५७ (३८०३८)
तत्र त्वं निहतो राम मया शरशतार्दितः ।
प्राप्स्यसे निर्जिताँल्लोकाञ्शस्त्रपूतो महारणे ॥ ५-१७८-५८ (३८०३९)
स गच्छ विनिवर्तस्व कुरुक्षोत्रं रणप्रिय ।
तत्रैष्यामि महाबाहो युद्धाय त्वांतपोधन ॥ ५-१७८-५९ (३८०४०)
अपि यत्र त्वया राम कृतं शौचं पुरा पितुः ।
तत्राहमपि हत्वा त्वां शौचं कर्तास्मि भार्गव ॥ ५-१७८-६० (३८०४१)
तत्र राम समागच्छ त्वरितं युद्धदुर्मद ।
व्यपनेष्यामि ते दर्पं पौराणं ब्राह्मणब्रुव ॥ ५-१७८-६१ (३८०४२)
यच्चापि कत्थसे राम बहुशः परिवत्सरे ।
निर्जिताः क्षत्रिया लोके मयैकेनेति तच्छ्रुणु ॥ ५-१७८-६२ (३८०४३)
न तदा जातवान्भीष्मः क्षत्रियो वापि मद्विधः ।
पञ्चाञ्चातानि तेजांसि तृणेषु ज्वलितं त्वया ॥ ५-१७८-६३ (३८०४४)
यस्ते युद्धमयं दर्पं कामं च व्यपनाशयेत् ।
सोऽहं जातो महाबाहो भीष्मः परपुरंजयः ।
व्यपनेष्यामि ते दर्पं युद्धे राम न संशयः ॥ ५-१७८-६४ (३८०४५)
ततो मामब्रवीद्रामः प्रहसन्निव भारत ।
दिष्ट्या भीष्म मया सार्धं योद्धुमिच्छसि संगरे ॥ ५-१७८-६५ (३८०४६)
अयं गच्छामि कौरव्य कुरुक्षेत्रं त्वया सह ।
भाषितं ते करिष्यामि तत्रागच्छ परंतप ॥ ५-१७८-६६ (३८०४७)
तत्र त्वां निहतं माता मया शरशताचितम् ।
जाह्नवी पश्यतां भीष्म गृध्रकङ्कबलाशनम् ॥ ५-१७८-६७ (३८०४८)
कृपणं त्वामभिप्रेक्ष्य सिद्धचारणसेविता ।
मया विनिहतं देवी रोदतामद्य पार्थिव ॥ ५-१७८-६८ (३८०४९)
अतदर्हा महाभागा भगीरथसुताऽनघा ।
या त्वामजीजनन्मन्दं युद्धकामुकमातुरम् ॥ ५-१७८-६९ (३८०५०)
एहि गच्छ मया भीष्म युद्धकामुक दुर्मद ।
गृहाण सर्वं कौरव्य रथादि भरतर्षभ ॥ ५-१७८-७० (३८०५१)
इति ब्रुवाणं तमहं रामं परपुरंजयमक् ।
प्रणम्यक शिरसा राममेवमस्त्वित्यथाब्रवम् ॥ ५-१७८-७१ (३८०५२)
एवमुक्त्वा ययौ रामः कुरुक्षेत्रं युयुत्सया ।
प्रविश्य नगरं चाहं सत्यवत्यै न्यवेदयम् ॥ ५-१७८-७२ (३८०५३)
ततः कृतस्वस्त्ययनो मात्रा च प्रतिनन्दितः ।
द्विजातीन्वाच्य पुण्याहं स्वस्ति चैव महाद्युते ॥ ५-१७८-७३ (३८०५४)
रथमास्थाय रुचिरं राजतं पाण्डुरैर्हयैः ।

सूपस्करं स्वधिष्ठानं वैयाघ्रपरिवारणम् ॥ ५-१७८-७४ (३८०५५)
उपपन्नं महाशस्त्रैः सर्वोपकरणान्वितम् ।
तत्कुलीनेन वीरेण हयशास्त्रविदा रणे ॥ ५-१७८-७५ (३८०५६)
यत्तं सूतेन शिष्टेन बहुशो दृष्टकर्मणा ।
दंशितः पाण्डुरेणाहं कवचेन वपुष्मता ॥ ५-१७८-७६ (३८०५७)
पाण्डुरं कार्मुकं गृह्य प्रायां भरतसत्तम ।
पाण्डुरेणातपत्रेण ध्रियमाणेन मूर्धनि ॥ ५-१७८-७७ (३८०५८)
पाण्डुरैश्चापि व्यजनैर्वीज्यमानो नराधिप ।
शुक्लवासाः सितोष्णीषः सर्वशुक्लविभूषणः ॥ ५-१७८-७८ (३८०५९)
स्तूयमानो जयाशीर्भिर्निष्क्रम्य गजसाह्वयात् ।
कुरुक्षेत्रं रणक्षेत्रमुपायां भरतर्षभ ॥ ५-१७८-७९ (३८०६०)
ते हयाश्चोदितास्तेन सूतेन परमाहवे ।
अवहन्मां भृशं राजन्मनोमारुतरंहसः ॥ ५-१७८-८० (३८०६१)
गत्वाऽहं तत्कुरुक्षेत्रं स च रामः प्रतापवान् ।
युद्धाय सहसा राजन्पराक्रान्तौ परस्परम् ॥ ५-१७८-८१ (३८०६२)
ततः सदर्शनेऽतिष्ठं रामस्यातितपस्विनः ।
प्रगृह्य शङ्खप्रवरंक ततः प्राधममुत्तमम् ॥ ५-१७८-८२ (३८०६३)
ततस्तत्र द्विजा राजंस्तापसाश्च वनौकसः ।
अपश्यन्त रणं दिव्यं देवाः सेन्द्रगणास्तदा ॥ ५-१७८-८३ (३८०६४)
ततो दिव्यानि माल्यानि प्रादुरासंस्ततस्ततः ।
वादित्राणि च दिव्यानि मेघवृन्दानि चैव ह ॥ ५-१७८-८४ (३८०६५)
ततस्ते तापसाः सर्वे भार्गवस्यानुयायिनः ।
प्रेक्षकाः समपद्यन्त परिवार्य रणाजिरम् ॥ ५-१७८-८५ (३८०६६)
ततो मामब्रवीद्देवी सर्वभूतहितैषिणी ।
माता स्वरूपिणी राजन्किमिदं ते चिकीर्षितम् ॥ ५-१७८-८६ (३८०६७)
गत्वाऽहं जामदग्न्यं तु प्रयाचिष्ये कुरूद्वह ।
भीष्मेण सह मा योत्सीः शिष्येणेति पुनः पुनः ॥ ५-१७८-८७ (३८०६८)
मा मैवं पुत्र निर्बन्धं कुरु विप्रेण पार्थिव ।
जामदग्न्येन समरे योद्धुमित्येव भर्त्सयत् ॥ ५-१७८-८८ (३८०६९)
किं न वै क्षत्रियहणो हरतुल्यपराक्रमः ।
विदितः पुत्र रामस्ते यतस्तं योद्धुमिच्छसि ॥ ५-१७८-८९ (३८०७०)
ततोऽहमब्रवं देवीमभिवाद्य कृताञ्जलिः ।
सर्वं तद्भरतश्रेष्ठ यथावृत्तं स्वयंवरे ॥ ५-१७८-९० (३८०७१)
यथा च रामो राजेन्द्र मया पूर्वं प्रचोदितः ।
काशिराजसुतायाश्च यथा कर्म पुरातनम् ॥ ५-१७८-९१ (३८०७२)
ततः सा राममभ्येत्य जननी मे महानदी ।

मदर्थं तमृषिं वीक्ष्य क्षमयामास भार्गवम् ॥ ५-१७८-९२ (३८०७३)
भीष्मेण सह मा योत्सीः शिष्येणेति वचोऽब्रवीत् ।
स च तामाह याचन्तीं भीष्ममेव निवर्तय ।
न च मे कुरुते काममित्यहं तमुपागमम् ॥ ५-१७८-९३ (३८०७४)
ततो गङ्गा सुतस्नोहान्मां सा पुनरुपागमत् ।
नास्या अकरवं वाक्यं क्रोधपर्याकुलेक्षणः ॥ ५-१७८-९४ (३८०७५)
अथादृश्यत धर्मात्मा भृगुश्रेष्ठो महातपाः ।
आह्वयामास च तदा युद्धाय द्विजसत्तमः ॥ ॥ ५-१७८-९५ (३८०७६)

इति श्रीमन्महाभारते उद्योगपर्वमि अम्बोपाख्यानपर्वणि
अष्टसप्तत्यधिकशततमोऽध्यायः ॥
Mahabharata - Udyoga Parva - Chapter Footnotes

५-१७८-२ काश्ये काशिराजकन्ये ॥
५-१७८-४८ अवलिप्तस्य दृप्तस्य ।प्रतिपन्नस्य कार्यं भवति
शासनमिति को धो पाठः ॥
५-१७८-५३ यः पुमान् यस्मिन्नरे यथा प्रीत्या द्वेषेण वा वर्तते स
नरस्तस्मिन् तथैव प्रीति द्वेषं वा प्रवर्तयन् ॥
५-१७८-५४ ननु त्वामर्थे प्रवर्तयन्नहं त्वयि प्रीतिमेव
करोमीत्याशङ्क्याह अर्थेवेति ।अर्थे द्युस्वाक्याद्दारकरणे धर्मे
पितृप्रीत्यर्थं स्वीकृते ब्रह्मचर्ये विषये देशकालानुसारेण
समर्थो विवेककुशलः।तत्र धर्मलोपेन गुरुवाक्यात् प्राप्यमाणोऽर्थः
श्रेयानुत नेत्यर्थे संशयवानुत गुरुवाक्यविरोधेनापि पाल्यमानो
धर्मः श्रेयानुत नेति धर्मे संशयवान्।एतयोर्मध्ये अर्थे
संशयमापन्नोऽर्थमननुतिष्ठन् श्रेयान्। परिशेषात् धर्मे तु
निःशंसयो धर्ममेवानुतिष्ठन् श्रोयानित्यर्थ ॥
५-१७८-६१ पौराणं पुराकृतम् ॥
५-१७८-६७ बलाः काकाः तेषामशनं अन्नभूतम् ॥

---

उद्योगपर्व-अध्यय१७९
॥ श्रीः ॥
५.१७९. अध्यायः १७९

Mahabharata - Udyoga Parva - Chapter Topics
भीष्मजामदग्न्ययुद्धवर्णनम् ॥१ ॥

Mahabharata - Udyoga Parva - Chapter Text

५-१७९-० (३८०७७)
भीष्म उवाच। ५-१७९-०क्ष् (३९१२)
तमहं स्मयन्निव रणे प्रत्यभाषं व्यवस्थितम् ।
भूमिष्ठं नोत्सहे योद्धुं भवन्तं रथमास्थितः ॥ ५-१७९-१ (३८०७८)
आरोह स्यन्दनं वीर कवचं च महाभुज ।
बधान समरे राम यदि योद्धुं मयेच्छसि ॥ ५-१७९-२ (३८०७९)
ततो मामब्रवीद्रामः स्मयमानो रणाजिरे ।
रथो मे मेदिनी भीष्म वाहा वेदाः सदश्ववत् ॥ ५-१७९-३ (३८०८०)
सूतश्च मातरिश्वा वै कवचं वेदमातरः ।
सुसंवीतो रणे ताभिर्योत्स्येऽहं कुरुनन्दन ॥ ५-१७९-४ (३८०८१)
एवं ब्रुवाणो गान्धारे रामो मां सत्यविक्रमः ।
शरव्रातेन महता सर्वतः प्रत्यवारयत् ॥ ५-१७९-५ (३८०८२)
ततोऽपश्यं जामदग्न्यं रथमध्ये व्यवस्थितम् ।
सर्वायुधवरे श्रीमत्यद्भुतोपमदर्शने ॥ ५-१७९-६ (३८०८३)
मनसा विहिते पुण्ये विस्तीर्णे नगरोपभे ।
दिव्याश्वयुजि सन्नद्धे काञ्चनेन विभूषिते ॥ ५-१७९-७ (३८०८४)
कवचेन महाबाहो सोमार्ककृतलक्ष्मणा ।
धनुर्धरो बद्धतूणो बद्धगोधाङ्गुलित्रवान् ॥ ५-१७९-८ (३८०८५)
सारथ्यं कृतवांस्तत्र युयुत्सोरकुतव्रणः ।
सखा वेदविदत्यन्तं दयितो भार्गवस्य ह ॥ ५-१७९-९ (३८०८६)
आह्वयानः स मां युद्धे मनो हर्षयतीव मे ।
पुनः पुनरभिक्रोशन्नभियाहीति भार्गवः ॥ ५-१७९-१० (३८०८७)
तमादित्यमिवोद्यन्तमनाधृष्यं महाबलम् ।
क्षत्रियान्तकरं राममेकमेकः समासदम् ॥ ५-१७९-११ (३८०८८)
ततोऽहं बाणपातेषु त्रिषु वाहान्निगृह्य वै ।
अवतीर्य धनुर्न्यस्य पदातिर्ऋषिसत्तमम् ॥ ५-१७९-१२ (३८०८९)
अभ्यागच्छं तदा राममर्चिष्यन्द्विजसत्तमम् ।
अभिवाद्य चैनं विधिवदब्रुवं वाक्यमुत्तमम् ॥ ५-१७९-१३ (३८०९०)
योत्स्ये त्वया रणे राम सदृशेनाधिकेन वा ।
गुरुणा धर्मशीलेन जयमाशास्व मे विभो ॥ ५-१७९-१४ (३८०९१)
राम उवाच। ५-१७९-१५क्ष् (३९१३)
एवमेतत्कुरुश्रेष्ठ कर्तव्यं भूतिमिच्छता ।
धर्मो ह्येष महाबाहो विशिष्टैः सह युध्यताम् ॥ ५-१७९-१५ (३८०९२)
शपेयं त्वां नचेदेवमागच्छेथा विशांपते ।
युध्यस्व त्वं रणे यत्तो धैर्यमालम्ब्य कौरव ॥ ५-१७९-१६ (३८०९३)

न तु ते जयमाशासे त्वां विजेतुमहं स्थितः ।
गच्छ युध्यस्व धर्मेण प्रीतोऽस्मि चरितेन ते ॥ ५-१७९-१७ (३८०९४)
ततोऽहं तं नमस्कृत्य रथमारुह्य सत्वरः ।
प्राध्मापयं रणे शङ्खं पुनर्हेमपरिष्कृतम् ॥ ५-१७९-१८ (३८०९५)
ततो युद्धं समभवन्मम तस्य च भारत ।
दिवसान्सुबहून्राजन्परस्परजिगीषया ॥ ५-१७९-१९ (३८०९६)
स मे तस्मिन्रणे पूर्वं प्राहरत्कङ्कपत्रिभिः ।
षष्ट्या शतैश्च नवभिः शराणां नतषर्वणाम् ॥ ५-१७९-२० (३८०९७)
चत्वारस्तेन मे वाहाः सूतश्चैव विशांपते ।
प्रतिरुद्धास्तथैवाहं समरे दंशितः स्थितः ॥ ५-१७९-२१ (३८०९८)
नमस्कृत्य च देवेभ्यो ब्राह्मणेभ्यो विशेषतः ।
तमहं स्मयन्निव रणे प्रत्यभाषं व्यवस्थितम् ॥ ५-१७९-२२ (३८०९९)
आचार्यता मानिता मे निर्मर्यादे ह्यपि त्वयि ।
भूयश्च शृणु मे ब्रह्मन्संपदं धर्मसंग्रहे ॥ ५-१७९-२३ (३८१००)
ये ते वेदाः शरीरस्था ॥॥ यच्च ते महत् ।
तपश्च ते महत्तप्तं न तेभ्यः प्रहराम्यहम् ॥ ५-१७९-२४ (३८१०१)
प्रहरे क्षत्रधर्मस्य यं त्वं राम समाश्रितः ।
ब्राह्मणः क्षत्रियत्वं हि याति शस्त्रसमुद्यमात् ॥ ५-१७९-२५ (३८१०२)
पश्य मे धनुषो वीर्यं पश्य बाह्वोर्बलं मम ।
एष ते कार्मुक वीर छिनद्मि निशितेषुणा ॥ ५-१७९-२६ (३८१०३)
तस्याहं निशितं भल्लं चिक्षेप भरतर्षभ ।
तेनास्य धनुषः कोटिं छित्वा भूमावपातयम् ॥ ५-१७९-२७ (३८१०४)
तथैव च पृषत्कानां शतानि नतपर्वणाम् ।
चिक्षेप कङ्कपत्राणां जामदग्न्यरथं प्रति । ५-१७९-२८ (३८१०५)
काये विषक्तास्तु तदा वायुना समुदीरिताः ।
चेलुः क्षरन्तो रुधिरं नागा इव च ते शराः ॥ ५-१७९-२९ (३८१०६)
क्षतजोक्षितसर्वाङ्गः क्षरन्स रुधिरं रणे ।
बभौ रामस्तथा राजन्प्रफुल्ल इव किंशुकः ॥ ५-१७९-३० (३८१०७)
हेमन्तान्तेऽशोक इव रक्तस्तबकमण्डितः ।
बभौ रामस्तथा राजन्प्रफुल्ल इव किंशुकः ॥ ५-१७९-३१ (३८१०८)
ततोऽन्यद्धनुरादाय रामः क्रोधसमन्वितः ।
हेमपुङ्खान्सुनिशिताञ्शरांस्तान्हि ववर्ष सः ॥ ५-१७९-३२ (३८१०९)
ते समासाद्य मां रौद्रा बहुधा मर्मभेदिनः ।
अकम्पयन्महावेगाः सर्पानलविषोपमाः ॥ ५-१७९-३३ (३८११०)
तमहं समवष्टभ्य पुनरात्मानमाहवे ।
शतसंख्यैः शरैः क्रुद्धस्तदा राममवाकिरम् ॥ ५-१७९-३४ (३८१११)

स तैरग्न्यर्कसङ्काशैः शरैराशीविषोपमैः ।
शितैरभ्यर्दितो रामो मन्दचेता इवाभवत् ॥ ५-१७९-३५ (३८११२)
ततोऽहं कृपयाऽऽविष्टो विनिन्द्यात्मानमात्मना ।
धिग्धिगित्यब्रुवं युद्धं क्षत्रधर्मं च भारत ॥ ५-१७९-३६ (३८११३)
असकृच्चाब्रुवं राजञ्शोकवेगपरिप्लुतः ।
अहो बत कृतं पापं मयेदं क्षत्रधर्मं च भारत ॥ ५-१७९-३७ (३८११४)
गुरुर्द्विजातिर्धर्मात्मा यदेवं पीडितः शरैः ।
ततो न प्राहरं भूयो जामदग्न्याय भारत ॥ ५-१७९-३८ (३८११५)
अथावताप्य पृथिवीं पूषा दिवसमंक्षये ।
जगामास्तं सहस्रांशुस्ततो युद्धमुपारमत् ॥ ॥ ५-१७९-३९ (३८११६)

इति श्रीमन्महाभारते उद्योगपर्वणि अम्बोपाख्यानपर्वणि
एकोनाशीत्यधिकशततमोऽध्यायः ॥

---

उद्योगपर्व-अध्यय१८०
॥ श्रीः ॥
५.१८०. अध्यायः १८०

Mahabharata - Udyoga Parva - Chapter Topics
रामभीष्मसमरवर्णनम् ॥ १ ॥

Mahabharata - Udyoga Parva - Chapter Text

५-१८०-० (३८११७)
भीष्म उवाच। ५-१८०-०क्ष् (३९१४)
आत्मनस्तु ततः सूतो हयानां च विशांपते ।
मम चापनयामास शल्यान्कुशलसंमतः ॥ ५-१८०-१ (३८११८)
स्नातापवृत्तैस्तुरगैर्लब्धतोयैरविह्वलैः ।
प्रभाते चोदिते सूर्ये ततो युद्धमवर्तत ॥ ५-१८०-२ (३८११९)
दृष्ट्वा भां तूर्णमायान्तं दंशितं स्यन्दने स्थितम् ।
अकरोद्रथमत्यर्थं रामः सज्जं प्रतापवान् ॥ ५-१८०-३ (३८१२०)
ततोऽहं राममायान्तं दृष्ट्वा समरकाङ्क्षिणम् ।
धनुःश्रेष्ठं समित्सृज्य सहसावतरं रथात् ॥ ५-१८०-४ (३८१२१)
अभिवाद्य तथैवाहं रथमारुह्य भारत ।
युयुत्सुर्जामदग्न्यस्य प्रमुखे वीतभीः स्थितः ॥ ५-१८०-५ (३८१२२)
ततोऽहं शरवर्षेण महता समवाकिरम् ।
स च मां शरवर्षेण वर्षन्तं समवाकिरम् ॥ ५-१८०-६ (३८१२३)

संक्रुद्धो जामदग्न्यस्तु पुनरेव सुतेजितान् ।
संप्रैषीन्मे शरान्घोरान्दीप्तास्यानुरगानिव ॥ ५-१८०-७ (३८१२४)
ततोऽहं निशितैर्भल्लैः शतशोऽथ सहस्रशः ।
अच्छिदं सहसा राजन्नन्तरिक्षे पुनः पुनः ॥ ५-१८०-८ (३८१२५)
ततस्त्वस्त्राणि दिव्यानि जामदग्न्यः प्रतापवान् ।
मयि प्रयोजयामास तान्यहं प्रत्यषेधयम् । ५-१८०-९ (३८१२६)
अस्त्रैरेव महाबाहो चिकीर्षन्नधिकां क्रियाम् ।
ततो विदि महान्नादः प्रादुरासीत्समन्ततः ॥ ५-१८०-१० (३८१२७)
ततोऽहमस्त्रं वायव्यं जामदग्न्ये प्रयुक्तवान् ।
प्रत्याजघ्ने च तद्रामो गुह्यकास्त्रेण भारत ॥ ५-१८०-११ (३८१२८)
ततोऽहमस्त्रमाग्नेयमनुमन्त्र्य प्रयुक्तवान् ।
वारुणेनैव तद्रामो वारयामास मे विभुः ॥ ५-१८०-१२ (३८१२९)
एवमस्त्राणि दिव्यानि रामस्याहमवारयम् ।
रामश्च मम तेजस्वी दिव्यास्त्रविदरिन्दमः ॥ ५-१८०-१३ (३८१३०)
ततो मां सव्यतो राजन्रामः कुर्वन्द्विजोत्तमः ।
उरस्यविध्यत्संक्रुद्धो जामदग्न्यः प्रतापवान् ॥ ५-१८०-१४ (३८१३१)
ततोऽहं भारतश्रेष्ठ संन्यषीदं रथोत्तमे ।
ततो मां कश्मलाविष्टं सूतस्तूर्णमुदावहत् ॥ ५-१८०-१५ (३८१३२)
ग्लायन्तं भरश्रेष्ठ रामबाणप्रपीडितम् ।
ततो मामपयातं वै भृशं विद्धमचेतसम् ॥ ५-१८०-१६ (३८१३३)
रामस्यानुचरा हृष्टाः सर्वे दृष्ट्वा विचुक्रुशुः ।
अकृतव्रणप्रभृतयः काशिकन्या च भारत ॥ ५-१८०-१७ (३८१३४)
ततस्तु लब्धसंज्ञोऽहं ज्ञात्वा सूतमथाब्रुवम् ।
याहि सूत यतो रामः सज्जोऽहं गतवेदनः ॥ ५-१८०-१८ (३८१३५)
ततो मामवहत्सूतो हयैः परमशोभितैः ।
नृत्यद्भिरिव कौरव्य मारुतप्रतिमैर्गतौ ॥ ५-१८०-१९ (३८१३६)
ततोऽहं राममासाद्य बाणवर्षैश्च कौरव ।
अवाकिरं सुसंरब्धः संरब्धं च जिगीषया ॥ ५-१८०-२० (३८१३७)
तानापतत एवासौ रामो बाणानजिह्मगान् ।
बाणैरेवाच्छिनत्तूर्णमेकैकं त्रिभिराहवे ॥ ५-१८०-२१ (३८१३८)
ततस्ते सूदिताः सर्वे मम बाणाः सुसंशिताः ।
रामबाणैर्द्विधा च्छिन्नाः शतशोऽथ सहस्रशः ॥ ५-१८०-२२ (३८१३९)
ततः पुनः शरं दीप्तं सुप्रभं कालसंमितम् ।
असृजं जामदग्न्याय रामायाहं जिघांसया ॥ ५-१८०-२३ (३८१४०)
तेन त्वभिहतो गाढं बाणवेगवशं गतः ।
मुमोह समरे रामो भूमौ च निपपात ह ॥ ५-१८०-२४ (३८१४१)

ततो हाहाकृतं कसर्वं रामे भूतलमाश्रिते ।
जगद्भारत संविग्नं यथार्कपतने भवेत् ॥ ५-१८०-२५ (३८१४२)
तत एनं समुद्विग्नाः सर्व एवाभिदुद्रुवुः ।
तपोधनास्ते सहसा काश्या च कुरुनन्दन ॥ ५-१८०-२६ (३८१४३)
तत एनं परिष्वज्य शनैराश्वासयंस्तदा ।
पाणिभिर्जलशीतैश्च जयाशीर्भिश्च कौरव ॥ ५-१८०-२७ (३८१४४)
ततः स विह्वलं वाक्यं राम उत्थाय चाब्रवीत् ।
तिष्ठ भीष्म हतोऽसीति बाणं संधाय कार्मुके ॥ ५-१८०-२८ (३८१४५)
स मुक्तो न्यपतत्तूर्णं सव्ये पार्श्वे महाहवे ।
येनाहं भृशमुद्विग्नो व्याघूर्णित इव द्रुमः ॥ ५-१८०-२९ (३८१४६)
हत्वा हयांस्ततो रामः शीघ्रास्त्रेण महाहवे ।
अवाकिरन्मां विस्रब्धो बाणैस्तैर्लोमवाहिभिः ॥ ५-१८०-३० (३८१४७)
ततोऽहमपि शीघ्रास्त्रं समरप्रतिवारणम् ।
अवासृजं महाबाहो तेन्तराधिष्ठिताः शराः ॥ ५-१८०-३१ (३८१४८)
रामस्य मम चैवाशु व्योमावृत्य समन्ततः ।
न स्म सूर्यः प्रतपति शरजालसमावृतः ॥ ५-१८०-३२ (३८१४९)
मातरिश्वा ततस्तस्मिन्मेघरुद्ध इवाभवत् ।
ततो वायोः प्रकम्पाच्च सूर्यस्य च गभस्तिभिः ॥ ५-१८०-३३ (३८१५०)
अभिघातप्रभावाच्च पावकः समजायत ।
ते शराः स्वसमुत्थेन प्रदीप्ताश्चित्रभानुना ॥ ५-१८०-३४ (३८१५१)
भूमौ सर्वे तदा राजन्भस्मभूताः प्रपेदिरे ।
तदा शतसहस्राणि प्रयुतान्यर्बुदानि च ॥ ५-१८०-३५ (३८१५२)
अयुतान्यथ खर्वाणि निखर्वाणि च कौरव ।
रामः शराणां संक्रुद्धो मयि तूर्णं न्यपातयत् ॥ ५-१८०-३६ (३८१५३)
ततोऽहं तानपि रणे शरैराशीविषोपमैः ।
संछिद्य भूमौ नृपते पातयेयं नगानिव ॥ ५-१८०-३७ (३८१५४)
एवं तदभवद्युद्धं तदा भरतसत्तम ।
सन्ध्याकाले व्यतीते तु व्यपायात्स च मे गुरुः ॥ ॥ ५-१८०-३८ (३८१५५)

इति श्रीमन्महाभारते उद्योगपर्वणि अम्बोपाख्यानपर्वणि
अशीत्यधिकशततमोऽध्यायः ॥

---

उद्योगपर्व-अध्यय१८१
॥ श्रीः ॥
५.१८१. अध्यायः १८१

रमभीष्मसमरवर्णनम् ॥ १ ॥

Mahabharata - Udyoga Parva - Chapter Text

५-१८१-० (३८१५६)
भीष्म उवाच। ५-१८१-०क्ष् (३९१५)
समागतस्य रामेण पुनरेवातिदारुणम् ।
अन्येद्युस्तुमुलं युद्धं तदा भरतसत्तम ॥ ५-१८१-१ (३८१५७)
ततो दिव्यास्त्रविच्छूरो दिव्यान्यस्त्राण्यनेकशःक ।
अयोजयत्स धर्मात्मा दिवसे दिवसे विभुः ॥ ५-१८१-२ (३८१५८)
तान्यहं तत्प्रतीघातैरस्त्रैरस्त्राणि भारत ।
व्यधमं तुमुलेयुद्धेप्राणांस्त्यक्त्वासुदुस्त्यजान् ॥ ५-१८१-३ (३८१५९)
अस्त्रैरस्त्रेषु बहुधा हतेष्वेव च भारत ।
अक्रुध्यत महातेजास्त्यक्तप्राणः स संयुगे ॥ ५-१८१-४ (३८१६०)
ततः शक्तिं प्राहिणोद्घोररूपा-
मस्त्रे रुद्धे जामदग्न्यो महात्मा ।
कालोत्सृष्टां प्रज्वलितामिवोल्कां
संदीप्ताग्रां तेजसा व्याप्य लोकम् ॥ ५-१८१-५ (३८१६१)
ततोऽहं तामिषुभिर्दीप्यमानां
समायान्तीमन्तकालार्कदीप्ताम् ।
छित्त्वा त्रिधा पातयामास भूमौ
ततो ववौ पवनः पुण्यगन्धिः ॥ ५-१८१-६ (३८१६२)
तस्यां छिन्नायां क्रोधदीप्तोऽथ रामः
शक्तीर्घोराः प्राहिणोद्द्वादशान्याः ।
तासां रूपं भारत नोत शक्यं
तेजस्वित्वाल्लाघवाच्चैव वक्तुम् ॥ ५-१८१-७ (३८१६३)
किन्त्वेवाहं विह्वलः संप्रदृश्य
दिग्भ्यः सर्वास्ता महोल्का इवाग्नेः ।
नानारूपास्तेजसोग्रेण दीप्ता
यथाऽऽदित्या द्वादश लोकसंक्षये ॥ ५-१८१-८ (३८१६४)
ततो जालं बाणमयं विवृत्तं
संदृश्य भित्त्वा शरजालेन राजन् ।
द्वादशेषून्प्राहिणवं रणेऽहं
ततः शक्तीरप्यधमं घोररूपाः ॥ ५-१८१-९ (३८१६५)
ततो राजञ्जामदग्न्यो महात्मा
शक्तीर्घोरा व्याक्षिपद्धेमदण्डाः ।

विचित्रिताः काञ्चनपट्टनंद्धा
यथा महोल्का ज्वलितास्तथा ताः ॥ ५-१८१-१० (३८१६६)
ताश्चाप्युग्राश्चर्मणा वारयित्वा
खड्गेनाजौ पातयित्वा नरेन्द्र ।
बाणैर्दिव्यैर्जामदग्न्यस्य सङ्ख्ये
दिव्यानश्वानभ्यवर्षं ससूतान् ॥ ५-१८१-११ (३८१६७)
निर्मिक्तानां पन्नगानां सरूपा
दृष्ट्वा शक्तीर्हेमचित्रा निकृत्ताः ।
प्रादुश्चक्रे दिव्यमस्त्रं महात्मा
क्रोधाविष्टो हैहयेशममाथी ॥ ५-१८१-१२ (३८१६८)
ततः श्रेण्यः शलभानामिवोग्राः
समापेतुर्विशिखानां प्रदीप्ताः ।
समाचिनोच्चापि भृशं शरीरं
हयान्सूतं सरथं चैव मह्यम् ॥ ५-१८१-१३ (३८१६९)
रथः शरैर्मे निचितः सर्वतोऽभू-
त्तथा वाहाः सारथिश्चैव राजन् ।
युगं रथेषां च तथैव चक्रे
तथैवाक्षः शरकृत्तोऽथ भग्नः ॥ ५-१८१-१४ (३८१७०)
ततस्तस्मिन्बाणवर्षे व्यतीते
शरौघेण प्रत्यवर्षं गुरुं तम् ।
स विक्षतो मार्गणैर्ब्रह्मराशि-
र्देहादसक्तं मुमुचे भूरि रक्तम् ॥ ५-१८१-१५ (३८१७१)
यथा रामो बाणजालाभितप्त-
स्तथैवाहं सुभृशं गाढविद्धः ।
ततो युद्धं व्यरमच्चापराह्णे
भानावस्तं प्रतियाते महीध्रम् ॥ ॥ ५-१८१-१६ (३८१७२)

इति श्रीमन्महाभारते उद्योगपर्वणि अम्बोपाख्यानपर्वणि
एकाशीत्यधिकशततमोऽध्यायः ॥

---

उद्योगपर्व-अध्यय१८२
॥ श्रीः ॥
५.१८२. अध्यायः १८२

Mahabharata - Udyoga Parva - Chapter Topics
रामेण रथादधः पातितस्य भीष्मस्य दिव्यपुरुषैः समाश्वासनम् ॥ १ ॥
भीष्मेण रामस्य रथादधः पातनम् ॥ २ ॥

समुद्बुध्य पुनर्युयुत्सो रामस्य महर्षिभिर्युद्धात्प्रतिनिवर्तनम् ॥ ३ ॥

Mahabharata - Udyoga Parva - Chapter Text

५-१८२-० (३८१७३)
भीष्म उवाच। ५-१८२-०क्ष् (३९१६)
ततः प्रभाते राजेन्द्र सूर्ये विमलतां गते ।
भार्गवस्य मया सार्धं पुनर्युद्धमवर्तत ॥ ५-१८२-१ (३८१७४)
ततोऽभ्रान्ते रथे तिष्ठन्रामः प्रहरतां वरः ।
ववर्ष शरजालानि मयि मेघ इवाचले ॥ ५-१८२-२ (३८१७५)
ततः सूतो मम सुहृच्छरवर्षेण ताडितः ।
अपयातो रथोपस्थान्मनो मम विषादयन् ॥ ५-१८२-३ (३८१७६)
ततः सूतो ममात्यर्थं कश्मलं प्राविशन्महत् ।
पृथिव्यां च शराघातान्निपपात मुमोह च ॥ ५-१८२-४ (३८१७७)
ततः सूतो जहात्प्राणान्रामबाणप्रपीडितः ।
मुहूर्तादिव राजेन्द्र मां च भीराविशत्तदा ॥ ५-१८२-५ (३८१७८)
ततः सूते हते तस्मिन्क्षिपतस्तस्य मे शरान् ।
प्रमत्तमनसो रामः प्राहिणोन्मृत्युसंमितम् ॥ ५-१८२-६ (३८१७९)
ततः सूतव्यसनिनं विप्लुतं मां स भार्गवः ।
शरेणाभ्यहनद्गाढं विकृष्य बलवद्धनुः ॥ ५-१८२-७ (३८१८०)
स मे भुजान्तरे राजन्निपत्य रुधिराशनः ।
मयैव सह राजेन्द्र जगाम वसुधातलम् ॥ ५-१८२-८ (३८१८१)
मत्वा तु निहतं रामस्ततो मां भरतर्षभ ।
मेघवद्विननादोच्चैर्जहृषे च पुनः पुनः ॥ ५-१८२-९ (३८१८२)
तथा तु पतिते राजन्मयि रामो मुदा युतः ।
उदक्रोशन्महानादं सह तैरनुयायिभिः ॥ ५-१८२-१० (३८१८३)
मम तत्राभवन्ये तु कुरवः पार्श्वतः स्थिताः ।
आगता अपि युद्धं तज्जनास्तत्र दिदृक्षवः ।
आर्तिं परमिकां जग्मुस्ते तदा पतिते मयि ॥ ५-१८२-११ (३८१८४)
ततोऽपश्यं पतितो राजसिंह
द्विजानष्टौ सूर्यहुताशनाभान् ।
ते मां समन्तात्परिवार्य तस्थुः
स्वबाहुभिः परिधार्याजिमध्ये ॥ ५-१८२-१२ (३८१८५)
रक्ष्यमाणश्च तैर्विप्रैर्नाहं भूमिमुपास्पृशम् ।
अन्तरिक्षे धृतो ह्यस्मि तैर्विप्रैर्बान्धवैरिव ॥ ५-१८२-१३ (३८१८६)
श्वसन्निवान्तरिक्षे च जलबिन्दुभिरुक्षितः ।

ततस्ते ब्राह्मणा राजन्नब्रुवन्परिगृह्य माम् ॥ ५-१८२-१४ (३८१८७)
मा भैरिति समं सर्वे स्वस्ति तेऽस्त्विति चासकृत् ।
ततस्तेषामहं वाग्भिस्तर्पितः सहसोत्थितः ।
मातरं सरितां श्रेष्ठामपश्यं रथमास्थिताम् ॥ ५-१८२-१५ (३८१८८)
हयाश्च मे संगृहीतास्तयाऽऽस-
न्महानद्या संयति कौरवेन्द्र ।
पादौ जनन्याः प्रतिगृह्य चाहं
तथा पितॄणां रथमभ्यरोहम् ॥ ५-१८२-१६ (३८१८९)
ररक्ष सा मां सरथं हयांश्चोपस्काराणि च ।
तामहं प्राञ्जलिर्भूत्वा पुनरेव व्यसर्जयम् ॥ ५-१८२-१७ (३८१९०)
ततोऽहं स्वयमुद्यम्य हयांस्तान्वातरंहसः ।
अयुध्यं जामदग्न्येन निवृत्तेऽहनि भारत ॥ ५-१८२-१८ (३८१९१)
ततोऽहं भरतश्रेष्ठ वेगवन्तं महाबलम् ।
अमुञ्चं समरे बाणं रामाय हृदयच्छिदम् ॥ ५-१८२-१९ (३८१९२)
ततो जगाम वसुधां मम बाणप्रपीडितः ।
जानुभ्यां धनुरुत्सृज्य रामो मोहवशं गतः ॥ ५-१८२-२० (३८१९३)
ततस्तस्मिन्निपतिते रामे भूरिसहस्रदे ।
आवव्रुर्जलदा व्योम क्षरन्तो रुधिरं बहु ॥ ५-१८२-२१ (३८१९४)
उल्काश्च शतशः पेतुः सनिर्घाताः सकम्पनाः। ५-१८२-२२बर्कं च
सहसा दीप्तं स्वर्भानुरभिसंवृणोत् ॥ ५-१८२-२२ (३८१९५)
ववुश्च वाताः परुषाश्चलिता च वसुंधरा ।
गृध्रा बलाश्च कङ्काश्च परिपेतुर्मुदा युताः ॥ ५-१८२-२३ (३८१९६)
दीप्तायां दिशि गोमायुर्दारुणं मुहुरुन्नदत् ।
अनाहता दुन्दुभयो विनेदुर्भृशनिःस्वनाः ॥ ५-१८२-२४ (३८१९७)
एतदौत्पातिकं सर्वं घोरमासीद्भयंकरम् ।
विसंज्ञकल्पे धरणीं गते रामे महात्मनि ॥ ५-१८२-२५ (३८१९८)
ततो वै सहसोत्थाय रामो मामभ्यवर्तत ।
पुनर्युद्धाय कौरव्य विह्वलः क्रोधमूर्छितः ॥ ५-१८२-२६ (३८१९९)
आददानो महाबाहुः कार्मुकं तालसन्निभम् ।
ततो मय्याददानं तं राममेव न्यवारयन् ॥ ५-१८२-२७ (३८२००)
महर्षयः कृपायुक्ताः क्रोधाविष्टोऽपि भार्गवः ।
समाहरदमेयात्मा शरं कालानलोपमम् ॥ ५-१८२-२८ (३८२०१)
सतो रविर्मन्दमरीचिमण्डलो
जगामास्तं पांसुपुञ्जावगूढः
निशा व्यगाहत्सुखशीतमारुता
ततो युद्धं प्रत्यवहारयाव- ॥ ५-१८२-२९ (३८२०२)

एवं राजन्नवहारो बभूव
ततः पुनर्विमलेऽभूत्सुघोरम् ।
कल्यंकल्यं विंशतिं वै दिनानि
तथैव चान्यानि दिनानि त्रीणि ॥ ॥ ५-१८२-३० (३८२०३)

इति श्रीमन्महाभारते उद्योगपर्वणि अम्बोपाख्यानपर्वणि
द्व्यशीत्यधिकशततमोऽध्यायः ॥
Mahabharata - Udyoga Parva - Chapter Footnotes

५-१८२-२ अभ्रान्ते मेघमण्डलसमीपे ॥
५-१८२-१२ द्विजान् ब्राह्मणरूपधरान् वसून् ॥
५-१८२-२१ भूयिप्तहस्नदे स्वर्णसहस्राणां दातरि ॥
५-१८२-२२ सकम्पनाः सविद्युतः ॥
५-१८२-२३ बलाः बलाकाः ॥
५-१८२-३० कल्यंकल्यं प्रातःप्रातः ॥

---

उद्योगपर्व-अध्यय१८३
॥ श्रीः ॥
५.१८३. अध्यायः १८३

Mahabharata - Udyoga Parva - Chapter Topics
सप्रमाणं देवतादिप्रार्थनापूर्वकं शायितस्य भीष्मस्य दिव्यपुरुषैः
स्वप्ने समाश्वासनपूर्वकं ज्ञातपूर्वप्रस्वापनास्त्रानुस्मारणम् ॥ १ ॥

Mahabharata - Udyoga Parva - Chapter Text

५-१८३-० (३८२०४)
भीष्म उवाच। ५-१८३-०क्ष् (३९१७)
ततोऽहं निशि राजेन्द्र प्रणम्य शिरसा तदा ।
ब्राह्मणानां पितॄणां च देवतानां च सर्वशः ॥ ५-१८३-१ (३८२०५)
नक्तंचराणां भूतानां राजन्यानां विशांपते ।
शयनं प्राप्य रहिते मनसा समचिन्तयम् ॥ ५-१८३-२ (३८२०६)
जामदग्न्येन मे युद्धमिदं परमदारुणम् ।
अहानि च बहून्यद्य वर्तते सुमहात्ययम् ॥ ५-१८३-३ (३८२०७)
न च रामं महावीर्यं शक्नोमि रणमूर्धनि ।
विजेतुं समरे विप्रं जामदग्न्यं महाबलम् ॥ ५-१८३-४ (३८२०८)
यदि शक्यो मया जेतुं जामदग्न्यः प्रतापवान् ।

दैवतानि प्रसन्नानि दर्शयन्तु निशां मम ॥ ५-१८३-५ (३८२०९)
ततो निशि च राजेन्द्र प्रसुप्तः शरविक्षतः ।
दक्षिणेनेह पार्श्वेन प्रभातसमये तदा ॥ ५-१८३-६ (३८२१०)
ततोऽहं विप्रमुख्यैस्तैर्यैरस्मि पतितो रथात् ।
उत्थापितो धृतश्चैव मा भैरिति च सान्त्वितः ॥ ५-१८३-७ (३८२११)
त एव मां महाराज स्वप्ने दर्शनमेत्य वै ।
परिवार्याब्रुवन्वाक्यं तन्निबोध कुरूद्वह ॥ ५-१८३-८ (३८२१२)
उत्तिष्ठ मा भैर्गाङ्गेय न भयं तेऽस्ति किंचन ।
रक्षामहे त्वां कौरव्य स्वशरीरं हि नो भवान् ॥ ५-१८३-९ (३८२१३)
न त्वां रामो रणे जेता जामदग्न्यः कथंचन ।
त्वमेव समरे रामं विजेता भरतर्षभ ॥ ५-१८३-१० (३८२१४)
इदमस्त्रं सुदयितं प्रत्यभिज्ञास्यते भवान् ।
विदितं हि तवाप्येतत्पूर्वस्मिन्देहधारणे ॥ ५-१८३-११ (३८२१५)
प्राजापत्यं विश्वकृतं प्रस्वापं नाम भारत ।
न हीदं वेद रामोऽपि पृथिव्यां वा पुमान्क्वचित् ॥ ५-१८३-१२ (३८२१६)
तत्स्मरस्व महाबाहो भृशं संयोजयस्व च ।
उपस्थास्यति राजेन्द्र स्वयमेव तवानघ ॥ ५-१८३-१३ (३८२१७)
येन सर्वान्महावीर्यान्प्रशासिष्यसि कौरव ।
न च रामः क्षयं गन्ता तेनास्त्रेण नराधिप ॥ ५-१८३-१४ (३८२१८)
एनसा न तु संयोगं प्राप्स्यसे जातु मानद ।
स्वप्स्यते जामदग्न्योऽसौ त्वद्बाणबलपीडितः ॥ ५-१८३-१५ (३८२१९)
ततो जित्वा त्वमेवैनं पुनरुत्थापयिष्यसि ।
अस्त्रेण दयितेनाजौ भीष्म संबोधनेन वै ॥ ५-१८३-१६ (३८२२०)
एवं कुरुष्व कौरव्य प्रभाते रथमास्थितः ।
प्रसुप्तं वा मृतं वेति तुल्यं मन्यामहे वयम् ॥ ५-१८३-१७ (३८२२१)
न च रामेण मर्तव्यं कदाचिदपि पार्थिव ।
ततः समुत्पन्नमिदं प्रस्वापं युज्यतामिति ॥ ५-१८३-१८ (३८२२२)
इत्युक्त्वान्तर्हिता राजन्सर्व एव द्विजोत्तमाः ।
अष्टौ सदृशरूपास्ते सर्वे भासुरमूर्तयः ॥ ॥ ५-१८३-१९ (३८२२३)

इति श्रीमन्महाभारते उद्योगपर्वणि अम्बोपाख्यानपर्वणि
त्र्यशीत्यधिकशततमोऽध्यायः ॥

Mahabharata - Udyoga Parva - Chapter Footnotes

५-१८३-५ निशां निशि । दर्शयन्तु आत्मानं प्रकाशयन्तु ॥

---

उद्योगपर्व-अध्यय१८४

॥ श्रीः ॥
५.१८४. अध्यायः १८४

Mahabharata - Udyoga Parva - Chapter Topics
रामभीष्मयोरायोधनम् ॥ १ ॥
भीष्मस्य प्रस्वापनास्त्रप्रतिभानम् ॥ २ ॥

Mahabharata - Udyoga Parva - Chapter Text

५-१८४-० (३८२२४)
भीष्म उवाच। ५-१८४-०क्ष् (३९१८)
ततो रात्रौ व्यतीतायां प्रतिबुद्धोऽस्मि भारत ।
ततः संचिन्त्य वै स्वप्नमवापं हर्षमुत्तमम् ॥ ५-१८४-१ (३८२२५)
ततः समभवद्युद्धं मम तस्य च भारत ।
तुमुलं सर्वभूतानां रोमहर्षणमद्भुतम् ॥ ५-१८४-२ (३८२२६)
ततो बाणमयं वर्षं ववर्ष मयि भार्गवः ।
न्यवारयमहं तच्च शरजालेन भारत ॥ ५-१८४-३ (३८२२७)
ततः परमसंक्रुद्धः पुनरेव महातपाः ।
ह्यस्तनेन च कोपेन शक्तिं वै प्राहिणोन्मयि ॥ ५-१८४-४ (३८२२८)
इन्द्राशनिसमस्पर्शां यमदण्डसमप्रभाम् ।
ज्वलन्तीमग्निवत्सङ्ख्ये लेलिहानां समन्ततः ॥ ५-१८४-५ (३८२२९)
ततो भरतशार्दूल धिष्ण्यमाकाशगं यथा ।
सा ममाभ्यवधीत्तूर्णं जत्रुदेशे कुरूद्वह ॥ ५-१८४-६ (३८२३०)
अथास्रमस्रवद्घोरं गिरेर्गैरिकधातुवात् ।
रामेण सुमहाबाहो क्षतस्य क्षतजेक्षण ॥ ५-१८४-७ (३८२३१)
ततोऽहं जामदग्न्याय भृशं क्रोधसमन्वितः ।
चिक्षेप मृत्युसंकाशं बाणं सर्पविषोपमम् ॥ ५-१८४-८ (३८२३२)
स तेनाभिहतो वीरो ललाटे द्विजसत्तमः ।
अशोभत महाराज शश्रृङ्ग इव पर्वतः ॥ ५-१८४-९ (३८२३३)
स संरब्धः समावृत्य शरं कालान्तकोपमम् ।
संदधे बलवत्कृष्य घोरं शत्रनिबर्हणम् ॥ ५-१८४-१० (३८२३४)
स वक्षसि पापतोग्रः शरो व्याल इव श्वसन् ।
महीं राजंस्ततश्चाहमगमं रुधिराविलः ॥ ५-१८४-११ (३८२३५)
संप्राप्य तु पुनः संज्ञां जामदघ्न्याय धीमते ।
प्राहिण्वं विमलां शक्तिं ज्वलन्तीमशनीमिव ॥ ५-१८४-१२ (३८२३६)
सा तस्य द्विजमुख्यस्य निपपात भुजान्तरे ।

विह्वलश्चाभवद्राजन्वेपथुश्चैनमाविशत् ॥ ५-१८४-१३ (३८२३७)
तत एनं परिष्वज्य सखा विप्रो महातपाः ।
अकृतव्रणः शुभैर्वाक्यैराश्वासयदनेकधा ॥ ५-१८४-१४ (३८२३८)
समाश्वस्तस्ततो रामः क्रोधामर्षसमन्वितः ।
प्रादुश्चक्रे तदा ब्राह्मं परमास्त्रं महाव्रतः ॥ ५-१८४-१५ (३८२३९)
ततस्तत्प्रतिघातार्थं ब्राह्ममेवास्त्रमुत्तमम् ।
मया प्रयुक्तं जज्वाल युगान्तमिव दर्शयत् ॥ ५-१८४-१६ (३८२४०)
तयोर्ब्रह्मास्त्रयोरासीदन्तरा वै समागमः ।
असंप्राप्यैव रामं च मां च भारतसत्तम ॥ ५-१८४-१७ (३८२४१)
ततो व्योम्नि प्रादुरभूत्तेज एव हि केवलम् ।
भूतानि चैव सर्वाणि जग्मुरार्तिं विशांपते ॥ ५-१८४-१८ (३८२४२)
ऋषयश्च सगन्धर्वा देवताश्चैव भारत ।
संतापं परमं जग्मुरस्त्रतेजोभिपीडिताः ॥ ५-१८४-१९ (३८२४३)
ततश्चचाल पृथिवी सपर्वतवनद्रुमा ।
संतप्तानि च भूतानि विषादंक जग्मुरुत्तमम् ॥ ५-१८४-२० (३८२४४)
प्रजज्वाल नभो राजन्धूमायन्ते दिशो दश ।
न स्थातुमन्तरिक्षे च शेकुराकाशगास्तदा ॥ ५-१८४-२१ (३८२४५)
ततो हाहाकृते लोके सदेवासुरराक्षसे ।
इदमन्तरमित्येवं मोक्तुकामोऽस्मि भारत ॥ ५-१८४-२२ (३८२४६)
प्रस्वापमस्त्रं त्वरितो वचनाद्ब्रह्मवादिनाम् ।
चिन्तितं च तदस्त्रं मे मनसि प्रत्यभात्तदा ॥ ॥ ५-१८४-२३ (३८२४७)

इति श्रीमन्महाभारते उद्योगपर्वणि अम्बोपाख्यानपर्वणि
चतुरशीत्यधिकशततमोऽध्यायः ॥

---

उद्योगपर्व-अध्यय१८५
॥ श्रीः ॥
५.१८५. अध्यायः १८५

Mahabharata - Udyoga Parva - Chapter Topics
भीष्मे रामंप्रति प्रस्वापनास्त्रं प्रयोक्तुकामे नारदेन तन्निषेधनम् ॥ १ ॥
भीष्मेण दिव्यपुरुषवचनाच्च प्रस्वापनास्त्रप्रतिसंसंहारे रामेण
स्वस्य पराजितत्वोक्तिः ॥ २ ॥
नारदादिवचनाद्युद्धोपरमः ॥ ३ ॥

Mahabharata - Udyoga Parva - Chapter Text

५-१८५-० (३८२४८)
भीष्म उवाच। ५-१८५-०क्ष् (३९१९)
ततो हलहलाशब्दो दिवि राजन्महानभूत् ।
प्रस्वापं भीष्म मा स्राक्षीरिति कौरवनन्दन ॥ ५-१८५-१ (३८२४९)
अयुञ्जमेव चैवाहं तदस्त्रं भृगुनन्दने ।
प्रस्वापं मां प्रयुज्जानं नारदो वाकयमब्रवीत् ॥ ५-१८५-२ (३८२५०)
एते वियति करव्य दिवि देवगणाः स्थिताः ।
ते त्वां निवारयन्त्यद्य प्रस्वापं मा प्रयोजय ॥ ५-१८५-३ (३८२५१)
रामस्तपस्वी ब्रह्मण्यो ब्राह्मणश्च गुरुश्च ते ।
तस्यवमानं कौरव्य मास्म कार्षीः कथञ्चन ॥ ५-१८५-४ (३८२५२)
ततोऽपश्यं दिविष्ठान्वै तानष्टौ ब्रह्मवादिनः ।
ते मां स्मयन्तो राजेन्द्र शनकैरिदमब्रुवन् ॥ ५-१८५-५ (३८२५३)
यथाऽऽह भरतश्रेष्ठ नारदस्तत्तथा कुरु ।
एतद्धि परमं श्रेयो लोकानां भरतर्षभ ॥ ५-१८५-६ (३८२५४)
ततश्च प्रतिसंहृत्य तदस्त्रं स्वापनं महत् ।
ब्रह्मास्त्रं दीपयाञ्चक्रे तस्मिन्युधि यथाविधि ॥ ५-१८५-७ (३८२५५)
ततो रामो हृषितो राजसिंह
दृष्ट्वा तदस्त्रं विनिवर्तितं वै ।
जितोऽस्मि भीष्मेण सुमन्दबुद्धि-
रित्येव वाक्यं सहसा व्यमुञ्चत् ॥ ५-१८५-८ (३८२५६)
ततोऽपश्यत्पितरं जामदग्न्यः
पितुस्तथा पितरं चास्य मान्यम् ।
ते तत्र चैनं परिवार्य तस्थु-
रूचुश्चैनं सान्त्वपूर्वं तदनीम् ॥ ५-१८५-९ (३८२५७)
पितर ऊचुः। ५-१८५-१०क्ष् (३९२०)
मा स्मैवं साहसं तात पुनः कार्षीः कथञ्चन ।
भीष्मेण संयुगं गन्तुं क्षत्रियेण विशेषतः ॥ ५-१८५-१० (३८२५८)
क्षत्रियस्य तु धर्मोऽयं यद्युद्धं भृगुनन्दन ।
स्वाध्यायो व्रतचर्याऽथ ब्राह्मणानां परं धनम् ॥ ५-१८५-११ (३८२५९)
इदं निमित्ते कस्मिंश्चिदस्माभिः प्रागुदाहृतम् ।
शस्त्रधारणमत्युग्रं तच्चाकार्यं कृतं त्वया ॥ ५-१८५-१२ (३८२६०)
वत्स पर्याप्तमेतावद्भीष्मेण सह संयुगे ।
विमर्दस्ते महाबाहो व्यपयाहि रणादितः ॥ ५-१८५-१३ (३८२६१)
पर्याप्तमेतद्भद्रं ते तव कार्मुकधारणम् ।
विसर्जयैतद्दुर्धर्ष तपस्तप्यस्व भार्गव ॥ ५-१८५-१४ (३८२६२)
एष भीष्मः शान्तनवो देवैः सर्वैर्निवारितः ।

निवर्तस्व रणादस्मादिति चैव प्रसादितः ॥ ५-१८५-१५ (३८२६३)
रामेण सह मायोत्सीर्गुरुणेति पुनः पुनः ।
न हि रामो रणे जेतुं त्वया न्याय्यः कुरूद्वह ॥ ५-१८५-१६ (३८२६४)
मानं कुरुष्व गाङ्गेय ब्राह्मणस्य रणाजिरे ।
वयं तु गुरवस्तुभ्यं तस्मात्त्वां वारयामहे ॥ ५-१८५-१७ (३८२६५)
भीष्मो वसूनामन्यतमो दिष्ट्या जीवसि पुत्रक ।
गाङ्गेयः शन्तनोः पुत्रो वसुरेष महायशाः ॥ ५-१८५-१८ (३८२६६)
कथं शक्यस्त्वया जेतुं निवर्तस्वेह भार्गव ।
अर्जुनः पाण्डवश्रेष्ठः पुरन्दरसुतो बली ॥ ५-१८५-१९ (३८२६७)
नरः प्रजापतिर्वीरः पूर्वदेवः सनातनः ।
सव्यसाचीति विख्यातस्त्रिषु लोकेषु वीर्यवान् ।
भीष्ममृत्युर्यथाकालं विहितो वै स्वयंभुवा ॥ ५-१८५-२० (३८२६८)
भीष्म उवाच। ५-१८५-२१क्ष् (३९२१)
एवमुक्तः स पितृभिः पितॄन्रामोऽब्रवीदिदम् ।
नाहं युधि निवर्तेयमिति मे व्रतमाहितम् ।
न निवर्तितपूर्वश्च कदाचिद्रणमूर्धनि ॥ ५-१८५-२१ (३८२६९)
निवर्त्यतामापगेयः कामं युद्धात्पितामहाः ।
न त्वहं विनिवर्तिष्ये युद्धादस्मात्कथंचन ॥ ५-१८५-२२ (३८२७०)
ततस्ते मुनयो राजन्नृचीकप्रमुखास्तदा ।
नारदेनैव सहिताः समागम्येदमब्रुवन् ॥ ५-१८५-२३ (३८२७१)
निवर्तस्व रणात्तात मानयस्व द्विजोत्तमम् ।
इत्यवोचमहं तांश्च क्षत्रधर्मव्यपेक्षया ॥ ५-१८५-२४ (३८२७२)
मम व्रतमिदं लोके नाहं युद्धात्कदाचन ।
विमुखो विनिवर्तेयं पृष्ठतोऽभ्याहतः शरैः ॥ ५-१८५-२५ (३८२७३)
नाहं लोभान्न कार्पण्यान्न भयान्नार्थकारणात् ।
त्यजेयं शाश्वतं धर्ममिति मे निश्चिता मतिः ॥ ५-१८५-२६ (३८२७४)
ततस्ते मुनयः सर्वे नारदप्रमुखा नृप ।
भागीरथी च मे माता रणमध्यं प्रपेदिरे ॥ ५-१८५-२७ (३८२७५)
तथैवात्तशरो धन्वी तथैव दृढनिश्चयः ।
स्थितोऽहमाहवे योद्धुं ततस्ते राममब्रुवन् ॥ ५-१८५-२८ (३८२७६)
समेत्य सहिता भूयः समरे भृगुनन्दनम् ।
नावनीतं हि हृदयं विप्राणां शाम्य भार्गव ॥ ५-१८५-२९ (३८२७७)
राम राम निवर्तस्व युद्धादस्माद्द्विजोत्तम ।
अवध्यो वै त्वया भीष्मस्त्वं च भीष्मस्य भार्गव ॥ ५-१८५-३० (३८२७८)
एवं ब्रुवन्तस्ते सर्वे प्रतिरुद्ध्य रणाजिरम् ।
न्यासयाञ्चक्रिरे शस्त्रं पितरो भृगुनन्दनम् ॥ ५-१८५-३१ (३८२७९)

ततोऽहं पुनरेवाथ तानष्टौ ब्रह्मवादिनः ।
अद्राक्षं दीप्यमानान्वै ग्रहानष्टाविवोदितान् ॥ ५-१८५-३२ (३८२८०)
ते मां सप्रणयं वाक्यमब्रुवन्समरे स्थितम् ।
प्रैहि रामं महाबाहो गुरुं लोकहितं कुरु ॥ ५-१८५-३३ (३८२८१)
दृष्ट्वा निवर्तितं रामं सुहृद्वाक्येन तेन वै ।
लोकानां च हितं कुर्वन्नहमप्याददे वचः ॥ ५-१८५-३४ (३८२८२)
ततोऽहं राममासाद्य ववन्दे भृशविक्षतः ।
रामश्चाभ्युत्स्मयन्प्रेम्णा मामुवाच महातपाः ॥ ५-१८५-३५ (३८२८३)
त्वत्समो नास्ति लोकेऽस्मिन्क्षत्रियः पृथिवीचरः ।
गम्यतां भीष्म युद्धेऽस्मिंस्तोषितोऽहं भृशं त्वया ॥ ५-१८५-३६ (३८२८४)
मम चैव समक्षं तां कन्यामाहूय भार्गवः ।
उक्तवान्दीनया वाचा मध्ये तेषां महात्मनाम् ॥ ॥ ५-१८५-३७ (३८२८५)

इति श्रीमन्महाभारते उद्योगपर्वणि अम्बोपाख्यानपर्वणि
पञ्चाशीत्यधिकशततमोऽध्यायः ॥

---

उद्योगपर्व-अध्यय१८६
॥ श्रीः ॥
५.१८६. अध्यायः १८६

Mahabharata - Udyoga Parva - Chapter Topics
राममामन्त्र्य गतया अम्बया पुण्याश्रमादिषु दुष्करतपश्चरणम् ॥ १ ॥

Mahabharata - Udyoga Parva - Chapter Text

५-१८६-० (३८२८६)
राम उवाच। ५-१८६-०क्ष् (३९२२)
प्रत्यक्षमेतल्लोकानां सर्वेषामेव भामिनि ।
यथाशक्त्या मया युद्धं कृतं वै पौरुषं परम् ॥ ५-१८६-१ (३८२८७)
न चैवमपि शक्नोमि भीष्मं शस्त्रभृतां वरम् ।
विशेषयितुमत्यर्थमुत्तमास्त्राणि दर्शयन् ॥ ५-१८६-२ (३८२८८)
एषा मे परमा शक्तिरेतन्मे परमं बलम् ।
यथेष्टं गम्यतां भद्रे किमन्यद्वा करोमि ते ॥ ५-१८६-३ (३८२८९)
भीष्ममेव प्रपद्यस्व न तेऽन्या विद्यते गतिः ।
निर्जितो ह्यस्मि भीष्मेण महास्त्राणि प्रमुञ्चता ॥ ५-१८६-४ (३८२९०)
एवमुक्त्वा ततो रामो विनिःश्वस्य महामनाः ।
तूष्णीमासीत्ततः कनक्या प्रोवाच भृगुनन्दनम् ॥ ५-१८६-५ (३८२९१)

भगवन्नेवमेवैतद्यथाऽऽह भगवांस्तथा ।
अजेयो युधि भीष्मोऽयमपि देवैरुदारधीः ॥ ५-१८६-६ (३८२९२)
यथाशक्ति यथोत्साहं मम कार्यं कृतं त्वया ।
अनिवार्यं रणे वीर्यमस्त्राणि विविधानि च ॥ ५-१८६-७ (३८२९३)
ने चैव शक्यते युद्धे विशेषयितुमन्ततः ।
न चाहमेनं यास्यामि पुनर्भीष्मं कथंचन ॥ ५-१८६-८ (३८२९४)
गमिष्यामि तु तत्राहं यत्र भीष्मं तपोधन ।
समरे पातयिष्यामि स्वयमेव भृगूद्वह ॥ ५-१८६-९ (३८२९५)
एवमुक्त्वा ययौ कन्या रोषव्याकुललोचना ।
तापस्ये धृतसंकल्पा सा मे चिन्तयती वधम् ॥ ५-१८६-१० (३८२९६)
ततो महेन्द्रं सहितैरमुनिभिर्भृगुसत्तमः ।
यथाऽऽगतं तथा सोऽगन्मामुपामन्त्र्य भारत ॥ ५-१८६-११ (३८२९७)
ततो रथं समारुह्य स्तूयमानो द्विजातिभिः ।
प्रविश्य नगरं मात्रे सत्यवत्यै न्यवेदयम् ॥ ५-१८६-१२ (३८२९८)
यथावृत्तं महाराज सा च मां प्रत्यनन्दत ।
पुरुषांश्चादिशं प्राज्ञान्कन्यावृत्तान्तकर्मणि ॥ ५-१८६-१३ (३८२९९)
दिवसे दिवसे ह्यस्या गतिजल्पितचेष्टितम् ।
प्रत्याहरंश्च मे युक्ताः स्थिताः प्रियहिते सदा ॥ ५-१८६-१४ (३८३००)
यदैव हि वनं प्रायात्सा कन्या तपसे धृता ।
तदैव व्यथितो दीनो गतचेता इवाभवम् ॥ ५-१८६-१५ (३८३०१)
न हि मां क्षत्रियः कश्चिद्वीर्येण व्यजयद्युधि ।
ऋते ब्रह्मविदस्तात तपसा संशितव्रतात् ॥ ५-१८६-१६ (३८३०२)
अपि चैतन्मया राजन्नारदेऽपि निवेदितम् ।
व्यासे चैव तथा कार्यं तौ चोभौ मामवोचताम् ॥ ५-१८६-१७ (३८३०३)
न विषादस्त्वया कार्यो भीष्म काशिसुतां प्रति ।
दैवं पुरुषकारेण को निवर्तितुमुत्सहेत् ॥ ५-१८६-१८ (३८३०४)
सा कन्या तु महाराज प्रविश्याश्रममण्डलम् ।
यमुनातीरमाश्रित्य तपस्तेपेऽतिमानुषम् ॥ ५-१८६-१९ (३८३०५)
निराहारा कृशा रूक्षा जटिला मलपङ्किनी ।
षण्मासान्वायुभक्षा च स्थाणुभूता तपोधना ॥ ५-१८६-२० (३८३०६)
यमुनाजलमाश्रित्य संवत्सरमथाऽपरम् ।
उदवासं निराहारा पारयामास भामिनी ॥ ५-१८६-२१ (३८३०७)
शीर्णपर्णेन चैकेन पारयामास सा परम् ।
संवत्सरं तीव्रकोपा पादाङ्गुष्ठाग्रधिष्ठिता ॥ ५-१८६-२२ (३८३०८)
एवं द्वादश वर्षाणि तापयामास रोदसी ।
निवर्त्यमानापि च सा ज्ञातिभिर्नैव शक्यते ॥ ५-१८६-२३ (३८३०९)

ततोऽगमद्वत्सभूमिं सिद्धचारणसेविताम् ।
आश्रमं पुण्यशीलानां तापसानां महात्मनाम् ॥ ५-१८६-२४ (३८३१०)
तत्र पुण्येषु तीर्थेषु साऽऽप्लुताङ्गी दिवानिशम् ।
व्यचरत्काशिकन्या सा यथाकामविचारिणी ॥ ५-१८६-२५ (३८३११)
नन्दाश्रमे महाराज तथोलूकाश्रमे शुभे ।
च्यवनस्याश्रमे चैव ब्रह्मणः स्थान एव च ॥ ५-१८६-२६ (३८३१२)
त्रयागे देवयजने देवारण्येषु चैव ह ।
भोगवत्यां महाराज कौशिकस्याश्रमे तथा ॥ ५-१८६-२७ (३८३१३)
माण्डव्यस्याश्रमे राजन्दिलीपस्याश्रमे तथा ।
रामह्रदे च कौरव्य पैलगर्गस्य चाश्रमे ॥ ५-१८६-२८ (३८३१४)
एतेषु तीर्थेषु तदा काशिकन्या विशांपते ।
आप्लावयत गात्राणि व्रतमास्थाय दुष्करम् ॥ ५-१८६-२९ (३८३१५)
तामब्रवीच्च कौरव्य मम माता जले स्थिता ।
किमर्थं क्लिश्यसे भद्रे तथ्यमेव वदस्व मे ॥ ५-१८६-३० (३८३१६)
सैनामथाब्रवीद्राजन्कृताञ्जलिरनिन्दिता
भीष्मेण समरे रामो निर्जितश्चारुलोचनि ॥ ५-१८६-३१ (३८३१७)
कोऽन्यस्तमुत्सहेञ्जेतुमुद्यतेषुं महीपतिः ।
साहं भीष्मविनाशाय तपस्तप्स्ये सुदारुणम् ॥ ५-१८६-३२ (३८३१८)
विचरामि महीं देवि यथा हन्यामहं नृपम् ।
एतद्व्रतफलं देवि परमस्मिन्यथा हि मे ॥ ५-१८६-३३ (३८३१९)
ततोऽब्रवीत्सागरगा जिह्मं चरसि भामिनि ।
नैष कामोऽनवद्याङ्गि शक्यः प्राप्तुं त्वयाऽबले ॥ ५-१८६-३४ (३८३२०)
यदि भीष्मविनाशाय काश्ये चरसि वै व्रतम् ।
व्रतस्था च शरीरं त्वं यदि नाम विमोक्ष्यसि ॥ ५-१८६-३५ (३८३२१)
नदी भविष्यसि शुभे कुटिला वार्षिकोदका ।
दुस्तीर्था न तु विज्ञेया वार्षिकी नाष्टमासिकी ॥ ५-१८६-३६ (३८३२२)
भीमग्राहवती घोरा सर्वभूतभयंकरी ।
एवमुक्त्वा ततो राजन्काशिकन्यां न्यवर्तत ॥ ५-१८६-३७ (३८३२३)
माता मम महाभागा स्मयमानेव भामिनी ।
कदाचिदष्टमे मासि कदाचिद्दशमे तथा ।
न प्राश्नीतोदकमपि पुनः सा वरवर्णिनी ॥ ५-१८६-३८ (३८३२४)
सा वत्सभूमिं कौरव्य तीर्थलोभात्ततस्ततः ।
पतिता परिधावन्ती पुनः काशिपतेः सुता ॥ ५-१८६-३९ (३८३२५)
सा नदी वत्सभूम्यां तु प्रथिताम्बेति भारत ।
वार्षिकी ग्राहबहुला दुस्तीर्था कुटिला तथा ॥ ५-१८६-४० (३८३२६)
सा कन्या तपसा तेन देहार्धेन व्यजायत ।

नदी च राजन्वत्सेषु कन्या चैवाभवत्तदा ॥ ॥ ५-१८६-४१ (३८३२७)

इति श्रीमन्महाभारते उद्योगपर्वणि अम्बोपाख्यानपर्वणि षडशीत्यधिकशततमोऽध्याय- ॥

Mahabharata - Udyoga Parva - Chapter Footnotes

५-१८६-३६ वार्षिकी वर्षास्वेव वहतीति वार्षिकी ॥

---

उद्योगपर्व-अध्यय१८७

॥ श्रीः ॥

५.१८७. अध्यायः १८७

Mahabharata - Udyoga Parva - Chapter Topics

अम्बया तपस्तोषितान्महादेवात् जन्मान्तरे पुंस्त्वप्राप्त्या भीष्महननरूपवमुपलभ्याग्नौ प्रवेशः ॥ १ ॥

Mahabharata - Udyoga Parva - Chapter Text

५-१८७-० (३८३२८)
भीष्म उवाच। ५-१८७-०क्ष् (३९२३)
ततस्ते तापसाः सर्वे तपसे धृतनिश्चयाम् ।
दृष्ट्वा न्यवर्तयंस्तात किं कार्यमिति चाब्रुवन् ॥ ५-१८७-१ (३८३२९)
तानुवाच ततः कन्या तपोवृद्धानृषींस्तदा ।
निराकृतास्मि भीष्मेण भ्रंशिता पतिधर्मतः ॥ ५-१८७-२ (३८३३०)
वधार्थं तस्य दीक्षा मे न लोकार्थं तपोधनाः ।
निहत्य भीष्मं गच्छेयं शान्तिमित्येव निश्चयः ॥ ५-१८७-३ (३८३३१)
यत्कृते दुःखवसतिमिमां प्राप्तऽस्मि शाश्वतीम् ।
पतिलोकाद्विहीना च नैव स्त्री न पुमानिह ॥ ५-१८७-४ (३८३३२)
नाहत्वा युधि गाङ्गेयं निवर्तिष्ये तपोधनाः ।
एष मे हृदि संकल्पो यदिदं कथितं मया ॥ ५-१८७-५ (३८३३३)
स्त्रीभावे परिनिर्विण्णा पुंस्त्वार्थे कृतनिश्चया ।
भीष्मे प्रतिचिकीर्षामि नास्मि वार्येति वै पुनः ॥ ५-१८७-६ (३८३३४)
तां देवो दर्शयामास शूलपाणिरुमापतिः ।
मध्ये तेषां महार्षीणां स्वेन रूपेण तापसीम् ॥ ५-१८७-७ (३८३३५)
छन्द्यमाना वरेणाथ सा वव्रे मत्पराजयम् ।
हनिष्यसीति तां देवः प्रत्युवाच मनस्विनीम् ॥ ५-१८७-८ (३८३३६)

ततः सा पुनरेवाथ कन्या रुद्रमुवाच ह ।
उपपद्येत्कथं देव स्त्रिया युधि जयो मम ॥ ५-१८७-९ (३८३३७)
स्त्रीभावेन च मे गाढं मनः शान्तमुमापते ।
प्रतिश्रुतश्च भूतेश त्वया भीष्मपराजयः ॥ ५-१८७-१० (३८३३८)
यथा स सत्यो भवति तथा कुरु वृषध्वज ।
यथा हन्यां समागम्य भीष्मं शान्तनवं युधि ॥ ५-१८७-११ (३८३३९)
तामुवाच महादेवः कन्यां किल वृषध्वजः ।
न मे वागमृतं प्राह सत्यं भद्रे भविष्यसि ॥ ५-१८७-१२ (३८३४०)
हनिष्यसि रणे भीष्मं पुरुषत्वं च लप्स्यति ॥
स्मरिष्यसि च तत्सर्वं देहमन्यं गता सती ॥ ५-१८७-१३ (३८३४१)
द्रुपदस्य कुले जाता भविष्यसि महारथः ।
शीघ्रास्त्रश्चित्रयोधी च भविष्यसि सुसंमतः ॥ ५-१८७-१४ (३८३४२)
यथोक्तमेव कल्याणि सर्वमेतद्भविष्यति ।
भविष्यसि पुमान्पश्चात्कस्माच्चित्कालपर्ययात् ॥ ५-१८७-१५ (३८३४३)
एवमुक्त्वा महादेवः कपर्दी वृषभध्वजः ।
पश्यतामेव विप्राणां तत्रैवान्तरधीयत ॥ ५-१८७-१६ (३८३४४)
ततः सा पश्यतां तेषां महर्षीणामनिन्दिता ।
समाहृत्य वनात्तस्मात्काष्ठानि वरवर्णिनी ॥ ५-१८७-१७ (३८३४५)
चितां कृत्वा सुमहतीं प्रदाय च हुताशनम् ।
प्रदीप्तेऽग्नौ महाराज रोषदीप्तेन चेतसा ॥ ५-१८७-१८ (३८३४६)
उक्त्वा भीष्मवधायेति प्रविवेश हुताशनम् ।
ज्येष्ठा काशिसुता राजन्यमुनामभितो नदीम् ॥ ॥ ५-१८७-१९ (३८३४७)

इति श्रीमन्महाभारते उद्योगपर्वणि अम्बोपाख्यानपर्वणि
सप्ताशीत्यधिकशततमोऽध्यायः ॥
Mahabharata - Udyoga Parva - Chapter Footnotes

५-१८७-१० शान्तं शौर्यधर्मरहितम् ॥
५-१८७-१९ यमुनामभितः यमुनाद्वीपे इत्यर्थः ॥

---

उद्योगपर्व-अध्यय१८८
॥ श्रीः ॥
५.१८८. अध्यायः १८८

Mahabharata - Udyoga Parva - Chapter Topics
पुत्रार्थं तपस्यते द्रुपदाय महादेवेन स्त्री भूत्वा पुमान्भविष्यतीति
वरदानम् ॥ १ ॥

द्रुपदभार्यया स्त्र्यपत्यजननेऽपि तस्य पुंस्त्वख्यापनम् ॥ २ ॥
द्रुपदेन तस्य स्त्रीत्वं प्रच्छाद्य पुंवज्जातकर्मादिकरणपूर्वकं
शिखण्डीति नामकरणम् ॥ ३ ॥

Mahabharata - Udyoga Parva - Chapter Text

५-१८८-० (३८३४८)
दुर्योधन उवाच। ५-१८८-०क्ष् (३९२४)
कथं शिखण्डी गाङ्गेय कन्यां भूत्वा पुरा तदा ।
पुरुषोऽभूद्युधिश्रेष्ठ तन्मे ब्रूहि पितामह ॥ ५-१८८-१ (३८३४९)
भीष्म उवाच। ५-१८८-२क्ष् (३९२५)
भार्या तु तस्य राजेन्द्र द्रुपदस्य महीपतेः ।
महिषी दयिता ह्यासीदपुत्रा च विशांपते ॥ ५-१८८-२ (३८३५०)
एतस्मिन्नेव काले तु द्रुपदो वै महीपतिः ।
अपत्यार्थे महाराज तोषयामास शङ्करम् ॥ ५-१८८-३ (३८३५१)
अस्माद्वधार्थं निश्चित्य तपो घोरं समास्थितः ।
ऋते कन्यां महादेव पुत्रो मेस्यादिति ब्रुवन् ॥ ५-१८८-४ (३८३५२)
भगवन्पुत्रमिच्छामि भीष्मं प्रतिचिकीर्षया ।
इत्युक्तो देवदेवेन स्त्रीपुमांस्ते भविष्यति ॥ ५-१८८-५ (३८३५३)
निवर्तस्व महीपाल नैतज्जात्वन्यथा भवेत् ।
स तु गत्वा च नगरं भार्यामिदमुवाच ह ॥ ५-१८८-६ (३८३५४)
कृतो यत्नो महादेवस्तपसाऽऽराधितो मया ।
कन्या भूत्वा पुमान्भावी इति चोक्तोस्मि शंभुना ॥ ५-१८८-७ (३८३५५)
पुनः पुनर्याच्यमानो दिष्टमित्यब्रवीच्छिवः ।
नतदन्यच्च भविता भवितव्यं हि तत्तथा ॥ ५-१८८-८ (३८३५६)
ततः सा नियता भूत्वा ऋतुकाले मनस्विनी ।
पत्नी द्रुपदराजस्य द्रुपदं प्रविवेश ह ॥ ५-१८८-९ (३८३५७)
लेभे गर्भं यथाकालं विधिदृष्टेन कर्मणा ।
पार्षतस्य महीपाल यथा मां नारदोऽब्रवीत् ॥ ५-१८८-१० (३८३५८)
ततो दधार सा देवी गर्भं राजीवलोचना ।
तां स राजा प्रियां भार्यां द्रुपदः कुरुनन्दन ॥ ५-१८८-११ (३८३५९)
पुत्रस्नेहान्महाबाहुः मुखं पर्यचरत्तदा ।
सर्वानभिप्रायकृतान्भार्याऽलभत कौरव ॥ ५-१८८-१२ (३८३६०)
अपुत्रस्य सतो राज्ञो द्रुपदस्य महीपतेः ।
यथाकालं तु सा देवी महिषी द्रुपदस्य ह ॥ ५-१८८-१३ (३८३६१)
कन्यां प्रवररूपां तु प्राजायत नराधिप ।

अपुत्रस्य तु राज्ञः सा द्रुपदस्य मनस्विनी ॥ ५-१८८-१४ (३८३६२)
ख्यापयामास राजेन्द्र पुत्रो ह्येष ममेति वै ।
ततः स राजा द्रुपद प्रच्छन्नाया नराधिप ॥ ५-१८८-१५ (३८३६३)
पुत्रवत्पुत्रकार्याणि सर्वाणि समकारयत् ।
रक्षणं चैव मन्त्रस्य महिषी द्रुपदस्य सा ॥ ५-१८८-१६ (३८३६४)
चकार सर्वयत्नेन ब्रुवणा पुत्र इत्युत ।
न च तां वेदक नगरे कश्चिदन्यत्र पार्षतात् ॥ ५-१८८-१७ (३८३६५)
श्रद्दधानो हि तद्वाक्यं देवस्याच्युततेजसः ।
छादयामास तां कन्यां पुमानिति च सोब्रवीत् ॥ ५-१८८-१८ (३८३६६)
जातकर्माणि सर्वाणि कारयामास पार्थिवः ।
पुंवद्विधानयुक्तानि शिखण्डीति च तां विदुः ॥ ५-१८८-१९ (३८३६७)
अहमेकस्तु चारेण वचनान्नारदस्य च ।
ज्ञातवान्देववाक्येन अम्बायास्तपसा तथा ॥ ॥ ५-१८८-२० (३८३६८)

इति श्रीमन्महाभारते उद्योगपर्वणि अम्बोपाख्यानपर्वणि
अष्टाशीत्यधिकशततमोऽध्यायः ॥

---

उद्योगपर्व-अध्यय१८९
॥ श्रीः ॥
५.१८९. अध्यायः १८९

Mahabharata - Udyoga Parva - Chapter Topics
पुंवेषगूहितया शिखण्डिन्या द्रोणाद्धनुर्विद्याभ्यसनम् ॥ १ ॥
द्रुपदेन शिखण्डिन्याः दशार्णाधिपतिकन्यया विवाहकरणम् ॥ २ ॥
दाशार्णकसुतया धात्रीद्वारा स्वपित्रे शिखण्डिन्याः स्त्रीत्वज्ञापनम् ॥ ३ ॥
दाशार्णकेन दूतमुखेन द्रुपदंप्रति स्वविप्रलम्भफलतया
सबन्धोस्तस्य समुच्छेदनिवेदनम् ॥ ४ ॥

Mahabharata - Udyoga Parva - Chapter Text

५-१८९-० (३८३६९)
भीष्म उवाच। ५-१८९-०क्ष् (३९२६)
चकार यत्नं द्रुपदः सुतायाः सर्वकर्मसु ।
ततो लेख्यादिषु तथा शिल्पेषु च परंतप ॥ ५-१८९-१ (३८३७०)
इष्वस्त्रे चैव राजेन्द्र द्रोणशिष्यो बभूव ह ।
तस्य माता महाराज राजानं वरवर्णिनी ॥ ५-१८९-२ (३८३७१)
चोदयामास भार्यार्थं कन्यायाः पुत्रवत्तदा ।

ततस्तां पार्षतो दृष्ट्वा कन्यां संप्राप्तयौवनाम् ।
स्त्रियं मत्वा ततश्चिन्तां प्रपेदे सह भार्यया ॥ ५-१८९-३ (३८३७२)
द्रुपद उवाच। ५-१८९-४क्ष् (३९२७)
कन्या ममेयं संप्राप्ता यौवनं शोकवर्धिनी ।
मया प्रच्छादिता चेयं वचनाच्छूलपाणिनः ॥ ५-१८९-४ (३८३७३)
भार्योवाच। ५-१८९-५क्ष् (३९२८)
न तन्मिथ्या महाराज भविष्यति कथंचन ।
त्रैलोक्यकर्ता कस्माद्धि वृथा वक्तुमिहार्हति ॥ ५-१८९-५ (३८३७४)
यदि ते रोचते राजन्वक्ष्यामि श्रृणु मे वचः ।
श्रुत्वेदानीं प्रपद्येथाः स्वां मतिं पृषतात्मज ॥ ५-१८९-६ (३८३७५)
क्रियतामस्य यत्नेन विधिवद्दारसंग्रहः ।
भविता तद्वचः सत्यमिति मे निश्चिता मतिः ॥ ५-१८९-७ (३८३७६)
ततस्तौ निश्चयं कृत्वा तस्मिन्कार्येऽथ दंपती ।
वरयाञ्चक्रतुः कन्यां दशार्णाधिपतेः सुताम् ॥ ५-१८९-८ (३८३७७)
ततो राजा द्रुपदो राजसिंहः
सर्वान्राज्ञः कुलतः सन्निशाम्य ।
दाशार्णकस्य नृपतेस्तनूजां
शिखण्डिने वरयामास दारान् ॥ ५-१८९-९ (३८३७८)
हिरण्यवर्मेति नृपो योऽसौ दाशार्णकः स्मृतः ।
स च प्रादान्महीपालः कन्यां तस्मै शिखण्डिने ॥ ५-१८९-१० (३८३७९)
स च राजा दशार्णेषु महानासीत्सुदुर्जयः ।
हिरण्यवर्मा दुर्धर्षो महासेनो महामनाः ॥ ५-१८९-११ (३८३८०)
कृते विवाहे तु तदा सा कन्या राजसत्तम ।
यौवनं समनुप्राप्ता सा च कन्या शिखण्डिनी ॥ ५-१८९-१२ (३८३८१)
कृतदारः शिखण्डी च काम्पिल्यं पुनरागमत् ।
न च सा वेद तां कन्यां कंचित्कालं स्त्रियं किल ।
यदा त्वेनामजानात्सा स्त्रियमेव नृपात्मजा ॥ ५-१८९-१३ (३८३८२)
धात्रीणां च सखीनां च व्रीडयाना न्यवेदयत् ।
कन्यां पाञ्चालराजस्य सुतां तां वै शिखण्डिनीम् ॥ ५-१८९-१४ (३८३८३)
ततस्ता राजशार्दूल धात्र्यो दाशार्णिकास्तदा ।
जग्मुरार्तिं परां प्रेष्याः प्रेषयामासुरेव च ॥ ५-१८९-१५ (३८३८४)
ततो दशार्णाधिपतेः प्रेष्याः सर्वा न्यवेदयन् ।
विप्रलम्भं यथावृत्तं स च चुक्रोध पार्थिवः ॥ ५-१८९-१६ (३८३८५)
शिखण्ड्यपि महाराज पुंवद्राजकुले तदा ।
विजहार मुदा युक्तः स्त्रीत्वं नैवातिरोचयन् ॥ ५-१८९-१७ (३८३८६)
ततः कतिपयाहस्य तच्छ्रुत्वा भरतर्षभ ।

हिरण्यवर्मा राजेन्द्र रोषादर्तिं जगाम ह ॥ ५-१८९-१८ (३८३८७)
ततो दाशार्णको राजा तीव्रकोपसमन्वितः ।
दूतं प्रस्थापयामास द्रुपदस्य निवेशनम् ॥ ५-१८९-१९ (३८३८८)
ततो द्रुपदमासाद्य दूतः काञ्चनवर्मणः ।
एक एकान्तसुत्सार्य रहो वचनमब्रवीत् ॥ ५-१८९-२० (३८३८९)
दाशार्णराजो राजंस्त्वामिदं वचनमब्रवीत् ।
अभिष्गात्प्रकुपितो विप्रलब्धस्त्वयाऽनघ ॥ ५-१८९-२१ (३८३९०)
अवमन्यसे मां नृपते नूनं दुर्मन्त्रितं तव ।
यन्मे कन्यां स्वकन्यार्थे मोहाद्याचितवानसि ॥ ५-१८९-२२ (३८३९१)
तस्याद्य विप्रलम्भस्य फलं प्राप्नुहि दुर्मते ।
एष त्वं सजनामात्यमुद्धरामि स्थिरो भव ॥ ५-१८९-२३ (३८३९२)
अवमत्य च वीर्यं मे कुलं चारित्रमेव च ।
विप्रलम्भस्त्वयापूर्वो मनुष्येषु प्रवर्तितः ॥ ५-१८९-२४ (३८३९३)
कुरु सर्वाणि कार्याणि भुङ्क्ष्व कभोगाननुत्तमान् ।
अभियास्यामि शीघ्रं त्वां समुद्धर्तुं सबान्धवम् ॥ ॥ ५-१८९-२५ (३८३९४)

इति श्रीमन्महाभारते उद्योगपर्वणि अम्बोपाख्यानपर्वणि
एकोननवत्यधिकशततमोऽध्यायः ॥
Mahabharata - Udyoga Parva - Chapter Footnotes

५-१८९-४ शूलयुक्तः पाणिः शूलपाणिः सोऽस्यास्तीति शूलपाणी तस्य ॥
५-१८९-२० उत्सार्य नीत्वा ॥
५-१८९-२१ अभिषङ्गात्पराभवात् ॥

---

उद्योगपर्व-अध्यय१९०
॥ श्रीः ॥
५.१९०. अध्यायः १९०

Mahabharata - Udyoga Parva - Chapter Topics
दाशार्णकेन पुनर्दूतप्रेषणे द्रुपदेन पत्न्यासह कर्तव्यालोचनम् ॥ १ ॥

Mahabharata - Udyoga Parva - Chapter Text

५-१९०-० (३८३९५)
भीष्म उवाच। ५-१९०-०क्ष् (३९२९)
एवमुक्तस्य दूतेन द्रुपदस्य तदा नृप ।

चोरस्येव गृहीतस्य न प्रावर्तत भारती ॥ ५-१९०-१ (३८३९६)
स यत्नमकरोत्तीव्रं संबन्धिन्युनुमानने ।
दूतैर्मधुरसंभाषैर्न तदस्तीति संदिशन् ॥ ५-१९०-२ (३८३९७)
स राजा भूय एवाथ ज्ञात्वा तत्त्वमथागमत् ।
कन्येति पाञ्चालसुतां त्वरमाणो विनिर्ययौ ॥ ५-१९०-३ (३८३९८)
ततः संप्रेषकयामास मित्राणाममितौजसाम् ।
दुहितुर्विप्रलम्भं तं धात्रीणां वचनात्तदा ॥ ५-१९०-४ (३८३९९)
ततः समुदयं कृत्वा बलानां राजसत्तमः ।
अभियाने मतिं चक्रे द्रुपदं प्रति भारत ॥ ५-१९०-५ (३८४००)
ततः संमन्त्रयामास मन्त्रिभिः स महीपतिः ।
हिरण्यवर्मा राजेन्द्र पाञ्चाल्यं पार्थिवं प्रति ॥ ५-१९०-६ (३८४०१)
तत्र वै निश्चितं तेषामभूद्राज्ञां महात्मनाम् ।
तथ्यं भवति चेदेतत्कन्या राजञ्शिखण्डिनी ॥ ५-१९०-७ (३८४०२)
बद्धवा पाञ्चालराजानमानयिष्यामहे गृहम् ।
अन्यं राजानमाधाय पाञ्चालेषु नरेश्वरम् ॥ ५-१९०-८ (३८४०३)
घातयिष्याम नृपतिं पाञ्चालं सशिखण्डिनम् ॥ ५-१९०-९ (३८४०४)
स तदा द्रुतमाज्ञाय पुनर्दूतान्नराधिपः ।
प्रास्थापयत्पार्षतया निहन्मीति स्थिरो भव ॥ ५-१९०-१० (३८४०५)
भीष्म उवाच। ५-१९०-११क्ष् (३९३०)
स हि प्रकृत्या वै भीतः किल्बिषी च नराधिपः ।
भयं तीव्रमनुप्राप्तो द्रुपदः पृथिवीपतिः ॥ ५-१९०-११ (३८४०६)
विसृज्य दूतान्दाशार्णे द्रुपदः शोकमूर्च्छितः ।
समेत्य भार्यां रहिते वाक्यमाह नराधिपः ॥ ५-१९०-१२ (३८४०७)
भयेन महताऽऽविष्टो हृदि शोकेन चाहतः ।
पाञ्चालराजो दयितां मातरं वै शिखण्डिनः ॥ ५-१९०-१३ (३८४०८)
अभियास्यति मां कोपात्संबन्धी सुमहाबलः ।
हिरण्यवर्मा नृपतिः कर्षमाणो वरूथिनीम् ॥ ५-१९०-१४ (३८४०९)
किमिदानीं करिष्यावो मूढौ कन्यामिमां प्रति ।
शिखण्डी किल पुत्रस्ते कन्येति परिशङ्कितः ॥ ५-१९०-१५ (३८४१०)
इति संचिन्त्य यत्नेन समित्रः सबलानुगः ।
वञ्चितोऽस्मीति मन्वानो मां किलोद्धर्तुमिच्छति ॥ ५-१९०-१६ (३८४११)
किमत्र तथ्यं सुश्रोणि मिथ्या किं ब्रूहि शोभने ।
श्रुत्वा त्वत्तः शुभं वाक्यं संविधास्याम्यहं तथा ॥ ५-१९०-१७ (३८४१२)
अहं हि संशयप्राप्तो बाला चेयं शिखण्डिनी ।
त्वं च राज्ञि महत्कृच्छ्रं संप्राप्ता वरवर्णिनि ॥ ५-१९०-१८ (३८४१३)
सा त्वं सर्वविमोक्षाय तत्त्वमाख्याहि पृच्छतः ।

तथा विदध्यां सुश्रोणि कृत्यमाशु शुचिस्मिते ॥ ५-१९०-१९ (३८४१४)
शिखण्डिनि च मा भैस्त्वं विधास्ये तत्र तत्त्वतः ।
कृपयाहं वरारोहे वञ्चितः पुत्रधर्मतः ॥ ५-१९०-२० (३८४१५)
मया दाशार्णको राजा वञ्चितः स महीपतिः ।
तदाचक्ष्व महाभागे विधास्ये तत्र यद्धितम् ॥ ५-१९०-२१ (३८४१६)
जनाता ह नरेन्द्रेण ख्यापनार्थं परस्य वै ।
प्रकाशं चोदिता देवी प्रत्युवाच महीपतिम् ॥ ॥ ५-१९०-२२ (३८४१७)

इति श्रीमन्महाभारते उद्योगपर्वणि अम्बोपाख्यानपर्वणि
नवत्यधिकशततमोऽध्यायः ॥
Mahabharata - Udyoga Parva - Chapter Footnotes

५-१९०-३ अगमत् ज्ञातवान् ॥
५-१९०-५ समुदयं समुदायम् ॥

---

उद्योगपर्व-अध्यय१९१
॥ श्रीः ॥
५.१९१. अध्यायः १९१

Mahabharata - Udyoga Parva - Chapter Topics
शिखण्डिन्या पित्रोः शोकस्य स्वमूलकत्वचिन्तनेन दुर्गमारण्यमेत्य
स्थूणनाम्नः कुबेरानुचरस्य गृहसमीपे प्रायोपवेशः ॥ १ ॥
स्थूणचोदितया शिखण्डिन्या तंप्रति पुंस्त्ववरणम् ॥ २ ॥

Mahabharata - Udyoga Parva - Chapter Text

५-१९१-० (३८४१८)
भीष्म उवाच। ५-१९१-०क्ष् (३९३१)
ततः शिखण्डिनो माता यथातत्त्वं नराधिप ।
आचचक्षे महाबाहो भर्त्रे कन्यां शिखण्डिनीम् ॥ ५-१९१-१ (३८४१९)
अपुत्रया मया राजन्सपत्नीनां भयादिदम् ।
कन्या शिखण्डिनी जाता पुरुषो वै निवेदिता ॥ ५-१९१-२ (३८४२०)
त्वया चैव नरश्रेष्ठ तन्मे प्रीत्याऽनुमोदितम् ।
पुत्रकर्म कृतं चैव कन्यायाः पार्थिवर्षभ ॥ ५-१९१-३ (३८४२१)
भार्या चोढा त्वया राजन्दशार्णाधिपतेः सुता ।
मया च प्रत्यभिहितं देववाक्यार्थदर्शनात् ।
कन्या भूत्वा पुमान्भावीत्येवं चैतदुपेक्षितम् ॥ ५-१९१-४ (३८४२२)

एतच्छ्रुत्वा द्रुपदो यज्ञसेनः
सर्वं तत्त्वं मन्त्रविद्भ्यो निवेद्य ।
मन्त्रं राजा मन्त्रयामास राजन्
यथायुक्तं रक्षणे वै प्रजानाम् ॥ ५-१९१-५ (३८४२३)
संबन्धकं चैव समर्थ्य तस्मिन्
दाशार्णके वै नृपतौ नरेन्द्र ।
स्वयं कृत्वा विप्रलम्भं यथाव-
न्मन्त्र्यैकाग्रो निश्चयं वै जगाम ॥ ५-१९१-६ (३८४२४)
स्वभावगुप्तं नगरमापत्काले तु भारत ।
गोपयामास राजेन्द्र सर्वतः समलङ्कृतम् ॥ ५-१९१-७ (३८४२५)
आर्तिं च परमां राजा जगाम सह भार्यया ।
दशार्णपतिना सार्धं विरोधे भरतर्षभ ॥ ५-१९१-८ (३८४२६)
कथं संबन्धिना सार्धं न मे स्याद्विग्रहो महान् ।
इति संचिन्त्य मनसा देवतामर्चयत्तदा ॥ ५-१९१-९ (३८४२७)
तं तु दृष्ट्वा तदा राजन्देवी देवपरं तदा ।
अर्चां प्रयुञ्जानमथो भार्या वचनमब्रवीत् ॥ ५-१९१-१० (३८४२८)
देवानां प्रतिपत्तिश्च सत्यं साधुमता सताम् ।
किमु दुःस्वार्णवं प्राप्य तस्मादर्चयतां गुरून् ॥ ५-१९१-११ (३८४२९)
दैवतानि च सर्वाणि पूज्यनां भूरिदक्षिणम् ।
अग्नयश्चापि ह्रयन्तां दाशार्णप्रतिषेधने ॥ ५-१९१-१२ (३८४३०)
अयुद्धेन निवृत्तिं च मनसा चिन्तय प्रभो ।
देवतानां प्रसादेन सर्वमेतद्भविष्यति ॥ ५-१९१-१३ (३८४३१)
मन्त्रिभिर्मन्त्रितं सार्धं त्वया पृथुललोचन ।
पुरस्यास्याविनाशाय यच्च राजंस्तथा कुरु ॥ ५-१९१-१४ (३८४३२)
दैवं हि मानुषोपेतं भृशं सिद्ध्यति पार्थिव ।
परम्परविरोधाद्धि सिद्धिरस्ति न चैतयोः ॥ ५-१९१-१५ (३८४३३)
तस्माद्विधाय नगरे विधानं सचिवैः सह ।
अर्चयस्व यथाकामं दैवतानि विशांपते ॥ ५-१९१-१६ (३८४३४)
एवं संभाषमाणौ तु दृष्ट्वा शोकपरायणौ ।
शिखण्डिनी तदा कन्या व्रीडितेव तपस्विनी ॥ ५-१९१-१७ (३८४३५)
ततः सा चिन्तयामास मत्कृते दुःखितावुभौ ।
इमाविति ततश्चक्रे मतिं प्राणविनाशने ॥ ५-१९१-१८ (३८४३६)
एवं सा निश्चयं कृत्वा भृशं शोकपरायणा ।
निर्जगाम गृहं त्यक्त्वा गहनं निर्जनं वनम् ॥ ५-१९१-१९ (३८४३७)
यक्षेणर्द्धिमता राजन्स्थूणाकर्णेन पालितम् ।
तद्भयादेव च जनो विसर्जयति तद्वनम् ॥ ५-१९१-२० (३८४३८)

तत्र च स्थूणभवनं सुधामृत्तिकलेपनम् ।
लाजोल्लापिकधूमाढ्यमुच्चप्राकारतोरणम् ॥ ५-१९१-२१ (३८४३९)
तन्प्रविश्य शिखण्डी सा द्रुपदस्यात्मजा नृप ।
अनश्नाना बहुतिथं शरीरमुदशोपयत् ॥ ५-१९१-२२ (३८४४०)
दर्शयामास तां यक्षः स्थूणो मार्दवसंयुतः ।
किमर्थोऽयं तवारम्भः करिष्ये ब्रूहि माचिरम् ॥ ५-१९१-२३ (३८४४१)
अशक्ययिति सा यक्षं पुनः पुनरुवाच ह ।
करिष्यामीति वै क्षिप्रं प्रत्युवाचाथ गुह्यकः ॥ ५-१९१-२४ (३८४४२)
धनेश्वरस्यानुचरो वरदोऽस्मि नृपात्मजे ।
अदेयमपि दास्यादि ब्रूहि यत्ते विवक्षितम् ॥ ५-१९१-२५ (३८४४३)
ततः शिखण्डी तत्सर्वमखिलेन न्यवेदयत् ।
तस्मै यक्षप्रधानाय स्थूणाकर्णाय भारत ॥ ५-१९१-२६ (३८४४४)
शिखण्ड्युवाच। ५-१९१-२७क्ष् (३९३२)
आपन्नो मे पिता यक्ष न चिरान्नाशमेष्यति ।
अभियास्यति सक्रोधो दशार्णाधिपतिर्हि तम् ॥ ५-१९१-२७ (३८४४५)
मन्निमित्तं महोत्साहः सहेमकवचो नृपः ।
तस्माद्रक्षस्व मां यक्ष मातरं पितरं च मे ॥ ५-१९१-२८ (३८४४६)
प्रतिज्ञातो हि भवता दुःखप्रतिशमो मम ।
भवेयं पुरुषो यक्ष त्वत्प्रसादादनिन्दितः ॥ ५-१९१-२९ (३८४४७)
यावदेव स राजा वै नोपयाति पुरं मम ।
तावदेव महायक्ष प्रसादं कुरु गुह्यक ॥ ॥ ५-१९१-३० (३८४४८)

इति श्रीमन्महाभारते उद्योगपर्वणि अम्बोपाख्यनपर्वणि
एकनवत्यधिकशततमोऽध्यायः ॥
Mahabharata - Udyoga Parva - Chapter Footnotes

५-१९१-११ साधुमता कल्याणवतापि देवानां सतां साधूनां च प्रतिपत्तिः पूजा नित्यं कर्तव्येति शेषः ।किमु दुःखार्णवं प्राप्य कर्तव्येति ।तस्मात् भवान् गुरून् देवाराधनार्थं ब्राह्मणान् अर्चयतां पूजयतु ॥
५-१९१-२१ लाजोल्लापिकः लाजानि उशीराणि उल्लापयति सूचयतीति लाजोल्लापिकः ।उशीरपरिमलयुक्तधूमाढ्यमित्यर्थः ।उशीरे लाजमुद्दिष्टमिति विश्वः। राजोपलेपधूमाढ्यं इतिओ कोड पाठः ॥

---

उद्योगपर्व-अध्यय१९२
॥ श्रीः ॥
५.१९२. अध्यायः १९२

Mahabharata - Udyoga Parva - Chapter Topics
स्थूणेन शिखण्डिन्यै पुनःपुंस्त्वप्रत्यर्पणप्रतिज्ञापनपूर्वकं तदीयस्त्रीत्वस्वीकारेण स्वीयपुंस्त्वसमर्पणम् ॥ १ ॥
दाशार्णकेन उपायात् शिखण्डिनः पुंस्त्वं निर्धार्य स्वपुरगमनम् ॥ २ ॥
अत्रान्तरे स्थूणगृहमागतेन कुबेरेण तंप्रति स्त्रीत्वधारणस्य शिखण्डिमरणावधिकत्वरूपशापदानम् ॥ ३ ॥
पुंस्त्वप्रत्यर्पणाय गतेन शिखण्डिना स्थूणात्तद्वृत्तान्तमुपलभ्य हर्षात्स्वगृहागमनम् ॥ ४ ॥
इति भीष्मेण दुर्योधनंप्रति शिखण्डिना सह स्वेन युद्धाकरणे कारणाभिधानम् ॥ ५ ॥

Mahabharata - Udyoga Parva - Chapter Text

५-१९३-० (३८४४९)
भीष्म उवाच। ५-१९३-०क्ष् (३९३३)
शिखण्डिवाक्यं श्रुत्वाऽथ स यक्षो भरतर्षभ ।
प्रोवाच मनसा चिन्त्य दैवेनोपनिपीडितः ॥ ५-१९२-१ (३८४५०)
भवितव्यं तथा तद्धि मम दुःखाय कौरव ।
भद्रे कामं करिष्यामि समयं तु निबोध मे ॥ ५-१९२-२ (३८४५१)
ग्स्वं ते पुंस्त्वं प्रदास्यामि स्त्रीत्वं धारयिताऽस्मि ते'
किंचित्कालं तु ते दास्ये पुल्लिङ्गं स्वमिदं तव ।
आगन्तव्यं त्वया काले सत्यं चैव वदस्व मे ॥ ५-१९२-३ (३८४५२)
प्रभुः संकल्पसिद्धोऽस्मि कामचारी विहंगमः ।
मत्प्रसादात्पुरं चैव त्राहि बन्धूंश्च केवलम् ॥ ५-१९२-४ (३८४५३)
स्त्रीलिङ्गं धारयिष्यामि तवेदं पार्थिवात्मजे ।
सत्यं मे प्रतिजानीहि करिष्यामि प्रियं तव ॥ ५-१९२-५ (३८४५४)
शिखण्ड्युवाच। ५-१९२-६क्ष् (३९३४)
प्रतिदास्यामि भगवन्पुलिङ्गं तव सुव्रत ।
किंचित्कालान्तरं स्त्रीत्वं धारयस्व निशाचर ॥ ५-१९२-६ (३८४५५)
प्रतियाते दशार्णे तु पार्थिवे हेमवर्मणि ।
कन्यैव हि भविष्यामि पुरुषस्त्वं भविष्यसि ॥ ५-१९२-७ (३८४५६)
भीष्म उवाच। ५-१९२-८क्ष् (३९३५)
इत्युक्त्वा समयं तत्र चक्राते तावुभौ नृप ।
अन्योन्यस्यानभिद्रोहे तौ संक्रामयतां ततः ॥ ५-१९२-८ (३८४५७)
स्त्रीलिङ्गं धारयामास स्थूणो यक्षोऽथ भारत ।
यक्षरूपं च तद्दीप्तं शिखण्डी प्रत्यपद्यत ॥ ५-१९२-९ (३८४५८)

ततः शिखण्डी पाञ्चाल्यः पुंस्त्वमासाद्य पार्थिव ।
विवेश नगरं हृष्टः पितरं च समासदत् ॥ ५-१९२-१० (३८४५९)
यथावृत्तं तु तत्सर्वमाचख्यौ द्रुपदस्य तत् ।
ग्मातुश्च रहिते राजन्प्रसादं यक्षजं तदा।'
द्रुपदस्तस्य तच्छ्रुत्वा हर्षमाहारयत्परम् ॥ ५-१९२-११ (३८४६०)
सभार्यस्तच्च सस्मार महेश्वरवचस्तदा ।
ततः संप्रेषयामास दशार्णाधिपतेर्नृपः ॥ ५-१९२-१२ (३८४६१)
पुरुषोऽयं मम सुतः श्रद्धत्तां मे भवानिति ।
अथ दाशार्णको राजा सहसाभ्यागमत्तदा ॥ ५-१९२-१३ (३८४६२)
पाञ्चालराजं द्रुपदं दुःखशोकसमन्वितः ।
ततः काम्पिल्यमासाद्य दशार्णाधिपतिस्ततः ॥ ५-१९२-१४ (३८४६३)
प्रेषयामास सत्कृत्य दूतं ब्रह्मविदां वरम् ।
ब्रूहि मद्वचनाद्दूत पाञ्चाल्यं तं नृपाधमम् ॥ ५-१९२-१५ (३८४६४)
यन्मे कन्यां स्वकन्यार्थे वृतवानसि दुर्मते ।
फलं तस्यावलेपस्य द्रक्ष्यस्यद्य न संशयः ॥ ५-१९२-१६ (३८४६५)
एवमुक्तश्च तेनासौ ब्राह्मणो राजसत्तम ।
दूतः प्रयातो नगरं दाशार्णनृपचोदितः ॥ ५-१९२-१७ (३८४६६)
ततः आसादयामास पुरोधा द्रुपदं पुरे ।
तस्मै पाञ्चालको राजा गामर्घ्यं च सुसत्कृतम् ॥ ५-१९२-१८ (३८४६७)
प्रापयामास राजेन्द्र सह तेन शिखण्डिना ।
तां पूजां नाभ्यनन्दत्स वाक्यं चेदमुवाच ह ॥ ५-१९२-१९ (३८४६८)
यदुक्तं तेन वीरेण राज्ञा काञ्चनवर्मणा ।
यत्तेऽहमधमाचार दुहित्राऽस्म्यभिवञ्चितः ॥ ५-१९२-२० (३८४६९)
तस्य पापस्य करणात्फलं प्राप्नुहि दुर्मते ।
देहि युद्धं नरपते ममाद्य रणमूर्धनि ॥ ५-१९२-२१ (३८४७०)
उद्धरिष्यामि ते सद्यः सामात्यसुतबान्धवम् ।
तदुपालम्भसंयुक्तं श्रावितः किल पार्थिवः ॥ ५-१९२-२२ (३८४७१)
दशार्णपतिना चोक्तो मन्त्रिमध्ये पुरोधसा ।
अभवद्भरतश्रेष्ठ द्रुपदः प्रणयानतः ॥ ५-१९२-२३ (३८४७२)
यदाह मां भवान्ब्रह्मन्संबन्धिवचनाद्वचः ।
अस्योत्तरं प्रतिवचो दूतो राज्ञे वदिष्यति ॥ ५-१९२-२४ (३८४७३)
ततः संप्रेषयामास द्रुपदोऽपि महात्मने ।
हिरण्यवर्मणे दूतं ब्राह्मणं वेदपारगम् ॥ ५-१९२-२५ (३८४७४)
तमागम्य तु राजानं दशार्णाधिपतिं तदा ।
तद्वाक्यमाददे राजन्यदुक्तं द्रुपदेन ह ॥ ५-१९२-२६ (३८४७५)
आगमः क्रियतां व्यक्तः कुमारोऽयं सुतो मम ।

मिथ्यैतदुक्तं केनापि तदश्रद्धेयमित्युत ॥ ५-१९२-२७ (३८४७६)
ततः स राजा द्रुपदस्य श्रुत्वा ।
विमर्शयुक्तो युवतीर्वरिष्ठाः ।
संप्रेषयामास सुचारुरूपाः
शिखण्डिनं स्त्रीपुमान्वेति वेत्तुम् ॥ ५-१९२-२८ (३८४७७)
ताः प्रेषितास्तत्त्वभावं विदित्वा
प्रीत्या राज्ञे तच्छशंसुर्हि सर्वम् ।
शिखण्डिनं पुरुषं कौरवेन्द्र
दाशार्णराजाय महानुभावम् ॥ ५-१९२-२९ (३८४७८)
ततः कृत्वा तु राजा स आगमं प्रीतिमानथ ।
संबन्धिना समागम्य हृष्टो वासमुवास ह ॥ ५-१९२-३० (३८४७९)
शिखण्डिने च मुदितः प्रादाद्वित्तं जनेश्वरः ।
हस्तिनोऽश्वांश्च गाश्चैव दासीर्बहुशतास्तथा ।५-१९२०३१च्
पूजितश्च प्रतिययौ निर्भर्त्स्यं तनयां किल ॥ ५-१९२-३१ (३८४८०)
विनीतकिल्विषे प्रीते हेमवर्मणि पार्थिवे ।
प्रतियाते दशार्णे तु हृष्टरूपा शिखण्डिनी ॥ ५-१९२-३२ (३८४८१)
कस्यचित्त्वथ कालस्य कुबेरो नरवाहनः ।
लोकयात्रां प्रकुर्वाणः स्थूणस्यागान्निवेशनम् ॥ ५-१९२-३३ (३८४८२)
स नद्गृहस्योपरि वतमान
आलोकयामास धनाधिगोप्ता ।
स्थूणस्य यक्षस्य विवेश वेश्म
स्वलंकृतं माल्यगुणैर्विचित्रैः ॥ ५-१९२-३४ (३८४८३)
लाचैश्च गन्धैश्च तथा वितानै-
रभ्यर्चितं धूनधूपितं च ।
ध्वजैः पताकाभिरलंकृतं च
भक्ष्यान्नपेयामिपदत्तमोदम् ॥ ५-१९२-३५ (३८४८४)
तत्स्थानं तस्य दृष्ट्वा तु सर्वतः समलंकृतम् ।
मणिरत्नसुवर्णानां मालाभिः परिपूरितम् ॥ ५-१९२-३६ (३८४८५)
नानाकुसूमगन्धाढ्यं सिक्तसंमृष्टशोभितम् ।
अथाब्रवीद्यक्षपतिस्तान्यक्षाननुगांस्तदा ॥ ५-१९२-३७ (३८४८६)
स्वलंकृतमिदं वेश्म स्थूणस्यामितविक्रमाः ।
नोपसर्पति मां चैव कस्मादद्य स मन्दधीः ॥ ५-१९२-३८ (३८४८७)
यस्माज्जानन्स मन्दात्मा मामसौ नोपसर्पति ।
तस्मात्तस्मै महादण्डो धार्यः स्यादिति मे मतिः ॥ ५-१९२-३९ (३८४८८)
यक्षा ऊचुः ।५-१९२-४०क्ष् (३९३६)
द्रुपदस्य सुता राजन्राज्ञो जाता शिखण्डिनी ।

तस्या निमित्ते कस्मिंश्चित्प्रादात्पुरुषलक्षणम् ॥ ५-१९२-४० (३८४८९)
अग्रहील्लक्षणं स्त्रीणां स्त्रीभूता तिष्ठते गृहे ।
नोपसर्पति तेनासौ सव्रीडः स्त्रीसरूपवान् ॥ ५-१९२-४१ (३८४९०)
एतस्मात्कारणाद्राजन्स्थूणो न त्वाऽद्य सर्पति ।
श्रुत्वा कुरु यथान्यायं विमानमिह तिष्ठताम् ॥ ५-१९२-४२ (३८४९१)
आनीयतां स्थूण इति ततो यक्षाधिपोऽब्रवीत् ।
कर्तास्मि निग्रहं तस्य प्रत्युवाच पुनः पुनः ॥ ५-१९२-४३ (३८४९२)
सोऽभ्यगच्छत यक्षेन्द्रमाहूतः पृथिवीपते ।
स्त्रीमरूपो महाराज तस्थौ व्रीडासमन्वितः ॥ ५-१९२-४४ (३८४९३)
तं शशापाथ संक्रुद्धो धनदः कुरूनन्दन ।
एवमेव भवत्वद्य स्त्रीत्वं पापस्य गुह्यकाः ॥ ५-१९२-४५ (३८४९४)
ततोऽब्रवीद्यक्षपतिर्महात्मा
यस्माददास्त्ववमन्येह यक्षान् ।
शिखण्डिनो लक्षणं पापबुद्धे
स्त्रीलक्षणं चाग्रहीः पापकर्मन् ॥ ५-१९२-४६ (३८४९५)
अप्रवृत्तं सुदुर्बुद्धे यस्मादेतत्त्वया कृतम् ।
तस्मादद्य प्रभृत्येव स्त्री त्वं सा पुरुषस्तथा ॥ ५-१९२-४७ (३८४९६)
ततः प्रसादयामासुर्यक्षा वैश्रवणं किल ।
स्थूणस्यार्थे कुरुष्वान्तं शापस्येति पुनः पुनः ॥ ५-१९२-४८ (३८४९७)
ततो महात्मा यक्षेन्द्रः प्रत्युवाचानुगामिनः ।
सर्वान्यक्षगणांस्तात शापस्यान्तचिकीर्षया ॥ ५-१९२-४९ (३८४९८)
शिखण्डिनि हते यक्षाः स्वं रूपं प्रतिपत्स्यते ।
स्थूणो यक्षो निरुद्वेगो भवत्विति महामनाः ॥ ५-१९२-५० (३८४९९)
इत्युक्त्वा भगवान्देवो यक्षराजः सुपूजितः ।
प्रययौ सहितः सर्वैर्निमेषान्तरचारिभिः ॥ ५-१९२-५१ (३८५००)
स्थूणस्तु शापं संप्राप्य तत्रैव न्यवसत्तदा ।
समये चागमत्तूर्णं शिखण्डी तं क्षपाचरम् ॥ ५-१९२-५२ (३८५०१)
सोऽभिगम्याब्रवीद्वाक्यं प्राप्तोऽस्मि भगवन्निति ।
तमब्रवीत्ततः स्थूणः प्रीतोऽस्मीति पुनः पुनः ॥ ५-१९२-५३ (३८५०२)
आर्जवेनागतं दृष्ट्वा राजपुत्रं शिखण्डिनम् ।
सर्वमेव यथावृत्तमाचचक्षे शिखण्डिने ॥ ५-१९२-५४ (३८५०३)
भीष्म उवाच। ५-१९२-५५क्ष् (३९३७)
शप्तो वैश्रवणेनाहं त्वत्कृते पार्थिवात्मज ।
गच्छेदानीं यथाकामं चर लोकान्यथासुखम् ॥ ५-१९२-५५ (३८५०४)
दिष्टमेतत्पुरा मन्ये न शक्यमतिवर्तितुम् ।
गमनं तव चेतो हि पौलस्त्यस्य च दर्शनम् ॥ ५-१९२-५६ (३८५०५)

भीष्म उवाच। ५-१९२-५७क्ष् (३९३८)
एवमुक्तः शिखण्डी तु स्थूणयक्षेण भारत ।
प्रत्याजगाम नगरं हर्षेण महतावृतः ॥ ५-१९२-५७ (३८५०६)
पूजयामास विविधैर्गन्धमाल्यैर्महाधनैः ।
द्विजातीन्देवताश्चैव चैत्यानथ चतुष्पथान् ॥ ५-१९२-५८ (३८५०७)
द्रुपदः सह पुत्रेण सिद्धार्थेन शिखण्डिना ।
मुदं च परमां लेभे पाञ्चाल्यः सह बान्धवैः ॥ ५-१९२-५९ (३८५०८)
शिष्यार्थं प्रददौ चाथ द्रोणाय कुरुपुङ्गव ।
शिखण्डिनं महाराज पुत्रं स्त्रीपूर्विणं तथा ॥ ५-१९२-६० (३८५०९)
प्रतिपेदे चतुष्पादं धनुर्वेदं नृपात्मजः ।
शिखण्डी सह युष्माभिर्धृष्टद्युम्नश्च पार्षतः ॥ ५-१९२-६१ (३८५१०)
मम त्वेतच्चरास्तात यथावत्प्रत्यवेदयन् ।
जडान्धबधिराकारा ये मुक्ता द्रुपदे मया ॥ ५-१९२-६२ (३८५११)
एवमेष महाराज स्त्री पुमान्द्रुपदात्मजः ।
स संभूतः कुरुश्रेष्ठ शिखण्डी रथसत्तमः ॥ ५-१९२-६३ (३८५१२)
ज्येष्ठा काशिपतेः कन्या अम्बा नामेति विश्रुता ।
द्रुपदस्य कुले जाता शिखण्डी भरतर्षभ ॥ ५-१९२-६४ (३८५१३)
नाहमेनं धनुष्पाणिं युयुत्सुं समुपस्थितम् ।
मुहूर्तमपि पश्येयं प्रहरेयं न चाप्युत ॥ ५-१९२-६५ (३८५१४)
व्रतमेतन्मम सदा पृथिव्यामपि विश्रुतम् ।
स्त्रियां स्त्रीपूर्वके चैव स्त्रीनाम्नि स्त्रीसरूपिणि ॥ ५-१९२-६६ (३८५१५)
न मुञ्चेयमहं बाणमिति कौरवनन्दन ।
न हन्यामहमेतेन कारणेन शिखण्डिनम् ॥ ५-१९२-६७ (३८५१६)
एतत्तत्त्वमहं वेद जन्म तात शिखण्डिनः ।
ततो नैनं हनिष्यामि समरेष्वाततायिनम् ॥ ५-१९२-६८ (३८५१७)
यदि भीष्मः स्त्रियं हन्यात्सन्तः कुर्युर्विगर्हणम् ।
नैनं तस्माद्धनिष्यामि दृष्ट्वापि समरे स्थितम् ॥ ५-१९२-६९ (३८५१८)
वैशंपायन उवाच। ५-१९२-७०क्ष् (३९३९)
एतच्छ्रुत्वा तु करव्यो राजा दुर्योधनस्तदा ।
मुहूर्तमिव स ध्यात्वा भीष्मे युक्तममन्यत ॥ ॥ ५-१९२-७० (३८५१९)

इति श्रीमन्महाभारते उद्योगपर्वणि अम्बोपाख्यानपर्वणि
द्विनवत्यधिकशततमोऽध्यायः ॥
Mahabharata - Udyoga Parva - Chapter Footnotes

५-१९२-४ विहंगमः आकाशगामी ॥

५-१९२-८ अभिसंदेहे इति झो पाठः ।संदेहे लिङ्गे सम्यग् दिह्यते उपचीयेते रतिकाले प्रथेते इति व्युत्पत्तेरिति तत्रार्थः ॥
५-१९२-२४ उत्तरं उत्कृष्टतरम् ॥
५-१९२-२७ आगमः परीक्षा ॥
५-१९२-६१ चतुष्पादं ग्रहणधरणप्रयोगप्रातीकारैश्चतुर्भिः पादैर्युक्तम् ॥
५-१९२-

---

उद्योगपर्व-अध्यय१९३
॥ श्रीः ॥
५.१९३. अध्यायः १९३

Mahabharata - Udyoga Parva - Chapter Topics
दुर्योधनेन भीष्मादीन्प्रति युष्माभिः कियता कालेन समग्रपरसेनाक्षपणं कर्तुं शक्यमिति प्रश्ने तैः पृथक्पृथक्तदुत्तरदानम् ॥ १ ॥

Mahabharata - Udyoga Parva - Chapter Text

५-१९३-० (३८५२०)
संजय उवाच। ५-१९३-०क्ष् (३९४०)
प्रभातायां तु शर्वर्यां पुनरेव सुतस्तव ।
मध्ये सर्वस्य सैन्यस्य पितामहमपृच्छत ॥ ५-१९३-१ (३८५२१)
दुर्योधन उवाच। ५-१९३-२क्ष् (३९४१)
पाण्डवेयस्य गाङ्गेय यदेतत्सैन्यमुद्यतम् ।
प्रभूतनरनागाश्वं महारथसमाकुलम् ॥ ५-१९३-२ (३८५२२)
भीमार्जुनप्रभृतिभिर्महेष्वासैर्महाबलैः ।
लोकपालसमैर्गुप्तं धृष्टद्युम्नपुरोगमैः ॥ ५-१९३-३ (३८५२३)
अप्रधृष्यमनावार्यमुद्धूतमिव सागरम् ।
सेनासागरमक्षोभ्यमपि देवार्महाहवे ॥ ५-१९३-४ (३८५२४)
केन कालेन गाङ्गेय क्षपयेथा महाद्युते ।
आचार्यो वा महेष्वासः कृपो वाऽऽशु महाबलः ॥ ५-१९३-५ (३८५२५)
कर्णो वा समरश्लाघी द्रौणिर्वा द्विजसत्तमः ।
दिव्यास्त्रविदुषः सर्वे भवन्तो हि बले मम ॥ ५-१९३-६ (३८५२६)
एतदिच्छाम्यहं ज्ञातुं परं कौतूहलं हि मे ।
हृदि नित्यं महाबाहो वक्तुमर्हसि तन्मम ॥ ५-१९३-७ (३८५२७)
भीष्म उवाच। ५-१९३-८क्ष् (३९४२)

अनुरूपं कुरुश्रेष्ठ त्वय्येतत्पृथिवीपते ।
बलाबलममित्राणां तेषां यदिह पृच्छसि ॥ ५-१९३-८ (३८५२८)
श्रृणु राजन्मम रणे या शक्तिः परमा भवेत् ।
शस्त्रवीर्ये रणे यच्च भुजयोश्च महाभुज ॥ ५-१९३-९ (३८५२९)
आर्जवेनैव युद्धेन योद्धव्य इतरो जनः ।
मायायुद्धेन मायावी इत्येतद्धर्मनिश्चयः ॥ ५-१९३-१० (३८५३०)
हन्यामहं महाभाग पाण्डवानामनीकिनीम् ।
दिवसे दिवसे कृत्वा भागान्भागान्निजान्मम ॥ ५-१९३-११ (३८५३१)
योधानां दशसाहस्रं कृत्वा भागं महाद्युते ।
सहस्रं रथिनामेकमेष भागो मतो मम ॥ ५-१९३-१२ (३८५३२)
अनेनाहं विधानेन सन्नद्धः सततोत्थितः ।
क्षपयेयं महत्सैन्यं कालेनानेन भारत ॥ ५-१९३-१३ (३८५३३)
मुञ्चेयं यदि वास्त्राणि महान्ति समरे स्थितः ।
शतसाहस्रघातीनि हन्यां मासेन भारत ॥ ५-१९३-१४ (३८५३४)
संजय उवाच। ५-१९३-१५क्ष् (३९४३)
श्रुत्वा भीष्मस्य तद्वाक्यं राजा दुर्योधनस्ततः ।
पर्यपृच्छत राजेन्द्र द्रोणमङ्गिरसां वरम् ॥ ५-१९३-१५ (३८५३५)
आचार्य केन कालेन पाण्डुपुत्रस्य सैनिकान् ।
निहन्या इति तं द्रोणः प्रत्युवाच हसन्निव ॥ ५-१९३-१६ (३८५३६)
स्थविरोऽस्मि महाबाहो मन्दप्राणविचेष्टितः ।
शस्त्राग्निना निर्दहेयं पाण्डवानामनीकिनीम् ॥ ५-१९३-१७ (३८५३७)
यथा भीष्मः शान्तनवो मासेनेति मतिर्मम ।
एषा मे परमा शक्तिरेतन्मे परमं बलम् ॥ ५-१९३-१८ (३८५३८)
द्वाभ्यामेव तु मासाभ्यां कृपः शारद्वतोऽब्रवीत् ।
द्रौणिस्तु दशरात्रेण प्रतिजज्ञे बलक्षयम् ।
कर्णस्तु पञ्चरात्रेण प्रतिजज्ञे महास्त्रवित् ॥ ५-१९३-१९ (३८५३९)
तच्छ्रुत्वा सूतपुत्रस्य वाक्यं सागरगासुतः ।
जहास सस्वनं हासं वाक्यं चेदमुवाच ह ॥ ५-१९३-२० (३८५४०)
न हि यावद्रणे पार्थं बाणशङ्खधनुर्धरम् ।
वासुदेवसमायुक्तं रथेनायान्तमाहवे ॥ ५-१९३-२१ (३८५४१)
समागच्छसि राधेय तेनैवमभिमन्यसे ।
शक्यमेवं च भूयश्च त्वया वक्तुं यथेष्टतः ॥ ॥ ५-१९३-२२ (३८५४२)

इति श्रीमन्महाभारते उद्योगपर्वणि अम्बोपाख्यानपर्वणि
त्रिनवत्यधिकशततमोऽध्यायः ॥

---

उद्योगपर्व-अध्यय१९४

॥ श्रीः ॥
५.१९४. अध्यायः १९४

Mahabharata - Udyoga Parva - Chapter Topics
युधिष्ठिरेण चारमुखात् भीष्मादिभिः स्वस्वशक्तिप्रकाशनं निशम्य अर्जुनंप्रति तच्छक्तिनिवेदनचोदने तत्कथनम् ॥ १ ॥

Mahabharata - Udyoga Parva - Chapter Text

५-१९४-० (३८५४३)
वैशंपायन उवाच। ५-१९४-०क्ष् (३९४४)
एतच्छ्रुत्वा तु कौन्तेयः सर्वान्भ्रातॄनुपह्वरे ।
आहूय भरतश्रेष्ठ इदं वचनमब्रवीत् ॥ ५-१९४-१ (३८५४४)
युधिष्ठिर उवाच। ५-१९४-२क्ष् (३९४५)
धार्तराष्ट्रस्य सैन्येषु ये चारपुरुषा मम ।
ते प्रवृत्तिं प्रयच्छन्ति ममेमां व्युषितां निशाम् ॥ ५-१९४-२ (३८५४५)
दुर्योधनः किलापृच्छदापगेयं महाव्रतम् ।
केन कालेन पाण्डूनां हन्याः सैन्यमिति प्रभो ॥ ५-१९४-३ (३८५४६)
मासेनेति च तेनोक्तो धार्तराष्ट्रः सुदुर्मतिः ।
तावता चापि कालेन द्रोणोपि प्रतिजज्ञिवान् ॥ ५-१९४-४ (३८५४७)
गौतमो द्विगुणं कालमुक्तवानिति नः श्रुतम् ।
द्रौणिस्तु दशरात्रेण प्रतिजज्ञे महास्त्रवित् ॥ ५-१९४-५ (३८५४८)
तथा दिव्यास्त्रवित्कर्णः संपृष्टः कुरुसंसदि ।
पञ्चभिर्दिवसैर्हन्तुं ससैन्यं प्रतिजज्ञिवान् ॥ ५-१९४-६ (३८५४९)
तस्मादहमपीच्छामि श्रोतुमर्जुन ते वचः ।
कालेन कियता शत्रून्क्षपयेरिति फाल्गुन ॥ ५-१९४-७ (३८५५०)
एवमुक्तो गुडाकेशः पार्थिवेन धनञ्जयः ।
वासुदेवं समीक्ष्येदं वचनं प्रत्यभाषत ॥ ५-१९४-८ (३८५५१)
सर्व एते महात्मानः कृतास्त्राश्चित्रयोधिनः ।
असंशयं महाराज हन्युरेव न संशयः ॥ ५-१९४-९ (३८५५२)
अपैतु ते मनस्तापो यथा सत्यं ब्रवीम्यहम् ।
हन्यामेकरथेनैव वासुदेवसहायवान् ॥ ५-१९४-१० (३८५५३)
सामरानपि लोकांस्त्रीन्सर्वान्स्थावरजङ्गमान् ।
भूतं भव्यं भविष्यं च निमेषादिति मे मतिः ॥ ५-१९४-११ (३८५५४)
ग्यावदिच्छेद्धरिरयं तावदस्ति न चान्यथा।'
यत्तद्धोरं पशुपतिः प्रादादस्त्रं महन्मम ।

कैराते द्वन्द्वयुद्धे तु तदिदं मयि वर्तते ॥ ५-१९४-१२ (३८५५५)
यद्युगान्ते पशुपतिः सर्वभूतानि संहरन् ।
प्रयुङ्क्ते पुरुषव्याघ्र तदिदं मयि वर्तते ॥ ५-१९४-१३ (३८५५६)
तन्न जानाति गाङ्गेयो न द्रोणो न च गौतमः ।
न च द्रोणसुतो राजन्कुत एव तु सूतजः ॥ ५-१९४-१४ (३८५५७)
न तु युक्तं रणे हन्तुं दिव्यैरस्त्रैः पृथग्जनम् ।
आर्जवेनैव युद्धेन विजेष्यामो वयं परान् ॥ ५-१९४-१५ (३८५५८)
तथेमे पुरुषव्याघ्राः सहायास्तव पार्थिव ।
सर्वे दिव्यास्त्रविद्वांसः सर्वे युद्धाभिकाङ्क्षिणः ॥ ५-१९४-१६ (३८५५९)
वेदान्तावभृथस्नाताः सर्व एतेऽपराजिताः ।
निहन्युः समरे सेनां देवानामपि पाण्डव ॥ ५-१९४-१७ (३८५६०)
शिखण्डी युयुधानश्च धृष्टद्युम्नश्च पार्षतः ।
भीमसेनो यमौ चोभौ युधामन्यूत्तमौजसौ ॥ ५-१९४-१८ (३८५६१)
विराटद्रुपदौ चोभौ भीष्मद्रोणसमौ युधि ।
शङ्खश्चैव महाबाहुर्हैडिम्बश्च महाबलः ॥ ५-१९४-१९ (३८५६२)
पुत्रोऽस्याञ्जनपर्वा तु महाबलपराक्रमः ।
शैनेयश्च महाबाहुः सहायो रणकोविदः ॥ ५-१९४-२० (३८५६३)
अभिमन्युश्च बलवान्द्रौपद्याः पञ्च चात्मजाः ।
स्वयं चापि समर्थोसि त्रैलोक्योत्सादनेपि च ॥ ५-१९४-२१ (३८५६४)
क्रोधाद्यं पुरुषं पश्येस्तथा शक्रसमद्युते ।
स क्षिप्रं नभवेद्व्यक्तमिति त्वां वेद्मि कौरव ॥ ॥ ५-१९४-२२ (३८५६५)

इति श्रीमन्महाभारते उद्योगपर्वणि अम्बोपाख्यनपर्वणि
चतुर्नवत्यधिकशततमोऽध्यायः ॥
Mahabharata - Udyoga Parva - Chapter Footnotes

५-१९४-२ व्युषितां निशां प्रभातकाले ॥

---

उद्योगपर्व-अध्यय१९५
॥ श्रीः ॥
५.१९५. अध्यायः १९५

Mahabharata - Udyoga Parva - Chapter Topics
दुर्योधनेन त्रेधाविभज्य सेनानां यापनम् ॥ १ ॥
सर्वेषां शिबिरप्रवेशः ॥ २ ॥

Mahabharata - Udyoga Parva - Chapter Text

५-१९५-० (३८५६६)
वैशंपायन उवाच। ५-१९५-०क्ष् (३९४६)
ततः प्रभाते विमले धार्तराष्ट्रेण चोदिताः ।
दुर्योधनेन राजानः प्रययुः पाण्डवान्प्रति ॥ ५-१९५-१ (३८५६७)
आप्लाव्य शुचयः सर्वे स्रग्विणः शुक्लवाससः ।
गृहीतशस्त्रा ध्वजिनः स्वस्ति वाच्य हुताग्नयः । ५-१९५-२ (३८५६८)
सर्वे ब्रह्मविदः शूराः सर्वे सुचरितव्रताः ।
सर्वे कामकृतश्चैव सर्वे चाहवलक्षणाः ॥ ५-१९५-३ (३८५६९)
आहवेषु परॉंल्लोकाञ्जिगीषन्तो महाबलाः ।
एकाग्रमनसः सर्वे श्रद्दधानाः परस्परम् ॥ ५-१९५-४ (३८५७०)
विन्दानुविन्दावावन्त्यौ केकया बाह्लिकैः सह ।
प्रययुः सर्व एवैते भारद्वाजपुरोगमाः ॥ ५-१९५-५ (३८५७१)
अश्वत्थामा शान्तनवः सैन्धवोऽथ जयद्रथः ।
दाक्षिणात्याः प्रतीच्याश्च पार्वतीयाश्च ने नृपाः ॥ ५-१९५-६ (३८५७२)
गान्धारराजः शकुनिः प्राच्योदीच्याश्च सर्वशः ।
शकाः किराता यवनाः शिबयोऽथ वसातयः ॥ ५-१९५-७ (३८५७३)
स्वैः स्वैरनीकैः सहिताः परिवार्य महारथम् ।
एते महारथाः सर्वे द्वितीये निर्ययुर्बले ॥ ५-१९५-८ (३८५७४)
कृतवार्मा सहानीकस्त्रिगर्तश्च महारथः ।
दुर्योधनश्च नृपतिर्भ्रातृभिः परिवारितः ॥ ५-१९५-९ (३८५७५)
शलो भूरिश्रवाः शल्यः कौसल्योऽथ बृहद्रथः ।
एते पश्चादनुगता धार्तराष्ट्रपुरोगमाः ॥ ५-१९५-१० (३८५७६)
ते समेत्य यथान्यायं धार्तराष्ट्रा महाबलाः ।
कुरुक्षेत्रस्य पश्चार्धे व्यवातिष्ठन्त दंशिताः ॥ ५-१९५-११ (३८५७७)
दुर्योधनस्तु शिबिरं कारयामास भारत ।
यथैव हास्तिनपुरं द्वितीयं समलंकृतम् ॥ ५-१९५-१२ (३८५७८)
न विशेषं विजानन्ति पुरस्य शिबिरस्य वा ।
कुशला अपि राजेन्द्र नरा नगरवासिनः ॥ ५-१९५-१३ (३८५७९)
तादृशान्येव दुर्गाणि राज्ञामपि महीपतिः ।
कारयामास कौरव्यः शतशोऽथ सहस्रशः ॥ ५-१९५-१४ (३८५८०)
पञ्चयोजनमुत्सृज्य माण्डलं तद्रणाजिरम् ।
सेनानिवेशास्ते राजन्नाविशञ्छतसङ्घशः ॥ ५-१९५-१५ (३८५८१)
तत्र ते पृथिवीपाला यथोत्साहं यथाबलम् ।
विविशुः शिबिराण्यत्र द्रव्यवन्ति सहस्रशः ॥ ५-१९५-१६ (३८५८२)
तेषां दुर्योधनो राजा ससैन्यानां महात्मनाम् ।

व्यादिदेश स बाह्यानां भक्ष्यभोज्यमनुत्तमम् ॥ ५-१९५-१७ (३८५८३)
सनागाश्वमनुण्याणां ये च शिल्पोपजीविनः ।
ये चान्येऽनुगतास्तत्र सूतमागधबन्दिनः ॥ ५-१९५-१८ (३८५८४)
वणिजो गणिकाश्चारा ये चैव प्रेक्षका जनाः ।
सर्वांस्तन्कौरवो राजा विधिवत्प्रत्यवैक्षत ॥ ॥ ५-१९५-१९ (३८५८५)

इति श्रीमन्महाभारते उद्योगपर्वणि अम्बोपाख्यानपर्वमि
पञ्चनवत्यधिकशततमोऽध्यायः ॥

---

उद्योगपर्व-अध्यय१९६
॥ श्रीः ॥
५.१९६. अध्यायः १९६

Mahabharata - Udyoga Parva - Chapter Topics
युधिष्ठिरेणापि त्रेधाविभज्य स्वसेनानां प्रेषणम् ॥ १ ॥

Mahabharata - Udyoga Parva - Chapter Text

५-१९६-० (३८५८६)
वैशंपायन उवाच। ५-१९६-०क्ष् (३९४७)
तथैव राजा कौन्तेयो धर्मपुत्रो युधिष्ठिरः ।
धृष्टद्युम्नमुखान्वीरांश्चोदयामास भारत ॥ ५-१९६-१ (३८५८७)
चेदिकाशिकरूशानां नेतारं दृढविक्रमम् ।
सेनापतिममित्रघ्नं धृष्टकेतुमथादिशत् ॥ ५-१९६-२ (३८५८८)
विराटं द्रुपदं चैव युयुधानं शिखण्डिनम् ।
पाञ्चाल्यौ च महेष्वासौ युधामन्यूत्तमौजसौ ॥ ५-१९६-३ (३८५८९)
ते शूराश्चित्रवर्माणस्तप्तकुण्डलधारिणः ।
आज्यावसिक्ता ज्वलिता धिष्ण्येष्विव हुताशनाः ॥ ५-१९६-४ (३८५९०)
अशोभन्त महेष्वासा ग्रहाः प्रज्वलिता इव ।
अथ सैन्यं यथायोगं पूजयित्वा नरर्षभः ॥ ५-१९६-५ (३८५९१)
दिदेश तान्यनीकानि प्रयाणाय महीपतिः ।
तेषां युधिष्ठिरो राजा ससैन्यानां महात्मनाम् ॥ ५-१९६-६ (३८५९२)
व्यादिदेश सबाह्यानां भक्ष्यभोज्यमनुत्तमम् ।
स गजाश्वमनुष्याणां ये च शिल्पोपजीविनः ॥ ५-१९६-७ (३८५९३)
अभिमन्युं बृहन्तं च द्रौपदेयांश्च सर्वशः ।
धृष्टद्युम्नमुखानेतान्प्राहिणोत्पाण्डुनन्दनः ॥ ५-१९६-८ (३८५९४)
भीमं च युयुधानं च पाण्डवं च धनंजयम् ।

द्वितीयं प्रेषयामास बलस्कन्धं युधिष्टिरः ॥ ५-१९६-९ (३८५९५)
भाण्डं समारोपयतां चरतां संप्रधावताम् ।
हृष्टानां तत्र योधानां शब्दो दिवमिवास्पशत् ॥ ५-१९६-१० (३८५९६)
स्वयमेव ततः पश्चाद्विराटद्रपदान्वितः ।
अथापरैर्महीपालैः सह प्रायान्महीपतिः ॥ ५-१९६-११ (३८५९७)
भीमधन्वायती सेना धृष्टद्युम्नेन पालिता ।
गङ्गेव पूर्णा स्तिमिता स्यन्दमाना व्यदृश्यत ॥ ५-१९६-१२ (३८५९८)
ततः पुनरनीकानि न्ययोजयत बुद्धिमान् ।
मोहयन्धृतराष्ट्रस्य पुत्राणां बुद्धिनिश्चयम् ॥ ५-१९६-१३ (३८५९९)
द्रौपदेयान्महेष्वासानभिमन्युं च पाण्डवः ।
नकुलं सहदेवं च सर्वांश्चैव प्रभद्रकान् ॥ ५-१९६-१४ (३८६००)
दश चाश्वसहस्राणि द्विसहस्त्राणि दन्तिनाम् ।
अयुतं च पदातीनां रथाः पञ्चशतं तथा ॥ ५-१९६-१५ (३८६०१)
भीमसेनस्य दुर्धर्षं प्रथमं प्रादिशद्बलम् ।
मध्यमे च विराटं च जयत्सेनं च पाण्डवः ॥ ५-१९६-१६ (३८६०२)
महारथौ च पाञ्चाल्यौ युधामन्यूत्तमौजसौ ।
वीर्यवन्तौ महात्मानौ युधामन्यूत्तमौजसौ ॥ ५-१९६-१७ (३८६०३)
अन्वयातां तदा मध्ये वासुदेवधनञ्जयौ ।
ग्तौ दृष्ट्वा पृथिवीपाला नष्टमित्येव मेनिरे ।
अन्तरिक्षगताः सर्वे देवाः सेन्द्रपुरोगमाः '॥ ५-१९६-१८ (३८६०४)
बभूवुरतिसंरब्धाः कृतप्रहरणा नराः ।
तेषां विंशतिसाहस्रा हयाः शूरैरधिष्ठिताः ।
पञ्च नागसहस्राणि रथवंशाश्च सर्वशः ॥ ५-१९६-१९ (३८६०५)
पदातयश्च ये शूराः कार्मुकासिगदाधराः ।
सहस्रशोऽन्वयुः पश्चादग्रतश्च सहस्रशः ॥ ५-१९६-२० (३८६०६)
युधिष्ठिरो यत्र सैन्ये स्वयमेव बलार्णवे ।
तत्र ते पृथिवीपाला भूयिष्टं पर्यवस्थिताः ॥ ५-१९६-२१ (३८६०७)
तत्र नागसहस्राणि हयानामयुतानि च ।
तथा रथसहस्राणि पदातीनां च भारत ॥ ५-१९६-२२ (३८६०८)
चेकितानः स्वसैन्येन महता पार्थिवर्षभ ।
धृष्टकेतुश्च चेदीनां प्रणेता पार्थिवो ययौ ॥ ५-१९६-२३ (३८६०९)
सात्यकिश्च महेष्वासो वृष्णीनां प्रवरो रथः ।
वृतः शतसहस्रेण रथानां प्रमुदन्बली ॥ ५-१९६-२४ (३८६१०)
क्षत्रदेवब्रह्मदेवौ रथस्थौ पुरुषर्षभौ ।
जघनं पालयन्तौ च पृष्ठतोऽनुप्रजग्मतुः ॥ ५-१९६-२५ (३८६११)
शकटापणवेशाश्च यानं युग्यं च सर्वशः ।

तत्र नागसहस्राणि हयानामयुतानि च ।
फल्गु सर्वं कलत्रं च यत्किंचित्कृशदुर्बलम् ॥ ५-१९६-२६ (३८६१२)
कोशसञ्चयवाहांश्च कोष्ठागारं तथैव च ।
गजानीकेन संगृह्य शनैः प्रायाद्युधिष्ठिरः ॥ ५-१९६-२७ (३८६१३)
तमन्वयात्सत्यधृतिः सौचित्तिर्युद्धदुर्मदः ।
श्रेणिमान्वसुदानश्च पुत्रः काश्यस्य वा विभुः ॥ ५-१९६-२८ (३८६१४)
रथा विंशतिसाहस्रा ये तेषामनुयायिनः ।
हयानां दश कोट्यश्च महतां किंकिणीकिनाम् ॥ ५-१९६-२९ (३८६१५)
गजा विंशतिसाहस्रा ईषादन्ताः प्रहारिणः ।
कुलीना भिन्नकरटा मेघा इव विसर्पिणः ॥ ५-१९६-३० (३८६१६)
षष्टिर्नागसहस्राणि दशान्यानि च भारत ।
युधिष्ठिरस्य यान्यासन्युधि सेना महात्मनः ॥ ५-१९६-३१ (३८६१७)
क्षरन्त इव जीमूताः प्रभिन्नकरटामुखाः ।
राजानमन्वयुः पश्चाच्चलन्त इव पर्वताः ॥ ५-१९६-३२ (३८६१८)
एवं तस्य बलं भीमं कुन्तीपुत्रस्य धीमतः ।
यदाश्रित्याथ युयुधे धार्तराष्ट्रं सुयोधनम् ॥ ५-१९६-३३ (३८६१९)
ततोऽन्ये शतशः पश्चात्सहस्रायुतशो नराः ।
नर्दन्तः प्रययुस्तेषाणनीकानि सहस्रशः ॥ ५-१९६-३४ (३८६२०)
तत्र भेरीसहस्राणि शङ्खानामयुतानि च ।
न्यवादयन्त संहृष्टाः सहस्रायुतशो नराः ॥ ॥ ५-१९६-३५ (३८६२१)

इति श्रीमन्महाभारते शतसाहस्र्यां संहितायां वैयासिक्यां उद्योगपर्वणि अम्बोपाख्यानपर्वणि षण्णवत्यधिकशततमोऽध्यायः । । ॥ समाप्तमम्बोपाख्यानपर्व ॥ उद्योगपर्व च ॥ अस्यानन्तरं भीष्मपर्व भविष्यति तस्ययमाद्य श्लोकः । जनमेजय उवाच। कथं युयुधिरे वीराः कुरुपाण्डवसोमकाः। पार्थिवाः सुमहात्मानो नानादेशसमागताः ॥ इदं उद्योगपर्व कुंभघोणस्थेन टीओ आरो कृष्णाचार्येण टीओ आरो व्यासाचार्येण च मुंबय्यां निर्णयसागरमुद्रायन्त्रे मुद्रापितम् । शकाब्दाः १८२८ सन १९०७

Mahabharata - Udyoga Parva - Chapter Footnotes

५-१९६-१२ भीमधन्वायनीति झो पाठे भीमधन्वानः अयन्ते प्रचरन्त्यस्यामिति भीमधन्वायनी ॥
५-१९६-१९ कृतप्रहरणाः ग्कृतयुद्धाः ' ॥
५-१९६-२६ शकटा भाण्डवन्ति अनांसि । आपणो वणिस्कमुदायः। वेशो वेश्याजनः। यानं युद्धयोग्यं वाहनम्। युग्यं केवलं वाहनम्। फल्गु

बालादिकम् । कलत्रं स्त्र्यादिकम् ॥
५-१९६-२७ कोशो धनम् । कोष्ठो धान्यादिसामग्री । संगृह्य एकीकृत्य ॥
५-१९६-

Please send corrections to sanskrit@cheerful.com
Last updated October 9, 2013
http://sanskritdocuments.org

# .. bhismaparva 06 Kumbhaghonam Edition ..
## ॥ ६ भीष्मपर्व ॥

६. भीष्मपर्व

भिस्मपर्व-अध्यय००१
॥ श्रीः ॥
६.१. अध्यायः १

कुरुक्षेत्रे कुरुपाण्डवसेनयोः परस्परसमागमः॥ १॥
उभयपक्षीयैः परस्परं समयकरणं ॥२॥
श्रीवेदव्यासाय नमः
नारायणं नमस्कृत्य नरं नरोत्तमम्।
Mahabharata - Bhishma Parva - Chapter Text

देवीं सरस्वतीं चैव ततो जयमुदीरयेत्॥ १ ६-१-० (३८६२२)
जनमेजय उवाच।
कथं युयुधिरे वीराः कुरुपाण्डवसोमकाः
पार्थिवाश्च महात्मानो नानादेशसमागताः॥ १ ६-१-१ (३८६२३)
वैशंपायन उवाच
यथा युयुधिरे वीराः कुरुपाण्डवसोमकाः।
कुरुक्षेत्रे तपःक्षेत्रे शृणु त्वं पृथिवीपते॥ २ ६-१-२ (३८६२४)
तेऽवतीर्य कुरुक्षेत्रं पाण्डवाः सहसोमकाः।
कौरवानभ्यवर्तन्त जिगीषन्तो महाबलाः॥ ३ ६-१-३ (३८६२५)
वेदाध्ययनसंपन्नाः सर्वे युद्धाभिनन्दिनः।
आशंसन्तो जयं युद्धे बलेनाभिमुखा रणे॥ ४ ६-१-४ (३८६२६)
अभियाय च दुर्धर्षां धार्तराष्ट्रस्य वाहिनीं।
प्राङ्मुखाः पश्चिमे भागे न्यवशन्त ससैनिकाः ५ ६-१-५ (३८६२७)
स्यमन्तपञ्चकाद्बाह्यं शिबिराणि सहस्रशः।
कारयामास विधिवत्कुन्तीपुत्रो युधिष्ठिरः॥ ६ ६-१-६ (३८६२८)
शून्येव पृथिवी सर्वा बालवृद्धावशेषिता।
निरश्वपुरुषेवासीद्रथकुञ्जरवर्जिता॥ ७ ६-१-७ (३८६२९)
यावत्तपति सुर्यो हि जम्बुद्वीपस्य मण्डलं।

तावदेव समावृत्तं बलं पार्थिवसत्तम॥ ८ ६-१-८ (३८६३०)
एकस्थाः सर्ववर्णास्ते मण्डलं बहुयोजनम् ।
पर्याक्रामन्त देशांश्च नदीः शैलान्वनानि च ॥ ६-१-९ (३८६३१)
तेषां युधिष्ठिरो राजा सर्वेषां पुरुषर्षभ ।
व्यादिदेश सवाहानां भक्ष्यभोज्यमनुत्तमम् ॥ ६-१-१० (३८६३२)
संज्ञाय विविधास्तात तेषां चक्रे युधिष्ठिरः ।
एवंवादी वेदितव्यः पाण्डवेयोऽयमित्युत ॥ ६-१-११ (३८६३३)
अभिज्ञानानि सर्वेषां संज्ञाश्चाभरणानि च ।
योजयामास कौरव्यो युद्धकाल उपस्थिते ॥ ६-१-१२ (३८६३४)
दृष्ट्वा ध्वजाग्रं पार्थस्य धार्तराष्ट्रो महामनाः ।
सह सर्वैर्महीपालैः प्रत्यव्यूहत पाण्डवम् ॥ ६-१-१३ (३८६३५)
पाण्डुरेणातपत्रेण ध्रियमाणेन मूर्धनि ।
मध्ये नागसहस्रस्य भ्रातृभिः परिवारितः ॥ ६-१-१४ (३८६३६)
दृष्ट्वा दुर्योधनं हृष्टाः पाञ्चाला युद्धनन्दिनः ।
दध्मुः प्रीता महाशङ्खान्भेरीर्जघ्नुः सहस्रशः ॥ ६-१-१५ (३८६३७)
ततः प्रहृष्टां स्वां सेनामभिवीक्ष्याथ पाण्डवाः ।
बभूवुर्हृष्टमनसो वासुदेवश्च वीर्यवान् ॥ ६-१-१६ (३८६३८)
स्वयोधान्हर्षयन्तौ च वासुदेवधनञ्जयौ ।
दध्मतुः पुरुषव्याघ्रौ दिव्यौ शङ्खौ रथे स्थितौ ॥ ६-१-१७ (३८६३९)
पाञ्चजन्यस्य शङ्खस्य देवदत्तस्य चोभयोः ।
श्रुत्वा तु निनदं योधाः शकृन्मूत्रं प्रसुस्रुवुः ॥ ६-१-१८ (३८६४०)
यथा सिंहस्य नदतः स्वनं श्रुत्वेतरे मृगाः ।
त्रयेयुर्निनदं श्रुत्वा तथाऽसीदत तद्बलम् ॥ ६-१-१९ (३८६४१)
उदतिष्ठद्रजो भौमं न प्राज्ञायत किंचन ।
अस्तं गत इवादित्यः सैन्येन रजसा वृतः ॥ ६-१-२० (३८६४२)
ववर्ष तत्र पर्जन्यो मांसशोणितवृष्टिमान् ।
व्युक्षन्सर्वाणि सैन्यानि तदद्भुतमिवाभवत् ॥ ६-१-२१ (३८६४३)
वायुस्ततः प्रादूरभून्नीचैः शर्करकर्षणः ।
विनिघ्नंस्तान्यनीकानि शतशोऽथ सहस्रशः ॥ ६-१-२२ (३८६४४)
उभे सैन्ये च राजेन्द्र युद्धाय मुदिते भृशम् ।
कुरुक्षेत्रे स्थिते यत्ते सागरक्षुभितोपमे ॥ ६-१-२३ (३८६४५)
तयोस्तु सेनयोरासीदद्भुतः स तु संगमः ।
युगान्ते समनुप्राप्ते द्वयोः सागरयोरिव ॥ ६-१-२४ (३८६४६)
शून्याऽऽसीत्पृथिवी सर्वा वृद्धबालावशेषिता ।
निरश्वपुरुषेवासीद्रथकुञ्जरवर्जिता ।
तेन सेनासमूहेन समानीतेन कौरवैः ॥ ६-१-२५ (३८६४७)

ततस्ते समयं चक्रुः कुरुपाण्डवसोमकाः ।
धर्मान्संस्थापयामासुर्युद्धानां भरतर्षभ ॥ ६-१-२६ (३८६४८)
निवृत्ते विहिते युद्धे स्यात्प्रीतिर्नः परस्परम् ।
यथापरं यथायोगं न च स्यात्कस्यचित्पुनः ॥ ६-१-२७ (३८६४९)
वाचा युद्धे प्रवृत्तानां वाचैव प्रतियोधनम् ।
निष्क्रान्ताः पृतनामध्यान्न हन्तव्याः कदाचन ॥ ६-१-२८ (३८६५०)
रथी च रथिना योध्यो गजेन गजधूर्गतः ।
अश्वेनाश्वी पदातिश्च पादातेनैव भारत ॥ ६-१-२९ (३८६५१)
यथायोगं यथाकामं यथोत्साहं यथाबलम् ।
समाभाष्य प्रहर्तव्यं न विश्वस्ते न विह्वले ॥ ६-१-३० (३८६५२)
परेण सह संयुक्तः प्रमत्तो विमुखस्तथा ।
क्षीणशस्त्रो विवर्मा च न हन्तव्यः कदाचन ॥ ६-१-३१ (३८६५३)
न सूतेषु न धुर्येषु न च शस्त्रोपनायिषु ।
न भेरीशङ्खवादेषु प्रहर्तव्यं कथंचन ॥ ६-१-३२ (३८६५४)
एवं ते समयं कृत्वा कुरुपाण्डवसोमकाः ।
विस्मयं परमं जग्मुः प्रेक्षमाणाः परस्परम् ॥ ६-१-३३ (३८६५५)
निविश्य च महात्मानस्ततस्ते पुरुषर्षभाः ।
हृष्टरूपाः समुनसो बभूवुः सहसैनिकाः ॥ ॥ ६-१-३४ (३८६५६)

इति श्रीमन्महाभारते भीष्मपर्वणि जम्बूखण्डविनिर्माणपर्वणि
प्रथमोऽध्यायः ॥

Mahabharata - Bhishma Parva - Chapter Footnotes

६-१-५ ६-१-६ ६-१-११ तव्यः इति झो पाठः तत्पाठे एवमिति ।एवंवेदी
विद्वान् इति अन्यैः पाण्डवेयो ज्ञातव्य इत्येतदर्थमित्यर्थः ॥
६-१-१९ असीदत अवसन्नमभूत् ॥
६-१-२३ सागरक्षुभितोपमे क्षुभितसागरोपमे ॥
६-१-२७ धर्मसंस्थापनमेवाह यथापरमिति ।यथायोगं
तुल्ययोर्योगस्यानतिक्रमणाम्।यथा येन प्रकारेण अपरं अनुत्कृष्टं
अन्याय्यमित्यर्थः ।तथा न कस्यचित्तुल्ययोगातिक्रमः स्यादित भावः ॥
६-१-२९ गजधूर्गतः गजस्कन्धगतः ॥

---

भिस्मपर्व-अध्यय००२
॥ श्रीः ॥
६.२. अध्यायः २

Mahabharata - Bhishma Parva - Chapter Topics

श्रीव्यासेन धृतराष्ट्रंप्रति युद्धदर्शनाय चक्षुर्दानकथनम् ॥ १ ॥
धृतराष्ट्रेण युद्धश्रवणमात्रे प्रार्थिते व्यासेन सञ्जयंप्रति
युद्धिविषये सार्वज्ञदानपूर्वकं युद्धप्रकारकथननियोगः ॥ २
। व्यासेन धृतराष्ट्रंप्रति दुर्निमित्तप्रादुर्भावकथनम् ॥ ३ ॥

Mahabharata - Bhishma Parva - Chapter Text

६-२-० (३८६५७)
वैशंपायन उवाच। ६-२-०क्ष् (३९४९)
ततः पूर्वापरे सैन्ये समीक्ष्य भगवानृषिः ।
सर्ववेदविदां श्रेष्ठो व्यासः सत्यवतीसुतः ॥ ६-२-१ (३८६५८)
भविष्यति रणे घोरे भरतानां पितामहः ।
प्रत्यक्षदर्शी भगवान्भूतभव्यभविष्यवित् ॥ ६-२-२ (३८६५९)
वैचित्रवीर्यं राजानं रहस्स्थमिदमब्रवीत् ।
शोचन्तमार्तं ध्यायन्तं पुत्राणामनयं तदा ॥ ६-२-३ (३८६६०)
व्यास उवाच। ६-२-४क्ष् (३९५०)
राजन्परिकालास्ते पुत्राश्चान्ये च पार्थिवाः ।
ते हिंसन्तीव सङ्ग्रामे समासाद्येतरेतरम् ॥ ६-२-४ (३८६६१)
तेषु कालपरीतेषु विनश्यत्स्वेव भारत ।
कालपर्यायमाहाय मा स्म शोके मनः कृथा ॥ ६-२-५ (३८६६२)
यदि चेच्छसि संग्रामं द्रष्टुमेनं विशांपते ।
चक्षुर्ददानि ते पुत्र युद्धमेतन्निशामया ॥ ६-२-६ (३८६६३)
धृतराष्ट्र उवाच। ६-२-७क्ष् (३९५१)
न रोचये ज्ञातिवधं द्रष्टुं ब्रह्मर्षिसत्तम। ६-२-७ (३८६६४)
युद्धमेतत्त्वशेषेण श्रृणुयां तव तेजसा ॥ ६-२-७ (३८६६५)
वैशंपायन उवाच। ६-२-८क्ष् (३९५२)
तस्मिन्ननिच्छति द्रष्टुं संग्रामं श्रोतुमिच्छति ।
वराणामीश्वरो व्यासः संजयाय वरं ददौ ॥ ६-२-८ (३८६६६)
व्यास उवाच। ६-२-९क्ष् (३९५३)
एष ते संजयो राजन्युद्धमेतद्वदिष्यति ।
एतस्य सर्वं संग्रामे न परोक्षं भविष्यति ॥ ६-२-९ (३८६६७)
चक्षुषा संजयो राजन्दिव्येनैव समन्वितः ।
कथयिष्यति ते युद्धं सर्वज्ञश्च भविष्यति ॥ ६-२-१० (३८६६८)
प्रकाशं वाऽप्रकाशं वा दिवा वा यदि वा निशि ।
मनसा चिन्तितमपि सर्वं वेत्स्यति संजयः ॥ ६-२-११ (३८६६९)

नैनं शस्त्राणि भेत्स्यन्ति नैनं बाधिष्यते श्रमः ।
गावल्गाणिरयं जीवन्युद्धादस्माद्विमोक्ष्यते ॥ ६-२-१२ (३८६७०)
अहं तु कीर्तिमेतेषां करूणां भरतर्षभ ।
पाण्डवानां च सर्वेषां प्रथयिष्यामि मा शुचः ॥ ६-२-१३ (३८६७१)
दिष्टमेतन्नरव्याघ्र नाभिशोचितुमर्हसि ।
न चैव शक्यं संयन्तुं यतो धर्मस्ततो जयः ॥ ६-२-१४ (३८६७२)
वैशंपायन उवाच। ६-२-१५क्ष् (३९५४)
एवमुक्त्वा स भगवान्कुरूणां प्रतितामहः ।
पुनरेव महाभागो धृतराष्ट्रमुवाच ह ॥ ६-२-१५ (३८६७३)
इह युद्धे महाराज भविष्यति महान्क्षयः ।
तथेह च निमित्तानि भयदान्युपलक्षये ॥ ६-२-१६ (३८६७४)
श्येना गृध्राश्च काकाश्च काङ्काश्च सहिता बकैः ।
संपतन्ति ध्वजाग्रेषु समवायांश्च कुर्वते ॥ ६-२-१७ (३८६७५)
अभ्यग्रं च प्रपश्यन्ति युद्धमानन्दिनो द्विजाः ।
क्रव्यादा भक्षयिष्यन्ति मांसानि गजवाजिनां ॥ ६-२-१८ (३८६७६)
कटाकटेति वाशन्तो भैरवा भयवेदिनः ।
कङ्काः क्रोशन्ति मध्याह्ने दक्षिणामभितो दिशं ॥ ६-२-१९ (३८६७७)
उभे पूर्वापरे सन्ध्ये नित्यं पश्यामि भारत ।
उदयास्तमने सूर्यं कबन्धैः परिवारितम् ॥ ६-२-२० (३८६७८)
श्वेतलोहितपर्यन्ताः कृष्णाग्रीवाः सविद्युतः ।
त्रिवर्णाः परिघाः सन्धौ भानुमावारयन्त्युत ॥ ६-२-२१ (३८६७९)
ज्वलितार्के ॥॥॥त्रं निर्विशेषदिनक्षपम् ।
चन्द्रोऽभूतग्निवर्णश्च पद्मवर्णे नभस्तले । ६-२-२२ (३८६८०)
आलक्षे प्रभया हीनां पौर्णमासीं च कीर्तिकीम् ।
चन्द्रोऽभूदग्निवर्णश्च पद्मवर्णे नभस्तले ॥ ६-२-२३ (३८६८१)
स्वप्स्यन्ति निहता वीरा भूमिमावृत्य पार्थिवाः ।
राजानो राजपुत्राश्च शूराः परिघबाहवः ॥ ६-२-२४ (३८६८२)
अन्तरिक्षे वराहस्य पृषदंशकस्य चोभयोः ।
प्रणादं युध्यतो रात्रौ रौद्रं नित्यं प्रलक्षये ॥ ६-२-२५ (३८६८३)
देवताप्रतिमाश्चैव कम्पन्ति च हसन्ति च ।
वमन्ति रुधिरं चास्यैः स्विद्यन्ति प्रपतन्ति च ॥ ६-२-२६ (३८६८४)
अनाहता दुन्दुभयः प्रणदन्ति विशांपते ।
अयुक्ताश्च प्रवर्तन्ते क्षत्रियाणां महारथाः ॥ ६-२-२७ (३८६८५)
कोकिलाः शतपत्राश्च चाषा भासाः शुकास्तथा ।
सारसाश्च मयूराश्च वाचो मुञ्चन्ति दारुणाः ॥ ६-२-२८ (३८६८६)
गृहीतशस्त्राः क्रोशन्ति चर्मिणो वाजिपृष्ठगाः ।

अरुणोदये प्रदृश्यन्ते शतशः शलभव्रजाः ॥ ६-२-२९ (३८६८७)
उभे सन्ध्ये प्रकाशन्ते दिशो दाहसमन्विते ।
पर्जन्यः पांसुवर्षी च मांसवर्षी च भारत ॥ ६-२-३० (३८६८८)
या चैषा विश्रुता राजंस्त्रैलोक्ये साधुसंमता ।
अरुन्धती तयाप्येष वसिष्ठः पृष्ठतः कृतः ॥ ६-२-३१ (३८६८९)
रोहिणीं पीडयन्नेष स्थितो राजञ्शनैश्चरः ।
व्यावृत्तं लक्ष्म सोमस्य भविष्यति महद्भयम् ॥ ६-२-३२ (३८६९०)
अनभ्रे च महाघोरस्तनितं श्रूयते भृशम् ।
वाहनानां च रुदतां निपतन्त्युश्रुबिन्दवः ॥ ॥ ६-२-३३ (३८६९१)

इति श्रीमन्महाभारते भीष्मपर्वणि जम्बूखण्डविनिर्माणपर्वणि
द्वितीयोऽध्यायः ॥

Mahabharata - Bhishma Parva - Chapter Footnotes

६-२-२ भविष्यति भाविनि ॥
६-२-४ हिंसन्तीव नाशयिष्यन्त्येव ॥
६-२-५ पर्यायं वैपरीत्यम् ॥
६-२-६ निशामय पश्य ॥
६-२-१७ समवायान् संघान् ॥
६-२-१८ अभ्यग्रं समीपम् । क्रव्यादामांसभक्षकाः ॥
६-२-१९ वाशन्तः शब्दं कुर्वन्तः ॥
६-२-२१ परिघाः परिवेषाः कृष्णग्रीवाः मध्ये कृष्णाः
श्वेतलोहितपर्यन्ताश्च संधौ संध्यायाम् आवारयन्ति वेष्टयन्ति ॥
६-२-२२ निर्विशेषदिनक्षयं इति झो पाठे
निर्विशेषदिनक्षयं अहोरात्रम् । निश्चयेन विगतः शेषो
यस्य तस्य दिनस्य तिथेः क्षयो यस्मिन् । सूर्योदयद्वयस्पर्शिनी
क्षयतिथिर्यस्मिन् अहोरात्रे तन्मया दृष्टम्। तदेव विशिनष्टि
ज्वलितेति। अर्केन्द्वोर्नक्षत्रममावास्यायामुभाभ्यामाक्रान्तं नक्षत्रं
तदेव ज्वलितं पापग्रहाक्रान्तं यस्मिन्। दर्से क्षयतिथिः तन्नक्षत्रे
च पापग्रह इत्ययं महान् दुर्योग इत्यर्थः ॥
६-२-२३ पद्मवर्णे रक्तपद्मवर्णे ॥
६-२-२७ अयुक्ताः अश्वैरयोजिता अपि प्रवर्तन्ते चलन्ति । महान्तो रथाः
महारथाः । मनोरथा इति को पाठः ॥
६-२-२९ गृहीतशस्त्रः आत्तलोहाः लोहतुण्डा इति यावत्
शस्त्रमायुधलोहयोरित्यमरः । चर्मिणो भृङ्गरिटिसंज्ञाः
कृष्णशलभविशेषाः ॥

॥ श्रीः ॥

६.३. अध्यायः ३

Mahabharata - Bhishma Parva - Chapter Topics

व्यासेन धृतराष्ट्रंप्रति दुर्निमित्तप्रादुर्भावकथनम् ॥ १ ॥
तथा जेष्यतां जयसूचकलिङ्गकथनम् ॥ २ ॥

Mahabharata - Bhishma Parva - Chapter Text

६-३-० (३८६९२)
व्यास उवाच। ६-३-०क्ष् (३९५५)
खरा गोषु प्रजायन्ते रमन्ते मातृभिः सुताः ।
अनार्तवं पुष्पफलं दर्शयन्ति वनद्रुमाः ॥ ६-३-१ (३८६९३)
गर्भिण्योऽजातपुत्राश्च जनयन्ति विभीषणान् ।
क्रव्यादाः पक्षिभिश्चापि सहा श्नन्ति परस्परम् ॥ ६-३-२ (३८६९४)
त्रिविषाणाश्चतुर्नेत्राः पञ्चपादा द्विमेहनाः ।
द्विशीर्षाश्च द्विपुच्छाश्च दंष्ट्रिणः पशवोऽशिवाः ॥ ६-३-३ (३८६९५)
जायन्ते विवृतास्याश्च व्याहरन्तोऽशिवा गिरः ।
त्रिपदाः शिखिनस्ताक्ष्यार्श्चतुर्दंष्ट्रा विषाणिनः ॥ ६-३-४ (३८६९६)
तथैवान्याश्च दृश्यन्ते स्त्रियो वै ब्रह्मवादिनाम् ।
वैनतेयान्मयूरांश्च जनयन्ति पुरे तव ॥ ६-३-५ (३८६९७)
गोवत्सं वडवा सूते श्वा सृगालं महीपते ।
कुक्कुरान्करभाश्चैव शुकाश्चाशुवादिनः ॥ ६-३-६ (३८६९८)
स्त्रियः काश्चित्प्रजायन्ते चतस्रः पञ्च कन्यकाः ।
जातमात्राश्च नृत्यन्ति गायन्त च हसन्ति च ॥ ६-३-७ (३८६९९)
पृथग्जनस्य सर्वस्य क्षुद्रकाः प्रहसन्ति च ।
नृत्यन्ति परिगायन्ति वेदयन्तो महद्भयम् ॥ ६-३-८ (३८७००)
प्रतिमाश्चालिखन्त्येताः सशस्त्राः कालचोदिताः ।
अन्योन्यमभिधावन्ति शिशवो दण्डपाणयः ॥ ६-३-९ (३८७०१)
अन्योन्यमभिमृद्नन्ति नगराणि युयुत्सवः ।
पद्मोत्पलानि वृक्षेषु जायन्ते कुमुदानि च ॥ ६-३-१० (३८७०२)
विष्व्वाताश्च वान्त्युग्रा रजो नाप्युपशाम्यति ।
अभीक्ष्णं कम्पते भूमिरर्कं राहुरुपैति च ॥ ६-३-११ (३८७०३)
श्वेतो ग्रहस्तथा चित्रां समतिक्रम्य तिष्ठति ।

अभावं हि विशेषेण कुरूणां तत्र पश्यति ॥ ६-३-१२ (३८७०४)
धूमकेतुर्महाघोरः पुष्यं चाक्रम्य तिष्ठति ।
सेनयोरशिवं घोरं करिष्यति महाग्रहः ॥ ६-३-१३ (३८७०५)
मघास्वङ्गारको वक्रः श्रवणे च बृहस्पतिः ।
भगं नक्षत्रमाक्रम्य सूर्यपुत्रेण पीड्यते ॥ ६-३-१४ (३८७०६)
शुक्रः प्रोष्ठपदे पूर्वे समारुह्य विरोचते ।
उत्तरे तु परिक्रम्य सहितः समुदीक्षते ॥ ६-३-१५ (३८७०७)
श्यामो ग्रहः प्रज्वलितः सधूम इव पावकः ।
ऐन्द्रं तेजस्वि नक्षत्रं ज्येष्ठामाक्रम्य तिष्ठति ॥ ६-३-१६ (३८७०८)
ध्रुवं प्रज्वलितो घोरमपसव्यं प्रवर्तते ।
रोहिणीं पीडयत्येवमुभौ च शशिभास्करो ।
चित्रास्वात्यन्तरे चैव विष्ठितः परुषग्रहः ॥ ६-३-१७ (३८७०९)
वक्रानुवक्रं कृत्वा च श्रवणं पावकप्रभः ।
ब्रह्मराशिं समावृत्य लोहिताङ्गो व्यवस्थितः ॥ ६-३-१८ (३८७१०)
सर्वसस्यपरिच्छन्ना पृथिवी सस्यमालिनी ।
पञ्चशीर्षा यवाश्चापि शतशीर्षाश्च शालयः ॥ ६-३-१९ (३८७११)
प्रधानाः सर्वलोकस्य यास्वायत्तमिदं जगत् ।
ता गावः प्रस्नुता वत्सैः शोणितं प्रक्षरन्त्युत ॥ ६-३-२० (३८७१२)
निश्चेरुरर्चिषश्चापात्खङ्गाश्च ज्वलिता भृशम् ।
व्यक्तं पश्यन्ति शस्त्राणि संग्रामं समुपस्थितम् ॥ ६-३-२१ (३८७१३)
अग्निवर्णा यथा भासः शस्त्राणामुदकस्य च ।
कवचानां ध्वजानां च भविष्यति महाक्षयः ॥ ६-३-२२ (३८७१४)
पृथिवी शोणितावर्ता ध्वजोडुपसमाकुला ।
कुरूणां वैशसे राजन्पाण्डवैः सह भारत ॥ ६-३-२३ (३८७१५)
दिक्षु प्रज्वलितास्याश्च व्याहरन्ति मृगद्विजाः ।
अत्याहितं दर्शयन्तः क्षत्रियाणां महद्भयम् ॥ ६-३-२४ (३८७१६)
एकपक्षाक्षिचरणाः शकुन्ताः खेचरा निशि ।
रौद्रं वदन्ति संरब्धाः शोणितं छर्दयन्ति च ॥ ६-३-२५ (३८७१७)
ग्रहौ ताम्रारुणनिभौ प्रज्वलन्ताविव स्थितौ ।
सप्तर्षीणामुदाराणां समवच्छाद्य वै प्रभाम् ॥ ६-३-२६ (३८७१८)
संवत्सरस्थायिनौ च ग्रहौ प्रज्वलितावुभौ ।
विशाखयोः समीपस्थौ बृहस्पतिशनैश्चरौ ॥ ६-३-२७ (३८७१९)
चन्द्रादित्यावुभौ ग्रस्तावेकाह्ना हि त्रयोदशीम् ।
अपर्वमि ग्रहं यातौ प्रजासंक्षयमिच्छतः ॥ ६-३-२८ (३८७२०)
अशोभिता दिशः सर्वाः पांसुवर्षैः समन्ततः ।
उत्पातमेघा रौद्राश्च रात्रौ वर्षन्ति शोणितम् ॥ ६-३-२९ (३८७२१)

कृत्तिकां पीडयंस्तीक्ष्णैर्नक्षत्रं पृथिवीपते ।
अभीक्ष्णवाता वायन्ते धूमकेतुमवस्थिताः ॥ ६-३-३० (३८७२२)
विषमं जनयन्त्येत आक्रन्दजननं महत् ।
त्रिषु पूर्वेषु सर्वेषु नक्षत्रेषु विशांपते ।
बुधः संपततेऽभीक्ष्णं जनयन्प्राणिनां भयम् ॥ ६-३-३१ (३८७२३)
चतुर्दशीं पञ्चदशीं भूतपूर्वां च षोडशीम् ।
इमां तु नाभिजानामि अमावास्यां त्रयोदशीम् ।
चन्द्रसूर्यावुभौ ग्रस्तावेकान्हा हि त्रयोदशीम् ॥ ६-३-३२ (३८७२४)
अपर्वणि ग्रहेणैतौ प्रजाः संक्षपयिष्यतः ।
मांसवर्षं पुनस्तीव्रमासीत्कृष्णचतुर्दशीम् ।
शोणितैर्वक्रसंपूर्णा अतृप्तास्तत्र राक्षसाः ॥ ६-३-३३ (३८७२५)
प्रतिस्नोतोवहा नद्यः सरितः शोणितोदकाः ।
फेनायमानाः कूपाश्च कूर्दन्ति वृषभा इव ॥ ६-३-३४ (३८७२६)
पतन्त्युल्काः सनिर्घाताः शक्राशनिसमप्रभाः ।
अद्य चैव निशां व्युष्टामनयं समवाप्स्यथ ॥ ६-३-३५ (३८७२७)
विनिःसृत्य महोल्काभिस्तिमिरं सर्वतो दिशम् ।
अन्योन्यमुपतिष्ठद्भिस्तत्र चोक्तं महर्षिभिः ।
भूमिपालसहस्राणां भूमिः पास्यति शोणितम् ॥ ६-३-३६ (३८७२८)
कैलासमन्दराभ्यां तु तथा हिमवतो विभो ।
सहस्रशो महाशब्दं शिखराणि पतन्ति च ॥ ६-३-३७ (३८७२९)
महाभूता भूमिकम्पे चत्वारः सागराः पृथक् ।
वेलामुद्वर्तयन्तीव क्षोभयन्तो वसुन्धराम् ॥ ६-३-३८ (३८७३०)
वृक्षानुन्मथ्य वान्त्युग्रा वाताः शर्करकर्षिणः ।
आभग्नाः सुमहावातैरशनीभिः समाहताः ॥ ६-३-३९ (३८७३१)
वृक्षाः पतन्ति चैत्याश्च ग्रामेषु नगरेषु च ।
नीललोहितपीतश्च भवत्यग्निर्हुतो द्विजैः ॥ ६-३-४० (३८७३२)
वामार्चिर्दुष्टगन्धश्च मुञ्चन्वै दारुणं स्वनम् ।
स्पर्शा गन्धा रसाश्चैव विपरीता महीपते ॥ ६-३-४१ (३८७३३)
धूमं ध्वजाः प्रमुञ्चन्ति कम्पमाना मुहुर्मुहुः ।
मुञ्चन्त्यङ्गारवर्षं च भेर्यश्च पटहास्तथा ॥ ६-३-४२ (३८७३४)
शिखराणां समृद्धानामुपरिष्टात्समन्ततः ।
वायसाश्च रुवन्त्युग्रं वामं मण्डलमाश्रिताः ॥ ६-३-४३ (३८७३५)
पक्वापक्वेऽतिसुभृशं वावाश्यन्ते वयांसि च ।
निलीयन्ते ध्वजाग्रेषु क्षयाय पृथिवीक्षिताम् ॥ ६-३-४४ (३८७३६)
ध्यायन्तः प्रकिरन्तश्च व्याला वेपथुसंयुताः ।
दीनास्तुरंगमाः सर्वे वारणाः सलिलाश्रयाः ॥ ६-३-४५ (३८७३७)

गएवंविधं दुर्निमित्तं क्षयाय पृथीवीक्षिताम् ।
भौमं दिव्यं चान्तरिक्षं त्रिविधं जायतेऽनिशम्'  ६-३-४६ (३८७३८)
एतच्छ्रुत्वा भवानत्र प्राप्तकालं व्यवस्यताम् ।
यथा लोकः समुच्छेदं नायं गच्छेत भारत ॥ ६-३-४७ (३८७३९)
वैशंपायन उवाच। ६-३-४८क्ष् (३९५६)
पितुर्वचो निशम्यैतद्धृतराष्ट्रोऽब्रवीदिदम् ।
दिष्टमेतत्पुरा मन्ये भविष्यति नरक्षयः ॥ ६-३-४८ (३८७४०)
राजानः क्षत्रधर्मेण यदि वध्यन्ति संयुगे ।
वीरलोकं समासाद्य सुखं प्राप्स्यन्ति केवलम् ॥ ६-३-४९ (३८७४१)
इह कीर्तिं परे लोके दीर्घकालं महत्सुखम् ।
प्राप्स्यन्ति पुरुषव्याघ्राः प्राणांस्त्यक्त्वा महाहवे ॥ ६-३-५० (३८७४२)
वैशंपायन उवाच। ६-३-५१क्ष् (३९५७)
एवं मुनिस्तथेत्सुक्त्वा कवीन्द्रो राजसत्तम ।
धृतराष्ट्रेण पुत्रेण ध्यानमन्वगमत्परम् ॥ ६-३-५१ (३८७४३)
स मुहूर्तं तथा ध्यात्वा पुनरेवाब्रवीद्वचः ।
असंशयं पार्थिवेन्द्र कालः संक्षयते जगत् ॥ ६-३-५२ (३८७४४)
सृजते च पुनर्लोकान्नेह विद्यति शाश्वतम् ।
ज्ञातीनां वै कुरूणां च संबन्धिसुहृदां तथा ॥ ६-३-५३ (३८७४५)
धर्म्यं दर्शय पन्थानं समर्थो ह्यसि वारणे ।
क्षुद्रं जातिवधं प्राहुर्मा कुरुष्व ममाप्रियम् ॥ ६-३-५४ (३८७४६)
कालोऽयं पुत्ररूपेण तव जातो विशांपते ।
न वधः पूज्यते वेदे हितं नैव कथंचन ॥ ६-३-५५ (३८७४७)
हन्यात्स एनं यो हन्यात्कुलधर्मं स्विकां तनुम् ।
कालेनोत्पथगन्तसि शक्ये सति यथाऽऽपदि ॥ ६-३-५६ (३८७४८)
कुलस्यास्य विनाशाय तथैव च महीक्षिताम् ।
अनर्थो राज्यरूपेण तव जातो विशांपते ॥ ६-३-५७ (३८७४९)
लुप्तधर्मा परेणासि धर्मं दर्शय वै सुतान् ।
किं ते राज्येन दुर्धर्षयेन प्राप्तोऽसि किल्विषम् ॥ ६-३-५८ (३८७५०)
यशो धर्मं च कीर्तिं च पालयन्स्वर्गमाप्स्यसि ।
लभन्तां पाण्डवा राज्यं शमं गच्छन्तु कौरवाः ॥ ६-३-५९ (३८७५१)
वैशंपायन उवाच। ६-३-६०क्ष् (३९५८)
एवं ब्रुवति विप्रेन्द्रे धृतराष्ट्रोऽम्बिकासुतः ।
प्रशस्य वाक्यं वाक्यज्ञो वाक्यं चैवाब्रवीत्पुनः ॥ ६-३-६० (३८७५२)
धृतराष्ट्र उवाच। ६-३-६१क्ष् (३९५९)
यथा भवान्वेत्ति तथैव वेत्ता
भावाभावौ विदितौ मे यथार्थौ ।

स्वार्थे हि संमुह्यति तात लोको
मां चापि लोकात्मकमेव विद्धि ॥ ६-३-६१ (३८७५३)
प्रसादये त्वामतुलप्रभावं
त्वं नो गतिर्दर्शयिता च धीरः ।
न चापि ते वशगा मे सुताश्च
न चाधर्मं कर्तुमर्हा हि मे मतिः ॥ ६-३-६२ (३८७५४)
त्वं हि धर्मः पवित्रं च यशः कीर्तिर्धृतिः स्मृतिः ।
कुरूणां पाण्डवानां च मान्यश्चापि पितामहः ॥ ६-३-६३ (३८७५५)
व्यास उवाच। ६-३-६४क्ष् (३९६०)
वैचित्रवीर्य नृपते यत्ते मनसि वर्तते ।
अभिधत्स्व यथाकामं छेत्ताऽस्मि तव संशयम् ॥ ६-३-६४ (३८७५६)
धृतराष्ट्र उवाच। ६-३-६५क्ष् (३९६१)
यानि लिङ्गानि संग्रामे भवन्ति विजयिष्यताम् ।
तानि सर्वाणि भगवञ्छ्रोतुमिच्छामि तत्त्वतः ॥ ६-३-६५ (३८७५७)
व्यास उवाच। ६-३-६६क्ष् (३९६२)
प्रसन्नभाः पावक ऊर्ध्वरश्मिः
प्रदक्षिणावर्तशिखो विधूमः ।
पुण्या गन्धाश्चाहुतीनां प्रवान्ति
जयस्यैतद्भाविनो रूपमाहुः ॥ ६-३-६६ (३८७५८)
गम्भीरघोषाश्च महास्वनाश्च
शङ्खा मृदङ्गाश्च नदन्ति यत्र ।
विशुद्धरश्मिस्तपनः शशी च
जयस्येतद्भाविनो रूपमाहुः ॥ ६-३-६७ (३८७५९)
इष्टा वाचः प्रसृता वायसानां
संप्रस्थितानां च गमिष्यतां च ।
ये पृष्ठतस्ते त्वरयन्ति राज-
न्ये चाग्रतस्ते प्रतिषेधयन्ति ॥ ६-३-६८ (३८७६०)
कल्याणवाचः शकुना राजहंसाः
शुकाः क्रौञ्चाः शतपत्राश्च यत्र ।
प्रदक्षिणाश्चैव भवन्ति सङ्ख्ये
ध्रुवं जयस्तत्र वदन्ति विप्राः ॥ ६-३-६९ (३८७६१)
अलंकारैः कवचैः केतुभिश्च
सुखप्रणादैर्हेषितैर्वा हयानाम् ।
भ्राजिष्मती दुष्प्रतिवीक्षणीया
येषां चमूस्ते विजयन्ति शत्रून् ॥ ६-३-७० (३८७६२)
हृष्टा वाचस्तथा सत्वं योधानां यत्र भारत ।

न म्लायन्ति स्रजश्चैव ते तरन्ति रणोदधिम् ॥ ६-३-७१ (३८७६३)
ग्प्रयाणे वायसो वामे दक्षिणे प्रविविक्षताम् ।
पश्चात्संसाधयत्यर्थं पुरस्तात्प्रतिषेधति ॥ ' ६-३-७२ (३८७६४)
शब्दरूपरसस्पर्शगन्धाश्चाविकृताः शुभाः ।
सदा हर्षश्च योधानां जयतामिह लक्षणम् ॥ ६-३-७३ (३८७६५)
अनुगा वायवो वान्ति तथाऽभ्राणि वयांसि च ।
अनुप्लवन्ति मेघाश्च तथैवेन्द्रधनूंषि च ॥ ६-३-७४ (३८७६६)
एतानि जयमानानां लक्षणानि विशांपते ।
भवन्ति विपरीतानि मुमूर्षूणां जनाधिप ॥ ६-३-७५ (३८७६७)
अल्पायां वा महत्यां वा सेनायामिति निश्चयः ।
हर्षो योधगणस्यैको जयलक्षणमुच्यते ॥ ६-३-७६ (३८७६८)
एको दीर्णो दारयति सेनां सुमहतीमपि ।
तां दीर्णामनुदीर्यन्ते योधाः शूरतरा अपि ॥ ६-३-७७ (३८७६९)
दुर्निवर्त्या तदा चैव प्रभग्ना महती वमूः ।
अपामिव महावेगा त्रस्ता मगगणा इव ॥ ६-३-७८ (३८७७०)
नैव शक्या समाधातुं सन्निपाते महाचमूः ।
दीर्ण इत्येव दीर्यन्ते सुविद्वांसोऽपि भारत ॥ ६-३-७९ (३८७७१)
भीतान्भग्नांश्च संप्रेक्ष्य भयं भूयोऽभिवर्धते ।
प्रभग्ना सहसा राजन्दिशो विद्रवते चमूः ।
नैव स्थापयितुं शक्या शूरैरपि महाचमूः ॥ ६-३-८० (३८७७२)
सत्कृत्य महतीं सेनां चतुरङ्गां महीपतिः ।
उपायपूर्वं मेधावी यतेत सततोत्थितः ॥ ६-३-८१ (३८७७३)
उपायविजयं श्रेष्ठमाहुर्भेदेन मध्यमम् ।
जघन्य एष विजयो यो युद्धेन विशांपते ॥ ६-३-८२ (३८७७४)
महान्दोषः सन्निपातस्तस्याद्यः क्षय उच्यते ।
परस्परज्ञाः संहृष्टा व्यवधूताः सुनिश्चिताः ॥ ६-३-८३ (३८७७५)
अपि पञ्चाशतं शूरा मृद्नन्ति महतीं चमूम् ।
अपि वा पञ्च षट् सप्त विजयन्त्यनिवर्तिनः ॥ ६-३-८४ (३८७७६)
न वैनतेयो गरुडः प्रशंसति महाजनम् ।
दृष्ट्वा सुपर्णोऽपचितिं महत्या अपि भारत ॥ ६-३-८५ (३८७७७)
न बाहुल्येन सेनाया जयो भवति नित्यशः ।
अध्रुवो हि जयो नाम दैवं चात्र परायणम् ।
जयवन्तो हि संग्रामे कृतकृत्या भवन्ति हि ॥ ॥ ६-३-८६ (३८७७८)

इति श्रीमन्महाभारते भीष्मपर्वणि जम्बूखण्डविनिर्माणपर्वणि
तृतीयोऽध्यायः ॥

६-३-६ वडवा अश्वा श्वा शुनी । करभो मृगविशेषः ॥
६-३-७ प्रजायन्ते जनयन्ति ॥
६-३-८ पृथग्जनस्य नीचजनस्य संबन्धिनः क्षुद्रकाः व्यङ्गाः चण्डालादिषु जाताः काणकुब्जादय इत्यर्थः । क्षुद्रा व्यङ्गानटीत्यादिमेदिनी ॥
६-३-१० नगराणि कृत्रिमाणि शिशव एवावमृद्नन्ति ॥
६-३-११ कार्तिक्याः परं हि संग्रामारम्भस्तत्र तुलास्थमर्कं राहुरुपैति ॥
६-३-१२ तदैव श्वेतो ग्रहः केतुश्चित्रामतिक्रामति स्वात्यादौ वर्तते । नित्यं समसस्तकस्थौ राहुकेतू इदानीमेकराशिगतौ महानिष्टसूचकाविति भावः ॥
६-३-१३ धूमकेतुरुपग्रहविशेषः स पुष्यं क्षत्रियनक्षत्रमाक्रम्य तिष्ठति । तथा वक्ष्यमाणरीत्या ज्येष्ठास्थेनापि केतुना पुष्यो विद्धस्तथा च स्वनक्षत्रे क्रूराक्रान्ते क्रूरविद्धे च सत्यवश्यं क्षत्रियाणां नाशो भवतीत्यर्थः । यथोक्तम् । कृत्तिकायां तथा पुष्ये रेवत्यां च पुनर्वसौ । वेधे सति त्रमाद्बधो वर्णेषु ब्राह्मणादिष्विति नरतिविजये ॥
६-३-१४ भगं नक्षत्रं पूर्वाफल्गुनी । श्रुतिमते तूत्तराफल्गुनी ॥
६-३-१५ पूर्वेप्रोष्ठपदे पूर्वाभाद्रपदानक्षत्रं समारुह्य परिक्रम्य परिघाख्य उपग्रहस्तेन सहितः उत्तरे उत्तराभाद्रपदानक्षत्रं उदीक्षते आक्रान्तुमिच्छति ॥
६-३-१६ श्यामो द्वितीय उपग्रहः केतुसंज्ञः ऐन्द्रं ज्येष्ठां नक्षत्रमिति योज्यम् ॥
६-३-१७ परुषग्रहो राहुरेकनक्षत्रस्थौ शशिभास्करौ पीडयति । अपसव्यं प्रवर्तते सर्वदा वक्री सन् । सर्वतोभद्रचक्रे वेधेन कस्वातीस्थः सन् रोहिणीनक्षत्रं च पीडयतीत्यर्थः ॥
६-३-१८ तत्रैव सर्वतोभद्रचक्रे मघास्थो लिहिताङ्गोऽङ्गारको वक्रानुवक्रं कृत्वा पुनःपुनर्वक्रीभूय ब्रह्मणा बृहस्पतिनाक्रान्तं राशिं श्रवणं समावृत्य सम्यक् पूर्णदृष्ट्या विद्वा तिष्ठति ॥
६-३-१९ परिच्छन्ना आच्छादिता । पञ्चशीर्षाणि शिम्बीसदृशानि येषां ते पञ्चशीर्षाः ॥
६-३-२७ पूर्वं श्रवणस्थो बृहस्पतिर्भगनक्षत्रस्थः सूर्यपुत्र इत्युक्तं तावुभौ विशाखासमीपे तिर्यग्वेधेन शतपदे चक्रे विशाखानक्षत्रं विध्यत इत्यर्थः ॥
६-३-२८ अपर्वणि पर्व दर्शाख्यं पञ्चदशेह्नि भवति

एकतिथिवृद्धौ षोडशे वा एकतिथिक्षये चतुर्दशे वाह्नि भवति ।तिथिद्वयक्षयस्तु लोकेऽत्यन्तमप्रसिद्ध इति अपर्वणीत्युक्तं ।ग्रहं यातौ राहुणा ग्रहणं प्राप्तौ ।एतदेव प्रजासंक्षयहेतुत्वेन शास्त्रे दृष्टमित्याह प्रजेति। अयं श्लोकोत्र दाक्षिणात्यकोशेषु नास्ति। झो पुस्तक एवास्ति ॥

६-३-३० चित्रास्वान्त्यतरस्थः पुरुषो ग्रहो रोहिणीं पीडयतीत्युक्तं तत्र चित्रांशे स्थित्वा रोहिणी अष्टादशत्वेन स्मुदायिकनक्षत्रं पीडयति ।स्वात्यंशे स्थित्वा कृत्तिकां षोडशकत्वेन सांघातिकनक्षत्रं पीडयति। सर्वतोभद्रचक्रे तथा दर्शनात् तदेतदाह कृत्तिकामित्यर्धेन ।तीक्ष्णै क्रूरैः कर्मभिरुपलक्षितो राहुरित्यर्थः ।धूमकेतुं उत्पातविशेषमनुलक्ष्यावस्थिताः ॥

६-३-३१ त्रिष्विति ।त्रिषु सर्वेषु नक्षत्रनक्षत्रेषु विशांपते। गृध्रः संपतते शीर्षे जनयन्भयमुत्तमम् इति झो पाठः ॥

६-३-३२ ग्रस्तावेकमासीं त्रयोदशीम् इति झो पाठः ।तत्पक्षे चन्द्रादित्यावुभौ ग्रस्तावित्येतेन श्लोकेनोक्तमर्थं विशदयति द्वाभ्याम्। चतुर्दशीमिति। त्रयोदशीं त्रयोदाशानामह्नां पूरणीं अमावास्यां भूतपूर्वां नाभिजानामि। अतिभूयसा कालेन अयं दुर्योग आगत इति भावः। एकमासीं एकस्मिन्नेव मासे भवाम्। पूर्वं त्रयोदश्यां रात्रौ पक्षसमाप्त्या सूर्यग्रहणमेवोक्तम्। इदानीं तु एकस्मिन्मासे चन्द्रः पूर्वमास्यां राहुणा ग्रहेण ग्रस्तः सूर्योऽमावास्यायाम्। यदा सूर्यो ग्रस्तस्तदा चन्द्रोपि ग्रस्त एव दर्शे तयोः संहतत्वात् ॥

६-३-३३ अपर्वणीति ।लोकाप्रसिद्धपर्वणीति पूर्ववत् ज्ञेयम् ॥

६-३-३४ कूपाः कूर्दन्ति क्रीडन्ति वातैः क्षुभ्यन्त इत्यर्थः ॥

६-३-३५ अनयं अनीतिफलम् ॥

६-३-३८ महाभूता वृद्धीभूताः ॥

६-३-४३ शिखराणां द्रुमाग्राणाम् ॥

६-३-४४ पक्वापक्वेति पक्षिरुतानुकरणम् ।वावाश्यन्ते अतिशयेन शब्दं कुर्वन्ति ॥

६-३-४५ प्रकिरन्तः शकृन्मूत्रमिति शेषः ।व्यालाः दुष्टहस्तिनः ।सलिलाश्रयाः अत्यन्तं प्रस्वेदयुक्ताः ॥

६-३-५१ मुनिः एवं तथेत्युक्त्वेति संबन्धः ।धृतराष्ट्रेण हेतुना। तदर्थमित्यर्थः। ध्यानं चिन्ताम् ॥

६-३-५५ अयं दुर्योधनः ॥

६-३-५६ सः धर्मः एवं धर्महन्तारं शक्येऽनापदि सत्यां किमर्थमापदीव उन्मार्गगामी भवसीत्यर्थः ॥

६-३-५८ परेण अतिशयेन ॥
६-३-६१ भावाभावौ स्थितिविनाशौ ॥
६-३-६३ त्वं हि धर्मादौ हेतुरित्यर्थः ॥
६-३-६७ रूपं गमकं चिह्नम् ॥
६-३-६८ ये पृष्ठतो भाषमाणा वायसास्ते गन्तारं त्वरयन्ति
सिद्धिसूचका इत्यर्थः । ये पुरतो भाषमाणास्ते गमनं
निषेधन्तीत्यर्थः ॥
६-३-८३ सन्निपातो योधानां संघर्षः । व्यवधूताः दारादिष्वनासक्ताः ॥
६-३-८५ शूराणां सहायसंपत्तिर्नापेक्षितेत्यत्र दृष्टान्तमाह
न वैनतेय इति । महत्या अपि सेनाया अपचितिं प्रतिकारं नाशं
वा एकेनैवात्मना कर्तुं शक्यं दृष्ट्वा सुपर्णः शोभनपतत्रः
गरुडो नामतः वैनतेयो विनतायाः पुत्रो महाजनं बहुजनसमूहं न
प्रशंसति ॥

---

भिस्मपर्व-अध्यय००४
॥ श्रीः ॥
६.४. अध्यायः ४

Mahabharata - Bhishma Parva - Chapter Topics
व्यासे गते संजयेन धृतराष्ट्रंप्रति भूमिगुणानुवर्णनम् ॥ १ ॥

Mahabharata - Bhishma Parva - Chapter Text

६-४-० (३८७७९)
वैशंपायन उवाच। ६-४-०क्ष् (३९६३)
एवमुक्त्वा ययौ व्यासो धृतराष्ट्रय धीमते ।
धृतराष्ट्रोऽपि तच्छ्रुत्वा ध्यानमेवान्वपद्यत ॥ ६-४-१ (३८७८०)
स मुहूर्तमिव ध्यात्वा विनिःश्वस्य मुहुर्मुहुः ।
संजयं संशितात्मानमपृच्छद्भरतर्षभ ॥ ६-४-२ (३८७८१)
संजयेमे महीपालाः शूरा युद्धाभिनन्दिनः ।
अन्योन्यमभिनिघ्नन्ति शस्त्रैरुच्चावचैरिह ॥ ६-४-३ (३८७८२)
पार्थिवाः पृथिवीहेतोः समभित्यज्य जीवितम् ।
न वा शाम्यन्ति निघ्नन्तो वर्धयन्ति यमक्षयम् ॥ ६-४-४ (३८७८३)
भौममैश्वर्यमिच्छन्तो न मृष्यन्ते परस्परम् ।
मन्ये बहुगुणा भूमिस्तन्ममाचक्ष्व संजय ॥ ६-४-५ (३८७८४)
बहूनि च सहस्राणि प्रयुतान्यर्बुदानि च ।

कोट्यश्च लोकवीराणां समेताः कुरुजाङ्गले ॥ ६-४-६ (३८७८५)
देशानां च परीमाणं नगराणां च संजय ।
श्रोतुमिच्छामि तत्त्वेन यत एते समागताः ॥ ६-४-७ (३८७८६)
दिव्यबुद्धिप्रदीपेन युक्तस्त्वं ज्ञानचक्षुषा ।
प्रभावात्तस्य विप्रर्षेर्व्यासस्यामिततेजसः ॥ ६-४-८ (३८७८७)
संजय उवाच। ६-४-९क्ष् (३९६४)
यथाप्रज्ञं महाप्राज्ञ भौमान्वक्ष्यामि ते गुणान् ।
शास्त्रचक्षुरवेक्षस्व नमस्ते भरतर्षभ ॥ ६-४-९ (३८७८८)
द्विविधानीह भूतानि चराणि स्थावराणि च ।
त्रसानां त्रिविधा योनिरण्डस्वेदजरायुजाः ॥ ६-४-१० (३८७८९)
त्रसानां खलु सर्वेषां श्रेष्ठा राजञ्जरायुजाः ।
जरायुजानां प्रवरा मानवाः पशवश्च ये ॥ ६-४-११ (३८७९०)
नानारूपधरा राजंस्तेषां भेदाश्चतुर्दश ।
वेदोक्ताः पृथिवीपाल येषु यज्ञाः प्रतिष्ठिताः ॥ ६-४-१२ (३८७९१)
ग्राम्याणां पुरुषाः श्रेष्ठाः सिंहाश्चारण्यवासिनाम् ।
सर्वेषामेव भूतानामन्योन्येनोपजीवनम् ॥ ६-४-१३ (३८७९२)
उद्भिञ्जाः स्थावराः प्रोक्तास्तेषां पञ्चैव जातयः ।
वृक्षगुल्मलतावल्ल्यस्त्वक्सारास्तृणजातयः ॥ ६-४-१४ (३८७९३)
तेषां विंशतिरेकोना महाभूतेषु पञ्चसु ।
चतुर्विंशतिरुद्दिष्टा गायत्री लोकसंमता ॥ ६-४-१५ (३८७९४)
य एतां वेद गायत्रीं पुण्यां सर्वगुणान्विताम् ।
तत्त्वेन भरतश्रेष्ठ स लोके न प्रणश्यति ॥ ६-४-१६ (३८७९५)
अरण्यवासिनः सप्त सप्तैषां ग्रामवासिनः ।
सिंहा व्याघ्रा वराहाश्च महिषा वारणास्तथा ॥ ६-४-१७ (३८७९६)
ऋक्षाश्च वानराश्चैव सप्तारण्याः स्मृता नृप ।
गौरजाविमनुष्याश्च अश्वाश्वतरगर्दभाः ॥ ६-४-१८ (३८७९७)
एते ग्राम्याः समाख्याताः पशवः सप्त साधुभिः ।
एते वै पशवो राजन्ग्राम्यारण्याश्चतुर्दश ॥ ६-४-१९ (३८७९८)
भूमौ च जायते सर्वं भूमौ सर्वं विनश्यति ।
भूमिः प्रतिष्ठा भूतानां भूमिरेव सनातनम् ॥ ६-४-२० (३८७९९)
यस्य भूमिस्तस्य सर्वं जगत्स्थावरजङ्गमम् ।
तत्रातिगृद्धा राजानो विनिघ्नन्तीतरेतरम् ॥ ॥ ६-४-२१ (३८८००)

इति श्रीमन्महाभारते उद्योगपर्वणि जम्बूखण्डविनिर्माणपर्वणि चतुर्थोऽध्यायः ॥

Mahabharata - Bhishma Parva - Chapter Footnotes

६-४-४ नवा नैव । यमक्षयं यमलोकम् ॥
६-४-१० त्रसानां जंगमानां योनिरुत्पत्तिस्थानम् ॥

---

भिस्मपर्व-अध्यय००५
॥ श्रीः ॥
६.५. अध्यायः ५

Mahabharata - Bhishma Parva - Chapter Topics
संजयेन धृतराष्ट्रंप्रति भूतपञ्चकगुणवर्णनपूर्वकं
संक्षेपेण जम्बूद्वीपवर्णनम् ॥ १ ।
Mahabharata - Bhishma Parva - Chapter Text

६-५-० (३८८०१)
धृतराष्ट्र उवाच। ६-५-०क्ष् (३९६५)
नदीनां पर्वतानां च नामधेयानि संजय ।
तथा जनपदानां च ये चान्ये भूमिमाश्रिताः ॥ ६-५-१ (३८८०२)
प्रमाणं च प्रमाणज्ञ पृथिव्या मम सर्वतः ।
निखिलेन समाचक्ष्व काननानि च संजय ॥ ६-५-२ (३८८०३)
संजय उवाच। ६-५-३क्ष् (३९६६)
पञ्चेमानि महाराज महाभूतानि संग्रहात् ।
जगतीस्थानि सर्वाणि समान्याहुर्मनीषिणः ॥ ६-५-३ (३८८०४)
भूमिरापस्तथा वायुरग्निराकाशमेव च ।
गुणोत्तराणि सर्वाणि तेषां भूमिः प्रधानतः ॥ ६-५-४ (३८८०५)
शब्दः स्पर्शश्च रूपं च रसो गन्धश्च पञ्चमः ।
भूमेरेते गुणाः प्रोक्ता ऋषिभिस्तत्त्ववेदिभिःक ॥ ६-५-५ (३८८०६)
चत्वारोऽप्सु गुणा राजन्गन्धस्तत्र न विद्यते ।
शब्दः स्पर्शश्च रूपं च तेजसोऽथ गुणास्त्रयः ।
शब्दः स्पर्शश्च वायौ द्वौ अकाशे शब्द एव तु ॥ ६-५-६ (३८८०७)
एते पञ्च गुणा राजन्महाभूतेषु पञ्चसु ।
वर्तन्ते सर्वलोकेषु येषु भूताः प्रतिष्ठिताः ॥ ६-५-७ (३८८०८)
अन्योन्यं नाभिवर्तन्ते साम्यं भवति वै यदा ॥ ६-५-८ (३८८०९)
यदा तु विषमीभावमाविशन्ति परस्परम् ।
तदा देहैर्देहवन्तो व्यतिरोहन्ति नान्यथा ॥ ६-५-९ (३८८१०)
आनुपूर्व्या विनश्यन्ति जायन्ते चानुपूर्वशः ।
सर्वाम्यपरिमेयाणि तदेषां रूपमैश्वरम् ॥ ६-५-१० (३८८११)

तत्रतत्र हि दृश्यन्ते धातवः पाञ्चभौतिकाः ।
तेषां मनुष्यास्तर्केण प्रमाणानि प्रचक्षते ॥ ६-५-११ (३८८१२)
अचिन्त्याः खलु ये भावा न तांस्तर्केण साधयेत् ।
प्रकृतिभ्यः परं यत्तु तदचिन्त्यस्य लक्षणम् ॥ ६-५-१२ (३८८१३)
सुदर्शनं प्रवक्ष्यामि द्वीपं तु कुरुनन्दन ।
परिमण्डलो महाराज द्वीपोऽसौ चक्रसंस्थितः ॥ ६-५-१३ (३८८१४)
नदीजालप्रतिच्छन्नः पर्वतैश्चाभ्रसन्निभैः ।
पुरैश्च विविधाकारै रम्यैर्जनपदैस्तथा ॥ ६-५-१४ (३८८१५)
वृक्षैः पुष्पफलोपेतैः संपन्नधनधान्यवान् ।
लवणेन समुद्रेण समन्तात्परिवारितः ॥ ६-५-१५ (३८८१६)
यथा हि पुरुषः पश्येदादर्शे मुखमात्मनः ।
एवं सुदर्शनद्वीपो दृश्यते चन्द्रमण्डले ॥ ६-५-१६ (३८८१७)
द्विरशस्तु ततः प्लक्षो द्विरंशः शाल्मलिर्महान् ।
द्विरंशः पिप्पलस्तस्य द्विरंशश्च कुशो महान् ।
सर्वौषधिसमापन्नः पर्वतैः परिवारितः ॥ ६-५-१७ (३८८१८)
आपस्ततोऽन्या विज्ञेयाः शेषः संक्षेप उच्यते ।
ततोऽन्य उच्यते चायमेनं संक्षेपतः श्रृणु ॥ ॥ ६-५-१८ (३८८१९)

इति श्रीमन्महाभारते भीष्मपर्वणि जम्बूखण्डविनिर्माणपर्वणि
पञ्चमोऽध्यायः ॥

Mahabharata - Bhishma Parva - Chapter Footnotes

६-५-१३ किमस्य प्रमाणं का वा आकृतिस्तवाभिमतेत्याशङ्क्याह
सुदर्शनमिति ।सुदर्शनो नाम जम्बूवृक्षविशेषस्तन्नामाङ्कितोऽयं
द्वीपः सुदर्शनद्वीपः तं प्रमाणत आकृतितश्च प्रकर्षेण
वक्ष्यामि। तुशब्दः पक्षान्तरव्यावृत्त्यर्थः ।चक्रसंस्थितः
चक्रवत् संस्थितं उस्थंनमाकारो यस्य सः ॥
६-५-१६ नन्वेवंविधस्य कथमतिसूक्ष्मत्वमुच्यतेऽत आह यथा हीति ॥

---

भिस्मपर्व-अध्यय००६
॥ श्रीः ॥
६.६. अध्यायः ६

Mahabharata - Bhishma Parva - Chapter Topics
संजयेन भारतादिनवखण्डानां तत्तत्सीमापर्वतानां मेरोश्च वर्णनम् ॥ १ ॥

६-६-० (३८८२०)
धृतराष्ट्र उवाच। ६-६-०क्ष् (३९६७)
उक्तो द्वीपस्य संक्षेपो विधिवद्बुद्धिमंस्त्वया ।
तत्त्वज्ञश्चासि सर्वस्य विस्तारं ब्रूहि सञ्जय ॥ ६-६-१ (३८८२१)
यावान्भूम्यवकाशोऽयं दृश्यते शशलक्षणे ।
तस्य प्रमाणां प्रब्रूहि ततो वक्ष्यसि पिप्पलम् ॥ ६-६-२ (३८८२२)
वैशंपायन उवाच। ६-६-३क्ष् (३९६८)
एवं राज्ञा स पृष्टस्तु संजयो वाक्यमब्रवीत्। ६-६-३क्ष संजय उवाच ।
प्रागायता महाराज षडेते वर्षपर्वताः ।
अवगाढा ह्युभयतः समुद्रौ पूर्वपश्चिमौ ॥ ६-६-३ (३८८२३)
हिमवान्हेमकूटश्च निषधश्च नगोत्तमः ।
नीलश्च वैदूर्यमयः श्वेतश्च शशिसन्निभः ॥ ६-६-४ (३८८२४)
सर्वधातुविचित्रश्च श्रृङ्गवान्नाम पर्वतः ।
एते वै पर्वता राजन्सिद्धचारणसेविताः ॥ ६-६-५ (३८८२५)
एषामन्तरविष्कम्भा योजनानि सहस्रशः ।
तत्र पुण्या जनपदास्तानि वर्षाणि भारत ॥ ६-६-६ (३८८२६)
वसन्ति तेषु सत्वानि नानाजातीनि सर्वशः ।
इदं तु भारतं वर्षं ततो हैमवतं परम् ॥ ६-६-८अग ततः
किंपुरुषावासं वर्षं हिमवतः परम्'।
हेमकूटात्परं चैव हरिवर्षं प्रचक्षते ॥ ६-६-७ (३८८२७)
दक्षिणेन तु नीलस्य निषधस्योत्तरेण तु ।
व्रागायतो महाभाग माल्यवान्नाम पर्वतः ॥ ६-६-९ (३८८२८)
ततः परं माल्यवतः पर्वतो गन्धमादनः ।
परिमण्डलस्तयोर्मध्ये मेरुः कनकपर्वतः ।
तरुणादित्यसंकाशो विधूम इव पावकः ॥ ६-६-१० (३८८२९)
योजनानां सहस्राणि षोडशाधः किल स्मृतः ।
ऊर्ध्वं च चतुरशीतिर्द्वात्रिंशन्मूर्ध्नि विस्तृतः ।
अधस्ताच्चतुरशीतिर्योजनानां महीपते ॥ ६-६-११ (३८८३०)
ऊर्ध्वमधश्च तिर्यक्व मेरुरावृत्य तिष्ठति ।
तस्य पार्श्वेष्वमी द्वीपाश्चत्वारः सस्थिता विभो ॥ ६-६-१२ (३८८३१)
भद्राश्वः केतुमालश्च जम्बूद्वीपश्च भारत ।
उत्तराश्चैव कुरवः कृतपुण्यप्रतिश्रयाः ॥ ६-६-१३ (३८८३२)
विहगः सुमुखो यस्तु सुपर्णस्यात्मजः किल ।
स वै विचिन्तयामास सौवर्णान्वीक्ष्य वायसान् ॥ ६-६-१४ (३८८३३)

मेरुरुत्तममध्यानामधमानां च पक्षिणाम् ।
अविशेषकरो यस्मात्तस्मादेनं त्यजाम्यहम् ॥ ६-६-१५ (३८८३४)
तमादित्योऽनुपर्येति सततं ज्योतिषां वरः ।
चन्द्रमाश्च सनक्षत्रो वायुश्चैव प्रदक्षिणः ॥ ६-६-१६ (३८८३५)
सपर्वतो महाराज दिव्यपुष्पफलान्वितः ।
भवनैरावृतः सर्वैर्जाम्बूनदपरिष्कृतैः ॥ ६-६-१७ (३८८३६)
तत्र देवगणा राजन्गन्धर्वासुरराक्षसाः ।
अप्सरोगणसंयुक्ताः शैले क्रीडन्ति सर्वदा ॥ ६-६-१८ (३८८३७)
तत्र ब्रह्मा च रुद्रश्च शक्रश्चापि सुरेश्वरः ।
समेत्य विविधैर्यज्ञैर्यजन्तेऽनेकदक्षिणैः ॥ ६-६-१९ (३८८३८)
तुम्बुरुर्नारदश्चैव विश्वावसुर्हहाहुहूः ।
अभिगम्यामरश्रेष्ठांस्तुष्टुवुर्विविधैः स्तवैः ॥ ६-६-२० (३८८३९)
सप्तर्षयो महात्मानः कश्यपश्च प्रजापतिः ।
तत्र गच्छन्ति भद्रं ते सदा पर्वणि पर्वणि ॥ ६-६-२१ (३८८४०)
तस्यैव मूर्धन्युशनाः काव्यो दैत्यैर्महीपते ।
इमानि तस्य रत्नानि तस्येमे रत्नपर्वताः ॥ ६-६-२२ (३८८४१)
तस्मात्कुबेरो भगवांश्चतुर्थं भागमश्नुते ।
ततः कलांशं वित्तस्य मनुष्येभ्यः प्रयच्छति ॥ ६-६-२३ (३८८४२)
पार्श्वे तस्योत्तरे दिव्यं सर्वर्तुकुसुमैश्चितम् ।
कर्णिकारवनं रम्यं शिलाजालसमुद्गतम् ॥ ६-६-२४ (३८८४३)
तत्र साक्षात्पशुपतिर्दिव्यैर्भूतैः समावृतः ।
उमासहायो भगवान्रमते भूतभावनः ॥ ६-६-२५ (३८८४४)
कर्णिकारमयी मालां बिभ्रत्पादावलम्बिनीम् ।
त्रिभिर्नेत्रैः कृतोद्योतस्त्रिभिः सूर्यैरिवोदितैः ॥ ६-६-२६ (३८८४५)
तमुग्रतपसः सिद्धाः सुव्रताः सत्यवादिनः ।
पश्यन्ति नहि दुर्वृत्तैः शक्यो द्रष्टुं महेश्वरः ॥ ६-६-२७ (३८८४६)
तस्य शैलस्य शिखरात्क्षीरधारा नरेश्वर ।
विश्वरूपाऽपरिमिता भीमनिर्घातनिःस्वना ॥ ६-६-२८ (३८८४७)
पुण्या पुण्यतमैर्जुष्टा गङ्गा भागीरथी शुभा ।
प्लवन्तीव प्रवेगेन ह्रदे चन्द्रमसः शुभे ॥ ६-६-२९ (३८८४८)
तया ह्युत्पादितः पुण्यः स ह्रदः सागरोपमः ।
तां धारयामास तदा दुर्धरां पर्वतैरपि ॥ ६-६-३० (३८८४९)
शतं वर्षसहस्राणां शिरसैव महेश्वरः ।
मेरोस्तु पश्चिमे पार्श्वे केतुमालो महीपते ॥ ६-६-३१ (३८८५०)
जम्बूखण्डे तु तत्रैव महाजनपदो नृप ।
आयुर्दशसहस्राणि वर्षाणां तत्र भारत ॥ ६-६-३२ (३८८५१)

सुवर्णवर्णाश्च नराः स्त्रियश्चाप्सरसोपमाः ।
अनामया वीतशोका नित्यं मुदितमानसाः ॥ ६-६-३३ (३८८५२)
जायन्ते मानवास्तत्र निष्टप्तकनकप्रभाः ।
गन्धमादनश्रृङ्गेषु कुबेरः सह राक्षसैः ॥ ६-६-३४ (३८८५३)
संवृतोऽप्सरसां सङ्घैर्मोदते गुह्यकाधिपः ।
गन्धमादनपार्श्वे तु पर त्वपरगण्डिकाः ॥ ६-६-३५ (३८८५४)
एकादशसहस्राणि वर्षाणां परमायुषः ।
तत्र कृष्णा नरा राजंस्तेजोयुक्ता महाबलाः ।
स्त्रियश्चोत्पलवर्णाभाः सर्वाः सुप्रियदर्शनाः ॥ ६-६-३६ (३८८५५)
नीलात्परतरं श्वेतं श्वेताद्धैरण्यकं परम् ।
वर्षमैरष्वतं राजन्नानाजनपदावृतम् ॥ ६-६-३७ (३८८५६)
धनुःसंस्थे महाराज द्वे वर्षे दक्षिणोत्तरे ।
इलावृत्तं मध्यमं तु पञ्च दीर्घाणि चैव हि ॥ ६-६-३८ (३८८५७)
उत्तरोत्तरमेतेभ्यो वर्षमुद्रिच्यते गुणैः ।
आयुःप्रमाणमारोग्यं धर्मतः कामतोऽर्थतः ॥ ६-६-३९ (३८८५८)
समन्वितानि भूतानि तेषु वर्षेषु भारत ।
एवमेषा महाराज पर्वतैः पृथिवी चिता ॥ ६-६-४० (३८८५९)
हेमकूटस्तु सुमहान्कैलासो नाम पर्वतः । ६-६-४१ब्यत्र वैश्रवणो
राजन्गुह्यकैः सह मोदते ॥ ६-६-४१ (३८८६०)
तत्र देवो महादेवो नित्यमास्ते सहोमया ।
शीते शिलातले रम्ये देवर्षिगणपूजितःक ॥ ६-६-४२ (३८८६१)
अस्त्युत्तरेण कैलासं मैनाकं पर्वतं प्रति ।
हिरण्यश्रृङ्गः सुमहान्दिव्यो मणिमयो गिरिः ॥ ६-६-४३ (३८८६२)
तस्य पार्श्वे महद्दिव्यं शुभ्रं काञ्चनवालुकम् ।
रम्यं बिन्दुसरो नाम यत्र राजा भगीरथः ॥ ६-६-४४ (३८८६३)
दृष्ट्वा भागीरथीं गङ्गामुवास बहुलाः समाः ।
यूपा मणिमयास्तत्र चैत्याश्चापि हिरण्मयाः ॥ ६-६-४५ (३८८६४)
तत्रेष्ट्वा तु गतः सिद्धिं सहस्राक्षो महायशाः ।
स्रष्टा भूतपतिर्यत्र सर्वलोकान्सनातनान् ॥ ६-६-४६ (३८८६५)
उपास्यते तिग्मतेजा यत्र भूतैः समन्ततः ।
नरनारायणौ ब्रह्मा मनुः स्थाणुश्च पञ्चमः ॥ ६-६-४७ (३८८६६)
तत्र दिव्या त्रिपथगा प्रथमं तु प्रतिष्ठिता ।
ब्रह्मलोकादपक्रान्ता सप्तधा प्रतिपद्यते ॥ ६-६-४८ (३८८६७)
वस्वौकसारा नलिनी पावनी च सरस्वती ।
जम्बूनदी च सीता च गङ्गा सिंधुश्च सप्तमी ॥ ६-६-४९ (३८८६८)
अचिन्त्या दिव्यसंकाशा प्रभोरेषैव संविधिः ।

उपासते यत्र सत्रं सहस्रयुगपर्यये ॥ ६-६-५० (३८८६९)
दृश्याऽदृश्या च भवति तत्र तत्र सरस्वती ।
एता दिव्याः सप्त गङ्गास्त्रिषु लोकेषु विश्रुताः ॥ ६-६-५१ (३८८७०)
रक्षांसि वै हिमवति हेमकूटे तु गुह्यकाः ।
सर्पा नागाश्च निषधे गोकर्णे च तपोवनम् ॥ ६-६-५२ (३८८७१)
देवासुराणां सर्वेषां श्वेतपर्वत उच्यते ।
गन्धर्वा निषधे नित्यं नीले ब्रह्मर्षयस्तथा ।
श्रृङ्गवांस्तु महाराज देवानां प्रतिसंचरः ॥ ६-६-५३ (३८८७२)
इत्येतानि महाराज सप्त वर्षाणि भागशः ।
भूतान्युपनिविष्टानि गतिमन्ति ध्रुवाणि च ॥ ६-६-५४ (३८८७३)
तेषामृद्धिर्बहुविधा दृश्यते दैवमानुषी ।
अशक्या परिसंख्यातुं श्रद्धेया तु बुभूषता ॥ ६-६-५५ (३८८७४)
यां तु पृच्छसि मां राजन्दिव्यामेतां शशाकृतिम् ।
पार्श्वे शशस्य द्वे वर्षे उक्ते ये दक्षिणोत्तरे ।
कर्णौ तु शाकद्वीपश्च काश्यपद्वीप एव च ॥ ६-६-५६ (३८८७५)
ताम्रपर्णीशिरो राजञ्छ्रीमान्मलयपर्वतः ।
एतद्द्वितीयं द्वीपस्य दृश्यते शशसंस्थितम् ॥ ॥ ६-६-५७ (३८८७६)

इति श्रीमन्महाभारते भीष्मपर्वणि जम्बूखण्डविनिर्माणपर्वणि
षष्ठोऽध्यायः ॥

Mahabharata - Bhishma Parva - Chapter Footnotes

६-६-६ एवं दक्षिणां दिशमारभ्य यावदुत्तरसमाप्ति
षट्प्राक्पश्चिमास्थानानि भवन्ति ।तेषां स्थानानां
वर्षाख्यानामन्तरमाह एषामिति। विष्कम्भो विस्तारः ॥
६-६-७ वसन्त्येषु तानि वर्षाणीति योगान्तरमाह वसन्तीति ।हिमवतो
दक्षिणे भारतं वर्षं उत्तरतो हैमवतं वर्षं द्वितीयम्। अस्यैव
नामान्तरं किंपुरुषावासमिति ॥
६-६-८ हेमकूटनिषधयोर्मध्ये हरिवर्षम् ।निषधनीलयोर्मध्ये
वर्षविभागमाह दक्षिणेनेति। दक्षिणेन दक्षिणतः समीप इत्यर्थः
।एवमुत्तरेणेत्यादौ ज्ञेयम् ॥
६-६-९ नीलनिषधयोर्मध्ये मेरुस्तस्य प्राक् माल्यवान् पूर्वसमुद्रावधिः
।पश्चिमसमुद्रावधिर्गन्धमादन इत्यर्थः ॥
६-६-१२ तस्य पार्श्वेष्विति ।पार्श्वेषु चतुर्दिक्षु। द्वीपा इव द्वीपाः
नद्यन्तरत्वाद्वर्षाणि ॥
६-६-१३ भद्राश्वादिसाहचर्याज्जम्बूद्वीपशब्दोऽत्र

भरतवर्षपरस्तस्य तत्सारत्वज्ञापनार्थः ।तानेव स्तौति
कृतपुण्यप्रतिश्रया इत्यादिना ।कृता विहिताः पुण्यैः पुण्यवद्भिः
प्रतिश्रया आश्रमा येषु ते ॥
६-६-१६ तं मेरुमादित्योऽनुपर्यैति प्रदक्षिणीकरोति ॥
६-६-२२ काव्यः कविश्रेष्ठः शुक्रो रमत इति शेषः ।तस्य काव्यस्य ॥
६-६-२३ तस्मात् काव्यात् ।ततः कुबेरात् ।कलांशं षोडशभागस्यापि लेशम् ॥
६-६-२८ क्षीरवत् श्वेता धारा यस्याः सा गङ्गा ।विश्वरूपा विश्वो
विष्णुस्तद्रूपा।तथाच स्मरन्ति- योसौ सर्वगतो विष्णुश्चित्वरूपी
निरञ्जनः।स एव द्रवरूपेण गाङ्गाम्भो कनात्र संशय इति ॥
६-६-३० तयैव प्रवेगेन मेरुप्राकारात् पतनजनितबलेन खनन्त्या स
ह्रद उत्पादित इति संबन्धः ॥
६-६-३५ अपरगण्डिकाः अन्ये गन्धमादनस्यैवावयवभूता बुद्बुदोपमाः
क्षुद्रशैलाः ।गण्डो भूषणबुद्ब्रदे इति मेदिनी ।स्वार्थिकः कः ॥
६-६-३६ उत्पलवर्णेन आभान्ति ताः उत्पलवर्णाभाः ॥
६-६-३७ एवं हिमवतो दक्षिणे भरतवर्षं ।तदुत्तरे
हैमवतं वर्ष।हेमकूटादुत्तरे हरिवर्षं।निषधादुत्तरे
नीलाच्च दक्षिणे मेरोः परित इलावृतमेकमेव चतुर्थं
वर्षं।अत्रैव केचिद्भद्राश्वकेतुमालयोर्वर्षान्तरत्वं प्रकल्प्य
नववर्षाणीत्याचक्षते।ततो नीलात्पर्वतात् उत्तरतः श्वेतं पञ्चमं
वर्षं।श्वेतात्पर्वतादुत्तरतो हैरण्यकं वर्षं षष्ठम्।ततः
शृङ्गवत्पर्वतात् ऐरावतं सप्तमं वर्षम् ॥
६-६-३८ धनुःसंस्थे धनुराकारे ।एवमाकारं दक्षिणे भरतवर्षं
उत्तरे ऐरावतं च मध्ये पञ्चेति सप्तवर्षाणि ॥
६-६-४१ हेमेति हेमकूटएव कैलासः तस्योत्तरे मैनाकः तस्योत्तरतो
हिरण्यशृङ्गः एतयोरन्तराले बिन्दुसरोऽस्तीति श्लोकत्रयार्थः ॥
६-६-५० प्रभोरीश्वरस्य एष सप्तनद्यात्मकः संविधिः समीचीनं
लोकोपकारार्थं विधानम् ।एषैवेति संधिरार्षः ॥
६-६-५३ श्वेतपर्वतः स्थानमिति शेषः ।गन्धर्वा वसन्तीति
शेषः।प्रतिसंचरः व्यवहारस्थानम् ॥
६-६-५४ इतीति ।वर्षाणि तत्र उपनिविष्टानि गतिमन्ति जङ्गमानि
ध्रुवाणि स्थावराणि च सर्वाणि भूतान्येव।सर्वं दृश्यं
आश्रयाश्रितरूपं पाञ्चभौतिकमेवेत्यर्थः ॥
६-६-५५ बुभूषता श्रेयःप्राप्तुमिच्छता श्रद्धया ॥

---

भिस्मपर्व-अध्यय००७
॥ श्रीः ॥

६.७. अध्यायः ७

Mahabharata - Bhishma Parva - Chapter Topics
मेरोरुत्तरभागस्थोत्तरकुरुवर्णनम् ॥ १ ॥
तथा मेरोः पूर्वभागस्थभद्राश्वखण्डवर्णनम् ॥ २ ॥

Mahabharata - Bhishma Parva - Chapter Text

६-७-० (३८८७७)
धृतराष्ट्र उवाच। ६-७-०क्ष् (३९६९)
मेरोरथोत्तरं पार्श्वं पूर्वं चाचक्ष्व संजय ।
निखिलेन महाबुद्धे माल्यवन्तं च पर्वतम् ॥ ६-७-१ (३८८७८)
संजय उवाच। ६-७-२क्ष् (३९७०)
दक्षिणेन तु नीलस्य मेरोः पार्श्वे तथोत्तरे ।
उत्तराः कुरवो राजन्पुण्याः सिद्धनिषेविताः ॥ ६-७-२ (३८८७९)
तत्र वृक्षा मधुफला नित्यपुष्पफलोपगाः ।
पुष्पाणि च सुगन्धीनि रसवन्ति फलानि च ॥ ६-७-३ (३८८८०)
सर्वकामफलास्तत्र केचिद्वृक्षा जनाधिप ।
अपरे क्षीरिणो नाम वृक्षास्तत्र नराधिप ॥ ६-७-४ (३८८८१)
ये क्षरन्ति सदा क्षीरं षड्रसं चामृपोतमम् ।
वस्त्राणि च प्रसूयन्ते फलेष्वाभरणानि च ॥ ६-७-५ (३८८८२)
सर्वा मणिमयी भूमिः सूक्ष्मकाञ्चनवालुका ।
सर्वर्तुसुखसंस्पर्शा निष्पङ्का च जनाधिप ।
पुष्करिण्यः शुभास्तत्र सुखस्पर्शा मनोरमाः ॥ ६-७-६ (३८८८३)
देवलोकच्युताः सर्वे जायन्ते तत्र मानवाः ।
शुक्लाभिजनसंयन्नाः सर्वे सुप्रियदर्शनाः ॥ ६-७-७ (३८८८४)
मिथुनानि च जायन्ते स्त्रियश्चाप्सरसोपमाः ।
तेषां ते क्षीरिणां क्षीरं पिबन्त्यमृतसन्निभम् ॥ ६-७-८ (३८८८५)
मिथुनं जायते काले समं तच्च प्रवर्धते ।
तुल्यरूगुणोपेतं समवेषं तथैव च ॥ ६-७-९ (३८८८६)
एवमेवानुरूपं च चक्रवाकसमं विभो ।
निरापगाम ते लोका नित्यं मुदितमानसाः ॥ ६-७-१० (३८८८७)
दशवर्षसहस्राणि शशवर्षशतानि च ।
जीवन्ति ते महाराज न चान्योन्यं जहत्युत ॥ ६-७-११ (३८८८८)
भारुण्डा नाम शकुनास्तीक्ष्णतुण्डा महाबलाः ।
तान्निहेरन्तीह मृतान्दरीषु प्रक्षिपन्ति च ॥ ६-७-१२ (३८८८९)

उत्तराः कुरवो राजन्व्याख्यातास्ते समासतः ।
मेरोः पार्श्वमहं पूर्वं वक्ष्याम्यथ यथातथम् ॥ ६-७-१३ (३८८९०)
तस्य मूर्धाभिषेकस्तु भद्राश्वस्य विशांपते ।
भद्रसालवनं यत्र कालाम्रश्च महाद्रुमः ॥ ६-७-१४ (३८८९१)
कालाम्रस्तु महाराज नित्यपुष्पफलः शुभः ।
द्रुमश्च योजनोत्सेधः सिद्धचारणसेवितः ॥ ६-७-१५ (३८८९२)
तत्र ते पुरुषाः श्वेतास्तेजोयुक्ता महाबलाः ।
स्त्रियः कुमुदवर्णाश्च सुन्दर्यः प्रियदर्शनाः ॥ ६-७-१६ (३८८९३)
चन्द्रप्रभाश्चन्द्रवर्णाः पूर्वचन्द्रनिभाननाः ।
चन्द्रशीतलगात्र्यश्च नृत्तिगीतविशारदाः ॥ ६-७-१७ (३८८९४)
दशवर्षसहस्राणि तत्रायुर्भरतर्षभ ।
कालाम्ररसपीतास्ते नित्यं संस्थितयौवनाः ॥ ६-७-१८ (३८८९५)
दक्षिणेन तु नीलस्य निषधस्योत्तरेण तु ।
सुदर्शनो नाम महाञ्जम्बूवृक्षः सनातनः ॥ ६-७-१९ (३८८९६)
सर्वकामफलः पुण्यः सिद्धचारणसेवितः ।
तस्य नाम्ना समाख्यातो जम्बूद्वीपः सनातनः ॥ ६-७-२० (३८८९७)
योजनानां सहस्त्रं च शतं च भरतर्षभ ।
उत्सेधो वृक्षराजस्य दिवस्पृङ्भनुजेश्वर ॥ ६-७-२१ (३८८९८)
अरत्नीनां सहस्रं च शतानि दश पञ्च च ।
परिणाहस्तु वृक्षस्य फलानां रसभेदिनाम् ॥ ६-७-२२ (३८८९९)
पतमानानि तान्युर्वी कुर्वन्ति विपुलं स्वनम् ।
मुञ्चन्ति च रसं राजंस्तस्मिन्रजतसन्निभम् ॥ ६-७-२३ (३८९००)
तस्या जम्बाः फलरसो नदी भूत्वा जनाधिप ।
मेरुं प्रदक्षिणं कृत्वा संप्रयात्युत्तरान्कुरून् ॥ ६-७-२४ (३८९०१)
तत्र तेषां मनःशान्तिर्न पिपासा जनाधिप ।
तस्मिन्फलरसे पीते न जरा बाधते च तान् ॥ ६-७-२५ (३८९०२)
तत्र जाम्बूनदं नाम कनकं देवभूषणम् ।
इन्द्रगोपकसंकाशं जायते भास्वरं तु तत् ॥ ६-७-२६ (३८९०३)
तरुणादित्यवर्णाश्च जायन्ते तत्र मानवाः ।
तथा माल्यवतः श्रृङ्गे दृश्यते हव्यवाट् सदा ॥ ६-७-२७ (३८९०४)
नाम्ना संवर्तको नाम कालाग्निर्भरतर्षभ ।
तथा माल्यवतः श्रृङ्गे पूर्वपूर्वानुगण्डिका ॥ ६-७-२८ (३८९०५)
योजनानां सहस्राणि पञ्चषण्माल्यवानथ ।
महारजतसंकाशा जायन्ते तत्र मानवाः ॥ ६-७-२९ (३८९०६)
ब्रह्मलोकच्युताः सर्वे सर्वे सर्वेषु साधवः ।
तपस्तप्यन्ति ते तीव्रं भवन्ति ह्यूर्ध्वरेतसः ।

रक्षणार्थं तु भूतानां प्रविश्यन्ते दिवाकरम् ॥ ६-७-३० (३८९०७)
षष्टिस्तानि सहस्राणि षष्टिरेव शतानि च ।
अरुणस्याग्रतो यान्ति परिवार्य दिवाकरम् ॥ ६-७-३१ (३८९०८)
षष्टिं वर्षसहस्राणि षष्टिमेव शतानि च ।
आदित्यतापतप्तास्ते विशन्ति शशिमण्डलम् ॥ ॥ ६-७-३२ (३८९०९)

इति श्रीमन्महाभारते भीष्मपर्वणि जम्बूखण्डविनिर्माणपर्वणि सप्तमोऽध्यायाः ॥

Mahabharata - Bhishma Parva - Chapter Footnotes

६-७-३ मधुफलाः स्वादुफलाः ॥
६-७-७ शुक्लाभिजनो विष्णुभक्तजनस्तेन संपमास्तत्सङ्गिनः ॥
६-७-१० चक्रवाकौ सहचरौ पक्षिदम्पती ॥
६-७-१४ मूर्धाभिषेको मूर्धाभिषिक्तम् । मुख्यमिति यावत् ॥
६-७-२८ गण्डिका क्षुद्रपर्वतः ॥
६-७-२९ पञ्चषट् पञ्चाधिकाः षट् एकादशेत्यर्थः । महारजतं काञ्चनं तत्संकाशाः ॥
६-७-३० ब्रह्मलोकेति । ये इतः कर्मणा ब्रह्मलोकं गतास्ते ततश्च्युताः सन्तो माल्यवति पर्वते जन्म लब्धा भूतानां रक्षणार्थं तपस्तप्त्वा दिवाकरं प्रविशन्ते तत्समीपं प्राप्नुवन्ति ॥

---

भिस्मपर्व-अध्यय००८
॥ श्रीः ॥
६.८. अध्यायः ८

Mahabharata - Bhishma Parva - Chapter Topics
मेरोरुत्तरभागस्थखण्डत्रयवर्णनम् ॥ १ ॥

Mahabharata - Bhishma Parva - Chapter Text

६-८-० (३८९१०)
धृतराष्ट्र उवाच। ६-८-०क्ष् (३९७१)
वर्षाणां चैव नामानि पर्वतानां च संजय ।
आचक्ष्व मे यथातत्त्वं ये च पर्वतवासिनः ॥ ६-८-१ (३८९११)
संजय उवाच। ६-८-२क्ष् (३९७२)
दक्षिणेन तु श्वेतस्य नीलस्यैवोत्तरेण तु ।
वर्षं रमणकं नाम जायन्ते तत्र मानवाः ॥ ६-८-२ (३८९१२)

शुक्लाभिजनसंपन्नाः सर्वे सुप्रियदर्शनाः ।
निःसपत्नाश्च ते सर्वे जायन्ते तत्र मानवाः ॥ ६-८-३ (३८९१३)
दशवर्षसहस्राणि शतानि दश पञ्च च ।
जीवन्ति ते महाराज नित्यं मुदितमानसाः ॥ ६-८-४ (३८९१४)
दक्षिणे शृङ्गिणश्चैव श्वेतस्याथोत्तरेण तु ।
वर्षं हिरण्मयं नाम यत्र हैरण्वती नदी ॥ ६-८-५ (३८९१५)
यत्र चायं महाराज पक्षिराट् पतगोत्तमः ।
यक्षानुगा महाराज धनिनः प्रियदर्शनाः ॥ ६-८-६ (३८९१६)
महाबलास्तत्र जना राजन्मुदितमानसाः ।
एकादशसहस्राणि वर्षाणां ते जनाधिप ॥ ६-८-७ (३८९१७)
आयुःप्रमाणं जीवन्ति शतानि दश पञ्च च ।
श्रृङ्गाणि वै श्रृङ्गवतस्त्रीण्येव मनुजाधिप ॥ ६-८-८ (३८९१८)
एकं मणिमयं तत्र तथैकं रौक्ममद्भुतम् ।
सर्वरत्नमयं चैकं भवनैरुपशोभितम् ।
तत्र स्वयंप्रभा देवी नित्यं वसति शाण्डिली ॥ ६-८-९ (३८९१९)
उत्तरेण तु श्रृङ्गस्य समुद्रान्ते जनाधिप ।
वर्षमैरावतं नाम तस्माच्छ्रृङ्गवतः परम् ॥ ६-८-१० (३८९२०)
न तत्र सूर्यस्तपति न जीर्यन्ते च मानवाः ।
चन्द्रमाश्च सनक्षत्रो ज्योतिर्भूत इवावृतः ॥ ६-८-११ (३८९२१)
पद्मप्रभाः पद्मवर्णाः पद्मपत्रनिभेक्षणाः ।
पद्मपत्रसुगन्धाश्च जायन्ते तत्र मानवाः ॥ ६-८-१२ (३८९२२)
अनिष्पन्दा इष्टगन्धा निराहारा जितेन्द्रियाः ।
देवलोकच्युताः सर्वे तथा विरजसो नृप ॥ ६-८-१३ (३८९२३)
त्रयोदशसहस्राणि वर्षाणां ते जनाधिप ।
आयुःप्रमाणं जीवन्ति नरा भरतसत्तम ॥ ६-८-१४ (३८९२४)
क्षीरोदस्य समुद्रस्य तथैवोत्तरतः प्रभुः ।
हरिर्वसति वैकुण्ठः शकटे कनकोज्ज्वले ॥ ६-८-१५ (३८९२५)
अष्टचक्रं हि तद्यानं भूतयुक्तं मनोजवम् ।
अग्निवर्णं महातेजो जाम्बूनदविभूषितम् ॥ ६-८-१६ (३८९२६)
स प्रभुः सर्वभूतानां विभुश्च भरतर्षभ ।
संक्षेपो विस्तरश्चैव कर्ता कारयिता तथा ॥ ६-८-१७ (३८९२७)
पृथिव्यापस्तथाऽऽकाशं वायुस्तेजश्च पार्थिव ।
स यज्ञः सर्वभूतनामास्यं तस्य हुताशनः ॥ ६-८-१८ (३८९२८)
वैशंपायन उवाच। ६-८-१९क्ष् (३९७३)
एवमुक्तः संजयेन धृतराष्ट्रो महामनाः ।
ध्यानमन्वगमद्राजा पुत्रान्प्रति जनाधिप ॥ ६-८-१९ (३८९२९)

स विचिन्त्य महातेजाः पुनरेवाब्रवीद्वचः ।
असंशयं सूतपुत्र कालः संक्षिपते जगत् ॥ ६-८-२० (३८९३०)
सृजते च पुनः सर्वं नेह विद्यति शाश्वतम् ।
नरो नारायणश्चैव सर्वज्ञः सर्वभूतहृत् ॥ ६-८-२१ (३८९३१)
देवा वैकुण्ठ इत्याहुर्वेदा विष्णुरिति प्रभुम् ॥ ॥ ६-८-२२ (३८९३२)

इति श्रीमन्महाभारते भीष्मपर्वणि जम्बूखण्डविनिर्माणपर्वणि
अष्टमोऽध्यायः ॥
Mahabharata - Bhishma Parva - Chapter Footnotes

६-८-२ यत्पूर्वं श्वेतवर्षमित्युक्तं तस्यैव रमणकमिति संज्ञान्तरम् ॥
६-८-८ शृङ्गवतः षष्ठस्य वर्षपर्वतस्य ॥
६-८-१० शृङ्गस्य शृङ्गवतः ॥
६-८-१३ अनिष्पन्दा अस्वेदाः । देवतुल्या इत्यर्थः ॥

---

भिस्मपर्व-अध्यय००९
॥ श्रीः ॥
६.९. अध्यायः ९

Mahabharata - Bhishma Parva - Chapter Topics
भारतवर्षस्थनदीपर्वतदेशानां विस्तरेण कथनम् ॥ १ ॥

Mahabharata - Bhishma Parva - Chapter Text

६-९-० (३८९३३)
धृतराष्ट्र उवाच। ६-९-०क्ष् (३९७४)
यदिदं भारतं वर्षं यत्रेदं मूर्च्छितं बलम् ।
यत्रातिमात्रलुब्धोऽयं पुत्रो दुर्योधनो मम ॥ ६-९-१ (३८९३४)
यत्र गृद्धा पाण्डुपुत्रा यत्र मे सज्जते मनः ।
एतन्मे तत्त्वमाचक्ष्व त्वं हि मे बुद्धिमान्मतः ॥ ६-९-२ (३८९३५)
संजय उवाच। ६-९-३क्ष् (३९७५)
न तत्र पाण्डवा गृद्धाः शृणु राजन्वचो मम ।
गृद्धो दुर्योधनस्तत्र शकुनिश्चापि सौबलः ॥ ६-९-३ (३८९३६)
अपरे क्षत्रियाश्चैव नानाजनपदेश्वराः ।
ये गृद्धा भारते वर्षे न मृष्यन्ति परस्परम् ॥ ६-९-४ (३८९३७)
अत्र ते कीर्तयिष्यामि वर्षं भारत भारतम् ।

प्रियमिन्द्रस्य देवस्य मनोर्वैवस्वतस्य च ॥ ६-९-५ (३८९३८)
पृथोस्तु राजन्वैन्यस्य तथेक्ष्वाकोर्महात्मनः ।
ययातेरम्बरीषस्य मान्धातुर्नहुषस्य च ॥ ६-९-६ (३८९३९)
तथैव मुचुकुन्दस्य शिबेरौशीनरस्य च ।
ऋषभस्य तथैलस्य नृगस्य नृपतेस्तथा ॥ ६-९-७ (३८९४०)
कुशिकस्य च दुर्धर्ष गाधेश्चैव महात्मनः ।
सोमकस्य च दुर्धर्ष दिलीपस्य तथैव च ॥ ६-९-८ (३८९४१)
अन्येषां च महाराज क्षत्रियाणां बलीयसाम् ।
सर्वेषामेव राजेन्द्र प्रियं भारत भारतम् ॥ ६-९-९ (३८९४२)
तत्ते वर्षं प्रवक्ष्यामि यथायथमरिन्दम ।
श्रृणु मे गदतो राजन्यन्मां त्वं परिपृच्छसि ॥ ६-९-१० (३८९४३)
महेन्द्रो मलयः सह्यः शुक्तिमानृक्षवानपि ।
विन्ध्यश्च पारियात्रश्च सप्तैते कुलपर्वताः ॥ ६-९-११ (३८९४४)
तेषां सहस्रशो राजन्पर्वतास्ते समीपतः ।
अविज्ञाताः सारवन्तो विपुलाश्चित्रसानवः ॥ ६-९-१२ (३८९४५)
अन्ये ततोऽपरिज्ञाता ह्रस्वा ह्रस्वोपजीविनः ।
आर्या म्लेच्छाश्च कौरव्य तैर्मिश्राः पुरुषा विभो ॥ ६-९-१३ (३८९४६)
नदीं पिबन्ति विपुलां गङ्गां सिन्धुं सरस्वतीम् ।
गोदावरीं नर्मदां च बाहुदां च महानदीम् ॥ ६-९-१४ (३८९४७)
शतद्रूं चन्द्रभागां च यमुनां च महानदीम् ।
दृषद्वतीं विपाशां च विपापां स्थूलवालुकाम् ॥ ६-९-१५ (३८९४८)
नदीं वेत्रवतीं चैव कृष्णवेणीं च निम्नगाम् ।
इरावतीं वितस्तां च पयोष्णीं देविकामपि ॥ ६-९-१६ (३८९४९)
वेदस्मृतां वेदवतीं त्रिदिवामिक्षुलां कृमिम् ।
करीषिणीं चित्रवाहां चित्रसेनां च निम्नगाम् ॥ ६-९-१७ (३८९५०)
गोमतीं धूतपापां च वन्दनां च महानदीम् ।
कौशिकीं त्रिविदां कृत्यां निचितां लोहितारणीं ॥ ६-९-१८ (३८९५१)
रहस्यां शतकुम्भां च सरयूं च तथैव च ।
चर्मण्वतीं वेत्रवतीं हस्तिसोमां दिशं तथा ॥ ६-९-१९ (३८९५२)
शरावतीं पयोष्णीं च वेणां भीमरथीमपि ।
कावेरीं चुलुकां चापि वाणीं शतबलामपि ॥ ६-९-२० (३८९५३)
नीवारामहितां चापि सुप्रयोगां जनाधिप ।
पवित्रां कुण्डलीं सिन्धुं राजनीं पुरमालिनीम् ॥ ६-९-२१ (३८९५४)
पूर्वाभिरामां वीरां च भीमामोघवतीं तथा ।
पाशाशिनीं पापहरां महेन्द्रां पाटलावतीम् ॥ ६-९-२२ (३८९५५)
करीषिणीमसिक्नीं च कुशचीरां महानदीम् ।

मकरीं प्रवरां मेनां हेमां घृतवतीं तथा ॥ ६-९-२३ (३८९५६)
पुरावतीमनुष्णां च शैब्यां कापीं च भारत ।
सदानीरामधृष्यां च कुशधारां महानदीम् ॥ ६-९-२४ (३८९५७)
सदाकान्तां शिवां चैव तथा वीरवतीमपि ।
वस्त्रां सुवस्त्रां गौरीं च कम्पनां सहिरण्वतीम् ॥ ६-९-२५ (३८९५८)
वरां वीरकरां चापि पञ्चमीं च महानदीम् ।
रथचित्रां ज्योतिरथां विश्वामित्रां कपिञ्जलाम् ॥ ६-९-२६ (३८९५९)
उपेन्द्रां बहुलां चैव कुवीरामम्बुवाहिनीम् ।
विनदीं पिञ्जलां वेणां तुङ्गवेणां महानदीम् ॥ ६-९-२७ (३८९६०)
विदिशां कृष्णवेणां च ताम्रां च कपिलामपि ।
खलुं सुवामां वेदाश्वां हरिश्रावां महापगाम् ॥ ६-९-२८ (३८९६१)
शीघ्रां च पिच्छिलां चैव भारद्वाजीं च निम्नगाम् ।
कौशिकीं निम्नगां शोणा बाहुदामथ चन्द्रमाम् ॥ ६-९-२९ (३८९६२)
दुर्गां चित्रशिलां चैव ब्रह्मवेध्यां बृहद्वतीम् ।
यवक्षामथ रोहीं च तथा जाम्बूनदीमपि ॥ ६-९-३० (३८९६३)
सुनसां तमसां दासीं वसामन्यां वराणसीम् ।
नीलां धृतवतीं चैव पर्णाशां च महानदीम् ॥ ६-९-३१ (३८९६४)
मानवीं वृषभां चैव ब्रह्ममेध्यां बृहद्ध्वनीम् ।
एताश्चान्याश्च बहुधा महानद्यो जनाधिप ॥ ६-९-३२ (३८९६५)
सदानिरामयां कृष्णां मन्दगां मन्दवाहिनीम् ।
ब्राह्मणीं च महागौरीं दुर्गामपि च भारत ॥ ६-९-३३ (३८९६६)
चित्रोपलां चित्ररथां मञ्जुलां वाहिनीं तथा ।
मन्दाकिनीं वैतरणीं कोषां चापि महानदीम् ॥ ६-९-३४ (३८९६७)
शुक्तिमतीमनङ्गां च तथैव वृषसाह्वयाम् ।
लोहित्यां करतोयां च तथैव वृषकाह्वयाम् ॥ ६-९-३५ (३८९६८)
कुमारीमृषिकुल्यां च मारिषां च सरस्वतीम् ।
मन्दाकिनीं सुपुण्यां च सर्वां गङ्गां च भारत ॥ ६-९-३६ (३८९६९)
विश्वस्य मातरः सर्वाः सर्वाश्चैव महाफलाः ।
तथा नद्यस्त्वप्रकाशाः शतशोऽथ सहस्रशः ॥ ६-९-३७ (३८९७०)
इत्येताः सरितो राजन्समाख्याता यथास्मृति ।
अत ऊर्ध्वं जनपदान्निबोध गदतो मम ॥ ६-९-३८ (३८९७१)
तत्रेमे कुरुपाञ्चालाः शाल्वा माद्रेयजाङ्गलाः ।
शूरसेनाः पुलिन्दाश्च बोधा मालास्तथैव च ॥ ६-९-३९ (३८९७२)
मत्स्याः कुशल्याः सौशल्याः कुंतयः कांतिकोसलाः ।
चेदिमत्स्यकरूशाश्च भोजाः सिन्धुपुलिन्दकाः ॥ ६-९-४० (३८९७३)
उत्तमाश्च दशार्णाश्च मेकलाश्चोत्कलैः सह ।

पञ्चालाः कोसलाश्चैव नैकपृष्ठा धुरन्धराः ॥ ६-९-४१ (३८९७४)
गोधा मद्रकलिङ्गाश्छ काशयोऽपरकाशयः ।
जठराः कुकुराश्चैव सदशार्णाश्च भारत ॥ ६-९-४२ (३८९७५)
कुन्तयोऽवन्तयश्चैव तथैवापरकुन्तयः ।
गोमन्ता मन्दकाः सण्डा विदर्भा रूपवाहिकाः ॥ ६-९-४३ (३८९७६)
अश्मकाः पाण्डुराष्ट्राश्च गोपराष्ट्राः करीतयः ।
अधिराज्यकुशाद्यश्च मल्लराष्ट्रं च केवलम् ॥ ६-९-४४ (३८९७७)
वारवास्यायवाहाश्च चक्राश्चक्रातयः शकाः ।
विदेहा मगधाः स्वक्षा मलजा विजयास्तथा ॥ ६-९-४५ (३८९७८)
अङ्गा वङ्गाः कलिङ्गाश्च यकृल्लोमान एव च ।
मल्लाः सुदेष्णाः प्रह्लादा माहिकाः शशिकास्तथा ॥ ६-९-४६ (३८९७९)
बाह्लीका वाटधानाश्च आभीराः कालतोयकाः ।
अपरान्ताः परान्ताश्च पञ्चालाश्चर्ममण्डलाः ॥ ६-९-४७ (३८९८०)
अटवीशिखराश्चैव मेरुभूताश्च मारिष ।
उपावृत्तानुपावृत्ताः स्वराष्ट्राः केकयास्तथा ॥ ६-९-४८ (३८९८१)
कुन्दापरान्ता माहेयाः कक्षाः सामुद्रनिष्कुटाः ।
अन्ध्राश्च बहवो राजन्नन्तर्गिर्यास्तथैव च ॥ ६-९-४९ (३८९८२)
बहिर्गिर्याङ्गमलजा मगधा मानवर्जकाः ।
समन्तराः प्रावृषेया भार्गवाश्च जनाधिप ॥ ६-९-५० (३८९८३)
पुण्ड्रा भर्गाः किराताश्च सुदृष्टा यामुनास्तथा ।
शका निषादा निषधास्तथैवानर्तनैर्ऋताः ॥ ६-९-५१ (३८९८४)
दुर्गालाः प्रतिमत्स्याश्च कुन्तलाः कोसलास्तथा ।
तीरग्रहाः शूरसेना ईजिकाः कन्यका गुणाः ॥ ६-९-५२ (३८९८५)
तिलभारा मसीराश्च मधुमन्तः सकुन्दकाः ।
काश्मीराः सिन्धुसौवीरा गान्धारा दर्शकास्तथा ॥ ६-९-५३ (३८९८६)
अभीसारा उलूताश्च शैवला बाह्लिकास्तथा ।
दार्वी च वानवा दर्वा वातजामरथोरगाः ॥ ६-९-५४ (३८९८७)
बहुवाद्याश्च कौरव्य सुदामानः सुमल्लिकाः ।
वध्राः करीषकाश्चापि कुलिन्दोपत्यकास्तथा ॥ ६-९-५५ (३८९८८)
वनायवो दशापार्श्वरोमाणः कुशबिन्दवः ।
कच्छा गोपालकक्षाश्च जाङ्गलाः कुरुवर्णकाः ॥ ६-९-५६ (३८९८९)
किराता बर्बराः सिद्धा वैदेहास्ताम्रलिप्तकाः ।
ओण्ड्रा म्लेच्छाः सैसिरिध्राः पार्वतीयाश्च मारिष ॥ ६-९-५७ (३८९९०)
अथापरे जनपदा दक्षिणा भरतर्षभ ।
द्रविडाः केरलाः प्राच्या भूषिका वनवासिकाः ॥ ६-९-५८ (३८९९१)
कर्णाटका महिषका विकल्पा मूषकास्तथा ।

झिल्लिकाः कुन्तलाश्चैव सौहृदानभकाननाः ॥ ६-९-५९ (३८९९२)
कौकुट्टकास्तथा चोलाः कोङ्कणा मालवा नराः ।
समङ्गाः करकाश्चैव कुकुराङ्गारमारिषाः ॥ ६-९-६० (३८९९३)
ध्वजिन्युत्सवसंकेतास्त्रिगर्ताः साल्वसेनयः ।
व्यूकाः कोकबकाः प्रोष्ठाः सर्मवेगवशास्तथा ॥ ६-९-६१ (३८९९४)
तथैव विन्ध्यचुलिकाः पुलिन्दा वल्कलैः सह ।
मालवा बल्लवाश्चैव तथैवापरबल्लवाः ॥ ६-९-६२ (३८९९५)
कुलिन्दाः कालदाश्चैव कुण्डलाः करटास्तथा ।
मूषकास्तनबालाश्च सनीपा घटसृञ्जयाः ॥ ६-९-६३ (३८९९६)
अठिदाः पाशिवाटाश्च तनयाः सुनयास्तथा ।
ऋषिका विदभाः काकास्तङ्गणाः परतङ्गणाः ॥ ६-९-६४ (३८९९७)
उत्तराश्चापरे म्लेच्छाः क्रूरा भरतसत्तम ।
यवनाश्चीनकाम्भोजा दारुणा म्लेच्छजातयः ॥ ६-९-६५ (३८९९८)
सकृद्ग्रहाः कुलत्थाश्च हूणाः पारसिकैः सह ।
तथैव रमणाश्चीनास्तथैव दशमालिकाः ॥ ६-९-६६ (३८९९९)
क्षत्रियोपनिवेशाश्च वैश्यशूद्रकुलानि च ।
शूद्राभीराश्च दरदाः काश्मीराः पशुभिः सह ॥ ६-९-६७ (३९०००)
खाशीराश्चान्तचाराश्च पह्लवा गिरिगह्वराः ।
आत्रेयाः सभरद्वाजास्तथैव स्तनपोषिकाः ॥ ६-९-६८ (३९००१)
प्रोषकाश्च कलिङ्गाश्च किरातानां च जातयः ।
तोमरा हन्यमानाश्च तथैव करभञ्जकाः ॥ ६-९-६९ (३९००२)
एते चान्ये जनपदाः प्राच्योदीच्यास्तथैव च ।
उद्देशमात्रेण मया देशाः संकीर्तिता विभो ॥ ६-९-७० (३९००३)
यथागुणबलं चापि त्रिवर्गस्य महाफलम् ।
दुह्याद्धेनुः कामधुक्क भूमिः सम्यगनुष्ठिता ॥ ६-९-७१ (३९००४)
तस्यां गृद्ध्यन्ति राजानः शूरा धर्मार्थकोविदाः ।
ते त्यजन्त्याहवे प्राणान्वसुगृद्धास्तरस्विनः ॥ ६-९-७२ (३९००५)
देवमानुषकायानां कामं भूमिः परायणम् ।
अन्योन्यस्यावलुम्पन्ति सारमेया यथाऽऽमिषम् ॥ ६-९-७३ (३९००६)
राजानो भरतश्रेष्ठ भोक्तुकामा वसुन्धराम् ।
न चापि तृप्तिः कामानां विद्यतेऽद्यापि कस्यचित् ॥ ६-९-७४ (३९००७)
तस्मात्परिग्रहे भूमेर्यतन्ते कुरुपाण्डवाः ।
साम्ना भेदेन दानेन दण्डेनैव च भारत ॥ ६-९-७५ (३९००८)
पिता भ्राता च पुत्राश्च खं द्यौश्च नरपुङ्गव ।
भूमिर्भवति भूतानां सम्यगच्छिद्रदर्शना ॥ ॥ ६-९-७६ (३९००९)

इति श्रीमन्महाभारते भीष्मपर्वणि जम्बूखण्डविनिर्माणपर्वणि
नवमोऽध्यायः ॥

Mahabharata - Bhishma Parva - Chapter Footnotes

६-९-२ गृद्धाः लोभयुक्ताः । एतत् एतस्य । मे मह्यम् । तत्त्वं याथार्थ्यम् ॥
६-९-५ प्रियमिति । कर्मभूमित्वादिन्द्रादीनामिदं प्रियंक ॥
६-९-७१ ययागुणबलमिति । यथागुणं सत्त्वादिगुणान् अनतिक्रम्य। तद्वत्
यथाबलं शौर्यं चानतिक्रम्य। त्रिवर्गस्य धर्मार्थकामात्मकस्य
महाफलं उत्कृष्टफलं हैरण्यगर्भपदप्राप्त्यन्तं सम्यगनुष्ठिता
सम्यक् पालिता भूमिर्दुह्यात् पूरयेत् । धेनुरिव कामान् अन्यांश्च दुग्धे
इति कामधुक् ॥
६-९-७३ देवकायानां यज्ञेन मानुषकायानामन्नप्रसवेन भूमिः परायणं
शरणम् ॥
६-९-७६ अच्छिद्रं संपूर्णं दर्शनं यस्याः सा भूमिः ॥

---

भिस्मपर्व-अध्यय०१०
॥ श्रीः ॥
६.१०. अध्यायः १०

Mahabharata - Bhishma Parva - Chapter Topics

चतुर्युगवर्णनम् ॥

Mahabharata - Bhishma Parva - Chapter Text

६-१०-० (३९०१०)
धृतराष्ट्र उवाच। ६-१०-०क्ष् (३९७६)
भारतस्यास्य वर्षस्य तथा हैमवतस्य च ।
प्रमाणमायुषः सूत बलं चापि शुभाशुभम् ॥ ६-१०-१ (३९०११)
अनागतमतिक्रान्तं वर्तमानं च संजय ।
आचक्ष्व मे विस्तरेण हरिवर्षं तथैव च ॥ ६-१०-२ (३९०१२)
संजय उवाच। ६-१०-३क्ष् (३९७७)
चत्वारि भारते वर्षे युगानि भरतर्षभ ।
कृतं त्रेता द्वापरं च तिष्यं च कुरुवर्धन ॥ ६-१०-३ (३९०१३)
पूर्वं कृतयुगं नाम ततस्त्रेतायुगं प्रभो ।
संक्षेपाद्द्वापरस्याथ ततस्तिष्यं प्रवर्तते ॥ ६-१०-४ (३९०१४)
चत्वारि तु सहस्राणि वर्षाणां कुरुसत्तम ।
आयुःसंख्या कृतयुगे संख्याता राजसत्तम ॥ ६-१०-५ (३९०१५)

तथा त्रीणि सहस्राणि त्रेतायां मनुजाधिप ।
द्वे सहस्रे द्वापरे तु भुवि तिष्ठन्ति सांप्रतम् ॥ ६-१०-६ (३९०१६)
न प्रमाणस्थितिर्ह्यस्ति तिष्येऽस्मिन्भरतर्षभ ।
गर्भस्थाश्च म्रियन्तेऽत्र तथा जाता म्रियन्ति च ॥ ६-१०-७ (३९०१७)
महाबला महासत्वाः प्रज्ञागुणसमन्विताः ।
प्रजायन्ते च जाताश्च शतशोऽथ सहस्रशः ॥ ६-१०-८ (३९०१८)
जाताः कृतयुगे राजन्धनिनः प्रयदर्शनाः ।
प्रजायन्ते च जाताश्च मुनयो वै तपोधनाः ॥ ६-१०-९ (३९०१९)
महोत्साहा महात्मानो धार्मिकाः सत्यवादिनः ।
प्रियदर्शना वपुष्मन्तो महावीर्या धनुर्धराः ॥ ६-१०-१० (३९०२०)
वरार्हा युधि जायन्ते क्षत्रियाः शूरसत्तमाः ।
त्रेतायां क्षत्रिया राजन्सर्वे वै चक्रवर्तिनः ॥ ६-१०-११ (३९०२१)
सर्ववर्णाश्च जायन्ते सदा चैव च द्वापरे ।
महोत्साहा वीर्यवन्तः परस्परजयैषिणः ॥ ६-१०-१२ (३९०२२)
तेजसाल्पेन संयुक्ताः क्रोधनाः पुरुषा नृप ।
लुब्धा अनृतकाश्चैव तिष्ये जायन्ति भारत ॥ ६-१०-१३ (३९०२३)
ईर्ष्या मानस्तथा क्रोधो मायाऽसूया तथैव च ।
तिष्ये भवति भूतानां रागो लोभश्च भारत ॥ ६-१०-१४ (३९०२४)
संक्षेपो वर्तते राजन्द्वापरेऽस्मिन्नराधिप ।
गुणोत्तरं हैमवतं हरिवर्षं ततः परम् ॥ ॥ ६-१०-१५ (३९०२५)

इति श्रीमन्महाभारते भीष्मपर्वणि जम्बूखण्डविनिर्माणपर्वणि
दशमोऽध्यायः ॥

Mahabharata - Bhishma Parva - Chapter Footnotes

६-१०-३ तिष्यं कलियुगम् ॥
६-१०-८ प्रजायन्ते प्रजां जनयन्ति ॥
६-१०-१० वपुष्मन्तः प्रशस्तदेहाः ॥
६-१०-१२ सर्वे वर्णाः परस्परजयैषिणो जायन्त इति संबन्धः ॥
६-१०-१४ ईर्ष्या परोत्कर्षासहिष्णुत्वम् । मानः स्वस्मिन्पूज्यताबुद्धिः
। क्रोधोऽभिज्वलनम् । माया कपटम्। असूया परगुणेषु
दोषाविष्करणम्। रागो विषयेषु प्रीतिः। लोभस्तल्लिप्सा ॥
६-१०-१५ संक्षेपो गुणानामिति शेषः ॥

---

भिस्मपर्व-अध्यय०११
॥ श्रीः ॥
६.११. अध्यायः ११

Mahabharata - Bhishma Parva - Chapter Topics

**शाकद्वीपवर्णनम् ॥ १ ॥**

Mahabharata - Bhishma Parva - Chapter Text

६-११-० (३९०२६)
धृतराष्ट्र उवाच। ६-११-०क्ष् (३९७८)
जम्बूखण्डस्त्वया प्रोक्तो यथावदिह सञ्जय ।
विष्कम्भमस्य प्रब्रूहि परिमाणं तु तत्त्वतः ॥ ६-११-१ (३९०२७)
समुद्रस्य प्रमाणं च सम्यगच्छिद्रदर्शनम् ।
शाकद्वीपं च मे ब्रूहि कुशद्वीपं च सञ्जय ॥ ६-११-२ (३९०२८)
शाल्मलिं चैव तत्त्वेन क्रौञ्चद्वीपं तथैव च ।
ब्रूहि गावल्गणे सर्वं राहोः सोमार्कयोस्तथा ॥ ६-११-३ (३९०२९)
सञ्जय उवाच। ६-११-४क्ष् (३९७९)
राजन्सुबहवो द्वीपा यैरिदं सन्ततं जगत् ।
सप्त द्वीपान्प्रवक्ष्यामि चन्द्रादित्यौ ग्रहं तथा ॥ ६-११-४ (३९०३०)
अष्टादश सहस्राणि योजनानि विशांपते ।
षट् शतानि च पूर्णानि विष्कम्भो जम्बुपर्वतः ॥ ६-११-५ (३९०३१)
लावणस्य समुद्रस्य विष्कम्भो द्विगुणः स्मृतः ।
नानाजनपदाकीर्णो मणिविद्रुमचित्रितः ॥ ६-११-६ (३९०३२)
नैकधातुविचित्रैश्च पर्वतैरुपशोभितः ।
सिद्धचारणसंकीर्णः सागरः परिमण्डलः ॥ ६-११-७ (३९०३३)
शाकद्वीपं च वक्ष्यामि यथावदिह पार्थिव ।
शृणु मे त्वं यथान्यायं ब्रुवतः कुरुनन्दन ॥ ६-११-८ (३९०३४)
जम्बूद्वीपपरमाणेन द्विगुणः स नराधिप ।
विष्कम्भेण महाराज सागरोऽपि विभागशः ॥ ६-११-९ (३९०३५)
क्षीरोदो भरतश्रेष्ठ येन संपरिवारिताः ।
तत्र पुण्या जनपदास्तत्र न म्रियते जनः ।
कुत एव हि दुर्भिक्षं क्षमातेजोयुता हि ते ॥ ६-११-१० (३९०३६)
शाकद्वीपस्य संक्षेपो यथावद्भरतर्षभ ।
उक्त एष महाराज किमन्यत्कथयामि ते ॥ ६-११-११ (३९०३७)
धृतराष्ट्र उवाच। ६-११-१२क्ष् (३९८०)
शाकद्वीपस्य संक्षेपो यथावदिह सञ्जय ।
उक्तस्त्वया महाप्राज्ञ विस्तरं ब्रूहि तत्त्वतः ॥ ६-११-१२ (३९०३८)
सञ्जय उवाच। ६-११-१३क्ष् (३९८१)

तथैव पर्वता राजन्सप्तात्र मणिभूषिताः ।
रत्नाकरास्तथा नद्यस्तेषां नामानि मे शृणु ॥ ६-११-१३ (३९०३९)
अतीव गुणवत्सर्वं तत्र पुण्यं जनाधिप ॥ ६-११-१४ (३९०४०)
देवर्षिगन्धर्वयुतः प्रथमो मेरुरुच्यते ।
प्रागायतो महाराज मलयो नाम पर्वतः ॥ ६-११-१५ (३९०४१)
ततो मेघाः प्रवर्तन्ते प्रभवन्ति च सर्वशः ।
ततः परेण कौरव्य जलधारो महागिरिः ॥ ६-११-१६ (३९०४२)
ततो नित्युमुपादत्ते वासवः परमं जलम् ।
ततो वर्षं प्रभवति वर्षकाले जनेश्वर ॥ ६-११-१७ (३९०४३)
उच्चैर्गिरी रैवतको यत्र नित्यं प्रतिष्ठिता ।
रेवती दिवि नक्षत्रं पितामहकृतो विधिः ॥ ६-११-१८ (३९०४४)
उत्तरेण तु राजेन्द्र श्यामो नाम महागिरिः ।
नवमेघप्रभः प्रांशुः श्रीमानुज्ज्वलविग्रहः ।
यतः श्यामत्वमापन्नाः प्रजा जनपदेश्वर ॥ ६-११-१९ (३९०४५)
धृतराष्ट्र उवाच। ६-११-२०क्ष् (३९८२)
सुमहान्संशयो मेऽद्य प्रोक्तोऽयं सञ्जय त्वया ।
प्रजाः कथं सूतपुत्र संप्राप्ताः श्यामतामिह ॥ ६-११-२० (३९०४६)
सञ्जय उवाच। ६-११-२१क्ष् (३९८३)
सर्वेष्वेव महाराज द्वीपेषु कुरुनन्दन ।
गौरः कृष्णश्च पतगस्तयोर्वर्णान्तरे नृप ॥ ६-११-२१ (३९०४७)
श्यामो यस्मात्प्रवृत्तो वै तस्माच्छ्यामो गिरिःस्मृतः ६-११-२२ (३९०४८)
ततः परं कौरवेन्द्र दुर्गशैलो महोदयः ।
केसरः केसरयुतो यतो वातः प्रवर्तते ॥ ६-११-२३ (३९०४९)
तेषां योजनविष्कम्भो द्विगुणः प्रविभागशः ।
वर्षाणि तेषु कौरव्य सप्तोक्तानि मनीषिभिः ॥ ६-११-२४ (३९०५०)
महामेरुर्महाकाशो जलदः कुमुदोत्तरः ।
जलधारो महाराज सुकुमार इति स्मृतः ॥ ६-११-२५ (३९०५१)
रेवतस्य तु कौमारः श्यामस्य मणिकाञ्चनः ।
केसरस्याथ मौदाकी परेण तु महापुमान् ॥ ६-११-२६ (३९०५२)
परिवार्य तु कौरव्य दैर्घ्यं ह्रस्वत्वमेव च ।
जम्बूद्वीपेन संक्यातस्तस्य मध्ये महाद्रुमः ॥ ६-११-२७ (३९०५३)
शाको नाम महाराज प्रजा तस्य सदानुगा ।
तत्र पुण्या जनपदाः पूज्यते तत्र शंकरः ॥ ६-११-२८ (३९०५४)
तत्र गच्छन्ति सिद्धाश्च चारणा दैवतानि च ।
धार्मिकाश्च प्रजा राजंश्चत्वारोऽतीव भारत ॥ ६-११-२९ (३९०५५)
वर्णाः स्वकर्मनिरता न च स्तेनोऽत्र दृश्यते ।

दीर्घायुषो महाराज जरामृत्युविवर्जिताः ॥ ६-११-३० (३९०५६)
प्रजास्तत्र विवर्धन्ते वर्षास्विव समुद्रगाः ।
नद्यः पुण्यजलास्तत्र गङ्गा च बहुधा गता ॥ ६-११-३१ (३९०५७)
सुकुमारी कुमारी च शीताशी वेणिका तथा ।
महानदी च कौरव्य तथा मणिजला नदी ॥ ६-११-३२ (३९०५८)
चक्षुर्वर्धनिका चैव नदी भरतसत्तम ।
तत्र प्रवृत्ताः पुण्योदा नद्यः कुरुकुलोद्वह ॥ ६-११-३३ (३९०५९)
सहस्राणां शतान्येव यतो वर्षति वासवः ।
न तासां नामधेयानि परिमाणं तथैव च ॥ ६-११-३४ (३९०६०)
शक्यन्ते परिसंख्यातुं पुण्यास्ता हि सरिद्वराः ।
तत्र पुण्या जनपदाश्चत्वारो लोकसंमताः ॥ ६-११-३५ (३९०६१)
मङ्गाश्च मशकाश्चैव मानसा मन्दगास्तथा ।
मङ्गा ब्राह्मणभूयिष्ठाः स्वकर्मनिरता नृप ॥ ६-११-३६ (३९०६२)
मशकेषु च राजन्या धार्मिकाः सर्वकामदाः ।
मानसाश्च महाराज वैश्यधर्मोपजीविनः ॥ ६-११-३७ (३९०६३)
सर्वकामसमायुक्ताः शूरा धर्मार्थनिश्चिताः ।
शूद्रास्तु मन्दगा नित्यं पुरुषा धर्मशीलिनः ॥ ६-११-३८ (३९०६४)
न तत्र राजा राजेन्द्र न दण्डो न च दण्डिकाः ।
स्वधर्मेणैव धर्मज्ञास्ते रक्षन्ति परस्परम् ॥ ६-११-३९ (३९०६५)
एतावदेव शक्यं तु तत्र द्वीपे प्रभाषितुम् ।
एतदेव च श्रोतव्यं शाकद्वीपे महौजसि ॥ ॥ ६-११-४० (३९०६६)

इति श्रीमन्महाभारते भीष्मपर्वणि भूमिपर्वणि एकादशोऽध्यायः ॥
Mahabharata - Bhishma Parva - Chapter Footnotes

६-११-४ ग्रहं राहुम् ॥
६-११-५ पर्वताकृतित्वाज्जम्बुपर्वत इत्युच्यते ॥
६-११-६ क्षेत्रफलतः पञ्चसहस्रायामत्वाज्जम्बूद्वीपस्य तदुभयतः
पञ्चपञ्चभिः सहस्रैः समुद्रस्य विष्कम्भो विस्तारः तेन
समुद्रस्य द्वीपस्य पञ्चदशसहस्रयोजनो व्यासः । द्विगुणः
दशसहस्रयोजनः परिमण्डलश्चेदुभयतः समुद्रवेष्टनेन
सह चत्वारिंशत्सहस्रः। एवं तृतीयोऽशीतिसहस्रः। चतुर्थः
षष्टिसहस्राधिकं लक्षम्। पञ्चमो लक्षत्रयं विंशतिसहस्राणि
। षष्ठो लक्षषङ्कं चत्वारिंशत्सहस्राणि। सप्तमो
द्वादशलक्षाण्यशीतिसहस्राणि। एतेषां संकलने पञ्चविंशतिलक्षाणि
पञ्चत्रिंशत्सहस्राणि योजनानि सप्तानां द्वीपानां समुद्राणं विस्तारः ॥

६-११-१८ रेवती ज्योतिर्मण्डलरूपेण दिवि विभ्रम्यमाणापि दिव्येन रूपेणात्रापि वर्तते एव । विधिर्मर्यादा पितामहेन कृता ॥
६-११-२१ पतगवर्णं व्याचष्टे तमोरिति । मिश्रोवर्णः पतग इत्यर्थः ॥
६-११-२२ यस्मात् श्यामो गिरिस्तस्मात्तत्स्थानां श्यामो वर्णः प्रवृत्त इत्यर्थः ॥

---

भिस्मपर्व-अध्यय०१२
॥ श्रीः ॥
६.१२. अध्यायः १२

Mahabharata - Bhishma Parva - Chapter Topics
क्रौञ्चदिद्वीपवर्णनम् ॥ १ ॥

Mahabharata - Bhishma Parva - Chapter Text

६-१२-० (३९०६७)
सञ्जय उवाच। ६-१२-०क्ष् (३९८४)
उत्तरेषु च कौरव्य द्वीपेषु श्रूयते कथा ।
एवं तत्र महाराज ब्रुवतश्च निबोध मे ॥ ६-१२-१ (३९०६८)
घृततोयः समुद्रोऽत्र दधिमण्डोदकोऽपरः ।
सुरोदः सागरश्चैव तथान्यो जलसागरः ॥ ६-१२-२ (३९०६९)
परस्परेण द्विगुणाः सर्वे द्वीपा नराधिप ।
पर्वताश्च महाराज समुद्रैः परिवारिताः ॥ ६-१२-३ (३९०७०)
गौरस्तु मध्यमे द्वीपे गिरिर्मानःशिलो महान् ।
पर्वतः पश्चिमे कृष्णो नारायणसखो नृप ॥ ६-१२-४ (३९०७१)
तत्र रत्नानि दिव्यानि स्वयं रक्षति केशवः ।
प्रसन्नश्चाभवत्तत्र प्रजानां व्यदधत्सुखम् ॥ ६-१२-५ (३९०७२)
कुशस्तम्बः कुशद्वीपे मध्ये जनपदैः सह ।
संपूज्यते शाल्मलिश्च द्वीपे शाल्मलिके नृप ॥ ६-१२-६ (३९०७३)
क्रौञ्चद्वीपे महाक्रौञ्चो गिरी रत्नचयाकरः ।
संपूज्यते महाराज चातुर्वर्ण्येन नित्यदा ॥ ६-१२-७ (३९०७४)
गोमन्तः पर्वतो राजन्सुमहान्सर्वधातुमान् ।
यत्र नित्यं निवसति श्रीमान्कमललोचनः ॥ ६-१२-८ (३९०७५)
मोक्षिभिः संस्तुतो नित्यं प्रभुर्नारायणो हरिः ।
कुशद्वीपे तु राजेन्द्र पर्वतो विद्रुमैश्चितः ॥ ६-१२-९ (३९०७६)
सुनामा नाम दुर्धर्षो द्वितीयो हेमपर्वतः ।

द्युतिमान्नाम कौरव्य तृतीयः कुमुदो गिरिः ॥ ६-१२-१० (३९०७७)
चतुर्थः पुष्पवान्नाम पञ्चमस्तु कुशेशयः ।
षष्ठो हरिगिरिर्नाम षडेते पर्वतोत्तमाः ॥ ६-१२-११ (३९०७८)
तेषामन्तरविष्कम्भो द्विगुणः सर्वभागशः ।
औद्भिदं प्रथमं वर्षं द्वितीयं वेणुमण्डलम् ॥ ६-१२-१२ (३९०७९)
तृतीयं सुरथाकारं चतुर्थं कम्बलं स्मृतम् ।
धृतिमत्पञ्चमं वर्षं षष्ठं प्रभाकरम् ॥ ६-१२-१३ (३९०८०)
सप्तमं कापिलं वर्षं सप्तैते वर्षलम्भकाः ।
एतेषु देवगन्धर्वाः प्रजाश्च जगतीश्वर ॥ ६-१२-१४ (३९०८१)
विहरन्ते रमन्ते च न तेषु म्रियते जनः ।
न तेषु दस्यवः सन्ति म्लेच्छजात्योपि वा नृप ॥ ६-१२-१५ (३९०८२)
गौरप्रायो जनः सर्वः सुकुमारश्च पार्थिव ।
अवशिष्टेषु सर्वेषु वक्ष्यामि मनुजेश्वर ॥ ६-१२-१६ (३९०८३)
यथाश्रुतं महाराज तदव्यग्रमनाः श्रृणु ।
क्रौञ्चद्वीपे महारा क्रौञ्चो नाम महागिरिः ॥ ६-१२-१७ (३९०८४)
क्रौञ्चात्परो वामनको वामनादन्धकारकः ।
अन्धकारात्परो राजन्मैनाकः पर्वतोत्तमः । ६-१२-१८ (३९०८५)
मैनाकात्परतो रादन्गोविन्दो गिरिरुत्तमः ।
गोविन्दात्परतो राजन्निबिडो नाम पर्वतः ॥ ६-१२-१९ (३९०८६)
परस्तु द्विगुणस्तेषां विष्कम्भो वंशवर्धन ।
देशांस्तत्र प्रवक्ष्यामि तन्मे निगदतः श्रृणु ॥ ६-१२-२० (३९०८७)
क्रोञ्चस्य कुशलो देशो वामनस्य मनोनुगः ।
मनोनुगात्परश्चोष्णो देशः कुरुकुलोद्वह ॥ ६-१२-२१ (३९०८८)
उष्णात्परः प्रावरकः प्रावारादन्धकारकः ।
अन्धकारकदेशात्तु मुनिदेशः परः स्मृतः ॥ ६-१२-२२ (३९०८९)
मुनिदेशात्परश्चैव प्रोच्यते दुन्दुभिस्वनः ।
सिद्धचारणसंकीर्णो गौरप्रायो जनाधिप ॥ ६-१२-२३ (३९०९०)
एते देशा महाराज देवगन्धर्वसेविताः ।
पुष्करे पुष्करो नाम पर्वतो मणिरत्नवान् ॥ ६-१२-२४ (३९०९१)
तत्र नित्यं प्रभवति स्वयं देवः प्रजापतिः ।
तं पर्युपासते नित्यं देवाः सर्वे महर्षयः ॥ ६-१२-२५ (३९०९२)
वाग्भिर्मनोनुकूलाभिः पूजयन्तो जनाधिप ।
जम्बूद्वीपात्प्रवर्तन्ते रत्नानि विविधान्युत ॥ ६-१२-२६ (३९०९३)
द्वीपेषु तेषु सर्वेषु प्रजानां कुरुसत्तम ।
ब्रह्मचर्येण सत्येन प्रजानां हि दमेन च ॥ ६-१२-२७ (३९०९४)
आरोग्यायुःप्रमाणाभ्यां द्विगुणं द्विगुणं ततः ।

एको जनपदो राजन्द्वीपेष्वेतेषु भारत ।
उक्ता जनपदा येषु धर्मश्चैकः प्रदृश्यते ॥ ६-१२-२८ (३९०९५)
ईश्वरो दण्डमुद्यम्य स्वयमेव प्रजापतिः ।
द्वीपानेतान्महाराज रक्षंस्तिष्ठति नित्यदा ॥ ६-१२-२९ (३९०९६)
स राजा स शिवो राजन्स पिता प्रतितामहः ।
गोपायति नरश्रेष्ठ प्रजाः सजडपण्डिताः ॥ ६-१२-३० (३९०९७)
भोजनं चात्र कौरव्य प्रजाः स्वयमुपस्थितम् ।
सिद्धमेव महाबाहो तद्धि भुञ्जन्ति नित्यदा ॥ ६-१२-३१ (३९०९८)
ततः परं समा नाम दृश्यते लोकसंस्थितिः ।
चतुरश्र महाराज त्रयस्त्रिंशत्तु मण्डलम् ॥ ६-१२-३२ (३९०९९)
तत्र तिष्ठन्ति कौरव्य चत्वारो लोकसंमताः ।
दिग्गजा भरतश्रेष्ठ वामनैरावतादयः ॥ ६-१२-३३ (३९१००)
सुप्रतीकस्तदा राजन्प्रभिन्नकरटामुखः ।
तस्याहं परिमाणं तु न संख्यातुमिहोत्सहे ॥ ६-१२-३४ (३९१०१)
असंख्यातः स नित्यं हि तिर्यगूर्ध्वमधस्तथा ।
तत्र वै वायवो वान्ति दिग्भ्यः सर्वाभ्य एव हि ॥ ६-१२-३५ (३९१०२)
असंबद्धा महाराज तान्निगृह्णन्ति ते गजाः ।
पुष्करैः पद्मसंकाशैर्विकसद्भिर्महाप्रभैः ॥ ६-१२-३६ (३९१०३)
शतधा पुनरेवाशु ते तान्मुञ्चन्ति नित्यशः ।
श्वसद्भिर्मुच्यमानास्तु दिग्गजैरिह मारुताः ।
आगच्छन्ति महाराज ततस्तिष्ठन्ति वै प्रजाः ॥ ६-१२-३७ (३९१०४)
धृतराष्ट्र उवाच। ६-१२-३८क्ष् (३९८५)
परो वै विस्तरोऽत्यर्थं त्वया सञ्जय कीर्तितः ।
दर्शितं द्वीपसंस्थानमुत्तरं ब्रूहि सञ्जय ॥ ६-१२-३८ (३९१०५)
सञ्जय उवाच। ६-१२-३९क्ष् (३९८६)
उक्ता द्वीपा महाराज ग्रहं वै शृणु तत्त्वतः ।
स्वर्भानोः कौरवश्रेष्ठ यावदेव प्रमाणतः ॥ ६-१२-३९ (३९१०६)
परिमण्डलो महाराज स्वर्भानुः श्रूयते ग्रहः ।
योजनानां सहस्राणि विष्कम्भो द्वादशास्य वै ॥ ६-१२-४० (३९१०७)
परिणाहेन षट्त्रिंशद्विपुलत्वेन चानघ ।
षष्टिमाहुः शतान्यस्य बुधाः पौराणिकास्तथा ॥ ६-१२-४१ (३९१०८)
चन्द्रमास्तु सहस्राणि राजन्नेकादश स्मृतः ।
विष्कम्भेण कुरुश्रेष्ठ त्रयस्त्रिंशत्तु मण्डलम् ॥ ६-१२-४२ (३९१०९)
एकोनषष्टिविष्कम्भं शीतरश्मेर्महात्मनः ॥ ६-१२-४३ (३९११०)
सूर्यस्त्वष्टौ सहस्राणि द्वे चान्ये कुरुनन्दन ।
विष्कम्भेण ततो राजन्मण्डलं त्रिंशता समम् ॥ ६-१२-४४ (३९१११)

अष्टपञ्चाशतं राजन्विपुलत्वेन चानघ ।
श्रूयते परमोदारः पतगोऽसौ विभावसुः ॥ ६-१२-४५ (३९११२)
एतत्प्रमाणमर्कस्य निर्दिष्टमिह भारत ।
स राहुश्छादयत्येतौ यथाकालं महात्तया ॥ ६-१२-४६ (३९११३)
चन्द्रादित्यौ महाराज संक्षेपोऽयमुदाहृतः ।
इत्येतत्ते महाराज पृच्छतः शास्त्रचक्षुषा ॥ ६-१२-४७ (३९११४)
सर्वमुक्तं यथातत्त्वं तस्माच्छममवाप्नुहि ।
यथोद्दिष्टं मया प्रोक्तं सनिर्माणमिदं जगत् ॥ ६-१२-४८ (३९११५)
तस्मादाश्वस कौरव्य पुत्रं दुर्योधनं प्रति ।
श्रुत्वेदं भरतश्रेष्ठ भूमिपर्व मनोनुगम् ॥ ६-१२-४९ (३९११६)
श्रीमान्भवति राजन्यः सिद्धार्थः साधुसंमतः ।
आयुर्बलं च कीर्तिश्च तस्य तेजश्च वर्धते ॥ ६-१२-५० (३९११७)
यः शृणोति महीपाल पर्वणीदं यतव्रतः ।
प्रीयन्ते पितरस्तस्य तथैव च पितामहाः ॥ ६-१२-५१ (३९११८)
इदं तु भारतं वर्षं यत्र वर्तामहे वयम् ।
पूर्वैः प्रवर्तितं पुण्यं तत्सर्वं श्रुतवानसि ॥ ॥ ६-१२-५२ (३९११९)

इति श्रीमन्महाभारते भीष्मपर्वणि भूमिपर्वणि द्वादशोऽध्यायः
॥ ॥ समाप्तमिदं भूमिपर्व ॥

Mahabharata - Bhishma Parva - Chapter Footnotes

६-१२-४ मानःशिलो मनःशिलामयः ॥
६-१२-३४ तस्य गजचतुष्टयस्य पृथिव्या आश्रयभूतस्य ।तत्कस्योपरिवर्तते इति दुर्वचम्।तेन ईश्वरशक्त्यैव दिग्गजा ध्रियन्त इति भावः ॥
६-१२-३६ पुष्करैः शुण्डाग्रैः ॥
६-१२-३९ उत्तरं सूर्येन्दुराहुप्रमाणम् ॥
६-१२-४१ परिणाहेन परिधिना षट्त्रिंशत्सहस्राणि विपुलत्वेन ततोऽप्याधिक्येन ॥
६-१२-४२ षष्टियोजनानि परिणाह एवेत्यर्थः ॥
६-१२-४५ पतगः शीघ्रगः ।विभावसुः सूर्यः ॥

---

भिस्मपर्व-अध्यय०१३
॥ श्रीः ॥
६.१३. अध्यायः १३

Mahabharata - Bhishma Parva - Chapter Topics
सञ्जयेन धृतराष्ट्रंप्रति भीष्महननकथनम् ॥ १ ॥

Mahabharata - Bhishma Parva - Chapter Text

६-१३-० (३९१२०)
वैशंपायन उवाच। ६-१३-०क्ष् (३९८७)
अथ गावल्गणिर्विद्वान्संयुगादेत्य भारत ।
प्रत्यक्षदर्शी सर्वस्य भूतभव्यभविष्यवित् ॥ ६-१३-१ (३९१२१)
ध्यायते धृतराष्ट्राय सहसोत्पत्य दुःखितः ।
आचष्ट निहतं भीष्मं भरतानां पितामहम् ॥ ६-१३-२ (३९१२२)
सञ्जय उवाच। ६-१३-३क्ष् (३९८८)
सञ्जयोऽहं महाराज नमस्ते भरतर्षभ ।
हतो भीष्मः शान्तनवो भरतानां पितामहः ॥ ६-१३-३ (३९१२३)
ककुदं सर्वयोधानां धाम सर्वधनुष्मताम् ।
शरतल्पगतः सोऽद्य शेते कुरुपितामहः ॥ ६-१३-४ (३९१२४)
यस्य वीर्यं समाश्रित्य द्यूतं पुत्रस्तवाकरोत् ।
स शेते निहतो राजन्संख्ये भीष्मः शिखण्डिना ॥ ६-१३-५ (३९१२५)
यः सर्वान्पृथिवीपालान्समवेतान्महामृधे ।
जिगायैकरथेनैव काशिपुर्यां महारथः ॥ ६-१३-६ (३९१२६)
जामदग्न्यं रणे रामं योऽयुध्यदपसंभ्रमः ।
न हतो जामदग्न्येन स हतोऽद्य शिखण्डिना ॥ ६-१३-७ (३९१२७)
महेन्द्रसदृशः शौर्ये स्थैर्ये च हिमवानिव ।
समुद्र इव गाम्भीर्यो सहिष्णुत्वे धरासमः ॥ ६-१३-८ (३९१२८)
शरदंष्ट्रो धनुर्वक्त्रः खड्गजिह्वो दुरासदः ।
नरसिंहः पिता तेऽद्य पाञ्चाल्येन निपातितः ॥ ६-१३-९ (३९१२९)
पाण्डवानां महासैन्यं यं दृष्ट्वोद्यतमाहवे ।
प्रावेपत भयोद्विग्नं सिंह दृष्ट्वेव गोगणः ॥ ६-१३-१० (३९१३०)
परिरक्ष्य स सेनां ते दशरात्रमनीकहा ।
जगामास्तमिवादित्यः कृत्वा कर्म सुदुष्करम् ॥ ६-१३-११ (३९१३१)
यः स शक्र इवाक्षोभ्यो वर्षन्बाणान्सहस्रशः ।
जघान युधि योधानामर्बुदं दशभिर्दिनैः ॥ ६-१३-१२ (३९१३२)
स शेते निहतो भूमौ वातभग्न इव द्रुमः ।
तव दुर्मन्त्रिते राजन्यथा नार्हः स भारत ॥ ॥ ६-१३-१३ (३९१३३)

इति श्रीमन्महाभारते भीष्मपर्वणि भगवद्गीतापर्वणि त्रयोदशोऽध्यायः ॥

६-१३-४ ककुदं राज्ञां मध्ये ध्वजतुल्यम् ।धाम तेजः ॥
६-१३-७ अपसंभ्रमो निर्भयः ॥

---

भिस्मपर्व-अध्यय०१४
॥ श्रीः ॥
६.१४. अध्यायः १४

Mahabharata - Bhishma Parva - Chapter Topics
धृतराष्ट्रेण भीष्महननश्रवणात्परिशोचनपूर्वकं संजयंप्रति विस्तरेण भीष्मादियुद्धवर्णनचोदना ॥१ ॥

Mahabharata - Bhishma Parva - Chapter Text

६-१४-० (३९१३४)
धृतराष्ट्र उवाच। ६-१४-०क्ष् (३९८९)
कथं कुरूणामृषभो हतो भीष्मः शिखण्डिना ।
कथं रथात्स न्यपतत्पिता मे वासवोपमः ॥ ६-१४-१ (३९१३५)
कथमाचक्ष्व मे योधा हीना भीष्मेण संजय ।
बलिना देवकल्पेन गुर्वर्थे ब्रह्मचारिणा ॥ ६-१४-२ (३९१३६)
तस्मिन्हते महाप्राज्ञे महेष्वासे महाबले ।
महासत्वे नरव्याघ्रे किमु आसीन्मनस्तव ॥ ६-१४-३ (३९१३७)
आर्तिं परामाविशति मनः शंससि मे हतम् ।
कुरूणामृषभं वीरमकम्पं पुरुषर्षभम् ॥ ६-१४-४ (३९१३८)
के तं यान्तमनुप्राप्ताः के वास्यसन्पुरोगमाः ।
केऽतिष्ठन्के न्यवर्तन्त केऽन्ववर्तन्त सञ्जय ॥ ६-१४-५ (३९१३९)
के शूरा रथशार्दूलमद्भुतं क्षत्रियर्षभम् ।
तथाऽनीकं गाहमानं सहसा पृष्ठतोऽन्वयुः ॥ ६-१४-६ (३९१४०)
यस्तमोर्क इवापोहन्परसैन्यममित्रहा ।
सहस्ररश्मिप्रतिमः परेषां भयमादधत् ॥ ६-१४-७ (३९१४१)
अकरोद्दुष्करं कर्म रणे पाण्डुसुतेषु यः ।
ग्रसमानमनीकानि य एनं पर्यवारयन् ॥ ६-१४-८ (३९१४२)
कृतिनं तं दुराधर्षं सञ्जयास्य त्वमन्तिके ।
कथं शान्तनवं युद्धे पाण्डवाः प्रत्यवारयन् ॥ ६-१४-९ (३९१४३)
निकृन्तन्तमनीकानि शरदंष्ट्रं मनस्विनम् ।

चापव्यात्ताननं घोरमसिजिह्वं दुरासदम् ॥ ६-१४-१० (३९१४४)
अनर्हं पुरुषव्याघ्रं ह्रीमन्तमपराजितम् ।
पातयामास कौन्तेयः कथं तमजितं युधि ॥ ६-१४-११ (३९१४५)
उग्रधन्वानमुग्रेषुं वर्तमानं रथोत्तमे ।
परेषामुत्तमाङ्गानि प्रचिन्वन्तमथेषुभिः ॥ ६-१४-१२ (३९१४६)
पाण्डवानां महत्सैन्यं यं दृष्ट्वोद्यतमाहवे ।
कालाग्निमिव दुर्धर्षं समचेष्टत नित्यशः ॥ ६-१४-१३ (३९१४७)
परिकृष्य स सेनां तु दशरात्रमनीकहा ।
दगामास्तमिवादित्यः कृत्वा कर्म सुदुष्करम् ॥ ६-१४-१४ (३९१४८)
यः स शक्र इवाक्षय्यं वर्षं शरमयं क्षिपन् ।
जघान युधि योधानामर्बुदं दशभिर्दिनैः ॥ ६-१४-१५ (३९१४९)
स शेते निहतो भूमौ वातभुग्न इव द्रुमः ।
मम दुर्मन्त्रितेनाजौ यथा नार्हति भारतः ॥ ६-१४-१६ (३९१५०)
कथं शान्तनवं दृष्ट्वा पाण्डवानामनीकिनी ।
प्रहर्तुमशकत्तत्र भीष्मं भीमपराक्रमम् ॥ ६-१४-१७ (३९१५१)
कथं भीष्मेण संग्रामं प्राकुर्वन्पाण्डुनन्दनाः ।
कथं च नाजयद्भीष्मो द्रोणे जीवति सञ्जय ॥ ६-१४-१८ (३९१५२)
कृपे सन्निहिते तत्र भरद्वाजात्मजे तथा ।
भीष्मः प्रहरतां श्रेष्ठः कथं स निधनं गतः ॥ ६-१४-१९ (३९१५३)
कथं चातिरथस्तेन पाञ्चाल्येन शिखण्डिना ।
भीष्मो विनिहतो युद्धे देवैरपि दुरासदः ॥ ६-१४-२० (३९१५४)
यः स्पर्धते रणे नित्यं जामदग्न्यं महाबलम् ।
अजितं जामदग्न्येन शक्रतुल्यपराक्रमम् ॥ ६-१४-२१ (३९१५५)
तं हतं समरे भीष्मं महारथकुलोदितम् ।
सञ्जयाचक्ष्व मे वीरं येन शर्म न विद्महे ॥ ६-१४-२२ (३९१५६)
मामकाः के महेष्वासा नाजहुः सञ्जयाच्युतम् ।
दुर्योधनसमादिष्टाः के वीराः पर्यवारयन् ॥ ६-१४-२३ (३९१५७)
यच्छिखण्डिमुखाः सर्वे पाण्डवा भीष्ममभ्ययुः ।
कच्चित्ते कुरवः सर्वे नाजहुः सञ्जयाच्युतम् ॥ ६-१४-२४ (३९१५८)
अश्मसारमयं नूनं हृदयं सुदृढं मम ।
यच्छ्रुत्वा पुरुषव्याघ्रं हतं भीष्मं न दीर्यते ॥ ६-१४-२५ (३९१५९)
यस्मिन्सत्यं च मेधा च नीतिश्च भरतर्षभे ।
अप्रमेयाणि दुर्धर्षे कथं स निहतो युधि ॥ ६-१४-२६ (३९१६०)
मौर्वीघोषस्तनयुत्नुः पृषत्कपृषतो महान् ।
धनुर्ह्रादमहाशब्दो महामेघ इवोन्नतः ॥ ६-१४-२७ (३९१६१)
योऽभ्यवर्षत कौन्तेयान्सपाञ्चालान्ससृञ्जयान् ।

निघ्नन्परथान्वीरो दानवानिव वज्रभृत् ॥ ६-१४-२८ (३९१६२)
इष्वस्त्रसागरं घोरं बाणग्रहं दुरासदम् ।
कार्मुकोर्मिणमक्षय्यमद्वीपं चलमप्लवम् ॥ ६-१४-२९ (३९१६३)
गदासिमकरावासं हयावर्त्तं गजाकुलम् ।
पदातिमत्स्यकलिलं शङ्खदुन्दुभिनिःस्वनम् ॥ ६-१४-३० (३९१६४)
हयान्गाजपदातींश्च रथांश्च तरसा बहून् ।
निमज्जयन्तं समरे परवीरापहारिणम् ॥ ६-१४-३१ (३९१६५)
विदह्यमानं कोपेन तेजसा च परंतपम् ।
वेलेव मकरावासं के वीराः पर्यवारयन् ॥ ६-१४-३२ (३९१६६)
भीष्मो यदकरोत्कर्म समरे सञ्जयारिहा ।
दुर्योधनहितार्थाय के तस्यास्य पुरोऽभवन् ॥ ६-१४-३३ (३९१६७)
के रक्षन्दक्षिणं चक्रं भीष्मस्यामिततेजसः ।
पृष्ठतः के परान्वीरानपासेधन्यतव्रताः ॥ ६-१४-३४ (३९१६८)
के पुरस्तादवर्तन्त रक्षन्तो भीष्ममन्तिके ।
के रक्षन्नुत्तरं चक्रं वीरा वीरकस्य युध्यतः ॥ ६-१४-३५ (३९१६९)
वामे चक्रे वर्तमानाः केऽघ्नन्सञ्जय सृञ्जयान् ।
अग्नतोऽग्न्यमनीकेषु केऽभ्यरक्षन्दुरासदम् ॥ ६-१४-३६ (३९१७०)
पार्श्वतः केऽभ्यरक्षन्त गच्छन्तो दुर्गमां गतिम् ।
समूहे के परान्वीरान्प्रत्ययुध्यन्त सञ्जय ॥ ६-१४-३७ (३९१७१)
रक्ष्यमाणः कथं वीरैर्गोप्यमानाश्च तेन ते ।
दुर्जयानामनीकानि नाजयंस्तरसा युधि ॥ ६-१४-३८ (३९१७२)
सर्वलोकेश्वरस्येव परमस्य प्रजापतेः ।
कथं प्रहर्तुमपि ते शेकुः सञ्जय पाण्डवाः ॥ ६-१४-३९ (३९१७३)
यस्मिन्द्वीपे समाश्वस्य युध्यन्ते कुरवः परैः ।
तं निमग्नं नरव्याघ्रं भीष्मं शंससि सञ्जय ॥ ६-१४-४० (३९१७४)
यस्य वीर्यं समाश्रित्य मम पुत्रो बृहद्बलः ।
न पाण्डवानगणयत्कथं स निहतः परैः ॥ ६-१४-४१ (३९१७५)
यः पुरा विबुधैः सर्वैः सहाये युद्धदुर्मदः ।
काङ्क्षितो दानवान्घ्नद्भिः पिता मम महाव्रतः ॥ ६-१४-४२ (३९१७६)
यस्मिज्जाते महावीर्ये शान्तनुर्लोकविश्रुतः ।
शोकं दैन्यं च दुःस्वं च प्राजहात्स च तत्क्षणे ॥ ६-१४-४३ (३९१७७)
प्रोक्तं परायणं प्राज्ञं स्वधर्मनिरतं शुचिम् ।
वेदवेदाङ्गतत्वज्ञं कथं शंससि मे हतम् ॥ ६-१४-४४ (३९१७८)
सर्वास्त्रविनयोपेतं शान्तं दान्तं मनस्विनम् ।
हतं शान्तनवं श्रुत्वा मन्ये शेषं हतं बलम् ॥ ६-१४-४५ (३९१७९)
धर्मादधर्मो बलवान्संप्राप्त इति मे मतिः ।

यत्र वृद्धं गुरुं हत्वा राज्यमिच्छन्ति पाण्डवाः ॥ ६-१४-४६ (३९१८०)
जामदग्न्यः पुरा रामः सर्वास्त्रविदनुत्तमः ।
अम्बार्थमुद्यतः सङ्ख्ये भीष्मेण युधि निर्जितः ॥ ६-१४-४७ (३९१८१)
तमिन्द्रसमकर्माणं ककुदं सर्वधन्विनाम् ।
हतं शंससि मे भीष्मं किं नु दुःखमतः परम् ॥ ६-१४-४८ (३९१८२)
असकृत्क्षत्रियव्राताः सङ्ख्ये येन विनिर्जिताः ।
जामदग्न्येन वीरेण परवीरनिघातिना ।
न हतो यो महाबुद्धिः स हतोऽद्य शिखण्डिना ॥ ६-१४-४९ (३९१८३)
तस्मान्नूनं महावीर्याद्भार्गवाद्युद्धदुर्मदात् ।
तेजोवीर्यबलैर्भूयाञ्शिखण्डी द्रुपदात्मजः ॥ ६-१४-५० (३९१८४)
यः शूरं कृतिनं युद्धे सर्वशस्त्रविशारदम् ।
परमास्त्रविदं वीरं जघान भरतर्षभम् ॥ ६-१४-५१ (३९१८५)
के वीरास्तममित्रघ्नमन्वयुः शस्त्रसंसदि ।
शंस मे तद्यथा चासीद्युद्धं भीष्मस्य पाण्डवैः ॥ ६-१४-५२ (३९१८६)
योषेव हतवीरा मे सेन्म पुत्रस्य सञ्जय ।
अगोपमिव चोद्भ्रान्तं गोकुलं तद्बलं मम ॥ ६-१४-५३ (३९१८७)
पौरुषं सर्वलोकस्य परं यस्मिन्महाहवे ।
परासक्ते च वस्तस्मिन्कथमासीन्मनस्तदा ॥ ६-१४-५४ (३९१८८)
जीवितेऽप्यद्य सामर्थ्यं किमिवास्मासु सञ्जय ।
घातयित्वा महावीर्यं पितरं लोकधार्मिकम् ॥ ६-१४-५५ (३९१८९)
अगाधे सलिले मग्नां नावं दृष्ट्वेव पारगाः ।
भीष्मे हते भृशं दुःखान्मन्ये शोचन्ति पुत्रकाः ॥ ६-१४-५६ (३९१९०)
अद्रिसारमयं नूनं हृदयं मम सञ्जय ।
यच्छ्रुत्वा पुरुषव्याघ्रं हतं भीष्मं न दीर्यते ॥ ६-१४-५७ (३९१९१)
यस्मिन्नस्त्राणि मेधा च नीतिश्च पुरुषर्षभे ।
अप्रमेयाणि दुर्धर्षे कथं स निहतो युधि ॥ ६-१४-५८ (३९१९२)
न चास्त्रेण न शौर्येण तपसा मेधया न च ।
न धृत्या न पुनस्त्यागान्मृत्योः कश्चिद्विमुच्यते ॥ ६-१४-५९ (३९१९३)
कालो नूनं महावीर्यः सर्वलोकदुरत्ययः ।
यत्र शान्तनवं भीष्मं हतं शंससि सञ्जय ॥ ६-१४-६० (३९१९४)
पुत्रशोकाभिसंतप्तो महद्दुःखमचिन्तयन् ।
आशंसेऽहं परं त्राणं भीष्माच्छान्तनुनन्दनात् ॥ ६-१४-६१ (३९१९५)
यदादित्यमिवापश्यत्पतितं भुवि सञ्जय ।
दुर्योधनः शान्तनवं किं तदा प्रत्यपद्यत ॥ ६-१४-६२ (३९१९६)
नाहं स्वेषां परेषां वा बुद्ध्या सञ्जय चिन्तयन् ।
शेषं किंचित्प्रपश्यामि प्रत्यनीके महीक्षिताम् ॥ ६-१४-६३ (३९१९७)

दारुणः क्षत्रधर्मोऽयमृषिभिः संप्रदर्शितः ।
यत्र शान्तनवं हत्वा राज्यमिच्छन्ति पाण्डवाः ॥ ६-१४-६४ (३९१९८)
वयं वा राज्यमिच्छामो घातयित्वा महाव्रतम् ।
क्षत्रधर्मे स्थिताः पार्था नापराध्यन्ति पुत्रकाः ॥ ६-१४-६५ (३९१९९)
एतदार्येण कर्तव्यं कृच्छ्रास्वापत्सु सञ्जय ।
पराक्रमः पराशक्तिस्तत्तु तस्मिन्प्रतिष्ठितम् ॥ ६-१४-६६ (३९२००)
अनीकानि विनिघ्नन्तं ह्रीमन्तमपराजितम् ।
कथं शान्तनवं तातं पाण्डुपुत्रा न्यवारयन् ॥ ६-१४-६७ (३९२०१)
यथायुक्तान्यनीकानि कथं युद्धं महात्मभिः ।
कथं वा निहतो भीष्मः पिता सञ्जय मे परैः ॥ ६-१४-६८ (३९२०२)
दुर्योधनश्च कर्णश्च शकुनिश्चापि सौबलः ।
दुःशासनश्च कितवो हते भीष्मे किमब्रुवन् ॥ ६-१४-६९ (३९२०३)
यच्छरीरैरुपास्तीर्णा नरवारणवाजिनाम् ।
शरशक्तिमहाखड्गतोमराक्षां महाभयाम् ।
प्राविशन्कितवा मन्दाः सभां युद्धदुरासदाम् ॥ ६-१४-७० (३९२०४)
प्राणद्यूते प्रतिभये केऽदीव्यन्त नरर्षभाः ।
के जीयन्ते जितास्तत्र कृतलक्ष्या निपातिताः ।
अन्ये भीष्माच्चान्तनवात्तन्ममाचक्ष्व सञ्जय ॥ ६-१४-७१ (३९२०५)
न हि मे शान्तिरस्तीह श्रुत्वा देवव्रतं हतम् ।
पितरं भीमकर्माणं भीष्ममाहवशोभिनम् ॥ ६-१४-७२ (३९२०६)
आर्तिं मे हृदये रूढां महतीं पुत्रहानिजाम् ।
त्वं हि मे सर्पिषेवाग्निमुद्दीपयसि सञ्जय ॥ ६-१४-७३ (३९२०७)
महान्तं भारमुद्यम्य विश्रुतं सार्वलौकिकम् ।
दृष्ट्वा विनिहतं भीष्मं मन्ये शोचन्ति पुत्रकाः ॥ ६-१४-७४ (३९२०८)
श्रोष्यामि तानि दुःखानि दुर्योधनकृतान्यहम् ।
तस्मान्मे सर्वमाचक्ष्व यद्वृत्तं तत्र सञ्जय ॥ ६-१४-७५ (३९२०९)
यद्वृत्तं तत्र संग्रामे मन्दस्याबुद्धिसंभवम् ।
अपनीतं सुनीतं यत्तन्ममाचक्ष्व सञ्जय ॥ ६-१४-७६ (३९२१०)
यत्कृतं तत्र संग्रामे भीष्मेण जयमिच्छता ।
तेजोयुक्तं कृतास्त्रेण शंस तच्चाप्यशेषतः ॥ ६-१४-७७ (३९२११)
यथा तदभवद्युद्धं कुरुपाण्डवसेनयोः ।
क्रमेण येन यस्मिंश्च काले यच्च यथाऽभवत् ॥ ॥ ६-१४-७८ (३९२१२)

इति श्रीमन्महाभारते भीष्मपर्वणि भगवद्गीतापर्वणि
चतुर्दशोऽध्यायः ॥

Mahabharata - Bhishma Parva - Chapter Footnotes

६-१४-१ अस्य त्वमन्तिके स्थित्वा सर्वं दृष्टवानसीति शेषः ॥
६-१४-१२ प्रचिन्वन्तं पुष्पवदाददानम् ॥
६-१४-१३ समचेष्टत म्रियमाणपशुवद्धस्तपादविक्षेपं कृतवत् ॥
६-१४-२३ अजुस्त्यक्तवन्तः ॥
६-१४-२७ मौर्वीघोषेण स्तनयित्नुर्गर्जन्मेघ इव ।पृषत्कपृषतो बाणबिन्दुः ॥
६-१४-३४ अपासेधन् न्यवारयन् ॥
६-१४-४४ प्रोक्त लोके ख्याढम् ॥
६-१४-४५ सर्वास्त्रविनयोपेतं सर्वास्त्रशिक्षायुक्तम् ॥
६-१४-५४ परासक्ते परलोकप्रिये ॥

---

भिस्मपर्व-अध्यय०१५
॥ श्रीः ॥
६.१५. अध्यायः १५

Mahabharata - Bhishma Parva - Chapter Topics
दुर्योधनेन दुःशासनंप्रति भीष्मरक्षणाज्ञापनम् ॥ १ ॥

Mahabharata - Bhishma Parva - Chapter Text

६-१५-० (३९२१३)
सञ्जय उवाच। ६-१५-०क्ष् (३९९०)
त्वद्युक्तोऽयमनुप्रश्नो महाराज यथार्हसि ।
न तु दुर्योधने दोषमिममासङ्क्तुमर्हसि ॥ ६-१५-१ (३९२१४)
य आत्मनो दुश्चरितादशुभं प्राप्नुयान्नरः ।
एनसा तेन नान्यं स उपाशङ्कितुमर्हति ॥ ६-१५-२ (३९२१५)
महाराज मनुष्येषु निन्द्यं यः सर्वमाचरेत् ।
स वध्यः सर्वलोकस्य निन्दितानि समाचरन् ॥ ६-१५-३ (३९२१६)
निकारो निकृतिप्रज्ञैः पाण्डवैस्त्वत्प्रतीक्षया ।
अनुभूतः सहामात्यैः क्षान्तश्च सुचिरं वने ॥ ६-१५-४ (३९२१७)
हयानां च गजानां च राज्ञां चामिततेजसाम् ।
प्रत्यक्षं यन्मया दृष्टं दृष्टं योगबलेन च ॥ ६-१५-५ (३९२१८)
शृणु तत्पृथिवीपाल मा च शोके मनः कृथाः ।
दिष्टमेतत्पुरा नूनमिदमेव नराधिप ॥ ६-१५-६ (३९२१९)
नमस्कृत्वा प्रवक्ष्यामि पाराशर्याय धीमते ।

यस्य प्रसादाद्दिव्यं तत्प्राप्तं ज्ञानमनुत्तमम् ॥ ६-१५-७ (३९२२०)
दृष्टिश्चातीन्द्रिया राजन्दूराच्छ्रवणमेव च ।
परचित्तस्य विज्ञानमतीतानागतस्य च ॥ ६-१५-८ (३९२२१)
व्युत्थितोत्पत्तिविज्ञानमाकाशे च गतिः शुभा ।
अस्त्रैरसङ्गो युद्धेषु वरदानान्महात्मनः ॥ ६-१५-९ (३९२२२)
श्रृणु मे विस्तरेणेदं विचित्रं परमाद्भुतम् ।
भरतानामभूद्युद्धं यथा तद्रोमहर्षणम् ॥ ६-१५-१० (३९२२३)
तेष्वनीकेषु यत्तेषु व्यूढेषु च विधानतः ।
दुर्योधनो महाराज दुःशासनमथाब्रवीत् ॥ ६-१५-११ (३९२२४)
दुःशासन रथास्तूर्णं युज्यन्तां भीष्मरक्षिणः ।
अनीकानि च सर्वाणि शीघ्रं त्वमनुचोदय ॥ ६-१५-१२ (३९२२५)
अयं स मामभिप्राप्तो वर्षपूगाभिचिन्तितः ।
पाण्डवानां ससैन्यानां कुरूणां च समागमः ॥ ६-१५-१३ (३९२२६)
नातः कार्यतमं मन्ये रणे भीष्मस्य रक्षणात् ।
हन्युद्गुप्तो ह्यसौ पार्थान्सोमकांश्च ससृञ्जयान् ॥ ६-१५-१४ (३९२२७)
अब्रवीच्च विशुद्धात्मा नाहं हन्यां शिखण्डिनाम् ।
श्रूयते स्त्री ह्यसौ पूर्वं तस्मादूर्त्यो रणे मम ॥ ६-१५-१५ (३९२२८)
तस्माद्भीष्मो रक्षितव्यो विशेषेणेति मे मतिः ।
शिखण्डिनो वधे यत्ताः सर्वे तिष्ठन्तु मामकाः ॥ ६-१५-१६ (३९२२९)
तथा प्राच्याः प्रतीच्याश्च दाक्षिणात्योत्तरापथाः ।
सर्वथाऽस्त्रेषु कुशलास्ते रक्षन्तु पितामहम् ॥ ६-१५-१७ (३९२३०)
अरक्ष्यमाणं हि वृको हन्यात्सिंहं महाबलम् ।
मा सिंहं जम्बुकेनेव घातयामः शिखण्डिना ॥ ६-१५-१८ (३९२३१)
वामं चक्रं युधामन्युरुत्तमौजाश्च दक्षिणम् ।
गोप्तारौ फाल्गुनं प्राप्तौ फाल्गुनोपि शिखण्डिनः । ६-१५-१९ (३९२३२)
संरक्ष्यमाणः पार्थेन भीष्मेण च विवर्जितः ।
यथा न हन्याद्गाङ्गेयं दुःशासन तथा कुरु ॥ ॥ ६-१५-२० (३९२३३)

इति श्रीमन्महाभारते भीष्मपर्वणि भगवद्गीतापर्वणि
पञ्चदशोऽध्यायः ॥

Mahabharata - Bhishma Parva - Chapter Footnotes

६-१५-१ आसङ्क्तं आसञ्जयितुम् ॥
६-१५-२ एनसा पापेन ॥
६-१५-९ व्युत्थितस्य उच्छास्त्रवर्तिन उत्पत्तिः कारणं तस्य विज्ञानम् ॥
६-१५-११ व्यूढेषु व्यूहरचनया स्थितेषु ॥

भिस्मपर्व-अध्यय०१६
॥ श्रीः ॥
६.१६. अध्यायः १६

Mahabharata - Bhishma Parva - Chapter Topics
कुरुपाण्डवसेनावर्णनम् ॥ १ ॥

Mahabharata - Bhishma Parva - Chapter Text

६-१६-० (३९२३४)
सञ्जय उवाच। ६-१६-०क्ष् (३९९१)
ततो रजन्यां व्युष्टायां शब्दः समभवन्महान् ।
क्रोशतां भूमिपलानां युज्यतां युज्यतामिति ॥ ६-१६-१ (३९२३५)
शङ्खदुन्दुभिघोषैश्च सिंहनादैश्च भारत ।
हयहेषितनादैश्च रथनेमिस्वनैस्तथा ॥ ६-१६-२ (३९२३६)
गाजानां बृहतां चैव योधानां चापि गर्जताम् ।
क्ष्वेलितास्फोटितोत्क्रुष्टैस्तुमुलं सर्वतोऽभवत् ॥ ६-१६-३ (३९२३७)
उदतिष्ठन्महाराज सर्वं युक्तमशेषतः ।
सूर्योदये महत्सैन्यं कुरुपाण्डवसेनयोः ॥ ६-१६-४ (३९२३८)
राजेन्द्र तव पुत्राणां पाण्डवानां तथैव च ।
दुष्प्रधृष्याणि चास्त्राणि सशस्त्रकवचानि च ॥ ६-१६-५ (३९२३९)
ततः प्रकाशे सैन्यानि समदृश्यन्त भारत ।
त्वदीयानां परेषां च शस्त्रवन्ति महान्ति च ॥ ६-१६-६ (३९२४०)
तत्र नागा रथाश्चैव जाम्बूनदपरिष्कृताः ।
विभ्राजमाना दृश्यन्ते मेघा इव सविद्युतः ॥ ६-१६-७ (३९२४१)
रथानीकान्यदृश्यन्त नगराणीव भूरिशः ।
अतीव शुशुभे तत्र पिता ते पूर्णचन्द्रवत् ॥ ६-१६-८ (३९२४२)
धनुर्भिर्ऋष्टिभिः खड्गैर्गदाभिः शक्तितोमरैः ।
योधाः प्रहरणैः शुभ्रैस्तेष्वनीकेष्ववस्थिताः ॥ ६-१६-९ (३९२४३)
गजाः पदाता रथिनस्तुरगाश्च विशांपते ।
व्यतिष्ठन्वागुराकाराः शतशोऽथ सहस्रशः ॥ ६-१६-१० (३९२४४)
ध्वजा बहुविधाकारा व्यदृश्यन्त समुच्छ्रिताः ।
स्वेषां चैव परेषां च द्युतिमन्तः सहस्रशः ॥ ६-१६-११ (३९२४५)
काञ्चना मणिचित्राङ्गा ज्वलन्त इव पावकाः ।
अर्चिष्मन्तो व्यरोचन्त गजारोहाः सहस्रशः ॥ ६-१६-१२ (३९२४६)

महेन्द्रकेतवः शुभ्रा महेन्द्रसदनेष्विव ।
सन्नद्धास्ते प्रवीराश्च ददृशुर्युद्धकाङ्क्षिणः ॥ ६-१६-१३ (३९२४७)
उद्यतैरायुधैश्चित्रास्तलबद्धाः कलापिनः ।
ऋषभाक्षा मनुष्येन्द्राश्चमूमुखगता बभुः ॥ ६-१६-१४ (३९२४८)
शकुनिः सौबलः शल्य आवन्त्योऽथ जयद्रथः ।
विन्दानुविन्दौ कैकेयाः काम्भोजश्च सुदक्षिणः ॥ ६-१६-१५ (३९२४९)
श्रुतायुधश्च कालिङ्गो जयत्सेनश्च पार्थिवः ।
बृहद्बलश्च कौशल्यः कृतवर्मा च सात्वतः ॥ ६-१६-१६ (३९२५०)
दशैते पुरुषव्याघ्राः शूराः परिघबाहवः ।
अक्षौहिणीनां पतयो यज्वानो भूरिदक्षिणाः ॥ ६-१६-१७ (३९२५१)
एते चान्ये च बहवो दुर्योधनवशानुगाः ।
राजानो राजपुत्राश्च नीतिमन्तो महारथाः ॥ ६-१६-१८ (३९२५२)
सन्नद्धाः समदृश्यन स्वेष्वनीकेष्ववस्थिताः ।
बद्धकृष्णाजिनाः सर्वे बलिनो युद्धशालिनः ॥ ६-१६-१९ (३९२५३)
हृष्टा दुर्योधनस्यार्थे ब्रह्मलोकाय दीक्षिताः ।
समर्था दश वाहिन्यः परिगृह्य व्यवस्थिताः ॥ ६-१६-२० (३९२५४)
एकादशी धार्तराष्ट्री कौरवाणां महाचमूः ।
अग्रतः सर्वसैन्यानां यत्र शान्तनवोऽग्रणीः ॥ ६-१६-२१ (३९२५५)
श्वेतोष्णीषं श्वेतहयं श्वेतवर्माणमच्युतम् ।
अपश्याम महाराज भीष्मं चन्द्रमिवोदितम् ॥ ६-१६-२२ (३९२५६)
हेमतालध्वजं भीष्मं राजते स्यन्दते स्थितम् ।
श्वेताभ्र इव तीक्ष्णांशुं ददृशुः कुरुपाण्डवाः ॥ ६-१६-२३ (३९२५७)
दृष्ट्वा चमूमुखे भीष्मं समकम्पन्त पाण्डवाः ।
सृञ्जयाश्च महेष्वासा धृष्टद्युम्नपुरोगमाः ।
जृम्भमाणं महासिंहं दृष्ट्वा क्षुद्रमृगा यथा ॥ ६-१६-२४ (३९२५८)
धृष्टद्युम्नमुखाः सर्वे समुद्विविजिरे मुहुः ।
एकादशैताः श्रीजुष्टा वाहिन्यस्तव पार्थिव ॥ ६-१६-२५ (३९२५९)
पाण्डवानां तथा सप्त महापुरुषपालिताः ।
उन्मत्तमकरावर्तौ महाग्राहसमाकुलौ ॥ ६-१६-२६ (३९२६०)
युगान्ते समवेतौ द्वौ दृश्येते सागराविव ।
नैव नस्तादृशो राजन्दृष्टपूर्वो न च श्रुतः ।
अनीकानां समेतानां कौरवाणां तथाविधः ॥ ॥ ६-१६-२७ (३९२६१)

इति श्रीमन्महाभारते भीष्मपर्वणि भगवद्गीतापर्वणि षोडशोऽध्यायः ॥

Mahabharata - Bhishma Parva - Chapter Footnotes

६-१६-४ युक्तं सन्नद्धम् ।अशेषतः सर्वप्रकारैः ॥
६-१६-१० वागुराकाराः परेषां बन्धनार्थमित्यर्थः ॥
६-१६-१४ तलबद्धाः तलं ज्याधातत्राणं बद्धं यैस्ते ।कलापिनः तूणवन्तः ॥
६-१६-२७ तथाविधः संमर्द इति शेषः ॥

---

भिस्मपर्व-अध्यय०१७
॥ श्रीः ॥
६.१७. अध्यायः १७

Mahabharata - Bhishma Parva - Chapter Topics
युद्धाय कुरुसेनानिर्याणम् ॥ १ ॥

Mahabharata - Bhishma Parva - Chapter Text

६-१७-० (३९२६२)
सञ्जय उवाच। ६-१७-०क्ष् (३९९२)
यथा स भगवान्व्यासः कृष्णद्वैपायनोऽब्रवीत् ।
तथैव सहिताः सर्वे समाजग्मुर्महीक्षितः ॥ ६-१७-१ (३९२६३)
मघाविषयगः सोमस्तद्दिनं प्रत्यपद्यत ।
दीप्यमानाश्च संपेतुर्दिवि सप्त महाग्रहाः ॥ ६-१७-२ (३९२६४)
द्विधाभूत इवादित्य उदये प्रत्यदृश्यत ।
ज्वलन्त्या शिखया भूयो भानुमानुदितो रविः ॥ ६-१७-३ (३९२६५)
ववाशिरे च दीप्तायां दिशि गोमायुवायसाः ।
लिप्समानाः शरीराणि मांसशोणितभोजनाः ॥ ६-१७-४ (३९२६६)
अहन्यहनि पार्थानां वृद्धः कुरुपितामहः ।
भरद्वाजात्मजश्चैव प्रातरुत्थाय संयतौ ॥ ६-१७-५ (३९२६७)
जयोऽस्तु पाण्डुपुत्राणामित्यूचतुरिन्दमौ ।
युयुधाते तवार्थाय यथा स समयः कृतः ॥ ६-१७-६ (३९२६८)
सर्वधर्मविशेषज्ञः पिता देवव्रतस्तव ।
समानीय महीपालानिदं वचनमब्रवीत् ॥ ६-१७-७ (३९२६९)
इदं वः क्षत्रिया द्वारं स्वर्गायापावृतं महत् ।
गच्छध्वं तेन शक्रस्य ब्रह्मणः सहलोकताम् ॥ ६-१७-८ (३९२७०)
एष वः शाश्वतः पन्थाः पूर्वैः पूर्वतरैः कृतः ।
संभावयध्वमात्मानमव्यग्रमनसो युधि ॥ ६-१७-९ (३९२७१)
नाभागोऽथ ययातिश्च मान्धाता नहुषो नृगः ।

संसिद्धाः परमं स्थानं गताः कर्मभिरीदृशैः ॥ ६-१७-१० (३९२७२)
अधर्मः क्षत्रियस्यैष यद्व्याधिमरणं गृहे ।
यदयोनिधनं याति सोऽस्य धर्मः सनातनः ॥ ६-१७-११ (३९२७३)
एवमुक्ता महीपाला भीष्मेण भरतर्षभ ।
निर्ययुः स्वान्यनीकानि शोभयन्तो रथोत्तमैः ॥ ६-१७-१२ (३९२७४)
स तु वैकर्तनः कर्णः सामात्यः सह बन्धुभिः ।
न्यासितः समरे शस्त्रं भीष्मेण भरतर्षभ ॥ ६-१७-१३ (३९२७५)
अपेतकर्णाः पुत्रास्ते राजनश्चैव तावकाः ।
निर्ययुः सिंहनादेन नादयन्तो दिशो दश ॥ ६-१७-१४ (३९२७६)
श्वेतैश्छत्रैः पताकाभिर्ध्वजवारणवाजिभिः ।
तान्यनीकानि शोभन्ते गजैरथ पदातिभिः ॥ ६-१७-१५ (३९२७७)
भेरीपणवशब्दैश्च दुन्दुभीनां च निःस्वनैः ।
रथनेमिनिनादैश्च बभूवाकुलिता मही ॥ ६-१७-१६ (३९२७८)
काञ्चनाङ्गदकेयूरैः कार्मुकैश्च महारथाः ।
भ्राजमाना व्यराजन्त साग्नयः पर्वता इव ॥ ६-१७-१७ (३९२७९)
तालेन महता भीष्मः पञ्चतारेण केतुना ।
विमलादित्यसंकाशस्तस्थौ कुरुचमूपरि ॥ ६-१७-१८ (३९२८०)
ये त्वदीया महेष्वासा राजानो भरतर्षभ ।
अवर्तन्त यथादेशं राजञ्शान्तनवस्य ते ॥ ६-१७-१९ (३९२८१)
स तु गोवासनः शैब्यः सहितः सर्वराजभिः ।
ययौ मातङ्गराजेन राजार्हेण पताकिना ।
पद्मवर्णस्त्वनीकानां सर्वेषामग्रतः स्थितः ॥ ६-१७-२० (३९२८२)
अश्वत्थामा ययौ यत्तः सिंहलाङ्गूलकेतुना ।
श्रुतायुधश्चित्रसेनः पुरुमित्रो विविंशतिः ॥ ६-१७-२१ (३९२८३)
शल्यो भूरिश्रवाश्चैव विकर्णश्च महारथः ।
एते सप्त महेष्वासा द्रोणपुत्रपुरोगमाः ॥ ६-१७-२२ (३९२८४)
स्यन्दनैर्वरवर्माणो भीष्मस्यासन्पुरोगमाः ।
तेषामपि महोत्सेधाः शोभयन्तो रथोत्तमान् ॥ ६-१७-२३ (३९२८५)
भ्राजमाना व्यरोचन्त जाम्बूनदमया ध्वजाः ।
जाम्बूनदमयी वेदी कमण्डलुविभूषिता ॥ ६-१७-२४ (३९२८६)
केतुराचार्यमुख्यस्य द्रोणस्य धनुषा सह ।
अनेकशतसाहस्रमनीकमनुकर्षतः ॥ ६-१७-२५ (३९२८७)
महान्दुर्योधनस्यासीन्नागो मणिमयो ध्वजः ।
तस्य पौरवकालिङ्गकाम्भोजाः समुदक्षिणाः ॥ ६-१७-२६ (३९२८८)
क्षेमधन्वा च शल्यश्च तस्थुः प्रमुखतो रथाः ।
स्यन्दनेन महार्हेण केतुना वृषभेण च ।

प्रकर्षन्नेव सेनाग्नं मागधस्य कृपो ययौ ॥ ६-१७-२७ (३९२८९)
तदङ्गपतिनां गुप्तं कृपेण च मनस्विना ।
शारदाम्बुधरप्रख्यं प्राच्यानां सुमहद्बलम् ॥ ६-१७-२८ (३९२९०)
अनीकप्रमुखे तिष्ठन्वराहेण महायशाः ।
शुशुभे केतुमुख्येन राजतेन जयद्रथः ॥ ६-१७-२९ (३९२९१)
शतं रतसहस्राणां तस्यासन्वशवर्तिनः ।
अष्टौ नागसहस्राणि सादिनामयुतानि षट् ॥ ६-१७-३० (३९२९२)
तत्सिन्धुपतिना राज्ञा पालितं ध्वजिनीमुखम् ।
अनन्तरथनागाश्वमशोभत महद्बलम् ॥ ६-१७-३१ (३९२९३)
षष्ट्या रथसहस्रैस्तु नागानामयुतेन च ।
पतिः सर्वकलिङ्गानां ययौ केतुमता सह ॥ ६-१७-३२ (३९२९४)
तस्य पर्वतसंकाशा व्यरोचन्त महागजाः ।
यन्त्रतोमरतूणीरैः पताकाभिः सुशोभिताः ॥ ६-१७-३३ (३९२९५)
शुशुभे केतुमुख्येन पावकेन कलिङ्गकः ।
श्वेतच्छत्रेण निष्केण चामरव्यजनेन च ॥ ६-१७-३४ (३९२९६)
केतुमानपि मातङ्गं विचित्रपरमाङ्कुशम् ।
आस्थितः समरे राजन्मेघस्थ इव भानुमान् ॥ ६-१७-३५ (३९२९७)
तेजसा दीप्यमानस्तु वारणोत्तममास्थितः ।
भगदत्तो ययौ राजा यथा वज्रधरस्तथा ॥ ६-१७-३६ (३९२९८)
गजस्कन्धगतावास्तां भगदत्तेन संमितौ ।
विन्दानुविन्दावावन्त्यौ केतुमन्तमनुव्रतौ ॥ ६-१७-३७ (३९२९९)
स रथानीकवान्व्यूहो हस्त्यङ्गो नृपशीर्षवान् ।
वाजिपक्षः पतत्युग्रः प्रहसन्सर्वतोमुखः ॥ ६-१७-३८ (३९३००)
द्रोणेन विहितो राजन्राज्ञा शान्तनवेन च ।
तथैवाचार्यपुत्रेण बाह्लीकेन कृपेम च ॥ ॥ ६-१७-३९ (३९३०१)

इति श्रीमन्महाभारते भीष्मपर्वणि भगवद्गीतापर्वणि सप्तदशोऽध्यायः ॥
Mahabharata - Bhishma Parva - Chapter Footnotes

६-१७-२ मघाविषयगः सोमस्तद्दिनं प्रत्यपद्यतेति ।मघा
पित्र्यां नक्षत्रं तस्य विषयो देशः पितृलोकस्तद्गतः
सोमः। कुरुपाण्डवयुद्धारम्भदिनमुक्तं भारतसावित्र्याम्-हेमन्ते
प्रथमे मासि शुक्लपक्षे त्रयोदशीम्। प्रवृत्तं भारतं
युद्धं नक्षत्रे यमदैवते। प्रथमे मार्गशीर्षे। अत्र
त्रयोदशीशब्देन तद्युक्ता चतुर्दश्येव ग्राह्या। अर्जुनेन
हतो भीष्मो माघमासेऽसिताष्टमीति। त्रयोदश्यां तु मध्याह्ने

भारद्वाजो निपातित इति। तत्रैव युद्धस्य दशमे पञ्चदशे चाह्नि तयोर्भीष्मद्रोणयोरष्टमीत्रयोदशीसंयोगदर्शनात्। अत्र पौषेति माघशब्दो मकरायनाभिप्रायेण। तदानीं तत्संभवात् असिताष्टमीति छेदः। अन्यथा सप्तमीद्वादश्योरेव तयोर्हननं प्राप्नोति। यत्तु अमावास्यायां दुर्योधनहननं तत्रैवोक्तं तत्राप्यमावास्याशब्द इष्टिदिने प्रतिपद्येव प्रयुक्तो वेदितव्यः। यमदैवते इति भरणी न ग्राह्या किंतु युग्मदैवतं मृगशीर्षमेव ग्राह्यम्। तस्य हि पूर्वदलं शुक्रदैवत्यत्वादासुरं उत्तरार्धं बुधदैवत्यत्वाद्दैव्यम्। तेन तत्रासुराणामुपरमो देवानामभ्युदयश्च सिद्ध्यति। किंच-चत्वारिंशदहान्यद्य द्वे च मे निःसृतस्य वै। पुष्येण संप्रयातोस्मि श्रवणे पुनरागत इति युद्धारम्भादष्टादशेऽह्नि तीर्थयात्रात आगतस्य बलदेवस्य वचनात् श्रवणे युद्धसमाप्तिर्दृश्यते। ततः प्राचीनेऽष्टादशर्क्षे मृगशीर्ष एव युद्धारम्भः संभवति नत्वेकविंशे भरण्याम्। अष्टादशदिनमध्ये नक्षत्रत्रयक्षयस्य कल्पयितुमयुक्तत्वात् कार्तिकी कृत्तिकायोगानुपातेन चतुर्दश्यां मृगस्यैव संभावनाच्च। एतेन युद्धारम्भं प्रकृत्य- मघाविषयगः सोमस्तद्दिनं प्रत्यपद्यतेति भीष्मपर्वणि सञ्जयवाक्यान्मघायां युद्धारम्भ इत्यपि निरस्तम्। बलदेववाक्यविरुद्धत्वात् । शब्दार्थस्तु मघापदेन तत्सहचराः पितरो लक्ष्यन्ते। तेन युद्धे मृतानां उत्तमदेहप्रदानार्थं चन्द्रस्तदा पितृलोके सन्निहितोऽभूदिति। स्वर्गिणां दिव्यदेहलाभश्चन्द्राधीन इति शास्त्रप्रसिद्धेः । तथा द्वादश्यां रात्रियुद्धे चन्द्रोदयकाले-त्रिभागमात्रशेषायां रात्रौ युद्धमवर्ततेत्युक्तम् तत्र त्रिभागेत्यस्य त्रिमुहूर्तशेषायामित्यर्थः। तथा-अष्टपञ्चाशतं रात्र्यः शयानस्याद्य मे गताः इति भीष्मवचनं तु-माघोऽयं समनु प्राप्तः- त्रिभगमात्रः पक्षोऽयं इति वाक्यशेषानुसारात्। अशतं शतहीनं यथा स्यात्तथा अष्टपञ्च अष्टपञ्चाशद्रात्रयो व्यतीता इति व्याख्येयम्। विलोमशोधनात् अष्टपञ्चाशदूनं शतं रात्रयो द्वाचत्वारिंशद्रात्रयो व्यतीता इत्यर्थः। तथाच पौषकृष्णाष्टमीतो माघशुक्लपञ्चम्यां तावती दिनसंख्या पूर्यते पक्षस्य च तृतीयो भागो गतो भवति। ततत्राप्येकतिथिक्षयात् पञ्चम्याः द्विचत्वारिंशत्तमत्वं ज्ञेयम्। शेषो भवितुमर्हतीत्यत्र कार्यशेषो देहत्यागादिरेव शेषो नतु पक्षशेष इति व्याख्या ज्ञेया। तत्रायं

निष्कर्षः। कार्तिकशुक्लद्वादश्यां रेवत्यां कृष्णप्रयाणम्। ततो
निष्कर्षः। कार्तिकशुक्लद्वादश्यां रेवत्यां कृष्णप्रयाणम्। ततो
मार्गशीर्षकृष्णपञ्चम्यां पुष्ये सेनयोर्निर्याणम्। ततः पञ्चम्यां
उपरि षष्ठीमारभ्य सप्तदिनानि गणयित्वा तदुपर्यष्टमेऽह्नि अमावास्या
भविष्यतीत्यनेन त्रयोदशदिनात्मकोऽयं कृष्णपक्षो महोत्पातजनक
इति सूचितम्। क्षीणयोश्च तिथ्योः पक्षान्तरे पुनर्वृद्ध्या
संख्यापूरणेभवतीति मार्गशीर्षकृष्णपञ्चमीमारभ्य
पौषशुक्लप्रतिपत् द्विचत्वारिंशी तिथिर्भवतीति बलदेववाक्योक्ता
दिनसंख्या नक्षत्रसंख्या चानुगृहीत भवति। यत्तु- सप्तमाच्चापि
दिवसादमावाक्या भविष्यति। संग्राममयोजयेत्तत्र तां ह्याहुः
शक्रदैवताम्। प्रयाध्वं वै कुरुक्षेत्रं पुष्यो द्येति पुनःपुनरिति
दुर्योधनवाक्यम् तत्र संग्राममित्यनेन संग्रामे जयसाधनं
धाराबन्धादिकं तस्यां योजयेदित्युक्तम्। शक्रदैवतामित्यनेन तस्यां
ज्येष्ठानक्षत्रयोग उच्यते। सच तिथिद्वयक्षयात्तत्रासंभवन्नपि
तत्र तिथिवदेव नक्षत्रक्षयाद्वा तिथिनक्षत्रयोराद्यन्तयोगाद्वा
ज्ञेय इति सर्वं समञ्जसम्। महाग्रहाः राहुकेतो रुपग्रहत्वात्सप्तैव
॥
६-१७-४ ववाशिरे शब्दं कृतवन्तः ॥
६-१७-११ अयोनिधनं अयसा शस्त्रेण मरणम् ॥
६-१७-१८ तालेन ध्वजभूतेन ॥
६-१७-२० गोवासनः तद्द्रेश्यः ॥
६-१७-२९ वराहेण केतुमुख्येनेति संबन्धः ॥
६-१७-३४ निष्केण कण्ठाभरणेन ॥

---

भिस्मपर्व-अध्यय०१८
॥ श्रीः ॥
६.१८. अध्यायः १८

Mahabharata - Bhishma Parva - Chapter Topics
कुरुसेनावर्णनम् ॥ १ ॥

Mahabharata - Bhishma Parva - Chapter Text

६-१८-० (३९३०२)
सञ्जय उवाच। ६-१८-०क्ष् (३९९३)
ततो मुहूर्तात्तुमुलः शब्दो हृदयकम्पनः ।

अश्रूयत महाराज योधानां प्रयुयुत्सताम् ॥ ६-१८-१ (३९३०३)
शङ्खदुन्दुभिघोषैश्च वारणानां च बृंहितैः ।
नोमिघोषै रथानां च दीर्यतीव वसुन्धरा ॥ ६-१८-२ (३९३०४)
हयानां हेषमाणानां योधानां चैव गर्जताम् ।
क्षणेनैव नभो भूमिः शब्देनापूरितं तदा ॥ ६-१८-३ (३९३०५)
पुत्राणां तव दुर्धर्ष पाण्डवानां तथैव च ।
समकम्पन्त सैन्यानि परस्परसमागमे ॥ ६-१८-४ (३९३०६)
तत्र नागा रथाश्चैव जाम्बूनदविभूषिताः ।
भ्राजमाना व्यदृश्यन्त मेघा इव सविद्युतः ॥ ६-१८-५ (३९३०७)
ध्वजा बहुविधाकारास्तावकानां नराधिप ।
काञ्चनाङ्गदिनो रेजुर्ज्वलिता इव पावकाः ॥ ६-१८-६ (३९३०८)
स्वेषां चैव परेषां च समदृश्यन्त भारत ।
महेन्द्रकेतवः शुभ्रा महेन्द्रसदनेष्विव ॥ ६-१८-७ (३९३०९)
काञ्चनैः कवचैर्वीरा ज्वलनार्कसमप्रभैः ।
सन्नद्धाः समदृश्यन्त ज्वलनार्कसमप्रभाः ॥ ६-१८-८ (३९३१०)
कुरुयोधवरा राजन्विचित्रायुधकार्मुकाः ।
उद्यतैरायुधैश्चित्रैस्तलबद्धाः पताकिनः ॥ ६-१८-९ (३९३११)
ऋषभाक्षा महेष्वासाश्चमूमुखगता बभुः ।
पृष्ठगोपास्तु भीष्मस्य पुत्रास्तव नराधिप ।
दुःशासनो दुर्विषहो दुर्मुखो दुःसहस्तथा ॥ ६-१८-१० (३९३१२)
विविंशतिश्चित्रसेनो विकर्णश्च महारथः ।
सत्यव्रतः पुरुमित्रो जयो भूरिश्रवाः शलः ॥ ६-१८-११ (३९३१३)
रथा विंशतिसाहस्रास्तथैषामनुयायिनः ।
अभीषाहाः शूरसेनाः शिबयोऽथ वसातयः ॥ ६-१८-१२ (३९३१४)
शाल्वा मत्स्यास्तथाम्बष्ठास्त्रैगर्ताः केकयास्तथा ।
सौवीराः कैतवाः प्राच्याः प्रतीच्येदीच्यवासिनः ॥ ६-१८-१३ (३९३१५)
द्वादशैते जनपदाः सर्वे शूरास्तनुत्यजः ।
महता रथवंशेन ते ररक्षुः पितामहम् ॥ ६-१८-१४ (३९३१६)
अनीकं दशसाहस्रं कुञ्जराणां तरस्विनाम् ।
मागधो यत्र नृपतिस्तद्रथानीकमन्वयात् ॥ ६-१८-१५ (३९३१७)
रथानां चक्ररक्षाश्च पादरक्षाश्च दन्तिनाम् ।
अभवन्वाहिनीमध्ये शतानामयुतानि षट् ॥ ६-१८-१६ (३९३१८)
पादाताश्चाग्रतो गच्छन्धनुश्चर्मासिपाणयः ।
अनेकशतसाहस्रा नखरप्रासयोधिनः ॥ ६-१८-१७ (३९३१९)
अक्षौहिण्यो दशैका च तव पुत्रस्य भारत ।
अदृश्यत महाराज गङ्गेव यमुनान्तरा ॥ ॥ ६-१८-१८ (३९३२०)

इति श्रीमन्महाभारते भीष्मपर्वणि भगवद्गीतापर्वणि अष्टादशोऽध्यायः ॥
Mahabharata - Bhishma Parva - Chapter Footnotes

६-१८-१६ शतानागयुतानि षट् षट्शतान्ययुतगुणानि । षष्टिलक्षाणीति यावत् ॥

---

भिस्मपर्व-अध्यय०१९
॥ श्रीः ॥
६.१९. अध्यायः १९

Mahabharata - Bhishma Parva - Chapter Topics
युद्धाय पाण्डवसेनानिर्याणम् ॥ १ ॥

Mahabharata - Bhishma Parva - Chapter Text

६-१९-० (३९३२१)
धृतराष्ट्र उवाच। ६-१९-०क्ष् (३९९४)
अक्षौहिणीं दशैकां च व्यूढां दृष्ट्वा युधिष्ठिरः ।
कथमल्पेन सैन्येन प्रत्यव्यूहत पाण्डवः ॥ ६-१९-१ (३९३२२)
यो वेद मानुषं व्यूहं दैवं गान्धर्वमासुरम् ।
कथं भीष्मं स कौन्तेयः प्रत्ययूहत सञ्जय ॥ ६-१९-२ (३९३२३)
सञ्जय उवाच। ६-१९-३क्ष् (३९९५)
धार्तराष्ट्राण्यनीकानि दृष्ट्वा व्यूढानि पाण्डवः ।
अभ्यभाषत धर्मात्मा धर्मराजो धनञ्जयम् ॥ ६-१९-३ (३९३२४)
महर्षेर्वचनात्तात वेदयन्ति बृहस्पतेः ।
संहतान्योधयेदल्पान्कामं विस्तारयेद्बहून् ॥ ६-१९-४ (३९३२५)
सूचीमुखमनीकं स्यादल्पानां बहुभिः सह ।
अस्माकं च तथा सैन्यमल्पीयः सुतरां परैः ॥ ६-१९-५ (३९३२६)
एतद्वचनमाज्ञाय महर्षेर्व्यूह पाण्डव ।
एतच्छ्रुत्वा धर्मराजं प्रत्यभाषत पाण्डवः ॥ ६-१९-६ (३९३२७)
एष व्यूहामि ते व्यूहं राजसत्तम दुर्जयम् ।
अचलं नाम वज्राख्यं विहितं वज्रपाणिना ॥ ६-१९-७ (३९३२८)
यः स वात इवोद्धूतः समरे दुःसहः परैः ।
स नः पुरो योत्सयते वै भीमः प्रहरतां वरः ॥ ६-१९-८ (३९३२९)
तेजांसि रिपुसैन्यानां मृद्नन्पुरुषसत्तमः ।

अग्नेऽग्रणीर्योत्स्यति नो युद्धोपायविचक्षणः ॥ ६-१९-९ (३९३३०)
यं दृष्ट्वा कुरवः सर्वे दुर्योधनपुरोगमाः ।
निवर्तिष्यन्ति संत्रस्ताः सिंहं क्षुद्रमृगा यथा ॥ ६-१९-१० (३९३३१)
तं सर्वे संश्रयिष्यामः प्राकारमकुतोभयाः ।
भीमं प्रहरतां श्रेष्ठं देवाराजमिवामराः ॥ ६-१९-११ (३९३३२)
न हि सोऽस्ति पुमाँल्लोके यः संक्रुद्धं वृकोदरम् ।
द्रष्टुमत्युग्रकर्माणं विषहेत नरर्षभम् ॥ ६-१९-१२ (३९३३३)
भीमसेनो गदां बिभ्रद्वज्रसारमयीं दृढाम् ।
चरन्वेगेन महता समुद्रमपि शोषयेत् ॥ ६-१९-१३ (३९३३४)
भीमसेनं तदा राजन्दर्शयस्व महाबलम् ।
केकया धृष्टकेतुश्च चेकितानश्च वीर्यवान् ॥ ६-१९-१४ (३९३३५)
एते गच्छन्तु सामात्याः प्रकर्षन्तो जनाधिप ।
धृतराष्ट्रस्य दायादानिति बीभत्सुरब्रवीत् ॥ ६-१९-१५ (३९३३६)
ब्रुवाणं तु तथा पार्थं सर्वसैन्यानि भारत ।
अपूजयंस्तदा वाग्भिरनुकूलाभिराहवे ॥ ६-१९-१६ (३९३३७)
एवमुक्त्वा महाबाहुस्तथा चक्रे धनञ्जयः ।
व्यूह्य तानि बलान्याशु प्रययौ फल्गुनस्तथा ॥ ६-१९-१७ (३९३३८)
संप्रयातान्कुरून्दृष्ट्वा पाण्डवानां महाचमूः ।
गङ्गेव पूर्णा स्तिमिता स्पन्दमाना व्यदृश्यत ॥ ६-१९-१८ (३९३३९)
भीमसेनोऽग्रणीस्तेषां धृष्टद्युम्नश्च वीर्यवान् ।
नकुलः सहदेवश्च धृष्टकेतुश्च पार्थिवः ॥ ६-१९-१९ (३९३४०)
विराटश्च ततः पश्चाद्राजाथाक्षौहिणीवृतः ।
भ्रातृभिः सह पुत्रैश्च सोऽभ्यरक्षत पृष्ठतः ॥ ६-१९-२० (३९३४१)
चक्ररक्षौ तु भीमस्य माद्रीपुत्रौ महाद्युती ।
द्रौपदेयाः ससौभद्राः पृष्ठगोपास्तरस्विनः ॥ ६-१९-२१ (३९३४२)
धृष्टद्युम्नश्च पाञ्चाल्यस्तेषां गोप्ता महारथः ।
सहितः पृतनाशूरैः रथमुख्यैः प्रभद्रकैः ॥ ६-१९-२२ (३९३४३)
शिखण्डी तु ततः पश्चादर्जुनेनाभिरक्षितः ।
यत्तो भीष्मविनाशाय प्रययौ भरतर्षभ ॥ ६-१९-२३ (३९३४४)
पृष्ठतोऽप्यर्जुनस्यासीद्युयुधानो महाबलः ।
चक्ररक्षौ तु पाञ्चाल्यौ युधामन्यूत्तमोजसौ ॥ ६-१९-२४ (३९३४५)
राजा तु मध्यमानीके कुन्तीपुत्रो युधिष्ठिरः ।
बृहद्भीः कुञ्जरैर्मत्तैश्चलद्भिरचलैरिव ॥ ६-१९-२५ (३९३४६)
अक्षौहिण्याथ पाञ्चाल्यो यज्ञसेनो महामनाः ।
विराटमन्वयात्पश्चात्पाण्डवार्थं पराक्रमी
॥ ६-१९-२७अतेषामादित्यचन्द्राभाः कनकोत्तमभूषणाः ।

नानाचिह्नधरा राजन्रथेष्वासन्महाध्वजाः ॥ ६-१९-२६ (३९३४७)
समुत्सार्य ततः पश्चाद्धृष्टद्युम्नो महारथः ।
भ्रातृभिः सहपुत्रैश्च सोऽभ्यरक्षद्युधिष्ठिरम् ॥ ६-१९-२८ (३९३४८)
त्वदीयानां परेषां च रथेषु विपुलान्ध्वजान् ।
अभिभूयार्जुनस्यैको रथे तस्थौ महाकपिः ॥ ६-१९-२९ (३९३४९)
पदातास्त्वग्रतोऽगच्छन्नसिशक्त्यृष्टिपाणयः ।
अनेकशतसाहस्रा भीमसेनस्य रक्षिणः ॥ ६-१९-३० (३९३५०)
वारणा दशसाहस्राः प्रभिन्नकरटामुखाः ।
शूरा हेममयैर्जालैर्दीप्यमाना इवाचलाः ॥ ६-१९-३१ (३९३५१)
क्षरन्त इव जीमूता महार्हाः पद्मगन्धिनः ।
राजानमन्वयुः पश्चाज्जीमूता इव वार्षिकाः ॥ ६-१९-३२ (३९३५२)
भीमसेनो गदां भीमां प्रकर्षन्परिघोपमाम् ।
प्रचकर्ष महासैन्यं दुराधर्षो महामनाः ॥ ६-१९-३३ (३९३५३)
तमर्कमिव दुष्प्रेक्ष्यं तपन्तमिव वाहिनीम् ।
न शेकुः सर्वयोधास्ते प्रतिवीक्षितुमन्तिके ॥ ६-१९-३४ (३९३५४)
वज्रो नामैष स व्यूहो निर्भयः सर्वतोमुखः ।
चापविद्युद्ध्वजो घोरो गुप्तो गाण्डीवधन्वना ॥ ६-१९-३५ (३९३५५)
यं प्रतिव्यूहय् तिष्ठन्ति पाण्डवास्तव वाहिनीम् ।
अजेयो मानुषे लोके पाण्डवैरभिरक्षितः ॥ ६-१९-३६ (३९३५६)
संध्यां तिष्ठत्सु सैन्येषु सूर्यस्योदयनं प्रति ।
प्रववौ पृष्ठतो वायुर्निरभ्रे स्तनयित्नुमान् ॥ ६-१९-३७ (३९३५७)
विष्वग्वाताश्च विववुर्नीचैः शर्करकर्षिणः ।
रजश्चोद्धूयत महत्तम आच्छादयञ्जगत् ॥ ६-१९-३८ (३९३५८)
पपात महती चोल्का प्राङ्मुखी भरतर्षभ ।
उद्यन्तं सूर्यमाहत्य व्यशीर्यत महास्वना ॥ ६-१९-३९ (३९३५९)
अथ संनह्यमानेषु सैन्येषु भरतर्षभ ।
निष्प्रभोऽभ्युद्ययौ सूर्यः सघोषं भूश्चचाल च ॥ ६-१९-४० (३९३६०)
व्यशीर्यत सनादा च भूस्तदा भरतर्षभ ।
निर्घाता बहवो राजन्दिक्षु सर्वासु चाभवन् ।
प्रादुरासीद्रजस्तीव्रं न प्राज्ञायत किंचन ॥ ६-१९-४१ (३९३६१)
ध्वजानां धूयमानानां सहसा मातरिश्वना ।
किङ्किणीजालबद्धानां काञ्चनस्रग्वराम्बरैः ॥ ६-१९-४२ (३९३६२)
महतां सपताकानामादित्यसमतेजसाम् ।
सर्वं झणझणीभूतमासीत्तालवनेष्विव ॥ ६-१९-४३ (३९३६३)
एवं ते पुरुषव्याघ्राः पाण्डवा युद्धनन्दिनः ।
व्यवस्थिताः प्रतिव्यूह्य तव पुत्रस्य वाहिनीम् ॥ ६-१९-४४ (३९३६४)

ग्रसन्त इव मञ्जानो योधानां भरतर्षभ ।
दृष्ट्वाग्रतो भीमसेनं गदापाणिमवस्थितम् ॥ ॥ ६-१९-४५ (३९३६५)

इति श्रीमन्महाभारते भीष्मपर्वणि भगवद्गीतापर्वणि
एकोनविंशोऽध्यायः ॥
Mahabharata - Bhishma Parva - Chapter Footnotes

६-१९-४ संहतानिति । अल्पैः संहत्यैव योद्धव्यम्। बहुभिस्तु
विशकलितैरपि योद्धुं शक्यमित्यर्थः ॥
६-१९-६ व्यूह व्यूहं कुरु ॥
६-१९-१८ स्पन्दमाना किंचिच्चलन्ती ॥
६-१९-३१ वारणा राजनमन्वयुरिति संबन्धः । अचलाः निष्कम्भाः ॥
६-१९-३२ जीमूतः पर्वताः ॥
६-१९-३९ आहत्य आस्फाल्य ॥
६-१९-४५ मज्जान इति । नोऽस्माकं योधामज्नाः धातुविशेषान् ग्रसन्त
इवेति योज्यम्। भीमसेनं दृष्ट्वा वस्थिता इति संबन्धः ॥

---

भिस्मपर्व-अध्यय०२०
॥ श्रीः ॥
६.२०. अध्यायः २०

Mahabharata - Bhishma Parva - Chapter Topics
कुरुसेनागमनप्रकारवर्णनम् ॥ १ ॥

Mahabharata - Bhishma Parva - Chapter Text

धृतराष्ट्र उवाच ।
सूर्योदये सञ्जय के नु पूर्वं
युयुत्सवो हृष्यमाणा इवासन् ।
मामका वा भीष्मनेत्राः समीपे
पाण्डवा वा भीमनेत्रास्तदानीम् ॥ ६-२०-१ (३९३६६)
केषां जघन्यौ समसूर्यौ सवायू
केषां सेनां श्वापदाश्चाभषन्त ।
केषां यूनां मुखवर्णाः प्रसन्नाः
सर्वं ह्येतद्ब्रूहि तत्त्वं यथावत् ॥ ६-२०-२ (३९३६७)
सञ्जय उवाच। ६-२०-३क्ष् (३९९६)

उभे सेने तुल्यमिवोपयाते
उभे व्यूहे हृष्टरूपे नरेन्द्र ।
उभे चित्रे वनराजिप्रकाशे
तथैवोभे नागरथाश्वपूर्णे ॥ ६-२०-३ (३९३६८)
उभे सेने बृहत्यौ भीमरूपे
तथैवोभे भारत दुर्विषह्ये ।
तथैवोभे स्वर्गजयाय सृष्टे
तथैवोभे सत्पुरुषोपजुष्टे ॥ ६-२०-४ (३९३६९)
पश्चान्मुखाः कुरवो धार्तराष्ट्राः
स्थिताः पार्थाः प्राङ्मुखा योत्स्यमानाः ।
दैत्येन्द्रसेनेव च कौरवाणां
देवेन्द्रसेनेव च पाण्डवानाम् ॥ ६-२०-५ (३९३७०)
शीतो वायुः पृष्ठतः पाण्डवानां
धार्तराष्ट्राञ्श्वापदा व्याहरन्त ।
गजेन्द्राणां मदगन्धांश्च तीव्रा-
न्न सेहिरे तव पुत्रस्य नागाः ॥ ६-२०-६ (३९३७१)
दुर्योधनो हस्तिनं पद्मवर्णं
सुवर्णकक्षं जालवन्तं प्रभिन्नम् ।
समास्थितो मध्यगतः कुरूणां
संस्तूयमानो बन्दिभिर्मागधैश्च ॥ ६-२०-७ (३९३७२)
चन्द्रप्रभं श्वेतमथातपत्रं
सौवर्णस्रग्भ्राजति चोत्तमाङ्गे ।
तं सर्वतः शकुनिः पार्वतीयैः
सार्धं गान्धारैर्याति गान्धारराजः ॥ ६-२०-८ (३९३७३)
भीष्मोऽग्रतः सर्वसैन्यस्य वृद्धः
श्वेतच्छत्रः श्वेतधनुः सखड्गः ।
श्वेतोष्णीषः पाण्डुरेण ध्वजेन
श्वेतैरश्वैः श्वेतशैलप्रकाशैः ॥ ६-२०-९ (३९३७४)
तस्य सैन्ये धार्तराष्ट्राश्च सर्वे
बाह्लीकानामेकदेशः शलश्च ।
ये चाम्बष्ठाः क्षत्रिया ये च सिन्धो-
स्तथा सौवीराः पञ्चनदाश्च शूराः ॥ ६-२०-१० (३९३७५)
शोणैर्हयै रुक्मरथो महात्मा
द्रोणो धनुष्पाणिरदीनसत्वः ।
आप्तो गुरुः प्रथितः सर्वराज्ञां
पश्चाच्चमूमिन्द्र इवाभियाति ॥ ६-२०-११ (३९३७६)

वार्धक्षत्रिः सर्वसैन्यस्य मध्ये
भूरिश्रवाः पुरुमित्रो जयश्च ।
साल्वा मत्स्याः केकयाश्चेति सर्वे
गजानीकैर्भ्रातरो योत्स्यमानाः ॥ ६-२०-१२ (३९३७७)
शारद्वतश्चोत्तरधूर्महात्मा
महेष्वासो गौतमश्चित्रयोधी ।
शकैः किरातैर्यवनैः पह्लवैश्च
सार्धं चमूमुत्तरतोऽभियाति ॥ ६-२०-१३ (३९३७८)
महारथैर्वृष्णिभोजैः सुगुप्तं
सुराष्ट्रकैर्विदितैरात्तशस्त्रैः ।
बृहद्बलं कृतवर्माभिगुप्तं
बलं त्वदीयं दक्षिणेनाभियाति ॥ ६-२०-१४ (३९३७९)
संशप्तकानामयुतं रथानां
मृत्युर्जयो वार्जुनस्येति सृष्टाः ।
येनार्जुनस्तेन राजन्कृतास्त्राः
प्रयातारस्ते त्रिगर्ताश्च शूराः ॥ ६-२०-१५ (३९३८०)
साग्रं शतसहस्रं तु नागानां तव भारत ।
नागेनागे रथशतं शतमश्वा रथेरथे ॥ ६-२०-१६ (३९३८१)
अश्वेऽश्वे दश धानुष्का धानुष्के शत चर्मिणः ।
एवं व्यूढान्यनीकानि भीष्मेण तव भारत ॥ ६-२०-१७ (३९३८२)
संव्यूह्य मानुषं व्यूहं दैवं गान्धर्वमासुरम् ।
दिवसेदिवसे प्राप्ते भीष्मः शान्तनवोऽग्रणीः ॥ ६-२०-१८ (३९३८३)
महारथौघविपुलः समुद्र इव घोषवान् ।
भीष्मेण धार्तराष्ट्राणां व्यूहः प्रत्यङ्मुखो युधि ॥ ६-२०-१९ (३९३८४)
अनन्तरूपा ध्वजिनी नरेन्द्र
भीमा त्वदीया न तु पाण्डवानाम् ।
तां चैव मन्ये बृहतीं दुष्प्रधर्षां
यस्या नेता केशवश्चार्जुनश्च ॥ ॥ ६-२०-२० (३९३८५)

इति श्रीमन्महाभारते भीष्मपर्वणि भगवद्गीतापर्वणि विंशोऽध्यायः ॥

Mahabharata - Bhishma Parva - Chapter Footnotes

६-२०-१ भीष्मो नेत्रः नेता येषां ते भीष्मनेत्राः ॥
६-२०-१५ येन यत्र ।तेन तत्र ॥
६-२०-२० अनन्तरूपा वह्वी त्वदीया नतु पाण्डवानां सेना वह्वी ।तथापि तां बृहतीमेव मन्ये इति संबन्धः ॥

भिस्मपर्व-अध्यय०२१
॥ श्रीः ॥
६.२१. अध्यायः २१

Mahabharata - Bhishma Parva - Chapter Topics
परसेनादर्शनचकितं युधिष्ठिरं प्रत्यर्जुनेन सयुक्तिनिरूपणं समाश्वासनम् ॥ १ ॥

Mahabharata - Bhishma Parva - Chapter Text

६-२१-० (३९३८६)
सञ्जय उवाच। ६-२१-०क्ष् (३९९७)
बृहतीं धार्तराष्ट्रस्य सेनां दृष्ट्वा समुद्यताम् ।
विषादमगमद्राजा कुन्तीपुत्रो युधिष्ठिरः ॥ ६-२१-१ (३९३८७)
व्यूहं भीष्मेण चाभेद्यं कल्पितं प्रेक्ष्य पाण्डवः ।
अभेद्यमिव संप्रेक्ष्य विवर्णोऽर्जुनमब्रवीत् ॥ ६-२१-२ (३९३८८)
धनञ्जय कथं शक्यमस्माभिर्योद्धुमाहवे ।
धार्तराष्ट्रैर्महाबाहो येषां योद्धा पितामहः ॥ ६-२१-३ (३९३८९)
अक्षोभ्योऽयमभेद्यश्च भीष्मेणामित्रकर्षिणा ।
कल्पितः शास्त्रदृष्टेन विधिना भूरिवर्चसा ॥ ६-२१-४ (३९३९०)
ते वयं संशय्नं प्राप्ताः ससैन्याः शत्रुकर्षण ।
कथमस्मान्महाव्यूहादुत्थानं नो भविष्यति ॥ ६-२१-५ (३९३९१)
अथार्जुनोऽब्रवीत्पार्थं युधिष्ठिरममित्रहा ।
विषण्णमिव संप्रेक्ष्य तव राजन्ननीकिनीम् ॥ ६-२१-६ (३९३९२)
प्रज्ञयाभ्यधिकाञ्शूरान्गुणयुक्तान्बहूनपि ।
जयन्त्यल्पतरा येन तन्निबोध विशांपते ॥ ६-२१-७ (३९३९३)
तत्र ते कारणं राजन्प्रवक्ष्याम्यनसूयवे ।
नारदस्तमृषिर्वेद भीष्मद्रोणौ च पाण्डव ॥ ६-२१-८ (३९३९४)
एनमेवार्थमाश्रित्य युद्धे देवासुरेऽब्रवीत् ।
पितामहः किल पुरा महेन्द्रादीन्दिवौकसः ॥ ६-२१-९ (३९३९५)
न तथा बलवीर्याभ्यां जयन्ति विजिगीषवः ।
यथा सत्यानृशंस्याभ्यां धर्मेणैवोद्यमेन च ॥ ६-२१-१० (३९३९६)
त्वक्त्वाऽधर्मं तथा सर्वे धर्मं चोत्तममास्थिताः ।
युध्यध्वमतहंकारा यतो धर्मस्ततो जयः ॥ ६-२१-११ (३९३९७)
एवं राजन्विजानीहि ध्रुवोऽस्माकं रणे जयः ।

यथा तु नारदः प्राह यतः कृष्णस्ततो जयः ॥ ६-२१-१२ (३९३९८)
गुणभूतो जयः कृष्णे पृष्ठतोऽभ्येति माधवम् ।
तद्यथा विजयश्चास्य सन्नतिश्चापरो गुणः ॥ ६-२१-१३ (३९३९९)
अनन्ततेजा गोविन्दः शत्रुपूगेषु निर्व्यथः ।
पुरुषः सनातनमयो यतः कृष्णस्ततो जयः ॥ ६-२१-१४ (३९४००)
पुरा ह्येष हरिर्भूत्वा विकुण्ठोऽकुण्ठसायकः ।
सुरासुरानवस्फूर्जन्नब्रवीत्के जयन्त्विति ॥ ६-२१-१५ (३९४०१)
अनु कृष्णं जयेमेति यैरुक्तं तत्र तैर्जितम् ।
तत्प्रसादाद्धि त्रैलोक्यं प्राप्तं शक्रादिभिः सुरैः ॥ ६-२१-१६ (३९४०२)
तस्य ते न व्यथां कांचिदिह पश्यामि भारत ।
यस्य ते यजमाशास्ते विश्वभुक् त्रिदिवेश्वरः ॥ ॥ ६-२१-१७ (३९४०३)

इति श्रीमन्महाभारते भीष्मपर्वणि भगवद्गीतापर्वणि एकविंशोऽध्यायः ॥
Mahabharata - Bhishma Parva - Chapter Footnotes

६-२१-१३ गुणभूतो दासभूतः ॥
६-२१-१५ अकुण्ठसायकः अप्रतिहतायुधः ॥

---

भिस्मपर्व-अध्यय०२२
॥ श्रीः ॥
६.२२. अध्यायः २२

Mahabharata - Bhishma Parva - Chapter Topics
युधिष्ठिरादीनां युद्धाय निर्गमः ॥ १ ॥

Mahabharata - Bhishma Parva - Chapter Text

सञ्जय उवाच ।
ततो युधिष्ठिरो राजा स्वां सेनां समचोदयत् ।
प्रतिव्यूहन्ननीकानि भीष्मस्य भरतर्षभ ॥ ६-२२-१ (३९४०४)
यथोद्दिष्टान्यनीकानि प्रत्यव्यूहन्त पाण्डवाःक ।
स्वर्गं परममिच्छन्तः सुयुद्धेन कुरूद्वहाः ॥ ६-२२-२ (३९४०५)
मध्ये शिखण्डिनोऽनीकं रक्षितं सव्यसाचिना ।
धृष्टद्युम्नश्चरन्नग्रे भीमसेनेन पालितः ॥ ६-२२-३ (३९४०६)
अनीकं दक्षिणं राजन्युयुधानेन पालितम् ।
श्रीमता सात्वताग्र्येण शक्रेणेव धनुष्मता ॥ ६-२२-४ (३९४०७)

महेन्द्रयानप्रतिमं रथं तु
सोपस्करं हाटकरत्नचित्रम् ।
युधिष्ठिरः काञ्चनभाण्डयोक्रं
समास्थितो नागबलस्य मध्ये ॥ ६-२२-५ (३९४०८)
समुच्छ्रितं दन्तशलाकमस्य
सुपाण्डुरं छत्रमतीव भाति ।
प्रदक्षिणं चैनमुपाचरन्त
महर्षयः संस्तुतिभिर्महेन्द्रम् ॥ ६-२२-६ (३९४०९)
पुरोहिताः शत्रुवधं वदन्तो
ब्रह्मर्षिसिद्धाः श्रुतवन्त एनम् ।
जप्यैश्च मन्त्रैश्च महौषधीभिः
समन्ततः स्वस्त्ययनं ब्रुवन्तः ॥ ६-२२-७ (३९४१०)
ततः स वस्त्राणि तथैव गाश्च
फलानि पुष्पाणि तथैव निष्कान् ।
कुरूत्तमो ब्राह्मणसान्महात्मा
कुर्वन्ययौ शक्र इवामरेशः ॥ ६-२२-८ (३९४११)
सहस्रसूर्यः शतकिङ्किणीकः
परार्ध्यजाम्बूनदहेमचित्रः ।
रथोऽर्जुनस्याग्निरिवार्चिमाली
विभ्राजते श्वेतहयः सुचक्रः ॥ ६-२२-९ (३९४१२)
तमास्थितः केशवसंगृहीतं
कपिध्वजो गाण्डिवबाणपाणिः ।
धनुर्धरो यस्य समः पृथिव्यां
न विद्यते नो भविता कदाचित् ॥ ६-२२-१० (३९४१३)
उद्धर्तयिष्यंस्तव पुत्रसेना-
मतीव रौद्रं स बिभर्ति रूपम् ।
अनायुधो यः सुभुजो भुजाभ्यां
नराश्वनागान्युधि भस्म कुर्यात् ॥ ६-२२-११ (३९४१४)
स भीमसेनः सहितो यमाभ्यां
वृकोदरो वीररथस्य गोप्ता ।
तं तत्र सिंहर्षभमत्तखेलं
लोके महेन्द्रप्रतिमानकल्पम् ॥ ६-२२-१२ (३९४१५)
समीक्ष्य सेनाग्रगतं दुरासदं
संविव्यथुः पङ्कगता यथा द्विपाः ।
वृकोदरं वारणाजदर्पं
योधास्त्वदीया भयविग्नसत्त्वाः ॥ ६-२२-१३ (३९४१६)

अनीकमध्ये तिष्ठन्तं राजपुत्रं दुरासदम् ।
अब्रवीद्भरतश्रेष्ठं गुडाकेशं जनार्दनः ॥ ६-२२-१४ (३९४१७)
वासुदेव उवाच। ६-२२-१५क्ष् (३९९८)
य एष रोषात्प्रतपन्बलस्थो
यो नः सेनां सिंह इवेक्षते च ।
स एष भीष्मः कुरुवंशकेतु-
र्येनाहृतास्त्रिशतं वाजिमेधाः ॥ ६-२२-१५ (३९४१८)
एतान्यनीकानि महानुभावं
गूहन्ति मेघा इव रश्मिमन्तम् ।
एतानि हत्वा पुरुषप्रवीर
काङ्क्षस्व युद्धं भरतर्षभेण ॥ ॥ ६-२२-१६ (३९४१९)

इति श्रीमन्महाभारते भीष्मपर्वणि भगवद्गीतापर्वणि द्वाविंशोऽध्यायः ॥
Mahabharata - Bhishma Parva - Chapter Footnotes

६-२२-९ सहस्रं सूर्यतुल्यान्यादर्शचक्राणि यस्मिन्स सहस्रसूर्यः ॥
६-२२-१६ गूहन्ति परिवारयन्ति ॥

---

भिस्मपर्व-अध्यय०२३
॥ श्रीः ॥
६.२३. अध्यायः २३

Mahabharata - Bhishma Parva - Chapter Topics
अर्जुनेन दुर्गास्तोत्रपठनम् ॥१ ॥

Mahabharata - Bhishma Parva - Chapter Text

६-२३-० (३९४२०)
सञ्जय उवाच। ६-२३-०क्ष् (३९९९)
धार्तराष्ट्रबलं दृष्ट्वा युद्धाय समुपस्थितम् ।
अर्जुनस्य हितार्थाय कृष्णो वचनमब्रवीत् ॥ ६-२३-१ (३९४२१)
श्रीभगवानुवाच। ६-२३-२क्ष् (४०००)
शुचिर्भूत्वा महाबाहो संग्रामाभिमुखे स्थितः ।
पराजयाय शत्रुणां दुर्गास्तोत्रमुदीरय ॥ ६-२३-२ (३९४२२)
सञ्जय उवाच। ६-२३-३क्ष् (४००१)
एवमुक्तोऽर्जुनः सङ्ख्ये वासुदेवेन धीमता ।

अवतीर्य रथात्पार्थः स्तोत्रमाह कृताञ्जलिः ॥ ६-२३-३ (३९४२३)
अर्जुन उवाच। ६-२३-४क्ष् (४००२)
नमस्ते सिद्धसेनानि आर्ये मन्दरवासिनि ।
कुमारि कालि कापालि कपिले कृष्णपिङ्गले ॥ ६-२३-४ (३९४२४)
भद्रकालि नमस्तुभ्यं महाकालि नमोऽस्तु ते ।
चण्डि चण्डे नमस्तुभ्यं तारिणि वरवर्णिनि ॥ ६-२३-५ (३९४२५)
कात्यायनि महाभागे करालि विजये जये ।
शिखिपिच्छध्वजधरे नानाभरणभूषिते ॥ ६-२३-६ (३९४२६)
अट्टशूलप्रहरणे स्वङ्गखेटकधारिणि ।
गोपेन्द्रस्यानुजे ज्येष्ठे नन्दगोपकुलोद्भवे ॥ ६-२३-७ (३९४२७)
महिषासृक्प्रिये नित्यं कौशिकि पीतवासिनि ।
अट्टहासे कोकमुखे नमस्तेऽस्तु रणप्रिये ॥ ६-२३-८ (३९४२८)
उमे शाकम्भरि श्वेते कृष्णे कैटभनाशिनि ।
हिरण्याक्षि विरूपाक्षि सुधूम्राक्षि नमोऽस्तु ते ॥ ६-२३-९ (३९४२९)
वेदश्रुति महापुण्ये ब्रह्मण्ये जातवेदसि ।
जम्बूकटकचैत्येषु नित्यं सन्निहितालये ॥ ६-२३-१० (३९४३०)
त्वं ब्रह्मविद्या विद्यानां महानिद्रा च देहिनाम् ।
स्कन्दमातर्भगवति दुर्गे कान्तारवासिनि ॥ ६-२३-११ (३९४३१)
स्वाहाकारः स्वधा चैव कला काष्ठा सरस्वती ।
सावित्री वेदमाता च तथा वेदान्त उच्यते ॥ ६-२३-१२ (३९४३२)
स्तुतासि त्वं महादेवि विशुद्धेनान्तरात्मना ।
जयो भवतु मे नित्यं त्वत्प्रसादाद्रणाजिरे ॥ ६-२३-१३ (३९४३३)
कान्तारभयदुर्गेषु भक्तानां चालयेषु च ।
नित्यं वससि पाताले युद्धे जयसि दानवान् ॥ ६-२३-१४ (३९४३४)
त्वं जम्भनी मोहिनी च माया ह्रीः श्रीस्तथैव च ।
संध्या प्रभावती चैव सावित्री जननी तथा ॥ ६-२३-१५ (३९४३५)
तुष्टिः पुष्टिर्धृतिर्दीप्तिश्चन्द्रादित्यविवर्धिनी ।
भूतिर्भूतिमतां सङ्ख्ये वीक्ष्यसे सिद्धचारणैः ॥ ६-२३-१६ (३९४३६)
सञ्जय उवाच। ६-२३-१७क्ष् (४००३)
ततः पार्थस्य विज्ञाय भक्तिं
मानववत्सला। ६-२३-१७बन्तरिक्षगतोवाच गोविन्दस्याग्रतः स्थिता ॥
६-२३-१७ (३९४३७)
देव्युवाच। ६-२३-१८क्ष् (४००४)
स्वल्पेनैव तु कालेन शत्रूञ्जेष्यसि पाण्डव ।
नरस्त्वमसि दुर्धर्ष नारायणसहायवान् ॥ ६-२३-१८ (३९४३८)
अजेयस्त्वं रणेऽरीणामपि वज्रभृतः स्वयम् ।

इत्येवमुक्त्वा वरदा क्षणेनान्तरधीयत ॥ ६-२३-१९ (३९४३९)
लब्ध्वा वरं तु कौन्तेयो मेने विजयमात्मनः ।
आरुरोह ततः पार्थो रथं परमसंमतम् ॥ ६-२३-२० (३९४४०)
कृष्णार्जुनावेकरथौ दिव्यौ शङ्खौः प्रदध्मतुः ।
य इदं पठते स्तोत्रं कल्य उत्थाय मानवः ॥ ६-२३-२१ (३९४४१)
यक्षरक्षःपिशाचेभ्यो न भयं विद्यते सदा ।
न चापि रिपवस्तेभ्यः सर्पाद्या ये च दंष्ट्रिणः ॥ ६-२३-२२ (३९४४२)
न भयं विद्यते तस्य सदा राजकुलादपि ।
विवादेक जयमाप्नोति बद्धो मुच्यति बन्धनात् ॥ ६-२३-२३ (३९४४३)
दुर्गं तरति चावश्यं तथा चोरैर्विमुच्यते ।
संग्रामे विजयेन्नित्यं लक्ष्मीं प्राप्नोति केवलाम् ॥ ६-२३-२४ (३९४४४)
आरोग्यबलसंपन्नो जीवेद्वर्षशतं तथा ।
एतद्दृष्टं प्रसादात्तु मया व्यासस्य धीमतः ॥ ६-२३-२५ (३९४४५)
मोहादेतौ न जानन्ति नरनारायणावृषी ।
तव पुत्रा दुरात्मानः सर्वे मन्युवशानुगाः ॥ ६-२३-२६ (३९४४६)
प्राप्तकालमिदं वाक्यं कालपाशेन कुण्ठिताः ।
द्वैपायनो नारदश्च कण्वो रामस्तथानघः ।
अवारयंस्तव सुतं न चासौ तद्गृहीतवान् ॥ ६-२३-२७ (३९४४७)
यत्र धर्मो द्युतिः कान्तिर्यत्र ह्रीः श्रीस्तथा मतिः ।
यतो धर्मस्ततः कृष्णो यतः कृष्णस्ततो जयः ॥ ॥ ६-२३-२८ (३९४४८)

इति श्रीमन्महाभरते भीष्मपर्वणि भगवद्गीतापर्वणि
त्रयोविंशोऽध्यायः ॥

Mahabharata - Bhishma Parva - Chapter Footnotes

६-२३-१ हितार्थाय हितश्चासावर्थश्च हितार्थो जयस्तदर्थम् ॥
६-२३-३ सङ्ख्ये सङ्ग्रामे ॥
६-२३-४ इदं स्तोत्रं झो पुस्तक एव दृश्यते न दाक्षिणात्यकोशेषु क्वापि ।हे सिद्धसेनानि सिद्धानां सेनाया नेत्रि। मन्दरे मन्दरवने वसतीति तथा। कुमारि अविप्लुतब्रह्मचर्ये जादिहीने इति वा। कालि कालशक्ते। कापालि कपालस्यायं पतिः कापालो रुद्रस्तत्पत्नि। कपिलः कृष्णपिङ्गलश्च वर्णविशेषौ तद्वति ॥
६-२३-५ भद्रं कल्याणं कालयति भक्तान् प्रति आनयति सा भद्रकाली ।महती चासी काली च कालयित्री संहत्री कालरूपा महाकाली। चण्डि चण्डस्य कालान्तकस्य भार्ये। चण्डे प्रगल्भे। तारिणि संकटोत्तरणकर्त्रि ।वरवर्णिनी सर्वसौभाग्यलक्षणोपेता स्त्री

तद्रूपे ॥
६-२३-६ कात्यायनि कतगोत्रोद्भवे । महाभागे अतिपूज्ये। करालि क्रूरे। विजये विशिष्टो जयो यया सा। जयप्रदे इत्यर्थः। जये जयस्वरूपे ॥
६-२३-७ भट्टं अत्युत्कटं शूलं तदेव प्रहरणायुधं यस्याः । खेटकं चर्म ॥
६-२३-८ कौशिकि कुशिककुलोत्पन्ने । अट्टहासे प्रशस्तस्मिते। कोकं चक्रवत् वृत्तं वा रक्तबीजवधेऽसुरादानशीलं वा मुखं यस्याः सा कोकमुखा ॥
६-२३-९ हिरण्याक्षि पीतनेत्रे । विरूपाक्षि विविधरूपयुक्तनेत्रे ॥
६-२३-१० ब्रह्मण्ये यज्ञकर्मविप्रादिषु साध्वी ब्रह्मण्या । जातवेदसि अतीतज्ञे अतीतैर्ज्ञाते वा। जम्बूकटकेषु जम्बूद्वीपराजधानीषु चैत्येषु देवतालयेषु नित्यं सन्निहित आलयः स्थानं यस्याः सा तथा ॥
६-२३-१३ रणाजिरे युद्धाङ्गणे ॥
६-२३-१५ जम्भनी तन्द्रा । मोहिनी निद्रा। श्रीर्लक्ष्मीः विद्यातपोधनादिसमृद्धिरूपा ॥

---

भिस्मपर्व-अध्यय०२४
॥ श्रीः ॥
६.२४. अध्यायः २४

Mahabharata - Bhishma Parva - Chapter Topics
सञ्जयेनोभयसेनयोरभ्युदयवर्णनम् ॥१ ॥

Mahabharata - Bhishma Parva - Chapter Text

६-२४-० (३९४४९)
धृतराष्ट्र उवाच। ६-२४-०क्ष् (४००५)
केषां प्रहृष्टास्तत्राग्रे योधा युध्यन्ति सञ्जय ।
उदग्रमनसः के वा के वा दीना विचेतसः ॥ ६-२४-१ (३९४५०)
के पूर्वं प्राहरंस्तत्र युद्धे हृदयकम्पने ।
मामकाः पाण्डवेया वा तन्ममाचक्ष्व सञ्जय ॥ ६-२४-२ (३९४५१)
कस्य सेनासमुदये गन्धो माल्यसमुद्भवः ।
वायुः प्रदक्षिणश्चैव योधानामभिगर्जताम् ॥ ६-२४-३ (३९४५२)
सञ्जय उवाच। ६-२४-४क्ष् (४००६)

उभयोः सेनयोस्तत्र योधा जहृषिरे तदा ।
स्रजः समाः सुगन्धानामुभयत्र समुद्भवः ॥ ६-२४-४ (३९४५३)
संहतानामनीकानां व्यूढानां भरतर्षभ ।
संसर्गात्समुदीर्णानां विमर्दः सुमहानभूत् ॥ ६-२४-५ (३९४५४)
वादित्रशब्दस्तुमुलः शङ्खभेरीविमिश्रितः ।
शूराणां रणशूराणां गर्जतामितरेतरम् ॥ ६-२४-६ (३९४५५)
उभयोः सेनयो राजन्महान्व्यतिकरोऽभवत् ।
अन्योन्यं वीक्षमाणानां योधानां भरतर्षभ ।
कुञ्जराणां च नदतां सैन्यानां च प्रहृष्यताम् ॥ ॥ ६-२४-७ (३९४५६)

इति श्रीमन्महाभारते भीष्मपर्वणि भगवद्गीतापर्वणि
चतुर्विंशोऽध्यायः ॥

---

भिस्मपर्व-अध्यय०२५
॥ श्रीः ॥
६.२५. अध्यायः २५

Mahabharata - Bhishma Parva - Chapter Topics
पञ्चविंशोऽध्यायः ॥ भगवद्गीताध्यायः ॥ १ ॥

Mahabharata - Bhishma Parva - Chapter Text

६-२५-० (३९४५७)
धृतराष्ट्र उवाच। ६-२५-०क्ष् (४००७)
धर्मक्षेत्रे कुरुक्षेत्रे समवेता युयुत्सवः ।
मामकाः पाण्डवाश्चैव किमकुर्वत सञ्जय ॥ ६-२५-१ (३९४५८)
सञ्जय उवाच। ६-२५-२क्ष् (४००८)
दृष्ट्वा तु पाण्डवानीकं व्यूढं दुर्योधनस्तदा ।
आचार्यमुपसंगम्य राजा वचनमब्रवीत् ॥ ६-२५-२ (३९४५९)
पश्यैतां पाण्डुपुत्राणामाचार्य महतीं चमूम् ।
व्यूढां द्रुपदपुत्रेण तव शिष्येण धीमता ॥ ६-२५-३ (३९४६०)
अत्र शूरा महेष्वासा भीमार्जुनसमा युधि ।
युयुधानो विराटश्च द्रुपदश्च महारथः ॥ ६-२५-४ (३९४६१)
धृष्टकेतुश्चेकितानः काशिराजश्च वीर्यवान् ।
पुरुजित्कुन्तिभोजश्च शैब्यश्च नरपुङ्गवः ॥ ६-२५-५ (३९४६२)
युधामन्युश्च विक्रान्त उत्तमौजाश्च नरपुङ्गवः ॥
सौभद्रो द्रौपदेयाश्च सर्व एव महारथाः ॥ ६-२५-६ (३९४६३)

अस्माकं तु विशिष्टा ये तान्निबोध द्विजोत्तम ।
नायका मम सैन्यस्य संज्ञार्थं तान्ब्रवीमि ते ॥ ६-२५-७ (३९४६४)
भवान्भीष्मश्च कर्णश्च कृपश्च समितिंजयः ।
अश्वत्थामा विकर्णश्च सौमदत्तिर्जयद्रथः ॥ ६-२५-८ (३९४६५)
अन्ये च बहवः शूरा मदर्थे त्यक्तजीविताः ।
नानाशस्त्रप्रहरणाः सर्वे युद्धविशारदाः ॥ ६-२५-९ (३९४६६)
अपर्याप्तं तदस्माकं बलं भीष्माभिरक्षितम् ।
पर्याप्तं त्विदमेतेषां बलं भीमाभिरक्षितम् ॥ ६-२५-१० (३९४६७)
अयनेषु च सर्वेषु यथाभागमवस्थिताः ।
भीष्ममेवाभिरक्षन्तु भवन्तः सर्व एव हि ॥ ६-२५-११ (३९४६८)
तस्य संजनयन्हर्षं कुरुवृद्धः पितामहः ।
सिंहनादं विनद्योच्चैः शङ्खं दध्मौ प्रतापवान् ॥ ६-२५-१२ (३९४६९)
ततः शङ्खाश्च भेर्यश्च पणवानकगोमुखाः ।
सहसैवाभ्यहन्यन्त स शब्दस्तुमुलोऽभवत् ॥ ६-२५-१३ (३९४७०)
ततः श्वेतैर्हयैर्युक्ते महति स्यन्दते स्थितौ ।
माधवः पाण्डवश्चैव दिव्यौ शङ्खौ प्रदध्मतुः ॥ ६-२५-१४ (३९४७१)
पाञ्चजन्यं हृषीकेशो देवदत्तं धनंजयः ।
पौण्ड्रं दध्मौ महाशङ्खं भीमकर्मा वृकोदरः ॥ ६-२५-१५ (३९४७२)
अनन्तविजयं राजा कुन्तीपुत्रो युधिष्ठिरः ।
नकुलः सहदेवश्च सुघोषमणिपुष्पकौ ॥ ६-२५-१६ (३९४७३)
काश्यश्च परमेष्वासः शिखण्डी च महारथः ।
धृष्टद्युम्नो विराटश्च सात्यकिश्चापराजितः ॥ ६-२५-१७ (३९४७४)
द्रुपदो द्रौपदेयाश्च सर्वशः पृथिवीपते ।
सौभद्रश्च महाबाहुः शङ्खान्दध्मुः पृथक्पृथक् ॥ ६-२५-१८ (३९४७५)
स घोषो धार्तराष्ट्राणां हृदयानि व्यदारयत् ।
नभश्च पृथिवीं चैव तुमुलो व्यनुनादयन् ॥ ६-२५-१९ (३९४७६)
अथ व्यवस्थितान्दृष्ट्वा धार्तराष्ट्रान्कपिध्वजः ।
प्रवृत्ते शस्त्रसंपाते धनुरुद्यम्य पाण्डवः ॥ ६-२५-२० (३९४७७)
हृषीकेशं तदा वाक्यमिदमाह महीपते । ६-२५-२१ (३९४७८)
अर्जुन उवाच ।
सेनयोरुभयोर्मध्ये रथं स्थापय मेऽच्युत ॥ ६-२५-२१क्ष् (४००९)
यावदेतान्निरीक्षेऽहं योद्धुकामानवस्थितान् ।
कैर्मया सह योद्धव्यमस्मिन्रणसमुद्यमे ॥ ६-२५-२२ (३९४७९)
योत्स्यमानानवेक्षेऽहं य एतेऽत्र समागताः ।
धार्तराष्ट्रस्य दुर्बुद्धेर्युद्धे प्रियचिकीर्षवः ॥ ६-२५-२३ (३९४८०)
सञ्जय उवाच। ६-२५-२४क्ष् (४०१०)

एवमुक्तो हृषीकेशो गुडाकेशेन भारत ।
सेनयोरुभयोर्मध्ये स्थापयित्वा रथोत्तमम् ॥ ६-२५-२४ (३९४८१)
भीष्मद्रोणप्रमुखतः सर्वेषां च महीक्षिताम् ।
उवाच पार्थ पश्यैतान्समवेतान्कुरूनिति ॥ ६-२५-२५ (३९४८२)
तत्रापश्यत्स्थितान्पार्थः पितॄनथ पितामहान् ।
आचार्यान्मातुलान्भ्रातॄन्पुत्रान्पौत्रान्सखींस्तथा ॥ ६-२५-२६ (३९४८३)
श्वशुरान्सुहृदश्चैव सेनयोरुभयोरपि ।
तान्समीक्ष्य स कौन्तेयः सर्वान्बन्धूनवस्थितान् ॥ ६-२५-२७ (३९४८४)
कृपया परयाऽविष्टो विषीदन्निदमब्रवीत् । ६-२५-२८ (३९४८५)
अर्जुन उवाच ।
दृष्ट्वेमं स्वजनं कृष्ण युयुत्सुं समुपस्थितम् ॥ ६-२५-२८क्ष् (४०११)
सीदन्ति मम गात्राणि मुखं च परिशुष्यति ।
वेपथुश्च शरीरे मे रोमहर्षश्च जायते ॥ ६-२५-२९ (३९४८६)
गाण्डीवं स्रंसते हस्तात्त्वक्चैव परिदह्यते ।
न च शक्नोम्यवस्थातुं भ्रमतीव च मे मनः ॥ ६-२५-३० (३९४८७)
निमित्तानि च पश्यामि विपरीतानि केशव ।
न च श्रेयोऽनुपश्यामि हत्वा स्वजनमाहवे ॥ ६-२५-३१ (३९४८८)
न काङ्क्षे विजयं कृष्ण न च राज्यं सुखानि च ।
किं नो राज्येन गोविन्द किं भोगैर्जीवितेन वा ॥ ६-२५-३२ (३९४८९)
येषामर्थे काङ्क्षितं नो राज्यं भोगाः सुखानि च ।
त इमेऽवस्थिता युद्धे प्राणांस्त्यक्त्वा धनानि च ॥ ६-२५-३३ (३९४९०)
आचार्याः पितरः पुत्रास्तथैव च पितामहाः ।
मातुलाः श्वशुराः पौत्राः स्यालाः संबन्धिनस्तथा ॥ ६-२५-३४ (३९४९१)
एतान्न हन्तुमिच्छामि घ्नतोऽपि मधुसूदन ।
अपि त्रैलोक्यराज्यस्य हेतोः किं नु महीकृते ॥ ६-२५-३५ (३९४९२)
निहत्य धार्तराष्ट्रान्नः का प्रीतिः स्याज्जनार्दन ।
पापमेवाश्रयेदस्मान्हत्वैतानाततायिनः ॥ ६-२५-३६ (३९४९३)
तस्मान्नार्हा यवं हन्तुं धार्तराष्ट्रान्स्वबान्धवान् ।
स्वजनं हि कथं हत्वा सुखिनः स्याम माधव ॥ ६-२५-३७ (३९४९४)
यद्यप्येते न पश्यन्ति लोभोपहतचेतसः ।
कुलक्षयकृतं दोषं पित्रद्रोहे च पातकम् ॥ ६-२५-३८ (३९४९५)
कथं न ज्ञेयमस्माभिः पापादस्मान्निवर्तितुम् ।
कुलक्षयकृतं दोषं प्रपश्यद्भिर्जनार्दन ॥ ६-२५-३९ (३९४९६)
कुलक्षये प्रणश्यन्ति कुलधर्माः सनातनाः ।
धर्मे नष्टे कुलं कृत्स्नमधर्मोऽभिभवत्युत ॥ ६-२५-४० (३९४९७)
अधर्माभिभवात्कृष्ण प्रदुष्यन्ति कुलस्त्रियः ।

स्त्रीषु दुष्टासु वार्ष्णेय जायते वर्णसङ्करः ॥ ६-२५-४१ (३९४९८)
सङ्करो नरकायैव कुलघ्नानां कुलस्य च ।
पतन्ति पितरो ह्येषां कुप्तपिण्डोदकक्रियाः ॥ ६-२५-४२ (३९४९९)
दोषैरेतैः कुलघ्नानां वर्णसङ्करकारकैः ।
उत्साद्यन्ते जातिधर्माः कुलधर्माश्च शाश्वताः ॥ ६-२५-४३ (३९५००)
उत्सन्नकुलधर्माणां मनुष्याणां जनार्दन ।
नरके नियतं वासो भवतीत्यनुशुश्रुम ॥ ६-२५-४४ (३९५०१)
अहो बत महत्पापं कर्तुं व्यवसिता वयम् ।
यद्राज्यसुखलोभेन हन्तुं स्वजनमुद्यताः ॥ ६-२५-४५ (३९५०२)
यदि मामप्रतीकारमशस्त्रं शस्त्रपाणयः ।
धार्तराष्ट्रा रणे हन्युस्तन्मे क्षेमतरं भवेत् ॥ ६-२५-४६ (३९५०३)
सञ्जय उवाच। ६-२५-४७क्ष् (४०१२)
एवमुक्त्वार्जुनः सङ्ख्ये रथोपस्थ उपाविशत् ।
विसृज्य सशरं चापं शोकसंविग्नमानसः ॥ ॥ ६-२५-४७ (३९५०४)

इति श्रीमन्महाभारते भीष्मपर्वणि भगवद्गीतापर्वणि
पञ्चविंशोऽध्यायः ॥

इति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे
श्रीकृष्णार्जुनसंवादे अर्जुनविषादयोगोनाम प्रथमोऽध्यायः ॥ १ ॥
Mahabharata - Bhishma Parva - Chapter Footnotes

६-२५-८ सौमदत्तिस्तञ्चैवचेति माध्वपाठः ॥
६-२५-१८ शङ्खं दध्मुः पृथक्पृथक् इति माध्वपाठः ॥
६-२५-३० गाण्डीवं स्रवते हस्तात् इति माध्वपाठः ॥
६-२५-३४ श्याला इति माध्वपाठः ॥

---

भिस्मपर्व-अध्यय०२६
॥ श्रीः ॥
६.२६. अध्यायः २६

Mahabharata - Bhishma Parva - Chapter Topics
षड्विंशोऽध्यायः ॥ भगवद्गीताध्यायः ॥ २ ॥

Mahabharata - Bhishma Parva - Chapter Text

६-२६-० (३९५०५)
सञ्जय उवाच। ६-२६-०क्ष् (४०१३)
तं तथा कृपयाविष्टमश्रुपूर्णाकुलेक्षणम् ।
विषीदन्तमिदं वाक्यमुवाच मधुसूदनः ॥ ६-२६-१ (३९५०६)
श्रीभगवानुवाच। ६-२६-२क्ष् (४०१४)
कुतस्त्वा कश्मलमिदं विषमे समुपस्थितम् ।
अनार्यजुष्टमस्वर्ग्यमकीर्तिकरमर्जुन ॥ ६-२६-२ (३९५०७)
क्लैब्यं मा स्म गमः पार्थ नैतत्त्वय्युपपद्यते ।
क्षुद्रं हृदयदौर्बल्यं त्यक्त्वोत्तिष्ठ परंतप ॥ ६-२६-३ (३९५०८)
अर्जुन उवाच। ६-२६-४क्ष् (४०१५)
कथं भीष्ममहं सङ्ख्ये द्रोणं च मधुसूदन ।
इषुभिः प्रतियोत्स्यामि पूजार्हावरिसूदन ॥ ६-२६-४ (३९५०९)
गुरूनहत्वा हि महानुभावान्
श्रेयो भोक्तुं भैक्षमपीह लोके ।
हत्वार्थकामांस्तु गुरूनिहैव
भुञ्जीय भोगान्रुधिरप्रदिग्धान् ॥ ६-२६-५ (३९५१०)
न चैतद्विद्मः कतरन्नो गरीयो
यद्वा जयम यदि वा नो जयेयुः ।
यानेव हत्वा न जिजीविषाम-
स्तेऽवस्थिताः प्रमुखे धार्तराष्ट्राः ॥ ६-२६-६ (३९५११)
कार्पण्यदोषोपहतस्वभावः
पृच्छामि त्वां धर्मसंमूढचेताः ।
यच्छ्रेयः स्यान्निश्चितं ब्रूहि तन्मे
शिष्यस्तेऽहं शाधि मां त्वां प्रपन्नम् ॥ ६-२६-७ (३९५१२)
न हि प्रपश्यामि ममापनुद्या-
द्यच्छोकमुच्छोषणमिन्द्रियाणाम् ।
अवाप्य भूमावसपत्नमृद्धं
राज्यं सुराणामपि चाधिपत्यम् ॥ ६-२६-८ (३९५१३)
सञ्जय उवाच। ६-२६-९क्ष् (४०१६)
एवमुकत्वा हृषीकेशं गुडाकेशं परंतप ।
न योत्स्य इति गोविन्दमुक्त्वा तूष्णीं बभूव ह ॥ ६-२६-९ (३९५१४)
तमुवाच हृषीकेशः प्रहसन्निव भारत ।
सेनयोरुभयोर्मध्ये विषीदन्तमिदं वचः ॥ ६-२६-१० (३९५१५)
श्रीभगवानुवाच। ६-२६-११क्ष् (४०१७)
अशोच्यानन्वशोचस्त्वं प्रज्ञावादांश्च भाषसे ।
गतासूनगतासूंश्च नानुशोचन्ति पाण्डिताः ॥ ६-२६-११ (३९५१६)

नत्वेवाहं जातु नासं न त्वं नेमे जनाधिपाः ।
न चैव नभविष्यामः सर्वे वयमतः परम् ॥ ६-२६-१२ (३९५१७)
देहिनोऽस्मिन्यथा देहे कौमारं यौवनं जरा ।
तथा देहान्तरप्राप्तिर्धीरस्तत्र न मुह्यति ॥ ६-२६-१३ (३९५१८)
मात्रास्पर्शास्तु कौन्तेय शीतोष्णसुखदुःखदाः ।
आगमापायिनोऽनित्यास्तांस्तितिक्षस्व भारत ॥ ६-२६-१४ (३९५१९)
यं हि व्यथयन्त्येते पुरुषं पुरुषर्षभ ।
समदुःखसुखं धीरं सोऽमृतत्वाय कल्पते ॥ ६-२६-१५ (३९५२०)
नासतो विद्यते भावो नाभावो विद्यते सतः ।
उभयोरपि दृष्टोऽन्तस्त्वनयोस्तत्त्वदर्शिभिःक ॥ ६-२६-१६ (३९५२१)
अविनाशि तु तद्विद्धि येन सर्वमिदं ततम् ।
विनाशमव्ययस्यास्य न कश्चित्कर्तुमर्हति ॥ ६-२६-१७ (३९५२२)
अन्तवन्त इमे देहा नित्यस्योक्ताः शरीरिणः ।
अनाशिनोऽप्रमेयस्य तस्माद्युध्यस्व भारत ॥ ६-२६-१८ (३९५२३)
य एनं वेत्ति हन्तारं यश्चैनं मन्यते हतम् ।
उभौ तौ न विजानीतो नायं हन्ति न हन्यते ॥ ६-२६-१९ (३९५२४)
न जायते म्रियते वा कदाचि-
न्नायं भूत्वा भविता वा न भूयः ।
अजो नित्यः शाश्वतोऽयं पुराणो
न हन्तये हन्यमाने शरीरे ॥ ६-२६-२० (३९५२५)
वेदाविनाशिनं नित्यं य एनमजमव्ययम् ।
कथं स पुरुषः पार्थ कं घातयति हन्ति कम् ॥ ६-२६-२१ (३९५२६)
वासांसि जीर्णानि यथा विहाय
नवानि गृह्णानि नरोऽपराणि ।
तथा शरीराणि विहाय जीर्णा-
न्यन्यानि संयाति नवानि देही ॥ ६-२६-२२ (३९५२७)
नैनं छिन्दन्ति शस्त्राणि नैनं दहति पावकः ।
न चैनं क्लेदयन्त्यापो न शोषयति मारुतः ॥ ६-२६-२३ (३९५२८)
अच्छेद्योऽयमदाह्योऽयमक्लेद्योऽशोष्य एव च ।
नित्यः सर्वगतः स्थाणुरचलोऽयं सनातनः ॥ ६-२६-२४ (३९५२९)
अव्यक्तोऽयमचिन्त्योऽयमविकार्योऽयमुच्यते ।
तस्मादेवं विदित्वैनं नानुशोचितुमर्हसि ॥ ६-२६-२५ (३९५३०)
अथ चैनं नित्यजातं नित्यं वा मन्यसे मृतम् ।
तथापि कत्वं महाबाहो नैनं शोचितुमर्हसि ॥ ६-२६-२६ (३९५३१)
जातस्य हि ध्रुवो मृत्युर्ध्रुवं जन्म मृतस्य च ।
तस्मादपरिहार्येऽर्थे न त्वं शोचितुमर्हसि ॥ ६-२६-२७ (३९५३२)

अव्यक्तादीनि भूतानि व्यक्तमध्यानि भारत ।
अव्यक्तनिधनान्येन तत्र का परिदेवना ॥ ६-२६-२८ (३९५३३)
आश्चर्यवत्पश्यति कश्चिदेन-
माश्चर्यवद्वदति तथैव चान्यः ।
आश्चर्यवच्चैनमन्यः श्रृणोति
श्रुत्वाऽप्येनं वेद न चैव कश्चित् ॥ ६-२६-२९ (३९५३४)
देही नित्यमवध्योऽयं देहे सर्वस्य भारत ।
तस्मात्सर्वाणि भूतानि न त्वं शोचितुमर्हसि ॥ ६-२६-३० (३९५३५)
स्वधर्ममपि चावेक्ष्य न विकम्पितुमर्हसि ।
धर्म्याद्धि युद्धाच्छ्रेयोऽन्यत्क्षत्रियस्य न विद्यते ॥ ६-२६-३१ (३९५३६)
यदृच्छया चोपपन्नं स्वर्गद्वारमपावृतम् ।
सुखिनः क्षत्रियाः पार्थ लन्ते युद्धमीदृशम् ॥ ६-२६-३२ (३९५३७)
अथ चेत्त्वमिमं धर्म्यं संग्रामं न करिष्यसि ।
ततः स्वधर्मं कीर्तिं च हित्वा पापमवाप्स्यसि ॥ ६-२६-३३ (३९५३८)
अकीर्तिं चापि भूतानि कथयिष्यन्ति तेऽव्ययाम् ।
संभावितस्य चाकीर्तिर्मरणादतिरिच्यते ॥ ६-२६-३४ (३९५३९)
भयाद्रणादुपरतं मंस्यन्ते त्वां महारथाः ।
येषां च त्वं बहुमतो भूत्वा यास्यसि लाघवम् ॥ ६-२६-३५ (३९५४०)
अवाच्यवादांश्चक बहून्वदिष्यन्ति तवाहिताः ।
निन्दन्तस्तव सामर्थ्यं ततो दुःखतरं नु किम् ॥ ६-२६-३६ (३९५४१)
हतो वा प्राप्स्यसि स्वर्गं जित्वा वा भोक्ष्यसे महीम् ।
तस्मादुत्तिष्ठ कौन्तेय युद्धाय कृतनिश्चयः ॥ ६-२६-३७ (३९५४२)
सुखदुःखे समे कृत्वा लाभालाभौ जयाजयौ ।
ततो युद्धाय युज्यस्व नैवं पापमवाप्स्यसि ॥ ६-२६-३८ (३९५४३)
एषा तेऽभिहिता साङ्ख्ये बुद्धिर्योगे त्विमां श्रृणु ।
बुद्ध्या युक्तो यया पार्थ कर्मबन्धं प्रहास्यसि ॥ ६-२६-३९ (३९५४४)
नेहाभिक्रमनाशोऽस्ति प्रत्यवायो न विद्यते ।
स्वल्पमप्यस्य धर्मस्य त्रायते महतो भयात् ॥ ६-२६-४० (३९५४५)
व्यवसायात्मिका बुद्धिरेकेह कुरुनन्दन ।
बहुशाखा ह्यनन्ताश्च बुद्धयोऽव्यवसायिनाम् ॥ ६-२६-४१ (३९५४६)
यामिमां पुष्पितां वाचं प्रवदन्त्यविपश्चितः ।
वेदवादरताः पार्थ नान्यदस्तीति वादिनः ॥ ६-२६-४२ (३९५४७)
कामात्मानः स्वर्गपरा जन्मकर्मफलप्रदाम् ।
क्रियाविशेषबहुलां भोगैश्वर्यगतिं प्रति ॥ ६-२६-४३ (३९५४८)
भोगैश्वर्यप्रसक्तानां तयाऽपहृतचेतसाम् ।
व्यवसायात्मिका बुद्धिः समाधौ न विधीयते ॥ ६-२६-४४ (३९५४९)

त्रैगुण्यविषया वेदा निस्त्रैगुण्यो भवार्जुन ।
निर्द्वन्द्वो नित्यसत्वस्थो निर्योगक्षेम आत्मवान् ॥ ६-२६-४५ (३९५५०)
यावानर्थ उदपाने सर्वतः संप्लुतोदके ।
तावान्सर्वेषु वेदेषु ब्राह्मणस्य विजानतः ॥ ६-२६-४६ (३९५५१)
कर्मण्येवाधिकारस्ते मा फलेषु कदा च न ।
मा कर्मफलहेतुर्भूर्मा ते सङ्गोऽस्त्वकर्मणि ॥ ६-२६-४७ (३९५५२)
योगस्थः कुरु कर्माणि सङ्गं त्यक्त्वा धनंजय ।
सिद्ध्यसिद्ध्योः समो भूत्वा समत्वं योग उच्यते ॥ ६-२६-४८ (३९५५३)
दूरेण ह्यवरं कर्म बुद्धियोगाद्धनंजय ।
बुद्धौ शरणमन्विच्छ कृपणाः फलहेतवः ॥ ६-२६-४९ (३९५५४)
बुद्धियुक्तो जहातीहक उभे सुकृतदुष्कृते ।
तस्माद्योगाय युज्यस्व योगः कर्मसु कौशलम् ॥ ६-२६-५० (३९५५५)
कर्मजं बुद्धियुक्ता हि फलं त्यक्त्वा मनीषिणः ।
जन्मबन्धविनिर्मुक्ताः पदं गच्छन्त्यनामयम् ॥ ६-२६-५१ (३९५५६)
यदा ते मोहकलिलं बुद्धिर्व्यतितरिष्यति ।
तदा गन्तासि निर्वेदं श्रोतव्यस्य श्रुतस्य च ॥ ६-२६-५२ (३९५५७)
श्रुतिविप्रतिपन्ना ते यदा स्थास्यति निश्चला ।
समाधावचला बुद्धिस्तदा योगमवाप्स्यसि ॥ ६-२६-५३ (३९५५८)
अर्जुन उवाच। ६-२६-५४क्ष् (४०१८)
स्थितप्रज्ञस्य का भाषा समाधिस्थस्य केशव ।
स्थितधीः किं प्रभाषेत किमासीत व्रजेत किं ॥ ६-२६-५४ (३९५५९)
श्रीभगवानुवाच । ६-२६-५५क्ष् (४०१९)
प्रजहाति यदा कामान्सर्वान्पार्थ मनोगतान् ।
आत्मन्येवात्मना तुष्टः स्थितप्रज्ञस्तदोच्यते ॥ ६-२६-५५ (३९५६०)
दुःखेष्वनुद्विग्नमनाः सुखेषु विगतस्पृहः ।
वीतरागभयक्रोधः स्थितधीर्मुनिरुच्यते ॥ ६-२६-५६ (३९५६१)
यः सर्वत्रानभिस्नेहस्तत्तत्प्राप्य शुभाशुभम् ।
नाभिनन्दति न द्वेष्टि तस्य प्रज्ञा प्रतिष्ठिता ॥ ६-२६-५७ (३९५६२)
यदा संहरते चायं कूर्मोऽङ्गानीव सर्वशः ।
इन्द्रियाणीन्द्रियार्थेभ्यस्तस्य प्रज्ञा प्रतिष्ठिता ॥ ६-२६-५८ (३९५६३)
विषया विनिवर्तन्ते निराहारस्य देहिनः ।
रसवर्जं रसोऽप्यस्य परं दृष्ट्वा निवर्तते ॥ ६-२६-५९ (३९५६४)
यततो ह्यपि कौन्तेय पुरुषस्य विपश्चितः ।
इन्द्रियाणि प्रमाथीनि हरन्ति प्रसभं मनः ॥ ६-२६-६० (३९५६५)
तानि सर्वाणि संयम्य युक्त आसीत मत्परः ।
वशे हि यस्येन्द्रियामि तस्य प्रज्ञा प्रतिष्ठिता ॥ ६-२६-६१ (३९५६६)

ध्यायतो विषयान्पुंसः सङ्गस्तेषूपजायते ।
सङ्गात्संजायते कामः कामात्क्रोधोऽभिजायते ॥ ६-२६-६२ (३९५६७)
क्रोधाद्भवति संमोहः संमोहात्स्मृतिविभ्रमः ।
स्मृतिभ्रंशाद्बुद्दिनाशो बुद्धिनाशात्प्रणश्यति ॥ ६-२६-६३ (३९५६८)
रागद्वेषवियुक्तैस्तु विषयानिन्द्रियैश्चरन् ।
आत्मवश्यैर्विधेयात्मा प्रसादमधिगच्छति ॥ ६-२६-६४ (३९५६९)
प्रसादे सर्वदुःखानां हानिरस्योपजायते ।
प्रसन्नचेतसो ह्याशु बुद्धिः पर्यवतिष्ठते ॥ ६-२६-६५ (३९५७०)
नास्ति बुद्धिरयुक्तस्य न चायुक्तस्य भावना ।
न चाभावयतः शान्तिरशान्तस्य कुतः सुखम् ॥ ६-२६-६६ (३९५७१)
इन्द्रियाणां हि चरतां यन्मनोऽनुविधीयते ।
तदस्य हरति प्रज्ञां वायुर्नावमिवाम्भसि ॥ ६-२६-६७ (३९५७२)
तस्माद्यस्य महाबाहो निगृहीतानि सर्वशः ।
इन्द्रियाणीन्द्रियार्थेभ्यस्तस्य प्रज्ञा प्रतिष्ठिता ॥ ६-२६-६८ (३९५७३)
या निशा सर्वभूतानां तस्यां जागर्ति संयमी ।
यस्यां जाग्रति भूतानि सा निशा पश्यतो मुनेः ॥ ६-२६-६९ (३९५७४)
आपूर्यमाणमचलप्रतिष्ठं
समुद्रमापः प्रविशन्ति यद्वत् ।
तद्वत्कामा यं प्रविशन्ति सर्वे
स शान्तिमाप्नोति न कामकामी ॥ ६-२६-७० (३९५७५)
विहाय कामान्यः सर्वान्पुमांश्चरति निःस्पृहः ।
निर्ममो निरहंकारः स शान्तिमधिगच्छति ॥ ६-२६-७१ (३९५७६)
एषा ब्राह्मी स्थितिः पार्थ नैनां प्राप्य विमुह्यति ।
स्थित्वास्यामन्तकालेऽपि ब्रह्म निर्वाणमृच्छति ॥ ॥ ६-२६-७२ (३९५७७)

इति श्रीमन्महाभारते भीष्मपर्वणि भगवद्गीतापर्वणि षड्विंशोऽध्यायः ॥

इति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे
श्रीकृष्णार्जुनसंवादे शाङ्ख्ययोगोनाम द्वितीयोऽध्यायः ॥ २ ॥

---

भिस्मपर्व-अध्यय०२७
॥ श्रीः ॥
६.२७. अध्यायः २७

Mahabharata - Bhishma Parva - Chapter Topics
सप्तविंशोऽध्यायः ॥ भगवद्गीताध्यायः ॥ ३ ॥

६-२७-० (३९५७८)
अर्जुन उवाच। ६-२७-०क्ष् (४०२०)
ज्यायसी चेत्कर्मणस्ते मता बुद्धिर्जनार्दन ।
तत्किं कर्मणि घोरे मां नियोजयसि केशव ॥ ६-२७-१ (३९५७९)
व्यामिश्रेणेव वाक्येन बुद्धिं मोहयसीव मे ।
तदेकं वद निश्चित्य येन श्रेयोऽहमाप्नुयाम् ॥ ६-२७-२ (३९५८०)
श्रीभगवानुवाच। ६-२७-३क्ष् (४०२१)
लोकेऽस्मिन्द्विविधा निष्ठा पुरा प्रोप्ता मयाऽनघ ।
ज्ञानयोगेन साङ्ख्यानां कर्मयोगेन योगिनाम् ॥ ६-२७-३ (३९५८१)
न कर्मणामनारम्भान्नैष्कर्म्यं पुरुषोऽश्नुते ।
न च संन्यसनादेव सिद्धिं समधिगच्छति ॥ ६-२७-४ (३९५८२)
न हि कश्चित्क्षणमपि जातु तिष्ठत्यकर्मकृत् ।
कार्यते ह्यवशः कर्म सर्वः प्रकृतिजैर्गुणैः ॥ ६-२७-५ (३९५८३)
कर्मेन्द्रियाणि संयम्य य आस्ते मनसा स्मरन् ।
इन्द्रियार्थान्विमूढात्मा मिथ्याचाराः स उच्यते ॥ ६-२७-६ (३९५८४)
यस्त्विन्द्रियाणि पनसा नियम्यारमभतेऽर्जुन ।
कर्मेन्द्रियैः कर्मयोगमसक्तः स विशिष्यते ॥ ६-२७-७ (३९५८५)
नियतं कुरु कर्म त्वं ज्यायो ह्यकर्मणः ।
शरीरयात्रापि च ते न प्रतिद्धयेदकर्मणः ॥ ६-२७-८ (३९५८६)
यज्ञार्थात्कर्मणोऽन्यत्र लोकोऽयं कर्मबन्धनः ।
तदर्थं कर्म कौन्तेय मुक्तसङ्गः समाचर ॥ ६-२७-९ (३९५८७)
सहयज्ञाः प्रजाः सृष्ट्वा पुरोवाच प्रजापतिः ।
अनेन प्रसविष्यध्वमेष वोऽस्त्विष्टकामधुक् ॥ ६-२७-१० (३९५८८)
देवान्भावयताऽनेन ते देवा भावयन्तु वः ।
परस्परं भावयन्तः श्रेयः परमवाप्स्यथ ॥ ६-२७-११ (३९५८९)
इष्टान्भोगान्हि वो देवा दास्यन्ते यज्ञभाविताः ।
तैर्दत्तानप्रदायैभ्यो यो भुङ्क्ते स्तेन एव सः ॥ ६-२७-१२ (३९५९०)
यज्ञशिष्टाशिनः सन्तो मुच्यन्ते सर्वकिल्बिषैः ।
भुञ्जते ते त्वघं पापा ये पचन्त्यात्मकारणात् ॥ ६-२७-१३ (३९५९१)
अन्नाद्भवन्ति भूतानि पर्जन्यादन्नसंभवः ।
यज्ञाद्भवति पर्जन्यो यज्ञः कर्मसमुद्भवः ॥ ६-२७-१४ (३९५९२)
कर्म ब्रह्मोद्भवं विद्धि ब्रह्माऽक्षरसमुद्भवम् ।
तस्मात्सर्वगतं ब्रह्म नित्यं यज्ञे प्रतिष्ठितम् ॥ ६-२७-१५ (३९५९३)

एवं प्रवर्तितं चक्रं नानुवर्तयतीह यः ।
अघायुरिन्द्रियारामो मोघं पार्थ स जीवति ॥ ६-२७-१६ (३९५९४)
यस्त्वात्मरतिरेव स्यादात्मतृप्तश्च मानवः ।
आत्मन्येव च संतुष्टस्तस्य कार्यं न विद्यते ॥ ६-२७-१७ (३९५९५)
नैव तस्य कृतेनार्थो नाकृतेनेह कश्चन ।
न चास्य सर्वभूतेषु कश्चिदर्थव्यपाश्रयः ॥ ६-२७-१८ (३९५९६)
तस्मादसक्तः सततं कार्यं कर्म समाचर ।
असक्तो ह्याचरन्कर्म परमाप्नोति पुरूषः ॥ ६-२७-१९ (३९५९७)
कर्मणैव हि संसिद्धिमास्थिता जनकादयः ।
लोकसंग्रहमेवापि संपश्यन्कर्तुमर्हसि ॥ ६-२७-२० (३९५९८)
यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः ।
स यत्प्रमाणं कुरुते लोकस्तदनुवर्तते ॥ ६-२७-२१ (३९५९९)
न मे पार्थास्ति कर्तव्यं त्रिषु लोकेषु किंचन ।
नानवाप्तमवाप्तव्यं वर्त एव च कर्मणि ॥ ६-२७-२२ (३९६००)
यदि ह्यहं न वर्तेयं जातु कर्मण्यतन्द्रितः ।
मम वर्त्मानुवर्तन्ते मनुष्याः पार्थ सर्वशः ॥ ६-२७-२३ (३९६०१)
उत्सीदेयुरिमे लोका न कुर्यां कर्म चेदहम् ।
संकरस्य च कर्ता स्यामुपहन्यामिमाः प्रजाः ॥ ६-२७-२४ (३९६०२)
सक्ताः कर्मण्यविद्वांसो यथा कुर्वन्ति भारत ।
कुर्याद्विद्वांस्तथाऽसक्तश्चिकीर्षुर्लोकसंग्रहम् ॥ ६-२७-२५ (३९६०३)
न बुद्धिभेदं जनयेदज्ञानां कर्मसङ्गिनाम् ।
जोषयेत्सर्वकर्माणि विद्वान्युक्तः समाचरन् ॥ ६-२७-२६ (३९६०४)
प्रकृतेः क्रियमाणानि गुणैः कर्माणि सर्वशः ।
अहङ्कारविमूढात्मा कर्ताहमिति मन्यते ॥ ६-२७-२७ (३९६०५)
तत्त्ववित्तु महाबाहो गुणकर्मविभागयोः ।
गुणाऽनुणेषु वर्तन्त इति मत्वा न सज्जते ॥ ६-२७-२८ (३९६०६)
प्रकृतेर्गुणसंमूढाः सज्जन्ते गुणकर्मसु ।
तानकृत्स्नविदो मन्दान्कृत्स्नविन्न विचालयेत् ॥ ६-२७-२९ (३९६०७)
मयि सर्वाणि कर्माणि संन्यस्याध्यात्मचेतसा ।
निराशीर्निर्ममो भूत्वा युध्यस्व विगतज्वरः ॥ ६-२७-३० (३९६०८)
ये मे मतमिदं नित्यमनुतिष्ठन्ति मानवाः ।
श्रद्धावन्तोऽनसूयन्तो मुच्यन्ते तेऽपि कर्मभिः ॥ ६-२७-३१ (३९६०९)
ये त्वेतदभ्यसूयन्तो नानुतिष्ठन्ति मे मतम् ।
सर्वज्ञानविमूढांस्तान्विद्धि नष्टानचेतसः ॥ ६-२७-३२ (३९६१०)
सदृशं चेष्टते स्वस्याः प्रकृतेर्ज्ञानवानपि ।
प्रकृतिं यान्ति भूतानि निग्रहः किं करिष्यति ॥ ६-२७-३३ (३९६११)

इन्द्रियस्येन्द्रियस्यार्थे रागद्वेषौ व्यवस्थितौ ।
तयोर्न वशमागच्छेत्तौ ह्यस्य परिपन्थिनौ ॥ ६-२७-३४ (३९६१२)
श्रेयान्स्वधर्मो विगुणः परधर्मात्स्वनुष्ठितात् ।
स्वधर्मे निधनं श्रेयः परधर्मो भयावहः ॥ ६-२७-३५ (३९६१३)
अर्जुन उवाच। ६-२७-३६क्ष् (४०२२)
अथ केन प्रयुक्तोऽयं पापं चरति पूरुषः ।
अनिच्छन्नपि वार्ष्णेय बलादिव नियोजितः ॥ ६-२७-३६ (३९६१४)
श्रीभगवानुवाच। ६-२७-३७क्ष् (४०२३)
काम एष क्रोध एष रजोगुणसमुद्भवः ।
महाशनो महापाप्मा विद्ध्येनमिह वैरिणम् ॥ ६-२७-३७ (३९६१५)
धूमेनाव्रियते वह्निर्यथाऽऽदर्शो मलेन च ।
यथोल्बेनावृतो गर्भस्तथा तेनेदमावृतम् ॥ ६-२७-३८ (३९६१६)
आवृतं ज्ञानमेतेन ज्ञानिनो नित्यवैरिणा ।
कामरूपेण कौन्तेय दुष्पूरेणानलेन च ॥ ६-२७-३९ (३९६१७)
इन्द्रियाणि मनो बुद्धिरस्याधिष्ठानमुच्यते ।
एतैर्विमोहयत्येष ज्ञानमावृत्य देहिनम् ॥ ६-२७-४० (३९६१८)
तस्मात्त्वमिन्द्रियाण्यादौ नियम्य भरतर्षभ ।
पाप्मानं प्रजहि ह्येनं ज्ञानविज्ञाननाशनम् ॥ ६-२७-४१ (३९६१९)
इन्द्रियामि पराण्याहुरिन्द्रियेभ्यः परं मनः ।
मनसस्तु परा बुद्धिर्यो बुद्धेः परतस्तु सः ॥ ६-२७-४२ (३९६२०)
एवं बुद्धेः परं बुद्धाः संस्तभ्यात्मानमात्मना ।
जहि शत्रुं महाबाहो कामरूपं दुरासदम् ॥ ॥ ६-२७-४३ (३९६२१)

इति श्रीमन्महाभारते भीष्मपर्वणि भगवद्गीतापर्वणि
सप्तविंशोऽध्यायः ॥

इति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे
श्रीकृष्णार्जुनसंवादे कर्मयोगोनाम तृतीयोऽध्यायः ॥

---

भिस्मपर्व-अध्यय०२८
॥ श्रीः ॥
६.२८. अध्यायः २८

Mahabharata - Bhishma Parva - Chapter Topics
अष्टाचिंशोऽध्यायः ॥ भगवद्गीताध्यायः ॥ ४ ॥

Mahabharata - Bhishma Parva - Chapter Text

६-२८-० (३९६२२)
श्रीभगवानुवाच। ६-२८-०क्ष् (४०२४)
इमं विवस्वते योगं प्रोक्तवानहमव्ययम् ।
विवस्वान्मनवे प्राह मनुरिक्ष्वाकवेऽब्रवीत् ॥ ६-२८-१ (३९६२३)
एवं परम्पराप्राप्तमिमं राजर्षयोऽविदुः ।
स कालेनेह महता योगो नष्टः परंतप ॥ ६-२८-२ (३९६२४)
स एवायं मया तेऽद्य योगः प्रोक्तः पुरातनः ।
भक्तोऽसि मे सखा चेति रहस्यं ह्येतदुत्तमम् ॥ ६-२८-३ (३९६२५)
अर्जुन उवाच। ६-२८-४क्ष् (४०२५)
अपरं भवतो जन्म परं जन्म विवस्वतः ।
कथमेतद्विजानीयां त्वमादौ प्रोक्तवानिति ॥ ६-२८-४ (३९६२६)
श्रीभगवानुवाच। ६-२८-५क्ष् (४०२६)
बहूनि मे व्यतीतानि जन्मानि तव चार्जुन ।
तान्यहं वेद सर्वाणि न त्वं वेत्थ परंतप ॥ ६-२८-५ (३९६२७)
अजोऽपि सन्नव्ययात्मा भूतानामीश्वरोऽपि सन् ।
प्रकृतिं स्वामधिष्ठाय संभवाम्यात्ममायया ॥ ६-२८-६ (३९६२८)
यदा यदा हि धर्मस्य ग्लानिर्भवति भारत ।
अभ्युत्थानमधर्मस्य तदाऽऽत्मानं सृजाम्यहम् ॥ ६-२८-७ (३९६२९)
परित्राणाय साधूनां विनाशाय च दुष्कृताम् ।
धर्मसंस्थापनार्थाय संभवामि युगे युगे ॥ ६-२८-८ (३९६३०)
जन्म कर्म च मे दिव्यमेवं यो वेत्ति तत्त्वतः ।
त्यक्त्वा देहं पुनर्जन्म नैति मामेति सोऽर्जुन ॥ ६-२८-९ (३९६३१)
वीतरागभयक्रोधा मन्मया मामुपाश्रिताः ।
बहवो ज्ञानतपसा पूता मद्भावमागताः ॥ ६-२८-१० (३९६३२)
ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहम् ।
मम वर्त्मानुवर्तन्ते मनुष्याः पार्थ सर्वशः ॥ ६-२८-११ (३९६३३)
काङ्क्षन्तः कर्मणां सिद्धिं यजन्त इह देवताः ।
क्षिप्रं हि मानुषे लोके सिद्धिर्भवति कर्मजा ॥ ६-२८-१२ (३९६३४)
चातुर्वर्ण्यं मया सृष्टं गुणकर्मविभागशः ।
तस्य कर्तारमपि मां विद्ध्यकर्तारमव्ययम् ॥ ६-२८-१३ (३९६३५)
न मां कर्माणि लिम्पन्तिक न मे कर्मफले स्पृहा ।
इति मां योऽभिजानाति कर्मभिर्न स बध्यते ॥ ६-२८-१४ (३९६३६)
एवं ज्ञात्वा कृतं कर्म पूर्वैरपि मुमुक्षुभिः ।
कुरु कर्मैव तस्मात्त्वं पूर्वैः पूर्वतरं कृतम् ॥ ६-२८-१५ (३९६३७)
किं कर्म किमकर्मेति कवयोऽप्यत्र मोहिताः ।

तत्ते कर्म प्रवक्ष्यामि यज्ज्ञात्वा मोक्ष्यसेऽशुभात् ॥ ६-२८-१६ (३९६३८)
कर्मणो ह्यपि बोद्धव्यं बोद्धव्यं च विकर्मणः ।
अकर्मणश्च बोद्धव्यं गहना कर्मणो गतिः ॥ ६-२८-१७ (३९६३९)
कर्मण्यकर्म यः पश्येदकर्मणि च कर्म यः ।
स बुद्धिमान्मनुष्येषु स युक्तः कृत्स्नकर्मकृत् ॥ ६-२८-१८ (३९६४०)
यस्य सर्वे समारम्भाः कामसंकल्पवर्जिताः ।
ज्ञानाग्निदग्धकर्माणं तमाहुः पण्डितं बुधाः ॥ ६-२८-१९ (३९६४१)
त्यक्त्वा कर्मफलासङ्गं नित्यतृप्तो निराश्रयः ।
कर्मण्यभिप्रवृत्तोऽपि नैव किंचित्करोति सः ॥ ६-२८-२० (३९६४२)
निराशीर्यतचित्तात्मा त्यक्तसर्वपरिग्रहः ।
शारीरं केवलं कर्म कुर्वन्नाप्नोति किल्बिषम् ॥ ६-२८-२१ (३९६४३)
यदृच्छालाभसंतुष्टो द्वन्द्वातीतो विमत्सरः ।
समः सिद्धावसिद्धौ च कृत्वापि न निबध्यते ॥ ६-२८-२२ (३९६४४)
गतसङ्गस्य मुक्तस्य ज्ञानावस्थितचेतसः ।
यज्ञायाचरतः कर्म समग्रं प्रविलीयते ॥ ६-२८-२३ (३९६४५)
ब्रह्मार्पणं ब्रह्म हविर्ब्रह्माग्नौ ब्रह्मणा हुतम् ।
ब्रह्मैव तेन गन्तव्यं ब्रह्म कर्म समाधिना ॥ ६-२८-२४ (३९६४६)
दैवमेवापरे यज्ञं योगिनः पर्युपासते ।
ब्रह्माग्नावपरे यज्ञं यज्ञेनैवोपजुह्वति ॥ ६-२८-२५ (३९६४७)
श्रोत्रादीनीन्द्रियाण्यन्ये संयमाग्निषु जुह्वति ।
शब्दादीन्विषयानन्य इन्द्रियाग्निषु जुह्वति ॥ ६-२८-२६ (३९६४८)
सर्वाणीन्द्रियकर्माणि प्राणकर्माणि चापरे ।
आत्मसंयमयोगाग्नौ जुह्वति ज्ञानदीपिते ॥ ६-२८-२७ (३९६४९)
द्रव्ययज्ञास्तपोयज्ञा योगयज्ञास्तथापरे ।
स्वाध्यायज्ञानयज्ञाश्च यतयः संशितव्रताः ॥ ६-२८-२८ (३९६५०)
अपाने जुह्वति प्राणं प्राणेऽपानं तथाऽपरे ।
प्राणापानगती रुद्ध्वा प्राणायामपरायणाः ॥ ६-२८-२९ (३९६५१)
अपरे नियताहाराः प्राणान्प्राणेषु जुह्वति ।
सर्वेऽप्येते यज्ञविदो यज्ञक्षपितकल्मषाः ॥ ६-२८-३० (३९६५२)
यज्ञशिष्टामृतभुजो यान्ति ब्रह्म सनातनम् ।
नायं लोकोऽस्त्ययज्ञस्य कुतोऽन्यः कुरुसत्तम ॥ ६-२८-३१ (३९६५३)
एवं बहुविधा यज्ञा वितता ब्रह्मणो मुखे ।
कर्मजान्विद्धि तान्सर्वानेवं ज्ञात्वा विमोक्ष्यसे ॥ ६-२८-३२ (३९६५४)
श्रेयान्द्रव्यमयाद्यजाज्ज्ञानयज्ञः परंतप ।
सर्वं कर्माखिलं पार्थ ज्ञाने परिसमाप्यते ॥ ६-२८-३३ (३९६५५)
तद्विद्धि प्रणिपातेन परिप्रश्नेन सेवया ।

उपदेक्ष्यन्ति ते ज्ञानं ज्ञानिनस्तत्त्वदर्शिनः ॥ ६-२८-३४ (३९६५६)
यज्ज्ञात्वा न पुनर्मोहमेवं यास्यसि पाण्डव ।
येन भूतान्यशेषेण द्रक्ष्यस्यात्मन्यथो मयि ॥ ६-२८-३५ (३९६५७)
अपि चेदसि पापेभ्यः सर्वेभ्यः पापकृत्तमः ।
सर्वं ज्ञानप्लवेनैव वृजिनं संतरिष्यसि ॥ ६-२८-३६ (३९६५८)
यथैधांसि समिद्धोऽग्निर्भस्मासात्कुरुतेऽर्जुन ।
ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते यथा ॥ ६-२८-३७ (३९६५९)
न हि ज्ञानेन सदृशं पवित्रमिह विद्यते ।
तत्स्वयं योगसंसिद्धः कालेनात्मनि विन्दति ॥ ६-२८-३८ (३९६६०)
श्रद्धावाँल्लभते ज्ञानं तत्परः संयतेन्द्रियः ।
ज्ञानं लब्ध्वा परां शान्तिमचिरेणाधिगच्छति ॥ ६-२८-३९ (३९६६१)
अज्ञश्चाश्रद्दधानश्च संशयात्मा विनश्यति ।
नायं लोकोऽस्ति न परो न सुखं संशयात्मनः ॥ ६-२८-४० (३९६६२)
योगसंन्यस्तकर्माणं ज्ञानसंछिन्नसंशयम् ।
आत्मवन्तं न कर्माणि निबध्नन्ति धनंजय ॥ ६-२८-४१ (३९६६३)
तस्मादज्ञानसंभूतं हृत्स्थं ज्ञानासिनाऽऽत्मनः ।
छित्त्वैनं संशयं योगमातिष्ठोत्तिष्ठ भारत ॥ ॥ ६-२८-४२ (३९६६४)

इति श्रीमन्महाभारते भीष्मपर्वणि भगवद्गीतापर्वणि
अष्टविंशोऽध्यायः ॥

इति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशस्त्रे
श्रीकृष्णार्जुनसंवादे यज्ञविभागयोगोनाम चतुर्थोऽध्यायः ॥
Mahabharata - Bhishma Parva - Chapter Footnotes

६-२८-३९ मत्परः संयतेन्द्रियः इति माध्वपाठः ॥
६-२८-क ज्ञानयोगोनाम इति माध्वपाठः ॥

---

भिस्मपर्व-अध्यय०२९
॥ श्रीः ॥
६.२९. अध्यायः २९

Mahabharata - Bhishma Parva - Chapter Topics
एकोनत्रिंशोऽध्यायः ॥ भगवद्गीताध्यायः ॥ ५ ॥

Mahabharata - Bhishma Parva - Chapter Text

६-२९-० (३९६६५)
अर्जुन उवाच। ६-२९-०क्ष् (४०२७)
संन्यासं कर्मणां कृष्ण कपुनर्योगं च शंससि ।
यच्छ्रेय एतयोरेकं तन्मे ब्रूहि सुनिश्चितम् ॥ ६-२९-१ (३९६६६)
श्रीभगवानुवाच। ६-२९-२क्ष् (४०२८)
संन्यासः कर्मयोगश्च निःश्रेयसकरावुभौ ।
तयोस्तु कर्मसंन्यासात्कर्मयोगो विशिष्यते ॥ ६-२९-२ (३९६६७)
ज्ञेयः स नित्यसंन्यासी यो न द्वेष्टि न काङ्क्षति ।
निर्द्वन्द्वो हि महाबाहो सुखं बन्धात्प्रमुच्यते ॥ ६-२९-३ (३९६६८)
साङ्ख्ययोगौ पृथग्बालाः प्रवदन्ति न पण्डिताः ।
एकमप्यास्थितः सम्यगुभयोर्विन्दते फलम् ॥ ६-२९-४ (३९६६९)
यत्साङ्ख्यैः प्राप्यते स्थानं तद्योगैरपि गम्यते ।
एकं साङ्ख्यं च योगं च यः पश्यति स पश्यति ॥ ६-२९-५ (३९६७०)
संन्यासस्तु महाबाहो दुःखमाप्तुमयोगतः ।
योगयुक्तो मुनिर्ब्रह्म नचिरेणाधिगच्छति ॥ ६-२९-६ (३९६७१)
योगयुक्तो विशुद्धात्मा विजितात्मा जितेन्द्रियः ।
सर्वभूतात्मभूतात्मा कुर्वन्नपि न लिप्यते ॥ ६-२९-७ (३९६७२)
नैव किंचित्करोमीति युक्तो मन्येत तत्त्ववित् ।
पश्यञ्शृण्वन्स्पृशञ्जिघ्रन्नश्नन्गच्छन्स्वपन्श्वसन् ॥ ६-२९-८
(३९६७३)
प्रलपन्विसृजन्गृह्णन्नुन्मिषन्निमिषन्नपि ।
इन्द्रियाणीन्द्रियार्थेषु वर्तन्त इति धारयन् ॥ ६-२९-९ (३९६७४)
ब्रह्मण्याधाय कर्माणि सङ्गं त्यक्त्वा करोति यः ।
लिप्यते न स पापेन पद्मपत्रमिवाम्भसा ॥ ६-२९-१० (३९६७५)
कायेन मनसा बुद्ध्या केवलैरिन्द्रियैरपि ।
योगिनः कर्म कुर्वन्ति सङ्गं त्यक्त्वात्मशुद्धये ॥ ६-२९-११ (३९६७६)
युक्तः कर्मफलं त्यक्त्वा शान्तिमाप्नोति नैष्ठिकीम् ।
अयुक्तः कामकारेण फले सक्तो निबध्यते ॥ ६-२९-१२ (३९६७७)
सर्वकर्माणि मनसा संन्यस्यास्ते सुखं वशी ।
नवद्वारे पुरे देही नैव कुर्वन्न कारयन् ॥ ६-२९-१३ (३९६७८)
न कर्तृत्वं न कर्माणि लोकस्य सृजति प्रभुः ।
न कर्मफलसंयोगं स्वभावस्तु प्रवर्तते ॥ ६-२९-१४ (३९६७९)
नादत्ते कस्य चित्पापं न चैव सुकृतं विभुः ।
अज्ञानेनावृतं ज्ञानं तेन मुह्यन्ति जन्तवः ॥ ६-२९-१५ (३९६८०)
ज्ञानेन तु तदज्ञानं येषां नाशितमात्मनः ।

तेषामादित्यवज्ज्ञानं प्रकाशयति तत्परम् ॥ ६-२९-१६ (३९६८१)
तद्बुद्धयस्तदात्मानस्तन्निष्ठास्तत्परायणाः ।
गच्छन्त्यपुनरावृत्तिं ज्ञाननिर्धूतकल्मषाः ॥ ६-२९-१७ (३९६८२)
विद्याविनयसंपन्ने ब्राह्मणे गवि हस्तिनि ।
शुनि चैव श्वपाके च पण्डिताः समदर्शिनः ॥ ६-२९-१८ (३९६८३)
इहैव तैर्जितः सर्गो येषां साम्ये स्थितं मनः ।
निर्दोषं हि समं ब्रह्म तस्माद्ब्रह्मणि ते स्थिताः ॥ ६-२९-१९ (३९६८४)
न प्रहृष्येत्प्रियं व्याप्य नोद्विजेत्प्राप्य चाप्रियम् ।
स्थिरबुद्धिरसंमूढो ब्रह्मविद्ब्रह्मणि स्थितः ॥ ६-२९-२० (३९६८५)
बाह्यस्पर्शेष्वसक्तात्मा विन्दत्यात्मनि यत्सुखम् ।
स ब्रह्मयोगयुक्तात्मा सुखमक्षय्यमश्नुते ॥ ६-२९-२१ (३९६८६)
ये हि संस्पर्शजा भोगा दुःखयोनय एव ते ।
आद्यन्तवन्तः कौन्तेय न तेषु रमते बुधः ॥ ६-२९-२२ (३९६८७)
शक्नोतीहैव यः सोढुं प्राक्षरीरविमोक्षणात् ।
कामक्रोधोद्भवं वेगं स युक्तः स सुखी नरः ॥ ६-२९-२३ (३९६८८)
योऽन्तःसुखोऽन्तरारामस्तथान्तर्ज्योतिरेव यः ।
स योगी ब्रह्मनिर्वाणं ब्रह्मभूतोऽधिगच्छति ॥ ६-२९-२४ (३९६८९)
लभन्ते ब्रह्मनिर्वाणमृषयः क्षीणकल्मषाः ।
छिन्नद्वैधा यतात्मानः सर्वभूतहिते रताः ॥ ६-२९-२५ (३९६९०)
कामक्रोधवियुक्तानां यतीनां यतचेतसाम् ।
अभितो ब्रह्मनिर्वाणं वर्तते विदितात्मनाम् ॥ ६-२९-२६ (३९६९१)
स्पर्शान्कृत्वा बहिर्बाह्यांश्चक्षुश्चैवान्तरे भ्रुवोः ।
प्राणापानौ समौ कृत्वा नासाभ्यन्तरचारिणौ ॥ ६-२९-२७ (३९६९२)
यतेन्द्रियमनोबुद्धिर्मुनिर्मोक्षपरायणः ।
विगतेच्छाभयक्रोधो यः सदा मुक्त एव सः । ६-२९-२८ (३९६९३)
भोक्तारं यज्ञतपसां सर्वलोकमहेश्वरम् ।
सुहृदं सर्वभूतानां ज्ञात्वा मां शान्तिमृच्छति ॥ ॥ ६-२९-२९ (३९६९४)

इति श्रीमन्महाभारते भीष्मपर्वणि भगवद्गीतापर्वणि
एकोनत्रिंशोऽध्यायः ॥

इति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे
श्रीकृष्णार्जुनसंवादे संन्यासयोगोनाम पञ्चमोऽध्यायः ॥

---

भिस्मपर्व-अध्यय०३०
॥ श्रीः ॥
६.३०. अध्यायः ३०

Mahabharata - Bhishma Parva - Chapter Topics
त्रिंशोऽध्यायः ॥ भगवद्गीताध्यायः ॥ ६ ॥

Mahabharata - Bhishma Parva - Chapter Text

६-३०-० (३९६९५)
श्रीभगवानुवाच। ६-३०-०क्ष् (४०२९)
अनाश्रितः कर्मफलं कार्यं कर्म करोति यः ।
स संन्यासी च योगी च न निरग्निर्न चाक्रियः ॥ ६-३०-१ (३९६९६)
यं संन्यासमिति प्राहुर्योगं तं विद्धि पाण्डव ।
न ह्यसंन्यस्तसिंकल्पो योगी भवति कश्चन ॥ ६-३०-२ (३९६९७)
आरुरुक्षोर्मुनेर्योगं कर्म कारणमुच्यते ।
योगारूढस्य तस्यैव शमः कारणमुच्यते ॥ ६-३०-३ (३९६९८)
यदा हि नेन्द्रियार्थेषु न कर्मस्वनुषज्जते ।
सर्वसंकल्पसंन्यासी योगारूढस्तदोच्यते ॥ ६-३०-४ (३९६९९)
उद्धरेदात्मनात्मानं नात्मानमवसादयेत् ।
आत्मैव ह्यात्मनो बन्धुरात्मैव रिपुरात्मनः ॥ ६-३०-५ (३९७००)
बन्धुरात्माऽऽत्मनस्तस्य येनात्मैवात्मना जितः ।
अनात्मनस्तु शत्रुत्वे वर्तेतात्मैव शत्रुवत् ॥ ६-३०-६ (३९७०१)
जितात्मनः प्रशान्तस्य परमात्मा समाहितः ।
शीतोष्णसुखदुःखेषु तथा मानापमानयोः ॥ ६-३०-७ (३९७०२)
ज्ञानविज्ञानतृप्तात्मा कूटस्थो विजितेन्द्रियः ।
युक्त इत्युच्यते योगी समलोष्टाश्मकाञ्चनः ॥ ६-३०-८ (३९७०३)
सुहृन्मित्रार्युदासीनमध्यस्थद्वेष्यबन्धुषु ।
साधुष्वपि च पापेषु समबुद्धिर्विशिष्यते ॥ ६-३०-९ (३९७०४)
योगी युञ्जीत सततमात्मानं रहसि स्थितः ।
एकाकी यतचित्तात्मा निराशीरपरिग्रहः ॥ ६-३०-१० (३९७०५)
शुचौ देशे प्रतिष्ठाप्य स्थिरमासनमात्मनः ।
नात्युच्छ्रितं नातिनीचं चैलाजिनकुशोत्तरम् ॥ ६-३०-११ (३९७०६)
तत्रैकाग्रं मनः कृत्वा यतचित्तेन्द्रियक्रियः ।
उपविश्यासने युञ्ज्याद्योगमात्मविशुद्धये ॥ ६-३०-१२ (३९७०७)
समं कायशिरोग्रीवं धारयन्नचलं स्थिरः ।
संप्रेक्ष्य नासिकाग्रं स्वं दिशश्चानवलोकथन् ॥ ६-३०-१३ (३९७०८)
प्रशान्तात्मा विगतभीर्ब्रह्मचारिव्रते स्थितः ।
प्रनः संयम्य मच्चित्तो युक्त आसीत मत्परः ॥ ६-३०-१४ (३९७०९)

युञ्जन्नेवं सदात्मानं योगी नियतमानसः ।
शान्तिं निर्वाणपरमां मत्संस्थामधिगच्छति ॥ ६-३०-१५ (३९७१०)
नात्यश्नतस्तु योगोऽस्ति न चैकान्तमनश्नतः ।
न चातिस्वप्नशीलस्य जाग्रतो नैव चार्जुन ॥ ६-३०-१६ (३९७११)
युक्ताहारविहारस्य युक्तचेष्टस्य कर्मसु ।
युक्तस्वप्नाववोधस्य योगो भवति दुःखहा ॥ ६-३०-१७ (३९७१२)
यदा विनियतं चित्तमात्मन्येवावतिष्ठते ।
निस्पृहः सर्वकामेभ्यो युक्त इत्युच्यते तदा ॥ ६-३०-१८ (३९७१३)
यथा दीपो निवातस्थो नेङ्गते सोपमा स्मृता ।
योगिनो यतचित्तस्य युञ्जतो योगमात्मनः ॥ ६-३०-१९ (३९७१४)
यत्रोपरमते चित्तं निरुद्धं योगसेवया ।
यत्र चैवात्मनात्मानं पश्यन्नात्मनि तुष्यति ॥ ६-३०-२० (३९७१५)
मुखमात्यन्तिकं यत्तद्बुद्धिग्राह्यमतीन्द्रियम् ।
वेत्ति यत्र न चैवायं स्थितश्चलति तत्त्वतः ॥ ६-३०-२१ (३९७१६)
यं लब्ध्वा चापरं लाभं मन्यते नाधिकं ततः ।
यस्मिन्स्थितो न दुःखेन गुरुणापि विचाल्यते ॥ ६-३०-२२ (३९७१७)
तं विद्याद्दुःखसंयोगवयोगं योगसंज्ञितम् ।
स निश्चयेन योक्तव्यो योगोऽनिर्विण्णचेतसा ॥ ६-३०-२३ (३९७१८)
संकल्पप्रभवान्कामांस्त्यक्त्वा सर्वानशेषतः ।
मनसैवेन्द्रियग्रामं विनिवम्य समन्ततः ॥ ६-३०-२४ (३९७१९)
शनैः शनैरुपरमेद्बुद्ध्या धृतिगृहीतया ।
आत्मसंस्थं मनः कृत्वा न किंचिदपि चिन्तयेत् ॥ ६-३०-२५ (३९७२०)
यतो यतो निश्चरति मनश्चञ्चलमस्थिरम् ।
ततस्ततो नियम्यैतदात्मन्येव वशं नयेत् ॥ ६-३०-२६ (३९७२१)
प्रशान्तमनसं ह्येनं योगिनं मुखमुत्तमम् ।
उपैति श्चान्तरजसं ब्रह्मभूतमकल्मषम् ॥ ६-३०-२७ (३९७२२)
युञ्चयेवं सदात्मानं योगी विमतकल्मषःक ।
मुखेन ब्रह्मसंस्कपर्शमत्यन्तं सुखमश्नुते ॥ ६-३०-२८ (३९७२३)
सर्वभूतस्थमात्मानं सर्वभूतानि चात्मनि ।
ईक्षते कयोगयुक्तात्मा सर्वत्र समदर्शनः ॥ ६-३०-२९ (३९७२४)
यो मां पश्यति सर्वत्र सर्वं च मयि पश्यति ।
तस्याहं न प्रणश्यामि स च मे न प्रणश्यति ॥ ६-३०-३० (३९७२५)
सर्वभूतस्थितं यो मां भजत्येकत्वमास्थितः ।
सर्वथा वर्तमानोऽपि स योगी मयि वर्तते ॥ ६-३०-३१ (३९७२६)
आत्मौपम्येन सर्वत्र समं पश्यति योऽर्जुन ।
सुखंक वा यदि वा दुःखं स योगी मरमो मतः ॥ ६-३०-३२ (३९७२७)

अर्जुन उवाच। ६-३०-३३क्ष् (४०३०)
योऽयं योगस्त्वया प्रोक्तः साम्येन मधुसूदन ।
एतस्याहं न पश्यामि चञ्चलत्वात्स्थितिं स्थिरां ॥ ६-३०-३३ (३९७२८)
चञ्चलं हि मनः कृष्ण प्रमाथि बलवद्दृढम् ।
तस्याहं निग्रहं मन्ये वायोरिव सुदुष्करम् ॥ ६-३०-३४ (३९७२९)
श्रीभगवानुवाच। ६-३०-३५क्ष् (४०३१)
असंशयं महाबाहो मनो दुर्निग्रहं चलम् ।
अभ्यासेन तु कौन्तेय वैराग्येण च गृह्यते ॥ ६-३०-३५ (३९७३०)
असंयतात्मना योगो दुष्प्राप इति मे मतिः ।
वश्यात्मना तु यतता शक्योऽऽवाप्तुमुपायतः ॥ ६-३०-३६ (३९७३१)
अर्जुन उवाच। ६-३०-३७क्ष् (४०३२)
अयतिः श्रद्धयोपेतो योगाच्चलितमानसः ।
अप्राप्य योगसंसिद्धिं कां गतिं कृष्ण गच्छति ॥ ६-३०-३७ (३९७३२)
कच्चिन्नोभयविभ्रष्टश्छिन्नाभ्रमिव नश्यति ।
अप्रतिकष्ठो महाबाहो विमूढो ब्रह्मणः पथि ॥ ६-३०-३८ (३९७३३)
एतन्मे संशयं कृष्ण छेत्तुमर्हस्यशेषतः ।
त्वदन्यः संशयस्यास्य छेत्ता न ह्युपपद्यते ॥ ६-३०-३९ (३९७३४)
श्रीभगवानुवाच। ६-३०-४०क्ष् (४०३३)
पार्थ नैवेह नामुत्र विनाशस्तस्य विद्यते ।
न हि कल्याणकृत्कश्चिद्दुर्गतिं तात गच्छति ॥ ६-३०-४० (३९७३५)
प्राप्य पुण्यकृतां लोकानुषित्वा शाश्वतीः समाः ।
शुचीनां श्रीमतां गेहे योगभ्रष्टोऽभिजायते ॥ ६-३०-४१ (३९७३६)
अथवा योगिनामेव कुले भवति धीमताम् ।
एतद्धि दुर्लभतरं लोके जन्म यदीदृश्यम् ॥ ६-३०-४२ (३९७३७)
तत्र तं बुद्धिसंयोगं लभते पौर्वदेहिकम् ।
यतते च ततो भूयः संसिद्धौ कुरुनन्दन ॥ ६-३०-४३ (३९७३८)
पूर्वाभ्यासेन तेनैव ह्रियते ह्यवशेऽपि सः ।
जिज्ञासुरपि योगस्य शब्दब्रह्मातिवर्तते ॥ ६-३०-४४ (३९७३९)
प्रयत्नाद्यतमानस्तु योगी संशुद्धकिल्विषः ।
अनेकन्मसंसिद्धस्ततो याति परां गतिम् ॥ ६-३०-४५ (३९७४०)
तपस्विभ्योऽधिको योगी ज्ञानिभ्योपि मतोऽधिकः ।
कर्मिभ्यश्चाधिको योगी तस्माद्योगी भावार्जुन ॥ ६-३०-४६ (३९७४१)
योगिनामपि सर्वेषां मद्गतेनान्तरात्मना ।
श्रद्धावान्भजते यो मां स मे युक्ततमो मतः ॥ ॥ ६-३०-४७ (३९७४२)

इति श्रीमन्महाभारते भीष्मपर्वणि भगवद्गीतापर्वणि त्रिंशोऽध्यायः ॥

इति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे
श्रीकृष्णार्जुनसंवादे अध्यात्मयोगोनाम षष्ठोऽध्यायः ॥
Mahabharata - Bhishma Parva - Chapter Footnotes

६-३०-११ चेलाजिनेति माध्वपाठः ॥
६-३०-२८ एवं युञ्जन् इति माध्वपाठः ॥
६-३०-४१ पुण्यकृताँल्लोकान् इति माध्वपाठः ॥
६-३१-क्र आत्मसंयमयोगोनाम इति माध्वपाठः ॥

---

भिस्मपर्व-अध्यय०३१
॥ श्रीः ॥
६.३१. अध्यायः ३१

Mahabharata - Bhishma Parva - Chapter Topics
एकत्रिंशोऽध्यायः ॥ भगवद्गीताध्यायः ॥ ७ ॥

Mahabharata - Bhishma Parva - Chapter Text

६-३१-० (३९७४३)
श्रीभगवानुवाच। ६-३१-०क्ष् (४०३४)
मय्यासक्तमनाः पार्थ योगं युञ्जन्मदाश्रयः ।
असंशयं समग्रं मां यथा ज्ञास्यसि तच्छ्रुणु ॥ ६-३१-१ (३९७४४)
ज्ञानं तेऽहं सविज्ञानमिदं वक्ष्याम्यशेषतः ।
यज्ज्ञात्वा नेह भूयोऽन्यज्ज्ञातव्यमवशिष्यते ॥ ६-३१-२ (३९७४५)
मनुष्याणां सहस्रेषु कश्चिद्यतति सिद्धये ।
यततामपि सिद्धानां कश्चिन्मां वेत्ति तत्त्वतः ॥ ६-३१-३ (३९७४६)
भूमिरापोऽनलो वायुः स्वं मनो बुद्धिरेव च ।
अहंकार इती यं मे भिन्ना प्रकृतिरष्टधा ॥ ६-३१-४ (३९७४७)
अपरेयमितस्त्वन्यां प्रकृतिं विद्धि मे पराम् ।
जीवभूतां महाबाहो ययेदं धार्यते जगत् ॥ ६-३१-५ (३९७४८)
एतद्योनीनि भूतानि सर्वाणीत्युपधारय ।
अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा ॥ ६-३१-६ (३९७४९)
मत्तः परतरं नान्यत्किंचिदस्ति धनंजय ।
मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इव ॥ ६-३१-७ (३९७५०)
रसोऽहमंप्सु कौन्तेय प्रभाऽस्मि शशिसूर्ययोः ॥

प्रणवः सर्ववेदेषु शब्दः खे पौरुषं नृषु ॥ ६-३१-८ (३९७५१)
पुण्यो गन्धः पृथिव्यां च तेजश्चास्मि विभावसौ ।
जीवनं सर्वभूतेषु तपश्चास्मि तपस्विषु ॥ ६-३१-९ (३९७५२)
बीजं मां सर्वभूतानां विद्धि पार्थ सनातनम् ।
बुद्धिर्बुद्धिमतामस्मि तेजस्तेजस्विनामहम् ॥ ६-३१-१० (३९७५३)
बलं बलवतां चाहं कामरागविवर्जितम् ।
धर्माविरुद्धो भूतेषु कामोऽस्मि भरतर्षभ ॥ ६-३१-११ (३९७५४)
ये चैव सात्विका भावा राजसास्तामसाश्च ये ।
मत्त एवेति तान्विद्धि न त्वहं तेषु ते मयि ॥ ६-३१-१२ (३९७५५)
त्रिभिर्गुणमयैर्भावैरेभिः सर्वमिदं जगत् ।
मोहितं नाभिजानाति मामेभ्यः परमव्ययम् ॥ ६-३१-१३ (३९७५६)
दैवी ह्येषा गुणमयी मम माया दुरत्यया ।
मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते ॥ ६-३१-१४ (३९७५७)
न मां तुष्कृतिनो मूढाः प्रपद्यन्ते नराधमाः ।
माययाऽपहृतज्ञाना आसुरं भावमाश्रिताः ॥ ६-३१-१५ (३९७५८)
चुत्रर्विधा भजन्ते मां जनाः सुकृतिनोऽर्जुन ।
आर्तो जिज्ञासुरर्थार्थी ज्ञानी च भरतर्षभ ॥ ६-३१-१६ (३९७५९)
तेषां ज्ञानी नित्ययुक्त एकभक्तिर्विशिष्यते ।
प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः ॥ ६-३१-१७ (३९७६०)
उदाराः सर्व एवैते ज्ञानी त्वात्मैव मे मतम् ।
आस्थितःक स हि युक्तात्मा मामेवानुत्तमां गतिं ॥ ६-३१-१८ (३९७६१)
बहूनां जन्मनामन्ते ज्ञानवान्मां प्रपद्यते ।
वासुदेवः सर्वमिति स महात्मा सुदुर्लभः ॥ ६-३१-१९ (३९७६२)
कामैस्तैस्तैर्हृतज्ञानाः प्रपद्यन्तेऽन्यदेवताः ।
तं तं नियममास्थाय प्रकृत्या नियताः स्वया ॥ ६-३१-२० (३९७६३)
यो यो यां यां तनुं भक्तः श्रद्धयार्चितुमिच्छति ।
तस्य तस्याचलां श्रद्धां तामेव विदधाम्यहम् ॥ ६-३१-२१ (३९७६४)
स तया श्रद्धया युक्तस्तस्याराधनमीहते ।
लभते च ततः कामान्मयैव विहितान्हितान् ॥ ६-३१-२२ (३९७६५)
अन्तवत्तु फलं तेषां तद्भवत्यल्पमेधसाम् ।
देवान्देवयजो यान्ति मद्भक्ता यान्ति मामपि ॥ ६-३१-२३ (३९७६६)
अव्यक्तं व्यक्तिमापन्नं मन्यन्ते मामबुद्धयः ।
परं भावमजानन्तो ममाव्ययमनुत्तमम् ॥ ६-३१-२४ (३९७६७)
नाहं प्रकाशः सर्वस्य योगमायासमावृतः ।
मूढोऽयं नाभिजानाति लोको मामजमव्ययम् ॥ ६-३१-२५ (३९७६८)
वेदाहं समतीतानि वर्तमानानि चार्जुन ।

भविष्याणि च भूतानि मां तु वेद न कश्चन ॥ ६-३१-२६ (३९७६९)
इच्छाद्वेषसमुत्थेन द्वन्द्वमोहेन भारत ।
सर्वभूतानि संमोहं सर्गे यान्ति परंतप ॥ ६-३१-२७ (३९७७०)
योषां त्वन्तगतं पापं जनानां पुण्यकर्मणाम् ।
ते द्वन्द्वमोहनिर्मुक्त भजन्ते मां दृढव्रताः ॥ ६-३१-२८ (३९७७१)
जरामरणमोक्षाय मामाश्रित्य यतन्ति ये ।
ते ब्रह्म तद्विदुः कृत्स्नमध्यात्मं कर्म चाखिलम् ॥ ६-३१-२९ (३९७७२)
साधिभूताधिदैवं मां साधियज्ञं च ये विदुः ।
प्रयाणकालेऽपि च मां ते विदुर्युक्तचेतसः ॥ ॥ ६-३१-३० (३९७७३)

इति श्रीमन्महाभारते भीष्मपर्वणि भगवद्गीतापर्वणि एकत्रिंशोऽध्यायः ॥

इति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे
श्रीकृष्णार्जुनसंवादे ज्ञानयोगोनाम सप्तमोऽध्यायः ॥
Mahabharata - Bhishma Parva - Chapter Footnotes

६-३१-क ज्ञानविज्ञानयोगोनाम इति माध्वपाठः ॥
६-३१-१६ आब्रह्मभवनात् इति माध्वपाठः ॥

---

भिस्मपर्व-अध्यय०३२
॥ श्रीः ॥
६.३२. अध्यायः ३२

Mahabharata - Bhishma Parva - Chapter Topics
द्वात्रिंशोऽध्यायः ॥ भगवद्गीताध्यायः ॥ ८ ॥

Mahabharata - Bhishma Parva - Chapter Text

६-३२-० (३९७७४)
अर्जुन उवाच। ६-३२-०क्ष् (४०३५)
किं तद्ब्रह्म किमध्यात्मं किं कर्म पुरुषोत्तम् ।
अधिभूतं च किं प्रोक्तमधिदैवं किमुच्यते ॥ ६-३२-१ (३९७७५)
अधियज्ञः कथं कोऽत्र देहेऽस्मिन्मधुसीदन ।
प्रयाणकाले च कथं ज्ञेयोऽसि नियतात्मभिः ॥ ६-३२-२ (३९७७६)
श्रीभगवानुवाच। ६-३२-३क्ष् (४०३६)
अक्षरं ब्रह्म परमं स्वभावोऽध्यात्ममुच्यते ।

भूतभावोद्भवकरो विसर्गः कर्मसंज्ञितः ॥ ६-३२-३ (३९७७७)
अधिभूतं क्षरो भावः पुरुषश्चाधिदैवतम् ।
अधियज्ञोऽहमेवात्र देहे देहभृतां वर ॥ ६-३२-४ (३९७७८)
अन्तकाले च मामेव स्मरन्मुक्त्वा कलेवरम् ।
यः प्रयाति स मद्भावं याति नास्त्यत्र संशयः ॥ ६-३२-५ (३९७७९)
यं यं वापि स्मरन्भावं त्यजत्यन्ते कलेवरम् ।
तं तमेवैति कौन्तेय सदा तद्भावभावितः ॥ ६-३२-६ (३९७८०)
तस्मात्सर्वेषु कालेषु मामनुस्मर युध्य च ।
मय्यर्पितमनोबुद्धिर्मामेवैष्यस्यसंशयः ॥ ६-३२-७ (३९७८१)
अभ्यासयोगयुक्तेन चेतसाऽनान्यगामिना ।
परमं पुरुषं दिव्यं याति पार्थानुचिन्तयन् ॥ ६-३२-८ (३९७८२)
कविं पुराणमनुशासितार-
मणोरणीयांसमनुस्मरेद्यः ।
सर्वस्य धातारमचिन्त्यरूप-
मादित्यवर्णं तमसः परस्तात् ॥ ६-३२-९ (३९७८३)
प्रयाणकाले मनसाऽचलेन
भक्त्या युक्तो योगबलेन चैव ।
भ्रुवोर्मध्ये प्राणमावेश्य सम्य-
क्स तं परं पुरुषमुपैति दिव्यम् ॥ ६-३२-१० (३९७८४)
यदक्षरं वेदविदो वदन्ति
विशन्ति यद्यतयो वीतरागाः ।
यदिच्छन्तो ब्रह्मचर्यं चरन्ति
तत्ते पदं संग्रहेण प्रवक्ष्ये ॥ ६-३२-११ (३९७८५)
सर्वद्वाराणि संयम्य मनो हृदि निरुध्य च ।
मूर्ध्न्याधायात्मनः प्राणमास्थितो योगधारणां ॥ ६-३२-१२ (३९७८६)
ओमित्येकाक्षरं ब्रह्म व्याहरन्मामनुस्मरन् ।
यः प्रयाति त्यजन्दें स याति परमां गतिम् ॥ ६-३२-१३ (३९७८७)
अनन्यचेताः सततं यो मां स्मरति नित्यशः ।
तस्याहं सुलभः पार्थ नित्ययुक्तस्य योगिनः ॥ ६-३२-१४ (३९७८८)
मामुपेत्य पुनर्जन्म दुःखालयमशाश्वतम् ।
नाप्नुवन्ति महात्मानः संसिद्धिं परमां गताः ॥ ६-३२-१५ (३९७८९)
आब्रह्मभुवनाल्लोकाः पुनरावर्तिनोऽर्जुन ।
मामुपेत्य तु कौन्तेय पुनर्जन्म न विद्यते ॥ ६-३२-१६ (३९७९०)
सहस्रयुगपर्यन्तमहर्यद्ब्रह्मणो विदुः ।
रात्रिं युगसहस्रां तां तेऽहोरात्रविदो जनाः ॥ ६-३२-१७ (३९७९१)
अव्यक्ताद्व्यक्तयः सर्वाः प्रभवन्त्यहरागमे ।

रात्र्यामे प्रलीयन्ते तत्रैवाव्यक्तसंज्ञके ॥ ६-३२-१८ (३९७९२)
भूतग्रामः स एवायं भूत्वा भूत्वा प्रलीयते ।
रात्र्यगमेऽवशः पार्थत प्रभवत्यहरागमे ॥ ६-३२-१९ (३९७९३)
परस्तस्मात्तु भावोऽन्यो व्यक्तोऽव्यक्तात्सनातनः ।
यः स सर्वेषु भूतेषुक नश्यत्सु न विनश्यति ॥ ६-३२-२० (३९७९४)
अव्यक्तोऽक्षर इत्युक्तस्तमाहुः परमां गतिम् ।
यं प्राप्य न निवर्तन्ते तद्धाम परमं मम ॥ ६-३२-२१ (३९७९५)
पुरुषः स परः पार्थ भक्त्या लभ्यस्त्वनन्यया ।
यस्यान्तस्थानि भूतानि येन सर्वमिदं ततम् ॥ ६-३२-२२ (३९७९६)
यत्र काले त्वनावृत्तिमावृत्तिं चैव योगिनः ।
प्रयाता यान्ति तं कालं वक्ष्यामि भरतर्षभ ॥ ६-३२-२३ (३९७९७)
अग्निर्ज्योतिरहः शुक्लः षण्मासा उत्तरायणम् ।
तत्र प्रयाता गच्छन्ति ब्रह्म ब्रह्मविदो जनाः ॥ ६-३२-२४ (३९७९८)
धूमो रात्रिस्तथा कृष्णः षण्मसा दक्षिणायनम् ।
तत्र चान्द्रमसं ज्योतिर्योगी प्राप्य निवर्तते ॥ ६-३२-२५ (३९७९९)
शुक्लकृष्णे गती ह्येते जगतः शाश्वते मते ।
एकया यात्यनावृत्तिमन्ययाऽऽवर्तते पुनः ॥ ६-३२-२६ (३९८००)
नैते सृती पार्थ जानन्योगी मुह्यति कश्चन ।
तस्मात्सर्वेषु कालेषु योगयुक्तो भवार्जुन ॥ ६-३२-२७ (३९८०१)
वेदेषु यज्ञेषु तपःसु चैव
दानेषु यत्पुण्यफलं प्रदिष्टम् ।
अत्येति तत्सर्वमिदं विदित्वा
योगी परं स्थानमुपैति चाद्यम् ॥ ॥ ६-३२-२८ (३९८०२)

इति श्रीमन्महाभारते भीष्मपर्वणि भगवद्गीतापर्वणि
द्वात्रिंशोऽध्यायः ॥ इतित श्रीमद्भगवद्गीतासुपनिषत्सु
ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे तारकब्रह्मयोगोनाम
अष्टमोऽध्यायः ॥
Mahabharata - Bhishma Parva - Chapter Footnotes

६-३२-क्व अक्षरब्रह्मयोगोनाम इति माध्वपाठः ॥

---

भिस्मपर्व-अध्यय०३३
॥ श्रीः ॥
६.३३. अध्यायः ३३

Mahabharata - Bhishma Parva - Chapter Topics
त्रयस्त्रिंशोऽध्यायः ॥ भगवद्गीताध्यायः ॥ ९ ॥

Mahabharata - Bhishma Parva - Chapter Text

६-३३-० (३९८०३)
श्रीभगवानुवाच। ६-३३-०क्ष् (४०३७)
इदं तु ते गुह्यतमं प्रवक्ष्याम्यनसूयवे ।
ज्ञानं विज्ञानसहितं यज्ज्ञात्वा मोक्ष्यसेऽशुभात् ॥ ६-३३-१ (३९८०४)
राजविद्या राजगुह्यं पवित्रमिदमुत्तमम् ।
प्रत्यक्षावगमं धर्म्यं सुसुखं कर्तुमव्ययम् ॥ ६-३३-२ (३९८०५)
अश्रद्दधानां पुरुषा धर्मस्यास्य परंतप ।
अप्राप्य मां निवर्तन्ते मृत्युसंसारवर्त्मनि ॥ ६-३३-३ (३९८०६)
मया ततमिदं सर्वं जगदव्यक्तमूर्तिना ।
मत्स्थानि सर्वभूतानि न चाहं तेष्ववस्थितःक ॥ ६-३३-४ (३९८०७)
न च मत्स्थानि भूतानि पश्य मे योगमैश्वरम् ।
भूतभृन्न च भूतस्थो ममात्मा भूतभावनः ॥ ६-३३-५ (३९८०८)
यथाऽऽकाशस्थितो नित्यं वायुः सर्वत्रगो महान् ।
तथा सर्वाणि भूतानि मत्स्थानीत्युपधारय ॥ ६-३३-६ (३९८०९)
सर्वभूतानि कौन्तेय प्रकृतिं यान्ति मामिकाम् ।
कल्पक्षये पुनस्तानि कल्पादौ विसृजाम्यहम् ॥ ६-३३-७ (३९८१०)
प्रकृतिं स्वामवष्टभ्य विसृजामि पुनः पुनः ।
भूतग्राममिमं कृत्स्नमवशं प्रकृतेर्वशात् ॥ ६-३३-८ (३९८११)
न च मां तानि कर्माणि निबध्नन्ति धनंजय ।
उदासीनवदासीनमसक्तं तेषु कर्मसु ॥ ६-३३-९ (३९८१२)
मयाऽऽध्यक्षेण प्रकृतिः सूयते सचराचरम् ।
हेतुनाऽनेन कौन्तेय जगद्विपरिवर्तते ॥ ६-३३-१० (३९८१३)
अवजानन्ति मां मूढा मानुषीं तनुमाश्रितम् ।
परं भावमजानन्तो मम भूतमहेश्वरम् ॥ ६-३३-११ (३९८१४)
मोघाशा मोघकर्माणो मोघज्ञाना विचेतसः ।
राक्षसीमासुरीं चैव प्रकृतिं मोहिनीं श्रिताः ॥ ६-३३-१२ (३९८१५)
महात्मानस्तु मां पार्थ दैवीं प्रकृतिमाश्रिताः ।
भजन्त्यनन्यमनसो ज्ञात्वा भूतादिमव्ययम् ॥ ६-३३-१३ (३९८१६)
सततं कीर्तयन्तो मां यतन्तश्च दृढव्रताः ।
नमस्यन्तश्च मां भक्त्या नित्ययुक्ता उपासते ॥ ६-३३-१४ (३९८१७)
ज्ञानयज्ञेन चाप्यन्ते यजन्तो मामुपासते ।

एकत्वेन पृथक्त्कवेन बहुधा विश्वतोमुम् ॥ ६-३३-१५ (३९८१८)
अहं क्रतुरहं यज्ञः स्वधाऽहमहमौषधम् ।
मन्त्रोऽहमहमेवाज्यमहमग्निरहं हुतम् ॥ ६-३३-१६ (३९८१९)
पिताऽहमस्य जगतो माता धाता पितामहः ।
वेद्यं पवित्रमोंकार ऋक् साम यजुरेव च ॥ ६-३३-१७ (३९८२०)
गतिर्भर्ता प्रभुः साक्षी निवासः शरणं सुहृत् ।
प्रभवः प्रलयः स्थानं निधानं बीजमव्ययम् ॥ ६-३३-१८ (३९८२१)
तपाम्यहमहं वर्षं निगृह्णाम्युत्सृजामि च ।
अमृतं चैव मृत्युश्च सदसच्चाहमर्जुन ॥ ६-३३-१९ (३९८२२)
त्रैविद्या मां सोमपाः पूतपापा
यज्ञैरिष्ट्वा स्वर्गतिं प्रार्थयन्ते ।
ते पुण्यमासाद्य सुरेन्द्रलोक-
मश्नन्ति दिव्यान्दिवि देवभोगान् ॥ ६-३३-२० (३९८२३)
ते तं भुक्त्वा स्वर्गलोकं विशालं
क्षीणो पुण्ये पर्त्यलोकं विशन्ति ।
एवं त्रयीधर्ममनुप्रपन्ना
गतागतं कामकामा लभन्ते ॥ ६-३३-२१ (३९८२४)
अनन्याश्चिन्तयन्तो मां ये जनाः पर्युपासते ।
तेषां नित्याभियुक्तानां योगक्षेमं वहाम्यहम् ॥ ६-३३-२२ (३९८२५)
येऽप्यन्यदेवताभक्ता यजन्ते श्रद्धयान्विताः ।
तेऽपि मामेव कौन्तेय यजन्त्यविधिपूर्वकम् ॥ ६-३३-२३ (३९८२६)
अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव च ।
न तु मामभिजानन्ति तत्त्वेनातश्च्यवन्ति ते ॥ ६-३३-२४ (३९८२७)
यान्ति देवव्रता देवान्पितॄन्यान्ति पितृव्रताः ।
भूतानि यान्ति भूतेज्या यान्ति मद्याजिनोपि माम् ६-३३-२५ (३९८२८)
पत्रं पुष्पं फलं तोयं यो मे भक्त्या प्रयच्छति ।
तदहं भक्त्युपहृतमश्नामि प्रयतात्मनः ॥ ६-३३-२६ (३९८२९)
यत्करोषि यदश्नासि यज्जुहोषि ददासि यत् ।
यत्तपस्यसि कौन्तेय तत्कुरुष्व मदर्पणम् ॥ ६-३३-२७ (३९८३०)
शुभाशुभफलैरेवं मोक्ष्यसे कर्मबन्धनैः ।
संन्यासयोगयुक्तात्मा विमुक्तो मामुपैष्यसि ॥ ६-३३-२८ (३९८३१)
समोऽहं सर्वभूतेषु न मे द्वेष्योऽस्ति न प्रियः ।
ये भजन्ति तु मां भक्त्या मयि ते तेषु चाप्यहम् ॥ ६-३३-२९ (३९८३२)
अपि चेत्सुदुराचारो भजते मामनन्यभाक् ।
साधुरेव स मन्तव्यः सम्यग्व्यवसितो हि सः ॥ ६-३३-३० (३९८३३)
क्षिप्रं भवति धर्मात्मा शश्वच्छान्तिं निगच्छति ।

कौन्तेय प्रतिजानीहि न मे भक्तः प्रणश्यति । ६-३३-३१ (३९८३४)
मां हि पार्थ व्यपाश्रित्य येऽपि स्युः पापयोनयः ।
स्त्रियो वैश्यास्तथा शूद्रास्तेऽपि यान्ति परां गतिं ॥ ६-३३-३२ (३९८३५)
किं पुनर्ब्राह्मणाः पुण्या भक्ता राजर्षयस्तथा ।
अनित्यमसुखं लोकमिमं प्राप्य भजस्व माम् ॥ ६-३३-३३ (३९८३६)
मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु ।
मामेवैष्यसि युक्त्वैवमात्मानं मत्परायणः ॥ ॥ ६-३३-३४ (३९८३७)

इति श्रीमन्महाभारते भीष्मपर्वणि भगवद्गीतापर्वणि
त्रयस्त्रिंशोऽध्यायः ॥

इति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे
श्रीकृष्णार्जुनसंवादे राजविद्याराजगुह्ययोगोनाम नवमोऽध्यायः ॥

---

भिस्मपर्व-अध्यय०३४
॥ श्रीः ॥
६.३४. अध्यायः ३४

Mahabharata - Bhishma Parva - Chapter Topics
चतुस्त्रिंशोऽध्यायः ॥ भगवद्गीताध्यायः ॥ १० ॥

Mahabharata - Bhishma Parva - Chapter Text

६-३४-० (३९८३८)
श्रीभगवानुवाच। ६-३४-०क्ष् (४०३८)
भूय एव महाबाहो श्रृणु मे परमं वचः ।
यत्तेऽहं प्रीयमाणाय वक्ष्यामि हितकाम्यया ॥ ६-३४-१ (३९८३९)
न मे विदुः सुरगणाः प्रभवं न महर्षयः ।
अहमादिर्हि देवानां महर्षीणां च सर्वशः ॥ ६-३४-२ (३९८४०)
यो मामजमनादिं च वेत्ति लोकमहेश्वरम् ।
असंमूढः स मर्त्येषु सर्वपापैः प्रमुच्यते ॥ ६-३४-३ (३९८४१)
बुद्धिर्ज्ञानमसंमोहः क्षमा सत्यं दमः शमः ।
सुखं दुःखं भवो भवो भयं चाभयमेव च ॥ ६-३४-४ (३९८४२)
अहिंसा समता तुष्टिस्तपो दानं यशोऽयशः ।
भवन्ति भावा भूतानां मत्त एव पृथग्विधाः ॥ ६-३४-५ (३९८४३)
महर्षयः सप्त पूर्वे चत्वारो मनवस्तथा ।

मद्भाव मानसा जाता येषां लोक इमाः प्रजाः ॥ ६-३४-६ (३९८४४)
एतां विभूतिं योगं च मम यो वेत्ति तत्त्वतः ।
सोऽविकम्पेन योगेन युज्यते नात्र संशयः ॥ ६-३४-७ (३९८४५)
अहं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्तते ।
इति मत्वा भजन्ते मां बुधा भावसमन्विताः ॥ ६-३४-८ (३९८४६)
मच्चित्ता मद्गतप्राणा बोधयन्तः परस्परम् ।
कथयन्तश्च मां नित्यं तुष्यन्ति च रमन्ति च ॥ ६-३४-९ (३९८४७)
तेषां सततयुक्तानां भजतां प्रीतिपूर्वकम् ।
ददामि बुद्धियोगं तं येन मामुपयान्ति ते ॥ ६-३४-१० (३९८४८)
तेषामेवानुकम्पार्थमहमज्ञानजं तमः ।
नाशयाम्यात्मभावस्थो ज्ञानदीपेन भास्वता ॥ ६-३४-११ (३९८४९)
अर्जुन उवाच। ६-३४-१२क्ष् (४०३९)
परं ब्रह्म परं धाम पवित्रं परमं भवान् ।
पुरुषं शाश्वतं दिव्यमादिदेवमजं विभुम् ॥ ६-३४-१२ (३९८५०)
आहुस्त्वामृषयः सर्वे देवर्षिर्नारदस्तथाक ।
असितो देवलो व्यासः स्वयं चैव ब्रवीषि मे ॥ ६-३४-१३ (३९८५१)
सर्वतेमदृतं मन्ये यन्मां वदसि केशव ।
न हि ते भगवन्व्यक्तिं विदुर्देवा न दानवाः ॥ ६-३४-१४ (३९८५२)
स्वयमेवात्मनात्मानं वेत्थ त्वं पुरुषोत्तम ।
भूतभावन भूतेश देवदेव जगत्पते ॥ ६-३४-१५ (३९८५३)
वक्तुमर्हस्यशेषेण दिव्या ह्यात्मविभूतयः ।
याभिर्विभूतिभिर्लोकानिमांस्त्वं व्याप्य तिष्ठसि ॥ ६-३४-१६ (३९८५४)
कथं विद्यामहं योगिंस्त्वां सदा परिचिन्तयन् ।
केषु केषु च भावेषु चिन्त्योऽसि भगवन्मया ॥ ६-३४-१७ (३९८५५)
विस्तरेणात्मनो योगं विभूतिं च जनार्दन ।
भूयः कथय तृप्तिर्हि शृण्वतो नास्ति मेऽमृतम् ॥ ६-३४-१८ (३९८५६)
श्रीभगवनुवाच। ६-३४-१९क्ष् (४०४०)
हन्त ते कथयिष्यामि दिव्या ह्यात्मविभूतयः ।
प्राधान्यतः कुरुश्रेष्ठ नास्त्यन्तो विस्तरस्य मे ॥ ६-३४-१९ (३९८५७)
अहमात्मा गुडाकेश सर्वभूताशयस्थितःक ।
अहमादिश्च मध्यं च भूतानामन्त एव च ॥ ६-३४-२० (३९८५८)
आदित्यानामहं विष्णुर्ज्योतिषां रविरंशुमान् ।
मरीचिर्मरुतामस्मि नक्षत्राणामहं शशी ॥ ६-३४-२१ (३९८५९)
वेदानां सामवेदोऽस्मि देवानामस्मि वासवः ।
इन्द्रियाणां मनश्चास्मि भूतानामस्मि चेतना ॥ ६-३४-२२ (३९८६०)
रुद्राणां शंकरश्चास्मि वित्तेशो यक्षरक्षसाम् ।

वसूनां पावकश्चास्मि मेरुः शिखरिणामहम् ॥ ६-३४-२३ (३९८६१)
पुरोधसां च मुख्यं मां विद्धि पार्थ बृहस्पतिम् ।
सेनानीनामहं स्कन्दः सरसामस्मि सागरः ॥ ६-३४-२४ (३९८६२)
महर्षीणां भृगुरहं गिरामस्म्येकमक्षरम् ।
यज्ञानां जपयज्ञोऽस्मि स्थावराणां हिमालयः ॥ ६-३४-२५ (३९८६३)
अश्वत्थः सर्ववृक्षाणां देवर्षीणां च नारदः ।
गन्धर्वाणां चित्ररथः सिद्धानां कपिलो मुनिः ॥ ६-३४-२६ (३९८६४)
उच्चैः श्रवसमश्वानां विद्धि माममृतोद्भवम् ।
ऐरावतं गजेन्द्राणां नराणां च नराधिपम् ॥ ६-३४-२७ (३९८६५)
आयुधानामहं वज्रं धेनूनामस्मि कामधुक् ।
प्रजनश्चास्मि कन्दर्पः सर्पाणामस्मि वासुकिः ॥ ६-३४-२८ (३९८६६)
अनन्तश्चास्मि नागानां वरुणो यादसामहम् ।
पितॄणामर्यमा चास्मि यमः संयमतामहम् ॥ ६-३४-२९ (३९८६७)
प्रह्लादश्चास्मि दैत्यानां कालः कलयतामहम् ।
मृगाणां च मृगेन्द्रोऽहं वैनतेयश्च परिणाम् ॥ ६-३४-३० (३९८६८)
पवनः पवतामस्मि रामः शस्त्रभृतामहम् ।
झषाणां मकरश्चास्मि स्रोतसामस्मि जाह्नवी ॥ ६-३४-३१ (३९८६९)
सर्गाणामादिरन्तश्च मध्यं चैवाहमर्जुन ।
अध्यात्मविद्या विद्यानां वादः प्रवदतामहम् ॥ ६-३४-३२ (३९८७०)
अक्षराणामकारोऽस्मि द्वन्द्वः सामासिकस्य च ।
अहमेवाक्षयः कालो धाताऽहं विश्वतोमुखः ॥ ६-३४-३३ (३९८७१)
मृत्युः सर्वहरश्चाहमुद्भवश्च भविष्यताम् ।
कीर्तिः श्रीर्वाक्क नारीणां स्मृतिर्मेधा धृतिः क्षमा ॥ ६-३४-३४ (३९८७२)
बृहत्साम कतथा साम्नां गायत्री छन्दसामहम् ।
मासानां मार्गशीर्षोऽहमृतूनां कुसुमाकरः ॥ ६-३४-३५ (३९८७३)
द्यूतं छलयतामस्मि तेजस्तेजस्विनामहम् ।
जयोऽस्मि व्यवसायोऽस्मि सत्त्वं सत्त्ववतामहम् ॥ ६-३४-३६ (३९८७४)
वृष्णीनां वासुदेवोऽस्मि पाण्डवानां धनञ्जयः ।
मुनीनामप्यहं व्यासः कवीनामुशना कविः ॥ ६-३४-३७ (३९८७५)
दण्डो दमयतामस्मि नीतिरस्मि जिगीषताम् ।
मौनं चैवास्मि गुह्यानां ज्ञानं ज्ञानवतामहम् ॥ ६-३४-३८ (३९८७६)
यच्चापि सर्वभूतानां बीजं तदहमर्जुन ।
न तदस्ति विना यत्स्यान्मया भूतं चराचरम् ॥ ६-३४-३९ (३९८७७)
नान्तोऽस्ति मम दिव्यानां विभूतीनां परंतप ।
एष तूद्देशतः प्रोक्तो विभूतेर्विस्तरो मया ॥ ६-३४-४० (३९८७८)
यद्यद्विभूतितत्सत्त्वं श्रीमदूर्जितमेव वा ।

तत्तदेवावगच्छ त्वं मम तेजोंशसंभवम् ॥ ६-३४-४१ (३९८७९)
अथवा बहुनैतेन किं ज्ञातेन तवार्जुन ।
विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत् ॥ ॥ ६-३४-४२ (३९८८०)

इति श्रीमन्महाभारते भीष्मपर्वणि भगवद्गीतापर्वणि
चतुस्त्रिंशोऽध्यायः ॥

इति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे
श्रीकृष्णार्जुनसंवादे विभूतियोगोनाम दशमोऽध्यायः ॥

---

भिस्मपर्व-अध्यय०३५
॥ श्रीः ॥
६.३५. अध्यायः ३५

Mahabharata - Bhishma Parva - Chapter Topics
पञ्चत्रिंशोऽध्यायः ॥ भगवद्गीताद्यायः ॥ ११ ॥

Mahabharata - Bhishma Parva - Chapter Text

६-३५-० (३९८८१)
अर्जुन उवाच। ६-३५-०क्ष् (४०४१)
मदनुग्रहाय परमं गुह्यमध्यात्मसंज्ञितम् ।
यत्त्वयोक्तं वचस्तेन मोहोऽयं विगतो मम ॥ ६-३५-१ (३९८८२)
भवाप्ययौ हि भूतानां श्रुतौ विस्तरशो मया ।
त्वत्तः कमलपत्राक्ष माहात्म्यमपि चाव्ययम् ॥ ६-३५-२ (३९८८३)
एवमेतद्यथात्थ त्वमात्मानं परमेश्वर ।
द्रष्टुमिच्छामि ते रूपमैश्वरं पुरुषोत्तम ॥ ६-३५-३ (३९८८४)
मन्यसे यदि तच्छक्यं मया द्रष्टुमिति प्रभो ।
योगेश्वर ततो मे त्वं दर्शयात्मानमव्ययम् ॥ ६-३५-४ (३९८८५)
श्रीभगवानुवाच। ६-३५-५क्ष् (४०४२)
पश्य मे पार्थ रूपाणि शतशोऽथ सहस्रशः ।
नानाविधानि दिव्यानि नानावर्णाकृतीनि च ॥ ६-३५-५ (३९८८६)
पश्यादित्यान्वसून्रुद्रानश्विनौ मरुतस्तथा ।
बहून्यदृष्टपूर्वाणि पश्याऽश्चर्याणि भारत ॥ ६-३५-६ (३९८८७)
इहैकस्थं जगत्कृत्स्नं पश्याद्य सचराचरम् ।
मम देहे गुडाकेश यच्चान्यद्द्रष्टुमिच्छसि ॥ ६-३५-७ (३९८८८)
न तु मां शक्ष्यसे द्रष्टुमनेनैव स्वचक्षुषा ।

दिव्यं ददामि ते चक्षुः पश्य मे योगमैश्वरम् ॥ ६-३५-८ (३९८८९)
सञ्जय उवाच। ६-३५-९क्ष् (४०४३)
एवमुक्त्वा ततो राजन्महायोगेश्वरो हरिः ।
दर्शयामास पार्थाय मरमं रूपमैश्वरम् ॥ ६-३५-९ (३९८९०)
अनेकवक्त्रनयनमनेकाद्भुतदर्शनम् ।
अनेकदिव्याभारणं दिव्यानेकोद्यतायुधम् ॥ ६-३५-१० (३९८९१)
दिव्यमाल्याम्बरधरं दिव्यगन्धानुलेपनम् ।
सर्वाश्चर्यमयं देवमनन्तं विश्वतोमुखम् ॥ ६-३५-११ (३९८९२)
दिवि सूर्यसहस्रस्य भवेद्युगपदुत्थिता ।
यदि भाः सदृशी सा स्याद्भासस्तस्य महात्मनः ॥ ६-३५-१२ (३९८९३)
तत्रैकस्थं जगत्कृत्स्नं प्रविभक्तमनेकधा ।
अपश्यद्देवदेवस्य शरीरे पाण्डवस्तदा ॥ ६-३५-१३ (३९८९४)
ततः स विस्मयाविष्टो हृष्टरोमा धनञ्जयः ।
प्रणम्य शिरसा देवं कृताञ्जलिरभाषत ॥ ६-३५-१४ (३९८९५)
अर्जुन उवाच। ६-३५-१५क्ष् (४०४४)
पश्यामि देवांस्तव देव देहे
सर्वांस्तथा भूतविशेषसङ्घान् ।
ब्रह्माणमीशं कमलासनस्थ-
मृषींश्च सर्वानुरगांश्च दिव्यान् ॥ ६-३५-१५ (३९८९६)
अनेकबाहूदरवक्त्रनेत्रं
पश्यामि त्वां सर्वतोऽनन्तरूपम् ।
नान्तं न मध्यं न पुनस्तवादिं
पश्यामि विश्वेश्वर विश्वरूप ॥ ६-३५-१६ (३९८९७)
किरीटिनं गदिनं चक्रिणं च
तेजोराशिं सर्वतो दीप्तिमन्तम् ।
पश्यामि त्वां दुर्निरीक्ष्यं समन्ता-
द्दीप्तानलार्कद्युतिमप्रमेययम् ॥ ६-३५-१७ (३९८९८)
त्वमक्षरं परमं वेदितव्यं
त्वमस्य विश्वस्य परं निधानम् ।
त्वमव्ययः शाश्वतधर्मगोप्ता
सनातनस्त्वं पुरुषो मतो मे ॥ ६-३५-१८ (३९८९९)
अनादिमध्यान्तमनन्तवीर्य-
मनन्तबाहुं शशिसूर्यनेत्रम् ।
पश्यामि त्वां दीप्तहुताशवक्त्रं
स्वतेजसा विश्वमिदं तपन्तम् ॥ ६-३५-१९ (३९९००)
द्यावापृथिव्योरिदमन्तरं हि

व्याप्तं त्वयैकेन दिशश्च सर्वाः ।
दृष्ट्वाद्भुतं रूपमुग्रं तदेवं
लोकत्रयं प्रव्यथितं महात्मन् ॥ ६-३५-२० (३९९०१)
अमी हि त्वा सुरसङ्घा विशन्ति
केचिद्भीताः प्राञ्जलयो गृणान्ति ।
स्वस्तीत्युक्त्वा महर्षिसिद्धसङ्घाः
स्तुवन्ति त्वां स्तुतिभिः पुष्कलाभिः ॥ ६-३५-२१ (३९९०२)
रुद्रादित्या वसवो ये च साध्या
विश्वेऽश्विनौ मरुतश्चोष्मपाश्च ।
गन्धर्वयक्षासुरसिद्धसङ्घा
वीक्षन्ते त्वां विस्मिताश्चैव सर्वे ॥ ६-३५-२२ (३९९०३)
रूपं महत्ते बहुवक्रनेत्रं
महाबाहो बहुबाहूरुपादम् ।
बहूदरं बहुदंष्ट्राकरालं
दृष्ट्वा लोकाः प्रव्यथितास्तथाहम् ॥ ६-३५-२३ (३९९०४)
नभःस्पृशं दीप्तमनेकवर्णं
व्यात्ताननं दीप्तविशालनेत्रम् ।
दृष्ट्वा हि त्वा प्रव्यथितान्तरात्मा
धृतिं न विन्दामि शमं च विष्णो ॥ ६-३५-२४ (३९९०५)
दंष्ट्राकरालानि च ते मुखानि
दृष्ट्वैव कालानलसन्निभानि ।
दिशो न जाने न लभे च शर्म
प्रसीद देवेश जगन्निवास ॥ ६-३५-२५ (३९९०६)
अमी च त्वां धृतराष्ट्रस्य पुत्राः
सर्वे सहैवावनिपालसङ्घैः ।
भीष्मो द्रोणः सूतपुत्रस्तथासौ
सहास्मदीयैरपि योधमुख्यैः ॥ ६-३५-२६ (३९९०७)
वक्राणि ते त्वरमाणा विशन्ति
दंष्ट्राकरालानि भयानकानि ।
केचिद्विलग्ना दशनान्तरेषु
संदृश्यन्ते चूर्णितैरुत्तमाङ्गैः ॥ ६-३५-२७ (३९९०८)
यथा नदीनां बहवोऽम्बुवेगाः
समुद्रमेवाभिमुखा द्रवन्ति ।
तथा तवामी नरलोकवीरा
विशन्ति वक्राण्यभिविज्वलन्ति ॥ ६-३५-२८ (३९९०९)
यथा प्रदीप्तं ज्वलनं पतङ्गा

विशन्ति नाशाय समृद्धवेगाः ।
तथैव नाशाय विशन्ति लोका-
स्तवापि वक्त्राणि समृद्धवेगाः ॥ ६-३५-२९ (३९९१०)
लेलिह्यसे ग्रसमानः समन्ता-
ल्लोकान्समग्रान्वदनैर्ज्वलद्भिःक ।
तेजोभिरापूर्य जगत्समग्रं
भासस्तवोग्राः प्रतपन्ति विष्णो ॥ ६-३५-३० (३९९११)
आख्याहि मे को भवानुग्ररूपो
नमोऽस्तु ते देववर प्रसीद ।
विज्ञातुमिच्छामि भवन्तमाद्यं
न हि प्रजानामि तव प्रवृत्तिम् ॥ ६-३५-३१ (३९९१२)
श्रीभगवानुवाच। ६-३५-३२क्ष् (४०४५)
कालोऽस्मि लोकक्षयकृत्प्रवृद्धो
लोकान्समाहर्तुमिह प्रवृत्तः ।
ऋतेऽपि त्वा न भविष्यन्ति सर्वे
येऽवस्थिताः प्रत्यनीकेषु योधाः ॥ ६-३५-३२ (३९९१३)
तस्मात्त्वमुत्तिष्ठ यशो लभस्व
जित्वा शत्रून्भुङ्क्ष्व राज्यं समृद्धम् ।
मयैवैते निहताः पूर्वमेव
निमित्तमात्रं भव सव्यसाचिन् ॥ ६-३५-३३ (३९९१४)
द्रोणं च भीष्मं च जयद्रथं च
कर्णं तथान्यानपि योधवीरान् ।
मया हतांस्त्वं जहि माव्यथिष्ठा
युद्धयस्व जेतानि रणे सपत्नान् ॥ ६-३५-३४ (३९९१५)
सञ्जय उवाच। ६-३५-३५क्ष् (४०४६)
एतच्छ्रुत्वा वचनं केशवस्य
कृताञ्जलिर्वेपमानः किरीटी ।
नमस्कृत्वा भूय एवाह कृष्णं
सगद्गदं भीतभीतः प्रणम्य ॥ ६-३५-३५ (३९९१६)
अर्जुन उवाच। ६-३५-३६क्ष् (४०४७)
स्थाने हृषीकेश तव प्रकीर्त्या
जगत्प्रहृष्यत्यनुरज्यते च ।
रक्षांसि भीतानि दिशो द्रवन्ति
सर्वे नमस्यन्ति च सिद्धसङ्घाः ॥ ६-३५-३६ (३९९१७)
कस्माच्च ते न नमेरन्महात्मन्
गरीयसे ब्रह्मणोऽप्यादिकर्त्रे ।

अनन्त देवेश जगन्निवास
त्वमक्षरं सदसत्तत्परं यत् ॥ ६-३५-३७ (३९११८)
त्वमादिदेवः पुरुषः पुराण-
स्त्वमस्य विश्वस्य परं निधानम् ।
वेत्ताऽसि वेद्यं च परं च धाम
त्वया ततं विश्वमनन्तरूप ॥ ६-३५-३८ (३९११९)
वायुर्यमोऽग्निर्वरुणः शशाङ्कः
प्रजापतिस्त्वं प्रपितामहश्च ।
नमो नमस्तेऽतु सहस्रकृत्वः
पुनश्च भूयोऽपि नमो नमस्ते ॥ ६-३५-३९ (३९१२०)
नमः पुरस्तादथ पृष्ठतस्ते
नमोऽस्तु ते सर्वत एव सर्व ।
अनन्तवीर्यामितविक्रमस्त्वं
सर्वं समाप्नोषि ततोऽसि सर्वः ॥ ६-३५-४० (३९१२१)
सखेति मत्वा प्रसभं यदुक्तं
हे कृष्ण हे यादव हे सखेति ।
अजानता महिमानं तवेदं
मया प्रमादात्प्रणयेन वाऽपि ॥ ६-३५-४१ (३९१२२)
यच्चापहासार्थमसत्कृतोऽसि
विहारशय्यासनभोजनेषु ।
एकोऽथवाप्यच्युत तत्समक्षं
तत्क्षामये त्वामहमप्रमेयम् ॥ ६-३५-४२ (३९१२३)
पितासि लोकस्य चराचरस्य
त्वमस्य पूज्यश् गुरुर्गरीयान् ।
न त्वत्समोऽस्त्यभ्यधिकः कुतोऽन्यो
लोकत्रयेऽप्यप्रतिमप्रभावः ॥ ६-३५-४३ (३९१२४)
तस्मात्प्रणम्य प्रणिधाय कायं
प्रसादये त्वामहमीशमीड्यम् ।
पितेव पुत्रस्य सखेव सख्युः
प्रियः प्रियायार्हसि देव सोढुम् ॥ ६-३५-४४ (३९१२५)
अदृष्टपूर्वं हृषितोऽस्मि दृष्ट्वा
भयेन च प्रव्यथितं मनो मे ।
तदेव मे दर्शय देव रूपं
प्रसीद देवेश जगन्निवास ॥ ६-३५-४५ (३९१२६)
किरीटिनं गदिनं चक्रहस्त-
मिच्छामि त्वां द्रष्टुमहं तथैव ।

तेनैव रूपेण चतुर्भुजेन
सहस्रबाहो भव विश्वमूर्ते ॥ ६-३५-४६ (३९९२७)
श्रीभगवानुवाच। ६-३५-४७क्ष् (४०४८)
मया प्रसन्नेन तवार्जुनेदं
रूपं परं दर्शितमात्मयोगात् ।
तेजोमयं विश्वमनन्तमाद्यं
यन्मे त्वदन्येन न दृष्टपूर्वम् ॥ ६-३५-४७ (३९९२८)
न वेद यज्ञाध्ययनैर्न दानै-
र्न च क्रियाभिर्न तपोभिरुग्रैः ।
एवंरूपः शक्य अहं नृलोके
द्रष्टुं त्वदन्येन कुरुप्रवीर ॥ ६-३५-४८ (३९९२९)
मा ते व्यथा मा च विमूढभावो
दृष्ट्वा रूपं घोरमीदृङ्भमेदम् ।
व्यपेतभीः प्रीतमनाः पुनस्त्वं
तदेव मे रूपमिदं प्रपश्य ॥ ६-३५-४९ (३९९३०)
सञ्जय उवाच। ६-३५-५०क्ष् (४०४९)
इत्यर्जुनं वासुदेवस्तथोक्त्वा
स्वकं रूपं दर्शयामास भूयः ।
आश्वासयामास च भीतमेनं
भूत्वा पुनः सौम्यवपुर्महात्मा ॥ ६-३५-५० (३९९३१)
अर्जुन उवाच। ६-३५-५१क्ष् (४०५०)
दृष्ट्वेदं मानुषं रूपं तव सौम्यं जनार्दन ।
इदानीमस्मि संवृत्तः सचेताः प्रकृतिं गतः ॥ ६-३५-५१ (३९९३२)
श्रीभगवानुवाच। ६-३५-५२क्ष् (४०५१)
सुदुर्दर्शमिदं रूपं दृष्टवानसि यन्मम ।
देवा अप्यस्य रूपस्य नित्यं दर्शनकाङ्क्षिणः ॥ ६-३५-५२ (३९९३३)
नाहं वेदैर्न तपसा न दानेन न चेज्यया ।
शक्य एवंविधो द्रष्टुं दृष्टवानसि मां यथा ॥ ६-३५-५३ (३९९३४)
भक्त्या त्वनन्यया शक्य अहमेवंविधोऽर्जुन ।
ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुं च परंतप ॥ ६-३५-५४ (३९९३५)
मत्कर्मकृन्मत्परमो मद्भक्तः सङ्गवर्जितः ।
निर्वैरः सर्वभूतेषु यः स मामेति पाण्डव ॥ ॥ ६-३५-५५ (३९९३६)

इति श्रीमन्महाभारते भीष्मपर्वणि भगवद्गीतापर्वणि
पञ्चत्रिंशोऽध्यायः ॥

इति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे
श्रीकृष्णार्जुनसंवादे विश्वरूपदर्शनयोगो नाम एकादशोऽध्यायः ॥

---

भिस्मपर्व-अध्यय०३६
॥ श्रीः ॥
६.३६. अध्यायः ३६

Mahabharata - Bhishma Parva - Chapter Topics
षट्त्रिंशोऽध्यायः ॥ भगवद्गीताध्यायः ॥ १२ ॥

Mahabharata - Bhishma Parva - Chapter Text

६-३६-० (३९९३७)
अर्जुन उवाच। ६-३६-०क्ष् (४०५२)
एवं सततयुक्ता ये भक्तास्त्वां पर्युपासते ।
ये चाप्यक्षरमव्यक्तं तेषां के योगवित्तमाः ॥ ६-३६-१ (३९९३८)
श्रीभगवानुवाच। ६-३६-२क्ष् (४०५३)
मय्यावेश्य मनो ये मां नित्ययुक्ता उपासते ।
श्रद्धया परयोपेतास्ते मे युक्ततमा मताः ॥ ६-३६-२ (३९९३९)
ये त्वक्षरमनिर्देश्यमव्यक्तं पर्युपासते ।
सर्वत्रगमचिन्त्यं च कूटस्थमचलं ध्रुवम् ॥ ६-३६-३ (३९९४०)
संनियम्येन्द्रियग्रामं सर्वत्र समबुद्धयः ।
ते प्राप्नुवन्ति मामेव सर्वभूतहिते रताःक ॥ ६-३६-४ (३९९४१)
क्लेशोऽधिकतरस्तेषामव्यक्तासक्तचेतसाम् ।
अव्यक्ता हि गदिर्दुःखं देहवद्भिरवाप्यते ॥ ६-३६-५ (३९९४२)
ये तु सर्वाणि कर्माणि मयि संन्यस्य मत्पराः ।
अनन्येनैव योगेन मां ध्यायन्त उपासते ॥ ६-३६-६ (३९९४३)
तेषामहं समुद्धर्ता मृत्युसंसारसागरात् ।
भवामि न चिरात्पार्थ मय्यावेशितचेतसाम् ॥ ६-३६-७ (३९९४४)
मय्येव मन आधत्स्व मयि बुद्धिं निवेशय ।
निवसिष्यसि मय्येव अत ऊर्ध्वं न शंशकयः ॥ ६-३६-८ (३९९४५)
अथ चित्तं समाधातुं न शक्नोषि मयि स्थिरम् ।
अभ्यासयोगेन ततो मामिच्छाऽऽप्तुं धनंजय ॥ ६-३६-९ (३९९४६)
अभ्यासेऽप्यसमर्थोऽसि मत्कर्मपरमो भव ।
मदर्थमपि कर्माणि कुर्वन्सिद्धिमवाप्स्यसि ॥ ६-३६-१० (३९९४७)
अथैतदप्यशक्तोऽसि कर्तुं मद्योगमाश्रितः ।
सर्वकर्मफलत्यागं ततः कुरु यतात्मवान् ॥ ६-३६-११ (३९९४८)

श्रेयो हि ज्ञानमभ्यासाज्ज्ञानाद्ध्यानं विशिष्यते ।
ध्यानात्कर्मफलत्यागस्त्यागाच्छान्तिरनन्तरम् ॥ ६-३६-१२ (३९९४९)
अद्वेष्टा सर्वभूतानां मैत्रः करुण एव च ।
निर्ममो निरहंकारः समदुःखसुखः क्षमी ॥ ६-३६-१३ (३९९५०)
संतुष्टः सततं योगी यतात्मा दृढनिश्चयः ।
मय्यर्पितमनोबुद्धिर्यो मे भक्तः स मे प्रियः ॥ ६-३६-१४ (३९९५१)
यस्मान्नोद्विजते लोको लोकान्नोद्विजते च यः ।
हर्षामर्षभयोद्वेगैर्मुक्तो यः स च मे प्रियः ॥ ६-३६-१५ (३९९५२)
अनपेक्षः शुचिर्दक्ष उदासीनो गतव्यथः ।
सर्वारम्भपरित्यागी यो मद्भक्तः स मे प्रियः ॥ ६-३६-१६ (३९९५३)
यो न हृष्यति न द्वेष्टि न शोचति न काङ्क्षति ।
शुभाशुभपरित्यागी भक्तिमान्यः स मे प्रियः ॥ ६-३६-१७ (३९९५४)
समः शत्रौ च मित्रे च तथा मानापमानयोः ।
शीतोष्णसुखदुःखेषु समः सङ्गविवर्जितः ॥ ६-३६-१८ (३९९५५)
तुल्यनिन्दास्तुतिर्मौनी संतुष्टो येन केन चित् ।
अनिकेतः स्थिरमतिर्भक्तिमान्मे प्रियो नरः ॥ ६-३६-१९ (३९९५६)
ये तु धर्मामृतमिदं यथोक्तं पर्युपासते ।
श्रद्दधाना मत्परमा भक्तास्तेऽतीव मे प्रियाः ॥ ॥ ६-३६-२० (३९९५७)

इति श्रीमन्महाभारते भीष्मपर्वणि भगवद्गीतापर्वणि
षट्त्रिंशोऽध्यायः ॥

इति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे
श्रीकृष्णार्जुनसंवादे भक्तियोगोनाम द्वादशोऽध्यायः ॥

---

भिस्मपर्व-अध्यय०३७
॥ श्रीः ॥
६.३७. अध्यायः ३७

Mahabharata - Bhishma Parva - Chapter Topics
सप्तत्रिंशोऽध्यायः ॥ भगवद्गीताध्यायः ॥ १३ ॥

Mahabharata - Bhishma Parva - Chapter Text

६-३७-० (३९९५८)
अर्जुन उवाच। ६-३७-०क्ष् (४०५४)
प्रकृतिं पुरुषं चैव क्षेत्रं क्षेत्रज्ञमेव च ।

एतद्वेदितुमिच्छामि ज्ञानं ज्ञेयं च केशव ॥ ६-३७-१ (३९९५९)
श्रीभगवानुवाच। ६-३७-२क्ष् (४०५५)
इदं शरीरं कौन्तेय क्षेत्रमित्यभिधीयते ।
एतद्यो वेत्ति तं प्राहुः क्षेत्रज्ञ इति तद्विदः ॥ ६-३७-२ (३९९६०)
क्षेत्रज्ञं चापि मां विद्धि सर्वक्षेत्रेषु भारत ।
क्षेत्रक्षेत्रज्ञयोर्ज्ञानं यत्तज्ज्ञानं मतं मम ॥ ६-३७-३ (३९९६१)
तत्क्षेत्रं यच्च यादृक् यद्विकारि यतश्च यत् ।
स च यो यत्प्रभावश्च तत्समासेन मे श्रृणु ॥ ६-३७-४ (३९९६२)
ऋषिभिर्बहुधा गीतं छन्दोभिर्विविधैः पृथक् ।
ब्रह्मसूत्रपदैश्चैव हेतुमद्भिर्विनिश्चितैः ॥ ६-३७-५ (३९९६३)
महाभूतान्यहङ्कारो बुद्धिरव्यक्तमेव च ।
इन्द्रियाणि दशैकं च पञ्च चेन्द्रियगोचराः ॥ ६-३७-६ (३९९६४)
इच्छा द्वेषः सुखं दुःखं सङ्घातश्चेतना धृतिः ।
एतत्क्षेत्रं समासेन सविकारमुदाहृतम् ॥ ६-३७-७ (३९९६५)
अमानित्वमदम्भित्वमहिंसा क्षान्तिरार्जवम् ।
आचार्योपासनं शौचं स्थैर्यमात्मविनिग्रहः ॥ ६-३७-८ (३९९६६)
इन्द्रियार्थेषु वैराग्यमनहङ्कार एव च ।
जन्ममृत्युजराव्याधिदुःखदोषानुदर्शनम् ॥ ६-३७-९ (३९९६७)
असक्तिरनभिष्वङ्गः पुत्रदारगृहादिषु ।
नित्यं च समचित्तत्वमिष्टानिष्टोपपत्तिषु ॥ ६-३७-१० (३९९६८)
मयि चानन्ययोगेन भक्तिरव्यभिचारिणी ।
विविक्तदेशसेवित्वमरतिर्जनसंसदि ॥ ६-३७-११ (३९९६९)
अध्यात्मज्ञाननित्यत्वं तत्त्वज्ञानार्थदर्शनम् ।
एतज्ज्ञानमिति प्रोक्तमज्ञानं यदतोऽन्यथा ॥ ६-३७-१२ (३९९७०)
ज्ञेयं यत्तत्प्रवक्ष्यामि यज्ज्ञात्वाऽमृतमश्नुते ।
अनादिमत्परं ब्रह्म न सत्तन्नासदुच्यते ॥ ६-३७-१३ (३९९७१)
सर्वतः पाणिपादं तत्सर्वतोऽक्षिशिरोमुखम् ।
सर्वतः श्रुतिमल्लोके सर्वमावृत्य तिष्ठति ॥ ६-३७-१४ (३९९७२)
सर्वेन्द्रियगुणाभासं सर्वेन्द्रियविवर्जितम् ।
असक्तं सर्वभृच्चैव निर्गुणं गुणभोक्तृ च ॥ ६-३७-१५ (३९९७३)
बहिरन्तश्च भूतानामचरं चरमेव च ।
सूक्ष्मत्वात्तदविज्ञेयं दूरस्थं चान्तिके च तत् ॥ ६-३७-१६ (३९९७४)
अविभक्तं च भूतेषु विभक्तमिव च स्थितम् ।
भूतभर्तृ च तज्ज्ञेयं ग्रसिष्णु प्रभविष्णु च ॥ ६-३७-१७ (३९९७५)
ज्योतिषामपि तज्ज्योतिस्तमसः परमुच्यते ।
ज्ञानं ज्ञेयं ज्ञानगम्यं हृदि सर्वस्य विष्ठितम् ॥ ६-३७-१८ (३९९७६)

इति क्षेत्रं तथा ज्ञानं ज्ञेयं चोक्तं समासतः ।
मद्भक्त एतद्विज्ञाय मद्भावायोपपद्यते ॥ ६-३७-१९ (३९९७७)
प्रकृतिं पुरुषं चैव विद्ध्यनादी उभावपि ।
विकारांश्च गुणांश्चैव विद्धि प्रकृतिसंभवान् ॥ ६-३७-२० (३९९७८)
कार्यकारणकर्तृत्वे हेतुः प्रकृतिरुच्यते ।
पुरुषः सुखदुःखानां भोक्तृत्वे हेतुरुच्यते ॥ ६-३७-२१ (३९९७९)
पुरुषः प्रकृतिस्थो हि भुङ्क्ते प्रकृतिजान्गुणान् ।
कारणं गुणसङ्गोऽस्य सदसद्योनिजन्मसु ॥ ६-३७-२२ (३९९८०)
उपद्रष्टानुमन्ता च भर्ता भोक्ता महेश्वरः ।
परमात्मेति चाप्युक्तो देहेऽस्मिन्पुरुषः परः ॥ ६-३७-२३ (३९९८१)
य एवं वेत्ति पुरुषं प्रकृतिं च गुणैः सह ।
सर्वथा वर्तमानोऽपि न स भूयोऽभिजायते ॥ ६-३७-२४ (३९९८२)
ध्यानेनात्मनि पश्यन्ति केचिदात्मानमात्मना ।
अन्ये साङ्ख्येन योगेन कर्मयोगेन चापरे ॥ ६-३७-२५ (३९९८३)
अन्ये त्वेवमजानन्तः श्रुत्वाऽन्येभ्य उपासते ।
तेऽपि चातितरन्त्येव मृत्युं श्रुतिपरायणाः
॥ ६-३७-२७अयावत्संजायते किंचित्सत्त्वं स्थावरजङ्गमम् ।
क्षेत्रक्षेत्रज्ञसंयोगात्तद्विद्धि भरतर्षभ ॥ ६-३७-२६ (३९९८४)
समं सर्वेषु भूतेषु तिष्ठन्तं परमेश्वरम् ।
विनश्यत्स्वविनश्यन्तं यः पश्यति स पश्यति ॥ ६-३७-२८ (३९९८५)
समं पश्यन्हि सर्वत्र समवस्थितमीश्वरम् ।
न हिनस्त्यात्मनात्मानं ततो याति परां गतिं ॥ ६-३७-२९ (३९९८६)
प्रत्यत्यैव च कर्माणि क्रियमाणानि सर्वशः ।
यः पश्यति तथात्मानमकर्तारं स पश्यति ॥ ६-३७-३० (३९९८७)
यदा भूतपृथग्भावमेकस्थमनुपश्यति ।
तत एव च विस्तारं ब्रह्म संपद्यते तदा ॥ ६-३७-३१ (३९९८८)
अनादित्वान्निर्गुणत्वात्परमात्मायमव्ययः ।
शरीरस्थोऽपि कौन्तेय न करोति न लिप्यते ॥ ६-३७-३२ (३९९८९)
यथा सर्वगतं सौक्ष्म्यादाकाशं नोपलिप्यते ।
सर्वत्रावस्थितो देहे तथात्मा नोपलिप्यते ॥ ६-३७-३३ (३९९९०)
यथा प्रकाशयत्येकः कृत्स्नं लोकमिमं रविः ।
क्षेत्रं क्षेत्री तथा कृत्स्नं प्रकाशयति भारत ॥ ६-३७-३४ (३९९९१)
क्षेत्रक्षेत्रज्ञयोरेवमन्तरं ज्ञानचक्षुषा ।
भूतप्रकृतिमोक्षं च ये विदुर्यान्ति ते परम् ॥ ॥ ६-३७-३५ (३९९९२)

इति श्रीमन्महाभारते भीष्मपर्वणि भगवद्गीतापर्वणि

सप्तत्रिंशोऽध्यायः ॥

इति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे
श्रीकृष्णार्जुनसंवादे क्षेत्रक्षेत्रज्ञविभागयोगोनाम
त्रयोदशोऽध्यायः ॥
Mahabharata - Bhishma Parva - Chapter Footnotes

६-३७-१ अयं श्लोकः प्रक्षित इति केचित् ॥
६-३७-५ विनिश्चिताम् इति माध्वपाठः ॥
६-३७-१८ सर्वस्य धिष्ठितमिति पाठान्तरम् ॥
६-३७-२४ य एनं वेत्ति इति माध्वपाठः ॥

---

भिस्मपर्व-अध्यय०३८
॥ श्रीः ॥
६.३८. अध्यायः ३८

Mahabharata - Bhishma Parva - Chapter Topics
अष्टत्रिंशोऽध्यायः ॥ भगवद्गीताध्यायः ॥ १४ ॥

Mahabharata - Bhishma Parva - Chapter Text

६-३८-० (३९९९३)
श्रीभगवानुवाच। ६-३८-०क्ष् (४०५६)
परं भूयः प्रवक्ष्यामि ज्ञानानां ज्ञानमुत्तमम् ।
यज्ज्ञात्वा मुनयः सर्वे परां सिद्धिमितो गताः ॥ ६-३८-१ (३९९९४)
इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः ।
सर्गेऽपि नोपजायन्ते प्रलये न व्यथन्ति च ॥ ६-३८-२ (३९९९५)
मम योनिर्महद्ब्रह्म तस्मिन्गर्भं दधाम्यहम् ।
संभवः सर्वभूतानां ततो भवति भारत ॥ ६-३८-३ (३९९९६)
सर्वयोनिषु कौन्तेय मूर्तयः संभवन्तिः याः ।
तासां ब्रह्म महद्योनिरहं बीजप्रदः पिता ॥ ६-३८-४ (३९९९७)
सत्वं रजस्तम इति गुणाः प्रकृतिसंभवाः ।
निबध्नन्ति महाबाहो देहे देहिनमव्ययम् ॥ ६-३८-५ (३९९९८)
तत्र सत्त्वं निर्मलत्वात्प्रकाशकमनामयम् ।
सुखसङ्गेन बध्नाति ज्ञानसङ्गेन चानघ ॥ ६-३८-६ (३९९९९)
रजो रागात्मकं विद्धि तृष्णासङ्गसमुद्भवम् ।

तन्निबध्नाति कौन्तेय कर्मसङ्गेन देहिनम् ॥ ६-३८-७ (४००००)
तमस्त्वज्ञानजं विद्धि मोहनं सर्वदेहिनाम् ।
प्रमादालस्यनिद्राभिस्तन्निबध्नाति भारत ॥ ६-३८-८ (४०००१)
सत्वं सुखे संजयति रजः कर्मणि भारत ।
ज्ञानमावृत्य तु तमः प्रमादे संजयत्युत ॥ ६-३८-९ (४०००२)
रजस्तमश्चाभिभूय सत्वं भवति भारत ।
रजः सत्वं तमश्चैव तमः सत्वं रजस्तथा ॥ ६-३८-१० (४०००३)
सर्वद्वारेषु देहेऽस्मिन्प्राकाश उपजायते ।
ज्ञानं यदा तदा विद्याद्विवृद्धं सत्वमित्युत ॥ ६-३८-११ (४०००४)
लोभः प्रवृत्तिरारम्भः कर्मणामशमः स्पृहा ।
रजस्येतानि जायन्ते विवृद्धे भरतर्षभ ॥ ६-३८-१२ (४०००५)
अप्रकाशोऽप्रवृत्तिश्च प्रमादो मोह एव च ।
तमस्येतानि जायन्ते विवृद्धे कुरुनन्दन ॥ ६-३८-१३ (४०००६)
यदा सत्वे प्रवृद्धे तु प्रलयं याति देहभृत् ।
तदोत्तमविदां लोकानमलान्प्रतिपद्यते ॥ ६-३८-१४ (४०००७)
रजसि प्रलयं गत्वा कर्मसङ्गिषु जायते ।
तथा प्रलीनस्तमसि मूढयोनिषु जायते ॥ ६-३८-१५ (४०००८)
कर्मणः सुकृतस्याहुः सात्विकं निर्मलं फलम् ।
रजसस्तु फलं दुःखमज्ञानं तमसः फलम् ॥ ६-३८-१६ (४०००९)
सत्वात्संजायते ज्ञानं रजसो लोभ एव च ।
प्रमादमोहौ तमसो भवतोऽज्ञानमेव च ॥ ६-३८-१७ (४००१०)
ऊर्ध्वं गच्छन्ति सत्वस्था मध्ये तिष्ठन्ति राजसाः ।
जघन्यगुणवृत्तस्था अधो गच्छन्ति तामसाः ॥ ६-३८-१८ (४००११)
नान्यं गुणेभ्यः कर्तारं यदा द्रष्टाऽनुपश्यति ।
गुणेभ्यश्च परं वेत्ति मद्भावं सोऽधिगच्छति ॥ ६-३८-१९ (४००१२)
गुणानेतानतीत्य त्रीन्देही देहसमुद्भवान् ।
जन्ममृत्युजरादुःखैर्विमुक्तोऽमृतमश्नुते ॥ ६-३८-२० (४००१३)
अर्जुन उवाच। ६-३८-२१क्ष् (४०५७)
कैर्लिङ्गैस्त्रीन्गुणानेतानीतो भवति प्रभो ।
किमाचारः कथं चैतांस्त्रीन्गुणानतिवर्तते ॥ ६-३८-२१ (४००१४)
श्रीभगवानुवाच। ६-३८-२२क्ष् (४०५८)
प्रकाशं च प्रवृत्तिं च मोहमेव च पाण्डव ।
न द्वेष्टि संप्रवृत्तानि न निवृत्तानि काङ्क्षति ॥ ६-३८-२२ (४००१५)
उदासीनवदासीनो गुणैर्यो न विचाल्यते ।
गुणा वर्तन्त इत्येव योऽवतिष्ठति नेङ्गते ॥ ६-३८-२३ (४००१६)
समदुःखसुखः स्वस्थः समलोष्टाश्मकाञ्चनः ।

तुल्यप्रियाप्रियो धीरस्तुल्यनिन्दात्मसंस्तुतिः ॥ ६-३८-२४ (४००१७)
मानापमानयोस्तुल्यस्तुल्यो मित्रारिपक्षयोः ।
सर्वारम्भपरित्यागी गुणातीतः स उच्यते ॥ ६-३८-२५ (४००१८)
मां च योऽव्यभिचारेण भक्तियोगेन सेवते ।
स गुणान्समतीत्यैतान्ब्रह्म भूयाय कल्पते ॥ ६-३८-२६ (४००१९)
ब्रह्मणो हि प्रतिष्ठाहममृतस्याव्ययस्य च ।
शाश्वतस्य च धर्मस्य सुखस्यैकान्तिकस्य च ॥ ॥ ६-३८-२७ (४००२०)

इति श्रीमन्महाभारते भीष्मपर्वणि भगवद्गीतापर्वणि
अष्टत्रिंशोऽध्यायः ॥

इति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे
श्रीकृष्णार्दुनसंवादे गुणत्रयविभागयोगोनाम चतुर्दशोऽध्यायः ॥
Mahabharata - Bhishma Parva - Chapter Footnotes

६-३८-१८ जघन्यगुणवृत्तिस्थाः इति माध्यपाठः ॥

---

भिस्मपर्व-अध्यय०३९
॥ श्रीः ॥
६.३९. अध्यायः ३९

Mahabharata - Bhishma Parva - Chapter Topics
एकोनचत्वारिंशोऽध्यायः ॥ भगवद्गीताध्यायः ॥ १५ ॥

Mahabharata - Bhishma Parva - Chapter Text

६-३९-० (४००२१)
श्रीभगवानुवाच। ६-३९-०क्ष् (४०५९)
ऊर्ध्वमूलमधःशाखमश्वत्थं प्राहुरव्ययम् ।
छन्दांसि यस्य पर्णानि यस्तं वेद स वेदवित् ॥ ६-३९-१ (४००२२)
अधश्चोर्ध्वं प्रसृतास्तस्य शाखा
गुणप्रवृद्धा विषयप्रवालाः ।
अधश्च मूलान्यनुसंततानि
कर्मानुबन्धीनि मनुष्यलोके ॥ ६-३९-२ (४००२३)
न रूपमस्येह तथोपलभ्यते
नान्तो न चादिर्न च संप्रतिष्ठा ।

अश्वत्थमेनं सुविरूढमूल-
मसङ्गशस्त्रेण दृढेन छित्वा ॥ ६-३९-३ (४००२४)
ततः पदं तत्परिमार्गितव्यं
यस्मिन्गता न निवर्तन्ति भूयः ।
तमेव चाद्यं पुरुषं प्रपद्ये
यतः प्रवृत्तिः प्रसृता पुराणी ॥ ६-३९-४ (४००२५)
निर्मानमोहा जितसङ्गदोषा
अध्यात्मनित्या विनिवृत्तकामाः ।
द्वंद्वैर्विमुक्ताः सुखदुःखसंज्ञै-
र्गच्छन्त्यमूढाः पदमव्ययं तत् ॥ ६-३९-५ (४००२६)
न तद्भासयते सूर्यो न शशाङ्को न पावकः ।
यद्गत्वा न निवर्तन्ते तद्धाम परमं मम ॥ ६-३९-६ (४००२७)
ममैवांशो जीवलोके जीवभूतः सनातनः ।
मनःषष्ठानीन्द्रियाणि प्रकृतिस्थानि कर्षति ॥ ६-३९-७ (४००२८)
शरीरं यदवाप्नोति यच्चाप्युत्क्रामतीश्वरः ।
गृहीत्वैतानि संयाति वायुर्गन्धानिवाशयात् ॥ ६-३९-८ (४००२९)
श्रोत्रं चक्षुः स्पर्शनं च रसनं घ्राणमेव च ।
अधिष्ठाय मनश्चायं विषयानुपसेवते ॥ ६-३९-९ (४००३०)
उत्क्रामन्तं स्थितं वाऽपि भुञ्जानं वा गुणान्वितम् ।
विमूढा नानुपश्यन्ति पश्यन्ति ज्ञानचक्षुषः ॥ ६-३९-१० (४००३१)
यतन्तो योगिनश्चैनं पश्यन्त्यात्मन्यवस्थितम् ।
यतन्तोऽप्यकृतात्मानो नैनं पश्यन्त्यचेतसः ॥ ६-३९-११ (४००३२)
यदादित्यगतं तेजो जगद्भासयतेऽखिलम् ।
यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मार्मकम् ॥ ६-३९-१२ (४००३३)
गामाविश्य च भूतानि धारयम्यहमोजसा ।
पुष्णामि चौषधीः सर्वाः सोमो भूत्वा रसात्मकः ॥ ६-३९-१३ (४००३४)
अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रितः ।
प्राणापानसमायुक्तः पचाम्यन्नं चतुर्विधम् ॥ ६-३९-१४ (४००३५)
सर्वस्य चाहं हृदि सन्निविष्टो
मत्तः स्मृतिर्ज्ञानमपोहनं च ।
वेदैश्च सर्वैरहमेव वेद्यो
वेदान्तकृद्वेदविदेव चाहम् ॥ ६-३९-१५ (४००३६)
द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च ।
क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते ॥ ६-३९-१६ (४००३७)
उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः ।
यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः ॥ ६-३९-१७ (४००३८)

यस्मात्क्षरमतीतोऽहमक्षरादपि चोत्तमः ।
अतोऽस्मि लोके वेदे च प्रस्थितः पुरुषोत्तमः ॥ ६-३९-१८ (४००३९)
यो मामेवमसंमूढो जानाति पुरुषोत्तमम् ।
स सर्वविद्भजति मां सर्वभावेन भारत ॥ ६-३९-१९ (४००४०)
इति गुह्यतमं शास्त्रमिदमुक्तं मयाऽनघ ।
एवद्बुद्ध्वा बुद्धिमान्स्यात्कृतकृत्यश्च भारत ॥ ॥ ६-३९-२० (४००४१)

इति श्रीमन्महाभारते भीष्मपर्वणि भगवद्गीतापर्वणि
एकोनचत्वारिंशोऽध्यायः ॥

इति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे
श्रीकृष्णार्जुनसंवादे पुरुषोत्तमयोगोनाम पञ्चशोऽध्यायः ॥
Mahabharata - Bhishma Parva - Chapter Footnotes

६-३९-३ न च संप्रविष्टः इति माध्वपाठः ॥
६-३९-क पुराणपुरुषोत्तमयोयोनाम इति माध्वपाठः ॥

---

भिस्मपर्व-अध्यय०४०
॥ श्रीः ॥
६.४०. अध्यायः ४०

Mahabharata - Bhishma Parva - Chapter Topics
चत्वारिंशोऽध्यायः ॥ भगवद्गीताध्यायः ॥ १६ ॥

Mahabharata - Bhishma Parva - Chapter Text

६-४०-० (४००४२)
श्रीभगवानुवाच। ६-४०-०क्ष् (४०६०)
अभयं सत्वसंशुद्धिर्ज्ञानयोगव्यवस्थितिः ।
दानं दमश्च यज्ञश्च स्वाध्यायस्तप आर्जवम् ॥ ६-४०-१ (४००४३)
अहिंसा सत्यमक्रोधस्त्यागः शान्तिरपैशुनम् ।
दया भूतेष्वलोलुत्वं मार्दवं ह्रीरचापलम् ॥ ६-४०-२ (४००४४)
तेजः क्षमा धृतिः शौचमद्रोहो नातिमानिता ।
भवन्ति संपदं दैवीमभिजातस्य भारत ॥ ६-४०-३ (४००४५)
दम्भो दर्पोऽभिमानश्च क्रोधः पारुष्यमेव च ।
अज्ञानं चाभिजातस्य पार्थ संपदमासुरीम् ॥ ६-४०-४ (४००४६)

दैवी संपद्विमोक्षाय निबन्धायासुरी मता ।
मा शुचः संपदं दैवीमभिजातोऽसि पाण्डव ॥ ६-४०-५ (४००४७)
द्वौ भूतसर्गौ लोकेऽस्मिन्दैव आसुर एव च ।
दैवो विस्तरशः प्रोक्त आसुरं पार्थ मे शृणु ॥ ६-४०-६ (४००४८)
प्रवृत्तिं च निवृत्तिं च जना न विदुरासुराः ।
न शौचं नापि चाचारो न सत्यं तेषु विद्यते ॥ ६-४०-७ (४००४९)
असत्यमप्रतिष्ठं ते जगदाहुरनीश्वरम् ।
अपरस्परसंभूतं किमन्यत्कामहैतुकम् ॥ ६-४०-८ (४००५०)
एतां दृष्टिमवष्टभ्य नष्टात्मानोऽल्पबुद्धयः ।
प्रभवन्त्युग्रकर्माणः क्षयाय जगतोऽहिताः ॥ ६-४०-९ (४००५१)
काममाश्रित्य दुष्पूरं दम्भमानमदान्विताः ।
मोहाद्गृहीत्वाऽसद्ग्राहान्प्रवर्तन्तेऽशुचिव्रताः ॥ ६-४०-१० (४००५२)
चिन्तामपरिमेयां च प्रलयान्तामुपाश्रिताः ।
कामोपभोगपरमा एतावदिति निश्चिताः ॥ ६-४०-११ (४००५३)
आशापाशशतैर्बद्धाः कामक्रोधपरायणाः ।
ईहन्तो कामभोगार्थमन्यायेनार्थसंचयान् ॥ ६-४०-१२ (४००५४)
इदमद्य मया लब्धमिमं प्राप्स्ये मनोरथम् ।
इदमस्तीदमपि मे भविष्यति पुनर्धनम् ॥ ६-४०-१३ (४००५५)
असौ मया हतः शत्रुर्हनिष्ये चापरानपि ।
ईश्वरोऽहमहं भोगी सिद्धोऽहं बलवान्सुखी ॥ ६-४०-१४ (४००५६)
आढ्योऽभिजनवानस्मि कोऽन्योस्ति सदृशो मया ।
यक्ष्ये दास्यामि मोदिष्य इत्यज्ञानविमोहिताः ॥ ६-४०-१५ (४००५७)
अनेकचित्तविभ्रान्त मोहजालसमावृताः ।
प्रसक्ताः कामभोगेषु पतन्ति नरकेऽशुचौ ॥ ६-४०-१६ (४००५८)
आत्मसंभाविताः स्तब्धा धनमानमदान्विताः ।
यजन्ते नामयज्ञैस्ते दम्भेनाविधिपूर्वकम् ॥ ६-४०-१७ (४००५९)
अहङ्कारं बलं दर्पं कामं क्रोधं च संश्रिताः ।
मामत्मपरदेहेषु प्रद्विषन्तोऽभ्यसूयकाः ॥ ६-४०-१८ (४००६०)
तानहं द्विषतः क्रूरान्संसारेषु नराधमान् ।
क्षिपाम्यजस्रमशुभानासुरीष्वेव योनिषु ॥ ६-४०-१९ (४००६१)
आसुरीं योनिमापन्ना मूढा जन्मनिजन्मनि ।
मामप्राप्यैव कौन्तेय ततो यान्त्यधमां गतिम् ॥ ६-४०-२० (४००६२)
त्रिविधं नरकस्येदं द्वारं नाशनमात्मनः ।
कामः क्रोधस्तथा लोभस्तस्मादेतत्रयं त्यजेत् ॥ ६-४०-२१ (४००६३)
एतैर्विमुक्तः कौन्तेय तमोद्वारैस्त्रिभिर्नरः ।
आचरत्यात्मनः श्रेयस्ततो याति परां गतिम् ॥ ६-४०-२२ (४००६४)

यः शास्त्रविधिमुत्सृज्य वर्तते कामकारतः ।
न स सिद्धिमवाप्नोति न सुखं न परां गतिम् ॥ ६-४०-२३ (४००६५)
तस्माच्छास्त्रं प्रमाणं ते कार्याकार्यव्यवस्थितौ ।
ज्ञात्वा शास्त्रविधानोक्तं कर्म कर्तुमिहार्हसि ॥ ॥ ६-४०-२४ (४००६६)

इति श्रीमन्महाभारते भीष्मपर्वणि भगवद्गीतापर्वणि
चत्वारिंशोऽध्यायः ॥

इति श्रीमन्मद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे
श्रीकृष्णार्जुनसंवादे देवासुरसंपद्विभागयोगोनाम षोडशोऽध्यायः
॥

---

भिस्मपर्व-अध्यय०४१
॥ श्रीः ॥
६.४१. अध्यायः ४१

Mahabharata - Bhishma Parva - Chapter Topics
एकचत्वारिंशोऽध्यायः ॥ भगवद्गीताध्यायः ॥ १७ ॥

Mahabharata - Bhishma Parva - Chapter Text

६-४१-० (४००६७)
अर्जुन उवाच। ६-४१-०क्ष् (४०६१)
ये शास्त्रविधिमुत्सृज्य यजन्ते श्रद्धयान्विता ।
तेषां निष्ठा तु का कृष्ण सत्वमाहो सजस्तमः ॥ ६-४१-१ (४००६८)
श्रीभगवानुवाच। ६-४१-२क्ष् (४०६२)
त्रिविधा भवति श्रद्धा देहिनां सा स्वभावजा ।
सात्विकी राजसी चैव तामसी चेति तां श्रृणु ॥ ६-४१-२ (४००६९)
सत्वानुरूपा सर्वस्य श्रद्धा भवति भारत ।
श्रद्धामयोऽयं पुरुषो यो यच्छ्रद्धः स एव सः ॥ ६-४१-३ (४००७०)
यजन्ते सात्विका देवान्यक्षरक्षांसि राजसाः ।
प्रेतान्भूतगणांश्चान्ये यजन्ते तामसा जनाः ॥ ६-४१-४ (४००७१)
अशास्त्रविहितं घोरं तप्यन्ते ये तपो जनाः ।
दम्भाहङ्कारसंयुक्ताः कामरागबलान्विताः ॥ ६-४१-५ (४००७२)
कर्शयन्तः शरीरस्थं भूतग्राममचेतसः ।
मां चैवान्तः शरीरस्थं तान्विद्ध्यासुरनिश्चयान् ॥ ६-४१-६ (४००७३)
आहारस्त्वपि सर्वस्य त्रिविधो भवति प्रियः ।

यज्ञस्तपस्तथा दानं तेषां भेदमिमं श्रृणु ॥ ६-४१-७ (४००७४)
आयुःसत्वबलारोग्यसुखप्रीतिविवर्धनाः ।
रस्याःस्निग्धाः स्थिरा हृद्या आहाराःसात्विकप्रियाः ॥ ६-४१-८ (४००७५)
कट्वम्ललवणात्युष्णतीक्ष्णरूक्षविदाहिनः ।
आहारा राजसस्येष्टा दुःखशोकामयप्रदाः ॥ ६-४१-९ (४००७६)
यातयामं गतरसं पूति पर्युषितं च यत् ।
उच्छिष्टमपि चामेध्यं भोजनं तामसप्रियम् ॥ ६-४१-१० (४००७७)
अफलाकाङ्क्षिभिर्यज्ञो विधिदृष्टो य इज्यते ।
यष्टव्यमेवेति मनः समाधाय स सात्विकः ॥ ६-४१-११ (४००७८)
अभिसंघाय तु फलं दम्भार्थमपि चैव यत् ।
इज्यते भरतश्रेष्ठ तं यज्ञं विद्धि राजसम् ॥ ६-४१-१२ (४००७९)
विधिहीनमसृष्टान्नं मन्त्रहीनमदक्षिणम् ।
श्रद्धाविरहितं यज्ञं तामसं परिचक्षते ॥ ६-४१-१३ (४००८०)
देवद्विजगुरुप्राज्ञपूजनं शौचमार्जवम् ।
ब्रह्मचर्यमहिंसा च शारीरं तप उच्यते ॥ ६-४१-१४ (४००८१)
अनुद्वेगकरं वाक्यं सत्यं प्रियहितं च यत् ।
स्वाध्यायाभ्यसनं चैव वाङ्मयं तप उच्यते ॥ ६-४१-१५ (४००८२)
मनःप्रसादः सम्यत्वं मौनमात्मविनिग्रहः ।
भावसंशुद्धिरित्येतत्तपो मानसमुच्यते ॥ ६-४१-१६ (४००८३)
श्रद्धया परया तप्तं तपस्तत्त्रिविधं नरैः ।
अफलाकाङ्क्षिभिर्युक्तैः सात्विकं परिचक्षते ॥ ६-४१-१७ (४००८४)
सत्कारमानपूजारार्थं तपो दम्भेन चैव यत् ।
क्रियते तदिह प्रोक्तं राजसं चलमध्रुवम् ॥ ६-४१-१८ (४००८५)
मूढग्राहेणात्मनो यत्पीडया क्रियते तपः ।
परस्योत्सादनार्थं वा तत्तामसमुदाहृतम् ॥ ६-४१-१९ (४००८६)
दातव्यमिति यद्दानं दीयतेऽनुपकारिणे ।
देशे काले च पात्रे च तद्दानं सात्विकं स्मृतम् ॥ ६-४१-२० (४००८७)
यत्तु प्रत्युपकारार्थं फलमुद्दिश्य वा पुनः ।
दीयते च परिक्लिष्टं तद्दानं राजसं स्मृतम् ॥ ६-४१-२१ (४००८८)
अदेशकाले यद्दानमपात्रेभ्यश्च दीयते ।
असत्कृतमवज्ञातं तत्तामसमुदाहृतम् ॥ ६-४१-२२ (४००८९)
ओंतत्सदिति निर्देशो ब्रह्मणस्त्रिविधः स्मृताः ।
ब्राह्मणास्तेन वेदाश्च यज्ञाश्च विहिताः पुरा ॥ ६-४१-२३ (४००९०)
तस्मादोमित्युदाहृत्य यज्ञदानतपःक्रियाः ।
प्रवर्तन्ते विधानोक्ताः सततं ब्रह्मवादिनाम् ॥ ६-४१-२४ (४००९१)
तदित्यनभिसंधाय फलं यज्ञतपःक्रियाः ।

दानक्रियाश्च विविधाः क्रियन्ते मोक्षकाङ्क्षिभिः ॥ ६-४१-२५ (४००९२)
सद्भावे साधुभावे च सदित्येतत्प्रयुज्यते ।
प्रशस्ते कर्मणि तथा सच्छब्दः पार्थ युज्यते ॥ ६-४१-२६ (४००९३)
यज्ञे तपसि दाने च स्थितिः सदिति चोच्यते ।
कर्म चैव तदर्थीयं सादित्येवाभिधीयते ॥ ६-४१-२७ (४००९४)
अश्रद्धया हुतं दत्तं तपस्तप्तं कृतं च यत् ।
असदित्युच्यते पार्थ न च तत्प्रेत्य नो इह ॥ ॥ ६-४१-२८ (४००९५)

इति श्रीमन्महाभारते भीष्मपर्वणि भगवद्गीतापर्वणि
एकचत्वारिंशोऽध्यायः ॥

इति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे
श्रीकृष्णार्जुनसंवादे श्रद्धात्रयबिभागयोगोनाम सप्तदशोऽध्यायः
॥

Mahabharata - Bhishma Parva - Chapter Footnotes

६-४१-२७ तदर्थोयं इति माध्वपाठः ॥

---

भिस्मपर्व-अध्यय०४२
॥ श्रीः ॥
६.४२. अध्यायः ४२

Mahabharata - Bhishma Parva - Chapter Topics
द्विचत्वारिंशोऽध्यायः ॥ भगवद्गीताध्यायः ॥ १८ ॥

Mahabharata - Bhishma Parva - Chapter Text

६-४२-० (४००९६)
अर्जुन उवाच। ६-४२-०क्ष् (४०६३)
संन्यासत्य महाबाहो तत्त्वमिच्छामि वेदितुम् ।
त्यागस्य च हृषीकेश पृथक्केशिनिपूदन ॥ ६-४२-१ (४००९७)
श्रीभगवानुवाच। ६-४२-२क्ष् (४०६४)
काम्यानां कर्मणां न्यासं संन्यासं कवयो विदुः ।
सर्वकर्मफलत्यागं प्राहुस्त्यागं विचक्षणाः ॥ ६-४२-२ (४००९८)
त्याज्यं दोषवदित्येके कर्म प्राहुर्मनीषिणः ।
यज्ञदानतपःकर्म न त्याज्यमिति चापरे ॥ ६-४२-३ (४००९९)

निश्चयं श्रृणु मे तत्र त्यागे भरतसत्तम ।
त्यागो हि पुरुषव्याघ्र त्रिविधः संप्रकीर्तितः ॥ ६-४२-४ (४०१००)
यज्ञदानतपःकर्म न त्याज्यं कार्यमेव तत् ।
यज्ञो दानं तपश्चैव पावनानि मनीषिणाम् ॥ ६-४२-५ (४०१०१)
एतान्यपि तु कर्माणि सङ्गं त्यक्त्वा फलानि च ।
कर्तव्यानीति मे पार्थ निश्चितं मतमुत्तमम् ॥ ६-४२-६ (४०१०२)
नियतस्य तु संन्यासः कर्मणो नोपपद्यते ।
मोहात्तस्य परित्यागस्तामसः परिकीर्तितः ॥ ६-४२-७ (४०१०३)
दुःखमित्येव यत्कर्म कायक्लेशभयात्त्यजेत् ।
स कृत्वा राजसं त्यागं नैव त्यागफलं लभेत् ॥ ६-४२-८ (४०१०४)
कार्यमित्येव यत्कर्म नियतं क्रियतेऽर्जुन ।
सङ्गं त्यक्त्वा फलं चैव स त्यागः सात्विको मतः ॥ ६-४२-९ (४०१०५)
न द्वेष्ट्यकुशलं कर्म कुशले नानुषज्जते ।
त्यागी सत्त्वसमाविष्टो मेधावी छिन्नसंशयः ॥ ६-४२-१० (४०१०६)
न हि देहभृता शक्यं त्यक्तुं कर्माण्यशेषतः ।
यस्तु कर्मफलत्यागी स त्यागीत्यभिधीयते ॥ ६-४२-११ (४०१०७)
अनिष्टमिष्टं मिश्रं च त्रिविधं कर्मणः फलम् ।
भवत्यत्यागिनीं प्रेत्य न तु संन्यासिनां क्वचित् ॥ ६-४२-१२ (४०१०८)
पञ्चैतानि महाबाहो कारणानि निबोध मे ।
साङ्ख्ये कृतान्ते प्रोक्तानि सिद्धये सर्वकर्मणां ॥ ६-४२-१३ (४०१०९)
अधिष्ठानं तथा कर्ता करणं च पृथग्विधम् ।
विविधाश्च पृथक्चेष्टा दैवं चैवात्र पञ्चमम् ॥ ६-४२-१४ (४०११०)
शरीरवाङ्मनोभिर्यत्कर्म प्रारभते नरः ।
न्याय्यं वा विपरीतं वा पञ्चैते तस्य हेतवः ॥ ६-४२-१५ (४०१११)
तत्रैवं सति कर्तारमात्मानं केवलं तु यः ।
पश्यत्यकृतबुद्धित्वान्न स पश्यति दुर्मतिः ॥ ६-४२-१६ (४०११२)
यस्य नाहंकृतो भवो बुद्धिर्यस्य न लिप्यते ।
हत्वाऽपि स इमाँल्लोकान्न हन्ति न निबध्यते ॥ ६-४२-१७ (४०११३)
ज्ञानं ज्ञेयं परिज्ञाता त्रिविधा कर्मचोदना ।
करणं कर्म कर्तेति त्रिविधः कर्मसंग्रहः ॥ ६-४२-१८ (४०११४)
ज्ञानं कर्म च कर्ता च त्रिधैव गुणभेदतः ।
प्रोच्यते गुणसंख्याने यथावच्छ्रृणु तान्यपि ॥ ६-४२-१९ (४०११५)
सर्वभूतेषु येनैकं भावमव्ययमीक्षते ।
अविभक्तं विभक्तेषु तज्ज्ञानं विद्धि सात्विकं ॥ ६-४२-२० (४०११६)
पृथक्त्वेन तु यज्ज्ञानं नानाभावान्पृथग्विधान् ।
वेत्ति सर्वेषु भूतेषु तज्ज्ञानं विद्धि राजसम् ॥ ६-४२-२१ (४०११७)

यत्तु कृत्स्नवदेकस्मिन्कार्ये सक्तमहैतुकम् ।
अतत्त्वार्थवदल्पं च तत्तासममुदाहृतम् ॥ ६-४२-२२ (४०११८)
नियतं सङ्गरहितमरागद्वेषतः कृतम् ।
अफलप्रेप्सुना कर्म यत्तत्सात्विकमुच्यते ॥ ६-४२-२३ (४०११९)
यत्तु कामेप्सुना कर्म ताहङ्कारेण वा पुनः ।
क्रियते बहुलायासं तद्राजसमुदाहृतम् ॥ ६-४२-२४ (४०१२०)
अनुबन्धं क्षयं हिंसामनपेक्ष्य च पौरुषम् ।
मोहादारभ्यते कर्म यत्तत्तामसमुच्यते ॥ ६-४२-२५ (४०१२१)
मुक्तसङ्गोनहंवादी धृत्युत्साहसमन्वितः
। ६-४२-२६ब्सिद्ध्यसिद्ध्योर्निर्विकारः कर्ता सात्विक उच्यते ॥ ६-४२-२६ (४०१२२)
रागी कर्मफलप्रेप्सुर्लुब्धो हिंसात्मकोऽशुचिः ।
हर्षशोकान्वितः कर्ता राजसः परिकीर्तितः ॥ ६-४२-२७ (४०१२३)
अयुक्तः प्राकृतः स्तब्धः शठो नैकृतिकोऽलसः ।
विषादी दीर्घसूत्री च कर्ता तामस उच्यते ॥ ६-४२-२८ (४०१२४)
बुद्धेर्भेदं धृतेश्चैव गुणतस्त्रिविधं श्रृणु ।
प्रोच्यमानमशेषेण पृथक्त्वेन धनंजय ॥ ६-४२-२९ (४०१२५)
प्रवृत्तिं च निवृत्तिं च कार्याकार्ये भयाभये ।
बन्धं मोक्षं च या वेत्ति बुद्धिः सा पार्थ सात्विकी ॥ ६-४२-३० (४०१२६)
यया धर्ममधर्मं च कार्यं चाकार्यमेव च ।
अयथावत्प्रजानाति बुद्धिः सा पार्थ राजसी ॥ ६-४२-३१ (४०१२७)
अधर्मं धर्ममिति या मन्यते तमसाऽऽवृता ।
सर्वार्थान्विपरीतांश्च बुद्धिः सा पार्थ तामसी ॥ ६-४२-३२ (४०१२८)
धृत्या यया धारयते मनःप्रणेन्द्रियक्रियाः ।
योगेनाव्यभिचारिण्या धृतिः सा पार्थ सात्विकी ॥ ६-४२-३३ (४०१२९)
यया तु धर्मकामार्थान्धृत्या धारयतेऽर्जुन ।
प्रसङ्गेन फलाकाङ्क्षी धृतिः सा पार्थ राजसी ॥ ६-४२-३४ (४०१३०)
यथा स्वप्नं भयं शोकं विषादं भदेमेव च ।
न विमुञ्चति दुर्मेधा धृतिः सा पार्थ तामसी ॥ ६-४२-३५ (४०१३१)
सुखं त्विदानीं त्रिविधं श्रुणु मे भारतर्षभ ।
अभ्यासाद्रमते यत्र दुःखान्तं च निगच्छति ॥ ६-४२-३६ (४०१३२)
यत्तदग्रे विषमिव परिणामेऽमृतोपमम् ।
तत्सुखं सात्विकं प्रोक्तमात्मबुद्धिप्रसादजम् ॥ ६-४२-३७ (४०१३३)
विषयेन्द्रियसंयोगाद्यत्तदग्रेऽमृतोपभम् ।
परिणामे विषमिव तत्सुखं राजसं स्मृतम् ॥ ६-४२-३८ (४०१३४)
यदग्रे चानुबन्धे च सुखं मोहनमात्मनः ।

निद्रालस्यप्रमादोत्थं तत्ताभसमुदाहृतम् ॥ ६-४२-३९ (४०१३५)
न तदस्ति पृथिव्यां वा दिवि देवेषु वा पुनः ।
सत्त्वं प्रकृतिजैर्मुक्तं यदेमिः स्यात्त्रिभिर्गुणैः ॥ ६-४२-४० (४०१३६)
ब्राह्मणक्षत्रियविशां शूद्राणां च परंतप ।
कर्माणि प्रविभक्तानि स्वभावप्रभवैर्गुणैः ॥ ६-४२-४१ (४०१३७)
शमो दमस्तपः शौचं क्षान्तिरार्जवमेव च ।
ज्ञानं विज्ञानमास्तिक्यं ब्रह्मकर्म स्वभावजम् ॥ ६-४२-४२ (४०१३८)
शौर्यं तेजो धृतिर्दाक्ष्यं युद्धे चाप्यपलायनम् ।
दानमीश्वरभावश्च क्षात्रं कर्म स्वभावजम् ॥ ६-४२-४३ (४०१३९)
कृषिगोरक्ष्यरभावश्च क्षात्रं कर्म स्वभावजम् ।
परिचर्यात्मकं कर्म शूद्रस्यापि स्वभावजम् ॥ ६-४२-४४ (४०१४०)
स्वे स्वे कर्मण्यभिरतः संसिद्धिं लभते नरः ।
स्वकर्मनिरत्तः सिद्धिं यथा विन्दति तच्छ्रुणु ॥ ६-४२-४५ (४०१४१)
यतः प्रवृत्तिर्भूतानां योन सर्वमिदं ततम् ।
स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवःक ॥ ६-४२-४६ (४०१४२)
श्रेयान्स्वधर्मो विगुणः परधर्मात्स्वनुष्ठितात् ।
स्वभावनियतं कर्म कुर्वन्नाप्नोति किल्विषम् ॥ ६-४२-४७ (४०१४३)
सहजं कर्म कौन्तेय सदोषमपि न त्यजेत् ।
सर्वारम्भा हि दोषेण धूमेनाग्निरिवावृताः ॥ ६-४२-४८ (४०१४४)
असक्तबुद्धिः सर्वत्र जितात्मा विगतस्पृहः ।
नैष्कर्म्यसिद्धिं परमां संन्यासेनाधिगच्छति ॥ ६-४२-४९ (४०१४५)
सिद्धिं प्राप्तो यथा ब्रह्म तथाऽऽप्नेति निबोध मे ।
समासेनैव कौन्तेय निष्ठा ज्ञानस्य या परा ॥ ६-४२-५० (४०१४६)
बुद्ध्या विशुद्धया युक्तो धृत्याऽऽत्मानं नियम्य च ।
शब्दादीन्विषयांस्त्यक्त्वा रागद्वेषौ व्युदस्य च ॥ ६-४२-५१ (४०१४७)
विविक्तसेवी लध्वाशी यतकाक्कायमानसः ।
ध्यानयोगपरो नित्यं वैराग्यं समुपाश्रितः ॥ ६-४२-५२ (४०१४८)
अहङ्कारं बलं दर्पं कामं क्रोधं परिग्रहम् ।
विमुच्य निर्ममः शान्तो ब्रह्मभूयाय कल्पते ॥ ६-४२-५३ (४०१४९)
ब्रह्मभूतः प्रसन्नात्मा न शोचतिक न काङ्क्षति ।
समः सर्वेषु भूतेषु मद्तभक्तिं लभते पराम् ॥ ६-४२-५४ (४०१५०)
भक्त्या मामभिजानाति यावान्यश्चास्मि तत्त्वतः ।
ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तरम् ॥ ६-४२-५५ (४०१५१)
सर्वकर्माण्यपि सदा कुर्वाणो मद्व्यपाश्रयः ।
मत्प्रसादादवाप्नोति शाश्वतं पदमव्ययम् ॥ ६-४२-५६ (४०१५२)
चेतसा सर्वकर्माणि मयि संन्यस्य मत्परः ।

बुद्धियोगमपाश्रित्य मच्चित्तः सततं भव ॥ ६-४२-५७ (४०१५३)
मच्चित्तः सर्वदुर्गाणि मत्प्रसादात्तरिष्यसि ।
अथ चेत्त्वमहङ्कारान्न श्रोष्यसि विनङ्क्ष्यसि ॥ ६-४२-५८ (४०१५४)
यदहङ्कारमाश्रित्य न योत्स्य इति मन्यसे ।
मिथ्यैष व्यवसायस्ते प्रकृतिस्त्वां नियोक्ष्यति ॥ ६-४२-५९ (४०१५५)
स्वभावजेन कौन्तेय निबद्धः स्वेन कर्मणा ।
कर्तुं नेच्छसि यन्मोहात्करिष्यस्यवशोपि तत् ॥ ६-४२-६० (४०१५६)
ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति ।
भ्रामयन्सर्वभूतानि यन्त्रारूढानि मायया ॥ ६-४२-६१ (४०१५७)
तमेव शरणं गच्छ सर्वभावेन भारत ।
तत्प्रसादात्परां शान्तिं स्थानं प्राप्स्यसि शाश्वतं ॥ ६-४२-६२ (४०१५८)
इति ते ज्ञानमाख्यातं गुह्याद्गुह्यतरं मया ।
विमृश्यैतदशेषेण यथेच्छसि तथा कुरु ॥ ६-४२-६३ (४०१५९)
सर्वगुह्यतमं भूयः श्रृणु मे परमं वचः ।
इष्टेऽसि मे दृढमिति ततो वक्ष्यामि ते हितम् ॥ ६-४२-६४ (४०१६०)
मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु ।
मामेवैष्यसि सत्यं ते प्रतिजाने प्रियोऽसि मे ॥ ६-४२-६५ (४०१६१)
सर्वधर्मान्परित्यज्य मामेकं शरणं व्रज ।
अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः ॥ ६-४२-६६ (४०१६२)
इदं ते नातपस्काय नाभक्ताय कदाचन ।
न चाशुश्रूषवे वाच्यं न च मां योऽभ्यसूयति ॥ ६-४२-६७ (४०१६३)
य इदं परमं गुह्यं मद्भक्तेष्वभिधास्यति ।
भक्तिं मयि परां कृत्वा मामेवैष्यत्यसंशयः ॥ ६-४२-६८ (४०१६४)
न च तस्मान्मनुष्येषु कश्चिन्मे प्रियकृत्तमः ।
भविता न च मे तस्मादन्यः प्रियतरो भुवि ॥ ६-४२-६९ (४०१६५)
अध्येष्यते च य इमं धर्म्यं संवादमावयोः ।
ज्ञानयज्ञेन तेनाहमिष्टः स्यामिति मे मतिः ॥ ६-४२-७० (४०१६६)
श्रद्धावाननसूयश्च श्रृणुयादपि यो नरः ।
सोपि मुक्तः शुभाँल्लोकान्प्राप्नुयात्पुण्यकर्मणां ॥ ६-४२-७१ (४०१६७)
कच्चिदेतच्छ्रुतं पार्थ त्वयैकाग्रेण चेतसा ।
कच्चिदज्ञानसंमोहः प्रनष्टस्ते धनंजय ॥ ६-४२-७२ (४०१६८)
अर्जुन उवाच। ६-४२-७३क्ष् (४०६५)
नष्टो मोहः स्मृतिर्लब्धा त्वत्प्रसादान्मयाऽच्युत ।
स्थितोऽस्मि गतसंदेहः करिष्ये वचनं तव ॥ ६-४२-७३ (४०१६९)
सञ्जय उवाच। ६-४२-७४क्ष् (४०६६)
इत्यहं वासुदेवस्य पार्थस्य च महात्मनः ।

संवादमिममश्रौषमद्भुतं रोमहर्षणम् ॥ ६-४२-७४ (४०१७०)
व्यासप्रसादाच्छ्रुतवानेतद्गुह्यमहं परम् ।
योगं योगेश्वरात्कृष्णात्साक्षात्कथयतः स्वयम् ॥ ६-४२-७५ (४०१७१)
राजन्संस्मृत्य संस्मृत्य संवादमिममद्भुतम् ।
केशवार्जुवयोः पुण्यं हृष्यामि च मुहुर्मुहुः ॥ ६-४२-७६ (४०१७२)
तच्च संस्मृत्य संस्मृत्य रूपमत्यद्भुतं हरेः ।
विस्मयो मे महान्राजन्हृष्यामि च पुनः पुनः ॥ ६-४२-७७ (४०१७३)
यत्र योगेश्वरः कृष्णो यत्र पार्थो धनुर्धरः ।
तत्र श्रीर्विजयो भूतिर्ध्रुवा नीतिर्मतिर्मम ॥ ॥ ६-४२-७८ (४०१७४)

इति श्रीमन्महाभारते भीष्मपर्वणि भगवद्गीतापर्वणि
द्विचत्वारिंशोऽध्यायः ॥

इति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे
श्रीकृष्णार्जुनसंवादे संन्यासयोगोनाम अष्टादशोऽध्यायः
॥ ॥ समाप्तं भगवद्गीतापर्व ॥

Mahabharata - Bhishma Parva - Chapter Footnotes

६-४२-१४ विविधा चेति माध्वपाठः ॥
६-४२-४२ब्रह्मं कर्म स्वभावजम् इति माध्वपाठः ॥
६-४२-५७ बुद्धियोगमुपाश्रित्येति माध्वपाठः ॥
६-४२-७८ यत्र योगीश्वर इति माध्वपाठः ॥

---

भिस्मपर्व-अध्यय०४३
॥ श्रीः ॥
६.४३. अध्यायः ४३

Mahabharata - Bhishma Parva - Chapter Topics

युधिष्ठिरेण रथादवरुह्य भीष्मद्रोणाद्यभिवादनपूर्वकं तेभ्यो
जयाशीर्ग्रहणम् ॥ १ ॥
युधिष्ठिरे पुनर्भ्रातृभिः सह रथारूढे सन्नहाभेरीन्नादनम् ॥ २ ॥

Mahabharata - Bhishma Parva - Chapter Text

६-४३-० (४०१७५)
वैशंपायन उवाच। ६-४३-०क्ष् (४०६७)

गीता सुगीता कर्तव्या किमन्यैः शास्त्रसंग्रहैः ।
या स्वयं पद्मनाभस्य सुखपद्माद्विनिःसृता ॥ ६-४३-१ (४०१७६)
सर्वशास्त्रमयी गीता सर्वदेवमयो हरिः ।
सर्वतीर्थमयी गङ्गा सर्वदेवमयो मनुः ॥ ६-४३-२ (४०१७७)
गीता गङ्गा च गायत्री गोविन्देति हृदि स्थिते ।
चतुर्गकारसंयुक्ते पुनर्जन्म न विद्यते ॥ ६-४३-३ (४०१७८)
षट्शतानि सविंशानि श्लोकानां प्राह केशवः ।
अर्जुनः सप्तपञ्चाशत्सप्तषष्टिं तु सञ्जयः ॥ ६-४३-४ (४०१७९)
धृतराष्ट्रः श्लोकमेकं गीताया मानमुच्यते ।
भारतामृतसर्वस्वगीताया मथितस्य च ।
सारमुद्धृत्य कृष्णेन अर्जुनस्य मुखे हुतम् ॥ ६-४३-५ (४०१८०)
सञ्जय उवाच। ६-४३-६क्ष् (४०६८)
ततो धनंजयं दृष्ट्वा बाणगाण्डीवधारिणम् ।
पुनरेव महानादं व्यसृजन्त महारथाःक ॥ ६-४३-६ (४०१८१)
पाण्डवाः सोमकाश्चैव ये चैषामनुयायिनः ।
दध्मुश्च मुदिताः शङ्खान्वीराः सागरसंभवान् ॥ ६-४३-७ (४०१८२)
ततो भेर्यश्च पेश्यश्च क्रकचा गोविषाणिकाः ।
सहसैवाभ्यहन्यन्त ततः शब्दो महानभूत् ॥ ६-४३-८ (४०१८३)
तथा देवाः सगन्धर्वाः पितरश्च जनाधिप ।
सिद्धचारणसङ्घाश्च समीयुस्ते दिदृक्षया ॥ ६-४३-९ (४०१८४)
ऋषयश्च महाभागाः पुरस्कृत्य शतक्रतुम् ।
समीयुस्तत्र सहिता द्रष्टुं तद्वैशसं महत् ॥ ६-४३-१० (४०१८५)
ग ते सेने स्तिमिते सञ्जे वीक्षमाणे परस्परम् ।
गङ्गायमुनयोर्वेगो यथैवैत्य परस्परम् ॥ ६-४३-११ (४०१८६)
एवं प्रवत्ते ते सेने निःशब्दे जनसंसदि ।
चित्रे पट इवालेख्ये दर्शनीयतरे शुभे ॥' ६-४३-१२ (४०१८७)
ततो युधिष्ठिरो दृष्ट्वा युद्धाय समवस्थिते ।
ते सेने सागरप्रख्ये मुहुः प्रज्वलिते नृप ॥ ६-४३-१३ (४०१८८)
विमुच्य कवचं वीरो निक्षिप्य च वरायुधम् ।
अवरुह्य रथात्क्षिप्रं पद्म्यामेव कृताञ्जलिः ॥ ६-४३-१४ (४०१८९)
पितामहमभिप्रेक्ष्य धर्मराजो युधिष्ठिरः ।
वाग्यतः प्रययौ धीरः प्राङ्मुखो रिपुवाहिनीम् ॥ ६-४३-१५ (४०१९०)
तं प्रयान्तमभिप्रेभ्य कुन्तीपुत्रो धनञ्जयः ।
अवतीर्य रथात्तूर्णं भ्रातृभिः सहितोऽन्वयात् ॥ ६-४३-१६ (४०१९१)
वासुदेवश्च भगवान्पृष्ठतोऽनुजगाम तम् ।
तथा मुख्याश्च राजानस्तच्चित्ता जग्मुरुत्सुकाः ॥ ६-४३-१७ (४०१९२)

अर्जुन उवाच। ६-४३-१८क्ष् (४०६९)
किं ते व्यवसितं राजन्यदस्मानपहाय वै ।
प्रद्म्यामेव प्रयातोऽसि प्राङ्मुखो रिपुवाहिनीम् ॥ ६-४३-१८ (४०१९३)
भीमसेन उवाच। ६-४३-१९क्ष् (४०७०)
क्व गमिष्यसि राजेन्द्र निक्षिप्तकवचायुधः ।
दंशितेष्वरिसैन्येषु भ्रातॄनुत्सृज्य पार्थिव ॥ ६-४३-१९ (४०१९४)
नकुल उवाच। ६-४३-२०क्ष् (४०७१)
एवं गते त्वयि ज्येष्ठे मम भ्रातरि भारत ।
भीमे दुनोति हृदयं ब्रूहि गन्ता भवान्क्व नु ॥ ६-४३-२० (४०१९५)
सहदेव उवाच। ६-४३-२१क्ष् (४०७२)
अस्मिन्रणसमूहे वै वर्तमाने महाभये ।
उत्सृज्य क्व नु गन्तासि शत्रूनभिमुखो नृप ॥ ६-४३-२१ (४०१९६)
सञ्जय उवाच। ६-४३-२२क्ष् (४०७३)
एवमाभाष्यमाणोऽपि भ्रातृभिः कुरुनन्दनः ।
नोवाच वाग्यतः किंचिद्गच्छत्येव युधिष्ठिरः ॥ ६-४३-२२ (४०१९७)
तानुवाच महाप्राज्ञो वासुदेवो महामनाः ।
अभिप्रायोऽस्य विज्ञातो मयेति प्रहसन्निव ॥ ६-४३-२३ (४०१९८)
एष भीष्मं तथा द्रोणं गौतमं शल्यमेव च ।
अनुमान्य गुरून्सर्वान्योत्स्यते पार्थिवोऽरिभिः ॥ ६-४३-२४ (४०१९९)
श्रूयते हि पुराकल्पे गुरूननुमान्य यः ।
युध्यते स भवेद्व्यक्तमपध्यातो महत्तरैः ॥ ६-४३-२५ (४०२००)
अनुमान्य यथाशास्त्रं यस्तु युध्येन्महत्तरैः ।
ध्रुवस्तस्य जयो युद्धे भवेदिति मतिर्मम ॥ ६-४३-२६ (४०२०१)
एवं ब्रुवति कृष्णेऽत्र धार्तराष्ट्रचमूं प्रति ।
हाहाकारो महानासीन्निःशब्दास्त्वपरेऽभवन् ॥ ६-४३-२७ (४०२०२)
दृष्ट्वा युधिष्ठिरं दूराद्धार्तराष्ट्रस्य सैनिकाः ।
मिथः संकथयांचक्रुरेषो हि कुलपांसनः ॥ ६-४३-२९अव्यक्तं भीत
इवाभ्येति राजासौ भीष्ममन्तिकम् ।
युधिष्ठिरः ससोदर्यः शरणार्थं प्रयाचकः ॥ ६-४३-२८ (४०२०३)
धनञ्जये कथं नाथे पाण्डवे च वृकोदरे ।
नकुले सहदेवे च भीतिरभ्येति पाण्डवम् ॥ ६-४३-३० (४०२०४)
न नूनं क्षत्रियकुले जातः संप्रथिते भुवि ।
यथाऽस्य हृदयं भीतमल्पसत्वस्य संयुगे ॥ ६-४३-३१ (४०२०५)
ततस्ते सैनिकाः सर्वे प्रशंसन्ति स्म कौरवान् ।
हृष्टाः सुमनसो भूत्वा चेलानि दुधुवुश्च ह ॥ ६-४३-३२ (४०२०६)
व्यनिन्दंश्च तथा सर्वे योधास्तव विशांपते ।

युधिष्ठिरं ससोदर्यं सहितं केशवनेन हि ॥ ६-४३-३३ (४०२०७)
ततस्तत्कौरवं सैन्यं धिक्वृत्वा तु युधिष्ठिरम् ।
निःशब्दमभवत्तूर्णं पुनरेव विशांपते ॥ ६-४३-३४ (४०२०८)
किं नु वक्ष्याति राजाऽसौ किं भीष्मः प्रतिवक्ष्यति ।
किं भीमः समरश्लाघी किं नु कृष्णार्जुनाविति ॥ ६-४३-३५ (४०२०९)
विवक्षितं किमस्येति संशयः सुमहानभूत् ।
उभयो सेनयो राजन्युधिष्ठिरकृते तदा ॥ ६-४३-३६ (४०२१०)
सोऽवगाह्य चमूं शत्रोः शरशक्तिसमाकुलाम् ।
भीष्ममेवाभ्यात्तूर्णं भ्रातृभिः परिवारितः ॥ ६-४३-३७ (४०२११)
तमुवाच ततः पादौ कारभ्यां पीड्य पाण्डवः ।
भीष्मं शान्तनवं राजा युद्धाय समुपस्थितम् ॥ ६-४३-३८ (४०२१२)
युधिष्ठिर उवाच। ६-४३-३९क्ष् (४०७४)
आमन्त्रये त्वां दुर्धर्ष त्वया योत्स्यामहे सह ।
अनजानीहि मां तात आशिषश्च प्रयोजय ॥ ६-४३-३९ (४०२१३)
भीष्म उवाच। ६-४३-४०क्ष् (४०७५)
यद्येवं नाभिगच्छेथा युधि मां पृथिवीपते ।
शपेयं त्वां महाराज परीभावाय भारत ॥ ६-४३-४० (४०२१४)
प्रीतोऽहं पुत्र युध्यस्व जयमाप्नुहि पाण्डव ।
यत्तेऽभिलषितं चान्यत्तदवाप्नुहि संयुगे ॥ ६-४३-४१ (४०२१५)
व्रियतां च वरः पार्थ किमस्मत्तोऽभिकाङ्क्षसि ।
एवं गते महाराज न तवास्ति पराजयः ॥ ६-४३-४२ (४०२१६)
अर्थस्य पुरुषो दासो दासस्त्वर्थो न कस्यचित् ।
इति सत्यं महाराज बद्धोऽस्म्यर्थेन कौरवैः ॥ ६-४३-४३ (४०२१७)
अतस्त्वां क्लीबवद्वाक्यं ब्रवीमि कुरुनन्दन ।
भृतोऽस्त्म्यर्थेन कौरव्य युद्धादन्यत्किमिच्छसि ॥ ६-४३-४४ (४०२१८)
युधिष्ठिर उवाच। ६-४३-४५क्ष् (४०७६)
मन्त्रयस्व महाबाहो हितैषी मम नित्यशः ।
युध्यस्व कौरवस्यार्थे ममैष सततं वरः ॥ ६-४३-४५ (४०२१९)
भीष्म उवाच। ६-४३-४६क्ष् (४०७७)
राजन्किमत्र साह्यं ते करोमि कुरुनन्दन ।
कामं योत्स्ये परस्यार्थे ब्रूहि यत्ते विवक्षितम् ॥ ६-४३-४६ (४०२२०)
युधिष्ठिर उवाच। ६-४३-४७क्ष् (४०७८)
कथं जयेयं संग्रामे भवन्तमपराजितम् ।
एतन्मे मन्त्रय हितं यदि श्रेयः प्रपश्यसि ॥ ६-४३-४७ (४०२२१)
भीष्म उवाच। ६-४३-४८क्ष् (४०७९)
नैनं पश्यामि कौन्तेय यो मां युध्यन्तमाहवे ।

विजयेत पुमान्कश्चित्साक्षादपि शतक्रतुः ॥ ६-४३-४८ (४०२२२)
युधिष्ठिर उवाच। ६-४३-४९क्ष् (४०८०)
हन्त पृच्छामि तस्मात्त्वां पितामह नमोस्तु ते ।
वधोपायं ब्रवीहि त्वमात्मनः समरे परैः ॥ ६-४३-४९ (४०२२३)
भीष्म उवाच। ६-४३-५०क्ष् (४०८१)
न स्म तं तात पश्यामि समरे यो जयेत माम् ।
न तावन्मृत्युकालोऽपि पुनरागमनं कुरु ॥ ६-४३-५० (४०२२४)
सञ्जय उवाच। ६-४३-५१क्ष् (४०८२)
ततो युधिष्ठिरो वाक्यं भीष्मस्य कुरुनन्दन ।
शिरसा प्रतिजग्राह भूयस्तमभिवाद्य च ॥ ६-४३-५१ (४०२२५)
प्रायात्पुनर्महाबाहुराचार्यस्य रथं प्रति ।
पश्यतां सर्वसैन्यानां मध्येन भ्रातृभिः सह ॥ ६-४३-५२ (४०२२६)
स द्रोणमभिवाद्याथ कृत्वं चाभिप्रदक्षिणम् ।
उवाच राजा दुर्धर्षमात्मनिःश्रेयसं वचः ॥ ६-४३-५३ (४०२२७)
आमन्त्रये त्वां भगवन्योत्स्ये विगितकल्मषः ।
कथं जये रिपून्सर्वाननुज्ञातस्त्वया द्विज ॥ ६-४३-५४ (४०२२८)
द्रोण उवाच। ६-४३-५५क्ष् (४०८३)
यदि मां नाभिगच्छेथा युद्धाय कृतनिश्चयः ।
शपेयं त्वां महाराज परीभावाय सर्वशः ॥ ६-४३-५५ (४०२२९)
तद्युधिष्ठिर तुष्टोऽस्मि पूजितश्च त्वयाऽनघ ।
अनुजानामि युध्यस्व विजयं समवाप्नुहि ॥ ६-४३-५६ (४०२३०)
करवाणि च ते कामं ब्रूहि त्वमभिकाङ्क्षितम् ।
एवं गते महाराज युद्धादन्यत्किमिच्छसि ॥ ६-४३-५७ (४०२३१)
अर्थस्य पुरुषो दासो दासस्त्वर्थो न कस्यचित् ।
इति सत्यं महाराज बद्धोऽस्म्यर्थेन कौरवैःक ॥ ६-४३-५८ (४०२३२)
ब्रवीम्येतत्क्लीबवत्त्वां युद्धादन्यत्किमिच्छसि ।
योत्स्येऽहं कौरवस्यार्थे तवाशास्यो जयो मया ॥ ६-४३-५९ (४०२३३)
युधिष्ठिर उवाच। ६-४३-६०क्ष् (४०८४)
जयमाशास्स्व मे ब्रह्मन्मन्त्रयस्व च मद्धितम् ।
युध्यस्व कौरवस्यार्थे वर एष वृतो मया ॥ ६-४३-६० (४०२३४)
द्रोण उवाच। ६-४३-६१क्ष् (४०८५)
ध्रुवस्ते विजयो राजन्यस्य मन्त्री हरिस्तव ।
अहं त्वामभिजानामि रणे शत्रून्विजेष्यसि ॥ ६-४३-६१ (४०२३५)
यतो धर्मस्ततः कृष्णो यतः कृष्णस्ततो जयः ।
युध्यस्व गच्छ कौन्तेय पृच्छ मां किं ब्रवीमि ते ॥ ६-४३-६२ (४०२३६)
युधिष्ठिर उवाच। ६-४३-६३क्ष् (४०८६)

पृच्छामि त्वां द्विजश्रेष्ठ श्रृणु यन्मेऽभिकाङ्क्षितम् ।
कथं जयेयं संग्रामे भवन्तमपराजितम् ॥ ६-४३-६३ (४०२३७)
द्रोण उवाच। ६-४३-६४क्ष् (४०८७)
न तेऽस्ति विजयस्तावद्यावद्युद्ध्याम्यहं रणे ।
ममाशु निधने राजन्यतस्व सह सदरैः ॥ ६-४३-६४ (४०२३८)
युधिष्ठिर उवाच। ६-४३-६५क्ष् (४०८८)
हन्त तस्मान्महाबाहो वधोपायं वदात्मनः ।
आचार्य प्रणिपत्यैष पृच्छामि त्वां नमोऽस्तु ते ॥ ६-४३-६५ (४०२३९)
द्रोण उवाच। ६-४३-६६क्ष् (४०८९)
न शत्रुं तात पश्यामि यो मां हन्याद्रथे स्थितम् ।
युध्यमानं सुसंरब्धं शरवर्षौघवर्षिणम् ॥ ६-४३-६६ (४०२४०)
ऋते प्रायगतं रजन्न्यस्तशस्त्रमचेतनम् ।
हन्यान्मां युधि योधानां सत्यमेतद्ब्रवीमि ते । ६-४३-६७ (४०२४१)
शस्त्रं चाहं रणे जह्यां श्रुत्वा तु महदप्रियम् ।
श्रद्धेपवाक्यात्पुरुषादेतत्सत्यं ब्रवीति ते ॥ ६-४३-६८ (४०२४२)
सञ्जय उवाच। ६-४३-६९क्ष् (४०९०)
एतच्छ्रुत्वा महाराज भारद्वाजस्य धीमतः ।
अनुमान्य तमाचार्यं प्रायाच्छारद्वतं प्रति ॥ ६-४३-६९ (४०२४३)
सोऽभिवाद्य कृपं राजा कृत्वा चापि प्रदक्षिणम् ।
उवाच दुर्धर्षतमं वाक्यं वाक्यविदां वरः ॥ ६-४३-७० (४०२४४)
अनुमानये त्वां योत्स्येऽहं गुरो विगतकल्मषः ।
जयेयं च रिपून्सर्वाननुज्ञातस्त्वयाऽनघ ॥ ६-४३-७१ (४०२४५)
कृप उवाच। ६-४३-७२क्ष् (४०९१)
यदि मां नाभिगच्छेथा युद्धाय कृतनिश्चयः ।
शपेयं त्वां महाराज परीभावाय सर्वशः ॥ ६-४३-७२ (४०२४६)
अर्थस्य पुरुषो दासो दासस्त्वर्थो न कस्यचित् ।
इति सत्यं महाराज बद्धोऽस्म्यर्थेन कौरवैः । ६-४३-७३ (४०२४७)
तेषामर्थे महाराज योद्धव्यमिति मे मतिः ।
अतस्त्वां क्लीबवद्ब्रूयांयुद्धादन्यत्किमिच्छसि ॥ ६-४३-७४ (४०२४८)
युधिष्ठिर उवाच। ६-४३-७५क्ष् (४०९२)
हन्त पृच्छामि ते तस्मादाचार्य श्रृणु मे वचः ।
इत्युक्त्वा व्यथितो राजा नोवाच गतचेतनः ॥ ६-४३-७५ (४०२४९)
सञ्जय उवाच ६-४३-७६क्ष् (४०९३)
तं गौतमः प्रत्युवाच विज्ञायास्य विवक्षितम् ।
अवध्योऽहं महीपाल यद्धयस्व जयमाप्नुहि ॥ ६-४३-७६ (४०२५०)
प्रीतस्तेऽभिगमेनाहं जयं तव नराधिप ।

आशासिष्ये सदोत्थाय सत्यमेतद्ब्रवीमि ते ॥ ६-४३-७७ (४०२५१)
एतच्छ्रुत्वा महाराज गौतमस्य विशांपते ।
अनुमान्य कृपं राजा प्रययौ येन मद्रराट् ॥ ६-४३-७८ (४०२५२)
स शल्यमभिवाद्याथ कृत्वा चाभिप्रदक्षिणम् ।
उवाच राजा दुर्धर्षमात्मनिःश्रेयसं वचः ॥ ६-४३-७९ (४०२५३)
अनुमानये त्वां दुर्धर्ष योत्स्ये विगतकल्मषः ।
जयेयं नु परान्राजन्ननुज्ञातस्त्वया रिपून् ॥ ६-४३-८० (४०२५४)
शल्य उवाच। ६-४३-८१क्ष् (४०९४)
यदि मां नाधिगच्छेथा युद्धाय कृतनिश्चयः ।
शपेयं त्वां महाराज परीभावाय वै रणे ॥ ६-४३-८१ (४०२५५)
तुष्टोऽस्मि पूजितश्चास्मि यत्काङ्क्षसि तदस्तु ते ।
अनुजानामि चैव त्वां युध्यस्व जयमाप्नुहि ॥ ६-४३-८२ (४०२५६)
ब्रूहि चैष परं वीर केनार्थः किं ददामि ते ।
एवं गते महाराज युद्धादन्यत्किमिच्छसि ॥ ६-४३-८३ (४०२५७)
अर्थस्य पुरुषो दासो दासस्त्वर्थो न कस्यचित् ।
इति सत्यं महाराज बद्धोस्म्यर्थेन कौरवैः ॥ ६-४३-८४ (४०२५८)
करिष्यामि हि ते कामं भागिनेय यथेप्सितम् ।
ब्रवीम्यतः क्लीबवत्त्वां युद्धादन्यत्किमिच्छसि ॥ ६-४३-८५ (४०२५९)
युधिष्ठिर उवाच। ६-४३-८६क्ष् (४०९५)
मन्त्रयस्व महाराज नित्यं मद्धितमुत्तमम् ।
कामं युद्धय परस्यार्थे वरमेतं वृणोम्यहम् ॥ ६-४३-८६ (४०२६०)
शल्य उवाच। ६-४३-८७क्ष् (४०९६)
किमत्र ब्रूहि साह्यं ते करोमि नृपसत्तम ।
कामं योत्स्ये परस्यार्थे बद्धोऽस्म्यर्थेन कौरवैः ॥ ६-४३-८७ (४०२६१)
युधिष्ठिर उवाच। ६-४३-८८क्ष् (४०९७)
स एव मे वरः शल्य उद्योगे यस्त्वया कृतः ।
सूतपुत्रस्य संग्रामे कार्यस्तेजोवधस्त्वया ॥ ६-४३-८८ (४०२६२)
शल्य उवाच। ६-४३-८९क्ष् (४०९८)
संपत्स्यत्येष ते कामः कुन्तीपुत्र यथेप्सितम् ।
गच्छ युध्यस्व विस्रब्धः प्रतिजाने वचस्तव ॥ ६-४३-८९ (४०२६३)
सञ्जय उवाच। ६-४३-९०क्ष् (४०९९)
अनुमान्याथ कौन्तेयो मातुलं मद्रकेश्वरम् ।
निर्जगाम महासैन्याद्भ्रातृभिः परिवारितः ॥ ६-४३-९० (४०२६४)
वासुदेवस्तु राधेयमाहवेऽभिजगाम वै ।
तत एनमुवाचेदं पाण्डवार्थे गदाग्रजः ॥ ६-४३-९१ (४०२६५)
श्रुतं मे कर्ण भीष्मस्य द्वेषात्किल न योत्स्यसे ।

अस्मान्वरय राधेय यावद्भीष्मो न हन्यते ॥ ६-४३-९२ (४०२६६)
हते तु भीष्मे राधेय पुनरेष्यसि संयुगम् ।
धार्तराष्ट्रस्य साहाय्यं यदि पश्यसि चेत्समम् ॥ ६-४३-९३ (४०२६७)
कर्ण उवाच। ६-४३-९४क्ष् (४१००)
न विप्रियं करिष्यामि धार्तराष्ट्रस्य केशव ।
त्यक्तप्राणं हि मां विद्धि दुर्योधनहितैषिणम् ॥ ६-४३-९४ (४०२६८)
सञ्जय उवाच। ६-४३-९५क्ष् (४१०१)
तच्छ्रुत्वा वचनं कृष्णः संन्यवर्तत भारत ।
युधिष्ठिरपुरोगैश्च पाण्डवैः सह संगतः ॥ ६-४३-९५ (४०२६९)
अथ सैन्यस्य मध्ये तु प्राक्रोशत्पाण्डवाग्रजः ।
योऽस्मान्वृणोति तमहं वरये साह्यकारणात् ॥ ६-४३-९६ (४०२७०)
अथ तान्समभिप्रेक्ष्य युयुत्सुरिदमब्रवीत् ।
प्रीतात्मा धर्मराजानं कुन्तीपुत्रं युधिष्ठिरम् ॥ ६-४३-९७ (४०२७१)
अहं योत्स्यामि भवतः संयुगे धृतराष्ट्रजान् ।
युष्मदर्थं महाराज यदि मां वृणुषेऽनघ ॥ ६-४३-९८ (४०२७२)
युधिष्ठिर उवाच। ६-४३-९९क्ष् (४१०२)
एह्येहि सर्वे योत्स्यामस्तव भ्रातॄनपण्डितान् ।
युयुत्सो वासुदेवश्च वयं च ब्रूम सर्वशः ॥ ६-४३-९९ (४०२७३)
वृणोमि त्वां महाबाहो युध्यस्व मम कारणात् ।
त्वयि पिण्डश्च तन्तुश्च धृतराष्ट्रस्य दृश्यते ॥ ६-४३-१०० (४०२७४)
भजस्वास्मान्राजपुत्र भजमानान्महाद्युते ।
न भविष्यति दुर्बुद्धिर्धार्तराष्ट्रोऽत्यमर्षणः ॥ ६-४३-१०१ (४०२७५)
सञ्जय उवाच। ६-४३-१०२क्ष् (४१०३)
ततो युयुत्सुः कौरव्यान्परित्यज्य सुतांस्तव ।
जगाम पाण्डुपुत्राणां सेनां विश्राव्य दुन्दुभिं ॥ ६-४३-१०२ (४०२७६)
ततो युधिष्ठिरो राजा संप्रहृष्टःक सहानुजः ।
जग्राह कवचं भूयो दीप्तिमत्कनकोज्ज्वलम् ॥ ६-४३-१०३ (४०२७७)
प्रत्यपद्यन्त ते सर्वे स्वरथान्पुरुषर्षभाः ।
ततो व्यूहं यथापूर्वं प्रत्यव्यूहन्त ते पुनः ॥ ६-४३-१०४ (४०२७८)
अवादयन्दुन्दुभींश्च शतशश्चैव पुष्करान् ।
सिंहनादांश्च विविधान्विनेदुः पुरुषर्षभाः ॥ ६-४३-१०५ (४०२७९)
रथस्थान्पुरुषव्याघ्रान्पाण्डवान्प्रेक्ष्य पार्थिवाः ।
धृष्टद्युम्नादयः सर्वे पुनर्जहृषिरे तदा ॥ ६-४३-१०६ (४०२८०)
गौरवं पाण्डुपुत्राणां मान्यान्मानयतां च तान् ।
दृष्ट्वा महीक्षितस्तत्र पूजयांचक्रिरे भृशम् ॥ ६-४३-१०७ (४०२८१)
सौहृदं च कृपां चैव प्राप्तकालं महात्मनाम् ।

दयां च ज्ञातिषु परां कथयांचक्रिरे नृपाः ॥ ६-४३-१०८ (४०२८२)
साधुसाध्विति सर्वत्र निश्चेरुः स्तुतिसंहिताः ।
वाचः पुण्याः कीर्तिमतां मनोहृदयहर्षणाः ॥ ६-४३-१०९ (४०२८३)
म्लेच्छाश्चार्याश्च ये तत्र ददृशुः शुश्रुवुस्तथा ।
वृत्तं तत्पाण्डुपुत्राणां रुरुदुस्ते सगद्गदाः ॥ ६-४३-११० (४०२८४)
ततो जघ्नुर्महाभेरीः शतशश्च सहस्रशः ।
शङ्खांश्च गोक्षीरनिभान्दध्मुर्हृष्टा मनस्विनः ॥ ॥ ६-४३-१११ (४०२८५)

इति श्रीमन्महाभारते भीष्मपर्वणि भीष्मवधपर्वणि
त्रिचत्वारिंशोऽध्यायः ॥
Mahabharata - Bhishma Parva - Chapter Footnotes

६-४३-८ पेश्यः काहलाः । क्रकचा जयमङ्गलाः। गोविषाणिकाः
गवादिश्रृङ्गाणि ॥
६-४३-२५ पुराकल्पे प्राचीनशास्त्रे ॥
६-४३-२९ व्यक्तं नियतम् । भीष्मं भीष्मस्य। अन्तिकं समीपम् ॥
६-४३-३६ विवक्षितं वक्तुमिष्टम् ॥
६-४३-५० तावत् संप्रति ॥
६-४३-५३ आत्मनिःश्रेसं स्वहित साधनम् ॥
६-४३-६५ अभिजानामि अनुजानामि ॥
६-४३-६७ प्रायगतं मरणाय नियतम् । अचेतनं योगबलेन त्यक्तदेहम्
। योधानां मध्ये कश्चिदिति शेषः ॥
६-४३-६८ जह्यां त्यजेयम् ॥
६-४३-९८ भवतः भवत्संबन्धी ॥
६-४३-१०० तन्तुः संततिः । पिण्डः पितृयज्ञः । अन्ये सर्वे
मरिष्यन्तीति भावः ॥
६-४३-१०७ गौरवं मान्यत्वम् ॥
६-४३-१०८ सौहृदं मैत्रीम् । कृपां स्नेहम्। दयां
परदुःखप्रहाणेच्छाम् ॥
६-४३-१०९ कीर्तिमतां पाण्डवानां स्तुतिसंहिता वाच इति संबन्धः ॥

---

भिस्मपर्व-अध्यय०४४
॥ श्रीः ॥
६.४४. अध्यायः ४४

Mahabharata - Bhishma Parva - Chapter Topics

६-४४-० (४०२८६)
धृतराष्ट्र उवाच। ६-४४-०क्ष् (४१०४)
एवं व्यूढेष्वनीकेषु मामकेष्वितरेषु च ।
के पूर्वं प्राहरंस्तत्र कुरवःक पाण्डवा नु किम् ॥ ६-४४-१ (४०२८७)
सञ्जय उवाच। ६-४४-२क्ष् (४१०५)
भ्रातृभिः सहितो राजन्पुत्रो दुःशासनस्तव ।
भीष्मं प्रमुखतः कृत्वा प्रययौ सह सेनया ॥ ६-४४-२ (४०२८८)
तथैव पाण्डवाः सर्वे भीमसेनपुरोगमाः ।
भीष्मेण युद्धमिच्छन्तः प्रययुर्हृष्टमानसाः ॥ ६-४४-३ (४०२८९)
क्ष्वेडाः किलकिलाशब्दाः क्रकचा गोविषाणिकाः ।
भेरीमृदङ्गमुरजा हयकुञ्जरनिःस्वनाः ॥ ६-४४-४ (४०२९०)
उभयोःक सेनयोर्ह्यासंस्ततस्तेऽस्मान्समाद्रवन् ।
वयं तान्प्रतिर्दन्तस्तदाऽऽसीत्तुमुलं महत् ॥ ६-४४-५ (४०२९१)
महान्त्यनीकानि महासमुच्छ्रये
समागमे पाण्डवधार्तराष्ट्रयोः ।
चकम्पिरे शङ्खमृदङ्गनिःस्वनैः
प्रकम्पितानीव वनानि वायुना ॥ ६-४४-६ (४०२९२)
नरेन्द्र नागाश्वरताकुलाना-
मभ्यागतानामशिवे मुहूर्ते ।
बभूव घोषस्तुमुलश्चमूनां
वातोद्धुतानामिव सागराणाम् ॥ ६-४४-७ (४०२९३)
तस्मिन्समुत्थिते शब्दे तुमुले रोमहर्षणे ।
भीमसेनो महाबाहुः प्राणदद्गोवृषो यथा ॥ ६-४४-८ (४०२९४)
शङ्खदुन्दुभिनिर्घोषं वारणानां च बृंहितम् ।
सिंहनादं च सैन्यानां भीससेनरवोऽभ्यभूत् ॥ ६-४४-९ (४०२९५)
हयानां हेषमाणानामनीकेषु सहस्रशः ।
सर्वानभ्यभवच्चब्दान्भीमस्य नदतः स्वनः ॥ ६-४४-१० (४०२९६)
तं श्रुत्वा निनदं तस्य सैन्यास्तव वितत्रसुः ।
जीमूतस्येव नदतः शक्राशनिसमस्वनम् ॥ ६-४४-११ (४०२९७)
वाहनानि च सर्वाणि शकृन्मूत्रं प्रमुस्रुवुः ।
शब्देन तस्य वीरस्य सिंहस्येवेतरेक मृगाः ॥ ६-४४-१२ (४०२९८)
दर्शयन्घोरमात्मानं महाभ्रमिव नादयन् ।

विभीषयंस्तव सुतान्भीमसेनः समभ्ययात् ॥ ६-४४-१३ (४०२९९)
तमायान्तं महेष्वासं सोदर्याः पर्यवारयन् ।
छादयन्तः शरव्रातैर्मेघा इव दिवाकरम् ॥ ६-४४-१४ (४०३००)
दुर्योधनश्च पुत्रस्ते दुर्मुखो दुःसहः शलः ।
दुःशासनश्चातिरथस्तथा दुर्मर्षणो नृपः ॥ ६-४४-१५ (४०३०१)
विविंशतिश्चित्रसेनो विकर्णश्च महारथः ।
पुरुमित्रो जयो भोजः सौमदत्तिश्च वीर्यवान् ॥ ६-४४-१६ (४०३०२)
महाचापानि धुन्वन्तो मेघा इव सविद्युतः ।
आददानाश्च नाराचान्निर्मुक्ताशीविषोपमान् ॥ ६-४४-१७ (४०३०३)
अथ ते द्रौपदीपुत्राः सौभद्रश्च महारथः ।
नकुलः सहदेवश्च धृष्टद्युम्नश्च पार्षतः ॥ ६-४४-१८ (४०३०४)
धार्तराष्ट्रान्प्रतिययुरर्दयन्तः शितैः शरैः ।
वज्रैरिव महावेगैः शिखराणि धराभृताम् ॥ ६-४४-१९ (४०३०५)
तस्मिन्प्रथमसंग्रामे भीमज्यातलनिःस्वने ।
तावकानां परेषां च नासीत्कश्चित्पराङ्मुखः ॥ ६-४४-२० (४०३०६)
लाघवं द्रोणशिष्याणामपश्यं भरतर्षभ ।
निमित्तवेधिनां चैव शरानुत्सृजतां भृशम् ॥ ६-४४-२१ (४०३०७)
नोपशाम्यति निर्घोषो धनुषां कूजतां तथा ।
विनिश्चेरुः शरा दीप्ताज्योतींषीव नभस्तलात् ॥ ६-४४-२२ (४०३०८)
सर्वे त्वन्ये महीपालाः प्रेक्षका इव भारत ।
ददृशुर्दर्शनीयं तं भीमं ज्ञातिसमागमम् ॥ ६-४४-२३ (४०३०९)
ततस्ते जातसंरम्भाः परस्परकृतागसः ।
अन्योन्यस्पर्धया राजन्व्यायच्छन्त महारथाः ॥ ६-४४-२४ (४०३१०)
कुरुपाण्डवसेने ते हस्त्यश्वरथसंकुले ।
शुशुभाते रणेऽतीव पटे चित्रार्पिते इव ॥ ६-४४-२५ (४०३११)
ततस्ते पार्थिवाः सर्वे प्रगृहीतशरासनाः ।
सहसैन्याः समापेतुः पुत्रस्य तव शासनात् ॥ ६-४४-२६ (४०३१२)
युधिष्ठिरेण चदिष्टाः पार्थिवास्ते सहस्रशः ।
विनदन्तः समापेतुः पुत्रस्य तव वाहिनीम् ॥ ६-४४-२७ (४०३१३)
उभयोः सेनयोस्तीव्रः सैन्यानां स समागमः ।
अन्तर्धीयत चादित्यः सैन्येन रजसा वृतः ॥ ६-४४-२८ (४०३१४)
प्रयुद्धानां प्रभग्नानां पुनरावर्तिनामपि ।
नात्र स्वेषां परेषां वा विशेषः समदृश्यत ॥ ६-४४-२९ (४०३१५)
तस्मिस्तु तुमुले युद्धे वर्तमाने महाभये ।
अति सर्वाण्यनीकानि पिता तेऽभिव्यरोचत ॥ ॥ ६-४४-३० (४०३१६)

इति श्रीमन्महाभारते भीष्मपर्वणि भीष्मवधपर्वणि
चतुश्चत्वारिंशोऽध्यायः ॥
Mahabharata - Bhishma Parva - Chapter Footnotes

६-४४-६ महान् समुच्छ्रयः संप्रहारो यत्र ॥
६-४४-९ अभ्यभूत् अभिभूतवान् ॥
६-४४-१४ सोदर्याः राजानुजाः ॥
६-४४-२१ निमित्तं लक्ष्यम् ॥
६-४४-२५ पटे इति सप्तम्यन्तम् ॥
६-४४-२८ सैन्येन सेनाभवेन ॥
६-४४-३० अति अतिक्रम्य ॥

---

भिस्मपर्व-अध्यय०४५
॥ श्रीः ॥
६.४५. अध्यायः ४५

Mahabharata - Bhishma Parva - Chapter Topics
कुरुपाण्डवसेनयोर्द्वन्द्वयुद्धवर्णनम् ॥ १ ॥

Mahabharata - Bhishma Parva - Chapter Text

६-४५-० (४०३१७)
सञ्जय उवाच। ६-४५-०क्ष् (४१०६)
पूर्वाह्णे तस्य रौद्रस्य युद्धमह्नो विशांपते ।
प्रावर्तत महाघोरं राज्ञां देहावकर्तनम् ॥ ६-४५-१ (४०३१८)
कुरूणां सृञ्जयानां च जिगीषूणां परस्परम् ।
सिंहानामिव संह्रादो दिवमुर्वी च नादयन् ॥ ६-४५-२ (४०३१९)
आसीत्किलकिलाशब्दस्तलशङ्खरवैः सह ।
जज्ञिरे सिंहनादाश्च शूराणां प्रतिगर्जताम् ॥ ६-४५-३ (४०३२०)
तलत्राभिहताश्चैव ज्याशब्दा भरतर्षभ ।
पत्तीनां पादशब्दश्च वाजिनां च महास्वनः ॥ ६-४५-४ (४०३२१)
तोत्राङ्कुशनिपातश्च आयुधानां च निःस्वनः ।
घण्टाशब्दश्च नागानामन्योन्यमभिधावताम् ॥ ६-४५-५ (४०३२२)
तस्मिन्समुदिते शब्दे तुगुले रोमहर्षणे ।
बभूव रथनिर्घोषः पर्जन्यनिनदोपमःक ॥ ६-४५-६ (४०३२३)
ते मनः क्रूरमाधाय समभित्यक्तजीविताः ।

पाण्डवानभ्यवर्तन्त सर्व एवोच्छ्रितध्वजाः ॥ ६-४५-७ (४०३२४)
अथ शान्तनवो राजन्नभ्यधावद्धनञ्जयम् ।
प्रगृह्य कार्मुकं घोरं कालदण्डोपमं रणे ॥ ६-४५-८ (४०३२५)
अर्जुनोऽपि धनुर्गृह्य गाण्डीवं लोकविश्रुतम् ।
अभ्यधावत तेजस्वी गाङ्गेयं रणमूर्धनि ॥ ६-४५-९ (४०३२६)
तावुभौ कुरुशार्दूलौ परस्परवधैषिणौ ।
गाङ्गेयस्तु रणे पार्थं विद्ध्वा नाकम्पयद्बली ॥ ६-४५-१० (४०३२७)
तथैव पाण्डवो राजन्भीष्मं नाकम्पयद्युधि ।
सात्यकिस्तु महेष्वासः कृतवर्माणमभ्यात् ॥ ६-४५-११ (४०३२८)
तयोः समभयवद्युद्धं तुमुलं रोमहर्षणम् ।
सात्यकिः कृतवर्माणं कृतवार्मा च सात्यकिम् ॥ ६-४५-१२ (४०३२९)
आनर्च्छतुः शरैर्घोरैस्तक्षमाणौ परस्परम् ।
तौ शराचितसर्वाङ्गौ शुशुभाते महाबलौ ॥ ६-४५-१३ (४०३३०)
वसन्ते पुष्पशबलौ पुष्पिताविव किंशुकौ ।
अभिमन्युर्महेष्वासं बृहद्बलमयोधयत् ॥ ६-४५-१४ (४०३३१)
ततः कोसलराजाऽसावभिमन्योर्विशांपते ।
ध्वजं चिच्छेद समरे सारथिं च व्यपातयत् ॥ ६-४५-१५ (४०३३२)
सौभद्रस्तु ततः क्रुद्धः पातिते रथसारथौ ।
बृहद्बलं महाराज विव्याध नवभिः शरैः ॥ ६-४५-१६ (४०३३३)
अथापराभ्यां भल्लाभ्यां शिताभ्यामरिमर्दनः ।
ध्वजमेकेन चिच्छेद पार्ष्णिमेकेन सारथिम् ॥ ६-४५-१७ (४०३३४)
अन्योन्यं च शरैः क्रुद्धौ ततक्षाते परस्परम् ।
मानिनं समरे दृप्तं कृतवैरं महारथम् ॥ ६-४५-१८ (४०३३५)
भीमसेनस्तव सुतं दुर्योधनमयोधयत् ।
तावुभौ नरशार्दूलौ कुरुमुख्यौ महाबलौ ॥ ६-४५-१९ (४०३३६)
अन्योन्यं शरवर्षाभ्यां ववृषाते रणाजिरे ।
तौ वीक्ष्य तु महात्मानौ कृतिनौ चित्रयोधिनौ ॥ ६-४५-२० (४०३३७)
विस्मयः सर्वभूतानां समपद्यत भारत ।
दुःशासनस्तु नकुलं प्रत्युद्याय महाबलम् ॥ ६-४५-२१ (४०३३८)
अविध्यन्निशितैर्बाणैर्बहुभिर्मर्मभेदिभिः ।
तस्य माद्रीसुतः केतुं सशरं च शरासनम् ॥ ६-४५-२२ (४०३३९)
चिच्छेद निशितैर्बाणैः प्रहसन्निव भारत ।
अथैनं पञ्चविंशत्या क्षुद्रकाणां समार्पयत् ॥ ६-४५-२३ (४०३४०)
पुत्रस्तु तव दुर्धर्षो नकुलस्य महाहवे ।
तुरङ्गांश्चिच्छिदे बाणैर्ध्वजं चैवाभ्यपातयत् ॥ ६-४५-२४ (४०३४१)
दुर्मुखः सहदेवं च प्रत्युद्याय महाबलम् ।

विव्याध शरवर्षेण यतमानं महाहवे ॥ ६-४५-२५ (४०३४२)
सहदेवस्ततो वीरो दुर्मुखस्य महारणे ।
शरेण भृतशीक्ष्णेन पातयामास सारथिम् ॥ ६-४५-२७अतावन्योन्यं
समासाद्य समरे युद्धदुर्मदौ ।६-४५-२७ब्त्रासयेतां शरैर्घोरैः
कृतप्रतिकृतैषिणौ ॥ ६-४५-२६ (४०३४३)
युधिष्ठिरः स्वयं राजा मद्रराजानमभ्ययात् ।
तस्य मद्राधिपश्चापं द्विधा चिच्छेद मारिष ॥ ६-४५-२८ (४०३४४)
तदपास्य धनुश्छिन्नं कुन्तीपुत्रो युधिष्ठिरः ।
अन्यत्कार्मुकमादाय वेगवद्बलवत्तरम् ॥ ६-४५-२९ (४०३४५)
ततो मद्रेश्वरं राजा शरैः सन्नतपर्वभिः ।
छादयामास संक्रुद्धस्तिष्ठ तिष्ठेति चाब्रवीत् ॥ ६-४५-३० (४०३४६)
धृष्टद्युम्नस्ततो द्रोणमभ्यद्रवत भारत ।
तस्य द्रोणः सुसंक्रुद्धः परासुकरणं दृढम् ॥ ६-४५-३१ (४०३४७)
त्रिधा चिच्छेद समरे पाञ्चाल्यस्य तु कार्मुकम् ।
शरं चैव महाघोरं कालदण्डमिवापरम् ॥ ६-४५-३२ (४०३४८)
प्रेषयामास समरे सोऽस्य काये न्यमञ्जत ।
अथान्यद्धनुरादाय सायकांश्च चतुर्दश ॥ ६-४५-३३ (४०३४९)
द्रोणं द्रुपदपुत्रस्तु प्रतिविव्याध संयुगे ।
तावन्योन्यं सुसंक्रुद्धौ चक्रतुः शुभृशं रणम् ॥ ६-४५-३४ (४०३५०)
सौमदत्तिं रणे शङ्खो रभसं रभसो युधि ।
प्रत्युद्ययौ महाराज तिष्ठतिष्ठेति चाब्रवीत् ॥ ६-४५-३५ (४०३५१)
तस्य वै दक्षिणं वीरो निर्बिभेद रणे भुजम् ।
समदत्तिस्तथा शङ्खं जत्रुदेशे समाहनत् ॥ ६-४५-३६ (४०३५२)
तयोस्तदभवद्युद्धं घोररूपं विशांपते ।
दृप्तयोः समरे पूर्वं वृत्रवासवयोरिव ॥ ६-४५-३७ (४०३५३)
बाह्लीकं तु रणे क्रुद्ध क्रुद्धरूपो विशांपते ।
अभ्यद्रवदमेयात्मा धृष्टकेतुर्महारथः ॥ ६-४५-३८ (४०३५४)
बाह्लीकस्तु रणे राजन्धृष्टकेतुममर्षणः ।
शरैर्बहुभिरानर्च्छत्सिंहनादमथानदत् ॥ ६-४५-३९ (४०३५५)
चेदिराजस्तु संक्रुद्धो बाह्लीकं नवभिः शरैः ।
विव्याध समरे तूर्णं मत्तो मत्तमिव द्विपम् ॥ ६-४५-४० (४०३५६)
तौ तत्र समरे क्रुद्धौ नर्दन्तौ च पुनः पुनः ।
समीयतुः सुसंक्रुद्धावङ्गारवबुधाविव ॥ ६-४५-४१ (४०३५७)
राक्षसं रौद्रकर्माणं क्रूरकर्मा घटोत्कचः ।
अलम्बुसं प्रत्युदियाद्बलं शक्र इवाहवे ॥ ६-४५-४२ (४०३५८)
घटोत्कचस्ततः क्रुद्धो राक्षसं तं महाबलम् ।

नवत्या सायकैस्तीक्ष्णैर्दारयामास भारत ॥ ६-४५-४३ (४०३५९)
अलम्बुसस्तु समरे भैमसेनिं महाबलम् ।
बहुधा दारयामास शरैः सन्नतपर्वभिः ॥ ६-४५-४४ (४०३६०)
व्यभ्राजेतां ततस्तौ तु संयुगे शरविक्षतौ ।
यथा देवासुरे युद्धे बलशक्रौ महाबलौ ॥ ६-४५-४५ (४०३६१)
शिखण्डी समरे राजन्द्रौणिमभ्युद्ययौ बली ।
अश्वत्थामा ततः क्रुद्दः शिखण्डिनमुपस्थितम् ॥ ६-४५-४६ (४०३६२)
नाराचेन सुतीक्ष्णेन भृशं विद्ध्वा ह्यकम्पयत् ।
शिखण्ड्यपि ततो राजन्द्रोणपुत्रमताडयत् ॥ ६-४५-४७ (४०३६३)
सायकेन सुपीतेन तीक्ष्णेन निशितेन च ।
तौ जघ्नतुस्तदान्योन्यं शरैर्बहुविधैर्मृधे ॥ ६-४५-४८ (४०३६४)
भगदत्तं रणे शूरं विराटो वाहिनीपतिः ।
अभ्ययात्त्वरितो राजंस्ततो युद्धमवर्तत ॥ ६-४५-४९ (४०३६५)
विराटो भगदत्तं तु शरवर्षेण भारत ।
अभ्यवर्षत्सुसंक्रुद्धो मेघो वृष्ट्या इवाचलम् ॥ ६-४५-५० (४०३६६)
भगदत्तस्ततस्तूर्णं विराटं पृथिवीपतिम् ।
छादयामास समरे मेघः सूर्यमिवोदितम् ॥ ६-४५-५१ (४०३६७)
बृहत्क्षत्रं तु कैकेयं कृपः शारद्वतो ययौ ।
तं कृपः शरवर्षेण च्छादयामास भारत ॥ ६-४५-५२ (४०३६८)
गौतमं कैकयः क्रुद्धः शरवृष्ट्याऽभ्यपूरयत् ।
तावन्योन्यं हयान्हत्वा धनुश्छित्वा च भारत ॥ ६-४५-५३ (४०३६९)
विरथावसियुद्धाय समीयतुरमर्षणौ ।
तयोस्तदभवद्युद्धं घोररूपं सुदारुणम् ॥ ६-४५-५४ (४०३७०)
द्रुपदस्तु ततो राजन्सैन्धवं वै जयद्रथम् ।
अभ्युद्ययौ हृष्टरूपो हृष्टरूपं परंतपः ॥ ६-४५-५५ (४०३७१)
ततः सैन्धवको राजा द्रुपदं विशिखैस्त्रिभिः ।
ताजयामास समरे स च तं प्रत्यबिध्यत ॥ ६-४५-५६ (४०३७२)
तयोस्तदभवद्युद्धं घोररूपं सुदारुणम् ।
ईक्षणप्रीतिजननं शुक्राङ्गरकयोरिव ॥ ६-४५-५७ (४०३७३)
विकर्णस्तु सुतस्तुभ्यं सुतसोमं महाबलम् ।
अभ्ययाञ्जवनैरश्वैस्ततो युद्धमवर्तत ॥ ६-४५-५८ (४०३७४)
विकर्णः सुतसोमं तु विद्ध्वा नाकम्पयच्छरैः ।
सुतसोमो विकर्णं च तदद्भुतमिवाभवत् ॥ ६-४५-५९ (४०३७५)
सुशर्माणं नरव्याघ्रश्चेकितानो महारथः ।
अभ्यद्रवत्सुसंक्रुद्धः पाण्डवार्थे पराक्रमी ॥ ६-४५-६० (४०३७६)
शुशर्मा तु महाराज चेकितानं महारथम् ।

महता शरवर्षेण वारयामास संयुगे ॥ ६-४५-६१ (४०३७७)
चेकितानोऽपि संरब्धः सुशर्माणां महाहवे ।
प्राच्छादयत्तमिषुभिर्महामेघ इवाचलम् ॥ ६-४५-६२ (४०३७८)
शकुनिः प्रतिविन्ध्यं तु पराक्रान्तं पराक्रमी ।
अभ्यद्रवत राजेन्द्र मत्तः सिंह इव द्विपम् ॥ ६-४५-६३ (४०३७९)
यौधिष्ठिरस्तु संक्रुद्धः सौबलं निशितैः शरैः ।
व्यदारयत संग्रामे मघवानिव दानवम् ॥ ६-४५-६४ (४०३८०)
शकुनिः प्रतिविन्ध्यं तु प्रतिविध्यन्तमाहवे ।
व्यदारयन्महाप्राज्ञः शरैः सन्नतपर्वभिः ॥ ६-४५-६५ (४०३८१)
सुदक्षिणं तु राजेन्द्र काम्भोजानां महारथम् ।
श्रुतकर्मा पराक्रान्तमभ्यद्रवत संयुगे ॥ ६-४५-६६ (४०३८२)
सुदक्षिणस्तु समरे साहदेविं महारथम् ।
विद्ध्वा नाकम्पयत वै मैनाकमिव पर्वतम् ॥ ६-४५-६७ (४०३८३)
श्रुतकर्मा ततः क्रुद्धः काम्भोजानां महारथम् ।
शरैर्बहुभिरानर्च्छद्दारयन्निव सर्वशः ॥ ६-४५-६८ (४०३८४)
इरावानथ संक्रुद्धः श्रुतायुषमरिन्दमम् ।
प्रत्युद्ययौ रणे यत्तो यत्तरूपं परंतपः ॥ ६-४५-६९ (४०३८५)
आर्जुनिस्तस्य समरे हयान्हत्वा महारथः ।
ननाद बलवान्नादं तत्सैन्यं प्रत्यपूरयत् ॥ ६-४५-७० (४०३८६)
श्रुतायुस्तु ततः क्रुद्धः फाल्गुनेः समरे हयान् ।
निजघान गदाग्रेण ततो युद्धमवर्तत ॥ ६-४५-७१ (४०३८७)
विन्दानिविन्दावावन्त्यौ कुन्तिभोजं महारथम् ।
ससेनं ससुतं वीरं संससञ्जतुराहवे ॥ ६-४५-७२ (४०३८८)
तत्राद्भुतमपश्याम तयोर्घोरं पराक्रमम् ।
अयुध्येतां स्थिरौ भूत्वा महत्या सेनया सह ॥ ६-४५-७३ (४०३८९)
अनुविन्दस्तु गदया कुन्तिभोजमताडयत् ।
कुन्तिभोजश्च तं तूर्णं शरव्रातैरवाकिरत् ॥ ६-४५-७४ (४०३९०)
कुन्तिभोजसुतश्चापि विन्दं विव्याध सायकैः ।
स च तं प्रतिविव्याध तदद्भुतमिवाभवत् ॥ ६-४५-७५ (४०३९१)
केकया भ्रातरः पञ्च गान्धारान्पञ्च मारिष ।
ससैन्यास्ते ससैन्यांश्च योधयामासुराहवे ॥ ६-४५-७६ (४०३९२)
वीरबाहुश्च ते पुत्रो वैराटिं रथसत्तमम् ।
उत्तरं योधयामास विव्याध निशितैः शरैः ॥ ६-४५-७७ (४०३९३)
उत्तरश्चापि तं वीरं विव्याध निशितैः शरैः ।
चेदिराट् समरे राजन्नुलूकं समभिद्रवत् ॥ ६-४५-७८ (४०३९४)
तथैव शरवर्षेण उलूकं समविद्ध्यत ।

उलूकश्चापि तं बाणैर्निशितैर्लोमवाहिभिः ॥ ६-४५-७९ (४०३९५)
तयोर्युद्धं समभवद्घोररूपं विशांते ।
दारयेतां सुसंक्रुद्धावन्योन्यमपराजितौ ॥ ६-४५-८० (४०३९६)
एवं द्वन्द्वसहस्राणि रथवारणवाजिनाम् ।
पदातीनां च समरे तव तेषां च संकुले ॥ ६-४५-८१ (४०३९७)
मुहूर्तमिव तद्युद्धमासीन्मधुरदर्शनम् ।
तत उन्मत्तवद्राजन्न प्राज्ञायत किंचन ॥ ६-४५-८२ (४०३९८)
गजो गजेन समरे रथिनं च रथी ययौ ।
अश्वोऽश्वं समभिप्रायात्पदातिश्च पदातिनम् ॥ ६-४५-८३ (४०३९९)
ततो युद्धं सुदुर्धर्षं व्याकुलं समपद्यत ।
शूराणां समरे तत्र समासाद्येतरेतरम् ॥ ६-४५-८४ (४०४००)
तत्र देवर्षयः सिद्धाश्चारणाश्च समागताः ।
प्रेक्षन्त तद्रणं घोरं देवासुरसमं भुवि ॥ ६-४५-८५ (४०४०१)
ततो दन्तिसहस्राणि र्थानां चापि मारिष ।
अश्वौघाः पुरुषौघाश्च विपरीतं समाययुः ॥ ६-४५-८६ (४०४०२)
तत्रतत्र प्रदृश्यन्ते रथवारणपत्तयः ।
सादिनश्च नरव्याघ्र युध्यमाना मुहुर्मुहुः ॥ ॥ ६-४५-८७ (४०४०३)

इति श्रीमन्महाभारते भीष्मपर्वणि भीष्मवधपर्वणि
प्रथमदिवसयुद्धे पञ्चचत्वारिंशोऽध्यायः ॥
Mahabharata - Bhishma Parva - Chapter Footnotes

६-४५-१ पूर्वाह्णे पूर्वभागे ॥
६-४५-५ तोत्रं गजदमनं वेणुकाख्यं वेणुवुध्नसमाकारम् ॥
६-४५-१३ आनर्च्छतुः पीडितवन्तौ । तक्षमाणौ तनूकुर्वाणौ ॥
६-४५-१४ पुष्पैः शबलौ विचित्रौ ॥
६-४५-१७ एकेन प्राष्णि पृष्ठगोपं एकेन सारथिमिति च ॥
६-४५-२३ क्षुद्रकाणां बाणविशेषाणाम् ॥
६-४५-३१ परासुकरणं मारणसाधनम् ॥
६-४५-३६ वीरः शङ्खः । जत्रुदेशे अंससंधौ ॥
६-४५-३८ धृष्टकेतुः शिशुपालसुतः ॥
६-४५-४४ सन्नतपर्वभिः अलक्षितग्रन्थिभिः ॥
६-४५-४८ तीक्ष्णेन सूक्ष्मधारेण । निशिते शाणोल्लीढेन । मृधे संग्रामे ॥
६-४५-५८ तुभ्यं तव । सुतसोमं भैमसेनिम् ॥
६-४५-६० चेकितानो यादवः ॥
६-४५-६९ इरावानर्जुनपुत्रः ॥

६-४५-७२ संससज्जतुः संसक्तावभूताम् ॥
६-४५-८१ द्वन्द्वं द्वयोर्द्वयोर्युद्धम् ॥
६-४५-८६ विपरीतं अतीतक्रमम् ॥

---

भिस्मपर्व-अध्यय०४६
॥ श्रीः ॥
६.४६. अध्यायः ४६

Mahabharata - Bhishma Parva - Chapter Topics
संकुलयुद्धवर्णनम् ॥ १ ॥

Mahabharata - Bhishma Parva - Chapter Text

६-४६-० (४०४०४)
सञ्जय उवाच। ६-४६-०क्ष् (४१०७)
राजञ्शतसहस्राणि तत्रतत्र पदातिनाम् ।
निर्मर्यादं प्रयुद्धानि तत्ते वक्ष्यामि भारत ॥ ६-४६-१ (४०४०५)
न पुत्रः पितरं जज्ञे पिता वा पुत्रमौरसम् ।
न भ्राता भ्रातरं तत्र स्वस्त्रीयं न च मातुलः ॥ ६-४६-२ (४०४०६)
न मातुलं च स्वस्रीयो न सखायं सखा तथा ।
आविष्टा इव युध्यन्ते पाण्डवाः कुरुभिः सह ॥ ६-४६-३ (४०४०७)
रथानीकं नरव्याघ्राः केचिदभ्यपतन्रथैः ।
अभज्यन्त युगैरेव युगानि भरतर्षभ ॥ ६-४६-४ (४०४०८)
रथेषाश्च रतेषाभिः कूरा रथकूबरैः ।
संगतैः सहिताः केचित्परस्परजिघांसवः ॥ ६-४६-५ (४०४०९)
न शेकुश्चलितुं केचित्सन्निपत्य रथा रथैः ।
प्रभिन्नास्तु महाकायाः सन्निपत्य गजा गजैः ॥ ६-४६-६ (४०४१०)
बहुधा दारयन्क्रुद्धा विषाणैरितरेतरम् ।
सतोरणपताकैश्च वारणा वरवारणैः ॥ ६-४६-७ (४०४११)
अभिसृत्य महाराज वेगवद्भिर्महागजैः ।
दन्तैरभिहतास्तत्र चुक्रुशुः परमातुराः ॥ ६-४६-८ (४०४१२)
अभिनीताश्च शिक्षाभिस्तोत्राङ्कुशसमाहताः ।
अप्रभिन्नाः प्रभिन्नानां संमुखाभिमुखा ययुः ॥ ६-४६-९ (४०४१३)
प्रभिन्नैरपि संसक्ताः केचित्तत्र महागजाः ।
क्रौञ्चवन्निनदं कृत्वा दुद्रुवुः सर्वतो दिशम् ॥ ६-४६-१० (४०४१४)
सम्यक्प्रणीता नागाश्च प्रभिन्नकरटामुखाः ।

ऋषितोमरनाराचैर्निर्विद्धा वरवारणाः ॥ ६-४६-११ (४०४१५)
प्रणेदुर्भिन्नमर्माणो निपेतुश्च गतासवः ।
प्राद्रवन्त दिशः केचिन्नदन्तो भैरवान्रवान् ॥ ६-४६-१२ (४०४१६)
गजानां पादरक्षास्तु व्यूढोरस्काः प्रहारिणः ।
ऋष्टिभिश्च धनुर्भिश्च विमलैश्च परश्वथैः ॥ ६-४६-१३ (४०४१७)
गदाभिर्मुसलैश्चैव भिन्दिपालैः सतोमरैः ।
आयसैः परिघैश्चैव निस्त्रिंशैर्विमलै शितैः । ६-४६-१४ (४०४१८)
प्रगृहीतैः सुसंरब्धा द्रवमाणास्ततस्ततः ।
व्यदृश्यन्त महाराज परस्परजिघांसवः ॥ ६-४६-१५ (४०४१९)
राजमानाश्च निस्त्रिंशाः संसिक्ता नरशोणितैः ।
प्रत्यदृश्यन्त शूराणामन्योन्यमभिधावताम् ॥ ६-४६-१६ (४०४२०)
अवक्षिप्तावधूतानामसीनां वीरबाहुभिः ।
संजज्ञे तुमुलः शब्दः पततां परमर्मसु ॥ ६-४६-१७ (४०४२१)
गदामुसलरुग्णानां भिन्नानां च वरासिभिः ।
दन्तिदन्तावभिन्नानां मृदितानां च दन्तिभिः ॥ ६-४६-१८ (४०४२२)
तत्र तत्र नरौघाणां क्रोशतामितरेतरम् ।
शुश्रुवुर्दारुणा वाचः प्रेतानामिव भारत ॥ ६-४६-१९ (४०४२३)
हयैरपि हयारोहाश्चामरापीडधारिभिः ।
हंसैरिव महावेगैरन्योन्यमभिविद्रुताः ॥ ६-४६-२० (४०४२४)
तैर्विमुक्ता महाप्रासा जाम्बूनदविभूषणाः ।
आशुगा विमलास्तीक्ष्णाः संपेतुर्भुजगोपमाः ॥ ६-४६-२१ (४०४२५)
अश्वैरग्र्यजवैः केचिदाप्लुत्य महतो रथात् ।
शिरांस्याददिरे वीरा रथिनामश्वसादिनः ॥ ६-४६-२२ (४०४२६)
बहूनपि हयारोहान्भल्लैः सन्नतपर्वभिः ।
रथी जघान संप्राप्य बाणगोचरमागतान् ॥ ६-४६-२३ (४०४२७)
नवमेघप्रतीकाशाश्चाक्षिप्य तुरगान्गजाः ।
पादैरेव विमृद्नन्ति मत्ताः कनकभूषणाः ॥ ६-४६-२४ (४०४२८)
पाट्यमानेषु कुम्भेषु पार्श्वेष्वपि च वारणाः ।
प्रासैर्विनिहताः केचिद्विनेदुः परमातुराः ॥ ६-४६-२५ (४०४२९)
साश्वारोहान्हयान्कांश्चिदुन्मथ्य वरवारणाः ।
सहसा चिक्षिपुस्तत्र संकुले भैरवे सति ॥ ६-४६-२६ (४०४३०)
साश्वारोहान्विषाणाग्रैरुत्क्षिप्य तुरगान्गजाः ।
रथौघानभिमृद्नन्तः सध्वजानभिचक्रमुः ॥ ६-४६-२७ (४०४३१)
पुंस्त्वादतिमदत्वाच्च केचित्तत्र महागजाः ।
साश्वारोहान्हयाञ्जघ्नुः करैः सचरणैस्तथा ॥ ६-४६-२८ (४०४३२)
अश्वारोहैश्च समरे हस्तिसादिभिरेव च ।

प्रतिमानेषु गात्रेषु पार्श्वेष्वभि च वारणान् ।
आशुगा विमलास्तीक्ष्णाः संपेतुर्भुजगोपमाः ॥ ६-४६-२९ (४०४३३)
नराश्वकायान्निर्भिद्य लौहानि कवचानि च ।
निपेतुर्विमलाः शक्त्यो वीरबाहुभिरर्पिताः ॥ ६-४६-३० (४०४३४)
महोल्ककाप्रतिमा घोरास्तत्र तत्र विशांपते ।
द्वीपिचर्मावनद्धैश्च व्याघ्रचर्मच्छदैरपि ॥ ६-४६-३१ (४०४३५)
विकोशैर्विमलैः खड्गैरभिजघ्नुः परान्रणे ।
अभिप्लुतमभिक्रुद्धमेकपार्श्वावदारितम् ॥ ६-४६-३२ (४०४३६)
विदर्शयन्तः संपेतुः खड्गचर्मपरश्वथैः ।
केचिदाक्षिप्य करिणः साश्वानपि रथान्करैः ॥ ६-४६-३३ (४०४३७)
विकर्षन्तो दिशः सर्वाः संपेतुः सर्वशब्दगाः ।
शङ्कुभिर्दारिताः केचित्संभिन्नाश्च परश्वथैः ॥ ६-४६-३४ (४०४३८)
हस्तिभिर्मृदिताः केचित्क्षुण्णाश्चान्ये तुरंगमैः ।
रथनेमिनिकृत्ताश्च निकृत्ताश्च परश्वथैः ॥ ६-४६-३५ (४०४३९)
व्याक्रोशन्त नरा राजंस्तत्रतत्र स्म बान्धवान् ।
पुत्रानन्ये पितॄनन्ये भ्रातॄंश्च सह बन्धुभिः ॥ ६-४६-३६ (४०४४०)
मातुलान्भागिनेयांश्च परानपि च संयुगे ।
विकीर्णान्त्राः सुबहवो भग्नसक्थाश्च भारत ॥ ६-४६-३७ (४०४४१)
बाहुभिश्चापरे छिन्नैः पार्श्वेषु च विदारिताः ।
क्रन्दन्तः समदृश्यन्त तृषिता जीवितेप्सवः ॥ ६-४६-३८ (४०४४२)
तृषापरिगताः केचिदल्पसत्वा विशांपते ।
भूमौ निपतिताः सङ्ख्ये मृगयांचक्रिरे जलम् ॥ ६-४६-३९ (४०४४३)
रुधिरौघपरिक्लिन्नाः क्लिश्यमानाश्च भारत ।
व्यनिन्दन्भृशमात्मानं तव पुत्रांश्च संगतान् ॥ ६-४६-४० (४०४४४)
अपरे क्षत्रियाः शूराः कृतवैराः परस्परम् ।
नैव शस्त्रं विमुञ्चन्ति नैव क्रन्दन्ति मारिष ।
तर्जयन्ति च संहृष्टास्तत्रतत्र परस्परम् ॥ ६-४६-४१ (४०४४५)
आदश्य दशनैश्चापि क्रोधात्स्वरदनच्छदम् ।
भ्रुकुटीकुटिलैर्वक्रैः प्रेक्षन्ति च परस्परम् ॥ ६-४६-४२ (४०४४६)
अपरे क्लिश्यमानास्तु शरार्ता व्रणपीडिताः ।
निष्कूजाः समपद्यन्त दृढसत्वा महाबलाः ॥ ६-४६-४३ (४०४४७)
अन्ये च विरथाः शूरा रथमन्यस्य संयुगे ।
प्रार्थयाना निपतिताः संक्षुण्णा वरवारणैः ।
अशोभन्त महाराज सपुष्पा इव किंशुकाः ॥ ६-४६-४४ (४०४४८)
संबभूवुरनीकेषु बहवो भैरवस्वनाः ।
वर्तमाने महाभीमे तस्मिन्वीरवरक्षये ॥ ६-४६-४५ (४०४४९)

निजघान पिता पुत्रं पुत्रश्च पितरं रणे ।
स्वस्त्रीयो मातुलं चापि स्वस्रीयं चापि मातुलः ॥ ६-४६-४६ (४०४५०)
सखा सखायं च तथा संबन्धी बान्धवं तथा ।
एवं युयुधिरे तत्र कुरवः पाण्डवैः सह ॥ ६-४६-४७ (४०४५१)
वर्तमाने तथा तस्मिन्निर्मर्यादे भयानके ।
भीष्ममासाद्य पार्थानां वाहिनी समकम्पत ॥ ६-४६-४८ (४०४५२)
केतुना पञ्चतारेण तालेन भारतर्षभ ।
राजतेन महाबाहुरुच्छ्रितेन महारथे ।
बभौ भीष्मस्तदा राजंश्चन्द्रमा इव मेरुणा ॥ ॥ ६-४६-४९ (४०४५३)

इति श्रीमन्महाभारते भीष्मपर्वणि भीष्मवधपर्वणि
प्रथमदिवसयुद्धे षट्चत्वारिंशोऽध्यायः ॥

Mahabharata - Bhishma Parva - Chapter Footnotes

६-४६-१ प्रयुद्धानि युद्धं कृतवन्ति ॥
६-४६-२ जज्ञे ज्ञातवान् ॥
६-४६-३ आविष्टा इव भूतादिना गृहीता इव ॥
६-४६-४ युगानि अश्वस्कन्धार्पितानि दारूणि ॥
६-४६-५ रथेषा रथदण्डः ।कूबरो युगकीलः।संगतैः संमुखागतैः ॥
६-४६-६ प्रभिन्नाश्च्योतन्मदाः ॥
६-४६-७ विषाणैर्दन्तैः तोरणानि चतुःस्तम्भमण्डपाकारस्य
गजपल्याणस्य अम्बारीति भाषया प्रसिद्धस्य ।द्वाराणि पताकाश्च
तत्रैव स्तम्भशेखरस्थाः ॥
६-४६-९ संमुखाभिमुखाः अन्योन्यसंमुखा इत्यर्थः ॥
६-४६-१७ अवक्षिप्तावधूतानां अधोमुखं पातितानां परेषां मर्मसु
पततामसीनामिति संबन्धः ॥
६-४६-१९ प्रेतानां नारकाणाम् ॥
६-४६-२६ सहसा बलेन ॥
६-४६-२८ पुंस्त्वाद्वीर्यवत्त्वात् ।अतिमदत्वादुद्भिन्नमदत्वात् ॥
६-४६-२९ प्रतिमानेषु ललाटेषु ॥
६-४६-३० शक्त्यः शक्तयः ६-४६-४३ निष्कूजा निःशब्दाः ॥

---

भिस्मपर्व-अध्यय०४७
॥ श्रीः ॥
६.४७. अध्यायः ४७

Mahabharata - Bhishma Parva - Chapter Topics

उत्तरकुमारवधः ॥१ ॥

Mahabharata - Bhishma Parva - Chapter Text

६-४७-० (४०४५४)
सञ्जय उवाच। ६-४७-०क्ष् (४१०८)
गतपूर्वाह्णभूयिष्ठे तस्मिन्नहनि दारुणे ।
वर्तमाने तथा रौद्रे महावीरवरक्षये ॥ ६-४७-१ (४०४५५)
दुर्मुखः कृतवर्मा च कृपः शल्यो विविंशतिः ।
भीष्मं जुगुपुरासाद्य तव पुत्रेण चोदिताः ॥ ६-४७-२ (४०४५६)
एतैरतिरथैर्गुप्तः पञ्चभिर्भरतर्षभः ।
पाण्डवानामनीकानि विजगाहे महारथः ॥ ६-४७-३ (४०४५७)
चेदिकाशिकरूषेषु पञ्चालेषु च भारत ।
भीष्मस्य बहुधा तालश्चलत्केतुरदृश्यत ॥ ६-४७-४ (४०४५८)
स शिरांसि रणेऽरीणां रथांश्च सयुगध्वजान् ।
निचकर्त महावेगैर्भल्लैः सन्नतपर्वभिः ॥ ६-४७-५ (४०४५९)
नृत्यतो रथमार्गेषु भीष्मस्य भरतर्षभ ।
भृशमार्तस्वरं चक्रुर्नागा मर्मणि ताडिताः ॥ ६-४७-६ (४०४६०)
अभिमन्युः सुसंक्रुद्धः पिशङ्गैस्तुरगोत्तमैः ।
संयुक्तं रथमास्थाय प्रायाद्भीष्मरथं प्रति ॥ ६-४७-७ (४०४६१)
जाम्बूनदविचित्रेण कर्णिकारेण केतुना ।
अभ्यवर्तत भीष्मं च तांश्चैव रथसत्तमान् ॥ ६-४७-८ (४०४६२)
स तालकेतोस्तीक्ष्णेन केतुमाहत्य पत्रिणा ।
भीष्मेण युयुधे वीरस्तस्य चानुरथैः सह ॥ ६-४७-९ (४०४६३)
कृतवर्माणमेकेन शल्यं पञ्चभिराशुगैः ।
विद्ध्वा नवभिरानर्च्छच्छिताग्रैः प्रतिपामहम् ॥ ६-४७-१० (४०४६४)
पूर्णायतविसृष्टेन सम्यक्प्रणिहितेन च ।
ध्वजमेकेन विव्याध जाम्बूनदपरिष्कृतम् ॥ ६-४७-११ (४०४६५)
दुर्मुखस्य तु भल्लेन सर्वावरणभेदिना ।
जहार सारथेः कायाच्छिरः सन्नतपर्वणा ॥ ६-४७-१२ (४०४६६)
धनुश्चिच्छेद भल्लेन कार्तस्वरविभूषितम् ।
कृपस्य निशिताग्रेण तांश्च तीक्ष्णमुखैः शरैः ॥ ६-४७-१३ (४०४६७)
जघान परमक्रुद्धो नृत्यन्निव महारथः ।
तस्य लाघवमुद्वीक्ष्य तुतुषुर्देवता अपि ॥ ६-४७-१४ (४०४६८)
लब्धलक्षतया कार्ष्णेः सर्वे भीष्ममुखा रथाः ।

सत्ववन्तममन्यन्त साक्षादिव धनंजयम् ॥ ६-४७-१५ (४०४६९)
तस्य लाघवमार्गस्थमलातसदृशप्रभम् ।
दिशः पर्यपतच्चापं गाण्डीवमिव घोषवत् ॥ ६-४७-१६ (४०४७०)
तमासाद्य महावेगैर्भीष्मो नवभिराशुगैः ।
विव्याध समरे तूर्णमार्जुनिं परवीरहा ॥ ६-४७-१७ (४०४७१)
ध्वजं चास्य त्रिभिर्भल्लैश्चिच्छेद परमौजसः ।
सारथिं च त्रिभिर्बाणैराजघान यतव्रतः ॥ ६-४७-१८ (४०४७२)
तथैव कृतवर्मा च कृपः शल्यश्च मारिष ।
विद्धवा नाकम्पयत्कार्ष्णिं मैनाकमिव पर्वतम् ॥ ६-४७-१९ (४०४७३)
स तैः परिवृतः शूरो धार्तराष्ट्रैर्महारथैः ।
ववर्ष शरवर्षाणि कार्ष्णिः पञ्चरथान्प्रति ॥ ६-४७-२० (४०४७४)
ततस्तेषां सहस्राणि संवार्य शरवृष्टिभिः ।
ननाद बलवान्कार्ष्णिर्भीष्माय विसृज्यञ्शरान् ॥ ६-४७-२१ (४०४७५)
तत्रास्य सुमहद्राजन्बाह्वोर्बलमदृश्यत ।
यतमानस्य समरे भीष्ममर्दयतः शरैः ॥ ६-४७-२२ (४०४७६)
पराक्रान्तस्य तस्यैव भीष्मोऽपि प्राहिणोच्छरान् ।
स तांश्चिच्छेद समरे भीष्मचापच्युताञ्शरान् ॥ ६-४७-२३ (४०४७७)
ततो ध्वजमामोघेषुर्भीष्मस्य नवभिः शरैः ।
चिच्छेद समरे वीरस्तत उच्चुक्रुशुर्जनाः ॥ ६-४७-२४ (४०४७८)
स राजतो महास्कन्धस्तालो हेमविभूषितः ।
सौभद्रविशिखैश्छिन्नः पपात भुवि भारत ॥ ६-४७-२५ (४०४७९)
तं तु सौभद्रविशिखैः पातितं भरतर्षभ ।
दृष्ट्वा भीमो ननादोच्चैः सौभद्रमभिहर्षयन् ॥ ६-४७-२६ (४०४८०)
अथ भीष्मो महास्त्राणि दिव्यानि सुबहूनि च ।
प्रादुश्चक्रे महारौद्रे रणे तस्मिन्महाबलः ॥ ६-४७-२७ (४०४८१)
ततः शरसहस्रेण सौभद्रं प्रतितामहः ।
अवाकिरदमेयात्मा तदद्भुतमिवाभवत् ॥ ६-४७-२८ (४०४८२)
ततो दश महेष्वासाः पाण्डवानां महारथाः ।
रक्षार्थमभ्यधावन्त सौभद्रं त्वरिता रथैः ॥ ६-४७-२९ (४०४८३)
विराटः सह पुत्रेण धृष्टद्युम्नश्च पार्षतः ।
भीमश्च केकयाश्चैव सात्यकिश्च विशांपते ॥ ६-४७-३० (४०४८४)
तेषां जवेनापततां भीष्मः शान्तनवो रणे ।
पाञ्चाल्यं त्रिभिरानर्च्छत्सात्यकिं नवभिः शरैः । ६-४७-३१ (४०४८५)
पूर्णायतविसृष्टेन क्षुरेण निशितेन च ।
ध्वजमेकेन चिच्छेद भीमसेनस्य पत्रिणा ॥ ६-४७-३२ (४०४८६)
जाम्बूनदमयः श्रीमान्केसरी स नरोत्तम ।

पपात भीमसेनस्य भीष्मेण मथितो रथात् ॥ ६-४७-३३ (४०४८७)
ततो भीमस्त्रिभिर्विद्ध्वा भीष्मं शान्तनवं रणे ।
कृपमेकेन विव्याध कृतवर्माणमष्टभिः ॥ ६-४७-३४ (४०४८८)
प्रगृहीताग्रहस्तेकन वैराटिरपि दन्तिना ।
अभ्यद्रवत राजानं मद्राधिपतिमुत्तरः ॥ ६-४७-३५ (४०४८९)
तस्य वारणराजस्य जवेनापततो रथे ।
शल्यो निवारयामास वेगमप्रतिमं शरैः । ६-४७-३६ (४०४९०)
तस्य क्रुद्धः स नागेन्द्रो बृहतः साधुवाहिनः ।
पदा युगमधिष्ठाय जघान चतुरो हयान् ॥ ६-४७-३७ (४०४९१)
स हताश्वे रथे तिष्ठन्मद्राधिपतिरायसीम् ।
उत्तरान्तकरीं शक्तिं चिक्षेप भुजगोपमाम् ॥ ६-४७-३८ (४०४९२)
तया भिन्नतनुत्राणः प्रविश्य विपुलं तमः ।
स पपात गजस्कन्धात्परमुक्ताङ्कुशतोमरः ॥ ६-४७-३९ (४०४९३)
असिमादाय शल्योऽपि अवप्लुत्य रथोत्तमात् ।
तस्य वारणराजस्य चिच्छेदाथ महाकरम् ॥ ६-४७-४० (४०४९४)
भिन्नमर्मा शरशतैश्छिन्नहस्तः सवारणः ।
भीममार्तस्वरं कृत्वा पपात च ममार च ॥ ६-४७-४१ (४०४९५)
एतदीदृशकं कृत्वा मद्रराजो नराधिप ।
आरुरोह रथं तूर्णं भास्वरं कृतवर्मणः ॥ ६-४७-४२ (४०४९६)
उत्तरं वै हतं दृष्ट्वा वैराटिर्भ्रातरं तदा ।
कृतवर्मणा च सहितं दृष्ट्वा शल्यमवस्थितम् ॥ ६-४७-४३ (४०४९७)
श्वेतः क्रोधात्प्रजज्वाल हविषा हव्यवाडिव ।
स विस्फार्य महच्चापं शक्रचापोपमं बली ॥ ६-४७-४४ (४०४९८)
अभ्यधावञ्जिघांसन्वै शल्यं मद्राधिपं बली ।
महता रथवंशेन समन्तात्परिवारितः ॥ ६-४७-४५ (४०४९९)
मुञ्चन्बाणमयं वर्षं प्रायाच्छल्यरथं प्रति ।
तमापतन्तं संप्रेक्ष्य मत्तवारणविक्रमम् ॥ ६-४७-४६ (४०५००)
तावकानां रथाः सप्त समन्तात्पर्यवारयन् ।
मद्रराजमभीप्सन्तो मृत्योर्दंष्ट्रान्तरं गतम् ॥ ६-४७-४७ (४०५०१)
बृहद्बलश्च कौसल्यो जयत्सेनश्च मागधः ।
तथा रुक्मरथो राजञ्शल्यपुत्रः प्रतापवान् ॥ ६-४७-४८ (४०५०२)
विन्दानुविन्दावावान्त्यौ काम्भोजश्च सुदक्षिणः ।
बृहत्क्षत्रस्य दायादः सैन्धवश्च जयद्रथः ॥ ६-४७-४९ (४०५०३)
नानावर्णविचित्राणि धनूंषि च महात्मनाम् ।
विस्फारितानि दृश्यन्ते तोयदेष्विव विद्युतः ॥ ६-४७-५० (४०५०४)
ते तु बाणमयं वर्षं श्वेतमूर्धन्यपातयन् ।

निदाघान्तेऽनिलोद्धूता मेघा इव नगे जलम् ॥ ६-४७-५१ (४०५०५)
ततः क्रुद्धो महेष्वासः सप्तभल्लैः सुतेजनैः ।
धनूंषि तेषामाच्छिद्य ममर्द पृतनापतिः ॥ ६-४७-५२ (४०५०६)
निकृत्तान्येव तानि स्म समदृश्यन्त भारत ।
ततस्ते तु निमेषार्धात्प्रत्यपद्यन्धनूंषि च ॥ ६-४७-५३ (४०५०७)
सप्त चैव पृषत्कांश्च श्वेतस्योपर्यपातयन् ।
ततः पुनरमेयात्मा भल्लैः सप्तभिराशुगैः ।
निचकर्त महाबाहुस्तेषां चापानि धन्विनाम् ॥ ६-४७-५४ (४०५०८)
ते निकृत्तमहाचापास्त्वरमाणा महारथाः ।
रथशक्तीः परामृश्य विनेदुर्भैरवान्नवान् ॥ ६-४७-५५ (४०५०९)
अन्वयुर्भरतश्रेष्ठ सप्त श्वेतरथं प्रति ।
ततस्ता ज्वलिताः सप्त महेन्द्राशनिनिःस्वनाः ॥ ६-४७-५६ (४०५१०)
अप्राप्ताः सप्तभिर्भल्लैश्चिच्छेद परमास्त्रवित्। ६-४७-५७ब्ततः
समादाय शरं सर्वकायविदारणम् ॥ ६-४७-५७ (४०५११)
प्राहिणोद्भरतश्रेष्ठ श्वेतो रुक्मरथं प्रति ।
तस्य देहे निपतितो बाणो वज्रातिगो महान् ॥ ६-४७-५८ (४०५१२)
ततो रुक्मरथो राजन्सायकेन दृढाहतः ।
निषसाद रथोपस्थे कश्मलं चाविशन्महत् ॥ ६-४७-५९ (४०५१३)
तं विसंज्ञं विमनसं त्वरमाणस्तु सारथिः ।
अपोवाह नसंभ्रान्तः सर्वलोकस्य पश्यतः ॥ ६-४७-६० (४०५१४)
ततोऽन्यान्षट् समादाय श्वेतो हेमविभूषितान् ।
तेषां षण्मां महाबाहुर्ध्वजशीर्षण्यपातयत् ॥ ६-४७-६१ (४०५१५)
हयांश्च तेषां निर्भिद्य सारथींश्च परंतप ।
शरैश्चैतान्समाकीर्य प्रायाच्छल्यरथं प्रति ॥ ६-४७-६२ (४०५१६)
ततो हलहलाशब्दस्तव सैन्येषु भारत ।
दृष्ट्वा सेनापतिं तूर्णं यान्तं शल्यरथं प्रति ॥ ६-४७-६३ (४०५१७)
ततो भीष्मं पुरस्कृत्य तव पुत्रो महाबलः ।
वृतस्तु सर्वसैन्येन प्रायाच्छ्वेतरथं प्रति ॥ ६-४७-६४ (४०५१८)
मृत्योरास्यमनुप्राप्तं मद्रराजममोचयत् ।
ततो युद्धं समभवत्तुमुलं रोमहर्षणम् ॥ ६-४७-६५ (४०५१९)
तावकानां परेषां च व्यतिषक्तरथद्विपम् ।
सौभद्रे भीमसेन च सात्यकौ च महारथे ॥ ६-४७-६६ (४०५२०)
कैकेये च विराटे च धृष्टद्युम्ने च पार्षते ।
एतेषु नरसिंहेषु चेदिमत्स्येषु चैव ह ।
ववर्ष शरवर्षाणि कुरुवृद्धः पितामहः ॥ ॥ ६-४७-६७ (४०५२१)

इति श्रीमन्महाभारते भीष्मपर्वणि भीष्मवधपर्वणि
प्रथमदिवसयुद्धे सप्तचत्वारिंशोऽध्यायः ॥
Mahabharata - Bhishma Parva - Chapter Footnotes

६-४७-७ पिशङ्गैः पिङ्गलैः ॥
६-४७-८ कर्णिकारेण कर्णिकारद्रुमोपमेन ॥
६-४७-९ अनुरथैः पार्ष्णिगोपादिभिः ॥
६-४७-११ पूर्णयतविसृष्टेन आकर्णाकृष्टत्यक्तेन ।प्रणिहितेन
प्रेरितेन ॥
६-४७-३६ रथे रथोपरि ॥
६-४७-४३ वैराटिः शङ्खः ॥
६-४७-४७ सप्तचत्वारिंशोऽध्यायः ॥

---

भिस्मपर्व-अध्यय०४८
॥ श्रीः ॥
६.४८. अध्यायः ४८

Mahabharata - Bhishma Parva - Chapter Topics
श्वेतयुद्धम् ॥ १ ॥
भीष्मेण श्वेतवधः ॥ २ ॥

Mahabharata - Bhishma Parva - Chapter Text

६-४८-० (४०५२२)
धृतराष्ट्र उवाच। ६-४८-०क्ष् (४१०९)
एवं श्वेते महेष्वासे प्राप्ते शल्यरथं प्रति ।
कुरवः पाण्डवेयाश्च किमकुर्वत सञ्जय ॥ ६-४८-१ (४०५२३)
भीष्मः शान्तनवः किं वा तन्ममाचक्ष्व पृच्छतः । ६-४८-२ (४०५२४)
सञ्जय उवाच ।
राजञ्शतसहस्राणि ततः क्षत्रियपुङ्गवाः ॥ ६-४८-२क्ष् (४११०)
श्वेतं सेनापतिं शूरं पुरस्कृत्य महारथाः ।
राज्ञो बलं दर्शयन्तस्तव पुत्रस्य भारत ॥ ६-४८-३ (४०५२५)
शिखण्डिनं पुरस्कृत्य त्रातुमैच्छन्महारथाः ।
अभ्यवर्तन्त भीष्मस्य रथं हेमपरिष्कृतम् ॥ ६-४८-४ (४०५२६)
जिघांसन्तं युधांश्रेष्ठं तदासीत्तुमुलं महत् ।
तत्तेऽहं संप्रवक्ष्यामि महावैशसमच्युत ॥ ६-४८-५ (४०५२७)

तावकानां परेषां च यथा युद्धमवर्तत ।
तत्राकरोद्रथोपस्थाञ्शून्याञ्शान्तनवो बहून् ॥ ६-४८-६ (४०५२८)
तत्राद्भुतं महच्चक्रे शरैराच्छेद्रथोत्तमान् ।
समावृणोच्छरैरर्कमर्कतुल्यप्रतापवान् ॥ ६-४८-७ (४०५२९)
नुदन्समन्तात्समरे रविरुद्यन्यथा तमः ।
तेनाजौ प्रेषिता राजञ्शराः शतसहस्रशः ॥ ६-४८-८ (४०५३०)
क्षत्रियान्तकराः सङ्ख्ये महावेगा महाबलाः ।
शिरांसि पातयामासुर्वीराणां शतशो रणे ॥ ६-४८-९ (४०५३१)
गजान्कण्टकसन्नाहान्वज्रेणेव शिलोच्चयान् ।
रथा रथेषु संसक्ता व्यदृश्यन्त विशांपते ॥ ६-४८-१० (४०५३२)
एके रथं पर्यवहंस्तुरगाः सतुरंगमम् ।
युवानं निहतं वीरं लम्बमानं सकार्मुकम् ॥ ६-४८-११ (४०५३३)
उदीर्णाश्च हया राजन्वहनक्तस्तत्रतत्र ह ।
बद्धस्वङ्गनिषङ्गाश्च विध्वस्तशिरसो हताः ॥ ६-४८-१२ (४०५३४)
शतशः पतिता भूमौ वीरशय्यासु शेरते ।
परस्पेरण धावन्तः पतिताः पुनरुत्थिताः ॥ ६-४८-१३ (४०५३५)
उत्थाय च प्रधावन्तो द्वन्द्वयुद्धमवाप्नुवन् ।
पीडिताः पुनरन्योन्यं लुठन्तो रणमूर्धनि ॥ ६-४८-१४ (४०५३६)
सचापाः सनिषङ्गाश्च जातरूपपरिष्कृताः ।
विस्रब्धहतवीराश्च शतशः परिपीडिताः ॥ ६-४८-१५ (४०५३७)
तेनतेनाभ्यधावन्त विसृजन्तश्च भारत ।
मत्तो गजः पर्यवर्तद्धयांश्च हतसादिनः ॥ ६-४८-१६ (४०५३८)
सरथा रथिनश्चापि विमृद्नन्तः समन्ततः ।
स्यान्दनादपतत्कश्चिन्निहतोऽन्येन सायकैः ॥ ६-४८-१७ (४०५३९)
हतसारथिरप्युच्चैः पपात काष्ठवद्रथः ।
युध्यमानस्य संग्रामे व्यूढे रजसि चोत्थिते ॥ ६-४८-१८ (४०५४०)
धनुःकूजितविज्ञानं तत्रासीत्प्रतियुद्ध्यतः ।
गात्रस्पर्शेन योधानां व्यज्ञास्त परिपन्थिनम् ॥ ६-४८-१९ (४०५४१)
युद्ध्यमानं शरै राजन्सिञ्जिनीध्वजिनीरवात् ।
अन्योन्यं वीरसंशब्दो नाश्रूयत भटैः कृतः ॥ ६-४८-२० (४०५४२)
शब्दायमाने संग्रामे पटहे कर्णदारिणि ।
युध्यमानस्य संग्रामे कुर्वतः पौरुषं स्वकम् ॥ ६-४८-२१ (४०५४३)
नाश्रौषं नामगोत्राणि कीर्तनं च परस्परम् ।
भीष्मचापच्युतैर्बाणैरार्तानां युध्यतां मृधे ॥ ६-४८-२२ (४०५४४)
परस्परेषां वीराणां मनांसि समकम्पयन् ।
तस्मिन्नत्याकुले युद्धे दारुणे रोमहर्षणे ॥ ६-४८-२३ (४०५४५)

पिता पुत्रं च समरे नाभिजानाति कश्चन ।
चक्रे भग्ने युगे च्छिन्ने एकधुर्ये हये हतः ॥ ६-४८-२४ (४०५४६)
आक्षिप्तः स्यन्दनाद्वीरः समारथिरजिह्मगैः ।
एवं च समरे सर्वे वीराश्च विरथीकृताः ॥ ६-४८-२५ (४०५४७)
तेन तेन स्म दृश्यन्ते धावमानाः समंततः ।
गजो हतः शिरश्छिन्नं मर्म भिन्नं हयो हतः ॥ ६-४८-२६ (४०५४८)
अहतः कोपि नैवासीद्भीष्मे नघ्नति शात्रवान् ।
श्वेतः कुरूणामकरोत्क्षयं तस्मिन्महाहवे ॥ ६-४८-२७ (४०५४९)
राजपुत्रान्नथोदारानवधीच्छतसङ्घशः ।
चिच्छेद रथिनां बाणैः शिरांसि भरतर्षभ ॥ ६-४८-२८ (४०५५०)
साङ्गदा बाहवश्चैव धनूंषि च समंततः ।
रथेषां रथचक्राणि तूणीराणि युगानि च ॥ ६-४८-२९ (४०५५१)
छत्राणि च महार्हाणि पताकाश्च विशांपते ।
हयैघाश्च रथौघाश्च नरौघाश्चैव भारत ॥ ६-४८-३० (४०५५२)
वारणाः शतशश्चैव हताः श्वेतेन भारत ।
वयं श्वेतभयाद्भीता विहाय रथसत्तमम् ॥ ६-४८-३१ (४०५५३)
अपयातास्तथा पश्चाद्विभुं पश्याम धृष्णवः ।
शरपातमतिक्रम्य कुरवः कुरुनन्दन ॥ ६-४८-३२ (४०५५४)
भीष्मं शान्तनवं युद्धे स्थिताः पश्याम सर्वशः ।
अदीनो दीनसमये भीष्मोऽस्माकं महाहवे ॥ ६-४८-३३ (४०५५५)
एकस्तस्थौ नरव्याघ्रो गिरिर्मेरुरिवाचलः ।
आददान इव प्राणान्सविता शिशिरात्यये ॥ ६-४८-३४ (४०५५६)
गभस्तिभिरिवादित्यस्तस्थौ शरमरीचिमान् ।
स मुमोच महेष्वासः शरसङ्घाननेकशः ॥ ६-४८-३५ (४०५५७)
निघ्नन्नमित्रान्समरे वज्रपाणिरिवासुरान् ।
ते वध्यमाना भीष्मेण प्रजहुस्तं महाबलम् ॥ ६-४८-३६ (४०५५८)
स्वयूथादिव ते यूथान्मुक्तं भूमिषु दारुणम् ।
तमेवमुपलक्ष्यैको हृष्टः पुष्टः परंतप ॥ ६-४८-३७ (४०५५९)
दुर्योधनप्रिये युक्तः पाण्डवान्परिशोचयन् ।
जीवितं दुस्त्यजं त्यक्त्वा भयं च सुमहाहवे ॥ ६-४८-३८ (४०५६०)
पातयामास सैन्यानि पाण्डवानां विशांपते ।
प्रहरन्तमनीकानि पिता देवव्रतस्तव ॥ ६-४८-३९ (४०५६१)
दृष्ट्वा सेनापतिं भीष्मस्त्वरितः श्वेतमभ्ययात् ।
स भीष्मं शरजालेन महता समवाकिरत् ॥ ६-४८-४० (४०५६२)
श्वेतं चापि तथा भीष्मः शरौघैः समवाकिरत् ।
तौ वृषाविव नर्दन्तौ मत्ताविव महाद्विपौ ॥ ६-४८-४१ (४०५६३)

व्याघ्राविव सुसंरब्धावन्योन्यमभिजघ्नतुः ।
अस्त्रैरस्त्राणि संवार्य ततस्तौ पुरुषर्षभौ ॥ ६-४८-४२ (४०५६४)
भीष्मः श्वेतश्च युयुधे परस्परवधैषिणौ ।
एकाह्ना निर्दहेद्भीष्मः पाम्डवानामनीकिनीम् ॥ ६-४८-४३ (४०५६५)
शरैः परमसंक्रुद्धो यदि श्वेतो न पालयेत् ।
पितामहं ततो दृष्ट्वा श्वेतो विमुखीकृतम् ॥ ६-४८-४४ (४०५६६)
प्रहर्षं पाण्डवा जग्मुः पुत्रस्ते विमनाभवत् ।
ततो दुर्योधनः क्रुद्धः पार्थिवैः परिवारितः ॥ ६-४८-४५ (४०५६७)
ससैन्यः पाण्डवानीकमभ्यद्रवत संयुगे ।
दुर्मुखः कृतवर्मा च कृपः शल्यो विशांपतिःक ॥ ६-४८-४६ (४०५६८)
भीष्मं जुगुपुरासाद्य तव पुत्रेण नोदिताः ।
दृष्ट्वा तु पार्थिवैः सर्वैर्दुर्योधनपुरोगमैः ॥ ६-४८-४७ (४०५६९)
पाण्डवानामनीकानि वध्यमानानि संयुगे ।
श्वेतो गाङ्गेयमुत्सृज्य तव पुत्रस्य वाहिनीम् ॥ ६-४८-४८ (४०५७०)
नाशयामास वेगेन वायुर्वृक्षानिवौजसा ।
द्रावयित्वा चमूं राजन्वैराटिः क्रोधमूर्च्छितः ॥ ६-४८-४९ (४०५७१)
आपतत्सहसा भूयो यत्र भीष्मो व्यवस्थितः ।
तौ तत्रोपगतौ राजञ्शरदीप्तौ महाबलौ ॥ ६-४८-५० (४०५७२)
अयुध्येतां महात्मानौ यथोभौ वृत्रवासवौ ।
अन्योन्यं तु महाराज परस्परवधैषिणौ ॥ ६-४८-५१ (४०५७३)
निगृह्य कार्मुकं श्वेतो भीष्मं विव्याध सप्तभिः ।
पराक्रमं ततस्तस्य पराक्रम्य पराक्रमी ॥ ६-४८-५२ (४०५७४)
तरसा वारयामास मत्तो मत्तमिव द्विपम् ।
श्वेतः शान्तनवं भूयः शरैः सन्नतपर्वभिः ॥ ६-४८-५३ (४०५७५)
विव्याध पञ्चविंशत्या तदद्भुतमिवाभवत् ।
तं प्रत्यविध्यद्दशभिर्भीष्मः शान्तनवस्तदा ॥ ६-४८-५४ (४०५७६)
स विद्धस्तेन बलवान्नाकम्पत यथाऽचलः ।
वैराटिः समरे क्रुद्धो भृशमायम्य कार्मुकम् ॥ ६-४८-५५ (४०५७७)
आजघान ततो भीष्मं श्वेतः क्षत्रियनन्दनः ।
संप्रहस्य तत श्वेतः सृक्किणी परिसंलिहन् ॥ ६-४८-५६ (४०५७८)
घनुश्चिच्छेद भीष्मस्य नवभिर्दशधा शरैः ।
संधाय विशिखं चैव शरं लोमप्रवाहिनम् ॥ ६-४८-५७ (४०५७९)
उन्ममाथ ततस्तालं ध्वजशीर्षं महात्मनः ।
केतुं निपतितं दृष्ट्वा भीष्मस्य तनयास्तव ॥ ६-४८-५८ (४०५८०)
हतं भीष्ममन्यन्त श्वेतस्य वशमागतम् ।
पाण्डवाश्चापि संहृष्टा दध्मुः शङ्खान्मुदा युताः ॥ ६-४८-५९ (४०५८१)

भीष्मस्य पतितं केतुं दृष्ट्वा तालं महात्मनः ।
ततो दुर्योधनः क्रोधात्स्वमनीकमनोदयत् ॥ ६-४८-६० (४०५८२)
यत्ता भीष्मं परीप्सध्वं रक्षमाणाः समंततः ।
मा नः प्रपश्यमानानां श्वेतान्मृत्युमवाप्स्यति ॥ ६-४८-६१ (४०५८३)
भीष्मः शान्तनवः शूरस्तथा सत्यं ब्रवीमि वः ।
राज्ञस्तु वचनं श्रुत्वा त्वरमाणा महारथाः ॥ ६-४८-६२ (४०५८४)
बलेन चतुरङ्गेण गाङ्गेयप्रन्वपालयन् ।
बाह्लीकः कृतवर्मा च शलः शल्यश्च भारत ॥ ६-४८-६३ (४०५८५)
जलसन्धो विकर्णश्च चित्रसेनो विविंशतिः ।
त्वरमाणास्त्वराकाले परिवार्य समंततः ॥ ६-४८-६४ (४०५८६)
शस्त्रवृष्टिं सुतुमुलां श्वेतस्योपर्यपातयन् ।
तान्क्रुद्धो निशितैर्बाणैस्त्वरमाणो महारथः ॥ ६-४८-६५ (४०५८७)
अवारयदमेयात्मा दर्शयन्पाणिलाघवम् ।
स निवार्य तु तान्सर्वान्केसरी कुञ्जराविव ॥ ६-४८-६६ (४०५८८)
महता शरवर्षेण भीष्मस्य धनुराच्छिनत् ।
ततोऽन्यद्धनुरादाय भीष्मः शान्तनवो युधि ॥ ६-४८-६७ (४०५८९)
श्वेतं विव्याध राजेन्द्र कङ्कपत्रैः शितैः शरैः ।
ततः सेनापतिः क्रुद्धो भीष्मं बहुभिरायसैः ॥ ६-४८-६८ (४०५९०)
विव्याध समरे राजन्सर्वलोकस्य पश्यतः ।
ततः प्रव्यथितो राजा भीष्मं दृष्ट्वा निवारितम् ॥ ६-४८-६९ (४०५९१)
प्रवीरं सर्वलोकस्य श्वेतेन युधि वै तदा ।
निष्ठानकश्च सुमहांस्तव सैन्यस्य चाभवत् ॥ ६-४८-७० (४०५९२)
तं वीरं वारितं दृष्ट्वा श्वेतेन शरविक्षतम् ।
हतं श्वेतेन मन्यन्ते श्वेतस्य वशमागतम् ॥ ६-४८-७१ (४०५९३)
ततः क्रोधवशं प्राप्तः पिता देवव्रतस्तव ।
ध्वजमुन्मतितं दृष्ट्वा तां च सेनां निवारिताम् ॥ ६-४८-७२ (४०५९४)
श्वेतं प्रति महाराज व्यसृजत्सायकान्बहून् ।
तानावार्य रणे श्वेतो भीष्मस्य रथिनां वरः ॥ ६-४८-७३ (४०५९५)
धनुश्चिच्छेद भल्लेन पुनरेव पितुस्तव ।
उत्सृज्य कार्मुकं राजन्गाङ्गेयः क्रोधमूर्च्छितः ॥ ६-४८-७४ (४०५९६)
अन्यत्कार्मुकमादाय विपुलं बलवत्तरम् ।
तत्र संधाय विपुलान्भल्लान्सप्त शिलाशितान् ॥ ६-४८-७५ (४०५९७)
चतुर्भिश्च जघानाश्वाञ्श्वेतस्य पृतनापतेः ।
ध्वजं द्वाभ्यां तु चिच्छेद सप्तमेन च सारथेः ॥ ६-४८-७६ (४०५९८)
शिरश्चिच्छेद भल्लेन संक्रुद्धोऽलघुविक्रमः ।
हताश्वसूतात्सु रथादवप्लुत्य महाबलः ॥ ६-४८-७७ (४०५९९)

अमर्षवशमापन्नो व्याकुलः समपद्यत ।
विरथं रथिनां श्रेष्ठं श्वेतं दृष्ट्वा पितामहः ॥ ६-४८-७८ (४०६००)
ताडयामास निशितैः शरसङ्घैः समंततः ।
स ताड्यमानः समरे भीष्मचापच्युतैः शरैः ॥ ६-४८-७९ (४०६०१)
स्वरथे धनुरुत्सृज्य शक्तिं जग्राह काञ्चनीम् ।
ततः शक्तिं रणे श्वेतो जग्राहोग्रं महाभयाम् ॥ ६-४८-८० (४०६०२)
कालदण्डोपमां घोरां मृत्योर्जिह्वामेव श्वसन् ।
अब्रवीच्च तदा श्वेतो भीष्मं शान्तनवं रणे ॥ ६-४८-८१ (४०६०३)
तिष्ठेदानीं सुसंरब्धः पश्य मां पुरुषो भव ।
एवमुक्त्वा महेष्वासो भीष्मं युधि पराक्रमी ॥ ६-४८-८२ (४०६०४)
ततः शक्तिममेयात्मा चिक्षेप भुजगोपमाम् ।
पाण्डवार्थे पराक्रान्तस्तवानर्थं चिकीर्षुकः ॥ ६-४८-८३ (४०६०५)
हाहाकारो महानासीत्पुत्राणां ते विशांपते ।
दृष्ट्वा शक्तिं महाघोरां मृत्योर्दण्डसमप्रभाम् ॥ ६-४८-८४ (४०६०६)
श्वेतस्य करनिर्मुक्तां निर्मुक्तोरगसन्निभाम् ।
अपतत्सहसा राजन्महोल्केव नभस्तलात् ॥ ६-४८-८५ (४०६०७)
ज्वलन्तीमन्तरिक्षे तां ज्वालाभिरिव संवृताम् ।
असंभ्रान्तस्तदा राजन्पिता देवव्रतस्तव ॥ ६-४८-८६ (४०६०८)
अष्टभिर्नवभिर्भीष्मः शक्तिं चिच्छेद पत्रिभिः ।
उत्कृष्टहेमविकृतां निकृतां निशितैः शरैः ॥ ६-४८-८७ (४०६०९)
उच्चुक्रुशुस्ततः सर्वे तावका भरतर्षभ ।
शक्तिं विनिहतां दृष्ट्वा वैराटिः क्रोधमूर्च्छितः ॥ ६-४८-८८ (४०६१०)
कालोपहतचेतास्तु कर्तवक्यं नाभ्यजानत ।
क्रोधसंमूर्च्छितो राजन्वैराटिः प्रहसन्निव ॥ ६-४८-८९ (४०६११)
गदां जग्राह संहृष्टो भीष्मस्य निधनं प्रति ।
क्रोधेन रक्तनयनो दण्डपाणिरिवान्तकः ॥ ६-४८-९० (४०६१२)
भीष्मं समिदुद्राव जलौघ इव पर्वतम् ।
तस्य वेगमसंवार्यं मत्वा भीष्मः प्रतापवान् ॥ ६-४८-९१ (४०६१३)
प्रहारविप्रमोक्षार्थं सहसा धरणींगतः ।
श्वेतः क्रोधसमाविष्टो भ्रामयित्वा तु तां गदाम् ॥ ६-४८-९२ (४०६१४)
रथे भीष्मस्य चिक्षेप यथा देवो धनेश्वरः ।
तया भीष्मनिपातिन्या स रथो भस्मसात्कृतः ॥ ६-४८-९३ (४०६१५)
सध्वजः सह सूतेन साश्वः सयुगबन्धुरः ।
विरथं रथिनां श्रेष्ठं भीष्मं दृष्ट्वा रथोत्तमकाः ॥ ६-४८-९४
(४०६१६)
अभ्यधावन्त सहिताः शल्यप्रभृतयो रथाः ।

ततोऽन्यं रथमास्थाय धनुर्विस्फार्य दुर्मनाः ॥ ६-४८-९५ (४०६१७)
शनकैरभ्यायाच्छ्वेतं गाङ्गेयः प्रहसन्निव ।
एतस्मिन्नन्तरे भीष्मः शुश्राव विपुलां गिरम् ॥ ६-४८-९६ (४०६१८)
आकाशादीरितां दिव्यामात्मनो हितसंभवाम् ।
भीष्मभीष्म महाबाहो शीघ्रं यत्नं कुरुष्व वै ॥ ६-४८-९७ (४०६१९)
एष ह्यस्य जये कालो निर्दिष्टो विश्वयोनिना ।
एतच्छ्रुत्वा तु वचनं देवदूतेन भाषितम् ॥ ६-४८-९८ (४०६२०)
संप्रहृष्टमना भूत्वा वधे तस्य मनो दधे ।
विरथं रथिनां श्रेष्ठं श्वेतं दृष्ट्वा पदातिनम् ॥ ६-४८-९९ (४०६२१)
सहितास्त्वभ्यवर्तन्त परीप्सन्तो महारथाः ।
सात्यकिर्भीमसेनश्च धृष्टद्युम्नश्च पार्षतः ॥ ६-४८-१०० (४०६२२)
कैकेयो धृष्टकेतुश्च अभिमन्युश्च वीर्यवान् ।
एतानापततः सर्वान्द्रोणशल्यकृपैः सह ॥ ६-४८-१०१ (४०६२३)
अवारयदमेयात्मा वारिवेगानिवाचलः ।
स निरुद्धेषु सर्वेषु पाण्डवेषु महात्मसु ॥ ६-४८-१०२ (४०६२४)
श्वेतः खड्गमथाकृष्य भीष्मस्य धनुराच्छिनात् ।
तदपास्य धनुश्छिन्नं त्वरमाणः पितामहः ॥ ६-४८-१०३ (४०६२५)
देवदूतवचः श्रुत्वा वधे तस्य मनो दधे ।
ततः प्रचरमाणस्तु पिता देवव्रतस्तव ॥ ६-४८-१०४ (४०६२६)
अन्यत्कार्मुकमादाय त्वरमाणो महारथः ।
क्षणेन सज्यमकरोच्छक्रचापसमप्रभम् ॥ ६-४८-१०५ (४०६२७)
पिता ते भरतश्रेष्ठ श्वेतं दृष्ट्वा महारथैः ।
वृतं तं मनुजव्याघ्रैर्भीमसेनपुरोगमैःक ॥ ६-४८-१०६ (४०६२८)
अभ्यवर्तत गाङ्गेयः श्वेतं सेनापतिं द्रुतम् ।
आपतन्तं ततो भीष्मो भीमसेनं प्रतापवान् ॥ ६-४८-१०७ (४०६२९)
आजघ्ने विशिखैः षष्ट्या सेनान्यं स महारथः ।
अभिमन्युं च समरे पिता देवव्रतस्तव ॥ ६-४८-१०८ (४०६३०)
आजघ्ने भरतश्रेष्ठस्त्रिभिः सन्नतपर्वभिः ।
सात्यकिं च शतेनाजौ भरतानां पितामहः
॥ ६-४८-११०अधृष्टद्युम्नं च विंशत्या कैकेयं चापि पञ्चभिः ।
तांश्च सर्वान्महेष्वासान्पिता देवव्रतस्तव ॥ ६-४८-१०९ (४०६३१)
वारयित्वा शरैर्घोरैः श्वेतमेवाभिदुद्रुवे ।
ततः शरं मृत्युसमं भारसाधनमुत्तमम् ॥ ६-४८-१११ (४०६३२)
विकृष्य बलवान्भीष्मः समाधत्त दुरासदम् ।
ब्रह्मास्त्रेण सुसंयुक्तं तं शरं लोमवाहिनम् ॥ ६-४८-११२ (४०६३३)
ददृशुर्देवगन्धर्वाः पिशाचोरगराक्षसाः ।

स तस्य कवचं भित्वा हृदयं चामितौजसः ॥ ६-४८-११३ (४०६३४)
जगाम धरणीं बाणो महाशनिरिव ज्वलन् ।
अस्तं गच्छन्यथाऽऽदित्यः प्रभाप्रादाय सत्वरः ॥ ६-४८-११४ (४०६३५)
एवं जीवितमादाय श्वेतदेहाञ्जगाम ह ।
तं भीष्मेण नरव्याघ्रं तथा विनिहतं युधि ॥ ६-४८-११५ (४०६३६)
प्रपतन्तमपश्याम गिरेः शृङ्गमिव च्युतम् ।
अशोचन्पाण्डवास्तत्र क्षत्रियाश्च महारथाः ॥ ६-४८-११६ (४०६३७)
प्रहृष्टाश्च सुतास्तुभ्यं कुरवश्चापि सर्वशः । ६-४८-११७ब्ततो
दुःशासनो राजञ्श्वेतं दृष्ट्वा निपातितम् ॥ ६-४८-११७ (४०६३८)
वादित्रनिनदैर्घोरैर्नृत्यति स्म समंततः ।
तस्मिन्हते महेष्वासे भीष्मेणाहवशोभिना ॥ ६-४८-११८ (४०६३९)
प्रावेपन्त महेष्वासाः शिखण्डिप्रमुखा रथाः ।
ततो धनंजयो राजन्वार्ष्णेयश्चापि सर्वशः ॥ ६-४८-११९ (४०६४०)
अवहारं शनैश्चक्रुर्निहते वाहिनीपतौ ।
ततोऽवहारः सैन्यानां तव तेषां च भारत ॥ ६-४८-१२० (४०६४१)
तावकानां परेषां च नर्दतां च मुहुर्मुहुः ।
पार्था विमनसो भूत्वा न्यवर्तन्त महारथाः ।
चिन्तयन्तो वधं घोरं द्वैरथेन परंतपाः ॥ ॥ ६-४८-१२१ (४०६४२)

इति श्रीमन्महाभारते भीष्मपर्वणि भीष्मवधपर्वणि
प्रथमदिवसयुद्धे अष्टचत्वारिंशोऽध्यायः ॥

---

भिस्मपर्व-अध्यय०४९
॥ श्रीः ॥
६.४९. अध्यायः ४९

Mahabharata - Bhishma Parva - Chapter Topics
शङ्खयुद्धवर्णनम् ॥ १ ॥

Mahabharata - Bhishma Parva - Chapter Text

६-४९-० (४०६४३)
धृतराष्ट्र उवाच। ६-४९-०क्ष् (४१११)
( श्वेते सेनापतौ तात संग्रमे निहते परैः ।
किमकुर्वन्महेष्वासाः पाञ्चालाः पाण्डवैः सह ॥ ६-४९-१ (४०६४४)
सेनापतिं समाकर्ण्य श्वेतं युधि निपातितम् ।
तदर्थं यततां चापि परेषां प्रपलायिनाम् ॥ ६-४९-२ (४०६४५)

मनः प्रीणाति मे वाक्यं जयं संजय श्रृण्वतः ।
प्रत्युपायं चिन्तयन्तः सञ्जनाः प्रस्रवन्ति मे ॥ ६-४९-३ (४०६४६)
स हि वीरोऽनुरक्तश्च वृद्धः कुरुपतिस्तदा ।
कृतं वैरं सदा तेन पितुः पुत्रेण धीमता ॥ ६-४९-४ (४०६४७)
तस्योद्विगभयाच्चापि संश्रितः पाण्डवान्पुरा ।
सर्वं बलं परित्यज्य दुर्गं संश्रित्य तिष्ठति ॥ ६-४९-५ (४०६४८)
पाण्डवानां प्रतापेन दुर्गं देशं निवेश्य च ।
सपत्नान्सततं बाधन्नार्यवृत्तिमनुष्ठितः ॥ ६-४९-६ (४०६४९)
आश्चर्यं वै सदा तेषां पुरा राज्ञां सुदुर्मतिः ।
ततो युधिष्ठिरे भक्तः कथं सञ्जय सूदितः ॥) ६-४९-७ (४०६५०)
प्रक्षिप्तः संमतः क्षुद्रः पुत्रो मे पुरुषाधमः ।
न युद्धं रोचयेद्भीष्मो न चाचार्यः कथंचन ॥ ६-४९-८ (४०६५१)
न कृपो न च गान्धारी नाहं सञ्जय रोचये ।
न वासुदेवो वार्ष्णेयो धर्मराजश्च पाण्डवः ॥ ६-४९-९ (४०६५२)
न भीमो नार्जुनश्चैव न यमौ पुरुषर्षभौ ।
वार्यमाणो मया नित्यं गान्धार्या विदुरेण च ॥ ६-४९-१० (४०६५३)
जामदग्न्येन रामेण व्यासेन च महात्मना ।
दुर्योधनो युध्यमानो नित्यमेव हि सञ्जय ॥ ६-४९-११ (४०६५४)
कर्णस्य मतमास्थाय सौबलस्य च पापकृत् ।
दुःशासनस्य च तथा पाण्डवान्नान्वचिन्तयत् ॥ ६-४९-१२ (४०६५५)
तस्याहं व्यसनं घोरं मन्ये प्राप्तं तु सञ्जय ।
श्वेतस्य च विनाशेन भीष्मस्य विजयेन च ॥ ६-४९-१३ (४०६५६)
संक्रुद्धः कृष्णसहितः पार्थः किमकरोद्युधि ।
अर्जुनाद्धि भयं भूयस्तन्मे तात न शाम्यति ॥ ६-४९-१४ (४०६५७)
स हि शूरश्च कौन्तेयः क्षिप्रकारी धनंजयः ।
मन्ये शरैः शरीराणि शत्रूणां प्रमथिष्यति ॥ ६-४९-१५ (४०६५८)
ऐन्द्रिमिन्द्रानुजसमं महेन्द्रसदृशं बले ।
अमोघक्रोधसंकल्पं दृष्ट्वा वः किमभून्मनः ॥ ६-४९-१६ (४०६५९)
तथैव वेदविच्छूरो ज्वलनार्कसमद्युतिः ।
इन्द्रास्त्रविदमेयात्मा प्रपतन्समितिंजयः ॥ ६-४९-१७ (४०६६०)
वज्रसंस्पर्शरूपाणामस्त्राणां च प्रयोजकः ।
सखड्गाक्षेपहस्तस्तु घोषं चक्रे महारथः ॥ ६-४९-१८ (४०६६१)
स सञ्जय महाप्राज्ञो द्रुपदस्यात्मजो बली ।
धृष्टद्युम्नः किमकरोच्छ्वेते युधि निपातिते ॥ ६-४९-१९ (४०६६२)
पुरा चैवापराधेन वधेन च चमूपतेः ।
मन्ये मनः प्रजज्वाल पाण्डवानां महात्मनाम् ॥ ६-४९-२० (४०६६३)

तेषां क्रोधं चिन्तयंस्तु अहःसु च निशासु च ।
न शान्तिमधिगच्छामि दुर्योदनकृतेन हि ।
कथं चाभून्महायुद्धं सर्वमाचक्ष्व सञ्जय ॥ ६-४९-२१ (४०६६४)
सञ्जय उवाच। ६-४९-२२क्ष् (४११२)
श्रृणु राजन्स्थिरो भूत्वा तवापनयनो महान् ।
न च दुर्योधने दोषमिमामाधातुमर्हसि ॥ ६-४९-२२ (४०६६५)
गतोदके सेतुबन्धो यादृक्तादृङ्भतिस्तव ।
संदीप्ते भवने यद्वत्कूपस्य खननं तथा ॥ ६-४९-२३ (४०६६६)
गतपूर्वाह्णभूयिष्ठे तस्मिन्नहनि दारुणे ।
तावकानां परेषां च पुनर्युद्धमवर्तत ॥ ६-४९-२४ (४०६६७)
श्वेतं तु निहतं दृष्ट्वा विराटस्य चमूपतिम् ।
कृतवर्मणा च सहितं दृष्ट्वा शल्यमवस्थितम् ॥ ६-४९-२५ (४०६६८)
शङ्खः क्रोधात्प्रजज्वाल हविषा हव्यवाडिव ।
स विस्फार्य महच्चापं शक्रचापोपमं बली ॥ ६-४९-२६ (४०६६९)
अभ्यधावज्जिघांसन्वै शल्यं मद्राधिपं युधि ।
महता रथसङ्घेन समन्तात्परिरक्षितः ॥ ६-४९-२७ (४०६७०)
सृजन्बाणमयं वर्षं प्रायाच्छल्यरथं प्रति ।
तमापतन्तं संप्रेक्ष्य मत्तवारणविक्रमम् ॥ ६-४९-२८ (४०६७१)
तावकानां रथाः सप्त समन्तात्पर्यवारयन् ।
मद्रराजं परीप्सन्तो मृत्योर्दंष्ट्रान्तरं गतम् ॥ ६-४९-२९ (४०६७२)
बृहद्बलश्च कौसल्यो जयत्सेनश्च मागधः ।
तथा रुक्मरथो राजन्पुत्रः शल्यस्य मानितः ॥ ६-४९-३० (४०६७३)
विन्दानुविन्दावावन्त्यौ काम्भोजश्च सुदक्षिणःक ।
बृहत्क्षत्रस्य दायादः सैन्धवश्च जयद्रथः ॥ ६-४९-३१ (४०६७४)
नानाधातुविचित्राणि कार्मुकाणि महात्मनाम् ।
विस्फारितान्यदृश्यन्त तोयदेष्विव विद्युतः ॥ ६-४९-३२ (४०६७५)
ते तु बाणमयं वर्षं शङ्खमूर्ध्नि न्यपातयन् ।
निदाघान्तेऽनिलोद्धूता मेघा इव नगे जलम् ॥ ६-४९-३३ (४०६७६)
ततः क्रुद्धो महेष्वासः सप्तभल्लैः सुतेजनैः ।
धनूंषि तेषामाच्छिद्य ननर्द पृतनापतिः ॥ ६-४९-३४ (४०६७७)
ततो भीष्मो महाबाहुर्विनद्य जलदो यथा ।
तालमात्रं धनुर्गृह्य शङ्खमभ्यद्रवद्रणे ॥ ६-४९-३५ (४०६७८)
तमुद्यन्तमुदीक्ष्याथ महेष्वासं महाबलम् ।
संत्रस्ता पाण्डवी सेना वातवेगहतेव नौः ॥ ६-४९-३६ (४०६७९)
ततोऽर्जुनः संत्वरितः शङ्खस्यासीत्पुरःसरः ।
भीष्माद्रक्ष्योऽयमद्येति ततो युद्धमवर्तत ॥ ६-४९-३७ (४०६८०)

हाहाकारो महानासीद्योधानां युधि युध्यताम् ।
तेजस्तेजसि संपृक्तमित्येवं विस्मयं ययुः ॥ ६-४९-३८ (४०६८१)
अथ शल्यो गदापाणिरवतीर्य महारथात् ।
शङ्खस्य चतुरो वाहानहनद्भरतर्षभ ॥ ६-४९-३९ (४०६८२)
स हताश्वाद्रथात्तूर्णं खड्गमादाय विद्रुतः ।
बीभत्सोश्च रथं प्राप्य पुनः शान्तिमविन्दत ॥ ६-४९-४० (४०६८३)
ततो भीष्मरथात्तूर्णमुत्पतन्ति पतत्रिणः ।
यैरन्तरीक्षं भूमिश्च सर्वतः समवस्तृता ॥ ६-४९-४१ (४०६८४)
पञ्चालानथ मत्स्यांश्च केकयांश्च प्रभद्रकान् ।
भीष्मः प्रहरतां श्रेष्ठः पातयामास पत्रिभिः ॥ ६-४९-४२ (४०६८५)
उत्सृज्य समरे राजन्पाण्डवं सव्यसाचिनम् ।
अभ्यद्रवत पाञ्चाल्यं द्रुपदं सेनया वृतम् ॥ ६-४९-४३ (४०६८६)
प्रियं संबन्धिनं राजञ्शरानवकिरन्बहून् ।
अग्निनेव प्रदग्धानि वनानि शिशिरात्यये ॥ ६-४९-४४ (४०६८७)
शरदग्धान्यदृश्यन्त सैन्यानि द्रुपदस्य ह ।
अत्यतिष्ठद्रणे भीष्मो विधूम इव पावकः ॥ ६-४९-४५ (४०६८८)
मध्यन्दिने यथाऽऽदित्यं तपन्तमिव तेजसा ।
न शेकुः पाण्डवेयस्य योधा भीष्मं निरीक्षितुम् ॥ ६-४९-४६ (४०६८९)
वीक्षांचक्रुः समंतात्ते पाण्डवा भयपीडिताः ।
त्रातारं नाध्यगच्छन्त गावः शीतार्दिता इव ॥ ६-४९-४७ (४०६९०)
सा तु यौधिष्ठिरी सेना गाङ्गेयशरपीडिता ।
सिंहेनेव विनिर्भिन्ना शुक्ला गौरिव गोपतेः ॥ ६-४९-४८ (४०६९१)
हते विप्रुद्रुते सैन्ये निरुत्साहे विमर्दिते ।
हाहाकारो महानासीत्पाण्डुसैन्येषु भारत ॥ ६-४९-४९ (४०६९२)
ततो भीष्मः शान्तनवो नित्यं मण्डलकार्मुकः ।
मुमोच बाणान्दीप्ताग्रानहीनाशीविषानिव ॥ ६-४९-५० (४०६९३)
शरैरेकायनीकुर्वन्दिशः सर्वा यतव्रतः ।
जघान पाण्डवरथानादिश्यादिश्य भारत ॥ ६-४९-५१ (४०६९४)
ततः सैन्येषु भग्नेषु मथितेषु च सर्वशः ।
प्राप्ते चास्तं दिनकरे न प्राज्ञायत किंचन ॥ ६-४९-५२ (४०६९५)
भीष्मं च समुदीर्यन्तं दृष्ट्वा पार्था महाहवे ।
अवहारमकुर्वन्त सैन्यानां भरतर्षभ ॥ ॥ ६-४९-५३ (४०६९६)

इति श्रीमन्महाभारते भीष्मपर्वणि भीष्मवधपर्वणि
प्रथमदिवसयुद्धे एकोनपञ्चाशोऽध्यायः ॥ ॥ इति
प्रथमदिवसयुद्धम् ॥

Mahabharata - Bhishma Parva - Chapter Footnotes

६-४९-५१ एकायनीकुर्वन् एकमार्गाः कुर्वन् ॥

---

भिस्मपर्व-अध्यय०५०
॥ श्रीः ॥
६.५०. अध्यायः ५०

Mahabharata - Bhishma Parva - Chapter Topics
धृष्टद्युम्नेन क्रौञ्चव्यूहनिर्माणम् ॥ १ ॥

Mahabharata - Bhishma Parva - Chapter Text

६-५०-० (४०६९७)
सञ्जय उवाच। ६-५०-०क्ष् (४११३)
कृतेऽवहारे सैन्यानां प्रथमे भरतर्षभ ।
भीष्मे च युद्धसंरब्धे हृष्टे दुर्योधने तथा ॥ ६-५०-१ (४०६९८)
धर्मराजस्ततस्तूर्णमभिगम्य जनार्दनम् ।
भ्रातृभिः सहितः सर्वैः सर्वैश्चैव जनेश्वरैः ॥ ६-५०-२ (४०६९९)
शुचा परमया युक्तश्चिन्तयानः पराजयम् ।
वार्ष्णेयमब्रवीद्रजान्दृष्ट्वा भीष्मस्य विक्रमम् ॥ ६-५०-३ (४०७००)
कृष्ण पश्य महेष्वासं भीष्मं भीमपराक्रमम् ।
शरैर्दहन्तं सैन्यं मे ग्रीष्मे कक्षमिवानलम् ॥ ६-५०-४ (४०७०१)
कथमेनं महात्मानं शक्ष्यामः प्रतिवीक्षितुम् ।
लेलिह्यमानं सैन्यं मे हविष्मन्तमिवानलम् ॥ ६-५०-५ (४०७०२)
एतं हि पुरुषव्याघ्रं धनुष्मन्तं महाबलम् ।
दृष्ट्वा विप्रद्रुतं सैन्यं समरे मार्गणाहतम् ॥ ६-५०-६ (४०७०३)
शक्यो जेतुं यमः क्रुद्धो वज्रपाणिश्च संयुगे ।
वरुणः पाशभृद्वापि कुबेरो वा गदाधरः ॥ ६-५०-७ (४०७०४)
न तु भीष्मो महाजेताः शक्यो जेतुं महाबलः ।
सोऽहमेवं गते मग्नो भीष्मागाधजलेऽप्लुवे ॥ ६-५०-८ (४०७०५)
आत्मनो बुद्धिदौर्बल्याद्भीष्ममासाद्य केशव ।
वनं यात्सामि वार्ष्णेय श्रेयो मे तत्र जीवितुम् ॥ ६-५०-९ (४०७०६)
न त्वेतान्पृथिवीपालान्दातुं भीष्माय मृत्यवे ।
क्षपयिष्यति सेनां मे कृष्ण भीष्मो महास्त्रवित् ॥ ६-५०-१० (४०७०७)
यथाऽनलं प्रज्वलितं पतङ्गाः समभिद्रुताः ।

विनाशायोपगच्छन्ति तथा मे सनिको जनः ॥ ६-५०-११ (४०७०८)
क्षयं नीतोऽस्मि वार्ष्णेय राज्यहेतोः पराक्रमी ।
भ्रातश्चैव मे वीराः कर्शिताः शरपीडिताः ॥ ६-५०-१२ (४०७०९)
मत्कृते भ्रातृहार्देन राज्याद्भ्रष्टास्तथा सुखात् ।
जीवितं बहुमन्येऽहं जीवितं ह्यद्य दुर्लभम् ॥ ६-५०-१३ (४०७१०)
जीवितस्य च शेषेण तपस्तप्स्यामि दुश्चरम् ।
न घातयिष्यामि रणे मित्राणीमानि केशव ॥ ६-५०-१४ (४०७११)
रथान्मे बहुसाहस्रान्दिव्यैरस्त्रैर्महाबलः ।
घातयत्यनिशं भीष्मः प्रवराणां प्रहारिणाम् ॥ ६-५०-१५ (४०७१२)
किं नु कृत्वा हितं मे स्याद्ब्रूहि माधव माचिरम् ।
मध्यस्थमिव पश्यामि समरे सव्यसाचिनम् ॥ ६-५०-१६ (४०७१३)
एको भीमः परं शक्त्या युध्यत्येव महाभुजः ।
केवलं बाहुवीर्येण क्षत्रधर्ममनुस्मरन् ॥ ६-५०-१७ (४०७१४)
गदया वीरघातिन्या यथोत्साहं महामनाः ।
करोत्यसुकरं कर्म रथाश्वनरपङ्क्तिषु ॥ ६-५०-१८ (४०७१५)
नालमेष क्षयं कर्तुं परसैन्यस्य मारिष ।
आर्जवेनैव युद्धेन वीर वर्षशतैरपि ॥ ६-५०-१९ (४०७१६)
एकोऽस्त्रवित्सखा तेऽयं सोऽप्यस्मान्समुपेक्षते ।
निर्दह्यमानान्भीष्मेण द्रोणेन च महात्मना ॥ ६-५०-२० (४०७१७)
दिव्यान्यस्त्राणि भीष्मस्य द्रोणस्य च महात्मनः ।
धक्ष्यन्ति क्षत्रियान्सर्वान्प्रयुक्तानि पुनः पुनः ॥ ६-५०-२१ (४०७१८)
कृष्ण भीष्मः सुसंरब्धः सहितः सर्वपार्थिवैः ।
क्षपयिष्यति नो नूनं यादृशोऽस्य पराक्रमः ॥ ६-५०-२२ (४०७१९)
स त्वं पश्य महाभाग योगेश्वर महारथम् ।
भीष्मं यः शमयेत्संख्ये दावाग्निं जलदो यथा ॥ ६-५०-२३ (४०७२०)
तव प्रसादाद्गोविन्द पाण्डवा निहतद्विषः ।
स्वराज्यमनुसंप्राप्ता मोदिष्यन्ते सबान्धवाः ॥ ६-५०-२४ (४०७२१)
एवमुक्त्वा ततः पार्थो ध्यान्नास्ते महामनाः ।
चिरमन्तर्मना भूत्वा शोकोपहतचेतनः ॥ ६-५०-२५ (४०७२२)
शोकार्तं तमथो ज्ञात्वा दुःखोपहतचेतसम् ।
अब्रवीत्तत्र गोविन्दो हर्षयन्सर्वपाण्डवान् ॥ ६-५०-२७अमाशुचो
भरतश्रेष्ट न त्वं शोचितुमर्हसि ।
यस्य ते भ्रातरः शूराः सर्वलोकेषु धन्विनःक ॥ ६-५०-२६ (४०७२३)
अहं च प्रियकृद्राजन्सात्यकिश्च महायशाः ।
विराटद्रुपदौ चेमौ धृष्टद्युम्नश्च पार्षतः ॥ ६-५०-२८ (४०७२४)
तथैव सबलाश्चेमे राजानो राजसत्तम ।

त्वत्प्रसादं प्रतीक्षन्ते त्वद्भक्ताश्च विशांपते ॥ ६-५०-२९ (४०७२५)
एष ते पार्षतो नित्यं हितकामः प्रिये रतः ।
सैनापत्यमनुप्राप्तो धृष्टद्युम्नो महाबलः ॥ ६-५०-३० (४०७२६)
शिखण्डी च महाबाहो भीष्मस्य निधनं किल ।
एतच्छ्रुत्वा ततो धर्मो धृष्टद्युम्नं महारथम् ।
अब्रवीत्समितौ तस्यां वासुदेवस्य श्रृण्वतः ॥ ६-५०-३१ (४०७२७)
धृष्टद्युम्न निबोधेदं यत्त्वां वक्ष्यामि मारिष ।
नातिक्रम्यं भवेत्तच्च वचनं मम भाषितम् ॥ ६-५०-३२ (४०७२८)
भवान्सेनापतिर्मह्यं वासुदेवेन संमितः ।
कार्तिकेयो यथा नित्यं देवानामभवत्पुरा ॥ ६-५०-३३ (४०७२९)
तथा त्वमपि पाण्डूनां सेनानीः पुरुषर्षभ ।
स त्वं पुरुषशार्दूल विक्रम्य जहि कौरवान् ॥ ६-५०-३४ (४०७३०)
अहं च तेऽनुयास्यामि भीमः कृष्णश्च मारिष ।
माद्रीपुत्रौ च सहितौ द्रौपदेयाश्च दंशिताः ॥ ६-५०-३५ (४०७३१)
ये चान्ये पृथिवीपालाः प्रधानाः पुरुषर्षभ ।
तत उद्धर्षयन्सर्वान्धृष्टद्युम्नोऽभ्यभाषत ॥ ६-५०-३६ (४०७३२)
अहं द्रोणान्तकः पार्थ विहितः शम्भुना पुरा ।
रणे भीष्मं कृपं द्रोणं तथा शल्यं जयद्रथम् ॥ ६-५०-३७ (४०७३३)
सर्वानद्य रणे दृप्तान्प्रतियोत्स्यामि पार्थिव ।
अथोत्क्रुष्टं महेष्वासैः पाण्डवैर्युद्धदुर्मदैः ॥ ६-५०-३८ (४०७३४)
समुद्यते पार्थिवेन्द्रे पार्षते शत्रुसूदने ।
तमब्रवीत्ततः पार्थः पार्षतं पृतनापतिम् ॥ ६-५०-३९ (४०७३५)
व्यूहः क्रौञ्चारुणो नाम सर्वशत्रुनिबर्हणः ।
यं बृहस्पतिरिन्द्राय तदा देवासुरेऽब्रवीत् ॥ ६-५०-४० (४०७३६)
तं यथावत्प्रतिव्यूहं परानीकविनाशनम् ।
अदृष्टपूर्वं राजानः पश्यन्तु कुरुभिः सह ॥ ६-५०-४१ (४०७३७)
यथोक्तः स नृदेवेन विष्णुर्वज्रभृता यथा ।
प्रभाते सर्वसैन्यानामग्रे चक्रे धनञ्जयम् ॥ ६-५०-४२ (४०७३८)
आदित्यपथगः केतुस्तस्याद्भुतमनोरमः ।
शासनात्पुरुहूतस्य निर्मितो विश्वकर्मणा ॥ ६-५०-४३ (४०७३९)
इन्द्रायुधसवर्णाभिः पताकाभिरलङ्कृतः । ६-५०-४४बाकाशग इवाकाशे
गन्धर्वनगरोपमः ॥ ६-५०-४४ (४०७४०)
नृत्यमान इवाभाति रथचर्यासु मारिष ।
तेन रत्नवता पार्थः स च गाण्डीवधन्वना ॥ ६-५०-४५ (४०७४१)
बभूव परमोपेतः सुमेरुरिव भानुना ।
शिरोभूद्द्रुपदो राजा महत्या सेनया वृतः ॥ ६-५०-४६ (४०७४२)

कुन्तिभोजश्च चैद्यश्च चक्षुर्भ्यां तौ जनेश्वरौ ।
दाशार्णकाः प्रभद्राश्च दाशेरकगणैः सह ॥ ६-५०-४७ (४०७४३)
अनूपकाः किराताश्च ग्रीवायां भरतर्षभ ।
पटच्चरैश्च पौण्ड्रैश्च राजन्पौरवकैस्तथा ॥ ६-५०-४८ (४०७४४)
निषादैः सहितश्चापि पृष्ठमासीद्युधिष्ठिरः ।
पक्षौ तु भीमसेनश्च धृष्टद्युम्नश्च पार्षतः ॥ ६-५०-४९ (४०७४५)
द्रौपदेयाभिमन्युश्च सात्यकिश्च महारथः ।
पिशाचा दारदाश्चैव पुण्ड्राः कुण्डीविषैः सह ॥ ६-५०-५० (४०७४६)
मारुता धेनुकाश्चैव तंगमाः परतंगणाः ।
बाह्लिकास्तित्तिराश्चैव चोलाः पाण्ड्याश्च भारत ॥ ६-५०-५१ (४०७४७)
एते जनपदा राजन्दक्षिणं पक्षमाश्रिताः ।
अग्निवेशास्तुहुण्डाश्च मालवा दानभारयः ॥ ६-५०-५२ (४०७४८)
शबरा उद्गसाश्चैव वत्साश्च सह नाकुलैः ।
नकुलः सहदेवश्च वामं पक्षं समाश्रिताः ॥ ६-५०-५३ (४०७४९)
रथानामयुतं पक्षौ शिरस्तु नियुतं तथा ।
पृष्ठमर्बुदमेवासीत्सहस्रामि च विंशतिः ॥ ६-५०-५४ (४०७५०)
ग्रीवायां नियुतं चापि सहस्रामि च सप्ततिः ।
पक्षकोटिप्रपक्षेषु पक्षान्तेषु च वारणाः ॥ ६-५०-५५ (४०७५१)
जग्मुः परिवृता राजंश्चलन्त इव पर्वताः ।
जघनं पालयामास विराटः सह केकयैः ॥ ६-५०-५६ (४०७५२)
काशिराजश्च शैब्यश्च रथानामयुतैस्त्रिभिः ।
एवमेनं महाव्यूहं व्यूह्य भारत पाण्डवाः ॥ ६-५०-५७ (४०७५३)
सूर्योधयं त इच्छतः स्थिता युद्धाय दंशिताः ।
तेषामादित्यवर्माणि विमलानि महान्ति च ।
श्वेतच्छत्राण्यशोभन्त वारणेषु रथेषु च ॥ ॥ ६-५०-५८ (४०७५४)

इति श्रीमन्महाभारते भीष्मपर्वणि भीष्मवधपर्वणि
द्वितीयदिवसयुद्धे पञ्चाशोऽध्यायः ॥

Mahabharata - Bhishma Parva - Chapter Footnotes

६-५०-१९ आर्जवेन अकुटिलेन दिव्यास्त्रमायाहीनेन ॥
६-५०-२५ अन्तर्मनाः विमनाः ॥
६-५०-३१ निधनं निधनहेतुः ॥
६-५०-३२ भाषितमुक्तम् ॥
६-५०-३३ मह्यं मम ॥
६-५०-४४ आकाशग इव पक्षीव ॥

६-५०-४५ रथचर्यासु रथवर्त्मसु ॥
६-५०-४६ परमोपेतः परा उत्कृष्टा चासौ मा लक्ष्मीश्चेति परमा तया उपेतः ॥

---

भिस्मपर्व-अध्यय०५१
॥ श्रीः ॥
६.५१. अध्यायः ५१

Mahabharata - Bhishma Parva - Chapter Topics
भीष्मादिभिः प्रतिव्यूहरचना ॥ १ ॥

Mahabharata - Bhishma Parva - Chapter Text

६-५१-० (४०७५५)
सञ्जय उवाच। ६-५१-०क्ष् (४११४)
क्रौञ्चं दृष्ट्वा ततो व्यूहमभेद्यं तनयस्तव ।
रक्षमाणं महाघोरं पार्थेनामिततेजसा ॥ ६-५१-१ (४०७५६)
आचार्यमुपसंगम्य कृपं शल्यं च पार्थिव ।
सौमदत्तिं विकर्णं च सोऽश्वत्थामानमेव च ॥ ६-५१-२ (४०७५७)
दुःशाकसनादीन्भ्रातॄंश्च सर्वनेव च भारत ।
अन्यांश्च सुबहूञ्शूरान्युद्धाय समुपागतान् ॥ ६-५१-३ (४०७५८)
प्राहेदं वचनं काले हर्षयंस्तनयस्तव ।
नानाशस्त्रप्रहरणाः सर्वे युद्धविशारदाः ॥ ६-५१-४ (४०७५९)
एकैकशः समर्था हि यूयं सर्वे महारथाः ।
पाण्डुपुत्रान्रणे हन्तुं ससैन्यान्किमु संहताः ॥ ६-५१-५ (४०७६०)
अपर्याप्तं तदस्माकं बलं भीष्माभिरक्षितम् ।
पर्याप्तमिदमेतेषां बलं भीमाभिरक्षितम् ॥ ६-५१-६ (४०७६१)
संस्थानाः शूरसेनाश्च वेत्रिकाः कुकुरास्तथा ।
आरोचकास्त्रिगर्ताश्च मद्रका यवनास्तथा ॥ ६-५१-७ (४०७६२)
शत्रुंजयेन सहितास्तथा दुःशासनेन च ।
विकर्णेन च वीरेण तथा नन्दोपनन्दकैः ॥ ६-५१-८ (४०७६३)
चित्रसेनेन सहिताः सहिताः पारिभद्रकैः ।
भीष्ममेवाभिरक्षन्तु सह सैन्यपुरस्कृताः ॥ ६-५१-९ (४०७६४)
ततो भीष्मश्च द्रोणश्च तव पुत्राश्च मारिष ।
अव्यूहन्त महाव्यूहं पाण्डूनां प्रतिबाधकम् ॥ ६-५१-१० (४०७६५)
भीष्मः सैन्येन महता समनन्तात्परिवारितः ।

ययौ प्रकर्षन्महतीं वाहिनीं सरराडिव ॥ ६-५१-११ (४०७६६)
तमन्वायान्महेष्वासो भारद्वाजः प्रतापवान् ।
कुन्तलैश्च दशार्णैश्च मागधैश्च विशांपते ॥ ६-५१-१२ (४०७६७)
विदमर्भैर्मेकलैश्चैव कर्णप्रावरणैरपि ।
सहिताः सर्वसैन्येन भीष्ममहावशोभिनम् ॥ ६-५१-१३ (४०७६८)
गान्धाराः सिन्धुसौवीराः शिबयोऽथ वसातयः ।
शकुनिश्च स्वसैन्येन भीष्ममाहवशोभिनम् ॥ ६-५१-१४ (४०७६९)
ततो दुर्योधनो राजा सहितः सर्वसोदरैः ।
अश्वातर्केर्विकर्णैश्च तथा चाम्बष्ठकोसलैः ॥ ६-५१-१५ (४०७७०)
दरदैश्च शकैश्चैव तथा क्षुद्रकमालवैः ।
अभ्यरक्षत संहृष्टः सौबलेयस्य वाहिनीम् ॥ ६-५१-१६ (४०७७१)
भूरिश्रवाः शलः शल्यो भगदत्तश्च मारिषः ।
विन्दानुविन्दावावन्त्यौ वामं पार्श्वमपालयन् ॥ ६-५१-१७ (४०७७२)
सौमदत्तिः सुशर्मा च काम्भोजश्च सुदक्षिणः ।
श्रुतायुश्चाच्युतायुश्च दक्षिणं पक्षमास्थिताः ॥ ६-५१-१८ (४०७७३)
अश्वत्थामा कृपश्चैव कृतवर्मा च सात्वतः ।
महत्या सेनया सार्धं सेनापृष्टे व्यवस्थिताः ॥ ६-५१-१९ (४०७७४)
पृष्ठगोपास्तु तस्यासन्नानादेश्या
जनेश्वराः। ६-५१-२०ब्केतुमान्वसुदानश्च पुत्रः काश्यस्य चाभिभूः ॥
६-५१-२० (४०७७५)
ततस्ते तावकाः सर्वे हृष्टा युद्धाय भारत ।
दध्मुः शङ्खान्मुदा युक्ताः सिंहनादांस्तथोन्नदन् ॥ ६-५१-२१ (४०७७६)
तेषां श्रुत्वा तु हृष्टानां वृद्धः कुरुपितामहः ।
सिंहनादं विनद्योच्चैः शङ्खं दध्मौ प्रतापवान् ॥ ६-५१-२२ (४०७७७)
ततः शङ्खाश्च भेर्यश्च पेश्यश्च विविधाः परैः ।
आनकाश्चाभ्यहन्यन्त स शब्दस्तुमुलोऽभवत् ॥ ६-५१-२३ (४०७७८)
ततः श्वेतैर्हयैर्युक्ते महति स्यन्दने स्थितौ ।
प्रदध्मतुः शङ्खवरौ हेमरत्नपरिष्कृतौ ॥ ६-५१-२४ (४०७७९)
पाञ्चजन्यं हृषीकेशो देवदत्तं धनंजयः ।
पौण्ड्रं दध्मौ महाशङ्खं भीमकर्मा वृकोदरः ॥ ६-५१-२५ (४०७८०)
अन्तविजयं राजा कुन्तीपुत्रो युधिष्ठिरः ।
नकुलः सहदेवश्च सुघोषमणिपुष्पकौ ॥ ६-५१-२६ (४०७८१)
काशिराजश्च शैब्यश्च शिखण्डी च महारथः ।
धृष्टद्युम्नो विराटश्च सात्यकिश्च महारथः ॥ ६-५१-२७ (४०७८२)
पाञ्चाल्याश्च महेष्वासा द्रौपद्याः पञ्च चात्मजाः ।
सर्वे दध्युर्महाशङ्खान्सिंहनादांश्च नेदिरे ॥ ६-५१-२८ (४०७८३)

स घोषः सुमहांस्तत्र वीरैस्तैः समुदीरितः ।
नभश्च पृथिवीं चैव तुमुलो व्यनुनादयन् ॥ ६-५१-२९ (४०७८४)
एवमेते महाराज प्रहृष्टाः कुरुपाण्डवाः ।
पुनर्युद्धाय संजग्मुस्तापयानाः परस्परम् ॥ ॥ ६-५१-३० (४०७८५)

इति श्रीमन्महाभारते भीष्मपर्वणि भीष्मवधपर्वणि
द्वितीयदिवसयुद्धे एकपञ्चाशोऽध्यायः ॥
Mahabharata - Bhishma Parva - Chapter Footnotes

६-५१-६ अपर्याप्तमपरिमेयम् ॥
६-५१-२० अभिभवत्यभिभूः ॥

---

भिस्मपर्व-अध्यय०५२
॥ श्रीः ॥
६.५२. अध्यायः ५२

Mahabharata - Bhishma Parva - Chapter Topics
भीष्मार्जुनयोर्युद्धम् ॥ १ ॥

Mahabharata - Bhishma Parva - Chapter Text

६-५२-० (४०७८६)
धृतराष्ट्र उवाच। ६-५२-०क्ष् (४११५)
एवं व्यूढेष्वनीकेषु मामकेष्वितरेषु च ।
कथं प्रहरतां श्रेष्ठाः संप्रहारं प्रचक्रिरे ॥ ६-५२-१ (४०७८७)
सञ्जय उवाच। ६-५२-२क्ष् (४११६)
तथा व्यूढेष्वनीकेषु सन्नद्धरुचिरध्वजाः ।
ग्तावकाः पाण्डवैः सार्धं यथाऽयुध्यन्त तच्छृणु।'
अपारमिव संदृश्य सागरप्रतिमं बलम् ॥ ६-५२-२ (४०७८८)
तेषां मध्ये स्थितो राजन्पुत्रो दुर्योधनस्तव ।
अब्रवीत्तावकान्सर्वान्युद्ध्यध्वमिति दंशिताः ॥ ६-५२-३ (४०७८९)
ते मनः क्रूरमाधाय समभित्यक्तजीविताः ।
पाण्डवानभ्यवर्तन्त सर्व एवोच्छ्रितध्वजाः ॥ ६-५२-४ (४०७९०)
ततो युद्धं समभवत्तुमुलं रोमहर्षणम् ।
तावकानां परेषां च व्यतिषक्तरथद्विपम् ॥ ६-५२-५ (४०७९१)
मुक्तास्तु रथिभिर्बाणा रुक्मपुङ्खाः सुतेजिताःक ।

सन्निपेतुरकुण्ठाग्रा नागेषु च हयेषु च ॥ ६-५२-६ (४०७९२)
तथा प्रवृत्ते संग्रामे धनुरुद्यम्य दंशितः ।
अभिपत्य महाबाहुर्भीष्मो भीमपराक्रमः ॥ ६-५२-७ (४०७९३)
सौभद्रे भीमसेने च सात्यकौ च महारथे ।
कैकेये च विराटे च धृष्टद्युम्ने च पार्षते ॥ ६-५२-८ (४०७९४)
एतेषु नरवीरेषु चेदिमत्स्येषु चाभिभूः ।
ववर्ष शरवर्षाणि वृद्धः कुरुपितामहः ॥ ६-५२-९ (४०७९५)
अभिद्यत ततो व्यूहस्तस्मिन्वीरसमागमे ।
सर्वेषामेव सैन्यानामासीद्व्यतिकरो महान् ॥ ६-५२-१० (४०७९६)
सादिनो ध्वजिनश्चैव हतप्रवरवाजिनः ।
विप्रद्रुतरथानीकाः समपद्यन्त पाण्डवाः ॥ ६-५२-११ (४०७९७)
अर्जुनस्तु नरव्याघ्रो दृष्ट्वा भीष्मं महारथम् ।
वार्ष्णेयमब्रवीत्क्रुद्धो याहि यत्र पितामहः ॥ ६-५२-१२ (४०७९८)
एष भीष्मः सुसंक्रुद्धो वार्ष्णेय मम वाहिनीम् ।
नाशयिष्यति सुव्यक्तं दुर्योधनहिते रतः ॥ ६-५२-१३ (४०७९९)
एष द्रोणः कृपः शल्यो विकर्णश्च जनार्दन ।
धार्तराष्ट्राश्च सहिता दुर्योधनपुरोगमाः ॥ ६-५२-१४ (४०८००)
पाञ्चालान्निहनिष्यन्ति रक्षिता दृढधन्वना ।
सोऽहं भीष्मं वधिष्यामि सैन्यहेतोर्जनार्दन ॥ ६-५२-१५ (४०८०१)
तमब्रवीद्वासुदेवो यत्तो भव धनंजय ।
एष त्वां प्रापयिष्यामि पितामहरथं प्रति ॥ ६-५२-१६ (४०८०२)
एवमुक्त्वा ततः शौरी रथं तं लोकविश्रुतम् ।
प्रापयामास भीष्मस्य रथं प्रति जनेश्वर ॥ ६-५२-१७ (४०८०३)
चलद्बहुपातकेन बलाकावर्णवाजिना ।
समुच्छ्रितमहाभीमनदद्वानरकेतुना ॥ ६-५२-१८ (४०८०४)
महता मेघनादेन रथेनामिततेजसा ।
विनिघ्नन्कौरवानीकं शूरसेनांश्च पाण्डवः ॥ ६-५२-१९ (४०८०५)
प्रायाच्छरणदः शीघ्रं सुहृदां हर्षवर्धनः ।
तमापतन्तं वेगेन प्रभिन्नमिव वारणम् ॥ ६-५२-२० (४०८०६)
त्रसयनतं रणे शूरान्मर्दयन्तं च सायकैः ।
सैन्धवप्रमुखैर्गुप्तः प्राच्यसौवीरकेकयैः ।
सहसा प्रत्युदीयाय भीष्मः शान्तनवोऽर्जुनम् ॥ ६-५२-२१ (४०८०७)
को हि गाण्डीवधन्वानमन्यः कुरुपितामहात् ।
द्रोणवैकर्तनाभ्यां वा रथी संयातुमर्हति ॥ ६-५२-२२ (४०८०८)
ततो भीष्मो महाराज सर्वलोकमहारथः ।
अर्जुनं सप्ततसप्तत्या नाराचानां समाचिनोत् ॥ ६-५२-२३ (४०८०९)

द्रोणश्च पञ्चविंशत्या कृपः पञ्चाशता शरैः ।
दुर्योधनश्चतुःषष्ट्या शल्यश्च नवभिः शरैः ॥ ६-५२-२४ (४०८१०)
सैन्धवो नवभिश्चैव शकुनिश्चापि पञ्चभिः ।
विकर्णो दशभिर्भल्लै राजन्विव्याध पाण्डवम् ॥ ६-५२-२५ (४०८११)
स तैर्विद्धो महेष्वासः समन्तान्निशितैः शरैः ।
न विव्यथे महाबाहुर्भिद्यमान इवाचलः ॥ ६-५२-२६ (४०८१२)
स भीष्मं पञ्चविंशत्या कृपं च नवभिः शरैः ।
द्रोणं षष्ट्या नरव्याघ्रो विकर्णं च त्रिभिः शरैः ॥ ६-५२-२७ (४०८१३)
शल्यं चैव त्रिभिर्बाणै राजानं चैव पञ्चभिः ।
प्रत्यविध्यदमेयात्मा किरीटी भरतर्षभ ॥ ६-५२-२८ (४०८१४)
तं सात्यकिर्विराटश्च धृष्टद्युम्नश्च पार्षतः ।
सौभद्रो द्रौपदेयाश्च परिवव्रुर्धनंजयम् ॥ ६-५२-२९ (४०८१५)
ततो द्रोणं महेष्वासं गाङ्गेयस्य प्रिये रतम् ।
अभ्यवर्तत पाञ्चाल्यः संयुक्तः सह सोमकैः ॥ ६-५२-३० (४०८१६)
भीष्मस्तु रथिनां श्रेष्ठो राजन्विव्याध पाण्डवम् ।
अशीत्या निशितैर्बाणैस्ततोऽक्रोशन्त पाण्डवाः ॥ ६-५२-३१ (४०८१७)
तेषां तु निनदं श्रुत्वा सहितानां प्रहृष्टवत् ।
प्रविवेश ततो मध्यं नरसिंहः प्रतापवान् ॥ ६-५२-३२ (४०८१८)
तेषां महारथानां स मध्यं प्राप्य धनंजयः ।
चिक्रीड धनुषा राजँल्लक्षं कृत्वा महारथान् ॥ ६-५२-३३ (४०८१९)
ग्क्षत्रियाणां शिरांस्युग्रैः कृन्तञ्शस्त्रैर्महारथः ।
शून्यान्कृत्वा रथोपस्थान्व्यचरत्फल्गुनस्तदा ।' ६-५२-३४ (४०८२०)
ततो दुर्योधनो राजा भीष्ममाह जनेश्वरः ।
पीड्यमानं स्वकं सैन्यं दृष्ट्वा पार्थेन संयुगे ॥ ६-५२-३५ (४०८२१)
एष पाण्डुसुतस्तात कृष्णेन सहितो बली ।
यततां सर्वसैन्यानां मूलं नः परिकृन्तति ।
त्वयि जीवति गाङ्गेय द्रोणे च रथिनां वरे ॥ ६-५२-३६ (४०८२२)
त्वत्कृते चैव कर्णोऽपि न्यस्तशस्त्रो विशांपते ।
न युध्यति रणे पार्थान्हितकामः सदा मम ।
स तथा कुरु गाङ्गेय यथा हन्येत फल्गुनः ॥ ६-५२-३७ (४०८२३)
एवमुक्तस्ततो राजन्पिता देवव्रतस्तव ।
धिक् क्षात्रं धर्ममित्युक्त्वा प्रायात्पार्थं रथं प्रति ॥ ६-५२-३८ (४०८२४)
उभौ श्वेतहयौ राजन्संसक्तौ प्रेक्ष्य पार्थिवाः ।
सिंहनादान्भृशं चक्रुः शङ्खान्दध्मुश्च मारिषत ॥ ६-५२-३९ (४०८२५)
द्रौणिर्दुर्योधनश्चैव विकर्णश्च तवात्मजः ।
परिवार्य रणे भीष्मं स्थिता युद्धाय मारिष ॥ ६-५२-४० (४०८२६)

तथैव पाण्डवाः सर्वे परिवार्य धनञ्जयम् ।
स्थिता युद्धाय महते ततो युद्धमवर्तत ॥ ६-५२-४१ (४०८२७)
गाङ्गेयस्तु रणे पार्थमानर्च्छन्नवभिः शरैः ।
तमर्जुनः प्रत्यविध्यद्दशभिर्मर्मभेदिभिः ॥ ६-५२-४२ (४०८२८)
ततः शरसहस्रेण सुप्रयुक्तेन पाण्डवः ।
अर्जुनः समरश्लाघी भीष्मस्यावारयद्दिशः ॥ ६-५२-४३ (४०८२९)
शरजालं ततस्तत्तु शरजालेन मारिष ।
वारयामास पार्थस्य भीष्मः शान्तनवस्तदा ॥ ६-५२-४४ (४०८३०)
उभौ परमसंहृष्टावुभौ युद्धाभिनन्दिनौ ।
निर्विशेषमयुध्येतां कृतप्रतिकृतैषिणौ ॥ ६-५२-४५ (४०८३१)
भीष्मचापविमुक्तानि शरजालानि शङ्घशः ।
शीर्यमाणान्यदृश्यन्त भिन्नान्यर्जुनसायकैःक ॥ ६-५२-४६ (४०८३२)
तथैवार्जुनमुक्तानि शरजालानि सर्वशः ।
गाङ्गेयशरनुन्नानि प्रापतन्त महीतले ॥ ६-५२-४७ (४०८३३)
अर्जुनः पञ्चविंशत्या भीष्ममार्च्छच्छितैः शरैः ।
भीष्मोपि समरे पार्थं विव्याध निशितैः शरैः । ६-५२-४८ (४०८३४)
अन्योन्यस्य हयान्विद्ध्वा ध्वजौ च सुमहाबलौ ।
रथेषां रथचक्रे च चिक्रीडतुररिन्दमौ ॥ ६-५२-४९ (४०८३५)
ततः क्रुद्धो महाराज भीष्मः प्रहरतां वरः ।
वासुदेवं त्रिभिर्बाणैराजघान स्तनान्तरे ॥ ६-५२-५० (४०८३६)
भीष्मचापच्युतैस्तैस्तु निर्विद्धो मधुसूदनः ।
विरराज रणे राजन्सपुष्प इव किंशुकः ॥ ६-५२-५१ (४०८३७)
ततोऽर्जुनो भृशं क्रुद्धो निर्विद्धं प्रेक्ष्य माधवम् ।
सारथिं कुरुवृद्धस्य निर्बिभेद शितैः शरैः ॥ ६-५२-५२ (४०८३८)
यतमानौ तु तौ वीरावन्योन्यस्य वधं प्रति ।
न शक्नुतां तदाऽन्योन्यमभिसन्धातुमाहवे ॥ ६-५२-५३ (४०८३९)
तौ मण्डलानि चित्राणि गतप्रत्यागतानि च ।
अदर्शयेतां बहुधा सूतसामर्थ्यलाघवात् ॥ ६-५२-५४ (४०८४०)
अन्तरं च प्रहारेषु तर्कयन्तौ परस्परम् ।
राजन्नन्तरमार्गस्थौ स्थितावास्तां मुहुर्मुहुः ॥ ६-५२-५५ (४०८४१)
उभौ सिंहरवोन्मिश्रं शङ्खशब्दं च चक्रतुः ।
तथैव चापनिर्घोषं चक्रतुस्तौ महारथौ ॥ ६-५२-५६ (४०८४२)
तयोः शङ्खनिनादेन रथनेमिस्वनेन च ।
दारिता सहसा भूमिश्चकम्पे च ननाद च ॥ ६-५२-५७ (४०८४३)
नोभयोरन्तरं कश्चिद्ददृशे भरतर्षभ ।
बलिनौ युद्धदुर्धर्षावन्योन्यसदृशावुभौ ॥ ६-५२-५८ (४०८४४)

चिह्नमात्रेण भीष्मं तु प्रजज्ञुस्तत्र कौरवाः ।
तथा पाण्डुसुताः पार्थं चिह्नमात्रेण जज्ञिरेक ॥ ६-५२-५९ (४०८४५)
तयोर्नृवरयोर्दृष्ट्वा तादृशं तं पराक्रमम् ।
विस्कमयं सर्वभूतानि जग्मुर्भारतसंयुगे ॥ ६-५२-६० (४०८४६)
न तयोर्विवरं कश्चिद्रणे पश्यति भारत ।
धर्मे स्थितस्य हि यथा न कश्चिद्वृजिनं क्वचित् ॥ ६-५२-६१ (४०८४७)
उभौ च शरजालेन तावदृश्यो बभूवतुः ।
प्रकाशौ च पुनस्तूर्णं बभूवतुरुभौ रणे ॥ ६-५२-६२ (४०८४८)
तत्र देवाः सगन्धर्वाश्चारणाश्चर्षिभिः सह ।
अन्योन्यं प्रत्यभाषन्त तयोर्दृष्ट्वा पराक्रमम् ॥ ६-५२-६३ (४०८४९)
न शक्यौ युधि संरब्धौ जेतुमेतौ कथंचन ।
सदेवासुरगन्धर्वैर्लोकैरपि महारथौ ॥ ६-५२-६४ (४०८५०)
आश्चर्यभूतं लोकेषु युद्धमेतन्महाद्भुतम् ।
नैतादृशानि युद्धानि भविष्यन्ति कथंचन ॥ ६-५२-६५ (४०८५१)
न हि शक्यो रणे जेतुं भीष्मः पार्थेन धीमता ।
सधनुः सरथः साश्वः प्रवपन्सायकान्रणे ॥ ६-५२-६६ (४०८५२)
तथैव पाण्डवं युद्धे देवैरपि दुरासदम् ।
न विजेतुं रणे भीष्म उत्सहेत धनुर्धरम् ॥ ६-५२-६७ (४०८५३)
आलोकादपि युद्धं हि सममेतद्भविष्यति ।
इति स्म वाचोऽश्रूयन्त प्रोच्चरन्त्यकस्ततस्ततः ।
गाङ्गेयार्जुनयोः सङ्ख्ये स्तवयुक्ता विशांपते ॥ ६-५२-६८ (४०८५४)
त्वदीयास्तु तदा योधाः पाण्डवेयाश्च भारत ।
अन्योन्यं समरे जघ्नुस्तयोस्तत्र समागमे ॥ ६-५२-६९ (४०८५५)
शितधारैस्तथा स्वङ्गैर्विमलैश्च परश्वधैः ।
शरैरन्यैश्च बहुभिः सस्त्रैर्नानाविधैरपि ॥ ६-५२-७० (४०८५६)
उभयोः सेनयोः शूरा न्यकृन्तन्त परस्परम् ।
वर्तमाने तथा घोरे तस्मिन्युद्धे सुदारुणे ।
द्रोणपाञ्चाल्ययो राजन्महानासीत्समागमः ॥ ॥ ६-५२-७१ (४०८५७)

इति श्रीमन्महाभारते भीष्मपर्वणि भीष्मवधपर्वणि
द्वितीयदिवसयुद्धे द्विपञ्चशोऽध्यायः ॥

Mahabharata - Bhishma Parva - Chapter Footnotes

६-५२-१० व्यतिकरो मेलकः ।समागम इत्यर्थः ॥
६-५२-१५ दृढधन्वना भीष्मेण ॥
६-५२-५५ अन्तरं छिद्रम् ।तर्कयन्तौ चिन्तयन्तौ।अन्तरमार्गस्थौ

छिद्रान्वेषणपरौ ॥
६-५२-५९ चिह्नं ध्वजः ॥
६-५२-६८ आलोकात् आसंसारस्थितेः ॥

---

भिस्मपर्व-अध्यय०५३
॥ श्रीः ॥
६.५३. अध्यायः ५३

Mahabharata - Bhishma Parva - Chapter Topics
द्रोणधृष्टद्युम्नयोर्युद्धम् ॥१ ॥

Mahabharata - Bhishma Parva - Chapter Text

६-५३-० (४०८५८)
धृतराष्ट्र उवाच। ६-५३-०क्ष् (४११७)
कथं द्रोणो महेष्वासः पाञ्चाल्यश्चापि पार्षतः ।
उभौ समीयतुर्यत्तौ तन्ममाचक्ष्व सञ्जय ॥ ६-५३-१ (४०८५९)
दिष्टमेव परं मन्ये पौरुषादिति मे मतिः ।
यत्र शान्तनवो भीष्मो नातरद्युधि पाण्डवम् ॥ ६-५३-२ (४०८६०)
भीष्मो हि समरे क्रुद्धो हन्याल्लोकांश्चराचरान् ।
स कथं पाण्डवं युद्धे नातरत्सञ्जयौजसा ॥ ६-५३-३ (४०८६१)
सञ्जय उवाच। ६-५३-४क्ष् (४११८)
श्रृणु राजन्स्थिरो भूत्वा युद्धमेतत्सुदारुणम् ।
न शक्याः पाण्डवा जेतुं देवैरपि सवासवैः ॥ ६-५३-४ (४०८६२)
द्रोणस्तु निशितैर्बाणैर्धृष्टद्युम्नमविध्यत ।
सारथिं चास्य भल्लेन रथनीडादपातयत् ॥ ६-५३-५ (४०८६३)
तथाऽस्य चतुरो वाहांश्चतुर्भिः सायकोत्तमैः ।
पीडयामास संक्रुद्धो धृष्टद्युम्नस्य मारिष ॥ ६-५३-६ (४०८६४)
धृष्टद्युम्नस्ततो द्रोणं नवत्या निशितैः शरैः ।
विव्याध प्रहसन्वीरस्तिष्ठतिष्ठेति चाब्रवीत् ॥ ६-५३-७ (४०८६५)
ततः पुनरमेयात्मा भारद्वाजः प्रतापवान् ।
शरैः प्रच्छादयामास धृष्टद्युम्नममर्षणम् ॥ ६-५३-८ (४०८६६)
आददे च शरं घोरं पार्षतान्तचिकीर्षकया ।
शक्राशनिसमस्पर्शं कालदण्डमिवापरम् ॥ ६-५३-९ (४०८६७)
हाहाकारो महानासीत्सर्वसैन्येषु भारत ।
तमिषुं संधितं दृष्ट्वा भारद्वाजेन संयुगे ॥ ६-५३-१० (४०८६८)

तत्राद्भुतमपश्याम धृष्टद्युम्नस्य पौरुषम् ।
यदेकः समरे वीरस्तस्थौ गिरिरिवाचलः ॥ ६-५३-११ (४०८६९)
तं च दीप्तं शरं घोरमायान्तं मृत्युमात्मनः ।
चिच्छेद शरवृष्टिं च भारद्वाजे मुमोच ह ॥ ६-५३-१२ (४०८७०)
तत उच्चुक्रुशुः सर्वे पाञ्चालाः पाण्डवैः सह ।
धृष्टद्युम्नेन तत्कर्म कृतं दृष्ट्वा सुदुष्करम् ॥ ६-५३-१३ (४०८७१)
ततः शक्तिं महावेगां स्वर्णवैडूर्यभूषिताम् ।
द्रोणस्य निधनाकाङ्क्षी चिक्षेप स पराक्रमी ॥ ६-५३-१४ (४०८७२)
तामापतन्तीं सहसा शक्तिं कनकभूषिताम् ।
त्रिधा चिच्छेद समरे भारद्वाजो हसन्निव ॥ ६-५३-१५ (४०८७३)
शक्तिं विनिहतां दृष्ट्वा धृष्टद्युम्नः प्रतपवान् ।
ववर्ष शरवर्षाणि द्रोणं प्रति जनेश्वरः ॥ ६-५३-१६ (४०८७४)
शरवर्षं ततस्तत्तु सन्निवार्य महायशाः ।
द्रोणो द्रुपदपुत्रस्य मध्ये चिच्छेद कार्मुकम् ॥ ६-५३-१७ (४०८७५)
स च्छिन्नधन्वा समरे गदां गुर्वीं महायशाः ।
द्रोणाय प्रेषयामास गिरिसारमयीं बली ॥ ६-५३-१८ (४०८७६)
सा गदा वेगवन्मुक्ता प्रायाद्द्रोणजिघांसया ।
तत्राद्भुतमपश्याम भारद्वाजस्य पौरुषम् ॥ ६-५३-१९ (४०८७७)
लाघवाद्व्यंसयामास गदां हेमविभूषिताम् ।
व्यंसयित्वा गदां तां च प्रेषयामास पार्षतम् ॥ ६-५३-२० (४०८७८)
भल्लान्सुनिशितान्पीतातान्रुक्मपुङ्खान्सुदारुणान् ।
ते तस्य कवचं भित्त्वा पपुः शोणितमाहवे ॥ ६-५३-२१ (४०८७९)
अथान्यद्धनुरादाय धृष्टद्युम्नो महारथः ।
द्रोणं युधि पराक्रम्य शरैर्विव्याध पञ्चभिः ॥ ६-५३-२२ (४०८८०)
रुधिराक्तौ ततस्तौ तु शुशुभाते नरर्षभौ ।
वसन्तसमये राजन्पुष्पिताविव किंशुकौ ॥ ६-५३-२३ (४०८८१)
अमर्षितस्ततो राजन्पराक्रम्य चमूमुखे ।
द्रोणो द्रुपदपुत्रस्य पुनश्चिच्छेद कार्मुकम् ॥ ६-५३-२४ (४०८८२)
अथैनं छिन्नधन्वानं शरैः सन्नतपर्वभिः ।
अभ्यवर्षदमेयात्मा वृष्ट्या मेघ इवाचलम् ॥ ६-५३-२५ (४०८८३)
सारथिं चास्य भल्लेन रथनीजादपातयत् ।
अथास्य चतुरो वाहांश्चतुर्भिर्निशितैः शरैः ॥ ६-५३-२६ (४०८८४)
पातयामास समरे सिंहनादं ननाद च ।
ततोऽपरेण भल्लेन हस्ताच्चापमथाच्छिनत् ॥ ६-५३-२७ (४०८८५)
स च्छिन्नधन्वा विरथो हताश्वो हतसारथिः ।
गदापाणिरवारोहत्स्व्यापयन्पौरुषं महत् ॥ ६-५३-२८ (४०८८६)

तामस्य विशिस्वैस्तूर्णं पातयामास भारत ।
रथादनवरूढस्य तदद्भुतमिवाभवत् ॥ ६-५३-२९ (४०८८७)
ततः स विपुलं चर्म शतचन्द्रं च भानुमत् ।
खड्गं च विपुलं दिव्यं प्रगृह्य सुभुजो बली ॥ ६-५३-३० (४०८८८)
अभिदुद्राव वेगेन द्रोणस्य वधाकाङ्क्षया ।
आमिषार्थी यथा सिंहो वने मत्तमिव द्विपम् ॥ ६-५३-३१ (४०८८९)
तत्राद्भुतमपश्याम भारद्वाजस्य पौरुषम् ।
लाघवं चास्त्रयोगं च बलं बाह्वोश्च भारत ॥ ६-५३-३२ (४०८९०)
यदेनं शरवर्षेण वारयामास पार्षतम् ।
न शशाक ततो गन्तुं बलवानपि संयुगे ॥ ६-५३-३३ (४०८९१)
निवारितस्तु द्रोणेन धृष्टद्युम्नो महारथः ।
न्यावारयच्छरौघांस्तांश्चर्मणा कृतहस्तवत् ॥ ६-५३-३४ (४०८९२)
ततो भीमो महाबाहुः सहसाऽभ्यपतद्बली ।
साहाय्यकारी समरे पार्षतस्य महात्मनः ॥ ६-५३-३५ (४०८९३)
स द्रोमं निशितैर्बाणै राजन्विव्याध सप्तभिः ।
पार्षतं च रथं तूर्णं स्वकमारोहयत्तदा ॥ ६-५३-३६ (४०८९४)
ततो दुर्योधनो राजन्कलिङ्गं समचोदयत् ।
सैन्येन महता युक्तं भारद्वाजस्य रक्षणे ॥ ६-५३-३७ (४०८९५)
ततः सा महती सेन कलिङ्गानां जनेश्वर ।
भीममभ्युद्ययौ तूर्णं तव पुत्रस्य शासनात् ॥ ६-५३-३८ (४०८९६)
पाञ्चाल्यमथ संत्यज्य द्रोणोऽपि रथिनां वरः ।
विराटद्रुपदौ वृद्धौ वारयामास संयुगे ॥ ६-५३-३९ (४०८९७)
धृष्टद्युम्नोऽपि समरे धर्मराजानमभ्ययात् ।
ततः प्रववृते युद्धं तुमुलं रोमहर्षणम् ॥ ६-५३-४० (४०८९८)
कलिङ्गानां च समरे भीष्मस्य च महात्मनः ।
जगतः प्रक्षयकरं घोररूपं भयावहम् ॥ ॥ ६-५३-४१ (४०८९९)

इति श्रीमन्महाभारते भीष्मपर्वणि भीष्मवधपर्वणि
द्वितीयदिवसयुद्धे त्रिपञ्चाशोऽध्यायः ॥

Mahabharata - Bhishma Parva - Chapter Footnotes

६-५३-३ नातरत् न लङ्घितवान् ॥
६-५३-५ नीडात् स्थानात् ॥
६-५३-२० व्यंसयामास वञ्चयतिस्म ॥
६-५३-२१ पीतान् पायितजलान् ॥

भिस्मपर्व-अध्यय०५४
॥ श्रीः ॥
६.५४. अध्यायः ५४

Mahabharata - Bhishma Parva - Chapter Topics
भीमसेनेन कलिङ्गादिवधः ॥ १ ॥

Mahabharata - Bhishma Parva - Chapter Text

६-५४-० (४०९००)
धृतराष्ट्र उवाच। ६-५४-०क्ष् (४११९)
मम पुत्रसमादिष्टः कलिङ्गोः वाहिनीपतिः ।
कथमद्भुतकर्माणं भीमसेनं महाबलम् ॥ ६-५४-१ (४०९०१)
चरन्तं गदया वीर दण्डहस्तमिवान्तकम् ।
योधयामास समरे कलिङ्गः सह सेनया ॥ ६-५४-२ (४०९०२)
सञ्जय उवाच। ६-५४-३क्ष् (४१२०)
पुत्रेण तव राजेन्द्र स तथोक्तो महाबलः ।
महत्या सेनया गुप्तः प्रायाद्भीमरथं प्रति ॥ ६-५४-३ (४०९०३)
तामापतन्तीं महतीं कलिङ्गानां महाचमूम् ।
रथाश्वनागकलिलां प्रगृहीतमहायुधाम् ॥ ६-५४-४ (४०९०४)
भीमसेनः कलिङ्गानामार्च्छद्भारत वाहिनीम् ।
केतुमन्तं च नैषादिमायान्तं सह चेदिभिः ॥ ६-५४-५ (४०९०५)
ततः श्रुतायुः संक्रुद्धो राज्ञा केतुमता सह ।
आससाद रणे भीमं व्यूढानीकेषु चेदिषु ॥ ६-५४-६ (४०९०६)
रथैरनेकसाहस्रैः कलिङ्गानां नराधिप ।
अयुतेन गजानां च निषादैःक सह केतुमान् ॥ ६-५४-७ (४०९०७)
भिमसेनं रणे राजन्समन्तात्पर्यवारयत् ।
चेदिमत्स्यकरूषाश्च भीमसेनपदानुगाः ॥ ६-५४-८ (४०९०८)
अभ्यधावन्त समरे निषादान्सह राजभिः ।
ततः प्रववृते युद्धं घोररूपं भयावहम् ॥ ६-५४-९ (४०९०९)
न प्राजानन्त योधाः स्वान्परस्परजिघांसया ।
घोरमासीत्ततो युद्धं भीमस्य सहसा परैः ॥ ६-५४-१० (४०९१०)
यथेन्द्रस्य महाराज महत्या दैत्यसेनया ।
तस्य सैन्यस्य संग्रामे युध्यमानस्य भारत ॥ ६-५४-११ (४०९११)
बभूव सुमहाञ्शब्दः सागरस्येव गर्जतः ।
अन्योन्यं स्म तदा योधा विकर्षन्तो विशांपते ॥ ६-५४-१२ (४०९१२)

महीं चक्रुश्चितां सर्वां शशलोहितसन्निभाम् ।
योधांश्च स्वान्परान्वापि नाभ्यजानञ्जिघांसया ॥ ६-५४-१३ (४०९१३)
स्वानप्याददते स्वांश्च शूराः परमदुर्जयाः ।
विमर्दः सुमहानासीदल्पानां बहुभिः सह ॥ ६-५४-१४ (४०९१४)
कलिङ्गैः सह चैदीनां निषादैश्च विशांपते ।
कृत्वा पुरुषकारं तु यथाशक्ति महाबलाः ॥ ६-५४-१५ (४०९१५)
भीमसेनं परित्यज्य संन्यवर्तनक्त चेदयः ।
सर्वैः कलिङ्गैरासन्नः सन्निवृत्तेषु चेदिषु ॥ ६-५४-१६ (४०९१६)
स्वबाहुबलमस्थाय अभ्यवर्षन्त पाण्डवम् ।
न चचाल रथोपस्थाद्भीमसेनो महाबलः ॥ ६-५४-१७ (४०९१७)
शितैरवाकिरद्बाणैः कलिङ्गानां वरूथिनीम् ।
कालिङ्गस्तु महेष्वासः पुत्रश्चास्य महारथः ॥ ६-५४-१८ (४०९१८)
शक्रदेव इति ख्यातो जघ्नतुः पाण्डवं शरैः ।
ततो भीमो महाबाहुर्विधुन्वन्रुचिरं धनुः ॥ ६-५४-१९ (४०९१९)
योधयामास कालिङ्गं स्वबाहुबलमाश्रितः ।
शक्रदेवस्तु समरे विसृजन्सायकान्बहून् ॥ ६-५४-२० (४०९२०)
अश्वाञ्जघान समरे भीमसेनस्य सायकैः ।
तं दृष्ट्वा विरथं तत्र भीमसेनमरिन्दमम् ॥ ६-५४-२१ (४०९२१)
शक्रदेवोऽभिदुद्राव शरैरवकिरञ्सितैः ।
भीमस्योपरि राजेन्द्र शक्रदेवो महाबलः ॥ ६-५४-२२ (४०९२२)
ववर्ष शरवर्षाणि तपान्ते जलदो यथा ।
हताश्वे तु रथे तिष्ठन्भीमसेनो महाबलः ॥ ६-५४-२३ (४०९२३)
शक्रदेवाय चिक्षेप सर्वशैक्यायसीं गदाम् ।
स तया निहतो राजन्कालिङ्गतनयो रथात् ॥ ६-५४-२४ (४०९२४)
विरथः सह सूतेन जगाम धरणीतलम् ।
कहतमात्मसुतं दृष्ट्वा कलिङ्गानां जनाधिपः ॥ ६-५४-२५ (४०९२५)
रथैरनेकसाहस्रैर्भीमस्यावारयद्दिशः ।
ग्अयुतेन गजानां च निषादैः परिवारितः।'
ततो भीमो महावेगां त्यक्त्वा गुर्वी महागदां ॥ ६-५४-२६ (४०९२६)
निस्त्रिंशमाददे घोरं चिकीर्षुः कर्म दारुणम् ।
चर्म चाप्रतिमं राजन्नार्षभं पुरुषर्षभ ॥ ६-५४-२७ (४०९२७)
नक्षत्रैरर्धचन्द्रैश्च शातकुम्भमयैश्चितम् ।
कालिङ्गस्तु ततः क्रुद्धो धनुर्ज्यामवमृज्य च ॥ ६-५४-२८ (४०९२८)
प्रगृह्य च शरं घोरमेकं सर्पविषोपमम् ।
प्राहिणोद्भीमसेनाय वधाकाङ्क्षी जनेश्वरः ॥ ६-५४-२९ (४०९२९)
तमापतन्तं वेगेन प्रेरितं निशितं शरम् ।

भीमसेनो द्विधा राजंश्चिच्छेद विपुलासिना ॥ ६-५४-३० (४०९३०)
उदक्रोशच्च संहृष्टस्त्रासयानो वरूथिनीम् ।
कालिङ्गोऽथ ततः क्रुद्धो भीमसेनाय संयुगे ॥ ६-५४-३१ (४०९३१)
तोमरान्प्राहिणोच्छीघ्रं चतुर्दश शिलाशितान् ।
तानप्राप्तान्महाबाहुः खगतानेव पाण्डवः ॥ ६-५४-३२ (४०९३२)
चिच्छेद सहसा राजन्नसंभ्रान्तो वरासिना ।
नित्यत्य तु रणे भीमस्तोमरान्वै चतुर्दश ॥ ६-५४-३३ (४०९३३)
भानुमन्तं ततो भीमः प्राद्रवत्पुरुषर्षभः ।
भानुमांस्तु ततो भीमं शरवर्षेण च्छादयन् ॥ ६-५४-३४ (४०९३४)
ननाद बलवन्नादं नादयानो नभस्तलम् ।
न च तं ममृषे भीमः सिंहनादं महाहवे ॥ ६-५४-३५ (४०९३५)
ततः शब्देन महता विननाद महास्वनः ।
तेन नादेन वित्रस्ता कलिङ्गानां वरूथिनी ॥ ६-५४-३६ (४०९३६)
न भीमं समरे मेने मानुषं भरतर्षभ ।
ततो भीमो महाबाहुर्नर्दित्वा विपुलं स्वनम् ॥ ६-५४-३७ (४०९३७)
सासिर्वेगवदाप्लुत्य दन्ताभ्यां वारणोत्तमम् ।
आरुरोह ततो मध्यं नागराजस्य मारिष ॥ ६-५४-३८ (४०९३८)
ततो मुमोच कालिङ्गः शक्तिं तामकरोद्द्वीधा ।
खड्गेन पृथुना मध्ये भानुमन्तमथाच्छिनत् ॥ ६-५४-३९ (४०९३९)
सोऽन्तरायुधिनं हत्वा राजपुत्रमरिन्दमः ।
गुरुभारसहे स्कन्धे नागस्यासिमपातयत् ॥ ६-५४-४० (४०९४०)
छिन्नस्कन्धः स विनदन्पपात गजयूथपः ।
आरुगणः सिन्धुवेगन सानुमानिव पर्वतः ॥ ६-५४-४१ (४०९४१)
ततस्तस्मादप्लुत्य गजाद्भारत भारतः ।
खड्गपाणिरदीनात्मा तस्थौ भूमौ सुदंशितः ॥ ६-५४-४२ (४०९४२)
स चचार बहून्मार्गानभितः पातयन्गजान् ।
अग्निचक्रमिवाविद्धं सर्वतः प्रत्यदृश्यत ॥ ६-५४-४३ (४०९४३)
अश्वबृन्देषु नागेषु रथानीकेषु चाभिभूः ।
पदातीनां च सङ्घेषु विनिघ्नञ्शोणितोक्षितः। ६-५४-४४ (४०९४४)
श्येनवद्व्यचरद्भीमो रणेऽरिषु बलोत्कटः ।
छिन्दंस्तेषाकं शरीराणि शिरांसि च महाबलः ॥ ६-५४-४५ (४०९४५)
खङ्ग्योकन शितधारेण संयुगे गजयोधिनाम् ।
पदातिरेकः संक्रुद्धः शत्रूणां भयवर्धनः ॥ ६-५४-४६ (४०९४६)
संमाहयामास स तान्कालान्तकयमोपमः ।
मूढाश्च ते तमेवाजौ विनदन्तः समाद्रवन् ॥ ६-५४-४७ (४०९४७)
सासिमुत्तमवेगेन विचरन्तं महारणे ।

निकृत्य रथिनां चाजौ रथेषाश्च युगानि च ॥ ६-५४-४८ (४०९४८)
जघान रथिनश्चापि बलवान्रिपुमर्दनः ।
भीमसेनश्चरन्मार्गान्सुबहून्प्रत्यदृश्यत ॥ ६-५४-४९ (४०९४९)
भ्रान्तमाविद्धमुद्भ्रान्तमाप्लुतं प्रसृतं प्लुतम् ।
संपातं समुदीर्णं च दर्शयामास पाण्डवः ॥ ६-५४-५० (४०९५०)
केचिदग्रासिना छिन्नाः पाण्डवेन महात्मना ।
विनेदुर्भिन्नमर्माणो निपेतुश्च गतासवः ॥ ६-५४-५१ (४०९५१)
छइन्नदन्ताग्रहस्ताश्च भिन्नकुम्भास्तथाऽपरे ।
वियोधाः स्वान्यनीकानि जघ्नुर्भारत वारणाः । ६-५४-५२ (४०९५२)
निपेतुरुर्व्यां च तथा विनदन्तो महारवान् ।
छिन्नांश्च तोमरान्राजन्महामात्रशिरांसि च ॥ ६-५४-५३ (४०९५३)
परिस्तोमान्विचित्रांश्च कक्ष्याश्च कनकोज्ज्वलाः ।
ग्रैवेयाण्यथ शक्तीश्च पताकाः कणपांस्तथा ॥ ६-५४-५४ (४०९५४)
तूणीरानथ यन्त्राणि धनूंषि च ।
भिन्दिपालानि शुभ्राणि तोत्राणि चाङ्कुशैः सह ॥ ६-५४-५५ (४०९५५)
घण्टाश्च विविधा राजन्हेमगर्भान्त्सरूनपि ।
पततः पातितांश्चैव पश्यामः सह सादिभिः ॥ ६-५४-५६ (४०९५६)
छिन्नगात्रावरकरैर्निहतैश्चाप वारणैः ॥
आसीद्भूमिःक समास्तीर्णा पतितैर्भूधरैरिव ॥ ६-५४-५७ (४०९५७)
विमृद्यैवं महानागान्ममर्दाश्वान्महाबलः ।
अश्वारोहवरांश्चैव पातयामास संयुगे ॥ ६-५४-५८ (४०९५८)
तद्धोरमभवद्युद्धं तस्य तेषां च भारत ।
खलीनान्यथ योक्राणि कक्ष्याश्च कनकोज्ज्वलाः ॥ ६-५४-५९ (४०९५९)
परिस्तोमाश्च प्रासाश्च ऋष्टयश्च महाधनाः ।
कवचान्यथ चर्माणि चित्राण्यास्तरणानि च ॥ ६-५४-६० (४०९६०)
तत्रतत्रापविद्धआनि व्यदृश्यन्त महाहवे ।
प्रासैर्यन्त्रैर्विचित्रैश्च शस्त्रैश्च विमलैस्तथा ॥ ६-५४-६१ (४०९६१)
स चक्रे वसुधां कीर्णां शबलैः कुसुमैरिव ।
आप्लुत्य रथिनः कांश्चित्परामृश्य महाबलः ॥ ६-५४-६२ (४०९६२)
पातयामास खड्गेन सध्वजानपि पाण्डवः ।
मुहुरुत्पततो दिक्षु धावतश्च यशस्विनःक ॥ ६-५४-६३ (४०९६३)
मार्गांश्च चरतश्चित्रं व्यस्मयन्त रणे जनाः ।
स जघान पदा कांश्चिद्धाक्षिप्यान्यानपोथयत् ॥ ६-५४-६४ (४०९६४)
खड्गेनान्यांश्च चिच्छेद नादेनान्यांश्च भीषयन् ।
ऊरुवेगेन चाप्यन्यान्पातयामास भूतले ॥ ६-५४-६५ (४०९६५)
अपरे चैनमालोक्य भयात्पञ्चत्वमागताः ।

एवं सा बहुला सेना कलिङ्गानां तरस्विनाम् ॥ ६-५४-६६ (४०९६६)
परिवार्य रणे भीष्मं भीमसेनमुपाद्रवत् ।
ततः कालिङ्गयैन्यानां प्रमुखे भरतर्षभ ॥ ६-५४-६७ (४०९६७)
श्रुतायुषमभिप्रेक्ष्य भीमसेनः समभ्ययात् ।
तमायान्तमभिप्रेक्ष्य कालिङ्गो नवभिः शरैः । ६-५४-६८ (४०९६८)
भीमसेनममेयात्मा प्रत्यविध्यत्स्तनान्तरे ।
कलिङ्गबाणाभिहतस्तोत्रार्दित इव द्विपः ॥ ६-५४-६९ (४०९६९)
भीमसेनः प्रजज्वाल क्रोदेनाग्निरिवैधितः ।
अथाशोकः समादाय रथं हेमपरिष्कृतम् ॥ ६-५४-७० (४०९७०)
भीमं संपादयामास रथेन रथसारथिः ।
तामरुह्य रथं तूर्णं कौन्तेयः शत्रुसूदनः ॥ ६-५४-७१ (४०९७१)
कलिङ्गमभिदुद्राव तिष्ठितिष्ठेति चाब्रवीत् ।
ततः श्रुतायुर्बलावान्भीमाय निशिताञ्शरान् ॥ ६-५४-७२ (४०९७२)
प्रेषयामास संक्रुद्धो दर्शयन्पाणिलाघवम् ।
स कार्मुकवरोत्सृष्टैर्नवभिर्निशितैः शरैः ॥ ६-५४-७३ (४०९७३)
समाहतो महाराज कलिङ्गेन महात्मना ।
संचुक्रुशे भृशं भीमो दण्डाहत इवोरगः ॥ ६-५४-७४ (४०९७४)
क्रुद्धश्च चापमायम्य बलवद्बलिनां वरः ।
कलिङ्गमवधीत्पार्थो भीमः सप्तभिरायसैः ॥ ६-५४-७५ (४०९७५)
क्षुराभ्यां चक्ररक्षौ च कलिङ्गस्य महाबलौ ।
सत्यदेवं च सत्यं च प्राहिणोद्यमसादनम् ॥ ६-५४-७६ (४०९७६)
ततः पुनमेयात्मा नासचैर्निशितैस्त्रिभिः ।
केतुमन्तं रणे भीमोऽगमयद्यमसादनम् ॥ ६-५४-७७ (४०९७७)
ततः कलिङ्गाः सन्नद्धा भीमसेनममर्षणम् ।
अनीकैर्बहुसाहस्रैः क्षत्रियाः समवारयन् ॥ ६-५४-७८ (४०९७८)
ततः शक्तिगदाखङ्गतोमरर्ष्टिपरश्वथैः ।
कलिङ्गाश्च ततो राजन्भीमसेनमवाकिरन् ॥ ६-५४-७९ (४०९७९)
संनिवार्य स तां घोरां शरवृष्टिं समुत्थिताम् ।
गदामादाय तरसा संनिपत्य महाबलः ॥ ६-५४-८० (४०९८०)
भीमः सप्तशतान्वीराननयद्यमसादनम् ।
पुनश्चैव द्विसाहस्रान्कलिङ्गानरिमर्दनः ॥ ६-५४-८१ (४०९८१)
प्राहिणोन्मृत्युलोकाय तदद्भुतमिवाभवत् ।
एवं स तान्यनीकानि कलिङ्गानां पुनःपुनः ॥ ६-५४-८२ (४०९८२)
बिभेद समरे तूर्णं प्रेक्ष्य भीष्मं महारथम् ।
हतारोहाश्च मातङ्गाः पाण्डवेन कृता रणे ॥ ६-५४-८३ (४०९८३)
विप्रजग्मुरनीकेषु मेघा वातहता इव ।

मृद्नन्तः स्वान्यनीकानि विनदन्तः शरातुराः ॥ ६-५४-८४ (४०९८४)
ततो भीमो महाबाहुः खड्गहस्तो महाभुजःक ।
संप्रहृष्टो महाघोषं शङ्खं प्राध्मापयद्बली ॥ ६-५४-८५ (४०९८५)
सर्वकालिङ्गसैन्यानां मनांसि समकम्पयत् ।
मोहश्चापि कलिङ्गानामाविवेश परंतप ॥ ६-५४-८६ (४०९८६)
प्राकम्पन्त च सैन्यानि वाहनानि च सर्वशः ।
भीमेन समरे राजन्गजेन्द्रेणेव सर्वशः ॥ ६-५४-८७ (४०९८७)
मार्गान्बहून्विचरता धावता च ततस्ततः ।
मुहुरुत्पतता चैव संमोहः समपद्यत ॥ ६-५४-८८ (४०९८८)
भीमसेनभयत्रस्तं सैन्यं च समकम्पत ।
क्षोभ्यमाणमसंबाधं ग्राहेणेव महत्सरः ॥ ६-५४-८९ (४०९८९)
त्रासितेषु च सर्वेषु भीमेनाद्भुतकर्मणा ।
पुनरावर्तमानेषु विद्रवत्सु च सङ्घशः ॥ ६-५४-९० (४०९९०)
सर्वकालिङ्गयोधेषु पाण्डूनां ध्वजिनीपतिः ।
अब्रवीत्स्वान्यनीकानि युध्यध्वमिति पार्षतः ॥ ६-५४-९१ (४०९९१)
सेनापतिवचः श्रुत्वा शिखण्डिप्रमुखा गणाः ।
भीममेवाभ्यवर्तन्त रथानीकैः प्रहारिभिः ॥ ६-५४-९३अधर्मराजश्च
तान्सर्वानुपजग्राह पाण्डवः ।
महता मेघवर्णेन नागानीकेन पृष्ठतः ॥ ६-५४-९२ (४०९९२)
एवं संनोद्य सर्वामि स्वान्यनीकानि पार्षतः ।
भीमसेनस्य जग्राह पार्ष्णिं सत्पुरुषैर्वृतः ॥ ६-५४-९४ (४०९९३)
न हि पञ्चालराजस्य लोके कश्चन विद्यते ।
भीमसात्यकयोरन्यः प्राणेभ्यः प्रियकृत्तमः ॥ ६-५४-९५ (४०९९४)
सोऽपश्यच्च कलिङ्गेषु चरन्तमरिसूदनः ।
भीमसेनं महाबाहुं पार्षतः परवीरहा ॥ ६-५४-९६ (४०९९५)
ननर्द बहुधा राजन्हृष्टश्चासीत्परंतपः ।
शङ्खं दध्मौ च समरे सिंहनादं ननाद च ॥ ६-५४-९७ (४०९९६)
स च पारावताश्वस्य रथे हेमपरिष्कृते ।
कोविदारध्वजं दृष्ट्वा भीमसेनः समाश्वसत् । ६-५४-९८ (४०९९७)
धृष्टद्युम्नस्तु तं दृष्ट्वा कलिङ्गैः समभिद्रुतम् ॥
भीमसेनममेयात्मा त्राणायाजौ समभ्ययात् ॥ ६-५४-९९ (४०९९८)
तौ दूरात्सात्यकिं दृष्ट्वा धृष्टद्युम्नवृकोदरौ ।
कलिङ्गान्समरे वीरौ योधयेतां मनस्विनौ । ६-५४-१०० (४०९९९)
स तत्र गत्वा शैनेयो जवेन जयतां वरः ।
पार्थपार्षतयोः पार्ष्णिं जग्राह पुरुषर्षभः ॥ ६-५४-१०१ (४१०००)
स कृत्कवा दारुणं कर्म प्रगृहीतशरासनः ।

आस्थितो रौद्रमात्मानं कलिङ्गानन्ववैक्षत ॥ ६-५४-१०२ (४१००१)
कलिङ्गप्रभवां चैव मांसशोणितकर्दमाम् ।
रुधिरस्यन्दिनीं तत्र भीमः प्रावर्तयन्नदीम् ॥ ६-५४-१०३ (४१००२)
अन्तरेण कलिङ्गानां पाण्डवानां च वाहिनीम् ।
तां संततार दुस्तारां भीमसेनो महाबलः ॥ ६-५४-१०४ (४१००३)
भीमसेनं तथा दृष्ट्वा प्राक्रोशंस्तावका नृप ।
कालोऽयं भीमरूपेण कलिङ्गैः कसह युध्यते ॥ ६-५४-१०५ (४१००४)
ततः शान्तनवो भीष्मः श्रुत्वा तं निनदं रणे ।
अभ्ययात्त्वरितो भीमं व्यूढानीकः समंततः ॥ ६-५४-१०६ (४१००५)
तं सात्यकिर्भीमसेनो धृष्टद्युम्नश्च पार्षतः ।
अभ्यद्रवन्त भीष्मस्य रथं हेमपरिष्कृतम् ॥ ६-५४-१०७ (४१००६)
परिवार्य तु ते सर्वे गाङ्गेयं तरसा रणे ।
त्रिभिस्त्रिभिः शरैर्घोरैर्भीष्ममानर्च्छुरोजसा ॥ ६-५४-१०८ (४१००७)
प्रत्यविध्यत तान्सर्वान्पिता देवव्रतस्तव ।
यतमानान्महेष्वासांस्त्रिभिस्त्रिभिरजिह्मगैः ॥ ६-५४-१०९ (४१००८)
ततः शरसहस्रेण सन्निवार्य महारथान् ।
हयान्काञ्चनसन्नाहान्भीमस्य न्यहनच्छरैः ॥ ६-५४-११० (४१००९)
हताश्वे स रथे तिष्ठन्भीमसेनः प्रतापवान् ।
शक्तिं चिक्षेप तरसा गाङ्गेयस्य रथं प्रति ॥ ६-५४-१११ (४१०१०)
अप्राप्तामथ तां शक्तिं पिता देवव्रतस्तव ।
त्रिधा चिच्छेद समरे सा पृथिव्यामशीर्यत ॥ ६-५४-११२ (४१०११)
ततः शैक्यायसीं गुर्वीं प्रगृह्य बलवान्गदाम् ।
भीमसेनस्ततस्तूर्णं पुप्लुवे मनुजर्षभ ॥ ६-५४-११३ (४१०१२)
सात्यकोऽपि ततस्तूर्णं भीमस्य प्रियकाम्यया ।
गाङ्गेयसारथिं तूर्णं पातयामास सायकैः ॥ ६-५४-११४ (४१०१३)
भीष्मस्तु निहते तस्मिन्सारथौ रथिनां वरः ।
वातायमानैस्तैरश्वैरपनीतो रणाजिरात् ॥ ६-५४-११५ (४१०१४)
भीमसेनस्ततो राजन्नपयाते महाव्रते ।
प्रजज्वाल यथा वह्निर्दहन्कक्षमिवैधितः ॥ ६-५४-११६ (४१०१५)
स हत्वा सर्वकालिङ्गान्सेनामध्ये व्यतिष्ठत ।
नैनमभ्युत्सहन्केचित्तावका भरतर्षभ ॥ ६-५४-११७ (४१०१६)
धृष्टद्युम्नस्तमारोप्य स्वरथे रथिनां वरः ।
पश्यतां सर्वसैन्यानामपोवाहक यशस्विनम् ॥ ६-५४-११८ (४१०१७)
संपूज्यमानः पाञ्चाल्यैर्मत्स्यैश्च भरतर्षभ ।
धृष्टद्युम्नं परिष्वज्य समेयादथ सात्यकिम् ॥ ६-५४-११९ (४१०१८)
अथाब्रवीद्भीमसेनं सात्यकिः सत्यविक्रमः ।

प्रहर्षयन्यदुव्याघ्रो धृष्टद्युम्नस्य पश्यतः ॥ ६-५४-१२० (४१०१९)
दिष्ट्या कालिङ्गराजश्च राजपुत्रश्च केतुमान ।
शक्रदेवश्च कालिङ्गः कलिङ्गाश्च मृधे हताः ॥ ६-५४-१२१ (४१०२०)
स्वबाहुबलवीर्येण नागाश्वरथसंकुलः ।
महापुरुषभूयिष्ठो धीरयोधनिषेवितः ॥ ६-५४-१२२ (४१०२१)
महाव्यूहः कलिङ्गानामेकेन मृदितस्त्वया ।
एवमुक्त्वा शिनेर्नप्ता दीर्घबाहुररिन्दम ।
रथाद्रथमभिद्रुत्य पर्यष्वजत पाण्डवम् ॥ ६-५४-१२३ (४१०२२)
ततः स्वरथमास्थाय पुनरेव महारथः ।
तावकानवधीत्क्रुद्धो भीमस्य बलमादधत् ॥ ॥ ६-५४-१२४ (४१०२३)

इति श्रीमन्महाभारते भीष्मपर्वणि भीष्मवधपर्वणि
द्वितीयदिवसयुद्धे चतुःपञ्चाशोऽध्यायः ॥
Mahabharata - Bhishma Parva - Chapter Footnotes

६-५४-३४ भानुमन्तं कलिङ्गात्मजम् ॥
६-५४-४० अन्तरायुधिनं गजारूढयोधम् ॥
६-५४-४३ आविद्धं भ्रामितम् ॥
६-५४-४७ कालान्तकयमोपमः प्रलयकालीननाशकयमतुल्यः ॥
६-५४-५३ महामात्रो हस्तिपकः ॥
६-५४-५४ कणपान् मुद्गरान् ॥
६-५४-५७ गात्रावरैर्गात्रैः पूर्वकायैः अवररधःकायैः ॥
६-५४-५९ खलीनानि अश्वास्यनिवेश्यनि अडिआलीती प्रसिद्धानि । कक्ष्या गजमध्यबन्धनम् ॥
६-५४-७० अशोको विशोकः ॥
६-५४-१०८ आनर्च्छुः आच्छादितवन्तः ॥
६-५४-११५ वातायमानैः इतस्ततो धावद्भिः ॥

---

भिस्मपर्व-अध्यय०५५
॥ श्रीः ॥
६.५५. अध्यायः ५५

Mahabharata - Bhishma Parva - Chapter Topics
अर्जुनयुद्धवर्णनम् ॥ १ ॥

Mahabharata - Bhishma Parva - Chapter Text

६-५५-० (४१०२४)
सञ्जय उवाच। ६-५५-०क्ष् (४१२१)
ततोऽपराह्णभूयिष्ठे तस्मिन्नहनि भारत ।
रथनागाश्वपत्तीनां सादिनां च महाक्षये ॥ ६-५५-१ (४१०२५)
द्रोणपुत्रेण शल्येन कृपेण च महात्मना ।
समसज्जत पाञ्चाल्यस्त्रिभिरैतैर्महारथैः ॥ ६-५५-२ (४१०२६)
स लोकविदितानश्वान्निजघान महाबलः ।
द्रौणेः पाञ्चालदायादः शितैर्दशभिराशुगैः ॥ ६-५५-३ (४१०२७)
ततः शल्यरथं तूर्णमास्थाय हतवाहनः ।
द्रौणिः पाञ्चालदायादमभ्यवर्षदथेषुभिः ॥ ६-५५-४ (४१०२८)
धृष्टद्युम्नं तु संयुक्तं द्रौणिना वीक्ष्य भारत ।
सौभद्रोऽभ्यपतत्तूर्णं विकिरन्निशिताञ्शरान् ॥ ६-५५-५ (४१०२९)
स शल्यं पञ्चविंशत्या कृपं च नवभिः शरैः ।
अश्वत्थामानमष्टाभिर्विव्याध पुरुषर्षभः ॥ ६-५५-६ (४१०३०)
आर्जुनिं तु ततस्तूर्णं द्रौणिर्विव्याध पत्रिणा ।
शल्योऽथ दशभिश्चैव कृपश्च निशितैस्त्रिभिः ॥ ६-५५-७ (४१०३१)
लक्ष्मणस्तव पौत्रस्तु सौभद्रं समवस्थितम् ।
अभ्यवर्तत संहृष्टस्ततो युद्धमवर्तत ॥ ६-५५-८ (४१०३२)
दौर्योधनिः सुसंक्रुद्धः सौभद्रं परवीरहा ।
विव्याध समरे राजंस्तदद्भुतमिवाभवत् ॥ ६-५५-९ (४१०३३)
अभिमन्युः सुसंक्रुद्धो भ्रातरं भरतर्षभ ।
शरैः पञ्चाशतै राजन्क्षिप्रहस्तोऽभ्यविध्यत ॥ ६-५५-१० (४१०३४)
लक्ष्मणोऽपि पुनस्तस्य धनुश्चिच्छेद पत्रिणा ।
मुष्टिदेशे महाराज ततस्ते चुक्रुशुर्जनाः ॥ ६-५५-११ (४१०३५)
तद्विहाय धनुश्छिन्नं सौभद्रं परवीरहा ।
अन्यदादत्तवांश्चित्रं कार्मुकं वेगवत्तरम् ॥ ६-५५-१२ (४१०३६)
तौ तत्र समरे युक्तौ कृतप्रतिकृतैषिणौ ।
अन्योन्यं विशिखैस्तीक्ष्णैर्जघ्नतुः पुरुषर्षभौ ॥ ६-५५-१३ (४१०३७)
ततो दुर्योधनो राज दृष्ट्वा पुत्रं महारथम् ।
पीडितं तव पौत्रेण प्रायात्तत्र प्रजेश्वरः ॥ ६-५५-१४ (४१०३८)
सन्निवृत्ते तव सुते सर्व एव जनाधिपाः ।
आर्जुनिं रथवंशेन समन्तात्पर्यवारयन् ॥ ६-५५-१५ (४१०३९)
स तैः परिवृतः शूरैः शूरो युधि सुदुर्जयैः ।
न स्म प्रव्यथते राजन्कृष्णतुल्यपराक्रमः ॥ ६-५५-१६ (४१०४०)
सौभद्रमथ संसक्तं दृष्ट्वा तत्र धनंजयः ।

अभिदुद्राव वेगेन त्रातुकामः स्वमात्मजम् ॥ ६-५५-१७ (४१०४१)
ततः सरथनागाश्वा भीष्मद्रोणपुरोगमाः ।
अभ्यवर्तन्त राजानः सहिताः सव्यसाचिनम् ॥ ६-५५-१८ (४१०४२)
उद्धूतं सहसा भौमं नागाश्वरथपत्तिभिः ।
दिवाकररथं प्राप्य रजस्तीव्रमदृश्यत ॥ ६-५५-१९ (४१०४३)
तानि नागसहस्राणि भूमिपालशतानि च ।
तस्य बाणपथं प्राप्य नाभ्यवर्तन्त सर्वशः ॥ ६-५५-२० (४१०४४)
प्रणेदुः सर्वभूतानि बभूवुस्तिमिरा दिशः ।
कुरूणां चानयस्तीव्रः समदृश्यत दारुणः ॥ ६-५५-२१ (४१०४५)
नाप्यन्तरिक्षं न दिशो न भूमिर्न च भास्करः ।
प्रजज्ञे भरतश्रेष्ठ सस्त्रसङ्घैः किरीटिनः ॥ ६-५५-२२ (४१०४६)
सादिता रथनागाश्च हताश्वा रथिनो रणे ।
विप्रद्रुतरथाः केचिद्दृश्यन्ते रथयूथपाः ॥ ६-५५-२३ (४१०४७)
विरथा रथिनश्चान्ये धावमानाः समन्ततः ।
तत्रतत्रैव दृश्यन्ते सायुधाः साङ्गदैर्भुजैः ॥ ६-५५-२४ (४१०४८)
हयारोहा हयांस्त्यक्त्वा गजारोहाश्च दन्तिनः ।
अर्जुनस्य भयाद्राजन्समन्ताद्विप्रदुद्रुवुः ॥ ६-५५-२५ (४१०४९)
रथेभ्यश्च गजेभ्यश्च हयेभ्यश्च नराधिपाः ।
पतिताः पात्यमानाश्च दृश्यन्तेऽर्जुनसायकैः ॥ ६-५५-२६ (४१०५०)
सगदानुद्यतान्बाहून्सखङ्गांश्च विशांपते ।
सप्रासांश्च सतूणीरान्सशरान्सशरासनान् ॥ ६-५५-२७ (४१०५१)
साङ्कुशाकन्सपताकांश्च तत्रतत्रार्जुनो नृणाम् ।
निचकर्त शरैरुग्रै रौद्रं वपुरधारयत् ॥ ६-५५-२८ (४१०५२)
परिघाणां प्रदीप्तानां मुद्गराणां च मारिष ।
प्रासानां भिन्दिपालानां निस्त्रिशानां च संयुगे ॥ ६-५५-२९ (४१०५३)
परश्वथानां पीक्ष्णानां तोमराणां च भारत ।
वर्मणां चापविद्धानां काञ्चनानां च भूमिप ॥ ६-५५-३० (४१०५४)
ध्वजानां चर्मणां चैव व्यजनानां च सर्वशः ।
छत्राणां हेमदण्डानां तोमराणां च भारत ॥ ६-५५-३१ (४१०५५)
प्रतोदानां च योक्त्राणां कशानां चैव मारिष ।
राशयः स्मात्र दृश्यन्ते विनिकीर्णा रणक्षितौ ॥ ६-५५-३२ (४१०५६)
नासीत्तत्र पुमान्कश्चित्तव सैन्यस्य भारत ।
योऽर्जुनं समरे शूरं प्रत्युद्यायात्कथंचन ॥ ६-५५-३३ (४१०५७)
यो यो हि समरे पार्थं प्रत्युद्याति विशांपते ।
स सङ्ख्ये विशिखैस्तीक्ष्णैः परलोकाय नीयते ॥ ६-५५-३४ (४१०५८)
तेषु विद्रवमाणेषु तव योधेषु सर्वशः ।

अर्जुनो वासुदेवश्च दध्मतुर्वारिजोत्तमौ ॥ ६-५५-३५ (४१०५९)
तत्पभग्नं बलं दृष्ट्वा पिता देवव्रतस्तव ।
अब्रवीत्समरे शूरं भारद्वाजं स्मयन्निव ॥ ६-५५-३६ (४१०६०)
एष पाण्डुसुतो वीर कृष्णेन सहितो बली ।
तथा करोति सैन्यानि यथा कुर्याद्धनञ्जयः ॥ ६-५५-३७ (४१०६१)
न ह्येष समरे शक्यो विजेतुं हि कथंचन ।
यथास्य दृश्यते रूप कालान्तकयमोपमम् ॥ ६-५५-३८ (४१०६२)
न निवर्तयितुं चापि शक्येयं महती चमूः ।
अन्योन्यप्रेया पश्य द्रवतीयं वरूथिनी ॥ ६-५५-३९ (४१०६३)
एष चास्तं गिरिश्रेष्ठं भानुमान्प्रतिपद्यते ।
चक्षूंषि सर्वलोकस्य संहरन्निव सर्वथा ॥ ६-५५-४० (४१०६४)
तत्रावहारं संप्राप्तं मन्येऽहं पुरुषर्षभ ।
श्रान्ता भीताश्च नो योधा न योत्स्यन्ति कथंचन ॥ ६-५५-४१ (४१०६५)
एवमुक्त्वा ततो भीष्मो द्रोणमाचार्यसत्तमम् ।
अवहारमथो चक्रे तावकानां महारथः ॥ ६-५५-४२ (४१०६६)
ग्ततः सरथनागाश्वा जंय प्राप्य समोपकाः ।
पाञ्चालाः पाण्डवाश्चैव प्रणेदुश्च पुनः पुनः ॥ ६-५५-४३ (४१०६७)
प्रययुः शिबिरायैव धनञ्जयपुरस्कृताः ।
वादित्रघोषैः संहृष्टा प्रणद्यन्तो महारथाः ॥' ६-५५-४४ (४१०६८)
ततोऽवहारः सैन्यानां तव तेषां च भारत ।
अस्तं गच्छति सूर्येऽभूत्सन्ध्याकाले च वर्तति ॥ ॥ ६-५५-४५ (४१०६९)

इति श्रीमन्महाभारते भीष्मपर्वणि भीष्मवधपर्वणि
द्वितीयदिवसयुद्धे पञ्चपञ्चाशोऽध्यायः ॥ ॥ इति
द्वितीयदिवसयुद्धम् ॥
Mahabharata - Bhishma Parva - Chapter Footnotes

६-५५-८ तव पौत्रमवस्थितं इति को घो पुस्तकपाठः ॥
६-५५-३७ यथा कुर्याद्धनंजयः ।धनञ्जयोऽग्निः ॥
६-५५-४३ नरोति वतमानै ॥

---

भिस्मपर्व-अध्यय०५६
॥ श्रीः ॥
६.५६. अध्यायः ५६

Mahabharata - Bhishma Parva - Chapter Topics

उभयपक्षयोर्व्यूहरचना ॥ १ ॥

Mahabharata - Bhishma Parva - Chapter Text

६-५६-० (४१०७०)
सञ्जय उवाच। ६-५६-०क्ष् (४१२२)
प्रभातायां च शर्वर्यां भीष्मः शान्तनस्तदा ।
अनीकान्यनुसंयाने व्यादिदेशाय भारत ॥ ६-५६-१ (४१०७१)
गारुडं च महाव्यूहं चक्रे शान्तनवस्तदा ।
पुत्राणां ते जयाकाङ्क्षी भीष्मः कुरुपितामहः । ६-५६-२ (४१०७२)
गरुडस्य स्वयं तुण्डे पिता देवव्रतस्तव ।
चक्षुषी च भरज्वाजः कृतवर्मा च सात्वतः ॥ ६-५६-३ (४१०७३)
अश्वत्थामा कृपश्चैव शिर आस्तां यशस्विनौ ।
त्रैगर्त्तैरथ कैकेयैर्वाटधानैश्च संयुगे ॥ ६-५६-४ (४१०७४)
भूरिश्रवाः शलः शल्यो भगदत्तश्च मारिष ।
मद्रकाः सिन्धुसौवीरास्तथा पाञ्चनदाश्च ये ॥ ६-५६-५ (४१०७५)
जयद्रथेन सहिता ग्रीवायां सन्निवेशिताः ।
पृष्ठे दुर्योधनो राजा सोदर्यैः सानुगैर्वृतः ॥ ६-५६-६ (४१०७६)
विन्दानुविन्दावावन्त्यौ काम्भोजश्च शकैः सह ।
पच्छमासन्महाराज शूरसेनाश्च सर्वशः ॥ ६-५६-७ (४१०७७)
मागधाश्च कलिङ्गाश्च दासेरकगणैः सह ।
दक्षिणं पक्षमासाद्य स्थिता व्यूहस्य दंशिताः ॥ ६-५६-८ (४१०७८)
काकरुशा विकुञ्चाश्च मुण्डाः कुण्डीवृषास्तथा ।
बृहद्बलेन सहिता वामं पार्श्वमवस्थिताः ॥ ६-५६-९ (४१०७९)
व्यूढं दृष्ट्वा तु तत्सैन्यं सव्यसाची परंतपः ।
धृष्टद्युम्नेन सहितः प्रत्यव्यूहत संयुगे ॥ ६-५६-१० (४१०८०)
अर्धचन्द्रेण व्यूहेन व्यूहन्तमतिदारुणम् ।
दक्षिणं शृङ्गमास्वय भिमसेनो व्यरोचत ॥ ६-५६-११ (४१०८१)
नानासंस्त्रौपसंषत्रैर्नानादेश्यैर्नृपैर्वृतः ।
तदन्येव विराटश्च द्रुपदश्च महारथः ॥ ६-५६-१२ (४१०८२)
तदनन्तरमेवासीन्नीलो नीलायुधैः सह ।
नीलादनन्तरश्चैव धृष्टकेतुर्महाबलः ॥ ६-५६-१३ (४१०८३)
चेदिकाशिकरूपेश्च पौरवैरपि संवृतः ।
धृष्टद्युम्नः शिखण्डी च पाञ्चालाश्च प्रभद्रकाः ॥ ६-५६-१४ (४१०८४)
मध्ये सैन्यस्य महतः स्थिता युद्धाय भारत ।
तत्रैव धर्मराजोऽपि गजानीकेन संवृतः । ६-५६-१५ (४१०८५)

ततस्तु सात्यकी राजन्द्रौपद्याः पञ्च चात्मजाः ।
अभिमन्युस्ततः शूर इरावांश्च ततः परम् ॥ ६-५६-१६ (४१०८६)
भैमसेनिस्ततो राजन्केकयाश्च महारथाः ।
एते सर्वे महाराज वामं पार्श्वमुपाश्रिताः ॥ ६-५६-१७ (४१०८७)
सर्वस्य जगतो गोप्ता गोप्ता यस्य जनार्दनः ।
ग्तत्रानुरथिनां श्रेष्ठो वामश्रृङ्गे व्यवस्थितः।'
एवमेतं महाव्यूहं प्रत्यव्यूहन्त पाण्डवाः ॥ ६-५६-१८ (४१०८८)
वधार्थं तव पुत्रामां तत्पक्षे ये च सङ्गताः ।
ततः प्रववृते युद्धं व्यतिषक्तरथद्विपम् ॥ ६-५६-१९ (४१०८९)
तावकानां परेषां च निघ्नतामितरेतरम् ।
हयौघाश्च रथौघाश्च तत्र तत्र विशांपते ॥ ६-५६-२० (४१०९०)
संपतन्तो व्यदृश्यन्त निघ्नन्तस्ते परस्परम् ।
धावतां च रथोघानां निघ्नतां च पृथक् पृथक् ॥ ६-५६-२१ (४१०९१)
बभूव तुमुलः शब्दो विमिश्रो दुन्दुभिस्वनैः ।
दिवस्पृङ्वरवीराणां निघ्नतामितरेतरम् ।
संप्रहारे सुतुमुले तव तेषां च भारत ॥ ॥ ६-५६-२२ (४१०९२)

इति श्रीमन्महाभारते भीष्मपर्वणि भीष्मवधपर्वणि
तृतीयदिवसयुद्धे षट्पञ्चाशोऽध्यायः ॥
Mahabharata - Bhishma Parva - Chapter Footnotes

६-५६-१७ ततोऽभूद्द्विपदां श्रेष्ठो वामं पार्श्वमपाश्रितः इति खो
पाठः ॥

---

भिस्मपर्व-अध्यय०५७
॥ श्रीः ॥
६.५७. अध्यायः ५७

Mahabharata - Bhishma Parva - Chapter Topics
संकुलयुद्धवर्णनम् ॥ १ ॥

Mahabharata - Bhishma Parva - Chapter Text

६-५७-० (४१०९३)
सञ्जय उवाच। ६-५७-०क्ष् (४१२३)
ततो व्यूढेष्वनीकेषु तावकेषु परेषु च ।

धनञ्जयो रथानीकमवधीत्तव भारत ॥ ६-५७-१ (४१०९४)
शरैरथिरथो युद्धे दारयन्रथयूथपान् ।
ते वध्यमानाः पार्थेन कालेनेव युगक्षये ॥ ६-५७-२ (४१०९५)
धार्तराष्ट्रा रणे यत्नात्पाण्डवान्प्रत्ययोधयन् ।
प्रार्थयाना यशो दीप्तां मृत्युं कृत्वा निवर्तनम् ॥ ६-५७-३ (४१०९६)
एकाग्रमनसो भूत्वा पाण्डवानां वरूथिनीम् ।
बभञ्जुर्बहुशो राजंस्ते चासज्जन्त संयुगे ॥ ६-५७-४ (४१०९७)
द्रवद्भिरथभग्नैश्च परिवर्तद्भिरेव च ।
पाण्डवैः कौरवेयैश्च न प्राज्ञायत किंचन ॥ ६-५७-५ (४१०९८)
उदतिष्ठद्रजो भौमं छादयानं दिवाकरम् ।
न दिशः प्रदिशो वापि जज्ञिरेऽत्र समागताः ॥ ६-५७-६ (४१०९९)
अनुमानेन संज्ञाभिर्नामगोत्रैश्च संयुगे ।
अवर्तत तदा युद्धं तत्र तत्र विशांपते ॥ ६-५७-७ (४११००)
न व्यूहो भिद्यते तत्र कौरवाणां कथञ्चन ।
रक्षितः सत्यसन्धेन भारद्वाजेन संयुगे ॥ ६-५७-८ (४११०१)
तथैव पाण्डवानां च रक्षितः सव्यसाचिना ।
नाभिद्यत महाव्यूहो भीमेन च सुरक्षितः ॥ ६-५७-९ (४११०२)
सेनाग्रादपि निष्पत्य प्रायुध्यंस्तत्र मानवाः ।
उभयोः सेनयो राजन्व्यतिषक्तरथद्विपाः ॥ ६-५७-१० (४११०३)
हयारोहैर्हयारोहाः पात्यन्ते स्म महाहवे ।
ऋष्टिभिर्विमलाभिश्च प्रासैरपि च संयुगे ॥ ६-५७-११ (४११०४)
रथी रथिनमासाद्य शरैः कनकभूषणैःक ।
पातयामास समरे तस्मिन्नतिभयंकरे ॥ ६-५७-१२ (४११०५)
गजारोहा गजारोहान्नाराचशरतोमरैः ।
संसक्तान्पातयामासुस्तव तेषां च सर्वशः ॥ ६-५७-१३ (४११०६)
कश्चिदुत्पत्य समरे वस्वारणमास्थितः ।
केशपक्षे परामृश्य जहार समरे शिरः ॥ ६-५७-१४ (४११०७)
अन्ये द्विरददन्ताग्रनिर्भिन्नहृदया रणे ।
वेमुश्च रुधिरं वीरा निःश्वसन्तः समन्ततः ॥ ६-५७-१५ (४११०८)
कश्चित्करिविषाणस्थो वीरो रणविशारदाः ।
प्रावेपच्छक्तिनिर्भिन्नो गजशिक्षास्त्रवेदिना ॥ ६-५७-१६ (४११०९)
पत्तिमङ्घा रणे पक्तीन्भिमन्दिपालपरश्वथैः ।
न्यतापतयन्त संहृष्टाः परस्परकृतागसः ॥ ६-५७-१७ (४१११०)
रथी च समरे राजन्नासाद्य गजयूथपम् ।
स गजं पातयामास गजी च रथिनां वरम् ॥ ६-५७-१८ (४११११)
रथिनं च हयारोहः प्रासेन भरतर्षभ ।

पातयामास समरे रथी च हयसादिनम् ॥ ६-५७-१९ (४१११२)
पदाती रथिनं सङ्ख्ये रथी चापि पदातिनम् ।
न्यपातयच्छितैः शस्त्रैः सेनयोरुभयोरपि ॥ ६-५७-२० (४१११३)
गजारोहा हयारोहान्पातयांचक्रिरे तदा ।
हयारोहा गजस्थांश्च तदद्भुतमिवाभवत् ॥ ६-५७-२१ (४१११४)
गजारोहवरैश्चापि तत्रतत्र पदातयः ।
पातिताः समदृश्यन्त तैश्चापि गजयोधिनः ॥ ६-५७-२२ (४१११५)
पत्तिसङ्घा हयारोहैः सादिसङ्घाश्च पत्तिभिः ।
पात्यमाना व्यदृश्यन्त शतशोऽथ सहस्रशः ॥ ६-५७-२३ (४१११६)
ध्वजैस्तत्रापविद्धैश्च कार्मुकैस्तोमरैस्तथा ।
प्रासैस्तथा गदाभिश्च परिघैः कम्पनैस्तथा ॥ ६-५७-२४ (४१११७)
शक्तिभिः कवचैश्चित्रैः कणपैरङ्कुशैरपि ।
निस्त्रिंशैर्विमलैश्चापि स्वर्णपुङ्खैः शरैस्तथा ॥ ६-५७-२५ (४१११८)
परिस्तोमैः कुथाभिश्च कम्बलैश्च महाधनैः ।
भूर्भाति भरतश्रेष्ठ स्रग्दामैरिव चित्रिता ॥ ६-५७-२६ (४१११९)
नराश्वकायैः पतितैर्दन्तिभिश्च महाहवे ।
अगम्यरूपा पृथिवी मांसशोणितकर्दमा ॥ ६-५७-२७ (४११२०)
प्रशशाम रजो भौमं व्युक्षितं रणशोणितैः ।
दिशश्च विमलाः सर्वाः संबभूवुर्जनेश्वर ॥ ६-५७-२८ (४११२१)
उत्थितान्यगणेयानि कबन्धानि समन्ततः ।
चिह्नभूतानि जगतो विनाशार्थाय भारत ॥ ६-५७-२९ (४११२२)
तस्मिन्युद्धे महारौद्रे वर्तमाने सुदारुणे ।
प्रत्यदृश्यन्त रथिनो धावमानाः समन्ततः ॥ ६-५७-३० (४११२३)
ततो भीष्मश्च द्रोणश्च सैन्धवश्च जयद्रथः ।
पुरुमित्रो जयो भोजः शल्यश्चापि ससौबलः ॥ ६-५७-३१ (४११२४)
एते समरदुर्धर्षाः सिंहतुल्यपराक्रमाः ।
पाण्डवानामनीकानि बभञ्जुःस्म पुनःपुनः ॥ ६-५७-३२ (४११२५)
तथैव भीमसेनोऽपि राक्षसश्च घटोत्कचः ।
सात्यकिश्चेकितानश्च द्रौपदेयाश्च भारत ॥ ६-५७-३३ (४११२६)
तावकांस्तव पुत्रांश्च सहितान्सर्वराजभिः ।
द्रावयामासुराजौ ते त्रिदशा दानवानिव ॥ ६-५७-३४ (४११२७)
तथा ते समरेऽन्योन्यं निघ्नन्तः क्षत्रियर्षभाः ।
रक्तोक्षिता घोररूपा विरेजुर्दानवा इव ॥ ६-५७-३५ (४११२८)
विनिर्जित्य रिपून्वीरा सेकनयोरुभयोरपि ।
व्यदृस्यन्त महामात्रा ग्रहा इव नभस्तले ॥ ६-५७-३६ (४११२९)
ततो रथसहस्रेण पुत्रो दुर्योधनस्तव ।

अभ्ययात्पाण्डवं युद्धे राक्षसं च घटोत्कचम् ॥ ६-५७-३८अतथैव
पाण्डवाः सर्वे महत्या सेनया सह ।
द्रोणभीष्मौ रणे यत्तौ प्रत्युद्ययुररिन्दमौ ॥ ६-५७-३७ (४११३०)
किरीटी च ययौ क्रुद्धः समन्तात्पार्थिवोत्तमान् ।
आर्जुनिः सात्यकिश्चैव ययतुः सौबलं बलम् ॥ ६-५७-३९ (४११३१)
ततः प्रववृते भूयः संग्रामो रोमहर्षणः ।
तावकानां परेषां च समरे विजयैषिणाम् ॥ ॥ ६-५७-४० (४११३२)

इति श्रीमन्महाभारते भीष्मपर्वणि भीष्मवधपर्वणि
तृतीयदिवसयुद्धे सप्तपञ्चशोऽध्यायः ॥
Mahabharata - Bhishma Parva - Chapter Footnotes

६-५७-३ मृत्युरेव निवर्तनहेतुर्नान्य इत्यर्थः ॥
६-५७-७ अनुमानेन ध्वजादिचिह्नेन ।संज्ञाभि संकेतैश्च ॥
६-५७-२६ परिकस्तोमैश्चित्रकम्बलैः ।कुथाभिस्तैरेव क्षुद्रैः
।कम्बलै राङ्कवैः ।महाधनैर्महामूल्यैः ॥
६-५७-३६ महामात्राः प्रधानाः ॥

---

भिस्मपर्व-अध्यय०५८
॥ श्रीः ॥
६.५८. अध्यायः ५८

Mahabharata - Bhishma Parva - Chapter Topics
अर्जुनादियुद्धवर्णनम् ॥ १ ॥

Mahabharata - Bhishma Parva - Chapter Text

६-५८-० (४११३३)
सञ्जय उवाच।६-५८-०क्ष् (४१२४)
ततस्ते पार्थिवाः क्रुद्धाः फल्गुनं वीक्ष्य संयुगे ।
रथैरनेकसाहस्रैः समन्तात्पर्यवारयन् ॥ ६-५८-१ (४११३४)
अथैनं रथबृन्देन कोष्ठकीकृत्य भारत ।
शरैः सुबहुसाहस्रैः समन्तादभ्यवारयन् ॥ ६-५८-२ (४११३५)
शक्तीश्च विमलाकस्तीक्ष्णा गदाश्च परिघैः सह ।
प्रासान्परश्वथांश्चैव मुद्गरान्मुसलानपि ॥ ६-५८-३ (४११३६)
चिक्षिपुः समरे क्रुद्धाः फल्गुनस्य रथं प्रति ।

शस्त्राणामथ तां वृष्टिं शलभानामिवायतिम् ॥ ६-५८-४ (४११३७)
रुरोध सर्वतः पार्थः शरैः कनकभूषणैः ।
तत्र तल्लाघवं दृष्ट्वा बीभत्सोरतिमानुषम् ॥ ६-५८-५ (४११३८)
देवदानवगन्धर्वाः पिशाचोरगराक्षसाः ।
साधुसाध्विति राजेन्द्र फल्गुनं प्रत्यपूजयन् ॥ ६-५८-६ (४११३९)
सात्यकिश्चाभिमन्युश्च महत्या सेकनया वृतौ ।
गान्धारान्समरे शूराञ्जग्मतुः सहसौबलान् ॥ ६-५८-७ (४११४०)
तत्र सौबलकाः क्रुद्धा वार्ष्णेयस्य रथोत्तमम् ।
तिशलश्चिच्छिदुः क्रोधाच्छस्त्रैर्नानाविधैर्युधि ॥ ६-५८-८ (४११४१)
सात्यकिस्तु रथं त्यक्त्वा वर्तमाने भयावहे ।
अभिमन्यो रथं तूर्णमारुरोह परंतपः ॥ ६-५८-९ (४११४२)
तावेकरथसंयुक्तौ सौबलेयस्य वाहिनीम् ।
व्यधमेतां शितैस्तूर्णं शरैःक सन्नतपर्वभिः ॥ ६-५८-१० (४११४३)
द्रोणभीष्मौ रणे यत्तौ धर्मराजस्य वाहिनीम् ।
नाशयेतां शरैस्तीक्ष्णैः कङ्कपत्रपरिच्छदैः ॥ ६-५८-११ (४११४४)
ततो धर्मसुतोक राजा माद्रीपुत्रौ च पाण्डवौ ।
मिषतां सर्वसैन्यानां द्रोणानीकमुपाद्रवन् ॥ ६-५८-१२ (४११४५)
तत्रासीत्सुमहद्युद्धं तुमुलं रोमहर्षणम् ।
यथा देवासुरं युद्धं पूर्वमासीत्सुदारुणम् ॥ ६-५८-१३ (४११४६)
कुर्वाणौ सुमहत्कर्म भीमसेनघटोत्कचौ ।
दुर्योधनस्ततोऽभ्येत्य तावुभावप्यवारयत् ॥ ६-५८-१४ (४११४७)
तत्राद्भुतमपश्याम हैडिम्बस्य पराक्रमम् ।
अतीत्य पीतरं युद्धे यदयुध्यत भारत ॥ ६-५८-१५ (४११४८)
भीमसेनस्तु संक्रुद्धो दुर्योधनममर्षणम् ।
हृद्यविध्यत्पृषत्केन प्रहसन्निव पाण्डवः ॥ ६-५८-१६ (४११४९)
ततो दुर्योधननो राजा प्रहारवरपीडितः ।
निषसाद रथोपस्थे कश्मलं च जगाम ह ॥ ६-५८-१७ (४११५०)
तं विसंज्ञं विदित्वा तु त्वरमाणोऽस्य सारथिः ।
अपोवाह रणाद्राजंस्ततः सैन्यमभज्यत ॥ ६-५८-१८ (४११५१)
ततस्तां कौरवीं सेनां द्रवमाणां समन्ततः ।
निघ्नन्भीमः शरैस्तीक्ष्णैरनुवव्राज पृष्ठतः ॥ ६-५८-१९ (४११५२)
पार्षतश्च रथश्रोष्ठो धर्मपुत्रश्च पाण्डवः ।
द्रोणस्य पश्यतः सैन्यं गाङ्गेयस्य च पश्यतः ॥ ६-५८-२० (४११५३)
जघ्नतुर्विशिकैस्तीक्ष्णैः परानीकविनाशनैः ।
द्रवमाणं तु तत्सैन्यं तव पुत्रस्य संयुगे ॥ ६-५८-२१ (४११५४)
नाशक्नुतां वारयितुं भीष्मद्रोणौ महारथौ ।

वार्यमाणं च भीष्मेण द्रोणेन च महात्मना ॥ ६-५८-२२ (४११५५)
विद्रवत्येव तत्सैन्यं पश्यतोर्द्रोणभीष्मयोः ।
ततो रथसहस्रेषु विद्रवत्सु ततस्ततःक ॥ ६-५८-२३ (४११५६)
तावास्थितावेकरथं सौभद्रशिनिपुङ्गवौ ।
सौबलीं समरे सेनां शातयेतां समन्ततः ॥ ६-५८-२४ (४११५७)
शुशुभाते तदा तौ तु शैनेयकुरुपुङ्गवौ ।
अमावास्यां गतौ यद्वत्सोमसूर्यौ नभस्तले ॥ ६-५८-२५ (४११५८)
अर्जुनस्तु ततः क्रुद्धस्तव सैन्यं विशांपते ।
ववर्ष शरवर्षेण धाराभिरिव तोयदः ॥ ६-५८-२६ (४११५९)
वध्यमानं ततस्तत्र शरैः पार्थस्य संयुगे ।
दुद्राव कौरवं सैन्यं विषादभयकम्पितम् ॥ ६-५८-२७ (४११६०)
द्रवतस्तान्समालक्ष्य भीष्मद्रोणौ महारथौ ।
न्यवारयेतां संरब्धौ दुर्योधनहितैषिणौ ॥ ६-५८-२८ (४११६१)
ततो दुर्योधनो राजा समाश्वस्य विशांपते ।
न्यवर्तयत तत्सैन्यं द्रवमाणां समन्ततः ॥ ६-५८-२९ (४११६२)
यत्र यत्र हि पुत्रं ते ये ये पश्यन्ति भारत ।
तत्र तत्र न्यवर्तन्त क्षत्रियाणां महरथाः ॥ ६-५८-३० (४११६३)
तान्निवृत्तान्समीक्ष्यैव ततोऽन्येऽपीतरे जनाः ।
अन्योन्यस्पर्धया राजँल्लज्जया चावतस्थिरे ॥ ६-५८-३१ (४११६४)
पुनरावर्ततां तेषां वेग आसीद्विशांपते ।
पूर्यतः सागरस्येव चन्द्रस्योदयनं प्रति ॥ ६-५८-३२ (४११६५)
अन्निवृत्तांस्ततस्तांस्तु दृष्ट्वा राजा सुयोधनः ।
अब्रवीत्त्वरितो गत्वा भीष्मं शान्तनवं वचः ॥ ६-५८-३३ (४११६६)
पितामह निबोधेदं यत्त्वां वक्ष्यामि भारत ।
नानुरूपमहं मन्ये त्वयि जीवति कौरव ॥ ६-५८-३४ (४११६७)
द्रोणो चास्त्रविदां श्रेष्ठे सपुत्रे ससुहृञ्जने ।
कृपे चैव महेष्वासे द्रवते यद्वरूथिनी ॥ ६-५८-३५ (४११६८)
न पाण्डवान्प्रतिलांस्तव मन्ये कथंचन ।
तथा द्रोणस्य सङ्ग्रमे द्रौमेश्चैव कृपस्य च ॥ ६-५८-३६ (४११६९)
अनुग्राह्याः पाण्डुसुतास्तव नूनं पितामह ।
यथेमां क्षमसे वीर वध्यमानां वरूथिनीम् ॥ ६-५८-३८असोऽस्मि
वाच्यस्त्वया राजन्पूर्वमेव समागमे ।
न योत्स्ये पाण्डवान्सङ्ख्ये नापि पार्षतसात्यकी ॥  ६-५८-३७ (४११७०)
श्रुत्वा तु वचनं तुभ्यमाचार्यस्य कृपस्य च ।
कर्णेन सहितः कृत्यं चिन्तयानस्तदैव हि ॥ ६-५८-३९ (४११७१)
यदि नाहं परित्याज्यो युवाभ्यामिह संयुगे ।

विक्रमेणानुरूपेण युध्येतां पुरुषर्षभौ ॥ ६-५८-४० (४११७२)
एतच्छ्रुत्वा वचो भीष्मः प्रहसन्वै मुहुर्मुहुः ।
अब्रवीत्तनयं तुभ्यं क्रोधादुद्वृत्य चक्षुषी ॥ ६-५८-४१ (४११७३)
बहुशोऽसि मया राजंस्तथ्यमुक्तो हितं वचः ।
अजेयाः पाण्डवा युद्धे देवैरपि सवासवैः ॥ ६-५८-४२ (४११७४)
यत्तु शक्यं मया कर्तुं वृद्धेनाद्य गतायुषा ।
करिष्यामि यथाशक्ति पश्येदानीं सबान्धवः ॥ ६-५८-४३ (४११७५)
अद्य पाण्डुसुतानेकः ससैन्यान्सह बन्धुभिः ।
सोऽहं निवारयिष्यामि सर्वलोकस्य पश्यतः ॥ ६-५८-४४ (४११७६)
एवमुक्ते तु भीष्मेण पुत्रास्तव जनेश्वर ।
दध्मुः शङ्खान्मुदा युक्ता भेरीः संजघ्निरे भृशम् ॥ ६-५८-४५ (४११७७)
पाण्डवा हि ततो राजञ्श्रुत्वा तं निनदं महत् ।
दध्मुः शङ्खांश्च भेरीश्च मुरजांश्चाप्यनादयन् ॥ ॥ ६-५८-४६ (४११७८)

इति श्रीमन्महाभारते भीष्मपर्वणि भीष्मवधपर्वणि
तृतीयदिवसयुद्धे अष्टपञ्चाशोऽध्यायः ॥
Mahabharata - Bhishma Parva - Chapter Footnotes

६-५८-२ कोष्ठकीकृत्य वेष्टयित्वा ॥
६-५८-३९ चिन्तयानः अभविष्यमिति शेषः ॥

---

भिस्मपर्व-अध्यय०५९
॥ श्रीः ॥
६.५९. अध्यायः ५९

Mahabharata - Bhishma Parva - Chapter Topics
स्वप्रतिज्ञां विहाय गृहीतचक्रेम कृष्णेन पादचारेम भीष्मं
हन्तुमभियानम् ॥ १ ॥
अर्जुनेन कृष्णस्य प्रतिनिवर्तनम् ॥ २ ॥

Mahabharata - Bhishma Parva - Chapter Text

६-५९-० (४११७९)
धृतराष्ट्र उवाच। ६-५९-०क्ष् (४१२५)
प्रतिज्ञाते ततस्तस्मिन्युद्धे भीष्मेण दारुणे ।
क्रोधितो मम पुत्रेण दुःखितेन विशेषतः ॥ ६-५९-१ (४११८०)

भीष्मः किमकरोत्तत्र पाण्डवेयेषु भारत ।
पितामहे वा पञ्चालास्तन्ममाचक्ष्व सञ्जय ॥ ६-५९-२ (४११८१)
सञ्जय उवाच। ६-५९-३क्ष् (४१२६)
गतपूर्वाह्णभूयिष्ठे तस्मिन्नहनि भारत ।
पश्चिमां दिशमास्थाय स्थिते चापि दिवाकरे ॥ ६-५९-३ (४११८२)
जयं प्राप्तेषु हृष्टेषु पाण्डवेषु महात्मसु ।
सर्वधर्मविशेषज्ञः पिता देवव्रतस्तव ॥ ६-५९-४ (४११८३)
अभ्ययाज्जवनैरश्वैः पाण्डवानामनीकिनीम् ।
महत्या सेनया गुप्तस्तव पुत्रैश्च सर्वशः ॥ ६-५९-५ (४११८४)
प्रावर्तत ततो युद्धं तुमुलं रोमहर्षणम् ।
अस्माकं पाण्डवैः सार्धमनायात्तव भारत ॥ ६-५९-६ (४११८५)
घनुषां कूजतां तत्र तलानां चाभिहन्यताम् ।
महान्समभवच्छब्दो गिरीणामिव दीर्यताम् ॥ ६-५९-७ (४११८६)
तिष्ठ स्थितोऽस्मि विद्ध्यैनं निवर्तस्व स्थिरो भव ।
स्थिरोऽस्मि प्रहरस्वेति शब्दोऽश्रूयत सर्वशः ॥ ६-५९-८ (४११८७)
काञ्चनेषु तनुत्रेषु किरीटेषु ध्वजेषु च ।
शिलानामिव शैलेषु पतितानामभूद्ध्वनिः ॥ ६-५९-९ (४११८८)
पतितान्युत्तमाङ्गानि बाहवश्च विभूषिताः ।
व्यचेष्टन्त महीं प्राप्य शतशोऽथ सहस्रशः ॥ ६-५९-१० (४११८९)
हृतोत्तमाङ्गाः केचित्तु तथैवोद्यतकार्मुकाः ।
प्रगृहीतायुधाश्चापि तस्थुः पुरुषसत्तमाःक ॥ ६-५९-११ (४११९०)
प्रावर्तत महावेगा नदी रुधिरवाहिनी ।
मातङ्गाङ्गशिला रौद्रा मांसशोणितकर्दमा ॥ ६-५९-१२ (४११९१)
वरश्वनरनागानां शरीरप्रभवा तदा ।
परलोकार्णवमुखी गृध्रगोमायुमोदिनी ॥ ६-५९-१३ (४११९२)
न दृष्टं न श्रुतं वापि युद्धमेतादृशं नृप ।
यथा तव सुतानां च पाण्डवानां च भारत ॥ ६-५९-१४ (४११९३)
नासीद्रथपथस्तत्र यौधैर्युधि निपातितैः ।
गजैश्च पतितैर्नीलैर्गिरिश्रृङ्गैरिवावृतः ॥ ६-५९-१५ (४११९४)
विकीर्णैः कवचैश्चित्रैः शिरस्त्रणैश्च मारिष ।
शुशुभे तद्राणस्थानं शरदीव नभस्तलम् ॥ ६-५९-१६ (४११९५)
विनिर्भिन्नाः शरैः केचिदन्त्रापीडप्रकर्षिणः ।
अभीताः समरे शत्रूनभ्यधावन्त दर्पिताः ॥ ६-५९-१७ (४११९६)
तात भ्रातः सखे बन्धो वयस्य मम मातुल ।
मा मां परित्यजेत्यन्ये चुक्रुशुः पतिता रणे ॥ ६-५९-१८ (४११९७)
अथाभ्येहि त्वमागच्छ किं भीतोसि क्व यास्यसि ।

स्थितोऽहं समरे मा भैरिरिति चान्ये विचुक्रुशुः ॥ ६-५९-१९ (४११९८)
तत्र भीष्मः शान्तनवो नित्यं मण्डलकार्मुकः ।
मुमोच बाणान्दीप्ताग्रानहीनाशीविषानिव ॥ ६-५९-२० (४११९९)
शरैरेकायनीकुर्वन्दिशः सर्वा यतव्रतः ।
जघान पाण्डवरथानादिश्य भारतर्षभ ॥ ६-५९-२१ (४१२००)
स नृत्यन्वै रथोपस्थे दर्शयन्पाणिलाघवम् ।
अलातचक्रवद्राजंस्तत्र तत्र स्म दृश्यते ॥ ६-५९-२२ (४१२०१)
तमेकं समरे शूरं पाण्डवाः सृञ्जयैः सह ।
अनेकशतसाहस्रं समपश्यन्त लाघवात् ॥ ६-५९-२३ (४१२०२)
मायाकृतात्मानमिव भीष्मं तत्र स्म मेनिरे ।
पूर्वस्यां दिशि तं दृष्ट्वा प्रतीच्यां ददृशुर्जनाः ॥ ६-५९-२४ (४१२०३)
उदीच्यां चैवमालोक्य दक्षिणस्यां पुनः प्रभो ।
एवं स समरे शूरो गाङ्गेयः प्रत्यदृश्यत ॥ ६-५९-२५ (४१२०४)
न चैवं पाण्डवेयानां कश्चिच्छक्नोति वीक्षितुम् ।
विशिखानेव पश्यन्ति भीष्मचापच्युतान्बहून् ॥ ६-५९-२६ (४१२०५)
कुर्वाणं समरे कर्म सूदयानं च वाहिनीम् ।
व्याक्रोशन्त रणे तत्र नरा बहुविधा बहु ॥ ६-५९-२७ (४१२०६)
अमानुषेण रूपेण चरन्तं पितरं तव ।
शलभा इव राजानः पतन्ति विधिचोदिताः ॥ ६-५९-२८ (४१२०७)
भीष्माग्निमभिसंक्रुद्धं विनाशाय सहस्रशः ।
न हि मोघः शरः कश्चिदासीद्भीष्मस्य संयुगे ॥ ६-५९-२९ (४१२०८)
नरनागाश्वकायेषु बहुत्वाल्लघुयोधिनः ।
भिनत्त्येकेन बाणेन सुमुखेन पतत्रिणा ॥ ६-५९-३० (४१२०९)
गजं कंकटसन्नद्धं वज्रेणेव शिलोच्चयम् ।
द्वौ त्रीनपि गजारोहान्पिण्डितान्वर्मितानपि ॥ ६-५९-३१ (४१२१०)
नाराचेन सुमुक्तेन निजघान पिता तव ।
यो यो भीष्मं नरव्याघ्रमभ्येति युधि कश्चन ॥ ६-५९-३२ (४१२११)
मुहूर्तदृष्टः स मया पतितो भुवि दृश्यते ।
एवं सा धर्मराजस्य वध्यमाना महाचमूः ॥ ६-५९-३३ (४१२१२)
भीष्मेणातुलवीर्येण व्यशीर्यत संहस्रधा ।
प्राकम्पत महासेना शरवर्षेण तापिता ॥ ६-५९-३४ (४१२१३)
पश्यतो वासुदेवस्य पार्थस्याथ शिखण्डिनः ।
यतमानाऽपि ते वीरा द्रवमाणान्महारथान् ॥ ६-५९-३५ (४१२१४)
नाशक्नुवन्वारयितुं भीष्मबाणप्रपीडितान् ।
महेन्द्रसमवीर्येण वध्यमाना महाचमूः ॥ ६-५९-३६ (४१२१५)
अभज्यत महाराज न च द्वौ सह धावतः ।

आविद्धरनागाश्वं पतितध्वजकूबरम् ॥ ६-५९-३७ (४१२१६)
अनीकं पाण्डुपुत्राणां हाहाभूतमचेतनम् ।
जघानात्र पिता पुत्रं पुत्रश्च पितरं तथा ॥ ६-५९-३८ (४१२१७)
प्रियं सखायं चाक्रन्दे सखा दैवबलात्कृतः । ६-५९-३९ब्विमुच्य
कवचान्यन्ये पाण्डुपुत्रस्य सैनिकाः ॥ ६-५९-३९ (४१२१८)
विनुक्तकेशा धावन्तः प्रत्यदृश्यन्त भारत ।
तद्गोकुलमिवोद्भ्रान्तमुद्भ्रान्तरथयूथपम् ॥ ६-५९-४० (४१२१९)
ददृशे पाण्डुपुत्रस्य सैन्यमार्तस्वरं तदा ।
प्रभज्यमानं सैन्यं तु दृष्ट्वा यादवनन्दनः ॥ ६-५९-४१ (४१२२०)
उवाच पार्थं बीभत्सुं निगृह्य रथमुत्तमम् ।
असं स कालः संप्राप्तः पार्थ पस्तेऽभिकाङ्क्षितः ॥ ६-५९-४२ (४१२२१)
प्रहरस्व नरव्याघ्र न चेन्मोहाद्विमुह्यसे ।
यत्त्वया कथितं वीर पुरा राज्ञां समागमे । ६-५९-४३ (४१२२२)
भीष्मद्रोणमुखान्सर्वान्धार्तराष्ट्रस्य सैनिकान् ।
सानुबन्धान्हनिष्यामि ये मां योत्स्यन्ति संयुगे ॥ ६-५९-४४ (४१२२३)
इति तत्कुरु कौन्तेय सत्यं वाक्यमरिन्दम ।
बीभत्सो पश्य सैन्यं स्वं भज्यमानं ततस्ततः ॥ ६-५९-४५ (४१२२४)
द्रवतश्च महीपालान्पश्य यौधिष्ठिरे बले ।
दृष्ट्वा हि भीष्मं समरे व्यात्ताननमिवान्तकम् ॥ ६-५९-४६ (४१२२५)
भयार्ताः प्रपलायन्ते सिंहात्क्षुद्रमृगा इव ।
एवमुक्तः प्रत्युवाच वासुदेवं धनंजयः ॥ ६-५९-४७ (४१२२६)
नोदयाश्वान्यतो भीष्मो विगाह्ये तद्बलार्णवम् ।
पातयिष्यामि दुर्धर्षं वृद्धं कुरुपितामहम् ॥ ६-५९-४८ (४१२२७)
सञ्जय उवाच। ६-५९-४९क्ष् (४१२७)
ततोऽश्वान्रजतप्रकख्यान्नोदयामास माधवः ।
यतो भीष्मरथो राजन्दुष्प्रेक्ष्यो रश्मिमानिव ॥ ६-५९-४९ (४१२२८)
ततस्तत्पुनरावृत्तं युधिष्ठिरबलं महत् ।
दृष्ट्वा पार्थं महाबाहुं भीष्मायोद्यतमाहवे ॥ ६-५९-५० (४१२२९)
ततो भीष्मःक कुरुश्रेष्ठ सिंहवद्विनदन्मुहुः ।
धनञ्जयरथं शीघ्रं शरवर्षैरवाकिरत् ॥ ६-५९-५१ (४१२३०)
क्षणेन स रथस्तस्य सहयः कसहसारथिः ।
शरवर्षेण महता संछन्नो न प्रकाशते ॥ ६-५९-५२ (४१२३१)
वासुदेवस्त्वसंभ्रान्तो धैर्यमास्थाय सत्त्ववान् ।
चोदयामास तानश्वान्विभिन्नान्भीष्मसायकैः ॥ ६-५९-५३ (४१२३२)
ततः पार्थो धनुर्गृह्य दिव्यं जलदनिःस्वनम् ।
पातयामास भीष्मस्य धनुश्छित्वा त्रिभिः शरैः ॥ ६-५९-५४ (४१२३३)

स च्छिन्नधन्वा कौरव्यः पुनरन्यन्महद्धनुः ।
निमिषान्तरमात्रेण सज्यं चक्रे पिता तव ॥ ६-५९-५५ (४१२३४)
विचकर्ष ततो दोर्भ्यां धनुर्जलदनिःस्वनम् ।
अथास्य तदपि क्रुद्धश्चिच्छेद धनुरर्जुनः ॥ ६-५९-५६ (४१२३५)
तस्य तत्पूजयामास लाघवं शन्तनोः सुतः ।
साधु पार्थ महाबाहो साधु भो पाण्डुनन्दन ॥ ६-५९-५७ (४१२३६)
त्वय्येवैतद्युक्तरूपं महत्कर्म धनंजय ।
प्रीतोऽस्मि सुभृशं पुत्र कुरु युद्धं मया सह ॥ ६-५९-५८ (४१२३७)
इति पार्थं प्रशस्याथ प्रगृह्यान्यन्महद्धनुः ।
मुमोच समरे वीरः शरान्पार्थरथं प्रति ॥ ६-५९-५९ (४१२३८)
अदर्शयद्वासुदेवो हययाने परं बलम् ।
मोघान्कुर्वञ्शरांस्तस्य मण्डलान्व्यचरल्लुघु ॥ ६-५९-६० (४१२३९)
तथा भीष्मस्तु सुदृढं वासुदेवधनंजयौ ।
विव्याध निशितैर्बाणैः सर्वगात्रेषु भारत ॥ ६-५९-६१ (४१२४०)
शुशुभाते नरव्याघ्रौ तौ भीष्मशरविक्षतौ ।
गोवृषाविव संरब्धौ विषाणोल्लेखनाङ्कितौ ॥ ६-५९-६२ (४१२४१)
पुनश्चापि सुसंरब्धः शरैः शतसहस्रशः ।
कृष्णयोर्युधि संरब्धो भीष्माः प्राच्छादयद्दिशः ।
ग्पार्थोऽपि समरे क्रुद्धो भीष्मस्यावारयद्दिशः ॥' ६-५९-६३ (४१२४२)
वार्ष्णेयं च शरैस्तीक्ष्णैः कम्पयामास रोषितः ।
मुहुरभ्यर्दयन्भीष्मः प्रहस्य स्वनवत्तदा ॥ ६-५९-६४ (४१२४३)
ततस्तु कृष्णः समरे दृष्ट्वा भीष्मपराक्रमम् ।
संप्रेक्ष्य च महाबाहुः पार्थस्य मृदुयुद्धताम् ॥ ६-५९-६५ (४१२४४)
भीष्मं च शरवर्षाणि सृजन्तमनिशं युधि ।
प्रतपन्तमिवादित्यं मध्यमासाद्य सेनयोः ॥ ६-५९-६६ (४१२४५)
वारन्वरान्विनिघ्नन्तं पाण्डुपुत्रस्य सैनिकान् ।
युगान्तमिव कुर्वाणं भीष्मं यौधिष्ठिरे बले ॥ ६-५९-६७ (४१२४६)
अमृष्यमाणो भगवान्केशवः परवीरहा ।
अचिन्तयदमेयात्मा नास्ति यौधिष्ठिरं बलम् ॥ ६-५९-६८ (४१२४७)
एकाह्ना हि रणे भीष्मो नाशयेद्देवदानवान् ।
किं नु पाण्डुसुतान्युद्धे सबलान्सपदानुगान् ॥ ६-५९-६९ (४१२४८)
द्रवते च महासैन्यं पाण्डवस्य महात्मनः ।
एते च कौरवास्तूर्णं प्रभग्नान्वीक्ष्य सोमकान् ॥ ६-५९-७० (४१२४९)
प्राद्रवन्ति रणे दृष्ट्वा हर्षयन्तः पितामहम् ।
सोहं भीष्मं निहन्म्यद्य पाण्डवार्थाय दंशितः ॥ ६-५९-७१ (४१२५०)
भारमेतं विनेष्यामि पाण्डवानां महात्मनाम् ।

अर्जुनो हि शरैस्तीक्ष्णैर्वध्यमानोऽपि संयुगे ॥ ६-५९-७२ (४१२५१)
कर्तव्यं नाभिजानाति रणे भीष्मस्य गौरवात् ।
तथा चिन्तयतस्तस्य भूय एव पितामहः ।
प्रेषयामास संक्रुद्धः शरान्पार्थरथं प्रति ॥ ६-५९-७३ (४१२५२)
तेषां बहुत्वासु भृसं शराणां
दिशश्च सर्वाः पिहिता बभूवुः ।
न चान्तरिक्षं न दिशो न भूमि-
र्न भास्करोऽदृश्यत रश्मिमालीक ॥ ६-५९-७४ (४१२५३)
ववुश्च वातास्तुमुलाः सधूमा
दिशश्च सर्वाः क्षुभिता बभूवुः ।
द्रोणो विकर्णोऽथ जयद्रथश्च
भूरिश्रवाः कृतवर्मा कृपश्च ॥ ६-५९-७५ (४१२५४)
श्रुतायुरम्बष्ठपतिश्च राजा
विन्दानुविन्दौ च सुदक्षिणश्च ।
प्राच्याश्च सौवीरगणाश्च सर्वे
वसातयः क्षुद्रकमालवाश्च ॥ ६-५९-७६ (४१२५५)
किरीटिनं त्वरमाणाभिसृ-
र्निदेशगाः शान्तनवस्य राज्ञः ।
तं वाजिपादातरथौघजालै-
रनेकसाहस्रशतैर्ददर्श ॥ ६-५९-७७ (४१२५६)
किरीटिनं संपरिवार्यमाणं
शिनेर्नप्ता वारणयूथपैश्च ।
ततस्तु दृष्ट्वार्जुनवासुदेवौ
पदातिनागाश्वरथैः समन्तात् ॥ ६-५९-७८ (४१२५७)
अभिद्रुतौ शस्त्रभृतां वरिष्ठौ
शिनिप्रवीरोऽभिससार तूर्णम् ।
स तान्यनीकानि महाधनुष्मान्
शिनिप्रवीरः सहसाऽभिपत्य ॥ ६-५९-७९ (४१२५८)
चकार साहाय्यमथार्जुनस्य
विष्णुर्यथा वृत्रनिषूदनस्य ।
विशीर्णनागाश्वरथध्वजौघं
भीष्मेण वित्रासितसर्वयोधम् ॥ ६-५९-८० (४१२५९)
युधिष्ठिरानीकमभिद्रवन्तं
प्रोवाच संदृश्य शिनिप्रवीरः ।
क्व क्षत्रिया यास्यथ नैष धर्मः
सतां पुरस्तात्कथितः पुराणैः ॥ ६-५९-८१ (४१२६०)

मा स्वां प्रतिज्ञां त्यजत प्रवीराः
स्वं वीरधर्मं परिपालयध्वम् ।
तान्वासवानन्तरजो निशाम्य
नरेन्द्रमुख्यान्द्रवतः समन्तात् ॥ ६-५९-८२ (४१२६१)
पार्थस्य दृष्टवा मृदुयुद्धातां च
भीष्मं च सङ्ख्ये समुदीर्यमाणम् ।
अमृष्यमाणः स ततो महात्मा
यशस्विनं सर्वदशार्हभर्ता ॥ ६-५९-८३ (४१२६२)
उवाच शैनेयमभिप्रशंसन्
दृष्ट्वा कुरूनापततः समग्रान् ।
ये यान्ति ते यान्तु शिनिप्रवीर
येऽपि स्थिताः सात्वत तेऽपि यान्तु ॥ ६-५९-८४ (४१२६३)
भीष्मं रथात्पश्य निपात्यमानं
द्रोणं च सङ्ख्ये सगणं मयाऽद्य ।
न सारथेः सात्वत कौरवाणां
क्रुद्धस्य मुच्येत रणेऽद्य कश्चित् ॥ ६-५९-८५ (४१२६४)
तस्मादहं गृह्य रथाङ्गमुग्रं
प्राणं हरिष्यामि महाव्रतस्य ।
निहत्य भीष्मं सगणं तथाजौ
द्रोणं च शैनेय रथप्रवीरौ ॥ ६-५९-८६ (४१२६५)
प्रीतिं करिष्यामि धनंजयस्य
राज्ञश्च भीमस्य तथाऽश्विनोश्च ।
निहत्य सर्वान्धृतराष्ट्रपुत्रां-
स्तत्पक्षिणो ये च नरेन्द्रमुख्याः ।
राज्येन राजानमजातशत्रुं
संपादयिष्याम्यहमद्य हृष्टः ॥ ६-५९-८७ (४१२६६)
ग इतीदमुक्त्वा स महानुभावः
सस्मार चक्रं निशितं पुराणम् ।
सुदर्शनं चिन्तितमात्रमेव
तस्याग्रहस्तं स्वयमारुरोह ॥ ६-५९-८८ (४१२६७)
तच्चक्रपद्मं प्रगृहीतमाजौ
रराज नारायणबाहुनालम् ।
यथादिपद्मं तरुणार्कवर्णं
रराज नारायणनाभिजातमक् ॥ ६-५९-८९ (४१२६८)
तत्कृष्णकोपोदयसूर्यबुद्धं
क्षुरान्ततीक्ष्णाग्रसुजातपत्रम् ।

तेस्यैव देहोरुसरःप्ररूढं
रराज नारायणबाहुनालम् ॥' ६-५९-९० (४१२६९)
ततः सुनाभं वसुदेवपुत्रः
सूर्यप्रभं वज्रसमप्रभावम् ।
क्षुरान्तमुद्यम्य भुजेन चक्रं
रथादवप्लुत्य विसृज्य वाहान् ।
संकम्पयन्गां चरणैर्महात्मा
वेगेन कृष्मः प्रससार भीष्मम् ॥ ६-५९-९१ (४१२७०)
मदान्धमाजौ समुदीर्णदर्पं
सिंहो जिघांसन्निव वारणेन्द्रम् ।
सोऽभिद्रवन्भीष्ममनीकमध्ये
क्रुद्धो महेन्द्रावरजः प्रमाथी ।
व्यालम्बिपीताम्बरधृक्ककाशे
घनो यथा खे तडितावनद्धः ॥ ६-५९-९२ (४१२७१)
तमात्तचक्रं प्रणदन्तमुच्चैः
क्रुद्धं महेन्द्रावरजं समीक्ष्य ।
सर्वाणि भूतानि भृशं विनेदुः
क्षयं कुरूणामिव चिन्तयित्वा ॥ ६-५९-९३ (४१२७२)
स वासुदेवः प्रगृहीतचक्रः
संवर्तयिष्यन्निव सर्वलोकम् ।
अभ्युत्पतँल्लोकगुरुर्बभासे
भूतानि धक्ष्यन्निव धूमकेतुः ॥ ६-५९-९४ (४१२७३)
तमाद्रवन्तं प्रगृहीतचक्रं
दृष्ट्वा देवं शान्तनवस्तदानीम् ।
असंभ्रमं तद्विचकर्ष दोर्भ्यां
महाधनुर्गामडिवतुल्यघोषम् ।
उवाच भीष्मस्तमनन्तपौरुषं
गोविन्दमाजावविमूढचेताः ॥ ६-५९-९५ (४१२७४)
एह्येहि देवेश जगन्निवास
नमोस्तु ते माधव चक्रपाणे ।
प्रसह्य मां पातय लोकनाथ
रथोत्तमात्सर्वशरण्य सङ्ख्ये ॥ ६-५९-९६ (४१२७५)
त्वया हतस्यापि ममाऽद्य कृष्ण
श्रेयः परस्मिन्निह चैव लोके ।
संभावितोऽस्म्यन्धकवृष्णिनाथ
लोकैस्त्रिभिर्वीर तवाभियानात् ॥ ६-५९-९७ (४१२७६)

रथादवप्लुत्य ततस्त्वरावान्
पार्थोऽप्यनुद्रुत्य यदुप्रवीरम् ।
जग्राह पीनोत्तमलम्बबाहुं
बाह्वोर्हरिं व्यायतपीनबाहुः ॥ ६-५९-९८ (४१२७७)
निगृह्यमणाश्च तदाऽऽदिदेवो
भृश सरोषः किल नाम योगी ।
आदाय वेगेन जगाम विष्णु-
र्जिष्णुं महावात इवैकवृक्षम् ॥ ६-५९-९९ (४१२७८)
पार्थस्तु विष्टभ्य बलेन पादौ
भीष्मान्तिकं तूर्णमभिद्रवन्तम् ।
बलान्निजग्राह हरिं किरीटी
पदेऽथ राजन्दशमे कथंचित् ॥ ६-५९-१०० (४१२७९)
अवस्थितं च प्रणिपत्य कृष्णं
प्रीतोऽर्जुनः काञ्चनचित्रमाली ।
उवाच कोपे प्रतिसंहरेति
गतिर्भवान्केशव पाण्डवानाम् ॥ ६-५९-१०१ (४१२८०)
न हास्यते कर्म यथाप्रतिज्ञं
पुत्रैः शपे केशव सोदरैश्च ।
अन्तं करिष्यामि यथा कुरूणां
त्वयाऽहमिन्द्रानुजसंप्रयुक्तः ॥ ६-५९-१०२ (४१२८१)
ततः प्रतिज्ञां समयं च तस्य
जनार्दनः प्रीतमना निशम्य ।
स्थितः प्रिये कौरवसत्तमस्य
रथं सचक्रः पुनरारुरोह ॥ ६-५९-१०३ (४१२८२)
ग्ततः प्रतिज्ञां समवाप्य भीष्मः
कृताञ्चलिः स्तुत्यमथाकरोद्वै ।
त्रैविक्रमे यस्य वपुर्बभासे
तथैव दृष्ट्वा तु समुज्ज्वलन्तम् ॥ ६-५९-१०४ (४१२८३)
प्रगृह्य शङ्खं द्विषताकं निहन्ता
स तानभूषून्पुनराददानः ।
भीष्मं शरैः संपरिवार्य सङ्ख्ये
चिच्छेद भूरिश्रवसश्च चापम् ॥ ६-५९-१०५ (४१२८४)
शल्यं च विद्धवा नवभिः पृषत्कै-
र्दुर्योधं वक्षसि निर्बिभेद।'
विनादयामास ततो दिशश्च
स पाञ्चजन्यस्य रवेण शौरिः ॥ ६-५९-१०६ (४१२८५)

व्याविद्धनिष्काङ्गदकुण्डलं तं
रजोविकीर्णाञ्चितपद्मनेत्रम् ।
विशुद्धदंष्ट्रं प्रगृहीतशङ्खं
विचुक्रुशुः प्रेक्ष्य कुरुप्रवीराः ॥ ६-५९-१०७ (४१२८६)
मृदङ्गभेरीपणवप्रणादा
नेमिस्वना दुन्दुभिनिःस्वनाश्च ।
ससिंहनादाश्च बभूवुरुग्राः
सर्वेष्वनीकेषु ततः कुरूणाम् ॥ ६-५९-१०८ (४१२८७)
गाण्डीवघोषः स्तनयित्नुकल्पो
जगाम पार्थस्य नभो दिशश्च ।
जग्मुश्च बाणा विमलाः प्रसन्नाः
सर्वा दिशः पाण्डवचापमुक्ताः ॥ ६-५९-१०९ (४१२८८)
तं कौरवाणामधिपो जवेन
भीष्मेण भूरिश्रवसा च सार्धम् ।
अभ्युद्ययावुद्यतबाणपाणिः
कक्षं दिधक्षन्निव धूमकेतुः ॥ ६-५९-११० (४१२८९)
अथार्जुनाय प्रजिघाय भल्लान्
भूरिश्रवाः सप्त सुवर्णपुङ्खान् ।
दुर्योदनस्तोमरमुग्रवेगं
शल्यो गदां शान्तनवश्च शक्तिम् ॥ ६-५९-१११ (४१२९०)
स सप्तभिः सप्त शरप्रवेकान्
संवार्य भीरिश्रवसा विसृष्टान् ।
शितेन दुर्योधनबाहुमुक्तं
क्षुरेण तत्तोमरमुन्ममाथ ॥ ६-५९-११२ (४१२९१)
ततः शुभामापततीं स शक्तिं
विद्युत्प्रभां शान्तनवेन मुक्ताम् ।
गदां च मद्राधिपबाहुमुक्तां
द्वाभ्यां शराभ्यां निचर्त वीरः ॥ ६-५९-११३ (४१२९२)
ततो भुजाभ्यां बलवद्विकृष्य
चित्रं धनुर्गाण्डिवमप्रमेयम् ।
माहेन्द्रमस्त्रं विधिवत्सुघोरं
प्रादुश्चकाराद्भुतमन्तरिक्षे ॥ ६-५९-११४ (४१२९३)
तेनोत्तमास्त्रेण ततो महात्मा
सर्वाण्यनीकानि महाधनुष्मान् ।
शरौघजालैर्विमलाग्निवर्णै-
र्निवारयामास किरीटमाली ॥ ६-५९-११५ (४१२९४)

शिलीमुखाः पार्थधनुःप्रमुक्ता
रथान्ध्वजाग्राणि धनूंषि बाहून् ।
निकृत्य देहान्विविशुः परेषां
नरेन्द्रनागेन्द्रतुरङ्गमाणाम् । ६-५९-११६ (४१२९५)
ततो दिशः सोऽनुदिशश्च पार्थः
शरैः सुधारैः समरे वितत्य ।
गाण्डीवशब्देन मनांसि तेषां
किरीटमाली व्यथयांचकार ॥ ६-५९-११७ (४१२९६)
तस्मिंस्तथा घोरतमे प्रवृत्ते
शङ्खस्वना दुन्दुभिनिःस्वनाश्च ।
अन्तर्हिता गाण्डिवनिःस्वनेन
बभूवुरुग्राश्वरथप्रणादाः ॥ ६-५९-११८ (४१२९७)
गाण्डीवशब्दं तमथो विदित्वा
विराटराजप्रमुखाः प्रवीराः ।
पाञ्चालराजो द्रुपदश्च वीर-
स्तं देशमाजग्मुरदीनसत्त्वाः ॥ ६-५९-११९ (४१२९८)
सर्वाणि सैन्यानि तु तावकानि
यतोयतो गाण्डिवजः प्रणादः ।
ततस्ततः सन्नतिमेव जग्मु-
र्न तं प्रतीपोऽभिससार कश्चित् ॥ ६-५९-१२० (४१२९९)
तस्मिन्सुघोरे कनृप संप्रहारे
हताः प्रवीराः सरथाश्वसूताः ।
गजाश्च नाराचनिपाततप्ता
महापताकाः शुभरुक्मकक्ष्याः ॥ ६-५९-१२१ (४१३००)
परीतसत्वाः सहसा निपेतुः
किरीटिना भिन्नतनुत्रकायाः ।
दृढं हताः पात्रिभिरुग्रवेगैः
पार्थेन भल्लैर्विमलैः शिताग्नैः ॥ ६-५९-१२२ (४१३०१)
निकृत्तयन्त्रा निहतेन्द्रकीला
ध्वजा महान्तो ध्वजिनिमुखेषु ।
पदातिसङ्घाश्च रथाश्च सङ्ख्ये
हयाश्च नागाश्च धनञ्जयेन ॥ ६-५९-१२३ (४१३०२)
बाणाहतास्तूर्णमपेतसत्वा
विष्टभ्य गात्राणि निपेतुरुर्व्याम् ।
ऐन्द्रेण तेनास्त्रवरेण राजन्
महाहवे भिन्नतनुत्रदेहाः ॥ ६-५९-१२४ (४१३०३)

ततः शरौघैर्निशितैः किरीटिना
नृदेहशस्त्रक्षतलोहितोदा ।
नदी सुघोरा नरमेदफेना
प्रवर्तिता तत्र रणाजिरे वै ॥ ६-५९-१२५ (४१३०४)
वेगेन साऽतीव पृथुप्रवाहा
परेतनागाश्वशरीररोधाः ।
नरेन्द्रमज्जोच्छ्रितमांसपङ्काः
प्रभूतरक्षोगणभूतसेविता ॥ ६-५९-१२६ (४१३०५)
शिरःकपालाकुलकेशशाद्वला
शरीरसङ्घातसहस्रवाहिनी ।
विशीर्णनानाकवचोर्मिसंकुला
नराश्वनागास्थिनिकृत्तशर्करा ॥ ६-५९-१२७ (४१३०६)
श्वकङ्कशालावृकगृध्रकाकैः
क्रव्यादसङ्घैश्च तरक्षुभिश्च ।
उपेतकूलां ददृशुर्मनुष्याः
क्रूरां महावैतरणीप्रकाशाम् ॥ ६-५९-१२८ (४१३०७)
प्रवर्तितामर्जुनबाणसङ्घै-
र्मेदोवसासृकप्रवहां सुभीमाम् ।
हतप्रवीरां च तथैव दृष्ट्वा
सेनां कुरूणामथ फल्गुनेन ॥ ६-५९-१२९ (४१३०८)
ते चेदिपाञ्चालकरूषमत्स्याः
पार्थाश्च सर्वे सहिताः प्रणेदुः ।
जयप्रगल्भाःक पुरुषप्रवीराः
संत्रासयन्तः कुरुवीरयोधान् ॥ ६-५९-१३० (४१३०९)
हतप्रवीराणि बलानि दृष्ट्वा
किरीटिना शत्रुभयावहेन ।
वित्रास्य सेनां ध्वजिनीपतीनां
सिंहो मृगाणामिव यूथसङ्घान् ॥ ६-५९-१३१ (४१३१०)
विनेदतुस्तावतिहर्षयुक्तौ
गाण्डीवधन्वा च जनार्दनश्च ।
ततो रविं संवृतरश्मिजालं
दृष्ट्वा भृशं शस्त्रपरिक्षताङ्गाः ॥ ६-५९-१३२ (४१३११)
तदैन्द्रमस्त्रं विततं च घोर-
मसह्यमुद्वीक्ष्य युगान्तकल्पम् ।
अथापयानं कुरवः सभीष्माः
सद्रोणदुर्योधनबाह्लिकाश्च ॥ ६-५९-१३३ (४१३१२)

चक्रुर्निशां सन्धिगतां समीक्ष्य
विभावसोर्लोहितरागयुक्ताम् ।
अवापय कीर्तिं च यशश्च लोके
विजित्य शत्रूंश्च धनंजयोऽपि ॥ ६-५९-१३४ (४१३१३)
ययौ नरेन्द्रैः सहसोदरैश्च
समाप्तकर्मा शिबिरं निशायाम् ।
ततः प्रजज्ञे तुमुलः कुरूणां
निशामुखे घोरतमः प्रणादः ॥ ६-५९-१३५ (४१३१४)
रणे रथानामयुतं निहत्य
हता गजाः सप्तशतार्जुनेन ।
प्राज्याश्च सौवीरगणाश्च सर्वे
निपातिताः क्षुद्रकमालवाश्च ॥ ६-५९-१३६ (४१३१५)
महत्कृतं कर्म धनञ्जयेन
कर्तुं यथा नार्हति कश्चिदन्यः ।
श्रुतायुरम्बष्ठपतिश्च राजा
तथैव दुर्मर्षणचित्रसेनौ ॥ ६-५९-१३७ (४१३१६)
द्रोणः कृपः सैन्धवबाह्लिकौ च
भूरिश्रवाः शल्यशलौ च राजन् ।
अन्ये च योधाः शतशः समेताः
क्रुद्धेन पार्थेन रणस्य मध्ये ॥ ६-५९-१३८ (४१३१७)
स्वबाहुवीर्येण जिताः सभीष्माः
किरीटिना लोकमहारथेन ।
इति ब्रुवन्तः शिबिराणि जग्मुः
सर्वे गणा भारत ये त्वदीयाः ॥ ६-५९-१३९ (४१३१८)
उल्कासहस्रैश्च सुसंप्रदीप्तै-
र्विभ्राजमानैश्च तथा प्रदीप्रैः ।
किरीटिवित्रासितसर्वयोधा
चक्रे निवेशं ध्वजिनी कुरूणाम् ॥ ॥ ६-५९-१४० (४१३१९)

इति श्रीमन्महाभारते भीष्मपर्वणि भीष्मवधपर्वणि
तृतीयदिवसयुद्धे एकोनषष्टितमोऽध्यायः ॥
Mahabharata - Bhishma Parva - Chapter Footnotes

६-५९-३१ पिण्डितान् एकस्थान् । वर्मितान् कवचिनः ॥
६-५९-३९ आक्रन्दे युद्धे ॥
६-५९-८३समुदीर्यमाणं वर्धमानप्रयत्नम् ॥

६-५९-८७ अश्विनोरश्विपुत्रयोर्नकुलसहदेवयोः ॥
६-५९-१११ प्रजिघाय प्रेषयामास ॥
६-५९-११२ शरप्रवेकान् बाणश्रेष्ठान् ॥

---

भिस्मपर्व-अध्यय०६०
॥ श्रीः ॥
६.६०. अध्यायः ६०

Mahabharata - Bhishma Parva - Chapter Topics
भीष्मार्जुनयुद्धवर्णनम् ॥१ ॥

Mahabharata - Bhishma Parva - Chapter Text

६-६०-० (४१३२०)
सञ्जय उवाच। ६-६०-०क्ष् (४१२८)
व्युष्टां निशां भारत भारताना-
मनीकिनीनां प्रमुखे महात्मा ।
ययौ सपत्नान्प्रति जातकोपो
वृतः समग्रेण बलेन भीष्मः ॥ ६-६०-१ (४१३२१)
तं द्रोणदुर्योधनबाह्लिकाश्च
तथैव दुर्मर्षणचित्रसेनौ ।
जयद्रथश्चातिबलो बलौघै-
र्नृपास्तथान्ये प्रययुः समन्तात् ॥ ६-६०-२ (४१३२२)
स तैर्महद्भिश्च महारथैश्च
तेजस्विभिर्वीर्यवद्भिश्च राजन् ।
रराज राजा स तु राजमुख्यै-
र्वृतः सदेवैरिव वज्रपाणिः ॥ ६-६०-३ (४१३२३)
तस्मिन्ननीकप्रमुखे विषक्ता
दोधूयमानाश्च महापताकाः ।
सुरक्तपीतासितपाण्डुराभा
महागजस्कन्धगता विरेजुः ॥ ६-६०-४ (४१३२४)
सा वाहिनी शान्तनवेन गुप्ता
महारथैर्वारणवाजिभिश्च ।
बभौ सविद्युत्स्तनयित्नुकल्पा
जलागमे द्यौरिव जातमेघा ॥ ६-६०-५ (४१३२५)
ततो रणायाभिमुखी प्रयाता

प्रत्यर्जुनं शान्तनवाभिगुप्ता ।
सेनामहोग्ना सहसा कुरूणां
वेगो यथा भीम इवापगायाः ॥ ६-६०-६ (४१३२६)
तं व्यालनानाविधगूढसारं
गजाश्वपादातरथौघपक्षम् ।
व्यूहं महामेघसमं महात्मा
ददर्श दूरात्कपिराजकेतुः ॥ ६-६०-७ (४१३२७)
विनिर्ययौ केतुमता रथेन
नरर्षभः श्वेतहयेन काले ।
ग जये धृतः शत्रुवरूथिनीनां
यथा सुरेन्द्रोऽसुरवाहिनीनाम् ॥ ६-६०-८ (४१३२८)
नारायणेनेन्द्र इवाभिगुप्तः
शशीव सूर्येण समेयिवान्यथा ।
तथा महात्मा सह केशवेन
वरीथिनीनां प्रमुखे रराज '॥ ६-६०-९ (४१३२९)
सोपस्करं सोत्तरबन्धुरेषं
यत्तं यदूनामृषभेण सङ्ख्ये ।
कपिध्वजं प्रेक्ष्य रथं विषेदुः
सहैव पुत्रैस्तव कौरवेयाः ॥ ६-६०-१० (४१३३०)
प्रकल्पितं गुप्तमुदायुधेन
किरीटिना लोकमहारथेन ।
तं व्यूहराजं ददृशुस्त्वदीया-
श्चतुश्चतुर्व्यालसहस्रकीर्णम् ॥ ६-६०-११ (४१३३१)
यथैव पूर्वेऽहनि धर्मराज्ञा
व्यूहः कृतः कौरवसत्तमेन ।
यथा न भूतो भुवि मानुषेषु
न दृष्टपूर्वो न च संश्रुतश्च ॥ ६-६०-१२ (४१३३२)
ततो यथादेशमुपेत्य तस्थुः
पाञ्चालमुख्याः सह चेदिमुख्यैः ।
ततः समादेशसमाहतानि
भेरीसहस्राणि विनेदुराजौ ॥ ६-६०-१३ (४१३३३)
शङ्खस्वनास्तूर्यरवाः प्रणेदुः
सर्वेष्वनीकेषु ससिंहनादाः ।
ततः सबाणानि महास्वनानि
विस्फार्यमाणानि धनूंषि वीरैः ॥ ६-६०-१४ (४१३३४)
क्षणेन भेरीपणवप्रणादा-

नन्तर्दधुः शङ्खमहास्वनांश्च ।
तच्छङ्खशब्दावृतमन्तरिक्ष-
मुद्धूतभौमद्रुतरेणुजालम् ॥ ६-६०-१५ (४१३३५)
महानुभावाश्च ततः प्रकाश-
नालोक्य वीराः सहसाऽभिपेतुः ।
रथी रथेनाभिहतः ससूतः
पपात साश्वः सरथः सकेतुः ॥ ६-६०-१६ (४१३३६)
गजो गजेनाभिहताः पपात
पदातिना चाभिहतः पदातिः ।
आवर्तमानान्यभिवर्तमानै-
र्घोरीकृतान्यद्भुतदर्शनानि ॥ ६-६०-१७ (४१३३७)
प्रासैश्च खड्गैश्च समाहतानि
सदश्वबृन्दानि सदश्वबृन्दैः ।
सुवर्णतारागणभूषितानि
सूर्यप्रभाभानि शरावराणि ॥ ६-६०-१८ (४१३३८)
विदार्यमाणानि परश्वथैश्च
प्रासैश्च स्वङ्गैश्च निपेतुरुर्व्याम् ।
गजैर्विषणापरगात्ररुग्णाः
केचित्ससूता रथिनः प्रपेतुः ॥ ६-६०-१९ (४१३३९)
गजर्षभाश्चापि जगर्षभेण
निपातिता बाणहताः पृथिव्याम् ।
गजौघवेगोद्धतसादितानां
श्रुत्वा विषेदुः सहसा मनुष्याः ॥ ६-६०-२० (४१३४०)
आर्तस्वनं सादिपदातियूनां
विषाणगात्रावरताडितानाम् ।
संभ्रान्तनागाश्वरथे मुहूर्ते
महाक्षये सादिपदातियूनाम् ॥ ६-६०-२१ (४१३४१)
महारथैः संपरिवार्यमाणं
संदृश्य दूरात्कपिराजकेतुम् ।
तं पञ्चतालोच्छ्रिततालकेतुः
सदश्ववेगाद्भुतवीर्ययानः ॥ ६-६०-२२ (४१३४२)
महास्त्रबाणाशनिदीप्तमन्तं
किरीटिनं शान्तनवोऽभ्यधावत् ।
तथैव शक्रप्रतिमप्रभाव-
मिन्द्रात्मजं द्रोणमुखा विसस्नुः ॥ ६-६०-२३ (४१३४३)
कृपश्च शल्यश्च विविंशतिश्च

दुर्योधनः सौमदत्तिश्च राजन् ।
ततो रथानां प्रमुखादुपेत्य
सर्वास्त्रिवित्काञ्चनचित्रवर्मा ॥ ६-६०-२४ (४१३४४)
जवेन शूरोऽभिससार सर्वा-
स्तानर्जुनस्यात्मभवोऽभिमन्युः ।
तेषां महास्त्राणि महारथाना-
मसह्यकर्मा विनिहत्य कार्ष्णिः ॥ ६-६०-२५ (४१३४५)
बभौ महामन्त्रहुतार्चिमाली
सदोगतः सन्भगवानिवाग्निः ।
ततः स तूर्णं रुधिरोदफेनां
कृत्वा नदीमाशु रणे रिपूणाम् ॥ ६-६०-२६ (४१३४६)
जगाम सौभद्रमतीत्य भीष्मो
महारथं पार्थमदीनसत्वः ।
ततः प्रहस्याद्भुतविक्रमेण
गाण्डीवमुक्तेन शिलाशितेन ॥ ६-६०-२७ (४१३४७)
विपाठजालेन महास्त्रजालं
विनाशयामास किरीटमाली ।
तमुत्तमं सर्वधनुर्धराणा-
मसक्तकर्मा कपिराजकेतुः ॥ ६-६०-२८ (४१३४८)
भीष्मं महात्माऽभिववर्ष तूर्णं
शरौघजालैर्विमलैश्च भल्लैः ।
तथैव भीष्माहतमन्तरिक्षे
महास्त्रजालं कपिराजकेतोः ॥ ६-६०-२९ (४१३४९)
विशीर्यमाणं ददृशुस्त्वदीया
दिवाकरेणेव तमोभिभूतम् ।
एवंविधं कार्मुकभीमनाद-
मदीनवत्सत्पुरुषोत्तमाभ्याम् ।
ददर्श लोकः कुरुसृंजयाश्च ६-६०-३० (४१३५०)
६-६०-३०फ़्"
तद्द्वैरथं भीष्मधनञ्जयाभ्याम् ॥ ॥

इति श्रीमन्महाभारते भीष्मपर्वणि भीष्मवधपर्वणि
चतुर्थदिवसयुद्धे षष्टितमोऽध्यायः ॥

Mahabharata - Bhishma Parva - Chapter Footnotes

६-६०-१ व्युष्टां प्रभाताम् ॥

६-६०-७ व्यालो व्यूहविशेषस्तेन नानाविधं गूढसारं च ॥
६-६०-९ सोत्तरबन्धुरेषं उत्तरेणाच्छादनेन बन्धुरा रम्या ईषा तत्सहितम् ॥
६-६०-१८ शरावराणि कवचानि ॥

---

भिस्मपर्व-अध्यय०६१
॥ श्रीः ॥
६.६१. अध्यायः ६१

Mahabharata - Bhishma Parva - Chapter Topics
धृष्टद्युन्मेन शलपुत्रवधः ॥ १ ॥

Mahabharata - Bhishma Parva - Chapter Text

६-६१-० (४१३५१)
सञ्जय उवाच। ६-६१-०क्ष् (४१२९)
द्रौणिर्भूरिश्रवाः शल्यश्चित्रसेनश्च मारिषः ।
पुत्रः सांयमनेश्चैव सौभद्रं पर्यवारयन् ॥ ६-६१-१ (४१३५२)
संसक्तमतितेजोभिस्तमेकं ददृशुर्जनाः ।
पञ्चभिर्मनुजव्याघ्रैर्गजैः सिंहशिशुं यथा ॥ ६-६१-२ (४१३५३)
नातिलक्ष्यतया कश्चिन्न शौर्ये न पराक्रमे ।
बभूव सदृशः कार्ष्णेर्नास्त्रे नापि च लाघवे ॥ ६-६१-३ (४१३५४)
तथा तमात्मजं युद्धे विक्रमन्तमरिन्दमम् ।
दृष्ट्वा पार्थः सुसंयत्तं सिंहनादमथानदत् ॥ ६-६१-४ (४१३५५)
पीडयानं तु तत्सैन्यं पौत्रं तव विशांपते ।
दृष्ट्वा त्वदीया राजेन्द्र समन्तात्पर्यवारयन् ॥ ६-६१-५ (४१३५६)
ध्वजिनीं धार्तराष्ट्राणां दीनशत्रुरदीनवत् ।
प्रत्युद्ययौ स सौभद्रस्तेजसा च बलेन च ॥ ६-६१-६ (४१३५७)
तस्य लाघवमार्गस्थमादित्यसदृशप्रभम् ।
व्यदृश्यत महच्चापं समरे युध्यतः परैः । ६-६१-७ (४१३५८)
स द्रौणिमिषुणैकेन विद्धवा शल्यं च पञ्चभिः ।
ध्वजं सांयमनेश्चैव सोऽष्टाभिश्चिच्छिदे ततः ॥ ६-६१-८ (४१३५९)
रुक्मदण्डां महाशक्तिं प्रेषितां सौमदत्तिन ।
शितेनोरगसंकाशां पत्रिणाभिजघान ताम् ॥ ६-६१-९ (४१३६०)
शल्यस्य च महावेगानस्यतः समरे शरान् ।
‘धनुश्चिच्छेद भल्लेन तीव्रवेगन फाल्गुनिः’

जघानार्जुनदायादश्चतुर्भिश्चतुरो हयान् ॥ ६-६१-१० (४१३६१)
भूरिश्रवाश्च शल्यश्च द्रौणिः सांयमनिः शलः ।
नाभ्यवर्तन्त संरब्धाः कार्ष्णेर्बाहुबलोदयात् ॥ ६-६१-११ (४१३६२)
ततस्त्रिगर्ता राजेन्द्र मद्राश्च सह केकयैः ।
पञ्चविंशतिसाहस्रास्तव पुत्रेण चोदिताः ॥ ६-६१-१२ (४१३६३)
धनुर्वेदविदो मुख्या अजेयाः शत्रुभिर्युधि ।
सह पुत्रं जिघांसन्तं परिवव्रुः किरीटिनम् ॥ ६-६१-१३ (४१३६४)
तौ तु तत्र पितापुत्रौ परिक्षिप्तौ महारथौ ।
ददर्श राजन्पाञ्चल्यः सेनापतिररिन्दम ॥ ६-६१-१४ (४१३६५)
स वारणरथोघानां सहस्रैर्बहुभिर्वृतः ।
वाजिभिः पत्तिभिश्चैव वृतः शतसहस्रशः ॥ ६-६१-१५ (४१३६६)
ग्पारावताश्वः स रथमास्थाय परवीरहा'
धनुर्विष्फार्य संक्रुद्धो नोदयित्वा च वाहिनीम् ।
ययौ तं मद्रकानीकं केकयांश्च परंतप ॥ ६-६१-१६ (४१३६७)
तेन कीर्तिमता गुप्तमनीकं दृढधन्वना ।
संरब्धरथनागाश्वं योत्स्यमानमशोभत ॥ ६-६१-१७ (४१३६८)
सोऽर्जुनप्रमुखे यान्तं पाञ्चालकुलवर्धनः ।
त्रिभिः शारद्वतं बाणैर्जत्रदेशे समार्पयत् ॥ ६-६१-१८ (४१३६९)
ततः स मद्रकान्हत्वा दशैव दशभिः शरैः ।
पृष्ठरक्षं जघानाशु भल्लेन कृतवर्मणः ॥ ६-६१-१९ (४१३७०)
दमनं चापि दायादं पौरवस्य महात्मनः ।
जघान विमलाग्रेण नाराचेन परंतपः ॥ ६-६१-२० (४१३७१)
ततः सांयमनेः पुत्रः पाञ्चाल्यं युद्धदुर्मदम् ।
अविध्यत्रिंशता बाणैर्दशभिश्चास्य सारथिम् ॥ ६-६१-२१ (४१३७२)
सोऽतिविद्धो महेष्वासः सृक्किणी परिसंलिहन् ।
भल्लेन भृशतीक्ष्णेन निचकर्तास्य कार्मुकम् ॥ ६-६१-२२ (४१३७३)
अथैनं पञ्चविंशत्या क्षिप्रमेव समार्पयत् ।
अश्वांश्चास्यावधीद्राजन्नुभौ तौ पार्ष्णिसारथी ॥ ६-६१-२३ (४१३७४)
स हताश्वे रते तिष्ठन्ददर्श भरतर्षभ ।
पुत्रः सांयमनेः पुत्रं पाञ्चाल्यस्य महात्मनः ॥ ६-६१-२४ (४१३७५)
स प्रगृह्य महाघोरं निस्त्रिंशवरमायसम् ।
पदातिस्तूर्णमानर्च्छद्रथस्थं पुरुषर्षभः ॥ ६-६१-२५ (४१३७६)
तं महौघमिवायान्तं स्वात्पतन्तमिवोरगम् ।
भ्रान्तावरणनिस्त्रिंशं कालोत्सृष्टमिवान्तकम् ॥ ६-६१-२६ (४१३७७)
दीप्यमानमिवादित्यं मत्तवारणविक्रमम् ।
अपश्यन्पाण्डवास्तत्र धृष्टद्युम्नश्च पार्षतः ॥ ६-६१-२७ (४१३७८)

तस्य पाञ्चालदायादः प्रतीपमभिधावतः ।
शितनिस्त्रिंशहस्तस्य शरावरणधारिणः ॥ ६-६१-२८ (४१३७९)
बाणवेगमतीतस्य तथाभ्याशमुपेयुषः ।
त्वरन्सेनापतिः क्रुद्धो बिभेद गदया शिरः ॥ ६-६१-२९ (४१३८०)
तस्य राजन्सनिस्त्रिंशं सुप्रभं च शरावरम् ।
हतस्य पततो हस्ताद्वेगेन न्यपतद्भुवि ॥ ६-६१-३० (४१३८१)
तं निहत्य गदाग्रेण स लेभे परमां मुदम् ।
पुत्रः पाञ्चालराजस्य महात्मा भीमविक्रमः ॥ ६-६१-३१ (४१३८२)
तस्मिन्हते महेष्वासे शल्यपुत्रे महारथे ।
हाहाकारो महानासीत्तव सैन्यस्य मारिष ॥ ६-६१-३२ (४१३८३)
ततः सांयमनिः क्रुद्धो दृष्ट्वा निहतामात्मजम् ।
अभिदुद्राव वेगेन पाञ्चाल्यं युद्धदुर्मदम् ॥ ६-६१-३३ (४१३८४)
तौ तत्र समरे शूरौ समेतौ युद्धदुर्मदौ ।
ददृशुः सर्वराजानः कुरवः पाण्डवास्तथा ॥ ६-६१-३४ (४१३८५)
ततः सांयमनिः क्रुद्धः पार्षतं परवीरहा ।
आजघान त्रिभिर्बाणैस्तोत्रैरिव महाद्विपम् ॥ ६-६१-३५ (४१३८६)
तथैव पार्षतं शूरं शल्यः समितिशोभनः ।
आजघानोरसि क्रुद्धस्ततो युद्धमवर्तत ॥ ॥ ६-६१-३६ (४१३८७)

इति श्रीमन्महाभारते भीष्मपर्वणि भीष्मवधपर्वणि
चतुर्थदिवसयुद्धे एकषष्टितमोऽध्यायः ॥
Mahabharata - Bhishma Parva - Chapter Footnotes

६-६१-१ सांयमनेः शलस्य पुत्रः ॥

---

भिस्मपर्व-अध्यय०६२
॥ श्रीः ॥
६.६२. अध्यायः ६२

Mahabharata - Bhishma Parva - Chapter Topics
भीमसेनादियुद्धवर्णनम् ॥ १ ॥

Mahabharata - Bhishma Parva - Chapter Text

६-६२-० (४१३८८)
धृतराष्ट्र उवाच। ६-६२-०क्ष् (४१३०)

दैवमेव परं मन्ये पौरुषादपि सञ्जय ।
यत्सैन्यं मम पुत्रस्य पाण्डुपुत्रेण वध्यते ॥ ६-६२-१ (४१३८९)
नित्यं हि मामकांस्तात हतानेव हि शंससि ।
अव्यग्रांश्च प्रहृष्टांश्च नित्यं शंशसि पाण्डवान् ॥ ६-६२-२ (४१३९०)
ग्विभग्नांश्च प्रनष्टांश्च नित्यं शंससि मामकान्।'
हीनान्पुरुषकारेण मामकानद्य सञ्जय ।
पातितान्पात्यमानांश्च हतानेव च शंससि ॥ ६-६२-३ (४१३९१)
युध्यमानान्यथाशक्ति घटमानाञ्जयं प्रति ।
पाण्डवा हि जयन्त्येव जीयन्ते चैव मामकाः ॥ ६-६२-४ (४१३९२)
सोऽहं तीव्राणि दुःखानि दुर्योधनकृतानि च ।
श्रोष्यामि सततं तात दुःसहानि बहूनि च ॥ ६-६२-५ (४१३९३)
तमुपायं न पश्यामि जीयेरन्येन पाण्डवान् ।
मामका विजयं युद्धे प्राप्नुयुर्येन सञ्जय ॥ ६-६२-६ (४१३९४)
सञ्जय उवाच। ६-६२-७क्ष् (४१३१)
क्षयं मनुष्यदेहानां गजवाजिरथक्षयम् ।
श्रृणु राजन्स्थिरो भूत्वा तवैवापनयो महान् ॥ ६-६२-७ (४१३९५)
धृष्टद्युम्नस्तु शल्येन पीडितो नवभिः शरैः ।
पीडयामास संक्रुद्धो मद्राधिपतिमायसैःक ॥ ६-६२-८ (४१३९६)
तत्राद्भुतमपश्याम पार्षस्य पराक्रमम् ।
न्यवारयत यस्तूर्णं शल्यं समितिशोभनम् ॥ ६-६२-९ (४१३९७)
नान्तरं दृश्यते तत्र तयोश्च रथिनोस्तदा ।
मुहूर्तमिव तद्युद्धं तयोः सममिवाभवत् ॥ ६-६२-१० (४१३९८)
ततः शल्यो महाराज धृष्टद्युम्नस्य संयुगे ।
धनुश्चिच्छेद भल्लेन पीतेन निशितेन च ॥ ६-६२-११ (४१३९९)
अथैनं शरवर्षेण च्छादयामास संयुगे ।
गिरिं जलागमे यद्वञ्जलदा जलवृष्टिभिः ॥ ६-६२-१२ (४१४००)
अभिमन्युस्ततः क्रुद्धो धृष्टद्युम्ने च पीडिते ।
अभिदुद्राव वेगेन मद्रराजरथं प्रति ॥ ६-६२-१३ (४१४०१)
ततो मद्राधिपस्थं कार्ष्णिः प्राप्यातिकोपनः ।
आर्तायनिममेयात्मा विव्याध निशितैः शरैः ॥ ६-६२-१४ (४१४०२)
ततस्तु तावका राजन्परीप्सन्तोऽर्जुनं रणे ।
मद्रराजरथं तूर्णं परिवार्यावतस्थिरे ॥ ६-६२-१५ (४१४०३)
दुर्योधनो विकर्णश्च दुःशासनविविंशती ।
दुर्मर्षणो दुःसहश्च चित्रसेनोऽथ दुर्मुखः ॥ ६-६२-१६ (४१४०४)
सत्यव्रतश्च भद्रं ते पुरुमित्रश्च भारत ।
एते मद्राधिपरथं पालयन्तः स्थिता रणे ॥ ६-६२-१७ (४१४०५)

तान्भीमसेनः संक्रुद्धो धृष्टद्युम्नश्च पार्षतः ।
द्रौपदेयाभिमन्युश्च माद्रीपुत्रौ च पाण्डवौ ॥ ६-६२-१८ (४१४०६)
धार्तराष्ट्रान्दश रथान्दशैव प्रत्यवारयन् ।
नानारूपाणि शस्त्राणि विसृजन्तो विशांपते ॥ ६-६२-१९ (४१४०७)
अभ्यवर्तन्त संहृष्टाः परस्परवधैषिणः ।
ते वै समेयुः संग्रामे राजन्दुर्मन्त्रिते तव ॥ ६-६२-२० (४१४०८)
तस्मिन्दशरथे क्रुद्धे वर्तमाने महाभये ।
तावकानां परेषां वा प्रेक्षका रथिनोऽभवन् ॥ ६-६२-२१ (४१४०९)
शस्त्राण्यनेकरूपाणि विसृजन्तो महारथाः ।
अन्योन्यमभिनर्दन्तः संप्रहारं प्रचक्रिरे ॥ ६-६२-२२ (४१४१०)
ते तदा जातसंरम्भाः सर्वेऽन्योन्यं जिघांसवः ।
अन्योन्यमभिमर्दन्तः स्पर्धमानाः परस्परम् ॥ ६-६२-२३ (४१४११)
अन्योन्यस्पर्धया राजञ्ज्ञातयः संगता मिथः ।
महास्त्राणि विमुञ्चन्तः समापेतुरमर्षिणः ॥ ६-६२-२४ (४१४१२)
दुर्योधनस्तु संक्रुद्धो धृष्टद्युम्नं महारणे ।
विव्याध निशितैर्बाणैश्चतुर्भिः समरे द्रुतम् ॥ ६-६२-२५ (४१४१३)
दुर्मर्षणश्च विंशत्या चित्रसेनश्च पञ्चभिः ।
दुर्मुखो नवभिर्बाणैर्दुःसहश्चापि सप्तभिः ॥ ६-६२-२६ (४१४१४)
विविंशतिः पञ्चभिश्च त्रिभिर्दुःशासनस्तथा ।
तान्प्रत्यविध्यद्राजेन्द्र पार्षतः शत्रुतापनः ॥ ६-६२-२७ (४१४१५)
एकैकं पञ्चविंशत्या दर्शयन्पाणिलाघवम् ।
सत्यव्रतं च समरे पुरुमित्रं च भारत ॥ ६-६२-२८ (४१४१६)
अभिमन्युरविध्यत्तु दशभिर्दशभिः शरैः ।
माद्रीपुत्रौ तु समरे मातुलं मातृनन्दनौ ॥ ६-६२-२९ (४१४१७)
अविध्येतां शरैस्तीक्ष्णैस्तदद्भुतमिवाभवत् ।
ततः शल्यो महाराज स्वस्त्रीयौ रथिनां वरौ ॥ ६-६२-३० (४१४१८)
शरैर्बहुभिरानर्च्छत्कृतप्रतिकृतैषिणौ ।
छाद्यमानौ ततस्तौ कतु माद्रीपुत्रौ न चेलतुः ॥ ६-६२-३१ (४१४१९)
अथ दुर्योधनं दृष्ट्वा भीमसेनो महाबलः ।
विधित्सुः कलहस्यान्तं गदां जग्राह पाण्डवः ॥ ६-६२-३२ (४१४२०)
तमुद्यतगदं दृष्ट्वा कैलासमिव श्रृङ्गिणम् ।
भीमसेनं महाबाहुं पुत्रास्ते प्राद्रवन्भयात् ॥ ६-६२-३३ (४१४२१)
दुर्योधनस्तु संक्रुद्धो मागधं समचोदयत् ।
अनीकं दशसाहस्रं कुञ्जराणां तरस्विनाम् ॥ ६-६२-३४ (४१४२२)
गजानीकेन सहितस्तेन राजा सुयोधनाः ।
मागधं पुरतः कृत्वा भीमसेनं समभ्ययात् ॥ ६-६२-३५ (४१४२३)

आपतन्तं च तं दृष्ट्वा गजानीकं वृकोदरः ।
गदापाणिरवारोहद्रथात्सिंह इवोन्नदन् ॥ ६-६२-३६ (४१४२४)
अद्रिसारमयीं गुर्वीं प्रगृह्य महतीं गदाम् ।
अभ्यधावद्गजानीकं व्यादितास्य इवान्तकः ॥ ६-६२-३७ (४१४२५)
स गजान्गदया निघ्नन्व्यचरत्समरे बली ।
भीमसेनो महाबाहुः सवज्र इव वासवः ॥ ६-६२-३८ (४१४२६)
तस्य नादेन महता मनोहृदयकम्पिना ।
व्यत्यचेष्टन्त संहत्य गजा भिमस्य गर्जतः ॥ ६-६२-३९ (४१४२७)
ततस्तु द्रौपदीपुत्राः सौभद्रश्च महारथः ।
नकुलः सहदेवश्च धृष्टद्युम्नश्च पार्षतः ॥ ६-६२-४० (४१४२८)
पृष्ठं भीमस्य रक्षन्तः शरवर्षेण वारणान् ।
अभ्यवर्षन्त धावन्तो मेघा इव गिरिव्रजान् ॥ ६-६२-४१ (४१४२९)
नाकुलिस्तु शतानीकः समरे शत्रुपूगहा ।
क्षुरैः क्षुरप्रैर्भल्लैश्च पीतैश्चाञ्जलिकैः शितैः ।
न्यहनच्चोत्तमाङ्गानि पाण्डवो गजयोधिनाम् ॥ ६-६२-४२ (४१४३०)
शिरोभिः प्रपतद्भिश्च बाहुभिश्च विभूषितैः ।
अश्मवृष्टिरिवाभाति पाणिभिश्च सहाङ्कुशैः ॥ ६-६२-४३ (४१४३१)
हृतोत्तमाङ्गाः स्कन्धेषु गजानां गजयोधिनः ।
अदृश्यन्ताचलाग्रेकषु द्रुमा भग्नशिखा इव ॥ ६-६२-४४ (४१४३२)
धृष्टद्युम्नहतानन्यानपश्याम महागजान् ।
पततः पात्यमानांश्च पार्षतेन महात्मना ॥ ६-६२-४५ (४१४३३)
मागधोऽथ महीपालो गजमैरावणोपमम् ।
प्रेषयामास समरे सौभद्रस्य रथं प्रति ॥ ६-६२-४६ (४१४३४)
तमापतन्तं संप्रेक्ष्य मागधस्य महागजम् ।
जघानैकेषुणा वीरःत सौभद्रः परवीरहा ॥ ६-६२-४७ (४१४३५)
तस्यावर्जितनागस्य कार्ष्णिः परपुरंजयः ।
राज्ञो रजतपुङ्खेन भल्लेनापाहरच्छिरः ॥ ६-६२-४८ (४१४३६)
विगाह्य तद्गजानीकं भीमसेनोऽपि पाण्डवः ।
व्यचरत्समरे मृद्नन्गजानिन्द्रो गिरीनिव ॥ ६-६२-४९ (४१४३७)
एकप्रहारनिहतान्भीमसेनेन दन्तिनः ।
अपश्याम रणे तस्मिन्गिरीन्वज्रहतानिव ॥ ६-६२-५० (४१४३८)
भग्नदन्तान्भग्नकरान्भग्नसक्थीश्च वारणान् ।
भग्नपृष्ठत्रिकानन्यान्निहतान्पर्वतोपमान् ॥ ६-६२-५१ (४१४३९)
नदतः सीदतश्चान्यान्विमुखान्समरे गतान् ।
विद्रुतान्भयसंविग्नांस्तथा विशकृतोऽपरान् ॥ ६-६२-५२ (४१४४०)
भीमसेनस्य मार्गेषु पतितान्पर्वतोपमान् ।

अपश्यं निहतान्नागान्राजन्निष्ठीवतोपरान् ॥ ६-६२-५३ (४१४४१)
वमन्तो रुधिरं चान्ये भिन्नकुम्भा महागजाः ।
विह्वलन्तो गता भूमिं शैला इव धरातले ॥ ६-६२-५४ (४१४४२)
मेदोरुधिरदिग्धाङ्गो वसामज्जासमुक्षितः ।
व्यचरत्समरे भीमो दण्डपाणिरिवान्तकः ॥ ६-६२-५५ (४१४४३)
गजानां रुधिरक्लिन्नां गदां बिभ्रद्वृकोदरः ।
घोरः प्रतिभयश्चासीत्पिनाकीव पिनाकभृत् ॥ ६-६२-५६ (४१४४४)
संमथ्यमानाः क्रुद्धेन भीमसेनेन दन्तिनः ।
सहसा प्राद्रवन्क्लिष्टा मृद्नन्तस्तव वाहिनीम् ॥ ६-६२-५७ (४१४४५)
तं हि वीरं महेष्वासं सौभद्रप्रमुखा रथाः ।
पर्यरक्षन्त युध्यन्तं वज्रायुधमिवामराः ॥ ६-६२-५८ (४१४४६)
शोणिताक्तां गदां बिभ्रदुक्षितां गजशोणितैः ।
कृतान्त इव रोद्रात्मा भीमसेनो व्यदृश्यत ॥ ६-६२-५९ (४१४४७)
व्यायच्छमानं गदया दिक्षु सर्वासु भारत ।
अपश्याम रणे भीमं नृत्यन्तमिव शङ्करम् ॥ ६-६२-६० (४१४४८)
यमदण्डोपमां गुर्वीमिन्द्राशनिसमकस्वनाम् ।
अपश्याम महाराय रौद्रां विशसनीं गदाम् ॥ ६-६२-६१ (४१४४९)
विमिश्रां केशमज्जाभिः प्रदिग्धां रुधिरेण च ।
पिनाकमिव रुद्रस्य क्रुद्धस्याभिघ्नतः पशून् ॥ ६-६२-६२ (४१४५०)
यथा पशूनां सङ्घातं यष्ट्या पालः प्रकालयेत् ।
तथा भीमो गजानीकं गदया समकालयत् ॥ ६-६२-६३ (४१४५१)
गदया वध्यमानास्ते मार्गणैश्च समन्ततः ।
स्वान्यनीकानि मृद्नन्तः प्राद्रवन्कुञ्जरास्तव ॥ ६-६२-६४ (४१४५२)
महावात इवाभ्राणि विधमित्वा स वारणान् ।
अतिष्ठत्तुमुले भीमः श्मशान इव शूलभृत् ॥ ॥ ६-६२-६५ (४१४५३)

इति श्रीमन्महाभारते भीष्मपर्वणि भीष्मवधपर्वणि
चतुर्थदिवसयुद्धे द्विषष्टितमोऽध्यायः ॥
Mahabharata - Bhishma Parva - Chapter Footnotes

६-६२-१४ आर्तायनिं ऋतायनपुत्रं शल्यम् ॥

---

भिस्मपर्व-अध्यय०६३
॥ श्रीः ॥
६.६३. अध्यायः ६३

Mahabharata - Bhishma Parva - Chapter Topics
सात्यकिभूरिश्रवसोः समागमः ॥ १ ॥

Mahabharata - Bhishma Parva - Chapter Text

६-६३-० (४१४५४)
सञ्जय उवाच। ६-६३-०क्ष् (४१३२)
हते तस्मिन्गजानीके पुत्रो दुर्योधनस्तव ।
भीमसेनं घ्नतेत्येवं सर्वसैन्यान्यचोदयत् ॥ ६-६३-१ (४१४५५)
ततः सर्वाण्यनीकानि तव पुत्रस्य शासनात् ।
अभ्यद्रवन्भीमसेनं नदन्तं भैरवान्रवान् ॥ ६-६३-२ (४१४५६)
तं बलौघमपर्यन्तं देवैरपि सुदुःसहम् ।
आपतन्तं सुदुष्पारं समुद्रमिव पर्वणि ॥ ६-६३-३ (४१४५७)
रथनागाश्वकलिलं शङ्खदुन्दुभिनादितम् ।
अनन्तरथपादातं रजसा सर्वतो वृतम् ॥ ६-६३-४ (४१४५८)
तं भीमसेनः समरे महोदधिमिवापरम् ।
सेनासागरमक्षोभ्यं वेलेव समवारयत् ॥ ६-६३-५ (४१४५९)
तदाश्चर्यमपश्याम पाण्डवस्य महात्मनः ।
भीमसेनस्य समरे राजन्कर्मातिमानुषम् ॥ ६-६३-६ (४१४६०)
उदीर्णान्पार्थिवान्सर्वान्साश्वान्सरथकुञ्जरान् ।
असंभ्रमं भीमसेनो गदया समवारयत् ॥ ६-६३-७ (४१४६१)
स संवार्य बलौघांस्तान्गदया रथिनां वरः ।
अतिष्ठत्तुमुले भीमो गिरिर्मेरुरिवाचलः ॥ ६-६३-८ (४१४६२)
तस्मिन्सुतुमुले घोरे काले परमदारुणे ।
भ्रातरश्चैव पुत्राश्च धृष्टद्युम्नश्च पार्षतः ॥ ६-६३-९ (४१४६३)
द्रौपदेयाभिमन्युश्च शिखण्डी चापराजितः ।
न प्राजहन्भीमसेनं भये जाते महाबलम् ॥ ६-६३-१० (४१४६४)
ततः शैक्यायसीं गुर्वीं प्रगृह्य महतीं गदाम् ।
अधावत्तावकान्योधान्दण्डपाणिरिवान्तकः ॥ ६-६३-११ (४१४६५)
पोथयन्रथबृन्दानि वाजिबृन्दनि चाभिभूः ।
कर्षयन्रथवृन्दानि बाहुवेगेन पाण्डवः ॥ ६-६३-१२ (४१४६६)
विनिघ्नन्यचतत्सङ्ख्ये युगान्ते कालविद्विभुः ।
ऊरुवेगेन संकर्षन्रथजालानि पाण्डवः ॥ ६-६३-१३ (४१४६७)
बलानि संममर्दाशु नड्वलानीव कुञ्जरः ।
मृद्नन्रथेभ्यो रथिनो गजेभ्यो गजयोधिनः ॥ ६-६३-१४ (४१४६८)
सादिनश्चाश्वपृष्ठेभ्यो भूमौ वापि पदातिनः ।

गदया व्यवमत्सर्वान्वातो वृक्षानिवौजसा ॥ ६-६३-१५ (४१४६९)
भीमसेनो महाबाहुस्तव पुत्रस्य वै बले ।
सापि प्रञ्जानसामासैः प्रदिग्धा रुधिरेण च ॥ ६-६३-१६ (४१४७०)
अदृश्यत महारौद्रा गदा नागाश्वपातनी ।
तत्रतत्र हतैश्चापि मनुष्यगजवाजिभिः ॥ ६-६३-१७ (४१४७१)
रणाङ्गणं समभवन्मृत्योरावाससन्निभम् ।
पिनाकमिव रुद्रस्य क्रुद्धस्याभिघ्नतः पशून् ॥ ६-६३-१८ (४१४७२)
यमदण्डोपमामुग्रामिन्द्राशनिसमस्वनाम् ।
ददृशुर्भीमसेनस्य रौद्रां विशसनीं गदाम् ॥ ६-६३-१९ (४१४७३)
आविध्यतो गदां तस्य कौन्तेयस्य महात्मनः ।
बभौ रूपं महाघोरं कालस्येव युगक्षये ॥ ६-६३-२० (४१४७४)
तं तथा महतीं सेनां द्रावयन्तं पुनः पुनः ।
दृष्ट्वा मृत्युमवायान्तं सर्वे विमनसोऽभवन् ॥ ६-६३-२१ (४१४७५)
यतोयतः प्रेक्षते स्म गदामुद्यम्य पाण्डवः ।
तेनतेन स्म दीर्यन्ते सर्वसैन्यानि भारत ॥ ६-६३-२२ (४१४७६)
प्रदारयन्तं सैन्यानि बलेनामितविक्रमम् ।
ग्रसमानमनीकानि व्यादितास्यमिवान्तकम् ॥ ६-६३-२३ (४१४७७)
तं तथा भीमकर्माणं प्रगृहीतमहागदम् ।
दृष्ट्वा वृकोदरं भीष्मः सहसैव समभ्ययात् ॥ ६-६३-२४ (४१४७८)
महता रथघोषेण रथेनादित्यवर्चसा ।
छादयञ्शरवर्षेण पर्जन्य इव वृष्टिमान् ॥ ६-६३-२५ (४१४७९)
तमायान्तं तथा दृष्ट्वा व्यात्ताननमिवान्तकम् ।
भीष्मं भीमो महाबाहुः प्रत्युदीयादमर्षितः ॥ ६-६३-२६ (४१४८०)
तस्मिन्क्षणे सात्यकिः सत्यसन्धः
शिनिप्रवीरोऽभ्यपतत्पितामहम् ।
निघ्नन्नमित्रान्धनुषा दृढेन
संकम्पयंस्तव पुत्रस्य सैन्यम् ॥ ६-६३-२७ (४१४८१)
तं यान्तमश्वै रजतप्रकाशैः
शरान्वपन्तं निशितान्सुपुङ्खान् ।
नाशक्नवन्धारयितुं तदानीं
सर्वे गणा भारत ये त्वदीयाः ॥ ६-६३-२८ (४१४८२)
अविध्यदेनं दशभिः पृषत्कैः-
रलम्बुसो राक्षसोऽसौ तदानीम् ।
शरैश्चतुर्भिः प्रतिविद्ध्य तं च
नप्ता शिनेरभ्यपतद्रथेन ॥ ६-६३-२९ (४१४८३)
अन्वागतं वृष्णिवरं निशम्य

तं शत्रुमध्ये परिवर्तमानम् ।
प्रद्रावयन्तं कुरुपुङ्गवांश्च
पुनः पुनश्च प्रणदन्तमाजौ ॥ ६-६३-३० (४१४८४)
योधास्त्वदीयाः शरवर्षैरवर्ष-
न्मेघा यथा भूधरमम्बुवेगैः ।
तथापि तं धारयितुं न शेकु-
र्मध्यंदिने सूर्यमिवातपन्तम् ॥ ६-६३-३१ (४१४८५)
न तत्र कश्चिन्नविषण्ण आसी-
दृते राजन्सोमदत्तस्य पुत्रात् ।
स वै समादाय धनुर्महात्मा
भिरिश्रवा भारत सौमदत्तिः ॥ ६-६३-३२ (४१४८६)
दृष्ट्वा रथान्स्वान्व्यपनीयमाना-
न्प्रत्युद्ययौ सात्यकिं योद्धुमिच्छन् ॥ ॥ ६-६३-३३ (४१४८७)

इति श्रीमन्महाभारते भीष्मपर्वणि भीष्मवधपर्वणि
चतुर्थदिवसयुद्धे त्रिषष्टितमोऽध्यायः ॥

---

भिस्मपर्व-अध्यय०६४
॥ श्रीः ॥
६.६४. अध्यायः ६४

Mahabharata - Bhishma Parva - Chapter Topics
भीमेन दुर्योधनानुजाष्टकवधः ॥ १ ॥
घटोत्कचभयेन कुरुभिः सेनावहारः ॥ २ ॥

Mahabharata - Bhishma Parva - Chapter Text

६-६४-० (४१४८८)
सञ्जय उवाच। ६-६४-०क्ष् (४१३३)
ततो भूरिश्रवा राजन्सात्यकिं नवभिः शरैः ।
प्राविध्यद्भृशसंक्रुद्धस्तोत्रैरिव महाद्विपम् ॥ ६-६४-१ (४१४८९)
कौरवं सात्यकिश्चैव शरैः सन्नतपर्वभिः ।
अवारयदमेयात्मा सर्वलोकस्य पश्यतः ॥ ६-६४-२ (४१४९०)
ततो दुर्योधनो राजा सोदर्यैः परिवारितः ।
सोमदत्तिं रणे यत्तः समन्तात्पर्यवारयत् ॥ ६-६४-३ (४१४९१)
तं चैव पाण्डवाः सर्वे सात्यकिं रभसं रणे ।

परिवार्य स्थिताः सङ्ख्ये समन्तात्सुमहौजसः ॥ ६-६४-४ (४१४९२)
भीमसेनस्तु संक्रुद्धो गजामुद्यम्य भारत ।
दुर्योधनमुखान्सर्वान्पुत्रांस्ते पर्यवारयत् ॥ ६-६४-५ (४१४९३)
रथैरनेकसाहस्रैः क्रोधामर्षसमन्वितः ।
नन्दकस्तव पुत्रस्तु भीमसेनं महाबलम् ॥ ६-६४-६ (४१४९४)
विव्याध विशिखैः षड्भिः कङ्कपत्रैः शिलाशितैः ।
दुर्योधनस्तदा राजन्भीमसेनं महारथम् ॥ ६-६४-७ (४१४९५)
आजघानोरसि क्रुद्धो मार्गणैर्नवभिः शितैः ।
ततो भीमो महाबाहुः स्वरथं सुमहाबलः ॥ ६-६४-८ (४१४९६)
आरुरोह रथश्रेष्ठं विशोकं चेदमब्रवीत् ।
एते महारथाः शूरा धार्तराष्ट्राः समागताः ॥ ६-६४-९ (४१४९७)
मामेव भृशसंक्रुद्धा हन्तुमभ्युद्यता युधि ।
मनोरथद्रुमोऽस्माकं चिन्तितो बहुवार्षिकः ॥ ६-६४-१० (४१४९८)
सफलः सूत चाद्येह योऽहं पश्यामि सोदरान् ।
यत्राशोकसमुत्क्षिप्ता रेणवो रथनेमिभिः ॥ ६-६४-११ (४१४९९)
प्रयास्यन्त्यन्तरिक्षं हि शरबृन्दैर्दिगन्तरे ।
तत्र तिष्ठति सन्नद्धः स्वयं राजा सुयोधनः ॥ ६-६४-१२ (४१५००)
भ्रातरश्चास्य सन्नद्धाः कुलपुत्रा मदोत्कटाः ।
एतानद्य हनिष्यामि पश्यतस्ते न संशयः ॥ ६-६४-१३ (४१५०१)
तस्मान्ममाश्वान्संग्रमे यत्तः संयच्छ सारथे ।
एवमुक्त्वा ततः पार्थस्तव पुत्रं विशांपते ॥ ६-६४-१४ (४१५०२)
विव्याध निशितैस्तीक्ष्णैः शरैः कनकभूषणैः ।
नन्दकं च त्रिभिर्बाणैरभ्यविध्यत्स्तनान्तरे ॥ ६-६४-१५ (४१५०३)
तं तु दुर्योधनः षष्ट्या विद्ध्वा भीमं महाबलम् ।
त्रिभिरन्यैः सुनिशितैर्विशोकं प्रत्यविध्यत ॥ ६-६४-१६ (४१५०४)
भिमस्य च रणे राजन्धनुश्चिच्छेद भासुरम् ।
मुष्टिदेशे भृशं तीक्ष्णौस्त्रिभिर्भल्लैर्हसन्निव ॥ ६-६४-१७ (४१५०५)
समरे प्रेक्ष्य यन्तारं विशोकं तु वृकोदरः ।
पीडितं विशिखैस्तीक्ष्णैस्तव पुत्रेण धन्विना ॥ ६-६४-१८ (४१५०६)
अमृष्यमाणः संरब्धो धनुर्दिव्यं परामृशम् ।
पुत्रस्य ते महाराज वधार्थं भरतर्षभ ॥ ६-६४-१९ (४१५०७)
समादधत्सुसंक्रुद्धः क्षुरप्रं रोमवाहिनम् ।
तेन चिच्छेद नृपतेर्भीमः कार्मुकमुत्तमम् ॥ ६-६४-२० (४१५०८)
सोऽपविद्ध्य धनुश्छिन्नं पुत्रस्ते क्रोधमूर्च्छितः ।
अन्यत्कार्मुकमादत्त सत्वरं वेगवत्तरम् ॥ ६-६४-२१ (४१५०९)
संदधे विशिखं घोर कालमृत्युसमप्रभम् ।

तेनाजघान संक्रुद्धो भीमसेनं स्तनान्तरे ॥ ६-६४-२२ (४१५१०)
स गाढविद्धो व्यथितः स्यान्दनोपस्थ आविशत् ।
स निषण्णो रथोपस्थे मूर्च्छामभिजगाम ह ॥ ६-६४-२३ (४१५११)
तं दृष्ट्वा व्यथितं भीममभिमन्युपुरोगमाः ।
नामृष्यन्त महेष्वासाः पाण्डवानां महारथः ॥ ६-६४-२४ (४१५१२)
ततस्तु तुमुलां वृष्टिं शस्त्राणां तिग्मतेजसाम् ।
पातयामासुरव्यग्राः पुत्रस्य तव मूर्धनि ॥ ६-६४-२५ (४१५१३)
प्रतिलभ्य ततः संज्ञां भीमसेनो महाबलः ।
दुर्योधनं त्रिभिर्विद्ध्वा पुनर्विव्याध पञ्चभिः ॥ ६-६४-२६ (४१५१४)
शल्यं च पञ्चविंशत्या शरैर्विव्याध पाण्डवः ।
रुक्मपुङ्खैर्महेष्वासः स विद्धो व्यपयाद्रणात् ॥ ६-६४-२७ (४१५१५)
प्रत्युद्ययुस्ततो भीमं तव पुत्राश्चतुर्दश ।
सेनापतिः सुषेणश्च जलसन्धः सुलोचनः ॥ ६-६४-२८ (४१५१६)
उग्रो भीमरथो भीमो वीरबाहुरलोलुपः ।
दुर्मुखो दुष्प्रधर्षश्च विवित्सुर्विकटः समः ॥ ६-६४-२९ (४१५१७)
विसृजन्तो बहून्बाणान्क्रोधसंरक्तलोचनाः ।
भीमसेनमभिद्रुत्य विव्यधुः सहिता भृशम् ॥ ६-६४-३० (४१५१८)
पुत्रांस्तु तव संप्रेक्ष्य भीमसेनो महाबलः ।
सृक्किणी विलिहन्वीरः पशुमध्ये यथा वृकः ॥ ६-६४-३१ (४१५१९)
अभिपत्य महाबाहुर्गरुत्मानिव वेगितः ।
सेनापतेः क्षुरप्रेण शिरश्चिच्छेद पाण्डवः ॥ ६-६४-३२ (४१५२०)
संप्रहस्य च हृष्टात्मा त्रिभिर्बाणैर्महाभुजः ।
जलसन्धं विनिर्भिद्य सोऽनयद्यमसादनम् ॥ ६-६४-३३ (४१५२१)
सुषेणं च ततो हत्वा प्रेषयामास मृत्यवे ।
उग्रस्य सशिरस्त्राणं शिरश्चन्द्रोपमं भुवि ॥ ६-६४-३४ (४१५२२)
पातयामास भल्लेन कुण्डलाभ्यां विभूषितम् ।
वीरबाहुं च सप्तत्या साश्वकेतुं ससारथिम् ॥ ६-६४-३५ (४१५२३)
निनाय समरे वीरः परलोकाय पाण्डवः ।
भीमं भीमरथं चोभौ भीमसेनो हसन्निव ॥ ६-६४-३६ (४१५२४)
पुत्रौ ते दुर्मदौ राजन्ननयद्यमसादनम् ।
ततः सुलोचनं भीमः क्षुरप्रेण महामृधे ॥ ६-६४-३७ (४१५२५)
मिषतां सर्वसैन्यानामनयद्यमसादनम् ।
पुत्रास्तु तव तं दृष्ट्वा भीमसेनपराक्रमम् ॥ ६-६४-३८ (४१५२६)
शेषा येऽन्येऽभवंस्तत्र ते भीमस्य भयार्दिताः ।
विप्रद्रुता दिशो राजन्वध्यमाना महात्मना ॥ ६-६४-३९ (४१५२७)
ततोऽब्रवीच्छान्तनवः सर्वानेव महारथान् ।

एष भीमो रणे क्रुद्धो धार्तराष्ट्रान्महारथान् ॥ ६-६४-४० (४१५२८)
यथा प्राग्य्रान्यथा ज्येष्ठान्यथा शूरांश्च संगतान् ।
निपातयत्युग्रधन्वा तं प्रगृह्णीत माचिरम् ॥ ६-६४-४१ (४१५२९)
एवमुक्त्वा ततः सर्वे धार्तराष्ट्रस्य सैनिकाः ।
अभ्यद्रवन्त संक्रुद्धा भीमसेनं महाबलम् ॥ ६-६४-४२ (४१५३०)
भगदत्तः प्रभिन्नेन कुञ्जरेण विशांपते ।
अभ्ययात्सहसा तत्रयत्र भीमो व्यवस्थितः ॥ ६-६४-४३ (४१५३१)
आपतन्नेव च रणे भीमसेनं शिलीमुखैः ।
अदृश्यं समरे चक्रे जीमूत इव भास्करम् ॥ ६-६४-४४ (४१५३२)
अभिमन्युमुखास्तत्तु नामृष्यन्त महारथाः ।
भीमस्याच्छादनं शङ्कये स्वबाहुबलमाश्रिताः ॥ ६-६४-४५ (४१५३३)
त एनं शरवर्षेण समन्तात्पर्यवारयन् । ६-६४-४६ब्गजं च
शरवृष्ट्या तु बिभिदुस्ते समन्ततः ॥ ६-६४-४६ (४१५३४)
स शस्त्रवृष्ट्याऽभिहतः समस्तैस्तैर्महारथैः ।
प्राग्ज्योतिषगजो राजन्नानालिङ्गैः सुतेजनैः ॥ ६-६४-४७ (४१५३५)
संजातरुधिरोत्पीडः प्रेक्षणीयोऽभवद्रणे ।
गभस्तिभिरिवार्कस्य संस्यूतो जलदो महान् ॥ ६-६४-४८ (४१५३६)
संचोदितो मदस्रावी भगदत्तेन वारणः ।
अभ्यधावत तन्सर्वान्कालोत्सृष्ट इवान्तकः ॥ ६-६४-४९ (४१५३७)
द्विगुणं जवमास्थाय कम्पयंश्चरणैर्महीम् ।
तस्य तत्सुमहद्रूपं दृष्ट्वा सर्वे महारथाः ॥ ६-६४-५० (४१५३८)
असह्यं मन्यमानाश्च नातिप्रमनसोऽभवन् ।
ततस्तु नृपतिः क्रुद्धो भीमसेनं स्तनान्तरे ॥ ६-६४-५१ (४१५३९)
आजघान महाराज शरेणानतपर्वणा ।
सोऽतिविद्धो महेष्वासस्तेन राज्ञा महारथः । ६-६४-५२ (४१५४०)
मूर्च्छयाऽभिपरीतात्मा ध्वजयष्टिं समाश्रयत् ।
तांस्तु भीतान्समालक्ष्य भीमसेनं च मूर्च्छितम् ॥ ६-६४-५३ (४१५४१)
ननाद बलवन्नादं भगदत्तः प्रतापवान् ।
ततो घटोत्कचो राजन्प्रेक्ष्य भीमं तथाऽऽगतं ॥ ६-६४-५४ (४१५४२)
संक्रुद्धो राक्षसो घोरस्तत्रैवान्तरधीयत ।
स कृत्वा दारुणां मायां भीरूणां भयवर्धिनीम् ॥ ६-६४-५५ (४१५४३)
अदृश्यत निमेषार्धाद्घोररूपं समास्थितः ।
ऐरावतं समारूढः स वै मायाकृतं स्वयम् ॥ ६-६४-५६ (४१५४४)
तस्य चान्येऽपि दिङ्वागा बभूवुरनुयायिनः ।
अञ्जनो वमानश्चैव महापद्मश्च सुप्रभः ॥ ६-६४-५७ (४१५४५)
त्रय एते महानागा राक्षसैः समधिष्ठिताः ।

महाकायास्त्रिधा राजन्प्रस्रवन्तो मदं बहु ॥ ६-६४-५८ (४१५४६)
तेजोवीर्यबलोपेता महाबलपराक्रमाः ।
घटोत्कचस्तु स्वं नागं चोदयामास तं तदा ॥ ६-६४-५९ (४१५४७)
सगजं भगदत्तं तु हन्तुकामः परंतपः ।
ते चान्ये चोदिता नागा राक्षसैस्तैर्महाबलैः ॥ ६-६४-६० (४१५४८)
परिपेतुः सुसंरब्धाश्चतुर्दंष्ट्राश्चतुर्दिशम् ।
भगदत्तस्य तं नागं विषाणैरभ्यपीडयन् ॥ ६-६४-६१ (४१५४९)
स पीड्यमानस्तैर्नागैर्वेदनार्तः शराहतः ।
अनदत्सुमहानादमिन्द्राशनिसमस्वनम् ॥ ६-६४-६२ (४१५५०)
ग्व्यवर्तत महाघोषो भैमसेनिशरार्दितः ।
मृदित्वा सर्वसैन्यानि तव पुत्रस्य भारत'॥ ६-६४-६३ (४१५५१)
तस्य तं नदतो नादं सुघोरं भीमनिःश्वनम् ।
श्रुत्वा भीष्मोऽब्रवीद्द्रोणं राजानं च सुयोधनम् ॥ ६-६४-६४ (४१५५२)
एष युध्यति संग्रामे हैडिम्बेन दुरात्मना ।
भगदत्तो महेष्वासः कृच्छ्रे च परिवर्तते ॥ ६-६४-६५ (४१५५३)
राक्षसश्च महामायः स च राजाऽतिकोपनः ।
एतौ समेतौ समरे कालमृत्युसमावुभौ ॥ ६-६४-६६ (४१५५४)
श्रीयते चैव हृष्टानां पाण्डवानां महास्वनः ।
हस्तिनश्चैव सुमहान्भीतस्य रुदितध्वनिः ॥ ६-६४-६७ (४१५५५)
तत्र गच्छाम भद्रं वो राजानं परिरक्षितुम् ।
अरक्ष्यमाणः समरे क्षिप्रं प्राणान्विमोक्ष्यति ॥ ६-६४-६८ (४१५५६)
ते त्वरध्वं महावीर्याः किं चिरेण प्रयामहे ।
महान्हि वर्तते रौद्रः संग्रामो रोमहर्षणः ॥ ६-६४-६९ (४१५५७)
भक्तश्च कुलपुत्रश्च शूरश्च पृतनापतिः ।
युक्तं तस्य परित्राणं कर्तुमस्माभिरच्युत ॥ ६-६४-७० (४१५५८)
भीष्मस्य तद्वचः श्रुत्वा सर्व एव महारथाः ।
द्रोणभीष्मौ पुरस्कृत्य भगदत्तपरीप्सया ॥ ६-६४-७१ (४१५५९)
उत्तमं जवमास्थाय प्रययुर्यत्र सोऽभवत् ।
तान्प्रयातान्समालोक्य युधिष्ठिरपुरोगमाः ॥ ६-६४-७२ (४१५६०)
पञ्चालाः पाण्डवैः सार्धं पृष्ठतोऽनुययुः परान् ।
तान्यनीकान्यथालोक्य राक्षसेन्द्रः प्रतापवान् ॥ ६-६४-७३ (४१५६१)
ननाद सुमहानादं विस्फोटमशनेरिव ।
तस्य तं निनदं श्रुत्वा दृष्ट्वा नागांश्च युध्यतः ॥ ६-६४-७४ (४१५६२)
भीष्मः शान्तनवो भूयो भारद्वाजमभाषत ।
न रोचते मे संग्रामो हैडिम्बेन दुरात्मना ॥ ६-६४-७५ (४१५६३)
बलवीर्यमसाविष्टः ससहायश्च सांप्रतज् ।

नैष शक्यो युधा जेतुमपि वज्रभृता स्वयम् ॥ ६-६४-७६ (४१५६४)
लब्धलक्षः प्रहारी च वयं च श्रान्तवाहनाः ।
पाञ्चालैः पाण्डवेयैश्च दिवसं क्षतविक्षताः ॥ ६-६४-७७ (४१५६५)
इदानीं युधि निर्जेतुं न शक्योऽसौ स राक्षसः ।
अस्तमभ्येति सविता रात्रौ योद्धुं कन शक्यते ।
अवहारमतः कुर्मः श्वो योत्स्यामः परै सह ॥ ६-६४-७८ (४१५६६)
पितामहवचः श्रुत्वा यथा चक्रुःस्म कौरवाः ।
उपायेनापयानं ते घटोत्कचभयार्दिताः ॥ ६-६४-७९ (४१५६७)
कौरवेषु निवृत्तेषु पाण्डवा जितकाशिनः ।
सिंहनादान्भृशं चक्रुः शङ्खान्दध्मुश्च भारत ॥ ६-६४-८० (४१५६८)
एवं तदभवद्युद्धं दिवसं भरतर्षभ ।
पाण्डवानां कुरूणां च पुरस्कृत्य घटोत्कचम् ॥ ६-६४-८१ (४१५६९)
कौरवास्तु ततो राजन्प्रययुः शिबिरं स्वकम् ।
व्रीडमाना निशाकाले पाण्डवेयैः पराजिताः ॥ ६-६४-८२ (४१५७०)
शरविक्षतगात्रास्तु पाण्डपपुत्रा महारथाः ।
युद्धे सुमनसो भूत्वा जग्मुः स्वशिबिरं प्रति ॥ ६-६४-८३ (४१५७१)
पुरस्कृत्य महाराज भीमसेनघटोत्कचौ ।
पूजयन्तस्तदान्योन्यं मुदा परमया युताः ॥ ६-६४-८४ (४१५७२)
नदन्तो विविधान्नादांस्तूर्यस्वनविमिश्रितान् ।
सिंहनादांश्च कुर्वन्तो विमिश्राञ्शङ्खनिः स्वनैः ॥ ६-६४-८५ (४१५७३)
विनदन्तो महात्मानः कम्पयन्तश्च मेदिनीम् ।
घट्टयन्तश्च मर्माणि तव पुत्रस्य मारिष । ६-६४-८६ (४१५७४)
प्रयाताः शिबिरायैव निशाकाले परंतप ।
दुर्योधनस्तु नृपतिर्दीनो भ्रातृवधेन च ॥ ६-६४-८७ (४१५७५)
मुहूर्तं चिन्तयामास बाष्पशोकसमाकुलः ।
ततः कृत्वा विधिं सर्वं शिबिरस्य यथाविधि ।
प्रदध्यौ शोकसंतप्तो भ्रातृव्यसनकर्शितः ॥ ॥ ६-६४-८८ (४१५७६)

इति श्रीमन्महाभारते भीष्मपर्वणि भीष्मवधपर्वणि
चतुर्थदिवसयुद्धे चतुःषष्टितमोऽध्यायः ॥ ॥ इति
चतुर्थदिवसयुद्धं समाप्तम् ॥

Mahabharata - Bhishma Parva - Chapter Footnotes

६-६४-४७ सुतेजनैर्बाणैरिति शेषः ॥
६-६४-८५ घट्टयन्तः स्पृशन्तः ॥

भिस्मपर्व-अध्यय०६५
॥ श्रीः ॥
६.६५. अध्यायः ६५

Mahabharata - Bhishma Parva - Chapter Topics
भीष्मेण दुर्योधनंप्रति विश्वोपाख्यानकथनम् ॥ १ ॥

Mahabharata - Bhishma Parva - Chapter Text

६-६५-० (४१५७७)
धृतराष्ट्र उवाच। ६-६५-०क्ष् (४१३४)
भयं मे सुमहज्जातं विस्मयश्चैव सञ्जय ।
श्रुत्वा पाण्डुकुमाराणां कर्म देवैः सुदुष्करम् ॥ ६-६५-१ (४१५७८)
पुत्राणां च पराभावं श्रुत्वा सञ्जय सर्वशः ।
चिन्ता मे महती सूत भविष्यति कथं त्विति ॥ ६-६५-२ (४१५७९)
ध्रुवं विदुरवाक्यानि धक्ष्यन्ति हृदयं मम ।
तथा हि दृश्यते सर्वं दैवयोगेन सञ्जय ॥ ६-६५-३ (४१५८०)
यत्र भीष्ममुखान्सर्वाञ्शस्त्रज्ञान्योधसत्तमान् ।
पाण्डवानामनीकेषु योधयन्ति प्रहारिणः ॥ ६-६५-४ (४१५८१)
केनावध्या महात्मानः पाण्डुपुत्रा महाबलाः ।
केन दत्तवरास्तात किं वा ज्ञानं विदन्ति ते ॥ ६-६५-५ (४१५८२)
येन क्षयं न गच्छन्ति दिवि तारागणा इव ।
पुनःपुनर्न मृष्यामि हतं सैन्यं तु पाण्डवैः ॥ ६-६५-६ (४१५८३)
मय्येव दण्डः पतति दैवात्परमदारुणः ।
यथाऽवध्याः पाण्डुसुता यथा वाध्याश्च मे सुताः ॥ ६-६५-७ (४१५८४)
एतन्मे सर्वमाचक्ष्व याथातथ्येन सञ्जय ।
न हि पारं प्रपश्यामि दुःखस्यास्य कथंचन ॥ ६-६५-८ (४१५८५)
समुद्रस्येव महतो भुजाभ्यां प्रतरन्नरः ।
पुत्राणां व्यसनं मन्ये ध्रुवं प्राप्तं सुदारुणम् ॥ ६-६५-९ (४१५८६)
घातयिष्यति मे स्रवान्पुत्रान्भीमो न शंसयः ।
न हि पश्यामि तं वीरं यो मे रक्षेत्सुतान्रणे ॥ ६-६५-१० (४१५८७)
ध्रुवं विनाशः संप्राप्तः पुत्रामां मम सञ्जय ।
तस्मान्मे कारणं सूत शक्तिं चैव विशेषतः ॥ ६-६५-११ (४१५८८)
पृच्छतो वै यथातत्त्वं सर्वमाख्यातुमर्हसि ।
दुर्योधनश्च यच्चक्रे दृष्ट्वा स्वान्विमुखान्रणे ॥ ६-६५-१२ (४१५८९)
भीष्मद्रोणौ कृपश्चैव सौबलश्च जयद्रथः ।

द्रौणिर्वापि महेष्वासो विकर्णो वा महाबलः ॥ ६-६५-१३ (४१५९०)
निश्चयो वापि कस्तेषां तदा ह्यासीन्महात्मानाम् ।
विमुखेषु महाप्राज्ञ मम पुत्रेषु सञ्जय ॥ ६-६५-१४ (४१५९१)
सञ्जय उवाच। ६-६५-१५क्ष् (४१३५)
श्रृणु राजन्नवहितः श्रुत्वा चैवावधारय ।
नैव मन्त्रकृतं किंचिन्नैव मायां तथाविधाम् ॥ ६-६५-१५ (४१५९२)
न वै विभीषिकां कांचिद्राजन्कुर्वन्ति पाण्डवाः ।
युध्यन्ति ते यथान्यायं शक्तिमन्तश्च संयुगे ॥ ६-६५-१६ (४१५९३)
धर्मेण सर्वकार्याणि जीवितादीनि भारत ।
आरभन्ते सदा पार्थाः प्रार्थयाना महद्यशः ॥ ६-६५-१७ (४१५९४)
न ते युद्धान्निवर्तन्ते धर्मोपेता महाबलाः ।
श्रिया परमया युक्ता यतो धर्मस्ततो जयः ॥ ६-६५-१८ (४१५९५)
तेनावध्या रणे पार्था जययुक्ताश्च पार्थिव ।
तव पुत्रा दुरात्मानः पापेष्वभिरताः सदा ॥ ६-६५-१९ (४१५९६)
निष्ठुरा हीनकर्माणस्तेन हीयन्ति संयुगे ।
सुबहूनि नृशंसानि पुत्रैस्तव जनेश्वरे ॥ ६-६५-२० (४१५९७)
निकृतानीह पाण्डूनां नीचैरिव यथा नरैः ।
सर्वं च तदनादृत्य पुत्राणां तव किल्बिषम् ॥ ६-६५-२१ (४१५९८)
धर्ममूलाः सदैवासन्पाण्डवाः पाण्डुपूर्वज ।
न चैतान्बहुमन्यन्ते पुत्रास्तव विशांपते । ६-६५-२२ (४१५९९)
तस्य पापस्य सततं क्रियमाणस्य कर्मणः ।
सांप्रतं सुमहद्घोरं फलं प्राप्तं जनेश्वर ॥ ६-६५-२३ (४१६००)
स त्वं भुङ्क्ष्व महाराज सपुत्रः समुहृज्जनः ।
नावबुध्यसि यद्राजन्वार्यमाणः सुहृज्जनैः ॥ ६-६५-२४ (४१६०१)
विदुरेणाथ भीष्मेण द्रोणेन न महात्मना ।
तथा मया चाप्यसकृद्वार्यमाणो न बुध्यसे ॥ ६-६५-२५ (४१६०२)
वाक्यं हितं च पथ्यं च मर्त्यः पथ्यमिवौषधम् ।
पुत्राणां मतमास्थाय जितान्मन्यसि पाण्डवान् ॥ ६-६५-२६ (४१६०३)
शृणु भूयो यथातत्त्वं यन्मां त्वं परिपृच्छसि ।
कारणं भरतश्रेष्ठ पाण्डवानां जयं प्रति ॥ ६-६५-२७ (४१६०४)
तत्तेऽहं कथयिष्यामि यथाश्रुतमरिन्दम ।
दुर्योधनेन संपृष्ट एतमर्थं पितामहः ॥ ६-६५-२८ (४१६०५)
दृष्ट्वा भ्रातॄन्रणे सर्वान्निर्जितांस्तु महारथान् ।
शोकसंमूढहृदयो निशाकाले स्म कौरवः ॥ ६-६५-२९ (४१६०६)
पितामहं महाप्राज्ञं विनयोपगम्य ह ।
यदब्रवीत्सुतस्तेऽसौ तन्मे शृणु जनेश्वर ॥ ६-६५-३० (४१६०७)

दुर्योधन उवाच। ६-६५-३१क्ष् (४१३६)
भवान्द्रोणश्च कर्णश्च कृपो द्रौणिस्तथैव च ।
कृतवर्मा च हार्दिक्यः काम्भोजश्च सुदक्षिणः ॥ ६-६५-३१ (४१६०८)
भूरिश्रवा विकर्णश्च भगदत्तश्च वीर्यवान् ।
महारथाः समाख्याताः कुलपुत्रास्तनुत्यजः ॥ ६-६५-३२ (४१६०९)
त्रयाणामपि लोकानां पर्याप्ता इति मे मतिः ।
पाण्डवानां समस्ताश्च न तिष्ठन्ति पराक्रमे ॥ ६-६५-३३ (४१६१०)
तत्र मे संशयो जातस्तत्त्वमाचक्ष्व पृच्छतः ।
यं समाश्रित्य कौन्तेय जयन्त्यस्मान्क्षणेक्षणे ॥ ६-६५-३४ (४१६११)
भीष्म उवाच। ६-६५-३५क्ष् (४१३७)
शृणु राजन्वचो मह्यं यथा वक्ष्यामि कौरव ।
बहुशश्च मयोक्तोऽसि न च मे तत्त्वया कृतम् ॥ ६-६५-३५ (४१६१२)
क्रियतां पाण्डवैः सार्ध समो भरतसत्तम ।
एतत्क्षेममहं मन्ये पृथिव्यास्तव वा विभो ॥ ६-६५-३६ (४१६१३)
भुङ्क्ष्वेमां पृथिवीं राजन्भ्रातृभिः सहितः सुखी ।
दुर्हृदस्तापयन्सर्वान्नन्दयंश्चापि बान्धवान् ॥ ६-६५-३७ (४१६१४)
न च मे क्रोशतस्तात श्रुतवानसि वै पुरा ।
तदिदं समनुप्राप्तं यत्पाण्डूनवमन्यसे ॥ ६-६५-३८ (४१६१५)
यश्च हेतुरवध्यत्वे तेकषामक्लिष्टकर्मणाम् ।
तं शृणुष्व महाबाहो मम कीर्तयतः प्रभो ॥ ६-६५-३९ (४१६१६)
नास्ति लोकेषु तद्भूतं भविता नो भविष्यति ।
यो जयेत्पाण्डवान्सर्वान्पालिताञ्छार्ङ्गधन्वना ॥ ६-६५-४० (४१६१७)
यत्तु मे कथितं तात मुनिभिर्भावितात्मभिः ।
पुराणगीतं धर्मज्ञ तच्छृणुष्व यथातथम् ॥ ६-६५-४१ (४१६१८)
पुरा किल सुराः सर्वे ऋषयश्च समागताः ।
पितामहमुपासेदुः पर्वत गन्धमादने ॥ ६-६५-४२ (४१६१९)
तेषां मध्ये समासीनः प्रजापतिरपश्यत ।
विमानं प्रज्वलद्भासा स्थितं प्रवरमम्बरे ॥ ६-६५-४३ (४१६२०)
ध्यानेनावेद्य तद्ब्रह्मा कृत्वा च नियतोऽञ्जलिम् ।
नमश्चकार हृष्टात्मा पुरुषं परमेश्वरम् ॥ ६-६५-४४ (४१६२१)
ऋषयस्त्वथ देवाश्च दृष्ट्वा ब्रह्माणमुत्थितम् ।
स्थिताः प्राञ्जलयः सर्वे पश्यन्तो महदद्भुतम् ॥ ६-६५-४५ (४१६२२)
यथावच्च तमभ्यर्च्य ब्रह्मा ब्रह्मविदां वरः ।
जगाद जगतः स्रष्टा परं परमधर्मवित् ॥ ६-६५-४६ (४१६२३)
विश्वावसुर्विश्वमूर्तिर्हि विश्वे
विष्वक्सेनो विश्वकर्मा वशी च ।

विश्वेश्वरो वासुदेवोऽसि तस्मा-
द्योगात्मानं देवतं त्वामुपैमि ॥ ६-६५-४७ (४१६२४)
जय विश्वमहादेव जय लोकहिते रत ।
जय योगीश्वर विभो जय योगपरावर ॥ ६-६५-४८ (४१६२५)
पद्मगर्भविशालाक्ष जय लोकेश्वरेश्वर ।
भूतभव्यभवन्नाथ जय सौम्यात्मजात्मज ॥ ६-६५-४९ (४१६२६)
असङ्ख्येयगुणाधार जय सर्वपरायण ।
नारायण सुदुष्पार जय शार्ङ्गधनुर्धर ॥ ६-६५-५० (४१६२७)
जय सर्वगुणोपेत विश्वमूर्ते निरामय ।
विश्वेश्वर महाबाहो जय लोकार्थतत्पर ॥ ६-६५-५१ (४१६२८)
महोरगवराहाद्य हरिकेश विभो जय ।
हरिवासदिशामीश विश्ववासामिताव्यय ॥ ६-६५-५२ (४१६२९)
व्यक्ताव्यक्तामितस्थान नियतेन्द्रिय सत्क्रिय ।
असङ्ख्येयात्मभावज्ञ जय गम्भीर कामद ॥ ६-६५-५३ (४१६३०)
अनन्त विदित ब्रह्मन्नित्यभूतविभावन ।
कृतकार्य कृतप्रज्ञ धर्मज्ञ विजयावह ॥ ६-६५-५४ (४१६३१)
गुह्यात्मन्सर्वयोगात्मन्स्फुटसंभूतसंभव ।
भूताद्य लोकत्त्वेश जय भूतविभावन ॥ ६-६५-५५ (४१६३२)
आत्मयोगे महाभाग कल्पसंक्षेपतत्पर ।
उद्भावनमनोभाव जय ब्रह्म जयप्रिय ॥ ६-६५-५६ (४१६३३)
निसर्गसर्गनिरत कामेश परमेश्वर ।
अमृतोद्भवसद्भाव मुक्तात्मन्विजयप्रद ॥ ६-६५-५७ (४१६३४)
प्रजापतिपते देव पद्मनाभ महाबल ।
आत्मभूतमहाभूत सत्वात्मञ्जय सर्वदा ॥ ६-६५-५८ (४१६३५)
पादौ तव धा देवी दिशो बाहु दिवं शिरः ।
मूर्तिस्तेऽहं सुराः कायश्चन्द्रादित्यौ च चक्षुषी ॥ ६-६५-५९ (४१६३६)
बलं तपश्च सत्यं च कर्म धर्मात्मकं तव ।
तेजोऽग्निः पवनः श्वास आपस्ते स्वेदसंभवाः ॥ ६-६५-६० (४१६३७)
अश्विनौ श्रवणौ नित्यं देवी जिह्वा सरस्वती ।
वेदाः संस्कारनिष्ठा हि त्वयीदं जगदाश्रितम् ॥ ६-६५-६१ (४१६३८)
न सङ्ख्यानं परीमाणं न तेजो न पराक्रमम् ।
न बलं योगयोगीश जानीमस्ते परंतप ॥ ६-६५-६२ (४१६३९)
त्वद्भक्तिनिरता देव नियमैस्त्वां समाश्रिताः ।
अर्चयामः सदा विष्णो परमेशं महेश्वरम् ॥ ६-६५-६३ (४१६४०)
ऋषयो देवगन्धर्वा यक्षराक्षसपन्नगाः ।
पिशाचा मानुषाश्चैव मृगपक्षिसरीसृपाः ॥ ६-६५-६४ (४१६४१)

एवमादि मया सृष्टं पृथिव्यां त्वत्प्रसादजम् ।
पद्मनाभ विशालाक्ष कृष्ण दुःस्वप्रणाशन ॥ ६-६५-६५ (४१६४२)
त्वं गतिः सर्वभूतानां त्वं नेता त्वं जगद्गुरुः ।
त्वत्प्रसादेन देवेश सुखिनो विबुधाः सदा ॥ ६-६५-६६ (४१६४३)
पृथिवी निर्भया देव त्वत्प्रसादात्सदाऽभवत् ।
तस्माद्भव विशालाक्ष यदुवंशविवर्धनः ॥ ६-६५-६७ (४१६४४)
धर्मसंस्थापनार्थाय दैत्यानां च बधाय च ।
जगतो धारणार्थाय विज्ञाप्यं कुरु मे विभो ॥ ६-६५-६८ (४१६४५)
यत्तत्परमकं गुह्यं त्वत्प्रसादादिदं विभो ।
वासुदेव तदेतत्ते मयोद्गीतं यथातथम् ॥ ६-६५-६९ (४१६४६)
सृष्ट्वा संकर्षणं देवं स्वयमात्मानमात्मना ।
कृष्ण त्वमात्मनास्राक्षीः प्रद्युम्नं चात्मसंभवम् ॥ ६-६५-७० (४१६४७)
प्रद्युम्नादनिरुद्धं त्वं यं विदुर्विष्णुमव्ययम् ।
अनिरुद्धोऽसृजन्मां वै ब्रह्माणं लोकधारिणम् ॥ ६-६५-७१ (४१६४८)
वासुदेवमयः सोऽहं त्वयैवास्मि विनिर्मितः ।
तस्माद्याचामि लोकेश चतुरात्मानमात्मना ।
विभज्य भागशोत्मानं व्रज मानुषतां विभो ॥ ६-६५-७२ (४१६४९)
तत्रासुरवधं कृत्वा सर्वलोकसुखाय वै ।
धर्मं प्राप्य यशः प्राप्य योगं प्राप्स्यति तत्त्वतः ॥ ६-६५-७३ (४१६५०)
त्वां हि ब्रह्मर्षयो लोके देवाश्चामितविक्रम ।
तैस्तैर्हि नामभिर्युक्ता गायन्ति परमात्मकम् ॥ ६-६५-७४ (४१६५१)
स्थिताश्च सर्वे त्वयि भूतसङ्घाः
कृत्वाश्रयं त्वां वरदं सुबाहो ।
अनादिमध्यान्तमपारयोगं
लोकस्य सेतुं प्रवदन्ति विप्राः ॥ ॥ ६-६५-७५ (४१६५२)

इति श्रीमन्महाभारते भीष्मपर्वणि भीष्मवधपर्वणि
पञ्चषष्टितमोऽध्यायः ॥

Mahabharata - Bhishma Parva - Chapter Footnotes

६-६५-२२ सापह्नवाः इति पाठे अपरिसंख्यातकिल्बिषा ॥
६-६५-२६ मन्यसि कमन्यसे ॥
६-६५-३५ मह्यं नम ॥

---

भिस्मपर्व-अध्यय०६६
॥ श्रीः ॥

६.६६. अध्यायः ६६

Mahabharata - Bhishma Parva - Chapter Topics
विश्वोपाख्यानम् ॥ १ ॥

Mahabharata - Bhishma Parva - Chapter Text

६-६६-० (४१६५३)
भीष्म उवाच। ६-६६-०क्ष् (४१३८)
ततः स भगवान्देवो लोकानामीश्वरेश्वरः ।
ब्रह्माणं प्रत्युवाचेदं स्निग्धगम्भीरया गिरा ॥ ६-६६-१ (४१६५४)
विदितं तात योगान्मे सर्वमेतत्तवेप्सितम् ।
तथा तद्भवितेत्युक्त्वा तत्रैवान्तरधीयत ॥ ६-६६-२ (४१६५५)
ततो देवर्षिगन्धर्वा विस्मयं परमं गताः ।
कौतूहलपराः सर्वे पितामहमथाब्रुवन् ॥ ६-६६-३ (४१६५६)
कोन्वयं यो भगवता प्रणम्य विनयाद्विभो ।
वाग्भिः स्तुतो वरिष्ठाभिः श्रोतुमिच्छाम तं वयम् ॥ ६-६६-४ (४१६५७)
एवमुक्तस्तु भगवान्प्रत्युवाच पितामहः ।
देवब्रह्मर्षिगन्धर्वान्सर्वान्मधुरया गिरा ॥ ६-६६-५ (४१६५८)
यत्तत्परं भविष्यं च भवितव्यं च यत्परम् ।
भूतात्मा च प्रभुश्चैव ब्रह्म यच्च परं पदम् ॥ ६-६६-६ (४१६५९)
तेनास्मि कृतसंवादः प्रसन्नेन सुरर्षभाः ।
जगतोऽनुग्रहार्थाय याचितो मे जगत्पतिः । ६-६६-७ (४१६६०)
मानुषं लोकमातिष्ठ वासुदेव इति श्रुतः ।
असुराणां वधार्थाय संभवस्व महीतले ॥ ६-६६-८ (४१६६१)
संग्रामे निहता ये ते दैत्यदानवराक्षसाः ।
त इमे नृषु संभूता घोररूपा महाबलाः ॥ ६-६६-९ (४१६६२)
तेषां वधार्थं भगवान्नरेण सहितो वशी ।
मानुषीं योनिमास्थाय चरिष्यति महीतले ॥ ६-६६-१० (४१६६३)
नरनारायणौ यौ तौ पुराणावृषिसत्तमौ ।
सहितो मानुषे लोके संभूतावमितद्युती ॥ ६-६६-११ (४१६६४)
अजेयौ समरे यत्तौ सहितैरमरैरपि ।
मूढास्त्वेतौ न जानन्ति नरनारायणावृषी ॥ ६-६६-१२ (४१६६५)
तस्याहमग्रजः पुत्रः सर्वस्य जगतः प्रभुः ।
वासुदेवोऽर्चनीयो वः सर्वलोकमहेश्वरः ॥ ६-६६-१३ (४१६६६)
तथा मनुष्योऽयमिति कदाचित्सुरसत्तमाः ।

नावज्ञेयो महावीर्यः शङ्खचक्रगदाधरः ॥ ६-६६-१४ (४१६६७)
एतत्परमकं गुह्यमेतत्परमकं पदम् ।
एतत्परमकं ब्रह्म एतत्परमकं यशः ॥ ६-६६-१५ (४१६६८)
एतदक्षरमव्यक्तमेतद्वै शाश्वतं महः ।
यत्तत्पुरुषसंज्ञं वै गीयते ज्ञायते न च ॥ ६-६६-१६ (४१६६९)
एतत्परमकं तेज एतत्परमकं सुखम् ।
एतत्परमकं सत्यं कीर्तितं विश्वकर्मणा ॥ ६-६६-१७ (४१६७०)
तस्मात्सेन्द्रैः सुरैः सर्वैर्लोकैश्चामितविक्रमःक ।
नावज्ञेयो वासुदेवो मानुषोऽयमिति प्रभुः ॥ ६-६६-१८ (४१६७१)
यश्च मानुषमात्रोऽयमिति ब्रूयात्स मन्दधीः ।
हृषीकेशमवज्ञानात्तमाहुः पुरुषाधमम् ॥ ६-६६-१९ (४१६७२)
योगिनं तं महात्मानं प्रविष्टं मानुषीं तनुम् ।
अवमन्येद्वासुदेवं तमाहुस्तमसं जनाः ॥ ६-६६-२० (४१६७३)
देवं चराचरात्मानं श्रीवत्साङ्कं सुवर्चसम् ।
पद्मनाभं न जानाति तमाहुस्तामसं बुधाः ॥ ६-६६-२१ (४१६७४)
किरीटकौस्तुभधरं मित्राणामभयंकरम् ।
अवजानन्महात्मानं घोरे तमसि मज्जति ॥ ६-६६-२२ (४१६७५)
एवं विदित्वा तत्त्वार्थं लोकानामीश्वरेश्वरः ।
वासुदेवो नमस्कार्यः सर्वलोकैः सुरोत्तमाः ।
तस्यामहात्माजो ब्रह्मा सर्वस्य जगतः पतिः ॥  ६-६६-२३ (४१६७६)
भीष्म उवाच। ६-६६-२४क्ष् (४१३९)
एवमुक्त्वा स भगवान्देवान्सर्षिगकणान्पुरा ।
विसृज्य सर्वभूतानि जगाम भवनं स्वकम् ॥ ६-६६-२४ (४१६७७)
ततो देवाः सगन्धर्वा मुनयोऽप्सरसोऽपि च ।
कथां तां ब्रह्मणा गीतां श्रुत्वा प्रीता दिवं ययुः ॥ ६-६६-२५ (४१६७८)
एतच्छ्रुतं मया तात ऋषीणां भावितात्मनाम् ।
वासुदेवं कथयतां समवाये पुरातनम् ॥ ६-६६-२६ (४१६७९)
रामस्य जामदग्न्यस्य मार्कण्डेयस्य धीमतः ।
व्यासनारदयोश्चापि सकाशाद्भरतर्षभ ॥ ६-६६-२७ (४१६८०)
एतमर्थं च विज्ञाय श्रुत्वा च प्रभुमव्ययम् ।
वासुदेवं महात्मानं लोकानामीश्वरेश्वरम् ॥ ६-६६-२८ (४१६८१)
यस्य चैवात्मजो ब्रह्मा सर्वस्य जगतः पिता ।
कथं न वासुदेवोऽयमर्च्यश्चेज्यश्च मानवैः ॥ ६-६६-२९ (४१६८२)
वारितोऽसि मया तात मुनिर्भिर्वेदपारगैः ।
मा गच्छ संयुगं तेन वासुदेवेन धन्विना ॥ ६-६६-३० (४१६८३)
मा पाण्डवैः सार्धमिति तत्त्वं मोहान्न बुध्यसे ।

मन्ये त्वां राक्षसं क्रूरं तथा चासि तमोवृतः ॥ ६-६६-३१ (४१६८४)
यस्माद्द्विषसि गोविन्दं पाण्डवं तं धनञ्जयम् ।
नरनारायणौ देवौ कोऽन्यो द्विष्याद्धि मानवः ॥ ६-६६-३२ (४१६८५)
तस्माद्ब्रवीमि ते राजन्नेष वै शाश्वतोऽव्ययः ।
सर्कवलोकमयो नित्यः शास्ता धाता धरो ध्रुवः ॥ ६-६६-३३ (४१६८६)
यो धारयति लोकांस्त्रींश्चराचरगुरुः प्रभुः ।
योद्धा जयश्च जेता च सर्वप्रकृतिरीश्वरः ॥ ६-६६-३४ (४१६८७)
राजन्सर्वमयो ह्येष तमोरागविवर्जितः ।
यतः कृष्णस्ततो धर्मो यतो धर्मस्ततो जयः ॥ ६-६६-३५ (४१६८८)
तस्य माहात्म्ययोगेन योगेनात्ममयेन च ।
धृताः पाण्डुसुता राजञ्जयश्चैषां भविष्यति ॥ ६-६६-३६ (४१६८९)
श्रेयोयुक्तां सदा बुद्धिं पाण्डवानां दधाति यः ।
बलं चैव रणे नित्यं भयेभ्यश्चैव रक्षति ॥ ६-६६-३७ (४१६९०)
स एष शाश्वतो देवाः सर्वगुह्यमयः शिवः ।
वासुदेव इति ज्ञेयो यन्मां पृच्छसि भारत ॥ ६-६६-३८ (४१६९१)
ब्राह्मणैः क्षत्रिकयैर्वैश्यैः शूद्रैश्च कृतलक्षणैः ।
सेव्यतेऽभ्यर्च्यते चैव नित्ययुक्तैः स्वकर्मभिःक ॥ ६-६६-३९ (४१६९२)
द्वापरस्य युगस्यान्ते आदौ कलियुगस्य च ।
सात्वतं विधिमास्थाय गीतः संकर्षणेन वै ॥ ६-६६-४० (४१६९३)
स एष सर्वं सुरमर्त्यलोकं
समुद्रकक्ष्यान्तरितां पुरीं च ।
युगेयुगे मानुषं चैव वासं
पुनःपुनः सृजते वासुदेवाःक ॥ ॥ ६-६६-४१ (४१६९४)

इति श्रीमन्महाभारते भीष्मपर्वणि भीष्मवधपर्वणि
षट्षष्टितमोऽध्यायः ॥

Mahabharata - Bhishma Parva - Chapter Footnotes

६-६६-३९ कृतलक्षणैः स्वस्वगुणप्रख्यातैः ॥
६-६६-४० सात्वताः पञ्चरात्रागमविधिना पूजकास्तदीयं सात्वतम् ॥
६-६६-४१ कक्ष्या काञ्ची ।पुरीं द्वारकाम् ॥

---

भिस्मपर्व-अध्यय०६७
॥ श्रीः ॥
६.६७. अध्यायः ६७

Mahabharata - Bhishma Parva - Chapter Topics

भीष्मेण विश्वोपाख्यानकथने वासुदेवमाहात्म्यकथनम् ॥ १ ॥
युधिष्ठिरस्य कृष्णसमाश्रयणेन विजय इति कथनम् ॥ २ ॥

Mahabharata - Bhishma Parva - Chapter Text

६-६७-० (४१६९५)
दुर्योधन उवाच। ६-६७-०क्ष् (४१४०)
वासुदेवो महद्भूतं सर्वलोकेषु कथ्यते ।
तस्यागमं प्रतिष्ठां च ज्ञातुमिच्छे पितामह ॥ ६-६७-१ (४१६९६)
भीष्म उवाच। ६-६७-२क्ष् (४१४१)
वासुदेवो महद्भूतं सर्वदैवतदैवतम् ।
न परं पुण्डरीकाक्षाद्दृश्यते भरतर्षभ ॥ ६-६७-२ (४१६९७)
श्रुतं मे तात रामस्य जामदग्न्यस्य जल्पतः ।
नारदस्य च देवर्षेः कृष्णद्वैपायनस्य च ।
असितो देवलश्चापि वालखिल्यास्तपोधनाः ॥ ६-६७-३ (४१६९८)
मार्कण्डेयश्च गोविन्दे कथयत्यद्भुतं महत् ।
सर्वभूतादिभूतात्मा महात्मा पुरुषोत्तमः ॥ ६-६७-४ (४१६९९)
आपो वायुश्च तेजश्च त्रयमेतदकल्पयत् ।
स सृष्ट्वा पृथिवीं देवीं सर्वलोकेश्वरः प्रभुः ॥ ६-६७-५ (४१७००)
अप्सु वै शयनं चक्रे महात्मा पुरुषोत्तमः ।
सर्वदेवमयो देवः शयानः शयने सुखम् ॥ ६-६७-६ (४१७०१)
मुखतः सोऽग्निमसृजत्प्राणाद्वायुमथापि च ।
सरस्वतीं च वेदांश्च मनसः ससृजेऽच्युत ॥ ६-६७-७ (४१७०२)
एषक लोकान्ससर्जादौ देवांश्च ऋषिभिः सह ।
अमृतं चैव मृत्युं च प्रजानां प्रभवाप्ययौ ॥ ६-६७-८ (४१७०३)
एष धर्मश्च धर्मज्ञो वरदः सर्वकामदः ।
एष कर्ता च कार्यं च आदेरादिः स्वयं प्रभुः ॥ ६-६७-९ (४१७०४)
भूतं भव्यं भविष्यच्च पूर्वमेतदकल्पयत् ।
उभे सन्ध्ये दिवः खं च नियमांश्च जनार्दनः ॥ ६-६७-१० (४१७०५)
ऋषींश्चैव हि गोविन्दस्तपश्चैवाभ्यकल्पयत् ।
स्रष्टारं जगतश्चापि महात्मा प्रभुरव्ययः ॥ ६-६७-११ (४१७०६)
अग्रजं सर्वभूतानां संकर्षणमकल्पयत् ।
शेषं चाकल्पयद्देवमनन्तमिति तं विदुः ॥ ६-६७-१२ (४१७०७)
यो धारयति भूतानि धरां चेमां सपर्वताम् ।
ध्यानयोगेन विप्राश्च तं विदन्ति महौजसम् ।
कर्णस्रोतोभवं चापि मधुं नाम महासुरम् ॥ ६-६७-१३ (४१७०८)

तमुग्रमुग्रकर्माणमुग्रां बुद्धइं समास्थितम् ।
हरन्तं ब्रह्मणो वेदाञ्जघान ब्रह्मणः पिता ।
ब्रह्मणोपचितिं कुर्वन्महात्मा पुरुषोत्तमः ॥ ६-६७-१४ (४१७०९)
तस्य तात वधादेव देवदानवमानवाः ।
मधुसूदनमित्याहुर्ऋषयश्च जनार्दनम् ॥ ६-६७-१५ (४१७१०)
वराहं नारसिंहं च त्रिविक्रममिति प्रभुम् ।
एष धाता विधाता च सर्वेषां प्रामिनां हरिः ॥ ६-६७-१६ (४१७११)
परं हि पुण्डरीकाक्षान्न भूतं न भविष्यति ।
मुखतः सोसृजद्विप्रान्बाहुभ्यां क्षत्रियांस्तथा ॥ ६-६७-१७ (४१७१२)
वैश्यांश्चाप्यूरुतो राजञ्शूद्रान्पद्ङ्यां तथैवच ।
तपसा नियतं देवं निधानं सर्वदेहिनाम् ॥ ६-६७-१८ (४१७१३)
ब्रह्मभूतममावास्यां पौर्णमास्यां तथैव च ।
योगभूतं परिचरन्केशवं महदाप्नुयात् ॥ ६-६७-१९ (४१७१४)
केशवः परमं तेजः सर्वलोकपितामहः ।
एवमाहुर्हृषीकेशं मुनयो वै नराधिप ॥ ६-६७-२० (४१७१५)
एवमेनं विजानीहि आचार्यं पितरं गुरुम् ।
कृष्णो यस्य प्रसीदेत लोकास्तेनाक्षया जिताः ॥ ६-६७-२१ (४१७१६)
यश्चैवैनं भयस्थाने केशवं शरणं व्रजेत् ।
सदा नरः पठंश्चेदं स्वस्तिमान्स सुखी भवेत् ॥ ६-६७-२२ (४१७१७)
ये च कृष्णं प्रपद्यन्ते ते न मुह्यन्ति मानवाः ।
भये महति मग्नांश्च पाति नित्यं जनार्दनःक ॥ ६-६७-२३ (४१७१८)
स तं युधिष्ठिरो ज्ञात्वा याथातथ्येन भारत ।
सर्वात्मना महात्मानं केशवं जगदीश्वरम् ।
प्रपन्नः शरणं राजन्योगानां प्रभुमीश्वरम् ॥ ॥ ६-६७-२४ (४१७१९)

इति श्रीमन्महाभारते भीष्मपर्वणि भीष्मवधपर्वणि
सप्तषष्टितमोऽध्यायः ॥

Mahabharata - Bhishma Parva - Chapter Footnotes

६-६७-८ प्रभव उत्पत्तिहेतुः ।अप्ययः प्रलयहेतुः ॥
६-६७-१३ कर्णात्स्रवतीति कर्णस्रोतः कर्णमलम् ॥

---

भिस्मपर्व-अध्यय०६८
॥ श्रीः ॥
६.६८. अध्यायः ६८

Mahabharata - Bhishma Parva - Chapter Topics

भीष्मेण दुर्योधनंप्रति ब्रह्मर्षिकृतकृष्णस्तवकथनम् ॥ १ ॥
तथा कृष्णस्य पाण्डवेषु प्रीतिकथनपूर्वकं तैः सह शमविधानम् ॥ २ ॥

Mahabharata - Bhishma Parva - Chapter Text

६-६८-० (४१७२०)
भीष्म उवाच। ६-६८-०क्ष् (४१४२)
स्तवं वै ब्रह्मसंयुक्तं शृणु कृष्णस्य भारत ।
ब्रह्मर्षिभिश्च देवैश्च यः पुरा कथितो भुवि ॥ ६-६८-१ (४१७२१)
साध्यानामपि देवानां देवदेवेश्वरः प्रभुः ।
लोकभावनभावज्ञ इति त्वां नारदोऽब्रवीत् ॥ ६-६८-२ (४१७२२)
भूतं भव्यं भविष्यच्च मार्कण्डेयोऽभ्युवाच ह ।
यज्ञं त्वां चैव यज्ञानां तपश्च तपसामपि ॥ ६-६८-३ (४१७२३)
देवानामपि देवं च त्वामाह भगवान्भृगुः ।
पुराणां चैव परमं विष्णो रूपं तवेति च ॥ ६-६८-४ (४१७२४)
वासुदेवो वसूनां त्वं शक्रं स्थापयिता तथा ।
देवदेवोऽसि देवानामिति द्वैपायनोऽब्रवीत् ॥ ६-६८-५ (४१७२५)
पूर्वे प्रजानिसर्गे च दक्षमाहुः प्रजापतिम् ।
स्रष्टारं सर्वभूतानामङ्गिरास्त्वां तथाऽब्रवीत् ॥ ६-६८-६ (४१७२६)
अव्यक्तं ते शरीरोत्थं व्यक्तं ते मनसि स्थितम् ।
देवास्त्वत्संभवाश्चैव देवलस्त्वसितोऽब्रवीत् ॥ ६-६८-७ (४१७२७)
शिरसा ते दिव्यं व्याप्तं बाहुभ्यां पृथिवी तथा ।
जठरं ते त्रयो लोकाः पुरुषोऽसि सनातनः ॥ ६-६८-८ (४१७२८)
एवं त्वामभिजानन्ति तपसा भाविता नराः ।
आत्मदर्शनतृप्तानामृषीणां चासि सत्तमः ॥ ६-६८-९ (४१७२९)
राजर्षीणामुदाराणामाहवेष्वनिवर्तिनाम् ।
सर्वधर्मप्रधानानां त्वं गतिर्मधुसूदन ॥ ६-६८-१० (४१७३०)
इति नित्यं योगविद्भिर्भगवान्पुरुषोत्तमः ।
सनत्कुमारप्रमुखैः स्तूयतेऽभ्यर्च्यते हरिः ॥ ६-६८-११ (४१७३१)
एष ते विस्तरस्तात संक्षेपश्च प्रकीर्तितः ।
केशवस्य यथा तत्त्वं सुप्रीतो भज केशवम् ॥ ६-६८-१२ (४१७३२)
सञ्जय उवाच। ६-६८-१३क्ष् (४१४३)
पुण्यं श्रुत्वैतदाख्यानं महाराज सुतस्तव ।
केशवं बहुमेने स पाण्डवांश्च महारथान् ॥ ६-६८-१३ (४१७३३)
तमब्रवीन्महाराज भीष्मः शान्तनवः पुनः ।

माहात्म्यं ते श्रुतं राजन्केशवस्य महात्कमनः ॥ ६-६८-१४ (४१७३४)
नरस्य च यथातत्त्वं यन्मां त्वं पृच्छसे नृप ।
यदर्थं नृषु संभूतौ नरानारायणावृषी ॥ ६-६८-१५ (४१७३५)
अवध्यौ च यथा वीरौ संयुगेष्वपराजितौ ।
यथा च पाण्डवा राजन्नवध्या युधि कस्यचित् ॥ ६-६८-१६ (४१७३६)
प्रीतिमान्हि दृढं कृष्णः पाण्डवेषु यशस्विषु ।
तस्माद्ब्रवीमि राजेन्द्र शमो भवतु पाण्डवैः ॥ ६-६८-१७ (४१७३७)
पृथिवीं भुङ्क्ष्व सहितो भ्रातृभिर्बलिभिर्वशी ।
नरानारायणौ देवाववज्ञाय नशिष्यसि ॥ ६-६८-१८ (४१७३८)
एवमुक्त्वा तव पिता तूष्णीमासीद्विशांपते ।
व्यसर्जयच्च राजानं शयनं च विवेश ह ॥ ६-६८-१९ (४१७३९)
राजा च शिबिरं प्रायात्प्रणिपत्य महात्मने ।
शिश्ये च शयने शुभ्रे रात्रिं तां भरतर्षभ ॥ ॥ ६-६८-२० (४१७४०)

इति श्रीमन्महाभारते भीष्मपर्वणि भीष्मवधपर्वणि
अष्टषष्टितमोऽध्यायः ॥ ॥ विश्वोपाख्यानं समाप्तम् ॥

---

भिस्मपर्व-अध्यय०६९
॥ श्रीः ॥
६.६९. अध्यायः ६९

Mahabharata - Bhishma Parva - Chapter Topics
कुरुपाण्डवयोर्मकरश्येनव्यूहरचनापूर्वकं युद्धारम्भः ॥ १ ॥

Mahabharata - Bhishma Parva - Chapter Text

६-६९-० (४१७४१)
सञ्जय उवाच। ६-६९-०क्ष् (४१४४)
व्युषितायां तु शर्वर्यामुदिते च दिवाकरे ।
उभे सेने महाराज युद्धायैव समीयतुः ॥ ६-६९-१ (४१७४२)
अभ्यधावन्त संक्रुद्धाः परस्परजिगीषवः ।
ते सर्वे सहिता युद्धे समालोक्य परस्परम् ॥ ६-६९-२ (४१७४३)
पाण्डवा धार्तराष्ट्राश्च राजन्दर्मन्त्रिते तव ।
व्यूहौ च व्यूह्य संरब्धाः संप्रहृष्टाः प्रहारिणः ॥ ६-६९-३ (४१७४४)
अरक्षन्मकरव्यूहं भीष्मो राजन्समन्ततः ।
तथैव पाण्डवा राजन्नरक्षन्व्यूहमात्मनः ॥ ६-६९-४ (४१७४५)
ग्अजातशत्रुः शत्रूणां मनांसि समकम्पयत्।'

श्येनवद्व्यूह्य तं व्यूहं धौम्यस्य वचनात्स्वयम् ॥ ६-६९-५ (४१७४६)
स हि तस्य सुविज्ञात अग्निचित्येषु भारत ।
मकरस्तु महाव्यूहस्तव पुत्रस्य धीमतः ॥ ६-६९-६ (४१७४७)
स्वयं सर्वेण सैन्येन द्रोणेनानुमतस्तदा ।
यथाव्यूहं शान्तनवः सोऽन्ववर्तत तत्पुनः ॥ ६-६९-७ (४१७४८)
स निर्ययौ महाराज पिता देवव्रतस्तव ।
महता रथवंशेन संवृतो रथिनां वरः ॥ ६-६९-८ (४१७४९)
इतरेतरमन्वीयुर्यथाभागमवस्थिताः ।
रथिनः पत्तयश्चैव दन्तिनः सादिनस्तथा ॥ ६-६९-९ (४१७५०)
तान्दृष्ट्वाऽभ्युद्यतान्सङ्ख्ये पाण्डवा हि यशस्विनः ।
श्येनव्यूहेन संव्यूह्य समनह्यन्त संयुगे ॥ ६-६९-१० (४१७५१)
अशोभत मुखे तस्य भीमसेनो महाबलः ।
नेत्रे शिखण्डी दुर्धर्षो धृष्टद्युम्नश्च पार्षतः ॥ ६-६९-११ (४१७५२)
शीर्षे तस्याभवद्वीरः सात्यकिः सत्यविक्रमः ।
विधुन्वन्गाण्डिवं पार्थो ग्रीवायामभवत्तदा ॥ ६-६९-१२ (४१७५३)
अक्षौहिण्या समं तत्र वामपक्षोऽभवत्तदा ।
महात्मा द्रुपदः श्रीमान्सह पुत्रेण संयुगे ॥ ६-६९-१३ (४१७५४)
दक्षिणश्चाभवत्पक्षः कैकेयोऽक्षौहिणीपतिः ।
पृष्ठतो द्रौपदेयाश्च सौभद्रश्चापि वीर्यवान् ॥ ६-६९-१४ (४१७५५)
पृष्ठे समभवच्छ्रीमान्स्वयं राजा युधिष्ठिरःक ।
भ्रातृभ्यां सहितो वीरो यमाभ्यां चारुविक्रमः ॥ ६-६९-१५ (४१७५६)
प्रविश्य तु रणे भीमो मकरं मुखतस्तदा ।
भीष्ममासाद्य संग्रामे च्छादयामास सायकैः ॥ ६-६९-१६ (४१७५७)
ततो भीष्मो महास्त्राणि पातयामास भारत ।
मोहयन्पाण्डुपुत्राणां व्यूढं सैन्यं महाहवे ॥ ६-६९-१७ (४१७५८)
संमुह्यति तदा सैन्ये त्वरमाणो धनंजयः ।
भीष्मं शरसहस्रेण विव्याध रणमूर्धनि ॥ ६-६९-१८ (४१७५९)
प्रतिसंवार्य चास्त्राणि भीष्ममुक्तानि संयुगे ।
स्वेनानीकेन हृष्टेन युद्धाय समुपस्थितः ॥ ६-६९-१९ (४१७६०)
ततो दुर्योधनो राजा भारज्वाजमभाषत ।
पूर्वं दृष्ट्वा वधं घोरं बलस्य बलिनां वरः ॥ ६-६९-२० (४१७६१)
भ्रातॄणां च वधं युद्धे स्मरमाणो महारथः ।
आचार्यः सततं हि त्वं हितकामो ममानघ ॥ ६-६९-२१ (४१७६२)
वयं हि त्वां समाश्रित्य भीष्मं चैव पितामहम् ।
देवानपि रणे जेतुं प्रार्थयामो न संशयः ॥ ६-६९-२२ (४१७६३)
किमु पाण्डुसुताकन्युद्धे हीनवीर्यपराक्रमान् ।

स तथा कुरु भद्रं ते यथा वध्यन्ति पाण्डवाः ॥ ६-६९-२३ (४१७६४)
एवमुक्तस्ततो द्रोणस्तव पुत्रेण मारिष ।
तत्र संप्रेक्ष्य राजनं संक्रुद्ध इव निश्वसन् ॥ ६-६९-२४ (४१७६५)
बालिशस्त्वं न जानीषे पाण्डवानां पराक्रमम् ।
न शक्या हि यथा जेतुं पाण्डवा हि महाबलाः ॥ ६-६९-२५ (४१७६६)
यथाबलं यथावीर्यं कर्म कुर्यामहं हि ते ।
इत्युक्तवा ते सुतं राजन्नभ्यपद्यत वाहिनीम् ।
अभिनत्पाण्डवानीकं प्रेक्षमाणस्य सात्यकेः ॥  ६-६९-२६ (४१७६७)
सात्यकिस्तु ततो द्रौणं वारयामात भारत ।
तयोः प्रववृते युद्धं घोररूपं भयावहम् ॥ ६-६९-२७ (४१७६८)
शैनेयं तु रणे क्रुद्धो भारद्वाजः प्रतापावान् ।
अविध्यन्निशितैर्बाणैर्जत्रुदेशे हसन्निव ॥ ६-६९-२८ (४१७६९)
भीमसेनस्ततः क्रुद्धो भारद्वाजमविध्यत ।
संरक्षन्सात्यकिं राजन्द्रोणाच्छस्त्रभृतां वरात् ॥ ६-६९-२९ (४१७७०)
ततो द्रोणश्च भीष्मश्च तथा शल्यश्च मारिष ।
भीमसेनं रणे क्रुद्धाश्छादयांचक्रिरे शरैः ॥ ६-६९-३० (४१७७१)
तत्राभिमन्युः संक्रुद्धो द्रौपदेयाश्च मारिष ।
विव्यधुर्निशितैर्बैणैः सर्वांस्तानुद्यतायुधान् ॥ ६-६९-३१ (४१७७२)
द्रोणभीष्मौ तु संक्रुद्धावापतन्तौ महाबलौ ।
प्रत्युद्ययौ शिखण्डी तु महेष्वासो महाहवे ॥ ६-६९-३२ (४१७७३)
प्रगृह्य बलवद्वीरो धनुर्जलदनिःश्वनम् ।
अभ्यवर्षच्छरैस्तूर्णं छादयानो दिवाकरम् ॥ ६-६९-३३ (४१७७४)
शिखण्डिनं समासाद्य भरतानां पितामहः ।
अवर्जयत संग्रामं स्त्रीत्वं तस्यानुसंस्मरन् ॥ ६-६९-३४ (४१७७५)
ततो द्रोणो महाराज अभ्यद्रवत तं रणे ।
रक्षमाणस्तदा भीष्मं तव पुत्रेण चोदितः ॥ ६-६९-३५ (४१७७६)
शिखण्डी तु समासाद्य द्रोणं शस्त्रभृतां वरम् ।
अवर्जयत संत्रस्तो युगान्ताग्निमिवोल्बणम् ॥ ६-६९-३६ (४१७७७)
ततो बलेन महता पुत्रस्तव विशांपते ।
जुगोप भीष्ममासाद्य प्रार्थयानो महद्यशः ॥ ६-६९-३७ (४१७७८)
तथैव पाण्डवा राजन्पुरुस्कृत्य धनञ्जयम् ।
भीष्ममेवाभ्यवर्तन्त जये कृत्वा दृढां मतिम् ॥ ६-६९-३८ (४१७७९)
तद्युद्धमभवद्धोरं देवानां दानवैरिव ।
जयमाकाङ्क्षतां सङ्ख्ये यशश्च सुमहाद्भुतम् ॥ ॥ ६-६९-३९ (४१७८०)

इति श्रीमन्महाभारते भीष्मपर्वणि भीष्मवधपर्वणि

भिस्मपर्व-अध्यय०७०
॥ श्रीः ॥
६.७०. अध्यायः ७०

Mahabharata - Bhishma Parva - Chapter Topics
संकुलयुद्धवर्णनम् ॥ १ ॥

Mahabharata - Bhishma Parva - Chapter Text

६-७०-० (४१७८१)
सञ्जय उवाच। ६-७०-०क्ष् (४१४५)
अकरोत्तुमुलं युद्धं भीष्मः शान्तनवस्तदा ।
भीमसेनभयादिच्छन्पुत्रांस्तारयितुं तव ॥ ६-७०-१ (४१७८२)
पूर्वाह्णे तन्महारौद्रं राज्ञां युद्धमवर्तत ।
कुरूणां पाण्डवानां च मुख्यशूरविनाशनम् ॥ ६-७०-२ (४१७८३)
तस्मिन्नाकुलसंग्रामे वर्तमाने महाभये ।
अभवत्तुमुलः शब्दः संस्पृशन्गगनं महत् ॥ ६-७०-३ (४१७८४)
नदद्भिश्च महानागैर्हेषमाणैश्च वाजिभिः ।
भेरीशङ्खनिनादैश्च तुमुलं समपद्यत ॥ ६-७०-४ (४१७८५)
युयुत्सवस्ते विक्रान्ता विजयाय महाबलाःक ।
अन्योन्यमभिगर्जन्तो गोष्ठिष्विव महर्षभाः ॥ ६-७०-५ (४१७८६)
शिरासं पात्यमानानां समरे निशितैः शरैः ।
अश्यवृष्टिरिवाकाशे बभूव भरतर्षभ ॥ ६-७०-६ (४१७८७)
कुण्डलोष्णीषधारीणि जातरूपोज्ज्वलानि च ।
पतितानि स्म दृश्यन्ते शिरांसि भरतर्षभ ॥ ६-७०-७ (४१७८८)
विशिखोन्मथितैर्गात्रैर्बाहुभिश्च सकार्मुकैः ।
सहस्ताभरणैश्चान्यैरभवच्छादिता मही ॥ ६-७०-८ (४१७८९)
कवचोपहितैर्गात्रैर्हस्तैश्च समलङ्कृतैः ।
मुखैश्च चन्द्रसंकाशै रक्तान्तनयनैः शुभैः ॥ ६-७०-९ (४१७९०)
गजवाजिमनुष्याणां सर्वगात्रैश्च भूपते ।
आसीत्सर्वा समास्तीर्णा मुहूर्तेन वसुंधराः ॥ ६-७०-१० (४१७९१)
रजोमेघैश्च तुमुलैः शस्त्रविद्युत्प्रकाशिभिः ।
आयुधानां च निर्घोषः स्तनयित्नुसमोऽभवत् ॥ ६-७०-११ (४१७९२)
स संप्रहारस्तुमुलःक कटुकः शोणितोदकः ।
प्रावर्तत कुरूणां च पाण्डवानां च भारत ॥ ६-७०-१२ (४१७९३)

तस्मिन्महाभये घोरे तुमुले रोमहर्षणे ।
ववृषुः शरवर्षाणि क्षत्रिया युद्धदुर्मदाः ॥ ६-७०-१३ (४१७९४)
आक्रोशन्कुञ्जरास्तत्र शरवर्षप्रतापिताः ।
तावकानां परेषां च संयुगे भरतर्षभ ॥ ६-७०-१४ (४१७९५)
संरब्धानां च वीराणां धीराणाममितौजसाम् ।
धनुर्ज्यातलशब्देन न प्राज्ञायत किंचन ॥ ६-७०-१५ (४१७९६)
उत्थितेषु कबन्धेषु सर्वतः शोमितोदके ।
समरे पर्यधावन्त नृपा रिपुवधोद्यताः ॥ ६-७०-१६ (४१७९७)
शरशक्तिगदाभिस्ते खड्गैश्चामिततेजसः ।
निजघ्नुः समरेऽन्योन्यं शूराः परिघबाहवः ॥ ६-७०-१७ (४१७९८)
बभ्रमुः कुञ्जराश्चात्र शरैर्विद्धा निरङ्कुशाः ।
अश्वाश्च पर्यधावन्त हतारोहा दिशो दश ॥ ६-७०-१८ (४१७९९)
उत्पत्य निपतन्त्यन्ये शरघातप्रपीडिताः ।
तावकानां परेषां च योधा भरतसत्तम ॥ ६-७०-१९ (४१८००)
वाहानामुत्तमाङ्गानां कार्मुकाणां च भारत ।
गदानां परिघाणां च हस्तानां चोरुभिः सह ॥ ६-७०-२० (४१८०१)
पादानां भूषणानां च केयूराणां च सङ्घशः ।
राशयस्तत्र दृश्यन्ते भीष्मभीमसमागमे ॥ ६-७०-२१ (४१८०२)
अश्वानां कुञ्जराणां च रथानां चानिवर्तिनाम् ।
सङ्घाताः स्म प्रदृश्यन्ते तत्रतत्र विशांपते ॥ ६-७०-२२ (४१८०३)
गदाभिरसिभिः प्रासैर्बाणैश्च नतपर्वभिः ।
जघ्नुः परस्पर तत्र क्षत्रियाः काल आगते ॥ ६-७०-२३ (४१८०४)
अपरे बाहुभिर्वीरा नियुद्धकुशला युधि ।
बहुधा समसञ्जन्त आयसैः परिघैरिव ॥ ६-७०-२४ (४१८०५)
मुष्टिभिर्जानुभिश्चैव तलैश्चैव विशांपते ।
अन्योन्यं जघ्निरे वीरास्तावकाः पाण्डवैः सह ॥ ६-७०-२५ (४१८०६)
पतितैः पात्यमानैश्च विचेष्टद्भिश्च भूतले ।
घोरमायोधनं जज्ञे तत्रतत्र जनेश्वर ॥ ६-७०-२६ (४१८०७)
विरथा रथिनश्चात्र निस्त्रिंशवरधारिणःक ।
अन्योन्यमभिधावन्तः परस्परवधैषिणः ॥ ६-७०-२७ (४१८०८)
ततो दुर्योधनो राजा कलिङ्गैर्बहुभिर्वृतः ।
पुरस्कृत्य रणे भीष्मं पाण्डवानभ्यवर्तत ॥ ६-७०-२८ (४१८०९)
तथैव पाण्डवाः सर्वे परिवार्य वृकोदरम् ।
भीष्ममभ्यद्रवन्क्रुद्धास्ततो युद्धमवर्तत ॥ ॥ ६-७०-२९ (४१८१०)

इति श्रीमन्महाभारते भीष्मपर्वणि भीष्मवधपर्वणि

भिस्मपर्व-अध्यय०७१
॥ श्रीः ॥
६.७१. अध्यायः ७१

Mahabharata - Bhishma Parva - Chapter Topics
संकुलयुद्धवर्णनम् ॥ १ ॥

Mahabharata - Bhishma Parva - Chapter Text

६-७१-० (४१८११)
सञ्जय उवाच। ६-७१-०क्ष् (४१४६)
दृष्ट्वा भीष्मेण संसक्तान्भ्रातॄनन्यांश्च पार्थिवान् ।
समभ्यधावद्गाङ्गेयमुद्यतास्त्रो धनञ्जयः ॥ ६-७१-१ (४१८१२)
पाञ्चजन्यस्य निर्घोषं धनुषो गाण्डिवस्य च ।
ध्वजं च दृष्ट्वा पार्थस्य सर्वान्नो भयमाविशत् ॥ ६-७१-२ (४१८१३)
सिंहलाङ्गूलमाकाशे ज्वलन्तमिव पर्वतम् ।
असज्जमानं वृक्षेषु धूमकेतुमिवोत्थितम् ॥ ६-७१-३ (४१८१४)
बहुवर्णं विचित्रं च दिव्यं वानरलक्षणम् ।
अपश्याम महाराज ध्वजं गाण्डीवधन्वनः ॥ ६-७१-४ (४१८१५)
सुवर्णपृष्ठं गाण्डीवं रणे द्रक्ष्यामि भारत ।
विद्युतं मेघमध्यस्थां भ्राजमानामिवाम्बरे ।
ददृशुर्गाण्डिवं योधा रुक्मपृष्ठं महामृधे ॥ ६-७१-५ (४१८१६)
आशुश्रुम भृशं चास्य शक्रस्येवाभिगर्जतः ।
सुघोरं तलयोः शब्दं निघ्नतस्तव वाहिनीम् ॥ ६-७१-६ (४१८१७)
चण्डवातो यथा मेघः सविद्युत्स्तनयित्नुमान् ।
दिशः संप्लावयन्सर्वाः शरवर्षैः समन्ततः ॥ ६-७१-७ (४१८१८)
समभ्यधावद्गाङ्गेयं भैरवास्त्रो धनञ्जयः ।
दिशं प्राचीं प्रतीचीं च न जानीमोऽस्त्रमोहिताः ॥ ६-७१-८ (४१८१९)
कान्दिग्भूता श्रान्तपत्रा हताश्वा हतचेतसः ।
अन्योन्यमभिसंश्लिष्य योधास्ते भरतर्षभ ॥ ६-७१-९ (४१८२०)
भीष्ममेवाभ्यलीयन्त सह सर्वैस्तवात्मजैः ।
तेषामार्तायनमभूद्भीष्मः शान्तनवो रणे ॥ ६-७१-१० (४१८२१)
समुत्पतन्ति वित्रस्ता रथेभ्यो रथिनस्तथा ।
सादिनश्चाश्वपृष्ठेभ्यो भूमौ चापि पदातयः ॥ ६-७१-११ (४१८२२)
श्रुत्वा गाण्डीवनिर्घोषं विस्फूर्जितमिवाशनेः ।

सर्वसैन्यानि भीतानि व्यवालीयन्त भारत ॥ ६-७१-१२ (४१८२३)
अथ काम्भोजैजरश्वैर्महद्भिः शीघ्रगामिभिः ।
गोपानां बहुसाहस्त्रैर्बालैर्गोपायनैर्वृतः ॥ ६-७१-१३ (४१८२४)
मद्रसौवीरगान्धारैस्त्रैगर्तैश्च विशांपते ।
सर्वकालिङ्गमुख्यैश्च कलिङ्गाधिपतिर्वृतः ॥ ६-७१-१४ (४१८२५)
नानानरगणौघैश्च दुःशासनपुरःसरः ।
जयद्रथश्च नृपतिः सहितः सर्वराजभिः ॥ ६-७१-१५ (४१८२६)
हयारोहवराश्चैव तव पुत्रेण चोदिताः ।
चतुर्दशसहस्राणि सौबलं पर्यवारयन् ॥ ६-७१-१६ (४१८२७)
ततस्ते सहिताः सर्वे विभक्तरथवाहनाः ।
अर्जुनं समरे जघ्नुस्तावका भरतर्षभ ॥ ६-७१-१७ (४१८२८)
चेदिकाशिपदातैश्च रथैः पाञ्चालसृञ्जयैः ।
पाण्डवाः सहिताः सर्वे धृष्टद्युम्नपुरोगमाः ।
तावकान्समरे जघ्नुर्धर्मपुत्रेण चोदिताः ॥ ६-७१-१८ (४१८२९)
रथिभिर्वारणैरश्वैः पादातैश्च समीरितम् ।
घोरमायोधनं चक्रे महाभ्रसदृशं रजः ॥ ६-७१-१९ (४१८३०)
तोमरप्रासनाराचगजाश्वरथयोधिनाम् ।
बलेन महता भीष्मः समसज्जत्किरीटिना ॥ ६-७१-२० (४१८३१)
आवन्त्यः काशिराजेन भीमसेनेन सैन्धवः ।
अजातशत्रुर्मद्राणामृषभेण यशस्विना ॥ ६-७१-२१ (४१८३२)
सहपुत्रः सहामात्यः शल्येन समसज्जत ।
विकर्णः सहदेवेन चित्रसेनः शिखण्डिना ॥ ६-७१-२२ (४१८३३)
मत्स्या दुर्योधनं जग्मुः शंकुनिं न विशांपते ।
द्रुपदश्चेकितानश्च सात्यकिश्चक महारथः ॥ ६-७१-२३ (४१८३४)
द्रोणेन समसज्जन्त सपुत्रेण महात्मना ।
कृपश्च कृतवर्मा च धृष्टद्युम्नमभिद्रुतौ ॥ ६-७१-२४ (४१८३५)
एवं प्रव्रजिताश्वानि भ्रान्तनागरथानि च ।
सैन्यानि समसज्जन्त प्रयुद्धानि समन्ततः ॥ ६-७१-२५ (४१८३६)
निरभ्रे विद्युतस्तीव्रा दिशश्च रजसा वृताः ।
प्रादुरासन्महोल्काश्च सनिर्घाता विशांपते ॥ ६-७१-२६ (४१८३७)
प्रादुर्भूतो महावातः पांसुवर्षं पपात च ।
नभस्यन्तर्दधे सूर्यः सैन्येन सजसा वृतः ॥ ६-७१-२७ (४१८३८)
प्रमोहः सर्वसत्वानामतीव समपद्यत ।
रजसा चाभिभूतानामस्त्रजालैश्च तुद्यताम् ॥ ६-७१-२८ (४१८३९)
वीरबाहुविसृष्टानां सर्वावरणभेदिनाम् ।
संघातः शरजालानां तुमुलः समपद्यत ॥ ६-७१-२९ (४१८४०)

प्रकाशं चक्रुराकाशमुद्यतानि भुजोत्तमैः ।
नक्षत्रविमलाभानि शस्त्राणि भरतर्षभ ॥ ६-७१-३० (४१८४१)
आर्षभाणि विचित्राणि रुक्मजालावृतानि च ।
संपेतुर्दिक्षु सर्वासु चर्माणि भरतर्षभ ॥ ६-७१-३१ (४१८४२)
सूर्यवर्णैश्च निस्त्रिंशैः पात्यमानानि सर्वशः ।
दिक्षु सर्वास्वदृश्यन्त शरीराणि शिरांसि च । ६-७१-३२ (४१८४३)
भग्नचक्राक्षनीडाश्च निपातितमहाध्वजाः ।
हताश्वाः पृथिवीं जग्मुस्तत्रतत्र महारथाः ॥ ६-७१-३३ (४१८४४)
परिपेतुर्हयाश्चात्र केचिच्छस्त्रकृतव्रणाः ।
रथान्विपरिकर्षन्तो हतेषु रथयोधिषु ॥ ६-७१-३४ (४१८४५)
शराहता भिन्नदेहा बद्धयोक्त्रा हयोत्तमाः ।
युगानि पर्यकर्षन्त तत्रतत्र स्म भारत। ६-७१-३५ (४१८४६)
अदृश्यन्त ससूताश्च साश्वाः सरथयोधिनः ।
एकेन बलिना राजन्वारणेन विमर्दिताः ॥ ६-७१-३६ (४१८४७)
गन्धहस्तिमदस्रावमाघ्राय बहवो रणे ।
सन्निपाते बलौघानां गजैर्ममृदिरे गजाः ॥ ६-७१-३७ (४१८४८)
सतोमरैर्महामात्रैर्निपतद्भिर्गतासुभिः ।
बभूवायोधनं छन्नं नाराचाभिहतैर्गजैः ॥ ६-७१-३८ (४१८४९)
सन्निपाते बलौघानां प्रेषितैर्वरवारणैः ।
निपेतुर्युधि संभग्नाः सयोधाः सध्वजा गजाः ॥ ६-७१-३९ (४१८५०)
नागराजोपमैर्हस्तैर्नागैराक्षिप्य संयुगे ।
व्यदृश्यन्त महाराज संभग्ना रथकूबराः ॥ ६-७१-४० (४१८५१)
विशीर्णरथसङ्घाश्च केशेष्वाक्षिप्य दन्तिभिः ।
द्रुमशाखा इवाविध्य निष्पिष्टा रथिनो रणे ॥ ६-७१-४१ (४१८५२)
रथेषु च रथान्युद्धे संसक्तान्वरवारणाः ।
विकर्षन्तो दिशः सर्वाः संपेतुः सर्वशब्दगाः ॥ ६-७१-४२ (४१८५३)
तेषां तथा कर्षतां तु गजानां रूपमाबभौ ।
सरःसु नलिनीजालं विषक्तमिव कर्षताम् ॥ ६-७१-४३ (४१८५४)
एवं संछादितं तत्र बभूवायोधनं महत् ।
सादिभिश्च पदातैश्च सध्वजैश्च महारथैः ॥ ॥ ६-७१-४४ (४१८५५)

इति श्रीमन्महाभारते भीष्मपर्वणि भीष्मवधपर्वणि
पञ्चमदिवसयुद्धे एकसप्ततितमोऽध्यायः ॥
Mahabharata - Bhishma Parva - Chapter Footnotes

६-७१-७ स्तनयित्नुर्गर्जितम् ॥

भिस्मपर्व-अध्यय०७२
॥ श्रीः ॥
६.७२. अध्यायः ७२

Mahabharata - Bhishma Parva - Chapter Topics
संकुलयुद्धवर्णनम् ॥ १ ॥

Mahabharata - Bhishma Parva - Chapter Text

६-७२-० (४१८५६)
सञ्जय उवाच। ६-७२-०क्ष् (४१४७)
शिखण्डी सह मत्स्येन विराटेन विशांपते ।
भीष्ममाशु महेष्वासमाससाद सुदुर्जयम् ॥ ६-७२-१ (४१८५७)
द्रोणं कृपं विकर्णं च महेष्वासं महाबलम् ।
राज्ञश्चान्यान्रणे शूरान्बहूनार्च्छद्धनंजयः ॥ ६-७२-२ (४१८५८)
सैन्धवं च महेष्वासं सामात्यं सह बन्धुभिः ।
प्राच्यांश्च दाक्षिणात्यांश्च भूमिपान्भूमिपर्षभ ॥ ६-७२-३ (४१८५९)
पुत्रं च ते महेष्वासं दुर्योधनममर्षणम् ।
दुःसहं चैव समरे भीमसेनोऽभ्यवर्तत ॥ ६-७२-४ (४१८६०)
सहदेवस्तु शकुनिमुलूकं च महारथम् ।
पितापुत्रौ महेष्वासावभ्यवर्तत दुर्जयौ ॥ ६-७२-५ (४१८६१)
युधिष्ठिरो महाराज गजानीकं महारथः ।
समवर्तत संग्रामे पुत्रेण निकृतस्तव ॥ ६-७२-६ (४१८६२)
माद्रीपुत्रस्तु नकुलः शूरसंक्रन्दनो युधि ।
त्रिगर्तानां बलैः सार्धं समसज्जत पाण्डवः ॥ ६-७२-७ (४१८६३)
अभ्यवर्तन्त संक्रुद्धाः समरे साल्वकेकयान् ।
सात्यकिश्चेकितानश्च सौभद्रश्च महारथः ॥ ६-७२-८ (४१८६४)
धृष्टकेतुश्च समरे राक्षसश्च घटोत्कचः ।
नाकुलिश्च शतानीकः समरे रथपुङ्गवः ।
पुत्राणां ते रथानीकं प्रत्युद्याताः सुदुर्जयाः ॥ ६-७२-९ (४१८६५)
सेनापतिरमेयात्मा धृष्टद्युम्नो महाबलः ।
द्रोणेन समरे राजन्समियायोग्रकर्मणा ॥ ६-७२-१० (४१८६६)
एवमेते महेष्वासास्तावकाः पाण्डवैः सह ।
समेत्य समरे शूराः संप्राहारं प्रचक्रिरे ॥ ६-७२-११ (४१८६७)
मध्यंदिनगते सूर्ये नभस्याकुलतां गते ।
कुरवः पाण्डवेयाश्च निजघ्नुरितरेतरम् ॥ ६-७२-१२ (४१८६८)

ध्वजिनो हेमचित्राङ्गा विचरन्तो रणाजिरे ।
सपताका रथा रेजुर्वैयाघ्रपरिवारणाः ॥ ६-७२-१३ (४१८६९)
समेतानां च समरे जिगीषूणां परस्परम् ।
बभूव तुमुलः शब्दः सिंहानामिव नर्दताम् ॥ ६-७२-१४ (४१८७०)
तत्राद्भुतमपश्याम संप्रहारं सुदारुणम् ।
यदकुर्वन्रणे शूराः सृञ्जयाः कुरुभिः सह ॥ ६-७२-१५ (४१८७१)
नैव खं न दिशो राजन्न सूर्यं शत्रुतापन ।
विदिशो वापि पश्यामः शरैर्मुक्तैः समन्ततः ॥ ६-७२-१६ (४१८७२)
शक्तीनां विमलाग्राणां तोमराणां तथास्यताम् ।
निस्त्रिंशानां च पीतानां नीलोत्पलनिभाः प्रभाः ॥ ६-७२-१७ (४१८७३)
कवचानां विचित्राणां भूषणानां प्रभास्तथा ।
खं दिशः प्रदिशश्चैव भासयामासुरोजसा ॥ ६-७२-१८ (४१८७४)
वपुर्भिश्च नरेन्द्राणां चन्द्रसूर्यसमप्रभैः ।
विरराज तदा राजंस्तत्रतत्र रणाङ्गणम् ॥ ६-७२-१९ (४१८७५)
रथसङ्घा नरव्याघ्राः समायान्तश्च संयुगे ।
विरेजुः समरे राजन्ग्रहा इव नभस्तले ॥ ६-७२-२० (४१८७६)
भीष्मस्तु रथिनां श्रेष्ठो भीमसेनं महाबलम् ।
अवारयत संक्रुद्धः सर्वसैन्यस्य पश्यतः ॥ ६-७२-२१ (४१८७७)
ततो भीष्मविनिर्मुक्ता रुक्मपुङ्खाः शिलाशिताः ।
अभ्यघ्नन्समरे भीमं तैलधौताः सुतेजनाः ॥ ६-७२-२२ (४१८७८)
तस्य शक्तिं महावेगं भीमसेनो महाबलः ।
क्रुद्धाशीविषसंकाशं प्रेषयामास भारत ॥ ६-७२-२३ (४१८७९)
तामापतन्तीं सहसा रुक्मदण्डं दुरासदाम् ।
चिच्छेद समरे भीष्मः शरैः सन्नतपर्वभिः ॥ ६-७२-२४ (४१८८०)
ततोऽपरेण भल्लेन पीतेन निशितेन च ।
कार्मुकं भीमसेनस्य द्विधा चिच्छेद भारत ॥ ६-७२-२५ (४१८८१)
अपास्य तु धनुश्छिन्नं भीमसेनो महाबलः ।
शरैर्बहुभिरानर्च्छद्भीष्मं शान्तनवं युधि ॥ ६-७२-२६ (४१८८२)
सात्यकिस्तु ततस्तूर्णं भीष्ममासाद्य संयुगे ।
आकर्णप्रहितैस्तीक्ष्णैर्निशितैस्तिग्मतेजनैः ॥ ६-७२-२७ (४१८८३)
शरैर्बहुभिरानर्च्छत्पितरं ते जनेश्वर ।
ततः संधाय वै तीक्ष्णं शरं परमदारुणम् ॥ ६-७२-२८ (४१८८४)
वार्ष्णेयस्य रथाद्भीष्मः पातयामास सारथिम् ।
तस्याश्वाः प्रद्रुता राजन्निहते रथसारथौ ॥ ६-७२-२९ (४१८८५)
तेन तेनैव धावन्ति मनोमारुतरंहसः ।
ततः सर्वस्य सैन्यस्य निःस्वनस्तुमुलोऽभवत् ॥ ६-७२-३० (४१८८६)

हाहाकारश्च संजज्ञे पाण्डवानां महात्मनाम् ।
अभ्यद्रवत गृह्णीत हयान्यच्छत धावत ॥ ६-७२-३१ (४१८८७)
इत्यासीत्तुमुलः शब्दो युयुधानरथं प्रति ।
एतस्मिन्नेव काले तु भीष्मः शान्तनवस्तदा ॥ ६-७२-३२ (४१८८८)
न्यहनत्पाण्डवीं सेनामासुरीमिव वृत्रहा ।
ते वध्यमाना भीष्मेण पाञ्चालाः सोमकैः सह ।
स्थिरां युद्धे मतिं कृत्वा भीष्ममेवाभिदुद्रुवुः ॥ ६-७२-३३ (४१८८९)
धृष्टद्युम्नमुखाश्चापि पार्थाः शान्तनवं रणे ।
अभ्यधावञ्जिगीषन्तस्तव पुत्रस्य वाहिनीम् ॥ ६-७२-३४ (४१८९०)
तथैव कौरवा राजन्भीष्मद्रोणपुरोगमाः ।
अभ्यधावन्त वेगेन ततो युद्धमवर्तत ॥ ॥ ६-७२-३५ (४१८९१)

इति श्रीमन्महाभारते भीष्मपर्वणि भीष्मवधपर्वणि
पञ्चमदिवसयुद्धे द्विसप्ततितमोऽध्यायः ॥
Mahabharata - Bhishma Parva - Chapter Footnotes

६-७२-१८ ओजसा स्वप्रभावेण ॥

---

भिस्मपर्व-अध्यय०७३
॥ श्रीः ॥
६.७३. अध्यायः ७३

Mahabharata - Bhishma Parva - Chapter Topics
युद्धवर्णनम् ॥ १ ॥

Mahabharata - Bhishma Parva - Chapter Text

६-७३-० (४१८९२)
सञ्जय उवाच। ६-७३-०क्ष् (४१४८)
विराटोऽथ त्रिभिर्बाणैर्भीष्ममार्च्छन्महारथम् ।
विव्याध तुरमांत्रास्य त्रिभिर्बाणैर्महारथः ॥ ६-७३-१ (४१८९३)
तं प्रत्यविध्यद्दशभिर्भीष्मः शान्तनवः शरैः ।
रुक्मपुङ्खैर्महेष्वासः कृतहस्तो महाबलः ॥ ६-७३-२ (४१८९४)
द्रौणिर्गाण्डीवधन्वानं भीमधन्वा महारथः ।
अविध्यदिषुभिः षड्भिर्दृढहस्तः स्तनान्तरे ॥ ६-७३-३ (४१८९५)
कार्मुकं तस्य चिच्छेद फल्गुनः परवीरहा ।
अविध्यच्च भृशं तीक्ष्णैः पत्रिभिः शत्रुकर्शनः ॥ ६-७३-४ (४१८९६)

सोऽन्यत्कार्मुकमादाय वेगवान्क्रोधमूर्च्छितः ।
अमृष्यमाणः पार्थेन कार्मुकच्छेदमाहवे ॥ ६-७३-५ (४१८९७)
अविध्यत्फल्गुनं राजन्नवत्या निशितैः शरैः ।
वासुदेवं च सप्तत्या विव्याध परमेषुभिः ॥ ६-७३-६ (४१८९८)
ततः क्रोधाभिताम्राक्षः कृष्णेन सह फल्गुनः ।
दीर्घमुष्णं च निःश्वस्य चिन्तयित्वा पुनःपुनः ॥ ६-७३-७ (४१८९९)
धनुः प्रपीड्य वामेन करेणामित्रकर्शनः ।
गाण्डीवधन्वा संक्रुद्धः शितान्सन्नतपर्वणः ॥ ६-७३-८ (४१९००)
जीवितान्तकरान्घोरान्समादत्त शिलीमुखान् ।
तैस्तूर्णं समरेऽविध्यद्द्रौणिं बलवतां वरः ॥ ६-७३-९ (४१९०१)
तस्य ते कवचं भित्त्वा पपुः शोणितमाहवे ।
न विव्यथे च निर्भिन्नो द्रौणिर्गाण्डीवधन्वना ॥ ६-७३-१० (४१९०२)
तथैव च शरान्द्रौणिः प्रविमुञ्चन्नविह्वलः ।
तस्थौ च समरे राजंस्त्रातुमिच्छन्महाव्रतम् ॥ ६-७३-११ (४१९०३)
तस्य तत्सुमहत्कर्म शशंसुः कुरुसत्तमाः ।
यत्कृष्णाभ्यां समेताभ्यामभ्यापतत संयुगे ॥ ६-७३-१२ (४१९०४)
स हि नित्यमनीकेषु युध्यतेऽभयमास्तितः ।
अस्त्रग्रामं ससंहारं द्रोणात्प्राप्य सुदुर्लभम् ॥ ६-७३-१३ (४१९०५)
ममैष आचार्यसुतो द्रोणस्यापि प्रियः सुतः ।
ब्राह्मणश्च विशेषेण माननीयो ममेति च ॥ ६-७३-१४ (४१९०६)
समास्थआय मतिं वीरो बीभत्सुः सत्रुतापनः ।
कृपां चक्रे रथश्रेष्ठो भारद्वाजसुतं प्रति ॥ ६-७३-१५ (४१९०७)
द्रौणिं त्यक्त्वा ततो युद्धे कौन्तेयः श्वेतवाहनः ।
युयुधे तावकान्निघ्नंस्त्वरमाणः पराक्रमी ॥ ६-७३-१६ (४१९०८)
दुर्योधनस्तु दशभिर्गार्ध्रपत्रैः शिलाशितैः ।
भीमसेनं महेष्वासं रुक्मपुङ्खैः समार्पयत् ॥ ६-७३-१७ (४१९०९)
भीमसेनः सुसंक्रुद्धः परासुकरणं दृढम् ।
चित्रं कार्मुकमादत्त शरांश्च निशितान्दश ॥ ६-७३-१८ (४१९१०)
आकर्णप्रहितैस्तीक्ष्णैर्वेगवद्भिरजिह्मगैः ।
अविध्यत्तूर्णमव्यग्रः कुरुराजं महोरसि ॥ ६-७३-१९ (४१९११)
तस्य काञ्चनसूत्रस्थः शरैः संछादितो मणिः ।
रराजोरसि खे सूर्यो ग्रहैरिव समावृतः ॥ ६-७३-२० (४१९१२)
पुत्रस्तु तव तेजस्वी भीमसेनेन ताडित ।
नामृष्यत यथा नागस्तलशब्दं मदोत्कटः ॥ ६-७३-२१ (४१९१३)
ततः शरैर्महाराज रुक्मपुङ्खैः शिलाशितैः ।
भीमं विव्याध संक्रुद्धस्त्रासयानो वरूथिनीम् ॥ ६-७३-२२ (४१९१४)

तौ युध्यमानौ समरे भृशमन्योन्यविक्षतौ ।
पुत्रौ ते देवसंकाशौ व्यरोचेतां महाबलौ ॥ ६-७३-२३ (४१९१५)
चित्रसेनं नरव्याघ्रं सौभद्रः परवीरहा ।
अविध्यद्दशभिर्बाणैः पुरुमित्रं च सप्तभिः ॥ ६-७३-२४ (४१९१६)
सत्यव्रतं च सप्तत्या विद्ध्वा शक्रसमो युधि ।
नृत्यन्निव रणे वीर आर्तिं नः समजीजनत् ॥ ६-७३-२५ (४१९१७)
तं प्रत्यविध्यद्दशभिश्चित्रसेनः शिलीमुखैः ।
सत्यव्रतश्च नवभिः पुरुमित्रश्च सप्तभिः ॥ ६-७३-२६ (४१९१८)
स विद्धो विक्षरन्रक्तं शत्रुसंवारणं महत् ।
चिच्छेद चित्रसेनस्य चित्रं कार्मुकमार्जुनिः ॥ ६-७३-२७ (४१९१९)
भित्त्वा चास्य तनुत्राणं शरेणोरस्यताडयत् ।
ततस्ते तावका वीरा राजपुत्रा महारथाः ॥ ६-७३-२८ (४१९२०)
समेत्य युधि संरब्धा विव्यधुर्निशितैः शरैः ।
तांश्च सर्वाञ्शरैस्तीक्ष्णैर्जघान परमास्त्रवित् ॥ ६-७३-२९ (४१९२१)
तस्य दृष्ट्वा तु तत्कर्म परिवव्रुः सुतास्तव ।
दहन्तं समरे सैन्यं वने कक्षं यथोल्बणम् ॥ ६-७३-३० (४१९२२)
अपेतशिशिरे काले समिद्धमिव पावकम् ।
अत्यरोचत सौभद्रस्तव सैन्यानि नाशयन् ॥ ६-७३-३१ (४१९२३)
तत्तस्य चरितं दृष्ट्वा पौत्रस्तव विशांपते ।
लक्ष्मणोऽभ्यपतत्तूर्णं सात्त्वीपुत्रमाहवे ॥ ६-७३-३२ (४१९२४)
अभिमन्युस्तु संक्रुद्धो लक्ष्मणं शुभलक्षणम् ।
विव्याध निशितैः षड्भिः सारथिं च त्रिभिः शरैः ॥ ६-७३-३३ (४१९२५)
तथैव लक्ष्मणो राजन्सौभद्रं निशितैः शरैः ।
अविध्यत महाराज तदद्भुतमिवाभवत् ॥ ६-७३-३४ (४१९२६)
तस्याश्वांश्चतुरो हत्वा सारथिं च महाबलः ।
अभ्यद्रवत सौभद्रो लक्ष्मणं निशितैः शरैः ॥ ६-७३-३५ (४१९२७)
हताश्वे तु रथे तिष्ठँल्लक्ष्मणः परवीरहा ।
शक्तिं चिक्षेप संक्रुद्धः सौभद्रस्य रथं प्रति ॥ ६-७३-३६ (४१९२८)
तामापतन्तीं सहसा घोररूपां दुरासदाम् ।
अभिमन्युः शरैस्तीक्ष्णैश्चिच्छेद भुजगोपमाम् ॥ ६-७३-३७ (४१९२९)
ततः स्वरथमारोप्य लक्ष्मणं गौतमस्तदा ।
अपोवाह रथेनाजौ सर्वसैन्यस्य पश्यतः ॥ ६-७३-३८ (४१९३०)
ततः समाकुले तस्मिन्वर्तमाने महाभये ।
अभ्यद्रवञ्जिघांसन्तः परस्परवधैषिणः ॥ ६-७३-३९ (४१९३१)
तावकाश्च महेष्वासाः पाण्डवाश्च महारथाः ।
जुह्वन्तः समरे प्राणान्निजघ्नुरितरेतरम् ॥ ६-७३-४० (४१९३२)

मुक्तकेशा विकवचा विरथाश्छिन्नकार्मुकाः ।
बाहुभइः समयुध्यन्त सृञ्जयाः कुरुभिः सह ॥ ६-७३-४१ (४१९३३)
ततो भीष्मो महाबाहुः पाण्डवानां महात्मनाम् ।
सेनां जघान संक्रुद्धो दिव्यैरस्त्रैर्महाबलः ॥ ६-७३-४२ (४१९३४)
हतेश्वरैर्गजैस्तत्र नरैरश्वैश्च पातितैः ।
रथिभिः सादिभिश्चैव समास्तीर्यत मेदिनी ॥ ॥ ६-७३-४३ (४१९३५)

इति श्रीमन्महाभारते भीष्मपर्वणि भीष्मवधपर्वणि
पञ्चमदिवसयुद्धे त्रिसप्ततितमोऽध्यायः ॥
Mahabharata - Bhishma Parva - Chapter Footnotes

६-७३-३२ सात्वतीपुत्रं अभिमन्युम् ॥

---

भिस्मपर्व-अध्यय०७४
॥ श्रीः ॥
६.७४. अध्यायः ७४

Mahabharata - Bhishma Parva - Chapter Topics
भूरिश्रवसा सात्यकिपुत्रदशकवधः ॥ १ ॥
सात्यकिभूरिश्रवसोयुर्द्धम् ॥ २ ॥

Mahabharata - Bhishma Parva - Chapter Text

६-७४-० (४१९३६)
सञ्जय उवाच। ६-७४-०क्ष् (४१४९)
अथ राजन्महाबाहुः सात्यकिर्युद्धदुर्मदः ।
विकृष्य चापं समरे भारसाहमनुत्तमम् ॥ ६-७४-१ (४१९३७)
यत्तत्सख्युस्तु पूर्वेण अर्जुनादुपशिक्षितम् ।
प्रगाढं लघु चित्रं च दर्शयन्हस्तलाघवम् ।
प्रामुञ्चत्पुङ्खसंयुक्ताञ्शरानाशीविषोपमान् ॥ ६-७४-२ (४१९३८)
तस्य विक्षिपतस्छापं शरानन्यांश्च मुञ्चतः ।
आददानस्य भूयश्च संदधानस्य चापरान् ॥ ६-७४-३ (४१९३९)
क्षिपतश्च परांस्तस्य रणे शत्रून्विनिघ्नतः ।
ददृशे रूपमत्यर्थं मेघस्येव प्रवर्षतः ॥ ६-७४-४ (४१९४०)
तमुदीर्यन्तमालोक्य राजा दुर्योधस्ततः ।
रथानामयुतं तस्य प्रेषयामास भारत ॥ ६-७४-५ (४१९४१)
तांस्तु सर्वान्महेष्वासान्सात्यकिः सत्यविक्रमः ।

जघान परमेष्वासो दिव्येनास्त्रेण वीर्यवान् ॥ ६-७४-६ (४१९४२)
स कृत्कवा दारुणं कर्म प्रगृहीतशरासनः ।
आससाद ततो वीरो भूरिश्रवसमाहवे ॥ ६-७४-७ (४१९४३)
स हि संदृश्य सेनां ते युयुधानेन पातिताम् ।
अभ्यधावत संक्रुद्धः कुरूणां कीर्तिवर्धनः ॥ ६-७४-८ (४१९४४)
इन्द्रायुधसवर्णं तु विस्फार्य सुमहद्धनुः ।
सृष्टवान्वज्रसंकाशाञ्शरानाशीविषोपमान् ॥ ६-७४-९ (४१९४५)
सहस्रशो माहाराज दर्शयन्पाणिलाघवम् ।
शरांस्तान्मृत्युसंस्पर्शान्सात्यकेश्च पदानुगाः ॥ ६-७४-१० (४१९४६)
न विषेहुस्तदा राजन्दुद्रुवुस्ते समन्ततः ।
विहाय सात्यकिं राजन्समरे युद्धदुर्मदम् ॥ ६-७४-११ (४१९४७)
तं दृष्ट्वा युयुधानस्य सुता दश महाबलाः ।
महारथाःक समाख्याताश्चित्रवर्मायुधध्वजाः ॥ ६-७४-१२ (४१९४८)
समासाद्य महेष्वासं भूरिश्रवसमाहवे ।
ऊचुः सर्वे सुसंरब्धा यूपकेतुं महारणे ॥ ६-७४-१३ (४१९४९)
भोभो कौरवादायाद सहास्माभिर्महाबल ।
एहि युध्यस्व संग्रामे समस्तैः पृथगेव वा ॥ ६-७४-१४ (४१९५०)
अस्मान्वा त्वं पराजित्य यशः प्राप्नुहि संयुगे ।
वयं वा त्वां पराजित्य प्रीतिं धास्यामहे पितुः ॥ ६-७४-१५ (४१९५१)
एवमुक्तस्तदा शूरैस्तानुवाच महाबलः ।
वीर्यश्लाघी नरश्रेष्ठस्तान्दृष्ट्वा समवस्थितान् ॥ ६-७४-१६ (४१९५२)
साध्विदं कथ्यते वीरा यंद्येवं मतिरद्य वः ।
युध्यध्वं सहिता यत्ता निहनिष्यामि वो रणे ॥ ६-७४-१७ (४१९५३)
एवमुक्ता महेष्वासास्ते वीराः क्षिप्रकारिणः ।
महता शरवर्षेण अभ्यधावन्नरिन्दमम् ॥ ६-७४-१८ (४१९५४)
सोऽपराह्णे महाराज संग्रामस्तुमुलोऽभवत् ।
एकस्य च बहूनां च समेतानां रणाजिरे ॥ ६-७४-१९ (४१९५५)
तमेकं रथिनां श्रेष्ठं शरैस्ते समवाकिरन् ।
प्रावृषीव यथा मेरुं सिषिचुर्जलदा नृप ॥ ६-७४-२० (४१९५६)
तैस्तु मुक्ताञ्शरान्घोरान्यमदण्डाशनिप्रभान् ।
असंप्राप्तानसंभ्राकन्तिश्चिच्छेदाशु महारथः ॥ ६-७४-२१ (४१९५७)
तत्राद्भुतमपश्याम सौमदत्तेः पराक्रमम् ।
यदेको बहुबिर्युद्धे समसञ्जदभीतवत् ॥ ६-७४-२२ (४१९५८)
विसृज्य शरवृष्टिं तां दश राजन्महारथाः ।
परिवार्य महाबाहुं निहन्तुमुपचक्रमुः ॥ ६-७४-२३ (४१९५९)
समदत्तिस्ततः क्रुद्धस्तेषां चापानि भारत ।

चिच्छेद समरे राजन्युध्यमानो महारथैः ॥ ६-७४-२४ (४१९६०)
अथैषां छिन्नधनुषां शरैः सन्नतपर्वभिः ।
चिच्छेद समरे राजञ्शिरांसि भरतर्षभ ॥ ६-७४-२५ (४१९६१)
ते हता न्यपतन्राजन्वज्रभग्ना इव द्रुमाः । ६-७४-२६ब्तान्दृष्ट्वा
निहतान्वीरो रणे पुत्रान्महाबलान् ॥ ६-७४-२६ (४१९६२)
वार्ष्णेयो विनदराजन्भूरिश्रवसमभ्ययात् ।
रथं रथेन समरे पीडयित्वा महाबलौ ॥ ६-७४-२७ (४१९६३)
तावन्योन्यं हि समरे निहत्य रथवाजिनः ।
विरथावभिवल्गान्तौ समेयातां महारथौ ॥ ६-७४-२८ (४१९६४)
प्रगृहीतमहाखड्गौ तौ चर्मवरधारिणौ ।
शुशुभाते नरव्याघ्रौ युद्धाय समवस्थितौ ॥ ६-७४-२९ (४१९६५)
असह्यमसियुद्धाय भूरिश्रवसमाहवे ।
मत्वा वृकोदरस्तूर्णमभिप्लुत्य महारथः ॥ ६-७४-३० (४१९६६)
ततः सात्यकिमभ्येत्य निस्त्रिंशवरधारिणम् ।
भीमसेनस्त्वरन्राजन्रथमारोपयत्तदा ॥ ६-७४-३१ (४१९६७)
तवापि तनयो राजन्भूरिश्रवसमाहवे ।
आरोपयद्रथं तूर्णं पश्यतां सर्वधन्विनाम् ॥ ६-७४-३२ (४१९६८)
तस्मिस्तथा वर्तमाने रणे भीष्मं महारथम् ।
अयोधयन्त संरब्धाः पाण्डवा भरतर्षभ ॥ ६-७४-३३ (४१९६९)
लोहितायति चादित्ये त्वरमाणो धनञ्जयः ।
पञ्चविंशतिसाहस्रान्निजघान महारथान् ॥ ६-७४-३४ (४१९७०)
ते हि दुर्योधनादिष्टास्तदा पार्थनिबर्हणे ।
संप्राप्यैव गता नाशं शलभा इव पावकम् ॥ ६-७४-३५ (४१९७१)
ततो मत्स्याः केकयाश्च धनुर्वेदविशारदाः ।
परिवव्रुस्तदा पार्थं सहपुत्रं महारथम् ॥ ६-७४-३६ (४१९७२)
एवस्मिन्नेव काले तु सूर्येऽस्तमुपगच्छति ।
सर्वेषां चैव सैन्यानां प्रमोहः समजायत ॥ ६-७४-३७ (४१९७३)
अवहारं ततश्चक्रे पिता देवव्रतस्तव ।
संध्याकाले महाराज सैन्यानां श्रान्तवाहनः ॥ ६-७४-३८ (४१९७४)
पाण्डवानां कुरूणां च परस्परसमागमे ।
ते सेने भृशसंविग्ने ययतुः स्वं निवेशनम् ॥ ६-७४-३९ (४१९७५)
ततः स्वशिबिरं गत्वा न्यविशंस्तत्र भारत ।
पाण्डवाः सृञ्जयैः सार्धं कुरवश्च यथाविधिः ॥ ॥ ६-७४-४० (४१९७६)

इति श्रीमन्महाभारते भीष्मपर्वणि भीष्मवधपर्वणि
पञ्चमदिवसयुद्धए चतुःसप्ततितमोऽध्यायः ॥

भिस्मपर्व-अध्यय०७५
॥ श्रीः ॥
६.७५. अध्यायः ७५

Mahabharata - Bhishma Parva - Chapter Topics
कुरुपाण्डवयोः क्रौञ्चमकरव्यूहरचनापूर्वकमायोधनम् ॥१ ॥

Mahabharata - Bhishma Parva - Chapter Text

६-७५-० (४१९७७)
सञ्जय उवाच। ६-७५-०क्ष् (४१५०)
विहृत्य तु ततो राजन्सहिताः कुरुपाण्डवाः ।
व्यतीतायां तु शर्वर्यां पुनर्युद्धाय निर्ययुः ॥ ६-७५-१ (४१९७८)
ततः शब्दो महानासीत्तव तेषां च भारत ।
युज्यतां रथमुख्यानां कल्प्यतां चैव दन्तिनाम् ॥ ६-७५-२ (४१९७९)
संनह्यतां पदातीनां हयानां चैव भारत ।
शङ्खदुन्दुभिनादश्च तुमुलः सर्वतोऽभवत् ॥ ६-७५-३ (४१९८०)
ततो युधिष्ठिरो राजा धृष्टद्युम्नमभाषत ।
व्यूहं व्यूहस्व पाञ्चाल मकरं शत्रुनाशनम् ॥ ६-७५-४ (४१९८१)
एवमुक्तस्तु पार्थेन धृष्टद्युम्नो महारथः ।
व्यादिदेश यथान्यायं रथिनो रथिनां वरः ॥ ६-७५-५ (४१९८२)
शिरोऽभूद्द्रुपदस्तस्य पाण्डवश्च धनञ्जयः ।
चक्षुषी सहदेवश्च नकुलश्च महारथः ॥ ६-७५-६ (४१९८३)
तुण्डमासीन्महाराज भीमसेनो महाबलः ।
सौभद्रो द्रौपदेयाश्च राक्षसश्च घटोत्कचः ॥ ६-७५-७ (४१९८४)
सात्यकिर्धर्मराजश्च व्यूहग्रीवां समास्थिताः ।
पृष्ठमासीन्महाराज विराटो वाहिनीपतिः ॥ ६-७५-९अधृष्टद्युम्नो
महाराज महत्या सेनया वृतः ।
केकया भ्रातरः पञ्च वामपार्श्वं समाश्रिताः ॥ ६-७५-८ (४१९८५)
धृष्टकेतुर्नरव्याघ्रश्चेकितानश्च वीर्यवान् ।
दक्षिणं पक्षमाश्रित्य स्थितौ व्यूहस्य रक्षणे ॥ ६-७५-१० (४१९८६)
पादयोस्तु महाराज स्थितः श्रीमान्महारथः ।
कुन्तिभोजः शतानीको महत्या सेनया वृतः ॥ ६-७५-११ (४१९८७)
शिखण्डी तु महेष्वासः सोमकैः संवृतो बली ।
इरावांश्च ततः पुच्छे मकरस्य व्यवस्थितौ ॥ ६-७५-१२ (४१९८८)
एवमेतं महाव्यूहं व्यूह्य भारत पाण्डवाः ।

सूर्योदये महाराज पुनर्युद्धाय दंशिताःक ॥ ६-७५-१३ (४१९८९)
कौरवानभ्ययुस्तूर्णं हस्त्यश्वरथपत्तिभिः ।
समुच्छ्रितैर्ध्वजैश्छत्रैः शस्त्रैश्च विमलैः शितैः
॥ ६-७५-१४ (४१९९०)
व्यूढं दृष्ट्वा तु तत्सैन्यं पिता देवव्रतस्तव ।
कौञ्चेन महता राजन्प्रत्यव्यूहत वाहिनीम् ॥ ६-७५-१५ (४१९९१)
तस्य तुण्डे महेष्वासो भारद्वाजो व्यरोचत ।
अश्वत्थामा कृपश्चैव चक्षुरास्तां जनेश्वर ॥ ६-७५-१६ (४१९९२)
कृतवर्मा तु सहितः काम्भोजैरथ बाह्लिकैः ।
शिरस्यासीन्नरश्रेष्ठः श्रेष्ठः सर्वधनुष्मताम् ॥ ६-७५-१७ (४१९९३)
ग्रीवायां शूरसेनश्च तव पुत्रश्च मारिष ।
दुर्योधनो महाराज राजभिर्बहुभिर्वृतः ॥ ६-७५-१८ (४१९९४)
प्राग्जोतिषस्तु सहितो मद्रसौवीरकेकयैः ।
उरस्यभून्नरश्रेष्ठ महत्या सेनया वृतः ॥ ६-७५-१९ (४१९९५)
पृष्ठे चास्तां महेष्वासावावन्त्यौ सपदानुगौः ।
स्वसेनया च सहितः शुशर्मा प्रस्थलाधिपः ।
वामं पक्षं समाश्रित्य दंशितः समवस्थितः ॥ ६-७५-२० (४१९९६)
तुषारा यवनाश्चैव शकाश्च सह चूचुपैः ।
दक्षिणं पक्षमाश्रित्य स्थिता व्यूहस्त भारत ॥ ६-७५-२१ (४१९९७)
श्रुतायुश्च शातायुश्च सौमदत्तिश्च मारिष ।
व्यूहस्य जघने तस्थू रक्षमाणाः परस्परम् ॥ ६-७५-२२ (४१९९८)
ततो युद्धाय संजग्मुः पाण्डवाः कौरवैः सह ।
सूर्योदये महाराज प्रावर्तत जनक्षयः ॥ ६-७५-२३ (४१९९९)
प्रतीयू रथिनो नामान्नागाश्च रथिनो ययुः ।
हयारोहान्रथारोहा रथिनश्चापि सादिनः ॥ ६-७५-२४ (४२०००)
सादिनश्च हयान्राजन्रथिनश्च महारणे ।
हस्त्यारोहान्हयारोहा रथिनः सादिनस्तथा ॥ ६-७५-२५ (४२००१)
रथिनः पत्तिभिः सार्धं सादिनश्चापि पत्तिभिः ।
अन्योन्यं समरे राजन्प्रत्यधावन्नमर्षिताः ॥ ६-७५-२६ (४२००२)
भीमसेनार्जुनयमैर्गुप्ता चान्यैर्महारथैः ।
शुशुभे पाण्डवी सेना नक्षत्रैरिव शर्वरी ॥ ६-७५-२७ (४२००३)
तथा भीष्मकृपद्रोणशल्यदुर्योधनादिभिः ।
तवापि च बभौ सेना ग्रहैर्द्यौरिव संवृताः ॥ ६-७५-२८ (४२००४)
भीमसेनस्तु कौन्तेयो द्रोणं दृष्ट्वा पराक्रमी ।
अभ्ययाज्जवनैरश्वैर्भारद्वाजस्य वाहिनीम् ॥ ६-७५-२९ (४२००५)
द्रोणास्तु समरे क्रुद्धो भीमं नवभिरायसैः ।

विव्याध समरश्लाघी मर्माण्युद्दिष्य वीर्यवान् ॥ ६-७५-३० (४२००६)
दृढाहतस्तो भीमो भारद्वाजस्य संयुगे ।
सारथिं प्रेषयामास यमस्य सदनं प्रति ॥ ६-७५-३१ (४२००७)
स संगृह्य स्कवयं वाहान्भारद्वाजः प्रतापवान् ।
व्यधमत्पाण्डवीं सेनां तूलराशिमिवानलः ॥ ६-७५-३२ (४२००८)
ते वद्यमाना द्रोणेन भीष्मेण च नरोत्तमाः ।
सृञ्जयाः तावकं सैन्यं भीमार्जुनपरिक्षतम् ॥ ६-७५-३३ (४२००९)
तथैव तावकं सैन्यं भीमार्जुनपरिक्षतम् ।
मुह्यते तत्रतत्रैव समदेव वराङ्गना ॥ ६-७५-३४ (४२०१०)
अभिद्येतां ततो व्यूहौ तस्मिन्वीरवरक्षये ।
आसीद्व्यतिकरो घोरस्तव तेषां च भारत ॥ ६-७५-३५ (४२०११)
तदद्भुतमपश्याम तावकानां परैः सह ।
एकायनगताः सर्वे यदयुध्यन्त भारत ॥ ६-७५-३६ (४२०१२)
प्रतिसंवार्य चास्त्राणि तेऽन्योन्यस्य विशांपते ।
युयुधुः पाण्डवाश्चैव कौरवाश्च महाबलाः ॥ ॥ ६-७५-३७ (४२०१३)

इति श्रीमन्महाभारते भीष्मपर्वणि भीष्मवधपर्वणि
षष्ठदिवसयुद्धे पञ्चसप्ततितमोऽध्यायः ॥

---

भिस्मपर्व-अध्यय०७६
॥ श्रीः ॥
६.७६. अध्यायः ७६

Mahabharata - Bhishma Parva - Chapter Topics
धृतराष्ट्रेण स्वसेनाक्षयश्रवणेन शोचनम् ॥ १ ॥

Mahabharata - Bhishma Parva - Chapter Text

६-७६-० (४२०१४)
धृतराष्ट्र उवाच। ६-७६-०क्ष् (४१५१)
एवं बहुगुणं सैन्यमेवं बहुविधं परम् ।
व्यूढमेवं यथाशास्त्रममोघं चैव सञ्जय ॥ ६-७६-१ (४२०१५)
जुष्टमस्माकमत्यन्तमभिकामं च नः सदा ।
प्रहृष्टं व्यसनोपेतं पुरस्ताद्दृष्टविक्रमम् ॥ ६-७६-२ (४२०१६)
नातिवृद्धमबालं च न कृशं न च पीवरम् ।
लघुवृत्तायतप्रायं सागराकारमव्ययम् ॥ ६-७६-३ (४२०१७)
आत्तसन्नाहशस्त्रं च बहुशस्त्रपरिग्रहम् ।

असियुद्धे नियुद्धे च गदायुद्धे च कोविदम् ॥ ६-७६-४ (४२०१८)
प्रासर्ष्टितोमरेष्वाजौ परिघेष्वायसेषु च ।
भिण्डिपालेषु शक्तीषु मुसलेषु च सर्वशः ॥ ६-७६-५ (४२०१९)
कम्पनेषु च चापेषु कणपेषु च सर्वशः ।
क्षेपणीयेषु चित्रेषु मुष्टयुद्धेषु च क्षमम् ॥ ६-७६-६ (४२०२०)
अपरोक्षं च विद्यासु व्यायामे च कृतश्रमम् ।
शस्त्रग्रहणविद्यासु सर्वासु परिनिष्ठितम् ॥ ६-७६-७ (४२०२१)
आरोहे पर्यवस्कन्दे सरणे सान्तरप्लुते ।
सम्यक्प्रहरणे याने व्यपयाने च कोविदम् ॥ ६-७६-८ (४२०२२)
नागाश्वरथयानेषु बहुशः सुपरीक्षितम् ।
परीक्ष्य च यथान्यायं वेतनेनोपपादितम् ॥ ६-७६-९ (४२०२३)
न गोष्ठ्या नोपकारेण न च बन्धुनिमित्ततः ।
न सौहृदबलैर्वापि नाकुलीनपरिग्रहैः ॥ ६-७६-१० (४२०२४)
समृद्धजनमार्यं च तुष्टसंबन्धिबान्धवम् ।
कृतोपकारभूयिष्ठं यशस्वि च मनस्वि च ॥ ६-७६-११ (४२०२५)
स्वजनैस्तु नरैर्मुख्यैर्बहुशो दृष्टकर्मभिः ।
लोकपालोपमैस्तात पालितं लोकविश्रुतम् ॥ ६-७६-१२ (४२०२६)
बहुभिः क्षत्रियैर्गुप्तं पृथिव्यां लोकसंमतैः ।
अस्मानभिगतैः कामात्सबलैः सपदानुगैः ॥ ६-७६-१३ (४२०२७)
महोदधिमिवापूर्णमापगाभिः समन्ततः ।
अपक्षपक्षिसंकाशै रथैर्नागैश्च संवृतम् ॥ ६-७६-१४ (४२०२८)
नानायोधजलं भीमं वाहनोर्मितरङ्गिणम् ।
क्षेपण्यसिगदाशक्तिशरप्राससमाकुलम् ॥ ६-७६-१५ (४२०२९)
ध्वजभूषणसंबाधं रत्नपट्टसुसंचितम् ।
परिधावद्भिरश्वैश्च वायुवेगविकम्पितम् ॥ ६-७६-१६ (४२०३०)
अपारमिव गर्जन्तं सागरप्रतिमं महत् ।
द्रोणभीष्मासिसंगप्तं गुप्तं च कृतवर्मणा ॥ ६-७६-१७ (४२०३१)
कृपदुःशासनाभ्यां च जयद्रथमुखैस्तथा ।
भगदत्तविकर्णाभ्यां द्रौणिसौबलबाह्लिकैः ॥ ६-७६-१८ (४२०३२)
गुप्तं प्रवीरैर्लौकैश्च सारवद्भिर्महात्मभिः ।
यदहन्यत सैन्यं मे दिष्टमत्र परायणम् ॥ ६-७६-१९ (४२०३३)
नैतादृशं समुद्योगं दृष्टवन्तो हि मानुषाः ।
ऋषयो वा महाभागाः पुराणा भुवि सञ्जय ॥ ६-७६-२० (४२०३४)
ईदृशोऽपि बलौघस्तु संयुक्तः शस्त्रसंपदा ।
वध्यते यत्र संग्रामे किमन्यद्भागधेयतः ॥ ६-७६-२१ (४२०३५)
विपरीतमिदं सर्वं प्रतिभाति हि सञ्जय ।

यत्रेदृशं बलं घोरं नावधीद्युधि पाण्डवान् ॥ ६-७६-२२ (४२०३६)
पाण्डवार्थाय नियतं देवास्तत्र समागताः ।
युध्यन्ते मामकं सैन्यं यथाऽवध्यत सञ्जय ॥ ६-७६-२३ (४२०३७)
उक्तोऽपि विदुरेणाहं हितं पथ्यं च नित्यशः ।
न च जग्राह तन्मन्दः पुत्रो दुर्योधनो मम ॥ ६-७६-२४ (४२०३८)
तथ्यां मन्ये मतिं तस्य सर्वज्ञस्य महात्मनः ।
आसीत्तथाऽऽगतं तात येन दृष्टमिदं पुरा ॥ ६-७६-२५ (४२०३९)
अथवा भाव्यमेवं हि संजयैतेन सर्वथा ।
पुरा धात्रा यथा दिष्टं तत्तथा न तदन्यथा ॥ ॥ ६-७६-२६ (४२०४०)

इति श्रीमन्महाभारते भीष्मपर्वणि भीष्मवधपर्वणि
षष्ठदिवसयुद्धे षट्सप्ततितमोऽध्यायः ॥
Mahabharata - Bhishma Parva - Chapter Footnotes

६-७६-२ नः अस्मान् अभिकामं आकाङ्क्षमाणम् । प्रह्वनिमिपाठे प्रणतम् ॥
६-७६-३ लघुवृत्तं शीघ्रकारि । आयतप्रायं प्रांशुबहुलम् ॥
६-७६-८ आरोहे हस्त्यादीनाम् । पर्यवस्कन्दे हस्त्यादिभ्योऽवतरणे ॥
६-७६-११ मनस्वि साहंकारम् ॥

---

भिस्मपर्व-अध्यय०७७
॥ श्रीः ॥
६.७७. अध्यायः ७७

Mahabharata - Bhishma Parva - Chapter Topics
भीमद्रोणपराक्रमवर्णनम् ॥ १ ॥

Mahabharata - Bhishma Parva - Chapter Text

६-७७-० (४२०४१)
सञ्जय उवाच। ६-७७-०क्ष् (४१५२)
आत्मदोषात्त्वया राजन्प्राप्तं व्यसनमीदृशम् ।
न हि दुर्योधनस्तानि पश्यते भरतर्षभ ॥ ६-७७-१ (४२०४२)
यानि त्वं पश्यसे राजन्धर्मसंकरकारणात् ।
तव दोषात्पुरा वृत्तं द्यूतमेतद्विशांपते ॥ ६-७७-२ (४२०४३)
तव दोषेण युद्धं च प्रवृत्तं सह पाण्डवैः ।
त्वमेवाद्य फलं भुङ्क्ष्व कृत्वा किल्बिषमात्मना ॥ ६-७७-३ (४२०४४)

आत्मना हि कृतं कर्म आत्मनैवोपभुज्यते ।
इह वा प्रेत्य वा राजंस्त्वया प्राप्तं यथातथम् ॥ ६-७७-४ (४२०४५)
तस्माद्राजन्स्थिरो भूत्वा प्राप्येदं व्यसनं महत् ।
शृणु युद्धं यथा वृत्तं शंसतो मे नराधिप ॥ ६-७७-५ (४२०४६)
भीमसेनः सुनिशितैर्बाणैर्भित्त्वा महाचमूम् ।
आससाद ततो वीरः सर्वान्दुर्योधनानुजान् ॥ ६-७७-६ (४२०४७)
दुःशासनं दुर्विषहं दुःसहं दुर्मदं जयम् ।
जयत्सेनं विकर्णं च चित्रसेनं सुदर्शनम् ॥ ६-७७-७ (४२०४८)
चारुचित्रं सुवर्माणं दुष्कर्णं कर्णमेव च ।
एतांश्चान्यांश्च सुबहून्समीपस्थान्महारथान् ॥ ६-७७-८ (४२०४९)
धार्तराष्ट्रान्सुसंक्रुद्धान्दृष्ट्वा भीमो महारथः ।
भीष्मेण समरे गुप्तां प्रविवेश महाचमूम् ॥ ६-७७-९ (४२०५०)
अथालोक्य प्रविष्टं तमूचुस्ते सर्व एव तु ।
जीवग्राहं निगृह्णीमो वयमेनं नराधिपाः ॥ ६-७७-१० (४२०५१)
स तैः परिवृतः पार्थो भ्रातृभिः कृतनिश्चयैः ।
प्रजासंहरणे सूर्यः क्रूरैरिव महाग्रहैः ॥ ६-७७-११ (४२०५२)
संप्राप्य मध्यं सैन्यस्य न भीः पाण्डवमाविशत् ।
यथा देवासुरे युद्धे महेन्द्रं प्राप्य दानवान् । ६-७७-१२ (४२०५३)
ततः शतसहस्राणि रथिनां सर्वशः प्रभो ।
उद्यतानि शरैस्तीव्रैस्तमेकं परिवव्रिरे ॥ ६-७७-१३ (४२०५४)
स तेषां प्रवरान्योधान्हस्त्यश्वरथसादिनः ।
जघान समरे शूरो धार्तराष्ट्रानचिन्तयन् ॥ ६-७७-१४ (४२०५५)
तेषां व्यवसितं ज्ञात्वा भीमसेनो जिघृक्षताम् ।
समस्तानां वधे राजन्मतिं चक्रे महामनाः ॥ ६-७७-१५ (४२०५६)
ततो रथं समुत्सृज्य गदामादाय पाण्डवः ।
उवाच सारथिं भीमं स्थीयतामिति भारत ॥ ६-७७-१६ (४२०५७)
यावदेतान्हनिष्यामि धार्तराष्ट्रान्सहानुगान् ।
इत्युक्त्वा भीमसेनस्तु प्रविश्य महतीं चमूम् ।
जघान धार्तराष्ट्राणां तद्बलौघमहार्णवम् ॥ ६-७७-१७ (४२०५८)
गदया भिमसेनेन ताडिता वारणोत्तमाः ।
भिन्नकुम्भा महाकाया भिन्नपृष्ठास्तथैवच ॥ ६-७७-१८ (४२०५९)
भिन्नगात्राः सहारोहैः शेरते पर्वता इव ।
रथाश्च भग्नास्तिलशः सयोधाः शतशो रणे ॥ ६-७७-१९ (४२०६०)
अश्वाश्च सादिनश्चैव पादातैः सह भारत ।
तत्राद्भुतमपश्याम भीमसेनस्य विक्रमम् ॥ ६-७७-२० (४२०६१)
यदेकः समरे राजन्बहुभिः समयोधयत् ।

अन्तकाले प्रजाः सर्वा दण्डपाणिरिवान्तकः ॥ ६-७७-२१ (४२०६२)
भीमसेने प्रविष्टे तु धृष्टद्युम्नोऽपि पार्षतः ।
द्रोणमुत्सृज्य तरसा ययौ यत्र वृकोदरः ॥ ६-७७-२२ (४२०६३)
विदार्य महतीं सेनां तावकानां नरर्षभः ।
आससाद रथं शून्यं भीमसेनस्य संयुगे ॥ ६-७७-२३ (४२०६४)
दृष्ट्वा विशोकं समरे भीमसेनस्य सारथिम् ।
धृष्टद्युम्नो महाराज दुर्मना गतचेतनः ॥ ६-७७-२४ (४२०६५)
अपृच्छद्बाष्पसंरुद्धो निःश्वसन्वाचमीरयन् ।
मम प्राणैः प्रियतमः क्व भीम इति दुःखितः ॥ ६-७७-२५ (४२०६६)
विशोकस्तमुवाचेदं धृष्टद्युम्नं कृताञ्जलिः ।
संस्थाप्य मामिह बली पाण्डवेयः पराक्रमी ॥ ६-७७-२६ (४२०६७)
प्रविष्टो धार्तराष्ट्राणामेतद्बलमहार्णवम् ।
मामुक्त्वा पुरुषव्याघ्रः प्रीतियुक्तमिदं वचः ॥ ६-७७-२७ (४२०६८)
प्रतिपालय मां सूत नियम्याश्वान्मुहूर्तकम् ।
यावदेवान्निहन्म्यद्य य इमे मद्वधोद्यताः ।
अभ्यधावद्गदापाणिस्तद्बलं स महाबलः ॥  ६-७७-२८ (४२०६९)
ततो दृष्ट्वा प्रधावन्तं गदाहस्तं महाबलम् ।
सर्वेषामेव सैन्यानां संहर्षः समजायत ॥ ६-७७-२९ (४२०७०)
तस्मिन्सुतुमुले युद्धे वर्तमाने भयानके ।
भित्त्वा राजन्महाव्यूहं प्रविवेश सखा तव ॥ ६-७७-३० (४२०७१)
विशोकस्य वचः श्रुत्वा धृष्टद्युम्नोऽथ पार्षतः ।
प्रत्युवाच ततः सूतं रणमध्ये महाबलः ॥ ६-७७-३१ (४२०७२)
न हि मे जीवितेनापि विद्यतेऽद्य प्रयोजनम् ।
भीमसेनं रणे हित्वा स्नेहमुत्सृज्य पाण्डवैः ॥ ६-७७-३२ (४२०७३)
यदि यामि विना भीमं किं मां क्षत्रं वदिष्यति ।
एकायनगते भीमे मयि चावस्थिते युधि ॥ ६-७७-३३ (४२०७४)
तस्य न स्वस्ति कुर्वन्ति देवाः शक्रपुरोगमाः ।
यः सहायान्परित्यज्य स्वस्तिमानाव्रजेद्गृहम् ॥ ६-७७-३४ (४२०७५)
ग्रौरवे नरके मज्जेदप्लवे दुस्तरे नृभिः ।'
मम भीमः सखा चैव संबन्धी च महाबलः ।
भक्तोऽस्मान्भक्तिमांश्चाहं तमप्यरिनिषूदनम् ॥  ६-७७-३५ (४२०७६)
सोऽहं तत्र गमिष्यामि यत्र यातो वृकोदरः ।
निघ्नन्तं मां रिपून्पश्य दानवानिव वासवम् ॥ ६-७७-३६ (४२०७७)
एवमुक्त्वा ततो वीरो ययौ मध्येन वाहिनीम् ।
भीमसेनस्य मार्गेषु गदाप्रमथितैर्गजैः ॥ ६-७७-३७ (४२०७८)
स ददर्श तदा भीमं दहन्तं रिपुवाहिनीम् ।

वातो वृक्षानिव बलात्प्रभञ्जन्तं रणे रिपून् ॥ ६-७७-३८ (४२०७९)
ते वध्यमानाः समरे रथिनः सादिनस्तथा ।
पादाता दन्तिनश्चैव चक्रुरात्स्वरं महत् ॥ ६-७७-३९ (४२०८०)
हाहाकारश्च संजज्ञे तव सैन्यस्य मारिष ।
वध्यतो भीमसेनेन कृतिना चित्रयोधिना ॥ ६-७७-४० (४२०८१)
ततः कृतास्त्रास्ते सर्वे परिवार्य वृकोदरम् ।
अभीताः समवर्तन्त शस्त्रवृष्ट्या परंतप ॥ ६-७७-४१ (४२०८२)
अभिद्रुतं शस्त्रभृतां वरिष्ठं
समन्ततः पाण्डवं लोकवीरः ।
सैन्येन घोरेण सुसंहितेन
दृष्ट्वा बली पार्षतो भीमसेनम् ॥ ६-७७-४२ (४२०८३)
अथोपगच्छच्छरविक्षताङ्गं
पदातिनं क्रोधविषं वमन्तम् ।
आश्वासयन्पार्षतो भीमसेनं
गदाहस्तं कालमिवान्तकाले ॥ ६-७७-४३ (४२०८४)
विशल्यमेनं च चकार तूर्ण-
मारोपयच्चात्मरथे महात्मा ।
भृशं परिष्वज्य च भीमसेन-
माश्वासयामास स शत्रुमध्ये ॥ ६-७७-४४ (४२०८५)
तथा तस्मिन्वर्तमानेऽतिवेगं
भ्रातॄनथोपेत्य तवापि पुत्रः ।
तस्मिन्विमर्दे तव संप्रवृत्ते
दृष्ट्वा रणे वाक्यमिदं बभाषे ॥ ६-७७-४५ (४२०८६)
अयं दुरात्मा द्रुपदस्य पुत्रः
समागतो भीमसेनेन सार्धम् ॥ ६-७७-४६ (४२०८७)
तं याम सर्वे महता बलेन
मा वो रिपुः प्रार्थयतामनीकम् ।
श्रुत्वा तु वाक्यं तममृष्यमाणा
ज्येष्ठाज्ञया नोदिता धार्तराष्ट्राः ॥ ६-७७-४७ (४२०८८)
वधाय निष्पेतुरुदायुधास्ते
युगक्षये केतवो यद्वदुग्राः ।
प्रगृह्य चास्त्राणि धनूंषि वीरा
ज्यां नेमिघोषैः प्रविकम्पयन्तः ॥ ६-७७-४८ (४२०८९)
शरैरवर्षन्द्रुपदस्य पुत्रं
यथाम्बुदा भूधरं वारिजालैः ।
निहत्य तांश्चापि शरैः सुतीक्ष्णै-

र्न विव्यथे समरे चित्रयोधी ॥ ६-७७-४९ (४२०९०)
समभ्युदीर्णांश्च तवात्मजांस्तथा
निशाम्य वीरानभितः स्थितान्रणे ।
जिघांसुरुग्रो द्रुपदात्मजो युवा ।
प्रमोहनास्त्रं युयुजे महारथः ।
क्रुद्धो भृशं तव पुत्रेषु राज-
न्दैत्येषु यद्वत्समरे महेन्द्रः ॥ ६-७७-५० (४२०९१)
'स वै ततोऽस्त्रं सुमहाप्रभावं'
प्रमोहनं द्रोणदत्तं महात्मा ।
प्रयोजयामास उदारकर्मा
तस्मिन्रणे तव सैन्यस्य राजन् ॥' ६-७७-५१ (४२०९२)
ततो व्यमुह्यन्त रणे नृवीराः
प्रमोहनास्त्राहतबुद्धिसत्वाः
प्रदुद्रुवुः कुरवश्चैव सर्वे
सवाजिनागाः सरथाः समन्तात् ।
परीतकालानिव नष्टसंज्ञा-
न्मोहोपेतांस्तव पुत्रान्निशम्य ॥ ६-७७-५२ (४२०९३)
एतस्मिन्नेव काले तु भीमः प्रहरतां वरः ।
विश्रम्य च तदा राजन्पीत्वाऽमृतरसं जलम् ॥ ६-७७-५३ (४२०९४)
पुनः सन्नह्य संक्रुद्धो योधयामास संयुगे ।
धृष्टद्युम्नेन सहितः कालयामास भारत ॥ ६-७७-५४ (४२०९५)
एतस्मिन्नन्तरे राजन्द्रोणः शस्त्रभृतां वरः ।
द्रुपदं त्रिभिरासाद्य शरैर्विव्याध दारुणैः ॥ ६-७७-५५ (४२०९६)
सोऽतिविद्धस्ततो राजन्रणे द्रोणेन पार्थिवः ।
अपायादद्रुपदो राजन्पूर्ववैरमनुस्मरन् । ६-७७-५६ (४२०९७)
जित्वा तु द्रुपदं द्रोणः शङ्खं दध्मौ प्रतापवान् ।
तस्य शङ्खस्वनं श्रुत्वा वित्रेसुः सर्वसोमकाः ॥ ६-७७-५७ (४२०९८)
अथ शुश्राव तेजस्वी द्रोणः शस्त्रभृतां वरः ।
प्रमोहनास्त्रेण रणे मोहितानात्मजांस्तव ॥ ६-७७-५८ (४२०९९)
ततो द्रोणो महाराज त्वरितोऽभ्याययौ रणात् ।
तत्रापश्यन्महेष्वासो भारद्वाजः प्रतापवान् ॥ ६-७७-५९ (४२१००)
धृष्टद्युम्नं च भीमं च विचरन्तौ महारणे ।
मोहाविष्टांश्च ते पुत्रानपश्यत्स महारथः ॥ ६-७७-६० (४२१०१)
ततः प्रज्ञांस्त्रमदाय मोहनास्त्रं व्यनाशयत् ।
ततः प्रत्यागतप्राणास्तव पुत्रा महारथाः ॥ ६-७७-६१ (४२१०२)
पुनर्युद्धाय समरे प्रत्युद्याता जिगीषवः ।

ततो युधिष्ठिरः प्राह समाहूय स्वसैनिकान् ॥ ६-७७-६२ (४२१०३)
गच्छन्तु पदवीं शक्त्या भीमपार्षतयोर्युधि ।
सौभद्रप्रमुखा वीरा रथा द्वादश दंशिताः ॥ ६-७७-६३ (४२१०४)
प्रवृत्तिमधिगच्छन्तु न हि शुद्ध्यति मे मनः ।
प्रवृत्तिर्भिमसेनस्य पार्षतस्य च संयुगे ॥ ६-७७-६४ (४२१०५)
विज्ञेया समरे शीघ्रं प्रविशध्वं रथार्णवम् ।
गच्छन्तु परया शक्त्या भवन्त इति मे मतिः ॥ ६-७७-६५ (४२१०६)
त एवं समनुज्ञाताः शूरा विक्रान्तयोधिनः ।
बाढमित्येवमुक्त्वा तु सर्वे पुरुषमानिनः ।
मध्यंदिनगते सूर्ये प्रययुः सर्व एव हि ॥ ६-७७-६६ (४२१०७)
केकया द्रौपदेयाश्च धृष्टकेतुश्च वीर्यवान् ।
अभिमन्युं पुरस्कृत्य महत्या सेनया वृताः ॥ ६-७७-६७ (४२१०८)
ते कृत्वा समरे व्यूहं सूचीमुखमरिन्दमम् ।
बिभिदुर्धार्तराष्ट्राणां तद्रथानीकमाहवे ॥ ६-७७-६८ (४२१०९)
तान्प्रयातान्महेष्वासानभिमन्युपुरोगमान् ।
भीमसेनभयाविष्टा धृष्टद्युम्नविमोहिता ॥ ६-७७-६९ (४२११०)
न संवारयितुं शक्ता तव सेना जनाधिप ।
मदमूर्च्छन्वितात्मा वै प्रमदेवाध्वनि स्थिता ॥ ६-७७-७० (४२१११)
तेऽभिजाता महेष्वासाः सुवर्णविकृतध्वजाः ।
परीप्सन्तोऽभ्यधावन्त धृष्टद्युम्नवृकोदरौ ॥ ६-७७-७१ (४२११२)
तौ च दृष्ट्वा महेष्वासावभिमन्युपुरोगमान् ।
बभूवतुर्मुदायुक्तौ निघ्नन्तौ तव वाहिनीम् ॥ ६-७७-७२ (४२११३)
ग्द्रोणमिष्वस्त्रकुशलं सर्वविद्यासु पारगम्।'
दृष्ट्वा तु सहसायान्तं पाञ्चाल्यो गुरुमात्मनः ।
नाशंसत वधं वीरः पुत्राणां तव पार्षतः ॥ ६-७७-७३ (४२११४)
ततो रथं समारोप्य कैकेयस्य वृकोदरम् ।
अभ्यधावत्सुसंक्रुद्धो द्रोणमिष्वस्त्रपारगम् ॥ ६-७७-७४ (४२११५)
तस्याभिपततस्तूर्णं भारद्वाजः प्रतापवान् ।
क्रुद्धश्चिच्छेद बाणेन धनुः शत्रुनिबर्हणः ॥ ६-७७-७५ (४२११६)
अन्यांश्च शतशो बाणान्प्रेषयामास पार्षते ।
दुर्योधनहितार्थाय भर्तृपिण्डमनुस्मरन् ॥ ६-७७-७६ (४२११७)
अथान्यद्धनुरादाय पार्षतः परवीरहा ।
द्रोणं विव्याध विंशत्या रुक्मपुङ्खैः शिलाशितैः ॥ ६-७७-७७ (४२११८)
तस्य द्रोणः पुनश्चापं चिच्छेदामित्रकर्शनःक ।
हयांश्च चतुरस्तूर्णं चतुर्भिः सायकोत्तमैः ॥ ६-७७-७८ (४२११९)
वैवस्वतक्षयं घोरं प्रेषयामास भारत ।

सारथिं चास्य भल्लेन प्रेषयामास भारत । ६-७७-७९ (४२१२०)
हताश्वात्स रथात्तूर्णमवप्लुत्य महारथः ।
आरुरोह महाबाहुरभिमन्योर्महारथम् ॥ ६-७७-८० (४२१२१)
ततः सरथनागाश्वा समकम्पत वाहिनी ।
पश्यतो भीमसेनस्य पार्षतस्य च पश्यतः ॥ ६-७७-८१ (४२१२२)
तत्प्रभग्नं बलं दृष्ट्वा द्रोणेनामिततेजसा ।
नाशक्नुवन्वारयितुं समस्तास्ते महारथाः ॥ ६-७७-८२ (४२१२३)
वध्यमानं तु तत्सैन्यं द्रोणेन निशितैः शरैः ।
व्यभ्रमत्तत्रतत्रैव क्षोभ्यमाण इवार्णवः ॥ ६-७७-८३ (४२१२४)
तथा दृष्ट्वा च तत्सैन्यं जहृषे तावकं बलम् ।
दृष्ट्वाचार्यं सुसंक्रुद्धं तपन्तं रिपुवाहिनीम् ।
तुष्टुवुः सर्वतो योधाः साधुसाध्विति भारत ॥ ॥ ६-७७-८४ (४२१२५)

इति श्रीमन्महाभारते भीष्मपर्वणि भीष्मवधपर्वणि
षष्ठदिवसयुद्धे सप्तसप्ततितमोऽध्यायः ॥

---

भिस्मपर्व-अध्यय०७८
॥ श्रीः ॥
६.७८. अध्यायः ७८

Mahabharata - Bhishma Parva - Chapter Topics
संकुलयुद्धवर्णनम् ॥ १ ॥

Mahabharata - Bhishma Parva - Chapter Text

६-७८-० (४२१२६)
सञ्जय उवाच। ६-७८-०क्ष् (४१५३)
ततो दुर्योधनो राजा महोत्प्रत्यागतस्मृतिः ।
शरवर्षैः पुनर्भीमं प्रत्यवारयदच्युतम् ॥ ६-७८-१ (४२१२७)
एकीभूतास्ततश्चैव तव पुत्रा महारथाः ।
समेत्य समरे भीमं योधयामासुरुद्यताः ॥ ६-७८-२ (४२१२८)
भीमसेनोऽपि समरे संप्राप्य स्वरथं पुनः ।
समारुह्य महाबाहुर्ययौ येन तवात्मजः ॥ ६-७८-३ (४२१२९)
प्रगृह्य च महावेगं परासुकरणं दृढम् ।
सज्यं शरासनं सङ्ख्ये शरैर्विव्याध ते सुतम् ॥ ६-७८-४ (४२१३०)
ततो दुर्योधनो राजा भीमसेनं महाबलम् ।
नाराचेन सुतीक्ष्णेन भृशं मर्मण्यताडयत् ॥ ६-७८-५ (४२१३१)

सोऽतिविद्धो महेष्वासस्तव पुत्रेण धन्विना ।
क्रोधसंरक्तनयनो वेगेनाक्षिप्य कार्मुकम् ॥ ६-७८-६ (४२१३२)
दुर्योधनं त्रिभिर्बाणैर्बाह्वोरुरसि चार्पयत् ।
स तत्र शुशुभे राजा शिखरैर्गिरिराडिव ॥ ६-७८-७ (४२१३३)
तौ दष्ट्वा समरे क्रुद्धौ विनिघ्नन्तौ परस्परम् ।
दुर्योधनानुजाः सर्वे शूराः संत्यक्तजीविताः ॥ ६-७८-८ (४२१३४)
संस्मृत्य मन्त्रितं पूर्वं निग्रहे भीमकर्मणः ।
निश्चयं परमं कृत्वा निग्रहीतुं प्रचक्रमुः ॥ ६-७८-९ (४२१३५)
तानापतत एवाजौ भीमसेनो महाबलः ।
प्रत्युद्ययौ महाराज गजः प्रतिगजानिव ॥ ६-७८-१० (४२१३६)
भृशं क्रुद्धश्च तेजस्वी नाराचेन समार्पयत् ।
चित्रसेनं महाराज तव पुत्रं महायशाः ॥ ६-७८-११ (४२१३७)
तथेतरांस्तव सुतांस्ताडयामास भारत ।
शरैर्बहुविधैः सङ्ख्ये रुक्मपुङ्खैः सुतेजनैः ॥ ६-७८-१२ (४२१३८)
ततः संप्रेक्ष्य पुत्रैस्ते भीमसेनं समावृतम् ।
अभिमन्युप्रभृतयस्ते द्वदश महारथाः ॥ ६-७८-१३ (४२१३९)
प्रेषिता धर्मराजेन भीमसेनपदानुगाः ।
प्रतिजग्मुर्महाराज तव पुत्रान्महाबलान् ॥ ६-७८-१४ (४२१४०)
दृष्ट्वा रथस्थांस्ताञ्शूरान्सूर्याग्निसमतेजसः ।
सर्वानेव महेष्वासान्भ्राजमानाञ्श्रिया वृतान् ॥ ६-७८-१५ (४२१४१)
महाहवे दीप्यमानान्सुवर्णमकुटोज्ज्वलान् ।
तत्यजुः समरे भीमं तव पुत्रा महाबलाः ॥ ६-७८-१६ (४२१४२)
तान्नामृष्यत कौन्तेयो जीवमाना गता इति ।
अन्वीय च पुनः सर्वांस्तव पुत्रानपीडयत् ॥ ६-७८-१७ (४२१४३)
अथाभिमन्युः समरे भीमसेनेन संगतः ।
पार्षतेन च ते सर्वे कैकया द्रौपदीसुताः ॥ ६-७८-१८ (४२१४४)
तादृष्ट्वा समरे क्रुद्धांस्तव सैन्ये महारथाः ।
दुर्योधनप्रभृतयः प्रगृहीतशरासनाः ।
भृशमश्वैः प्रजवितैः प्रययुर्यत्र ते रथाः ॥ ६-७८-१९ (४२१४५)
अपराह्णे महाराज प्रावर्तत महारणः ।
तावकानां च बलिनां परेषां चैव भारत ॥ ६-७८-२० (४२१४६)
अभिमन्युर्विकर्णस्य हयान्हत्वा महाहवे ।
अथैनं पञ्चविंशत्या क्षुद्रकाणां समार्पयत् ॥ ६-७८-२१ (४२१४७)
हताश्वं रथमुत्सृज्य विकर्णस्तु महारथः ।
आरुरोह रथं राजंश्चित्रसेनस्य भारत ।
योधयामास समरे तदद्भुतमिवाभवत् ॥ ६-७८-२२ (४२१४८)

स्थितावेकरथे तौ तु भ्रातरौ कुलवर्धनौ ।
आर्जिनिः शरजालेन च्छादयामास भारत ॥ ६-७८-२३ (४२१४९)
चित्रसेनो विकर्णश्च कार्ष्णि पञ्चभिरायसैः ।
विव्यधाते न चाकम्पत्कार्ष्णिर्मेरुरिव स्थितः ॥ ६-७८-२४ (४२१५०)
दुःशासनस्तु समरे केकयान्पञ्च मारिष ।
योधयामास राजेन्द्र तदद्भुतमिवाभवत् ॥ ६-७८-२५ (४२१५१)
द्रौपदेया रणे क्रुद्धा दुर्योधनमवारयन् ।
शरैराशीविषाकारैः पुत्रं तव विशांपते ॥ ६-७८-२६ (४२१५२)
पुत्रोऽपि तव दुर्धर्षो द्रौपद्यास्तनयान्रणे ।
सायकैर्निशितै राजन्नाजघान पृथक्पृथक् ॥ ६-७८-२७ (४२१५३)
तैश्चापि विद्धः शुशुभे रुधिरेम समुक्षितः ।
गिरिः प्रस्रवणैर्यद्वद्गैरिकादिविमिश्रितैः ॥ ६-७८-२८ (४२१५४)
भीष्मोऽपि समरे राजन्पाण्डवानामनीकिनीम् ।
कालयामास बलवान्पालः पशुगणानिव ॥ ६-७८-२९ (४२१५५)
ततो गाण्डीवनिर्घोषः प्रादुरासीद्विशांपते ।
दक्षिणेन वरूथिन्याः पार्थस्यरीन्विनिघ्नतः ॥ ६-७८-३० (४२१५६)
उत्तस्थुः समरे तत्र कबन्धानि समन्ततः ।
कुरूणां चैव सैन्येषु पाण्डवानां च भारत ॥ ६-७८-३१ (४२१५७)
शोणितोदं शरावर्तं गजद्वीपं हयोर्मिणम् ।
रथनौभिर्नरव्याघ्राः प्रतेरुः सैन्यसागरम् ॥ ६-७८-३२ (४२१५८)
छिन्नहस्ता विकवचा विदेहाश्च नरोत्तमाः ।
दृश्यन्ते पतितास्तत्र शतशोऽथ सहस्रशः ॥ ६-७८-३३ (४२१५९)
निहतैर्मत्तमातङ्गैः शोणितौघपरिप्लुतैः ।
भूर्भाति भरतश्रेष्ठ पर्वतैराचिता यथा ॥ ६-७८-३४ (४२१६०)
तत्राद्भुतमपश्याम तव तेषां च भारत ।
न तत्रासीत्पुमान्कश्चिद्यो युद्धं नाभिकाङ्क्षति ॥ ६-७८-३५ (४२१६१)
एवं युयुधिरे वीराः प्रार्थयाना महद्यशः ।
तावकाः पाण्डवैः सार्धमाकाङ्क्षन्तो जयं युधि ॥ ॥ ६-७८-३६ (४२१६२)

इति श्रीमन्महाभारते भीष्मपर्वणि भीष्मवधपर्वणि
षष्ठदिवसयुद्धे अष्टसप्ततितमोऽध्यायः ॥

---

भिस्मपर्व-अध्यय०७९
॥ श्रीः ॥
६.७९. अध्यायः ७९

संकुलयुद्धवर्णनम् ॥ १ ॥

Mahabharata - Bhishma Parva - Chapter Text

६-७९-० (४२१६३)
सञ्जय उवाच। ६-७९-०क्ष् (४१५४)
ततो दुर्योधनो राजा लोहितायति भास्करे ।
संग्रामरभसो भीमं हन्तुकामोऽभ्यधावत ॥ ६-७९-१ (४२१६४)
तमायान्तमभिप्रेक्ष्य नृवीरं दृढवैरिणम् ।
भीमसेनः सुसंक्रुद्ध इदं वचनमब्रवीत् ॥ ६-७९-२ (४२१६५)
अयं स कालः संप्राप्तो वर्षपूगाभिवाञ्छितः ।
अद्य त्वां निहनिष्यामि यदि नोत्सृजसे रणम् ॥ ६-७९-३ (४२१६६)
अद्य कुन्त्याः परिक्लेशं वनवासं च कृत्स्नशः ।
द्रौपद्याश्च परिक्लेशं प्रणेष्यामि हते त्वयि ॥ ६-७९-४ (४२१६७)
यत्पुरा मत्सरीभूत्वा पाण्डवानवमन्यसे ।
तस्य पापस्य गान्धारे पश्य व्यसनमागतम् ॥ ६-७९-५ (४२१६८)
कर्णस्य मतमास्थाय सौबलस्य च यत्पुरा ।
अचिन्त्य पाण्डवान्कामाद्यथेष्टं कृतवानसि ॥ ६-७९-६ (४२१६९)
याचमानं च यन्मोहाद्दाशार्हमवमन्यसे ।
उलूकस्य समादेशं यद्ददासि च हृष्टवत् ॥ ६-७९-७ (४२१७०)
तेन त्वां निहनिष्यामि सानुबन्धं सबान्धवम् ।
शमीकरिष्ये तत्पापं यत्पुरा कृतवानसि ॥ ६-७९-८ (४२१७१)
एवमुक्त्वा धनुर्घोरं विकृष्योद्भ्राम्य चासकृत् ।
समाधत्त शरान्घोरान्महाशनिसमप्रभान् ॥ ६-७९-९ (४२१७२)
षड्विंशतिमसं क्रुद्धो मुमोचाशु सुयोधने ।
ज्वलिताग्निशिखाकारान्वज्रकल्पानजिह्मगान् ॥ ६-७९-१० (४२१७३)
ततोऽस्य कार्मुकं द्वाभ्यां सूतं द्वाभ्यां च विव्यधे ।
चतुर्भिरश्वाञ्जवनाननयद्यमसादनम् ॥ ६-७९-११ (४२१७४)
द्वाभ्यां च सुविकृष्टाभ्यां शराभ्यामरिमर्दनः ।
छत्रं चिच्छेद समरे राज्ञस्तस्य नरोत्तम् ॥ ६-७९-१२ (४२१७५)
षड्भिश्च तस्य चिच्छेद ज्वलन्तं ध्वजमुत्तमम् ।
छित्त्वा तं च ननादोच्चैस्तव पुत्रस्य पश्यतः ॥ ६-७९-१३ (४२१७६)
रथाच्च स ध्वजः श्रीमान्नानारत्नविभूषितात् ।
पपात सहसा भूमौ विद्युञ्जलधरादिव ॥ ६-७९-१४ (४२१७७)
ज्वलन्तं सूर्यसंकाशं नागं मणिमयं शुभम् ।
ध्वजं कुरुपतेश्छिन्नं ददृशुः सर्वपार्थिवाः ॥ ६-७९-१५ (४२१७८)

अथैनं दशभिर्बाणैस्तोत्रैरिव महाद्विपम् ।
आजघान रणे वीरं स्मयन्निव महारथः ॥ ६-७९-१६ (४२१७९)
स गाढविद्धो व्यथितो भीमसेनेन संयुगे ।
निषसाद रथोपस्थे मूर्च्छाभिहतचेतनः ॥ ६-७९-१७ (४२१८०)
ततः स राजा सिन्धूनां रथश्रेष्ठो महाबलः ।
दुर्योधनस्य जग्राह पार्ष्णिं स्वपुरुषैर्वृतः ॥ ६-७९-१८ (४२१८१)
कृपश्च रथिनां श्रेष्ठस्तव पुत्रमचेतनम् ।
आरोपयद्रथं राजन्दुर्योधनममर्षणम् ॥ ६-७९-१९ (४२१८२)
परिवार्य ततो भीमं जेतुकामो जयद्रथः ।
रथैरनेकसाहस्रैर्भीमस्यावारयद्दिशः ॥ ६-७९-२० (४२१८३)
धृष्टकेतुस्ततो राजन्नभिमन्युश्च वीर्यवान् ।
केकया द्रौपदेयाश्च तव पुत्रानयोधयन् ॥ ६-७९-२१ (४२१८४)
चित्रसेनः सुचित्रश्च चित्राङ्गश्चित्रदर्शनः ।
चारुचित्रः सुचारुश्च तथा नन्दोपनन्दकौ ॥ ६-७९-२२ (४२१८५)
अष्टावेते महेष्वासाः सुकुमारा यशस्विनः ।
अभिमन्युरथं राजन्समन्तात्पर्यवारयन् ॥ ६-७९-२३ (४२१८६)
आजघान ततस्तूर्णमभिमन्युर्महामनाः ।
एकैकं पञ्चभिर्बाणैः शितैः सन्नतपर्वभिः ॥ ६-७९-२४ (४२१८७)
वज्रमृत्युप्रतीकाशैर्विचित्रायुधनिःसृतैः ।
अमृष्यमाणास्ते सर्वे सौभद्रं रथसत्तमम् ॥ ६-७९-२५ (४२१८८)
ववृषुर्मार्गणैस्तीक्ष्णैर्गिरिं मेरुमिवाम्बुदाः ।
स पीड्यमानः समरे कृतास्त्रो युद्धदुर्मदः ॥ ६-७९-२६ (४२१८९)
अभिमन्युर्महाराज तावकान्समकम्पयत् ।
यथा देवासुरे युद्धे वज्रपाणिर्महासुरान् ॥ ६-७९-२७ (४२१९०)
विकर्णस्य ततो भल्लान्प्रेषयामास भारत ।
चतुर्दश रथश्रेष्ठो घोरानाशीविषोपमान् ॥ ६-७९-२८ (४२१९१)
स तैर्विकर्णस्य रथात्पातयामास वीर्यवान् ।
ध्वजं सूतं हयांश्चैव नृत्यमान इवाहवे ॥ ६-७९-२९ (४२१९२)
पुनश्चान्याञ्शरान्पीतानकुण्ठाग्राञ्शिलाशितान् ।
प्रेषयामास संक्रुद्धो विकर्णाय महाबलः ॥ ६-७९-३० (४२१९३)
ते विकर्णं समासाद्य कङ्कबर्हिणवाससः ।
भित्त्वा देहं गता भूमिं ज्वलन्त इव पन्नगाः ॥ ६-७९-३१ (४२१९४)
ते शरा हेमपुङ्खाग्रा व्यदृश्यन्त महीतले ।
विकर्णरुधिरक्लिन्ना वमन्त इव शोणितम् ॥ ६-७९-३२ (४२१९५)
विकर्णं वीक्ष्य निर्भिन्नं तस्यैवान्ये सहोदराः ।
अभ्यद्रवन्त समरे सौभद्रप्रमुखान्रथान् ॥ ६-७९-३३ (४२१९६)

अभियात्वा तथैवान्यान्रथांस्तान्सूर्यवर्चसः ।
अविध्यन्समरेऽन्योन्यं संरम्भाद्युद्धदुर्मदाः ॥ ६-७९-३४ (४२१९७)
दुर्मुखः श्रुतकर्माणं विद्ध्वा सप्तभिराशुगैः ।
ध्वजमेकेन चिच्छेद सारथिं चास्य सप्तमिः ॥ ६-७९-३५ (४२१९८)
अश्वाञ्जाम्बूनदैर्जालैः प्रच्छन्नान्वातरंहसः ।
जघान षड्भिरासाद्य सारथिं चाभ्यपातयत् ॥ ६-७९-३६ (४२१९९)
स हताश्वे रथे तिष्ठञ्श्रुतकर्मा महारथः ।
शक्तिं चिक्षेप संक्रुद्धो महोल्कां ज्वलितामिव ॥ ६-७९-३७ (४२२००)
सा दुर्मुखस्य विमलं वर्म भित्त्वा यशस्विनः ।
विदार्य प्राविशद्भूमिं दीप्यमाना स्वतेजसा ॥ ६-७९-३८ (४२२०१)
दुर्मुखो विह्वलस्तत्र निषसाद रणे विभो ।
विसंज्ञं प्रेक्ष्य ते सर्वे भ्रातरः पर्यवारयन् ॥ ६-७९-३९ (४२२०२)
तं दृष्ट्वा विरथं तत्र सुतसोमो महारथः ।
पश्यतां सर्वसैन्यानां रथमारोपयत्स्वकम् ॥ ६-७९-४० (४२२०३)
श्रुतकीर्तिस्तथा वीरो जयत्सेनं सुतं तव ।
अभ्ययात्समरे राजन्हन्तुकामो यशस्विनम् ॥ ६-७९-४१ (४२२०४)
तस्य विक्षिपतश्चापं श्रुतकीर्तेर्महास्वनम् ।
चिच्छेद समरे तूर्णं जयत्सेनः सुतस्तव ॥ ६-७९-४२ (४२२०५)
क्षुरप्रेण सुतीक्ष्णेन प्रहसन्निव भारत ।
तं दृष्ट्वा च्छिन्नधन्वानं शतानीकः सहोदरम् ॥ ६-७९-४३ (४२२०६)
अभ्यपद्यत तेजस्वी सिंहवन्निनदन्मुहुः ।
शतानीकस्तु समरे दृढं विस्पार्य कार्मुकम् ॥ ६-७९-४४ (४२२०७)
विव्याध दशभिस्तूर्णं जयत्सेनं शिलीमुखैः ।
ननाद सुमहानादं प्रभिन्न इव वारणः ॥ ६-७९-४५ (४२२०८)
अथान्येन सुतीक्ष्णेन सर्वावरणभेदिना ।
शतानीको जयत्सेनं विव्याध हृदये भृशम् ॥ ६-७९-४६ (४२२०९)
तथा तस्मिन्वर्तमाने दुष्कर्णो भ्रातुरन्तिके ।
मुमोचास्मैशितान्बाणांस्तीक्ष्णानाशीविषोपमान्
चिच्छेद समरे चापं नाकुलेः क्रोधमूर्च्छितः ॥ ६-७९-४७ (४२२१०)
अथान्यद्धनुरादाय भारसाहमनुत्तमम् ।
समादत्त शरान्घोराञ्शतानीको महाबलः ॥ ६-७९-४८ (४२२११)
तिष्ठतिष्ठेति चामन्त्र्य दुष्कर्णं भ्रातुरग्रतः ।
मुमोचास्मै शितान्बाणाज्ज्वलितान्पन्नगानिव ॥ ६-७९-४९ (४२२१२)
ततोऽस्य धनुरेकेन द्वाभ्यां सूतं च मारिष ।
चिच्छेद समरे तूर्णं तं च विव्याध सप्तभिः ॥ ६-७९-५० (४२२१३)
अश्वान्मनोजवांस्तस्य कर्बुरान्वातरंहसः ।

जघान निशितैस्तूर्णं सर्वान्द्वादशभिः शरैः ॥ ६-७९-५१ (४२२१४)
अथापरेण भल्लेन सुयुक्तेनाशुपातिना ।
दुष्कर्णं नाकुलिः क्रुद्धो विव्याध हृदये भृशम् ॥ ६-७९-५२ (४२२१५)
स पपात ततो भूमौ वज्राहत इव द्रुमः ।
दुष्कर्णं व्यथितं दृष्ट्वा पञ्च राजन्महारथाः ॥ ६-७९-५३ (४२२१६)
दिघांसन्तः शतानीकं सर्वतः पर्यवारयन् ।
छाद्यमानं शरव्रतैः शतानीकं यशस्विनम् ॥ ६-७९-५४ (४२२१७)
अभ्यधावन्त संक्रुद्धाः केकयाः पञ्च सोदराः ।
तानभ्यापततः प्रेक्ष्य तव पुत्रा महारथाः ॥ ६-७९-५५ (४२२१८)
प्रत्युद्ययुर्महाराज गजानिव महागजाः ।
दुर्मुखो दुर्जयश्चैव तथा दुर्मर्षणो युवा ॥ ६-७९-५६ (४२२१९)
शत्रुंजयः सत्रुसहः सर्वे क्रुद्धा यशस्विनः ।
प्रत्युद्याता महाराज केकयान्भ्रातरः समम् ॥ ६-७९-५७ (४२२२०)
रथैर्नगरसंकाशैर्हयैर्युक्तैर्मनोजवैः ।
नानावर्णविचित्राभिः पताकाभिरलङ्कृतैः ॥ ६-७९-५८ (४२२२१)
शरचापधरा वीरा विचित्रकवचध्वजाः ।
विविशुस्ते परं सैन्यं सिंहा इव वनाद्वनम् ॥ ६-७९-५९ (४२२२२)
तेषां सुतुमुलं युद्धं व्यतिषक्तरथद्विपम् ।
अवर्तत महारौद्रं निघ्नतामितरेतरम् ॥ ६-७९-६० (४२२२३)
अन्योन्यागस्कृतां राजन्यमराष्ट्रविवर्धनम् ।
मुहूर्तास्तमिते सूर्ये चक्रुर्युद्धं सुदारुणम् ॥ ६-७९-६१ (४२२२४)
रथिनः सादिनश्चाथ व्यकीर्यन्त सहस्रशः ।
ततः शान्तनवः क्रुद्धः शरैः सन्नतपर्वभिः ॥ ६-७९-६२ (४२२२५)
नाशयामास सेनां तां भीष्मस्तेषां महात्मनाम् ।
पञ्चालानां च सैन्यानि शरैर्निन्ये यमक्षयम् ॥ ६-७९-६३ (४२२२६)
एवं भित्त्वा महेष्वासः पाण्डवानामनीकिनीम् ।
कृत्वाऽवहारं सैन्यानां ययौ स्वशिबिरं नृप ॥ ६-७९-६४ (४२२२७)
नाशयामासतुर्वीरौ धृष्टद्युम्नवृकोदरौ ।
करवाणामनीकानि शरैः सन्नतपर्वभिः ॥ ६-७९-६५ (४२२२८)
धर्मराजोऽपि संप्रेक्ष्य धृष्टद्युम्नवृकोदरौ ।
मूर्ध्नि चैतावुपाघ्राय प्रहृष्टः शिबिरं ययौ ॥ ६-७९-६६ (४२२२९)
ग अर्जुनो वासुदेवश्च कौरवाणामनीकिनीम् ।'
हत्वा विद्राव्य च शरैः शिबिरायैव जग्मतुः ॥ ॥ ६-७९-६७ (४२२३०)

इति श्रीमन्महाभारते भीष्मपर्वणि भीष्मवधपर्वणि
षष्ठदिवसयुद्धे एकोनाशीतितमोऽध्यायः ॥

---

भिस्मपर्व-अध्यय०८०
॥ श्रीः ॥
६.८०. अध्यायः ८०

Mahabharata - Bhishma Parva - Chapter Topics
भीष्मदुर्योधनसंवादः ॥१ ॥

Mahabharata - Bhishma Parva - Chapter Text

६-८०-० (४२२३१)
सञ्जय उवाच। ६-८०-०क्ष् (४१५५)
क्षत्रियास्ते महाराज परस्परकृतागसः ।
जग्मुः स्वशिबिराण्येव रुधिरेण समुक्षिताः ॥ ६-८०-१ (४२२३२)
विश्रम्य च यथान्यायं पूजयित्वा परस्परम् ।
सन्नद्धाः समदृश्यन्त भूयो युद्धचिकीर्षवः ॥ ६-८०-२ (४२२३३)
ततस्तव सुतो राजंश्चिन्तयाभिपरिप्लुतः ।
विस्रवच्छोणिताक्ताङ्गः पप्रच्छेदं पितामहम् ॥ ६-८०-३ (४२२३४)
सैन्यानि रौद्राणि भयानकानि
व्यूढानि सम्यग्बहुलध्वजानि ।
विदार्य हत्वा च निपीड्य शूरां-
स्ते पाण्डवा लब्धजयाः प्रहृष्टाः ॥ ६-८०-४ (४२२३५)
संमोह्य सर्वान्युधि कीर्तिमन्तो
व्यूहं च तं मकरं मृत्युकल्पम् ।
प्रविश्य भीमेन रणे हतोऽस्मि
घोरैः शरैर्मृत्युदण्डप्रकाशैः ॥ ६-८०-५ (४२२३६)
क्रुद्धं तमुद्वीक्ष्य भयेन राज-
न्संमूर्च्छितो न लभे शान्तिमद्य ।
इच्छे प्रसादात्तव सत्यसन्ध
प्राप्तुं जयं पाण्डवेयांश्च हन्तुम् ॥ ६-८०-६ (४२२३७)
तेनैवमुक्तः प्रहसन्महात्मा
दुर्योधनं मन्युगतं विदित्वा ।
तं प्रत्युवाचाविमना मनस्वी
गङ्गासुतः सस्त्रभृतां वरिष्ठः ॥ ६-८०-७ (४२२३८)
परेण यत्नेन विगाह्य सेनां
सर्वात्मनाऽहं तव राजपुत्र ।
इच्छामि दातुं विजयं सुखं च

न चात्मानं छादयेऽहं त्वदर्थे ॥ ६-८०-८ (४२२३९)
एते तु रौद्रा बहवो महारथा
यशस्विनः शूरतमाः कृतास्त्राः ।
ये पाण्डवानां समरे सहाया
जितक्लमा रोषविषं वमन्ति ॥ ६-८०-९ (४२२४०)
केनेह शक्याः सहसा विजेतुं
वीर्योद्धताः कृतवैरास्त्वया च ।
अहं ह्येतान्प्रतियोत्स्यामि राज-
न्सर्वात्मना जीवितं त्यज्य वीर ॥ ६-८०-१० (४२२४१)
रणे तवार्थाय महानुभाव
न जीवितं रक्षितव्यं ममाद्य ।
सर्वांस्तवार्थाय सदेवदैत्याँ-
ल्लोकान्दहेयं किमु शत्रुसेनाम् ॥६-८०-१२अतान्पाण्डवान्योधयिष्यामि राजन्
प्रियं च ते सर्वमहं करिष्ये। ६-८०-११ (४२२४२)
सञ्जय उवाच ।
श्रुत्वा पितुस्ते वचनं प्रतीतो
दुर्योधनः प्रीतमना बभूव ॥ ६-८०-१२क्ष् (४१५६)
सर्वाणि सैन्यानि ततः प्रहृष्टो
निर्गच्छतेत्याह नृपांश्च सर्वान् ।
तदाक्षया तानि विनिर्ययुर्द्रुतं
गजाश्वपादातरथायुतानि ॥ ६-८०-१३ (४२२४३)
प्रहर्षयुक्तानि तु तानि राज-
न्महान्ति नानाविधशस्त्रवन्ति ।
स्थितानि नागाश्वपदातिमन्ति
विरेजुराजौ तव राजन्बलानि ॥ ६-८०-१४ (४२२४४)
शस्त्रास्त्रविद्भिर्नरवीरयोधै-
रधिष्ठिताः सैन्यगणास्त्वदीयाः ।
रथौघपादातगजाश्वसङ्घैः
प्रयाद्भिराजौ विधिवत्प्रणुन्नैः ॥ ६-८०-१५ (४२२४५)
समुद्धतं वै तरुणार्कवर्णं
रजो बभौ च्छादयत्सूर्यरश्मीन् ।
रेजुः पताका रथदन्तिसंस्था
वातेरिता भ्राम्यमाणाः समन्तात् ॥ ६-८०-१६ (४२२४६)
नानालिङ्गैः समरे तत्र राजन्
मेघैर्युता विद्युतः खे यथैव ।
वृन्दैः स्थिताश्चापि सुसंप्रयुक्ता-

श्चकाशिरे दन्तिगणाः समन्तात् ॥ ६-८०-१७ (४२२४७)
धनूंषि विष्फारयतां नृपाणां
बभूव शब्दस्तुमुलोऽतिघोरः ।
विमथ्यतो देवमहासुरौघै-
र्यथार्णवस्यादियुगे तदानीम् ॥ ६-८०-१८ (४२२४८)
तदुग्रनागं बहुरूपवर्णं
तवात्मजानां समुदीर्णकोपम् ।
बभूव सैन्यं रिपुसैन्यहन्त-
युगान्तमेघौघनिभं तदानीम् ॥ ॥ ६-८०-१९ (४२२४९)

इति श्रीमन्महाभारते भीष्मपर्वणि भीष्मवधपर्वणि
सप्तमदिवसयुद्धे अशीतितमोऽध्यायः ॥

---

भिस्मपर्व-अध्यय०८१
॥ श्रीः ॥
६.८१. अध्यायः ८१

Mahabharata - Bhishma Parva - Chapter Topics
भीष्मेण दुर्योधनसंहर्षणम् ॥ १ ॥
राज्ञां द्वन्द्वीभूय मेलनम् ॥ २ ॥
अर्जुनपराक्रमवर्णनम् ॥ ३ ॥

Mahabharata - Bhishma Parva - Chapter Text

६-८१-० (४२२५०)
सञ्जय उवाच। ६-८१-०क्ष् (४१५७)
अथात्मजं तव पुनर्गाङ्गेयो ध्यानमास्थितम् ।
अब्रवीद्भरतश्रेष्ठः संप्रहर्षकर वचः ॥ ६-८१-१ (४२२५१)
भीष्म उवाच। ६-८१-२क्ष् (४१५८)
अहं द्रोणश्च शल्यश्च कृतवर्मा च सात्वतः ।
अश्वत्थामा विकर्णश्च भगदत्तोऽथ सौबलः ॥ ६-८१-२ (४२२५२)
विन्दानुविन्दावावन्त्यौ बाह्लीकः सह बाह्लिकैः ।
त्रिगर्तराजो बलवान्मागधश्च सुदुर्जयः ॥ ६-८१-३ (४२२५३)
बृहद्बलश्च कौसल्यश्चित्रसेनो विविंशतिः ।
ग्कृपश्च सह सोदर्यैस्तव राजन्पदानुगाः।'
रथाश्च बहुसाहस्राः शोभनाश्च महाध्वजाः ॥ ६-८१-४ (४२२५४)
देशजाश्च हया राजन्स्वारूढा हयसादिभिः ।

गजेन्द्राश्च मदोद्वृत्ताः प्रभिन्नकरटामुखाः ॥ ६-८१-५ (४२२५५)
पादाताश्च तथा शूरा नानाप्रहरणा युधि ।
नानादेशसमुत्पन्नास्त्वदर्थे योद्धुमुद्यताः ॥ ६-८१-६ (४२२५६)
एते चान्ये च बहवस्त्वदर्थे त्यक्तजीविताः ।
देवानपि रणे जेतुं समर्था इति मे मतिः ॥ ६-८१-७ (४२२५७)
अवश्यं हि मया राजंस्तव वाच्यं हितं सदा ।
अशक्याः पाण्डवा जेतुं देवैरपि सवासवैः ॥ ६-८१-८ (४२२५८)
वासुदेवसहायाश्च महेन्द्रसमविक्रमाः ।
सर्वथाऽहं तु राजेन्द्र करिष्ये वचनं तव ॥ ६-८१-९ (४२२५९)
पाण्डवांश्च रणे जेष्ये मां वा जेष्यन्ति पाण्डवाः । ६-८१-१० (४२२६०)
सञ्जय उवाच ।
एवमुक्त्वा ददावस्मै विशल्यकरणीं शुभाम् ॥ ६-८१-१०क्ष् (४१५९)
ओषधीं वीयसंपन्नां विशल्यश्चाभवत्तदा ।
ततः प्रभाते विमले स्वेन सैन्येन वीर्यवान् ॥ ६-८१-११ (४२२६१)
अव्यूहत स्वयं व्यूहं भीष्मो व्यूहविशारदः ।
मण्डलं मनुजश्रेष्ठो नानाशस्त्रसमाकुलम् ॥ ६-८१-१२ (४२२६२)
संपूर्णं योधमुख्यैश्च तथा दन्तिपदातिभिः ।
रथैरनेकसाहस्रैः समन्तत्परिवारितम् ॥ ६-८१-१३ (४२२६३)
अश्ववृन्दैर्महद्भिश्च रिष्टितोमरधारिभिः ।
नागेनागे रथाः सप्त सप्त चाश्वा रथेरथे ॥ ६-८१-१४ (४२२६४)
अन्वश्वं दश धानुष्का धानुष्के दश चर्मिणः ।
एवं व्यूहं महाराज तव सैन्यस्य दंशितम् ॥ ६-८१-१५ (४२२६५)
स्थितं रणाय महते भीष्मेण युधि पालितम् ।
दशाश्वानां सहस्राणि दन्तिनां च तथैव च ॥ ६-८१-१६ (४२२६६)
रथानामयुतं चापि पुत्राश्च तव दंशिताः ।
चित्रसेनादयः शूरा अभ्यरक्षन्तितामहम् ॥ ६-८१-१७ (४२२६७)
रक्ष्यमाणाः स तैः शूरैर्गोप्यमानाश्च तेन ते ।
सन्नद्धाः समदृश्यन्त राजानश्च महाबलाः ॥ ६-८१-१८ (४२२६८)
दुर्योधनस्तु समरे दंशितो रथमास्थितः ।
व्यराजत श्रिया जुष्टो यथा शक्रस्त्रिविष्टपे ॥ ६-८१-१९ (४२२६९)
ततः शब्दो महानासीत्पुत्राणां तव भारत ।
रथघोषश्च विपुलो वादित्राणां च निःस्वनः ॥ ६-८१-२० (४२२७०)
भीष्मेण धार्तराष्ट्राणां व्यूढः प्रत्यङ्मुखो युधि ।
मण्डलः स महाव्यूहो दुर्भेद्योऽमित्रघातनः ॥ ६-८१-२१ (४२२७१)
सर्वतः शुशुभे राजन्रणेऽरीणां दुरासदः ।
मण्डलं तु समालोक्य व्यूहं परमदुर्ययम् ॥ ६-८१-२२ (४२२७२)

स्वयं युधिष्ठिरो राजा वज्रं व्यूहमथाकरोत् ।
तथा व्यूढेष्वनीकेषु यथास्थानमवस्थिताः ॥ ६-८१-२३ (४२२७३)
रथिनः सादिनः सर्वे सिंहनादमथानदन् ।
बिभित्सवस्ततो व्यूहं निर्ययुर्युद्धकाङ्क्षिणः ॥ ६-८१-२४ (४२२७४)
इतरेतरतः शूराः सहसैन्याः प्रहारिणः ।
भारद्वाजो ययौ मत्स्यं द्रौणिश्चापि सिखण्डिनम् ॥ ६-८१-२५ (४२२७५)
स्वयं दुर्योधनो राजा पार्षतं समुपाद्रवत् ।
नकुलः सहदेवश्च मद्रराजानमीयतुः ॥ ६-८१-२६ (४२२७६)
विन्दानुविन्दावावन्त्यौ युयुधानमभिद्रुतौ ।
सर्वे नृपास्तु समरे धनंजयमयोधयन् ॥ ६-८१-२७ (४२२७७)
भीमसेनो रणे यान्तं हार्दिक्यं समवारयत् ।
चित्रसेनं विकर्णं च तथा दुर्मर्षणं विभुः ॥ ६-८१-२८ (४२२७८)
आर्जुनिः समरे राजंस्तव मुत्रानयोधयत् ।
प्राग्ज्योतिषो महेष्वासो हैडिम्बं राक्षसोत्तमम् ॥ ६-८१-२९ (४२२७९)
अभिदुद्राव वेगेन मत्तो मत्तमिव द्विपम् ।
अलम्बुसस्तदा राजन्सात्यकिं युद्धदुर्मदम् ॥ ६-८१-३० (४२२८०)
ससैन्यं समरे क्रुद्धो राक्षसः समुपाद्रवत् ।
भूरिश्रवा रणे यत्तो धृष्टकेतुमयोधयत् ॥ ६-८१-३१ (४२२८१)
श्रुतायुषं च राजानं धर्मपुत्रो युधिष्ठिरः ।
चेकितानश्च समरे कृपमेवान्वयोधयत् ॥ ६-८१-३२ (४२२८२)
शेषाः प्रतिययुर्यत्ता भीष्ममेव महारथम् ।
ततो राजसमूहास्ते परिवव्रुर्धनंजयम् ॥ ६-८१-३३ (४२२८३)
शक्तितोमरनाराचगदापरिघपाणयः ।
अर्जुनोऽथ भृशं क्रुद्धो वार्ष्णेयमिदमब्रवीत् ॥ ६-८१-३४ (४२२८४)
पश्य माधव सैन्यानि धार्तराष्ट्रस्य संयुगे ।
व्यूढानि व्यूहविदुषा गाङ्गेयेन महात्मना ॥ ६-८१-३५ (४२२८५)
युद्धाभिकामाञ्शूरांश्च पश्य माधव दंशितान् ।
त्रिगर्तराजं सहितं भ्रातृभिः पश्य केशव ॥ ६-८१-३६ (४२२८६)
अद्यैतान्नाशयिष्यामि पश्यतस्ते जनार्दन ।
य इमे मां यदुश्रेष्ठ योद्धुकामा रणाजिरे ॥ ६-८१-३७ (४२२८७)
एतदुक्त्वा तु कौन्तेयो धनुर्ज्यामवमृद्य च ।
ववर्ष शरवर्षाणि नराधिपगणान्प्रति ॥ ६-८१-३८ (४२२८८)
तेऽपि तं परमेष्वासाः शरवर्षैरपूरयन् ।
तटाकं वारिधाराभिर्यथा प्रावृषि तोयदाः ॥ ६-८१-३९ (४२२८९)
हाहाकारो महानासीत्तव सैन्ये विशांपते ।
छाद्यमानौ रणे कृष्णौ शरैर्दृष्ट्वा महारणे ॥ ६-८१-४० (४२२९०)

देवा देवर्षयश्चैव गन्धर्वाश्च सहोरगैः ।
विस्मयं परमं जग्मुर्दृष्ट्वा कृष्णौ तथाऽऽगतौ ॥ ६-८१-४१ (४२२९१)
ततः क्रुद्धोऽर्जुनो राजन्नैन्द्रमस्त्रमुदैरयत् ।
तत्राद्भुतमपश्याम विजयस्य पराक्रमम् ॥ ६-८१-४२ (४२२९२)
शस्त्रवृष्टिं परैर्मुक्तां शरौघैर्यदवारयत् ।
न च तत्राप्यनिर्भिन्नः कश्चिदासीद्विशांपते ॥ ६-८१-४३ (४२२९३)
तेषां राजसहस्राणां हयानां दन्तिनां तथा ।
द्वाभ्यां त्रिभिः शरैश्चान्यान्पार्थो विव्याध मारिष ॥ ६-८१-४४ (४२२९४)
ते हन्यमानाः पार्थेन भीष्मं शान्तनवं ययुः ।
अगाधे मज्जमानानां भीष्मः पोतोऽभवत्तदा ॥ ६-८१-४५ (४२२९५)
आपतद्भिस्तु तैस्तत्र प्रभग्नं तावकं बलम् ।
संचुक्षुभे महाराज वातैरिव महार्णवः ॥ ॥ ६-८१-४६ (४२२९६)

इति श्रीमन्महाभारते भीष्मपर्वणि भीष्मवधपर्वणि
सप्तमदिवसयुद्धे एकाशीतितमोऽध्यायः ॥

---

भिस्मपर्व-अध्यय०८२
॥ श्रीः ॥
६.८२. अध्यायः ८२

Mahabharata - Bhishma Parva - Chapter Topics
द्रोणेन विराटसूनोः शङ्खस्य वधः ॥ १ ॥
द्वन्द्वयुद्धम् ॥ २ ॥

Mahabharata - Bhishma Parva - Chapter Text

६-८२-० (४२२९७)
सञ्जय उवाच। ६-८२-०क्ष् (४१६०)
प्रवृत्तमात्रे संग्रामे निवृत्ते च सुशर्मणि ।
भग्नेषु चापि वीरेषु पाण्डवेन महात्मना ॥ ६-८२-१ (४२२९८)
क्षुभ्यमाणे बले तूर्णं सागरप्रतिमे तव ।
प्रत्युद्याते च गाङ्गेये त्वरितं विजयं प्रति ॥ ६-८२-२ (४२२९९)
दृष्ट्वा दुर्योधनो राजा रणे पार्थस्य विक्रमम् ।
त्वरमाणः समभ्येत्य सर्वांस्तानब्रवीन्नृपान् ॥ ६-८२-४अतेषां तु
प्रमुखे शूरं सुशर्माणं महाबलम् ।
मध्ये सर्वस्य सैन्यस्य भृशं संहर्षयन्निव ॥ ६-८२-३ (४२३००)
एष भीष्मः शान्तनवो योद्धुकामो धनञ्जयम् ।

सर्वात्मना कुरुश्रेष्ठस्त्यक्त्वा जीवितमात्मनः ॥ ६-८२-५ (४२३०१)
तं प्रयान्तं रणे वीरं सर्वसैन्येन भारतम् ।
संयत्ताः समरे सर्वे पालयध्वं पितामहम् ॥ ६-८२-६ (४२३०२)
बाढमित्येवमुक्त्वा तु तान्यनीकानि सर्वशः ।
नरेन्द्राणां महाराज समाजग्मुः पितामहम् ॥ ६-८२-७ (४२३०३)
ततः प्रयातः सहसा भीष्मः शान्तनवोऽर्जुनम् ।
रणे भारतमायान्तमाससाद महाबलः ॥ ६-८२-८ (४२३०४)
महाश्वेताश्वयुक्तेन भीमवानरकेतुना ।
महता मेघनादेन रथेनातिविराजता ॥ ६-८२-९ (४२३०५)
समरे सर्वसैन्यानामुपयानं धनञ्जयम् ।
अभवत्तुमुलो नादो भयाद्दृष्ट्वा किरीटिनम् ॥ ६-८२-१० (४२३०६)
अभीशुहस्तं कृष्णं च दृष्ट्वादित्यमिवापरम् ।
मध्यंदिनगतं सङ्ख्ये न शेकुः प्रतिवीक्षितुम् ॥ ६-८२-११ (४२३०७)
तथा शान्तनवं भीष्मं श्वेताश्वं श्वेतकार्मुकम् ।
न शेकुः पाण्डवा द्रष्टुं श्वेतं ग्रहमिवोदितम् ॥ ६-८२-१२ (४२३०८)
स सर्वतः परिवृतस्त्रिगर्तैः सुमहात्मभिः ।
भ्रातृभिः सह पुत्रैश्च तथाऽन्यैश्च महारथैः ॥ ६-८२-१३ (४२३०९)
भारद्वाजस्तु समरे मत्स्यं विव्याध पत्रिणा ।
ध्वजं चास्य शरेणाजौ धनुश्चैकेन चिच्छिदे ॥ ६-८२-१४ (४२३१०)
तदपास्य धनुश्छिन्नं विराटो वाहिनीपतिः ।
अन्यदादत्त वेगेन धनुर्भारसहं दृढम् ॥ ६-८२-१५ (४२३११)
शरांश्चाशीविषाकाराज्ज्वलितान्पन्नगानिव ।
द्रोणं त्रिभिश्च विव्याध चतुर्भिश्चास्य वाजिनः ॥ ६-८२-१६ (४२३१२)
ध्वजमेकेन विव्याधक सारथिं चास्य पञ्चभिः ।
धनुरेकेषुणाऽविध्यत्तत्राक्रुध्यद्द्विजर्षभः ॥ ६-८२-१७ (४२३१३)
तस्य द्रोणोऽवधीदश्वाञ्शरैः सन्नतपर्वभिः ।
अष्टाभिर्भरतश्रेष्ठ सूतमेकेन पत्रिणा ॥ ६-८२-१८ (४२३१४)
स हताश्वादवप्लुत्य स्यन्दनाद्धतसारथिः ।
आरुरोह रथं तूर्णं पुत्रस्य रथिनां वरः ॥ ६-८२-१९ (४२३१५)
ततस्तु तौ पितापुत्रौ भारद्वाजं रथे स्थितौ ।
महता शरवर्षेण वारयामाससतुर्बलात् ॥ ६-८२-२० (४२३१६)
भारद्वाजस्ततः क्रुद्धः शरमाशीविषोपमम् ।
चिक्षेप समरे तूर्णं शङ्खं प्रति जनेश्वरः ॥ ६-८२-२१ (४२३१७)
स तस्य हृदयं भित्त्वा पीत्त्वा शोणितमाहवे ।
जगाम धरणीं बाणो लोहितार्द्रवरच्छदः ॥ ६-८२-२२ (४२३१८)
स पपात रणे तूर्णं भारद्वाजशराहतः ।

धनुस्त्यक्त्वा शरांश्चैव पितुरेव समीपतः ॥ ६-८२-२३ (४२३१९)
हतं तमात्मजं दृष्ट्वा विराटः प्राद्रवद्भयात् ।
उत्सृज्य समरे द्रोणं व्यात्ताननमिवान्तकम् ॥ ६-८२-२४ (४२३२०)
भारद्वाजस्ततस्तूर्णं पाण्डवानां महाचमूम् ।
दारयामास समरे शतशोऽथ सहस्रशः ॥ ६-८२-२५ (४२३२१)
शिखण्डी तु महाराज द्रौणिमासाद्य संयुगे ।
आजघान भ्रुवोर्मध्ये नाराचैस्त्रिभिराशुगैः ॥ ६-८२-२६ (४२३२२)
स बभौ रथशार्दूलो ललाटे संस्थितैस्त्रिभिः ।
शिखरैः काञ्चनमयैर्मेरुस्त्रिभिरिवोच्छ्रितैः ॥ ६-८२-२७ (४२३२३)
अश्वत्थाम ततः क्रुद्धो निमेषार्धाच्छिखण्डिनः ।
ध्वजं सूतमथो राजंस्तुरगानायुधानि च ॥ ६-८२-२८ (४२३२४)
शरैर्बहुभिराच्छिद्य पातयामास संयुगे ष ।
स हताश्वादवप्लुत्य रथाद्वै रथिनां वरः ॥ ६-८२-२९ (४२३२५)
खड्गमादाय सुशितं विमलं च शरावरम् ।
श्येनवद्व्यचरत्क्रुद्धः शिखण्डी शत्रुतापनः ॥ ६-८२-३० (४२३२६)
सखड्गस्य महाराज चरतस्तस्य संयुगे ।
नान्तरं ददृशे द्रौणिस्तदद्भुतमिवाभवत् ॥ ६-८२-३१ (४२३२७)
ततः शरसहस्राणि बहूनि भरतर्षभ ।
प्रेषयामास समरे द्रौणिः परमकोपनः ॥ ६-८२-३२ (४२३२८)
तामापतन्तीं समरे शरवृष्टिं सुदारुणाम् ।
असिना तीक्ष्णधारेण चिच्छेद बलिनां वरः ॥ ६-८२-३३ (४२३२९)
ततोऽस्य विमलं द्रौणिः शतचन्द्रं मनोरमम् ।
चर्माच्छिनदसिं चास्थ खण्डयामास संयुगे ॥ ६-८२-३४ (४२३३०)
शितैस्तु बहुशो राजंस्तं च विव्याध पत्रिभिः ।
शिखण्डी तु ततः खड्गं खण्डितं तेन सायकैः ॥ ६-८२-३५ (४२३३१)
आविध्य व्यसृजत्तूर्णं ज्वलन्तमिव पन्नगम् ।
तमापतन्तं सहसा कालानलसमप्रभम् ॥ ६-८२-३६ (४२३३२)
चिच्छेद समरे द्रौणिर्दर्शयन्पाणिलाघवम् ।
शिखण्डिनं च विव्याध शरैर्बहुभिरायसैः ॥ ६-८२-३७ (४२३३३)
शिखण्डी तु भृशं राजंस्तुद्यमानः शितैः शरैः ।
आरुरोह रथं तूर्णं माधवस्य महात्मनः ॥ ६-८२-३८ (४२३३४)
सात्यकिश्चापि संक्रुद्धो राक्षसं क्रूरमाहवे ।
अलम्बुसं शरैस्तीक्ष्णैर्विव्याध बलिनां वरः ॥ ६-८२-३९ (४२३३५)
राक्षसेन्द्रस्ततस्तस्य धनुश्चिच्छेद भारत ।
अर्धचन्द्रेण समरे तं च विव्याध सायकैः ॥ ६-८२-४० (४२३३६)
मायां च राक्षसीं कृत्वा शरवर्षैरवाकिरत् ।

तत्राद्भुतमपश्याम शैनेयस्य पराक्रमम् ॥ ६-८२-४१ (४२३३७)
असंभ्रमस्तु समरे वध्यमानः शितैः शरैः ।
ऐन्द्रमस्त्रं च वार्ष्णेयो योजयामास भारत ॥ ६-८२-४२ (४२३३८)
विजयाद्यदनुप्राप्तं माधवेन यशस्विना ।
तदस्त्रं भस्मासात्कृत्वा मायां तां राक्षसीं तदा ॥ ६-८२-४३ (४२३३९)
अलम्बुसं शरैरन्यैरभ्याकिरत सर्वतः ।
पर्वतं वारिधाराभिः प्रावृषीव बलाहकः ॥ ६-८२-४४ (४२३४०)
तत्तथा पीडितं तेन माधवेन यशस्विना ।
प्रदुद्राव भयाद्रक्षस्त्यक्त्वा सात्यकिमाहवे ॥ ६-८२-४५ (४२३४१)
॥॥॥॥ माघवता जित्वा भारत सात्यकिः ।
शैनेयः प्राणदज्जित्वा योधानां तव पश्यताम् ॥ ६-८२-४६ (४२३४२)
न्यहनत्तावकांश्चापि सात्यकिः सत्यविक्रमः ।
निशितैर्बहुभिर्बाणैस्तेऽद्रवन्त भयार्दिताः ॥ ६-८२-४७ (४२३४३)
एतस्मिन्नेव काले तु द्रुपदस्यात्मजो बली ।
धृष्टद्युम्नो महाराज पुत्रं तव जनेश्वरम् ॥ ६-८२-४८ (४२३४४)
छादयामास समरे शरैः सन्नतपर्वभिः ।
स च्छाद्यमानो विशिखैर्धृष्टद्युम्नेन भारत ॥ ६-८२-४९ (४२३४५)
विव्यथे न च राजेन्द्र तव पुत्रो जनेश्वर ।
धृष्टद्युम्नं च समरे तूर्णं विव्याध पत्रिभिःक ॥ ६-८२-५० (४२३४६)
षष्ट्या च त्रिंशता चैव तदद्भुतमिवाभवत् ।
तस्य सेनापतिः क्रुद्धो धनुश्चिच्छेद मारिष ॥ ६-८२-५१ (४२३४७)
हयांश्च चतुरः शीघ्रं निजघान महाबलः ।
शरैश्चैनं सुनिशितैः क्षिप्रं विव्याध सप्तभिः ॥ ६-८२-५२ (४२३४८)
स हताश्वान्महाबाहुरवप्लुत्य रथाद्बली ।
पदातिरसिमुद्यम्य प्राद्रवत्पार्षतं प्रति ॥ ६-८२-५३ (४२३४९)
शकुनिस्तं समभ्येत्य राजगृद्धी महाबलः ।
राजानं सर्वलोकस्य रथमारोपयत्स्वकम् ॥ ६-८२-५४ (४२३५०)
ततो नृपं पराजित्य पार्षतः परवीरहा ।
न्यहनत्तावकं सैन्यं वज्रपाणिरिवासुरान् ॥ ६-८२-५५ (४२३५१)
कृतवर्मा रणे भीमं शरैराच्छन्महारथः ।
प्रच्छादयामास च तं महामेघो रविं यथा ॥ ६-८२-५६ (४२३५२)
ततः प्रहस्य समरे भीमसेनः परंतपः ।
प्रेषयामास संक्रुद्धः सायंकान्कृतवर्मणे ॥ ६-८२-५७ (४२३५३)
तैरर्द्यमानोऽतिरथः सात्वतः शस्त्रकोविदः ।
नाकम्पत महाराज भीमं चार्च्छच्छितैः शरैः ॥ ६-८२-५८ (४२३५४)
तस्याश्वांश्चतुरो हत्वा भीमसेनो महारथः ।

सारथिं पातयामास सध्वजं सुपरिष्कृतम् ॥ ६-८२-५९ (४२३५५)
शरैर्बहुविधैश्चैनमाचिनोत्परवीरहा ।
शकलीकृतसर्वाङ्गः श्वावित्तु शललैर्यथा ॥ ६-८२-६० (४२३५६)
हताश्वश्च ततस्तूर्णं सुबलस्य रथं ययौ ।
स्वालस्य ते महाराज तव पुत्रस्य पश्यतः ॥ ६-८२-६१ (४२३५७)
भीमसेनोऽपि संक्रुद्धस्तव सैन्यमुपाद्रवत् ।
निजघान च संक्रुद्धो दण्डपाणिरिवान्तकः ॥ ॥ ६-८२-६२ (४२३५८)

इति श्रीमन्महाभारते भीष्मपर्वणि भीष्मवधपर्वणि
सप्तमदिवसयुद्धे द्व्यशीतितमोऽध्यायः ॥
Mahabharata - Bhishma Parva - Chapter Footnotes

६-८२-६० सर्वाङ्गो हताश्वः प्रत्यदृश्यतेति झो पाठः ॥

---

भिस्मपर्व-अध्यय०८३
॥ श्रीः ॥
६.८३. अध्यायः ८३

Mahabharata - Bhishma Parva - Chapter Topics
द्वन्द्वयुद्धवर्णनम् ॥ १ ॥

Mahabharata - Bhishma Parva - Chapter Text

६-८३-० (४२३५९)
धृतराष्ट्र उवाच। ६-८३-०क्ष् (४१६१)
बहूनि हि विचित्राणि द्वैरथानि स्म सञ्जय ।
पाण्डूनां मामकैः सार्धमश्रौषं तव जल्पतः ॥ ६-८३-१ (४२३६०)
न चैव मामकं किंचिद्धृष्टं शंससि सञ्जय ।
नित्यं पाण्डुसुतान्हृष्टानभग्नान्संप्रशंससि ॥ ६-८३-२ (४२३६१)
जीयमानान्विमनसो मामकान्विगतौजसः ।
वदसे संयुगे सूत दिष्टमेतन्न संशयः ॥ ६-८३-३ (४२३६२)
सञ्जय उवाच। ६-८३-४क्ष् (४१६२)
यथाशक्ति यथोत्साहं युद्धे चेष्टन्ति तावकाः ।
दर्शयानाः परं शक्त्या पौरुषं पुरुषर्षभ ॥ ६-८३-४ (४२३६३)
गङ्गायाः सुरनद्या वै स्वादुभूतं यथोदकम् ।
महोदधिसमभ्याशे लवणत्वं निगच्छति ॥ ६-८३-५ (४२३६४)

तथा तत्पौरुषं राजंस्तावकानां परंतप ।
प्राप्य पाण्डुसुतान्वीरान्व्यर्थं भवति संयुगे ॥ ६-८३-६ (४२३६५)
घटमानान्यथाशक्ति कुर्वाणान्कर्म दुष्करम् ।
न दोषेण कुरुश्रेष्ठ कौरवान्गन्तुमर्हसि ॥ ६-८३-७ (४२३६६)
तवापराधात्सुमहान्सपुत्रस्य विशांपते ।
पृतिव्याः प्रक्षयो घोरो यमराष्ट्रविवर्धनः ॥ ६-८३-८ (४२३६७)
आत्मदोषात्समुत्पन्नं शोचितुं नार्हसे नृप ।
न हि रक्षन्ति राजानः सर्वथाऽत्रापि जीवितम् ॥ ६-८३-९ (४२३६८)
युद्धे सुकृतिनां लोकानिच्छन्तो वसुधाधिपाः ।
चमूं विगाह्य युद्ध्यन्ते नित्यं स्वर्गपरायणाः ॥ ६-८३-१० (४२३६९)
पूर्वाह्णे तु महाराज प्रावर्तत जनक्षयः ।
तं त्वमेकमना भूत्वा शृणु देवासुरोपमम् ॥ ६-८३-११ (४२३७०)
आवन्त्यौ तु महेष्वासौ महासेनौ महाबलौ ।
युधामन्युमभिप्रेक्ष्य समेयता रणोत्कटौ ॥ ६-८३-१२ (४२३७१)
तेषां प्रववृते युद्धं समुहद्रोणहर्षणम् ।
युधामन्युः सुसंक्रुद्धो भ्रातरौ देवरूपिणौ ॥ ६-८३-१३ (४२३७२)
विव्याध निशितैस्तूर्णं शरैः सन्नतपर्वभिः ।
तावेनं प्रत्यविध्येतां समरे चित्रयोधिनौ ॥ ६-८३-१४ (४२३७३)
युध्यतां हि तथा राजन्विशेषो न व्यदृश्यत ।
यततां शत्रुनाशाय कृतप्रतिकृतैषिणाम् ॥ ६-८३-१५ (४२३७४)
युधामन्युस्ततो राजन्ननुविन्दस्य सायकैः ।
चतुर्भिश्चतुरो वाहाननयद्यमसादनम् ॥ ६-८३-१६ (४२३७५)
भल्लाभ्यां च सुतीक्ष्णाभ्यां धनुः केतुं च मारिष ।
चिच्छेद समरे राजंस्तदद्भुतमिवाभवत् ॥ ६-८३-१७ (४२३७६)
त्यक्त्वाऽनुविन्दोऽथ रथं विन्दस्य रथमास्थितः ।
धनुर्गृहीत्वा परमं भारसाधनमुत्तमम् ॥ ६-८३-१८ (४२३७७)
तावेकस्थौ रणे वीरावावन्त्यौ रथिनां वरौ ।
शरान्मुमुचतुस्तूर्णं युधामन्यौ महात्मनि ॥ ६-८३-१९ (४२३७८)
ताभ्यां मुक्ता महावेगाः शराः काञ्चनभूषणाः ।
दिवाकरपथं प्राप्य च्छादयामासुरम्बरम् ॥ ६-८३-२० (४२३७९)
युधामन्यू रणे क्रुद्धो भ्रातरौ तौ महारथौ ।
ववर्ष शरवर्षेण सारथिं चाप्यपातयत् ॥ ६-८३-२१ (४२३८०)
तस्मिंस्तु पतिते भूमौ गतसत्वे तु सारथौ ।
रथः प्रदुद्राव दिशः समुद्भ्रान्तहयस्ततः ॥ ६-८३-२२ (४२३८१)
तौ स जित्वा महाराज यज्ञसेनसुतः प्रभुः ।
पौरुषं ख्यापयंस्तूर्णं व्यधमत्तव वाहिनीम् ॥ ६-८३-२३ (४२३८२)

सा वध्यमाना समरे धार्तराष्ट्री महाचमूः ।
वेगान्बहुविधांश्चक्रे विषं पीत्वेन मानवः ॥ ६-८३-२४ (४२३८३)
हैडिम्बो राक्षसेन्द्रस्तु भगदत्तं समाद्रवत् ।
रथेनादित्यवर्णेन सध्वजेन महाबलः ॥ ६-८३-२५ (४२३८४)
ततः प्राग्ज्योतिषो राजा नागराजं समास्थितःक ।
यथा वज्रधरः पूर्वं संग्रामे तारकामये ॥ ६-८३-२६ (४२३८५)
तत्र देवाः सगन्धर्वा ऋषयश्च समागताः ।
विशेषं न स्म विविदुर्हैडिम्बभगदत्तयोः ॥ ६-८३-२७ (४२३८६)
यथा सुरपतिः शक्रस्त्रासयामास दानवान् ।
तथैव समरे राजा द्रावयामास पाण्डवान् ॥ ६-८३-२८ (४२३८७)
तेन विद्राव्यमाणास्ते पाण्डवाः सर्वतो दिशम् ।
त्रातारं नाभ्यगच्छन्तः स्वेष्वनीकेषु भारत ॥ ६-८३-२९ (४२३८८)
भैमसेनिं रथस्थं तु तत्रापश्याम भारत ।
शेषा विमनसो भूत्वा प्राद्रवन्त महारथाः ॥ ६-८३-३० (४२३८९)
निवृत्तेषु तु पाण्डूनां पुनः सैन्येषु भारत ।
आसीन्निष्ठानको घोरस्तव सैन्यस्य संयुगे ॥ ६-८३-३१ (४२३९०)
घटोत्कचस्ततो राजन्भगदत्तं महारणे ।
शरैः प्रच्छादयामास मेरुं गिरिमिवाम्बुदः ॥ ६-८३-३२ (४२३९१)
निहत्य ताञ्शरान्राजा राक्षसस्य धनुश्च्युतान् ।
भैमसेनिं रणे तूर्णं सर्वमर्मस्वताडयत् ॥ ६-८३-३३ (४२३९२)
स ताड्यमानो बहुभिः शरैः सन्नतपर्वभिः ।
न विव्यथे राक्षसन्द्रो भिद्यमान इवाचलः ॥ ६-८३-३४ (४२३९३)
तस्य प्राग्ज्योतिषः क्रुद्धस्तोमरांश्च चतुर्दश ।
प्रेषयामास समरे तांश्चिच्छेद स राक्षसः ॥ ६-८३-३५ (४२३९४)
स तांश्छित्त्वा महाबाहुस्तोमरान्निशितैः शरैः ।
भगदत्तं च विव्याध सप्तत्या कङ्कपत्रिभिः ॥ ६-८३-३६ (४२३९५)
ततः प्राग्ज्योतिषो राजा प्रहसन्निव भारत ।
तस्याश्वांश्चतुरः सङ्ख्ये पातयामास सायकैः ॥ ६-८३-३७ (४२३९६)
स हताश्वे रथे तिष्ठन्राक्षसेन्द्रः प्रतापवान् ।
शक्तिं चिक्षेप वेगेन प्रग्ज्योतिषगजं प्रति ॥ ६-८३-३८ (४२३९७)
तामापतन्तीं सहसा हेमदण्डां सुवेगिनीम् ।
त्रिधा चिच्छेद नृपतिः सा व्यकीर्यत मेदिनीं ॥ ६-८३-३९ (४२३९८)
शक्तिं विनिहतां दृष्ट्वा हैडिम्बः प्राद्रवद्भयात् ।
यथेन्द्रस्य रणात्पूर्वं नमुचिर्दैत्यसत्तमः ॥ ६-८३-४० (४२३९९)
तं विजित्य रणे शूरं विक्रान्तं ख्यातपौरुषम् ।
अजय्यं समरे वीरं यमेन वरुणेन च ॥ ६-८३-४१ (४२४००)

पाण्डवीं समरे सेनां संममर्द स कुञ्जरः ।
यथा वनगजो राजन्मृद्गंश्चरति पद्मिनीम् ॥ ६-८३-४२ (४२४०१)
मद्रेश्वरस्तु समरे यमाभ्यां समसञ्जत ।
स्वस्त्रीयौ छादयांचक्रे शरौघैः पाण्डुनन्दनौ ॥ ६-८३-४३ (४२४०२)
सहदेवस्तु समरे मातुलं दृश्य संगतम् ।
अवारयच्छरौघेण मेघो यद्वद्दिवाकरम् ॥ ६-८३-४४ (४२४०३)
छाद्यमानः शरौघेण हृष्टरूपतरोऽभवत् ।
तयोश्चाप्यभवत्प्रीतिरतुला मातृकारणात् ॥ ६-८३-४५ (४२४०४)
ततः प्रहस्य समरे नकुलस्य महारथः ।
ग ध्वजं चिच्छेद बाणेन धनुश्चैकेन मारिष ॥ ६-८३-४६ (४२४०५)
अथैनं छिन्नधन्वानं छादयामास भारत ।
निजघान रणे तं तु सूतं चास्य न्यपातयत् ॥ ६-८३-४७ (४२४०६)
ततः प्रसह्य समरे नकुलस्य महारथः ।
अश्वांश्च चतुरो राजंश्चतुर्भिः सायकोत्तमैः ॥ ६-८३-४८ (४२४०७)
प्रेषयामास समरे यमस्य सदनं प्रति ।
हताश्वात्तु रथात्तूर्णमवप्लुत्य महारथः ॥ ६-८३-४९ (४२४०८)
आरुरोह ततो यानं भ्रातुरेव यशस्विनः ।
एकस्थौ तु रणे शूरौ दृढे विक्षिप्य कार्मुके ॥ ६-८३-५० (४२४०९)
मद्रराजरथं तूर्णं च्छादयामासतुः क्षणात् ।
स च्छाद्यमानो बहुभिः शरैः सन्नतपर्वभिः ॥ ६-८३-५१ (४२४१०)
स्वस्त्रीयाभ्यां नरव्याघ्रो नाकम्पत यथाऽचलः ।
प्रहसन्निव तां चापि शस्त्रवृष्टिं जघान ह ॥ ६-८३-५२ (४२४११)
सहदेवस्ततः क्रुद्धः शरमुद्गृह्य वीर्यवान् ।
मद्रराजमभिप्रेक्ष्य प्रेषयामास भारत ॥ ६-८३-५३ (४२४१२)
स शरः प्रेषितस्तेन गरुडानिलवेगवान् ।
मद्रराजं विनिर्भिद्य निपपात महीतले ॥ ६-८३-५४ (४२४१३)
स गाढविद्धो व्यथितो रथोपस्थे महारथः ।
निषसाद महाराज कश्मलं च जगाम ह ॥ ६-८३-५५ (४२४१४)
तं विसंज्ञं निपतितं सूतः संप्रेक्ष्य संयुगे ।
अपोवाह रथेनाजौ यमाभ्यामभिपीडितम् ॥ ६-८३-५६ (४२४१५)
दृष्ट्वा मद्रेश्वररथं धार्तराष्ट्राः पराङ्मुखम् ।
सर्वे विमनसो भूत्वा नेदमस्तीत्यचिन्तयन् ॥ ६-८३-५७ (४२४१६)
निर्जित्य मातुलं सङ्ख्ये माद्रीपुत्रौ महारथौ ।
दध्मतुर्मुदितौ शङ्खौ सिंहनादं च नेदतुः ॥ ६-८३-५८ (४२४१७)
अभिदुद्रुवतुर्हृष्टौ तव सैन्यं विशांपते ।
यथा दैत्यचमूं राजन्निन्द्रोपेन्द्राविवामरौ ॥ ॥ ६-८३-५९ (४२४१८)

इति श्रीमन्महाभारते भीष्मपर्वणि भीष्मवधपर्वणि
सप्तमदिवसयुद्धे त्र्यशीतितमोऽध्यायः ॥
Mahabharata - Bhishma Parva - Chapter Footnotes

६-८३-१२ इरावन्तमभिप्रेक्ष्य इति झो पाठः ॥
६-८३-१३ इरावांस्तु सुसंक्रुद्ध इति झो पाठः ॥
६-८३-१६ इरावांस्तु ततं इति झो पाठः ॥
६-८३-१९ इरावति महात्मनीति झो पाठः ॥
६-८३-२१ इरावांस्तु रणे इति झो पाठः ॥
६-८३-२३ नागराजसुतासुत इति झो पाठः । तत्र नागराजः कौरव्यस्तस्य सुता उलूपी तस्याः सुत इरावानित्यर्थः ॥
६-८३-३१ निष्ठानकः सव्यथः कशब्दः ॥

---

भिस्मपर्व-अध्यय०८४
॥ श्रीः ॥
६.८४. अध्यायः ८४

Mahabharata - Bhishma Parva - Chapter Topics
युधिष्ठिरादियुद्धवर्णनम् ॥ १ ॥

Mahabharata - Bhishma Parva - Chapter Text

६-८४-० (४२४१९)
सञ्जय उवाच। ६-८४-०क्ष् (४१६३)
ततो युधिष्ठिरो राजा मध्यं प्राप्ते दिवाकरे ।
श्रुतायुपमभिप्रेक्ष्य प्रेषयामास वाजिनः ॥ ६-८४-१ (४२४२०)
ततस्तु त्वरितो राजञ्श्रुतायुषमरिन्दमन् ।
निजघ्ने सायकैस्तीक्ष्णैर्नवभिर्नतपर्वभिःक ॥ ६-८४-२ (४२४२१)
स संवार्य रमे राजा प्रेषितान्धर्मसूनुना ।
शरान्सप्त महेष्वासः कौन्तेयाया समार्षयत् ॥ ६-८४-३ (४२४२२)
ते तस्व कवचं भित्त्वा पपुः शोणितमाहवे ।
असूनिव विचिन्वन्तो देहे तस्य महात्मनः ॥ ६-८४-४ (४२४२३)
पाण्डवस्तु भृशं क्रुद्धो विद्धस्तेन महात्मना ।
रणे वराहकर्णेन राजानं हृद्यविध्यता ॥ ६-८४-५ (४२४२४)
अथापरेण भल्लेन केतुं तस्य महात्मनः ।
रथश्रेष्ठो रथात्तूर्णं भूमौ पार्थो न्यपातयत् ॥ ६-८४-६ (४२४२५)

केतु निपतितं दृष्ट्वा श्रुतायुः स तु पार्थिवः ।
पाण्डवं विशिखैतीक्ष्णै राजन्विव्याध सप्तभिः ॥ ६-८४-७ (४२४२६)
ततः क्रोधात्प्रजज्वल धर्मपुत्रो युधिष्ठिरः ।
यथा युगान्ते भूतानि दिधक्षुरिव पावकः ॥ ६-८४-८ (४२४२७)
क्रुद्धं तु पाण्डवं दृष्ट्वा देवगन्धर्वराक्षसाः ।
प्रविव्यधुर्महाराज व्याकुलं जाप्यभूज्जगत् ॥ ६-८४-९ (४२४२८)
सर्वेषां चैव भूतानामिदमासीन्मनोगतम् ।
त्रींल्लोकान्म संक्रुद्धो नृपोऽयं धक्ष्यतीति वै ॥ ६-८४-१० (४२४२९)
ऋष ॥॥। देवाश्च चक्रुः स्वस्त्ययनं महत् ।
लोकानां नृपाशान्त्यर्थं क्रोधिते पाण्डवे तदा ॥ ६-८४-११ (४२४३०)
स च क्रोधसमाविष्टः सृक्विणी परिसंलिहन ।
इवारात्सवपुर्घोरं युगान्तादित्यसन्निभम् ॥ ६-८४-१२ (४२४३१)
ततः सैन्यानि सर्वाणि तावकानि विशांपते ।
निराशान्यभवंस्तत्र जीवितं प्रति भारत ॥ ६-८४-१३ (४२४३२)
स तु धैर्येण तं कोपं सन्निवार्य महायशाः ।
श्रुतायुषः प्रचिच्छेद मुष्टिदेशे महाधनुः ॥ ६-८४-१४ (४२४३३)
अथैनं छिन्नधन्वानं नाराचेन स्तनान्तरे ।
निर्बिभेद रणे राजा सर्वसैन्यस्य पश्यतः ॥ ६-८४-१५ (४२४३४)
सत्वरं च रणे राजंस्तस्य वाहान्महात्मनः ।
निजघान शरैः क्षिप्रं सूतं च सुमहाबलः ॥ ६-८४-१६ (४२४३५)
हताश्वं तु रथं त्यक्त्वा दृष्ट्वा राज्ञोऽस्य पौरुषम् ।
विप्रदुद्राव वेगेन श्रुतायुः समरे तदा ॥ ६-८४-१७ (४२४३६)
तस्मिञ्जिते महेष्वासे धर्मपुत्रेण संयुगे ।
दुर्योधनबलं राजन्सर्वमासीत्पराङ्भुखम् ॥ ६-८४-१८ (४२४३७)
एवं जित्वा महाराज धर्मपुत्रो युधिष्ठिरः ।
व्यात्ताननो यथा कालस्तव सैन्यं जघान ह ॥ ६-८४-१९ (४२४३८)
चेकितानस्तु वार्ष्णेयो गौतमं रथिनां वरम् ।
प्रेक्षतां सर्वसैन्यानां छादयामास सायकैः ॥ ६-८४-२० (४२४३९)
संनिवार्य शरांस्तांस्तु कृपः शारद्वतो युधि ।
चेकितानां रणे यत्तं राजन्विव्याध पत्रिभिः ॥ ६-८४-२१ (४२४४०)
अथापरेण भल्लेन धनुश्चिच्छेद मारिष ।
सारथिं चास्य समरे क्षिप्रहस्तो न्यपातयत् ॥ ६-८४-२२ (४२४४१)
अश्वांस्छास्यावधीद्राजन्नुभौ तौ पार्ष्णिसारथी ।
अवप्लुत्य रथात्तूर्णं गदां जग्राह सात्वतः ॥ ६-८४-२३ (४२४४२)
स तया वीरघातिन्या गदया गदिनां वरः ।
गौतमस्य हयान्हत्वा सारथिं च न्यपातयत् ॥ ६-८४-२४ (४२४४३)

भूमिष्ठो गौतमस्तस्य शरांश्चिक्षेप षोडशक ।
शरास्ते सात्वतं भित्त्वा प्राविशन्धरणीतलम् ॥ ६-८४-२५ (४२४४४)
चेकितानस्ततः क्रुद्धः पुनश्चिक्षेप तां गदाम् ।
गौतमस्य वधाकाङ्क्षी वृत्रस्येव पुरन्दरः ॥ ६-८४-२६ (४२४४५)
तामापतन्तीं विमलामश्यमगर्भां महागदाम् ।
शरैरनेकसाहस्त्रैर्वारयामास गौतमः ॥ ६-८४-२७ (४२४४६)
चेकितानस्ततः खङ्गं क्रोधादुद्धृत्य भारत ।
लाघवं परमास्थाय गौतमं समुपाद्रवत् ॥ ६-८४-२८ (४२४४७)
गौतमोऽपि धनुस्त्यक्त्वा प्रगृह्यासिं सुसंयतः ।
वेगेन महता राजंश्चेकितानमुपाद्रवत् ॥ ६-८४-२९ (४२४४८)
तावुभौ बलसंपन्नौ निस्त्रिंशवरधारिणौ ।
निस्त्रिंशाभ्यां सुतीक्ष्णाभ्यामन्योन्यं संततक्षतुः ॥ ६-८४-३० (४२४४९)
निस्त्रिंशवेगाभिहतौ ततस्तौ पुरुषर्षभौ ।
धरणीं समनुप्राप्तौ सर्वभूतनिषेविताम् ॥ ६-८४-३१ (४२४५०)
मूर्छ्ययाऽभिपरीताङ्गौ व्यायामेन तु मोहितौ ।
ततोऽभ्यधावद्वेगेन भीमसेनः सुहृत्तया ॥ ६-८४-३२ (४२४५१)
चेकितानं तथाभूतं दृष्ट्वा समरदुर्मदः ।
रथमारोपयच्चैनं सर्वसैकन्यस्य पश्यतः ॥ ६-८४-३३ (४२४५२)
तथैव शकुनि शूरः स्यालस्तव विशांपतेक ।
आरोपयद्रथं तूर्णं गौतमं रथिनां वरम् ॥ ६-८४-३४ (४२४५३)
सौमदत्तिं ततः क्रुद्धो धृष्टकेतुर्महाबलः ।
नवत्या सायकैः क्षिप्रं राजन्विव्याध वक्षसि ॥ ६-८४-३५ (४२४५४)
सौमदत्तिरुरस्थैस्तैर्भृशं बाणैरशोभत ।
मध्यंदिने महाराज रश्मिभिस्तपनो यथा ॥ ६-८४-३६ (४२४५५)
भूरिश्रवास्तु समरे धृष्टकेतुं महारथम् ।
हतसूतहयं चक्रे विरथं सायकोत्तमैः ॥ ६-८४-३७ (४२४५६)
विरथं तं समालोक्य हताश्वं हतसारथिम् ।
महता शरवर्षेण च्छादयामास संयुगे ॥ ६-८४-३८ (४२४५७)
स तु तं रथमुत्सृज्य धृष्टकेतुर्महामनाः ।
आरुरोह ततो यानं शतानीकस्य मारिष ॥ ६-८४-३९ (४२४५८)
चित्रसेनो विकर्णश्च राजन्दुर्मर्षणस्तथा ।
रथिनो हेमसन्नाहाः सौभद्रमभिदुद्रुवुः ॥ ६-८४-४० (४२४५९)
अभिमन्योस्ततस्तैस्तु घोरं युद्धमवर्तत ।
शरीरस्य यथा राजन्वातपित्तकफैस्त्रिभिः ॥ ६-८४-४१ (४२४६०)
विरथांस्तव पुत्रांस्तु कृत्वा राजन्महाहवे ।
न जघान नरव्याघ्रः स्मरन्भीमवचस्तदा ॥ ६-८४-४२ (४२४६१)

ततो राज्ञां बहुशतैर्गजाश्वरथयायिभिः ।
संवृतं समरे भीष्मं देवैरपि दुरासदम् ॥ ६-८४-४३ (४२४६२)
प्रयान्तं शीघ्रमुद्वीक्ष्य परित्रातुं सुतांस्तव ।
अभिमन्युं समुद्दिश्य बालमेकं महारथम् ॥ ६-८४-४४ (४२४६३)
वासुदेवमुवाचेदं कौन्तेयः श्वेतवाहनः ।
चोदयाश्वान्हृषीकेश यत्रैते बहुला रथाः ॥ ६-८४-४५ (४२४६४)
एते हि बहवः शूराः कृतास्त्रा युद्धदुर्मदाः ।
यथा हन्युर्न नः सेनां तथा माधव चोदय ॥ ६-८४-४६ (४२४६५)
एवमुक्तः स वार्ष्णेयः कौन्तेयेनामितौजसा ।
रथं श्वेतहयैर्युक्तं प्रेषयामास संयुगे ॥ ६-८४-४७ (४२४६६)
निष्ठानको महानासीत्तव सैन्यस्य मारिष ।
यदर्जुनो रणे क्रुद्धः संयातस्तावकान्प्रति ॥ ६-८४-४८ (४२४६७)
समासाद्य तु कौन्तेयो राज्ञस्तान्भीष्मरक्षिणः ।
सुशर्माणमथो राजन्निदं वचनमब्रवीत् ॥ ६-८४-४९ (४२४६८)
जानामि त्वां युधां श्रेष्ठमत्यन्तं पूर्ववैरिणम् ।
अनयस्याद्य संप्राप्तं फलं पश्य सुदारुणम् ॥ ६-८४-५० (४२४६९)
अद्य ते दर्शयिष्यामि पूर्वप्रेतान्पितामहान् ।
एवं संजल्पतस्तस्य बीभत्सोः शत्रुघातिनः ॥ ६-८४-५१ (४२४७०)
श्रुत्वापि परुषं वाक्यं सुशर्मा रथयूथपः ।
न चैनमब्रवीत्किंचिच्छुभं वा यदि वाऽशुभम् ॥ ६-८४-५२ (४२४७१)
अभिगम्यार्जुनं वीरं राजभिर्बहुभिर्वृतः ।
पुरस्तात्पृष्ठतश्चैव पार्श्वतश्चैव सर्वतः ॥ ६-८४-५३ (४२४७२)
परिवार्यार्जुनं सङ्ख्ये तव पुत्रैर्महारथः ।
शरैः संछादयामास मेघैरिव दिवाकरम् ॥ ६-८४-५४ (४२४७३)
६-८४-५५ (४२४७४)
ततः प्रवृत्तः सुमहान्संग्रामः शोणितोदकः ।
तावकानां च समरे पाण्डवानां च भारत ॥

---

भिस्मपर्व-अध्यय०८५
॥ श्रीः ॥
६.८५. अध्यायः ८५

Mahabharata - Bhishma Parva - Chapter Topics
संकुलयुद्धवर्णनम् ॥ १ ॥

Mahabharata - Bhishma Parva - Chapter Text

६-८५-० (४२४७५)
सञ्जय उवाच। ६-८५-०क्ष् (४१६४)
स ताड्यमानस्तु शरैर्धनंजयः
पदाहतो नाग इव श्वसन्बली ।
बाणांश्च बाणेन महारथानां
चिच्छेद चापानि रणे प्रसह्य ॥ ६-८५-१ (४२४७६)
संछिद्य चापानि च तानि राज्ञां
तेषां रणे वीर्यवतां क्षणेन ।
विव्याध बाणैर्युगपन्महात्मा
निःशेषतां तेष्वथ मन्यमानः ॥ ६-८५-२ (४२४७७)
निपेतुराजौ रुधिरप्रदिग्धा-
स्ते ताडिताः शक्रसुतेन राजन् ।
विभिन्नगात्राः पतितोत्तमाङ्गा
गतासवश्छिन्नतनुत्रकायाः ॥ ६-८५-३ (४२४७८)
महीं गताः पर्थबलाभिभूता
विचित्ररूपा युगपद्विनेशुः ।
दृष्ट्वा हतांस्तान्युधि राजपुत्रां-
स्त्रिगर्तराजः प्रययौ रथेन ॥ ६-८५-४ (४२४७९)
तेषां रथानामथ पृष्ठगोपा
द्वात्रिंशदन्येऽभ्यपतन्त पार्थम् ।
तथैव ते तं परिवार्य पार्थं
विकृष्य चापानि महारवाणि ॥ ६-८५-५ (४२४८०)
अवीवृषन्बाणमहौघवृष्ट्या
यथा गिरिं तोयधरा जलौघैः ।
संपीड्यमानस्तु शरौघवृष्ट्या
धनंजयस्तान्युधि जातरोषः ॥ ६-८५-६ (४२४८१)
षष्ट्या शरैः संयति तैलधौतै-
र्जघान तानप्यथ पृष्ठगोपान् ।
रथांश्च तांस्तनवजित्य सङ्ख्ये
धनञ्जयः प्रीतमना यशस्वी ॥ ६-८५-७ (४२४८२)
अथात्वरद्भीष्मवधाय जिष्णु-
र्बलानि राजन्समरे निहत्य ।
त्रिगर्तराजो निहतान्समीक्ष्य
महात्मना तानथ बन्धुवर्गान् ॥ ६-८५-८ (४२४८३)
रणे पुरस्कृत्य नराधिपांस्तान्
जगाम पार्थं त्वरितो वधाय

अभिद्रुतं चास्त्रभृतां वरिष्ठं
धनंजयं वीक्ष्य शिखण्डिमुख्याः ॥ ६-८५-९ (४२४८४)
अभ्यद्ययुस्ते शितशस्त्रहस्ता
रिरक्षिषन्तो रथमर्जुनस्य ।
पार्थोऽपि तानापततः समीक्ष्य
त्रिगर्तराज्ञा सहितान्नृवीरान ॥ ६-८५-१० (४२४८५)
विध्वंसयित्वा समरे धनुष्मान्
गाण्डीवमुक्तैर्निशितैः पृषत्कैः ।
भीष्मं यियासुर्युधि संददर्श
दुर्योधनं सैन्धवादींश्च राज्ञः ॥ ६-८५-११ (४२४८६)
संवारयिष्णूनभिवारयित्वा
मुहूर्तमायोध्य बलेन वीरः ।
उत्सृज्य राजानमनन्तवीर्यो
जयद्रथादींश्च नृपान्महौजाः ।
ययौ ततो भीमबलो मनस्वी
गाङ्गेयमाजौ शरचापपाणिः ॥ ६-८५-१२ (४२४८७)
भीष्मोऽपि दृष्ट्वा समरे कृतास्त्रान्
स पाण्डवानां रथिनोऽभ्युदारान् ।
विहाय संग्राममुखे धनंजयं
जवेन पार्थं पुनराजगाम ॥ ६-८५-१३ (४२४८८)
युधिष्ठिरश्च प्रबलो महात्मा
समाययौ त्वरितो जातकोपः ।
मद्राधिपं समभित्यज्य सङ्ख्ये
स्वभागमाप्तं तमनन्तकीर्तिः ।
सार्धं स माद्रीसुतभीमसेनै-
र्भीष्मं ययौ शान्तनवं रणाय ॥ ६-८५-१४ (४२४८९)
तैः संप्रयुक्तैः स महारथाग्र्यै-
र्गङ्गासुतः समरे चित्रयोधी ।
न विव्यधे शान्तनवो महात्मा
समागतैः पाण्डुसुतैः समस्तैः ॥ ६-८५-१५ (४२४९०)
अथैत्य राजा युधि सत्यसन्धो
जयद्रथोऽत्युग्रबलो मनस्वी ।
चिच्छेद चापानि महारथानां
प्रसह्य तेषां धनुषा वरेण ॥ ६-८५-१६ (४२४९१)
युधिष्ठिरं भीमसेनं यमौ च
पार्थं कृष्णं युधि संजातकोपः ।

दुर्योदनः क्रोधविषो महात्मा
जघान बाणैरनलप्रकाशैः ॥ ६-८५-१७ (४२४९२)
कृपेण शल्येन शलेन चैव
तथा विभो चित्रसेनेन चौजौ ।
विद्धाः शरैस्तेऽतिविवृद्धकोपै-
र्देवा यथा दैत्यगणैः समेतैः ॥ ६-८५-१८ (४२४९३)
छिन्नायुधं शान्तनवेन राजा
शिखण्डिनं प्रेक्ष्य च जातकोपः ।
अजातशत्रुः समरे महात्मा
शिखण्डिनं क्रुद्ध उवाच वाक्यम् ॥ ६-८५-१९ (४२४९४)
उक्त्वा तथा त्वं पितुरग्रतो मा-
महं हनिष्यामि महाव्रतं तम् ।
भीष्मं शरौघैर्विमलार्कवर्णैः
सत्यं वदामीति कृता प्रतिज्ञा ॥ ६-८५-२० (४२४९५)
त्वया च नैनां सफलां करोषि
देवव्रतं यन्न निहंसि युद्धे ।
मिथ्याप्रतिज्ञो भव मात्र वीर
रक्षस्व धर्मं स्वकुलं यशश्च ॥ ६-८५-२१ (४२४९६)
प्रेक्षस्व भीष्मं युधि भीमवेगं
सर्वांस्तपन्तं मम सैन्यसङ्घान् ।
शरौघजालैरतितिग्मवेगैः
कालं यथा कालकृतं क्षणेन ॥ ६-८५-२२ (४२४९७)
निकृत्तचापः समरेऽनपेक्षः
पराजितः शान्तनवेन चाजौ ।
विहाय बन्धूनथ सदरांश्च
क्व यास्यसे नानुरूपं तवेदम् ॥ ६-८५-२३ (४२४९८)
दृष्ट्वा हि भीष्मं तमनन्तवीर्यं
भग्नं च सैन्यं द्रवमाणमेवम् ।
भीतोऽसि नूनं द्रुपदस्य पुत्र
तथा हि ते मुखवर्णोऽप्रहृष्टः ॥ ६-८५-२४ (४२४९९)
अज्ञायमाने च धनंजये तु
महाहावे संप्रसक्ते नृवीरे ।
कथं हि भीष्मात्प्रथितः पृथिव्यां
भयं त्वमद्य प्रकरोषि वीर ॥ ६-८५-२५ (४२५००)
स धर्मराजस्य वचो निशम्य ६-८५-२६रूक्षाक्षरं विप्रलापानुबद्धम् ।
प्रत्यादेशं मन्यमानो महात्मा

प्रतत्वरे भीष्मवधाय राजन् ॥ ६-८५-२६ (४२५०१)
तमापतन्तं महता जवेन
शिखण्डिनं भीष्ममभिद्रवन्तम् ।
निवारयामास हि शल्य एन-
मस्त्रेण घोरेण सुदुर्जयेन ॥ ६-८५-२७ (४२५०२)
स चापि दृष्ट्वा समुदीर्यमाण-
मस्त्रं युगान्ताग्निसमप्रकाशम् ।
न संमुमोह द्रुपदस्य पुत्रो
राजन्महेन्द्रप्रतिमप्रभावः ।
तस्थौ च तत्रैव महाधनुष्मान्
शरैस्तदस्त्रं प्रतिबाधमानः ॥ ६-८५-२८ (४२५०३)
अथाददे वारुणमन्यदस्त्रं
शिखण्ड्यथोऽग्रं प्रतिघातमस्य ।
तदस्त्रमस्त्रेण विदार्यमाणं
खस्थाः सुरा ददृशुः पार्थिवाश्च ॥ ६-८५-२९ (४२५०४)
भीष्मस्तु राजन्समरे महात्मा
धनुश्च चित्रं ध्वजमेव चापि ।
छित्त्वाऽनदत्पाण्डुसुतस्य वीरो
युधिष्ठिरस्याजमीढस्य राज्ञः ॥ ६-८५-३० (४२५०५)
ततः समुत्सृज्य धनुः सबाणं
युधिष्ठिरं वीक्ष्य भयाभिभूतम् ।
गदां प्रगृह्याभिपपात सङ्ख्ये
जयद्रथं भीमसेनः पदातिः ॥ ६-८५-३१ (४२५०६)
तमापतन्तं सहसा जवेन
जयद्रथः सगदं भीमसेनम् ।
विव्याध घोरैर्यमदण्डकल्पैः
शितैः शरैः पञ्चशरैः समन्तात् ॥ ६-८५-३२ (४२५०७)
अचिन्तयित्वा स शरांस्तरस्वी
वृकोदरः क्रोधपरीतचेताः ।
जघान वाहान्समरे समन्तात्
सुसंमतान्सिन्धुराजस्य सङ्ख्ये ॥ ६-८५-३३ (४२५०८)
ततोऽभिवीक्ष्याप्रतिमप्रभाव-
स्तवात्मजस्त्वरमाणो रथेन
अभ्यायौ भीमसेनं निहन्तुं
समुद्यतास्त्रः सुरराजकल्पः ॥ ६-८५-३४ (४२५०९)
जयद्रथो भग्नवाहं रथं त

त्यक्त्वा ययौ यत्र राजा कुरूणाम् ।
भयेन भीमस्य समूढचेताः
ससौबलस्तत्र युद्धस्य भीतः ॥ ६-८५-३५ (४२५१०)
भीमोऽप्यथैनं सहसा विनद्य
प्रत्युद्ययौ गदया तर्जयानः ।
समुद्यतां तां यमदण्डकल्पां
दृष्ट्वा गदां ते कुरवः समन्तात् ॥ ६-८५-३६ (४२५११)
विहाय सर्वे तव पुत्रमुग्नं ६-८५-३७ (४२५१२)
पातं गदायाः परिहर्तुकामाः ।
अपक्रान्तास्तुमुले संप्रमर्दे
सुदूरुणे भारत मोहनीये ॥ ६-८५-३७ (४२५१३)
अमूढचेतास्त्वथ चित्रसेनो
महागदामापतन्तीं निरीक्ष्य ।
रथं समुत्सृज्य पदातिराजौ
प्रगृह्य खङ्गं विपुलं च चर्म ।
अवप्लुतः सिंह उवाचलाग्रा-
ज्जगामान्यं भ्रमप भूमिदेशम् ॥ ६-८५-३८ (४२५१४)
गदापि सा प्राप्य रथं सुचित्रं
साश्व ससूतं विनिहत्य सङ्ख्ये ।
जगाम भूमिं ज्वलिता महोल्क
भ्रष्टाऽम्बराद्गामिव संपतन्ती ॥ ६-८५-३९ (४२५१५)
आश्चर्यभूतं सुमहत्त्वदीया
दृष्ट्वैव तद्भारत संप्रहृष्टाः ।
सर्वे विनेदुः सहिताः समन्ता-
त्पुपूजिरे तव पुत्रस्य शौर्यम् ॥ ॥ ६-८५-४० (४२५१६)

इति श्रीमन्महाभारते भीष्मपर्वणि भीष्मवधपर्वणि
सप्तमदिवसयुद्धे पञ्चाशीतितमोऽध्यायः ॥
Mahabharata - Bhishma Parva - Chapter Footnotes

६-८५-२५ अज्ञायमाने पश्चात्स्थिते ॥
६-८५-२६ प्रत्यादेशं भर्त्सनं ॥

---

भिस्मपर्व-अध्यय०८६
॥ श्रीः ॥
६.८६. अध्यायः ८६

Mahabharata - Bhishma Parva - Chapter Topics
संकुलयुद्धवर्णनम् ॥ १ ॥

Mahabharata - Bhishma Parva - Chapter Text

६-८६-० (४२५१७)
सञ्जय उवाच। ६-८६-०क्ष् (४१६५)
विरथं तं समासाद्य चित्रसेनं यशस्विनम् ।
रथमारोपयामास विकर्णस्तनयस्तव ॥ ६-८६-१ (४२५१८)
तस्मिंस्तथा वर्तमाने तुमुले संकुले भृशम् ।
भीष्मः शान्तनवस्तूर्णं युधिष्ठिरमुपाद्रवत् ॥ ६-८६-२ (४२५१९)
ततः सरथनागाश्वाः समकम्पन्त सृञ्जयाः ।
मृत्योरास्यमनुप्राप्तं मेनिरे च युधिष्ठिरम् ॥ ६-८६-३ (४२५२०)
युधिष्ठिरोऽपि कौरव्यो यमाभ्यां सहितः प्रभुः ।
महेष्वासं नरव्याघ्रं भीष्मं शान्तनवं ययौ ॥ ६-८६-४ (४२५२१)
ततः शरसहस्राणि प्रमुञ्चन्पाण्डवो युधि ।
भीष्मं संछादयामास यथा मेघो दिवाकरम् ॥ ६-८६-५ (४२५२२)
तेन सम्यक्प्रणीतानि शरजालानि मारिष ।
प्रतिजग्राह गाङ्गयः शतशोऽथ सहस्रशः ॥ ६-८६-६ (४२५२३)
तथैव शरजालानि भीष्मोणास्तानि मारिष ।
आकाशे समदृश्यन्त स्वगमानां व्रजा इव ॥ ६-८६-७ (४२५२४)
निमेषार्धेन कौन्तेयं भीष्मः शान्तनवो युधि ।
अदृश्यं समरे चक्रे शरजालेन भारत ॥ ६-८६-८ (४२५२५)
ततो युधिष्ठिरे राजा कौरव्यस्य महात्मनः ।
नाराचं प्रेषयामास क्रुद्ध आशीविषोपमम् ॥ ६-८६-९ (४२५२६)
असंप्राप्तं ततस्तं तु क्षुरप्रेण महारथः ।
चच्छेद समरे राजन्भीष्मस्तस्य धनुश्च्युतम् ॥ ६-८६-१० (४२५२७)
तं तु च्छित्वा रणे भीष्मो नाराचं कलसंमितम् ।
नजघ्ने कौरवेन्द्रस्य हयान्काञ्चनभूषणान् ॥ ६-८६-११ (४२५२८)
हताश्वं तु रथं त्यक्त्वा धर्मपुत्रो युधिष्ठिरः ।
आरुरोह रथं तूर्णं नकुलस्य महात्मनःक ॥ ६-८६-१२ (४२५२९)
यमावपि हि संक्रुद्धः समासाद्य रणे तदा ।
शरैः संछादयामास भीष्मः परपुरंजयः ॥ ६-८६-१३ (४२५३०)
तौ तु दृष्ट्वा महाराज भीष्मबाणप्रपीडितौ ।
जगाम परमां चिन्तां भीष्मस्य वधकाङ्क्षया ॥ ६-८६-१४ (४२५३१)
ततो युधिष्ठिरो वश्यान्राज्ञस्तान्समचोदयत् ।

भीष्मं शान्तनवं सर्वे निहतेति सुहृद्गणान् ॥ ६-८६-१५ (४२५३२)
ततस्ते पार्थिवाः सर्वे श्रुत्वा पार्थस्य भाषितम् ।
महता रथवंशेन परिवव्रुः पितामहम् ॥ ६-८६-१६ (४२५३३)
स समन्तात्परिवृतः पिता देवव्रतस्तव ।
चिक्रीड धनुषा राजन्पातयानो महारथान् ॥ ६-८६-१७ (४२५३४)
तं चरन्तं रणे पार्था ददृशुः कौरवं युधि ।
मृगमध्यं प्रविश्येव यथा सिंहशिशुं वने ॥ ६-८६-१८ (४२५३५)
तर्जयानं रमे वीरांस्त्रासयानं च सायकैः ।
दृष्ट्वा त्रेसुर्महाराज सिंहं मृगगणा इव ॥ ६-८६-१९ (४२५३६)
रणे भारत सिंहस्य ददृशुः क्षत्रिया गतिम् ।
अग्नेर्वायुसहायस्य यथा कक्षं दिधक्षतः ॥ ६-८६-२० (४२५३७)
शिरांसि रथिनां भीष्मः पातयामास संयुगे ।
तालेभ्यः परिपक्वानि फलानि कुशलो नरः ॥ ६-८६-२१ (४२५३८)
पतद्भिश्च महाराज शिरोभिर्धरणीतले ।
बभूव तुमुलः शब्दः पतताम‍श्मनामिव ॥ ६-८६-२२ (४२५३९)
तस्मिन्सुतुमुले युद्धे वर्तमाने भयानके ।
सर्वेषामेव सैन्यानामासीद्व्यतिकरो महान् ॥ ६-८६-२३ (४२५४०)
भिन्नेषु तेषु व्यूहेषु क्षत्रिया इतरेतरम् ।
एकमेकं समाहूय युद्धायैवावतस्थिरे ॥ ६-८६-२४ (४२५४१)
शिखण्डी तु समासाद्य भरतानां पितामहम् ।
अभिदुद्राव वेगेन तिष्ठतिष्ठेति चाब्रवीत् ॥ ६-८६-२५ (४२५४२)
अनादृत्य ततो भीष्मस्तं शिखण्डिनमाहवे ।
प्रययौ सृञ्जयान्क्रुद्धः स्त्रीत्वं तस्य विचिन्तयन् ॥ ६-८६-२६ (४२५४३)
सृंजयास्तु ततो दृष्ट्वा हृष्टं भीष्म महारणे ।
सिंहनादांश्च विविधांश्चक्रुः शङ्खविमिश्रितान् ॥ ६-८६-२७ (४२५४४)
ततः प्रववृते युद्धं व्यतिषक्तरथद्विपम् ।
पश्चिमां दिशमासाद्य स्थिते सवितरि प्रभो ॥ ६-८६-२८ (४२५४५)
धृष्टद्युम्नोऽथ पाञ्चाल्यः सात्यकिश्च महारथः ।
पीडयन्तौ भृशं सैन्यं शक्तितोमरवृष्टिभिः ॥ ६-८६-२९ (४२५४६)
शस्त्रैश्च बहुभी राजञ्जघ्नतुस्तावकान्रणे ।
ते हन्यमानाः समरे तावका भरतर्षभ ॥ ६-८६-३० (४२५४७)
आर्यां युद्धे मतिं कृत्वा न त्यजन्ति स्म संयुगम् ।
यथोत्साहं तु समरे निजघ्नुस्तावका रणे ॥ ६-८६-३१ (४२५४८)
तत्राक्रन्दो महानासीत्तावकानां महात्मानाम् ।
वध्यतां समरे राजन्पार्षतेन महात्मना ॥ ६-८६-३२ (४२५४९)
तं श्रुत्वा निनदं घोरं तावकानां महारथौ ।

विन्दानुविन्दावावन्त्यौ पार्षतं प्रत्युपस्थितौ ॥ ६-८६-३३ (४२५५०)
तौ तस्य तुरगान्हत्वा त्वरमाणौ महारथौ ।
छादयामासतुरुभौ शरवर्षेण पार्षतम् ॥ ६-८६-३४ (४२५५१)
अवप्लुत्याथ पाञ्चाल्यो रथात्तूर्णं महाबलः ।
आरुरोहक रथं तूर्णं सात्यकेस्तु महात्मनः ॥ ६-८६-३५ (४२५५२)
ततो युधिष्ठिरो राजा महत्या सेनया वृतः ।
आवन्त्यौ समरे क्रुद्धावभ्ययात्स परंतपौ ॥ ६-८६-३६ (४२५५३)
तथैव तव पुत्रोऽपि सर्वोद्योगेन मारिष ।
विन्दानुविन्दौ समरे परिवार्यावतस्थिवान् ॥ ६-८६-३७ (४२५५४)
अर्जुनश्चापि संक्रुद्धः क्षत्रियान्क्षत्रियर्षभः ।
अयोधयत संग्रामे वज्रपाणिरिवासुरान् ॥ ६-८६-३८ (४२५५५)
द्रोणास्तु समरे क्रुद्धः पुत्रस्य प्रियकृत्तव ।
व्यधमत्सर्वपाञ्चालांस्तूलराशिमिवानलः ॥ ६-८६-३९ (४२५५६)
दुर्योधनपुरोगास्तु पुत्रास्तव विशांपते ।
परिवार्य रणे भीष्मं युयुधुः पाण्डवैः सह ॥ ६-८६-४० (४२५५७)
ततो दुर्योधनो राजा लोहितायति भास्करे ।
अब्रवीत्तावकान्सर्वास्त्वरध्वमिति भारत ॥ ६-८६-४१ (४२५५८)
युध्यतां तु तथा तेषां कुर्वतां कर्म दुष्करम् ।
अस्तं गिरिमथारूढे अप्रकाशति भास्करे ॥ ६-८६-४२ (४२५५९)
प्रावर्तत नदी घोरा शोणितौघतरङ्गिणी ।
गोमायुगणसंकीर्णा क्षणेन क्षणदामुखे ॥ ६-८६-४३ (४२५६०)
शिवाभिरशिवाभिश्च रुवद्भिर्भैरवं रवम् ।
घोरमायोधनं जज्ञे भूतसङ्घैः समाकुलम् ॥ ६-८६-४४ (४२५६१)
राक्षसाश्च पिशाचाश्च तथान्ये पिशिताशिनः ।
समन्ततो व्यदृश्यन्त शतशोऽथ सहस्रशः ॥ ६-८६-४५ (४२५६२)
अर्जुनोऽथ सुशर्मादीन्राज्ञस्तान्सपदानुगान् ।
विजित्य पृतनामध्ये ययौ स्वशिबिरं प्रति ॥ ६-८६-४६ (४२५६३)
युधिष्टिरोऽपि कौरव्यो भ्रातृभ्यां सहितस्तथा ।
ययौ स्वशिबिरं राजा निशायां सेनया वृतः ॥ ६-८६-४७ (४२५६४)
भीमसेनोऽपि राजेन्द्र दुर्योधनमुखान्रथान् ।
अवजित्य ततः सङ्ख्ये ययौ स्वशिबिरं प्रति ॥ ६-८६-४८ (४२५६५)
दुर्योधनोऽपि नृपतिः परिवार्य महारणे ।
भीष्मं शान्तनवं तूर्णं प्रयातः शिबिरं प्रति ॥ ६-८६-४९ (४२५६६)
द्रोणो द्रौणिः कृपः शल्यः कृतवर्मा च सात्वतः ।
परिवार्य चमूं सर्वाः प्रययुः शिबिरं प्रति ॥ ६-८६-५० (४२५६७)
तथैव सात्यकी राजन्धृष्टद्युम्नश्च पार्षतः ।

परिवार्य रणे योधान्ययतुः शिबिरं प्रति ॥ ६-८६-५१ (४२५६८)
एवमेते महाराज तावकाः पाण्डवैः सह ।
पर्यवर्तन्त सहिता निशाकाले परंतप ॥ ६-८६-५२ (४२५६९)
ततः स्वशिबिरं गत्वा पाण्डवाः कुरवस्तथा ।
न्यवसन्त महाराज पूजयन्तः परस्परम् ॥ ६-८६-५३ (४२५७०)
रक्षां कृत्वा ततः शूरा न्यस्य गुल्मान्यथाविधि ।
अपनीय च शल्यानि स्नात्वा च विविधैर्जलैः ॥ ६-८६-५४ (४२५७१)
कृतस्वस्त्ययनाः सर्वे स्तूयमानाश्च बन्दिभिः ।
गीतवादित्रशब्देन व्यक्रीडन्त यशस्विनः ॥ ६-८६-५५ (४२५७२)
मुहूर्तादिव तत्सर्वमभवत्स्वर्गसन्निभम् ।
न हि युद्धकथां कांचित्तत्राकुर्वन्महारथाः ॥ ६-८६-५६ (४२५७३)
ते प्रसुप्ते बले तत्र परिश्रान्तजने नृप ।
हस्त्यश्वबहुले रात्रौ प्रेक्षणीये बभूवतुः ॥ ॥ ६-८६-५७ (४२५७४)

इति श्रीमन्महाभारते भीष्मपर्वणि भीष्मवधपर्वणि
सप्तमदिवसयुद्धे षडशीतितमोऽध्यायः ॥

---

भिस्मपर्व-अध्यय०८७
॥ श्रीः ॥
६.८७. अध्यायः ८७

Mahabharata - Bhishma Parva - Chapter Topics
उभयसेनयोर्व्यूहरचनापूर्वकं परस्पराभियानम् ॥१ ॥

Mahabharata - Bhishma Parva - Chapter Text

६-८७-० (४२५७५)
सञ्जय उवाच। ६-८७-०क्ष् (४१६६)
परिणाम्य निशां तां तु सुखसुप्ता जनेश्वराः ।
कुरवः पाण्डवाश्चैव पुनर्युद्धाय निर्ययुः ॥ ६-८७-१ (४२५७६)
ततः शब्दो महानासीत्सेनयोरुभयोर्नृप ।
निर्गच्छमानयोः सङ्ख्ये यथा सागरयोरिव ॥ ६-८७-२ (४२५७७)
ततो दुर्योधनो राजा चित्रसेनो विविंशतिः ।
भीष्मश्च रथिनां श्रेष्ठो भारद्वाजश्च वै द्विजः ॥ ६-८७-३ (४२५७८)
एकीभूताः सुसंयत्ताः कौरवाणां महाचमूम् ।
व्यूहाय विदधू राजन्पाण्डवान्प्रतिदंशितान् ॥ ६-८७-४ (४२५७९)
कूर्मव्यूहं ततः कृत्वा पिता तव विशांपते ।

सागरप्रतिमं घोरं वाहनोर्मितरङ्गिणम् ॥ ६-८७-५ (४२५८०)
अग्रतः सर्वसैन्यानां भीष्मः शान्तनवो ययौ ।
मालवैर्दाक्षिणात्यैश्च आवन्त्यैश्च समन्वितः ॥ ६-८७-६ (४२५८१)
ततोऽनन्तरमेवासीद्भारद्वाजः प्रतापवान ।
पुलिन्दैः पारदैश्चैव तथा क्षुद्रकमालवैः ॥ ६-८७-७ (४२५८२)
द्रोणादनन्तरं यत्तो भगदत्तः प्रतापवान् ।
मगधैश्च कलिङ्गैश्च पिशाचैश्च विशांपते ॥ ६-८७-८ (४२५८३)
प्राग्ज्योतिषादनु नृपः कौसल्योऽथ बृहद्बलः ।
मेकलैः कुरुविन्दैश्च त्रैपुरैश्च समन्विताः ॥ ६-८७-९ (४२५८४)
बृहद्बलादनु नृपस्त्रिगर्तः प्रस्थलाधिपः ।
काम्भोजैर्बहुभिः सार्धं यवनैश्च सहस्रशः ॥ ६-८७-१० (४२५८५)
द्रौणिस्तु रभसः शूरस्त्रैगर्तादनु भारत ।
प्रययौ सिंहनादेन नादयानो धरातलम् ॥ ६-८७-११ (४२५८६)
तथा सर्वेण सैन्येन राजा दुर्योधनस्तदा ।
द्रौणेरनन्तरं प्रायात्सोदर्यैः परिवारितः ॥ ६-८७-१२ (४२५८७)
दुर्योधनादनु ततः कृपः शारद्वतो ययौ ।
एवमेष महाव्यूहः प्रययौ सागरोपमः ॥ ६-८७-१३ (४२५८८)
रेजुस्तत्र पताकाश्च श्वेतच्छत्राणि भारत ।
अङ्गदान्यत्र चित्राणि महार्हाणि धनूंषि च ॥ ६-८७-१४ (४२५८९)
तं तु दृष्ट्वा महाव्यूहं तावकानां महारथः ।
युधिष्ठिरोऽब्रवीत्तूर्णं पार्षतं पृतनापतिम् ॥ ६-८७-१५ (४२५९०)
पश्य व्यूहं महेष्वास निर्मितं सागरोपमम् ।
प्रतिव्यूहं रणे शूर कुरु क्षिप्रं महारथ ॥ ६-८७-१६ (४२५९१)
ततः स पार्षतः क्रूरो व्यूहं चक्रे सुदारुणम् ।
श्रृङ्गाटकं महाराज परव्यूहविनाशनम् ॥ ६-८७-१७ (४२५९२)
श्रृङ्गाभ्यां भीमसेनश्च सात्यकिश्च महारथः ।
रथैरनेकसाहस्रैस्तथा हयपदातिभिः ॥ ६-८७-१८ (४२५९३)
नाभावभून्नरश्रेष्ठः श्वेताश्वः कृष्णसारथिः ।
मध्ये युधिष्ठिरो राजा माद्रीपुत्रौ च पाण्डवौ ॥ ६-८७-१९ (४२५९४)
अथेतरे महेष्वासाः सहसैन्या नराधिपाः ।
व्यूहं तं पूरयामासुर्व्यूहशास्त्रविशारदाः ॥ ६-८७-२० (४२५९५)
एवमेतं महाव्यूहं व्यूह्य भारत पाण्डवाः ।
अतिष्ठन्समरे शूरा योद्धुकामा जयैषिणः ॥ ६-८७-२१ (४२५९६)
भेरीशब्दैश्च विमलैर्विमिश्रैः शङ्खनिःस्वनैः ।
क्ष्वेडितास्फोटितोत्क्रुष्टैर्नादिताः सर्वतो दिशः ॥ ६-८७-२२ (४२५९७)
ततः शूराः समासाद्य समरे ते परस्परम ।

नेत्रैरनिमिषै राजन्नवैक्षन्त परस्परम् ॥ ६-८७-२४अग्मनोभिस्ते
मनुष्येन्द्र युद्धं योधाः प्रचक्रिरे ।'
पुनराहूय तेऽन्योन्यं शरीरैरपि चक्रिरे ॥ ६-८७-२३ (४२५९८)
ततः प्रववृते युद्धं घोररूपं भयावहम् ।
तावकानां परेषां च निघ्नतामितरेतरम् ॥ ६-८७-२५ (४२५९९)
नाराचा निशिताः सङ्ख्ये संपतन्ति स्म भारत ।
व्यात्तानना भयकरा उरगा इव सङ्घशः ॥ ६-८७-२६ (४२६००)
निष्पेतुर्विमलाः शक्त्यस्तैलधौताः सुतेजनाः ।
अम्बुदेभ्यो यथा राजन्भ्राजमानाः शतह्रदाः ॥ ६-८७-२७ (४२६०१)
गदाश्च विमलैः पट्टैः पिनद्धाः स्वर्णभूषिताः ।
पतन्त्यस्तत्र दृस्यन्ते गिरिशृङ्गोपमाः शुभाः ॥ ६-८७-२८ (४२६०२)
निस्त्रिंशाश्च व्यदृश्यन्त विमलाम्बरसन्निभाः ।
आर्षभाणि च चर्माणि शतचन्द्राणि भारतत ॥ ६-८७-२९ (४२६०३)
अशोभन्त रणे राजन्पात्यमानानि सर्वशः ।
तेऽन्योन्यं समरे सेने युध्यमाने नराधिप ॥ ६-८७-३० (४२६०४)
अशोभेतां यथा देवदैत्यसेने समुद्यते ।
अभ्यद्रवन्त समरे तेऽन्योन्यं वै समन्ततः ॥ ६-८७-३१ (४२६०५)
रथास्तु रथिभिस्तूर्णं प्रेषिताः परमाहवे ।
युगैर्युगानि संश्लिष्य युयुधुः पार्थिवर्षभाः ॥ ६-८७-३२ (४२६०६)
दन्तिनां युध्यमानानां संघर्षात्पावकोऽभवत् ।
दन्तेषु भरतश्रेष्ठ सधूमः सर्वतो दिशम् ॥ ६-८७-३३ (४२६०७)
प्रासैरभिहताः केचिद्गजयोधाः समन्ततः ।
पतमानाः स्म दृश्यन्ते गिरिशृङ्गान्नगा इव ॥ ६-८७-३४ (४२६०८)
पादाताश्चाप्यदृश्यन्त निघ्नन्तोऽथ परस्परम् ।
चित्ररूपधराः शूरा नखरप्रासयोधिनः ॥ ६-८७-३५ (४२६०९)
अन्योन्यं ते समासाद्य कुरुपाण्डवसैनिकाः ।
अस्त्रैर्नानाविधैर्घोरै रणे निन्युर्यमक्षयम् ॥ ६-८७-३६ (४२६१०)
ततः शान्तनवो भीष्मो रथघोषेण नादयन् ।
अभ्यागमद्रणे पार्थान्धनुःशब्देन मोहयन् ॥ ६-८७-३७ (४२६११)
पाण्डवानां रथाश्चापि नदन्तो भैरवं स्वनम् ।
अभ्यद्रवन्त संयत्ता धृष्टद्युम्नपुरोगमाः ॥ ६-८७-३८ (४२६१२)
ततः प्रववृते युद्धं तव तेषां च भारत ।
नराश्वरथनागानां व्यतिषक्तं परस्परम् ॥ ॥ ६-८७-३९ (४२६१३)

इति श्रीमन्महाभारते भीष्मपर्वणि भीष्मवधपर्वणि
अष्टमदिवसयुद्धे सप्ताशीतितमोऽध्यायः ॥

भिस्मपर्व-अध्यय०८८
॥ श्रीः ॥
६.८८. अध्यायः ८८

Mahabharata - Bhishma Parva - Chapter Topics
भीमेन सुनाभादिदुर्योधनानुजाष्टकहननम् ॥१ ॥

Mahabharata - Bhishma Parva - Chapter Text

६-८८-० (४२६१४)
सञ्जय उवाच। ६-८८-०क्ष् (४१६७)
भीष्मं तु समरे क्रुद्धं प्रतपन्तं समन्ततः ।
न शेकुः पाण्डवा द्रष्टुं तपन्तमिव भास्करम् ॥ ६-८८-१ (४२६१५)
ततः सर्वाणि सैन्यानि धर्मपुत्रस्य शासनात् ।
अभ्यद्रवन्त गाङ्गेयं मर्दयन्तं शितैः शरैः ॥ ६-८८-२ (४२६१६)
स तु भीष्मो रणश्लाघी तोमकान्सहसृञ्जयान् ।
पाञ्चालांश्च महेष्वासान्पातयामास सायकैः ॥ ६-८८-३ (४२६१७)
ते वध्यमाना भीष्मेण पाञ्चालाः पाण्डवैः सह ।
भीष्ममेवाभ्ययुस्तूर्णं त्यक्त्वा मृत्युकृतं भयम् ॥ ६-८८-४ (४२६१८)
स तेषां रथिनां वीरो भीष्मः शान्तनवो युधि ।
चिच्छेद सहसा राजन्बाहूनथ शिरांसि च ॥ ६-८८-५ (४२६१९)
विरथान्रथिनश्चक्रे पिता देवव्रतस्तव ।
पतितान्युत्तमाङ्गानि हयेभ्यो हयसादिनाम् ॥ ६-८८-६ (४२६२०)
निर्मनुष्यांश्च मातङ्गाञ्शयानान्पर्वतोपमान् ।
अपश्याम महाराज भीष्मास्त्रेण प्रमाथितान् ॥ ६-८८-७ (४२६२१)
न तत्रासीत्पुमान्कश्चित्पाण्डवानां विशांपते ।
अन्यत्र रथिनां श्रेष्ठद्भीमसेनान्महाबलात् ॥ ६-८८-८ (४२६२२)
स हि भीष्मं समासाद्य छादयामास सायकैः ।
ततो निष्टानको घोरो भीष्मभीमसमागमे ॥ ६-८८-९ (४२६२३)
बभूव सर्वसैन्यानां घोररूपो भयानकः ।
तथैव पाण्डवा हृष्टाः सिंहनादमथानदन् ॥ ६-८८-१० (४२६२४)
ततो दुर्योधनो राजा सोदर्यैः परिवारितः ।
भीष्मं जुगोप समरे वर्तमाने जनक्षये ॥ ६-८८-११ (४२६२५)
भीमस्तु सारथिं हत्वा भीष्मस्य रथिनां वरः ।
प्रद्रुताश्वे रथे तस्मिन्द्रवमाणे समन्ततः ॥ ६-८८-१२ (४२६२६)
सुनाभस्य शरेणाशु शिरश्चिच्छेद भारत ।

क्षुरप्रेण सुतीक्ष्णेन स हतो न्यपतद्भुवि ॥ ६-८८-१३ (४२६२७)
हते तस्मिन्महाराज तव पुत्रे महारथे ।
नामृष्यन्त रणे शूराः सोदराः सप्त संयुगे ॥ ६-८८-१४ (४२६२८)
आदित्यकेतुर्बह्वाशी कुण्डधारो महोदरः ।
अपराजितः पण्डितको विशालाक्षः सुदुर्जयः ॥ ६-८८-१५ (४२६२९)
पाण्डवं चित्रसन्नाहा विचित्रकवचध्वजाः ।
अभ्यद्रवन्त संग्रामे योद्धुकामारिमर्दनाः ॥ ६-८८-१६ (४२६३०)
महोदरस्तु समरे भीमं विव्याध पत्रिभिः ।
नवभिर्वज्रसंकाशैर्नमुचिं वृत्रहा यथा ॥ ६-८८-१७ (४२६३१)
आदित्यकेतुः सप्तत्या बह्वाशी चापि पञ्चभिः ।
नवत्या कुण्डधारश्च विशालाक्षश्च पञ्चभिः ॥ ६-८८-१८ (४२६३२)
अपराजितो महाराज पराजिष्णुर्महारथम् ।
शरैर्बहुभिरानर्च्छद्भीमसेनं महाबलम् ॥ ६-८८-१९ (४२६३३)
रणे पण्डितकश्चैनं त्रिभिर्बाणैः समार्पयत् ।
स तं न ममृषे भीमः शत्रुभिर्वधमाहवे ॥ ६-८८-२० (४२६३४)
धनुः प्रपीड्य वामेन करेणामित्रकर्सनः ।
शिरश्चिच्छेद समरे शरेणानतपर्वणा ॥ ६-८८-२१ (४२६३५)
अपराजितस्य सुनसं तव पुत्रस्य संयुगे ।
पराजितस्य भीमेन कृत्तं गामपतच्छिरः ॥ ६-८८-२२ (४२६३६)
अथापरेण भल्लेन कुण्डधारं महारथम् ।
प्राहिणोन्मृत्युलोकाय सर्वलोकस्य पश्यतः ॥ ६-८८-२३ (४२६३७)
ततः पुनरमेयात्मा प्रसंधाय शिलीमुखम् ।
प्रेषयामास समरे पण्डितं प्रति भारत ॥ ६-८८-२४ (४२६३८)
स शरः पण्डितं हत्वा विवेश धरणीतलम् ।
यथा नरं निहत्याशु भुजगः कालचोदितः ॥ ६-८८-२५ (४२६३९)
विशालाक्षशिरश्छित्त्वा पातयामास भूतले ।
त्रिभिः शरैरदीनात्मा स्मरन्क्लेशं पुरातनम् ॥ ६-८८-२६ (४२६४०)
महोदरं महेष्वासं नाराचेन स्तनान्तरे ।
विव्याध समरे राजन्स हतो न्यपतद्भुवि ॥ ६-८८-२७ (४२६४१)
आदित्यकेतोः केतुं च च्छित्त्वा बाणेन संयुगे ।
भल्लेन भृशतीक्ष्णेन शिरश्चिच्छेद भारत ॥ ६-८८-२८ (४२६४२)
बह्वाशिनं तत भीमः शरेणानतर्वणा ।
प्रेषयामास संक्रुद्धो यमस्य सदनं प्रति ॥ ६-८८-२९ (४२६४३)
प्रदुद्रुवुस्ततस्तेऽन्ये पुत्रास्तव विशांपते ।
मन्यमाना हि तत्सत्यं सभायां तस्य भाषितम् ॥ ६-८८-३० (४२६४४)
ततो दुर्योधनो राजा भ्रातृव्यसनकर्शितः ।

अब्रवीत्तावकान्योधान्भीमोऽयं वध्यतामिति ॥ ६-८८-३१ (४२६४५)
एवमेते महेष्वासाः पुत्रास्त्व विशांपते ।
भ्रातॄन्संदृश्य निहतान्प्रस्मरंस्ते हि तद्वचः ॥ ६-८८-३२ (४२६४६)
यदुक्तवान्महाप्राज्ञः क्षत्ता हितमनामयम् ।
तदिदं समनुप्राप्तं वचनं दिव्यदर्शिनः ॥ ६-८८-३३ (४२६४७)
लोभमोहसमाविष्टः पुत्रप्रीत्या जनाधिप ।
न बुध्यसे पुरा यत्तत्तथ्यमुक्तं वचो महत् ॥ ६-८८-३४ (४२६४८)
तथैव च वधार्थाय पुत्राणां पाण्डवो बली ।
नूनं जातो महाबाहुर्यथा हन्ति स्म कौरवान् ॥ ६-८८-३५ (४२६४९)
ततो दुरयोधनो राजा भीष्ममासाद्य संयुगे ।
दुःखेन महताऽऽविष्टो विललाप सुदुःखितः ॥ ६-८८-३६ (४२६५०)
निहता भ्रातरः शूरा भीमसेनेन मे युधि ।
यतमानास्तथान्येऽपि हन्यन्ते सर्वसैनिकाः ॥ ६-८८-३७ (४२६५१)
भवांश्च मध्यस्थतया नित्यमस्मानुपेक्षते ।
सोऽहं कुपथमारूढः पश्य दैवमिदं मम ॥ ६-८८-३८ (४२६५२)
एतच्छ्रुत्वा वचः क्रूरं पिता देवव्रतस्तव ।
दुर्योधनमिदं वाक्यमब्रवीत्समाश्रुलोचनः ॥ ६-८८-३९ (४२६५३)
उक्तमेतन्मया पूर्वं द्रोणेन विदुरेण च ।
गान्धार्या च यशस्विन्या तत्त्वं तात न बुद्धवान् ॥ ६-८८-४० (४२६५४)
समयश्च मया पूर्वं कृतो वै शत्रुकर्शन ।
नाहंयुधि नियोक्तव्यो नाप्याचार्यः कथंचना ॥ ६-८८-४१ (४२६५५)
यय हि धर्तराष्ट्राणां भीमो द्रक्ष्यति संयुगे ।
हनिष्यति रणे नित्यं सत्यमेतद्ब्रवीमि ते ॥ ६-८८-४२ (४२६५६)
स त्वं राजन्स्थिरो भूत्वा रणे कृत्वा दृढां मतिम् ।
योधयस्व रणे पार्थान्स्वर्गं कृत्वा परायणम् ॥ ६-८८-४३ (४२६५७)
न शक्यः पाण्डवा जेतुं सेन्द्रैरपि सुरासुरैः ।
तस्माद्युद्धे स्थिरां कृत्वा मतिं युद्धयस्व भारत ॥ ॥ ६-८८-४४ (४२६५८)

इति श्रीमन्महाभरते भीष्मपर्वणि भीष्मवधपर्वणि
अष्टमदिवसयुद्धे अष्टाशीतितमोऽध्यायः ॥

---

भिस्मपर्व-अध्यय०८९
॥ श्रीः ॥
६.८९. अध्यायः ८९

Mahabharata - Bhishma Parva - Chapter Topics
धृतराष्ट्रेण पुत्रवधश्रवणात् शोचनम् ॥ १ ॥

६-८९-० (४२६५९)
धृतराष्ट्र उवाच। ६-८९-०क्ष् (४१६८)
दृष्ट्वा मे निहतान्पुत्रान्बहूनेकेन सञ्जय ।
भीष्मो द्रोणः कृपश्चैव किमकुर्वत संयुगे ॥ ६-८९-१ (४२६६०)
अहन्यहनि मे पुत्राः क्षयं गच्छन्ति सञ्जय ।
मन्येऽहं सर्वथा पुत्रान्दैवेनोपहतान्भृशम् ॥ ६-८९-२ (४२६६१)
यत्र मे तनयाः सर्वे जीयन्ते न जयन्त्युत ।
यत्र भीष्मस्य द्रोणस्य कृपस्य च महात्मनः ॥ ६-८९-३ (४२६६२)
सौमदत्तेश्च वीरस्य भगदत्तस्य चोभयोः ।
अश्वत्थाम्नस्तथा तात शूराणामनिवर्तिनाम् ॥ ६-८९-४ (४२६६३)
अन्येषां चैव शूराणां मध्यगास्तनया मम ।
यदहन्यन्त संग्रामे किमन्यद्भागधेयतः ॥ ६-८९-५ (४२६६४)
न हि दुर्योधनो मन्दः पुरा प्रोक्तमबुध्यत ।
वार्यमाणो मया तात भीष्मेण विदुरेण च ॥ ६-८९-६ (४२६६५)
गन्धार्या चैव दुर्मेधाः सततं हितकाम्यया ।
नाबुध्यत पुरा मोहात्तस्य प्राप्तमिदं फलम् ॥ ६-८९-७ (४२६६६)
यद्भीमसेनः समरे पुत्रान्मम विचेतसः ।
अहन्यहनि संक्रुद्धो नयते यमसादनम् ॥ ६-८९-८ (४२६६७)
इदं तत्समनुप्राप्तं क्षत्तुर्वचनमुत्तमम् ।
न बुद्धवानस्मि विभो प्रोच्यमानमिदं तदा ॥ ६-८९-९ (४२६६८)
निवारय सुतं द्यूतात्पाण्डवान्मा द्रुहेति च ।
सुहृदां हितकामानां ब्रुवतां तत्तदेव च ॥ ६-८९-१० (४२६६९)
न शृणोमि पुरा वाक्यं मर्त्यः पथ्यमिवौषधम् ।
तदिदं समनुप्राप्तं वचनं साधु भाषितम् ॥ ६-८९-११ (४२६७०)
विदुरद्रोणभीष्माणां तथाऽन्येषां हितैषिणाम् ।
अकृत्वा वचनं पथ्यं क्षयं गच्छन्ति कौरवाः ॥ ६-८९-१२ (४२६७१)
तदेतत्समतिक्रान्तं पूर्वमेव हि सञ्जय ।
तस्मान्मे वद तत्त्वेन यथा युद्धमवर्तत ॥ ६-८९-१३ (४२६७२)
सञ्जय उवाच। ६-८९-१४क्ष् (४१६९)
मध्याह्ने सुमहारौद्रः संग्रामः समपद्यत ।
लकक्षयकरो राजंस्तन्मे निगदतः शृणु ॥ ६-८९-१४ (४२६७३)
ततः सर्वाणि सैन्यानि धर्मपुत्रस्य शासनात् ।
संरब्धान्यभ्यवर्तन्त भीष्ममेव जिघांसया ॥ ६-८९-१५ (४२६७४)

धृष्टद्युम्नः शिखण्डी च सात्यकिश्च महारथः ।
युक्तानीका महाराज भीष्ममेव समभ्ययुः ॥ ६-८९-१६ (४२६७५)
विराटो द्रुपदश्चैव सहिताः सर्वसोमकैः ।
अभ्यद्रवन्त संग्रामे भीष्ममेव महारथम् ॥ ६-८९-१७ (४२६७६)
केकया धृष्टकेतुश्च कुन्तिभोजश्च दंशितः ।
शुक्तानीका महाराज भीष्ममेव समभ्ययुः ॥ ६-८९-१८ (४२६७७)
अर्जुनो द्रौपदश्चैव कुन्तिभोजश्च दंशितः ।
दुर्योधनसमादिष्टान्राज्ञः सर्वान्समभ्ययुः ॥ ६-८९-१९ (४२६७८)
अभिमन्युस्तथा शूरो हैडिम्बश्च महारथः ।
भीमसेनश्च संक्रुद्धस्तेऽभ्यधावन्त कौरवान् ॥ ६-८९-२० (४२६७९)
त्रिधाभूतैरवध्यन्त पाण्डवैः कौरवा युधि ।
तथैव कौरवै राजन्नवध्यन्त परे रणे ॥ ६-८९-२१ (४२६८०)
द्रोणस्तु रथिनां श्रेष्ठः सोमकान्सृञ्जयैः सह ।
अभ्यधावत संक्रुद्धः प्रेषयिष्यन्यमक्षयम् ॥ ६-८९-२२ (४२६८१)
तत्राक्रन्दो महानासीत्सृञ्जयानां महात्मानाम् ।
वध्यतां समरे राजन्भारद्वाजेन धन्विना ॥ ६-८९-२३ (४२६८२)
द्रोणेन निहतास्तत्र क्षत्रिया बहवो रणे ।
विचेष्टन्तो ह्यदृश्यन्त व्याधिक्लिष्टा वरा इव ॥ ६-८९-२४ (४२६८३)
कूजतां क्रन्दतां चैव स्तनतां चैव भारत ।
अनिशं शुश्रुवे शब्दः क्षुत्क्लिष्टानां नृणामिव ॥ ६-८९-२५ (४२६८४)
तथैव कौरवेयाणां भीमसेनो महाबलः ।
चकार कदनं घोरं क्रुद्धः काल इवापरः ॥ ६-८९-२६ (४२६८५)
वध्यतां तत्र सैन्यानामन्योन्येन महारणे ।
प्रावर्तत नदी घोरा रुधिरौघपरवाहिनी ॥ ६-८९-२७ (४२६८६)
स संग्रामो महाराज घोररूपोऽभवन्महान् ।
कुरूणां पाणडवानां च यमराष्ट्रविवर्धनः ॥ ६-८९-२८ (४२६८७)
ततो भीमो रणे क्रुद्धो रभसश्च विशेषतः ।
गजानीकं समासाद्य प्रेषयामास मृत्यवे ॥ ६-८९-२९ (४२६८८)
तत्र भारत भीमेन नाराचाभिहता गजाः ।
पेतुर्नेदुश्च सेदुश्च दिशश्च परिबभ्रमुः ॥ ६-८९-३० (४२६८९)
छिन्नहस्ता महानागाश्छिन्नगात्राश्च मारिष ।
क्रौञ्चवद्व्यनदन्भीताः पृथिवीमधिशेरते ॥ ६-८९-३१ (४२६९०)
नकुलः सहदेवश्च हयानीकमभिद्रुतौ ।
ते हयाः काञ्चनापीडा रुक्मभाण्डपरिच्छदाः ॥ ६-८९-३२ (४२६९१)
वध्यमाना व्यदृश्यन्त शतशोऽथ सहस्रशः ।
पतद्भिस्तुरगै राजन्समास्तीर्यत मेदिनी ॥ ६-८९-३३ (४२६९२)

निर्जिह्वैश्च श्वसद्भिश्च कूजद्भिश्च गतासुभिः ।
हयैर्बभौ नरश्रेष्ठ नानारूपधरैर्धरा ॥ ६-८९-३४ (४२६९३)
अर्जुनेन हतैः सङ्ख्ये तथा भारत राजभिः ।
प्रबभौ वसुधा घोरा तत्रतत्र विशांपते ॥ ६-८९-३५ (४२६९४)
रथैर्भग्नैर्ध्वजैश्छिन्नैर्निकृत्तैश्च महायुधैः ।
चामरैर्व्यजनैश्चैव च्छत्रैश्च सुमहाप्रभैः ॥ ६-८९-३६ (४२६९५)
हरैर्निष्कैः सकेयूरैः शिरोभिश्च सकुण्डलैः ।
उष्णीषैरपविद्धैश्च पताकाभिश्च सर्वशः ॥ ६-८९-३७ (४२६९६)
अनुकर्षैः शुभै राजन्योक्त्रैश्चैव सरश्मिभिः ।
संकीर्णा वसुधा भाति वसन्ते कुसुमैरिव ॥ ६-८९-३८ (४२६९७)
एवमेष क्षयो वृत्तः पाण्डूनामपि भारत ।
क्रुद्धे शान्तनवे भीष्मे द्रोणे च रथसत्तमे ॥ ६-८९-३९ (४२६९८)
अश्वत्थाम्नि कृपे चैव तथैव कृतवर्मणि ।
तथेतरेषु क्रुद्धेषु तावकानामपि क्षयः ॥ ॥ ६-८९-४० (४२६९९)

इति श्रीमन्महाभरते भीष्मपर्वणि भीष्मवधपर्वणि
अष्टमदिवसयुद्धे एकोननवतितमोऽध्यायः ॥
Mahabharata - Bhishma Parva - Chapter Footnotes

६-८९-२५ कूजतां अव्यक्तं ध्वनताम् ।स्तनतां उच्चैः शब्दायमानानाम् ॥
६-८९-३७ निष्कैरुरोभूषणैः ॥
६-८९-३८ योक्त्रैरीषायोजनरज्जुभिः रश्मिभिरश्वबन्धनरज्जुभिः ॥

---

भिस्मपर्व-अध्यय०९०
॥ श्रीः ॥
६.९०. अध्यायः ९०

Mahabharata - Bhishma Parva - Chapter Topics
अर्जुनात्मजेन इरावता शकुनेरनुजानां वधः ॥ १ ॥
आर्श्यशृङ्गिनाम्ना राक्षसेन इरावतो वधः ॥ २ ॥

Mahabharata - Bhishma Parva - Chapter Text

६-९०-० (४२७००)
सञ्जय उवाच। ६-९०-०क्ष् (४१७०)
वर्तमाने तथा रौद्रे राजन्वीरवरक्षये ।
शकुनिः सौबलः श्रीमान्पाण्डवान्समुपाद्रवत् ॥ ६-९०-१ (४२७०१)

तथैव सात्वतो राजन्हार्दिक्यः परवीरहा ।
अभ्यद्रवत संग्रामे पाण्डवानां वरूथिनीम् ॥ ६-९०-२ (४२७०२)
ततः काम्भोजमुख्यानां नदीजानां च वाजिनाम् ।
आरट्टानां महीजानां सिन्धुजानां च सर्वशः ॥ ६-९०-३ (४२७०३)
वनायुजानां शुभ्राणां तथा पर्वतवासिनाम् ।
वाजिनां बहुभिः सङ्ख्ये समन्तात्परिवारयन् ॥ ६-९०-४ (४२७०४)
ये चापरे तित्तिरिजा जवना वातरंहसः ।
सुवर्णालङ्कृतैरेतैर्वर्मवद्भिः सुकल्पितैः ॥ ६-९०-५ (४२७०५)
हयैर्वातजवैर्मुख्यैः पाण्डवस्य सुतो बली ।
अभ्यवर्तत तत्सैन्यं हृष्टरूपः परंतपाः ॥ ६-९०-६ (४२७०६)
अर्जुनस्य सुतः श्रीमानिरावान्नाम वीर्यवान् ।
सुतायां नागराजस्य जातः पार्थेन धीमता ॥ ६-९०-७ (४२७०७)
ऐरावतेन सा दत्ता अनपत्या महात्मना ।
पत्यौ हते सुपर्णेन कृपणा दीनचेतना ॥ ६-९०-८ (४२७०८)
कार्यार्थं तां च जग्राह पार्थः कामवशानुगाम् ।
एवमेष समुत्पन्नः परक्षेत्रेऽर्जुनात्मजः ॥ ६-९०-९ (४२७०९)
स नागलोके संवृद्धो मात्रा च परिरक्षितः ।
पितृव्येण परित्यक्तः पार्थद्वेषाद्दुरात्मना ॥ ६-९०-१० (४२७१०)
खमुत्पत्य महाराज नागराट् सत्यविक्रमः ।
इन्द्रलोकं जगामाशु श्रुत्वा तत्रार्जुनं गतम् ॥ ६-९०-११ (४२७११)
सोऽभिगम्य महाबाहुः पितरं सत्यविक्रमः ।
अभ्यवादयदव्यग्रो विनयेन कृताञ्जलिः ॥ ६-९०-१२ (४२७१२)
न्यवेदयत चात्मानमर्जुनस्य महात्मनः ।
इरावानस्मि भद्रं ते पुत्रश्चाहं तव प्रभो ॥ ६-९०-१३ (४२७१३)
मातुः समागमो यश्च तत्सर्वं प्रत्यवेदयत् ।
तच्च सर्वं यथावृत्तमनुसस्मार पाण्डवः ॥ ६-९०-१४ (४२७१४)
परिष्वज्य सुतं चापि आत्मनः सदृशं गुणैः ।
प्रीतिमाननयत्पार्थो देवराजनिवेशनम् ॥ ६-९०-१५ (४२७१५)
सोऽर्जुनेन समाज्ञप्तो देवलोके तदा नृप ।
प्रीतिपूर्वं महाबाहुः स्वकार्यं प्रति भारत ॥ ६-९०-१६ (४२७१६)
ग्स चापि नरशार्दूलः शार्दूलसमविक्रमः।'
अब्रवीच्च तदा पार्थमयमस्मि तवानघ ॥ ६-९०-१७ (४२७१७)
स्थितः प्रेष्यश्च पुत्रश्च सर्वथा त्वं प्रशाधि माम् ।
कं करोमि च ते कामं कं च कामं त्वमिच्छसि ॥ ६-९०-१८ (४२७१८)
परिष्वज्य सुतं प्रेम्णा वासविः प्रत्युवाच तम् ।
प्रीतिपूर्वं च कार्यं च कार्या प्रीतिश्च मानदः ॥' ६-९०-१९ (४२७१९)

युद्धकाले तु साहाय्यं दातव्यं नो भवेदिति ।
बाढमित्येवमुक्त्वा तु युद्धकाल इहागतः ॥ ६-९०-२० (४२७२०)
कामवर्णजवैरश्वैः सर्वतः शुशुभे वृतः ।
ते हयाः काञ्चनापीडा नानावर्णा मनोजवाः ॥ ६-९०-२१ (४२७२१)
उत्पेतुः सहसा राजन्हंसा इव महोदधौ ।
ते त्वदीयान्समासाद्य हयसंघान्मनोजवान् ॥ ६-९०-२२ (४२७२२)
क्रोडैः क्रोडानभिघ्नन्तो घोणाभिश्च परस्परम् ।
निपेतुः सहसा राजन्सुवेगाभिहता भुवि ॥ ६-९०-२३ (४२७२३)
निपतद्भिस्तथा तैश्च हयसङ्घैः परस्परम् ।
शुश्रुवे दारुणः शब्दः सुपर्णपतने यथा ॥ ६-९०-२४ (४२७२४)
तथैव तावका राजन्समेत्यान्योन्यमाहवे ।
परस्परवधं घोरं चक्रुस्ते हयसादिनः ॥ ६-९०-२५ (४२७२५)
तस्मिंस्तथा वर्तमाने संकुले तुमुले भृशम् ।
उभयोरपि संशान्ता हयसङ्घाः समन्ततः ॥ ६-९०-२६ (४२७२६)
प्रक्षीणसायकाः शूरा निहताश्वाः श्रमातुराः ।
विलयं समनुप्राप्तास्तक्षमाणाः परस्परम् ॥ ६-९०-२७ (४२७२७)
ततः क्षीणे हयानिके किंचिच्छेषे च भारत ।
सौबलस्यानुजाः शूरा निर्गता रणमूर्धनि ॥ ६-९०-२८ (४२७२८)
वायुवेगसमस्पर्शाञ्जवे वायुसमांश्च ते ।
आरुह्य बलसंपन्नान्वयःस्थांस्तुरगोत्तमान् ॥ ६-९०-२९ (४२७२९)
गजो गवाक्षो वृषकश्चर्मवानार्जयः शुकः ।
षडेते बलसंपन्ना निर्ययुर्महतो बलात् ॥ ६-९०-३० (४२७३०)
वार्यमाणाः शकुनिना स्वैश्च योधैर्महाबलैः ।
सन्नद्धा युद्धकुशला रौद्ररूपा महाबलाः ॥ ६-९०-३१ (४२७३१)
तदनीकं महाबहो भित्त्वा परमदुर्जयम् ।
बलेन महता युक्ताः स्वर्गाय विजयैषिणः ॥ ६-९०-३२ (४२७३२)
विविशुस्ते तदा हृष्टा गान्धारा युद्धदुर्मदाः ।
तान्प्रविष्टांस्तदा दृष्ट्वा इरावानपि वीर्यवान् ॥ ६-९०-३३ (४२७३३)
अब्रवीत्समरे योधान्स्वान्विचित्रहयस्थितान् ।
यथैते धार्तराष्ट्रस्य योधाः सानुगवाहनाः ॥ ६-९०-३४ (४२७३४)
हन्यन्ते समरे सर्वे तथा नीतिर्विधीयताम् ।
बाढमित्येवमुक्त्वा ते सर्वे योधा इरावतः ॥ ६-९०-३५ (४२७३५)
जघ्नुस्तेषां बलानीकं दुर्जयं समरे परैः ।
तदनीकमनीकेन समरे वीक्ष्य पातितम् ॥ ६-९०-३६ (४२७३६)
अमृष्यमाणास्ते सर्वे सुबलस्यात्मजा रणे ।
इरावन्तमभिद्रुत्य सर्वतः पर्यवारयन् ॥ ६-९०-३७ (४२७३७)

ताडयन्तः शितैः प्रासैश्चोदयन्तः परस्परम् ।
ते शूराः पर्यधावन्त कुर्वन्तो महदाकुलम् ॥ ६-९०-३८ (४२७३८)
इरावानथ निर्भिन्नः प्रासैस्तीक्ष्णैर्महात्मभिः ।
स्रवता रुधिरेणाक्तस्तोत्रैर्विद्ध इव द्विपः ॥ ६-९०-३९ (४२७३९)
उरस्यपि च पृष्ठे च पार्श्वयोश्च भृशाहतः ।
एको बहुभिरत्यर्थं धैर्याद्राजन्न विव्यथे ॥ ६-९०-४० (४२७४०)
इरावानपि संक्रुद्धः सर्वास्तान्निशितैः शरैः ।
मोहयामास समरे विद्ध्वा परपुरंजयः ॥ ६-९०-४१ (४२७४१)
प्रासानुत्कृष्य तरसा स्वशरीरादरिन्दमः ।
तैरेव ताडयामास सुबलस्यात्मजान्रणे ॥ ६-९०-४२ (४२७४२)
विकृष्य च शितं खड्गं गृहीत्वा च शरावरम् ।
पदातिर्द्रुतमागच्छज्जिघांसुः सौबलान्युधि ॥ ६-९०-४३ (४२७४३)
ततः प्रत्यागतप्राणाः सर्वे ते सुबलात्मजाः ।
भूयः क्रोधसमाविष्टा इरावन्तमभिद्रुताः ॥ ६-९०-४४ (४२७४४)
इरावानपि खड्गेन दर्शयन्पाणिलाघवम् ।
अभ्यवर्तत देवांश्च मानुषांश्चैव संयुगे ॥ ६-९०-४५ (४२७४५)
लाघवेनाथ चरतः सर्वे ते सुबलात्मजाः ।
अन्तरं नाभ्यगच्छन्त चरन्तः शीघ्रगैर्हयैः ॥ ६-९०-४६ (४२७४६)
भूमिष्ठमथ तं सङ्ख्ये ह्यन्तरिक्षादवप्लुतम् ।
परिवार्य भृशं सर्वे ग्रहीतुमुपचक्रमुः ॥ ६-९०-४७ (४२७४७)
अथाभ्याशगतानां तेषां गात्राण्यकृन्तत ।
असिहस्तोऽस्त्रहस्तानां तेषां गात्राण्यकृन्तत ॥ ६-९०-४८ (४२७४८)
आयुधानि च सर्वेषां बाहूनपि विभूषितान् ।
अपतन्त निकृत्ताङ्गा मृता भूमौ गतासवः ॥ ६-९०-४९ (४२७४९)
वृषकस्तु महाराज बहुधा विपरिक्षतः ।
अमुच्यत महारौद्रात्तस्माद्वीरावकर्तनात् ॥ ६-९०-५० (४२७५०)
तान्सर्वान्पतितान्दृष्ट्वा भीतो दुर्योधनस्ततः ।
अभ्यधावत संक्रुद्धो राक्षसं घोरदर्शनम् ॥ ६-९०-५१ (४२७५१)
आर्श्यशृङ्गिं महेष्वासं मायाविनमरिन्दमम् ।
वैरिणं भीमसेनस्य पूर्वं बकवधेन वै ॥ ६-९०-५२ (४२७५२)
पश्य वीर यथा ह्येष फल्गुनस्य सुतो बली ।
मायावी विप्रियं कर्तुमकार्षीन्मे बलक्षयम् ॥ ६-९०-५३ (४२७५३)
त्वं च कामगमस्तात मायास्त्रे च विशारदः ।
कृतवैरश्च पार्थेन तस्मादेनं रणे जहि ॥ ६-९०-५४ (४२७५४)
बाढमित्येवमुक्त्वा तु राक्षसो घोरदर्शनः ।
प्रययौ सिंहनादेन यत्रार्जुनसुतो युवा ॥ ६-९०-५५ (४२७५५)

स योधैर्युद्धकुशलैर्विमलप्रासयोधिभिः ।
वीरैः प्रहारिभिर्युक्तैः स्वैरनीकैः समावृतः ॥ ६-९०-५६ (४२७५६)
श्हतशेषैर्महाराज द्विसाहस्त्रैर्हयोत्तमैःघ
निहन्तुकामः समरे इरावन्तं महाबलम् ॥ ६-९०-५७ (४२७५७)
इरावानपि संक्रुद्धस्त्वरमाणः पराक्रमी
हन्तुकाममयित्रघ्नो राक्षसं प्रत्यवारयत् ॥ ६-९०-५८ (४२७५८)
तमापतन्तं संप्रेक्ष्य राक्षसः सुमहाबलः ।
त्वरमाणस्ततो मायां प्रयोक्तुमुपचक्रमे ॥ ६-९०-५९ (४२७५९)
तेन मायामयाः सृष्टा हयास्तावन्त एव हि ।
स्वारूढा राक्षसैर्घोरैः शूलपट्टसधारिभिः ॥ ६-९०-६० (४२७६०)
ते संरब्धाः समागम्य द्विसाहस्राः प्रहारिणः ।
अचिराद्गमयामासुः प्रेतलोकं परस्परम् ॥ ६-९०-६१ (४२७६१)
तस्मिंस्तु निहते सैन्ये तावुभौ युद्धदुर्मदौ ।
संग्रामे समतिष्ठेतां यथा वै वृत्रवासवौ ॥ ६-९०-६२ (४२७६२)
आद्रवन्तमभिप्रेक्ष्य राक्षसं युद्धदुर्मदम् ।
इरावाथ संरब्धः प्रत्यधावन्महाबलः ॥ ६-९०-६३ (४२७६३)
समभ्याशगतस्याजौ तस्य खङ्गेन दुर्मदः ।
चिच्छेद कार्मुकं दीप्तं शरवापं च कञ्चुकम् ॥ ६-९०-६४ (४२७६४)
स निकृत्तं धनुर्दृष्ट्वा खं जवेन समाविशत् ।
इरावन्तमभिक्रुद्धं मोहयन्निव मायया ॥ ६-९०-६५ (४२७६५)
ततोऽन्तरिक्षमुत्पत्य इरावानपि राक्षसम् ।
विमोहयित्वा मायाभिसत्स्य गात्रामि सायकैः ॥ ६-९०-६६ (४२७६६)
चिच्छेद सर्वमर्मज्ञः कामरूपो दुरासदः ।
तथा स राक्षसश्रेष्ठः शरैः कृत्तः पुनः पुनः ॥ ६-९०-६७ (४२७६७)
संबभूव महाराज समवाप च यौवनम् ।
माया हि सहराज समवाप च यौवनम् ॥ ६-९०-६८ (४२७६८)
एवं तद्राक्षसस्याङ्गं छिन्नंछिन्नं व्यरोहत ।
इरावानपि संक्रुद्धो राक्षसं त महाबलम् ॥ ६-९०-६९ (४२७६९)
परश्वथेन तीक्ष्णेन चिच्छेद च पुनः पुनः ।
स तेन बलिना वीरश्छिद्यमान इव द्रुमः ॥ ६-९०-७१अराक्षसो
व्यनदद्धोरं स शब्दस्तुमुलोऽभवत् ।
परश्वथक्षतं रक्षः सुस्राव बहुशोणितम् ॥ ६-९०-७० (४२७७०)
ततश्चुक्रोध बलवांश्चक्रे वेगं च संयुगे ।
आर्श्यशृङ्गिस्ततो दृष्ट्वा समरे शत्रुमूर्चितम् ॥ ६-९०-७२ (४२७७१)
कृत्वा घोरं महद्रूपं ग्रहीतुमुपचक्रमे ।
अर्जुनस्य सुतं वीरमिरावन्तं यशस्विनम् ॥ ६-९०-७३ (४२७७२)

संग्रामशिरसो मध्ये सर्वेषां तत्र पश्यताम् ।
तां दृष्ट्वा तादृशीं मायां राक्षसस्य दुरात्मनः ॥ ६-९०-७४ (४२७७३)
इरावानपि संक्रुद्धो मायां स्रष्टुं प्रचक्रमे ।
तस्य क्रोधाभिभूतस्य समरेष्वनिवर्तिनः ॥ ६-९०-७५ (४२७७४)
योऽन्वयो मातृकस्तस्य स एनमभिपेदिवान् ।
स नागैर्बहुभी राजन्निरावान्संवृतो रणे ॥ ६-९०-७६ (४२७७५)
दधार सुमहद्रूपमनन्त इव भोगवान् ।
ततो बहुविधैर्नागैश्छादयामास राक्षसम् ॥ ६-९०-७७ (४२७७६)
छाद्यमानस्तु नागैः स ध्यात्वा राक्षसपुङ्गवः ।
सौपर्णं रूपमास्थाय भक्षयामास पन्नगम् ॥ ६-९०-७८ (४२७७७)
मायया भक्षिते तस्मिन्नन्वये तस्य मातृके ।
विमोहितमिरावन्तं न्यहनद्राक्षसोऽसिना ॥ ६-९०-७९ (४२७७८)
सकुण्डलं समुकुटं पद्मेन्दुसदृशप्रभम् ।
इरावतः शिरो रक्षः पातयामास भूतले ॥ ६-९०-८० (४२७७९)
तस्मिंस्तु निहते वीरे राक्षसेनार्जुनात्मजे ।
विशोकाः समपद्यन्त धार्तराष्ट्राः सराजकाः ॥ ६-९०-८१ (४२७८०)
तस्मिन्महति संग्रामे तादृशे भैरवे पुनः ।
महान्व्यतिकरो घोरः सेनयोः समपद्यत ॥ ६-९०-८२ (४२७८१)
गजा हयाः पदाताश्च विमिश्रा दन्तिभिर्हताः ।
रथाश्वा दन्तिनश्चैव पत्तिभिस्तत्र सूदिताः ॥ ६-९०-८३ (४२७८२)
तथा पत्तिरथौघाश्च हयाश्च बहवो रणे ।
रथिभिर्निहता राजंस्तव तेषां च संकुले ॥ ६-९०-८४ (४२७८३)
अजानन्नर्जुनश्चापि निहतं पुत्रमौरसम् ।
जघान समरे शूरान्राज्ञस्तान्भीष्मरक्षिणः ॥ ६-९०-८५ (४२७८४)
तथैव तावका राजन्सृञ्जयाश्च सहस्रशः ।
जुह्वतः समरे प्राणान्निजघ्नुरितरेतरम् ॥ ६-९०-८६ (४२७८५)
मुक्तकेशा विकवचा विरथाश्छिन्नकार्मुकाः ।
बाहुभिः समयुध्यन्त समवेताः परस्परम् ॥ ६-९०-८७ (४२७८६)
तथा मर्मातिगैर्भीष्मो निजघान महारथान् ।
कम्पयन्समरे सेनां पाण्डवानां परंतपः ॥ ६-९०-८८ (४२७८७)
तेन यौधिष्ठिरे सैन्ये बहवो मानवा हताः ।
दन्तिनः सादिनश्चैव रथिनोऽथ हयास्तथा ॥ ६-९०-८९ (४२७८८)
तत्र भारत भीष्मस्य रणे दृष्ट्वा पराक्रमम् ।
अत्यद्भुतमपश्याम शक्रस्येव पराक्रमम् ॥ ६-९०-९० (४२७८९)
तथैव भीमसेनस्य पार्षतस्य च भारत ।
रौद्रमासीद्रणे युद्धं सात्यकस्य च धन्विनः ॥ ६-९०-९१ (४२७९०)

दृष्ट्वा द्रोणस्य विक्रान्तं पाण्डवान्भयमाविशत् ।
एक एव रणे शक्तो निहन्तुं सर्वसैनिकान् ॥ ६-९०-९२ (४२७९१)
किं पुनः पृथिवीशूरैर्योधव्रातैः समावृतः ।
इत्यब्रुवन्महाराज रणे द्रोणेन पीडिताः ॥ ६-९०-९३ (४२७९२)
वर्तमाने तथा रौद्रे संग्रामे भरतर्षभ ।
उभयोः सेनयोः शूरा नामृष्यन्त परस्परम् ॥ ६-९०-९४ (४२७९३)
आविष्टा इव युध्यन्ते रक्षोभूतैर्महाबलैः ।
तावकाः पाण्डवेयाश्च संरब्धास्तात धन्विनः ॥ ६-९०-९५ (४२७९४)
न स्म पश्यामहे कंचित्प्राणान्यः परिरक्षति ।
दैवासुराभे समरे तस्मिन्योधा नराधिप ॥ ॥ ६-९०-९६ (४२७९५)

इति श्रीमन्महाभारते भीष्मपर्वणि भीष्मवधपर्वणि
अष्टमदिवसयुद्धे नवतितमोऽध्यायः ॥
Mahabharata - Bhishma Parva - Chapter Footnotes

६-९०-३ वाजिनां वेगवतां वाजिनामश्वानां बहुभिर्गणैः परिवारयन्निति
गणशब्दाध्याहारेण द्वयोः संबन्धः ॥
६-९०-६ पाण्डवस्यार्जुनस्य सुत इरावान् ॥
६-९०-७ नागराजस्य ऐरावतस्य ॥
६-९०-१० पितृव्येण अश्वसेनेन ॥
६-९०-५७ अयमर्धः श्लोको दाक्षिणात्यकोशेषु नास्ति खो झो पुस्तकयोरस्ति ॥
६-९०-९५ आविष्टाः ग्रहाद्याविष्टाः ॥

---

भिस्मपर्व-अध्यय०९१
॥ श्रीः ॥
६.९१. अध्यायः ९१

Mahabharata - Bhishma Parva - Chapter Topics
दुर्योधनघटोत्कचयोर्युद्धम् ॥ १ ॥

Mahabharata - Bhishma Parva - Chapter Text

६-९१-० (४२७९६)
धृतराष्ट्र उवाच। ६-९१-०क्ष् (४१७१)
इरावन्तं तु निहतं दृष्ट्वा पार्था महारथाः ।
संग्रामे किमकुर्वन्त तन्ममाचक्ष्व सञ्जय ॥ ६-९१-१ (४२७९७)

सञ्जय उवाच। ६-९१-२क्ष् (४१७२)
इरावन्तं तु निहतं संग्रामे वीक्ष्य राक्षसः ।
व्यनदत्सुमहानादं भैमसेनिर्घटोत्कचः ॥ ६-९१-२ (४२७९८)
नदतस्तस्य शब्देन पृथिवी सागराम्बरा ।
सपर्वतवना राजंश्चचाल सुभृशं तदा ॥ ६-९१-३ (४२७९९)
अन्तरिक्षं दिशश्चैव सर्वाश्च प्रदिशस्तथा ।
ग्चेलुश्च सहसा तत्र तेन नादेन नादिताः' ६-९१-४ (४२८००)
तं श्रुत्वा सुमहानादं तव सैन्यस्य भारत ॥
ऊरुस्तम्भः समभवद्वेपथुः स्वेद एव च। ६-९१-५ (४२८०१)
सर्व एव महाराज तावका दीनचेतसः ॥
सर्वतः समचेष्टन्त सिंहभीता गजा इव । ६-९१-६ (४२८०२)
नर्दित्वा सुमहानादं निर्घातमिव राक्षसः ॥
ज्वलितं शूलमुद्यम्य रूपं कृत्वा विभीषणम् । ६-९१-७ (४२८०३)
नानारूपप्रहरणैर्वृतो राक्षसपुङ्गवैः ॥
आजघान सुसंक्रुद्धः कालान्तकयमोपभः । ६-९१-८ (४२८०४)
तमापतन्तं संप्रेक्ष्य संक्रुद्धं भीमदर्शनम् ॥
स्वबलं च भयात्तस्य प्रायशो विमुखीकृतम् । ६-९१-९ (४२८०५)
ततो दुर्योधनो राजा घटोत्कचमुपाद्रवत् ॥
प्रगृह्य विपुलं चापं सिंहवद्विनदन्मुहुः । ६-९१-१० (४२८०६)
पृष्ठतोऽनुययौ चैनं स्रवद्भिः पर्वतोपमैः ॥
कुञ्जरैर्दशसाहस्रैर्वङ्गानामधिपः स्वयम् ॥ ६-९१-११ (४२८०७)
पुत्रं तव महाराज चुकोप स निशाचरः ।
ततः प्रववृते युद्धं तुमुलं रोमहर्षणम् ॥ ६-९१-१२ (४२८०८)
राक्षसानां च राजेन्द्र दुर्योधनबलस्य च ।
गजानीकं च संप्रेक्ष्य मेघबृन्दमिवोदितम् ॥ ६-९१-१३ (४२८०९)
अभ्यधावन्त संक्रुद्धा राक्षसाः शस्त्रपाणयः ।
नदन्तो विविधान्नादान्मेघा इव सविद्युतः ॥ ६-९१-१४ (४२८१०)
शरशक्त्यृष्टिनाराचैर्निघ्नन्तो गजयोधिनः ।
भिण्डिपालैस्तथा शूलैर्मुद्गरैः सपरश्वधैः ॥ ६-९१-१५ (४२८११)
पर्वताग्रैश्च वृक्षैश्च निजघ्नुस्ते महागजान् ।
भिन्नकुम्भान्विरुधिरान्भिन्नगात्रांश्च वारणान् ॥ ६-९१-१६ (४२८१२)
अपश्याम महाराज वध्यमानान्निशाचरैः ।
तेषु प्रक्षीयमाणेषु भग्नेषु गजयोधिषु ॥ ६-९१-१७ (४२८१३)
दुर्योधनो महाराज राक्षसान्समुपाद्रवत् ।
अमर्षवशमापन्नस्त्यक्त्वा जीवितात्मनः ॥ ६-९१-१८ (४२८१४)
मुमोच निशितान्बाणान्राक्षसेषु परंतप ।

जघान च महेष्वासः प्रधानांस्तत्र राक्षसान् ॥ ६-९१-१९ (४२८१५)
संक्रुद्धो भरतश्रेष्ठ पुत्रो दुर्योधनस्तव ।
वेगवन्तं महारौद्रं विद्युज्जिह्वं प्रमाथिनम् ॥ ६-९१-२० (४२८१६)
शरैश्चतुर्भिश्चतुरो निजघान महाबलः ।
ततः पुनरमेयात्मा शरवर्षं दुरासदम् ॥ ६-९१-२१ (४२८१७)
मुमोच भरतश्रेष्ठो निशाचरबलं प्रति ।
तत्तु दृष्ट्वा महत्कर्म पुत्रस्य तव मारिष ॥ ६-९१-२२ (४२८१८)
क्रोधेनाभिप्रजज्वाल भैमसेनिर्महाबलः ।
स विष्फार्य महच्चापमिन्द्राशनिसमप्रभम् ॥ ६-९१-२३ (४२८१९)
अभिदुद्राव वेगेन दुर्योधनमरिन्दमम् ।
तमापतन्तमुद्वीक्ष्य कालसृष्टमिवान्तकम् ॥ ६-९१-२४ (४२८२०)
न विव्यथे महाराज पुत्रो दुर्योधनस्तव ।
अथैनमब्रवीत्क्रुद्धः क्रूरः संरक्तलोचनः ॥ ६-९१-२५ (४२८२१)
घटोत्कच उवाच। ६-९१-२६क्ष् (४१७३)
अद्यानृण्यं गमिष्यामि पितॄणां मातुरेव च ।
ये त्वया सुनृशंसेन दीर्घकालं प्रवासिताः ॥ ६-९१-२६ (४२८२२)
यच्च ते पाण्डवा राजंश्छलद्यूते पराजिताः ।
यच्चैव द्रौपदी कृष्णा एववस्त्रा रजस्वला ॥ ६-९१-२७ (४२८२३)
सभामानीय दुर्बुद्धे बहुधा क्लेशिता त्वया ।
तव च प्रियकामेन आश्रमस्था दुरात्मना ॥ ६-९१-२८ (४२८२४)
सैन्धवेन परामृष्टा परिभूय पितॄन्मम ।
एतेषामपमानानामन्येषां च कुलाधम ॥ ६-९१-२९ (४२८२५)
अन्तमद्य गमिष्यामि यदि नोत्सृजसे रणम् ।
एवमुक्त्वा तु हैडिम्बो महद्विष्फार्य कार्मुकम् ॥ ६-९१-३० (४२८२६)
संदश्य दशनैरोष्ठं सृकिणी परिसंलिहन् ।
शरवर्षेण महता दुर्योधनमवाकिरत् ।
पर्वतं वारिधाराभिः प्रावृषीव बलाहकः ॥ ॥ ६-९१-३१ (४२८२७)

इति श्रीमन्महाभारते भीष्मपर्वणि भीष्मवधपर्वणि
अष्टमदिवसयुद्धे एकनवतितमोऽध्यायः ॥

---

भिस्मपर्व-अध्यय०९२
॥ श्रीः ॥
६.९२. अध्यायः ९२

Mahabharata - Bhishma Parva - Chapter Topics
घटोत्कचयुद्धवर्णनम् ॥१ ॥

६-९२-० (४२८२८)
सञ्जय उवाच। ६-९२-०क्ष् (४१७४)
ततस्तद्बाणवर्षं तु दुःसहं दानवैरपि ।
दधार युधि राजेन्द्रो यथा वर्षं महाद्विपः ॥ ६-९२-१ (४२८२९)
ततः क्रोधसमाविष्टो निःश्वसन्निव पन्नगः ।
संशयं परमं प्राप्तः पुत्रस्ते भरतर्षभ ॥ ६-९२-२ (४२८३०)
मुमोच निशितांस्तीक्ष्णान्नाराचान्पञ्चविंशतिम् ।
तेऽपतन्सहसा राजंस्तस्मिन्राक्षसपुङ्गवे ॥ ६-९२-३ (४२८३१)
आशीविषा इव क्रुद्धाः पर्वते गन्धमादने ।
स तैर्विद्धः स्रवन्रक्तं प्रभिन्न इव कुञ्जरः ॥ ६-९२-४ (४२८३२)
दध्रे मतिं विनाशाय राज्ञः स पिशिताशनः ।
जग्राह च महाशक्तिं गिरीणामपि दारिणीम् ॥ ६-९२-५ (४२८३३)
संप्रदीप्तां महोल्काभामशनिं ज्वलितामिव ।
तमागच्छन्महाबाहुर्जिघांसुस्तनयं तव ॥ ६-९२-६ (४२८३४)
तामुद्यतामभिप्रेक्ष्य वङ्गानामधिपस्त्वरन् ।
कुञ्जरं गिरिसंकाशं राक्षसं प्रत्यचोदयत् ॥ ६-९२-७ (४२८३५)
स नागप्रवरेणाजौ बलिना शीघ्रगामिना ।
यतो दुर्योधनरथस्तं मार्गं प्रत्यषेधयत् ॥ ६-९२-८ (४२८३६)
पन्थानं वारयामास कुञ्जरेण सुतस्य ते ।
मार्गमावारितं दृष्ट्वा राज्ञा वङ्गेन धीमता ॥ ६-९२-९ (४२८३७)
घटोत्कचो महाराज क्रोधसंरक्तलोचनः ।
उद्यतां तां महाशक्तिकं तस्मिंश्चिक्षेप वारणे ॥ ६-९२-१० (४२८३८)
स तयाऽभिहतो राजंस्तेन बाहुप्रमुक्तया ।
संजातरुधिरोत्पीडः पपात च ममार च ॥ ६-९२-११ (४२८३९)
पतत्यथ गजे चापि वङ्गानामीश्वरो बली ।
जवेन समभिद्रुत्य जगाम धरणीतलम् ॥ ६-९२-१२ (४२८४०)
दुर्योधोऽपि संप्रेक्ष्य पतितं वरवारणम् ।
प्रभग्नं च बलं दृष्ट्वा जगाम परमां व्यथाम् ॥ ६-९२-१३ (४२८४१)
ग्अशक्तः प्रतियोद्धुं वै दृष्ट्वा तस्य पराक्रमम्।'
क्षत्रधर्मं पुरस्कृत्य आत्मनश्चातिमानिताम् ।
प्राप्तेऽपक्रनये राजा तस्थौ गिरिरिवाचलः ॥ ६-९२-१४ (४२८४२)
राधान च शितं बाणं कालाग्निसमतेजसम् ।
सुयोच धरमक्रुद्धस्तस्मिन्घोरे निशाचरे ॥ ६-९२-१५ (४२८४३)

तमापतन्तं संप्रेक्ष्य वणिमिन्द्राशनिप्रभम् ।
लाघवान्मोचयामास महात्मा वै घटोत्कचः ॥ ६-९२-१६ (४२८४४)
भूयश्च निननादोषं क्रोधसंरक्तलोचनः ।
त्रासयामास रौन्यानि युगन्ते जलदो यथा ॥ ६-९२-१७ (४२८४५)
तं श्रुत्वा निनिदं घोरं तस्व भीमस्य रक्षसः ।
आचार्यमुसंगम्य भीष्मः शान्तनवोऽब्रवीत् ॥ ६-९२-१८ (४२८४६)
यथैव निनन्दो घोरः श्रूयते राक्षसेरितः ।
हैडिम्बो युध्यते नूनं राज्ञा दुर्योधनेन च ॥ ६-९२-१९ (४२८४७)
नैष शक्यो हि संग्रामे जेतुं भूतेन केनचित् ।
तत्र गच्छत भद्रं वो राजानं परिरक्षितुम् ॥ ६-९२-२० (४२८४८)
अभिद्रुत्य महाबाहुं राक्षसेन प्रपीडितम् ।
एतद्धि परमं कृत्यं सर्वेषां नः परंतपाः ॥ ६-९२-२१ (४२८४९)
पितामहवचः श्रुत्वा त्वरमाणा महारथाः ।
उत्तमं जवमास्थाय प्रययुर्यत्र कौरवः ॥ ६-९२-२२ (४२८५०)
द्रोणश्च सोमदत्तश्च बाह्लीकोऽथ जयद्रथः ।
कृपो भिरिश्रवाः शल्य आवन्त्यः स बृहद्बलः ॥ ६-९२-२३ (४२८५१)
अश्वत्थामा विकर्णश्च चित्रसेनो विविंशतिः ।
रथाश्चानेकसाहस्रा ये तेषामनुयायिनः ॥ ६-९२-२४ (४२८५२)
अभिद्रुतं परीप्सन्तः पुत्रं दुर्योधनं तव ।
तदनीकमनाधृष्यं पालितं तु महारथैः ॥ ६-९२-२५ (४२८५३)
पाततायिनमायान्तं प्रेक्ष्य राक्षससत्तमः ।
॥क्रम्पत महाबाहुर्मैनाक इव पर्वतःक ॥ ६-९२-२६ (४२८५४)
प्रगृह्य विपुलं चापं ज्ञातिभिः परिवारितः ।
शूलमुद्गरहस्तैश्च नानाप्रहरणैरपि ॥ ६-९२-२७ (४२८५५)
ततः समभवद्युद्धं तुमुलं रोमहर्षणम् ।
राक्षसानां च मुख्यस्य दुर्योधनबलस्य च ॥ ६-९२-२८ (४२८५६)
धनुषां कूजतां शब्दः सर्वतस्तुमुलो रणे ।
अश्रूयत महाराज वंशानां दह्यतामिव ॥ ६-९२-२९ (४२८५७)
शस्त्राणां पात्यमानानां कवचेषु शरीरिणाम् ।
शब्दः समभवद्राजन्गिरीणामिव भिद्यताम् ॥ ६-९२-३० (४२८५८)
वीरबाहुविसृष्टानां तोमराणां विशांपते ।
रूपमासीद्वियत्स्थानां सर्पाणामिव सर्पताम् ॥ ६-९२-३१ (४२८५९)
ततः परमसंक्रुद्धो विष्फार्य सुमहद्धनुः ।
राक्षसन्द्रो महाबाहुर्विनदन्भैरव रवम् ॥ ६-९२-३२ (४२८६०)
आचार्यस्यार्धचन्द्रेण क्रुद्धश्चिच्छेद कार्मुकम् ।
सोमदत्तस्य भल्लेन ध्वजं चोन्मथ्य चानदत् ॥ ६-९२-३३ (४२८६१)

बाह्लीकं च त्रिभिर्बाणैः प्रत्यविध्यत्स्तनान्तरे ।
कृपमेकेन विव्याध चित्रसेनं त्रिभिः शरैः ॥ ६-९२-३४ (४२८६२)
पूर्णायतविसृष्टेन सम्यक्प्रणिहितेन च ।
जत्रुदेशे समासाद्य विकर्णं समताडयत् ॥ ६-९२-३५ (४२८६३)
न्यषीदत्स्वरथोपस्थे शोणितेन परिप्लुतः ।
ततः पुनरमेयात्मा नाराचान्दश पञ्च च ॥ ६-९२-३६ (४२८६४)
भूरिश्रवसि संक्रुद्धः प्राहिणोद्भरतर्षभ ।
ते वर्म भित्त्वा तस्याशु विविशुर्धरणीतलम् ॥ ६-९२-३७ (४२८६५)
विविंशतेश्च द्रौणेश्च यन्तारौ समताडयत् ।
तौ पेततू रथोपस्थे रश्मीनुत्सृज्य वाजिनाम् ॥ ६-९२-३८ (४२८६६)
सिन्धुराज्ञोऽर्धचन्द्रेण वाराहं स्वर्णभूषितम् ।
उन्ममाथ महाराज द्वितीयेनाच्छिनद्धनुः ॥ ६-९२-३९ (४२८६७)
चतुर्भिरथ नाराचैरावन्त्यस्य महात्मनः ।
जघान चतुरो वाहान्क्रोधसंरक्तलोचनः ॥ ६-९२-४० (४२८६८)
पूर्णायतविसृष्टेन पीतेन निशितेन च ।
निर्बिभेद महाराज राजपुत्रं बृहद्बलम् ॥ ६-९२-४१ (४२८६९)
स गाढविद्धो व्यथितो रथोपस्थ उपाविशत् ।
भृशं क्रोधेन चाविष्टो रथस्थो राक्षसाधिपः ॥ ६-९२-४२ (४२८७०)
चिक्षेप निशितांस्तीक्ष्णाञ्छरानाशीविषोपमान् ।
बिभिदुस्ते महाराज शल्यं युद्धविशारदम् ॥ ॥ ६-९२-४३ (४२८७१)

इति श्रीमन्महाभारते भीष्मपर्वणि भीष्मवधपर्वणि
अष्टमदिवसयुद्धे द्विनवतितमोऽध्यायः ॥
Mahabharata - Bhishma Parva - Chapter Footnotes

---

भिस्मपर्व-अध्यय०९३
॥ श्रीः ॥
६.९३. अध्यायः ९३

Mahabharata - Bhishma Parva - Chapter Topics
संकुलमुद्धवर्णनम् ॥ १ ॥

Mahabharata - Bhishma Parva - Chapter Text

६-९३-० (४२८७२)
सञ्जय उवाच। ६-९३-०क्ष् (४१७५)

विमुखीकृत्य वर्सांस्तु तावकान्युधि राक्षसः ।
जिघांसुभरतश्रेष्ठ दुर्योधनमुपाद्रवत् ॥ ६-९३-१ (४२८७३)
तमापतन्तं संप्रेक्ष्य राजानं प्रति वेगितम् ।
अभ्यधावञ्जिघांसन्तस्तावका युद्धदुर्मदाःक ॥ ६-९३-२ (४२८७४)
तालमात्राणि चापानि विकर्षन्तो महारथाः ।
तमेकमभ्यधावन्त नदन्तः सिंहसङ्घवत् ॥ ६-९३-३ (४२८७५)
अथैनं शरवर्षेण समन्तात्पर्यवाकिरन् ।
पर्वतं वारिधाराभिः शरदीव वलाहकाः ॥ ६-९३-४ (४२८७६)
स गाढविद्धो व्यथितस्तोत्रार्दित इव द्विपः ।
उत्पपात तदाऽऽकाशं समन्ताद्वैनतेयवत् ॥ ६-९३-५ (४२८७७)
व्यनदत्सुमहानादं जीमूत इव शारदः ।
दिशः खं विदिशश्चैव नादयन्भैरवस्वनः ॥ ६-९३-६ (४२८७८)
राक्षसस्य तु तं शब्दं श्रुत्वा राजा युधिष्ठिरः ।
उवाच भरतश्रेष्ठ भीमसेनमरिन्दमम् ॥ ६-९३-७ (४२८७९)
युध्यते राक्षसो नूनं धार्तराष्ट्रैर्महारथैः ।
यथाऽस्य श्रूयते शब्दो नदतो भैरवं स्वनम् ॥ ६-९३-८ (४२८८०)
अतिभारं च पश्यामि तस्मिन्राक्षसपुङ्गवे ।
पितामहश्च संक्रुद्धः पाञ्चालान्हन्तुमुद्यतः ॥ ६-९३-९ (४२८८१)
तेषां च रक्षणार्थाय युध्यते फल्गुनः परैः ।
एतज्ज्ञात्वा महाबाहो कार्यद्वयमुपस्थितम् ॥ ६-९३-१० (४२८८२)
गच्छ रक्षस्व हैडिम्बं शंशयं परमं गतम् ।
भ्रातुर्वचनमाज्ञाय त्वरमाणो वृकोदरः ॥ ६-९३-११ (४२८८३)
प्रययौ सिंहनादेन त्रासयन्सर्वपार्थिवान् ।
वेगेन महता राजन्पर्वकाले यथोदधिःक ॥ ६-९३-१२ (४२८८४)
तमन्वगात्सत्यधृतिः सौचित्तिर्युद्धदुर्मदः ।
श्रेणिमान्वसुदानश्च पुत्रः काश्यस्य चाभिभूः ॥ ६-९३-१३ (४२८८५)
अभिमन्युमुखाश्चैव द्रौपदेया महारथाः ।
क्षत्रदेवश्च विक्रन्तः क्षत्रधर्मा तथैव च ॥ ६-९३-१४ (४२८८६)
अनूपाधिपतिश्चैव नीलः स्वबलमास्थितः ।
महता रथवंशेन हैडिम्बं पर्यवारयन् ॥ ६-९३-१५ (४२८८७)
कुञ्चरैश्च सदा मत्तैः षट्सहस्रैः प्रहारिभिःक ।
अभ्यरक्षन्त सहिता राक्षसेन्द्रं घटोत्कचम् ॥ ६-९३-१६ (४२८८८)
सिंहनादेन महता नेमिघोषेण चैव ह ।
खुरशब्दनिपातैश्च कम्पयन्तो वसुंधराम् ॥ ६-९३-१७ (४२८८९)
तेषामापततां श्रुत्वा शब्दं तं तावकं बलम् ।
भीमसेनभयोद्विग्नं विवर्णवदनं तथा ॥ ६-९३-१८ (४२८९०)

परिवृत्य महाराज परित्यज्य घटोत्कचम् ।
ततः प्रववृते युद्धंक तत्र तेषां महात्मनाम् ॥ ६-९३-१९ (४२८९१)
तावकानां परेषां च संग्रामेष्वनिवर्तिनाम् ।
नानारूपाणि शस्त्राणि विसृजन्तो महारथाः ॥ ६-९३-२० (४२८९२)
अन्योन्यमभिधावन्तः संप्रहारं प्रचक्रिरे ।
व्यतिष्यक्तं महारौद्रं युद्धं भीरुभयावहम् ॥ ६-९३-२१ (४२८९३)
हया हयैः समाजग्मुः पादाताश्च पदातिभिः ।
ग्रथा रथैः समागच्छन्नागा नागैश्च संयुगे'
अन्योन्यं समरे राजन्प्रार्थयानाः समभ्ययुः ॥ ६-९३-२२ (४२८९४)
सहसा चाभवत्तीव्रं सन्निपातन्महद्रजः ।
गजाश्वरथपत्तीनां पादनेमिसमुद्धतम् ॥ ६-९३-२३ (४२८९५)
धूम्रारुणं रजस्तीव्रं रणभूमिं समावृणोत् ।
नैव स्वे न परे राजन्समजानन्परस्परम् ॥ ६-९३-२४ (४२८९६)
पिता पुत्रं न जानीते पुत्रो वा पितरं तथा ।
निर्मर्यादे तथाभूते वैशसे रोमहर्षणे ॥ ६-९३-२५ (४२८९७)
शस्त्राणां भरतश्रेष्ठ मनुष्याणां च र्जताम् ।
सुमहानभवच्छब्दः प्रेतानामिव भारत ॥ ६-९३-२६ (४२८९८)
गजवाजिमनुष्याणां शोणितान्नतरङ्गिणी ।
प्राववर्तत नदी तत्र केशशैवलशाद्वला ॥ ६-९३-२७ (४२८९९)
नराणां चैव कायेभ्यः शिरसां पततां रणे ।
शुश्रुवे सुमहाञ्छब्दः पततामश्मनामिव ॥ ६-९३-२८ (४२९००)
विशिरस्कैर्मनुष्यैश्च छिन्नगात्रैश्च वारणैः ।
अश्वैः संभिन्नदेहैश्च संकीर्णाऽभूद्वसुंधरा ॥ ६-९३-२९ (४२९०१)
नानाविधानि शस्त्राणि विसृजन्तो महारथाः ।
अन्योन्यमभिधावन्तः संप्रहारार्थमुद्यताः ॥ ६-९३-३० (४२९०२)
हया हयान्समासाद्य प्रेषिता हयसादिभिः ।
समाहत्य रणेऽन्योन्यं निपेतुर्गतजीविताः ॥ ६-९३-३१ (४२९०३)
नरा नरान्समासाद्य क्रोधरक्तेक्षणा भृशम् ।
उरांस्युरोभिरन्योन्यं समाश्लिष्य निजघ्निरे ॥ ६-९३-३२ (४२९०४)
प्रेषिताश्च महामात्रैर्वारणाः परवारणैः ।
अभ्यघ्नन्त विषणाग्रैर्वारणानेव संयुगे ॥ ६-९३-३३ (४२९०५)
ते जातरुधिरोत्पीडाः पताकाभिरलङ्कृताः ।
संसक्ताः प्रत्यदृश्यन्त मेघा इव सविद्युतः ॥ ६-९३-३४ (४२९०६)
केचिद्भिन्ना विषाणाग्रैर्भिन्नकुम्भाश्च तोमरैः ।
विनदन्तोऽभ्यधावन्त गर्जमाना धना इव ॥ ६-९३-३५ (४२९०७)
केचिद्धस्तैर्द्विधाच्छिन्नैश्छिन्नगात्रास्तथाऽपरे ।

निपेतुस्तुमुले तस्मिंश्छिन्नपक्षा इवाद्रयः ॥ ६-९३-३६ (४२९०८)
पार्श्वैस्तु दारितैरन्ये वारणैर्वरवारणाः ।
मुमुचुः शोणितं भूरि धातूनिव महीधराः ॥ ६-९३-३७ (४२९०९)
नाराचनिहतास्त्वन्ये तथा विद्धाश्च तोमरैः ।
विनदन्तोऽभ्यधावन्त विशृङ्गा इव पर्वताः ॥ ६-९३-३८ (४२९१०)
केचित्क्रोधसमाविष्टा मदान्धा निरवग्रहाः ।
रथान्हयान्पदातींश्च ममृदुः शतशो रणे ॥ ६-९३-३९ (४२९११)
तथा हया हयारोहैस्ताडिताः प्रासतोमरैः ।
तेन तेनाभ्यवर्तन्त कुर्वन्तो व्याकुला दिशः ॥ ६-९३-४० (४२९१२)
रथिनो रथिभिः सार्धं कुलपुत्रास्तनुत्यजः ।
परां शक्तिं समास्थाय चक्रुः कर्माण्यभीतवत् ॥ ६-९३-४१ (४२९१३)
स्वयंवर इवामर्दे प्रजह्रुरितरेतरम् ।
प्रार्थयाना यशो राजन्स्वर्गं वा युद्धशालिनः ॥ ६-९३-४२ (४२९१४)
तस्मिंस्तथा वर्तमाने संग्रामे रोमहर्षणे ।
धार्तराष्ट्रं महत्सैन्यं प्रययौ विमुखीकृतम् ॥ ॥ ६-९३-४३ (४२९१५)

इति श्रीमन्महाभारते भीष्मपर्वणि भीष्मवधपर्वणि
अष्टमदिवसयुद्धे त्रिनवतितमोऽध्यायः ॥

---

भिस्मपर्व-अध्यय०९४
॥ श्रीः ॥
६.९४. अध्यायः ९४

Mahabharata - Bhishma Parva - Chapter Topics
घटोत्कचयुद्धम् ॥ १ ॥

Mahabharata - Bhishma Parva - Chapter Text

६-९४-० (४२९१६)
सञ्जय उवाच। ६-९४-०क्ष् (४१७६)
स्वसैन्यं निहतं दृष्ट्वा राजा दुर्योधनः स्वयम् ।
अभ्यधावत्सुसंक्रुद्धो भीमसेनमरिन्दमम् ॥ ६-९४-१ (४२९१७)
प्रगृह्य सुमहच्चापमिन्द्राशनिसमस्वनम् ।
महता शरवर्षेण पाण्डवं समवाकिरत् ॥ ६-९४-२ (४२९१८)
अर्धचन्द्रं च संधाय सुतीक्ष्णं लोमवापिनम् ।
भीमसेनस्य चिच्छेद चापं क्रोधसमन्वितः ॥ ६-९४-३ (४२९१९)
तदन्तरं च संप्रेक्ष्य त्वरमाणो महारथः ।

प्रसंदधे शितं बाणं गिरीणामपि दारणम् ॥ ६-९४-४ (४२९२०)
तेनोरसि महाराज भीमसेनमताडयत् ।
स गाढविद्धो व्यथितः सृक्विणी परिसंलिहन् ॥ ६-९४-५ (४२९२१)
समालम्बे तेजस्वी ध्वजं हेमपरिष्कृतम् ।
तथा विमनसं दृष्ट्वा भीमसेनं घटोत्कचः ॥ ६-९४-६ (४२९२२)
क्रोधेनाभिप्रजज्वाल दिधक्षन्निव पावकः ।
अभिमन्युमुखाश्चापि पाण्डवानां महारथाः ॥ ६-९४-७ (४२९२३)
समभ्यधावन्क्रोशन्तो राजानं जातसंभ्रमाः ।
संप्रेक्ष्य तान्संपततः संक्रुद्धाञ्जातसंभ्रमान् ॥ ६-९४-८ (४२९२४)
भारद्वाजोऽब्रवीद्वाक्यं तावकानां महारथान् ।
क्षिप्रं गच्छत भद्रं वो राजानं परिरक्षत ॥ ६-९४-९ (४२९२५)
संशयं परमं प्राप्तं मज्जन्तं व्यसनार्णवे ।
एते क्रुद्धा महेष्वासाः पाण्डवानां महारथाः ॥ ६-९४-१० (४२९२६)
भीमसेनं पुरस्कृत्य दुर्योधनमुपाद्रवन् ।
नानाविधानि शस्त्राणि विसृजन्तो महारथाः ॥ ६-९४-११ (४२९२७)
नदन्तो भैरवान्नादांस्त्रासयन्तश्च भूमिपान् ।
तदाऽऽचार्यवचः श्रुत्वा सौमदत्तिपुरोगमाः ॥ ६-९४-१२ (४२९२८)
तावकाः समवर्तन्त पाम्डवानामनीकिनीम् ।
कृपो भूरिश्रवाः शल्यो द्रोणपुत्रो विविंशतिः ॥ ६-९४-१३ (४२९२९)
चित्रसेनो विकर्णश्च सैन्धवोऽथ बृहद्बलः ।
आवन्त्यौ च महेष्वासौ कौरवं पर्यवारयन् ॥ ६-९४-१४ (४२९३०)
ते विंशतिपदं गत्वा संप्रहारं प्रचक्रिरे ।
पाण्डवा धार्तराष्ट्राश्च परस्परजिघांसवःक ॥ ६-९४-१५ (४२९३१)
एवमुक्त्वा महाबाहुर्महद्विष्फार्य कार्मुकम् ।
भारद्वाजस्ततो भीमं षड्विंशत्या समार्पयत् ॥ ६-९४-१६ (४२९३२)
भूयश्चैनं महाबाहुः शरैः शीघ्रमवाकिरत् ।
पर्वतं वारिधाराभिः प्रावृषीव वलाहकः ॥ ६-९४-१७ (४२९३३)
तं प्रत्यविध्यद्दशभिर्भीमसेनः शिलीमुखैः ।
त्वरमाणो महेष्वासः सव्ये पार्श्वे महाबलः ॥ ६-९४-१८ (४२९३४)
स गाढविद्धो व्यथितो वयोवृद्धश्च भारत ।
प्रनष्टसंज्ञः सहसा रथोपस्थ उपाविशत् ॥ ६-९४-१९ (४२९३५)
गुरुं प्रव्यथितं दृष्ट्वा राजा दुर्योधनः स्वयम् ।
द्रौणायनिश्च संक्रुद्धौ भीमसेनमभिद्रुतौ ॥ ६-९४-२० (४२९३६)
तावापतन्तौ संप्रेक्ष्य कालान्तकयमोपमौ ।
भीमसेनो महाबाहुर्गदामादाय सत्वरम् ॥ ६-९४-२१ (४२९३७)
अवप्लुत्य रथात्तूर्णं तस्थौ गिरिरिवाचलः ।

समुद्यम्य गदां गुर्वी यमदण्डोपमां रणे। ६-९४-२२ (४२९३८)
तमुद्यतगदं दृष्ट्वा कैलासमिव शृङ्गिणम् ।
कौरवो द्रोणपुत्रश्च सहितावभ्यधावताम् ॥ ६-९४-२३ (४२९३९)
तावापतन्तौ सहितौ त्वरितौ बलिनां वरौ ।
अभ्यधावत वेगेन त्वरमाणो वृकोदरः ॥ ६-९४-२४ (४२९४०)
तमापतन्तं संप्रेक्ष्य संक्रुद्धं भीमदर्शनम् ।
समभ्यधावंस्त्वरिताः कौरवाणां महारथाः ॥ ६-९४-२५ (४२९४१)
भारद्वाजमुखाः सर्वे भीमसेनजिघांसया ।
नानाविधानि शस्त्राणि भीमस्योरस्यपातयन् ॥ ६-९४-२६ (४२९४२)
सहिताः पाण्डवं सर्वे पीडयन्तः समन्ततः ।
तं दृष्ट्वा संशयं प्राप्तं पीड्यमानं महारथम् ॥ ६-९४-२७ (४२९४३)
अभिमन्युप्रभृतयः पाण्डवानां महारथाःक ।
अभ्यदावन्परीप्सन्तः प्राणांस्त्यक्त्वा सुदुस्त्यजान्  ६-९४-२८ (४२९४४)
अनूपाधिपतिः शूरो भीमस्य दयितः सखा ।
नीलो नीलाम्बुदप्रख्यः संक्रुद्धो द्रौणिमभ्यात् ॥ ६-९४-२९ (४२९४५)
स्पर्धते हि महेष्वासो नित्यं द्रोणसुतेन सः ।
स विष्फार्य महच्चापं द्रौणिं विव्याध पत्रिणा ॥ ६-९४-३० (४२९४६)
यथा शक्रो महाराज पुरा विव्याध दानवम् ।
विप्रचित्तिं दुराधर्षं देवतानां भयंकरम् ॥ ६-९४-३१ (४२९४७)
येन लोकत्रयं क्रोधात्त्रासितं स्वेन तेजसाक । ६-९४-३२ब्ग्स रुद्रेण जितः पूर्वं निहतो मातरिश्वना'
तथा नीलेन निर्भिन्नः सम्यङ्भुक्तेन पत्रिणा ॥  ६-९४-३२ (४२९४८)
संजातरुधिरोत्पीडो द्रौणिः क्रोधसमन्वितः ।
स विष्फार्य धनुश्चित्रमिन्द्राशनिसमस्वनम् ॥ ६-९४-३३ (४२९४९)
दध्रे नीलविनाशाय मतिं मतिमतां वरः ।
ततः संधाय विमलान्भल्लान्कर्मारमार्जितान् ॥ ६-९४-३४ (४२९५०)
जघान चतुरो वाहान्पातयामास च ध्वजम् ।
ग्सूतं चैकेन भल्लेन रथनीडादपाहरत्'
सप्तमेन च भल्लेन नीलं विव्याध वक्षसि ॥  ६-९४-३५ (४२९५१)
स गाढविद्धो व्यथितो रथोपस्थ उपाविशत् ।
मोहितं वीक्ष्य राजानं नीलमश्मचयोपमम् ॥ ६-९४-३६ (४२९५२)
घटोत्कचोऽभिसंक्रुद्धो ज्ञातिभिः परिवारितः ।
अभिदुद्राव वेगेन द्रौणिमाहवशोभिनम् ।
तथेतरे चाभ्यधावन्राक्षसा युद्धदुर्मदाः ॥ ६-९४-३८अग भीमसेनो महाबाहुर्नीलं नीलाञ्जनप्रभम् ।'
आरोप्य स्वरथं वीरो दुर्योधनमपाद्रवत् ॥  ६-९४-३७ (४२९५३)

घटोत्कचं च संप्रेक्ष्य राक्षसं घोरदर्शनम् ॥
अभ्यधावत तेजस्वी भारज्वाजात्मजस्त्वरन् ॥ ६-९४-३९ (४२९५४)
निजघान च संक्रुद्धो राक्षसान्भीमदर्शनान् ।
योऽभवन्नग्रतः क्रुद्धा राक्षसस्य पुरःसराः ।
विमुखांश्चैव तान्दृष्ट्वा द्रौणिचापच्युतैः शरैः ॥ ६-९४-४० (४२९५५)
अक्रुद्ध्यत महाकायो भैमसेनिर्घटोत्कचः ।
प्रादुश्चक्रे ततो मायां घोररूपां सुदारुणाम् ॥ ६-९४-४१ (४२९५६)
मोहयन्समरे द्रौणिं मायावी राक्षसाधिपः ।
ततस्ते तावकाः सर्वे मायया विमुखीकृताःक ॥ ६-९४-४२ (४२९५७)
अन्योन्यं समपश्यन्त निकृत्ता मेदिनीतले ।
विचेष्टमानाः कृपणाः शोणितेन परिप्लुताः ॥ ६-९४-४३ (४२९५८)
द्रोणं दुर्योधनं शल्यमश्वत्थामानमेव च ।
प्रायशश्च महेष्वासा ये प्रधानाः स्म कौरवाः ॥ ६-९४-४४ (४२९५९)
विध्वस्ता रथिनः सर्वे गजाश्च विनिपातिताः ।
हयाश्चैव हयारोहाः सन्निकृत्ताः सहस्रशः ॥ ६-९४-४५ (४२९६०)
तद्दृष्ट्वा तावकं सैन्यं विद्रुतं शिबिरं प्रति ।
मम प्राक्रोशतो राजंस्तथा देवव्रतस्य च ॥ ६-९४-४६ (४२९६१)
युध्यध्वं मा पलायध्वं मायैषा राक्षसी रणे ।
घटोत्कचप्रमुक्तेति नातिष्ठन्त विमोहिताः ॥ ६-९४-४७ (४२९६२)
नैव ते श्रद्दधुर्भीता वदतोरावयोर्वचः ।
तांश्च प्रद्रवतो दृष्ट्वा जयं प्राप्ताश्च पाण्डवाः ॥ ६-९४-४८ (४२९६३)
घटोत्कचेन सहिताः सिंहनादान्प्रचक्रिरे ।
शङ्खदुन्दुभिनिर्घोषैः समन्तान्नेदिरे भृशम् ॥ ६-९४-४९ (४२९६४)
एवं तव बलं सर्वं हैडिम्बेन महात्मना ।
सूर्यास्तमनवेलायां प्रभग्नं विद्रुतं दिशः ॥ ॥ ६-९४-५० (४२९६५)

इति श्रीमन्महाभारते भीष्मपर्वणि भीष्मवधपर्वणि
अष्टमदिवसयुद्धे चतुर्नवतितमोऽध्यायः ॥
Mahabharata - Bhishma Parva - Chapter Footnotes

६-९४-४४ द्रोणाद्रींश्चापश्यन्तेति संबन्धः ॥

---

भिस्मपर्व-अध्यय०९५
॥ श्रीः ॥
६.९५. अध्यायः ९५

Mahabharata - Bhishma Parva - Chapter Topics
भगदत्तादियुद्धम् ॥ १ ॥

Mahabharata - Bhishma Parva - Chapter Text

६-९५-० (४२९६६)
सञ्जय उवाच। ६-९५-०क्ष् (४१७७)
तस्मिन्महति संक्रन्दे राजा दुर्योधनस्तदा ।
ग्पराजयं राक्षसेन नामृष्यत परंतपः।'
गाङ्गेयमुपसंगम्य विनयेनाभिवाद्य च ॥ ६-९५-१ (४२९६७)
तस्य सर्वं यथावृत्तमाख्यातुमुपचक्रमे ।
घटोत्कचस्य विजयमात्मनश्च पराजयम् ॥ ६-९५-२ (४२९६८)
कथयामास दुर्धर्षो विनिःश्वस्य पुनःपुनः ।
अब्रवीच्च तदा राजन्भीष्मं कुरुपितामहम् ॥ ६-९५-३ (४२९६९)
भवन्तं समुपाश्रित्य द्रोणं चैव पितामह ।
पाण्डवैर्विग्रहो घोरः समारब्धो मया प्रभो ॥ ६-९५-४ (४२९७०)
एकादश समाख्याता अक्षौहिण्यश्च या मम ।
निदेशे तव तिष्ठन्ति मया सार्धं परंतप ॥ ६-९५-५ (४२९७१)
सोऽहं भरतशार्दूल भीमसेनपुरोगमैः ।
घटोत्कचं समाश्रित्य पाण्डवैर्युधि निर्जितः ॥ ६-९५-६ (४२९७२)
तन्मे दहति गात्राणि शुष्कवृक्षमिवानलः ।
तदिच्छामि महाभाग त्वत्प्रसादात्परंतप ॥ ६-९५-७ (४२९७३)
राक्षसापशदं हन्तुं स्वयमेव पितामह ।
त्वां समाश्रित्य दुर्धर्षं तन्मे कर्तुं त्वमर्हसि ॥ ६-९५-८ (४२९७४)
सञ्जय उवाच। ६-९५-९क्ष् (४१७८)
एतच्छ्रुत्वा तु वचनं राज्ञो भरतसत्तम ।
दुर्योधनमिदं वाक्यं भीष्मः शान्तनवोऽब्रवीत् ॥ ६-९५-९ (४२९७५)
शृणु राजन्मम वचो यत्त्वां वक्ष्यामि कौरव ।
यथा त्वया महाराज वर्तितव्यं परंतप ॥ ६-९५-१० (४२९७६)
आत्मा रक्ष्यस्त्वया तात सर्वावस्थास्वरिन्दम ।
धर्मराजेन संग्रामस्त्वया कार्यः सदाऽनघ ॥ ६-९५-११ (४२९७७)
अर्जुनेन यमाभ्यां वा भीमसेनेन वा पुनः ।
अन्यैर्वा पृथिवीपालै राजा राजानमृच्छति ॥ ६-९५-१२ (४२९७८)
न तु कार्यस्त्वया राजन्हैडिम्बेन दुरात्मा ।
अहं द्रोणः कृपो द्रौणिः कृतवर्मा च सात्वतः ।
शल्यश्च वृषसेनश्च विकर्णश्च महारथः ॥ ६-९५-१३ (४२९७९)

शेषाश्च भ्रातरस्त्वन्ये दुःशासनपुरोगमाः ।
त्वदर्थे प्रतियोत्स्यामो राक्षसं तं महाबलम् ॥ ६-९५-१४ (४२९८०)
रौद्रे तस्मिन्राक्षसेन्द्रे यदि ते हृच्छयो महान् ।
अयमागच्छतु रणं तस्य युद्धाय दुर्मतेः ॥ ६-९५-१५ (४२९८१)
भगदत्तो महीपालः पुरन्दरसमो युधि ।
एतावदुक्त्वा राजानं भगदत्तमथाब्रवीत् ॥ ६-९५-१६ (४२९८२)
समक्षं पार्थिवेन्द्रस्य वाक्यं वाक्यविशारदः ।
गच्छ शीघ्रं महाराज हैडिम्बं युद्धदुर्मदम् ॥ ६-९५-१७ (४२९८३)
वारयस्व रणे यत्तो मिषतां सर्वधन्विनाम् ।
राक्षसं क्रूरकर्माणं यथेन्द्रस्तारकं पुरा ॥ ६-९५-१८ (४२९८४)
तव दिव्यानि चास्त्राणि विक्रमश्च परंतप ।
समागमश्च बहुभिः पुराऽभूदमरैः सह ॥ ६-९५-१९ (४२९८५)
त्वं तस्य नृपशार्दूल प्रतियोद्धा महाहवे ।
स्वबलेनावृतो गच्छ जहि राक्षसपुङ्गवम् ॥ ६-९५-२० (४२९८६)
सञ्जय उवाच। ६-९५-२१क्ष् (४१७९)
एतच्छ्रुत्वा तु वचनं भीष्मस्य पृतनापतेः ।
प्रययौ सिंहनादेन परानभिमुखको द्रुतम् ॥ ६-९५-२१ (४२९८७)
तमापतन्तं संप्रेक्ष्य गर्जन्तमिव तोयदम् ।
अभ्यवर्तन्त संक्रुद्धाः पाण्डवानां महारथाः ॥ ६-९५-२२ (४२९८८)
भीमसेनोऽभिमन्युश्च राक्षसश्च घटोत्कचः ।
द्रौपदेयाः सत्यधृतिः क्षत्रदेवश्च भारत ॥ ६-९५-२३ (४२९८९)
चेदिपो वसुदानश्च दशार्णाधिपतिस्तथा ।
सुप्रतीकेन तांश्चापि भगदत्तोऽप्युपाद्रवत् ॥ ६-९५-२४ (४२९९०)
ततः समभवद्युद्धं घोररूपं भयानकम् ।
पाण्डूनां भगदत्तेन यमराष्ट्रविवर्धनम् ॥ ६-९५-२५ (४२९९१)
प्रयुक्ता रथिभिर्बाणा भीमवेगाः सुतेजनाः ।
ते निपेतुर्महाराज नागेषु च रथेषु च ॥ ६-९५-२६ (४२९९२)
प्रभिन्नाश्च महानागा विनीता हस्तिसादिभिः ।
परस्परं समासाद्य संनिपेतुरभीतवत् ॥ ६-९५-२७ (४२९९३)
मदान्धा रोषसंरब्धा विषाणाग्रैर्महाहवे ।
बिभिदुर्दन्तमुसलैः समासाद्य परस्परम् ॥ ६-९५-२८ (४२९९४)
हयाश्च चामरापीडाः प्रासपाणिभिरास्थिताः ।
चोदिताः सादिभिः क्षिप्रं निजघ्नुरितरेतरम् ॥ ६-९५-२९ (४२९९५)
पादाताश्च पदात्योघैस्ताडिताः शक्तितोमरैः ।
न्यपतन्त तदा भूमौ शतशोऽथ सहस्रशः ॥ ६-९५-३० (४२९९६)
रथिनश्च रथाकंश्चित्रान्कर्णिनालीकतोमरैः ।

निहत्य समरे वीरान्सिंहनादान्विनेदिरे ॥ ६-९५-३१ (४२९९७)
तस्मिंस्तथा वर्तमाने संग्रामे रोमहर्षणे ।
भगतत्तो महेष्वासो भीमसेनमथाद्रवत् ॥ ६-९५-३२ (४२९९८)
कुञ्जरेण प्रभिन्नेन सप्तधा स्रवता मदम् ।
पर्वतेन यथा तोयं स्रवमाणेन सर्वशः ॥ ६-९५-३३ (४२९९९)
किरञ्छरसहस्राणि सुप्रतीकशिरोगतः ।
ऐरावतस्थो मघवान्वारिधारा इवानघ ॥ ६-९५-३४ (४३०००)
स भीमं शरधाराभिस्ताजयामास पार्थिवः ।
पर्वतं वारिधाराभिस्तपान्ते जलदो यथा ॥ ६-९५-३५ (४३००१)
भीमसेनस्तु संक्रुद्धः पादरक्षान्परःशतान् ।
निजघान महेष्वासः संरब्धः शरवृष्टिभिः ॥ ६-९५-३६ (४३००२)
तान्दृष्ट्वा निहतान्क्रुद्धो भगदत्तः प्रतापवान् ।
चोदयामास नागेन्द्रं भीमसेनरथं प्रति ॥ ६-९५-३७ (४३००३)
स नागः प्रेषितस्तेन बाणो ज्याचोदितो यथा ।
अभ्यधावत वेगेन भीमसेनपुरोगमाः ॥ ६-९५-३८ (४३००४)
तमापतन्तं संप्रेक्ष्य पाण्डवानां महारथाः ।
अभ्यवर्तन्त वेगेन भीमसेनपुरोगमाः ॥ ६-९५-३९ (४३००५)
केकयाश्चाभिमन्युश्च द्रौपदेयाश्च सर्वशः ।
दशार्णाधिपतिः शूरः क्षत्रदेवश्च मारिष ॥ ६-९५-४० (४३००६)
चेदिपो धृष्टकेतुश्च संरब्धाः सर्व एव ते ।
उत्तमास्त्राणि दिव्यानि दर्शयन्तो महाबलाः ॥ ६-९५-४१ (४३००७)
तमेकं कुञ्जरं क्रुद्धाः समन्तात्पर्यवारयन् ।
स विद्धो बहुभिर्बाणैर्व्यरोचत महाद्विपः ॥ ६-९५-४२ (४३००८)
संजातरुधिरोत्पीडो धातुचित्र इवाद्रिराट् ।
दशार्णाधिपतिश्चाऽपि गजं भूमिधरोपमम् ॥ ६-९५-४३ (४३००९)
समास्थितोऽभिदुद्राव भगदत्तस्य वारणम् ।
तमापतन्तं समरे जगं जगपतिः स च ॥ ६-९५-४४ (४३०१०)
दधार सुप्रतीकोऽपि वेलेव मकरालयम् ।
वारितं प्रेक्ष्य नागेन्द्रं दशार्णस्य महात्मनः ॥ ६-९५-४५ (४३०११)
साधुसाध्विति सैन्यानि त्वदीयान्यभ्यपूजयन् ।
ततः प्राग्ज्योतिषः क्रुद्धस्तोमरान्वै चतुर्दश ॥ ६-९५-४६ (४३०१२)
प्राहिणोत्तस्य नागस्य प्रमुखे नृपसत्तम ।
तस्य कुम्भपरित्राणां शातकुम्भपरिष्कृतम् ॥ ६-९५-४७ (४३०१३)
विदार्य प्राविशन्क्षिप्रं वल्मीकमिव पन्नगाः ।
स गाढविद्धो व्यथितो नागो भरतसत्तम ॥ ६-९५-४८ (४३०१४)
उपावृत्तमदः क्षिप्रमभ्यवर्तत वेगिनः ।

स प्रदुद्राव वेगेन प्रणदन्भैरवं रवम् ॥ ६-९५-४९ (४३०१५)
संमर्दमानः स्वबलं वायुर्वृक्षानिवौजसा ।
तस्मिन्पराजिते नागे पाण्डवानां महारथाः ॥ ६-९५-५० (४३०१६)
सिंहनादं विनद्योच्चैर्युद्धायैवावतस्थिरे ।
ततो भीमं पुरस्कृत्य भगदत्तमुपाद्रवन् ॥ ६-९५-५१ (४३०१७)
किरन्तो विविधान्बाणाञ्शस्त्राणि विविधानि च ।
तेषामापततां राजन्संक्रुद्धानाममर्षिणाम् ॥ ६-९५-५२ (४३०१८)
श्रुत्वा स निनदंक घोरममर्षाद्गतसाध्वसः ।
भगदत्तो महेष्वासः स्वनागं प्रत्यचोदयत् ॥ ६-९५-५३ (४३०१९)
अङ्कुशाङ्गुष्ठनुदितः स गजप्रवरो युधि ।
तस्मिन्क्षणे समभवत्सांवर्तक इवानलः ॥ ६-९५-५४ (४३०२०)
रथसङ्घांस्तथा नागान्हयांश्च हयसादिनः ।
पादातांश्च सुसंक्रुद्धः शतशोऽथ सहस्रशःक ॥ ६-९५-५५ (४३०२१)
अमृद्नात्समरे नागः संप्रधावंस्ततस्ततः ।
तेन संलोड्यमानं तु पाण्डवानां बलं महत् ॥ ६-९५-५६ (४३०२२)
संचुकोच महाराज चर्मेवाग्नौ समाहितम् ।
भग्नं तु स्वबलं दृष्ट्वा भगदत्तेन धीमता ॥ ६-९५-५७ (४३०२३)
घटोत्कचोऽथ संक्रुद्धो भगदत्तमुपाद्रवत् ।
विकटः परुषो राजन्दीप्तास्यो दीप्तलोचनः ॥ ६-९५-५८ (४३०२४)
रूपं विभीषणं कृत्वा रोषेण प्रज्वलन्निव ।
जग्राह विमलं शूलं गिरीणामपि दारणम् ॥ ६-९५-५९ (४३०२५)
नागं जिघांसुः सहसा चिक्षेप च महाबलः ।
स विस्फुलिङ्गमालाभिः समन्तात्परिवेष्टितम् ॥ ६-९५-६० (४३०२६)
तमापतन्तं सहसा दृष्ट्वा प्राग्ज्योतिषो नृपः ।
चिक्षेप रुचिरं तीक्ष्णमर्धचन्द्रं सुदारुणम् ॥ ६-९५-६१ (४३०२७)
चिच्छेद तन्महच्छूलं तेन बाणेन वेगवान् ।
उत्पपात द्विधा च्छिन्नं शूलं हेमपरिष्कृतम् ॥ ६-९५-६२ (४३०२८)
महाशनिर्यथा भ्रष्टा शक्रमुक्ता नभोगता ।
शूलं निपतितं दृष्ट्वा द्विधा कृत्तं च पार्थिवः ॥ ६-९५-६३ (४३०२९)
रुक्मदण्डां महाशक्तिं जग्राहाग्निशिखोपमान् ।
चिक्षेप तां राक्षसस्य तिष्ठितिष्ठेति चाब्रवीत् ॥ ६-९५-६४ (४३०३०)
तामापतन्तीं संप्रेक्ष्य वियत्स्थामशनीमिव ।
उत्पत्य राक्षसस्तूर्णं जग्राह च ननाद च ॥ ६-९५-६५ (४३०३१)
बभञ्ज चैनां त्वरितो जानुन्यारोप्य भारत ।
पश्यतः पार्थिवेन्द्रस्य तदद्भुतमिवाभवत् ॥ ६-९५-६६ (४३०३२)
तदवेक्ष्य कृतं कर्म राक्षसेन बलीयसा ।

दिवि देवाः सगन्धर्वा मुनयश्चापि विस्मिताः ॥ ६-९५-६७ (४३०३३)
पाण्डवाश्च महाराज भीमसेनपुरोगमाः ।
साधुसाध्विति नादेन पृथिवीमन्वनादयन् ॥ ६-९५-६८ (४३०३४)
तं तु श्रुत्वा महानादं प्रहृष्टानां महात्मनाम् ।
नामृष्यत महेष्वासो भगदत्तः प्रतापवान् ॥ ६-९५-६९ (४३०३५)
स विष्फार्य महच्चापमिन्द्राशानिसमप्रभम् ।
अभिदुद्राव वेगेन पाण्डवानां महारथान् ॥ ६-९५-७० (४३०३६)
विसृजन्विमलांस्तीक्ष्णान्नाराचाञ्ज्वलनप्रभान् ।
भीममेकेन विव्याध राक्षसं नवभिः शरैः ॥ ६-९५-७१ (४३०३७)
अभिमन्युं त्रिभिश्चैव केकयान्पञ्च पञ्चभिः ।
पूर्णायतविसृष्टेन शरेणानतपर्वणा ॥ ६-९५-७२ (४३०३८)
बिभेद दक्षिणं बाहुं क्षत्रेदवस्य चाहवे ।
पपात सहसा तस्य सशरं धनुरुत्तमम् ॥ ६-९५-७३ (४३०३९)
द्रौपदेयांस्ततः पञ्च पञ्चभिः समताडयत् ।
भीमसेनस्य च क्रोधान्निजघान तुरंगमान् ॥ ६-९५-७४ (४३०४०)
ध्वजं केसरिणं चास्य चिच्छेद विशिखैस्त्रिभिः ।
निर्बिभेद त्रिभिश्चान्यैः सारथिं चास्य पत्रिभिः ॥ ६-९५-७५ (४३०४१)
स गाढविद्धो व्यथितो रथोपस्थ उपाविशत् ।
विशोको भरतश्रेष्ठ भगदत्तेन संयुगे ॥ ६-९५-७६ (४३०४२)
ततो भीमो महाबाहुर्विरथो रथिनां वरः ।
गदां प्रगृह्य वेगेन प्रचस्कन्द रथोत्तमात् ॥ ६-९५-७७ (४३०४३)
तमुद्यतगदं दृष्ट्वा सशृङ्गमिव पर्वतम् ।
तावकानां भयं घोरं समपद्यत भारत ॥ ६-९५-७८ (४३०४४)
एतस्मिन्नेव काले तु पाण्डवः कृष्णसारथिः ।
आजगाम महाराज निघ्नञ्शत्रून्समन्ततः ॥ ६-९५-७९ (४३०४५)
यत्र तौ पुरुषव्याघ्रौ पितापुत्रौ महाबलौ ।
प्राग्ज्योतिषेण संयुक्तौ भीमसेनघटोत्कचौ ॥ ६-९५-८० (४३०४६)
दृष्ट्वा च पाण्डवो भ्रातॄन्युध्यमानान्महारथान् ।
त्वरितो भरतश्रेष्ठ तत्रायुध्यत्किरञ्छरान् ॥ ६-९५-८१ (४३०४७)
ततो दुर्योधनो राजा त्वरमाणो महारथः ।
सेनामचोदयत्क्षिप्रं रथनागाश्वसंकुलाम् ॥ ६-९५-८२ (४३०४८)
तामापतन्तीं सहसा कौरवाणां महाचमूम् ।
अभिदुद्राव वेगेन पाण्डवः श्वेतवाहनः ॥ ६-९५-८३ (४३०४९)
भगदत्तश्च समरे तेन नागेन भारत ।
विमृद्नन्पाण्डवबलं युधिष्ठिरमुपाद्रवत् ॥ ६-९५-८४ (४३०५०)
तदासीत्सुमहद्युद्धं भगदत्तस्य मारिष ।

पाञ्चालैः पाण्डवेयैश्च केकयैश्चोद्यतायुधैः ॥ ६-९५-८५ (४३०५१)
भीमसेनोऽपि समरे तावुभौ केशवार्जिनौ ।
अश्रावयद्यथावृत्तमिरावद्वधतुत्तमम् ॥ ॥ ६-९५-८६ (४३०५२)

इति श्रीमन्महाभारते भीष्मपर्वणि भीष्मवधपर्वणि
अष्टमदिवसयुद्धे पञ्चनवतितमोऽध्यायः ॥
Mahabharata - Bhishma Parva - Chapter Footnotes

६-९५-४ भवन्तं समुपाश्रित्य वासुदेवं यथा परैः इति झो पाठः
। ड पाठे अयमर्थश्लोको नास्ति ॥
६-९५-१५ अनुशय इति पाठे पश्चात्तापः ॥
६-९५-७७ प्रचस्कन्द अवततार ॥

---

भिस्मपर्व-अध्यय०९६
॥ श्रीः ॥
६.९६. अध्यायः ९६

Mahabharata - Bhishma Parva - Chapter Topics
भीमेन दुर्योधनानुजानां कतिपयानां हननम् ॥ १ ॥

Mahabharata - Bhishma Parva - Chapter Text

६-९६-० (४३०५३)
सञ्जय उवाच। ६-९६-०क्ष् (४१८०)
पुत्रं विनिहतं श्रुत्वा इरावन्तं धनञ्जयः ।
दुःखेन महताऽऽविष्टो निःश्वसन्पन्नगो यथा ॥ ६-९६-१ (४३०५४)
अब्रवीत्समरे राजन्वासुदेवमिदं वचः ।
इदं नूनं महाप्राज्ञो विदुरो दृष्टवान्पुरा ॥ ६-९६-२ (४३०५५)
कुरूणां पाण्डवानां च क्षयं घोरं महामतिःक ।
स ततो निवारितवान्धृतराष्ट्रं जनेश्वरम् ॥ ६-९६-३ (४३०५६)
अन्ये च बहवो वीराः संग्रामे मधुसूदन ।
निहताः कौरवैः सङ्ख्ये तथाऽस्माभिश्च कौरवाः ॥ ६-९६-४ (४३०५७)
अर्थहेतोर्नरश्रेष्ठ क्रियते कर्म कुत्सितम् ।
धिगर्थान्यत्कृते ह्येवं क्रियते ज्ञातिसंक्षयः ॥ ६-९६-५ (४३०५८)
अधनस्य मृतं श्रेयो न च ज्ञातिवधाद्धनम् ।
किं नु प्राप्स्यामहे कृष्ण हत्वा ज्ञातीन्समागतान् ॥ ६-९६-६ (४३०५९)
दुर्योधनापराधेन शकुनेः सौबलस्य च ।

क्षत्रिया निधनं यान्ति कर्णदुर्मन्त्रितेन च ॥ ६-९६-७ (४३०६०)
इदानीं च विजानामि सुकृतं मधुसूदन ।
कृतं राज्ञा महाबाहो याचता त सुयोधनम् ॥ ६-९६-८ (४३०६१)
राज्यार्धं पञ्च वा ग्रामान्नाकार्षीत्स च दुर्मतिःक ।
दृष्ट्वा हि क्षत्रियाञ्शूराञ्शयानान्धरणीतले ॥ ६-९६-९ (४३०६२)
निन्दामि भृशमात्मानं धिगस्तु क्षत्रिजीविकाम् ।
अशक्तमिति मामेते ज्ञास्यन्ते क्षत्रिया रणे ॥ ६-९६-१० (४३०६३)
एतदर्थं मया युद्धं रोचितं मधुसूदन ।
संचोदय हयाञ्शीघ्रं धार्तराष्ट्रचमूं प्रति ॥ ६-९६-११ (४३०६४)
प्रतरिष्ये महापारं भुजाभ्यां समरोदधिम् ।
नायं क्लीबायितुं कालो विद्यते माधव क्वचित् ॥ ६-९६-१२ (४३०६५)
सञ्जय उवाच। ६-९६-१३क्ष् (४१८१)
एवमुक्तस्तु पार्थेन केशवः परवीरहा ।
चोदयामास तानश्वान्पाण्डुरान्वातरंहसः ॥ ६-९६-१३ (४३०६६)
अथ शब्दो महानासीत्तव सैन्यस्य भारत ।
मारुतोद्धूतवेगस्य सागरस्येव पर्वणि ॥ ६-९६-१४ (४३०६७)
अपराह्णे महाराज संग्रामः समपद्यत ।
पर्जन्यसमनिर्घोषो भीष्मस्य सह पाण्डवैः ॥ ६-९६-१५ (४३०६८)
ततो राजंस्तव सुता भीमसेनमुपाद्रवन् ।
परिवार्य रणे द्रोणं वसवो वासवं यथा ॥ ६-९६-१६ (४३०६९)
ततः शान्तनवो भीष्मः कृपश्च रथिनां वरः ।
भगदत्तः सुशर्मा च धनंजयमुपाद्रवन् ॥ ६-९६-१७ (४३०७०)
हार्दिक्यो बाह्लिकश्चैव सात्यकिं समभिद्रुतौ ।
अम्बष्ठकस्तु नृपतिरभिमन्युमवस्थितः ॥ ६-९६-१८ (४३०७१)
शेषास्त्वन्ये महाराज शेषानेव महारथान् ।
ततः प्रववृते युद्धं घोररूपं भयावहम् ॥ ६-९६-१९ (४३०७२)
ग्भीमसेनस्तु संप्रेक्ष्य पुत्रांस्तव विशांपते'।
प्रजज्वाल रणे क्रुद्धो हविषा हव्यवाडिव ॥ ६-९६-२० (४३०७३)
पुत्रास्तु तव कौन्तेयं छादयांचक्रिरे शरैः ।
प्रावृषीव महाराज जलदा इव पर्वतम् ॥ ६-९६-२१ (४३०७४)
स च्छाद्यमानो बहुधा पुत्रैस्तव विशांपते ।
सृक्विणी संलिहन्वीरः शार्दूल इव दर्पितः ॥ ६-९६-२२ (४३०७५)
व्यूढोरस्कस्ततो भीमः पोथयामास पार्थिवम् ।
क्षुरप्रेण सुतीक्ष्णेन सुमुक्तेन महारणे ॥ ६-९६-२३ (४३०७६)
ताडयामास संक्रुद्धः सोऽभवद्व्यथितेन्द्रियः ।
अपरेण तु भल्लेन पीतेन निशितेन तु ।

अपातयत्कुण्डलितं सिंहः क्षुद्रमृगं यथा ॥ ६-९६-२४ (४३०७७)
ततः सुनिशितान्बाणान्भीमसेनः शिलाशितान् ।
स सप्त संदधे हन्तुं पुत्रास्ते भरतर्षभ ॥ ६-९६-२५ (४३०७८)
प्रेषिता भिमसेनेन शरास्ते दृढधन्वना ।
अपातयन्त पुत्रांस्ते रथेभ्यः सुमहारथान् ॥ ६-९६-२६ (४३०७९)
अनाधृष्टिं कुण्डभेदिं विराजं दीप्तलोचनम् ।
दीर्घबाहुं सुबाहुं च तथैव मकरध्वजम् ॥ ६-९६-२७ (४३०८०)
प्रपतन्तिस्म वीरास्ते विरेजुर्भरतर्षभ ।
वसन्ते पुष्पशबलाः किंशुकाः पतिता इव ॥ ६-९६-२८ (४३०८१)
ततः प्रदुद्रुवुः शेषास्तव पुत्रा महाहवे ।
तं कालमिव मन्यन्तो भीमसेनं महाबलम् ॥ ६-९६-२९ (४३०८२)
द्रोणस्तु समरे वीरं निर्दहनक्तं सुतांस्तव ।
यथाद्रिं वारिधाराभिः समन्ताद्व्यकिरच्छरैः ॥ ६-९६-३० (४३०८३)
तत्राद्भुतमपश्याम कुन्तीपुत्रस्य पौरुषम् ।
द्रोणेन वार्यमाणोऽपि निजघ्ने यत्सुतांस्तव ॥ ६-९६-३१ (४३०८४)
यथा गोवृषभो वर्षं संधारयति स्वात्पतत् ।
भीमस्तथा द्रोणमुक्तं शरवर्षमदीधरत् ॥ ६-९६-३२ (४३०८५)
अद्भुतं च महाराज तत्र चक्रे वृकोदरः ।
यत्पुत्रांस्तेऽवधीत्सङ्ख्ये द्रोणं चैव न्यवारयत् ॥ ६-९६-३३ (४३०८६)
पुत्रेषु तव वीरेषु चिक्रीडार्जुनपूर्वजः ।
मृगेष्विव महाराज चरन्व्याघ्रो महाबलः ॥ ६-९६-३४ (४३०८७)
यथा हि पशुमध्यस्थो द्रावयेत पशून्वृकः ।
वृकोदरस्तव सुतांस्तथा व्यद्रावयद्रणे ॥ ६-९६-३५ (४३०८८)
गाङ्गेयो भगदत्तश्च गोतमश्च महारथाः ।
पाण्डवं रभसं युद्धे वारयामासुरर्जुनम् ॥ ६-९६-३६ (४३०८९)
अस्त्रैरस्त्राणि संवार्य तेषां सोऽतिरथो रणे
प्रवीरांस्तव सैन्येषु प्रेषयामास मृत्यवे ॥ ६-९६-३७ (४३०९०)
अभिमन्युस्तु राजानमम्बष्टं लोकविश्रुतम् ।
विरथं रथिनां श्रेष्ठं कारयामास सायकैः ॥ ६-९६-३८ (४३०९१)
विरथो वध्यमानस्तु सौभद्रेण यशस्विना ।
अवप्लुत्य रथात्तूर्णमम्बष्ठो वसुधाधिपः ॥ ६-९६-३९ (४३०९२)
असिं चिक्षेप समरे सौभद्रस्य महात्मनः ।
आरुरोह रथं चैव हार्दिक्यस्य महाबलः ॥ ६-९६-४० (४३०९३)
आपतन्तं तु निस्त्रिंशं युद्धमार्गविशारदः ।
लाघवाद्व्यंसयामास सौभद्रः परवीरहा ॥ ६-९६-४१ (४३०९४)
व्यंसितं वीक्ष्य निस्त्रिंशं सौभद्रेण रणे तदा ।

साधुसाध्विति सैन्यानां प्रणादोऽभूद्विशांपते ॥ ६-९६-४२ (४३०९५)
धृष्टद्युम्नमुखास्त्वन्ये तव सैन्यमयोधयन् ।
तथैव तावकाः सर्वे पाण्डुसैन्यमयोधयन् ॥ ६-९६-४३ (४३०९६)
तत्राक्रन्दो महानासीत्तव तेषां च भारत ।
निघ्नतां दृढमन्योन्यं कुर्वतां कर्म दुष्करम् ॥ ६-९६-४४ (४३०९७)
अन्योन्यं हि रणे शूराः केशेष्वाक्षिप्य मानिनः ।
नखदन्तैरयुध्यन्त मुष्टिभिर्जानुभिस्तथा ॥ ६-९६-४५ (४३०९८)
तलैश्चैवाथ निस्त्रिंशैर्बाहुभिश्च सुसंस्थितैः ।
विवरं प्राप्य चान्योन्यमनयन्यमसादनम् ॥ ६-९६-४६ (४३०९९)
न्यहनच्च पिता पुत्रं पुत्रश्च पितरं तथा ।
व्याकुलीकृतसंकल्पा युयुधुस्तत्र मानवाः ॥ ६-९६-४७ (४३१००)
रणे चारूणि चापानि हेमपृष्ठानि मारिष ।
हतानामपविद्धानि कलापाश्च महाधनाः ॥ ६-९६-४८ (४३१०१)
जातरूपमयैः पुङ्खै राजतैर्निशिताः शराः ।
तैलधौता व्यराजन्त निर्मुक्तभुजगोपमाः ॥ ६-९६-४९ (४३१०२)
खड्गाश्च दान्तत्सरवो जातरूपपरिष्कृताः ।
चर्माणि चापविद्धानि रुक्मचित्राणि धन्विनां ॥ ६-९६-५० (४३१०३)
सुवर्णविकृताः प्रासाः प्रभग्ना हेमभूषिताः ।
जातरूपमया यष्ट्यः शक्त्यश्च कनकोज्ज्वलाः ॥ ६-९६-५१ (४३१०४)
अवस्कन्दाश्च पतिता मुसलानि गुरूणि च ।
परिघाः पट्टसाश्चैव भिण्डिपालाश्च मारिष ॥ ६-९६-५२ (४३१०५)
पतिता विविधाश्चापाश्चित्रा हेमपरिष्कृताः ।
कुथा बहुविधाकाराश्चामरा व्यजनानि च ॥ ६-९६-५३ (४३१०६)
नानाविधानि शस्त्राणि प्रगृह्य पतिता नराः ।
जीवन्त इव दृश्यनते गतसत्त्वा महारथाः ॥ ६-९६-५४ (४३१०७)
गजाविमथितैर्गात्रैर्मुसलैर्भिन्नमस्तकाः ।
गजावाजिरथक्षुण्णाः शेरते स्म नराः क्षितौ ॥ ६-९६-५५ (४३१०८)
तथैवाश्वनृनागानां शरीरैर्विबभौ तदा ।
संछन्ना वसुधा राजन्पर्वतैरिव शातितैः ॥ ६-९६-५६ (४३१०९)
समरे पतितैश्चैव शक्त्यृष्टिशरतोमरैः ।
निस्त्रिंशैः पट्टसैः प्रासैरवस्कन्दैः परश्वथैः ॥ ६-९६-५७ (४३११०)
परिघैर्भिण्डिपालैश्च शतघ्नीभिश्च मारिष ।
शरीरैः शस्त्रनिर्भिन्नैः समास्तीर्यत मेदिनी ॥ ६-९६-५८ (४३१११)
विशब्दैरल्पशब्दैश्च शोणितौगपरिप्लुतैः ।
गतासुभिरमित्रघ्न विबभौ निचिता मही ॥ ६-९६-५९ (४३११२)
सतलत्रैः सकेयूरैर्बाहुभिश्चन्दनोक्षितैः ।

हस्तिहस्तोपमैश्छिन्नैरूरुभिश्च तरस्विनाम् ॥ ६-९६-६० (४३११३)
बद्धचूजामणिवरैः शिरोभिश्च सकुण्डलैः ।
पातितै ऋषभाक्षाणां बभौ भारत मेदिनी ॥ ६-९६-६१ (४३११४)
कवचैः शोणितादिग्धैर्विप्रकीर्णैश्च काञ्चनैः ।
रराज सुभृशं भूमिः शान्तार्चिर्भिरिवानलैः ॥ ६-९६-६२ (४३११५)
विप्रविद्धैः कलापैश्च पतितैश्च शरासनैः ।
विप्रकीर्णैः शरैश्चैव रुक्मपुङ्खैः समन्ततः ॥ ६-९६-६३ (४३११६)
रथैश्च सर्वतो भग्नैः किङ्किणीजालभूषितैः ।
वाजिभिश्च हतैर्बाणैः स्रस्तजिह्वैः सशोणितैः ॥ ६-९६-६४ (४३११७)
अनुकर्षैः पताकाभिरुपासङ्गैर्ध्वजैरपि ।
प्रवीराणां महाशङ्खैर्विप्रकीर्णैश्च पाण्डुरैः ॥ ६-९६-६५ (४३११८)
स्रस्तहस्तैश्च मातङ्गैः शयानैर्विबभौ मही ।
नानारूपेरलंकारैः प्रमदेवाभ्यलङ्कृता ॥ ६-९६-६६ (४३११९)
दन्तिभिश्चापरैस्तत्र सप्राणैर्गाढवेदनैः ।
करैः शब्दं विमुञ्चद्भिः शीकरं च मुहुर्मुहुः ॥ ६-९६-६७ (४३१२०)
विबभौ तद्रणस्थानं स्यन्दमानैरिवाचलैः ।
नानारागैः कम्बलैश्च परिस्तोमेश्च दन्तिनाम् ॥ ६-९६-६८ (४३१२१)
वैदूर्यमणिदण्डैश्च पतितैरङ्कुशैः शुभैः ।
घण्टाभिश्च गजेन्द्राणां पतिताभिः समन्ततः ॥ ६-९६-६९ (४३१२२)
विपाटितविचित्राभिः कुथाभिरङ्कुशैस्तथा ।
ग्रैवेयैश्चित्ररूपैश्च रुक्मकक्ष्याभिरेव च ॥ ६-९६-७० (४३१२३)
यन्त्रैश्च बहुधा च्छिन्नैस्तोमरैश्चापि काञ्चनैः ।
ग्रराज सुभृशं भूमिस्तत्रतत्र विशांपते'
अश्वानां रेणुकपिलै रुक्मच्छन्नैरुरश्छदैः ॥ ६-९६-७१ (४३१२४)
सादिनां च भुजैश्छिन्नैः पतितैः साङ्गदैस्तथा ।
प्रासैश्च विमलैस्तीक्ष्णैर्विमलाभिस्तथर्ष्टिभिः ॥ ६-९६-७२ (४३१२५)
उष्णीषैश्च तथा चित्रैर्विप्रविद्धैस्ततस्ततः ।
विचित्रैर्बाणवर्षैश्च जातरूपपरिष्कृतैः ॥ ६-९६-७३ (४३१२६)
अश्वास्तरपरिस्तोमै राङ्कवैर्मृदितैस्तथा ।
नरेन्द्रचूडामणिभिर्विचित्रैश्च महाधनैः ॥ ६-९६-७४ (४३१२७)
छत्रैस्तथापविद्धैश्च चामरैर्व्यजनैरपि ।
पद्मेन्दुद्युतिभिश्चैव वदनैश्चारुकुण्डलैः ॥ ६-९६-७५ (४३१२८)
क्लृप्तश्मश्रुभिरत्यर्थं वीराणां समलङ्कृतैः ।
अपविद्धैर्महाराज सुवर्णोज्ज्वलकुण्डलैः ॥ ६-९६-७६ (४३१२९)
ग्रहनक्षत्रशबला द्यौरिवासीद्वसुंधरा ।
एवमेते महासेने मृदिते तत्र भारत ॥ ६-९६-७७ (४३१३०)

परस्परं समासाद्य तव तेषां च संयुगे ।
तेषु श्रान्तेषु भग्नेषु मृदितेषु च भारत ॥ ६-९६-७८ (४३१३१)
रात्रिः समभवत्तत्र नापश्याम ततोऽनुगान् ।
ततोऽवहारं सैकन्यानां प्रचुक्रुः कुरुपाण्डवाः ॥ ६-९६-७९ (४३१३२)
घोरे निशामुखे रौद्रे वर्तमाने महाभये ।
अवहारं ततः कृत्वा सहिताः कुरुपाणड्वाः ।
न्यविशन्त निशाकाले गत्वा स्वशिबिरं तदा ॥ ॥ ६-९६-८० (४३१३३)

इति श्रीमन्महाभारते भीष्मपर्वणि भीष्मवधपर्वणि
अष्टमदिवसयुद्धे षण्णवतितमोऽध्यायः ॥
Mahabharata - Bhishma Parva - Chapter Footnotes

६-९६-२३ व्यूढोरस्कं इति झो पाठः ॥
६-९६-४८ अपविद्धानि पतितानि ॥

---

भिस्मपर्व-अध्यय०९७
॥ श्रीः ॥
६.९७. अध्यायः ९७

Mahabharata - Bhishma Parva - Chapter Topics
भीष्मो न्यस्तशस्त्रश्चेदहं पाण्डवान् जेष्यामीति कर्णबोधितेन
दुर्योधनेन रात्रौ भीष्ममेत्य कर्णस्य युद्धानुज्ञाप्रार्थना ॥ १ ॥

Mahabharata - Bhishma Parva - Chapter Text

६-९७-० (४३१३४)
सञ्जय उवाच। ६-९७-०क्ष् (४१८२)
ततो दुर्योधनो राजा शकुनिश्चापि सौबलः ।
दुःशासनश्च पुत्रस्ते सूतपुत्रश्च दुर्जयः ॥ ६-९७-१ (४३१३५)
समागम्य महाराज मन्त्रं चक्रुर्विवक्षितम् ।
कथं पाण्डुसुताः सङ्ख्ये जेतव्याः सगणा इति ॥ ६-९७-२ (४३१३६)
ततो दुर्योधनो राजा सर्वांस्तानाह मन्त्रिणः ।
सूतपुत्रं समाभाष्य सौबलं च महाबलम् ॥ ६-९७-३ (४३१३७)
द्रोणो भीष्म कृपः शल्यः सौमदत्तिश्च संयुगे ।
न पार्थान्प्रति बाधन्ते न जाने किंनु कारणम् ॥ ६-९७-४ (४३१३८)
अवध्यमानास्ते चापि क्षपयन्ति बलं मम ।
सोऽस्मि क्षीणबलः कर्ण क्षीणशस्त्रश्च संयुगे ॥ ६-९७-५ (४३१३९)

ग्द्रोणस्य प्रमुखे वीरा हतास्ते भ्रातरो मम ।
भीमसेनेन राधेय मम चैव च पश्यतः '॥ ६-९७-६ (४३१४०)
निकृतः पाण्डवैः शूरैरवध्यैर्दैवतैरपि ।
सोऽहं संशयमापन्नः प्रकरिष्ये कथं रणम् ॥ ६-९७-७ (४३१४१)
सञ्जय उवाच। ६-९७-८क्ष् (४१८३)
तमब्रवीन्महाराज सूतपुत्रो नराधिपम् ।
मा शोच भरतश्रेष्ठ करिष्येऽहं प्रियं तव ॥ ६-९७-८ (४३१४२)
भीष्मः शान्तनवस्तूर्णमपयातु महारणात् ।
निवृत्ते युधि गाङ्गेये न्यस्तशस्त्रे च भारत ॥ ६-९७-९ (४३१४३)
अहं पार्थान्हनिष्यामि सहितान्सर्वसोमकैः ।
पश्यतो युधि भीष्मस्य शपे सत्येन ते नृप ॥ ६-९७-१० (४३१४४)
पाण्डवेषु दयां नित्यं स हि भीष्मः करोति वै ।
अशक्तश्च रणे भीष्मो जेतुमेतान्महारथान् ॥ ६-९७-११ (४३१४५)
अभिमानी रणे भीष्मो नित्यं चापि रणप्रियः ।
स कथं पाण्डवान्युद्धे जेष्यते तात संगतान् ॥ ६-९७-१२ (४३१४६)
स त्वं शीघ्रमितो गत्वा भीष्मस्य शिबिरं प्रति ।
अनुमान्य गुरुं वृद्धं शस्त्रं न्यासय भारत ॥ ६-९७-१३ (४३१४७)
न्यस्तशस्त्रे ततो भीष्मे निहतान्पश्य पाण्डवान् ।
मयैकेन रणे राजन्ससुहृद्गणबान्धवान् ॥ ६-९७-१४ (४३१४८)
एवमुक्तस्तु कर्णेन पुत्रो दुर्योधनस्तव ।
अब्रवीद्भ्रातरं तत्र दुःशासनमिदं वचः ॥ ६-९७-१५ (४३१४९)
अनुयात्रं यथा सर्वं सज्जीभवति सर्वशः ।
दुःशासन तथा क्षिप्रं सर्वमेवोपपादय ॥ ६-९७-१६ (४३१५०)
एवमुक्त्वा ततो राजन्कर्णमाह जनेश्वरः ।
अनुमान्य रणे भीष्ममेषोऽहं द्विपदां वरम् ॥ ६-९७-१७ (४३१५१)
आगमिष्ये ततः क्षिप्रं त्वत्सकाशमरिन्दम ।
अपक्रान्ते ततो भीष्मे प्रहरिष्यसि संयुगे ॥ ६-९७-१८ (४३१५२)
निष्पपात ततस्तूर्णं पुत्रस्तव विशांपते ।
सहितो भ्रातृभिस्तैस्तु देवैरिव शतक्रतुः ॥ ६-९७-१९ (४३१५३)
ततस्तं नृपशार्दूलं शार्दूलसमविक्रमम् ।
आरोपयद्धयं तूर्णं भ्राता दुःशासनस्तदा ॥ ६-९७-२० (४३१५४)
अङ्गदी बद्धमुकुटो हस्ताभरणवान्नृप ।
धार्तराष्ट्रो महाराज विबभौ स पथि व्रजन् ॥ ६-९७-२१ (४३१५५)
भण्डीपुष्पनिकाशेन तपनीयनिभेन च ।
अनुलिप्तः पराद्ध्र्येन चन्दनेन सुगन्धिना ॥ ६-९७-२२ (४३१५६)
अरजोम्बरसंवीतः सिंहखेलगतिर्नृप ।

शुशुभे विमलार्चिष्मान्नभसीव दिवाकरः ॥ ६-९७-२३ (४३१५७)
तं प्रयान्तं नरव्याघ्रं भीष्मस्य शिबिरं प्रति ।
अनुजग्मुर्महेष्वासाः सर्वलोकस्य धन्विनः ।
भ्रातरश्च महेष्वासास्त्रिदशा इव वासवम् ॥ ६-९७-२४ (४३१५८)
हयानन्ये समारुह्य गजानन्ये च भारत ।
रथानन्ये नरश्रेष्ठं परिवव्रुः समन्ततः ॥ ६-९७-२५ (४३१५९)
ग्पदातयश्च त्वरिता नखरप्रासयोधिनः ।
परिवव्रुर्महेष्वासं धार्तराष्ट्रं महारथम् ॥' ६-९७-२६ (४३१६०)
आत्तशस्त्राश्च सुहृदो रक्षणार्थं महीपतेः ।
प्रादुर्बभूवुः सहिताः शक्रस्येवामरा दिवि ॥ ६-९७-२७ (४३१६१)
स पूज्यमानः कुरुभिः कौरवाणां महाबलः ।
प्रययौ सदनं राजा गाङ्गेयस्य यशस्विनः ।
अन्वीयमानः सततं सोदरैः परिवारितः ॥ ६-९७-२८ (४३१६२)
दक्षिणं दक्षिणः काले संभृत्य स्वभुजं तदा ।
हस्तिहस्तोपमं सौम्यं सर्वशत्रुनिबर्हणम् ॥ ६-९७-२९ (४३१६३)
प्रगृह्णन्नञ्जलीन्नॄणामुद्यतान्सर्वतो दिशः ।
शुश्राव मधुरा वाचो नानादेशनिवासिनाम् ॥ ६-९७-३० (४३१६४)
संस्तूयमानः सूतैश्च मागधैश्च महायशाः ।
पूजयानश्च तान्सर्वान्सर्वलोकेश्वरेश्वरः ॥ ६-९७-३१ (४३१६५)
प्रदीपैः काञ्चनैस्तत्र गन्धतैलावसेचितैः ।
परिवव्रुर्महाराजं प्रज्वलद्भिः समन्ततः ॥ ६-९७-३२ (४३१६६)
स तैः परिवृतो राजा प्रदीपैः काञ्चनैर्ज्वलन् ।
शुशुभे चन्द्रमायुक्तो दीप्तैरिव महाग्रहैः ॥ ६-९७-३३ (४३१६७)
कञ्चुकोष्णीषिणस्तत्र वेत्रझर्झरपाणयः ।
प्रोत्सारयन्तः शनकैस्तं जनं सर्वतो दिशम् ॥ ६-९७-३४ (४३१६८)
संप्राप्य तु ततो राजा भीष्मस्य सदनं शुभम् ।
अवतीर्य हयाच्चापि भीष्मं प्राप्य जनेश्वरः ॥ ६-९७-३५ (४३१६९)
अभिवाद्य ततो भीष्मं निषण्णः परमासने ।
काञ्चने सर्वतोभद्रे स्पर्द्ध्यास्तरणसंवृते ।
उवाच प्राञ्जलिर्भीष्मं बाष्पकण्ठोऽश्रुलोचनः ॥ ६-९७-३६ (४३१७०)
त्वां वयं हि समाश्रित्य संयुगे शत्रुसूदन ।
उत्सहेम रणे जेतुं सेन्द्रानपि सुरासुरान् ।
किमु पाण्डुसुतान्वीरान्ससुहृद्गणबान्धवान् ॥ ६-९७-३७ (४३१७१)
तस्मादर्हसि गाङ्गेय कृपां कर्तुं मयि प्रभो ।
जहि पाण्डुसुतान्वारान्महेन्द्र इव दानवान् ॥ ६-९७-३८ (४३१७२)
पूर्वमुक्तं महाबाहो हनिष्यामि ससोमकान् ।

पाञ्चालान्केकयैः सार्धं करूपांश्चेति भारत ॥ ६-९७-३९ (४३१७३)
त्वद्वचः सत्यमेवास्तु जहि पार्थान्समागतान् ।
सोमकांश्च महेष्वासान्सत्यवाग्भव भारत ॥ ६-९७-४० (४३१७४)
दयया यदि वा राजन्द्वेष्यभावान्मम प्रभो ।
मन्दभाग्यतया वापि मम रक्षसि पाण्डवान् ॥ ६-९७-४१ (४३१७५)
अनुजानीहि समरे कर्णमाहवशोभिनम् ।
स जेष्यति रणे पार्थान्ससुहृद्गणबान्धवान् ॥ ६-९७-४२ (४३१७६)
सञ्जय उवाच। ६-९७-४३क्ष् (४१८४)
स एवमुक्त्वा नृपतिः पुत्रो दुर्योधनस्तव ।
नोवाच वचनं किंचिद्भीष्मं सत्यपराक्रमम् ॥ ॥ ६-९७-४३ (४३१७७)

इति श्रीमन्महाभारते भीष्मपर्वणि भीष्मवधपर्वणि
सप्तनवतितमोऽध्यायः ॥
Mahabharata - Bhishma Parva - Chapter Footnotes

६-९७-२१ भण्डीपुष्पं मञ्जिष्ठापुष्पम् ॥
६-९७-२९ दक्षिणं स्वभुजं संभृत्य समुद्धृत्य ॥

---

भिस्मपर्व-अध्यय०९८
॥ श्रीः ॥
६.९८. अध्यायः ९८

Mahabharata - Bhishma Parva - Chapter Topics
भीष्मेण दुर्योधनंप्रति अर्जुनपराक्रमप्रशंसनपूर्वकं
पाण्डवानामजय्यत्वमभिधाय शिखण्डिवर्जं पाञ्चालादिवधप्रतिज्ञा
॥ १ ॥

Mahabharata - Bhishma Parva - Chapter Text

६-९८-० (४३१७८)
सञ्जय उवाच। ६-९८-०क्ष् (४१८५)
वाक्शल्यैस्तव पुत्रेण सोऽतिविद्धो महामनाः ।
नोवाच दुःखोपहतो ह्यप्रियं प्रियमण्वपि ॥ ६-९८-१ (४३१७९)
स ध्यात्वा सुचिरं कालं दुःखरोषसमन्वितः ।
श्वसन्निव महानागः प्रणुन्नो वाक्शलाकया ॥ ६-९८-२ (४३१८०)
उद्वृत्य चक्षुषी लोपान्निर्दहन्निव भारत ।
सदेवासुरगन्धर्वं लोकं काल इवापरः ॥ ६-९८-३ (४३१८१)

अब्रवीत्तव पुत्रं च सामपूर्वमिदं वचः ।
किं त्वं दुर्योधनैवं मां वाक्षल्यैरपकृन्तसि ॥ ६-९८-४ (४३१८२)
घटमानं यथाशक्ति कुर्वाणं च तव प्रियम् ।
जुह्वानं समरे प्राणांस्तव वै प्रियकाम्यया ॥ ६-९८-५ (४३१८३)
यदा तु पाण्डवः शूरः खाण्डवेऽग्निमतर्पयत् ।
पराजित्य रणे शक्रं पर्याप्तं तन्निदर्शनम् ॥ ६-९८-६ (४३१८४)
यदा च त्वां महाबाहो गन्धर्वैर्हृतमोजसा ।
अमोचयत्पाण्डुसुतः पर्याप्तं तन्निदर्शनम् ॥ ६-९८-७ (४३१८५)
द्रवमाणेषु शूरेषु सोदरेषु तव प्रभो ।
सूतपुत्रे च राधेये पर्याप्तं तन्निदर्शनम् ॥ ६-९८-८ (४३१८६)
यच्च नः सहितान्सर्वान्विराटनगरे तदा ।
एक एवाजयत्पार्थः पर्याप्तं तन्निदर्शनम् ॥ ६-९८-९ (४३१८७)
द्रोणं च युधि संरब्धं मां च निर्जित्य संयुगे ।
वासांसि स समादत्त पर्याप्तं तन्निदर्शनम् ॥ ६-९८-१० (४३१८८)
तथा द्रौणिं महेष्वासं शारद्वतमथापि च ।
गोग्रहे जितवान्पूर्वं पर्याप्तं तन्निदर्शनम् ॥ ६-९८-११ (४३१८९)
विजित्य च यदा कर्णं सदा पुरुषमानिनम् ।
उत्तरायै ददौ वस्त्रं पर्याप्तं तन्निदर्शनम् ॥ ६-९८-१२ (४३१९०)
निवातकवचान्युद्धे वासवेनापि दुर्जयान् ।
जितवान्समरे पार्थः पर्याप्तं तन्निदर्शनम् ॥ ६-९८-१३ (४३१९१)
को हि शक्तो रणे जेतुं पाण्डवं रभसं तदा ।
यस्य गोप्ता जगद्गोप्ता शङ्खचक्रगदाधरः ॥ ६-९८-१४ (४३१९२)
वासुदेवोऽनन्तशक्तिः सृष्टिसंहारकारकः ।
सर्वेश्वरो देवदेवः परमात्मा सनातनः ॥ ६-९८-१५ (४३१९३)
उक्तोऽसि बहुशो राजन्नारदाद्यैर्महर्षिभिः ।
त्वं तु मोहान्न जानीषे वाच्यावाच्यं सुयोधन ॥ ६-९८-१६ (४३१९४)
मुमूर्षुर्हि नरः सर्वान्वृक्षान्पश्यति काञ्चनान् ।
तथा त्वमपि गान्धारे विपरीतानि पश्यसि ॥ ६-९८-१७ (४३१९५)
स्वयं वैरं महत्कृत्वा पाण्डवैः सह सृञ्जयैः ।
युद्ध्यस्व तानद्य रणे पश्यामः पुरुषो भव ।
ग्अशक्याः पाण्डवा जेतुं देवैरपि सवासवैः ॥' ६-९८-१८ (४३१९६)
अहं तु सोमकान्सर्वान्पाञ्चालांश्च समागतान् ।
निहनिष्ये नरव्याघ्र वर्जयित्वा शिखण्डिनम् ॥ ६-९८-१९ (४३१९७)
तैर्वाऽहं निहतः सङ्ख्ये गमिष्ये यमसादनम् ।
तान्वा निहत्य समरे प्रीतिं दास्याम्यहं तव ॥ ६-९८-२० (४३१९८)
पूर्वं हि स्त्री समुत्पन्ना शिखण्डी राजवेश्मनि ।

वरदानात्पुमाञ्जातः सैषा वे स्त्री शिखण्डिनी ॥ ६-९८-२१ (४३१९९)
तमहं न हनिष्यामि प्राणत्यागेऽपि भारत ।
याऽसौ प्राङ्वर्मिता धात्रा सैषा वै स्त्री शिखण्डिनी ॥ ६-९८-२२ (४३२००)
सुखं स्वपिहि गान्धारे श्वोऽस्मि कर्ता महारणम् ।
यं जनाः कथयिष्यन्ति यावत्स्थास्यति मेदिनी ॥ ६-९८-२३ (४३२०१)
सञ्जय उवाच। ६-९८-२४क्ष् (४१८६)
एवमुक्तस्तव सुतो निर्जगाम जनेश्वर ।
अभिवाद्य गुरुं मूर्ध्ना प्रययौ स्वं निवेशनम् ॥ ६-९८-२४ (४३२०२)
आगम्य तु ततो राजा विसृज्य च महाजनम् ।
प्रविवेश ततस्तूर्णं क्षयं शत्रुक्षयंकरः ॥ ६-९८-२५ (४३२०३)
प्रहृष्टः स निशां तां च गमयामास पार्थिवः ।
प्रभातायां च शर्वर्यां प्रातरुत्थाय तान्नृपः ॥ ६-९८-२६ (४३२०४)
राज्ञः समाज्ञापयत सेनां योजयतेति ह ।
अद्य भीष्मो रणे क्रुद्धो निहनिष्यति सोमकान् ॥ ६-९८-२७ (४३२०५)
दुर्योधनस्य तच्छ्रुत्वा रात्रौ विलपितं बहु ।
मन्यमानः स तं राजन्प्रत्यादेशमिवात्मनः ॥ ६-९८-२८ (४३२०६)
निर्वेदं परमं गत्वा विनिन्द्य परवश्यताम् ।
दीर्घं दध्यौ शान्तनवो योद्धुकामोऽर्जुनं रणे ॥ ६-९८-२९ (४३२०७)
इङ्गितेन तु तज्ज्ञात्वा गाङ्गेयेन विचिन्तितम् ।
दुर्योधनो महाराज दुःशासनमचोदयत् ॥ ६-९८-३० (४३२०८)
दुःशासन रथास्तूर्णं युज्यन्तां भीष्मरक्षिणः ।
द्वाविंशतिमनीकानि सर्वाण्येवाभिचोदय ॥ ६-९८-३१ (४३२०९)
अयं हि समनुप्राप्तो वर्षपूगाभिचिन्तितः ।
पाण्डवानां ससैन्यानां वधो राज्यस्य चागमः ॥ ६-९८-३२ (४३२१०)
तत्र कार्यमहं मन्ये भीष्मस्यैवाभिरक्षणम् ।
स नो गुप्तः सहायः स्याद्धन्यात्पार्थांश्च संयुगे ॥ ६-९८-३३ (४३२११)
अब्रवीद्धि विशुद्धात्मा नाहं हन्यां शिखण्डिनम् ।
स्त्रीपूर्वको ह्यसौ राजंस्तस्माद्वर्ज्यो मया रणे ॥ ६-९८-३४ (४३२१२)
लोकस्तद्वेद यदहं पितुः प्रियचिकीर्षया ।
राज्यं स्फीतं महाबाहो स्त्रियश्च त्यक्तवान्पुरा ॥ ६-९८-३५ (४३२१३)
नैव चाहं स्त्रियं जातु न स्त्रीपूर्वं कथंचन ।
हन्यां युधि नरश्रेष्ठ सत्यमेतद्ब्रवीमि ते ॥ ६-९८-३६ (४३२१४)
अयं स्त्रीपूर्वको राजञ्छिखण्डी यदि ते श्रुतः ।
उद्योगे कथितं सर्वं यथा जाता शिखण्डिनी ॥ ६-९८-३७ (४३२१५)
कन्या भूत्वा पुमाञ्जातः स च योत्स्यति भारत ।
तस्याहं प्रमुखे बाणान्न मुञ्चेयं कथंचन ॥ ६-९८-३८ (४३२१६)

युद्धे हि क्षत्रियांस्तात पाण्डवानां जयैषिणः ।
सर्वानन्यान्हनिष्यामि संप्राप्तान्रणमूर्धनि ॥ ६-९८-३९ (४३२१७)
एवं मां भरतश्रेष्ठ गाङ्गेयः प्राह शास्त्रवित् ।
तत्र सर्वात्मना मन्ये गाङ्गेयस्यैव पालनम् ॥ ६-९८-४० (४३२१८)
अरक्ष्यमाणं हि वृको हन्यात्सिंहं महाहवे ।
मा वृकेणेव गाङ्गेयं घातयेम शिखण्डिना ॥ ६-९८-४१ (४३२१९)
मातुलः शकुनिः शल्यः कृपो द्रोणो विविंशतिः ।
यत्ता रक्षन्तु गाङ्गेयं तस्मिन्गुप्ते ध्रुवो जयः ॥ ६-९८-४२ (४३२२०)
एतच्छ्रुत्वा तु ते सर्वे दुर्योधनवचस्तदा ।
सर्वतो रथवंशेन गाङ्गेयं पर्यवारयन् ॥ ६-९८-४३ (४३२२१)
पुत्राश्च तव गाङ्गेयं परिवार्य ययुर्मुदा ।
कम्पयन्तो भुवं द्यां च क्षोभयन्तश्च पाण्डवान् ॥ ६-९८-४४ (४३२२२)
ते रथैः सुप्रसंयुक्तैर्दन्तिभिश्च महारथाः ।
परिवार्य रणे भीष्मं दंशिताः समवस्थिताः ॥ ६-९८-४५ (४३२२३)
यथा देवासुरे युद्धे त्रिदशा वज्रधारिणम् ।
सर्वे ते स्म व्यतिष्ठन्त रक्षन्तस्तं महारथम् ॥ ६-९८-४६ (४३२२४)
ततो दुर्योधनो राजा पुनर्भ्रातरमब्रवीत् ।
सव्यं चक्रं युधामन्युरुत्तमौजाश्च दक्षिणम् ।
गोप्तारावर्जुनस्यैतावर्जुनोऽपि शिखण्डिनः ॥ ६-९८-४७ (४३२२५)
रक्ष्यमाणः स पार्थेन तथास्माभिर्विवर्जितः ।
यथा भीष्मं न नो हन्याद्दुःशासन तथा कुरु ॥ ६-९८-४८ (४३२२६)
सञ्जय उवाच। ६-९८-४९क्ष् (४१८७)
भ्रातुस्तद्वचनं श्रुत्वा पुत्रो दुःशासनस्तव ।
भीष्मं प्रमुखतः कृत्वा प्रययौ सह सेनया ॥ ६-९८-४९ (४३२२७)
भीष्मं तु रथवंशेन दृष्ट्वा समभिसंवृतम् ।
अर्जुनो रथिनां श्रेष्ठो धृष्टद्युम्नमुवाच ह ॥ ६-९८-५० (४३२२८)
शिखण्डिनं नरव्याघ्रं भीष्मस्य प्रमुखे नृप ।
स्थापयस्वाद्य पाञ्चाल्य तस्य गोप्ताऽहमित्युत ॥ ॥ ६-९८-५१ (४३२२९)

इति श्रीमन्महाभारते भीष्मपर्वणि भीष्मवधपर्वणि
नवमदिवसयुद्धे अष्टनवतितमोऽध्यायः ॥

Mahabharata - Bhishma Parva - Chapter Footnotes

६-९८-२५ महाजनं जनसमूहम् ।क्षयं गृहम् ॥
६-९८-२८ प्रत्यादेशं निराकरम् ॥
६-९८-२९ निर्वेदं खेदम् ॥

६-९८-३७ उद्योगे युद्धात्प्राक् ॥

---

भिस्मपर्व-अध्यय०९९
॥ श्रीः ॥
६.९९. अध्यायः ९९

Mahabharata - Bhishma Parva - Chapter Topics
कुरुपाण्डवसेनयोर्व्यूहरचनापूर्वकं परस्पराभिगमनम् ॥१ ॥

Mahabharata - Bhishma Parva - Chapter Text

६-९९-० (४३२३०)
सञ्जय उवाच। ६-९९-०क्ष् (४१८८)
ततः शान्तनवो भीष्मो निर्ययौ सह सेनया ।
व्यूहं चाव्यूहत महत्सर्वतोभद्रमात्मनः ॥ ६-९९-१ (४३२३१)
कृपश्च कृतवर्मा च शैब्यश्चैव महारथः ।
शकुनिः सैन्धवश्चैव काम्भोजश्च सुदक्षिणः ॥ ६-९९-२ (४३२३२)
भीष्मेण सहिताः सर्वे पुत्रैश्च तव भारत ।
अग्रतः सर्वसैन्यानां व्यूहस्य प्रमुखे स्थिताः ॥ ६-९९-३ (४३२३३)
द्रोणो भूरिश्रवाः शल्यो भगदत्तश्च मारिष ।
दक्षिणं पक्षमाश्रित्य स्थिता व्यूहस्य दंशिताः ॥ ६-९९-४ (४३२३४)
अश्वत्थामा सोमदत्तश्चावन्त्यौ च महारथौ ।
महत्या सेनया युक्ता वामं पक्षमपालयन् ॥ ६-९९-५ (४३२३५)
दुर्योधनो महाराज त्रिगर्तैः सर्वतो वृतः ।
व्यूहमध्ये स्थितो राजन्पाण्डवान्प्रति भारत ॥ ६-९९-६ (४३२३६)
अलम्बुसो रथश्रेष्ठः श्रुतायुश्च महारथः ।
पृष्ठतः सर्वसैन्यानां स्थितौ व्यूहस्य दंशितौ ॥ ६-९९-७ (४३२३७)
एवं च तं तदा व्यूहं कृत्वा भारत तावकाः ।
सन्नद्धाः समदृश्यन्त प्रतपन्त इवाग्नयः ॥ ६-९९-८ (४३२३८)
ततो युधिष्ठिरो राजा भीमसेनश्च पाण्डवः ।
नकुलः सहदेवश्च माद्रीपुत्रावुभावपि ॥ ६-९९-९ (४३२३९)
अग्रतः सर्वसैन्यानां स्थिता व्यूहस्य दंशिताः ।
धृष्टद्युम्नो विराटश्च सात्यकिश्च महारथः ॥ ६-९९-१० (४३२४०)
स्थिताः सैन्येन महता परानीकविनाशनाः ।
शिखण्डी विजयश्चैव राक्षसश्च घटोत्कचः ॥ ६-९९-११ (४३२४१)
चेकितानो महाबाहुः कुन्तिभोजश्च वीर्यवान् ।

स्थिता रणे महाराज महत्या सेनया वृताः ॥ ६-९९-१२ (४३२४२)
अभिमन्युर्महेष्वासो द्रुपदश्च महाबलः ।
युयुधानो महेष्वासो युधामन्युश्च वीर्यवान् ॥ ६-९९-१३ (४३२४३)
केकया भ्रातरश्चैव स्थिता युद्धाय दंशिताः ।
एवं तेऽपि महाव्यूहं प्रतिव्यूह्य सुदुर्जयम् ॥ ६-९९-१४ (४३२४४)
पाण्डवाः समरे शूराः स्थिता युद्धाय दंशिताः ।
तावकास्तु रणे यत्ताः सहसेना नराधिपाः ॥ ६-९९-१५ (४३२४५)
अभ्युद्ययू रणे पार्थान्भीष्मं कृत्वाऽग्रतो नृप ।
तथैव पाण्डवा राजन्भीमसेनपरोगमाः ॥ ६-९९-१६ (४३२४६)
भीष्मं योद्धुमभीप्सन्तः संग्रामे विजयैषिणः ।
क्ष्वेलाः किलकिलाः शङ्खान्क्रकचान्गोविषाणिकाः ॥ ६-९९-१७ (४३२४७)
भेरीमृदङ्गपणवान्नादयन्तश्च पुष्करान् ।
पाण्डवा अभ्यवर्तन्त नदन्तो भैरवान्रवान् ॥ ६-९९-१८ (४३२४८)
भेरीमृदङ्गशङ्खानां दुन्दुभीनां च निःस्वनैः ।
उत्कृष्टसिंहनादैश्च वल्गितैश्च पृथग्विधैः ॥ ६-९९-१९ (४३२४९)
वयं प्रतिनदन्तस्तानगच्छाम त्वरान्विताः ।
सहसैवाभिसंक्रुद्धास्तदासीत्तुमुलं महत् ॥ ६-९९-२० (४३२५०)
ततोऽन्योन्यं प्रधावन्तः संप्रहारं प्रचक्रिरे ।
ततः शब्देन महता प्रचकम्पे वसुंधरा ॥ ६-९९-२१ (४३२५१)
पक्षिणश्च महाघोरं व्याहरन्तो विबभ्रमुः ।
सप्रभश्चोदितः सूर्यो निष्प्रभः समपद्यत ॥ ६-९९-२२ (४३२५२)
ववुश्च वातास्तुमुलाः शंसन्तः सुमहद्भयम् ।
घोराश्च घोरनिर्ह्रादाः शिवास्तत्र ववाशिरे ॥ ६-९९-२३ (४३२५३)
वेदयन्त्यो महाराज महद्वैशसमागतम् ।
दिशः प्रज्वलिता राजन्पांसुवर्षं पपात च ॥ ६-९९-२४ (४३२५४)
रुधिरेण समुन्मिश्रमस्थिवर्षं पपात च ।
रुदतां वाहनानां च नेत्रेभ्यः प्रापतज्जलम् ॥ ६-९९-२५ (४३२५५)
सुस्रुवुश्च शकृन्मूत्रं प्रध्यायन्तो विशांपते ।
अन्तर्हिता महानादाः श्रूयन्ते भरतर्षभ ॥ ६-९९-२६ (४३२५६)
रक्षसां पुरुषादानां नदतां भैरवान्रवान् ।
संपतन्तश्च दृश्यन्ते गोमायबलवायसाः ॥ ६-९९-२७ (४३२५७)
श्वानश्च विविधैर्नादैर्भषन्तस्तत्र मारिष ।
ज्वलिताश्च महोल्का वै समाहत्य दिवाकरम् ।
निपेतुः सहसा भूमौ वेदयन्त्यो महद्भयम् ॥ ६-९९-२८ (४३२५८)
महान्त्यनीकानि महासमुच्छ्रये
ततस्तयोः पाण्डवधार्तराष्ट्रयोः ।

चकम्पिरे शङ्खमृदङ्गनिःस्वनैः
प्रकम्पितानीव वनानि वायुना ॥ ६-९९-२९ (४३२५९)
नरेन्द्रनागाश्वसमाकुलाना-
मभ्यायतीनामशिवे मुहूर्ते ।
बभूव घोषस्तुमुलश्चमूनां
वातोद्धुतानामिव सागराणाम् ॥ ॥ ६-९९-३० (४३२६०)

इति श्रीमन्महाभरते भीष्मपर्वणि भीष्मवधपर्वणि
नवमदिवसयुद्धे एकोनशततमोऽध्यायः ॥
Mahabharata - Bhishma Parva - Chapter Footnotes

६-९९-२७ बलवायसाः बलोदग्राः काकाः ॥
६-९९-२९ महासमुच्छ्रये महति युद्धे ॥
६-९९-३० अभ्यायतीनामभिमुखमागच्छन्तीनाम् ॥

---

भिस्मपर्व-अध्यय१००
॥ श्रीः ॥
६.१००. अध्यायः १००

Mahabharata - Bhishma Parva - Chapter Topics
अलम्बुसस्य द्रौपदेयैः सह युद्धमभिमन्युना समागमश्च ॥१ ॥

Mahabharata - Bhishma Parva - Chapter Text

६-१००-० (४३२६१)
सञ्जय उवाच। ६-१००-०क्ष् (४१८९)
अभिमन्यू रथोदारः पिशङ्गैस्तुरगोत्तमैः ।
अभिदुद्राव तेजस्वी दुर्योधनबलं महत् ॥ ६-१००-१ (४३२६२)
विकिरञ्शरवर्षाणि वारिधारा इवाम्बुदः ।
न शेकुः समरे क्रुद्धं सौभद्रमरिसूदनम् ॥ ६-१००-२ (४३२६३)
शस्त्रौघिणं गाहमानं सेनासागरमक्षयम् ।
निवारयितुमप्याजौ त्वदीयाः कुरुनन्दन ॥ ६-१००-३ (४३२६४)
तेन मुक्ता रणे राजञ्शराः शत्रुनिबर्हणाः ।
क्षत्रियाननयञ्शूरान्प्रेतराजनिवेशनम् ॥ ६-१००-४ (४३२६५)
यमदण्डोपमान्घोराञ्ज्वलिताशीविषोपमान् ।
सौभद्रः समरे क्रुद्धः प्रेषयामास सायकान् ॥ ६-१००-५ (४३२६६)
सरथान्रथिनस्तूर्णं हयांश्चैवससादिनः ।

गजारोहांश्च सगजान्दारयामास फाल्गुनिः ॥ ६-१००-६ (४३२६७)
तस्य तत्कुर्वतः कर्म महत्सङ्ख्ये महीभृतः ।
पूजयांचक्रिरे हृष्टाः प्रशशंसुश्च फाल्गुनिम् ॥ ६-१००-७ (४३२६८)
तान्यनीकानि सौभद्रो द्रावयामास भारत ।
तूलराशीनिवाकाशे मारुतः सर्वतो दिशम् ॥ ६-१००-८ (४३२६९)
तेन विद्राव्यमाणानि तव सैन्यानि भारत ।
त्रतारं नाध्यगच्छन्त पङ्कते मग्ना इव द्वीपाः ॥ ६-१००-९ (४३२७०)
विद्राव्य सर्वसैन्यानि तावकानि नरोत्तम ।
अभिमन्युः स्थितो राजन्विधूमोऽग्निरिव ज्वलन् ॥ ६-१००-१० (४३२७१)
न चैनं तावका राजन्विषेहुररिघातिनम् ।
प्रदीप्तं पावकं यद्वत्पतङ्गाः कालचोदिताः ॥ ६-१००-११ (४३२७२)
प्रहरन्सर्वशत्रुभ्यः पाण्डवानां महारथः ।
अदृश्यत महेष्वासः सवज्र इव वासवः ॥ ६-१००-१२ (४३२७३)
हेमपृष्ठं धनुश्चास्य ददृशे विचरद्दिशः ।
तोयदेषु यथा राजन्राजमाना शतह्रदा ॥ ६-१००-१३ (४३२७४)
शराश्च निशिताः पीता निश्चरन्ति स्म संयुगे ।
वनात्फुल्लद्रुमाद्राजन्भ्रमराणामिव व्रजाः ॥ ६-१००-१४ (४३२७५)
तथैव चरतस्तस्य सौभद्रस्य महात्मनः ।
रथेन काञ्चनाङ्गेन ददृशुर्नान्तरं जनाः ॥ ६-१००-१५ (४३२७६)
मोहयित्वा कृपं द्रोणं द्रौणिं च सबृहद्बलम् ।
सैन्धवं च महेष्वासो व्यचरल्लघु सुष्ठु च ॥ ६-१००-१६ (४३२७७)
मण्डलीकृतमेवास्य धनुः पश्याम भारत ।
सूर्यमण्डलसंकाशं दहतस्तव वाहिनीम् ॥ ६-१००-१७ (४३२७८)
तं दृष्ट्वा क्षत्रियाः शुराः प्रतपन्तं तरस्विनम् ।
द्विफल्गुनमिमं लोकं मेनिरे तस्य कर्मभिः ॥ ६-१००-१८ (४३२७९)
तेनार्दिता महाराज भारती सा महाचमूः ।
व्यभ्रमत्तत्रतत्रैव योषिन्मदवशादिव ॥ ६-१००-१९ (४३२८०)
द्रावयित्वा महासैन्यं कम्पयित्वा महारथान् ।
नन्दयामास सुहृदो मयं जित्वेव वासवः ॥ ६-१००-२० (४३२८१)
तेन निद्राव्यमाणानि तव सैन्यानि संयुगे ।
चक्रुरार्तस्वनं घोरं पर्जन्यनिनदोपमम् ॥ ६-१००-२१ (४३२८२)
तं श्रुत्वा निनदं घोरं तव सैन्यस्य भारत ।
मारुतोद्धूतवेगस्य सागरस्येव पर्वणि ॥ ६-१००-२२ (४३२८३)
दुर्योधनस्तदा राजन्नार्श्यशृङ्गिमभाषत ।
एष कार्ष्णिर्महाबाहो द्वितीय इव फल्गुनः ॥ ६-१००-२३ (४३२८४)
चमूं द्रावयते क्रोधाद्वृत्रो देवचमूमिव ।

तस्य चान्यत्र पश्यामि संयुगे भेषजं महत् ॥ ६-१००-२४ (४३२८५)
ऋते त्वां राक्षसश्रेष्ठं सर्वविद्यासु पारगम् ।
स गत्वा त्वरितं वीरं जहि सौभद्रमाहवे ॥ ६-१००-२५ (४३२८६)
वयं पार्थं हनिष्यामो भीष्मद्रोणपुरोगमाः ।
स एवमुक्तो बलवान्राक्षसेन्द्रः प्रतापवान् ॥ ६-१००-२६ (४३२८७)
प्रययौ समरे तूर्णं तव पुत्रस्य शासनात् ।
नर्दमानो महानादं प्रावृषीव बलाहकः ॥ ६-१००-२७ (४३२८८)
तस्य शब्देन महता पाण्डवानां बलं महत् ।
प्राचलत्सर्वतो राजन्वातोद्धूत इवार्णवः ॥ ६-१००-२८ (४३२८९)
बहवश्च महाराज तस्य नादेन भीषिताः ।
प्रियान्प्राणान्परित्यज्य निपेतुर्धरणीतले ॥ ६-१००-२९ (४३२९०)
कार्ष्णिश्चापि मुदा युक्तः प्रगृह्य सशरं धनुः ।
नृत्यन्निव रथोपस्थे तद्रक्षः समुपाद्रवत् ॥ ६-१००-३० (४३२९१)
ततः स राक्षसः क्रुद्धः संप्राप्यैवार्जुनं रणे ।
नातिदूरे स्थितां तस्य द्रावयामास वै चमूम् ॥ ६-१००-३१ (४३२९२)
तां वध्यमानां च तथा पाण्डवानां महाचमूम् ।
प्रत्युद्ययौ रणे रक्षो देवसेनां यथा बलः ॥ ६-१००-३२ (४३२९३)
विमर्दः सुमहानासीत्तस्य सैन्यस्य मारिष ।
रक्षसा घोररूपेण वध्यमानस्य संयुगे ॥ ६-१००-३३ (४३२९४)
ततः शरसहस्त्रैस्तां पाण्डवानां महाचमूम् ।
व्यद्रावयद्रणे रक्षो दर्शयतत्स्वपराक्रमम् ॥ ६-१००-३४ (४३२९५)
सा वध्यमाना च तथा पाण्डवानामनीकिनी ।
रक्षसा घोररूपेण प्रदुद्राव रणे भयात् ॥ ६-१००-३५ (४३२९६)
प्रमृद्य च रणे सेनां पद्मिनीं वारणो यथा ।
ततोऽभिद्रद्राव रणे द्रौपदेयान्महाबलान् ॥ ६-१००-३६ (४३२९७)
ते तु क्रुद्धा महेष्वासा द्रौपदेयाः प्रहारिणः ।
राक्षसं दुद्रुवुः सङ्ख्ये ग्रहाः पञ्च रविं यथा ॥ ६-१००-३७ (४३२९८)
वीर्यवद्भिस्ततस्तैस्तु पीडितो राक्षसोत्तमः ।
यथा युगक्षये घोरे चन्द्रमाः पञ्चभिर्ग्रहैः ॥ ६-१००-३८ (४३२९९)
प्रतिविन्ध्यस्ततो रक्षो बिभेद निशितैः शरैः ।
सर्वपारशवैस्तूर्णमकुण्ठाग्रैर्महाबलः ॥ ६-१००-३९ (४३३००)
स तैर्भिन्नतनुत्राणः शुशुभे राक्षसोत्तमः ।
मरीचिभिरिवार्कस्य संस्यूतो जलदो महान् ॥ ६-१००-४० (४३३०१)
विषक्तैः सशरैश्चापि तपनीयपरिच्छदैः ।
आश्चर्यशृङ्गिर्बभौ राजन्दीप्तशृङ्ग इवाचलः ॥ ६-१००-४१ (४३३०२)
ततस्ते भ्रातरः पञ्च राक्षसेन्द्रं महाहवे ।

विव्यधुर्निशितैर्बाणैस्तपनीयविभूषितैः । ६-१००-४२ (४३३०३)
स निर्भिन्नः शरैर्घोरैर्भुजगैः कोपितैरिव ।
अलम्बुसो भृशं राजन्नागेन्द्र इव चुक्रुधे ॥ ६-१००-४३ (४३३०४)
सोऽतिविद्धो महाराज मुहूर्तमथ मारिष ।
प्रविवेश तमो दीर्घं पीडितस्तैर्महारथैः ॥ ६-१००-४४ (४३३०५)
प्रतिलभ्य ततः संज्ञां क्रोधेन द्विगुणीकृतः ।
चिच्छेद सायकैस्तेषां ध्वजांश्चैव धनूंषि च ॥ ६-१००-४५ (४३३०६)
एकैकं पञ्चभिर्बाणैराजघान स्मयन्निव ।
अलम्बुसो रथोपस्थे नृत्यन्निव महारथः ॥ ६-१००-४६ (४३३०७)
त्वरमाणः सुसंबद्धो हयांस्तेषां महात्मनाम् ।
जघान राक्षसः क्रुद्धः सारथींश्च सहस्रशः ॥ ६-१००-४७ (४३३०८)
बिभेद च सुसंरब्धः पुनश्चैनान्सुतांशितैः ।
शरैर्बहुविधाकारैः शतशोऽथ सहस्रशः ॥ ६-१००-४८ (४३३०९)
विरथांश्च महेष्वासान्कृत्वा तत्र स राक्षसः ।
अभिदुद्राव वेगेन हन्तुकामो निशाचरः ॥ ६-१००-४९ (४३३१०)
तानर्दितान्रणे तेन राक्षसेन दुरात्मना ।
दृष्ट्वाऽर्जुनसुतः सङ्ख्ये राक्षसं समुपाद्रवत् ॥ ६-१००-५० (४३३११)
तयोः समभवद्युद्धं वृत्रवासवयोरिव ।
ददृशुस्तावकाः सर्वे पाण्डवाश्च परस्परम् ॥ ६-१००-५१ (४३३१२)
तौ समेतौ महायुद्धे क्रोधदीप्तौ परस्परम् ।
महाबलौ महाराज क्रोधसंरक्तलोचनौ ॥ ६-१००-५२ (४३३१३)
परस्परमवेक्षेतां कालानलसमौ युधि ।
ग्आशीविषाविव क्रुद्धौ नेत्राभ्यामितरेतरम् ।'
तयोः समागमो घोरो बभूव कटुकोदयः ॥ ६-१००-५३ (४३३१४)
यथा देवासुरे युद्धे शक्रशम्बरयोः पुरा ॥ ॥ ६-१००-५४ (४३३१५)

इति श्रीमन्महाभारते भीष्मपर्वणि भीष्मवधपर्वणि
नवमदिवसयुद्धे शततमोऽध्यायः ॥
Mahabharata - Bhishma Parva - Chapter Footnotes

६-१००-१६ लघु सुष्ठु च शीघ्रं शोभनं च यथा स्यात्तथा ॥
६-१००-२३ आर्ष्यशृङ्गिमलम्बुसम् ॥
६-१००-३९ सर्वपारशवैः सर्वलोहमयैः ॥
६-१००-४० संस्यूतो ग्रथितः ॥

---

भिस्मपर्व-अध्यय१०१
॥ श्रीः ॥

## ६.१०१. अध्यायः १०१

Mahabharata - Bhishma Parva - Chapter Topics
अभिमन्युनाऽलम्बुसस्य पराजयः ॥ १ ॥

Mahabharata - Bhishma Parva - Chapter Text

६-१०१-० (४३३१६)
धृतराष्ट्र उवाच। ६-१०१-०क्ष् (४१९०)
आर्जुनं समरे शूरं विनिघ्नन्तं महारथान् ।
अलम्बुसः कथं युद्धे प्रत्ययुध्यत सञ्जय ॥ ६-१०१-१ (४३३१७)
आर्श्यशृङ्गिं कथं चैव सौभद्रः परवीरहा ।
तन्ममाचक्ष्व तत्त्वेन यथावृत्तं स्म संयुगे ॥ ६-१०१-२ (४३३१८)
धनंजयश्च किं चक्रे मम सैन्येषु संयुगे ।
भीमो वा रथिनां श्रेष्ठो राक्षसो वा घटोत्कचः ॥ ६-१०१-३ (४३३१९)
नकुलः सहदेवो वा सात्यकिर्वा महारथः ।
एतदाचक्ष्व मे सत्यं कुशलो ह्यसि सञ्जय ॥ ६-१०१-४ (४३३२०)
सञ्जय उवाच। ६-१०१-५क्ष् (४१९१)
हन्ते तेऽहं प्रवक्ष्यामि संग्रामं रोमहर्षणम् ।
यथाऽभूद्राक्षसेन्द्रस्य सौभद्रस्य च मारिष ॥ ६-१०१-५ (४३३२१)
अर्जुनश्च यथा सङ्ख्ये भीमसेनश्च पाण्डवः ।
नकुलः सहदेवश्च रणे चक्रुः पराक्रमम् ॥ ६-१०१-६ (४३३२२)
तथैव तावकाः सर्वे भीष्मद्रोणपुरःसराः ।
अद्भुतानि विचित्राणि चक्रुः कर्माण्यभीतवत् ॥ ६-१०१-७ (४३३२३)
अलम्बुसस्तु समरे अभिमन्युं महारथम् ।
विनद्य सुमहानादं तर्जयित्वा मुहुर्मुहुः ॥ ६-१०१-८ (४३३२४)
अभिदुद्राव वेगेन तिष्ठतिष्ठेति चाब्रवीत् ।
अभिमन्युश्च वेगेन सिंहवद्विनदन्मुहुः ॥ ६-१०१-९ (४३३२५)
आर्श्यशृङ्गिं महेष्वासि पितुरत्यन्तवैरिणम् ।
ततः समीपतुः सङ्ख्ये त्वरितौ नरराक्षसौ ॥ ६-१०१-१० (४३३२६)
रथाभ्यां रथिनौ श्रेष्ठौ यथा वै देवदानवौ ।
मायावा राक्षसश्रेष्ठो दिव्यास्त्रश्चैव फाल्गुनिः ॥ ६-१०१-११ (४३३२७)
ततः कर्ष्णिर्महाराज निशितैः सायकैस्त्रिभिः ।
आर्श्यशृङ्गिं रणे विद्धवा पुनर्विव्याव पञ्चभिः ॥ ६-१०१-१२ (४३३२८)
अलम्बुरोऽपि संक्रुद्धः कार्ष्णि नवभिराशुगैः ।
हृदि विव्याध वेगेन तोत्रैरिव महाद्विपम् ॥ ६-१०१-१३ (४३३२९)

ततः शरसहस्रेण क्षिप्रकारी निशाचरः ।
अर्जुनास सुतं सङ्ख्ये पीडयामास भारत ॥ ६-१०१-१४ (४३३३०)
अभिमन्युस्ततः क्रुद्धो नवभिर्नतपर्वभिः ।
बिभेद निशितैर्बाणै राक्षसेन्द्रं महोरसि ॥ ६-१०१-१५ (४३३३१)
ते तस्य विविशुस्तूर्णं कायं निर्भिद्य मर्मसु ।
स तैर्विभिन्नसर्वाङ्गः शुशुभे राक्षसोत्तमः ॥ ६-१०१-१६ (४३३३२)
पुष्पितैः किंशुकै राजन्संस्तीर्ण इव पर्वतः ।
स संदधानश्च शरान्हेमपुङ्खान्महाबलः ॥ ६-१०१-१७ (४३३३३)
विबभौ राक्षसश्रेष्ठः सज्वाल इव पर्वतः ।
ततः क्रुद्धो महाराज आर्श्यशृङ्गिरमर्षणः ॥ ६-१०१-१८ (४३३३४)
महेन्द्रप्रतिमं कार्ष्णिं छादयामास पत्रिभिः ।
तेन ते विशिखा मुक्ता यमदण्डोपमाः शिताः ॥ ६-१०१-१९ (४३३३५)
अभिमन्युं विनिर्भिद्य प्राविशन्त धरातलम् ।
तथैवार्जुनिना मुक्ताः शराः कनकभूषणाः ॥ ६-१०१-२० (४३३३६)
अलम्बुसं विनिर्भिद्य प्राविशन्त धरातलम् ।
सौभद्रस्तु रणे रक्षः शरैः सन्नतपर्वभिः ॥ ६-१०१-२१ (४३३३७)
चक्रे विमुखमासाद्य बलं शक्र इवाहवे ।
विमुखं च रणे रक्षो वध्यमानं रणेऽरिणा ॥ ६-१०१-२२ (४३३३८)
प्रादुश्चक्रे महामायां तामसीमरिघातिनीम् ।
ततस्ते तमसा सर्वे वृताश्चासन्महीपते ॥ ६-१०१-२३ (४३३३९)
नाभिमन्युमपश्यन्त नैव स्वान्न परान्रणे ।
अभिमन्युश्च तदृष्ट्वा घोररूपं महत्तमः ॥ ६-१०१-२४ (४३३४०)
प्रादुश्चक्रेऽस्त्रमत्युग्रं भास्करं कुरुनन्दनः ।
ततः प्रकाशमभवज्जगत्सर्वं महीपते ॥ ६-१०१-२५ (४३३४१)
तां चाभिजघ्निवान्मायां राक्षसस्य दुरात्मनः ।
संक्रुद्धश्च महावीर्यो राक्षसेन्द्रं नरोत्तमः ॥ ६-१०१-२६ (४३३४२)
छादयामास समरे शरैः सन्नतपर्वभिः ।
बह्वीस्तथाऽन्या मायाश्च प्रयुक्तास्तेन रक्षसा ॥ ६-१०१-२७ (४३३४३)
सर्वास्त्रविदमेयात्मा वारयामास फाल्गुनिः ।
हतमायं ततो रक्षो वध्यमानं च सायकैः ॥ ६-१०१-२८ (४३३४४)
रथं तत्रैव संत्यज्य प्राद्रवन्महतो भयात् ।
तस्मिन्विनिर्जिते तूर्णं कूटयोधिनि राक्षसे ॥ ६-१०१-२९ (४३३४५)
आर्जुनिः समरे सैन्यं तावकं संममर्द ह ।
मदान्धो वन्यनागेन्द्रः सपद्मां पद्मिनीमिव ॥ ६-१०१-३० (४३३४६)
ततः शान्तनवो भीष्मः सैन्यं दृष्ट्वाऽभिविद्रुतम् ।
महता शरवर्षेण सौभद्रं पर्यवारयत् ॥ ६-१०१-३१ (४३३४७)

कोष्ठीकृत्य च तं वीरं धार्तराष्ट्रा महारथः ।
एवं सुबहवो युद्धे ततक्षुः सायकैर्दृढम् ॥ ६-१०१-३२ (४३३४८)
स तेषां रथिनां वीरः पितुस्तुल्यपराक्रमः ।
सदृशो वासुदेवस्य विक्रमेण बलेन च ॥ ६-१०१-३३ (४३३४९)
उभयोः सदृशं कर्म स पितुर्मातुलस्य च ।
रणे बहुविधं चक्रे सर्वशस्त्रभृतां वरः ॥ ६-१०१-३४ (४३३५०)
ततो धनञ्जयो वीरो विनिघ्नंस्तव सैनिकान् ।
आससाद रणे भीष्मं पुत्रप्रेप्सुरमर्षणः ॥ ६-१०१-३५ (४३३५१)
तथैव समरे राजन्पिता देवव्रतस्तव ।
आससाद रणे पार्थं स्वर्भानुरिव भास्करम् ॥ ६-१०१-३६ (४३३५२)
ततः सरथनागाश्वाः पुत्रास्तव जनेश्वर ।
परिवव्रू रणे भीष्मं जुगुपुश्च समन्ततः ॥ ६-१०१-३७ (४३३५३)
तथैव पाण्डवा राजन्परिवार्य धनञ्जयम् ।
रणाय महते युक्ता दंशिता भरतर्षभ ॥ ६-१०१-३८ (४३३५४)
शारद्वतस्ततो राजन्भीष्मस्य प्रमुखे स्थितम् ।
अर्जुनं पञ्चविंशत्या सायकानां समाचिनोत् ॥ ६-१०१-३९ (४३३५५)
प्रत्युद्गम्याथ विव्याध सात्यकिस्तं शितैः शरैः ।
पाण्डवप्रियकामार्थं शार्दूल इव कुञ्जरम् ॥ ६-१०१-४० (४३३५६)
गौतमोऽपि त्वरायुक्तो माधवं नवभिः शरैः ।
हृदि विव्याध संक्रुद्धः कङ्कपत्रपरिच्छदैः ॥ ६-१०१-४१ (४३३५७)
शैनेयोऽपि ततः क्रुद्धश्चापमानम्य वेगवान् ।
गौतमान्तकरं तूर्णं समाधत्त शिलीमुखम् ॥ ६-१०१-४२ (४३३५८)
तमापतन्तं वेगेन शक्राशनिसमद्युतिम् ।
द्विधा चिच्छेद संक्रुद्धो द्रौणिः परमकोपनः ॥ ६-१०१-४३ (४३३५९)
समुत्सृज्याथ शैनेयो गौतमं रथिनां वरः ।
अभ्यद्रवद्रणे द्रौणिं राहुः खे शशिनं यथा ॥ ६-१०१-४४ (४३३६०)
तस्य द्रोणसुतश्चापं द्विधा चिच्छेद भारत ।
अथैनं छिन्नधन्वानं ताडयामास सायकैः ॥ ६-१०१-४५ (४३३६१)
सोऽन्यत्कार्मुकमादाय शत्रुघ्नं भारसाधनम् ।
द्रौणिं षष्ट्या महाराज बाह्वोरुरसि चार्पयत् ॥ ६-१०१-४६ (४३३६२)
स विद्धो व्यथितश्चैव मुहूर्तं कश्मलायुतः ।
निषसाद रथोपस्थे ध्वजयष्टिं समाश्रितः ॥ ६-१०१-४७ (४३३६३)
प्रतिलभ्य ततः संज्ञां द्रोणपुत्रः प्रतापवान् ।
वार्ष्णेयं समरे क्रुद्धो नाराचेन समार्पयत् ॥ ६-१०१-४८ (४३३६४)
शैनेयं स तु निर्भिद्य प्राविशद्धरणीतलम् ।
वसन्तकाले बलवान्बिलं सर्पशिशुर्यथा ॥ ६-१०१-४९ (४३३६५)

अथापरेण भल्लेन माधवस्य ध्वजोत्तमम् ।
चिच्छेद समरे द्रौणिः सिंहनादं मुमोच ह ॥ ६-१०१-५० (४३३६६)
पुनश्चैनं शरैर्घोरैश्छादयामास भारत ।
निदाघान्ते महाराज यथा मेघो दिवाकरम् ॥ ६-१०१-५१ (४३३६७)
सात्यकोऽपि महाराज शरजालं निहत्य तत् ।
द्रौणिमभ्याकिरत्तूर्णं शरजालैरनेकधा ॥ ६-१०१-५२ (४३३६८)
तापयामास च द्रौणिं शैनेयः परवारहा ।
विमुक्तो मेघजालेन यथैव तपनस्तथा ॥ ६-१०१-५३ (४३३६९)
शराणां च सहस्रेण पुनरेव समुद्यतः ।
सात्यकिश्छादयामास ननाद च महाबलः ॥ ६-१०१-५४ (४३३७०)
दृष्ट्वा पुत्रं च तं ग्रस्तं राहुणेव निशाकरम् ।
अभ्यद्रवत शैनेयं भारद्वाजः प्रतापवान् ॥ ६-१०१-५५ (४३३७१)
विव्याध च सुतीक्ष्णेन पृषत्केन महामृधे ।
परीप्सन्स्वसुतं राजन्वार्ष्णेयेनाभिपीडितम् ॥ ६-१०१-५६ (४३३७२)
सात्यकिस्तु रणे हित्वा गुरुपुत्रं महारथम् ।
द्रोणं विव्याध विंशत्या सर्वपारशवैः शरैः ॥ ६-१०१-५७ (४३३७३)
तदन्तरममेयात्मा कौन्तेयः शत्रुतापनः ।
अभ्यद्रवद्रणे क्रुद्धो द्रोणं प्रति महारथः ॥ ६-१०१-५८ (४३३७४)
ततो द्रोणश्च पार्थश्च समेयातां महामृधे ।
यथा बुधश्च शुक्रश्च महाराज नभस्तले ॥ ॥ ६-१०१-५९ (४३३७५)

इति श्रीमन्महाभारते भीष्मपर्वणि भीष्मवधपर्वणि
नवमदिवसयुद्धे एकाधिकशततमोऽध्यायः ॥

---

भिस्मपर्व-अध्यय१०२
॥ श्रीः ॥
६.१०२. अध्यायः १०२

Mahabharata - Bhishma Parva - Chapter Topics
द्रोणार्जुनयुद्धं भीमसेनपराक्रमश्च ॥ १ ॥

Mahabharata - Bhishma Parva - Chapter Text

६-१०२-० (४३३७६)
धृतराष्ट्र उवाच। ६-१०२-०क्ष् (४१९२)
कथं द्रोणो महेष्वासः पाण्डवश्च धनञ्जयः ।
समीयतू रणे यत्तौ तावुभौ पुरुषर्षभौ ॥ ६-१०२-१ (४३३७७)

प्रियो हि पाण्डवो नित्यं भारद्वाजस्य धीमतः ।
आचार्यश्च रणे नित्यं प्रियः पार्थस्य सञ्जय ॥ ६-१०२-२ (४३३७८)
तावुभौ रथिनो सङ्ख्ये हृष्टौ सिंहाविवोत्कटौ ।
कथं समीयतुर्यत्तौ भारद्वाजधनञ्जयौ ॥ ६-१०२-३ (४३३७९)
सञ्जय उवाच। ६-१०२-४क्ष् (४१९३)
न द्रोणः समरे पार्थं जानीते प्रियमात्मनः ।
क्षत्रधर्मं पुरस्कृत्य पार्थो वा गुरुमाहवे ॥ ६-१०२-४ (४३३८०)
न क्षत्रिया रणे राजन्वर्जयन्ति परस्परम् ।
निर्मर्यादं हि युध्यन्ते पितृभिर्भ्रातृभिः सह ॥ ६-१०२-५ (४३३८१)
रणे भारत पार्थेन द्रोणो विद्धस्त्रिभिः शरैः ।
नाचिन्तयच्च तान्बाणान्पार्थचापच्युतान्युधि ॥ ६-१०२-६ (४३३८२)
शरवृष्ट्या पुनः पार्थश्छादयामास तं रणे ।
स प्रजज्वाल रोषेण गहनेऽग्निरिवोर्जितः ॥ ६-१०२-७ (४३३८३)
ततोऽर्जुनं रणे द्रोणः शरैः सन्नतपर्वभिः ।
छादयामास राजेन्द्र नचिरादेव भारत ॥ ६-१०२-८ (४३३८४)
ततो दुर्योधनो राजा सुशर्माणमचोदयत् ।
द्रोणस्य समरे राजन्पार्ष्णिग्रहणकारणात् ॥ ६-१०२-९ (४३३८५)
त्रिगर्तराडपि क्रुद्धो भृशमायम्य कार्मुकम् ।
छादयामास समरे पार्थं बाणैरयोमुखैः ॥ ६-१०२-१० (४३३८६)
ताभ्यां मुक्ताः शरा राजन्नन्तरिक्षे विरेजिरे ।
हंसा इव महाराज शरत्काले नभस्तले ॥ ६-१०२-११ (४३३८७)
ते शराः प्राप्य कौन्तेयं समन्ताद्विविशुः प्रभो ।
फलभारनतं यद्वत्स्वादुवृक्षं विहंगमाः ॥ ६-१०२-१२ (४३३८८)
अर्जुनस्तु रणे नादं विनद्य रथिनां वरः ।
त्रिगर्तराजं समरे सपुत्रं विव्यधे शरैः ॥ ६-१०२-१३ (४३३८९)
ते वध्यमानाः पार्थेन कालेनेव युगक्षये ।
पार्थमेवाभ्यवर्तन्त मरणे कृतनिश्चयाः ।
मुमुचुः शरवृष्टिं च पाण्डवस्य रथं प्रति ॥ ६-१०२-१४ (४३३९०)
शरवृष्टिं ततस्तां तु शरवर्षैः समन्ततः ।
प्रतिजग्राह राजेन्द्र तोयवृष्टिमिवाचलः ॥ ६-१०२-१५ (४३३९१)
तत्राद्भुतमपश्याम बीभत्सोर्हस्तलाघवम् ।
विमुक्तां बहुभिर्योधैः शस्त्रवृष्टिं दुरासदाम् ॥ ६-१०२-१६ (४३३९२)
यदेको वारयामास मारुतोऽभ्रगणानिव ।
कर्मणा तेन पार्थस्य तुतुषुर्देवदानवाः ॥ ६-१०२-१७ (४३३९३)
अथ क्रुद्धो रणे पार्थस्त्रिगर्तान्प्रति भारत ।
मुमोचास्त्रं महाराज वायव्यं पृतनामुखे ॥ ६-१०२-१८ (४३३९४)

प्रादुरासीत्ततो वायुः क्षोभयाणो नभस्तलम् ।
पातयन्वै तरुगणान्विनिघ्नंश्चैव सैनिकान् ॥ ६-१०२-१९ (४३३९५)
ततो द्रोणोऽभिवीक्ष्यैव वायव्यास्त्रं सुदारुणम् ।
शैलमन्यन्महाराज घोरमस्त्रं मुमोच ह ॥ ६-१०२-२० (४३३९६)
द्रोणेन युधि निर्मुक्ते तस्मिन्नस्त्रे नराधिप ।
प्रशशाम ततो वयुः प्रसन्नाश्च दिशो दश ॥ ६-१०२-२१ (४३३९७)
ततः पाण्डुसुतो वीरस्त्रिगर्तस्य रथव्रजान् ।
निरुत्साहान्रणे चक्रे विमुखान्विपराक्रमान् ॥ ६-१०२-२२ (४३३९८)
ततो दुर्योधनश्चैव कृपश्च रथिनां वरः ।
अश्वत्थामा तथा शल्यः काम्भोजश्च सुदक्षिणः ॥ ६-१०२-२३ (४३३९९)
विन्दानुविन्दावावन्त्यौ बाह्लिकः सह बाह्लिकैः ।
महता रथवंशेन पार्थस्यावारयन्दिशः ॥ ६-१०२-२४ (४३४००)
तथैव भगदत्तश्च श्रतायुश्च महाबलः ।
गजानीकेन भीमस्य ताववारयतां दिशः ॥ ६-१०२-२५ (४३४०१)
भूरिश्रवाः शलश्चैव सौबलश्च विशांपते ।
शरौघैर्विमलैस्तीक्ष्णैर्माद्रीपुत्राववारयन् ॥ ६-१०२-२६ (४३४०२)
भीष्मस्तु संहतः सङ्ख्ये धार्तराष्ट्रैः ससैनिकैः ।
युधिष्ठिरं समासाद्य सर्वतः पर्यवारयत् ॥ ६-१०२-२७ (४३४०३)
आपतन्तं गजानीकं दृष्ट्वा पार्थो वृकोदरः ।
लोलिहन्सृक्किणी वीरो मृगराडिव कानने ॥ ६-१०२-२८ (४३४०४)
भीमस्तु रथिनां श्रेष्ठो गदां गृह्य महाहवे ।
अवप्लुत्य रथात्तूर्णं तव सैन्यान्यभीषयत् ॥ ६-१०२-२९ (४३४०५)
तमुद्वीक्ष्य गदाहस्तं ततस्ते गजसादिनः ।
परिवव्रू रणे यत्ता भीमसेनं समन्ततः ॥ ६-१०२-३० (४३४०६)
गजमध्यमनुप्राप्तः पाण्डवः स व्यराजत ।
मेघजालस्य महतो यथा मध्यगतो रविः ॥ ६-१०२-३१ (४३४०७)
व्यधमत्स गजानीकं गदया पाण्डवर्षभः ।
महाभ्रजालमतुलं मातरिश्वेव सन्ततम् ॥ ६-१०२-३२ (४३४०८)
ते वध्यमाना बलिना भीमसेनेन दन्तिनः ।
आर्तनादं रणे चक्रुर्गर्जन्तो जलदा इव ॥ ६-१०२-३३ (४३४०९)
बहुधा दारितश्चैव विषाणैस्तत्र दन्तिभिः ।
फुल्लाशोकनिभः पार्थः शुशुभे रणमूर्धनि ॥ ६-१०२-३४ (४३४१०)
ग्सादिनां शस्त्रवृष्टिं च व्यधमद्गदया ततः।'
वायुवेगसमायुक्तो व्यचरत्पाण्डवो युधि ॥ ६-१०२-३५ (४३४११)
विषाणोल्लिखितैर्गात्रैर्विषाणाभिहतो भृशम् ।
विषाणे दन्तिनं गृह्य निर्विषाणमथाकरोत् ॥ ६-१०२-३६ (४३४१२)

विषाणेन च तेनैव कुम्भोऽभ्याहत्य दन्तिनम् ।
पातयामास समरे दण्डहस्त इवान्तकः ॥ ६-१०२-३७ (४३४१३)
शोणिताक्तां गदां बिभ्रन्मेदोभञ्जाकृतच्छविः ।
कृताभ्यङ्गः शोणितेन रुद्रवत्प्रत्यदृश्यत ॥ ६-१०२-३८ (४३४१४)
एवं के वध्यमानाश्च हतशेषा महागजाः ।
प्राद्रवन्त दिशो राजन्विमृद्नन्तः स्वकं बलम् ॥ ६-१०२-३९ (४३४१५)
द्रवद्भिस्तैर्महानागैः समन्ताद्भरतर्षभ ।
दुर्योधनबलं सर्वं पुनरासीत्पराङ्मुखम् ॥ ६-१०२-४० (४३४१६)

इति श्रीमन्महाभारते भीष्मपर्वणि भीष्मवधपर्वणि
नवमदिवसयुद्धे द्व्यधिकशततमोऽध्यायः ॥

---

भिस्मपर्व-अध्यय१०३
॥ श्रीः ॥
६.१०३. अध्यायः १०३

Mahabharata - Bhishma Parva - Chapter Topics
संकुलयुद्धवर्णनम् ॥ १ ॥

Mahabharata - Bhishma Parva - Chapter Text

६-१०३-० (४३४१७)
सञ्जय उवाच। ६-१०३-०क्ष् (४१९४)
मध्यंदिनो महाराज संग्रामः समपद्यत ।
लोकक्षयकरो रौद्रो भीष्मस्य सह सोमकैः ॥ ६-१०३-१ (४३४१८)
गाङ्गेयो रथिनां श्रेष्ठः पाण्डवानामनीकिनीम् ।
व्यधमन्निशितैर्बाणैः शतशोऽथ सहस्रशः ॥ ६-१०३-२ (४३४१९)
संममर्द च तत्सैन्यं पिता देवव्रतस्तव ।
मर्दयेच्च यथा राजन्सिंहः प्राप्य मृगव्रजम् ॥ ६-१०३-३ (४३४२०)
धृष्टद्युम्नः शिखण्डी च विराटो द्रुपदस्तथा ।
भीष्ममासाद्य समरे शरैर्जघ्नुर्महारथम् ॥ ६-१०३-४ (४३४२१)
धृष्टद्युम्नं ततो विद्ध्वा विराटं च शरैस्त्रिभिः ।
द्रुपदस्य च नाराचं प्रेषयामास भारत ॥ ६-१०३-५ (४३४२२)
तेन विद्धा महेष्वासा भीष्मेणामित्रकर्शिना ।
चुक्रुधुः समरे राजन्पादस्पृष्टा इवोरगाः ॥ ६-१०३-६ (४३४२३)
शिखण्डी तं च विव्याध भरतानां पितामहम् ।
स्त्रीमयं मनसा ध्यात्वा नास्मै प्राहरदच्युतः ॥ ६-१०३-७ (४३४२४)

धृष्टद्युम्नस्तु समरे क्रोधेनाग्निरिव ज्वलन् ।
पितामहं त्रिभिर्बाणैर्बाह्वोरुरसि चार्पयत् ॥ ६-१०३-८ (४३४२५)
द्रुपदः पञ्चविंशत्या विराटो दशभिः शरैः ।
शिखण्डी पञ्चविंशत्या भीष्मं विव्याध सायकैः ॥ ६-१०३-९ (४३४२६)
सोऽतिविद्धो महाराज शोणितौघपरिप्लुतः ।
वसन्ते पुष्पशबलो रक्ताशोक इवाबभौ ॥ ६-१०३-१० (४३४२७)
तान्प्रत्यविध्यद्गाङ्गेयस्त्रिभिस्त्रिभिरजिह्मगैः ।
द्रुपदस्य च भल्लेन धनुश्चिच्छेद मारिष ॥ ६-१०३-११ (४३४२८)
सोऽन्यत्कार्मुकमादाय भीष्मं विव्याध पञ्चभिः ।
सारथिं च त्रिभिर्बाणैः सुशितै रणमूर्धनि ॥ ६-१०३-१२ (४३४२९)
तथा भीमो महाराज द्रौपद्याः पञ्च चात्मजाः ।
केकया भ्रातरः पञ्च सात्यकिश्चैव सात्वतः ॥ ६-१०३-१३ (४३४३०)
अभ्यद्रवन्त गाङ्गेयं युधिष्ठिरसमाज्ञया ।
प्रति रक्षणकार्यार्थं धृष्टद्युम्नमुखान्रणे ॥ ६-१०३-१४ (४३४३१)
तथैव तावकाः सर्वे भीष्मरक्षार्थमुद्यताः ।
प्रत्युद्ययुः पाण्डुसेनां सहसैन्या नराधिप ॥ ६-१०३-१५ (४३४३२)
तत्रासीत्सुमहद्युद्धं तव तेषां च संकुलम् ।
नराश्वरथनागानां यमराष्ट्रविवर्धनम् ॥ ६-१०३-१६ (४३४३३)
रथी रथिनमासाद्य प्राहिणोद्यमसादनम् ।
तथेतरान्समासाद्य नरनागाश्वसादिनः ॥ ६-१०३-१७ (४३४३४)
अनयन्परलोकाय शरैः सन्नतपर्वभिः ।
शरैश्च विविधैर्घोरैस्तत्रतत्र विशांपते ॥ ६-१०३-१८ (४३४३५)
रथास्तु रथिभिर्हीना हतसारथयस्तथा ।
विप्रद्रुताश्वाः समरे दिशो जग्मुः समन्ततः ॥ ६-१०३-१९ (४३४३६)
मृद्नन्तस्ते नरान्राजन्हयांश्च सुबहून्रणे ।
वातायमाना दृश्यन्ते गन्धर्वनगरोपमाः ॥ ६-१०३-२० (४३४३७)
रथिनश्च रथैर्हीना वर्मिणस्तेजसा युताः ।
कुण्डलोष्णीषिणः सर्वे निष्काङ्गदविभूषणाः ॥ ६-१०३-२१ (४३४३८)
देवपुत्रसमाः सर्वे शौर्ये शक्रसमा युधि ।
ऋद्ध्या वैश्रवणां चाति नयेन च बृहस्पतिम् ॥ ६-१०३-२२ (४३४३९)
सर्वलोकेश्वराः शूरास्तत्रतत्र विशांपते ।
विप्रद्रुता व्यदृश्यन्त प्राकृता इव मानवाः ॥ ६-१०३-२३ (४३४४०)
दन्तिनश्च नरश्रेष्ठ हीनाः परमसादिभिः ।
मृद्नन्तः स्वान्यनीकानि निपेतुः सर्वशब्दगाः ॥ ६-१०३-२४ (४३४४१)
चर्मभिश्चामरैश्चित्रैः पताकाभिश्च मारिष ।
छत्रैः सितैर्हेमदण्डैश्चामरैश्च समन्ततः ॥ ६-१०३-२५ (४३४४२)

विशीर्णैर्विप्रधावन्तो दृश्यन्ते स्म दिशो दश ।
नवमेघप्रतीकाशा जलदोपमनिःस्वनाः ॥ ६-१०३-२६ (४३४४३)
तथैव दन्तिभिर्हीना गजारोहा विशांपते ।
प्रधावन्तोऽन्वदृश्यन्त तव तेषां च संकुले ॥ ६-१०३-२७ (४३४४४)
नानादेशसमुत्थांश्च तुरगान्हेमभीषितान् ।
वातायमानानद्राक्षं शतशोऽथ सहस्रशः ॥ ६-१०३-२८ (४३४४५)
अश्वारोहान्हतैरश्वैर्गृहीतासन्समन्ततः ।
द्रवमाणानपश्याम द्राव्यमाणांश्च संयुगे ॥ ६-१०३-२९ (४३४४६)
गजो गजं समासाद्य द्रवमाणं महाहवे ।
ययौ प्रमृद्य तरसा पादातान्वाजिनस्तथा ।
तथैव च रथान्राजन्प्रममर्द रणे गजः ॥ ६-१०३-३० (४३४४७)
रथाश्चैव समासाद्य पतितांस्तुरगान्भुवि ।
व्यमृद्नन्समरे राजंस्तुरगांश्च नरान्रमे ॥ ६-१०३-३१ (४३४४८)
एवं ते बहुधा राजन्प्रत्यमृद्नन्परस्परम् ।
ग्दृश्यन्तेस्म महाबाहो तत्रतत्र महाबलाः ॥' ६-१०३-३२ (४३४४९)
तस्मिन्रौद्रे तथा युद्धे वर्तमाने महाभये ।
प्रावर्तत नदी घोरा शोमितान्त्रतरङ्गिणी ॥ ६-१०३-३३ (४३४५०)
अस्थिसङ्घातसंबाधा केशशैवलाद्वला ।
रथह्रदा शरावर्ता हयमीना दुरासदा ॥ ६-१०३-३४ (४३४५१)
शीर्षोपलसमाकीर्णा हस्तिग्राहसमाकुला ।
कवचोष्णीषफेनौघा धनुर्वेगासिकच्छपा ॥ ६-१०३-३५ (४३४५२)
ग शङ्खनक्रौघसंकीर्णा छत्रकूर्मरथोडुपा।'
पताकाध्वजवृक्षाढ्या मर्त्यकूलापहारिणी ।
क्रव्यादहंससंकीर्णा यमराष्ट्रविवर्धनी ॥ ६-१०३-३६ (४३४५३)
तां नदीं क्षत्रियाः शूरा रथनागहयप्लवैः ।
प्रतेरुर्बहवो राजन्भयं त्यक्त्वा महारथाः ॥ ६-१०३-३७ (४३४५४)
अपोवाह रणे भीरून्कश्मलेनाभिसंवृतान् ।
यथा वैतरणी प्रेतान्प्रेतराजपुरं प्रति ॥ ६-१०३-३८ (४३४५५)
प्राक्रोशन्क्षत्रियास्तत्र दृष्ट्वा तद्वैशसं महत् ।
दुर्योधनापराधेन गच्छन्ति क्षत्रियाः क्षयम् ॥ ६-१०३-३९ (४३४५६)
गुणवत्सु कथं द्वेषं धृतराष्ट्रो जनेश्वरः ।
कृतवान्पाण्डुपुत्रेषु पापात्मा लोभमोहितः ॥ ६-१०३-४० (४३४५७)
एवं बहुविधा वाचः श्रूयन्ते स्म परस्परम् ।
पाण्डवस्तवसंयुक्ताः पुत्राणां ते सुदारुणाः ॥ ६-१०३-४१ (४३४५८)
ता निशम्य ततो वाचः सर्वयोधैरुदाहृताः ।
आगस्कृत्सर्वलोकस्य पुत्रो दुर्योधनस्तव ॥ ६-१०३-४२ (४३४५९)

भीष्मं द्रोणं कृपं चैव शल्यं चोवाच भारत ।
युध्यध्वमनहंकराः किं चिरं कुरुथेति च ॥ ६-१०३-४३ (४३४६०)
ग्इति दुर्योधनोत्सृष्टाः सर्वे युयुधिरे नृपाः'
ततः प्रववृते युद्धं कुरूणां पाण्डवैः सह ।
अक्षद्यूतकृतं राजन्सुघोरं वैशसं तदा ॥ ६-१०३-४४ (४३४६१)
यत्पुरा न निगृह्णासि वार्यमाणो महात्मभिः ।
वैचित्रवीर्य तस्येदं फलं पश्य सुदारुणम् ॥ ६-१०३-४५ (४३४६२)
न हि पाण्डुसुता राजन्ससैन्याः सपदानुगाः ।
रक्षन्ति समरे प्राणान्कौरवा वापि संयुगे ॥ ६-१०३-४६ (४३४६३)
६-१०३-४७ (४३४६४)
एतस्मात्कारणाद्घोरो वर्तते स्वजनक्षयः ।
दैवाद्वा पुरुषव्याघ्र तव चापनयान्नृप ॥ ॥ इति
श्रामन्महाभारते भीष्मपर्वणि भीष्मवधपर्वणि नवमदिवसयुद्धे
त्र्यधिकशततमोऽध्यायः ॥

Mahabharata - Bhishma Parva - Chapter Footnotes

६-१०३-७ स्त्रीमयं अयं भीष्मः स्त्रीं ध्यात्वा चिन्तयित्वा ।यद्वा
स्त्रीमयं स्वार्थे मयट् ॥
६-१०३-२२ वैश्रवणं कुबेरं चाति अतिक्रान्ता ॥
६-१०३-२८ अद्राक्षमहं सञ्जयः ॥
६-१०३-४२ आगस्कृदपराधी ॥

---

भिस्मपर्व-अध्यय१०४
॥ श्रीः ॥
६.१०४. अध्यायः १०४

Mahabharata - Bhishma Parva - Chapter Topics

संकुलयुद्धवर्णनम् ॥ १ ॥

Mahabharata - Bhishma Parva - Chapter Text

६-१०४-० (४३४६५)
सञ्जय उवाच। ६-१०४-०क्ष् (४११९५)
अर्जुनस्तान्नरव्याघ्रः सुशर्मानुचरान्नृपान् ।
अनयत्प्रेतराजस्य सदनं सायकैः शितैः ॥ ६-१०४-१ (४३४६६)
सुशर्मापि ततो बाणैः पार्थं विव्याध संयुगे ।
वासुदेवं च सप्तत्या पार्थं च नवभिः पुनः ॥ ६-१०४-२ (४३४६७)

तं निवार्य शरौघेण सक्रुसूनुर्महारथः ।
सुशर्मणो रणे योधान्प्राहिणोद्यमसादनम् ॥ ६-१०४-३ (४३४६८)
ते वध्यमानाः पार्थेन कालेनेव युगक्षये ।
व्यद्रवन्त रणे राजन्भये जाते महारथाः ॥ ६-१०४-४ (४३४६९)
उत्सृज्य तुरगान्केचिद्रथान्केचिच्च मारिष ।
गजानन्ये समुत्सृज्य प्राद्रवन्त दिशो दश ॥ ६-१०४-५ (४३४७०)
अपरे तु तदादाय वाजिनागरथान्रणे ।
त्वरया परया युक्ताः प्राद्रवन्त विशांपते ॥ ६-१०४-६ (४३४७१)
पादाताश्चापि शस्त्राणि समुत्सृज्य महारणे ।
निरपेक्षा व्यधावन्त तेनतेन स्म भारत ॥ ६-१०४-७ (४३४७२)
वार्यमाणाः सुबहुशस्त्रैगर्तेन सुशर्मणा ।
तथान्यैः पार्थिवश्रेष्ठैर्न व्यतिष्ठन्त संयुगे ॥ ६-१०४-८ (४३४७३)
तद्बलं प्रद्रुतं दृष्ट्वा पुत्रो दुर्योधनस्तव ।
पुरस्कृत्य रणे भीष्मं सर्वसैन्यपुरस्कृतः ॥ ६-१०४-९ (४३४७४)
सर्वोद्योगेन महता धनञ्जयमुपाद्रवत् ।
त्रिगर्ताधिपतेरर्थे जीवितस्य विशांपते ॥ ६-१०४-१० (४३४७५)
स एकः समरे तस्थौ किरन्बहुविधाञ्शरान् ।
भ्रातृभिः सहितः सर्वैः शेषा हि प्रद्रुता नराः ॥ ६-१०४-११ (४३४७६)
तथैव पाण्डवा राजन्सर्वोद्योगेन दंशिताः ।
प्रययुः फल्गुनार्थाय यत्र भीष्मो व्यतिष्ठत ॥ ६-१०४-१२ (४३४७७)
ज्ञायमाना रणे वीर्यं घोरं गाण्डीवधन्वनः ।
हाहाकारकृतोत्साहा भीष्मं जग्मुः समन्ततः ॥ ६-१०४-१३ (४३४७८)
ततस्तालध्वजः शूरः पाण्डवानां वरूथिनीम् ।
छादयामास समरे शरैः सन्नतपर्वभिः ॥ ६-१०४-१४ (४३४७९)
एकीभूतास्ततः सर्वे कुरवः सह पाण्डवैः ।
अयुध्यन्त महाराज मध्यं प्राप्ते दिवाकरे ॥ ६-१०४-१५ (४३४८०)
सात्यकिः कृतवर्माणं विद्धवा पञ्चभिराशुगैः ।
अतिष्ठदाहवे शूरः किरन्बाणान्सहस्रशः ॥ ६-१०४-१६ (४३४८१)
तथैव द्रुपदो राजा द्रोणं विद्धवा शितैः शरैः ।
पुनर्विव्याध सप्तत्या सारथिं चास्य पञ्चभिः ॥ ६-१०४-१७ (४३४८२)
भीमसेनस्तु राजानं बाह्लीकं प्रपितामहम् ।
विद्धवा नदन्महानादं शार्दूल इव कानने ॥ ६-१०४-१८ (४३४८३)
आर्जुनिश्चित्रसेनेन विद्धो बहुभिरशुगैः ।
अतिष्ठदाहवे शूरः किरन्बाणान्सहस्रशः ।
चित्रसेनं त्रिभिर्बाणैर्विव्याध समरे भृशम् ॥ ६-१०४-१९ (४३४८४)
समागतौ तौ तु रणे महामात्रौ व्यरोचताम् ।

यथा दिवि महाघोरौ राजन्बुधशनैश्चरौ ॥ ६-१०४-२० (४३४८५)
तस्याश्वांश्चतुरो हत्वा सूतं च नवभिः शरैः ।
ननाद बलवान्नादं सौभद्रः परवीरहा ॥ ६-१०४-२१ (४३४८६)
हताश्वात्तु रथात्तूर्णं सोऽवप्लुत्य महारथः ।
आरुरोह रथं तूर्णं दुर्मुखस्य विशांपते ॥ ६-१०४-२२ (४३४८७)
द्रोणश्च द्रुपदं भित्त्वा शरैः सन्नतपर्वभिः ।
सारथिं चास्य विव्याध त्वरमाणः पराक्रमी ॥ ६-१०४-२३ (४३४८८)
पीड्यमानस्ततो राजा द्रुपदो वाहिनीमुखे ।
अपायाज्जवनैरश्वैः पूर्ववैरमनुस्मरन् ॥ ६-१०४-२४ (४३४८९)
भीमसेनस्तु राजानं मुहूर्तादिव बाह्लिकम् ।
व्यश्वसूतरथं चक्रे सर्वसैन्यस्य पश्यतः ॥ ६-१०४-२५ (४३४९०)
ससंभ्रमो महाराज संशयं परमं गतः ॥ ६-१०४-२६ (४३४९१)
अवप्लुत्य ततो वाहाद्बाह्लीकः पुरुषोत्तमः ।
आरुरह रथं तूर्णं लक्ष्मणस्य महारणे ॥ ६-१०४-२७ (४३४९२)
सात्यकिः कृतवर्माणं वारयित्वा महारणे ।
शरैर्बहुविधै राजन्नाससाद पितामहम् ॥ ६-१०४-२८ (४३४९३)
स विद्धवा भारतं षष्ट्या निशितै रोमवाहिभिः ।
नृत्यन्निव रथोपस्थे विधुन्वानो महद्धनुः ॥ ६-१०४-२९ (४३४९४)
तस्यायसीं महाशक्तिं चिक्षेपाथ पितामहः ।
हेमचित्रां महावेगां नागकन्योपमां शुभाम् ॥ ६-१०४-३० (४३४९५)
तामापतन्तीं सहसा मृत्युकल्पां सुदुर्जयाम् ।
व्यंसयामास वार्ष्णेयो लाघवेन महायशाः ॥ ६-१०४-३१ (४३४९६)
अनासाद्य तु वार्ष्णेयं शक्तिः परमदारुणा ।
न्यपतद्धरणीपृष्ठे महोल्केव महाप्रभा ॥ ६-१०४-३२ (४३४९७)
वार्ष्णेयस्तु ततो राजन्स्वां शक्तिं कनकप्रभाम् ।
वेगवद्गृह्य चिक्षेप पितामहरथं प्रति ॥ ६-१०४-३३ (४३४९८)
वार्ष्णेयभुजवेगेन प्रणुन्ना सा महाहवे ।
अभिदुद्राव वेगेन कालरात्रिर्यथा नरम् ॥ ६-१०४-३४ (४३४९९)
तामापतन्तीं सहसा द्विधा चिच्छेद भारतः ।
क्षुरप्राभ्यां सुतीक्ष्णाभ्यांसा व्यशीर्यत मेदिनीम् ॥ ६-१०४-३५ (४३५००)
छित्त्वा शक्तिं तु गाङ्गयः सात्यकिं नवभिः शरैः ।
आजघानोरसि क्रुद्धः प्रहसञ्छत्रुकर्शनः ॥ ६-१०४-३६ (४३५०१)
ततः सरथनागाश्वाः पाण्डवाः पाण्डुपूर्वज ।
परिवव्रू रणे भीष्मं माधवत्राणकारणात् ॥ ६-१०४-३७ (४३५०२)
ततः प्रववृते युद्धं तुमुलं रोमहर्षणम् ।
पाण्डवानां कुरूणां च समरे विजयैषिणाम् ॥ ॥ ६-१०४-३८ (४३५०३)

इति श्रीमन्महाभारते भीष्मपर्वणि भीष्मवधपर्वणि
नवमदिवसयुद्धे चतुरधिकशततमोऽध्यायः ॥
Mahabharata - Bhishma Parva - Chapter Footnotes

६-१०४-७ तेनतेन पथा ॥
६-१०४-२० महामात्रौ श्रेष्ठौ ॥
६-१०४-२९ भारत भीष्मम् । रोमवाहिभिः रोमच्छेदकैः ॥
६-१०४-३५ मेदिनीं प्राप्येति शेषः ॥
६-१०४-३७ माधवः सात्यकिः ॥

---

भिस्मपर्व-अध्यय१०५
॥ श्रीः ॥
६.१०५. अध्यायः १०५

Mahabharata - Bhishma Parva - Chapter Topics
युधिष्ठिरादियुद्धवर्णनम् ॥ १ ॥

Mahabharata - Bhishma Parva - Chapter Text

६-१०५-० (४३५०४)
सञ्जय उवाच। ६-१०५-०क्ष् (४११६)
दृष्ट्वा भीष्मं रणे युद्धं पाण्डवैरभिसंवृतम् ।
यथा मेघैर्महाराज तपान्ते दिवि भास्करम् ॥ ६-१०५-१ (४३५०५)
दुर्योधनो महाराज दुःशासनमभाषत ।
एष शूरो महेष्वासो भीष्मः शूरनिषूदनः ॥ ६-१०५-२ (४३५०६)
छादितः पाण्डवैः शूरैः समन्ताद्भरतर्षभ ।
तस्य कार्यं त्वया वीर रक्षणं सुमहात्मनः ॥ ६-१०५-३ (४३५०७)
रक्ष्यमाणो हि समरे भीष्मोऽस्माकं पितामहः ।
निहन्यात्समरे यत्तान्पाञ्चालान्पाण्डवैः सह ॥ ६-१०५-४ (४३५०८)
तत्र कार्यतमं मन्ये भीष्मस्यैवाभिरक्षणम् ।
गोप्ता ह्येष महेष्वासो भीष्मोऽस्माकं महाव्रतः ॥ ६-१०५-५ (४३५०९)
स भवान्सर्वसैन्येन परिवार्य पितामहम् ।
समरे कर्म कुर्वाणं दुष्करं परिरक्षतु ॥ ६-१०५-६ (४३५१०)
सञ्जय उवाच। ६-१०५-७क्ष् (४११७)
स एवमुक्तः समरे पुत्रो दुःशासनस्तव ।
परिवार्य स्थितो भीष्मं सैन्येन महता वृतः ॥ ६-१०५-७ (४३५११)

ततः शतसहस्राणां हयानां सुबलात्मजः ।
विमलप्रासहस्तानामृष्टितोमरधारिणाम् ॥ ६-१०५-८ (४३५१२)
दर्पितानां सुवेगानां बलस्थानां पताकिनाम् ।
शिक्षितैर्युद्धकुशलैरुपेतानां नरोत्तमैः ॥ ६-१०५-९ (४३५१३)
नकुलं सहदेवं च धर्मराजं च पाण्डवम् ।
न्यवारयन्नरश्रेष्ठान्परिवार्य समन्ततः ॥ ६-१०५-१० (४३५१४)
ततो दुर्योधनो राजा शूराणां हयसादिनाम् ।
अयुतं प्रेषयामास पाण्डवानां निवारणे ॥ ६-१०५-११ (४३५१५)
तैः प्रविष्टैर्महावेगैर्गरुत्मद्भिरिवाहवे ।
खुराहता धरा राजंश्चकम्पे च ननाद च ॥ ६-१०५-१२ (४३५१६)
खुरशब्दश्च सुमहान्वाजिनां शुश्रुवे तदा ।
महावंशवनस्येव दह्यमानस्य पर्वते ॥ ६-१०५-१३ (४३५१७)
उत्पतद्भिश्च तैस्तत्र समुद्धूतं महद्रजः ।
दिवाकररथं प्राप्य च्छादयामास भास्करम् ॥ ६-१०५-१४ (४३५१८)
वेगवद्भिर्हयैस्तैस्तु क्षोभिता पाण्डवीक चमूः ।
निपतद्भिर्महावेगैर्हंसैरिव महत्सरः ॥ ६-१०५-१५ (४३५१९)
हेषतां चैव शब्देन न प्राज्ञायत किंचन ।
ग्अन्तर्दधे महाञ्शब्दस्तेन शब्देन मोहितः ॥' ६-१०५-१६ (४३५२०)
ततो युधिष्ठिरो राजा माद्रीपुत्रौ च पाण्डवौ ।
प्रत्यघ्नंस्तरसा वेगं समरे हयसादिनाम् ॥ ६-१०५-१७ (४३५२१)
उद्वृत्तस्य महाराज प्रावृट्कालेऽतिपूर्यतः ।
पौर्णमास्यामम्बुवेगं यथा वेला महोदधेः ॥ ६-१०५-१८ (४३५२२)
ततस्ते रथिनो राजञ्शरैः सन्नतपर्वभिः ।
न्यकृन्तन्नुत्तमाङ्गानि शरेण हयसादिनाम् ॥ ६-१०५-१९ (४३५२३)
ते निपेतुर्महाराज निहता दृढधन्विभिः ।
नागैरिव महानागा यथावद्गिरिगह्वरे ॥ ६-१०५-२० (४३५२४)
तेऽपि प्रासैः सुनिशितैः शरैः सन्नतपर्वभिः ।
न्यकृन्तन्नुत्तमाङ्गानि विचरन्तो दिशो दश ॥ ६-१०५-२१ (४३५२५)
अभ्याहता हयारोहा ऋष्टिभिर्भरतर्षभ ।
अत्यजन्नुत्तमाङ्गानि फलानीव महाद्रुमाः ॥ ६-१०५-२२ (४३५२६)
समादिनो हया राजंस्तत्रतत्र निषूदिताः ।
पतिताः पात्यमानाश्च प्रत्यदृश्यन्त सर्वशः ॥ ६-१०५-२३ (४३५२७)
वध्यमाना हयाश्चैव प्राद्रवन्त भयार्दिताः ।
यथा सिंहं समासाद्य मृगाः प्राणपरायणाः ॥ ६-१०५-२४ (४३५२८)
पाण्डवाश्च महाराज जित्वा शत्रून्महामृधे ।
दध्मुः शङ्खांश्च भेरीश्च ताडयामासुराहवे ॥ ६-१०५-२५ (४३५२९)

ततो दुर्योधनो दीनो दृष्ट्वा सैन्यं पराजितम् ।
अब्रवीद्रतश्रेष्ठ मद्रराजमिदं वचः ॥ ६-१०५-२६ (४३५३०)
एष पाण्डुसुतो ज्येष्ठो यमाभ्यां सहितो रणे ।
पश्यतां वो महाबाहो सेनां द्रावयति प्रभो ॥ ६-१०५-२७ (४३५३१)
तं वारय महाबाहो वेलेव मकरालयम् ।
त्वं हि संश्रूयसेऽत्यर्थमसह्यबलविक्रमः ॥ ६-१०५-२८ (४३५३२)
सञ्जय उवाच। ६-१०५-२९क्ष् (४११९८)
पुत्रस्य तव तद्वाक्यं श्रुत्वा शल्यः प्रतापवान् ।
स ययौ रथवंशेन यत्र राजा युधिष्ठिरः ॥ ६-१०५-२९ (४३५३३)
तदापतद्वै सहसा शल्यस्य सुमहद्बलम् ।
महौघवेगं समरे वारयामास पाण्डवः ॥ ६-१०५-३० (४३५३४)
मद्रराजं च समरे धर्मराजो महारथः ।
दशभिः सायकैस्तूर्णमाजघान स्तनान्तरे ।
नकुलः सहदेवश्च तं सप्तभिरजिह्मगैः ॥ ६-१०५-३१ (४३५३५)
मद्रराजोऽपि तान्सर्वानाजघान त्रिभिस्त्रिभिः ।
युधिष्ठिरं पुनः षष्ट्या विव्याध निशितैः शरैः ॥ ६-१०५-३२ (४३५३६)
माद्रीपुत्रौ च संभ्रान्तौ द्वाभ्यां द्वाभ्यामताडयत् ।
ततो भीमो महाबहुर्दृष्ट्वा राजनमाहवे ॥ ६-१०५-३३ (४३५३७)
मद्रराजवशं प्राप्तं मृत्योरास्यगतं यथा ।
अभ्यपद्यत संग्रामे युधिष्ठिरममित्रजित् ॥ ६-१०५-३४ (४३५३८)
ग्आपतन्नेव भीमस्तु मद्रराजमताडयत्।'
सर्वपारशवैस्तीक्ष्णैर्नाराचैर्मर्मभेदिभिः ॥ ६-१०५-३५ (४३५३९)
ततो भीष्मश्च द्रोणश्च सैन्येन महता वृतौ ।
राजानमभ्यपद्येतामञ्जसा शरवर्षिणौ ॥ ६-१०५-३६ (४३५४०)
ततो युद्धं महाघोरं प्रावर्तत सुदारुणम् ।
अपरां दिशमास्थाय द्योतमाने दिवाकरे ॥ ॥ ६-१०५-३७ (४३५४१)

इति श्रीमन्महाभारते भीष्मपर्वणि भीष्मवधपर्वणि
नवमदिवसयुद्धे पञ्चाधिकशततमोऽध्यायः ॥

Mahabharata - Bhishma Parva - Chapter Footnotes

६-१०५-८ तत इति । सैन्येनेति पूर्वस्मादनुकृष्यते। हयानां सैन्येन
परिवार्य न्यवारयदिति तृतीयेनान्वयः ॥

---

भिस्मपर्व-अध्यय१०६
॥ श्रीः ॥
६.१०६. अध्यायः १०६

Mahabharata - Bhishma Parva - Chapter Topics
भीष्मपराक्रममममृष्यता कृष्णेन रथादवरुह्य तद्वधायाभियानम्
॥ १ ॥
अर्जुनेन पश्चादनुधाव्य निवर्तितस्य कृष्णस्य तेन सह पुना
रथारोहणम् ॥ २ ॥

Mahabharata - Bhishma Parva - Chapter Text

६-१०६-० (४३५४२)
सञ्जय उवाच। ६-१०६-०क्ष् (४१९९)
ततः पिता तव क्रुद्धो निशितैः सायकोत्तमैः ।
आजघान रणे पार्थान्सहसेनान्समन्ततः ॥ ६-१०६-१ (४३५४३)
भीमं द्वादशभिर्विद्ध्वा सात्यकिं नवभिः शरैः ।
नकुलं च त्रिभिर्विद्ध्वा सहदेवं च सप्तभिः ॥ ६-१०६-२ (४३५४४)
युधिष्ठिरं द्वादशभिर्बाह्वोरुरसि चार्पयत् ।
धृष्टद्युम्नं ततो विद्ध्वा ननाद सुमहाबलः ॥ ६-१०६-३ (४३५४५)
तं द्वादशाख्यैर्नकुलो माधवश्च त्रिभिः शरैः ।
धृष्टद्युम्नश्च सप्तत्या भीमसेनश्च सप्तभिः ।
युधिष्ठिरो द्वादशभिः प्रत्यविध्यत्पितामहम् ॥ ६-१०६-४ (४३५४६)
द्रोणस्तु सात्यकिं विद्ध्वा भीमसेनमविध्यत ।
एकैकं पञ्चभिर्बाणैर्यमदण्डोपमैः शितैः ॥ ६-१०६-५ (४३५४७)
तौ च तं प्रत्यविध्येतां त्रिभिस्त्रिभिरजिह्मगैः ।
तोत्रैरिव महानागं द्रोणं ब्राह्मणपुङ्गवम् ॥ ६-१०६-६ (४३५४८)
सौवीरा कितवाः प्राच्याः प्रतीच्योदीच्यमालवाः ।
अभीषाहाः शूरसेनाः शिबयोऽथ वसातयः ।
संग्रमे नाजहुर्भीष्मं वध्यमानाः शितैः शरैः ॥ ६-१०६-७ (४३५४९)
तथैवान्ये महीपाला नानादेशसमागताः ।
पाण्डवानभ्यवर्तन्त विविधायुधपाणयः ।
तथैव पाण्डवा राजन्परिवव्रुः पितामहम् ॥ ६-१०६-८ (४३५५०)
स समन्तात्परिवृतो रथौघैरपराजितः ।
गहनेऽग्निरिवोत्सृष्टः प्रजज्वाल दहन्परान् ॥ ६-१०६-९ (४३५५१)
रथाग्न्यगारश्चापार्चिरसिशक्तिगजेन्धनः ।
शरस्फुलिङ्गो भीष्माग्निर्ददाह क्षत्रियर्षभान् ॥ ६-१०६-१० (४३५५२)
ग यथा हि सुमहानग्निः कक्षे चरसि सानिलः ।'
तथा भीष्मो महाराज दिव्यमस्त्रमुदीरयन् ॥ ६-१०६-११ (४३५५३)

सुवर्णपुङ्खैरिषुभिर्गार्ध्रपक्षैः सुतेजनैः ।
कर्णिनालीकनाराचैश्छादयामास तद्बलम् ॥ ६-१०६-१२ (४३५५४)
अपातयद्ध्वजांश्चैव रथिनश्च शितैः शरैः ।
मुण्डतालवनानीव चकार स रथव्रजान् ॥ ६-१०६-१३ (४३५५५)
निर्मनुष्यान्रथान्राजन्गजानश्वांश्च संयुगे ।
अकरोत्स महाबाहुः सर्वशस्त्रभृतां वरः ॥ ६-१०६-१४ (४३५५६)
तस्य ज्यातलनिर्घोषं विस्फूर्जितमिवाशनेः ।
निशम्य सर्वभूतानि समकम्पन्त भारत ॥ ६-१०६-१५ (४३५५७)
अमोघा ह्यपतन्बाणाः पितुस्ते भरतर्षभ ।
नासज्जन्त तनुत्रेषु भीष्मचापच्युताः शराः ॥ ६-१०६-१६ (४३५५८)
हतवीरान्रथान्राजन्संयुक्ताञ्जवनैर्हयैः ।
अपश्याम महाराज ह्रियमाणान्रणाजिरे ॥ ६-१०६-१७ (४३५५९)
चेदिकाशिकरूषाणां सहस्राणि चतुर्दश ।
महारथाः समाख्याताः कलपुत्रास्तनुत्यजः ।
अपरावर्तिनः सर्वे सुवर्णविकृतध्वजाः ॥ ६-१०६-१८ (४३५६०)
संग्रामे भीष्ममासाद्य व्यादितास्यमिवान्तकम् ।
निमग्नाः परलोकाय सवाजिरथकुञ्जराः ॥ ६-१०६-१९ (४३५६१)
भग्नाक्षोपस्करान्कांश्चिद्भग्नचक्रांश्च भारत ।
अपश्याम महाराज शतशोऽथ सहस्रशः ॥ ६-१०६-२० (४३५६२)
सवरूथै रथैर्भग्नै रथिभिश्च निपातितैः ।
शरैः सुकवचैश्छिन्नैः पट्टसैश्च विशांपते ॥ ६-१०६-२१ (४३५६३)
गदाभिर्भिण्डिपालैश्च निशितैश्च शिलीमुखैः ।
अनुकर्षैरुपासङ्गैश्चक्रैर्भग्नैश्च मारिष ॥ ६-१०६-२२ (४३५६४)
बाहुभिः कार्मुकैः खड्गैः शिरोभिश्च सकुण्डलैः ।
तलत्रैरङ्गुलित्रैश्च ध्वजैश्च विनिपातितैः ।
चापैश्च बहुधा च्छिन्नैः समास्तीर्यत मेदिनी ॥ ६-१०६-२३ (४३५६५)
गजारोहा गजान्राजन्हयांश्च हयसादिनः ।
अभिपेतुर्द्रुतं तत्र शतशोऽथ सहस्रशः ॥ ६-१०६-२४ (४३५६६)
यतमानाश्च ते वीरा द्रवमाणान्महारथान् ।
नाशक्नुवन्वारयितुं भीष्मबाणप्रपीडितान् ॥ ६-१०६-२५ (४३५६७)
महेन्द्रसमवीर्येण वध्यमाना महाचमूः ।
अभज्यत महाराज न च द्वौ समधावताम् ॥ ६-१०६-२६ (४३५६८)
आविद्धरथनागाश्वं पतितध्वजसंकुलम् ।
अनीकं पाण्डुपुत्राणां हाहाभूतमचेतनम् ॥ ६-१०६-२७ (४३५६९)
जघानात्र पिता पुत्रं पुत्रश्च पितरं तथ ।
प्रियं सखाय चाक्रन्दे सखा दैवबलात्कृतः ॥ ६-१०६-२८ (४३५७०)

विमुच्य कवचानन्ये पाण्डुपुत्रस्य सैनिकाः ।
प्रकीर्य केशान्धावन्तः प्रत्यदृश्यन्त सर्वशः ॥ ६-१०६-२९ (४३५७१)
तद्गोकुलमिवोद्भ्रान्तमुद्भ्रान्तरथकूबरम् ।
ददृशे पाण्डुपुत्रस्य सैन्यमार्तस्वरं तदा ॥ ६-१०६-३० (४३५७२)
प्रभज्यमानं सैन्यं तु दृष्ट्वा यादवनन्दनः ।
उवाच पार्थं बीभत्सुं निगृह्य रथमुत्तमम् ॥ ६-१०६-३१ (४३५७३)
श्रीभगवानुवाच। ६-१०६-३२क्ष् (४२००)
अयं स कालः संप्राप्तः पार्थ यः काङ्क्षितस्तव ।
प्रहरास्मै नरव्याघ्र भीष्मायाहवशोभिने ॥ ६-१०६-३२ (४३५७४)
यत्पुरा कथितं वीर त्वया राज्ञां समागमे ।
विराटनगरे तात सञ्जयस्य समीपतः ॥ ६-१०६-३३ (४३५७५)
भीष्मद्रोणमुखान्सर्वान्धार्तराष्ट्रस्य सैनिकान् ।
सानुबन्धान्हनिष्यामि ये मां योत्स्यन्ति सङ्गरे ॥ ६-१०६-३४ (४३५७६)
इति तत्कुरु कौन्तेय सत्यं वाक्यमरिन्दम ।
क्षत्रधर्ममनुस्मृत्य युध्यस्व विगतज्वरः ॥ ६-१०६-३५ (४३५७७)
सञ्जय उवाच। ६-१०६-३६क्ष् (४२०१)
इत्युक्तो वासुदेवेन तिर्यग्दृष्टिरधोमुखः ।
अकाम इव बीभत्सुरिदं वचनमब्रवीत् ॥ ६-१०६-३६ (४३५७८)
अवध्यानां वधं कृत्वा राज्यं वा नरकोत्तरम् ।
दुःखानि वनवासे वा किं नु मे सुकृतं भवेत् ॥ ६-१०६-३७ (४३५७९)
चोदयाश्वान्यतो भीष्मः करिष्ये वचनं तव ।
पातयिष्यामि दुर्धर्षं भीष्मं कुरुपितामहम् ॥ ६-१०६-३८ (४३५८०)
सञ्जय उवाच। ६-१०६-३९क्ष् (४२०२)
स चाश्वान्रजतप्रख्यांश्चोदयामास माधवः ।
यतो भीष्मस्ततो राजन्दुष्प्रेक्ष्यो रश्मिवानिव । ६-१०६-३९ (४३५८१)
ततस्तत्पुनरावृत्तं युधिष्ठिरबलं महत् ।
दृष्ट्वा पार्थं महाबाहुं भीष्मायोद्यतमाहवे ॥ ६-१०६-४० (४३५८२)
ततो भीष्मः कुरुश्रेष्ठः सिंहवद्विनदन्मुहुः ।
धनंजयरथं शीघ्रं शरवर्षैरवाकिरत् ॥ ६-१०६-४१ (४३५८३)
क्षणेन स रथस्तस्य सहयः सहसारथिः ।
शरवर्षेण महता न प्राज्ञायत भारत ॥ ६-१०६-४२ (४३५८४)
वासुदेवस्त्वसंभ्रान्तो धैर्यमास्थाय सत्वरः ।
चोदयामास तानश्वान्विनुन्नान्भीष्मसायकैः ॥ ६-१०६-४३ (४३५८५)
ततः पार्थो धनुर्गृह्य दिव्यं जलदनिःस्वनम् ।
पातयामास भीष्मस्य धनुश्छित्त्वा शितैः शरैः ॥ ६-१०६-४४ (४३५८६)
स च्छिन्नधन्वा कौरव्यः पुनरन्यन्महद्धनुः ।

निमेषान्तरमात्रेण सज्यं चक्रे पिता तव ॥ ६-१०६-४५ (४३५८७)
चकर्ष च ततो दोर्भ्यां धनुर्जलदनिःस्वनम् ।
अथास्य तदपि क्रुद्धश्चिच्छेद धनुरर्जुनः ।
तस्य तत्पूजयामास लाघवं शन्तनोः सुतः ॥ ६-१०६-४६ (४३५८८)
गाङ्गेयस्त्वब्रवीत्पार्थं धन्विश्रेष्ठमरिंदम ।
साधुसाधु महाबाहो साधु कुन्तीसुतेति च ॥ ६-१०६-४७ (४३५८९)
समाभाष्यैवमपरं प्रगृह्य रुचिरं धनुः ।
मुमोच समरे भीष्मः शरान्पार्थरथं प्रति ॥ ६-१०६-४८ (४३५९०)
अदर्शयद्वसुदेवो हययाने परं बलम् ।
मोघान्कुर्वञ्शरांस्तस्य मण्डलानि निदर्शयन् ॥ ६-१०६-४९ (४३५९१)
शुशुभाते नरव्याघ्रौ तौ भीष्मशरविक्षतौ ।
गोवृषाविव संरब्धौ विषाणोल्लिखिताङ्कितौ ॥ ६-१०६-५० (४३५९२)
वासुदेवस्तु संप्रेक्ष्य पार्थस्य मृदुयुद्धताम् ।
भीष्मं च शरवर्षाणि सृजन्तमनिशं युधि ॥ ६-१०६-५१ (४३५९३)
प्रतपन्तमिवादित्यं मध्यमासाद्य सेनयोः ।
वरान्वरान्विनिघ्नन्तं पाण्डुपुत्रस्य सैनिकान् ॥ ६-१०६-५२ (४३५९४)
युगान्तमिव कुर्वाणं भीष्मं यौधिष्ठिरे बले ।
नामृष्यत महाबाहुर्माधवः परवीरहा ॥ ६-१०६-५३ (४३५९५)
उत्सृज्य रजतप्रख्यान्हयान्पार्थस्य मारिष ।
वासुदेवस्ततो योगी प्रचस्कन्द महारथात् ॥ ६-१०६-५४ (४३५९६)
अभिदुद्राव भीष्मं स भुजप्रहरणो बली ।
प्रतोदपाणिस्तेजस्वी सिंहवद्विनदन्मुहुः ॥ ६-१०६-५५ (४३५९७)
दारयन्निव पद्भ्यां स जगतीं जगदीश्वरः ।
क्रोधताम्रेक्षणः कृष्णो जिघांसुरमितद्युतिः ॥ ६-१०६-५६ (४३५९८)
ग्रसन्निव च तेजांसि तावकानां महाहवे ।
दृष्ट्वा माधवमाक्रन्दे भीष्मायोद्यतमन्तिके ॥ ६-१०६-५७ (४३५९९)
हतो भीष्मो हतो भीष्म इति तत्रस्म सैनिकाः ।
क्रोशन्तः प्राद्रवन्सर्वे वासुदेवभयातुराः ॥ ६-१०६-५८ (४३६००)
पीतकौशेयसंवीतो मणिश्यामो जनार्दनः ।
शुशुभे विद्रवन्भीष्मं विद्युन्माली यथाम्बुदः ॥ ६-१०६-५९ (४३६०१)
स सिंह इव मातङ्गं यथर्षभ इवर्षभम् ।
अभिदुद्राव वेगेन विनदन्यादवर्षभः ॥ ६-१०६-६० (४३६०२)
तमापतन्तं संप्रेक्ष्य पुण्डरीकाक्षमाहवे ।
असंभ्रमं रणे भीष्मो विचकर्ष महद्धनुः ।
उवाच चैव गोविन्दमसंभ्रान्तेन चेतसा ॥ ६-१०६-६१ (४३६०३)
एह्येहि पुण्डरीकाक्ष देवदेव नमोस्तु ते ।

मामद्य सात्वतश्रेष्ठ तापयस्त महाहवे ॥ ६-१०६-६२ (४३६०४)
त्वया हि देव संग्रामे हतस्यापि ममानघ ।
श्रेय एव परं कृष्ण लोके भवति सर्वतः ॥ ६-१०६-६३ (४३६०५)
संभावितोऽस्मि गोविन्द त्रैलोक्येनाद्य संयुगे ।
प्रहरस्व यथेष्टं वै दासोऽस्मि तव चानघ ॥ ६-१०६-६४ (४३६०६)
सञ्जय उवाच। ६-१०६-६५क्ष् (४२०३)
अन्वगेव ततः पार्थः समभिद्रुत्य केशवम् ।
निजग्राह महाबाहुर्बाहुभ्यां परिगृह्य वै ॥ ६-१०६-६५ (४३६०७)
निगृह्यमाणः पार्थेन कृष्णो राजीवलोचनः ।
जगामैवैनमादाय वेगेन पुरुषोत्तमः ॥ ६-१०६-६६ (४३६०८)
पार्थस्तु विष्टभ्य बलाच्चरणौ परवीरहा ।
निजग्राह हृषीकेशं कथंचिद्दशमे पदे ॥ ६-१०६-६७ (४३६०९)
तत एवमुवाचार्तः क्रोधपर्याकुलेक्षणम् ।
निःश्वसन्तं यथा नागमर्जुनः प्रणयात्सखा ॥ ६-१०६-६८ (४३६१०)
निवर्तस्व महाबाहो नानृतं कर्तुमर्हसि ।
यत्त्वया कथितं पूर्वं न योत्स्यामीति केशव ॥ ६-१०६-६९ (४३६११)
मिथ्यावादीति लोकास्त्वां कथयिष्यन्ति माधव ।
ममैष भारः सर्वो हि हनिष्यामि पितामहम् ॥ ६-१०६-७० (४३६१२)
शपे केशव शस्त्रेण सत्येन सुकृतेन च ।
अन्तं यथा गमिष्यामि शत्रूणां शत्रुसूदन ॥ ६-१०६-७१ (४३६१३)
अद्यैव पश्य दुर्धर्षं पात्यमानं महारथम् ।
तारापतिमिवापूर्णमन्तकाले यदृच्छया ॥ ६-१०६-७२ (४३६१४)
माधवस्तु वचः श्रुत्वा फल्गुनस्य महात्मनः ।
‘अभवत्परमप्रीतो दृष्ट्वा पार्थस्य विक्रमम्’।
न किंचिदुक्त्वा सक्रोध आरुरोह रथं पुनः ॥ ६-१०६-७३ (४३६१५)
तौ रथस्थौ नरव्याघ्रौ भीष्मः शान्तनवः पुनः ।
ववर्ष शरवर्षेण मेघो वृष्ट्या यथाऽचलौ ॥ ६-१०६-७४ (४३६१६)
प्राणानादत्त योधानां पिता देवव्रतस्तव ।
गभस्तिभिरिवादित्यस्तेजांसि शिशिरात्यये ॥ ६-१०६-७५ (४३६१७)
यथा कुरूणां सैन्यानि बभञ्जुर्युधि पाण्डवाः ।
तथा पाण्डवसैन्यानि बभञ्ज युधि ते पिता ॥ ६-१०६-७६ (४३६१८)
हतविद्रुतसैन्यास्तु निरुत्साहा विचेतसः ।
निरीक्षितुं न शेकुस्ते भीष्ममप्रतिमं रणे ॥ ६-१०६-७७ (४३६१९)
मध्यं गतमिवादित्यं प्रतपन्तं स्वतेजसा ।
ते वध्यमाना भीष्मेण शतशोऽथ सहस्रशः ॥ ६-१०६-७८ (४३६२०)
कुर्वाणं समरे कर्माण्यतिमानुषविक्रमम् ।

वीक्षांचक्रुर्महाराज पाण्डवा भयपीडिताः ॥ ६-१०६-७९ (४३६२१)
तथा पाण्डवसैन्यानि द्राव्यमाणानि भारत ।
त्रातारं नाध्यगच्छन्त गावः पङ्कगता इव ।
पिपीलिका इव क्षुण्णा दुर्बला बलिना रणे ॥ ६-१०६-८० (४३६२२)
तथैव योधा राजेन्द्र भीष्मेणामित्रघातिना ।
समरे मृदिताः सर्वे पाण्डवाः सह सृञ्जयैः ॥ ६-१०६-८१ (४३६२३)
महारथं भारत दुष्प्रकम्पं
शरौघिणं प्रतपन्तं नरेन्द्रान् ।
भीष्मं न शेकुः प्रतिवीक्षितुं ते
शरार्चिषं सूर्यमिवातपन्तम् ॥ ६-१०६-८२ (४३६२४)
विमृद्गतस्तस्य तु पाण्डुसेना-
मस्तं जगामाथ सहस्ररश्मिः ।
ततो हि भीष्मः सबलान्ससैन्या-
न्न्यवारयत्पाण्डुसुताञ्शरौघैः ॥ ६-१०६-८३ (४३६२५)
जघान चैतान्सुभृशं महाबलो
महाव्रतः पाण्डुसुतान्महास्त्रैः ।
रणे करूणाधिपचेदिपैर्बलै-
र्वृतान्सदा चक्रधरस्य पश्यतः ।
ततो बलानां श्रमकर्शितानां ६-१०६-८४ (४३६२६)
६-१०६-८४फ़"
मनोऽवहारं प्रति संबभूव ॥ ॥

इति श्रीमन्महाभारते भीष्मपर्वणि भीष्मवधपर्वणि
नवमदिवसयुद्धे षडधिकशततमोऽध्यायः ॥

---

भिस्मपर्व-अध्यय१०७
॥ श्रीः ॥
६.१०७. अध्यायः १०७

Mahabharata - Bhishma Parva - Chapter Topics
युधिष्ठिरेण कृष्णेनसह संमन्त्र्य रात्रौ भीष्ममेत्य
तद्वधोपायकथनप्रार्थना ॥ १ ॥
तंप्रति भीष्मेण तत्कथनम् ॥ २ ॥

Mahabharata - Bhishma Parva - Chapter Text

६-१०७-० (४३६२७)

सञ्जय उवाच। ६-१०७-०क्ष् (४२०४)
युध्यतामेव तेषां तु भास्करेऽस्तमुपागते ।
सन्ध्या समभवद्घोरा नापश्याम ततो रणम् ॥ ६-१०७-१ (४३६२८)
ततो युधिष्ठिरो राजा सन्ध्यां संदृश्य भारत ।
वध्यमानं च भीष्मेण त्यक्तास्त्रं भयविह्वलम् ॥ ६-१०७-२ (४३६२९)
स्वसैन्यं च परावृत्तं पलायनपरायणम् ।
भीष्मं च युधि संरब्धं पीडयन्तं महारथम् ॥ ६-१०७-३ (४३६३०)
सोमकांश्च जितान्दृष्ट्वा निरुत्साहान्महारथान् ।
ग निशामुखं च संप्रेक्ष्य घोररूपं भयानकम्।'
चिन्तयित्वा ततो राज्ञामपहारमकारयत् ॥ ६-१०७-४ (४३६३१)
ततोऽपहारं सैन्यानां चक्रे राजा युधिष्ठिरः ।
तथैव तव सैन्यानामपहारे ह्यभूत्तदा ॥ ६-१०७-५ (४३६३२)
ततोऽपहारं सैन्यानां कृत्वा तत्र महारथाः ।
न्यविशन्त कुरुश्रेष्ठ संग्रामे क्षतविक्षताः ॥ ६-१०७-६ (४३६३३)
भीष्मस्य समरे कर्म चिन्तयानास्तु पाण्डवाः ।
नालभन्त तदा शान्तिं भीष्मबाणप्रपीडिताः ॥ ६-१०७-७ (४३६३४)
भीष्मोऽपि समरे जित्वा पाण्डवान्सह सृञ्जयान् ।
पूज्यमानस्तव सुतैर्वन्द्यमानश्च भारत ॥ ६-१०७-८ (४३६३५)
न्यविशत्कुरुभिः सार्धं हृष्टरूपैः समन्ततः ।
ततो रात्रिः समभवत्सर्वभूतप्रमोहिनी ॥ ६-१०७-९ (४३६३६)
तस्मिन्रात्रिमुखे घोरे पाण्डवा वृष्णिभिः सह ।
सृञ्जयाश्च दुराधर्षा मन्त्राय समुपाविशन् ॥ ६-१०७-१० (४३६३७)
आत्मनिःश्रेयसं सर्वे प्राप्तकालं महाबलाः ।
मन्त्रयामासुरव्यग्रा मन्त्रनिश्चयकोविदाः ॥ ६-१०७-११ (४३६३८)
ततो युधिष्ठिरो राजा मन्त्रयित्वा चिरं नृप ।
वासुदेवं समुद्वीक्ष्य वचनं चेदमाददे ॥ ६-१०७-१२ (४३६३९)
कृष्ण पश्य माहात्मानं भीष्मं भीमपराक्रमम् ।
गजं नलवनानीव विमृद्नन्तं बलं मम ॥ ६-१०७-१३ (४३६४०)
न चैवैनं महात्मानमुत्सहामो निरीक्षितुम् ।
लेलिह्यमानं सैन्येषु प्रवृद्धमिव पावकम् ॥ ६-१०७-१४ (४३६४१)
यथा घोरो महानागस्तक्षको वै विषोल्बणः ।
तथा भीष्मो रणे क्रुद्धस्तीक्ष्णशस्त्रः प्रतापवान् ॥ ६-१०७-१५ (४३६४२)
गृहीतचापः समरे प्रमुञ्चन्निशिताञ्छरान् ।
शक्यो जेतुं यमः क्रुद्धो वज्रपाणिश्च देवराट् ॥ ६-१०७-१६ (४३६४३)
वरुणः पाशभृच्चापि सगदो वा धनेश्वरः ।
न तु भीष्मः सुसंक्रुद्धः शक्यो जेतुं महाहवे ॥ ६-१०७-१७ (४३६४४)

सोऽहमेवं गते कृष्ण निमग्नः शोकसागरे ।
आत्मनो बुद्धिदौर्बल्याद्भीष्ममासाद्य संयुगे ॥ ६-१०७-१८ (४३६४५)
वनं यास्यामि दुर्धर्ष श्रेयो वै तत्र मे गतम् ।
न युद्धं रोचते कृष्ण हन्ति भीष्मो हि नः सदा ॥ ६-१०७-१९ (४३६४६)
यथा प्रज्वलितं वह्निं पतङ्गः समभिद्रवन् ।
एकतो मृत्युमभ्येति तथाऽहं भीष्ममेयिवान् ॥ ६-१०७-२० (४३६४७)
क्षयं नीतोऽस्मि वार्ष्णेय राज्यहेतोः पराक्रमी ।
भ्रातरश्चैव मे शुराः सायकैर्भृशपीडिताः ॥ ६-१०७-२१ (४३६४८)
मत्कृते भ्रातृसौहार्दाद्राज्यभ्रष्टा वनं गताः ।
परिक्लिष्टा तथा कृष्णा मत्कृते मधुसूदन ॥ ६-१०७-२२ (४३६४९)
जीवितं बहु मन्येऽहं जीवितं ह्यद्य दुर्लभम् ।
जीवितस्याद्य शेषेण चरिष्ये धर्ममुत्तमम् ॥ ६-१०७-२३ (४३६५०)
यदि तेऽहमनुग्राह्यो भ्रातृभिः स केशव ।
स्वधर्मस्याविरोधेन हितं व्याहर केशव ॥ ६-१०७-२४ (४३६५१)
सञ्जय उवाच। ६-१०७-२५क्ष् (४२०५)
एवं श्रुत्वा वचस्तस्य कारुण्याद्बहुविस्तरम् ।
प्रत्युवाच ततः कृष्णः सान्त्वयानो युधिष्ठिरम् ॥ ६-१०७-२५ (४३६५२)
श्रीभगवानुवाच । ६-१०७-२६क्ष् (४२०६)
धर्मपुत्र विषादं त्वं मा कृथाः सत्यसंगर ।
यस्य ते भ्रातरः शूरा दुर्जयाः सत्रुसूदनाः ॥ ६-१०७-२६ (४३६५३)
अर्जुनो भीमसेनश्च वाय्वग्निसमतेजसौ ।
माद्रीपुत्रौ च विक्रान्तौ त्रिदशानामिविश्वरौ ॥ ६-१०७-२७ (४३६५४)
मां वा नियुङ्क्ष्व सौहार्दाद्योत्स्ये भीष्मेण पाण्डव ।
त्वप्रयुक्तो महाराज किं न कुर्यां महाहवे ॥ ६-१०७-२८ (४३६५५)
हनिष्यामि रणे भीष्ममाहूय पुरुषर्षभम् ।
पश्यतां धार्तराष्ट्राणां यदि नेच्छति फल्गुनः ॥ ६-१०७-२९ (४३६५६)
यदि भीष्मे हते वीरे जयं पश्यसि पण्डव ।
हन्तास्म्येकरथेनाद्य कुरुवृद्धं पितामहम् ॥ ६-१०७-३० (४३६५७)
पश्य मे विक्रमं राजन्महेन्द्रस्येव संयुगे ।
विमुञ्चन्तं महास्त्रामि पातयिष्यामि तं रथात् ॥ ६-१०७-३१ (४३६५८)
यः शत्रुः पाण्डुपुत्राणां मच्छत्रुः स न संशयः ।
मदर्था भवदर्था ये ये मदीयास्तवैव ते ॥ ६-१०७-३२ (४३६५९)
तव भ्राता मम सखा संबन्धी शिष्य एव च ।
मांसान्युत्कृत्य दास्यामि फल्गुनार्थे महीपते ॥ ६-१०७-३३ (४३६६०)
एष चापि नरव्याघ्रो मत्कृते जीवितं त्यजेत् ।
एष नः समयस्तात तारयेम परस्परम् ॥ ६-१०७-३४ (४३६६१)

स मां नियुङ्क्ष्व राजेन्द्र यावत्सज्जो भवाम्यहम् ।
प्रतिज्ञातमुपप्लाव्ये यत्तत्पार्थेन पूर्वतः ॥ ६-१०७-३५ (४३६६२)
पातयिष्यामि गाङ्गेयमित्युलूकस्य संनिधौ ।
परिरक्ष्यमिदं तावद्वचः पार्थस्य धीमतः ॥ ६-१०७-३६ (४३६६३)
अनुज्ञातेन पार्थेन मया कार्यं न संशयः ।
अथवा फल्गुनस्यैष भारः परिमितो रणे ॥ ६-१०७-३७ (४३६६४)
स हनिष्यति संग्रामे भीष्मं परपुरंजयम् ।
अशक्यमपि कुर्याद्धि रणे पार्थः समुद्यतः ॥ ६-१०७-३८ (४३६६५)
त्रिदशान्वा समुद्युक्तान्सहितान्दैत्यदानवैः ।
निहन्त्यादर्जुनः सङ्ख्ये किमु भीष्मं नराधिप ॥ ६-१०७-३९ (४३६६६)
विपरीतो महावीर्यो गतसत्वोऽल्पजीवनः ।
भीष्मः शान्तनवो नूनं कर्तव्यं नावबुध्यते ॥ ६-१०७-४० (४३६६७)
युधिष्ठिर उवाच। ६-१०७-४१क्ष् (४२०७)
एवमेतन्महाबाहो यथा वदसि माधव ।
सर्वे ह्येते न पर्याप्तास्तव वेगविधारणे ॥ ६-१०७-४१ (४३६६८)
नियतं समावाप्स्यामि सर्वमेतद्यथेप्सितम् ।
यस्य मे पुरुषव्याघ्र भवान्पक्षे व्यवस्थितः ॥ ६-१०७-४२ (४३६६९)
सेन्द्रानपि रणे देवाञ्जयेयं जयतां वर ।
त्वया नाथेन गोविन्द किमु भीष्मं महारथम् ॥ ६-१०७-४३ (४३६७०)
न तु त्वामनृतं कर्तुमुत्सहे स्वात्मगौरवात् ।
अयुध्यमानाः सहाय्यं यथोक्तं कुरु माधव ॥ ६-१०७-४४ (४३६७१)
समयस्तु कृतः कश्चिन्मम भीष्मेण संयुगे ।
मन्त्रयिष्ये तवार्थाय न तु योत्स्ये कथंचन ॥ ६-१०७-४५ (४३६७२)
दुर्योधनार्थं योत्स्यामि सत्यमेतदिति प्रभो ।
स हि राज्यस्य मे दाता मन्त्रस्यैव च माधव ॥ ६-१०७-४६ (४३६७३)
तस्माद्देवव्रतं भूयो वधोपायार्थमात्मनः ।
भवता सहिताः सर्वे प्रयाम मधुसूदन ॥ ६-१०७-४७ (४३६७४)
तद्वयं सहिता गत्वा भीष्ममाशु नरोत्तमम् ।
रुचिते तव पृच्छामि मन्त्रं वार्ष्णेय माचिरम् ॥ ६-१०७-४८ (४३६७५)
स वक्ष्यति हितं वाक्यं सत्यमस्माज्जनार्दन ।
यथा च वक्ष्यते कृष्ण तथा कर्तास्मि संयुगे ॥ ६-१०७-४९ (४३६७६)
स नो जयस्य दाता स्यान्मन्त्रस्य च दृढव्रतः ।
बालाः पित्रा विहीनाश्च तेन संवर्धिता वयम् ॥ ६-१०७-५० (४३६७७)
तं चेत्पितामहं वृद्धं हन्तुमिच्छामि माधव ।
पितुः पितरमिष्टं च धिगस्तु क्षत्रजीविकाम् ॥ ६-१०७-५१ (४३६७८)
सञ्जय उवाच। ६-१०७-५२क्ष् (४२०८)

ततोऽब्रवीन्महाराज वार्ष्णेयः कुरुनन्दनम् ।
रोचते मे महाप्राज्ञ राजेन्द्र तव भाषितम् ॥ ६-१०७-५२ (४३६७९)
देवव्रतः कृती भीष्मः प्रेक्षितेनापि निर्दहेत् ।
गम्यतां स्ववधोपायं प्रष्टुं सागरगासुतम् ॥ ६-१०७-५३ (४३६८०)
वक्तमर्हति सत्यं स त्वया पृष्टो विशेषतः ।
ते वयं तत्र गच्छामः प्रष्टुं कुरुपितामहम् ॥ ६-१०७-५४ (४३६८१)
गत्वा शान्तनवं वृद्धं मन्त्रं पृच्छाम भारत ।
स नो दास्यति मन्त्रं यं तेन योत्स्यामहे परान् ॥ ६-१०७-५५ (४३६८२)
सञ्जय उवाच। ६-१०७-५६क्ष् (४२०९)
एवमामन्त्र्य ते वीराः पाण्डवाः पाण्डुपूर्वज ।
जग्मुस्ते सहिताः सर्वे वासुदेवश्च वीर्यवान् ॥ ६-१०७-५६ (४३६८३)
विमुक्तशस्त्रकवचा भीष्मस्य सदनं प्रति ।
प्रविश्य च तदा भीष्मं शिरोभिः प्रणिपेदिरे ॥ ६-१०७-५७ (४३६८४)
पूजयन्तो महाराज पाण्डवा भरतर्षभम् ।
प्रणम्य शिरसा चैनं भीष्मं शरणमभ्ययुः ॥ ६-१०७-५८ (४३६८५)
तानुवाच महाबाहुर्भीष्मः कुरुपितामहः ।
स्वागतं तव वार्ष्णेय स्वागतं ते धनञ्जय ॥ ६-१०७-५९ (४३६८६)
स्वागतं धर्मपुत्राय भीमाय यमयोस्तथा ।
किं वा कार्यं करोम्यद्य युष्माकं प्रीतिवर्धनं ॥ ६-१०७-६० (४३६८७)
ग्युद्धादन्यत्र हे वत्साः प्रीयन्तां मा विशङ्कथ ।'
सर्वात्मनापि कर्तास्मि यदपि स्यात्सदुष्करम् ।
तथा ब्रुवाणं गाङ्गेयं प्रीतियुक्तं पुनःपुनः ॥ ६-१०७-६१ (४३६८८)
उवाच राजा दीनात्मा प्रीतियुक्तमिदं वचः ।
कथं जयेम सर्वज्ञ कथं राज्यं लभेमहि ॥ ६-१०७-६२ (४३६८९)
प्रजानां संशयो न स्यात्कथं तन्मे बद प्रभो ।
भवान्हि नो वधोपायं ब्रवीतु स्वयमात्मनः ॥ ६-१०७-६३ (४३६९०)
भवन्तं समरे वीर विषहेम कथं वयम् ।
न हि ते सूक्ष्ममप्यस्ति रन्ध्रं कुरुपितामह ॥ ६-१०७-६४ (४३६९१)
मण्डलेनैव धनुषा दृश्यसे संयुगे सदा ।
आददानं संदधानं विकर्षन्तं धनुर्न च ॥ ६-१०७-६५ (४३६९२)
पश्यामस्त्वां महाबाहो रथे सूर्यमिवापरम् ।
रथाश्वनरनागानां हन्तारं परवीरहन् ॥ ६-१०७-६६ (४३६९३)
कोऽथवोत्सहते जेतुं वां पुमान्भरतर्षभ ।
वर्षता शरवर्षाणि महान्ति पुरुषर्षभ ॥ ६-१०७-६७ (४३६९४)
क्षयं निता हि पृतना संयुगे महती मम ।
यथा युधि जयेम त्वां यथा राज्यं भृशं मम ॥ ६-१०७-६८ (४३६९५)

मम सैन्यस्य च क्षेमं तन्मे ब्रूहि पितामह ।६-१०७-६९क्षसञ्जय उवाच ।
ततोऽब्रवीच्छान्तनवः पाण्डवान्पाण्डुपूर्वज ॥ ६-१०७-६९ (४३६९६)
न कथंचन कौन्तेय मयि जीवति संयुगे ।
जयो भवति सर्वज्ञ सत्यमेतद्ब्रवीमि ते ॥ ६-१०७-७० (४३६९७)
निर्जिते मयि युद्धेन रणे जेष्यथ पाण्डवाः ।
क्षिप्रं मयि प्रहरत यदीच्छथ रणे जयम् ॥ ६-१०७-७१ (४३६९८)
अनुजानामि वः पार्थाः प्रहरध्वं यथासुखम् ।
एवं हि सुकृतं मन्ये भवतां विदितो ह्यहम् ।
हते मयि हतं सर्वं तस्मादेवं विधीयताम् ॥ ६-१०७-७२ (४३६९९)
युधिष्ठिर उवाच। ६-१०७-७३क्ष् (४२१०)
ब्रूहि तस्मादुपायं नो यथा युद्धे जयेमहि ।
भवन्तं समरे क्रुद्धं दण्डहस्तमिवान्तकम् ॥ ६-१०७-७३ (४३७००)
शक्यो वज्रधरो जेतुं वरुणोऽथ यमस्तथा ।
न भवान्समरे शक्यः सेन्द्रैरपि सुरासुरैः ॥ ६-१०७-७४ (४३७०१)
भीष्म उवाच। ६-१०७-७५क्ष् (४२११)
सत्यमेतन्महाबाहो यथा वदसि पाण्डव ॥ ६-१०७-७५ (४३७०२)
नाहं जेतुं रणे शक्यः सेन्द्रैरपि सुरासुरैः ।
आत्तशस्त्रो रणे यत्तो गृहीतवरकार्मुकः ।
ततो मां न्यस्तशस्त्रं तु एते हन्युर्महारथाः ॥ ६-१०७-७६ (४३७०३)
निक्षिप्तशस्त्रे पतिते विमुक्तकवचध्वजे ।
द्रवमाणे च भीते च तवास्मीति च वादिनि ॥ ६-१०७-७७ (४३७०४)
ग्स्त्रीजिते स्त्रीप्रधाने च स्त्रीप्रधायिनि धर्मज'
स्त्रियां स्त्रीनामधेये च विकले चैकपुत्रिणि ।
अप्रसूते च षण्डे च न युद्धं रोचते मम ॥ ६-१०७-७८ (४३७०५)
इमं मे शृणु राजेन्द्र संकल्पं पूर्वचिन्तितम् ।
असंकल्पध्वजं दृष्ट्वा न युध्येयं कदाचन ॥ ६-१०७-७९ (४३७०६)
य एष द्रौपदो राजंस्तव सैन्ये महारथः ।
शिखण्डी समरामर्षी शूरश्च समितिंजयः ॥ ६-१०७-८० (४३७०७)
यथाऽभवच्च स्त्रीपूर्वं पश्चात्पुंस्त्वं समागतः ।
जानन्ति च भवन्तोऽपि सर्वमेतद्यथातथम् ॥ ६-१०७-८१ (४३७०८)
अर्जुनः समरे शूरः पुरस्कृत्य शिखण्डीनम् ।
मामेव विशिखैस्तीक्ष्णैरभिद्रवतु दंशितः ॥ ६-१०७-८२ (४३७०९)
असंकल्पध्वजे तस्मिन्स्त्रीपूर्वे च विशेषतः ।
न प्रहर्तुमभीप्सामि गृहीतेषु कथंचन ॥ ६-१०७-८३ (४३७१०)
तदन्तरं समासाद्य पाण्डवो मां धनञ्जयः ।
शरैर्घातयतु क्षिप्रं समन्ताद्भरतर्षभ ॥ ६-१०७-८४ (४३७११)

न तं पश्यामि लोकेष मां हन्याद्यः समुद्यतम् ।
ऋते कृष्णान्महाभागात्पाण्डवाद्वा धनञ्जयात् ॥ ६-१०७-८५ (४३७१२)
पार्षतं तु पुरोधाय क्लीबमद्य ममाग्रतः ।
आत्तशस्त्रो रणे यत्तो गृहीतवरकार्मुकः ।
मां पातयतु बीभत्सुरेवं तव जयो ध्रुवम् ॥ ६-१०७-८६ (४३७१३)
एतत्कुरुष्व कौन्तेय यथोक्तं मम सुव्रत ।
ततो जेष्वसि संग्रामे धार्तराष्ट्रान्समागतान् ॥ ६-१०७-८७ (४३७१४)
सञ्जय उवाच। ६-१०७-८८क्ष् (४२१२)
तेऽनुज्ञातास्ततः पार्था जग्मुः स्वशिबिरं प्रति ।
अभिवाद्य महात्मानं भीष्मं कुरुपितामहम् ॥ ६-१०७-८८ (४३७१५)
तथोक्तवति गाङ्गेये परलोकाय दीक्षिते ।
अर्जुनो दुःखसंतप्तः सव्रीडमिदमब्रवीत् ॥ ६-१०७-८९ (४३७१६)
गुरुणा कुरुवृद्धेन कृतप्रज्ञेन धीमता ।
पितामहेन संग्रामे कथं योद्धास्मि माधव ॥ ६-१०७-९० (४३७१७)
क्रीडता हि मया बाल्ये वासुदेव महामनाः ।
पांसुरूषितगात्रेण महात्मा परुषीकृतः ॥ ६-१०७-९१ (४३७१८)
यस्याहमधिरुह्याङ्कं वालः किल गदाग्रज ।
तातेत्यवोचं पितरं पितुः पाण्डोर्महात्मनः ॥ ६-१०७-९२ (४३७१९)
नाहं तातस्तव पितुस्तातोऽस्मि तव भारत ।
इति मामब्रवीद्बाल्ये यः स वध्यः कथं मया ॥ ६-१०७-९३ (४३७२०)
कामं वध्यतु सैन्यं मे नाहं योत्स्ये महात्मना ।
जयो वास्तु वधो वा मे कथं वा कृष्ण मन्यसे ॥ ६-१०७-९४ (४३७२१)
ग कथमस्माद्विधः कृष्ण जानन्धर्मं सनातनम् ।
न्यस्तशस्त्रे च वृद्धे च प्रहरेद्धि पितामहे ॥' ६-१०७-९५ (४३७२२)
श्रीवासुदेव उवाच। ६-१०७-९६क्ष् (४२१३)
प्रतिज्ञाय वधं जिष्णो पुरा भीष्मस्य संयुगे ।
क्षत्रधर्मे स्थितः पार्थ कथं नैनं हनिष्यसि ॥ ६-१०७-९६ (४३७२३)
पातयैनं रथात्पार्थ क्षत्रियं युद्धदुर्मदम् ।
नाहत्वा युधि गाङ्गेयं विजयस्ते भविष्यति ॥ ६-१०७-९७ (४३७२४)
दृष्टमेतत्पुरा देवैर्भविष्यत्यवशस्य ते ।
यद्दृष्टं हि पुरा पार्थ तत्तथा न तदन्यथा ॥ ६-१०७-९८ (४३७२५)
न हि भीष्मं दुराधर्षं व्यात्ताननमिवान्तकम् ।
त्वदन्यः शक्नुयाद्योद्धुमपि वज्रधरः स्वयम् ॥ ६-१०७-९९ (४३७२६)
जहि भीष्मं स्थिरो भूत्वा शृणु चेदं वचो मम ।
यथोवाच पुरा शक्रं महाबुद्धिर्बृहस्पतिः ॥ ६-१०७-१०० (४३७२७)
ज्यायांसमपि चेद्वृद्धं गुणैरपि समन्वितम् ।

आततायिनमायान्तं हन्याद्घातकमात्मनः ॥ ६-१०७-१०१ (४३७२८)
शाश्वतोऽयं स्थितो धर्मः क्षत्रियाणां धनञ्जय ।
योद्धव्यं रक्षितव्यं च यष्टव्यं चानसूयुभिः ॥ ६-१०७-१०२ (४३७२९)
अर्जुन उवाच। ६-१०७-१०३क्ष् (४२१४)
शिखण्डी निधनं कृष्ण भीष्मस्य भविता ध्रुवम् ।
दृष्ट्वैव हि सदा भीष्मः पाञ्चाल्यं विनिवर्तते ॥ ६-१०७-१०३ (४३७३०)
ते वयं प्रमुखे तस्य पुरस्कृत्य शिखण्डिनम् ।
गाङ्गेयं पातयिष्याम उपायेनेति मे मतिः ॥ ६-१०७-१०४ (४३७३१)
अहमन्यान्महेष्वासान्वारयिष्यामि सायकैः ।
शिखण्ड्यपि युधां श्रेष्ठं भीष्ममेवाभियोधयेत् ॥ ६-१०७-१०५ (४३७३२)
श्रुतं हि कुरुमुख्यस्य नाहं हन्यां शिखण्डिनम् ।
कन्या ह्येषा पुरा भूत्वा पुरुषः समपद्यत ॥ ६-१०७-१०६ (४३७३३)
ग्अर्जुनस्य वचः श्रुत्वा भीष्मस्य वधसंयुतम् ।
जहृषुर्हृष्टरोमाणः सकृष्णाः पाण्डवास्तदा ॥' ६-१०७-१०७ (४३७३४)
इत्येवं निश्चयं कृत्वा पाण्डवाः सहमाधवाः ।
अनुमान्य महात्मानं प्रययुर्हृष्टमानसाः ।
शयनानि यथा स्वानि भेजिरे पुरुषर्षभाः ॥ ॥ ६-१०७-१०८ (४३७३५)

इति श्रीमन्महाभारते भीष्मपर्वणि भीष्मवधपर्वणि
सप्ताधिकशततमोऽध्यायः ॥
Mahabharata - Bhishma Parva - Chapter Footnotes

६-१०७-२० एकत इति द्वितीयान्तात्तसिः ।एकं केवलं
मृत्युमेवाभ्येतीत्यर्थः ॥
६-१०७-४० विपरीतः क्षुद्रेषु पराक्रमी ।गतसत्वो गतबुद्धिः ॥
६-१०७-६१ युद्धादन्यत्रेत्यर्धं कः पुस्तक एव दृश्यते ॥
६-१०७-९१ परुषीकृतः रूक्षीकृतः ॥
६-१०७-९७ युद्धदुर्मदं युद्धोत्सुकम् ॥
६-१०७-९८ गमिष्याति यमक्षयं इति पाठे भीष्म इति शेषः ॥
६-१०७-१०१ आततायिनमित्यस्य घातकमिति विशेषणमन्येभ्य आततायिभ्यो
व्यवच्छेदायोक्तम् ॥
६-१०७-१०३ निधनं निधनहेतुः ॥

---

भिस्मपर्व-अध्यय१०८
॥ श्रीः ॥
६.१०८. अध्यायः १०८

Mahabharata - Bhishma Parva - Chapter Topics

भीष्मयुद्धम् ॥१ ।शिखण्डिनो भीष्मेण सह संवादो युद्धसन्नाहश्च ॥२ ॥

Mahabharata - Bhishma Parva - Chapter Text

६-१०८-० (४३७३६)
धृतराष्ट्र उवाच। ६-१०८-०क्ष् (४२१५)
कथं शिखण्डी गाङ्गेयमभ्यवर्तत संयुगे ।
पाण्डवाश्च कथं भीष्मं तन्ममाचक्ष्व सञ्जय ॥ ६-१०८-१ (४३७३७)
सञ्जय उवाच। ६-१०८-२क्ष् (४२१६)
ततः प्रभाते विमले सूर्यस्योदयनं प्रति ।
ताड्यमानासु भेरीषु मृदङ्गेष्वानकेषु च ॥ ६-१०८-२ (४३७३८)
ध्मायमानेषु शङ्खेषु पाण्डरेषु समन्ततः ।
शिखण्डिनं पुरस्कृत्य निर्याप्ताः पाण्डवा युधि ॥ ६-१०८-३ (४३७३९)
कृत्वा व्यूहं महाराज सर्वशत्रुनिबर्हणम् ।
शिखण्डी सर्वसैन्यानामग्र आसीद्विशांपते ॥ ६-१०८-४ (४३७४०)
चक्ररक्षौ ततस्तस्य भीमसेनधनंजयौ ।
पृष्ठतो द्रौपदेयाश्च सौभद्रश्चैव वीर्यवान् ॥ ६-१०८-५ (४३७४१)
सात्यकिश्चेकितानश्च तेषां गोप्ता महारथः ।
धृष्टद्युम्नस्ततः पश्चात्पाञ्चालैरभिरक्षितः ॥ ६-१०८-६ (४३७४२)
ततो युधिष्ठिरो राजा यमाभ्यां सहितः प्रभुः ।
प्रययौ सिंहनादेन नादयन्भरतर्षभ ॥ ६-१०८-७ (४३७४३)
विराटस्तु ततः पश्चात्स्वेन सैन्येन संवृत्तः ।
द्रुपदश्च महाबाहो ततः पञ्चादुपाद्रवत् ॥ ६-१०८-८ (४३७४४)
केकया भ्रातरः पञ्च धृष्टकेतुश्च वीर्यवान् ।
जघनं पालयामासुः पाण्डवेयश्च राक्षसः ॥ ६-१०८-९ (४३७४५)
एवं व्यूह्य महासैन्यं पाण्डवास्तव वाहिनीम् ।
अभ्यद्रवन्त संग्रामे त्यक्त्वा जीवितमात्मनः ॥ ६-१०८-१० (४३७४६)
तथैव कुरवो राजन्भीष्मं कृत्वा महारथम् ।
अग्रतः सर्वसैन्यानां प्रययुः पाण्डवान्प्रति ॥ ६-१०८-११ (४३७४७)
पुत्रैस्तव दुराधर्षो रक्षितः सुमहाबलैः ।
ततो द्रोणो महेष्वासः पुत्रश्चास्य महाबलः ॥ ६-१०८-१२ (४३७४८)
भगदत्तस्ततः पश्चाद्गजानीकेन संवृतः ।
कृपश्च कृतवर्मा च भगदत्तमनुव्रतौ ॥ ६-१०८-१३ (४३७४९)

काम्भोजराजो बलवांस्ततः पश्चात्सुदक्षिणः ।
मागधश्च जयत्सेनः सौबलश्च बृहद्बलः ॥ ६-१०८-१४ (४३७५०)
तथैवान्ये महेष्वासाः सुशर्मप्रमुखा नृपाः ।
जघनं पालयामासुस्तव सैन्यस्य भारत ॥ ६-१०८-१५ (४३७५१)
दिवसेदिवसे प्राप्ते भीष्मः शान्तनवो युधि ।
आसुरानकरोद्व्यूहान्पैशाचानथ राक्षसान् ॥ ६-१०८-१६ (४३७५२)
ततः प्रववृते युद्धं तव तेषां च भारत ।
अन्योन्यं निघ्नतां राजन्यमराष्ट्रविवर्धनम् ॥ ६-१०८-१७ (४३७५३)
अर्जुनप्रमुखाः पार्थाः पुरस्कृत्य शिखण्डिनम् ।
भीष्मं युद्धेऽभ्यवर्तन्त किरन्तो विविधाञ्शरान् ॥ ६-१०८-१८ (४३७५४)
तत्र भारत भीमेन ताडितास्तावकाः शरैः ।
रुधिरौघपरिक्लिन्नाः परलोकं ययुस्तदा ॥ ६-१०८-१९ (४३७५५)
नकुलः सहदेवश्च सात्यकिश्च महारथः ।
तव सैनयं समासाद्य पीडयामासुरोजसा ॥ ६-१०८-२० (४३७५६)
ते वध्यामानाः समरे तावका भरतर्षभ ।
नाशक्नुवन्वारयितुं पाण्डवानां महद्बलम् ॥ ६-१०८-२१ (४३७५७)
ततस्तु तावकं सैन्यं वध्यमानं समन्ततः ।
संप्राद्रवद्दशः दिशः काल्यमानं महारथैः ॥ ६-१०८-२२ (४३७५८)
त्रातारं नाध्यगच्छन्त तावका भरतर्षभ ।
वध्यमानाः शितैर्बाणैः पाण्डवैः सह सृञ्जयैः ॥ ६-१०८-२३ (४३७५९)
धृतराष्ट्र उवाच। ६-१०८-२४क्ष् (४२१७)
पीड्यमानं बलं दृष्ट्वा पार्थैर्भीष्मः पराक्रमी ।
यदकार्षीद्रणे क्रुद्धस्तन्ममाचक्ष्व सञ्जय ॥ ६-१०८-२४ (४३७६०)
कथं वा पाण्डवा युद्धे प्रत्युद्याताः परंतपाः ।
निघ्नन्तो मामकान्वीरांस्तन्ममाचक्ष्व सञ्जय ॥ ६-१०८-२५ (४३७६१)
सञ्जय उवाच। ६-१०८-२६क्ष् (४२१८)
आचक्षे ते महाराज यदकार्षीत्पिता तव ।
पीडिते तव पुत्रस्य सैन्ये पाण्डव सृञ्जयैः ॥ ६-१०८-२६ (४३७६२)
प्रंहृष्टमनसः शूराः पाण्डवाः पाण्डुपूर्वज ।
अभ्यवर्तन्त निघ्नन्तस्तव पुत्रस्य वाहिनीम् ॥ ६-१०८-२७ (४३७६३)
तं विनाशं मनुष्येन्द्र नरवारणवाजिनाम् ।
नामृष्यत तदा भीष्मः सैन्यघातं रणे परैः ॥ ६-१०८-२८ (४३७६४)
स पाणडवान्महेष्वासः पञ्चालांश्चैव सृञ्जयान् ।
नाराचैर्वत्सदन्तैश्च शितैरञ्जलिकैस्तथा ॥ ६-१०८-२९ (४३७६५)
अभ्यवर्षत दुर्धर्षस्त्यक्त्वा जीवितमात्मनः ।
स पाण्डवानां प्रवरान्पञ्च राजन्महारथान् ॥ ६-१०८-३० (४३७६६)

आत्तशस्त्रो रणे यत्नाद्वारयामास सायकैः ।
नानाशस्त्रास्त्रवर्षैस्तान्वीर्यामर्षप्रवेरितैः ॥ ६-१०८-३१ (४३७६७)
निजघ्ने समरे क्रुद्धो हस्त्यश्वं चामितं बहु ।
रथिनोऽपातयद्राजन्रथेभ्यः पुरुषर्षभ ॥ ६-१०८-३२ (४३७६८)
सादिनश्चाश्वपृष्ठेभ्यः पादातांश्च समागतान् ॥ ६-१०८-३३ (४३७६९)
गजारोहान्गजेभ्यश्च परेषां जयकारिणः ।
तमेकं समरे भीष्मं त्वरमाणं महारथम् ॥ ६-१०८-३४ (४३७७०)
पाण्डवाः समवर्तन्त वज्रहस्तमिवासुराः ।
शक्राशनिसमस्पर्शान्विमुञ्चन्निशिताञ्छरान् ॥ ६-१०८-३५ (४३७७१)
दिक्ष्वदृश्यत सर्वासु घोरं सन्धारयन्वपुः ।
मण्डलीभूतमेवास्य नित्यं धनुरदृश्यत ॥ ६-१०८-३६ (४३७७२)
संग्रामे युध्यमानस्य शक्रचापोपमं महत् ॥
तदृष्ट्वा समरे कर्म पुत्रास्तव विशांपते ॥ ६-१०८-३७ (४३७७३)
विस्मायं परमं गत्वा पितामहमपूजयन् ।
पार्था विमनसो भूत्वा प्रैक्षन्त पितरं तव ॥ ६-१०८-३८ (४३७७४)
युध्यमानं रणे शूरं विप्रचित्तिमिवामराः ।
न चैनं वारयामासुर्व्यात्ताननमिवान्तकम् ॥ ६-१०८-३९ (४३७७५)
दशमेऽहनि संप्राप्ते रथानीकं शिखण्डिनः ।
अदहन्निशितैर्बाणैः कृष्णवर्त्मेव काननम् ॥ ६-१०८-४० (४३७७६)
तं शिखण्डी त्रिभिर्बाणैरभ्यविध्यत्सनान्तरे ।
आशीविषमिव क्रुद्धं कालसृष्टमिवान्तकम् ॥ ६-१०८-४१ (४३७७७)
स तेनातिभृशं विद्धः प्रेक्ष्य भीष्मः शिखण्डिनम् ।
पुनर्नालोकयत्क्रुद्धः प्रहसन्निदमब्रवीत् ॥ ६-१०८-४२ (४३७७८)
कामं प्रहर वा मा वा न त्वां योत्स्ये कथंचन ।
यैव हि त्वं कृता धात्रा सैव हि त्वं शिखण्डिनी ॥ ६-१०८-४३ (४३७७९)
तस्य तद्वचनं श्रुत्वा शिखण्डी क्रोधमूर्च्छितः ।
उवाच भीष्मं समरे सृक्विणी परिलेलिहन् ॥ ६-१०८-४४ (४३७८०)
जानामि त्वां महाबाहो क्षत्रियाणां भयंकरम् ।
मया श्रुतं च ते युद्धं जामदग्न्येन वै सह ॥ ६-१०८-४५ (४३७८१)
दिव्यश्च ते प्रभावोऽयं मया च बहुशः श्रुतः ।
जनन्नपि प्रभावं ते योत्स्येऽद्याहं त्वया सह ॥ ६-१०८-४६ (४३७८२)
पाण्डवानां प्रियं कुर्वन्नात्मनश्च नरोत्तम ॥
अद्य त्वां योधयिष्यामि रणे पुरुषसत्तम ॥ ६-१०८-४७ (४३७८३)
ध्रुवं च त्वां हनिष्यामि शपे सत्येन तेऽग्रतः ।
एतच्छ्रुत्वा च मद्वाक्यं यत्कृत्यं तत्समाचर ॥ ६-१०८-४८ (४३७८४)
कामं युध्यस्व वा मा वा न मे जीवन्प्रमोक्ष्यसे ।

सुदृष्टः क्रियतां भीष्म लोकोऽयं समितिंजय ॥ ६-१०८-४९ (४३७८५)
सञ्जय उवाच। ६-१०८-५०क्ष् (४२१९)
एवमुक्त्वा ततो भीष्मं पञ्चभिर्नतपर्वभिः ।
अविध्यत रणे भीष्मं प्रतुदन्वाक्यसायकैः ॥ ६-१०८-५० (४३७८६)
तस्य तद्वचनं श्रुत्वा सव्यसाची महारथः ।
कालोऽयमिति संचिन्त्य शिखण्डिनमचोदयत् ॥ ६-१०८-५१ (४३७८७)
अहं त्वामनुयास्यामि परान्विद्रावयञ्शरैः ।
अभिद्रव सुसंरब्धो भीष्मं भीमपराक्रमम् ॥ ६-१०८-५२ (४३७८८)
न हि ते संयुगे पीडां शक्ताः कर्तुं महाबलाः ।
तस्मादद्य महाबाहो यत्नाद्भीष्यमभिद्रव ॥ ६-१०८-५३ (४३७८९)
अहत्वा समरे भीष्म यदि यास्यसि मारिष ।
अवहास्योऽस्य लोकस्य भविष्यसि मया सह ॥ ६-१०८-५४ (४३७९०)
नावहास्या यथा वीर भवेम परमाहवे ।
तथा कुरु रणे यत्नं साधयस्व पितामहम् ॥ ६-१०८-५५ (४३७९१)
कुरूंश्च सहितान्सर्वान्यतमानान्महारथान् ।
अहमावारयिष्यामि सावयस्व पितामहम् ॥ ६-१०८-५६ (४३७९२)
द्रोणं च द्रोणपुत्रं च कृपं चाथ सुयोधनम् ।
चित्रसेनं विकर्णं च सैन्धवं च यजद्रथम् ॥ ६-१०८-५७ (४३७९३)
विन्दानुविन्दावावन्त्यौ काम्भोजं च सुदक्षिणम् ।
भगदत्तं तथा शूरं मागदं च महाबलम् ॥ ६-१०८-५८ (४३७९४)
सौमदत्तिं तथा शूरमार्श्यशृङ्गिं च राक्षसम् ।
त्रिगर्तराजं च रणे सह सर्वैर्महारथैः ॥ ६-१०८-५९ (४३७९५)
अहमावारयिष्यामि वेलेव मकरालयम् ।
कुरूंश्च सहितान्सर्वान्युध्यमानान्महाबलान् ।
निवारयिष्यामि रणे साधयस्व पितामहम् ॥ ॥ ६-१०८-६० (४३७९६)

इति श्रीमन्महाभारते भीष्मपर्वणि भीष्मवधपर्वणि
दशमदिवसयुद्धे अष्टाधिकशततमोऽध्यायः ॥
Mahabharata - Bhishma Parva - Chapter Footnotes

६-१०८-४३ कामं स्वच्छन्दम् ।अभ्यस इति पाठे प्रक्षिप ॥
६-१०८-४९ सुदृष्टः क्रियतां न पुनर्द्रक्ष्यसि लोकमिममिति भावः ॥
६-१०८-५५ साधयस्वस्वीकुरु जहि वा ॥

---

भिस्मपर्व-अध्यय१०९
॥ श्रीः ॥

६.१०९. अध्यायः १०९

Mahabharata - Bhishma Parva - Chapter Topics
भीष्मदुर्योधनसंवादः ॥ १ ॥
भीष्मपराक्रमवर्णनम् ॥ २ ॥

Mahabharata - Bhishma Parva - Chapter Text

६-१०९-० (४३७९७)
धृतराष्ट्र उवाच। ६-१०९-०क्ष् (४२२०)
कथं शिखण्डी गाङ्गेयमभ्यधावत्पितामहम् ।
पाञ्चाल्यः समरे क्रुद्धो धर्मात्मानं यतव्रतम् ॥ ६-१०९-१ (४३७९८)
केऽरक्षन्पाण्डवानीके शिखण्डिनमुदायुधाः ।
त्वरमाणास्त्वराकाले जिगीषन्तो महारथाः ॥ ६-१०९-२ (४३७९९)
कथं शान्तनवो भीष्मः स तस्मिन्दशमेऽहनि ।
अयुध्यत महावीर्यः पाण्डवैः सह सृञ्जयैः ॥ ६-१०९-३ (४३८००)
न मृष्यामि रणे भीष्मं प्रत्युद्यातं शिखण्डिना ।
कच्चिन्न रथमङ्गोऽस्व धनुर्वाऽशीर्यतास्थतः ॥ ६-१०९-४ (४३८०१)
सञ्जय उवाच। ६-१०९-५क्ष् (४२२१)
नाशीर्यत धनुश्चास्य रथभङ्गो न चाप्यभूत् ।
युध्यमानस्य संग्रामे भीष्मस्य भरतर्षभ ।
निघ्नतः समरे शत्रूञ्शरैः सन्नतपर्वभिः ॥ ६-१०९-५ (४३८०२)
अनेकशतसाहस्रावकानां महारथाः ।
तथा दन्तिगणा राजन्हायश्चैव सुसञ्जिताः ॥ ६-१०९-६ (४३८०३)
अभ्यवर्तन्त युद्धाय पुरस्कृत्य पितामहम् ॥ ६-१०९-७ (४३८०४)
यथाप्रतिज्ञं कौरव्य स चापि समितिंजयः ।
पार्यानामकरोद्भीष्मः सततं समिति क्षयम् ॥ ६-१०९-८ (४३८०५)
युध्यमानं महेष्वासं विनिघ्नन्तं पराञ्शरैः ।
पाञ्चालाः पाण्डवैः सार्धं सर्वतः पर्यवारयन् ॥ ६-१०९-९ (४३८०६)
दशमेऽहनि संप्राप्ते ततस्तां रिपुवाहिनीम् ।
कीर्यमाणां शितैर्बाणैः शतशोऽथ सहस्रशः ॥ ६-१०९-१० (४३८०७)
न हि भीष्मं महेष्वासं पाण्डवाः पाण्डुपूर्वज ।
अशक्नुवन्रणे जेतुं पाशहस्तमिवानतकम् ॥ ६-१०९-११ (४३८०८)
अथोपायान्महाराज सव्यसाची धनञ्जयः ।
त्रासयन्रथिनः सर्वान्बीभत्सुरपराजितः ॥ ६-१०९-१२ (४३८०९)
सिंहवद्विनदन्नुच्चैर्धनुर्ज्यां विक्षिपन्मुहुः ।

शरौघान्विसृजन्पार्थो व्यचरत्कालवद्रणे ॥ ६-१०९-१३ (४३८१०)
तस्य शब्देन वित्रस्तास्तावका भारतर्षभ ।
सिंहस्येव मृगा राजन्व्यद्रवन्त महाभयात् ॥ ६-१०९-१४ (४३८११)
जयन्तं पाण्डवं दृष्ट्वा त्वत्सैन्यं चाभिपीडितम् ।
दुर्योधनस्ततो भीष्ममब्रवीद्भृशपीडितः ॥ ६-१०९-१५ (४३८१२)
एष पाण्डुसुतस्तात श्वेताश्वः कृष्णसारथिः ।
दहते मामकान्सर्वान्कृष्णवर्त्मेन काननम् ॥ ६-१०९-१६ (४३८१३)
पश्य सैन्यानि गाङ्गेय द्रवमाणानि सर्वशः ।
पण्डवेन युधां श्रेष्ठ काल्यमानानि संयुगे ॥ ६-१०९-१७ (४३८१४)
यथा पशुगणान्पालः संकालयति कानने ।
तथेदं मामकं सैन्यं काल्यते शत्रुतापन ॥ ६-१०९-१८ (४३८१५)
धनञ्जयशरैर्भग्नं द्रवमाणं ततस्ततः ।
भीमोऽप्येवं दुराधर्षो विद्रावयति मे बलम् ॥ ६-१०९-१९ (४३८१६)
सात्यकिश्चेकितानश्च माद्रीपुत्रौ च पाण्डवौ ।
अभिमन्युः सुविक्रान्तो वाहिनीं द्रवते मम ॥ ६-१०९-२० (४३८१७)
धृष्टद्युम्नस्तथा शूरो राक्षसश्च घटोत्कचः ।
व्यद्रावयेतां सहसा सैन्यं मम महारणे ॥ ६-१०९-२१ (४३८१८)
वध्यमानस्य सैन्यस्य सर्वैरेतैर्महारथैः ।
नान्यां गतिं प्रपश्यामि स्थाने युद्धे च भारत ॥ ६-१०९-२२ (४३८१९)
ऋते त्वां पुरुषव्याघ्र देवतुल्यपराक्रमम् ।
पर्याप्तस्तु भवाञ्शीघ्रं पीडितानां गतिर्भव ॥ ६-१०९-२३ (४३८२०)
सञ्जय उवाच। ६-१०९-२४क्ष् (४२२२)
एवमुक्तो महाराज पिता देवव्रतस्तव ।
चिन्तयित्वा मुहूर्तं तु कृत्वा निश्चयमात्मनः ॥ ६-१०९-२४ (४३८२१)
तव संधारयन्पुत्रमब्रवीच्छंतनोः सुतः ।
दुर्योधन विजानीहि स्थिरो भूत्वा विशांपते ॥ ६-१०९-२५ (४३८२२)
ग्पातयिष्ये रिपूनन्यान्पाण्डवान्प्रतिपालयन् ।
प्रतिज्ञातो जयो ह्यद्य पाण्डवानां महात्मनाम् ॥' ६-१०९-२६ (४३८२३)
पूर्वकालं तव मया प्रतिज्ञानं महाबल ।
हत्वा दशसहस्राणि क्षत्रियाणां महात्मनाम् ॥ ६-१०९-२७ (४३८२४)
संग्रामादपयास्यामि ह्येतत्कर्म समाहितम् ।
इति तत्कृतवांश्चाहं यथोक्तं भरतर्षभ ॥ ६-१०९-२८ (४३८२५)
अद्य चापि महत्कर्म प्रकरिष्ये यथाबलम् ।
अहं वाऽद्य हतः शेष्ये हनिष्ये वाऽद्य पाण्डवान् ॥ ६-१०९-२९ (४३८२६)
ग्अशक्याः पाण्डवा जेतुं देवैरपि सवासवैः।'
किं पुनर्मर्त्यधर्मेण क्षत्रियेण महाबलाः ॥ ६-१०९-३० (४३८२७)

अद्य ते पुरुषव्याघ्र प्रतरिष्ये ऋणं तव ।
भर्तृपिण्डकृतं राजन्निहताः पृतनामुखे ॥ ६-१०९-३१ (४३८२८)
सञ्जय उवाच। ६-१०९-३२क्ष् (४२२३)
इत्युक्त्वा भरतश्रेष्ठ क्षत्रियान्प्रवपञ्छरैः ।
आससाद दुराधर्षः पाण्डवानामनीकिनीम् ॥ ६-१०९-३२ (४३८२९)
अनीकमध्ये तिष्ठन्तं गाङ्गेयं भारतर्षभ ।
आशीविषमिव क्रुद्धं पाण्डवाः प्रत्यवारयन् ॥ ६-१०९-३३ (४३८३०)
दशमेऽहनि भीष्मस्तु दर्शयञ्शक्तिमात्मनः ।
राजञ्शतसहस्राणि सोऽवधीत्कुरुनन्दन ॥ ६-१०९-३४ (४३८३१)
पाञ्चालानां च ये श्रेष्ठा राजपुत्रा महारथाः ।
तेषामादत्त तेजांसि जलं सूर्य इवांशुभिः ॥ ६-१०९-३५ (४३८३२)
हत्वा दशसहस्राणि कुञ्जराणां तरस्विनाम् ।
सारोहाणां महाराज हयानां चायुतं तथा ॥ ६-१०९-३६ (४३८३३)
पूर्णे शतसहस्रे द्वे पादातानां नरोत्तमः ।
प्रजज्वाल रणे भीष्मो विधूम इव पावकः ॥ ६-१०९-३७ (४३८३४)
न चैवं पाण्डवेयानां केचिच्छेकुर्निरीक्षितुम् ।
उत्तरं मार्गमास्थाय तपन्तमिव भास्करम् ॥ ६-१०९-३८ (४३८३५)
ते पाण्डवेवाः संरब्धा महेष्वासेन पीडिताः ।
वधायाभ्यद्रवन्भीष्मं सृञ्जयाश्च महारथाः ॥ ६-१०९-३९ (४३८३६)
स वध्यमानो बहुभिर्भीष्मः शान्तनवस्तथा ।
अवकीर्णो महेष्वासैः शैलो मेघैरिवावृतः ॥ ६-१०९-४० (४३८३७)
पुत्रास्तु तव गाङ्गेयं समन्तात्पर्यवारयन् ।
महत्या सेनया सार्धं ततो युद्धमवर्तत ॥ ॥ ६-१०९-४१ (४३८३८)

इति श्रीमन्महाभारते भीष्मपर्वणि भीष्मवधपर्वणि
दशमदिवसयुद्धे नवाधिकशततमोऽध्यायः ॥
Mahabharata - Bhishma Parva - Chapter Footnotes

६-१०९-८ समितिंजयः संग्रामजित् । समिति युद्धे ॥
६-१०९-२० द्रवते द्रावयति ॥
६-१०९-२२ गतिं धाम । आश्रयमिति यावत्। स्थाने अवस्थाने ॥
६-१०९-२९ शेष्ये स्वप्स्यामि ॥

---

भिस्मपर्व-अध्यय११०
॥ श्रीः ॥
६.११०. अध्यायः ११०

Mahabharata - Bhishma Parva - Chapter Topics

अर्जुनदुःशासनयुद्धम् ॥ १ ॥

Mahabharata - Bhishma Parva - Chapter Text

६-११०-० (४३८३९)
सञ्जय उवाच। ६-११०-०क्ष् (४२२४)
अर्जुनस्तु रणे राजन्दृष्ट्वा भीष्मस्य विक्रमम् ।
शिखण्डिनमथोवाच समभ्योहि पितामहम् ॥ ६-११०-१ (४३८४०)
न चापि भीस्त्वया कार्या भीष्मादद्य कथंचन ।
अहमेनं शरैस्तीक्ष्णैः पातयिष्ये रथोत्तमात् ॥ ६-११०-२ (४३८४१)
सञ्जय उवच। ६-११०-३क्ष् (४२२५)
एवमुक्तस्तु पार्थेन शिखण्डी भरतर्षभ ।
अभ्यद्रवत गाङ्गेयं श्रुत्वा पार्थस्य भाषितम् ॥ ६-११०-३ (४३८४२)
धृष्टद्युम्नस्तथा राजन्सौभद्रश्च महारथः ।
हृष्टावाद्रवतां भीष्मं श्रुत्वा पार्थस्य भाषितम् ॥ ६-११०-४ (४३८४३)
विराटद्रुपदौ वृद्धौ कुन्तिभोजस्य दंशितः ।
अभ्यद्रवत गाङ्गेयं पुत्रस्य तव पश्यतः ।
नकुलः सहदेवश्च धर्मराजश्च वीर्यवान् ॥ ६-११०-५ (४३८४४)
तथेतराणि सैन्यानि सर्वाण्येव विशांपते ।
समाद्रवन्त गाङ्गेयं श्रुत्वा पार्थस्य भाषितम् ॥ ६-११०-६ (४३८४५)
प्रत्युद्ययुस्तावकाश्च समेतांस्तान्महारथान् ।
यथाशक्ति यथोत्साहं तन्मे निगदतः शृणु ॥ ६-११०-७ (४३८४६)
चित्रसेनो महाराज चेकितानं समभ्यायात् ।
भीष्मप्रेप्सुं रणे यान्तं वृषं व्याघ्रशिशुर्यथा ॥ ६-११०-८ (४३८४७)
धृष्टद्युम्नं महाराज भीष्मान्तिकमुपागतम् ।
त्वरमाणं रणे यत्तं कृतवर्मा न्यवरायत् ॥ ६-११०-९ (४३८४८)
भीमसेनं सुसंक्रुद्धं गाङ्गेयस्य वधैषिणम् ।
त्वरमाणो महाराज सौमदत्तिर्न्यवारयत् ॥ ६-११०-१० (४३८४९)
तथैव नकुलं शूरं किरन्तं सायकान्बहून् ।
विकर्णो वारयामास इच्छन्भीष्मस्य जीवितम् ॥ ६-११०-११ (४३८५०)
सहदेवं तथा राजन्यान्तं भीष्मरथं प्रति ।
वारयामास संक्रुद्धः कृपः शारद्वतो युधि ॥ ६-११०-१२ (४३८५१)
राक्षसं क्रूरकर्माणं भैमसेनिं महाबलम् ।
भीष्मस्य निधनप्रेप्सुं दुर्मुखोऽभ्यज्ञवद्बली ॥ ६-११०-१३ (४३८५२)
सात्यकिं समरे क्रुद्धमार्श्यशृङ्गिवारयत् ।

ग्भीष्मस्य वधमिच्छन्तं पाण्डवप्रीतिकाम्यया' ६-११०-१४ (४३८५३)
अभिमन्युं महाराज यान्तं भीष्मरथं प्रति ।
सुदक्षिणो महाराज काम्भोज प्रत्यवारयत् ॥ ६-११०-१५ (४३८५४)
विराटद्रुपदौ वृद्धौ समेतावरिमर्दनौ ।
अश्वत्थामा ततः क्रुद्धो वारयामास भारत ॥ ६-११०-१६ (४३८५५)
तथा पाण्डुसुतं ज्येष्ठं भीष्मस्य वधकाङ्क्षिणम् ।
भारद्वाजो रणे यत्तो धर्मपुत्रमवारयत् ॥ ६-११०-१७ (४३८५६)
अर्जुनं रभसं युद्धे पुरस्कृत्य शिखण्डिनम् ।
भीष्मप्रेप्सुं महाराज भासयन्तं दिशो दश ॥ ६-११०-१८ (४३८५७)
दुःशासनो महेष्वासो वारयामास संयुगे ।
अन्ये च तावका योधाः पाण्डवानां महारथान् ॥ ६-११०-१९ (४३८५८)
भीष्मस्याभिमुखान्यातान्वारयामासुराहवे ।
धृष्टद्युम्नस्तु सैन्यानि प्राक्रोशंस्तु पुनः पुनः ॥ ६-११०-२० (४३८५९)
अभ्यद्रवत संरब्धो भीष्ममेकं महारथः ।
एषोऽर्जुनो रणे भीष्मं प्रयाति कुरुनन्दनः ॥ ६-११०-२१ (४३८६०)
अभ्यद्रवत माभैष्ट भीष्मो हि प्राप्स्यते न वः ।
अर्जुनं समरे योद्धुं नोत्सहेतापि वासवः ॥ ६-११०-२२ (४३८६१)
किमु भीष्मो रणे वीरा गतसत्वोऽल्पजीवितः ।
इति सेनापतेः श्रुत्वा पाण्डवानां महारथाः ॥ ६-११०-२३ (४३८६२)
अभ्यद्रवन्त संहृष्टा गाङ्गेयस्य रथं प्रति ।
आगच्छतस्तान्समरे वार्योघानचला इव ॥ ६-११०-२४ (४३८६३)
अवारयन्त संहृष्टास्तावकाः पुरुषर्षभाः ।
दुःशासनो महाराज भयं त्यक्त्वा महारथः ॥ ६-११०-२५ (४३८६४)
भीष्मस्य जीविताकाङ्क्षी धनञ्जयमुपाद्रवत् । ६-११०-२६ब्तथैव
पाण्डवाः शूरा गाङ्गेयस्य रथं प्रति ॥ ६-११०-२६ (४३८६५)
अभ्यद्रवन्त संग्रामे तव पुत्रान्महारथाः ।
तत्राद्भुतमपश्याम चित्ररूपं विशांपते ॥ ६-११०-२७ (४३८६६)
दुःशासनरथं प्राप्य यत्पार्थो नात्यवर्तत ।
यथा वारयते वेला क्षुब्धतोयं महार्णवम् ॥ ६-११०-२८ (४३८६७)
तथैव पाण्डवं क्रुद्धं तव पुत्रो न्यवारयत् ।
उभौ तौ रथिनां श्रेष्ठावुभौ भारतदुर्जयौ ॥ ६-११०-२९ (४३८६८)
उभौ चन्द्रार्कसदृशौ कान्त्या दीप्त्या च भारत ।
तथा तौ जातसंरम्भावन्योन्यवधकाङ्क्षिणौ ॥ ६-११०-३० (४३८६९)
समीयतुर्महासङ्ख्ये मयशक्रौ यथा पुरा ।
दुःशासनो महाराज पाण्डवं विशिखैस्त्रिभिः ॥ ६-११०-३१ (४३८७०)
वासुदेवं च विंशत्या ताडयामास संयुगे ।

ततोऽर्जुनो जातमन्युर्वार्ष्णेयं वीक्ष्य पीडितम् ॥ ६-११०-३२ (४३८७१)
दुःशासनं शतेनाजौ नाराचानां समार्पयत् ।
ते तस्य कवचं भित्त्वा पपुः शोणितमाहवे ॥ ६-११०-३३ (४३८७२)
ग यथैव पन्नगा राजंस्तटाकं तृषितास्तथा।'
दुःशासनस्त्रिभिः क्रुद्धः पार्थं विव्याध पत्रिभिः ।
ललाटे भरतश्रेष्ठ शरैः सन्नतपर्वभिः ॥ ६-११०-३४ (४३८७३)
ललाटस्थैस्तु तैर्बाणैः शुशुभे पाण्डवो रणे ।
यथा मेरुर्महाराज शृङ्गैरत्यर्थमुच्छ्रितैः ॥ ६-११०-३५ (४३८७४)
सोऽतिविद्धो महेष्वासः पुत्रेण तव धन्विना ।
व्यराजत रणे पार्थः किंशुकः पुष्पवानिव ॥ ६-११०-३६ (४३८७५)
दुःशासनं ततः क्रुद्धः पीडयामास पाण्डवः ।
पर्वणीव सुसंक्रुद्धो राहुः पूर्णं निशाकरम् ॥ ६-११०-३७ (४३८७६)
पीड्यमानो बलवता पुत्रस्तव विशांपते ।
विव्याध समरे पार्थं कङ्कपत्रैः शिलाशितैः ॥ ६-११०-३८ (४३८७७)
तस्य पार्थो धनुश्छित्वा रथं चास्य त्रिभिः शरैः ।
आजघान ततः पश्चात्पुत्रं ते निशितैः शरैः ॥ ६-११०-३९ (४३८७८)
सोऽन्यत्कार्मुकमादाय भीमस्य प्रमुखे स्थितः ।
अर्जुनं पञ्चाविंशत्या बाह्वोरुरसि चार्पयत् ॥ ६-११०-४० (४३८७९)
तस्य क्रुद्धो महाराज पाण्डवः शत्रुतापनः ।
अप्रैषीद्विशिखान्घोरान्यमदण्डोपमान्बहून् ॥ ६-११०-४१ (४३८८०)
अप्राप्तानेव तान्बाणांश्चिच्छेद तनयस्तव ।
यतमानस्य पार्थस्य तदद्भुतमिवाभवत् ॥ ६-११०-४२ (४३८८१)
पार्थं च निशितैर्बाणैरविध्यत्तनयस्तव ।
ततः क्रुद्धो रणे पार्थः शरान्संधाय कार्मुके ॥ ६-११०-४३ (४३८८२)
प्रेषयामास समरे स्वर्णपुङ्खाञ्छिलाशितान् ।
न्यमज्जंस्ते महाराज तस्य काये महात्मनः ॥ ६-११०-४४ (४३८८३)
यथा हंसा महाराज तटाकं प्राप्य भारत ।
पीडितश्चैव पुत्रस्ते पाण्डवेन महात्मना ॥ ६-११०-४५ (४३८८४)
हित्वा पार्थं रणे तूर्णं भीष्मस्य रथमाव्रजत् ।
अगाधे मज्जतस्तस्य द्वीपो भीष्मोऽभवत्तदा ॥ ६-११०-४६ (४३८८५)
प्रतिलभ्य ततः संज्ञां पुत्रस्तव विशांपते ।
अवारयत्ततः शूरो भूय एव पराक्रमी ॥ ६-११०-४७ (४३८८६)
शरैः सुनिशितैः पार्थं यथा वृत्रं पुरन्दरः ।
निर्बिभेद महाकायो विव्यथे नैव चार्जुनः ॥ ॥ ६-११०-४८ (४३८८७)

इति श्रीमन्महाभारते भीष्मपर्वणि भीष्मवधपर्वणि

दशमदिवसयुद्धे दशाधिकशततमोऽध्यायः ॥
Mahabharata - Bhishma Parva - Chapter Footnotes

६-११०-१८ रभसं कृतोत्साहम् ॥
६-११०-२४ प्रलयानिव इति पाठे प्रलयाकालीनानिव ॥
६-११०-२७ अद्भुतं अभूतपूर्वम् ॥
६-११०-३१ यमशक्रौ इति पाठान्तरम् ॥
६-११०-४१ अप्रैषीत् । उपसर्गात्पूर्वोऽडगामस्तु छान्दसः। एवमन्यत्रापि ॥
६-११०-४६ द्वीप आश्रयः ॥

---

भिस्मपर्व-अध्यय१११
॥ श्रीः ॥
६.१११. अध्यायः १११

Mahabharata - Bhishma Parva - Chapter Topics
द्वन्द्वयुद्धम् ॥ १ ॥

Mahabharata - Bhishma Parva - Chapter Text

६-१११-० (४३८८८)
सञ्जय उवाच। ६-१११-०क्ष् (४२२६)
सात्यकिं दंशितं युद्धे भीष्मायाभ्युद्यतं रणे ।
आर्श्यशृङ्गिर्महेष्वासो वारयामास संयुगे ॥ ६-१११-१ (४३८८९)
माधवस्तु सुसंक्रुद्धो राक्षसं नवभिः शरैः ।
आजघान रणे राजन्प्रहसन्निव भारत ॥ ६-१११-२ (४३८९०)
तथैव राक्षसो राजन्माधवं नवभिः शरैः ।
अर्दयामास राजेन्द्र संक्रुद्धः शिनिपुङ्गवम् ॥ ६-१११-३ (४३८९१)
शैनेयः शरसङ्घं तु प्रेषयामास संयुगे ।
राक्षसाय सुसंक्रुद्धो माधवः परवीरहा ॥ ६-१११-४ (४३८९२)
ततो रक्षो महाबाहुं सात्यकिं सत्यविक्रमम् ।
विव्याध विशिखैस्तीक्ष्णैः सिंहनाद ननाद च ॥ ६-१११-५ (४३८९३)
माधवस्तु भृशं विद्धो राक्षसेन रणे तदा ।
धैर्यमालम्ब्य तेजस्वी जहास च ननाद च ॥ ६-१११-६ (४३८९४)
भगदत्तस्ततः क्रुद्धो माधवं निशितैः शरैः ।
ताडयामास समरे तोत्त्रैरिव महागजम् ॥ ६-१११-७ (४३८९५)
विहाय राक्षसं युद्धे शैनेयो रथिनां वरः ।
प्राग्ज्योतिषाय चिक्षेप शरान्संनतपर्वणः ॥ ६-१११-८ (४३८९६)

तस्य प्राग्ज्योतिषो राजा माधवस्य महद्धनुः ।
चिच्छेद शतधारेण भल्लेन कृतहस्तवत् ॥ ६-१११-९ (४३८९७)
अथान्यद्धनुरादाय वेगवत्परवीरहा ।
भगदत्तं रणे क्रुद्धं विव्याध निशितैः शरैः ॥ ६-१११-१० (४३८९८)
सोऽतिविद्धो महेष्वासः सृक्किणी परिसंलिहन् ।
शक्तिं कनकवैडूर्यभूषितामायसीं दृढाम् ॥ ६-१११-११ (४३८९९)
यमदण्डोपमां घोरां चिक्षेप परमाहवे ।
तामापतन्तीं सहसा तस्य बाहुबलेरिताम् ॥ ६-१११-१२ (४३९००)
सात्यकिः समरे राजन्द्विधा चिच्छेद सायकैः ।
ततः पपात सहसा सहोल्केव हतप्रभा ॥ ६-१११-१३ (४३९०१)
शक्तिं विनिहतां दृष्ट्वा पुत्रस्तव विशांपते ।
महता रथवंशेन वारयामास माधवम् ॥ ६-१११-१४ (४३९०२)
तथा परिवृतं दृष्ट्वा वार्ष्णेयानां महारथम् ।
दुर्योधनो भृशं क्रुद्धो भ्रातॄन्सर्वानुवाच ह ॥ ६-१११-१५ (४३९०३)
तथा कुरुत कौरव्या यथाः वः सात्यको युधि ।
न जीवन्प्रतिनिर्याति महतोऽस्माद्रथव्रजात् ॥ ६-१११-१६ (४३९०४)
तस्मिन्हते हतं मन्ये पाण्डवानां महद्बलम् ।
तथेति च वचस्तस्य परिगृह्य महारथाः ॥ ६-१११-१७ (४३९०५)
शैनेयं योधयामासर्भीष्मायाभ्युद्यतं रणे ।
ग्अभिमन्युं तदाऽऽयान्तं भीष्मस्याभ्युद्यतं वधे ।'
काम्भोजराजो बलवान्वारयामास संयुगे ॥ ६-१११-१८ (४३९०६)
आर्जुनिं नृपतिर्विद्ध्वा शरैः सन्नतपर्वभिः ।
पुनरेव चतुःषष्ट्या राजन्विव्याध तं नृप ॥ ६-१११-१९ (४३९०७)
सुदक्षिणस्तु समरे पुनर्विव्याध तं पञ्चभिः ।
सारथिं चास्य नवभिरिच्छन्भीष्मस्य जीवितम् ॥ ६-१११-२० (४३९०८)
तद्युद्धमासीत्सुमहत्तयोस्तत्र समागमे ।
यदाभ्यधावद्गाङ्गेयं शिखण्डी शत्रुकर्शनः ॥ ६-१११-२१ (४३९०९)
विराटद्रुपदौ वृद्धौ वारयनतौ महाचमूम् ।
भीष्मं च युधि संरब्धावाद्रवन्तौ महारथौ ॥ ६-१११-२२ (४३९१०)
अश्वत्थामा रणे क्रुद्धः समियाद्रथसत्तमः ।
ततः प्रववृते युद्धं तयोस्तस्य च भारत ॥ ६-१११-२३ (४३९११)
विराटो दशभिर्भल्लैराजघान परंतप ।
यतमानं महेष्वासं द्रौणिमाहवशोभिनम् ॥ ६-१११-२४ (४३९१२)
द्रुपदश्च त्रिभिर्बाणैर्विव्याध निशितैस्तदा ।
गुरुपुत्रं समासाद्य प्रहरन्तौ महाबलौ ॥ ६-१११-२५ (४३९१३)
अश्वत्थामा ततस्तौ तु विव्याध बहुभिः शरैः ।

विराटद्रुपदौ वीरौ भीष्मं प्रति समुद्यतौ ॥ ६-१११-२६ (४३९१४)
तत्राद्भुतमपश्याम वृद्धयोश्चरितं महत् ।
यद्द्रौणिसायकान्घोरान्प्रत्यवारयतां युधि ॥ ६-१११-२७ (४३९१५)
सहदेवं तथाऽऽयान्तं कृपः शारद्वतोऽभ्ययात् ।
यथा नागो वने नागं मत्तो मत्तमुपाद्रवत् ॥ ६-१११-२८ (४३९१६)
कृपश्च समरे शूरो माद्रीपुत्रं महारथम् ।
आजघान शरैस्तूर्णं सप्तत्या रुक्मभूषणैः ॥ ६-१११-२९ (४३९१७)
तस्य माद्रीसुतश्चापं द्विधा चिच्छेद सायकैः ।
अथैनं छिन्नधन्वानं विव्याध नवभिः शरैः ॥ ६-१११-३० (४३९१८)
सोऽन्यत्कार्मुकमादाय समरे भारसाधनम् ।
माद्रीपुत्रं सुसंहृष्टो दशभिर्निशितैः शरैः ॥ ६-१११-३१ (४३९१९)
आजघानोरसि क्रुद्ध इच्छन्भीष्मस्य जीवितम् ।
तथैव पाण्डवो राजञ्छारद्वतममर्षणम् ॥ ६-१११-३२ (४३९२०)
आजघानोरसि क्रुद्धो भीष्मस्य वधकाङ्क्षया ।
तयोर्युद्धं समभवद्धोररूपं भयावहम् ॥ ६-१११-३३ (४३९२१)
नकुलं तु रणे क्रुद्धो विकर्णः शत्रुतापनः ।
विव्याध सायकैः षष्ट्या रक्षन्भीष्मं महाबलम् ॥ ६-१११-३४ (४३९२२)
नकुलोऽपि भृशं विद्धस्तव पुत्रेण धीमता ।
विकर्णं सप्तसप्तत्या निर्बिभेद शिलीमुखैः ॥ ६-१११-३५ (४३९२३)
तत्र तौ नरशार्दूलौ भीष्महेतोः परंतपौ ।
अन्योन्यं जघ्नतुर्वीरौ गोष्ठे गोवृषभाविव ॥ ६-१११-३६ (४३९२४)
घटोत्कचं रणे यान्तं निघ्नन्तं तव वाहिनीम् ।
दुर्मुखः समरे प्रायाद्भीष्महेतोः पराक्रमी ॥ ६-१११-३७ (४३९२५)
हैडिम्बस्तु रणे राजन्दुर्मुखं शत्रुतापनम् ।
आजघानोरसि क्रुद्धः शरेणानतपर्वणा ॥ ६-१११-३८ (४३९२६)
भीमसेनसुतं चापि दुर्मुखः सुमुखैः शरैः ।
षष्ट्या वीरो नदन्हृष्टो विव्याध रणमूर्धनि ॥ ६-१११-३९ (४३९२७)
धृष्टद्युम्नं तथाऽऽयान्तं भीष्मस्य वधकाङ्क्षिणम् ।
हार्दिक्यो वारयामास रथश्रेष्ठं महारथः ॥ ६-१११-४० (४३९२८)
हार्दिक्यः पार्षतं चापि विद्ध्वा पञ्चभिरायसैः ।
पुनः पञ्चाशता तूर्णं तिष्ठतिष्ठेति चाब्रवीत् ॥ ६-१११-४१ (४३९२९)
आजघान महाबाहुः पार्षतं तं महारथम् ।
तं चैव पार्षतो राजन्हार्दिक्यं नवभिः शरैः ॥ ६-१११-४२ (४३९३०)
विव्याध निशितैस्तीक्ष्णैः कङ्कपत्रैरजिह्मगैः ।
तयोः समभवद्युद्धं भीष्महेतोर्महाहवे ॥ ६-१११-४३ (४३९३१)
अन्योन्यातिशये युक्तं यथा वृत्रमहेन्द्रयोः ।

भीमसेनं तथाऽऽयान्तं भीष्मं प्रति महारथम् ॥ ६-१११-४४ (४३९३२)
भूरिश्रवाभ्ययात्तूर्णं तिष्ठतिष्ठेति चाब्रवीत् ।
सौमदत्तिरथो भीममाजघान स्तनान्तरे ॥ ६-१११-४५ (४३९३३)
नाराचेन सुतीक्ष्णेन रुक्मपुङ्खेन संयुगे ।
उरःस्थेन बभौ तेन भीमसेनः प्रतापवान् ॥ ६-१११-४६ (४३९३४)
स्कन्दशक्त्या यथा क्रौञ्चः पुरा नृपतिसत्तम ।
तौ शरान्सूर्यसंकाशान्कर्मारपरिमार्जितान् ॥ ६-१११-४७ (४३९३५)
अन्योन्यस्य रणे क्रुद्धौ चिक्षिपते नरर्षभौ ।
भीमो भीष्मवधाकाङ्क्षी सौमदत्तिं महारथम् ॥ ६-१११-४८ (४३९३६)
तथा भीष्मजये गृध्नुः सौमदत्तिस्तु पाण्डवम् ।
कृतप्रतिकृते यत्तौ योधयामासतू रणे ॥ ६-१११-४९ (४३९३७)
युधिष्ठिरं तु कौन्तेयं महत्या सेनया वृत्तम् ।
भीष्माभिमुखमायान्तं भारद्वाजो न्यवारयत् ॥ ६-१११-५० (४३९३८)
द्रोणस्य रथनिर्घोषं पर्जन्यनिनदोपमम् ।
श्रुत्वा प्रभद्रका राजन्समकम्पन्त मारिष ॥ ६-१११-५१ (४३९३९)
सा सेना महती राजन्पाण्डुपुत्रस्य संयुगे ।
द्रोणेन वारिता यत्ता न चचाल पदात्पदम् ॥ ६-१११-५२ (४३९४०)
चेकितान रणे यत्तं भीष्मं प्रति जनेश्वर ।
चित्रसेनस्तव सुतः क्रुद्धरूपमवारयत् ॥ ६-१११-५३ (४३९४१)
भीष्महेतोः पराक्रान्तश्चित्रसेनः पराक्रमी ।
चेकितानं परं शक्त्या योधयामास भारत ॥ ६-१११-५४ (४३९४२)
तथैव चेकितानोऽपि चित्रसेनमवारयत् ।
तद्युद्धमासीत्सुमहत्तयोस्तत्र समागमे ॥ ६-१११-५५ (४३९४३)
अर्जुनो वार्यमाणस्तु बहुशस्तत्र भारत ।
विमुखीकृत्य पुत्रं ते सेनां तव ममर्द ह ॥ ६-१११-५६ (४३९४४)
दुःशासनोऽपि परया शक्त्या पार्थमवारयत् ।
कथं भीष्मं न नो हन्यादिति निश्चित्य भारत ॥ ६-१११-५७ (४३९४५)
सा वध्यमाना समरे पुत्रस्य तव वाहिनी ।
लोड्यते रथिभिः श्रेष्ठैस्तत्रतत्रैव भारत ॥ ॥ ६-१११-५८ (४३९४६)

इति श्रीमन्महाभारते भीष्मपर्वणि भीष्मवधपर्वणि
दशदिवसयुद्धे एकादशाधिकशततमोऽध्यायः ॥

Mahabharata - Bhishma Parva - Chapter Footnotes

६-१११-५८ लोड्यते आकुलीक्रियते ॥

---

भिस्मपर्व-अध्यय११२

॥ श्रीः ॥

६.११२. अध्यायः ११२

Mahabharata - Bhishma Parva - Chapter Topics

द्रोणेनाश्वत्थामानंप्रति दुर्निमित्तप्रदर्शपूर्वकं युद्धानुशासनम् ॥ १ ॥

Mahabharata - Bhishma Parva - Chapter Text

६-११२-० (४३९४७)
सञ्जय उवाच। ६-११२-०क्ष् (४२२७)
अथ वीरो महेष्वासो मत्तवारणविक्रमः ।
समादाय महच्चापं मत्तवारणवारणम् ॥ ६-११२-१ (४३९४८)
विधुन्वानो नरश्रेष्ठो द्रावयाणो वरूथिनीम् ।
पृतनां पाण्डवेयानां गाहमानो महाबलः ॥ ६-११२-२ (४३९४९)
निमित्तानि निमित्तज्ञः सर्वतो वीक्ष्य वीर्यवान् ।
प्रतपन्तमनीकानि द्रोणः पुत्रमभाषत ॥ ६-११२-३ (४३९५०)
द्रोण उवाच। ६-११२-४क्ष् (४२२८)
अयं हि दिवसस्तात यत्र पार्थो महाबलः ।
जिघांसुः समरे भीष्मं परं यत्नं करिष्यति ॥ ६-११२-४ (४३९५१)
उत्पतन्ति हि मे बाणा धनुः प्रस्फुरतीव च ।
योगमस्त्राणि नेच्छन्ति क्रूरं मे वर्तते मनः ॥ ६-११२-५ (४३९५२)
दिक्ष्वशान्तानि घोराणि व्याहरन्ति मृगद्विजाः ।
नीचैर्गृध्रा निलीयन्ते भारतानां चमूं प्रति ॥ ६-११२-६ (४३९५३)
नष्टप्रभ इवादित्यः सर्वतो लोहिता दिशः ।
रसते व्यथते भूमिः कम्पतीव च सर्वशः ॥ ६-११२-७ (४३९५४)
कङ्कगृध्रा बलाकाश्च व्याहरन्ति मुहुर्मुहुः ।
शिवाश्चैवाशिवा घोरा वेदयन्त्यो महद्भयम् ॥ ६-११२-८ (४३९५५)
पपात महती चोल्का मध्येनादित्यमण्डलात् ।
सकबन्धश्च परिघो भानुमावृत्य तिष्ठति ॥ ६-११२-९ (४३९५६)
परिवेषस्तथा घोरश्चन्द्रभास्करयोरभूत् ।
वेदयानो भयं घोरं राज्ञां देहावकर्तनम् ॥ ६-११२-१० (४३९५७)
देवतायतनस्थाश्च कौरवेन्द्रस्य देवताः ।
कम्पन्ते च हसन्ते च नृत्यन्ति च रुदन्ति च ॥ ६-११२-११ (४३९५८)
अपसव्यं ग्रहाश्चक्रुरलक्ष्माणं दिवाकरम् ।
अवाक्शिराश्च भगवानुपातिष्ठत चन्द्रकमाः ॥ ६-११२-१२ (४३९५९)
वपूंषि च नरेन्द्राणां विगताभानि लक्षये ।

धार्तराष्ट्रस्य सैन्येषु न च भ्राजन्ति दंशिताःक ॥ ६-११२-१३ (४३९६०)
सेनयोरुभयोश्चापि समन्ताच्छ्रूयते महान् ।
पाञ्चजन्यस्य निर्घोषो गाण्डीवस्य च निःस्वनः ॥ ६-११२-१४ (४३९६१)
ध्रुवमास्थाय बीभत्सुरुत्तमास्त्राणि संयुगे ।
अपास्यान्यान्रणे योधानभ्येष्यति पितामहम् ॥ ६-११२-१५ (४३९६२)
हृष्यन्ति रोमकूपाणि सीदतीव च मे मनः ।
चिन्तयित्वा महाबाहो भीष्मार्जुनसमागमम् ॥ ६-११२-१६ (४३९६३)
तं चेह निकृतिप्रज्ञं पाञ्चाल्यं पापचेतसम् ।
पुरस्कृत्य रणे पार्थो भीष्मस्यायोधनं गतः ॥ ६-११२-१७ (४३९६४)
अब्रवीच्च पुरा भीष्मो नाहं हन्यां शिखण्डिनम् ।
स्त्री ह्येषा विहिता धात्रा दैवाच्च स पुनः पुमान् ॥ ६-११२-१८ (४३९६५)
असंकल्पध्वजश्चैव याज्ञसेनिर्महाबलः ।
न चामङ्गलिके तस्मिन्प्रहरेदापगासुतः ॥ ६-११२-१९ (४३९६६)
एतद्विचिन्तयानस्य प्रज्ञा सीदति मे भृशम् ।
अभ्युद्यतो रणे पार्थः कुरुवृद्धमुपाद्रवत् ॥ ६-११२-२० (४३९६७)
युधिष्ठिरस्य च क्रोधो भीष्मश्चार्जुनसंगतः ।
मम चास्त्रसमारम्भः प्रजानामशिवं ध्रुवम् ॥ ६-११२-२१ (४३९६८)
मनस्वी बलवाञ्शूरः कृतास्त्रोऽलघुविक्रमः ।
दूरपाती दृढेषुश्च निमित्तज्ञश्च पाण्डवः ॥ ६-११२-२२ (४३९६९)
अजेयः समरे चापि देवैरपि सवासवैः ।
बलवान्बुद्धिमांश्चैव जितक्लेशो युधां वरः ॥ ६-११२-२३ (४३९७०)
विजयी च रणे नित्यं भैरवास्त्रश्च पाण्डवः
। ६-११२-२४ब्ग्अभ्युद्यतं रणे दृष्ट्वा भैरवास्त्रं च पाण्डवम् ।'
तस्य मार्गं परिहरन्द्रुतं गच्छ यतव्रत ॥ ६-११२-२४ (४३९७१)
पश्याद्यैतन्महाघोरे संयुगे वैशसं महत् ।
हेमचित्राणि शूरणां महान्ति च शुभानि च ॥ ६-११२-२५ (४३९७२)
कवचान्यवदीर्यन्ते शरैः सन्नतपर्वभिः ।
छिद्यन्ते च ध्वजाग्राणि तोमराश्च धनूंषि च ॥ ६-११२-२६ (४३९७३)
प्रासाश्च विमलास्तीक्ष्णाः शक्त्यश्च कनकोज्ज्वलाः ।
वैजयन्त्यश्च नागानां संक्रुद्धेन किरीटिना ॥ ६-११२-२७ (४३९७४)
नायं संरक्षितुं कालः प्राणान्पुत्रोपजीविभिः ।
याहि स्वर्गं पुरस्कृत्य यशसे विजयाय च ॥ ६-११२-२८ (४३९७५)
रथनागहयावर्तां महाघोरां सुदुर्गमाम् ।
रथेन संग्रामनदीं तरत्येष कपिध्वजः ॥ ६-११२-२९ (४३९७६)
ब्रह्मण्यता दमो दानं तपश्च चरितं महत् ।
इहैव दृश्यते पार्थे भ्राता यस्य धनञ्जयः ॥ ६-११२-३० (४३९७७)

भीमसेनश्च बलवान्माद्रीपुत्रौ च पाण्डवौ ।
वासुदेवश्च वार्ष्णेयो यस्य नाथो व्यवस्थितः ॥ ६-११२-३१ (४३९७८)
तस्यैष मन्युप्रभवो धार्तराष्ट्रस्य दुर्मतेः ।
तपोभावितदेहस्य कोपो दहति वाहिनीम् ॥ ६-११२-३२ (४३९७९)
एष संदृश्यते पार्थो वासुदेवव्यपाश्रयः ।
दारयन्सर्वसैन्यानि धार्तराष्ट्राणि सर्वशः ॥ ६-११२-३३ (४३९८०)
एतदालोक्यते सैन्यं क्षोभ्यमाणं किरीटिना ।
महोर्मिनद्धं सुमहत्तिमिनेव महाजलम् ॥ ६-११२-३४ (४३९८१)
हाहाकिलकिलाशब्दाः श्रूयन्ते च चमूमुखे ।
याहि पाञ्चालदायादमहं यास्ये युधिष्ठिरम् ॥ ६-११२-३५ (४३९८२)
दुर्गमं ह्यन्तरं राज्ञो व्यूहस्यामिततेजसः ।
समुद्रकुक्षिप्रतिमं सर्वतोऽतिरथैः स्थितैः ॥ ६-११२-३६ (४३९८३)
सात्यकिश्चाभिमन्युश्च धृष्टद्युम्नवृकोदरौ ।
पर्यरक्षन्त राजानं यमौ च मनुजेश्वरम् ॥ ६-११२-३७ (४३९८४)
उपेन्द्रसदृशश्यामो महाशाल इवोद्गतः ।
एष गच्छत्यनीकाग्रे द्वितीय इव फल्गुनः ॥ ६-११२-३८ (४३९८५)
उत्तमास्त्राणि चाधत्स्व गृहीत्वा च महद्धनुः ।
पार्षतं याहि राजानं युध्यस्व च वृकोदरम् ॥ ६-११२-३९ (४३९८६)
को हि नेच्छेत्प्रियं पुत्रं जीवन्तं शाश्वतीः समाः ।
क्षत्रधर्मं तु संप्रेक्ष्य ततस्त्वां नियुनज्म्यहम् ॥ ६-११२-४० (४३९८७)
एष चातिरणे भीष्मो दहते वै महाचमूम् ।
युद्धेषु सदृशस्तात यमस्य वरुणस्य च ॥ ६-११२-४१ (४३९८८)
सञ्जय उवाच। ६-११२-४२क्ष् (४२२९)
पुत्रं समनुशास्यैवं भारद्वाजः प्रतापवान् ।
महारणे महाराज धर्मराजमयोधयत् ॥ ॥ ६-११२-४२ (४३९८९)

इति श्रीमन्महाभारते भीष्मपर्वणि भीष्मवधपर्वणि
दशमदिवसयुद्धे द्वादशाधिकशततमोऽध्यायः ॥
Mahabharata - Bhishma Parva - Chapter Footnotes

६-११२-६ घोराणि भयंकराणि ।अशान्तानि अनुपरतानि ॥
६-११२-७ रसते शब्दायते ।व्यथते बिभेतीव कम्पत इव च ॥
६-११२-१२ अलक्ष्माणं प्रचण्डलक्षणलक्षितम् ।अवाक्शिरा
अधोमुखकोटिद्वयः ॥
६-११२-१५ आस्थाय आलम्ब्य ॥
६-११२-२१ अस्त्रसमारम्भः उद्यममात्रं नतु पूर्ववदस्त्राणामुपस्थितिः ॥

६-११२-२८ हे पुत्र उपजीविभिरनुगतैः ॥
६-११२-३० पार्थए युधिष्ठिरे ॥
६-११२-३२ तस्य धर्मस्य ।मन्युर्दैन्यम्।भारतीमिति पाठे सेनामिति शेषः ॥

---

भिस्मपर्व-अध्यय११३
॥ श्रीः ॥
६.११३. अध्यायः ११३

Mahabharata - Bhishma Parva - Chapter Topics
भीमसेनपराक्रमवर्णनम् ॥ १ ॥

Mahabharata - Bhishma Parva - Chapter Text

६-११३-० (४३९९०)
सञ्जय उवाच। ६-११३-०क्ष् (४२३०)
भगदत्तः कृपः शल्यः कृतवर्ता तथैव च ।
विन्दानुविन्दावावन्त्यौ सैन्धवश्च जयद्रथः ॥ ६-११३-१ (४३९९१)
चित्रसेनो विकर्णश्च तथा दुर्मर्षणो युवा ।
दशैते तावका योधा भीमसेनमयोधयन् ॥ ६-११३-२ (४३९९२)
महत्या सेनया युक्ता नानादेशसमुत्थया ।
भीष्मस्य समरे राजन्प्रार्थयाना महद्यशः ॥ ६-११३-३ (४३९९३)
शल्यस्तु नवभिर्बाणैर्भीमसेनमताडयत् ।
कृतवर्मा त्रिभिर्भाणैः कृपश्च नवभिः शरैः ॥ ६-११३-४ (४३९९४)
चित्रसेनो विकर्णश्च भगदत्तश्च मारिष ।
दशभिर्दशभिर्बाणैर्भीमसेनमताडयन् ॥ ६-११३-५ (४३९९५)
सैन्धवश्च त्रिभिर्बाणैर्भीमसेनमडायत् ।
विन्दानुविन्दावावन्त्यौ पञ्चभिः पञ्चभिः शरैः ॥ ६-११३-६ (४३९९६)
दुर्मर्षणस्तु विंशत्या पाण्डवं निशितैः शरैः ।
स तान्सर्वान्महाराज राजमानान्पृथक्पृथक् ॥ ६-११३-७ (४३९९७)
प्रवीरान्सर्वलोकस्य धार्तराष्ट्रान्महारथान् ।
जघान समरे वीरः पाण्डवः परवीरहा ॥ ६-११३-८ (४३९९८)
सप्तभिः शल्यमाविध्यत्कृतवर्माणमष्टभिः ।
कृपस्य सशरं चापं मध्ये चिच्छेद भारत ॥ ६-११३-९ (४३९९९)
अथैनं च्छिन्नधन्वानं पुनर्विव्याध सप्तभिः ।
विन्दानुविन्दौ च तथा त्रिभिस्त्रिभिरताडयत् ॥ ६-११३-१० (४४०००)
दुर्मर्षणं च विंशत्या चित्रसेनं च पञ्चभिः ।

विकर्णं दशभिर्बाणैः पञ्चभिश्च जयद्रथम् ॥ ६-११३-११ (४४००१)
विद्ध्वा भीमोऽनदद्धृष्टः सैन्धवं च पुनस्त्रिभिः ।
अथान्यद्धनुरादाय गौतमो रथिनां वरः ॥ ६-११३-१२ (४४००२)
भीमं विव्याध संरब्धो दशभिर्निशितैः शरैः ।
स विद्धो दशभिर्बाणैस्तोत्रैरिव महाद्विपः ॥ ६-११३-१३ (४४००३)
ततः क्रुद्धो महाराज भीमसेनः प्रतापवान् ।
गौतमं ताडयामास शरैर्बहुभिराहवे ॥ ६-११३-१४ (४४००४)
सैन्धवस्य तथाऽश्वांश्च सारथिं च त्रिभिः शरैः ।
प्राहिणोन्मृत्युलोकाय कालान्तकसमद्युतिः ॥ ६-११३-१५ (४४००५)
हताश्वात्तु रथात्तूर्णमवप्लुत्य महारथः ।
शरांश्चिक्षेप निशितान्भीमसेनस्य संयुगे ॥ ६-११३-१६ (४४००६)
तस्य भीमो धनुर्मध्ये द्वाभ्यां चिच्छेद मारिष ।
भल्लाभ्यां भरतश्रेष्ठ सैन्धवस्य महात्मनः ॥ ६-११३-१७ (४४००७)
स च्छिन्नधन्वा विरथो हताश्वो हतसारथिः ।
चित्रसेनरथं राजन्नारुरोह त्वरान्वितः ॥ ६-११३-१८ (४४००८)
अत्यद्भुतं रणे कर्म कृतवांस्तत्र पाण्डवः ।
महारथाञ्शरैर्विद्ध्वा वारयित्वा च मारिष ॥ ६-११३-१९ (४४००९)
विरथं सैन्धवं चक्रे सर्वलोकस्य पश्यतः ।
तदा न ममृषे शल्यो भीमसेस्य विक्रमम् ॥ ६-११३-२० (४४०१०)
स संधाय शरांस्तीक्ष्णान्करमारपरिमार्जितान् ।
भीमं विव्याध समरे तिष्ठितिष्ठेति चाब्रवीत् ॥ ६-११३-२१ (४४०११)
कृपश्च कृतवर्माच भगदत्तश्च वीर्यवान् ।
विन्दानुविन्दावावन्त्यौ चित्रसेनश्च संयुगे ॥ ६-११३-२२ (४४०१२)
दुर्मर्षणो विकर्णश्च सिन्धुराजश्च वीर्यवान् ।
भीमं ते विव्यधुस्तूर्णं शल्यहेतोररिन्दमाः ॥ ६-११३-२३ (४४०१३)
स च तान्प्रति विव्याध पञ्चभिः पञ्चभिः शरैःक ।
शल्यं विव्याध सप्तत्या पुनश्च दशभिः शरैः ॥ ६-११३-२४ (४४०१४)
तं शल्यो नवभिर्भित्त्वा पुनर्विव्याध पञ्चभिः ।
सारथिं चास्य भल्लेन गाढं विव्याध मर्मणि ॥ ६-११३-२५ (४४०१५)
विशोकं प्रेक्ष्य निर्भिन्नं भीमसेनः प्रतापवान् ।
मद्रराजं त्रिभिर्बाणैर्बाह्वोरुरुसि चार्पयत् ॥ ६-११३-२६ (४४०१६)
तथेतरान्महेष्वासांस्त्रिभिस्त्रिभिरजिह्मगैः ।
ताजयामास समरे सिंहवद्विननाद च ॥ ६-११३-२७ (४४०१७)
ते हि यत्ता महेष्वासाः पाण्डवं युद्धकोविदम् ।
त्रिभिस्त्रिभिरकुण्ठाग्रैर्भृशं मर्मस्वताडयन् ॥ ६-११३-२८ (४४०१८)
सोऽतिविद्धो महेष्वासो भीमसेनो न विव्यथे ।

पर्वतो वारिधाराभिर्वर्षमाणैरिवाम्बुदैः ॥ ६-११३-२९ (४४०१९)
स तु क्रोधसमाविष्टः पाण्डवानां महारथः ।
मद्रेश्वरं त्रिभिर्बाणैर्भृशं विद्ध्वा महायशाः ॥ ६-११३-३० (४४०२०)
कृपं च नवभिर्बाणैर्भृशं विद्ध्वा समन्ततः ।
प्रग्ज्योतिषं शतैराजौ राजन्विव्याध सायकैः ॥ ६-११३-३१ (४४०२१)
ततस्तु सशरं चापं सात्वतस्य महात्मनः ।
क्षुरप्रेण सुतीक्ष्णेन चिच्छेद कृतहस्तवत् ॥ ६-११३-३२ (४४०२२)
तथान्यद्धनुरादाय कृतवर्मा वृकोदरम् ।
आजघान भ्रुवोर्मध्ये नाराचेन परंतपः ॥ ६-११३-३३ (४४०२३)
भीमस्तु समरे विद्ध्वा शल्यं नवभिरायसैः ।
भगदत्तं त्रिभिश्चैव कृतवर्माणमष्टभिः ॥ ६-११३-३४ (४४०२४)
द्वाभ्यां द्वाभ्यां तु विव्याध गौतमप्रभृतीन्रथान् ।
तेऽपि तं समरे राजन्विव्यधुर्निशितैः शरैः ॥ ६-११३-३५ (४४०२५)
स तथा पीड्यमानोऽपि सर्वशस्त्रैर्महारथैः ।
मत्वा तृणेन तांस्तुल्यान्विचचार गतव्यथः ॥ ६-११३-३६ (४४०२६)
ते चापि रथिनां श्रेष्ठा भीमाय निशिताञ्शरान् ।
प्रेषयामासुरव्याग्राः शतशोऽथ सहस्रशः ॥ ६-११३-३७ (४४०२७)
तस्य शक्तिं महावेगां भगदत्तो महारथः ।
चिक्षेप समरे वीरः स्वर्णदण्डां महमते ॥ ६-११३-३८ (४४०२८)
तोमरं सैन्धवो राजा पट्टसं च महाभुजः ।
शतघ्नीं च कृपो राजञ्छरं शल्यश्च संयुगे ॥ ६-११३-३९ (४४०२९)
अथेतरे महेष्वासाः पञ्च पञ्च शिलीमुखान् ।
भीमसेनं समुद्दिश्य प्रेषयमासुरोजसा ॥ ६-११३-४० (४४०३०)
तोमरं च द्विधा चक्रे क्षुरप्रेणानिलात्मजः ।
पट्टसं च त्रिभिर्बाणैश्चिच्छेद तिलकाण्डवत् ॥ ६-११३-४१ (४४०३१)
स बिभेद शतघ्नीं च नवभिः कङ्कपत्रिभिः ।
मद्रराजप्रयुक्तं च शरं छित्त्वा महारथः ॥ ६-११३-४२ (४४०३२)
शक्तिं चिच्छेद सहसा भगदत्तेरितां रणे ।
तथेतराञ्शरान्घोराञ्शरैः सन्नतपर्वभिः ॥ ६-११३-४३ (४४०३३)
भीमसेनो रणश्लाघी त्रिधैकैकं समाच्छिनत् ।
तांश्च सर्वान्महेष्वासांस्त्रिभिस्त्रिभिरताडयत् ॥ ६-११३-४४ (४४०३४)
ततो धनञ्जयस्तत्र वर्तमाने महारणे ।
आजगाम रथेनाजौ भीमं दृष्ट्वा महारथम् ॥ ६-११३-४५ (४४०३५)
निघ्नन्तं समरे शत्रून्योधयानं च सायकैः ।
तौ तु तत्र महात्मानौ समेतौ वीक्ष्य पाण्डवौ ॥ ६-११३-४६ (४४०३६)
न शशंसुर्जयं तत्र तावकाः पुरुषर्षभाः ।

अथार्जुनो रणे भीमं योधयन्तं महारथान् ॥ ६-११३-४७ (४४०३७)
भीष्मस्य निधनाकाङ्क्षी पुरस्कृत्य शिखण्डिनम् ।
आससाद रणे वीरांस्तावकान्दश भारत ॥ ६-११३-४८ (४४०३८)
ये स्म भीमं रणे राजन्योधयन्तो व्यवस्थिताः ।
बीभत्सुस्तानथाविध्यद्भीमस्य प्रियकाम्यया ॥ ६-११३-४९ (४४०३९)
ततो दुर्योधनो राजा सुशर्माणमचोदयत् ।
अर्जुनस्य वधार्थाय भीमसेनस्य चोभयोः ॥ ६-११३-५० (४४०४०)
सुशर्मन्गच्छ शीघ्रं त्वं बलौघैः परिवारितः ।
जहि पाण्डुसुतावेतौ धनञ्जयवृकोदरौ ॥ ६-११३-५१ (४४०४१)
तच्छ्रुत्वा वचनं तस्य त्रैगर्तः प्रस्थलाधिपः ।
अभिद्रुत्य रणे भीममर्जुनं चैव धन्विनौ ॥ ६-११३-५२ (४४०४२)
रथैरनेकसाहस्रैः समन्तात्पर्यवारयत् ।
ततः प्रववृते युद्धमर्जुनस्य परैः सह ॥ ॥ ६-११३-५३ (४४०४३)

इति श्रीमन्महाभारते भीष्मपर्वणि भीष्मवधपर्वणि
दशमदिवसयुद्धे त्रयोदशाधिकशततमोऽध्यायः ॥
Mahabharata - Bhishma Parva - Chapter Footnotes

६-११३-२१ कर्मारं शस्त्रोल्लेखनयन्त्रम् ॥
६-११३-३२ सात्वतस्य कृतवर्मणः ॥

---

भिस्मपर्व-अध्यय११४
॥ श्रीः ॥
६.११४. अध्यायः ११४

Mahabharata - Bhishma Parva - Chapter Topics
भीमार्जुनपराक्रमवर्णनम् ॥ १ ॥

Mahabharata - Bhishma Parva - Chapter Text

६-११४-० (४४०४४)
सञ्जय उवाच। ६-११४-०क्ष् (४२३१)
अर्जुनस्तु रणे शल्यं यतमानं महारथम् ।
छादयामास समरे शरैः सन्नतपर्वभिः ॥ ६-११४-१ (४४०४५)
सुशर्माणं कृपं चव त्रिभीस्त्रिभिरविध्यत ।
प्राग्ज्योतिषं च समरे सैन्धवं च जयद्रथम् ॥ ६-११४-२ (४४०४६)
चित्रसेनं विकर्णं च कृतवर्माणमेव च ।

दुर्मर्षणं च राजेन्द्र ह्यावन्त्यौ च महारथौ ॥ ६-११४-३ (४४०४७)
एकैकं त्रिभिरानर्च्छत्कङ्कबर्हिणवाजितैः ।
शरैरतिरथो युद्धे पीडयन्वाहिनीं तव ॥ ६-११४-४ (४४०४८)
जयद्रथो रणे पार्थं विद्ध्वा भारत सायकैः ।
भीमं विव्याध तरसा चित्रसेनरथे स्थितः ॥ ६-११४-५ (४४०४९)
शल्यश्च समरे जिष्णुं कृपश्च रथिनां वरः ॥
विव्याधाते महाराज बहुधा मर्ममेदिभिः ॥ ६-११४-६ (४४०५०)
चित्रसेनादयश्चैव पुत्रास्तव विशांपते ।
पञ्चाभिः पञ्चभिस्तूर्णं संयुगे निशितैः शरैः ॥ ६-११४-७ (४४०५१)
आजघ्नुरर्जुनं सङ्ख्ये भीमसेनं च मारिष ।
तौ तत्र रथिनां श्रेष्ठौ कौन्तेयौ भरतर्षभौ ॥ ६-११४-८ (४४०५२)
अपीडयेतां समरे त्रिगर्तानां महद्बलम् ।
सुशर्माणि रणे पार्थं शरैर्नवभिराशुगैः ॥ ६-११४-९ (४४०५३)
ननाद बलवन्नादं त्रासयानो महद्बलम् ।
अन्ये च रथिनः शूरा भीमसेनधनञ्जयौ ॥ ६-११४-१० (४४०५४)
विव्यधुर्निशितैर्बाणै रुक्मपुङ्खैरजिह्मगैः ।
तेषां च रथिनां मध्ये कौन्तेयौ भरतर्षभौ ॥ ६-११४-११ (४४०५५)
क्रीडमानौ रथोदारौ चित्ररूपौ व्यदृश्यताम् ।
आमिषेप्सू गवां मध्ये सिंहाविव मदोत्कटौ ॥ ६-११४-१२ (४४०५६)
छित्त्वा धनूंषि शूराणां शरांश्च बहुधा रणे ।
पातयामासतुर्वीरौ शिरांसि शतशो नृणाम् ॥ ६-११४-१३ (४४०५७)
रथाश्च बहवो भग्ना हयाश्च शतशो हताः ।
गजाश्च सगजारोहाः पेतुरुर्व्यां महाहवे ॥ ६-११४-१४ (४४०५८)
रथिनः सादिनश्चापि तत्रतत्र निषूदिताः ।
दृश्यन्ते बहवो राजन्वेषमानाः समन्ततः ॥ ६-११४-१५ (४४०५९)
हतैर्गजपदात्योघैर्वाजिभिश्च निषूदितैः ।
रथैश्च बहुधा भग्नैः समास्तीर्यत मेदिनी ॥ ६-११४-१६ (४४०६०)
छत्रैश्च बहुधा च्छिन्नैर्ध्वजैश्च विनिपातितैः ।
अङ्कुशैरपविद्धैश्च परिस्तोमैश्च भारत ॥ ६-११४-१७ (४४०६१)
केयूरैरङ्गदैर्हारै राङ्कवैर्मृदितैस्तथा ।
उष्णीषैर्ऋष्टिभिश्चैव चामरव्यजनैरपि ॥ ६-११४-१८ (४४०६२)
तत्रतत्रापविद्धैश्च बाहुभिश्चन्दनोक्षितैः ।
ऊरुभिश्च नरेन्द्राणां समास्तीर्यत मेदिनी ॥ ६-११४-१९ (४४०६३)
तत्राद्भुतमपश्याम रणे पार्थस्य विक्रमम् ।
शरैः संवार्य तान्वीरान्यज्जघान महाबलः ॥ ६-११४-२० (४४०६४)
पुत्रस्तु तव तं दृष्ट्वा भीमार्जुनपराक्रमम् ।

गाङ्गेयस्य रथाभ्याशमुपजग्मे महाबलः ॥ ६-११४-२१ (४४०६५)
कृपश्च कृतवर्मा च सैन्धवश्च जयद्रथः ।
विन्दानुविन्दावावन्त्यौ नाजहुः संयुगं तदा ॥ ६-११४-२२ (४४०६६)
ततो भीमो महेष्वासः फल्गुनश्च महारथः ।
कौरवाणां चमूं घोरां भृशं दुद्रुवतू रणे ॥ ६-११४-२३ (४४०६७)
ततो बर्हिणवाजानामयुतान्यर्बुदानि च ।
धनञ्जयरथे तूर्णं पातयन्ति स्म भूमिपाः ॥ ६-११४-२४ (४४०६८)
ततस्तञ्शरजालेन सन्निवार्य महारथान् ।
पार्थः समन्तात्समरे प्रेषयामास मृत्यवे ॥ ६-११४-२५ (४४०६९)
शल्यस्तु समरे जिष्णुं क्रीडन्निव महारथः ।
आजघानोरसि क्रुद्धो भल्लैः सन्नतपर्वभिः ॥ ६-११४-२६ (४४०७०)
तस्य पार्थो धनुश्छित्त्वा हस्तावापं च पञ्चभिः ।
अथैनं सायकैस्तीक्ष्णैर्भृशं विव्याध मर्मणि ॥ ६-११४-२७ (४४०७१)
अथान्यद्धनुरादाय समरे भारसाधनम् ।
मद्रेश्वरो रणे जिष्णुं ताडयामास रोषितः ॥ ६-११४-२८ (४४०७२)
त्रिभिः शरैर्महाराज वासुदेवं कच पञ्चभिः ।
भीमसेनं च नवभिर्बाह्वोरुरसि चार्पयत् ॥ ६-११४-२९ (४४०७३)
ततो द्रोणो महाराज मागधश्च महारथः ।
दुर्योधनसमादिष्टौ तं देशमुपजग्मतुः ॥ ६-११४-३० (४४०७४)
यत्र पार्थो महाराज भीमसेनश्च पाण्डवः ।
कौरव्यस्य महासेनां जघ्नतुः सुमहारथौ ॥ ६-११४-३१ (४४०७५)
जयत्सेनस्तु समरे भीमं भीमायुधं युधि ।
विव्याध निशितैर्बाणैरष्टभिर्भरतर्षभ ॥ ६-११४-३२ (४४०७६)
तं भीमो दशभिर्विद्ध्वा पुनर्वीव्याध पञ्चभिः ।
सारथिं चास्य भल्लेन रथनीडादपातयत् ॥ ६-११४-३३ (४४०७७)
उद्भ्रांतैस्तुरगैः सोऽथ द्रवमाणैः समन्ततः ।
मागधोऽपसृतो राजा सर्वसैन्यस्य पश्यतः ॥ ६-११४-३४ (४४०७८)
द्रोणश्च विवरं दृष्ट्वा भीमसेनं शिलीमुखैः ।
विव्याध बाणैर्निशितैः पञ्चषष्टिभिरायसैः ॥ ६-११४-३५ (४४०७९)
तं भीमः समरश्लाघी गुरुं पितृसमं रणे ।
विव्याध पञ्चभिर्भल्लैस्तथा षष्ट्या च भारत ॥ ६-११४-३६ (४४०८०)
अर्जुनस्तु सुशर्माणं विद्ध्वा बहुभिरायसैः ।
व्यधमत्तस्य तत्सैन्यं महाभ्राणि यथाऽनिलः ॥ ६-११४-३७ (४४०८१)
ततो भीष्मश्च राज च कौसल्यश्च बृहद्बलः ।
समवर्तन्त संक्रुद्धा भीमसेनधनञ्जयौ ॥ ६-११४-३८ (४४०८२)
तथैव पाण्डवाः शूरा धृष्टद्युम्नश्च पार्षतः ।

अभ्यद्रवन्रणे भीष्मं व्यादितास्यमिवान्तकम् ॥ ६-११४-३९ (४४०८३)
शिखण्डी तु समासाद्य भरतानां पितामहम् ।
अभ्यद्रवत संहृष्टो भयं त्यक्त्वा महारथात् ॥ ६-११४-४० (४४०८४)
युधिष्ठिरमुखाः पार्थाः पुरस्कृत्य शिखण्डिनम् ।
अयोधयन्रणे भीष्मं सहिताः सर्वसृञ्जयैः ॥ ६-११४-४१ (४४०८५)
तथैव तावकाः सर्वे पुरस्कृत्य यतव्रतम् ।
शिखण्डिप्रमुखान्पार्थान्योधयन्ति स्म संयुगे ॥ ६-११४-४२ (४४०८६)
ततः प्रववृते युद्धं कौरवाणां भयावहम् ।
तत्र पाण्डुसुतैः सार्धं भीष्मस्य विजयं प्रति ॥ ६-११४-४३ (४४०८७)
तावकानां जये भीष्मो ग्लह आसीद्विशांपते ।
तत्र हि द्यूतमासक्तं विजयायेतराय वा ॥ ६-११४-४४ (४४०८८)
धृष्टद्युम्नस्तु राजेन्द्र सर्वसैन्यान्यचोदयत् ।
अभ्यद्रवत गाङ्गेयं मा भैष्ट रथसत्तमाः ॥ ६-११४-४५ (४४०८९)
सेनापतिवचः श्रुत्वा पाण्डवानां वरूथिनी ।
भीष्मं समभ्ययात्तूर्णं प्राणांस्त्यक्त्वा महाहवे ॥ ६-११४-४६ (४४०९०)
भीष्मोऽपि रथिनां श्रेष्ठः प्रतिजग्राह तां चमूम् ।
आपतन्तीं महाराज वेलामिव महोदधिः ॥ ॥ ६-११४-४७ (४४०९१)

इति श्रीमन्महाभारते भीष्मपर्वणि भीष्मवधपर्वणि
दशमदिवसयुद्धे चतुर्दशाधिकशततमोऽध्यायः ॥
Mahabharata - Bhishma Parva - Chapter Footnotes

६-११४-२४ बर्हिणवाजानां मयूरपक्षवतां बाणानाम् ॥
६-११४-३० मागधो जयत्सेनः ॥
६-११४-३४ अपसृतः पलायितः ॥

---

भिस्मपर्व-अध्यय११५
॥ श्रीः ॥
६.११५. अध्यायः ११५

Mahabharata - Bhishma Parva - Chapter Topics
युद्धे विरक्तेन भीष्मेण युधिष्ठिरंप्रति स्ववधोद्यमचोदना ॥ १ ॥

Mahabharata - Bhishma Parva - Chapter Text

६-११५-० (४४०९२)
धृतराष्ट्र उवाच। ६-११५-०क्ष् (४२३२)

कथं शान्तनवो भीष्मो दशमेऽहनि सञ्जय ।
अयुध्यत महावीर्यः पाण्डवैः सह सृज्जयैः ॥ ६-११५-१ (४४०९३)
कुरवश्च कथं युद्धे पाण्डवान्प्रत्यवारयन् ।
आचक्ष्व मे महायुद्धं भीष्मस्याहवशोभिनः ॥ ६-११५-२ (४४०९४)
सञ्जय उवाच। ६-११५-३क्ष् (४२३३)
कुरवः पाण्डवैः सार्धं यदयुध्यन्त भारत ।
यथा च तदभूद्युद्धं तत्तु वक्ष्यामि सांप्रतम् ॥ ६-११५-३ (४४०९५)
गमिताः परलोकाय परमास्त्रैः किरीटिना ।
अहन्यहनि संप्राप्ते तावकानां महारथाः ॥ ६-११५-४ (४४०९६)
यथाप्रतिज्ञं कौरव्यः स चापि समितिंजयः ।
पार्थानामकरोद्भीष्मः सततं समिति क्षयम् ॥ ६-११५-५ (४४०९७)
कुरुभिः सहितं भीष्मं युध्यमानं परंतप ।
अर्जुनं च सपाञ्चाल्यं दृष्ट्वा संशयिता जनाः ॥ ६-११५-६ (४४०९८)
दशमेऽहनि तस्मिंस्तु भीष्मार्जुनसमागमे ।
अवर्तत महारौद्रः सततं समिति क्षयः ॥ ६-११५-७ (४४०९९)
तस्मिन्नयुतशो राजन्भूयशश्च परंतपः ।
भीष्मः शान्तनवो योधाञ्जघान परामास्त्रवित् ॥ ६-११५-८ (४४१००)
येषामज्ञातकल्पानि नामगोत्राणि पार्थिव ।
ते हतास्तत्र भीष्मेण शूराः सर्वेऽनिवर्तिनः ॥ ६-११५-९ (४४१०१)
दशाहानि तथा तप्त्वा भीष्मः पाण्डववाहिनीम् ।
निरविद्यत धर्मात्मा जीविते स परंतपः ॥ ६-११५-१० (४४१०२)
स क्षिप्रं वधमन्विच्छन्नात्मनोऽभिसुखं रणे ।
न हन्यां मानवश्रेष्ठान्संग्रामेऽभिमुखानिति ॥ ६-११५-११ (४४१०३)
चिन्तयित्वा महाबाहुः पिता देवव्रतस्तव ।
अभ्याशस्थं महाराज पाण्डवं वाक्यमब्रवीत् ॥ ६-११५-१२ (४४१०४)
भीष्म उवाच। ६-११५-१३क्ष् (४२३४)
युधिष्ठिर महाप्राज्ञ सर्वशास्त्रविशारद ।
शृणुष्व वचनं तात धर्म्यं स्वर्ग्यं च जल्पतः ॥ ६-११५-१३ (४४१०५)
निर्विण्णोऽस्मि भृशं तात देहेनानेन भारत ।
घ्नतश्च मे गतः कालः सुबहून्प्राणिनो रणे ॥ ६-११५-१४ (४४१०६)
तस्मात्पार्थं पुरोधाय पाञ्चालान्सृज्जयांस्तथा ।
मद्वधे क्रियतां यत्नो मम चेदिच्छसि प्रियम् ॥ ६-११५-१५ (४४१०७)
सञ्जय उवाच। ६-११५-१६क्ष् (४२३५)
तस्य तन्मतमाज्ञाय पाण्डवः सत्यदर्शनः ।
भीष्मं प्रति ययौ राजा संग्रामे सह सृञ्जयैः ॥ ६-११५-१६ (४४१०८)
धृष्टद्युम्नस्ततो राजन्पाण्डवश्च युधिष्ठिरः ।

श्रुत्वा भीष्मस्य तां वाचं चोदयामासतुर्बलम् ॥ ६-११५-१७ (४४१०९)
अभिद्रवध्यं युद्ध्यध्वं भीष्मं जयत संयुगे ।
रक्षिताः सत्यसन्धेन जिष्णुना रिपुजिष्णुना ॥ ६-११५-१८ (४४११०)
अयं चापि महेष्वासः पार्षतो वाहिनीपतिः ।
भीमसेनश्च समरे पालयिष्यति वो ध्रुवम् ॥ ६-११५-१९ (४४१११)
मा वो भीष्माद्भयं किंचिदस्त्वद्य युधि सृञ्जयाः ।
ध्रुवं भीष्मं विजेष्यामः पुरस्कृत्य शिखण्डिनम् ॥ ६-११५-२० (४४११२)
ते तथा समयं कृत्वा दशमेऽहनि पाण्डवाः ।
ब्रह्मलोकपरा भूत्वा संजग्मुः क्रोधमूर्च्छिताः ॥ ६-११५-२१ (४४११३)
शिखण्डिनं पुरस्कृत्य पाण्डवं च धनञ्जयम् ।
भीष्मस्य पातने यत्नं परमं ते समास्थिताः ॥ ६-११५-२२ (४४११४)
ततस्त्व सुतादिष्टा नानाजनपदेश्वराः ।
द्रोणेन सहपुत्रेण सहसेना महाबलाः ॥ ६-११५-२३ (४४११५)
दुःशासनश्च बलवान्सह सर्वैः सहोदरैः ।
भीष्मं समरमध्यस्थं पालयांचक्रिरे तदा ॥ ६-११५-२४ (४४११६)
ततस्तु तावकाः शूराः पुरस्कृत्य महाव्रतम् ।
शिखण्डिप्रमुखान्पार्थान्योधयन्ति स्म संयुगे ॥ ६-११५-२५ (४४११७)
चेदिभिस्तु सपाञ्चालैः सहितो वानरध्वजः ।
ययौ शान्तनवं भीष्मं पुरस्कृत्य शिखण्डिनम् ॥ ६-११५-२६ (४४११८)
द्रोणपुत्रं शिनेर्नप्ता धृष्टकेतुस्तु पौरवम् ।
अभिमन्युः सहामात्यं दुर्योधमयोधयत् ॥ ६-११५-२७ (४४११९)
विराटस्तु सहानीकः सहसेनं जयद्रथम् ।
वृद्धक्षत्रस्य दायादमाससाद परंतप ॥ ६-११५-२८ (४४१२०)
मद्रराजं महेष्वासं सहसैन्यं युधिष्ठिरः ।
भीमसेनोऽभिगुप्तस्तु नागानीकमुपाद्रवत् ॥ ६-११५-२९ (४४१२१)
अप्रधृष्यमनावार्यं सर्वशस्त्रभृतां वरम् ।
द्रोणं प्रति ययौ यत्तः पाञ्चाल्यः सह सोदरैः ॥ ६-११५-३० (४४१२२)
कर्णिकारध्वजं चैव सिंहकैतुररिंदमः ।
प्रत्युज्जगाम सौभद्रं राजपुत्रो बृहद्बलः ॥ ६-११५-३१ (४४१२३)
शिखण्डिनं च पुत्रास्ते पाण्डवं च धनञ्जयम् ।
राजभिः समरे पार्थमभिपेतुर्जिघांसवः ॥ ६-११५-३२ (४४१२४)
तस्मिन्नतिमहाभीमे सेनयोर्वै पराक्रमे ।
संप्रधावत्स्वनीकेषु मेदिनी समकम्पत ॥ ६-११५-३३ (४४१२५)
तान्यनीकान्यनीकेषु समयुध्यन्त भारत ।
तावकानां परेषां च दृष्ट्वा शान्तनवं रणे ॥ ६-११५-३४ (४४१२६)
ततस्तेषां प्रयततामन्योन्यमभिधावताम् ।

प्रादुरासीन्महाशब्दो दिक्षु सर्वासु भारत ॥ ६-११५-३५ (४४१२७)
शङ्खदुन्दुभिघोषश्च वारणानां च बृंहितैः ।
सिंहनादश्च सैन्यानां दारुणः समपद्यत ॥ ६-११५-३६ (४४१२८)
सा च सर्वनरेन्द्राणां चन्द्रार्कसदृशी प्रभा ।
हाराङ्गदकिरीटेषु निष्प्रभा समपद्यत ॥ ६-११५-३७ (४४१२९)
रजोमेघास्तु संजज्ञुः शस्त्रविद्युद्भिरावृताः ।
धनुषां चापि निर्घोषो दारुणः समपद्यत ॥ ६-११५-३८ (४४१३०)
बाणशङ्खप्रणादाश्च भेरीणां च महास्वनाः ।
रथघोषश्च संजज्ञे सेनयोरुभयोरपि ॥ ६-११५-३९ (४४१३१)
प्रासशक्त्यृष्टिसङ्घैश्च बाणौघैश्च समाकुलम् ।
निष्प्रकाशमिवाकाशं सेनयोः समपद्यत ॥ ६-११५-४० (४४१३२)
अन्योन्यं रथिनः पेतुर्वाजिनश्च महाहवे ।
कुञ्जरान्कुञ्जरा जघ्नुः पादातांश्च पदातयः ॥ ६-११५-४१ (४४१३३)
तत्रासीत्सुमहद्युद्धं कुरूणां पाण्डवैः सह ।
भीष्महेतोर्नरव्याघ्र श्येनयोरामिषे यथा ॥ ६-११५-४२ (४४१३४)
तयोः समागमो घोरो बभूव युधि भारत ।
अन्योन्यस्य वधार्थाय जिगीषूणां महाहवे ॥ ॥ ६-११५-४३ (४४१३५)

इति श्रीमन्महाभारते भीष्मपर्वणि भीष्मवधपर्वणि
दशमदिवसयुद्धे पञ्चादशाधिकशततमोऽध्यायः ॥
Mahabharata - Bhishma Parva - Chapter Footnotes

६-११५-१० निरविद्यत निर्वेदं जगाम ॥
६-११५-१४ निर्विण्यो विरक्तः ॥
६-११५-२१ ब्रह्मलोकपराः बृहत्त्वान्महान्तं लोकं प्रति यतमानाः ॥

---

भिस्मपर्व-अध्यय११६
॥ श्रीः ॥
६.११६. अध्यायः ११६

Mahabharata - Bhishma Parva - Chapter Topics
संकुलयुद्धवर्णनम् ॥ १ ॥

Mahabharata - Bhishma Parva - Chapter Text

६-११६-० (४४१३६)

सञ्जय उवाच। ६-११६-०क्ष् (४२३६)
अभिमन्युर्महाराज तव पुत्रमयोधयत् ।
महत्या सेनया युक्तं भीष्महेतोः पराक्रमी ॥ ६-११६-१ (४४१३७)
दुर्योधनो रणे कार्ष्णिं नवभिर्नतपर्वभिः ।
आजघानोरसि क्रुद्धः पुनश्चैनं त्रिभिः शरैः ॥ ६-११६-२ (४४१३८)
तस्य शक्तिं रणे कार्ष्णिर्मृत्योर्जिह्वामिवायसीम् ।
प्रेषयामास संक्रुद्धो दुर्योधनरथं प्रति ॥ ६-११६-३ (४४१३९)
तामापतन्तीं सहसा घोररूपां विशांपते ।
द्विधा चिच्छेद ते पुत्रः क्षुरप्रेण महारथः ॥ ६-११६-४ (४४१४०)
तां शक्तिं पतितां दृष्ट्वा कार्ष्णिः परमकोपनः ।
दुर्योधनं त्रिभिर्बाणैर्बाह्वोरुरसि चार्पयत् ॥ ६-११६-५ (४४१४१)
पुनश्चैनं शरैर्घोरैराजघान स्तनान्तरे ।
दशभिर्भरतश्रेष्ठ दुर्योधनममर्षणम् ॥ ६-११६-६ (४४१४२)
तद्युद्धमभवद्घोरं चित्ररूपं च भारत ।
ईक्षितृप्रीतितजननं सर्वपार्थिवपूजितम् ॥ ६-११६-७ (४४१४३)
भीष्मस्य निधनार्थाय पार्थस्य विजयाय च ।
युयुधाते रणे वीरौ सौभद्रकुरुपुङ्गवौ ॥ ६-११६-८ (४४१४४)
सात्यकिं रभसं युद्धे द्रौणिर्ब्राह्मणपुङ्गवः ।
आजघानोरसि क्रुद्धो नाराचेन परंतपः ॥ ६-११६-९ (४४१४५)
शैनेयोऽपि गुरोः पुत्रं सर्वमर्मसु भारत ।
अताडयदमेयात्मा नवभिः कङ्कपत्रिभिः ॥ ६-११६-१० (४४१४६)
अश्वत्थामा तु समरे सात्यकिं नवभिः शरैः ।
त्रिंशता च पुनस्तूर्णं बाह्वोरुरसि चार्पयत् ॥ ६-११६-११ (४४१४७)
सोऽतिविद्धो महेष्वासो द्रोणपुत्रेण सात्यकिः ।
द्रोणपुत्रं त्रिभिर्बाणैराजघान महायशाः ॥ ६-११६-१२ (४४१४८)
पौरवो धृष्टकेतुं च शरैराच्छाद्य संयुगे ।
बहुधा दारयांचक्रे महेष्वासं महारथः ॥ ६-११६-१३ (४४१४९)
तथैव पौरवं युद्धे धृष्टकेतुर्महारथः ।
त्रिंशता निशितैर्बाणैर्विव्याधाशु महाभुजः ॥ ६-११६-१४ (४४१५०)
पौरवस्तु धनुश्छित्त्वा धृष्टकेतोर्महारथः ।
ननाद बलवन्नादं विव्याध च शितैः शरैः ॥ ६-११६-१५ (४४१५१)
सोऽन्यत्कार्मुकमादाय पौरवं निशितैः शरैः ।
आजघान महाराज त्रिसप्तत्या शिलीमुखैः ॥ ६-११६-१६ (४४१५२)
तौ तु तत्र महेष्वासौ महामात्रौ महारथौ ।
महता शरवर्षेण परस्परमवर्षताम् ॥ ६-११६-१७ (४४१५३)
अन्योन्यस्य धनुश्छित्त्वा हयान्हत्वा च भारत ।

विरथावसियुद्धाय समीयतुरमर्षणौ ॥ ६-११६-१८ (४४१५४)
आर्षभे चर्मणी चित्रे शतचन्द्रपुरस्कृते ।
तारकाशतचित्रे च निस्त्रिंशौ सुमहाप्रभौ ॥ ६-११६-१९ (४४१५५)
प्रगृह्य विमलौ राजंस्तावन्योन्यमभिद्रुतौ ।
वासितासंगमे यत्तौ सिंहाविव महावने ॥ ६-११६-२० (४४१५६)
मण्डलानि विचित्राणि गतप्रत्यागतानि च ।
चेरतुर्दर्शयन्तौ च प्रार्थयन्तौ परस्परम् ॥ ६-११६-२१ (४४१५७)
पौरवो धृष्टकेतुं तु शङ्खदेशे महासिना ।
ताडयामास संक्रुद्धस्तिष्ठतिष्ठेति चाब्रवीत् ॥ ६-११६-२२ (४४१५८)
चेदिराजोऽपि समरे पौरवं पुरुषर्षभम् ।
आजघान शिताग्रेण जत्रुदेशे महासिना ॥ ६-११६-२३ (४४१५९)
तावन्योन्यं महाराज समासाद्य महाहवे ।
अन्योन्यवेगाभिहतौ निपेततुररिंदमौ ॥ ६-११६-२४ (४४१६०)
ततः स्वरथमारोप्य पौरवं तनयस्तव ।
जयत्सेनो रथेनाजावपोवाह रणाजिरात् ॥ ६-११६-२५ (४४१६१)
धृष्टकेतु तु समरे माद्रीपुत्रः प्रतापवान् ।
अपोवाह रणे क्रुद्धः सहदेवः पराक्रमी ॥ ६-११६-२६ (४४१६२)
चित्रसेनः सुशर्माणं विद्धवा बहुभिरायसैः ।
पुनर्विव्याध तं षष्ट्या पुनश्च नवभि शरैः ॥ ६-११६-२७ (४४१६३)
सुशर्मा तु रणे क्रुद्धस्तव पुत्रं विशांपते ।
दशमिर्दशभिश्चैव विव्याध निशितैः शरैः ॥ ६-११६-२८ (४४१६४)
चित्रसेनश्च तं राजंस्त्रिंशता नतपर्वभिः ।
आजघान रमे क्रुद्धः स च तं प्रत्यविध्यत ॥ ६-११६-२९ (४४१६५)
भीष्मस्य समरे राजन्यशो मानं च वर्धयन् ।
सौभद्रो राजपुत्रं तु बृहद्बलमयोधयत् ॥ ६-११६-३० (४४१६६)
पार्थहेतोः पराक्रान्तो भीष्मस्य निधनं प्रति ।
आर्जुनिं कोसलेन्द्रस्तु विद्धवा पञ्चभिरायसैः ॥ ६-११६-३१ (४४१६७)
पुनर्विव्याध विंशत्या शरैः सन्नतपर्वभिः ।
सौभद्रः कोसलेन्द्रं तु विव्याधाष्टभिरायसैः ॥ ६-११६-३२ (४४१६८)
नाकम्पयत संग्रामे विव्याध च पुनः शरैः ।
कौसल्यस्य धनुश्चापि पुनश्चिच्छेद फाल्गुनिः ॥ ६-११६-३३ (४४१६९)
आजघान शरैश्चापि त्रिंशता कङ्कपत्रिभिः ।
सोऽन्यत्कार्मुकमादाय राजपुत्रो बृहद्बलः ॥ ६-११६-३४ (४४१७०)
फाल्गुनिं समरे क्रुद्धो विव्याध बहुभिः शरैः ।
तयोर्युद्धं समभवद्भीष्महेतोः परंतप ॥ ६-११६-३५ (४४१७१)
संरब्धयोर्महाराज समरे चित्रयोधिनोः ।

यथा देवासुरे युद्धे बलिवासवयोरभूत् ॥ ६-११६-३६ (४४१७२)
भीमसेनो गजानीकं योधयन्बह्वशोभत ।
यथा शक्रो वज्रपाणिर्दारयन्पर्वतोत्तमान् ॥ ६-११६-३७ (४४१७३)
ते वध्यमाना भीमेन मातंगा गिरिसन्निभाः ।
निपेतुरुर्व्यां सहिता नादयन्तो वसुधराम् ॥ ६-११६-३८ (४४१७४)
गिरिमात्रा हि ते नागा भिन्नाञ्जनचयोपमाः ।
विरेजुर्वसुधां प्राप्ता विकीर्णा इव पर्वताः ॥ ६-११६-३९ (४४१७५)
युधिष्ठिरो महेष्वासो मद्रराजानमाहवे ।
महत्या सेनया गुप्तं पीडयामास संगतम् ॥ ६-११६-४० (४४१७६)
मद्रेश्वरश्च समरे धर्मपुत्रं महारथम् ।
पीडयामास संरब्धो भीष्महेतोः पराक्रमी ॥ ६-११६-४१ (४४१७७)
विराटं सैन्धवो राजा विद्ध्वा सन्नतपर्वभिः ।
नवभिः सायकैस्तीक्ष्णैस्त्रिंशता पुनरार्पयत् ॥ ६-११६-४२ (४४१७८)
विराटश्च महाराज सैन्धवं वाहिनीपतिः ।
त्रिंशद्भिर्निशितैर्बाणैराजघान स्तनान्तरे ॥ ६-११६-४३ (४४१७९)
चित्रकार्मुकनिस्त्रिंशौ चित्रवर्मायुधध्वजौ ।
रेजतुश्चित्ररूपौ तौ संग्रामे मत्स्यसैन्धवौ ॥ ६-११६-४४ (४४१८०)
द्रोणः पाञ्चालपुत्रेण समागम्य महारणे ।
महासमुदयं चक्रे शरैः सन्नतपर्वभिः ॥ ६-११६-४५ (४४१८१)
ततो द्रोणो महाराज पार्षतस्य महद्धनुः ।
छित्त्वा पञ्चाशतेषूंश्च पार्षतं प्रति सृष्टवान् ॥ ६-११६-४६ (४४१८२)
सोऽन्यत्कार्मुकमादाय पार्षतः परवीरहा ।
द्रोणस्य मिषतो युद्धे प्रेषयामास सायकान् ॥ ६-११६-४७ (४४१८३)
ताञ्छराञ्छरघातेन चिच्छेद स महारथः ।
द्रोणो द्रुपदपुत्राय प्राहिणोत्पञ्च सायकान् ॥ ६-११६-४८ (४४१८४)
ततः क्रुद्धो महाराज पार्षतः परवीरहा ।
द्रोणाय चिक्षेप गदां यमदण्डोपमां रणे ॥ ६-११६-४९ (४४१८५)
तामापतन्तीं सहसा हेमपट्टविभूषिताम् ।
शरैः पञ्चाशता द्रोणो वारयामास संयुगे ॥ ६-११६-५० (४४१८६)
सा छिन्ना बहुधा राजन्द्रोणचापच्युतैः शरैः ।
चूर्णीकृता विशीर्यन्ती पपात वसुधातले ॥ ६-११६-५१ (४४१८७)
गदां विनिहतां दृष्ट्वा पार्षतः शत्रुतापनः ।
द्रोणाय शक्तिं चिक्षेप सर्वपारशवीं शुभाम् ॥ ६-११६-५२ (४४१८८)
तां द्रोणो नवभिर्बाणैश्चिच्छेद युधि भारत ।
पार्षतं च महेष्वासं पीडयामास संयुगे ॥ ६-११६-५३ (४४१८९)
एवमेतन्महायुद्धं द्रोणपार्षतयोरभूत् ।

भीष्मं प्रति महाराज घोररूपं भयानकम् ॥ ६-११६-५४ (४४१९०)
अर्जुनः प्राप्य गाङ्गेयं पीडयन्निशितैः शरैः ।
अभ्यद्रवत संयत्तो वने मत्तमिव द्विपम् ॥ ६-११६-५५ (४४१९१)
प्रत्युद्ययौ च तं राजा भगदत्तः प्रतापवान् ।
त्रिधा भिन्नेन नागेन मदान्धेन महाबलः ॥ ६-११६-५६ (४४१९२)
तमापतन्तं सहसा महेन्द्रगजसन्निभम् ।
परं यत्नं समस्थाय बीभत्सुः प्रत्यपद्यत ॥ ६-११६-५७ (४४१९३)
ततो गजगतो राजा भगदत्तः प्रतापवान् ।
अर्जुनं शरवर्षेण वारयामास संयुगे ॥ ६-११६-५८ (४४१९४)
अर्जुनस्तु ततो नागमायान्तं रजतोपमैः ।
विमलैरायसैस्तीक्ष्णैरविध्यत महारणे ॥ ६-११६-५९ (४४१९५)
शिखण्डिनं च कौन्तेयो याहियाहीत्यचोदयत् ।
भीष्मं प्रति महाराज जह्येनमिति चाब्रवीत् ॥ ६-११६-६० (४४१९६)
प्राग्ज्योतिषस्ततो हित्वा पाण्डवं पाण्डुपूर्वज ।
प्रययौ त्वरितो राजन्द्रुपदस्य रथं प्रति ॥ ६-११६-६१ (४४१९७)
ततोऽर्जुनो महाराज भीष्ममभ्यद्रवद्द्रुतम् ।
शिखण्डिनं पुरस्कृत्य ततो युद्धमवर्तत । ६-११६-६२ (४४१९८)
ततस्ते तावकाः शूराः पाण्डवं रभसं युधि ।
समभ्यधावन्क्रोशन्तस्तदद्भुतमिवाभवत् ॥ ६-११६-६३ (४४१९९)
नानाविधान्यनीकानि पुत्राणां ते जनाधिप ।
अर्जुनो व्यधमत्काले दिवीवाभ्राणि मारुतः ॥ ६-११६-६४ (४४२००)
शिखण्डी तु समासाद्य भरतानां पितामहम् ।
इषुभिस्तूर्णमव्यग्रो बहुभिः स समाचिनोत् ॥ ६-११६-६५ (४४२०१)
रथाग्न्यगारश्चापार्चिरशिशक्तिगदेन्धनः ।
शरसङ्घमहाज्वालः क्षत्रियान्समरेऽदहत् ॥ ६-११६-६६ (४४२०२)
यथाऽग्निः सुमहानिद्धः कक्षे चरति सानिलः ।
तथा जज्वाल भीष्मोऽपि दिव्यान्यस्त्राण्युदीरयन् ॥ ६-११६-६७ (४४२०३)
सोमकांश्च रणे भीष्मो जघ्ने पार्थपदानुगान् ।
न्यवारयत तत्सैन्यं पाण्डवस्य महारथः ॥ ६-११६-६८ (४४२०४)
सुवर्णपुङ्खैरिषुभिः शितैः सन्नतपर्वभिः ।
नादयन्स दिशो भीष्मः प्रदिशश्च महाहवे ॥ ६-११६-६९ (४४२०५)
पातयन्रथिनो राजन्हयांश्च सह सादिभिः ।
मुण्डतालवनानीव चकार स रथव्रजान् ॥ ६-११६-७० (४४२०६)
निर्मनुष्यान्रथान्राजन्गजानश्वांश्च संयुगे ।
चकार समरे भीष्मः सर्वशस्त्रभृतां वरः ॥ ६-११६-७१ (४४२०७)
तस्य ज्यातलनिर्घोषं विस्फूर्जितमिवाशनेः ।

निशम्य सर्वतो राजन्समकम्पन्त सैनिकाः ॥ ६-११६-७२ (४४२०८)
अधोमा न्यपतन्बाणाः पितुस्ते मनुजेश्वर ।
नासज्जन्त शरीरेषु भीष्मचापच्युताः शराः ॥ ६-११६-७३ (४४२०९)
निर्मनुष्यान्रथान्राजन्सुयुक्ताञ्जवनैर्हयैः ।
वातायमानानद्राक्षं ध्रियमाणान्विशांपते ॥ ६-११६-७४ (४४२१०)
चेदिकाशिकरूशानां सहस्राणि चतुर्दश ।
महारथाः समाख्याताः कुलपुत्रास्तनुत्यजः ॥ ६-११६-७५ (४४२११)
अपरावर्तिनः शूराः सुवर्णविकृतध्वजाः ।
संग्रामे भीष्ममासाद्य सवाजिरथकुञ्जराः ॥ ६-११६-७६ (४४२१२)
जग्मुस्ते परलोकाय व्यादितास्यमिवान्तकम् ।
न तत्रासीद्रणे राजन्सोमकानां महारथः ॥ ६-११६-७७ (४४२१३)
यः संप्राप्य रणे भीष्मं जीविते स्म मनो दधे ।
तांश्च सर्वान्रणे योधान्प्रेतराजपुरं प्रति ॥ ६-११६-७८ (४४२१४)
नीतानमन्यन्त जना दृष्ट्वा भीष्मस्य विक्रमम् ।
न कश्चिदेनं समरे प्रत्युद्याति महारथः ॥ ६-११६-७९ (४४२१५)
ऋते पाण्डुसुतं वीरं श्वेताश्वं कृष्णसारथिम् ।
शिखण्डिनं च समरे पाञ्चाल्यममितौजसम् ॥ ॥ ६-११६-८० (४४२१६)

इति श्रीमन्महाभारते भीष्मपर्वणि भीष्मवधपर्वणि
दशमदिवसयुद्धे षोडशाधिकशततमोऽध्यायः ॥
Mahabharata - Bhishma Parva - Chapter Footnotes

६-११६-२७ चित्रसेन इति । पाण्डवपक्षीयः सुशर्मायमपरो
वार्धक्षेमिर्नतु त्रैगर्तः ॥
६-११६-४५ समुदयं संग्रामम् । भवेत्समुदयः सङ्घे संयुगे च
समुद्गमे इति मेदिनी ॥

---

भिस्मपर्व-अध्यय११७
॥ श्रीः ॥
६.११७. अध्यायः ११७

Mahabharata - Bhishma Parva - Chapter Topics
संकुलयुद्धवर्णनम् ॥ १ ॥

Mahabharata - Bhishma Parva - Chapter Text

६-११७-० (४४२१७)
सञ्जय उवाच। ६-११७-०क्ष् (४२३७)
शिखण्डी तु रणे भीष्ममासाद्य पुरुषर्षभम् ।
दशभिर्निशितैर्भल्लैराजघान स्तनान्तरे ॥ ६-११७-१ (४४२१८)
शिखण्डिनं तु गाङ्गेयः क्रोधदीप्तेन चक्षुषा ।
संप्रेक्षत कटाक्षेण निर्दहन्निव भारत ॥ ६-११७-२ (४४२१९)
स्त्रीत्वं तस्य स्मरन्राजन्सर्वलोकस्य पश्यतः ।
नाजघान रणे भीष्मः स च तन्नावबुद्धवान् ॥ ६-११७-३ (४४२२०)
अर्जुनस्तु महाराज शिखण्डिनमभाषत ।
अभित्वरस्वास्य वधे शिखण्डिन्नथसत्तम ॥ ६-११७-४ (४४२२१)
किं ते विवक्षया वीर जहि भीष्मं महारथम् ।
न ह्यन्यमनुपश्यामि कंचिद्यौधिष्ठिरे बले ॥ ६-११७-५ (४४२२२)
यः शक्तः समरे भीष्मं योधयेत पितामहम् ।
ऋते त्वां पुरुषव्याघ्र सत्यमेतद्ब्रवीमि ते ॥ ६-११७-६ (४४२२३)
एवमुक्तस्तु पार्थेन शिखण्डी भरतर्षभ ।
शरैर्नानाविधैस्तूर्णं पितामहमुपाद्रवत् ॥ ६-११७-७ (४४२२४)
अचिन्तयित्वा तान्बाणान्पिता देवव्रतस्तव ।
अर्जुनं समरे क्रुद्धं वारयामास सायकैः ॥ ६-११७-८ (४४२२५)
तथैव च चमूं सर्वां पाण्डवानां महारथः ।
अप्रैषीत्स शरैस्तीक्ष्णैः परलोकाय मारिष ॥ ६-११७-९ (४४२२६)
तथैव पाण्डवा राजन्सैन्येन महता वृताः ।
भीष्मं संछादयामासुर्मेघा इव दिवाकरम् ॥ ६-११७-१० (४४२२७)
स समन्तात्परिवृतो भीष्मो हि भरतर्षभ ।
निर्ददाह रणे शूरान्वने वह्निरिव ज्वलन् ॥ ६-११७-११ (४४२२८)
तत्राद्भुतमपश्याम तव पुत्रस्य पौरुषम् ।
अयोधयच्च यत्पार्थं जुगोप च पितामहम् ॥ ६-११७-१२ (४४२२९)
कर्मणा तेन समरे तव पुत्रस्य धन्विनः ।
दुःशासनस्य तुतुषुः सर्वे लोका महात्मनः ॥ ६-११७-१३ (४४२३०)
यदेकः समरे पार्थान्सानुगान्समयोधयत् ।
न चैनं पाण्डवा युद्धे वारयामासुरुल्बणम् ॥ ६-११७-१४ (४४२३१)
दुःशासनेन समरे रथिनो विरथीकृताः ।
सादिनश्च महेष्वासा हस्तिनश्च महाबलाः ॥ ६-११७-१५ (४४२३२)
विनिर्भिन्नाः शरैस्तीक्ष्णैर्निपेतुर्वसुधातले ।
शरातुरास्तथैवान्ये दन्तिनो विद्रुता दिशः ॥ ६-११७-१६ (४४२३३)
यथाग्निरिन्धनं प्राप्य ज्वलेद्दीप्तार्चिरुल्बणम् ।
तथा जज्वाल पुत्रस्ते पाण्डुसेनां विनिर्दहन् ॥ ६-११७-१७ (४४२३४)

तं भारतमहामात्रं पाण्डवानां महारथः ।
जेतुं नोत्सहते कश्चिन्नाभ्युद्यातुं कथंचन ॥ ६-११७-१८ (४४२३५)
ऋते महेन्द्रतनयाच्छ्वेताश्वात्कृष्णसारथेः ।
स हि तं समरे राजन्निर्जित्य विजयोऽर्जुनः ॥ ६-११७-१९ (४४२३६)
भीष्ममेवाभिदुद्राव सर्वसैन्यस्य पश्यतः ।
विजितस्तव पुत्रोऽपि भीष्मबाहुव्यपाश्रयः ॥ ६-११७-२० (४४२३७)
पुनः पुनः समाश्वस्य प्रायुध्यत मदोत्कटः ।
अर्जुनस्तु रणे राजन्योधयन्संव्यराजत ॥ ६-११७-२१ (४४२३८)
शिखण्डी तु रणे राजन्विव्याधैव पितामहम् ।
शरैरशनिसंस्पर्शैस्तथा सर्पविषोपमैः ॥ ६-११७-२२ (४४२३९)
न च स्म ते रुजं चक्रुः पितुस्तव जनेश्वर ।
स्मयमानस्तु गाङ्गेयस्तान्बाणाञ्जगृहे तदा ॥ ६-११७-२३ (४४२४०)
उष्णार्तो हि नरो यद्वज्जलधाराः प्रतीच्छति ।
तथा जग्राह गाङ्गेयः शरधाराः शिखण्डिनः ॥ ६-११७-२४ (४४२४१)
तं क्षत्रिया महाराज ददृशुर्घोरमाहवे ।
भीष्मं दहन्तं सैन्यानि पाण्डवानां महात्मनां ॥ ६-११७-२५ (४४२४२)
ततोऽब्रवीत्तव सुतः सर्वसैन्यानि मारिष ।
अभिद्रवत संग्रामे फल्गुनं सर्वतो रणे ॥ ६-११७-२६ (४४२४३)
भीष्मो वः समरे सर्वान्पायिष्यति धर्मवित् ।
तद्भयं सुमहत्त्यक्त्वा पाण्डवान्प्रति युध्यत ॥ ६-११७-२७ (४४२४४)
एष तालेन महता भीष्मस्तिष्ठति पालयन् ।
सर्वेषां धार्तराष्ट्राणां समरे शर्म वर्म च ॥ ६-११७-२८ (४४२४५)
देवा अपि समुद्युक्ता नालं भीष्मं समासितुम् ।
किमु पार्था महात्मानं मर्त्यभूता महाबलाः ॥ ६-११७-२९ (४४२४६)
तस्माद्द्रवत मा योधाः फल्गुनं प्राप्य संयुगे ।
अहमद्य रणे यत्तो योधयिष्यामि पाण्डवम् ॥ ६-११७-३० (४४२४७)
सहितः सर्वतो यत्तैर्भवद्भिर्वसुधाधिपैः ।
तच्छ्रुत्वा तु वचो राजंस्तव पुत्रस्य धन्विनः ॥ ६-११७-३१ (४४२४८)
अर्जुनं प्रति संयत्ता बलवन्तो महाबलाः ।
ते विदेहाः कलिङ्गाश्च दासेरकगणाश्च ह ॥ ६-११७-३२ (४४२४९)
अभिपेतुर्निषादाश्च सौवीराश्च महारणे ।
बाह्लीका दरदाश्चैव प्रतीच्योदीच्यमालवाः ॥ ६-११७-३३ (४४२५०)
अभीषाहाः शूरसेनाः शिबयोऽथ वसातयः ।
साल्वः शकास्त्रिगर्ताश्च अम्बष्ठाः केकयौः सह ॥ ६-११७-३४ (४४२५१)
अभिपेतू रणे पार्थं पतङ्गा इव पावकम् ।
स तान्सर्वान्सहानीकान्महाराज महारथान् ॥ ६-११७-३५ (४४२५२)

दिव्यान्यस्त्राणि संचिन्त्य प्रसंधाय धनञ्जयः ।
स तैरस्त्रैर्महावेगैर्ददाह सुमहाबलः ॥ ६-११७-३६ (४४२५३)
शरप्रतापैर्बीभत्सुः पतङ्गानिव पावकः ।
तस्य बाणसहस्राणि सृजतो दृढधन्विनः ॥ ६-११७-३७ (४४२५४)
दीप्यमानमिवाकाशे गाण्डीवं समदृश्यत ।
ते शरार्ता महाराज विप्रकीर्णमहाध्वजाः ॥ ६-११७-३८ (४४२५५)
नाभ्यवर्तन्त राजानः सहिता वानरध्वजम् ।
सध्वजा रथिनः पेतुर्हयारोहा हयैः सह ॥ ६-११७-३९ (४४२५६)
सगजाश्च गजारोहाः किरीटिशरताडिताः ।
ततोऽर्जुनभुजोत्सृष्टैरावृताऽऽसीद्वसुंधरा ॥ ६-११७-४० (४४२५७)
विद्रुतं दिक्षु सर्वासु शरैर्बलमदृश्यत ।
अथ पार्थो महाराज द्रावयित्वा वरूथिनीम् ॥ ६-११७-४१ (४४२५८)
दुःशासनाय सुबहून्प्रेषयामास सायकान् ।
ते तु भित्त्वा तव सुतं दुःशासनमयोमुखाः ॥ ६-११७-४२ (४४२५९)
धरणीं विविशुः सर्वे वल्मीकमिव पन्नगाः ।
हयांश्चास्य ततो जघ्ने सारथिं च न्यपातयत् ॥ ६-११७-४३ (४४२६०)
विविंशतिं च विंशत्या विरथीकृतवान्प्रभुः ।
आजघान भृशं चैव पञ्चभिर्नतपर्वभिः ॥ ६-११७-४४ (४४२६१)
कृपं विकर्णं शल्यं च विद्ध्वा बहुभिरायसैः ।
चकार विरथांश्चैव कौन्तेयः श्वेतवाहनः ॥ ६-११७-४५ (४४२६२)
एवं ते विरथाः सर्वे कृपः शल्यश्च मारिष ।
दुःशासनो विकर्णश्च तथैव च विविंशतिः ॥ ६-११७-४६ (४४२६३)
संप्राद्रवन्त समरे निर्जिताः सव्यसाचिना ।
पूर्वाह्णे भरतश्रेष्ठ पराजित्य महारथान् ॥ ६-११७-४७ (४४२६४)
प्रजज्वाल रणे पार्थो विधूम इव पावकः ।
तथैव शरवर्षेण भास्करो रश्मिवानिव ॥ ६-११७-४८ (४४२६५)
अन्यानपि महाराज तापयामास पार्थिवान् ।
पराङ्मुखीकृत्य तथा शरवर्षैर्महारथान् ॥ ६-११७-४९ (४४२६६)
प्रावर्तयत संग्रामे शोणितोदां महानदीम् ।
मध्येन कुरुसैन्यानां पाण्डवानां च भारत ॥ ६-११७-५० (४४२६७)
तस्मिन्नतिमहाभीमे राजन्वीरवरक्षये ।
भीष्मं प्रति पराक्रान्ताः पाण्डवाः सह सृञ्जयैः ॥ ६-११७-५१ (४४२६८)
ते पराक्रान्तमालोक्य युधि राजन्पितामहम् ।
न न्यवर्तन्त ते पुत्रा ब्रह्मलोकपुरस्कृताः ॥ ६-११७-५२ (४४२६९)
इच्छन्तो निधनं युद्धे स्वर्गलोकपरायणाः ।
पाण्डवानभ्यवर्तन्त तावका युद्धदुर्मदाः ॥ ६-११७-५३ (४४२७०)

पाण्डवाश्च महाराज स्मरन्तो विविधान्बहून् ।
क्लेशान्कृतान्सपुत्रेण त्वया पूर्वं नराधिप ॥ ६-११७-५४ (४४२७१)
भयं त्यक्त्वा रणे शूराः स्वर्गलोकपुरस्कृताः ।
तावकांस्तव पुत्रांश्च योधयन्ति स्म हृष्टवत् ॥ ६-११७-५५ (४४२७२)
गजाश्च रथसङ्घाश्च बहुधा रथिभिर्हताः ।
रथाश्च निहता नागैर्हयाश्चैव पदातिभिः ॥ ६-११७-५६ (४४२७३)
अन्तरा च्छिद्यमानानि शरीराणि शिरांसि च ।
निपेतुर्दिक्षु सर्वासु गजाश्वरथयोधिनाम् ॥ ६-११७-५७ (४४२७४)
छन्नमायोधनं राजन्कुण्डलाङ्गदधारिभिः ।
पतितैः पात्यमानैश्च राजपुत्रैर्महारथैः ॥ ६-११७-५८ (४४२७५)
रथनेमिनिकृत्तैश्च गजैश्चैवावपोथितैः ।
पादातश्चाप्यधावन्त साश्वाश्च हययोधिनः ॥ ६-११७-५९ (४४२७६)
गजाश्च रथयोधाश्च परिपेतुः समन्ततः ।
विकीर्णाश्च रथा भूमौ भग्नचक्रयुगध्वजाः ॥ ६-११७-६० (४४२७७)
तद्गजाश्वरथौघानां रुधिरेण समुक्षितम ।
छन्नमायोधनं रेजे रक्ताभ्रमिव शारदम् ॥ ६-११७-६१ (४४२७८)
श्वानः काकाश्च गृध्राश्च वृका गोमायुभिः सह ।
प्रणेर्दुर्भक्ष्यमासाद्य विकृताश्च सगद्द्विजाः ॥ ६-११७-६२ (४४२७९)
ववुर्बहुविधश्चैव दिक्षु सर्वासु मारुताः ।
दृश्यमानेषु रक्षःसु भूतेषु च नदत्सु च ॥ ६-११७-६३ (४४२८०)
काञ्चनानि च दामानि पताकाश्च महाधनाः ।
धूयमाना व्यदृश्यन्त सहसा मारुतेरिताः ॥ ६-११७-६४ (४४२८१)
श्वेतच्छत्रसहस्राणि सध्वजाश्च महारथाः ।
विकीर्णाः समदृश्यन्त शतशोऽथ सहस्रशः ॥ ६-११७-६५ (४४२८२)
सपताकाश्च मातङ्गा दिशो जग्मुः शरातुराः ।
क्षत्रियाश्च मनुष्येन्द्र गदाशक्तिधनुर्धराः ॥ ६-११७-६६ (४४२८३)
समन्ततश्च दृश्यन्ते पतिता धरणीतले
।६-११७-६७ब्ग्इषुभिस्ताड्यमानाश्च नाराचैश्च सहस्रशः।'
पेतुरार्तस्वरं कृत्वा तत्रतत्र महागजाः ॥ ६-११७-६७ (४४२८४)
सेनापतिस्तु समरे प्राह सेनां महारथः ।
अभ्यद्रवत गाङ्गेयं सैनिकाः किं कृतेन वः ॥ ६-११७-६८ (४४२८५)
सेनापतिवचः श्रुत्वा सोमकाः सह सृञ्जयैः ।
अभ्यद्रवन्त गाङ्गेयं शस्त्रवृष्ट्या समन्ततः ॥ ६-११७-६९ (४४२८६)
ततो भीष्मो महाराज दिव्यमस्त्रमुदीरयन् ।
अभ्यधावत कौन्तेयं मिषतां सर्वधन्विनाम् ॥ ६-११७-७० (४४२८७)
तं शिखण्डी रणे यान्तमभ्यद्रवत दंशितः ।

ततः समाहरद्भीष्मस्तदस्त्रं पावकोपमम् ॥ ६-११७-७१ (४४२८८)
एतस्मिन्नेव काले तु कौन्तेयः श्वेतवाहनः ।
निजघ्ने तावकं सैन्यं मोहयित्वा पितामहम् ॥ ॥ ६-११७-७२ (४४२८९)

इति श्रीमन्महाभारते भीष्मपर्वणि भीष्मवधपर्वणि
दशमदिवसयुद्धे सप्तदशाधिकशततमोऽध्यायः ॥
Mahabharata - Bhishma Parva - Chapter Footnotes

६-११७-५ विवक्षया विचारेण संशयेन वा ॥
६-११७-९ तीक्ष्णैस्तदा शरैः प्रैषीत् इति ङो पाठः ॥
६-११७-१४ उल्बणमुग्रम् ॥
६-११७-१८ भारतमहामात्रं भरतवंशश्रेष्ठम् ॥
६-११७-२८ शर्म सुखहेतुत्वात् ।वर्म रक्षाहेतुत्वात् ॥
६-११७-२९ समासितुं उपसर्पितुं नाशयितुं वा ।मर्त्यभूताः मर्त्यस्वरूपाः ॥
६-११७-३० तस्माद्द्रवत हे योधाः इति को पाठः ॥
६-११७-६३ भूतेषु प्रेतेषु ॥
६-११७-६४ महाधनाः बहुमूल्याः ॥

---

भिस्मपर्व-अध्यय११८
॥ श्रीः ॥
६.११८. अध्यायः ११८

Mahabharata - Bhishma Parva - Chapter Topics
भीष्मपराक्रमवर्णनम् ॥ १ ॥

Mahabharata - Bhishma Parva - Chapter Text

६-११८-० (४४२९०)
सञ्जय उवाच। ६-११८-०क्ष् (४२३८)
असंव्यूढेष्वनीकेषु भूयिष्ठमनुवर्तिषु ।
ब्रह्मलोकपराः सर्वे समपद्यन्त भारत ॥ ६-११८-१ (४४२९१)
च ह्यनीकमनीकेषु समसज्जत संकले ।
रथा न रथिभिः सार्धं पादाता न पदातिभिः ॥ ६-११८-२ (४४२९२)
अश्वा नाश्वैरयुध्यन्त गजा न गजयोधिभिः ।
उन्मत्तवन्महाराज युध्यन्ते तत्र भारत ॥ ६-११८-३ (४४२९३)
महान्व्यतिकरो रौद्रः सेनयोः समपद्यत ।

नरनागगणेष्वेवं विकीर्णेषु च सर्वशः ॥ ६-११८-४ (४४२९४)
क्षये तस्मिन्महारौद्रे निर्विशेषमजायत ।
ततः शल्यः कृपश्चैव चित्रसेनश्च भारत ॥ ६-११८-५ (४४२९५)
दुःशासनो विकर्णश्च रथानास्थाय भास्वरान् ।
पाण्डवानां रणे शूरा ध्वजिनीं समकम्पयन् ॥ ६-११८-६ (४४२९६)
सा वध्यमाना समरे पाण्डुसेना महात्मभिः ।
त्रातारं नाध्यगच्छद्वै मज्जमानेव नौर्जले ॥ ६-११८-७ (४४२९७)
यथा हि शैशिरः कालो गवां मर्माणि कृन्तति ।
तथा पाण्डुसुतानां वै भीष्मो मर्माणि कृन्तति ६-११८-८ (४४२९८)
तथैव तव सैन्यस्य पार्थेन च महात्मना ।
नवमेघप्रतीकाशाः पातिता बहुधा गजाः ॥ ६-११८-९ (४४२९९)
मृद्यमानाश्च दृश्यन्ते पार्थेन नरयूथपाः ।
इषुभिस्ताड्यमानाश्च नाराचैश्च सहस्रशः ॥ ६-११८-१० (४४३००)
पेतुरार्तस्वरं घोरं कृत्वा तत्र महागजाः ।
आनद्धाभरणैः कायैर्निहतानां महात्मनाम् ॥ ६-११८-११ (४४३०१)
छन्नमायोधनं रेजे शिरोभिश्च सकुण्डलैः । ६-११८-१२ब्तस्मिन्नेव
महाराज महावीरवरक्षये ॥ ६-११८-१२ (४४३०२)
भीष्मे च युधि विक्रान्ते पाण्डवे च धनञ्जये ।
ते पराक्रान्तमालोक्य राजन्युधि पितामहम् ॥ ६-११८-१३ (४४३०३)
अभ्यवर्तन्त ते पुत्राः सर्वे सैन्यपुरस्कृताः ।
इच्छन्तो निधनं युद्धे स्वर्गं कृत्वा परायणम् ॥ ६-११८-१४ (४४३०४)
पाण्डवानभ्यवर्तन्त तस्मिन्वीरवरक्षये ।
पाण्डवापि महाराज स्मरन्तो विविधान्बहून् ॥ ६-११८-१५ (४४३०५)
क्लेशान्कृतान्सपुत्रेण त्वया पूर्वं नराधिप ।
भयं त्यक्त्वा रणे शूरा ब्रह्मलोकाय तत्पराः ॥ ६-११८-१६ (४४३०६)
तावकांस्तव पुत्रांश्च योधयन्ति प्रहृष्टवत् ।
सेनापतिस्तु समरे प्राह सेनां महारथः ॥ ६-११८-१७ (४४३०७)
अभिद्रवत गाङ्गेयं सोमकाः सृञ्जयैः सह ।
सेनापतिवचः श्रुत्वा सोमकाः सृञ्जयाश्च ते ॥ ६-११८-१८ (४४३०८)
अभ्यद्रवन्त गाङ्गेयं शरवृष्ट्या समाहताः ।
वध्यमानस्ततो राजन्पिता शान्तनवस्तव ॥ ६-११८-१९ (४४३०९)
अमर्षवशमापन्नो योधयामास सृञ्जयान् ।
तस्य कीर्तिमतस्तात पुरा रामेण धीमता ॥ ६-११८-२० (४४३१०)
संप्रदत्ताऽस्त्रशिक्षा वै परानीकविनाशनी ।
स तां विद्यामधिष्ठाय कुर्वन्तपरबलक्षयम् ॥ ६-११८-२१ (४४३११)
अहन्यहनि पार्थानां वृद्धः कुरुपितामहः ।

भीष्मो दशसहस्राणि जघान परवीरहा ॥ ६-११८-२२ (४४३१२)
तस्मिंस्तु दशमे प्राप्ते दिवसे भरतर्षभ ।
एको भीष्मो हि मत्स्येषु पाञ्चालेषु च संयुगे ॥ ६-११८-२३ (४४३१३)
गजाश्वममितं हत्वा हत्वा सप्त महारथान् ।
हत्वा पञ्चसहस्राणि रथानां प्रतिपामहः ॥ ६-११८-२४ (४४३१४)
नराणां च महायुद्धे सहस्राणि चतुर्दश ।
दन्तिनां च सहस्राणि हयानामयुतं पुनः ॥ ६-११८-२५ (४४३१५)
शिक्षबलेन न्यहनत्पिता तव विशांपते ।
ततः सर्वमहीपानां क्षपयित्वा वरूथिनीम् ॥ ६-११८-२६ (४४३१६)
विराटस्य प्रियो भ्राता शतानीको निपातितः ।
शतानीकं च समरे हत्वा भीष्मः प्रतापवान् ॥ ६-११८-२७ (४४३१७)
सहस्राणि महाराज राज्ञां भल्लैरपातयत् ।
उद्विग्नाः समरे योधा विक्रोशन्ति धनञ्जयम् ॥ ६-११८-२८ (४४३१८)
ये च केचन पार्थानामभियाता धनञ्जयम् ।
राजानो भीष्ममासाद्य गतास्ते यमसादनम् ॥ ६-११८-२९ (४४३१९)
किरन्दश दिशो भीष्मः शरजालैः समन्ततः ।
अतीत्य सेनां पार्थानामवतस्थे चमूमुखे ॥ ६-११८-३० (४४३२०)
स कृत्वा सुमहत्कर्म तस्मिन्वै दशमेऽहनि ।
सेनयोरन्तरे तिष्ठन्प्रगृहीतशरासनः ॥ ६-११८-३१ (४४३२१)
न चैनं पार्थिवाः केचिच्छक्ता राजन्निरीक्षितुम् ।
मध्यं प्राप्तं यथा ग्रीष्मे तपन्तं भास्करं दिवि ॥ ६-११८-३२ (४४३२२)
यथा दैत्यचमूं शक्रस्तापयामास संयुगे ।
तथा भीष्मः पाण्डवेयांस्तापयामास भारत ॥ ६-११८-३३ (४४३२३)
तथा चैनं पराक्रान्तमालोक्य मधुसूदनः ।
उवाच देवकीपुत्रः प्रीयमाणो धनञ्जयम् ॥ ६-११८-३४ (४४३२४)
एष शान्तनवो भीष्मः सेनयोरन्तरे स्थितः ।
सन्निहत्य बलादेनं विजयस्ते भविष्यति ॥ ६-११८-३५ (४४३२५)
बलात्संस्तम्भयस्वैनं यत्रैषा भिद्यते चमूः ।
न हि भीष्मशरानन्यः सोढुमुत्सहते विभो ॥ ६-११८-३६ (४४३२६)
ततस्तस्मिन्क्षणे राजंश्चोदितो वानरध्वजः ।
सध्वजं सरथं साश्वं भीष्ममन्तर्दधे शरैः ॥ ६-११८-३७ (४४३२७)
स चापि कुरुमुख्यानामृषभः पाण्डवेरितान् ।
सरव्रतैः शरव्रातान्बहुधा विदुधाव तान् ॥ ६-११८-३८ (४४३२८)
ततः पाञ्चालराजश्च धृष्टकेतुश्च वीर्यवान् ।
पाण्डवो भीमसेनश्च धृष्टद्युम्नश्च पार्षतः ॥ ६-११८-३९ (४४३२९)
यमौ च चेकितानश्च केकयाः पञ्च चैव ह ।

सात्यकिश्च महाबाहुः सौभद्रोऽथ घटोत्कचः ॥ ६-११८-४० (४४३३०)
द्रौपदेयाः शिखण्डी च कुन्तिभोजश्च वीर्यवान् ।
विराटश्च महाराज पाण्डवेया महाबलाः ॥ ६-११८-४१ (४४३३१)
एते चान्ये च बहवः पीडिता भीष्मसायकैः ।
समुद्धृताः फल्गुनेन निमग्नाः शोकसागरे ॥ ६-११८-४२ (४४३३२)
ततः शिखण्डी वेगेन प्रगृह्य परमायुधम् ।
भीष्ममेवाभिदुद्राव रक्ष्यमाणः किरीटिना ॥ ६-११८-४३ (४४३३३)
ततोऽस्यानुचरान्हत्वा सर्वान्रणविभागवित् ।
भीष्ममेवाभिदुद्राव बीभत्सुरपराजितः ॥ ६-११८-४४ (४४३३४)
सात्यकिश्चेकितानश्च धृष्टद्युम्नश्च पार्षतः ।
विराटो द्रुपदश्चैव माद्रीपुत्रौ च पाण्डवौ ॥ ६-११८-४५ (४४३३५)
दुद्रुवुर्भीष्ममेवाजौ रक्षिता दृढधन्वना ।
अभिमन्युश्च समरे द्रौपद्याः पञ्च चात्मजाः ॥ ६-११८-४६ (४४३३६)
ददृशुः समरे भीष्मं समुद्यतमहायुधम् ।
ते सर्वे दृढधन्वानः संयुगेष्वपलायिनः ॥ ६-११८-४७ (४४३३७)
बहुधा भीष्ममानर्च्छुर्मार्गणैः क्षतमार्गणैः ।
विधूय तान्बाणगणान्ये मुक्ताः पार्थिवोत्तमैः ॥ ६-११८-४८ (४४३३८)
पाण्डवानामदीनात्मा व्यगाहत वरूथिनीम् ।
चक्रे शरविघातं च क्रीडन्निव पितामहः ॥ ६-११८-४९ (४४३३९)
नाभिसंधत्त पाञ्चाल्ये स्मयमानो मुहुर्मुहुः ।
स्त्रीत्वं तस्यानुसंस्मृत्य भीष्मो बाणाञ्शिखण्डिने ॥ ६-११८-५० (४४३४०)
जघान द्रुपदानीके रथान्सप्त महारथः ।
ततः किलकिलाशब्दः क्षणेन समभूत्तदा ॥ ६-११८-५१ (४४३४१)
मत्स्यपाञ्चालचेदीनां तमेकमभिधावताम् ।
ते नराश्वरथव्रातैर्मार्गणैश्च परंतप ॥ ६-११८-५२ (४४३४२)
तमेकं छादयामासुर्मेघा इव दिवाकरम् ।
भीष्मं भागीरथीपुत्रं प्रतपन्तं रणे रिपून् ॥ ६-११८-५३ (४४३४३)
ततस्तस्य च तेषां च युद्धे देवासुरोपमे ।
किरीटी भीष्ममानर्च्छ पुरस्कृत्य शिखण्डिनम् ॥ ॥ ६-११८-५४ (४४३४४)

इति श्रीमन्महाभारते भीष्मपर्वणि भीष्मवधपर्वणि
दशमदिवसयुद्धे अष्टादशाधिकशततमोऽध्यायः ॥

Mahabharata - Bhishma Parva - Chapter Footnotes

६-११८-१ अनिवर्तिषु इति झो पाठः ॥
६-११८-४ व्यतिकरः क्षोभः ॥

भिस्मपर्व-अध्यय११९
॥ श्रीः ॥
६.११९. अध्यायः ११९

Mahabharata - Bhishma Parva - Chapter Topics
भीष्मनिपातः ॥ १ ॥

Mahabharata - Bhishma Parva - Chapter Text

६-११९-० (४४३४५)
सञ्जय उवाच। ६-११९-०क्ष् (४२३९)
एवं ते पाण्डवाः सर्वे पुरस्कृत्य शिखण्डिनम् ।
विव्यधुः समरे भीष्मं परिवार्य समन्ततः ॥ ६-११९-१ (४४३४६)
शतघ्नीभिः सुघोराभिः परिघैश्च परश्वथैः ।
मुद्गरैर्मुसलैः प्रासैः क्षेपणीयैश्च सर्वशः ॥ ६-११९-२ (४४३४७)
शरैः कनकपुङ्खैश्च शक्तितोमरकम्पनैः ।
नाराचैर्वत्सदन्तैश्च भुशुण्डीभिश्च सर्वशः ॥ ६-११९-३ (४४३४८)
अताडयन्रणे भीष्मं सहिताः सर्वसृञ्जयाः ।
स विशीर्णतनुत्रामाः पीडितो बहुभिस्तदा ॥ ६-११९-४ (४४३४९)
न विव्यथे तदा भीष्मो भिद्यमानेषु मर्मसु ।
संदीप्तशरचापाग्निरस्त्रप्रसृतमारुतः ॥ ६-११९-५ (४४३५०)
नेमिनिर्ह्रादसंतापो महास्त्रोदयपावकः ।
चित्रचापमहाज्वालो वीरक्षयमहेन्धनः ॥ ६-११९-६ (४४३५१)
युगान्तागनिसमप्रख्यः परेषां समपद्यत ।
निवृत्य रथसङ्घानामन्तरेण विनिःसृतः ॥ ६-११९-७ (४४३५२)
दृश्यते स्म नेरन्द्राणां पुनर्मध्यगतश्चरन् ।
ततः पाञ्चालराजं च धृष्टकेतुमतीत्य च ॥ ६-११९-८ (४४३५३)
पाण्डवानीकिनीमध्यमाससाद विशांपते ।
ततः सात्यकिभीमौ च पाण्डवं च धनञ्जयम् ॥ ६-११९-९ (४४३५४)
द्रुपदं च विराटं च धृष्टद्युम्नं च पार्षतम् ।
भीमघोषैर्महावेगैर्मर्मावरणभेदिभिः ॥ ६-११९-१० (४४३५५)
षडेतान्निशितैर्भीष्मः प्रविव्याधोत्तकैः शरैः ।
तस्य ते निशितान्बाणात्सन्निवार्य महारथाः ॥ ६-११९-११ (४४३५६)
दशभिर्दशभिर्भीष्ममर्दयामासुरोजसा ।
शिखण्डी तु महाबाणान्यान्मुमोच महारथः ॥ ६-११९-१२ (४४३५७)

न चक्रुस्ते रुजं तस्य स्वर्मपुङ्खाः शिलाशिताः ।
ततः किरीटी संरब्धो भीष्ममेवाभ्यधावत ॥ ६-११९-१३ (४४३५८)
शिखण्डिनं पुरस्कृत्य धनुश्चास्य समाच्छिनत् ।
भीष्मस्य धनुषश्छेदं नामृष्यन्त महारथाः ॥ ६-११९-१४ (४४३५९)
द्रोणश्च कृतवर्मा च सैन्धवश्च जयद्रथः ।
भूरिश्रवाः शलः शल्यो भगदत्तस्तथैव च ॥ ६-११९-१५ (४४३६०)
सप्तैते परमक्रुद्धाः किरीटिनमभिद्रुताः ।
तत्र शस्त्राणि दिव्यानि दर्शयन्तो महारथाः ॥ ६-११९-१६ (४४३६१)
अभिपेतुर्भृशं क्रुद्धाश्चादयन्तश्च पाण्डवम् ।
तेषामापततां शब्दः शुश्रुवे फल्गुनं प्रति ॥ ६-११९-१७ (४४३६२)
उद्धूतानां यथा शब्दः समुद्राणां युगक्षये ।
घ्नत त्वरत गृह्णीत विद्ध्यध्वमवकर्तत ॥ ६-११९-१८ (४४३६३)
इत्यासीत्तुमुलः शब्दः फल्गुनस्य रथं प्रति ।
तं शब्दं तुमुलं श्रुत्वा पाण्डवानां महारथाः ॥ ६-११९-१९ (४४३६४)
अभ्यधावन्परीप्सन्तः फल्गुनं भरतर्षभ ।
सात्यकिर्भीमसेनश्च धृष्टद्युम्नश्च पार्षतः ॥ ६-११९-२० (४४३६५)
विराटद्रुपदौ चोभौ राक्षसश्च घटोत्कचः ।
अभिमन्युश्च संक्रुद्धः सप्तैते क्रोधमूर्च्छिताः ॥ ६-११९-२१ (४४३६६)
समभ्यधावंस्त्वरिताश्चित्रकार्मुकधारिणः ।
तेषां समभवद्युद्धं तुमुलं रोमहर्षणम् ॥ ६-११९-२२ (४४३६७)
संग्रमे भरतश्रेष्ठ देवानां दानवैरिव ।
शिखण्डी तु रणे श्रेष्ठो रक्ष्यमाणः किरीटिना ॥ ६-११९-२३ (४४३६८)
अविध्यद्दशभिर्भीषामं छिन्नधन्वानमाहवे ।
सारथिं दशभिश्चास्य ध्वजं चैकेन चिच्छिदे ॥ ६-११९-२४ (४४३६९)
सोऽन्यत्कार्मुकमादाय गाङ्गेयो वेगवत्तरम् ।
तदप्यस्य शितैर्बाणैस्त्रिभिश्चिच्छेद फल्गुनः ॥ ६-११९-२५ (४४३७०)
एवं स पाण्डवः क्रुद्ध आत्तमात्तं पुनः पुनः ।
धनुश्चिच्छेद भीष्मस्य सव्यसाची परंतपः ॥ ६-११९-२६ (४४३७१)
स च्छिन्नधन्वा संक्रुद्धाः सृक्किणी परिसंलिहन् ।
शक्तिं जग्राह तरसा गिरीणामपि दारणीम् ॥ ६-११९-२७ (४४३७२)
तां च चिक्षेप संक्रुद्धः फल्गुनस्य रथं प्रति ।
तामापतन्तीं संप्रेक्ष्य ज्वलन्तीमशनीमिव ॥ ६-११९-२८ (४४३७३)
समादत्त शितान्भल्लान्पञ्च पाण्डवनन्दनः ।
तस्य चिच्छेद तां शक्तिं पञ्चधा पञ्चभिः शरैः ॥ ६-११९-२९
(४४३७४)
संक्रुद्धो भरतश्रेष्ठ भीष्मवाहुप्रवेरिताम् ।

सा पपात तथा च्छिन्ना संक्रुद्धेन किरीटिना ॥ ६-११९-३० (४४३७५)
मेघबृन्दपरिभ्रष्टा विच्छिन्नेव शतह्रदा ।
छिन्नां तां शक्तिमालोक्य भीष्मः क्रोधसमन्वितः । ६-११९-३१ (४४३७६)
अचिन्तयद्रणे वीरो बुद्ध्या परपुरंजयः ।
शक्तोऽहं धनुषैकेन निहन्तुं सर्वपाण्डवान् ॥ ६-११९-३२ (४४३७७)
यद्येषां न भवेद्गोप्ता विष्वक्सेनो महाबलः ।
ग्अजय्यश्चैव सर्वेषां लोकानामिति मे मतिः ।'
कारणद्वयमास्थाय नाहं योत्स्यामि पाण्डवान् ॥ ६-११९-३३ (४४३७८)
अवध्यत्वाच्च पाण्डूनां स्त्रीभावाच्च शिखण्डिनः ।
पित्रा तुष्टेन मे पूर्वं यदा कालीमुदवहम् ॥ ६-११९-३४ (४४३७९)
स्वच्छन्दमरणं दत्तमवध्यत्वं रणे तथा ।
तस्मान्मृत्युमहं मन्ये प्राप्तकालमिवात्मनः ॥ ६-११९-३५ (४४३८०)
एवं ज्ञात्वा व्यवसितं भीष्मस्यामिततेजसः ।
ऋषयो वसवश्चैव वियत्स्था भीष्ममब्रुवन् ॥ ६-११९-३६ (४४३८१)
यत्ते व्यवसितं तात तदस्माकमपि प्रियम् ।
तत्कुरुष्व महाराज युद्धे बुद्धिं निवर्तय ॥ ६-११९-३७ (४४३८२)
अस्य वाक्यस्य निधने प्रादुरासीच्छिवोऽनिलः ।
अनुलोमः सुगन्धी च पृषतैश्च समन्वितः ॥ ६-११९-३८ (४४३८३)
देवदुन्दुभयश्चैव संप्रणेदुर्महास्वनाः ।
पपात पुष्पवृष्टिश्च भीष्मस्योपरि मारिष ॥ ६-११९-३९ (४४३८४)
न च ताः शुश्रुवे कश्चित्तेषां संवदतां गिरः ।
ऋते भीष्मं महाबाहुं मां चापि मुनितेजसा ॥ ६-११९-४० (४४३८५)
संभ्रमश्च महानासीत्त्रिदशानां विशांपते ।
पतिष्यति रथाद्भीष्मे सर्वलोकप्रिये तदा ॥ ६-११९-४१ (४४३८६)
इति देवगणानां च वाक्यं श्रुत्वा महातपाः ।
ततः शान्तनवो भीष्मो बीभत्सुं नाभ्यवर्तत ॥ ६-११९-४२ (४४३८७)
भिद्यमानः शितैर्बाणैः सर्वावरणभेदिभिः ।
शिखण्डी तु महाराज भरतानां पितामहम् ॥ ६-११९-४३ (४४३८८)
आजघानोरसि क्रुद्धो नवभिर्निशितैः शरैः ।
स तेनाभिहतः सङ्ख्ये भीष्मः कुरुपितामहः ॥ ६-११९-४४ (४४३८९)
नाकम्पत महाराज क्षितिकम्पे यथाऽचलः ।
ततः प्रहस्य बीभत्सुर्व्याक्षिपन्गाण्डिवं धनुः ॥ ६-११९-४५ (४४३९०)
गाङ्गेयं पञ्चविंशत्या क्षुद्रकाणां समार्पयत् ।
पुनः पुनः शतैरेनं त्वरमाणो धनञ्जयः ॥ ६-११९-४६ (४४३९१)
सर्वगात्रेषु संक्रुद्धस्तथा मर्मस्वताडयत् ।
एवमन्यैरपि भृशं विद्ध्यमानः सहस्रशः ॥ ६-११९-४७ (४४३९२)

तानप्याशु शरैर्भीष्मः प्रविव्याध महारथः ।
तैश्च मुक्ताञ्छरान्भीष्मो युधि सत्यपराक्रमः ॥ ६-११९-४८ (४४३९३)
निवारयामास शरैः समं सन्नतपर्वभिः ।
शिखण्डी तु रणे बाणान्यान्मुमोच महारथः ॥ ६-११९-४९ (४४३९४)
न चक्रुस्ते रुजं तस्य रुक्मपुङ्खाः शिलासिताः ।
ततः किरीटी संक्रुद्धो भीष्ममेवाभ्यवर्तत ॥ ६-११९-५० (४४३९५)
शिखण्डिनं पुरस्कृत्य धनुश्चास्य समाच्छिनत् ।
अथैनं नवभिर्विद्ध्वा ध्वजमेकेन चिच्छिदे ॥ ६-११९-५१ (४४३९६)
सारथिं विशिखैश्चास्य दशभिः समकम्पयत् ।
सोऽन्यत्कार्मुकमादाय गाङ्गेयो बलवत्तरम् ॥ ६-११९-५२ (४४३९७)
तदप्यस्य शितैर्भल्लैस्त्रिधा त्रिभिरघातयत् ।
निमेषार्धेन कौन्तेय आत्तमात्तं महारणे ॥ ६-११९-५३ (४४३९८)
एवमस्य धनूंष्याजौ चिच्छेद सुबहून्यथ ।
ततः शान्तनवो भीष्मो बीभत्सुं नात्यवर्तत ॥ ६-११९-५४ (४४३९९)
अथैनं पञ्चविंशत्या क्षुद्रकाणां समार्पयत् ।
सोऽतिविद्धो महेष्वासो दुःशासनमभाषत ॥ ६-११९-५५ (४४४००)
एष पार्थो रणे क्रुद्धः पाण्डवानां महारथः ।
शरैरनेकसाहस्रैर्मामेवाभ्यपतद्रणे ॥ ६-११९-५६ (४४४०१)
न चैष समरे शक्यो जेतुं वज्रभृता अपि ।
न चापि सहिता वीरा देवदानवराक्षसाः ॥ ६-११९-५७ (४४४०२)
मां चापि शक्ता निर्जेतुं किमु मर्त्या महारथाः
। ६-११९-५८ब्‌ऋतेऽर्जुनं सुसंक्रुद्धमेतत्सत्यं ब्रवीमि ते ॥'
६-११९-५८ (४४४०३)
एवं तयोः संवदतोः फल्गुनो निशितैः शरैः ।
शिखण्डिनं पुरस्कृत्य भीष्मं विव्याध संयुगे ॥ ६-११९-५९ (४४४०४)
ततो दुःशासनं भीष्मः स्मयमान इवाब्रवीत् ।
अर्दितो निशितैर्बाणैर्भृशं गाण्डीवधन्वना ॥ ६-११९-६० (४४४०५)
वज्राशनिसमस्पर्शाः सुपुङ्खाः सुप्रतेजनाः ।
सुमुक्ता अव्यवच्छिन्ना नेमे बाणाःशिखण्डिनः ॥ ६-११९-६१ (४४४०६)
निकृन्तमाना मर्माणि दृढावरणभेदिनः ।
सुसला इव मे घ्नन्ति नेमे बाणः शिखण्डिनः ॥ ६-११९-६२ (४४४०७)
वज्रदण्डसमस्पर्शा वज्रवेगदुरासदाः ।
मम प्राणानारुजन्ति नेमे बाणाः शिखण्डिनः ॥ ६-११९-६३ (४४४०८)
नाशयन्तीव मे प्राणान्यमदूता इवागताः ।
गदापरिघसंस्पर्शा नेमे बाणाः शिखण्डिनः ॥ ६-११९-६४ (४४४०९)
भुजगा इव संक्रुद्धा लेलिहाना विषोल्बणाः ।

समाविशन्ति मर्माणि नेमे बाणाः शिखण्डिनः ॥ ६-११९-६५ (४४४१०)
अर्जुनस्य इमे बाणा नेमे बाणाः शिखण्डिनः ।
कृन्तन्ति मम गात्राणि माघमांसे गवा इव ॥ ६-११९-६६ (४४४११)
सर्वे ह्यपि न मे दुःखं कुर्युरन्ये नराधिपाःक ।
वीरं गाण्डीवधन्वानमृते जिष्णुं कपिध्वजम् ॥ ६-११९-६७ (४४४१२)
इति ब्रुवञ्छान्तनवो दिधक्षुरिव पाण्डवम् ।
शक्तिं भीष्मः स पार्थाय ततश्चिक्षेप भारत ॥ ६-११९-६८ (४४४१३)
तामस्य विशिखैश्छित्त्वा त्रिधा त्रिभिरपातयत् ।
पश्यतां कुरुवीराणां सर्वेषां तत्र भारत ॥ ६-११९-६९ (४४४१४)
चर्माथादत्त गाङ्गेयो जातरूपपरिष्कृतम् ।
खड्गं चान्यतरप्रेप्सुर्मृत्योरग्रे जयाय वा ॥ ६-११९-७० (४४४१५)
तस्य तच्छतधा चर्म व्यधमत्सायकैस्तथा ।
रथादनवरूढस्य तदद्भुतमिवाभवत् ॥ ६-११९-७१ (४४४१६)
ततो युधिष्ठिरो राजा स्वान्यनीकान्यचोदयत् ।
अभिद्रवत गाङ्गेयं मा वोऽस्तु भयमण्वपि ॥ ६-११९-७२ (४४४१७)
अथ ते तोमरैः प्रासैर्बाणौघैश्च समन्ततः ।
पट्टसैश्च सुनिस्त्रिंशैर्नाराचैश्च तथा शितैः ॥ ६-११९-७३ (४४४१८)
वत्सदन्तैश्च भल्लैश्च तमेकमभिदुद्रुवुः ।
सिंहनादस्ततो घोरः पाण्डवानामभूत्तदा ॥ ६-११९-७४ (४४४१९)
तथैव तव पुत्राश्च नेदुर्भीष्मजयैषिणः ।
तमेकमभ्यरक्षन्त सिंहनादांश्च चक्रिरे ॥ ६-११९-७५ (४४४२०)
तत्रासीत्तुमुलं युद्धं तावकानां परैः सह ।
दशमेऽहनि राजेन्द्र भीष्मार्जुनसमागमे ॥ ६-११९-७६ (४४४२१)
आसीद्धोर इवावर्तो मुहूर्तमुदधेरिव ।
सैन्यानां युध्यमानानां निघ्नतामितरेतरम् ॥ ६-११९-७७ (४४४२२)
असौम्यरूपा पृथिवी शोणिताक्ताऽभवत्तदा ।
समं च विषमं चैव न प्राज्ञायत किंचन ॥ ६-११९-७८ (४४४२३)
योधानामयुतं हत्वा तस्मिन्स दशमेऽहनि ।
अतिष्ठदाहवे भीष्मो भिद्यमानेषु मर्मसु ॥ ६-११९-७९ (४४४२४)
ततः सेनामुखे तस्मिन्स्थितः पार्थो धनुर्धरः ।
मध्येन कुरुसैन्यानां द्रावयामास वाहिनीम् ॥ ६-११९-८० (४४४२५)
ग्तत्राद्भुतमपश्याम पाण्डवानां पराक्रमम् ।
द्रावयामासुरिषुभिः सर्वान्भीष्मपदानुगान् ॥' ६-११९-८१ (४४४२६)
वयं श्वेतहयाद्भीताः कुन्तीपुत्राद्धनञ्जयात् ।
पीड्यमानाः शितैः शस्त्रैः प्राद्रवाम रणे तदा ॥ ६-११९-८२ (४४४२७)
ग्पाण्डवैः पञ्चभिः सार्धं सात्यकेन च धन्विना ।

धृष्टद्युम्नसुखैः सर्वैः पाञ्चालैश्च समन्ततःक ॥ ६-११९-८३
(४४२८)
भिद्यमानाः शरैस्तीक्ष्णैः सर्वे कार्ष्णिपुरोगमैः ।
द्रोणद्रौणिकृतैः सार्धं सर्वे शल्यशलादयः ।
तावकाः समरे राजञ्जहुर्भीष्मं महामृधे ॥' ६-११९-८४ (४४२९)
सौवीराः कितवाः प्राच्याःप्रतीच्योदीच्यमालवाः ।
अभीषाहाः शूरसेनाः शिबयोऽथ वसातयः ॥ ६-११९-८५ (४४३०)
साल्वाश्रयास्त्रिगर्ताश्च अम्बष्ठाः केकयैः सह ।
द्वादशैते जनपदाः शरार्ता व्रणपीडिताः ।
संग्रामे प्रजहुर्भीष्मं युध्यमानाः किरीटिना ॥ ६-११९-८६ (४४३१)
ततस्तमेकं बहवः परिवार्य समन्ततः ।
परिकाल्य कुरून्सर्वाञ्शरवर्षैरवाकिरन् ॥ ६-११९-८७ (४४३२)
निपातयत गृह्णीत युध्यध्वमवकृन्तत ।
इत्यासीत्तुमुलः शब्दो राजन्भीष्मरथं प्रति ॥ ६-११९-८८ (४४३३)
निहत्य समरे राजञ्शतशोऽथ सहस्रशः ।
न तस्यासीदनिर्भिन्नं गात्रे द्व्यङ्गुलमन्तरम् ॥ ६-११९-८९ (४४३४)
एवंभूतस्तव पिता शरैर्विशकलीकृतः ।
शिताग्रैः फल्गुनेनाजौ प्राक्शिराः प्रापतद्रथात् ॥ ६-११९-९० (४४३५)
किंचिच्छेषे दिनकरे पुत्राणां तव पश्यताम् ।
हाहेति दिवि देवानां पार्थिवानां च भारत ॥ ६-११९-९१ (४४३६)
पतमाने रथाद्भीष्मे बभूव सुमहास्वनः ।
संपतन्तमभिप्रेक्ष्य महात्मानं पितामहम् ॥ ६-११९-९२ (४४३७)
सह भीष्मेण सर्वेषां प्रापतन्हृदयानि नः ।
स पपात महाबाहुर्वसुधामनुनादयन् ॥ ६-११९-९३ (४४३८)
इन्द्रध्वज इवोत्सृष्टः केतुः सर्वधनुष्मताम् ।
धरणीं न स पस्पर्श शरसङ्घैः समावृतः ॥ ६-११९-९४ (४४३९)
शलतल्पे महेष्वासं शयानं पुरुषर्षभम् ।
रथात्प्रपतितं चैनं दिव्यो भावः समाविशत् ॥ ६-११९-९५ (४४४०)
अभ्यवर्षच्च पर्जन्यः प्राकम्पत च मेदिनी ।
पतन्स ददृशे चापि दक्षिणेन दिवाकरम् ॥ ६-११९-९६ (४४४१)
संज्ञां चोपालभद्वीरः कालं संचिन्त्य भारत ।
अन्तरिक्षे च शुश्राव दिव्या वाचः समन्ततः ॥ ६-११९-९७ (४४४२)
कथं महात्मा गाङ्गेयः सर्वशस्त्रभृतां वरः ।
कालकर्ता नरव्याघ्रः संप्राप्ते दक्षिणायने ॥ ६-११९-९८ (४४४३)
स्थितोऽस्मीति च गाङ्गेयस्तच्छ्रुत्वा वाक्यमब्रवीत् ।
धारयिष्याम्यहं प्राणान्पतितेऽपि महीतले ॥ ६-११९-९९ (४४४४)

उत्तरायणमन्विच्छन्सुगतिप्रतिकाङ्क्षया ।
तस्य तन्मतमाज्ञाय गङ्गा हिमवतः सुताः ॥ ६-११९-१०० (४४४४५)
महर्षीन्हंसरूपेण प्रेषयामास तत्र वै ।
ततस्तं प्रति ते हंसास्त्वरिता मानसौकसः ॥ ६-११९-१०१ (४४४४६)
आजग्मुः सहिता द्रष्टुं भीष्मं कुरुपितामहम् ।
यत्र शेते नरश्रेष्ठः शरतल्पे पितामहः ॥ ६-११९-१०२ (४४४४७)
ते तु भीष्मं समासाद्य ऋषयो हंसरूपिणः ।
अपश्यञ्छरतल्पस्थं भीष्मं कुरुकुलोद्वहम् ॥ ६-११९-१०३ (४४४४८)
ते तं दृष्ट्वा महात्मानं कृत्वा चापि प्रदक्षिणम् ।
गाङ्गेयं भरतश्रेष्ठं दक्षिणेन च भास्करम् ॥ ६-११९-१०४ (४४४४९)
इतरेतरमामन्त्र्य प्राहुस्तत्र मनीषिणः ।
भीष्मः कथं महात्मा सन्संस्थाता दक्षिणायने ॥ ६-११९-१०५ (४४४५०)
इत्युक्त्वा प्रस्थिता हंसा दक्षिणामभितो दिशम् ।
संप्रेक्ष्य वै महाबुद्धिश्चिन्तयित्वा च भारत ॥ ६-११९-१०६ (४४४५१)
तानब्रवीच्छान्तनवो नाहं गन्ता कथंचन ।
दक्षिणावर्त आदित्ये एतन्मे मनसि स्थितम् ॥ ६-११९-१०७ (४४४५२)
गमिष्यामि स्वकं स्थानमासीद्यन्मे पुरातनम् ।
उदगायन आदित्ये हंसाः सत्यं ब्रवीमि वः ॥ ६-११९-१०८ (४४४५३)
धारयिष्याम्यहं प्राणानुत्तरायणकाङ्क्षया ।
प्राणानां च समुत्सर्ग ऐश्वर्यं नियतं मम ॥ ६-११९-१०९ (४४४५४)
तस्मात्प्राणान्धारयिष्ये मुमूर्षुरुदगायने ।
यश्च दत्तो वरो मह्यं पित्रा तेन महात्मना ॥ ६-११९-११० (४४४५५)
छन्दतस्ते भवेन्मृत्युरिति तत्सत्यमस्तु मे ।
धारयिष्ये ततः प्राणानुत्सर्गे नियते सति ॥ ६-११९-१११ (४४४५६)
इत्युक्त्वा तांस्तदा हंसान्स शेते शरतल्पगः ।
एवं कुरूणां पतिते शृङ्गे भीष्मे महौजसि ॥ ६-११९-११२ (४४४५७)
पाण्डवाः सृञ्जयाश्चैव सिंहनादं प्रचक्रिरे ।
तस्मिन्हते महासत्वे भरतानां पितामहे ॥ ६-११९-११३ (४४४५८)
न किंचित्प्रत्यपद्यन्त पुत्रास्ते भरतर्षभ ।
संमोहश्चैव तुमुलः कुरूणामभवत्तदा ॥ ६-११९-११४ (४४४५९)
कृपदुर्योधनमुखा निःश्वस्य रुरुदुस्ततः ।
विषादाच्च चिरं कालमतिष्ठन्विगतेन्द्रियाः ॥ ६-११९-११५ (४४४६०)
दध्युश्चैव महाराज न युद्धे दधिरे मनः ।
ऊरुग्राहगृहीताश्च नाभ्यधावन्त पाण्डवान् ॥ ६-११९-११६ (४४४६१)
अवध्ये शन्तनोः पुत्रे हते भीष्मे महौजसि ।
ग्दुःखार्तास्ते ततो राजन्कुरूणां पतयोऽभवन् ।'

अभाव सहसा राजन्कुरुराजस्य तर्कितः ॥ ६-११९-११७ (४४४६२)
हतप्रवीरास्तु वयं निकृत्ताश्च शितैः शरैः ।
कर्तव्यं नाभिजानीमो निर्जिताः सव्यसाचिना ॥ ६-११९-११८ (४४४६३)
पाणडवाश्च जयं लब्ध्वा परत्र च परां गतिम् ।
सर्वे दध्युर्महाशङ्खञ्शूराः परिघवाहवः ॥ ६-११९-११९ (४४४६४)
सोमकाश्च सपाञ्चालाः प्राहृष्यन्त जनेश्वर ।
ततस्तूर्यसहस्रेषु नदत्सु स महाबलः ॥ ६-११९-१२० (४४४६५)
आस्फोटयामास भृशं भीमसेनो ननाद च ।
सेनयोरुभयोश्चापि गाङ्गेये निहते विभौ ॥ ६-११९-१२१ (४४४६६)
संन्यस्य विराः शस्त्राणि प्राध्यायन्त समन्ततः ।
प्राक्रोशन्प्राद्रवंश्चान्ये जग्मुर्मोहं तथाऽपरे ॥ ६-११९-१२२ (४४४६७)
क्षत्रं चान्येऽभ्यनिन्दन्त भीष्मं चान्येऽभ्यपूजयन् ।
ऋषयः पितरश्चैव प्रशशसुर्महाव्रतम् ॥ ६-११९-१२३ (४४४६८)
भरतानां च ये पूर्वे ते चैनं प्रशशंसिरे ।
महोपनिषदं चैव योगमास्थाय विर्यवान् ॥ ६-११९-१२४ (४४४६९)
जपञ्शान्तनवो धीमान्कालाकाङ्क्षी स्थितोऽभवत् ॥ ॥ ६-११९-१२५ (४४४७०)

इति श्रीमन्महाभारते भीष्मपर्वणि भीष्मवधपर्वणि
दशमदिवसयुद्धे एकोनविंशत्यधिकशततमोऽध्यायः ॥
Mahabharata - Bhishma Parva - Chapter Footnotes

६-११९-२६ आत्तमात्तं गृहीतं गृहीतम् ॥
६-११९-३७ व्यवसितं निश्चितम् ॥
६-११९-३८ निधने समाप्तौ ॥
६-११९-४० मुनितेजसा व्यासप्रभावेन ॥
६-११९-६१ अव्यवच्छिन्नाः संतताःच ॥
६-११९-६६ माघमा कर्कटी प्रोक्ता तदपत्यं तु सेगवा ।यथा माघमां
कर्कटी मातरं सेगवास्तदपत्यानि कृन्तन्ति उदरस्थान्यपत्यानि
पृष्ठं विदार्य वहिर्नर्गच्छन्ति तद्वदित्यर्थः ।तेन
प्राणापहारिवेदनाजनकत्वं बामानां नेदं शिखण्डिबाणेषु संभवति
।तेषां मदङ्गे पुष्पतुल्यत्वात् ॥
६-११९-७० अग्रे तेषाम् ।मृत्योरिति चतुर्थ्यर्थे षष्ठी ।मृत्यवे
इत्यर्थः ॥
६-११९-८६ प्राणपीडिता इति को घो पाठः ॥
६-११९-९७ कालं मृत्युम् ॥
६-११९-१०४ दक्षिणेन दक्षिणमार्गस्थं भास्करं च दृष्ट्वेत्यन्वयः ॥

६-११९-१०५ संस्थाता मरिष्यति ॥
६-११९-१०९ ऐश्वर्यं स्वसामर्थ्यं स्वच्छन्दमृत्युत्वात् ॥

---

भिस्मपर्व-अध्यय१२०
॥ श्रीः ॥
६.१२०. अध्यायः १२०

Mahabharata - Bhishma Parva - Chapter Topics
कुरुपाण्डवैरन्यै राजभिश्च भीष्माभिवादनम् ॥ १ ॥
अर्जुनेन भीष्माय बाणमयोपधानसमर्पणम् ॥ २ ॥

Mahabharata - Bhishma Parva - Chapter Text

६-१२०-० (४४४७१)
धृतराष्ट्र उवाच। ६-१२०-०क्ष् (४२४०)
कथमासंस्तदा योधा हीना भीष्मेण सञ्जय ।
बलिना देवकल्पेन कौमारब्रह्मचारिणा ॥ ६-१२०-१ (४४४७२)
तदैव निहतान्मन्ये कुरूनन्यांश्च पाण्डवैः ।
न प्राहरद्यदा भीष्मो घृणित्वाद्द्रुपदात्मजम् ॥ ६-१२०-२ (४४४७३)
ततो दुःखतरं मन्ये किमन्यत्प्रभविष्यति ।
अद्यैव निहतं श्रुत्वा पितरं मम दुर्मतेः ॥ ६-१२०-३ (४४४७४)
अश्मसारमयं नूनं हृदयं मम सञ्जय ।
श्रुत्वा विनिहतं भीष्मं शतधा यन्न दीर्यते ॥ ६-१२०-४ (४४४७५)
यदन्यन्निहतेनाजौ भीष्मेण जयमिच्छता ।
चेष्टितं कुरुसिंहेन तन्मे कथय सुव्रत ॥ ६-१२०-५ (४४४७६)
पुनःपुनर्न मृष्यामि हतं देवव्रतं रणे ।
न हतो जामदग्न्येन दिव्यैरस्त्रैश्च यः पुरा ॥ ६-१२०-६ (४४४७७)
स हतो द्रौपदेयेन पाञ्चाल्येन शिखण्डिना । ६-१२०-७ (४४४७८)
सञ्जय उवाच ।
सायाह्ने न्यपतद्भूमौ धार्तराष्ट्रान्विषादयन् ॥ ६-१२०-७क्ष् (४२४१)
पाञ्चालान्हर्षयंश्चैव भीष्मः कुरुपितामहः ।
स शेते शरतल्पस्थो मेदिनीमस्पृशंस्तदा ॥ ६-१२०-८ (४४४७९)
भीष्मो रथात्प्रपतितः संछिन्नो बहुभिः शरैः ।
हाहेति तुमुलः शब्दो भूतानां समपद्यत ॥ ६-१२०-९ (४४४८०)
सीमावृक्षे निपतिते कुरूणां समितिंजये ।
सेनयोरुभयो राजन्क्षत्रियान्भयमाविशत् ॥ ६-१२०-१० (४४४८१)
भीष्मं शान्तनवं दृष्ट्वा विशीर्णकवचध्वजम् ।

कुरवः पर्यवर्तन्त पाण्डवाश्च विशांपते ॥ ६-१२०-११ (४४४८२)
खं तमःसंवृतमभूदासीद्भानुर्गतप्रभः ।
ररास पृथिवी चैव भीष्मे शान्तनवे हते ॥ ६-१२०-१२ (४४४८३)
अयं ब्रह्मविदां श्रेष्ठो गतिर्ब्रह्मविदां सदा ।
इत्यभाषन्त भूतानि शयानं पुरुषर्षभम् ॥ ६-१२०-१३ (४४४८४)
अयं पितरमाज्ञाय कामार्तं शन्तनुं पुरा ।
ऊर्ध्वरेतसमात्मानं चकार पुरुषर्षभः ॥ ६-१२०-१४ (४४४८५)
इति स्म शरतल्पस्थं भरतानां पितामहम् ।
ऋषयस्त्वभ्यभाषन्त सहिताः सिद्धचारणैः ॥ ६-१२०-१५ (४४४८६)
हते शान्तनवे भीष्मे भरतानां पितामहे ।
न किंचित्प्रत्यपद्यन्त पुत्रास्तव हि मारिष ॥ ६-१२०-१६ (४४४८७)
विषण्णवदनाश्चासन्हतश्रीकाश्च भारत ।
अतिष्ठन्व्रीडिताश्चैव ह्रिया युक्ता ह्यधोमुखाः ॥ ६-१२०-१७ (४४४८८)
पाण्डवाश्च जयं लब्ध्वा संग्रामशिरसि स्थिताः ।
सर्वे दध्युर्महाशङ्खान्हेमजालपरिष्कृतान् ॥ ६-१२०-१८ (४४४८९)
हर्षात्तूर्यसहस्रेषु वाद्यमानेषु चानघ ।
अपश्याम महाराज भीमसेनं महाबलम् ॥ ६-१२०-१९ (४४४९०)
विक्रीडमानं कौन्तेयं हर्षेण महता युतम् ।
निहत्य तरसा शत्रुं महाबलसमन्वितम् ॥ ६-१२०-२० (४४४९१)
संमोहश्चापि तुमुलः कुरूणामभवत्ततः ।
कर्णदुर्योधनौ चापि निःश्वसेतां मुहुर्मुहुः ॥ ६-१२०-२१ (४४४९२)
तथा निपातिते भीष्मे कौरवाणां पितामहे ।
हाहाभूतमभूत्सर्वं निर्मर्यादमवर्तत ॥ ६-१२०-२२ (४४४९३)
दृष्ट्वा च पतितं भीष्मं पुत्रो दुःशासनस्तव ।
उत्तमं जवमास्थाय द्रोणानीकमुपाद्रवत् ॥ ६-१२०-२३ (४४४९४)
भ्रात्रा प्रस्थापितो वीरः स्वेनानीकेन दंशितः ।
प्रययौ पुरुषव्याघ्रः स्वसैन्यमभिहर्षयन् ॥ ६-१२०-२४ (४४४९५)
तमायान्तमभिप्रेक्ष्य कुरवः पर्यवारयन् ।
दुःशासनं महाराज किमयं वक्ष्यतीति च ॥ ६-१२०-२५ (४४४९६)
ततो द्रोणाय निहतं भीष्ममाचष्ट कौरवः ।
द्रोणस्तदाऽप्रियं श्रुत्वा मुमोह भरतर्षभ ॥ ६-१२०-२६ (४४४९७)
स संज्ञामुपलभ्याशु भारद्वाजः प्रतापवान् ।
निवारयामास तदा स्वान्यनीकानि मारिष ॥ ६-१२०-२७ (४४४९८)
विनिवृत्तान्कुरून्दृष्ट्वा पाण्डवापि स्वसैनिकान् ।
रथैः शीघ्राश्वसंयुक्तैः समन्तात्पर्यवारयन् ॥ ६-१२०-२८ (४४४९९)
निवृत्तेषु च सैन्येषु पारम्पर्येण सर्वशः ।

निर्मुक्तकवचाः सर्वे भीष्ममीयुर्नराधिपाः ॥ ६-१२०-२९ (४४५००)
व्युपरम्य ततो युद्धाद्योधाः शतसहस्रशः ।
उपतस्थुर्महात्मानं प्रजापतिमिवामराः ॥ ६-१२०-३० (४४५०१)
ते तु भीष्मं समासाद्य शयानं भरतर्षभम् ।
अभिवाद्यावतिष्ठन्त पाण्डवाः कुरुभिः सह ॥ ६-१२०-३१ (४४५०२)
अथ पाण्डून्कुरूंश्चैव प्रणिपत्याग्रतः स्थितान् ।
अभ्यभाषत धर्मात्मा भीष्मः शान्तनवस्तदा ॥ ६-१२०-३२ (४४५०३)
स्वागतं वो महाभागाः स्वागतं वो महारथाः ।
तुष्यामि दर्शनाच्चाहं युष्माकममरोपमाः ॥ ६-१२०-३३ (४४५०४)
अभिनन्द्य स तानेवं शिरसा लम्बताऽब्रवीत् ।
ग्परपार्श्वे तव सुतान्स्थितानुद्वीक्ष्य भारत।'
शिरो मे लम्बतेऽत्यर्थमुपधानं प्रदीयताम् ॥ ६-१२०-३४ (४४५०५)
ततो नृपाः समाजह्रुस्तनूनि च मृदूनि च ।
उपधानानि मुख्यानि नैच्छत्तानि पितामहः ॥ ६-१२०-३५ (४४५०६)
अथाब्रवीन्नरव्याघ्रः प्रसहन्निव तान्नृपान् ।
नैतानि वीरशय्यासु युक्तरूपाणि पार्थिवाः ॥ ६-१२०-३६ (४४५०७)
ततो वीक्ष्य नरश्रेष्ठमभ्यभाषत पाण्डवम् ।
धनञ्जयं दीर्घबाहुं सर्वलोकमहारथम् ॥ ६-१२०-३७ (४४५०८)
धनञ्जय महाबाहो शिरो मे तात लम्बते ।
दीयतामुपधानं वै यद्युक्तमिह मन्यसे ॥ ६-१२०-३८ (४४५०९)
सञ्जय उवाच। ६-१२०-३९क्ष् (४२४२)
समारोप्य महच्चापमभिवाद्य पितामहम् ।
नेत्राभ्यामश्रुपूर्णाभ्यामिदं वचनमब्रवीत् ॥ ६-१२०-३९ (४४५१०)
आज्ञापय कुरुश्रेष्ठ सर्वशस्त्रभृतां वर ।
प्रेष्योऽहं तव दुर्धर्ष क्रियतां किं पितामह ॥ ६-१२०-४० (४४५११)
तमब्रवीच्छान्तनवः शिरो मे तात लम्बते
। ६-१२०-४१ब्ग्दीयतामुपधानं मे यद्युक्तमिह मन्यसे'
उपधानं कुरुश्रेष्ठ उपधेहि ममार्जुन ॥ ६-१२०-४१ (४४५१२)
वीरशय्यानुरूपं वै शीघ्रं वीर प्रयच्छ मे ।
त्वं हि पार्थ समर्थो वै श्रेष्ठः सर्वधनुष्मताम् ॥ ६-१२०-४२ (४४५१३)
क्षत्रधर्मस्य वेत्ता च बुद्धिसत्वगुणान्वितः ।
फल्गुनोऽपि तथेत्युक्त्वा व्यवसायं परंजयः ॥ ६-१२०-४३ (४४५१४)
गृह्यानुमन्त्र्य गाण्डीवं शरान्सन्नतपर्वणः ।
अनुमान्य महात्मानं भरतानां महारथम् ॥ ६-१२०-४४ (४४५१५)
त्रिभिस्तीक्ष्णैर्महावेगैरुदगृह्णाच्छिरः शरैः ।
अभिप्राये तु विदिते धर्मात्मा स्वयसाचिना ॥ ६-१२०-४५ (४४५१६)

अतुष्यद्भरतश्रेष्ठो भीष्मो धर्मार्थतत्त्ववित् ।
उपधानेन दत्तेन प्रत्यनन्दद्धनञ्जयम् ॥ ६-१२०-४६ (४४५१७)
प्राह सर्वान्समुद्वीक्ष्य भरतान्भारतं प्रति ।
कुन्तीपुत्रं युधां श्रेष्ठं सुहृदां प्रीतिवर्धनम् ॥ ६-१२०-४७ (४४५१८)
शयनस्यानुरूपं मे पाण्डवोपहितं त्वया ।
यद्यन्यथा प्रपद्येथाः शपेयं त्वामहं पुरा ॥ ६-१२०-४८ (४४५१९)
एवमेव महाबाहो धर्मेषु परितिष्ठता ।
स्वप्तव्यं क्षत्रियेणाजौ शरतल्पगतेन वै ॥ ६-१२०-४९ (४४५२०)
एवमुक्त्वा तु बीभत्सुं सर्वांस्तानब्रवीद्वचः ।
राज्ञश्च राजपुत्रांश्च पाण्डवैरभिसंवृतान् ॥ ६-१२०-५० (४४५२१)
पश्यध्वमुपधानं मे पाणडवेनाभिसन्धितम् ।
शयेयमस्यां शय्यायां यावदावर्तनं रवेः ॥ ६-१२०-५१ (४४५२२)
ये तदा धारयिष्यन्ति ते च प्रेक्ष्यन्ति मां नृपाः ।
दिशं वैश्रवणाक्रान्तां यदा गन्ता दिवाकरः ॥ ६-१२०-५२ (४४५२३)
नूनं सप्ताश्वयुक्तेन रथेनोत्तमतेजसा ।
रक्ष्येऽहं वै मम प्राणान्सुहृदः सुप्रियानिव ॥ ६-१२०-५३ (४४५२४)
परिखाः खन्यतामत्र ममावसदने नृपाः ।
उपासिष्ये विवस्वन्तमेवं शरशताचितः ।
उपारमध्वं संग्रामाद्वैरमुत्सृज्य पार्थिवाः ॥ ६-१२०-५४ (४४५२५)
सञ्जय उवाच। ६-१२०-५५क्ष् (४२४३)
उपातिष्ठन्नथो वैद्याः शल्योद्धरणकोविदाः ।
सर्वोपकरणैर्युक्ताः कुशलैः साधुशिक्षिताः ॥ ६-१२०-५५ (४४५२६)
तान्दृष्ट्वा जाह्नवीपुत्रः प्रोवाच तनयं तव ।
दत्तदेया विसृज्यन्तां पूजयित्वा चिकित्सकाः ॥ ६-१२०-५६ (४४५२७)
एवंगते मयेदानीं वैद्यैः कार्यमिहास्ति किम् ।
क्षत्रधर्मे प्रशस्तां हि प्राप्तोऽस्मि परमां गतिम् ॥ ६-१२०-५७ (४४५२८)
नैष धर्मो महीपालाः शरतल्पगतस्य मे ।
एभिरेव शरैश्चाहं दग्धव्योऽग्नौ नराधिपाः ॥ ६-१२०-५८ (४४५२९)
तच्छ्रुत्वा वचनं तस्य पुत्रो दुर्योधनस्तव ।
वैद्यान्विसर्जयामास पूजयित्वा यथार्हतः ॥ ६-१२०-५९ (४४५३०)
ततस्ते विस्मयं जग्मुर्नानाजनपदेश्वराः ।
स्थितिं धर्मे परां दृष्ट्वा भीष्मस्यामिततेजसः ॥ ६-१२०-६० (४४५३१)
उपधानं ततो दत्त्वा पितुस्ते मनुजेश्वराः ।
सहिताः पाण्डवाः सर्वे कुरवश्च महारथाः ॥ ६-१२०-६१ (४४५३२)
उपगम्य महात्मानं शयानं शयने शुभे ॥ ६-१२०-६२ (४४५३३)
तेऽभिवाद्य ततो भीष्मं कृत्वा च त्रिःप्रदक्षिणम् ।

विधाय रक्षां भीष्मस्य सर्व एव समन्ततः ॥ ६-१२०-६३ (४४५३४)
वीराः स्वशिबिराण्येव ध्यायन्तः परमातुराः ।
निवेशायाभ्युपागच्छन्सायाह्ने रुधिरोक्षिताः ॥ ६-१२०-६४ (४४५३५)
निविष्टान्पाण्डवांश्चैव प्रीयमाणान्महारथान् ।
भीष्मस्य पतनं दृष्ट्वा उपगम्य महाबलः ॥ ६-१२०-६५ (४४५३६)
उवाच माधवः काले धर्मपुत्रं युधिष्ठिरम् ।
दिष्ट्या जयसि कौरव्य दिष्ट्या भीष्मो निपातितः ॥ ६-१२०-६६ (४४५३७)
अवध्यो मानुषैरेव सत्यसन्धो महारथः ।
अथवा दैवतैः सार्धं सर्वशास्त्रस्य पारगः ॥ ६-१२०-६७ (४४५३८)
त्वां तु चक्षुर्हणं प्राप्य दग्धो घोरेण चक्षुष । ६-१२०-६८ (४४५३९)
सञ्जय उवाच ।
एवमुक्तो धर्मराजः प्रत्युवाच जनार्दनम् ॥ ६-१२०-६८क्ष् (४२४४)
तव प्रसादाद्विजयः क्रोधात्तव पराजयः ।
त्वं हि नः शरणं कृष्ण भक्तानामभयंकरः ॥ ६-१२०-६९ (४४५४०)
अनाश्चर्यो जयस्तेषां येषां त्वमसि केशव ।
रक्षिता समरे नित्यं नित्यं चापि हिते रतः ॥ ६-१२०-७० (४४५४१)
सर्वथा त्वां समासाद्य नाश्चर्यमिति मे मतिः। ६-१२०-७१ (४४५४२)
सञ्जय उवाच ।
एवमुक्तः प्रत्युवाच स्मयमानो जनार्दनः ।
तवैवैतद्युक्तरूपं वचनं पार्थिवोत्तम ॥ ॥ ६-१२०-७१क्ष् (४२४५)

इति श्रीमन्महाभारते भीष्मपर्वणि भीष्मवधपर्वणि दशमदिवसे
विंशत्यधिकशततमोऽध्यायः ॥

Mahabharata - Bhishma Parva - Chapter Footnotes

६-१२०-११ पर्यवर्तन्त परिवृतवन्तः ॥
६-१२०-१७ व्रीडिताः व्रीडावन्तः । व्रीडा चान्यतः। ह्रीश्चाकार्यकरणात् ॥
६-१२०-२९ पारम्पर्येण क्रमेण ॥
६-१२०-३४ उपधानं उपबर्हम् ॥
६-१२०-३८ इह वीरशय्यायाम् ॥
६-१२०-४३ व्यवसायमुचितोद्योगम् ॥
६-१२०-४५ अन्वगृह्णात् अवतष्टम्भे ॥
६-१२०-४८ उपहितं उपधानीयं दत्तम् ॥
६-१२०-५३ विमोक्ष्येऽहं तदा प्राणान् इति झो पाठः ॥
६-१२०-५४ ममावसदने मन्निवासस्थाने ॥
६-१२०-६८ चक्षुषा हन्तीति तथा तम् । दृष्टिमात्रेण हननक्षमम् ॥

॥ श्रीः ॥
६.१२१. अध्यायः १२१

Mahabharata - Bhishma Parva - Chapter Topics
तृषार्तेन भीष्मेण पानीययाचनम् ॥ १ ॥
राजभिः कलशेनानीते जले भीष्मेण तन्निन्दनपूर्वकमर्जुनंप्रति याचनम् ॥ २ ॥
अर्जुनेन पर्यन्यास्त्रेण भूमिंभित्त्वोत्थापितसलिलधारया भीष्मस्य तृष्णाशमनम् ॥ ३ ॥
भीष्मेण दुर्योधनंप्रति अर्जुनप्रशंसनपूर्वकं पाण्डवैः सह शमोपदेशः ॥ ४ ॥

Mahabharata - Bhishma Parva - Chapter Text

६-१२१-० (४४५४३)
सञ्जय उवाच। ६-१२१-०क्ष् (४२४६)
व्युष्टायां तु महाराज शर्वर्यां सर्वपार्थिवाः ।
पाण्डवा धार्तराष्ट्राश्च उपातिष्ठन्पितामहम् ॥ ६-१२१-१ (४४५४४)
तं वीरशयने वीरं शयानं कुरुसत्तम ।
अभिवाद्योपतस्थुर्वै क्षत्रियाः क्षत्रियर्षभम् ॥ ६-१२१-२ (४४५४५)
कन्याश्चन्दनचूर्णैश्च लाजैर्माल्यैश्च सर्वशः ।
अवाकिरञ्छान्तनवं तत्र गत्वा सहस्रशः ॥ ६-१२१-३ (४४५४६)
स्त्रियो वृद्धास्तथा बालाः प्रेक्षकाश्च पृथग्जनाः ।
समभ्ययुः शान्तनवं भूतानीव तमोनुदम् ॥ ६-१२१-४ (४४५४७)
तूर्याणि शतसङ्ख्यानि तथैव नटनर्तकाः ।
शिल्पिनश्च तथाऽऽजग्मुः कुरुवृद्धं पितामहम् ॥ ६-१२१-५ (४४५४८)
उपागम्य च राजेन्द्र सन्नहान्विप्रमुच्य ते ।
आयुधानि च निक्षिप्य सहिताः कुरुपाण्डवाः ॥ ६-१२१-६ (४४५४९)
अन्वासन्त दुराधर्षं देवव्रतमरिंदमम् ।
अन्योन्यं प्रीतिमन्तस्ते यथापूर्वं यथावयः ॥ ६-१२१-७ (४४५५०)
सा पार्थिवशताकीर्णा समितिर्भीष्मशोभिता ।
शुशुभे भारती दीप्ता दिवीवादित्यमण्डलम् ॥ ६-१२१-८ (४४५५१)
विबभौ च नृपाणां सा गङ्गासुतमुपासताम् ।
देवानामिव देवेशं पितामहमुपासताम् ॥ ६-१२१-९ (४४५५२)

भीष्मस्तु वेदनां धैर्यान्निगृह्य भरतर्षभ ।
अभितप्तः शरैश्चैव नातिहृष्टमनाऽब्रवीत् ॥ ६-१२१-१० (४४५५३)
शराभितप्तकायो हि शस्त्रसंपातमूर्च्छितः ।
पानीयमित संप्रेक्ष्य राज्ञस्तान्प्रत्यभाषत ॥ ६-१२१-११ (४४५५४)
ततस्ते क्षत्रिया राजन्नुपाजह्रुः समन्ततः ।
भक्ष्यानुच्चावचान्राजन्वारिकुम्भांश्च शीतलान् ॥ ६-१२१-१२ (४४५५५)
उपानीतं तु पानीयं दृष्ट्वा शान्तनवोऽब्रवीत् ।
न मेऽद्य सेवितुं योग्या भोगाः केवलमानुषाः ॥ ६-१२१-१३ (४४५५६)
अपक्रान्तो मनुष्येभ्यः शरशय्यां गतो ह्यहम् ।
प्रतीक्षमाणस्तिष्ठामि निवृत्तिं शशिसूर्ययोः ॥ ६-१२१-१४ (४४५५७)
ग सञ्जय उवाच। ६-१२१-१५क्ष् (४२४७)
एवमुक्त्वा तदोवाच भीष्मः शरशतैश्चितः ।
पयः पास्यामि गोपाला गोमयं न तु गोमयम् ।
गोपयेनाग्निवर्णेन गोमयं न तु गोमयम् ॥' ६-१२१-१५ (४४५५८)
एवमुक्त्वा शान्तनवो निन्दन्वाक्येन पार्थिवान् ।
अर्जुनं द्रष्टुमिच्छामीत्यभ्यभाषत भारत ॥ ६-१२१-१६ (४४५५९)
अथोपेत्य महाबाहुरभिवाद्य पितामहम् ।
अतिष्ठत्प्राञ्जलिः प्रह्वः किं करोमीति चाब्रवीत् ॥ ६-१२१-१७ (४४५६०)
तं दृष्ट्वा पाण्डवं राजन्नभिवाद्याग्रतः स्थितम् ।
अभ्यभाषत धर्मात्मा भीष्मः प्रीतो धनंजयम् ॥ ६-१२१-१८ (४४५६१)
दह्यतीव शरीरं मे संवृतस्य तवेषुभिः ।
मर्माणि परिदूयन्ते मुखं च परिशुष्यति ॥ ६-१२१-१९ (४४५६२)
वेदनार्तशरीरस्य प्रयच्छापो ममार्जुन ।
त्वं हि शक्तो महेष्वास दातुमापो यथाविधि ॥ ६-१२१-२० (४४५६३)
सञ्जय उवाच। ६-१२१-२१क्ष् (४२४८)
अर्जुनस्तु तथेत्युक्त्वा रथमारुह्य वीर्यवान् ।
अधिज्यं बलवत्कृत्वा गाण्डीवं व्याक्षिपद्धनुः ॥ ६-१२१-२१ (४४५६४)
तस्य ज्यातलनिर्घोषं विस्फूर्जितमिवाशनेः ।
वित्रेसुः सर्वभूतानि सर्वे श्रुत्वा च पार्थिवाः ॥ ६-१२१-२२ (४४५६५)
ततः प्रदक्षिणं कृत्वा रथेन रथिनां वरः ।
शयानं भरतश्रेष्ठं सर्वशस्त्रभृतां वरम् ॥ ६-१२१-२३ (४४५६६)
संधाय च शरं दीप्तमभिमन्त्र्य स पाण्डवः ।
पर्जन्यास्त्रेण संयोज्य सर्वलोकस्य पश्यतः ॥ ६-१२१-२४ (४४५६७)
अविध्यत्पृथिवीं पार्थः पार्श्वे भीष्मस्य दक्षिणे ।
उत्पपात ततो धारा वारिणो विमला शुभा ॥ ६-१२१-२५ (४४५६८)
शीतस्यामृतकल्पस्य दिव्यगन्धरसस्य च ।

अतर्पयत्ततः पार्थः शीतया जलधारया ॥ ६-१२१-२६ (४४५६९)
भीष्मं कुरूणामृषभं दिव्यं दिव्यपराक्रमम् ।
कर्मणा तेन पार्थस्य शक्रस्येव विकुर्वतः ॥ ६-१२१-२७ (४४५७०)
विस्मयं परमं जग्मुस्ततस्ते वसुधाधिपाः ।
तत्कर्म प्रेक्ष्य बीभत्सोरतिमानुषविक्रमम् ॥ ६-१२१-२८ (४४५७१)
संप्रावेपन्त कुरवो गावः शीतार्दिता इव ।
विस्मयाच्चोत्तरीयाणि व्याविध्यन्सर्वतो नृपाः ॥ ६-१२१-२९ (४४५७२)
शङ्खदुन्दुभिनिर्घोषस्तुमुलः सर्वतोऽभवत् ।
तृप्तः शान्तनवश्चापि राजन्बीभत्सुमब्रवीत् ॥ ६-१२१-३० (४४५७३)
सर्वपार्थिववीराणां सन्निधौ पूजयन्निव ।
नैतच्चित्रं महाबाहो त्वयि कौरवनन्दन ॥ ६-१२१-३१ (४४५७४)
कथितो नारदेनासि पूर्वर्षिरमितद्युते ।
वासुदेवसहायस्त्वं महत्कर्म करिष्यसि ॥ ६-१२१-३२ (४४५७५)
यन्नोत्सहति देवेन्द्रः सह देवैरपि ध्रुवम् ।
विदुस्त्वां निधनं पार्थ सर्वक्षत्रस्य तद्विदः ॥ ६-१२१-३३ (४४५७६)
धनुर्धराणामेकस्त्वं पृथिव्यां प्रवरो नृषु ॥ ६-१२१-३४ (४४५७७)
मनुष्या जगति श्रेष्ठाः पक्षिणां पतगेश्वरः ।
सरितं सागरः श्रेष्ठो गौर्वरिष्ठा चतुष्पदाम् ॥ ६-१२१-३५ (४४५७८)
आदित्यस्तेजसां श्रेष्ठो गिरीणां हिमवान्वरः ।
जातीनां ब्राह्मणः श्रेष्ठः श्रेष्ठस्त्वमसि धन्विनां ॥ ६-१२१-३६ (४४५७९)
न वै श्रुतं धार्तराष्ट्रेण वाक्यं
मयोच्यमानं विदुरेण चैव ।
द्रोणेन रामेण जनार्दनेन
मुहुर्मुहुः सञ्जयेनापि चोक्तम् ॥ ६-१२१-३७ (४४५८०)
परीतबुद्धिर्हि विसंज्ञकल्पो
दुर्योधनो न च तच्छ्रद्दधाति ।
स शेष्यते वै निहतश्चिराय
शास्त्रातिगो भीमबलाभिभूतः ॥ ६-१२१-३८ (४४५८१)
सञ्जय उवाच। ६-१२१-३९क्ष् (४२४९)
एतच्छ्रुत्वा तद्वचः कौरवेन्द्रो
दुर्योधनो दीनमना बभूव ।
तमब्रविच्छान्तनवोऽभिवीक्ष्य
निबोध राजन्भव वीतमन्युः ॥ ६-१२१-३९ (४४५८२)
दृष्टं दुर्योधनैतत्ते यथा पार्थेन धीमता ।
जलस्य धारा जनिता शीतस्यामृतगन्धिनः ॥ ६-१२१-४० (४४५८३)
एतस्य कर्ता लोकेऽस्मिन्नान्यः कश्चन विद्यते ।

आग्नेयं वारुणं सौम्यं वायव्यमथ वैष्णवम् ॥ ६-१२१-४१ (४४५८४)
ऐन्द्रं पाशुपतं ब्रह्मं पारमेष्ठ्यं प्रजापतेः ।
धातुस्त्वष्टुश्च सवितुर्वैवस्वतमथापि वा ॥ ६-१२१-४२ (४४५८५)
सर्वस्मिन्मानुषे लोके वेत्त्येको हि धनञ्जयः ।
कृष्णो वा देवकीपुत्रो नान्यो वेदेह कश्चन ॥ ६-१२१-४३ (४४५८६)
अशक्यः पाण्डवस्तात युद्धे जेतुं कथंचन ।
अमानुषाणि कर्माणि यस्यैतानि महात्मनः ॥ ६-१२१-४४ (४४५८७)
तेन सत्ववता सङ्ख्ये शूरेणाहवशोभिना ।
जिष्णुना समरे राजन्संधिर्भवतु मा चिरम् ॥ ६-१२१-४५ (४४५८८)
यावत्कृष्णो महाबाहुः स्वाधीनः कुरुसत्तम ।
तावत्पार्थेन शूरेण संधिस्ते तात युज्यताम् ॥ ६-१२१-४६ (४४५८९)
यावन्न ते चमूः सर्वाः शरैः सन्नतपर्वभिः ।
नाशयत्यर्जुनस्तावत्संधिस्ते तात युज्यताम् ॥ ६-१२१-४७ (४४५९०)
यावत्तिष्ठन्ति समरे हतशेषाः सहोदराः ।
नृपाश्च बहवो राजंस्तावत्संधिः प्रयुज्यताम् ॥ ६-१२१-४८ (४४५९१)
न निर्दहति ते यावत्क्रोधदीप्तेक्षणश्चमूम् ।
युधिष्ठिरो रणे तावत्संधिस्ते तात युज्यताम् ॥ ६-१२१-४९ (४४५९२)
नकुलः सहदेवश्च भीमसेनश्च पाण्डवः ।
यावच्चमूं महाराज नाशयन्ति न सर्वशः ॥ ६-१२१-५० (४४५९३)
तावत्ते पाण्डवैर्वीरैः सौहार्दं मम रोचते ।
युद्धं मदन्तमेवास्तु तात संशाम्य पाण्डवैः ॥ ६-१२१-५१ (४४५९४)
एतत्ते रोचतां वाक्यं यदुक्तोऽसि मयाऽनघ ।
एतत्क्षममहं मन्ये तव चैव कुलस्य च ॥ ६-१२१-५२ (४४५९५)
त्यक्त्वा मन्युं व्युपशाम्यस्व पार्थैः
पर्याप्तमेतद्यत्कृतं फल्गुनेन ।
भीष्मस्यान्तादस्तु वः सौहृदं च
जीवन्तु शेषाः साधु राजन्प्रसीद ॥ ६-१२१-५३ (४४५९६)
राज्यस्यार्दं दीयतां पाण्डवाना-
मिन्द्रप्रस्थं धरमराजोऽभियातु ।
मा मित्रध्रुक्पार्थिवानां जघन्यः
पापां कीर्तिं प्राप्स्यसे कौरवेन्द्र ॥ ६-१२१-५४ (४४५९७)
ममावसानाच्छान्तिरस्तु प्रजानां
संगच्छन्तां पाण्डवाः प्रीतिमन्तः ।
पिता पुत्रं मातुलं भागिनेयो
भ्राता चैव भ्रातरं प्रैतु राजन् ॥ ६-१२१-५५ (४४५९८)
न चेदेवं प्राप्तकालं वचो मे

मोहाविष्टः प्रतिपत्स्यस्यबुद्ध्या ।
तप्स्यस्यन्ते एतदन्ताः स्थ सर्वे
सत्यामेतां भारतीमीरयामि ॥ ६-१२१-५६ (४४५९९)
सञ्जय उवाच। ६-१२१-५७क्ष् (४२५०)
एतद्वाक्यं सौहृदादापगेयो
मध्ये राज्ञां भारतं श्रावयित्वा ।
तूष्णीमासीच्छल्यसंतप्तमर्मा
योज्यात्मानं वेदनां संनियम्य ॥ ६-१२१-५७ (४४६००)
धर्मार्थसहितं वाक्यं श्रुत्वा हितमनामयम् ।
नारोचयत पुत्रस्ते मुमूर्षुरिव भेषजम् ॥ ॥ ६-१२१-५८ (४४६०१)

इति श्रीमन्महाभारते भीष्मपर्वणि भीष्मवधपर्वणि
एकविंशत्यधिकशततमोऽध्यायः ।
Mahabharata - Bhishma Parva - Chapter Footnotes

६-१२१-४ पृधग्जनाः प्राकृता जनाः ।भूतानि प्राणिनो गन्धर्वादीनि
वा। तमोनुदं सूर्यम् ॥
६-१२१-१९ परिदूयन्ते परितप्यन्ते ॥
६-१२१-२७ विकुर्वतो विशेषेण कुर्वतः ॥
६-१२१-२९ व्याविध्यन्भ्रामितवन्तः ॥
६-१२१-३३ निधनं निधनहेतुः ।तद्विदो देवरहस्यज्ञाः ॥
६-१२१-३५ जगति भूलोके ॥
६-१२१-५२ क्षेममिति पाठे हितं ॥
६-१२१-५३ फल्गुनेन यत्कृतं एतदेतावदेव पर्याप्तमस्तु
।चशब्दादेतावतां भ्रातॄणामन्तादपीति ॥
६-१२१-५७ योज्ययोगधारणायुक्तं कृत्वा ॥
६-१२१-५८ धर्मार्थेति श्लोकः झो पुस्त एवास्ति ॥

---

भिस्मपर्व-अध्यय१२२
॥ श्रीः ॥
६.१२२. अध्यायः १२२

Mahabharata - Bhishma Parva - Chapter Topics
अपगतेषु राजसु कर्णेन रसहि भीष्ममेत्य तदभिवादनम् ॥ १ ॥
भीष्मेण कर्णं प्रति तस्य कुन्तीसुतत्वोक्त्या पाण्डवैः सह
संगमचोदना ॥ २ ॥
कर्णेन सयुक्तिकं पाण्डवैः संगमस्य दुष्करत्वमभिधाय

भीष्मक्षमापनपूर्वकं स्वावासगमनम् ॥ ३ ॥

Mahabharata - Bhishma Parva - Chapter Text

६-१२२-० (४४६०२)
सञ्जय उवाच। ६-१२२-०क्ष् (४२५१)
ततस्ते पार्थिवाः सर्वे जग्मुः स्वानालयान्पुनः ।
तूर्ष्णींभूते महाराज भीष्मे शन्तनुनन्दने ॥ ६-१२२-१ (४४६०३)
श्रुत्वा तु निहतं भीष्मं राधेयः पुरुषर्षभः ।
ईषदागतसंत्रासस्त्वरयोपजगाम ह ॥ ६-१२२-२ (४४६०४)
स ददर्श महात्मानं शरतल्पगतं तदा ।
जन्मशय्यागतं वीरं कार्तिकेयमिव प्रभुम् ॥ ६-१२२-३ (४४६०५)
निमीलिताक्षं तं वीरं साश्रुकण्ठस्तदा वृषा ।
अभ्येत्य पादयोस्तस्य निपपात महाद्युतिः ॥ ६-१२२-४ (४४६०६)
राधेयोऽहं कुरुश्रेष्ठ नित्यमक्षिगतस्तव ।
द्वेष्योऽत्यन्तमनागाः सन्निति चैनमुवाच ह ॥ ६-१२२-५ (४४६०७)
तच्छ्रुत्वा कुरुवृद्धो हि शरैः संवृतलोचनः ।
रहितं धिष्ण्यमालोक्य समुत्सार्य च रक्षिणः ॥ ६-१२२-६ (४४६०८)
पितेव पुत्रं गाङ्गेयः परिरभ्यैकपाणिना ।
शनैरुद्वीक्ष्य सस्नेहमिदं वचनमब्रवीत् ॥ ६-१२२-७ (४४६०९)
न विप्रियं ममैवेह यत्स्पर्धेथा मया सह ।
यदि मां नाधिगच्छेथा न ते श्रेयो ध्रुवं भवेत् ॥ ६-१२२-८ (४४६१०)
कौन्तेयस्त्वं न राधेयो न तवाधिरथः पिता ।
सूर्यजस्त्वं महाबाहो विदितो नारदान्मया ॥ ६-१२२-९ (४४६११)
कृष्णद्वैपायनाच्चैव तेजसा च न संशयः ।
न च द्वेषोस्ति मे तात त्वयि सत्यं ब्रवीमि ते ॥ ६-१२२-१० (४४६१२)
तेजोवधनिमित्तं तु परुषं त्वाहमब्रुवम् ।
अकस्मात्पाण्डवान्हि त्वं द्विषसीति मतिर्मम ॥ ६-१२२-११ (४४६१३)
येनासि बहुशो राज्ञा चोदितः सूतनन्दन ।
जातोऽसि धर्मलोपेन ततस्ते बुद्धिरीदृशी ॥ ६-१२२-१२ (४४६१४)
नीचाश्रयान्मत्सरेण द्वेषिणी गुमिनामपि ।
तेनासि बहुशो रूक्षं श्रावितः कुरुसंसदि ॥ ६-१२२-१३ (४४६१५)
जानामि समरे वीर्यं शत्रुभिर्दुःसहं भुवि ।
ब्रह्मण्यतां च शौर्यं च दाने च परमां स्थितिम् ॥ ६-१२२-१४ (४४६१६)
न त्वया सदृशः कश्चित्पुरुषेष्वमरोपम ।
कुलभेदभयाच्चाहं सदा परुषमुक्तवान् ॥ ६-१२२-१५ (४४६१७)

इष्वस्त्रे भारसंधाने लाघवेऽस्त्रबले तथा ।
सदृशः फल्गुनेनासि कृष्णेन च महात्मना ॥ ६-१२२-१६ (४४६१८)
कर्ण काशिपुरं गत्वा त्वयैकेन धनुष्मता ।
कन्यार्थे कुरुराजस्य राजानो मृदिता युधि ॥ ६-१२२-१७ (४४६१९)
तथा च बलवान्राजा जरासन्धो दुरासदः ।
समरे समरश्लाघिन्न त्वया सदृशोऽभवत् ॥ ६-१२२-१८ (४४६२०)
ब्रह्मण्यः सत्त्वयोधी च तेजसा च बलेन च ।
देवगर्भसमः सङ्ख्ये मनुष्यैरधिको युधि ॥ ६-१२२-१९ (४४६२१)
व्यपनीतोऽद्य मन्युर्मे यस्त्वां प्रति पुरा कृतः ।
दैवं पुरुषकारेण न शक्यमतिवर्तितुम् ॥ ६-१२२-२० (४४६२२)
सोदर्याः पाण्डवा वीरा भ्रातरस्तेऽरिसूदन ।
संगच्छ तैर्महाबाहो मम चेदिच्छसि प्रियम् ॥ ६-१२२-२१ (४४६२३)
मया भवतु निर्वृत्तं वैरमादित्यनन्दन ।
पृथिव्यां सर्वराजानो भवन्त्वद्य निरामयाः ॥ ६-१२२-२२ (४४६२४)
कर्ण उवाच। ६-१२२-२३क्ष् (४२५२)
जानाम्येव महाबाहो सर्वमेतन्न संशयः ।
यथा वदसि मे भीष्म कौन्तेयोऽहं न सूतजः ॥ ६-१२२-२३ (४४६२५)
अवकीर्णस्त्वहं कुन्त्या सूतेन च विवर्धितः ।
भुक्त्वा दुर्योधनैश्वर्यं न मिथ्या कर्तुमुत्सहे ॥ ६-१२२-२४ (४४६२६)
वसुदेवसुतो यद्वत्पाण्डवाय दृढव्रतः ।
वसु चैव शरीरं च पुत्रदारं तथा यशः ॥ ६-१२२-२५ (४४६२७)
सर्वं दुर्योधनस्यार्थे त्यक्तं मे भूरिदक्षिण ।
मा चैतद्व्याधिमरणं क्षत्रं स्यादिति कौरव ॥ ६-१२२-२६ (४४६२८)
कोपिताः पाण्डवा नित्यं मयाऽश्रित्य सुयोधनम् ।
अवश्यभावी ह्यर्थोऽयं यो न शक्यो निवर्तितुम् ॥ ६-१२२-२७ (४४६२९)
दैवं पुरुषकारेण को विवर्तितुमुत्सहेत् ।
पृथिवीक्षयसंशीनि निमित्तानि पितामह ॥ ६-१२२-२८ (४४६३०)
भवद्भिरुपलब्धानि कथितानि च संसदि ।
पाण्डवा वासुदेवश्च विदिता मम सर्वशः ॥ ६-१२२-२९ (४४६३१)
अजेयाः पुरुषैरन्यैरिति तंश्चोत्सहामहे ।
विजयिष्ये रणे पाण्डूनिति मे निश्चितः मनः ॥ ६-१२२-३० (४४६३२)
न च शक्यमवस्रष्टुं वैरमेतत्सुदारुणम् ।
धनंजयेन योत्स्येऽहं स्वधर्मप्रीतमानसः ॥ ६-१२२-३१ (४४६३३)
अनुजानीष्व मां तात युद्धाय कृतनिश्चयम् ।
अनुज्ञातस्त्वया वीर युध्येयमिति मे मतिः ॥ ६-१२२-३२ (४४६३४)
दुरुक्तं विप्रतीपं वा रभसाच्चापलात्तथा ।

यन्मयेह कृतं किंचित्तन्मे त्वं क्षन्तुमर्हसि ॥ ६-१२२-३३ (४४६३५)
भीष्म उवाच। ६-११२-३४क्ष् (४२५३)
न चेच्छक्यमवस्रष्टुं वैरमेतत्सुदारुणम् ।
अनुजानामि कर्ण त्वां युध्यस्व स्वर्गकाम्यया ॥ ६-१२२-३४ (४४६३६)
निर्मन्युर्गतसंरम्भः कृतकर्मा रणे स्म ह ।
यथाशक्ति यथोत्साहं सतां वृत्तेषु वृत्तवान् ॥ ६-१२२-३५ (४४६३७)
अहं त्वामनुजानामि यदिच्छसि तदाप्नुहि ।
क्षत्रधर्मजिताँल्लोकानवाप्स्यसि धनंजयात् ॥ ६-१२२-३६ (४४६३८)
युध्यस्व निरहंकारो बलवीर्यव्यपाश्रयः ।
धर्म्याद्धि युद्धादधिकं क्षत्रियस्य न विद्यते ॥ ६-१२२-३७ (४४६३९)
प्रशमे हि कृतो यत्नः सुमहान्सुचिरं मया ।
न चैव शकितः कर्तुं यतो धर्मस्ततो जयः ॥ ६-१२२-३८ (४४६४०)
सञ्जय उवाच। ६-१२२-३९क्ष् (४२५४)
इत्युक्तवति गाङ्गेये अभिवाद्योपमन्त्र्य च ।
राधेयो रथमारुह्य प्रायात्तव सुतं प्रति ॥ ६-१२२-३९ (४४६४१)
ग वैशंपायन उवाच। ६-१२२-४०क्ष् (४२५५)
इत्येतद्बहुवृत्तान्तं भीष्मपर्वाखिलं मया ।
शृण्वते ते महाराज प्रोक्तं पापहरं शुभम् ॥ ६-१२२-४० (४४६४२)
यः श्रावयेत्सदा राजन्ब्राह्मणान्वेदपारगान् ।
श्रद्धावन्तश्च ये चापि श्रोष्यन्ति मनुजा भुवि ॥ ६-१२२-४१ (४४६४३)
विधूय सर्वपापानि विहायान्ते कलेवरम् ।
प्रयान्ति तत्पदं विष्णोर्यत्प्राप्य न निवर्तते ॥ ६-१२२-४२ (४४६४४)
तस्मात्सर्वप्रयत्नेन भारतं भरतर्षभ ।
शृणुयात्सिद्धिमन्विच्छन्निह वामुत्र मानवः ॥ ६-१२२-४३ (४४६४५)
भोजनं भोजयेद्विप्रान्गन्धमाल्यैरलङ्कृतान् ।
भीष्मपर्वणि राजेन्द्र दद्यात्पानीयमुत्तमम् ॥' ॥ ६-१२२-४४ (४४६४६)

इति श्रीमन्महाभारते शतसाहस्र्यां संहितायां वैयासिक्यां
भीष्मपर्वणि भीष्मवधपर्वणि द्वाविंशत्यधिकशततमोऽध्यायः
॥ ॥ समाप्तं भीष्मवधपर्व भीष्मपर्व च ।

Mahabharata - Bhishma Parva - Chapter Footnotes

६-१२२-१क्ष अस्यानन्तरं द्रोणपर्व भविष्यति। ६-१२२-१क्ष्ब् तस्यायमाद्यः
श्लोकः। ६-१२२-१क्ष्च् तमप्रतिमसत्वौजोबलवीर्यपराक्रमम्। ६-१२२-१क्ष्ब्

हतं देवव्रतं श्रुत्वा पाञ्चाल्येन शिखण्डिन । ।
६-१२२- ६-१२२-३ जन्मशय्यागतं जन्मकाले शरशय्यागतम्
। शरजन्मत्वात् ॥
६-१२२-१२ येनासीति सार्धश्लोकः झो पुस्तक एवास्ति ॥
६-१२२-१५ पुरुषेषु मानुषेषु ॥
६-१२२-१८ त्वया सदृशो नाभवत् त्वया जित इत्यर्थः । इयं कथा राजधर्मे। अनेन नागायुतबलत्वं कर्णस्य सूचितम् ॥
६-१२२-१९ युधि संप्रहारे ॥
६-१२२-२२ निर्वृत्तं समाप्तम् ॥
६-१२२-२४ अवकीर्णस्त्यक्तः ॥
६-१२२-२८ निवर्तितुं निवर्तयितुम् ॥
६-१२२-३० पाण्डूनर्जुनं विहाय चतुरः । अर्जुनेन योत्स्ये अन्यान्विजेष्ये इति भावः ॥
६-१२२-३३ विप्रतीपं विरुद्धम् ॥
इदं भीष्मपर्व कुंभघोणस्थेन टीओ आरो कृष्णाचार्येण टीओ आरो व्यासाचार्येण च मुंबय्यां निर्णयसागरमुद्रायन्त्रे मुद्रापितम्
। शकाब्दाः १८२९ सन १९०७

---

# .. dronaparva 07 Kumbhaghonam Edition ..
## ॥ ७ द्रोणपर्व ॥

७. द्रोणपर्व

द्रोनपर्व-अध्यय००१
॥ श्रीः ॥
७.१. अध्यायः १

Mahabharata - Drona Parva - Chapter Topics
धृतराष्ट्रेण सञ्जयंप्रति
भीष्मपातानन्तरीयकदुर्योधनादिवृत्तान्तप्रश्नः ॥ १ ॥
सञ्जयेन योधानां शरणत्वेन कर्णाह्वाने कथिते धृतराष्ट्रस्य
कर्णवृत्तान्तप्रश्नः ॥ २ ॥

Mahabharata - Drona Parva - Chapter Text

७-१-० (४४६४७)
श्रीवेदव्यासाय नमः। ७-१-०क्ष् (४२५६)
नारायणं नमस्कृत्य नरं चैव नरोत्तमम् ।
देवीं सरस्वतीं व्यासं ततो जयमुदीरयेत् ॥ ७-१-१ (४४६४८)
जनमेजय उवाच। ७-१-१क्ष् (४२५७)
तमप्रतिमसत्वौजोबलवीर्यपराक्रमम् ।
हतं देवव्रतं श्रुत्वा पाञ्चाल्येन शिखण्डिना ॥ ७-१-१ (४४६४९)
धृतराष्ट्रस्ततो राजा शोकव्याकूललोचनः ।
किमचेष्टत विप्रर्षे हते पिताक्ष् वीर्यवान् ॥ ७-१-२ (४४६५०)
तस्य पुत्रो हि भगवान्भीष्भद्रोणमुखै रथैः ।
पमजित्य महेष्वासान्पाण्डव राज्यमिच्छति ॥ ७-१-३ (४४६५१)
तस्मिन्हा तु भगवन्कतौ सर्वधनुष्मताम् ।
यदचेष्टत कौरवस्तन्मे ब्रूहि तपौधन ॥ ७-१-४ (४४६५२)
वैशंपायन उवाच। ७-१-५क्ष् (४२५८)
निहतं पितरं श्रुत्वा धृतराष्ट्रो जनाधिपः ।

लेभे न शान्तिं कौरव्यश्चिन्ताशौकपरायणः ॥ ७-१-५ (४४६५३)
तत्व चिन्तयतो दुःखमनिशं पार्थिवस्य तत् ।
आजगाम विशुद्धात्मा पुनर्गावल्गणिस्तदा ॥ ७-१-६ (४४६५४)
ग्व्यासप्रसादाद्विज्ञाय सर्वं वृत्तान्तमुत्तमम् ।
सैनिकानां च सर्वेषां सेनयोरुभयोस्तदा'॥ ७-१-७ (४४६५५)
शिबिरात्सञ्जयं प्राप्तं निशि नागाह्वयं पुरम् ।
आम्विकेयो माहारज धृतराष्ट्रोऽन्वपृच्छत ॥ ७-१-८ (४४६५६)
श्रुत्वा भीष्मस्य निधनमप्रहृष्टमना भृशम् ।
पुत्राणां जयमाकाङ्क्षन्विललापातुरो यथा ॥ ७-१-९ (४४६५७)
धृतराष्ट्र उवाच। ७-१-१०क्ष् (४२५९)
संशोच्य तु महात्मानं भीष्मं भीमपराक्रमम् ।
किमकार्षुःपरं तात कुरवः कालचोदिताः ॥ ७-१-१० (४४६५८)
तस्मिन्विनिहते शूरे दुराधर्षे महात्मनि ।
किं नु स्वित्कुरवोऽकार्षुर्निमग्नाः शोकसागरे ॥ ७-१-११ (४४६५९)
तदुदीर्णं महत्सैन्यं त्रैलोक्यस्यापि सञ्जय ।
भयमुत्पादयेत्तीव्रं पाण्डवानां महात्मनाम् ॥ ७-१-१२ (४४६६०)
को हि दौर्योधने सैन्ये पुमानासीन्महारथः ।
यं प्राप्य समरे वीरा न त्रस्यन्ति महाभये ॥ ७-१-१३ (४४६६१)
देवव्रते तु निहते कुरूणामृषभे तदा ।
किमकार्षुर्नृपतयस्तन्ममाचक्ष्व सञ्जया ॥ ७-१-१४ (४४६६२)
सञ्जय उवाच। ७-१-१५क्ष् (४२६०)
शृणु राजन्नेकमना वचनं ब्रुवतो मम ।
यत्ते पुत्रास्तदाकार्षुर्हते देवव्रते मृधे ॥ ७-१-१५ (४४६६३)
निहते तु तदा भीष्मे राजन्सत्यपराक्रमे ।
तावकाः पाण्डवेयाश्च प्राध्यायन्त पृथक्पृथक् ॥ ७-१-१६ (४४६६४)
विस्मिताश्च प्रहृष्टाश्च क्षत्रधर्मं निशाम्य ते ।
स्वधर्मं निन्दमानास्ते प्रमिपत्य महात्मने ॥ ७-१-१७ (४४६६५)
शयनं कल्पयामासुर्भीष्मायामितकर्मणे ।
सोपधानं नरव्याघ्र शरैः सन्नतपर्वभिः ॥ ७-१-१८ (४४६६६)
विधाय रक्षां भीष्माय समाभाष्य परस्परम् ।
अनुमान्य च गाङ्गेयं कृत्वा चापि प्रदक्षिणम् ॥ ७-१-१९ (४४६६७)
क्रोधसंरक्तनयनाः समवेत्य परस्परम् ।
पुनर्युद्धाय निर्जग्मुः क्षत्रियाः कालचोदिताः ॥ ७-१-२० (४४६६८)
ततस्तूर्यनिनादैश्च भेरीणां निनदेन च ।
तावकानामनीकानि परेषां च विनिर्ययुः ॥ ७-१-२१ (४४६६९)
व्यावृत्तेऽर्यम्णि राजेन्द्र पतिते जाह्नवीसुते ।

अमर्पवशमापन्नाः कालोपहतचेतसः ॥ ७-१-२२ (४४६७०)
अनादृत्य वचः पथ्यं गाङ्गेयस्य महात्मनः ।
निर्ययुर्भरतश्रेष्ठाः शस्त्राण्यादाय सत्वराः ॥ ७-१-२३ (४४६७१)
मोहात्तव सपुत्रस्य वधाच्छान्तनवस्य च ।
कौरवा म्नृत्युनाऽऽहूताः सहिताः सर्वराजभिः ॥ ७-१-२४ (४४६७२)
अजावय इवागोपा वने श्वापदसंकुले ।
ग्कर्णकर्णेति चाक्रन्दञ्छेषा भारत पार्थिवाः'।
भृशमुद्विग्नमनसो हीना देवव्रतेन ते ॥ ७-१-२५ (४४६७३)
पतिते भरतश्रेष्ठे बभूव कुरुवाहिनी ।
द्यौरिवापेतनक्षत्रा हीनं खमिव वायुना ॥ ७-१-२६ (४४६७४)
विपन्नसस्येव मही वाक्चैवासंस्कृता यथा ।
आसुरीव यथा सेना निगृहीते नृपे वलौ ॥ ७-१-२७ (४४६७५)
विधवेव वारारोहा शुष्कतोयेव निम्नगा ।
वृकैरिव वने रुद्धा पृपती हतयूथपा ॥ ७-१-२८ (४४६७६)
शरभाऽऽहतसिंहेव महती गिरिकन्दरा ।
सा सेना भरतश्रेष्ठे पतिते जाह्नवीसुते ॥ ७-१-२९ (४४६७७)
विष्वग्वाताहतिशुब्धा नौरिवासीन्महार्णवे ।
वलिभिः पाण्डवैर्वीरैर्लब्धलक्षैर्भृशार्दिता ॥ ७-१-३० (४४६७८)
सा तदासीद्भृशं सेना व्याकुलाश्वरथद्विपा ।
विपन्नभूयिष्ठनरा कृपणा ध्वस्तमानसा ॥ ७-१-३१ (४४६७९)
तस्यां त्रस्ता नृपतयः सैनिकाश्च पृथग्विधाः ।
पाताल इव मज्जन्तो हीना देवव्रतेन ते। ७-१-३२ (४४६८०)
कर्णस्य कुरवोऽस्मार्षुः स हि देवव्रतोपमः ।
सर्वशस्त्रभृतां श्रेष्ठं रोचमानमिवातिथिम् ॥ ७-१-३३ (४४६८१)
बन्धुमापद्गतस्येव तमेवोपागमन्मनः ।
चुक्रुशुः कर्मकर्णेति तत्र भारत पार्थिवाः ॥ ७-१-३४ (४४६८२)
राधेयं हितमस्माकं सूतपुत्रं तनुत्यजम् ।
स हि नाबुध्यत तदा दशाहानि महायशाः ॥ ७-१-३५ (४४६८३)
सामात्यबन्धुः कर्णो वै तमानयत माचिरम् ।
भीष्णेण हि महाबाहुः सर्वक्षत्रस्य पश्यतः ॥ ७-१-३६ (४४६८४)
रथेषु गण्यमानेषु बलविक्रमशालिषु ।
शङ्ख्यातोऽर्धरथः कर्णो द्विगुणः सन्नरर्षभः ॥ ७-१-३७ (४४६८५)
रथातिरक्षसङ्ख्यायां योऽग्रणीः शूरसम्भतः ।
सासुरानपि देवेशान्रणे यो योद्धुमुत्सहेत् ॥ ७-१-३८ (४४६८६)
स तु तेनैव कोपेन राजन्गाङ्गेयमुक्तवान् ।
त्वयि जीकते कौरव्य नाहं योत्स्ये कदाचन। ७-१-३९ (४४६८७)

त्वया तु पाण्डवेयेषु निहतेषु महामृधे ।
दुर्योधनमनुज्ञाप्य वनं यास्यामि कौरव ॥ ७-१-४० (४४६८८)
हते वा त्वयि पार्थैस्तु युधि स्वर्गमुपेयुषि ।
हन्तास्म्येकरथेनैव कृत्स्नान्वान्मन्यसे रथा ॥ ७-१-४१ (४४६८९)
एवमुक्त्वा महाबाहुर्दशाहान्येक एव स ।
नायुध्यत ततः कर्णः पुत्रस्य तव संयते ॥ ७-१-४२ (४४६९०)
भीष्मः समरविक्रान्तः पाण्डवेयस्य भारत ।
जघान समरे योधानसङ्ख्येयपराक्रमः ॥ ७-१-४३ (४४६९१)
तस्मिंस्तु निहते शूरे सत्यसन्धे महौजसि ।
त्वत्सुताः वर्णमस्मार्पुस्तर्तुकामा इव प्लवम् ॥ ७-१-४४ (४४६९२)
तावकास्तव पुत्राश्च सहिताः सर्वराजभिः ।
हा कर्ण इति चाक्रन्दन्कालोऽयमिति अब्रवन् ॥ ७-१-४५ (४४६९३)
एवं ते स्म हि राधेयं सूतपुत्रं नतxxxx
चुक्रुशुः सहिता योधाxxxxxxxxxxx ॥ ७-१-४६ (४४६९४)
जामदग्न्याभ्यनुज्ञातमस्त्रे दुर्वारपौरुषम् ।
अगमन्नो मनः कर्ण बन्धुमात्ययिकेष्विव ॥ ७-१-४७ (४४६९५)
स हि शक्तो रणे राजंस्त्रातुमस्मान्महाभयात् ॥
त्रिदशानिव गोविन्दः सततं सुमहाभयात् ॥ ७-१-४८ (४४६९६)
वैशंपायन उवाच। ७-१-४९क्ष् (४२६१)
तथा तु सञ्जयं कर्णं कीर्तयन्तं पुनः पुनः ।
आशीविषवदुच्छ्वस्य धृतराष्ट्रोऽब्रवीदिदम् ॥ ७-१-४९ (४४६९७)
धृतराष्ट्र उवाच। ७-१-५०क्ष् (४२६२)
यत्तद्वैकर्तनं कर्णमगमद्वो मनस्तदा ।
उप्यरक्षत्स राधेयः सूतपुत्रस्तनुत्यजः ॥ ७-१-५० (४४६९८)
अपि तन्न मृषाकार्षीत्किच्चित्सत्यपराक्रमः ।
सम्भान्तानां तदार्तानां त्रस्तानां त्राणमिच्छतां ॥ ७-१-५१ (४४६९९)
अपि तत्पूरयांचक्रे धनुर्धरवरो युधि ।
यत्तद्विनिहते भीष्मे कौरवाणामपाकृतम् ॥ ७-१-५२ (४४७००)
तत्खण्डं पूरयन्कर्णः परेषामादधद्भयम् ।
स हि वै पुरुषव्याघ्रो लोके सञ्जय कथ्यते ॥ ७-१-५३ (४४७०१)
७-१-५४ (४४७०२)
आर्तानां बान्धवानां च क्रन्दतां च विशेषतः ।
परित्यज्य रणे प्राणांस्तत्त्राणार्थं च शर्म च ।
कृतवान्मम पुत्राणां जयाशां सफलामपि ॥
Mahabharata - Drona Parva - Chapter Footnotes

५-१-१ सत्यं xxx  महत्यपि दुःखकारणे वैकल्यराहित्यम् । ओजो
क्ष्क्ष्मं वलक्ष्क्ष्क्ष्वलं शरीरदार्ढ्यम् । ५-१- ५-१- ५-१- ५-१- ५-१-
५-१- ५-१- ५-१- ५-१- ५-१- ५-१-

---

द्रोनपर्व-अध्यय००२
॥ श्रीः ॥
७.२. अध्यायः २

Mahabharata - Drona Parva - Chapter Topics
कर्णेन पाण्डवोच्छेदनपूर्वकं दुर्योधनाय राज्यदानं प्रतिज्ञाय
युद्धायाभियानम् ॥ १ ॥

Mahabharata - Drona Parva - Chapter Text

७-२-० (४४७०३)
सञ्जय उवाच। ७-२-०क्ष् (४२६३)
हतं भीष्ममथाधिरथिर्विदित्वा
भिन्नां नावं वारिधावत्यगाधे ।
सोदर्यवद्व्यसनात्सूतपुत्रः
संतारयिष्यंस्तव पुत्रस्य सेनाम् ॥ ७-२-१ (४४७०४)
श्रुत्वा तु कर्णः पुरुषेन्द्रमच्युतं
निपातितं शान्तनवं महारथम् ।
अथोपयायात्सहसारिकर्षणो
धनुर्धराणां प्रवरस्तदा नृप ॥ ७-२-२ (४४७०५)
हते तु रथसत्तमे परैर्निमज्जतीं नावमिवार्णवे कुरून् ।
पितेव पुत्रांस्त्वरितोऽभ्ययात्ततः सन्तारयिष्यंस्तव पुत्रस्य सेनाम्
॥ ७-२-३ (४४७०६)
सम्मृज्य दिव्यं धनुराततज्यं स रामदत्तं रिपुसङ्घहन्ता ।
बाणांश्च कालानलवायुकल्पानुल्लालयन्वाक्यमिदं बभाषे। ७-२-४ (४४७०७)
कर्ण उवाच ।
यस्मिन्धृतिर्बुद्धिपराक्रमौजः सत्यं स्मृतिर्वीरगुणाश्च सर्वे ।
अस्त्राणि दिव्यान्यथ संनतिर्ह्रीः प्रिया च वागनसूया च भीष्मे ॥
७-२-४क्ष् (४२६४)
सदा कृतज्ञे द्विजशत्रुघातके सनातनं चन्द्रमसीव लक्ष्मीः ।
स चेत्प्रशान्तः परवीरहन्ता मन्ये हतानेव च सर्ववीरान् ॥ ७-२-५ (४४७०८)
नेह ध्रुवं किङ्चन जातु विद्यते । लोके ह्यस्मिन्कर्मणोऽनित्ययोगात् ।

सूर्योदये को हि विमुक्तसङ्शयो भावं कुर्वीतार्यमहाव्रते हते
॥ ७-२-६ (४४७०९)
वसुप्रभावे वसुवीर्यसंभवे गते वसूनेव वसुंधराधिपे ।
वसूनि पुत्रांश्च वसुंधरां तथा कुरूंश्च शोचध्वमिमां च
वाहिनीम् ॥ ७-२-७ (४४७१०)
सञ्जय उवाच। ७-१-८क्ष् (४२६५)
महाप्रभावे वरदे निपातिते लोकेश्वरे शास्तरि चामितौजसि ।
पराजितेषु भरतेषु दुर्मनाः कर्णो भृशं न्यश्वसदश्रु वर्तयन्
॥ ७-२-८ (४४७११)
इदं च राधेयवचो निशम्य सुताश्च राजंस्तव सैनिकाश्च ह ।
परस्परं चुक्रुशुरार्तिजं मुहुस्तदाश्रु नेत्रैर्मुमुचुश्च शब्दवत्
॥ ७-२-९ (४४७१२)
प्रवर्तमाने तु पुनर्महाहवे विगाह्यमानासु चमूषु पार्थिवैः ।
अथाब्रवीद्धर्षकरं तदा वचो रथर्षभान्सर्वमहारथर्षभः
॥ ७-२-१० (४४७१३)
जगत्यनित्ये सततं प्रधावति प्रचिन्तयन्नस्थिरमद्य लक्षये ।
भवत्सु तिष्ठत्स्विह पातितो मृधे निरिप्रकाशः कुरुपुङ्गवः कथम्
॥ ७-२-११ (४४७१४)
निपातिते शान्तनवे महारथे दिवाकरे भूतलमास्थिते यथा ।
न पार्थिवाः सोढुमलं धनंजयं गिरिप्रवोढारमिवानिलं द्रुमाः
॥ ७-२-१२ (४४७१५)
हतप्रधानं त्विदमार्तरूपं परैर्हतोत्साहमनाथमद्य वै ।
मर्या कुरूणां परिपाल्यमाहवे बलं यथा तेन महात्मना तथा ॥ ७-२-१३
(४४७१६)
समाहिते चात्मनि भारमीदृशं जगत्तथाऽनित्यमिदं च लक्षये ।
निपातितं चाहवशौण्डमाहवे कथं नु कुर्यामहमीदृशे भयम्
॥ ७-२-१४ (४४७१७)
अहं तु तान्कुरुवृषभानजिह्मगैः प्रवेशयन्यमसदनं चरन्रणे ।
यशः परं जगति विभाव्य वर्तिता परैर्हतो भुवि शयिताथवा पुनः
॥ ७-२-१५ (४४७१८)
युधिष्ठिरो धृतिमतिसत्यसत्ववान् वृकोदरो गजशततुल्यविक्रमः ।
तथार्जुनस्त्रिदशवरात्मजो युवा न तद्बलं सुजयमिहामरैरपि
॥ ७-२-१६ (४४७१९)
यमौ रणे यत्र यमोपमौ बले ससात्यकिर्यत्र च देवकीसुतः ।
न तद्बलं कापुरुषोऽभ्युपेयिवान्निवर्तते मृत्युमुखादिवासुभृत्
॥ ७-२-१७ (४४७२०)

तपोऽभ्युदीर्णं तपसैव बाध्यते बलं बलेनैव तथा मनस्विभिः ।
मनश्च मे शत्रुनिवारणे ध्रुवं स्वरक्षणे चाचलवद्व्यवस्थितम्
॥ ७-२-१८ (४४७२१)
एवं चैषां बाधमानः प्रभावं गत्वैवाहं ताञ्जयाम्यद्य सूत ।
मित्रद्रोहो मर्षणीयो न मेऽयं भग्ने सैन्ये यः समेयात्स मित्रम्
॥ ७-२-१९ (४४७२२)
कर्तास्म्येतत्सत्पुरुषार्यकर्म त्यक्त्वा प्राणाननुयास्यामि भीष्मम् ।
सर्वान्सङ्ख्ये शत्रुशङ्घान्हनिष्ये हतस्तैर्वा वीरलोकं प्रपत्स्ये
॥ ७-२-२० (४४७२३)
संप्राक्रुष्टे रुदितस्त्रीकुमारे पराहते पौरुषे धार्तराष्ट्रे ।
मया कृत्यमिति जानामि सूत तस्माद्राज्ञस्त्वद्य शत्रून्विजेष्ये
॥ ७-२-२१ (४४७२४)
कुरून्रक्षन्पाण्डुपुत्राञ्जिघांसंस्त्यक्त्वा प्राणान्घोररूपे रणेऽस्मिन् ।
सर्वान्सङ्ख्ये शत्रुसङ्घान्निहत्य दास्याम्यहं धर्मxxxxxxxx
७-२-२२ (४४७२५)
निबध्यतां मे कवचं विचित्रं हैमं शुभ्रं मणिरत्नावभासि ।
शिरस्त्राणं चार्कसमानभासं धनुः शरांश्चाग्निविपाहिकल्पान्
॥ ७-२-२३ (४४७२६)
उपासङ्गान्पोडश योजयन्तु धनूंम्पि दिव्यानि तथाऽऽहरन्तु ।
असींश्च शक्तीश्च गदाश्च गुर्वीः शङ्खं च जाम्बूनदचित्रनालम्
॥ ७-२-२४ (४४७२७)
इमां रौक्मीं नागकक्ष्यां विचित्रां ध्वजं जैत्रं दिव्यमिन्दीवराङ्कम् ।
श्लक्ष्णैर्वस्त्रैर्विप्रमृज्यानयन्तु चित्रां मालां चारुबद्धां सलाजाम्
॥ ७-२-२५ (४४७२८)
अश्वानग्र्यान्पाण्डुराभ्रप्रकाशान् पुष्टान्स्नातान्मन्त्रपूताभिरद्भिः ।
तप्तैर्भाण्डैः काञ्चनैरभ्युपेतान् शीघ्राञ्शीघ्रं सूतपुत्रानयस्व
॥ ७-२-२६ (४४७२९)
रथं चाग्र्यं हेममालावनद्धं रत्नैश्चित्रं सूर्यचन्द्रप्रकाशैः ।
द्रव्यैर्युक्तं सम्प्रहारोपपन्नैर्बाहैर्युक्तं तूर्णमावर्तयस्व
॥ ७-२-२७ (४४७३०)
चित्राणि चापानि च वेगवन्ति ज्याश्चोत्तमाः सन्नहनोपपन्नाः ।
तूणांश्च पूर्णान्महतः शराणामासाद्य गात्रावरणानि चैव ॥ ७-२-२८ (४४७३१)
प्रायात्रिकं चानयताशु सर्वं पूर्णं कान्त्या वीरकांस्यां च हैमम् ।
आनीय मालामवबध्य चाङ्गे प्रवादयन्त्वाशु जयाय भेरीः ॥ ७-२-२९ (४४७३२)
प्रयाहि मूताशु यतः किरीटी वृकोदरो धर्मसुतो यमौ च ।
तान्वा हनिष्यामि समेत्य सङ्ख्ये भीष्मो यथैष्यामि हतो द्विषद्भिः

॥ ७-२-३० (४४७३३)
यस्मिन्राजा सत्यधृतिर्युधिष्ठिरः समास्थितो भीमसेनार्जुनौ च ।
वासुदेवः सात्यकिः सृंजयाश्च मन्ये बलं तदजय्यं महीपैः
॥ ७-२-३१ (४४७३४)
तं चेन्मृत्युः सर्वहरोऽभिरक्षेत्सदाऽप्रमत्तः समरे किरीटिनम् ।
तथापि हन्तास्मि समेत्य सङ्ख्ये यास्यामि वा भीष्ममुखो यमाय
॥ ७-२-३२ (४४७३५)
न त्वेवाहं न गमिष्यामि तेषां मध्ये शराणां तत्र चाहं ब्रवीमि ।
मित्रद्रुहो दुर्बलभक्तयो ये पापात्मानो न ममैते सहायाः ॥ ७-२-३३ (४४७३६)
सञ्जय उवाच। ७-२-३४क्ष् (४२६६)
समृद्धिमन्तं रथमुत्तमं दृढं सकूबरं हेमपरिष्कृतं शुभम् ।
पताकिनं वातजवैर्हयोत्तमैर्युक्तं समास्थाय ययौ जयाय ॥ ७-२-३४
(४४७३७)
सम्पूज्यमानः कुरुभिर्महात्मा रथर्षभो देवगणैर्यथेन्द्रः ।
ययौ तदायोधनमुग्रधन्वा यत्रावसानं भरतर्षभस्य ॥ ७-२-३५ (४४७३८)
वरूथिना महता सध्वजेन सुवर्णमुक्तामणिरत्नमालिना ।
सदश्वयुक्तेन रथेन कर्णो मेघस्वनेनार्क इवामितौजाः ॥ ७-२-३६ (४४७३९)
हुताशनाभः स हुताशनप्रभे शुभः शुभे वै स्वरथे धनुर्धरः ।
स्थितो रराजाधिरथिर्महारथः स्वयं विमाने सुरराडिवास्थितः
॥ ॥ ७-२-३७ (४४७४०)

इति श्रीमन्महाभारते द्रोणपर्वणि द्रोणाभिषेकपर्वणि द्वितीयोऽध्यायः
॥ २ ॥
Mahabharata - Drona Parva - Chapter Footnotes

५-२-१ ५-२- ५-२- ५-२- ५-२- ५-२- ५-२- ५-२- ५-२- ५-२-
५-२- ५-२-

---

द्रोनपर्व-अध्यय००३
॥ श्रीः ॥
७.३. अध्यायः ३

Mahabharata - Drona Parva - Chapter Topics
कर्णेन भीष्ममेत्य युद्धानज्ञायाचनम् ॥ १ ॥

Mahabharata - Drona Parva - Chapter Text

७-१-० (४४७४१)
सञ्जय उवाच। ७-१-०क्ष् (४२६७)
शरवल्पे महात्मानं शयानममितौजसम् ।
महाशतसमूंहन समुद्रमिव शोषितम् ॥ ७-१-१ (४४७४२)
दृष्ट्वा पितामहं भीष्मं सर्वक्षत्रान्तकं गुरुम् ।
दिव्यैरस्त्रैर्महेष्वासं पातितं सव्यसाचिना ।
जयाणा तव पुत्राणां संभग्ना शर्म वर्म च ॥ ७-१-२ (४४७४३)
अपाक्ष्णामिव द्वीपमगाधे गाधमिच्छताम् ।
स्तोतमा यामुनेनेव शरौघेण परिप्लुतम् ॥ ७-१-३ (४४७४४)
महान्तमिव मैनाकमहार्यं भुवि पातितम् ।
तxxx युतमिवादित्यं शक्रस्येवामृतं हृतम् ॥ ७-१-४ (४४७४५)
शतक्रतुभिवाचिन्त्यं पुरा वृत्रेणा निर्जितम् ।
महोनं सर्वसैन्यस्य युधि भीष्मं निपातितम् ॥ ७-१-५ (४४७४६)
ककुदं सर्वसैन्यानां लक्ष्म सर्वधनुष्मताम् ।
धनन्तयशरैर्व्याप्तं पितरं ते महाव्रतम्। ७-१-६ (४४७४७)
तं वीरशयने वीरं शयानं पुरुषर्पभम् ।
भीष्ममाधिरथिर्दृष्ट्वा भरतानां पितामहम् ॥ ७-१-७ (४४७४८)
प्रस्कन्द्य स रथात्तूर्णं शोकमोहपरिप्लुतः ।
ग्पद्यभामेव जगामार्तो बाष्पव्याकुललोचनः'॥
अभिवाद्याञ्जलिं बद्धवा वन्दमानोऽभ्यभाषत ॥ ७-१-८ (४४७४९)
कर्णोऽहमस्मि भद्रं ते वद मामभि भारत ।
पुण्यया क्षेमया वाचा चक्षुषा चावलोकय ॥ ७-१-९ (४४७५०)
न नूनं सुकृतस्येह फलं कश्चित्समश्नुते ।
यत्र धर्मपरो वृद्धः शेते भुवि भवानिह ॥ ७-१-१० (४४७५१)
कोशसञ्चयने मन्त्रे व्यूहे प्रहरणेषु च ।
नाहमन्यं प्रपश्यामि कुरूणां कुरुपुङ्गव ॥ ७-१-११ (४४७५२)
बुद्धया विशुद्धया युक्तो यः कुरूंस्तारयेद्भयात् ।
योधांस्त्वमप्लुवे हित्वा पितुलोकं गमिष्यसि ॥ ७-१-१२ (४४७५३)
अद्यप्रभृति सङ्क्रुद्धा व्याघ्रा इव मृगक्षयम् ।
पाण्डवा भरतश्रेष्ठ करिष्यन्ति कुरुक्षयम् ॥ ७-१-१३ (४४७५४)
अद्य गाण्डीवधोपेण वीर्यज्ञाः सव्यसाचिनः ।
कुरवः सन्त्रसिष्यन्ति वज्रघोषादिवासुराः ॥ ७-१-१४ (४४७५५)
अद्य गाण्डीवमुक्तानामशनीनामिव xxx : ।
त्रासयिष्यति बाणानां कुरूनन्यांश्च पथिक्ष्क्ष् ७-१-१५ (४४७५६)
समिद्धोऽग्निर्यथा वीर महाज्वालो द्रुमान्दxxx त् ।

धार्तराष्ट्राः इधक्ष्यन्ति तथा बाणाः किरीटिक्ष्क्ष्  ७-१-१६ (४४७५७)
येन येन प्रसरतो वाय्वग्नी सहितौ वने ।
तेन तेन प्रदहतो भूरिगुल्मतृणद्रुमान् ॥ ७-१-१७ (४४७५८)
यादृशोऽग्निः समुद्भूतस्तादृक्पार्थो न संशयः ।
यथा वायुर्नरव्याघ्र तथा कृष्णो संशयः ॥ ७-१-१८ (४४७५९)
क्ष्क्ष्दतः पाञ्चजन्यस्य रसतो गाण्डिवस्य च ।
श्रुत्वा सर्वाणि सैन्यानि त्रासं यास्यन्ति भारत। ७-१-१९ (४४७६०)
कपिध्वजस्योत्पततो रथस्यामित्रकर्शिनः ।
शब्दं सोढुं न शक्ष्यन्ति त्वामृते वीर पार्थिवाः ॥ ७-१-२० (४४७६१)
को ह्यर्जुनं योधयितुं त्वदन्यः पार्थिवोऽर्हति ।
यस्य दिव्यानि कर्माणि प्रवदन्ति मनीषिणः। ७-१-२१ (४४७६२)
अमानुषैश्च संग्रामं त्र्यम्बकेण महात्मना ।
तस्माच्चैव वरं प्राप्तो दुष्प्रापश्चाकृतात्मभिः ॥ ७-१-२२ (४४७६३)
कोऽन्यः शक्तो रणे जेतुं पूर्वं यो न जितस्त्वया ।
जितो येन रणे रामो भवता वीर्यशालिना। ७-१-२३ (४४७६४)
क्षत्रियान्तकरो घोरो देवदानवदर्पहा ।
ग्सोप्यद्याभिहतः शेते शरैः प्रोतः शिखण्डिना ॥ ७-१-२४ (४४७६५)
तमद्याहं पाण्डवं युद्धशौण्डममृष्यमाणो भवता चानुशिष्टः ।
आशीविषं हष्टिहरं सुघोरं शूरं शक्ष्याम्यस्त्रबलान्निहन्तुम्
॥ ॥ ७-१-२५ (४४७६६)

इति श्रीमन्महाभारते द्रोणपर्वणि द्रोणाभिषेकपर्वणि तृतीयोऽध्यायः
॥ ३ ॥
Mahabharata - Drona Parva - Chapter Footnotes

५-१-६ ककुदं श्रेष्ठम् ५-१-१९ xxx  तः शब्दं कुर्वतः ॥
५-१-२२ अमानुषैर्निवातकवचादिभिः ॥
५-१-३ तृतीयोऽध्यायः ॥

---

द्रोनपर्व-अध्यय००४
॥ श्रीः ॥
७.४. अध्यायः ४

Mahabharata - Drona Parva - Chapter Topics
भीष्मानुज्ञातस्य कर्णस्य युद्धायाऽऽगमनम् ॥ १ ॥

७-१-० (४४७६७)
सञ्जय उवाच। ७-१-०क्ष् (४२६८)
तस्य लालप्यमानस्य कुरुवृद्धः पितामहः ।
देशकालोचितं वाक्यमब्रवीत्प्रीतमानसः ॥ ७-१-१ (४४७६८)
भीष्म उवाच। ७-१-२क्ष् (४२६९)
समुद्र इव सिन्धूनां ज्योतिषामिव भास्करः ।
सत्यस्य च यथा सन्तो बीजानामिव चोर्वरा ॥ ७-१-२ (४४७६९)
पर्जन्य इव भूतानां प्रतिष्ठा सुहृदां भवान् ।
बान्धवास्त्वाऽनुजीवन्तु स्वादुवृक्षमिवाण्डजाः ॥ ७-१-३ (४४७७०)
मानहा भव शत्रूणां मित्राणां नन्दिवर्धनः ।
कौरवाणां भव गतिर्यथा विष्णुर्दिवौकसाम् ॥ ७-१-४ (४४७७१)
स्वबाहुबलवीर्येण धार्तराष्ट्रप्रियैषिणा ।
कर्ण राजपुरं गत्वा काम्भोजा निर्जितास्त्वया ॥ ७-१-५ (४४७७२)
गिरिव्रजगताश्चापि नग्नजित्प्रमुखा नृपाः ।
अम्बष्ठाश्च विदेहाश्च गान्धाराश्च जितास्त्वया ॥ ७-१-६ (४४७७३)
हिमवद्दुर्गनिलयाः किराता रणकर्कशाः ।
दुर्योधनस्य वशगास्त्वया कर्ण पुरा कृताः ॥ ७-१-७ (४४७७४)
उत्कला मेकलाः पौण्ड्राः कलिङ्गान्ध्राश्च संयुगे ।
निषादाश्च त्रिगर्ताश्च बाह्लीकाश्च जितास्त्वया  ७-१-८ (४४७७५)
तत्रतत्र च संग्रामे दुर्योधनहितैषिणा ।
बहवश्च जिताः कर्ण त्वया वीरा महौजसा ॥ ७-१-९ (४४७७६)
यथा दुर्योधनस्यातः सज्ञातिकुलबान्धवः ।
तथा त्वमपि सर्वेषां कौरवाणां गतिर्भव ॥ ७-१-१० (४४७७७)
शिवेशनाभिवदामि त्वां गच्छ युध्यस्व शत्रुभिः ।
अनुशास्य कुरून्सर्वान्धत्स्व दुर्योधने जयम् ॥ ७-१-११ (४४७७८)
भवान्पौत्रसमोऽस्माकं यथा दुर्योधनस्तथा ।
तवापि धर्मतः सर्वे यथा तस्य वयं तथा ॥ ७-१-१२ (४४७७९)
यौनात्सम्बन्धकाल्लोके विशिष्टं सङ्गतं सताम् ।
सद्भिः सङ्गममिच्छन्ति तस्मात्प्राज्ञाः परैरपि ॥ ७-१-१३ (४४७८०)
स सत्यसङ्गरो भूत्वा ममेदमिति निश्चितः ।
कुरूणां पालय बलं यथा दुर्योधनस्तथा ॥ ७-१-१४ (४४७८१)
ग्यथा च कुरवो युद्धे योधयन्ति स्म पाण्डवान् ।
तथा कर्ण त्वया कार्यं दुर्योधनहितैषिणा'॥ ७-१-१५ (४४७८२)
निशम्य वचनं तस्य चरणावभिवाद्य च ।

ययौ वैकर्तनः कर्णस्तूर्णमायोधनं प्रति ॥ ७-१-१६ (४४७८३)
सोऽभिवीक्ष्य नरौघाणां स्थानमप्रतिमं महत् ।
व्यूढप्रहरणोरस्कं सैन्यं तत्समबृंहयत् ॥ ७-१-१७ (४४७८४)
हृषिताः कुरवः सर्वे दुर्योधनपुरोगमाः ।
उपागतं महाबाहुं सर्वानीकपुरःसरम् ॥ ७-१-१८ (४४७८५)
७-१-१९ (४४७८६)
कर्णं दृष्ट्वा महात्मानं युद्धाय समुपस्थितम् ।
क्ष्वेडितास्फोटितरवैः सिंहनादरवैरपि ।
धनुःशब्दैश्च विविधैः कुरवः समपूजयन् ॥
Mahabharata - Drona Parva - Chapter Footnotes

५-१-३ अर्थपतिः प्रधानस्वामी ॥

---

द्रोनपर्व-अध्यय००५
॥ श्रीः ॥
७.५. अध्यायः ५

Mahabharata - Drona Parva - Chapter Topics
दुर्योधनपृष्टेन कर्णेन तम्प्रति द्रोणस्य सैनापत्यकरणविधानम् ॥ १ ॥

Mahabharata - Drona Parva - Chapter Text

७-१-० (४४७८७)
सञ्जय उवाच। ७-१-०क्ष् (४२७०)
रथस्थं पुरुषव्याघ्रं दृष्टा कर्णमवस्थितम् ।
हृष्टो दुर्योधनो राजन्निदं वचनमब्रवीत् ॥ ७-१-१ (४४७८८)
सनाथमिव मन्येऽहं भवता पालितं बलम् ।
अत्र किं नु समर्थं यद्धितं तत्सम्प्रधार्यताम् ॥ ७-१-२ (४४७८९)
कर्ण उवाच। ७-१-३क्ष् (४२७१)
ब्रूहि नः पुरुषव्याघ्र त्वं हि प्राज्ञतमो नृषु ।
यथा चार्थपतिः कृत्यं पश्यते न तथेतरः ॥ ७-१-३ (४४७९०)
ते स्म सर्वे तव वचः श्रोतुकामा नरेश्वर ।
नान्याय्यं हि भवान्वाक्यं ब्रूयादिति मतिर्मम ॥ ७-१-४ (४४७९१)
दुर्योधन उवाच। ७-१-५क्ष् (४२७२)
भीष्मः सेनाप्रणेताऽऽसीद्वयसा विक्रमेण च ।
श्रुतेन चोपसम्पन्नः सर्वैर्योधगणैस्तथा ॥ ७-१-५ (४४७९२)

तेनातियशसा कर्ण घ्नता शत्रुगणान्मम ।
सुयुद्धेन दशाहानि पालिताः स्मो महात्मना ॥ ७-१-६ (४४७९३)
तस्मिन्नसुकरं कर्म कृतवत्यास्थिते दिवम् ।
कं तु सेनाप्रणेतारं मन्यसे तदनन्तरम् ॥ ७-१-७ (४४७९४)
न विना नायकं सेना मुहूर्तमपि तिष्ठति ।
ग्आहवेषु विशेषेण भ्रष्टनेत्रेष्विवाञ्जनम्।'
आहवेष्वाहवश्रेष्ठ नेतृहीनेव नौर्जले ॥ ७-१-८ (४४७९५)
यथा ह्यकर्णधारा नौ रथश्चासारथिर्यथा ।
द्रवेद्यथेष्टं तद्वत्स्यादृते सेनापतिं बलम् ॥ ७-१-९ (४४७९६)
अदेशिको यथा सार्थः सर्वः कृच्छ्रं समृच्छति ।
अनायका तथा सेना सर्वान्दोषान्समर्च्छति ॥ ७-१-१० (४४७९७)
स भावन्वीक्ष्य सर्वेषु मामकेषु महात्मसु ।
पश्य सेनापतिं युक्तमनु शान्तनवादिह ॥ ७-१-११ (४४७९८)
यं हि सेनाप्रमेतारं भवान्वक्ष्यति संयुगे ।
तं वयं सहिताः सर्वे करिष्यामो न संशयः। ७-१-१२ (४४७९९)
कर्ण उवाच। ७-१-१३क्ष् (४२७३)
सर्व एव महात्मान इमे पुरुषसत्तमाः ।
सेनापतित्वमर्हन्ति नात्र कार्या विचारणा ॥ ७-१-१३ (४४८००)
कुलसंहननज्ञानैर्बलविक्रमबुद्धिभिः ।
युक्ताः श्रुतज्ञा धीमन्त आहवेष्वनिवर्तिनः ॥ ७-१-१४ (४४८०१)
युगपन्न तु ते शक्याः कर्तुं सर्वे पुरःसराः ।
एक एव तु कर्तव्यो यस्मिन्वैशेषिका गुणाः ॥ ७-१-१५ (४४८०२)
अन्योन्यस्पर्धिनां ह्येषां यद्येकं त्वं करिष्यसि ।
शेषा विमनसो व्यक्तं न योत्स्यन्ति हितास्तव ॥ ७-१-१६ (४४८०३)
अयं च सर्वयोधानामाचार्यः स्थिवरो गुरुः ।
युक्तः सेनापतिः कर्तुं द्रोणः शस्त्रभृतां वरः ॥ ७-१-१७ (४४८०४)
को हि तिष्ठति दुर्धर्षे द्रोणे शस्त्रभृतां वरे ।
सेनापतिःस्यादन्योस्माच्छुक्राङ्गिरसदर्शनात् ॥ ७-१-१८ (४४८०५)
न च सोऽप्यस्ति ते योधः सर्वराजसु भारत ।
द्रोणं यः समरे यान्तमनुयास्यति संयुगे ॥ ७-१-१९ (४४८०६)
एष सेनाप्रणेतॄणामेष शस्त्रभृतामपि ।
एष बुद्धिमतां चैव श्रेष्ठो राजन्गुरुस्तव ॥ ७-१-२० (४४८०७)
एवं दुर्योधनाचार्यमाशु सेनापतिं कुरु ।
जिगीषन्तो सुरान्सङ्ख्ये कार्तिकेयमिवामराः ॥ ॥ ७-१-२१ (४४८०८)

इति श्रीमन्महाभारते द्रोणपर्वणि द्रोणाभिषेकपर्वणि

पञ्चमोऽध्यायः ॥ ५ ॥

Mahabharata - Drona Parva - Chapter Footnotes

५-१-८ नेता कर्णधारः ॥
५-१-१० अदेशिकोऽग्रेसररहितः। ५-१-१४ संहननं शरीरम्। ।
५-१-१८ शुक्राङ्गिरसदर्शनाच्छुक्रबृहस्पतितुल्यात्। ५-१-५
पञ्चमोऽध्यायः। ।

---

द्रोनपर्व-अध्यय००६
॥ श्रीः ॥
७.६. अध्यायः ६

Mahabharata - Drona Parva - Chapter Topics

दुर्योधनेन द्रोणम्प्रति सैनापत्यस्वीकारप्रार्थना ॥ १ ॥

Mahabharata - Drona Parva - Chapter Text

७-१-० (४४८०९)
सञ्जय उवाच। ७-१-०क्ष् (४२७४)
कर्णस्य वचनं श्रुत्वा राजा दुर्योधनस्तदा ।
सेनामध्यगतं द्रोणमिदं वचनमब्रवीत् ॥ ७-१-१ (४४८१०)
दुर्योधन उवाच। ७-१-२क्ष् (४२७५)
वर्णश्रैष्ठ्यात्कुलोत्पत्त्या श्रुतेन वयसा धिया ।
वीर्याद्दाक्ष्यादधृष्यत्वादर्थज्ञानान्नयाज्जयात् ॥ ७-१-२ (४४८११)
तपसा च कृतज्ञत्वाद्वृद्धः सर्वगुणैरपि ।
युक्तो भवत्सश्रो गोप्ता राज्ञामन्यो न विद्यते ॥ ७-१-३ (४४८१२)
स भवान्पातु नः सर्वान्देवानिव शतक्रतुः ।
भवन्नेत्राः पराञ्जेतुमिच्छामो द्विजसत्तम ॥ ७-१-४ (४४८१३)
रुद्राणामिव कापालिर्वसूनामिव पावकः ।
कुबेर इव यक्षाणां मरुतामिव वासवः ॥ ७-१-५ (४४८१४)
वसिष्ठ इव विप्राणां तेजसामिव भास्करः ।
पितॄणामिव धर्मेन्द्रो यादसामिव चाम्बुराट् ॥ ७-१-६ (४४८१५)
नक्षत्राणामिव शशी दितिजानामिवोशनाः ।
ग्सर्वेषामिव लोकानां विश्वस्य च यथा क्षयः'॥ ७-१-७ (४४८१६)
विश्वोत्पत्तिस्थितिलये श्रेष्ठो नारायणः प्रभुः ।
एवं सेनाप्रणेतॄणां मम सेनापतिर्भव ॥ ७-१-८ (४४८१७)

अक्षौहिण्यो दशैका च वशगाः सन्तु तेऽनघ ।
ताभिः शत्रून्प्रतिव्यूह्य जहीन्द्रो दानवानिव ॥ ७-१-९ (४४८१८)
प्रयातु नो भवानग्रे देवानामिव पावकिः ।
अनुयास्यामहे त्वाऽऽजौ सौरभेया इवर्षभम् ॥ ७-१-१० (४४८१९)
उग्रधन्वा महेष्वासो दिव्यं विष्फारयन्धनुः ।
दृष्ट्वा भवन्तं सङ्ग्रामे नार्जुनः प्रहरिष्यति ॥ ७-१-११ (४४८२०)
ध्रुवं युधिष्ठिरं सङ्ख्ये सानुबन्धं सबान्धवम् ।
जेष्यामि पुरुषव्याघ्र भवान्सेनापतिर्यदि ॥ ७-१-१२ (४४८२१)
सञ्जय उवाच। ७-१-१३क्ष् (४२७६)
एवमुक्ते ततो द्रोणं जयेत्यूचुर्नराधिपाः ।
सिंहनादेन महता हर्षयन्तस्तवात्मजम् ॥ ७-१-१३ (४४८२२)
सैनिकाश्च मुदा युक्ता वर्धयन्ति द्विजोत्तमम् ।
दुर्योधनं पुरस्कृत्य प्रार्थयन्तो महद्यशः ।
दुर्योधनं ततो राजन्द्रोणो वचनमब्रवीत् ॥ ॥ ७-१-१४ (४४८२३)

इति श्रीमन्महाभारते द्रोणपर्वणि द्रोणाभिषेकपर्वणि षष्ठोऽध्यायः
॥ ६ ॥
Mahabharata - Drona Parva - Chapter Footnotes

५-१-४ भवान्नेस्त्रं तेना येषां ते ॥
५-१-६ धर्मेन्द्रो यमः । अम्बुराट् वरुणः ॥
५-१-१० पावकिः स्कन्दः ॥
५-१-६ षष्टोऽध्यायः ॥

---

द्रोनपर्व-अध्यय००७
॥ श्रीः ॥
७.७. अध्यायः ७

Mahabharata - Drona Parva - Chapter Topics
दुर्योधनेन द्रोणस्य सैनापत्येऽभिषेचनम् ॥ १ ॥
द्रोणयुद्धवर्णनम् ॥ २ ॥

Mahabharata - Drona Parva - Chapter Text

७-१-० (४४८२४)
द्रोण उवाच। ७-१-०क्ष् (४२७७)

वेदं षडङ्गं वेदाहमर्थविद्यां च मानवीम् ।
त्रैय्यम्बकमथेष्वस्त्रं शस्त्राणि विविधानि च ॥ ७-१-१ (४४८२५)
ये चाप्युक्ता मयि गुणा भवद्भिर्जयकाङ्क्षिभिः ।
चिकीर्षुस्तानहं सर्वान्योधयिष्यामि पाण्डवान् ॥ ७-१-२ (४४८२६)
पार्षतं तु रणे राजन्न हनिष्ये कथञ्चन ।
स हि सृष्टो वधार्थाय ममैव पुरुषर्षभः ॥ ७-१-३ (४४८२७)
योधयिष्यामि सैन्यानि नाशयन्सर्वसोमकान् ।
न च मां पाण्डवा युद्धे योधयिष्यन्ति हर्षिताः ॥ ७-१-४ (४४८२८)
सञ्जय उवाच। ७-१-५क्ष् (४२७८)
स एवमभ्यनुज्ञातश्चक्रे सेनापतिं ततः ।
द्रोणं तव सुतो राजन्विधिदृष्टेन कर्मणा ॥ ७-१-५ (४४८२९)
अथाभिषिषिचुर्द्रोणं दुर्योधनमुखा नृपाः ।
ग्स्वस्तिवादरवैश्चान्यैः श्लक्ष्णैश्चान्यैर्मनोरमैः'।
सैनापत्ये यथा स्कन्दं पुरा शक्रमुखाः सुराः ॥  ७-१-६ (४४८३०)
ततो वादित्रघोषेण शङ्खानां च महास्वनैः ।
प्रादुरासीत्कृते द्रोणे हर्षः सेनापतौ तदा ॥ ७-१-७ (४४८३१)
ततः पुण्याहघोषेण साशीर्वादस्वनेन च ।
संस्तवैर्गीतशब्दैश्च सूतमागधबन्दिनाम् ॥ ७-१-८ (४४८३२)
जयशब्दैर्द्विजाग्र्याणां सुभगानर्तितैस्तथा ।
सत्कृत्य विधिना द्रोणं मेनिरे पाण्डवाञ्जितान् ॥ ७-१-९ (४४८३३)
सञ्जय उवाच। ७-१-१०क्ष् (४२७९)
सैनापत्यं तु संप्राप्य भारद्वाजो महारथः ।
युयुत्सुर्व्यूह्य सैन्यानि प्रायात्तव सुतैः सह ॥ ७-१-१० (४४८३४)
सैन्धवश्च कलिङ्गश्च विकर्णश्च तवात्मजः ।
दक्षिणं पार्श्वमास्थाय समतिष्ठन्त दंशिताः ॥ ७-१-११ (४४८३५)
प्रपक्षः शकुनिस्तेषां प्रवरैर्हयसादिभिः ।
ययौ गान्धारकैः सार्धं विमलप्रासयोधिभिः ॥ ७-१-१२ (४४८३६)
कृपश्च कृतवर्मा च चित्रसेनो विविंशतिः ।
दुःशासनमुखा यत्ताः सव्यं पक्षमपालयन् ॥ ७-१-१३ (४४८३७)
तेषां प्रपक्षाः काम्भोजाः सुदक्षिणपुरस्सराः ।
ययुरश्वैर्महावेगैः शकाश्च यवनैः सह ॥ ७-१-१४ (४४८३८)
मद्रास्त्रिगर्ताः साम्बष्ठाः प्रतीच्योदीच्यमालवाः ।
शिबयः शूरसेनाश्च शूद्राश्च मलदैः सह ॥ ७-१-१५ (४४८३९)
सौवीराः कितवाः प्राच्या दाक्षिणात्याश्च सर्वशः ।
नवात्मजं पुरस्कृत्य सूतपुत्रस्य पृष्ठतः ॥ ७-१-१६ (४४८४०)
हर्षयन्तः स्वसैन्यानि ययुस्तव सुतैः सह ।

प्रवरः सर्वयोधानां बलेषु बलमादधम् ॥ ७-१-१७ (४४८४१)
ययौ वैकर्तनः कर्णः प्रमुखे सर्वधन्विनाम् ।
तस्य दीप्तो महाकायः स्वान्यनीकानिहर्षयन् ॥ ७-१-१८ (४४८४२)
हस्तिकक्ष्यो गहाकेतुर्बभौ सूर्यसमद्युतिः ।
न भीष्मव्यसनं कश्चिद्दृष्ट्वा कर्णममन्यत ॥ ७-१-१९ (४४८४३)
विशोकाश्चाभवन्सर्वे राजानः कुरुभिः सह ।
हृष्टाश्च बहवो योधास्तत्राजल्पन्त वेगतः ॥ ७-१-२० (४४८४४)
न हि कर्णं रणे दृष्ट्वा युधि स्थास्यन्ति पाण्डवाः ।
कर्णो हि समरे शक्तो जेतुं देवान्सवासवान् ॥ ७-१-२१ (४४८४५)
किमु पाण्डुसुतान्युद्धे हीनवीर्यपराक्रमान् ।
भीष्मेण तु रणे पार्थाः पालिता बाहुशालिना ॥ ७-१-२२ (४४८४६)
तांस्तु कर्णः शरैस्तीक्ष्णैर्नाशयिष्यति संयुगे ।
एवं ब्रुवन्तस्तेऽन्योन्यं हृष्टरूपा विशांपते ॥ ७-१-२३ (४४८४७)
राधेयं पूजयन्तश्च प्रशंसन्तश्च निर्ययुः ।
अस्माकं शकटव्यूहो द्रोणेन विहितोऽभवत् ॥ ७-१-२४ (४४८४८)
परेषां क्रौञ्च एवासीद्व्यूहो राजन्महात्मनाम् ।
प्रीयमाणेन विहितो धर्मराजेन भारत ॥ ७-१-२५ (४४८४९)
व्यूहप्रमुखतस्तेषां तस्थतुः पुरुषर्षभौ ।
वानरध्वजमुच्छ्रित्य विष्वक्सेनधनंजयौ ॥ ७-१-२६ (४४८५०)
ककुदं सर्वसैन्यानां धाम सर्वधनुष्मताम् ।
आदित्यपथगः केतुः पार्थस्यामिततेजसः ॥ ७-१-२७ (४४८५१)
दीपयामास तत्सैन्यं पाण्डवस्य महात्मनः ।
यथा प्रज्वलितः सूर्यो युगान्ते वै वसुंधराम् ॥ ७-१-२८ (४४८५२)
दीप्यन्दृश्येत हि तथा केतुः सर्वत्र धीमतः ।
योधानामर्जुनः श्रेष्ठो गाण्डीवं धनुषां वरम् ॥ ७-१-२९ (४४८५३)
वासुदेवश्च भूतानां चक्राणां च सुदर्शनम् ।
चत्वार्येतानि तेजांसि वहञ्श्वेतहयो रथः ॥ ७-१-३० (४४८५४)
परेषामग्रतस्तस्थौ कालचक्रमिवोद्यतम् ।
एवं तौ सुमहात्मानौ बलसेनाग्रगावुभौ ॥ ७-१-३१ (४४८५५)
तावकानां मुखे कर्णः परेषां च धनंजयः ।
ततो जयाभिसंरब्धौ परस्परवधैषिणौ ॥ ७-१-३२ (४४८५६)
अवेक्षेतां तदान्योन्यं समरे कर्णपाण्डवौ ।
ततः प्रयाते सहसा भारद्वाजे महारथे ॥ ७-१-३३ (४४८५७)
सिंहनादेन घोरेण वसुधा समकम्पत ।
ततस्तुमुलमाकाशमावृणोत्सदिवाकरम् ॥ ७-१-३४ (४४८५८)
वातोद्धूतं रजस्तीव्रं कौशेयनिकरोपमम् ।

ववर्ष द्यौरनभ्राऽपि मांसास्थिरुधिराण्युत ॥ ७-१-३५ (४४८५९)
गृध्राः श्येना बकाः कङ्का वायसाश्च सहस्रशः ।
उपर्युपरि सेनां ते तदा पर्यपतन्नृप ॥ ७-१-३६ (४४८६०)
गोमायवश्च प्राक्रोशन्भयदान्दारुणान्रवान् ।
अकार्षुरपसव्यं च बहुशः पृतनां तव ॥ ७-१-३७ (४४८६१)
चिखादिषन्तो मांसानि पिपासन्तश्च शोणितम् ।
अपतद्दीप्यमाना च सनिर्घाता सकम्पना ॥ ७-१-३८ (४४८६२)
उल्का ज्वलन्ती सङ्ग्रामे पुच्छेनावृत्य सर्वशः ।
परिवेषो महांश्चापि सविद्युत्स्तनयित्नुमान् ॥ ७-१-३९ (४४८६३)
भास्करस्याभवद्राजन्प्रयाते वाहिनीपतौ ।
एते चान्ये च बहवः प्रादुरासन्सुदारुणाः ।
उत्पाता युधि वीराणां जीवितक्षयकारिणः ॥ ७-१-४० (४४८६४)
ततः प्रववृते युद्धं परस्परवधैषिणाम् ।
कुरुपाण्डवसैन्यानां शब्देनापूरयज्जगत् ॥ ७-१-४१ (४४८६५)
ते त्वन्योन्यं सुसंरब्धाः पाण्डवाः कौरवैः सह ।
अभ्यघ्नन्निशितैः शस्त्रैर्जयगृद्धाः प्रहारिणः ॥ ७-१-४२ (४४८६६)
स पाण्डवानां महतीं महेष्वासो महाद्युतिः ।
वेगेनाभ्यद्रवत्सेनां किरञ्शरशतैः शितैः ॥ ७-१-४३ (४४८६७)
द्रोणमभ्युद्यतं दृष्ट्वा पाण्डवाः सहसृञ्जयैः ।
प्रत्यगृह्णंस्तदा राजञ्छरवर्षैः पृथक्पृथक् ॥ ७-१-४४ (४४८६८)
विक्षोभ्यमाणआ द्रोणेन भिद्यमाना महाचमूः ।
व्यशीर्यत सपाञ्चाला वातेनेव वलाहकाः ॥ ७-१-४५ (४४८६९)
बहूनीह विकुर्वाणो दिव्यान्यस्त्राणि संयुगे ।
अपीडयत्क्षणेनैव द्रोणः पाण्डवसृञ्जयान् ॥ ७-१-४६ (४४८७०)
ते वध्यमाना द्रोणेन वासवेनेव दानवाः ।
पाञ्चालाः समकम्पन्त धृष्टद्युम्नपुरोगमाः ॥ ७-१-४७ (४४८७१)
ततो दिव्यास्त्रविच्छूरो याज्ञसेनिर्महारथः ।
अभिनच्छरवर्षेण द्रोणानीकमनेकधा ॥ ७-१-४८ (४४८७२)
द्रोणस्य शरवर्षाणि शरवर्षेण पार्षतः ।
सन्निवार्य ततः सर्वान्कुरूनप्यवधीद्बली ॥ ७-१-४९ (४४८७३)
संयम्य तु ततो द्रोणः समवस्थाप्य चाहवे ।
स्वमनीकं महेष्वासः पार्षतं समुपाद्रवत् ॥ ७-१-५० (४४८७४)
स बाणवर्षं सुमहदसृजत्पार्षतं प्रति ।
मघवान्समभिक्रुद्धः सहसा दानवानिव ॥ ७-१-५१ (४४८७५)
ते कम्प्यमाना द्रोणेन बाणैः पाण्डवसृञ्जयाः ।
पुनःपुनरभज्यन्त सिंहेनैवेतरे मृगाः ॥ ७-१-५२ (४४८७६)

तथा पर्यपतद्रोणः पाण्डवानां बले बली ।
अलातचक्रवद्राजंस्तदद्भुतमिवाभवत् ॥ ७-१-५३ (४४८७७)
खचरनगरकल्पं कल्पितं शास्त्रदृष्ट्या चलदनिलपताकं ह्लादनं
वल्गिताश्वम् ।
स्फटिकविमलकेतुं त्रासनं शात्रवाणां रथवरमधिरूढः
सञ्जहारारिसेनाम् ॥ ॥ ७-१-५४ (४४८७८)

इति श्रीमन्महाभारते द्रोणपर्वणि द्रोणाभिषेकपर्वणि
Mahabharata - Drona Parva - Chapter Footnotes

५-१-९ सुभगानर्तितैः सौभाग्यवतीनृत्तैः ॥
५-१-२७ आदित्यपथगः आकाशगः ॥
५-१-५४ ह्लादनं योद्धुरानन्दजननम् ॥
५-१-७ सप्तमोऽध्यायः ॥

---

द्रोनपर्व-अध्यय००८
॥ श्रीः ॥
७.८. अध्यायः ८

Mahabharata - Drona Parva - Chapter Topics
सञ्जयेन धृतराष्ट्रं प्रति द्रोणपराक्रमवर्णनपूर्वकं
तन्निधनकथनम् ॥ १ ॥

Mahabharata - Drona Parva - Chapter Text

७-१-० (४४८७९)
सञ्जय उवाच। ७-१-०क्ष् (४२८०)
तथा द्रोणमभिघ्नन्तं साश्वसूतरथद्विपान् ।
व्यथिताः पाण्डवा दृष्ट्वा न चैनं पर्यवारयन् ॥ ७-१-१ (४४८८०)
ततो युधिष्ठिरो राजा धृष्टद्युम्नधनञ्जयौ ।
अब्रवीत्सर्वतो यत्तैः कुम्भयोनिर्निवार्यताम् ॥ ७-१-२ (४४८८१)
तत्रैनमर्जुनश्चैव धृष्टद्युम्नश्च पार्षतः ।
ग्ये चान्ये पार्थिवा राजन्पाण्डवस्यानुसैनिकाः ।
प्रत्यगृह्णंस्ततस्तत्र समागच्छन्महारथाः ॥ ७-१-३ (४४८८२)
केकया भीमसेनश्च सौभद्रोऽथ घटोत्कचः ।
युधिष्ठिरो यमौ मात्स्यो द्रुदश्चात्मजैः सह ॥ ७-१-४ (४४८८३)

द्रौपदेयाश्च संहृष्टा धृष्टकेतुः ससात्यकिः ।
चेकितानश्च सङ्क्रुद्धो युयुत्सुश्च महारथः ॥ ७-१-५ (४४८८४)
ये चान्ये पार्थिवा राजन्पाण्डवस्यानुयायिनः ।
कुलवीर्यानुरूपाणि चक्रुः कर्माण्यनेकशः ॥ ७-१-६ (४४८८५)
संभिद्यमानां तां दृष्ट्वा पाण्डवैर्वाहिनीं रणे ।
व्यावृत्य चक्षुषी कोपाद्भारद्वाजोऽन्ववैक्षत ॥ ७-१-७ (४४८८६)
स तीव्रं कोपमास्थाय रथे समरदुर्जयः ।
व्यधमत्पाण्डवानीकं महाभ्राणीव मारुतः ॥ ७-१-८ (४४८८७)
रथानश्वान्नरान्नागानभिधावन्नितस्ततः ।
चचारोन्मत्तवद्द्रोणो वृद्धोऽपि तरुणो यथा ॥ ७-१-९ (४४८८८)
तस्य शोणितदिग्धाङ्गाः शोणास्ते वातरंहसः ।
आजानेया हया राजन्नविश्रान्ताः सुखं ययुः ॥ ७-१-१० (४४८८९)
तमन्तकमिव क्रुद्धमापतन्तं यतव्रतम् ।
दृष्ट्वा सम्प्राद्रवन्योधाः पाण्डवस्य ततस्ततः ॥ ७-१-११ (४४८९०)
तेषां प्राद्रवतां भीमः पुनरावर्ततामपि ॥
पश्यतां तिष्ठतां चासीच्छब्दः परमदारुणः ॥ ७-१-१२ (४४८९१)
शूराणां हर्षजननो भीरूणां भयवर्धनः ।
द्यावापृथिव्योर्विवरं पूरयामास सर्वतः ॥ ७-१-१३ (४४८९२)
ततः पुनरपि द्रोणो नाम विश्रावयन्युधि ।
अकरोद्रौद्रमात्मानं किरञ्छरशतैः परान् ॥ ७-१-१४ (४४८९३)
स तथा तेष्वनीकेषु पाण्डुपुत्रस्य मारिष ।
कालवद्व्यचरद्द्रोणो युवेव स्थविरो बली ॥ ७-१-१५ (४४८९४)
उत्कृत्य च शिरांस्युग्रो बाहूनपि सुभूषणान् ।
कृत्वा शून्यान्रथोपस्थानुदक्रोशन्महारवान् ॥ ७-१-१६ (४४८९५)
तस्य हर्षप्रणादेन बाणवर्षेण च प्रभो ।
प्राकम्पन्त रणे योधा गावः शीतार्दिता इव ॥ ७-१-१७ (४४८९६)
द्रोणस्य रथघोषेण मौर्वीनिष्पेषणेन च ।
धनुःशब्देन चाकाशे शब्दः समभवन्महान् ॥ ७-१-१८ (४४८९७)
अथास्य धनुषो बाणा निस्सरन्तः सहस्रशः ।
व्याप्य सर्वा दिशः पेतुर्नागाश्वरथपत्तिषु। ७-१-१९ (४४८९८)
तं कार्मुकमहावेगमस्त्रज्वलितपावकम् ।
द्रोणमासादयाञ्चक्रुः पाञ्चालाः पाण्डवैः सह ॥ ७-१-२० (४४८९९)
सनागरथपत्त्यश्वान्प्राहिणोद्यमसादनम् ।
अचिरादकरोद्द्रोणो महीं शोणितकर्दमाम् ॥ ७-१-२१ (४४९००)
तन्वता परमास्त्राणि शरान्सततमस्यता ।
द्रोणेन विहितं दिक्षु शरजालमदृश्यत ॥ ७-१-२२ (४४९०१)

पदातिषु रथाश्वेषु वारणेषु च सर्वशः ।
तस्य विद्युदिवाभ्रेषु चरन्केतुरदृश्यत ॥ ७-१-२३ (४४९०२)
सकेकयानां प्रवरांश्च पञ्च पाञ्चालराजं च शरैः प्रमथ्य ।
युधिष्ठिरानीकमदीनसत्वो द्रोणोऽभ्ययात्कार्मुकबाणपाणिः ॥ ७-१-२४ (४४९०३)
तं भीमसेनश्च धनञ्जयश्च शिनेश्च नप्ता द्रुपदात्मजश्च ।
शैब्यात्मजः काशिपतिः शिबिश्च दृष्ट्वा नदन्तो व्यकिरञ्छरौघैः
॥ ७-१-२५ (४४९०४)
ग्तेषां शरा द्रोणशरैर्निकृत्ता भूमावदृश्यन्त विवर्तमानाः ।
श्रेणीकृताः संयति मोघवेगा द्वीपे नदीनामिव काशरोहाः'॥ ७-१-२६ (४४९०५)
ते द्रोणबाणासनविप्रमुक्ताः पतत्रिणः काञ्चनचित्रपुङ्खाः ।
भित्त्वा शरीराणि गजाश्वयूनां जग्मुर्महीं शोणितदिग्धवाजाः ॥ ७-१-२७
(४४९०६)
सा योधसङ्घैश्च रथैश्च भूमिः शरैर्विभिन्नैर्गजवाजिभिश्च ।
प्रच्छाद्यमाना पतितैर्बभूव समावृता द्यौरिव कालमेघैः
॥ ७-१-२८ (४४९०७)
शैनेयभीमार्जुनवाहिनीशं सौभद्रपाञ्चालसकाशिराजम् ।
अन्यांश्च वीरान्समरे ममर्द द्रोणः सुतानां तव भूतिकामः ॥ ७-१-२९
(४४९०८)
एतानि चान्यानि च कौरवेन्द्र कर्माणि कृत्वा समरे महात्मा ।
प्रताप्य लोकानिव कालसूर्यो द्रोणो गतः स्वर्गमितो हि राजन् ॥ ७-१-३० (४४९०९)
एवं रुक्मरथः शूरो हत्वा शतसहस्रशः ।
पाण्डवानां रणे योधान्पार्षतेन निपातितः ॥ ७-१-३१ (४४९१०)
अक्षौहिणीमभ्यधिकां शूराणामनिवर्तिनाम् ।
निहत्य पश्चाद्धृतिमानगच्छत्परमां गतिम् ॥ ७-१-३२ (४४९११)
पाण्डवैः सहपाञ्चालैरशिवैः क्रूरकर्मभिः ।
हतो रुक्मरथो राजन्कृत्वा कर्म सुदुष्करम् ॥ ७-१-३३ (४४९१२)
ततो निनादो भूतानामाकाशे समजायत ।
सैन्यानां च ततो राजन्नाचार्ये निहते युधि ॥ ७-१-३४ (४४९१३)
द्यां धरां खं दिशो वापि प्रदिशश्चानुनादयन् ।
अहो धिगिति भूतानां शब्दः समभवद्भृशम् ॥ ७-१-३५ (४४९१४)
देवताः पितरश्चैव पूर्वे ये चास्य बान्धवाः ।
ददृशुर्निहतं तत्र भारद्वाजं महारथम् ॥ ७-१-३६ (४४९१५)
पाण्डवास्तु जयं लब्ध्वा सिंहनादान्प्रचक्रिरे ।
सिंहनादेन महता समकम्पत मेदिनी ॥ ७-१-३७ (४४९१६)
गविचित्रजाम्बूनदभूषितध्वजं महारथं रुक्मरथं निपातितम्।॥
७-१-३८ (४४९१७)

इति श्रीमन्महाभारते द्रोणपर्वणि द्रोणाभिषेकपर्वणि अष्टमोऽध्यायः
॥ ८ ॥
Mahabharata - Drona Parva - Chapter Footnotes

५-१-१२ भीमः शब्द इति सम्बन्धः ॥
५-१-८ अष्टमोऽध्यायः ॥

---

द्रोनपर्व-अध्यय००९
॥ श्रीः ॥
७.९. अध्यायः ९

Mahabharata - Drona Parva - Chapter Topics
द्रोणमरणश्राविणो धृतराष्ट्रस्य तद्गुणानुवर्णनपूर्वकं शोचनम् ॥ १ ॥

Mahabharata - Drona Parva - Chapter Text

७-१-० (४४९१८)
धृतराष्ट्र उवाच। ७-१-०क्ष् (४२८१)
किं कुर्वाणं रणे द्रोणं जघ्नुः पाण्डवसृञ्जयाः ।
तथा निपुणमस्त्रेषु सर्वशस्त्रभृतामपि ॥ ७-१-१ (४४९१९)
रथः पर्यपतद्वाऽस्य धनुर्वाऽशीर्यतास्यतः ।
प्रमत्तो वाऽभवद्द्रोणो यथा मृत्युमुपेयिवान् ॥ ७-१-२ (४४९२०)
कथं नु पार्षतस्तात शत्रुभिर्दुष्प्रधर्षणम् ।
किरन्तमिषुसङ्घातान्रुक्मपुङ्खाननेकशः ॥ ७-१-३ (४४९२१)
क्षिप्रहस्तं द्विजश्रेष्ठं कृतिनं चित्रयोधिनम् ।
दूरेषुपातिनं दान्तमस्त्रयुद्धेषु पारगम् ॥ ७-१-४ (४४९२२)
पाञ्चालपुत्रो न्यवधीद्दिव्यास्त्रधरमच्युतम् ।
कुर्वाणं दारुणं कर्म रणे यत्तं महारथम् ॥ ७-१-५ (४४९२३)
व्यक्तं हि दैवं बलवत्पौरुषादिति मे मतिः ।
यद्द्रोणो निहतः शूरः पार्षतेन महात्मना ॥ ७-१-६ (४४९२४)
अस्त्रं चतुर्विधं वीरे यस्मिन्नासीत्प्रतिष्ठितम् ।
तमिष्वस्त्रधराचार्यं द्रोणं शंससि मे हतम् ॥ ७-१-७ (४४९२५)
श्रुत्वा हतं रुक्मरथं वैयाघ्रपरिवारणम् ।
जातरूपपरिष्कारं नाद्य शोकमपानुदे ॥ ७-१-८ (४४९२६)
न नूनं परदुःखेन म्रियते कोऽपि सञ्जय ।

यत्र द्रोणमहं श्रुत्वा हतं जीवामि मन्दधीः ।
दैवमेव परं मन्ये नन्वनर्थं हि पौरुषम् ॥ ७-१-९ (४४९२७)
अश्मसारमयं नूनं हृदयं सुदृढं मम ।
यच्छ्रुत्वा निहतं द्रोणं शतधा न विदीर्यते ॥ ७-१-१० (४४९२८)
ब्राह्मे दैवे तथेष्वस्त्रे यमुपासन्गुणार्थिनः ।
ब्राह्मणा राजपुत्राश्च स कथं मृत्युना हृतः ॥ ७-१-११ (४४९२९)
शोषणं सागरस्येव मेरोरिव विसर्पणम् ।
पतनं भास्करस्येव न मृष्ये द्रोणपातनम् ॥ ७-१-१२ (४४९३०)
दुष्टानां प्रतिषेद्धासीद्धार्मिकाणां च रक्षिता ।
योऽहासीत्कृपणस्यार्थे प्राणानपि परन्तपः ॥ ७-१-१३ (४४९३१)
मन्दानां मम पुत्राणां जयाशा यस्य विक्रमे ।
बृहस्पत्युशनस्तुल्यो बुद्ध्या स निहतः कथम् ॥ ७-१-१४ (४४९३२)
ग्गुणानां सर्वयोधानां स्थितिरासीन्महाद्युतिः ।
यं मृत्युर्वशगस्तिष्ठेत्स कथं मृत्युना हतः'॥ ७-१-१५ (४४९३३)
ते च शोणा बृहन्तोऽश्वाश्छन्ना जालैर्हिरण्मयैः ।
रथे वातजवा युक्ताः सर्वशस्त्रातिगा रणे ॥ ७-१-१६ (४४९३४)
बलिनो हेषिणो दान्ताः सैन्धवाः साधुवाहिनः ।
दृढाः सङ्ग्राममध्येषु कच्चिदासन्न विह्वलाः ॥ ७-१-१७ (४४९३५)
करिणां बृंहतां युद्धे शङ्खदुन्दुभिनिःस्वनैः ।
ज्याक्षेपशरवर्षाणां शस्त्राणां च सहिष्णवः ॥ ७-१-१८ (४४९३६)
आशंसन्तः पराञ्जेतुं जितश्वासा जितव्यथाः ।
हयाः पराजिताः शीघ्रा भारद्वाजरथोद्वहाः ॥ ७-१-१९ (४४९३७)
ते स्म रुक्मरथे युक्ता नरवीरसमास्थिताः ।
कथं नाभ्यतरंस्तात पाण्डवानामनीकिनीम् ॥ ७-१-२० (४४९३८)
जातरूपपरिष्करामास्थाय रथमुत्तमम् ।
भारद्वाजः किमकरोद्युधि सत्यपराक्रमः ॥ ७-१-२१ (४४९३९)
विद्यां यस्योपजीवन्ति सर्वलोकधनुर्धराः ।
स सत्यसन्धो बलवान्द्रोणः किमकरोद्युधि ॥ ७-१-२२ (४४९४०)
दिवि शक्रमिव श्रेष्ठं महामात्रं धनुर्भृताम् ।
के नु तं रौद्रकर्माणं युद्धे प्रत्युद्ययू रथाः ॥ ७-१-२३ (४४९४१)
ननु रुक्मरथं दृष्ट्वा प्राद्रवन्ति स्म पाण्डवाः ।
दिव्यमस्त्रं विकुर्वाणं रणे तस्मिन्महाबलम् ॥ ७-१-२४ (४४९४२)
उताहो सर्वसैन्येन धर्मराजः सहानुजः ।
पाञ्चालप्रग्रहो द्रोणं सर्वतः समवारयत् ॥ ७-१-२५ (४४९४३)
नूनमावारयत्पार्थो रथिनोऽन्यानजिह्मगैः ।
ततो द्रोणं समहरत्पार्षतः पापकर्मकृत् ॥ ७-१-२६ (४४९४४)

नह्यहं परिपश्यामि वधे कञ्चन शुष्मिणः ।
धृष्टद्युम्नादृते रौद्रात्पाल्यमानात्किरीटिना ॥ ७-१-२७ (४४९४५)
ग्उताहो सर्वसैन्येन धर्मराजः सहानुजः ।
उत्सृज्य सर्वसैन्यानि द्रोणं तमभिदुद्रुवे'॥ ७-१-२८ (४४९४६)
तैर्वृतः सर्वतः क्षुद्रैः पाञ्चालापशदैस्ततः ।
केकयैश्चेदिकारूशैर्मत्स्यैरन्यैश्च भूमिपैः ॥ ७-१-२९ (४४९४७)
व्याकुलीकृतमाचार्यं पिपीलैरुरगं यथा ।
कर्मण्यसुकरे सक्तं जघानेति मतिर्मम ॥ ७-१-३० (४४९४८)
योऽधीत्य चतुरो वेदान्साङ्गानाख्यानपञ्चमान् ।
ब्राह्मणानां प्रतिष्ठासीत्स्रोतसामिव सागरः ॥ ७-१-३१ (४४९४९)
क्षत्रं च ब्रह्म चैवेह योऽभ्यतिष्ठत्परन्तपः ।
ग्दृप्तानां प्रतिषेद्धा च चक्षुरासीदचक्षुषाम् ॥ ७-१-३२ (४४९५०)
अमर्षी चावलिप्तेषु धार्मिकेषु च धार्मिकः'।
स कथं ब्राह्मणो वृद्धः शस्त्रेण वधमाप्तवान् ॥ ७-१-३३ (४४९५१)
अमर्षिणा मर्षितवान्क्लिश्यमानान्सदा मया ।
अनर्हमाणान्कौन्तेयान्कर्मणस्तस्य तत्फलम् ॥ ७-१-३४ (४४९५२)
यस्य कर्मानुजीवन्ति लोके सर्वधनुर्भृतः ।
स सत्यसन्धः सुकृती श्रीकामैर्निहतः कथम् ॥ ७-१-३५ (४४९५३)
दिवि शक्र इव श्रेष्ठो महासत्वो महाबलः ।
स कथं निहतः पार्थैः क्षुद्रमत्स्यैर्यथा तिमिः ॥ ७-१-३६ (४४९५४)
क्षिप्रहस्तश्च बलवान्दृढधन्वारिमर्दनः ।
न यस्य विजयाकाङ्क्षी विषयं प्राप्य जीवति ॥ ७-१-३७ (४४९५५)
यं द्वौ न जहतः शब्दौ जीवमानं कदाचन ।
ब्राह्मश्च वेदकामानां ज्याघोषश्च धनुष्मताम् ॥ ७-१-३८ (४४९५६)
अदीनं पुरुषव्याघ्रं ह्रीमन्तमपराजितम् ।
तमिष्वासवराचार्यं द्रोणं जघ्नुः कथं रथाः ॥ ७-१-३९ (४४९५७)
ग्नाहं मन्ये हतं द्रोणं स हि लोकमयोत्स्यत ।
को हि शक्तो रणे जेतुमनाधृष्ययशोबलम् ॥ ७-१-४० (४४९५८)
ब्रह्मकल्पो भवेद्ब्राह्मे क्षात्रे नारायणोपमः ।
ब्रह्मक्षत्रे च यस्यास्तां वशे स्थाणोरिवाखिले ॥ ७-१-४१ (४४९५९)
सर्वान्हि मामकान्वीरान्सहाश्वरथकुञ्जरान् ।
युधिष्ठिरस्य तपसा हतान्मन्यामहे कुरून्'॥ ७-१-४२ (४४९६०)
कथं सञ्जय दुर्धर्षमनाधृष्ययशोबलम् ।
पश्यतां पुरुषेन्द्राणां समरे पार्षतोऽवधीत् ॥ ७-१-४३ (४४९६१)
के पुरस्तादयुध्यन्त रक्षन्तो द्रोणमन्तिकात् ।
के नु पश्चादवर्तन्त गच्छतो दुर्गमां गतिम् ॥ ७-१-४४ (४४९६२)

केऽरक्षन्दक्षिणं चक्रं सव्यं के च महात्मनः ।
पुरस्तात्के च वीरस्य युध्यमानस्य संयुगे ॥ ७-१-४५ (४४९६३)
के च तस्मिंस्तनूस्त्यक्त्वा प्रतीपं मृत्युमाव्रजन् ।
द्रोणस्य समरे वीराः केऽकुर्वन्त परां धृतिम् ॥ ७-१-४६ (४४९६४)
कच्चिन्नैनं भयान्मन्दाः क्षत्रिया व्यजहन्रणे ।
रक्षितारस्ततः शून्ये कच्चित्तैर्न हतः परैः ॥ ७-१-४७ (४४९६५)
न स पृष्ठमरेस्त्रासाद्रणे शौर्यात्प्रदर्शयेत् ।
परामप्यापदं प्राप्य स कथं निहतः परैः ॥ ७-१-४८ (४४९६६)
एतदार्येण कर्तव्यं कृच्छ्रास्वापत्सु सञ्जय ।
पराक्रमेद्यथा शक्त्या तच्च तस्मिन्प्रतिष्ठितम् ।
ग्यो यथाशक्ति युद्धयेत द्विषद्भिःस्वांश्च पालयन् ॥ ७-१-४९ (४४९६७)
कच्चिन्नैनं भयात्क्षुद्राः पार्थेभ्यः प्रददू रणे ।
गोप्तृभिस्तैः समुत्सृष्टः कच्चिन्नैष परैर्हतः ॥ ७-१-५० (४४९६८)
धृष्टद्युम्नं प्रपश्यामि निघ्नन्तमिव ब्राह्मणम् ।
वार्यमाणं रणे तात द्रौणिनाऽमिततेजसा'॥ ७-१-५१ (४४९६९)
मुह्यते मे मनस्तात कथा तावन्निवार्यताम् ।
भूयस्तु लब्धसंज्ञस्त्वां परिपृच्छामि सञ्जय ॥ ॥ ७-१-५२ (४४९७०)

इति श्रीमन्महाभारते द्रोणपर्वणि द्रोणाभिषेकपर्वणि नवमोऽध्यायः ॥ ९ ॥
Mahabharata - Drona Parva - Chapter Footnotes

५-१-२ अस्यतः शरानिति शेषः ॥
५-१-१७ बलिनस्तेजस्विनः ॥
५-१-२३ महामात्रं प्रधानम् ॥
५-१-२५ पाञ्चालम्प्रग्रहः पाञ्जालः प्रग्रहो बन्धरजुर्यस्य ५-१-२७
शुष्मिणस्तेजस्विनः ॥
५-१-२९ अपशदोऽधमः ॥
५-१-३१ आख्यानं पुराणभारतादि ॥
५-१-९ नवमोऽध्यायः ॥

---

द्रोनपर्व-अध्यय०१०
॥ श्रीः ॥
७.१०. अध्यायः १०

Mahabharata - Drona Parva - Chapter Topics
द्रोणमरणश्रवणेन मूर्छितस्य धृतराष्ट्रस्य

परिचारिकाभिर्जलसेचनादिना समुद्बोधनम् ॥ १ ॥
धृतराष्ट्रेण सञ्जयम्प्रति युद्धकथनचोदना ॥ २ ॥

Mahabharata - Drona Parva - Chapter Text

७-१०-० (४४९७१)
वैशम्पायन उवाच। ७-१०-०क्ष् (४२८२)
एवं पृष्ट्वा सूतपुत्रं हृच्छोकेनार्दितो भृशम् ।
जये निराशः पुत्राणां धृतराष्ट्रोऽपतत्क्षितौ ॥ ७-१०-१ (४४९७२)
तं विसंज्ञं निपतितन्त सिषिचुः परिचारिकाः ।
जलेनात्यर्थशीतेन जीवन्त्यः पुण्यगन्धिना ॥ ७-१०-२ (४४९७३)
पतितं चैनमालोक्य समस्ता भरतस्त्रियः ।
परिवव्रुर्महाराजमस्पृशंश्चैव पाणिभिः ॥ ७-१०-३ (४४९७४)
उत्थाप्य चैनं शनकै राजानं पृथिवीतलात् ।
आसनं प्रापयामासुर्बाष्पकण्ठ्यो वराननाः ॥ ७-१०-४ (४४९७५)
आसनं प्राप्य राजा तु मूर्च्छयाऽभिपरिप्लुतः ।
निश्चेष्टोऽतिष्ठत तदा वीज्यमानः समन्ततः ॥ ७-१०-५ (४४९७६)
स लब्ध्वा शनकैः संज्ञां वेपमानो महीपतिः ।
पुनर्गावल्गणिं सूतं पर्यपृच्छद्यथातथम् ॥ ७-१०-६ (४४९७७)
धृतराष्ट्र उवाच। ७-१०-७क्ष् (४२८३)
यः स उद्यन्निवादित्यो ज्योतिषा प्रणुदंस्तमः ।
अजातशत्रुमायान्तं कस्तं द्रोणादवारयत् ॥ ७-१०-७ (४४९७८)
प्रभिन्नमिव मातङ्गं यथा क्रुद्धं तरस्विनम् ।
प्रसन्नवदनं दृष्ट्वा प्रतिद्विरदगामिनम् ॥ ७-१०-८ (४४९७९)
वासितासङ्गमे यद्वदजय्यं प्रतियूथपैः ।
निजघान रणे वीरान्वीरः पुरुषसत्तमः ॥ ७-१०-९ (४४९८०)
यो ह्येको हि महावीर्यो निर्दहेद्धोरचक्षुषा ।
कृत्स्नं दुर्योधनबलं धृतिमान्सत्यसङ्गरः ॥ ७-१०-१० (४४९८१)
चक्षुर्हणं जये सक्तमिष्वासधरमच्युतम् ।
दान्तं बहुमतं लोके के शूराः पर्यवारयन् ॥ ७-१०-११ (४४९८२)
के दुष्प्रधर्षं राजानमिष्वासधरमच्युतम् ।
समासेदुर्नरव्याघ्रं कौन्तेयं तत्र मामकाः ॥ ७-१०-१२ (४४९८३)
तरसैवाभिपद्याथ यो वै द्रोणमुपाद्रवत् ।
यः करोति महत्कर्म शत्रूणां वै महाबलः ॥ ७-१०-१३ (४४९८४)
महाकायो महोत्साहो नागायुतसमो बले ।
तं भीमसेनमायान्तं के शूराः पर्यवारयन् ॥ ७-१०-१४ (४४९८५)

यदायाज्जलदप्रख्यो रथः परमवीर्यवान् ।
पर्जन्य इव बीभत्सुस्तुमुलामशनीं सृजन् ॥ ७-१०-१५ (४४९८६)
विसृजञ्छरजालानि वर्षाणि मघवानिव ।
अवस्फूर्जन्दिशः सर्वास्तलनेमिस्वनेन च ॥ ७-१०-१६ (४४९८७)
चापविद्युत्प्रभो घोरो रथगुल्मवलाहकः ।
सनेमिघोषस्तनितः शरशब्दातिबन्धुरः ॥ ७-१०-१७ (४४९८८)
रोषनिर्जितजीमूतो मनोभिप्रायशीघ्रगः ।
मर्मातिगो बाणधरस्तुमुलः शोणितोदकैः ॥ ७-१०-१८ (४४९८९)
सम्प्लावयन्दिशः सर्वा मानवैरास्तरन्महीम् ।
भीमनिःस्वनितो रौद्रो दुर्योधनपुरोगमान् ॥ ७-१०-१९ (४४९९०)
युद्धेऽभ्यषिञ्चद्विजयो गार्ध्रपत्रैः शिलाशितैः ।
गाण्डीवं धारयन्धीमान्कीदृशं वो मनस्तदा ॥ ७-१०-२० (४४९९१)
इषुसम्बाधमाकाशं कुर्वन्कपिवरध्वजः ।
यदायात्कथमासीत्तु तदा पार्थं समीक्षताम् ॥ ७-१०-२१ (४४९९२)
कच्चिद्गाण्डीवशब्देन न प्रणश्यति वै बलम् ।
यद्वः सभैरवं कुर्वन्नर्जुनो भृशमन्वयात् ॥ ७-१०-२२ (४४९९३)
कच्चिन्नापानुदत्प्रामानिषुभिर्वो धनञ्जयः ।
वातो वेगादिवाविध्यन्मेघाञ्शरगणैर्नृपान् ॥ ७-१०-२३ (४४९९४)
को हि गाण्डीवधन्वानं रणे सोढुं नरोऽर्हति ।
यमुपश्रुत्य सेनाग्रे जनः सर्वो विदीर्यते ॥ ७-१०-२४ (४४९९५)
यत्सेनाः समकम्पन्त यद्वीरानस्पृशद्भयम् ।
के तत्र नाजहुर्द्रोणं के क्षुद्राः प्राद्रवन्भयात् ॥ ७-१०-२५ (४४९९६)
के वा तत्र तनूस्त्यक्त्वा प्रतीपं मृत्युमाव्रजन् ।
अमानुषाणां जेतारं युद्धेष्वपि धनञ्जयम् ॥ ७-१०-२६ (४४९९७)
न च वेगं सिताश्वस्य विसहिष्यन्ति मामकाः ।
गाण्डीवस्य च निर्घोषं प्रावृड्जलदनिःस्वनम् ॥ ७-१०-२७ (४४९९८)
विष्वक्सेनो यस्य यन्ता यस्य योद्धा धनञ्चयः ।
अशक्यः स रथो जेतुं मन्ये देवासुरैरपि ॥ ७-१०-२८ (४४९९९)
सुकुमारो युवा शूरो दर्शनीयश्च पाण्डवः ।
मेधावी निपुणो धीमान्युधि सत्यपराक्रमः ॥ ७-१०-२९ (४५०००)
आरावं विपुलं कुर्वन्व्यथयन्सर्वसैनिकान् ।
यदायान्नकुलो द्रोणं के शूराः पर्यवारयन् ॥ ७-१०-३० (४५००१)
आशीविष इव क्रुद्धः सहदेवो यदाऽभ्ययात् ।
कदनं करिष्यञ्शत्रूणां तेजसा दुर्जयो युधि ॥ ७-१०-३१ (४५००२)
आर्यव्रतममोघेषुं ह्रीमन्तमपराजितम् ।
सहदेवं तमायान्तं के शूराः पर्यवारयन् ॥ ७-१०-३२ (४५००३)

यस्तु सौवीरराजस्य प्रमथ्य महतीं चमूम् ।
आदत्त महिषीं भोजां काम्यां सर्वाङ्गशोभनाम् ॥ ७-१०-३३ (४५००४)
सत्यं धृतिश्च शौर्यं च ब्रह्मचर्यं च केवलम् ।
सर्वाणि युयुधानेऽस्मिन्नित्यानि पुरुषर्षभे ॥ ७-१०-३४ (४५००५)
बलिनं सत्यकर्माणमदीनमपराजितम् ।
वासुदेवसमं युद्धे वासुदेवादनन्तरम् ॥ ७-१०-३५ (४५००६)
धनञ्जयोपदेशेन श्रेष्ठमिष्वस्त्रकर्मणि ।
पार्थेन सममस्त्रेषु कस्तं द्रोणादवारयत् ॥ ७-१०-३६ (४५००७)
वृष्णीनां प्रवरं वीरं शूरं सर्वधनुष्मताम् ।
रामेण सममस्त्रेषु यशसा विक्रमेण च ॥ ७-१०-३७ (४५००८)
सत्यं धृतिर्मतिः शौर्यं ब्राह्मं चास्त्रमनुत्तमम् ।
सात्वते तानि सर्वाणि त्रैलोक्यमिव केशवे ॥ ७-१०-३८ (४५००९)
तमेवङ्गुणसम्पन्नं दुर्वारमपि दैवतैः ।
समासाद्य महेष्वासं के शूराः पर्यवारयन् ॥ ७-१०-३९ (४५०१०)
पाञ्चालेषूत्तमं वीरमुत्तमाभिजनप्रियम् ।
नित्यमुत्तमकर्माणमुत्तमौजसमाहवे ॥ ७-१०-४० (४५०११)
युक्तं धनञ्जयहिते ममानर्थार्थमुत्थितम् ।
यमवैश्रवणादित्यमहेन्द्रवरुणोपमम् ॥ ७-१०-४१ (४५०१२)
महारथं समाख्यातं द्रोणायोद्यतमाहवे ।
त्यजन्तं तुमुले प्राणान्के शूराः समवारयन् ॥ ७-१०-४२ (४५०१३)
एकोपसृत्य चेदिभ्यः पाण्डवान्यः समाश्रितः ।
धृष्टकेतुं समायान्तं द्रोणं कस्तं न्यवारयत् ॥ ७-१०-४३ (४५०१४)
योऽवधीत्केतुमान्वीरो राजपुत्रं दुरासदम् ।
अपरान्तगिरिद्वारे द्रोणात्कस्तं न्यवारयत् ॥ ७-१०-४४ (४५०१५)
स्त्रीम्पुसयोर्नरव्याघ्रो यः स वेद गुणागुणान् ।
शिखण्डिनं याज्ञसेनिमम्लानमनसं युधि ॥ ७-१०-४५ (४५०१६)
देवव्रतस्य समरे हेतुं मृत्योर्महात्मनः ।
द्रोणायाभिमुखं यान्तं के शूराः पर्यवारयन् ॥ ७-१०-४६ (४५०१७)
यस्मिन्नभ्यधिका वीरे गुणाः सर्वे धनञ्जयात् ।
यस्मिन्नस्त्राणि सत्यं च ब्रह्मचर्यं च सर्वदा ॥ ७-१०-४७ (४५०१८)
वासुदेवसमं वीर्ये धनञ्जयसमं बले ।
तेजसाऽऽदित्यसदृशं बृहस्पतिसमं मतौ ॥ ७-१०-४८ (४५०१९)
अभिमन्युं महात्मानं व्यात्ताननमिवान्तकम् ।
द्रोणायाभिमुखं यान्तं के शूराः समवारयन् ॥ ७-१०-४९ (४५०२०)
तरुणस्तरुणप्रज्ञः सौभद्रः परवीरहा ।
यदाभ्यधावद्वै द्रोणं तदाऽऽसीद्वो मनः कथं ॥ ७-१०-५० (४५०२१)

द्रौपदेया नरव्याघ्राः समुद्रमिव सिन्धवः ।
यद्द्रोणमाद्रवन्सङ्ख्ये के शूरास्तान्न्यवारयन् ॥ ७-१०-५१ (४५०२२)
एते द्वादश वर्षाणि क्रीडामुत्सृज्य बालकाः ।
अस्त्रार्थमवसन्भीष्मे बिभ्रतो व्रतमुत्तमम् ॥ ७-१०-५२ (४५०२३)
क्षत्रञ्जयः क्षत्रदेवः क्षत्रवर्मा च मानदः ।
धृष्टद्युम्नात्मजा वीराः के तान्द्रोणादवारयन् ॥ ७-१०-५३ (४५०२४)
शताद्विशिष्टं यं युद्धे सममन्यन्त वृष्णयः ।
चेकितानं महेष्वासं कस्तं द्रोणादवारयत् ॥ ७-१०-५४ (४५०२५)
वार्धक्षेमिः कलिङ्गानां यः कन्यामाहरद्युधि ।
अनाधृष्टिरदीनात्मा कस्तं द्रोणादवारयत् ॥ ७-१०-५५ (४५०२६)
भ्रातरः पञ्च कैकेया धार्मिकाः सत्यविक्रमाः ।
इन्द्रगोपकसङ्काशा रक्तवर्मायुधध्वजाः ॥ ७-१०-५६ (४५०२७)
मातृष्वसुः सुता वीराः पाण्डवानां जयार्थिनः ।
तान्द्रोणं हन्तुमायातान्के वीराः पर्यवारयन् ॥ ७-१०-५७ (४५०२८)
यं योधयन्तो राजानो नाजयन्वारणावते ।
षण्मासानपि संरब्धा जिघांसन्तो युधां पतिं ॥ ७-१०-५८ (४५०२९)
धनुष्मतां वरं शूरं सत्यसन्धं महाबलम् ।
द्रोणात्कस्तं नरव्याघ्रं युयुत्सुं पर्यवारयत् ॥ ७-१०-५९ (४५०३०)
यः पुत्रं काशिराजस्य वाराणस्यां महारथम् ।
समरे स्त्रीषु गृध्यन्तं भल्लेनापाहरद्रथात् ॥ ७-१०-६० (४५०३१)
धृष्टद्युम्नं महेष्वासं पार्थानां मन्त्रधारिणम् ।
युक्तं दुर्योधनानर्थे सृष्टं द्रोणवधाय च ॥ ७-१०-६१ (४५०३२)
निर्दहन्तं रणे योधान्दारयन्तं च सर्वतः ।
द्रोणाभिमुखमायान्तं के शूराः पर्यवारयन् ॥ ७-१०-६२ (४५०३३)
उत्सङ्ग इव सम्वृद्धं द्रुपदस्यास्त्रवित्तमम् ।
शैखण्डिनं शस्त्रगुप्तं के द्रोणादवारयन् ॥ ७-१०-६३ (४५०३४)
य इमां पृथिवीं कृत्स्नां चर्मवत्समवेष्टयत् ।
महता रथघोषेण मुख्यारिघ्नो महारथः ॥ ७-१०-६४ (४५०३५)
दशाश्वमेधानाजह्रे स्वन्नपानाप्तदक्षिणान् ।
निरर्गलान्सर्वमेधान्पुत्रवत्पालयन्प्रजाः ॥ ७-१०-६५ (४५०३६)
विसृष्टा दक्षिणा यस्य गङ्गाजलमवारयत् ।
गङ्गास्रोतसि यावत्यः सिकता अप्यशेषतः ।
तावतीर्गा ददौ वीर उशीनरसुतोऽध्वरे ॥ ७-१०-६६ (४५०३७)
न पूर्वे नापरे चक्रुरिदं केचन मानवाः ।
इतीदं चुक्रुशुर्देवाः कृते कर्मणि दुष्करे ॥ ७-१०-६७ (४५०३८)
पश्यामस्त्रिषु लोकेषु न तं संस्थास्नुचारिषु ।

जातं चापि जनिष्यन्तं द्वितीयं चापि साम्प्रतम् ॥ ७-१०-६८ (४५०३९)
अन्यमौशीनराच्छैब्याद्धुरो वोढारमित्युत ।
गतिं यस्य न यास्यन्ति मानुषा लोकवासिनः ॥ ७-१०-६९ (४५०४०)
तस्य नप्तारमायान्तं शैब्यं कः समवारयत् ।
द्रोणायाभिमुखं यत्तं व्यात्ताननमिवान्तकम् ॥ ७-१०-७० (४५०४१)
विराटस्य रथानीकं मत्स्यस्यामित्रघातिनः ।
प्रेप्सन्तं समरे द्रोणं के वीराः पर्यवारयन् ॥ ७-१०-७१ (४५०४२)
सद्यो वृकोदराज्जातो महाबलपराक्रमः ।
मायावी राक्षसो वीरो यस्मान्मम महद्भयम् ॥ ७-१०-७२ (४५०४३)
पार्थानां जयकामं तं तं पुत्राणां मम कण्टकम् ।
घटोत्कचं महात्मानं कस्तं द्रोणादवारयत् ॥ ७-१०-७३ (४५०४४)
एते चान्ये च बहवो येषामजितं युधि ।
त्यक्तारः संयुगे प्राणान्किं तेषामजितं युधि ॥ ७-१०-७४ (४५०४५)
येषां च पुरुषव्याघ्रः शार्ङ्गधन्वा व्यपाश्रयः ॥
लोकानां गुरुरत्यर्थं लोकनाथः सनातनः। ७-१०-७५ (४५०४६)
नारायणोरणे नाथो दिव्यो दिव्यात्मकः प्रभुः ॥
यस्य दिव्यानि कर्माणि प्रवदन्ति मनीषिणः। ७-१०-७६ (४५०४७)
तान्यहं कीर्तयिष्यामि भक्त्या स्थैर्यार्थमात्मनः ॥ ॥ ७-१०-७७ (४५०४८)

इति श्रीमन्महाभारते द्रोणपर्वणि द्रोणाभिषेकपर्वणि दशमोऽध्यायः
॥ १० ॥
Mahabharata - Drona Parva - Chapter Footnotes

५-१०-८ सः प्रसिद्धः । तमजातशत्रुम् आयान्तं दृष्ट्वा द्रोणात्कः
अवारयदित्यन्वयः ॥
५-१०-१५ यदा अयात् यदा च
दुर्योधनपुरोगमान्गार्ध्रपत्रैरभ्यषिञ्चत्तदा वो मनः
कीदृशमभूदिति षष्ठेनान्वयः ॥
५-१०-३४ युयुधाने सात्यकौ ॥
५-१०-३८ सात्वते सात्यकौ ॥
५-१०-६८ स्थास्नुचारिषु स्थावरजङ्गमात्मकेषु । स्नमित्यस्य
व्यवहितेन पश्याम इत्यनेन सम्बन्धः ॥
५-१०-१० दशमोऽध्यायः ॥
१० ॥

---

द्रोनपर्व-अध्यय०११

॥ श्रीः ॥

७.११. अध्यायः ११

Mahabharata - Drona Parva - Chapter Topics

धृतराष्ट्रेण
प्रसङ्गाद्भक्त्युद्रेकेण--श्रीकृष्णचरित्रानुकीर्तनम् ॥ १ ॥
धृतराष्ट्रेण बहुधा विचिन्त्य सञ्जयम्प्रति युद्धकथनचोदना ॥ २ ॥

Mahabharata - Drona Parva - Chapter Text

७-११-० (४५०४९)
धृतराष्ट्र उवाच। ७-११-०क्ष् (४२८४)
शृणु दिव्यानि कर्माणि वासुदेवस्य सञ्जय ।
कृतवान्यानि गोविन्दो यथा नान्याःपुमान्क्वचित् ॥ ७-११-१ (४५०५०)
संवर्धता गोपकुले बालेनैव महात्मना ।
विख्यापितं बलं बाह्वोस्त्रिषु लोकेषु सञ्जय ॥ ७-११-२ (४५०५१)
पूतनां शकटं हत्वा केशिनं चैव वाजिनम् ।
ऋषभं धेनुकं चैव अरिष्टं च महाबलम् ॥ ७-११-३ (४५०५२)
दावान्मुक्त्वा महाबाहुर्धृत्वा गोवर्धनं निगिम् ।
चाणूरं मुष्टिकं चैव रङ्गमध्ये निहत्य च ॥ ७-११-४ (४५०५३)
प्रलम्बं नरकं जम्भं पीठं चापि महासुरम् ।
मुरुं चान्तकसङ्काशमवधीत्पुष्करेक्षणः ॥ ७-११-५ (४५०५४)
तथा कंसो महातेजा जरासन्धेन पालितः ।
विक्रमेणैव कृष्णेन सगणः पातितो रणे ॥ ७-११-६ (४५०५५)
सुनामा रणविक्रान्तः समग्राक्षौहिणीपतिः ।
भोजराजस्य मध्यस्थो भ्राता कंसस्य वीर्यवान् ॥ ७-११-७ (४५०५६)
बलदेवद्वितीयेन कृष्णेनामित्रघातिना ।
तरस्वी समरे दग्धः ससैन्यः शूरसेनराट् ॥ ७-११-८ (४५०५७)
दुर्वासा नाम विप्रर्षिस्तथा परमकोपनः ।
आराधितः सदारेण स चास्मै प्रददौ वरान् ॥ ७-११-९ (४५०५८)
तथा गान्धारराजस्य सुतां वीरः स्वयंवरे ।
निर्जित्य पृथिवीपालानावहत्पुष्करेक्षणः ॥ ७-११-१० (४५०५९)
अमृष्यमाणा राजानो यस्य जात्या हया इव ।
रथे वैवाहिके युक्ताः प्रतोदेन कृतव्रणाः ॥ ७-११-११ (४५०६०)
जरासन्धं महाबाहुमुपायेन जनार्दनः ।
परेण घातयामास समग्राक्षौहिणीपतिम् ॥ ७-११-१२ (४५०६१)

चेदिराजं च विक्रान्तं राजसेनापतिं बली ।
अर्घे विवदमानं च जघान पशुवत्तदा ॥ ७-११-१३ (४५०६२)
सौभं दैत्यपुरं खस्थं शाल्वगुप्तं दुरासदम् ।
समुद्रकुक्षौ विक्रम्य पातयामास माधवः ॥ ७-११-१४ (४५०६३)
अङ्गान्वङ्गान्कलिङ्गांश्च मागधान्काशिकोसलान् ।
वात्स्यगार्ग्यकरूषांश्च पौण्ड्रांश्चाप्यजयद्रणे ॥ ७-११-१५ (४५०६४)
आवन्त्यान्दाक्षिणात्यांश्च पार्वतीयान्दशेरकान् ।
काश्मीरकानौरसिकान्पिशाचांश्च समुद्गलान् ॥ ७-११-१६ (४५०६५)
काम्भोजान्वाटधानांश्च चोलान्पाण्ड्यांश्च सञ्जय ।
त्रिगर्तान्मालवांश्चैव दरदांश्च सुदुर्जयान् ॥ ७-११-१७ (४५०६६)
नानादिग्भ्यश्च सम्प्राप्तान्खशांश्चैव शकांस्तथा ।
जितवान्पुण्डरीकाक्षो यवनं च सहानुगम् ॥ ७-११-१८ (४५०६७)
प्रविश्य मकरावासं यादोगणनिषेवितम् ।
जिगाय वरुणं सङ्ख्ये सलिलान्तर्गतं पुरा ॥ ७-११-१९ (४५०६८)
युधि पञ्चजनं हत्वा दैत्यं पातालवासिनम् ।
पाञ्चजन्यं हृषीकेशो दिव्यं शङ्खमवाप्तवान् ॥ ७-११-२० (४५०६९)
खाण्डवे पार्थसहितस्तोषयित्वा हुताशनम् ।
आग्नेयमस्त्रं दुर्धर्षं चक्रं लेभे महाबलः ॥ ७-११-२१ (४५०७०)
वैनतेयं समारुह्य त्रासयित्वाऽमरावतीम् ।
महेन्द्रभवनाद्वीरः पारिजातमुपानयत् ॥ ७-११-२२ (४५०७१)
तच्च मर्षितवाञ्शक्रो जानंस्तस्य पराक्रमम् ।
राज्ञां चाप्यजितं कंचित्कृष्णेनेह न शुश्रुम ॥ ७-११-२३ (४५०७२)
यच्च तन्महदाश्चर्यं सभायां मम सञ्जय ।
कृतवान्पुण्डरीकाक्षः कस्तदन्य इहार्हति ॥ ७-११-२४ (४५०७३)
यच्च भक्त्या प्रसन्नोऽहमद्राक्षं कृष्णमीश्वरम् ।
तन्मे सुविदितं सर्वं प्रत्यक्षमिव चागमम् ॥ ७-११-२५ (४५०७४)
नान्तो विक्रमयुक्तस्य बुद्ध्या युक्तस्य वा पुनः ।
कर्मणां शक्यते गन्तुं हृषीकेशस्य सञ्जय ॥ ७-११-२६ (४५०७५)
तथा गदश्च साम्बश्च प्रद्युम्नोऽथ विदूरथः ।
अगावहोऽनिरुद्धश्च चारुदेष्णः ससारणः ॥ ७-११-२७ (४५०७६)
उल्मुको निशठश्चैव झिल्ली बभ्रुश्च वीर्यवान् ।
पृथुश्च विपृथुश्चैव शमीकोऽथारिमेजयः ॥ ७-११-२८ (४५०७७)
एतेऽन्ये बलवन्तश्च वृष्णिवीराः प्रहारिणः ।
कथंचित्पाण्डवानीकं श्रयेयुः समरे स्थिताः ॥ ७-११-२९ (४५०७८)
आहूता वृष्णिवीरेण केशवेन महात्मना ।
ततः संशयितं सर्वं भवेदिति मतिर्मम ॥ ७-११-३० (४५०७९)

नागायुतबलो वीरः कैलासशिखरोपमः ।
वनमाली हली रामस्तत्र यत्र जनार्दनः ॥ ७-११-३१ (४५०८०)
यमाहुः सर्वपितरं वासुदेवं द्विजातयः ।
अपि वा ह्येष पाण्डूनां योत्स्यतेऽर्थाय सञ्जय ॥ ७-११-३२ (४५०८१)
स यदा तात सन्नह्येत्पाण्डवार्थाय सञ्जय ।
न तदा प्रतिसंयोद्धा भविता तत्र कश्चन ॥ ७-११-३३ (४५०८२)
यदि स्म कुरवः सर्वे जयेयुर्नाम पाण्डवान् ।
वार्ष्णेयोऽर्थाय तेषां वै गृह्णीयाच्छस्त्रमुत्तमम् ॥ ७-११-३४ (४५०८३)
ततः सर्वान्नरव्याघ्रो हत्वा नरपतीन्रणे ।
कौरवांश्च महाबाहुःकुन्त्यै दद्यात्स मेदिनीम् ॥ ७-११-३५ (४५०८४)
यस्य यन्ता हृषीकेशो योद्धा यस्य धनञ्जयः ।
रथस्य तस्य कः सङ्ख्ये प्रत्यनीको भवेद्रथः ॥ ७-११-३६ (४५०८५)
न केनचिदुपायेन कुरूणां दृश्यते जयः ।
तस्मान्मे सर्वमाचक्ष्व यथा युद्धमवर्तत ॥ ७-११-३७ (४५०८६)
अर्जुनः केशवस्यात्मा कृष्णोऽप्यात्मा किरीटिनः ।
अर्जुने विजयो नित्यं कृष्णे कीर्तिश्च शाश्वती ॥ ७-११-३८ (४५०८७)
सर्वेष्वपि च लोकेषु बीभत्सुरपराजितः ।
प्राधान्येनैव भूयिष्ठममेयाः केशवे गुणाः ॥ ७-११-३९ (४५०८८)
मोहाद्दुर्योधनः कृष्णं यो न वेत्तीह केशवम् ।
मोहितो दैवयोगेन मृत्युपाशपुरस्कृतः। ७-११-४० (४५०८९)
न वेद कृष्णं दाशार्हमर्जुनं चैव पाण्डवम् ।
पूर्वदेवौ महात्मानौ नरनारायणावुभौ ॥ ७-११-४१ (४५०९०)
एकात्मानौ द्विधाभूतौ दृश्येते मानवैर्भुवि ।
मनसापि हि दुर्धर्षौ सेनामेतां यशस्विनौ ॥ ७-११-४२ (४५०९१)
नाशयेतामिहेच्छन्तौ मानुषत्वाच्च नेच्छतः ।
युगस्येव विपर्यासो लोकानामिव मोहनम् ॥ ७-११-४३ (४५०९२)
भीष्मस्य च वधस्तात द्रोणस्य च महात्मनः ।
न ह्येव ब्रह्मचर्येण न वेदाध्ययनेन च ॥ ७-११-४४ (४५०९३)
न क्रियाभिर्न चास्त्रेण मृत्योः कश्चिन्निर्वायते ।
लोकसम्भावितौ वीरौ कृतास्त्रौ युद्धदुर्मदौ ॥ ७-११-४५ (४५०९४)
भीष्मद्रोणौ हतौ श्रुत्वा किन्नु जीवामि सञ्जय ।
यां तां श्रियमसूयामः पुरा दृष्टवा युधिष्ठिरे ॥ ७-११-४६ (४५०९५)
अद्य तामनुजानीमो भीष्मद्रोणवधेन ह ।
मत्कृते चाप्यनुप्राप्तः कुरूणामेष सङ्क्षयः ॥ ७-११-४७ (४५०९६)
पक्वानां हि वधे सूत वज्रायन्ते तृणान्युत ।
अनन्तमिदमैश्वर्यं लोके प्राप्तो युधिष्ठिरः ॥ ७-११-४८ (४५०९७)

यस्य कोपान्महात्मानौ भीष्मद्रोणौ निपातितौ ।
प्राप्तः प्रकृतितो धर्मो न धर्मो मामकान्प्रति ॥ ७-११-४९ (४५०९८)
क्रूरः सर्वविनाशाय कालोऽसौ नातिवर्तते ।
अन्यथा चिन्तिता ह्यर्था नरैस्तात मनस्विभिः ।
अन्यथैव प्रपद्यन्ते दैवादिति मतिर्मम ॥ ७-११-५० (४५०९९)
तस्मादपरिहार्येऽर्थे सम्प्राप्ते कृच्छ्र उत्तमे ।
अपारणीये दुश्चिन्त्ये यथाभूतं प्रचक्ष्व मे ॥ ॥ ७-११-५१ (४५१००)

इति श्रीमन्महाभारते द्रोणपर्वणि द्रोणाभिषेकपर्वणि एकादशोऽध्यायः
॥ ११ ॥
Mahabharata - Drona Parva - Chapter Footnotes

५-११-६ विक्रमेणैव अस्त्रं चिना ॥
५-११-१२ परेण भीमेन ॥
५-११-११ एकादशोऽध्यायः ॥

---

द्रोनपर्व-अध्यय०१२
॥ श्रीः ॥
७.१२. अध्यायः १२

Mahabharata - Drona Parva - Chapter Topics
द्रोणचोदितेन दुर्योधनेन युधिष्ठिरस्य जीवग्राहं ग्रहणवरणम् ॥ १ ॥
द्रोणेन अर्जुनासन्निधाने तद्ग्रहणे प्रतिज्ञाते दुर्यो धनेन
तदुद्घोषणम् ॥ २ ॥

Mahabharata - Drona Parva - Chapter Text

७-१२-० (४५१०१)
सञ्जय उवाच। ७-१२-०क्ष् (४२८५)
ग्शुश्रूषस्व स्थिरो भूत्वां शंसतो मम भारत'।
हन्त ते कथयिष्यामि सर्वं प्रत्यक्षदर्शिवान् ।
यथा सत्यपरो द्रोणः सादिताः पाण्डुसृञ्जयैः ॥ ७-१२-१ (४५१०२)
सेनापतित्वं सम्प्राप्य भारद्वाजो महारथः ।
मध्ये सर्वस्य सैन्यस्य पुत्रं ते वाक्यमब्रवीत् ॥ ७-१२-२ (४५१०३)
यत्कौरवाणामृषभादापगेयादनन्तरम् ।
सैनापत्ये त्वया राजन्नद्य सत्कृतवानहम् ॥ ७-१२-३ (४५१०४)

सदृशं कर्मणस्तस्य फलं प्राप्नुहि भारत ।
करोमि कामं कं तेऽद्य प्रवृणीष्व यमिच्छसि ॥ ७-१२-४ (४५१०५)
सञ्जय उवाच। ७-१२-५क्ष् (४२८६)
ततो दुर्योधनो राजा कर्णदुःशासनादिभिः ।
सम्मन्त्र्योवाच दुर्धर्षमाचार्यं जयतां वरम् ॥ ७-१२-५ (४५१०६)
ददासि चेद्वरं मह्यं जीवग्राहं युधिष्ठिरम् ।
गृहीत्वा रयिनां श्रेष्ठं मत्समीपमिहानय ॥ ७-१२-६ (४५१०७)
ग्इच्छेयं वै महात्मानं धर्मात्मानं युधिष्ठिरम् ।
भ्रातृणां पश्यतामेव जीवग्राहेण मे द्विज ॥ ७-१२-७ (४५१०८)
गृहीत्वा रथिनां श्रेष्ठं मत्सकाशमिहानय ।
प्रीणाम्यनेन कार्येण ससुहृज्जनबान्धवः ॥ ७-१२-८ (४५१०९)
सञ्जय उवाच। ७-१२-९क्ष् (४२८७)
ततः कुरूणामाचार्यः श्रुत्वा पुत्रस्य ते वचः ।
सेनां प्रहर्षयन्सर्वामिदं वचनमब्रवीत् ॥ ७-१२-९ (४५११०)
धन्यः कुन्तीसुतो राजन्यस्य ग्रहणमिच्छसि ।
न वधं तस्य दुर्धर्ष वरमद्य प्रयाचसे ॥ ७-१२-१० (४५१११)
किमर्थं च नरव्याघ्र न वधं तस्य काङ्क्षसे ।
नाशंससि क्रियामेतां मत्तो दुर्योधन ध्रुवम् ॥ ७-१२-११ (४५११२)
आहोस्विद्धर्मराजस्य द्वेष्टा कश्चिन्न विद्यते ।
यदीच्छसि त्वं जीवन्तं कुलं रक्षसि चात्मनः ॥ ७-१२-१२ (४५११३)
अथवा भरतश्रेष्ठ निर्जित्य युधि पाण्डवान् ।
राज्यांशं प्रति दत्त्वा च सौभ्रात्रं कर्तुमिच्छसि ॥ ७-१२-१३ (४५११४)
धन्यः कुन्तीसुतो राजा सुजातं चास्य धीमतः ।
अजातशत्रुता सत्या तस्य यत्स्निह्यते भवान् ॥ ७-१२-१४ (४५११५)
सञ्जय उवाच। ७-१२-१५क्ष् (४२८८)
द्रोणेन चैवमुक्तस्य तव पुत्रस्य भारत ।
सहसा निःसृतो भावो योस्य नित्यं हृदि स्थितः ॥ ७-१२-१५ (४५११६)
नाकारो गूहितुं शक्यो बृहस्पतिसमैरपि ।
तस्मात्तव सुतो राजन्प्रहृष्टो वाक्यमब्रवीत् ॥ ७-१२-१६ (४५११७)
वधे कुन्तीसुतस्याजौ नाचार्य विजयो मम ।
हते युधिष्ठिरे पार्था हन्युःसर्वान्हि नो ध्रुवम् ॥ ७-१२-१७ (४५११८)
नैव शक्या रणे सर्वे निहन्तुममरैरपि ।
ग्यदि सर्वे हनिष्यन्ते पाण्डवाः ससुता मृधे ॥ ७-१२-१८ (४५११९)
ततः कृत्स्नं वशे कृत्वा निःशेषं नृपमण्डलम् ।
ससागरवनां स्फीतां विजित्य वसुधामिमाम् ॥ ७-१२-१९ (४५१२०)
विष्णुर्दास्यति कृष्णायै कुन्त्यै वा पुरुषोत्तमः'।

यद्येष चैषां शेषःस्यात्स एवास्मान्न शेषयेत् ॥ ७-१२-२० (४५१२१)
सत्यप्रतिज्ञे त्वानीते पुनर्द्यूतेन निर्जिते ।
ग्तस्मिञ्जीवति चायाते ह्युपायैर्बहुभिः कृतैः'।
पुनर्यास्यन्त्यरण्याय पाण्डवास्तमनुव्रताः ॥ ७-१२-२१ (४५१२२)
सोऽयं मम जयो व्यक्तं दीर्घकालं भविष्यति ।
अतो न वधमिच्छामि धर्मराजस्य कर्हिचित् ॥ ७-१२-२२ (४५१२३)
सञ्जय उवाच। ७-१२-२३क्ष् (४२८९)
तस्य जिह्ममभिप्रायं ज्ञात्वा द्रोणोऽर्थतत्त्ववित् ।
तं वरं सान्तरं तस्मै ददौ संचिन्त्य बुद्धिमान् ॥ ७-१२-२३ (४५१२४)
द्रोण उवाच। ७-१२-२४क्ष् (४२९०)
न चेद्युधिष्ठिरं वीरः पालयेदर्जुनो युधि ।
मन्यस्व पाण्डवश्रेष्ठमानीतं वशमात्मनः ॥ ७-१२-२४ (४५१२५)
न हि शक्यो रणे पार्थः सेन्द्रैर्देवासुरैरपि ।
प्रत्युद्यातुमतस्तात न तस्माद्धर्षयाम्यहम् ॥ ७-१२-२५ (४५१२६)
असंशयं स मे शिष्यो मत्पूर्वश्चास्त्रकर्मणि ।
तरुणः सुकृती युक्त एकायनगतश्च सः ॥ ७-१२-२६ (४५१२७)
अस्त्राणीन्द्राच्च रुद्राच्च भूयांसि समवाप्तवान् ।
अमर्षितश्च ते राजंस्ततो नामर्षयाम्यहम् ॥ ७-१२-२७ (४५१२८)
स चापक्रम्यतां युद्धाद्येनोपायेन शक्यते ।
अपनीते ततः पार्थे धर्मराजो जितस्त्वया ॥ ७-१२-२८ (४५१२९)
ग्रहणे हि जयस्तस्य न वधे पुरुषर्षभ ।
ग्ग्रहणं हि वधात्तस्य धर्मराजस्य मन्यसे'।
अनेनैवाभ्युपायेन ग्रहणं समुपैष्यसि ॥ ७-१२-२९ (४५१३०)
अहं गृहीत्वा राजानं सत्यधर्मपरायणम् ।
आनयिष्यामि ते राजन्वशमद्य न संशयः ॥ ७-१२-३० (४५१३१)
यदि स्थास्यति सङ्ग्रामे मुहूर्तमपि मेऽग्रतः ।
अपनीते नरव्याघ्रे कुन्तीपुत्रे धनञ्जये ॥ ७-१२-३१ (४५१३२)
फल्गुनस्य समीपे तु न हि शक्यो युधिष्ठिरः ।
ग्रहीतुं समरे राजन्सेन्द्रैरपि सुरासुरैः ॥ ७-१२-३२ (४५१३३)
सञ्जय उवाच। ७-१२-३३क्ष् (४२९१)
ग्एवमुक्ते तदा तस्मिन्युद्धे देवासुरोपमे'।
सान्तरं तु प्रतिज्ञाते राज्ञो द्रोणेन निग्रहे ।
गृहीतं तममन्यन्त तव पुत्राः सुबालिशाः ॥ ७-१२-३३ (४५१३४)
ततो दुर्योधनेनापि ग्रहणं पाण्डवस्य तत् ।
ग्स्कन्धावारेषु सर्वेषु यथास्थानेषु मारिष'।
सैन्यस्थानेषु सर्वेषु सुघोषितमरिन्दम ॥ ७-१२-३४ (४५१३५)

पाण्डवेयेषु सापेक्षं द्रोणं जानाति ते सुतः ।
ततः प्रतिज्ञास्थैर्यार्थं स मन्त्रो बहुलीकृतः ॥ ॥ ७-१२-३५ (४५१३६)

इति श्रीमन्महाभारते द्रोणपर्वणि द्रोणाभिषेकपर्वणि द्वादशोऽध्यायः
॥ १२ ॥
Mahabharata - Drona Parva - Chapter Footnotes

५-१२-११ एतां वधरूपां क्रियां मत्तो नाशंससि न सम्भावयसि ॥
५-१२-१२ तदिच्छसि त्वं इति क.ख.पाठः ॥
५-१२-१४ सुजातं शोभनं जन्म ५-१२-२२ व्यक्तं नियतम् ॥
५-१२-२६ मत्पूर्वः अहं पूर्वो गुरुर्यस्य एकायनगतः
जयमरणान्यतरनिश्चयवान् ॥
५-१२-३५ बहुलीकृतः प्रतिज्ञां न त्यजेदिति बहुषु प्रकाशितः ॥
५-१२-१२ द्वादशोऽध्यायः ॥

---

द्रोनपर्व-अध्यय०१३
॥ श्रीः ॥
७.१३. अध्यायः १३

Mahabharata - Drona Parva - Chapter Topics
अर्जुनेन द्रोणप्रतिज्ञाभीतस्य युधिष्ठिरस्य समाश्वासनम् ॥ १ ॥
युद्धारम्भो द्रोणपराक्रमश्च ॥ २ ॥

Mahabharata - Drona Parva - Chapter Text

७-१३-० (४५१३७)
सञ्जय उवाच। ७-१३-०क्ष् (४२९२)
सान्तरे तु प्रतिज्ञाने राज्ञो द्रोणेन निग्रहे ।
ततस्ते सैनिकाः श्रुत्वा तं युधिष्ठिरनिग्रहम् ।
सिंहनादरवांश्चक्रुर्बाहुशब्दांश्च कृत्स्नशः ॥ ७-१३-१ (४५१३८)
तच्च सर्वं यथान्यायं धर्मराजेन भारत ।
आप्तैश्चारैः परिज्ञातं भारद्वाजचिकीर्षितम् ॥ ७-१३-२ (४५१३९)
ततः सर्वान्समानाय्य भ्रातॄनन्यांश्च सर्वशः ।
अब्रवीद्धर्मराजस्तु धनञ्जयमिदं वचः ॥ ७-१३-३ (४५१४०)
श्रुतं ते पुरुषव्याघ्र द्रोणस्याद्य चिकीर्षितम् ।
यथा तन्न भवेत्सत्यं तथा नीतिर्विधीयताम् ॥ ७-१३-४ (४५१४१)

सान्तरं हि प्रतिज्ञातं द्रोणेनामित्रघातिना ।
तच्चान्तरममोघेषौ त्वयि तेन समाहितम् ॥ ७-१३-५ (४५१४२)
तत्त्वमद्य महाबाहो युध्यस्व मदनन्तरम् ।
यथा दुर्योधनः कामं नेमं द्रोणादवाप्नुयात् ॥ ७-१३-६ (४५१४३)
अर्जुन उवाच। ७-१३-७क्ष् (४२९३)
यथा मे न वधः कार्य आचार्यस्य कथञ्चन ।
तथा तव परित्यागो न मे राजंश्चिकीर्षितः ॥ ७-१३-७ (४५१४४)
अप्येवं पाण्डव प्राणानुत्सृजेयमहं युधि ।
प्रतियाताऽहमाचार्यं त्वां न जह्यां कथञ्चन ॥ ७-१३-८ (४५१४५)
त्वां निगृह्याहवे राजन्धार्तराष्ट्रो यमिच्छति ।
न स तं जीवलोकेऽस्मिन्कामं प्राप्ता कथञ्चन ॥ ७-१३-९ (४५१४६)
प्रपतेद्द्यौः सनक्षत्रा पृथिवी शकली भवेत् ।
न त्वां द्रोणो निगृह्णीयाज्जीवमाने मयि ध्रुवम् ॥ ७-१३-१० (४५१४७)
यदि तस्य रणे साह्यं कुरुते वज्रभृत्स्वयम् ।
विष्णुर्वा सहितो देवैर्न त्वां प्राप्स्यत्यसौ मृधे ॥ ७-१३-११ (४५१४८)
मयि जीवति राजेन्द्र न भयं कर्तुमर्हसि ।
द्रोणादस्त्रभृतां श्रेष्ठात्सर्वशस्त्रभृतामपि ॥ ७-१३-१२ (४५१४९)
अन्यच्च ब्रूयां राजेन्द्र प्रतिज्ञां मम निश्चलाम् ॥ ७-१३-१३ (४५१५०)
न स्मराम्यनृतं तावन्न स्मरामि पराजयम् ।
न स्मरामि प्रतिश्रुत्य विस्मृत्य मनस्वऽकृतम् ॥ ७-१३-१४ (४५१५१)
सञ्जय उवाच। ७-१३-१५क्ष् (४२९४)
ततः शङ्खाश्च भेर्यश्च मृदङ्गाश्चानकैः सह ।
प्रावाद्यन्त महाराज पाण्डवानां निवेशने ॥ ७-१३-१५ (४५१५२)
सिंहनादश्च संजज्ञे पाण्डवानां महात्मनाम् ॥
धनुर्ज्यातलशब्दश्च गगनस्पृक्सुभैरवः ॥ ७-१३-१६ (४५१५३)
श्रुत्वा शङ्खस्य निर्घोषं पाण्डवस्य महौजसः ।
त्वदीयेष्वप्यनीकेषु वादित्राण्यभिजघ्निरे ॥ ७-१३-१७ (४५१५४)
ततो व्यूढान्यनीकानि तव तेषां च भारत ।
शनैरुपेयुरन्योन्यं योत्स्यमानानि संयुगे ॥ ७-१३-१८ (४५१५५)
ततः प्रववृते युद्धं तुमुलं रोमहर्षणम् ।
पाण्डवानां कुरूणां च द्रोणपाञ्चाल्ययोरपि ॥ ७-१३-१९ (४५१५६)
यतमानाः प्रयतेन द्रोणानीकविशातने ।
न शेकुः सृञ्जया युद्धे तद्धि द्रोणेन पालितम् ॥ ७-१३-२० (४५१५७)
तथैव तव पुत्रस्य रथोदाराः प्रहारिणः ।
न शेकुः पाण्डवीं सेनां पाल्यमानां किरीटीना ॥ ७-१३-२१ (४५१५८)
आस्तां ते स्तिमिते सेने रक्ष्यमाणे परस्परम् ।

सम्प्रसुप्ते यथा नक्तं वनराज्यौ सुपुष्पिते ॥ ७-१३-२२ (४५१५९)
ततो रुक्मरथो राजन्नर्केणेव विराजता ।
वरूथिना विनिष्पत्य व्यचरत्पृतनामुखे ॥ ७-१३-२३ (४५१६०)
तमुद्यन्तं रथेनैकमाशुकारिणमाहवे ।
अनेकमिव सन्त्रसान्मेनिरे पाण्डुसृञ्जयाः ॥ ७-१३-२४ (४५१६१)
तेन मुक्ताः शरा घोरा विचेरुः सर्वतोदिशम् ।
त्रासयन्तो महाराज पाण्डवेयस्य वाहिनीम् ॥ ७-१३-२५ (४५१६२)
मध्यन्दिनमनुप्राप्तो गभस्तिशतसंवृतः ।
यथा दृश्येत घर्मांशुस्तथा द्रोणोऽप्यदृश्यत ॥ ७-१३-२६ (४५१६३)
न चैनं पाण्डवेयानां कश्चिच्छक्नोति भारत ।
वीक्षितुं समरे क्रुद्धं महेन्द्रमिव दानवाः ॥ ७-१३-२७ (४५१६४)
मोहयित्वा ततः सैन्यं भारद्वाजः प्रतापवान् ।
धृष्टद्युम्नबलं तूर्णं व्यधमन्निशितैः शरैः ॥ ७-१३-२८ (४५१६५)
स दिशः सर्वतो रुद्ध्वा संवृत्य खमजिह्मगैः ।
पार्षतो यत्र तत्रैनामभिनत्पाण्डुवाहिनीम् ॥ ॥ ७-१३-२९ (४५१६६)

इति श्रीमन्महाभारते द्रोणपर्वणि द्रोणाभिषेकपर्वणि
एकादशदिवसयुद्धे त्रयोदशोऽध्यायः ॥ १३ ॥
Mahabharata - Drona Parva - Chapter Footnotes

५-१३-२२ सम्प्रसुप्ते कृतपत्रसङ्कोचे ॥
५-१३-२३ वरूथिना रथेन ॥
५-१३-१३ त्रयोदशोऽध्यायः ॥

---

द्रोनपर्व-अध्यय०१४
॥ श्रीः ॥
७.१४. अध्यायः १४

Mahabharata - Drona Parva - Chapter Topics
द्रोणयुद्धं द्वैरथयुद्धमभिमन्युपराक्रमश्च ॥ १ ॥

Mahabharata - Drona Parva - Chapter Text

७-१४-० (४५१६७)
सञ्जय उवाच। ७-१४-०क्ष् (४२९५)
ततः स पाण्डवानीके जनयन्सुमहद्भयम् ।

व्यचरत्पृतनां द्रोणो दहन्कक्षमिवानलः ॥ ७-१४-१ (४५१६८)
निर्दहन्तमनीकानि साक्षादग्निमिवोत्थितम् ।
दृष्ट्वा रुक्मरथं क्रुद्धं समकम्पन्त सृञ्जयाः ॥ ७-१४-२ (४५१६९)
सततं कृष्यतः सङ्ख्ये धनुषोऽस्याशुकारिणः ।
ज्याघोषः शुश्रुवेऽत्यर्थं विस्फूर्जितमिवाशनेः ॥ ७-१४-३ (४५१७०)
रथिनः सादिनश्चैव नागानश्वान्पदातिनः ।
रौद्रा हस्तवता मुक्ताः सम्मृद्नन्ति स्स सायकाः ॥ ७-१४-४ (४५१७१)
नानद्यमानः पर्जन्यः प्रवृद्धः शुचिसङ्क्षये ।
अश्मवर्षमिवावर्षत्परेषामावहद्भयम् ॥ ७-१४-५ (४५१७२)
विचरन्स दिशः सर्वाः सेनां सङ्क्षोभयन्प्रभुः ।
वर्धयामास सन्त्रासं शात्रवाणाममानुषम् ॥ ७-१४-६ (४५१७३)
तस्य विद्युदिवाभ्रेषु चापं हेमपरिष्कृतम् ।
भ्राजमानं रथे तस्मिन्दृश्यते स्म महाभयम् ॥ ७-१४-७ (४५१७४)
स वीरः सत्यवान्प्राज्ञो धर्मनित्यः सदा पुनः ।
युगान्तकालवद्घोरां रौद्रां प्रावर्तयन्नदीम् ॥ ७-१४-८ (४५१७५)
अमर्षवेगप्रभवां क्रव्यादगणसङ्कुलाम् ।
बलौघैः सर्वतः पूर्णां ध्वजवृक्षापहारिणीम् ॥ ७-१४-९ (४५१७६)
शोणितोदां रथावर्तां हस्त्यश्वकृतरोधसम् ।
कवचोडुपसंयुक्तां मांसपङ्कसमाकुलाम् ॥ ७-१४-१० (४५१७७)
मेदोमज्जास्थिसिकतामुष्मीषचयफेनिलाम् ॥
सङ्ग्रामजलदापूर्णां प्रासमत्स्यसमाकुलाम् ॥ ७-१४-११ (४५१७८)
नरनागाश्वकलिलां शरवेगौघवाहिनीम् ।
शरीरदारुसङ्घाटां रथकच्छपसङ्कुलाम् ॥ ७-१४-१२ (४५१७९)
उत्तमाङ्गैः पङ्कजिनीं निस्त्रिंशझषसङ्कुलाम् ।
रथनागहृदोपेतां नानाभारणभूषिताम् ॥ ७-१४-१३ (४५१८०)
महारथशतावर्तां भूमिरेणूर्मिमालिनीम् ।
महावीर्यवतां सङ्ख्ये सुतरां भीरुदुस्तराम् ॥ ७-१४-१४ (४५१८१)
शरीरशतसम्बाधां गृध्रकङ्कनिषेविताम् ।
महारथसहस्राणि नयन्तीं यमसादनम् ॥ ७-१४-१५ (४५१८२)
शूलव्यालसमाकीर्णां प्राणिवाजिनिषेविताम् ।
छिन्नक्षत्रमहाहंसां मुकुटाण्डजसेविताम् ॥ ७-१४-१६ (४५१८३)
चक्रकूर्माङ्गदानक्रां शरक्षुद्रझषाकुलाम् ।
बकगृध्रसृगालानां घोरसङ्घैर्निषेविताम् ॥ ७-१४-१७ (४५१८४)
निहतान्प्राणिनः सङ्ख्ये द्रोणेन बलिना रणे ।
वहन्तीं पितृलोकाय शतशो राजसत्तम ॥ ७-१४-१८ (४५१८५)
शरीरशतसम्बाधां केशशैवलशाद्वलाम् ।

नदीं प्रावर्तयद्राजन्भीरूपणां भयवर्धिनीम् ॥ ७-१४-१९ (४५१८६)
तर्जयन्तमनीकानि तानि तानि महारथम् ।
सर्वतोऽभ्यद्रवन्द्रोणं युधिष्ठिरपुरोगमाः ॥ ७-१४-२० (४५१८७)
तानभिद्रवतः शूरांस्तावका दृढविक्रमाः ।
सर्वतः प्रत्यगृह्णन्त तदभूद्रोमहर्षणम् ॥ ७-१४-२१ (४५१८८)
शतमायस्तु शकुनिः सहदेवं समाद्रवत् ।
सनियन्तृध्वजरथं विव्याघ निशितैः शरैः ॥ ७-१४-२२ (४५१८९)
तस्य माद्रीसुतः केतुं धनुः सूतं हयानपि ।
नातिक्रुद्धः शरैश्छित्त्वा षष्ट्या विव्याध सौबलम् ।
ग्भित्त्वा च शरवर्षेण शकुनिं प्रत्यवारयत्'॥ ७-१४-२३ (४५१९०)
गदां गृहीत्वा शकुनिः प्रचस्कन्द रथोत्तमात् ।
स तस्य गदया राजन्रथात्सूतमपातयत् ॥ ७-१४-२४ (४५१९१)
ततस्तौ विरथौ राजन्गादाहस्तौ महाबलौ ।
चिक्रीडतू रणे शूरौ सशृङ्गाविव पर्वतौ ॥ ७-१४-२५ (४५१९२)
द्रोणः पाञ्चालदायादं विव्याध निशितैः शरैः ।
तयोस्तत्र महाराज बाणवर्षैः प्रकाशितम् ।
खद्योतैरिव चाकाशं प्रदोषे पुरुषर्षभ ॥ ७-१४-२६ (४५१९३)
विविंशतिं भीमसेनो विंशत्या निशितैः शरैः ।
विद्धवा नाकम्पयद्वीरस्तदद्भुतमिवाभवत् ॥ ७-१४-२७ (४५१९४)
विविंशतिस्तु सहसा व्यश्वकेतुशरासनम् ।
भीमं चक्रे महाराज ततः सैन्यान्यपूजयन् ॥ ७-१४-२८ (४५१९५)
स तन्न ममृषे वीरः शत्रोर्विक्रममाहवे ।
ततोऽस्य गदया दान्तान्हयात्सर्वानपातयत् ॥ ७-१४-२९ (४५१९६)
हताश्वात्स रथाद्राजन्गृह्य चर्म महाबलः ।
अभ्ययाद्भीमसेनं तु मत्तो मत्तमिव द्विपम् ॥ ७-१४-३० (४५१९७)
शल्यस्तु नकुलं वीरः स्वस्रीयं प्रियमात्मनः ।
विव्याध प्रहसन्बाणैर्लालयन्कोपयन्निव ॥ ७-१४-३१ (४५१९८)
तस्याश्वानातपत्रं च ध्वजं सूतमथो धनुः ।
निपात्य नकुलः सङ्ख्ये शङ्खं दध्मौ प्रतापवान् ॥ ७-१४-३२ (४५१९९)
धृष्टकेतुः कृपेणास्ताञ्छित्त्वा बहुविधाञ्छरान् ।
कृपं विव्याध सप्तत्या ध्वजं चास्य त्रिभिः शरैः ॥ ७-१४-३३ (४५२००)
तं कृपः शरवर्षेण महता समवारयत् ।
विव्याध च रणे विप्रो धृष्टकेतुममर्षणम् ॥ ७-१४-३४ (४५२०१)
सात्यकिः कृतवर्माणं नाराचेन स्तनान्तरे ।
विद्धवा विव्याध सप्तत्या पुनरन्यैः स्मयन्निव ॥ ७-१४-३५ (४५२०२)
तं भोजः सप्तसप्तत्या विद्ध्वाऽऽशु निशितैः शरैः ।

नाकम्पयत शैनेयं शीघ्रो वायुरिवाचलम् ॥ ७-१४-३६ (४५२०३)
सेनापतिः सुशर्माणं भृशं मर्मस्वताडयत् ।
स चापि तं तोमरेण जत्रुदेशेऽभ्यताडयत् ॥ ७-१४-३७ (४५२०४)
वैकर्तनं तु समरे विराटः प्रत्यवारयत् ।
सह मत्स्यैर्महावीर्यैस्तदद्भुतमिवाभवत् ॥ ७-१४-३८ (४५२०५)
तत्पौरुषमभूत्तत्र सूतपुत्रस्य दारुणम् ।
यत्सैन्यं वारयामास शरैः सन्नतपर्वभिः ॥ ७-१४-३९ (४५२०६)
द्रुपदस्तु स्वयं राजा भगदत्तेन सङ्गतः ।
तयोर्युद्धं महाराज चित्ररूपमिवाभवत् ॥ ७-१४-४० (४५२०७)
भगदत्तस्तु राजानं द्रुपदं नतपर्वभिः ।
सनियन्तृध्वजरथं विव्याध पुरुषर्षभः ॥ ७-१४-४१ (४५२०८)
द्रुपदस्तु ततः क्रुद्धो भगदत्तं महारथम् ।
आजघानोरसि क्षिप्रं शरेणानतपर्वणा ॥ ७-१४-४२ (४५२०९)
युद्धं योधवरौ लोके सौमदत्तिशिखण्डिनौ ।
भूतानां त्रासजननं चक्रातेऽस्त्रविशारदौ ॥ ७-१४-४३ (४५२१०)
भूरिश्रवा रणे राजन्याज्ञसेनिं महारथम् ।
महता सायकौघेन च्छादयामास वीर्यवान् ॥ ७-१४-४४ (४५२११)
शिखण्डी तु ततः क्रुद्धः सौमदत्तिं विशाम्पते ।
नवत्या सायकानां तु कम्पयामास भारत ॥ ७-१४-४५ (४५२१२)
राक्षसौ रौद्रकर्माणौ हेडिम्बालम्बुसावुभौ ।
चक्रातेऽत्युद्भुतं युद्धं परस्परजयैषिणौ ॥ ७-१४-४६ (४५२१३)
मायाशतसृजौ दृप्तौ मायाभिरितरेतरम् ।
अन्तर्हितौ चेरतुस्तौ भृशं विस्मयकारिणौ ॥ ७-१४-४७ (४५२१४)
चेकितानोऽनुविन्देन युयुधे चातिभैरवम् ।
यथा देवासुरे युद्धे बलशक्रौ महाबलौ ॥ ७-१४-४८ (४५२१५)
लक्ष्मणः क्षत्रदेवेन विमर्दमकरोद्भृशम् ।
यथा विष्णुः पुरा राजन्हिरण्याक्षेण संयुगे ॥ ७-१४-४९ (४५२१६)
ततः प्रचलिताश्वेन विधिवत्कल्पितेन च ।
रथेनाभ्यपतद्राजन्सौभद्रं पौरवो पौरवो नदन् ॥ ७-१४-५० (४५२१७)
ततोऽभ्ययात्स त्वरितो युद्धाकाङ्क्षी महाबलः ।
तेन चक्रे महद्युद्धमभिमन्युररिन्दमः ॥ ७-१४-५१ (४५२१८)
पौरवस्त्वथ सौभद्रं शरव्रातैरवाकिरत् ।
तस्यार्जुनिर्ध्वजं छत्रं धनुश्चोर्व्यामपातयत् ॥ ७-१४-५२ (४५२१९)
सौभद्रः पौरवं त्वन्यैर्विद्ध्वा सप्तभिराशुगैः ।
पञ्चभिस्तस्य विव्याध हयान्सूनं च सायकैः ॥ ७-१४-५३ (४५२२०)
ततः प्रहर्षयन्सेनां सिंहवद्विनदन्मुहुः ।

समादत्तार्जुनिस्तूर्णं पौरवान्तकरं शरम् ॥ ७-१४-५४ (४५२२१)
तं तु सन्धितमाज्ञाय सायकं घोरदर्शनम् ।
द्वाभ्यां शराभ्यां हार्दिक्यश्चिच्छेद सशरं धनुः ॥ ७-१४-५५ (४५२२२)
तदुत्सृज्य धनुश्छिन्नं सौभद्रः परवीरहा ।
उद्बबर्ह सितं खड्गमाददनाः शरावरम् ॥ ७-१४-५६ (४५२२३)
स तेनानेकतारेण चर्मणा कृतहस्तवत् ।
भ्रान्तासिना चरन्मार्गान्दर्शयन्वीर्यमात्मनः ॥ ७-१४-५७ (४५२२४)
भ्रामितं पुनरुद्भ्रान्तमाधूतं पुनरुत्थितम् ।
चर्मनिस्त्रिंशयो राजन्निर्विशेषमदृश्यत ॥ ७-१४-५८ (४५२२५)
स पौरवरथस्येषामाप्लुत्य सहसा नदन् ।
पौरवं रथमास्थाय केशपक्षे परामृशत् ॥ ७-१४-५९ (४५२२६)
जघानास्य पदा सूतमसिना पातयद्ध्वजम् ।
विक्षोभ्याम्भोनिधिं तार्क्ष्यस्तं नागमिव चाक्षिपत् ॥ ७-१४-६० (४५२२७)
तमागलितकेशान्तं ददृशुः सर्वपार्थिवाः ।
उक्षाणमिव सिंहेन पात्यमानमचेतसम् ॥ ७-१४-६१ (४५२२८)
तमार्जुनिवशं प्राप्तं कृष्यमाणमनाथवत् ।
पौरवं पातितं दृष्ट्वा नामृष्यत जयद्रथः ॥ ७-१४-६२ (४५२२९)
स बर्हिबर्हावततं किङ्किणीशतजालवत् ।
चर्म चादाय खड्गं च नदन्पर्यपतद्रथात् ॥ ७-१४-६३ (४५२३०)
ततः सैन्धवमालोक्य कार्ष्णिरुत्सृज्य पौरवम् ।
उत्पपात रथात्तूर्णं श्येनवन्निपपात च। ७-१४-६४ (४५२३१)
प्रासपट्टिशनिस्त्रिंशाञ्छत्रुभिः सम्प्रचोदितान् ।
चिच्छेद चासिना कार्ष्णिश्चर्मणा संरुरोध च ॥ ७-१४-६५ (४५२३२)
स दर्शयित्वा सैन्यानां स्वबाहुबलमात्मनः ।
तमुद्यम्य महाखड्गं चर्म चाथ पुनर्बली ॥ ७-१४-६६ (४५२३३)
वृद्धक्षत्रस्य दायादं पितुरत्यन्तवैरिणम् ।
ससाराभिमुखः शूरः शार्दूल इव कुञ्जरम् ॥ ७-१४-६७ (४५२३४)
तौ परस्परमासाद्य खड्गदन्तनखायुधौ ।
हृष्टवत्सम्प्रजहाते व्याघ्रकेसरिणाविव ॥ ७-१४-६८ (४५२३५)
सम्पातेष्वभिघातेषु निपातेष्वसिचर्मणोः ।
न तयोरन्तरं कश्चिद्ददर्श नरसिंहयोः ॥ ७-१४-६९ (४५२३६)
अवक्षेपोऽसिनिर्हादः शस्त्रान्तरनिदर्शनम् ।
बाह्यान्तरनिपातश्च निर्विशेमदृश्यत ॥ ७-१४-७० (४५२३७)
बाह्यमाभ्यन्तरं चैव चरन्तौ मार्गमुत्तमम् ।
ददृशाते महात्मानौ सपक्षाविव पर्वतौ ॥ ७-१४-७१ (४५२३८)
ततो विक्षिपतः खड्गं सौभद्रस्य यशस्विनः ।

शरावरणपक्षान्ते प्रजहार जयद्रथः ॥ ७-१४-७२ (४५२३९)
रुक्मपत्रान्तरे सक्तस्तस्मिंश्चर्मणि भास्वरे ।
सिन्धुराजबलोद्धूतः सोऽभज्यत महानसिः ॥ ७-१४-७३ (४५२४०)
भग्नमाज्ञाय निस्त्रिंशमवप्लुत्य पदानि षट् ।
अदृश्यत निमेषेण स्वरथं पुनरास्थितः ॥ ७-१४-७४ (४५२४१)
तं कार्ष्णिं समरान्मुक्तमास्थितं रथमुत्तमम् ।
सहिताः सर्वराजानः परिवव्रुः समन्ततः ॥ ७-१४-७५ (४५२४२)
ततश्चर्म च खड्गं च समुत्क्षिप्य महाबलः ।
ननादार्जुनदायादः प्रेक्षमाणो जयद्रथम् ॥ ७-१४-७६ (४५२४३)
सिन्धुराजं परित्यज्य सौभद्रः परवीरहा ।
तापयामास तत्सैन्यं भुवनं भास्करो यथा ॥ ७-१४-७७ (४५२४४)
तस्य सर्वायसीं शक्तिं शल्यः कनकभूषणाम् ।
चिक्षेप समरे घोरां दीप्तामग्निशिखामिव ॥ ७-१४-७८ (४५२४५)
तामवप्लुत्य जग्राह विकोशं चाकरोदसिम् ।
वैनतेयो यथा कार्ष्णिः पतन्तमुरगोत्तमम् ॥ ७-१४-७९ (४५२४६)
तस्य लाघवमाज्ञाय सत्वं चामिततेजसः ।
सहिताः सर्वराजानः सिंहनादमथानदन् ॥ ७-१४-८० (४५२४७)
ततस्तामेव शल्यस्य सौभद्रः परवीरहा ।
मुमोच भुजवीर्येण वैदूर्यविकृतां शिताम् ॥ ७-१४-८१ (४५२४८)
सा तस्य रथमासाद्य निर्मुक्तभुजगोपमा ।
जघान सूतं शल्यस्य रथाच्चैनमपातयत् ॥ ७-१४-८२ (४५२४९)
ततो विराटद्रुपदौ धृष्टकेतुर्युधिष्ठिरः ।
सात्यकिः केकया भीमो धृष्टद्युम्नशिखण्डिनौ ॥ ७-१४-८३ (४५२५०)
यमौ च द्रौपदेयाश्च साधुसाध्विति चुक्रुशुः ।
बाणशब्दाश्च विविधाः सिंहनादाश्च पुष्कलाः ॥ ७-१४-८४ (४५२५१)
प्रादुरासन्हर्षयन्तः सौभद्रमपलायिनम् ।
तन्नामृष्यन्त पुत्रास्ते शत्रोर्विजयलक्षणम् ॥ ७-१४-८५ (४५२५२)
अथैनं सहसा सर्वे समन्तान्निशितैः शरैः ।
अभ्याकिरन्महाराज जलदा इव पर्वतम् ॥ ७-१४-८६ (४५२५३)
तेषां च प्रियमन्विच्छन्सूतस्य च पराभवम् ।
आर्तायनिरमित्रघ्नः क्रुद्धः सौभद्रमभ्ययात् ॥ ॥ ७-१४-८७ (४५२५४)

इति श्रीमन्महाभारते द्रोणपर्वणि द्रोणाभिषेकपर्वणि
एकादशदिवसयुद्धे चतुर्दशोऽध्यायः ॥ १४ ॥

Mahabharata - Drona Parva - Chapter Footnotes

५-१४-५ शुचिसङ्क्षये ग्रीष्मान्ते ॥
५-१४-१६ प्राणिन एव वाजिनः पक्षिणः ॥
५-१४-८७ पराभवं प्रेक्ष्येति शेषः ॥
५-१४-१४ चतुर्दशोऽध्यायः ॥

---

द्रोनपर्व-अध्यय०१५
॥ श्रीः ॥
७.१५. अध्यायः १५

Mahabharata - Drona Parva - Chapter Topics
Mahabharata - Drona Parva - Chapter Text

७-१५-० (४५२५५)
॥ ७-१५-५० (४५३०६)

इति श्रीमन्महाभारते द्रोणपर्वणि द्रोणाभिषेकपर्वणि
Mahabharata - Drona Parva - Chapter Footnotes

५-१५-१ ५-१५- ५-१५- ५-१५- ५-१५- ५-१५- ५-१५- ५-१५- ५-१५-
५-१५- ५-१५- ५-१५-

---

द्रोनपर्व-अध्यय०१६
॥ श्रीः ॥
७.१६. अध्यायः १६

Mahabharata - Drona Parva - Chapter Topics
द्रोणेन युधिष्ठिरग्रहणोद्यमे अर्जुमेन तद्भङ्गः ॥१ ॥

Mahabharata - Drona Parva - Chapter Text

७-१६-० (४५३०७)
सञ्जय उवाच। ७-१६-०क्ष् (४२९७)
तद्बलं सुमहद्दीर्णं त्वदीयं प्रेक्ष्य वीर्यवान् ।
दधारैको रणे पाण्डून्वृषसेनोऽस्त्रमायया ॥ ७-१६-१ (४५३०८)
शरा दश दिशो मुक्ता वृषसेनेन संयुगे ।

विचेरुस्ते विनिर्भिद्य नरवाजिरथद्विपान् ॥ ७-१६-२ (४५३०९)
तस्य दीप्ता महाबाणा विविश्चेरुः सहस्रशः ।
भानोरिव महाराज घर्मकाले मरीचयः ॥ ७-१६-३ (४५३१०)
तेनार्दिता महाराज रथिनः सादिनस्तथा ।
निपेतुरुर्व्यां सहसा वातभग्ना इव द्रुमाः ॥ ७-१६-४ (४५३११)
हयौघांश्च रथौघांश्च गजौघांश्च महारथः ।
अपातयद्रणे राजञ्शतशोऽथ सहस्रशः ॥ ७-१६-५ (४५३१२)
दृष्ट्वा तमेकं समरे विचरन्तमभीतवत् ।
सहिताः सर्वराजानः परिवव्रुः समन्ततः ॥ ७-१६-६ (४५३१३)
नाकुलिस्तु शतानीको वृषसेनं समभ्ययात् ।
विव्याध चैनं दशभिर्नाराचैर्मर्मभेदिभिः ॥ ७-१६-७ (४५३१४)
तस्य कर्णात्मजश्चापं छित्त्वा केतुमपातयत् ।
तं भ्रातरं परीप्सन्तो द्रौपदेयाः समभ्ययुः ॥ ७-१६-८ (४५३१५)
कर्णात्मजं शरव्रातैरदृश्यं चक्रुरञ्जसा ।
तान्नदन्तोऽभ्यधावन्त द्रोणपुत्रमुखा रथाः ॥ ७-१६-९ (४५३१६)
छादयन्तो महाराज द्रौपदेयान्महारथान् ।
शरैर्नानाविधैस्तूर्णं पर्वताञ्जलदा इव ॥ ७-१६-१० (४५३१७)
तान्पाण्डवाः प्रत्यगृह्णंस्त्वरिताः पुत्रगृद्धिनः ।
पाञ्चालाः केकया मत्स्याः सृञ्जयाश्चोद्यतायुधाः ॥ ७-१६-११ (४५३१८)
तद्युद्धमभवद्घोरं सुमहद्रोमहर्षणम् ।
त्वदीयैः पाण्डुपुत्राणां देवानामिव दानवैः ॥ ७-१६-१२ (४५३१९)
एवं युयुधिरे वीराः संरब्धाः कुरुपाण्डवाः ।
परस्परमुदीक्षन्तः परस्परकृतागसः ॥ ७-१६-१३ (४५३२०)
तेषां ददृशिरे कोपाद्वपूंष्यमिततेजसाम् ।
युयुत्सूनामिवाकाशे पतत्त्रिवरभोगिनाम् ॥ ७-१६-१४ (४५३२१)
भीमकर्णकृपद्रोणद्रौणिपार्षतसात्यकैः ।
बभासे स रणोद्देशः कालसूर्यैरिवोदितैः ॥ ७-१६-१५ (४५३२२)
ग्प्रजानां संक्षये घोरे यथा सूर्योदयो भवेत् ।
शूराणामुदयस्तद्वदासीत्पुरुषसत्तम'॥ ७-१६-१६ (४५३२३)
तदासीत्तुमुलं युद्धं निघ्नतामितरेतरम् ।
महाबलानां बलिभिर्दानवानां यथा सुरैः ॥ ७-१६-१७ (४५३२४)
ततो युधिष्ठिरानीकमुद्धूतार्णवनिःस्वनम् ।
त्वदीयमवधीत्सैन्यं संप्रद्रुतमहारथम् ॥ ७-१६-१८ (४५३२५)
तत्प्रभग्नं बलं दृष्ट्वा शत्रुभिर्भृशमर्दितम् ।
अलं द्रुतेन वः शूरा इति द्रोणोऽभ्यभाषत ॥ ७-१६-१९ (४५३२६)
ग्भारद्वाजममर्षश्च विक्रमश्च समाविशत् ।

समुद्धृत्य निषङ्गाच्च धनुर्ज्यामवमृज्य च ।
महाशरधनुष्पाणिर्यन्तारमिदमब्रवीत् ॥ ७-१६-२० (४५३२७)
सारथे याहि यत्रैष पाण्डरेण विराजता ।
ध्रियमाणेन च्छेण राजा तिष्ठति धर्मराट् ॥ ७-१६-२१ (४५३२८)
तदेतद्दीर्यते सैन्यं धार्तराष्ट्रमनेकधा ।
एतत्संस्तम्भयिष्यामि प्रतिवार्य युधिष्ठिरम् ॥ ७-१६-२२ (४५३२९)
न हि मामभिवर्षन्तं संयुगे तात पाण्डवाः ।
मात्स्यपाञ्चालराजानः सर्वे च सहसोमकाः ॥ ७-१६-२३ (४५३३०)
अर्जुनो मत्प्रसादाद्धि महास्त्राणि समाप्तवान् ।
न मामुत्सहते तात न भीमो न च सात्यकिः ॥ ७-१६-२४ (४५३३१)
मत्प्रसादाद्धि बीभत्सुः परमेष्वासतां गतः ।
ममैवास्त्रं विजानाति धृष्टद्युम्नोऽपि पार्षतः ॥ ७-१६-२५ (४५३३२)
नायं संरक्षितुं कालः प्राणांस्तात जयैषिणा ।
याहि सर्गं पुरस्कृत्य यशसे च जयाय च ॥ ७-१६-२६ (४५३३३)
सञ्जय उवाच। ७-१६-२७क्ष् (४२९८)
एवं सञ्चोदितो यन्ता द्रोणमभ्यवहत्ततः ॥ ७-१६-२७ (४५३३४)
तदाऽश्वहृदयेनाश्वानभिमन्त्र्याशु हर्षयन् ।
रथेन सवरूथेन भास्वरेण विराजता ॥ ७-१६-२८ (४५३३५)
तं करूशाश्च मात्स्याश्च चेदयश्च ससात्वताः ।
पाण्डवाश्च सपाञ्चालाः सहिताः पर्यवारयन्'॥ ७-१६-२९ (४५३३६)
ततः शोणहयः क्रुद्धश्चतुर्दन्त इव द्विपः ।
प्रविश्य पाण्डवानीकं युधिष्ठिरमुपाद्रवत् ॥ ७-१६-३० (४५३३७)
तमाविध्यच्छितैर्बाणैः कङ्कपत्रैर्युधिष्ठिरः ।
तस्य द्रोणो धनुश्छित्वा तं द्रुतं समुपाद्रवत् ॥ ७-१६-३१ (४५३३८)
चक्ररक्षः कुमारस्तु पाञ्चालानां यशस्करः ।
दधार द्रोणमायान्तं वेलेव सरितां पतिम् ॥ ७-१६-३२ (४५३३९)
द्रोणं निवारितं दृष्ट्वा कुमारेण द्विजर्षभम् ।
सिंहनादरवो ह्यासीत्साधुसाध्विति भाषितम् ॥ ७-१६-३३ (४५३४०)
कुमारस्तु ततो द्रोणं सायकेन महाहवे ।
विव्याधोरसि सङ्क्रुद्धः सिंहवच्च नदन्मुहुः ॥ ७-१६-३४ (४५३४१)
संवार्य च रणे द्रोणं कुमारस्तु महाबलः ।
शरैरनेकसाहस्रैः कृतहस्तो जितश्रमः ॥ ७-१६-३५ (४५३४२)
तं शूरमार्यव्रतिनं मन्त्रास्त्रेषु कृतश्रमम् ।
चक्ररक्षतं परामृद्नात्कुमारं द्विजपुङ्गवः ॥ ७-१६-३६ (४५३४३)
स मध्यं प्राप्य सैन्यानां सर्वाः प्रविचरन्दिशः ।
तव सैन्यस्य गोप्तासीद्भारद्वाजो द्विजर्षभः ॥ ७-१६-३७ (४५३४४)

शिखण्डिनं द्वादशभिर्विंशत्या चोत्तमौजसम् ।
नकुलं पञ्चभिर्विद्ध्वा सहदेवं च सप्तभिः ॥ ७-१६-३८ (४५३४५)
युधिष्ठिरं द्वादशभिर्द्रौपदेयांस्त्रिभिस्त्रिभिः ।
सात्यकिं पञ्चभिर्विद्ध्वा मत्स्यं च दशभिः शरैः ॥ ७-१६-३९ (४५३४६)
व्यक्षोभयद्रणे योधान्यथामुख्यमभिद्रवन् ।
अभ्यवर्ततं सम्प्रेप्सुः कुन्तीपुत्रं युधिष्ठिरम् ॥ ७-१६-४० (४५३४७)
युगन्धरस्ततो राजन्भारद्वाजं महारथम् ।
वारयामास सङ्क्रुद्धं वातोद्धतमिवार्णवम् ॥ ७-१६-४१ (४५३४८)
युधिष्ठिरं स विद्ध्वा तु शरैः सन्नतपर्वभिः ।
युगन्धरं तु भल्लने रथनीडादपातयत् ॥ ७-१६-४२ (४५३४९)
ग्तं विजित्य महातेजा भारद्वाजो महामनाः ।
अभ्यवर्तत सम्प्रेप्सुः कुन्तीपुत्रं युधिष्ठिरम्'॥ ७-१६-४३ (४५३५०)
ततो विराटद्रुपदौ केकयाः सात्यकिः शिबिः ।
व्याघ्रदत्तश्च पाञ्चल्यः सिंहसेनश्च वीर्यवान् ॥ ७-१६-४४ (४५३५१)
एते चान्ये च बहवः परीप्सन्तो युधिष्ठिरम् ।
आवव्रुस्तस्य पन्थानं किरन्तः सायकान्बहून् ॥ ७-१६-४५ (४५३५२)
व्याघ्रदत्तस्तु पाञ्चाल्यो द्रोणं विव्याध मार्गणैः ।
पञ्चाशता शितै राजंस्तत उच्चुक्रुशुर्जनाः ॥ ७-१६-४६ (४५३५३)
त्वरितं सिंहसेनस्तु द्रोणं विद्ध्वा महारथम् ।
प्राहसत्सहसा हृष्टस्त्रासयन्वै महारथान् ॥ ७-१६-४७ (४५३५४)
ततो विष्फार्य नयने धनुर्ज्यामवमृज्य च ।
तलशब्दं महत्कृत्वा द्रोणस्तं समुपाद्रवत् ॥ ७-१६-४८ (४५३५५)
ततस्तु सिंहसेनस्य शिरः कायात्सकुण्डलम् ।
व्याघ्रदत्तस्य चाक्रम्य भल्लाभ्यामाहरद्बली ॥ ७-१६-४९ (४५३५६)
तान्प्रमृज्य शरव्रातैः पाण्डवानां महारथान् ।
युधिष्ठिररथाभ्याशे तस्थौ मृत्युरिवान्तकः ॥ ७-१६-५० (४५३५७)
ततोऽभवन्महाशब्दो राजन्यौधिष्ठिरे बले ।
हृतो राजेति योधानां समीपस्थे यतव्रते ॥ ७-१६-५१ (४५३५८)
अब्रुवन्सैनिकास्तत्र दृष्ट्वा द्रोणस्य विक्रमम् ।
अद्य राजा धार्तराष्ट्रः कृतार्थो वै भविष्यति ॥ ७-१६-५२ (४५३५९)
अस्मिन्महूर्ते द्रोणस्तु पाण्डवं गृह्य हर्षितः ।
आगमिष्यति नो नूनं धार्तराष्ट्रस्य संयुगे ॥ ७-१६-५३ (४५३६०)
एवं सञ्जल्पतां तेषां तावकानां महारथः ।
आयाज्जवेन कौन्तेयो रथघोषेण नादयन् ॥ ७-१६-५४ (४५३६१)
शोणितोदां रथावर्तां कृत्वा विशसने नदीम् ।
शूरास्थिचयसङ्कीर्णां प्रेतकूलापहारिणीम् ॥ ७-१६-५५ (४५३६२)

तां शरौघमहाफेनां प्रासमत्स्यसमाकुलाम् ।
नदीमुत्तीर्य वेगेन कुरून्विद्राव्य पाण्डवः ॥ ७-१६-५६ (४५३६३)
ततः किरीटि सहसा द्रोणानीकमुपाद्रवत् ।
छादयन्निषुजालेन महता मोहयन्निव ॥ ७-१६-५७ (४५३६४)
शीघ्रमभ्यस्यतो बाणान्सन्दधानस्य चानिशम् ।
नान्तरं ददृशे कश्चित्कौन्तेयस्य यशस्विनः ॥ ७-१६-५८ (४५३६५)
न दिशो नान्तरिक्षं च न द्यौर्नैव च मेदिनी ।
अदृश्यन्त महाराज बाणभूता इवाभवन् ॥ ७-१६-५९ (४५३६६)
नादृश्यत तदा राजंस्तत्र किञ्चन संयुगे ।
बाणान्धकारे महति कृते गाण्डीवधन्वना ॥ ७-१६-६० (४५३६७)
सूर्ये चास्तमनुप्राप्ते तमसा चाभिसंवृते ।
नाज्ञायत तदा शत्रुर्न सुहृन्न च कश्चन। ७-१६-६१ (४५३६८)
ततोऽवहारं चक्रुस्ते द्रोणदुर्योधनादयः ।
तान्विदित्वा पुनस्त्रस्ता न युद्धमनसः परान् ॥ ७-१६-६२ (४५३६९)
स्वान्यनीकानि बीभत्सुः शनकैरवहारयत् ।
ततोऽभितुष्टुवुः पार्थं प्रहृष्टाः पाण्डुसृञ्जयाः ॥ ७-१६-६३ (४५३७०)
पाञ्चालाश्च मनोज्ञाभिर्वाग्भिः सूर्यमिवर्षयः ।
एं स्वशिबिरं प्रायाज्जित्वा शत्रून्धनञ्जयः ॥ ७-१६-६४ (४५३७१)
पृष्ठतः सर्वसैन्यानां मुदितो वै सकेशवः ॥
मसारगल्वर्कमुवर्णरूपैर्वज्रप्रवालस्फटिकैश्च मुख्यैः।
७-१६-६५ (४५३७२)
चित्रे रथे पाण्डुसुतो बभासे नक्षत्रचित्रे वियतीव चन्द्रः ॥ ॥
७-१६-६६ (४५३७३)

इति श्रीमन्महाभारते द्रोणपर्वणि द्रोणाभिषेकपर्वणि
एकादशदिवसयुद्धे षोडशोऽध्यायः ॥ १६ ॥
Mahabharata - Drona Parva - Chapter Footnotes

५-१६-१ अस्त्रमायया अस्त्रकौशलेन ॥
५-१६-१४ पतत्त्रिवरभोगिनामिव पतत्त्रिवरो गरुडः ।भोगिनः सर्पाः ॥
५-१६-१९ द्रुतेन पलायितेन ॥
५-१६-५५ विशसने युद्धे ॥
५-१६-६६ मसारः इन्द्रनीलः ।गल्वर्कः पद्मरागः ॥
५-१६-१६ षोडशोऽध्यायः ॥

---

द्रोनपर्व-अध्यय०१७

॥ श्रीः ॥

७.१७. अध्यायः १७

Mahabharata - Drona Parva - Chapter Topics

संशप्तकैराहूतस्यार्जुनस्य युधिष्ठिररक्षणे सत्यजितं नियोज्य तान्प्रति युद्धाय गमनम् ॥ १ ॥

Mahabharata - Drona Parva - Chapter Text

७-१७-० (४५३७४)
सञ्जय उवाच। ७-१७-०क्ष् (४२९९)
ते सेने शिबिरं गत्वा न्यविशेतां विशाम्पते ।
यथाभागं यथान्यायं यथागुल्मं च सर्वशः ॥ ७-१७-१ (४५३७५)
कृत्वाऽवहारं सैन्यानां द्रोणः परमदुर्मनाः ।
दुर्योधनमभिप्रेक्ष्य सव्रीडमिदमब्रवीत् ॥ ७-१७-२ (४५३७६)
उक्तमेतन्मया पूर्वं न तिष्ठति धन्जये ।
शक्यो ग्रहीतुं सङ्ग्रामे देवैरपि युधिष्ठिरः ॥ ७-१७-३ (४५३७७)
इति तद्वः प्रयततां कृतं पार्थेन संयुगे ।
मा विशङ्कीर्वचो मह्यमजेयौ कृष्णपाण्डवौ ॥ ७-१७-४ (४५३७८)
अपनीते तु योगेन केनचिच्छ्वेतवाहने ।
तत एष्यति ते राजन्वशमेष युधिष्ठिरः ॥ ७-१७-५ (४५३७९)
कश्चिदाहूय तं सङ्ख्ये देशमन्यं प्रकर्षतु ।
तमजित्वा न कौन्तेयो निवर्तेत कथञ्चन ॥ ७-१७-६ (४५३८०)
एतस्मिन्नन्तरे शून्येधर्मराजमहं नृप ।
ग्रहीष्यामि चमूं भित्त्वा धृष्टद्युम्नस्य पश्यतः ॥ ७-१७-७ (४५३८१)
अर्जुनेन परित्यक्तो न चेत्त्रासात्पलायते ।
मामुपायान्तमालोक्य गृहीतं विद्धि पाण्डवम् ॥ ७-१७-८ (४५३८२)
एवं तेऽहं महाराज धर्मपुत्रं युधिष्ठिरम् ।
समानेष्यामि सगणं वशमद्य न संशयः ॥ ७-१७-९ (४५३८३)
यदि तिष्ठति सङ्ग्रामे मुहूर्तमपि पाण्डवः ।
अथापयाति सङ्ग्रामाद्विजयात्तद्विशिष्यते ॥ ७-१७-१० (४५३८४)
सञ्जय उवाच। ७-१७-११क्ष् (४३००)
द्रोणस्य तद्वचः श्रुत्वा त्रिगर्ताधिपतिस्तदा ।
भ्रातृभिः सहितो राजन्निदं वचनमब्रवीत् ॥ ७-१७-११ (४५३८५)
वयं विनिकृता राजन्सदा गाण्डीवधन्वना ।
अनागःस्वपि चागस्तत्कृतमस्मासु तेन वै ॥ ७-१७-१२ (४५३८६)

ते वयं स्मरमाणास्तान्विनिकारान्पृथग्विधान् ।
क्रोधाग्निना दह्यमाना ह्यशेमहि सदा निशि ॥ ७-१७-१३ (४५३८७)
स नो दिष्ट्याऽस्त्रसम्पन्नश्चक्षुर्विषयमागतः ।
कर्तारः स्मरयं कर्म यच्चिकीर्षाम हृद्गतम् ॥ ७-१७-१४ (४५३८८)
भवतश्च प्रियं यत्स्यादस्माकं च यशस्करम् ।
वयमेनं हनिष्यामो निकृष्यायोधनाद्बहिः ॥ ७-१७-१५ (४५३८९)
अद्यास्त्वनर्जुना भूमिरत्रिगर्ताऽथवा पुनः ।
सत्यं ते प्रतिजानीमो नैतन्मिथ्या भविष्यति ॥ ७-१७-१६ (४५३९०)
एवं सत्यरथश्चोक्त्वा सत्यवर्मा च भारत ।
सत्यव्रतश्च सत्येषुः सत्यकर्मा तथैव च ॥ ७-१७-१७ (४५३९१)
सहिता भ्रातरः पञ्च रथानामयुतेन च ।
न्यवर्तन्त महाराज कृत्वा शपथमाहवे ॥ ७-१७-१८ (४५३९२)
मालवास्तुण्डिकेराश्च रथानामयुतैस्त्रिभिः ।
सुशर्मा च नरव्याघ्रस्त्रिगर्तः प्रस्थलाधिपः ॥ ७-१७-१९ (४५३९३)
मावेल्लकैर्ललित्थैश्च सहितो मद्रकैरपि ।
रथानामयुतेनैव सोऽगमद्भ्रातृभिः सह ॥ ७-१७-२० (४५३९४)
नानाजनपदेभ्यश्च रथानामयुतं पुनः ।
समुत्थितं विशिष्टानां शपथार्थमुपागमत् ॥ ७-१७-२१ (४५३९५)
ततो ज्वलनमानर्च्य हुत्वा सर्वे पृथक्पृथक् ।
जगृहुः कुशचीराणि चित्राणि कवचानि च ॥ ७-१७-२२ (४५३९६)
ते च बद्धतनुत्राणा घृताक्ताः कुशचीरिणः ।
मौर्वीमेखलिनो वीराः सहस्रशतदक्षिणाः ॥ ७-१७-२३ (४५३९७)
यज्वानः पुत्रिणो लोक्याः कृतकृत्यास्तनुत्यजः ।
योक्ष्यमाणास्तदाऽऽत्मानं यशसा विजयेन च ॥ ७-१७-२४ (४५३९८)
ब्रह्मचर्यश्रुतिमुखैः क्रतुभिश्चाप्तदक्षिणैः ।
प्राप्याँल्लोकान्सुयुद्धेन क्षिप्रमेव यियासवः ॥ ७-१७-२५ (४५३९९)
ब्राह्मणांस्तर्पयित्वा च निष्कान्दत्वा पृथक्पृथक् ।
गाश्च वासांसि च पुनः समाभाष्य परस्परम् ॥ ७-१७-२६ (४५४००)
गद्विजमुख्यैः समुदितैः कृतस्वस्त्ययनाशिषः ।
मुदिताश्च प्रहृष्टाश्च जलं संस्पृश्य निर्मलम्'॥ ७-१७-२७ (४५४०१)
प्रज्वाल्य कृष्णवर्त्मानमुपागम्य रणव्रतम् ।
तस्मिन्नग्नौ तदा चक्रुः प्रतिज्ञां दृढनिश्चयाः ॥ ७-१७-२८ (४५४०२)
शृण्वतां सर्वभूतानामुच्चैर्वाचो बभाषिरे ।
सर्वे धनञ्जयवधे प्रतिज्ञां चापि चक्रिरे। ७-१७-२९ (४५४०३)
ये वै लोकाश्चाव्रतिनां ये चैव ब्रह्मघातिनाम् ।
मद्यपस्य च ये लोका गुरुदाररतस्य च ॥ ७-१७-३० (४५४०४)

ब्रह्मस्वहारिणश्चैव राजपिण्डापहारिणः ।
शरणागतं च त्यजतो याचमानं तथा घ्नतः ॥ ७-१७-३१ (४५४०५)
अगारदाहिनां चैव ये च गां निघ्नतामपि ।
अपकारिणां च ये लोका ये च ब्रह्मद्विषामपि ॥ ७-१७-३२ (४५४०६)
स्वभार्यामृतुकालेषु मोहाद्वै नाभिगच्छताम् ।
श्राद्धमैथुनिकानां च ये चाप्यात्मापहारिणाम् ॥ ७-१७-३३ (४५४०७)
न्यासापहारिणां ये च श्रुतं नाशयतां च ये ।
क्लीबने युध्यमानानां ये च नीचानुसारिणाम् ॥ ७-१७-३४ (४५४०८)
नास्तिकानां च ये लोका येऽग्निमातृपितृत्यजाम् ।
तानाप्नुयामहे लोकान्ये च पापकृतामपि ॥ ७-१७-३५ (४५४०९)
यद्यहत्वा वयं युद्धे निवर्तेम धनञ्जयम् ।
तेन चाभ्यर्दितास्त्रासाद्भवेमहि पराङ्मुखाः ॥ ७-१७-३६ (४५४१०)
यदि त्वसुकरं लोके कर्म कुर्याम संयुगे ।
इष्टाँल्लोकान्प्राप्नुयामो वयमद्य न संशयः ॥ ७-१७-३७ (४५४११)
एवमुक्त्वा तदा राजंस्तेऽभ्यवर्तन्त संयुगे ।
आह्वयन्तोऽर्जुनं वीराः पितृजुष्टां दिशं प्रति ॥ ७-१७-३८ (४५४१२)
आहूतस्तैर्नरव्याघ्रैः पार्थः परपुरञ्जयः ।
धर्मराजमिदं वाक्यमपदान्तरमब्रवीत् ॥ ७-१७-३९ (४५४१३)
आहूतो न निवर्तेयमिति मे व्रतमाहितम् ।
संशप्तकाश्च मां राजन्नाह्वयन्ति महामृधे ॥ ७-१७-४० (४५४१४)
एष च भ्रातृभिः सार्धं सुशर्माऽऽह्वयते रणे ।
वधाय सगणस्यास्य मामनुज्ञातुमर्हसि ॥ ७-१७-४१ (४५४१५)
नैतच्छक्नोमि संसोढुमाह्वानं पुरुषर्षभ ।
सत्यं ते प्रतिजानामि हतान्विद्धि परान्युधि ॥ ७-१७-४२ (४५४१६)
युधिष्ठिर उवाच। ७-१७-४२क्ष् (४३०१)
श्रुतं ते तत्त्वतस्तात यद्द्रोणस्य चिकीर्षितम् ।
यथा तदनृतं तस्य भवेतत्त्वं समाचर ॥ ७-१७-४३ (४५४१७)
द्रोणो हि बलवाञ्शूरः कृतास्त्रश्च जितश्रमः ।
प्रतिज्ञातं च तेनैतद्ग्रहणं मे महारथ ॥ ७-१७-४४ (४५४१८)
अर्जुन उवाच। ७-१७-४५क्ष् (४३०२)
अयं वै सत्यजिद्राजन्नद्य त्वां रक्षिता युधि ।
ध्रियमाणे च पाञ्चाल्ये नाचार्यः काममाप्स्यति ॥ ७-१७-४५ (४५४१९)
हते तु पुरुषव्याघ्रे रणे सत्यजिति प्रभो ।
सर्वैरपि समेतैर्वा न स्थातव्यं कथंचन ॥ ७-१७-४६ (४५४२०)
सञ्जय उवाच। ७-१७-४७क्ष् (४३०३)
अनुज्ञातस्ततो राज्ञा परिष्वक्तश्च फल्गुनः ।

प्रेम्णा दृष्टश्च बहुधा ह्याशिषश्चास्य योजिताः ॥ ७-१७-४७ (४५४२१)
विहायैनं ततः पार्थस्त्रिगर्तान्प्रत्ययाद्बली ।
क्षुधितः क्षुद्विघातार्थं सिंहो मृगगणानिव ॥ ७-१७-४८ (४५४२२)
ततो दौर्योधनं सैन्यं मुदा परमया युतम् ।
ऋतेऽर्जुनं भृशं क्रुद्धं धर्मराजस्य निग्रहे ॥ ७-१७-४९ (४५४२३)
ततोऽन्योन्येन ते सैन्ये समाजग्मतुरोजसा ।
गङ्गासरय्वौ वेगेन प्रावृषीवोल्बणोदके ॥ ॥ ७-१७-५० (४५४२४)

इति श्रीमन्महाभारते द्रोणपर्वणि द्रोणाभिषेकपर्वणि
सप्तदशोऽध्यायः ॥ १७ ॥
Mahabharata - Drona Parva - Chapter Footnotes

५-१७-५ योगेन उपायेन ॥
५-१७-२४ लोक्याः पुण्यलोकार्हाः ॥
५-१७-२५ ब्रह्मचर्यं वेदव्रताचरणम् । श्रुतिर्वेदाध्ययनं ते एव
मुखं प्रधानं येषु तैः। कर्मभिरिति शेषः ॥
५-१७-३३ आत्मापहारिणां स्वजातिगोपकानाम् ॥
५-१७-३४ श्रुतं प्रतिज्ञातम् ॥
५-१७-३९ अपदान्तरमव्यवहितम् ॥
५-१७-१७ सप्तदशोऽध्यायः ॥

---

द्रोनपर्व-अध्यय०१८
॥ श्रीः ॥
७.१८. अध्यायः १८

Mahabharata - Drona Parva - Chapter Topics
अर्जुनस्य संशप्तकैः सह युद्धम् ॥ १ ॥

Mahabharata - Drona Parva - Chapter Text

७-१८-० (४५४२५)
सञ्जय उवाच। ७-१८-०क्ष् (४३०४)
ततः संशप्तका राजन्समे देशे व्यवस्थिताः ।
व्यूढानीकै रथैरेव चन्द्रार्धाख्यैर्मुदा युताः ॥ ७-१८-१ (४५४२६)
ते किरीटिनमायान्तं दृष्ट्वा हर्षेण मारिष ।
ंअतीव सम्प्रहृष्टास्ते ह्युपलक्ष्य धनञ्जयम्' ।

उदक्रोशन्नरव्याघ्राः शब्देन महता तदा ॥  ७-१८-२ (४५४२७)
स दिशः प्रदिशः सर्वा नभश्चैव समावृणोत् ।
आवृतत्वाच लोकस्य नासीत्तत्र प्रतिस्वनः ॥ ७-१८-३ (४५४२८)
सोऽतीव संप्रहृष्टांस्तानुपलभ्य धनञ्जयः ।
किञ्चिदभ्युत्स्मयन्कृष्णमिदं वचनमब्रवीत् ॥ ७-१८-४ (४५४२९)
देवकीपुत्र पश्येमान्मुमूर्षूनद्य संयुगे ।
भ्रातॄंस्त्रैगर्तकानेतान्रोदितव्ये प्रहर्षितान् ॥ ७-१८-५ (४५४३०)
अथवा हर्षकालोऽयं त्रैगर्तानामसंशयम् ।
कुनरैर्दुरवापान्हि लोकान्प्राप्स्यन्ति संयुगे ।
ग्मया हता हिं सङ्ग्रामे लोकान्प्राप्स्यन्ति पुष्कलान्'
एवमुक्त्वा महाबाहुर्हृषीकेशं ततोऽर्जुनः ।
आससाद रणे व्यूढां त्रिगर्तानामनीकिनीम् ॥  ७-१८-६ (४५४३१)
स देवदत्तमादाय शङ्खं हेमपरिष्कृतम् ।
दध्मौ वेगेन महता घोषेणापूरयन्दिशः ॥ ७-१८-८ (४५४३२)
तेन शब्देन वित्रस्ता संशप्तकवरूथिनी ।
विचेष्टाऽवस्थिता सङ्ख्ये ह्यश्मसारमयी यथा ॥ ७-१८-९ (४५४३३)
ग्सा सेना भरतश्रेष्ठ निश्चेष्टा शुशुभे तदा ।
चित्रे पटे यथा न्यस्ता कुशलैः शिल्पिभिर्नरैः ॥ ७-१८-१० (४५४३४)
स्वनेन तेन सैन्यानां दिवमावृण्वता तदा ।
सस्वना पृथिवी सर्वा तथैव च महोदधिः ।
स्वनेन तेन सैन्यानां कर्णास्तु बधिरीकृताः'॥  ७-१८-११ (४५४३५)
वाहास्तेषां विवृत्ताक्षाः स्तब्धकर्णशिरोधराः ।
विष्टब्धचरणा मूत्रं रुधिरं च प्रसुस्रुवुः ।
ग्ततो व्युपारमच्छब्दः प्रहृष्टास्ते ततोऽभवन्'॥  ७-१८-१२ (४५४३६)
उपलभ्य ततः संज्ञामवस्थाप्य च वाहिनीम् ।
युगपत्पाण्डुपुत्राय चिक्षिपुः कङ्कपत्रिणः ॥ ७-१८-१३ (४५४३७)
तानर्जुनः सहस्राणि दशपञ्चभिराशुगैः ।
अनागतानेव शरैश्चिच्छेदाशु पराक्रमी ॥ ७-१८-१४ (४५४३८)
ततोर्जुनं शितैर्बाणैर्दशभिर्दशभिः पुनः ।
प्राविध्यन्त ततः पार्थस्तानविध्यत्त्रिभिस्त्रिभिः ॥ ७-१८-१५ (४५४३९)
एकैकस्तु ततः पार्थं राजन्विव्याध पञ्चभिः ।
स च तान्प्रतिविव्याध द्वाभ्यां द्वाभ्यां पराक्रमी ॥ ७-१८-१६ (४५४४०)
भूय एव तु सङ्क्रुद्धास्त्वर्जुनं सहकेशवम् ।
आपूरयञ्शरैस्तीक्ष्णैस्तटाकमिव वृष्टिभिः ॥ ७-१८-१७ (४५४४१)
ततः शरसहस्राणि प्रापतन्नर्जुनं प्रति ।
भ्रमराणामिव व्राताः फुल्लं द्रुमगणं वने ॥ ७-१८-१८ (४५४४२)

ततः सुबाहुस्त्रिंशद्भिरद्रिसारमयैः शरैः ।
अविध्यदिषुभिर्गाढं किरीटे सव्यसाचिनम् ॥ ७-१८-१९ (४५४४३)
तैः किरीटि किरीटस्थैर्हेमपुङ्खैरजिह्मगैः ।
शातकुम्भमयापीडो बभौ यूप इवोच्छ्रितः ॥ ७-१८-२० (४५४४४)
हस्तावापं सुबाहोस्तु भल्लेन युधि पाण्डवः ।
चिच्छेद तं चैव पुनः शरवर्षैरवाकिरत् ॥ ७-१८-२१ (४५४४५)
ततः सुशर्मा दशभिः सुरथस्तु किरीटिनम् ।
सुधर्मा सुधनुश्चैव सुबाहुश्च समार्पयत् ॥ ७-१८-२२ (४५४४६)
तांस्तु सर्वान्पृथग्बाणैर्वानरप्रवरध्वजः ।
प्रत्यविध्यद्ध्वजांश्चैषां भल्लैश्चिच्छेद सायकान् ॥ ७-१८-२३ (४५४४७)
सुधन्वनो धनुश्छित्त्वा हयांश्चास्यावधीच्छरैः ।
अथास्य सशिरस्त्राणं शिरः कायादपातयत् ॥ ७-१८-२४ (४५४४८)
ग्जहार पार्थः सैन्येषु सहस्रे द्वे च योधिनाम्'।
तस्मिन्निपतिते वीरे त्रस्तास्तस्य पदानुगाः ॥ ७-१८-२५ (४५४४९)
ग्भूयिष्ठं प्रतिरुद्धा ये हतैर्योधैर्यशस्विनः'।
व्यद्रवन्त भयाद्भीता यत्र दौर्योधनं बलम् ॥ ७-१८-२६ (४५४५०)
ततो जघानं सङ्क्रुद्धो वासविस्तां महाचमूम् ।
शरजालैरविच्छिन्नैस्तमः सूर्य इवांशुभिः ॥ ७-१८-२७ (४५४५१)
ततो भग्ने बले तस्मिन्विप्रलीने समन्ततः ।
सव्यसाचिनि सङ्क्रुद्धे त्रैगर्तान्भयमाविशत् ॥ ७-१८-२८ (४५४५२)
ते वध्यमानाः पार्थेन शरैः सन्नतपर्वभिः ।
अमुह्यंस्तत्रतत्रैव त्रस्ता मृगगणा इव ॥ ७-१८-२९ (४५४५३)
ततस्त्रिगर्तराट् क्रुद्धस्तानुवाच महारथान् ।
अलं द्रुतेन वः शूरा न भयं कर्तुमर्हथ ॥ ७-१८-३० (४५४५४)
शप्त्वाऽथ शपथान्घोरान्सर्वसैन्यस्य पश्यतः ।
गत्वा दौर्योधनं सैन्यं किं वै वक्ष्यथ मुख्यशः। ७-१८-३१ (४५४५५)
नावहास्याः कथं लोके कर्मणाऽनेन संयुगे ।
भवेम सहिताः सर्वे निवर्तध्वं यथाबलम् ॥ ७-१८-३२ (४५४५६)
एवमुक्तास्तु ते राजन्नुदक्रोशन्मुहुर्मुहुः ।
शङ्खांश्च दध्मिरे वीरा हर्षयन्तः परस्परम् ॥ ७-१८-३३ (४५४५७)
ततस्ते सन्न्यवर्तन्तं संशप्तकगणाः पुनः ।
नारायणाश्च गोपाला मृत्युं कृत्वाऽनिवर्तनम् ॥ ॥ ७-१८-३४ (४५४५८)

इति श्रीमन्महाभारते द्रोणपर्वणि द्रोणाभिषेकपर्वणि
अष्टादशोऽध्यायः ॥ १८ ॥

Mahabharata - Drona Parva - Chapter Footnotes

५-१८-१ व्युह्यानीकं रथैरेव चन्द्राकारं मुदा युताः इति झ पाठः ॥
५-१८-१८ अष्टादशोऽध्यायः ॥

---

द्रोनपर्व-अध्यय०१९
॥ श्रीः ॥
७.१९. अध्यायः १९

Mahabharata - Drona Parva - Chapter Topics
अर्जुनस्य संशप्तकैः सह युद्धम् ॥ १ ॥

Mahabharata - Drona Parva - Chapter Text

७-१९-० (४५४५९)
सञ्च उवाच। ७-१९-०क्ष् (४३०५)
दृष्टा तु सन्निवृत्तांस्तान्संशप्तकगणान्पुनः ।
वासुदेवं महात्मानमर्जुनः समभाषत ॥ ७-१९-१ (४५४६०)
चोदयाश्वान्हृषीकेश संशप्तकगणान्प्रति ।
नैते हास्यन्ति सङ्ग्रामं जीवन्त इति मे मतिः ॥ ७-१९-२ (४५४६१)
पश्य मेऽस्त्रबलं घोरं बाह्वोरिष्वसनस्य च ।
अद्यैतान्पातयिष्यामि क्रुद्धो रुद्रः पशूनिव ॥ ७-१९-३ (४५४६२)
सञ्जय उवाच। ७-१९-४क्ष् (४३०६)
ततः कृष्णः स्मितं कृत्वा प्रतिनन्द्य शिवेन तम् ।
प्रावेशयत दुर्धर्षो यत्रयत्रैच्छदर्जुनः ॥ ७-१९-४ (४५४६३)
स रथो भ्राजतेऽत्यर्थमुह्यमानो रणे तदा ।
उह्यमानमिवाकाशे विमानं पाण्डुरैर्हयैः ॥ ७-१९-५ (४५४६४)
मण्डलानि ततश्चक्रे गतप्रत्यागतानि चे ।
यथा शक्ररथो राजन्युद्धे देवासुरे पुरा ॥ ७-१९-६ (४५४६५)
अथ नारायणाः क्रुद्धा विविधायुधपाणयः ।
छादयन्तः शरव्रातैः परिवव्रुर्धनञ्जयम् ॥ ७-१९-७ (४५४६६)
अदृश्यं च मुहूर्तेन चक्रुस्ते भरतर्षभ ।
कृष्णेन सहितं युद्धे कुन्तीपुत्रं धनञ्जयम् ॥ ७-१९-८ (४५४६७)
क्रुद्धस्तु फल्गुनः सङ्ख्ये द्विगुणीकृतविक्रमः ।
गाण्डीवं धनुरामृज्य तूर्णं जग्राह संयुगे ॥ ७-१९-९ (४५४६८)
बद्धवा च भ्रुकुटिं वक्त्रे क्रोधस्य प्रतिलक्षणम् ।
देवदत्तं महाशङ्खं पूरयामास पाण्डवः ॥ ७-१९-१० (४५४६९)

अथास्त्रमरिसङ्घघ्नं त्वाष्ट्रमभ्यस्यदर्जुनः ।
ततो रूपसहस्राणि प्रादुरासन्पृथक्पृथक् ॥ ७-१९-११ (४५४७०)
अर्जुनप्रतिरूपैस्तैर्नानारूपैर्विमोहिताः ।
अन्योन्येनार्जुनं मत्वा स्वमात्मानं च जघ्निरे ॥ ७-१९-१२ (४५४७१)
अयमर्जुनोऽयं गोविन्द इमौ पाण्डवयादवौ ।
इति ब्रुवाणाः संमूढा जघ्नुरन्योन्यमाहवे ॥ ७-१९-१३ (४५४७२)
ग्अन्योन्यं समरे जघ्नुस्तावका भरतर्षभ'।
मोहिताः परमास्त्रेण क्षयं जग्मुः परस्परम् ॥ ७-१९-१४ (४५४७३)
ग्रुधिरोक्षितगात्रास्ते प्रेक्षमाणः परस्परम्'।
अशोभन्त रणे योधाः पुष्पिता इव किंशुकाः ॥ ७-१९-१५ (४५४७४)
ग्रुधिरोत्पीडनास्ते तु रुधिरेण समुक्षिताः ।
चन्दनस्य रसेनेव व्यभ्राजन्त रणाजिरे ॥ ७-१९-१६ (४५४७५)
ततः प्रसह्य बीभत्सुर्व्याक्षिपद्गाण्डिवं धनुः ।
न्यहनत्ताञ्छरैस्तीक्ष्णैस्तमः सूर्य इवांशुभिः ॥ ७-१९-१७ (४५४७६)
हतावशिष्टास्ते भूयः परिवार्य धनञ्जयम् ।
साश्वध्वजरथं चक्रुरदृश्यं शरवृष्टिभिः'॥ ७-१९-१८ (४५४७७)
ततः शरसहस्राणि तैर्विमुक्तानि भस्मसात् ।
कृत्वा तदस्त्रं तान्वीराननयद्यमसादनम् ॥ ७-१९-१९ (४५४७८)
अथ प्रहस्य बीभत्सुर्ललित्थान्मालवानपि ।
मावेल्लकांस्त्रिगर्तांश्च यौधेयांश्चार्दयच्छरैः ॥ ७-१९-२० (४५४७९)
ते हन्यमाना वीरेण क्षत्रियाः कालचोदिताः ।
व्यसृजञ्छरजालानि पार्थे नानाविधानि च ॥ ७-१९-२१ (४५४८०)
न ध्वजो नार्जुनस्तत्र न रथो न च केशवः ।
प्रत्यदृश्यत घोरेण शरवर्षेण संवृतः ॥ ७-१९-२२ (४५४८१)
ततस्ते लब्धलक्षत्वादन्योन्यमभिचुक्रुशुः ।
हतौ कृष्णाविति प्रीत्या वासांस्यादुधुवुस्तदा ॥ ७-१९-२३ (४५४८२)
भेरीमृदङ्गशङ्खांश्च दध्मुर्वीराः सहस्रशः ।
सिंहनादरवांश्चोग्रांश्चक्रिरे तत्र मारिष ॥ ७-१९-२४ (४५४८३)
ततः प्रसिष्विदे कृष्णः खिन्नश्चार्जुनमब्रवीत् ।
क्वासि पार्थ न पश्यामि कच्चिज्जीवसि शत्रुहन् ॥ ७-१९-२५ (४५४८४)
तस्य तद्भाषितं श्रुत्वा त्वरमाणो धनञ्जयः ।
वायव्यास्त्रेण तैरस्तां शरवृष्टिमपाहरत् ॥ ७-१९-२६ (४५४८५)
ततः संशप्तकव्रातान्साश्वद्विपरथायुधान् ।
उवाह भगवान्वायुः शुष्कपर्मचयानिव ॥ ७-१९-२७ (४५४८६)
उह्यमानास्तु ते राजन्बह्वशोभन्त वायुना ।
प्रडीनाः पक्षिणः काले वृक्षेभ्य इव मारिष ॥ ७-१९-२८ (४५४८७)

तांस्तथा व्याकुलीकृत्य त्वरमाणो धनञ्जयः ।
जघान निशितैर्बाणैः सहस्राणि शतानि च ॥ ७-१९-२९ (४५४८८)
शिरांसि भल्लैरहरद्बाहूनपि च सायुधान् ।
हस्तिहस्तोपमांश्चोरूञ्शरैरुर्व्यामपातयत् ॥ ७-१९-३० (४५४८९)
पृष्ठच्छिन्नान्विचरणान्विमस्तकदृगङ्गुलीन् ।
नानाङ्गावयवैर्हीनांश्चकारारीन्धनञ्जयः ॥ ७-१९-३१ (४५४९०)
गन्धर्वनगराकारान्विधिवत्कल्पितान्रथान् ।
शरैर्विशकलीकुर्वंश्चक्रे व्यश्वरथद्विपान् ॥ ७-१९-३२ (४५४९१)
मुण्डतालवनानीव तत्रतत्र चकाशिरे ।
छिन्ना रथध्वजव्राताः केचित्तत्र क्वचित्क्वचित् ॥ ७-१९-३३ (४५४९२)
सोत्तरायुधिनो नागाः सपताकाङ्कुशध्वजाः ।
पेतुः शक्राशनिहता द्रुमवन्त इवाचलाः ॥ ७-१९-३४ (४५४९३)
चामरापीडकवचाः स्रस्तान्त्रनयनास्तथा ।
सारोहास्तुरगाः पेतुः पार्तबाणहताः क्षितौ ॥ ७-१९-३५ (४५४९४)
विप्रविद्धासिनाराचाश्छिन्नवर्मर्ष्टिशक्तयः ।
पत्तयश्छिन्नवर्माणः कृपणाः शेरते हताः ॥ ७-१९-३६ (४५४९५)
तैर्हतैर्हन्यमानैश्च पतद्भिः पतितैरपि ।
भ्रमद्भिर्निष्टनद्भिश्च क्रूरमायोधनं बभौ ॥ ७-१९-३७ (४५४९६)
रजश्च चाप्यभवद्दुर्गा कबन्धशतसङ्कुला ॥
तद्बभौ रौद्रबीभत्सं बीभत्सोर्यानमाहवे। ७-१९-३८ (४५४९७)
आक्रीडमिव रुद्रस्य घ्नतः कालात्यये पशून् ॥
कते वध्यमानाः पार्थेन व्याकुलाश्वरथद्विपाः। ७-१९-३९ (४५४९८)
तमेवाभिमुखाः क्षीणाः शक्रस्यातिथितां गताः ॥
सा भूमीर्भरतश्रेष्ठ निहतैस्तैर्महारथैः। ७-१९-४० (४५४९९)
आस्तीर्णा सम्बभौ सर्वा प्रेतीभूतैः समन्ततः ॥
एतस्मिन्नन्तरे चैव प्रमत्ते सव्यसाचिनि। ७-१९-४१ (४५५००)
व्यूढानीकस्ततो द्रोणो युधिष्ठिरमुपाद्रवत् ॥
तं प्रत्यगृह्णंस्त्वरिता व्यूढानीकाः प्रहारिणः। ७-१९-४२ (४५५०१)
युधिष्ठिरं परीप्सन्तस्तदासीत्तुमुलं महत् ॥ ॥ ७-१९-४३ (४५५०२)

इति श्रीमन्महाभारते द्रोणपर्वणि संशप्तकवधपर्वणि
द्वादशदिवसयुद्धे एकोनविंशोऽध्यायः ॥ १९ ॥

Mahabharata - Drona Parva - Chapter Footnotes

५-१९-३४ सोत्तरायुधिनः उपरिगतैर्योधैः सहिताः ॥
५-१९-१९ एकोनविंशोऽध्यायः ॥

द्रोनपर्व-अध्यय०२०
॥ श्रीः ॥
७.२०. अध्यायः २०

Mahabharata - Drona Parva - Chapter Topics
सङ्कुलयुद्धवर्णनम् ॥ १ ॥

Mahabharata - Drona Parva - Chapter Text

७-२०-० (४५५०३)
सञ्जय उवाच। ७-२०-०क्ष् (४३०७)
परिणाम्य निशां तां तु भारद्वाजो महारथः ।
उक्त्वा सुबहु राजेन्द्र वचनं वै सुयोधनम् ॥ ७-२०-१ (४५५०४)
विधाय गोप्तॄन्पार्थस्य संशप्तकगणैः सह ।
निष्क्रान्ते च तदा पार्थे संशप्तकवधं प्रति ॥ ७-२०-२ (४५५०५)
व्यूढानीकस्ततो द्रोणः पाण्डवानां महाचमूम् ।
अभ्যयाद्भरतश्रेष्ठ धर्मराजजिघृक्षया ॥ ७-२०-३ (४५५०६)
व्यूढां दृष्ट्वा सुपर्णेन भारद्वाजस्य तां चमूम् ।
व्यूहेन मण्डलार्धेन प्रत्यव्यूहद्युधिष्ठिरः ॥ ७-२०-४ (४५५०७)
मुखं त्वासीत्सुपर्णस्य भारद्वाजो महारथः ।
शिरो दुर्योधनो राजा सोदर्यैः सानुगैर्वृतः ॥ ७-२०-५ (४५५०८)
चक्षुषी कृतवर्माऽऽसीद्गौतमश्चास्यतां वरः ॥ ७-२०-६ (४५५०९)
भूतशर्मा क्षेमशर्मा करकाक्षश्च वीर्यवान् ।
कलिङ्गाः सिंहलाः प्राच्याः शूरा भीरा दशेरकाः ॥ ७-२०-७ (४५५१०)
शका यवनकाम्भोजास्तथा हंसपथाश्च ये ।
ग्रीवायां शूरसेनाश्च दरन्दा मद्रकेकयाः ।
गजाश्वरथपत्त्योघास्तस्थुः परमदंशिताः ॥ ७-२०-८ (४५५११)
भूरिश्रवास्तथा शल्यः सोमदत्तश्च बाह्लिकः ।
अक्षौहिण्या वृता वीरा दक्षिणं पार्श्वमास्थिताः ॥ ७-२०-९ (४५५१२)
विन्दानुविन्दावावन्त्यौ काम्भोजश्च सुदक्षिणः ।
वामं पार्श्वं समाश्रित्य द्रोणपुत्राग्रतः स्थिताः ॥ ७-२०-१० (४५५१३)
पृष्ठे कलिङ्गाः साम्बष्ठा मागधाः पौण्ड्रमद्रकाः ।
गान्धाराः शकुनाः प्राच्याः पार्वतीया वसातयः ॥ ७-२०-११ (४५५१४)
पुच्छे वैकर्तनः कर्णः सपुत्रज्ञातिबान्धवः ।
महत्या सेनया तस्थौ नानाजनपदोत्थया ॥ ७-२०-१२ (४५५१५)

जयद्रथो भीमरथः सम्पातिर्ऋषभो जयः ।
भूमिञ्जयो वृषक्राथो नैषधश्च महाबलः ॥ ७-२०-१३ (४५५१६)
वृता बलेन महता ब्रह्मलोकपरिष्कृताः ।
व्यूहस्योरसि ते राजन्स्थिता युद्धविशारदाः ॥ ७-२०-१४ (४५५१७)
द्रोणेन विहितो व्यूहः पदात्यश्वरथद्विपैः ।
वातोद्धूतार्णवाकारः प्रनृत्त इव लक्ष्यते ॥ ७-२०-१५ (४५५१८)
तस्य पक्षप्रपक्षेभ्यो निष्पतन्ति युयुत्सवः ।
सविद्युत्स्तनिता मेघाः सर्वदिग्भ्यः इवोष्णगे ॥ ७-२०-१६ (४५५१९)
तस्य प्राग्ज्योतिषो मध्ये विधिवत्कल्पितं गजम् ।
आस्थितः शुशुभे राजन्नंशुमानुदये यथा ॥ ७-२०-१७ (४५५२०)
माल्यदामवता राजञ्श्वेतच्छत्रेण धार्यता ।
कृत्तिकायोगयुक्तेन पौर्णमास्यामिवेन्दुना ॥ ७-२०-१८ (४५५२१)
नीलाञ्जनचयप्रख्यो मदान्धो द्विरदो बभौ ।
अतिवृष्टो महामेघैर्यथा स्यात्पर्वतो महान् ॥ ७-२०-१९ (४५५२२)
नानानृपतिभिर्वीरै र्विविधायुधभूषणैः ।
समन्वितः पार्वतीयैः शक्रो देवगणैरिव ॥ ७-२०-२० (४५५२३)
ततो युधिष्ठिरः प्रेक्ष्य व्यूहं तमतिमानुषम् ।
अजय्यमरिभिः सङ्ख्ये पार्षतं वाक्यमब्रवीत् ॥ ७-२०-२१ (४५५२४)
ब्राह्मणस्य वशं नाहमियामद्य यथा प्रभो ।
पारावतसवर्णाश्व तथा नीतिर्विधीयताम् ॥ ७-२०-२२ (४५५२५)
धृष्टद्युम्न उवाच। ७-२०-२३क्ष् (४३०८)
द्रोणस्य यतमानस्य वशं नैष्यसि सुव्रत ।
अहमावारयिष्यामि द्रोणमद्य सहानुगम् ॥ ७-२०-२३ (४५५२६)
मयि जीवति कौरव्य नोद्वेगं कर्तुमर्हसि ।
न हि शक्तो रणे द्रोणो विजेतुं मां कथञ्चन ॥ ७-२०-२४ (४५५२७)
सञ्जय उवाच। ७-२०-२५क्ष् (४३०९)
एवमुक्त्वा किरन्बाणान्द्रुपदस्य सुतो बली ।
पारावतसवर्णाश्वः स्वयं द्रोणमुपाद्रवत् ॥ ७-२०-२५ (४५५२८)
अनिष्टदर्शनं दृष्ट्वा धृष्टद्युम्नमवस्थितम् ।
क्षणेनैवाभवद्द्रोणो नातिहृष्टमना इव ॥ ७-२०-२६ (४५५२९)
ग्स हि जातो महाराज द्रोणस्य निधनं प्रति ॥ ७-२०-२७ (४५५३०)
मर्त्यधर्मतया तस्माद्भारद्वाजो व्यमुह्यत ।
नाशकत्तत्र तत्किञ्चिदनीकं प्रतिवीक्षितुम् ॥ ७-२०-२८ (४५५३१)
ततः किरन्निषूंस्तीक्ष्णान्द्रुपदस्य वरूथिनीम् ।
भराद्वाजो ययौ तूर्णं पार्षतं वर्जयन्युधि ।
द्रुपदस्य महत्सैन्यं दारयामास ब्राह्मणः'॥ ७-२०-२९ (४५५३२)

तं तु सम्प्रेक्ष्य पुत्रस्ते दुर्मुखः शत्रुकर्षणः ।
प्रियं चिकीर्षुर्द्रोणस्य धृष्टद्युम्नमवारयत् ॥ ७-२०-३० (४५५३३)
स सम्प्रहारस्तुमुलः सुघोरः समपद्यत ।
पार्षतस्य च शूरस्य दुर्मुखस्य च भारत ॥ ७-२०-३१ (४५५३४)
पार्षतः शरजालेन क्षिप्रं प्रच्छाद्य दुर्मुखम् ।
भारद्वाजं शरौघेण महता समवारयत् ॥ ७-२०-३२ (४५५३५)
द्रोणावारितं दृष्ट्वा भृशायस्तस्तवात्मजः ।
नानालिङ्गैः शरव्रातैः पार्षतं सममोहयत् ॥ ७-२०-३३ (४५५३६)
तयोर्विषक्तयोः सङ्ख्ये पाञ्चाल्यकुरुमुख्ययोः ।
द्रोणो यौधिष्ठिरं सैन्यं बहुधा व्यधमच्छरैः ॥ ७-२०-३४ (४५५३७)
अनिलेन यथाऽभ्राणि विच्छिन्नानि समन्ततः ।
तथा पार्थस्य सैन्यानि विच्छिन्नानि क्वचित्क्वचित् ॥ ७-२०-३५ (४५५३८)
मुहूर्तमिव तद्युद्धमासीन्मधुरदर्शनम् ।
तत उन्मत्तवद्राजन्निर्मर्यादमवर्तत ॥ ७-२०-३६ (४५५३९)
ग्नैव खं न दिशो भूमिर्बभासे न च भास्करः'।
नैव स्वे न परे राजन्नाज्ञायन्त परस्परम् ।
अनुमानेन संज्ञाभिर्युद्धं तत्समवर्तत ॥ ७-२०-३७ (४५५४०)
चूडामणिषु निष्केषु भूषणेष्वपि वर्मसु ।
तेषामादित्यवर्णाभा रश्मयः प्रचकाशिरे ॥ ७-२०-३८ (४५५४१)
तत्प्रकीर्णपताकानां रथवारणवाजिनाम् ।
बलाकाशबलाभ्रामं ददृशे रूपमाहवे ॥ ७-२०-३९ (४५५४२)
नरानेव नरा जघ्नरुदग्राश्च हया हयान् ।
रथांश्च रथिनो जघ्नुर्वारणा वरवारणान् ॥ ७-२०-४० (४५५४३)
समुच्छ्रितपताकानां गजानां परमद्विपैः ।
क्षणेन तुमुलो घोरः सङ्ग्रामः समपद्यत ॥ ७-२०-४१ (४५५४४)
तेषां संसक्तगात्राणां कर्षतामितरेतरम् ।
दन्तसङ्घातसङ्घर्षात्सधूमोऽग्निरजायत ॥ ७-२०-४२ (४५५४५)
विप्रकीर्णपताकास्ते विषाणजनिताग्नयः ।
बभूवुः खं समासाद्य सविद्युत इवाम्बुदाः ॥ ७-२०-४३ (४५५४६)
विक्षिपद्भिर्नदद्भिश्च निपतद्भिश्च वारणैः ।
सम्बभूव मही कीर्णा मेघैर्द्यौरिव वार्षिकी ॥ ७-२०-४४ (४५५४७)
तेषामाहन्यमानानां बाणतोमरऋष्टिभिः ।
वारणानां रवो जज्ञे मेघानामिव सम्प्लुवे ॥ ७-२०-४५ (४५५४८)
तोमराभिहताः केचिद्बाणैश्च परमद्विपाः ।
वित्रेसुः सर्वनागानां शब्दमेवापरेऽसृजन् ॥ ७-२०-४६ (४५५४९)
विषाणाभिहताश्चापि केचित्तत्र गजा गजैः ।

चक्रुरार्तस्वनं घोरमुत्पातजलदा इव ॥ ७-२०-४७ (४५५५०)
प्रतीपाः क्रियमाणाश्च वारणा वरवारणैः ।
उन्मथ्य पुनराजग्मुः प्रेरिताः परमाङ्कुशैः ॥ ७-२०-४८ (४५५५१)
महामात्रैर्महामात्रास्ताडिताः शरतोमरैः ।
गजेभ्यः पृथिवीं जग्मुर्मुक्तप्रहरणाङ्कुशाः ॥ ७-२०-४९ (४५५५२)
निर्मनुष्याश्च मातङ्गा विनदन्तस्ततस्ततः ।
छिन्नाभ्राणीव सम्पेतुः सम्प्रविश्य परस्परम् ॥ ७-२०-५० (४५५५३)
हतान्परिवहन्तश्च पतितान्पतितायुधान् ।
दिशो जग्मुर्महानागाः केचिदेकचरा इव ॥ ७-२०-५१ (४५५५४)
ताडितास्ताड्यमानाश्च तोमरर्ष्टिपरश्वथैः ।
पेतुरार्तस्वनं कृत्वा तदा विशसने गजाः ॥ ७-२०-५२ (४५५५५)
तेषां शैलोपमैः कायैर्निपतद्भिः समन्ततः ।
आहता सहसा भूमिश्चकम्पे च ननाद च ॥ ७-२०-५३ (४५५५६)
सादितैः सगजारोहैः सपताकैः समन्ततः ।
मातङ्गैः शुशुभे भूमिर्विकीर्णैरिव पर्वतैः ॥ ७-२०-५४ (४५५५७)
गजस्थाश्च महामात्रा निर्भिन्नहृदया रणे ।
रथिभिः पातिता भल्लैर्विकीर्णाङ्कुशतोमराः ॥ ७-२०-५५ (४५५५८)
क्रौञ्चवद्विनदन्तोऽन्ये नाराचाभिहता गजाः ।
परान्स्वांश्चापि मृद्नन्तः परिपेतुर्दिशो दश ॥ ७-२०-५६ (४५५५९)
गजाश्वरथयोधानां शरीरौघसमावृता ।
बभूव पृथिवी राजन्मांसशोणितकर्दमा ॥ ७-२०-५७ (४५५६०)
प्रमथ्य च विषाणाग्रैः समुत्क्षिप्ताश्च वारणैः ।
सचक्राश्च विचक्राश्च रथैरेव महारथाः ॥ ७-२०-५८ (४५५६१)
रथाश्च रथिभिर्हीना निर्मनुष्याश्च वाजिनः ।
हतारोहाश्च मातङ्गा दिशो जग्मुर्भयातुराः ॥ ७-२०-५९ (४५५६२)
जघानात्र पिता पुत्रं पुत्रश्च पितरं तथा ।
इत्यासीत्तुमुलं युद्धं न प्राज्ञायत किञ्चन ॥ ७-२०-६० (४५५६३)
आगुल्फेभ्योऽवसीदन्ते नरा लोहितकर्दमैः ।
दीप्यमानैः परिक्षिप्ता दावैरिव महाद्रुमाः ॥ ७-२०-६१ (४५५६४)
शोणितैः सिच्यमानानि वस्त्राणि कवचानि च ।
छत्राणि च पताकाश्च सर्वं रक्तमदृश्यत ॥ ७-२०-६२ (४५५६५)
हयौघाश्च रथौघाश्च नरौघाश्च निपातिताः ।
संक्षुण्णाः पुनरावृत्य बहुधा रथनेमिभिः ॥ ७-२०-६३ (४५५६६)
सगजौघमहावेगः परासुनरशैवलः ।
रथौघतुमुलावर्तः प्रबभौ सैन्यसागरः ॥ ७-२०-६४ (४५५६७)
तं वाहनमहानौभिर्योधा जयधनैषिणः ।

अवगाह्याथ मज्जन्तो नैव मोहं प्रचक्रिरे ॥ ७-२०-६५ (४५५६८)
शरवर्षाभिवृष्टेषु योधेष्वञ्चितलक्ष्मसु ।
न तेष्वचित्ततां लेभे कश्चिदाहतलक्षणः ॥ ७-२०-६६ (४५५६९)
वर्तमाने तथा युद्धे घोररूपे भयङ्करे ।
मोहयित्वा परान्द्रोणो युधिष्ठिरमुपाद्रवत् ॥ ॥ ७-२०-६७ (४५५७०)

इति श्रीमन्महाभारते द्रोणपर्वणि संशप्तकवधपर्वणि
द्वादशदिवसयुद्धे विंशोऽध्यायः ॥ २० ॥
Mahabharata - Drona Parva - Chapter Footnotes

५-२०-१६ उष्णगे घर्मात्यये ॥
५-२०-१८ पौर्णमास्यां कृत्तिकायोगयुक्तेन इन्दुना
। शारदपूर्णचन्द्रेणेत्यर्थः ॥
५-२०-२६ अनिष्टदर्शनं स्वमृत्युहेतुत्वात् ॥
५-२०-३३ भृशायस्तोऽतिप्रयत्नवान् ॥
५-२०-५१ एकचराः द्विपान्तरदर्शनासहाः ॥
५-२०-६६ अचित्ततां मोहम् ॥
५-२०-२० विंशोऽध्यायः ॥

---

द्रोनपर्व-अध्यय०२१
॥ श्रीः ॥
७.२१. अध्यायः २१

Mahabharata - Drona Parva - Chapter Topics
युधिष्ठिरं जिघृक्षतो द्रोणस्य सत्यजिता निराधः ॥ १ ॥
द्रोणेन सत्यजिति निहते भयाद्युधिष्ठिरस्यापयानम् ॥ २ ॥
पुनर्युधिष्ठिरं जिघृक्षुणा द्रोणेन पाञ्चाल्यादीनां हननम् ॥ ३ ॥

Mahabharata - Drona Parva - Chapter Text

७-२१-० (४५५७१)
सञ्जय उवाच। ७-२१-०क्ष् (४३१०)
ततो युधिष्ठिरो द्रोणं दृष्ट्वान्तिकमुपागतम् ।
महता शरवर्षेण प्रत्यगृह्णादभीतवत् ॥ ७-२१-१ (४५५७२)
ततो हलहलाशब्द आसीद्यौधिष्ठिरे बले ।
जिघृक्षति महासिंहे गजानामिव यूथपम् ॥ ७-२१-२ (४५५७३)

दृष्ट्वा द्रोणं ततः शूरः सत्यजित्सत्यविक्रमः ।
युधिष्ठिरमभिप्रेप्सुराचार्यं समुपाद्रवत् ॥ ७-२१-३ (४५५७४)
तत आचार्यपाञ्चाल्यौ युयुधाते महाबलौ ।
विक्षोभयन्तौ तत्सैन्यमिन्द्रवैरोचनाविव ॥ ७-२१-४ (४५५७५)
ततो द्रोणं महेष्वासः सत्यजित्सत्यविक्रमः ।
अविध्यन्निशिताग्रेण परमास्त्रं विदर्शयन् ॥ ७-२१-५ (४५५७६)
तथास्य सारथेः पञ्च शरान्सर्पविषोपमान् ।
अमुञ्चदन्तकप्रख्यान्संमुमोहास्य सारथिः ॥ ७-२१-६ (४५५७७)
अथास्य सहसाऽविध्यद्धयान्दशभिराशुगैः ।
दशभिर्दशभिः क्रुद्ध उभौ च पार्ष्णिसारथी ॥ ७-२१-७ (४५५७८)
मण्डलं तु समावृत्य विचरन्पृतनामुखे ।
ध्वजं चिच्छेद च क्रुद्धो द्रोणस्यामित्रकर्षणः ॥ ७-२१-८ (४५५७९)
द्रोणस्तु तत्समालोक्य चरितं तस्य संयुगे ।
मनसा चिन्तयामास प्राप्तकालमरिन्दमः ॥ ७-२१-९ (४५५८०)
ततः सत्यजितं तीक्ष्णैर्दशभिर्मर्मभेदभिः ।
अविध्यच्छीघ्रमाचार्यश्छित्त्वाऽस्य सशरं धनुः ॥ ७-२१-१० (४५५८१)
स शीघ्रतरमादाय धनुरन्यत्प्रतापवान् ।
द्रोणमभ्यहनद्राजंस्त्रिंशता कङ्कपत्रिभिः ॥ ७-२१-११ (४५५८२)
दृष्ट्वा सत्यजिता द्रोणं ग्रस्यमानमिवाहवे ।
वृकः शरशतैस्तीक्ष्णैः पाञ्चाल्यो द्रोणमार्दयत् ॥ ७-२१-१२ (४५५८३)
सञ्छाद्यमानं समरे द्रोणं दृष्ट्वा महारथम् ।
चुक्रुशुः पाण्डवा राजन्वस्त्राणि दुधुवुश्च ह ॥ ७-२१-१३ (४५५८४)
वृकस्तु परमक्रुद्धो द्रोणं षष्ट्या स्तनान्तरे ।
विव्याध बलवान्राजंस्तदद्भुतमिवाभवत् ॥ ७-२१-१४ (४५५८५)
द्रोणस्तु शरवर्षेण च्छाद्यमानो महारथः ।
वेगं चक्रे महावेगः क्रोधादुद्वृत्य चक्षुषी ॥ ७-२१-१५ (४५५८६)
ततः सत्यजितश्चापं छित्त्वा द्रोणो वृकस्य च ।
षड्भिः ससूतं सहयं शरैर्द्रोणोऽवधीद्वृकम् ॥ ७-२१-१६ (४५५८७)
अथान्यद्धनुरादाय सत्यजिद्वेगवत्तरम् ।
साश्वं ससूतं विशिखैर्द्रोणं विव्याध सध्वजम् ॥ ७-२१-१७ (४५५८८)
स तन्न ममृषे द्रोणः पाञ्चाल्येनार्दितो मृधे ।
ततस्तस्य विनाशाय सत्वरं व्यसृजच्छरान् ॥ ७-२१-१८ (४५५८९)
हयान्ध्वजं धनुर्मुष्टिमुभौ च पार्ष्णिसारथी ।
अवाकिरत्ततो द्रोणः शरवर्षैः सहस्रशः ॥ ७-२१-१९ (४५५९०)
तथा सञ्छिद्यमानेषु कार्मुकेषु पुनःपुनः ।
पाञ्चाल्यः परमास्त्रज्ञः शोणाश्वं समयोधयत् ॥ ७-२१-२० (४५५९१)

स सत्यजितमालोक्य तथोदीर्णं महाहवे ।
अर्धचन्द्रेण चिच्छेद शिरस्तस्य महात्मनः ॥ ७-२१-२१ (४५५९२)
तस्मिन्हते महामात्रे पाञ्चालानां महारथे ।
अपायाज्जवनैरश्वैर्द्रोणात्त्रस्तो युधिष्ठिरः ॥ ७-२१-२२ (४५५९३)
पाञ्चालाः केकया मात्स्याश्चेदिकारूशकोसलाः ।
युधिष्ठिरमभीप्सन्तो दृष्ट्वा द्रोणमुपाद्रवन् ॥ ७-२१-२३ (४५५९४)
ततो युधिष्ठिरं प्रेप्सुराचार्यः शत्रुपूगहा ।
व्यधमत्तान्यनीकानि तूलराशिमिवानलः ॥ ७-२१-२४ (४५५९५)
निर्दहन्तमनीकानि तानि तानि पुनःपुनः ।
द्रोणं मत्स्यादवरजः शतानीकोऽभ्यवर्तत ॥ ७-२१-२५ (४५५९६)
सूर्यरश्मिप्रतीकाशैः कर्मारपरिमार्जितैः ।
षड्भिः ससूतं सहयं द्रोणं विद्ध्वाऽनदञ्भृशम् ॥ ७-२१-२६ (४५५९७)
क्रूराय कर्मणे युक्तश्चिकीर्षुः कर्म दुष्करम् ।
अवाकिरच्छरशतैर्भारद्वाजं महारथम् ॥ ७-२१-२७ (४५५९८)
तस्य नानदतो द्रोणः शिरः कायात्सकुण्डलम् ।
क्षुरेणापाहरत्तूर्णं ततो मत्स्याः प्रदुद्रुवुः ॥ ७-२१-२८ (४५५९९)
मत्स्याञ्जित्वाऽजयच्चेदीन्करूशान्केकयानपि ।
पाञ्चालान्सृञ्जयान्पाण्डून्भारद्वाजः पुनःपुनः ॥ ७-२१-२९ (४५६००)
तं दहन्तमनीकानि क्रुद्धमग्निं यथा वनम् ।
दृष्ट्वा रुक्मरथं वीरं समकम्पन्त सृञ्जयाः ॥ ७-२१-३० (४५६०१)
उभाभ्यां सन्दधानस्य धनुरस्याशुकारिणः ।
ज्याघोषो निघ्नतोऽमित्रान्दिक्षुसर्वासु शुश्रुवे ॥ ७-२१-३१ (४५६०२)
नागानश्वान्पदातींश्च रथिनो गजसादिनः ।
रौद्रा हस्तवता मुक्ताः प्रमथ्नन्ति स्म सायकाः ॥ ७-२१-३२ (४५६०३)
नानद्यमानः पर्जन्यो मिश्रवातो हिमात्यये ।
अश्मवर्षमिवावर्षन्परेषां भयमादधत् ॥ ७-२१-३३ (४५६०४)
सर्वा दिशः समचरत्सैन्यं विक्षोभयन्निव ।
बली शूरो महेष्वासो मित्राणामभयङ्करः ॥ ७-२१-३४ (४५६०५)
तस्य विद्युदिवाभ्रेषु चापं हेमपरिष्कृतम् ।
दिक्षु सर्वासु पश्यामो द्रोणस्यामिततेजसः ॥ ७-२१-३५ (४५६०६)
शोभमानां ध्वजे चास्य वेदीमद्राक्ष्म भारत ।
हिमवच्छिखराकारं चरतः संयुगे भृशम् ॥ ७-२१-३६ (४५६०७)
द्रोणस्तु पाण्डवानीके चकार कदनं महत् ।
यथा दैत्यगणे विष्णुः सुरासुरनमस्कृतः ॥ ७-२१-३७ (४५६०८)
स शूरः सत्यवाक्प्राज्ञो बलवान्सत्यविक्रमः ।
महानुभावः कल्पान्ते रौद्रां भीरुविभीषणाम् ॥ ७-२१-३८ (४५६०९)

कवचोर्मिध्वजावर्तां मर्त्यकूलापहारिणीम् ॥
गजवाजिमहाग्राहामसिमीनां दुरासदाम् ॥ ७-२१-३९ (४५६१०)
वीरास्थिशर्करां रौद्रां भेरीमुरजकच्छपाम् ।
चर्मवर्मप्लवां घोरां केशशैवलशाद्वलाम् ॥ ७-२१-४० (४५६११)
शरौघिणीं धनुःस्रोतां बाहुपन्नगसङ्कुलाम् ।
रणभूमिवहां तीव्रां कुरुसृञ्जयवाहिनीम् ॥ ७-२१-४१ (४५६१२)
मनुष्यशीर्षपाषाणां शक्तिमीनां गदोडुपाम् ।
उष्णीषफेनवसनां विकीर्णान्त्रसरीसृपाम् ॥ ७-२१-४२ (४५६१३)
वीरापहारिणीमुग्रां मांसशोणितकर्दमाम् ।
हस्तिग्राहां केतुवृक्षां क्षत्रियाणां निमज्जनीम् ॥ ७-२१-४३ (४५६१४)
क्रूरां शरीरसङ्घाटां सादिनक्रां दुरत्ययाम् ।
द्रोणः प्रावर्तयत्तत्र नदीमन्तकगामिनीम् ॥ ७-२१-४४ (४५६१५)
क्रव्यादगणसञ्जुष्टां श्वशृगालगणायुताम् ।
निषेवितां महारौद्रैः पिशिताशैः समन्ततः ॥ ७-२१-४५ (४५६१६)
तं दहन्तमनीकानि रथोदारं कृतान्तवत् ।
सर्वतोऽभ्यद्रवन्द्रोणं कुन्तीपुत्रपुरोगमाः ॥ ७-२१-४६ (४५६१७)
ते द्रोणं सहिताः शूराः सर्वतः प्रत्यवारयन् ।
गभस्तिभिरिवादित्यं तपन्तं भुवनं यथा ॥ ७-२१-४७ (४५६१८)
तं तु शूरं महेष्वासं तावकाऽभ्युद्यतायुधाः ।
राजानो राजपुत्राश्च समन्तात्पर्यवारयन् ॥ ७-२१-४८ (४५६१९)
शिखण्डी तु ततो द्रोणं पञ्चभिर्नतपर्वभिः ।
क्षत्रवर्मा च विंशत्या वसुदानश्च पञ्चभिः ॥ ७-२१-४९ (४५६२०)
उत्तमौजास्त्रिभिर्बाणैः क्षत्रदेवश्च सप्तभिः ।
सात्यकिश्च शतेनाजौ युधामन्युस्तथाऽष्टभिः ॥ ७-२१-५० (४५६२१)
युधिष्ठिरो द्वादशभिर्द्रोणं विव्याध सायकैः ।
धृष्टद्युम्नश्च दशभिश्चेकितानस्त्रिभिः शरैः ॥ ७-२१-५१ (४५६२२)
ततो द्रोणः सत्यसन्धः प्रभिन्न इव कुञ्जरः ।
अभ्यतीत्य रथानीकं दृढसेनमपातयत् ॥ ७-२१-५२ (४५६२३)
ततो राजानमासाद्य प्रहरन्तमभीतवत् ।
अविध्यन्नवभिः क्षेमं स हतःप्रापतद्रथात् ॥ ७-२१-५३ (४५६२४)
स मध्यं प्राप्य सैन्यानां सर्वाः प्रविचरन्दिशः ।
त्राता ह्यभवदन्येषां न त्रातव्यः कथंचन ॥ ७-२१-५४ (४५६२५)
शिखण्डिनं द्वादशभिर्विंशत्या चोत्तमौजसम् ।
वसुदानं च भल्लेन प्रैषयद्यमसादनम् ॥ ७-२१-५५ (४५६२६)
अशीत्या क्षत्रवर्माणं षड्विंशत्या सुदक्षिणम् ।
क्षत्रदेवं तु भल्लेन रथनीडादपातयत् ॥ ७-२१-५६ (४५६२७)

युधामन्युं चतुःषष्ट्या त्रिंशता चैव सात्यकिम् ।
विद्धवा रुक्मरथस्तूर्णं युधिष्ठिरमुपाद्रवत् ॥ ७-२१-५७ (४५६२८)
ततो युधिष्ठिरः क्षिप्रं गुरुतो राजसत्तमः ।
अपायाञ्जवनैरश्वैः पाञ्चाल्यो द्रोणमभ्ययात् ॥ ७-२१-५८ (४५६२९)
तं द्रोणः सधनुष्कं तु साश्वयन्तारमाक्षिणोत् ।
स हतः प्रापतद्भूमौ रथाज्ज्योतिरिवाम्बरात् ।
ग्हत्वा तं विबभौ द्रोणः कुरुभिः परिवारितः ॥ ७-२१-५९ (४५६३०)
वार्धक्षेमिस्तु वार्ष्णेयो द्रोणं विद्धवा शरोत्तमैः ।
नवभिश्च महीपालः पुनर्विव्याध पञ्चभिः ॥ ७-२१-६० (४५६३१)
स सात्यकिश्चतुष्षष्ट्या राजन्विव्याध सायकैः ।
सुचित्रो दशभिर्बाणैर्द्रोणं विद्धवाऽनदद्बली ॥ ७-२१-६१ (४५६३२)
तं द्रोणः समरे राजञ्शरवर्षैरवाकिरत् ।
अपातयत्तयो द्रोणः सुचित्रं सहसारथिम् ॥ ७-२१-६२ (४५६३३)
साश्वं च समरे राजन्हतो वै प्रापतत्क्षितौ ।
पात्यमानो महाराज बभौ ज्योतिरिवाम्बरात् ॥ ७-२१-६३ (४५६३४)
तस्मिन्हते राजपुत्रे पाञ्चालानां यशस्करे ।
हत द्रोणं हत द्रोणमित्यासीन्निःस्वनो महान् ॥ ७-२१-६४ (४५६३५)
तांस्तथा भृशसंरब्धान्पाञ्चालान्मत्स्यकेकयान् ।
सृञ्जयान्पाण्डवांश्चैव द्रोणो व्यक्षोभयद्बली ॥ ७-२१-६५ (४५६३६)
सात्यकिं चेकितानं च धृष्टद्युम्नशिखण्डिनौ ।
वार्धक्षेमिं चैत्रसेनिं सेनाबिन्दुं सुवर्चसम् ॥ ७-२१-६६ (४५६३७)
एतांश्चान्यांश्च सुबहून्नानाजनपदेश्वरान् ।
सर्वान्द्रोणोऽजयद्युद्धे कुरुभिः परिवारितः ॥ ७-२१-६७ (४५६३८)
तावकाश्च महाराज जयं लब्ध्वा महाहवे ।
पाण्डवेयान्रणे जघ्नुर्द्रवमाणान्समन्ततः ॥ ७-२१-६८ (४५६३९)
ते दानवा इवेन्द्रेण वध्यमाना महात्मना ।
पाञ्चालाः केकया मात्स्याः समकम्पन्त भारत ॥ ॥ ७-२१-६९ (४५६४०)

इति श्रीमन्महाभारते द्रोणपर्वणि संशप्तकवधपर्वणि
द्वादशदिवसयुद्धे एकविंशोऽध्यायः ॥ २१ ॥
Mahabharata - Drona Parva - Chapter Footnotes

५-२१-५५ उभयत्र विद्धवेति शेषः ॥
५-२१-५८ पाञ्चाल्यो नाम्ना ॥
५-२१-२१ एकविंशोऽध्यायः ॥

द्रोनपर्व-अध्यय०२२
॥ श्रीः ॥
७.२२. अध्यायः २२

Mahabharata - Drona Parva - Chapter Topics
द्रोणपराक्रमहृष्टेन दुर्योधनेन कर्णं सम्बोध्य
भीमसेनाद्यवज्ञाने कृते कर्णेन भीमादीनां
प्रशंसनपूर्वकमनवज्ञेयत्वकथनम् ॥ १ ॥

Mahabharata - Drona Parva - Chapter Text

७-२२-० (४५६४१)
धृतराष्ट्र उवाच। ७-२२-०क्ष् (४३११)
भारद्वाजेन भग्नेषु पाण्डवेषु महामृधे ।
पाञ्चालेषु च सर्वेषु कश्चिदन्योऽभ्यवर्तत ॥ ७-२२-१ (४५६४२)
आर्यां युद्धे मतिं कृत्वा क्षत्रियाणां यशस्करीम् ।
असेवितां कापुरुषैः सेवितां पुरुषर्षभैः ॥ ७-२२-२ (४५६४३)
स हि वीरोन्नतः शूरो यो भग्नेषु निवर्तते ।
अहो नासीत्पुमान्कश्चिद्दृष्ट्वा द्रोणं व्यवस्थितम् ॥ ७-२२-३ (४५६४४)
जृम्भमाणमिव व्याघ्रं प्रभिन्नमिव कुञ्जरम् ।
त्यजन्तमाहवे प्राणान्सन्नद्धं चित्रयोधिनम् ॥ ७-२२-४ (४५६४५)
महेष्वासं नरव्याघ्रं द्विषतां भयवर्धनम् ।
कृतज्ञं सत्यनिरतं दुर्योधनहितैषिणम् ॥ ७-२२-५ (४५६४६)
भारद्वाजं तथाऽनीके दृष्ट्वा शूरमवस्थितम् ।
के शूराः सन्न्यवर्तन्त तन्ममाचक्ष्व सञ्जय ॥ ७-२२-६ (४५६४७)
सञ्चय उवाच। ७-२२-७क्ष् (४३१२)
तान्दृष्ट्वा चलितान्सङ्ख्ये प्रणुन्नान्द्रोणसायकैः ।
पाञ्चालान्पाण्वान्मात्स्यान्सृञ्जयांश्चेदिकेकयान् ॥ ७-२२-७ (४५६४८)
द्रोणचापविमुक्तेन शरौघेणाशु हारिणा ।
सिन्धोरिव महौधेन ह्रियमाणान्यथा प्लवान् ॥ ७-२२-८ (४५६४९)
कौरवाः सिंहनादेन नानावाद्यस्वनेन च ।
रथद्विपनरांश्चैव सर्वतः समवारयन् ॥ ७-२२-९ (४५६५०)
तान्पश्यन्सैन्यमध्यस्थो राजा स्वजनसम्वृतः ।
दुर्योधनोऽब्रवीत्कर्णं प्रहृष्टः प्रहसन्निव ॥ ७-२२-१० (४५६५१)
दुर्योधन उवाच। ७-२२-११क्ष् (४३१३)
पश्य राधेय पाञ्चालान्प्रणुन्नान्द्रोणसायकैः ।

सिंहेनेव मृगान्वन्यांस्त्रासितान्दृढधन्वना ॥ ७-२२-११ (४५६५२)
नैते जातु पुनर्युद्धमीहेयुरिति मे मतिः ।
यथा तु भग्ना द्रोणेन वातेनेव महाद्रुमाः ॥ ७-२२-१२ (४५६५३)
अर्द्यमानाः शरैरेते रुक्मपुङ्खैर्महात्मना ।
पथा नैकेन गच्छन्ति घूर्णमानास्ततस्ततः ॥ ७-२२-१३ (४५६५४)
सन्निरुद्धाश्च कौरव्यैर्द्रोणेन च महात्मना ।
एतेऽन्ये मण्डलीभूताः पावकेनेव कुञ्जराः ॥ ७-२२-१४ (४५६५५)
भ्रमरैरिव चाविष्टा द्रोणस्य निशितैः शरैः ।
अन्योन्यं समलीयन्त पलायनपरायणाः ॥ ७-२२-१५ (४५६५६)
एष भीमो महाक्रोधी हीनः पाण्डवसृञ्जयैः ।
मदीयैरावृतो योधैः कर्ण नन्दयतीव माम् ॥ ७-२२-१६ (४५६५७)
व्यक्तं द्रोणमयं लोकमद्य पश्यति दुर्मतिः ।
निराशो जीवितान्नूनमद्य राज्याच्च पाण्डवः ॥ ७-२२-१७ (४५६५८)
कर्ण उवाच। ७-२२-१८क्ष् (४३१४)
नैष जातु महाबाहुर्जीवन्नाहवमुत्सृजेत् ।
न चेमान्पुरुषव्याघ्र सिंहनादान्सहिष्यति ॥ ७-२२-१८ (४५६५९)
न चापि पाण्डवा युद्धे भज्येरन्निति मे मतिः ।
शूराश्च बलवन्तश्च कृतास्त्रा युद्धदुर्मदाः ॥ ७-२२-१९ (४५६६०)
विषाग्निद्यूतसङ्क्लेशान्वनवासं च पाण्डवाः ।
स्मरमाणा न हास्यन्ति सङ्ग्राममिति मे मतिः ॥ ७-२२-२० (४५६६१)
निवृत्तो हि महाबाहुरमितौजा वृकोदरः ।
वरान्वरान्हि कौन्तेयो रथोदारान्हनिष्यति ॥ ७-२२-२१ (४५६६२)
असिना धनुषा शक्त्या हयैर्नागैर्नरै रथैः ।
आयसेन च दण्डेन व्रातान्व्रातान्हनिष्यति ॥ ७-२२-२२ (४५६६३)
तमेनमनुवर्तन्ते सात्यकिप्रमुखा रथाः ।
पाञ्चालाः केकया मास्त्याः पाश्डवाश्च विशेषतः ॥ ७-२२-२३ (४५६६४)
शूराश्च बलवन्तश्च विक्रान्ताश्च महारथाः ।
विनिघ्नन्तश्च भीमेन संरब्धेनाभिचोदिताः ॥ ७-२२-२४ (४५६६५)
ते द्रोणमभिवर्तन्ते सर्वतः कुरुपुङ्गवाः ।
वृकोदरं परीप्सन्तः सूर्यमभ्रगणा इव ॥ ७-२२-२५ (४५६६६)
ग्समरेषु तु निर्दिष्टाः पाण्डवाः कृष्णबान्धवाः ।
पाञ्चालाः केकया मात्स्याः पाण्डवेयाश्च सर्वशः ॥ ७-२२-२६ (४५६६७)
शूराश्च बलवन्तश्च विक्रान्ताश्च महारथाः ।
ह्रीमन्तः शत्रुमरणे निपुणाः पुण्यलक्षणाः ॥ ७-२२-२७ (४५६६८)
बहवः पार्थिवा राजंस्तेषां वशगता रणे ।
मावमंस्थाः पाण्डवांस्त्वं नारायणपुरोगमान् ॥ ७-२२-२८ (४५६६९)

एकायनगता ह्येते पीडयेयुर्यतव्रतम् ।
अरक्षमाणं शलभा यथा दीपं मुमूर्षवः ॥ ७-२२-२९ (४५६७०)
असंशयं कृतास्त्राश्च पर्याप्ताश्चापि वारणे ।
अतिभारमहं मन्ये भारद्वाजे समाहितम् ॥ ७-२२-३० (४५६७१)
ते शीघ्रमनुगच्छामो यत्र द्रोणो व्यवस्थितः ।
कोका इव महानागं मा वै हन्युर्यतव्रतम् ॥ ७-२२-३१ (४५६७२)
सञ्जय उवाच। ७-२२-३२क्ष् (४३१५)
राधेयस्य वचः श्रुत्वा राजा दुर्योधनस्ततः ।
भ्रातृभिः सहितो राजन्प्रायाद्द्रोणरथं प्रति ॥ ७-२२-३२ (४५६७३)
तत्रारावो महानासीदेकं द्रोणं जिघांसताम् ।
पाण्डवानां निवृत्तानां नानावर्णैर्हयोत्तमैः ॥ ॥ ७-२२-३३ (४५६७४)

इति श्रीमन्महाभारते द्रोणपर्वणि संशप्तकवधपर्वणि
द्वादशदिवसयुद्धे द्वाविंशोऽध्यायः ॥ २२ ॥
Mahabharata - Drona Parva - Chapter Footnotes

५-२२-१ अभ्यवर्तत किम् ॥
५-२२-३१ कोको वृकः ॥
५-२२-२२ द्वाविंशोऽध्यायः ॥

---

द्रोनपर्व-अध्यय०२३
॥ श्रीः ॥
७.२३. अध्यायः २३

Mahabharata - Drona Parva - Chapter Topics
Mahabharata - Drona Parva - Chapter Text

७-२३-० (४५६७५)
धृतराष्ट्र उवाच। ७-२३-०क्ष् (४३१६)
सर्वेषामेव मे ब्रूहि रथचिह्नानि सञ्जय ।
ये द्रोणमभ्यवर्तन्त क्रुद्धा भीमपुरोगमाः ।
ग्तान्यहं श्रोतुमिच्छामि विस्तरेण पृथक्पृथक् ॥ ७-२३-१ (४५६७६)
दूयते मे मनस्तात द्रोणं प्रति परन्तपम् ।
श्रुत्वा भीष्मस्य निधनं तद्वदेतद्भविष्यति'॥ ७-२३-२ (४५६७७)
सञ्जय उवाच। ७-२३-३क्ष् (४३१७)
ऋक्षवर्णैर्हयैर्दृष्ट्वा व्यायच्छन्तं वृकोदरम् ।

रजताश्वस्ततः शूरः शैनेयः सन्न्यवर्तत ॥ ७-२३-३ (४५६७८)
सारङ्गाश्वो युधामन्युः स्वयं प्रत्वरयन्हयान् ।
पर्यवर्तत दुर्धर्षः क्रुद्धो द्रोणरथं प्रति ॥ ७-२३-४ (४५६७९)
पारावतसवर्णैस्तु हेमभाण्डैर्महाजवैः ।
पाञ्चालराजस्य सुतो धृष्टद्युम्नो न्यवर्तत ॥ ७-२३-५ (४५६८०)
पितरं तु परिप्रेप्सुः क्षत्रधर्मा यतव्रतः ।
सिद्धिं चास्य परां काङ्क्षञ्शोणाश्वः सन्न्यवर्तत ॥ ७-२३-६ (४५६८१)
पद्मपत्रनिभांश्चाश्वान्मल्लिकाक्षान्स्वलङ्कृतान् ।
शैखण्डिः क्षत्रदेवस्तु स्वयं प्रत्वरयन्ययौ ॥ ७-२३-७ (४५६८२)
दर्शनीयास्तु काम्भोजाः शुकपत्रपरिच्छदाः ।
वहन्तो नकुलं शीघ्रं तावकानाभिदुद्रुवुः ॥ ७-२३-८ (४५६८३)
कृष्णास्तु मेघसङ्काशा अवहन्नुत्तमौजसम् ।
दुर्धर्षायाभिसन्धाय क्रुद्धं युद्धाय भारत ॥ ७-२३-९ (४५६८४)
तथा तित्तिरिकल्माषा हया वातसमा जवे ।
अवहंस्तुमुले युद्धे सहदेवमुदायुधम् ॥ ७-२३-१० (४५६८५)
दन्तवर्णास्तु राजानं कालवाला युधिष्ठिरम् ।
भीमवेगा नरव्याघ्रमवहन्वातरंहसः ॥ ७-२३-११ (४५६८६)
हेमोत्तमप्रतिच्छन्नैर्हयैर्वातसमैर्जवे ।
अभ्यवर्तन्त सैन्यानि सर्वाण्येव युधिष्ठिरम् ॥ ७-२३-१२ (४५६८७)
राज्ञस्त्वनन्तरो राजा पाञ्चाल्यो द्रुपदोऽभवत् ।
जातरूपमयच्छत्रः सर्वैस्तैरभिरक्षितः ॥ ७-२३-१३ (४५६८८)
ललामैर्हरिभिर्युक्तः सर्वशब्दक्षमैर्युधि ।
राज्ञां मध्ये महेष्वासः शान्तभीरभ्यवर्तत ॥ ७-२३-१४ (४५६८९)
तं विराटोऽन्वयाच्छीघ्रं सह सर्वैर्महारथैः ।
केकयाश्च सिखण्डी च धृष्टकेतुस्तथैव च ।
स्वैः स्वैः सैन्यैः परिवृता मात्स्यराजानमन्वयुः ॥ ७-२३-१५ (४५६९०)
तं तु पाटलिपुष्पाणां समवर्णा हयोत्तमाः ।
वहमाना व्यराजन्त मास्त्यस्यामित्रघातिनः ॥ ७-२३-१६ (४५६९१)
हरिद्रासमवर्णास्तु जवना हेममालिनः ।
पुत्रं विराटराजस्य सत्वरं समुदावहन् ॥ ७-२३-१७ (४५६९२)
इन्द्रगोपकवर्णैश्च भ्रातरः पञ्च केकयाः ।
जातरूपसमाभासाः सर्वे लोहितकध्वजाः ॥ ७-२३-१८ (४५६९३)
ते हेममालिनः शूराः सर्वे युद्धविशारदाः ।
वर्षन्त इव जीमूताः प्रत्यदृश्यन्त दंशिताः ॥ ७-२३-१९ (४५६९४)
आमपात्रनिकाशास्तु पाञ्चाल्यममितौजसम् ।
दत्तास्तुम्बुरुणा दिव्याः शिखण्डिनमुदावहन् ॥ ७-२३-२० (४५६९५)

तथा द्वादशसाहस्राः पाञ्चालानां महारथाः ।
तेषां तु षट्सहस्राणि ये शिखण्डिनमन्वयुः ॥ ७-२३-२१ (४५६९६)
पुत्रं तु शिशुपालस्य नरसिंहस्य मारिष ।
आक्रीडन्तो वहन्ति स्म सारङ्गशबला हयाः ॥ ७-२३-२२ (४५६९७)
धृष्टकेतुस्तु चेदीनामृषभोऽतिबलोदितः ।
काम्भोजैः शबलैरश्वैरभ्यवर्तत दुर्जयः ॥ ७-२३-२३ (४५६९८)
बृहत्क्षत्रं तु कैकेयं सुकुमारं हयोत्तमाः ।
पलालधूमसङ्काशाः सैन्धवाः शीघ्रमावहन् ॥ ७-२३-२४ (४५६९९)
मल्लिकाक्षाः पद्मवर्णा बाह्लिजाताः स्वलङ्कृताः ।
शूरं शिखण्डिनः पुत्रमृक्षदेवमुदावहन् ॥ ७-२३-२५ (४५७००)
रुक्मभाण्डप्रतिच्छन्नाः कौशेयसदृशा हयाः ।
क्षमावन्तोऽवहन्सङ्ख्ये सेनाबिन्दुमरिन्दमम् ॥ ७-२३-२६ (४५७०१)
युवानमवहन्युद्धे क्रौञ्चवर्णा हयोत्तमाः ।
काश्यस्याभिभुवः पुत्रं सुकुमारं महारथम् ॥ ७-२३-२७ (४५७०२)
श्वेतास्तु प्रतिविन्ध्यन्तं कृष्णग्रीवा मनोजवाः ।
यन्तुः प्रेष्यकरा राजन्राजपुत्रमुदावहन् ॥ ७-२३-२८ (४५७०३)
सुतसोमं तु योधाग्र्यं भीमपुत्रं महाबलम् ।
माषपुष्पसवर्णास्तमवहन्वाजिनो रणे ॥ ७-२३-२९ (४५७०४)
सहस्रसोमप्रतिमो बभूव पुरे कुरूणामुदयेन्दुनाम्नि ।
तस्मिञ्जातः सोमसंक्रन्दमध्ये यस्मात्तस्मात्सुतसोमोऽभवत्सः
॥ ७-२३-३० (४५७०५)
नाकुलिं तु शतानीकं शालपुष्पनिभा हयाः ।
आदित्यतरुणप्रख्याः श्लाघनीयमुदावहन् ॥ ७-२३-३१ (४५७०६)
काञ्चनापिहितैर्योक्त्रैर्मयूरग्रीवसन्निभाः ।
द्रौपदेयं नरव्याघ्रं श्रुतकर्माणमाहवे ॥ ७-२३-३२ (४५७०७)
श्रुतकीर्तिं श्रुतनिधिं द्रौपदेयं हयोत्तमाः ।
ऊहुः पार्थसमं युद्धे चाषपत्रनिभा हयाः ॥ ७-२३-३३ (४५७०८)
यमाहुरध्यर्धगुणं कृष्णात्पार्थाच्च संयुगे ।
अभिमन्युं पिशङ्गास्तं कुमारमवहन्रणे ॥ ७-२३-३४ (४५७०९)
एकस्तु धार्तराष्ट्रेभ्यः पाण्डवान्यः समाश्रितः ।
तं बृहन्तो महाकाया युयुत्सुमवहन्रणे ।
ग्ये तु पुष्करसारस्य तुल्यवर्णा हयोत्तमाः'॥ ७-२३-३५ (४५७१०)
पलालकाण्डवर्णास्तु वार्धक्षेमिं तरस्विनम् ।
ऊहुः सुतुमुले युद्धे हया हृष्टाः स्वलङ्कृताः ॥ ७-२३-३६ (४५७११)
कुमारं शितिपादास्तु रुक्मचित्रैरुरश्छदैः ।
सौचित्तिमवहद्युद्धे यन्तुः प्रेष्यकरा हयाः ॥ ७-२३-३७ (४५७१२)

रुक्मपीठावकीर्णास्तु कौशेयसदृशा हयाः ।
सुवर्णमालिनः क्षान्ताः श्रेणिमन्तमुदावहन् ॥ ७-२३-३८ (४५७१३)
रुक्ममालाधराः शूरा हेमपृष्ठाः स्वलङ्कृताः ।
काशिराजं नरश्रेष्ठं श्लाघनीयमुदावहन् ॥ ७-२३-३९ (४५७१४)
अस्त्राणां च धनुर्वेदे ब्राह्मे वेदे च पारगम् ।
तं सत्यधृतिमायान्तमरूणाः समुपावहन् ॥ ७-२३-४० (४५७१५)
यः स पाञ्चालसेनानीद्रोणमंशमकल्पयत् ।
पारावतसवर्णास्तं धृष्टद्युम्नमुदावहन् ॥ ७-२३-४१ (४५७१६)
तमन्वयात्सत्यधृतिः सौचित्तिर्युद्धदुर्मदः ।
श्रेणिमान्वसुदानश्च पुत्रः काश्यस्य चाभिभूः ॥ ७-२३-४२ (४५७१७)
युक्तैः परमकाम्भोजैर्जवनैर्हेममालिभिः ।
भीषयन्तो द्विषत्सैन्यं यमवैश्रवणोपमाः ॥ ७-२३-४३ (४५७१८)
प्रभद्रकास्तु काम्भोजाः षट्सहस्राण्युदायुधाः ।
नानावर्णैर्हयैः श्रेष्ठैर्हेमवर्णरथध्वजाः ॥ ७-२३-४४ (४५७१९)
शरव्रातैर्विधुन्वन्तः शत्रून्विततकार्मुकाः ।
समानमृत्यवो भूत्वा धृष्टद्युम्नं समन्वयुः ॥ ७-२३-४५ (४५७२०)
बभ्रुकौशेयवर्णास्तु सुवर्णवरमालिनः ।
ऊहुरम्लानमनसश्चेकितानं हयोत्तमाः ॥ ७-२३-४६ (४५७२१)
इन्द्रायुधसवर्णैस्तु कुन्तिभोजो हयोत्तमैः ।
आयात्सदश्वैः पुरुजिन्मातुलः सव्यसाचिनः ॥ ७-२३-४७ (४५७२२)
अन्तरिक्षसवर्णास्तु तारकाचित्रिता इव ।
राजानं रोचमानं ते हयाः सङ्ख्ये समावहन् ॥ ७-२३-४८ (४५७२३)
कर्बुराः शितिपादास्तु स्वर्णजालपरिच्छदाः ।
जारासन्धिं हयाः श्रेष्ठाः सहदेवमुदावहन् ॥ ७-२३-४९ (४५७२४)
ये तु पुष्करनालस्य समवर्णा हयोत्तमाः ।
जवे श्येनसमाश्चित्राः सुदामानमुदावहन् ॥ ७-२३-५० (४५७२५)
शशलोहितवर्णास्तु पाण्डुरोद्गतराजयः ।
पाञ्चाल्यं गोपतेः पुत्रं सिंहसेनमुदावहन् ॥ ७-२३-५१ (४५७२६)
पाञ्चालानां नरव्याघ्रो यः ख्यातो जनमेजयः ।
तस्य सर्षपपुष्पाणां तुल्यवर्णा हयोत्तमाः ॥ ७-२३-५२ (४५७२७)
माषवर्णाश्च जवना बृहन्तो हेममालिनः ।
दधिपृष्ठाश्चित्रमुखाः पाञ्चाल्यमवहन्द्रुतम् ॥ ७-२३-५३ (४५७२८)
शूराश्च भद्रकाश्चैव शरकाण्डनिभा हयाः ।
पद्मकिञ्जल्कवर्णाभा दण्डधारमुदावहन् ॥ ७-२३-५४ (४५७२९)
रासभारुणवर्णाभाः पृष्ठतो मूषिकप्रभाः ।
वल्गन्त इव संयत्ता व्याघ्रदत्तमुदावहन् ॥ ७-२३-५५ (४५७३०)

हरयः कालकाश्चित्राश्चित्रमाल्यविभूषिताः ।
सुधन्वानं नरव्याघ्रं पाञ्चाल्यं समुदावहन् ॥ ७-२३-५६ (४५७३१)
इन्द्राशनिसमस्पर्शा इन्द्रगोपकसन्निभाः ।
काये चित्रान्तराश्चित्राश्चित्रायुधमुदावहन् ॥ ७-२३-५७ (४५७३२)
बिभ्रतो हेपमालास्तु चक्रवाकोदरा हयाः ।
कोसलाधिपतेः पुत्रं सुक्षत्रं वाजिनोऽवहन् ॥ ७-२३-५८ (४५७३३)
शबलास्तु बृहन्तोऽश्वा दान्ता जाम्बूनदस्रजः ।
युद्धे सत्यधृतिं क्षेमिमवहन्प्रांशवः शुभाः ॥ ७-२३-५९ (४५७३४)
एकवर्णेन सर्वेण ध्वजेन कवचेन च ।
अश्वैश्च धनुषा चैव शुक्लैः शुक्लो न्यवर्तत ॥ ७-२३-६० (४५७३५)
समुद्रसेनपुत्रं तु सामुद्रा रुद्रतेजसम् ।
अश्वाः शशाङ्कसदृशाश्चन्द्रसेनमुदावहन् ॥ ७-२३-६१ (४५७३६)
नीलोत्पलसवर्णास्तु तपनीयविभूषिताः ।
शैब्यं चित्ररथं सङ्ख्ये चित्रमाल्याऽवहन्हयाः ॥ ७-२३-६२ (४५७३७)
कलायपुष्पवर्णास्तु श्वेतलोहितराजयः ।
रथसेनं हयश्रेष्ठाः समूहुर्युद्धदुर्मदम् ॥ ७-२३-६३ (४५७३८)
यं तु सर्वमनुष्येभ्यः प्राहुः शूरतरं नृपम् ।
तं पटच्चरहन्तारं शुकवर्णाऽवहन्हयाः ॥ ७-२३-६४ (४५७३९)
चित्रायुधं चित्रमाल्यं चित्रवर्मायुधध्वजम् ।
ऊहुः किंशुकपुष्पाणां समवर्णा हयोत्तमाः ॥ ७-२३-६५ (४५७४०)
एकवर्णेन सर्वेण ध्वजेन कवचेन च ।
धनुषा रथवाहैश्च नीलैर्नीलोऽभ्यवर्तत ॥ ७-२३-६६ (४५७४१)
नानारूपै रत्नचिह्नैर्वरूथरथकार्मुकैः ।
वाजिध्वजपताकाभिश्चित्रैश्चित्रोऽभ्यवर्तत ॥ ७-२३-६७ (४५७४२)
ये तु पुष्करवर्णस्य तुल्यवर्णा हयोत्तमाः ।
ते रोचमानस्य सुतं हेमवर्णमुदावहन् ॥ ७-२३-६८ (४५७४३)
योधाश्च भद्रकाराश्च शरदण्डानुदण्डयः ।
श्वेताण्डाः कुक्कुटाण्डाभा दण्डकेतुं हयाऽवहन् ॥ ७-२३-६९ (४५७४४)
केशवे न हते सङ्ख्ये पितर्यथ नराधिपे ।
भिन्ने कपाटे पाण्डानां विद्रुतेषु च बन्धुषु ॥ ७-२३-७० (४५७४५)
भीष्मादवाप्य चास्त्राणि द्रोणाद्रामात्कृपात्तथा ।
अस्त्रैः समत्वं सम्प्राप्य रुक्मिकर्णार्जुनाच्युतैः ॥ ७-२३-७१ (४५७४६)
इयेष द्वारकां हन्तुं कृत्स्नां जेतुं च मेदिनीम् ।
निवारितस्ततः प्राज्ञैः सुहृद्भिर्हितकाम्यया ॥ ७-२३-७२ (४५७४७)
वैरानुबन्धमुत्सज्य स्वराज्यमनुशास्ति यः ।
स सागरध्वजः पाण्ड्यश्चन्द्ररश्मिनिभैर्हयैः ॥ ७-२३-७३ (४५७४८)

वैडूर्यजालसञ्छन्नैर्वीर्यद्रविणमाश्रितः ।
दिव्यं विस्फारयंश्चापं द्रोणमभ्यद्रवद्बली ॥ ७-२३-७४ (४५७४९)
आरकूटकवर्णाश्च हयाः पाण्ड्यानुयायिनाम् ।
अवहन्रथमुख्यानामयुतानि चतुर्दश ॥ ७-२३-७५ (४५७५०)
नानावर्णेन रूपेण नानाकृतिमुखा हयाः ।
रथचक्रध्वजं वीरं घटोत्कचमुदावहन् ॥ ७-२३-७६ (४५७५१)
भारतानां समेतानामुत्सृज्यैको मतानि यः ।
गतो युधिष्ठिरं भक्त्या त्यक्त्वा सर्वमभीप्सितम् ॥ ७-२३-७७ (४५७५२)
लोहिताक्षं महाबाहुं युयुत्सुं मकरध्वजम् ।
महासत्वा महाकायाः सौवर्णस्यन्दने स्थितम् ॥ ७-२३-७८ (४५७५३)
सुवर्णवर्णा धर्मज्ञमनीकस्थं युधिष्ठिरम् ।
राजश्रेष्ठं हयश्रेष्ठाः सर्वतः पृष्ठतोऽन्वयुः ॥ ७-२३-७९ (४५७५४)
वर्णैरुच्चावचैरन्यैः सदश्वानां प्रभद्रकाः ।
सन्न्यवर्तन्त युद्धाय बहवो देवरूपिणः ॥ ७-२३-८० (४५७५५)
ते यत्ता भीमसेनेन सहिताः काञ्चनध्वजाः ।
प्रत्यदृश्यन्त राजेन्द्र सेन्द्रा इव दिवौकसः ॥ ७-२३-८१ (४५७५६)
अत्यरोचत तान्सर्वान्धृष्टद्युम्नः समागतान् ।
सर्वाण्यति च सैन्यानि भारद्वाजो व्यरोचत ॥ ७-२३-८२ (४५७५७)
अतीव शुशुभे तस्य ध्वजः कृष्णाजिनोत्तरः ।
कमण्डलुर्महाराज जातरूपमयः शुभः ॥ ७-२३-८३ (४५७५८)
ध्वजं तु भीमसेनस्य वैरडूर्यमणिलोचनम् ।
भ्राजमानं महासिंहं राजन्तं दृष्टवानहम् ॥ ७-२३-८४ (४५७५९)
ध्वजं तु कुरुराजस्य पाण्डवस्य महौजसः ।
दृष्टवानस्मि सौवर्णं सोमं ग्रहगणान्वितम् ॥ ७-२३-८५ (४५७६०)
मृदङ्गौ चात्र विपुलौ दिव्यौ नन्दोपनन्दकौ ।
यन्त्रेणाहन्यमानौ च सुस्वनौ हर्षवर्धनौ ॥ ७-२३-८६ (४५७६१)
शरभं पृष्ठसौवर्णं नकुलस्य महाध्वजम् ।
अपश्याम रथेत्युग्रं भीषयाणमवस्थितम् ॥ ७-२३-८७ (४५७६२)
हंसस्तु राजतः श्रीमान्ध्वजे घण्टापताकवान् ।
सहदेवस्य दुर्धर्षो द्विषतां शोकवर्धनः ॥ ७-२३-८८ (४५७६३)
पञ्चानां द्रौपदेयानां प्रतिमाध्वजभूषणम् ।
धर्ममारुतशक्राणामश्विनोश्च महात्मनोः ॥ ७-२३-८९ (४५७६४)
अभिमन्योः कुमारस्य शार्ङ्गपक्षी हिरण्मयः ।
रथे ध्वजवरो राजंस्तप्तचामीकरोज्ज्वलः ॥ ७-२३-९० (४५७६५)
घटोत्कचस्य राजेन्द्र ध्वजे गृध्रो व्यरोचत ।
अश्वाश्च कामगास्तस्य रावणस्य पुरा यथा ॥ ७-२३-९१ (४५७६६)

माहेन्द्रं च धनुर्दिव्यं धर्मराजे युधिष्ठिरे ।
वायव्यं भीमसेनस्य धनुर्दिव्यमभून्नृप ॥ ७-२३-९२ (४५७६७)
त्रैलोक्यरक्षणार्थाय ब्रह्मणा सृष्टमायुधम् ।
तद्दिव्यमजरं चैव फाल्गुनार्थाय वै धनुः ॥ ७-२३-९३ (४५७६८)
वैष्णवं नकुलायाथ सहदेवाय चाश्विजम् ।
घटोत्कचाय पौलस्त्यं धनुर्दिव्यं भयामकम् ॥ ७-२३-९४ (४५७६९)
रौद्रमाग्नेयकौबेरं याम्यं गिरिशमेव च ।
पञ्चानां द्रौपदेयानां धनूरत्नानि भारत ॥ ७-२३-९५ (४५७७०)
रौद्रं धनुर्वरं श्रेष्ठं लेभे यद्रोहिणीसुतः ।
तत्तुष्टः प्रददौ रामः सौभद्राय महात्मने ॥ ७-२३-९६ (४५७७१)
एते चान्ये च बहवो ध्वजा हेमविभूषिताः ।
तत्रादृश्यन्त शूराणां द्विषतां शोकवर्धनाः ॥ ७-२३-९७ (४५७७२)
तदभूद्ध्वजसम्बाधमकापुरुषसेवितम् ।
द्रोणानीकं महाराज पटे चित्रमिवार्पितम् ॥ ७-२३-९८ (४५७७३)
शुश्रुवुनार्मगोत्राणि वीराणां संयुगे तदा ।
द्रोणमाद्रवतां राजन्स्वयंवर इवाहवे ॥ ॥ ७-२३-९९ (४५७७४)

इति श्रीमन्महाभारते द्रोणपर्वणि संशप्तकवधपर्वणि
द्वादशदिवसयुद्धे त्रयोविंशोऽध्यायः ॥ २३ ॥
Mahabharata - Drona Parva - Chapter Footnotes

५-२३-१ रथचिह्नानि हयान् ध्वजांश्चेत्यर्थः ॥
५-२३-३ व्यायच्छन्तं निवर्तमानम् ॥
५-२३-४ सितनीलारुणो वर्णः सारङ्गसदृशश्च सः ॥
५-२३-५ पारावतकपोताभः सितनीलसमन्वयात् ॥
५-२३-६ शोणः कोकनदच्छविः ॥
५-२३-७ मल्लिकाक्षान्निर्मलेक्षणान् ॥
५-२३-८ महाललाटजधनस्कन्धवक्षोजवा हयाः । दीर्घग्रीवायता
हस्वमुष्काः काम्भोजकाः स्मृताः। शुकपत्रपरिच्छदाः
शुकपत्राभरोमाणः ॥
५-२३-११ दन्तवर्णः गजदन्तगौराः ॥
५-२३-१४ श्वेतं ललाटमध्यश्थं तारारूपं हयस्य यत् । ललामं
चापि तत्प्राहुर्ललामोऽश्वस्तदन्वितः। सकेसराणि रोमाणि सुवर्णभानि
यस्य तु। हरिःस स वर्णतोऽश्वस्तु पीतकौशेयसन्निभः ॥
५-२३-१६ पाटलिपुष्पाणां समवर्णाः श्वेतरक्ताः ॥
५-२३-१७ विराटराजस्य पुत्र उत्तरम् ॥

५-२३-२० आमपात्रनिकाशाः मलिनश्वेताः ॥
५-२३-२६ क्षमावन्तो विनीताः ॥
५-२३-२८ प्रेष्यकराः इच्छानुविधायिनः ॥
५-२३-३० सहस्रसोमप्रतिमः सोमसहस्रसमः सौम्यतम इत्यर्थः ।तस्मिन् उदयेन्दुनाम्नि उदयेन्दुपर्याये पुरे शक्रप्रस्थ एव सोमसङ्क्रन्दः सोमाभिषवणं तस्य मध्ये।तमधिकृत्य तत्फेनेनेत्यर्थस्तस्माद्धोतोः ॥
५-२३-३१ शालपुष्पनिभाः रक्तपीताः ॥
५-२३-३२ योक्त्रैराबन्धैः ।मयूरग्रीवो मरकतविशेषः ॥
५-२३-३४ पिशङ्गाः कपिलाः ॥
५-२३-३६ पलालकाण्डो निष्फलव्रीहिदण्डस्तद्वर्णाः ॥
५-२३-३७ रुक्मपीठेन रुक्मवर्णेन पीठेन पृष्ठेनावकीर्णा व्याप्ताः ॥
५-२३-४० अरुणा अव्यक्तरागाः ॥
५-२३-४१ धृष्टद्युम्नस्य पुनर्वचनं द्रोणहन्तृत्वदृढीकरणार्थम् ॥
५-२३-४६ बभ्रुकौशेयवर्णाः पिङ्गगौराः ॥
५-२३-४७ इन्द्रायुधसवर्णैस्त्रिवर्णैः ॥
५-२३-४८ अन्तरिक्षसवर्णा नीलाः ॥
५-२३-४९ कर्बुराश्चित्राः ॥
५-२३-५३ माषवर्णाः मलिनश्यामाः ॥
५-२३-५४ भद्रकाः शोभनशिरसः ।शरकाण्डनिभाः सितगौराः ॥
५-२३-५५ रासभारुणवर्णाभा अरुणमलिनाः ।मूषिकप्रभाः मलिनश्वेताः ॥
५-२३-५६ कालकाः कृष्णमस्तकाः ॥
५-२३-५७ चित्रान्तरा विचित्रावकाशाः ।चित्रा अद्भुतदर्शनाः ॥
५-२३-५८ चक्रवाकोदरा ईषच्छ्वेताः ॥
५-२३-६३ कलायपुष्पवर्णाः मिश्रश्यामाः ॥
५-२३-६४ पटच्चराणामसुरविशेषाणां हन्तारं समुद्राधिपम् ॥
५-२३-६९ योधा युद्धक्षमाः ।भद्रकाराः शोभनक्रियाः।शरदण्डः शरप्रकाण्ड इव अनुदण्डिः पृष्ठवंशो येषाम्।सितगौरपृष्ठा इत्यर्थः ॥
५-२३-७० कपाटे नगरविशेषे ॥
५-२३-७५ आटरूषकवर्णाभाः इति झ पाठः ।तत्र आटरूषकस्य वासकस्य कुसुमं तद्वर्णसदृशवर्णा इत्यर्थः ॥
५-२३-७८ हया अवहन् इति पूर्वस्मादनुकृष्यते ॥
५-२३-७९ सुवर्णवर्णा इति पूर्वोत्तरान्वयि ॥
५-२३-८६ नन्दोपनन्दकौ नाम्ना ॥
५-२३-२३ त्रयोविंशोऽध्यायः ॥

द्रोनपर्व-अध्यय०२४
॥ श्रीः ॥
७.२४. अध्यायः २४

Mahabharata - Drona Parva - Chapter Topics
धृतराष्ट्रेण पुत्रान्प्रति शोचनपूर्वकं सञ्जयम्प्रति
युद्धकथनचोदना ॥ १ ॥

Mahabharata - Drona Parva - Chapter Text

७-२४-० (४५७७५)
धृतराष्ट्र उवाच। ७-२४-०क्ष् (४३१८)
व्यथयेयुरिमे सेनां देवानामपि सञ्जय ।
आहवे ये न्यवर्तन्त वृकोदरमुखा नृपाः ॥ ७-२४-१ (४५७७६)
सम्प्रयुक्तः किलैवायं दिष्टैर्भवति पूरुषः ।
तस्मिन्नेव च सर्वार्थाः प्रदृश्यन्ते पृथग्विधाः ॥ ७-२४-२ (४५७७७)
दीर्घं विप्रोषितः कालमरण्ये जटिलोऽजिनी ।
अज्ञातश्चैव लोकस्य विजहार युधिष्ठिरः ॥ ७-२४-३ (४५७७८)
स एव महतीं सेनां समावर्तयदाहवे ।
किमन्यद्दैवसंयोगान्मम पुत्राभवाय च ॥ ७-२४-४ (४५७७९)
युक्त एव हि भाग्येन ध्रुवमुत्पद्यते नरः ।
स तथाऽऽकृष्यते तेन न यथा स्वयमिच्छति ॥ ७-२४-५ (४५७८०)
द्यूतव्यसनमासाद्य क्लेशितो हि युधिष्ठिरः ।
स पुनर्भागधेयेन सहायानुपलब्धवान् ॥ ७-२४-६ (४५७८१)
अर्धं मे केकया लब्धाः काशिका कोसलाश्चये ।
चेदीनां चार्धमपरे मामे व समुपाश्रिताः ॥ ७-२४-७ (४५७८२)
पृथिवी भूयसी तात मम पार्थस्य नो तथा ।
इति मामब्रवीत्सूत मन्दो दुर्योधनः पुरा ॥ ७-२४-८ (४५७८३)
तस्य सेनासमूहस्य मध्ये द्रोणः सुरक्षितः ।
निहतः पार्षतेनाजौ किमन्यद्भागधेयतः ॥ ७-२४-९ (४५७८४)
मध्ये राज्ञां महाबाहुं सदा युद्धाभिनन्दिनम् ।
सर्वास्त्रपारगं द्रोणं कथं मृत्युरुपेयिवान् ॥ ७-२४-१० (४५७८५)
समनुप्राप्तकृच्छ्रोऽहं मोहं परममागतः ।
भीष्मद्रोणौ हतौ श्रुत्वा नाहं जीवितुमुत्सहे ॥ ७-२४-११ (४५७८६)
यन्मां क्षत्ताऽब्रवीत्तात प्रपश्यन्पुत्रगृद्धिनम् ।

दुर्योधनेन तत्सर्वं प्राप्तं सूत मया सह ॥ ७-२४-१२ (४५७८७)
नृशंसं तु परं तात त्यक्त्वा दुर्योधनं यदि ।
पुत्रशेषं चिकीर्षेयं कृत्स्नं न मरणं व्रजेत् ॥ ७-२४-१३ (४५७८८)
यो हि धर्मं परित्यज्य भवत्यर्थपरो नरः ।
सोऽस्माच्च हीयते लोकात्क्षुद्रभावं च गच्छति ॥ ७-२४-१४ (४५७८९)
अद्य चाप्यस्य राष्ट्रस्य कृतोच्छेदस्य सञ्जय ।
अवशेषं न पश्यामि ककुदे मृदिते सति ॥ ७-२४-१५ (४५७९०)
कथं स्यादवशेषो हि धुर्ययोरभ्यतीतयोः ।
यौ नित्यमुपजीवामः क्षमिणौ पुरुषर्षभौ ॥ ७-२४-१६ (४५७९१)
व्यक्तमेव च मे शंस यथा युद्धमवर्तत ।
केऽयुध्यन्के व्यपाकुर्वन्के क्षुद्राः प्राद्रवन्भयात् ॥ ७-२४-१७ (४५७९२)
धनुञ्जयं च मे शंस यद्यच्चक्रे रथर्षभः ।
तस्माद्भयं नो भूयिष्ठं भ्रातृव्याच्च वृकोदरात् ॥ ७-२४-१८ (४५७९३)
यथाऽसीच्च निवृत्तेषु पाण्डवेयेषु सञ्जय ।
मम सैन्यावशेषस्य सन्निपातः सुदारुणः ॥ ७-२४-१९ (४५७९४)
कथं च वो मनस्तात निवृत्तेष्वभवत्तदा ।
मामकानां च ये शूराः के कांस्तत्र न्यवारयन् ॥ ॥ ७-२४-२० (४५७९५)

इति श्रीमन्महाभारते द्रोणपर्वणि संशप्तकवधपर्वणि
चतुर्विंशोऽध्यायः ॥ २४ ॥
Mahabharata - Drona Parva - Chapter Footnotes

५-२४-२ संप्रयुक्तः सम्बद्धः । भवति उत्पद्यते। तस्मिन् दिष्ट एव ॥
५-२४-१८ भ्रातृव्यादमित्रात् ॥
५-२४-२४ चतुर्विशोऽध्यायः ॥

---

द्रोनपर्व-अध्यय०२५
॥ श्रीः ॥
७.२५. अध्यायः २५

Mahabharata - Drona Parva - Chapter Topics
द्वन्द्वयुद्धवर्णनम् ॥ १ ॥

Mahabharata - Drona Parva - Chapter Text

७-२५-० (४५७९६)

सञ्जय उवाच। ७-२५-०क्ष् (४३११)
महद्भैरवमासीन्नः सन्निवृत्तेषु पाण्डुषु ।
दृष्ट्वा द्रोणं छाद्यमानं तैर्भास्करमिवाम्बुदैः ॥ ७-२५-१ (४५७९७)
तैश्चोद्धूतं रजस्तीव्रमवचक्रे चमूं तव ।
ततो हतममंस्याम द्रोणं दृष्टिपथे हते ॥ ७-२५-२ (४५७९८)
तांस्तु शूरान्महेष्वासान्क्रूरं कर्म चिकीर्षतः ।
दृष्ट्वा दुर्योधनस्तूर्णं स्वसैन्यं समचूचुदत् ॥ ७-२५-३ (४५७९९)
यथाशक्ति यथोत्साहं यथासत्वं नराधिपाः ।
वारयध्वं यथायोगं पाण्डवानामनीकिनीम् ॥ ७-२५-४ (४५८००)
ततो दुर्मर्षणो भीममभ्यगच्छत्सुतस्तव ।
आराद्दृष्ट्वा किरन्बाणैरिच्छन्दोणस्य जीवितम् ॥ ७-२५-५ (४५८०१)
तं बाणेरवतस्तार क्रुद्धो मृत्युरिवाहवे ।
तं च भीमोऽतुदद्बाणैस्तदाऽऽसीत्तुमुलं महत् ॥ ७-२५-६ (४५८०२)
त ईश्वरसमादिष्टाः प्राज्ञाः शूराः प्रहारिणः ।
राज्यं मृत्युभयं त्यक्त्वा प्रत्यतिष्ठन्परान्युधि ॥ ७-२५-७ (४५८०३)
कृतवर्मा शिनेः पौत्रं द्रोणं प्रेप्सुं विशाम्पते ।
पर्यवारयदायान्तं शूरं समरशोभिनम् ॥ ७-२५-८ (४५८०४)
तं शैनेयः शरव्रातैः क्रुद्धः क्रुद्धमवारयत् ।
कृतवर्मा च शैनेयं मत्तो मत्तमिव द्विपम् ॥ ७-२५-९ (४५८०५)
सैन्धवः क्षत्रवर्माणमायान्तं निशितैः शरैः ।
उग्रधन्वा महेष्वासं यत्ततो द्रोणादवारयत् ॥ ७-२५-१० (४५८०६)
क्षत्रवर्मा सिन्धुपतेश्छित्त्वा केततनकार्मुके ।
नाराचैर्दशभिः क्रुद्धः सर्वमर्मस्वताडयत् ॥ ७-२५-११ (४५८०७)
अथान्यद्धनुरादाय सैन्धवः कृतहस्तवत् ।
विव्याध क्षत्रवर्माणं रणे सर्वायसैः शरैः ॥ ७-२५-१२ (४५८०८)
युयुत्सुं पाण्डवार्थाय यतमानं महारथम् ।
सुबाहुर्भारतं शूरं यत्तो द्रोणादवारयत् ॥ ७-२५-१३ (४५८०९)
सुबाहोः सधनुर्बाणावस्यतः परिघोपमौ ।
युयुत्सुः शितपीताभ्यां क्षुराभ्यामच्छिनद्भुजौ ॥ ७-२५-१४ (४५८१०)
राजानं पाण्डवश्रेष्ठं धर्मात्मानं युधिष्ठिरम् ।
वेलेव सागरं क्षुब्धं मद्रराट् समवारयत् ॥ ७-२५-१५ (४५८११)
तं धर्मराजो बहुभिर्मर्मभिद्भिरवाकिरत् ।
मद्रेशस्तं चतुःषष्ट्या शरैर्विद्ध्वाऽनदद्भृशम् ॥ ७-२५-१६ (४५८१२)
तस्य नानदतः केतुमुच्चकर्त च कार्मुकम् ।
क्षुराभ्यां पाण्डवो ज्येष्ठस्तत उच्चुक्रुशुर्जनाः ॥ ७-२५-१७ (४५८१३)
तथैव राजा बाह्लीको राजानं द्रुपदं शरैः ।

आद्रवन्तं सहानीकः सहानीकं न्यवारयत् ॥ ७-२५-१८ (४५८१४)
तद्युद्धमभवद्धोरं वृद्धयोः सहसेनयोः ।
यथा महायूथपयोर्द्विपयोः सम्प्रभिन्नयोः ॥ ७-२५-१९ (४५८१५)
विन्दानुविन्दावावन्त्यौ विराटं मत्स्यमार्च्छताम् ।
सहसैन्यौ सहानीकं यथेन्द्राग्नी पुरा बलिम् ॥ ७-२५-२० (४५८१६)
तदुत्पिञ्जलकं युद्धमासीद्देवासुरोपमम् ।
मत्स्यानां केकयैः सार्धमभीताश्वरथद्विपम् ॥ ७-२५-२१ (४५८१७)
नाकुलिं तु शतानीकं भूतकर्मा सभापतिः ।
अस्यन्तमिषुजालानि यान्तं द्रोणादवारयत् ॥ ७-२५-२२ (४५८१८)
ततो नकुलदायादस्त्रिभिर्भल्लैः सुसंशितैः ।
चक्रे विबाहुशिरसं भूतकर्माणमाहवे ॥ ७-२५-२३ (४५८१९)
सुतसोमं तु विक्रान्तमायान्तं तं शरौघिणम् ।
द्रोणायाभिमुखं वीरं साल्वो बाणैरवारयत् ॥ ७-२५-२४ (४५८२०)
स तु भीमरथः साल्वमाशुगैरायसैः शितैः ।
षड्भिः साश्वनियन्तारमनयद्यमसादनम् ॥ ७-२५-२५ (४५८२१)
श्रुतकीर्तिं समायान्तं मयूरसदृशैर्हयैः ।
चित्रसेनो महाराज तव पौत्रं न्यवारयत् ॥ ७-२५-२६ (४५८२२)
तमार्जुनिः शरैश्चक्रे पितृव्यं जर्झरच्छविम् ।
शरैश्च द्रौपदीपुत्रं चित्रसेनः समावृणोत् ॥ ७-२५-२७ (४५८२३)
किरन्तं शरजालानि प्रभिन्नमिव कुञ्जरम् ।
श्रुतकर्माणमायान्तं दौश्शासनिरवारयत् ॥ ७-२५-२८ (४५८२४)
तौ पौत्रौ तव दुर्धर्षौ परस्परवधैषिणौ ।
पितॄणामर्थसिद्ध्यर्थं चक्रतुर्युद्धमुत्तमम् ॥ ७-२५-२९ (४५८२५)
तिष्ठन्तमग्रे तं दृष्ट्वा प्रतिविन्ध्यं महाहवे ।
द्रौणिर्मानं पितुः कुर्वन्मार्गणैः समवारयत् ॥ ७-२५-३० (४५८२६)
तं क्रुद्धं प्रतिविव्याध प्रतिविन्ध्यः शितैः शरैः ।
सिंहलाङ्गूललक्ष्माणं पितुरर्थे व्यवस्थितम् ॥ ७-२५-३१ (४५८२७)
प्रवपन्निव बीजानि बीजकाले कृषीवलः ।
द्रौणायनिर्द्रौपदेयं शरवर्षैरवाकिरत् ॥ ७-२५-३२ (४५८२८)
यस्तु शूरतमो राजन्नुभयोः सेनयोर्मतः ।
तं पटच्चरहन्तारं लक्ष्मणः समवारयत् ॥ ७-२५-३३ (४५८२९)
स लक्ष्मणस्येष्वसनं छित्त्वा लक्ष्म च भारत ।
लक्ष्मणे शरजालानि विसृजन्बह्वशोभत ॥ ७-२५-३४ (४५८३०)
ततोऽभिमन्युः कर्माणि कुर्वन्तं चित्रयोधिनम् ।
आर्जुनिः कृतिनं शूरं लक्ष्मणं समयोधयत् ॥ ७-२५-३५ (४५८३१)
स सम्प्रहारस्तुमुलस्तयोरासीन्महात्मनोः ।

श्रोतॄणामीक्षितॄणां च भृशं प्रीतिविवर्धनः ॥ ७-२५-३६ (४५८३२)
विकर्णस्तु महाप्राज्ञो याज्ञसेनिं शिखण्डिनम् ।
पर्यवारयदायान्तं युवानं समरे युवा ॥ ७-२५-३७ (४५८३३)
ततस्तमिषुजालेन याज्ञसेनिः समावृणोत् ।
विधूय तद्बाणजालं बभौ तव सुतो बली ॥ ७-२५-३८ (४५८३४)
अङ्गदोऽभिमुखं वीरमुत्तमौजसमाहवे ।
द्रोणायाभिमुखं यान्तं शरौघेण न्यवारयत् ॥ ७-२५-३९ (४५८३५)
स सम्प्रहारस्तुमुलस्तयोः पुरुषसिंहयोः ।
सैनिकानां च सर्वेषां तयोश्च प्रीतिवर्धनः ॥ ७-२५-४० (४५८३६)
दुर्मुखस्तु महेष्वासो वीरं पुरुजितं बली ।
द्रोणायाभिमुखं यान्तं वत्सदन्तैरवारयत् ॥ ७-२५-४१ (४५८३७)
स दुर्मुखं भ्रुवोर्मध्ये नाराचेनाभ्यताडयत् ।
तस्य तद्धि बभौ वक्त्रं सनालमिव पङ्कजम् ॥ ७-२५-४२ (४५८३८)
कर्णस्तु केकयान्भ्रातॄन्पञ्च लोहितकध्वजान् ।
द्रोणायाभिमुखं याताञ्शरवर्षैरवारयत् ॥ ७-२५-४३ (४५८३९)
ते चैनं भृशसन्तप्ताः शरवर्षैरवाकिरन् ।
स च तांश्छादयामास शरजालैः पुनः पुनः ॥ ७-२५-४४ (४५८४०)
नैव कर्णो न ते पञ्च ददृशर्बाणसंवृताः ।
साश्वसूतध्वजरथाः परस्परशराचिताः ॥ ७-२५-४५ (४५८४१)
पुत्रास्ते दुर्जयश्चैव जयश्च विजयश्च ह ।
नीलकाश्यजयत्सेनांस्त्रयस्त्रीन्प्रत्यवारयन् ॥ ७-२५-४६ (४५८४२)
तद्युद्धमभवद्धोरमीक्षितृप्रीतिवर्धनम् ।
सिंहव्याघ्रतरक्षूणां यथर्क्षमहिषर्षभैः ॥ ७-२५-४७ (४५८४३)
क्षेमधूर्तिबृहन्तौ तु भ्रातरौ सात्वतं युधि ।
द्रोणायाभिमुखं यान्तं शरैस्तीक्ष्णैस्ततक्षतुः ॥ ७-२५-४८ (४५८४४)
तयोस्तस्य च तद्युद्धमत्यद्भुतमिवाभवत् ।
सिंहस्य द्विपमुख्याभ्यां प्रभिन्नाभ्यां यथा वने। ७-२५-४९ (४५८४५)
राजानं तु तथाम्बष्ठमेकं युद्धाभिनन्दिनम् ।
चेदिराजः शरानस्यन्क्रुद्धो द्रोणादवारयत् ॥ ७-२५-५० (४५८४६)
ततोऽम्बष्ठोऽस्थिभेदिन्या निरभिद्यच्छलाकया ।
स त्यक्त्वा सशरं चापं रथाद्भूमिमुपागमत् ॥ ७-२५-५१ (४५८४७)
वार्धक्षेमिं तु वार्ष्णेयं कृपः शारद्वतः शरैः ।
अक्षुद्रः क्षुद्रकैर्बाणैः क्रुद्धरूपमवारयत् ॥ ७-२५-५२ (४५८४८)
युध्यन्तौ कृपवार्ष्णेयौ येऽपश्यंश्चित्रयोधिनौ ।
ते युद्धासक्तमनसो नान्यं बुबुधिरे क्रियाम् ॥ ७-२५-५३ (४५८४९)
सौमदत्तिस्तु राजानं मणिमन्तमतन्द्रितम् ।

पर्यवारयदायान्तं यशो द्रोणस्य वर्धयन् ॥ ७-२५-५४ (४५८५०)
स सौमदत्तेस्त्वरितश्चित्रेष्वसनकेतने ।
पुनः पताकां सूतं चच्छत्रं चापातयद्रथात् ॥ ७-२५-५५ (४५८५१)
अथाप्लुत्य रथात्तूर्णं यूपकेतुरमित्रहा ।
साश्वसूतध्वजरथं तं चकर्त वरासिना ॥ ७-२५-५६ (४५८५२)
रथं च स्वं समास्थाय धनुरादाय चापरम् ।
स्वयं यच्छन्हयान्राजन्व्यधमत्पाण्डवीं चमूम् ॥ ७-२५-५७ (४५८५३)
पाण्ड्यमिन्द्रमिवायान्तमसुरान्प्रति दुर्जयम् ।
समर्थः सायकौघेन वृषसेनो न्यवारयत् ॥ ७-२५-५८ (४५८५४)
ग्अथाजगाम हैडिम्बो महामायो महाबलः ।
पितॄणां हितमन्विच्छन्दहन्कौरववाहिनीम्'॥ ७-२५-५९ (४५८५५)
गदापरिघनिस्त्रिंशपट्टसायोघनोपलैः ।
कडङ्गरैर्भुशुण्डीभिः प्रासैस्तोमरसायकैः ॥ ७-२५-६० (४५८५६)
मुसलैर्मुद्गरैश्चक्रैर्भिण्डिपालपरश्वथैः ।
पांसुवाताग्निसलिलैर्भस्मलोष्ठतृणद्रुमैः ॥ ७-२५-६१ (४५८५७)
आतुदन्प्ररुजन्भञ्जन्निघ्नन्विद्रावयन्क्षिपन् ।
सेनां विभीषयन्नायाद्द्रोणप्रेप्सुर्घटोत्कचः ॥ ७-२५-६२ (४५८५८)
तं तु नानाप्रहरणैर्नानायुद्धविशेषणैः ।
राक्षसं राक्षसः क्रुद्धः समाजघ्ने ह्यलम्बुसः ॥ ७-२५-६३ (४५८५९)
तयोस्तदभवद्युद्धं रक्षोग्रामणिमुख्ययोः ।
तादृग्यादृक्पुरावृत्तं शम्बरामरराजयोः ॥ ७-२५-६४ (४५८६०)
एवं द्वन्द्वशतान्यासन्रथवारणवाजिनाम् ।
पदातीनां च भद्रं ते तव तेषां च सङ्कुले ॥ ७-२५-६५ (४५८६१)
नैतादृशो दृष्टपूर्वः सङ्ग्रामो नैव च श्रुतः ।
द्रोणस्याभावभावे तु प्रसक्तानां परस्परम् ॥ ७-२५-६६ (४५८६२)
इदं घोरमिदं चित्रमिदं रौद्रमिति प्रभो ।
तत्र युद्धान्यदृश्यन्त प्रततानि बहूनि च ॥ ॥ ७-२५-६७ (४५८६३)

इति श्रीमन्महाभारते द्रोणपर्वणि संशप्तकवधपर्वणि
द्वादशदिवसयुद्धे पञ्चविंशोऽध्यायः ॥ २५ ॥

Mahabharata - Drona Parva - Chapter Footnotes

५-२५-१ भीरोर्भावो भैरवं भयमिति यावत् ॥
५-२५-२ दृष्टिपथे गते इति ङ पाठः ॥
५-२५-७ बाह्यं मृत्युभयं इति क ङ पाठः ॥
५-२५-२१ उत्पिञ्जलकमत्यन्ताकुलम् । तदद्भुततमं युद्धं इति

क ङ पाठः ॥
५-२५-२२ भूतकर्मा सभापतिरिति द्विनामा ॥
५-२५-२५ भीमरथो राजभ्राता ॥
५-२५-४५ ददृशुः ददृशिरे ॥
५-२५-५१ शलाकया शङ्कुना ॥
५-२५-६० अयोघाना कडङ्गरैर्दण्डैः ॥
५-२५-६२ आतुदन् व्यथयन् । प्ररुजन्विध्यन्। भञ्जन् आमर्दयन्। निघ्नन् मारयन्। विद्रावयन्पलाययन्। क्षिपन्प्रेरयन् ॥
५-२५-६६ आभावभावे मारणे रक्षणे च ॥
५-२५-२५ पञ्चविंशोऽध्यायः ॥
२५ ॥

---

द्रोनपर्व-अध्यय०२६
॥ श्रीः ॥
७.२६. अध्यायः २६

Mahabharata - Drona Parva - Chapter Topics
भगदत्तपराक्रमवर्णनम् ॥ १ ॥

Mahabharata - Drona Parva - Chapter Text

७-२६-० (४५८६४)
धृतराष्ट्र उवाच। ७-२६-०क्ष् (४३२०)
तेष्वेवं सन्निवृत्तेषु प्रत्युद्यातेषु भागशः ।
कथं युयुधिरे पार्था मामकाश्च तरस्विनः ॥ ७-२६-१ (४५८६५)
किमर्जुनश्चाप्यकरोत्संशप्तकबलं प्रति ।
संशप्तका वा पार्थस्य किमकुर्वत सञ्जय ॥ ७-२६-२ (४५८६६)
सञ्जय उवाच। ७-२६-३क्ष् (४३२१)
तथा तेषु निवृत्तेषु प्रत्युद्यातेषु भागशः ।
स्वयमभ्यद्रवद्भीमं नागानीकेन ते सुतः ॥ ७-२६-३ (४५८६७)
स नाग इव नागेन गोवृषेणेव गोवृषः ।
समाहूतः स्वयं राज्ञा नागानीकमुपाद्रवत् ॥ ७-२६-४ (४५८६८)
स युद्धकुशलः पार्थो बाहुवीर्येण चान्वितः ।
अभिनत्कुञ्जरानीकमचिरेणैव मारिष ॥ ७-२६-५ (४५८६९)
ते गजा गिरिसङ्काशाः क्षरन्तः सर्वतो मदम् ।
भीमसेनस्य नाराचैर्विमुखा विमदीकृताः ॥ ७-२६-६ (४५८७०)

विधमेदभ्रजालानि यथा वायुः समुद्धतः ।
व्यधमत्तान्यनीकानि तथैव पवनात्मजः ॥ ७-२६-७ (४५८७१)
स तेषु विसृजन्बाणान्भीमो नागेष्वशोभत ।
भुवनेष्विव सर्वेषु गभस्तीनुदितो रविः ॥ ७-२६-८ (४५८७२)
ते भीमबाणाभिहताः संस्यूता विबभुर्गजाः ।
गभस्तिभिरिवार्कस्य व्योम्नि नानाबलाहकाः ॥ ७-२६-९ (४५८७३)
तथा गजानां कदनं कुर्वाणमनिलात्मजम् ।
क्रुद्धो दुर्योधनोऽभ्येत्य प्रत्यविध्यच्छितैः शरैः ॥ ७-२६-१० (४५८७४)
ततः क्षणेन क्षितिपं क्षतजप्रतिमेक्षणः ।
क्षयं निनीषुर्निशितैर्भीमो विव्याध पत्रिभिः ॥ ७-२६-११ (४५८७५)
स शराचितसर्वाङ्गः क्रुद्धो विव्याध पाण्डवम् ।
नाराचैरर्करश्म्याभैर्भीमसेनं स्मयन्निव ॥ ७-२६-१२ (४५८७६)
तस्य नागं मणिमयं रत्नचित्रध्वजे स्थितम् ।
भल्लाभ्यां कार्मुकं चैव क्षिप्रं चिच्छेद पाण्डवः ॥ ७-२६-१३ (४५८७७)
दुर्योधनं पीड्यमानं दृष्ट्वा भीमेन मारिष ।
चुक्षोभयिषुरभ्यागादङ्गो मातङ्गमास्थितः ॥ ७-२६-१४ (४५८७८)
तमापतन्तं नागेन्द्रमम्बुदप्रतिमस्वनम् ।
कुम्भान्तरे भीमसेनो नाराचैरार्दयद्भृशम् ॥ ७-२६-१५ (४५८७९)
तस्य कायं विनिर्भिद्य न्यमज्जद्धरणीतले ।
ततः पपात द्विरदो वज्राहत इवाचलः ॥ ७-२६-१६ (४५८८०)
तस्यावर्जितनागस्य म्लेच्छस्याधः पतिष्यतः ।
शिरश्चिच्छेद भल्लेन क्षिप्रकारी वृकोदरः ॥ ७-२६-१७ (४५८८१)
तस्मिन्निपतिते वीरे सम्प्राद्रवत सा चमूः ।
सम्भ्रान्ताश्वद्विपरथा पदातीनवमृद्नती ॥ ७-२६-१८ (४५८८२)
तेष्वनीकेषु भग्नेषु विद्रवत्सु समन्ततः ।
प्राग्ज्योतिषस्ततो भीमं कुञ्जरेण समाद्रवत् ॥ ७-२६-१९ (४५८८३)
येन नागेन मघवानजयद्दैत्यदानवान् ।
तदन्वयेन नागेन भीमसेनमुपाद्रवत् ॥ ७-२६-२० (४५८८४)
स नागप्रवरो भीमं सहसा समुपाद्रवत् ।
श्रवणाभ्यामथो द्वाभ्यां संहतेन करेण च ॥ ७-२६-२१ (४५८८५)
व्यावृत्तनयनः क्रुद्धः प्रमथन्निव पाण्डवम् ।
वृकोदररथं साश्वमविशेषमचूर्णयत् ॥ ७-२६-२२ (४५८८६)
पद्भ्यां भीमोऽप्यथो धावंस्तस्य गात्रेष्वलीयत ।
जानन्नञ्जलिकावेधं नापाक्रामत पाण्डवः ॥ ७-२६-२३ (४५८८७)
गात्राभ्यन्तरगो भूत्वा करेणाताडयन्मुहुः ।
लालयामास तं नागं वधाकाङ्क्षिणमव्ययम् ॥ ७-२६-२४ (४५८८८)

कुलालचक्रवन्नागस्तदा तूर्णमथाभ्रमत् ।
नागायुतबलः श्रीमान्कालयानो वृकोदरम् ॥ ७-२६-२५ (४५८८९)
भीमोऽपि निष्क्रम्य ततः सुप्रतीकाग्रतोऽभवत् ।
भीमं करेणावनम्य जानुभ्यामभ्यताडयत् ॥ ७-२६-२६ (४५८९०)
ग्रीवायां वेष्टयित्वैनं स गजो हन्तुमैहत ।
करवेष्टं भीमसेनो भ्रमं दत्त्वा व्यमोचयत् ॥ ७-२६-२७ (४५८९१)
पुनर्गात्राणि नागस्य प्रविवेश वृकोदरः ।
यावत्प्रतिगजायातं स्वबलं प्रत्यवैक्षत ।
भीमोपि नागगात्रेभ्यो विनिःसृत्यापयाज्जवात् ॥ ७-२६-२८ (४५८९२)
ततः सर्वस्य सैन्यस्य नादः समभवन्महान् ।
अहो धिङ्निहतो भीमः कुञ्जरेणेति मारिष ॥ ७-२६-२९ (४५८९३)
तेन नागेन सन्त्रस्ता पाण्डवानामनीकिनी ।
सहसाऽभ्यद्रवद्राजन्यत्र तस्यौ वृकोदरः ॥ ७-२६-३० (४५८९४)
ततो युधिष्ठिरो राजा हतं मत्वा वृकोदरम् ।
भगदत्तं सपाञ्चाल्यः सर्वतः समवारयत् ॥ ७-२६-३१ (४५८९५)
तं रथं रथिनां श्रेष्ठाः परिवार्य परन्तपाः ।
अवाकिरञ्शरैस्तीक्ष्णैः शतशोऽथ सहस्रशः ॥ ७-२६-३२ (४५८९६)
स विघातं पृषत्कानामङ्कुशेन समाहरन् ।
क्षणेन पाण्डुपाञ्जालान्व्यधमत्पर्वतेश्वरः ॥ ७-२६-३३ (४५८९७)
तदद्भुतमपश्याम भगदत्तस्य संयुगे ।
तथा वृद्धस्य चरितं कुञ्जरेण विशाम्पते ॥ ७-२६-३४ (४५८९८)
ततो राजा दशार्णानां प्राग्ज्योतिषमुपाद्रवत् ।
तिर्यग्यातेन नागेन समदेनाशुगामिना ॥ ७-२६-३५ (४५८९९)
तयोर्युद्धं समभवन्नागयोर्भीमरूपयोः ।
सपक्षयोः पर्वतयोर्यथा सद्रुमयोः पुरा ॥ ७-२६-३६ (४५९००)
प्राग्ज्योतिषपतेर्नागः सन्निवृत्त्यापसृत्य च ।
पार्श्वे दशार्णाधिपतेर्भित्त्वा नागमपातयत् ॥ ७-२६-३७ (४५९०१)
तोमरैः सूर्यरश्म्याभैर्भगदत्तोऽथ सप्तभिः ।
जघान द्विरदस्थं तं शत्रुं प्रचलितासनम् ॥ ७-२६-३८ (४५९०२)
व्यवच्छिद्य तु राजानं भगदत्तं युधिष्ठिरः ।
रथानीकेन महता सर्वतः पर्यवारयत् ॥ ७-२६-३९ (४५९०३)
स कुञ्जरस्थो रथिभिः शुशुभे सर्वतो वृतः ।
पर्वते वनमध्यस्थो ज्वलन्निव हुताशनः ॥ ७-२६-४० (४५९०४)
मण्डलं सर्वतः श्लिष्टं रथिनामुग्रधन्विनाम् ।
किरतां शरवर्षाणि स नागः पर्यवर्तत ॥ ७-२६-४१ (४५९०५)
ततः प्राग्ज्योतिषो राजा परिगृह्य महागजम् ।

प्रेषयामास सहसा युयुधानरथं प्रति ॥ ७-२६-४२ (४५९०६)
ग्आपतन्तं च सम्प्रेक्ष्य नागं सात्वतपुङ्गवः ।
अविध्यत्पञ्चभिर्बाणैः शितैराशीविषोपमैः'॥ ७-२६-४३ (४५९०७)
शिनेः पौत्रस्य तु रथं परिगृह्य महाद्विपः ।
अभिचिक्षेप वेगेन युयुधानस्त्वपाक्रमत् ॥ ७-२६-४४ (४५९०८)
बृहतः सैन्धवानश्वान्समुत्थाप्यथ सारथिः ।
तस्थौ सात्यकिमासाद्य सम्प्लुतस्तं रथं प्रति ॥ ७-२६-४५ (४५९०९)
स तु लब्ध्वान्तरं नागस्त्वरितो रथमण्डलात् ।
निष्पतन्सततं सर्वान्परिचिक्षेप पार्थिवान् ॥ ७-२६-४६ (४५९१०)
ते त्वाशुगतिना तेन त्रास्यमाना नरर्षभाः ।
तमेकं द्विरदं सङ्ख्ये मेनिरे शतशो द्विपान् ॥ ७-२६-४७ (४५९११)
ते गजस्थेन काल्यन्ते भगदत्तेन पार्थिवाः ।
ऐरावतस्थेन यथा देवराजेन दानवाः ॥ ७-२६-४८ (४५९१२)
तेषां प्रद्रवतां भीमः पाञ्चालानामितस्ततः ।
गजवाजिकृतः शब्दः सुमहान्समजायत ॥ ७-२६-४९ (४५९१३)
भगदत्तेन समरे काल्यमानेषु पाण्डुषु ।
प्राग्ज्योतिषमभिक्रुद्धः पुनर्भीमः समभ्ययात् ॥ ७-२६-५० (४५९१४)
तस्याभिद्रवतो वाहान्हस्तमुक्तेन वारिणा ।
सिक्त्वा व्यत्रासयन्नागस्ते पार्थसहरंस्ततः ॥ ७-२६-५१ (४५९१५)
ततस्तमभ्ययात्तूर्णं रुचिपर्वा कृतीसुतः ।
समघ्नञ्छरवर्षेण रथस्थोऽन्तकसन्निभः ॥ ७-२६-५२ (४५९१६)
ततः स रुचिपर्वाणं शरेणानतपर्वणा ।
सुपर्वा पर्वतपतिर्निन्ये वैवस्वतक्षयम् ॥ ७-२६-५३ (४५९१७)
तस्मिन्निपतिते वीरे सौभद्रो द्रौपदीसुतः ।
चेकितानो धृष्टकेतुर्युयुत्सुश्चार्दयन्द्विपम् ॥ ७-२६-५४ (४५९१८)
त एनं शरधाराभिर्धाराभिरिव तोयदाः ।
सिषिचुर्भैरवान्नादान्विनदन्तो जिघांसवः ॥ ७-२६-५५ (४५९१९)
ततः पार्ष्ण्यङ्कुशाङ्गुष्ठैः कृतिना चोदितो द्विपः ।
प्रसारितकरः प्रायात्स्तब्धकर्णेक्षणो द्रुतम् ॥ ७-२६-५६ (४५९२०)
सोऽधिष्ठाय पदा वाहान्युयुत्सोः सूतमारुजत् ।
युयुत्सुस्तु रथाद्राजन्नपाक्रामत्त्वरान्वितः ॥ ७-२६-५७ (४५९२१)
ततः पाण्डवयोधास्ते नागराजं शरैर्द्रुतम् ।
सिषिचुर्भैरवान्नादान्विनदन्तो जिघांसवः ॥ ७-२६-५८ (४५९२२)
पुत्रस्तु तव सम्भ्रान्तः सौभद्रस्याप्लुतो रथम् ।
स कुञ्जरस्थो विसृजन्निषूनरिषु पार्थिवः ।
बभौ रश्मीनिवादित्यो भुवनेषु समुत्सृजन् ॥ ७-२६-५९ (४५९२३)

तमार्जुनिर्द्वादशभिर्युयुत्सुर्दशभिः शरैः ।
त्रिभिस्त्रिभिर्द्रौपदेया धृष्टकेतुश्च विव्यधुः ॥ ७-२६-६० (४५९२४)
ग्चेकितानः चतुःषष्ट्या सोत्तरायुधिकं पुनः ।
प्रत्यविध्यत्ततः सर्वान्भगदत्तस्त्रिभिस्त्रिभिः'॥ ७-२६-६१ (४५९२५)
सोऽतियत्नार्पितैर्बाणैराचितो द्विरदो बभौ ।
संस्यूत इव सूर्यस्य रश्मिभिर्जलदो महान् ॥ ७-२६-६२ (४५९२६)
नियन्तुः शिल्पयत्नाभ्यां प्रेरितोऽरिशरार्दितः ।
परिचिक्षेप तान्नागः स रिपून्सव्यदक्षिणम् ॥ ७-२६-६३ (४५९२७)
गोपाल इव दण्डेन यथा पशुगणान्वने ।
सङ्कालयति तां सेनां भगदत्तस्तथा मुहुः ॥ ७-२६-६४ (४५९२८)
क्षिप्रं श्येनाभिपन्नानां वायसानामिव स्वनः ।
बभूव पाण्डवेयानां भृशं विद्रवतां स्वनः ॥ ७-२६-६५ (४५९२९)
स नागराजः प्रवराङ्कुशाहतः
पुरा सपक्षोऽद्रिवरो यथा नृप ।
भयं तदा रिपुषु समादधद्भृशं
वणिग्जनानां क्षुभितो यथाऽर्णवः ॥ ७-२६-६६ (४५९३०)
ततो ध्वनिर्द्विरदरथाश्वपार्थिवै
र्भयाद्रवद्भिर्जनितोऽतिभैरवः ।
क्षितिं वियद् द्यां विदिशो दिशस्तथा
समावृणोत्पार्थिवसंयुगे ततः ॥ ७-२६-६७ (४५९३१)
स तेन नागप्रवरेण पार्थिवो
भृशं जगाहे द्विषतामनीकिनीम् ।
पुरा सुगुप्तां विबुधैरिवाहवे
विरोचनो देववरूतिनीमिव ॥ ७-२६-६८ (४५९३२)
भृशं ववौ ज्वलनसखो वियद्रजः
समावृणोन्मुहुरपि चैव सैनिकान् ।
तमेकनागं गणशो यथा गजान्
समन्ततो द्रुतमथ मेनिरे जनाः ॥ ॥ ७-२६-६९ (४५९३३)

इति श्रीमन्महाभारते द्रोणपर्वणि संशप्तकवधपर्वणि
द्वादशदिवसयुद्धे षड्विंशोऽध्यायः ॥ २६ ॥

Mahabharata - Drona Parva - Chapter Footnotes

५-२६-१७ आवर्जितः पतनप्रवणो नागो यस्य ॥
५-२६-२१ संहतेन सङ्कुचितेन ॥
५-२६-३५ तिर्यग्यातेन पार्श्वतोगामिना ॥

५-२६-३९ व्यवच्छिद्य विद्धवा ॥
५-२६-४१ पर्यवर्तत भ्रान्तवान् ॥
५-२६-४५ समुत्थाप्य स्थिरीकृत्य ॥
५-२६-५२ सुपर्वा पार्वतीसुतः इति क ङ पाठः ॥
५-२६-५३ सुपर्वा शोभनाङ्गसंधिः ॥
५-२६-६७ वियदाकाशम् । द्यां स्वर्गम् ॥
५-२६-२६ षड्विंशोऽध्यायः ॥

---

द्रोनपर्व-अध्यय०२७
॥ श्रीः ॥
७.२७. अध्यायः २७

Mahabharata - Drona Parva - Chapter Topics
अर्जुनेन संशप्तकानां हननम् ॥१ ॥

Mahabharata - Drona Parva - Chapter Text

७-२७-० (४५९३४)
सञ्जय उवाच। ७-२७-०क्ष् (४३२२)
यन्मां पार्थस्य सङ्ग्रामे कर्माणि परिपृच्छसि ।
तृच्छृणुष्व महाबाहो पार्थो यदकरोद्रणे ॥ ७-२७-१ (४५९३५)
रजो दृष्ट्वा समुद्भूतं श्रुत्वा च गजनिःस्वनम् ।
भगदत्ते विकुर्वाणे कौन्तेयः कृष्णमब्रवीत् ॥ ७-२७-२ (४५९३६)
यथा प्राग्ज्योतिषो राजा गजेन मधुसूदन ।
त्वरमाणोऽभिनिष्क्रान्तो ध्रुवं तस्यैष निःस्वनः ॥ ७-२७-३ (४५९३७)
इन्द्रादनवरः सङ्ख्ये गजयानविशारदः ।
प्रथमो गजघोधानां पृथिव्यामिति मे मतिः ॥ ७-२७-४ (४५९३८)
स चापि द्विरदश्रेष्ठः सदाऽप्रतिगजो युधि ।
सर्वशस्त्रातिगः सङ्ख्ये कृतकर्मा जितक्लमः ॥ ७-२७-५ (४५९३९)
सहः सस्त्रनिपातानामग्निस्पर्शस्य चानघ ।
स पाण्डवबलं सर्वमद्यैको नाशयिष्यति ॥ ७-२७-६ (४५९४०)
गसिंहनादं महत्कृत्वा धनुर्बाणरवैः सह ।
विद्राव्यमाणं सम्पश्य हतभूयिष्ठनायकम् ।
दृष्ट्वा विनद्य सहसा मम सेनां प्रमृद्नति'॥ ७-२७-७ (४५९४१)
न चावाभ्यामृतेऽन्योऽस्ति शक्तस्त्वं प्रतिबाधितुम् ।
त्वरमाणस्ततो याहि यतः प्राग्ज्योतिषाधिपः ॥ ७-२७-८ (४५९४२)

दृप्तं सङ्ख्ये द्विपबलाद्वयसा चापि विस्मितम् ।
अद्यैनं प्रेषयिष्यामि बलहन्तुः प्रियातिथिम् ॥ ७-२७-९ (४५९४३)
वचनादथ कृष्णस्तु प्रययौ सव्यसाचिनः ।
दीर्यते भगदत्तेन यत्र पाण्डववाहिनी ॥ ७-२७-१० (४५९४४)
तं प्रयान्तं ततः पश्चादाह्वयन्तो महारथाः ।
संशप्तकाः समारोहन्सहस्राणि चतुर्दश ॥ ७-२७-११ (४५९४५)
दशैव तु सहस्राणि त्रिगर्तानां महारथाः ।
चत्वारि च सहस्राणि वासुदेवस्य चानुगाः ॥ ७-२७-१२ (४५९४६)
दीर्यमाणां चमूं दृष्ट्वा भगदत्तेन मानिष ।
आहूयमानस्य च तैरभवद्धृदयं द्विधा ॥ ७-२७-१३ (४५९४७)
किन्नु श्रेयस्करं कर्म भवेदद्येत्यचिन्तयत् ।
इह वा विनिवर्तेयं गच्छेयं वा युधिष्ठिरम् ॥ ७-२७-१४ (४५९४८)
तस्य बुद्ध्या विचार्यैवमर्जुनस्य कुरूद्वह ।
अभवद्भूयसी बुद्धिः संशप्तकवधे स्थिरा ॥ ७-२७-१५ (४५९४९)
स सन्निवृत्तः सहसा कपिप्रवरकेतनः ।
एको रथसहस्राणि निहन्तुं वासवी रणे ॥ ७-२७-१६ (४५९५०)
सा हि दुर्योधनस्यासीन्मतिः कर्णस्य चोभयोः ।
अर्जुनस्य वधोपाये या वै द्वैधमकल्पयत् ॥ ७-२७-१७ (४५९५१)
स तु दोलायमानोऽबूद्द्वैधीभावेन पाण्डवः ।
वधेन तु नराग्र्याणामकरोत्तां मृषा तदा ॥ ७-२७-१८ (४५९५२)
ततः शतसहस्राणि शराणां नतपर्वणाम् ।
असृजन्नर्जुने राजन्संशप्तकमहारथाः ॥ ७-२७-१९ (४५९५३)
नैव कुन्तीसुतः पार्थो नैव कृष्णो जनार्दनः ।
न हया न रथो राजन्दृश्यन्ते स्म शरैश्चिताः ॥ ७-२७-२० (४५९५४)
तदा मोहमनुप्राप्तः सिष्विदे हि जनार्दनः ।
ततस्तान्प्रायशः पार्थो ब्रह्मास्त्रेण निजघ्निवान् ॥ ७-२७-२१ (४५९५५)
शतशः पाणयश्छिन्नाः सेषुज्यातलकार्मुकाः ।
केतवो वाजिनः सूता रथिनश्चापतन्क्षितौ ॥ ७-२७-२२ (४५९५६)
द्रुमाचलाग्राम्बुधरैः समकायाः सुकल्पिताः ।
हतारोहाः क्षितौ पेतुर्द्विपाः पार्थशराहताः ॥ ७-२७-२३ (४५९५७)
विप्रविद्धकुथा नागाश्छिन्नभाण्डाः परासवः ।
सारोहास्तु रणे पेतुर्मथिता मार्गणैर्भृशम् ॥ ७-२७-२४ (४५९५८)
सर्ष्टिप्रासासिनखराः समुद्गरपरश्वथाः ।
विच्छिन्ना बाहवः पेतुर्नृणां भल्लैः किरीटिना ॥ ७-२७-२५ (४५९५९)
बालादित्याम्बुजेन्दूनां तुल्यरूपाणि मारिष ।
संच्छिन्नान्यर्जुनशरैः शिरांस्युर्वी प्रपेदिरे ॥ ७-२७-२६ (४५९६०)

जज्वालालङ्कृता सेना पत्रिभिः प्राणिभोजनैः ।
नानारूपैस्तदाऽमित्रान्क्रुद्धैर्निघ्नति फल्गुने ॥ ७-२७-२७ (४५९६१)
क्षोभयन्तं तदा सेनां द्विरदं नलिनीमिव ।
धनञ्जयं भूतगणाः साधुसाध्वित्यपूजयन् ॥ ७-२७-२८ (४५९६२)
दृष्ट्वा तत्कर्म पार्थस्य वासवस्येव माधवः ।
विस्मयं परमं गत्वा प्राञ्जलिस्तमुवाच ह ॥ ७-२७-२९ (४५९६३)
कर्मैतत्पार्थ शक्रेण यमेन धनदेन च ।
दुष्करं समरे यत्ते कृतमद्येति मे मतिः ॥ ७-२७-३० (४५९६४)
युगपच्चैव सङ्ग्रामे शतशोऽथ सहस्रशः ।
पतिता एव मे दृष्टाः संशप्तकमहारथाः ॥ ७-२७-३१ (४५९६५)
संशप्तकांस्ततो हत्वा भूयिष्ठा ये व्यवस्थिताः ।
भगदत्ताय याहीति कृष्णं पार्थोऽभ्यनोदयत् ॥ ॥ ७-२७-३२ (४५९६६)

इति श्रीमन्महाभारते द्रोणपर्वणि संशप्तकवधपर्वणि
द्वादशदिवसयुद्धे सप्तविंशोऽध्यायः ॥ २७ ॥
Mahabharata - Drona Parva - Chapter Footnotes

५-२७-२ विकुर्वाणे विविधाः क्रियाः कुर्वाणे ॥
५-२७-६ सहः सोढा ।पचाद्यच ॥
५-२७-९ विस्मितं रूढाहङ्कारम् ॥
५-२७-११ समारोहन्संवृतवन्तः ॥
५-२७-२७ सप्तविंशोऽध्यायः ॥

---

द्रोनपर्व-अध्यय०२८
॥ श्रीः ॥
७.२८. अध्यायः २८

Mahabharata - Drona Parva - Chapter Topics
भगदत्तार्जुनसमागमः ॥ १ ॥

Mahabharata - Drona Parva - Chapter Text

७-२८-० (४५९६७)
सञ्जय उवाच। ७-२८-०क्ष् (४३२३)
यियासतस्ततः कृष्णः पार्थस्याश्वान्मनोजवान् ।
सम्प्रैषीद्धेमसञ्छन्नान्द्रोणानीकाय सन्त्वरन् ॥ ७-२८-१ (४५९६८)

तं प्रयान्तं कुरुश्रेष्ठं स्वांस्त्रातुं द्रोणतापितान् ।
सुशर्मा भ्रातृभिः सार्धं युद्धार्थी पृष्ठतोऽन्वयात् ॥ ७-२८-२ (४५९६९)
ततः श्वेतहयः कृष्णमब्रवीदजितञ्जयः ।
एष मां भ्रातृभिः सार्धं सुशर्माऽऽह्वयतेऽच्युत ॥ ७-२८-३ (४५९७०)
दीर्यते चोत्तरेणैव तत्सैन्यं मधुसूदन ।
द्वैधीभूतं मनो मेऽद्य कृतं संशप्तकैरिदम् ॥ ७-२८-४ (४५९७१)
किन्नु संशप्तकान्हन्मि स्वान्रक्षाम्यहितार्दितान् ।
इति मे त्वं मतं वेत्सि तत्र किं सुकृतं भवेत् ॥ ७-२८-५ (४५९७२)
एवमुक्तस्तु दाशार्हः स्यन्दनं प्रत्यवर्तयत् ।
येन त्रिगर्ताधिपतिः पाण्डवं समुपाह्वयत् ॥ ७-२८-६ (४५९७३)
ततोऽर्जुनः सुशर्माणं विद्ध्वा सप्तभिराशुगैः ।
ध्वजं धनुश्चास्य तथा क्षुराभ्यां समकृन्तत ॥ ७-२८-७ (४५९७४)
त्रिगर्ताधिपतेश्चापि भ्रातरं षड्भिराशुगैः ।
साश्वं ससूतं त्वरितः पार्थः प्रैषीद्यमक्षयम् ॥ ७-२८-८ (४५९७५)
ततो भुजगसङ्काशां सुशर्मा शक्तिमायसीम् ।
चिक्षेपार्जुनमादिश्य वासुदेवाय तोमरम् ॥ ७-२८-९ (४५९७६)
शक्तिं त्रिभिः शरैश्छित्त्वा तोमरं त्रिभिरर्जुनः ।
सुशर्माणं शरव्रातैर्मोहयित्वा न्यवर्तयत् ॥ ७-२८-१० (४५९७७)
तं वासवमिवायान्तं भूरिवर्षं शरौघिणम् ।
राजंस्तावकसैन्यानां नोग्रं कश्चिदवारयत् ॥ ७-२८-११ (४५९७८)
ततो धनञ्जयो बाणैः सर्वानेव महारथान् ।
आयाद्विनिघ्नन्कौरव्यान्दहन्कक्षमिवानलः ॥ ७-२८-१२ (४५९७९)
तस्य वेगमसह्यं तं कुन्तीपुत्रस्य धीमतः ।
नाशक्नुवंस्ते संसोढुं स्पर्शमग्नेरिव प्रजाः ॥ ७-२८-१३ (४५९८०)
संवेष्टयन्ननीकानि शरवर्षेण पाण्डवः ।
सुपर्ण इव नागेन्द्रं प्रायात्प्राग्ज्योतिषं प्रति ॥ ७-२८-१४ (४५९८१)
यत्तदानामयज्जिष्णुर्भरतानामपापिनाम् ।
धनुः क्षेमकरं सङ्ख्ये द्विषतामश्रुवर्धनम् ॥ ७-२८-१५ (४५९८२)
तदेव तव पुत्रस्य राजन्दुर्द्यूतदेविनः ।
कृते क्षत्रविनाशाय धनुरायच्छदर्जुनः ॥ ७-२८-१६ (४५९८३)
तथा विक्षोभ्यमाणा सा पार्थेन तव वाहिनी ।
व्यशीर्यत महाराज नौरिवासाद्य पर्वतम् ॥ ७-२८-१७ (४५९८४)
ततो दशसहस्राणि न्यवर्तन्त धनुष्मताम् ।
मतिं कृत्वा रणे क्रूरां वीरा जयपराजये ॥ ७-२८-१८ (४५९८५)
व्यपेतहृदयत्रासा आवव्रुस्तं महारथाः ।
आर्च्छत्पार्थो गुरुं भारं सर्वभारसहो युधि ॥ ७-२८-१९ (४५९८६)

यथा नलवनं क्रुद्धः प्रभिन्नः षष्टिहायनः ।
मृद्नीयात्तद्वदायस्तः पार्थोऽमृद्नाच्चमूं तव ॥ ७-२८-२० (४५९८७)
तस्मिन्प्रमथिते सैन्ये भगदत्तो नराधिपः ।
तेन नागेन सहसा धनञ्जयमुपाद्रवत् ॥ ७-२८-२१ (४५९८८)
तं रथेन नरव्याघ्रः प्रत्यगृह्णाद्धनञ्जयः ।
स सन्निपातस्तुमुलो बभूव नरनागयोः ॥ ७-२८-२२ (४५९८९)
कल्पिताभ्यां यथाशास्त्रं रथेन च गजेन च ।
सङ्ग्रामे चेरतुर्वीरौ भगदत्तधनञ्जयौ ॥ ७-२८-२३ (४५९९०)
ततो जीमूतसङ्काशान्नागादिन्द्र इव प्रभुः ।
अभ्यवर्षच्छरौघेण भगदत्तो धनञ्जयम् ॥ ७-२८-२४ (४५९९१)
स चापि शरवर्षं तं शरवर्षेण वासिवः ।
अप्राप्तमेव चिच्छेद भगदत्तस्य वीर्यवान् ॥ ७-२८-२५ (४५९९२)
ततः प्राग्ज्योतिषो राजा शरवर्षे निवारिते ।
संरक्तनयनो रोषात्पार्थं पुनरवाकिरत् ॥ ७-२८-२६ (४५९९३)
स तथा शरवर्षेण पार्थं समभिहत्य वै ।
चोदयामास तं नागं वधायाच्युतपार्थयोः ॥ ७-२८-२७ (४५९९४)
तमापतन्तं द्विरदं दृष्ट्वा क्रुद्धमिवान्तकम् ।
चक्रेऽपसव्यं त्वरितः स्यन्दनेन जनार्दनः ॥ ७-२८-२८ (४५९९५)
सम्प्राप्तमपि नेयेष परावृत्तं महाद्विपम् ।
सारोहं मृत्युसात्कर्तुं स्मरन्धर्मं धनञ्जयः ॥ ७-२८-२९ (४५९९६)
स तु नागो द्विपरथान्हयांश्चामृद्य मारिष ।
प्राहिणोन्मृत्युलोकाय ततः क्रुद्धो धनञ्जयः ॥ ॥ ७-२८-३० (४५९९७)

इति श्रीमन्महाभारते द्रोणपर्वणि संशप्तकवधपर्वणि
द्वादशदिवसयुद्धे अष्टाविंशोऽध्यायः ॥ २८ ॥
Mahabharata - Drona Parva - Chapter Footnotes

५-२८-१६ आयच्छद्गृहीतवान् । यदेवार्जुनस्य धनुर्भरतानां
क्षेमकरमासीत्तदेव त्वत्पुत्रनिमित्तं क्षत्रक्षयकरमभवदिति
वाक्यार्थः ५-२८-२८ अष्टाविंशोऽध्यायः ॥

---

द्रोनपर्व-अध्यय०२९
॥ श्रीः ॥
७.२९. अध्यायः २९

Mahabharata - Drona Parva - Chapter Topics

अर्जुनेन सगजस्य भगदत्तस्य वधः ॥ १ ॥

Mahabharata - Drona Parva - Chapter Text

७-२९-० (४५९९८)
धृतराष्ट्र उवाच। ७-२९-०क्ष् (४३२४)
तथा क्रुद्धः किमकरोद्भगदत्तस्य पाण्डवः ।
प्राग्ज्योतिषो वा पार्थस्य तन्मे शंस यथातथम् ॥ ७-२९-१ (४५९९९)
सञ्जय उवाच। ७-२९-२क्ष् (४३२५)
प्राग्ज्योतिषेण संसक्तावुभौ दाशार्हपाण्डवौ ।
मृत्युदंष्ट्रान्तिकं प्राप्तौ सर्वभूतानि मेनिरे ॥ ७-२९-२ (४६०००)
तथा तु शरवर्षाणि पातयत्यनिशं प्रभो ।
गजस्कन्धान्महाराज कृष्णयोः स्यन्दनस्थयोः ॥ ७-२९-३ (४६००१)
अथ कार्ष्णायसैर्बाणैः पूर्णकार्मुकनिःसृतैः ।
अविध्यद्देवकीपुत्रं हेमपुङ्खैः शिलाशितैः ॥ ७-२९-४ (४६००२)
अग्निस्पर्शसमास्तीक्ष्णा भगदत्तेन चोदिताः ।
निर्भिद्य देवकीपुत्रं क्षितिं जग्मुः सुवाससः ॥ ७-२९-५ (४६००३)
तस्य पार्थो धनुश्छित्त्वा परिवारं निहत्य च ।
लालयन्निव राजानं भगदत्तमयोधयत् ॥ ७-२९-६ (४६००४)
सोऽर्करश्मिनिभांस्तीक्ष्णांस्तोमरान्वै चतुर्दश ।
अप्रेषयत्सव्यसाची द्विधैकैकमथाच्छिनत् ॥ ७-२९-७ (४६००५)
ततो नागस्य तद्वर्म व्यधमत्पाकशासनिः ।
शरजालेन महता तद्व्यशीर्यत भूतले ॥ ७-२९-८ (४६००६)
शीर्णवर्मा स तु गजः शरैः सुभृशमर्दितः ।
बभौ धारानिपाताक्तो व्यभ्रः पर्वतराडिव ॥ ७-२९-९ (४६००७)
ततः प्राग्ज्योतिषः शक्तिं हेमदण्डामयस्मयीम् ।
व्यसृजद्वासुदेवाय द्विधा तामर्जुनोऽच्छिनत् ॥ ७-२९-१० (४६००८)
ततश्छत्रं ध्वजं चैव च्छित्त्वा राज्ञोऽर्जुनः शरैः ।
विव्याध दशभिस्तूर्णमुत्स्मयन्पर्वतेश्वरम् ॥ ७-२९-११ (४६००९)
सोऽतिविद्धोऽर्जुनशरैः सुपुङ्खैः कङ्कपत्रिभिः ।
भगदत्तस्ततः क्रुद्धः पाण्डवस्य जनाधिपः ॥ ७-२९-१२ (४६०१०)
व्यसृजत्तोमरान्मूर्ध्नि श्वेताश्वस्योन्नाद च ।
तैरर्जुनस्य समरे किरीटं परिवर्तितम् ॥ ७-२९-१३ (४६०११)
परिवृत्तं किरीटं तद्यमयन्नेव पाण्डवः ।
सुदृष्टः क्रियतां लोक इति राजानमब्रवीत् ॥ ७-२९-१४ (४६०१२)
एवमुक्तस्तु सङ्क्रुद्धः शरवर्षेण पाण्डवम् ।

अभ्यवर्षत्स गोविन्दं धनुरादाय भास्वरम् ॥ ७-२९-१५ (४६०१३)
तस्य पार्थो धनुश्छित्त्वा तूणीरान्सन्निकृत्य च ।
त्वरमाणो द्विसप्तत्या सर्वमर्मस्वताडयत् ॥ ७-२९-१६ (४६०१४)
विद्धस्ततोऽतिव्यथितो वैष्णवास्त्रमुदीरयन् ।
अभिमन्त्र्याङ्कुशं क्रुद्धो व्यसृजत्पाण्डवोरसि ॥ ७-२९-१७ (४६०१५)
विसृष्टं भगदत्तेन तदस्त्रं सर्वघाति वै ।
उरसा प्रतिजग्राह पार्थं सञ्छाद्य केशवः ॥ ७-२९-१८ (४६०१६)
वैजयन्त्यभवन्माला तदस्त्रं केशवोरसि ।
पद्मकोशविचित्रा सा सर्वर्तुकुसुमोत्करा ॥ ७-२९-१९ (४६०१७)
ज्वलनार्केन्दुवर्णाभा पावकोज्ज्वलपल्लवा ।
तया पद्मपलाशिन्या वातकम्पितपत्रया ॥ ७-२९-२० (४६०१८)
शुशुभेऽभ्यधिकं शौरिरतसीपुष्पसन्निभः ।
ततोऽर्जुनः क्लान्तमनाः केशवं प्रत्यभाषत ॥ ७-२९-२१ (४६०१९)
अयुध्यमानस्तुरगान्संयन्तास्मि जनार्दन ।
इत्युक्त्वा पुण्डरीकाक्ष प्रतिज्ञां स्वां न रक्षसि ॥ ७-२९-२२ (४६०२०)
यद्यहं व्यसनी वा स्यामशक्तो वा निवारणे ।
ततस्त्वयैवं कार्यं स्यान्न तु कार्यं मयि स्थिते ॥ ७-२९-२३ (४६०२१)
सबाणः सधनुश्चाहं ससुरासुरमानुषान् ।
शक्तो लोकानिमाञ्जेतुं तच्चापि विदितं तव ॥ ७-२९-२४ (४६०२२)
ततोऽर्जुनं वासुदेवः प्रत्युवाचार्यवद्वचः ।
शृणु गुह्यमिदं पार्थ पुरावृत्तं यथाऽनघ ॥ ७-२९-२५ (४६०२३)
ग्येयं भूतधरा देवी सर्वभूतधरा धरा ।
सकामा लोककर्तारं नारायणमुपस्थिता ॥ ७-२९-२६ (४६०२४)
स सङ्गत्य तया सार्धं प्रीतस्तस्या वरं ददौ ।
सा वव्रे विष्णुसदृशं पुत्रमस्त्रं च वैष्णवम् ॥ ७-२९-२७ (४६०२५)
बभूव च सुतस्तस्या नरको नाम विश्रुतः ।
अस्त्रं च वैष्णवं तस्मै ददौ नारायणः स्वयम् ॥ ७-२९-२८ (४६०२६)
तदेवं नरकस्यासीदस्त्रं सर्वाहितान्तकम् ।
तस्मात्प्राग्ज्योतिषं प्राप्तं सर्वशस्त्रविघातनम् ॥ ७-२९-२९ (४६०२७)
नास्यावध्योऽस्ति लोकेऽस्मिन्मदन्यः कश्चिदर्जुन ।
तस्मान्मया कृतं ह्येतन्मा भूत्ते बुद्धिरन्यथा ॥ ७-२९-३० (४६०२८)
सञ्जय उवाच। ७-२९-३१क्ष् (४३२६)
अनुनीय तु दाशार्हः पाण्डवं त्वरितोऽब्रवीत् ।
जहि प्राग्ज्योतिषं क्षिप्रं वाक्यशेषं च मे शृणु'॥ ७-२९-३१ (४६०२९)
चतुर्मूर्तिरहं शश्वल्लोकत्राणार्थमुद्यतः ।
आत्मानं प्रविभज्येह लोकानां हितमादधे ॥ ७-२९-३२ (४६०३०)

एका मूर्तिस्तपश्चर्यां कुरुते मे भुवि स्थिता ।
अपरा पश्यति जगत्कुर्वाणं साध्वसाधुनी ॥ ७-२९-३३ (४६०३१)
अपरा कुरुते कर्म मानुषं लोकमाश्रिता ।
शेते चतुर्थी त्वपरा निद्रां वर्षसहस्रिकीम् ॥ ७-२९-३४ (४६०३२)
याऽसौ वर्षसहस्रान्ते मूर्तिरुत्तिष्ठते मम ।
वरार्हेभ्यो वराञ्श्रेष्ठांस्तस्मिन्काले ददाति सा ॥ ७-२९-३५ (४६०३३)
तं तु कालमनुप्राप्तं विदित्वा पृथिवी तदा ।
अयाचत वरं यन्मां नरकार्थाय तच्छृणु ॥ ७-२९-३६ (४६०३४)
देवानां दानवानां च अवध्यस्तनयोऽस्तु मे ।
उपेतो वैष्णवास्त्रेण तन्मे त्वं दातुमर्हसि ॥ ७-२९-३७ (४६०३५)
एवं वरमहं श्रुत्वा जगत्यास्तनये तदा ।
अमोघमस्त्रं प्रायच्छं वैष्णवं परमं पुरा ॥ ७-२९-३८ (४६०३६)
अवोचं चैतदस्त्रं वै ह्यमोघं भवतु क्षमे ।
नरकस्याभिरक्षार्थं नैनं कश्चिद्वधिष्यति ॥ ७-२९-३९ (४६०३७)
अनेनास्त्रेण ते गुप्तः सुतः परबलार्दनः ।
भविष्यति दुराधर्षः सर्वलोकेषु सर्वदा ॥ ७-२९-४० (४६०३८)
तथेत्युक्त्वा गता देवी कृतकामा मनस्विनी ।
स चाप्यासीद्दुराधर्षो नरकः शत्रुतापनः ॥ ७-२९-४१ (४६०३९)
तस्मात्प्राग्ज्योतिषं प्राप्तं तदस्त्रं पार्थ मामकम् ।
नास्यावध्योऽस्ति लोकेषु सेन्द्ररुद्रेषु मारिष ॥ ७-२९-४२ (४६०४०)
तन्मया त्वत्कृते चैतदन्यथैवोपनिर्मितम् ।
वियुक्तं परमास्त्रेण जहि पार्थ महासुरम् ॥ ७-२९-४३ (४६०४१)
ग्अवध्योऽयं महास्त्रेण भगदत्तः सुरासुरैः'।
वैरिणं जहि दुर्धर्षं भगदत्तं सुरद्विषम् ।
यथाऽहं जघ्निवान्पूर्वं हितार्थं नरकं तथा ॥ ७-२९-४४ (४६०४२)
सञ्जय उवाच। ७-२९-४५क्ष् (४३२७)
एवमुक्तस्तदा पार्थः केशवेन महात्मना ।
भगदत्तं शितैर्बाणैः सहसा समवाकिरत् ॥ ७-२९-४५ (४६०४३)
ततः पार्थो महाबाहुरसम्भ्रान्तो महामनाः ।
कुम्भयोरन्तरे नागं नाराचेन समार्पयत् ॥ ७-२९-४६ (४६०४४)
स समासाद्य तं नागं बाणो वज्र इवाचलम् ।
अभ्यगात्सह पुङ्खेन वल्मीकमिव पन्नगः ॥ ७-२९-४७ (४६०४५)
स करी भगदत्तेन प्रेर्यमाणो मुहुर्मुहुः ।
न करोति वचस्तस्य दरिद्रस्येव योषिता ॥ ७-२९-४८ (४६०४६)
स तु विष्टभ्य गात्राणि दन्ताभ्यामवनिं ययौ ।
नदन्नार्तस्वनं प्राणानुत्ससर्ज महाद्विपः ॥ ७-२९-४९ (४६०४७)

ततो गाण्डीवधन्वानमभ्यभाषत केशवः ।
अयं महत्तरः पार्थ पलितेन समावृतः ॥ ७-२९-५० (४६०४८)
वलीसञ्छन्ननयनः शूरः परमदुर्जयः ।
अक्ष्णोरुन्मीलनार्थाय बद्धपट्टो ह्यसौ नृपः ॥ ७-२९-५१ (४६०४९)
देववाक्यात्प्रचिच्छेद शरेण भृशमर्जुनः ।
छिन्नमात्रेंऽशुके तस्मिन्रुद्धनेत्रो बभूव सः ॥ ७-२९-५२ (४६०५०)
तमोमयं जगन्मेने भगदत्तः प्रतापवान् ।
ततश्चन्द्रार्धबिम्बेन बाणेन नतपर्वणा ॥ ७-२९-५३ (४६०५१)
बिभेद हृदयं राज्ञो भगदत्तस्य पाण्डवः ।
स भिन्नहृदयो राजा भगदत्तः किरीटिना ॥ ७-२९-५४ (४६०५२)
शरासनं शरांश्चैव गतासुः प्रमुमोच ह ।
शिरसस्तस्य विभ्रष्टं पपात च वरांशुकम् ।
नालताडनविभ्रष्टं पलाशं नलिनादिव ॥ ७-२९-५५ (४६०५३)
स हेममाली तपनीयभाण्डा
त्पपात नागाद्गिरिसन्निकाशात् ।
सुपुष्पितो मारुतवेगभग्नो
महीधराग्रादिव कर्णिकारः ॥ ७-२९-५६ (४६०५४)
निहत्य तं नरपतिमिन्द्रविक्रमं
सस्वायमिन्द्रस्य तदैन्द्रिराहवे ।
ततोऽपरांस्तव जयकाङ्क्षिणो नरान्
बभञ्ज वायुर्बलवान्द्रुमानिव ॥ ॥ ७-२९-५७ (४६०५५)

इति श्रीमन्महाभारते द्रोणपर्वणि संशप्तकवधपर्वणि
द्वादशदिवसयुद्धे एकोनत्रिंशोऽध्यायः ॥ २९ ॥
Mahabharata - Drona Parva - Chapter Footnotes

५-२९-३३ एका मूर्तिर्बदरिकाश्रमे नारायणरूपा ।अषरा परमात्मरूपा ॥
५-२९-३४ अपरा रामकृष्णादिरूपा ।अपरा जलशायिनी ॥
५-२९-४८ योषिता भागुरिमते टाप् ॥
५-२९-२९ एकोनत्रिंशोऽध्यायः ॥

---

द्रोनपर्व-अध्यय०३०
॥ श्रीः ॥
७.३०. अध्यायः ३०

Mahabharata - Drona Parva - Chapter Topics

अर्जुनयुद्धवर्णनम् ॥ १ ॥

Mahabharata - Drona Parva - Chapter Text

७-३०-० (४६०५६)
सञ्जय उवाच। ७-३०-०क्ष् (४३२८)
प्रियमिन्द्रस्य सततं सखायममितौजसम् ।
हत्वा प्राग्ज्योतिषं पार्थः प्रदक्षिणमवर्तत ॥ ७-३०-१ (४६०५७)
ततो गान्धारराजस्य सुतौ परपुरञ्जयौ ।
अर्देतामर्जुनं सङ्ख्ये भ्रातरौ वृषकाचलौ ॥ ७-३०-२ (४६०५८)
तौ समेत्यार्जुनं वीरौ पुरः पश्चाच्च धन्विनौ ।
अविध्येतां महावेगैर्निशितैराशुगैर्भृशम् ॥ ७-३०-३ (४६०५९)
वृषकस्य हयान्सूतं धनुश्छत्रं रथं ध्वजम् ।
तिलशो व्यधमत्पार्थः सौबलस्य शितैः शरैः ॥ ७-३०-४ (४६०६०)
ततोऽर्जुनः शरव्रातैर्नानाप्रहरणैरपि ।
गान्धारानाकुलांश्चक्रे सौबलप्रमुखान्पुनः ॥ ७-३०-५ (४६०६१)
ततः पञ्चशतान्वीरान्गान्धारानुद्यतायुधान् ।
प्राहिणोन्मृत्युलोकाय क्रुद्धो बाणैर्धनञ्जयः ॥ ७-३०-६ (४६०६२)
हताश्वात्तु रथात्तूर्णमवतीर्य महाभुजः ।
आरुरोह रथं भ्रातुरन्यच्च धनुराददे ॥ ७-३०-७ (४६०६३)
तावेकरथमारूढौ भ्रातरौ वृषकाचलौ ।
शरवर्षेण बीभत्सुमविध्येतां मुहुर्मुहुः ॥ ७-३०-८ (४६०६४)
स्यालौ तव महात्मानौ राजानौ वृषकाचलौ ।
भृशं विजघ्नतुः पार्थमिन्द्रं वृत्रबलाविव ॥ ७-३०-९ (४६०६५)
लब्धलक्षौ तु गान्धारावहतां पाण्डवं पुनः ।
नैदाघवार्षिकौ मासौ लोकं घर्मांशुभिर्यथा ॥ ७-३०-१० (४६०६६)
तौ रथस्थौ नरव्याघ्रौ राजानौ वृषकाचलौ ।
संश्लिष्टाङ्गौ स्थितौ राजञ्जघानैकेषुणाऽर्जुनः ॥ ७-३०-११ (४६०६७)
तौ रथात्सिंहसंकाशौ लोहिताक्षौ महाभुजौ ।
राजन्सम्पेततुर्वीरौ सोदर्यावेकलक्षणौ ॥ ७-३०-१२ (४६०६८)
तयोर्भूमिं गतौ देहौ रथाद्बन्धुजनप्रियौ ।
यशो दशः दिशः पुण्यं गमयित्वा व्यवस्थितौ ॥ ७-३०-१३ (४६०६९)
दृष्ट्वा विनिहतौ सङ्ख्ये मातुलावपलायिनौ ।
भृशं मुमुचुरश्रूणि पुत्रास्तव विशांपते ॥ ७-३०-१४ (४६०७०)
निहतौ भ्रातरौ दृष्ट्वा मायाशतविशारदः ।
कृष्णौ सम्मोहन्मायां विदधे शकुनिस्ततः ॥ ७-३०-१५ (४६०७१)

लगुडायोगुडाश्मानः शतघ्न्यश्च सशक्तयः ।
गदापरिघनिस्त्रिंशशूलमुद्गरपट्टसाः ॥ ७-३०-१६ (४६०७२)
सकम्पनर्ष्टिनखरा मुसलानि परश्वथाः ।
क्षुराः क्षुरप्रनालीका वत्सदन्तास्थिसन्धयः ॥ ७-३०-१७ (४६०७३)
चक्राणि विशिखाः प्रासा विविधान्यायुधानि च ।
प्रपेतुः शतशो दिग्भ्यः प्रदिग्भ्यश्चार्जुनं प्रति ॥ ७-३०-१८ (४६०७४)
खरोष्ट्रमहिषाः सिंहा व्याघ्राः सृमरचित्रकाः ।
ऋक्षाः सालावृका गृध्राः कपयश्च सरीसृपाः ॥ ७-३०-१९ (४६०७५)
विविधानि च रक्षांसि क्षुधितान्यर्जुनं प्रति ।
सङ्क्रुद्धान्यभ्यधावन्त विविधानि वयांसि च ॥ ७-३०-२० (४६०७६)
ततो दिव्यास्त्रविच्छूरः कुन्तीपुत्रो धनञ्जयः ।
विसृजन्निषुजालानि सहसा तान्यताडयत् ॥ ७-३०-२१ (४६०७७)
ते हन्यमानाः शूरेण प्रवरैः सायकैर्दृढैः ।
विरुवन्तो महारावान्विनेशुः सर्वतो हताः ॥ ७-३०-२२ (४६०७८)
ततस्तमः प्रादुरभूदर्जुनस्य रथं प्रति ।
तस्माच्च तमसो वचाः क्रूराः पार्थमभर्त्सयन् ॥ ७-३०-२३ (४६०७९)
तत्तमो भैरवं घोरं भयकर्तृ महाहवे ।
उत्तमास्त्रेण महता ज्यौतिषेणार्जुनोऽवधीत् ॥ ७-३०-२४ (४६०८०)
हते तस्मिञ्जलौघास्तु प्रादुरासन्भयानकाः ।
अम्भसस्तस्य नाशार्थमादित्यास्त्रमथार्जुनः ।
प्रायुङ्क्ताम्भस्ततस्तेन प्रायशोऽस्त्रेण शोषितम् ॥ ७-३०-२५ (४६०८१)
एवं बहुविधा मायाः सौबलस्य कृताः कृताः ।
जघानास्त्रबलेनाशु प्रहसन्नर्जुनोऽब्रवीत् ॥ ७-३०-२६ (४६०८२)
ग्दुर्द्यूतदेविन्गान्धारे नाक्षान्क्षिपति गाण्डिवम् ।
ज्वलितान्निशितांस्तीक्ष्णाञ्शरान्क्षिपतिगाण्डिवं'॥ ७-३०-२७ (४६०८३)
तदा हतासु मायासु त्रस्तोऽर्जुनशराहतः ।
अपायाञ्जवनैरश्वैः शकुनिः प्राकृतो यथा ॥ ७-३०-२८ (४६०८४)
ततोऽर्जुनोऽस्त्रविच्छैघ्र्यं दर्शयन्नात्मनोऽरिषु ।
अभ्यवर्षच्छरौघेण कौरवाणामनीकिनीम् ॥ ७-३०-२९ (४६०८५)
सा हन्यमाना पार्थेन तव पुत्रस्य वाहिनी ।
द्वैधीभूता महाराज गङ्गेवासाद्य पर्वतम् ॥ ७-३०-३० (४६०८६)
द्रोणमेवान्वपद्यन्त केचित्तत्र नरर्षभाः ।
केचिद्दुर्योधनं राजन्नर्द्यमानाः किरीटिना ॥ ७-३०-३१ (४६०८७)
नापश्याम ततस्त्वेनं सैन्ये वै रजसावृते ।
गाण्डीवस्य च निर्घोषः श्रुतो दक्षिणतो मया ॥ ७-३०-३२ (४६०८८)
शङ्खदुन्दुभिनिर्घोषं वादित्राणां च निःस्वनम् ।

गाण्डीवस्य तु निर्घोषो व्यतिक्रम्यास्पृशद्दिवम् ॥ ७-३०-३३ (४६०८९)
ततः पुनर्दक्षिणतः सङ्ग्राममश्चित्रयोधिनाम् ।
सुयुद्धं चार्जुनस्यासीदहं द्रोणमन्वियाम् ॥ ७-३०-३४ (४६०९०)
यौधिष्ठिराण्यनीकानि प्रहरन्ति ततस्ततः ।
नानाविधान्यनीकानि पुत्राणां तव भारत ।
अर्जुनो व्यधमत्काले दिवीवाभ्राणि मारुतः ॥ ७-३०-३५ (४६०९१)
तं वासवमिवायान्तं भूरिवर्षं शरौघिणम् ।
महेष्वासा नरव्याघ्रा नोग्रं केचिदवारयन् ॥ ७-३०-३६ (४६०९२)
ते हन्यमानाः पार्थेन त्वदीया व्यथिता भृशम् ।
स्वानेव बहवो जघ्नुर्विद्रवन्तस्ततस्ततः ॥ ७-३०-३७ (४६०९३)
तेऽर्जुनेन शरा मुक्ताः कङ्कपत्रास्तनुच्छिदः ।
शलभा इव सम्पेतुः संवृण्वाना दिशो दश ॥ ७-३०-३८ (४६०९४)
तुरगं रथिनं नागं पदातिमपि मारिष ।
विनिर्भिद्य क्षितिं जग्मुर्वल्मीकमिव पन्नगाः ॥ ७-३०-३९ (४६०९५)
न च द्वितीयं व्यसृजत्कुञ्जराश्वनरेषु सः ।
पृथगेकशरारुग्णा निपेतुस्ते गतासवः ॥ ७-३०-४० (४६०९६)
हतैर्मनुष्यैर्द्विरदैश्च सर्वतः
शराभिसृष्टैश्च हयैर्निपातितैः ।
तदाऽश्वगोमायुबलाभिनादितं
विचित्रमायोधशिरो बभूव तत् ॥ ७-३०-४१ (४६०९७)
पिता सुतं त्यजति सुहृद्वरं सुहृत्
तथैव पुत्रः पितरं शरातुरः ।
स्वरक्षणे कृतमतयस्तदा जना
सत्यजन्ति वाहानपि पार्थपीडिताः ॥ ॥ ७-३०-४२ (४६०९८)

इति श्रीमन्महाभारते द्रोणपर्वणि द्रोणाभिषेकपर्वणि

Mahabharata - Drona Parva - Chapter Footnotes

५-३०-१० वर्षशब्दोऽयमृतुवचनः
। निदाघर्तुसम्बन्धिनावित्यर्थः। घर्मांशुभिस्तीक्ष्णकिरणैः। लोकं घर्मोम्बुभिर्यथा इति क ङ पाठः ॥
५-३०-१७ कम्पनयष्ट्यः । क्षुरा क्षुराकृतिफलकाः। क्षुरप्रास्तूग्रमध्यफलकाः। नालीका नलिकया क्षेप्याः। वत्सदन्ता गोपोतकदन्ताकारफलकाः। अस्थिसन्धयोऽस्थिमयफलकाः ॥
५-३०-१८ विशिखाः फणित्राकारफलकाः ॥
५-३०-१९ सूमरा गवयाः । चित्रको व्याघ्रभेदः। सालावृकाः श्वानः ॥

५-३०-३२ एनमर्जुनम् ॥
५-३०-४१ शराभिसृष्टैर्बाणाभिहतैः ।आयोधशिरो रणाङ्गणम् ॥
५-३०-३० त्रिंशोऽध्यायः ॥

---

द्रोनपर्व-अध्यय०३१
॥ श्रीः ॥
७.३१. अध्यायः ३१

Mahabharata - Drona Parva - Chapter Topics
अश्वत्थाम्ना नीलस्य वधः ॥१ ॥

Mahabharata - Drona Parva - Chapter Text

७-३१-० (४६०९९)
धृतराष्ट्र उवाच। ७-३१-०क्ष् (४३२९)
तेष्वनीकेषु भग्नेषु पाण्डुपुत्रेण सञ्जय। ५-३१-१ब्चलितानां
द्रुतानां च कथमासीन्मनांसि वः ॥ ७-३१-१ (४६१००)
आनीकानां प्रभग्नानामवस्थानमपश्यताम् ।
दुष्करं प्रतिसन्धानं तन्ममाचक्ष्व सञ्जय ॥ ७-३१-२ (४६१०१)
सञ्जय उवाच। ७-३१-३क्ष् (४३३०)
तथापि तव पुत्रस्य प्रियकामा विशाम्पते ।
यशः प्रवीरा लोकेषु रक्षन्तो द्रोणमन्वयुः ॥ ७-३१-३ (४६१०२)
समुद्यतेषु चास्त्रेषु सम्प्राप्ते च युधिष्ठिरे ।
अकुर्वन्नार्यकर्माणि भैरवे सत्यभीतवत् ॥ ७-३१-४ (४६१०३)
अन्तरं भीमसेनस्य प्रापतन्नमितौजसः ।
सात्यकेश्चैव वीरस्य धृष्टद्युम्नस्य वा विभो ॥ ७-३१-५ (४६१०४)
द्रोणं द्रोणमिति क्रूराः पाञ्चालाः समचोदयन् ।
मा द्रोणमिति पुत्रास्ते कुरून्सर्वानचोदयन् ॥ ७-३१-६ (४६१०५)
द्रोणं द्रोणमिति ह्येके मा द्रोणमिति चापरे ।
कुरूणां पाण्डवानां च द्रोणद्यूतमवतेत ॥ ७-३१-७ (४६१०६)
यंयं प्रमथते द्रोणः पाञ्चालानां रथव्रजम् ।
तत्रतत्र तु पाञ्चाल्यो धृष्टद्युम्नोऽभ्यवर्तत ॥ ७-३१-८ (४६१०७)
तेषां भाग्यविपर्यासैः सङ्ग्रामे भैरवे सति ।
वीराः समासदन्वीरान्कुर्वन्तो भैरवं रवम् ॥ ७-३१-९ (४६१०८)
अकम्पनीयाः शत्रूणां बभूवुस्तत्र पाण्डवाः ।
अकम्पयन्ननीकानि स्मरन्तः क्लेशमात्मनः ॥ ७-३१-१० (४६१०९)

ते त्वमर्षवशं प्राप्ता ह्रीमन्तः सत्वचोदिताः ।
त्यक्त्वा प्राणान्न्यवर्तन्त घ्नन्तो द्रोणं महाहवे ॥ ७-३१-११ (४६११०)
अयासमिव सम्पातः शिलानामिव चाभवत् ।
दीव्यतां तुमुले युद्धे प्राणैरमिततेजसाम् ॥ ७-३१-१२ (४६१११)
नानुस्मरन्ति सङ्ग्राममपि वृद्धास्तथाविधम् ।
ये पूर्वदेवैर्देवानामपश्यन्युद्धमद्भुतम् ॥ ७-३१-१३ (४६११२)
प्राकम्पतेव पृथिवी तस्मिन्वीरावसादने ।
निवर्तता बलौघेन महता भारपीडिता ॥ ७-३१-१४ (४६११३)
घूर्णतोऽपि बलौघस्य दिवं स्तब्ध्वेव निःस्वनः ।
अजातशत्रोस्तत्सैन्यमाविवेश सुभैरवः ॥ ७-३१-१५ (४६११४)
समासाद्य तु पाण्डूनामनीकानि सहस्रशः ।
द्रोणेन चरता सङ्ख्ये प्रभग्नानि शितैः शरैः ॥ ७-३१-१६ (४६११५)
तेषु प्रमथ्यमानेषु द्रोणेनाद्भुतकर्मणा ।
पर्यवरायदासाद्य द्रोणं सेनापतिः स्वयम् ॥ ७-३१-१७ (४६११६)
तदद्भुतमभूद्युद्धं द्रोणपाञ्चालयोस्तथा ।
नैव तस्योपमा काचिदिति मे निश्चिता मतिः ॥ ७-३१-१८ (४६११७)
ततो नीलोऽनलप्रख्यो ददाह कुरुवाहिनीम् ।
शरस्फुलिङ्गश्चापार्चिर्दहन्कक्षमिवानलः ॥ ७-३१-१९ (४६११८)
तं दहन्तमनीकानि द्रोणपुत्रः प्रतापवान् ।
पूर्वाभिभाषी सुश्लक्ष्णं स्मयमानोऽभ्यभाषत ॥ ७-३१-२० (४६११९)
नील किं बहुभिर्दग्धैस्तव योधैः सरार्चिषा ।
मयैकेन हि युध्यस्व क्रुद्धः प्रहर चाशु माम् ॥ ७-३१-२१ (४६१२०)
तं पद्मनिकराकारं पद्मपत्रनिभेक्षणम् ।
व्याकोशपद्माभमुखो नीलो विव्याध सायकैः ॥ ७-३१-२२ (४६१२१)
तेनापि विद्धः सहसा द्रौणिर्भल्लैः शितैस्त्रिभिः ।
धनुर्ध्वजं च च्छत्रं च द्विषतः सन्न्यकृन्तत ॥ ७-३१-२३ (४६१२२)
स प्लुतः स्यन्दनात्तस्मान्नीलश्चर्मवरासिभृत् ।
द्रौणायनेः शिरः कायाद्धर्तुमैच्छत्पतत्त्रिवत् ॥ ७-३१-२४ (४६१२३)
तस्योद्यतासेः सुनसं शिरः कायात्सकुण्डलम् ।
भल्लेनापाहरद्द्रौणिः स्मयमान इवानघ ॥ ७-३१-२५ (४६१२४)
सम्पूर्णचन्द्राभमुखः पद्मपत्रनिभेक्षणः ।
प्रांशुरुत्पलपत्राभो निहतो न्यपतद्भुवि ॥ ७-३१-२६ (४६१२५)
ततः प्रविव्यथे सेना पाण्डवी भृशमाकुला ।
आचार्यपुत्रेण हते नीले ज्वलिततेजसि ॥ ७-३१-२७ (४६१२६)
अचिन्तयंश्च ते सर्वे पाण्डवानां महारथाः ।
कथं नो वासविस्त्रायाच्छत्रुभ्य इति मारिष ॥ ७-३१-२८ (४६१२७)

दक्षिणेन तु सेनायाः कुरुते कदनं बली ।
संशप्तकावशेषस्य नारायणबलस्य च ॥ ॥ ७-३१-२९ (४६१२८)

इति श्रीमन्महाभारते द्रोणपर्वणि संशप्तकवधपर्वणि
द्वादशदिवसयुद्धे एकत्रिंशोऽध्यायः ॥ ३१ ॥
Mahabharata - Drona Parva - Chapter Footnotes

५-३१-५ अन्तरं छिद्रम् । प्रापतन्सृतवन्तः ॥
५-३१-७ पाण्डवान्याम इत्येव मा द्रोणमिति चापरे इति कः पाठः ॥
५-३१-९ समासदन्प्रतिगतवन्तः ॥
५-३१-११ न्यवर्तन्त भयेभ्यो निवृत्ताः । सत्यचोदिताः इति
क ख ङ । पाठः ॥
५-३१-३१ एकत्रिंशोऽध्यायः ॥

---

द्रोनपर्व-अध्यय०३२
॥ श्रीः ॥
७.३२. अध्यायः ३२

Mahabharata - Drona Parva - Chapter Topics
सङ्कुलयुद्धवर्णनम् ॥ १ ॥

Mahabharata - Drona Parva - Chapter Text

७-३२-० (४६१२९)
सञ्जय उवाच। ७-३२-०क्ष् (४३३१)
प्रतिघातं तु सैन्यस्य नामृष्यत वृकोदरः ।
सोऽभ्याहनद्गुरुं षष्ट्या कर्णं च दशभिः शरैः ॥ ७-३२-१ (४६१३०)
तस्य द्रोणः शितैर्बाणैस्तीक्ष्णधारैरजिह्मगैः ।
जीवितान्तमभिप्रेप्सुर्मर्मण्याशु जघान ह ॥ ७-३२-२ (४६१३१)
आनन्तर्यमभिप्रेप्सुः षड्विंशत्या शमार्पयत् ।
कर्णो द्वादशभिर्बाणैरश्वत्थामा च सप्तभिः ॥ ७-३२-३ (४६१३२)
षड्भिर्दुर्योधनो राजा तत एनमथाकिरत् ।
भीमसेनोऽपि तान्सर्वान्प्रत्यविध्यन्महाबलः ॥ ७-३२-४ (४६१३३)
द्रोणं पञ्चाशतेषूणां कर्णं च दशभिः शरैः ।
दर्योधनं द्वादशभिर्द्रौणिमष्टाभिराशुगैः ॥ ७-३२-५ (४६१३४)
आरावं तुमुलं कुर्वन्नभ्यवर्तत तान्रणे ।

तस्मिन्सन्त्यति प्रामान्मृत्युसाधारणीकृते ॥ ७-३२-६ (४६१३५)
अजातशत्रुस्तान्योधान्भीमं त्रातेत्यचोदयत् ।
ते ययुर्भीमसेनस्य समीपममितौजसः ॥ ७-३२-७ (४६१३६)
युयुधानप्रभृतयो माद्रीपुत्रौ च पाण्डवौ ।
ते समेत्य सुसंरब्धाः सहिताः पुरुषर्षभाः ॥ ७-३२-८ (४६१३७)
महेष्वासवरैर्गुप्ता द्रोणानीकं बिभित्सवः ।
समापेतुर्महावीर्या भीमप्रभृतयो रथाः ॥ ७-३२-९ (४६१३८)
तान्प्रत्यगृह्णादव्यग्रो द्रोणोऽपि रथिनां वरः ।
महारथानतिबलान्वीरान्समरयोधिनः ॥ ७-३२-१० (४६१३९)
बाह्यं मृत्युभयं कृत्वा तावकान्पाण्डवा ययुः ।
सादिनः सादिनोऽभ्यघ्नंस्तथैव रथिनो रथान् ॥ ७-३२-११ (४६१४०)
असिशक्त्यृष्टिसङ्घातैर्युद्धमासीत्परश्वथैः ।
प्रकृष्टमसियुद्धं च बभूव कटुकोदयम् ॥ ७-३२-१२ (४६१४१)
कुञ्जराणां च सम्पाते युद्धमासीत्सुदारुणम् ।
अपतत्कुञ्जरादन्यो हयादन्यस्त्ववाक्शिराः ॥ ७-३२-१३ (४६१४२)
नरो बाणविनिर्भिन्नो रथादन्यश्च मारिष ।
तत्रान्यस्य च सम्पर्दे पतितस्य विवर्मणः ॥ ७-३२-१४ (४६१४३)
शिरः प्रध्वंसयामास वक्षस्याक्रम्य कुञ्जरः ।
अपरांश्चापरेऽमृद्नन्वारणाः पतितान्नरान् ॥ ७-३२-१५ (४६१४४)
विषाणैश्चावनिं गत्वा व्यभिन्दन्रथिनो बहून् ।
नरान्त्रैः केचिदपरे विषाणालग्नसंश्रयैः ॥ ७-३२-१६ (४६१४५)
बभ्रमुः समरे नागा मृद्नन्तः शतशो नरान् ।
कार्ष्णायसतनुत्राणान्नराश्वरथकुञ्जरान् ॥ ७-३२-१७ (४६१४६)
पतितान्पोथयाञ्चक्रुर्द्विपाः स्थूलनलानिव ।
गृध्रपत्राधिवासांसि शयनानि नारधिपाः ॥ ७-३२-१८ (४६१४७)
ह्रीमन्तः कालसम्पर्कात्सुदुःस्वान्यनुशेरते ।
हन्ति स्मात्र पिता पुत्रं रथेनाभ्येत्य संयुगे ॥ ७-३२-१९ (४६१४८)
पुत्रश्च पितरं मोहान्निर्मर्यादमवर्तत ।
रथो भग्नो ध्वजश्छिन्नश्छत्रमुर्व्यां निपातितम् ॥ ७-३२-२० (४६१४९)
युगार्धं च्छिन्नमादाय प्रदुद्राव तथा हयः ।
सासिर्बाहुर्निपतितः शिरश्छिन्नं सकुण्डलम् ॥ ७-३२-२१ (४६१५०)
गजेनाक्षिप्य बलिना रथः सञ्चूर्णितः क्षितौ ।
रथिना ताडितो नागो नाराचेनापतत्क्षितौ ॥ ७-३२-२२ (४६१५१)
सारोहश्चापतद्वाजी गेजेनाभ्याहतो भृशम् ।
निर्मर्यादं महद्युद्धमवर्तत सुदारुणम् ॥ ७-३२-२३ (४६१५२)
हा तात हा पुत्र सखे क्वासि तिष्ठ क्व धावसि ।

प्रहराहर जह्येनं स्मितश्वेडितगर्जितैः ।
इत्येवमुच्चैरत्यर्थं श्रूयन्ते विविधा गिरः ॥ ७-३२-२४ (४६१५३)
नरस्याश्वस्य नागस्य समसज्जत शोणितम् ।
उपाशाम्यद्रजो भौमं भीरून्कश्मलमाविशत् ॥ ७-३२-२५ (४६१५४)
चक्रेण चक्रमासाद्य वीरो वीरस्य संयुगे ।
अतीतेषुपथे काले जहार गदया सिरः ॥ ७-३२-२६ (४६१५५)
असीत्केशपरामर्शो मुष्टियुद्धं च दारुणम् ।
नखैर्दन्तैश्च सूराणामद्वीपे द्वीपमिच्छताम् ॥ ७-३२-२७ (४६१५६)
तत्राच्छिद्यत शूरस्य सखड्गो बाहुरुद्यतः ।
सधुनश्चापरस्यापि सशरः साङ्कुशस्तथा ॥ ७-३२-२८ (४६१५७)
आक्रोशदन्यमन्योऽत्र तथाऽन्यो विमुखोऽद्रवत् ।
अन्यः प्राप्तस्य चान्यस्य शिरः कायादपाहरत् ॥ ७-३२-२९ (४६१५८)
सशब्दमद्रवच्चान्यः शब्दादन्योऽत्रसङ्भृशम् ।
स्वानन्योऽथ परानन्यो जघान निशितैः शरैः ॥ ७-३२-३० (४६१५९)
गिरिशृङ्गोपमश्चात्र नाराचेन निपातितः ।
मातङ्गो न्यपतद्भूमौ नदीरोध इवोष्णगे ॥ ७-३२-३१ (४६१६०)
तथैव रथिनं नागः क्षरन्गिरिरिवारुजन् ।
अभ्यतिष्ठत्पदा भूमौ सहाश्वं सहसारथिम् ॥ ७-३२-३२ (४६१६१)
शूरान्प्रहरतो दृष्ट्वा कृताश्स्त्रान्रुधिरोक्षितान् ।
बहूनप्याविशन्मोहो भीरून्हृदयदुर्बलान् ॥ ७-३२-३३ (४६१६२)
सर्वमाविग्नमभवन्न प्राज्ञायत किञ्चन ।
सैन्येन रजसा ध्वस्तं निर्मर्यादमवर्तत ॥ ७-३२-३४ (४६१६३)
ततः सेनापतिः शीघ्रमयं क्राल इति ब्रुवन् ।
नित्याभित्वरितानेव त्वरयामास पाण्डवान् ॥ ७-३२-३५ (४६१६४)
कुर्वन्तः शासनं तस्य पाण्डवा बाहुशालिनः ।
सरो हंसा इवापेतुर्घ्नन्तो द्रोणरथं प्रति ॥ ७-३२-३६ (४६१६५)
गृह्णीताद्रवतान्योन्यं विभीता विनिकृन्तत ।
इत्यासीत्तुमुलः शब्दो दुर्धर्षस्य रथं प्रति ॥ ७-३२-३७ (४६१६६)
ततो द्रोणः कृपः कर्णो द्रौणी राजा जयद्रथः ।
विन्दानुविन्दावावन्त्यौ शल्यश्चैतान्न्यवारयन् ॥ ७-३२-३८ (४६१६७)
ते त्वार्यधर्मसंरब्धा दुर्निवारा दुरासदाः ।
शरार्ता न जहुर्द्रोणं पाञ्चालाः पाण्डवै सह ॥ ७-३२-३९ (४६१६८)
ततो द्रोणोऽतिसंक्रुद्धो विसृजञ्शतशः शरान् ।
चेदिपाञ्चालपाण्डूनामकरोत्कदनं महत् ॥ ७-३२-४० (४६१६९)
तस्य ज्यातलनिर्घोषः शुश्रुवे दिक्षं मारिष ।
वज्रसंह्रादसङ्काशस्त्रासयन्मानवान्बहून् ॥ ७-३२-४१ (४६१७०)

एतस्मिन्नन्तरे जिष्णुर्जित्वा संशप्तकान्बहून् ।
अभ्ययात्तत्र यत्रासौ द्रोणः पाण्डून्प्रमर्दति ॥ ७-३२-४२ (४६१७१)
ताञ्शरौघान्महावर्ताञ्शोणितोदान्महाहदान् ।
तीर्णः संशप्तकान्हत्वा प्रत्यदृश्यत फल्गुनः ॥ ७-३२-४३ (४६१७२)
तस्य कीर्तिमतो लक्ष्म सूर्यप्रतिमतेजसः ।
दीप्यमानमपश्याम तेजसा वानरध्वजम् ॥ ७-३२-४४ (४६१७३)
संशप्तकसमुद्रं तमुच्छोष्यास्त्रगभस्तिभिः ।
स पाण्डवयुगान्तार्कः कुरूनप्यभ्यतीतपत् ॥ ७-३२-४५ (४६१७४)
प्रददाह कुरून्सर्वानर्जुनः शस्त्रतेजसा ।
युगान्ते सर्वभूतानि धूमकेतुरिवोत्थितः ॥ ७-३२-४६ (४६१७५)
तेन बाणसहस्रौघैर्गजाश्वरथयोधिनः ।
ताड्यमानाः क्षितिं जग्मुर्मुक्तकेशाःशरार्दिताः ॥ ७-३२-४७ (४६१७६)
केचिदार्तस्वनं चक्रुर्विनेशुरपरे पुनः ।
पार्थबाणहताः केचिन्निपेतुर्विगतासवः ॥ ७-३२-४८ (४६१७७)
तेषामुत्पतितान्कांश्चित्पतितांश्च पराङ्मुखान् ।
न जघानार्जुनो योधान्योधव्रतमनुस्मरन् ॥ ७-३२-४९ (४६१७८)
ते विकीर्णरथाश्चित्राः प्रायशश्च पराङ्मुखः ।
कुरवः कर्णकर्णेति हाहेति च विचुक्रुशुः ॥ ७-३२-५० (४६१७९)
तमाधिरथिराक्रन्दं विज्ञाय शरणैषिणाम् ।
मा भैष्टेति प्रतिश्रुत्य ययावभिमुखोऽर्जुनम् ॥ ७-३२-५१ (४६१८०)
स भारतरथश्रेष्ठः सर्वभारतहर्षणः ।
प्रादुश्चक्रे तदाग्नेयमस्त्रमस्त्रविदां वारः ॥ ७-३२-५२ (४६१८१)
तस्य दीप्तशरौघस्य दीप्तचापधरस्य च ।
ग्वारुणेन तदस्त्रेण विधूयाथ धनञ्जयः'।
शरौघाञ्शरजालेन विदुधाव धनञ्जयः ॥ ७-३२-५३ (४६१८२)
तथैवाधिरथिस्तस्य बाणाज्ज्वलिततेजसः ।
अस्त्रमस्त्रेण संवार्य प्राणदद्विसृजञ्शरान् ॥ ७-३२-५४ (४६१८३)
धृष्टद्युम्नश्च भीमश्च सात्यकिश्च महारथः ।
विव्यधुः कर्णमासाद्य त्रिभिस्त्रिभिरजिह्मगैः ॥ ७-३२-५५ (४६१८४)
अर्जुनास्त्रं तु राधेयः संवार्य शरवृष्टिभिः ।
तेषां त्रयाणां चापानि चिच्छेद विशिखैस्त्रिभिः ॥ ७-३२-५६ (४६१८५)
ते निकृत्तायुधाः शूरा निर्विषा भुजगा इव ।
रथशक्तीः समुत्क्षिप्य भृशं सिंहा इवानदन् ॥ ७-३२-५७ (४६१८६)
ता भुजाग्रैर्महावेगा निसृष्टा भुजगोपमाः ।
दीप्यमाना महाशक्त्यो जग्मुराधिरथिं प्रति ॥ ७-३२-५८ (४६१८७)
ता निकृत्य शरव्रातैस्त्रिभिस्त्रिभिरजिह्मगैः ।

ननाद बलवान्कर्णः पार्थाय विसृजञ्शरान् ॥ ७-३२-५९ (४६१८८)
अर्जुनश्चापि राधेयं विद्ध्वा सप्तभिराशुगैः ।
कर्णादवरजं बाणैर्जघान निशितैः शरैः ॥ ७-३२-६० (४६१८९)
ततः शत्रुंजयं हत्वा पार्थः षड्भिरजिह्मगैः ।
जहार सद्यो भल्लेन विपाटस्य शिरो रथात् ॥ ७-३२-६१ (४६१९०)
पश्यतां धार्तराष्ट्राणामेकेनैव किरीटिना ।
प्रमुखे सूतपुत्रस्य सोदर्या निहतास्त्रयः ॥ ७-३२-६२ (४६१९१)
ततो भीमः समुत्पत्य स्वरथाद्वैनतेयवत् ।
वरासिना कर्णपक्षाञ्जधान दश पञ्च च ॥ ७-३२-६३ (४६१९२)
पुनस्तु रथमास्थाय धनुरादाय चापरम् ।
विव्याध दशभिः कर्णं सूतमश्वांश्च पञ्चभिः ॥ ७-३२-६४ (४६१९३)
धृष्टद्युम्नोऽप्यसिवरं चर्म चादाय भास्वरम् ।
जघान चन्द्रवर्माणं बृहत्क्षत्रं च नैषधम् ॥ ७-३२-६५ (४६१९४)
ततः स्वरथमास्थाय पाञ्चाल्योऽन्यच्च कार्मुकम् ।
आदाय कर्णं विव्याध त्रिसप्तत्या नदन्रणे ॥ ७-३२-६६ (४६१९५)
शैनेयोऽप्यन्यदादाय धनुरिन्दुसमद्युतिः ।
सूतपुत्रं चतुःषष्ट्या विद्ध्वा सिंह इवानदत् ॥ ७-३२-६७ (४६१९६)
भल्लाभ्यां साधु मुक्ताभ्यां छित्त्वा कर्णस्य कार्मुकम् ।
पुनः कर्णं त्रिभिर्बाणैर्बाह्वोरुरसि चार्पयत् ॥ ७-३२-६८ (४६१९७)
ततो दुर्योधनो द्रोणो राजा चैव जयद्रथः ।
निमज्जमानं राधेयमुज्जह्रुः सात्यकार्णवात् ॥ ७-३२-६९ (४६१९८)
पत्त्यश्वरथमातङ्गास्त्वदीयाः शतशोऽपरे ।
कर्णमेवाभ्यधावन्त त्रास्यमानाः प्रहारिणः ॥ ७-३२-७० (४६१९९)
धृष्टद्युम्नश्च भीमश्च सौभद्रोऽर्जुन एव च ।
नकुलः सहदेवश्च सात्यकिं जुगुपू रणे ॥ ७-३२-७१ (४६२००)
एवमेष महारौद्रः क्षयार्थं सर्वधन्विनाम् ।
तावकानां परेषां च त्यक्त्वा प्राणानभूद्रणः ॥
पदातिरथनागाश्वा गजाश्वरथपत्तिभिः ।
रथिनो नागपत्त्यश्वैरथ पत्तीरथ द्विपैः ॥ ७-३२-७२ (४६२०१)
अश्वैरश्वा गजैर्नागा रथिनो रथिभिः सह ।
संयुक्ताः समदृश्यन्त पत्तयश्चापि पत्तिभिः ॥
एवं सुकलिलं युद्धमासीत्क्रव्यादहर्षणम् ।
महद्भिस्तैरभीतानां यमराष्ट्रविवर्धनम् ॥ ७-३२-७४ (४६२०२)
ततो हता नररथवाजिकुञ्जरै
रनेकशो द्विपरथपत्तिवाजिनः ।
गजैर्गजा रथिभिरुदायुधा रथा ।

हयैर्हयाः पत्तिगणैश्च पत्तयः ॥ ७-३२-७६ (४६२०३)
रथैर्द्विपा द्विरदवरैर्महाहया
हयैर्नरा वररथिभिश्च वाजिनः ।
निरस्तजिह्वादशनेक्षणाः क्षितौ
क्षयं गताः प्रमथितवर्मभूषणाः ॥ ७-३२-७७ (४६२०४)
तथा परैर्बहुकरणैर्वरायुधै-
र्हता गताः प्रतिभयदर्शनाः क्षितिम् ।
विपोथिता हयगजपादताडिता
भृशाकुला रथमुखनेमिभिः क्षताः ॥ ७-३२-७८ (४६२०५)
प्रमोदने श्वापदपक्षिरक्षसां
जनक्षये वर्तति तत्र दारुणे ।
महाबलास्ते कुपिताः परस्परं
निषूदयन्तः प्रविचेरुरोजसा ॥ ७-३२-७९ (४६२०६)
ततो बले भृशलुलिते परस्परं
निरीक्षमाणे रुधिरौघसम्प्लुते ।
दिवाकरेऽस्तंगिरिमास्थिते शनै
रुभे प्रयाते शिबिराय भारत ॥ ॥ ७-३२-८० (४६२०७)

इति श्रीमन्महाभारते द्रोणपर्वणि संशप्तकवधपर्वणि
द्वादशदिवसयुद्धावहारे द्वात्रिंशोऽध्यायः ॥ ३२ ॥
Mahabharata - Drona Parva - Chapter Footnotes

५-३२-६ मृत्युसाधारणीकृते मरणतुल्यावस्थां गमिते ॥
५-३२-१२ कटुकस्य परुषस्योदयो यत्र ॥
५-३२-१६ अविनं गत्वा अभित्य । विषाणालग्नसंश्रयैः दन्तलग्नैकदेशैः ॥
५-३२-१८ गृध्रपक्षाधिवासांसि गृध्रपक्षास्तरणानि ॥
५-३२-२५ समसज्जत घनतामगमत् ॥
५-३२-२६ अतीतः इषुपथः शरावकाशो यत्र ॥
५-३२-२७ द्वीपमाश्रयम् ॥
५-३२-२९ आक्रोशत् आहूतवान् ॥
५-३२-३२ क्षरन्मदमिति शेषः । रथिनं तथैव सहसारथिं
अर्थाद्रथं च पदा आरुजन् भूमौ अभ्यतिष्ठदित्यन्वयः ॥
५-३२-३७ विभीता अभीताः । दुर्धर्षस्य द्रोणस्य ॥
५-३२-३९ आर्यधर्मेण संरब्धाः सोद्यमाः ॥
५-३२-५३ विदुधाव खण्डितवान् ॥
५-३२-६१ विघातस्य शिर इति क पाठः ॥

५-३२-७२ प्राणांस्त्यक्त्वा युध्यतामिति शेषः ॥
५-३२-७५ अभीतानामभिमुखागतानां भयहीनानां वा ॥
५-३२-७८ बहुकरणैरनेकप्रक्रियैः । रथमुखानां रथमुख्यानां नेमिभिश्चक्रान्तैः ॥
५-३२-३२ द्वात्रिंशोऽध्यायः ॥

---

द्रोनपर्व-अध्यय०३३
॥ श्रीः ॥
७.३३. अध्यायः ३३

Mahabharata - Drona Parva - Chapter Topics
युधिष्ठिरस्याग्रहणात् दुर्मनायमानं दुर्योधनं प्रति द्रोणेन कस्यचिन्महारथस्य हननप्रतिज्ञा ॥ १ ॥
सञ्जयेन धृतराष्ट्रं प्रति सङ्क्षेपतोऽभिमन्युवधकथनम् ॥ २ ॥

Mahabharata - Drona Parva - Chapter Text

७-३३-० (४६२०८)
सञ्जय उवाच। ७-३३-०क्ष् (४३३२)
पूर्वमस्मासु भग्नेषु फल्गुगेनामितौजसा ।
द्रोणे च मोघसङ्कल्पे रक्षिते च युधिष्ठिरे ॥ ७-३३-१ (४६२०९)
सर्वे विध्वस्तकवचास्तावका युधि निर्जिताः ।
रजस्वला भृशोद्विग्ना वीक्षमाणा दिशो दश ॥ ७-३३-२ (४६२१०)
अवहारं ततः कृत्वा भारद्वाजस्य सम्मते ।
लब्धलक्षैः शरैर्भिन्ना भृशावहसिता रणे ॥ ७-३३-३ (४६२११)
श्लाघमानेषु भूतेषु फल्गुनस्यामितान्गुणान् ।
केशवस्य च सौहार्दे कीर्त्यमानेऽर्जुनं प्रति ॥ ७-३३-४ (४६२१२)
अभिशस्ता इवाभूवन्ध्यानमूकत्वमास्थिताः ।
ततः प्रभातसमये द्रोणं द्रुयोधनोऽब्रवीत् ॥ ७-३३-५ (४६२१३)
प्रणयादभिमानाच्च द्विषद्वृद्ध्या च दुर्मनाः ।
शृण्वतां सर्वयोधानां संरब्धो वाक्यकोविदः ॥ ७-३३-६ (४६२१४)
नूनं वयं वध्यपक्षे भवतो द्विजसत्तम ।
तथाहि नाग्रहीः प्राप्तं समीपेऽद्य युधिष्ठिरम् ॥ ७-३३-७ (४६२१५)
इच्छतस्ते न मुच्येत चक्षुःप्राप्तो रणे रिपुः ।
जिघृक्षतो रक्ष्यमाणः सामरैरपि पाण्डवैः ॥ ७-३३-८ (४६२१६)
वरं दत्त्वा मम प्रीतः पश्चाद्विकृतवानसि ।

आशाभङ्गं न कुर्वन्ति भक्तस्यार्याः कथञ्चन ॥ ७-३३-९ (४६२१७)
सञ्जय उवाच। ७-३३-१०क्ष् (४३३३)
ततोऽप्रीतस्तथोक्तः सन्भारद्वाजोऽब्रवीन्नृपम् ।
नार्हसे मां तथा ज्ञातुं घटमानं तव प्रिये ॥ ७-३३-१० (४६२१८)
ससुरासुरगन्धर्वाः सयक्षोरगराक्षसाः ।
नालं लोका रणे जेतुं पाल्यमानं किरीटिना ॥ ७-३३-११ (४६२१९)
विश्वसृग्यत्र गोविन्दः पृतनानीस्तथाऽर्जुनः ।
तत्र कस्य बलं क्रामेदन्यत्र त्र्यम्बकात्प्रभोः ॥ ७-३३-१२ (४६२२०)
सत्यं तात ब्रवीम्यद्य नैतज्जात्वन्यथा भवेत् ।
अद्यैकं प्रवरं कञ्चित्पातयिष्ये महारथम् ॥ ७-३३-१३ (४६२२१)
चक्रब्यूहं विधास्यामि योऽभेद्यस्त्रिदशैरपि ।
योगेन केनचिद्राजन्नर्जुनस्त्वपनीयताम् ॥ ७-३३-१४ (४६२२२)
न ह्यज्ञातमसाध्यं वा तस्य सङ्ख्येऽस्ति किञ्चन ।
तेन ह्युपात्तं सकलं सर्वज्ञानमितस्ततः ॥ ७-३३-१५ (४६२२३)
द्रोणेन व्याहृते त्वेवं संशप्तकगणाः पुनः ।
आह्वयन्नर्जुनं सङ्ख्ये दक्षिणामभितो दिशम् ॥ ७-३३-१६ (४६२२४)
ततोऽर्जुनस्याथ परैः सार्धं समभवद्रणः ।
तादृशो यादृशो नान्यः श्रुतो दृष्टोपि वा क्वचित्। ७-३३-१७ (४६२२५)
तत्र द्रोणेन विहितो व्यूहो राजन्व्यरोचत ।
चरन्मध्यन्दिने सूर्यः प्रतपन्निव दुर्दृशः ॥ ७-३३-१८ (४६२२६)
तं चाभिमन्युर्वचनात्पितुर्ज्येष्ठस्य भारत ।
बिभेद दुर्भिदं सङ्ख्ये चक्रव्यूहमनेकधा ॥ ७-३३-१९ (४६२२७)
स कृत्वा दुष्करं कर्म हत्वा वीरान्सहस्रशः ।
राजपुत्रशतं हत्वा कौसल्यं च बृहद्बलम् ॥ ७-३३-२० (४६२२८)
महारथं शल्यपुत्रं पौत्रं ते लक्ष्मणं तथा ।
षट्सु वीरेषु संसक्तो दौःशासनिवशं गतः ।
सौभद्रः पृथिवीपाल जहौ प्राणान्परन्तप ॥ ७-३३-२१ (४६२२९)
वयं परमसंहृष्टाः पाण्डवाः शोककर्शिताः ।
सौभद्रे निहते राजन्नवहारमकुर्महि ॥ ७-३३-२२ (४६२३०)
ग्जनमेजय उवाच। ७-३३-२३क्ष् (४३३४)
समरोद्युक्तकर्माणः कर्मभिर्व्यञ्जितश्रमाः ।
सकृष्णाः पाण्डवाः पञ्च देवैरपि दुरासदाः ॥ ७-३३-२३ (४६२३१)
शश्वत्कर्मान्वयैर्बुद्ध्या प्रकृत्या यशसा श्रिया ।
न भूतो भविता वापि कृष्णस्य सदृशः पुमान् ॥ ७-३३-२४ (४६२३२)
सत्यधर्मतपोदानैर्द्विजपूजादिभिर्गुणैः ।
सदेहस्त्रिदिवं प्राप्तो राजा किल युधिष्ठिरः ॥ ७-३३-२५ (४६२३३)

युगान्ते चान्तकश्चैव जामदग्न्यश्च कीर्तिमान् ।
रणस्थो भीमसेनश्च कथ्यन्ते सदृशास्त्रयः ॥ ७-३३-२६ (४६२३४)
प्रतिज्ञाकर्मदक्षस्य रणे गाण्डीवधन्वनः ।
उपमां नाधिगच्छामि पार्थस्य सदृशीं क्षितौ ॥ ७-३३-२७ (४६२३५)
गुरुवात्सल्यमत्यन्तं नैभृत्यं विनयो दमः ।
नकुले त्वाभिरूप्यं च शौर्यं च नियतानि षट् ॥ ७-३३-२८ (४६२३६)
श्रुतमाधुर्यगाम्भीर्यसत्त्वरूपपराक्रमैः ।
सदृशो देवयोर्वीरः सहदेवः किलाश्विनोः ॥ ७-३३-२९ (४६२३७)
ये च कृष्णे गुणाः स्फीताः पाण्डवेषु च ये गुणाः ।
अभिमन्यौ किलैकस्था दृश्यन्ते ते गुणाः शुभाः ॥ ७-३३-३० (४६२३८)
युधिष्ठिरस्य शौर्येण कृष्णस्य चरितेन च ।
कर्मणा भीमसेनस्य सदृशं भीमकर्मणः ॥ ७-३३-३१ (४६२३९)
धनञ्जयस्य रूपेण विक्रमेण शुभेन च ।
विनये सहदेवस्य सदृशं नकुलस्य च ॥ ७-३३-३२ (४६२४०)
अभिमन्युं द्विजश्रेष्ठ सौभद्रमपराजितम् ।
श्रोतुमिच्छामि कार्त्स्न्येन कथमायोधने हतः ॥ ७-३३-३३ (४६२४१)
वैशंपायन उवाच। ७-३३-३४क्ष् (४३३५)
अभिमन्युं हतं श्रुत्वा धृतराष्ट्रो जनाधिपः ।
विस्तरेण महाराज पर्यपृच्छत्स सञ्जयम्'॥ ७-३३-३४ (४६२४२)
धृतराष्ट्र उवाच। ७-३३-३५क्ष् (४३३६)
पुत्रं पुरुषसिंहस्य सञ्जयाप्राप्तयौवनम् ।
रणे विनिहतं श्रुत्वा भृशं मे दीर्यते मनः ॥ ७-३३-३५ (४६२४३)
दारुणः क्षत्रधर्मोऽयं विहितो धर्मकर्तृभिः ।
यत्र राज्येप्सवः शूरा बाले शस्त्रमपातयन् ॥ ७-३३-३६ (४६२४४)
बालमत्यन्तसुखिनं विचरन्तमभीतवत् ।
कृतास्त्रा बहवो जघ्नुर्ब्रूहि गावल्गणे कथम् ॥ ७-३३-३७ (४६२४५)
बिबित्सता रथानीकं सौभद्रेणामितौजसा ।
विक्रीडितं यथा सङ्ख्ये तन्ममाचक्ष्व सञ्जय ॥ ७-३३-३८ (४६२४६)
सञ्जय उवाच। ७-३३-३९क्ष् (४३३७)
यन्मां पृच्छसि राजेन्द्र सौभद्रस्य निपातनम् ।
तत्ते कार्त्स्न्येन वक्ष्यामि शृणु राजन्समाहितः ॥ ७-३३-३९ (४६२४७)
विक्रीडितं कुमारेण यथानीकं बिभित्सता ।
आरुग्णाश्च यथा वीरा दुःसाध्याश्चापि विप्लुवे ॥ ७-३३-४० (४६२४८)
दावाग्न्यभिपरीतानां भूरिगुल्मतृणद्रुमे ।
वनौकसामिवारण्ये त्वदीयानामभूद्भयम् ॥ ॥ ७-३३-४१ (४६२४९)

इति श्रीमन्महाभारते द्रोणपर्वणि अभिमन्युवधपर्वणि
त्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥
Mahabharata - Drona Parva - Chapter Footnotes

५-३३-२ रजस्वला धूलिव्याप्ताः ॥
५-३३-९ विकृतवानन्यथा कृतवान् ॥
५-३३-१५ कलाभिः सहितं सकलम् । इतोऽस्मत्तः । ततोऽन्यतः ॥
५-३३-२१ षट्सु द्रोणद्रौणिकृपकर्णभोजशल्येषु ॥
५-३३-२८ नैभृत्यं कृतकर्तव्याप्रकाशनम् ॥
५-३३-३६ धर्मकर्तृभिर्मन्वादिभिः ॥
५-३३-३३ त्रयस्त्रिंशोऽध्यायः ॥

---

द्रोनपर्व-अध्यय०३४
॥ श्रीः ॥
७.३४. अध्यायः ३४

Mahabharata - Drona Parva - Chapter Topics
द्रोणेन पद्मव्यूहरचना ॥ १ ॥

Mahabharata - Drona Parva - Chapter Text

७-३४-० (४६२५०)
सञ्जय उवाच। ७-३४-०क्ष् (४३३८)
स्थिरो भव महाराज शोकं धारय दुर्धरम् ।
महान्तं बन्धुनाशं ते कथयिष्यामि तच्छृणु ॥ ७-३४-१ (४६२५१)
पद्मव्यूहो महाराज आचार्येणाभिकल्पितः ।
तत्र पद्मोपमाः सर्वे राजानो विनिवेशिताः ॥ ७-३४-२ (४६२५२)
कुमारा राजलोकस्य निक्षिप्ताः केसरोपामाः ।
कर्णिकास्थो महाराज तस्य दुर्योधनोऽभवत् ॥ ७-३४-३ (४६२५३)
कृताभिसमयाः सर्वे सुवर्णविकृतध्वजाः ।
रक्ताम्बरधराः सर्वे सर्वे रक्तविभूषणाः ॥ ७-३४-४ (४६२५४)
सर्वे रक्तपताकाश्च सर्वे वै हेममालिनः ।
चन्दनागुरुदिग्धाङ्गाः स्रग्विणः सूक्ष्मवाससः ॥ ७-३४-५ (४६२५५)
सहिताः पर्यधावन्त कार्ष्णि प्रतियुयुत्सवः ।
तेषां दशसहस्राणि बभूवुर्दृढधन्विनाम् ॥ ७-३४-६ (४६२५६)
पौत्रं तव पुरस्कृत्य लक्ष्मणं प्रियदर्शनम् ।

अन्योन्यसमदुःखास्ते अन्योन्यसमसाहसाः ॥ ७-३४-७ (४६२५७)
अन्योन्यं स्पर्धमानाश्च अन्योन्यस्य हिते रताः ।
दुर्योधनस्तु राजेन्द्र सैन्यमध्ये व्यवस्थितः ॥ ७-३४-८ (४६२५८)
कर्णदुःशासनकृपैर्वृतो राजा महारथैः ।
देवराजोपमः श्रीमाञ्श्वेतच्छत्राभिसंवृतः ॥ ७-३४-९ (४६२५९)
चामरव्यजनाक्षेपैरुदयन्निव भास्करः ।
प्रमुखे तस्य सैन्यस्य द्रोणोऽवस्थित नायकः ॥ ७-३४-१० (४६२६०)
सिन्धुराजस्तथाऽतिष्ठच्छ्रीमान्मेरुरिवाचलः ।
सिन्धुराजस्य पार्श्वस्था अश्वत्थामपुरोगमाः ॥ ७-३४-११ (४६२६१)
सुतास्तव महाराज त्रिंशत्त्रिदशसन्निभाः ।
गान्धारराजः कितवः शल्यो भूरिश्रवास्तथा ॥ ७-३४-१२ (४६२६२)
पार्श्वतः सिन्धुराजस्य व्यराजन्त महारथाः ।
ततः प्रववृते युद्धं तुमुलं लोमहर्षणम् ।
तावकानां परेषां च मृत्युं कृत्वा निवर्तनम् ॥ ॥ ७-३४-१३ (४६२६३)

इति श्रीमन्महाभारते द्रोणपर्वणि अभिमन्युवधपर्वणि
त्रयोदशदिवसयुद्धे चतुस्त्रिंशोऽध्यायः ॥ ३४ ॥
Mahabharata - Drona Parva - Chapter Footnotes

५-३४-२ चक्रव्यूह इति झ पाठः ॥
५-३४-१० प्रमुखेऽग्रे । सैन्यस्य नायको
द्रोणः। अवस्थितेतिच्छन्दोनुरोधाद्विसर्गलोपः ॥
५-३४-३४ चतुस्त्रिंशोऽध्यायः ॥

---

द्रोनपर्व-अध्यय०३५
॥ श्रीः ॥
७.३५. अध्यायः ३५

Mahabharata - Drona Parva - Chapter Topics
युधिष्ठिरेणाभिमन्युम्प्रति पद्मव्यूहभेदनचोदना ॥ १ ॥

Mahabharata - Drona Parva - Chapter Text

७-३५-० (४६२६४)
सञ्जय उवाच। ७-३५-०क्ष् (४३३९)
तदनीकमनाधृष्टं भारद्वाजेन रक्षितम् ।

पार्थाः समभ्यवर्तन्त भीमसेनपुरोगमाः ॥ ७-३५-१ (४६२६५)
सात्यकिश्चेकितानश्च धृष्टद्युम्नश्च पार्षतः ।
कुन्तिभोजश्च विक्रान्तो द्रुपदश्च महारथः ॥ ७-३५-२ (४६२६६)
आर्जुनिः क्षत्रधर्मा च बृहत्क्षत्रश्च वीर्यवान् ।
चेदिपो धृष्टकेतुश्च माद्रीपुत्रौ घटोत्कचः ॥ ७-३५-३ (४६२६७)
युधामन्युश्च विक्रान्तः शिखण्डी चापराजितः ।
उतक्तमौजाश्च दुर्धर्षो विराटश्च महारथः ॥ ७-३५-४ (४६२६८)
द्रौपदेयाश्च संरब्धाः शैशुपालिश्च वीर्यवान् ।
केकयाश्च महावीर्याः सृञ्जयाश्च सहस्रशः ॥ ७-३५-५ (४६२६९)
एते चान्ये च सगणाः कृतास्त्रा युद्धदुर्मदाः ।
समभ्यधावन्सहसा भारद्वाजं युयुत्सवः ॥ ७-३५-६ (४६२७०)
समीपे वर्तमानांस्तान्भारद्वाजोऽतिवीर्यवान् ।
असम्भ्रान्तः शरौघेण महता समवारयत् ॥ ७-३५-७ (४६२७१)
महौघः सलिलस्येव गिरिमासाद्य दुर्भिदम् ।
द्रोणं ते नाभ्यवर्तन्त वेलामिव जलाशयाः ॥ ७-३५-८ (४६२७२)
पीड्यमानाः शरै राजन्द्रोणचापविनिःसृतैः ।
न शेकुः प्रमुखे स्थातुं भारद्वाजस्य पाण्डवाः ॥ ७-३५-९ (४६२७३)
तदद्भुतमपश्याम द्रोणस्य भुजयोर्बलम् ।
यदेनं नाभ्यवर्तन्त पाञ्चालाः सृञ्जयैः सह ॥ ७-३५-१० (४६२७४)
तमायान्तमभिक्रुद्धं द्रोणं दृष्ट्वा युधिष्ठिरः ।
बहुधा चिन्तयामास द्रोणस्य प्रतिवारणम् ॥ ७-३५-११ (४६२७५)
अशक्यं तु तमन्येन द्रोणं मत्त्वा युधिष्ठिरः ।
अविषह्यं गुर भारं सौभद्रे समवासृजत् ॥ ७-३५-१२ (४६२७६)
वासुदेवादनवरं फल्गुनाच्चामितौजसम् ।
अब्रवीत्परवीरघ्नमभिमन्युमिदं वचः ॥ ७-३५-१३ (४६२७७)
युधिष्ठिर उवाच। ७-३५-१४क्ष् (४३४०)
एत्य नो नार्जुनो गर्हेद्यथा तात तथा कुरु ।
द्रोणानीकस्य न वयं विद्मो भेदं कथञ्चन ॥ ७-३५-१४ (४६२७८)
त्वं वाऽर्जुनो वा कृष्णो वा भिन्द्यात्प्रद्युम्न एव वा ।
द्रोणानीकं महाबाहो पञ्चमो नोपपद्यते ॥ ७-३५-१५ (४६२७९)
अभिमन्यो वरं तात याचे त्वां दातुमर्हसि ।
पितॄणां मातुलानां च सैन्यानां चैव सर्वशः ॥ ७-३५-१६ (४६२८०)
धनञ्जयो हि नस्तात गर्हयेदेत्य संयुगात् ।
क्षिप्रमस्त्रं समादाय द्रोणानीकं विशातय ॥ ७-३५-१७ (४६२८१)
अभिमन्युरुवाच। ७-३५-१८क्ष् (४३४१)
द्रोणस्य दृढमत्युग्रमनीकप्रवरं युधि ।

पितॄणां जयमाकाङ्क्षन्नवगाहेऽविलम्बितम् ॥ ७-३५-१८ (४६२८२)
उपदिष्टो हि मे पित्रा योगोऽनीकविशातने ।
नोत्सहे हि विनिर्गन्तुमहं कस्याञ्चिदापदि ॥ ७-३५-१९ (४६२८३)
युधिष्ठिर उवाच। ७-३५-२०क्ष् (४३४२)
भिन्ध्यनीकं युधांश्रेष्ठ द्वारं सञ्जनयस्व नः ।
वयं त्वाऽनुगमिष्यामो येन त्वं तात यास्यसि ॥ ७-३५-२० (४६२८४)
धनञ्जयसमं युद्धे त्वां वयं तात संयुते ।
प्रणिधायानुयास्यामो रक्षन्तः सर्वतोमुखाः ॥ ७-३५-२१ (४६२८५)
भीम उवाच। ७-३५-२२क्ष् (४३४३)
अहं त्वाऽनुगमिष्यामि धृष्टद्युम्नोऽथ सात्यकिः ।
पाञ्चलाः केकया मात्स्यास्तथा सर्वे प्रभद्रकाः ॥ ७-३५-२२ (४६२८६)
सकृद्भिन्नं त्वया व्यूहं तत्र तत्र पुनः पुनः ।
वयं प्रध्वंसयिष्यामो निघ्नामाना वरान्वरान् ॥ ७-३५-२३ (४६२८७)
अभिमन्युरुवाच। ७-३५-२४क्ष् (४३४४)
अहमेतत्प्रवेक्ष्यामि द्रोणानीकं दुरासदम् ।
पतङ्ग इव सङ्क्रुद्धो ज्वलितं जातवेदसम् ॥ ७-३५-२४ (४६२८८)
तत्कर्माद्य करिष्यामि हितं यद्वंशयोर्द्वयोः ।
मातुलस्य च यत्प्रीतिं करिष्यति पितुश्च मे ॥ ७-३५-२५ (४६२८९)
शिशुनैकेन सङ्ग्रमे काल्यमानानि सङ्घशः ।
द्रक्ष्यन्ति सर्वभूतानि द्विषत्सैन्यानि वै मया ॥ ७-३५-२६ (४६२९०)
नाहं पार्थेन जातः स्यां न च जातः सुभद्रया ।
यदि मे संयुगे कश्चिज्जीवितो नाद्य मुच्यते ॥ ७-३५-२७ (४६२९१)
यदि चैकरथेनाहं समग्रं क्षत्रमण्डलम् ।
न करोम्यष्टधा युद्धे न भवाम्यर्जुनात्मजः ॥ ७-३५-२८ (४६२९२)
युधिष्ठिर उवाच। ७-३५-२९क्ष् (४३४५)
एवं ते भाषमाणस्य बलं सौभद्र वर्धताम् ।
यत्समुत्सहसे भेत्तुं द्रोणानीकं दुरासदम् ॥ ७-३५-२९ (४६२९३)
रक्षितं पुरुषव्याघ्रैर्महेष्वासैर्महाबलै ।
साध्यरुद्रमरुत्तुल्यैर्वस्वग्न्यादित्यविक्रमैः ॥ ७-३५-३० (४६२९४)
सञ्जय उवाच। ७-३५-३१क्ष् (४३४६)
तस्य तद्वचनं श्रुत्वा स यन्तारमचोदयत् ॥ ७-३५-३१ (४६२९५)
सुमित्राश्वान्रणे क्षिप्रं द्रोणानीकाय चोदय ॥ ॥ ७-३५-३२ (४६२९६)

इति श्रीमन्महाभारते द्रोणपर्वणि अभिमन्युवधपर्वणि
त्रयोधशदिवसयुद्धे पञ्चत्रिंशोऽध्यायः ॥ ३५ ॥

Mahabharata - Drona Parva - Chapter Footnotes

५-३५-१६ मातुलानां सात्यकिप्रभृतीनाम् ॥
५-३५-१९ योग उपायो युक्तिर्वा ॥
५-३५-२१ प्रणिधाय प्रविश्य ॥
५-३५-३५ पञ्चत्रिंशोःऽध्यायः ॥

---

द्रोनपर्व-अध्यय०३६
॥ श्रीः ॥
७.३६. अध्यायः ३६

Mahabharata - Drona Parva - Chapter Topics
अभिमन्युयुद्धवर्णनम् ॥ १ ॥

Mahabharata - Drona Parva - Chapter Text

७-३६-० (४६२९७)
सञ्जय उवाच। ७-३६-०क्ष् (४३४७)
सौभद्रस्तद्वचः श्रुत्वा धर्मराजस्य धीमतः ।
अचोदयत यन्तारं द्रोणानीकाय भारत ॥ ७-३६-१ (४६२९८)
तेन सञ्चोद्यमानस्तु याहियाहीति सारथिः ।
प्रत्युवाच ततो राजन्नभिमन्युमिदं वचः ॥ ७-३६-२ (४६२९९)
अतिभारोऽयमायुष्मन्नाहितस्त्वयि पाण्डवैः ।
सम्प्रधार्य क्षणं बुद्ध्या ततस्त्वं योद्धुमर्हसि ॥ ७-३६-३ (४६३००)
आचार्यो हि कृती द्रोणः परमास्त्रे कृतश्रमः ।
त्वं तु बालः स बलवान्सङ्ग्रामाणामकोविदः ॥ ७-३६-४ (४६३०१)
ततोऽभिमन्युः प्रहसन्सारथिं वाक्यमब्रवीत् ।
सारथे कोन्वयं द्रोणः समग्रं क्षत्रमेव वा ॥ ७-३६-५ (४६३०२)
ग्व्यवसायो हि मे योद्धुं रणोत्सवसमुद्यतः'।
ऐरावतगतं शक्रं सहामरगणैरहम् ॥ ७-३६-६ (४६३०३)
अथवा रुद्रमीशानं सर्वभूतगणार्चितम् ।
योधयेयं रणमुखे न मे क्षत्रेऽद्य विस्मयः ॥ ७-३६-७ (४६३०४)
ग्यच्चैतत्पश्यसे सूत सयोधाश्वरथद्विपम्'।
तन्ममाद्य द्विषत्सैन्यं कलामर्हति षोडशीम् ॥ ७-३६-८ (४६३०५)
अपि विश्वजितं विष्णुं मातुलं प्राप्य सूतज ।
पितरं चार्जुनं युद्धे न भीर्मामुपयास्यति ॥ ७-३६-९ (४६३०६)
सञ्जय उवाच। ७-३६-१०क्ष् (४३४८)

एवमप्युच्यमानः स सारथिस्तं पुनः पुनः ।
वीर ते तेन मा युद्धमिति सौभद्रमब्रवीत्'॥ ७-३६-१० (४६३०७)
अभिमन्युश्च तां वाचं कदर्थीकृत्य सारथेः ।
याहीत्येवाब्रवीदेनं द्रोणानीकाय माचिरम् ॥ ७-३६-११ (४६३०८)
ततः सन्नोदयामास हयानाशु त्रिहायनान् ।
नातिहृष्टमनाः सूतो हेमभाण्डपरिच्छदान् ॥ ७-३६-१२ (४६३०९)
ते प्रेषिताः सुमित्रेण द्रोणानीकाय वाजिनः ।
द्रोणमभ्यद्रवन्राजन्महावेगा महाबलाः ॥ ७-३६-१३ (४६३१०)
तमुदीक्ष्य तथायान्तं सर्वे द्रोणपुरोगमाः ।
अभ्यवर्तन्त कौरव्याः पाण्डवाश्च तमन्वयुः ॥ ७-३६-१४ (४६३११)
सकर्णिकारप्रवरोच्छ्रितध्वजः
सुवर्णवर्माऽऽर्जुनिरर्जुनाद्वरः ।
युयुत्सया द्रोणमुखान्महारथान्
समासदत्सिंहशिशुर्यथा द्विपान् ॥ ७-३६-१५ (४६३१२)
ते विंशतिपदे यत्ताः सम्प्रहारं प्रचक्रिरे ।
आसीद्गाङ्ग इवावर्तो मुहूर्तमुदधाविव ॥ ७-३६-१६ (४६३१३)
शूराणां युध्यमानानां निघ्नतामितरेतरम् ।
सङ्ग्रामस्तुमुलो राजन्प्रावर्तत सुदारुणः ॥ ७-३६-१७ (४६३१४)
प्रवर्तमाने सङ्ग्रामे तस्मिन्नतिभयङ्करे ।
द्रोणस्य मिषतो व्यूहं भित्त्वा व्यचरदार्जुनिः ॥ ७-३६-१८ (४६३१५)
ग्तदभेद्यमनाधृष्यं द्रोणानीकं सुदुर्जयम् ।
भित्त्वार्जुनिरसम्भ्रान्तो विवेशाचिन्त्यविक्रमः'॥ ७-३६-१९ (४६३१६)
तं प्रविष्टं विनिघ्नन्तं शत्रुसङ्घान्महाबलम् ।
हस्त्यश्वरथपत्त्यौघाः परिवव्रुरुदायुधाः ॥ ७-३६-२० (४६३१७)
नानावादित्रनिनदैः क्ष्वेडितोत्कृष्टगर्जितैः ।
हुङ्कारैः सिंहनादैश्च तिष्ठ तिष्ठेति निःस्वनैः ॥ ७-३६-२१ (४६३१८)
घोरैर्हलहलाशब्दैर्मागास्तिष्ठैहि मामिति ।
असावहममित्रेति प्रवदन्तो मुहुर्मुहुः ॥ ७-३६-२२ (४६३१९)
बृंहितैः शिञ्जितैर्हासैः करनेमिस्वनैरपि ।
सन्नादयन्तो वसुधामभिदुद्रुवुरार्जुनिम् ॥ ७-३६-२३ (४६३२०)
तेषामापततां वीरः शीघ्रयोधी महाबलः ।
क्षिप्रास्त्रो न्यवधीद्राजन्मर्मज्ञो मर्मभेदिभिः ॥ ७-३६-२४ (४६३२१)
ते हन्यमाना विवशा नानालिङ्गैः शितैः शरैः ।
अभिपेतुः सुबहुशः शलभा इव पावकम् ॥ ७-३६-२५ (४६३२२)
ततस्तेषां शरीरैश्च शरीरावयवैश्च सः ।
सन्तंस्तार क्षितिं क्षिप्रं कुशैर्वेदिमिवाध्वरे ॥ ७-३६-२६ (४६३२३)

बद्धगोधाङ्गुलित्राणान्सशरासनसायकान् ।
सासिचर्माङ्कुशाभीषून्सतोमरपरश्वथान् ॥ ७-३६-२७ (४६३२४)
सगदायोगुडप्रासान्सर्ष्टितोमरपट्टसान् ।
सभिण्डिपालपरिघान्यशक्तिवरकम्पनान् ॥ ७-३६-२८ (४६३२५)
सप्रतोदमहाशङ्खान्सकुन्तान्सकचग्रहान् ।
समुद्गरक्षेपणीयान्सपाशपरिघोपलान् ॥ ७-३६-२९ (४६३२६)
सकेयूराङ्गदान्बाहून्हृद्यगन्धानुलेपनान् ।
सञ्चिच्छेदार्जुनिर्वृत्तांस्त्वदीयानां सहस्रशः ॥ ७-३६-३० (४६३२७)
तैः स्फुरद्भिर्महाराज शुशुभे भूः सुलोहितैः ।
पञ्चास्यैः पन्नगैश्छिन्नैर्गरुडेनेव मारिष ॥ ७-३६-३१ (४६३२८)
सुनासाननकेशान्तैरव्रणैश्चारुकुण्डलैः ।
सन्दष्टौष्ठपुटैः क्रोधात्क्षरद्भिः शोणितं बहु ॥ ७-३६-३२ (४६३२९)
सचारुमुकुटोष्णीषैर्मणिरत्नविभूषितैः ।
विनालनलिनाकारैर्दिवाकरशशिप्रभैः ॥ ७-३६-३३ (४६३३०)
हितप्रियंवदैः काले बहुभिः पुण्यगन्धिभिः ।
द्विषच्छिरोभिः पृथिवीं स वै तस्तार फाल्गुनिः ॥ ७-३६-३४ (४६३३१)
गन्धर्वनगराकारान्विधिवत्कल्पितान्रथान् ।
वीषामुखान्वित्रिवेणून्न्यस्तदण्डकबन्धुरान् ॥ ७-३६-३५ (४६३३२)
विजङ्घाकूबरांस्तत्र विनेमींश्च व्यरानपि ।
विचक्रोपस्करोपस्थान्भग्नोपकरणानपि ॥ ७-३६-३६ (४६३३३)
ग्समास्थितान्योधवरैर्दान्ताश्वान्साधुसारथीन् ।
विपताकाध्वजच्छत्रान्वितूणीरायुधानपि ॥ ७-३६-३७ (४६३३४)
प्रपातितोपस्तरणान्हतयोधान्सहस्रशः ।
शरैर्विशकलीकुर्वन्दिक्षु सर्वास्वदृश्यत ॥ ७-३६-३८ (४६३३५)
पुनर्द्विपान्द्विपारोहान्वैजयन्त्यङ्कुशध्वजान् ।
तूणान्वर्माण्यथो कक्ष्या ग्रैवेयांश्च सकम्बलान् ॥ ७-३६-३९ (४६३३६)
घण्टाः शुण्डाविषाणाग्राञ्छत्रमालाः पदानुगान् ।
शरैर्निशितधाराग्रैः शात्रवाणामशातयत् ॥ ७-३६-४० (४६३३७)
वनायुजान्पार्वतीयान्काम्भोजानथ बाह्लिकान् ।
स्थिरवालधिकर्णाक्षाञ्जवनान्साधुवाहिनः ॥ ७-३६-४१ (४६३३८)
आरूढाञ्शिक्षितैर्योधैः शक्त्यृष्टिप्रासयोधिभिः ।
विध्वस्तचामरमुखान्विप्रविद्धप्रकीर्णकान् ॥ ७-३६-४२ (४६३३९)
निरस्तजिह्वानयनान्निष्कीर्णान्त्रयकृद्धनान् ।
हतारोहांश्छिन्नघण्टान्क्रव्यादगणमोदकान् ॥ ७-३६-४३ (४६३४०)
निकृत्तचर्मकवचाञ्शकृन्मूत्रासृगाप्लुतान् ।
निपातयन्नश्ववरांस्तावकान्स व्यरोचत ।

एको विष्णुरिवाचिन्त्यं कृत्वा कर्म सुदुष्करम् ॥ ७-३६-४४ (४६३४१)
तथा निर्माथितं तेन चतुरङ्गबलं महत् ।
यथाऽसुरबलं घोरं त्र्यम्बकेन महौजसा ॥ ७-३६-४५ (४६३४२)
कृत्वा कर्म रणेऽसह्यं परैरार्जुनिराहवे ।
अभिनच्च पदात्योघांस्त्वदीयानेव सर्वशः ॥ ७-३६-४६ (४६३४३)
एवमेकेन तां सेनां सौभद्रेण सितैः शरैः ।
भृशं विप्रहतां दृष्ट्वा स्कन्देनेवासुरीं चमूम् ॥ ७-३६-४७ (४६३४४)
त्वदीयास्तव पुत्राश्च वीक्षमाणा दिशो दश ।
संशुष्कास्याश्चलन्नेत्राः प्रस्विन्ना रोमहर्षिणः ॥ ७-३६-४८ (४६३४५)
पलायनकृतोत्साहा निरुत्साहा द्विषज्जये ।
गोत्रनामभिरन्योन्यं क्रन्दन्तो जीवितैषिणः ॥ ७-३६-४९ (४६३४६)
हतान्पुत्रान्पितॄन्भ्रातॄन्बन्धून्सम्बन्धिनस्तथा ।
प्रातिष्ठन्त समुत्सृज्य त्वरयन्तो हयद्विपान् ॥ ॥ ७-३६-५० (४६३४७)

इति श्रीमन्महाभारते द्रोणपर्वणि अभिमन्युवधपर्वणि
त्रयोदशदिवसयुद्धे षट्त्रिंशोऽध्यायः ॥ ३६ ॥
Mahabharata - Drona Parva - Chapter Footnotes

५-३६-१६ विंशतिरिति व्यूहपर्यायः । तदुक्तं। विंशत्यङ्गतया
व्यूहो विंशतिर्व्यपदिश्यते इति। विंशतेः पदे रक्षणे। पदं
व्यवसितत्राणस्थानलक्ष्माङ्घ्रिवस्तुष्वित्यमरः। तं विशन्तं ततो
यत्ता इति क। पाठः। ते विशन्तं मुदा युक्ता इति घ ङ। पाठः ॥
५-३६-२१ क्ष्वेडितं ध्वनिविशेषः । उत्कुष्टमाह्वानम्। गार्जितं
हन्यन्तां हन्यन्तामिति वचः ॥
५-३६-२९ कचग्रहोऽङ्कुशः ॥
५-३६-३६ उपस्थो रथक्रोडः ॥
५-३६-४३ यकृत्कालखण्डम् ॥
५-३६-४५ व्यङ्गं तव वलं महत् इति झ पाठः ॥
५-३६-३६ षट्त्रिंशोऽध्यायः ॥

---

द्रोनपर्व-अध्यय०३७
॥ श्रीः ॥
७.३७. अध्यायः ३७

Mahabharata - Drona Parva - Chapter Topics
अभिमन्युपराक्रमवर्णनम् ॥ १ ॥

७-३७-० (४६३४८)
सञ्जय उवाच। ७-३७-०क्ष् (४३४९)
तां प्रभाग्नां चमूं दृष्ट्वा सौभद्रेणामितौजसा ।
दुर्योधनो भृशं क्रुद्धः स्वयं सौभद्रमभ्ययात् ॥ ७-३७-१ (४६३४९)
ततो राजानमावृत्तं सौभद्रं प्रति संयुगे ।
दृष्ट्वा द्रोणोऽब्रवीद्योधान्परीप्सध्वं नराधिपम् ॥ ७-३७-२ (४६३५०)
पुराऽभिमन्युर्लक्षं नः पश्यतां हन्ति वीर्यवान् ।
तमाद्रवत माभैष्ट क्षिप्रं रक्षत कौरवम्। ७-३७-३ (४६३५१)
सञ्जय उवाच। ७-३७-४क्ष् (४३५०)
ग्एवमुक्तास्ततस्तेन भारद्वाजेन धीमता'।
कृतज्ञानबलोत्सेधाः सुहृदो जितकाशिनः ।
त्रास्यमाना भयाद्वीरं परिवव्रुस्तवात्मजम् ॥ ७-३७-४ (४६३५२)
द्रोणो द्रौणिः कृपः कर्णः कृतवर्मा च सौबलः ।
बृहद्बलो मद्रराजो भूरिर्भूरिश्रवाः शलः ॥ ७-३७-५ (४६३५३)
पौरवो वृषसेनश्च विसृजन्तः शिताञ्शरान् ।
सौभद्रं शरवर्षेण महता समवाकिरन् ॥ ७-३७-६ (४६३५४)
सम्मोहयित्वा तमथ दुर्योधनममोचयन् ।
आस्याद्ग्रासमिवाक्षिप्तं ममृषे नार्जुनात्मजः ॥ ७-३७-७ (४६३५५)
ताञ्शरौघेण महता साश्वसूतान्महारथान् ।
विमुखीकृत्य सौभद्रः सिंहनादमथानदत् ॥ ७-३७-८ (४६३५६)
तस्य नादं ततः श्रुत्वा सिंहस्येवामिषैषिणः ।
नामृष्यन्त सुसंरब्धाः पुनर्द्रोणमुखा रथाः ॥ ७-३७-९ (४६३५७)
त एनं कोष्ठकीकृत्य रथवंशेन मारिष ।
व्यसृजन्निषुजालानि नानालिङ्गानि सङ्घशः ॥ ७-३७-१० (४६३५८)
तान्यन्तरिक्षे चिच्छेद पौत्रस्ते निशितैः शरैः ।
तांश्चैव प्रतिविव्याध तदद्भुतमिवाभवत् ॥ ७-३७-११ (४६३५९)
ग्ततो रथपदात्योघाः कुञ्जराः सादिनश्च ह'।
कोपितास्तेन शूरेण शरैराशीविषोपमैः ।
परिवव्रुर्जिघांसन्तः सौभद्रमपराजितम् ॥ ७-३७-१२ (४६३६०)
समुद्रमिव पर्यस्तं त्वदीयं तं बलार्णवम् ।
दधारैकोऽर्जुनिर्बाणैर्वेलेवोद्वृत्तमर्णवम् ॥ ७-३७-१३ (४६३६१)
शूराणां युध्यमानानां निघ्नतामितरेतरम् ।
अभिमन्योः परेषां च नासीत्कश्चित्पराङ्मुखः ॥ ७-३७-१४ (४६३६२)

तस्मिंस्तु घोरे सङ्ग्रामे वर्तमाने भयङ्करे ।
दुःसहो नवभिर्बाणैरभिमन्युमविध्यत ॥ ७-३७-१५ (४६३६३)
दुःशानो द्वादशभिः कृपः शारद्वतस्त्रिभिः ।
द्रोणस्तु सप्तदशभिः शरैराशीविषोपमैः ॥ ७-३७-१६ (४६३६४)
विविंशतिस्तु सप्तत्या कृतवर्मा च सप्तभिः ।
बृहद्बलस्तथाऽष्टाभिरश्वत्थामा च सप्तभिः ॥ ७-३७-१७ (४६३६५)
भूरिश्रवास्त्रिभिर्बाणैर्मद्रेशः षड्भिराशुगैः ।
द्वाभ्यां शराभ्यां शकुनिस्त्रिभिर्दुर्योधनो नृपः ॥ ७-३७-१८ (४६३६६)
स तु तान्प्रतिविव्याध त्रिभिस्त्रिभिरजिह्मगैः। ७-३७-१९ (४६३६७)
नृत्यन्निव महाराज चापहस्तः प्रतापवान् ॥ ७-३७-१९ (४६३६८)
ततोऽभिमन्युः सङ्क्रुद्धस्त्रास्यमानस्तवात्मजैः ।
विदर्शयन्वै सुमहच्छिक्षौरसकृतं बलम् ॥ ७-३७-२० (४६३६९)
गरुडानिलरंहोभिर्यन्तुर्वाक्यकरैर्हयैः ।
अभ्यद्रवत तं कार्ष्णिमश्मकेन्द्रः कृतत्वरः ॥ ७-३७-२१ (४६३७०)
अश्वाश्वाश्मकमादाय त्वरमाणाऽभ्यहारयन् ।
विव्याध दशभिर्बाणैस्तिष्ठतिष्ठेति चाब्रवीत् ॥ ७-३७-२२ (४६३७१)
तस्याभिमन्युर्दशभिर्हयान्सूतं ध्वजं शरैः ।
बाहू धनुः शिरश्चोर्व्यां स्मयमानोऽभ्यपातयत् ॥ ७-३७-२३ (४६३७२)
ततस्तस्मिन्हते वीरे सौभद्रेणाश्मकेश्वरे ।
सञ्चचाल बलं सर्वं पलायनपरायणम् ॥ ७-३७-२४ (४६३७३)
ततः कर्णः कृपो द्रोणो द्रौणिर्गान्धारराट् शलः ।
शल्यो भूरिश्रवाः क्राथः सोमदत्तो विविंशतिः ।
वृषसेनः सुषेणश्च कुण्डभेदी प्रतर्दनः ॥ ७-३७-२५ (४६३७४)
बृन्दारको ललित्थश्च प्रबाहुर्दीर्घलोचनः ।
दुर्योधनश्च सङ्क्रुद्धः शरवर्षैरवाकिरन् ॥ ७-३७-२६ (४६३७५)
सोऽतिविद्धो महेष्वासैरभिमन्युरजिह्मगैः ।
शरमादत्त कर्णाय वर्मकायावभेदिनम् ॥ ७-३७-२७ (४६३७६)
तस्य भित्त्वा तनुत्राणं देहं निर्भिद्य चाशुगः ।
प्राविशद्धरणीं वेगाद्वल्मी कमिव पन्नगः ॥ ७-३७-२८ (४६३७७)
स तेनातिप्रहारेण व्यथितो विह्वलन्निव ।
सञ्चचाल रणे कर्णः क्षितिकम्पे यथाऽचलः ॥ ७-३७-२९ (४६३७८)
तथान्यैर्निशितैर्बाणैः सुषेणं दीर्घलोचनम् ।
कुण्डभेदिं च सङ्क्रुद्धस्त्रिभिस्त्रीनवधीद्बली ॥ ७-३७-३० (४६३७९)
कर्णस्तं पञ्चविंशत्या नाराचानां समार्पयत् ।
अश्वत्थामा च विंशत्या कृतवर्मा च सप्तभिः ॥ ७-३७-३१ (४६३८०)
स शराचितसर्वाङ्गः क्रुद्धः शक्रात्मजात्मजः ।

विचरन्ददृशे सैन्ये पाशहस्त इवान्तकः ॥ ७-३७-३२ (४६३८१)
शल्यं च शरवर्षेण समीपस्थामवाकिरत् ।
उदक्रोशन्महाबाहुस्तव सैन्यानि भीषयन् ॥ ७-३७-३३ (४६३८२)
ततः स विद्धोऽस्त्रविदा मर्मभिद्भिरजिह्मगैः ।
शल्यो राजन्रथोपस्थे निषसाद मुमोह च ॥ ७-३७-३४ (४६३८३)
तं हि दृष्ट्वा तथा विद्धं सौभद्रेण यशास्विना ।
सम्प्राद्रवच्चमूः सर्वा भारद्वाजस्य पश्यतः ॥ ७-३७-३५ (४६३८४)
सम्प्रेक्ष्य तं महाबाहुं रुक्मपुङ्खैः समावृतम् ।
त्वदीयाः प्रपलायन्ते मृगाः सिंहार्दिता इव ॥ ७-३७-३६ (४६३८५)
ग्सौभद्रशरनिर्भग्नाः समरेऽमरविक्रमाः ।
एवं शल्यो विमृदितस्तव पौत्रेण भारत'॥ ७-३७-३७ (४६३८६)
स तु रणयशसाऽभिपूज्यमानः
पितृसुरचारणसिद्धयक्षसङ्घैः
अवनितलगतैश्च भूतसङ्घै--
रतिविबभौ हुतभुग्यथाऽऽज्यसिक्तः ॥ ॥ ७-३७-३८ (४६३८७)

इति श्रीमन्महाभारते द्रोणपर्वणि अभिमन्युवधपर्वणि
त्रयोदशदिवसयुद्धे सप्तत्रिंशोऽध्यायः ॥ ३७ ॥
Mahabharata - Drona Parva - Chapter Footnotes

५-३७- त्रास्यमानाः पालयिष्यन्तः ॥
५-३७- पर्यस्तं उत्क्रान्तमर्यादम् ॥
५-३७- शिक्षौरसकृतं अभ्यासकृतं निसर्गभवं च ॥

---

द्रोनपर्व-अध्यय०३८
॥ श्रीः ॥
७.३८. अध्यायः ३८

Mahabharata - Drona Parva - Chapter Topics
अभिमन्युपराक्रमवर्णनम् ॥ १ ॥

Mahabharata - Drona Parva - Chapter Text

७-३८-० (४६३८८)
धृतराष्ट्र उवाच। ७-३८-०क्ष् (४३५१)
तथा प्रमथमानं तं महेष्वासानजिह्मगैः ।

आर्जुनिं मामकाः सङ्ख्ये के त्वेनं समवारयन् ॥ ७-३८-१ (४६३८९)
सञ्जय उवाच। ७-३८-२क्ष् (४३५२)
शृणु राजन्कुमारस्य रणे विक्रीडितं महत् ।
बिभित्सतो रथानीकं भारद्वाजेन रक्षितम् ॥ ७-३८-२ (४६३९०)
मद्रेशं सादितं दृष्ट्वा सौभद्रेणाशुगै रणे ।
शल्यादवरजः क्रुद्ध किन्बाणान्समभ्ययात् ॥ ७-३८-३ (४६३९१)
स विद्ध्वा दशभिर्बाणैः साश्वयन्तारमार्जुनिम् ।
उदक्रोशन्महाशब्दं तिष्ठतिष्ठेति चाब्रवीत् ॥ ७-३८-४ (४६३९२)
तस्यार्जुनिः शिरोग्रीवं पाणिपादं धनुर्हयान् ।
छत्रं ध्वजं नियन्तारं त्रिवेणुं चाप्युपस्करम् ॥ ७-३८-५ (४६३९३)
चक्रं युगं च तूणीरं ह्यनुकर्षं सायकैः ।
पताकां चक्रगोप्तारौ सर्वोपकरणानि च ॥ ७-३८-६ (४६३९४)
लघुहस्तः प्रचिच्छेद ददृशे तं न कश्चन ।
स पपात क्षितौ क्षीणः प्रविद्धाभरणाम्बरः ॥ ७-३८-७ (४६३९५)
वायुनेव महाचैत्यः समूलं चित्रवेदिकः ।
अनुगास्तस्य वित्रस्ताः प्राद्रवन्सर्वतो दिशः ॥ ७-३८-८ (४६३९६)
आर्जुनेः कर्म तद्दृष्ट्वा सम्प्रणेदुः समन्ततः ।
नादेन सर्वभूतानि साधुसाध्विति भारत ॥ ७-३८-९ (४६३९७)
शल्यभ्रातर्यथारुग्णे बहुशस्तस्य सैनिकाः ।
कुलाधिवासनामानि श्रावयन्तोऽर्जुनात्मजम् ॥ ७-३८-१० (४६३९८)
अभ्यधावन्त सङ्क्रुद्धा विविधायुधपाणयः ।
रथैरश्वैर्गजैश्चान्ये पद्भिश्चान्ये बलोत्कटाः ॥ ७-३८-११ (४६३९९)
बाणशब्देन महता रथनेमिस्वनेन च ।
हुंकारैः क्ष्वेडितोत्कृष्टैः सिंहनादैः सगर्जितैः ॥ ७-३८-१२ (४६४००)
ज्यातलत्रस्वनैरन्ये गर्जन्तोऽर्जुननन्दनम् ।
ब्रुवन्तश्च न नो जीवन्मोक्ष्यसे जीवितादिति ॥ ७-३८-१३ (४६४०१)
तांस्तथा ब्रुवतो दृष्ट्वा सौभद्रः प्रहसन्निव ।
यो योस्मै प्राहरत्पूर्वं तं तं विव्याध पत्रिभिः ॥ ७-३८-१४ (४६४०२)
सन्दर्शयिष्यन्नस्त्राणि विचित्राणि लघूनि च ।
आर्जुनिः समरे शूरो मृदुपूर्वमयुध्यत ॥ ७-३८-१५ (४६४०३)
वासुदेवादुपात्तं यदस्त्रं यच्च धनञ्जयात् ।
अदर्शयत तत्कार्ष्णिः कृष्णाभ्यामविशेषवत् ॥ ७-३८-१६ (४६४०४)
दूरमस्य गुरुं भारं साध्वसं च पुनः पुनः ।
सन्दधद्विसृजंश्चेषून्निर्विशेषमदृश्यत ॥ ७-३८-१७ (४६४०५)
चापमण्डलमेवास्य विस्फुरद्दिक्ष्वदृश्यत ।
सुदीप्तस्य शरत्काले सवितुर्मण्डलं यथा ॥ ७-३८-१८ (४६४०६)

ज्याशब्दः शुश्रुवे तस्य तलशब्दश्च दारुणः ।
महाशनिमुचः काले पयोदस्येव निःस्वनः ॥ ७-३८-१९ (४६४०७)
ह्रीमानमर्षी सौभद्रो मानकृत्प्रियदर्शनः ।
सम्मिमानयिषुर्वीरानिष्वस्त्रैश्चाप्ययुध्यत ॥ ७-३८-२० (४६४०८)
मृदुर्भूत्वा महाराज दारुणः समपद्यत ।
वर्षाभ्यतीतो भगवाञ्शरदीव दिवाकरः ॥ ७-३८-२१ (४६४०९)
शरान्विचित्रान्सुबहून्रुक्मपुङ्खाञ्शिलाशितान् ।
मुमोच शतशः क्रुद्धो गभस्तीनिव भास्करः ॥ ७-३८-२२ (४६४१०)
क्षुरप्रैर्वत्सदन्तैश्च विपाठैश्च महायशाः ।
नाराचैरर्धचन्द्राभैर्भल्लैरञ्जलिकैरपि ॥ ७-३८-२३ (४६४११)
अवाकिरद्रथानीकं भारद्वाजस्य पश्यतः ।
ततस्तत्सैन्यमभवद्विमुखं शरपीडितम् ॥ ॥ ७-३८-२४ (४६४१२)

इति श्रीमन्महाभारते द्रोणपर्वणि अभिमन्युवधपर्वणि
त्रयोदशदिवसयुद्धे अष्टत्रिंशोऽध्यायः ॥ ३८ ॥
Mahabharata - Drona Parva - Chapter Footnotes

५-३८-५ तल्पं इति पाठे रथगतशय्याम् ॥
५-३८-१० अधिवासो निवासः ॥
५-३८-१६ अविशेषवत्तुल्यमित्यर्थः ॥
५-३८-१७ अस्य निरस्य ॥
५-३८-३८ अष्टत्रिंशोऽध्यायः ॥

---

द्रोनपर्व-अध्यय०३९
॥ श्रीः ॥
७.३९. अध्यायः ३९

Mahabharata - Drona Parva - Chapter Topics
दुश्शासनाभिमन्युसमागमः ॥ १ ॥

Mahabharata - Drona Parva - Chapter Text

७-३९-० (४६४१३)
धृतराष्ट्र उवाच। ७-३९-०क्ष् (४३५३)
द्वैधीभवति मे चित्तं शुचा तुष्ट्या च सञ्जय ।
मम पुत्रस्य यत्सैन्यं सौभद्रः समवारयत् ॥ ७-३९-१ (४६४१४)

विस्तरेणैव मे शंस सर्वं गावल्गणे पुनः ।
विक्रीडितं कुमारस्य स्कन्दस्येवासुरैः सह ॥ ७-३९-२ (४६४१५)
सञ्जय उवाच। ७-३९-३क्ष् (४३५४)
हन्त ते सम्प्रवक्ष्यामि विमर्दमतिदारुणम् ।
एकस्य च बहूनां च यथासीत्तुमुलो रणः ॥ ७-३९-३ (४६४१६)
अभिमन्युः कृतोत्साहः कृतोत्साहानरिन्दमान् ।
रथस्थो रथिनः सर्वांस्तावकानभ्यवर्षयत् ॥ ७-३९-४ (४६४१७)
द्रोणं कर्णं कृपं शल्यं द्रौणिं भोजं बृहद्बलम् ॥
दुर्योधनं सौमदत्तिं शकुनिं च महाबलम् ॥ ७-३९-५ (४६४१८)
नानानृपान्नृपसुतान्सैन्यानि विविधानि च ।
अलातचक्रवत्सर्वांश्चरन्बाणैः समार्पयत् ॥ ७-३९-६ (४६४१९)
निघ्नन्नमित्रान्सौभद्रः परमास्त्रैः प्रतापवान् ।
अदर्शयत तेजस्वी दिक्षु सर्वासु भारत ॥ ७-३९-७ (४६४२०)
तद्दृष्ट्वा चरितं तस्य सौभद्रस्यामितौजसः ।
समकम्पन्त सैन्यानि त्वदीयानि सहस्रशः ॥ ७-३९-८ (४६४२१)
अथाब्रवीन्महाप्राज्ञो भारद्वाजः प्रतापवान् ।
हर्षेणोत्फुल्लनयनः कृपमाभाष्य सत्वरम् ॥ ७-३९-९ (४६४२२)
घटयन्निव मर्माणि पुत्रस्य तव भारत ।
अभिमन्युं रणे दृष्ट्वा तदा रणविशारदम् ॥ ७-३९-१० (४६४२३)
द्रोण उवाच। ७-३९-११क्ष् (४३५५)
एष गच्छति सौभद्रः पार्थानां प्रथितो युवा ।
नन्दयन्सुहृदः सर्वान्राजानं च युधिष्ठिरम् ॥ ७-३९-११ (४६४२४)
नकुलं सहदेवं च भीमसेनं च पाण्डवम् ।
बन्धून्सम्बन्धिनश्चान्यान्मध्यस्थान्सुहृदस्तथा ॥ ७-३९-१२ (४६४२५)
नास्य युद्धे समं मन्ये कञ्चिदन्यं धनुर्धरम् ।
इच्छन्हन्यादिमां सेनां किमर्थमपि नेच्छति ॥ ७-३९-१३ (४६४२६)
सञ्जय उवाच। ७-३९-१४क्ष् (४३५६)
द्रोणस्य प्रीतिसंयुक्तं श्रुत्वा वाक्यं तवात्मजः ।
आर्जुनिं प्रति सङ्क्रुद्धो द्रोणं दृष्ट्वा स्मयन्निव ॥ ७-३९-१४ (४६४२७)
अथ दुर्योधनः कर्णमब्रवीद्बाह्लिकं नृपः ।
दुःशासनं मद्रराजं तांस्तथाऽन्यान्महारथान् ॥ ७-३९-१५ (४६४२८)
सर्वभूर्धाभिषिक्तानामाचार्यो ब्रह्मवित्तमः ।
अर्जुनस्य सुतं मूढं नायं हन्तुमिहेच्छति ॥ ७-३९-१६ (४६४२९)
न ह्यस्य समरे युद्ध्येदन्तकोऽप्याततायिनः ।
किमङ्ग पुनरेवान्यो मर्त्यः सत्यं ब्रवीमि वः ॥ ७-३९-१७ (४६४३०)
अर्जुनस्य सुतं त्वेष शिष्यत्वादभिरक्षति ।

शिष्याः पुत्राश्च दयितास्तदपत्यं च धर्मिणाम् ॥ ७-३९-१८ (४६४३१)
संरक्ष्यमाणो द्रोणेन मन्यते वीर्यमात्मनः ।
आत्मसम्भावितो मूढस्तं प्रमथ्नीत माचिरम् ॥ ७-३९-१९ (४६४३२)
एवमुक्तास्तु ते राज्ञा सात्वतीपुत्रमभ्ययुः ।
संरब्धास्ते जिघांसन्तो भारद्वाजस्य पश्यतः ॥ ७-३९-२० (४६४३३)
दुःशासनस्तु तच्छ्रुत्वा दुर्योधनवचस्तदा ।
अब्रवीत्कुरुशार्दूल दुर्योधनमिदं वचः ॥ ७-३९-२१ (४६४३४)
अहमेनं हनिष्यामि महाराज ब्रवीमि ते ।
मिषतां पाण्डु पुत्राणां पाञ्चालानां च पश्यताम् ॥ ७-३९-२२ (४६४३५)
ग्रसिष्याम्यद्य सौभद्रं यथा राहुर्दिवाकरम् ।
उत्क्रुश्य चाब्रवीद्वाक्यं कुरुराजमिदं पुनः ॥ ७-३९-२३ (४६४३६)
श्रुत्वा कृष्णौ मया ग्रस्तं सौभद्रमतिमानिनौ ।
गमिष्यतः प्रेतलोकं जीवलोकान्न संशयः ॥ ७-३९-२४ (४६४३७)
तौ च श्रुत्वा मृतौ व्यक्तं पाण्डोः क्षेत्रोद्भवाः सुताः ।
एकाह्ना ससुहृद्वर्गाः क्लैब्याद्धास्यन्ति जीवितम् ॥ ७-३९-२५ (४६४३८)
तस्मादस्मिन्हते शत्रौ हताः सर्वेऽहितास्तव ।
शिवेन मां ध्याहि राजन्नेष हन्मि रिपूंस्तव ॥ ७-३९-२६ (४६४३९)
सञ्जय उवाच। ७-३९-२७क्ष् (४३५७)
एवमुक्त्वाऽनदद्राजन्पुत्रो दुःशासनस्तव ।
सौभद्रमभ्ययात्क्रुद्धः शरवर्षैरवाकिरन् ॥ ७-३९-२७ (४६४४०)
तमतिक्रुद्धमायान्तं तव पुत्रमरिंदमः ।
अभिमन्युः शरैस्तीक्ष्णैः षड्विंशत्या समार्पयत् ॥ ७-३९-२८ (४६४४१)
दुःशासनस्तु सङ्क्रुद्धः प्रभिन्न इव कुञ्जरः ।
अयोधयत सौभद्रमभिमन्युश्च तं रणे ॥ ७-३९-२९ (४६४४२)
तौ मण्डलानि चित्राणि रथाभ्यां सव्यदक्षिणम् ।
चरमाणावयुध्येतां रथशिक्षाविशारदौ ॥ ७-३९-३० (४६४४३)
अथ पणवमृदङ्गदुन्दुभीनां
क्रकचमहानकभेरिझर्झराणम् ।
निनदमतिभृशं नराः प्रचक्रु--
र्लवणजलोद्भवसिंहनादमिश्रम् ॥ ॥ ७-३९-३१ (४६४४४)

इति श्रीमन्महाभारते द्रोणपर्वणि अभिमन्युवधपर्वणि
त्रयोदशदिवसयुद्धे एकोनचत्वारिंशोऽध्यायः ॥ ३९ ॥
Mahabharata - Drona Parva - Chapter Footnotes

५-३९-१७ अङ्गेत्यसूयायाम् ॥

५-३९-१८ धर्मिणामिति सोल्लुण्ठम् ॥
५-३९-१९ आत्मसंभावितः अहमेवेति सम्भावनामारूढः ॥
५-३९-३१ लवणजलोद्भवः शङ्खः ॥
५-३९-३९ एकोनचत्वारिंशोऽध्यायः ॥

---

द्रोनपर्व-अध्यय०४०
॥ श्रीः ॥
७.४०. अध्यायः ४०

Mahabharata - Drona Parva - Chapter Topics
अभिमन्युना कर्णदुःशासनपराजयः ॥१ ॥

Mahabharata - Drona Parva - Chapter Text

७-४०-० (४६४४५)
सञ्जय उवाच। ७-४०-०क्ष् (४३५८)
ग्ततः समभवद्युद्धं तयोः पुरुषसिंहयोः ।
तस्मिन्काले महाबाहुः सौभद्रः परवीरहा ॥ ७-४०-१ (४६४४६)
सशरं कार्मुकं छित्त्वा लाघवेन व्यपातयत् ।
दुःशासनं शरैस्तीक्ष्णैः संततक्ष समन्ततः'॥ ७-४०-२ (४६४४७)
शरविक्षतगात्रं तु प्रत्यमित्रमवस्थितम् ।
अभिमन्युः स्मयन्धीमान्दुःशासनमथाब्रवीत् ॥ ७-४०-३ (४६४४८)
दिष्ट्या पश्यामि सङ्ग्रमे मानिनं शूरमागतम् ।
निष्ठुरं त्यक्तधर्माणमाक्रोशनपरायणम् ॥ ७-४०-४ (४६४४९)
यत्सभायां त्वया राज्ञो धृतराष्ट्रस्य शृण्वतः ।
कोपितः परुषैर्वाक्यैर्धर्मराजो युधिष्ठिरः ॥ ७-४०-५ (४६४५०)
जयोन्मत्तेन भीमश्च बह्वबद्धं प्रभाषितः ।
अक्षकूटं समाश्रित्य सौबलस्यात्मनो बलम् ॥ ७-४०-६ (४६४५१)
तत्त्वयेदमनुप्राप्तं तस्य कोपान्महात्मनः ।
परवित्तापहारस्य कोधस्याप्रशमस्य च ॥ ७-४०-७ (४६४५२)
लोभस्य ज्ञाननाशस्य द्रोहस्यात्याहितस्य च ।
पितॄणां मम राज्यस्य हरणस्योग्रधन्विनाम् ॥ ७-४०-८ (४६४५३)
तत्त्वयेदमनुप्राप्तं प्रकोपाद्वै महात्मनाम् ।
स तस्योग्रमधर्मस्य फलं प्राप्नुहि दुर्मते ॥ ७-४०-९ (४६४५४)
शासिताऽस्म्यद्य ते बाणैः सर्वसैन्यस्य पश्यतः ।
अद्याहमनृणस्तस्य कोपस्य भविता रणे ॥ ७-४०-१० (४६४५५)

अमर्षितायाः कृष्णायाः काङ्क्षितस्य च मे पितुः ।
अद्य कौरव्य भीमस्य भवितास्म्यनृणो युधि ।
न हि मे मोक्ष्यसे जीवन्यदि नोत्सृजसे रणं ॥ ७-४०-११ (४६४५६)
सञ्जय उवाच। ७-४०-१२क्ष् (४३५९)
एवमुक्त्वा महाबाहुर्बाणं दुःशासनान्तकम् ।
संदधे परवीरघ्नः कालाग्न्यनिलवर्चसम् ॥ ७-४०-१२ (४६४५७)
तस्योरस्तूर्णमासाद्य जत्रुदेशे विभिद्य तम् ।
जगाम सह पुङ्खेन वल्मीकमिव पन्नगः ।
अथैनं पञ्चविंशत्या पुनरेव समार्पयत् ॥ ७-४०-१३ (४६४५८)
शरैरग्निसमस्पर्शैराकर्णसमचोदितैः ।
स गाढविद्धो व्यथितो रथोपस्थ उपाविशत् ।
दुःशासनो महाराज कश्मलं चाविशन्महत् ॥
सारथिस्त्वरमाणस्तु दुःशासनमचेतनम् ।
रणमध्यादपोवाह सौभद्रशरपीडितम् ॥ ७-४०-१४ (४६४५९)
पाण्डवा द्रौपदेयाश्च विराटश्च समीक्ष्य तम् ।
पाञ्चालाः केकयाश्चैव सिंहनादमथानदन् ॥ ७-४०-१६ (४६४६०)
वादित्राणि च सर्वाणि नानालिङ्गानि सर्वशः ।
प्रावादयन्त संहृष्टाः पाण्डूनां तत्र सैनिकाः ॥ ७-४०-१७ (४६४६१)
अपश्यन्स्मयमानाश्च सौभद्रस्य विचेष्टितम् ।
अत्यन्तवैरिणं दृप्तं दृष्ट्वा शत्रुं पराजितम् ॥ ७-४०-१८ (४६४६२)
धर्ममारुतशक्राणामश्विनोः प्रतिमास्तथा ।
धारयन्तो ध्वजाग्रेषु द्रौपदेया महारथाः ॥ ७-४०-१९ (४६४६३)
सात्यकिश्चेकितानश्च धृष्टद्युम्नशिखण्डिनौ ।
केकया धृष्टकेतुश्च मात्स्याः पाञ्चालसृञ्जयाः ॥ ७-४०-२० (४६४६४)
पाण्डवाश्च मुदा युक्ता युधिष्ठिरपुरोगमाः ।
अभ्यद्रवन्त त्वरिता द्रोणानीकं बिभित्सवः ॥ ७-४०-२१ (४६४६५)
ततोऽभवन्महायुद्धं त्वदीयानां परैः सह ।
जयमाकाङ्क्षमाणानां शूराणामनिवर्तिनाम् ॥ ७-४०-२२ (४६४६६)
तथा तु वर्तमाने वै सङ्ग्रामेऽतिभयंकरे ।
दुर्योधनो महाराज राधेयमिदमब्रवीत् ॥ ७-४०-२३ (४६४६७)
पश्य दुःशासनं वीरमभिमन्युवशंगतम् ।
प्रतपन्तमिवादित्यं निघ्नन्तं शात्रवान्रणे। ७-४०-२४ (४६४६८)
अथ चैते सुसंरब्धाः सिंहा इव बलोत्कटाः ।
सौभद्रमुद्यतास्त्रातुमभ्यधावन्त पाण्डवाः ॥ ७-४०-२५ (४६४६९)
सञ्जय उवाच। ७-४०-२६क्ष् (४३६०)
ततः कर्णः शरैस्तीक्ष्णैरभिमन्युं दुरासदम् ।

अभ्यवर्षत सङ्क्रुद्धः पुत्रस्य हितकृत्तव ॥ ७-४०-२६ (४६४७०)
तस्य चानुचरांस्तीक्ष्णैर्विव्याध परमेषुभिः ।
अवज्ञापूर्वकं शूरः सौभद्रस्य परणाजिरे ॥ ७-४०-२७ (४६४७१)
अभिमन्युस्तु राधेयं त्रिसप्तत्या शिलीमुखैः ।
अविध्यत्त्वरितो राजन्द्रोणं प्रेप्सुर्महामनाः ॥ ७-४०-२८ (४६४७२)
तं तथा नाशकत्कश्चिद्द्रोणाद्वारयितुं रथी ।
आरुजन्तं रथव्रातान्वज्रहस्तात्मजात्मजम् ॥ ७-४०-२९ (४६४७३)
ततः कर्णो जयप्रेप्सुर्मानी सर्वधनुष्मताम् ।
सौभद्रं शतशोऽविध्यदुत्तमास्त्राणि दर्शयन् ॥ ७-४०-३० (४६४७४)
सोऽस्त्रैरस्त्रविदां श्रेष्ठो रामशिष्यः प्रतापवान् ।
समरे शत्रुदुर्धर्षमभिमन्युमपीडयत् ॥ ७-४०-३१ (४६४७५)
स तथा पीड्यमानस्तु राधेयेनास्त्रवृष्टिभिः ।
समरेऽमरसङ्काशः सौभद्रो न व्यशीर्यत ॥ ७-४०-३२ (४६४७६)
ततः शिलाशितैस्तीक्ष्णैर्भल्लैरानतपर्वभिः ।
छित्त्वा धनूंषि शूराणामार्जुनिः कर्णमार्दयत् ॥ ७-४०-३३ (४६४७७)
धनुर्मण्डलनिर्मुक्तैः शरैराशीविषोपमैः ।
सच्छत्रध्वजयन्तारं साश्वमाशु स्मयन्निव ॥ ७-४०-३४ (४६४७८)
कर्णोऽपि चास्य चिक्षेप बाणान्सन्नतपर्वणः ।
असम्भ्रान्तश्च तान्सर्वानगृह्णात्फल्गुनात्मजः ॥ ७-४०-३५ (४६४७९)
ततो मुहूर्तात्कर्णस्य बाणेनैकेन वीर्यवान् ।
सध्वजं कार्मुकं वीरश्छित्त्वा भूमावपातयत् ॥ ७-४०-३६ (४६४८०)
ततः कृच्छ्रगतं कर्णं दृष्ट्वा कर्णादनन्तरः ।
सौभद्रमभ्ययात्तूर्णं दृढमुद्यम्य कार्मुकम् ॥ ७-४०-३७ (४६४८१)
तत उच्चुक्रुशुः पार्थास्तेषां चानुचरा जनाः ।
वादित्राणि च सञ्जघ्नुः सौभद्रं चापि तुष्टुवुः ॥ ॥ ७-४०-३८ (४६४८२)

इति श्रीमन्महाभारते द्रोणपर्वणि अभिमन्युवधपर्वणि
त्रयोदशदिवसयुद्धे चत्वारिंशोऽध्यायः ॥ ४० ॥
Mahabharata - Drona Parva - Chapter Footnotes

५-४०-८ अत्याहितस्य जीवानपेक्षकर्मणः । साहसस्येतियावत् ॥
५-४०-४० चत्वारिंशोऽध्यायः ॥

---

द्रोणपर्व-अध्यय०४१
॥ श्रीः ॥
७.४१. अध्यायः ४१

Mahabharata - Drona Parva - Chapter Topics
अभिमन्युपराक्रमवर्णनम् ॥ १ ॥

Mahabharata - Drona Parva - Chapter Text

७-४१-० (४६४८३)
सञ्जय उवाच। ७-४१-०क्ष् (४३६१)
सोऽभ्यगच्छद्धनुष्पाणिर्ज्यां विकर्षन्पुनः पुनः ।
सच्छत्रध्वजयन्तारं साश्वमाशु स्मयन्निव ॥ ७-४१-१ (४६४८४)
सोऽपिध्यद्दशभिर्बाणैरभिमन्युं दुरासदम् ।
सच्छत्रध्वजयन्तारं साश्वमाशु स्मयन्निव ॥ ७-४१-२ (४६४८५)
पितृपैतामहं कर्म कुर्वाणमतिमानुषम् ।
दृष्ट्वार्दितं शरैः कार्ष्णिं त्वदीया हृषिताऽभवन् ॥ ७-४१-३ (४६४८६)
तस्याभिमन्युरायम्य स्मयन्नेकेन पत्रिणा ।
शिरः प्रच्यावयामास तद्रथात्प्रापतद्भुवि ॥ ७-४१-४ (४६४८७)
कर्णिकारमिवाधूतं वातेनापतितं नगात् ।
ग्कर्णानुजं च सम्प्रेक्ष्य तावका व्यथिताऽभवन्'।
भ्रातरं निहतं दृष्ट्वा कर्णश्चासीत्पराङ्मुखः ॥ ७-४१-५ (४६४८८)
विमुखीकृत्य कर्णं तु सौभद्रः कङ्कपत्रिभिः ।
अन्यानपि महेष्वासांस्तूर्णमेवाभिदुद्रुवे ॥ ७-४१-६ (४६४८९)
ततस्तद्वितते सैन्यं हस्त्यश्वरथपत्तिमत् ।
क्रुद्धोऽभिमन्युरभिनत्तिग्मतेजा महारथः ॥ ७-४१-७ (४६४९०)
कर्णस्तु बहुभिर्बाणैरर्द्यमानोऽभिमन्युना ।
अपायाज्जवनैरश्वैस्ततोऽनीकमभिद्रवत् ॥ ७-४१-८ (४६४९१)
गतिंष्ठ कर्ण महेष्वास कृप दुर्योधनेति च ।
द्रोणस्य क्रोशतो राजंस्तदनीकमभज्यत'॥ ७-४१-९ (४६४९२)
शलभैरिव चाकाशं धाराभिरिव पर्वतः ।
अभिमन्यो शरैश्छन्नं न प्राज्ञायत किञ्चन ॥ ७-४१-१० (४६४९३)
तावकानां तु योधानां वध्यतां निशितैः शरैः ।
अन्यत्र सैन्धवाद्राजन्न स्म कश्चिदतिष्ठत ॥ ७-४१-११ (४६४९४)
सौभद्रस्तु ततः शङ्खं प्रध्माय पुरुषर्षभः ॥
शीघ्रमभ्यपतत्सेनां भारतीं भरतर्षभ ॥ ७-४१-१२ (४६४९५)
स कक्षेऽग्निरिवोत्सृष्टो निर्दहंस्तरसा रिपून् ।
मध्ये भारतसैन्यानामार्जुनिः पर्यवर्तत ॥ ७-४१-१३ (४६४९६)
रथनागाश्वमनुजानर्दयन्निशितैः शरैः ।

सम्प्रविश्याकरोद्भूमिं कबन्धगणसङ्कुलाम् ॥ ७-४१-१४ (४६४९७)
सौभद्रचापप्रभवैर्निकृत्ताः परमेषुभिः ।
स्वानेवाभिमुखान्घ्नन्तः प्राद्रवञ्जीवितार्थिनः ॥ ७-४१-१५ (४६४९८)
ते घोरा रौद्रकर्माणो विपाठा बहवः शिताः ।
निघ्नन्तो रथनागाश्वाञ्जग्मुराशु वसुन्धराम् ॥ ७-४१-१६ (४६४९९)
सायुधाः साङ्गुलित्राणाः सगदाः साङ्गदा रणे ।
दृश्यन्ते बाहवश्छिन्ना हेमाभारणभूषिताः ॥ ७-४१-१७ (४६५००)
शराश्चापानि खड्गाश्च शरीराणि शिरांसि च ।
सकुण्डलानि स्रग्वीणि भूमावासन्सहस्रशः ॥ ७-४१-१८ (४६५०१)
सोपस्करैरधिष्ठानैरीषादण्डकबन्धुरैः ।
अक्षैर्विमथितैश्चक्रैर्बहुधा पतितैर्युगैः ॥ ७-४१-१९ (४६५०२)
शक्तिचापासिभिश्चैव पतितैश्च महाध्वजैः ।
चर्मचापशरैश्चैव व्यवकीर्णैः समन्ततः ॥ ७-४१-२० (४६५०३)
निहतैः क्षत्रियैरश्वैर्वारणैश्च विशाम्पते ।
अगम्यरूपा पृथिवी क्षणेनासीत्सुदारुणा ॥ ७-४१-२१ (४६५०४)
वध्यतां राजपुत्राणां क्रन्दतामितरेतरम् ।
प्रादुरासीन्महाशब्दो भीरूणां भयवर्धनः ॥ ७-४१-२२ (४६५०५)
स शब्दो भरतश्रेष्ठ दिशः सर्वा व्यनादयत् ॥
सौभद्रश्चाद्रवत्सेनां घ्नन्वराश्वरथद्विपान् ॥ ७-४१-२३ (४६५०६)
कक्षमग्निरिवोत्सृष्टो निर्दहंस्तरसा रिपून् ।
मध्ये भारतसैन्यानामार्जुनिः प्रत्यदृश्यत ॥ ७-४१-२४ (४६५०७)
विचरन्तं दिशः सर्वाः प्रदिशश्चापि भारत ।
तं तदा नानुपश्यामः सैन्ये च रजसाऽऽवृते ॥ ७-४१-२५ (४६५०८)
आददानं गजाश्वानां णां चायुंषि भारत ।
क्षमेन भूयः पश्यामः सूर्यं मध्यंदिने यथा ॥ ७-४१-२६ (४६५०९)
अभिमन्युं महाराज प्रतपन्तं द्विषद्गणान् ।
स वासवसमः सङ्ख्ये वासवस्यात्मजात्मजः ॥ ७-४१-२७ (४६५१०)
अभिमन्युर्महाराज सैन्यमध्ये व्यरोचत ।
ग्यथा पुरा वह्निसुतः सुरसैन्येषु वीर्यवान्'॥ ॥ ७-४१-२८ (४६५११)

इति श्रीमन्महाभारते द्रोणपर्वणि अभिमन्युवधपर्वणि
त्रयोदशदिवसयुद्धे एकचत्वारिंशोऽध्यायः ॥ ४१ ॥

---

द्रोणपर्व-अध्यय०४२
॥ श्रीः ॥
७.४२. अध्यायः ४२

Mahabharata - Drona Parva - Chapter Topics

सञ्जयेन धृतराष्ट्रं प्रति अभिमन्युमनुगतानां जयद्रथेन निरोधकथनम् ॥ १ ॥
तथा जयद्रथस्य रुद्रात् पाण्डवनिरोधरूपवरलाभकथनम् ॥ २ ॥

Mahabharata - Drona Parva - Chapter Text

७-४२-० (४६५१२)
धृतराष्ट्र उवाच। ७-४२-०क्ष् (४३६२)
बालमत्यन्तसुखिनं स्वबाहुबलदर्पितम् ।
युद्धेष्वकुशलं वीरं कुलपुत्रं तनुत्यजम् ॥ ७-४२-१ (४६५१३)
गाहमानमनीकानि सदश्वैश्च त्रिहायनैः ।
अपि यौधिष्ठिरात्सैन्यात्कश्चिदन्वपतद्बली ॥ ७-४२-२ (४६५१४)
सञ्जय उवाच। ७-४२-३क्ष् (४३६३)
युधिष्ठिरो भीमसेनः शिखण्डी सात्यकिर्यमौ ।
धृष्टद्युम्नो विराटश्च द्रुपदश्च सकेकयः ॥ ७-४२-३ (४६५१५)
धृष्टकेतुश्च संरब्धो मात्स्याश्चाभ्यपतन्रणे ।
तेनैव तु पथा यान्तः पितरो मातुलैः सह ॥ ७-४२-४ (४६५१६)
अभ्यद्रवन्परीप्सन्तो व्यूढानीकाः प्रहारिणः ।
तान्दृष्ट्वा द्रवतः शूरांस्त्वदीया विमुखाऽभवन् ॥ ७-४२-५ (४६५१७)
ततस्तद्विमुखं दृष्ट्वा तव सूनोर्महद्बलम् ।
जामाता तव तेजस्वी संस्तम्भयिषुराद्रवत् ॥ ७-४२-६ (४६५१८)
सैन्धवस्य महाराज पुत्रो राजा जयद्रथः ।
स पुत्रगृद्धिनः पार्थान्सहसैन्यानवारयत् ॥ ७-४२-७ (४६५१९)
उग्रधन्वा महेष्वासो दिव्यमस्त्रमुदीरयन् ।
वार्धक्षत्रिरुपासेधत्प्रवणादिव कुञ्जरः ॥ ७-४२-८ (४६५२०)
धृतराष्ट्र उवाच। ७-४२-९क्ष् (४३६४)
कतिभारमहं मन्ये सैन्धवे सञ्जयाहितम् ।
यदेकः पाण्डवान्क्रुद्धान्पुप्रेप्सूनवारयत् ॥ ७-४२-९ (४६५२१)
अत्यद्भुतमहं मन्ये बलं शौर्यं च सैन्धवे ।
तस्य प्रब्रूहि मे वीर्यं कर्म चाग्र्यं महात्मनः ॥ ७-४२-१० (४६५२२)
किं जप्तं हुतमिष्टं वा किं सुतप्तमथो तपः ।
ग्दमो वा ब्रह्मचर्यं वा सूत यच्चास्य सत्तम ॥ ७-४२-११ (४६५२३)
देवं कतममाराध्य विष्णुमीशानमब्जजम् ।
सिन्धुराट् तनये सक्तान्क्रुद्धान्पार्थानवारयत् ॥ ७-४२-१२ (४६५२४)

नैवं कृतं महत्कर्म भीष्मेणाज्ञासिषं तथा'।
सिन्धुराजो हि येनैकः पाण्डवान्समवारयत् ॥ ७-४२-१३ (४६५२५)
सञ्जय उवाच। ७-४२-१४क्ष् (४३६५)
द्रौपदीहरणे यत्तद्भीमसेनेन निर्जितः ।
मानात्स तप्तवान्राजा वरार्थी सुमहत्तपः ॥ ७-४२-१४ (४६५२६)
इन्द्रियाणीन्द्रियार्थेभ्यः प्रियेभ्यः सन्निवर्त्य सः ।
क्षुत्पिपासातकपसहः कृशो धमनिसन्ततः ॥ ७-४२-१५ (४६५२७)
देवमाराधयच्छर्वं गृणन्ब्रह्म सनातनम् ।
भक्तानुकम्पी भगवांस्तस्य चक्रे ततो दयाम् ॥ ७-४२-१६ (४६५२८)
स्वप्नान्तेऽप्यथ चैवाह हरः सिन्धुपतेः सुतम् ।
वरं वृणीष्व प्रीतोऽस्मि जयद्रथ किमिच्छसि ॥ ७-४२-१७ (४६५२९)
एवमुक्तस्तु शर्वेण सिन्धुराजो जयद्रथः ।
उवाच प्रणतो रुद्रं प्राञ्जलिर्नियतात्मवान् ॥ ७-४२-१८ (४६५३०)
पाण्डवेयानहं सङ्ख्ये भीमवीर्यपराक्रमान् ।
वारयेयं रथेनैकः समस्तानिति भारत ॥ ७-४२-१९ (४६५३१)
एवमुक्तस्तु देवेशो जयद्रथमथाब्रवीत् ।
ददामि ते वरं सौम्य विना पार्थं धनञ्जयम् ।
वारयिष्यसि सङ्ग्रामे चतुरः पाण्डुनन्दनान् ॥ ७-४२-२० (४६५३२)
गएकाहमिति राजेन्द्र तत्रैवान्तरधीयत'।
एवमस्त्विति देवेशमुक्त्वाबुद्ध्यत पार्थिवः ॥ ७-४२-२१ (४६५३३)
स तेन वरदानेन दिव्येनास्त्बलेन च ।
एकः संवारयामास पाण्डवानामनीकिनीम् ॥ ७-४२-२२ (४६५३४)
तस्य ज्यातलघोषेण क्षत्रियान्भयमाविशत् ।
परांस्तु तव सैन्यस्य हर्षः परमकोऽभवत् ॥ ७-४२-२३ (४६५३५)
दृष्ट्वा तु क्षत्रिया भारं सैन्धवे सर्वमाहितम् ।
उत्क्रुश्याभ्यद्रवन्राजन्येन यौधिष्ठिरं बलम् ॥ ॥ ७-४२-२४ (४६५३६)

इति श्रीमन्महाभारते द्रोणपर्वणि अभिमन्युवधपर्वणि
त्रयोदशदिवसयुद्धे द्विचत्वारिंशोऽध्यायः ॥ ४२ ॥
Mahabharata - Drona Parva - Chapter Footnotes

५-४२-८ प्रवणान्निम्नप्रदेशं प्नाप्य ॥
५-४२-१० बलं सामर्थ्यम् । शौर्यमुत्साहः वीर्यं प्रभावम् ॥
५-४२-४२ द्विचत्वारिंशोऽध्यायः ॥

---

द्रोनपर्व-अध्यय०४३

॥ श्रीः ॥

७.४३. अध्यायः ४३

Mahabharata - Drona Parva - Chapter Topics

जयद्रथेन रुद्रवरात् व्यूहपथं पिधाय पाण्डवादिनिरोधः ॥१ ॥

Mahabharata - Drona Parva - Chapter Text

७-४३-० (४६५३७)
सञ्जय उवाच। ७-४३-०क्ष् (४३६६)
यन्मां पृच्छसि राजेन्द्र सिन्धुराजस्य विक्रमम् ।
शृणु तत्सर्वमाख्यास्ये यथा पाण्डूनयोधयत् ॥ ७-४३-१ (४६५३८)
तमूहुर्वाजिनो वश्याः सैन्धवाः साधुवाहिनः ।
विकुर्वाणा बृहन्तोऽश्वाः श्वसनोपरंहसः ॥ ७-४३-२ (४६५३९)
गन्धर्वनगराकारं विधिवत्कल्पितं रथम् ।
तस्याभ्यशोभयत्केतुर्वाराहो राजतो महान् ॥ ७-४३-३ (४६५४०)
श्वेतश्चत्रपताकाभिश्चामरव्यजनेन च ।
स बभौ राजलिङ्गैस्तैस्तारापतिरिवाम्बरे ॥ ७-४३-४ (४६५४१)
मुक्तावज्रमणिस्वर्णैर्भूषितं तदयस्मयम् ।
वरूथं विबभौ तस्य ज्योतिर्भिः खमिवावृतम् ॥ ७-४३-५ (४६५४२)
स विष्फार्य महच्चापं किरन्निषुगणान्बहून ।
तत्कण्डं पूरयामास यदार्जुनिरदारयत् ॥ ७-४३-६ (४६५४३)
स सात्यकिं त्रिभिर्बाणैरष्टभिश्च वृकोदरम् ।
धृष्टद्युम्नं तथा षष्ट्या विराटं दशभिः शरैः ॥ ७-४३-७ (४६५४४)
द्रुपदं पञ्चभिस्तीक्ष्णैः सप्तभिश्च शिखण्डिनम् ।
केकयान्पञ्चविंशत्या द्रौपदेयांस्त्रिभिस्त्रिभिः ॥ ७-४३-८ (४६५४५)
युधिष्ठिरं तु सप्तत्या ततः शेषानपानुदत् ।
इषुजालेन महता तदद्भुतमिवाभवत् ॥ ७-४३-९ (४६५४६)
अथास्य शितपीतेन भल्लेनादिश्य कार्मुकम् ।
चिच्छेद प्रहसन्राजा धर्मपुत्रः प्रतापवान् ॥ ७-४३-१० (४६५४७)
अक्ष्णोर्निमेषमात्रेण सोऽन्यदादाय कार्मुकम् ।
विव्याध दशभिः पार्थं तांश्चैवान्यांस्त्रिभिस्त्रिभिः ॥ ७-४३-११ (४६५४८)
तत्तस्य लाघवं ज्ञात्वा भीमो भल्लैस्त्रिभिस्त्रिभिः ।
धनुर्ध्वजं च च्छत्रं च क्षितौ क्षिप्रमपातयत् ॥ ७-४३-१२ (४६५४९)
सोऽन्यदादाय बलवान्सज्जं कृत्वा च कार्मुकम् ।
भीमस्यापातयत्केतुं धनुरश्वांश्च मारिष ॥ ७-४३-१३ (४६५५०)

स हताश्वादवप्लुत्य च्छिन्नधन्वा रथोत्तमात् ।
सोत्यकेराप्लुतो यानं गिर्यग्रमिव केसरी ॥ ७-४३-१४ (४६५५१)
ततस्त्वदीयाः संहृष्टाः साधुसाध्विति वादिनः ।
सिन्धुराजस्य तत्कर्म प्रेक्ष्याश्रद्धेयमद्भुतम् ॥ ७-४३-१५ (४६५५२)
सङ्क्रुद्धान्पाण्डवानेको यद्दधारास्त्रतेजसा ।
तत्तस्य कर्म भूतानि सर्वाण्येवाभ्यपूजयन् ॥ ७-४३-१६ (४६५५३)
सौभद्रेण हतैः पूर्वं सोत्तरायोधिभिर्द्विपैः ।
पाण्डूनां दर्शितः पन्थाः सैन्धवेन निवारितः ॥ ७-४३-१७ (४६५५४)
यतमानास्तु ते वीरा मात्स्यपाञ्चालकेकयाः ।
पाण्डवाश्चान्वपद्यन्त प्रतिशेकुर्न सैन्धवम् ॥ ७-४३-१८ (४६५५५)
यो यो हि यतते भेत्तुं द्रोणानीकं तवाहितः ।
तत्तमेव वरं प्राप्य सैन्धवः प्रत्यवारयत् ॥ ॥ ७-४३-१९ (४६५५६)

इति श्रीमन्महाभारते द्रोणपर्वणि अभमन्युवधपर्वणि
त्रयोदशदिवसयुद्धे त्रिचत्वारिंशोऽध्यायः ॥ ४३ ॥
Mahabharata - Drona Parva - Chapter Footnotes

५-४३-५ वरूथं रथवेष्टनम् ॥
५-४३-१० आदिश्य एष च्छिनद्मीत्युद्दिश्य ॥
५-४३-४३ त्रिचत्वारिंशोऽध्यायः ॥

---

द्रोनपर्व-अध्यय०४४
॥ श्रीः ॥
७.४४. अध्यायः ४४

Mahabharata - Drona Parva - Chapter Topics
अभिमन्युपराक्रमवर्णनम् ॥ १ ॥

Mahabharata - Drona Parva - Chapter Text

७-४४-० (४६५५७)
सञ्जय उवाच। ७-४४-०क्ष् (४३६७)
सैन्धवेन निरुद्धेषु जयगृद्धिषु पाण्डुषु ।
सुघोरमभवद्युद्धं त्वदीयानां परैः सह ॥ ७-४४-१ (४६५५८)
प्रविश्याथार्जुनिः सेनां सत्यसन्धो दुरासदः ।
व्यक्षोभयत तेजस्वी मकरः सागरं यथा ॥ ७-४४-२ (४६५५९)

तं तथा शरवर्षेण छादयन्तमरिंदमम् ।
यथा प्रधानाः सौभद्रमभ्ययुः कुरुसत्तमाः ॥ ७-४४-३ (४६५६०)
तेषां तस्य च सम्मर्दो दारुणः समपद्यत ।
सृजतां शरवर्षाणि प्रसक्तममितौजसाम् ॥ ७-४४-४ (४६५६१)
रथव्रजेन संरुद्धस्तैरमित्रैस्तथाऽऽर्जुनिः ।
वृषसेनस्य यन्तारं हत्वा चिच्छेद कार्मुकम् ॥ ७-४४-५ (४६५६२)
तं च विव्याध बलवांस्तस्य चाश्वानजिह्मगैः ।
वातायमानैस्तैरश्वैर्विसंज्ञोऽपहृतो रणात् ॥ ७-४४-६ (४६५६३)
तेनान्तरेणाभिमन्योर्यन्तापासारयद्रथम् ।
रथव्रजास्ततो हृष्टाः साधुसाध्विति चुक्रुशुः ॥ ७-४४-७ (४६५६४)
तं सिंहमिव सङ्क्रुद्धं प्रमथ्नन्तं शरैररीन् ।
आरादायान्तमभ्येत्य वसातीयोऽभ्યयाद्द्रुतम् ॥ ७-४४-८ (४६५६५)
सोऽभिमन्युं शरैः षष्ट्या रुक्मपुङ्खैरवाकिरत् ।
अब्रवीच्च न मे जीवञ्जीवतो युधि मोक्ष्यसे ॥ ७-४४-९ (४६५६६)
तमयस्मयवर्माणमिषुणा दूरपातिना ।
विव्याध हृदि सौभद्रः स पपात व्यसुः क्षितौ ॥ ७-४४-१० (४६५६७)
वसातीयं हतं दृष्ट्वा क्रुद्धाः क्षत्रियपुङ्गवाः ।
परिवव्रुस्तदा राजंस्तव पौत्रं जिघांसवः ॥ ७-४४-११ (४६५६८)
विष्फारयन्तश्चापानि नानारूपाण्यनेकशः ।
तद्युद्धमभवद्रौद्रं सौभद्रस्यारिभिः सह ॥ ७-४४-१२ (४६५६९)
तेषां शरान्सेष्वसनाञ्शरीराणि शिरांसि च ।
सकुण्डलानि स्रग्वीणि क्रुद्धश्चिच्छेद फाल्गुनिः ॥ ७-४४-१३ (४६५७०)
सखड्गाः साङ्गुलित्राणाः सपट्टसपरश्वथाः ।
अदृश्यन्त भुजाश्छिन्ना हेमाभरणभूषिताः ॥ ७-४४-१४ (४६५७१)
स्रग्भिराभरणैर्वस्त्रैः पतितैर्विविधैर्ध्वजैः ।
वर्मभिश्चर्मभिर्हारैर्मुकुटैश्छत्रचामरैः ॥ ७-४४-१५ (४६५७२)
उपस्करैरधिष्ठानैरीषादण्डकबन्धुरैः ।
अक्षैर्विमथितैश्चक्रैर्भग्नैश्च बहुधा युगैः ॥ ७-४४-१६ (४६५७३)
अनुकर्षैः पताकाभिस्तथा सारथिवाजिभिः ।
रथैश्च भग्नैर्नागैश्च हतैः कीर्णाभवन्मही ॥ ७-४४-१७ (४६५७४)
निहतैः क्षत्रियैः शूरैर्नानाजनपदेश्वरैः ।
जयगृद्धैर्वृता भूमिर्दारुणा समपद्यत ॥ ७-४४-१८ (४६५७५)
दिशो विचरतस्तस्य सर्वाश्च प्रदिशस्तथा ।
रणेऽभिमन्योः क्रुद्धस्य रूपमन्तरधीयत ॥ ७-४४-१९ (४६५७६)
काञ्चनं यद्यदस्यासीद्वर्म चाभरणानि च ।
धनुषश्च शराणां च तदपश्याम केवलम् ॥ ७-४४-२० (४६५७७)

तं तदा नाशकत्कश्चिच्चक्षुर्भ्यामभिवीक्षितुम् ।
आददानं शरैर्योधान्मध्ये सूर्यमिव स्थितम् ॥ ॥ ७-४४-२१ (४६५७८)

इति श्रीमन्महाभारते द्रोणपर्वणि अभिमन्युवधपर्वणि
त्रयोदशदिवसयुद्धे चतुश्चत्वारिंशोऽध्यायः ॥ ४४ ॥

---

द्रोनपर्व-अध्यय०४५
॥ श्रीः ॥
७.४५. अध्यायः ४५

Mahabharata - Drona Parva - Chapter Topics
अभिमन्योः पराक्रमः तेन दुर्योधनपराजयः ॥ १ ॥

Mahabharata - Drona Parva - Chapter Text

७-४५-० (४६५७९)
सञ्जय उवाच। ७-४५-०क्ष् (४३६८)
आददानस्तु शूराणामायुंष्यभवदार्जुनिः ।
अन्तकः सर्वभूतानां प्राणान्काल इवागते ॥ ७-४५-१ (४६५८०)
स शक्र इव विक्रान्तः शक्रसूनोः सुतो बली ।
अभिमन्युस्तदानीकं लोडयन्समदृश्यत ॥ ७-४५-२ (४६५८१)
प्रविश्यैव तु राजेन्द्र क्षत्रियेन्द्रान्तकोपमः ।
सत्यश्रवसमादत्त व्याघ्रो मृगमिवोल्बणः ॥ ७-४५-३ (४६५८२)
सत्यश्रवसि चाक्षिप्ते त्वरमाणा महारथाः ।
प्रगृह्य विपुलं शस्त्रमभिमन्युमुपाद्रवन् ॥ ७-४५-४ (४६५८३)
अहंपूर्वमहंपूर्वमिति क्षत्रियपुङ्गवाः ।
स्पर्धमानाः समाजग्मुर्जिघांसन्तोऽर्जुनात्मजम् ॥ ७-४५-५ (४६५८४)
क्षत्रियाणामनीकानि प्रद्रुतान्यभिधावताम् ।
जग्राह तिमिरासाद्य क्षुद्रमत्स्यानिवार्णिवे ॥ ७-४५-६ (४६५८५)
ये केचन गतास्तस्य समीपमपलायिनः ।
न ते प्रतिन्यवर्तन्त समुद्रादिव सिन्धवः ॥ ७-४५-७ (४६५८६)
महाग्रहगृहीतेव वातवेगभयार्दिता ।
समकम्पत सा सेना विभ्रष्टा नौरिवार्णवे ॥ ७-४५-८ (४६५८७)
अथ रुक्मरथो नाम मद्रेश्वरसुतो बली ।
त्रस्तामाश्वासयन्सेनामत्रस्तो वाक्यमब्रवीत् ॥ ७-४५-९ (४६५८८)
अलं त्रासेन वः शूरा नैष कश्चिन्मयि स्थिते ।

अहमेनं ग्रीहष्यामि जीवग्राहं न संशयः ॥ ७-४५-१० (४६५८९)
एवमुक्त्वा तु सौभद्रमभिदुद्राव वीर्यवान् ।
सुकल्पितेनोह्यमानः स्यन्दनेन विराजता ॥ ७-४५-११ (४६५९०)
सोऽभिमन्युं त्रिभिर्बाणैर्विद्ध्वा वक्षस्यथानदत् ।
त्रिभिश्च दक्षिणे बाहौ सव्ये च निशितैस्त्रिभिः ॥ ७-४५-१२ (४६५९१)
स तस्येष्वसनं छित्त्वा फाल्गुनिः सव्यदक्षिणौ ।
भुजौ शिरश्च स्वक्षिभ्रु क्षितौ क्षिप्रमपातयत् ॥ ७-४५-१३ (४६५९२)
दृष्ट्वा रुक्मरथं रुग्णं पुत्रं शल्यस्य मानिनम् ।
जीवग्राहं जिघृक्षन्तं सौभद्रेण यशस्विना ॥ ७-४५-१४ (४६५९३)
सङ्ग्रामदुर्मदा राजन्राजपुत्राः प्रहारिणः ।
वयस्याः शल्यपुत्रस्य सुवर्णविकृतध्वजाः ॥ ७-४५-१५ (४६५९४)
तालमात्राणि चापानि विकर्षन्तो महाबलाः ।
आर्जुनिं शरवर्षेण समन्तात्पर्यवारयन् ॥ ७-४५-१६ (४६५९५)
शूरैः निक्षाबलोपेतैस्तरुणैरत्यमर्षणैः ।
दृष्ट्वैकं समरे शूरं सौभद्रमपराजितम् ॥ ७-४५-१७ (४६५९६)
छाद्यमानं शरव्रातैर्हृष्टो दुर्योधनोऽभवत् ।
वैवस्वतस्य भवनं गतं ह्येममन्यत ॥ ७-४५-१८ (४६५९७)
सुवर्णपुङ्खैरिषुभिर्नानालिङ्गैः सुतेजनैः ।
अदृश्यमार्जुनिं चक्रुर्निमेषात्ते नृपात्मजाः ॥ ७-४५-१९ (४६५९८)
ससूताश्वध्वजं तस्य स्यन्दनं तं च मारिष ।
आचितं समपश्याम श्वाविधं शललैरिव ॥ ७-४५-२० (४६५९९)
स गाढविद्धः क्रुद्धश्च तोत्रैर्गज इवार्दितः ।
गान्धर्वमस्त्रमायच्छद्रथमायां च भारत ॥ ७-४५-२१ (४६६००)
अर्जुनो तपस्तप्त्वा गन्धर्वेभ्यो यदाहृतम् ।
तुम्बुरुप्रमुखेभ्यो वै तेनामोहयताहितान् ॥ ७-४५-२२ (४६६०१)
एकधा शतधा राजन्दृश्यते स्म सहस्रधा ।
अलातचक्रवत्सङ्ख्ये क्षिप्रमस्त्राणि दर्शयन् ॥ ७-४५-२३ (४६६०२)
रथचर्यास्त्रमायाभिर्मोहयित्वा परन्तपः ।
बिभेद शतधा राजञ्शरीराणि महीक्षिताम् ॥ ७-४५-२४ (४६६०३)
प्राणाः प्राणभृतां सङ्ख्ये प्रेषिता निशितैः शरैः ।
राजन्प्रापुरसुं लोकं शरीराण्यवनिं ययुः ॥ ७-४५-२५ (४६६०४)
धनूंष्यश्वान्नियन्तॄंश्च ध्वजान्बाहूंश्च साङ्गदान् ।
सिरांसि च शितैर्बाणैस्तेषां चिच्छेद फाल्गुनिः ॥ ७-४५-२६ (४६६०५)
चूतारामो यथा भग्नः पञ्चवर्षः फलोपगः ।
राजपुत्रशतं तद्वत्सौभद्रेण निपातितम् ॥ ७-४५-२७ (४६६०६)
क्रुद्धाशीविषसङ्काशान्सुकुमारान्सुखोचितान् ।

एकेन निहतान्दृष्ट्वा भीतो दुर्योधनोऽभवत् ॥ ७-४५-२८ (४६६०७)
रथिनः कुञ्जरानश्वान्पदातींश्चावमर्दितान् ।
दृष्ट्वा दुर्योधनः क्षिप्रमुपायात्तममर्षितः ॥ ७-४५-२९ (४६६०८)
तयोः क्षणमिवापूर्वः सङ्ग्रामः समपद्यत ।
अथाभवत्ते विमुखः पुत्रः शरशताहतः ॥ ॥ ७-४५-३० (४६६०९)

इति श्रीमन्महाभारते द्रोणपर्वणि अभिमन्युवधपर्वणि
त्रयोदशदिसयुद्धे पञ्चत्वारिंशोऽध्यायः ॥ ४५ ॥
Mahabharata - Drona Parva - Chapter Footnotes

५-४५- आयच्छत्प्रयुक्तवान् । रथमायां दुर्लक्ष्यां रथशिक्षाम् ॥
५-४५- फलोपगः फलोन्मुखः ॥
५-४५- पञ्चचत्वारिंशोऽध्यायः ॥

---

द्रोनपर्व-अध्यय०४६
॥ श्रीः ॥
७.४६. अध्यायः ४६

Mahabharata - Drona Parva - Chapter Topics
अभिमन्युना दुर्योधनसूनोर्लक्ष्मणस्य वधः ॥ १ ॥

Mahabharata - Drona Parva - Chapter Text

७-४६-० (४६६१०)
धृतराष्ट्र उवाच। ७-४६-०क्ष् (४३६९)
यथा वदसि मे सूत एकस्य बहुभिः सह ।
सङ्ग्रामं तुमुलं घोरं जयं चैव महात्मनः ॥ ७-४६-१ (४६६११)
अश्रद्धेयमिवाश्चर्यं सौभद्रस्याथ विक्रमम् ।
किन्तु नात्यद्भुतं तेषां येषां धर्मो व्यपाश्रयः ॥ ७-४६-२ (४६६१२)
दुर्योधने च विमुखे राजपुत्रशते हते ।
सौभद्रे प्रतिपत्तिं कां प्रत्यपद्यन्त मामकाः ॥ ७-४६-३ (४६६१३)
सञ्जय उवाच। ७-४६-४क्ष् (४३७०)
संशुष्कास्याश्चलन्नेत्राः प्रस्विन्ना रोमहर्षणाः ।
पालयनकृतोत्साहा निरुत्साहा द्विषज्जये ॥ ७-४६-४ (४६६१४)
हतान्भ्रातॄन्पितॄन्पुत्रान्सुहृत्सम्बन्धिबान्धवान् ।
उत्सृज्योत्सृज्य सञ्जग्मुस्त्वरयन्तो हयद्विपान् ॥ ७-४६-५ (४६६१५)

तान्प्रभग्नांस्तथा दृष्ट्वा द्रोणो द्रौणिर्बृहद्बलः ।
कृपो दुर्योधनः कर्णः कृतवर्माथ सौबलः ॥ ७-४६-६ (४६६१६)
अभ्यधावन्सुसङ्क्रुद्धाः सौभद्रमपराजितम् ।
ते तु पौत्रेण ते राजन्प्रायशो विमुखीकृताः ।
ग्सौभद्रेण महाराज शक्रप्रतिमतेजसा'॥ ७-४६-७ (४६६१७)
एकस्तु सुखसंवृद्धो बाल्याद्दर्पाच्च निर्भयः ।
इष्वस्त्रविन्महातेजा लक्ष्मणोऽर्जुनिमभ्ययात् ॥ ७-४६-८ (४६६१८)
तमन्वगेवास्य पिता पुत्रगृद्धी न्यवर्तत ।
अनुदुर्योधनं चान्ये न्यवर्तन्त महारथाः ॥ ७-४६-९ (४६६१९)
तं तेऽभिषिषिचुर्बाणैर्मेघा गिरिमिवाम्बुभिः ।
स तु तान्प्रममाथैको विष्वग्वातो यथाम्बुदान् ॥ ७-४६-१० (४६६२०)
पौत्रं तव च दुर्धर्षं लक्ष्मणं प्रियदर्शनम् ।
पितुः समीपे तिष्ठन्तं शूरमुद्यतकार्मुकम् ॥ ७-४६-११ (४६६२१)
अत्यन्तसुखसंवृद्धं धनेश्वरसुतोपमम् ।
आससाद रणे कार्ष्णिर्मत्तो मत्तमिव द्विपम् ।
ग्सिंहशाबो वने शश्वत्पुण्डरीकशिशुं यथा'॥ ७-४६-१२ (४६६२२)
लक्ष्मणेन तु सङ्गम्य सौभद्रः परवीरहा ।
शरैः सुनिशितैस्तीक्ष्णैर्बाह्वोरुरसि चार्पयत् ॥ ७-४६-१३ (४६६२३)
सङ्क्रुद्धौ वै महाराज दण्डाहत इवोरगः ।
पौत्रस्तव महाराज तव पौत्रमभाषत ॥ ७-४६-१४ (४६६२४)
सुदृष्टः क्रियतां लोको ह्यमुं लोकं गमिष्यसि ।
पश्यतां बान्धवानां त्वां नयामि यमसादनम् ॥ ७-४६-१५ (४६६२५)
एवमुक्त्वा ततो भल्लं सौभद्रः परवीरहा ।
उद्बबर्ह महाबाहुर्निर्मुक्तोरगसन्निभम् ॥ ७-४६-१६ (४६६२६)
स तस्य भुजनिर्मुक्तो लक्ष्मणस्य सुदर्शनम् ।
सुनसं सुभ्रु केशान्तं शिरोऽहार्षीत्सकुण्डलम् ॥ ७-४६-१७ (४६६२७)
ग्पौत्रस्तु तव दुर्धर्षं लक्ष्मणं प्रियदर्शनम् ।
पितुः समीपे तिष्ठन्तं प्राहिणोद्यमसादनम् ॥ ७-४६-१८ (४६६२८)
अत्यन्तसुखसंवृद्धं धनेश्वरसुतोपमम्'।
लक्ष्मणां निहतं दृष्ट्वा हाहेत्युच्चुक्रुशुर्जनाः ॥ ७-४६-१९ (४६६२९)
ततो दुर्योधनः क्रुद्धः प्रिये पुत्रे निपातिते ।
हतैनमिति चुक्रोश क्षत्रियान्क्षत्रियर्षभः ॥ ७-४६-२० (४६६३०)
ततो द्रोणः कृपः कर्णो द्रोणपुत्रो बृहद्बलः ।
कृतवर्मा च हार्दिक्यः षड्रथाः पर्यवारयन् ॥ ७-४६-२१ (४६६३१)
तांस्तु विद्ध्वा शितैर्बाणैर्विमुखीकृत्य चार्जुनिः ।
वेगेनाभ्यपतत्क्रुद्धः सैन्धवस्य महद्बलम् ॥ ७-४६-२२ (४६६३२)

आवव्रुस्तस्य पन्थानं गजानीकेन दंशिताः ।
कलिङ्गाश्च निषादाश्च क्राथपुत्रश्च वीर्यवान् ।
तत्प्रसक्तमिवात्यर्थं युद्धमासीद्विशाम्पते ॥ ७-४६-२३ (४६६३३)
ततस्तत्कुञ्जरानीकं व्यधमद्धृष्टमार्जुनिः ।
यथा वायुर्नित्यगतिर्जलदाञ्शतशोऽम्बरे ॥ ७-४६-२४ (४६६३४)
ततः क्रुद्धाः शरव्रातै राजानः समवारयन् ।
अथेतरे सन्निवृत्ताः पुनर्द्रोणमुखा रथाः ।
परमास्त्राणि धुन्वानाः सौभद्रमभिदुद्रुवुः ॥ ७-४६-२५ (४६६३५)
तान्निवार्यार्जुनिर्बाणैः क्राथपुत्रमयोधयत् ।
शरौघेणाप्रमेयेण त्वरमाणो जिघौसया ॥ ७-४६-२६ (४६६३६)
सधनुर्बाणकेयूरौ बाहू समुकुटं शिरः ।
सच्छत्रध्वजयन्तारं रथं चाश्वान्न्यपातयत् ॥ ७-४६-२७ (४६६३७)
कुलशीलश्रुतिबलैः कीर्त्या चास्त्रबलेन च ।
युक्ते तस्मिन्हते वीराः प्रायशो विमुखाऽभवन् ॥ ॥ ७-४६-२८ (४६६३८)

इति श्रीमन्महाभारते द्रोणपर्वणि अभिमन्युवधपर्वणि
त्रयोदशदिवसयुद्धे षट्चत्वारिंशोऽध्यायः ॥ ४६ ॥
Mahabharata - Drona Parva - Chapter Footnotes

५-४६-३ प्रतिपत्तिं प्रतिविधानम् ॥
५-४६-१० विष्वग्वातोऽशेषदिग्वातः ॥
५-४६-१७ केशान्तं केशैर्मनोहरम् । अन्तः प्रान्तेऽन्तिके मध्ये स्वरूपे
च मनोहरे इत्यभिधानात् ॥
५-४६-२३ धृष्टं प्रगल्भम् ॥
५-४६-४६ षट्चत्वारिंशोऽध्यायः ॥

---

द्रोनपर्व-अध्यय०४७
॥ श्रीः ॥
७.४७. अध्यायः ४७

Mahabharata - Drona Parva - Chapter Topics
अभिमन्युपराक्रमवर्णनम् ॥ १ ॥

Mahabharata - Drona Parva - Chapter Text

७-४७-० (४६६३९)

धृतराष्ट्र उवाच। ७-४७-०क्ष् (४३७१)
तथा प्रविष्टं तरुणं सौभद्रमपराजितम् ।
कुलानुरूपं कुर्वाणं सङ्ग्रामेष्वपराजितम् ॥ ७-४७-१ (४६६४०)
आजानेयैः सुबलिभिर्यान्तमश्वैस्त्रिहायनैः ।
प्लवमानमिवाकाशे के शूराः समवारयन् ॥ ७-४७-२ (४६६४१)
सञ्जय उवाच। ७-४७-३क्ष् (४३७२)
अभिमन्युः प्रविश्यैतांस्तावकान्निशितैः शरैः ।
अकरोत्पार्थिवान्सर्वान्विमुखान्पाण्डुनन्दनः ॥ ७-४७-३ (४६६४२)
तं तु द्रोणः कृपः कर्णो द्रौणिश्च सबृहद्बलः ।
कृतवर्मा च हार्दिक्यः षड्रथाः पर्यवारयन् ॥ ७-४७-४ (४६६४३)
दृष्ट्वा तु सैन्धवे भारमतिमात्रं समाहितम् ।
सैन्यं तव महाराज युधिष्ठिरमुपाद्रवत् ॥ ७-४७-५ (४६६४४)
सौभद्रमितरे वीरमभ्यवर्षञ्शराम्बुभिः ।
तालमात्राणि चापानि विकर्षन्तो महाबलाः ॥ ७-४७-६ (४६६४५)
तांस्तु सर्वान्महेष्वासान्सर्वविद्यासु निष्ठितान् ।
व्यदृष्टम्भयद्रणे बाणैः सौभद्रः परवीरहा ॥ ७-४७-७ (४६६४६)
द्रोणं पञ्चाशताविध्यद्विंशत्या च बृहद्बलम् ।
अशीत्या कृतवर्माणं कृपं षष्ट्या शिलीमुखैः ॥ ७-४७-८ (४६६४७)
रुक्मपुङ्खैर्महावेगैराकर्णसमचोदितैः ।
अविध्यद्दशभिर्बाणैरश्वत्थामानमार्जुनिः ॥ ७-४७-९ (४६६४८)
कर्णं च कर्णिना कर्णे पीतेन च शितेन च ।
फाल्गुनिर्द्विषतां मध्ये विव्याध परमेषुणा ॥ ७-४७-१० (४६६४९)
पातयित्वा कृपस्याश्वांस्तथोभौ पार्ष्णिसारथी ।
अथैनं दशभिर्बाणैः प्रत्यविध्यत्स्तनान्तरे ॥ ७-४७-११ (४६६५०)
ततो बृन्दारकं वीरं कुरूणां कीर्तिवर्धनम् ।
पुत्राणां तव वीराणां पश्यतामवधीद्बली ॥ ७-४७-१२ (४६६५१)
तं द्रौणिः पञ्चविंशत्या क्षुद्रकाणां समार्पयत् ।
वरंवरममित्राणामारुजन्तमभीतवत् ॥ ७-४७-१३ (४६६५२)
स तु बाणैः शितैस्तूर्णं प्रत्यविध्यत मारिष ।
पश्यतां धार्तराष्ट्राणामश्वत्थामानमार्जुनिः ॥ ७-४७-१४ (४६६५३)
षष्ट्या शराणां तं द्रौणिस्तिग्मधारैः सुतेजनैः ।
उग्रैर्नाकम्पयद्विद्ध्वा मैनाकमिव पर्वतम् ॥ ७-४७-१५ (४६६५४)
स तु द्रौणिं त्रिसप्तत्या हेमपुङ्खैरजिह्मगैः ।
प्रत्यविध्यन्महातेजा बलवानपकारिणम् ॥ ७-४७-१६ (४६६५५)
तस्मिन्द्रोणो बाणशतं पुत्रगृद्धी न्यपातयत् ।
अश्वत्थामा तथाऽष्टौ च परीप्सन्पितरं रणे ॥ ७-४७-१७ (४६६५६)

कर्णो द्वाविंशतिं भल्लान्कृतवर्मा च विंशतिम् ।
बृहद्बलस्तु पञ्चाशत्कृपः शारद्वतो दश ॥ ७-४७-१८ (४६६५७)
तांस्तु प्रत्यवधीत्सर्वान्दशभिर्दशभिः शरैः ।
तैरर्द्यमानः सौभद्रः सर्वतो निशितैः शरैः ॥ ७-४७-१९ (४६६५८)
तं कोसलानामधिपः कर्णिनाऽताडयद्धृदि ।
स तस्याश्वान्ध्वजं चापं सूतं चापातयत्क्षितौ ॥ ७-४७-२० (४६६५९)
अथ कोसलराजस्तु विरथः खङ्ग्रचर्मधृत् ।
इयेष फाल्गुनेः कायाच्छिरो हर्तुं सकुण्डलम् ॥ ७-४७-२१ (४६६६०)
स कोसलानामधिपं राजपुत्रं बृहद्बलम् ।
हृदि विव्याध वाणेन स भिन्नहृदयोऽपतत् ॥ ७-४७-२२ (४६६६१)
बभञ्ज च सहस्राणि दश राज्ञां महात्मनाम् ।
सृजतामशिवा वाचः खङ्गकार्मुकधारिणाम् ॥ ७-४७-२३ (४६६६२)
तथा बृहद्बलं हत्वा सौभद्रो व्यचरद्रणे ।
व्यष्टम्भयन्महेष्वासो योधांस्तव शराम्बुभिः ॥ ॥ ७-४७-२४ (४६६६३)

इति श्रीमन्महाभारते द्रोणपर्वणि अभिमन्युवधपर्वणि
त्रोयदशदिवसयुद्धे सप्तचत्वारिंशोऽध्यायः ॥ ४७ ॥

---

द्रोनपर्व-अध्यय०४८
॥ श्रीः ॥
७.४८. अध्यायः ४८

Mahabharata - Drona Parva - Chapter Topics
द्रोणादिभिः षड्भिरभिमन्योर्विरथीकरणम् ॥ १ ॥

Mahabharata - Drona Parva - Chapter Text

७-४८-० (४६६६४)
सञ्जय उवाच। ७-४८-०क्ष् (४३७३)
स कर्णं कर्णिना कर्णे पुनर्विव्याध फाल्गुनिः ।
शरैः पञ्चाशता चैनमविध्यत्कोपयन्भृशम् ॥ ७-४८-१ (४६६६५)
प्रतिविव्याध राधेयस्तावद्भिरथ तं पुनः ।
शरैराचितसर्वाङ्गो बह्वशोभत भारत ॥ ७-४८-२ (४६६६६)
कर्णं चाप्यकरोत्क्रुद्धो रुधिरोत्पीडवाहिनम् ।
कर्णोऽपि विबभौ शूरः शरैश्छिन्नोऽसृगातप्लुः ।
ग्सन्धानुगतपर्यन्तः शरदीव दिवाकरः'॥ ७-४८-३ (४६६६७)

तावुभौ शरचित्राङ्गौ रुधिरेण समुक्षितौ ।
बभूवतुर्महात्मानौ पुष्पिताविव किंशुकौ ॥ ७-४८-४ (४६६६८)
अथ कर्णस्य सचिवान्षट् शूरांश्चित्रयोधिनः ।
साश्वसूतध्वजरथान्सौभद्रो निजघान ह ॥ ७-४८-५ (४६६६९)
तथेतरान्महेष्वासान्दशभिर्दशभिः शरैः ।
प्रत्यविध्यदसम्भ्रान्तस्तदद्भुतमिवाभवत् ॥ ७-४८-६ (४६६७०)
मागधस्य तथा पुत्रं हत्वा षड्भिरजिह्मगैः ।
साश्वं ससूतं तरुणमश्वकेतुमपातयत् ॥ ७-४८-७ (४६६७१)
मार्तिकावतकं भोजं ततः कुञ्जरकेतनम् ।
क्षुरप्रेण समुन्मथ्य ननाद विसृजन्शरान् ॥ ७-४८-८ (४६६७२)
तस्य दौःशासनिर्विद्ध्वा चतुर्भिश्चतुरो हयान् ।
सूतमेकेन विव्याध दशभिश्चार्जुनात्मजम् ॥ ७-४८-९ (४६६७३)
ततो दौःशासनिं कार्ष्णिर्विद्ध्वा सप्तभिराशुगैः ।
संरम्भाद्रक्तनयनो वाक्यमुच्चैरथाब्रवीत् ॥ ७-४८-१० (४६६७४)
पिता तवाहवं त्यक्त्वा गतः कापुरुषो यथा ।
दिष्ट्या त्वमपि जानीषे योद्धुं न त्वद्य मोक्ष्यसे ॥ ७-४८-११ (४६६७५)
एतावदुक्त्वा वचनं कर्मारपरिमार्जितम् ।
नाराचं विससर्जास्मै तं द्रौणिस्त्रिभिराच्छिनत् ॥ ७-४८-१२ (४६६७६)
तस्यार्जुनिर्ध्वजं छित्त्वा शल्यं त्रिभिरताडयत् ।
तं शल्यो नवभिर्बाणैर्गार्ध्रपत्रैरताडयत् ॥ ७-४८-१३ (४६६७७)
हृद्यसम्भ्रान्तवद्राजंस्तदद्भुतमिवाभवत् ।
तस्यार्जुनिर्ध्वजं छित्त्वा हत्वोभौ पार्ष्णिसारथी ॥ ७-४८-१४ (४६६७८)
तं विव्याधायसैः षड्भिः सोपाक्रामद्रथान्तरम् ।
शत्रुञ्जयं चन्द्रकेतुं मेघवेगं सुवर्चसम् ॥ ७-४८-१५ (४६६७९)
सूर्यभासं च पञ्चैतान्हत्वा विव्याध सौबलम् ।
तं सौबलस्त्रिभिर्विद्ध्वा दुर्योधनमथाब्रवीत् ॥ ७-४८-१६ (४६६८०)
सर्व एनं विमथ्नीमः पुरैकैकं हिनस्ति नः ।
अथाब्रवीत्पुनर्द्रोणं कर्णो वैकर्तनो रणे ॥ ७-४८-१७ (४६६८१)
पुरा सर्वान्प्रमथ्नाति ब्रूह्यस्य वधम्माशु नः ।
ततो द्रोणो महेष्वासः सर्वांस्तान्प्रत्यभाषत ॥ ७-४८-१८ (४६६८२)
अस्ति वाऽस्यान्तरं किञ्चित्कुमारस्याथ पश्यत ।
अन्वस्य पितरं चाद्य चरतः सर्वतो दिशम् ॥ ७-४८-१९ (४६६८३)
शीघ्रतां नरसिंहस्य पाण्डवेयस्य पश्यत ।
धनुर्मण्डलमेवास्य रथमार्गेषु दृश्यते ॥ ७-४८-२० (४६६८४)
संदधानस्य विशिखाञ्शीघ्रं चैव विमुञ्चतः ।
आरुजन्नपि मे प्राणान्मोहयन्नपि सायकैः ॥ ७-४८-२१ (४६६८५)

प्रहर्षयति मां भूयः सौभद्रः परवीरहा ।
अतिमानं दधात्येष सौभद्रो विचरन्रणे ॥ ७-४८-२२ (४६६८६)
अन्तरं यस्य संरब्धा न पश्यन्ति महारथाः ।
अस्यतो लघुहस्तस्य दिशः सर्वा महेषुभिः ।
न विशेषं प्रपश्यामि रणे गाण्डीवधन्वनः ॥ ७-४८-२३ (४६६८७)
सञ्जय उवाच। ७-४८-२४क्ष् (४३७४)
अथ कर्णः पुनर्द्रोणमाहार्जुनिशराहतः ।
स्थातव्यमिति तिष्ठामि पीड्यमानोऽभिमन्युना ॥ ७-४८-२४ (४६६८८)
तेजस्विनः कुमारस्य शराः परमदारुणाः ।
क्षिण्वन्ति हृदयं मेऽद्य घोराः पावकतेजसः ॥ ७-४८-२५ (४६६८९)
तमाचार्योऽब्रवीत्कर्णं शनकैः प्रहसन्निव ।
अभेद्यमस्य कवचं युवा चाशुपराक्रमः ॥ ७-४८-२६ (४६६९०)
उपदिष्टा मया चास्य पितुः कवचधारणा ।
तामेष निखिलां वेत्ति ध्रुवं परपुरञ्जयः ॥ ७-४८-२७ (४६६९१)
शक्यं त्वस्य धनुश्छेत्तुं ज्यां च बाणैः समाहितैः ।
अभीषूंश्च हयांश्चैव तथोभौ पार्ष्णिसारथी ॥ ७-४८-२८ (४६६९२)
एतत्कुरु महेष्वास राधेय यदि शक्यते ।
अथैनं विमुखीकृत्य पश्चात्प्रहरणं कुरु ॥ ७-४८-२९ (४६६९३)
सधनुष्को न शक्योऽयमपि जेतुं सुरासुरैः ।
विरथं विधनुष्कं च कुरुष्वैनं यदीच्छसि ॥
‍ग्पुनः स्थितेन केनापि दुःशको जेतुमार्जुनिः'॥ ७-४८-३० (४६६९४)
सञ्जय उवाच। ७-४८-३१क्ष् (४३७५)
तदाचार्यवचः श्रुत्वा कर्णो वैकर्तनस्त्वरन् ।
अस्यतो लघुहस्तस्य पृष्ठतो धनुराच्छिनत् ॥ ७-४८-३१ (४६६९५)
अश्वानस्यावधीद्द्रोणो गौतमः पार्ष्णिसारथी ।
शेषास्तु च्छिन्नधन्वानं शरवर्षैरवाकिरन् ॥ ७-४८-३२ (४६६९६)
त्वरमाणास्त्वराकाले विरथं षण्महारथाः ।
शरवर्षैरकरुणा बालमेकमवाकिरन् ॥ ७-४८-३३ (४६६९७)
स च्छिन्नधन्वा विरथः स्वधर्ममनुपालयन् ।
खड्गचर्मधरः श्रीमानुत्पपात विहायसा ॥ ७-४८-३४ (४६६९८)
मार्गैः सकौशिकाद्यैश्च लाघवेन बलेन च ।
आर्जुनिर्व्यचरद्व्योम्नि भृशं वै पक्षिराडिव ॥ ७-४८-३५ (४६६९९)
मय्येव निपतत्येष सासिरित्यूर्ध्वदृष्टयः ।
विव्यधुस्तं महेष्वासं समरे छिद्रदर्सिनः ॥ ७-४८-३६ (४६७००)
क्षुरप्रेण महातेजास्त्वरमाणः सपत्नजित् ॥ ७-४८-३७ (४६७०१)
राधेयो निशितैर्बाणैर्व्यधमच्चर्म चोत्तमम् ॥ ७-४८-३८ (४६७०२)

व्यसिचर्मेषुपूर्णाङ्गः सोऽन्तरिक्षात्पुनः क्षितिम् ।
आस्थितश्चक्रमुद्यम्य द्रोणं क्रुद्धोऽभ्यधावत ॥ ७-४८-३९ (४६७०३)
स चक्ररेणूकज्ज्वलशोभिताङ्गो
बभावतीवोज्ज्वलचक्रपाणिः ।
रणेऽभिमन्युः क्षणमास रौद्रः
स वासुदेवानुकृतिं प्रकुर्वन् ॥ ७-४८-४० (४६७०४)
स्रुतरुधिरकृतैकरागवस्त्रो
भ्रुकुटिपुटाकुलितोऽतिसिंहनादः ।
प्रभुरमितबलो रणेऽभिमन्यु--
र्नृपवरमध्यगतो भृशं व्यराजत् ॥ ॥ ७-४८-४१ (४६७०५)

इति श्रीमन्महाभारते द्रोणपर्वणि अभिमन्युवधपर्वणि
त्रयोदशदिवसयुद्धे अष्टचत्वारिंशोऽध्यायः ॥ ४८ ॥
Mahabharata - Drona Parva - Chapter Footnotes

५-४८-१८ वधं वधोपायम् ॥
५-४८-१९ अण्वप्यस्यान्तरं ह्यद्य इति झ.पाठः ॥
५-४८-३५ कौशिकं सर्वतोभद्रम् ॥
५-४८-४८ अष्टचत्वारिंशोऽध्यायः ॥

---

द्रोनपर्व-अध्यय०४९
॥ श्रीः ॥
७.४९. अध्यायः ४९

Mahabharata - Drona Parva - Chapter Topics
अभिमन्युवधः ॥ १ ॥

Mahabharata - Drona Parva - Chapter Text

७-४९-० (४६७०६)
सञ्जय उवाच। ७-४९-०क्ष् (४३७६)
विष्णोः स्वसुर्नन्दकरः स विष्ण्वायुधभूषणः ।
रराजातिरथः सङ्ख्ये जनार्दन इवापरः ॥ ७-४९-१ (४६७०७)
मारुतोद्धूतकेशान्तमुद्यतारिवरायुधम् ।
वपुः समीक्ष्य पृथ्वीशा दुःसमीक्ष्यं सुरैरपि ॥ ७-४९-२ (४६७०८)
ग्यदि पाणितलादेतच्चक्रं मुञ्चेत फाल्गुनिः ।

वरदानान्मातुलस्य विष्णोश्चक्रमिवापतेत्'॥ ७-४९-३ (४६७०९)
तच्चक्रं भृशमुद्विग्नाः संचिच्छिदुरनेकधा ।
महारथस्ततः कार्ष्णिः स जग्राह महागदाम् ॥ ७-४९-४ (४६७१०)
विधनुःस्यन्दनासिस्तैर्विचक्रश्चारिभिः कृतः ।
अभिमन्युर्गदापाणिरश्वत्थामानमार्दयत् ॥ ७-४९-५ (४६७११)
स गदामुद्यतां दृष्ट्वा ज्वलन्तीमशनीमिव ।
अपाक्रामद्रथोपस्थाद्विक्रमांस्त्रीन्नरर्षभः ॥ ७-४९-६ (४६७१२)
तस्याश्वान्गदया हत्वा तथोभौ पार्ष्णिसारथी ।
शराचिताङ्गः सौभद्रः श्वाविद्वत्समदृश्यत ॥ ७-४९-७ (४६७१३)
ततः सुबलदायादं कालिकेयमपोथयत् ।
जघान चास्यानुचरान्गान्धारान्सप्तसप्ततिम् ॥ ७-४९-८ (४६७१४)
पुनश्चैव वसातीयाञ्जघान रथिनो दश ।
केकयानां रथान्सप्त हत्वा च दश कुञ्जरान् ।
दौःशासनिरथं साश्वं गदया समपोथयत् ॥ ७-४९-९ (४६७१५)
ततो दौःशसनिः क्रुद्धो गदामुद्यम्य मारिष ।
अभिदुद्राव सौभद्रं तिष्ठतिष्ठेति चाब्रवीत् ॥ ७-४९-१० (४६७१६)
तावुद्यतगदौ वीरावन्योन्यवधकाङ्क्षिणौ ।
भ्रातृव्यौ सम्प्रजहाते पुरेव त्र्यम्बकान्धकौ ॥ ७-४९-११ (४६७१७)
तावन्योन्यं गदाग्राभ्यामाहत्य पतितौ क्षितौ ।
इन्द्रध्वजाविवोत्सृष्टौ रणमध्ये परंतपौ ॥ ७-४९-१२ (४६७१८)
दौःशासनिरथोत्थाय कुरूणां कीर्तिवर्धनः ।
उत्तिष्ठमानं सौभद्रं गदया मूर्ध्न्यताडयत् ॥ ७-४९-१३ (४६७१९)
गदावेगेन महता व्यायामेन च मोहितः ।
विचेता न्यपतद्भूमौ सौभद्रः परवीरहा ॥ ७-४९-१४ (४६७२०)
एवं विनिहतो राजन्नेको बहुभिराहवे ।
क्षोभयित्वा चमूं सर्वां नलिनीमिव कुञ्जरः ॥ ७-४९-१५ (४६७२१)
अशोभत हतो वीरो व्याधैर्वनगजो यथा ।
तं तथा पतितं शूरं तावकाः पर्यवारयन् ॥ ७-४९-१६ (४६७२२)
दावं दग्ध्वा यथा शान्तं पावकं शिशिरात्यये ।
विमृद्य नगशृङ्गाणि सन्निवृत्तमिवानिलम् ॥ ७-४९-१७ (४६७२३)
अस्तिं गतमिवादित्यं तप्त्वा भारत वाहिनीम् ।
उपप्लुतं यथा सोमं संशुष्कमिव सागरम् ॥ ७-४९-१८ (४६७२४)
पूर्णचन्द्राभवदनं काकपक्षवृतालिकम् ।
तं भूमौ पतितं दृष्ट्वा तावकास्ते महारथाः ।
मुदा परमया युक्ताश्चुक्रुशुः सिंहवन्मुहुः ॥ ७-४९-१९ (४६७२५)
आसीत्परमको हर्षस्तावकानां विशाम्पते ।

इतरेषां तु वीराणां नेत्रेभ्यः प्रापतज्जलम् ॥ ७-४९-२० (४६७२६)
अन्तरिक्षे च भूतानि प्राक्रोशन्त विशाम्पते ।
दृष्ट्वा निपतितं वीरं च्युतं चन्द्रमिवाम्बरात् ॥ ७-४९-२१ (४६७२७)
द्रोणकर्णमुखैः षड्भिर्धार्तराष्ट्रैर्महारथैः ।
एकोऽयं निहतः शेते नैष धर्मो मतो हि नः ॥ ७-४९-२२ (४६७२८)
तस्मिन्विनिहते वीरे बह्वशोभत मेदिनी ।
द्यौर्यथा पूर्णचन्द्रेण नक्षत्रगणमालिनी ॥ ७-४९-२३ (४६७२९)
रुक्मपुङ्खैश्च सम्पूर्णा रुधिरौघपरिप्लुता ।
उत्तमाङ्गैश्च शूराणां भ्राजमानैः सकुण्डलैः ॥ ७-४९-२४ (४६७३०)
विचित्रैश्च परिस्तोमैः पताकाभिश्च संवृता ।
चामरैश्च कुथाभिश्च प्रविद्धैश्चाम्बरोत्तमैः ॥ ७-४९-२५ (४६७३१)
रथाश्वनरनागानामलङ्कारैश्च सुप्रभैः ।
खड्गैः सुनिशितैः पीतैर्निर्मुक्तैर्भुजगैरिव ॥ ७-४९-२६ (४६७३२)
चापैश्च विविधैश्छिन्नैः शक्त्यृष्टिप्रासकम्पनैः ।
विविधैश्चायुधैश्चान्यैः संवृता भूरशोभत ॥ ७-४९-२७ (४६७३३)
गनिष्टनद्भिरतीवान्यैरुद्वहद्भुधिरस्रवैः ।
नरैः पतद्भिः पतितैरवनी स्वधिकं बभौ ॥ ७-४९-२८ (४६७३४)
वाजिभिश्चापि निर्जीवैः श्वसद्भिः शोणितोक्षितैः ।
सारोहैर्विषमा भूमिः सौभद्रेण निपातितैः ॥ ७-४९-२९ (४६७३५)
साङ्कुशैः समहामात्रैः सर्वमायुधकेतुभिः ।
पर्वतैरिव विध्वस्तैर्विशिखैर्मथितैर्गजैः ॥ ७-४९-३० (४६७३६)
पृथिव्यानुकीर्णैश्च अश्वसारथियोधिभिः ।
ह्रदैरिव प्रक्षुभितैर्हतनागै रथोत्तमैः ॥ ७-४९-३१ (४६७३७)
पदातिसङ्घैश्च हतैर्विविधायुधभूषणैः ।
भीरूणां त्रासजननी घोररूपाऽभवन्मही ॥ ७-४९-३२ (४६७३८)
तं दृष्ट्वा पतितं भूमौ चन्द्रार्कसदृशद्युतिम् ।
तावकानां परा प्रीतिः पाण्डूनां चाभवद्व्यथा ॥ ७-४९-३३ (४६७३९)
अभिमन्यौ हते राजञ्शिशुकेऽप्राप्तयौवने ।
सम्प्राद्रवच्चमूः सर्वा धर्मराजस्य पश्यतः ॥ ७-४९-३४ (४६७४०)
दीर्यमाणं बलं दृष्ट्वा सौभद्रे विनिपातिते ।
अजातशत्रुस्तान्वीरानिदं वचनमब्रवीत् ॥ ७-४९-३५ (४६७४१)
स्वर्गमेष गतः शूरो यो हतो न पराङ्मुखः ।
संस्तम्भयत माभैष्ट विजेष्यामो रणे रिपून् ॥ ७-४९-३६ (४६७४२)
इत्येवं स महातेजा दुःखितेभ्यो महाद्युतिः ।
धर्मराजो युधां श्रेष्ठो ब्रुवन्दुःखमपानुदत् ॥ ७-४९-३७ (४६७४३)
युद्धे ह्याशीविषाकारान्राजपुत्रान्रणे रिपून् ।

पूर्वं निहत्य सङ्ग्रामे पश्चादार्जुनिरभ्ययात् ॥ ७-४९-३८ (४६७४४)
हत्वा दशसहस्राणि कौसल्यं च महारथम् ।
कृष्णार्जुनसमः कार्ष्णिः शक्रलोकं गतो ध्रुवम् ॥ ७-४९-३९ (४६७४५)
रथाश्वनरमातङ्गान्विनिहत्य सहस्रशः ।
अवितृप्तः स सङ्ग्रामादशोच्यः पुण्यकर्मकृत्। ७-४९-४० (४६७४६)
गतः पुण्यकृतां लोकाञ्शाश्वतान्पुण्यनिर्जितान् ॥ ॥ ७-४९-४१ (४६७४७)

इति श्रीमन्महाभारते द्रोणपर्वणि अभिमन्युवधपर्वणि
त्रयोदशदिवसयुद्धे एकोनपञ्चाशत्तमोऽध्यायः ॥ ४९ ॥
Mahabharata - Drona Parva - Chapter Footnotes

५-४९-१८ उपप्लुतं राहुग्रस्तम् ॥
५-४९-१९ काकपक्षावृताक्षिकं इति झ पाठः ॥
५-४९-३० विशाखोन्मथितैर्गजैः इति क पाठः ॥
५-४९-३१ व्यश्वसारथियोधिभिः इति क पाठः ॥
५-४९-४९ एकोनपञ्चाशत्तमोऽध्यायः ॥

---

द्रोनपर्व-अध्यय०५०
॥ श्रीः ॥
७.५०. अध्यायः ५०

Mahabharata - Drona Parva - Chapter Topics
युद्धभूमिवर्णनम् ॥ १ ॥

Mahabharata - Drona Parva - Chapter Text

७-५०-० (४६७४८)
सञ्जय उवाच। ७-५०-०क्ष् (४३७७)
वयं तु प्रवरं हत्वा तेषां तैः शरपीडिताः ।
निवेशायाभ्युपायामः सायाह्ने रुधिरोक्षिताः ॥ ७-५०-१ (४६७४९)
निरीक्षमाणास्तु वयं परे चायोधनं शनैः ।
अपयाता महाराज ग्लानिं प्राप्ता विचेतसः ॥ ७-५०-२ (४६७५०)
ततो निशाया दिवसस्य चाशिवः
शिवारुतैः सन्धिरवर्तताद्भुतः ।
कुशेशयापीडनिभे दिवाकरे
विलम्बमानेऽस्तमुपेत्य पर्वतम् ॥ ७-५०-३ (४६७५१)

वरासिशक्त्यृष्टिवरूथचर्मणां
विभूषणानां च समाक्षिपन्प्रभाः ।
दिवं च भूमिं च समानयन्निव
प्रियां तनुं भानुरुपैति पावकम् ॥ ७-५०-४ (४६७५२)
महाभ्रकूटाचलशृङ्गसन्निभै--
र्गजैरनेकैरिव वज्रपातितैः ।
सवैजयन्त्यङ्कुशवर्मयन्तृभि--
र्निपातितैर्नष्टगतिश्चिता क्षितिः ॥ ७-५०-५ (४६७५३)
हतेश्वरैश्चूर्णितचक्रकूबरै--
र्हताश्वसूतैर्विपताककेतुभिः ।
महारथैर्भूः शुशुभे विचूर्णितैः
पुरैरिवामित्रहतैर्नराधिप ॥ ७-५०-६ (४६७५४)
रथाश्वबृन्दैः सहसादिभिर्हतैः
प्रविद्धभाण्डाभरणैः पृथग्विधैः ।
निरस्तजिह्वादशनान्त्रलोचनै--
र्धरा बभौ घोरविरूपदर्शना ॥ ७-५०-७ (४६७५५)
प्रविद्धवर्माभिणाम्बरायुधा
विपन्नहस्त्यश्वरथानुगा नराः ।
महार्हशय्यास्तरणोचितास्तदा
क्षितावनाथा इव शेरते हताः ॥ ७-५०-८ (४६७५६)
अतीव हृष्टाः श्वशृगालवायसा
बकाः सुपर्णाश्च वृकास्तरक्षवः ।
वयांस्यसृक्पान्यथ रक्षसां गणाः
पिशाचसङ्घाश्च सुदारुणा रणे ॥ ७-५०-९ (४६७५७)
त्वचो विनिर्भिद्य पिबन्वसामसृक
तथैव मज्जाः पिशितानि चाश्नुवन् ।
वपां विलुम्पन्ति हसन्ति गान्ति च
प्रकर्षमाणाः कुणपान्यनेकशः ॥ ७-५०-१० (४६७५८)
शरीरसङ्घाटवहा ह्यसृग्जला
रथोडुपा कुञ्जरशैलसङ्कटा ।
मनुष्यशीर्षोपलमांसकर्दमा
प्रविद्धनानाविधशस्त्रमालिनी ॥ ७-५०-११ (४६७५९)
भयावहा वैतरणीव दुस्तरा
प्रवर्तिता योधवरैस्तदा नदी ।
उवाह मध्येन रणाजिरे भृशं
भयावहा दीनमृतप्रवाहिनी ॥ ७-५०-१२ (४६७६०)

पिबन्ति च स्नान्ति च यत्र दुर्दृशाः
पिशाचसङ्घास्तु नदन्ति भैरवाः ।
सुनन्दिताः प्रणभृतां क्षयंकराः
समानभक्षाः श्वसृगालपक्षिणः ॥ ७-५०-१३ (४६७६१)
तथा तदायोधनमुग्रदर्शनं
निशामुखे पितृपतिराष्ट्रवर्धनम् ।
निरीक्षमाणः शनकैर्जहुर्नराः
समुत्थिता नृत्तकबन्धसङ्कुलम् ॥ ७-५०-१४ (४६७६२)
अपेतविध्वस्तमहार्हभूषणं
निपातितं शक्रसमं महाबलम् ।
रणेऽभिमन्युं ददृशुस्तदा जना
व्यपोढहव्यं सदसीव पावकम् ॥ ॥ ७-५०-१५ (४६७६३)

इति श्रीमन्महाभारते द्रोणपर्वणि अभिमन्युवधपर्वणि
त्रयोदशदिवसयुद्धावहारे पञ्चाशत्तमोऽध्यायः ॥ ५० ॥

---

द्रोनपर्व-अध्यय०५१
॥ श्रीः ॥
७.५१. अध्यायः ५१

Mahabharata - Drona Parva - Chapter Topics
युधिष्ठिरस्याभिमन्युमनुशोच्य विलापः ॥ १ ॥

Mahabharata - Drona Parva - Chapter Text

७-५१-० (४६७६४)
सञ्जय उवाच। ७-५१-०क्ष् (४३७८)
हते तस्मिन्महावीर्ये सौभद्रे रथयूथपे ।
विमुक्तरथसन्नाहाः सर्वे निक्षिप्तकार्मुकाः ॥ ७-५१-१ (४६७६५)
उपोपविष्टा राजानं परिवार्य युधिष्ठिरम् ।
तदेव युद्धं ध्यायन्तः सौभद्रगतमानसाः ॥ ७-५१-२ (४६७६६)
ततो युधिष्ठिरो राजा विललाप सुदुःखितः ।
ततो युधिष्ठिरो राजा विललाप सुदुःखितः। ७-५१-३ (४६७६७)
अभिमन्यौ हते वीरे भ्रातुः पुत्रे महारथे ॥ ७-५१-४ (४६७६८)
युधिष्ठिर उवाच। ७-५१-४क्ष् (४३७९)
एनं जित्वा कृपं शल्यं राजानं च सुयोधनम् ।

द्रौणं द्रौणिं महेष्वासं तथैवान्यान्महारथान् ॥ ७-५१-४ (४६७६९)
द्रोणानीकमसम्बाधं मम प्रियचिकीर्षया ।
ग्हत्वा शत्रुगणान्वीरानेष शेते महारथः ॥ ७-५१-५ (४६७७०)
कृतास्त्रयु द्धकुशलान्महेष्वासान्महाबलान् ।
कुलशः पूणैर्युक्ताञ्छूरान्विख्यातपौरुषान् ॥ ७-५१-६ (४६७७१)
द्रोणेन प्रहितं व्यूहमभेद्यममरैरपि ।
अदृष्टपूर्वमस्माभिः पद्मं चक्रायुधप्रियः'॥ ७-५१-७ (४६७७२)
भित्त्वा मध्यं प्रविष्टोऽसौ गोमध्यमिव केसरी ।
ग्विक्रीडितं रणे तेन निघ्नता वै परान्वरान्'॥ ७-५१-८ (४६७७३)
यस्य शूरा महेष्वासाः प्रत्यनीकगता रणे ।
प्रभग्ना विनिवर्तन्ते कृतास्त्रा युद्धदुर्मदाः ॥ ७-५१-९ (४६७७४)
अत्यन्तशत्रुरस्माकं येन दुःशासनः शरैः ।
क्षिप्रं ह्यभिमुखः सङ्ख्ये विसंज्ञो विमुखीकृतः ॥ ७-५१-१० (४६७७५)
स तीर्त्वा दुस्तरं वीरो द्रोणानीकमहार्णवम् ।
प्राप्य दौःशासनिं कार्ष्णिः प्राप्तो वैवस्वतक्षयम् ॥ ७-५१-११ (४६७७६)
कथं द्रक्ष्यामि कौन्तेयं सौभद्रे निहतेऽर्जुनम् ।
सुभद्रां वा महाभागां प्रियं पुत्रमपश्यतीम् ॥ ७-५१-१२ (४६७७७)
ग्हतवत्सां यथा धेनुं तद्दर्शनकृतोन्मुखीम्'।
किंस्विद्वक्ष्याम्यपेतार्थमक्लिष्टमसमञ्जसम् ।
तावुभौ प्रतिवक्ष्यामि हृषीकेशधनञ्जयौ ॥ ७-५१-१३ (४६७७८)
अहमेव सुभद्रायाः केशवार्जुनयोरपि ।
प्रियकामो जयाकाङ्क्षी कृतवानिदमप्रियम् ॥ ७-५१-१४ (४६७७९)
न लुब्धो बुध्यते दोषाँल्लोभान्मोहात्प्रवर्तते ।
मधुलिप्सुर्हि नापश्यं प्रपातमहमीदृशम् ॥ ७-५१-१५ (४६७८०)
यो हि भोज्ये पुरस्कार्यो यानेषु शयनेषु च ।
भूषणेषु च सोऽस्माभिर्बालो युधि पुरस्कृतः ॥ ७-५१-१६ (४६७८१)
कथं हि बालस्तरुणो युद्धानामविशारदः ।
सदश्व इव सम्बाधे विषमे क्षेममर्हति ॥ ७-५१-१७ (४६७८२)
नो चेद्धि वयमप्येनं महीमनुशयीमहि ।
बीभत्सोः कोपदीप्तस्य दग्धाः कृपणचक्षुषा ॥ ७-५१-१८ (४६७८३)
अलुब्धो मितमान्हीमान्क्षमावान्रूपवान्बली ।
वपुष्मान्मानकृद्वीरः प्रियः सत्यपराक्रमः ॥ ७-५१-१९ (४६७८४)
यस्य श्लाघन्ति विबुधाः कर्माण्यूर्जितकर्मणः ।
निवातकवचाञ्जघ्ने कालकेयांश्च वीर्यवान् ॥ ७-५१-२० (४६७८५)
महेन्द्रशत्रवो येन हिरण्यपुरवासिनः ।
अक्ष्णोर्निमेषमात्रेण पौलोभाः सगणा हताः ॥ ७-५१-२१ (४६७८६)

परेभ्योऽप्यभयार्थिभ्यो यो ददात्यभयं विभुः ।
तस्यास्माभिर्न शकितस्त्रातुमप्यात्मजो बली ॥ ७-५१-२२ (४६७८७)
भयं तु सुमहत्प्राप्तं धार्तराष्ट्रान्महाबलान् ।
पार्थः पुत्रवधात्क्रुद्धः कौरवाञ्शोषयिष्यति ॥ ७-५१-२३ (४६७८८)
क्षुद्रः क्षुद्रसहायश्च स्वपक्षक्षयकारकः ।
व्यक्तं दुर्योधनो दृष्ट्वा शोचन्हास्यति जीवितं ॥ ७-५१-२४ (४६७८९)
न मे जयः प्रीतिकरो न राज्यं
न चामरत्वं न सुरैः सलोकता ।
इमं समीक्ष्याप्रतिवीर्यपौरुषं
निपातितं देववरात्मजात्मजम् ॥ ॥ ७-५१-२५ (४६७९०)

इति श्रीमन्महाभारते द्रोणपर्वणि अभिमन्युवधपर्वणि
एकपञ्चाशत्तमोऽध्यायः ॥ ५१ ॥
Mahabharata - Drona Parva - Chapter Footnotes

५-५१-५ असंबाधं अप्रतीघातम् ॥
५-५१-१३ असमञ्जसमयुक्तरूपम् ॥
५-५१-१७ सम्बाधे गहने ॥
५-५१-१९ एनं अभिमन्युं अनुचेन्न महीं शयीमहि तदा क्रोधदीप्तस्य
बीभत्सोः कृपणेनावसन्नेन चक्षुषा दग्धा भवेमहीत्यन्वयः ॥
५-५१-१९ वपुष्मांस्तेजस्वी ॥
५-५१-५१ एकपञ्चाशत्तमोऽध्यायः ॥

---

द्रोनपर्व-अध्यय०५२
॥ श्रीः ॥
७.५२. अध्यायः ५२

Mahabharata - Drona Parva - Chapter Topics
युधिष्ठिराश्वासनाय व्यासेन तम्प्रति अकम्पनोपाख्यानकथनोपक्रमः ॥ १ ॥

Mahabharata - Drona Parva - Chapter Text

७-५२-० (४६७९१)
सञ्जय उवाच। ७-५२-०क्ष् (४३८०)
एवं विलपमाने तु कुन्तीपुत्रे युधिष्ठिरे ।
कृष्णद्वैपायनस्तत्र आजगाम महानृषिः ॥ ७-५२-१ (४६७९२)

अथ दृष्ट्वा महात्मानं पाण्डुपुत्रो युधिष्ठिरः ।
युक्तासनो दीनमनाः पूजां चक्रे महात्मनः ॥ ७-५२-२ (४६७९३)
अर्चयित्वा यथान्यायमुपविष्टं युधिष्ठिरः ।
अब्रवीच्छोकसन्तप्तो भ्रातुः पुत्रवधेन च ॥ ७-५२-३ (४६७९४)
अधर्मयुक्तैर्बहुभिः परिवार्य महारथैः ।
युध्यमानो महेष्वासैः सौभद्रो निहतो रणे ॥ ७-५२-४ (४६७९५)
बालश्च बालबुद्धिश्च वीरश्च परवीरहा ।
अनुपायेन सङ्ग्रामे युध्यमानो विनाशितः ॥ ७-५२-५ (४६७९६)
मया प्रोक्तः स सङ्ग्रामे द्वारं सञ्जनयस्व नः ।
प्रविष्टेऽभ्यन्तरे तस्मिन्सैन्धवेन निवारिताः ॥ ७-५२-६ (४६७९७)
ननु नाम समं युद्धमेष्टव्यं युद्धजीविभिः ।
इदं चैवासमं युद्धमीदृशं यत्कृतं परैः ॥ ७-५२-७ (४६७९८)
तेनास्मि भृशसन्तप्तः शोकबाष्पसमाकुलः ।
शमं नैवाधिगच्छामि चिन्तयानः पुनः पुनः ॥ ७-५२-८ (४६७९९)
सञ्जय उवाच। ७-५२-९क्ष् (४३८१)
तं तथा विलपन्तं वै शोकव्याकुलमानसम् ।
उवाच सान्त्वयन्व्यासो युधिष्ठिरमिदं वचः ॥ ७-५२-९ (४६८००)
व्यास उवाच। ७-५२-१०क्ष् (४३८२)
युधिष्ठिर महाप्राज्ञ सर्वशास्त्रविशारद ।
व्यसनेषु न मुह्यन्ति त्वादृशा भरतर्षभ ॥ ७-५२-१० (४६८०१)
स्वर्गमेष गतः शूरः शत्रून्हत्वा बहून्रणे ।
अबालसदृशं कर्म कृत्वा वै पुरुषोत्तमः ॥ ७-५२-११ (४६८०२)
अनतिक्रमणीयो वै विधिरेष युधिष्ठिर ।
देवदानवगन्धर्वान्मृत्युर्हरति भारत ॥ ७-५२-१२ (४६८०३)
युधिष्ठिर उवाच। ७-५२-१३क्ष् (४३८३)
इमे वै पृथिवीपालाः शेरते पृथिवीतले ।
निहताः पृतनामध्ये मृतसंज्ञा महाबलाः ॥ ७-५२-१३ (४६८०४)
नागायुतबलाश्चान्ये वायुवेगबलास्तथा ।
त एते निहताः सङ्ख्ये तुल्यरूपा नरैर्नराः ॥ ७-५२-१४ (४६८०५)
नैषां पश्यामि हन्तारं प्राणिनां संयुगे क्वचित् ।
विक्रमेणोपसम्पन्नास्तपोबलसमन्विताः ॥ ७-५२-१५ (४६८०६)
जेतव्यमिति चान्योन्यं येषां नित्यं हृदि स्थितम् ।
अथ चेमे हताः प्राज्ञाः शेरते विगतायुषः ॥ ७-५२-१६ (४६८०७)
मृता इति च शब्दोयं वर्तते च ततोऽर्थवत् ।
इमे मृता महीपालाः प्रायशो भीमविक्रमाः ॥ ७-५२-१७ (४६८०८)
निश्चेष्टा निरभीमानाः शूराः शत्रुवशंगताः ।

राजपुत्राश्च संरब्धा वैश्वानरमुखं गताः ॥ ७-५२-१८ (४६८०९)
अत्र मे संशयः प्राप्तः कुतः संज्ञा मृता इति ।
कस्य मृत्युः कुतो मृत्युः केन मृत्युरिमाः प्रजाः ।
हरत्यमरसङ्काश तन्मे ब्रूहि पितामह ॥ ७-५२-१९ (४६८१०)
सञ्जय उवाच। ७-५२-२०क्ष् (४३८४)
तं तथा परिपृच्छन्तं कुन्तीपुत्रं युधिष्ठिरम् ।
आश्वासनमिदं वाक्यमुवाच भगवानृषिः ॥ ७-५२-२० (४६८११)
व्यास उवाच। ७-५२-२१क्ष् (४३८५)
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
अकम्पनस्य कथितं नारदेन पुरा नृप ॥ ७-५२-२१ (४६८१२)
स चापि राजा राजेन्द्र पुत्रव्यसनमुत्तमम् ।
अप्रसह्यतमं लोके प्राप्तवानिति नः श्रुतम् ॥ ७-५२-२२ (४६८१३)
तदहं सम्प्रवक्ष्यामि मृत्योः प्रभवमुत्तमम् ।
ततस्त्वं मोक्ष्यसे दुःखात्स्नेहबन्धनसंश्रयात् ॥ ७-५२-२३ (४६८१४)
समस्तपापराशिघ्नं शृणु कीर्तयतो मम ।
धन्यमाख्यानमायुष्यं शोकघ्नं पुष्टिवर्धनम् ॥ ७-५२-२४ (४६८१५)
पवित्रमरिसङ्घघ्नं पङ्गलानां च मङ्गलम् ।
यथैव वेदाध्ययनमुपाख्यानमिदं तथा ॥ ७-५२-२५ (४६८१६)
श्रवणीयं महाराज प्रातर्नित्यं नृपोत्तमैः ।
पुत्रानायुष्मतो राज्यमीहमानैः श्रियं तथा ॥ ७-५२-२६ (४६८१७)
पुरा कृतयुगे तात आसीद्राजा ह्यकम्पनः ।
स शत्रुवशमापन्नो मध्ये सङ्ग्राममूर्धनि ।
ग्योधयामास बलवान्बद्धश्चासीदकम्पनः'॥ ७-५२-२७ (४६८१८)
तस्य पुत्रो हरिर्नाम नारायणसमो बले ।
श्रीमान्कृतास्त्रो मेधावी युधि शक्रोपमो बली ॥ ७-५२-२८ (४६८१९)
ग्स दृष्ट्वा पितरं युद्धे तदवस्थं महाद्युतिः ।
अचिन्तयित्वा मरणं शत्रुमध्यं ततोऽविशत् ॥ ७-५२-२९ (४६८२०)
स शत्रुभिः परिवृतो बहुधा रणमूर्धनि ।
योधयामास तान्सर्वान्सर्वास्त्रकुशलो बली ॥ ७-५२-३० (४६८२१)
वर्षन्बाणसहस्राणि शत्रुष्वमितविक्रमः ।
पदातिरथनागाश्वान्प्रममाथ महाबलः ॥ ७-५२-३१ (४६८२२)
स शरैराचितश्चक्रैर्गदाभिर्मुसलैरपि ।
मृद्गन्रथसहस्राणि पदातीन्वाजिवारणान् ॥ ७-५२-३२ (४६८२३)
परानीकं विभिद्याजौ मोक्षयित्वा च तं नृपम् ।
पुनरेवाकरोद्युद्धं शत्रुमध्यगतो बली ॥ ७-५२-३३ (४६८२४)
ततस्ते रथिनः सर्वे समेत्य पुनराहवे ।

जघ्नुस्तं परिवार्यैकं तोमरैरिव कुञ्जरम्'॥ ७-५२-३४ (४६८२५)
स कर्म दुष्करं कृत्वा सङ्ग्रामे शत्रुतापनः ।
शत्रुभिर्निहतः सङ्ख्ये पृतानायां युधिष्ठिर ॥ ७-५२-३५ (४६८२६)
द्विषद्भिर्निहतं दृष्ट्वा प्रियं पुत्रमकम्पनः ।
अमर्षजनितक्रोध आहवात्सहसाऽऽगतः ॥ ७-५२-३६ (४६८२७)
स राजा प्रेतकृत्यानि तस्य कृत्वा शुचान्वितः ।
शोचन्नहनि रात्रौ च नालभत्सुखमात्मनः ॥ ७-५२-३७ (४६८२८)
तस्य शोकं विदित्वा तु पुत्रव्यसनसम्भवम् ।
आजगामाथ देवर्षिर्नारदोऽस्य समीपतः ॥ ७-५२-३८ (४६८२९)
स तु राजा महाभागो दृष्ट्वा देवर्षिसत्तमम् ।
पूजयित्वा यथान्यायं कथामकथयत्तदा ॥ ७-५२-३९ (४६८३०)
तस्य सर्वं समाचष्ट यथावृत्तं युधिष्ठिर ।
शत्रुभिर्विजयं सङ्ख्ये पुत्रस्य च वधं तथा ॥ ७-५२-४० (४६८३१)
अकम्पन उवाच। ७-५२-४१क्ष् (४३८६)
मम पुत्रो महावीर्य इन्द्रविष्णुसमद्युतिः ।
शत्रुभिर्बहुभिः सङ्ख्ये पराक्रम्य हतो बली ॥ ७-५२-४१ (४६८३२)
शृणु मे प्राणिनां चापि मृत्युः प्रभवते किल ।
क एष मृत्युर्भगवन्किंवीर्यबलपौरुषः ।
एतदिच्छामि तत्त्वेन श्रोतुं मतिमतां वर ॥ ७-५२-४२ (४६८३३)
व्यास उवाच। ७-५२-४३क्ष् (४३८७)
तस्य तद्वचनं श्रुत्वा नारदो वरदः प्रभुः ।
आख्यानमिदमाचष्ट पुत्रशोकापहं महत् ॥ ७-५२-४३ (४६८३४)
नारद उवाच। ७-५२-४४क्ष् (४३८८)
शृणु राजन्महाबाहो आख्यानं बहुविस्तरम् ।
यथावृत्तं श्रुतं चैव मयाऽपि वसुधाधिप ॥ ७-५२-४४ (४६८३५)
प्रजाः सृष्टा तदा ब्रह्मा आदिसर्गे पितामहः ।
असंहृतं महातेजा दृष्ट्वा जगदिदं प्रभुः ॥ ७-५२-४५ (४६८३६)
तस्य चिन्ता समुत्पन्ना संहारं प्रति पार्थिव ।
चिन्तयन्न ह्यसौ देव संहारं वसुधाधिप ॥ ७-५२-४६ (४६८३७)
तस्य रोषान्महाराज मुखेभ्योऽग्निरजायत ।
तेन सर्वा दिशो व्याप्ताः सान्तर्देशा दिधक्षता ॥ ७-५२-४७ (४६८३८)
ततो दिवं भुवं चैव ज्वालामालासमाकुलम् ।
चारचरं जगत्सर्वं ददाह भगवान्प्रभुः ॥ ७-५२-४८ (४६८३९)
ततो हतानि भूतानि चराणि स्थावराणि च ।
महता क्रोधवेगेन त्रासयन्निव वीर्यवान्। ७-५२-४९ (४६८४०)
ततो रुद्रो जटी स्याणुर्निशाचरपतिर्हरः ।

जगाम शरणं देवं ब्रह्माणं परमेष्ठिनम् ॥ ७-५२-५० (४६८४१)
तस्मिन्नापतिते स्थाणौ प्रजानां हितकाम्यया ।
अब्रवीत्परमो देवो ज्वलन्निव महामुनिः ॥ ७-५२-५१ (४६८४२)
किं कर्म कामं कामार्ह कामाज्जातोऽसि पुत्रक ।
करिष्यामि प्रियं सर्वं ब्रूहि स्थाणो यदिच्छसि ॥ ॥ ७-५२-५२ (४६८४३)

इति श्रीमन्महाभारते द्रोणपर्वणि अभिमन्युवधपर्वणि
द्विपञ्चाशत्तमोऽध्यायः ॥ ५२ ॥
Mahabharata - Drona Parva - Chapter Footnotes

५-५२-६ द्वारं सञ्जनयस्वेति मया उक्त इति सम्बन्धः । निवारितः
तमनुप्रविशन्त इति शेषः ॥
५-५२-१९ कस्य मृत्युः क इति शेषः ॥
५-५२-४७ खेभ्य इति पाठे श्रोत्रादिच्छिद्रेभ्यः ॥
५-५२-५२ द्विपञ्चाशत्तमोऽध्यायः ॥

---

द्रोनपर्व-अध्यय०५३
॥ श्रीः ॥
७.५३. अध्यायः ५३

Mahabharata - Drona Parva - Chapter Topics
ब्रह्मरुद्रसंवादः ॥ १ ॥
ब्रह्मणा प्रजासंहाराय मृत्युदेवीसर्जनम् ॥ २ ॥

Mahabharata - Drona Parva - Chapter Text

७-५३-० (४६८४४)
स्थाणुरुवाच। ७-५३-०क्ष् (४३८९)
प्रजासर्गनिमित्तं हि कृतो यत्नस्त्वया विभो ।
त्वया सृष्टाश्च वृद्धाश्च भूतग्रामाः पृथग्विधाः ॥ ७-५३-१ (४६८४५)
तास्तवेह पुनः क्रोधात्प्रजा नश्यन्ति सर्वशः ।
ता दृष्ट्वा मम कारुण्यं प्रसीद भगवन्प्रभो ॥ ७-५३-२ (४६८४६)
ब्रह्मोवाच। ७-५३-३क्ष् (४३९०)
संहर्तुं न च मे काम एतदेवं भवेदिति ।
पृथिव्या हितकामं तु ततो मां मन्युराविशत् ॥ ७-५३-३ (४६८४७)
इयं सन्ना तदा देवी भारार्ता समचूचुदत् ।

संहारार्थं महादेव भारेणाभिहता सती ॥ ७-५३-४ (४६८४८)
ततोऽहं नाधिगच्छामि बुद्ध्या बहु विचारयन् ।
संहारमप्रमेयस्य ततो मां मन्युराविशत् ॥ ७-५३-५ (४६८४९)
रुद्र उवाच। ७-५३-६क्ष् (४३९१)
संहारार्थं प्रसीदस्व मारुषो वसुधाधिप ।
मा प्रजाः स्थावराश्चैव जङ्गमाश्च व्यनीनशः ॥ ७-५३-६ (४६८५०)
तव प्रसादाद्भगवन्निदं वर्तेत्त्रिधा जगत् ।
अनागतमतीतं च यच्च सम्प्रति वर्तते ॥ ७-५३-७ (४६८५१)
भगवन्क्रोधसन्दीप्तः क्रोधादग्निमवासृजत् ।
स दहत्यश्मकूटानि द्रुमांश्च सरितस्तथा ॥ ७-५३-८ (४६८५२)
पल्वलानि च सर्वाणि सर्वं चैव तृणोलपाः ।
स्थावरं जङ्गमं चैव निःशेषं कुरुते जगत् ॥ ७-५३-९ (४६८५३)
तदेतद्भस्मसाद्भूतं जगत्स्थावरजङ्गमम् ।
प्रसीद भगवन्स त्वं रोषो न स्याद्वरो मम ॥ ७-५३-१० (४६८५४)
सर्वे हि सृष्टा नश्यन्ति तव देव कथंचन ।
तस्मान्निवर्ततां तेजस्त्वय्येवेदं प्रलीयताम् ॥ ७-५३-११ (४६८५५)
उपायमन्यं सम्पश्य प्रजानां हितकाम्यया ।
यथेमे प्राणिनः सर्वे निर्वर्तेरंस्तथा कुरु ॥ ७-५३-१२ (४६८५६)
अभावं नेह गच्छेयुरुत्सन्नजननाः प्रजाः ।
भवता हि नियुक्तोऽहं प्रानां पालने विभा ।
दया ते न समुत्पन्ना प्रजासु विबुधेश्वर ॥ ७-५३-१३ (४६८५७)
मा विनश्येज्जगन्नाथ जगत्स्थावरजङ्गमम् ।
प्रसादाभिमुखं देवं तस्मादेवं ब्रवीम्यहम् ॥ ७-५३-१४ (४६८५८)
नारद उवाच। ७-५३-१५क्ष् (४३९२)
श्रुत्वा हि वचनं देवः प्रजानां हितकारणे ।
तेजः सन्धारयामास पुनरेवान्तरात्मनि ॥ ७-५३-१५ (४६८५९)
ततोऽग्निमुपसंहृत्य भगवाँल्लोकसत्कृतः ।
प्रवृत्तं च निवृत्तं च कल्पयामास वै प्रभुः ॥ ७-५३-१६ (४६८६०)
उपसंहरतस्तस्य तमग्निं रोषजं तथा ।
प्रादुर्बभूव विश्वेभ्यो गोभ्योनारी महात्मनः ॥ ७-५३-१७ (४६८६१)
कृष्णरक्ता तथा पिङ्गा रक्तजिह्वास्यलोचना ।
कुण्डलाभ्यां च राजेन्द्र तप्ताभ्यां तप्तभूषणा ॥ ७-५३-१८ (४६८६२)
सा निःसृत्य तथा खेभ्यो दक्षिणां दिशमाश्रिता ।
स्मयमाना च साऽवेक्ष्य देवौ विश्वेश्वरावुभौ ॥ ७-५३-१९ (४६८६३)
ग्तां तु तत्र तदा देवीं ब्रह्मा लोकपितामहः ।
उक्तवान्मधुरं वाक्यं सान्त्वयित्वा पुनः पुनः'।

मृत्यो इति महीपाल जहि चेमाः प्रजा इति ॥ ७-५३-२० (४६८६४)
त्वं हि संहारबुद्ध्याऽथ प्रादुर्भूता रुषो मम ।
तस्मात्संहर सर्वास्त्वं प्रजाः सजडपण्डिताः ॥ ७-५३-२१ (४६८६५)
अविशेषेण चैव त्वं प्रजाः संहर भामिनि ।
मम त्वं हि नियोगेन ततः श्रेयो ह्यवाप्स्यासि ॥ ७-५३-२२ (४६८६६)
नारद उवाच। ७-५३-२३क्ष् (४३९३)
एवमुक्ता तु सा तेन मृत्युः कमललोचना ।
प्रारुदद्भृशसंविग्ना प्रापतन्नश्रुबिन्दवः ॥ ७-५३-२३ (४६८६७)
पाणिभ्यां प्रतिजग्राह तान्यश्रूणि पितामहः ।
सर्वभूतहितार्थाय तां चाप्यनुनयत्तदा ॥ ॥ ७-५३-२४ (४६८६८)

इति श्रीमन्महाभारते द्रोणपर्वणि अभिमन्युवधपर्वणि
त्रिपञ्चाशत्तमोऽध्यायः ॥ ५३ ॥
Mahabharata - Drona Parva - Chapter Footnotes

५-५३-२ कारुण्यं जातमिति शेषः ॥
५-५३-५ अप्रमेयस्यानन्तस्य जगत इति शेषः । अहिंस्यस्येतिवार्थः ॥
५-५३-६ संहारार्थं मारुषः रोषं माकार्षीः किन्तु प्रसीदस्व ॥
५-५३-१० तव रोषो न स्यादिति मम मह्यं वरोऽस्त्विति योजना ॥
५-५३-१३ उत्सन्नजननाः प्रक्षीणसन्तानाः ॥
५-५३-१६ प्रवृत्तं कर्म सृष्टिहेतुम् । निवृत्तं कर्म मोक्षहेतुम् ॥
५-५३-१७ गोभ्य इन्द्रियच्छिद्रेभ्यः ॥
५-५३-१९ देवौ ब्रह्मरुद्रौ ॥
५-५३-२० मरुणं मृत्प्राणवियोगस्तमन्यस्येच्छतीति मृत्युरित्मर्थः
। इति आहेति शेषः ॥
५-५३-२१ रुषो रोषात् ॥
५-५३-५३ त्रिपञ्चाशत्तमोऽध्यायः ॥

---

द्रोनपर्व-अध्यय०५४
॥ श्रीः ॥
७.५४. अध्यायः ५४

Mahabharata - Drona Parva - Chapter Topics
नारदेन मृत्युब्रह्मसंवादकथनेन अकम्पनस्य शोकपरिहरणम् ॥ १ ॥
व्यासेनाकम्पनोपाख्यानकथनात् युधिष्ठिरस्य शोकापनोदनम् ॥ २ ॥

७-५४-० (४६८६९)
नारद उवाच। ७-५४-०क्ष् (४३९४)
विनीय दुःकमबला आत्मन्येव प्रजापतिम् ।
उवाच प्राञ्जलिर्भूत्वा लतेवावर्जिता पुनः ॥ ७-५४-१ (४६८७०)
मृत्युरुवाच। ७-५४-२क्ष् (४३९५)
त्वया सृष्टा कथं नारी ईदृशी वदतां वर ।
क्रूरं कर्माहितं कुर्यां मूढेव परिजानती ॥ ७-५४-२ (४६८७१)
बिभेम्यहमधर्माद्धि प्रसीद भगवन्प्रभो ।
प्रियान्पुत्रान्वयस्यांश्च भ्रातॄन्मातॄः पितॄन्पतीन् ॥ ७-५४-३ (४६८७२)
अपध्यास्यन्ति ये देव मृतांस्तेभ्यो बिभेम्यहम् ।
कृपणानां हि रुदतां ये पतन्त्यश्रुबिन्दवः ॥ ७-५४-४ (४६८७३)
तेभ्योऽहं भगवन्भीता शरणं त्वाऽहमागता ।
यमस्य भवनं देव गच्छेयं न सुरोत्तम ॥ ७-५४-५ (४६८७४)
कायेन विनयोपेता मूर्ध्नोदग्रनखेन च ।
एतदिच्छाम्यहं कामं त्वत्तो लोकपितामह ॥ ७-५४-६ (४६८७५)
इच्छेयं त्वत्प्रसादाद्धि तपस्तप्तुं प्रजेश्वर ।
प्रदिशेमं वरं देव त्वं मह्यं भगवन्प्रभो ॥ ७-५४-७ (४६८७६)
त्वया ह्युक्ता गमिष्यामि धेनुकाश्रममुत्तमम् ।
तत्र तप्स्ये तपस्तीव्रं तवैवाराधने रता ॥ ७-५४-८ (४६८७७)
न हि शक्ष्यामि देवेश प्राणान्प्राणभृतां प्रियान् ।
हर्तुं विलपमानानामधर्मादभिरक्ष माम् ॥ ७-५४-९ (४६८७८)
ब्रह्मोवाच। ७-५४-१०क्ष् (४३९६)
मृत्यो सङ्कल्पिताऽसि त्वं प्रजासंहारहेतुना ।
गच्छ संहर सर्वास्त्वं प्रजा मा ते विचारणा ॥ ७-५४-१० (४६८७९)
भविता त्वेतदेवं हि नैतज्जात्वन्यथा भवेत् ।
भव त्वनिन्दिता लोके कुरुष्व वचनं मम ॥ ७-५४-११ (४६८८०)
नारद उवाच। ७-५४-१२क्ष् (४३९७)
एवमुक्ता भगवता प्राञ्जलिश्चाप्यवाङ्मुखी ।
संहारे नाकरोद्बुद्धिं प्रजानां हितकाम्यया ॥ ७-५४-१२ (४६८८१)
तूष्णीमासीत्तदा देवः प्रजानामीश्वरेश्वरः ।
प्रसादं चागमत्क्षिप्रमात्मनैव प्रजापतिः ॥ ७-५४-१३ (४६८८२)
स्मयमानश्च देवेशो लोकान्सर्वानवेक्ष्य च ।
लोकास्त्वासन्यथापूर्वं दृष्टास्तेनापमन्युना ॥ ७-५४-१४ (४६८८३)
निवृत्तरोषे तस्मिंस्तु भगवत्यपराजिते ।

सा कन्याऽपि जगामाऽथ समीपात्तस्य धीमतः ॥ ७-५४-१५ (४६८८४)
अपमृत्याप्रतिश्रुत्य प्रजासंहरणं तदा ।
त्वरमाणा च राजेन्द्र मृत्युर्धेनुकमभ्यगात् ॥ ७-५४-१६ (४६८८५)
सा तत्र परमं तीव्रं चचार व्रतमुत्तमम् ।
सा तद ह्येकपादेन तस्थौ पद्मानि षोडश ॥ ७-५४-१७ (४६८८६)
पञ्च चाब्दानि कारुण्यात्प्रजानां तु हितैषिणी ।
इन्द्रियाणीन्द्रियार्थेभ्यः प्रियेभ्यः सन्निवर्त्य सा ॥ ७-५४-१८ (४६८८७)
ततस्त्वेकेन पादेन पुनरन्यानि सप्त वै ।
तस्थौ पद्मानि षट् चैव सप्त चैकं च पार्थिवा ॥ ७-५४-१९ (४६८८८)
ततः पद्मायुतं तात मृगैः सह चचार सा ।
पुनर्गत्वा ततो नन्दां पुण्यां शीतामलोदकाम् ॥ ७-५४-२० (४६८८९)
अप्सु वर्षसहस्राणि सप्त चैकं च साऽनयत् ।
धारयित्वा तु नियमं नन्दायां वीतकल्मषा ॥ ७-५४-२१ (४६८९०)
सा पूर्वं कौशिकीं पुण्यां जगाम नियमैधिता ।
तत्र वायुजलाहारा चचार नियमं पुनः ॥ ७-५४-२२ (४६८९१)
सप्तगङ्गासु सा पुण्या कन्या वेतसकेषु च ।
तपोविशेषैर्बहुभिः कर्षयद्देहमात्मनः ॥ ७-५४-२३ (४६८९२)
ततो गत्वा तु सा गङ्गां महामेरुं च केवलम् ।
तस्थौ चाश्मेव निश्चेष्टा प्राणायामपरायणा ॥ ७-५४-२४ (४६८९३)
पुनर्हिमवतो मूर्ध्नि यत्र देवाः पुराऽयजन् ।
तत्राङ्गुष्ठेन सा तस्थौ निखर्वंल परमा शुभा ॥ ७-५४-२५ (४६८९४)
पुष्करेष्वथ गोकर्णे नैमिषे मलये तथा ।
अकर्शयत्स्वकं देहं नियमैर्मानसप्रियैः ॥ ७-५४-२६ (४६८९५)
अनन्यदेवता नित्यं दृढभक्ता पितामहे ।
तस्थौ पितामहं चैव तोषयामास धर्मतः ॥ ७-५४-२७ (४६८९६)
ततस्तामब्रवीत्प्रीतो लोकानां प्रभवोऽव्ययः ।
सौम्येन मनसा राजन्प्रीतः प्रीतमनास्तदा ॥ ७-५४-२८ (४६८९७)
मृत्यो किमिदमत्यन्तं तपांसि चरसीति ह ।
ततोऽब्रवीत्पुनर्मृत्युर्भगवन्तं पितामहम् ॥ ७-५४-२९ (४६८९८)
नाऽहं हन्यां प्रजा देव स्वस्थाश्चाक्रोशतीस्तथा ।
एतदिच्छामि सर्वेश त्वत्तो वरमहं प्रभो ॥ ७-५४-३० (४६८९९)
अधर्मभयभीताऽस्मि ततोऽहं तप आस्थिता ।
भीतायास्तु महाभाग प्रयच्छाभयमव्यय ॥ ७-५४-३१ (४६९००)
आर्ता चानागसी नारी याचामि भव मे गतिः ।
तामब्रवीत्ततो देवो भूतभव्यभविष्यवित् ॥ ७-५४-३२ (४६९०१)
अधर्मो नास्ति ते मृत्यो संहरन्त्या इमाः प्रजाः ।

मया चोक्तं मृषा भद्रे भविता न कथञ्चन ॥ ७-५४-३३ (४६९०२)
तस्मात्संहर कल्याणि प्रजाः सर्वाश्चतुर्विधाः ।
धर्मः सनातनश्च त्वां सर्वथा पावयिष्यति ॥ ७-५४-३४ (४६९०३)
लोकपालो यमश्चैव सहाया व्याधयश्च ते ।
अहं च विबुधाश्चैव पुनर्दास्याम ते वरम् ॥ ७-५४-३५ (४६९०४)
यथा त्वमेनसा मुक्ता विरजाः ख्यातिमेष्यसि। ७-५४-३६ (४६९०५)
नारद उवाच ।
सैवमुक्ता महाराज कृताञ्जलिरिदं विभुम्। ७-५४-३६क्ष् (४३९८)
पुनरेवाब्रवीद्वाक्यं प्रसाद्य शिरसा तदा ।
यद्येवमेतत्कर्तव्यं धर्मतो नास्त्यतो भयम् ॥ ७-५४-३७ (४६९०६)
तवाज्ञा मूर्ध्नि मे न्यस्ता यत्ते वक्ष्यामि तच्छृणु ।
लोभः क्रोधोऽभ्यसूयेर्ष्या द्रोहो मोहश्च देहिनां ॥ ७-५४-३८ (४६९०७)
अह्रश्चान्योन्यपरुषा देहं भिन्द्युः पृथिग्वधाः। ७-५४-३९ (४६९०८)
ब्रह्मोवाच। ७-५४-३९क्ष् (४३९९)
तथा भविष्यते मृत्यो साधु संहर भोः प्रजाः ।
अधर्मस्ते न भविता नापध्यास्याम्यहं शुभे ॥ ७-५४-३९ (४६९०९)
यान्यश्रुबिन्दूनि करे ममासं--
स्ते व्याधयः प्राणिनामात्मजाताः ।
ते मारयिष्यन्ति नरान्गतासू--
न्नाधर्मस्ते भविता मा स्म भैषीः ॥ ७-५४-४० (४६९१०)
नाधर्मस्ते भविता प्राणिनां वै
त्वं वै धर्मस्त्वं हि धर्मस्य चेशा ।
धर्म्या भूत्वा धर्मनित्या धरित्री
तस्मात्प्राणान्सर्वथेमान्नियच्छ ॥ ७-५४-४१ (४६९११)
ग्प्राप्ता तथा नो भविता कदाचि--
देवं मयाद्यैव नियोज्यसे त्वम्'।
सर्वेषां वै प्राणिनां कामरोषौ
सन्त्यज्य त्वं संहरस्वेह जीवान् ।
येषां धर्मास्ते भविष्यन्त्यनन्ता
मिथ्यावृत्तं मारयिष्यत्यधर्मः ॥ ७-५४-४२ (४६९१२)
तेनात्मानं पावयस्वात्मना त्वं
पापेऽऽत्मानं मज्जयिष्यन्त्यसत्यात् ।
तस्मात्कामं रोषमप्यागतं त्वं
सन्त्यज्यान्तः संहरस्वेति जीवान् ॥ ७-५४-४३ (४६९१३)
नारद उवाच। ७-५४-४४क्ष् (४४००)
सा वै भीमा मृत्युसंज्ञोपदेशा--

च्छापाङ्गीता बाढमित्यब्रवीत्तम् ।
सा च प्राणं प्राणिनामन्तकाले
कामक्रोधौ त्यज्य हरत्यसक्ता ॥ ७-५४-४४ (४६९१४)
मृत्युस्त्वेषां व्याधयस्तत्प्रसूता
व्याधी रोगो रुज्यते येन जन्तुः ।
सर्वेषां च प्राणिनां प्रायणान्ते
तस्माच्छोकं माकृथा निष्फलं त्वम् ॥ ७-५४-४५ (४६९१५)
सर्वे देवाः प्राणिभिः प्रायणान्ते
गत्वा वृत्ताः सन्निवृत्तास्तथैव ।
एवं सर्वे प्राणिनस्तत्र गत्वा
वृत्ता देवा मर्त्यवद्राजसिंह ॥ ७-५४-४६ (४६९१६)
वायुर्भीमो भीमनादो महौजा
भेत्ता देहान्प्राणिनां सर्वगोऽसौ ।
नो वा वृत्तिं कदाचि--
त्प्राप्नोत्युग्रोऽनन्ततेजोविशिष्टः ॥ ७-५४-४७ (४६९१७)
सर्वे देवा मर्त्यसंज्ञाविशिष्टा--
स्तस्मात्पुत्रं माशुचो राजसिंह ।
स्वर्गं प्राप्तो मोदते ते तनूजो
नित्यं रम्यान्वीरलोकानवाप्य ॥ ७-५४-४८ (४६९१८)
त्यक्त्वा दुःखं सङ्गतः पुण्यकृद्भि--
रेषा मृत्युर्देवदिष्टा प्रजानाम् ।
प्राप्ते काले संहरन्ती यथाव--
त्स्वयं कृता प्राणहरा प्रजानाम् ॥ ७-५४-४९ (४६९१९)
आत्मानं वै प्राणिनो घ्नन्ति सर्वे
नैतान्मृत्युर्दण्डपाणिर्हिनस्ति ।
तस्मान्मृतान्नानुशोचन्ति धीरा
मृत्युं ज्ञात्वा निश्चयं ब्रह्मसृष्टम् ।
इत्थं सृष्टिं देवक्लृप्तां विदित्वा
पुत्रान्नष्टाच्छोकमाशु त्यजस्व ॥ ७-५४-५० (४६९२०)
द्वैपायन उवाच। ७-५४-५१क्ष् (४४०१)
एतच्छ्रुत्वार्थवद्वाक्यं नारदेन प्रकाशितम् ।
उवाचाकम्पनो राजा सखायं नारदं तथा ॥ ७-५४-५१ (४६९२१)
व्यपेतशोकः प्रीतोऽस्मि भगवन्नृषिसत्तम ।
श्रुत्वेतिहासं त्वत्तस्तु कृतार्थोऽस्म्यभिवादये ॥ ७-५४-५२ (४६९२२)
तथोक्तो नारदस्तेन राज्ञा देवर्षिसत्तमः ।
जगाम नन्दनं शीघ्रमशोकवनमात्मनः ॥ ७-५४-५३ (४६९२३)

पुण्यं यशस्यं स्वर्ग्यं च धन्यमायुष्यमेव च ।
अस्येतिहासस्य सदा श्रवणं श्रावणं तथा ॥ ७-५४-५४ (४६९२४)
एतदर्थपदं श्रुत्वा तदा राजा युधिष्ठिर ।
क्षत्रधर्मं च विज्ञाय शूराणां च परां गतिम् ।
सम्प्राप्तोऽसौ महावीर्यः स्वर्गलोकं महारथः ॥ ७-५४-५५ (४६९२५)
अभिमन्युः परान्हत्वा प्रमुखे सर्वधन्विनाम् ।
युध्यमानो महेष्वासो हतः सोऽभिमुखो रणे ॥ ७-५४-५६ (४६९२६)
असिना गदया शक्त्या धनुषा च महारथः ।
विरजाः सोमसूनुः स पुनस्तत्र प्रलीयते ॥ ७-५४-५७ (४६९२७)
तस्मात्परां धृतिं कृत्वा भ्रातृभिः सह पाण्डव ।
अप्रमत्तः सुसन्नद्धः शीघ्रं योद्धुमुपाक्रम ॥ ॥ ७-५४-५८ (४६९२८)

इति श्रीमन्महाभारते द्रोणपर्वणि अभिमन्युवधपर्वणि
चतुःपञ्चाशोऽध्यायः ॥ ५४ ॥
Mahabharata - Drona Parva - Chapter Footnotes

५-५४-६ उदग्रनखेन अञ्जलिना । विनयोपेता शरणागतास्मीत्यर्थः ॥
५-५४-१४ अपमन्युना गतामर्षेणेत्यर्थः ॥
५-५४-१६ अप्रतिश्रुत्यानङ्गीकृत्य ॥
५-५४-१७ पद्मं शतं कोट्यो वर्षाणि तानि षोडश पञ्च च ॥
५-५४-३९ अन्योन्यपरुषा वागिति शेषः ॥
५-५४-४५ प्रायणान्ते आयुष्यकर्मणोऽवसाने ॥
५-५४-४६ सर्वे इति । देवा इन्द्रियाणि। प्राणिभिः जीवैः) सह। गत्वा तत्रैव परलोके। वृत्ता वृत्तवन्तः। पुनर्भूत्वा सन्निवृत्ता भवन्ति। मर्त्यभावार्था एव देवा इन्द्रादयः मर्त्यवदेव गत्वा वृत्ता भवन्ति नतु निवृत्ता भवन्ति मर्त्यभावाय। कर्मदेवा एव निवर्तन्ते नत्वाजानदेवास्तेषां क्रममुक्तियोग्यत्वादिति भावः ॥
५-५४-४८ सर्वेदेवा इति । मर्त्यत्वं मरणधर्मत्वं ब्रह्मादीनामपि स्वाभाविकमस्त्यतोऽनर्थकः शोक इत्यर्थः ॥
५-५४-४९ स्वयमेव स्वस्य मृत्युः अथापि जनानां प्राणहरा मृत्युर्जनादन्येति कल्पना कृता अनभिज्ञैरिति शेषः ॥
५-५४-५० नष्टात जातमिति शेषः ॥
५-५४-५३ चतुःपञ्चाशत्तमोऽध्यायः ॥
५४ ॥

---

द्रोनपर्व-अध्यय०५५

॥ श्रीः ॥

७.५५. अध्यायः ५५

Mahabharata - Drona Parva - Chapter Topics

व्यासेन युधिष्ठिरं प्रति षोडशराजकीयाख्यानकथनप्रारम्भः ॥ १ ॥

नारदेन सृञ्जयम्प्रति मरुत्तराजचरितकथनम् ॥ २ ॥

Mahabharata - Drona Parva - Chapter Text

७-५५-० (४६९२९)
सञ्जय उवाच। ७-५५-०क्ष् (४४०२)
श्रुत्वा मृत्युसमुत्पत्तिं कर्माण्यनुपमानि च ।
धर्मराजः पुनर्वाक्यं प्रसाद्यैनमथाब्रवीत् ॥ ७-५५-१ (४६९३०)
युधिष्ठिर उवाच। ७-५५-२क्ष् (४४०३)
गुरवः पुण्यकर्माणः शक्रप्रतिमविक्रमाः ।
पूर्वं राजर्षयो ब्रह्मन्कियन्तो मृत्युना हताः ॥ ७-५५-२ (४६९३१)
भूय एव तु मां तथ्यैर्वचोभिरभिबृंहय ।
राजर्षीणां पुराणानां समाश्वासय कर्मभिः ॥ ७-५५-३ (४६९३२)
कियन्त्यो दक्षिणा दत्ताः काश्च दत्ता महात्मभिः ।
राजर्षिभिः पुण्यकृद्भिस्तद्भवान्प्रब्रवीतु मे ॥ ७-५५-४ (४६९३३)
ग्व्यास उवाच। ७-५५-५क्ष् (४४०४)
अन्येपि यज्वनां लोका अन्ये चापि तपस्विनाम् ।
क्षमावतां च त्रींल्लोकाञ्शूरा गच्छन्ति भारत ॥ ७-५५-५ (४६९३४)
क्षत्रियस्य तुं सङ्ग्रामे शत्रून्हत्वा हतस्य वा ।
फलमत्यन्तमित्याहुर्धर्मशास्त्रविदो जनाः ॥ ७-५५-६ (४६९३५)
वेदविद्याव्रतस्नाता यज्वानः पुत्रिणश्च ये ।
तेभ्यः परार्थ्या यज्वानो यज्वभ्यश्च तनुत्यजः ॥ ७-५५-७ (४६९३६)
स वीरो यज्वनो नित्यं क्षत्रियानार्जुनिर्गतः ।
लोकान्पुण्यतमानिष्टानिति विद्धि विशाम्पते ॥ ७-५५-८ (४६९३७)
सर्वेषां नृपसिंहानां शृणु यज्ञान्नृपोत्तम ।
तानतिक्रम्य गच्छन्ति स्वर्गकामास्तनुत्यजः ॥ ७-५५-९ (४६९३८)
युधिष्ठिर उवाच। ७-५५-१०क्ष् (४४०५)
सर्वेषां यज्वनां यज्ञं श्रोतुमिच्छामि सुव्रत ।
दक्षिणाश्चानुरूपेभ्यो दत्ता राजर्षिसत्तमैः'॥ ७-५५-१० (४६९३९)
व्यास उवाच। ७-५५-११क्ष् (४४०६)
शैब्यस्य नृपतेः पुनः सृञ्जयो नाम नामतः ।

सखायौ तस्य चेवोभौ ऋषी पर्वतनारदौ ॥ ७-५५-११ (४६९४०)
तौ कदाचिद्गृहं तस्य प्रविष्टौ तद्दिदृक्षया ।
विधिवच्चार्चितौ तेन प्रीतौ तत्रोषतुः सुखम् ॥ ७-५५-१२ (४६९४१)
तं कदाचित्सुखासीनं ताभ्यां सह शुचिस्मिता ।
दुहिताऽभ्यागमत्कन्या सृञ्जयं वरवर्णिनी ॥ ७-५५-१३ (४६९४२)
तयाऽभिवादितः कन्यामभ्यनन्दद्यथाविधि ।
तत्सलिङ्गाभिराशीर्भिरिष्टाभिरभितः स्थिताम् ॥ ७-५५-१४ (४६९४३)
तां निरीक्ष्याब्रवीद्वाक्यं पर्वतः प्रहसन्निव ।
कस्येयं चञ्चलापाङ्गी सर्वलक्षणसम्मता ॥ ७-५५-१५ (४६९४४)
उषा स्विद्भाः स्विदर्कस्य ज्वलनस्य शिखापि वा ।
श्रीर्ह्रिरः कीर्तिर्धृतिः षुष्टिः सिद्धिश्चन्द्रमसः प्रभा
॥ ७-५५-१६ (४६९४५)
सञ्जय उवाच। ७-५५-१७क्ष् (४४०७)
एवं ब्रुवाणं देवर्षिं नृपतिः सृञ्जयोऽब्रवीत् ।
ममेयं भगवन्कन्या वर्या वरमभीप्सति ॥ ७-५५-१७ (४६९४६)
नारदस्त्वब्रवीदेनं देहि मह्यमिमां नृप ।
भार्यार्थं सुमहच्छ्रेयः प्राप्तुं चेदिच्छसे नृप ॥ ७-५५-१८ (४६९४७)
ददानीत्येवं संहृष्टः सृञ्जयः प्राह नारदम्। ७-५५-१९ (४६९४८)
व्यास उवाच ।
ग्एवमुक्ते नृपतिना क्रोधपर्याकुलेक्षणः'।
पर्वतस्तु सुसङ्क्रुद्धो नारदं वाक्यमब्रवीत् ॥ ७-५५-१९क्ष् (४४०८)
पूर्वं ममैव मनसा विद्धि भार्यां वृतामृषे ।
यस्मादपाचरस्तस्मात्स्वर्गं न गच्छसि ॥ ७-५५-२० (४६९४९)
एवमुक्तो नारदस्तं प्रत्युवाचोत्तरं वचः ।
मनोवाग्बुद्धिसम्भाषा सत्यं तोयमथाग्नयः ॥ ७-५५-२१ (४६९५०)
पाणिग्रहममन्त्राश्च प्रथितं दारलक्षणम् ।
न त्वेषां निश्चिता निष्ठा त्वया सा मनसा स्मृता ॥ ७-५५-२२ (४६९५१)
ग्एवं विद्वांस्तु मां यस्मादनुव्याहृतवानसि'।
तस्मात्त्वमपि न स्वर्गं गमिष्यसि मया विना ।
अन्योन्यमेवं शप्त्वा वै तस्थतुस्तत्र तौ तदा ॥ ७-५५-२३ (४६९५२)
अथ सोऽपि नृपो विप्रान्पानाच्छादनभोजनैः ।
पुत्रकामः परं शक्त्या यत्नाच्चोपाचरच्छुचिः ॥ ७-५५-२४ (४६९५३)
तस्य प्रसन्ना विप्रेन्द्राः कदाचित्पुत्रदर्शिनः ।
तपःस्वाध्यायनिरता वेदवेदाङ्गपारगाः ॥ ७-५५-२५ (४६९५४)
सहिता नारदं प्राहुर्देह्यस्मै पुत्रमीप्सितम् ।
तथेत्युक्त्वा द्विजैरुक्तः सृञ्जयं नारदोऽब्रवीत् ॥ ७-५५-२६ (४६९५५)

तुभ्यं प्रसन्ना राजर्षे पुत्रमीप्सन्ति ब्राह्मणाः ।
वरं वृणीष्व भद्रं ते यादृशं पुत्रमीप्सितम् ॥ ७-५५-२७ (४६९५६)
तथोक्तः प्राञ्जली राजा पुत्रं वव्रे गुणान्वितम् ।
यशस्विनं कीर्तिमन्तं तेजस्विनमरिन्दमम् ॥ ७-५५-२८ (४६९५७)
यस्य मूत्रं पुरीषं च क्लेदः स्वेदश्च काञ्चनम् ।
ग्सर्वं भवेत्प्रसादाद्वै तादृशं तनयं वृणे ॥ ७-५५-२९ (४६९५८)
व्यास उवाच। ७-५५-३०क्ष् (४४०९)
तथा भविष्यतीत्युक्ते जज्ञे तस्योप्सितः सुतः ।
काञ्चनस्याकरः श्रीमान्प्रसादाद्वै सुकाङ्क्षितः ॥ ७-५५-३० (४६९५९)
रुदितस्य च नेत्राभ्यामपतत्तस्य नेत्रजम् ।
मूत्रं पुरीषं स्वेदश्च सर्वं भवति काञ्चनम्'।
सुवर्णष्ठीविरित्येव तस्य नामाभवत्कृतम् ॥ ७-५५-३१ (४६९६०)
तस्मिन्वरप्रदानेन वर्धयत्यमितं धनम् ।
कारयामास नृपतिः सौवर्णं सर्वमीप्सितम् ॥ ७-५५-३२ (४६९६१)
गृहप्राकारदुर्गाणि ब्राह्मणावसथान्यपि ।
शय्यासनानि यानानि स्थालीपिठरभाजनम् ॥ ७-५५-३३ (४६९६२)
तस्य राज्ञोऽपि यद्वेश्म बाह्याश्चोपस्कराश्च ये ।
सर्वं तत्काञ्चनमयं कालेन परिवर्धितम् ॥ ७-५५-३४ (४६९६३)
अथ दस्युगणाः श्रुत्वा दृष्ट्वा चैनं तथाविधम् ।
सम्भूय तस्य नृपतेः समारब्धाश्चिकीर्षितुम् ॥ ७-५५-३५ (४६९६४)
केचित्तत्राब्रुवन्राज्ञः पुत्रं गृह्णीम वै स्वयम् ।
सोऽस्याकरः काञ्चनस्य तस्य यत्नं चरामहे ॥ ७-५५-३६ (४६९६५)
ततस्ते दस्यवो लुब्धाः प्रविश्य नृपतेर्गृहम् ।
राजपुत्रं तथाऽऽजह्रुः सुवर्णष्ठीविनं बलात् ॥ ७-५५-३७ (४६९६६)
गृह्यैनमनुपायज्ञा नीत्वाऽरण्यमचेतसः ।
हत्वा विशस्य चापश्यँ ल्लुब्धा वसु न किञ्चन ॥ ७-५५-३८ (४६९६७)
तस्य प्राणैर्विमुक्तस्य नष्टं तत्काञ्चनं वरम् ।
दस्यवश्च तदाऽन्योन्यं जघ्नुर्मूर्खा विचेतसः ॥ ७-५५-३९ (४६९६८)
हत्वा परस्परं नष्टाः कुमारं चाद्भुतं भुवि ।
असम्भाव्यं गता घोरं नरकं दुष्टकारिणः ॥ ७-५५-४० (४६९६९)
तं दृष्ट्वा निहतं पुत्रं वरदत्तं महातपाः ।
विललाप सुदुःखार्तो बहुधा करुणं नृपः ॥ ७-५५-४१ (४६९७०)
विलपन्तं निशम्याथ पुत्रशोकहतं नृपम् ।
प्रत्यदृश्यत देवर्षिर्नारदस्तस्य सन्निधौ ॥ ७-५५-४२ (४६९७१)
उवाच चैनं दुःखार्तं विलपन्तमचेतसम् ।
सृञ्जयं नारदो यद्यत्तन्निबोध युधिष्ठिर ॥ ७-५५-४३ (४६९७२)

नारद उवाच। ७-५५-४४क्ष् (४४१०)
ग्त्यज शोकं महाराज वैक्लब्यं त्यज बुद्धिमन् ।
न मृतः शोचतो जीवेन्मुह्यतो वा नराधिप ॥ ७-५५-४४ (४६९७३)
त्यज शोकं नृपश्रेष्ठ न शोचन्ति भवद्विधाः ।
वीरो भवान्महाराज ज्ञानवृद्धोऽपि मे मतः'।
कामानामवितृप्तस्त्वं सृञ्जयेह मरिष्यसि ॥ ७-५५-४५ (४६९७४)
यस्य चैते वयं गेहे उषिता ब्रह्मवादिनः ।
आविक्षितं मरुत्तं च मृतं सृञ्जय शुश्रुम ॥ ७-५५-४६ (४६९७५)
संवर्तो याजयामास स्पर्धया वै बृहस्पतेः ।
यस्मै राजर्षये प्रादाद्धनं स भगवान्प्रभुः ।
हैमं हिमवतः पादं यियक्षोर्विविधैः सवैः ॥ ७-५५-४७ (४६९७६)
यस्य सेन्द्रामरगणा बृहस्पतिपुरोगमाः ।
देवा विश्वसृजः सर्वे यजनान्ते समासते ।
यज्ञवाटस्य सौवर्णाः सर्वे चासन्परिच्छदाः ॥ ७-५५-४८ (४६९७७)
यस्य सर्वं तदा ह्यन्नं मनोभिप्रायगं शुचि ।
कामतो बुभुजुर्विप्राः सर्वे चान्नार्थिनो द्विजाः ।
पयो दधि घृतं क्षौद्रं भक्ष्यं भोज्यं च शोभनम् ॥
७-५५-४९ (४६९७८)
यस्य यज्ञेषु सर्वेषु वासांस्याभरणानि च ।
ईप्सितान्युपतिष्ठन्ते प्रहृष्टान्वेदपारगान् ॥ ७-५५-५० (४६९७९)
मरुतः परिवेष्टारो मरुत्तस्याभवन्गृहे ।
आविक्षितस्य राजर्षेर्विश्वेदेवाः सभासदः ॥ ७-५५-५१ (४६९८०)
यस्य वीर्यवतो राज्ञः सुवृष्ट्या सस्यसम्पदः ।
हविर्भिस्तर्पिता येन सम्यक्क्लृप्तैर्दिवौकसः ॥ ७-५५-५२ (४६९८१)
ऋषीणां च पितॄणां च देवानां सुखजीविनम् ।
ब्रह्मचर्यश्रुतिमुखैः सर्वैर्दानैश्च सर्वदा ॥ ७-५५-५३ (४६९८२)
शयनासनपानानि स्वर्णराशीश्च दुस्त्यजाः ।
तत्सर्वममितं वित्तं दत्तं विप्रेभ्य इच्छया ॥ ७-५५-५४ (४६९८३)
सोनुध्यातस्तु शक्रेण प्रजाः कृत्वा निरामयाः ।
श्रद्दधानो जिताँल्लोकान्गतः पुण्यदुहोऽक्षयान् ॥ ७-५५-५५ (४६९८४)
सप्रजः सनृपामात्यः सदारापत्यबान्धवः ।
यौवनेन सहस्राब्दं मरुत्तो राज्यमन्वशात् ॥ ७-५५-५६ (४६९८५)
स चेन्ममार सृञ्जय चतुर्भद्रतरस्त्वया ।
पुत्रात्पुण्यतरस्तुभ्यं मा पुत्रमनुतप्यथाः ।
अयज्वानमदक्षिण्यमभि श्वैत्येत्युदाहरत् ॥ ॥ ७-५५-५७ (४६९८६)

इति श्रीमन्महाभारते द्रोणपर्वणि अभिमन्युवधपर्वणि षोडशराजकीये पञ्चपञ्चाशत्तमोऽध्यायः ॥ ५५ ॥
Mahabharata - Drona Parva - Chapter Footnotes

५-५५-१४ तत्सलिङ्गाभिस्तस्यानुरूपाभिः ।अभितः पार्श्वतः ॥
५-५५-२२ नत्वेषा निश्चिता निष्ठा मैत्री सप्तपदी सतां इति ङ ।पाठः। निष्ठा सप्तमदी सतां इति घ। पाठः। सप्तपदी स्मृता इति झ। पाठः ॥
५-५५-२३ शप्त्वावै तत्र वत्सरमूषतुः इति क पाठः ॥
५-५५-२५ पुत्रमीप्सवः इति घ ङ झ पाठः ॥
५-५५-२६ द्विजैरुक्ततो नारदस्तथेत्युक्त्वा सृञ्जयमब्रवीदित्यन्वयः ॥
५-५५-२९ क्लेदः श्लेष्मादिः ॥
५-५५-३१ सुवर्णष्ठीविरित्यनेन गण्डूषादिकमपि काञ्चनं भवतीति सूचितम् ॥
५-५५-३५ चिकीर्षितुमपकारं कर्तुम् ।कॄहिंसायामित्यस्य रूपम् ॥
५-५५-४७ सवैः यज्ञैः ॥
५-५५-५७ चतुर्भद्रतरः धर्मज्ञानवैराग्यैश्वर्याणि चत्वारि भद्राणि ।धर्मार्थकामबलानीत्यन्ये तुभ्यं तव। अयज्वानमदक्षिण्यं पुत्रं अभिलक्ष्य मानुतप्यथाः हे श्वैत्य श्वित्यपुत्र इति उदाहरन्नारदः सृञ्जयं प्रतीति व्यासवाक्यम्। अदाक्षिण्यं इति झ पाठः ॥
५-५५-५५ पञ्चपञ्चाशत्तमोऽध्यायः ॥

---

द्रोनपर्व-अध्यय०५६
॥ श्रीः ॥
७.५६. अध्यायः ५६

Mahabharata - Drona Parva - Chapter Topics
नारदेन सृञ्जयम्प्रति सुहोत्रचरित्रकीर्तनम् ॥ १ ॥

Mahabharata - Drona Parva - Chapter Text

७-५६-० (४६९८७)
नारद उवाच। ७-५६-०क्ष् (४४११)
सुहोत्रं नाम राजानं मृतं सृञ्जय शुश्रुम ।
एकवीरमशक्यं तममरैरभिवीक्षितुम् ॥ ७-५६-१ (४६९८८)

यः प्राप्य राज्यं धर्मेण ऋत्विङ्मन्त्रिपुरोहितान् ।
सम्मान्य चात्मनः श्रेयः पृष्ट्वा तेषां मते स्थितः ॥ ७-५६-२ (४६९८९)
प्रजानां पालनं धर्मो दानमिज्या द्विषज्जयः ।
एतत्सुहोत्रो विज्ञाय धर्म्यमैच्छद्धनागमम् ॥ ७-५६-३ (४६९९०)
धर्मेणाराधयन्देवान्बाणैः शत्रूञ्जयंस्तथा ।
सर्वाण्यपि च भूतानि स्वगुणैरन्वरञ्जयत् ॥ ७-५६-४ (४६९९१)
यो भुक्त्वेमां वसुमतीं म्लेच्छाटविकवर्जिताम् ।
यस्मै ववर्ष पर्जन्यो हिरण्यं परिवत्सरान् ॥ ७-५६-५ (४६९९२)
हैरण्यास्तत्र वाहिन्यः स्वैरिण्यो व्यवहन्पुरा ।
ग्राहान्कर्कटकांश्चैव मत्स्यांश्च विविधान्बहून् ॥ ७-५६-६ (४६९९३)
कामान्वर्षति पर्जन्यो रूप्याणि विविधानि च ।
सौवर्णान्यप्रमेयाणि वाप्यश्च क्रोशसम्मिताः ॥ ७-५६-७ (४६९९४)
सहस्रं वामनान्कुब्जान्नक्रान्मकरकच्छपान् ।
सौवर्णान्विहितान्दृष्ट्वा ततोऽस्मयत वै तदा ॥ ७-५६-८ (४६९९५)
तत्सुवर्णमपर्यन्तं राजर्षिः कुरुजाङ्गले ।
ईजानो वितते यज्ञे ब्राह्मणेभ्यो ह्यमन्यत ॥ ७-५६-९ (४६९९६)
सोऽश्वमेधसहस्रेण राजसूयशतेन च ।
पुण्यैः क्षत्रिययज्ञैश्च प्रभूतवरदक्षिणैः ॥ ७-५६-१० (४६९९७)
काम्यनैमित्तिकाजस्रैरिष्टवेष्टां गतिमाप्तवान् ।
स चेन्ममार सृञ्जय चतुर्भद्रतरस्त्वया ॥ ७-५६-११ (४६९९८)
पुत्रात्पुण्यतरस्तुभ्यं मा पुत्रमनुतप्यथाः ।
अयज्वानमदक्षिण्यमभि श्वैत्येत्युदाहरत् ॥ ॥ ७-५६-१२ (४६९९९)

इति श्रीमन्महाभारते द्रोणपर्वणि अभिमन्युवधपर्वणि षोडशराजकीये षट्पञ्चाशत्तमोऽध्यायः ॥ ५६ ॥
Mahabharata - Drona Parva - Chapter Footnotes

५-५६-६ हैरण्या हिरण्मयाः ग्राहादयोऽपि । वाहिन्यो नद्यः। स्वैरिण्यः सर्वजनोपभोग्याः ॥
५-५६-५६ षट्पञ्चाशत्तमोऽध्यायः ॥

---

द्रोनपर्व-अध्यय०५७
॥ श्रीः ॥
७.५७. अध्यायः ५७

Mahabharata - Drona Parva - Chapter Topics

नारदेन सृञ्जयम्प्रति अङ्गराजगुणवर्णनम् ॥ १ ॥

Mahabharata - Drona Parva - Chapter Text

७-५७-० (४७०००)
नारद उवाच। ७-५७-०क्ष् (४४१२)
अङ्गं च पौरवं वीरं मृतं सृञ्जय शुश्रुम ।
सहस्रं यः सहस्राणां श्वेतानश्वानवासृजत् ॥ ७-५७-१ (४७००१)
तस्याश्वमेधे राजर्षेर्देशाद्देशात्समीयुषाम् ।
शिक्षाक्षरविधिज्ञानां नासीत्सङ्ख्या विपश्चिताम् ॥ ७-५७-२ (४७००२)
वेदविद्याव्रतस्नाता वदान्याः प्रियदर्शनाः ।
सुभिक्षाच्छादनगृहाः सुशय्यासनभोजनाः ॥ ७-५७-३ (४७००३)
नटनर्तकगन्धर्वैः पूर्णकैर्वर्धमानकैः ।
नित्योद्योगैश्च क्रीडद्भिस्तत्र स्म परिहर्षिताः ॥ ७-५७-४ (४७००४)
यज्ञे यज्ञे यथाकालं दक्षिणाः सोऽत्यकालयत् ।
द्विपान्दशसहस्राख्यानदात्काञ्चनसंवृतान् ॥ ७-५७-५ (४७००५)
यः सहस्रं सहस्राणि कन्या हेमविभूषिताः ॥
धूर्युजाश्वगजारूढाः सगृहक्षेत्रगोशताः। ७-५७-६ (४७००६)
शतं शतसहस्राणि स्वर्णमालानथर्षभान् ॥
गवां सहस्रानुचरान्दक्षिणामत्यकालयत्। ७-५७-७ (४७००७)
हेमशृङ्ग्यो रौप्यखुराः सवत्साः कांस्यदोहनाः ॥
दासीदासखरोष्ट्रांश्च प्रादादाजाविकं बहु। ७-५७-८ (४७००८)
रत्नानां विविधानां च विविधांश्चान्नपर्वतान् ॥
तस्मिन्संवितते यज्ञे दक्षिणामत्यकालयत्। ७-५७-९ (४७००९)
तत्रास्य गाथा गायन्ति ये पुराणविदो जनाः ॥
ग्अङ्गस्य यजमानस्य अपि विष्णुपदे वयम्। ७-५७-१० (४७०१०)
अमाद्यदिन्द्रः सोमेन दक्षिणाभिर्द्विजातयः ।
देवमानुषगन्धर्वांश्चात्यरोचन्त दक्षिणाः'॥ ७-५७-११ (४७०११)
अङ्गस्य यजमानस्य स्वधर्माधिगताः शुभाः ।
गुणोत्तरास्तु क्रतवस्तस्यासन्सार्वकामिकाः ॥ ७-५७-१२ (४७०१२)
स चेन्ममार सृञ्जय चतुर्भद्रतस्त्वया ।
पुत्रात्पुण्यतरस्तुभ्यं मा पुत्रमनुतप्यथाः ।
अयज्वानमदक्षिण्यमभि श्वैत्येत्युदाहरत् ॥ ॥ ७-५७-१३ (४७०१३)

इति श्रीमन्महाभारते द्रोणपर्वणि अभिमन्युवधपर्वणि षोडशराजकीये सप्तपञ्चाशत्तमोऽध्यायः ॥ ५७ ॥

५-५७-२ राजर्षेः सर्वे देवाः समाययुः इति ढ पाठः ॥
५-५७-४ पूर्णकैः स्वर्णचूडैः । वर्धमानकैः आरार्तिकहस्तैः ॥
५-५७-७ धूर्युजा रथाः ॥
५-५७-५७ सप्तपञ्चाशत्तमोऽध्यायः ॥

---

द्रोनपर्व-अध्यय०५८
॥ श्रीः ॥
७.५८. अध्यायः ५८

Mahabharata - Drona Parva - Chapter Topics
नारदेन सृञ्जयम्प्रति शिबिवैभवशंसनम् ॥ १ ॥

Mahabharata - Drona Parva - Chapter Text

७-५८-० (४७०१४)
नारद उवाच। ७-५८-०क्ष् (४४१३)
शिबिमौशीनरं चापि मृतं सृञ्जय शुश्रुम ।
य इमां पृथिवीं सर्वां चर्मवत्पर्यवेष्टयत् ॥ ७-५८-१ (४७०१५)
साद्रिद्वीपार्णववनां रथघोषेण नादयन् ।
स शिबिर्यष्टुमन्विच्छन्मुख्यः सर्वसपत्नजित् ॥ ७-५८-२ (४७०१६)
तेन यज्ञैर्बहुविधैरिष्टं पर्याप्तदक्षिणैः ।
अविहिंस्य जनानन्यानवाप वसु पुष्कलम् ॥ ७-५८-३ (४७०१७)
सर्वमूर्धाभिषिक्तानां सम्मतः सोऽभवद्युधि ।
अजयच्चाश्वमेधैर्यो विजित्य पृथिवीमिमाम् ॥ ७-५८-४ (४७०१८)
निरर्गलैर्बहुफलैर्निष्ककोटिसहस्रदः ।
गबिभर्ति दक्षिणा यस्य गङ्गायाः स्रोत आवृणोत्'॥ ७-५८-५ (४७०१९)
हस्त्यश्वपशुभिर्धान्यैर्मृगैर्गोजाविभिस्तथा ।
विविधैः पृथिवीं पुण्यां शिबिर्ब्राह्मणसात्करोत् ॥ ७-५८-६ (४७०२०)
यावत्यो वर्षतो धारा यावत्यो दिवि तारकाः ।
यावत्यः सिकता गाङ्ग्यो यावन्मेरोर्महोपलाः ॥ ७-५८-७ (४७०२१)
उदन्वति च यावन्ति रत्नानि प्राणिनोऽपि च ।
तावतीरददङ्गा वै शिबिरौशीनरोऽध्वरे ॥ ७-५८-८ (४७०२२)
नोद्यन्तारं धुरस्तस्य कञ्चिदन्यं प्रजापतिः ।
भूतं भव्यं भवन्तं वा नाध्यगच्छन्नरोत्तमम् ॥ ७-५८-९ (४७०२३)

तस्यासन्विविधा यज्ञाः सर्वकामैः समन्विताः ।
हेमयूपासनगृहा हेमप्राकारतोरणाः ॥ ७-५८-१० (४७०२४)
शुचिस्वाद्वन्नपानं च ब्राह्मणाः प्रयुतायुताः ।
नानाभक्ष्यैः प्रियकथाः पयोदधिमहाहृदाः ॥ ७-५८-११ (४७०२५)
तस्यासन्यज्ञवाटेषु नद्यः शुभ्रान्नपर्वताः ।
पिबत स्नात खादध्वमिति यत्रोच्यते जनैः ॥ ७-५८-१२ (४७०२६)
यस्मै प्रादाद्वरं रुद्रस्तुष्टः पुण्येन कर्मणा ।
अक्षयं ददतो वित्तं श्रद्धा कीर्तिस्तथा क्रियाः ॥ ७-५८-१३ (४७०२७)
यथोक्तमेव भूतानां प्रियत्वं स्वर्गमुत्तमम् ।
एताँल्लब्ध्वा वरानिष्टाञ्शिबिः काले दिवं गतः ॥ ७-५८-१४ (४७०२८)
स चेन्ममार सृञ्जय चतुर्भद्रतरस्त्वया ।
पुत्रात्पुण्यतरस्तुभ्यं मा पुत्रमनुतप्यथाः ।
अयज्वानमदक्षिण्यमभि श्वैत्येत्युदाहरत् ॥ ॥ ७-५८-१५ (४७०२९)

इति श्रीमन्महाभारते द्रोणपर्वणि अभिमन्युवधपर्वणि षोडशराजकीये
अष्टपञ्चाशत्तमोऽध्यायः ॥ ५८ ॥
Mahabharata - Drona Parva - Chapter Footnotes

५-५८-१ पर्यवेष्टयत् स्वाधीनामकरोत् ॥
५-५८-५ कोटिसहस्रशः इति क ख ङ पाठः ॥
५-५८-९ तस्य शिबेर्धुरः कार्यभारस्य उयन्तारं वोढारं प्रज्ञापतिः
स्रष्टा स्वसृष्टौ नाध्यगच्छत् ॥
५-५८-१३ ददतो राज्ञो वित्तादिकमक्षयमस्त्विति रुद्रो वरं ददाविति
सम्बन्धः ॥
५-५८-५८ अष्टपञ्चाशत्तमोऽध्यायः ॥
५८ ॥

---

द्रोनपर्व-अध्यय०५९
॥ श्रीः ॥
७.५९. अध्यायः ५९

Mahabharata - Drona Parva - Chapter Topics
सृञ्जयम्प्रति नारदेन राममहिमानुवर्णनम् ॥ १ ॥

Mahabharata - Drona Parva - Chapter Text

७-५९-० (४७०३०)
नारद उवाच। ७-५९-०क्ष् (४४१४)
रामं दाशरथिं चैव मृतं सृञ्जय शुश्रुम ।
यं प्रजा अन्वमोदन्त पिता पुत्रमिवौरसम् ।
असङ्ख्येया गुणा यस्मिन्नासन्नमिततेजसि ॥ ७-५९-१ (४७०३१)
यश्चतुर्दशवर्षाणि निदेशात्पितुरच्युतः ।
वने वनितया सार्धमवसल्लक्ष्मणाग्रजः ॥ ७-५९-२ (४७०३२)
जघान च जनस्थाने राक्षसान्मनुजर्षभः ।
तपस्विनां रक्षणार्थं सहस्राणि चतुर्दश ॥ ७-५९-३ (४७०३३)
तत्रैव वसतस्तस्य रावणो नाम राक्षसः ।
जहार भार्यां वैदेहीं सम्मोह्यैनं सहानुजम् ॥ ७-५९-४ (४७०३४)
ग्रामो हृतां राक्षसेन भार्यां श्रुत्वा जटायुषः ।
आतुरः शोकसन्तप्तो रामोऽगच्छद्धरीश्वरम् ॥ ७-५९-५ (४७०३५)
तेन रामः सुसङ्गम्य वानरैश्च महाबलैः ।
आजगामोदधेः पारं सेतुं कृत्वा महार्णवे ॥ ७-५९-६ (४७०३६)
तत्र हत्वा तु पौलस्त्यान्ससुहृद्गणबान्धवान् ।
मायाविनं महाघोरं रावणं लोककण्टकम्'॥ ७-५९-७ (४७०३७)
सुरासुरैरवध्यं तं देवब्राह्मणकण्टकम् ।
जघान स महाबाहुः पौलस्त्यं सगणं रणे ॥ ७-५९-८ (४७०३८)
ग्हत्वा तत्र रिपुं सङ्ख्ये भार्यया सह सङ्गतः ।
स च लङ्केश्वरं चक्रे धर्मात्मानं विभीषणम् ॥ ७-५९-९ (४७०३९)
भार्यया सह संयुक्तस्ततो वानरसेनया ।
अयोध्यामागतो वीरः पुष्पकेण विराजता ॥ ७-५९-१० (४७०४०)
तत्र राजन्प्रविष्टः सन्नयोध्यायां महायशाः ।
मातॄर्वयस्यान्सचिवानृत्विजः सपुरोहितान् ॥ ७-५९-११ (४७०४१)
शुश्रूषमाणः सततं मन्त्रिभिश्चाभिषेचितः ।
विसृज्य हरिराजानं हनुमन्तं सहाङ्गदम् ॥ ७-५९-१२ (४७०४२)
भ्रातरं भरतं वीरं शत्रुघ्नं चैव लक्ष्मणम् ।
पूजयन्परया प्रीत्या वैदेह्या चाभिपूजितः ॥ ७-५९-१३ (४७०४३)
दशवर्षसहस्राणि दशवर्षशतानि च ।
चतुःसगारपर्यन्तां पृथिवीमन्वशासत ॥ ७-५९-१४ (४७०४४)
अश्वमेधशतैरीजं क्रतुभिर्भूरिदक्षिणैः ।
यश्च विप्रप्रसादेन सर्वकामानवाप्य च'॥ ७-५९-१५ (४७०४५)
सम्प्राप्य विधिवद्राज्यं सर्वभूतानुकम्पनः ।
ग्सर्वद्वीपानवष्टभ्य प्रजा धर्मेण पालयन्'॥ ७-५९-१६ (४७०४६)
स निर्गलं मुख्यतममश्वमेधशतं प्रभुः ।

आजहार सुरेशस्य हविषा मुदमाहरन् ।
अन्यैश्च विविधैर्यज्ञैरीजे बहुगुणैर्नृपः ॥ ७-५९-१७ (४७०४७)
क्षुत्पिपासेऽजयद्रामः सर्वरोगांश्च देहिनाम् ।
सततं गुणसम्पन्नो दीप्यमानः स्वतेजसा ॥ ७-५९-१८ (४७०४८)
अतिसर्वाणि भूतानि रामो दाशरथिर्बभौ ।
ऋषीणां देवतानां च मानुषाणां च सर्वशः ।
पृथिव्यां सह वासोऽभूद्रामे राज्यं प्रशासति ॥ ७-५९-१९ (४७०४९)
नाहीयत तदा प्रामः प्राणिनां न तदा व्यथा ।
प्राणापानौ समावास्तां रामे राज्यं प्रशासति ॥ ७-५९-२० (४७०५०)
पर्यदीप्यन्त तेजांसि तदाऽनर्थाश्च नाभवन् ।
दीर्घायुषः प्रजाः सर्वा युवा न म्रियते तदा ॥ ७-५९-२१ (४७०५१)
वेदैश्चतुर्भिः सुप्रीताः प्राप्नुवन्ति दिवौकसः ।
हव्यं कव्यं च विविधं निष्पूर्तं हुतमेव च ॥ ७-५९-२२ (४७०५२)
अदंशमशका देशा नष्टव्यालसरीसृपाः ।
नाप्यु प्राणभृतां मृत्युर्नाकाले ज्वलनोऽदहत् ॥ ७-५९-२३ (४७०५३)
अधर्मरुचयो लुब्धा मूर्खा वा नाभवंस्तदा ।
शिष्टेष्टप्राज्ञकर्माणः सर्वे वर्णास्तदाऽभवन् ॥ ७-५९-२४ (४७०५४)
स्वधां पूजां च रक्षोभिर्जनस्थाने प्रणाशिताम् ।
प्रादान्निहत्य रक्षांसि पितृदेवेभ्य ईश्वरः ॥ ७-५९-२५ (४७०५५)
सहस्रपुत्राः पुरुषा दशवर्षशतायुषः ।
न च ज्येष्ठाः कनिष्ठेभ्यस्तदा श्राद्धानि कुर्वते ॥ ७-५९-२६ (४७०५६)
श्यामो युवा लोहिताक्षो मत्तमातङ्गविक्रमः ।
आजानुबाहुः सुभुजः सिंहस्कन्धो महाबलः ॥ ७-५९-२७ (४७०५७)
दशवर्षसहस्राणि दशवर्षशतानि च ।
सर्वभूतमनःकान्तो रामो राज्यमकारयत् ॥ ७-५९-२८ (४७०५८)
रामो रामो राम इति प्रजानामभवत्कथा ।
रामभूतं जगदभूद्रामे राज्यं प्रशासति ॥ ७-५९-२९ (४७०५९)
चतुर्विधाः प्रजा रामः स्वर्गं नीत्वा दिवं गतः ।
आत्मेच्छया प्रतिष्ठाप्य राजवंशमिहाष्टधा ॥ ७-५९-३० (४७०६०)
स चेन्ममार सृञ्जय चतुर्भद्रतरस्त्वया ।
पुत्रात्पुण्यतरस्तुभ्यं मा पुत्रमनुतप्यथाः ।
अयज्वानमदक्षिण्यमभि श्वैत्येत्युदाहरत् ॥ ॥ ७-५९-३१ (४७०६१)

इति श्रीमन्महाभारते द्रोणपर्वणि अभिमन्युवधपर्वणि षोडशराजकीये एकोनषष्टितमोऽध्यायः ॥ ५९ ॥

Mahabharata - Drona Parva - Chapter Footnotes

५-५९-१७ स निरर्गलजान्मुख्यानश्वमेधाञ्शतं प्रभुः इति ङ
। पाठः। आजहार महाजज्ञं प्रजा धर्मेण पालयन्। निरर्गलं
सजारूथ्यमश्वमेधं च तं विभुः इति झ। पाठः। आजहार रमेशस्य
इति ङ। पाठः ॥
५-५९-१९ पृथिव्यां मानुषाणां प्रत्यक्षा देवादयो विचरन्ति पुण्यातिशयात् ॥
५-५९-२० प्राणो बलम् ॥
५-५९-२२ निष्पूर्तं जठीकारामादि । हुतमिष्ठम्। सुप्रीता ब्राह्मणाः
शास्त्रपारगाः इति ङ। पाठः ॥
५-५९-२९ रामाद्रामं जगदभूत् इति घ झ।पाठः । तत्र रामं अभिरामम् ॥
५-५९-५९ एकोनषष्टितमोऽध्यायः ॥
५९ ॥

---

द्रोनपर्व-अध्यय०६०
॥ श्रीः ॥
७.६०. अध्यायः ६०

Mahabharata - Drona Parva - Chapter Topics
नारदेन सृञ्जयम्प्रति भगीरथचरित्रकथनम् ॥१ ॥

Mahabharata - Drona Parva - Chapter Text

७-६०-० (४७०६२)
नारद उवाच। ७-६०-०क्ष् (४४१५)
भगीरथं च राजानं मृतं सृञ्जय शुश्रुम ।
ग्परित्राणाय पूर्वेषां येन गङ्गाऽवतारिता ॥ ७-६०-१ (४७०६३)
यस्येन्द्रो बाहुवीर्येण प्रीतो राज्ञो महात्मनः ।
सोऽश्वमेधशतैरीजे समाप्तवरदक्षिणैः ॥ ७-६०-२ (४७०६४)
हविर्मन्त्रान्नसम्पन्नैर्देवानामादधौ मुदम्'।
येन भागीरथी गङ्गा चयनैः काञ्चनैश्चिता ॥ ७-६०-३ (४७०६५)
यः सहस्रं सहस्राणां कन्या हेमविभूषिताः ।
राज्ञश्च राजपुत्रांश्च ब्राह्मणेभ्यो ह्यमन्यत ॥ ७-६०-४ (४७०६६)
सर्वा रथगताः कन्या रथाः सर्वे चतुर्युजः ।
रथेरथे शतं नागाः सर्वे वै हेममालिनः ॥ ७-६०-५ (४७०६७)
सहस्रमश्वाश्चैकैकं गजानां पृष्ठतोऽन्वयुः ।
अश्वेअश्वे शतं गावो गवां पश्चादजाविकम् ॥ ७-६०-६ (४७०६८)

तेनाक्रान्ता जनौघेन दक्षिणा भूयसीर्ददत् ।
उपह्वरेऽतिव्यथिता तस्याङ्के निषसाद ह ॥ ७-६०-७ (४७०६९)
तथा मागीरथी गङ्गा ह्यूर्ध्वगा ह्यभवत्पुरा ।
दुहितृत्वं गता राज्ञः पुत्रत्वमगमत्तदा ॥ ७-६०-८ (४७०७०)
तां तु गाथा जगुः प्रीता गन्धर्वाः सूर्यवर्चसः ।
पितृदेवमनुष्याणां शृण्वतां वल्गुवादिनः ॥ ७-६०-९ (४७०७१)
भगीरथं यजमानमैक्ष्वाकुं भूरिदक्षिणम् ।
गङ्गा समुद्रगा देवी वव्रे पितरमीश्वरम् ॥ ७-६०-१० (४७०७२)
तस्य सेन्द्रैः सुरगणैर्देवैर्यज्ञः स्वलङ्कृतः ।
सम्यक्परिगृहीतश्च शान्तविघ्नो निरामयः ॥ ७-६०-११ (४७०७३)
यो य इच्छेत विप्रो वै यत्रयत्रात्मनः प्रियम् ।
भगीरथस्तदा प्रीतस्तत्रतत्राददद्वशी ॥ ७-६०-१२ (४७०७४)
नादेयं ब्राह्मणस्यासीद्यस्य यत्स्यात्प्रियं धनम् ।
सोऽपि विप्रप्रसादेन ब्रह्मलोकं गतो नृपः ॥ ७-६०-१३ (४७०७५)
येन यातौ मखमुखौ दिशाशाविह पादपाः ।
तेनावस्थातुमिच्छन्ति तं गत्वा राजमीश्वरम् ॥ ७-६०-१४ (४७०७६)
स चेन्ममार सृञ्जय चतुर्भद्रतरस्त्वया ।
पुत्रात्पुण्यतरस्तुभ्यं मा पुत्रमनुतप्यथाः ।
अयज्वानमदक्षिण्यमभि श्वैत्येत्युदाहरत् ॥ ॥ ७-६०-१५ (४७०७७)

इति श्रीमन्महाभारते द्रोणपर्वणि अभिमन्युवधपर्वणि षोडशराजकीये षष्टितमोऽध्यायः ॥ ६० ॥

Mahabharata - Drona Parva - Chapter Footnotes

५-६०-३ चयनैः काञ्चनैश्चिता स्वर्णेष्टकमयैः क्रत्वर्थस्थण्डिलैर्व्याप्ता चयनैरिष्टकासोपानैर्वा कूलद्वये उद्गमात्संगमपर्यन्तं निचितेति वार्थः ॥
५-६०-४ राज्ञश्च राजपुत्रांश्चातिक्रम्येति शेषः । ब्राह्मणेभ्यः अमन्यत दत्तवान् ॥
५-६०-७ येन हेतुना उपह्वरे समीपे भूयसीर्दक्षिणा ददत् राजा आस्ते तेन हेतुना गङ्गा जनौघभारेण आक्रान्ता वेत्रयष्टिवत्तीरप्रदेशे नतिं प्राप्ता सती अतिव्यथिताऽतस्तस्याङ्के निषसादह । दक्षिणाभारेण तीरप्रदेशेऽवनते प्रवाहाम्बु राज्ञोऽङ्कपर्यन्तमागतमित्यर्थः ॥
५-६०-८ पुत्रत्वं नरकात्त्राणकर्तृत्वम् ॥
५-६०-१२ वशी योगी योगप्रभावात् । यो यत्र देशे यत् इच्छेत्स तत्र प्राप्नु यादित्यर्थः ॥

५-६०-१४ येऽनुयाता अभिमुखा दिंशमद्यापि पादपाः
।आनतास्तस्थुरिच्छन्तस्तमन्वागन्तुमीश्वरम् इति
क।पाठः।अनेत्रास्तस्थुः इति क।ङ।पाठः ॥
५-६०-६० षष्टितमोऽध्यायः ॥

---

द्रोनपर्व-अध्यय०६१
॥ श्रीः ॥
७.६१. अध्यायः ६१

Mahabharata - Drona Parva - Chapter Topics
नारदेन सञ्जयम्प्रति दिलीपप्रभाववर्णनम् ॥१ ॥

Mahabharata - Drona Parva - Chapter Text

७-६१-० (४७०७८)
नारद उवाच।७-६१-०क्ष् (४४१६)
दिलीपं चापि राजेन्द्र मृतां सृञ्जय शुश्रुम ।
यस्य यज्ञशतेष्वासन्प्रयुतायुतशो द्विजाः ॥७-६१-१ (४७०७९)
तन्त्रज्ञानार्थसम्पन्ना यज्वानः पुत्रपौत्रिणः ।
ग्स्वच्छन्दाः पुण्यगन्धाश्च सुभक्षा हेममालिनः ।
यस्य कर्माणि भूरिणि कथयन्ति मनीषिणः'॥ ७-६१-२ (४७०८०)
य इमां वसुसम्पूर्णां वसुधां वसुधाधिपः ।
ईजानो वितते यज्ञे ब्राह्मणेभ्यो ह्यमन्यत ॥७-६१-३ (४७०८१)
ग्राजानो वितते यज्ञे उपहारानुपाहरन्'।
दिलीपस्य तु यज्ञेषु कृतः पन्था हिरण्मयः ।
तं धर्म इव कुर्वाणाः सेन्द्रा देवाः समागमन् ॥ ७-६१-४ (४७०८२)
सहस्रं यत्र मातङ्गा अगच्छन्पर्वतोपमाः ।
सौवर्णं चाभवत्सर्वं सदः परमभास्वरम् ॥७-६१-५ (४७०८३)
रसानां चाभवन्कुल्या भक्ष्याणां चापि पर्वताः ।
सहस्रव्यामा नृपते यूपाश्चासन्हिरण्मयाः ॥७-६१-६ (४७०८४)
चषालप्रचषालौ च यस्य यूपे हिरण्मयौ ।
नृत्यन्त्यप्सरसो यत्र षट्सहस्राणि सप्त च ॥७-६१-७ (४७०८५)
यत्र वीणां वादयति प्रीत्या विश्वावसुः स्वयम् ।
सर्वभूतान्यमन्यन्त मम वादयतीति तम् ॥७-६१-८ (४७०८६)
रागखाण्डवभोज्यैश्च मत्ताः पतिषु शेरते ॥ ७-६१-९ (४७०८७)
तदेतदद्भुतं मन्ये अन्यैर्न सदृशं नृपैः ।

यदप्सु युध्यमानस्य चक्रे न परिपेततुः ॥ ७-६१-१० (४७०८८)
राजानं दृढधन्वानं दिलीपं सत्यवादिनम् ।
येऽपश्यन्भूरिदक्षिण्यं तेऽपि स्वर्गजितो नराः ॥ ७-६१-११ (४७०८९)
पञ्च शब्दा न जीर्यन्ति दिलीपस्य निवेशने ।
स्वाध्यायघोषो ज्याघोषः पिबताश्नीत खादत ॥ ७-६१-१२ (४७०९०)
स चेन्ममार सृञ्जय चतुर्भद्रतरस्त्वया ।
पुत्रात्पुण्यतरस्तुभ्यं मा पुत्रमनुतप्यथाः ।
अयज्वानमदक्षिण्यमभि श्वैत्येत्युदाहरत् ॥ ॥ ७-६१-१३ (४७०९१)

इति श्रीमन्महाभारते द्रोणपर्वणि अभिमन्युवधपर्वणि षोडशराजकीये
एकषष्टितमोऽध्यायः ॥ ६१ ॥
Mahabharata - Drona Parva - Chapter Footnotes

५-६१-२ तन्त्र क्रिया ॥
५-६१-४ पन्था हिरण्मयः । हिरण्मय्यः स्रुचो भवन्तीति विधिमार्गस्तत
आरभ्य प्रवृत्त इत्यर्थः ॥
५-६१-९ रागखण्डवं गुडोदनम् । पर्पटिकेति वैदर्भाः । यद्घोषा
हेमसच्छन्ना मत्ताः पथिषु शेरते इति ङ़ पाठः । पथि सुशेरते
इति क। पाठः । रागस्वाण्डवभोज्यैश्च मत्ताः पथिषु शेरते इति
घ पाठः ॥
५-६१-१० अप्सु न परिपेततुः न ममज्जतुः । यस्याप्ययुध्यमानस्य
चक्रे न परिमर्दनम् इति क। पाठः ॥
५-६१-६१ एकषष्टितमोऽध्यायः ॥

---

द्रोनपर्व-अध्यय०६२
॥ श्रीः ॥
७.६२. अध्यायः ६२

Mahabharata - Drona Parva - Chapter Topics
नारदेन सृञ्जयम्प्रति मान्धातृचरिताभिधानम् ॥ १ ॥

Mahabharata - Drona Parva - Chapter Text

७-६२-० (४७०९२)
नारद उवाच। ७-६२-०क्ष् (४४१७)
मान्धतारं यौवनाश्वं मृतं सृञ्जय शुश्रुम ।

यं देवावश्विनौ गर्भे पितुः पार्श्वे चकर्षतुः ॥ ७-६२-१ (४७०९३)
मृगयां विचरन्राजा तृषितः क्लान्तवाहनः ।
धूमं दृष्ट्वाऽगमत्सत्रं पृषदाज्यमवाप सः ॥ ७-६२-२ (४७०९४)
तं दृष्ट्वा युवनाश्वस्य जठरे रविसन्निभम् ।
गर्भं निरूहतुर्देवावश्विनौ भिषजां वरौ ॥ ७-६२-३ (४७०९५)
तं दृष्ट्वा पितुरुत्सङ्गे शयानं देववर्चसम् ।
अन्योन्यमब्रुवन्देवाः कमयं धास्यतीति वै ॥ ७-६२-४ (४७०९६)
मामेवायं धयत्वङ्ग इति ह स्माह वासवः ।
ततोङ्गुलिभ्यो हीन्द्रस्य प्रादुरासीत्पयोऽमृतम् ॥ ७-६२-५ (४७०९७)
मां धास्यतीति कारण्याद्यदिन्द्रो ह्यन्वकम्पयत् ।
तस्मात्तु मान्धातेत्येवं नाम तस्याद्भुतं कृतम् ॥ ७-६२-६ (४७०९८)
ततस्तु धारां पयसो घृतस्य च महात्मनः ।
तस्यास्ये यौवनाश्वस्य पाणिरिन्द्रस्य चास्रवत् ॥ ७-६२-७ (४७०९९)
अपिबत्पाणिमिन्द्रस्य स चाप्यह्गाऽभ्यवर्धत ।
सोऽभवद्द्वादशसमो द्वादशाहेन वीर्यवान् ॥ ७-६२-८ (४७१००)
इमां च पृथिवीं कृत्स्नामेकाह्ना स व्यजीजयत् ।
धर्मात्मा धृतिमान्वीरः सत्यसन्धो जितेन्द्रियः ॥ ७-६२-९ (४७१०१)
जनमेजयं सुधन्वानं गयं पूरुं बृहद्रथम् ।
असितं च नृगं चैव मान्धाता मानवोऽजयत् ॥ ७-६२-१० (४७१०२)
उदेति च यतः सूर्यो यत्र च प्रतितिष्ठति ।
तत्सर्वं यौवनाश्वस्य मान्धातुः क्षेत्रमुच्यते ॥ ७-६२-११ (४७१०३)
सोऽश्वमेधशतैरिष्ट्वा राजसूयशतेन च ।
अददद्रोहितान्मत्स्यान्ब्राह्मणेभ्यो विशाम्पते ॥ ७-६२-१२ (४७१०४)
हैरण्यान्योजनोत्सेधानायताञ्शतयोजनम् ।
बहुप्रकारान्सुस्वादून्भक्ष्यभोज्यान्नपर्वतान् ॥ ७-६२-१३ (४७१०५)
अतिरिक्तं ब्राह्मणेभ्यो भुञ्जानो हीयते जनः ॥ ७-६२-१४ (४७१०६)
भक्ष्यान्नपाननिचयाः शुशुभुस्त्वन्नपर्वताः ।
घृतह्रदाः सूपपङ्का दधिफेनां गुडोदकाः ॥ ७-६२-१५ (४७१०७)
रुरुधुः पर्वतान्नद्यो मधुक्षीरवहाः शुभाः ।
देवासुरा नरा यक्षा गन्धर्वोरगपक्षिणः ॥ ७-६२-१६ (४७१०८)
विप्रास्तत्रागताश्चासन्वेदवेदाङ्गपारगाः ।
ब्राह्मणा ऋषयश्चापि नासंस्तत्राविपश्चितः ॥ ७-६२-१७ (४७१०९)
समुद्रान्तां वसुमतीं वसुपूर्णां तु सर्वतः ।
स तां ब्राह्मणसात्कृत्वा जगाम स्वान्गृहान्प्रति ॥ ७-६२-१८ (४७११०)
ग्राजाऽपि विविधैरिष्ट्वा यज्ञैर्विविधदक्षिणैः'।
गतः पुण्यकृतां लोकान्व्याप्य स्वयशसा दिशः ॥ ७-६२-१९ (४७१११)

स चेन्ममार सृञ्जय चतुर्भद्रतरस्त्वया ।
पुत्रात्पुण्यतरस्तुभ्यं मा पुत्रमनुतप्यथाः ।
अयज्वानमदक्षिण्यमभि श्वैत्येत्युदाहरत् ॥ ॥ ७-६२-२० (४७११२)

इति श्रीमन्महाभारते द्रोणपर्वणि अभिमन्युवधपर्वणि षोडशराजकीये द्विषष्टितमोऽध्यायः ॥ ६२ ॥
Mahabharata - Drona Parva - Chapter Footnotes

५-६२-६ तस्मान्मान्धातरित्येवं इति क पाठः ॥
५-६२-८ द्वादशसमो द्वादशवार्षिकः । शय इति पाठे द्वादशहस्तः। व्यजीजयद्विजितवान् ॥
५-६२-१३ रोहितान् लोहितभूप्रदेशान्पद्मरागखनिमतो वा मत्स्यान्देशविशेषान् । हैरण्यान् स्वर्णाकरयुक्तान्। जनोत्सेधान् जनेषु उत्सेध उच्छ्रायो येषां तान्। मत्स्यदेशोत्पन्ने हि नद्यावद्यापि परम्परया पूर्वापरौ समुद्रौ गच्छत इति तेषामुच्छ्रितत्वं प्रसिद्धम्। रोहितानश्वान् इति क ङ पाठः ॥
५-६२-१४ अतिरिक्तमवशिष्टं भुञ्जानो जन एव हीयते तत्वन्नमित्यर्थः ॥
५-६२-६२ द्विषष्टितमोऽध्यायः ॥

---

द्रोनपर्व-अध्यय०६३
॥ श्रीः ॥
७.६३. अध्यायः ६३

Mahabharata - Drona Parva - Chapter Topics
नारद उवाच ।
Mahabharata - Drona Parva - Chapter Text

७-६३-० (४७११३)
नारद उवाच। ७-६३-०क्ष् (४४१८)
ययातिं नाहुषं चैव मृतं सृञ्जय शुश्रुम ।
ग्य इमां पृथिवीं जित्वा ससमुद्रां सपर्वताम् ॥ ७-६३-१ (४७११४)
शम्याप्रासेन निर्माय वेदीः सन्नतदक्षिणाः ।
ईजानः क्रतुभिः पुण्यैः पर्यगच्छत्प्रदक्षिणम्'॥ ७-६३-२ (४७११५)
राजसूयशतैरिष्ट्वा सोऽश्वमेधशतेन च ।
पुण्डरीकसहस्रेण वाजपेयशतैस्तथा ॥ ७-६३-३ (४७११६)
अतिरात्रसहस्रेण चातुर्मास्यैश्च कामतः ।

अग्निष्टोमैश्च विविधैः सत्रैश्च प्राज्यदक्षिणैः ॥ ७-६३-४ (४७११७)
अब्राह्मणानां यद्वित्तं पृथिव्यामस्ति किञ्चन ।
तत्सर्वं परिसङ्ख्याय ततो ब्राह्मणसात्करोत् ॥ ७-६३-५ (४७११८)
सरस्वती पुण्यतमा नदीनां
तथा समुद्राः सरितः साद्रयश्च ।
ईजानाय पुण्यतमाय राज्ञे
घृतं पयो दुदुहुर्नाहुषाय ॥ ७-६३-६ (४७११९)
व्यूढे देवासुरे युद्धे कृत्वा देवसहायताम् ।
चतुर्धा व्यभजत्सर्वां चतुर्भ्यः पृथिवीमिमाम् ॥ ७-६३-७ (४७१२०)
यज्ञैर्नानाविधैरिष्ट्वा प्रजामुत्पाद्य चोत्तमाम् ।
देवयान्यां चौशनस्यां शर्मिष्ठायां च धर्मतः ॥ ७-६३-८ (४७१२१)
देवारण्येषु सर्वेषु विजहारामरोपमः ।
आत्मनः कामचारेण द्वितीय इव वारावः ॥ ७-६३-९ (४७१२२)
यदा नाभ्यगमच्छान्तिं कामानां सर्ववेदवित् ।
ततो गाथामिमां गीत्वा सदारः प्राविशद्वनम् ॥ ७-६३-१० (४७१२३)
यत्पृथिव्यां व्रीहियवं हिरण्यं पशवः स्त्रियः ।
नालमेकस्य तत्सर्वमिति मत्वा शमं व्रजेत् ॥ ७-६३-११ (४७१२४)
एवं कामान्परित्यज्य ययातिर्धृतिमेत्य च ।
पूरुं राज्ये प्रतिष्ठाप्य प्रयातो वनमीश्वरः ॥ ७-६३-१२ (४७१२५)
स चेन्ममार सृञ्जय चतुर्भद्रतरस्त्वया ।
पुत्रात्पुण्यतरस्तुभ्यं मा पुत्रमनुतप्यथाः ।
अयज्वानमदक्षिण्यमभि श्वैत्येत्युदाहरत् ॥ ॥ ७-६३-१३ (४७१२६)

इति श्रीमन्महाभारते द्रोणपर्वणि अभिमन्युवधपर्वणि षोडशराजकीये
त्रिषष्टितमोऽध्यायः ॥ ६३ ॥
Mahabharata - Drona Parva - Chapter Footnotes

५-६३-४ प्राज्यदक्षिणैः बहुदक्षिणैः ॥
५-६३-५ अब्राह्मणानां ब्राह्मणद्वेषिणाम् । म्लेच्छानामिति
यावत्। परिसङ्ख्याय अपहृत्य ॥
५-६३-७ चतुर्भ्यः ऋत्विग्भ्यः
। प्राचीदिग्घोतुर्दक्षिणाध्वर्योरित्यादिश्रुतेः ॥
५-६३-६३ त्रिषष्टितमोऽध्यायः ॥

---

द्रोनपर्व-अध्यय०६४
॥ श्रीः ॥

७.६४. अध्यायः ६४

Mahabharata - Drona Parva - Chapter Topics
नारदेन सृञ्जयम्प्रत्यम्बरीषविभवाभिधानम् ॥ १ ॥

Mahabharata - Drona Parva - Chapter Text

७-६४-० (४७१२७)
नारद उवाच। ७-६४-०क्ष् (४४१९)
नाभागमम्बरीषं च मृतं सृञ्जय शुश्रुम ।
यः सहस्रं सहस्राणां राज्ञां चैकस्त्वयोधयत् ॥ ७-६४-१ (४७१२८)
जिगीषमाणाः सङ्ग्रामे समन्ताद्वैरिणोऽभ्ययुः ।
अस्त्रयुद्धविदो घोराः सृजन्तश्चाशिवा गिरः ॥ ७-६४-२ (४७१२९)
बललाघवशिक्षाभिस्तेषां सोऽस्त्रबलेन च ।
छत्रायुधध्वजरथांश्छित्त्वा प्रासान्गतव्यथः ॥ ७-६४-३ (४७१३०)
त एनं मुक्तसन्नाहाः प्रार्थयञ्जीवितैषिणः ।
शरण्यमीयुः शरणं तव स्म इति वादिनः ॥ ७-६४-४ (४७१३१)
स तु तान्वशगान्कृत्वा जित्वा चेमां वसुन्धराम् ।
ईजे यज्ञशतैरिष्टैर्यथा शक्रस्तथाऽनघः ॥ ७-६४-५ (४७१३२)
बुभुजुः सर्वसम्पन्नमन्नमन्ये जनाः सदा ।
तस्मिन्यज्ञे तु विप्रेन्द्राः सन्तृप्ताः परमार्चिताः ॥ ७-६४-६ (४७१३३)
मोदकान्पूरिकापूपान्स्वादुपूर्णाश्च शष्कुलीः ।
करम्भान्पृथुमृद्वीका अन्नानि सुकृतानि च ॥ ७-६४-७ (४७१३४)
सूपान्मैरेयकापूपान्रागषाडवपानकान् ।
मृष्टान्नानि सुयुक्तानि मृदूनि सुरभीणि च ॥ ७-६४-८ (४७१३५)
घृतं मधु पयस्तोयं दधीनि रसवन्ति च ।
फलं मूलं सुस्वादु द्विजास्तत्रोपभुञ्जते ॥ ७-६४-९ (४७१३६)
मदनीयानि पापानि विदित्वा चात्मनः सुखम् ।
अपिबन्त यथाकामं पानपा गीतवादितैः ॥ ७-६४-१० (४७१३७)
तत्र स्म गाथा गायन्ति क्षीबा हृष्टाः पठन्ति च ।
नाभागस्तुतिसंयुक्ता ननृतुश्च सहस्रशः ॥ ७-६४-११ (४७१३८)
तेषु यज्ञेष्वम्बरीषो दक्षिणामत्यकालयत् ।
राज्ञां शतसहस्राणि दशप्रयुतयाजिनाम् ॥ ७-६४-१२ (४७१३९)
हिरण्यकवचान्सर्वाञ्श्वेतच्छत्रप्रकीर्णकान् ।
हिरण्यस्यन्दनारूढान्सानुयात्रपरिच्छादान् ॥ ७-६४-१३ (४७१४०)
ईजानो वितते यज्ञे दक्षिणामत्यकालयत् ।

मूर्धाभिषिक्तांश्च नृपान्राजपुत्रशतानि च ॥ ७-६४-१४ (४७१४१)
स दण्डकोशनिचयान्ब्राह्मणेभ्यो ह्यमन्यत ।
नैवं पूर्वे जनाश्चक्रुर्न करिष्यन्ति चापरे ॥ ७-६४-१५ (४७१४२)
यदम्बरीषो नृपतिः करोत्यमितदक्षिणः ।
इत्येवमनुमोदन्ते प्रीता यस्य महर्षयः ॥ ७-६४-१६ (४७१४३)
स चेन्ममार सृञ्जय चतुर्भद्रतरस्त्वया ।
पुत्रात्पुण्यतरस्तुभ्यं मा पुत्रमनुतप्यथाः ।
अयज्वानमदक्षिण्यमभि श्वैत्येत्युदाहरत् ॥ ॥ ७-६४-१७ (४७१४४)

इति श्रीमन्महाभारते द्रोणपर्वणि अभिमन्युवधपर्वणि षोडशराजकीये
चतुःषष्टितमोऽध्यायः ॥ ६४ ॥
Mahabharata - Drona Parva - Chapter Footnotes

५-६४-८ सूपाद्योरण्डकान्यूषान् इति क ङ पाठः ॥
५-६४-१० मादनीयानि मदकराणि सुरादीनि ।पापानि पापहेतूनीति ज्ञात्वापि
सुखलिप्सवः पिबन्तीत्यर्थः। मदनीयानि पानानि विदंशानात्मनः
प्रियान्। पपुस्तत्र यथाकामं पानपा(का) गीतकाः परम् इति क पाठः)॥
५-६४-१२ अत्यकालयद्दातुं निष्कासितवान् ।जिता राजान् एव
सोपस्करदक्षिणात्वेन दत्ताः। तेषां राज्यानि ते राजानश्च
ब्राह्मणसात्कृता इत्यर्थः ॥
५-६४-६४ चतुःषष्ठितमोऽध्यायः ॥

---

द्रोनपर्व-अध्यय०६५
॥ श्रीः ॥
७.६५. अध्यायः ६५

Mahabharata - Drona Parva - Chapter Topics
नारदेन सृञ्जयम्प्रति शशिबिन्दुयशोनुवर्णनम् ॥ १ ॥

Mahabharata - Drona Parva - Chapter Text

७-६५-० (४७१४५)
नारद उवाच। ७-६५-०क्ष् (४४२०)
शशिबिन्दुं च राजानं मृतं सृञ्जय शुश्रुम ।
य ईजे विविधैर्यज्ञैः श्रीमान्सत्यपराक्रमः ॥ ७-६५-१ (४७१४६)
तस्य भार्यासहस्राणां शतमासीन्महात्मनः ।

एकैकस्यां च भार्यायां सहस्रं तनयाभवन् ॥ ७-६५-२ (४७१४७)
ते कुमाराः पराक्रान्ताः सर्वे नियुतयाजिनः ।
राजानः क्रतुभिर्मुख्यैरीजाना वेदपारगाः ॥ ७-६५-३ (४७१४८)
हिरण्यकवचाः सर्वे सर्वे चोत्तमधन्विनः ।
सर्वेऽश्वमेधैरीजानाः कुमाराः शाशिबिन्दवाः ॥ ७-६५-४ (४७१४९)
तानश्वमेधे राजेन्द्रो ब्राह्मणेभ्योददत्पिता ।
शतंशतं रथगजा एकैकं पृष्ठतोऽन्वयुः ॥ ७-६५-५ (४७१५०)
राजपुत्रं तदा कन्यास्तपनीयस्वलङ्कृताः ।
कन्याङ्कन्यां शतं नागा नागेनागे शतं रथाः ॥ ७-६५-६ (४७१५१)
रथेरथे शतं चाश्वा बलिनो हेममालिनः ।
अश्वेअश्वे गोसहस्रं गवां पञ्चाशदाविकाः ॥ ७-६५-७ (४७१५२)
एतद्धनमपर्याप्तमश्वमेधे महामस्वे ।
शशिबिन्दुर्महाभागो ब्राह्मणेभ्यो ह्यमन्यत ॥ ७-६५-८ (४७१५३)
वार्क्षाश्च यूपा यावन्त अश्वमेधे महामखे ।
ते तथैव पुनश्चान्ये तावन्तः काञ्चनाभवन् ॥ ७-६५-९ (४७१५४)
भक्ष्यान्नपाननिचयाः पर्वताः क्रोशमुच्छ्रिताः ।
तस्याश्वमेधे निर्वृत्ते राज्ञः शिष्टास्त्रयोदश ॥ ७-६५-१० (४७१५५)
तुष्टपुष्टजनाकीर्णां शान्तविघ्नामनामयाम्। ७-६५-११ (४७१५६)
शशिबिन्दुरिमां भूमिं चिरं भुक्त्वा दिवं गतः ॥ ७-६५-११ (४७१५७)
स चेन्ममार सृञ्जय चतुर्भद्रतरस्त्वया ।
पुत्रात्पुण्यतरस्तुभ्यं मा पुत्रमनुतप्यथाः ।
अयज्वानमदक्षिण्यमभि श्वैत्येत्युदाहरत् ॥ ॥ ७-६५-१२ (४७१५८)

इति श्रीमन्महाभारते द्रोणपर्वणि अभिमन्युवधपर्वणि षोडशराजकीये पञ्चषष्टितमोऽध्यायः ॥ ६५ ॥

Mahabharata - Drona Parva - Chapter Footnotes

५-६५- त्रयोदशास्त्र निचयाः शिष्टाः ॥
५-६५- पञ्चषष्टितमोऽध्यायः ॥
६५ ॥

---

द्रोनपर्व-अध्यय०६६
॥ श्रीः ॥
७.६६. अध्यायः ६६

Mahabharata - Drona Parva - Chapter Topics

नारदेन सृञ्जयम्प्रति गयगुणानुवर्णनम् ॥ १ ॥

Mahabharata - Drona Parva - Chapter Text

७-६६-० (४७१५९)
नारद उवाच। ७-६६-०क्ष् (४४२१)
गयं चाधूर्तरजसं मृतं सृञ्जय शुश्रुम ।
ये वै वर्षशत राजा हुतशिष्टाशनोऽभवत् ॥ ७-६६-१ (४७१६०)
तस्मै ह्यग्निर्वरं प्रादात्ततो वव्रे वरं गयः ।
तपसा ब्रह्मचर्येण व्रतेन नियमेन च ॥ ७-६६-२ (४७१६१)
गुरूणां च प्रसादेन वेदानिच्छामि वेदितुम् ।
स्वधर्मेणाविहिंस्यान्यान्धनमिच्छामि चाक्षयम् ॥ ७-६६-३ (४७१६२)
विप्रेषु ददतश्चैव श्रद्धा भवतु नित्यशः ।
कन्यासु च सवर्णासु सुप्रजस्त्वं च मे भवेत् ॥ ७-६६-४ (४७१६३)
अन्नमोजो महो मह्यं धर्मे मे रमतां मनः ।
अविघ्नं चास्तु मे नित्यं धर्मकार्येषु पावक ॥ ७-६६-५ (४७१६४)
तथा भिष्यतीत्युक्त्वा तत्रैवान्तरधीयत ।
गयो ह्यवाप्य तत्सर्वं धर्मेणाराधयञ्जगत् ॥ ७-६६-६ (४७१६५)
स दर्शपूर्णमासाभ्यां कालेष्वाग्रयणेन च ।
चातुर्मास्यैश्च विविधैर्यज्ञैश्चावाप्तदक्षिणैः ॥ ७-६६-७ (४७१६६)
अयजच्छ्रद्धया राजा परिसंवत्सराञ्शतम् ।
गवां शतसहस्राणि शतमश्वशतानि च ॥ ७-६६-८ (४७१६७)
शतं निष्कसहस्राणि गवां चाप्ययुतानि षट् ।
उत्थायोत्थाय सम्प्रादात्परिसंवत्सराञ्शतम् ॥ ७-६६-९ (४७१६८)
नक्षत्रेषु च सर्वेषु ददन्नक्षत्रदक्षिणाः ।
ईजे च विविधैर्यज्ञैर्यथा सोमोऽङ्गिरा यथा ॥ ७-६६-१० (४७१६९)
सौवर्णां पृथिवीं कृत्वा य इमां प्रमिशर्कराम् ।
विप्रेभ्यः प्राददद्राजा सोऽश्वमेधे महामखे ॥ ७-६६-११ (४७१७०)
जाम्बूनदमया यूपाः सर्वे रत्नपरिच्छदाः ।
गयस्यासन्समृद्धास्तु सर्वभूतमनोहराः ॥ ७-६६-१२ (४७१७१)
सर्वकामसमृद्धं च प्रादादन्नं गयस्तदा ।
ब्राह्मणेभ्यः प्रहृष्टेभ्यः सर्वभूतेभ्य एव च ॥ ७-६६-१३ (४७१७२)
ससमुद्रवनद्वीपनदीनदवनेषु च ।
नगरेषु च राष्ट्रेषु दिवि व्योम्नि च येऽवसन् ॥ ७-६६-१४ (४७१७३)
भूतग्रामाश्च विविधाः सन्तृप्ता यज्ञसम्पदा ।
गयस्य सदृशो यज्ञो नास्त्यन्य इति तेऽब्रुवन् ॥ ७-६६-१५ (४७१७४)

षट्त्रिंशद्योजनायामा त्रिंशद्योजनमायता ।
पश्चात्पुरश्चतुर्विंशद्वेदी ह्यासीद्धिरण्मयी ॥ ७-६६-१६ (४७१७५)
गयस्य यजमानस्य मुक्तावज्रमणिस्तृता ।
प्रादात्स ब्राह्मणेभ्योऽथ वासांस्याभरणानि च ॥ ७-६६-१७ (४७१७६)
यथोक्ता दक्षिणाश्चान्या विप्रेभ्यो भूरिदक्षिणः ।
यत्र भोजनशिष्टस्य पर्वताः पञ्चविंशतिः ॥ ७-६६-१८ (४७१७७)
कुल्याश्च क्षीरवाहिन्यो रसानां चापभवंस्तदा ।
वस्त्राभरणगन्धानां शारयश्च पृथग्विधाः ॥ ७-६६-१९ (४७१७८)
यस्य प्रभावाच्च गयस्त्रिषु लोकेषु विश्रुतः ।
वटश्चाक्षय्यकरणः पुण्यं ब्रह्मसरश्च तत् ॥ ७-६६-२० (४७१७९)
स चेन्ममार सञ्जय चतुर्भद्रतरस्त्वया ।
पुत्रात्पुण्यतरस्तुभ्यं मा पुत्रमनुतप्यथाः ।
अयज्वानमदक्षिण्यमभि श्वैत्येत्युदाहरत् ॥ ॥ ७-६६-२१ (४७१८०)

इति श्रीमन्महाभारते द्रोणपर्वणि अभिमन्युवधपर्वणि षोडशराजकीये
षट्षष्टितमोऽध्यायः ॥ ६६ ॥
Mahabharata - Drona Parva - Chapter Footnotes

५-६६-१ गयं चामूर्तरयसं इति घ । झ पाठः ॥
५-६६-४ पात्रेषु ददतः सामे श्रद्धा भवतु इति क ङ पाठः ॥
५-६६-७ पौर्णमासाभ्य इति घ । पाठः ॥
५-६६-१० नक्षत्रविहिता दक्षिणाः ॥
५-६६-२० यस्य प्रसादाद्गायत्री त्रिषु लोकेषु विश्रुता इति क पाठः ॥
५-६६-६६ षट्षष्टितमोऽध्यायः ॥

---

द्रोनपर्व-अध्यय०६७
॥ श्रीः ॥
७.६७. अध्यायः ६७

Mahabharata - Drona Parva - Chapter Topics
नारदेन सृञ्जयम्प्रति रन्तिदेवचरित्रकीर्तनम् ॥ १ ॥

Mahabharata - Drona Parva - Chapter Text

७-६७-० (४७१८१)
नारद उवाच । ७-६७-०क्ष् (४४२२)

साङ्कृतिं रन्तिदेवं च मृतं सृञ्जय शुश्रुम ।
यस्य द्विशतसाहस्रा आसन्सूदा महात्मनः ॥ ७-६७-१ (४७१८२)
गृहानभ्यागतान्विप्रानतिथीन्परिवेषकाः ।
पक्वंपक्वं दिवारात्रं वरान्नममृतोपमम् ॥ ७-६७-२ (४७१८३)
न्यायेनाधिगतं वित्तं ब्राह्मणेभ्यो ह्यमन्यत ।
वेदानधीत्य धर्मेण यश्चक्रे द्विषतो वशे ॥ ७-६७-३ (४७१८४)
उपस्थिताश्च पशवः स्वयं यं शंसितव्रतम् ।
बहवः स्वर्गमिच्छन्तो विधिवत्सत्रयाजिनम् ॥ ७-६७-४ (४७१८५)
नदी महानसाद्यस्य प्रवृत्तक्ता चर्मराशितः ।
तस्माच्चर्मण्वती नाम ख्याता पुण्या सरिद्वरा ॥ ७-६७-५ (४७१८६)
ब्राह्मणेभ्यो ददन्निष्कान्सौवर्णान्स प्रभावतः ।
तुभ्यं निष्कं तुभ्यं निष्कमिति ह स्म प्रभाषते ॥ ७-६७-६ (४७१८७)
तुभ्यन्तुभ्यमिति प्रादान्निष्कान्निष्कान्सहस्रशः ।
तत पुनः समाश्वास्य निष्कानेव प्रयच्छति ॥ ७-६७-७ (४७१८८)
अल्पं दत्तं मयाऽद्येति निष्ककोटिं सहस्रशः ।
एकाह्ना ताम्यति ततः क्वाद्य विप्रा इति ब्रुवन् ॥ ७-६७-८ (४७१८९)
द्विजपाणिवियोगेन दुःखं मे शाश्वतं महत् ।
भविष्यति न सन्देह एवं राजाऽददद्वसु ॥ ७-६७-९ (४७१९०)
सहस्रशश्च सौवर्णान्वृषभान्गोशतानुगान् ।
साष्टं शतं सुवर्णानां निष्कमाहुर्धनं तथा ॥ ७-६७-१० (४७१९१)
अध्यर्धमासमददद्ब्राह्मणेभ्यः शतं समाः ।
अग्निहोत्रोपकरणं यज्ञोपकरणं च यत् ॥ ७-६७-११ (४७१९२)
ऋषिभ्यः करकान्कुम्भान्स्थालीः पिठरमेव च ।
शयनासनायानानि प्रासादांश्च गृहाणि च ॥ ७-६७-१२ (४७१९३)
वृक्षांश्च विविधान्दद्यादन्नानि च धनानि च ।
सर्वं सौवर्णमेवासीद्रन्तिदेवस्य धीमतः ॥ ७-६७-१३ (४७१९४)
तत्रास्य गाथा गायन्ति ये पुराणविदो जनाः ।
रन्तिदेवस्य तां दृष्ट्वा समृद्धिमतिमानुषीम् ॥ ७-६७-१४ (४७१९५)
नैतादृशं दृष्टपूर्वं कुबेरसदनेष्वपि ।
धनं च पूर्यमाणं नः किं पुनर्मनुजेष्विति ॥ ७-६७-१५ (४७१९६)
व्यक्तं वस्वोकसारेयमित्युचुस्तत्र विस्मिताः ।
साङ्कृते रन्तिदेवस्य यां रात्रिमतिथिर्वसेत् ॥ ७-६७-१६ (४७१९७)
आलभ्यन्त तदा गावः सहस्राण्येकविंशतिः ।
तत्र स्म सूदाः क्रोशन्ति सुमृष्टमणिकुण्डलाः ॥ ७-६७-१७ (४७१९८)
सूपं भूयिष्ठमश्नीध्वं नाद्य मांसं यथा पुरा ।
रन्तिदेवस्य यत्किञ्चित्सौवर्णमभवत्तदा ॥ ७-६७-१८ (४७१९९)

तत्सर्वं वितते यज्ञे ब्राह्मणेभ्यो ह्यमन्यत ।
प्रत्यक्षं तस्य हव्यानि प्रतिगृह्णन्ति देवताः ॥ ७-६७-१९ (४७२००)
कव्यानि पितरः काले सर्वकामान्द्विजोत्तमाः ।
स चेन्ममार सृञ्जय चतुर्भद्रतरस्त्वया ॥ ७-६७-२० (४७२०१)
पुत्रात्पुण्डतरस्तुभ्यं मा पुत्रमनुतप्यथाः ।
अयज्वानमदक्षिण्यमभि श्वैत्येत्युदाहरत् ॥ ॥ ७-६७-२१ (४७२०२)

इति श्रीमन्महाभारते द्रोणपर्वणि अभिमन्युवधपर्वणि षोडशराजकीये सप्तषष्टितमोऽध्यायः ॥ ६७ ॥

Mahabharata - Drona Parva - Chapter Footnotes

५-६७-३ न्यायेनाधिगतं वित्तं येनाक्षय्यं इति क ङ । पाठः ॥
५-६७-८ एकान्हा दास्यति पुनः कोऽन्यस्तत्सम्प्रदास्यति इति घ झ पाठः ॥
५-६७-१० पारिभाषिकं निष्कमाह सहस्रश इति ॥
५-६७-११ अध्यर्धमासं पक्षे पक्षे इत्यर्थः । शतं समा इति वाक्यशेषात् ॥
५-६७-१५ धनं च पूर्णमासाद्य इति घ ङ पाठः ॥
५-६७-१६ वस्वोकसारा सलोप आर्षः । कनकमयानि ओकांसि सारो यस्याः सा तथा ॥
५-६७-१८ नाद्याश्नीत यथा पुरा इति क । पाठः ॥
५-६७-६७ सप्तषष्टितमोऽध्यायः ॥

---

द्रोनपर्व-अध्यय०६८
॥ श्रीः ॥
७.६८. अध्यायः ६८

Mahabharata - Drona Parva - Chapter Topics
नारदेन सृञ्जयम्प्रति भरतचरितकथनम् ॥ १ ॥

Mahabharata - Drona Parva - Chapter Text

७-६८-० (४७२०३)
नारद उवाच । ७-६८-०क्ष् (४४२३)
दौष्यन्ति भरतं चापि मृतं सृञ्जय शुश्रुम ।
कर्माण्यसुकराण्यन्यैः कृतवान्यः शिशुर्वने ॥ ७-६८-१ (४७२०४)
हिमावदातान्यः सिंहान्नखदंष्ट्रायुधान्बली ।

निर्वीर्यांस्तरसा कृत्वा विचकर्ष बबन्ध च ॥ ७-६८-२ (४७२०५)
क्रूरांश्चोग्रतरान्व्याघ्रान्दमित्वा चाकरोद्वशे ।
मनःशिला इव शिलाः संयुक्ता जतुराशिभिः ॥ ७-६८-३ (४७२०६)
त्रायलादींश्चातिबलवान्सुप्रतीकान्गजानपि ।
दंष्ट्रासु गृह्य विमुखाञ्शुष्कास्यानकरोद्वशे ॥ ७-६८-४ (४७२०७)
महिषानप्यतिबलो बलिनो विचकर्ष ह ।
सिंहानां च सुदृप्तानां शतान्याकर्षयद्बलात् ॥ ७-६८-५ (४७२०८)
बलिनः सृमरान्खड्गान्नानासत्त्वानि चाप्युत ।
कृच्छ्रप्राणान्वने बद्ध्वा दमयित्वाप्यवासृजत् ॥ ७-६८-६ (४७२०९)
तं सर्वदमनेत्याहुर्द्विजास्तेनास्य कर्मणा ।
तं प्रत्यषेधज्जननी मा सत्वानि व्यनीनशः ॥ ७-६८-७ (४७२१०)
सोऽश्वमेधशतेनेजे यमुनामनु वीर्यवान् ।
त्रिशतैश्च सरस्वत्यां गङ्गामनु चतुःशतैः ॥ ७-६८-८ (४७२११)
सौऽश्वमेधसहस्रेण राजसूयशतेन च ।
पुनरीजे महायज्ञैः समाप्तवरदक्षिणैः ॥ ७-६८-९ (४७२१२)
अग्निष्टोमातिरात्राणामुक्थ्यविश्वजितां च सः ।
वाजपेयसहस्रामां सहस्रैश्च सुसंवृतैः ॥ ७-६८-१० (४७२१३)
इष्ट्वा शाकुन्तलो राजा तर्पयित्वा द्विजान्धनैः ।
सहस्रं यत्र पद्मानां कण्वाय भरतो ददौ ।
जाम्बूनदस्य शुद्धस्य कनकस्य महायशाः ॥ ७-६८-११ (४७२१४)
यस्य यूपाः सतव्यामाः परिणाहेन काञ्चनाः ।
समागम्य द्विजैः सार्धं सेन्द्रैर्देवैः समुच्छ्रिताः ॥ ७-६८-१२ (४७२१५)
अलङ्कृतान्राजमानान्सर्वरत्नैर्मनोहरैः ।
हैरण्यान्द्विरदानश्वान्रथानुष्ट्रानजाविकान् ॥ ७-६८-१३ (४७२१६)
दासी दासं धनं धान्यं गाः सवत्साः पयस्विनीः ।
ग्रामान्गृहांश्च क्षेत्राणि विविधांश्च परिच्छदान् ॥ ७-६८-१४ (४७२१७)
कोटीशतायुतांश्चैव ब्राह्मणेभ्यो ह्यमन्यत ।
चक्रवर्ती ह्यदीनात्मा जितारिर्ह्यजितः परैः ॥ ७-६८-१५ (४७२१८)
स चेन्ममार सृञ्जय चतुर्भद्रतरस्त्वया ।
पुत्रात्पुण्यतरस्तुभ्यं मा पुत्रमनुतप्यथाः ।
अयज्वानमदक्षिण्यमभि श्वैत्येत्युदाहरत् ॥ ॥ ७-६८-१६ (४७२१९)

इति श्रीमन्महाभारते द्रोणपर्वणि अभिमन्युवधपर्वणि षोडशराजकीये अष्टषष्टितमोऽध्यायः ॥ ६८ ॥

Mahabharata - Drona Parva - Chapter Footnotes

५-६८-१ शुचिर्वने इति क ङ पाठः ॥
५-६८-३ क्रुरानिति । यथा मनःशिलामयाः शिलाः
जतुराशिभिर्लाभापुज्जैर्युक्तास्तत्सदृशान् रक्तबिन्दुयुक्तान्
रक्तपीतवर्णान् व्याघ्रविशेषान् वशेऽकरोदित्यर्थः। शिलाः
प्रभुत्वाज्जनकाशिनः इति क। पाठः ॥
५-६८-१२ व्यामो हस्तचतुष्टयम् । परिणाहेन दैर्घ्येण ॥
५-६८-६८ अष्टषष्टितमोऽध्यायः ॥

---

द्रोनपर्व-अध्यय०६९
॥ श्रीः ॥
७.६९. अध्यायः ६९

Mahabharata - Drona Parva - Chapter Topics
नारदेन सृञ्जयम्प्रति पृथुचरित्रकथनम् ॥ १ ॥

Mahabharata - Drona Parva - Chapter Text

७-६९-० (४७२२०)
नारद उवाच। ७-६९-०क्ष् (४४२४)
पृथुं वैन्यं च राजानं मृतं सृञ्जय शुश्रुम ।
यमभ्यषिञ्चत्सम्मन्त्र्य राजसूये महर्षयः ॥ ७-६९-१ (४७२२१)
अयं नः प्रथयिष्येत सर्वानित्यभवत्पृथुः ।
क्षतान्नस्त्रास्यते सर्वानत्येवं क्षत्रियोऽभवत् ॥ ७-६९-२ (४७२२२)
पृथुं वैन्यं प्रजा दृष्ट्वा रक्ताः स्मेति यदब्रुवन् ।
ततो राजेति नामास्य अनुरागादजायत ॥ ७-६९-३ (४७२२३)
अकृष्टपच्या पृथिवी आसीद्वैन्यस्य कामधुक् ।
सर्वाः समादुघा गावः पुटकेपुटके मधु ॥ ७-६९-४ (४७२२४)
आसन्हिरण्मया वृक्षाः सुखस्पर्शाः सुखावहाः ।
तेषां चीरक्ष्क्ष् संवीताः प्रजास्तेष्वेव शेरते ॥ ७-६९-५ (४७२२५)
फलान्यमृतकल्पानि स्वादूनि च मधूनि च ।
तेषामासीत्तदाऽऽहारो निराहाराश्च नाभवन् ॥ ७-६९-६ (४७२२६)
अरोगाः सर्वसिद्धार्था मनुष्या ह्यकुतोभयाः ।
न्यवसन्त यथाकामं वृक्षेषु च गुहासु च ॥ ७-६९-७ (४७२२७)
प्रविभागो न राष्ट्राणां पुराणां चाभवत्तदा ।
यथासुखं यथाकामं तथैता मुदिताः प्रजाः ॥ ७-६९-८ (४७२२८)
तस्य संस्तम्भिता ह्यापः समुद्रमभियास्यतः ।

पर्वताश्च ददुर्मार्गं ध्वजभङ्गश्च नाभवत् ॥ ७-६९-९ (४७२२९)
तं वनस्पतयः शैला देवासुरनरोरगाः ।
सप्तर्षयः पुण्यजना गन्धर्वाप्सरसोऽपि च ।
पितरश्च सुखासीनमभिगम्येदमब्रुवन् ॥ ७-६९-१० (४७२३०)
सम्राडसि क्षत्रियोऽसि राजा गोप्ता पिताऽसि नः ।
देह्यस्मभ्यं महाराज प्रभुः सन्नीप्सितान्वरान् ।
यैर्वयं शाश्वतं तृप्ता वर्तयिष्यामहे सुखम् ॥ ७-६९-११ (४७२३१)
गविज्ञापितः प्रजाभिस्तु प्रजानां हितकाम्यया ।
धनुर्गृह्य पृषत्कांश्च वसुधामाद्रवद्बली ॥ ७-६९-१२ (४७२३२)
ततो वैन्यभयाद्राजन्गौर्भूत्वा प्राद्रवन्मही ।
तां पृथुर्धनुरादाय द्रवन्तीमन्वसारयत् ॥ ७-६९-१३ (४७२३३)
सा लोकान्ब्रह्मलोकादीन्गत्वा वैन्यभयार्दिता ।
सा ददर्शाग्रतो वैन्यं कार्मुकोद्यतपाणिकम् ॥ ७-६९-१४ (४७२३४)
ज्वलद्भिर्विशिखैर्बाणैर्दीप्ततेजःसमद्युतिम् ।
महायोगं महात्मानं दुर्धर्षममरैरपि ॥ ७-६९-१५ (४७२३५)
अलभन्ती परित्राणं वैन्यमेवाभ्यपद्यत ।
कृताञ्जलिपुटा राजन्पूज्यं लोकैस्त्रिभिस्तदा ॥ ७-६९-१६ (४७२३६)
उवाच चैनं नाधर्म्यं स्त्रीवधं कर्तुमर्हसि ।
कथं धारयिता चासि प्रजा राजन्मया विना ॥ ७-६९-१७ (४७२३७)
पृथुरुवाच। ७-६९-१८क्ष् (४४२५)
एकस्यार्थाय यो हन्यादात्मनो वा परस्य वा ।
एकं प्राणान्बहून्वापि प्राणिनां नास्ति पातकं ॥ ७-६९-१८ (४७२३८)
यस्मिंस्तु निहते भद्रे बहवः सुखमेधते ।
तस्मिन्हते त्वधं नास्ति पातकं नोपभुज्यते ॥ ७-६९-१९ (४७२३९)
सोऽहं पालननिमित्तं त्वां बधिष्यामि वसुंधरे ।
यदि चेद्वचनादद्य न करिष्यसि मे प्रियम् ॥ ७-६९-२० (४७२४०)
त्वां निहत्य तु बाणेन मच्छासनपराङ्मुखीम् ।
आत्मानं प्रथयित्वाऽहं प्रजा धारयिता स्वयं ॥ ७-६९-२१ (४७२४१)
सुखं वचनमास्थाय मम धर्मभृतां वरे ।
सञ्जीवय प्रजा नित्यं शक्ता ह्यसि वसुन्धरे ॥ ७-६९-२२ (४७२४२)
दुहितृत्वं च मे गच्छ एवमेतन्महाशरम् ।
नियच्छेयं त्वदर्थाय उद्यतं घोरदर्शनम् ॥ ७-६९-२३ (४७२४३)
भूमिरुवाच। ७-६९-२४क्ष् (४४२६)
सर्वमेतन्महाराज विधास्यासि परन्तप ।
वत्सं त्वं पश्य राजन्वै क्षरेयं येन वत्सला ॥ ७-६९-२४ (४७२४४)
समां तु कुरु सर्वज्ञ मां तु धर्मभृतां वर ।

यथा विष्यन्दमानं वै क्षीरं सर्वत्र भावये ॥ ७-६९-२५ (४७२४५)
नारद उवाच। ७-६९-२६क्ष् (४४२७)
तत उत्सारयामास शिलाजालानि सर्वशः ।
पृथुर्वैन्यस्तदा राजा तेन शैला विवर्धिताः ॥ ७-६९-२६ (४७२४६)
न हि पूर्वनिसर्गे वै विषमे वसुधातले ।
प्रविभागः पुराणां वा ग्रामाणां वा महीपते ॥ ७-६९-२७ (४७२४७)
न सस्यानि न गोरक्ष्यं न कृषिर्न वणिक्पथः ।
वैन्यात्प्रभृति राजेन्दर सर्वस्यैतस्य सम्भवः ॥ ७-६९-२८ (४७२४८)
यत्रयत्र च साम्यं तु भूमावासीत्किलानघ ।
तत्रतत्र प्रजास्तात निवासमभिरोचयन् ।
कृच्छ्रेण च महाराज इत्येवमनुशुश्रुम ॥ ७-६९-२९ (४७२४९)
तथेत्युक्त्वा पुनर्वैन्यो गृहीत्वाऽऽजगवं धनुः ।
शरांश्चाप्रतिमान्घोरांश्चिन्तयित्वाऽब्रवीन्महीम् ॥ ७-६९-३० (४७२५०)
पृथुरुवाच। ७-६९-३१क्ष् (४४२८)
एह्येहि वसुधे क्षिप्रं क्षरैभ्यः काङ्क्षितं पयः ।
मच्छसनातिगां वै त्वां प्रमथिष्याम्यहं शरैः ॥ ७-६९-३१ (४७२५१)
नारद उवाच। ७-६९-३२क्ष् (४४२९)
तथोक्ता साऽत्मनः श्रेयश्चिन्तयित्वाऽब्रवीत्पृथुम्। ७-६९-३२ (४७२५२)
भूमिरुवाच ।
वत्सं पात्राणि दोग्धॄंश्च क्षीराणि च समादिश ॥ ७-६९-३२क्ष् (४४३०)
ततो दास्याम्यहं भद्र सर्वं यस्य यथेप्सितम् ।
दुहितृत्वे च मां वीर सङ्कल्पयितुमर्हसि ॥ ७-६९-३३ (४७२५३)
नारद उवाच।' ७-६९-३४क्ष् (४४३१)
तथेत्युक्त्वा पृथुः सर्वं विधानमकरोद्वशी ।
ततो भूतनिकायास्तां वसुधां दुदुहुस्तदा ॥ ७-६९-३४ (४७२५४)
तां वनस्पतयः पूर्वं समुत्तस्थुर्दुधुक्षवः ।
साऽतिष्ठद्वत्सला वत्सं दोग्धृपात्राणि चेच्छती ॥ ७-६९-३५ (४७२५५)
वत्सोऽभूत्पुष्पितः सालः प्लक्षो दोग्धाऽभवत्तदा ।
छिन्नप्ररोहणं दुग्धं पात्रमौदुम्बरं शुभम् ॥ ७-६९-३६ (४७२५६)
उदयः पर्वतो वत्सो मेरुर्दोग्धा महागिरिः ।
रत्नान्योषधयो दुग्धं पात्रमस्तमयं तथा ॥ ७-६९-३७ (४७२५७)
ग्देवानां वत्स इन्द्रोऽभूत्पात्रं दारुमयं तथा'।
दोग्धा च सविता देवो दुग्धमूर्जस्करं प्रियम् ॥ ७-६९-३८ (४७२५८)
असुरा दुदुहुर्मायामयःपात्रे तु तां तदा ।
दोग्धा द्विमूर्धा तत्रासीद्वत्सश्चासीद्विरोचनः ॥ ७-६९-३९ (४७२५९)
कृषिं च सस्यं च नरा दुदुहुः पृथिवीतले ।

स्वायंभुवो मनुर्वत्सस्तेषां दोग्धाऽभवत्पृथुः ॥ ७-६९-४० (४७२६०)
अलाबुपात्रे च तथा विषं दुग्धा वसुन्धरा ।
धृतराष्ट्रोऽभवद्दोग्धा तेषां वत्सस्तु तक्षकः ॥ ७-६९-४१ (४७२६१)
सप्तर्षिभिर्ब्रह्म दुग्धा तथा चाक्लिष्टकर्मभिः ।
दोग्धा बृहस्पतिः पात्रं छन्दो वत्सश्च सोमराट् ॥ ७-६९-४२ (४७२६२)
अन्तर्धानं चामपात्रे दुग्धा पुण्यजनैर्विराट् ।
दोग्धा वैश्रवणस्तेषां वत्सश्चासीद्वृषध्वजः ॥ ७-६९-४३ (४७२६३)
पुण्यगन्धान्पद्मपात्रे गन्धर्वाप्सरसोऽदुहन् ।
वत्सश्चित्ररथस्तेषां दोग्धा विश्वरुचिः प्रभुः ॥ ७-६९-४४ (४७२६४)
स्वधां रजतपात्रेषु दुदुहुः पितरश्च ताम् ।
वत्सो वैवस्वतस्तेषां यमो दोग्धान्तकस्तदा ॥ ७-६९-४५ (४७२६५)
एवं निकायैस्तैर्दुग्धा पयोऽभीष्टं हि सा विराट् ।
यैर्वर्तयन्ति ते ह्यद्य पात्रैर्वत्सैश्च नित्यशः ॥ ७-६९-४६ (४७२६६)
यज्ञैश्च विविधैरिष्ट्वा पृथुर्वैन्यः प्रतापवान् ।
सन्तर्पयित्वा भूतानि सर्वैः कामैर्मनःप्रियैः ॥ ७-६९-४७ (४७२६७)
हैरण्यानकरोद्राजा ये केचित्पार्थिवा भुवि ।
तान्ब्राह्मणेभ्यः प्रायच्छदश्वमेधे महामखे ॥ ७-६९-४८ (४७२६८)
स षष्टिं गोसहस्राणि षष्टिं नागशतानि च ।
सौवर्णानकरोद्राजा ब्राह्मणेभ्यश्च तान्ददौ ॥ ७-६९-४९ (४७२६९)
इमां च पृथिवीं सर्वां मणिरत्नविभूषिताम् ।
सौवर्णीमकरोद्राजा ब्राह्मणेभ्यश्च तां ददौ ॥ ७-६९-५० (४७२७०)
स चेन्ममार सृञ्जय चतुर्भद्रतरस्त्वया ।
पुत्रात्पुण्यतरस्तुभ्यं मा पुत्रमनुतप्यथाः ।
अयज्वानमदक्षिण्यमभि श्वैत्येत्युदाहरत् ॥ ॥ ७-६९-५१ (४७२७१)

इति श्रीमन्महाभारते द्रोणपर्वणि अभिमन्युवधपर्वणि षोडशराजकीये एकोनसप्ततितमोऽध्यायः ॥ ६९ ॥

Mahabharata - Drona Parva - Chapter Footnotes

५-६९-१ ध्वजभङ्गस्तोरणादिना ॥
५-६९-३९ द्विमूर्धा शुक्रोऽभूत् इति क ङ ड़ पाठः ॥
५-६९-४३ विराट् पृथिवी । वत्सश्चासीत्कुवेरकः इति पाठः ॥
५-६९-४४ दोग्धा वसुरपि प्रभुः इति क ङ ड़ पाठः ॥
५-६९-४५ वत्सोऽत्र वत्सरस्तेषां क ङ पाठः ॥
५-६९-४६ निवर्तयन्ति ते रुद्रादिष्टे वैन्येन सर्वशः इति क । पाठः । यैर्वर्तयन्ति ते तृप्तादिष्टे वैन्येन सर्वशः इति

ङ। पाठः। ये वर्षयन्ति ते पात्रैः वत्सैर्दोग्धैश्च नित्यशः
इति ङ। पाठः ॥
५-६९-४८ पार्थिवाः पृथ्वीसंवन्धिपदार्थाः ॥
५-६९-६९ एकोनसप्ततितमोऽध्यायः ॥

---

द्रोनपर्व-अध्यय०७०
॥ श्रीः ॥
७.७०. अध्यायः ७०

Mahabharata - Drona Parva - Chapter Topics
सृञ्जयम्प्रति नारदेन परशुरामप्रभाववर्णनम् ॥ १ ॥

Mahabharata - Drona Parva - Chapter Text

७-७०-० (४७२७२)
नारद उवाच। ७-७०-०क्ष् (४४३२)
रामो महातपाः शूरो वीरो लोकनमस्कृतः ।
जामदग्न्योऽप्यतियशा अवितृप्तो मरिष्यति ॥ ७-७०-१ (४७२७३)
यश्चास्त्रमनुपर्येति भूमिं कुर्वन्विपांसुलाम् ।
नचासीद्विक्रिया यस्य प्राप्य श्रियमनुत्तमाम् ॥ ७-७०-२ (४७२७४)
ग्जामदग्न्यो न ते राजन्कच्चिच्छ्रोत्रमुपागतः ।
येनैकेन पुरा राजन्क्रुद्धेन हतबन्धुना ॥ ७-७०-३ (४७२७५)
भृगुभिस्ताम्भमानेन त्राहि रामेति विस्वरम् ।
त्रिःसप्तकृत्वो भूमिर्यत्कृता निःक्षत्रिया पुरा'॥ ७-७०-४ (४७२७६)
यः क्षत्रियैः परामृष्टे वत्से पितरि चाब्रुवन् ।
ततोऽवधीत्कार्तवीर्यमजितं समरे परैः ॥ ७-७०-५ (४७२७७)
क्षत्रियाणां चतुःषष्टिमयुतानि सहस्रशः ।
तदा मृत्योः समेतानि एकेन धनुषाऽजयत् ॥ ७-७०-६ (४७२७८)
ब्रह्मद्विषां चाथ तस्मिन्हस्राणि चतुर्दश ।
पुनरन्यान्निजग्राह दन्तकूरे जघान ह ॥ ७-७०-७ (४७२७९)
सहस्रं मुसलेनाहन्सहस्रमसिनाऽवधीत् ।
उद्बन्धनात्सहस्रं च सहस्रमुदके कृतम् ॥ ७-७०-८ (४७२८०)
दन्तान्भङ्क्त्वा सहस्रस्य भिन्नकर्णांस्तथाऽकरोत् ।
ततः सप्तसहस्राणां कुटुधूपमपाययत् ॥ ७-७०-९ (४७२८१)
शिष्टान्वध्वा च हत्वा वै तेषां मूर्ध्नि विभिद्य च ।
गुणावतीमुत्तरेण खाण्डवाद्दक्षिणेन च ।

गिर्यन्ते शतसाहस्रा हैहयाः समरे हताः ॥ ७-७०-१० (४७२८२)
सरथाश्वगजा वीरा निहतास्तत्र शेरते ।
पितुर्वधामर्षितेन जामदग्न्येन धीमता ॥ ७-७०-११ (४७२८३)
निजघ्ने दशसाहस्रान्रामः परशुना तदा ।
न ह्यमृष्यत ता वाचो यास्तैर्भृशमुदीरिताः ॥ ७-७०-१२ (४७२८४)
भृगौ रामाभिधावेति यदाक्रन्दन्द्विजोत्तमाः ।
ततः काश्मीरदरदान्कुन्तिक्षुद्रकमालवान् ॥ ७-७०-१३ (४७२८५)
अङ्गवङ्गकलिङ्गांश्च विदेहांस्ताम्रलिप्तकान् ।
रक्षोवाहान्वीतिहोत्रांस्त्रिगर्तान्मार्तिकावतान् ॥ ७-७०-१४ (४७२८६)
शिबीनन्यांश्च राजन्यान्देशान्देशान्सहस्रशः ।
निजघान शितैर्बाणैर्जामदग्न्यः प्रतापवान् ॥ ७-७०-१५ (४७२८७)
कोटीशतसहस्राणि क्षत्रियाणां सहस्रशः ।
इन्द्रगोपकवर्णस्य बन्धुजीवनिभस्य च ॥ ७-७०-१६ (४७२८८)
रुधिरस्य परीवाहैः पूरयित्वा सरांसि च ।
सर्वानष्टादश द्वीपान्वशमानीय भार्गवः ॥ ७-७०-१७ (४७२८९)
ईजे क्रतुशतैः पुण्यैः समाप्तवरदक्षिणैः ।
वेदीमष्टनलोत्सेधां सौवर्णां विधिनिर्मिताम् ॥ ७-७०-१८ (४७२९०)
सर्वरत्नशतैः पूर्णां पताकाशतमालिनीम् ।
ग्राम्यारण्यैः पशुगणैः सम्पूर्णां च महीमिमाम् ॥ ७-७०-१९ (४७२९१)
रामस्य जामदग्न्यस्य प्रतिजग्राह कश्यपः ।
ततः शतसहस्राणि द्विपेन्द्रान्हेमभूषणान् ॥ ७-७०-२० (४७२९२)
निर्दस्युं पृथिवीं कृत्वा शिष्टेष्टजनसङ्कुलाम् ।
कश्यपाय ददौ रामो हयमेधे महामखे ॥ ७-७०-२१ (४७२९३)
त्रिःसप्तकृत्वः पृथिवीं कृत्वा निःक्षत्रियां प्रभुः ।
इष्ट्वा क्रतुशतैर्वीरो ब्राह्मणेभ्यो ह्यमन्यत ॥ ७-७०-२२ (४७२९४)
सप्तद्वीपां वसुमतीं मारीचोऽगृह्णत द्विजः ।
रामं प्रोवाच निर्गच्छ वसुधातो ममाज्ञया ॥ ७-७०-२३ (४७२९५)
स कश्यपस्य वचनात्प्रोत्सार्य सरिताम्पतिम् ।
इषुपाते युधां श्रेष्ठः कुर्वन्ब्राह्मणशासनम् ॥ ७-७०-२४ (४७२९६)
अध्यावसद्गिरिश्रेष्ठं महेन्द्रं पर्वतोत्तमम् ।
एवं गुणशतैर्युक्तो भृगूणां कीर्तिवर्धनः ॥ ७-७०-२५ (४७२९७)
जामदग्न्यो ह्यतियशा मरिष्यति महाद्युतिः ।
त्वया चतुर्भद्रतरः पुण्यात्पुण्यतरस्तव ॥ ७-७०-२६ (४७२९८)
अयज्वानमदक्षिण्यं मा पुत्रमनुतप्यथाः ।
एते चतुर्भद्रतरास्त्वया भद्रशताधिकाः ।
मृता नरवरश्रेष्ठ मरिष्यन्ति च सृञ्जय ॥ ॥ ७-७०-२७ (४७२९९)

इति श्रीमन्महाभारते द्रोणपर्वणि अभिमन्युवधपर्वणि षोडशराजकीये सप्ततितमोऽध्यायः ॥ ७० ॥

Mahabharata - Drona Parva - Chapter Footnotes

५-७०-१ ये मृतास्तेऽतीता ये वर्तमानास्तेऽपि । मरिष्यन्त्येवेत्याह राम इति ॥
५-७०-५ क्षत्रियैः कार्तवीर्यपुत्रैः । अब्रुवन्नविकत्थयन् ॥
५-७०-६ मृत्योर्मृत्युमवधीकृत्य ॥
५-७०-७ तस्मिंस्तन्मध्ये एव । दन्तक्रूरमिति पाठे तद्देशाधिपतिम् ॥
५-७०-८ उद्बन्धनाद्वृक्षशाखावलम्बनात् ॥
५-७०-९ कणधूममपाययत् इति क ङ पाठः ॥
५-७०-१२ तैराश्रमवासिभिः ॥
५-७०-१८ अष्टनलेत्यत्र नलशब्दश्चतुर्हस्तवचनः ॥
५-७०-७० सप्ततितमोऽध्यायः ॥

---

द्रोनपर्व-अध्यय०७१
॥ श्रीः ॥
७.७१. अध्यायः ७१

Mahabharata - Drona Parva - Chapter Topics

युधिष्ठिरं समाश्वास्य स्वाश्रमगमनम् ॥ १ ॥

Mahabharata - Drona Parva - Chapter Text

७-७१-० (४७३००)
व्यास उवाच । ७-७१-०क्ष् (४४३३)
पुण्यमाख्यानमायुष्यं श्रुत्वा षोडशराजकम् ।
अव्याहरन्नरपतिस्तूष्णीमासीत्स सृञ्जयः ॥ ७-७१-१ (४७३०१)
तमब्रवीत्तदा दीनं नारदो भगवानृषिः ।
कच्चिन्मया व्याहृतं यद्धृदये तत्स्थितं तव ॥ ७-७१-२ (४७३०२)
आहोस्विदन्ततो नष्टं श्राद्धं शूद्रीपताविव ।
स एवमुक्तः प्रत्याह प्राञ्जलिः सृञ्जयस्तदा ॥ ७-७१-३ (४७३०३)
पुत्रशोकापहं श्रुत्वा धन्यमाख्यानमुत्तमम् ।
राजर्षीणां पुराणानां यज्वनां दक्षिणावताम् ॥ ७-७१-४ (४७३०४)
विस्मयेन हृते शोके तमसीवार्कतेजसा ।

विपाप्माऽस्म्यव्यथोपेतो ब्रूहि किं करवाण्यहम् ॥ ७-७१-५ (४७३०५)
नारद उवाच। ७-७१-६क्ष् (४४३४)
दिष्ट्यापहतशोकस्त्वं वृणीष्वेह यदिच्छसि ।
तत्ते सम्पत्स्यते सर्वं न मृषावादिनो वयम् ॥ ७-७१-६ (४७३०६)
सृञ्जय उवाच। ७-७१-७क्ष् (४४३५)
पावितोऽहमनेनैव प्रसन्नो यद्भवान्मम् ।
प्रसन्नो यस्य भगवान्न तस्यास्तीह दुर्लभम् ॥ ७-७१-७ (४७३०७)
नारद उवाच। ७-७१-८क्ष् (४४३६)
पुनर्ददामि ते पुत्रं दस्युभिर्निहतं वृथा ।
उद्धृत्य नरकात्कष्टात्पशुवत्प्रोक्षितं यथा ॥ ७-७१-८ (४७३०८)
व्यास उवाच। ७-७१-९क्ष् (४४३७)
प्रादुरासीत्ततः पुत्रः सृञ्जयस्याद्भुतप्रभः ।
प्रसन्नेनर्षिणा दत्तः कुबेरतनयोपमः ॥ ७-७१-९ (४७३०९)
ततः सङ्गम्य पुत्रेण प्रीतिमानभवन्नृपः ।
ईजे च क्रतुभिः पुण्यैः समाप्तवरदक्षिणैः ॥ ७-७१-१० (४७३१०)
अकृतार्थश्च भीतश्च न च सन्नाहकोविदः ।
अयज्वाचानपत्यश्च ततोऽसौ जीवितः पुनः ॥ ७-७१-११ (४७३११)
शूरो वीरः कृतार्थश्च प्रमथ्यारीन्सहस्रशः ।
अभिमन्युर्गतः स्वर्गं सङ्ग्रामेऽभिमुखाहतः ॥ ७-७१-१२ (४७३१२)
ब्रह्मचर्येण याँल्लोकान्प्रजया च श्रुतेन च ।
इष्टैश्च क्रतुभिर्यान्ति तांस्ते पुत्रोऽक्षयान्गतः ॥ ७-७१-१३ (४७३१३)
विद्वांसः कर्मभिः पुण्यैः स्वर्गमीहन्ति नित्यशः ।
न तु स्वर्गादयं लोकः काम्यते स्वर्गवासिभिः ॥ ७-७१-१४ (४७३१४)
तस्मात्स्वर्गगतं पुत्रमर्जुनस्य हतं रणे ।
न चेहानयितुं शक्यं किञ्चिदप्राप्यमीहितम् ॥ ७-७१-१५ (४७३१५)
यां योगिनो ध्यानविविक्तदर्शनाः
प्रयान्ति यां चोत्तमयज्विनो जनाः ।
तपोभिरिद्धैरनुयान्ति यां तथा
तामक्षयां ते तनयो गतो गतिम् ॥ ७-७१-१६ (४७३१६)
अन्तात्पुनर्भावगतो विराजते
राजेव वीरो ह्यमृतात्मरश्मिभिः ।
तामैन्दवीमात्मतनुं द्विजोचितां
गतोऽभिमन्युर्न स शोकमर्हति ॥ ७-७१-१७ (४७३१७)
एवं ज्ञात्वा स्थिरो भूत्वा मा शुचो धैर्यमाप्नुहि ।
जीवन्हि पुरुषः शोच्यो न तु स्वर्गगतोऽनघ ॥ ७-७१-१८ (४७३१८)
शोचतो हि महाराज अघमेवाभिवर्धते ।

तस्माच्छोकं परित्यज्य श्रेयसे प्रयतेद्बुधः ॥ ७-७१-१९ (४७३१९)
प्रहर्षं प्रीतिमानन्दं प्रियमुत्सिक्तचित्तताम् ।
एतदाहुर्बुधाः शौचमशौचं शोक उच्यते ॥ ७-७१-२० (४७३२०)
एवं विद्वन्समुत्तिष्ठ प्रयतो भव मा शुचः ।
श्रुतस्ते सम्भवो मृत्योस्तपांस्यनुपमानि च ॥ ७-७१-२१ (४७३२१)
सर्वभूतसमत्वं च ब्रह्मणा चापि चोदितम् ।
सृञ्जयस्य तु पुत्रोऽसौ मृतः सञ्जीवितः श्रुतः ॥ ७-७१-२२ (४७३२२)
एवं विद्वन्महाराज मा शुचः साधयाम्यहम् ।
एतावदुक्त्वा भगवांस्तत्रैवान्तरधीयत ॥ ७-७१-२३ (४७३२३)
वागीशाने भगवति व्यासे व्यभ्रनभःप्रभे ।
गते मतिमतां श्रेष्ठे समाश्वास्य युधिष्ठिरम् ॥ ७-७१-२४ (४७३२४)
पूर्वेषां पार्थिवेन्द्राणआं महेन्द्रप्रतिमौजसाम् ।
न्यायाधिगतवित्तानां तां श्रुत्वा यज्ञसम्पदम् ॥ ७-७१-२५ (४७३२५)
सम्पूज्य मनसा विद्वान्विशोकोऽभूद्युधिष्ठिरः ।
पुनश्चाचिन्तयद्दीनः किंस्विद्वक्ष्ये धनञ्जयम् ॥ ॥ ७-७१-२६ (४७३२६)

इति श्रीमन्महाभारते द्रोणपर्वणि अभिमन्युवधपर्वणि
एकसप्ततितमोऽध्यायः ॥ ७१ ॥
Mahabharata - Drona Parva - Chapter Footnotes

५-७१-५ विस्मयेन पुण्याख्यानश्रवणजनितचित्तविस्तारेण ॥
५-७१-१५ नेहानियतिना ह्यस्य किं चिदव्याप्तमीहते इति क पाठः ।न चेहानयितुं शक्यं किं चिरं प्राप्यमीहता इति ङ। पाठः। नेहानेयतिना ह्यस्य किञ्चिदप्राप्यमीशितुः इति ड पाठः ॥
५-७१-१७ अन्तान्मरणात् ।भावगतः सम्पत्प्राप्तः। द्विजोचितां द्विजैरभिमताम् ॥
५-७१-१९ अधं दुःखम् ॥
५-७१-७१ एकसप्ततितमोऽध्यायः ॥

---

द्रोनपर्व-अध्यय०७२
॥ श्रीः ॥
७.७२. अध्यायः ७२

Mahabharata - Drona Parva - Chapter Topics
अभिमन्युमनुशोच्यार्जुनस्य विलापः ॥ १ ॥

७-७२-० (४७३२७)
धृतराष्ट्र उवाच। ७-७२-०क्ष् (४४३८)
अथ संशप्तकैः सार्धं युध्यमाने धनञ्जये ।
अभिमन्यौ हते चापि बाले बलवतां वरे ॥ ७-७२-१ (४७३२८)
महर्षिसत्तमे याते व्यासे स तु युधिष्ठिरः ।
पाण्डवाः किमथाऽकार्षुः शोकोपहतचेतसः ॥ ७-७२-२ (४७३२९)
कथं संशप्तकेभ्यो वा निवृत्तो वानरध्वजः ।
केन वा कथितस्तस्य प्रशान्तः सुतपावकः ।
एतन्मे शंस तत्त्वेन सर्वमेवेह सञ्जय ॥ ७-७२-३ (४७३३०)
सञ्जय उवाच। ७-७२-४क्ष् (४४३९)
शृणु राजन्यथा तेभ्यो निवृत्तः कृष्णसारथिः ।
ततः सर्वाणि सैन्यानि दहन्कृष्णगतिर्यथा ॥ ७-७२-४ (४७३३१)
सम्प्रयातेऽस्तमादित्ये संध्याकाल उपस्थिते ।
अयातस्यात्मशिबिरं निमित्तैरघशंसिभिः ॥ ७-७२-५ (४७३३२)
यच्चासीन्मानसं तस्य यच्च कृष्णेन भाषितम् ।
यथा च कथितस्तस्य निहतः सुतपावकः ।
विस्तरेणैव मे सर्वं ब्रुवतः शृणु मारिष'॥ ७-७२-६ (४७३३३)
तस्मिन्नहनि निर्वृत्ते घोरे प्राणभृतां क्षये ।
आदित्येऽस्तङ्गते श्रीमान्सन्ध्याकाल उपस्थिते ॥ ७-७२-७ (४७३३४)
व्यपयातेषु वासाय सर्वेषु भरतर्षभ ।
हत्वा संशप्तकव्रातान्दिव्यैरस्त्रैः कपिध्वजः ॥ ७-७२-८ (४७३३५)
प्रायात्स्वशिबिरं जिष्णुर्जैत्रमास्थाय तं रथम् ।
गच्छन्नेव च गोविन्दं साश्रुकण्ठोऽभ्यभाषत ॥ ७-७२-९ (४७३३६)
किं तु मे हृदयं त्रस्तं वाक्च सज्जति केशव ।
स्यन्दने नावतिष्ठामि गात्रैः सीदामि चाच्युत ॥ ७-७२-१० (४७३३७)
अनिष्टं चैव मे श्लिष्टं हृदयान्नापसर्पति ।
भुविये दिक्षु चात्युग्रा उत्पातास्त्रासयन्ति माम् ॥ ७-७२-११ (४७३३८)
बहुप्रकारा दृश्यन्ते सर्व एवाघशंसिनः ।
अपि स्वस्ति भवेद्राज्ञः सामात्यस्य गुरोर्मम ॥ ७-७२-१२ (४७३३९)
वासुदेव उवाच। ७-७२-१३क्ष् (४४४०)
व्यक्तं शिवं सहभ्रातुर्धर्मराजस्य पाण्डव ।
मा शुचःकिञ्चिदेवान्यत्तत्रानिष्टं भविष्यति ॥ ७-७२-१३ (४७३४०)
सञ्जय उवाच। ७-७२-१४क्ष् (४४४१)
ततः सन्ध्यामुपास्यैव वीरौ वीरावसादने ।

कथयन्तौ रणे वृत्तं प्रयातौ रथमास्थितौ ॥ ७-७२-१४ (४७३४१)
ततः स्वशिबिरं प्राप्तौ हतामित्रौ हतद्विषौ ।
वासुदेवोऽर्जुनश्चैव कृत्वा कर्म सुदुष्करम् ॥ ७-७२-१५ (४७३४२)
ध्वस्ताकारमिवालेख्यं संवीक्ष्य शिबिरं स्वकम् ।
बीभत्सुरब्रवीत्कृष्णमस्वस्थहृदयस्ततः ॥ ७-७२-१६ (४७३४३)
नदन्ति नाद्य तूर्याणि मङ्गल्यानि जनार्दन ।
मिश्रा दुन्दुभिनिर्घोषैः शङ्खाश्चाडम्बरैः सह ॥ ७-७२-१७ (४७३४४)
वीणा नैवाद्य वाद्यन्ते शम्यातालस्वनैः सह ।
मङ्गल्यानि च गीतानि न गायन्ति पठन्ति च ॥ ७-७२-१८ (४७३४५)
स्तुतियुक्तानि रम्याणि ममानीकेषु बन्दिनः ।
योधाश्चापि हि मां दृष्ट्वा निवर्तन्ते ह्यधोमुखाः ॥ ७-७२-१९ (४७३४६)
कर्माणि च यथापूर्वं कृत्वा नाभिवदन्ति माम् ।
अपि स्वस्ति भवेदद्य भ्रातृभ्यो मम माधव ॥ ७-७२-२० (४७३४७)
न हि शुद्ध्यति मे भावो दृष्ट्वा स्वजनमाकुलम् ।
अपि पाञ्चालराजस्य विराटस्य च मानद ॥ ७-७२-२१ (४७३४८)
सर्वेषां चैव योधानां सामग्र्यं स्यान्ममाच्युत ।
न च मामद्य सौभद्रः प्रहृष्टो भ्रातृभिः सह ।
रणादायान्तमुचितं प्रत्युद्याति हसन्निव ॥ ७-७२-२२ (४७३४९)
सञ्जय उवाच। ७-७२-२३क्ष् (४४४२)
एवं सङ्कथयन्तौ तौ प्रविष्टौ शिबिरं स्वकम् ।
ददृशाते भृशास्वस्थान्पाण्डवान्नष्टचेतसः ॥ ७-७२-२३ (४७३५०)
दृष्ट्वा भ्रातृंश्च पुत्रांश्च विमना वानरध्वजः ।
अपश्यंश्चैव सौभद्रमिदं वचनमब्रवीत् ॥ ७-७२-२४ (४७३५१)
मुखवर्णोऽप्रसन्नो वः सर्वेषामेव लक्ष्यते ।
न चाभिमन्युं पश्यामि न च मां प्रतिनन्दथ ॥ ७-७२-२५ (४७३५२)
मया श्रुतश्च द्रोणेन पद्मव्यूहो विनिर्मितः ।
न च वस्तस्य भेत्ताऽस्ति विना सौभद्रमर्भकम् ॥ ७-७२-२६ (४७३५३)
न चोपदिष्टस्तस्यासीन्मयानीकाद्विनिर्गमः ।
कच्चिन्न बालो युष्माभिः परानीकं प्रवेशितः ॥ ७-७२-२७ (४७३५४)
भित्त्वाऽनीकं महेष्वासः परेषां बहुभिर्युधि ।
कच्चिन्न निहतः सङ्ख्ये सौभद्रः परवीरहा ॥ ७-७२-२८ (४७३५५)
लोहिताक्षं महाबाहुं जातं सिंहमिवाद्रिषु ।
उपेन्द्रसदृशं ब्रूत कथमायोधने हतः ॥ ७-७२-२९ (४७३५६)
सुकुमारं महेष्वासं वासवस्यात्मजात्मजम् ।
सदा मम प्रियं ब्रूत कथमायोधने हतः ॥ ७-७२-३० (४७३५७)
सुभद्रायाः प्रियं पुत्रं द्रौपद्याः केशवस्य च ।

अम्बायाश्च प्रियं नित्यं कोवधीत्कालमोहितः ॥ ७-७२-३१ (४७३५८)
सदृशो वृष्णिवीरस्य केशवस्य महात्मनः ।
विक्रमश्रुतमाहात्म्यैः कथमायोधने हतः ॥ ७-७२-३२ (४७३५९)
वार्ष्णेयीदयितं शूरं मया सततलालितम् ।
यदि पुत्रं न पश्यामि यास्यामि यमसादनम् ॥ ७-७२-३३ (४७३६०)
मृदुकुञ्चितकेशान्तं बालं बालमृगेक्षणम् ।
मत्तद्विरदविक्रान्तं सिंहपोतमिवोद्गतम् ॥ ७-७२-३४ (४७३६१)
स्मिताभिभाषिणं दान्तं गुरुवाक्यकरं सदा ।
बाल्येऽप्यतुलकर्माणं प्रियवाक्यममत्सरम् ॥ ७-७२-३५ (४७३६२)
महोत्साहं महाबाहुं दीर्घराजीवलोचनम् ।
भक्तानुकम्पिनं दान्तं न च नीचानुसारिणम् ॥ ७-७२-३६ (४७३६३)
कृतज्ञं ज्ञानसम्पन्नं कृतास्त्रभनिवर्तिनम् ।
युद्धाभिनन्दिनं नित्यं द्विषतां भयवर्धनम् ॥ ७-७२-३७ (४७३६४)
स्वेषां प्रियहिते युक्तं पितॄणां जयगृद्धिनम् ।
न च पूर्वं प्रहर्तारं सम्प्रमे नष्टसम्भ्रमम् ।
यदि पुत्रं न पश्यामि यास्यामि यमसादनम् ॥ ७-७२-३८ (४७३६५)
रथेषु गण्यमानेषु गणितं तं महारथम् ।
मयाऽध्यर्धगुणं सङ्ख्ये तरुणं बाहुशालिनम् ॥ ७-७२-३९ (४७३६६)
प्रद्युम्नस्य प्रियं नित्यं केशवस्य ममैव च ।
यदि पुत्रं न पश्यामि यास्यामि यमसादनम् ॥ ७-७२-४० (४७३६७)
सुनसं सुललाटान्तं स्वक्षिभ्रूदशनच्छदम् ।
अपश्यतस्तद्वदनं का शान्तिर्हृदयस्य मे ॥ ७-७२-४१ (४७३६८)
तन्त्रीस्वनसुखं रम्यं पुंस्कोकिलसमध्वनिम् ।
अशृण्वतः स्वनं तस्य का शान्तिर्हृदयस्य मे ॥ ७-७२-४२ (४७३६९)
रूपं चाप्रतिमं तस्य त्रिदशैश्चापि दुर्लभम् ।
अपश्यतो हि वीरस्य का शान्तिर्हृदयस्य मे ॥ ७-७२-४३ (४७३७०)
अभिवादनदक्षं तं पितॄणां वचने रतम् ।
नाद्याहं यदि पश्यामि का शान्तिर्हृदयस्य मे ॥ ७-७२-४४ (४७३७१)
सुकुमारः सदा वीरो महार्हशयनोचितः ।
भूमावनाथवच्छेते नूनं नाथवतां वरः ॥ ७-७२-४५ (४७३७२)
शयानं समुपासन्ति यं पुरा परमस्त्रियः ।
तमद्य विप्रविद्धाङ्गमुपासन्त्यशिवाः शिवाः ॥ ७-७२-४६ (४७३७३)
यः पुरा बोध्यते सुप्तः सूतमागधबन्दिभिः ।
बोधयन्त्यद्य तं नूनं श्वापदा विकृतैः स्वनैः ॥ ७-७२-४७ (४७३७४)
छत्रच्छायासमुचितं तस्य तद्वदनं शुभम् ।
नूनमद्य रजोध्वस्तं रणरेणुः करिष्यति ॥ ७-७२-४८ (४७३७५)

हा पुत्रकावितृप्तस्य सततं पुत्रदर्शने ।
भाग्यहीनस्य कालेन यथा मे नीयसे बलात् ॥ ७-७२-४९ (४७३७६)
सा च संयमनी नूनं सदा सुकृतिनां गतिः ।
स्वभाभिर्मोहिता रम्या त्वयाऽत्यर्थं विराजते ॥ ७-७२-५० (४७३७७)
नूनं वैवस्वतश्च त्वां वरुणश्च प्रियातिथिम् ।
शतक्रतुर्धनेशश्च प्राप्तमर्चन्त्यभीरुकम् ॥ ७-७२-५१ (४७३७८)
सञ्जय उवाच। ७-७२-५२क्ष् (४४४३)
एवं विलप्य बहुधा भिन्नपोतो वगिग्यथा ।
दुःखेन महताऽविष्टो युधिष्ठिरमपृच्छत ॥ ७-७२-५२ (४७३७९)
गकथं त्वयि च भीमे च धृष्टद्युम्ने च जीवति ।
सात्यके शक्रविक्रान्ते सौभद्रो निहतः परैः'॥ ७-७२-५३ (४७३८०)
कच्चित्स कदनं कृत्वा परेषां कुरुनन्दन ।
स्वर्गतोऽभिमुखः सङ्ख्ये युध्यमानो नरर्षभैः ॥ ७-७२-५४ (४७३८१)
स नूनं बहुभिर्यत्तैर्युध्यमानो नरर्षभैः ।
असहायः सहायार्थी मामनुध्यातवान्ध्रुवम् ॥ ७-७२-५५ (४७३८२)
पीड्यमानः शरैर्बालस्तात साध्वभिधाव माम् ।
इति विप्रलपन्मन्ये नृशंसैर्भुवि पातितः ॥ ७-७२-५६ (४७३८३)
अथवा मत्प्रसूतः स स्वस्रीयो माधवस्य च ।
सुभद्रायां च सम्भूतो न चैवं वक्तुमर्हति ॥ ७-७२-५७ (४७३८४)
वज्रसारमयं नूनं हृदयं सुदृढं मम ।
अपश्यतो दीर्घबाहुं रक्ताक्षं यन्न दीर्यते ॥ ७-७२-५८ (४७३८५)
कथं बाले महेष्वासा नृशंसा मर्मभेदिनः ।
स्वस्रीये वासुदेवस्य मम पुत्रेऽक्षिपञ्शरान् ॥ ७-७२-५९ (४७३८६)
यो मां नित्यमदीनात्मा प्रत्युद्गम्याभिनन्दति ।
उपयान्तं रिपून्हत्वा सोऽद्य मां किं न पश्यति ॥ ७-७२-६० (४७३८७)
नूनं स पातितः शेते धरण्यां रुधिरोक्षितः ।
शोभयन्मेदिनीं गात्रैरादित्य इव पातितः ॥ ७-७२-६१ (४७३८८)
सुभद्रामनुशोचामि या पुत्रमपलायिनम् ।
रणे विनिहतं श्रुत्वा शोकार्ता वै विनङ्क्षति ॥ ७-७२-६२ (४७३८९)
सुभद्रा वक्ष्यते किं मामबिमन्युमपश्यती ।
द्रौपदीं चैव दुःखार्तां किं वा वक्ष्यामि तामहम् ॥ ७-७२-६३ (४७३९०)
वज्रसारमयं नूनं हृदयं यन्न यास्यति ।
सहस्रधा वधूं दृष्ट्वा रुदतीं शोककर्शिताम् ॥ ७-७२-६४ (४७३९१)
हृष्टानां धार्तराष्ट्राणां सिंहनादो मया श्रुतः ।
युयुत्सुश्चापि कृष्णेन श्रुतो वीरानुपालभन् ॥ ७-७२-६५ (४७३९२)
अशक्नुवन्तः पार्थस्य बालं हत्वा महाबलम् ।

किं न लज्जन्त्यधर्मज्ञाः पार्थिवा दृश्यतां बलम् ॥ ७-७२-६६ (४७३९३)
किं तयोर्विप्रियं कृत्वा केशवार्जुनयोर्मृधे ।
सिंहवन्नदथ प्रीताः शोककाल उपस्थिते ॥ ७-७२-६७ (४७३९४)
आगमिष्यति वः क्षिप्रं फलं पापस्य कर्मणः ।
अधर्मो हि कृतस्तीव्रः कथं स्यादफलश्चिरम् ॥ ७-७२-६८ (४७३९५)
इति तान्परिभाषन्वै वैश्यापुत्रो महामतिः ।
अपायाच्छस्त्रमुत्सृज्य कोपदुःखसमन्वितः ॥ ७-७२-६९ (४७३९६)
किमर्थमेतन्नाख्यातं त्वया कृष्ण रणे मम ।
अधक्ष्यं तानहं क्रूरांस्तदा सर्वान्महारथान् ॥ ७-७२-७० (४७३९७)
सञ्जय उवाच। ७-७२-७१क्ष् (४४४४)
पुत्रशोकार्दितं पार्थं ध्यायन्तं साश्रुलोचनम् ।
निगृह्य वासुदेवस्तं पुत्राधिभिरभिप्लुतम् ।
मैवमित्यब्रवीत्कृष्णस्तीव्रशोकसमन्वितम् ॥ ७-७२-७१ (४७३९८)
सर्वेषामेष वै पन्थाः शूराणामनिवर्तिनाम् ।
क्षत्रियाणां विशेषेण येषां नः शस्त्रजीविका ॥ ७-७२-७२ (४७३९९)
एषा वै युध्यमानानां शूराणामनिवर्तिनाम् ।
विहिता सर्वशास्त्रज्ञैर्गतिर्मतिमतां वर ॥ ७-७२-७३ (४७४००)
ध्रुवं हि युद्धे मरणं शूरामामनिवर्तिनाम् ।
गतः पुण्यकृतां लोकानभिमन्युर्न संशयः ॥ ७-७२-७४ (४७४०१)
एतच्च सर्ववीराणां काङ्क्षितं भरतर्षभ ।
सङ्ग्रामेऽभिमुखा मृत्युं प्राप्नुयामेति मानद ॥ ७-७२-७५ (४७४०२)
स च वीरान्रणे हत्वा राजपुत्रान्महाबलान् ।
वीरैराकाङ्क्षितं मृत्युं सम्प्राप्तोऽभिमुखं रणे ॥ ७-७२-७६ (४७४०३)
मा शुचः पुरुषव्याघ्र पूर्वैरेष सनातनः ।
धर्मकृद्भिः कृतो धर्मः क्षत्रियाणां रणे क्षयः ॥ ७-७२-७७ (४७४०४)
इमे ते भ्रातरः सर्वे दीना भरतसत्तम ।
त्वयि शोकसमाविष्टे नृपाश्च सुहृदस्तव ॥ ७-७२-७८ (४७४०५)
एतांश्च वचसा साम्ना समाश्वासय मानद ।
विदितं वेदितव्यं ते न शोकं कर्तुमर्हसि ॥ ७-७२-७९ (४७४०६)
सञ्जय उवाच। ७-७२-८०क्ष् (४४४५)
एवमाश्वासितः पार्थः कृष्णेनाद्भुतकर्मणा ।
ततोऽब्रवीत्तदा भ्रातॄन्सर्वान्पार्थः सगद्गदम् ॥ ७-७२-८० (४७४०७)
स दीर्घबाहुः पृथ्वंसो दीर्घराजीवलोचनः ।
अभिमन्युर्यथा वृत्तः श्रोतुमिच्छाम्यहं तथा ॥ ७-७२-८१ (४७४०८)
सनागस्यन्दनहयान्सङ्ग्रामे निहतान्मया ।
क्षिप्रं द्रक्ष्यन्ति ते नूनं मम पुत्रं निहत्य वै ॥ ७-७२-८२ (४७४०९)

कथं च वः कृतास्त्राणां सर्वेषां शस्त्रपाणिनाम् ।
सौभद्रो निधनं गच्छेद्वज्रिणापि समागतः ॥ ७-७२-८३ (४७४१०)
यद्येवमहमज्ञास्यमशक्तान्रक्षणे मम ।
सूनोः पाण्डवपाञ्चालानगोप्स्यं तं महारणे ॥ ७-७२-८४ (४७४११)
कथं च वो रथस्थानां शरवर्षाणि मुञ्चताम् ।
नीतोऽभिमन्युर्निधनं कदर्थीकृत्य वः परैः ॥ ७-७२-८५ (४७४१२)
अहो वः पौरुषं नास्ति न च वोऽस्ति पराक्रमः ।
यत्राभिमन्युः समरे पश्यतां वो निपातितः ॥ ७-७२-८६ (४७४१३)
आत्मानमेव गर्हेयं यदहं वै सुदुर्बलान् ।
युष्मानाज्ञाय निर्यातो भीरूनकृतनिश्चयान् ॥ ७-७२-८७ (४७४१४)
आहोस्विद्भूषणार्थाय वर्मशस्त्रायुधानि वः ।
वाचस्तु वक्तुं संसत्सु मम पुत्रमरक्षताम् ॥ ७-७२-८८ (४७४१५)
सञ्जय उवाच। ७-७२-८९क्ष् (४४४६)
एवमुक्त्वा ततो वाक्यमतिष्ठद्वै वरासिमान् ।
न स्माशक्यत बीभत्सुः केनचित्प्रसमीक्षितुम् ॥ ७-७२-८९ (४७४१६)
तमन्तकमिव क्रुद्धं निःश्वसन्तं मुहुर्मुहुः ।
ग्महेन्द्रमिव तिष्ठन्तं वज्रोद्यतमहाभुजम्'।
पुत्रशोकाभिसन्तप्तमश्रुपूर्णमुखं तदा ॥ ७-७२-९० (४७४१७)
न भाषितुं शक्नुवन्ति द्रष्टुं वा सुहृदोऽर्जुनम् ।
अन्यत्र वासुदेवाद्वा ज्येष्ठाद्वा पाण्डुनन्दनात् ॥ ७-७२-९१ (४७४१८)
सर्वास्ववस्थासु हितावर्जुनस्य मनोनुगौ ।
बहुमानात्प्रियत्वाच्च तावेनं वक्तमर्हतः ॥ ७-७२-९२ (४७४१९)
ततस्तं पुत्रशोकेन भृशं पीडितमानसम् ।
राजीवलोचनं क्रुद्धं राजा वचनमब्रवीत् ॥ ॥ ७-७२-९३ (४७४२०)

इति श्रीमन्महाभारते द्रोणपर्वणि प्रतिज्ञापर्वणि
द्विसप्ततितमोऽध्यायः ॥ ७२ ॥

Mahabharata - Drona Parva - Chapter Footnotes

५-७२-११ श्लिष्टमनुबद्धम् ॥
५-७२-१७ आडम्बरैस्तूर्यरवैः ॥
५-७२-४९ यथेति कथमर्थे ॥
५-७२-७० वासुदेव उवाच । किमर्थमेतन्नाख्यातं त्वया पार्थ रणे
मम इति ट पाठः ॥
५-७२-७२ द्विसप्ततितमोऽध्यायः ॥

द्रोनपर्व-अध्यय०७३
॥ श्रीः ॥
७.७३. अध्यायः ७३

Mahabharata - Drona Parva - Chapter Topics
युधिष्ठिरेणार्जुनम्प्रत्यभिमन्युनिधनप्रकारकथनम् ॥ १ ॥
अर्जुनेन सशपथं जयद्रथवधप्रतिज्ञा ॥ २ ॥

Mahabharata - Drona Parva - Chapter Text

७-७३-० (४७४२१)
युधिष्ठिर उवाच। ७-७३-०क्ष् (४४४७)
त्वयि याते महाबाहो संशप्तकबलं प्रति ।
प्रयत्नमकरोत्तीव्रमाचार्यो प्रहणे मम ॥ ७-७३-१ (४७४२२)
व्यूढानीकं ततो द्रोणं यतमानं महामृधे ।
प्रतिव्यूह्य सहानीकाः प्रत्यरुध्म वयं बलात् ॥ ७-७३-२ (४७४२३)
स वार्यमाणो रथिभिर्मयि चापि सुरक्षिते ।
अस्मानभिजगामाशु पीडयन्निशितैः शरैः ॥ ७-७३-३ (४७४२४)
ते पीड्यमाना द्रोणेन द्रोणानीकं न शक्नुमः ।
प्रतिवीक्षितुमप्याजौ भेत्तुं तत्कुत एव तु ॥ ७-७३-४ (४७४२५)
ततस्तमप्रतिरथमहं सौभद्रमब्रवम् ।
द्रोणानीकमिदं भिन्द्धि द्वारं सञ्जनयस्व नः ॥ ७-७३-५ (४७४२६)
स तथा चोदितोऽस्माभिः सदश्व इव वीर्यवान् ।
असह्यमपि तं भारं वोढुमेवोपचक्रमे ॥ ७-७३-६ (४७४२७)
स तवास्त्रोपदेशेन वीर्येण च समन्वितः ।
प्राविशत्तद्बलं बालः सुपर्ण इव सागरम् ॥ ७-७३-७ (४७४२८)
तेऽनुयाता वयं वीरं सात्वतीपुत्रमाहवे ।
प्रवेष्टुकामास्तेनैव येन स प्राविशच्चमूम् ॥ ७-७३-८ (४७४२९)
ततः सैन्धवको राजा क्षुद्रस्तात जयद्रथः ।
वरदानेन रुद्रस्य सर्वान्नः समवारयत् ॥ ७-७३-९ (४७४३०)
ततो द्रोणः कृपः कर्णो द्रौणिः कौसल्य एव च ।
कृतवर्मा च सौभद्रं षड्रथाः पर्यवारयन् ॥ ७-७३-१० (४७४३१)
परिवार्य तु तैः सर्वैर्युधि बालो महारथैः ।
यतमानः परं शक्त्या बहुभिर्विरथीकृतः ॥ ७-७३-११ (४७४३२)
ततो दौःशासनिः क्षिप्रं तथा तैर्विरथीकृतम् ।
ग्संशयं परमं प्राप्तं पदातिनमवस्थितम् ।

गदाहस्तोऽभ्ययात्तूर्णं जिघांसुरपराजितम् ॥ ७-७३-१२ (४७४३३)
गदिनं त्वथ तं दृष्ट्वा वासवस्यात्मजात्मजः ।
स जग्राह गदां वीरो गदायुद्धविशारदः ॥ ७-७३-१३ (४७४३४)
गदामण्डलमार्गस्थौ सर्वक्षत्रस्य पश्यतः ।
तौ सम्प्रजग्मतुर्वीरावन्योन्यस्यान्तरैषणौ ॥ ७-७३-१४ (४७४३५)
तावन्योन्यं गदाग्राभ्यां ताडितौ युद्धदुर्मदौ ।
इन्द्रध्वजाविवोत्सृष्टौ गतसत्वौ महींगतौ ॥ ७-७३-१५ (४७४३६)
दौःशासनिरथोत्थाय कुरूणां कीर्तिवर्धनः ।
उत्तिष्ठमानं सौभद्रं गदया मूर्ध्न्यताडयत् ॥ ७-७३-१६ (४७४३७)
गदावेगेन महता व्यायामेन च मोहितः ।
विमना न्यपतद्भूमौ सौभद्रः परवीरहा ॥ ७-७३-१७ (४७४३८)
स तु हत्वा सहस्राणि द्विपाश्वरथपत्तिनाम्'।
राजपुत्रशतं चाग्र्यं वीरांश्चालक्षितान्बहून् ॥ ७-७३-१८ (४७४३९)
बृहद्बलं च राजानं स्वर्गेण समयोजयत् ।
ग्गतः सुकृतिनां लोकान्ये च स्वर्गजितां शुभाः ॥ ७-७३-१९ (४७४४०)
अदीनस्त्रासयञ्छत्रून्नन्दयित्वा च बान्धवान् ।
असकृन्नाम विश्राव्य पितॄणां मातुलस्य च'॥ ७-७३-२० (४७४४१)
वीरो दिष्टान्तमापन्नः शोचयन्वान्धवान्बहून् ।
ग्ततः स्म शोकसन्तप्ता भवताऽद्य समेयुषः'॥ ७-७३-२१ (४७४४२)
एतावदेव निर्वृत्तमस्माकं शोकवर्धनम् ।
स चैवं पुरुषव्याघ्रः स्वर्गलोकमवाप्तवान् ॥ ७-७३-२२ (४७४४३)
सञ्जय उवाच। ७-७३-२३क्ष् (४४४८)
ततोऽर्जुनो वचः श्रुत्वा धर्मराजेन भाषितम् ।
हा पुत्र इति निःश्वस्य व्यथितो न्यपतद्भुवि ॥ ७-७३-२३ (४७४४४)
विषण्णवदनाः सर्वे परिवार्य धनञ्जयम् ।
नेत्रैरनिमिषैर्दीनाः प्रत्यवैक्षन्परस्परम् ॥ ७-७३-२४ (४७४४५)
प्रतिलभ्य ततः संज्ञां वासविः क्रोधमूर्च्छितः ।
कम्पमानो ज्वरेणेव निःश्वसंश्च मुहुर्मुहुः ॥ ७-७३-२५ (४७४४६)
पाणिं पाणौ विनिष्पिष्य दन्तान्कटकटाय्य च ।
ग्त्रिशिखां भ्रुकुटीं कृत्वा क्रोधसंरक्तलोचनः'।
उन्मत्त इव विप्रेक्षन्निदं वचनमब्रवीत् ॥ ७-७३-२६ (४७४४७)
अर्जुन उवाच। ७-७३-२७क्ष् (४४४९)
सत्यं वः प्रतिजानामि श्वोऽस्मि हन्ताऽजयद्रथम् ।
न चेद्वधभयाद्भीतो धार्तराष्ट्रान्प्रहास्यति ॥ ७-७३-२७ (४७४४८)
न चास्माञ्शरणं गच्छेत्कृष्णं वा पुरुषोत्तमम् ।
भवन्तं वा महाराज श्वोऽस्मि हन्ता जयद्रथम् ॥ ७-७३-२८ (४७४४९)

धार्तराष्ट्रप्रियकरं मयि विस्मृतसौहृदम् ।
पापं बालवधे हेतुं श्वोऽस्मि हन्ता जयद्रथम् ॥ ७-७३-२९ (४७४५०)
रक्षमाणाश्च तं सङ्ख्ये ये मां योत्स्यन्ति केचन ।
अपि द्रोणकृपौ राजञ्छादयिष्यामि ताञ्छरैः ॥ ७-७३-३० (४७४५१)
यद्येतदेवं सङ्ग्रामे न कुर्यां पुरुषर्षभाः ।
मा स्म पुण्यकृतां लोकान्प्राप्नुयां शूरसम्मतान् ॥ ७-७३-३१ (४७४५२)
ये लोका मातृहन्तॄणां ये चापि पितृघातिनाम् ।
गुरुदारगतानां ये पिशुनानां च ये सदा ॥ ७-७३-३२ (४७४५३)
साधूनसूयतां ये च ये चापि परिवादिनाम् ।
ये च निक्षेपहन्तॄणां ये च विश्वासघातिनाम् ॥ ७-७३-३३ (४७४५४)
भुक्तपूर्वां स्त्रियं ये च निन्दतामघशंसिनाम् ।
ब्रह्मघ्नानां च ये लोका ये च गोघातिनामपि ॥ ७-७३-३४ (४७४५५)
पायसं वा यवान्नं वा शाकं कृसरमेव वा ।
संयावापूपमांसानि ये च लोका वृथाश्नताम् ।
तानन्हायाधिगच्छेयं न चेद्धन्यां जयद्रथम् ॥ ७-७३-३५ (४७४५६)
वेदाध्यायिनमत्यर्थं संशितं वा द्विजोत्तमम् ।
अवमन्यमानो यान्याति वृद्धान्साधून्गुरूंस्तथा ॥ ७-७३-३६ (४७४५७)
स्पृशतो ब्राह्मणं गां च पादेनाग्निं च या भवेत् ।
याऽप्सु श्लेष्म पुरीषं च मूत्रं वा मुञ्चतां गतिः ।
तां गच्छेयं गतिं कष्टां न चेद्धन्यां जयद्रथम् ॥ ७-७३-३७ (४७४५८)
नग्नस्य स्नायमानस्य या च वन्ध्याऽतिथेर्गतिः ।
उत्कोचिनां मृषोक्तीनां वञ्चकानां च या गतिः ॥ ७-७३-३८ (४७४५९)
आत्मापहारिणां या च या च मिथ्याभिशंसिनाम् ।
भृत्यैः सन्दृश्यमानानां पुत्रदाराश्रितैस्तथा ॥ ७-७३-३९ (४७४६०)
असंविभज्य क्षुद्राणां या गतिर्मिष्टमश्नताम् ।
तां गच्छेयं गतिं घोरां न चेद्धन्यां जयद्रथम् ॥ ७-७३-४० (४७४६१)
संश्रितं चापि यस्त्यक्त्वा साधुं तद्वचने रतम् ।
न बिभर्ति नृसंसात्मा निन्दते चोपकारिणम् ॥ ७-७३-४१ (४७४६२)
अर्हते प्रातिवेश्याय श्राद्धं यो न ददाति च ।
अनर्हेभ्यश्च यो दद्याद्वृषलीपतये तथा ॥ ७-७३-४२ (४७४६३)
मद्यपो भिन्नमर्यादः कृतघ्नो भर्तृनिन्दकः ।
तेषां गतिमियां क्षिप्रं न चेद्धान्यां जयद्रथम् ॥ ७-७३-४३ (४७४६४)
भुञ्जानानां तु सव्येन उत्सङ्गे चापि खादताम् ।
पालाशमासनं चैव तिन्दुकैर्दन्तधावनम् ॥ ७-७३-४४ (४७४६५)
ये चावर्जयतां लोकाः स्वपतां च तथोषसि ।
शीतभीताश्च ये विप्रा रणभीताश्च क्षत्रियाः ॥ ७-७३-४५ (४७४६६)

एककूपोदकग्रामे वेदध्वनिविवर्जिते ।
षण्मासं तत्र वसतां तथा शास्त्रं विनिन्दताम् ॥ ७-७३-४६ (४७४६७)
दिवामैथुनिनां चापि दिवसेषु च शेरते ।
अगारदाहिनां चैव गरदानां च ये मताः ॥ ७-७३-४७ (४७४६८)
अग्न्यातिथ्यविहीनाश्च गोपानेषु च विघ्नदाः ।
रजस्वलां सेवयन्तः कन्यां शुल्केन दायिनः ॥ ७-७३-४८ (४७४६९)
या च वै बहुयाजिनां ब्राह्मणानां श्ववृत्तिनाम् ।
आस्यमैथुनिकानां च ये दिवामैथुने रताः ॥ ७-७३-४९ (४७४७०)
ब्राह्मणस्य प्रतिश्रुत्य यो वै लोभाद्ददाति न ।
तेषां गतिं गमिष्यामि श्वो न हन्यां जयद्रथम् ॥ ७-७३-५० (४७४७१)
धर्मादपेता ये चान्ये मया नात्रानुकीर्तिताः ।
ये चानुकीर्तितास्तेषां गतिं क्षिप्रमवाप्नुयाम् ॥ ७-७३-५१ (४७४७२)
यदि व्युष्टामिमां रात्रिं श्वो न हन्यां जयद्रथम् ।
इमां चाप्यपरां भूयः प्रतिज्ञां मे निबोधत ॥ ७-७३-५२ (४७४७३)
यद्यस्मिन्न हत्ते पापे सूर्योऽस्तमुपयास्यति ।
इहैव सम्प्रवेष्टाऽहं ज्वलितं जातवेदसम् ॥ ७-७३-५३ (४७४७४)
असुरसुरमनुष्याः पक्षिणो वोरगा वा
पितृरजनिचरा वा ब्रह्मदेवर्षयो वा ।
चरमचरमपीदं यत्परं चापि तस्मा--
त्तदपि मम रिपुं तं रक्षितुं नैव शक्ताः ॥ ७-७३-५४ (४७४७५)
यदि विशति रसातलं तदग्र्यं
वियदपि देवपुरं दितेः पुरं वा ।
तदपि शरशतैरहं प्रभाते
भृशमभिमन्युरिपोः शिरोऽभिहर्ता ॥ ७-७३-५५ (४७४७६)
सञ्जय उवाच। ७-७३-५६क्ष् (४४५०)
एवमुक्त्वा विचिक्षेप गाण्डीवं सव्यदक्षिणम् ।
तस्य सर्वमतिक्रम्य धनुःशब्दोऽस्पृशद्दिवम् ॥ ७-७३-५६ (४७४७७)
अर्जुनेन प्रतिज्ञाते पाञ्चजन्यं जनार्दनः ।
प्रदध्मौ तत्र सङ्क्रुद्धो देवदत्तं च फल्गुनः ॥ ७-७३-५७ (४७४७८)
स पाञ्चजन्योऽच्युतवक्त्रवायुना
भृशं सुपूर्णोदरनिःसृतध्वनिः ।
जगत्सपातालवियद्दिगीश्वरं
प्रकम्पयामास युगात्यये यथा ॥ ७-७३-५८ (४७४७९)
ततो वादित्रघोषाश्च प्रादुरासन्सहस्रशः ।
सिंहनादश्च पाण्डूनां प्रतिज्ञाते महात्मना ॥ ७-७३-५९ (४७४८०)
ग्प्रानृत्यदिव गाण्डीवं शरास्तूणीगता मुदा ।

निराक्रामन्निव तदा स्वयमेव मृधैषिणः ॥ ७-७३-६० (४७४८१)
भीमसेनः सुसंहृष्टः प्रत्यभाषत भारत ।
धनञ्जयमभिप्रेक्ष्य हर्षगद्गदया गिरा ॥ ७-७३-६१ (४७४८२)
प्रतिज्ञोद्भवशब्देन कृष्णशङ्खस्वनेन च ।
निहतो धार्तराष्ट्रोऽयं सानुबन्धः सुयोधनः ॥ ७-७३-६२ (४७४८३)
अथ मृदिततमाग्र्यदाममाल्यं
तव सुतशोकमयं च रोषजातम् ।
व्यपनुदति महाप्रभावसेन--
न्नरवर वाक्यमिदं महार्थमिष्टम् ॥ ७-७३-६३ (४७४८४)
सञ्जय उवाच। ७-७३-६४क्ष् (४४५१)
अथ शङ्ख्यैश्च भेरीभिः पणवैः सैनिकास्तथा ।
ससूतमागधा जिष्णुं स्तुतिभिः समपूजयन् ॥ ७-७३-६४ (४७४८५)
तदा भीमं बलं सर्वे तेन नादेन मोहितम् ।
तावकं तन्महाराज विषण्णं समपद्यत'॥ ॥ ७-७३-६५ (४७४८६)

इति श्रीमन्महाभारते द्रोणपर्वणि प्रतिज्ञापर्वणि
त्रिसप्ततितमोऽध्यायः ॥ ७३ ॥
Mahabharata - Drona Parva - Chapter Footnotes

५-७३-३८ वन्ध्यापतेः इति ङ । पाठः। उत्क्रोशकानृतानां च इति क। पाठः। उत्कोटिकानृतानां च इति ट ङ पाठः ॥
५-७३-३९ आत्मापहारिणां आत्मानमन्यथा प्रकाशयताम् ॥
५-७३-४२ वृषली शूद्रा कन्याभावे रजस्वला वा ॥
५-७३-५५ दितेरिति । कार्ये कारणोपचाराद्दैत्यानामित्यर्थः ॥
५-७३-७३ त्रिसप्ततितमोऽध्यायः ॥

---

द्रोनपर्व-अध्यय०७४
॥ श्रीः ॥
७.७४. अध्यायः ७४

Mahabharata - Drona Parva - Chapter Topics
अर्जुनप्रतिज्ञाश्रवणचकितस्य जयद्रथस्य द्रोणतुर्योधनाश्यासनम् ॥ १ ॥

Mahabharata - Drona Parva - Chapter Text

७-७४-० (४७४८७)

सञ्जय उवाच। ७-७४-०क्ष् (४४५२)
श्रुत्वा तु तं महाशब्दं पाण्डूनां पुत्रगृद्धिनाम् ।
चारैः प्रवेदितस्त्रस्तः समुत्थाय जयद्रथः ॥ ७-७४-१ (४७४८८)
शोकसम्मूढहृदयो दुःखेनाभ्याहतो भृशम् ।
मज्जमान इवागाधे विपुले शोकसागरे ।
जगाम समितिं राज्ञां सैन्धवो विमृशन्बहु ॥ ७-७४-२ (४७४८९)
स तेषां नरदेवानां सकाशे पर्यदेवयत् ।
अभिमन्युपितुर्भीतः सव्रीडो वाक्यमब्रवीत् ॥ ७-७४-३ (४७४९०)
योऽसौ पाण्डोः किल क्षेत्रे जातः शक्रेण कामिना ।
स निनीषति दुर्बुद्धिर्मां किलैकं यमक्षयम् ॥ ७-७४-४ (४७४९१)
स्वस्ति वोऽस्तु गमिष्यामि स्वगृहं जीवितेप्सया। ७-७४-५ (४७४९२)
अथवास्त्रप्रतिबलास्त्रात मां क्षत्रियर्षभाः ।
पार्थेन प्रार्थितं वीरास्ते सन्दत्त ममाभयम् ॥ ७-७४-६ (४७४९३)
द्रोणदुर्योधनकृपाः कर्णमद्रेशबाह्लिकाः ।
दुःशासनादयः शक्तास्त्रातुमप्यन्तकार्दितम् ॥ ७-७४-७ (४७४९४)
किमङ्ग पुनरेकेन फल्गुनेन जिघांसता ।
न त्रास्यन्ति भवन्तो मां समस्ताः पतयः क्षितेः ॥ ७-७४-८ (४७४९५)
प्रतिज्ञां पाण्डवेयानां श्रुत्वा मम महद्भयम् ।
सीदन्ति मम गात्राणि मुमूर्षोरिव पार्थिवाः ॥ ७-७४-९ (४७४९६)
वधो नूनं प्रतिज्ञातो मम गाण्डीवधन्वना ।
तथाहि हृष्टाः क्रोशन्ति शोककालेऽपि पाण्डवाः ॥ ७-७४-१० (४७४९७)
तन्न देवा न गन्धर्वा नासुरोरगराक्षसाः ।
उत्सहन्तेऽन्यथा कर्तुं कुत एव नराधिपाः ॥ ७-७४-११ (४७४९८)
तस्मान्मामनुजानीत भद्रं वोऽस्तु नरर्षभाः ।
अदर्शनं गमिष्यामि न मां द्रक्ष्यन्ति पाण्डवाः ॥ ७-७४-१२ (४७४९९)
सञ्जय उवाच। ७-७४-१३क्ष् (४४५३)
एवं विलपमानं तं भयाद्व्याकुलचेतसम् ।
आत्मकार्यगरीयस्त्वाद्राजा दुर्योधनोऽब्रवीत् ॥ ७-७४-१३ (४७५००)
न भेतव्यं नरव्याघ्र को हि त्वां पुरुषर्षभ ।
मध्ये क्षत्रियवीराणां तिष्ठन्तं प्रार्थयेद्युधि ॥ ७-७४-१४ (४७५०१)
गएतेषां नरदेवानां मत्तमातङ्गगामिनाम् ।
सङ्घातमुपयातानामपि विभ्येत्पुरन्दरः'॥ ७-७४-१५ (४७५०२)
अहं वैकर्तनः कर्णश्चित्रसेनो विविंशतिः ।
भूरिश्रवाः शलः शल्यो वृषसेनो दुरासदः ॥ ७-७४-१६ (४७५०३)
पुरुमित्रो जयो भोजः काम्भोजश्च सुदक्षिणः ।
सत्यव्रतो महाबाहुर्विकर्णो दुर्मुखश्च ह ॥ ७-७४-१७ (४७५०४)

दुःशासनः सुबाहुश्च कालिङ्गश्चाप्युदायुधः ।
विन्दानुविन्दावावन्त्यौ द्रोणो द्रौणिश्च सौबलः ॥ ७-७४-१८ (४७५०५)
ग्मायावी बलवाञ्छूरो राक्षसश्चाप्यलम्बुसः'।
एते चान्ये च बहवो नानाजनपदेश्वराः ।
ससैन्यास्त्वाभिगोप्स्यन्ति व्येतु ते मानसो ज्वरः ॥ ७-७४-१९ (४७५०६)
त्वं चापि रथिनां श्रेष्ठः स्वयं शूरोऽमितद्युते ।
स कथं पाण्डवेयेभ्यो भयं पश्यसि वैन्धव ॥ ७-७४-२० (४७५०७)
अक्षौहिण्यो महावीर्य मदीयास्तव रक्षणे ।
यत्ता योत्स्यन्ति माभैस्त्वं सैन्धव व्येतु ते भयम् ॥ ७-७४-२१ (४७५०८)
सञ्जय उवाच। ७-७४-२२क्ष् (४४५४)
एवमाश्वासितो राजन्पुत्रेण तव सैन्धवः ।
दुर्योधनेन सहितो द्रोणं रात्रावुपागमत् ॥ ७-७४-२२ (४७५०९)
उपसङ्गृह्य चरणौ द्रोणाय स विशाम्पतिः ।
उपोपविश्य प्रणतः पर्यपृच्छदिदं वचः ॥ ७-७४-२३ (४७५१०)
निमित्ते दूरपातित्वे लघुत्वे दृढवेधने ।
मम ब्रवीतु भगवान्विशेषं फल्गुनस्य च ॥ ७-७४-२४ (४७५११)
विद्याविशेषमिच्छामि ज्ञातुमाचार्य तत्त्वतः ।
अर्जुनस्यात्मनश्चैव याथातथ्यं प्रचक्ष्व मे ॥ ७-७४-२५ (४७५१२)
द्रोण उवाच। ७-७४-२६क्ष् (४४५५)
सममाचार्यकं तात तव चैवार्जुनस्य च ।
योगाद्दुःखोषितत्वाच्च तस्मात्त्वत्तोऽधिकोऽर्जुनः ॥ ७-७४-२६ (४७५१३)
न तु ते युधि सन्त्रासः कार्यः पार्थात्कथञ्चन ।
अहं हि रक्षिता तात भयात्त्वां नात्र संशयः ॥ ७-७४-२७ (४७५१४)
न हि मद्बाहुगुप्तस्य प्रभवन्त्यमरा अपि ।
व्यूहयिष्यामि तं व्यूहं यं पार्थो न तरिष्यति ॥ ७-७४-२८ (४७५१५)
तस्माद्युध्यस्व माभैस्त्वं स्वधर्ममनुपालय ।
पितृपैतामहं मार्गमनुयाहि महारथ ॥ ७-७४-२९ (४७५१६)
अधीता विधिवद्वेदा अग्नयः सुहुतास्त्वया ।
इष्टं च बहुभिर्यज्ञैर्न ते मृत्युर्भयङ्करः ॥ ७-७४-३० (४७५१७)
दुर्लभं मानुषैर्मन्दैर्महाभाग्यमवाप्य तु ।
भुजवीर्यार्जिताँल्लोकान्दिव्यान्प्राप्स्यस्यनुत्तमान् ॥ ७-७४-३१ (४७५१८)
कुरवः पाण्डवाश्चैव वृष्णयोऽन्ये च मानवाः ।
अहं च सहपुत्रेण अध्रुवा इति चिन्त्यताम् ॥ ७-७४-३२ (४७५१९)
पर्यायेण वयं सर्वे कालेन बलिना हताः ।
परलोकं गमिष्यामः स्वैःस्वैः कर्मभिरन्विताः ॥ ७-७४-३३ (४७५२०)
तपस्तप्त्वा तु याँल्लोकान्प्राप्नुवन्ति तपस्विनः ।

क्षत्रधर्माश्रिताः वीराः क्षत्रियाः प्राप्नुवन्ति तान् ॥ ७-७४-३४ (४७५२१)
एवमाश्वासितो राजा भारद्वाजेन सैन्धवः ।
अपानुदद्भयं पार्थाद्युद्धाय च मनो दधे ॥ ७-७४-३५ (४७५२२)
ततः प्रहर्षः सैन्यानां तस्य चासीद्विशाम्पते ।
वादित्राणां ध्वनिश्चोग्रः सिंहनादरवैः सह ॥ ॥ ७-७४-३६ (४७५२३)

इति श्रीमन्महाभारते द्रोणपर्वणि प्रतिज्ञापर्वणि
चतुःसप्ततितमोऽध्यायः ॥ ७४ ॥
Mahabharata - Drona Parva - Chapter Footnotes

५-७४-४ किलेत्यरुचौ ॥
५-७४-५ स्वगृहाज्जीवितेप्सया इति ङ । पाठः ॥
५-७४-६ पार्थेन पार्थिवा वीरास्त्वंद्ददध्वं ममाभयम् इति क ट पाठः ॥
५-७४-२४ निमित्ते लक्ष्यभेदने ॥
५-७४-२६ योगादभ्यासात् । दुःखोचितत्वाच्च इति क ट ङ पाठः ॥
५-७४-३० मृत्युभवं भयम् इति क पाठः ॥
५-७४-७४ चतुःसप्ततितमोऽध्यायः ॥

---

द्रोनपर्व-अध्यय०७५
॥ श्रीः ॥
७.७५. अध्यायः ७५

Mahabharata - Drona Parva - Chapter Topics
श्रीकृष्णेनार्जुनम्प्रति द्रोणादिभिर्जयद्रथरक्षणप्रतिज्ञादिकथनम्
॥ १ ॥

Mahabharata - Drona Parva - Chapter Text

७-७५-० (४७५२४)
सञ्जय उवाच । ७-७५-०क्ष् (४४५६)
प्रतिज्ञाते तु पार्थेन सिन्धुराजवधे तदा ।
वासुदेवो महाबाहुर्धनञ्जयमभाषत ॥ ७-७५-१ (४७५२५)
भ्रातॄणां मतमज्ञाय त्वया वाचा प्रतिश्रुतम् ।
सैन्धवं चास्मि हन्तेति तत्साहसमिदं कृतम् ॥ ७-७५-२ (४७५२६)
असम्मन्त्र्य मया सार्धमतिभारोऽयमुद्यतः ।
कथं तु सर्वलोकस्य नावहास्या भवेमहि ॥ ७-७५-३ (४७५२७)

धार्तराष्ट्रस्य शिबिरे ये तु प्रणिहिताश्चराः ।
त इमे शीघ्रमागम्य प्रवृत्तिं वेदयन्ति नः ॥ ७-७५-४ (४७५२८)
त्वया वै सम्प्रतिज्ञाते सिन्धुराजवधे प्रभो ।
सिंहनादः सवादित्रः सुमहानिह तैः श्रुतः ॥ ७-७५-५ (४७५२९)
तेन शब्देन वित्रस्ता धार्तराष्ट्राः ससैन्धवाः ।
नाकस्मात्सिंहनादोऽयमिति मत्वा व्यवस्थिताः ॥ ७-७५-६ (४७५३०)
सुमहाञ्शब्दसम्पातः कौरवाणां महाभुज ।
आसीन्नागाश्वपत्तीनां रथघोषश्च भैरवः ॥ ७-७५-७ (४७५३१)
अभिमन्योर्वधं श्रुत्वा ध्रुवमार्तो धनञ्जयः ।
रात्रौ निर्यास्यति क्रोधातिति मत्त्वा व्यवस्थिताः ॥ ७-७५-८ (४७५३२)
तैश्चारेभ्य इयं कृत्स्ना श्रुता सत्यवतस्तव ।
प्रतिज्ञा सिन्धुराजस्य वधे राजीवलोचन ॥ ७-७५-९ (४७५३३)
ततो विमनसः सर्वे त्रस्ताः क्षुद्रमृगा इव ।
आसन्सुयोधनामात्याः स च राजा जयद्रथः ॥ ७-७५-१० (४७५३४)
अथोत्थाय सहामात्यैर्दीनः स्वशिबिरात्किल ।
अयात्सौवीरसिन्धूनामीश्वरो राजसंसदम् ॥ ७-७५-११ (४७५३५)
स मन्त्रकाले संमन्त्र्य सर्वा नैश्श्रेयसीं क्रियाम् ।
सुयोधनमिदं वाक्यमब्रवीद्राजसंसदि ॥ ७-७५-१२ (४७५३६)
मामसौ पुत्रहन्तेति श्वोऽभियाता धनञ्जयः ।
प्रतिज्ञातो हि सेनाया मध्ये तेन वधो मम ॥ ७-७५-१३ (४७५३७)
तां न देवा न गन्धर्वा नासुरोरगराक्षसाः ।
उत्सहन्तेऽन्यथा कर्तुं प्रतिज्ञां सव्यसाचिनः ॥ ७-७५-१४ (४७५३८)
ते मां रक्षत सङ्ग्रामे मा वो मूर्ध्नि धनञ्जयः ।
पदं कृत्वाऽऽप्नुयाल्लक्ष्यं युक्तं प्रतिविधीयताम् ॥ ७-७५-१५ (४७५३९)
अथ रक्षा न मे सम्यक्क्रियते कुरुनन्दन ।
अनुजानीहि मां राजन्गमिष्यामि गृहान्प्रति ॥ ७-७५-१६ (४७५४०)
एवमुक्तस्त्ववाक्शीर्षो विमनाः ससुयोधनः ।
श्रुत्वा तं समयं तस्य ध्यानमेवान्वपद्यत ॥ ७-७५-१७ (४७५४१)
तमार्तमभिसम्प्रेक्ष्य राजा किल स सैन्धवः ।
मृदु चात्महितं चैव सापेक्षमिदमुक्तवान् ॥ ७-७५-१८ (४७५४२)
नेह पश्यामि भवतां तथावीर्यं धनुर्धरम् ।
योऽर्जुनस्यास्त्रमस्त्रेण प्रतिहन्यान्महाहवे ॥ ७-७५-१९ (४७५४३)
वासुदेवसहायस्य गाण्डीवं धुन्वतो धनुः ।
कोऽर्जुनस्याग्रतस्तिष्ठेत्साक्षादपि शतक्रतुः ॥ ७-७५-२० (४७५४४)
महेश्वरोऽपि पार्थेन श्रूयते योधितः पुरा ।
पदातिना महावीर्यो गिरौ हिमवति प्रभुः ॥ ७-७५-२१ (४७५४५)

दानवानां सहस्राणि हिरण्यपुरवासिनाम् ।
जघानैकरथेनैव देवराजप्रचोदितः ॥ ७-७५-२२ (४७५४६)
समायुक्तो हि कौन्तेयो बासुदेवेन धीमता ।
सामरानपि लोकांस्त्रीन्हन्यादिति मतिर्मम ॥ ७-७५-२३ (४७५४७)
सोऽहमिच्छाम्यनुज्ञातुं रक्षितुं वा महात्मना ।
द्रोणेन सहपुत्रेण वीरेण यदि मन्यसे ॥ ७-७५-२४ (४७५४८)
श्रीभगवानुवाच। ७-७५-२५क्ष् (४४५७)
स राज्ञा स्वयमाचार्यो भृशमत्रार्थितोऽर्जुन ।
संविधानं च विहितं रथाश्च किल सज्जिताः ॥ ७-७५-२५ (४७५४९)
कर्णो भूरिश्रवा द्रौणिर्वृषसेनश्च दुर्जयः ।
कृपश्च मद्रराजश्च षडेतेऽस्य पुरोगमाः ॥ ७-७५-२६ (४७५५०)
शकटः पद्मकश्चार्धो व्यूहो द्रोणेन निर्मितः ।
पद्मकर्णिकमध्यस्थः सूची पार्श्वे जयद्रथः ॥ ७-७५-२७ (४७५५१)
स्थास्यते रक्षिते वीरैः सिन्धुराट् स सुदुर्मदः ।
धनुष्यस्त्रे च वीर्ये च प्राणे चैव तथौरसे ॥ ७-७५-२८ (४७५५२)
अविषह्यतमा ह्येते निश्चिताः पार्थ षड्रथाः ।
एतानजित्वा सगणान्नैव प्राप्यो जयद्रथः ॥ ७-७५-२९ (४७५५३)
तेषामेकैकशो वीर्यं षण्णां त्वमनुचिन्तय ।
सहिता हि नरव्याघ्र न शक्या जेतुमञ्जसा ॥ ७-७५-३० (४७५५४)
भूयस्तु मन्त्रयिष्यामि नीतिमात्महिताय वै ।
मन्त्रज्ञैः सचिवैः सार्धं सुहृद्भिः कार्यसिद्धये ॥ ॥ ७-७५-३१ (४७५५५)

इति श्रीमन्महाभारते द्रोणपर्वणि प्रतिज्ञापर्वणि
पञ्चसप्ततितमोऽध्यायः ॥ ७५ ॥
Mahabharata - Drona Parva - Chapter Footnotes

५-७५-२ अशब्दो निषेधे । अज्ञात्वेत्यर्थः ॥
५-७५-२५ संविधानं प्रतिविधानम् ॥
५-७५-२७ पद्मव्यूहः पश्चार्धे पश्चाद्भागे यस्य । सूची सूचीमुखो व्यूहः ॥
५-७५-७५ पञ्चसप्ततितमोऽध्यायः ॥

---

द्रोनपर्व-अध्यय०७६
॥ श्रीः ॥
७.७६. अध्यायः ७६

Mahabharata - Drona Parva - Chapter Topics
अर्जुनेन श्रीकृष्णम्प्रति स्वसामर्थ्यकथनम् ॥ १ ॥

Mahabharata - Drona Parva - Chapter Text

७-७६-० (४७५५६)
अर्जुन उवाच। ७-७६-०क्ष् (४४५८)
षड्रथान्धार्तराष्ट्रस्य मन्यसे यान्बलाधिकान् ।
तेषां वीर्यं ममार्धेन न तुल्यमिति मे मतिः ॥ ७-७६-१ (४७५५७)
अस्त्रमस्त्रेण सर्वेषामेतेषां मधुसूदन ।
मया द्रक्ष्यसि निर्भिन्नं जयद्रथवधैषिणा ॥ ७-७६-२ (४७५५८)
द्रोणस्य मिषतश्चाहं सगणस्य विपश्चितः ।
मूर्धानं सिन्धुराजस्य पातयिष्यामि भूतले ॥ ७-७६-३ (४७५५९)
यदि साध्याश्च रुद्राश्च वसवश्च सहाश्विनः ।
मरुतश्च सहेन्द्रेण विश्वेदेवाः सहेश्वराः ॥ ७-७६-४ (४७५६०)
पितरः सहगन्धर्वाः सुपर्णाः सागराद्रयः ।
द्यौर्वियत्पृथिवी चेयं दिशश्च सदिगीश्वराः ॥ ७-७६-५ (४७५६१)
ग्राम्यारण्यानि भूतानि स्थावराणि चराणि च ।
त्रातारः सिन्धुराजस्य भवन्ति मधुसूदन ॥ ७-७६-६ (४७५६२)
तथापि बाणैर्निहतं श्वो द्रष्टासि रणे मया ।
सत्येन च शपे कृष्ण तथैवायुधमालभे ॥ ७-७६-७ (४७५६३)
यस्य गोप्ता महेष्वासो द्रोणः पापस्य दुर्मतेः ।
तमेव प्रथमं द्रोणमभियास्यामि केशव ॥ ७-७६-८ (४७५६४)
तस्मिन्युद्धमिदं बद्धं मन्यते स सुयोधनः ।
तस्मात्तस्यैव सेनाग्रं भित्त्वा यास्यामि सैन्धवम् ॥ ७-७६-९ (४७५६५)
द्रष्टासि श्वो महेष्वासान्नाराचैस्तिग्मतेजितैः ।
शृङ्गाणीव गिरेर्वज्रैर्दार्यमाणान्मया युधि ॥ ७-७६-१० (४७५६६)
नरनागाश्वदेहेभ्यो विस्रविष्यति शोणितम् ।
पतद्भ्यः पतितेभ्यश्च विभिन्नेभ्यः शितैः शरैः ॥ ७-७६-११ (४७५६७)
गाण्डीवप्रेषिता बाणा मनोऽनिलसमा जवे ।
नृनागाश्वान्विदेहासून्कर्तारश्च सहस्रशः ॥ ७-७६-१२ (४७५६८)
शक्राद्भीष्मात्कृपाद्द्रोणाद्देवाद्रुद्राच्च यन्मया ।
उपात्तमस्त्रं घोरं तद्द्रष्टारोऽत्र नरा युधि ॥ ७-७६-१३ (४७५६९)
ब्राह्मेणास्त्रेण चास्त्राणि हन्यमानानि संयुगे ।
मया द्रष्टाऽसि सर्वेषां सैन्धवस्याभिरक्षिणाम् ॥ ७-७६-१४ (४७५७०)
शरवेगसमुत्कृत्तै राज्ञां केशव मूर्धभिः ।

आस्तीर्यमाणां पृथिवीं द्रष्टाऽसि श्वो मया युधि ॥ ७-७६-१५ (४७५७१)
क्रव्यादांस्तर्पयिष्यामि द्रावयिष्यामि शात्रवान् ।
सुहृदो नन्दयिष्यामि प्रमथिष्यामि सैन्धवम् ॥ ७-७६-१६ (४७५७२)
बह्वागस्कृत्कुसंबन्धी पापदेशसमुद्भवः ।
मया सैन्धवको राजा हतः स्वाञ्शोचयिष्यति ॥ ७-७६-१७ (४७५७३)
सर्वे क्षीरान्नभोक्तारः पापाचारा रणाजिरे ।
मया सराजका बाणैर्हता नश्यन्ति सैन्धवाः ॥ ७-७६-१८ (४७५७४)
तथा प्रभाते कर्ताऽस्मि यथा कृष्ण सुयोधनः ।
नान्यं धनुर्धरं लोके मंस्यते मत्समं युधि ॥ ७-७६-१९ (४७५७५)
ग्गाण्डीवं च धनुर्दिव्यं योद्धारं च धनञ्जम् ।
यन्तारं च हृषीकेशं कोऽतिवर्तेत संयुगे'॥ ७-७६-२० (४७५७६)
तव प्रसादाद्भगवन्किंनावाप्तं रणे मम ।
अविषह्यं हृषीकेश किं जानन्मां विगर्हसे ॥ ७-७६-२१ (४७५७७)
यथा लक्ष्म स्थिरं चन्द्रे समुद्रे च यथा जलम् ।
एवमेतां प्रतिज्ञां मे सत्यां विद्धि जनार्दन ॥ ७-७६-२२ (४७५७८)
मावमंस्था ममास्त्राणि मावमंस्थाश्च गाण्डिवम् ।
मावमंस्था बलं बाह्वोर्मावमंस्था धनञ्जयम् ॥ ७-७६-२३ (४७५७९)
गाण्डीवं च धनुर्दिव्यं योद्धा चाहं नरर्षभ ।
त्वं च यन्ता हृषीकेश किन्नु स्यादजितं मया ॥ ७-७६-२४ (४७५८०)
यथाभियाय सङ्ग्रमं न जितो वै जयामि च ।
तेन सत्येन सङ्ग्रामे हतं विद्धि जयद्रथम् ॥ ७-७६-२५ (४७५८१)
ग्त्वं च माधव सर्वं तत्तथा प्रतिविधास्यसि ।
यथा रिपूणां मिषतां प्रमथिष्यामि सैन्धवम्'॥ ७-७६-२६ (४७५८२)
ध्रुवं वै ब्राह्मणे सत्यं ध्रुवा साधुषु सन्नतिः ।
श्रीर्ध्रुवाऽपि च दक्षेषु ध्रुवो नारायणे जयः ॥ ७-७६-२७ (४७५८३)
सञ्जय उवाच। ७-७६-२८क्ष् (४४५९)
एवमुक्त्वा हृषीकेशं स्वयमात्मानमात्मना ।
सन्दिदेशार्जुनो नर्दन्वासविः केशवं प्रभुम् ॥ ७-७६-२८ (४७५८४)
यथा प्रभातां रजनीं कल्पितः स्याद्रथोत्तमः ।
तथा कार्यं त्वया कृष्ण प्रतिज्ञा स्याद्यथा ध्रुवा ॥ ॥ ७-७६-२९ (४७५८५)

इति श्रीमन्महाभारते द्रोणपर्वणि प्रतिज्ञापर्वणि
षट्सप्ततितमोऽध्यायः ॥ ७६ ॥

Mahabharata - Drona Parva - Chapter Footnotes

५-७६-९ तस्मिन् द्रोणे । युद्धं बद्धमिव बद्धं एकान्तजयेन स्थिरीकृतम् ॥

५-७६-७६ षट्सप्ततितमोऽध्यायः ॥

---

द्रोनपर्व-अध्यय०७७
॥ श्रीः ॥
७.७७. अध्यायः ७७

Mahabharata - Drona Parva - Chapter Topics
श्रीकृष्णेन सुभद्रासमाश्वासनम् ॥ १ ॥

Mahabharata - Drona Parva - Chapter Text

७-७७-० (४७५८६)
सञ्जय उवाच। ७-७७-०क्ष् (४४६०)
तां निशां दुःखशोकार्तौ निःश्वसन्ताविवोरगौ ।
निद्रां नैवोपलेभाते वासुदेवधनञ्जयौ ॥ ७-७७-१ (४७५८७)
नरनारायणौ क्रुद्धौ ज्ञात्वा देवाः सवासवाः ।
व्यथिताश्चिन्तयामासुः किंस्विदेतद्भविष्यति ॥ ७-७७-२ (४७५८८)
ववुश्च दारुणा वाता रूक्षा घोराभिशंसिनः ।
सकबन्धस्तथाऽऽदित्ये परिघः समदृश्यत ॥ ७-७७-३ (४७५८९)
शुष्काशन्यश्च निष्पेतुः सनिर्घाताः सविद्युतः ।
चचाल चापि पृथिवी सशैलवनकानना ॥ ७-७७-४ (४७५९०)
चुक्षुभुश्च महाराज सागारा मकरालयाः ।
प्रतिस्रोतःप्रवृत्ताश्च तथा गन्तुं समुद्रगाः ॥ ७-७७-५ (४७५९१)
रथाश्वनरनागानां प्रवृत्तमधरोत्तरम् ।
क्रव्यादानां प्रमोदार्थं यमराष्ट्रविवृद्धये ॥ ७-७७-६ (४७५९२)
वाहनानि शकृन्मूत्रे मुमुचू रुरुदुश्च ह ।
तान्दृष्ट्वा दारुणान्सर्वानुत्पाताँल्लोमहर्षणान् ॥ ७-७७-७ (४७५९३)
सर्वे ते व्यथिताः सैन्यास्त्वदीया भरतर्षभा ।
श्रुत्वा महाबलस्योग्रां प्रतिज्ञां सव्यसाचिनः ॥ ७-७७-८ (४७५९४)
अथ कृष्णं महाबाहुरब्रवीत्पाकशासनिः ।
आश्वासय सुभद्रां त्वं भगिनीं स्नुषया सह ॥ ७-७७-९ (४७५९५)
स्नुषां चास्या वयस्याश्च विशोकाः कुरु माधव ।
साम्ना सत्येन युक्तेन वचसाऽऽश्वासय प्रभो ॥ ७-७७-१० (४७५९६)
ततोऽर्जुनगृहं गत्वा वासुदेवः सुदुर्मनाः ।
भगिनीं पुत्रशोकार्तामाश्वासयत दुःखिताम् ॥ ७-७७-११ (४७५९७)
वासुदेव उवाच। ७-७७-१२क्ष् (४४६१)

मा शोकं कुरु वार्ष्णेयि कुमारं प्रति सस्नुषा ।
सर्वेषां प्राणिनां भीरु निष्ठैषा कालनिर्मिता ॥ ७-७७-१२ (४७५९८)
कुले जातस्य वीरस्य क्षत्रियस्य विशेषतः ।
सदृशं मरणं ह्येतत्तव पुत्रस्य मा शुचः ॥ ७-७७-१३ (४७५९९)
दिष्ट्या महारथो धीरः पितुस्तुल्यपराक्रमः ।
क्षात्रेण विधिना प्राप्तो वीराभिलषितां गतिम् ॥ ७-७७-१४ (४७६००)
जित्वा सुबहुशः शत्रून्प्रेषयित्वा च मृत्यवे ।
गतः पुण्यकृतां लोकान्सर्वकामदुहोऽक्षयान् ॥ ७-७७-१५ (४७६०१)
तपसा ब्रह्मचर्येण श्रुतेन प्रज्ञयापि च ।
सन्तो यां गतिमिच्छन्ति तां प्राप्तस्तव पुत्रकः ॥ ७-७७-१६ (४७६०२)
वीरसूर्वीरपत्नी त्वं वीरजा वीरबान्धवा ।
मा शुचस्तनयं भद्रे गतःस परमां गतिम् ॥ ७-७७-१७ (४७६०३)
ग्स्वाध्याययुक्तं ब्राह्ममी याचितारं
ग्स्वाध्याययुक्तं ब्राह्मणी याचितारं
गौर्बोढारं क्षिप्रगन्तारमश्वा ।
दासं शूद्रा कर्मकारं तु वैश्या
शूरं सूते त्वद्विधा राजपुत्री'॥ ७-७७-१८ (४७६०४)
प्राप्स्यते चाप्यसौ पापः सैन्धवो बालघातकः ।
अधर्मस्यास्य तु फलं ससुहृद्गणबान्धवः ॥ ७-७७-१९ (४७६०५)
व्युष्टायां तु वरारोहे रजन्यां पापकर्मकृत् ।
न हि मोक्ष्यति पार्थात्स प्रविष्टोऽप्यमरावतीम् ॥ ७-७७-२० (४७६०६)
श्वः शिरः पादमूलं ते सैन्धवस्याहृतं ध्रुवम् ।
पद्भ्यां प्रमथितासि त्वं विशोका भव मा रुदः ॥ ७-७७-२१ (४७६०७)
क्षत्रधर्मं पुरस्कृत्य गतः शूरः सतां गतिम् ।
वयं च प्राप्नुयामेह ये चान्ये शस्त्रजीविनः ॥ ७-७७-२२ (४७६०८)
व्यूढोरस्को महाबाहुरनिवर्ती रिपुव्रजात् ।
गतस्तव वरारोहे पुत्रः स्वर्गं ज्वरं जहि ॥ ७-७७-२३ (४७६०९)
अनुयातश्च पितरं मातृपक्षं च वीर्यवान् ।
सहस्रशो रिपून्हत्वा हतः शूरो महारथः ॥ ७-७७-२४ (४७६१०)
आश्वासय स्नुषां राज्ञि मा शुचः क्षत्रिये भृशम् ।
श्वः प्रियं सुमहच्छ्रुत्वा विशोका भव नन्दिनि ॥ ७-७७-२५ (४७६११)
यत्पार्थेन प्रतिज्ञातं तत्तथा न तदन्यथा ।
चिकीर्षितं हि ते भर्तुर्न भवेज्जातु निष्फलम् ॥ ७-७७-२६ (४७६१२)
यदि च मनुजपन्नगाः पिशाचा
रजनिचचाराः पतगाः सुरासुराश्च ।
रणगतमभियान्ति सिन्धुराजं

न स भविता सह तैरपि प्रभाते ॥ ॥ ७-७७-२७ (४७६१३)

इति श्रीमन्महाभारते द्रोणपर्वणि प्रतिज्ञापर्वणि
सप्तसप्ततितमोऽध्यायः ॥ ७७ ॥
Mahabharata - Drona Parva - Chapter Footnotes

५-७७-२७ अभियान्ति रक्षिष्यन्ति ॥
५-७७-७७ सप्तसप्ततितमोऽध्यायः ॥

---

द्रोनपर्व-अध्यय०७८
॥ श्रीः ॥
७.७८. अध्यायः ७८

Mahabharata - Drona Parva - Chapter Topics
अभिमन्युमनुशोच्य विलपन्त्याः सुभद्रायाः कृष्णेनाश्वासनम् ॥ १ ॥

Mahabharata - Drona Parva - Chapter Text

७-७८-० (४७६१४)
सञ्जय उवाच। ७-७८-०क्ष् (४४६२)
एतच्छ्रुत्वा वचस्तस्य केशवस्य महात्मनः ।
सुभद्रा पुत्रशोकार्ता विललाप सुदुःखिता ॥ ७-७८-१ (४७६१५)
हा पुत्रा मम मन्दायाः कथमेत्यासि संयुगम् ।
निधनं प्राप्तवांस्तात पितुस्तुल्यपराक्रमः ॥ ७-७८-२ (४७६१६)
कथमिन्दीवरश्यामं सुदंष्ट्रं चारुलोचनम् ।
मुखं ते दृश्यते वत्स गुण्ठितं रणरेणुना ॥ ७-७८-३ (४७६१७)
नूनं शूरं निपतितं त्वां पश्यन्त्यनिवर्तिनम् ।
सुशिरोग्रीवबाह्वंसं व्यूढोरस्कं नतोदरम् ॥ ७-७८-४ (४७६१८)
चारूपचितसर्वाङ्गं स्वक्षं शस्त्रक्षताचितम् ।
भूतानि त्वां निरीक्षन्ते भूमौ चन्द्रमिवोदितम् ॥ ७-७८-५ (४७६१९)
शयनीयं पुराऽध्युष्य स्पर्ध्यास्तरणसंवृतम् ।
भूमावद्य कथं शेषे विप्रविद्धः सुखोचितः ॥ ७-७८-६ (४७६२०)
योऽन्वास्यत पुरा वीरो वरस्त्रीभिर्महाभुजः ।
कथमन्वास्यते सोऽद्य शिवाभिः पतितो मृधे ॥ ७-७८-७ (४७६२१)
योऽस्तूयत पुरा हृष्टैः सूतमागधबन्दिभिः ।
सोऽद्य क्रव्याद्गणैर्घोरैर्विनदद्भिरुपास्येत ॥ ७-७८-८ (४७६२२)

पाण्डवेषु च नाथेषु वृष्णिवीरेषु वा विभो ।
पाञ्चालेषु च वीरेषु हतः केनास्यनाथवत् ॥ ७-७८-९ (४७६२३)
ग्यत्र त्वं केशवे नाथे सत्यनाथो यथा हतः'।
अतृप्तदर्शना पुत्र दर्शनस्य तवानघ ।
मन्दभाग्या गमिष्यामि व्यक्तमद्य यमक्षयम् ॥ ७-७८-१० (४७६२४)
विशालाक्षं सुकेशान्तं चारुवाक्यं सुगन्धि च ।
तव पुत्र कदा भूयो मुखं द्रक्ष्यामि निर्व्रणम् ॥ ७-७८-११ (४७६२५)
धिग्बलं भीमसेनस्य धिक्पार्थस्य धनुष्मताम् ।
धिग्वीर्यं वृष्णिवीराणां चाञ्चालानां च धिग्बलं ॥ ७-७८-१२ (४७६२६)
धिक्केकयांस्तथा चेदीन्मत्स्यांश्चैवाथ सृञ्जयान् ।
ये त्वां रणगतं वीरं न शेकुरभिरक्षितुम् ॥ ७-७८-१३ (४७६२७)
अद्य पश्यामि पृथिवीं शून्यामिव हतत्विषम् ।
अभिमन्युमपश्यन्ती शोकव्याकुललोचना ॥ ७-७८-१४ (४७६२८)
स्वस्रीयं वासुदेवस्य पुत्रं गाण्डवीधन्वनः ।
कथं त्वाऽतिरथं वीरं द्रक्ष्याम्यद्य निपातितम् ॥ ७-७८-१५ (४७६२९)
एह्येहि तृषितो वत्स स्तनौ पूर्णौ पिबाशु मे ।
अङ्कमारुह्य मन्दाया ह्यतृप्तायाश्च दर्शने ॥ ७-७८-१६ (४७६३०)
हा वीर दृष्टो नष्टश्च धनं स्वप्न इवासि मे ।
अहो ह्यनित्यं मानुष्यं जलबुद्बुदचञ्चलम् ॥ ७-७८-१७ (४७६३१)
इमां ते तरुणीं भार्यां तवाधिभिरभिप्लुताम् ।
ग्उत्तरामुत्तमां जात्या सुशीलां प्रिय भाषिणीम् ॥ ७-७८-१८ (४७६३२)
शनकैः परिरभ्यैनां स्नुषां मम यशस्विनीम् ।
सुकुमारीं विशालाक्षीं पूर्णचन्द्रनिभाननाम् ॥ ७-७८-१९ (४७६३३)
बालपल्लवतन्वङ्गीं मत्तमातङ्गगामिनीम् ।
बिम्बाधरोष्ठीमबलामभिमन्यो प्रहर्षय ॥ ७-७८-२० (४७६३४)
त्वया विना कथं पुत्र जीर्णां पतितमानसाम्'।
इमां सन्धारयिष्यामि वृषभादिव धेनुकाम् ॥ ७-७८-२१ (४७६३५)
अहो ह्यकाले प्रस्थानं कृतवानसि पुत्रक ।
विहाय फलकाले मां सुगृद्धां तव दर्शने ॥ ७-७८-२२ (४७६३६)
नूनं गतिः कृतान्तस्य प्राज्ञैरपि सुदुर्विदा ।
यत्र त्वं केशवे नाथे सङ्ग्रामेऽनाथवद्धतः ॥ ७-७८-२३ (४७६३७)
यज्वनां दानशीलानां ब्राह्मणानां कृतात्मनाम् ।
चरितब्रह्मचर्याणां पुण्यतीर्थावगाहिनाम् ॥ ७-७८-२४ (४७६३८)
कृतज्ञानां वदान्यानां गुरुशुश्रूषिणामपि ।
सहस्रदक्षिणानां च या गतिस्तामवाप्नुहि ॥ ७-७८-२५ (४७६३९)
या गतिर्युध्यमानानां शूराणामनिवर्तिनाम् ।

हत्वारीन्निहतानां च सङ्ग्रामे तां गति व्रज ॥ ७-७८-२६ (४७६४०)
गोसहस्रप्रदातॄणां क्रतुदानां च या गतिः ।
नैवेशिकं चाभिमतं ददतां या गतिः शुभा ॥ ७-७८-२७ (४७६४१)
ब्राह्मणेभ्यः शरण्येभ्यो निधिं निदधतां च या ।
या चापि न्यस्तदण्डानां तां गतिं व्रज पुत्रक ॥ ७-७८-२८ (४७६४२)
ब्रह्मचर्येण यां यान्ति मुनयः संशितव्रताः ।
एकपत्न्यश्च यां यान्ति तां गतिं व्रज पुत्रक ॥ ७-७८-२९ (४७६४३)
राज्ञा सुचरितैर्या च गतिर्भवति शाश्वती ।
चरमाश्रमिणां पुण्यैः सेवितानां पुरः स्थितैः ॥ ७-७८-३० (४७६४४)
दीनानुकम्पिनां या च सततं संविभागिनाम् ।
पैशुन्याच्च निवृत्तानां तां गतिं व्रज पुत्रक ॥ ७-७८-३१ (४७६४५)
व्रतिनां धर्मशीलानां गुरुशुश्रूषिणामपि ।
अमोघातिथिनां या च तां गतिं व्रज पुत्रक ॥ ७-७८-३२ (४७६४६)
कृच्छ्रेषु या धारयतामात्मानं व्यसनेषु च ।
गतिः शोकाग्निदग्धानां तां गतिं व्रज पुत्रक ॥ ७-७८-३३ (४७६४७)
मातापित्रोश्च शुश्रूषां कल्पयन्तीह ये सदा ।
स्वदारनिरतानां च या गतिस्तामवाप्नुहि ॥ ७-७८-३४ (४७६४८)
ऋतुकाले स्वकां भार्यां गच्छतां या मनीषिणाम् ।
परस्त्रीभ्यो निवृत्तानां तां गतिं व्रज पुत्रक ॥ ७-७८-३५ (४७६४९)
साम्ना ये सर्वभूतानि पश्यन्ति गतमत्सराः ।
नारुन्तुदानां क्षमिणां या गतिस्तामवाप्नुहि ॥ ७-७८-३६ (४७६५०)
मधुमांसान्निवृत्तानां मदाद्दम्भात्तथाऽनृतात् ।
परोपतापादन्यायात्तां गतिं व्रज पुत्रक ॥ ७-७८-३७ (४७६५१)
हीमन्तः सर्वशास्त्रज्ञा ज्ञानतृप्ता जितेन्द्रियाः ।
यां गतिं साधवो यान्ति तां गतिं व्रज पुत्रक ॥ ७-७८-३८ (४७६५२)
सञ्जय उवाच। ७-७८-३९क्ष् (४४६३)
एवं विलपतीं दीनां सुभद्रां शोककर्शिताम् ।
अन्वपद्यत पाञ्चाली वैराटिसहितां तदा ॥ ७-७८-३९ (४७६५३)
सा प्रकामं रुदित्वा च विलप्य च सुदुःखिता ।
उन्मत्तवत्तदा राजन्विसंज्ञा पतिता क्षितौ ॥ ७-७८-४० (४७६५४)
सोपचारस्तु कृष्णस्तां दुःखितां भृशदुःखितः ।
सिक्त्वाम्भसा समाश्वास्य तत्तदुक्त्वा हितं वचः ॥ ७-७८-४१ (४७६५५)
विसंज्ञकल्पां रुदतीमपविद्धां प्रवेपतीम् ।
भगिनीं पुण्डरीकाक्ष इदं वचनमब्रवीत् ॥ ७-७८-४२ (४७६५६)
सुभद्रे मा शुचः पुत्रं पाञ्चाल्याश्वासयोत्तराम् ।
गतोऽभिमन्युः प्रथितां गतिं क्षत्रियपुङ्गवः ॥ ७-७८-४३ (४७६५७)

ये चान्येऽपि कुले सन्ति पुरुषा नो वरानने ।
सर्वे न ते गतिं यान्ति याऽभिमन्योर्यशस्विनः ॥ ७-७८-४४ (४७६५८)
कुर्याम तद्वयं कर्म कुर्युर्युत्सुहृदश्च नः ।
कृतवान्यादृगद्यैकस्तव पुत्रो महारथः ॥ ७-७८-४५ (४७६५९)
सञ्जय उवाच। ७-७८-४६क्ष् (४४६४)
एवमाश्वास्य भगिनीं द्रौपदीमपि चोत्तराम् ।
पार्थस्यैव महाबाहुः पार्श्वमागादरिन्दमः ॥ ७-७८-४६ (४७६६०)
ततोऽभ्यनुज्ञाय नृपान्कृष्णो बन्धूंस्तथाऽर्जुनम् ।
विवेशान्तः पुरे राजंस्ते च जग्मुः स्वमालयम् ॥ ॥ ७-७८-४७ (४७६६१)

इति श्रीमन्महाभारते द्रोणपर्वणि प्रतिज्ञापर्वणि
अष्टसप्ततितमोऽध्यायः ॥ ७८ ॥
Mahabharata - Drona Parva - Chapter Footnotes

५-७८-२७ नैवेशिकं सोपकरणं गृहम् । नैवेशिकायेति पाठे
गृहाश्रमोन्मुखाय विद्याव्रतस्नाताय। अभिमतं विवाहोपयुक्तम् ॥
५-७८-२८ न्यस्तदण्डानां निरस्ताभिमानानाम् । दण्डो स्त्री लगुडे पुमानित्यु
पक्रम्य दमे यमेऽबिमानेचेति मेदिनी ॥
५-७८-२९ एकपत्न्यः पतिव्रताः ॥
५-७८-७८ अष्टसप्ततितमोऽध्यायः ॥

---

द्रोनपर्व-अध्यय०७९
॥ श्रीः ॥
७.७९. अध्यायः ७९

Mahabharata - Drona Parva - Chapter Topics
श्रीकृष्णेन रात्रावर्जुनेन त्र्यम्बकाय बलिप्रदापनम् ॥ १ ॥
कृष्णदारुकसम्भाषणम् ॥ २ ॥

Mahabharata - Drona Parva - Chapter Text

७-७९-० (४७६६२)
सञ्जय उवाच। ७-७९-०क्ष् (४४६५)
ततोऽर्जुनस्य भवनं प्रविश्याप्रतिमं विभुः ।
स्पृष्ट्वाम्भः पुण्डरीकाक्षः स्थण्डिले शुभलक्षणे ।
सन्तस्तार शुभां शय्यां दर्भैर्वैदूर्यसन्निभैः ॥ ७-७९-१ (४७६६३)

ततो माल्येन विधिवल्लाजैर्गन्धैः सुमङ्गलैः ।
अलञ्चकार तां शय्यां परिवार्यायुधोत्तमैः ॥ ७-७९-२ (४७६६४)
ततः स्पृष्टोदकं पार्थं विनीतपरिचारकम् ।
नैत्यकं दर्शयाञ्चक्रे नैशं त्रैयम्बकं बलिम् ॥ ७-७९-३ (४७६६५)
ततः प्रीतमनाः पार्थो गन्धमाल्यैश्च माधवम् ।
अलङ्कृत्योपहारं तं नैशं तस्मै न्यवेदयत् ॥ ७-७९-४ (४७६६६)
साधुसाध्विति गोविन्दः फल्गुनं प्रत्यभाषत ॥ ७-७९-५ (४७६६७)
सुप्यतां पार्थ भद्रं ते कल्याणाय व्रजाम्यहम् ।
स्थापयित्वा ततो द्वास्थान्गोप्तॄंश्चात्तायुधान्नरान् ॥ ७-७९-६ (४७६६८)
दारुकानुगतः श्रीमान्विवेश शिबिरं स्वकम् ।
शिश्ये च शयने शुभ्रे बहुकृत्य विचिन्तयन् ॥ ७-७९-७ (४७६६९)
पार्थाय सर्वं भगवाञ्शोकदुःखापहं विधिम् ।
व्यदधात्पुण्डरीकाक्षस्तेजोद्युतिविवर्धनम् ॥ ७-७९-८ (४७६७०)
योगमास्थाय युक्तात्मा सर्वेषामीश्वरेश्वरः ।
श्रेयस्कामः पृथुयशा विष्णुर्जिष्णुप्रियङ्करः ॥ ७-७९-९ (४७६७१)
न पाण्डवानां शिबिरे कश्चित्सुष्वाप तां निशाम् ।
प्रजागरः सर्वजनं ह्याविवेश विशाम्पते ॥ ७-७९-१० (४७६७२)
पुत्रशोकाभितप्तेन प्रतिज्ञातो महात्मना ।
श्वः सिन्धुराजस्य वधः कार्यो गाण्डीवधन्वना ॥ ७-७९-११ (४७६७३)
तत्कथं नु महाबाहुर्वासविः परवीरहा ।
प्रतिज्ञां सफलां कुर्यादिति ते समचिन्तयन् ॥ ७-७९-१२ (४७६७४)
कष्टं हीदं व्यवसितं पाण्डवेन महात्मना ।
पुत्रशोकाभिभूतेन प्रतिज्ञा महती कृता ॥ ७-७९-१३ (४७६७५)
भ्रातरश्चापि विक्रान्ता बहुलानि बलानि च ।
धृतराष्ट्रस्य पुत्रेण सर्वतः सन्निवेशिताः ॥ ७-७९-१४ (४७६७६)
स हत्वा सैन्धवं सङ्ख्ये पुनरेतु जयी सुखी ।
Ґहत्वा रिपुगणं सर्वं पारयित्वा महाव्रतम् ॥ ७-७९-१५ (४७६७७)
यद्यस्ति सुकृतं किञ्चिदस्माकं हन्तु सैन्धवम् ।
जित्वा सर्वान्रिपून्पार्थस्त्रातु नोऽस्मान्महाभयात् ॥ ७-७९-१६ (४७६७८)
एवमाशंसमानास्ते केचित्तस्थुरुपश्रुतिम् ।
श्रुत्वा चेष्टं सुमनसो व्यक्तमाशंसिरे जयम् ॥ ७-७९-१७ (४७६७९)
भविता नु कथं कृत्यमिदमित्यब्रुवञ्जनाः'।
श्वोऽहत्वा सिन्धुराजं वै धूमकेतुं प्रवेक्ष्यति ॥ ७-७९-१८ (४७६८०)
न शक्यमनृतां कर्तुं प्रतिज्ञां विजयेन हि ।
Ґमहद्धि साहसं पार्थः कृतवाच्छोकमोहितः'॥ ७-७९-१९ (४७६८१)
धर्मपुत्रः कथं राजा भविष्यति मृतेऽर्जुने ।

तस्मिन्हि विजयः कृत्स्नः पाण्डवेन समाहितः ॥ ७-७९-२० (४७६८२)
यदि नोऽस्ति कृतं किञ्चिद्यदि दत्तं हुतं यदि ।
फलेन तस्य सर्वस्य सव्यसाची जयत्वरीन् ॥ ७-७९-२१ (४७६८३)
सञ्जय उवाच। ७-७९-२२क्ष् (४४६६)
एवं कथयतां तेषां जयमाशंसतां प्रभो ।
कृच्छ्रेण महता राजन्रजनी व्यत्यवर्तत ॥ ७-७९-२२ (४७६८४)
तस्या रजन्या मध्ये तु प्रतिबुद्धो जनार्दनः ।
स्मृत्वा प्रतिज्ञां पार्थस्य दारुकं प्रत्यभाषत ॥ ७-७९-२३ (४७६८५)
अर्जुनेन प्रतिज्ञातमार्तेन हतबन्धुना ।
जयद्रथं वधिष्यामि श्वोभूत इति दारुक ॥ ७-७९-२४ (४७६८६)
तत्तु दुर्योधनः श्रुत्वा मन्त्रिभिर्मन्त्रयिष्यति ।
यथा जयद्रथं पार्थो न हन्यादिति संयुगे ॥ ७-७९-२५ (४७६८७)
अक्षौहिण्यो हि ताः सर्वा रक्षिष्यन्ति जयद्रथम् ।
द्रोणश्च सहपुत्रेण सर्वास्त्रविधिपारगः ॥ ७-७९-२६ (४७६८८)
एको वीरः सहस्राक्षो दैत्यदानवदर्पहा ।
सोऽपि तं नोत्सहेताजौ हन्तुं द्रोणेन रक्षितम् ॥ ७-७९-२७ (४७६८९)
सोऽहं श्वस्तत्करिष्यामि यथा कुन्तीसुतोऽर्जुनः ।
अप्राप्तेऽस्तं दिनकरे हनिष्यति जयद्रथम् ॥ ७-७९-२८ (४७६९०)
न हि दारा न मित्राणि ज्ञातयो न च बान्धवाः ।
कश्चिदन्यः प्रियतरः कुन्तीपुत्रान्ममार्जुनात् ॥ ७-७९-२९ (४७६९१)
अनर्जुनमिमं लोकं मुहूर्तमपि दारुक ।
उदीक्षितुं न शक्तोऽहं भविता न च तत्तथा ॥ ७-७९-३० (४७६९२)
अहं विजित्य तान्सर्वान्सहसा सहयद्विपान् ।
अर्जुनार्थे हनिष्यामि सकर्णान्ससुयोधनान् ॥ ७-७९-३१ (४७६९३)
श्वो निरीक्षन्तु मे वीर्यं त्रयो लोका महाहवे ।
धनञ्जयार्थे समरे पराक्रान्तस्य दारुक ॥ ७-७९-३२ (४७६९४)
श्वो नरेन्द्रसहस्राणि राजपुत्रशतानि च ।
साश्वद्विपरथान्याजौ विद्रविष्यामि दारुक ॥ ७-७९-३३ (४७६९५)
श्वस्तां चक्रप्रमथितां द्रक्ष्यसे नृपवाहिनीम् ।
मया क्रुद्धेन समरे पाण्डवार्थे निपातिताम् ॥ ७-७९-३४ (४७६९६)
श्वः सदेवाः सगन्धर्वाः पिशाचोरगराक्षसाः ।
ज्ञास्यन्ति लोकाः सर्वे मां सुहृदं सव्यसाचिनः ॥ ७-७९-३५ (४७६९७)
यस्तं द्वेष्टि स मां द्वेष्टि यस्तं चानु स मामनु ।
इति सङ्कल्प्यतां बुद्ध्या शरीरार्धं ममार्जुनः ॥ ७-७९-३६ (४७६९८)
यथा त्वं मे प्रभातायामस्यां निशि रथोत्तमम् ।
कल्पयित्वा यथाशास्त्रमादाय व्रज संयतः ॥ ७-७९-३७ (४७६९९)

गदां कौमोदकीं दिव्यां शक्तिं चक्रं धनुः शरान् ।
आरोप्य वै रथे सूत सर्वोपकरणानि च ॥ ७-७९-३८ (४७७००)
स्थानं च कल्पयित्वाऽथ रथोपस्थे ध्वजस्य मे ।
वैनतेयस्य वीरस्य समरे रथशोभिनः ॥ ७-७९-३९ (४७७०१)
छत्रं जाम्बूनदैर्जालैरर्कज्वलनसप्रभैः ॥
विश्वकर्मकृतैर्दिव्यैरश्वानपि विभूषय ॥ ७-७९-४० (४७७०२)
बलाहकं मेघपुष्पं शैब्यं सुग्रीवमेव च ।
युक्त्वा वाजिवरांस्तत्र कवची तिष्ठ दारुक ॥ ७-७९-४१ (४७७०३)
पाञ्चजन्यस्य निर्घोषं पर्जन्यनिनदोपमम् ।
श्रुत्वा च भैरवं नादमुपेयास्त्वं जवेन माम् ॥ ७-७९-४२ (४७७०४)
एकाह्नाऽहममर्षं च सर्वदुःखानि चैव ह ।
भ्रातुः पैतृष्वसेयस्य व्यपनेष्यामि दारुक ॥ ७-७९-४३ (४७७०५)
सर्वोपायैर्यतिष्यामि यथा बीभत्सुराहवे ।
पश्यतां धार्तराष्ट्राणां हनिष्यति जयद्रथम् ॥ ७-७९-४४ (४७७०६)
यस्ययस्य च बीभत्सुर्वधे यत्नं करिष्यति ।
आशंसेऽहं रणे तन्तं तत्रतत्र हनिष्यति ॥ ७-७९-४५ (४७७०७)
दारुक उवाच। ७-७९-४६क्ष् (४४६७)
जय एव ध्रुवस्तस्य कुत एव पराजयः ।
यस्य त्वं पुरुषव्याघ्र सारथ्यमुपजग्मिवान् ॥ ७-७९-४६ (४७७०८)
एवं चैतत्करिष्यामि यथा मामनुभाषसे ।
सुप्रभातामिमां रात्रिं जयाय विजयस्य हि ॥ ॥ ७-७९-४७ (४७७०९)

इति श्रीमन्महाभारते द्रोणपर्वणि प्रतिज्ञापर्वणि
एकोनाशीतितमोऽध्यायः ॥ ७९ ॥
Mahabharata - Drona Parva - Chapter Footnotes

५-७९-३ लाजैरक्षतैः ॥
५-७९-४ तस्मै त्र्यम्बकाय ॥
५-७९-८ पार्थाय तादर्थ्ये चतुर्थी ।तेजः प्रतापः ॥
५-७९-१३ महात्मना इत्यस्यानन्तरं स च राजा महावीर्यः पारयत्वर्जुनः
स ताम् इत्येकमर्ध ङ ।च झ ञ। पुस्तकेषु अधिकं वर्तते ॥
५-७९-३१ सहसा बलेन ॥
५-७९-३६ अनु अनुगतः ॥
५-७९-७९ एकोनाशीतितमोऽध्यायः ॥

---

द्रोनपर्व-अध्यय०८०

॥ श्रीः ॥
७.८०. अध्यायः ८०

Mahabharata - Drona Parva - Chapter Topics
अर्जुनस्य स्वप्ने कृष्णेन सह कैलासगमनम् ॥ १ ॥
तथा स्तुत्या रुद्रप्रसादनम् ॥ २ ॥

Mahabharata - Drona Parva - Chapter Text

७-८०-० (४७७१०)
सञ्जय उवाच। ७-८०-०क्ष् (४४६८)
धार्तराष्ट्रस्य तं मन्त्रं स्मरन्नेव धनञ्जयः ।
प्रतिज्ञामात्मनो रक्षन्मुमोहाचिन्त्यविक्रमः ॥ ७-८०-१ (४७७११)
तं तु शोकेन सन्तप्तं स्वप्ने कपिवरध्वजम् ।
आससाद महातेजा ध्यायन्तं गरुडध्वजः ॥ ७-८०-२ (४७७१२)
प्रत्युत्थानं च कृष्णस्य सर्वावस्थासु फल्गुनः ।
न लोपयति धर्मात्मा भक्त्या प्रेम्णा च सर्वदा ॥ ७-८०-३ (४७७१३)
प्रत्युत्थाय च गोविन्दं स्वं तस्मै चासनं ददौ ।
न चासने स्वयं बुद्धिं बीभत्सुर्व्यदधात्तदा ॥ ७-८०-४ (४७७१४)
ततः कृष्णो महातेजा जानँल्लोकस्य निश्चयम् ।
कुन्तीपुत्रमिदं वाक्यमासीनः स्थितमब्रवीत् ॥ ७-८०-५ (४७७१५)
मा विषादे मनः पार्थ कृथाः कालो हि दुर्जयः ।
कालः सर्वाणि भूतानि नियच्छति भवाभवे ॥ ७-८०-६ (४७७१६)
किमर्थं च विषादस्ते तद्ब्रूहि द्विपदां वर ।
न शोच्यं विदुषां श्रेष्ठ शोकः कार्यविनाशनः ॥ ७-८०-७ (४७७१७)
यत्तु कार्यं भवेत्कार्यं कर्मणा तत्समाचर ।
हीनचेष्टस्य यः शोकः स हि शत्रुर्धनञ्जय ॥ ७-८०-८ (४७७१८)
शोचन्नन्दयते शत्रून्कर्शयत्यपि बान्धवान् ।
क्षीयते च नरस्तस्मान्न त्वं शोचितुमर्हसि ॥ ७-८०-९ (४७७१९)
सञ्जय उवाच। ७-८०-१०क्ष् (४४६९)
इत्युक्तो वासुदेवेन बीभत्सुरपराजितः ।
आबभाषे तदा विद्वानिदं वचनमर्थवत् ॥ ७-८०-१० (४७७२०)
मया प्रतिज्ञा महती जयद्रथवधे कृता ।
श्वोऽस्मि हन्ता दुरात्मानं पुत्रघ्नमिति केशव ॥ ७-८०-११ (४७७२१)
मत्प्रतिज्ञाविघातार्थं धार्तराष्ट्रैः किलाच्युत ।
पृष्ठतः सैन्धवः कार्यः सर्वैर्गुप्तो महारथैः ॥ ७-८०-१२ (४७७२२)

दश चैका च ताः कृष्ण अक्षौहिण्यः सुदुर्जयाः ।
हतावशेषास्तत्रेमा हन्त माधव सङ्ख्यया ॥ ७-८०-१३ (४७७२३)
ताभिः परिवृतः सङ्ख्ये सर्वैश्चैव महारथैः ।
कथं शक्येत सन्द्रष्टुं दुरात्मा कृष्ण सैन्धवः ॥ ७-८०-१४ (४७७२४)
प्रतिज्ञापारणं चापि न भविष्यति केशव ।
प्रतिज्ञायां च हीनायां कथं जीवति मद्विधः ॥ ७-८०-१५ (४७७२५)
दुःखापायस्य मे वीर विकाङ्क्षा परिवर्तते ।
द्रुतं च याति सविता तत एतद्ब्रवीम्यहम् ॥ ७-८०-१६ (४७७२६)
सञ्जय उवाच। ७-८०-१७क्ष् (४४७०)
शोकस्थानं तु तच्छ्रुत्वा पार्थस्य द्विजकेतनः ।
संस्पृश्याम्भस्ततः कृष्णः प्राङ्मुखः समवस्थितः ॥ ७-८०-१७ (४७७२७)
इदं वाक्यं महातेजा बभाषे पुष्करेक्षणः ।
हितार्थं पाण्डुपुत्रस्य सैन्धवस्य वधे कृती ॥ ७-८०-१८ (४७७२८)
श्रीभगवानुवाच। ७-८०-१९क्ष् (४४७१)
पार्थ पाशुपतं नाम परमास्त्रं सनातनम् ।
येन सर्वान्मृधे दैत्याञ्जघ्ने देवो महेश्वरः ॥ ७-८०-१९ (४७७२९)
यदि तद्विदितं तेऽद्य श्वो हन्ताऽसि जयद्रथम् ।
अथ ज्ञातं प्रपद्यस्य मनसा वृषभध्वजम् ॥ ७-८०-२० (४७७३०)
तं देवं मनसा ध्यात्वा जोषमास्स्व धनञ्जय ।
ततस्तस्य प्रसादात्त्वं भक्त्या प्राप्स्यसि तन्महत् ॥ ७-८०-२१ (४७७३१)
सञ्जय उवाच। ७-८०-२२क्ष् (४४७२)
ततः कृष्णवचः श्रुत्वा संस्पृश्याम्भो धनञ्जयः ।
भूमावासीन एकाग्रो जगाम मनसा भवम् ॥ ७-८०-२२ (४७७३२)
ततः प्रणिहितो ब्राह्मे मुहूर्ते शुभलक्षणे ।
आत्मानमर्जुनोऽपश्यद्गगने सहकेशवम् ॥ ७-८०-२३ (४७७३३)
पुण्यं हिमवतः पादं मणिमन्तं च पर्वतम् ।
ज्योतिर्भिश्च समाकीर्णं सिद्धचारणसेवितम् ॥ ७-८०-२४ (४७७३४)
वायुवेगगतिः पार्थः खं भेजे सहकेशवः ।
केशवेन गृहीतः स दक्षिणे विभुना भुजे ॥ ७-८०-२५ (४७७३५)
प्रेक्षमाणो बहून्भावाञ्जगामाद्भुतदर्शनान् ।
उदीच्यां दिशि धर्मात्मा सोपश्यच्छ्वेतपर्वतम् ॥ ७-८०-२६ (४७७३६)
कुबेरस्य विराहे च नलिनीं पद्मभूषिताम् ।
सरिच्छ्रेष्ठां च तां गङ्गां वीक्षमाणो बहूदकाम् ॥ ७-८०-२७ (४७७३७)
सदा पुष्पफलैर्वृक्षैरुपेतां स्फटिकोपलाम् ।
सिंहव्याघ्रसमाकीर्णां नानामृगसमाकुलाम् ॥ ७-८०-२८ (४७७३८)
पुण्याश्रमवतीं रम्यां मनोज्ञाण्डजसेविताम् ।

मन्दरस्य प्रदेशांश्च किन्नरोद्गीतनादितान् ॥ ७-८०-२९ (४७७३९)
हेमरूप्यमयैः शृङ्गैर्नानौषधिविदीपितान् ।
तथा मन्दारवृक्षैश्च पुष्पितैरुपशोभितान्। ७-८०-३० (४७७४०)
स्निग्धाञ्जनचयाकारं सम्प्राप्तः कालपर्वतम् ।
ब्रह्मतुङ्गं नदीश्चान्यास्तथा जनपदानपि ॥ ७-८०-३१ (४७७४१)
स तुङ्गं शतशृङ्गं च शर्यातिवनमेव च ।
पुण्यमश्वशिरस्थानं स्थानमाथर्वणस्य च ॥ ७-८०-३२ (४७७४२)
वृषदंशं च शैलेन्द्रं महामन्दरमेव च ।
अप्सरोभिः समाकीर्णं किन्नरैश्चोपशोभितम् ॥ ७-८०-३३ (४७७४३)
तस्मिञ्शैले व्रजन्पार्थः सकृष्णः समवैक्षत ।
शुभैः प्रस्रवणैर्जुष्टां हेमधातुविभूषिताम् ॥ ७-८०-३४ (४७७४४)
चन्द्ररश्मिप्रकाशाङ्गीं पृथिवीं पुरमालिनीम् ।
समुद्रांश्चाद्भुताकारानपश्यद्बहुलाकरान् ॥ ७-८०-३५ (४७७४५)
वियद्द्यां पृथिवीं चैव तथा विष्णुपदं व्रजन् ।
विस्मितः सह कृष्णेन क्षिप्तो बाण इवाभ्यगात् ॥ ७-८०-३६ (४७७४६)
ग्रहनक्षत्रसोमानां सूर्याग्न्योश्च समत्विषम् ।
अपश्यत तदा पार्थो ज्वलन्तमिव पर्वतम् ॥ ७-८०-३७ (४७७४७)
समासाद्य तु तं शैलं शैलाग्रे समवस्थितम् ।
तपोनित्यं महात्मानमपश्यद्वृषभध्वजम्। ७-८०-३८ (४७७४८)
सहस्रमिव सूर्याणां दीप्यमानं स्वतेजसा ।
शूलिनं जटिलं गौरं वल्कलाजिनवाससम् ॥ ७-८०-३९ (४७७४९)
नयनानां सहस्रैश्च विचित्राङ्गं महौजसम् ।
पार्वत्या सहितं देवं भूतसङ्घैश्च भास्वरैः ॥ ७-८०-४० (४७७५०)
गीतवादित्रसन्नादैर्हास्यलास्यसमन्वितम् ।
वग्लितास्फोटितोत्क्रुष्टैः पुण्यैर्गन्धैश्च सेवितम् ॥ ७-८०-४१ (४७७५१)
स्तूयमानं स्तवैर्दिव्यैर्ऋषिभिर्ब्रह्मवादिभिः ।
गोप्तारं सर्वभूतानामीशानं वरदं शिवम् ॥ ७-८०-४२ (४७७५२)
वासुदेवस्तु तं दृष्ट्वा जगाम शिरसा क्षितिम् ।
पार्थेन सह धर्मात्मा गृणन्ब्रह्म सनातनम् ॥ ७-८०-४३ (४७७५३)
लोकादिं विश्वकर्माणमजमीशानमव्ययम् ।
मनसः परमं योनिं खं वायुं ज्योतिषां निधिम् ॥ ७-८०-४४ (४७७५४)
स्रष्टारं वारिधाराणां भुवश्च प्रकृतिं पराम् ।
देवदानवयक्षाणां मानवानां च शासकम् ॥ ७-८०-४५ (४७७५५)
योगानां च परं धाम दृष्टं ब्रह्मविदां निधिम् ।
चारचरस्य स्रष्टारं प्रतिहर्तारमेव च ॥ ७-८०-४६ (४७७५६)
कालकोपं महात्मानं शक्रसूर्यगुणोदयम् ।

ववन्दतुस्तदा कृष्णौ वाङ्मनोबुद्धिकर्मभिः ॥ ७-८०-४७ (४७७५७)
यं प्रपद्यन्ति विद्वांसः सूक्ष्माध्यात्मपदैषिणः ।
तमजं कारमात्मानं जग्मतुः शरणं भवम् ॥ ७-८०-४८ (४७७५८)
अर्जुनश्चापि तं देवं भूयो भूयोऽप्यवन्दत ।
ज्ञात्वा तं सर्वभूतादिं भूतभव्यभवोद्भवम् ॥ ७-८०-४९ (४७७५९)
ग्शरण्यं शरणं देवमीशानं परमेश्वरम् ।
जगाम जगतां नाथमर्जुनः सजनार्दनः'॥ ७-८०-५० (४७७६०)
ततस्तावागतौ दृष्ट्वा नरनारायणावुभौ ।
सुप्रसन्नमनाः शर्वः प्रोवाच प्रहसन्निव ॥ ७-८०-५१ (४७७६१)
स्वागतं वां नरश्रेष्ठावुत्तिष्ठेतां गतक्लमौ ।
किञ्च वामीप्सितं वीरौ मनसः क्षिप्रमुच्यताम् ॥ ७-८०-५२ (४७७६२)
येन कार्येण सम्प्राप्तौ युवां तत्साधयामि किम् ।
व्रियतामात्मनः श्रेयस्तत्सर्वं प्रददानि वाम् ॥ ७-८०-५३ (४७७६३)
सञ्जय उवाच। ७-८०-५४क्ष् (४४७३)
ततस्तद्वचनं श्रुत्वा प्रत्युत्थाय कृताञ्जली ।
वासुदेवार्जुनौ शर्वं तुष्टुवाते महामती ।
भक्त्यास्तवेन दिव्येन महात्मानावनिन्दितौ ॥ ७-८०-५४ (४७७६४)
कृष्णार्जुनावूचतुः। ७-८०-५५क्ष् (४४७४)
नमो भवाय शर्वाय रुद्राय वरदाय च ।
पशूनां पतये नित्यमुग्राय च कपर्दिने ॥ ७-८०-५५ (४७७६५)
महादेवाय भीमाय त्र्यम्बकाय च शान्तये ।
ईशानाय मखघ्नाय नमोऽस्त्वन्धकघातिने ॥ ७-८०-५६ (४७७६६)
कुमारगुरवे तुभ्यं नीलग्रीवाय वेधसे ।
पिनाकिने हविष्याय सत्याय विभवे सदा ॥ ७-८०-५७ (४७७६७)
विलोहिताय ध्रूम्राय व्याधायानपराजिते ।
नित्यं नीलशिखण्डाय शूलिने दिव्यचक्षुषे ॥ ७-८०-५८ (४७७६८)
होत्रे पोत्रे त्रिनेत्राय व्याधाय वसुरेतसे ।
अचिन्त्यायाम्बिकाभर्त्रे सर्वदेवस्तुताय च ॥ ७-८०-५९ (४७७६९)
वृषध्वजाय मुण्डाय जटिने ब्रह्मचारिणे ।
तप्यमानाय सलिले ब्रह्मण्यायाजिताय च ॥ ७-८०-६० (४७७७०)
विश्वात्मने विश्वसृजे विश्वमावृत्य तिष्ठते ।
नमोनमस्ते सेव्याय भूतानां प्रभवे सदा ॥ ७-८०-६१ (४७७७१)
ब्रह्मवक्त्राय सर्वाय शंकराय शिवाय च ।
नमोस्तु वाचस्पतये प्रजानां पतये नमः ॥ ७-८०-६२ (४७७७२)
ग्अभिगम्याय काम्याय स्तुत्यायार्याय सर्वदा ।
नमोऽस्तु देवदेवाय महाभूतधराय च ।

नमो विश्वस्य पतये पत्तीनां पतये नमः'॥ ७-८०-६३ (४७७७३)
नमो विश्वस्य पतये महतां पतये नमः ।
नमः सहस्रशिरसे सहस्रभुजमृत्यवे ॥
सहस्रनेत्रपादाय नमोऽसङ्ख्येयकर्मणे। ७-८०-६४ (४७७७४)
नमो हिरण्यवर्णाय हिरण्यकवचाय च ।
भक्तानुकम्पिने नित्यं सिध्यतां नो वरः प्रभो ॥ ७-८०-६५ (४७७७५)
सञ्जय उवाच। ७-८०-६६क्ष् (४४७५)
एवं स्तुत्वा महादेवं वासुदेवः सहार्जुनः ।
प्रसादयामास भवं तदा ह्यस्त्रोपलब्धये ॥ ॥ ७-८०-६६ (४७७७६)

इति श्रीमन्महाभारते द्रोणपर्वणि प्रतिज्ञापर्वणि अशीतितमोऽध्यायः
॥ ८० ॥
Mahabharata - Drona Parva - Chapter Footnotes

५-८०-७ न शोच्यं शोको नाचरणीयः ॥
५-८०-८ कार्ये कृत्यं कार्यं करणीयं भवेदित्यन्वयः ॥
५-८०-२३ प्रणिहितः समातिxxxx ॥
५-८०-३२ अथर्वणस्य मुनेः ॥
५-८०-३६ तथा च व्रजन्विष्णुपदमाकाशमभ्यगादित्यन्वयः ॥
५-८०-४१ लास्यं नृत्तम् । वल्गितमितस्ततः प्रचारः। आस्फोटितं भुजाडम्बरः। उक्त्रुष्टमुच्चैः स्वनितम् ॥
५-८०-४४ विश्वं जगत्कर्म प्राप्यं यस्य ।ईशानमप्रतिहतेच्छम्। अव्ययमविकारम्। मनसः परमं प्रवृत्तिनिवृत्तिकारणम्। योनिमुत्पत्तिस्थानं च। ज्योतिषां तेजसां निधिमधिष्ठानम् ॥
५-८०-४६ योगानां योगदर्शिनां परं धाम परमाश्रयम् ।दृष्टं साक्षाद्भूतं ब्रह्मतत्त्वं तद्विदां निर्धि रहस्यम् ॥
५-८०-४७ कालइव कोपो यस्य ।शक्रस्य गुणा ऐश्वर्यादयः सूर्यस्य गुणाः प्रतापादयः तेषामुदयो यस्मात्। कालकेशं इति क। पाठः ॥
५-८०-४८ कारणात्मानं कारणैकस्वभावम् ॥
५-८०-५५ भावः सर्वप्रभुत्वात् ।शर्वः संहरणात् ॥
५-८०-५६ शान्तिः शमप्रधानत्वात् ॥
५-८०-५७ हविष्यः हविष्ययोग्यत्वात् ।विभुर्व्यापकत्वात् ॥
५-८०-५८ व्याधाय मृगहननात् ।द्विरुक्तिर्द्विस्तथाकरणात्। अनात्प्राणिनः पराजयतीति अनपराजित्सर्वभूतोत्तमत्वात्। नीलशिखण्डो नीलकेशत्वात् ॥
५-८०-५९ होता दीक्षितः भावेन हवनशीलत्वात् ।वसुरेता अग्नौ रेतः

क्षेपणात् ॥
५-८०-६० मुण्डो दीक्षितत्वात् । ब्रह्मचारी रेतोविधारणात् ॥
५-८०-६१ भूतानां प्राणिनां प्रमथादीनाम् ॥
५-८०-६२ ब्रह्मवक्रो वेदपूर्णमुखत्वात् । शिवो
मोक्षहेतुत्वात्। वाचस्पतिर्वाङ्मयप्रवर्तनात् ॥
५-८०-८० अशीतितमोऽध्यायः ॥

---

द्रोनपर्व-अध्यय०८१
॥ श्रीः ॥
७.८१. अध्यायः ८१

Mahabharata - Drona Parva - Chapter Topics
अर्जुनेन स्वप्ने शंकरात्पाशुपतास्त्रमुपलक्ष्य कृष्णेनसह पुनः
शिबिरं प्रत्यागमनम् ॥१ ॥

Mahabharata - Drona Parva - Chapter Text

७-८१-० (४७७७७)
सञ्जय उवाच। ७-८१-०क्ष् (४४७६)
ततः पार्थः प्रसन्नात्मा प्राञ्जलिर्वृषभध्वजम् ।
ददर्शोत्फुल्लनयनः समस्तं तेजसां निधिम् ॥ ७-८१-१ (४७७७८)
तं चोपहारं सुकृतं नैशं नैत्यकमात्मना ।
ददर्श त्र्यम्बकाभ्याशे वासुदेवनिवेदितम् ॥ ७-८१-२ (४७७७९)
ततोऽभिपूज्य मनसा कृष्णं शर्वं च पाण्डवः ।
इच्छाम्यहं दिव्यमस्त्रमित्यभाषत शङ्करम् ॥ ७-८१-३ (४७७८०)
ततः पार्थस्य विज्ञाय वरार्थे वचनं तदा ।
वासुदेवार्जुनौ देवः स्मयमानोऽभ्यभाषत ॥ ७-८१-४ (४७७८१)
स्वागतं वां नरश्रेष्ठौ विज्ञातं मनसेप्सितम् ।
येन कामेन सम्प्राप्तौ भवद्भ्यां तं ददाम्यहम् ॥ ७-८१-५ (४७७८२)
सरोऽमृतमयं दिव्यमभ्याशे शत्रुसूदनौ ।
तत्र मे तद्धनुर्दिव्यं शरश्च निहितः पुरा ॥ ७-८१-६ (४७७८३)
येन देवारयः सर्वे मया युधि निपातिताः ।
तत आनीयतां कृष्णौ सशरं धनुरुत्तमम् ॥ ७-८१-७ (४७७८४)
तथेत्युक्त्वा तु तौ वीरौ सर्वपारिषदैः सह ।
प्रस्थितौ तत्सरो दिव्यं दिव्यैश्वर्यशतैर्युतम् ॥ ७-८१-८ (४७७८५)
निर्दिष्टं यद्वृषाङ्केण पुण्यं सर्वार्थसाधकम् ।

तौ जग्मतुरसम्भ्रान्तौ नरनारायणावृषी ॥ ७-८१-९ (४७७८६)
ततस्तौ तत्सरो गत्वा सूर्यमण्डलसन्निभम् ।
नागमन्तर्जले घोरं ददृशातेऽर्जुनाच्युतौ ॥ ७-८१-१० (४७७८७)
द्वितीयं चापरं नागं सहस्रशिरसं वरम् ।
वमन्तं विपुला ज्वाला ददृशातेऽग्निवर्चसम् ॥ ७-८१-११ (४७७८८)
ततः कृष्णश्च पार्थश्च संस्पृश्याम्भः कृताञ्जली ।
तौ नागावुपतस्थाते नमस्यन्तौ वृषध्वजम् ॥ ७-८१-१२ (४७७८९)
गृणन्तौ वेदविद्वांसौ तद्ब्रह्म शतरुद्रियम् ।
अप्रमेयप्रमाणं तौ गत्वा सर्वात्मना भवम् ॥ ७-८१-१३ (४७७९०)
ततस्तौ रुद्रमाहात्म्याद्धित्वा रूपं महोरगौ ।
धनुर्बाणश्च शत्रुघ्नं तद्द्वन्द्वं समपद्यत ॥ ७-८१-१४ (४७७९१)
तौ तज्जगृहतुः प्रीतौ धनुर्बाणं च सुप्रभम् ।
आजह्रतुर्महात्मानौ ददतुश्च महात्मने ॥ ७-८१-१५ (४७७९२)
ततः पार्श्वाद्वृषाङ्कस्य ब्रह्मचारी न्यवर्तत ।
पिङ्गाक्षस्तपसः क्षेत्रं बलवान्नीललोहितः। ७-८१-१६ (४७७९३)
स तद्गृह्य धनुःश्रेष्ठं तस्थौ स्थानं समाहितः ।
विचकर्षाथ विधिवत्सशरं धनुरुत्तमम् ॥ ७-८१-१७ (४७७९४)
तस्य मौर्वीं च मुष्टिं च स्थानं चालक्ष्य पाण्डवः ।
श्रुत्वा मन्त्रं भवप्रोक्तं जग्राहाचिन्त्यविक्रमः ॥ ७-८१-१८ (४७७९५)
स सरस्येव तं बाणं मुमोचातिबलः प्रभुः ।
चिक्षेप च पुनर्वीरस्तस्मिन्सरसि तद्धनुः ॥ ७-८१-१९ (४७७९६)
ततः प्रीतं भवं ज्ञात्वा स्मृतिमानर्जुनस्तदा ।
वरमारण्यके दत्तं दर्शनं शङ्करस्य च ।
मनसा चिन्तयामास तन्मे सम्पद्यतां भव ॥ ७-८१-२० (४७७९७)
तस्य तन्मतमाज्ञाय प्रीतः प्रादाद्वरं भवः ।
तच्च पाशुपतं घोरं प्रतिज्ञायाश्च पारणम् ॥ ७-८१-२१ (४७७९८)
ततः पाशुपतं दिव्यमवाप्य पुनरीश्वरात् ।
संहृष्टरोमा दुर्धर्षः कृतं कार्यममन्यत ॥ ७-८१-२२ (४७७९९)
गततोऽर्जुनहृषीकेशौ पुनः पुनररिंदमौ'।
ववन्दतुश्च संहृष्टौ शिरोभ्यां तं महेश्वरम् ॥ ७-८१-२३ (४७८००)
अनुज्ञातौ क्षणे तस्मिन्भवेनार्जुनकेशवौ ।
प्राप्तौ स्वशिबिरं वीरौ मुदा परमया युतौ ॥ ७-८१-२४ (४७८०१)
तथा भवेनानुमतौ महासुरनिघातिना ।
इद्रावीष्णू यथा प्रीतौ जम्भस्य वधकाङ्क्षिणौ ॥ ॥ ७-८१-२५ (४७८०२)

इति श्रीमन्महाभारते द्रोणपर्वणि प्रतिज्ञापर्वणि एकाशीतितमोऽध्यायः

॥ ८१ ॥
Mahabharata - Drona Parva - Chapter Footnotes

५-८१-२ आत्मना सुकृतं सूपकल्पितम् ॥
५-८१-१४ द्वन्द्वं युगलम् ॥
५-८१-१६ नीललोहितः भगवतोऽपरा तनुः ॥
५-८१-१७ स्थानं स्थापनकम् ५-८१-१८ जग्राह मनसि कृतवान् ॥
५-८१-८१ एकाशीतितमोऽध्यायः ॥

---

द्रोनपर्व-अध्यय०८२
॥ श्रीः ॥
७.८२. अध्यायः ८२

Mahabharata - Drona Parva - Chapter Topics
श्रीकृष्णस्य कृताह्निकं युधिष्ठिरं प्रत्यागमनम् ॥ १ ॥

Mahabharata - Drona Parva - Chapter Text

७-८२-० (४७८०३)
सञ्जय उवाच। ७-८२-०क्ष् (४४७७)
तयोः संवदतोरेव कृष्णदारुकयोस्तथा ।
साऽत्यगाद्रजनी राजन्नथ राजा स्म बोध्यते ॥ ७-८२-१ (४७८०४)
पठन्ति पाणिध्वनिका मागधाः स्तवगायकाः ।
वैतालिकाश्च सूताश्च तुष्टवुः पुरुषर्षभम् ॥ ७-८२-२ (४७८०५)
नर्तकाश्चाप्यनृत्यन्त जगुर्गीतानि गायकाः ।
कुरुवंशस्तवार्थानि मधुरं रक्तकण्ठिनः ॥ ७-८२-३ (४७८०६)
मृदङ्गा झर्झरा भेर्यः पणवानकगोमुखाः ।
आडम्बराश्च शङ्खाश्च दुन्दुभ्यश्च महास्वनाः ॥ ७-८२-४ (४७८०७)
एवमेतानि सर्वाणि तथान्यान्यपि भारत ।
वादयन्ति स्म संहृष्टाः कुशलाः साधुशिक्षिताः ॥ ७-८२-५ (४७८०८)
स मेघसमनिर्घोषो महाञ्शब्दोऽस्पृशद्दिवम् ।
पार्थिवप्रवरं सुप्तं युधिष्ठिरमबोधयत् ॥ ७-८२-६ (४७८०९)
प्रतिबुद्धः सुखं सुप्तो महार्हे शयनोत्तमे ।
उत्थायावश्यकार्यार्थं ययौ स्नानगृहं नृपः ॥ ७-८२-७ (४७८१०)
ततः शुक्लाम्बराः स्नातास्तरुणाः शतमष्ट च ।
स्नापकाः काञ्चनैः कुम्भैः पूर्णैः समुपतस्थिरे ॥ ७-८२-८ (४७८११)

भद्रासने सूपविष्टः परिधायाम्बरं लघु ।
सस्नौ चन्दनसंयुक्तैः पानीयैरभिमन्त्रितैः ॥ ७-८२-९ (४७८१२)
उत्सादितः कषायेण बलवद्भिः सुशिक्षितैः ।
आप्लुतः साधिवासेन जलेन ससुगन्धिना ॥ ७-८२-१० (४७८१३)
राजहंसनिभं प्राप्य उष्णीषं शिथिलार्पितम् ।
जलक्षयनिमित्तं वै वेष्टयामास मूर्धनि ॥ ७-८२-११ (४७८१४)
हरिणा चन्दनेनाङ्गमुपलिप्य महाभुजः ।
स्रग्वी चाक्लिष्टवसनः प्राङ्मुखः प्राञ्जलिः स्थितः ॥ ७-८२-१२ (४७८१५)
ग्कृत्वेन्द्रियाणामैकाग्र्यं मनसश्च महामनाः'।
जजाप जप्यं कौन्तेयः सतां मार्गमनुष्ठितः ।
तत्राग्निशरणं दीप्तं प्रविवेश विनीतवत् ॥ ७-८२-१३ (४७८१६)
समिद्भिः स पवित्राभिरग्निमाहुतिभिस्तथा ।
मन्त्रपूताभिरर्चित्वा निश्चक्राम गृहात्ततः ॥ ७-८२-१४ (४७८१७)
द्वितीयां पुरुषव्याघ्रः कक्ष्यां निर्गम्य पार्थिवः ।
ततो वेदविदो वृद्धानपश्यद्ब्राह्मणर्षभान् ॥ ७-८२-१५ (४७८१८)
दान्तान्वेदव्रतस्नातान्स्नातानवभृथेषु च ।
सहस्रानुचरान्सौरान्सहस्रं चाष्ट चापरान् ॥ ७-८२-१६ (४७८१९)
अक्षतैः सुमनोभिश्च वाचयित्वा महाभुजः ।
तान्द्विजान्मधुसर्पिर्भ्यां फलैः श्रेष्ठैः सुमङ्गलैः ॥ ७-८२-१७ (४७८२०)
प्रादात्काञ्चनमेकैकं निष्कं विप्राय पाण्डवः ।
अलङ्कृतं चाश्वशतं वासांसीष्टाश्च दक्षिणाः ॥ ७-८२-१८ (४७८२१)
तथा गाः कपिला दोग्ध्रीः सवत्साः पाण्डुनन्दनः ।
हेमशृङ्गा रौप्यखुरा दत्त्वा तेभ्यः प्रदक्षिणम् ॥ ७-८२-१९ (४७८२२)
स्वस्तिकान्वर्धमानांश्च नन्द्यावर्तांश्च काञ्चनान् ।
माल्यं च जलकुम्भांश्च ज्वलितं च हुताशनम् ॥ ७-८२-२० (४७८२३)
पूर्णान्यक्षतपात्राणि रुचकं रोचनास्तथा ।
स्वलङ्कृताः शुभाः कन्या दधिसर्पिर्मधूदकम् ॥ ७-८२-२१ (४७८२४)
मङ्गल्यान्पक्षिणश्चैव यच्चान्यदपि पूजितम् ।
दृष्ट्वा स्पृष्ट्वा च कौन्तेयो बाह्यां कक्ष्यां ततोऽगमत् ॥ ७-८२-२२ (४७८२५)
ततस्तस्यां नहाबाहोस्तिष्ठतः परिचारकाः ।
सौवर्णं सर्वतोभद्रं मुक्तावैदूर्यमण्डितम् ॥ ७-८२-२३ (४७८२६)
परार्ध्यास्तरणास्तीर्णं सोत्तरच्छदमृद्धिमत् ।
विश्वकर्मकृतं दिव्यमुपजह्रुर्वरासनम् ॥ ७-८२-२४ (४७८२७)
तत्र तस्योपविष्टस्य भूषणानि महात्मनः ।
उपाजह्रुर्महार्हाणि प्रेप्याः शुभ्राणि सर्वशः ॥ ७-८२-२५ (४७८२८)

युक्ताभरणवेषस्य कौन्तेयस्य महात्मनः ।
रूपमासीन्महाराज द्विषतां शोकवर्धनम् ॥ ७-८२-२६ (४७८२९)
चामरैश्चन्द्ररश्म्याभैर्हेमदण्डैः सुशोभनैः ।
दोधूयमानैः शुशुभे विद्युद्भिरिव तोयदः ॥ ७-८२-२७ (४७८३०)
संस्तूयमानः सूतैश्च वन्द्यमानश्च वन्दिभिः ।
उपगीयमानो गन्धर्वैरास्ते स्म कुरुनन्दनः ॥ ७-८२-२८ (४७८३१)
ततो मुहूर्तमासीच्च वन्दिनां निनदो महान् ।
रथानां नेमिघोषश्च खुरघोषश्च वाजिनाम् ॥ ७-८२-२९ (४७८३२)
ह्रादेन गजघण्टानां शङ्खानां निनदेन च ।
नराणां पदशब्दैश्च कम्पतीव स्म मेदिनी ॥ ७-८२-३० (४७८३३)
ततः शुद्धान्तमासाद्य जानुभ्यां भूतले स्थितः ।
शिरसा वन्दनीयं तमभिवाद्य जनेश्वरम् ॥ ७-८२-३१ (४७८३४)
कुण्डली बद्धनिस्त्रिंशः सन्नद्धकवचो युवा ।
अभिप्रणम्य शिरसा द्वास्थो धर्मात्मजाय वै ॥ ७-८२-३२ (४७८३५)
न्यवेदयद्धृषीकेशमुपयान्तं महात्मने ।
सोऽब्रवीत्पुरुषव्याघ्रः स्वागतेनैव माधवः ॥ ७-८२-३३ (४७८३६)
ग्प्रवेश्यतां समीपं मे किमर्थं प्रविलम्बसे'।
आसनं च मधुघ्नाय दीयतां परमार्चितम् ।
ततः प्रवेश्य वार्ष्णेयमुपवेश्य वरासने ॥ ७-८२-३४ (४७८३७)
सत्कृत्य सत्कृतस्तेन पर्यपृच्छद्युधिष्ठिरः ॥ ॥ ७-८२-३५ (४७८३८)

इति श्रीमन्महाभारते द्रोणपर्वणि प्रतिज्ञापर्वणि
द्व्यशीतितमोऽध्यायः ॥ ८२ ॥

Mahabharata - Drona Parva - Chapter Footnotes

५-८२-२ पाणिध्वनिका हस्तेन तालस्वनं कुर्वते ॥
५-८२-३ रक्तकण्ठिनो रञ्जकस्वराः ॥
५-८२-४ झर्झरा झिल्लिकाः ।भेर्यो बृहद्ढक्काः।पणवा
मुरजाः।आनकाः पटहाः।गोमुखाः त्रागडाः।आडम्बराश्च
क्षुद्रपटहाः।दुन्दुभ्यो ढक्काः ॥
५-८२-९ भद्रासने चतुःसमासने ॥
५-८२-१० कषायेण सर्वौषध्यादिकल्केन ॥
५-८२-१२ अक्लिष्टमनुपहतं वसनं यस्य ॥
५-८२-१३ दीप्तं ज्वलदग्निम् ॥
५-८२-१६ सौरान्सूर्योपासकान् ॥
५-८२-१९ प्रदक्षिणं कृत्वेति शेषः ॥

५-८२-२० स्वस्तिकानालिङ्गनानि ।वर्धमानान्
शरावान्। नन्द्यावर्तान्सम्पुटिताद्यर्घपात्राणि ॥
५-८२-२१ रुचकं मातुलुङ्गकम् ॥
५-८२-२४ विश्वकर्मकृतं विश्वकर्मप्रणीतेन विधिना निर्मितम् ॥
५-८२-२८ वन्द्यमानः स्तूयमानः ।स्तुत्यर्थस्य वदे रूपम् ॥
५-८२-३१ शुद्धान्तं कक्ष्याभ्यन्तरम् ॥
५-८२-८२ द्व्यशीतितितमोऽध्यायः ॥

---

द्रोनपर्व-अध्यय०८३
॥ श्रीः ॥
७.८३. अध्यायः ८३

Mahabharata - Drona Parva - Chapter Topics
जयद्रथवधस्य दुष्करत्वाशङ्किनो युधिष्ठिरस्य कृष्णेन
समाश्वासनम् ॥१ ॥

Mahabharata - Drona Parva - Chapter Text

७-८३-० (४७८३९)
युधिष्ठिर उवाच। ७-८३-०क्ष् (४४७८)
सुखेन रजनी व्युष्टा कच्चित्ते मधुसूदन ।
कच्चिज्ज्ञानानि सर्वाणि प्रसन्नानि तवाच्युत ॥ ७-८३-१ (४७८४०)
सञ्जाय उवाच। ७-८३-२क्ष् (४४७९)
वासुदेवोऽपि तद्युक्तं प्रत्युवाच युधिष्ठिरम् ।
दर्शनादेव ते सौम्य न किञ्चिदशुभं मम ॥ ७-८३-२ (४७८४१)
सञ्जय उवाच। ७-८३-३क्ष् (४४८०)
ततश्च प्रकृतीः क्षत्ता न्यवेदयदुपस्थिताः ।
अनुज्ञातश्च राज्ञा स प्रावेशयत तं जनम् ॥ ७-८३-३ (४७८४२)
विराटं भीमसेनं च धृष्टद्युम्नं च सात्यकिम् ।
चेदिपं धृष्टकेतुं च द्रुपदं च महारथम् ॥ ७-८३-४ (४७८४३)
शिखण्डिनं यमौ चैव चेकितानं सकेकयम् ।
युयुत्सुं चैव कौरव्यं पाञ्चाल्यं चोत्तमौजसम् ॥ ७-८३-५ (४७८४४)
युधामन्यु सुबाहुं च द्रौपदेयांश्च सर्वशः ।
एतांश्च सुहृदश्चान्यान्दर्शयामास पाण्डवम् ॥ ७-८३-६ (४७८४५)
अनुज्ञाताश्च पार्थेन स्वासीना आसनेषु ते ।
सर्वेष्वथ परार्ध्येषु यथार्हं वन्द्य पाण्डवम् ॥ ७-८३-७ (४७८४६)

एकस्मिन्नासने वीरावुपविष्टौ महाबलौ ।
कृष्णश्च युयुधानश्च वेद्यामिव हुताशनौ ॥ ७-८३-८ (४७८४७)
ततो युधिष्ठिरस्तेषां शृण्वतां मधुसूदनम् ।
अब्रवीत्पुण्डरीकाक्षमाभाष्य मधुरं वचः ॥ ७-८३-९ (४७८४८)
एकं त्वां वयमाश्रित्य सहस्राक्षमिवामराः ।
प्रार्थयामो जयं युद्धे शाश्वतानि सुखानि च ॥ ७-८३-१० (४७८४९)
त्वं हि राज्यविनाशं च द्विषद्भिश्च निराक्रियाम् ।
क्लेशांश्च विविधान्कृष्ण सर्वांस्तानपि वेत्थ नः ॥ ७-८३-११ (४७८५०)
त्वयि सर्वेश सर्वेषामस्माकं भक्तवत्सल ।
सुखमायत्तमत्यर्थं यात्रा च मधुसूदन ॥ ७-८३-१२ (४७८५१)
स तथा कुरु वार्ष्णेय यथा त्वयि मनो मम ।
अर्जुनस्य यथा सत्या प्रतिज्ञा स्याच्चिकीर्षिता ॥ ७-८३-१३ (४७८५२)
स भवांस्तारयत्वस्माद्दुःखामर्षमहार्णवात् ।
परां तितीर्षतामद्य प्लुवो नो भव माधव ॥ ७-८३-१४ (४७८५३)
नहि तत्कुरुते योधः कार्तवीर्यसमोऽपि यः ।
युधि यत्कुरुषे कृष्ण सारथ्यं त्वं समास्थितः ॥ ७-८३-१५ (४७८५४)
यथैव सर्वास्वापत्सु पासि वृष्णीञ्जनार्दन ।
तथैवास्मान्महाबाहो वृजिनात्त्रातुमर्हसि ॥ ७-८३-१६ (४७८५५)
त्वमगाधेऽप्लवे मग्नान्पाण्डवान्कुरुसागरे ।
समुद्धर प्लुवो भूत्वा शङ्खचक्रगदाधर ॥ ७-८३-१७ (४७८५६)
नमस्ते देवदेवेश सनातन विशातन ।
विष्णो जिष्णो हरे कृष्ण वैकुण्ठ पुरुषोत्तम ॥ ७-८३-१८ (४७८५७)
नारदस्त्वां समाचख्यौ पुराणमृषिसत्तमम् ।
वरदं शार्ङ्गिणं श्रेष्ठं तत्सत्यं कुरु माधव ॥ ७-८३-१९ (४७८५८)
इत्युक्तः पुण्डरीकाक्षो धर्मराजेन संसदि ।
तोयमेघस्वनो वाग्मी प्रत्युवाच युधिष्ठिरम् ॥ ७-८३-२० (४७८५९)
वासुदेव उवाच। ७-८३-२१क्ष् (४४८१)
सामरेष्वपि लोकेषु सर्वेषु न तथाविधः ।
शरासनधरः कश्चिद्यथा पार्थो धनञ्जयः ॥ ७-८३-२१ (४७८६०)
वीर्यवानस्त्रसम्पन्नः पराक्रान्तो महाबलः ।
युद्धशौण्डः सदामर्षी तेजसा परमो नृणाम् ॥ ७-८३-२२ (४७८६१)
स युवा वृषभस्कन्धो दीर्घबाहुर्महाबलः ।
सिंहर्षभगतिः श्रीमान्द्विषतस्ते हनिष्यति ॥ ७-८३-२३ (४७८६२)
अहं च तत्करिष्यामि तथा कुन्तीसुतोऽर्जुनः ।
धार्तराष्ट्रस्य सैन्यानि धक्ष्यत्यग्निरिवेन्धनम् ॥ ७-८३-२४ (४७८६३)
अद्य तं पापकर्माणं क्षुद्रं सौभद्रघातिनम् ।

अपुनर्दर्शनं मार्गमिषुभिः क्षेप्स्यतेऽर्जुनः ॥ ७-८३-२५ (४७८६४)
तस्याद्य गृध्राः श्येनाश्च चण्डगोमायवस्तथा ।
भक्षयिष्यन्ति मांसानि ये चान्ये पुरुषादकाः ॥ ७-८३-२६ (४७८६५)
यद्यस्य देवा गोप्तारः सेन्द्राः सर्वे तथाऽप्यसौ ।
राजधानीं यमस्याद्य हतः प्राप्स्यति दुर्मतिः ॥ ७-८३-२७ (४७८६६)
निहत्य सैन्धवं जिष्णुरद्य त्वामुपयास्यति ।
विशोको विज्वरो राजन्भव शान्ति पुरस्कृतः ॥ ॥ ७-८३-२८ (४७८६७)

इति श्रीमन्महाभारते द्रोणपर्वणि प्रतिज्ञापर्वणि
त्र्यशीतितमोऽध्यायः ॥ ८३ ॥
Mahabharata - Drona Parva - Chapter Footnotes

५-८३-११ निराक्रियामपसारणम् ॥
५-८३-१२ यात्रा स्थितिः ॥
५-८३-१६ वृजिनात् व्यसनात् ॥
५-८३-१८ सनातन अनादिनिधन । विशा तन संहर्तः। कृष्ण
संसारकर्षक। पुरुषोत्तम परमात्मन् ॥
५-८३-२२ युद्धशौण्डः युद्धप्रवीणः ॥
५-८३-८३ त्र्यशीतितमोऽध्यायः ॥

---

द्रोनपर्व-अध्यय०८४
॥ श्रीः ॥
७.८४. अध्यायः ८४

Mahabharata - Drona Parva - Chapter Topics
जयद्रथम्प्रति गच्छताऽर्जुनेन युधिष्ठिररक्षणाय सात्यकिम्प्रति
चोदना ॥ १ ॥

Mahabharata - Drona Parva - Chapter Text

७-८४-० (४७८६८)
सञ्जय उवाच। ७-८४-०क्ष् (४४८२)
तथा तु वदतां तेषां प्रादुरासीद्धनञ्जयः ।
दिदृक्षुर्भरतश्रेष्ठं राजानं ससुहृद्गणम् ॥ ७-८४-१ (४७८६९)
तं प्रविष्टं शुभां कक्ष्यामभिवन्द्याग्रतः स्यितम् ।
तमुत्थायार्जुनं प्रेम्णा सस्वजे पाण्डवर्षभः ॥ ७-८४-२ (४७८७०)

मूर्ध्नि चैनमुपाघ्राय परिष्वज्य च बाहुना ।
आशिषः परमाः प्रोच्य स्मयमानोऽभ्यभाषत ॥ ७-८४-३ (४७८७१)
व्यक्तमर्जुन सङ्ग्रामे ध्रुवस्ते विजयो महान् ।
तादृग्रूपा च ते च्छाया प्रसन्नश्च जनार्दनः ॥ ७-८४-४ (४७८७२)
सञ्जय उवाच। ७-८४-५क्ष् (४४८३)
तमब्रवीत्ततो जिष्णुर्महदाश्चर्यमुत्तमम् ।
दृष्टवानस्मि भद्रं ते केशवस्य प्रसादजम् ॥ ७-८४-५ (४७८७३)
ततस्तत्कथयामास यथादृष्टं धनञ्जयः ।
आश्वासनार्थं सुहृदां त्र्यम्बकेण समागमम् ॥ ७-८४-६ (४७८७४)
ततः शिरोभिरवनिं स्पृष्ट्वा सर्वे च विस्मिताः ।
नमस्कृत्य वृषाङ्काय साधुसाध्वित्यथाब्रुवन् ॥ ७-८४-७ (४७८७५)
अनुज्ञातास्ततः सर्वे सुहृदो धर्मसूनुना ।
त्वरमाणाः सुसन्नद्धा हृष्टा युद्धाय निर्ययुः ॥ ७-८४-८ (४७८७६)
अभिवाद्य तु राजानं युयुधानाच्युतार्जुनाः ।
हृष्टा विनिर्ययुस्ते वै युधिष्ठिरनिवेशनात् ॥ ७-८४-९ (४७८७७)
रथेनैकेन दुर्धर्षौ युयुधानजनार्दनौ ।
जग्मतुः सहितौ वीरावर्जुनस्य निवेशनम् ॥ ७-८४-१० (४७८७८)
तत्र गत्वा हृषीकेशः कल्पयामास शास्त्रवित् ।
रथं रथवरस्याजौ वानरर्षभलक्षणम् ॥ ७-८४-११ (४७८७९)
स मेघसमनिर्घोषस्तप्तकाञ्चनसप्रभः ।
बभौ रथवरः क्लृप्तः शिशुर्दिवसकृद्यथा ॥ ७-८४-१२ (४७८८०)
ततः पुरुषशार्दूलः सज्जं सर्वं न्यवेदयत् ।
रथं पुरुषसिंहस्य सध्वजं सुपताकिनम् ॥ ७-८४-१३ (४७८८१)
स तु लोकवरः पुंसां किरीटी हेमवर्मभृत् ।
चापबाणधरो वाहं प्रदक्षिणमवर्तत ॥ ७-८४-१४ (४७८८२)
तपोविद्यावयोवृद्धैः क्रियावद्भिर्जितेन्द्रियैः ।
स्तूयमानो जयाशीर्भिरारुरोह महारथम् ॥ ७-८४-१५ (४७८८३)
जैत्रैः साङ्ग्रामिकैर्मन्त्रैः पूर्वमेव रथोत्तमम् ।
अभिमन्त्रितमर्चिष्मानुदयं भास्करो यथा ॥ ७-८४-१६ (४७८८४)
स रथे रथिनां श्रेष्ठः काञ्चने काञ्चनावृतः ।
विबभौ विमलोऽर्चिष्मान्मेराविव दिवाकरः। ७-८४-१७ (४७८८५)
अन्वारुरुहतुः पार्थं युयुधानजनार्दनौ ।
शर्यातेर्यज्ञमायान्तं यथेन्द्रं देवमश्विनौ ॥ ७-८४-१८ (४७८८६)
अथ जग्राह गोविन्दो रश्मीन्रश्मिविदांवरः ।
मातलिर्वासवस्येव वृत्रं हन्तुं प्रयास्यतः ॥ ७-८४-१९ (४७८८७)
स ताभ्यां सहितः पार्थो रथप्रवरमास्थितः ।

सहितो बुधशुक्राभ्यां तमो निघ्नन्यथा शशी ॥ ७-८४-२० (४७८८८)
सैन्धवस्य वधप्रेप्सुः प्रयातः शत्रुपूगहा ।
सहाम्बुपतिमित्राभ्यां यथेन्द्रस्तारकामये ॥ ७-८४-२१ (४७८८९)
ततो वादित्रनिर्घोषैर्माङ्गल्यैश्च स्तवैः शुभैः ।
प्रयान्तमर्जुनं वीरं मागधाश्चैव तुष्टुवुः ॥ ७-८४-२२ (४७८९०)
सजयाशीः सपुण्याहः सूतमागधनिःस्वनः ।
युक्तो वादित्रघोषेण तेषां रतिकरोऽभवत् ॥ ७-८४-२३ (४७८९१)
तमनुप्रवणो वायुः पुण्यगन्धवहः शुभः ।
ववौ संहर्षयन्पार्थं द्विषतश्चापि शोषयन् ॥ ७-८४-२४ (४७८९२)
ततस्तस्मिन्क्षणे राजन्विविधानि शुभानि च ।
प्रादुरासन्निमित्तानि विजयाय बहूनि च ॥ ७-८४-२५ (४७८९३)
पाण्डवानां त्वदीयानां विपरीतानि मारिष ।
दृष्ट्वाऽर्जुनो निमित्तानि विजयाय प्रदक्षिणम् ।
युयुधानं महेष्वासमिदं वचनमब्रवीत् ॥ ७-८४-२६ (४७८९४)
युयुधानाद्य युद्धे मे दृश्यते विजयो ध्रुवः ।
यथाहीमानि लिङ्गानि दृश्यन्ते शिनिपुङ्गव ॥ ७-८४-२७ (४७८९५)
सोऽहं तत्र गमिष्यामि यत्र सैन्धवको नृपः ।
यियासुर्यमलोकाय मम वीर्यं प्रतीक्षते ॥ ७-८४-२८ (४७८९६)
यथा परमकं कृत्यं सैन्धवस्य वधो मम ।
तथैव सुमहत्कृत्यं धर्मराजस्य रक्षणम् ॥ ७-८४-२९ (४७८९७)
स त्वमद्य महाबाहो राजानं परिपालय ।
यथैव हि मया गुप्तस्त्वया गुप्तो भवेत्तथा ॥ ७-८४-३० (४७८९८)
न पश्यामि च तं लोके यस्त्वां युद्धे पराजयेत् ।
वासुदेवसमं युद्धे स्वयमप्यमरेश्वरः ॥ ७-८४-३१ (४७८९९)
त्वयि चाहं पराश्वस्तः प्रद्युम्ने वा महारथे ।
शक्नुयां सैन्धवं हन्तुमनपेक्षो नरर्षभ ॥ ७-८४-३२ (४७९००)
मय्यपेक्षा न कर्तव्या गोप्ताऽयं मम केशवः ।
राज्ञ एव परा गुप्तिः कार्या सर्वात्मना त्वया ॥ ७-८४-३३ (४७९०१)
न हि यत्र महाबाहुर्वासुदेवो व्यवस्थितः ।
किञ्चिद्व्यापद्यते तत्र यत्राहमपि च ध्रुवम् ॥ ७-८४-३४ (४७९०२)
एवमुक्तस्तु पार्थेन सात्यकिः परवीरहा ।
तथेत्युक्त्वाऽगमत्तत्र यत्र राजा युधिष्ठिरः ॥ ॥ ७-८४-३५ (४७९०३)

इति श्रीमन्महाभारते द्रोणपर्वणि प्रतिज्ञापर्वणि
चतुरशीतितमोऽध्यायः ॥ ८४ ॥
Mahabharata - Drona Parva - Chapter Footnotes

५-८४-१२ शिशुर्दिवसकृत् बालः सूर्यः ॥
५-८४-१८ यथा च्यवनमश्विनौ इति क ट्ड् पाठः ॥
५-८४-२६ प्रदक्षिणं छन्दोनुवर्तिनम् ॥
५-८४-३३ अपेक्षा अनुरोधः ॥
५-८४-८४ चतुरशीतितमोऽध्यायः ॥

---

द्रोनपर्व-अध्यय०८५
॥ श्रीः ॥
७.८५. अध्यायः ८५

Mahabharata - Drona Parva - Chapter Topics
धृतराष्ट्रेण पुत्रान्प्रति शोचनपूर्वकं
सञ्जयम्प्रत्यभिमन्युनिधनानन्तरीयकयुद्धकथनचोदना ॥ १ ॥

Mahabharata - Drona Parva - Chapter Text

७-८५-० (४७९०४)
धृतराष्ट्र उवाच। ७-८५-०क्ष् (४४८४)
श्वोभूते किमकार्षुस्ते दुःखशोकसमन्विताः ।
अभिमन्यौ हते तत्र कैर्वाऽयुध्यन्त पाण्डवाः ॥ ७-८५-१ (४७९०५)
जानन्तस्तस्य कर्माणि कुरवः सव्यसाचिनः ।
कथं तत्किल्बिषं कृत्वा निर्भया ब्रूहि मामकाः ॥ ७-८५-२ (४७९०६)
पुत्रशोकाभिसन्तप्तं क्रुद्धं मृत्युमिवान्तकम् ।
आयान्तं पुरुषव्याघ्रं कथं ददृशुराहवे ॥ ७-८५-३ (४७९०७)
कपिराजध्वनं सङ्ख्ये विधुन्वानं महद्धनुः ।
दृष्ट्वा पुत्रपरिद्यूनं किमकुर्वत मामकाः ॥ ७-८५-४ (४७९०८)
किन्तु सञ्जय सङ्ग्रमे वृत्तं दुर्योधनं प्रति ।
परिदेवो महानद्य श्रूयते हि गृहेगृहे ॥ ७-८५-५ (४७९०९)
भूयाञ्शब्दानतीत्यान्याञ्शब्दः सैन्धववेश्मनि ।
पौराणिकानां तूर्याणां शङ्खदुन्दुभिघोषवान् ॥ ७-८५-६ (४७९१०)
सूतमागधबन्दीनां नर्तकानां च निःस्वनः ।
सोऽद्य न श्रूयते शब्दः सूत पुत्र यथा पुरा ॥ ७-८५-७ (४७९११)
शब्दो नानाविधोऽभीष्टमभवद्यत्र मे श्रुतः ।
दीनानामद्य तं शब्दं न शृणोमि समीरितम् ॥ ७-८५-८ (४७९१२)
निवेशने सत्यधृतेः सोमदत्तस्य सञ्जय ।

आसीनोऽहं पुरा तात शब्दमश्रौषमुत्तमम् ॥ ७-८५-९ (४७९१३)
तदद्य पुण्यहीनोऽहमार्तस्वरनिनादितम् ।
निवेशनं गतोत्साहं विकृतं तात लक्षये ॥ ७-८५-१० (४७९१४)
विविंशतेर्दुर्मुखस्य चित्रसेनविकर्णयोः ।
अन्येषां च सुतानां मे न तथा श्रूयते ध्वनिः ॥ ७-८५-११ (४७९१५)
ब्राह्मणआः क्षत्रिया वैश्या यं शिष्याः पर्युपासते ।
द्रोणपुत्रं महेष्वासं पुत्राणां मे परायणम् ॥ ७-८५-१२ (४७९१६)
वितण्डालापसंलापैर्द्रुतवादित्रवादितैः ।
गीतैश्च विविधैरिष्टै रमते यो दिवानिशम् ॥ ७-८५-१३ (४७९१७)
उपास्यमानो बहुभिः कुरुपाण्डवसात्वतैः ।
श्लक्ष्णस्तस्य गृहे शब्दो नाद्य द्रौणेर्यथा पुरा ॥ ७-८५-१४ (४७९१८)
द्रोणपुत्रं महेष्वासं गायना नर्तकाश्च ये ।
अत्यर्थमुपतिष्ठन्ति तेषां न श्रूयते ध्वनिः ॥ ७-८५-१५ (४७९१९)
विन्दानुविन्दयोः सायं शिबिरे यो महाध्वनिः ।
श्रूयते सोऽद्य न तथा केकयानां च वेश्मसु ॥ ७-८५-१६ (४७९२०)
नित्यं प्रमुदितानां च तालगीतस्वनो महान् ।
नृत्यतां श्रूयते तात गणानां सोऽद्य न स्वनः ॥ ७-८५-१७ (४७९२१)
सप्ततन्तून्वितन्वाना याजका यमुपासते ।
सौमदत्तिं श्रुतनिधिं तेषां न श्रूयते ध्वनिः ॥ ७-८५-१८ (४७९२२)
ज्याघोषो ब्रह्मघोषश्च तोमरासिरथध्वनिः ।
द्रोणस्यासीदविरतो गृहे तं न शृणोम्यहम् ॥ ७-८५-१९ (४७९२३)
नानादेशसमुत्थानां गीतानां योऽभवत्स्वनः ।
वादित्रनादितानां च सोऽद्य न श्रूयते महान् ॥ ७-८५-२० (४७९२४)
यदाप्रभृत्युपप्लुव्याच्छान्तिमिच्छञ्जनार्दनः ।
आगतः सर्वभूतानामनुकम्पार्थमच्युतः ॥ ७-८५-२१ (४७९२५)
ततोऽहमब्रुवं सूत मन्दं दुर्योधनं तदा ।
वासुदेवेन तीर्थेन पुत्र संशाम्य पाण्डवैः ॥ ७-८५-२२ (४७९२६)
कालप्राप्तमहं मन्ये मा त्वं दुर्योधनातिगाः ।
ग्संशाम्य भ्रातृभिस्तैस्तु क्षत्रियानभिपालय'॥ ७-८५-२३ (४७९२७)
शमं चेद्याचमानं त्वं प्रत्याख्यास्यसि केशवम् ।
हितार्थमभिजल्पन्तं न तवास्ति रणे जयः ॥ ७-८५-२४ (४७९२८)
प्रत्याचष्ट स दाशार्हमृषभं सर्वधन्विनाम् ।
अनुनेयानि जल्पन्तमनयान्नान्वपद्यत ॥ ७-८५-२५ (४७९२९)
ग्कर्णदुःशासनमतः सौबलस्य च दुर्मतेः ।
प्रत्याख्यातो महाबाहुःकुलान्तकरणेन वै'॥ ७-८५-२६ (४७९३०)
ततो दुःशासनस्यैव कर्णस्य च मतं द्वयोः ।

अन्ववर्तत मां हित्वा कृष्टः कालेन दुर्मतिः ॥ ७-८५-२७ (४७९३१)
न ह्यहं युद्धमिच्छामि विदुरो द्रोण एव वा ।
बाह्लीकः सोमदत्तो वा भीष्मो द्रौणायनिस्तथा ॥ ७-८५-२८ (४७९३२)
शलो भूरिश्रवाश्चैव पुरुमित्रो विविंशतिः ।
जयः कृपो वा धर्मात्मा ये चान्ये मम बान्धवाः ॥ ७-८५-२९ (४७९३३)
एतेषां मतमास्थाय यदि वत्स्यति पुत्रकः ।
एतेभ्यश्च मदूर्ध्वं च अभोक्ष्यद्वसुधामिमाम् ॥ ७-८५-३० (४७९३४)
श्लक्ष्णा मधुरसम्भाषा ज्ञातिमध्ये प्रियंवदाः ।
कुलीनाः सम्मताः प्राज्ञाः सुखं जीवन्ति मानवाः। ७-८५-३१ (४७९३५)
धर्मापेक्षी नरो नित्यं सर्वत्र लभते सुखम् ।
प्रेत्यभावे च कल्याणं प्रसादं प्रतिपद्यते ॥ ७-८५-३२ (४७९३६)
अर्हास्ते पृथिवीं भोक्तुं समर्थाः साधनेऽपि च ।
तेषामपि समुद्रान्ता पितृपैतामही मही ॥ ७-८५-३३ (४७९३७)
ग्न च त्वाऽभिभविष्यन्ति हित्वा धर्मं पृथात्मजाः ।
नियुज्यमानाः स्थास्यन्ति पाण्डवा धर्मवर्त्मनि ॥ ७-८५-३४ (४७९३८)
सन्ति मे ज्ञातयस्तात येषां श्रोष्यन्ति पाण्डवाः ।
शल्यस्य सोमदत्तस्य भीष्मस्य च महात्मनः ॥ ७-८५-३५ (४७९३९)
द्रोणस्याथ विकर्णस्य बाह्लीकस्य कृपस्य च ।
अन्येषां चैव वृद्धानां भरतानां महात्मनाम् ।
त्वदर्थमब्रवं तात न जहुर्वचनानि ते ॥ ७-८५-३६ (४७९४०)
कं वा त्वं मन्यसे तेषां यस्त्वां ब्रूयादतोऽन्यथा ।
कृष्णो न धर्मं सञ्जह्यात्सर्वे ते हि तदन्वयाः ॥ ७-८५-३७ (४७९४१)
मयाऽपि चोक्तास्ते वीरा वचनं धर्मसंहितम् ।
नान्यथा प्रकरिष्यन्ति धर्मात्मानो हि पाण्डवाः ॥ ७-८५-३८ (४७९४२)
इत्यहं विलपन्सूत बहुशः पुत्रमुक्तवान् ।
न च मे श्रुतवान्मूढो मन्ये कालस्य पर्ययम् ॥ ७-८५-३९ (४७९४३)
वृकोदरार्जुनौ यत्र वृष्णिवीरश्च सात्यकिः ।
उत्तमौजाश्च पाञ्चाल्यो युधामन्युश्च दुर्जयः ॥ ७-८५-४० (४७९४४)
धृष्टद्युम्नश्च दुर्धर्षः शिखण्डी चापराजितः ।
अश्मकाः केकयाश्चैव क्षत्रधर्मा च सौमकिः ॥ ७-८५-४१ (४७९४५)
चैद्यश्च चेकितानश्च पुत्रः काश्यस्य चाभिभूः ।
द्रौपदेया विराटश्च द्रुपदश्च महारथः ॥ ७-८५-४२ (४७९४६)
यमौ च पुरुषव्याघ्रौ मन्त्री च मधुसूदनः ।
क एताञ्जातु युध्येत लोकेऽस्मिन्वै जिजीविषुः ॥ ७-८५-४३ (४७९४७)
दिव्यमस्त्रं विकुर्वाणान्प्रसहेद्वा परान्मम ।
अन्यो दुर्योधनात्कार्णाच्छकुनेश्चापि सौबलात् ।

दुःशासनचतुर्थानां नान्यं पश्यामि पञ्चमम् ॥ ७-८५-४४ (४७९४८)
येषां वचनकृत्स स्याद्विष्वक्सेनो रथे स्थितः ।
सन्नद्धश्चार्जुनो योद्धा तेषां नास्ति पराजयः ॥ ७-८५-४५ (४७९४९)
तथा मम विलापानां नायं दुर्योधनः स्मरेत् ।
हतौ हि पुरुषव्याघ्रौ भीष्मद्रोणौ त्वमात्थ वै ॥ ७-८५-४६ (४७९५०)
तेषां विदुरवाक्यानामुक्तानां दीर्घदर्शनात् ।
दृष्ट्वेमां फलनिर्वृत्तिं मन्ये शोचन्ति पुत्रकाः ॥ ७-८५-४७ (४७९५१)
सेनां दृष्ट्वाऽभिभूतां मे शैनेयेनार्जुनेन च ।
शून्यान्दृष्ट्वा रथोपस्थान्मन्ये शोचन्ति पुत्रकाः ॥ ७-८५-४८ (४७९५२)
हिमात्यये यथा कक्षं शुष्कं वातेरितो महान् ।
अग्निर्दहेत्तथा सेनां मामिकां स धनञ्जयः ॥ ७-८५-४९ (४७९५३)
आचक्ष्व मम तत्सर्वं कुशलो ह्यसि सञ्जय ।
यदोपयाताः सायाह्ने कृत्वा पार्थस्य किल्बिषं ॥ ७-८५-५० (४७९५४)
अभिमन्यौ हते तात कथमासीन्मनो हि वः ॥ ७-८५-५१ (४७९५५)
न जातु तस्य कर्माणि युधि गाण्डीवधन्वनः ।
अपकृत्य महत्तात सोढुं शक्ष्यन्ति मामकाः ॥ ७-८५-५२ (४७९५६)
किन्नुः दुर्योधनः कृत्यं कर्णः कृत्यं किमब्रवीत् ।
दुःशासनः सौबलश्च तेषामेवं गते सति ॥ ७-८५-५३ (४७९५७)
सर्वेषां समवेतानां पुत्राणां मम सञ्जय ।
यद्वृत्तं तात सङ्ग्रामे मन्दस्यापनयैर्भृशम् ॥ ७-८५-५४ (४७९५८)
लोभानुगस्य दुर्बुद्धेः क्रोधेन विकृतात्मनः ।
राज्यकामस्य मूढस्य रागोपहतचेतसः ।
दुर्नीतं वा सुनीतं वा तन्ममाचक्ष्व सञ्जय ॥ ॥ ७-८५-५५ (४७९५९)

इति श्रीमन्महाभारते द्रोणपर्वणि जयद्रथवधपर्वणि
पञ्चाशीतितमोऽध्यायः ॥ ८५ ॥

Mahabharata - Drona Parva - Chapter Footnotes

५-८५-४ पुत्रपरिद्यूनं पुत्रवधदुःखितम् ॥
५-८५-१३ स्वपक्षस्थापनहीनः प्रतिपक्षे प्रतिक्षेपो वितण्डा ।अलापो भाषणम्।संलापो मेथो भाषणम् ॥
५-८५-१७ गणानां सङ्घानाम् ॥
५-८५-२२ तीर्थेन निदानेन उपायेन वा ॥
५-८५-२३ कालप्राप्तं समयोचितम् ॥
५-८५-२५ अनुनेयनि अनुकूलानि ॥
५-८५-३१ श्लक्ष्ण ऋजवः ॥

५-८५-३३ साधने स्वीकरणे ॥
५-८५-४४ दिव्यमस्त्रं विकुर्वाणाः संहरेयुररिंदमाः इति क ट पाठः ॥
५-८५-४७ दीर्घदर्शनादनागतानुसन्धानात् ॥
५-८५-५२ महदत्यर्थम् ॥
५-८५-५३ तेषां मध्ये ॥
५-८५-५५ रागो मात्सर्थं रागस्तु मात्सर्ये इति मेदिनी ॥
५-८५-८५ पञ्चाशीतितमोऽध्यायः ॥

---

द्रोनपर्व-अध्यय०८६
॥ श्रीः ॥
७.८६. अध्यायः ८६

Mahabharata - Drona Parva - Chapter Topics
सञ्जयेन धृतराष्ट्रोपालम्भपूर्वकं युद्धकथनोपक्रमः ॥ १ ॥

Mahabharata - Drona Parva - Chapter Text

७-८६-० (४७९६०)
सञ्जय उवाच। ७-८६-०क्ष् (४४८५)
हन्त ते सम्प्रवक्ष्यामि सर्वं प्रत्यक्षदर्शिवान् ।
शुश्रूषस्व स्थिरो भूत्वा तव ह्यपनयो महान् ॥ ७-८६-१ (४७९६१)
गतोदके सेतुबन्धो यादृक्तादृगयं तव ।
विलापो निष्फलो राजन्मा शुचो भरतर्षभ ॥ ७-८६-२ (४७९६२)
अनतिक्रमणीयोऽयं कृतान्तस्याद्भुतो विधिः ।
मा शुचो भरतश्रेष्ठ दिष्टमेतत्पुरातनम् ॥ ७-८६-३ (४७९६३)
यदि त्वं हि पुरा द्यूतात्कुन्तीपुत्रं युधिष्ठिरम् ।
निवर्तयेथाः पुत्रांश्च न त्वां व्यसनमाव्रजेत् ॥ ७-८६-४ (४७९६४)
युद्धकाले पुनः प्राप्ते तदैव भवता यदि ।
निवर्तिताः स्युः संरब्धा न त्वां व्यसनमाव्रजेत् ॥ ७-८६-५ (४७९६५)
दुर्योधनं चाविधेयं बध्नीयास्त्वं पुरा यदि ।
अवेक्ष्य कौरवान्राजन्प्राप्स्यसे त्वं महद्यशः ॥ ७-८६-६ (४७९६६)
तत्ते बुद्धिव्यतीचारमुपलप्स्यन्ति तज्जनाः ।
पाञ्चाला वृष्णयः सर्वे ये चान्येऽपि नराधिपाः ॥ ७-८६-७ (४७९६७)
स कृत्वा पितृकर्म त्वं पुत्रं संस्थाप्य सत्पथे ।
वर्तेथा यदि धर्मेण न त्वां व्यसनमाव्रजेत् ॥ ७-८६-८ (४७९६८)
त्वं तु प्राज्ञतमो लोके हित्वा धर्मं सनातनम् ।

दुर्योधनस्य कर्णस्य शकुनेश्चान्वगा मतम् ॥ ७-८६-९ (४७९६९)
तत्ते विलपितं सर्वं मया राजन्निशामितम् ।
अर्थे निविशमानस्य विषमिश्रं यथा मधु ॥ ७-८६-१० (४७९७०)
न तथा मन्यते कृष्णो न च राजा युधिष्ठिरः ।
न भीष्मो नैव च द्रोणो यथा त्वं मन्यसे नृप ॥ ७-८६-११ (४७९७१)
व्यजानीत यदा तु त्वां लुब्धं धर्मप्रवादिनम् ।
तदाप्रभृति कृष्मस्त्वां न तथा बहुमन्यते ॥ ७-८६-१२ (४७९७२)
परुषाण्युच्यमानांश्च यथा पार्थानुपेक्षसे ।
तस्यानुबन्धः प्राप्तस्त्वां पुत्रामां राज्यकामुक ॥ ७-८६-१३ (४७९७३)
पितृपैतामहं राज्यमपावृत्तं त्वयाऽनघ ।
अथ पार्थैर्जितां कृत्स्नां पृथिवीं प्रत्यपद्यथाः ॥ ७-८६-१४ (४७९७४)
पाण्डुना निर्जितं राज्यं कौरवाणां यशस्तथा ।
एतच्चाप्यधिकं भूयः पाण्डवैर्धर्मचाखिभिः ॥ ७-८६-१५ (४७९७५)
तेषां तत्तादृशं कर्म त्वामासाद्य सुनिष्फलम् ।
यत्पित्र्याद्भ्रंशिता राज्यात्त्वयेहामिषगृद्धिना ॥ ७-८६-१६ (४७९७६)
यत्पुनर्युद्धकाले त्वं पुत्रान्गार्हयसे नृप ।
बहुधा व्याहरन्दोषान्न तदद्योपपद्यते ॥ ७-८६-१७ (४७९७७)
न हि रक्षन्ति राजानो युध्यन्तो जीवितं रणे ।
चमूं विगाह्य पार्थानां युध्यन्ते क्षत्रियर्षभाः ॥ ७-८६-१८ (४७९७८)
यां तु कृष्णार्जुनौ सेनां यां सात्यकिवृकोदरौ ।
रक्षेरन्को नु तां युध्येच्चमूमन्यत्र कौरवात् ॥ ७-८६-१९ (४७९७९)
येषां योद्धा गुडाकेशो येषां मन्त्री जनार्दनः ।
येषां च सात्यकिर्योद्धा येषां योद्धा वृकोदरः ॥ ७-८६-२० (४७९८०)
को हि तान्विषहेद्योद्धुं मर्त्यधर्मा धनुर्धरः ।
अन्यत्र कौरवेयेभ्यो ये वा तेषां पदानुगाः ॥ ७-८६-२१ (४७९८१)
यावत्तु शक्यते कर्तुमन्तरज्ञैर्जनाधिपैः ।
क्षत्रधर्मरतैः शूरैस्तावत्कुर्वन्ति कौरवाः ॥ ७-८६-२२ (४७९८२)
यथा तु पुरुषव्याघ्रैर्युद्धं परमसङ्कटम् ।
कुरूणां पाण्डवैः सार्धं तत्सर्वं शृणु तत्त्वतः ॥ ॥ ७-८६-२३ (४७९८३)

इति श्रीमन्महाभारते द्रोणपर्वणि जयद्रथवधपर्वणि
षडशीतितमोऽध्यायः ॥ ८६ ॥

Mahabharata - Drona Parva - Chapter Footnotes

५-८६-१७ ते तव बुद्धेर्व्यतिचारं वैषम्यमुपलप्स्यन्त्यनुभविष्यन्ति ॥
५-८६-१३ अर्थे निविशमानानां यथा पार्थानुपेक्षसे इति क ट । पाठः ॥

५-८६-२२ अन्तरङ्गैरवसरवेदिभिः ॥
५-८६-८६ षडशीतितमोऽध्यायः ॥

---

द्रोनपर्व-अध्यय०८७
॥ श्रीः ॥
७.८७. अध्यायः ८७

Mahabharata - Drona Parva - Chapter Topics
द्रोणेन शकटव्यूहनिर्माणम् ॥ १ ॥

Mahabharata - Drona Parva - Chapter Text

७-८७-० (४७९८४)
सञ्जय उवाच। ७-८७-०क्ष् (४४८६)
तस्यां निशायां व्युष्टायां द्रोणः शस्त्रभृतां वरः ।
स्वान्यनीकानि सर्वाणि प्राक्रामद्व्यूहितुं ततः ॥ ७-८७-१ (४७९८५)
शूराणां गर्जतां राजन्सङ्क्रुद्धानाममर्षिणाम् ।
श्रूयन्ते स्म गिरश्चित्राः परस्परवधैषिणाम् ॥ ७-८७-२ (४७९८६)
विष्फार्य च धनूंष्यन्ये ज्याः परे परिमृज्य च ।
विनिःश्वसन्तः प्राक्रोशन्क्वेदानीं स धनञ्जयः ॥ ७-८७-३ (४७९८७)
विकोशान्सुत्सरूनन्ये कृतधारान्समाहितान् ।
पीतानाकाशसङ्काशानसीन्केचिच्च चिक्षिपुः ॥ ७-८७-४ (४७९८८)
चरन्तस्त्वसिमार्गांश्च धनुर्मार्गांश्च शिक्षिताः ।
सङ्ग्राममनसः शूरा दृश्यन्ते स्म सहस्रशः ॥ ७-८७-५ (४७९८९)
सघण्टाश्चन्दनादिग्धाः स्वर्णवज्रविभूषिताः ।
समुत्क्षिप्य गदाश्चान्ये पर्यपृच्छन्त पाण्डवम्। ७-८७-६ (४७९९०)
अन्ये बलमदोन्मत्ताः परिघैर्बाहुशालिनः ।
चक्रुः सम्बाधमाकाशमुच्छ्रितेन्द्रध्वजोपमैः ॥ ७-८७-७ (४७९९१)
नानाप्रहरणैश्चान्ये विचित्रस्रगलङ्कृताः ।
सङ्ग्राममनसः शूरास्तत्रतत्र व्यवस्थिताः ॥ ७-८७-८ (४७९९२)
क्वार्जुनः क्व स गोविन्दः क्व च मानी वृकोदरः ।
क्व च ते सुहृदस्तेषामाह्वयन्ते रणे तदा ॥ ७-८७-९ (४७९९३)
ततः शङ्खमुपाध्माय त्वरयन्वाजिनः स्वयम् ।
इतस्ततस्तान्रचयन्द्रोणश्चरति वेगितः ॥ ७-८७-१० (४७९९४)
तेष्वनीकेषु सर्वेषु स्थितेष्वाहवनन्दिषु ।
भारद्वाजो महाराज जयद्रथमथाब्रवीत् ॥ ७-८७-११ (४७९९५)

त्वं चैव सौमदत्तिश्च कर्णश्चैव महारथः ।
अश्वत्थामा च शल्यश्च वृषसेनः कृपस्तथा ॥ ७-८७-१२ (४७९९६)
शतं चाश्वसहस्राणां रथानामयुतानि षट् ।
द्विरदानां प्रभिन्नानां सहस्राणि चतुर्दश ॥ ७-८७-१३ (४७९९७)
पदातीनां सहस्राणि दंशितान्येकविंशतिः ।
गव्यूतिषु त्रिमात्रासु मामनासाद्य तिष्ठत ॥ ७-८७-१४ (४७९९८)
तत्रस्थं त्वां न संसोढुं शक्ता देवाः सवासवाः ।
किं पुनः पाण्डवाः सर्वे समाश्वसिहि सैन्धव ॥ ७-८७-१५ (४७९९९)
सञ्जय उवाच। ७-८७-१६क्ष् (४४८७)
एवमुक्तः समाश्वस्तः सिन्धुराजो जयद्रथः ।
सम्प्रायात्सहगान्धारैर्वृतस्तैश्च महारथैः ।
वर्मिभिः सादिभिर्यत्तैः प्रासपाणिहयस्थितैः ॥ ७-८७-१६ (४८०००)
चामरापीडिनः सर्वे जाम्बूनदविभूषिताः ।
जयद्रथस्य राजेन्द्र हयाः साधुप्रवाहिनः ॥ ७-८७-१७ (४८००१)
ते चैकसप्तसाहस्रास्त्रिसाहस्राश्च सैन्धवाः ॥ ७-८७-१८ (४८००२)
मत्तानां सुविरूढानां हस्त्यारोहैर्विशारदैः ।
हस्तिनां भीमरूपाणां वर्मिणां रौद्रकर्मिणाम् ॥ ७-८७-१९ (४८००३)
अध्यर्धेन सहस्रेण पुत्रो दुर्मर्षणस्तव ।
अग्रतः सर्वसैन्यानां योत्स्यमानो व्यवस्थितः ॥ ७-८७-२० (४८००४)
ततो दुःशासनश्चैव विकर्णश्च तवात्मजौ ।
सिन्धुराजार्थसिद्ध्यर्थमग्रानीके व्यवस्थितौ ॥ ७-८७-२१ (४८००५)
दीर्घो द्वादशगव्यूतिः पश्चार्धे पञ्चविस्तृतः ।
व्यूहस्तु चक्रशकटो भारद्वाजेन निर्मितः ॥ ७-८७-२२ (४८००६)
नानानृपतिभिर्वीरैस्तत्रतत्र व्यवस्थितैः ।
रथाश्वगजपत्त्योघैर्द्रोणेन विहितः स्वयम् ॥ ७-८७-२३ (४८००७)
पश्चार्धे तस्य पद्मस्तु गर्भव्यूहः पुनः कृतः ।
सूचीपद्मस्य गर्भस्थो गूढो व्यूहः कृतः पुनः ॥ ७-८७-२४ (४८००८)
एवमेतं महाव्यूहं व्यूह्य द्रोणो व्यवस्थितः ।
सूचीमुखे महेष्वासः कृतवर्मा व्यवस्थितः ॥ ७-८७-२५ (४८००९)
अनन्तरं च काम्भोजो जलसन्धश्च मारिष ।
दुर्योधनश्च कर्णश्च तदनन्तरमेव च ॥ ७-८७-२६ (४८०१०)
ततः शतसहस्राणि योदानानमनिवर्तिनाम् ।
व्यवस्थितानि सर्वाणि शकटे मुखरक्षिणाम् ॥ ७-८७-२७ (४८०११)
तेषां च पृष्ठतो राजा बलेन महता वृतः ।
जयद्रथस्ततो राजा सूचीपार्श्वे व्यवस्थितः ॥ ७-८७-२८ (४८०१२)
शकटस्य तु राजेन्द्र भारद्वाजो मुखे स्थितः ।

नात्र तस्याभवद्भेदो जुगोपैनं ततः स्वयम् ॥ ७-८७-२९ (४८०१३)
श्वेतवर्माम्बरोष्णीषो व्यूढोरस्को महाभुजः ।
धनुर्विस्फारयन्द्रोणस्तस्थौ क्रुद्ध इवान्तकः ।
ग्तस्य सैन्यस्य सर्वस्य नेता गोप्ता च वीर्यवान्'॥ ७-८७-३० (४८०१४)
ताकिनं शोणहयं वेदीकृष्णाजिनध्वजम् ।
द्रोणस्य रथमालोक्य प्रहृष्टाः कुरवोऽभवन् ॥ ७-८७-३१ (४८०१५)
सिद्धचारणसङ्घानां विस्मयः सुमहानभूत् ।
द्रोणेन विहितं दृष्ट्वा व्यूहं क्षुब्धार्णवोपमम् ॥ ७-८७-३२ (४८०१६)
सशैलसागरवनां नानाजनपदाकुलाम् ।
ग्रसेद्व्यूहः क्षितिं सर्वामिति भूतानि मेनिरे ॥ ७-८७-३३ (४८०१७)
बहुरथमनुजाश्वपत्तिनागं
प्रतिभयनिःस्वनमद्भुतानुरूपम् ।
अहितहृदयभेदनं महद्वै
शकटमवेक्ष्य कृतं ननन्द राजा ॥ ॥ ७-८७-३४ (४८०१८)

इति श्रीमन्महाभारते द्रोणपर्वणि जयद्रथवधपर्वणि
चतुर्दशदिसयुद्धे सप्ताशीतितमोऽध्यायः ॥ ८७ ॥
Mahabharata - Drona Parva - Chapter Footnotes

५-८७-४ पीतान् पायितोदकान् ॥
५-८७-९ क्वचेति चकार इत्यर्थे ।इत्याह्वयन्त इत्यन्वयः ॥
५-८७-१४ त्रिमात्रासु त्रिसख्यासु तिसृष्वित्यर्थः ॥
५-८७-२२ पश्चार्धे पश्चाद्भागे पञ्चगव्यूतिः ।चक्रशकटः
चक्रगर्भः शकटः ॥
५-८७-३४ अद्भुतानुरूपमाश्चर्यरूपं एतत्समययोग्यं च ॥
५-८७-८७ सप्ताशीतितमोऽध्यायः ॥
८७ ॥

---

द्रोनपर्व-अध्यय०८८
॥ श्रीः ॥
७.८८. अध्यायः ८८

Mahabharata - Drona Parva - Chapter Topics
अर्जुनस्य रणाङ्गणप्रवेशः ॥१ ॥

Mahabharata - Drona Parva - Chapter Text

७-८८-० (४८०१९)
सञ्जय उवाच। ७-८८-०क्ष् (४४८८)
व्यूढेषु तव सैन्येषु समुत्क्रुष्टेषु मारिष ।
ताड्यमानासु भेरीषु मृदङ्गेष्वानकेषु च ॥ ७-८८-१ (४८०२०)
अनीकानां च संह्रादे वादित्राणां च निःस्वने ।
प्रध्मापितेषु शङ्खेषु सन्नादे रोमहर्षणे ॥ ७-८८-२ (४८०२१)
प्रगृहीतेषु शस्त्रेषु भारतेषु युयुत्सुषु ।
रौद्रे मुहूर्ते सम्प्राप्ते सव्यसाची व्यदृश्यत ॥ ७-८८-३ (४८०२२)
बलानां वायसानां च पुरस्तात्सव्यसाचिनः ।
पिशितासृग्भुजां सङ्घाः प्रलीयन्ते सहस्रशः ॥ ७-८८-४ (४८०२३)
मृगाश्च घोरसन्नादः शिवाश्चाशिवदर्शनाः ॥
दक्षिणेन प्रयातानामस्माकं नेदुरध्वनि ॥ ७-८८-५ (४८०२४)
ग्लोकक्षये महाराज यादृशास्तादृशा हि ते ।
अशिवा धार्तराष्ट्राणां शिवाः पार्थस्य संयुगे'॥ ७-८८-६ (४८०२५)
सनिर्घाता ज्वलन्त्यश्च पेतुरुल्काः सहस्रशः ।
चचाल च मही कृत्स्ना भये घोरे समुत्थिते ॥ ७-८८-७ (४८०२६)
विष्वग्वाताः सनीहारा रूक्षाः शर्करकर्षिणः ।
ववुरायाति कौन्तेये सङ्ग्रामे समुपस्थिते ॥ ७-८८-८ (४८०२७)
नाकुलिश्च शतानीको धृष्टद्युम्नश्च पार्षतः ।
पाण्डवानामनीकानि प्राज्ञौ तौ व्यूहतुस्तदा ॥ ७-८८-९ (४८०२८)
ततो रथसहस्रेण द्विरदानां शतेन च ।
त्रिभिरश्वसहस्रैश्च पदातीनां शतैः शतैः ॥ ७-८८-१० (४८०२९)
अध्यर्धमात्रे धनुषां सहस्रे तनयस्तव ।
अग्रतः सर्वसैन्यानां स्थित्वा दुर्मर्षणोऽब्रवीत् ॥ ७-८८-११ (४८०३०)
अद्य गाण्डीवधन्वानं तपन्तं युद्धदुर्मदम् ।
अहमावारयिष्यामि वेलेव मकरालयम् ॥ ७-८८-१२ (४८०३१)
अद्य पश्यन्तु सङ्ग्रामे धनञ्जयममर्षणम् ।
विषक्तं मयि दुर्धर्षं भिन्नं कुम्भमिवाश्मनि ॥ ७-८८-१३ (४८०३२)
तिष्ठध्वं रथिनो यूयं सङ्ग्राममभिकाङ्क्षिणः ।
युध्यामि संहतानेतान्यशो मानं च वर्धयन् ॥ ७-८८-१४ (४८०३३)
एवं ब्रुवन्महाराज महात्मा स महीपतिः ।
महेष्वासैर्वृतो राजन्महेष्वासो व्यवस्थितः ॥ ७-८८-१५ (४८०३४)
ततोऽर्जुनो महाराज महात्मा महतां पतिः ।
महारथसमाख्यातो महेष्वासो व्यवस्थितः ॥ ७-८८-१६ (४८०३५)
कक्षाग्निरिव दुःस्पर्शः सवज्र इव वासवः ।

दण्डपाणिरिवासह्यो मृत्युः कालेन चोदितः ॥ ७-८८-१७ (४८०३६)
शूलपाणिरिवाक्षोभ्यो वरुणः पाशवानिव ।
युगान्ताग्निरिवार्चिष्मान्दिधक्षुः स्थास्नुजङ्गमम् ॥ ७-८८-१८ (४८०३७)
क्रोधामर्षबलोद्भूतो निवातकवचान्तकः ।
युद्धे जेता स्थितः सत्ये पारयिष्यन्महाव्रतम् ॥ ७-८८-१९ (४८०३८)
आमुक्तकवचः खड्गी जाम्बूनदकिरीटभृत् ।
शुभ्रमाल्याम्बरधरः स्वङ्गदश्चारुकुण्डलः ॥ ७-८८-२० (४८०३९)
रथप्रवरमास्थाय नरो नारायणानुगः ।
विधुन्वन्गाण्डिवं सङ्ख्ये बभौ सूर्य इवोदितः ॥ ७-८८-२१ (४८०४०)
अग्रानीकस्य सोऽभ्यर्धे इषुपाते धनञ्जयः ।
व्यवस्थाप्य रथं राजञ्शङ्खं दध्मौ प्रतापवान् ॥ ७-८८-२२ (४८०४१)
अथ कृष्णोऽप्यसम्भ्रान्तः पार्थेन सह मारिष ।
प्राध्मापयत्पाञ्चजन्यं शङ्खप्रवरमोजसा ॥ ७-८८-२३ (४८०४२)
तयोः शङ्खप्रणादेन तव सैन्ये विशाम्पते ।
आसन्संहृष्टरोमाणः कम्पिता गतचेतसः ॥ ७-८८-२४ (४८०४३)
यथा त्रस्यन्ति भूतानि सर्वाण्यशनिनिःस्वनात् ।
तथा शङ्खप्रणादेन वित्रेसुस्तव सैनिकाः ॥ ७-८८-२५ (४८०४४)
प्रसुस्रुवुः शकृन्मूत्रं वाहनानि च सर्वशः ।
एवं सवाहनं सर्वमाविग्नमभवद्बलम् ॥ ७-८८-२६ (४८०४५)
सीदन्ति स्म नरा राजञ्शङ्खशब्देन मारिष ।
विसंज्ञाश्चाभवन्केचित्केचिद्राजन्वितत्रसुः ॥ ७-८८-२७ (४८०४६)
ततः कपिर्महानादं सहभूतैर्ध्वजालयैः ।
अकरोद्व्यादितास्यश्च भीषयंस्तव सैनिकान् ॥ ७-८८-२८ (४८०४७)
ततः शङ्खाश्च भेर्यश्च मृदङ्गाश्चानकैः सह ।
पुनरेवाभ्यहन्यन्त तव सैन्यप्रहर्षणाः ॥ ७-८८-२९ (४८०४८)
नानावादित्रसंह्रादैः क्ष्वेडितास्फोटिताकुलैः ।
सिंहनादैः समुत्क्रुष्टैः समाधूतैर्महारथैः ॥ ७-८८-३० (४८०४९)
तस्मिंस्तु तुमुले शब्दे भीरूणां भयवर्धने ।
अतीव हृष्टो दाशार्हमब्रवीत्पाकशासनिः ॥ ॥ ७-८८-३१ (४८०५०)

इति श्रीमन्महाभारते द्रोणपर्वणि जयद्रथवधपर्वणि
चतुर्दशदिवसयुद्धे अष्टांशीतितमोऽध्यायः ॥ ८८ ॥
Mahabharata - Drona Parva - Chapter Footnotes

५-८८-१० शतैः शतैर्दशसहस्रैः ॥
५-८८-३० समाधूतैः सञ्चालितैः ॥

५-८८-८८ अष्टाशीतितमोऽध्यायः ॥

---

द्रोनपर्व-अध्यय०८९
॥ श्रीः ॥
७.८९. अध्यायः ८९

Mahabharata - Drona Parva - Chapter Topics
अर्जुनयुद्धवर्णनम् ॥ १ ॥

Mahabharata - Drona Parva - Chapter Text

७-८९-० (४८०५१)
अर्जुन उवाच ७-८९-०क्ष् (४४८९)
चोदयाश्वान्हृषीकेश यत्र दुर्मर्षणः स्थितः ।
एतद्भित्त्वा गजानीकं प्रवेक्ष्याम्यरिवाहिनीम् ॥ ७-८९-१ (४८०५२)
सञ्जय उवाच। ७-८९-२क्ष् (४४९०)
एवमुक्तो महाबाहुः केशवः सव्यसाचिना ।
अचोदयद्धयांस्तत्र यत्र दुर्मर्षणः स्थितः ॥ ७-८९-२ (४८०५३)
स सम्प्रहारस्तुमुलः सम्प्रवृत्तः सुदारुणः ।
एकस्य च बहूनां च रथनागनरक्षयः ॥ ७-८९-३ (४८०५४)
ततः सायकवर्षेण पर्जन्य इव वृष्टिमान् ।
परानवाकिरत्पार्थः पर्वतानिव नीरदः ॥ ७-८९-४ (४८०५५)
ते चापि रथिनः सर्वे त्वरिताः कृतहस्तवत् ।
अवाकिरन्बाणजालैस्तत्र कृष्णधनञ्जयौ ॥ ७-८९-५ (४८०५६)
ततः क्रुद्धो महाबाहुर्वार्यमाणः परैर्युधि ।
शिरांसि रथिनां पार्थः कायेभ्योऽपाहरच्छरैः ॥ ७-८९-६ (४८०५७)
उद्भ्रान्तनयनैर्वक्त्रैः सन्दष्टौष्ठपुटैः शुभैः ।
सकुण्डलशिरस्त्राणैर्वसुधा समकीर्यत ॥ ७-८९-७ (४८०५८)
पुण्डरीकवनानीव विध्वस्तानि समन्ततः ।
विनिकीर्णानि योधानां वदनानि चकाशिरे ॥ ७-८९-८ (४८०५९)
सुवर्णचित्राभरणाः संसिक्ता रुधिरेण च ।
संसक्ता इव दृश्यन्ते मेघसङ्घाः सविद्युतः ॥ ७-८९-९ (४८०६०)
शिरसां पततां राजञ्शब्दोऽभूद्वसुधातले ।
कालेन परिपक्वानां तालानां पततामिव ॥ ७-८९-१० (४८०६१)
कबन्ध उत्थितः कश्चिद्विष्फार्य सशरं धनुः ।
किञ्चित्खड्गं विनिष्कृष्य भुजेनोद्यम्य तिष्ठति ।

ग्गृहीत्वाऽन्यस्य केशेषु शिरो नृत्यति चापरः'॥ ७-८९-११ (४८०६२)
पतितानि न जानन्ति शिरांसि पुरुषर्षभाः ।
अमृष्यमाणाः सङ्ग्रामे कौन्तेयं जयगृद्धिनः ॥ ७-८९-१२ (४८०६३)
हयानामुत्तमाङ्गैश्च हस्तिहस्तैश्च मेदिनी ।
बाहुभिश्च शिरोभिश्च वीराणां समकीर्यत ॥ ७-८९-१३ (४८०६४)
अयं पार्थः कुतः पार्थः पार्थोऽयमिति सर्वशः ।
गतिष्ठ पार्थेहि मां पार्थ क्व यासीति च जल्पताम्'।
तव सैन्येषु योधानां पार्थभूतमिवाभवत् ॥ ७-८९-१४ (४८०६५)
अन्योन्यमपि चाजघ्नुरात्मानमपि चापरे ।
पार्थभूतममन्यन्त जनाः कालेन मोहिताः ॥ ७-८९-१५ (४८०६६)
निष्टनन्तः सरुधिरा विसंज्ञा गाढवेदनाः ।
शयाना बहवो वीराः कीर्तयन्तः स्वबान्धवान् ॥ ७-८९-१६ (४८०६७)
सभिण्डिपालाः सप्रासाः सशक्त्यृष्टिपरश्वथाः ।
सनिर्व्यूहाः सनिस्त्रिंशाः सशरासनतोमराः ॥ ७-८९-१७ (४८०६८)
सबाणवर्माभरणाः सगदाः साङ्गदा रणे ।
महाभुजगसङ्काशा बाहवः परिघोपमाः ॥ ७-८९-१८ (४८०६९)
उद्वेष्टन्ति विचेष्टन्ति सञ्चेष्टन्ति च सर्वशः ।
वेगं कुर्वन्ति संरब्धा निकृत्ताः परमेषुभिः ॥ ७-८९-१९ (४८०७०)
यो यः स्म समरे पार्थं प्रतिसञ्चरते नरः ।
तस्यतस्यान्तको बाणः शरीरमुपसर्पति ॥ ७-८९-२० (४८०७१)
नृत्यतो रथमार्गेषु धनुर्व्यायच्छतस्तथा ।
न कश्चित्तत्र पार्थश्च ददृशेऽन्तरमण्वपि ॥ ७-८९-२१ (४८०७२)
यत्तस्य घटमानस्य क्षिप्रं विक्षिपतः शरान् ।
लाघवात्पाण्डुपुत्रस्य व्यस्मयन्त परे जनाः ॥ ७-८९-२२ (४८०७३)
हस्तिनं हस्तियन्तारमश्वमाश्विकमेव च ।
अभिनत्फल्गुनो बाणै रथिनं च ससारथिम् ॥ ७-८९-२३ (४८०७४)
आवर्तमानमावृत्तं युध्यमानं च पाण्डवः ।
प्रमुखे तिष्ठमानं च न कञ्चिन्न निहन्ति सः ॥ ७-८९-२४ (४८०७५)
यथोदयन्वै गगने सूर्यो हन्ति महत्तमः ।
तथाऽर्जुनो गजानीकमवधीत्कङ्कपत्रिभिः ॥ ७-८९-२५ (४८०७६)
हस्तिभिः पतितैर्भिन्नैस्तव सैन्यमदृश्यत ।
अन्तकाले यथा भूमिर्व्यवकीर्णा महीधरैः ॥ ७-८९-२६ (४८०७७)
यथा मध्यंदिने सूर्यो दुष्प्रेक्ष्यः प्राणिभिः सदा ।
तथा धनञ्जयः क्रुद्धो दुष्प्रेक्ष्यो युधि शत्रुभिः ॥ ७-८९-२७ (४८०७८)
तत्तथा तव पुत्रस्य सैन्यं युधि परन्तप ।
प्रभग्नं द्रुतमाविग्नमतीव शरपीडितम् ॥ ७-८९-२८ (४८०७९)

मारुतेनेव महता मेघानीकं व्यदीर्यत ।
प्रकाल्यमानं तत्सैन्यं नाशकत्प्रतिवीक्षितुम् ॥ ७-८९-२९ (४८०८०)
प्रतोदैश्चापकोटीभिर्हुंकारैः साधुवाहितैः ।
कशापार्ष्ण्यभिघातैश्च वाग्भिरुग्राभिरेव च ॥ ७-८९-३० (४८०८१)
चोदयन्तो हयांस्तूर्णं पलायन्ते स्म तावकाः ।
सादिनो रथिनश्चैव पत्तयश्चार्जुनार्दिताः ॥ ७-८९-३१ (४८०८२)
पार्ष्ण्यङ्गुष्ठाङ्कुशैर्नागं चोदयन्तस्तथाऽपरे ।
शरैः सम्मोहिताश्चान्ये तमेवाभिमुखा ययुः ॥ ७-८९-३२ (४८०८३)
तव योघ हतोत्साहा विभ्रान्तमनसस्तदा ॥ ॥ ७-८९-३३ (४८०८४)

इति श्रीमन्महाभारते द्रोणपर्वणि जयद्रथवधपर्वणि
चतुर्दशदिवसयुद्धे एकोननवतितमोऽध्यायः ॥ ८९ ॥
Mahabharata - Drona Parva - Chapter Footnotes

५-८९-१७ निर्व्यूह आयुधविशेषः ॥
५-८९-२० प्रतिसञ्चरते प्रत्युद्रच्छति ॥
५-८९-२२ यत्तस्यावहितस्य ॥
५-८९-२८ द्रुतं विद्रुतम् । आविग्नं भीतम् ॥
५-८९-३० साधुवाहितैः सुष्ठु व्यापारीतैः ॥
५-८९-८९ एकोननवतितमोऽध्यायः ॥

---

द्रोनपर्व-अध्यय०९०
॥ श्रीः ॥
७.९०. अध्यायः ९०

Mahabharata - Drona Parva - Chapter Topics
अर्जुनेन दुःशासनपराजयः ॥ १ ॥

Mahabharata - Drona Parva - Chapter Text

७-९०-० (४८०८५)
धृतराष्ट्र उवाच। ७-९०-०क्ष् (४४९१)
तस्मिन्प्रभग्ने सैन्याग्रे वध्यमाने किरीटिना ।
केतु तत्र रणे वीराः प्रत्युदीयुर्धनञ्जयम् ॥ ७-९०-१ (४८०८६)
आहोस्विच्छकटव्यूहं प्रविष्टा मोघनिश्चयाः ॥
द्रोणमाश्रित्य तिष्ठन्ति प्राकारमकुतोभयाः ॥ ७-९०-२ (४८०८७)

सञ्जय उवाच। ७-९०-३क्ष् (४४९२)
तथाऽर्जुनेन सम्भग्ने तस्मिंस्तव बलेऽनघ ।
हतवीरे हतोत्साहे पलायनकृतक्षणे ॥ ७-९०-३ (४८०८८)
पाकशासनिनाऽभीक्ष्णं वध्यमाने शरोत्तमैः ।
न तत्र कश्चित्सङ्ग्रामे शशाकार्जुनमीक्षितुम् ॥ ७-९०-४ (४८०८९)
ततस्तव सुतो राजन्दृष्ट्वा सैन्यं तथागतम् ।
दुःशासनो भृशं क्रुद्धो युद्धायार्जुनमभ्यगात् ॥ ७-९०-५ (४८०९०)
सकाञ्चनविचित्रेण कवचेन समावृतः ।
जाम्बूनदशिरस्त्राणः शूरस्तीव्रपराक्रमः ॥ ७-९०-६ (४८०९१)
नागानीकेन महता ग्रसन्निव महीमिमाम् ।
दुःशासनो महाराज सव्यसाचिनमावृणोत् ॥ ७-९०-७ (४८०९२)
ह्रादेन गजघण्टानां शङ्खानां निनदेन च ।
ज्याक्षेपनिनदैश्चैव विरावेण च दन्तिनाम् ॥ ७-९०-८ (४८०९३)
भूर्दिशश्चान्तरिक्षं च शब्देनासीत्समावृतम् ।
ग्युवराजो बलश्लाघी पिङ्गलः प्रियदर्शनः'।
स मुहूर्तं प्रतिभयो दारुणः समपद्यत ॥ ७-९०-९ (४८०९४)
तान्दृष्ट्वा पततस्तूर्णमङ्कुशैरभिचोदितान् ।
व्यालम्बहस्तान्संरब्धान्सपक्षानिव पर्वतान् ॥ ७-९०-१० (४८०९५)
सिंहनादेन महता नरसिंहो धनञ्जयः ।
गतदाचलघनप्रख्यं पताकाशतसङ्कुलम्'।
गजानीकममित्राणामभितो व्यधमच्छरैः ॥ ७-९०-११ (४८०९६)
महोर्मिणमिवोद्धूतं श्वसनेन महार्णवम् ।
किरीटी तद्गजानीकं प्राविशन्मकरो यथा ॥ ७-९०-१२ (४८०९७)
खमाश्रित इवादित्यः प्रतपन्स युगक्षये ।
ददृशे दिक्षु सर्वासु पार्थः परपुरञ्जनः ॥ ७-९०-१३ (४८०९८)
खुरशब्देन चाश्वानां नेमिघोषेण तेन च ।
तेन चोत्क्रुष्टशब्देन ज्यानिनादेन तेन च ॥ ७-९०-१४ (४८०९९)
नानावादित्रशब्देन पाञ्चजन्यस्वनेन च ।
देवदत्तस्य घोषेण गाण्डीवनिनदेन च ।
मन्दवेगा नरा नागा बभूवुस्ते विचेतसः ॥ ७-९०-१५ (४८१००)
शरैराशीविषस्पर्शैर्निर्भिन्नाः सव्यसाचिना ।
ते गजाः समसीदन्त मग्नाः पङ्कार्णवेष्विव ॥ ७-९०-१६ (४८१०१)
युगपच्च समाविष्टैः शरैर्गाण्डीवधन्वनः ।
अनेकशतसाहस्रैर्द्रुमा मधुकरैरिव ।
गपुङ्खावशिष्टैर्बहुभिः शोणितोत्पीडवाहिभिः'॥ ७-९०-१७ (४८१०२)
आरावं परमं कृत्वा वध्यमानाः किरीटिना ।

निपेतुरनिशं भूमौ छिन्नपक्षा इवाद्रयः ॥ ७-९०-१८ (४८१०३)
अपरे दन्तवेष्टेषु कुम्भेषु च कटेषु च ।
शरैः समर्पिता नागाः क्रौञ्चवद्व्यनदन्मुहुः ॥ ७-९०-१९ (४८१०४)
गजस्कन्धगतानां च पुरुषाणां किरीटिना ।
छिद्यन्ते चोत्तमाङ्गानि भुल्लैः सन्नतपर्वभिः ॥ ७-९०-२० (४८१०५)
सकुण्डलानां पततां शिरसां धरणीतले ।
पद्मानामिव सङ्घातैः पार्थश्चक्रे निवेदनम् ॥ ७-९०-२१ (४८१०६)
यन्त्रबद्धा विकवचा व्रणार्ता रुधिरोक्षिताः ।
भ्रमत्सु युधि नागेषु मनुष्या विललम्बिरे ॥ ७-९०-२२ (४८१०७)
केचिदेकेन बाणेन सुयुक्तेन सुपत्रिणा ।
द्वौ त्रयश्च विनिर्भिन्ना निपेतुर्धरणीतले ॥ ७-९०-२३ (४८१०८)
अपरे मदसंरब्धा मातङ्गाः पर्वतोपमाः ।
सारोहा न्यपतन्भूमौ द्रुमवन्त इवाचलाः ॥ ७-९०-२४ (४८१०९)
मौर्वीं ध्वजं धनुश्चैव युगमीषां तथैव च ।
रथिनां कुट्टयामास भल्लैः सन्नतपर्वभिः ॥ ७-९०-२५ (४८११०)
न सन्दधन्न चाकर्षन्न विमुञ्चन्न चोद्वहन् ।
मण्डलेनैव धनुषा नृत्यन्पार्थः स्म दृश्यते ॥ ७-९०-२६ (४८१११)
अतिविद्धाश्च नाराचैर्वमन्तो रुधिरं मुखैः ।
मुहूर्तान्न्यपतन्नन्ये वारणा वसुधातले ॥ ७-९०-२७ (४८११२)
उत्थितान्यगणेयानि कबन्धानि समन्ततः ।
अदृश्यन्त महाराज तस्मिन्परमसङ्कुले ॥ ७-९०-२८ (४८११३)
सचापाः साङ्गुलित्राणाः सखड्गाः साङ्गदा रणे ।
अदृश्यन्त भुजाश्छिन्ना हेमाभरणभूषिताः ॥ ७-९०-२९ (४८११४)
सूपस्करैरधिष्ठानैरीषादण्डकबन्धुरैः ।
चक्रैर्विमथितैरक्षैर्भग्नैश्च बहुधा युगैः ॥ ७-९०-३० (४८११५)
चर्मचापधरैश्चैव व्यवकीर्णैस्ततस्ततः ।
स्रग्भिराभरणैर्वस्त्रैः पतितैश्च महाध्वजैः ॥ ७-९०-३१ (४८११६)
निहतैर्वारणैरश्वैः क्षत्रियैश्च निपातितैः ।
अदृश्यत मही तत्र दारुणप्रतिदर्शना ॥ ७-९०-३२ (४८११७)
एवं दुःशासनबलं वध्यमानं किरीटिना ।
सम्प्राद्रवन्महाराज व्यथितं सहनायकम् ॥ ७-९०-३३ (४८११८)
गएवं बले द्रुते याते राजपुत्रं महारथम् ।
विव्याध दशभिर्बाणैस्तिष्ठतिष्ठेति चाब्रवीत् ॥ ७-९०-३४ (४८११९)
जीवितेन कथं गन्ता दुरुक्तं यावदद्य ते ।
तद्वाक्यसदृशं कर्म कुरु त्वं यदि मन्यसे ॥ ७-९०-३५ (४८१२०)
एवमुक्त्वा ततो राजा पार्थः पार्थिवमर्दनः ।

भृशं क्रुद्धो महाराज अविध्यत्तनयं तव'॥ ७-९०-३६ (४८१२१)
ततो दुःशासनस्त्रस्तः सहानीकः शरार्दितः ।
द्रोणं त्रातारमाकाङ्क्षञ्शकटव्यूहमभ्यगात् ॥ ॥ ७-९०-३७ (४८१२२)

इति श्रीमन्महाभारते द्रोणपर्वणि जयद्रथवधपर्वणि
चतुर्दशदिवसयुद्धे नवतितमोऽध्यायः ॥ ९० ॥
Mahabharata - Drona Parva - Chapter Footnotes

५-९०-३ पलायने कृतः क्षणोऽवसरो येन ॥
५-९०-९ प्रतिभयो भयङ्करः ।दारुणः क्रूरः ॥
५-९०-१९ दन्तवेष्टेषु दन्तमूलेषु ।कटेषु कटिषु ॥
५-९०-२१ निवेदनमुपाहारम् ॥
५-९०-२२ यन्त्रबद्धा यन्त्रैरालिखिताः ॥
५-९०-९० नवतितमोऽध्यायः ॥

---

द्रोनपर्व-अध्यय०९१
॥ श्रीः ॥
७.९१. अध्यायः ९१

Mahabharata - Drona Parva - Chapter Topics
अर्जुनस्य व्यूहमुखस्थेन द्रोणेन कञ्चित्कालं युद्ध्वा तमपहाय
व्यूहप्रवेशः ॥ १ ॥

Mahabharata - Drona Parva - Chapter Text

७-९१-० (४८१२३)
सञ्जय उवाच। ७-९१-०क्ष् (४४९३)
दुःशसनबलं हत्वा सव्यसाची महारथः ।
सिन्धुराजं परीप्सन्वै द्रोणानीकमुपाद्रवत् ॥ ७-९१-१ (४८१२४)
स तु द्रोणं समासाद्य व्यूहस्य प्रमुखे स्थितम् ।
कृताञ्जलिरिदं वाक्यं कृष्णस्यानुमतेऽब्रवीत् ॥ ७-९१-२ (४८१२५)
शिवेन ध्याहि मां ब्रह्मन्स्वस्ति चैव वदस्व मे ।
भवत्प्रसादादिच्छामि प्रवेष्टं दुर्भिदां चमूम् ॥ ७-९१-३ (४८१२६)
भवान्पितृसमो मह्यं धर्मराजसमोऽपि च ।
धौम्यकृष्णसमश्चैव सत्यमेतद्ब्रवीमि ते ॥ ७-९१-४ (४८१२७)
अश्वत्थामा यथा तात रक्षणीयस्त्वयाऽनघ ।

तथाऽहमपि ते रक्ष्यः सदैव द्विजसत्तम ॥ ७-९१-५ (४८१२८)
तव प्रसादादिच्छेयं सिन्धुराजानमाहवे ।
निहन्तुं द्विपदां श्रेष्ठ प्रतिज्ञां रक्ष मे प्रभो ॥ ७-९१-६ (४८१२९)
सञ्जय उवाच। ७-९१-७क्ष् (४४९४)
एवमुक्तस्तदाऽऽचार्यः प्रत्युवाच स्मयन्निव ।
मामजित्वा न बीभत्सो शक्यो जेतुं जयद्रथः ॥ ७-९१-७ (४८१३०)
एतावदुक्त्वा तं द्रोणः शरव्रातैरवाकिरत् ।
सरथाश्वध्वजं तीक्ष्णैः प्रहसन्वै ससारथिम् ॥ ७-९१-८ (४८१३१)
ततोऽर्जुनः शरव्रातान्द्रोणस्यावार्य सायकैः ।
द्रोणमभ्यर्दयद्बाणैर्घोररूपैर्महत्तरैः ॥ ७-९१-९ (४८१३२)
विव्याध च रणे द्रोणमनुमान्य विशाम्पते ।
क्षत्रधर्मं समास्थाय नवभिः सायकैः पुनः ॥ ७-९१-१० (४८१३३)
तस्येषूनिषुभिश्छित्त्वा द्रोणो विव्याध तावुभौ ।
विषाग्निज्वलितप्रख्यैरिषुभिः कृष्णपाण्डवौ ॥ ७-९१-११ (४८१३४)
इयेप पाण्डवस्तस्य बाणैश्छेत्तुं शरासनम् ।
तस्य चिन्तयतस्त्वेव फल्गुनस्य महात्मनः ॥ ७-९१-१२ (४८१३५)
द्रोणः शरैरसम्भ्रान्तो ज्यां चिच्छेदाशु वीर्यवान् ।
विव्याध च हयानस्य ध्वजं सारथिमेव च ॥ ७-९१-१३ (४८१३६)
अर्जुनं च शरैर्वीरः स्मयमानोऽभ्यवाकिरत् ।
एतस्मिन्नन्तरे पार्थः सज्यं कृत्वा महद्धनुः ॥ ७-९१-१४ (४८१३७)
विशेषयिष्यन्नाचार्यं सर्वास्त्रविदुषां वरः ।
मुमोच षट्शतान्बाणान्गृहीत्वैकमिव द्रुतम् ॥ ७-९१-१५ (४८१३८)
पुनः सप्तशतानन्यान्सहस्रं चानिवर्तिनः ।
चिक्षेपायुतशश्चान्यांस्तेऽघ्नन्द्रोणस्य तां चमूम् ॥ ७-९१-१६ (४८१३९)
तैः सम्यगस्तैर्बलिना कृतिना चित्रयोधिना ।
मनुष्यवाजिमातङ्गा विद्धाः पेतुर्गतासवः ॥ ७-९१-१७ (४८१४०)
विसूताश्वध्वजाः पेतुः सञ्छिन्नायुधजीविताः ।
रथिनो रथमुख्येभ्यः सहसा शरपीडिताः ॥ ७-९१-१८ (४८१४१)
चूर्णिताक्षिप्तदग्धानां वज्रानिलहुताशनैः ।
तुल्यरूपा गजाः पेतुर्गिर्यग्राम्बुदवेश्मनाम् ॥ ७-९१-१९ (४८१४२)
पेतुरश्वसहस्राणि प्रहतान्यर्जुनेषुभिः ।
हंसा हिमवतः पृष्ठे वारिविप्रहता इव ॥ ७-९१-२० (४८१४३)
रथाश्वद्विपपत्त्योघाः सलिलौघा इवाद्भुताः ।
युगान्तादित्यरश्म्याभैः पाण्डवास्त्रशरैर्हताः ॥ ७-९१-२१ (४८१४४)
तं पाण्डवादित्यशरांशुजालं
कुरुप्रवीरान्युधि निष्टपन्तम् ।

स द्रोणमेघः शरवृष्टिवेगैः
प्राच्छादयन्मेघ इवार्करश्मीन् ॥ ७-९१-२२ (४८१४५)
अथात्यर्थं विसृष्टेन द्विषतामसुभोजिना ।
आजघ्ने वक्षसि द्रोणो नाराचेन धनञ्जयम् ॥ ७-९१-२३ (४८१४६)
स विह्वलितसर्वाङ्गः क्षितिकम्पे यथाऽचलः ।
धैर्यमालम्ब्य बीभत्सुर्द्रोणं विव्याध पत्रिभिः ॥ ७-९१-२४ (४८१४७)
द्रोणस्तु पञ्चभिर्बाणैर्वासुदेवमताडयत् ।
अर्जुनं च त्रिसप्तत्या ध्वजं चास्य त्रिभिः शरैः ॥ ७-९१-२५ (४८१४८)
विशेषयिष्यञ्शिष्यं च द्रोणो राजन्पराक्रमी ।
अदृश्यमर्जुनं चक्रे निमेषाच्छरवृष्टिभिः ॥ ७-९१-२६ (४८१४९)
प्रसक्तान्पततोऽद्राक्ष्म भारद्वाजस्य सायकान् ।
मण्डलीकृतमेवास्य धनुश्चादृश्यताद्भुतम् ॥ ७-९१-२७ (४८१५०)
तेऽभ्ययुः समरे राजन्वासुदेवधनञ्जयौ ।
द्रोणसृष्टाः सुबहवः कङ्कपत्रपरिच्छदाः ॥ ७-९१-२८ (४८१५१)
तत्राद्भुतमपश्याम शिलानामिव सर्पणम् ।
यद्द्रोणं तरसा पार्थो वृद्धं बालोऽपि नातरत् ॥ ७-९१-२९ (४८१५२)
चिन्तयामास वार्ष्णेयो दृष्ट्वा द्रोणस्य विक्रमम् ।
नातिवर्तिष्यते ह्योनं वेलामिव महार्णवः ॥ ७-९१-३० (४८१५३)
ततः पार्थं समुद्विग्नं लक्ष्य चिन्तयतेऽच्युतः ।
द्रोणस्य चापि विक्रान्तं दृष्ट्वा मधुनिषूदनः ।
इत्यब्रवीद्वासुदेवो धनञ्जयमुदारधीः ॥ ७-९१-३१ (४८१५४)
पार्थपार्थ महाबाहो न नः कालात्ययो भवेत् ।
द्रोणमुत्सृज्य गच्छामो ब्राह्मणोऽसौ गतक्लमः ॥ ७-९१-३२ (४८१५५)
सञ्जय उवाच। ७-९१-३३क्ष् (४४९५)
पार्थश्चाप्यब्रवीत्कृष्णं यथेष्टमिति केशवम् ॥ ७-९१-३३ (४८१५६)
ततः प्रदक्षिणं कृत्वा द्रोणं प्रायान्महाभुजम् ।
परिवृत्तश्च बीभत्सुरगच्छद्विसृजञ्शरान् ॥ ७-९१-३४ (४८१५७)
ततोऽब्रवीत्स्वयं द्रोणः क्वेदं पाण्डव गम्यते ।
ननु नाम रणे शत्रुमजित्वा न निवर्तसे ॥ ७-९१-३५ (४८१५८)
अर्जुन उवाच। ७-९१-३६क्ष् (४४९६)
गुरुर्भवान्न मे शत्रुः शिष्यः पुत्रसमोऽस्मि ते ।
न चास्ति स पुमाँल्लोके यस्त्वां युधि पराजयेत् ॥ ७-९१-३६ (४८१५९)
सञ्जय उवाच। ७-९१-३७क्ष् (४४९७)
एवं ब्रुवाणो बीभत्सुर्जयद्रथवधोत्सुकः ।
त्वरायुक्तो महाबाहुस्त्वत्सैन्यं समुपाद्रवत् ॥ ७-९१-३७ (४८१६०)
तं चक्ररक्षौ पाञ्चाल्यौ युधामन्यूत्तमौजसौ ।

अन्वयातां महात्मानौ विशन्तं तावकं बलम् ॥ ७-९१-३८ (४८१६१)
ततो जयो महाराज कृतवर्मा च सात्वतः ।
काम्भोजश्च श्रुतायुश्च धनञ्जयमवारयन् ॥ ७-९१-३९ (४८१६२)
तेषां दशसहस्राणि रथानामनुयायिनाम् ।
अभीषाहाः शूरसेनाः शिबयोऽथ वसातयः ॥ ७-९१-४० (४८१६३)
मावेल्लका ललित्थाश्च केकया मद्रकास्तथा ।
नारायणाश्च गोपालाः काम्भोजानां च ये गणाः ॥ ७-९१-४१ (४८१६४)
कर्णेन विजिताः पूर्वं सङ्ग्रामे शूरसम्मताः ।
भारद्वाजं पुरस्कृत्य हृष्टात्मानोऽर्जुनं प्रति ॥ ७-९१-४२ (४८१६५)
पुत्रशोकाभिसन्तप्तं क्रुद्धं मृत्युमिवान्तकम् ।
त्यजन्तं तुमुले प्राणान्सन्नद्धं चित्रयोधिनम् ॥ ७-९१-४३ (४८१६६)
गाहमानमनीकानि मातङ्गमिव यूथपम् ।
महेष्वासं पराक्रान्तं नरव्याघ्रमवारयन् ॥ ७-९१-४४ (४८१६७)
ततः प्रववृते युद्धं तुमुलं रोमहर्षणम् ।
अन्योन्यं वै प्रार्थयतां योधानामर्जुनस्य च ॥ ७-९१-४५ (४८१६८)
जयद्रथवधप्रेप्सुमायान्तं पुरुषर्षभम् ।
न्यवारयन्त सहिताः क्रिया व्याधिमिवोत्थितं ॥ ॥ ७-९१-४६ (४८१६९)

इति श्रीमन्महाभारते द्रोणपर्वणि जयद्रथवधपर्वणि
चतुर्दशोदिसयुद्धे एकनवतिततमोऽध्यायः ॥ ९१ ॥
Mahabharata - Drona Parva - Chapter Footnotes

५-९१-१९ गिर्यग्राम्बुदवेश्मनां वज्रानिलहुताशनैः
चूर्णिताक्षिप्तदग्धानां इति यथासङ्ख्येनान्वयः ॥
५-९१-९१ एकनवतितमोऽध्यायः ॥

---

द्रोनपर्व-अध्यय०९२
॥ श्रीः ॥
७.९२. अध्यायः ९२

Mahabharata - Drona Parva - Chapter Topics
अर्जुनेन श्रुतायुधसुदक्षिणयोर्वधः ॥ १ ॥

Mahabharata - Drona Parva - Chapter Text

७-९२-० (४८१७०)

सञ्जय उवाच। ७-९२-०क्ष् (४४९८)
सन्निरुद्धस्तु तैः पार्थो महाबलपराक्रमः ।
द्रुतं समनुयातश्च द्रोणेन रथिनां वरः ॥ ७-९२-१ (४८१७१)
किरन्निषुगणांस्तीक्ष्णान्स रश्मीनिव भास्करः ।
तापयामास तत्सैन्यं देहं व्याधिगणो यथा ॥ ७-९२-२ (४८१७२)
अश्वो विद्धो रथश्छिन्नः सारोहः पातितो गजः ।
छत्राणि चापविद्धानि रथाश्चक्रैर्विना कृताः ॥ ७-९२-३ (४८१७३)
विद्रुतानि च सैन्यानि शरार्तानि समन्ततः ।
इत्यासीत्तुमुलं युद्धं न प्राज्ञायत किञ्चन ॥ ७-९२-४ (४८१७४)
तेषां संयच्छतां सङ्ख्ये परस्परमजिह्मगैः ।
अर्जुनो ध्वजिनीं राजन्नभीक्ष्णं समकम्पयत् ॥ ७-९२-५ (४८१७५)
सत्यां चिकीर्षमाणस्तु प्रतिज्ञां सत्यसङ्गरः ।
अभ्यद्रवद्रथश्रेष्ठं शोणाश्वं श्वेतवाहनः ॥ ७-९२-६ (४८१७६)
तं द्रोणः पञ्चविंशत्या मर्मभिद्भिरजिह्मगैः ।
अन्तेवासिनमाचार्यो महेष्वासं समार्पयत् ॥ ७-९२-७ (४८१७७)
तं तूर्णमिव बीभत्सुः सर्वशस्त्रभृतां वरः ।
अभ्यधावदिषूनस्यन्निषुवेगविघातकान् ॥ ७-९२-८ (४८१७८)
तस्याशु क्षिपतो भल्लान्भल्लैः सन्नतपर्वभिः ।
प्रत्यविध्यदमेयात्मा ब्रह्मास्त्रं समुदीरयन् ॥ ७-९२-९ (४८१७९)
तदद्भुतमपश्याम द्रोणस्याचार्यकं युधि ।
यतमानो युवा नैनं प्रत्यविध्यद्यदर्जुनः ॥ ७-९२-१० (४८१८०)
क्षरन्निव महामेघो वारिधाराः सहस्रशः ।
द्रोणमेघः पार्थशैलं ववर्ष शरवृष्टिभिः ॥ ७-९२-११ (४८१८१)
अर्जुनः शरवर्षं तच्छरवर्षेण वीर्यवान् ।
अवारयदसम्भ्रान्तो न त्वाचार्यमपीडयत् ॥ ७-९२-१२ (४८१८२)
द्रोणस्तु पञ्चविंशत्या श्वेतवाहनमार्दयत् ।
वासुदेवं च सप्तत्या बाह्वोरुरसि चाशुगैः ॥ ७-९२-१३ (४८१८३)
पार्थस्तु प्रहसन्धीमानाचार्यं स शरौघिणम् ।
विसृजन्तं शितान्बाणानवारयत तं युधि ॥ ७-९२-१४ (४८१८४)
अथ तौ वध्यमानौ तु द्रोणेन रथसत्तमौ ।
अवर्जयेतां दुर्धर्षं युगान्ताग्निमिवोत्थितम् ॥ ७-९२-१५ (४८१८५)
वर्जयन्निशितान्बाणान्द्रोणचापविनिःसृतान् ।
किरीटमाली कौन्तेयो भोजानीकमथाविशत् ॥ ७-९२-१६ (४८१८६)
सोऽन्तरा कृतवर्माणं काम्भोजं च सुदक्षिणम् ।
अभ्ययाद्वर्जयन्द्रोणं मैनाकमिव पर्वतम् ॥ ७-९२-१७ (४८१८७)
ततो भोजो नरव्याघ्रो दुर्धर्षं कुरुसत्तमम् ।

अविध्यत्तूर्णमव्यग्रो दशभिः कङ्कपत्रिभिः ॥ ७-९२-१८ (४८१८८)
तमर्जुनः शतेनाजौ राजन्विव्याध पत्रिणाम् ।
पुनश्चान्यैस्त्रिभिर्बाणैर्मोहयन्निव सात्वतम् ॥ ७-९२-१९ (४८१८९)
भोजस्तु प्रहसन्पार्थं वासुदेवं च माधवम् ।
एकैकं पञ्चविंशत्या सायकानां समार्पयत् ॥ ७-९२-२० (४८१९०)
तस्यार्जुनो धनुश्छित्त्वा वियाधैनं त्रिसप्तभिः ।
शरैरग्निशिखाकारैः क्रुद्धाशीविषसन्निभैः ॥ ७-९२-२१ (४८१९१)
अथान्यद्धनुरादाय कृतवर्मा महारथः ।
पञ्चभिः सायकैस्तूर्णं विव्याधोरसि भारत ॥ ७-९२-२२ (४८१९२)
पुनश्च निशितैर्बाणैः पार्थं विव्याध पञ्चभिः ।
तं पार्थो नवभिर्बाणैराजघान स्तनान्तरे ॥ ७-९२-२३ (४८१९३)
दृष्ट्वा विषक्तं कौन्तेयं कृतवर्मरथं प्रति ।
चिन्तयामास वार्ष्णेयो न नः कालात्ययो भवेत् ॥ ७-९२-२४ (४८१९४)
ततः कृष्णोऽब्रवीत्पार्थं कृतवर्मणि मा दयाम् ।
कुरु सम्बन्धकं हित्वा प्रमथ्यैनं विशातय ॥ ७-९२-२५ (४८१९५)
ततः स कृतवर्माणं मह्योयित्वाऽर्जुनः शरैः ।
अभ्यगाज्जवनैरश्वैः काम्भोजानामनीकिनीम् ॥ ७-९२-२६ (४८१९६)
अमर्षितस्तु हार्दिक्यः प्रविष्टे श्वेतवाहने ।
विधुन्वन्सशरं चापं पाञ्चाल्याभ्यां समागतः ॥ ७-९२-२७ (४८१९७)
चक्ररक्षौ तु पाञ्चाल्यावर्जुनस्य पदानुगौ ।
पर्यवारयदायान्तौ कृतवर्मा रथेषुभिः ॥ ७-९२-२८ (४८१९८)
तावविध्यत्ततो भोजः कृतवर्मा शितैः शरैः ।
त्रिभिरेव युधामन्युं चतुर्भिश्चोत्तमौजसम् ॥ ७-९२-२९ (४८१९९)
तावप्येनं विविधतुर्दशभिर्दशभिः शरैः ।
त्रिभिरेव युधामन्युरुत्तगौजास्त्रिभिस्तथा ।
सञ्चिच्छिदतुरप्यस्य ध्वजं कार्मुकमेव च ॥  ७-९२-३० (४८२००)
अथान्यद्धनुरादाय हार्दिक्यः क्रोधमूर्च्छितः ।
कृत्वा विधनुषौ वीरौ शरवर्षैरवाकिरत् ॥ ७-९२-३१ (४८२०१)
तावन्ये धनुषी सज्ये कृत्वा भोजं विजघ्नतुः ।
तेनान्तरेषु बीभत्सुर्विवेशामित्रवाहिनीम् ॥ ७-९२-३२ (४८२०२)
न लेभाते तु तौ द्वारं वारितौ कृतवर्मणा ।
धार्तराष्ट्रेष्वनीकेषु यतमानौ नरर्षभौ ॥ ७-९२-३३ (४८२०३)
अनीकान्यर्दयन्युद्धे त्वरितः श्वेतवाहनः ।
नावधीत्कृतवर्माणं प्राप्तमप्यरिसूदनः ॥ ७-९२-३४ (४८२०४)
तं दृष्ट्वा तु तथाऽऽयान्तंशूरो राजा श्रुतायुधः ।
अभ्यद्रवत्सुसङ्क्रुद्धो विधुन्वानो महद्धनुः ॥ ७-९२-३५ (४८२०५)

स पार्थं त्रिभिरानर्च्छत्सप्तत्या च जनार्दनम् ।
क्षुरप्रेण सुतीक्ष्णेन पार्थकेतुमताडयत् ॥ ७-९२-३६ (४८२०६)
ततोऽर्जुनो नवत्या तु शराणां नतपर्वणाम् ।
आजघान भृशं क्रुद्धस्तोत्रैरिव महाद्विपम् ॥ ७-९२-३७ (४८२०७)
स तन्न ममृषे राजन्पाण्डवेयस्य विक्रमम् ।
अथैनं सप्तसप्तत्या नाराचानां समार्पयत् ॥ ७-९२-३८ (४८२०८)
तस्यार्जुनो धनुश्छित्त्वा शरावापं निकृत्य च ।
आजघानोरसि क्रुद्धः सप्तभिर्नतपर्वभिः ॥ ७-९२-३९ (४८२०९)
अथान्यद्धनुरादाय स राजा क्रोधमूर्च्छितः ।
वासविं नवभिर्बाणैर्बाह्वोरुरसि चार्पयत् ॥ ७-९२-४० (४८२१०)
ततोऽर्जुनः स्मयन्नेव श्रुतायुधमरिन्दमः ।
शरैरनेकसाहस्रैः पीडयामास भारत ॥ ७-९२-४१ (४८२११)
अश्वांश्चास्यावधीत्तूर्णं सारथिं च महारथः ।
विव्याध चैनं सप्तत्या नाराचानां महाबलः ॥ ७-९२-४२ (४८२१२)
हताश्वं रथमुत्सृज्य स तु राजा श्रुतायुधः ।
अभ्यद्रवद्रणे पार्थं गदामुद्यम्य वीर्यवान् ॥ ७-९२-४३ (४८२१३)
वरुणस्यत्मजो वीरः स तु राजा श्रुतायुधः ।
पर्णाशाजननी यस्य शीततोया महानदी ॥ ७-९२-४४ (४८२१४)
तस्य माताऽब्रवीद्राजन्वरुणं पुत्रकारणात् ।
अवध्योऽयं भवेल्लोके शत्रूणां तनयो मम ॥ ७-९२-४५ (४८२१५)
वरुणस्त्वब्रवीत्प्रीतो ददाम्यस्मै वरं हितम् ।
दिव्यमस्त्रं सुतस्तेऽयं येनावध्यो भविष्यति ॥ ७-९२-४६ (४८२१६)
नास्ति चाप्यमरत्वं वै मनुष्यस्य कथञ्चन ।
सर्वेणावश्यमर्तव्यं जातेन सरितां वरे ॥ ७-९२-४७ (४८२१७)
दुर्धर्षस्त्वेष शत्रूणां रणेषु भविता सदा ।
अस्त्रस्यास्य प्रभावाद्वै व्येतु ते मानसो ज्वरः ॥ ७-९२-४८ (४८२१८)
इत्युक्त्वा वरुणः प्रादाद्गदां मन्त्रपुरस्कृताम् ।
यामासाद्य दुराधर्षः सर्वलोके श्रुतायुधः ॥ ७-९२-४९ (४८२१९)
उवाच चैनं भगवान्पुनरेव जलेश्वरः ।
अयुध्यति न मोक्तव्या सा त्वय्येव पतेदिति ॥ ७-९२-५० (४८२२०)
हन्यादेषा प्रतीपं हि प्रयोक्तारमपि प्रभो ।
न चाकरोत्स तद्वाक्यं प्राप्ते काले श्रुतायुधः ॥ ७-९२-५१ (४८२२१)
स तया वीरघातिन्या जनार्दनमताडयत् ।
प्रतिजग्राह तां कृष्णः पीनेनांसेन वीर्यवान् ।
नाकम्पयत शौरिं सा विन्ध्यं गिरिमिवानिलः ॥ ७-९२-५२ (४८२२२)
ग्ततोऽर्जुनः क्षुरप्राभ्यां भुजौ परिघसन्निभौ ।

चिच्छेद पाण्डवः शीघ्रं जलेश्वरसुतस्य वै ॥ ७-९२-५३ (४८२२३)
स ज्वलन्ती महोल्केव समासाद्य जनार्दनम्'।
प्रत्यागता महावेगा कृत्येव दुरधिष्ठिता ॥ ७-९२-५४ (४८२२४)
जघान चास्थितं वीरं श्रुतायुधममर्षणम् ।
ग्स पपात हतो भूमौ विशिरा विभुजो बली ।
सम्भग्न इव वातेन बहुशाखो वनस्पतिः ॥ ७-९२-५५ (४८२२५)
सा विस्फुरन्ती ज्वलिता वज्रवेगसमा गदा'।
हत्वा श्रुतायुधं वीरं धरणीमन्वपद्यत ॥ ७-९२-५६ (४८२२६)
गदां निवर्तितां दृष्ट्वा निहतं च श्रुतायुधम् ।
हाहाकारो महांस्तत्र सैन्यानां समजायत ।
स्वेनास्त्रेण हतं दृष्ट्वा श्रुतायुधमरिन्दमम् ॥ ७-९२-५७ (४८२२७)
अयुध्यमानाय ततः केशवाय नराधिप ।
क्षिप्ता श्रुतायुधेनाथ तस्मात्तमवधीद्गदा ॥ ७-९२-५८ (४८२२८)
यथोक्तं वरुणेनाजौ तथा स निधनं गतः ।
व्यसुश्चाप्यपतद्भूमौ प्रेक्षतां सर्वधन्विनाम् ॥ ७-९२-५९ (४८२२९)
पतमानस्तु स बभौ पर्णाशायाः प्रियः सुतः ।
सम्भग्न इव वातेन बहुशाखो वनस्पतिः ॥ ७-९२-६० (४८२३०)
ततः सर्वाणि सैन्यानि सेनामुख्याश्च सर्वशः ।
प्राद्रवन्त हतं दृष्ट्वा श्रुतायुधमरिन्दमम् ॥ ७-९२-६१ (४८२३१)
ततः काम्भोजराजस्य पुत्रः शूरः सुदक्षिणः ।
अभ्ययाज्जवनैरश्वैः फल्गुनं शत्रुसूदनम् ॥ ७-९२-६२ (४८२३२)
तस्य पार्थः शरान्सप्त प्रेषयामास भारत ।
ते तं शूरं विनिर्भिद्य प्राविशन्धरणीतलम् ॥ ७-९२-६३ (४८२३३)
सोऽतिविद्धः शरैस्तीक्ष्णैर्गाण्डीवप्रेषितैर्मृधे ।
अर्जुनं प्रतिविव्याध दशभिः कङ्कपत्रिभिः ॥ ७-९२-६४ (४८२३४)
वासुदेवं त्रिभिर्विद्ध्वा पुनः पार्थं च पञ्चभिः ।
तस्य पार्थो धनुश्छित्त्वा केतुं चिच्छेद मारिष ॥ ७-९२-६५ (४८२३५)
भल्लाभ्यां भृशतीक्ष्णाभ्यां तं च विव्याध पाण्डवः ।
स तु पार्थं त्रिभिर्विद्ध्वा सिंहनादमथानदत् ॥ ७-९२-६६ (४८२३६)
सर्वपारशवीं चैव शक्तिं शूरः सुदक्षिणः ।
सघण्टां प्राहिणोद्घोरां क्रुद्धो गाण्डीवधन्वने ॥ ७-९२-६७ (४८२३७)
सा ज्वलन्ती महोल्केव तमासाद्य महारथम् ।
सविस्फुलिङ्गा निर्भिद्य निपपात महीतले ॥ ७-९२-६८ (४८२३८)
शक्त्या त्वभिहतो गाढं मूर्च्छयाऽभिपरिप्लुतः ।
समाश्वास्य महातेजाः सृक्विणी परिलेलिहन् ॥ ७-९२-६९ (४८२३९)
तं चतुर्दशभिः पार्थो नाराचैः कङ्कपत्रिभिः ।

साश्वध्वजधनुःसूतं विव्याधाचिन्त्यविक्रमः ॥ ७-९२-७० (४८२४०)
रथं चान्यैः सुबहुभिश्चक्रे विशकलं शरैः ।
सुदक्षिणं तं काम्भोजं मोघसङ्कल्पविक्रमम् ।
बिभेद हृदि बाणेन पृथुधारेण पाण्डवः ॥ ७-९२-७१ (४८२४१)
स भिन्नवर्मा स्रस्ताङ्गः प्रभ्रष्टमुकुटाङ्गदः ।
पपाताभिमुखः शूरो यन्त्रमुक्त इव ध्वजः ॥ ७-९२-७२ (४८२४२)
गिरेः शिखरजः श्रीमान्सुशाखः सुप्रतिष्ठितः ।
निर्भग्न इव वातेन कर्णिकारो हिमात्यये ।
विशीर्णः पतितो राजा प्रसार्य विपुलौ भुजौ ॥ ७-९२-७३ (४८२४३)
शेते स्म निहतो भूमौ काम्भोजास्तरणोचितः ।
महार्हाभरणोपेतः सानुमानिव पर्वतः ॥ ७-९२-७४ (४८२४४)
सुदर्शनीयस्ताम्राक्षः कर्णिना स सुदक्षिणः ।
पुत्रः काम्भोजराजस्य पार्थेन विनिपातितः ॥ ७-९२-७५ (४८२४५)
धारयन्नग्निसङ्काशां शिरसा काञ्चनीं स्रजम् ।
अशोभत महाबाहुर्व्यसुर्भूमौ निपातितः ॥ ७-९२-७६ (४८२४६)
ततः सर्वाणि सैन्यानि व्यद्रवन्त सुतस्य ते ।
हतं श्रुतायुधं दृष्ट्वा काम्भोजं च सुदक्षिणम् ॥ ॥ ७-९२-७७ (४८२४७)

इति श्रीमन्महाभारते द्रोणपर्वणि जयद्रथवधपर्वणि
चतुर्दशदिवसयुद्धे द्विनवतितमोऽध्यायः ॥ ९२ ॥
Mahabharata - Drona Parva - Chapter Footnotes

५-९२-१५ तेषां संयच्छतां विधारयताम् ॥
५-९२-१० आचार्यकं शिक्षाम् ॥
५-९२-२८ रथेषुभिः अदूरस्थायिभिर्बाणैः ॥
५-९२-५४ कृत्या अभिचारदेवता ॥
५-९२-७२ ध्वजः शक्रध्वजः ॥
५-९२-९२ द्विनवतितमोऽध्यायः ॥

---

द्रोनपर्व-अध्यय०९३
॥ श्रीः ॥
७.९३. अध्यायः ९३

Mahabharata - Drona Parva - Chapter Topics
अर्जुनेन श्रुतायुःप्रभृतीनां वधः ॥ १ ॥

७-९३-० (४८२४८)
सञ्जय उवाच। ७-९३-०क्ष् (४४९९)
हते सुदक्षिणे राजन्वीरे चैव श्रुतायुधे ।
जवेनाभ्यद्रवन्पार्थं कुपिताः सैनिकास्तव ॥ ७-९३-१ (४८२४९)
अभीषाहाः शूरसेनाः शिबयोऽथ वसातयः ।
अभ्यवर्षंस्ततो राजञ्शरवर्षैर्धनञ्जयम् ॥ ७-९३-२ (४८२५०)
तेषां षष्टिशतानन्यान्प्रामथ्नात्पाण्डवः शरैः ।
ते स्म भीताः पलायन्ते व्याघ्रात्क्षुद्रमृगा इव ॥ ७-९३-३ (४८२५१)
ते निवृत्ताः पुनः पार्थं सर्वतः पर्यवारयन् ।
रणे सपत्नान्निघ्नन्तं जिगीषन्तं परान्युधि ॥ ७-९३-४ (४८२५२)
तेषामापततां तूर्णं गाण्डीवप्रेषितैः शरैः ।
शिरांसि पातयामास बाहूंश्चापि धनञ्जयः ॥ ७-९३-५ (४८२५३)
शिरोभिः पातितैस्तत्र भूमिरासीन्निरन्तरा ।
अभ्रच्छायेव चैवासीद्ध्वाङ्क्षगृध्रबलैर्युधि ॥ ७-९३-६ (४८२५४)
तेषु तूत्साद्यमानेषु क्रोधामर्षसमन्वितौ ।
स्रुतायुश्चाश्रुतायुश्च धनञ्जयमयुध्यताम् ॥ ७-९३-७ (४८२५५)
बलिनौ स्पर्धिनौ वीरौ कुलजौ बाहुशालिनौ ।
तावेनं शरवर्षाणि सव्यदक्षिणमस्यताम् ॥ ७-९३-८ (४८२५६)
त्वरायुक्तौ महराज प्रार्थयानौ महद्यशः ।
अर्जुनस्य वधप्रेप्सू पुत्रार्थे तव धन्विनौ ॥ ७-९३-९ (४८२५७)
तावर्जुनं सहस्रेण पत्रिणां नतपर्वणाम् ।
पूरयामासतुः क्रुद्धौ तटाकं जलदौ यथा ॥ ७-९३-१० (४८२५८)
श्रुतायुश्च ततः क्रुद्धस्तोमरेण धनञ्जयम् ।
आजघान रथश्रेष्ठः पीतेन निशितेन च ॥ ७-९३-११ (४८२५९)
सोऽतिविद्धो बलवता शत्रुणा शत्रुकर्शनः ।
जगाम परमं मोहं मोहयन्केशवं रणे ॥ ७-९३-१२ (४८२६०)
एतस्मिन्नेव काले तु सोऽश्रुतायुर्महारथः ।
शूलेन भृशतीक्ष्णेन ताडयामास पाण्डवम् ॥ ७-९३-१३ (४८२६१)
क्षते क्षारं स हि ददौ पाण्डवस्य महात्मनः ।
पार्थोऽपि भृशसंविद्धो ध्वजयष्टिं समाश्रितः ॥ ७-९३-१४ (४८२६२)
ततः सर्वस्य सैन्यस्य तावकस्य विशाम्पते ।
सिंहनादो महानासीद्धतं मत्वा धनञ्जयम् ॥ ७-९३-१५ (४८२६३)
कृष्णश्च भृशसन्तप्तो दृष्ट्वा पार्थं विचेतनम् ।
आश्वासयत्सुहृद्याभिर्वाग्भिस्तत्र धनञ्जयम् ॥ ७-९३-१६ (४८२६४)

ततस्तौ रथिनां श्रेष्ठौ लब्धलक्षौ धनञ्जयम् ।
वासुदेवं च वार्ष्णेयं शरवर्षैः समन्ततः ॥ ७-९३-१७ (४८२६५)
सचक्रकूबररथं साश्वध्वजपताकिनम् ।
अदृश्यं चक्रतुर्युद्धे तदद्भुतमिवाभवत् ॥ ७-९३-१८ (४८२६६)
प्रत्याश्वस्तस्तु बीभत्सुः शनकैरिव भारत ।
प्रेतराजपुरं प्राप्य पुनः प्रत्यागतो यथा ॥ ७-९३-१९ (४८२६७)
सञ्छन्नं शरजालेन रथं दृष्ट्वा सकेशवम् ।
शत्रू चाभिमुखौ दृष्ट्वा दीप्यमानाविवानलौ ॥ ७-९३-२० (४८२६८)
प्रादुश्चक्रे ततः पार्थः शाक्रमस्त्रं महारथः ।
तस्मादासन्सहस्राणि शराणां नतपर्वणाम् ॥ ७-९३-२१ (४८२६९)
ते जघ्नुस्तौ महेष्वासौ ताभ्यां मुक्तांश्च सायकान् ।
विचेरुराकाशगताः पार्थचापविनिःसृताः ॥ ७-९३-२२ (४८२७०)
प्रतिहत्य सरांस्तूर्णं शरवेगेन पाण्डवः ।
प्रतस्थे तत्रतत्रैव योधयन्वै महारथान् ॥ ७-९३-२३ (४८२७१)
तौ च फल्गुनबाणौघैर्विबाहुशिरसौ कृतौ ।
वसुधामन्वपद्येतां वातनुन्नाविव द्रुमौ ॥ ७-९३-२४ (४८२७२)
श्रुतायुषश्च निधनं वधश्चेवाश्रुतायुषः ।
लोकविस्मापनमभूत्समुद्रस्येव शोषणम् ॥ ७-९३-२५ (४८२७३)
तयोः पदानुगान्हत्वा पुनः पञ्चशतं रथान् ।
प्रत्यगाद्भारतीं सेनां निघ्नन्पार्थो वरान्वरान् ॥ ७-९३-२६ (४८२७४)
श्रुतायुषं च निहतं प्रेक्ष्य चैवाश्रुतायुषम् ।
नियतायुश्च सङ्क्रुद्धो दीर्घायुश्चैव भारत ॥ ७-९३-२७ (४८२७५)
पुत्रौ तयोर्नरश्रेष्ठौ कौन्तेयं प्रति जग्मतुः ।
किरन्तौ विविधान्बाणान्पितृव्यसनकर्शितौ ॥ ७-९३-२८ (४८२७६)
तावर्जुनो मुहूर्तेन शरैः सन्नतपर्वभिः ।
प्रैषयत्परमक्रुद्धो यमस्य सदनं प्रति ॥ ७-९३-२९ (४८२७७)
लोडयन्तमनीकानि द्विपं पद्मसरो यथा ।
नाशक्नुवन्वारयितुं पार्थं क्षत्रियपुङ्गवाः ॥ ७-९३-३० (४८२७८)
अङ्गास्तु गजसङ्घैश्च पाण्डवं पर्यवारयन् ।
क्रुद्धाः सहस्रशो राजञ्शिक्षिता हस्तिसादिनः ॥ ७-९३-३१ (४८२७९)
दुर्योधनसमादिष्टाः कुञ्जरैः पर्वतोपमैः ।
प्राच्याश्च दाक्षिणात्याश्च कलिङ्गप्रमुखा नृपाः ॥ ७-९३-३२ (४८२८०)
तेषामापततां शीघ्रं गाण्डीवप्रेषितैः शरैः ।
निचकर्त शिरांस्युग्रो बाहूनपि सुभूषणान् ॥ ७-९३-३३ (४८२८१)
तैः शिरोभिर्मही कीर्णा बाहुभिश्च सहाङ्गदैः ।
बभौ कनकपाषाणा भुजगैरिव संवृता ॥ ७-९३-३४ (४८२८२)

बाहवो विशिखैश्छिन्नाः शिरांस्युन्मथितानि च ।
पतमानान्यदृश्यन्त द्रुमेभ्य इव पक्षिणः ॥ ७-९३-३५ (४८२८३)
शरैः सहस्रशो विद्धा द्विपाः प्रसृतशोणिताः ।
अदृश्यन्ताद्रयः काले गैरिकाम्बुस्रवा इव ॥ ७-९३-३६ (४८२८४)
निहताः शेरते स्मान्ये बीभत्सोर्निशितैः शरैः ।
गजपृष्ठगता म्लेच्छा नानाविकृतदर्शनाः ॥ ७-९३-३७ (४८२८५)
नानावेषधरा राजन्नानाशस्त्रौघसंवृताः ।
रुधिरेणानुलिप्ताङ्गा भान्ति चित्रैः शरैर्हताः ॥ ७-९३-३८ (४८२८६)
शोणितं निर्वमन्ति स्म द्विपाः पार्थशराहताः ।
सहस्रशश्छिन्नगात्राः सारोहाः सपदानुगाः ॥ ७-९३-३९ (४८२८७)
चुक्रुशुश्च निपेतुश्च बभ्रमुश्चापरे दिशः ।
भृशं त्रस्ताश्च बहवः स्वानेव ममृदुर्गजाः ॥ ७-९३-४० (४८२८८)
सोत्तरायुधिनश्चैव द्विपास्तीक्ष्णविषोपमाः ।
विदन्त्यसुरमायां ये सुघोरा घोरचक्षुषः ॥ ७-९३-४१ (४८२८९)
यवनाः पारदाश्चैव शकाश्च सह बाह्लिकैः ।
काकवर्णा दुराचाराः स्त्रीलोलाः कलहप्रियाः ॥ ७-९३-४२ (४८२९०)
द्राविडास्तत्र युध्यन्ते मत्तमातङ्गविक्रमाः ।
गोयोनिप्रभवा म्लेच्छाः कालकल्पाः प्रहारिणः ॥ ७-९३-४३ (४८२९१)
दार्वातिसारा दरदाः पुण्ड्राश्चैव सहस्रशः ।
ते न शक्याः स्म सङ्ख्यातुं व्राताः शतसहस्रशः ॥ ७-९३-४४ (४८२९२)
अभ्यवर्षन्त ते सर्वे पाण्डवं निशितैः शरैः ।
अवाकिरंश्च ते म्लेच्छा नानायुद्धविशारदाः ॥ ७-९३-४५ (४८२९३)
तेषामपि ससर्जाशु शरवृष्टिं धनञ्जयः ।
सृष्टिस्तथाविधा ह्यासीच्छलभानामिवायतिः ॥ ७-९३-४६ (४८२९४)
अभ्रच्छायामिव शरैः सैन्ये कृत्वा धनञ्जयः ।
मुण्डार्धमुण्डाञ्जटिलानशुचीञ्जटिलाननान् ।
म्लेच्छानशातयत्सर्वान्समेतानस्त्रतेजसा ॥ ७-९३-४७ (४८२९५)
शरैश्च शतशो विद्धास्ते सङ्घा गिरिचारिणः ।
प्राद्रवन्त रणे भीता गिरिगह्वरवासिनः ॥ ७-९३-४८ (४८२९६)
गजाश्वसादिम्लेच्छानां पतितानां शितैः शरैः ।
बकाः कङ्का वृका भूमावपिबन्रुधिरं मुदा ॥ ७-९३-४९ (४८२९७)
पत्त्यश्वरथनागैश्च प्रच्छन्नकृतसङ्क्रमाम् ।
शरवर्षप्लवां घोरां केशशैवलशाद्वलाम् ।
प्रावर्तयन्नदीमुग्रां शोणितौघतरङ्गिणीम् ॥ ७-९३-५० (४८२९८)
छिन्नाङ्गुलीक्षुद्रमत्स्यां युगान्ते कालसन्निभाम् ।
प्राकरोद्गजसम्बाधां नदीमुत्तरशोणिताम् ॥ ७-९३-५१ (४८२९९)

देहेभ्यो राजपुत्राणां नागाश्वरथसादिनाम् ।
यथा स्थलं च निम्नं च न स्याद्वर्षति वासवे ।
तथाऽऽसीत्पृथिवी सर्वा शोणितेन परिप्लुता ॥ ७-९३-५२ (४८३००)
षट्सहस्रान्हयान्वीरान्पुनर्दशशतान्वरान् ।
प्राहिणोन्मृत्युलोकाय क्षत्रियान्क्षत्रियर्षभः ॥ ७-९३-५३ (४८३०१)
शरैः सहस्रशो विद्धा विधिवत्कल्पिता द्विपाः ।
शेरते भूमिमासाद्य शैला वज्रहता इव ॥ ७-९३-५४ (४८३०२)
स वाजिरथमातङ्गान्निघ्नन्व्यचरदर्जुनः ।
प्रभिन्न इव मातङ्गो मृद्नन्नलवनं यथा ॥ ७-९३-५५ (४८३०३)
भुरिद्रुमलतागुल्मं शुष्केन्धनतृणोलपम् ।
निर्दहेदनलोऽरण्यं यथा वायुसमीरितः ॥ ७-९३-५६ (४८३०४)
सेनारण्यं तव तथा कृष्णानिलसमीरितः ।
शरार्चिरदहत्क्रुद्धः पाण्डवोऽग्निर्धनञ्जयः ॥ ७-९३-५७ (४८३०५)
शून्यान्कुर्वन्रथोपस्थान्मानवैः संस्तरन्महीम् ।
प्रानृत्यदिव सम्बाधे चापहस्तो धनञ्जयः ।
वज्रकल्पैः शरैर्भूमिं कुर्वन्नुत्तरशोणिताम् ॥ ७-९३-५८ (४८३०६)
ग्ततः प्रावर्तत नदी शोणितौघतरङ्गिणी ।
नराश्वद्विपकायेभ्यः पर्वतेभ्य इवापगा ॥ ७-९३-५९ (४८३०७)
अस्थिशर्करसम्बाधा ध्वजवृक्षा रथह्रदा ।
सञ्छिन्नशीर्षपाणाणा हस्तिहस्तमहाग्रहा ॥ ७-९३-६० (४८३०८)
मांसमज्जास्थिपङ्काढ्यां हताश्वमकराकुला ।
उष्णीषफेनसञ्छन्ना शरघोरझषाकुला ॥ ७-९३-६१ (४८३०९)
रुद्रस्याक्रीडसदृशीं भूमिं कुर्वन्विभीषणाम्'।
प्राविशद्भारतीं सेनां सङ्क्रुद्धो वै धनञ्जयः ॥ ७-९३-६२ (४८३१०)
तं श्रुतायुस्तथाम्बष्ठो व्रजमानं न्यवारयत् ॥ ७-९३-६३ (४८३११)
तस्यार्जुनः शरैस्तीक्ष्णैः कङ्कपत्रपरिच्छदैः ।
न्यपातयद्धयाञ्शीघ्रं यतमानस्य मारिष ।
धनुश्चास्यापरैश्छित्त्वा शरैः पार्थो विचक्रमे ॥ ७-९३-६४ (४८३१२)
अम्बष्ठस्तु गदां गृह्य क्रोधपर्याकुलेक्षणः ।
आससाद रणे पार्थं केशवं च महारथम् ॥ ७-९३-६५ (४८३१३)
ततः सम्प्रहरन्वीरो गदामुद्यम्य भारत ।
रथमावार्य गदया केशवं समताडयत् ॥ ७-९३-६६ (४८३१४)
गदया ताडितं दृष्ट्वा केशवं परवीरहा ।
अर्जुनोऽथ भृशं क्रुद्धः सोऽम्बष्ठं प्रति भारत ॥ ७-९३-६७ (४८३१५)
ततः शरैर्हेमपुङ्खैः सगदं रथिनां वरम् ।
छादयामास समरे मेघः सूर्यमिवोदितम् ॥ ७-९३-६८ (४८३१६)

अथापरैः शरैश्चापि गदां तस्य महात्मनः ।
अचूर्णयत्तदा पार्थस्तिदद्भुतमिवाभवत् ॥ ७-९३-६९ (४८३१७)
अथ तां पतितां दृष्ट्वा गृह्यान्यां च महागदाम् ।
अर्जुनं वासुदेवं च पुनः पुनरताडयत् ॥ ७-९३-७० (४८३१८)
तस्यार्जुनः क्षुरप्राभ्यां सगदावुद्यतौ भुजौ ।
चिच्छेदेन्द्रध्वजाकारौ शिरश्चान्येन पत्रिणा ॥ ७-९३-७१ (४८३१९)
स पपात हतो राजन्वसुधामनुनादयन् ।
इन्द्रध्वज इवोत्सृष्टो यन्त्रनिर्मुक्तबन्धनः ॥ ७-९३-७२ (४८३२०)
अम्बष्ठे तु तदा भग्ने तव सैन्यमभज्यत ॥ ७-९३-७३ (४८३२१)
रथानीकावगाढश्च वारणाश्वशतैर्वृतः ।
अदृश्यत पदा पार्थो घनैः सूर्य इवावृतः ॥ ७-९३-७४ (४८३२२)

इति श्रीमन्महाभारते द्रोणपर्वणि जयद्रथवधपर्वणि
चतुर्धशदिवसयुद्धे त्रिनवतितमोऽध्यायः ॥ ९३ ॥
Mahabharata - Drona Parva - Chapter Footnotes

५-९३-४३ गोयोनिप्रभवा नन्दिन्यां जाताः ॥
५-९३-४६ सृष्टिः संसृष्टिः ॥
५-९३-४७ जटिलाननान् जटिलानि रूढश्मश्रूण्याननानि येषाम् ॥
५-९३-५० प्रच्छन्नेन प्रच्छादनेन कृतो रचितः सङ्क्रमो यस्याम् ॥
५-९३-५१ उत्तरशोणित्तां शोणितप्रधानाम् ॥
५-९३-५३ हयान् अश्वारोहान् ॥
५-९३-९३ त्रिनवतितमोऽध्यायः ॥

---

द्रोनपर्व-अध्यय०९४
॥ श्रीः ॥
७.९४. अध्यायः ९४

Mahabharata - Drona Parva - Chapter Topics
अर्जुनाद्भीतेन दुर्योधनेन द्रोणमेत्य तदुपालम्भपूर्वकं
जयद्रथम्प्रति शोचनम् ॥ १ ॥
द्रोणेन दुर्योधनस्य मन्त्रोच्चारणपूर्वकं कवचमाबध्यार्जुनेन
सह युद्धाय प्रेषणम् ॥ २ ॥

Mahabharata - Drona Parva - Chapter Text

७-९४-० (४८३२३)
सञ्जय उवाच। ७-९४-०क्ष् (४५००)
ततः प्रविष्टे कौन्तेये सिन्धुराजजिघांसया ।
द्रोणानीकं विनिर्भिद्य भोजानीकं च दुस्तरम् ॥ ७-९४-१ (४८३२४)
काम्भोजस्य च दायादे हते राजन्सुदक्षिणे ।
श्रुतायुषि च विक्रान्ते निहते सव्यसाचिना ॥ ७-९४-२ (४८३२५)
विप्रद्रुतेष्वनीकेषु विध्वस्तेषु समन्ततः ।
प्रभग्नं स्वबलं दृष्ट्वा पुत्रस्ते द्रोणमभ्ययात् ॥ ७-९४-३ (४८३२६)
त्वरन्नेकरथेनैव समेत्य द्रोणमब्रवीत् ।
गतः स पुरुषव्याघ्रः प्रमथ्यैतां महाचमूम् ॥ ७-९४-४ (४८३२७)
अथ बुद्ध्या समीक्षस्व किन्नु कार्यमनन्तरम् ।
अर्जुनस्य विघाताय दारुणेऽस्मिञ्जनक्षये ॥ ७-९४-५ (४८३२८)
यथा स पुरुषव्याघ्रो न हन्येत जयद्रथः ।
तथा विधत्स्व भद्रं ते त्वं हि नः परमा गतिः ॥ ७-९४-६ (४८३२९)
असौ धनञ्जयाग्निर्हि कोपमारुतचोदितः ।
सेनाकक्षं दहति मे वह्निः कक्षमिवोत्थितः ॥ ७-९४-७ (४८३३०)
अतिक्रान्ते हि कौन्तेये भित्त्वा सैन्यं परन्तप ।
जयद्रथस्य गोप्तारः संशयं परमं गताः ॥ ७-९४-८ (४८३३१)
स्थिरा बुद्धिर्नरेन्द्राणमासीद्ब्रह्मविदां वर ।
नातिक्रमिष्यति द्रोणं जातु जीवन्धनञ्जयः ॥ ७-९४-९ (४८३३२)
योऽसौ पार्थो व्यतिक्रान्तो मिषतस्ते महाद्युते ।
सर्वं ह्यद्यातुरं मन्ये नेदमस्ति बलं मम ॥ ७-९४-१० (४८३३३)
जानामि त्वां महाभाग पाण्डवानां हिते रतम् ।
ततो मुह्यामि च ब्रह्मन्कार्यवत्तां विचिन्तयन् ॥ ७-९४-११ (४८३३४)
यथाशक्ति च ते ब्रह्मन्वर्धयन्वृत्तिमुत्तमाम् ।
प्रीणामि च यथाशक्ति तच्च त्वं नावबुध्यसे ॥ ७-९४-१२ (४८३३५)
अस्मान्न त्वं सदा भक्तानिच्छस्यमितविक्रम ।
पाण्डवान्सततं प्रीणास्यास्माकं विप्रिये रतान् ॥ ७-९४-१३ (४८३३६)
अस्मानेवोपजीवंस्त्वमस्माकं विप्रिये रतः ।
न ह्यहं त्वां विजानामि मधुदिग्धमिव क्षुरम् ॥ ७-९४-१४ (४८३३७)
ग्नह्यहं त्वां विजानामि सर्वं मण्डूकराविणम्'।
नादास्यच्चेद्वरं मह्यं भवान्पाण्डवनिग्रहे ।
नावारयिष्यं गच्छन्तमहं सिन्धुपतिं गृहान् ॥ ७-९४-१५ (४८३३८)
मया त्वाशंसमानेन त्वत्तस्त्राणमबुद्धिना ।
आश्वासितः सिन्धुपतिर्मोहाद्दत्तश्च मृत्यवे ॥ ७-९४-१६ (४८३३९)
यमदंष्ट्रान्तरं प्राप्तो मुच्येतापि हि मानवः ।

नार्जुनस्य वशं प्राप्तो मुच्येताजौ जयद्रथः ॥ ७-९४-१७ (४८३४०)
स तथा कुरु शोणश्व यथा मुच्येत सैन्धवः ।
मम चार्तप्रलापानां माक्रुधः पाहि सैन्धवम् ॥ ७-९४-१८ (४८३४१)
द्रोण उवाच। ७-९४-१९क्ष् (४५०१)
नाभ्यसूयामि ते वाक्यमश्वत्थाम्नाऽसि मे समः ।
सत्यं तु ते प्रवक्ष्यामि तज्जुषस्व विशाम्पते ॥ ७-९४-१९ (४८३४२)
सारथिः प्रवरः कृष्णः शीघ्राश्चास्य हयोत्तमाः ।
अल्पं च विवरं कृत्वा पूर्णं याति धनञ्जयः ॥ ७-९४-२० (४८३४३)
किं न पश्यसि बाणौघान्क्रोशमात्रे किरीटिनः ।
पश्चाद्रथस्य पतितान्क्षिप्ताञ्शीघ्रं हि गच्छतः ॥ ७-९४-२१ (४८३४४)
न ताबं शीघ्रयानेऽद्य समर्थो वयसान्वितः ।
सेनामुखे च पार्थानामेतद्बलमुपस्थितम् ॥ ७-९४-२२ (४८३४५)
युधिष्ठिरश्च मे ग्राह्यो मिषतां सर्वधन्विनाम् ।
एवं मया प्रतिज्ञातं क्षत्रमध्ये महाभुज ॥ ७-९४-२३ (४८३४६)
धनञ्जयेन चोत्सृष्टो वर्तते प्रमुखे नृप ।
तस्माद्व्यूहमुखं हित्वा नाहं यास्यामि फल्गुनम् ॥ ७-९४-२४ (४८३४७)
तुल्याभिजनकर्माणं शत्रुमेकं सहायवान् ।
गत्वा योधय मा भैस्त्वं त्वं ह्यस्य जगतः पतिः ॥ ७-९४-२५ (४८३४८)
राजा शूरः कृती दक्षो वैरमुत्पाद्य पाण्डवैः ।
वीरः स्वयं प्रयाह्याशु यत्र पार्थो धनञ्जयः ॥ ७-९४-२६ (४८३४९)
दुर्योधन उवाच। ७-९४-२७क्ष् (४५०२)
कथं त्वामप्यतिक्रान्तः सर्वशस्त्रभृतां वरम् ।
धनञ्जयो मया शक्य आचार्य प्रतिबाधितुम् ॥ ७-९४-२७ (४८३५०)
अपि शक्यो रणे जेतुं वज्रहस्तः पुरन्दरः ।
नार्जुनः समरे शक्यो जेतुं परपुरञ्जयः ॥ ७-९४-२८ (४८३५१)
येन भोजश्च हार्दिक्यो भवांश्च त्रिदशोपमः ।
अस्त्रप्रतापेन जितौ श्रुतायुश्च निबर्हितः ॥ ७-९४-२९ (४८३५२)
सुदक्षिणश्च निहतः स च राजा श्रुतायुधः ।
श्रुतायुश्चाश्रुतायुश्च म्लेच्छाश्चायुतशो हताः ॥ ७-९४-३० (४८३५३)
तं कथं पाण्डवं युद्धे दहन्तमिव पावकम् ।
प्रतियोत्स्यामि दुर्धर्षं तन्ममाचक्ष्व सत्तम्। ७-९४-३१ (४८३५४)
क्षमं चेन्मन्यसे युद्धं मम तेनाद्य शाधि माम् ।
परवानस्मि भवतः प्रेष्यवद्रक्ष मे यशः ॥ ७-९४-३२ (४८३५५)
द्रोण उवाच। ७-९४-३३क्ष् (४५०३)
सत्यं वदसि कौरव्य दुराधर्षो धनञ्जयः ।
अहं तु तत्करिष्यामि यथैनं प्रसहिष्यसि ॥ ७-९४-३३ (४८३५६)

अद्भुतं चाद्य पश्यन्तु लोके सर्वधनुर्धराः ।
विषक्तं त्वयि कौन्तेयं वासुदेवस्य पश्यतः ॥ ७-९४-३४ (४८३५७)
एष ते कवचं राजंस्तथा बध्नामि काञ्चनम् ।
यथा न बाणा नास्त्राणि प्रहरिष्यन्ति ते रणे ॥ ७-९४-३५ (४८३५८)
यदि त्वां सासुरसुराः सयक्षोरगराक्षसाः ।
योधयन्ति त्रयो लोकाः सनरा नास्ति ते भयम् ॥ ७-९४-३६ (४८३५९)
न कृष्णो न च कौन्तेयो न चान्यः शस्त्रभृद्रणे ।
शरानर्पयितुं कश्चित्कवचे तव शक्ष्यति ॥ ७-९४-३७ (४८३६०)
स त्वं कवचमास्थाय क्रुद्धमद्य रणेऽर्जुनम् ।
त्वरमाणः स्वयं याहि न त्वाऽसौ विषहिष्यति ॥ ७-९४-३८ (४८३६१)
सञ्जय उवाच। ७-९४-३९क्ष् (४५०४)
एवमुक्त्वा त्वरन्द्रोणः स्पृष्ट्वाम्भो वर्म भास्वरम् ।
आबबन्धाद्भुततमं जपन्मन्त्रं यथाविधि ॥ ७-९४-३९ (४८३६२)
रणे तस्मिन्सुमहति विजयस्य सुतस्य ते ।
विसिष्मापयिषुर्लोकान्विद्यया ब्रह्मवित्तमः ॥ ७-९४-४० (४८३६३)
द्रोण उवाच। ७-९४-४१क्ष् (४५०५)
करोतु स्वस्ति ते ब्रह्मा स्वस्ति कुर्वन्तु ब्राह्मणाः ।
सरीसृपाश्च ये श्रेष्ठास्तेभ्यस्ते स्वस्ति भारत ॥ ७-९४-४१ (४८३६४)
ययातिर्नहुषश्चैव धुन्धुमारो भगीरथः ।
तुभ्यं राजर्षयः सर्वे स्वस्ति कुर्वन्तु ते सदा ॥ ७-९४-४२ (४८३६५)
स्वस्ति तेऽस्त्वेकपादेभ्यो बहुपादेभ्य एव च ।
स्वस्त्यस्त्वपादकेभ्यश्च नित्यं तव महारणे ॥ ७-९४-४३ (४८३६६)
स्वाहा स्वधा शची चैव स्वस्ति कुर्वन्तु ते सदा ।
लक्ष्मीररुन्धती चैव कुरुतां स्वस्ति तेऽनघ ॥ ७-९४-४४ (४८३६७)
अमितो देवलश्चैव विश्वामित्रस्तथाङ्गिराः ।
वसिष्ठः कश्यपश्चैव स्वस्ति कुर्वन्तु ते नृप ॥ ७-९४-४५ (४८३६८)
धाता विधाता लोकेशो दिशश्च सदिगीश्वराः ।
स्वस्ति तेऽद्य प्रयच्छन्तु कार्तिकेयश्च षण्मुखः ॥ ७-९४-४६ (४८३६९)
ग्येन देवाः सकृङ्गनाः सङ्ग्रमे तारकामये ।
धृताः स च हतः शूरो ह्यवध्यो देवतागणैः ॥ ७-९४-४७ (४८३७०)
विवस्वान्कुरुतां स्वस्ति तथा वैवस्वतो यमः ।
पार्षिदा वशगा यस्य स्वस्ति तुभ्यं प्रयच्छतु'॥ ७-९४-४८ (४८३७१)
दिग्गजाश्चैव चत्वारः क्षितिश्च गगनं ग्रहाः ।
गदिशश्च विदिशश्चैव सिद्धा लोकहिते रताः ।
स्वस्ति कुर्वन्तु ते नित्यं मन्त्रेणानेन रस्तुताः'॥ ७-९४-४९ (४८३७२)
अधस्ताद्धरणीं योऽसौ सदा धारयते नृप ।

शेषश्च पन्नगश्रेष्ठः स्वस्ति तुभ्यं प्रयच्छतु ॥ ७-९४-५० (४८३७३)
गान्धारे युधि विक्रम्य निर्जिते पाकशासनेः ।
पुरा वृत्रेण दैत्येन भिन्नदेहाः सहस्रशः ॥ ७-९४-५१ (४८३७४)
हृततेजोबलाः स्रवे तदा सेन्द्रा दिवौकसः ।
ब्रह्माणं शरणं जग्मुर्वृत्राद्भीतां महासुरात् ॥ ७-९४-५२ (४८३७५)
देवा ऊचुः। ७-९४-५३क्ष् (४५०६)
प्रमार्दितानां वृत्रेण देवानां देवसत्तम ।
गतिर्भव सुरश्रेष्ठ त्राहि नो महतो भयात् ॥ ७-९४-५३ (४८३७६)
अथ पार्श्वे स्थितं विष्णुं शक्रादींश्च सुरोत्तमान् ।
प्राह पथ्यमिदं वाक्यं विषण्णान्सुरसत्तमान् ॥ ७-९४-५४ (४८३७७)
रक्ष्या मे सततं देवाः सहेन्द्राः सद्विजातयः ।
त्वष्टुः सुदुर्धरं तेजो येन वृत्रो विनिर्मितः ॥ ७-९४-५५ (४८३७८)
त्वष्ट्रा पुरा तपस्तप्त्वा वर्षायुतशतं तदा ।
वृत्रो विनिर्मितो देवाः प्राप्यानुज्ञां महेश्वरात् ॥ ७-९४-५६ (४८३७९)
शंकरस्य प्रसादाद्वै हन्याद्देवरिपुर्बली ।
नागत्वा शंकरस्थानं भगवान्दृश्यते हरः ॥ ७-९४-५७ (४८३८०)
दृष्ट्वा जेष्यथ वृत्रं तं क्षिप्रं गच्छत मन्दरम् ।
यत्रास्ते तपसां योनिर्दक्षयज्ञविनाशनः ॥ ७-९४-५८ (४८३८१)
पिनाकी सर्वभूतेशो भगनेत्रनिपातनः ।
ते गत्वा सहिता देवा ब्रह्मणा सह मन्दरम् ॥ ७-९४-५९ (४८३८२)
अपश्यंस्तेजसां राशिं सूर्यकोटिसमप्रभम् ।
सोऽब्रवीत्स्वागतं देवा ब्रूत किं करवाण्यहम् ॥ ७-९४-६० (४८३८३)
अमोघं दर्शनं मह्यं कामप्राप्तिरतोऽस्तु वः ।
एवमुक्तास्तु ते सर्वे प्रत्युचूस्तं दिवौकसः ॥ ७-९४-६१ (४८३८४)
हृतौजसां नो वृत्रेण गतिर्भव दिवौकसाम् ।
मूर्तीरीक्षस्व नो देव प्रहारैर्जर्जरीकृताः ।
शरणं त्वां प्रपन्नाः स्म गतिर्भव महेश्वर ॥ ७-९४-६२ (४८३८५)
शर्वे उवाच ।
विदितं वो यथा देवाः कृत्येयं सुमहाबला। ७-९४-६३ (४८३८६)
त्वष्टुस्तेजोभवा घोरा दुर्निवार्याऽकृतात्मभिः ॥
अवश्यं तु मया कार्यं साह्यं सर्वदिवौकसाम्। ७-९४-६४ (४८३८७)
ममेदं गात्रजं शक्र कवचं गृह्य भास्वरम् ॥
बधानानेन मन्त्रेण मानसेन सुरेश्वर। ७-९४-६५ (४८३८८)
वधायासुरमुख्यस्य वृत्रस्य सुरघातिनः ॥ ७-९४-६६ (४८३८९)
द्रोण उवाच। ७-९४-६६क्ष् (४५०७)
इत्युक्त्वा वरदः प्रादाद्वर्म तन्मन्त्रमेव च ।

स तेन वर्मणा गुप्तः प्रायाद्वृत्रचमूं प्रति ॥ ७-९४-६६ (४८३९०)
नानाविधैश्च शस्त्रौघैः पात्यमानैर्महारणे ।
न सन्धिः शक्यते भेत्तुं वर्मबन्धस्य तस्य तु ॥ ७-९४-६७ (४८३९१)
स तेन वर्मणा गुप्तो वृत्रं देवरिपुं तदा ।
जघान समरेऽभीतः शक्रो देवाग्रणीस्तदा ॥ ७-९४-६८ (४८३९२)
तं च मन्त्रमयं बन्धं वर्म चाङ्गिरसे ददौ ।
अङ्गिराः प्राह पुत्रस्य मन्त्रज्ञस्य बृहस्पतेः ।
बृहस्पतिरथोवाच अग्निवेश्याय धीमते ॥ ७-९४-६९ (४८३९३)
अग्निवेश्यो मम प्रादात्तेन बध्नामि वर्म ते ।
तवाद्य देहरक्षार्थं मन्त्रेण नृपसत्तम ॥ ७-९४-७० (४८३९४)
सञ्जय उवाच। ७-९४-७१क्ष् (४५०८)
एवमुक्त्वा ततो द्रोणस्तव पुत्रं महाद्युतिम् ।
पुनरे वचः प्राह शनैराचार्यपुङ्गवः ॥ ७-९४-७१ (४८३९५)
ब्रह्मसूत्रेण बध्नामि कथचं तव भारत ।
हिरण्यगर्भेण यथा बद्धं विष्णोः पुरा रणे ॥ ७-९४-७२ (४८३९६)
यथा च ब्रह्मणा बद्धं सङ्ग्रामे तारकामये ।
शक्रस्य कवचं दिव्यं तथा बध्नाम्यहं तव ॥ ७-९४-७३ (४८३९७)
सञ्जय उवाच। ७-९४-७४क्ष् (४५०९)
बद्ध्वा तु कवचं तस्य मन्त्रेण विधिपूर्वकम् ।
प्रेषयामास राजानं युद्धाय महते द्विजः ॥ ७-९४-७४ (४८३९८)
स सन्नद्धो महाबाहुराचार्येण महात्मना ।
ग्प्रस्थितः सहसा राजन्यत्र यातो धनञ्जयः'॥ ७-९४-७५ (४८३९९)
रथानां च सहस्रेण त्रिगर्तानां प्रहारिणाम् ।
तथा दन्तिसहस्रेण मत्तानां वीर्यशालिनाम् ॥ ७-९४-७६ (४८४००)
अश्वानां नियुतेनैव तथाऽन्यैश्च महारथैः ।
वृतः प्रायान्महाबाहुरर्जुनस्य रथं प्रति ॥ ७-९४-७७ (४८४०१)
नानावादित्रघोषेण यथा वैरोचनिस्तथा ॥ ७-९४-७८ (४८४०२)
ततः शब्दो महानासीत्सैन्यानां तव भारत ।
अगाधं प्रस्थितं दृष्ट्वा समुद्रमिव कौरवम् ॥ ॥ ७-९४-७९ (४८४०३)

इति श्रीमन्महाभारते द्रोणपर्वणि जयद्रथवधपर्वणि
चतुर्दशदिवसयुद्धे चतुर्नवतितमोऽध्यायः ॥ ९४ ॥

Mahabharata - Drona Parva - Chapter Footnotes

५-९४-१० आतुरमनवस्पितम् ॥
५-९४-१२ नावबुध्यसे न स्मरसि ॥

५-९४-१३ नेच्छसि नानुरुध्यते ॥
५-९४-१४ वचसा ललितं सदा ।हृदयेन भृशं तीक्ष्णं इति क। पाठः ॥
५-९४-३५ ते त्वाम् ॥
५-९४-४९ चत्वार ऐरावतवामनाञ्जनसार्वभौमाः ॥
५-९४-५६ अनुज्ञां वरम् ॥
५-९४-५७ हन्याद्धन्तुमर्हति ॥
५-९४-६५ मानसेन मनसोच्चारणीयेन ॥
५-९४-७२ ब्रह्मसूत्रेण ब्रह्मणा सूचितेनो पदेशेन ॥
५-९४-९४ चतुर्नवतितमोऽध्यायः ॥

---

द्रोनपर्व-अध्यय०९५
॥ श्रीः ॥
७.९५. अध्यायः ९५

Mahabharata - Drona Parva - Chapter Topics
राज्ञां द्वन्द्वीभूय युद्धाय समागमः ॥ १ ॥

Mahabharata - Drona Parva - Chapter Text

७-९५-० (४८४०४)
सञ्जय उवाच। ७-९५-०क्ष् (४५१०)
प्रविष्टयोर्महाराज पार्थवार्ष्णेययो रणे ।
दुर्योधने प्रयाते च पृष्ठतः पुरुषर्षभे ॥ ७-९५-१ (४८४०५)
जवेनाभ्यद्रवन्द्रोणं महता निःस्वनेन च ।
पाण्डवाः सोमकैः सार्धं ततो युद्धमवर्तत ॥ ७-९५-२ (४८४०६)
तद्युद्धमभवत्तीव्रं तुमुलं रोमहर्षणम् ।
कुरूणां पाण्डवानां च व्यूहस्य पुरतोऽद्भुतम् ॥ ७-९५-३ (४८४०७)
राजन्कदाचिन्नास्माभिर्दृष्टं तादृङ्क च श्रुतम् ।
यादृङ्मध्यगते सूर्ये युद्धमासीद्विशाम्पते ॥ ७-९५-४ (४८४०८)
धृष्टद्युम्नमुखाः पार्था व्यूढानीकाः प्रहारिणः ।
द्रोणस्य सैन्यं ते सर्वे शरवर्षैरवाकिरन् ॥ ७-९५-५ (४८४०९)
वयं द्रोणं पुरस्कृत्य सर्वशस्त्रभृतां वरम् ।
पार्षतप्रमुखान्पार्थानभ्यवर्षाम सायकैः ॥ ७-९५-६ (४८४१०)
महामेघाविवोदीर्णौ मिश्रवातौ हिमात्यये ।
सेनाग्रे प्रचकाशेते रुचिरे रथभूषिते ॥ ७-९५-७ (४८४११)
समेत्य तु महासेने चक्रतुर्वेगमुत्तमम् ।

जाह्नवीयमुने नद्यौ प्रावृषीवोल्बणोदके ॥ ७-९५-८ (४८४१२)
नानाशस्त्रपुरोवातो द्विपाश्वरथसंवृतः ।
गदाविद्युन्महारौद्रः सङ्ग्रामजलदो महान् ॥ ७-९५-९ (४८४१३)
भारद्वाजानिलोद्भूतः शरधारासहस्रवान् ।
अभ्यवर्षन्महारौद्रं पाण्डुसेनाग्निमुद्धतम् ॥ ७-९५-१० (४८४१४)
समुद्रमिव घर्मान्ते विशन्घोरो महानिलः ।
व्यक्षोभयदनीकानि पाण्डवानां द्विजोत्तमः ॥ ७-९५-११ (४८४१५)
तेऽपि सर्वप्रयत्नेन द्रोणमेव समाद्रवन् ।
बिभित्सन्तो महासेतुं वार्योघाः प्रबला इव ॥ ७-९५-१२ (४८४१६)
वारयामास तान्द्रोणो जलौघमचलो यथा ।
पाण्डवान्समरे क्रुद्धान्पाञ्चालांश्च सकेकयान् ॥ ७-९५-१३ (४८४१७)
अथापरे च राजानः परिवृत्य समन्ततः ।
महाबला रणे शूराः पाञ्चालानन्ववारयन् ॥ ७-९५-१४ (४८४१८)
ततो रणे नरव्याघ्रः पार्षतः पाण्डवैः सह ।
सञ्जघानासकृद्द्रोणं बिभित्सुररिवाहिनीम् ॥ ७-९५-१५ (४८४१९)
यथैव शरवर्षाणि द्रोणो वर्षति पार्षते ।
तथैव शरवर्षाणि धृष्टद्युम्नोऽप्यवर्षत ॥ ७-९५-१६ (४८४२०)
सनिस्त्रिंशपुरोवातः शक्तिप्रासर्ष्टिसंवृतः ।
ज्याविद्युच्चापसंह्रादो धृष्टद्युम्नबलाहकः ॥ ७-९५-१७ (४८४२१)
शरधाराश्मवर्षाणि व्यसृजत्सर्वतो दिशम् ।
निघ्नन्रथवराश्वौघान्प्लावयामास वाहिनीम् ॥ ७-९५-१८ (४८४२२)
यंयमार्च्छच्छरैर्द्रोणः पाण्डवानां रथव्रजम् ।
ततस्ततः शरैर्द्रोणमपाकर्षत पार्षतः ॥ ७-९५-१९ (४८४२३)
तथा तु यतमानस्य द्रोणस्य युधि भारत ।
धृष्टद्युम्नं समासाद्य त्रिधा सैन्यमभिद्यत ॥ ७-९५-२० (४८४२४)
भोजमेकेऽभ्यवर्तन्त जलसन्धं तथाऽपरे ।
पाण्डवैर्हन्यमानाश्च द्रोणमेवापरे ययुः ॥ ७-९५-२१ (४८४२५)
सङ्घट्टयति सैन्यानि द्रोणस्तु रथिनां वरः ।
व्यधमच्चापि तान्यस्य धृष्टद्युम्नो महारथः ॥ ७-९५-२२ (४८४२६)
धार्तराष्ट्रास्तथा भूता वध्यन्ते पाण्डुसृञ्जयैः ।
अगोपाः पशवोऽरण्ये बहुभिः श्वापदैरिव ॥ ७-९५-२३ (४८४२७)
कालः स्म ग्रसते योधान्धृष्टद्युम्नेन मोहितान् ।
सङ्ग्रामे तुमुले तस्मिन्निति सम्मेनिरे जनाः ॥ ७-९५-२४ (४८४२८)
कुनृपस्य यथा राष्ट्रं दुर्भिक्षव्याधितस्करैः ।
द्राव्यते तद्वदापन्ना पाण्डवैस्तव वाहिनी ॥ ७-९५-२५ (४८४२९)
अर्करश्मिविमिश्रेषु शस्त्रेषु कवचेषु च ।

चक्षूंषि प्रत्यहन्यन्त सैन्येन रजसा तथा ॥ ७-९५-२६ (४८४३०)
त्रिधा भूतेषु सैन्येषु वध्यमानेषु पाण्डवैः ।
अमर्षितस्ततो द्रोणः पाञ्चालान्व्यधमच्छरैः ॥ ७-९५-२७ (४८४३१)
मृद्नतस्तान्यनीकानि निघ्नतश्चापि सायकैः ।
बभूव रूपं द्रोणस्य कालाग्नेरिव दीप्यतः ॥ ७-९५-२८ (४८४३२)
रथं नागं हयं चापि पत्तिनश्च विशाम्पते ।
एकैकेनेषुणा सङ्ख्ये निर्बिभेद महारथः ॥ ७-९५-२९ (४८४३३)
पाण्डवानां तु सैन्येषु नास्ति कश्चित्स भारत ।
दधार यो रणे बाणान्द्रोणचापच्युतान्प्रभो ॥ ७-९५-३० (४८४३४)
तत्पच्यमानमर्केण द्रोणसायकतापितम् ।
बभ्राम पार्षतं सैन्यं तत्रतत्रैव भारत ॥ ७-९५-३१ (४८४३५)
ग्हन्यमानं तु तत्सैन्यं भारद्वाजेन सर्वतः ।
शरैरग्निशिखाकारैर्दह्यते भरतर्षभ'॥ ७-९५-३२ (४८४३६)
तथैव पार्षतेनापि काल्यमानं बलं तव ।
अभवत्सर्वतो दीप्तं शुष्कं वनमिवाग्निना ॥ ७-९५-३३ (४८४३७)
बाध्यमानेषु सैन्येषु द्रोणपार्षतसायकैः ।
त्यक्त्वा प्राणान्परं शक्त्या युध्यन्ते स्वर्गलिप्सवः ॥ ७-९५-३४ (४८४३८)
तावकानां परेषां च युध्यतां भरतर्षभ ।
नासीत्कश्चिन्महाराज योऽत्याक्षीत्संयुगं भयात् ॥ ७-९५-३५ (४८४३९)
भीमसेनं तु कौन्तेयं सोदर्याः पर्यवारयन् ।
विविंशतिश्चित्रसेनो विकर्णश्च महारथः ॥ ७-९५-३६ (४८४४०)
विन्दानुविन्दावावन्त्यौ क्षेमधूर्तिश्च वीर्यवान् ।
त्रयाणां तव पुत्राणां त्रय एवानुयायिनः ॥ ७-९५-३७ (४८४४१)
बाह्लीकराजस्तेजस्वी कुलपुत्रो महारथः ।
सहसेनः सहामात्यो द्रौपदेयानवारयत् ॥ ७-९५-३८ (४८४४२)
शैब्यो गोवासनो राजा योधैर्दशशतावरैः ।
काश्यस्याभिभुवः पुत्रं पराक्रान्तमवारयत् ॥ ७-९५-३९ (४८४४३)
अजातशत्रुं कौन्तेयं ज्वलन्तमिव पावकम् ।
मद्राणामीश्वरः शल्यो राजा राजानमावृणोत्। ७-९५-४० (४८४४४)
दुःशासनस्त्ववस्थाप्य स्वमनीकममर्षणः ।
सात्यकिं प्रययौ क्रुद्धः शूरो रथवरं युधि ॥ ७-९५-४१ (४८४४५)
स्वकेनाहमनीकेन सन्नद्धः कवचावृतः ।
चतुःशतैर्महेष्वासैश्चेकितानमवारयम् ॥ ७-९५-४२ (४८४४६)
शकुनिस्तु सहानीको माद्रीपुत्राववारयत् ।
गान्धारकैः सप्तशतैश्चापशक्त्यसिपाणिभिः ॥ ७-९५-४३ (४८४४७)
विन्दानुविन्दावावन्त्यौ विराटं मत्स्यमार्च्छताम् ।

प्राणांस्तक्त्वा महेष्वासौ मित्रार्थेऽभ्युद्यतायुधौ ॥ ७-९५-४४ (४८४४८)
शिखण्डिनं याज्ञसेनिं रुन्धानमपराजितम् ।
बाह्लीकः प्रतिसंयत्तः पराक्रान्तमवारयत् ॥ ७-९५-४५ (४८४४९)
धृष्टद्युम्नं तु पाञ्चाल्यं क्रूरैः सार्धं प्रभद्रकैः ।
आवन्त्यः सहसौवीरैः क्रुद्धरूपमवारयत् ॥ ७-९५-४६ (४८४५०)
घटोत्कचं तथा शूरं राक्षसं क्रूरकर्मिणम् ।
अलामुधोऽद्रवत्तूर्णं क्रुद्धमायान्तमाहवे ॥ ७-९५-४७ (४८४५१)
अलम्बुसं राक्षसेन्द्रं कुन्तिभोजो महारथः ।
सैन्येन महता युक्तः क्रुद्धरूपमवारयत् ॥ ७-९५-४८ (४८४५२)
सैन्धवः पृष्ठतस्त्वासीत्सर्वसैन्यस्य भारत ।
रक्षितः परमेष्वासैः कृपप्रभृतिभी रथैः ॥ ७-९५-४९ (४८४५३)
तस्यास्तां चक्ररक्षौ द्वौ सैन्धवस्य बृहत्तमौ ।
द्रौणिर्दक्षिणतो राजन्सूतपुत्रश्च वामतः ॥ ७-९५-५० (४८४५४)
पृष्ठगोपास्तु तस्यासन्सौमदत्तिपुरोगमाः ।
कृपश्च वृषसेनश्च शलः शल्यश्च दुर्जयः ॥ ७-९५-५१ (४८४५५)
नीतिमन्तो महेष्वासाः सर्वे युद्धविशारदाः ।
सैन्धवस्य विधायैवं रक्षां युयुधिरे ततः ॥ ॥ ७-९५-५२ (४८४५६)

इति श्रीमन्महाभारते द्रोणपर्वणि जयद्रथवधपर्वणि
चतुर्दशदिवसयुद्धे पञ्चनवतितमोऽध्यायः ॥ ९५ ॥
Mahabharata - Drona Parva - Chapter Footnotes

५-९५-७ हिमात्यये शिशिरे ।सेनाग्रे प्रधाने सेने ॥
५-९५-१८ प्लावयामास विद्रावितवान् ॥
५-९५-१९ अपाकर्षत व्यावर्तितवान् ॥
५-९५-२२ सङ्घट्टयति सम्मेलयति ॥
५-९५-३९ काश्यस्य काशिराजस्य ॥
५-९५-४६ आवन्त्योऽन्यः ॥
५-९५-९५ पञ्चनवतितमोऽध्यायः ॥

---

द्रोनपर्व-अध्यय०९६
॥ श्रीः ॥
७.९६. अध्यायः ९६

Mahabharata - Drona Parva - Chapter Topics
राज्ञां द्वन्द्वयुद्धवर्णनम् ॥ १ ॥

७-९६-० (४८४५७)
सञ्जय उवाच। ७-९६-०क्ष् (४५११)
राजन्सङ्ग्राममाश्चर्यं शृणु कीर्तयतो मम ।
कुरूणां पाण्डवानां च यथा युद्धमवर्तत ॥ ७-९६-१ (४८४५८)
भारद्वाजं समासाद्य व्यूहस्य प्रमुखे स्थितम् ।
अयोधयन्रणे पार्था द्रोणानीकं बिभित्सवः ॥ ७-९६-२ (४८४५९)
रक्षमाणः स्वथं व्यूहं द्रोणोऽपि सह सैनिकैः ।
अयोधयद्रणे पार्थान्प्रार्थयानो महद्यशः ॥ ७-९६-३ (४८४६०)
विन्दानुविन्दावावन्त्यौ विराटं दशभिः शरैः ।
अयोधयद्रणे पार्थान्प्रार्थयानो महद्यशः ॥ ७-९६-४ (४८४६१)
विन्दानुविन्दावावन्त्यौ विराटं दशभिः शरैः ।
पराक्रान्तौ पराक्रम्य योधयामास सानुगौ ॥ ७-९६-५ (४८४६२)
तेषां युद्धं समभवद्दारुणं शोणितोदकम् ।
सिंहस्य द्विपमुख्याभ्यां प्रभिन्नाभ्यां यथा वने ॥ ७-९६-६ (४८४६३)
बाह्लीकं रभसं युद्धे याज्ञसेनिर्महाबलः ।
आजघ्ने विशिखैस्तीक्ष्णैर्घोरैर्मर्मास्थिभेदिभिः ॥ ७-९६-७ (४८४६४)
बाह्लीको याज्ञसेनिं तु हेमपुङ्खैः शिलाशितैः ।
आजघान भृशं क्रुद्धो नवभिर्नतपर्वभिः ॥ ७-९६-८ (४८४६५)
तद्युद्धमभवद्घोरं शरशक्तिसमाकुलम् ।
भीरूणां त्रासजननं शूराणां हर्षवर्धनम् ॥ ७-९६-९ (४८४६६)
ताभ्यां तत्र शरैर्मुक्तैरन्तरिक्षं दिशस्तथा ।
अभवत्संवृतं सर्वं न प्राज्ञायत किञ्चन ॥ ७-९६-१० (४८४६७)
शैब्यो गोवासनो युद्धे काश्यपुत्रं महारथम् ।
ससैन्यो योधयामास गजः प्रतिगजं यथा ॥ ७-९६-११ (४८४६८)
बाह्लीकराजः सङ्क्रुद्धो द्रौपदेयान्महारथान् ।
मनः पञ्चेन्द्रियाणीव शुशुभे योधयन्रणे ॥ ७-९६-१२ (४८४६९)
अयोधयंस्ते सुभृशं तं शरौघैः समन्ततः ।
इन्द्रियाणि यथा देहं शश्वद्देहवतां वर ॥ ७-९६-१३ (४८४७०)
वार्ष्णेयं सात्यकिं युद्धे पुत्रो दुःशासनस्तव ।
आजघ्ने सायकैस्तीक्ष्णैर्नवभिर्नतपर्वभिः ॥ ७-९६-१४ (४८४७१)
सोऽतिविद्धो बलवता महेष्वासेन धन्विना ।
ईषन्मूर्च्छां जगामाशु सात्यकिः सत्यविक्रमः ॥ ७-९६-१५ (४८४७२)
समाश्वस्तस्तु वार्ष्णेयस्तव पुत्रं महारथम् ।

विव्याध दशभिस्तूर्णं सायकैः कङ्कपत्रिभिः ॥ ७-९६-१६ (४८४७३)
तावन्योन्यं दृढं विद्धावन्योन्यशरपीडितौ ।
रजेतुः समरे राजन्पुष्पिताविव किंशुकौ ॥ ७-९६-१७ (४८४७४)
अलम्बुसस्तु सङ्क्रुद्धः कुन्तिभोजशरार्दितः ।
अशोभत भृशं लक्ष्म्या पुष्पाढ्य इव किंशुकः ॥ ७-९६-१८ (४८४७५)
कुन्तिभोजं ततो रक्षो विद्ध्वा बहुभिरायसैः ।
अनदद्भैरवं नादं वाहिन्याः प्रमुखे तव ॥ ७-९६-१९ (४८४७६)
ततस्तौ समरे शूरौ योधयन्तौ परस्परम् ।
ददृशुः सर्वसैन्यानि शक्रजम्भौ यथा पुरा ॥ ७-९६-२० (४८४७७)
शकुनिं रभसं युद्धे कृतवैरं च भारत ।
माद्रीपुत्रौ च संरब्धौ शरैश्चार्दयतां भृशम् ॥ ७-९६-२१ (४८४७८)
तुमुलः स महान्राजन्प्रावर्तत जनक्षयः ।
त्वया सञ्जनितोऽत्यर्थं कर्णेन च विवर्धितः ॥ ७-९६-२२ (४८४७९)
रक्षितस्तव पुत्रैश्च क्रोधमूलो हुताशनः ।
य इमां पृथिवीं राजन्दग्धुं सर्वां समुद्यतः ॥ ७-९६-२३ (४८४८०)
शकुनिः पाण्डुपुत्राभ्यां कृतः स विमुखः शरैः ।
न स्म जानाति कर्तव्यं युद्धे किञ्चित्पराक्रमम् ॥ ७-९६-२४ (४८४८१)
विमुखं चैनमालोक्य माद्रीपुत्रौ महारथौ ।
ववर्षतुः पुनर्बाणैर्यथा मेघौ महागिरिम् ॥ ७-९६-२५ (४८४८२)
स वध्यमानो बहुभिः शरैः सन्नतपर्वभिः ।
सम्प्रायाज्जवनैरश्वैर्द्रोणानीकाय सौबलः ॥ ७-९६-२६ (४८४८३)
घटोत्कचस्तथा शूरं राक्षसं तमलामुधम् ।
अभ्ययाद्रभसं युद्धे वेगमास्थाय मध्यमम् ॥ ७-९६-२७ (४८४८४)
तयोर्युद्धं महाराज चित्ररूपमिवाभवत् ।
यादृशं हि पुरावृत्तं रामरावणयोर्मृधे ॥ ७-९६-२८ (४८४८५)
ततो युधिष्ठिरो राजा मद्रराजानमाहवे ।
विद्ध्वा पञ्चाशता बाणैः पुनर्विव्याध सप्तभिः ॥ ७-९६-२९ (४८४८६)
ततः प्रववृते युद्धं तयोरत्यद्भुतं नृप ।
यथा पूर्वं महद्युद्धं शम्बरामरराजयोः ॥ ७-९६-३० (४८४८७)
विविंशतिश्चित्रसेनो विकर्णश्च तवात्मजः ।
अयोधयन्भीमसेनं महत्या सेनया वृताः ॥ ॥ ७-९६-३१ (४८४८८)

इति श्रीमन्महाभारते द्रोणपर्वणि जयद्रथवधपर्वणि
चतुर्दशदिवसयुद्धे षण्णवतितमोऽध्यायः ॥ ९६ ॥
Mahabharata - Drona Parva - Chapter Footnotes

५-९६-२३ हुताशनः प्रावर्ततेत्यनुषज्यते ॥
५-९६-९६ षण्णवतितमोऽध्यायः ॥

---

द्रोनपर्व-अध्यय०९७
॥ श्रीः ॥
७.९७. अध्यायः ९७

Mahabharata - Drona Parva - Chapter Topics
द्रोणधृष्टद्युम्नयोर्युद्धम् ॥ १ ॥

Mahabharata - Drona Parva - Chapter Text

७-९७-० (४८४८९)
सञ्जय उवाच। ७-९७-०क्ष् (४५१२)
तथा तस्मिन्प्रवृत्ते तु सङ्ग्रमे रोमहर्षणे ।
कौरवेयांस्त्रिधाभूतान्पाण्डवाः समुपाद्रवन् ॥ ७-९७-१ (४८४९०)
जलसन्धं महाबाहुं भीमसेनोऽभ्यवर्तत ।
युधिष्ठिरः सहानीकः कृतवर्माणमाहवे ॥ ७-९७-२ (४८४९१)
किरंस्तु शरवर्षाणि रोचमान इवांशुमान् ।
धृष्टद्युम्नो महाराज द्रोणमभ्यद्रवद्रणे ॥ ७-९७-३ (४८४९२)
ततः प्रववृते युद्धं त्वरतां सर्वधन्विनाम् ।
कुरूणां पाण्डवानां च सङ्क्रुद्धानां परस्परम् ॥ ७-९७-४ (४८४९३)
सङ्क्षये तु तथाभूते वर्तमाने महाभये ।
द्वन्दवीभूतेषु सैन्येषु युध्यमानेष्वभीतवत् ॥ ७-९७-५ (४८४९४)
द्रोणः पाञ्चालपुत्रेण बली बलवता सह ।
यदक्षिपत्पृषत्कौघांस्तदद्भुतमिवाभवत् ॥ ७-९७-६ (४८४९५)
पुण्डरीकवनानीव विध्वस्तानि समन्ततः ।
चक्राते द्रोणपाञ्चाल्यौ नृणां शीर्षाण्यनेकशः ॥ ७-९७-७ (४८४९६)
विनिकीर्णानि वीराणामनीकेषु समन्ततः ।
वस्त्राभरणशस्त्राणि ध्वजवर्मायुधानि च ॥ ७-९७-८ (४८४९७)
तपनीयतनुत्राणाः संसिक्ता रुधिरेण च ।
कोविदारा इवाभान्ति पुष्पितास्तत्र भारत ।
तावकाः समरे योधाः पाण्डवेयाश्च विक्षताः ॥ ७-९७-९ (४८४९८)
कुञ्जराश्वनरान्ये पातयन्ति स्म पत्रिभिः ।
तालमात्राणि चापानि विकर्षन्तो महारथाः ॥ ७-९७-१० (४८४९९)
असिचर्माणि चापानि शिरांशि कवचानि च ।

विप्रकीर्यन्त शूराणां सम्प्रहारे महात्मनाम् ॥ ७-९७-११ (४८५००)
उत्थितान्यगणेयानि कबन्धानि समन्ततः ।
अदृश्यन्त महाराज तस्मिन्परमसङ्कुले ॥ ७-९७-१२ (४८५०१)
गृध्राः कङ्का बकाः श्येना वायसा जम्बुकास्तथा ।
बहुशः पिशिताशाश्च तत्रादृश्यन्त मारिष ॥ ७-९७-१३ (४८५०२)
भक्षयन्तश्च मांसानि पिबन्तश्चापि शोणितम् ।
विलुम्पमानाः केशांश्च मज्जाश्च बहुधा नृप ॥ ७-९७-१४ (४८५०३)
आकर्षन्तः शरीराणि शरीरावयवांस्तथा ।
नराश्वगजसङ्घानां शिरांशि च ततस्ततः ॥ ७-९७-१५ (४८५०४)
कृतास्त्रा रणशिक्षाभिर्दीक्षिता रणशालिनः ।
रणे जयं प्रार्थयाना भृशं युयुधिरे तदा ॥ ७-९७-१६ (४८५०५)
असिमार्गान्बहुविधान्विचेरुः सैनिका रणे ।
ऋष्टिभिः शक्तिभिः प्रासैः शूलतोमरपट्टसैः ॥ ७-९७-१७ (४८५०६)
गदाभिः परिघैश्चान्यैरायुधैश्च भुजैरपि ।
अन्योन्यं जघ्निरे क्रुद्धा युद्धरङ्गता नराः ॥ ७-९७-१८ (४८५०७)
रथिनो रथिभिः सार्धमश्वारोहाश्च सादिभिः ।
मातङ्गा वरमातङ्गैः पदाताश्च पदातिभिः ॥ ७-९७-१९ (४८५०८)
क्षीबा इवान्ये चोन्मत्ता रङ्गेष्विव च वारणाः ।
उच्चुक्रुशुरथान्योन्यं जघ्नुरन्योन्यमेव च ॥ ७-९७-२० (४८५०९)
वर्तमाने तथा युद्धे निर्मर्यादे विशाम्पते ।
धृष्टद्युम्नो हयानश्वैर्द्रोणस्य व्यत्यमिश्रयत् ॥ ७-९७-२१ (४८५१०)
ते हयाः साध्वशोभन्त मिश्रिता वातरंहसः ।
पारावतसवर्णाश्च रक्तशोणाश्च संयुगे ॥ ७-९७-२२ (४८५११)
पारावतसवर्णास्ते रक्तशोणविमिश्रिताः ।
हयाः शुशुभिरे राजन्मेघा इव सविद्युतः ॥ ७-९७-२३ (४८५१२)
धृष्टद्युम्नस्तु सम्प्रेक्ष्य द्रोणमभ्याशमागतम् ।
असिचर्मादद वीरो धनुरुत्सृज्य भारत ॥ ७-९७-२४ (४८५१३)
चिकीर्षुर्दुष्करं कर्म पार्षतः परवीरहा ।
ईषायाः समतिक्रम्य द्रोणस्य रथमाविशत् ॥ ७-९७-२५ (४८५१४)
अतिष्ठद्युगमध्ये स युगसन्नहनेषु च ।
जघनार्धेषु चाश्वानां तत्सैन्यान्यभ्यपूजयन् ॥ ७-९७-२६ (४८५१५)
खड्गेन चरतस्तस्य शोणाश्वानधितिष्ठतः ।
न ददार्शान्तरं द्रोणस्तदद्भुतमिवाभवत् ॥ ७-९७-२७ (४८५१६)
यथा श्येनस्य पतनं वनेष्वामिषगृद्धिनः ।
तथैवासीदभीसारस्तस्य द्रोणं जिघांसतः ॥ ७-९७-२८ (४८५१७)
ततः शरशतेनास्य शतचन्द्रं समाक्षिपत् ।

द्रोणो द्रुपद पुत्रस्य खड्गं च दशभिः शरैः ॥ ७-९७-२९ (४८५१८)
हयांश्चैव चतुःषष्ट्या शराणां जघ्निवान्बली ।
ध्वजं छत्रं च भल्लाभ्यां तथा तौ पार्ष्णिसारथी ॥ ७-९७-३० (४८५१९)
अथास्मै त्वरितो बाणमपरं जीवितान्तकम् ।
धृष्टद्युम्नाय चिक्षेप वज्रं वज्रधरो यथा ॥ ७-९७-३१ (४८५२०)
तं चतुर्दशभिस्तीक्ष्णैर्बाणैश्चिच्छेद सात्यकिः ।
ग्रस्तमाचार्यमुख्येन धृष्टद्युम्नं व्यमोचयत् ॥ ७-९७-३२ (४८५२१)
सिंहेनेव मृगं ग्रस्तं नरसिंहेन मारिष ।
द्रोणाद्वै मोचयामास पाञ्चाल्यं शिनिपुङ्गवः ॥ ७-९७-३३ (४८५२२)
सात्यकिं प्रेक्ष्य गोप्तारं पाञ्चाल्यं च महाहवे ।
शराणां त्वरितो द्रोणः षड्विंशत्या समार्पयत् ॥ ७-९७-३४ (४८५२३)
ततो द्रोणं शिनेः पौत्रो ग्रसन्तमपि सृञ्जयान् ।
प्रत्यविध्यच्छितैर्बाणैः षड्विंशत्या स्तनान्तरे ॥ ७-९७-३५ (४८५२४)
ततः सर्वे रथास्तूर्णं पाञ्चाल्या जयगृद्धिनः ।
सात्वताभिसृते द्रोणे धृष्टद्युम्नमवाक्षिपन् ॥ ॥ ७-९७-३६ (४८५२५)

इति श्रीमन्महाभारते द्रोणपर्वणि जयद्रथवधपर्वणि
चतुर्दशदिवसयुद्धे सप्तनवतितमोऽध्यायः ॥ ९७ ॥
Mahabharata - Drona Parva - Chapter Footnotes

५-९७-२६ युगसन्नहनेषु युगबन्धेषु ॥
५-९७-३६ अवाक्षित् अपनीतवन्तः ॥
५-९७-९७ सप्तनवतितमोऽध्यायः ॥

---

द्रोनपर्व-अध्यय०९८
॥ श्रीः ॥
७.९८. अध्यायः ९८

Mahabharata - Drona Parva - Chapter Topics
द्रोणसात्यक्योर्युद्धम् ॥ १ ॥

Mahabharata - Drona Parva - Chapter Text

७-९८-० (४८५२६)
धृतराष्ट्र उवाच। ७-९८-०क्ष् (४५१३)
बाणे तस्मिन्निकृत्ते तु धृष्टद्युम्ने च मोक्षिते ।

तेन वृष्णिप्रवीरेण युयुधानेन सञ्जय ॥ ७-९८-१ (४८५२७)
अमर्षितो महेष्वासः सर्वशस्त्रभृतां वरः ।
नरव्याघ्रं शिनेः पौत्रं द्रोणः किमकरोद्युधि ॥ ७-९८-२ (४८५२८)
सञ्जय उवाच। ७-९८-३क्ष् (४५१४)
सम्प्रस्रुतक्रोधविषो व्यादितास्यशरासनः ।
तीक्ष्णधारेषुदशनः सितनाराचदंष्ट्रवान् ॥ ७-९८-३ (४८५२९)
संरम्भामर्षताम्राक्षो महोरग इव श्वसन् ।
नरवीरः प्रमुदितः शोणैरश्वैर्महाजवैः ॥ ७-९८-४ (४८५३०)
उत्पतद्भिरिवाकाशे क्रामद्भिरिव पर्वतम् ।
रुक्मपुङ्खाञ्शरानस्यन्युयुधानमुपाद्रवत् ॥ ७-९८-५ (४८५३१)
शरपातमहावर्षं रथघोषबलाहकम् ।
कार्मुकैरावृतं राजन्नाराचबहुविद्युतम् ॥ ७-९८-६ (४८५३२)
शक्तिखड्गाशनिधरं क्रोधवेगसमुत्थितम् ।
द्रोणमेघमनावार्यं हयमारुतचोदितम् ॥ ७-९८-७ (४८५३३)
दृष्ट्वैवाभिपतन्तं तं शूरः परपुरञ्जयः ।
उवाच सूतं शैनेयः प्रहसन्युद्धदुर्मदः ॥ ७-९८-८ (४८५३४)
एनं वै ब्राह्मणं शूरं स्वकर्मण्यनवस्थितम् ।
आश्रयं धार्तराष्ट्रस्य धर्मराजभयावहम् ॥ ७-९८-९ (४८५३५)
शीघ्रं प्रजवितैरश्वैः प्रत्युद्याहि प्रहृष्टवत् ।
आचार्यं राजपुत्राणां सततं शूरमानिनम् ॥ ७-९८-१० (४८५३६)
सञ्जय उवाच। ७-९८-११क्ष् (४५१५)
ग्एवमुक्तस्ततः सूतः सात्यकस्यावहद्रथम्'।
ततो रजतसङ्काशा माधवस्य हयोत्तमाः ।
द्रोणस्याभिमुखाः शीघ्रमगच्छन्वातरंहसः ॥ ७-९८-११ (४८५३७)
ततस्तौ द्रोणशैनेयौ युयुधाते परन्तपौ ।
शरैरनेकसाहस्रैस्ताडयन्तौ परस्परम् ॥ ७-९८-१२ (४८५३८)
इषुजालावृतं व्योम चक्रतुः पुरुषर्षभौ ।
पूरयामासतुर्वीरावुभौ दश दिशः शरैः ।
मेघाविवातपापाये धाराभिरितरेतरम् ॥ ७-९८-१३ (४८५३९)
न स्म सूर्यस्तदा भाति न ववौ च समीरणः ।
हषुजालावृतं घोरमन्धकारं समन्ततः ॥ ७-९८-१४ (४८५४०)
अनाधृष्यमिवान्येषां शूराणामभवत्तदा ।
अन्धकारीकृते लोके द्रोणशैनेययोः शरैः ॥ ७-९८-१५ (४८५४१)
तयोः शीघ्रास्त्रविदुषोर्द्रोणसात्वतयोस्तदा ।
नान्तरं शरवृष्टीनां ददृशे नरसिंहयोः ॥ ७-९८-१६ (४८५४२)
इषूणां सन्निपातेन शब्दो धाराभिघातजः ।

शुश्रुवे शक्रमुक्तानामशनीनामिव स्वनः ॥ ७-९८-१७ (४८५४३)
नाराचैर्व्यतिविद्धानां शराणां रूपमाबभौ ।
आशीविषविदष्टानां सर्पाणामिव भारत ॥ ७-९८-१८ (४८५४४)
तयोर्ज्यातलनिर्घोषः शुश्रुवे युद्धशौण्डयोः ।
अजस्रं शैलशृङ्गाणां वज्रेणाहन्यतामिव ॥ ७-९८-१९ (४८५४५)
उभयोस्तौ रथौ राजंस्ते चाश्वास्तौ च सारथी ।
रुक्मपुङ्खैः शरैश्छन्नाश्चित्ररूपा बभुस्तदा ॥ ७-९८-२० (४८५४६)
निर्मलानामजिह्मानां नाराचानां विशाम्पते ।
निर्मुक्ताशीविषाभानां सम्पातोऽभूत्सुदारुणः ॥ ७-९८-२१ (४८५४७)
उभयोः पतिते छत्रे तथैव पतितौ ध्वजौ ।
गनिकृन्ततोः शरैस्तीक्ष्णैर्द्रोणसात्यकयो रणे'॥ ७-९८-२२ (४८५४८)
उभौ रुधिरसिक्ताङ्गावुभौ च विजयैषिणौ ।
स्रवद्भिः शोणितं गात्रैः प्रस्रुताविव वारणौ ।
अन्योन्यमभ्यविध्येतां जीवितान्तकरैः शरैः ॥ ७-९८-२३ (४८५४९)
गर्जितोत्कृष्टसन्नादाः शङ्खदुन्दुभिनिःस्वनाः ।
उपारमन्महाराज व्याजहार न कश्चन ॥ ७-९८-२४ (४८५५०)
तुष्णींभूतान्यनीकानि योधा युद्धादुपारमन् ।
ददर्श द्वैरथं ताभ्यां जातकौतूहलो जनः ॥ ७-९८-२५ (४८५५१)
रथिनो हस्तियन्तारो हयारोहाः पदातयः ।
अवैक्षन्ताचलैर्नेत्रैः परिवार्य नरर्षभौ ॥ ७-९८-२६ (४८५५२)
हस्त्यनीकान्यतिष्ठन्त तथानीकानि वाजिनाम् ।
तथैव रथवाहिन्यः प्रतिव्यूह्य व्यवस्थिताः ॥ ७-९८-२७ (४८५५३)
मुक्ताविद्रुमचित्रैश्च मणिकाञ्चनभूषितैः ।
ध्वजैराभरणैश्चित्रैः कवचैश्च हिरण्मयैः ॥ ७-९८-२८ (४८५५४)
वैजयन्तीपताकाभिः परिस्तोमाङ्ककम्बलैः ।
विमलैर्निशितैः शस्त्रैर्हयानां च प्रकीर्णकैः ॥ ७-९८-२९ (४८५५५)
जातरूपमयीभिश्च राजतीभिश्च मूर्धसु ।
गजानां कुम्भमालाभिर्दन्तवेष्टैश्च भारत ॥ ७-९८-३० (४८५५६)
सबलाकाः सखद्योताः सैरावतशतह्रदाः ।
अदृश्यन्तोष्णपर्याये मेघानामिव वागुराः ॥ ७-९८-३१ (४८५५७)
अपश्यन्नस्मदीयाश्च ते च यौधिष्ठिराः स्थिताः ।
तद्युद्धं युयुधानस्य द्रोणस्य च महात्मनः ॥ ७-९८-३२ (४८५५८)
विमानाग्रगता देवा ब्रह्मसोमपुरोगमाः ।
सिद्धचारणसङ्घाश्च विद्याधरमहोरगाः ॥ ७-९८-३३ (४८५५९)
गगन्धर्वा दानवा यक्षा राक्षसाप्सरसः खगाः'।
गतप्रत्यागताक्षेपैश्चितैरस्त्रविघातिभिः ।

विविधैर्विस्मयं जग्मुस्तयोः पुरुषसिंहयोः ॥ ७-९८-३४ (४८५६०)
हस्तलाघवमस्त्रेषु दर्शयन्तौ महाबलौ ।
अन्योन्यमभिविध्येतां शरैस्तौ द्रोणसात्यकी ॥ ७-९८-३५ (४८५६१)
ततो द्रोणस्य दाशार्हः शरांश्चिच्छेद संयुगे ।
पत्रिभिः सुदृढैराशु धनुश्चैव महाद्युतेः ॥ ७-९८-३६ (४८५६२)
निमेषान्तरमात्रेण भारद्वाजोऽपरं धनुः ।
सज्यं चकार तदपि चिच्छेदास्य स सात्यकिः ॥ ७-९८-३७ (४८५६३)
ततस्त्वरन्पुनर्द्रोणो धनुर्हस्तो व्यतिष्ठत ।
सज्यं सज्यं धनुश्चास्य चिच्छेद निशितैः शरैः ॥ ७-९८-३८ (४८५६४)
एवमेकशतं छिन्नं धनुषां दृढधन्विना ।
न चान्तरं तयोर्दृष्टं सन्धाने च्छेदनेऽपि च ॥ ७-९८-३९ (४८५६५)
ततोऽस्य संयुगे द्रोणो दृष्ट्वा कर्मातिमानुषम् ।
युयुधानस्य राजेन्द्र मनसैतदचिन्तयत् ॥ ७-९८-४० (४८५६६)
एतदस्त्रबलं रामे कार्तवीर्ये धनञ्जये ।
भीष्मे च पुरुषव्याघ्रे यदिदं सात्वतां वरे ॥ ७-९८-४१ (४८५६७)
तं चास्य मनसा द्रोणः पूजयामास विक्रमम् ।
लाघवं वासवस्येव सम्प्रेक्ष्य द्विजसत्तमः ॥ ७-९८-४२ (४८५६८)
तुतोषास्त्रविदां श्रेष्ठस्तथा देवाः सवासवाः ।
न तामालक्षयामासुर्लघुतां शीघ्रचारिणः ॥ ७-९८-४३ (४८५६९)
देवाश्च युयुधानस्य गन्धर्वाश्च विशाम्पते ।
सिद्धचारणसङ्घाश्च विदुर्द्रोणस्य कर्म तत् ॥ ७-९८-४४ (४८५७०)
ततोऽन्यद्धनुरादाय द्रोणः क्षत्रियमर्दनः ।
अस्त्रैरस्त्रविदां श्रेष्ठो योधयामास भारत ॥ ७-९८-४५ (४८५७१)
तस्यास्त्राण्यस्त्रमायाभिः प्रतिहत्य स सात्यकिः ।
जघान निशितैर्बाणैस्तदद्भुतमिवाभवत् ॥ ७-९८-४६ (४८५७२)
तस्यातिमानुषं कर्म दृष्ट्वाऽन्यैरसमं रणे ।
युक्तं योगेन योगज्ञास्तावकाः समपूजयन् ॥ ७-९८-४७ (४८५७३)
यदस्त्रमस्यति द्रोणस्तदेवास्यति सात्यकिः ।
तमाचार्योऽथ सम्भ्रान्तोऽयोधयच्छत्रुतापनः ॥ ७-९८-४८ (४८५७४)
ततः क्रुद्धो महाराज धनुर्वेदस्य पारगः ।
वधाय युयुधानस्य दिव्यमस्त्रमुदैरयत् ॥ ७-९८-४९ (४८५७५)
तदाग्नेयं महाघोरं रिपुघ्नमुपलक्ष्य सः ।
दिव्यमस्त्रं महेष्वासो वारुणं समुदैरयत् ॥ ७-९८-५० (४८५७६)
हाहाकारो महानासीद्दृष्ट्वा दिव्यास्त्रधारिणौ ।
न विचेरुस्तदाऽऽकाशे भूतान्याकाशगान्यपि ॥ ७-९८-५१ (४८५७७)
अस्त्रे ते वारुणाग्नेये यदा बाणैः समाहिते ।

न यावदभ्यपद्येतां व्यावर्तदथ भास्करः ॥ ७-९८-५२ (४८५७८)
ततो युधिष्ठिरो राजा भीमसेनश्च पाण्डवः ।
नकुलः सहदेवश्च पर्यरक्षन्त सात्यकिम् ॥ ७-९८-५३ (४८५७९)
धृष्टद्युम्नमुखैः सार्धं विराटश्च सकेकयः ।
मत्स्याः साल्वेयसेनाश्च द्रोणमाजग्मुरञ्जसा ॥ ७-९८-५४ (४८५८०)
दुःशासनं पुरस्कृत्य राजपुत्राः सहस्रशः ।
द्रोणमभ्युपपद्यन्त सपत्नैः परिवारितम् ॥ ७-९८-५५ (४८५८१)
रजसा संवृते लोके शरजालसमावृते ॥
सर्वमाविग्नमभवन्न प्राज्ञायत किञ्चन। ७-९८-५६ (४८५८२)
सैन्येन रजसा ध्वस्ते निर्मर्यादमवर्तत ॥
ग्तेनान्तरेण पार्थस्तु रणे जित्वा महारिपून्। ७-९८-५७ (४८५८३)
अतिक्रान्तस्तदा युद्धं कृत्वा पर्यवतस्थिवान्'॥
॥ ७-९८-५८ (४८५८४)

इति श्रीमन्महाभारते द्रोणपर्वणि जयद्रथवधपर्वणि
चतुर्दशदिवसयुद्धे अष्टनवतितमोऽध्यायः ॥ ९८ ॥
Mahabharata - Drona Parva - Chapter Footnotes

५-९८-१६ अन्तरमवच्छेदः ॥
५-९८-२७ रथवाहिन्यो रथसेनाः ॥
५-९८-२९ वैजयन्ती विलक्षणाभिः पताकाभिः
।परिस्तोमैर्वर्णकम्बलैः।अङ्गकम्बलैः सूक्ष्मकम्बलैः ॥
५-९८-३१ ऐरावतमिन्द्रधनुः ।ऐरावतोभ्रमातङ्गे इत्युपक्रम्य
नपुंसकं महेन्द्रस्य ऋजुदीर्घशरासने इति मेदिनी ॥
उष्णस्य पर्याये अपगमे वागुराः जालानि समूहा इतियावत् ॥
५-९८-३४ प्रत्यागतं निवर्तनम् ।आक्षेपः प्रहरणम् ॥
५-९८-४३ आलक्षयामासुर्लक्षितवन्तः ॥
५-९८-४४ विदुर्नेत्यनुषज्यते ॥
५-९८-४७ योगेन युक्त्या ॥
५-९८-५२ न यावदभ्यपद्येतां यावदेव न पराभूते ।व्यावर्तत्
मध्याह्नतः परावृत्तोऽभूत् ॥
५-९८-९८ अष्टनवतितमोऽध्यायः ॥

---

द्रोनपर्व-अध्यय०९९
॥ श्रीः ॥
७.९९. अध्यायः ९९

Mahabharata - Drona Parva - Chapter Topics
अर्जुनेन रणाङ्कणे हयाप्यायनाय शरैः सरोनिर्माणम् ॥ १ ॥
तथा शरमयवेश्मनिर्माणम् ॥ २ ॥

Mahabharata - Drona Parva - Chapter Text

७-९९-० (४८५८५)
सञ्जय उवाच। ७-९९-०क्ष् (४५१६)
ग्वर्तमाने तदा युद्धे द्रोणस्य सह पाण्डुभिः'।
परिवर्तमान आदित्ये तत्र सूर्ये च रश्मिभिः ।
रजसा कीर्यमाणाश्च मन्दीभूताश्च कौरवाः ॥ ७-९९-१ (४८५८६)
तिष्ठतां युध्यमानानां पुनरावर्ततामपि ।
भज्यतां जयतां चैव जगाम तदहः शनैः ॥ ७-९९-२ (४८५८७)
तथा तेषु विषक्तेषु सैन्येषु जयगृद्धिषु ।
अर्जुनो वासुदेवश्च सैन्धवायैव जग्मतुः ॥ ७-९९-३ (४८५८८)
रथमार्गप्रमाणं तु कौन्तेयो निशितैः शरैः ।
चकार यं च पन्थानं ययौ तेन जनार्दनः ॥ ७-९९-४ (४८५८९)
यत्रयत्र रथो याति पाण्डवस्य महात्मनः ।
तत्रतत्रैव दीर्यन्ते सेनास्तव विशाम्पते ॥ ७-९९-५ (४८५९०)
रथशिक्षां तु दाशार्हो दर्शयामास वीर्यवान् ।
उत्तमाधममध्यानि मण्डलानि विदर्शयन् ॥ ७-९९-६ (४८५९१)
ते तु नामाङ्किता बाणाः कालज्वलनसन्निभाः ।
स्नायुनद्धाः सुपर्वाणः पृथवो दीर्घगामिनः ॥ ७-९९-७ (४८५९२)
वैणवाश्चायसाश्चोग्रा ग्रसन्तो विविधानरीन् ।
रुधिरं पतगैः सार्धं प्राणिनां पपुराहवे ॥ ७-९९-८ (४८५९३)
रथस्थितोऽग्रतः क्रोशं यानस्यत्यर्जुनः शरान् ।
रथे क्रोशमतिक्रान्ते तस्य ते घ्नन्ति शात्रवान् ॥ ७-९९-९ (४८५९४)
तार्क्ष्यमारुतरंहोभिर्वाजिभिः साधुवाहिभिः ।
यथाऽगच्छद्धृषीकेशः कृत्स्नं विस्मापयञ्जगत् ॥ ७-९९-१० (४८५९५)
न तथा गच्छति रथस्तपनस्य विशाम्पते ।
नेन्द्रस्य न तु रुद्रस्य नापि वैश्रवणस्य च ॥ ७-९९-११ (४८५९६)
नान्यस्य समरे राजन्गतपूर्वस्तथा रथः ।
यथा ययावर्जुनस्य मनोभिप्रायशीघ्रगः ॥ ७-९९-१२ (४८५९७)
प्रविश्य तु रणे राजन्केशवः परवीरहा ।
सेनामध्ये हयांस्तूर्णं चोदयामास भारत ॥ ७-९९-१३ (४८५९८)

ततस्तस्य रथौघस्य मध्यं प्राप्य हयोत्तमाः ।
कृच्छ्रेणरथमूहुस्तं क्षुत्पिपासासमन्विताः ॥ ७-९९-१४ (४८५९९)
क्षताश्च बहुभिः शस्त्रैर्युद्धशौण्डैरनेकशः ।
मण्डलानि विचित्राणि विचेरुस्ते मुहुर्मुहुः ॥ ७-९९-१५ (४८६००)
हतानां वाजिनागानां रथानां च नरैः सह ।
उपरिष्टादतिक्रान्ताः शैलाभानां सहस्रशः ॥ ७-९९-१६ (४८६०१)
ग्श्रमेण महता युक्तास्ते हया वातरंहसः ।
मन्दवेगगता राजन्संवृत्तास्तत्र संयुगे'॥ ७-९९-१७ (४८६०२)
एतस्मिन्नन्तरे वीरावावन्त्यौ भ्रातरौ नृप ।
सहसेनौ समार्च्छेतां पाण्डवं क्लान्तवाहनम् ॥ ७-९९-१८ (४८६०३)
तावर्जुनं चतुःषष्ट्या सप्तत्या च जनार्दनम् ।
शराणां च शतैरश्वानविध्येतां मुदान्वितौ ॥ ७-९९-१९ (४८६०४)
तावर्जुनो महाराज नवभिर्नतपर्वभिः ।
आजघान रणे क्रुद्धो मर्मज्ञो मर्मभेदिभिः ॥ ७-९९-२० (४८६०५)
ततस्तौ तु शरौघेण बीभत्सुं सहकेशवम् ।
आच्छादयेतां संरब्धौ सिंहनादं च चक्रतुः ॥ ७-९९-२१ (४८६०६)
तयोस्तु धनुषी मुष्टौ भल्लाभ्यां श्वेतवाहनः ।
चिच्छेद समरे तूर्णं भूय एव धनञ्जयः ।
अथान्यैर्विशिखैस्तूर्णं ध्वजौ च कनकोज्ज्वलौ ॥ ७-९९-२२ (४८६०७)
अथान्ये धनुषी राजन्प्रगृह्य समरे तदा ।
पाण्डवं भृशसङ्क्रुद्धावर्दयामासतुः शरैः ॥ ७-९९-२३ (४८६०८)
तयोस्तु भृशसङ्क्रुद्धः शराभ्यां पाण्डुनन्दनः ।
धनुषी चिच्छिदे तूर्णं भूय एव धनञ्जयः ॥ ७-९९-२४ (४८६०९)
तथान्यैर्विशिखैस्तूर्णं रुक्मपुङ्खैः शिलाशितैः ।
जघानाश्वांस्तथा सूतौ पार्ष्णी च सपदानुगौ ॥ ७-९९-२५ (४८६१०)
ज्येष्ठस्य च शिरः कायात्क्षुरप्रेण न्यकृन्तत ।
स पपात हतः पृथ्व्यां वातरुग्ण इव द्रुमः ॥ ७-९९-२६ (४८६११)
विन्दं तु निहतं दृष्ट्वा ह्यनुविन्दः प्रतापवान् ।
हताश्वं रथमुत्सृज्य गदां गृह्य महाबलः ॥ ७-९९-२७ (४८६१२)
अभ्यवर्तत सङ्ग्रामे भ्रातुर्वधमनुस्मरन् ।
गदया रथिनां श्रेष्ठो नृत्यन्निव महारथः ॥ ७-९९-२८ (४८६१३)
अनुविन्दस्तु गदया ललाटे मधुसूदनम् ।
स्पष्ट्वा नाकम्पयत्क्रुद्धो मैनाकमिव पर्वतम् ॥ ७-९९-२९ (४८६१४)
तस्यार्जुनः शरैः षड्भिर्ग्रीवां पादौ भुजौ शिरः ।
निचकर्त स सञ्छन्नः पपाताद्रिचयो यथा ॥ ७-९९-३० (४८६१५)
ततस्तौ निहतौ दृष्ट्वा तयो राजन्पदानुगाः ।

अभ्यद्रवन्त सङ्क्रुद्धाः किरन्तः शतशः शरान् ॥ ७-९९-३१ (४८६१६)
तानर्जुनः शरैस्तूर्णं निहत्य भरतर्षभ ।
व्यरोचत यथा वह्निर्दावं दग्ध्वा हिमात्यये ॥ ७-९९-३२ (४८६१७)
तयोः सेनामतिक्रम्य कृच्छ्रादिव धनञ्जयः ।
विबभौ जलदं हित्वा दिवाकर इवोदितः ॥ ७-९९-३३ (४८६१८)
तं दृष्ट्वा कुरवस्त्रस्ताः प्रहृष्टाश्चाभवन्पुनः ।
अभ्यवर्तन्त पार्थं च समन्ताद्भरतर्षभ ॥ ७-९९-३४ (४८६१९)
श्रान्तं चैनं समालक्ष्य ज्ञात्वा दूरे च सैन्धवम् ।
सिंहनादेन महता सर्वतः पर्यवारयन् ॥ ७-९९-३५ (४८६२०)
तांस्तु दृष्ट्वा सुसंरब्धानुत्स्मयन्पुरुषर्भः ।
शनकैरिव दाशार्हमर्जुनो वाक्यमब्रवीत् ॥ ७-९९-३६ (४८६२१)
शरार्दिताश्च ग्लानाश्च हया दूरे च सैन्धवः ।
किमिहानन्तरं कार्यं साधिष्ठं तव रोचते ॥ ७-९९-३७ (४८६२२)
ब्रूहि कृष्ण यथातत्त्वं त्वं हि प्राज्ञतमः सदा ।
भवन्नेत्रा रणे शत्रून्विजेष्यन्तीह पाण्डवाः ॥ ७-९९-३८ (४८६२३)
मम त्वनन्तरं कृत्यं यद्वै तत्त्वं निबोध मे ।
हयान्विमुच्य हि सुखं विशल्यान्कुरु माधव ॥ ७-९९-३९ (४८६२४)
सञ्जय उवाच। ७-९९-४०क्ष् (४५१७)
एवमुक्तस्तु पार्थेन केशवः प्रत्युवाच तम् ।
ममाप्येतन्मतं पार्थ यदिदं ते प्रभाषितम् ॥ ७-९९-४० (४८६२५)
अर्जुन उवाच। ७-९९-४१क्ष् (४५१८)
अहमावारयिष्यामि सर्वसैन्यानि केशव ।
त्वमप्यत्र यथान्यायं कुरु कार्यमनन्तरम् ॥ ७-९९-४१ (४८६२६)
सञ्जय उवाच। ७-९९-४२क्ष् (४५१९)
सोऽवतीर्य रथोपस्थादसम्भ्रान्तो धनञ्जयः ।
गाण्डीवं धनुरादाय तस्थौ गिरिरिवाचलः)॥ ७-९९-४२ (४८६२७)
तमभ्यधावन्क्रोशन्तः क्षत्रिया जयकाङ्क्षिणः ।
इदं छिद्रमिति ज्ञात्वा धरणीस्थं धनञ्जयम् ॥ ७-९९-४३ (४८६२८)
तमेकं रथवंशेन महता पर्यवारयन् ।
विकर्षन्तश्च चापानि विसृजन्तश्च सायकान् ॥ ७-९९-४४ (४८६२९)
शस्त्राणि च विचित्राणि क्रुद्धास्तत्र व्यदर्शयन् ।
छादयन्तः शरैः पार्थं मेघा इव दिवाकरम् ॥ ७-९९-४५ (४८६३०)
अभ्यद्रवन्त वेगेन क्षत्रियाः क्षत्रियर्षभम् ।
नरसिंहं रथोदाराः सिंहं मत्ता इव द्विपाः ॥ ७-९९-४६ (४८६३१)
तत्र पार्थस्य भुजयोर्महद्बलमदृश्यत ।
यत्क्रुद्धो बहुलाः सेनाः सर्वतः समवारयत् ॥ ७-९९-४७ (४८६३२)

अस्त्रैरस्त्राणि संवार्य द्विषतां सर्वतो विभुः ।
इषुभिर्बुभिस्तूर्णं सर्वानेव समावृणोत् ॥ ७-९९-४८ (४८६३३)
तत्रान्तरिक्षे बाणानां प्रगाढानां विशाम्पते ।
सङ्घर्षेण महार्चिष्मान्पावकः समजायत ॥ ७-९९-४९ (४८६३४)
तत्रतत्र महेष्वासैः श्वसद्भिः शोणितोक्षितैः ।
हयैर्नागैश्च सम्भिन्नैर्नदद्भिश्चारिकर्शन ॥ ७-९९-५० (४८६३५)
संरब्धैश्चारिभिर्वीरैः प्रार्थयद्भिर्जयं मृधे ।
एकस्थैर्बहुभिः क्रुद्धैरूष्मेव समजायत ॥ ७-९९-५१ (४८६३६)
शरोर्मिणं ध्वजावर्तं नागनक्रं दुरत्ययम् ।
पदातिमत्स्यकलिलं शङ्खदुन्दुभिनिःस्वनम् ॥ ७-९९-५२ (४८६३७)
असङ्ख्येयमपारं च रजो नीरमतीव च ।
उष्णीषकमठं छत्रपताकाफेनमालिनम् ॥ ७-९९-५३ (४८६३८)
रथसागरमक्षोभ्यं मातङ्गाङ्गशिलाचितम् ।
वेलाभूतस्तदा पार्थः पत्रिभिः समवारयत् ॥ ७-९९-५४ (४८६३९)
श्धृतराष्ट्र उवाच। ७-९९-५५क्ष् (४५२०)
अर्जुने धरणीं प्राप्ते हयहस्ते च केशवे ।
एतदन्तरमासाद्य कथं पार्थो न घातितः ॥ ७-९९-५५ (४८६४०)
सञ्जय उवाच। ७-९९-५६क्ष् (४५२१)
सद्यः पार्थिव पार्थेन निरुद्धाः सर्वपार्थिवाः ।
रथस्था धरणीस्थेन वाक्यमच्छान्दसं यथा ॥ ७-९९-५६ (४८६४१)
स पार्थः पार्थिवान्सर्वान्भूमिस्थोपि रथस्थितान् ।
एको निवारयामास लोभः सर्वगुणानिव ।॥ ७-९९-५७ (४८६४२)
ततो जनार्दनः सङ्ख्ये प्रियं पुरुषसत्तमम् ।
असम्भ्रान्तो महाबाहुरर्जुनं वाक्यमब्रवीत् ॥ ७-९९-५८ (४८६४३)
उदपानमिहाश्वानां नालमस्ति रणेऽर्जुन ।
परीप्सन्ते जलं चेमे पेयं न त्ववगाहनम् ॥ ७-९९-५९ (४८६४४)
इदमस्तीत्यसम्भ्रान्तो ब्रुवन्नस्त्रेण मेदिनीम् ।
अभिहत्यार्जुनश्चक्रे वाजिपानं सरः शुभम् ॥ ७-९९-६० (४८६४५)
श्हंसकारण्डवाकीर्णं चक्रवाकोपशोभितम् ।
सुविस्तीर्णं प्रसन्नाम्भः प्रफुल्लवरपङ्कजम् ॥ ७-९९-६१ (४८६४६)
कूर्ममत्स्यगणाकीर्णमगाधमृषिसेवितम् ।
आगच्छन्नारदमुनिर्दर्शनार्थं कृतं क्षणात् ।॥ ७-९९-६२ (४८६४७)
शरवंशं शरस्थूणं शराच्छादनमद्भुतम् ।
शरवेश्माकरोत्पार्थस्त्वष्टेवाद्भुतकर्मकृत् ॥ ७-९९-६३ (४८६४८)
ततः प्रहस्य गोविन्दः साधुसाध्वित्यथाब्रवीत् ।
शरवेश्मनि पार्थेन कृते तस्मिन्महात्मना ॥ ॥ ७-९९-६४ (४८६४९)

इति श्रीमन्महाभारते द्रोणपर्वणि जयद्रथवधपर्वणि
चतुर्दशदिवसयुद्धे एकोनशततमोऽध्यायः ॥ ९९ ॥
Mahabharata - Drona Parva - Chapter Footnotes

५-९९-१७ स्नायुनद्धाः सूक्ष्मचर्माग्रग्रथिताः ॥
५-९९-९ क्रोशं कोशमुद्दिश्य ॥
५-९९-२५ सूतौ सारथी । पार्ष्णी पृष्ठरक्षौ ॥
५-९९-३० अद्रिचयो निरिशृङ्गम् ॥
५-९९-४९ प्रगाढानां व्यवगाढानाम् ॥
५-९९-५४ वेलाभूतो मर्यादारूपः ॥
५-९९-५५ कुण्डलितास्त्रयः श्लोकाः झ । पाठे एव वर्तन्ते ॥
५-९९-५९ अलं पर्याप्तम् ॥
५-९९-६० अभिहत्य खात्वा । दाजिपानं अश्वपानीयम् ॥
५-९९-६१ हंसकारण्डवाकीर्णमित्यादियोग्यतया वर्णनम् ॥
कुण्डलितौ द्वौ श्लोकौ घ झ पाठयोरेव ॥
५-९९-६३ वंशः शालाधारकाष्ठम् । स्थूणा मध्यस्तम्भः ॥
५-९९-९९ एकोनशततमोऽध्यायः ॥

---

द्रोनपर्व-अध्यय१००
॥ श्रीः ॥
७.१००. अध्यायः १००

Mahabharata - Drona Parva - Chapter Topics
श्रीकृष्णेनार्जुननिर्मितसरसि स्नापनादिनाऽऽप्यायितानां तुरगाणां
पुना रथे योजनम् ॥ १ ॥
पुना रथमारूढयोः कृष्णः र्जुनयोर्जयद्रथम्प्रति गमनम् ॥ ३ ॥

Mahabharata - Drona Parva - Chapter Text

७-१००-० (४८६५०)
सञ्जय उवाच। ७-१००-०क्ष् (४५२२)
सलिले जनिते तस्मिन्कौन्तेयेन महात्मना ।
निस्तारिते द्विषत्सैन्ये कृते च शरवेश्मनि ॥ ७-१००-१ (४८६५१)
वासुदेवो रथात्तूर्णमवतीर्य महाद्युतिः ।
मोचयामास तुरगान्विनुन्नान्कङ्कपत्रिभिः ॥ ७-१००-२ (४८६५२)

अदृष्टपूर्वं तद्दृष्ट्वा साधुवादो महानभूत् ।
सिद्धचारणसङ्घानां सैनिकानां च सर्वशः ॥ ७-१००-३ (४८६५३)
पदातिनं तु कौन्तेयं युध्यमानं महारथाः ।
नाशक्नुवन्वारयितुं तदद्भुतमिवाभवत् ॥ ७-१००-४ (४८६५४)
आपतत्सु रथौघेषु प्रभूतगजवाजिषु ।
नासम्भ्रमत्तदा पार्थस्तदस्य पुरुषानति ॥ ७-१००-५ (४८६५५)
व्यसृजन्त शरौघांस्ते पाण्डवं प्रति पार्थिवाः ।
न चाव्यथत धर्मात्मा वासविः परवीरहा ॥ ७-१००-६ (४८६५६)
शतानि शरजालानि गदाः प्रासांश्च वीर्यवान् ।
आगतानग्रसत्पार्थः सरितः सागरो यथा ॥ ७-१००-७ (४८६५७)
अस्त्रवेगेन महता पार्थो बाहुबलेन च ।
सर्वेषां पार्थिवेन्द्राणामग्रसत्ताञ्शरोत्तमान् ॥ ७-१००-८ (४८६५८)
तत्तु पार्थस्य विक्रान्तं वासुदेवस्य चोभयोः ।
अपूजयन्महाराज कौरवा महदद्भुतम् ॥ ७-१००-९ (४८६५९)
कौरवा ऊचुः। ७-१००-१०क्ष् (४५२३)
किमद्भुततमं लोके भविताऽप्यथवा ह्यभूत् ।
यदश्वान्पार्थ गोविन्दौ पाययामासतू रणे ॥ ७-१००-१० (४८६६०)
भयं विपुलमस्मासु तावधत्तां नरोत्तमौ ।
तेजो विदधतुश्चोग्रं यत्सैन्यं तावकं विभो ।
ग्दधारैको रणे पार्थो वेलेवोद्वृत्तमर्णवम् ॥ ७-१००-११ (४८६६१)
पार्थस्य शरसञ्छन्ने तस्मिन्सद्मनि भारत ।
आकाशमिव सम्प्राप्य विचेरुस्तत्र पक्षिणः ॥ ७-१००-१२ (४८६६२)
न चैनं युधि तिष्ठन्तं सैन्येषु तव मारिष ।
अभ्यद्रवत्सुसङ्क्रुद्धः पुमान्कश्चित्तु तावकः ॥ ७-१००-१३ (४८६६३)
सर्वे विमनसोऽभूवंस्तव योधा विशाम्पते ।
सम्प्रेक्ष्य तत्र गोविन्दं पाण्डवं च धनञ्जयम्'॥ ७-१००-१४ (४८६६४)
अथ स्मयन्हृषीकेशः स्त्रीमध्य इव भारत ।
अर्जुनेन कृते सङ्ख्ये शरगर्भगृहे तदा ॥ ७-१००-१५ (४८६६५)
उपावर्तयदव्यग्रस्तानश्वान्पुष्करेक्षणः ।
मिषतां सर्वसैन्यानां त्वदीयानां विशाम्पते ॥ ७-१००-१६ (४८६६६)
ग्उपावृत्त्योत्थितानश्वान्पाणिभ्यां पुष्करेक्षणः ।
सम्मार्जयन्रणे राजन्पश्यतां सर्वयोधिनाम्'॥ ७-१००-१७ (४८६६७)
तेषां श्रमं च ग्लानिं च वमथुं वेपथुं व्रणान् ।
सर्वं व्यपानुदत्कृष्णः कुशलो ह्यश्वकर्मणि ॥ ७-१००-१८ (४८६६८)
शल्यानुद्धृत्य पाणिभ्यां परिमृज्य च तान्हयान् ।
उपावर्त्य यथान्यायं पाययामास वारि सः ॥ ७-१००-१९ (४८६६९)

स ताँल्लब्धोदकान्स्नाताञ्जग्धान्नान्विगतक्लमान् ।
योजयामास संहृष्टः पुनरेव रथोत्तमे ॥ ७-१००-२० (४८६७०)
स तं रथवरं शौरिः सर्वशस्त्रभृतां वरः ।
समास्थाय महातेजाः सार्जुनः प्रययौ द्रुतम् ॥ ७-१००-२१ (४८६७१)
ग्योजयित्वा हयांस्तस्य विधिदृष्टेन कर्मणा ।
रणे चचार गोविन्दस्तृणीकृत्य महारथान्'॥ ७-१००-२२ (४८६७२)
रथं रथवरस्याजौ युक्तं लब्धोदकैर्हयैः ।
दृष्ट्वा कुरुबलश्रेष्ठाः पुनर्विमनसोऽभवन् ॥ ७-१००-२३ (४८६७३)
विनिःस्वसन्तस्ते राजन्भग्नदंष्ट्रा इवोरगाः ।
धिगहोऽतिगतः पार्थः कृष्णश्चेत्यब्रुवन्पृथक् ॥ ७-१००-२४ (४८६७४)
तत्सैन्यं सर्वतो दृष्ट्वा रोमहर्षणमद्भुतम् ।
त्वरध्वमिति चाक्रन्दन्नैतदस्तीति चावुवन् ॥ ७-१००-२५ (४८६७५)
सर्वक्षत्रस्य मिषतो रथेनैकेन दंशितौ ।
बालः क्रीडनकेनेव कदर्थीकृत्य नो बलम् ॥ ७-१००-२६ (४८६७६)
क्रोशतां यतमानानामसंसक्तौ परन्तपौ ।
दर्शयित्वाऽत्मनो वीर्यं प्रयातौ सर्वराजसु ॥ ७-१००-२७ (४८६७७)
ग्यथा देवासुरे युद्धे तृणीकृत्य च दानवान् ।
इन्द्राविष्णू पुरा राजञ्जम्भस्य वधकाङ्क्षिणौ'॥ ७-१००-२८ (४८६७८)
तौ प्रयातौ पुनर्दृष्ट्वा तदाऽन्ये सैनिकाब्रुवन् ।
त्वरध्वं कुरवः सर्वे वधे कृष्णकिरीटिनोः ॥ ७-१००-२९ (४८६७९)
रथं युङ्क्त्वा हि दाशार्हो मिषतां सर्वधन्विनाम् ।
जयद्रथाय यात्येष कदर्थीकृत्य नो रणे ॥ ७-१००-३० (४८६८०)
तत्र केचिन्मिथो राजन्समभाषन्त भूमिपाः ।
अदृष्टपूर्वं सङ्ग्रामे तदृष्ट्वा महदद्भुतम् ॥ ७-१००-३१ (४८६८१)
सर्वसैन्यानि राजा च धृतराष्ट्रोऽत्ययं गतः ।
दुर्योधनापराधेन क्षत्रं कृत्स्ना च मेदिनी ॥ ७-१००-३२ (४८६८२)
विलयं समनुप्राप्ता तच्च राजा न बुध्यते ।
इत्येवं क्षत्रियास्तत्र ब्रुवन्त्यन्ये च भारत ॥ ७-१००-३३ (४८६८३)
सिन्धुराजस्य यत्कृत्यं गतस्य यमसादनम् ।
तत्करोतु वृथादृष्टिर्धार्तराष्ट्रोऽनुपायवित् ॥ ७-१००-३४ (४८६८४)
ततः शीघ्रतरं प्रायात्पाण्डवः सैन्धवं प्रति ।
विवर्तमाने तिग्मांशौ हृष्टैः पीतोदकैर्हयैः ॥ ७-१००-३५ (४८६८५)
तं प्रयान्तं महाबाहुं सर्वशस्त्रभृतां वरम् ।
नाशक्नुवन्वारयितुं योधाः क्रुद्धमिवान्तकम् ॥ ७-१००-३६ (४८६८६)
विद्राव्य तु ततः सैन्यं पाण्डवः शत्रुतापनः ।
यथा मृगगणान्सिंहः सैन्धवार्थे व्यलोडयत् ॥ ७-१००-३७ (४८६८७)

गाहमानस्त्वनीकानि तूर्णमश्वानचोदयत् ।
बलाकाभं तु दाशार्हः पाञ्चजन्यं व्यनादयत् ॥ ७-१००-३८ (४८६८८)
कौन्तेयेनाग्रतः सृष्टा न्यपतन्पृष्ठतः शराः ।
तूर्णात्तूर्णतरं ह्यश्वाः प्रावहन्वातरंहसः ॥ ७-१००-३९ (४८६८९)
ततो नृपतयः क्रुद्धाः परिवव्रुर्धनञ्जयम् ।
क्षत्रिया बहवश्चान्ये जयद्रथवधैषिणम् ॥ ७-१००-४० (४८६९०)
सैन्येषु विप्रयातेषु धिष्ठितं पुरुषर्षभम् ।
दुर्योधनोऽत्वयात्पार्थं त्वरमाणो महाहवे ॥ ७-१००-४१ (४८६९१)
वातोद्धूतपताकं तं रथं जलदनिःस्वनम् ।
घोरं कपिध्वजं दृष्ट्वा विषण्णा रथिनोऽभवन् ॥ ७-१००-४२ (४८६९२)
दिवाकरेऽथ रजसा सर्वतः संवृते भृशम् ।
शरार्ताश्चरणे योधाः शेकुः कृष्णौ न वीक्षितुम् ॥ ॥ ७-१००-४३ (४८६९३)

इति श्रीमन्महाभारते द्रोणपर्वणि जयद्रथवधपर्वणि
चतुर्दशदिवसयुद्धे शततमोऽध्यायः ॥१०० ॥
Mahabharata - Drona Parva - Chapter Footnotes

५-१००-५ पुरुषानति पुरुषेभ्योऽतिशयः
।असम्भ्रमत्।उपसर्गात्पूर्वमार्षोऽट् ॥
५-१००-११ विदधतुर्दर्शितवन्तौ ॥
५-१००-१६ उपावर्तयत्परिलोडितवान् ॥
५-१००-१८ श्रमं मनःकायखेदम् ।ग्लानिं बलापचयम्।वमथुं फेनोद्गमम् ॥
५-१००-३९ प्रावहन् अत्यक्रामन् ॥
५-१००-४१ धिष्ठितं किञ्चिदवस्थितम् ॥
५-१००-१०० शततमोऽध्यायः ॥

---

द्रोनपर्व-अध्यय१०१
॥ श्रीः ॥
७.१०१. अध्यायः १०१

Mahabharata - Drona Parva - Chapter Topics
जयद्रथं यियासोरर्जुनस्य दुर्योधनेन निरोधः ॥१ ॥

Mahabharata - Drona Parva - Chapter Text

७-१०१-० (४८६९४)

सञ्जय उवाच। ७-१०१-०क्ष् (४५२४)
स्रंसन्त इव मज्जानस्तावकानां भयान्नृप ।
तौ दृष्ट्वा समतिक्रान्तौ वासुदेवधनञ्जयौ ॥ ७-१०१-१ (४८६९५)
सर्वे तु प्रतिसंरब्धा ह्रीमन्तः सत्वचोदिताः ।
स्थिरीभूता महात्मानः प्रत्यगच्छन्धनञ्जयम् ॥ ७-१०१-२ (४८६९६)
ये गताः पाण्डवं युद्धे रोषामर्षसमन्विताः ।
तेऽद्यापि न निवर्तन्ते सिन्धवः सागरादिव ॥ ७-१०१-३ (४८६९७)
असन्तस्तु न्यवर्तन्त वेदेभ्य इव नास्तिकाः ।
नरकं भजमानास्ते प्रत्यपद्यन्त किल्बिषम् ॥ ७-१०१-४ (४८६९८)
तावतीत्य रथानीकं विमुक्तौ पुरुषर्षभौ ।
ददृशाते यथा राहोरास्यान्मुक्तौ प्रभाकरौ ॥ ७-१०१-५ (४८६९९)
मत्स्याविव महाजालं विदार्य विगतक्लमौ ।
तथा कृष्णावदृश्येतां सेनाजालं विदार्य तत् ॥ ७-१०१-६ (४८७००)
विमुक्तौ शस्त्रसम्बाधाद्द्रोणानीकात्सुदुर्भिदात् ।
अदृश्येतां महात्मानौ कालसूर्याविवोदितौ ॥ ७-१०१-७ (४८७०१)
अस्त्रसम्बाधनिर्मुक्तौ विमुक्तौ शस्त्रसङ्कटात् ।
अदृश्येतां महात्मानौ शत्रुसम्बाधकारिणौ ॥ ७-१०१-८ (४८७०२)
विमुक्तौ ज्वलनस्पर्शान्मकरास्याज्झषाविव ।
अक्षोभयेतां सेनां तौ समुद्रं मकराविव ॥ ७-१०१-९ (४८७०३)
तावकास्तव पुत्राश्च द्रोणानीकस्थयोस्तयोः ।
नैतौ तरिष्यतो द्रोणमिति चक्रुस्तदा मतिम् ॥ ७-१०१-१० (४८७०४)
तौ तु दृष्ट्वा व्यतिक्रान्तौ द्रोणानीकं महाद्युती ।
नाशशंसुर्महाराज सिन्धुराजस्य जीवितम् ॥ ७-१०१-११ (४८७०५)
आशा बलवती राजन्सिन्धुराजस्य जीविते ।
द्रोणहार्दिक्ययोः कृष्णौ न मोक्ष्येते इति प्रभो ॥ ७-१०१-१२ (४८७०६)
तामाशां विफलीकृत्य सन्तीर्णौ तौ परन्तपौ ।
द्रोणानीकं महाराज भोजानीकं च दुस्तरम् ॥ ७-१०१-१३ (४८७०७)
अथ दृष्ट्वा व्यतिक्रान्तौ ज्वलिताविव पावकौ ।
निराशाः सिन्धुराजस्य जीवितं न शशंसिरे ॥ ७-१०१-१४ (४८७०८)
मिथश्च समभाषेतामभीतौ भयवर्धनौ ।
जयद्रथवधे वाचस्तास्ताः कृष्णधनञ्जयौ ॥ ७-१०१-१५ (४८७०९)
असौ मध्ये कृतः षड्भिर्धार्तराष्ट्रैर्महारथैः ।
चक्षुर्विषयसम्प्राप्तो न मे मोक्ष्यति सैन्धवः ॥ ७-१०१-१६ (४८७१०)
यद्यस्य समरे गोप्ता शक्रो देवगणैः सह ।
तथाप्येनं निहंस्याव इति कृष्णावभाषताम् ॥ ७-१०१-१७ (४८७११)
इति कृष्णौ महाबाहू मिथः कथयतां तदा ।

सिन्धुराजमवेक्षन्तौ त्वत्पुत्रा बहु चुक्रुशुः ॥ ७-१०१-१८ (४८७१२)
अतीत्य मरुधन्वानं प्रयान्तौ तृषितौ गजौ ।
पीत्वा वारि समाश्वस्तौ तथैवास्तामरिन्दमौ ॥ ७-१०१-१९ (४८७१३)
व्याघ्रसिंहगजाकीर्णानतिक्रम्य च पर्वतान् ।
वणिजाविव दृश्येतां हीनमृत्यू जरातिगौ ॥ ७-१०१-२० (४८७१४)
तथाहि मुखवर्णोऽयमनयोरिति मेनिरे ।
तावका वीक्ष्य मुक्तौ तौ विक्रोशन्ति स्म सर्वशः ॥ ७-१०१-२१ (४८७१५)
द्रोणादाशीविषाकाराज्ज्वलितादिव पावकात् ।
अन्येभ्यः पार्थिवेभ्यश्च भास्वन्ताविव भास्करौ ॥ ७-१०१-२२ (४८७१६)
विमुक्तौ सागरप्रख्याद्रोणानीकादर्रिंदमौ ।
अदृश्येतां मुदा युक्तौ समुत्तीर्यार्णवं यथा ॥ ७-१०१-२३ (४८७१७)
अस्त्रौघान्महतो मुक्तौ द्रोणहार्दिक्यरक्षितात् ।
रोचमानावदृश्येतामिन्द्राग्न्योः सदृशौ रणे ॥ ७-१०१-२४ (४८७१८)
उद्भिन्नरुधिरौ कृष्णौ भारद्वाजस्य सायकैः ।
शितैश्चितौ व्यरोचेतां कर्णिकारैरिवाचलौ ॥ ७-१०१-२५ (४८७१९)
द्रोणग्राहह्रदान्मुक्तौ शक्त्याशीविषसङ्कटात् ।
अयःशरोग्रमकरात्क्षत्रियप्रवराम्भसः ॥ ७-१०१-२६ (४८७२०)
ज्याघोषतलनिर्हादाद्गदानिस्त्रिंशविद्युतः ।
द्रोणास्त्रमेघान्निर्मुक्तौ सूर्येन्दू तिमिरादिव ॥ ७-१०१-२७ (४८७२१)
बाहुभ्यामिव सन्तीर्णौ सिन्धुषष्ठाः समुद्रगाः ।
तपान्ते सरितः पूर्णा महाग्राहसमाकुलाः ॥ ७-१०१-२८ (४८७२२)
ग्महाशैलोच्चयां घोरां लङ्घयित्वा महानदीम् ।
निस्तीर्णावध्वगौ यद्वत्तद्वत्तौ तारितौ रणे'॥ ७-१०१-२९ (४८७२३)
इति कृष्णौ महेष्वासौ प्रशस्तौ लोकविश्रुतौ ।
सर्वभूतान्यमन्यन्त द्रोणास्त्रबलवारणात् ॥ ७-१०१-३० (४८७२४)
जयद्रथं समीपस्थमवेक्षन्तौ जिघांसया ।
रुरुं वनान्ते लिप्सन्तौ व्याघ्रवत्तावतिष्ठताम् ॥ ७-१०१-३१ (४८७२५)
यथा हि मुखवर्णोऽयमनयोरिति मेनिरे ।
तव योधा महाराज हतमेव जयद्रथम् ॥ ७-१०१-३२ (४८७२६)
लोहिताक्षौ महाबाहू संयुक्तौ कृष्णपाण्डवौ ।
सिन्धुराजमभिप्रेक्ष्य हृष्टौ व्यनदतां मुहुः ॥ ७-१०१-३३ (४८७२७)
शौरेरभीषुहस्तस्य पार्थस्य च धनुष्मतः ।
तयोरासीत्प्रभा राजन्सूर्यपावकयोरिव ॥ ७-१०१-३४ (४८७२८)
हर्ष एव तयोरासीद्द्रोणानीकप्रमुक्तयोः ।
समीपे सैन्धवं दृष्ट्वा श्येनयोरामिषं यथा ॥ ७-१०१-३५ (४८७२९)
तौ तु सैन्धवमालोक्य वर्तमानमिवान्तिके ।

सहसा पेततुःक्रुद्धौ क्षिप्रं श्येनाविवामिपम् ॥ ७-१०१-३६ (४८७३०)
तौ दृष्ट्वा तु व्यतिक्रान्तौ हृषीकेशधनञ्जयौ ।
सिन्धुराजस्य रक्षार्थं पराक्रान्तः सुतस्तव ॥ ७-१०१-३७ (४८७३१)
द्रोणेनाबद्धकवचो राजा दुर्योधनस्ततः ।
ययावेकरथेनाजौ हयसंस्कारवित्प्रभो ॥ ७-१०१-३८ (४८७३२)
कृष्णपार्थौ महेष्वासौ व्यतिक्रम्याथ ते सुतः ।
अग्रतः पुण्डरीकाक्षं प्रतीयाय नराधिप ॥ ७-१०१-३९ (४८७३३)
ततः सर्वेषु सैन्येषु वादित्राणि प्रहृष्टवत् ।
प्रावाद्यन्त व्यतिक्रान्ते तव पुत्रे धनञ्जयम् ॥ ७-१०१-४० (४८७३४)
सिंहनादरवाश्चासञ्शङ्खशब्दविमिश्रिताः ।
दृष्ट्वा दुर्योधनं तत्र कृष्णयोः प्रमुखे स्थितम् ॥ ७-१०१-४१ (४८७३५)
ये च ते सिन्धुराजस्य गोप्तारः पावकोपमाः ।
ते प्राहृष्यन्त समरे दृष्ट्वा पुत्रं तव प्रभो ॥ ७-१०१-४२ (४८७३६)
दृष्ट्वा दुर्योधनं कृष्णो व्यतिक्रान्तं सहानुगम् ।
अब्रवीदर्जुनं राजन्प्राप्तकालमिदं वचः ॥ ॥ ७-१०१-४३ (४८७३७)

इति श्रीमन्महाभारते द्रोणपर्वणि जयद्रथवधपर्वणि
चतुर्दशदिवसयुद्धे एकाधिकशततमोऽध्यायः ॥ १०१ ॥
Mahabharata - Drona Parva - Chapter Footnotes

५-१०१-३ अमर्षश्चिरानुंवद्धः कोपः ॥
५-१०१-५ प्रभाकरौ चन्द्रादित्यौ ॥
५-१०१-१९ मरुधन्वानं मरुस्थलम् ॥
५-१०१-२८ सिन्धुः षष्ठी यासाम् । ताश्च
शतद्रुविपाशेरावतीचन्द्रभागावितस्ताः। एताहि नितान्तदुस्तराः ॥
५-१०१-३१ रुरुं निपाने इति ट । पाठः। रूरुन्निपाते इति क। पाठः ॥
५-१०१-३९ अग्रतः प्रमुखे ॥
५-१०१-१०१ एकाधिकशततमोऽध्यायः ॥

---

द्रोनपर्व-अध्यय१०२
॥ श्रीः ॥
७.१०२. अध्यायः १०२

Mahabharata - Drona Parva - Chapter Topics
दुर्योधने निरुन्धाने कृष्णेन
तद्दुष्कृतानुस्मारणपूर्वकमर्जुनम्प्रति तद्वधचोदना ॥ १ ॥

अर्जुनम्प्रति दुर्योधनस्य वीरवादः ॥ २ ॥

Mahabharata - Drona Parva - Chapter Text

७-१०२-० (४८७३८)
वासुदेव उवाच। ७-१०२-०क्ष् (४५२५)
दुर्योधनमतिक्रान्तमेतं पश्य धनञ्जय ।
आपद्गतमिमं मन्ये नास्त्यस्य सदृशो रथः ॥ ७-१०२-१ (४८७३९)
दूरपाती महेष्वासः कृतास्त्रो युद्धदुर्मदः ।
दृढहस्तश्चित्रयोधी धार्तराष्ट्रो महाबलः ॥ ७-१०२-२ (४८७४०)
अत्यन्तसुखसंवृद्धो मानितश्च महारथैः ।
कृती च सततं पार्थ नित्यं द्वेष्टि च पाण्डवान् ॥ ७-१०२-३ (४८७४१)
तेन युद्धमहं मन्ये प्राप्तकालं तवानघ ।
अत्र नो द्यूतमायत्तं विजयायेतराय वा ॥ ७-१०२-४ (४८७४२)
अत्र क्रोधविषं पार्थ विमुञ्च चिरसम्भृतम् ॥
एष मूलमनर्थानां पाण्वानां महात्मनाम् ॥ ७-१०२-५ (४८७४३)
सोऽयं प्राप्तस्तवाक्षेपं पश्य साफल्यमात्मनः ।
कथं हि राजा राज्यार्थी त्वया गच्छेत संयुगम् ॥ ७-१०२-६ (४८७४४)
दिष्ट्या त्विदानीं सम्प्राप्त एष ते बाणगोचरम् ।
यथाऽयं जीवितं जह्यात्तथा कुरु धनञ्जय ॥ ७-१०२-७ (४८७४५)
ऐश्वर्यमदसम्मूढो नैष दुःखमुपेयिवान् ।
न च ते संयुगे वीर्यं जानाति पुरुषर्षभ ॥ ७-१०२-८ (४८७४६)
त्वां हि लोकास्त्रयः पार्थ ससुरासुरमानवाः ।
नोत्सहन्ते रणे जेतुं किमुतैकः सुयोधनः ॥ ७-१०२-९ (४८७४७)
स दिष्ट्या समनुप्राप्तस्तव पार्थ रथान्तिकम् ।
जह्येनं त्वं महाबाहो यथा वृत्रं पुरन्दरः ॥ ७-१०२-१० (४८७४८)
एष ह्यनर्थे सततं पराक्रान्तस्तवानघ ।
निकृत्या धर्मराजं च द्यूते वञ्चितवानयम् ॥ ७-१०२-११ (४८७४९)
बहूनि सुनृशंसानि कृतान्येतेन मानद ।
युष्मासु पापमतिना अपापेष्वपि नित्यदा ॥ ७-१०२-१२ (४८७५०)
तमनार्यं सदा क्रुद्धं पुरुषं कामरूपिणम् ।
आर्यां युद्धे मतिं कृत्वा जहि पार्थाविचारयन् ॥ ७-१०२-१३ (४८७५१)
निकृत्या राज्यहरणं वनवासं च पाण्डव ।
परिक्लेशं च कृष्णाया हृदि कृत्वा पराक्रम ॥ ७-१०२-१४ (४८७५२)
दिष्ट्यैष तव बाणानां गोचरे परिवर्तते ।
प्रतिघाताय कार्यस्य दिष्ट्या च यततेऽग्रतः ॥ ७-१०२-१५ (४८७५३)

दिष्ट्या जानाति सङ्ग्रामे योद्धव्यं हि त्वया सह ।
दिष्ट्या च सफलाः पार्थ सर्वे कामा ह्यकामिताः ॥ ७-१०२-१६ (४८७५४)
तस्माज्जहि रणे पार्थ धार्तराष्ट्रं कुलाधमम् ।
यथेन्द्रेण हतः पूर्वं जम्भो देवासुरे मृधे ॥ ७-१०२-१७ (४८७५५)
अस्मिन्हते त्वया सैन्यमनाथं भिद्यतामिदम् ।
वैरस्य दिष्ट्या सहजं मूलं छिन्धि दुरात्मनाम् ॥ ७-१०२-१८ (४८७५६)
सञ्जय उवाच। ७-१०२-१९क्ष् (४५२६)
तं तथेत्यब्रवीत्पार्थः कृत्यरूपमिदं मम ।
सर्वमन्यदनादृत्य गच्छ यत्र सुयोधनः ॥ ७-१०२-१९ (४८७५७)
येनैतद्दीर्घकालं नो भुक्तं राज्यमकण्टकम् ।
अप्यस्य युधि विक्रम्य च्छिन्द्यां मूर्धानमाहवे ॥ ७-१०२-२० (४८७५८)
अपि तस्य ह्यनर्हायाः परिक्लेशस्य माधव ।
कृष्णायाः शक्नुयां गन्तुं पदं केशप्रधर्षणे ॥ ७-१०२-२१ (४८७५९)
ग्अप्यहं तानि दुःखानि पूर्ववृत्तानि माधव ।
दुर्योधनं रणे हत्वा प्रतिमोक्ष्ये कथञ्चन'॥ ७-१०२-२२ (४८७६०)
इत्येवंवादिनौ कृष्णौ हृष्टौ श्वेतान्हयोत्तमान् ।
प्रेषयामासतुः सङ्ख्ये प्रेप्सन्तौ तं नराधिपम् ॥ ७-१०२-२३ (४८७६१)
तयोः समीपं सम्प्राप्य पुत्रस्ते भरतर्षभ ।
न चकार भयं प्राप्ते भये महति मारिष ॥ ७-१०२-२४ (४८७६२)
तदस्य क्षत्रियाः कर्म सर्व एवाभ्यपूजयन् ।
यदर्जुनहृषीकेशौ प्रत्युद्यातौ न्यवारयत् ॥ ७-१०२-२५ (४८७६३)
ततः सर्वस्य सैन्यस्य तावकस्य विशाम्पते ।
महानादो ह्यभूत्तत्र दृष्ट्वा राजानमाहवे ॥ ७-१०२-२६ (४८७६४)
तस्मिञ्जनसमुन्नादे प्रवृत्ते भैरवे सति ।
कदर्थीकृत्य ते पुत्रः प्रत्यमित्रमवारयत् ॥ ७-१०२-२७ (४८७६५)
आवारितस्तु कौन्तेयस्तव पुत्रेण धन्विना ।
संरम्भमगमद्भूयः स च तस्मिन्परन्तपः ॥ ७-१०२-२८ (४८७६६)
तौ दृष्ट्वा प्रतिसंरब्धौ दुर्योधनधनञ्जयौ ।
अभ्यवैक्षन्त राजानो भीमरूपाः समन्ततः ॥ ७-१०२-२९ (४८७६७)
दृष्ट्वा तु पार्थं संरब्धं वासुदेवं च मारिष ।
प्रहसन्नेव पुत्रस्ते योद्धुकामः समाह्वयत् ॥ ७-१०२-३० (४८७६८)
ततः प्रहृष्टो दाशार्हः पाण्डवश्च धनञ्जयः ।
व्यक्रोशेतां महानादं दध्मतुश्चाम्बुजोत्तमौ ॥ ७-१०२-३१ (४८७६९)
तौ हृष्टरूपौ सम्प्रेक्ष्य कौरवेयास्तु सर्वशः ।
निराशाः समपद्यन्त पुत्रस्य तव जीविते ॥ ७-१०२-३२ (४८७७०)
शोकमापुः परं चैव कुरवः सर्व एव ते ।

अमन्यन्त च पुत्रं ते वैश्वानरमुखे हुतम् ॥ ७-१०२-३३ (४८७७१)
तथा तु दृष्ट्वा योधास्ते प्रहृष्टौ कृष्णपाण्डवौ ।
हतो राजा हतो राजेत्यूचिरे च भयार्दिताः ॥ ७-१०२-३४ (४८७७२)
जनस्य सन्निनादं तु श्रुत्वा दुर्योधनोऽब्रवीत् ।
व्येतु वो भीरहं कृष्णौ प्रेषयिष्यामि मृत्यवे ॥ ७-१०२-३५ (४८७७३)
इत्युक्त्वा सैनिकान्सर्वाञ्जयापेक्षी नराधिपः ।
पार्थमाभाष्य संरम्भादिदं वचनमब्रवीत् ॥ ७-१०२-३६ (४८७७४)
पार्थ यच्छिक्षितं तेऽस्त्रं दिव्यं पार्थिवमेव च ।
तद्दर्शय मयि क्षिप्रं यदि जातोऽसि पाण्डुना ॥ ७-१०२-३७ (४८७७५)
यद्बलं तव वीर्यं च केशवस्य तथैव च ।
तत्कुरुष्व मयि क्षिप्रं पश्यामस्तव पौरुषम् ॥ ७-१०२-३८ (४८७७६)
अस्मत्परोक्षं कर्माणि कृतानि प्रवदन्ति ते ।
स्वामिसत्कारयुक्तानि यानि तानीह दर्शय ॥ ॥ ७-१०२-३९ (४८७७७)

इति श्रीमन्महाभारते द्रोणपर्वणि जयद्रथवधपर्वणि
चतुर्दशदिवसयुद्धे द्व्यदिकशततमोऽध्यायः ॥ १०२ ॥
Mahabharata - Drona Parva - Chapter Footnotes

५-१०२-१ नास्तीत्यर्जुनोत्तेजनम् ॥
५-१०२-६ आक्षेपं शरगोचरम् ॥
५-१०२-१५ कार्यस्य जयद्रथवधरूपस्य ॥
५-१०२-१९ कृत्यरूपमत्यन्तकरणीयम् ॥
५-१०२-२९ पदं प्रतिपदम् । गन्तुं पदवीं कलहस्य च इति क। पाठः ॥
५-१०२-३९ स्वामिसत्कारो वीरप्रधानोऽयमिति यदन्यैः सत्करणं तेन युक्तानि योग्यतां गतानि ॥
५-१०२-१०२ द्व्यधिकशततमोऽध्यायः ॥

---

द्रोनपर्व-अध्यय१०३
॥ श्रीः ॥
७.१०३. अध्यायः १०३

Mahabharata - Drona Parva - Chapter Topics
अर्जुनेन दुर्योधनपराजयः ॥ १ ॥

Mahabharata - Drona Parva - Chapter Text

७-१०३-० (४८७७८)
सञ्जय उवाच। ७-१०३-०क्ष् (४५२७)
एवमुक्त्वाऽर्जुनं राजा त्रिभिर्मर्मातिगैः शरैः ।
अभ्यविध्यन्महावेगैश्चतुर्भिश्चतुरो हयान् ॥ ७-१०३-१ (४८७७९)
वासुदेवं च दशभिः प्रत्यविध्यत्स्तनान्तरे ।
प्रतोदं चास्य भल्लेन च्छित्त्वा भूमावपातयत् ॥ ७-१०३-२ (४८७८०)
तं चतुर्दशभिः पार्थश्चित्रपुङ्खैः शिलाशितैः ।
अविध्यत्तूर्णमव्यग्रस्ते चाभ्रश्यन्त वर्मणि ॥ ७-१०३-३ (४८७८१)
तेषां नैष्फल्यमालोक्य पुनर्नव च पञ्च च ।
प्राहिणोन्निशितान्बाणांस्ते चाभ्रश्यन्त वर्मणः ॥ ७-१०३-४ (४८७८२)
अष्टाविंशांस्तु तान्बाणानस्तान्विप्रेक्ष्य निष्फलान् ।
अब्रवीत्परवीरघ्नः कृष्णोऽर्जुनमिदं वचः ॥ ७-१०३-५ (४८७८३)
अदृष्टपूर्वं पश्यामि शिलानामिव सर्पणम् ।
त्वया सम्प्रेषिताः पार्थ नार्थं कुर्वन्ति पत्रिणः ॥ ७-१०३-६ (४८७८४)
कच्चिद्गाण्डीवजः प्राणस्तथैव भरतर्षभ ।
मुष्टिश्च ते यथा पूर्वं भुजयोश्च बलं तव ॥ ७-१०३-७ (४८७८५)
न वा कच्चिदयं कालः प्राप्तः स्यादद्य पश्चिमः ।
तव चैवास्य शत्रोश्च तन्ममाचक्ष्व पृच्छतः ॥ ७-१०३-८ (४८७८६)
विस्मयो मे महान्पार्थ तव दृष्ट्वा शरानिमान् ।
व्यर्थान्निपतितान्सङ्ख्ये दुर्योधनरथं प्रति ॥ ७-१०३-९ (४८७८७)
वज्राशनिसमा घोराः परकायावभेदिनः ।
शराः कुर्वन्ति ते नार्थं पार्थ काऽद्य विडम्बना ॥ ७-१०३-१० (४८७८८)
अर्जुन उवाच। ७-१०३-११क्ष् (४५२८)
द्रोणेन नियतं कृष्ण धार्तराष्ट्रे निदर्शितम् ।
अन्ते विहितमस्त्राणामेतत्कवचधारणम् ॥ ७-१०३-११ (४८७८९)
अस्मिन्नन्तर्हितं कृष्ण त्रैलोक्यमपि वर्मणि ।
एको द्रोणो हि वेदैतदहं तस्माच्च सत्तमात् ॥ ७-१०३-१२ (४८७९०)
न शक्यमेतत्कवचं बाणैर्भेत्तुं कथञ्चन ।
अपि वज्रेण गोविन्द स्वयं मघवता युधि ॥ ७-१०३-१३ (४८७९१)
जानंस्त्वमपि वै कृष्ण मां विमोहयसे कथम् ।
यद्वृत्तं त्रिषु लोकेषु यच्च केशव वर्तते ॥ ७-१०३-१४ (४८७९२)
यथा भविष्यद्यच्चैव तत्सर्वं विदितं तव ।
न त्विदं वेद वै कश्चिद्यथा त्वं मधुसूदन ॥ ७-१०३-१५ (४८७९३)
एष दुर्योधनः कृष्ण द्रोणेन विहितामिमाम् ।
तिष्ठत्यभीतवत्सङ्ख्ये बिभ्रत्कवचधारणाम् ॥ ७-१०३-१६ (४८७९४)
यत्त्वत्र विहितं कार्यं नैष तद्वेत्ति माधव ।

स्त्रीवदेष बिभर्त्येतां युक्तां कवचधारणाम् ॥ ७-१०३-१७ (४८७९५)
पश्य बाह्वोश्च मे वीर्यं धनुषश्च जनार्दन ।
पराजयिष्ये कौरव्यं कवचेनापि रक्षितम् ॥ ७-१०३-१८ (४८७९६)
इदमङ्गिरसे प्रादाद्देवेशो वर्म भास्वरम् ।
तस्माद्बृहस्पतिः प्राप ततः प्राप पुरन्दरः ॥ ७-१०३-१९ (४८७९७)
पुनर्ददौ सुरपतिर्मह्यं वर्म ससङ्ग्रहम् ।
दैवं यद्यस्य वर्मैतद्ब्रह्मणा वा स्वयं कृतम् ।
नैनं गोप्स्यति दुर्बुद्धिमद्य बाणहतं मया ॥ ७-१०३-२० (४८७९८)
सञ्जय उवाच। ७-१०३-२१क्ष् (४५२९)
एवमुक्त्वाऽर्जुनो बाणानभिमन्त्र्य व्यकर्षयत् ।
मानवास्त्रेण मानार्हस्तीक्ष्णावरणभेदिना ॥ ७-१०३-२१ (४८७९९)
विकृष्यमाणांस्तेनैव धनुर्मध्यगताञ्छरान् ।
तानस्यास्त्रेण चिच्छेद द्रौणिः सर्वास्त्रघातिना ॥ ७-१०३-२२ (४८८००)
तान्निकृत्तानिषून्दृष्ट्वा दूरतो ब्रह्मवादिना ।
न्यवेदयत्केशवाय विस्मितः श्वेतवाहनः ॥ ७-१०३-२३ (४८८०१)
नैतदस्त्रं मया शक्यं द्विः प्रयोक्तुं जनार्दन ।
अस्त्रं मामेव हन्याद्धि हन्याच्चापि बलं मम ॥ ७-१०३-२४ (४८८०२)
ततो दुर्योधनः कृष्णौ नवभिर्नवभिः शरैः ।
अविध्यत रणे राजञ्शरैराशीविषोपमैः ॥ ७-१०३-२५ (४८८०३)
भूय एवाभ्यवर्षच्च समरे कृष्णपाण्डवौ ।
शरवर्षेण महता ततोऽहृष्यन्त तावकाः ।
चक्रुर्वादित्रनिनदान्सिंहनादरवांस्तथा ॥ ७-१०३-२६ (४८८०४)
ततः क्रुद्धो रणे पार्थः सृक्विणी परिसंलिहन् ।
नापश्यच्च ततोऽस्याङ्गं यन्न स्याद्वर्मरक्षितम् ॥ ७-१०३-२७ (४८८०५)
ततोऽस्य निशितैर्बाणैः सुमुक्तैरन्तकोपमैः ।
हयांश्चकार निर्देहानुभौ च पार्ष्णिसारथी ॥ ७-१०३-२८ (४८८०६)
धनुरस्याच्छिनत्तूर्णं हस्तावापं च वीर्यवान् ।
रथं च शकलीकर्तुं सव्यसाची प्रचक्रमे ॥ ७-१०३-२९ (४८८०७)
दुर्योधनं च बाणाभ्यां तीक्ष्णाभ्यां विरथीकृतम् ।
आविद्ध्यद्धस्ततलयोरुभयोरर्जुनस्तदा ॥ ७-१०३-३० (४८८०८)
श्प्रयत्नज्ञो हि कौन्तयो नखमांसान्तरेषुभिः ।
स वेदनाभिराविग्नः पलायनपरायणः ॥ ७-१०३-३१ (४८८०९)
तं कृच्छ्रामापदं प्राप्तं दृष्ट्वा परमधन्विनः ।
समापेतुः परीप्सन्तो धनञ्जयशरार्दितम् ॥ ७-१०३-३२ (४८८१०)
तं रथैर्बहुसाहस्रैः कल्पितैः कुञ्जरैर्हयैः ।
पदात्योघैश्च संरब्धैः परिवव्रुर्धनञ्जयम् ॥ ७-१०३-३३ (४८८११)

अथ नार्जुनगोविन्दौ न रथो वा व्यदृश्यत ।
अस्त्रवर्षेण महता शरौघैश्चापि संवृतौ ॥ ७-१०३-३४ (४८८१२)
ततोऽर्जुनोऽस्त्रवीर्येण निजघ्ने तां वरूथिनीम् ।
तत्र व्यङ्गी कृताः पेतुः शतशोऽथ रथद्विपाः ॥ ७-१०३-३५ (४८८१३)
ते हता हन्यमानाश्च न्यगृह्णंस्तं रथोत्तमम् ।
स रथः स्तम्भितस्तस्थौ क्रोशमात्रे समन्ततः ॥ ७-१०३-३६ (४८८१४)
ततोऽर्जुनं वृष्णिवीरस्त्वरितो वाक्यमब्रवीत् ।
धनुर्विष्फारयात्यर्थमहं ध्मास्यामि चाम्बुजम् ॥ ७-१०३-३७ (४८८१५)
ततो विष्फार्य बलवद्गाण्डीवं जघ्निवान्रिपून् ।
महता शरवर्षेण तलशब्देन चार्जुनः ॥ ७-१०३-३८ (४८८१६)
पाञ्चजन्यं च बलवान्दध्मौ तारेण केशवः ।
रजसा ध्वस्तपक्ष्मान्तः प्रस्विन्नवदनो भृशम् ॥ ७-१०३-३९ (४८८१७)
'तेनाच्युतोष्ठपुटपूरितमारुतेन
शङ्खान्तरोदरविवृद्धविनिःसृतेन ।
नादेन सासुरवियत्सुरलोकपाल--
मुद्विग्नमीश्वर जगत्स्फुटतीव सर्वम्'॥ ७-१०३-४० (४८८१८)
तस्य शङ्खस्य नादेन धनुषो निःस्वनेन च ।
निःसत्वाश्च ससत्वाश्च क्षितौ पेतुस्तदा जनाः ॥ ७-१०३-४१ (४८८१९)
तैर्विमुक्तो रथो रेजे वाय्वीरित इवाम्बुदः ।
जयद्रथस्य गोप्तारस्ततः क्षुब्धाः सहानुगाः ॥ ७-१०३-४२ (४८८२०)
ते दृष्ट्वा सहसा पार्थं गोप्तारः सैन्धवस्य तु ।
चक्रुर्नादान्महेष्वासाः कम्पयन्तो वसुन्धराम् ॥ ७-१०३-४३ (४८८२१)
बाणशब्दरवांश्चोग्रान्विमिश्राञ्शङ्खनिःस्वनैः ।
प्रादुश्चक्रुर्महात्मानः सिंहनादरवानपि ॥ ७-१०३-४४ (४८८२२)
तं श्रुत्वा निनदं घोरं तावकानां समुत्थितम् ।
प्रदध्मतुः शङ्खवरौ वासुदेवधनञ्जयौ ॥ ७-१०३-४५ (४८८२३)
तेन शब्देन महता पूरितेयं वसुन्धरा ।
सशैला सार्णवद्वीपा सपाताला विशाम्पते ॥ ७-१०३-४६ (४८८२४)
स शब्दो भरतश्रेष्ठ व्याप्य सर्वा दिशो दश ।
प्रतिसस्वान तत्रैव कुरुपाण्डवयोर्बले ॥ ७-१०३-४७ (४८८२५)
तावका रथिनस्तत्र दृष्ट्वा कृष्णधनञ्जयौ ।
सम्भ्रमं परमं प्राप्तास्त्वरमाणा महारथाः ॥ ७-१०३-४८ (४८८२६)
अथ कृष्णौ महाभागौ तावका वीक्ष्य दंशितौ ।
अभ्यद्रवन्त सङ्क्रुद्धास्तदद्भुतमिवाभवत् ॥ ॥ ७-१०३-४९ (४८८२७)

इति श्रीमन्महाभारते द्रोणपर्वणि जयद्रथवधपर्वणि

चतुर्दशदिवसयुद्धे त्र्यधिकशततमोऽध्यायः ॥ १०३ ॥
Mahabharata - Drona Parva - Chapter Footnotes

५-१०३-७ गाण्डीवतो बाणाः इति ङ पाठः । गण्डीवतः प्राणा इति क ट पाठः ॥
५-१०३-१७ युक्तां अन्यप्रयुक्ताम् ॥
५-१०३-२० ससङ्ग्रहं सोपदेशम् । दैवं दैवः कृतम् ॥
५-१०३-२८ निर्देहान् निकृत्तावयवान् ॥
५-१०३-३१ नखमांसान्तरे इषुभिराविद्धयदिति पूर्वेणान्वयः
। सन्धिरार्षः । अयं श्लोकः झ पाठ एवास्ति ॥
५-१०३-३६ क्रोशमात्रे सैंधवतोर्थात् ॥
५-१०३-१०३ त्र्यधिकशततमोऽध्यायः ॥

---

द्रोनपर्व-अध्यय१०४
॥ श्रीः ॥
७.१०४. अध्यायः १०४

Mahabharata - Drona Parva - Chapter Topics
अर्जुनस्य भूरिश्रवःप्रभृतिभिरष्टभिर्युद्धम् ॥ १ ॥

Mahabharata - Drona Parva - Chapter Text

७-१०४-० (४८८२८)
सञ्जय उवाच। ७-१०४-०क्ष् (४५३०)
तावकास्त्वभिसम्प्रेक्ष्य वृष्ण्यन्धककरूद्वहौ ।
सत्वरास्तौ जिघांसन्तस्तथैव विजयः परान् ॥ ७-१०४-१ (४८८२९)
सुवर्णचित्रैर्वैयाघ्रैः स्वनवद्भिर्महारथैः ।
दीपयन्तो दिशः सर्वा ज्वलद्भिरिव पावकैः ॥ ७-१०४-२ (४८८३०)
रुक्मपुङ्खैश्च दुष्प्रेक्ष्यैः कार्मुकैः पृथिवीपते ।
कूजद्भिरतुलान्नादन्रोषितैरुरगैरिव ॥ ७-१०४-३ (४८८३१)
भूरिश्रवाः शलः कर्णो वृषसेनो जयद्रथः ।
कृपश्च मद्रराजश्च द्रोणिश्च रथिनां वरः ॥ ७-१०४-४ (४८८३२)
ते पिबन्त इवाकाशमश्वैरष्टौ महारथाः ।
व्यराजयन्दश दिशो वैयाघ्रैर्हेमचन्द्रकैः ॥ ७-१०४-५ (४८८३३)
ते दंशिताः सुसंरब्धा रथैर्मेघौघनिःस्वनैः ।
समावृण्वन्दश दिशः पार्थस्य निशितैः शरैः ॥ ७-१०४-६ (४८८३४)
कौलूतका हयाश्चित्रा वहन्तस्तान्महारथान् ।

व्यशोभन्त तदा शीघ्रा दीपयन्तो दिशो दश ॥ ७-१०४-७ (४८८३५)
आजानेयैर्महावेगैर्नानादेशसमुत्थितैः ।
पार्वतीयैर्नदीजैश्च सैन्धवैश्च हयोत्तमैः ॥ ७-१०४-८ (४८८३६)
कुरुयोधवरा राजंस्तव पुत्रं परीप्सवः ।
धनञ्जयरथं शीघ्रं सर्वतः समुपाद्रवन् ॥ ७-१०४-९ (४८८३७)
ते प्रगृह्य महाशङ्खान्दध्मुः पुरुषसत्तमाः ।
पूरयन्तो दिवं राजन्पृथिवीं च ससागराम् ॥ ७-१०४-१० (४८८३८)
तथैव दध्मतुः शङ्खौ वासुदेवधनञ्जयौ ।
प्रवरौ सर्वदेवानां सर्वशङ्खवरौ भुवि ॥ ७-१०४-११ (४८८३९)
देवदत्तं च कौन्तेयः पाञ्चजन्यं च केशवः ।
शब्दस्तु देवदत्तस्य धनञ्जयसमीरितः ॥ ७-१०४-१२ (४८८४०)
पृथिवीं चान्तरिक्षं च दिशश्चैव समावृणोत् ।
तथैव पाञ्चजन्योऽपि वासुदेवसमीरितः ॥ ७-१०४-१३ (४८८४१)
सर्वशब्दानतिक्रम्य पूरयामास रोदसी ।
तस्मिंस्तथा वर्तमाने दारुणे नादसङ्कुले ॥ ७-१०४-१४ (४८८४२)
भीरूणां त्रासजनने शूराणां हर्षवर्धने ।
प्रवादितासु भेरीषु झर्झरेष्वानकेषु च ॥ ७-१०४-१५ (४८८४३)
मृदङ्गेष्वपि राजेन्द्र वाद्यमानेष्वनेकशः ।
महारथसमाख्याता दुर्योधनहितैषिणः ॥ ७-१०४-१६ (४८८४४)
अमृष्यमाणास्तं शब्दं क्रुद्धाः परमधन्विनः ।
कर्णादयो महेष्वासास्त्वत्सैन्यपरिरक्षिणः ॥ ७-१०४-१७ (४८८४५)
अमर्षिता महाशङ्खान्दध्मुर्वीरा महारथाः ।
कृते प्रतिकरिष्यन्तः केशवस्यार्जुनस्य च ॥ ७-१०४-१८ (४८८४६)
बभूव तव तत्सैन्यं शङ्खशब्दे समीरिते ।
उद्विग्नरथनागाश्वमस्वस्थमिव चाभिभो ॥ ७-१०४-१९ (४८८४७)
तत्प्रहृष्टजनाबाधं भेरीशङ्खनिनादितम् ।
बभूव भृशमुद्विग्नं निर्घातैरिव संवृतम् ॥ ७-१०४-२० (४८८४८)
स शब्दः सुमहान्राजन्दिशः सर्वा व्यनादयत् ।
त्रासयामास तत्सैन्यं युगान्त इव सम्भृतः ॥ ७-१०४-२१ (४८८४९)
ततो दुर्योधनोऽष्टौ च राजानस्ते महारथाः ।
जयद्रथस्य रक्षार्थं पाण्डवं पर्यवारयन् ॥ ७-१०४-२२ (४८८५०)
ततो द्रौणिस्त्रिसप्तत्या वासुदेवमताडयत् ।
अर्जुनं च त्रिभिर्भल्लैर्ध्वजमश्वांश्च पञ्चभिः ॥ ७-१०४-२३ (४८८५१)
तमर्जुनः पृषत्कानां शतैः षड्भिरताडयत् ।
अत्यर्थमिव सङ्क्रुद्धः प्रतिविद्धे जनार्दने ॥ ७-१०४-२४ (४८८५२)
कर्णं च दशभिर्विद्ध्वा वृषसेनं त्रिभिस्तथा ।

शल्यस्य सशरं चापं मुष्टौ चिच्छेद वीर्यवान् ॥ ७-१०४-२५ (४८८५३)
गृहीत्वा धनुरन्यत्तु शल्यो विव्याध पाण्डवम् ।
भूरिश्रवास्त्रिभिर्बाणैर्हेमपुङ्खैः शिलाशितैः ॥ ७-१०४-२६ (४८८५४)
कर्णो द्वात्रिंशता चैव वृषसेनश्च सप्तभिः ।
जयद्रथस्त्रिसप्तत्या कृपश्च दशभिः शरैः ।
मद्राजश्च दशभिर्विव्यधुः फल्गुनं रणे ॥ ७-१०४-२७ (४८८५५)
ततः शराणां षष्ठ्या तु द्रौणिः पार्थमवाकिरत् ।
वासुदेवं च विंशत्या पुनः पार्थं च पञ्चभिः ॥ ७-१०४-२८ (४८८५६)
प्रहसंस्तु नरव्याघ्रः श्वेताश्वः कृष्णसारथिः ।
प्रत्यविध्यत्स तान्सर्वान्दर्शयन्पाणिलाघवम् ॥ ७-१०४-२९ (४८८५७)
कर्णं द्वादशभिर्विद्ध्वा वृषसेनं त्रिभिः शरैः ।
शल्यस्य सशरं चापं मुष्टिदेशे व्यकृन्तत ॥ ७-१०४-३० (४८८५८)
सौमदत्तिं त्रिभिर्विद्ध्वा शल्यं च दशभिः शरैः ।
शितैरग्निशिखाकारैर्द्रौणिं विव्याध चाष्टभिः ॥ ७-१०४-३१ (४८८५९)
गौतमं पञ्चविंशत्या सैन्धवं च शतेन ह ।
पुनर्द्रौणिं च सप्तत्या शराणां सोऽभ्यताडयत् ॥ ७-१०४-३२ (४८८६०)
भूरिश्रवास्तु सङ्क्रुद्धः प्रतोदं चिच्छिदे हरेः ।
अर्जुनं च त्रिसप्तत्या बाणानामाजघान ह ॥ ७-१०४-३३ (४८८६१)
ततः शरशतैस्तीक्ष्णैस्तानरीन्श्वेतवाहनः ।
प्रत्यषेधद्द्रुतं क्रुद्धो महावातो घनानिव ॥ ॥ ७-१०४-३४ (४८८६२)

इति श्रीमन्महाभारते द्रोणपर्वणि जयद्रथवधपर्वणि
चतुर्दशदिवसयुद्धे चतुरधिकशततमोऽध्यायः ॥ १०४ ॥
Mahabharata - Drona Parva - Chapter Footnotes

५-१०४-२ वैयाघ्रैर्व्याघ्रचर्मचित्रैः ॥
५-१०४-७ कौलतकाः कुलूतदेशजाः पार्वतीयसमानलक्षणाः ॥
५-१०४-८ आजानेयैः कुलीनैः । नदीजैर्नदीतीरजैः ॥
५-१०४-१०४ चतुरधिकशततमोऽध्यायः ॥

---

द्रोनपर्व-अध्यय१०५
॥ श्रीः ॥
७.१०५. अध्यायः १०५

Mahabharata - Drona Parva - Chapter Topics
सञ्जयेन रथानां ध्वजवर्णनम् ॥ १ ॥

७-१०५-० (४८८६३)
धृतराष्ट्र उवाच। ७-१०५-०क्ष् (४५३१)
ध्वजान्बहुविधाकारान्भ्राजमानानतिश्रिया ।
पार्थानां मामकानां च तान्ममाचक्ष्व सञ्जय ॥ ७-१०५-१ (४८८६४)
सञ्जय उवाच। ७-१०५-२क्ष् (४५३२)
ध्वजान्बहुविधाकाराञ्शृणु तेषां महात्मनाम् ।
रूपतो वर्णतश्चैव नामतश्च निबोध मे ॥ ७-१०५-२ (४८८६५)
तेषां तु रथमुख्यानां रथेषु विविधा ध्वजाः ।
प्रत्यदृश्यन्त राजेन्द्र ज्वलिता इव पावकाः ॥ ७-१०५-३ (४८८६६)
काञ्चनाः काञ्चनापीडाः काञ्चनस्रगलङ्कृताः ।
काञ्चनानीव शृङ्गाणि काञ्चनस्य महागिरेः ॥ ७-१०५-४ (४८८६७)
अनेकवर्णा विविधा ध्वजाः परमशोभनाः ।
ते ध्वजाः संवृतास्तेषां पताकाभिः समन्ततः ।
नानावर्णविराणाभिः शुशुभुः सर्वतो वृताः ॥ ७-१०५-५ (४८८६८)
पताकाश्च ततस्तास्तु श्वसनेन समीरिताः ।
नृत्यमाना व्यदृश्यन्त रङ्गमध्ये विलासिकाः ॥ ७-१०५-६ (४८८६९)
इन्द्रायुधसवर्णाभाः पताका भरतर्षभ ।
दोधूयमाना रथिनां शोभयन्ति महारथान् ॥ ७-१०५-७ (४८८७०)
सिंहलाङ्गूल उग्रास्यो ध्वजो वानरलक्षणः ।
धनञ्जयस्य सङ्ग्रामे प्रत्यदृश्यत भारत ॥ ७-१०५-८ (४८८७१)
स वानरध्वजो राजन्पताकाभिरलङ्कृतः ।
त्रासयामास तत्सैन्यं ध्वजो गाण्डीवधन्वनः ॥ ७-१०५-९ (४८८७२)
तथैव सिंहलाङ्गूलं द्रोणपुत्रस्य भारत ।
ध्वजाग्रं समपश्याम बालसूर्यसमप्रभम् ॥ ७-१०५-१० (४८८७३)
काञ्चनं पवनोद्धूतं शक्रध्वजसमप्रभम् ।
नन्दनं कौरवेन्द्राणां द्रौणेर्लक्ष्म समुच्छ्रितम् ॥ ७-१०५-११ (४८८७४)
हस्तिकक्ष्या पुनर्हैमी बभूवाधिरथेर्ध्वजः ।
आहवे खं महाराज ददृशे पूरयन्निव ॥ ७-१०५-१२ (४८८७५)
पताकी काञ्चनः स्रग्वी ध्वजः कर्णस्य संयुगे ।
नृत्यतीव रथोपस्थे श्वसनेन समीरितः ॥ ७-१०५-१३ (४८८७६)
आचार्यस्य तु पाण्डूनां ब्राह्मणस्य तपस्विनः ।
गोवृषो गौतमस्यासीत्कृपस्य सुपरिष्कृतः ॥ ७-१०५-१४ (४८८७७)
स तेन भ्राजते राजन्गोवृषेण महारथः ।

त्रिपुरघ्नरथो यद्वद्गोवृषेण विराजता ॥ ७-१०५-१५ (४८८७८)
मयूरो वृषसेनस्य काञ्चनो मणिरत्नवान् ।
व्याहरिष्यन्निवातिष्ठत्सेनाग्रमुपशोभयन् ॥ ७-१०५-१६ (४८८७९)
तेन तस्य रथो भाति मयूरेण महात्मनः ।
यथा स्कन्दस्य राजेन्द्र मयूरेण विराजता ॥ ७-१०५-१७ (४८८८०)
मद्रराजस्य शल्यस्य ध्वजाग्रेऽग्निशिखामिव ।
सौवर्णीं प्रतिपश्याम सीतामप्रतिमां शुभाम् ॥ ७-१०५-१८ (४८८८१)
सा सीता भ्राजते तस्य रथमास्थाय मारिष ।
सर्वबीजविरूढेव यथा सीता श्रिया वृता ॥ ७-१०५-१९ (४८८८२)
वराहः सिन्धुराजस्य राजतोऽभिविराजते ।
ध्वजाग्रे लोहिताङ्गाभो हेमजालपरिष्कृतः ॥ ७-१०५-२० (४८८८३)
शुशुभे केतुना तेन राजतेन जयद्रथः ।
यथा देवासुरे युद्धे पुरा पूषा स्म शोभते ॥ ७-१०५-२१ (४८८८४)
सौमदत्तेः पुनर्यूपो यज्ञशीलस्य धीमतः ।
ध्वजः सूर्य इवाभाति सोमश्चात्र प्रदृश्यते ॥ ७-१०५-२२ (४८८८५)
स यूपः काञ्चनो राजन्सौमदत्तेर्विराजते ।
राजसूये मखश्रेष्ठे यथा यूपः समुच्छ्रितः ॥ ७-१०५-२३ (४८८८६)
शलस्य तु महाराज राजतो द्विरदो महान् ।
केतुः काञ्चनचित्राङ्गैर्मयूरैरुपशोभितः ॥ ७-१०५-२४ (४८८८७)
स केतुः शोभयामास सैन्यं ते भरतर्षभ ।
यथा श्वेतो महानागो देवराजचमूं तथा ॥ ७-१०५-२५ (४८८८८)
नागो मणिमयो राज्ञो ध्वजः कनकसंवृतः ।
किङ्किणीशतसंह्रादो भ्राजंश्चित्रो रथोत्तमे ॥ ७-१०५-२६ (४८८८९)
व्यभ्राजत भृशं राजन्पुत्रस्तव विशाम्पते ।
ध्वजेन महता सङ्ख्ये कुरूणामृषभस्तदा ॥ ७-१०५-२७ (४८८९०)
नवैते तव वाहिन्यामुच्छ्रिताः परमध्वजाः ।
व्यदीपयंस्ते पृतनां युगान्तादित्यसन्निभाः ॥ ७-१०५-२८ (४८८९१)
दशमस्त्वर्जुनस्यासीदेक एव महाकपिः ।
अदीप्यतार्जुनो येन हिमवानिव शम्भुना ॥ ७-१०५-२९ (४८८९२)
ततश्चित्राणि शुभ्राणि सुमहान्ति महारथाः ।
कार्मुकाण्याददुस्तूर्णमर्जुनार्थे परन्तपाः ॥ ७-१०५-३० (४८८९३)
तथैव धनुरायच्छत्पार्थः शत्रुविनाशनः ।
गाण्डीवं दिव्यकर्मा तद्राजन्दुर्मन्त्रिते तव ॥ ७-१०५-३१ (४८८९४)
तवापराधाद्राजानो निहता बहुशो युधि ।
नानादिग्भ्यः समाहूताः सहयाः सरथद्विपाः ॥ ७-१०५-३२ (४८८९५)
तेषामासीद्व्यातिक्षेपो गर्जतामितरेतरम् ।

दुर्योधनमुखानां च पाण्डूनामृषभस्य च ॥ ७-१०५-३३ (४८८९६)
तत्राद्भुतं परं चक्रे कौन्तेयः कृष्णसारथिः ।
यदेको बहुभिः सार्धं समागच्छदभीतवत् ॥ ७-१०५-३४ (४८८९७)
अशोभत महाबाहुर्गाण्डीवं विक्षिपन्धनुः ।
जिगीषुस्तान्नरव्याघ्रो जिघांसुश्च जयद्रथम् ॥ ७-१०५-३५ (४८८९८)
तत्रार्जुनो नरव्याघ्रः शरैर्मुक्तैः सहस्रशः ।
अदृश्यांस्तावकान्योधान्प्रचक्रे शत्रुतापनः ॥ ७-१०५-३६ (४८८९९)
ततस्तेऽपि नरव्याघ्राः पार्थं सर्वे महारथाः ।
अदृश्यं समरे चक्रुः सायकौघैः समन्ततः ॥ ७-१०५-३७ (४८९००)
संवृते नरसिंहैस्तु कूरूणामृषभेऽर्जुने ।
महानासीत्समुद्भूतस्तस्य सैन्यस्य निःस्वनः ॥ ॥ ७-१०५-३८ (४८९०१)

इति श्रीमन्महाभारते द्रोणपर्वणि जयद्रथवधपर्वणि
चतुर्दशदिवसयुद्धे पञ्चाधिकशततमोऽध्यायः ॥ १०५ ॥
Mahabharata - Drona Parva - Chapter Footnotes

५-१०५-२ रूपमाकारः ॥
५-१०५-१० ध्वजाग्रं ध्वजमुख्यम् ॥
५-१०५-११ काञ्चनम् काञ्चनमयम् ॥
५-१०५-१६ व्याहरिष्यन्वदिष्यन् ॥
५-१०५-३३ व्यतिक्षेपः अन्योन्याभिघातः ॥
५-१०५-१०५ पञ्चाधिकशततमोऽध्यायः ॥

---

द्रोनपर्व-अध्यय१०६
॥ श्रीः ॥
७.१०६. अध्यायः १०६

Mahabharata - Drona Parva - Chapter Topics
द्रोणयुधिष्ठिरयोर्युद्धम् ॥ १ ॥

Mahabharata - Drona Parva - Chapter Text

७-१०६-० (४८९०२)
धृतराष्ट्र उवाच। ७-१०६-०क्ष् (४५३३)
अर्जुने सैन्धवं प्राप्ते भारद्वाजेन संवृताः ।
पाञ्चालाः कुरुभिः सार्धं किमकुर्वत सञ्जय ॥ ७-१०६-१ (४८९०३)

सञ्जय उवाच। ७-१०६-२क्ष् (४५३४)
अपराह्णे महाराज सङ्ग्रमे रोमहर्षणे ।
पाञ्चालानां कुरूणां च द्रोणद्यूतमवर्तत ॥ ७-१०६-२ (४८९०४)
पाञ्चाला हि जिघांसन्तो द्रोणं संहृष्टचेतसः ।
अभ्यमुञ्चन्त गर्जन्तः शरवर्षाणि मारिष ॥ ७-१०६-३ (४८९०५)
ततस्तुल तुमुलस्तेषां सङ्ग्रामोऽवर्ततान्धुतः ।
पाञ्चालानां कुरूणां च घोरो देवासुरोपमः ॥ ७-१०६-४ (४८९०६)
सर्वे द्रोणरथं प्राप्य पाञ्चालाः पाण्डवैः सह ।
तदनीकं बिभित्सन्तो महास्त्राणि व्यदर्शयन् ॥ ७-१०६-५ (४८९०७)
द्रोणस्य रथपर्यन्तं रथिनो रथमास्थिताः ।
कम्पयन्तोऽभ्यवर्तन्त वेगमास्थाय मध्यमम् ॥ ७-१०६-६ (४८९०८)
तमभ्ययाद्बृहत्क्षत्रः केकयानां महारथः ।
विमुञ्चन्निशितान्बाणान्महेन्द्राशनिसन्निभान् ॥ ७-१०६-७ (४८९०९)
तं तु प्रत्युद्ययौ शीघ्रं क्षेमधूर्तिर्महायशाः ।
विमुञ्चन्निशितान्बाणाञ्शतशोऽथ सहस्रशः ॥ ७-१०६-८ (४८९१०)
धृष्टकेतुश्च चेदीनामृषभोऽतिबलोदितः ।
त्वरितोऽभ्यद्रवद्द्रोणं महेन्द्रमिव शम्बरः ॥ ७-१०६-९ (४८९११)
तमापतन्तं सहसा व्यादितास्यमिवान्तकम् ।
वीरधन्वा महेष्वासस्त्वरमाणः समभ्ययात् ॥ ७-१०६-१० (४८९१२)
युधिष्ठिरं महाराजं जिगीषुं समवस्थितम् ।
सहानीकं ततो द्रोणो न्यवारयत वीर्यवान् ॥ ७-१०६-११ (४८९१३)
नकुलं कुशलं युद्धे पराक्रान्तं पराक्रमी ।
अभ्यगच्छत्समायान्तं विकर्णस्ते सुतः प्रभो ॥ ७-१०६-१२ (४८९१४)
सहदेवं तथाऽऽयान्तं दुर्मुखः शत्रुकर्शनः ।
शैररनेकसाहस्रैः समवाकिरदाशुगैः ॥ ७-१०६-१३ (४८९१५)
सात्यकिं तु नरव्याघ्रं व्याघ्रदत्तस्त्ववारयत् ।
शरैः सुनिशितैस्तीक्ष्णैः कम्पयन्वै मुहुर्मुहुः ॥ ७-१०६-१४ (४८९१६)
द्रौपदेयान्नरव्याघ्रान्मुञ्चतः सायकोत्तमान् ।
संरब्धान्रथिनः श्रेष्ठान्सौमदत्तिरवारयत् ॥ ७-१०६-१५ (४८९१७)
भीमसेनं तदा क्रुद्धं भीमरूपो भयानकः ।
प्रत्यवारयदायान्तमार्श्यशृङ्गिर्महाबलः ॥ ७-१०६-१६ (४८९१८)
तयोः समभवद्युद्धं नरराक्षसयोर्मृधे ।
यादृगेव पुरावृत्तं रामरावणयोर्नृप ॥ ७-१०६-१७ (४८९१९)
ततो युधिष्ठिरो द्रोणं नवत्या नतपर्वणाम् ।
आजघ्ने भरतश्रेष्ठः सर्वमर्मसु भारत ॥ ७-१०६-१८ (४८९२०)
तं द्रोणः पञ्चविंशत्या निजघान स्तनान्तरे ।

रोषितो भरतश्रेष्ठ कौन्तेयेन यशस्विना ॥ ७-१०६-१९ (४८९२१)
अदृश्यं समरे चक्रे राजानं सायकोत्तमैः ।
साश्वसूतध्वजं द्रोणः पश्यतां सर्वधन्विनाम् ॥ ७-१०६-२० (४८९२२)
ताञ्शरान्द्रोणमुक्तांस्तु शरवर्षेण पाण्डवः ।
अवारयत धर्मात्मा दर्शयन्पाणिलाघवम् ॥ ७-१०६-२१ (४८९२३)
ततो द्रोणो भृशं क्रुद्धो दर्मराजस्य संयुगे ।
चिच्छेद समरे धन्वी धनुस्तस्य महात्मनः ॥ ७-१०६-२२ (४८९२४)
अथैनं छिन्नधन्वानं त्वरमाणो महारथः ।
शरैरनेकसाहस्रैः पूरयामास सर्वतः ॥ ७-१०६-२३ (४८९२५)
अदृश्यं वीक्ष्य राजानं भारद्वाजस्य सायकैः ।
सर्वभूतान्यमन्यन्त हतमेव युधिष्ठिरम् ॥ ७-१०६-२४ (४८९२६)
केचिच्चैनममन्यन्त तथैव विमुखीकृतम् ।
हृतो राजेति राजेन्द्र ब्राह्मणेन महात्मना ॥ ७-१०६-२५ (४८९२७)
स कृच्छ्रं परमं प्राप्तो धर्मराजो युधिष्ठिरः ।
त्यक्त्वा तत्कार्मुकं छिन्नं भारद्वाजेन संयुगे ।
आददेऽन्यद्धनुर्दिव्यं भारघ्नं वेगवत्तरम् ॥ ७-१०६-२६ (४८९२८)
ततस्तान्सायकांस्तत्र दोणनुन्नान्सहस्रशः ।
चिच्छेद समरे वीरस्तदद्भुतमिवाभवत् ॥ ७-१०६-२७ (४८९२९)
छित्त्वा तु ताञ्शरान्राजक्रोधसंरक्तलोचनः ।
शक्तं जग्राह समरे गिरीणामपि दारिणीम् ।
स्वर्णदण्डां महाघोरामष्टघण्टां भयावहाम् ॥ ७-१०६-२८ (४८९३०)
समुत्क्षिप्य च तां हृष्टो ननाद बलवद्बली ।
नादेन सर्वभूतानि त्रासयन्निव भारत ॥ ७-१०६-२९ (४८९३१)
शक्तिं समुद्यतां दृष्ट्वा धर्मराजेन संयुगे ।
स्वस्ति द्रोणाय सहसा सर्वभूतान्यथाब्रुवन् ॥ ७-१०६-३० (४८९३२)
सा राजभुजनिर्मुक्ता निर्मुक्तोरगसन्निभा ।
प्रज्वालयन्ती गगनं दिशः सप्रदिशस्तथा ।
द्रोणान्तिकमनुप्राप्ता दीप्तास्या पन्नगी यथा ॥ ७-१०६-३१ (४८९३३)
तामापतन्तीं सहसा दृष्ट्वा द्रोणो विशाम्पते ।
प्रादुश्चक्रै ततो ब्राह्ममस्त्रमस्त्रविदां वरः ॥ ७-१०६-३२ (४८९३४)
तदस्त्रं भस्मसात्कृत्वा तां शक्तिं घोरदर्शनाम् ।
जगाम स्यन्दनं तूर्णं पाण्डवस्य यशस्विनः ॥ ७-१०६-३३ (४८९३५)
ततो युधिष्ठिरो राजा द्रोणास्त्रं तत्समुद्यतम् ।
अशामयन्महाप्राज्ञो ब्रह्मास्त्रेणैव मारिष ॥ ७-१०६-३४ (४८९३६)
विद्ध्वा तं च रणे द्रोणं पञ्चभिर्नतपर्वभिः ।
क्षुरप्रेण सुतीक्ष्णेन चिच्छेदास्य महद्धनुः ॥ ७-१०६-३५ (४८९३७)

तदपास्य धनुश्छिन्नं द्रोणः क्षत्रियमर्दनः ।
गदां चिक्षेप सहसा धर्मपुत्राय मारिष ॥ ७-१०६-३६ (४८९३८)
तामापतन्तीं सहसा गदां दृष्ट्वा युधिष्ठिरः ।
गदामेवाग्रहीत्क्रुद्धश्चिक्षेप च परन्तप ॥ ७-१०६-३७ (४८९३९)
ते गदे सहसा मुक्ते समासाद्य परस्परम् ।
सङ्घर्षात्पावकं मुक्त्वा समेयातां महीतले ॥ ७-१०६-३८ (४८९४०)
ततो द्रोणो भृशं क्रुद्धो धर्मराजस्य मारिष ।
चतुर्भिर्निशितैस्तीक्ष्णैर्हयाञ्जघ्ने शरोत्तमैः ॥ ७-१०६-३९ (४८९४१)
चिच्छेदैकेन भल्लेन धनुश्चेन्द्रध्वजोपमम् ।
केतुमेकेन चिच्छेद पाण्डवं चार्दयत्त्रिभिः ॥ ७-१०६-४० (४८९४२)
हताश्वात्तुल रथात्तूर्णमवप्लुत्य युधिष्ठिरः ।
तस्थावूर्ध्वभुजो राजा व्यायुधो भरतर्षभ ॥ ७-१०६-४१ (४८९४३)
विरथं तं समालोक्य व्यायुधं च विशेषतः ।
द्रोणो व्यमोहयच्छत्रून्सर्वसैन्यानि चाभिभो ॥ ७-१०६-४२ (४८९४४)
मुञ्चंश्चेषुगणांस्तीक्ष्णाँल्लघुहस्तो दृढव्रतः ।
अभिदुद्राव राजानं सिंहो मृगमिवोल्बणः ॥ ७-१०६-४३ (४८९४५)
तमभिद्रुतमालोक्य द्रोणेनामित्रघातिना ।
हाहेति सुमहाञ्शब्दः पाण्डूनां समजायत ॥ ७-१०६-४४ (४८९४६)
हृतो राजा हृतो राजा भारद्वाजेन मारिष ।
इत्यांसीत्सुमहाञ्शब्दः पाण्डूसैन्यस्य सर्वतः ॥ ७-१०६-४५ (४८९४७)
ततस्त्वरितमारुह्य सहदेवरथं नृपः ।
अपायाज्जवनैरश्वैः कुन्तीपुत्रो युधिष्ठिरः ॥ ॥ ७-१०६-४६ (४८९४८)

इति श्रीमन्महाभारते द्रोणपर्वणि जयद्रथवधपर्वणि
चतुर्दशदिवसयुद्धे षडधिकशततमोऽध्यायः ॥ १०६ ॥
Mahabharata - Drona Parva - Chapter Footnotes

५-१०६-२ द्रोणे युद्धमवर्तत क । ङ। पाठः। घोरं युद्धमवर्तत
इति ट।पाठः ॥
५-१०६-६ कम्पयन्तो भुवमिति शेषः ॥
५-१०६-१५ सौमदत्तिः शलः ॥
५-१०६-२५ इतो राजेति अमन्यन्तेत्यनुषङ्गः ॥
५-१०६-१०६ षडधिकशततमोऽध्यायः ॥

---

द्रोनपर्व-अध्यय१०७
॥ श्रीः ॥

७.१०७. अध्यायः १०७

Mahabharata - Drona Parva - Chapter Topics
सङ्कुलयुद्धवर्णनम् ॥ १ ॥

Mahabharata - Drona Parva - Chapter Text

७-१०७-० (४८९४९)
सञ्जय उवाच। ७-१०७-०क्ष् (४५३५)
बृहत्क्षत्रमथायान्तं केकयं दृढविक्रमम् ।
क्षेमधूर्तिर्महाराज विव्याधोरसि मार्गणैः ॥ ७-१०७-१ (४८९५०)
बृहत्क्षत्रस्तु तं राजा नवत्या नतपर्वणाम् ।
आजघ्ने त्वरितो राजन्द्रोणानीकबिभित्सया ॥ ७-१०७-२ (४८९५१)
क्षेमधूर्तिस्तु सङ्क्रुद्धः केकयस्य महात्मनः ।
धनुश्चिच्छेद भल्लेन पीतेन निशितेन ह ॥ ७-१०७-३ (४८९५२)
अथैनं छिन्नधन्वानं शरेणानतपर्वणा ।
विव्याध समरे तूर्णं प्रवरं सर्वधन्विनाम् ॥ ७-१०७-४ (४८९५३)
अथान्यद्धनुरादाय बृहत्क्षत्रो हसन्निव ।
व्यश्वसूतरथं चक्रे क्षमदूर्तिं महारथम् ॥ ७-१०७-५ (४८९५४)
ततोऽपरेण भल्लेन पीतेन निशितेन च ।
जहार नृपतेः कायाच्छिरोऽज्वलितकुण्डलम् ॥ ७-१०७-६ (४८९५५)
तच्छिन्नं सहसा तस्य शिरः कुञ्चितमूर्धजम् ।
सकिरीटं महीं प्राप्य बभौ ज्योतिरिवाम्बरात् ॥ ७-१०७-७ (४८९५६)
तं निहत्य रणे हृष्टो बृहत्क्षत्रो महारथः ।
सहसाऽभ्यपतत्सैन्यं तावकं पार्थकारणात् ॥ ७-१०७-८ (४८९५७)
धृष्टकेतुं तथाऽऽयान्तं द्रोणहेतोः पराक्रमी ।
वीरधन्वा महेष्वासो वारयामास भारत ॥ ७-१०७-९ (४८९५८)
तौ परस्परमासाद्य शरदंष्ट्रौ तरस्विनौ ।
शरैरनेकसाहस्रैरन्योन्यमभिजघ्नतुः ॥ ७-१०७-१० (४८९५९)
तावुभौ नरशार्दूलौ युयुधाते परस्परम् ।
महावने तीव्रमदौ वारणाविव यूथपौ ॥ ७-१०७-११ (४८९६०)
गिरिगह्वरमासाद्य शार्दूलाविव रोषितौ ।
युयुधाते महावीर्यौ परस्परजिघांसया ॥ ७-१०७-१२ (४८९६१)
तद्युद्धमासीत्तुमुलं प्रेक्षणीयं विशाम्पते ।
सिद्धचारणसङ्घानां विस्मयाद्भुतदर्शनम् ॥ ७-१०७-१३ (४८९६२)
वीरधन्वा ततः क्रुद्धो धृष्टकेतोः शरासनम् ।

द्विधा चिच्छेद भल्लेन प्रहसन्निव भारत ॥ ७-१०७-१४ (४८९६३)
तदुत्सृज्य धनुच्छिन्नं चेदिराजो महारथः ।
शक्तिं जग्राह विपुलां हेमदण्डामयस्मयीम् ॥ ७-१०७-१५ (४८९६४)
तां तु शक्तिं महावीर्यां दोर्भ्यामायस्य भारत ।
चिक्षेप सहसा यत्तो वीरधन्वरथं प्रति ॥ ७-१०७-१६ (४८९६५)
तया तु वीरघातिन्या शक्त्या त्वभिहतो भृशम् ।
निर्भिन्नहृदयस्तूर्णं निपपात रथान्महीम् ॥ ७-१०७-१७ (४८९६६)
तस्मिन्विनिहते वीरे त्रैगर्तानां महारथे ।
बलं तेऽभज्यत विभो पाण्डवेयैः समन्ततः ॥ ७-१०७-१८ (४८९६७)
सहदेवे ततः षष्टिं सायकान्दुर्मुखोऽक्षिपत् ।
ननाद च महानादं तर्जयन्पाण्डवं रणे ॥ ७-१०७-१९ (४८९६८)
माद्रेयस्तु ततः क्रुद्धो दुर्मुखं च शितैः शरैः ।
भ्राता भ्रातरमायत्तो विव्याध प्रहसन्निव ॥ ७-१०७-२० (४८९६९)
तं रणे रभसं दृष्ट्वा सहदेवं महाबलम् ।
दुर्मुखो नवभिर्बाणैस्ताडयामास भारत ॥ ७-१०७-२१ (४८९७०)
दुर्मुखस्य तु भल्लेन च्छित्त्वा केतुं महाबलः ।
जघान चतुरो वाहांश्चतुर्भिर्निशितैः शरैः ॥ ७-१०७-२२ (४८९७१)
अथापरेण भल्लेन पीतेन निशितेन ह ।
चिच्छेद सारथेः कायाच्छिरो ज्वलितकुण्डलम् ॥ ७-१०७-२३ (४८९७२)
क्षुरप्रेण च तीक्ष्णेन कौरव्यस्य महद्धनुः ।
सहदेवो रणे छित्त्वा तं च विव्याध पञ्चभिः ॥ ७-१०७-२४ (४८९७३)
हताश्वं तु रथं त्यक्त्वा दुर्मुखो विमनास्तदा ।
आरुरोह रथं राजन्निरमित्रस्य भारत ॥ ७-१०७-२५ (४८९७४)
सहदेवस्ततः क्रुद्धो निरमित्रं महाहवे ।
जघान पृथुधारेण भल्लेन परवीरहा ॥ ७-१०७-२६ (४८९७५)
स पपात रथोपस्थान्निरमित्रो जनेश्वरः ।
त्रिगर्तराजस्य सुतो व्यथयंस्तव वाहिनीम् ॥ ७-१०७-२७ (४८९७६)
तं तु हत्वा महाबाहुः सहदेवो व्यरोचत ।
यथा दाशरथी रामः खरं हत्वा महाबलम् ॥ ७-१०७-२८ (४८९७७)
हाहाकारो महानासीत्त्रिगर्तानां जनेश्वर ।
राजपुत्रं हतं दृष्ट्वा निरमित्रं महारथम् ॥ ७-१०७-२९ (४८९७८)
नकुलस्ते सुतं राजन्विकर्णं पृथुलोचनम् ।
मुहूर्ताज्जितवाँल्लोके तदद्भुतमिवाभवत् ॥ ७-१०७-३० (४८९७९)
सात्यकिं व्याघ्रदत्तस्तु शरैः सन्नतपर्वभिः ।
चक्रेऽदृश्यं साश्वसूतं सध्वजं पृतनान्तरे ॥ ७-१०७-३१ (४८९८०)
तान्निवार्य शराञ्शूरः शैनेयः कृतहस्तवत् ।

साश्वसूतध्वजं बाणैर्व्याघ्रदत्तमपातयत् ॥ ७-१०७-३२ (४८९८१)
कुमारे निहते तस्मिन्मागधस्य सुते प्रभो ।
मागधाः सर्वतो यत्ता युयुधानमुपाद्रवन् ॥ ७-१०७-३३ (४८९८२)
विसृजन्तः शरांश्चैव तोमरांश्च सहस्रशः ।
भिण्डिपालांस्तथा प्रासान्मुद्रान्मुसलानपि ॥
अयोधयन्रणे शूराः सात्वतं युद्धदुर्मदम् ॥ ७-१०७-३४ (४८९८३)
तांस्तु सर्वान्स बलवान्सात्यकिर्युद्धदुर्मदः ।
नातिकृच्छ्राद्धसन्नेव विजिग्ये पुरुषर्षभः ॥ ७-१०७-३५ (४८९८४)
मागधान्द्रवतो दृष्ट्वा हतशेषान्समन्ततः ।
बलं तेऽभज्यत विभो युयुधानशरार्दितम् ॥ ७-१०७-३६ (४८९८५)
नाशयित्वा रणे सैन्यं त्वदीयं तु समन्ततः ।
विधुन्वानो धनुःश्रेष्ठं व्यभ्राजत महायशाः ॥ ७-१०७-३७ (४८९८६)
भज्यमानं बलं राजन्सात्वतेन महात्मना ।
नाभ्यवर्तत युद्धाय त्रासितं दीर्घबाहुना ॥ ७-१०७-३८ (४८९८७)
ततो द्रोणो भृशं क्रुद्धः सहसोद्वृत्य चक्षुषी ।
सात्यकिं सत्यकर्माणं स्वयमेवाभिदुद्रुवे ॥ ॥ ७-१०७-३९ (४८९८८)

इति श्रीमन्महाभारते द्रोणपर्वणि जयद्रथवधपर्वणि
चतुर्दशदिवसयुद्धे सप्ताधिकशततमोऽध्यायः ॥ १०७ ॥

---

द्रोनपर्व-अध्यय१०८
॥ श्रीः ॥
७.१०८. अध्यायः १०८

Mahabharata - Drona Parva - Chapter Topics
द्रौपदेयैः शलवधः ॥ १ ॥
भीमसेनेनालम्बुसपराजयः ॥ २ ॥

Mahabharata - Drona Parva - Chapter Text

७-१०८-० (४८९८९)
सञ्जय उवाच। ७-१०८-०क्ष् (४५३६)
द्रौपदेयान्महेष्वासान्सौमदत्तिर्महायशाः ।
एकैकं पञ्चभिर्विद्ध्वा पुनर्विव्याध सप्तभिः ॥ ७-१०८-१ (४८९९०)
ते पीडिता भृशं तेन रौद्रेण सहसा विभो ।
प्रमूढा नैव विविदुर्मृधे कृत्यं स्म किंचन ॥ ७-१०८-२ (४८९९१)

नाकुलिश्च शतानीकः सौमदत्तिं नरर्षभम् ।
द्वाभ्यां विद्ध्वाऽनदद्धृष्टः शराभ्यां शत्रुकर्शनः ॥ ७-१०८-३ (४८९९२)
तथेतरे रणे यत्तास्त्रिभिस्त्रिभिरजिह्मगैः ।
विव्यधुः समरे तूर्णं सौमदत्तिममर्षणम् ॥ ७-१०८-४ (४८९९३)
स तान्प्रति महाराज पञ्च चिक्षेप सायकान् ।
एकैकं हृदि चाजघ्ने एकैकेन महायशाः ॥ ७-१०८-५ (४८९९४)
ततस्ते भ्रातरः पञ्च शरैर्विद्धा महात्मना ।
परिवार्य रणे वीरं विव्यधुः सायकैर्भृशम् ॥ ७-१०८-६ (४८९९५)
अर्जुनिस्तु हयांस्तस्य चतुर्भिर्निशितैः शरैः ।
प्रेषयामास सङ्क्रुद्धो यमस्य सदनं प्रति ॥ ७-१०८-७ (४८९९६)
भैमसेनिर्धनुश्छित्त्वा सौमदत्तेर्महात्मनः ।
ननाद बलवन्नादं विव्याध च शितैः शरैः ॥ ७-१०८-८ (४८९९७)
यौधिष्ठिरिर्ध्वजं तस्य च्छित्त्वा भूमावपातयत् ।
नाकुलिश्चाथ यन्तारं रथनीडादपाहरत् ॥ ७-१०८-९ (४८९९८)
साहदेविस्तु तं ज्ञात्वा भ्रातृभिर्विमुखीकृतम् ।
क्षुरप्रेण शिरो राजन्निचकर्त महात्मनः ॥ ७-१०८-१० (४८९९९)
तच्छिरो न्यपतद्भूतौ तपनीयविभूषितम् ।
अभासयद्रणोद्देशं बालसूर्यसमप्रभम् ॥ ७-१०८-११ (४९०००)
सौमदत्तेः शिरो दृष्ट्वा निपतत्तन्महात्मनः ।
वित्रस्तास्तावका राजन्प्रदुद्रुवुरनेकधा ॥ ७-१०८-१२ (४९००१)
अलम्बुसस्तु समरे भीमसेनं महाबलम् ।
योधयामस सङ्क्रुद्धो लक्ष्मणं रावणिर्यथा ॥ ७-१०८-१३ (४९००२)
सम्प्रयुद्धौ रमे दृष्ट्वा तावुभौ नरराक्षसौ ।
विस्मयः सर्वभूतानां भयं चासीत्सुदारुणम् ॥ ७-१०८-१४ (४९००३)
आर्श्यशृङ्गिं ततो भीमो नवभिर्निशितैः शरैः ।
विव्याध प्रहसन्राजन्राक्षसेन्द्रममर्षणम् ॥ ७-१०८-१५ (४९००४)
तद्रक्षः समरे विद्धं कृत्वा नादं भयावहम् ।
अभ्यद्रवत्ततो भीमं ये च तस्य पदानुगाः ॥ ७-१०८-१६ (४९००५)
स भीमं पञ्चभिर्विद्ध्वा शरैः सन्नतपर्वभिः ।
भैमान्परिजघानाशु रथांस्त्रिशतमाहवे ।
पुनश्चतुःशतान्हत्वा भीमं विव्याध पत्रिणा ॥ ७-१०८-१७ (४९००६)
सोऽतिविद्धस्तथा भीमो राक्षसेन महाबलः ।
निषसाद रथोपस्थे मूर्च्छयाऽभिपरिप्लुतः ॥ ७-१०८-१८ (४९००७)
प्रतिलभ्य ततः संज्ञां मारुतिः क्रोधमूर्च्छितः ।
विकृष्य कार्मुकं घोरं भारसाधनमुत्तमम् ।
अलम्बुसं शरैस्तीक्ष्णैरर्दयामास सर्वतः ॥ ७-१०८-१९ (४९००८)

स विद्धो बहुभिर्बाणैर्नीलाञ्जनचयोपमः ।
शुशुभे सर्वतो राजन्प्रफुल्ल इव किंशुकः ॥ ७-१०८-२० (४९००९)
स वध्यमानः समरे भीमचापच्युतैः शरैः ।
स्मरन्भ्रातृवधं चैव पाण्डवेन महात्मना ।
घोरं रूपमथो कृत्वा भीमसेनमभाषत ॥ ७-१०८-२१ (४९०१०)
तिष्ठेदानीं रणे पार्थ पश्य मेऽद्य पराक्रमम् ॥
बाको नाम सुदुर्बुद्धि राक्षसप्रवरो बली। ७-१०८-२२ (४९०११)
परोक्षं मम तद्वृत्तं यद्भ्राता मे हतस्त्वया ॥ ७-१०८-२३ (४९०१२)
सञ्जय उवाच। ७-१०८-२४क्ष् (४५३७)
एवमुक्त्वा ततो भीममन्तर्धानं गतस्तदा ।
महता शरवर्षेण भृशं तं समवाकिरत् ॥ ७-१०८-२४ (४९०१३)
भीमस्तु समरे राजन्नदृश्ये राक्षसे तदा ।
आकाशं पूरयामास शरैः सन्नतपर्वभिः ॥ ७-१०८-२५ (४९०१४)
स वध्यमानो भीमेन निमेषाद्रथमास्थितः ।
जगाम धरणीं चैव क्षुद्रः खं सहसाऽगमत् ॥ ७-१०८-२६ (४९०१५)
उच्चावचानि रूपाणि चकार सुबहूनि च ।
अणुर्बृहत्पुनः स्थूलो नादान्मुञ्चन्निवाम्बुदः ॥ ७-१०८-२७ (४९०१६)
शनिपेतुर्गगनाचत्वैव शरधाराः सहस्रशः ।
शक्तयः कणपाः प्रासाः शूलपट्टसतोमराः ॥ ७-१०८-२८ (४९०१७)
शतघ्न्यः परिघाश्चैव भिण्डिपालाः परश्वथाः ।
शिलाः खड्गा गुडाश्चैव ऋष्टीर्वज्राणि चैव ह ॥ ७-१०८-२९ (४९०१८)
सा राक्षसविसृष्टा तु शस्त्रवृष्टिः सुदारुणा ।
जघान पाण्डुपुत्रस्य सैनिकान्रणमूर्धनि ।॥ ७-१०८-३० (४९०१९)
उच्चावचास्तथा वाचो व्याजहार समन्ततः ।
तेन पाण्डवसैन्यानां सूदिता युधि वारणाः ॥ ७-१०८-३१ (४९०२०)
हयाश्च बहवो राजन्पत्तयश्च तथा पुनः ।
रथेभ्यो रथिनः पेतुस्तस्य नुन्नाः स्म सायकैः ॥ ७-१०८-३२ (४९०२१)
शोणितोदां रथावर्तां हस्तिग्राहसमाकुलाम् ।
छत्रहंसां कर्दमिनीं बाहुपन्नगसङ्कुलाम् ॥ ७-१०८-३३ (४९०२२)
नदीं प्रवर्तयामास रक्षोगणसमाकुलाम् ।
वहन्तीं बहुधा राजंश्चेदिपाञ्चालसृञ्जयान् ॥ ७-१०८-३४ (४९०२३)
तं तथा समरे राजन्विचरन्तमभीतवत् ।
पाण्डवा भृशसंविग्नाः प्रापश्यंस्तस्य विक्रमम् ॥ ७-१०८-३५ (४९०२४)
तावकानां तु सैन्यानां प्रहर्षः समजायत ।
वादित्रनिनदश्चोग्रः सुमहान्रोमहर्षणः ॥ ७-१०८-३६ (४९०२५)
तं श्रुत्वा निनदं घोरं तव सैन्यस्य पाण्डवः ।

नामृष्यत यथा नागस्तलशब्दं समीरितम् ॥ ७-१०८-३७ (४९०२६)
ततः क्रोधाभिताम्राक्षो निर्दहन्निव पावकः ।
सन्दधे त्वाष्ट्रमस्त्रं स स्वयं त्वष्टेव मारुतिः ॥ ७-१०८-३८ (४९०२७)
ततः शरसहस्राणि प्रादुरासन्समन्ततः ।
तैः शरैस्तव सैन्यस्य विद्रवः सुमहानभूत् ॥ ७-१०८-३९ (४९०२८)
तदस्त्रं प्रेरितं तेन भीमसेनेन संयुगे ।
राक्षसस्य महामायां हत्वा राक्षसमार्दयत् ॥ ७-१०८-४० (४९०२९)
स वध्यमानो बहुधा भीमसेनेन राक्षसः ।
सन्त्यज्य समरे भीमं द्रोणानीकमुपाद्रवत् ॥ ७-१०८-४१ (४९०३०)
तस्मिंस्तु निर्जिते राजन्राक्षसेन्द्रे महात्मना ।
अनादयन्सिंहनादैः पाण्डवाः सर्वतो दिशम् ॥ ७-१०८-४२ (४९०३१)
अपूजयन्मारुतिं च संहृष्टास्ते महाबलम् ।
प्रहादमिव दैतेया यथा शक्रं मरुद्गणाः ॥ ॥ ७-१०८-४३ (४९०३२)

इति श्रीमन्महाभारते द्रोणपर्वणि जयद्रथवधपर्वणि
चतुर्दशदिवसयुद्धे अष्टाधिकशततमोऽध्यायः ॥ १०८ ॥
Mahabharata - Drona Parva - Chapter Footnotes

५-१०८-१२ सौमदत्तेः शलस्य ॥
५-१०८-२७ बृहत् बृहन् ॥
५-१०८-२८ कुण्डलितः पाठो ङ । झ ञ । पुस्तकेषु दृश्यते ॥
५-१०८-२९ ऋष्टीः ऋष्टयः ॥
५-१०८-१०८ अष्टाधिकशततमोऽध्यायः ॥

---

द्रोनपर्व-अध्यय१०९
॥ श्रीः ॥
७.१०९. अध्यायः १०९

Mahabharata - Drona Parva - Chapter Topics
घटोत्कचेनालम्बुसवधः ॥ १ ॥

Mahabharata - Drona Parva - Chapter Text

७-१०९-० (४९०३३)
सञ्जय उवाच। ७-१०९-०क्ष् (४५३८)
गकिरन्तं शरवर्षाणि रोषाद्द्रोणं महाहवे ।

वित्रासयन्तं तां सेनां कौन्तेयानां महीपते ॥ ७-१०९-१ (४९०३४)
दृष्ट्वा ततो महेष्वासो निघ्नन्तं च रथान्भृशम् ।
घटोत्कचो महाबाहू रणायाभिजगाम ह ॥ ७-१०९-२ (४९०३५)
पिशाचवदनैर्युक्तं रथं काञ्चनभूषितम् ।
समास्थाय महाराज नानाप्रहरणैर्युतः ॥ ७-१०९-३ (४९०३६)
दंशितस्तपनीयेन कवचेन सुवर्चसा ।
भूषणैराचिताङ्गश्च नदन्निव च तोयदः ॥ ७-१०९-४ (४९०३७)
हैडिम्बेयः सुसङ्क्रुद्धो द्रोणमभ्यद्रवद्बली ।
तमभ्यधावदायान्तं क्रुद्धरूपलम्बुसः ॥ ७-१०९-५ (४९०३८)
ऋक्षचर्मपरिक्षिप्तं रथमास्थाय दंशितः ।
रक्तोष्ठः सधनुष्पाणिः प्रांशुः कल्प इव स्थितः ॥ ७-१०९-६ (४९०३९)
क्षिपञ्छतघ्नीर्विपुला मुसलोपमतोमरान् ।
मुसण्ठीर्बहुलाश्चैव त्रिशूलानपि पट्टसान् ॥ ७-१०९-७ (४९०४०)
कर्पराञ्छतधारांश्च पिनाकान्विविधांस्तथा ।
चक्राणि च क्षुरप्राणि क्षेपणीश्च कटङ्कटान् ॥ ७-१०९-८ (४९०४१)
नारायान्विविधानस्यन्सकङ्कोलूकवायसान् ।
चिक्षेप धनुरादाय निनदन्भैरवान्रवान् ॥ ७-१०९-९ (४९०४२)
तं रौद्रं क्रूरमायान्तं दृष्ट्वा कालमिवागतम् ।
प्राद्रवद्भयसंविग्ना राजन्पाण्डववाहिनी ॥ ७-१०९-१० (४९०४३)
सात्यकिस्तु रथव्याघ्रो दृष्ट्वा तं राक्षसं युधि ।
अभ्ययादमरप्रख्यो भ्रामयित्वा महद्धनुः ॥ ७-१०९-११ (४९०४४)
अभ्यद्रवच्च तद्रक्षस्तिष्ठतिष्ठेति चाब्रवीत् ।
अलम्बुसं राक्षसेन्दरं सोऽस्त्रवर्षैरवाकिरत् ॥ ७-१०९-१२ (४९०४५)
ततः पाण्डवसैन्यानि विद्रुतान्यथ भारत ।
निरीक्ष्याभ्यद्रवत्तूर्णं त्वरमाणो घटोत्कचः ॥ ७-१०९-१३ (४९०४६)
चिक्षेप च गदाशक्तीस्तोमरानथ पट्टसान् ।
हेमचित्रत्सरूनुग्रान्खङ्गानाकाशसप्रभान् ॥ ७-१०९-१४ (४९०४७)
अन्योन्यमरादालोक्य राक्षसौ तौ महाबलौ ।
भैरवं नदतुर्नादान्सतोयाविव तोयदौ ॥ ७-१०९-१५ (४९०४८)
ततः प्रववृते युद्धं घोरं राक्षससिंहयोः ।
यादृगेव पुरा वृत्तं रामरावणयोर्मृधे ॥ ७-१०९-१६ (४९०४९)
स शक्तीश्च पिनाकांश्च वज्रान्खङ्गान्परश्वथान् ।
अन्योन्यमभिसङ्क्रुद्धौ तदा व्यसृजतामुभौ ॥ ७-१०९-१७ (४९०५०)
आकृष्यमाणे धनुषि तयोर्बाहुबलेन च ।
यन्त्रेणेव तदा राजन्भृशं नादान्प्रचक्रतुः ॥ ७-१०९-१८ (४९०५१)
अलम्बुसस्ततश्चक्रं कृतान्तज्वलनप्रभम् ।

घटोत्कचाय चिक्षेप यत्नमास्थाय वीर्यवान् ॥ ७-१०९-१९ (४९०५२)
तद्भैमसेनिः सम्प्रेक्ष्य चक्रं वेगवदन्तरे ।
गदया ताडयामास तद्दीर्णं शतधाऽभवत् ॥ ७-१०९-२० (४९०५३)
ततोऽग्निचूर्णैः सहसा चक्रघातविनिःसृतैः ।
दंशकैरिव सा सेना पतद्भिर्भृशसंकुला ॥ ७-१०९-२१ (४९०५४)
ततः प्रतिहते चक्रे स वीरो रोषसंकुलः ।
प्राहिणोत्तरसा शूलं शक्तीर्दशशतं तदा ॥। ७-१०९-२२ (४९०५५)
ज्वलन्तीश्च किरन्तीश्च ज्वालामालाः समन्ततः ।
युगान्तोल्कानिभास्तीक्ष्णा हेमदण्डा महास्वनाः ॥ ७-१०९-२३ (४९०५६)
ताश्चापतन्तीः सम्प्रेक्ष्य राक्षसस्य घटोत्कचः ।
अर्धचन्द्रैः प्रचिच्छेद नाराचैः कङ्कपत्रिभिः ॥ ७-१०९-२४ (४९०५७)
ततो रोषपरीताङ्गः प्रमुमोच स राक्षसः ।
शरवर्षं महाघोरं घटोत्कचरथं प्रति'॥ ७-१०९-२५ (४९०५८)
तयोः प्रतिभयं युद्धमासीद्राक्षससिंहयोः ।
कुर्वतोर्विविधा मायाः शक्रशम्बरयोरिव ॥ ७-१०९-२६ (४९०५९)
अलम्बुसो भृशं क्रुद्धो घटोत्कचमताडयत् ॥ ७-१०९-२७ (४९०६०)
तयोर्युद्धं समभवद्रक्षोग्रामणिमुख्ययोः ।
यादृगेव पुरा वृत्तं रामरावणयोः प्रभो ॥ ७-१०९-२८ (४९०६१)
घटोत्कचस्तु विंशत्या नाराचानां स्तनान्तरे ।
अलम्बुसमथो विद्धा सिंहवद्व्यनदन्मुहुः ॥ ७-१०९-२९ (४९०६२)
तथैवालम्बुसो राजन्हैडिम्बिं युद्धदुर्मदम् ।
विद्ध्वा विद्ध्ऽनदद्धृष्टः पूरयन्खं समन्ततः ॥ ७-१०९-३० (४९०६३)
तथा तौ भृशसङ्क्रुद्धौ राक्षसेन्द्रौ महाबलौ ।
निर्विशेषमयुध्येतां मायाभिरितरेतरम् ॥ ७-१०९-३१ (४९०६४)
मायाशतसृजौ नित्यं मोहयन्तौ परस्परम् ।
मायायुद्धेषु कुशलौ मायायुद्धमयुध्यताम् ॥ ७-१०९-३२ (४९०६५)
यांयां घटोत्कचो युद्धे मायां दर्शयते नृप ।
तां तामलम्बुसो राजन्माययैव निजघ्निवान् ॥ ७-१०९-३३ (४९०६६)
तं तथा युध्यमानं तु मायायुद्धविशारदम् ।
अलम्बुसं राक्षसेन्द्रं दृष्ट्वाऽक्रुध्यन्त पाण्डवाः ॥ ७-१०९-३४ (४९०६७)
त एनं भृशसंविग्नाः सर्वतः प्रवरा रथैः ।
अभ्यद्रवन्त सङ्क्रुद्धा भीमसेनादयो नृप ॥ ७-१०९-३५ (४९०६८)
त एनं कोष्ठकीकृत्य रथवंशेन मारिष ।
सर्वतो व्यकिरन्बाणैरुल्काभिरिव कुञ्जरम् ॥ ७-१०९-३६ (४९०६९)
स तेषामस्त्रवेगं तं प्रतिहत्यास्त्रमायया ।
तस्माद्रथव्रजान्मुक्तो वनदाहादिव द्विपः ॥ ७-१०९-३७ (४९०७०)

स विष्फार्य अनुर्धोरमिन्द्राशनिसमस्वनम् ।
मारुतिं पञ्चविंशत्या भैमसेनिं च पञ्चभिः ॥ ७-१०९-३८ (४९०७१)
युधिष्ठिरं त्रिभिर्विद्धा सहदेवं च सप्तभिः ।
नकुलं च त्रिसप्तत्या द्रोपदेयांश्च मारिष ।
पञ्चभिःपञ्चभिर्विद्ध्वा घोरं नादं ननाद ह ॥ ७-१०९-३९ (४९०७२)
तं भीमसेनो नवभिः सहदेवस्तु पञ्चभिः ।
युधिष्ठिरः शतेनैव राक्षसं प्रत्यविध्यत ।
नकुलस्तु चतुःषष्ट्या द्रौपदेयास्त्रिभिस्त्रिभिः ॥ ७-१०९-४० (४९०७३)
हैडिम्बो राक्षसं विद्ध्वा युद्धे पञ्चाशता शरैः ।
पुनर्विव्याध सप्तत्या ननाद च महाबलः ॥ ७-१०९-४१ (४९०७४)
तस्य नादेन महता कम्पितेयं वसुन्धरा ।
सपर्वतवना राजन्सपादपजलाशया ॥ ७-१०९-४२ (४९०७५)
सोऽतिविद्धो महेष्वासैः सर्वतस्तैर्महारथैः ।
प्रतिविव्याध तान्सर्वान्पञ्चभिः पञ्चभिः शरैः ॥ ७-१०९-४३ (४९०७६)
तं क्रुद्धं राक्षसं युद्धे प्रतिक्रुद्धस्तु राक्षसः ।
हैडिम्बो भरतश्रेष्ठ शरैर्विव्याध सप्तभिः ॥ ७-१०९-४४ (४९०७७)
सोऽतिविद्धो बलवता राक्षसेन्द्रो महाबलः ।
व्यसृजत्सायकांस्तूर्णं रुक्मपुङ्खाञ्शिलाशितान् ॥ ७-१०९-४५ (४९०७८)
ते शरा नतपर्वाणो भैमसेनिविनिर्भिदः ।
रुषिताः पन्नगा यद्वद्योधमुख्यानुपागमन् ॥ ७-१०९-४६ (४९०७९)
ततस्ते पाण्डवा राजन्समन्तान्निशिताञ्शरान् ।
प्रेषयामासुरुद्विग्ना हैडिम्बश्च घटोत्कचः ॥ ७-१०९-४७ (४९०८०)
स विध्यमानः समरे पाण्डवैर्जितकाशिभिः ।
ग्क़नाभ्यपद्यत कर्तव्यमार्श्यशृङ्गिर्महाबलः ॥ ७-१०९-४८ (४९०८१)
घटोत्कचं महाराज शरवर्षैरवाकिरत् ।
दग्धाद्रिकूटसदृशं तमञ्जनचयोपरमम् ॥ ७-१०९-४९ (४९०८२)
घटोत्कचोऽप्यसम्भ्रान्तः शरवर्षं महत्तरम् ।
अलम्बुसवधप्रेप्सुर्मुमोचाग्निरिव ज्वलन् ॥ ७-१०९-५० (४९०८३)
अलम्बुसवधाच्चोग्राद्धटोत्कचवधादपि ।
शराः प्रादुर्भवन्ति स्म द्विरेफा इव शाखिनः ॥ ७-१०९-५१ (४९०८४)
अभ्रच्छायेव रचिता बाणैस्तत्र नरेश्वर ।
न स्म विज्ञायते किञ्चिदन्धकारे कृते शरैः ॥ ७-१०९-५२ (४९०८५)
तत आकर्णमुक्तेन भल्लेन च घटोत्कचः ।
अलम्बुसस्य चिच्छेद शिरो यन्तुर्महाबलः ॥ ७-१०९-५३ (४९०८६)
ततोऽपरैर्वेगवद्भिः क्षुरैस्तस्य घटोत्कचः ।
अक्षमीषां युगं चैव चिच्छेद युधि ताडयन् ॥ ७-१०९-५४ (४९०८७)

अवस्कन्द्य रथात्तूर्णं कैर्मीरः क्रोधमूर्च्छितः ।
तस्मिन्मायामयं घोरमस्त्रवर्षं ववर्ष ह ॥ ७-१०९-५५ (४९०८८)
घटोत्कचोऽप्याशु रथात्प्रस्कन्द्य स तमेव च ।
मायास्त्रेणैव मायास्त्रं व्यधमत्समरे रिपोः ॥ ७-१०९-५६ (४९०८९)
हैडिम्बेनार्द्यमानस्तु युधि सोऽलम्बुसोऽद्रवत् ।
अन्तर्हितो महाराज घटोत्कचमयोधयत् ॥ ७-१०९-५७ (४९०९०)
अन्तर्धानगतं दृष्ट्वा तत्रतत्र घटोत्कचः ।
गदया ताडयामास वेगवत्या महाबलः ॥ ७-१०९-५८ (४९०९१)
उत्पपात ततो व्योम्नि प्रहारपरिपीडितः ।
अलम्बुसो राक्षसेन्द्रः सहसा पक्षिराडिव ॥ ७-१०९-५९ (४९०९२)
घटोत्कचोऽप्यसम्भ्रान्तः खड्गपाणिरथोत्पतत् ।
ततो वेगेन महता विवर्षिषुरिवाम्बुदः ॥ ७-१०९-६० (४९०९३)
तमापतन्तं सम्प्रेक्ष्य कैर्मीरी राक्षसोत्तमः ।
अभिदुद्राव वेगेन सिंहः सिंहमिव स्थितम् ॥ ७-१०९-६१ (४९०९४)
दक्षिणेनासिमुद्यम्य वक्षः प्रच्छाद्य वर्मणा ।
अभिदुद्राव वेगेन वेगवन्तं घटोत्कचः ॥ ७-१०९-६२ (४९०९५)
तावुभौ वेगसंरब्धावलम्बुसघटोत्कचौ ।
अन्योन्यस्य तथैवोरू समाजघ्नतुरञ्जसा ॥ ७-१०९-६३ (४९०९६)
अन्योन्यस्याभिघातेन तयो राक्षससिंहयोः ।
शैलेनाभिहतस्येव शैलस्याभून्महास्वनः ॥ ७-१०९-६४ (४९०९७)
ततोऽपसृत्य सहसा पुनरापेततुर्भृशम् ।
चरन्तावसिमार्गांस्तान्विविधान्राक्षसोत्तमौ ॥ ७-१०९-६५ (४९०९८)
तयोर्गात्रेषु पतितावसी भिन्नौ निपेततुः ।
वेगोत्सृष्टे मघवता वज्रे शैलतटेष्विव ॥ ७-१०९-६६ (४९०९९)
ततः सैन्यानि ददृशुस्तद्युद्धमतिदारुणम् ।
युद्धं तयो राक्षसयोरामिषे श्येनयोरिव ॥ ७-१०९-६७ (४९१००)
ततो लोहितरक्ताक्षावुभौ तौ राक्षसोत्तमौ ।
तथैक्ष्येतां तु शार्दूलौ सन्ध्यारक्ताविवाम्बुदौ ॥ ७-१०९-६८ (४९१०१)
चक्राते श्येनवच्चैव मण्डलानि सहस्रशः ।
उभौ निस्त्रिंशहस्तौ तौ सपक्षाविव पक्षिणौ ॥ ७-१०९-६९ (४९१०२)
भ्रामयित्वा तु तं खड्गं पाण्डोः किर्मीरनन्दनः ।
चिक्षेपास्य शिरो हर्तुं स च तस्य घटोत्कचः ॥ ७-१०९-७० (४९१०३)
तावसी युगपद्दीप्तौ समेत्य विपुलौ भुवि ।
पतितौ तौ तु बाहुभ्यां राक्षसौ समसज्जताम् ॥ ७-१०९-७१ (४९१०४)
शीर्षाघातांसधातैश्च परस्परमथाहतौ ।
पुनर्विमिश्रितौ वीरौ व्यायुध्येते मुहुर्मुहुः ॥ ७-१०९-७२ (४९१०५)

भैमसेनिरथोत्क्षिप्य समाविध्य पुनः पुनः ।
निष्पिपेष क्षितौ क्षिप्रं पूर्णकुम्भमिवाश्मनि ॥ ७-१०९-७३ (४९१०६)
बललाघवसम्पन्नः सम्पन्नो विक्रमेण च ।
भैमसेनिरथ क्रुद्धः सर्वसैन्यस्य पश्यतः ॥ ७-१०९-७४ (४९१०७)
असृक्क्षरितसर्वाङ्गश्चूर्णितास्थिविभूषणः ।
घटोत्कचेन निष्पिष्टो हतः सालकटङ्कटः ॥ ७-१०९-७५ (४९१०८)
पाण्डवानां ततः सेना तं दृष्ट्वा विनिपातितम् ।
ननाद सुमहानादं हर्षवेगसमाप्लुता ॥ ७-१०९-७६ (४९१०९)
ततस्तु निपपाताशु गतासुर्भुवि राक्षसः ।
शिखरं पर्वतस्येव वज्रवेगेन पातितम् ॥ ७-१०९-७७ (४९११०)
पतता तेन महता रथिनां दन्तिनां दश ।
तव सैन्ये महाराज निहताः सुबृहत्तया ॥ ७-१०९-७८ (४९१११)
ततो घटोत्कचो हत्वा तद्रक्षो वृत्रसन्निभम् ।
पुनः स रथमास्थाय विजिगीषुर्ननादह'॥ ७-१०९-७९ (४९११२)
ततः सुमनसः पार्था हते तस्मिन्निशाचरे ।
चुक्रुशुः सिंहनादांश्च वासांस्यादुधुवुश्च ह ॥ ७-१०९-८० (४९११३)
तावकाश्च हतं दृष्ट्वा राक्षसेन्द्रं महाबलम् ।
अलम्बुसं तथा शूरा विशीर्णमिव पर्वतम् ।
हाहाकारमकार्षुश्च सैन्यानि भरतर्षभ ॥ ७-१०९-८१ (४९११४)
जनाश्च तद्ददृशिरे रक्षः कौतूहलान्विताः ।
यदृच्छया निपतितं भूमावङ्गारकं यथा ॥ ७-१०९-८२ (४९११५)
घटोत्कचस्तु तद्धत्वा रक्षो बलवतां वरम् ।
मुमोच बलवन्नादं बलं हत्वेव वासवः ॥ ७-१०९-८३ (४९११६)
स पूज्यमानः पितृभिः सबान्धवै--
र्घटोत्कचः कर्मणि दुष्करे कृते ।
रिपुं निहत्याभिननन्द वै तदा
ह्यलम्बुसं पक्वमलम्बुषं यथा ॥ ७-१०९-८४ (४९११७)
ततो निनादः सुमहान्समुत्थितः
सशङ्खनानाविधबाणघोषवान् ।
निशम्य तं प्रत्यनदंस्तु पाण्डवा--
स्ततो ध्वनिर्भुवनमथाऽस्पृशद्भृशम् ॥ ७-१०९-८५ (४९११८)
गततोऽभिगम्य राजानं धर्मपुत्रं युधिष्ठिरम् ।
स्वकर्मावेदयन्मूर्ध्ना प्राञ्जलिर्निपपात ह ॥ ७-१०९-८६ (४९११९)
मूर्ध्न्युपाघ्राय तं ज्येष्ठः परिष्वज्य च पाण्डवः ।
प्रितोऽस्मीत्यब्रवीद्राजन्हर्षादुत्फुल्ललोचनः ॥ ७-१०९-८७ (४९१२०)
घटोत्कचेन निष्पिष्टे हते सालकटङ्कटे ।

बभूवुर्मुदिताः सर्वे हते तस्मिन्निशाचरे'॥ ॥ ७-१०९-८८ (४९१२१)

इति श्रीमन्महाभारते द्रोणपर्वणि जयद्रथवधपर्वणि
चतुर्दशदिवसयुद्धे नवाधिकशततमोऽध्यायः ॥ १०९ ॥

Mahabharata - Drona Parva - Chapter Footnotes

५-१०९-१ रक्षोग्रामणिमुख्ययोः रक्षःपतिप्रघानयोः ॥
५-१०९-क नाभ्यपद्यतेत्यारभ्य विजिगीषुर्ननादहेति ७९
तमश्लोकपर्यन्तं विद्यमानानां श्लोकानां स्थाने अधोलिखिताः
सार्धषट्श्लोका एव झ पुस्तके सन्ति । मर्त्यधर्ममनुप्राप्तः कर्तव्यं
नान्वपद्यत। ततःसमरशौण्डो वै भैमसेनिर्महाबलः ॥
समीक्ष्य तदवस्थं तं वधायास्य मनो दधे । वेगं चक्रे महान्तं
च राक्षसेन्द्रथं प्रति ॥
दग्धाद्रिकूटशृङ्गाभं भिन्नाञ्जनचयोपमम् । रथाद्रथमभिद्रुत्य
क्रुद्धो हैडिम्बिराक्षिपत् ॥
उद्ववर्ह रथाच्चापि पन्नागं गरुडो यथा । समुत्क्षिप्य च
बाहुभ्यामाविद्ध्य च पुनः पुनः ॥
निष्पिपेष क्षितौ क्षिप्रं पूर्णकुम्भमिवाश्मनि । बललाघवसम्पन्नः
सम्पन्नो विक्रमेण च ॥
भैमसेनी रणे क्रुद्धः सर्वसैन्यान्यभीषयत् । स
विष्फारितसर्वाङ्गश्चूर्णितास्थिर्विभीषणः ॥
घटोत्कचेन वीरेण हतः सालकटङ्कटः। ५-१०९-१५ भुवनं स्वर्लोकम्। ।
५-१०९-१०९ नवाधिकशततमोऽध्यायः ॥

---

द्रोनपर्व-अध्यय११०
॥ श्रीः ॥
७.११०. अध्यायः ११०

Mahabharata - Drona Parva - Chapter Topics
रणाङ्कणो पाञ्चजन्यस्वने श्रुते अश्रुतेच गाण्डीवघोषे
अर्जुनस्य विपदमाशङ्कमानेन युधिष्ठिरेण सात्यकिम्प्रति
अर्जुनवृत्तान्तपरिज्ञानाय गमनचोदना ॥ १ ॥

Mahabharata - Drona Parva - Chapter Text

७-११०-० (४९१२२)

धृतराष्ट्र उवाच। ७-११०-०क्ष् (४५३९)
भारद्वाजं कथं युद्धे युयुधानो न्यवारयत् ।
सञ्जयाचक्ष्व तत्त्वेन परं कौतूहलं हि मे ॥ ७-११०-१ (४९१२३)
सञ्जय उवाच। ७-११०-२क्ष् (४५४०)
शृणु राजन्महाप्राज्ञ सङ्ग्रामं रोमहर्षणम् ।
द्रोणस्य पाण्डवैः सार्धं युयुधानपुरोगमैः ॥ ७-११०-२ (४९१२४)
वध्यमानं बलं दृष्ट्वा युयुधानेन मारिष ।
अभ्यद्रवत्स्वयं द्रोणः सात्यकिं सत्यविक्रमम् ॥ ७-११०-३ (४९१२५)
तमापतन्तं सहसा भारद्वाजं महारथम् ।
सात्यकिः पञ्चविंशत्या क्षुद्रकाणां समार्पयत् ॥ ७-११०-४ (४९१२६)
द्रोणोऽपि युधि विक्रान्तो युयुधानं समाहितः ।
अविध्यत्पञ्चभिस्तूर्णं हेमपुङ्खैः शरैः शितैः ॥ ७-११०-५ (४९१२७)
ते वर्म भित्त्वा सुदृढं द्विषत्पिशितभोजनाः ।
अभ्ययुर्धरणीं राजन्वल्मीकमिव पन्नगाः ॥ ७-११०-६ (४९१२८)
दीर्घबाहुरभिक्रुद्धस्तोत्रार्दित इव द्विपः ।
द्रोणं पञ्चाशताऽविध्यन्नाराचैरग्निसन्निभैः ॥ ७-११०-७ (४९१२९)
भारद्वाजो रणे विद्धो युयुधानेन सत्वरम् ।
सात्यकिं बहुभिर्बाणैर्यतमानमविध्यत ॥ ७-११०-८ (४९१३०)
ततः क्रुद्धो महेष्वासो भूय एव महाबलः ।
सात्वतं पीडयामास व्रातेन नतपर्वणाम् ॥ ७-११०-९ (४९१३१)
स वध्यमानः समरे भारद्वाजेन सात्यकिः ।
नान्वपद्यत कर्तव्यं किञ्चिदेव विशाम्पते ॥ ७-११०-१० (४९१३२)
विषण्णवदनश्चापि युयुधानोऽभवन्नृप ।
भारद्वाजं रणे दृष्ट्वा विसृजन्तं शिताञ्शरान् ॥ ७-११०-११ (४९१३३)
तं तु सम्प्रेक्ष्य ते पुत्राः सैनिकाश्च विशाम्पते ।
प्रहृष्टमनसो भूत्वा सिंहवद्व्यनदन्मुहुः ॥ ७-११०-१२ (४९१३४)
तं श्रुत्वा निनदं घोरं पीड्यमानं च माधवम् ।
युधिष्ठिरोऽब्रवीद्राजा सर्वसैन्यानि भारत ॥ ७-११०-१३ (४९१३५)
एष वृष्णिवरो वीरः सात्यकिः सत्यविक्रमः ।
ग्रस्यते युधि वीरेण भानुमानिव राहुणा ।
अभिद्रवत गच्छध्वं सात्यकिर्यत्र युध्यते ॥ ७-११०-१४ (४९१३६)
अभिद्रवत गच्छद्वं सात्यकिर्यत्र युध्यते ॥
धृष्टद्युम्नं च पाञ्चाल्यमिदमाह जनाधिपः ।
ग्द्रोणं वारय सुक्षित्रं सात्यकिं मावधीद्द्विजः'॥ ७-११०-१५ (४९१३७)
अभिद्रव द्रुतं द्रोणं किमु तिष्ठसि पार्षत ।
न पश्यसि भयं द्रोणाद्घोरं नः समुपस्थितम् ॥ ७-११०-१६ (४९१३८)

असौ द्रोणो महेष्वासो युयुधानेन संयुगे ।
क्रीडते सूत्रबद्धेन पक्षिणा बालको यथा ॥ ७-११०-१७ (४९१३९)
तत्रैव सर्वे गच्छन्तु भीमसेनपुरोगमाः ।
त्वयैव सहिताः सर्वे युयुधानरथं प्रति ॥ ७-११०-१८ (४९१४०)
पृष्ठतोऽनुगमिष्यामि त्वामहं सहसैनिकः ।
सात्यकिं मोक्षयस्वाद्य यमदंष्ट्रान्तरं गतम् ॥ ७-११०-१९ (४९१४१)
सञ्जय उवाच। ७-११०-२०क्ष् (४५४१)
एवमुक्त्वा ततो राजा सर्वसैन्येन भारत ।
अभ्यद्रवद्रणे द्रोणं युयुधानस्य कारणात् ॥ ७-११०-२० (४९१४२)
तत्रारावो महानासीद्द्रोणमेकं युयुत्सताम् ।
पाण्डवानां च भद्रं ते सृञ्जयानां च सर्वशः ॥ ७-११०-२१ (४९१४३)
ते समेत्य नरव्याघ्रा भारद्वाजं महारथम् ।
अभ्यवर्षञ्शरैस्तीक्ष्णैः कङ्कबर्हिणवाजितैः ॥ ७-११०-२२ (४९१४४)
स्मयन्नेव तु तान्वीरान्द्रोणः प्रत्यग्रहीत्स्वयम् ।
अतिथीनागतान्यद्वत्सलिलेनासनेन च ॥ ७-११०-२३ (४९१४५)
तर्पितास्ते शरैस्तस्य भारद्वाजस्य धन्विनः ।
आतिथेयं गृहं प्राप्य तर्प्यन्तेऽतिथयो यथा ॥ ७-११०-२४ (४९१४६)
भारद्वाजं च ते सर्वे न शेकुः प्रतिवीक्षितुम् ।
मध्यन्दिनमनुप्राप्तं सहस्रांशुमिव प्रभो ॥ ७-११०-२५ (४९१४७)
तांस्तु सर्वान्महेष्वासान्द्रोणः शस्त्रभृतां वरः ।
अतापयच्छरव्रातैर्गभस्तिभिरिवांशुमान् ॥ ७-११०-२६ (४९१४८)
वध्यमाना महाराज पाण्डवाः सृञ्जयास्तथा ।
त्रातारं नाध्यगच्छन्त पङ्कमग्ना इव द्विपाः ॥ ७-११०-२७ (४९१४९)
द्रोणस्य च व्यदृश्यन्त विसर्पन्तो महाशराः ।
गभस्तय इवार्कस्य प्रतपन्तः समन्ततः ॥ ७-११०-२८ (४९१५०)
तस्मिन्द्रोणेन निहताः पाञ्चालाः पञ्चविंशतिः ।
महारथाः समाख्याता धृष्टद्युम्नस्य सम्मताः ॥ ७-११०-२९ (४९१५१)
पाण्डूनां सर्वसैन्येषु पाञ्चालानां तथैव च ।
द्रोणं स्म ददृशुः शूरं विनिघ्नन्तं वरान्वरान् ॥ ७-११०-३० (४९१५२)
केकयानां शतं हत्वा विद्राव्य च समन्ततः ।
द्रोणस्तस्थौ महाराज व्यादितास्य इवान्तकः ॥ ७-११०-३१ (४९१५३)
पाञ्चालान्सृञ्जयान्मत्स्यान्केकयांश्च नराधिप ।
द्रोणोऽजयन्महाबाहुः शतशोऽथ सहस्रशः ॥ ७-११०-३२ (४९१५४)
तेषां समभवच्छब्दो विद्धानां द्रोणसायकैः ।
वनौकसामिवारण्ये व्याप्तानां धूमकेतुना ॥ ७-११०-३३ (४९१५५)
तत्र देवाः सगन्धर्वाः पितरश्चाब्रुवन्नृप ।

एते द्रवन्ति पाञ्चालाः पाण्डवाश्च ससैनिकाः ॥ ७-११०-३४ (४९१५६)
तं तथा समरे द्रोणं निघ्नन्तं सौमकान्रणे ।
न चाप्यभिययुः केचिदपरे नैव विव्यधुः ॥ ७-११०-३५ (४९१५७)
वर्तमाने तथा रौद्रे तस्मिन्वीरवरक्षये ।
अशृणोत्सहसा पार्थः पाञ्चजन्यस्य निःस्वनम् ॥ ७-११०-३६ (४९१५८)
पूरिते वासुदेवेन शङ्खराजे महात्मना ।
युध्यमानेषु वीरेषु सैन्धवस्याभिरक्षिषु ॥ ७-११०-३७ (४९१५९)
नदत्सु धार्तराष्ट्रेषु विजयस्य रथं प्रति ।
गाण्डीवस्य च निर्घोषे विप्रनष्टे समन्ततः ॥ ७-११०-३८ (४९१६०)
कश्मलाभिहतो राजा चिन्तयामास पाण्डवः ।
न नूनं स्वस्ति पार्थाय यथा नदति शङ्खराट् ॥ ७-११०-३९ (४९१६१)
कौरवाश्च यथा हृष्टा विनदन्ति मुहुर्मुहुः ।
ग्व्यक्तमद्य विनश्यन्ति सर्वलोकमहारथाः'॥ ७-११०-४० (४९१६२)
एवं सञ्चिन्तयित्वा तु व्याकुलेनान्तरात्मना ।
अजताशत्रुः कौन्तेयः सात्वतं प्रत्यभाषत ॥ ७-११०-४१ (४९१६३)
बाष्पगद्गदया वाचा मुह्यमानो मुहुर्मुहुः ।
कृत्यस्यानन्तरापेक्षी शैनेयं शिनिपुङ्गवम् ॥ ७-११०-४२ (४९१६४)
युधिष्ठिर उवाच। ७-११०-४३क्ष् (४५४२)
यः स धर्मः पुरा दृष्टः सद्भिः शैनेय शाश्वतः ।
साम्पराये सुहृत्कृत्ये तस्य कालोऽयमागतः ॥ ७-११०-४३ (४९१६५)
सर्वेष्वपि च योधेषु चिन्तयञ्शिनिपुङ्गव ।
त्वत्तः सुहृत्तमं कञ्चिन्नाभिजानामि सात्यके ॥ ७-११०-४४ (४९१६६)
यो हि प्रीतमना नित्यं यश्च नित्यमनुव्रतः ।
स कार्ये साम्पराये तु नियोज्य इति मे मतिः ॥ ७-११०-४५ (४९१६७)
यथा च केशवो नित्यं पाण्डवानानं परायणम् ।
तथा त्वमपि वार्ष्णेय कृष्णतुल्यपराक्रमः ॥ ७-११०-४६ (४९१६८)
सोऽहं भारं समाधास्ये त्वयि तं वोढुमर्हसि ।
अभिप्रायं च मे नित्यं न वृथा कर्तुमर्हसि ॥ ७-११०-४७ (४९१६९)
स त्वं भ्रातुर्वयस्यस्य गुरोरपि च संयुगे ।
कुरु कृच्छ्रे सहायार्थमर्जुनस्य नरर्षभ ॥ ७-११०-४८ (४९१७०)
त्वं हि सत्यव्रतः शूरो मित्राणामभयङ्करः ।
लोके विख्यायसे वीर कर्मभिः सत्यवागिति ॥ ७-११०-४९ (४९१७१)
यो हि शैनेय मित्रार्थे युध्यमानस्त्यजेत्तनुम् ।
पृथिवीं च द्विजातिभ्यो यो दद्यात्स समो भवेत् ॥ ७-११०-५० (४९१७२)
श्रुताश्च बहवोऽस्माभी राजानो ये दिवं गताः ।
दत्त्वेमां पृथिवीं कृत्स्नां ब्राह्मणेभ्यो यथाविधि ॥ ७-११०-५१ (४९१७३)

ग्दीयमाना च बहुभिर्दास्यते च मुहुर्मही ।
न हि कश्चिद्रणे प्राणान्मित्रार्थे त्यक्तवानिह'॥ ७-११०-५२ (४९१७४)
एवं त्वामपि धर्मात्मन्प्रयाचेऽहं कृताञ्जलिः ।
पृथिवीदानतुल्यं स्यादधिकं वा फलं विभो ॥ ७-११०-५३ (४९१७५)
एक एव सदा कृष्णो मित्राणामभयङ्करः ।
रणे सन्तजति प्राणान्द्वितीयस्त्वं च सात्यके ॥ ७-११०-५४ (४९१७६)
विक्रान्तस्य च वीरस्य युद्धे प्रार्थयतो यशः ।
शूर एव सहायः स्यान्नेतरः प्राकृतो जनः ॥ ७-११०-५५ (४९१७७)
ईदृशे तु परामर्दे वर्तमानस्य माधव ।
त्वदन्यो हि रणे गोप्ता विजयस्य न विद्यते ॥ ७-११०-५६ (४९१७८)
श्लाघन्नेव हि कर्माणि शतशस्तव पाण्डवः ।
मम सञ्चनयन्हर्षं पुनः पुनरकीर्तयत् ॥ ७-११०-५७ (४९१७९)
लघुहस्तश्चित्रयोधी तथा लघुपराक्रमः ।
प्राज्ञः सर्वास्त्रविच्छूरो मुह्यते न च संयुगे ॥ ७-११०-५८ (४९१८०)
महास्कन्धो महोरस्को महाबाहुर्महाहनुः ।
महाबलो महावीर्यः स महात्मा महारथः ॥ ७-११०-५९ (४९१८१)
शिष्यो मम सखा चैव प्रियोऽस्याहं प्रियश्च मे ।
युयुधानः सहायो मे प्रमथिष्यति कौरवान् ॥ ७-११०-६० (४९१८२)
अस्मदर्थे च राजेन्द्र सन्नह्येद्यदि केशवः ।
रामो वाप्यनिरुद्धो वा प्रद्युम्नो वा महारथः ॥ ७-११०-६१ (४९१८३)
गदो वा मारणो वापि साम्वो वा सह वृष्णिभिः ।
सहायार्थं महाराज सङ्ग्रामोत्तममूर्धनि ॥ ७-११०-६२ (४९१८४)
तथाप्यहं नरव्याघ्रं शैनेयं सत्यविक्रमम् ।
साहाय्ये विनियोक्ष्यामि नास्ति मेऽन्योहि तत्समः ॥ ७-११०-६३ (४९१८५)
इति द्वैतवने तात मामुवाच धनञ्जयः ।
परोक्षे त्वद्गुणांस्तथ्यान्कथयन्नार्यसंसदि ॥ ७-११०-६४ (४९१८६)
तस्य त्वमेवं सङ्कल्पं न वृथा कर्तुमर्हसि ।
धनञ्जयस्य वार्ष्णेय मम भीमस्य चोभयोः ॥ ७-११०-६५ (४९१८७)
यच्चापि तीर्थानि चरन्नगच्छं द्वारकां प्रति ।
तत्राहमपि ते भक्तिमर्जुनं प्रति दृष्टवान् ॥ ७-११०-६६ (४९१८८)
न तन्सौहृदनन्येपु मया शैनेय लक्षितम् ।
यथा त्वमस्मान्भजसे वर्तमानानुपप्लवे ॥ ७-११०-६७ (४९१८९)
सोऽभिजात्या च भक्त्या च सख्यस्याचार्यकस्य च ।
सौहृदस्य च वीर्यस्य कुलीनत्वस्य माधव ॥ ७-११०-६८ (४९१९०)
सत्यस्य च महावाहो अनुकम्पार्थमेव च ।
अनुरूपं महेष्वास कर्म त्वं कर्तुमर्हसि ॥ ७-११०-६९ (४९१९१)

सुयोधनो हि सहसा गतो द्रोणेन दंशितः ।
पूर्वमेवानुयातास्ते कौरवाणां महारथाः ॥ ७-११०-७० (४९१९२)
सुमहान्निनदश्चैव श्रूयते विजयं प्रति ।
स शैनेय जवेनाशु गन्तुमर्हसि मानद ॥ ७-११०-७१ (४९१९३)
भीमसेनो वयं चैव संयत्ताः सहसैनिकाः ।
द्रोणमावारयिष्यामो यदि त्वां प्रतियोत्स्यते ॥ ७-११०-७२ (४९१९४)
पश्य शैनेय सैन्यानि द्रवमाणानि संयुगे ।
महान्तं चरणे शब्दं दीर्यमाणां च भारतीम् ॥ ७-११०-७३ (४९१९५)
महामारुतवेगेन समुद्रमिव पर्वसु ।
धार्तराष्टबलं तात विक्षिप्तं सव्यसाचिना ॥ ७-११०-७४ (४९१९६)
रथैर्विपरिधावद्भिर्मनुष्यैश्च हयैश्च ह ।
सैन्यं रजःसमुद्भूतमेतत्सम्परिवर्तते ॥ ७-११०-७५ (४९१९७)
संवृतः सिन्धुसौवीरैर्नखरप्रासयोधिभिः ।
अत्यन्तोपचितैः शूरैः फल्गुनः परवीरहा ॥ ७-११०-७६ (४९१९८)
नैतद्बलमसंवार्य शक्यो जेतुं जयद्रथः ।
एते हि सैन्धवस्यार्थे सर्वे सन्त्यक्तजीविताः ॥ ७-११०-७७ (४९१९९)
शरशक्तिध्वजवरं हयनागसमाकुलम् ।
पश्यैतद्धार्तराष्ट्राणामनीकं सुदुरासदम् ॥ ७-११०-७८ (४९२००)
शृणु दुन्दुभिनिर्घोषं शङ्खशब्दांश्च पुष्कलान् ।
सिंहनादरवांश्चैव रथनेमिस्वनांस्तथा ॥ ७-११०-७९ (४९२०१)
नागानां शृणु शब्दं च पत्तीनां च सहस्रशः ।
सादिनां द्रवतां चैव शृणु कम्पयतां महीम् ॥ ७-११०-८० (४९२०२)
पुरस्तात्सैन्धवानीकं द्रोणानीकं च पृष्ठतः ।
बहुत्वाद्धि नरव्याघ्र देवेन्द्रमपि पीडयेत् ॥ ७-११०-८१ (४९२०३)
अपर्यन्ते बले मग्नो जह्यादपि च जीवितम् ।
तस्मिंश्च निहते युद्धे कथं जीवेत मादृशः ॥ ७-११०-८२ (४९२०४)
सर्वथा समनुप्राप्तः सुकृच्छ्रं त्वयि जीवति ।
श्यामो युवा गुडाकेशो दर्शनीयश्च पाण्डवः ॥ ७-११०-८३ (४९२०५)
लघ्वस्त्रश्चित्रयोधी च प्रविष्टस्यात भारतीम् ।
सूर्योदये महाबाहुर्दिवसश्चातिवर्तते ॥ ७-११०-८४ (४९२०६)
तन्न जानामि वार्ष्णेय यदि जीवति वा न वा ।
कुरूणां चापि तत्सैन्यं सागरप्रतिमं महत् ॥ ७-११०-८५ (४९२०७)
एक एव च बीभत्सुः प्रविष्टस्तात भारतीम् ।
अविपह्यां महाबाहुः सुरैरपि महाहवे ॥ ७-११०-८६ (४९२०८)
न हि मे वर्तते बुद्धिरद्य युद्धे कथञ्चन ।
द्रोणोऽपि रभसो युद्धे मम पीडयते बलम् ॥ ७-११०-८७ (४९२०९)

प्रत्यक्षं ते महाबाहो यथाऽसौ चरति द्विजः ।
युगपच्च समेतानां कार्याणां त्वं विचक्षणः ।
महार्थं लघुसंयुक्तं कर्तुमर्हसि मानद ॥ ७-११०-८८ (४९२१०)
तस्य मे सर्वकार्येषु कार्यमेतन्मतं महत् ।
अर्जुनस्य परित्राणां कर्तव्यमिति संयुगे ॥ ७-११०-८९ (४९२११)
नाहं शोचामि दाशार्हं गोप्तारं जगतः पतिम् ।
स हि शक्तो रणे तात त्रींल्लोकानपि सङ्गतान् ॥ ७-११०-९० (४९२१२)
विजेतुं पुरुषव्याघ्रः सत्यमेतद्ब्रवीमि ते ।
किम्पुनर्धार्तराष्ट्रस्य बलमेतत्सुदुर्बलम् ॥ ७-११०-९१ (४९२१३)
अर्जुनस्त्वेष वार्ष्णेय पीडितो बहुभिर्युधि ।
प्रजह्यात्समरे प्राणांस्तस्माद्विन्दामि कश्मलम् ॥ ७-११०-९२ (४९२१४)
तस्य त्वं पदवीं गच्छ गच्छेयुस्त्वादृशा यथा ।
तादृशस्येदृशे काले मादृशेनाभिनोदितः ॥ ७-११०-९३ (४९२१५)
रणे वृष्णिप्रवीराणां द्वावेवातिरथौ स्मृतौ ।
प्रद्युम्नश्च महाबाहुस्त्वं च सात्वत विश्रुतः ॥ ७-११०-९४ (४९२१६)
अस्त्रे नारायणसमः सङ्कर्षणसमो बले ।
वीरतायां नरव्याघ्र धनञ्जयसमो ह्यसि ॥ ७-११०-९५ (४९२१७)
भीष्मद्रोणावतिक्रम्य सर्वयुद्धविशारदम् ।
त्वामेव पुरुषव्याघ्रं लोके सन्तः प्रचक्षते ॥ ७-११०-९६ (४९२१८)
ग्सदेवासुरगन्धर्वान्सकिन्नरमहोरगान् ।
योधयेच्च जगत्सर्वं विजयेत रिपून्बहून् ॥ ७-११०-९७ (४९२१९)
इति ब्रुवन्ति लोकेषु जनास्तव गुणांस्तथा ।
समागमेषु सर्वेषु पृथगेव च सर्वदा'।
नाशक्यं विद्यते लोके सात्यकेरिति माधव ॥ ७-११०-९८ (४९२२०)
तत्त्वां यदभिवक्ष्यामि तत्कुरुष्व महाबल ॥ ७-११०-९९ (४९२२१)
सम्भावना हि लोकस्य मम पार्थस्य चोभयोः ।
नान्यथा तां महाबाहो सम्प्रकर्तुमिहार्हसि ॥ ७-११०-१०० (४९२२२)
परित्यज्य प्रियान्प्राणान्रणे चर विभीतवत् ।
न हि शैनेय दाशार्हा रणे रक्षन्ति जीवितम् ॥ ७-११०-१०१ (४९२२३)
अयुद्धमनवस्थानं सङ्ग्रामे च पलायनम् ।
भीरूणामसतां मार्गो नैष दाशार्हसेवितः ॥ ७-११०-१०२ (४९२२४)
तवार्जुनो गुरुस्तात धर्मात्मा शिनिपुङ्गच ।
वासुदेवो गुरुश्चापि तव पार्थस्य धीमतः ॥ ७-११०-१०३ (४९२२५)
कारणद्वयमेतद्धि जानंस्त्वामहमब्रुवम् ।
मावमंस्था वचो मह्यं गुरुस्तव गुरोर्ह्यहम् ॥ ७-११०-१०४ (४९२२६)
वासुदेवमतं चैव मम चैवार्जुनस्य च ।

सत्यमेतन्मयोक्तं ते याहि यत्र धनञ्जयः ॥ ७-११०-१०५ (४९२२७)
एतद्वचनमाज्ञाय मम सत्यपराक्रम ।
प्रविशैतद्बलं तात धार्तराष्ट्रस्य दुर्मतेः ॥ ७-११०-१०६ (४९२२८)
प्रविश्य च यथान्यायं सङ्गम्य च महारथैः ।
यथार्हमात्मनः कर्म रणे सात्वत दर्शय ॥ ॥ ७-११०-१०७ (४९२२९)

इति श्रीमन्महाभारते द्रोणपर्वणि जयद्रथवधपर्वणि
चतुर्दशदिवसयुद्धे दशाधिकशततमोऽध्यायः ॥ ११० ॥
Mahabharata - Drona Parva - Chapter Footnotes

५-११०-२९ तस्मिन्नवसरे ॥
५-११०-४२ कृत्यस्य जयद्रथवधस्यानन्तरापेक्षी अविघ्नाकाङ्क्षी ॥
५-११०-४३ यः स धर्मो मैत्रीलक्षणः । साम्पराये आपत्काले ॥
५-११०-४७ वयस्यस्य स्निग्धस्य । सहायार्थं सहायरूपप्रयोजनम् ॥
५-११०-६७ उपप्लुवे विमर्दे ॥
५-११०-६८ सख्यादेरनुरूपमित्यनेनान्वयः ॥
५-११०-६९ सत्यस्याङ्गीकारस्य । अनुकम्पार्थमर्जुनानुपालननिमित्तम् ॥
५-११०-७९ श्रूयते हि रणं प्रति इति क।पाठः ॥
५-११०-८८ महार्थं महान्तमर्थम् । लघुसंयुक्तमविलम्बसम्पन्नम् ॥
५-११०-१०१ विभीतवदभीतः ॥
५-११०-१०२ अनबस्थानमस्थैर्यम् ॥
५-११०-११० दशाधिकशततमोऽध्यायः ॥

---

द्रोनपर्व-अध्यय१११
॥ श्रीः ॥
७.१११. अध्यायः १११

Mahabharata - Drona Parva - Chapter Topics
अर्जुनम्प्रति गच्छेति युधिष्ठिरचोदितेन सात्यकिना तम्प्रति
स्वस्यार्जुनेन तद्रक्षणाय नियोगाभिधानपूर्वकं स्वेन
तस्यापरित्याज्यत्वकथनम् ॥ १ ॥
युधिष्ठिरेण भीमादिभिः स्वस्य रक्षणकथनपूर्वकं पुनः
सात्यकेरर्जुनम्प्रति गमने नियोजनम् ॥ २ ॥

Mahabharata - Drona Parva - Chapter Text

७-१११-० (४९२३०)
सञ्जय उवाच। ७-१११-०क्ष् (४५४३)
प्रीतियुक्तं च हृद्यं च माननीयं च सर्वशः ।
कालयुक्तं च चित्रं च स्वधिया चाभिभाषितम् ॥ ७-१११-१ (४९२३१)
धर्मराजस्य तद्वाक्यं निश्यम्य शिनिपुङ्गवः ।
सात्यकिर्भरतश्रेष्ठ प्रत्युवाच युधिष्ठिरम् ॥ ७-१११-२ (४९२३२)
श्रुतं ते गदतो वाक्यं सर्वमेतन्मयाऽच्युत ।
न्याययुक्तं च सत्यं च फल्गुनार्थे यशस्करम् ॥ ७-१११-३ (४९२३३)
एवंविधे तथा काले मादृशं प्रेक्ष्य सत्तम ।
वक्तुमर्हसि राजेन्द्र यथा पार्थं तथैव माम् ॥ ७-१११-४ (४९२३४)
न मे धनञ्जयस्यार्थे प्राणा रक्ष्याः कथञ्चन ।
त्वत्प्रयुक्तः पुनरहं किं नकुर्यां महाहवे ॥ ७-१११-५ (४९२३५)
लोकत्रयं योधयेयं सदेवासुरमानुषम् ।
त्वत्प्रयुक्तो नरेन्द्रेन्द्र किम्पुनस्तान्सुदुर्बलान् ॥ ७-१११-६ (४९२३६)
सुयोधनबलं त्वद्य योधयिष्ये समन्ततः ।
विजेष्ये च रणे राजन्सत्यमेतद्ब्रवीमि ते ॥ ७-१११-७ (४९२३७)
कुशल्यहं कुशलिनं समासाद्य धनञ्जयम् ।
हते जयद्रथे राजन्पुनरेष्यामि तेऽन्तिकम् ॥ ७-१११-८ (४९२३८)
अवश्यं तु मया सर्वं विज्ञाप्यस्त्वं नराधिप ।
वासुदेवस्य यद्वाक्यं फल्गुनस्य च धीमतः ॥ ७-१११-९ (४९२३९)
दृढं त्वभिहितश्चाहमर्जुनेन पुनःपुनः ।
मध्ये सर्वस्य सैन्यस्य वासुदेवस्य शृण्वतः ॥ ७-१११-१० (४९२४०)
अद्य माधव राजानमप्रमत्तोऽनुपालय ।
आर्यां युद्धे मतिं कृत्वा यावद्धन्मि जयद्रथम् ॥ ७-१११-११ (४९२४१)
त्वयि चाहं महाबाहो प्रद्युम्ने वा महारथे ।
नृपं निक्षिप्य गच्छेयं निरपेक्षो जयद्रथम् ॥ ७-१११-१२ (४९२४२)
जानीषे हि रणे द्रोणं कुरुषु श्रेष्ठसम्मतम् ।
प्रतिज्ञा चापि ते नित्यं श्रुता द्रोणस्य माधव ॥ ७-१११-१३ (४९२४३)
ग्रहमे धर्मराजस्य भारद्वाजोऽपि गृध्यति ।
शक्तश्चापि रणे द्रोणो निग्रहीतुं युधिष्ठिरम् ॥ ७-१११-१४ (४९२४४)
एवं त्वयि समाधाय धर्मराजं नरोत्तमम् ।
अहमद्य गमिष्यामि सैन्धवस्य वधाय हि ॥ ७-१११-१५ (४९२४५)
ग्स त्वमद्य रणे यत्तो रक्ष माधव पाण्डवम् ।
रक्षेणे धर्मराजस्य ध्रुवो हि विजयो मम'॥ ७-१११-१६ (४९२४६)
जयद्रथं च हत्वाऽहं द्रुतमेष्यामि माधव ।
धर्मराजं न चेद्द्रोणो निगृह्णीयाद्रणे बलात् ॥ ७-१११-१७ (४९२४७)

निगृहीते नरश्रेष्ठे भारद्वाजेन माधव ।
सैन्धवस्य वधो न स्यान्ममाप्रीतिस्तथा भवेत् ॥ ७-१११-१८ (४९२४८)
एवङ्गते नरश्रेष्ठे पाण्डवे सत्यवादिति ।
अस्माकं गमनं व्यक्तं वनं प्रति भवेत्पुनः ॥ ७-१११-१९ (४९२४९)
सोऽयं मम जयो व्यक्तं व्यर्थ एव भविष्यति ।
यदि द्रोणो रणे क्रुद्धो निगृह्णीयाद्युधिष्ठिरम् ॥ ७-१११-२० (४९२५०)
स त्वमद्य महाबाहो प्रियार्थं मम माधव ।
जयार्थं च यशोर्थं च रक्ष राजानमाहवे ॥ ७-१११-२१ (४९२५१)
स भवान्मयि निक्षेपो निक्षिप्तः सव्यसाचिना ।
भारद्वाजाद्भयं नित्यं मन्यमानेन वै प्रभो ॥ ७-१११-२२ (४९२५२)
तस्यापि च महाबाहो नित्यं पश्यामि संयुगे ।
नान्यं हि प्रतियोद्धारं रौक्मिणेयादृते प्रभो ॥ ७-१११-२३ (४९२५३)
मां चापि मन्यते युद्धे भारद्वाजस्य धीमतः ।
सोऽहं संभावनानं चैतामाचार्यवचनं च तत् ।
पृष्ठतो नोत्सहे कर्तुं त्वां वा त्यक्तुं महीपते ॥ ७-१११-२४ (४९२५४)
आचार्यो लघुहस्तत्वादभेद्यकवचावृतः ।
उपलभ्य रणे क्रीडेद्यथा शकुनिना शिशुः ॥ ७-१११-२५ (४९२५५)
यदि कार्ष्णिर्धनुष्पाणिरिह स्यान्मकरध्वजः ।
तस्मै त्वां विसृजेयं वै स त्वां रक्षेद्यथाऽर्जुनः ॥ ७-१११-२६ (४९२५६)
कुरु त्वमात्मनो गुप्तिं कस्ते गोप्ता गते मयि ।
यः प्रतीयाद्रमे द्रोणं यावद्गच्छामि पाण्डवम् ॥ ७-१११-२७ (४९२५७)
मा च ते भयमद्यास्तु राजन्नर्जुनसम्भवम् ।
न स जातु महाबाहुर्भारमुद्यम्य सीदति ॥ ७-१११-२८ (४९२५८)
ये च सौवीरका योधास्तथा सैन्धवपौरवाः ।
उदीच्या दाक्षिणात्याश्च ये चान्येऽपि महारथाः ॥ ७-१११-२९ (४९२५९)
ये च कर्णमुखा राजन्रथोदाराः प्रकीर्तिताः ।
एतेऽर्जुनस्य क्रुद्धस्य कलां नार्हन्ति षोडशीम् ॥ ७-१११-३० (४९२६०)
उद्युक्ताः पृथिवीपाल ससुरासुरमानुषाः ।
सराक्षसगणा राजन्सकिन्नरमहोरगाः ॥ ७-१११-३१ (४९२६१)
जङ्गमस्थावरैः सार्धं नालं पार्थस्य संयुगे ।
एवं ज्ञात्वा महाराज व्येतु ते भीर्धनञ्जये ॥ ७-१११-३२ (४९२६२)
एवं वीरौ महेष्वासौ कृष्णौ सत्यपराक्रमौ ।
न तत्र कर्मणो व्यापत्कथंचिदपि विद्यते। ७-१११-३३ (४९२६३)
दैवं कृतास्त्रतां योगममर्षं शौर्यमाहवे ।
कृतज्ञतां दयां चैव भ्रातुस्त्वमनुचिन्तय ॥ ७-१११-३४ (४९२६४)
मयि चापि सहाये ते गच्छमानेऽर्जुनं प्रति ।

द्रोणे चित्रास्त्रतां सङ्ख्ये राजंस्त्वमनुचिन्तय ॥ ७-१११-३५ (४९२६५)
आचार्यो हि भृशं राजन्निग्रहे तव गृध्यति ।
प्रतिज्ञामात्मनो रक्षन्सत्यां कर्तुं च भारत ॥ ७-१११-३६ (४९२६६)
कुरुष्वाद्यात्मनो गुप्तिं कस्ते गोप्ता गते मयि ।
यस्याहं प्रत्ययात्पार्थं गच्छेयं फल्गुनं प्रति ॥ ७-१११-३७ (४९२६७)
न ह्यहं त्वां महाराज अनिक्षिप्य महाहवे ।
क्वचिद्यास्यामि कौरव्य सत्यमेतद्ब्रवीमि ते ॥ ७-१११-३८ (४९२६८)
ग्न पश्यामि रथं कञ्चिद्यस्ते गोप्ता भवेदिह ।
शक्तं यं मन्यसे राजन्गोप्तारं प्रति पाण्डव'॥ ७-१११-३९ (४९२६९)
एतद्विचार्य बहुशो बुद्ध्या बुद्धिमतां वर ।
दृष्ट्वा श्रेयः परं बुद्ध्या ततो राजन्प्रशाधि माम् ॥ ७-१११-४० (४९२७०)
युधिष्ठिर उवाच। ७-१११-४१क्ष् (४५४४)
एवमेतन्महाबाहो यथा वदसि माधव ।
न तु मे शुद्ध्यते भावः श्वेताश्वं प्रति मारिष ॥ ७-१११-४१ (४९२७१)
करिष्ये परमं यत्नमात्मनो रक्षणे ह्यहम् ।
गच्छ त्वं समनुज्ञातो यत्र यातो धनञ्जयः ॥ ७-१११-४२ (४९२७२)
आत्मसंरक्षणं सङ्ख्ये गमनं चार्जुनं प्रति ।
विचार्यैतत्स्वयं बुद्ध्या गमनं तत्र रोचये ॥ ७-१११-४३ (४९२७३)
स त्वमातिष्ठ यानाय यत्र यातो धनञ्जयः ।
ममापि रक्षणं भीमः करिष्यति महाबलः ॥ ७-१११-४४ (४९२७४)
पार्षतश्च ससोदर्यः पार्थिवाश्च मबाहलाः ।
द्रौपदेयाश्च मां तात रक्षिष्यन्ति न संशयः ॥ ७-१११-४५ (४९२७५)
केकया भ्रातरः पञ्च राक्षसश्च घटोत्कचः ।
विराटो द्रुपदश्चैव शिखण्डी च महारथः ॥ ७-१११-४६ (४९२७६)
धृष्टकेतुश्च बलवान्कुन्तिभोजश्च मातुलः ।
नकुलः सहदेवश्च पाञ्चालाः सृञ्जयास्तथा ।
एते समाहितास्तात रक्षिष्यन्ति न संशयः ॥ ७-१११-४७ (४९२७७)
न द्रोणः सह सैन्येन कृतवर्मा च संयुगे ।
समासादयितुं शक्तो न च मां धर्षयिष्यति ॥ ७-१११-४८ (४९२७८)
धृष्टद्युम्नश्च समरे द्रोणं क्रुद्धं परन्तपः ।
वारयिष्यति विक्रम्य वेलेव मकरालयम् ॥ ७-१११-४९ (४९२७९)
यत्र स्थास्यति सङ्ग्रामे पार्षतः परवीरहा ।
न द्रोणस्य बलं तात क्रमेत्तत्र कथञ्चन ॥ ७-१११-५० (४९२८०)
एष द्रोणविनाशाय समुत्पन्नो हुताशनात् ।
कवची स शरी खड्गी धन्वी च वरभूषणः ॥ ७-१११-५१ (४९२८१)
ग्एष द्रोणं रणे क्रुद्धं वारयेत स वै प्रभो ।

पाञ्चालः सहितैः सर्वैः पाण्डवानां च धन्विभिः'॥ ७-१११-५२ (४९२८२)
विक्रुधं गच्छ शैनेय मा कार्षीर्मयि सम्भ्रमम् ।
धृष्टद्युम्नो रणे क्रुद्धं द्रोणमावारयिष्यति ॥ ॥ ७-१११-५३ (४९२८३)

इति श्रीमन्महाभारते द्रोणपर्वणि जयद्रथवधपर्वणि
चतुर्दशदिवसयुद्धे एकादशाधिकशततमोऽध्यायः ॥ १११ ॥
Mahabharata - Drona Parva - Chapter Footnotes

५-१११-१५ एवमीदृश्यामपि कार्यगतौ ।समाधाय निक्षिप्य ॥
५-१११-१९ एवङ्गते ग्रहणं प्राप्ते ।अस्माकं चिन्तितं व्यक्तं
व्यर्थमेव भवेद्युधि इति।क ख ङ पाठः ॥
५-१११-२७ यावद्गच्छामि गमिष्यामि ॥
५-१११-२८ अर्जुनसम्भवमर्जुनविषयम् ॥
५-१११-३४ दैवममानुषताम् ।योगमभिज्ञानम् ॥
५-१११-३८ क्वचित्कस्मिंश्चित् अनिक्षिप्येत्यन्वयः ॥
५-१११-४० दृष्ट्वा निश्चित्य ॥
५-१११-४४ आतिष्ठ प्रक्रमस्व ॥
५-१११-४७ मातुलः पुरुजित् ॥
५-१११-५३ मयि मामधिकृत्य ।सम्भ्रममुद्वेगम् ॥
५-१११-१११ एकादशाधिकशततमोऽध्यायः ॥

---

द्रोनपर्व-अध्यय११२
॥ श्रीः ॥
७.११२. अध्यायः ११२

Mahabharata - Drona Parva - Chapter Topics
सात्यकेः युधिष्ठिररक्षणे भीमं नियोज्यार्जुनदर्शनाय प्रस्थानम् ॥ १ ॥

Mahabharata - Drona Parva - Chapter Text

७-११२-० (४९२८४)
सञ्जय उवाच। ७-११२-०क्ष् (४५४५)
धर्मराजस्य तद्वाक्यं निशम्य शिनिपुङ्गवः ।
स पार्थाद्भयमाशंसन्परित्यागान्महीपतेः ॥ ७-११२-१ (४९२८५)
अपवादं ह्यात्मनश्च लोकाद्रक्षन्विशेषतः ।
न मां भीतमिति ब्रूयात्प्रयान्तं फल्गुनं प्रति ॥ ७-११२-२ (४९२८६)

निश्चित्य बहुधैवं स सात्यकिर्युद्धदुर्मदः ।
नातिव्यक्तमिवाभाष्य धर्मराजं महायशाः ॥ ७-११२-३ (४९२८७)
शोकगद्गदया वाचा शोकोपहतचेतनः ।
यथेदानीमिति ध्यात्वा धर्मराजमथाब्रवीत् ॥ ७-११२-४ (४९२८८)
कृतां चेन्मन्यसे रक्षां स्वस्ति तेऽस्तु विशाम्पते ।
अनुयास्यामि बीभत्सुं करिष्ये वचनं तव ॥ ७-११२-५ (४९२८९)
न हि मे पाण्डवात्कश्चित्त्रिषु लोकेषु विद्यते ।
यो मे प्रियतरो राजन्सत्यमेतद्ब्रवीमि ते ॥ ७-११२-६ (४९२९०)
तस्याहं पदवीं यास्ये सन्देशात्तव मानद ।
त्वत्कृते न च मे किञ्चिदकर्तव्यं कथञ्चन ॥ ७-११२-७ (४९२९१)
यथा हि मे गुरोर्वाक्यं विशिष्टं द्विपदां वर ।
तथा तवापि वचनं विशिष्टतरमेव मे ॥ ७-११२-८ (४९२९२)
प्रिये हि तव वर्तेते भ्रातरौ कृष्णपाण्डवौ ।
तयोः प्रिये स्थितं चैव विद्धि मां राजपुङ्गव ॥ ७-११२-९ (४९२९३)
तवाज्ञां शिरसा गृह्य पाण्डवार्थमहं प्रभो ।
भित्त्वेदं दुर्भिदं सैन्यं प्रयास्ये नरपुङ्गव ॥ ७-११२-१० (४९२९४)
द्रणानीकं विशाम्येष क्रुद्धो झष इवार्णवम् ।
तत्र यास्यामि यत्रासौ राजन्राजा जयद्रथः ॥ ७-११२-११ (४९२९५)
यत्र सेनान्तमाश्रित्य भीतस्तिष्ठति पाण्डवात् ।
गुप्तो रथवरश्रेष्ठैर्द्रौणिकर्णकृपादिभिः ॥ ७-११२-१२ (४९२९६)
इतिस्त्रियोजनं मन्ये तमध्वानं विशाम्पते ।
यत्र तिष्ठति पार्थोऽसौ जयद्रथवधोद्यतः ॥ ७-११२-१३ (४९२९७)
त्रियोजनगतस्यापि तस्य यास्याम्यहं पदम् ।
आसैन्धववधाद्राजन्सुदृढेनान्तरात्मना ॥ ७-११२-१४ (४९२९८)
अनादिष्टस्तु गुरुणा को नु युध्येत मानवः ।
आदिष्टस्तु यथा राजन्को न युध्येत मादृशः ॥ ७-११२-१५ (४९२९९)
अभिजानामि तं देशमितः पूर्णं त्रियोजनम् ।
यत्र तिष्ठति राजाऽसौ सैन्धवो बालघातकः ॥ ७-११२-१६ (४९३००)
सागरप्रतिमं सैन्यं गर्जन्तमिव सागरम् ।
हलशक्तिगदाप्रासचर्मखड्गर्ष्टितोमरम् ।
इष्वस्त्रवरसम्बाधं क्षोभयित्वा व्रजाम्यहम् ॥ ७-११२-१७ (४९३०१)
यदेतत्कुञ्जरानीकं सहस्रमनुपश्यसि ।
कुलमाञ्जनकं नाम यत्रैते वीर्यशालिनः ॥ ७-११२-१८ (४९३०२)
आस्थिता बहुभिर्म्लेच्छैर्युद्धशौण्डैः प्रहारिभिः ।
नागा नगनिभा राजन्क्षरन्त इव तोयदाः ॥ ७-११२-१९ (४९३०३)
नैते जातु निवर्तेरन्प्रेषिता हस्तिसादिभिः ।

अन्यत्र हि वधादेषां नास्ति राजन्पराजयः ॥ ७-११२-२० (४९३०४)
अथ यान्रथिनो राजन्सहस्रमनुपश्यसि ।
एते रुक्मरथा नाम राजपुत्रा महारथाः ॥ ७-११२-२१ (४९३०५)
रथेष्वस्त्रेषु निपुणा नागेषु च विशाम्पते ।
धनुर्वेदे गताः पारं मुष्टियुद्धे च कोविदाः ॥ ७-११२-२२ (४९३०६)
गदायुद्धविशेषज्ञा नियुद्धकुशलास्तथा ।
खड्गप्रहरणे युक्ताः सम्पाते चासिचर्मणोः ॥ ७-११२-२३ (४९३०७)
शूराश्च कृतविद्याश्च स्पर्धन्ते च परस्परम् ।
नित्यं हि समरे राजन्विजिगीषन्ति मानवान् ॥ ७-११२-२४ (४९३०८)
कर्णेन विहिता राजन्दुःशासनमनुव्रताः ।
एतांस्तु वासुदेवोऽपि रथोदारान्प्रशंसति ॥ ७-११२-२५ (४९३०९)
सततं प्रियकामाश्च कर्णस्यैते वशे स्थिताः ।
तस्यैव वचनाद्राजन्निवृत्ताः श्वेतवाहनात् ॥ ७-११२-२६ (४९३१०)
ते न क्लान्ता न च श्रान्ता दृढावरणकार्मुकाः ।
मदर्थेऽधिष्ठिता नूनं धार्तराष्ट्रस्य शासनात् ॥ ७-११२-२७ (४९३११)
एतान्प्रमथ्य सङ्ग्रामे प्रियार्थं तव कौरव ।
प्रयास्यामि ततः पश्चात्पदवीं सव्यसाचिनः ॥ ७-११२-२८ (४९३१२)
यांस्त्वेतानपरान्राजन्नागान्सप्तशतानिमान् ।
प्रेक्षसे वर्मसञ्छन्नान्किरातैः समधिष्ठितान् ॥ ७-११२-२९ (४९३१३)
किरातराजो यान्प्रादाद्गृहीतः सव्यसाचिना ।
स्वलङ्कृतांस्तदा प्रेष्यानिच्छञ्जीवितमात्मनः ॥ ७-११२-३० (४९३१४)
आसन्नेते पुरा राजंस्तव कर्मकरा दृढम् ।
त्वामेवाद्य युयुत्सन्ते पश्य कालस्य पर्ययम् ॥ ७-११२-३१ (४९३१५)
एषामेते महामात्राः किराता युद्धदुर्मदाः ।
हस्तिशिक्षाविदश्चैव सर्वे चैवाग्नियोनयः ॥ ७-११२-३२ (४९३१६)
एते विनिर्जिताः सङ्ख्ये सङ्ग्रामे सव्यसाचिना ।
मदर्थमद्य संयत्ता दुर्योधनवशानुगाः ॥ ७-११२-३३ (४९३१७)
एतान्हत्वा शरै राजन्किरातान्युद्धदुर्मदान् ।
सैन्धवस्य वधे यत्तमनुयास्यामि पाण्डवम् ॥ ७-११२-३४ (४९३१८)
ये त्वेते सुमहानाग अञ्जनस्य कुलोद्भवाः ।
कर्कशाश्च विनीताश्च प्रभिन्नकरटामुखाः ॥ ७-११२-३५ (४९३१९)
जाम्बूनदमयैः सर्वैर्वर्मभिः सुविभूषिताः ।
लब्धलक्षा रणे राजन्नैरावणसमा युधि ॥ ७-११२-३६ (४९३२०)
आस्थिता दस्युभिस्तीक्ष्णैः शूरैरुत्तमपार्वतैः ।
कर्कशैः प्रवरैर्योधैः कार्ष्णायसतनुच्छदैः ॥ ७-११२-३७ (४९३२१)
सन्ति गोयोनयश्चात्र सन्ति वानरयोनयः ।

अनेकयोनयश्चान्ये तथा मानुषयोनयः ॥ ७-११२-३८ (४९३२२)
अनीकमसतामेतद्धूम्रवर्णमुदीर्यते ।
म्लेच्छानां पापकर्तॄणां हिमदुर्गनिवासिनाम् ॥ ७-११२-३९ (४९३२३)
एतद्दुर्योधनो लब्ध्वा समग्रं राजमण्डलम् ।
कृपं च सौमदत्तिं च द्रोणं च रथिनां वरम् ॥ ७-११२-४० (४९३२४)
सिन्धुराजं तथा कर्णमवमन्यत पाण्डवान् ।
कृतार्थमथ चात्मानं मन्यते कालचोदितः ॥ ७-११२-४१ (४९३२५)
ते तु सर्वेऽद्य सम्प्राप्ता मम नाराचगोचरम् ।
नभविष्यन्ति कौन्तेय यद्यपि स्युर्मनोजवाः ॥ ७-११२-४२ (४९३२६)
तेन संभाविता नित्यं परवीर्योपजीविना ।
विनाशमुपयास्यन्ति मच्छरौघनिपीडिताः ॥ ७-११२-४३ (४९३२७)
ये त्वेते रथिनो राजन्दृश्यन्ते काञ्चनध्वजाः ।
एते दुर्वारणा नाम काम्भोजा यदि ते श्रुताः ॥ ७-११२-४४ (४९३२८)
शूराश्च कृतविद्याश्च धनुर्वेदे च निष्ठिताः ।
संहताश्च भृशं ह्येते अन्योन्यस्य हितैषिणः ॥ ७-११२-४५ (४९३२९)
अक्षौहिण्यश्च संरब्धा धार्तराष्ट्रस्य भारत ।
यत्ता मदर्थे तिष्ठन्ति कुरुवीराभिरक्षिताः ॥ ७-११२-४६ (४९३३०)
अप्रमत्ता महाराज मामेव प्रत्युपस्थिताः ।
तानहं प्रमथिष्यामि तृणानीव हुताशनः ॥ ७-११२-४७ (४९३३१)
तस्मात्सर्वानुपासङ्गान्सर्वोपकरणानि च ।
रथे कुर्वन्तु मे राजन्यथावद्रथकल्पकाः ॥ ७-११२-४८ (४९३३२)
अस्मिंस्तु किल सम्मर्दे ग्राह्यं विविधमायुधम् ।
यथोपदिष्टमाचार्यैः कार्यः पञ्चगुणो रथः ॥ ७-११२-४९ (४९३३३)
काम्भोजैर्हि समेष्यामि तीक्ष्णैराशीविषोपमैः ।
नानाशस्त्रसमावायैर्विविधायुधयोधिभिः ॥ ७-११२-५० (४९३३४)
किरातैश्च समेष्यामि विषकल्पैः प्रहारिभिः ।
लालितैः सततं राज्ञा दुर्योधनहितैषिभिः ॥ ७-११२-५१ (४९३३५)
शकैश्चापि समेष्यामि शक्रतुल्यपराक्रमैः ।
अग्निकल्पैर्युराधर्षैः प्रदीप्तैरिव पावकैः ॥ ७-११२-५२ (४९३३६)
तथाऽन्यैर्विविधैर्योधैः कालकल्पैर्दुरासदैः ।
समेष्यामि रणे राजन्बहुभिर्युद्धदुर्मदैः ॥ ७-११२-५३ (४९३३७)
गत्रियोजनगतस्यापि पदवीं सव्यसाचिनः ।
यास्यामि रथिनां श्रेष्ठं प्रवरं च धनुष्मताम् ॥ ७-११२-५४ (४९३३८)
सूर्योदयगतस्याहं पाण्डवस्य गतिं चरन् ।
अपराह्णगते सूर्ये गमिष्यामि न संशयः'॥ ७-११२-५५ (४९३३९)
तस्माद्वै वाजिनो मुख्यान्विश्रुताञ्शुभलक्षणैः ।

उपावृत्तांश्च पीतांश्च पुनर्युञ्जन्तु मे रथे ॥ ७-११२-५६ (४९३४०)
सञ्जय उवाच। ७-११२-५७क्ष् (४५४६)
तस्य सर्वानुपासङ्गान्सर्वोपकरणानि च ।
रथे चास्थापयद्राजा शस्त्राणि विविधानि च ॥ ७-११२-५७ (४९३४१)
ततस्तान्सर्वतोमुक्तान्सदश्वांश्चतुरो जनाः ।
रसवत्पाययामासुः पानं मदसमीरणम् ॥ ७-११२-५८ (४९३४२)
पीतोपवृत्तान्स्नातांश्च जग्धान्नान्समलङ्कृतान् ।
विनीतशल्यांस्तुरगांश्चतुरो हेममालिनः ॥ ७-११२-५९ (४९३४३)
तान्युक्तान्रुक्मवर्णाभान्विनीताञ्शीघ्रगामिनः ।
संहृष्टमनसो व्यग्रान्विधिवत्कल्पितान्रथे ॥ ७-११२-६० (४९३४४)
महाध्वजेन सिंहेन हेमकेसरमालिना ।
संवृते केतकैर्हैमैर्मणिविद्रुमचित्रितैः ॥ ७-११२-६१ (४९३४५)
पाण्डुराभ्रप्रकाशाभिः पताकाभिरलङ्कृते ।
हेमदण्डोच्छ्रितच्छत्रे बहुशस्त्रपरिच्छदे ।
योजयामास विधिवद्धेमभाण्डविभूषितान् ॥ ७-११२-६२ (४९३४६)
दारुकस्यानुजो भ्राता सूतस्तस्य प्रियः सखा ।
न्यवेदयद्रथं युक्तं वासवस्येव मातलिः ॥ ७-११२-६३ (४९३४७)
ततः स्नातः शुचिर्भूत्वा कृतकौतुकमङ्गलः ।
स्नातकानां सहस्रस्य स्वर्णनिष्कानथो ददौ ॥ ७-११२-६४ (४९३४८)
आशीर्वादैः परिष्वक्तः सात्यकिः श्रीमतां वरः ।
ततः समधुपर्काम्भः पीत्वा कैरातकं मधु ॥ ७-११२-६५ (४९३४९)
लोहिताक्षो बभौ तत्र मदविह्वललोचनः ।
आलभ्य वीरकांस्यं च हर्षेण महताऽन्वितः ॥ ७-११२-६६ (४९३५०)
द्विगुणीकृततेजोभिः प्रज्वलन्निव पावकः ।
उत्सङ्गे धनुरादाय सशरं रथिनां वरः ॥ ७-११२-६७ (४९३५१)
ग्आशीर्वादैः परिष्वक्तः सात्यकिः श्रीमतां वरः'।
कृतस्वस्त्ययनो विप्रैः कवची समलङ्कृतः ॥ ७-११२-६८ (४९३५२)
लाजैर्गन्धैस्तथा माल्यैः कन्याभिश्चाभिनन्दितः ।
युधिष्ठिरस्य चरणावभिवाद्य कृताञ्जलिः ॥ ७-११२-६९ (४९३५३)
तेन मूर्धन्युपाघ्रातः कृतस्वस्त्ययनोऽपि च ।
आशिषो विविधाः श्रुत्वा धर्मराजमुखेरिताः ।
हर्षेण महता युक्त आरुरोह महारथम् ॥ ७-११२-७० (४९३५४)
ततस्ते वाजिनो हृष्टाः सुपुष्टा वातरंहसः ।
अजय्या जैत्रमूहुस्तं विकुर्वाणाः स्म सैन्धवाः ।
यथा शक्ररथं राजन्नूहुस्ते हरयः पुरा ॥ ७-११२-७१ (४९३५५)
तथैव भीमसेनोऽपि धर्मराजेन पूजितः ।

प्रायात्सात्यकिना सार्धमभिवाद्य युधिष्ठिरम् ॥ ७-११२-७२ (४९३५६)
तौ दृष्ट्वा प्रविविक्षन्तौ तव सेनामरिंदमौ ।
संयत्तास्तावकाः सर्वे तस्थुर्द्रोणपुरोगमाः ॥ ७-११२-७३ (४९३५७)
सन्नद्धमनुगच्छन्तं दृष्ट्वा भीमं स सात्यकिः ।
अभिनन्द्याब्रवीद्वीरस्तदा हर्षकरं वचः ॥ ७-११२-७४ (४९३५८)
त्वं भीम रक्ष राजानमेतत्कार्यतमं हि ते ।
अहं भित्त्वा प्रवेक्ष्यामि कालपक्वमिदं बलम् ॥ ७-११२-७५ (४९३५९)
आयत्यां च तदात्वे च श्रेयो राज्ञोऽभिरक्षणम् ।
जानीषे मम वीर्यं त्वं तव चाहमरिन्दम ।
तस्माद्भीम निवर्तस्व मम चेदिच्छसि प्रियम् ॥ ७-११२-७६ (४९३६०)
सञ्जय उवाच। ७-११२-७७क्ष् (४५४७)
तथोक्तः सात्यकिं प्राह व्रज त्वं कार्यसिद्धये ।
अहं राज्ञः करिष्यामि रक्षां पुरुषसत्तम ॥ ७-११२-७७ (४९३६१)
एवमुक्तः प्रत्युवाच भीमसेनं स माधवः ।
गच्छ गच्छ ध्रुवं पार्थ ध्रुवो हि विजयो मम ॥ ७-११२-७८ (४९३६२)
यन्मे स्निग्धोऽनुरक्तश्च त्वमद्य वशमास्थितः ।
निमित्तानि च धन्यानि यथा भीम वदन्ति मां ॥ ७-११२-७९ (४९३६३)
निहते सैन्धवे पापे पाण्डवेन महात्मना ।
परिष्वजिष्ये राजानं धर्मात्मानं युधिष्ठिरम् ।
ग्अप्रमादश्च ते कार्यो द्रोणं प्रति महारथम्'॥ ७-११२-८० (४९३६४)
सञ्चय उवाच। ७-११२-८१क्ष् (४५४८)
एतावदुक्त्वा भीमं तु विसृज्य च महायशाः ।
सम्प्रैक्षत्तावकं सैन्यं व्याघ्रो मृगगणानिव ॥ ७-११२-८१ (४९३६५)
तं दृष्ट्वा प्रविविक्षन्तं सैन्यं तव जनाधिप ।
भूय एवाभवन्मूढं सुभृशं चाप्यकम्पत ॥ ७-११२-८२ (४९३६६)
ततः प्रयातः सहसा तव सैन्यं स सात्यकिः ।
दिदृक्षुरर्जुनं राजन्धर्मराजस्य शासनात् ॥ ॥ ७-११२-८३ (४९३६७)

इति श्रीमन्महाभारते द्रोणपर्वणि जयद्रथवधपर्वणि
चतुर्दशदिवसयुद्धे द्वादशाधिकशततमोऽध्यायः ॥ ११२ ॥
Mahabharata - Drona Parva - Chapter Footnotes

५-११२-२ ते मां भीतमिति ब्रूयुरयान्तं इति झ ।पाठः ॥
५-११२-१४ आसैन्धववधात् सैन्धववधात्प्रागेव ॥
५-११२-१७ हलादितोमरान्तमार्श आद्यजन्तम् ॥
५-११२-२३ सम्पाते विहरणे ॥

५-११२-३० तदा दिग्विजये ॥
५-११२-३५ अञ्जनस्य वरुणोपवाह्यस्य ॥
५-११२-३५ तेन दुर्योधनेन। ५-११२-४३ सम्भावितः सम्वर्धिताः। ।
५-११२-४९ पञ्चगुणः पञ्चगुणस्नमग्रीकः ॥
५-११२-५० नानाशस्त्राणां समावायः समूहो येषु ॥
५-११२-५६ पीताः पायितपेयाः ॥
५-११२-६१ केतकैः कुन्दघटितशलाकाभिः ॥
५-११२-६४ स्वर्णनिष्कान् दीनारान् ॥
५-११२-६५ ततः समधुपर्कार्हैः पीत्वा कैलातकं मधु इति
झ ञ पाठः । कैलावतं मधु इति ङ पाठः ॥
५-११२-७६ आयत्यामुत्तरकाले । तदात्वे तत्क्षणे ॥
५-११२-११२ द्वादशाधिकशततमोऽध्यायः ॥

---

द्रोनपर्व-अध्यय११३
॥ श्रीः ॥
७.११३. अध्यायः ११३

Mahabharata - Drona Parva - Chapter Topics
अर्जुनं गच्छतः सात्यकेः कृतवर्मणासह युद्धम् ॥ १ ॥

Mahabharata - Drona Parva - Chapter Text

७-११३-० (४९३६८)
सञ्जय उवाच। ७-११३-०क्ष् (४५४९)
प्रयाते तव सैन्यं तु युयुधाने युयुत्सया ।
धर्मराजो महाराज स्वेनानीकेन संवृतः ।
प्रायाद्द्रोणरथं प्रेप्सुर्युयुधानस्य पृष्ठतः ॥ ७-११३-१ (४९३६९)
ततः पाञ्चालराजस्य पुत्रः समरदुर्मदः ।
ग्प्रयाते माधवे राजन्निदं वचनमब्रवीत्'॥ ७-११३-२ (४९३७०)
प्राक्रोशत्पाण्डवानीके वसुदानश्च पार्थिवः ।
आगच्छत प्रहरत द्रुतं विपरिधावत ॥ ७-११३-३ (४९३७१)
यथा सुखेन गच्छेत सात्यकिर्युद्धदुर्मदः ।
महारथा हि बहवो यतिष्यन्तेऽस्य निर्जये ॥ ७-११३-४ (४९३७२)
सञ्जय उवाच। ७-११३-५क्ष् (४५५०)
ग्सेनापतिवचः श्रुत्वा पाण्डवेयाः समन्ततः ।
अभ्युद्ययुर्महाराज तव सैन्यं समन्ततः ॥ ७-११३-५ (४९३७३)

जहि प्रहर गृह्णीहि विध्य विद्रव चाद्रव'।
इति ब्रुवन्तौ वेगेन निपेतुस्ते महारथाः ॥ ७-११३-६ (४९३७४)
वयं प्रतिजिगीषन्तस्तत्र तान्समभिद्रुताः ।
ग्बाणशङ्खरवान्कृत्वा विमिश्रान्वाद्यनिस्वनैः ॥ ७-११३-७ (४९३७५)
युयुधानरथं दृष्ट्वा तावका अभिदुद्रुवुः'।
ततः शब्दो महानासीद्युयुधानरथं प्रति ॥ ७-११३-८ (४९३७६)
आकीर्यमाणा धावन्ती तव पुत्रस्य वाहिनी ।
सात्वतेन महाराज शतधाऽभिव्यशीर्यत ॥ ७-११३-९ (४९३७७)
तस्यां विदीर्यमाणायां शिनेः पुत्रो महारथः ।
सप्तवीरान्महेष्वासानग्रानीकेष्वपोथयत् ॥ ७-११३-१० (४९३७८)
अथान्यानपि राजेन्द्र नानाजनपदेश्वरान् ।
शरैरनलसङ्काशैर्निन्ये वीरान्यमक्षयम् ॥ ७-११३-११ (४९३७९)
शतमेकेन विव्याध शतेनैकं च पत्रिणाम् ।
द्विपारोहान्द्विपांश्चैव हयारोहान्हयांस्तथा ।
रथिनः साश्वसूतांश्च जघानेशः पशूनिव ॥ ७-११३-१२ (४९३८०)
तं तथाऽद्भुतकर्माणं शरसम्पातवर्षिणम् ।
न केचनाभ्यधावन्वै सात्यकिं तव सैनिकाः ॥ ७-११३-१३ (४९३८१)
ते भीता मृद्यमानाश्च प्रमृष्टा दीर्घबाहुना ।
आयोधनं जहुर्वीरा दृष्टा तमतिमानिनम् ॥ ७-११३-१४ (४९३८२)
तमेकं बहुधा पश्यन्मोहितास्तस्य तेजसा ॥ ७-११३-१५ (४९३८३)
रथैर्विमथितैश्चैव भग्ननीडैश्च मारिष ।
चक्रैर्विमथितैश्छत्रैर्ध्वजैश्च विनिपातितैः ॥ ७-११३-१६ (४९३८४)
अनुकर्षैः पताकाभिः शिरस्त्राणैः सकाञ्चनैः ।
बाहुभिश्चन्दनादिग्धैः साङ्गदैश्च विशाम्पते ॥ ७-११३-१७ (४९३८५)
हस्तिहस्तोपमैश्चापि भुजङ्गाभोगसन्निभैः ।
ऊरुभिः पृथिवी च्छन्ना मनुजानां नराधिप ॥ ७-११३-१८ (४९३८६)
शशाङ्कसन्निभैश्चैव वदनैश्चारुकुण्डलैः ।
पतितैर्ऋषभाक्षाणां बभौ भारत मेदिनी ॥ ७-११३-१९ (४९३८७)
गजैश्च बहुधा छिन्नैः शयानैः पर्वतोपमैः ।
रराजातिभृशं भूमिर्विकीर्णैरिव पर्वतैः ॥ ७-११३-२० (४९३८८)
तपनीयमयैर्योक्त्रैर्मुक्ताजालविभूषितैः ।
उरश्छदैर्विचित्रैश्च व्यशोभन्त तुरङ्गमाः ।
गतसत्वा महीं प्राप्य प्रमृष्टा दीर्घबाहुना ॥ ७-११३-२१ (४९३८९)
नानाविधानि सैन्यानि तव हत्वा तु सात्वतः ।
प्रविष्टस्तावकं सैन्यं द्रावयित्वा चमूं भृशम् ॥ ७-११३-२२ (४९३९०)
ततस्तेनैव मार्गेण येन यातो धनञ्जयः ।

इयेष सात्यकिर्गन्तुं ततो द्रोणेन वारितः ॥ ७-११३-२३ (४९३९१)
भारद्वाजं समासाद्य युयुधानश्च सात्यकिः ।
न न्यवर्तत सङ्क्रुद्धो वेलामिव जलाशयः ॥ ७-११३-२४ (४९३९२)
निवार्य तु रणे द्रोणो युयुधानं महारथम् ।
विव्याध निशितैर्बाणैः पञ्चभिर्मर्मभेदिभिः ॥ ७-११३-२५ (४९३९३)
सात्यकिस्तु रणे द्रोणं राजन्विव्याध सप्तभिः ।
हेमपुङ्खैः शिलाधौतैः कङ्कबर्हिणवाजितैः ॥ ७-११३-२६ (४९३९४)
षं षड्भिः सायकैर्द्रोणः साश्वयन्तारमार्दयत् ।
स तं न ममृषे द्रोणं युयुधानो महारथः ॥ ७-११३-२७ (४९३९५)
सिंहनादं ततः कृत्वा द्रोणं विव्याध सात्यकिः ।
दशभिः सायकैश्चान्यैः षड्भिरष्टाभिरेव च ॥ ७-११३-२८ (४९३९६)
युयुधानः पुनर्द्रोणं विव्याध दशभिः शरैः ।
एकेन सारथिं चास्य चतुर्भिश्चतुरो हयान् ।
ध्वजमेकेन बाणेन विव्याध युधि मारिष ॥  ७-११३-२९ (४९३९७)
तं द्रोणः साश्वयन्तारं सरथध्वजमाशुगैः ।
त्वरन्प्राच्छादयद्बाणैः शलभानामिव व्रजैः ॥ ७-११३-३० (४९३९८)
तथैव युयुधानोऽपि द्रोणं बहुभिराशुगैः ।
ग्प्राच्छादयदसम्भ्रान्तस्त्वरमाणो महारथः ॥ ७-११३-३१ (४९३९९)
द्रोणस्तु परमक्रुद्धः सात्यकिं परवीरहा ।
अवाकिच्छितैर्बाणैर्वासुदेवपराक्रमम् ॥ ७-११३-३२ (४९४००)
तं तथा शरजालेन प्रच्छाद्य महता पुनः ।
द्रोणः प्रहस्य शैनेयमिदं वचनमब्रवीत्'॥ ७-११३-३३ (४९४०१)
तवाचार्यो रणं हित्वा गतः कापुरुषो यथा ।
युध्यमानं च मां हित्वा प्रदक्षिणमवर्तत ॥ ७-११३-३४ (४९४०२)
त्वं हि मे युध्यतो नाद्य जीवन्यास्यसि माधव ।
यदि मां त्वं रणे हित्वा न यास्याचार्यवद्द्रुतम् ॥ ७-११३-३५ (४९४०३)
सात्यकिरुवाच। ७-११३-३६क्ष् (४५५१)
धनञ्जयस्य पदवीं धर्मराजस्य शासनात् ।
गच्छामि स्वस्ति ते ब्रह्मन्न मे कालात्ययो भवेत् ॥ ७-११३-३६ (४९४०४)
आचार्यानुगतो मार्गः शिष्यैरन्वास्यते सदा ।
तस्मादेव व्रजाम्याशु यथा मे स गुरुर्गतः ॥ ७-११३-३७ (४९४०५)
सञ्जय उवाच। ७-११३-३८क्ष् (४५५२)
एतावदुक्त्वा शैनेय आचार्यं परिवर्जयन् ।
प्रयातः सहसा राजन्सारथिं चेदमब्रवीत् ॥ ७-११३-३८ (४९४०६)
द्रोणः करिष्यते यत्नं सर्वथा मम वारणे ।
यत्तो याहि रणे सूत शृणु चेदं वचः परम् ॥ ७-११३-३९ (४९४०७)

एतदालोक्यते सैन्यमावन्त्यानां महाप्रभम् ।
अस्यानन्तरतस्त्वेतद्दाक्षिणात्यं महद्बलम् ॥ ७-११३-४० (४९४०८)
तदनन्तरमेतच्च बाह्लिकानां महद्बलम् ।
बाह्लिकाभ्याशतो युक्तं कर्णस्य च महद्बलम् ॥ ७-११३-४१ (४९४०९)
अन्योन्येन हि सैन्यानि भिन्नान्येतानि सारथे ।
अन्योन्यं समुपाश्रित्य न त्यक्ष्यन्ति रणाजिरम् ॥ ७-११३-४२ (४९४१०)
एतदन्तरमासाद्य चोदयाश्वान्प्रहृष्टवत् ।
मध्यमं जवमास्थाय वह मामत्र सारथे ॥ ७-११३-४३ (४९४११)
बाह्लिका यत्र दृश्यन्ते नानाप्रहरणोद्यताः ।
दाक्षिणात्याश्च बहवः सूतपुत्रपुरोगमाः ॥ ७-११३-४४ (४९४१२)
हस्त्यश्वरथसम्बाधं यच्चानीकं विलोक्यते ।
नानादेशसमुत्थैश्च पदातिभिरधिष्ठितम् ॥ ७-११३-४५ (४९४१३)
ग्कततः शक्यो महाव्यूहो भेत्तुं स सहसा रणे ।
तं देशं त्वरिता यामो मृद्ग्रन्तो युधि शात्रवान् ॥ ७-११३-४६ (४९४१४)
तत्रैते सम्प्रहृष्टत्वान्नास्मान्प्रति युयुत्सवः ॥ ७-११३-४७ (४९४१५)
अयुध्यमानो बहुभिरेकं प्राप्य सुदुर्बलम् ।
बलं प्रमथ्य गच्छामि मिषतां सर्वधन्विनाम् ॥ ७-११३-४८ (४९४१६)
मध्यतो याहि यत्रोग्रं कर्णस्य सुमहद्बलम् ।
यत्रैते परमक्रुद्धा दाक्षिणात्या महारथाः ।
एतान्विजित्य सङ्ग्रामे ततो यामो धनञ्जयम् ॥ ७-११३-४९ (४९४१७)
सञ्जय उवाच। ७-११३-५०क्ष् (४५५३)
युयुधानवचः श्रुत्वा युयुधानस्य सारथिः ।
यथोक्तमगमद्राजन्वर्जयन्द्रोणमाहवे'॥ ७-११३-५० (४९४१८)
तं द्रोणोऽनुययौ क्रुद्धो विकिरन्विशिखान्बहून् ।
युयुधानं महाभागं गच्छन्तमनिवर्तिनम् ॥ ७-११३-५१ (४९४१९)
स च सैन्यं महद्भित्त्वा दाक्षिणात्यबलं च तत् ।
कर्णस्य सैन्यं सुमहदभिहत्य शितैः शरैः ॥ ७-११३-५२ (४९४२०)
प्राविशद्भारतीं सेनामपर्यन्तां स सात्यकिः ।
सात्यको हि ततः सैन्यं द्रावयन्स समन्ततः ॥ ७-११३-५३ (४९४२१)
प्रविष्टे युयुधाने तु सैनिकेषु द्रुतेषु च ।
अमर्षी कृतवर्मा तु सात्यकिं पर्यवारयत् ॥ ७-११३-५४ (४९४२२)
तमापतन्तं विशिखैः षड्भिराहत्य सात्यकिः ।
चतुर्भिश्चतुरोऽस्याश्वानाजघानाशु वीर्यवान् ॥ ७-११३-५५ (४९४२३)
ततः पुनः षोडशभिर्नतपर्वभिराशुगैः ।
सात्यकिः कृतवर्माणं प्रत्यविध्यत्स्तनान्तरे ॥ ७-११३-५६ (४९४२४)
स ताड्यमानो विशिखैर्बहुभिस्तिग्मतेजनैः ।

सात्वतेन महाराज कृतवर्मा न चक्षमे ॥ ७-११३-५७ (४९४२५)
स वत्सन्दतं सन्धाय तिग्मांश्वनलसप्रभम् ।
आकृष्य राजन्नाकर्णाद्विव्याधोरसि सात्यकिम् ॥ ७-११३-५८ (४९४२६)
स तस्य देहावरणं भित्त्वा देहं च सायकः ।
सपुङ्खपत्रः पृथिवीं विवेश रुधिरोक्षितः ॥ ७-११३-५९ (४९४२७)
अथास्य बहुभिर्बाणैरच्छिनत्परमास्त्रवित् ।
स मार्गणगणं राजन्कृतवर्मा शरासनम् ॥ ७-११३-६० (४९४२८)
विव्याध च रणे राजन्सात्यकिं सत्यविक्रमम् ।
दशभिर्विशिखैस्तीक्ष्णैरभिक्रुद्धः स्तनान्तरे ॥ ७-११३-६१ (४९४२९)
ततः प्रशीर्णे धनुषि शक्त्या शक्तिमतां वरः ।
जघान दक्षिणं बहुं सात्यकिः कृतवर्मणः ॥ ७-११३-६२ (४९४३०)
ततोऽन्यत्सुदृढं चापं पूर्णमायम्य सात्यकिः ।
व्यसृजद्विशिखांस्तूर्णं शतशोऽथ सहस्रशः ॥ ७-११३-६३ (४९४३१)
सरथं कृतवर्माणं समन्तात्पर्यवारयत् ।
छादयित्वा रणे राजन्हार्दिक्यं स तु सात्यकिः ।
अथास्य भल्लेन शिरः सारथेः समकृन्तत ॥ ७-११३-६४ (४९४३२)
स पपात हतः सूतो हार्दिक्यस्य महारथात् ।
ततस्ते यन्तृरहिताः प्राद्रवंस्तुरगा भृशम् ॥ ७-११३-६५ (४९४३३)
अथ भोजस्तु सम्भ्रान्तो निगृह्य तुरगामन्स्वयम् ।
तस्थौ वीरो धनुष्पाणिस्तत्सैन्यान्यभ्यपूजयन् ॥ ७-११३-६६ (४९४३४)
स मुहूर्तमिवाश्वास्य सदश्वान्समनोदयत् ।
व्यपेत भीरमित्राणामावहत्सुमहद्भयम् ॥ ७-११३-६७ (४९४३५)
सात्यकिश्चात्यगात्तस्मात्स तु भीममुपाद्रवत् ॥ ७-११३-६८ (४९४३६)
युयुधानोऽपि राजेन्द्र भोजानीकाद्विनिःसृतः ।
प्रययौ त्वरितस्तूर्णं काम्भोजानां महाचमूम् ॥ ७-११३-६९ (४९४३७)
स तत्र बहुभिः शूरैः सन्निरुद्धो महारथैः ।
न चचाल तदा राजन्सात्यकिः सत्यविक्रमः ॥ ७-११३-७० (४९४३८)
सन्धाय च चमूं द्रोणो भोजे भारं निवेश्य च ।
अभ्यधावद्रणे यत्तो युयुधानं युयुत्सया ॥ ७-११३-७१ (४९४३९)
तथा तमनुधावन्तं युयुधानस्य पृष्ठतः ।
न्यवारयन्त संहृष्टाः पाण्डुसैन्ये ब्रृहत्तमाः ।
समासाद्य तु हार्दिक्यं रथानां प्रवरं रथम् ॥ ७-११३-७२ (४९४४०)
पाञ्चाला विगतोत्साहा भीमसेनपुरोगमाः ।
विक्रम्य वारिता राजन्वीरेण कृतवर्मणा ॥ ७-११३-७३ (४९४४१)
यतमानांश्च तान्सर्वानीषद्विगतचेतसः ।
अभितस्ताञ्शरौघेण क्लान्तवाहानकारयत् ॥ ७-११३-७४ (४९४४२)

निगृहीतास्तु भोजेन भोजानीकेप्सवो रणे ।
अतिष्ठन्नार्यवद्वीराः प्रार्थयन्तो महद्यशः ।
ग्हार्दिक्यं समरे यत्ता न शेकुः प्रतिवीक्षितुम्'॥ ॥ ७-११३-७५ (४९४४३)

इति श्रीमन्महाभारते द्रोणपर्वणि जयद्रथवधपर्वणि
चतुर्दशदिवसयुद्धे त्रयोधशाधिकशततमोऽध्यायः ॥ २ ॥
Mahabharata - Drona Parva - Chapter Footnotes

५-११३-१२ ईशो रुद्रः ॥
५-११३-१९ ऋषोभस्येवाक्षीणि येषाम् ॥
५-११३-३५ त्वंहि त्वमपि ॥
५-११३-४२ भिन्नानि पृथग्भूतानि ॥
५-११३-क एतदादि पञ्चश्लोकानां स्थाने अधो लिखित एकएव श्लोकः
झ । पुस्तकेऽस्ति। एतावदुक्त्वा यन्तारं ब्राह्मणं परिवर्जयन्। मध्यतो
याहि यच्चोग्रं कर्णस्य च महद्बलम् ॥
५-११३-५८ जिह्मागानिलसन्निभम् इति । झ। पाठः ॥
५-११३-७१ सन्धाय यथास्थानमानीय ॥
५-११३-७५ आर्यवत्कुलीनवत् । कुलीनत्वादितियावत् ॥
५-११३-११३ त्रयोदशाधिकरशथतमोऽध्यायः ॥

---

द्रोनपर्व-अध्यय११४
॥ श्रीः ॥
७.११४. अध्यायः ११४

Mahabharata - Drona Parva - Chapter Topics
धृतराष्ट्रस्य स्वसैन्यपराजयश्रवणेन शोचनम् ॥ १ ॥
सञ्जयेन तदुपालम्भपूर्वकं कृतवर्मपराक्रमकथनम् ॥ २ ॥

Mahabharata - Drona Parva - Chapter Text

७-११४-० (४९४४४)
धृतराष्ट्र उवाच। ७-११४-०क्ष् (४५५४)
एवं बहुगुणं सैन्यमेवं प्रविचितं बलम् ।
व्यूढमेवं यथान्यायमेवं बहु च सञ्जय ॥ ७-११४-१ (४९४४५)
नित्यं पूजितमस्माभिरभिकामं च नः सदा ।
प्रौढमत्यद्भुताकारं पुरस्ताद्दृष्टविक्रमम् ॥ ७-११४-२ (४९४४६)

नातिवृद्धमबालं च नाकृशं नातिपीवरम् ।
लघुवृत्तायतप्रायं सारगात्रमनामयम् ॥ ७-११४-३ (४९४४७)
आत्तसन्नाहसञ्छन्नं बहुशस्त्रपरिच्छदम् ।
शस्त्रग्रहणविद्यासु बह्वीषु परिनिष्ठितम् ॥ ७-११४-४ (४९४४८)
आरोहे पर्यवस्कन्दे सरणे सान्तरप्लुते ।
सम्यक्प्रहरणे याने व्यपयाने च कोविदम् ॥ ७-११४-५ (४९४४९)
नागेष्वश्वेषु बहुशो रथेषु च परीक्षितम् ।
ग्चर्मनिस्त्रिंशयुद्धे च नियुद्धे च विशारदम्'।
परीक्ष्य च यथान्यायं वेतनेनोपपादितम् ॥ ७-११४-६ (४९४५०)
न गोष्ठ्या नोपकारेण न सम्बन्धनिमित्ततः ।
नानाहूतं नाप्यभृतं मम सैन्यं बभूव ह ॥ ७-११४-७ (४९४५१)
कुलीनार्यजनोपेतं तुष्टपुष्टमनुद्धतम् ।
कृतमानोपचारं च यशस्वि च मनस्वि च ॥ ७-११४-८ (४९४५२)
सचिवैश्चापरैर्मुख्यैर्बहुभिः पुण्यकर्मभिः ।
लोकपालोपमैस्तात पालितं नरसत्तमैः ॥ ७-११४-९ (४९४५३)
बहुभिः पार्थिवैर्गुप्तमस्मत्प्रियचिकीर्षुभिः ।
अस्मानभिसृतैः कामात्सबलैः सपदानुगैः ॥ ७-११४-१० (४९४५४)
महोदधिमिवापूर्णमापगाभिः समन्ततः ।
अपक्षैः पक्षिसङ्काशै रथैरश्वैश्च संवृतम् ॥ ७-११४-११ (४९४५५)
प्रभिन्नकरटैश्चैव द्विरदैरावृतं महत् ।
यदहन्यत मे सैन्यं किमन्यद्भागधेयतः ॥ ७-११४-१२ (४९४५६)
योधाक्षय्यजलं भीमं वाहनोर्मितरङ्गिणम् ।
क्षेपण्यसिगदाशक्तिशरप्रासझषाकुलम् ॥ ७-११४-१३ (४९४५७)
ध्वजभूषणसम्बाधरत्नोपलसुसञ्चितम् ।
वाहनैरभिधावद्भिर्वायुवेगविकम्पितम् ॥ ७-११४-१४ (४९४५८)
द्रोणगम्भीरपातालं कृतवर्ममहाहृदम् ।
जलसन्धमहाग्राहं कर्मचन्द्रोदयोद्धतम् ॥ ७-११४-१५ (४९४५९)
गते सैन्यार्णवं भित्त्वा तरसा पाण्डवर्षभे ।
सञ्जयैकरथेनैव युयुधाने च मामकम् ॥ ७-११४-१६ (४९४६०)
तत्र शेषं न पश्यामि प्रविष्टे सव्यसाचिनि ।
सात्वते च रथोदारे मम सैन्यस्य सञ्जय ॥ ७-११४-१७ (४९४६१)
तौ तत्र समतिक्रान्तौ दृष्ट्वाऽतीव तरस्विनौ ।
सिन्धुराजं तु सम्प्रेक्ष्य गाण्डीवस्य च गोचरम् ॥ ७-११४-१८ (४९४६२)
किं नु वा कुरवः कृत्यं विदधुः कालचोदिताः ।
दारुणैकायनेऽकाले कथं वा प्रतिपेदिरे ॥ ७-११४-१९ (४९४६३)
ग्रस्तान्हि कौरवान्मन्ये मृत्युना तात सङ्गतान् ।

विक्रमोऽपि रणे तेषां न तथा दृश्यते हि वै ॥ ७-११४-२० (४९४६४)
अक्षतौ संयुगे तत्र प्रविष्टौ कृष्णपाण्डवौ ।
न च वारयिता कश्चित्तयोरस्तीह सञ्जय ॥ ७-११४-२१ (४९४६५)
भृताश्च बहवो योधाः परीक्ष्यैव महारथाः ।
वेतनेन यथायोगं प्रियवादेन चापरे ॥ ७-११४-२२ (४९४६६)
असत्कारभृतस्तात मम सैन्ये न विद्यते ।
कर्मणा ह्यनुरूपेण लभ्यते भक्तवेतनम् ॥ ७-११४-२३ (४९४६७)
न च योधोऽभवत्कश्चिन्मम सैन्ये तु सञ्जय ।
अल्पदानभृतस्तात तथा चाभृतको नरः ॥ ७-११४-२४ (४९४६८)
पूजितो हि यथाशक्त्या दानमानासनैर्मया ।
तथा पुत्रैश्च मे तात ज्ञातिभिश्च सबान्धवैः ॥ ७-११४-२५ (४९४६९)
ते च प्राप्यैव सङ्ग्रामे निर्जिताः सव्यसाचिना ।
शैनेयेन परामृष्टाः किमन्यद्भागधेयतः ॥ ७-११४-२६ (४९४७०)
रक्ष्यते यश्च सङ्ग्रामे ये च सञ्जय रक्षिणः ।
एकः साधारणः पन्थार रक्ष्यस्य सह रक्षिभिः ॥ ७-११४-२७ (४९४७१)
अर्जुनं समरे दृष्ट्वा सैन्धवस्याग्रतः स्थितम् ।
पुत्रो मम भृशं मूढः किं कार्यं प्रत्यपद्यत ॥ ७-११४-२८ (४९४७२)
सात्यकिं च रणे दृष्ट्वा प्रविशन्तमभीतवत् ।
किं नु दुर्योधनः कृत्यं प्राप्तकालममन्यत ॥ ७-११४-२९ (४९४७३)
सर्वशस्त्रातिगौ सेनां प्रविष्टौ रथिसत्तमौ ।
दृष्ट्वा कां वै धृतिं युद्धे प्रत्यपद्यन्त मामकाः ॥ ७-११४-३० (४९४७४)
दृष्ट्वा कृष्णं तु दाशार्हमर्जुनार्थे व्यवस्थितम् ।
शिनीनामृषभं चैव मन्ये शोचन्ति पुत्रकाः ॥ ७-११४-३१ (४९४७५)
दृष्टा सेनां व्यतिक्रान्तां सात्वतेनार्जुनेन च ।
पलायमानांश्च कुरून्मन्ये शोचन्ति पुत्रकाः ॥ ७-११४-३२ (४९४७६)
विद्रुतान्रथिनो दृष्ट्वा निरुत्साहान्द्विषज्जये ।
पलायनकृतोत्साहान्मन्ये शोचन्ति पुत्रकाः ॥ ७-११४-३३ (४९४७७)
शून्यान्कृतान्रथोपस्थान्सात्वतेनार्जुनेन च ।
हतांश्च योधान्संदृश्य मन्ये शोचन्ति पुत्रकाः ॥ ७-११४-३४ (४९४७८)
व्यश्वनागरथान्दृष्ट्वा तत्र वीरान्सहस्रशः ।
धावमानान्रणे व्यग्रामन्यन्ये शोचन्ति पुत्रकाः ॥ ७-११४-३५ (४९४७९)
महानागान्विद्रवतो दृष्ट्वाऽर्जुनशराहतान् ।
पतितान्पततश्चान्यान्मन्ये शोचन्ति पुत्रकाः ॥ ७-११४-३६ (४९४८०)
विहीनांश्च कृतानश्वान्विरथांश्च कृतान्नरान् ।
तत्र सात्यकिपार्थाभ्यां मन्ये शोचन्ति पुत्रकाः ॥ ७-११४-३७ (४९४८१)
हयौघान्निहतान्दृष्ट्वा द्रवमाणांस्ततस्ततः ।

रणे माधवपार्थाभ्यां मन्ये शोचन्ति पुत्रकाः ॥ ७-११४-३८ (४९४८२)
पत्तिसङ्घात्रणे दृष्ट्वा धावमानांश्च सर्वशः ।
निराशा विजये सर्वे मन्ये शोचन्ति पुत्रकाः ॥ ७-११४-३९ (४९४८३)
द्रोणस्य समतिक्रान्तावनीकमपराजितौ ।
क्षणेन दृष्ट्वा तौ वीरौ मन्ये शोचन्ति पुत्रकाः ॥ ७-११४-४० (४९४८४)
सम्मूढोऽस्मि भृशं तात श्रुत्वा कृष्णधनञ्जयौ ।
प्रविष्टौ मामकं सैन्यं सात्वतेन सहाच्युतौ ॥ ७-११४-४१ (४९४८५)
तस्मिन्प्रविष्टे पृतनां शिनीनां प्रवरे रथे ।
भोजानीकं व्यतिक्रान्ते किमकुर्वत कौरवाः ॥ ७-११४-४२ (४९४८६)
तथा द्रोणेन समरे निगृहीतेषु पाण्डुषु ।
कथं युद्धमभूत्तत्र तन्ममाचक्ष्व सञ्जय ॥ ७-११४-४३ (४९४८७)
द्रोणो हि बलवाञ्श्रेष्ठः कृतास्त्रो युद्धदुर्मदः ।
पाञ्चालास्तं महेष्वासं प्रत्ययुध्यन्कथं रणे ॥ ७-११४-४४ (४९४८८)
बद्धवैरास्ततो द्रोणे धनञ्जयजयैषिणः ।
भारद्वाजसुतस्तेषु दृढवैरो महारथः ॥ ७-११४-४५ (४९४८९)
अर्जुनश्चापि यच्चक्रे सिन्धुराजवधं प्रति ।
तन्मे सर्वं समाचक्ष्व कुशलो ह्यसि सञ्जय ॥ ७-११४-४६ (४९४९०)
सञ्जय उवाच। ७-११४-४७क्ष् (४५५५)
आत्मापराधात्सम्भूतं व्यसनं भरतर्षभ ।
प्राप्य प्राकृतवद्वीर न त्वं शोचितुमर्हसि ॥ ७-११४-४७ (४९४९१)
पुरा यदुच्यसे प्राज्ञैः सुहृद्भिर्विदुरादिभिः ।
मा हार्षीः पाण्डवान्राजन्निति तन्न त्वया श्रुतम् ॥ ७-११४-४८ (४९४९२)
सुहृदां हितकामानां वाक्यं यो न शृणोति ह ।
स महद्व्यसनं प्राप्य शोचते वै यथा भवान् ॥ ७-११४-४९ (४९४९३)
याचितोऽसि पुरा राजन्दाशार्हेण शमं प्रति ।
न च तं लब्धवान्कामं त्वत्तः कृष्णो महायशाः ॥ ७-११४-५० (४९४९४)
तव निर्गुणतां ज्ञात्वा पक्षपातं सुतेषु च ।
द्वैधीभावं तथा धर्मे पाण्डवेषु च मत्सरम् ॥ ५-११४-५२ तव
जिह्ममभिप्रायं विदित्वा पाण्डवान्प्रति ।
आर्तप्रलापांश्च बहून्मनुजाधिप सत्तम ॥ ७-११४-५१ (४९४९५)
सर्वलोकस्य तत्त्वज्ञः सर्वलोकेश्वरः प्रभुः ।
वासुदेवस्ततो युद्धं कुरूणामकरोन्महत् ॥ ७-११४-५३ (४९४९६)
आत्मापराधात्सुमहान्प्राप्तस्ते विपुलः क्षयः ।
नैनं दुर्योधने दोषं कर्तुमर्हसि मानद ॥ ७-११४-५४ (४९४९७)
न हि ते सुकृतं किञ्चिदादौ मध्ये च भारत ।
दृश्यते पृष्ठतश्चैव त्वन्मूलो हि पराजयः ॥ ७-११४-५५ (४९४९८)

तस्मादद्य स्थिरो भूत्वा ज्ञात्वा लोकस्य निर्णयम् ।
शृणु युद्धं यथावृत्तं घोरं देवासुरोपमम् ॥ ७-११४-५६ (४९४९९)
प्रविष्टे तव सैन्यं तु शैनेये सत्यविक्रमे ।
भीमसेनमुखाः पार्थाः प्रतीयुर्वाहिनीं तव ॥ ७-११४-५७ (४९५००)
आगच्छतस्तान्सहसा क्रुद्धरूपान्सहानुगान् ।
दधारैको रणे पाण्डून्कृतवर्मा महारथः ॥ ७-११४-५८ (४९५०१)
यथोद्वृत्तं वारयते वेला वै सलिलार्णवम् ।
पाण्डुसैन्यं तथा सङ्ख्ये हार्दिक्यः समवारयत् ॥ ७-११४-५९ (४९५०२)
तत्राद्भुतमपश्याम हार्दिक्यस्य पराक्रमम् ।
यदेनं सहिताः पार्था नातिचक्रमुराहवे ॥ ७-११४-६० (४९५०३)
ततो भीमस्त्रिभिर्विद्ध्वा कृतवर्माणमाशुगैः ।
शङ्खं दध्मौ महाबाहुर्हर्षयन्सर्वपाण्डवान् ॥ ७-११४-६१ (४९५०४)
सहदेवस्तु विंशत्या धर्मराजश्च पञ्चभिः ।
शतेन नकुलश्चापि हार्दिक्यं समविध्यत ॥ ७-११४-६२ (४९५०५)
द्रौपदेयास्त्रिसप्तत्या सप्तभिश्च घटोत्कचः ।
धृष्टद्युम्नस्त्रिभिश्चापि कृतवर्माणमार्दयत् ॥ ७-११४-६३ (४९५०६)
विराटो द्रुपदश्चैव याज्ञसेनिश्च पञ्चभिः ।
शिखण्डी चैव हार्दिक्यं विद्ध्वा पञ्चभिराशुगैः ॥ ७-११४-६४ (४९५०७)
पुनर्विव्याध विंशत्या सायकानां हसन्निव ।
कृतवर्मा ततो राजन्सर्वतस्तान्महारथान् ॥ ७-११४-६५ (४९५०८)
एकैकं पञ्चभिर्विद्ध्वा भीमं विव्याध सप्तभिः ।
धनुर्ध्वजं चास्य तदा रथाद्भूमावपातयत् ॥ ७-११४-६६ (४९५०९)
अथैनं छिन्नधन्वानं त्वरमाणो महारथः ।
आजघानोरसि क्रुद्धः सप्तत्या निशितैः शरैः ॥ ७-११४-६७ (४९५१०)
स गाढविद्धो बलवान्हार्दिक्यस्य शरोत्तमैः ।
चचाल रथमध्यस्थः क्षितिकम्पे यथाऽचलः ॥ ७-११४-६८ (४९५११)
भीमसेनं तथा दृष्ट्वा धर्मराजपुरोगमाः ।
विसृजन्तः शरान्राजन्कृतवर्माणमार्दयन् ॥ ७-११४-६९ (४९५१२)
तं तथा कोष्ठकीकृत्य रथवंशेन मारिष ।
विव्यधुः सायकैर्हृष्टा रक्षार्थं मारुतेर्मृधे ॥ ७-११४-७० (४९५१३)
प्रतिलभ्य ततः संज्ञां भीमसेनो महाबलः ।
शक्तिं जग्राह समरे हेमदण्डामयस्मायीम् ॥ ७-११४-७१ (४९५१४)
चिक्षेप च रथात्तूर्णं कृतवर्मरथं प्रति ।
सा भीमभुजनिर्मुक्ता निर्मुक्तोरगसन्निभा ॥ ७-११४-७२ (४९५१५)
कृतवर्माणमभितः प्रजज्वाल सुदारुणा ।
तामापतन्तीं सहसा युगान्ताग्निसमप्रभाम् ॥ ७-११४-७३ (४९५१६)

द्वाभ्यां शराभ्यां हार्दिक्यो निजघान द्विधा तदा ।
सा छिन्ना पतिता भूमौ शक्तिः कनकभूषणा ॥ ७-११४-७४ (४९५१७)
द्योतयन्ती दिशो राजन्महोल्केव नभश्च्युता ।
शक्तिं विनिहतां दृष्ट्वा भीमश्चुक्रोध वै भृशम् ॥ ७-११४-७५ (४९५१८)
ततोऽन्यद्धनुरादाय वेगवत्सुमहास्वनम् ।
भीमसेनो रणे क्रुद्धो हार्दिक्यं समवारयत् ॥ ७-११४-७६ (४९५१९)
अथैनं पञ्चभिर्बाणैराजघान स्तनान्तरे ।
भीमो भीमबलो राजंस्तव दुर्मन्त्रितेन च ॥ ७-११४-७७ (४९५२०)
भोजस्तु क्षतसर्वाङ्गो भीमसेनेन मारिष ।
रक्ताशोक इवोत्फुल्लो व्यभ्राजत रणाजिरे ॥ ७-११४-७८ (४९५२१)
ततः क्रुद्धस्त्रिभिर्बाणैर्भीमसेनं हसन्निव ।
अभिहत्य दृढं युद्धे तान्सर्वान्प्रत्यविध्यत ॥ ७-११४-७९ (४९५२२)
त्रिभिस्त्रिभिर्महेष्वासो यतमानान्महारथान् ।
तेऽपि तं प्रत्यविध्यन्त सप्तभिः सप्तभिः शरैः ॥ ७-११४-८० (४९५२३)
शिखण्डिनस्ततः क्रुद्धः क्षुरप्रेण महारथः ।
धनुश्चिच्छेद सामरे प्रहसन्निव सात्वतः ॥ ७-११४-८१ (४९५२४)
शिखण्डी तु ततः क्रुद्धश्छिन्ने धनुषि सत्वरः ।
असिं जग्राह समरे शतचन्द्रं च भास्वरम् ॥ ७-११४-८२ (४९५२५)
भ्रामयित्वा महच्चर्म चामीकरविभूषितम् ।
तमसिं प्रेषयामात कृतवर्मरथं प्रति ॥ ७-११४-८३ (४९५२६)
स तस्य सशरं चापं छित्त्वा राजन्महानसिः ।
अभ्यगाद्धरणीं राजंश्च्युतं ज्योतिरिवाम्बरात् ॥ ७-११४-८४ (४९५२७)
एतस्मिन्नेव काले तु त्वरमाणं महारथाः ।
विव्यधुः सायकैर्गाढं कृतवर्माणमाहवे ॥ ७-११४-८५ (४९५२८)
अथान्यद्धनुरादाय त्यक्त्वा तच्च महद्धनुः ।
विशीर्णं भरतश्रेष्ठ हार्दिक्यः परवीरहा ॥ ७-११४-८६ (४९५२९)
विव्याध पाण्डवान्युद्धे त्रिभिस्त्रिभिरजिह्मगैः ।
शिखण्डिनं च विव्याध त्रिभिः पञ्चभिरेव च ॥ ७-११४-८७ (४९५३०)
धनुरन्यत्समादाय शिखण्डी तु महायशाः ।
अवारयत्कूर्मनखैराशुगैर्हृदिकात्मजम् ॥ ७-११४-८८ (४९५३१)
ततः क्रुद्धो रणे राजन्हृदिकस्यात्मसम्भवः ।
अभिदुद्राव वेगेन याज्ञसेनिं महारथम् ॥ ७-११४-८९ (४९५३२)
भीष्मस्य समरे राजन्मृत्योर्हेतुं महात्मनः ।
विदर्शयन्बलं शूरः शार्दूल इव कुञ्जरम् ॥ ७-११४-९० (४९५३३)
तौ दिशागजसङ्काशौ ज्वलिताविव पावकौ ।
समापेततुरन्योन्यं शरसङ्घैररिन्दमौ ॥ ७-११४-९१ (४९५३४)

विधुन्वानौ धनुःश्रेष्ठे सन्दधानौ च सायकान् ।
विसृजन्तौ च शतशो गभस्तीनिव भास्करौ ॥ ७-११४-९२ (४९५३५)
तापयन्तौ शरैस्तीक्ष्णैरन्योन्यं तौ महारथौ ।
युगान्तप्रतिमौ वीरौ रेजतुर्भास्कराविव ॥ ७-११४-९३ (४९५३६)
कृतवर्मा च समरे याज्ञसेनिं महारथम् ।
विद्धवेषुभिस्त्रिसप्तत्या पुनर्विव्याध सप्तभिः ॥ ७-११४-९४ (४९५३७)
स गाढविद्धो व्यथितो रथोपस्थ उपाविशत् ।
विसृज्य सशरं चापं मूर्च्छयाऽभिपरिप्लुतः ॥ ७-११४-९५ (४९५३८)
तं विषण्णं रणे दृष्ट्वा तावकाः पुरुषर्षभ ।
हार्दिक्यं पूजयामासुर्वासांस्यादुधुवुश्च ह ॥ ७-११४-९६ (४९५३९)
शिखण्डिनं तथा ज्ञात्वा हार्दिक्यशरपीडितम् ।
अपोवाह रणाद्यन्ता त्वरमाणो महारथम् ॥ ७-११४-९७ (४९५४०)
सादितं तु रथोपस्थे दृष्ट्वा पार्थाः शिखण्डिनम् ।
परिवव्रू रथैस्तूर्णं कृतवर्माणमाहवे ॥ ७-११४-९८ (४९५४१)
तत्राद्भुतं परं चक्रे कृतवर्मा महारथः ।
यदेकः समरे पार्थान्वारयामास सानुगान् ॥ ७-११४-९९ (४९५४२)
पार्थाञ्जित्वाऽजयच्चेदीन्पाञ्चालान्सृञ्जयानपि ।
केकयांश्च महावीर्यान्कृतवर्मा महारथः ॥ ७-११४-१०० (४९५४३)
ते वध्यमानाः समरे हार्दिक्येन स्म पाण्डवाः ।
इतश्चेतश्च धावन्तो नैव चक्रुर्धृतिं रणे ॥ ७-११४-१०१ (४९५४४)
जित्वा पाण्डुसुतान्युद्धे भीमसेनपुरोगमान् ।
हार्दिक्यः समरेऽतिष्ठद्विधूम इव पावकः ॥ ७-११४-१०२ (४९५४५)
ते द्राव्यमाणाः समरे हार्दिक्येन महारथाः ।
विमुखाः समपद्यन्त शरवृष्टिभिरार्दिताः ॥ ॥ ७-११४-१०३ (४९५४६)

इति श्रीमन्महाभारते द्रोणपर्वणि जयद्रथवधपर्वणि
चतुर्दशदिवसयुद्धे चतुर्दशाधिकशततमोऽध्यायः ॥ ११४ ॥
Mahabharata - Drona Parva - Chapter Footnotes

५-११४-१ बहुगुणं बहवो गुणाः शौर्यादयः संध्यादयो वा यस्मिन्
। बलं प्रबलम् ॥
५-११४-२ नः अभिकाममनुरक्तम् ॥
५-११४-३ लघुनो मनोज्ञस्य वृत्तस्यायतनमायासः प्रायः प्रचुरं
यत्र । सारगात्रं निबिडावयवम् ॥
५-११४-५ पर्यवस्कन्दे अवरोहणे । सरणे प्रसरणे। सान्तरप्लुते
प्लुवनान्तरीतायां गतौ। व्यपयानेऽपसरणे ॥

५-११४-६ वेतनेन दिनमासवर्षदेयेन धनेन ॥
५-११४-७ गोष्ठ्या संलापमात्रेण ॥
५-११४-१३ वाहनान्येवोर्मितरङ्गपरम्परा विद्यते यत्र ।क्षेपण्यो यन्त्राणि ॥
५-११४-१४ रत्नैरुपलैश्च सुसञ्चितं सुष्ठुसञ्छादितम्
।वाहनाभिधावनान्येव वायुवेगतया रूपितानि ॥
५-११४-१७ मम सैन्यस्य सेषमित्यन्वयः ॥
५-११४-१९ दारुणैकायने अतिभीषणेऽनन्यगतिके ।अकाले अतीते समये ॥
५-११४-२३ लभ्यते सैन्येनार्थात् ॥
५-११४-३० धृतिं धारणाम् ॥
५-११४-३५ व्यग्राननेकाग्रान् ।अव्यग्रान् पलायनैकमनस इति वा ॥
५-११४-५१ निर्गुणतां गुणवैषम्यम् ।द्वैधीभावमनिश्चयम् ॥
५-११४-५४ सुमहान् विपुल इति पर्यायाभ्यां महत्त्वोद्रेकः ॥
५-११४-५६ निर्णयं नियतस्वभावम् ॥
५-११४-६५ सर्वतः सर्वान् ॥
५-११४-७४ द्विधा स्थानद्वये ॥
५-११४-८८ कूर्मनखैः कूर्मनखाकृतिफलकैः ॥
५-११४-११४ चतुर्दशाधिकशततमोऽध्यायः ॥

---

द्रोनपर्व-अध्यय११५
॥ श्रीः ॥
७.११५. अध्यायः ११५

Mahabharata - Drona Parva - Chapter Topics
सात्यकिना जलसन्धस्य वधः ॥१ ॥

Mahabharata - Drona Parva - Chapter Text

७-११५-० (४९५४७)
सञ्जय उवाच।७-११५-०क्ष् (४५५६)
शृणुष्वैकमना राजन्यन्मां त्वं परिपृच्छसि ।
द्राव्यमाणे बले तस्मिन्हार्दिक्येन महात्मना ॥ ७-११५-१ (४९५४८)
लज्जयावनते चापि परिहृष्टे च तावके ।
द्वीपो य आसीत्पाण्डूनामगाधे गाधमिच्छताम् ॥ ७-११५-२ (४९५४९)
श्रुत्वा स निनदं भीमं तावकानां महाहवे ।
शैनेयस्त्वरितो राजन्कृतवर्माणमभ्ययात् ॥ ७-११५-३ (४९५५०)
उवाच सारथिं तत्र क्रोधामर्षसमन्वितः ।

हार्दिक्याभिमुखं सूत कुरु मे रथमुत्तमम् ॥ ७-११५-४ (४९५५१)
कुरुते कदनं पश्य पाण्डुसैन्ये ह्यमर्षितः ।
एनं जित्वा पुनः सूत यास्यामि विजयं प्रति ॥ ७-११५-५ (४९५५२)
एवमुक्ते तु वचने सूतस्तस्य महामते ।
निमेषान्तरमात्रेण कृतवर्माणमभ्ययात् ॥ ७-११५-६ (४९५५३)
कृतवर्मा तु हार्दिक्यः शैनेयं निशितैः शरैः ।
अवाकिरत्सुसंक्रुद्धस्ततोऽक्रुद्ध्यत्स सात्यकिः ॥ ७-११५-७ (४९५५४)
अथाशु निशितं भल्लुं शैनेयः कृतवर्मणः ।
प्रेषयामास समरे शरांश्च चतुरोऽपरान् ॥ ७-११५-८ (४९५५५)
ते तस्य जघ्निरे वाहान्भल्लेनास्याच्छिनद्धनुः ।
पृष्ठरक्षं तथा सूतमविध्यन्निशितैः शरैः ॥ ७-११५-९ (४९५५६)
ततस्तं विरथं कृत्वा सात्यकिः सत्यविक्रमः ।
सेनामस्यार्दयामास शरैः सन्नतपर्वभिः ॥ ७-११५-१० (४९५५७)
अभज्यताथ पृतना शैनेयशरपीडिता ।
ग्पलायनकृतोत्साहा भ्रमन्ती तत्रतत्र ह'।
ततः प्रायात्स त्वरितः सात्यकिः सत्यविक्रमः ॥ ७-११५-११ (४९५५८)
शृणु राजन्यदकरोत्तव सैन्येषु वीर्यवान् ।
अतीत्य स महाराज द्रोणानीकमहार्णवम् ॥ ७-११५-१२ (४९५५९)
पराजित्य तु संहृष्टः कृतवर्माणमाहवे ।
यन्तारमब्रवीच्छूरः शनैर्याहीत्यसम्भ्रमम् ॥ ७-११५-१३ (४९५६०)
दृष्ट्वा तु तव तत्सैन्यं रथाश्वद्वि पसङ्कुलम् ।
पदातिजनसम्पूर्णमब्रवीत्सारथिं पुनः ॥ ७-११५-१४ (४९५६१)
यदेतन्मेघसङ्काशं द्रोणानीकस्य सव्यतः ।
सुमहत्कुञ्जरानीकं यस्य रुक्मरथो मुखम् ॥ ७-११५-१५ (४९५६२)
एते हि बहवः सूत दुर्निवार्याश्च संयुगे ।
दुर्योधनसमादिष्टा मदर्थे त्यक्तजीविताः ॥ ७-११५-१६ (४९५६३)
राजपुत्रा महेष्वासाः सर्वे विक्रान्तयोधिनः ।
ग्न चाजित्वा रणे ह्येताञ्शक्यः प्राप्तुं जयद्रथः ॥ ७-११५-१७ (४९५६४)
नापि सूत मया पार्थः शक्यः प्राप्तुं कथञ्चन ।
एते तिष्ठन्ति सहिताः सर्वविद्यासु निष्ठिताः'॥ ७-११५-१८ (४९५६५)
त्रिगर्तानां रथोदाराः सुवर्णविकृतध्वजाः ।
मामेवाभिमुखा वीरा योत्स्यमाना व्यवस्थिताः ॥ ७-११५-१९ (४९५६६)
अत्र मां प्रापय क्षिप्रमश्वांश्चोदय सारथे ।
त्रिगर्तैः सह योत्स्यामि भारद्वाजस्य पश्यतः ॥ ७-११५-२० (४९५६७)
सञ्जय उवाच। ७-११५-२१क्ष् (४५५७)
ततः प्रायाच्छनैः सूतः सात्वतस्य मते स्थितः ।

रथेनादित्यवर्णेन भास्वरेण पताकिना ॥ ७-११५-२१ (४९५६८)
तमूहुः सारथेर्वश्या वल्गमाना हयोत्तमाः ।
वायुवेगसमाः सङ्ख्ये कुन्देन्दुरजतप्रभाः ॥ ७-११५-२२ (४९५६९)
आपतन्तं रणे तं तु शङ्खवर्णैर्हयोत्तमैः ।
परिवव्रुस्ततः शूरा गजानीकेन सर्वतः ।
किरन्तो विविधांस्तीक्ष्णान्सायकाँल्लघुवेधिनः ॥ ७-११५-२३ (४९५७०)
सात्वतोऽपि शितैर्बाणैर्गजानीकमयोधयत् ।
पर्वतानिव वर्षेण तपान्ते जलदो महान् ॥ ७-११५-२४ (४९५७१)
वज्राशनिसमस्पर्शैर्वध्यमानाः शरैर्गजाः ।
प्राद्रवन्रणमुत्सृज्य शिनिवीरसमीरितैः ॥ ७-११५-२५ (४९५७२)
शीर्णदन्ता विरुधिरा भिन्नमस्तकपिण्डिकाः ।
विशीर्णकर्णास्यकरा विनियन्तृपताकिनः ॥ ७-११५-२६ (४९५७३)
सम्भिन्नवर्मघण्टाश्च विनिकृत्तमहाध्वजाः ।
हतारोहा दिशो राजन्भेजिरे भ्रष्टकम्बलाः ॥ ७-११५-२७ (४९५७४)
रुवन्तो विविधान्नादाञ्जलदोपमनिःस्वनाः ।
नाराचैर्वत्सदन्तैश्च भल्लैरञ्जलिकैस्तथा ॥ ७-११५-२८ (४९५७५)
क्षुरप्रैरर्धचन्द्रैश्च सात्वतेन विदारिताः ।
क्षरन्तोऽसृक्तथा मूत्रं पुरीषं च प्रदुद्रुवुः ।
बभ्रमुश्चस्खलुश्चान्ये पेतुर्मम्लुस्तथाऽपरे ॥ ७-११५-२९ (४९५७६)
एवं तत्कुञ्जरानीकं युयुधानेन पीडितम् ।
शरैरग्न्यर्कसङ्काशैः प्रदुद्राव समन्ततः ॥ ७-११५-३० (४९५७७)
तस्मिन्हते गजानीके जलसन्धो महाबलः ।
यत्तः सम्प्रापयन्नागं रजताश्वरथं प्रति ॥ ७-११५-३१ (४९५७८)
रुक्मवर्मधरः शूरस्तपनीयाङ्गदः शुचिः ।
कुण्डली मकुटी खड्गी रक्तचन्दनरूषितः ॥ ७-११५-३२ (४९५७९)
शिरसा धारयन्दीप्तां तपनीयमयीं स्रजम् ।
उरसा धारयन्निष्कं कण्ठसूत्रं च भास्वरम् ॥ ७-११५-३३ (४९५८०)
चापं च रुक्मविकृतं विधुन्वन्गजमूर्धनि ।
अशोभत महाराज सविद्युदिव तोयदः ॥ ७-११५-३४ (४९५८१)
तमापतन्तं सहसा मागधस्य गजोत्तमम् ।
सात्यकिर्वारयामास वेलेव मकरालयम् ॥ ७-११५-३५ (४९५८२)
नागं निवारितं दृष्ट्वा शैनेयस्य शरोत्तमैः ।
अक्रुध्यत रणे राजञ्जलसन्धो महाबलः ॥ ७-११५-३६ (४९५८३)
ततः क्रुद्धो महाराज मार्गणैर्भारसाधनैः ।
अविध्यत शिनेः पौत्रं जलसन्धो महोरसि ॥ ७-११५-३७ (४९५८४)
ततोऽपरेण भल्लेन पीतेन निशितेन च ।

अस्यतो वृष्णिवीरस्य निचकर्त शरासनम् ॥ ७-११५-३८ (४९५८५)
सात्यकिं छिन्नधन्वानां प्रहसन्निव भारत ।
अविध्यन्मागधो वीरः पञ्चभिर्निशितैः शरैः ॥ ७-११५-३९ (४९५८६)
स विद्धो बहुभिर्बाणैर्जलसन्धेन वीर्यवान् ।
नाकम्पत महाबाहुस्तदद्भुतमिवाभवत् ॥ ७-११५-४० (४९५८७)
अचिन्तयन्वै स शरान्नात्यर्थं सम्भ्रमाद्बली ।
धनुरन्यत्समादाय तिष्ठतिष्ठेत्युवाच ह ॥ ७-११५-४१ (४९५८८)
एतावदुक्त्वा शैनेयो जलसन्धं महोरसि ।
विव्याध षष्ट्या सुभृशं शराणां प्रहसन्निव ॥ ७-११५-४२ (४९५८९)
क्षुरप्रेण सुतीक्ष्णेन मुष्टिदेशे महद्धनुः ।
जलसन्धस्य चिच्छेद विव्याध च त्रिभिः शरैः ॥ ७-११५-४३ (४९५९०)
जलसन्धस्तु तत्त्यक्त्वा सशरं वै शरासनम् ।
तोमरं व्यसृजत्तूर्णं सात्यकिं प्रति मारिष ॥ ७-११५-४४ (४९५९१)
स निर्भिद्य भुजं सव्यं माधवस्य महारणे ।
अभ्यगाद्धरणीं घोरः श्वसन्निव महोरगः ॥ ७-११५-४५ (४९५९२)
निर्भिन्ने तु भुजे सव्ये सात्यकिः सत्यविक्रमः ।
त्रिंशद्भिर्विशिखैस्तीक्ष्णैर्जलसन्धमताडयत् ॥ ७-११५-४६ (४९५९३)
प्रगृह्य तु ततः खड्गं जलसन्धो महाबलः ।
आर्षभं चर्म च महच्छतचन्द्रकसङ्कुलम् ।
आविध्य च ततः खड्गं सात्वतायोत्ससर्ज ह ॥ ७-११५-४७ (४९५९४)
शैनेयस्य धनुश्छित्त्वा स खड्गो न्यपतन्महीम् ।
अलातचक्रवच्चैव व्यरोचत महीं गतः ॥ ७-११५-४८ (४९५९५)
अथान्यद्धनुरादाय सर्वकायावदारणम् ।
ग्जलसन्धमभिप्रेक्ष्य उत्स्मयित्वा च माधवः'॥ ७-११५-४९ (४९५९६)
शालस्कन्धप्रतीकाशमिन्द्राशनिसमस्वनम् ।
विष्फार्य विव्यधे क्रुद्धो जलसन्धं शरेण ह ॥ ७-११५-५० (४९५९७)
ततः साभरणौ बाहू क्षुराभ्यां माधवोत्तमः ।
साङ्गदौ जलसन्धस्य चिच्छेद प्रहसन्निव ॥ ७-११५-५१ (४९५९८)
तौ बाहू परिघप्रख्यौ पेततुर्गजसत्तमात् ।
वसुन्धराधराद्भ्रष्टौ पञ्चशीर्षाविवोरगौ ॥ ७-११५-५२ (४९५९९)
ततः सुदंष्ट्रं सुहनु चारुकुण्डलमण्डितम् ।
क्षुरेणास्य तृतीयेन शिरश्चिच्छेद सात्यकिः ॥ ७-११५-५३ (४९६००)
तत्पातितशिरोबाहुकबन्धं भीमदर्शनम् ।
द्विरदं जलसन्धस्य रुधिरेणाभ्यषिञ्चत ॥ ७-११५-५४ (४९६०१)
जलसन्धं निहत्याजौ त्वरमाणस्तु सात्वतः ।
विमानं पातयामास गजस्कन्धाद्विशांपते ॥ ७-११५-५५ (४९६०२)

रुधिरेणावसिक्ताङ्गौ जलसन्धस्य कुञ्जरः ।
विलम्बमानमवहत्संश्लिष्टं परमासनम् ॥ ७-११५-५६ (४९६०३)
शरार्दितः सात्वतेन मर्दमानः स्ववाहिनीम् ।
घोरमार्तस्वरं कृत्वा विदुद्राव महागजः ॥ ७-११५-५७ (४९६०४)
हाहाकारो महानासीत्तव सैन्यस्य मारिष ।
जलसन्धं हतं दृष्ट्वा वृष्णीनामृपभेण तु ॥ ७-११५-५८ (४९६०५)
विमुखाश्चाभ्यधावन्त तव योधाः समन्ततः ।
पलायनकृतोत्साहा निरुत्साहा द्विषञ्जये ॥ ७-११५-५९ (४९६०६)
एतस्मिन्नन्तरे राजन्द्रोणः शस्त्रभृतां वरः ।
ग्सन्न्यस्य भारं सुमहत्कृतवर्मणि भारत ॥ ७-११५-६० (४९६०७)
अभ्ययाज्जवनैरश्वैर्युयुधानं महारथम् ।
स हि पार्थान्रणे यत्तान्दधारैको महाबलः'॥ ७-११५-६१ (४९६०८)
तमुदीर्णं तथा दृष्ट्वा शैनेयं कुरुपुङ्गवाः ।
द्रोणेनैव सह क्रुद्धा सात्यकिं समुपाद्रवन् ॥ ७-११५-६२ (४९६०९)
ततः प्रववृते युद्धं कुरूणां सात्वतस्य च ।
द्रोणस्य च रणे राजन्घोरं देवासुरोपमम् ॥ ॥ ७-११५-६३ (४९६१०)

इति श्रीमन्महाभारते द्रोणपर्वणि जयद्रथवधपर्वणि
चतुर्दशदिवसयुद्धे पञ्चदशाधिकशततमोऽध्यायः ॥ ११५ ॥
Mahabharata - Drona Parva - Chapter Footnotes

५-११५-२३ द्रोणो ५-११५-२६ पिण्डिका गण्डः ॥
५-११५-३३ कण्ठसूत्रं हारम् ॥
५-११५-४७ ततो ग्रहणानन्तरम् । आविध्य भ्रामयित्वा ॥
५-११५-५२ वसुन्धराधरात् पर्वताम् ॥
५-११५-११५ पञ्चदशाधिकशततमोऽध्याय ॥

---

द्रोनपर्व-अध्यय११६
॥ श्रीः ॥
७.११६. अध्यायः ११६

Mahabharata - Drona Parva - Chapter Topics
सात्यकिना दुर्योधनकृतवर्मणोः पराजयः ॥ १ ॥

Mahabharata - Drona Parva - Chapter Text

७-११६-० (४९६११)
सञ्जय उवाच। ७-११६-०क्ष् (४५५८)
ग्सात्वतस्य रणे कर्म दृष्ट्वा योद्धुं महारथाः ।
अमृष्यमाणाः संयत्ताः शैनेयं समुपाद्रवन्'॥ ७-११६-१ (४९६१२)
ते किरन्तः शरव्रातान्सर्वे यत्ताः प्रहारिणः ।
त्वरमाणा महाराज युयुधानमयोधयन् ॥ ७-११६-२ (४९६१३)
तं द्रोणः सप्तसप्त्या जघान निशितैः शरैः ।
दुर्मर्षणो द्वादशभिर्दुःसहो दशभिः शरैः ॥ ७-११६-३ (४९६१४)
विकर्णश्चापि निशितैस्त्रिंशद्भिः कङ्कपत्रिभिः ।
विव्याध मार्गणैस्तूर्णं वामपार्श्वे स्तनान्तरे ॥ ७-११६-४ (४९६१५)
दुर्मुखो दशभिर्बाणैस्तथा दुःशासनोऽष्टभिः ।
चित्रसेनश्च शैनेयं द्वाभ्यां विव्याध मारिष ॥ ७-११६-५ (४९६१६)
दुर्योधनश्च महता शरवर्षेण माधवम् ।
अपीडयद्रमे राजञ्शूराश्चान्ये महारथाः ॥ ७-११६-६ (४९६१७)
सर्वतः प्रतिविद्धस्तु तव पुत्रैर्महारथैः ।
ग्स तुद्यमानश्च तदा सर्वतः कुरुपुङ्गवैः'॥ ७-११६-७ (४९६१८)
तान्प्रत्यविध्यद्वार्ष्णेयः पृथक्पृथगजिह्मगैः ।
ग्सात्यकिः पुण्डरीकाक्षो ह्यस्त्रेषु परिनिष्ठितः'॥ ७-११६-८ (४९६१९)
भारद्वाजं त्रिभिर्बाणैर्दुःसहं नवभिः शरैः ।
विकर्णं पञ्चविंशत्या चित्रसेनं च सप्तभिः ॥ ७-११६-९ (४९६२०)
दुर्मर्षणं द्वादशभिरष्टाभिश्च विविंशतिम् ।
सत्यव्रतं च नवभिर्विजयं दशभिः शरैः ॥ ७-११६-१० (४९६२१)
ग्दुर्योधनं त्रिभिर्विद्धवा सुपुङ्खैस्तिग्मतेजनैः'।
ततो रुक्माङ्गदं चापं विधुन्वानो महारथः ।
अभ्ययात्सात्यकिस्तूर्णं पुत्रं तव महारथम् ॥ ७-११६-११ (४९६२२)
राजानं सर्वलोकस्य सर्वलोकमहारथम् ।
शरैरभ्यहनद्गाढं ततो युद्धमभूत्तयोः ॥ ७-११६-१२ (४९६२३)
विमुञ्चतौ शरांस्तीक्ष्णान्सन्दधानौ च सायकान् ।
अदृश्यं समरेऽन्योन्यं चक्रतुस्तौ महारथौ ॥ ७-११६-१३ (४९६२४)
सात्यकिः कुरुराजेन निर्विद्धो बह्वशोभत ।
अस्रवद्रुधिरं भूरि स्वरसं चन्दनो यथा ॥ ७-११६-१४ (४९६२५)
सात्वतेन च बाणौघैर्निर्विद्धस्तनयस्तव ।
शातकुम्भमयापीडो बभौ यूप इवोच्छ्रितः ॥ ७-११६-१५ (४९६२६)
माधवस्तु रमे राजन्कुरुराजस्य धन्विनः ।
धनुश्चिच्छेद समरे क्षुरप्रेण हसन्निव ॥ ७-११६-१६ (४९६२७)
अथैनं छिन्नधन्वानं शरैर्बहुभिराचिनोत् ।

निर्भिन्नश्च शरैस्तेन द्विषता क्षिप्रकारिणा ।
नामृष्यत रणे राजा शत्रोर्विजयलक्षणम् ॥ ७-११६-१७ (४९६२८)
अथान्यद्धनुरादाय हेमपृष्ठं दुरासदम् ।
विव्याध सात्यकिं तूर्णं सायकानां शतेन ह ॥ ७-११६-१८ (४९६२९)
सोऽतिविद्धो बलवता तव पुत्रेण धन्विना ।
अमर्षवशमापन्नस्तव पुत्रमपीडयत् ॥ ७-११६-१९ (४९६३०)
पीडितं नृपतिं दृष्ट्वा तव पुत्रं महारथाः ।
सात्यकिं शरवर्षेण छादयामासुरोजसा ॥ ७-११६-२० (४९६३१)
स च्छाद्यमानो बहुभिस्तव पुत्रैर्महारथैः ।
एकैकं पञ्चभिर्विद्ध्वा पुनर्विव्याध सप्तभिः ।
दुर्योधनं व त्वरितो विव्याधाष्टभिराशुगैः ॥ ७-११६-२१ (४९६३२)
प्रहसंश्चास्य चिच्छेद कार्मुकं रिपुभीषणम् ।
नागं मणिमयं चैव शरैर्ध्वजमपातयत् ॥ ७-११६-२२ (४९६३३)
हत्वा तु चतुरो वाहांश्चतुर्भिर्निशितैः शरैः ।
सारथिं पातयामास क्षुरप्रेण महायशाः ॥ ७-११६-२३ (४९६३४)
एतस्मिन्नन्तरे चैव कुरुराजं महारथम् ।
अवारिकच्छरैर्हृष्टो बहुभिर्मर्मभेदिभिः ॥ ७-११६-२४ (४९६३५)
स विध्यमानः समरे शैनेयस्य शरोत्तमैः ।
प्राद्रवत्सहसा राजन्पुत्रो दुर्योधनस्तव ।
आप्लुतश्च ततो यानं चित्रसेनस्य धन्विनः ॥ ७-११६-२५ (४९६३६)
हाहाभूतं जगच्चासीद्दृष्ट्वा राजानमाहवे ।
ग्रस्यमानं सात्यकिना खे मोममिव राहुणा ॥ ७-११६-२६ (४९६३७)
तं तु शब्दमथ श्रुत्वा कृतवार्मा महारथः ।
अभ्ययात्सहसा तत्र यत्रास्ते माधवः प्रभुः ॥ ७-११६-२७ (४९६३८)
विधुन्वानो धनुः श्रेष्ठं चोदयंश्चैव वाजिनः ।
भर्त्सयन्सारथिं चाग्रे याहियाहीति सत्वरम् ॥ ७-११६-२८ (४९६३९)
तमापतन्तं सम्प्रेक्ष्य व्यादितास्यमिवान्तकम् ।
युयुधानो महाराज यन्तारमिदमब्रवीत् ॥ ७-११६-२९ (४९६४०)
कृतवर्मा रथेनैष द्रुतमापतते शरी ।
प्रत्युद्याहि रथेनैनं प्रवरं सर्वधन्विनाम् ॥ ७-११६-३० (४९६४१)
गप्रयाहि सत्वरं सूत रथेन रथसत्तमम् ।
निहनिष्यामि तं सङ्ख्ये वृष्णिवीरमरिन्दमम्'॥ ७-११६-३१ (४९६४२)
ततः प्रजवितास्वेन रथेन रथिनांवरः ।
आससाद रणे भोजं प्रतिमानं धनुष्मताम् ॥ ७-११६-३२ (४९६४३)
ततो गभस्तिमत्प्रख्यौ ज्वलिताविव पावकौ ।
समेयातां नरव्याघ्रौ व्याघ्राविव तरस्विनौ ॥ ७-११६-३३ (४९६४४)

कृतवर्मा तु शैनेयं षड्विंशत्या समार्पयत् ।
निशितैः सायकैस्तीक्ष्णैर्यन्तारं चास्य पञ्चभिः ॥ ७-११६-३४ (४९६४५)
चतुरश्चतुरो वाहांश्चतुर्भिः परमेषुभिः ।
अविध्यत्साधुदान्तान्वै सैन्धवान्सात्वतस्य हि ॥ ७-११६-३५ (४९६४६)
रुक्मध्वजो रुक्मपृष्ठं महद्विष्फार्य कार्मुकम् ।
रुक्माङ्गदी रुक्मवर्मा रुक्मपुङ्खैरवारयत् ॥ ७-११६-३६ (४९६४७)
ततोऽशीतिं शिनेः पौत्रः सायकान्कृतवर्मणे ।
प्राहिणोत्त्वरया युक्तो द्रष्टुकामो धनञ्जयम् ॥ ७-११६-३७ (४९६४८)
सोऽतिविद्धो बलवता शत्रुणा शत्रुतापनः ।
समकम्पतः दुर्धर्षः क्षितिकम्पे यथाऽचलः ॥ ७-११६-३८ (४९६४९)
त्रिषष्ट्या चतुरोऽस्याश्वान्सप्तभिः सारथिं तथा ।
विव्याध निशितैस्तूर्णं सात्यकिः सत्यविक्रमः ॥ ७-११६-३९ (४९६५०)
ग्हताश्वसूते तु रथे स्थिताय शिनिपुङ्गवः'।
सुवर्णपुङ्खं विशिखं समादाय च सात्यकिः ।
व्यसृजत्तं महाज्वालं सङ्क्रुद्धमिव पन्नगम् ॥ ७-११६-४० (४९६५१)
सोऽविध्यत्कृतवर्माणं यमदण्डोपमः शरः ।
जाम्बूनदविचित्रं च वर्म निर्भिद्य भानुमत् ।
अभ्यगाद्धरणीमुग्रो रुधिरेण समुक्षितः ॥ ७-११६-४१ (४९६५२)
सञ्जातरुधिरश्चाजौ सात्वतेषुभिरर्दितः ।
सशरं धनुरुत्सृज्य न्यपतत्स्यन्दनोत्तमात् ॥ ७-११६-४२ (४९६५३)
स सिंहदंष्ट्रो जानुभ्यां पतितोऽमितविक्रमः ।
शरार्दितः सात्यकिना रथोपस्थे नरर्षभः ॥ ७-११६-४३ (४९६५४)
सहस्रबाहुसदृशमक्षोभ्यमिव सागरम् ।
निवार्य कृतवर्माणं सात्यकिः प्रययौ ततः ॥ ७-११६-४४ (४९६५५)
ग्न हि तस्य शरोऽपार्थः कथञ्चिदपि पार्थिव ।
दिदृक्षुः स हि वेगेन प्रायाद्यत्र धनञ्जयः ॥ ७-११६-४५ (४९६५६)
स शक्त्या क्षत्रियैस्तत्र निरुद्धो बलवत्तरः ।
युयुधे सात्वतो राजन्दिदृक्षुः पाण्डुनन्दनम्'॥ ७-११६-४६ (४९६५७)
खड्गशक्तिधनुःकीर्णां गजाश्वरथसङ्कुलाम् ।
प्रवर्तितोग्ररुधिरां शतशः क्षत्रियर्षभैः ॥ ७-११६-४७ (४९६५८)
प्रेक्षतां सर्वसैन्यानां मध्येन शिनिपुङ्गवः ।
अभ्यगाद्वाहिनीं हित्वा वृत्रहेवासुरीं चमूम् ॥ ७-११६-४८ (४९६५९)
समाश्वस्य च हार्दिक्यो गृह्य चान्यन्महद्धनुः ।
तस्थौ स तत्र बलवान्वारयन्युधि पाण्डवान् ॥ ॥ ७-११६-४९ (४९६६०)

इति श्रीमन्महाभारते द्रोणपर्वणि जयद्रथवधपर्वणि

चतुर्दशदिवसयुद्धे षोडशाधिकशततमोऽध्यायः ॥ ११६ ॥

Mahabharata - Drona Parva - Chapter Footnotes

५-११६-११ रुक्माङ्गदं चापि इति ङ पाठः ॥
५-११६-१४ चन्दनो रक्तचन्दनः ॥
५-११६-४३ दंष्ट्राश्चतस्रो यस्य स्युर्दशनेभ्यः समुच्छ्रिताः
। सिंहदंष्ट्रः स गदितश्चतुर्दंष्ट्रश्च सूरिभिः ॥
५-११६-११६ षोडशाधिकशततमोऽध्यायः ॥

---

द्रोनपर्व-अध्यय११७
॥ श्रीः ॥
७.११७. अध्यायः ११७

Mahabharata - Drona Parva - Chapter Topics

सात्यकिपराक्रमवर्णनम् ॥ १ ॥

Mahabharata - Drona Parva - Chapter Text

७-११७-० (४९६६१)
सञ्जय उवाच। ७-११७-०क्ष् (४५५९)
काल्यमानेषु सैन्येषु शैनेयेन ततस्ततः ।
भारद्वाजः शरव्रातैर्मर्मभिद्भिरवाकिरत् ॥ ७-११७-१ (४९६६२)
स सम्प्रहारस्तुमुलो द्रोणसात्वतयोरभूत् ।
पश्यतां सर्वसैन्यानां बलिवासवयोरिव ॥ ७-११७-२ (४९६६३)
ततो द्रोणः शिनेः पौत्रं चित्रैः सर्वायसैः शरैः ।
त्रिभिराशीविपाकारैर्ललाटे समविध्यत ॥ ७-११७-३ (४९६६४)
तैर्ललाटार्पितैर्बाणैर्युयुधानस्त्वजिह्मगैः ।
व्यरोचत महाराज त्रिशृङ्ग इव पर्वतः ॥ ७-११७-४ (४९६६५)
ततोऽस्य बाणानपरानिन्द्राशनिसमस्वनान् ।
भारद्वाजोऽन्तरप्रेक्षी प्रेषयामास संयुगे ॥ ७-११७-५ (४९६६६)
तान्द्रोणचापनिर्मुक्तान्दाशार्हः पततः शरान् ।
द्वाभ्यांद्वाभ्यां सुपुङ्खाभ्यां चिच्छेद परमास्त्रवित् ॥ ७-११७-६ (४९६६७)
तामस्य लघुतां द्रोणः समवेक्ष्य विशाम्पते ।
प्रहस्य सहसाऽविध्यत्त्रिंशतां शिनिपुङ्गवम् ॥ ७-११७-७ (४९६६८)
पुनः पञ्चशतेषूणां शितेन च समार्पयत् ।
लघुतां युयुधानस्य लाघवेन विशेषयन् ॥ ७-११७-८ (४९६६९)

समुत्पतन्ति वल्मीकाद्यथा क्रुद्धा महोरगाः ।
तथा द्रोणरथाद्राजन्नापतन्ति तनुच्छिदः ॥ ७-११७-९ (४९६७०)
तथैव युयुधानेन सृष्टाः सतसहस्रशः ।
अवाकिरन्द्रोणरथं शरा रुधिरभोजनाः ॥ ७-११७-१० (४९६७१)
लाघवाद्द्विजमुख्यस्य सात्वतस्य च मारिष ।
विशेषं नाध्यगच्छाम समावास्तां नरर्षभौ ॥ ७-११७-११ (४९६७२)
सात्यकिस्तु ततो द्रोणं नवभिर्नतपर्वभिः ।
आजघान भृशं क्रुद्धो ध्वजं च निशितैः शरैः ॥ ७-११७-१२ (४९६७३)
सारथिं च शतेनैव भारद्वाजस्य पश्यतः ।
लाघवं युयुधानस्य दृष्ट्वा द्रोणो महारथः ॥ ७-११७-१३ (४९६७४)
सप्तत्या सारथिं विद्ध्वा तुरङ्गांश्च त्रिभिस्त्रिभिः ।
ध्वजमेकेन चिच्छेद माधवस्य रथे स्थितम् ॥ ७-११७-१४ (४९६७५)
अथापरेण भल्लेन हेमपुङ्खेन पत्रिणा ।
धनुश्चिच्छेद समरे माधवस्य महात्मनः ॥ ७-११७-१५ (४९६७६)
सात्यकिस्तु ततः क्रुद्धो धनुस्त्यक्त्वा महारथः ।
गदां जग्राह महतीं भारद्वाजाय चाक्षिपत् ॥ ७-११७-१६ (४९६७७)
तामापतन्तीं सहसा पट्टबद्धामयस्मयीम् ।
न्यवारयच्छरैर्द्रोणो बहुभिर्बहुरूपिभिः ॥ ७-११७-१७ (४९६७८)
अथान्यद्धनुरादाय सात्यकिः सत्यविक्रमः ।
विव्याध बहुभिर्वीरं भारद्वाजं शिलाशितैः ॥ ७-११७-१८ (४९६७९)
स विद्ध्वा समरे द्रोणं सिंहनादममुञ्चत ।
तं वै न मृमषे द्रोणः सिंहनादं महात्मनः ॥ ७-११७-१९ (४९६८०)
ततः शक्तिं रणे द्रोणो रुक्मदण्डामयस्मयीम् ।
तरसा प्रेषयामास माधवस्य रथं प्रति ॥ ७-११७-२० (४९६८१)
अनासाद्य तु शैनेयं सा शक्तिः कालसन्निभा ।
भित्त्वा रथं जगामोग्ना धरणीं दारुणस्वना ॥ ७-११७-२१ (४९६८२)
ततो द्रोणं शिनेः पौत्रो राजन्विव्याध पत्रिणा ।
दक्षिणं भुजमासाद्य पीडयन्भरतर्षभ ॥ ७-११७-२२ (४९६८३)
द्रोणोऽपि समरे राजन्माधवस्य महद्धनुः ।
अर्धचन्द्रेण चिच्छेद रथशक्त्या च सारथिम् ॥ ७-११७-२३ (४९६८४)
मुमोह सारथिस्तस्य रथशक्त्या समाहतः ।
स रथोपस्थमासाद्य मुहूर्तं सन्न्यषीदत ॥ ७-११७-२४ (४९६८५)
चकार सात्यकी राजंस्तत्र कर्मातिमानुषम् ।
अयोधयच्च यद्द्रोणं रश्मीञ्जग्राह च स्वयम् ॥ ७-११७-२५ (४९६८६)
ततः शरशतेनैव युयुधानो महारथः ।
अविध्यद्ब्राह्मणं सङ्ख्ये हृष्टरूपो विशाम्पते ॥ ७-११७-२६ (४९६८७)

तस्य द्रोणः शरान्पञ्च प्रेषयामास भारत ।
ते घोराः कवचं भित्त्वा पपुः शोणितमाहवे ॥ ७-११७-२७ (४९६८८)
निर्विद्धस्तु शरैर्घोरैरक्रुद्ध्यत्सात्यकिर्भृशम् ।
सायकान्व्यसृजच्चापि वीरो रुक्मरथं प्रति ॥ ७-११७-२८ (४९६८९)
ततो द्रोणस्य यन्तारं निपात्यैकेषुणा भुवि ।
अश्वान्व्यद्रावयद्बाणैर्हतसूतांस्ततस्ततः ॥ ७-११७-२९ (४९६९०)
स रथः प्रद्रुतः सङ्ख्ये मण्डलानि सहस्रशः ।
चकार राजतो राजन्भ्राजमान इवांशुमान् ॥ ७-११७-३० (४९६९१)
अभिद्रवत गृह्णीत हयान्द्रोणस्य धावत ।
इति स्म चुक्रुशुः सर्वे राजपुत्राः सराजकाः ॥ ७-११७-३१ (४९६९२)
ते सात्यकिमपास्याशु राजन्युधि महारथाः ।
यतो द्रोणस्ततः सर्वे सहसा समुपाद्रवन् ॥ ७-११७-३२ (४९६९३)
तान्दृष्ट्वा प्रद्रुतान्सङ्ख्ये सात्वतेन शरार्दितान् ।
प्रभग्नं पुनरेवासीत्तव सैन्यं समाकुलम् ॥ ७-११७-३३ (४९६९४)
व्यूहस्यैव पुनर्द्वारं गत्वा द्रोणो व्यवस्थितः ।
वातायमानैस्तैरश्वैर्नीतो वृष्णिशरार्दितैः ॥ ७-११७-३४ (४९६९५)
पाण्डुपाञ्चालसम्भिन्नं व्यूहमालोक्य वीर्यवान् ।
शैनेये नाकरोद्यत्नं व्यूहमेवाभ्यरक्षत ॥ ७-११७-३५ (४९६९६)
निवार्य पाण्डुपाञ्चालान्द्रोणाग्निः प्रदहन्निव ।
तस्थौ क्रोधेध्मसन्दीप्तः कालसूर्य इवोद्यतः ॥ ॥ ७-११७-३६ (४९६९७)

इति श्रीमन्महाभारते द्रोणपर्वणि जयद्रथवधपर्वणि
चतुर्दशदिवसयुद्धे सप्तदशाधिकशततमोऽध्यायः ॥ ११७ ॥
Mahabharata - Drona Parva - Chapter Footnotes

५-११७-२३ रथशक्त्या केतकपत्राकारमुखया शक्त्या ॥
५-११७-११७ सप्तदशाधिकशततमोऽध्यायः ॥

---

द्रोनपर्व-अध्यय११८
॥ श्रीः ॥
७.११८. अध्यायः ११८

Mahabharata - Drona Parva - Chapter Topics
सात्यकिना सुदर्शननाम्नो राज्ञो वधः ॥ १ ॥

Mahabharata - Drona Parva - Chapter Text

७-११८-० (४९६९८)
सञ्जय उवाच। ७-११८-०क्ष् (४५६०)
द्रोणं स जित्वा पुरुषप्रवीर--
स्तथैव हार्दिक्यमुखांस्त्वदीयान् ।
प्रहस्य सूतं वचनं बभाषे
शिनिप्रवीरः कुरुपुङ्गवाग्र्य ॥ ७-११८-१ (४९६९९)
निमित्तमात्रं वयमद्य सूत
दग्धा रथाः केशवफल्गुनाभ्याम् ।
हतान्निहन्मेह नरर्षभेण
वयं सुरेशात्मसमुद्भवेत ॥ ७-११८-२ (४९७००)
सञ्जय उवाच। ७-११८-३क्ष् (४५६१)
तमेवमुक्त्वा शिनिपुङ्गवस्तदा
महामृधे सोऽग्र्यधनुर्धरोऽरिहा ।
किरन्समन्तात्सहसा शरान्बली
समापतच्छ्येन इवामिषाशया ॥ ७-११८-३ (४९७०१)
तं यान्तमश्वैः शशिशङ्खवर्णै--
र्विगाह्य सैन्यं पुरुषप्रवीरम् ।
नाशक्नुवन्वारयितुं समन्ता--
दादित्यरश्मिप्रतिमं रथाग्र्यम् ॥ ७-११८-४ (४९७०२)
असह्यविक्रान्तमदीनसत्वं
सर्वे गणा भारत ये त्वदीयाः ।
सहस्रनेत्रप्रतिमप्रभावं
दिवीव सूर्यं जलदव्यपाये ॥ ७-११८-५ (४९७०३)
अमर्षपूर्णस्त्वतिचित्रयोधी
शरासनी काञ्चनवर्मधारी ।
सुदर्शनः सात्यकिमापतन्तं
न्यवारयद्राजवरः प्रसह्य ॥ ७-११८-६ (४९७०४)
तयोरभूद्भारतसम्प्रहारः
सुदारुणस्तं समतिप्रशंसन् ।
योधास्त्वदीयाश्च हि सोमकाश्च
वृत्रेन्द्रयोर्युद्धमिवामरौघाः ॥ ७-११८-७ (४९७०५)
शरैः सुतीक्ष्णैः शतशोऽभ्यविध्य--
त्सुदर्शनः सात्वतमुख्यमाजौ ।
अनागतानेव तु तान्पृषत्कां--
श्चिच्छेद राजञ्शिनिपुङ्गवोऽपि ॥ ७-११८-८ (४९७०६)

तथैव शक्रप्रतिमोऽपि सात्यकिः
सुदर्शने यान्क्षिपति स्म सायकान् ।
द्विधा त्रिधा तानकरोत्सुदर्शनः
शरोत्तमैः स्यन्दनवर्यमास्थितः ॥ ७-११८-९ (४९७०७)
तान्वीक्ष्य बाणान्निहतांस्तदानीं
सुदर्शनः सात्यकिबाणवेगैः ।
क्रोधाद्दिधक्षन्निव तिग्मतेजाः
शरानमुञ्चत्तपनीयचित्रान् ॥ ७-११८-१० (४९७०८)
पुनः स बाणैस्त्रिभिरग्निकल्पै--
राकर्णपूर्णैर्निशितैः सुपुङ्खैः ।
विव्याध देहावरणं विभिद्य
ते सात्यकेराविविशुः शरीरम् ॥ ७-११८-११ (४९७०९)
तथैव तस्यावनिपालपुत्रः
सन्धाय बाणैरपरैर्ज्वलद्भिः ।
आजघ्निवांस्तान्रजतप्रकाशां--
श्चतुर्भिरश्वांश्चतुरः प्रसह्य ॥ ७-११८-१२ (४९७१०)
तथा तु तेनाभिहतस्तरस्वी
नप्ता शिनेरिन्द्रसमानवीर्यः ।
सुदर्शनस्येषुगणैः सुतीक्ष्णै--
र्हयान्निहत्याशु ननाद नादम् ॥ ७-११८-१३ (४९७११)
अथास्य सूतस्य शिरो निकृत्य
भल्लेन शक्राशनिसन्निभेन ।
सुदर्शनस्यापि शिनिप्रवीरः
क्षुरेण कालानलसन्निभेन ॥ ७-११८-१४ (४९७१२)
सकुण्डलं पूर्णशशिप्रकाशं
भ्राजिष्णु वक्त्रं विचकर्त देहात् ।
यथा पुरा वज्रधरः प्रसह्य
बलस्य सङ्ख्येऽतिबलस्य राजन् ॥ ७-११८-१५ (४९७१३)
निहत्य तं पार्थिवपुत्रपौत्रं
रणे यदूनामृषभस्तरस्वी ।
मुदा समेतः परया महात्मा
रराज राजन्सुरराजकल्पः ॥ ७-११८-१६ (४९७१४)
ततो ययावर्जुनमेव वीरो
निवार्य सैन्यं तव मार्गणौघैः ।
सदश्वयुक्तेन रथेन राजँ--
ल्लोकं विसिस्मापयिषुर्नृवीरः ॥ ७-११८-१७ (४९७१५)

तत्तस्य विस्मापयनीयमग्र्य--
मपूजयन्योधवराः समेताः ।
प्रवर्तमानानिषुगोचरेऽरी--
न्ददाह बाणैर्हुतभुग्यथैव ॥ ॥ ७-११८-१८ (४९७१६)

इति श्रीमन्महाभारते द्रोणपर्वणि जयद्रथवधपर्वणि
चतुर्दशदिवसयुद्धे अष्टादशाधिकशततमोऽध्यायः ॥११८ ॥

---

द्रोनपर्व-अध्यय११९
॥ श्रीः ॥
७.११९. अध्यायः ११९

Mahabharata - Drona Parva - Chapter Topics
सात्यकिपराक्रमवर्णनम् ॥१ ॥

Mahabharata - Drona Parva - Chapter Text

७-११९-० (४९७१७)
ग्सञ्जय उवाच। ७-११९-०क्ष् (४५६२)
निर्जित्य कृतवर्माणं भारद्वाजं च संयुगे ।
स सात्यकिः सत्यधृतिर्महात्मा शिनिपुङ्गवः ॥ ७-११९-१ (४९७१८)
क़दुर्योधनं च निर्जित्य शूरं चैव सुयोधनम् ।
जलसन्धं निहत्याजौ शूरसेनं च पार्थिवम् ॥ ७-११९-२ (४९७१९)
म्लेच्छांश्च बहुधा राजन्काश्यपुत्रं च संयुगे ।
निषादांस्तङ्कणांश्चैव कलिङ्गान्मगधानपि ॥ ७-११९-३ (४९७२०)
केकयाञ्छूरसेनांश्च तथा पर्वतवासिनः ।
काम्भोजान्यवनांश्चैव वसातींश्च शिबीनपि ॥ ७-११९-४ (४९७२१)
कोसलान्मगधांश्चैव यातुधानान्सतित्तिरान् ।
एतांश्चान्यान्रणे हत्वाऽगच्छद्युद्धे स सात्यकिः ॥ ७-११९-५ (४९७२२)
रुधिरौघनदीं घोरां केशशैवालशाद्वलाम् ।
शक्तिग्राहसमाकीर्णां छत्रहंसोपशोभिताम् ॥ ७-११९-६ (४९७२३)
दुस्तरां भीरुभिर्नित्यं शूरलोकप्रवाहिनीम् ।
प्रवर्त्य हृषितो राजन्पुनर्यन्तारमब्रवीत् ॥ ७-११९-७ (४९७२४)
ध्वजनागाश्वकलिलं शरशक्त्यूर्मिमालिनम्'।
खड्गमत्स्यं गदाग्राहं शूरायुधमहास्वनम् ॥ ७-११९-८ (४९७२५)
प्राणापहारिणं रौद्रं वादित्रोद्घुष्टनादितम् ।

शूराणां सुखसंस्पर्शमस्पृश्यमथ भीरुणाम् ।
तीर्णाः स्म दुस्तरं तात द्रोणानीकमहार्णवम् ॥ ७-११९-९ (४९७२६)
जलसन्धबलेनाजौ पुरुषादैरिवावृतम् ।
अतोऽन्यत्पृतनाशेषं मन्ये कुनदिकामिव ॥ ७-११९-१० (४९७२७)
तर्तव्यामल्पसलिलां चोदयाश्वानसम्भ्रमम् ।
हस्तप्राप्तमहं मन्ये साम्प्रतं सव्यसाचिनम् ॥ ७-११९-११ (४९७२८)
निर्जित्य दुर्धरं द्रोणं सपदानुगमाहवे ।
हार्दिक्यं योधवर्यं च मन्ये प्राप्तं धनञ्जयम् ॥ ७-११९-१२ (४९७२९)
न हि मे जायते त्रासो दृष्ट्वा सैन्यान्यनेकशः ।
वह्नेरिव प्रदीप्तस्य वने शुष्कतृणालयम् ॥ ७-११९-१३ (४९७३०)
पश्य पाण्डवमुख्येन यातां भूमिं किरीटिना ।
पत्त्यश्वरथनागौघैः पतितैर्विषमीकृताम् ॥ ७-११९-१४ (४९७३१)
द्रवते तद्यथा सैन्यं तेन भग्नं महात्मना ।
रथैर्विपरिधावद्भिर्गजैरश्वैश्च सारथे ।
कौशेयारुणसंकाशमेतदुद्धूयते रजः ॥ ७-११९-१५ (४९७३२)
अभ्याशस्थमहं मन्ये श्वेताश्वं कृष्णसारथिम् ॥ ७-११९-१६ (४९७३३)
श्रूयते ह्येष निर्घोषो जलदस्येव गर्जतः ।
विष्फार्यमाणस्य रणे गाण्डीवस्यामितौजसः ॥ ७-११९-१७ (४९७३४)
अभ्याशस्थमहं मन्ये सैन्धवस्य किरीटिनम् ।
तादृशः श्रूयते शब्दः सैन्यानां सागरोपमः ॥ ७-११९-१८ (४९७३५)
यादृशानि निमित्तानि मम प्रादुर्भवन्ति वै ।
अनस्तंगत आदित्ये हन्ता सैन्धवमर्जुनः ॥ ७-११९-१९ (४९७३६)
शनैर्विस्रम्भयन्नश्वान्याहि यत्रारिवाहिनी ॥ ७-११९-२० (४९७३७)
यत्रैते सतलत्रामाः सुयोधनपुरोगमाः ।
दंशिताः क्रूरकर्माणः काम्भोजा युद्धदुर्मदाः ॥ ७-११९-२१ (४९७३८)
शरबाणासनधरा यवनाश्च प्रहारिणः ।
शकाः किराता दरदा बर्बरास्ताम्रलिप्तकाः ॥ ७-११९-२२ (४९७३९)
अन्ये च बहवो म्लेच्छा विविधायुधपाणयः ।
मामेवाभिमुखाः सर्वे तिष्ठन्ति समरार्थिनः ॥ ७-११९-२३ (४९७४०)
एतान्सरथनागाश्वान्निहत्याजौ सपत्तिनः ।
इदं दुर्गं महाघोरं तीर्णमेवोपधारय ॥ ७-११९-२४ (४९७४१)
सूत उवाच। ७-११९-२५क्ष् (४५६३)
न सम्भ्रमो मे वार्ष्णेय विद्यते सत्यविक्रम ।
यद्यपि स्यात्तव क्रुद्धो जामदग्न्योऽग्रतः स्थितः ॥ ७-११९-२५ (४९७४२)
द्रोणो वा रथिनां श्रेष्ठः कृपो मद्रेश्वरोऽपि वा ।
तथापि सम्भ्रामो न स्यात्त्वामाश्रित्य महाभुज ॥ ७-११९-२६ (४९७४३)

त्वया सुबहवो युद्धे निर्जिताः शत्रुसूदन ।
दंशिताःक्रूरकर्माणः काम्भोजा युद्धदुर्मदाः ॥ ७-११९-२७ (४९७४४)
शरवाणासनधरा यवनाश्च प्रहारिणः ।
शकाः किराता दरदा बर्बरास्ताम्रलिप्तकाः ।
अन्ये च बहवो म्लेच्छा विविधायुधपाणयः ॥ ७-११९-२८ (४९७४५)
न च मे सम्भ्रमः कश्चिद्भूतपूर्वः कथञ्चन ।
किमुतैतत्समासाद्य धीरं संयुगगोष्पदम् ॥ ७-११९-२९ (४९७४६)
आयुष्मन्कतरेण त्वां प्रापयामि धनञ्जयम् ।
केभ्यः क्रुद्धोऽसि वार्ष्णेय कान्स्विन्मृत्युरुपस्थितः ॥ ७-११९-३० (४९७४७)
केषां सङ्गमनीकस्य हन्तुमुत्सहते मनः ।
केत्वां युधि पराक्रान्तं कालान्तकयमोपमम् ॥ ७-११९-३१ (४९७४८)
दृष्ट्वा विक्रमसम्पन्नं विद्रविष्यन्ति संयुगे ।
केषां वैवस्वतो राजा स्मरतेऽद्य महाभुज ॥ ७-११९-३२ (४९७४९)
सात्यकिरुवाच। ७-११९-३३क्ष् (४५६४)
मुण्डानेतान्हनिष्यामि दानवानिव वासवः ।
प्रतिज्ञां पारयिष्यामि काम्भोजानेव मां वह ॥ ७-११९-३३ (४९७५०)
xxxxx कदनं कृत्वा क्षिप्रं यास्यामि पाण्डवम् ॥ ७-११९-३४ (४९७५१)
xxxxx यन्ति मे वीर्यं कौरवाः ससुयोधनाः ।
xxxxxx नाके हते सूत सर्वसैन्येषु चासकृत् ॥ ७-११९-३५ (४९७५२)
अद्य कौरवसैन्यस्य दीर्घमाणस्य संयुगे ।
श्रुत्वा विरावं बहुधा सन्तप्स्यति सुयोधनः ॥ ७-११९-३६ (४९७५३)
अद्य पाण्डवमुख्यस्य श्वेताश्वस्य महात्मनः ।
आचार्यककृतं मार्गं दर्शयिष्यामि संयुगे ॥ ७-११९-३७ (४९७५४)
अद्य मद्बाणनिहतान्योधमुख्यान्सहस्रशः ।
दृष्ट्वा दुर्योधनो राजा पश्चात्तापं गमिष्यति ॥ ७-११९-३८ (४९७५५)
अद्य मे क्षिप्रहस्तस्य क्षिपतः सायकोत्तमान् ।
अलातचक्रप्रतिमं धनुर्द्रक्ष्यन्ति कौरवाः ॥ ७-११९-३९ (४९७५६)
मत्सायकचिताङ्गानां रुधिरं स्रवतां मुहुः ।
सैनिकानां वधं दृष्ट्वा सन्तप्स्यति सुयोधनः ॥ ७-११९-४० (४९७५७)
अद्य मे क्रुद्धरूपस्य निघ्नतश्च वरान्वरान् ।
द्विफल्गुनामिमं लोकं मंस्यतेऽद्य सुयोधनः ॥ ७-११९-४१ (४९७५८)
अद्य राजसहस्राणि निहतानि मया रणे ।
दृष्ट्वा दुर्योधनो राजा सन्तप्स्यति महामृधे ॥ ७-११९-४२ (४९७५९)
अद्य स्नेहं च भक्तिं च पाण्डवेषु महात्मसु ।
हत्वा राजसहस्राणि दर्शयिष्यामि राजसु ॥ ७-११९-४३ (४९७६०)
बलं वीर्यं कृतज्ञत्वं मम ज्ञास्यन्ति कौरवाः ॥ ७-११९-४४ (४९७६१)

सञ्जय उवाच। ७-११९-४५क्ष् (४५६५)
एवमुक्तस्तदा सूतः शिक्षितान्साधुवाहिनः ।
शशाङ्कसन्निकाशान्वै वाजिनो व्यनुदद्भृशम् ॥ ७-११९-४५ (४९७६२)
ते पिबन्त इवाकाशं युयुधानं हयोत्तमाः ।
प्रापयन्यवनाञ्शनीघ्रं मनः पवनरंहसः ॥ ७-११९-४६ (४९७६३)
सात्यकिं ते समासाद्य पृतनास्वनिवर्तिनम् ।
बहवो लघुहस्ताश्च शरवर्षैरवाकिरन् ॥ ७-११९-४७ (४९७६४)
तेषामिषूनथास्त्राणि वेगवान्नतपर्वभिः ।
अच्छिनत्सात्यकी राजन्नैनं ते प्राप्नुवञ्शराः ॥ ७-११९-४८ (४९७६५)
रुक्मपुङ्खैः सुनिशितैर्गार्ध्रपत्रैरजिह्मगैः ।
उच्चकर्त शिरांस्युग्रो यवनानां भुजानपि ॥ ७-११९-४९ (४९७६६)
शैक्यायसानि वर्माणि कांस्यानि च समन्ततः ।
भित्त्वा देहांस्तथा तेषां शरा जग्मुर्महीतलम् ॥ ७-११९-५० (४९७६७)
ते हन्यमाना वीरेण म्लेच्छाः सात्यकिना रणे ।
शतशोऽभ्यपतंस्तत्र व्यसवो वसुधातले ॥ ७-११९-५१ (४९७६८)
सुपूर्णायतमुक्तैस्तानव्यवच्छिन्नपिण्डितैः ।
पञ्च षट् सप्त चाष्टौ च भिभेद यवनाञ्शरैः ॥ ७-११९-५२ (४९७६९)
काम्भोजानां सहस्रैश्च शकानां च विशाम्पते ।
शबराणां किरातानां बर्बराणां तथैव च ॥ ७-११९-५३ (४९७७०)
अगम्यरूपां पृथिवीं मांसशोणितकर्दमाम् ।
कृतवांस्तत्र शैनेयः क्षपयंस्तावकं बलम् ॥ ७-११९-५४ (४९७७१)
दस्यूनां सशिरस्त्राणैः शिरोभिर्लूनमूर्धदौः ।
दीर्घकूर्चैर्मही कीर्णा विबर्हैरण्डजैरिव ॥ ७-११९-५५ (४९७७२)
रुधिरोक्षितसर्वाङ्गैस्तैस्तदायोधनं बभौ ।
कबन्धैः संवृतं सर्वं ताम्राभ्रैः खमिवावृतम् ॥ ७-११९-५६ (४९७७३)
वज्राशनिसमस्पर्शैः सुपर्वभिरजिह्मगैः ।
ते सात्वतेन निहताः समाववृर्वसुन्धराम् ॥ ७-११९-५७ (४९७७४)
ग्तेषामस्त्राणि बाणांश्च शैनेयो नतपर्वभिः ।
निचकर्त महाराज यवनानां शिरोधराः ॥ ७-११९-५८ (४९७७५)
ते शरा नतपर्वाणो युयुधानप्रचोदिताः ।
हित्वा देहांस्तथा तेषां पतन्ति स्म महीतले ॥ ७-११९-५९ (४९७७६)
ते हन्यमाना वीरास्तु वृष्णिवीरेण संयुगे ।
शस्त्राहताः पतन्त्युर्व्यां काम्भोजाः सपदानुगाः ॥ ७-११९-६० (४९७७७)
काम्भोजानां भुजैश्छिन्नैर्यवनानां च भारत ।
तत्रतत्र मही भाति पञ्चास्यैरिव पन्नगैः'॥ ७-११९-६१ (४९७७८)
अल्पावशिष्टाः सम्भग्नाः कृच्छ्रप्राणा विचेतसः ।

जिताः सङ्ख्ये महाराज युयुधानेन दंशिताः ॥ ७-११९-६२ (४९७७९)
पार्ष्णिभिश्च कशाभिश्च ताडयन्तस्तुरङ्गमान् ।
जवमुत्तममास्थाय सर्वतः प्राद्रवन्भयात् ॥ ७-११९-६३ (४९७८०)
काम्भोजसैन्यं विद्राव्य दुर्जयं युधि भारत ।
यवनानां च तत्सैन्यं शकानां च महद्बलम् ॥ ७-११९-६४ (४९७८१)
ततः स पुरुषव्याघ्रः सात्यकिः सत्यविक्रमः ।
प्रहृष्टस्तावकाञ्जित्वा सूतं याहीत्यचोदयत् ॥ ७-११९-६५ (४९७८२)
तत्तस्य समरे कर्म दृष्ट्वाऽन्यैरकृतं पुरा ।
चारणाः सहगन्धर्वाः पूजयाञ्चक्रिरे भृशम् ॥ ७-११९-६६ (४९७८३)
तं यान्तं पृष्ठगोप्तारमर्जुनस्य विशाम्पते ।
चारणाः प्रेक्ष्य संहृष्टास्त्वदीयाश्चाभ्यपूजयन् ॥ ॥ ७-११९-६७ (४९७८४)

इति श्रीमन्महाभारते द्रोणपर्वणि जयद्रथवधपर्वणि
चतुर्दशदिवसयुद्धे एकोनविंशत्यधिकशततमोऽध्यायः ॥ ११९ ॥
Mahabharata - Drona Parva - Chapter Footnotes

५-११९-क एतदादिसार्धसप्तश्लोकस्थाने वक्ष्यमाणः सार्धएव श्लोकः
झ पुस्तकेऽस्ति ।सञ्जय उवाच। ततः स सात्यकिर्धीमीन्महात्मा
वृष्णिपुङ्गवः। सुदर्शनं निहत्याजौ यन्तारं पुनरब्रवीत् ॥
रथाश्वनागकलिलं शरशक्तयूर्मिमालिनम्। ५-११९-२० विस्रम्भयन्
आश्वासयन्। ।
५-११९-३३ पारयिष्यामि समापयिष्यामि ॥
५-११९-५० वैक्यायसानि शोणितायोमयानि ॥
५-११९-५२ सुपूर्णयतमुक्तैराकर्णज्योत्सृष्टैः
।अव्यवच्छिन्नपिण्डितैरनवच्छिन्नसंहतैः ॥
५-११९-११९ एकोनविंशत्यधिकशततमोऽध्यायः ॥

---

द्रोनपर्व-अध्यय१२०
॥ श्रीः ॥
७.१२०. अध्यायः १२०

Mahabharata - Drona Parva - Chapter Topics
सात्यकियुद्धवर्णनम् ॥
Mahabharata - Drona Parva - Chapter Text

७-१२०-० (४९७८५)

सञ्जय उवाच। ७-१२०-०क्ष् (४५६६)
जित्वा यवनकाम्भोजान्युयुधानस्ततोऽर्जुनम् ।
जगाम तव सैन्यस्य मध्येन रथिनां वरः ॥ ७-१२०-१ (४९७८६)
शरदंष्ट्रो नरव्याघ्रो विचित्रकवचच्छविः ।
मृगं व्याघ्र इवाजिघ्रंस्तव सैन्यमभीषयत् ॥ ७-१२०-२ (४९७८७)
स रथेन चरन्मार्गान्धनुरुद्भ्रामयङ्भृशम् ।
रुक्मपृष्ठं महावेगं रुक्मचन्द्रकसङ्कुलम् ॥ ७-१२०-३ (४९७८८)
रुक्माङ्गदशिरस्त्राणो रुक्मवर्मसमावृतः ।
रुक्मध्वजधनुः शूरो मेरुशृङ्गमिवाबभौ ॥ ७-१२०-४ (४९७८९)
सधनुर्मण्डलः सङ्ख्ये तेजोभासुररश्मिवान् ।
शरदीवोदितः सूर्यो नृसूर्यो विरराज ह ॥ ७-१२०-५ (४९७९०)
वृषभस्कन्धविक्रान्तो वृषभाक्षो नरर्षभः ।
तावकानां बभौ मध्ये गवां मध्ये यथा वृषः ॥ ७-१२०-६ (४९७९१)
मत्तद्विरदसङ्काशं मत्तद्विरदगामिनम् ।
प्रभिन्नमिव मातङ्गं यूथमध्ये व्यवस्थितम् ॥ ७-१२०-७ (४९७९२)
व्याधा इव जिघांसन्तस्त्वदीयाः समुपाद्रवन् ।
ग्सात्यकिं समरे राजन्परिवव्रुस्तवात्मजाः'॥ ७-१२०-८ (४९७९३)
द्रोणानीकमतिक्रान्तं भोजानीकं च दुस्तरम् ।
जलसन्धार्णवं तीर्त्वा काम्भोजानां च वाहिनीम् ॥ ७-१२०-९ (४९७९४)
हार्दिक्यमकरान्मुक्तं तीर्णं वै सैन्यसागरम् ।
परिवव्रुः सुसङ्क्रुद्धास्त्वदीयाः सात्यकिं रथाः ॥ ७-१२०-१० (४९७९५)
दुर्योधनश्चित्रसेनो दुःशासनविविंशती ।
शकुनिर्दुःसहश्चैव युवा दुर्धर्षणः क्रथः ॥ ७-१२०-११ (४९७९६)
अन्ये च बहवः शूराः शस्त्रवन्तो दुरासदाः ।
पृष्ठतः सात्यकिं यान्तमन्वधावन्नमर्षिणः ॥ ७-१२०-१२ (४९७९७)
अथ शब्दो महानासीत्तव सैन्यस्य मारिष ।
मारुतोद्धूतवेगस्य सागरस्येव पर्वणि ॥ ७-१२०-१३ (४९७९८)
तानभिद्रवतः सर्वान्समीक्ष्य शिनिपुङ्गवः ।
शनैर्याहीति यन्तारमब्रवीत्प्रहसन्निव ॥ ७-१२०-१४ (४९७९९)
इदमेति समुद्धूतं धार्तराष्ट्रबलं महत् ।
मामेवाभिमुखं तूर्णं गजाश्वरथपत्तिमत् ।
नादयद्वै दिशः सर्वा रथघोषेण सारथे ॥ ७-१२०-१५ (४९८००)
पृथिवीं चान्तरिक्षं च कम्पयन्सागरानपि ।
एतद्बलार्णवं सूत वारयिष्ये महारणे ।
पौर्णमास्यामिवोद्धूतं वेलेव मकरालयम् ॥ ७-१२०-१६ (४९८०१)
पश्य मे सूत विक्रान्तमिन्द्रस्येव महामृधे ।

एष सैन्यानि शत्रूणां विधमामि शितैः शरैः ॥ ७-१२०-१७ (४९८०२)
निहतानाहवे पश्य पदात्यश्वरथद्विपान् ।
मच्छरैरग्निसङ्काशैर्विद्धदेहान्सहस्रशः ॥ ७-१२०-१८ (४९८०३)
इत्येवं ब्रुवतस्तस्य सात्यकेरमितौजसः ।
समीपे सैनिकास्ते तु शीघ्रमीयुर्युयुत्सवः ।
जह्याद्रवस्व तिष्ठेति पश्यपश्येति वादिनः ॥ ७-१२०-१९ (४९८०४)
तानेवं ब्रुवतो वीरान्सात्यकिर्निशितैः शरैः ।
जघानं त्रिशतानश्वान्कुञ्जरांश्च चतुःशतान् ।
ग्लध्वस्त्रश्चित्रयोधी च प्रहरञ्शिनिपुङ्गवः'॥ ७-१२०-२० (४९८०५)
स सम्प्रहारस्तुमुलस्तस्य तेषां च धन्विनाम् ।
देवासुररणप्रख्यः प्रावर्तत जनक्षयः ॥ ७-१२०-२१ (४९८०६)
मेघजालनिभं सैन्यं तव पुत्रस्य मारिष ।
प्रत्यगृह्णाच्छिनेः पौत्रः शरैराशीविषोपमैः ॥ ७-१२०-२२ (४९८०७)
प्रच्छाद्यमानः समरे शरजालैः स वीर्यवान् ।
असम्भ्रमन्महाराज तावकानवधीद्बहून् ॥ ७-१२०-२३ (४९८०८)
आश्चर्यं तत्र राजेन्द्र सुमहद्दृष्टवानहम् ।
न मोघः सायकः कश्चित्सात्यकेरभवत्प्रभो ॥ ७-१२०-२४ (४९८०९)
रथनागाश्वकलिलः पदात्यूर्मिसमाकुलः ।
शैनेयवेलामासाद्य स्थितः सैन्यमहार्णवः ॥ ७-१२०-२५ (४९८१०)
सम्भ्रान्तनरनागाश्वमावर्तत मुहुर्मुहुः ।
तत्सैन्यमिषुभिस्तेन वध्यमानं समन्ततः ।
बभ्राम तत्रतत्रैव गावः शीतार्दिता इव ॥ ७-१२०-२६ (४९८११)
पदातिनं रथं नागं सादिनं तुरगं तथा ।
अविद्धं तत्र नाद्राक्षं युयुधानस्य सायकैः ॥ ७-१२०-२७ (४९८१२)
न तादृक्कदनं राजन्कृतवांस्तत्र फल्गुनः ।
यादृक्क्षयमनीकानामकरोत्सात्यकिर्नृप ॥ ७-१२०-२८ (४९८१३)
अत्यर्जुनं शिनेः पौत्रो युध्यते पुरुषर्षभः ।
वीतभीर्लाघवोपेतः कृतित्वं सम्प्रदर्शयन् ॥ ७-१२०-२९ (४९८१४)
ततो दुर्योधनो राजा सात्वतस्य त्रिभिः शरैः ।
विव्याध सूतं निशितैश्चतुर्भिश्चतुरो हयान् ॥ ७-१२०-३० (४९८१५)
सात्यकिं च त्रिभिर्विद्ध्वा पुनरष्टाभिरेव च ।
दुःशासनः षोडशभिर्विव्याध शिनिपुङ्गवम् ॥ ७-१२०-३१ (४९८१६)
शकुनिः पञ्चविंशत्या चित्रसेनश्च पञ्चभिः ।
दुःसहः पञ्चदशभिर्विव्याधोरसि सात्यकिम् ॥ ७-१२०-३२ (४९८१७)
उत्स्मयन्वृष्णिशार्दूलस्तथा बाणैः समाहतः ।
तानविध्यन्महाराज सर्वानेव त्रिभिस्त्रिभिः ॥ ७-१२०-३३ (४९८१८)

गाढविद्धानरीन्कृत्वा मार्गणैः सोऽतितेजनैः ।
शैनेयः श्येनवत्सङ्ख्ये व्यचरल्लघुविक्रमः ॥ ७-१२०-३४ (४९८१९)
सौबलस्य धनुश्छित्त्वा हस्तावापं निकृत्य च ।
दुर्योधनं त्रिभिर्बाणैरभ्यविध्यत्स्तनान्तरे ॥ ७-१२०-३५ (४९८२०)
चित्रसेनं शतेनैव दशभिर्दुःसहं तथा ।
दुःशासनं तु विंशत्या विव्याध शिनिपुङ्गवः ॥ ७-१२०-३६ (४९८२१)
अथान्यद्धनुरादाय श्यालस्तव विशाम्पते ।
अष्टाभिः सात्यकिं विद्ध्वा पुनर्विव्याध पञ्चभिः ॥ ७-१२०-३७ (४९८२२)
दुःशासनश्च दशभिर्दुःसहश्च त्रिभिः शरैः ।
दुर्मुखश्च द्वादशभी राजन्विव्याध सात्यकिम् ॥ ७-१२०-३८ (४९८२३)
दुर्योधनस्त्रिसप्तत्या किद्ध्वा भारत माधवम् ।
ततोस्य निशितैर्बाणैस्त्रिभिर्विव्याध सारथिम् ॥ ७-१२०-३९ (४९८२४)
तान्सर्वान्सहिताञ्शूरान्यतमानान्महारथान् ।
पञ्चभिः पञ्चभिर्बाणैः पुनर्विव्याध सात्यकिः ॥ ७-१२०-४० (४९८२५)
ततः स रथिनां श्रेष्ठस्तव पुत्रस्य सारथिम् ।
आजघानाशु भल्लेन स हतो न्यपतद्भुवि ॥ ७-१२०-४१ (४९८२६)
पतिते सारथौ तस्मिंस्तव पुत्ररथः प्रभो ।
वातायमानैस्तैरश्वैरपानीयत सङ्गरात् ॥ ७-१२०-४२ (४९८२७)
ततस्तव सुतो राजन्सैनिकाश्च विशाम्पते ।
राज्ञो रथमभिप्रेक्ष्य विद्रुताः शतशोऽभवन् ॥ ७-१२०-४३ (४९८२८)
विद्रुतं तत्र तत्सैन्यं दृष्ट्वा भारत सात्यकिः ।
अवाकिरच्छरैस्तीक्ष्णै रुक्मपुङ्खैः शिलाशितैः ॥ ७-१२०-४४ (४९८२९)
विद्राव्य सर्वसैन्यानि तावकानि सहस्रशः ।
प्रययौ सात्यकी राजञ्श्वेताश्वस्य रथं प्रति ॥ ७-१२०-४५ (४९८३०)
ग्तं प्रयान्तं महाबाहुं तावकाः प्रेक्ष्य मारिष ।
दृष्टं चादृष्टवत्कृत्वा क्रियामन्यामयोजयन्'॥ ७-१२०-४६ (४९८३१)
तं शरानाददानं च रक्षमाणं च सारथिम् ।
आत्मानं पालयानं च तावकाः समपूजयन् ॥ ॥ ७-१२०-४७ (४९८३२)

इति श्रीमन्महाभारते द्रोणपर्वणि जयद्रथवधपर्वणि
चतुर्दशदिवसयुद्धे विंशत्यधिकशततमोऽध्यायः ॥ १२० ॥

---

द्रोणपर्व-अध्यय१२१
॥ श्रीः ॥
७.१२१. अध्यायः १२१

Mahabharata - Drona Parva - Chapter Topics
सात्यकियुद्धवर्णनम् ॥ १ ॥

Mahabharata - Drona Parva - Chapter Text

७-१२१-० (४९८३३)
धृतराष्ट्र उवाच। ७-१२१-०क्ष् (४५६७)
सम्प्रद्य महत्सैन्यं यान्तं शैनेयमर्जुनम् ।
निर्ह्रीका मम ते पुत्राः किमकुर्वत सञ्जय ॥ ७-१२१-१ (४९८३४)
कथं वैषां तदा युद्धे धृतिरासीन्मुमूर्षताम् ।
शैनेयचरितं दृष्ट्वा यादृशं सव्यसाचिनः ॥ ७-१२१-२ (४९८३५)
किं नु वक्ष्यन्ति ते क्षात्रं सैन्यमध्ये पराजिताः ।
कथं नु सात्यकिर्युद्धे व्यतिक्रान्तो महायशाः ॥ ७-१२१-३ (४९८३६)
कथं च मम पुत्राणां जीवतां तत्र सञ्जय ।
शैनेयोऽभिययौ युद्धे तन्ममाचक्ष्व सञ्जय ॥ ७-१२१-४ (४९८३७)
अत्यद्भुतमिदं तात त्वत्सकाशाच्छृणोम्यहम् ।
एकस्य बहुभिः सार्धं शत्रुभिस्तैर्महारथैः ॥ ७-१२१-५ (४९८३८)
विपरीतमहं मन्ये मन्दभाग्यं सुतं प्रति ।
यत्रावध्यन्त समरे सात्वतेन महारथाः ॥ ७-१२१-६ (४९८३९)
एकस्य हि न पर्याप्तं यत्सैन्यं तस्य सञ्जय ।
क्रुद्धस्य युयुधानस्य सर्वे तिष्ठन्तु पाण्डवाः ॥ ७-१२१-७ (४९८४०)
निर्जित्य समरे द्रोणं कृतिनं चित्रयोधिनम् ।
यथा पशुगणान्सिंहस्तद्वद्धन्ता सुतान्मम ॥ ७-१२१-८ (४९८४१)
कृतवर्मादिभिः शूरैर्यत्तैर्बहुभिराहवे ।
युयुधानो न शकितो हन्तुं यत्पुरुषर्षभः ॥ ७-१२१-९ (४९८४२)
नैतदीदृशकं युद्धं कृतवांस्तत्र फल्गुनः ।
यादृशं कृतवान्युद्धं शिनेर्नप्ता महायशाः ॥ ७-१२१-१० (४९८४३)
सञ्जय उवाच। ७-१२१-११क्ष् (४५६८)
तव दुर्मन्त्रिते राजन्दुर्योधनकृतेन च ।
शृणुष्वावहितो भूत्वा यत्ते वक्ष्यामि भारत ॥ ७-१२१-११ (४९८४४)
ते पुनः सन्न्यवर्तन्त कृत्वा संशपथान्मिथः ।
परां युद्धे मतिं क्रूरां तव पुत्रस्य शासनात् ॥ ७-१२१-१२ (४९८४५)
त्रीणि सादिसहस्राणि दुर्योधनपुरोगमाः ।
शककाम्भोजबालह्लीका यवनाः पारदास्तथा ॥ ७-१२१-१३ (४९८४६)
कुलिन्दास्तङ्कणाम्बष्ठाः पैशाचाश्च सबर्बराः ।
पार्वतीयाश्च राजेन्द्र क्रुद्धाः पाषाणपाणयः ।

अभ्यद्रवन्त शैनेयं शलभाः पावकं यथा ॥ ७-१२१-१४ (४९८४७)
युक्ताश्च पार्वतीयानां रथाः पाषाणयोधिनाम् ।
शूराः पञ्चशतं राजञ्शैनेयं समुपाद्रवन् ॥ ७-१२१-१५ (४९८४८)
ततो रथसहस्रेण महारथशतेन च ।
द्विरदानां सहस्रेण द्विसाहस्रैश्च वाजिभिः ॥ ७-१२१-१६ (४९८४९)
शरवर्षाणि मुञ्चन्तो विविधानि महारथाः ।
अभ्यद्रवन्त शैनेयमसङ्ख्येयाश्च पत्तयः ॥ ७-१२१-१७ (४९८५०)
तांश्च सञ्चोदयन्सर्वान्घ्नतैनमिति भारत ।
दुःशासनो महाराज सात्यकिं पर्यवारयत् ॥ ७-१२१-१८ (४९८५१)
तत्राद्भुतमपश्याम शैनेयचरितं महत् ।
यदेको बहुभिः सार्धमसम्भ्रान्तमयुध्यत ॥ ७-१२१-१९ (४९८५२)
अवधीच्च रथानीकं द्विरदानां च तद्बलम् ।
सादिनश्चैव तान्सर्वान्दस्यूनपि च सर्वशः ॥ ७-१२१-२० (४९८५३)
तत्र चक्रैर्विमथितैर्भग्नैश्च परमायुधैः ।
अक्षैश्च बहुधा भग्नैरीषादण्डकबन्धुरैः ॥ ७-१२१-२१ (४९८५४)
कुञ्जरैर्मथितैश्चापि ध्वजैश्च विनिपातितैः ।
वर्मभिश्च तथाऽनीकैर्व्यवकीर्णा वसुन्धरा ॥ ७-१२१-२२ (४९८५५)
स्रग्भिराभरणैर्वस्त्रैरनुकर्षैश्च मारिष ।
सञ्छन्ना वसुधा तत्र द्यौर्ग्रहैरिव भारत ॥ ७-१२१-२३ (४९८५६)
गिरिरूपधरैश्चापि पतितैश्च महागजैः ।
ग्म्लेच्छस्थितैर्महाराज भिन्नाञ्जनचयोपमैः ॥ ७-१२१-२४ (४९८५७)
मृगैर्मन्द्रैश्च भद्रैश्च मृगमन्द्रैस्तथाऽपरैः ।
भद्रैर्मन्द्रमृगैश्चैव मृगभद्रैस्तथैव च ॥ ७-१२१-२५ (४९८५८)
भद्रमन्द्रैश्चैव तथा तथा भद्रमृगैरपि ।
तत्रतत्र धरा कीर्णा शयानैः पर्वतोपमैः'॥ ७-१२१-२६ (४९८५९)
अञ्जनस्य कुले जाता वामनस्य च भारत ।
सुप्रतीककुले जाता महापद्मकुले तथा ॥ ७-१२१-२७ (४९८६०)
ऐरावतकुले चैव तथाऽन्येषु कुलेषु च ।
जाता दन्तिवरा राजञ्शेरते बहवो हताः ॥ ७-१२१-२८ (४९८६१)
वनायुजान्पार्वतीयान्काम्भोजान्बाह्लिकानपि ।
तथा हयवरान्राजन्निजघ्ने तत्र सात्यकिः ॥ ७-१२१-२९ (४९८६२)
नानादेशसमुत्थांश्च नानाजातींश्च दन्तिनः ।
निजघ्ने तत्र शैनेयः शतशोऽथ सहस्रशः ॥ ७-१२१-३० (४९८६३)
तेषु प्रकाल्यमानेषु दस्यून्दुःशासनोऽब्रवीत् ।
निवर्तध्वमधर्मज्ञा युध्यध्वं किं सृतेन वः ॥ ७-१२१-३१ (४९८६४)
तांश्चातिभग्नासन्सम्प्रेक्ष्य पुत्रो दुःशासनस्तव ।

पाषाणयोधिनः शूरान्पार्वतीयानचोदयत् ॥ ७-१२१-३२ (४९८६५)
अश्मयुद्धेषु कुशला नैतज्जानापि सात्यकिः ।
अश्मयुद्धमजानन्तं हतैनं युद्धकामुकम् ॥ ७-१२१-३३ (४९८६६)
तथैव कुरवः सर्वे नाश्मयुद्धविशारदाः ।
अभिद्रवत माभैष्ट न वः प्राप्स्यति सात्यकिः ॥ ७-१२१-३४ (४९८६७)
ते पार्वतीया राजानः सर्वे पाषाणयोधिनः ।
अभ्यद्रवन्त शैनेयं राजानमिव मन्त्रिणः ॥ ७-१२१-३५ (४९८६८)
ततो गजशिरःप्रख्यैरुपलैः शैलवासिनः ।
उद्यतैर्युयुधानस्य पुरतस्तस्थुराहवे ॥ ७-१२१-३६ (४९८६९)
क्षेरणीयैस्तथाप्यन्ये सात्वतस्य वधैषिणः ।
चोदितास्तव पुत्रेण सर्वतो रुरुधुर्दिशः ॥ ७-१२१-३७ (४९८७०)
तेषामापततामेव शिलायुद्धं चिकीर्षताम् ।
सात्यकिः प्रतिसन्धाय निशितान्प्राहिणोच्छरान् ॥ ७-१२१-३८ (४९८७१)
तामश्मवृष्टिं तुमुलां पार्वतीयैः समीरिताम् ।
चिच्छेदोरगसंकाशैर्नाराचैः शिनिपुङ्गवः ॥ ७-१२१-३९ (४९८७२)
तैरश्मचूर्णैर्दीप्यद्भिः खद्योतानामिव व्रजैः ।
प्रायः सैन्यान्यहन्यन्त हाहाभूतानि मारिष ॥ ७-१२१-४० (४९८७३)
ततः पञ्चशतं शूराः समुद्यतमहाशिलाः ।
निकृत्तबाहवो राजन्निपेतुर्धरणीतले ॥ ७-१२१-४१ (४९८७४)
सात्वतस्य च भल्लेन निष्पिष्टैस्तैस्तथाऽद्रिभिः ।
न्यपतन्निहता म्लेच्छास्तत्रतत्र गतासवः ॥ ७-१२१-४२ (४९८७५)
ते हन्यमानाः समरे सात्वतेन महात्मना ।
अश्मवृष्टिं महाघोरां पातयन्ति स्म सात्वते ॥ ७-१२१-४३ (४९८७६)
पाषाणयोधिनः शूरान्यतमानानवस्थितान् ।
न्यवधीद्बहुसाहस्रांस्तदद्भुतमिवाभवत् ॥ ७-१२१-४४ (४९८७७)
ततः पुनर्बस्तमुखैरश्मवृष्टीः समन्ततः ।
अधोबस्तैः स्थूलबस्तैर्दरदैः खसतङ्कणैः ॥ ७-१२१-४५ (४९८७८)
लम्बकैश्च कुणिन्दैश्च क्षिप्ताः क्षिप्ताश्च सात्यकिः ।
नाराचैः प्रतिचिच्छेद प्रतिपत्तिविशारदः ॥ ७-१२१-४६ (४९८७९)
अद्रीणां भिद्यमानानामन्तरिक्षे शितैः शरैः ।
शब्देन प्राद्रवन्सङ्ख्ये रथाश्वगजपत्तयः ॥ ७-१२१-४७ (४९८८०)
अश्मचूर्णैरवाकीर्णा मनुष्यगजवाजिनः ।
नाशक्नुवन्नवस्थातुं भ्रमरैरिव दंशिताः ॥ ७-१२१-४८ (४९८८१)
हतशिष्टाः सरुधिरा भिन्नमस्तकपिण्डिकाः ।
गविभिन्नशिरसो राजन्दन्तैश्छिन्नैश्च दन्तिनः ।
निर्धूतैश्च करैर्नागा व्यङ्गाश्च शतशः कृताः ॥  ७-१२१-४९ (४९८८२)

हत्वा पञ्चशतं योधांस्तत्क्षणेनैव मारिष ।
व्यचरत्पृतनामध्ये शैनेयः कृतहस्तवत् ॥ ७-१२१-५० (४९८८३)
कुञ्जराः सन्न्यवर्तन्त युयुधानेन मोहिताः ॥  ७-१२१-५१ (४९८८४)
अश्मनां भिद्यमानानां सायकैः श्रूयते ध्वनिः ।
पद्मपत्रेषुधाराणां पतन्तीनामिव ध्वनिः'॥ ७-१२१-५२ (४९८८५)
ततः शब्दः समभवत्तव सैन्यस्य मारिष ।
माधवेनार्द्यमानस्य सागरस्येव पर्वणि ॥ ७-१२१-५३ (४९८८६)
तं शब्दं तुमुलं श्रुत्वा द्रोणो यन्तारमब्रवीत् ।
एष सूत रणे क्रुद्धः सात्वतानां महारथः ॥ ७-१२१-५४ (४९८८७)
दारयन्बहुधा सैन्यं रणे चरति कालवत् ।
यत्रैष शब्दस्तुमुलस्तत्र सूत रथं नय ॥ ७-१२१-५५ (४९८८८)
पाषाणयोधिभिर्नूनं युयुधानः समागतः ।
तथाहि रथिनः सर्वे हियन्ते विद्रुतैर्हयैः ॥ ७-१२१-५६ (४९८८९)
विशस्त्रकवचा रुग्णास्तत्रतत्र पतन्ति च ।
न शक्नुवन्ति यन्तारः संयन्तुं तुमुले हयान् ॥ ७-१२१-५७ (४९८९०)
सञ्जय उवाच। ७-१२१-५८क्ष् (४५६९)
इत्येतद्वचनं श्रुत्वा भारद्वाजस्य सारथिः ।
प्रत्युवाच ततो द्रोणं सर्वशस्त्रभृतां वरम् ॥ ७-१२१-५८ (४९८९१)
सैन्यं द्रवति चायुष्मन्कौरवेयं समन्ततः ।
पश्य योधान्रणे भग्नान्धावतो वै ततस्ततः ॥ ७-१२१-५९ (४९८९२)
इमे च संहताः शूराः पाञ्चालाः पाण्डवैः सह ।
त्वामेव हि जिघांसन्त आद्रवन्ति समन्ततः ॥ ७-१२१-६० (४९८९३)
अत्र कार्यं समाधत्स्व प्राप्तकालमरिन्दम ।
स्वाने वा गमने वापि दूरं यातश्च सात्यकिः ॥ ७-१२१-६१ (४९८९४)
सञ्चय उवाच। ७-१२१-६२क्ष् (४५७०)
तथैवं वदतस्तस्य भारद्वाजस्य सारथेः ।
प्रत्यदृश्यत शैनेयो निघ्नन्बहुविधान्रथान् ॥ ७-१२१-६२ (४९८९५)
ते वध्यमानाः समरे युयुधानेन तावकाः ।
युयुधानरथं त्यक्त्वा द्रोणानीकाय दुद्रुवुः ॥ ७-१२१-६३ (४९८९६)
यैस्तु दुःशासनः सार्धं रथैः पूर्वं न्यवर्तत ।
ते भीतास्त्वभ्यधावन्त सर्वे द्रोणरथं प्रति ॥ ॥ ७-१२१-६४ (४९८९७)

इति श्रीमन्महाभारते द्रोणपर्वणि जयद्रथवधपर्वणि
चतुर्दशदिवसयुद्धे एकविंशत्यधिकशततमोऽध्यायः ॥ १२१ ॥
Mahabharata - Drona Parva - Chapter Footnotes

५-१२१-११ दुर्योधनस्य कृतेन कर्मणा ॥
५-१२१-१२ मतिं कृत्वेत्यन्वयः ॥
५-१२१-२५ मृगमन्द्रादयो गजविशेषाः ॥
५-१२१-२७ वामनस्य यमोपवाह्यस्य । सुप्रतीकस्य ईशोपवाह्यस्य। महापद्मस्य कुमुदस्य कुले ॥
५-१२१-२८ अन्येषु कुलेषु पुण्डरीकपुष्पदन्तसार्वभौमीयेषु ॥
५-१२१-३७ क्षेपणीयैः शस्त्रैः ॥
५-१२१-४५ ततः पुनर्व्यात्तमुखास्तेऽश्मवृष्टीः समन्ततः । अयोहस्ताः शूलहस्ता दरदास्तङ्गणाः खसाः। लम्पकाश्च कुलिन्दाश्च चिक्षिपुस्तांश्च सात्यकिः। इति झ ञ ध पाठः ॥
५-१२१-४७ अद्रीणां प्रस्तराणाम् ॥
५-१२१-१२१ एकविंशत्यधिकशततमोऽध्यायः ॥

---

द्रोनपर्व-अध्यय१२२
॥ श्रीः ॥
७.१२२. अध्यायः १२२

Mahabharata - Drona Parva - Chapter Topics
सात्यकिभयात्पलायमानस्य दुश्शासनस्य द्रोणेनोपालम्भः ॥ १ ॥
द्रोणधृष्टद्युम्नयोर्युद्धम् ॥ २ ॥

Mahabharata - Drona Parva - Chapter Text

७-१२२-० (४९८९८)
सञ्जय उवाच। ७-१२२-०क्ष् (४५७१)
दुःशासनरथं दृष्ट्वा समीपे पर्यवस्थितम् ।
भारद्वाजस्ततो वाक्यं दुःशासनमथाब्रवीत् ॥ ७-१२२-१ (४९८९९)
दुःशासन रथाः सर्वे कस्माच्चैते प्रविद्रुताः ।
कच्चित्क्षेमं तु नृपतेः कच्चिज्जीवति सैन्धवः ॥ ७-१२२-२ (४९९००)
राजपुत्रो भवानत्र राजभ्राता महारथः ।
किमर्थं द्रवते युद्धे यौवराज्यमवाप्य च ॥ ७-१२२-३ (४९९०१)
दासी जिताऽसि द्यूते त्वं यथा कामचरी भव ।
वाससां वाहिका राज्ञो भ्रातुर्ज्येष्ठस्य मे भव ॥ ७-१२२-४ (४९९०२)
न सन्ति पतयः सर्वे तेऽद्य षण्ढतिलैः समाः ।
दुःशासनैवं कस्मात्त्वं पूर्वमुक्त्वा पलायसे ॥ ७-१२२-५ (४९९०३)
स्वयं वैरं महत्कृत्वा पाञ्चालैः पाण्डवैः सह ।

एकं सात्यकिमासाद्य कथं भीतोऽसि संयुगे ॥ ७-१२२-६ (४९९०४)
न जानीषे पुरा त्वं तु गृह्णन्नक्षान्दुरोदरे ।
शरा ह्येते भविष्यन्ति दारुणाशीविषोपमाः ॥ ७-१२२-७ (४९९०५)
अप्रियाणां हि वचनं पाण्डवस्य विशेषतः ।
द्रौपद्याश्च परिक्लेशस्त्वन्मूलो ह्यभवत्पुरा ॥ ७-१२२-८ (४९९०६)
क्व ते मानश्च दर्पश्च क्व ते वीर्यं क्व गर्जितम् ।
आशीविषसमान्पार्थान्कोपयित्वा क्व यास्यसि ॥ ७-१२२-९ (४९९०७)
शोच्येयं भारती सेना राज्यं चैव सुयोधनः ।
यस्य त्वं कर्कशो भ्राता पलायनपरायणः ॥ ७-१२२-१० (४९९०८)
ननु नाम त्वया वीर दार्यमाणा भयार्दिता ।
स्वबाहुबलमास्थाय रक्षितव्या ह्यनीकिनी ॥ ७-१२२-११ (४९९०९)
स त्वमद्य रणं हित्वा भीतो हर्षयसे परान् ।
विद्रुते त्वयि सैन्यस्य नायके शत्रुमूदन ।
कोऽन्यः स्थास्यति सङ्ग्रामे भीतो भीते व्यपाश्रये ॥ ७-१२२-१२ (४९९१०)
एकेन सात्वतेनाद्य युध्यमानस्य तेन वै ।
पलायने तव मतिः सङ्ग्रामाद्धि प्रवर्तते ॥ ७-१२२-१३ (४९९११)
यदा गाण्डीवधन्वानं भीमसेनं च कौरव ।
यमौ च द्रक्ष्यसि रणे तदा वै किं करिष्यसि ॥ ७-१२२-१४ (४९९१२)
युधि फल्गुनबाणानां सूर्याग्निसमवर्चसाम् ।
न तुल्याः सात्यकिशरा येभ्यो भीतः पलायसे ॥ ७-१२२-१५ (४९९१३)
त्वरितो वीर गच्छ त्वं गान्धार्युदरमाविश ।
पृथिव्यां धावमानस्य नान्यत्पश्यामि जीवनम् ॥ ७-१२२-१६ (४९९१४)
यदि तावत्कृता बुद्धिः पलायनपरायणा ।
पृथिवी धर्मराजाय शमेनैव प्रदीयताम् ॥ ७-१२२-१७ (४९९१५)
यावत्फल्गुननाराचा निर्मुक्तोरगसन्निभाः ।
नाविशन्ति शरीरं ते तावत्संशाम्य पाण्डवैः ॥ ७-१२२-१८ (४९९१६)
यावत्ते पृथिवीं पार्था हत्वा भ्रातृशतं रणे ।
नाक्षिपन्ति महात्मानस्तावत्संशाम्य पाण्डवैः ॥ ७-१२२-१९ (४९९१७)
यावन्न क्रुध्यते राजा धर्मपुत्रो युधिष्ठिरः ।
कृष्णश्च समरश्लाघी तावत्संशाम्य पाण्डवैः ॥ ७-१२२-२० (४९९१८)
यावद्भीमो महाबाहुर्विगाह्य महतीं चमूम् ।
सोदरांस्ते न मृद्गाति तावत्संशाम्य पाण्डवैः ॥ ७-१२२-२१ (४९९१९)
पूर्वमुक्तश्च ते भ्राता भीष्मेणासौ सुयोधनः ।
अजेयाः पाण्डवाः सङ्ख्ये सौम्य संशाम्य तैः सह ॥ ७-१२२-२२ (४९९२०)
ग्मया शमवता चोक्तो रक्ष शेषं सुयोधन ।
संशाम्य पार्थैस्त्वं रक्ष वीर सर्वान्महीक्षितः'॥ ७-१२२-२३ (४९९२१)

न च तत्कृतवान्मन्दस्तव भ्राता सुयोधनः ।
स युद्धे धृतिमास्थाय यत्तो युध्यस्व पाण्डवैः ॥ ७-१२२-२४ (४९९२२)
तवापि शोणितं भीमः पास्यतीति मया श्रुतम् ।
तच्चाप्यवितथं तस्य तत्तथैव भविष्यति ॥ ७-१२२-२५ (४९९२३)
किं भीमस्य न जानासि विक्रमं त्वं सुबालिश ।
यत्त्वया वैरमारब्धं संयुगे प्रपलायिना ॥ ७-१२२-२६ (४९९२४)
गच्छ तूर्णं रथेनैव यत्र तिष्ठति सात्यकिः ।
त्वया हीनं बलं ह्येतद्विद्रविष्यति भारत ॥
आत्मार्थं योधय रणे सात्यकिं सत्यविक्रमम् ॥ ७-१२२-२७ (४९९२५)
सञ्जय उवाच। ७-१२२-२८क्ष् (४५७२)
एवमुक्तस्तव सुतो नाब्रवीत्किञ्चिदप्यसौ ।
श्रुतं चाश्रुतवत्कृत्वा प्रायाद्येन स सात्यकिः ॥ ७-१२२-२८ (४९९२६)
सैन्येन महता युक्तो म्लेच्छानामनिवर्तिनाम् ।
आसाद्य च रणे यत्तो युयुधानमयोधयत् ॥ ७-१२२-२९ (४९९२७)
द्रोणोऽपि रथिनां श्रेष्ठः पाञ्चालान्पाण्डवांस्तथा ।
अभ्यद्रवत सङ्क्रुद्धो जवमास्थाय मध्यमम् ॥ ७-१२२-३० (४९९२८)
प्रविश्य च रणे द्रोणः पाण्डवानां वरूथिनीम् ।
द्रावयामास योधान्वै शतशोऽथ सहस्रशः ॥ ७-१२२-३१ (४९९२९)
ततो द्रोणो महाराज नाम विश्राव्य संयुगे ।
पाण्डुपाञ्चालमत्स्यानां प्रचक्रे कदनं महत् ॥ ७-१२२-३२ (४९९३०)
तं जयन्तमनीकानि भारद्वाजं ततस्ततः ।
पाञ्चालपुत्रो द्युतिमान्वीरकेतुः समभ्ययात् ॥ ७-१२२-३३ (४९९३१)
स द्रोणं पञ्चभिर्विद्ध्वा शरैः सन्नतपर्वभिः ।
ध्वजमेकेन विव्याध सारथिं चास्य सप्तभिः ॥ ७-१२२-३४ (४९९३२)
तत्राद्भुतं महाराज दृष्टवानस्मि संयुगे ।
यद्द्रोणो रभसं युद्धे पाञ्चाल्यं नात्यवर्तत ॥ ७-१२२-३५ (४९९३३)
सन्निरुद्धं रमे द्रोणं पाञ्चला वीक्ष्य मारिष ।
आवव्रुः सर्वतो राजन्धर्मपुत्रजयैषिणः ॥ ७-१२२-३६ (४९९३४)
ते शरैरग्निसंकाशैस्तोमरैश्च महाधनैः ।
शस्त्रैश्च विविधै राजन्द्रोणमेकमवाकिरन् ॥ ७-१२२-३७ (४९९३५)
निवार्य तान्बाणगणान्द्रोणो राजन्समन्ततः ।
महाजलधरान्व्योम्नि मातरिश्वेव चाबभौ ॥ ७-१२२-३८ (४९९३६)
ततः शरं महाघोरं सूर्यपावकसन्निभम् ।
सन्दधे परवीरघ्नो वीरकेतो रथं प्रति ॥ ७-१२२-३९ (४९९३७)
स भित्त्वा तु शरो राजन्पाञ्चालकुलनन्दनम् ।
अभ्यगाद्धरणीं तूर्णं लोहितार्द्रो ज्वलन्निव ॥ ७-१२२-४० (४९९३८)

ततोऽपतद्रथात्तूर्णं पाञ्चालकुलनन्दनः ।
पर्वताग्रादिव महांश्चम्पको वायुपीडितः ॥ ७-१२२-४१ (४९९३९)
तस्मिन्हते महेष्वासे राजपुत्रे महाबले ।
पाञ्चालास्त्वरिता द्रोणं समन्तात्पर्यवारयन् ॥ ७-१२२-४२ (४९९४०)
चित्रकेतुः सुधन्वा च चित्रवर्मा च भारत ।
तथा चित्ररथश्चैव भ्रातृव्यसनकर्शिताः ॥ ७-१२२-४३ (४९९४१)
अभ्यद्रवन्त सहिता भारद्वाजं युयुत्सवः ।
मुञ्चन्तः शरवर्षाणि तपान्ते जलदा इव ॥
ग्अदृश्यं समरे चक्रुर्भारद्वाजं सुधन्विनः'॥ ७-१२२-४४ (४९९४२)
स वध्यमानो बहुधा राजपुत्रैर्महारथैः ।
क्रोधमाहारयत्तेषामभावाय द्विजर्षभः ॥ ७-१२२-४५ (४९९४३)
ततः शरमयं जालं द्रोणस्तेषामवासृजत् ।
ते हन्यमाना द्रोणस्य शरैराकर्णचोदितैः ।
कर्तव्यं नाभ्यजानन्वै कुमारा राजसत्तम ॥ ७-१२२-४६ (४९९४४)
तान्विमूढान्रणे द्रोणः प्रहसन्निव भारत ।
व्यश्वसूतरथांश्चक्रे कुमारान्कुपितो रणे ॥ ७-१२२-४७ (४९९४५)
अथापरैः सुनिशितैर्भल्लैस्तेषां महायशाः ।
पुष्पाणीव विवान्वायुः सोत्तमाङ्गान्यपातयत् ॥ ७-१२२-४८ (४९९४६)
ते रथेभ्यो हताः पेतुः क्षितौ राजन्सुवर्चसः ।
देवासुरे पुरा युद्धे यथा दैतेयदानवाः ॥ ७-१२२-४९ (४९९४७)
तान्निहत्य रणे राजन्भारद्वाजः प्रतापवान् ।
कार्मुकं भ्रामयामास हेमपृष्ठं दुरासदम् ॥ ७-१२२-५० (४९९४८)
ग्तदस्य भ्राजते राजन्मेघमध्ये तडिद्यथा'॥ ७-१२२-५१ (४९९४९)
पाञ्चालान्निहतान्दृष्ट्वा देवकल्पान्महारथान् ।
धृष्टद्युम्नो भृशोद्विग्नो नेत्राभ्यां पातयञ्जलम् ।
अभ्यवर्तत सङ्गारमे क्रुद्धो द्रोणरथं प्रति ॥ ७-१२२-५२ (४९९५०)
ततो हाहेति सहसा नादः समभवन्नृप ।
पाञ्चाल्येन रणे दृष्ट्वा द्रोणमावारितं शरैः ॥ ७-१२२-५३ (४९९५१)
से च्छाद्यमानो बहुधा पार्षतेन महात्मना ।
न विव्यथे ततो द्रोणः स्मयन्नेवान्वयुध्यत ॥ ७-१२२-५४ (४९९५२)
ततो द्रोणं महाराज पाञ्चाल्यः क्रोधमूर्च्छितः ।
आजघानोरसि क्रुद्धो नवत्या नतपर्वणाम् ॥ ७-१२२-५५ (४९९५३)
स गाढविद्धो बलिना भारद्वाजो महायशाः ।
निषसाद रथोपस्थे कश्मलं च जगाम ह ॥ ७-१२२-५६ (४९९५४)
तं वै तथागतं दृष्ट्वा धृष्टद्युम्नः पराक्रमी ।
चापमुत्सृज्य शीघ्रं तु असिं जग्राह वीर्यवान् ॥ ७-१२२-५७ (४९९५५)

अवप्लुत्य रथाच्चापि त्वरितः स महारथः ।
आरुरोह रथं तूर्णं भारद्वाजस्य मारिष ।
हर्तुमिच्छञ्शिरः कायात्क्रोधसंरक्तलोचनः ॥ ७-१२२-५८ (४९९५६)
प्रत्याश्वस्तस्ततो द्रोणो धनुर्गृह्य महारवम् ।
आसन्नमागतं दृष्ट्वा धृष्टद्युम्नं जिघांसया ॥ ७-१२२-५९ (४९९५७)
शरैर्वैतस्तिकै राजन्विव्याधासन्नवेधिभिः ।
योधयामास समरे धृष्टद्युम्नं महारथम् ॥ ७-१२२-६० (४९९५८)
ते हि वैतस्तिका नाम शरा आमन्नयोधिनः ।
द्रोणस्य विहिता राजन्यैर्धृष्टद्युम्नमाक्षिणोत् ॥ ७-१२२-६१ (४९९५९)
स वध्यमानो बहुभिः सायकैस्तैर्महाबलः ।
अवप्लुत्य रथात्तूर्णं भग्नवेगः पराक्रमी ॥ ७-१२२-६२ (४९९६०)
आरुह्य स्वरथं वीरः प्रगृह्य च महद्धनुः ।
विव्याध समरे द्रोणं धृष्टद्युम्नो महारथः ॥ ७-१२२-६३ (४९९६१)
द्रोणश्चापि महाराज शरैर्विव्याध पार्षतम् ॥ ७-१२२-६४ (४९९६२)
तदद्भुतमभूद्युद्धं द्रोणपाञ्चालयोस्तदा ।
त्रैलोक्यकाङ्क्षिणोरासीच्छक्रप्रह्लादयोरिव ॥ ७-१२२-६५ (४९९६३)
मण्डलानि विचित्राणि यमकानीतराणि च ।
चरन्तौ युद्धमार्गज्ञौ ततक्षतुरथेषुभिः ॥ ७-१२२-६६ (४९९६४)
मोहयन्तौ मनांस्याजौ योधानां द्रोणपार्षतौ ।
सृजन्तौ शरवर्षाणि वर्षास्विव बलाहकौ ।
छादयन्तौ महात्मानौ शरैर्व्योम दिशो महीम् ॥ ७-१२२-६७ (४९९६५)
तदद्भुतं तयोर्युद्धं भूतसङ्घा ह्यपूजयन् ।
क्षत्रियाश्च महाराज ये चान्ये तव सैनिकाः ॥ ७-१२२-६८ (४९९६६)
अवश्यं समरे द्रोणो दृष्टद्युम्नेन सङ्गतः ।
वशमेष्यति नो राजन्पाञ्चाला इति चुक्रुशुः ॥ ७-१२२-६९ (४९९६७)
द्रोणस्तु त्वरितो युद्धे धृष्टद्युम्नस्य सारथेः ।
शिरः प्रच्यावयामास फलं पक्वं तरोरिव ॥ ७-१२२-७० (४९९६८)
ततस्तु प्रद्रुता वाहा राजंस्तस्य महात्मनः ॥ ७-१२२-७१ (४९९६९)
तेषु प्रद्रवमाणेषु पाञ्चालान्सृञ्जयांस्तथा ।
अयोधयद्रणे द्रोणस्तत्रतत्र पराक्रमी ॥ ७-१२२-७२ (४९९७०)
विजित्य पाण्डुपाञ्चालान्भारद्वाजः प्रतापवान् ।
स्वं व्यूहं पुनरास्थाय स्थितोऽभवदरिन्दमः ।
न चैनं पाण्डवा युद्धे जेतुमुत्सेहिरे प्रभो ॥ ॥ ७-१२२-७३ (४९९७१)

इति श्रीमन्महाभारते द्रोणपर्वणि जयद्रथवधपर्वणि
चतुर्दशदिवसयुद्धे द्वाविंशत्यधिकशततमोऽध्यायः ॥ १२२ ॥

५-१२२-४८ विशेषेण वातीति विवान् । पुष्पाणीव वनाद्वायुः इति ट ।पाठः। पुष्पाणीव विचन्वन्हि इति झ ।ज। पाठः ॥
५-१२२-६१ द्रोणस्य विविधा राजन् इति ट । पाठः। द्रोणस्य विदिता इति क। पाठः ॥
५-१२२-१२२ द्वाविंशत्यधिकशततमोऽध्यायः ॥
१२२ ॥

---

द्रोनपर्व-अध्यय१२३
॥ श्रीः ॥
७.१२३. अध्यायः १२३

Mahabharata - Drona Parva - Chapter Topics
सात्यकिना दुःशासनपराजयः ॥ १ ॥

Mahabharata - Drona Parva - Chapter Text

७-१२३-० (४९९७२)
सञ्जय उवाच। ७-१२३-०क्ष् (४५७३)
ततो दुःशासनो राजञ्शैनेयं समुपाद्रवत् ।
किरञ्शरसहस्राणि पर्जन्य इव वृष्टिमान् ॥ ७-१२३-१ (४९९७३)
स विद्ध्वा सात्यकिं षष्ट्या तथा षोडशभिः शरैः ।
नाकम्पयत्स्थितं युद्धे मैनाकमिव पर्वतम् ॥ ७-१२३-२ (४९९७४)
तं तु दुःशासनः शूरः सायकैरावृणोद्भृशम् ।
रथव्रातेन महता नानादेशोद्भवेन च ॥ ७-१२३-३ (४९९७५)
सर्वतो भरतश्रेष्ठ विसृजन्सायकान्बहून् ।
पर्जन्य इव घोषेण नादयन्वै दिशो दश ॥ ७-१२३-४ (४९९७६)
तमापतन्तमालोक्य सात्यकिः कौरवं रणे ।
अभिद्रुत्य महाबाहुश्छादयामास सायकैः ॥ ७-१२३-५ (४९९७७)
ते छाद्यमाना बाणौघैर्दुःशासनपुरोगमाः ।
प्राद्रवन्समरे भीतास्तव सैन्यस्य पश्यतः ॥ ७-१२३-६ (४९९७८)
तेषु द्रवत्सु राजेन्द्र पुत्रो दुःशानस्तव ।
तस्थौ व्यपेतभी राजन्सात्यकिं चार्दयच्छरैः ॥ ७-१२३-७ (४९९७९)
चतुर्भिर्वाजिनस्तस्य सारथिं च त्रिभिः शरैः ।
सात्यकिं च शतेनाजौ विद्ध्वा नादं मुमोच सः ॥ ७-१२३-८ (४९९८०)

ततः क्रुद्धो महाराज माधवस्तस्य संयुगे ।
रथं सूतं ध्वजं तं च चक्रेऽदृश्यमजिह्मगैः ॥ ७-१२३-९ (४९९८१)
स तु दुःशासनं शूरं सायकैरावृणोद्दृशम् ।
मशकं समनुप्राप्तमूर्णनाभिरिवोर्णया ॥ ७-१२३-१० (४९९८२)
त्वरन्समावृणोद्बाणैर्दुःशासनममित्रजित् ॥
दृष्ट्वा दुःशासनं राजा तथा शरशताचितम्। ७-१२३-११ (४९९८३)
त्रिगर्तांश्चोदयामास युयुधानरथं प्रति ॥ ७-१२३-१२ (४९९८४)
तेऽगच्छन्युयुधानस्य समीपं क्रुरकर्मणः ।
त्रिगर्तानां त्रिसाहस्रा रथा युद्धविशारदाः ॥ ७-१२३-१३ (४९९८५)
ते तु तं रथवंशेन महता पर्यवारयन् ।
स्थिरां कृत्वा मतिं युद्धे भूत्वा संशप्तका मिथः ॥ ७-१२३-१४ (४९९८६)
तेषां प्रयतमानानां शरवर्षाणि मुञ्चताम् ।
योधान्पञ्चशतान्मुख्यानग्र्यानीके व्यपोथयत् ॥ ७-१२३-१५ (४९९८७)
तेऽपतन्निहतास्तूर्णं शिनिप्रवरसायकैः ।
महामारुतवेगेन भग्ना इव नगाद्द्रुमाः ॥ ७-१२३-१६ (४९९८८)
नागैश्च बहुधा च्छिन्नैर्ध्वजैश्चैव विशाम्पते ।
हयैश्च कनकापीडैः पतितैस्तत्र मेदिनी ॥ ७-१२३-१७ (४९९८९)
शैनेयशरसङ्कृत्तैः शोणितौघपरिप्लुतैः ।
अशोभत महाराज किंशुकैरिव पुष्पितैः ॥ ७-१२३-१८ (४९९९०)
ते वध्यमानाः समरे युयुधानेन तावकाः ।
त्रातारं नाध्यगच्छन्त पङ्कमग्ना इव द्विपाः ॥ ७-१२३-१९ (४९९९१)
ततस्ते पर्यवर्तन्त सर्वे द्रोणरथं प्रति ।
भयात्पतगराजस्य गर्तानीव महोरगाः ॥ ७-१२३-२० (४९९९२)
हत्वा पञ्चशतान्योधाञ्छरैराशीविषोपमैः ।
प्रायात्स शनकैर्वीरो धनञ्जयरथं प्रति ॥ ७-१२३-२१ (४९९९३)
तं प्रयान्तं नरश्रेष्ठं पुत्रो दुःशासनस्तव ।
विव्याध नवभिस्तूर्णं शरैः सन्नतपर्वभिः ॥ ७-१२३-२२ (४९९९४)
स तु तं प्रतिविव्याध पञ्चभिर्निशितैः शरैः ।
रुक्मपुङ्खैर्महेष्वासो गार्ध्रपत्रैरजिह्मगैः ॥ ७-१२३-२३ (४९९९५)
सात्यकिं तु महाराज प्रहसन्निव भारत ।
दुःशासनस्त्रिभिर्विद्ध्वा पुनर्विव्याध पञ्चभिः ॥ ७-१२३-२४ (४९९९६)
शैनेयस्तव पुत्रं तु हत्वा पञ्चभिराशुगैः ।
धनुश्चास्य रणे छित्त्वा विस्मयन्नर्जुनं ययौ ॥ ७-१२३-२५ (४९९९७)
ततो दुःशासनः क्रुद्धो वृष्णिवीराय गच्छते ।
सर्वपारशवीं शक्तिं विससर्ज जिघांसया ॥ ७-१२३-२६ (४९९९८)
तां तु शक्तिं तदा घोरां तव पुत्रस्य सात्यकिः ।

चिच्छेद शतधा राजन्निशितैः कङ्कपत्रिभिः ॥ ७-१२३-२७ (४९९९९)
अथान्यद्धनुरादाय पुत्रस्तव जनेश्वर ।
सात्यकिं च शरैर्विद्ध्वा सिंहनादं ननाद च ॥ ७-१२३-२८ (५००००)
सात्यकिस्तु रणे क्रुद्धो मोहयित्वा सुतं तव ।
शरैरग्निशिखाकारैराजघान स्तनान्तरे ॥ ७-१२३-२९ (५०००१)
त्रिभिरेव महाभागः शरैः सन्नतपर्वभिः ।
सर्वायसैस्तीक्ष्णवक्त्रैः पुनर्विव्याध चाष्टभिः ॥ ७-१२३-३० (५०००२)
दुःशासनस्तु विंशत्या सात्यकिं प्रत्यविध्यत ।
सात्वतोऽपि महाराज तं विव्याध स्तनान्तरे ॥ ७-१२३-३१ (५०००३)
त्रिभिरेव महाभागः शरैः सन्नतपर्वभिः ।
ततोऽस्य वाहान्निशितैः शरैर्जघ्ने महारथः ॥ ७-१२३-३२ (५०००४)
सारथिं च सुराङ्क्रुद्धः शरैः सन्नतपर्वभिः ।
धनुरेकेन भल्लेन हस्तावापं च पञ्चभिः ॥ ७-१२३-३३ (५०००५)
ध्वजं च रथशक्तिं च भल्लाभ्यां परमस्त्रिवित् ।
चिच्छेद विशिखैस्तीक्ष्णैस्तथोभौ पार्ष्णिसारथी ॥ ७-१२३-३४ (५०००६)
स च्छिन्नधन्वा विरथो हताश्वो हतसारथिः ।
त्रिगर्तसेनापतिना स्वरथेनापवाहितः ॥ ७-१२३-३५ (५०००७)
तमभिद्रुत्य शैनेयो मुहूर्तमिव भारत ।
न जघान महाबाहुर्भीमसेनवचः स्मरन् ॥ ७-१२३-३६ (५०००८)
भीमसेनेन तु वधः सुतानां तव भारत ।
प्रतिज्ञातः सभामध्ये सर्वेषामेव संयुगे ॥ ७-१२३-३७ (५०००९)
ततो दुःशासनं जित्वा सात्यकिः संयुगे प्रभो ।
जगाम त्वरितो राजन्येन यातो धनञ्जयः ॥ ॥ ७-१२३-३८ (५००१०)

इति श्रीमन्महाभारते द्रोणपर्वणि जयद्रथवधपर्वणि
चतुर्दशदिवसयुद्धे त्रयोविंशत्यधिकशततमोऽध्यायः ॥ १२३ ॥

---

द्रोनपर्व-अध्यय१२४
॥ श्रीः ॥
७.१२४. अध्यायः १२४

Mahabharata - Drona Parva - Chapter Topics
सङ्कुलयुद्धवर्णनम् ॥ १ ॥

Mahabharata - Drona Parva - Chapter Text

७-१२४-० (५००११)
धृतराष्ट्र उवाच। ७-१२४-०क्ष् (४५७४)
किं तस्यां मम सेनायां नासन्केचिन्महारथाः ।
ये तथा सात्यकिं यान्तं नैवाघ्नन्नाप्यवारयन् ॥ ७-१२४-१ (५००१२)
एको हि समरे कर्म कृतवान्सत्यविक्रमः ।
शक्रतुल्यबलो युद्धे महेन्द्रो दानवेष्विव ॥ ७-१२४-२ (५००१३)
अथवा शून्यमासीत्तद्येन यातः स सात्यकिः ।
हतभूयिष्ठमथवा येन यातः स सात्यकिः ॥ ७-१२४-३ (५००१४)
यत्कृतं वृष्णिवीरेण कर्म शंससि मे रणे ।
नैतदुत्सहते कर्तुं कर्म शक्रोऽपि सञ्जय ॥ ७-१२४-४ (५००१५)
अश्रद्धेयमचिन्त्यं च कर्म तस्य महात्मनः ।
वृष्ण्यन्धकप्रवीरस्य श्रुत्वा मे व्यथितं मनः ॥ ७-१२४-५ (५००१६)
न सन्ति तस्मात्पुत्रा मे यथा सञ्जय भाषसे ।
एको वै बहुलाः सेनाः प्रामृद्नात्सत्यविक्रमः ॥ ७-१२४-६ (५००१७)
कथं च युध्यमानानामपक्रान्ती महात्मनाम् ।
एको बहूनां शैनेयस्तन्ममाचक्ष्व सञ्जय ॥ ७-१२४-७ (५००१८)
सञ्जय उवाच। ७-१२४-८क्ष् (४५७५)
राजन्सेनासमुद्योगो रथनागाश्वपत्तिमान् ।
अतुल्यस्तव सेनायां युगान्तसदृशोऽभवत् ॥ ७-१२४-८ (५००१९)
आहूतेषु समूहेषु तव सैन्यस्य मानद ।
नास्ति लोके समः कश्चित्समूह इति मे मतिः ॥ ७-१२४-९ (५००२०)
तत्रव देवास्त्वभाषन्त चारणाश्च समागताः ।
एतदन्ताः समूहा वै भविष्यन्ति महीतले ॥ ७-१२४-१० (५००२१)
न च वै तादृशो व्यूह आसीत्कश्चिद्विशाम्पते ।
यादृग्जयद्रथवधे द्रोणेन विहितोऽभवत् ॥ ७-१२४-११ (५००२२)
ग्उद्धूता पृथिवी नूनं युद्धहेतोः समागतैः ।
इति तत्र जनाश्चाहुर्दृष्टा तां जनसंसदम्'॥ ७-१२४-१२ (५००२३)
चण्डवातविभिन्नानां समुद्राणामिव स्वनः ।
रणेऽभवद्बलौघानामन्योन्यमभिधावताम् ॥ ७-१२४-१३ (५००२४)
पार्थिवानां समेतानां बहून्यासन्नरोत्तम ।
त्वद्बले प्राण्डवानां च सहस्राणि शतानि च ॥ ७-१२४-१४ (५००२५)
संरब्धानां प्रवीराणां समरे दृढकर्मणाम् ।
तत्रासीत्सुमहाशब्दस्तुमुलो रोमहर्षणः ॥ ७-१२४-१५ (५००२६)
ग्पाण्डवानां कुरूणां च गर्जतामितरेतरम् ।
क्ष्वेलाः किलकिलाशब्दास्तत्रासन्वै सहस्रशः ॥ ७-१२४-१६ (५००२७)
भेरीशब्दाश्च तुमुला बाणशब्दाश्च भारत ।

अन्योन्यं निघ्नतां चैव नराणां शुश्रुवे स्वनः'॥ ७-१२४-१७ (५००२८)
अथाक्रन्दन्भीसमेनो धृष्टद्युम्नश्च मारिष ।
नकुलः सहदेवश्च धर्मराजश्च पाण्डवः ॥ ७-१२४-१८ (५००२९)
आगच्छत प्रहरत द्रुतं विपरिधावत ।
प्रविष्टावरिसेनां हि वीरौ माधवपाण्डवौ ॥ ७-१२४-१९ (५००३०)
यथा सुखेन गच्छेतां जयद्रथवधं प्रति ।
तथा प्रकुरुत क्षिप्रमिति सैन्यान्यचोदयन् ॥ ७-१२४-२० (५००३१)
तयोरभावे कुरवः कृतार्थाः स्युर्वयं जिताः ॥ ७-१२४-२१ (५००३२)
ग्यत्र यातौ महात्मानौ तूर्णं परपुरञ्जयौ'।
ते यूयं सहिता भूत्वा तूर्णमेव बलार्णवम् ।
क्षोभयध्वं महावेगाः पवनः सागरं यथा ॥ ७-१२४-२२ (५००३३)
भीमसेनेन ते राजन्पाञ्चाल्येन च नोदिताः ।
आजघ्नुः कौरवान्सङ्ख्ये त्यक्त्वाऽसूनात्मनः प्रियान् ॥ ७-१२४-२३ (५००३४)
इच्छन्तो निधनं युद्धे शस्त्रैरुत्तमतेजसः ।
स्वर्गेप्सवो मित्रकार्ये नाभ्यनन्दन्त जीवितम् ॥ ७-१२४-२४ (५००३५)
तथैव तावका राजन्प्रार्थयन्तो महद्यशः ।
आर्या युद्धे मतिं कृत्वा युद्धायैवावतस्थिरे ॥ ७-१२४-२५ (५००३६)
तस्मिन्सुतुमुले युद्धे वर्तमाने भयावहे ।
जित्वा सर्वाणि सैन्यानि प्रायात्सात्यकिरर्जुनं ॥ ७-१२४-२६ (५००३७)
कवचानां प्रभास्तत्र सूर्यरश्मिविराजिताः ।
दृष्टीः सङ्ख्ये सैनिकानां प्रतिजघ्नुः समन्ततः ।
ग्ध्वजशस्त्रप्रतिहता लोकान्समवदीपयन् ॥ ७-१२४-२७ (५००३८)
चण्डवातोद्धतान्मेघान्विकिरन्रश्मिमानिव ।
तथा तव महत्सैन्यं तद्व्यरोचत तापयन् ॥ ७-१२४-२८ (५००३९)
सम्प्रहृष्टः स सहसा तव सैन्यार्णवं प्रति ।
लोलयन्सर्वतो गत्वा समुद्रं मकरो यथा ॥ ७-१२४-२९ (५००४०)
तत्र राजन्महानासीत्सङ्ग्रामो भीतिवर्धनः ।
पाण्डवस्य महाबाहो तावकानां च दारुणः ॥ ७-१२४-३० (५००४१)
रुद्रस्याक्रीडसङ्काशः संहारः सर्वदेहिनाम् ।
ततः शब्दो महानासीत्प्रायाद्यत्र धनञ्चयः ॥ ७-१२४-३१ (५००४२)
तत्र स्म कदनं घोरं वर्तते पाण्डुपूर्वज ।
अर्जुनस्य महाबाहोस्तावकानां च धन्विनाम् ॥ ७-१२४-३२ (५००४३)
मध्ये भारतसैन्यस्य माधवस्य महारणे ।
द्रोणस्यापि परैः सार्धं व्यूहद्वारे सुदारुणम् ॥ ७-१२४-३३ (५००४४)
एवमेष क्षयो वृत्तः पृथिव्यां पृथिवीपते ।
क्रुद्धेऽर्जुने तथा द्रोणे सात्वते च महारथे'॥ ७-१२४-३४ (५००४५)

तथा प्रयतमानानां पाण्डवानां महात्मनाम् ।
दुर्योधनो महाराजन्व्यगाहत महद्बलम् ॥ ७-१२४-३५ (५००४६)
स सन्निपातस्तुमुलस्तेषां तस्य च भारत ।
अभवत्सर्वभूतानामभावकरणो महान् ॥ ७-१२४-३६ (५००४७)
धृतराष्ट्र उवाच। ७-१२४-३७क्ष् (४५७६)
तथा यातेषु सैन्येषु तथा कृच्छ्रगतः स्वयम् ।
कच्चिद्दुर्योधनः सूत नाकार्षीत्पृष्ठतो रणम् ॥ ७-१२४-३७ (५००४८)
एकस्य च बहूनां च सन्निपातो महाहवे ।
विशेषतो नरपतेर्विषमः प्रतिभाति मे ॥ ७-१२४-३८ (५००४९)
सोऽत्यन्तसुखसंवृद्धो लक्ष्म्या लोकस्य चेश्वरः ।
एको बहून्समासाद्य कच्चिन्नासीत्पराङ्मुखः ॥ ७-१२४-३९ (५००५०)
सञ्जय उवाच। ७-१२४-४०क्ष् (४५७७)
राजन्सङ्ग्राममाश्चर्यं तव पुत्रस्य भारत ।
एकस्य बहुभिः सार्धं शृणुष्व गदतो मम ॥ ७-१२४-४० (५००५१)
दुर्योधनेन समरे पृतना पाण्डवी रणे ।
नलिनी द्विरदेनेव समन्तात्प्रतिलोडिता ॥ ७-१२४-४१ (५००५२)
ततस्तां प्रहतां सेनां दृष्ट्वा पुत्रेण ते नृप ।
भीमसेनपुरोगास्तं पाञ्चालाः समुपाद्रवन् ॥ ७-१२४-४२ (५००५३)
स भीमसेनं दशभिः शरैर्विव्याध पाण्डवम् ।
त्रिभिस्त्रिभिर्यमौ वीरौ धर्मराजं च सप्तभिः ॥ ७-१२४-४३ (५००५४)
विराटद्रुपदौ षड्भिः शतेन च शिखण्डिनम् ।
धृष्टद्युम्नं च विंशत्या द्रौपदेयांस्त्रिभिस्त्रिभिः ॥ ७-१२४-४४ (५००५५)
शतशश्चापरान्योधान्सद्विपांश्च रथान्रणे ।
शरैरवचकर्तोग्रैः क्रुद्धोऽन्तक इव प्रजाः ॥ ७-१२४-४५ (५००५६)
न सन्दधद्विमुञ्चन्वा मण्डलीकृतकार्मुकः ।
अदृश्यत रिपून्निघ्नञ्छिक्षयाऽस्तबलेन च ॥ ७-१२४-४६ (५००५७)
तस्य तान्निघ्नतः शत्रून्हेमपृष्ठं महद्धनुः ।
अजस्रं मण्डलीभूतं ददृशुः समरे जनाः ॥ ७-१२४-४७ (५००५८)
ततो युधिष्ठिरो राजा भल्लाभ्यामच्छिनद्धनुः ।
तव पुत्रस्य कौरव्य यतमानस्य संयुगे ॥ ७-१२४-४८ (५००५९)
विव्याध चैनं दशभिः सम्यगस्तैः शरोत्तमैः ।
वर्म चाशु समासाद्य ते भित्त्वा क्षितिमाविशन् ॥ ७-१२४-४९ (५००६०)
ततः प्रमुदिताः पार्थाः परिवव्रुर्युधिष्ठिरम् ।
यथा वृत्रवधे देवाः पुरा शक्रं महर्षयः ॥ ७-१२४-५० (५००६१)
ततोऽन्यद्धनुरादाय तव पुत्रः प्रतापवान् ।
तिष्ठेतिष्ठेति राजानं ब्रुवन्पाण्डवमभ्ययात् ॥ ७-१२४-५१ (५००६२)

तमायान्तमभिप्रेक्ष्य तव पुत्रं महामृधे ।
प्रत्युद्ययुः समुदिताः पाञ्चाला जयगृद्धिनः ॥ ७-१२४-५२ (५००६३)
तान्द्रोणः प्रतिजग्राह परीप्सन्युधि पाण्डवम् ।
चण्डवातोद्धुतान्मेघान्निगिरिरम्बुमुचो यथा ॥ ७-१२४-५३ (५००६४)
तत्र राजन्महानासीत्सङ्ग्रामो रोमहर्षणः ।
पाण्डवानां महाबाहो तावकानां च संयुगे ॥ ७-१२४-५४ (५००६५)
रुद्रस्याक्रीडसदृशः संहारः सर्वदेहिनाम् ॥ ७-१२४-५५ (५००६६)
ततः शब्दो महानासीद्यातो येन धनञ्जयः ।
अतीव सर्वशब्देभ्यो रोमहर्षकरः प्रभो ॥ ७-१२४-५६ (५००६७)
अर्जुनस्य महाबाहो तावकानां च धन्विनाम् ।
मध्ये भारतसैन्यस्य माधवस्य महारणे ।
द्रोणस्यापि परैः सार्धं व्यूहद्वारे महारणे ॥ ७-१२४-५७ (५००६८)
एवमेष क्षयो वृत्तः पृथिव्यां पृथिवीपते ।
क्रुद्धेऽर्जुने तथा द्रोणे सात्वते च महारथे ॥ ॥ ७-१२४-५८ (५००६९)

इति श्रीमन्महाभारते द्रोणपर्वणि जयद्रथवधपर्वणि
चतुर्दशदिवसयुद्धे चतुर्विंशत्यधिकशततमोऽध्यायः ॥ १२४ ॥
Mahabharata - Drona Parva - Chapter Footnotes

५-१२४-९ अनीकेषु समूहेषु इति क ख पाठः ॥
५-१२४-३९ लक्ष्म्येति विशेषणे तृतीया ॥
५-१२४-१२५ चतुर्विंशत्यधिकशततमोऽध्यायः ॥

---

द्रोनपर्व-अध्यय१२५
॥ श्रीः ॥
७.१२५. अध्यायः १२५

Mahabharata - Drona Parva - Chapter Topics
द्रोणपराक्रमवर्णनम् ॥ १ ॥

Mahabharata - Drona Parva - Chapter Text

७-१२५-० (५००७०)
सञ्जय उवाच। ७-१२५-०क्ष् (४५७८)
अपराह्णे महाराज सङ्ग्रामः सुमहानभूत् ।
पर्जन्यसमनिर्घोषः पुनर्द्रोणस्य सोमकैः ॥ ७-१२५-१ (५००७१)

शोणाश्वं रथमास्थाय नरवीरः समाहितः ।
समरेऽभ्यद्रवत्पाण्डूञ्जवमास्थाय मध्यमम् ॥ ७-१२५-२ (५००७२)
तव प्रियहिते युक्तो महेष्वासो महाबलः ।
चित्रपुङ्खैः शितैर्बाणैः कलशोत्तमसम्भवः ।
ग्जघान सोमकान्राजन्सृञ्जयान्केकयानपि'॥ ७-१२५-३ (५००७३)
वरान्वरान्हि योधानां विचिन्वन्निव भारत ।
आक्रीडत रमे राजन्भारद्वाजः प्रतापवान् ॥ ७-१२५-४ (५००७४)
तमभ्ययाद्बृहत्क्षत्रः केकयानां महारथः ।
भ्रातॄणां नृप पञ्चानां श्रेष्ठः समरकर्कशः ॥ ७-१२५-५ (५००७५)
विमुञ्चन्विशिखांस्तीक्ष्णानाचार्यं भृशमार्दयत् ।
महामेघो यथा वर्षं विमुञ्चन्गन्धमादने ॥ ७-१२५-६ (५००७६)
तस्य द्रोणो महाराज स्वर्णपुङ्खाञ्शिलाशितान् ।
प्रेषयामास सङ्क्रुद्ध- सायकान्दश पञ्च च ॥ ७-१२५-७ (५००७७)
तांस्तु द्रोणविनिर्मुक्तान्क्रुद्धाशीविषसन्निभान् ।
एकैकं पञ्चभिर्बाणैर्युधि चिच्छेद हृष्टवत् ॥ ७-१२५-८ (५००७८)
तदस्य लाघवं दृष्ट्वा प्रहस्य द्विजपुङ्गवः ।
प्रेषयामास विशिखानष्टौ सन्नतपर्वणः ॥ ७-१२५-९ (५००७९)
तान्दृष्ट्वा पततस्तूर्णं द्रोणचापच्युताञ्शरान् ।
अवारयच्छरैरेव तावद्भिर्निशितैर्मृधे ॥ ७-१२५-१० (५००८०)
ततोऽभवन्महाराज तव सैन्यस्य विस्मयः ।
बृहत्क्षत्रेण तत्कर्म कृतं दृष्ट्वा सुदुष्करम् ॥ ७-१२५-११ (५००८१)
ततो द्रोणो महाराज बृहत्क्षत्रं विशेषयन् ।
प्रादुश्चक्रे रणे दिव्यं ब्राह्ममस्त्रं सुदुर्जयम् ॥ ७-१२५-१२ (५००८२)
कैकेयोऽस्त्रं समालोक्य मुक्तं द्रोणेन संयुगे ।
ब्रह्मास्त्रेणैव राजेन्द्र ब्राह्ममस्त्रमशातयत् ॥ ७-१२५-१३ (५००८३)
ततोऽस्त्रे निहते ब्राह्मे बृहत्क्षत्रस्तु भारत ।
विव्याध ब्राह्मणं षष्ट्या स्वर्णपुङ्खैः शिलाशितैः ॥ ७-१२५-१४ (५००८४)
तं द्रोणो द्विपदां श्रेष्ठो नाराचेन समार्पयत् ।
स तस्य कवचं भित्त्वा प्राविशद्धरणीतलम् ॥ ७-१२५-१५ (५००८५)
कृष्णसर्पो यथा मुक्तो वल्मीकं नृपसत्तम ।
तथाऽत्यगान्महीं बाणो भित्त्वा कैकेयमाहवे ॥ ७-१२५-१६ (५००८६)
सोऽतिविद्धो महाराज कैकेयो द्रोणसायकैः ।
क्रोधेन महताऽऽविष्टो व्यावृत्य नयने शुभे ॥ ७-१२५-१७ (५००८७)
द्रोणं विव्याध सप्तत्या स्वर्णपुङ्खैः शिलाशितैः ।
सारथिं चास्य बाणेन भृशं मर्मस्वताडयत् ॥ ७-१२५-१८ (५००८८)
द्रोणस्तु बहुभिर्विद्धो बृहत्क्षत्रेण मारिष ।

असृजद्विशिखांस्तीक्ष्णान्कैकेयस्य रथं प्रति ॥ ७-१२५-१९ (५००८९)
व्याकुलीकृत्य तं द्रोणो बृहत्क्षत्रं महारथम् ।
अश्वांश्चतुर्भिरन्यवधीच्चतुरोऽस्य पतत्त्रिभिः ॥ ७-१२५-२० (५००९०)
सूतं चैकेन बाणेन रथनीडादपातयत् ।
द्वाभ्यां ध्वजं च च्छत्रं च च्छित्त्वा भूमावपातयत् ॥ ७-१२५-२१ (५००९१)
ततः साधुविसृष्टेन नाराचेन द्विजर्षभः ।
हृद्यविध्यद्बृहत्क्षत्रं स च्छिन्नहृदयोऽपतत् ॥ ७-१२५-२२ (५००९२)
बृहत्क्षत्रे हते राजन्केकयानां महारथे ।
शैशुपालिरभिक्रुद्धो यन्तारमिदमब्रवीत् ॥ ७-१२५-२३ (५००९३)
सारथे याहि यत्रैष द्रोणस्तिष्ठति दंशितः ।
विनिघ्नन्केकयान्सर्वान्पाञ्चालानां च वाहिनीं ॥ ७-१२५-२४ (५००९४)
तस्य तद्वचनं श्रुत्वा सारथी रथिनां वरम् ।
द्रोणाय प्रापयामास काम्भोजैर्जवनैर्हयैः ॥ ७-१२५-२५ (५००९५)
धृष्टकेतुश्च चेदीनामृषभोऽतिबलोदितः ।
वधायाभ्यद्रवद्द्रोणं पतङ्ग इव पावकम् ॥ ७-१२५-२६ (५००९६)
सोऽविध्यत तदा द्रोणं षष्ट्या साश्वरथध्वजम् ।
पुनश्चान्यैः सरैस्तीक्ष्णैः सुप्तं व्याघ्रं तुदन्निव ॥ ७-१२५-२७ (५००९७)
तस्य द्रोणो धनुर्मध्ये क्षुरप्रेण शितेन च ॥
चकर्त गार्ध्रपत्रेण यतमानस्य शुष्मिणः ॥ ७-१२५-२८ (५००९८)
अथान्यद्धनुरादाय शैशुपालिर्महारथः ।
विव्याध सायकैर्द्रोणं कङ्कबर्हिणवाजितैः ॥ ७-१२५-२९ (५००९९)
तस्य द्रोणो हयान्हत्वा चतुर्भिश्चतुरः शरैः ।
सारथेश्च शिरः कायाच्चकर्त प्रहसन्निव ॥ ७-१२५-३० (५०१००)
अथैनं पञ्चविंशत्या सायकानां समार्पयत् ॥ ७-१२५-३१ (५०१०१)
अवप्लुत्य रथाच्चैद्यो गदामादाय सत्वरः ।
भारद्वाजाय चिक्षेप रुपितामिव पन्नगीम् ॥ ७-१२५-३२ (५०१०२)
तामापतन्तीमालोक्य कालरात्रिमिवोद्यताम् ।
अश्मसारमयीं गुर्वी तपनीयविभूषिताम् ।
शरैरनेकसाहस्रैर्भाद्वाजोऽच्छिनच्छितैः ॥ ७-१२५-३३ (५०१०३)
सा छिन्ना बहुभिर्बाणैभारद्वाजेन मारिष ।
गदा पपात कौरव्य नादयन्ती धरातलम् ॥ ७-१२५-३४ (५०१०४)
गदां विनिहतां दृष्ट्वा धृष्टकेतुरमर्षणः ।
तोमरं व्यसृजद्वीरः शक्तिं च कन कोज्ज्वलाम् ॥ ७-१२५-३५ (५०१०५)
तोमरं पञ्चभिर्भित्त्वा शक्तिं चिच्छेद पञ्चभिः ।
तौ जग्मतुर्महीं छिन्नौ सर्पाविव गरुत्मता ॥ ७-१२५-३६ (५०१०६)

ततोऽस्य विशिखं तीक्ष्णं वधाय वधकाङ्क्षिणः ।
प्रेषयामास समरे भारद्वाजः प्रतापवान् ॥ ७-१२५-३७ (५०१०७)
स तस्य कवचं भित्त्वा हृदयं चामितौजसः ।
अभ्यगाद्धरणीं बाणो हंसः पद्मवनं यथा ॥ ७-१२५-३८ (५०१०८)
पतङ्गं हि ग्रसेच्चाषो यथा क्षुद्रं बुभुक्षितः ।
तथा द्रोणोऽग्रसच्छूरो धृष्टकेतुं महाहवे ॥ ७-१२५-३९ (५०१०९)
निहते चेदिराजे तु तत्खण्डं पित्र्यमाविशत् ।
अमर्षवशमापन्नः पुत्रोऽस्य परमास्त्रवित् ॥ ७-१२५-४० (५०११०)
तमपि प्रहसन्द्रोणः शरैर्निन्ये यमक्षयम् ।
महाव्याघ्रो महारण्ये मृगशावं यथा बली ॥ ७-१२५-४१ (५०१११)
तेषु प्रक्षीयमाणेषु पाण्डवेयेषु भारत ।
जरासन्धसुतो वीरः स्वयं द्रोणमुपाद्रवत् ॥ ७-१२५-४२ (५०११२)
स तु द्रोणं महाबाहुः शरधाराभिराहवे ।
अदृश्यमकरोत्तूर्णं जलदो भास्करं यथा ॥ ७-१२५-४३ (५०११३)
तस्य तल्लाघवं दृष्ट्वा द्रोणः क्षत्रियमर्दनः ।
व्यसृजत्सायकांस्तूर्णं शतशोऽथ सहस्रशः ॥ ७-१२५-४४ (५०११४)
छादयित्वा रमे द्रोणं रथस्थं रथिनां वरम् ।
जारासन्धिं जघानाशु मिषतां सर्वधन्विनाम् ॥ ७-१२५-४५ (५०११५)
योयो विधीयते खण्डस्तंतं द्रोणोऽन्तकोपमः ।
आदत्त सर्वभूतानि प्राप्ते काले यथान्तकः ॥ ७-१२५-४६ (५०११६)
ततो द्रोणो महाराज नाम विश्राव्य संयुगे ।
शरैरनेकसाहस्रैः पाण्डवेयान्समावृणोत् ॥ ७-१२५-४७ (५०११७)
ते तु नामाङ्किता बाणा द्रोणेनास्ताः शिलाशिताः ।
नरान्नागान्हयांश्चैव निजघ्नुः शतशो मृधे ॥ ७-१२५-४८ (५०११८)
ते वध्यमाना द्रोणेन शक्रेणेव महासुराः ।
समकम्पन्त पाञ्चाला गावः शीतार्दिता इव ॥ ७-१२५-४९ (५०११९)
ततो निष्टानको घोरः पाण्डवानामजायत ।
द्रोणेन वध्यमानेषु सैन्येषु भरतर्षभ ॥ ७-१२५-५० (५०१२०)
प्रताप्यमानाः सूर्येण हन्यमानाश्च सायकैः ।
अन्वपद्यन्त पाञ्चालास्तदा सन्त्रस्तचेतसः ॥ ७-१२५-५१ (५०१२१)
मोहिता बाणजालेन भारद्वाजेन संयुगे ।
ऊरुग्राहगृहीतानां पाञ्चालानां महारथाः ॥ ७-१२५-५२ (५०१२२)
चेदयश्च महाराज सृञ्जयाः काशिकोसलाः ।
अभ्यद्रवन्त संहृष्टा भारद्वाजं युयुत्सया ॥ ७-१२५-५३ (५०१२३)
ब्रुवन्तश्च रणेऽन्योन्यं चेदिपाञ्चालसृञ्जयाः ।
हत द्रोणं हत द्रोणमिति ते द्रोणमभ्ययुः ॥ ७-१२५-५४ (५०१२४)

यतन्तः पुरुषव्याघ्राः सर्वशक्त्या महाद्युतिम् ।
निनीषवो रणे द्रोणं यमस्य सदनं प्रति ॥ ७-१२५-५५ (५०१२५)
यतमानांस्तु तान्वीरान्भारद्वाजः शिलीमुखैः ।
यमाय प्रेषयामास चेदिमुख्यान्विशेषतः ॥ ७-१२५-५६ (५०१२६)
तेषु प्रक्षीयमाणेषु चेदिमुख्येषु सर्वशः ।
पाञ्चलाः समकम्पन्त द्रोणसायकपीडिताः ॥ ७-१२५-५७ (५०१२७)
प्राक्रोशन्भीमसेनं ते धृष्टद्युम्नं च भारत ।
दृष्ट्वा द्रोणस्य कर्माणि तथारूपाणि मारिष ॥ ७-१२५-५८ (५०१२८)
भीम उवाच। ७-१२५-५९क्ष् (४५७९)
ब्राह्मणेन तपो नूनं चरितं दुश्चरं महत् ।
तथा हि युधि सङ्क्रुद्धो दहति क्षत्रियर्षभान् ॥ ७-१२५-५९ (५०१२९)
धर्मो युद्धं क्षत्रियस्य ब्राह्मणस्य परं तपः ।
तपस्वी कृतविद्यश्च प्रेक्षितेनापि निर्दहेत् ॥ ७-१२५-६० (५०१३०)
द्रोणाग्निमस्त्रसंस्पर्शं प्रविष्टाः क्षत्रियर्षभाः ।
बहवो दुस्तरं घोरं यत्रादह्यन्त भारत ॥ ७-१२५-६१ (५०१३१)
यथाबलं यथोत्साहं यथासत्वं महाद्युतिः ।
मोहयन्सर्वभूतानि द्रोणो हन्ति बलानि नः ॥ ७-१२५-६२ (५०१३२)
सञ्जय उवाच। ७-१२५-६३क्ष् (४५८०)
तस्य तद्वचनं श्रुत्वा क्षत्रधर्मा व्यवस्थितः ।
अर्धचन्द्रेण चिच्छेद द्रोणस्य सशरं धनुः ॥ ७-१२५-६३ (५०१३३)
स संरब्धतरो भूत्वा द्रोणः क्षत्रियमर्दनः ॥ ७-१२५-६४ (५०१३४)
अन्यत्कार्मुकमादाय भास्वरं वेगवत्तरम् ।
तत्राधाय शरं तीक्ष्णं परानीकविशातनम् ॥ ७-१२५-६५ (५०१३५)
आकर्णपूर्णमाचार्यो बलवानभ्यवासृजत् ।
स हत्वा क्षत्रधर्माणं जगाम धरणीतलम् ॥ ७-१२५-६६ (५०१३६)
स भिन्नहृदयो वाहान्न्यपतन्मेदिनीतले ।
ततः सैन्यान्यकम्पन्त धृष्टद्युम्नसुते हते ॥ ७-१२५-६७ (५०१३७)
अथ द्रोणं समारोहच्चेकितानो महाबलः ।
स द्रोणं दशभिर्विद्ध्वा प्रत्यविद्ध्यत्स्तनान्तरे ॥ ७-१२५-६८ (५०१३८)
चतुर्भिः सारथिं चास्य चतुर्भिश्चतुरो हयान् ।
तमाचार्यस्त्रिभिर्बाणैर्बाह्वोरुरसि चार्दयत् ॥ ७-१२५-६९ (५०१३९)
ध्वजं सप्तभिरुन्मथ्य यन्तारमवधीत्त्रिभिः ।
तस्य सूते हते तेऽश्वा रथमादाय विद्रुताः ॥ ७-१२५-७० (५०१४०)
समरे शरसंवीता भारद्वाजेन मारिष ।
चेकितानरथं दृष्ट्वा हताश्वं हतसारथिम् ॥ ७-१२५-७१ (५०१४१)
तान्समेतान्रणे शूरांश्चेदिपाञ्चालसृञ्जयान् ।

समन्ताद्द्रावयन्द्रोणो बह्वशोभत मारिष ॥ ७-१२५-७२ (५०१४२)
आकर्णपलितः श्यामो वयसाऽशीतिपञ्चकः ।
रणे पर्यचरद्द्रोणो वृद्धः षोडशवर्षवत् ॥ ७-१२५-७३ (५०१४३)
अथ द्रोणं महाराज विचरन्तमभीतवत् ।
वज्रहस्तममन्यन्त शत्रवः शत्रुसूदनम् ॥ ७-१२५-७४ (५०१४४)
ततोऽब्रवीन्महाबाहुर्द्रुपदो बुद्धिमान्नृप ।
लुब्धोऽयं क्षत्रियान्हन्ति व्याघ्रः क्षुद्रमृगानिव ॥ ७-१२५-७५ (५०१४५)
कृच्छ्रान्दुर्योधनो लोकान्पापः प्राप्स्यति दुर्मतिः ।
यस्य लोभाद्विनिहताः समरे क्षत्रियर्षभाः ॥ ७-१२५-७६ (५०१४६)
शतशः शेरते भूमौ निकृत्ता गोवृषा इव ।
रुधिरेण परीताङ्गाः श्वशृगालादनीकृताः ॥ ७-१२५-७७ (५०१४७)
सञ्जय उवाच। ७-१२५-७८क्ष् (४५८१)
एवमुक्त्वा महाराज द्रुपदोऽक्षौहिणीपतिः ।
पुरस्कृत्य रणे पार्थान्द्रोणमभ्यद्रवद्द्रुतम् ॥ ॥ ७-१२५-७८ (५०१४८)

इति श्रीमन्महाभारते द्रोणपर्वणि जयद्रथवधपर्वमि
चतुर्दशदिवसयुद्धे पञ्चविंशत्यधिकशततमोऽध्यायः ॥१२५ ॥
Mahabharata - Drona Parva - Chapter Footnotes

५-१२५-५० निष्टानकः कष्टस्वनः ॥
५-१२५-५२ ऊरुग्राहः ऊरुस्तम्भः ॥
५-१२५-७३ आकर्णमुपागतं पलितं केशादेः शौक्ल्यं यस्य । वयसा
कालपिण्डसंयोगेन। अशीतिपञ्चकः चतुःशताब्दः ॥
५-१२५-१२५ पञ्चविंशत्यधिकशततमोऽध्यायः ॥

---

द्रोनपर्व-अध्यय१२६
॥ श्रीः ॥
७.१२६. अध्यायः १२६

Mahabharata - Drona Parva - Chapter Topics
अर्जुनवृत्तान्तपरिज्ञानाय सात्यकिं प्रेषितवता युधिष्ठिरेण
पुनस्तयोर्वृत्तान्तपरिज्ञानाय भीमसेनस्य तत्र गमनचोदना ॥१ ॥

Mahabharata - Drona Parva - Chapter Text

७-१२६-० (५०१४९)

सञ्जय उवाच। ७-१२६-०क्ष् (४५८२)
व्यूहेष्वालोड्यमानेषु पाण्डवानां ततस्ततः ।
सुदूरमन्वयुः पार्थाः पाञ्चालाः सह सोमकैः ॥ ७-१२६-१ (५०१५०)
वर्तमाने तथा रौद्रे सङ्ग्रामे रोमहर्षणे ।
सङ्क्षये जगतस्तीव्रे युगान्त इव भारत ॥ ७-१२६-२ (५०१५१)
द्रोणे युधि पराक्रान्ते नर्दमाने मुहुर्मुहुः ।
पाञ्चालेषु च क्षीणेषु वध्यमानेषु पाण्डुषु ॥ ७-१२६-३ (५०१५२)
नापश्यच्छरणं कञ्चिद्धर्मराजो युधिष्ठिरः ।
चिन्तयामास राजेन्द्र कथमेतद्भविष्यति ॥ ७-१२६-४ (५०१५३)
ततो विक्ष्य दिशः सर्वाः सव्यसाचिदिदृक्षया ।
युधिष्ठिरो ददर्शाथ नैव पार्थं न माधवम् ॥ ७-१२६-५ (५०१५४)
सोऽपश्यन्नरशार्दूलं वानरर्षभलक्षणम् ।
गाण्डीवस्य च निर्घोषमशृण्वन्व्यथितेन्द्रियः ॥ ७-१२६-६ (५०१५५)
अपश्यन्सात्यकिं चापि वृष्णीनां प्रवरं रथम् ।
चिन्तयाभिपरीताङ्गो धर्मराजो युधिष्ठिरः ।
नाध्यगच्छत्तदा शान्ति तावपश्यन्नरोत्तमौ ॥ ७-१२६-७ (५०१५६)
लोकोपक्रोशभीरुत्वाद्धर्मराजो महामनाः ।
अचिन्तयन्महाबाहुः शैनेयस्य रथं प्रति ॥ ७-१२६-८ (५०१५७)
पदवीं प्रेषितश्चैव फल्गुनस्य मया रणे ।
शैनेयः सात्यकिः सत्यो मित्राणामभयङ्करः ॥ ७-१२६-९ (५०१५८)
तदिदं ह्येकमेवासीद्द्विधा जातं ममाऽद्य वै ।
सात्यकिश्च हि विज्ञेयः पाण्डवश्च धनञ्जयः ॥ ७-१२६-१० (५०१५९)
सात्यकिं प्रेषयित्वा तु पाण्डवस्य पदानुगम् ।
सात्वतस्यापि कं युद्धे प्रेषयिष्ये पदानुगम् ॥ ७-१२६-११ (५०१६०)
परिष्यामि प्रयत्नेन भ्रातुरन्वेषणं यदि ।
युयुधानमनन्विष्य लोको मां गर्हयिष्यति ॥ ७-१२६-१२ (५०१६१)
भ्रातुरन्वेषणं कृत्वा धर्मपुत्रो युधिष्ठिरः ।
परित्यजति वार्ष्णेयं सात्यकिं सत्यविक्रमम् ॥ ७-१२६-१३ (५०१६२)
लोकापवादभीरुत्वात्सोऽहं पार्थं वृकोदरम् ।
पदवीं प्रेषयिष्यामि माधवस्य महात्मनः ॥ ७-१२६-१४ (५०१६३)
यथैव च मम प्रीतिरर्जुने शत्रुसूदने ।
तथैव वृष्णिवीरेऽपि सात्वते युद्धदुर्मदे ॥ ७-१२६-१५ (५०१६४)
अतिभारे नियुक्तश्च मया शैनेयनन्दनः ।
स तु मित्रोपरोधेन गौरवात्तु महाबलः ।
प्रविष्टो भारतीं सेनां मकरः सागरं यथा ॥ ७-१२६-१६ (५०१६५)
असौ हि श्रूयते शब्दः शूराणामनिवर्तिनाम् ।

मिथः संयुध्यमानानं वृष्णिवीरेण धीमता ॥ ७-१२६-१७ (५०१६६)
प्राप्तकालं सुबलवन्निश्चितं बहुधा हि मे ।
तत्रैव पाण्डवेयस्य भीमसेनस्य धन्विनः ।
गमनं रोचते मह्यं यत्र यातौ महारथौ ॥ ७-१२६-१८ (५०१६७)
न चाप्यसह्यं भीमस्य विद्यते भुवि किञ्चिन ॥ ७-१२६-१९ (५०१६८)
शक्तो ह्येष रणे यत्तः पृथिव्यां सर्वधन्विनाम् ।
स्वबाहुबलमास्थाय प्रतिव्यूहितुमञ्जसा ॥ ७-१२६-२० (५०१६९)
यस्य बाहुबलं सर्वे समाश्रित्य महात्मनः ।
वनवासान्निवृत्ताः स्म न च युद्धेषु निर्जिताः ॥ ७-१२६-२१ (५०१७०)
इतो गते भीमसेने सात्वतं प्रति पाण्डवे ।
सनाथौ भवितारौ हि युधि सात्वतफल्गुनौ ॥ ७-१२६-२२ (५०१७१)
कामं त्वशोचनीयौ तौ रणे सात्वतफल्गुनौ ।
रक्षितौ वासुदेवेन स्वयं शस्त्रविशारदौ ॥ ७-१२६-२३ (५०१७२)
अवश्यं तु मया कार्यमात्मनः शोकनाशनम् ।
तस्माद्भीमं नियोक्ष्यामि सात्वतस्य पदानुगम् ॥ ७-१२६-२४ (५०१७३)
ततः प्रतिकृतं मन्ये विधानं सात्यकिं प्रति ॥
एवं निश्चित्य मनसा धर्मपुत्रो युधिष्ठिरः। ७-१२६-२५ (५०१७४)
यन्तारमब्रवीद्राजा भीमं प्रति नयस्व माम् ॥ ७-१२६-२६ (५०१७५)
धर्मराजवचः श्रुत्वा सारथिर्हयकोविदः ।
रथं हेमपरिष्कारं भीमान्तिकमुपानयत् ॥ ७-१२६-२७ (५०१७६)
भीमसेनमनुज्ञाप्य प्राप्तकालमचिन्तयत् ।
कश्मलं प्राविशद्राजा बहु तत्र समादिशत् ॥ ७-१२६-२८ (५०१७७)
स कश्मलसमाविष्टो भीममाहूय पार्थिवः ।
अब्रवीद्वचनं राजन्कुन्तीपुत्रो युधिष्ठिरः। ७-१२६-२९ (५०१७८)
अब्रवीद्वचनं राजन्कुन्तीपुत्रो युधिष्ठिरः ॥
यः सदेवान्सगन्धर्वान्दैत्यांश्चैकरथोऽजयत्। ७-१२६-३० (५०१७९)
तस्य लक्ष्म न पश्यामि भीमसेनानुजस्य ते ॥ ७-१२६-३१ (५०१८०)
सञ्जय उवाच ।
ततोऽब्रवीद्धर्मराजं भीमसेनस्तथागतम् ।
नैवाद्राक्षं नचाश्रौषं तव कश्मलमीदृशम् ॥ ७-१२६-३१क्ष् (४५८३)
पुरातिदुःखदीर्णानां भवान्गतिरभूद्धि नः ।
उत्तिष्ठोत्तिष्ठ राजेन्द्र शाधि किं करवाणि ते ॥ ७-१२६-३२ (५०१८१)
न ह्यसाध्यमकार्यं वा विद्यते मम मानद ।
आज्ञापय कुरुश्रेष्ठ मा च शोके मनः कृथाः ॥ ७-१२६-३३ (५०१८२)
सञ्जय उवाच। ७-१२६-३४क्ष् (४५८४)
तमब्रवीदश्रुपूर्णः कृष्णसर्प इव श्वसन् ।

भीमसेनमिदं वाक्यं प्रम्लानवदनो नृपः ॥ ७-१२६-३४ (५०१८३)
श्रूयते पाञ्चजन्यस्य यथा शङ्खस्य निस्वनः ।
पूरितो वासुदेवेन संरब्धेन यशस्विना ॥ ७-१२६-३५ (५०१८४)
नूनमद्य हतः शेते तव भ्राता धनञ्जयः ।
तस्मिन्विनिहते नूनं युध्यतेऽसौ जनार्दनः ॥ ७-१२६-३६ (५०१८५)
यस्य सत्ववतो वीर्यं ह्युपजीवन्ति पाण्डवाः ।
यं भयेष्वभिगच्छन्ति सहस्राक्षमिवामराः ॥ ७-१२६-३७ (५०१८६)
स शूरः सैन्धवप्रेप्सुरन्वयाद्भारतीं चमूम् ।
तस्य वै गमनं विद्मो भीम नावर्तनं पुनः ॥ ७-१२६-३८ (५०१८७)
श्यामो युवा गुडाकेशो दर्शनीयो महारथः ।
व्यूढोरस्को महाबाहुर्मत्तद्विरदविक्रमः ॥ ७-१२६-३९ (५०१८८)
चकोरनेत्रस्ताम्रास्यो द्विषतां भयवर्धनः ।
ग्मम प्रियहितार्थं च शक्रलोकादिहागतः ॥ ७-१२६-४० (५०१८९)
वृद्धोपसेवी धृतिमान्कृतज्ञः सत्यसङ्गरः ।
प्रविष्टो महतीं सेनामपर्यन्तां धनञ्जयः ॥ ७-१२६-४१ (५०१९०)
प्रविष्टे च चमूं घोरामर्जुने शत्रुनाशने ।
प्रेषितः सात्वतो वीरः फल्गुनस्य पदानुगः ॥ ७-१२६-४२ (५०१९१)
तस्याभिगमनं जाने भीम नावर्तनं पुनः'।
तदिदं मम भद्रं ते शोकस्थानमरिन्दम ॥ ७-१२६-४३ (५०१९२)
अर्जुनार्थे महाबाहो सात्वतस्य च कारणात् ।
वर्धते हविषेवाग्निरिध्यमानः पुनः पुनः ॥ ७-१२६-४४ (५०१९३)
तस्य लक्ष्म न पश्यामि तेन विन्दामि कश्मलम् ।
तं विद्धि पुरुषव्याघ्रं सात्वतं च महारथम् ॥ ७-१२६-४५ (५०१९४)
स तं महारथं पश्चादनुयातस्तवानुजम् ।
तमपश्यन्महाबाहुमदं विन्दामि कश्मलम् ॥ ७-१२६-४६ (५०१९५)
ग्अथैनं पुनराचक्ष्व लोहिताक्षं सकेशवम् ।
दृष्ट्वा कुशलिनं पार्थं सैन्धवान्ते ससात्यकिम् ॥ ७-१२६-४७ (५०१९६)
संविदं मम कुर्यास्त्वं सिंहनादेन पाण्डव ॥ ७-१२६-४८ (५०१९७)
नूनं विनिहतः शूरः सव्यासाची परन्तप'।
पार्थे तस्मिन्हते चैव युध्यते गरुडध्वजः ॥ ७-१२६-४९ (५०१९८)
सहयो नास्य वै कश्चित्तेन विन्दामि कश्मलम् ।
तस्मात्कृष्णो रणे नूनं युध्यते युद्धकोविदः ॥ ७-१२६-५० (५०१९९)
न हि मे शुध्यते भावस्तयोरेव परन्तप ।
स तत्र गच्छ कौन्तेय यत्र यातो धनञ्जयः ॥ ७-१२६-५१ (५०२००)
सात्यकिश्च महावीर्यः कर्तव्यं यदि मन्यसे ।
वचनं मम धर्मज्ञ भ्राता ज्येष्ठो भवामि ते ॥ ७-१२६-५२ (५०२०१)

न मेऽर्जुनस्तथा ज्ञेयो ज्ञातव्यः सात्यकिर्यथा ॥ ७-१२६-५३ (५०२०२)
चिकीर्षुर्मत्प्रियं पार्थ स यातः सव्यसाचिनः ।
पदवीं दुर्गमां घोरामगम्यामकृतात्मभिः ॥ ७-१२६-५४ (५०२०३)
दृष्ट्वा कुशलिनौ कृष्णौ सात्वतं चैव सात्यकिम् ।
संविदं चैव कुर्यास्त्वं सिंहनादेन पाण्डव ॥ ॥ ७-१२६-५५ (५०२०४)

इति श्रीमन्महाभारते द्रोणपर्वणि जयद्रथवधपर्वणि
चतुर्दशदिवसयुद्धे षड्विंशत्यधिकशततमोऽध्यायः ॥ १२६ ॥
Mahabharata - Drona Parva - Chapter Footnotes

५-१२६-६ वानरर्षभलक्षणं वानरप्रधानध्वजम्
। वरवानरकेतनमिति पाठो वा ॥
५-१२६-९ सत्यो दृढप्रतिज्ञः ॥
५-१२६-२५ सात्यकिम्प्रति प्रतिविधानं कृतमित्यन्वयः ॥
५-१२६-४० चकोरनेत्रो रक्तान्तायतनयनः । ताम्रास्यो रक्तगौरमुखः ॥
५-१२६-१२६ षड्विंशत्यधिकशततमोऽध्यायः ॥
१२६ ॥

---

द्रोनपर्व-अध्यय१२७
॥ श्रीः ॥
७.१२७. अध्यायः १२७

Mahabharata - Drona Parva - Chapter Topics
कतिचन धार्तराष्ट्रान्निहत्य निर्गच्छता भीमेन स्वपथं
निरुन्धानस्य द्रोणस्य रथभञ्जनम् ॥ १ ॥

Mahabharata - Drona Parva - Chapter Text

७-१२७-० (५०२०५)
भीमसेन उवाच। ७-१२७-०क्ष् (४५८५)
ब्रह्मेशानेन्द्रवरुणानवहद्यः पुरा रथः ।
तमास्थाय गतौ कृष्णौ न तयोर्विद्यते भयम् ॥ ७-१२७-१ (५०२०६)
तवाज्ञां शिरसा बिभ्रदेष गच्छामि मा शुचः ।
समेत्य तान्नरव्याघ्रास्तव दास्यामि संविदम् ॥ ७-१२७-२ (५०२०७)
सञ्जय उवाच। ७-१२७-३क्ष् (४५८६)
एतावदुक्त्वा प्रययौ परिदाय युधिष्ठिरम् ।

धृष्टद्युम्नाय बलवान्सुहृद्भ्यश्च पुनःपुनः ।
धृष्टद्युम्नं चेदमाह भीमसेनो महाबलः ॥ ७-१२७-३ (५०२०८)
विदितं ते महाबाहो यथा द्रोणो महारथः ।
ग्रहणे धर्मराजस्य सर्वोपायेन वर्तते ॥ ७-१२७-४ (५०२०९)
न च मे गमने कृत्यं तादृक्पार्षत विद्यते ।
यादृशं रक्षणे राज्ञः कार्यमात्ययिकं हि नः ॥ ७-१२७-५ (५०२१०)
एवमुक्तोऽस्मि पार्थेन प्रतिवक्तुं न चोत्सहे ।
प्रयास्ये तत्र यत्रासौ मुमूर्षुः सैन्धवः स्थितः ॥ ७-१२७-६ (५०२११)
धर्मराजस्य वचने स्थातव्यमविशङ्कया ।
यास्यामि पदवीं भ्रातुः सात्वतस्य च धीमतः ॥ ७-१२७-७ (५०२१२)
सोऽद्य यत्तो रणे रार्थं परिरक्ष युधिष्ठिरम् ।
एतद्धि सर्वकार्याणां परमं कृत्समाहवे ॥ ७-१२७-८ (५०२१३)
तमब्रवीन्महाराज धृष्टद्युम्नो वृकोदरम् ।
ईप्सितं ते करिष्यामि गच्छ पार्थाविचारयन् ॥ ७-१२७-९ (५०२१४)
नाहत्वा समरे द्रोणो धृष्टद्युम्नं कथञ्चन ।
निग्रहं धर्मराजस्य प्रकरिष्यति संयुगे ॥ ७-१२७-१० (५०२१५)
सञ्जय उवाच। ७-१२७-११क्ष् (४५८७)
ततो निक्षिप्य राजानं धृष्टद्युम्ने च पाण्डवम् ।
अभिवाद्य गुरुं ज्येष्ठं प्रययौ येन फल्गुनः ॥ ७-१२७-११ (५०२१६)
परिष्वक्तश्च कौन्तेयो धर्मराजेन मारुतिः ।
आघ्रातश्च तथा मूर्ध्नि श्रावितश्चाशिषः शुभाः ॥ ७-१२७-१२ (५०२१७)
श्कृत्वा प्रदक्षिणान्विप्रानर्चितांस्तुष्टमानसान् ।
आलभ्य मङ्गलान्यष्टौ पीत्वा कैरातकं मधु ॥ ७-१२७-१३ (५०२१८)
द्विगुणद्रविणो वीरो मदरक्तान्तलोचनः ।
विप्रैः कृतस्वस्त्ययनो विजयोत्पादसूचितः ॥ ७-१२७-१४ (५०२१९)
पश्यन्नेवात्मनो बुद्धिं विजयानन्दकारिणीम् ।
अनुलोमानिलैश्चाशु प्रदर्शितजयोदयः ॥ ७-१२७-१५ (५०२२०)
भीमसेनो महाबाहुः कवची शुभकुण्डली ।
सगदः सतलत्राणः सशरी रथिनां वरः ।
रथमारुह्य निर्युक्तं सर्वोपकरणान्वितम्'॥ ७-१२७-१६ (५०२२१)
तस्य कार्ष्णायसं वर्म हेमचित्रं महर्द्धिमत् ।
विबभौ सर्वतः श्लिष्टं सविद्युदिव तोयदः ॥ ७-१२७-१७ (५०२२२)
पीतरक्तासितसितैर्वासौभिश्च सुवेष्टितः ।
कण्ठसूत्रेण विबभौ सेन्द्रायुध इवाम्बुदः ॥ ७-१२७-१८ (५०२२३)
प्रयाते भीमसेने तु तव सैन्यं युयुत्सया ।
पाञ्चजन्यरवो घोरः पुनरासीद्विशाम्पते ॥ ७-१२७-१९ (५०२२४)

तं श्रुत्वा निनदं घोरं त्रैलोक्यत्रासनं महत् ।
पुनर्भीमं महाबाहुं धर्मपुत्रोऽभ्यभाषत ॥ ७-१२७-२० (५०२२५)
एष वृष्णिप्रवीरेण ध्मातः सलिलजो भृशम् ।
पृथिवीं चान्तरिक्षं च विनादयति शङ्खराट् ॥ ७-१२७-२१ (५०२२६)
नूनं व्यसनमापन्ने सुमहत्सव्यसाचिनि ।
कुरुभिर्युध्यते सार्धं सर्वैश्चक्रगदाधरः ॥ ७-१२७-२२ (५०२२७)
नूनमार्या महत्कुन्ती पापं व्यसनमीदृशम् ।
द्रौपदी च सुभद्रा च पश्यन्ति सह बन्धुभिः ।
तद्भीम त्वरया युक्तो याहि यत्र धनञ्जयः ॥ ७-१२७-२३ (५०२२८)
मुह्यतीव हि मे चित्तं धनञ्जयदिदृक्षया ।
दिशश्च प्रदिशः पार्थ सात्वतस्य च कारणात् ॥ ७-१२७-२४ (५०२२९)
गच्छगच्छेति गुरुणा सोऽनुज्ञातो वृकोदरः ।
ततः पाण्डुसुतो राजन्भीमसेनः प्रतापवान् ॥ ७-१२७-२५ (५०२३०)
बद्धगोधाङ्गुलित्राणः प्रगृहीतशरासनः ।
ज्येष्ठेन प्रहितो भ्रात्रा भ्राता भ्रातुः प्रियङ्करः ॥ ७-१२७-२६ (५०२३१)
आहत्य दुन्दुभिं भीमः शङ्खं प्रध्माप्य चासकृत् ।
विनद्य सिंहनादेन ज्यां विकर्षन्पुनःपुनः ॥ ७-१२७-२७ (५०२३२)
तेन शब्देन वीराणां पातयित्वा मनांस्युत ।
दर्शयन्घोरमात्मानममित्रान्सहसाऽभ्ययात् ॥ ७-१२७-२८ (५०२३३)
तमूहुर्जवना दान्ता विरुवन्तो हयोत्तमाः ।
विशोकेन सुसंयत्ता मनोमारुतरंहसः ॥ ७-१२७-२९ (५०२३४)
आरुजन्विरुजन्पार्थो ज्यां विकर्षंश्च पाणिना ।
सम्प्रकर्षन्विकर्षंश्च सेनाग्रं समलोडयत् ॥ ७-१२७-३० (५०२३५)
तं प्रयान्तं महाबाहुं पाञ्चालाः सहसोमकाः ।
पृष्ठतोऽनुययुः शूरा मघवन्तमिवामराः ॥ ७-१२७-३१ (५०२३६)
तं समेत्य महाराज तावकाः पर्यवारयन् ।
दुःशासनश्चित्रसेनः कुण्डभेदी विविंशतिः ॥ ७-१२७-३२ (५०२३७)
दुर्मुखो दुःसहश्चैव विकर्णश्च शलस्तथा ।
विन्दानुविन्दौ सुमुखो दीर्घबाहुः सुदर्शनः ॥ ७-१२७-३३ (५०२३८)
वृन्दारकः सुहस्तश्च सुषेणो दीर्घलोचनः ।
अभयो रौद्रकर्णा च सुवर्मा दुर्विमोचनः ॥ ७-१२७-३४ (५०२३९)
शोभन्तो रथिनां श्रेष्ठाः सहसैन्यपदानुगाः ।
संयत्ताः समरे वीरा भीमसेनमुपाद्रवन् ॥ ७-१२७-३५ (५०२४०)
तैः समन्तादृतः शूरैः समरेषु महारथः ।
तान्समीक्ष्य तु कौन्तेयो भीमसेनः पराक्रमी ।
अभ्यवर्तत वेगेन सिंहः क्षुद्रमृगानिव ॥ ७-१२७-३६ (५०२४१)

ते महास्त्राणि दिव्यानि तत्र वीरा अदर्शयन् ।
छादयन्तः शरैर्भीमं मेघाः सूर्यमिवोदितम् ॥ ७-१२७-३७ (५०२४२)
ततः क्रुद्धो महाराज भीमसेनः पराक्रमी ।
अग्रतः स्यन्दनानीकं शरवर्षैरवाकिरत् ॥ ७-१२७-३८ (५०२४३)
ते वध्यमानाः समरे तव पुत्रा महारथाः ।
भीमं भीमबला युद्धे योधयन्ति जयैषिणः ॥ ७-१२७-३९ (५०२४४)
ततो दुःशासनः क्रुद्धो रथशक्तिं समाक्षिपत् ।
सर्वपारसवीं तीक्ष्णां जिघांसुः पाण्डुनन्दनम् ॥ ७-१२७-४० (५०२४५)
आपतन्तीं महाशक्तिं तव पुत्रप्रणोदिताम् ।
द्विधा चिच्छेद तां भीमस्तदद्भुतमिवाभवत् ॥ ७-१२७-४१ (५०२४६)
अथान्यैर्विशिखैस्तीक्ष्णैः सङ्क्रुद्धः कुण्डभेदिनम् ।
सुषेणं दीर्घनेत्रं च त्रिभिस्त्रीनवधीद्बली ॥ ७-१२७-४२ (५०२४७)
ततो वृन्दारकं वीरं कुरूणां कीर्तिवर्धनम् ।
पुत्राणां तव वीराणां युध्यतामवधीत्पुनः ॥ ७-१२७-४३ (५०२४८)
अभयं रौद्रकर्माणं दुर्विमोचनमेव च ।
त्रिभिस्त्रीनवधीद्भीमः पुनरेव सुतांस्तव ॥ ७-१२७-४४ (५०२४९)
वध्यमाना महाराज पुत्रास्तव बलीयसा ।
भीमं प्रहरतां श्रेष्ठं समन्तात्पर्यवारयन् ॥ ७-१२७-४५ (५०२५०)
ते शरैर्भीमकर्माणं ववर्षुः पाण्डवं युधि ।
मेघा इवातपापाये धाराभिर्धरणीधरम् ॥ ७-१२७-४६ (५०२५१)
स तद्बाणमयं वर्षमश्मवर्षमिवाचलः ।
प्रतीच्छन्पाण्डुदायादो न प्राव्यथत शत्रुहा ॥ ७-१२७-४७ (५०२५२)
विन्दानुविन्दौ सहितौ सुवर्माणं च ते सुतम् ।
प्रहसन्नेव कौन्तेयः शरैर्निन्ये यमक्षयम् ॥ ७-१२७-४८ (५०२५३)
ततः सुदर्शनं वीरं पुत्रं ते भरतर्षभ ।
विव्याध समरे तूर्णं स पपात ममार च ॥ ७-१२७-४९ (५०२५४)
सोऽचिरेणैव कालेन तद्रथानीकमाशुगैः ।
दिशः सर्वाः समालोक्य व्यधमत्पाण्डुनन्दनः ॥ ७-१२७-५० (५०२५५)
ततो वै रथघोषेण गर्जितेन मृगा इव ।
भज्यमानाश्च समरे तव पुत्रा विशाम्पते ।
प्राद्रवन्सहसा सर्वे भीमसेनभयर्दिताः ॥ ७-१२७-५१ (५०२५६)
अनुयायाच्च कौन्तेयः पुत्राणां ते महद्बलम् ।
विव्याध समरे राजन्कौरवेयान्समन्ततः ॥ ७-१२७-५२ (५०२५७)
वध्यमाना महाराज भीमसेनेन तावकाः ।
त्यक्त्वा भीमं रणाज्जग्मुश्चोदयन्तो हयोत्तमान्। ७-१२७-५३ (५०२५८)
तांस्तु निर्जित्य समरे भीमसेनो महाबलः ।

सिंहनादरवं चक्रे बाहुशब्दं च पाण्डवः ॥ ७-१२७-५४ (५०२५९)
क्ष्महान्तं तलशब्दं च कृत्वा द्रोणान्तिकं ययौ ।
तमावारयदाचार्यो वेलेवोद्वृत्तमर्णवम् ॥ ७-१२७-५५ (५०२६०)
तस्य द्रोणो रथं राजञ्छादयामास संयुगे ।
साश्वसूतध्वजं तूर्णं तदद्भुतमिवाभवत् ॥ ७-१२७-५६ (५०२६१)
ललाटेऽताडयच्चैनं नाराचेन स्मयन्निव ।
ऊर्ध्वरश्मिरिवादित्यो विबभौ तत्र पाण्डवः ॥ ७-१२७-५७ (५०२६२)
स मन्यमानस्त्वाचार्यो ममायं फल्गुनो यथा ।
भीमः करिष्यते पूजामित्युवाच वृकोदरम् ॥ ७-१२७-५८ (५०२६३)
भीमसेन न ते शक्यं प्रवेष्टुमरिवाहिनीम् ।
मामनिर्जित्य समरे शत्रुमद्य महाबल ॥ ७-१२७-५९ (५०२६४)
यदि ते सानुजः कृष्णः प्रविष्टोऽनुमते मम ।
अनीकं न तु शक्यं मे प्रवेष्टुमिह वै त्वया ॥ ७-१२७-६० (५०२६५)
सञ्जय उवाच। ७-१२७-६१क्ष् (४५८८)
अथ भीमस्तु तच्छ्रुत्वा गुरोर्वाक्यमशेषतः ।
क्रुद्धः प्रोवाच वै द्रोणं रक्तताम्रेक्षणः श्वसन् ॥ ७-१२७-६१ (५०२६६)
तवार्जुनो नानुमते ब्रह्बन्धो रमाजिरम् ।
प्रविष्टः स हि दुर्धर्षः शक्रस्यापि विशेद्बलम् ॥ ७-१२७-६२ (५०२६७)
येन त्वं परमां पूजां कुर्वता मानितो ह्यसि ।
नार्जुनोऽहं घृणी विप्र भीमसेनोऽस्मि ते रिपुः ॥ ७-१२७-६३ (५०२६८)
पिता नस्त्वं गुरुर्बन्धुस्तदा पुत्रा हि ते वयम् ।
इति मन्यामहे सर्वे भवन्तं प्रणताः स्थिताः ॥ ७-१२७-६४ (५०२६९)
तदद्य विपरीतं ते वदतोऽस्मासु दृश्यते ।
यदि शत्रुं त्वमात्मानं मन्यसे तत्तथाऽस्त्विह ।
एष ते सदृशं कर्म शत्रोर्भीमः करिष्यति ॥ ७-१२७-६५ (५०२७०)
सञ्जय उवाच। ७-१२७-६६क्ष् (४५८९)
अथोद्भ्राम्य गदां वीरः कालदण्डमिवान्तकः ।
द्रोणायावासृजद्राजन्स रथादवपुप्लुवे ॥ ७-१२७-६६ (५०२७१)
साश्वसूतध्वजं यानं द्रोणस्यापोथयत्तदा ।
तदद्भुतमपश्याम पाण्डवेयस्य विक्रमम् ॥ ७-१२७-६७ (५०२७२)
द्रोणं तु विरथं कृत्वा भीमसेनो महाबलः ।
अभ्यवर्तत सैन्यानि तावकानि समन्ततः ॥ ७-१२७-६८ (५०२७३)
स मृद्नंस्तरसा योधान्वायुर्वृक्षानिवौजसा ।
विचचार रणे राजन्वायुतुल्यपराक्रमः ॥ ७-१२७-६९ (५०२७४)
निर्जितस्तु तदा तेन पाण्डवेन महात्मना ।
अन्यं तु रथमातिष्ठद्द्रोणः प्रहरतां वरः ॥ ॥ ७-१२७-७० (५०२७५)

इति श्रीमन्महाभारते द्रोणपर्वणि जयद्रथवधपर्वणि
चतुर्दशदिवसयुद्धे सप्तविंशत्यधिकशततमोऽध्यायः ॥ १२७ ॥
Mahabharata - Drona Parva - Chapter Footnotes

५-१२७-१ संविदं ज्ञापनम् ॥
५-१२७- आत्ययिकं अतिशयितम् ॥
५-१२७- इदं श्लोकत्रयं झ । पुस्तक एव वर्तते। अनलो गोहिरण्यं
च दूर्वागोरोचनामृतम्। अक्षतं दधि चेत्यष्टौ मङ्गलानि
प्रचक्षते ॥
५-१२७- विजयोत्पादसूचितः सूचितविजयोत्पादः ॥
५-१२७- रथमारुह्य प्रययाविति पूर्वेणान्वयः ॥
५-१२७- आह कुन्ती नूनमार्या पापमद्य निदर्शनम् । द्रोपद्री च सुभद्रा
च पश्यन्त्यौ सह बन्धुभिः। इति झ। पाठः ॥
५-१२७- आरुजन् कृन्तन् । विरुजन्विष्यन्। विकर्षन् अत्यर्थं
कर्षन्। सम्प्रकर्षन् सम्यक्प्रकर्षेण विलिखन्। विकर्षन् विक्षिपन् ॥
५-१२७-क इयं कथा झ । पाठे पूर्वाध्याये ३७ तमश्लोकादनन्तरं
कथितास्ति ।

---

द्रोनपर्व-अध्यय१२८
॥ श्रीः ॥
७.१२८. अध्यायः १२८

Mahabharata - Drona Parva - Chapter Topics
पुनर्द्रोणरथान्भङ्क्त्वा गच्छतो भीमस्यार्जुनदर्शनेन सिंहनादः ॥ १ ॥
तच्छ्रवणेन युधिष्ठिरस्य हर्षोदयः ॥ २ ॥

Mahabharata - Drona Parva - Chapter Text

७-१२८-० (५०२७६)
सञ्जय उवाच। ७-१२८-०क्ष् (४५९०)
समुत्तीर्णं रथानीकं पाण्डवं विहसन्रणे ।
विवारयिषुराचार्यः शरवर्षैरवाकिरत् ॥ ७-१२८-१ (५०२७७)
पिबन्निव शरौघांस्तान्द्रोणचापपरिच्युतान् ।
सोऽभ्यद्रवत सोदर्यान्मोहयन्बलमायया ॥ ७-१२८-२ (५०२७८)
तं मृधे वेगमास्थाय परं परमधन्विनः ।

चोदितास्तव पुत्रैश्च सर्वतः पर्यवारयन् ॥ ७-१२८-३ (५०२७९)
स तैस्तु संवृतो भीमः क्रोधेन प्रदहन्निव ।
उद्यच्छन्स गदां तेभ्यः सुघोरां सिंहवन्नदन् ।
अवासृजच्च वेगेन शत्रुपक्षविनाशिनीम् ॥ ७-१२८-४ (५०२८०)
इन्द्राशनिरिवेन्द्रेण प्रविद्धा संहतात्मना ।
प्रामथ्नात्सा महाराज सैनिकांस्तव संयुगे ॥ ७-१२८-५ (५०२८१)
घोषेण महता राजन्पूरयन्तीव मेदिनीम् ।
ज्वलन्ती तेजसा भीमा त्रासयामास ते सुतान् ॥ ७-१२८-६ (५०२८२)
तां पतन्तीं महावेगां दृष्ट्वा तेजोभिसंवृताम् ।
प्राद्रवंस्तावकाः सर्वे नदन्तो बैरवान्रवान् ॥ ७-१२८-७ (५०२८३)
सिंहनादमसह्यं हि श्रुत्वा भीमस्य संयुगे ।
प्रापतन्मनुजास्त्रस्ता रथेभ्यो रथिनस्तदा ॥ ७-१२८-८ (५०२८४)
ते हन्यमाना भीमेन गदाहस्तेन तावकाः ।
प्राद्रवन्त रणे भीता व्याघ्रघ्राता मृगा इव ॥ ७-१२८-९ (५०२८५)
स तान्विद्राव्य कौन्तेयः सङ्ख्येऽमित्रान्दुरासदान् ।
सुपर्ण इव वेगेन पक्षिराडत्यगाच्चमूम् ॥ ७-१२८-१० (५०२८६)
तथा तु विप्रकुर्वाणं रथयूथपयूथपम् ।
भारद्वाजो महाराज भीमसेनं समभ्ययात् ॥ ७-१२८-११ (५०२८७)
भीमं तु समरे द्रोणो वारयित्वा शरोर्मिभिः ।
अकरोत्सहसा नादं षाण्डूनां भयमादधत् ॥ ७-१२८-१२ (५०२८८)
तद्युद्धमासीत्सुमहद्धोरं देवासुरोपमम् ।
द्रोणस्य च महाराज भीमस्य च महात्मनः ॥ ७-१२८-१३ (५०२८९)
यदा तु विशिखैस्तीक्ष्णैर्द्रोणचापविनिःसृतैः ।
वध्यन्ते समरे वीराः शतशोऽथ सहस्रशः ॥ ७-१२८-१४ (५०२९०)
ततो रथादवप्लुत्य वेगमास्थाय पाण्डवः ।
निमील्य नयने राजन्पदातिर्द्रोणमभ्ययात् ॥ ७-१२८-१५ (५०२९१)
अंसे शिरो भीमसेनः करौ कृत्वोरसि स्थिरौ ।
वेगमास्थाय बलवान्मनोनिलगरुत्मताम् ॥ ७-१२८-१६ (५०२९२)
यथा हि गोवृषो वर्षं प्रतिगृह्णाति लीलया ।
तथा भीमो नरव्याघ्रः शरवर्षं समग्रहीत् ॥ ७-१२८-१७ (५०२९३)
स वध्यमानः समरे रथं द्रोणस्य मारिष ।
ईषायां पाणिना गृह्य प्रचिक्षेप महाबलः ॥ ७-१२८-१८ (५०२९४)
द्रोणस्तु सत्वरो राजन्क्षिप्तो भीमेन संयुगे ।
ग्ददृशे तावकैर्योधैर्विस्मयोत्फुल्ललोचनैः ।
परिहृत्य रथं द्रोणश्चूर्णितं तं महीतले'॥ ७-१२८-१९ (५०२९५)
रथमन्यं समारुह्य व्यूहद्वारं ययौ पुनः ।

तमायान्तं तथा दृष्ट्वा भग्नोत्साहं गुरुं तदा ॥ ७-१२८-२० (५०२९६)
गत्वा वेगात्पुनर्भीमो धुरं गृह्य रथस्य तु ।
तमप्यतिरथं भीमश्चिक्षेप भृशरोषितः ॥ ७-१२८-२१ (५०२९७)
एवमष्टौ रथाः क्षिप्ता भीमसेनेन लीलया ॥ ७-१२८-२२ (५०२९८)
व्यदृश्यत निमेषेण पुनः स्वरथमास्थितः ।
दृश्यते तावकैर्योधैर्विस्मयोत्फुल्ललोचनैः ॥ ७-१२८-२३ (५०२९९)
तस्मिन्क्षणे तस्य यन्ता तूर्णमश्वानचोदयत् ।
भीमसेनस्य कौरव्य तदद्भुतमिवाभवत् ॥ ७-१२८-२४ (५०३००)
ततः स्वरथमास्थाय भीमसेनो महाबलः ।
अभ्यद्रवत वेगेन तव पुत्रस्य वाहिनीम् ॥ ७-१२८-२५ (५०३०१)
स मृद्नन्क्षत्रियानाजौ वातो वृक्षानिवोद्धतः ।
अगच्छद्दारयन्सेनां सिन्धुवेगो नगानिव ॥ ७-१२८-२६ (५०३०२)
भोजानीकं समासाद्य हार्दिक्येनाभिरक्षितम् ।
प्रमथ्य तरसा वीरस्तदप्यतिबलोऽभ्ययात् ॥ ७-१२८-२७ (५०३०३)
सन्त्रासयन्ननीकानि तलशब्देन पाण्डवः ।
अजयत्सर्वसैन्यानि शार्दूल इव गोवृषान् ॥ ७-१२८-२८ (५०३०४)
भोजानीकमतिक्रम्य दरदानां च वाहिनीम् ।
तथा म्लेच्छगणानन्यान्बहून्युद्धविशारदान् ॥ ७-१२८-२९ (५०३०५)
सात्यकिं चैव सम्प्रेक्ष्य युध्यमानं महारथम् ।
रथेन यत्तः कौन्तेयो वेगेन प्रययौ तदा ॥ ७-१२८-३० (५०३०६)
भीमसेनो महाराज द्रष्टुकामो धनञ्जयम् ।
अतीत्य समरे योधांस्तावकान्पाण्डुनन्दनः ॥ ७-१२८-३१ (५०३०७)
सोऽपश्यदर्जुनं तत्र युध्यमानं महारथम् ।
सैन्धवस्य वधार्थं हि पराक्रान्तं पराक्रमी ॥ ७-१२८-३२ (५०३०८)
तं दृष्ट्वा पुरुषव्याघ्रश्चुक्रोश महतो रवान् ।
प्रावृट्काले महाराज नर्दन्निव बलाहकः ॥ ७-१२८-३३ (५०३०९)
तं तस्य निनदं घोरं पार्थः शुश्राव नर्दतः ।
वासुदेवश्च कौरव्य भीमसेनस्य संयुगे ॥ ७-१२८-३४ (५०३१०)
तौ श्रुत्वा युगपद्वीरौ निनदं तस्य शुष्मिणः ।
पुनः पुनः प्राणदतां दिदृक्षन्तौ वृकोदरम् ॥ ७-१२८-३५ (५०३११)
ततः पार्थो महानादं मुञ्चन्वै माधवश्च ह ।
अभ्ययातां महाराज नर्दन्तौ गोवृषाविव ॥ ७-१२८-३६ (५०३१२)
भीमसेनरवं श्रुत्वा फल्गुनस्य च धन्विनः ।
अप्रीयत महाराज धर्मपुत्रो युधिष्ठिरः ॥ ७-१२८-३७ (५०३१३)
विशोकश्चाभवद्राजा श्रुत्वा तं निनदं तयोः ।
धनञ्जयस्य समरे जयमाशास्तवान्विभिः ॥ ७-१२८-३८ (५०३१४)

तथा तु नर्दमाने वै भीमसेने मदोत्कटे ।
स्मितं कृत्वा महाबाहुर्धर्मपुत्रो युधिष्ठिरः ॥ ७-१२८-३९ (५०३१५)
हृद्गतं मनसा प्राह ध्यात्वा धर्मभृतां वरः ।
दत्ता भीम त्वया संवित्कृतं गुरुवचस्तथा ॥ ७-१२८-४० (५०३१६)
न हि तेषां जयो युद्धे येषां द्वेष्टाऽसि पाण्डव ।
दिष्ट्या जीवति सङ्ग्रमे सव्यसाची धनञ्जयः ॥ ७-१२८-४१ (५०३१७)
दिष्ट्या च कुशली वीरः सात्यकिः सत्यविक्रमः ।
दिष्ट्या शृणोमि गर्जन्तौ वासुदेवधनञ्जयौ ॥ ७-१२८-४२ (५०३१८)
येन शक्रं रणे जित्वा तर्पितो हव्यवाहनः ।
स हन्ता द्विषतां सङ्ख्ये दिष्ट्या जीवति फल्गुनः ॥ ७-१२८-४३ (५०३१९)
यस्य बाहुबलं सर्वे वयमाश्रित्य जीविताः ।
स हन्ता रि पुसैन्यानां दिष्ट्या जीवति फल्गुनः ॥ ७-१२८-४४ (५०३२०)
निवातकवचा येन देवैरपि सुदुर्जयाः ।
निर्जिता धनुषैकेन दिष्ट्या पार्थः स जीवति ॥ ७-१२८-४५ (५०३२१)
कौरवान्सहितान्सर्वान्गोग्रहार्थे समागतान् ।
योऽजयन्मत्स्यनगरे दिष्ट्या पार्थः स जीवति ॥ ७-१२८-४६ (५०३२२)
कालकेयसहस्राणि चतुर्दश महारणे ।
योऽवधीद्भुजवीर्येण दिष्ट्या पार्थः स जीवति ॥ ७-१२८-४७ (५०३२३)
गन्धर्वराजं बलिनं दुर्योधनकृते च वै ।
जितवान्योऽस्त्रवीर्येण दिष्ट्या पार्थः स जीवति ॥ ७-१२८-४८ (५०३२४)
किरीटमाली बलवाञ्छ्वेताश्वः कृष्णसारथिः ।
मम प्रियश्च सततं दिष्ट्या पार्थः स जीवति ॥ ७-१२८-४९ (५०३२५)
पुत्रशोकाभिसन्तप्तश्चिकीर्षन्कर्म दुष्करम् ।
जयद्रथवधान्वेषी प्रतिज्ञां कृतवान्हि यः ।
कच्चित्स सैन्धवं सङ्ख्ये हनिष्यति धनञ्जयः ॥ ७-१२८-५० (५०३२६)
कच्चित्तीर्णप्रतिज्ञं हि वासुदेवेन रक्षितम् ।
अनस्तमित आदित्ये समेष्याम्यहमर्जुनम् ॥ ७-१२८-५१ (५०३२७)
कच्चित्सैन्धवको राजा दुर्योधनहिते रतः ।
नन्दयिष्यत्यमित्रान्हि फल्गुनेन निपातितः ॥ ७-१२८-५२ (५०३२८)
कच्चिद्दुर्योधनो राजा फल्गुनेन निपातितम् ।
दृष्ट्वा सैन्धवकं सङ्ख्ये शममस्मासु धास्यति ॥ ७-१२८-५३ (५०३२९)
दृष्ट्वा विनिहतान्भ्रातॄन्भीमसेनेन संयुगे ।
कच्चिद्दुर्योधनो मन्दः शममस्मासु यास्यति ॥ ७-१२८-५४ (५०३३०)
दृष्ट्वा चान्यान्महायोधान्पातितान्धरणीतले ।
कच्चिद्दुर्योधनो मन्दः पश्चात्तापं गमिष्यति ॥ ७-१२८-५५ (५०३३१)
शेषस्य रक्षणार्थं च सन्धास्यति सुयोधनः ॥

एवं बहुविधं तस्य राज्ञश्चिन्तयतस्तदा। ७-१२८-५६ (५०३३२)
कृपयाऽभिपरीतस्य घोरं युद्धमवर्तत ॥ ॥ ७-१२८-५७ (५०३३३)

इति श्रीमन्महाभारते द्रोणपर्वणि जयद्रथवधपर्वणि
चतुर्दशदिवसयुद्धे अष्टाविंशत्यधिकशततमोऽध्यायः ॥१२८ ॥
Mahabharata - Drona Parva - Chapter Footnotes

५-१२८-२४ भीमसेनस्य कर्मेन्ति शेषः ॥
५-१२८-१२८ अष्टाविंशत्यधिकशततमोऽध्यायः ॥

---

द्रोनपर्व-अध्यय१२९
॥ श्रीः ॥
७.१२९. अध्यायः १२९

Mahabharata - Drona Parva - Chapter Topics
भीमेन कर्णपराजयो दुःशलवधश्च ॥१ ॥

Mahabharata - Drona Parva - Chapter Text

७-१२९-० (५०३३४)
धृतराष्ट्र उवाच। ७-१२९-०क्ष् (४५९१)
निनदन्तं तथा तं तु भीमसेनं महाबलम् ।
मेघस्तनितनिर्घोषं के वीराः पर्यवारयन् ॥ ७-१२९-१ (५०३३५)
न हि पश्याम्यहं तं वै त्रिषु लोकेषु कञ्चन ।
क्रुद्धस्य भीमसेनस्य यस्तिष्ठेदग्रतो रणे ॥ ७-१२९-२ (५०३३६)
गदां युयुत्समानस्य कालस्येवेह सञ्चय ।
न हि पश्याम्यहं युद्धे यस्तिष्ठेदग्रतः पुमान् ॥ ७-१२९-३ (५०३३७)
रथं रथेन यो हन्यात्कुञ्जरं कुञ्चरेण च ।
कस्तस्य समरे स्थाता साक्षादपि पुरन्दरः ॥ ७-१२९-४ (५०३३८)
क्रुद्धस्य भीमसेनस्य मम पुत्राञ्जिघांसतः ।
दुर्योधनहिते युक्ताः समतिष्ठन्त केऽग्रतः ॥ ७-१२९-५ (५०३३९)
भीमसेनदवाग्नेस्तु मम पुत्रांस्तृणोलपम् ।
प्रधक्ष्यतो रणमुखे केऽतिष्ठन्नग्रतो नराः ॥ ७-१२९-६ (५०३४०)
काल्यमानांस्तु पुत्रान्मे दृष्ट्वा भीमस्य संयुगे ।
कालेनेव प्रजाः सर्वाः के भीमं पर्यवारयन् ॥ ७-१२९-७ (५०३४१)
न मेऽर्जुनाद्भयं तादृक्कृष्णान्नापि च सात्वतात् ।

हुतभुग्जन्मनो नैव यादृग्भीमाद्भयं मम ॥ ७-१२९-८ (५०३४२)
भीमवह्नेः प्रदीप्तस्य मम पुत्रान्दिधक्षतः ।
के शूराः पर्यवर्तन्त तन्ममाचक्ष्व सञ्जय ॥ ७-१२९-९ (५०३४३)
सञ्चय उवाच। ७-१२९-१०क्ष् (४५९२)
तथा तु नर्दमानं तं भीमसेनं महाबलम् ।
तुमुलेनैव शब्देन कर्णोऽप्यभ्यद्रवद्बली ॥ ७-१२९-१० (५०३४४)
व्याक्षिपन्सुमहच्चापमतिमात्रममर्षणः ।
कर्णः सुयुद्धमाकाङ्क्षन्दर्शयिष्यन्बलं मृधे ॥ ७-१२९-११ (५०३४५)
रुरोध मार्गं भीमस्य वातस्येव महीरुहः ।
भीमोऽपि दृष्ट्वा सावेगं पुरो वैकर्तनं स्थितम् ॥ ७-१२९-१२ (५०३४६)
चुकोप बलवद्वीरश्चिक्षेपास्य शिलाशितान् ।
तान्प्रत्यगृह्णात्कर्णोऽपि प्रतीपं प्रापयच्छरान् ॥ ७-१२९-१३ (५०३४७)
ततस्तु सर्वयोधानां यतनां प्रेक्षतां तदा ।
प्रावेपन्निव गात्राणि कर्णभीमसमागमे ॥ ७-१२९-१४ (५०३४८)
रथिनां सादिनां चैव तयोः श्रुत्वा तलस्वनम् ।
भीमसेनस्य निनदं श्रुत्वा घोरं रणाजिरे ॥ ७-१२९-१५ (५०३४९)
खं च भूमिं च संरुद्धां मेनिरे क्षत्रियर्षभाः ।
पुनर्घोरेण नादेन पाण्डवस्य महात्मनः ॥ ७-१२९-१६ (५०३५०)
समरे सर्वयोधानां धनूंष्यभ्यपतन्क्षितौ ।
शस्त्राणि न्यपतन्दोर्भ्यः केषाञ्चिच्चासवोऽद्रवन् ॥ ७-१२९-१७ (५०३५१)
वित्रस्तानि च सर्वाणि शकृन्मूत्रं प्रसुस्रुवुः ।
वाहनानि च सर्वाणि बभूवुर्विमनांसि च ॥ ७-१२९-१८ (५०३५२)
प्रादुरासन्निमित्तानि घोराणि सुबहून्युत ।
गृध्रकङ्कबलैश्चासीदन्तरिक्षं समावृतम् ॥ ७-१२९-१९ (५०३५३)
तस्मिन्सुतुमुले राजन्कर्णभीमसमागमे ।
ततः कर्णस्तु विंशत्या शराणां भीममार्दयत् ॥ ७-१२९-२० (५०३५४)
विव्याध चास्य त्वरितः सूतं पञ्चभिराशुगैः ।
प्रहस्य भीमसेनोऽपि कर्णं प्रत्याद्रवद्रणे ॥ ७-१२९-२१ (५०३५५)
सायकानां चतुः षष्ट्या क्षिप्रकारी महायशाः ।
तस्य कर्णो महेष्वासः सायकांश्चतुरोऽक्षिपत् ॥ ७-१२९-२२ (५०३५६)
असम्प्राप्तांश्च तान्भीमः सायकैर्नतपर्वभिः ।
चिच्छेद बहुधा राजन्दर्शयन्पाणिलाघवम् ॥ ७-१२९-२३ (५०३५७)
तं कर्णश्छादयामास शरव्रातैरनेकशः ।
सञ्छाद्यमानः कर्णेन बहुधा पाण्डुनन्दनः ॥ ७-१२९-२४ (५०३५८)
चिच्छेद चापं कर्णस्य मुष्टिदेशे महारथः ।
विव्याध चैनं बहुभिः सायकैर्नतपर्वभिः ॥ ७-१२९-२५ (५०३५९)

अथान्यद्धनुरादाय सज्यं कृत्वा च सूतजः ।
विव्याध समरे भीमं भीमकर्मा महारथः ॥ ७-१२९-२६ (५०३६०)
तस्य बीमो भृशं क्रुद्धस्त्रीञ्शरान्नतपर्वणः ।
निचखानोरसि क्रुद्धः सूतपुत्रस्य वेगतः ॥ ७-१२९-२७ (५०३६१)
तैः कर्णोऽराजत शरैरुरोमध्यगतैः सदा ।
महीधर इवोदग्रस्त्रिशृङ्गो भरतर्षभ ॥ ७-१२९-२८ (५०३६२)
सुस्राव चास्य रुधिरं विद्धस्य परमेषुभिः ।
धातुप्रस्यन्दिनः शैलाद्यथा गैरिकधातवः ॥ ७-१२९-२९ (५०३६३)
किञ्चिद्विचलितः कर्णः सुप्रहाराभिपीडितः ।
आकर्णपूर्णमाकृष्य भीमं विव्याध सायकैः ॥ ७-१२९-३० (५०३६४)
चिक्षेप च पुनर्बाणाञ्शतशोऽथ सहस्रशः ।
स शरैरर्दितस्तेन कर्णेन दृढधन्विना ।
धनुर्ज्यामच्छिनत्तूर्णं भीमस्तस्य क्षुरेण ह ॥ ७-१२९-३१ (५०३६५)
सारथिं चास्य भल्लेन रथनीडादपातयत् ।
वाहांश्च चतुरस्तस्य व्यसूंश्चक्रे महारथः ॥ ७-१२९-३२ (५०३६६)
हताश्वात्तु रथात्कर्णः समाप्लुत्य विशाम्पते ।
स्यन्दनं वृषसेनस्य तूर्णमापुप्लुवे भयात् ॥ ७-१२९-३३ (५०३६७)
निर्जित्य तु रणे कर्णं भीमसेनः प्रतापवान् ।
ननाद बलवान्नादं पर्जन्यनिनदोपमम् ॥ ७-१२९-३४ (५०३६८)
तस्य तं निनदं श्रुत्वा प्रहृष्टोऽभूद्युधिष्ठिरः ।
कर्णं पराजितं मत्वा भीमसेनेन संयुगे ॥ ७-१२९-३५ (५०३६९)
समन्ताच्छङ्खनिनदं पाण्डुसेनाऽकरोत्तदा ।
शत्रुसेनाध्वनिं श्रुत्वा तावका ह्यनदन्भृशम् ॥ ७-१२९-३६ (५०३७०)
स शङ्खबाणनिनदैर्हर्षाद्राजा स्ववाहिनीम् ।
चक्रे युधिष्ठिरः सङ्ख्ये हर्षनादैश्च सङ्कुलाम् ॥
गाण्डीवं व्याक्षिपत्पार्थः कृष्णोऽप्यब्जमवादयत् ७-१२९-३७ (५०३७१)
तमन्तर्धाय निनदं भीमस्य नदतो ध्वनिः ।
अश्रूयत तदा राजन्सर्वसैन्येषु दारुणः ॥ ७-१२९-३८ (५०३७२)
ततो व्यायच्छतामस्त्रैः पृथक्पृथगजिह्मगैः ।
मृदुपूर्वं तु राधेयो दृढपूर्वं तु पाण्डवः ॥ ७-१२९-३९ (५०३७३)
ग्भीमोऽपि च महाराज वैकर्तनमुपाद्रवत् ।
आसुरे तु महासैन्ये तारकं पावकिर्यथा ॥ ७-१२९-४० (५०३७४)
तयोरेवं महद्युद्धमभवद्भीमकर्णयोः ।
तं भीमसेनो महता शरवर्षेण वारयन् ॥ ७-१२९-४१ (५०३७५)
विव्याध सारथिं चास्य हयांश्च चतुरः शरैः ।
ध्वजं चास्य पताकां च भल्लैः सन्नतपर्वभिः ।

रथं च चक्ररक्षौ च भीमश्चिच्छेद मारिष ॥ ७-१२९-४२ (५०३७६)
कर्णोऽपि रथिनां श्रेष्ठो भीमसेनेन कम्पितः ।
खड्गचर्मधरो राजन्भीममभ्यद्रवद्बली ॥ ७-१२९-४३ (५०३७७)
भीमश्चिच्छेद खड्गं च चर्मणा सह मारिष ॥ ७-१२९-४४ (५०३७८)
दृष्ट्वा कर्णं च पार्थेन बाधितं बहुभिः शरैः ।
दुर्योधनो महाराज दुश्शलं प्रत्यभाषत ।
कर्णं कृच्छ्रगतं पश्य शीघ्रं यानं प्रयच्छह ॥ ७-१२९-४५ (५०३७९)
सञ्जय उवाच। ७-१२९-४६क्ष् (४५९३)
एवमुक्तस्ततो राज्ञा दुश्शलः समुपाद्रवत् ।
दुश्शलस्य रथं कर्णश्चारुरोह महारथः ॥ ७-१२९-४६ (५०३८०)
तौ पार्थः सहसा गत्वा विव्याध दशभिः शरैः ।
पुनश्च कर्णं विद्ध्वाऽपि दुश्शलस्य शिरोऽहरत् ॥ ७-१२९-४७ (५०३८१)
दुश्शलं निहतं दृष्ट्वा भीमसेनेन मारिष ।
तस्यैव धनुरादाय कर्णो विव्याध पाण्डवम् ॥ ७-१२९-४८ (५०३८२)
अन्योन्यं समरे वीरौ युयुधाते महाबलौ ।
शत्रुघ्नौ शत्रुमध्ये तु बलवज्रभृताविव ॥ ७-१२९-४९ (५०३८३)
भीमो विद्धा हयांश्चैव सारथिं च पुनः पुनः ।
कर्णमभ्यद्रवत्पार्थः प्रहसंश्च महाबलः ॥ ७-१२९-५० (५०३८४)
ततो व्यायच्छमानस्य भीमसेनस्य संयुगे ।
तत्सैन्यं कलिलीभूतं न प्राज्ञायत किञ्चन ॥ ॥ ७-१२९-५१ (५०३८५)

इति श्रीमन्महाभारते द्रोणपर्वणि जयद्रथवधपर्वणि
चतुर्दशदिवसयुद्धे एकोनत्रिंशदधिकशततमोऽध्यायः ॥ १२९ ॥
Mahabharata - Drona Parva - Chapter Footnotes

५-१२९-१ युयुत्समानस्य व्यापारयतः ॥
५-१२९- सावेगं सत्वरम् ॥
५-१२९- संरुद्धामेकतामापन्नाम् ॥
५-१२९- व्यायच्छतां प्रहरताम् ॥
५-१२९- एकोनत्रिंशदधिकशततमोऽध्यायः ॥
१२९ ॥

---

द्रोनपर्व-अध्यय१३०
॥ श्रीः ॥
७.१३०. अध्यायः १३०

Mahabharata - Drona Parva - Chapter Topics
द्रोणदुर्योधनसंवादो दुर्योधनयुद्धं च ॥१ ॥

Mahabharata - Drona Parva - Chapter Text

७-१३०-० (५०३८६)
सञ्जय उवाच। ७-१३०-०क्ष् (४५९४)
तस्मिन्विलुलिते सैन्ये सैन्धवायार्जुने गते ।
सात्वते भीमसेने च पुत्रस्ते द्रोणमभ्ययात् ।
त्वरन्नेकरथेनैव बहु कृत्यं विचिन्तयन् ॥ ७-१३०-१ (५०३८७)
स रथस्तव पुत्रस्य त्वरया परया युतः ।
तूर्णमभ्यद्रवद्द्रोणं मनोमारुतवेगवान् ॥ ७-१३०-२ (५०३८८)
ग्इह दृष्ट इतो नष्टः सरथः प्राद्रवन्नृपः ।
मुहूर्तादिव पुत्रस्ते द्रोणमासाद्य मारिष'।
ससम्भ्रमामिदं वाक्यमब्रवीत्कुरनन्दनः ॥ ७-१३०-३ (५०३८९)
अर्जुनो भीमसेनश्च सात्यकिश्चापराजितः ।
विजित्य सर्वसैन्यानि सुमहान्ति महारथाः ॥ ७-१३०-४ (५०३९०)
सम्प्राप्ताः सिन्धुराजस्य समीपमनिवारिताः ।
व्यायच्छन्ति च तत्रापि सर्व एवापराजिताः ॥ ७-१३०-५ (५०३९१)
यदि तावद्रणे पार्थो व्यतिक्रान्तो महारथः ।
कथं सात्यकिभीमाभ्यां व्यतिक्रान्तोऽसि मानद ॥ ७-१३०-६ (५०३९२)
आश्चर्यभूतो लोकेऽस्मिन्समुद्रस्येव शोषणम् ।
निर्जयस्तव विप्राग्य्र सात्वतेनार्जुनेन च ।
तथैव भीमसेनेन लोकः संवदते भृशम् ॥ ७-१३०-७ (५०३९३)
कथं द्रोणो जितः सङ्ख्ये धनुर्वेदस्य पारगः ।
इत्येवं ब्रुवते योधा अश्रद्धेयमिदं तव ॥ ७-१३०-८ (५०३९४)
नाश एव तु मे नूनं मन्दभाग्यस्य संयुगे ।
यत्र त्वां पुरुषव्याघ्रं व्यतिक्रान्तास्त्रयो रथाः ॥ ७-१३०-९ (५०३९५)
द्रोण उवाच। ७-१३०-१०क्ष् (४५९५)
एवं गते तु कृत्येऽस्मिन्ब्रूहि यत्ते विवक्षितम् ।
यद्गतं गतमेवेदं शेषं चिन्तय मानद ॥ ७-१३०-१० (५०३९६)
दुर्योधन उवाच। ७-१३०-११क्ष् (४५९६)
यत्कृत्यं सिन्धुराजस्य प्राप्तकालमनन्तरम् ।
तत्संविधीयतां क्षिप्रं साधु सञ्चिन्त्य नो द्विज ॥ ७-१३०-११ (५०३९७)
द्रोण उवाच। ७-१३०-१२क्ष् (४५९७)
चिन्त्यं बहुविधं तात यत्कृत्यं तच्छृणुष्व मे ।

त्रयो हि समतिक्रान्ताः पाण्डवानां महारथाः ॥ ७-१३०-१२ (५०३९८)
यावत्तेषां भयं पश्चात्तावदेषां पुरःसरम् ।
तद्गरीयस्तरं मन्ये यत्र कृष्णधनञ्जयौ ॥ ७-१३०-१३ (५०३९९)
सा पुरस्ताच्च पश्चाच्च गृहीता भारती चमूः ।
तत्र कृत्यमहं मन्ये सैन्धवस्याभिरक्षणम् ॥ ७-१३०-१४ (५०४००)
स नो रक्ष्यतमस्तात क्रुद्धाद्भीतो धनञ्जयात् ।
गतौ च सैन्धवं भीमौ युयुधानवृकोदरौ ॥ ७-१३०-१५ (५०४०१)
सम्प्राप्तं तदिदं द्यूतं यत्तच्छकुनिबुद्धिजम् ।
न सभायां जयो वृत्तो नापि तत्र पराजयः ।
इह नो ग्लहमानानामद्य तावज्जयाजयौ ॥ ७-१३०-१६ (५०४०२)
यान्स्म तान्ग्लहते घोराञ्छकुनिः कुरुसंसदि ।
अक्षान्स मन्यमानः प्राक्शरास्ते हि दुरासदाः ॥ ७-१३०-१७ (५०४०३)
यत्र ते बहवस्तात कौरवेया व्यवस्थिताः ।
सेनां दुरोदरं विद्धि शरानक्षान्विशाम्पते ।
ग्लहं च सैन्धवं राजंस्तत्र द्यूतस्य निश्चयः ॥ ७-१३०-१८ (५०४०४)
सैन्धवे तु महद्द्यूतं समासक्तं परैः सह ।
अत्र ते ध्रुवमायत्तो जयो वाऽजय एव वा ॥ ७-१३०-१९ (५०४०५)
अत्र सर्वे महाराज त्यक्त्वा जीवितमात्मनः ।
सैन्धवस्य रणे रक्षां विधिवत्कर्तुमर्हथ ।
तत्र नो ग्लहमानानां ध्रुवौ जयपराजयौ ॥ ७-१३०-२० (५०४०६)
यत्र ते परमेष्वासा यत्ता रक्षन्ति सैन्धवम् ।
तत्र गच्छ स्वयं शीघ्रं तांश्च रक्षस्व रक्षिणः ॥ ७-१३०-२१ (५०४०७)
इहैव त्वहमासिष्ये प्रेषयिष्यामि चापरान् ।
निरोत्स्यामि च पाञ्चालान्सहितान्पाण्डुसृञ्जयैः ॥ ७-१३०-२२ (५०४०८)
सञ्जय उवाच। ७-१३०-२३क्ष् (४५९८)
ततो दुर्योधनोऽगच्छत्तूर्णमाचार्यशासनात् ।
उद्यम्यात्मानमुग्राय कर्मणे स पदानुगः ॥ ७-१३०-२३ (५०४०९)
चक्ररक्षौ तु पाञ्चाल्यौ युधामन्यूत्तमौजसौ ।
बाह्येन सेनामभ्येत्य जग्मतुः सव्यसाचिनम् ॥ ७-१३०-२४ (५०४१०)
यौ तु पूर्वं महाराज वारितौ कृतवर्मणा ।
प्रविष्टे त्वर्जुने राजंस्तव सैन्यं युयुत्सया ॥ ७-१३०-२५ (५०४११)
पार्श्वे भित्त्वा चमूं वीरौ प्रविष्टौ तव वाहिनीम् ।
पार्श्वेन सैन्यमायान्तौ कुरुराजो ददर्श ह ॥ ७-१३०-२६ (५०४१२)
ताभ्यां दुर्योधनः सार्धमकरोत्सङ्ख्यमुत्तमम् ।
त्वरितस्त्वरमाणाभ्यां भ्रातृभ्यां भारतो बली ॥ ७-१३०-२७ (५०४१३)
तावेनमभ्यद्रवतामुभावुद्यतकार्मुकौ ।

महारथसमाख्यातौ क्षत्रियप्रवरौ युधि ॥ ७-१३०-२८ (५०४१४)
तमविध्यद्युधामन्युस्त्रिंशता कङ्कपत्रिभिः ।
विंशत्या सारथिं चास्य चतुर्भिश्चतुरो हयान् ॥ ७-१३०-२९ (५०४१५)
दुर्योधनो युधामन्योर्ध्वजमेकेषुणाऽच्छिनत् ।
एकेन कार्मुकं चास्य चकर्त तनयस्तव ॥ ७-१३०-३० (५०४१६)
सारथिं चास्य भल्लेन रथनीडादपाहरत् ।
ततोऽविध्यच्छरैस्तीक्ष्णैश्चतुर्भिश्चतुरो हयान् ॥ ७-१३०-३१ (५०४१७)
युधामन्युश्च सङ्क्रुद्धः शरांस्त्रिंशतमाहवे ।
व्यसृजत्तव पुत्रस्य त्वरमाणः स्तनान्तरे ॥ ७-१३०-३२ (५०४१८)
तथोत्तमौजाः सङ्क्रुद्धः शरैर्हेमविभूषितैः ।
अविध्यत्सारथिं चास्य प्राहिणोद्यमसादनम् ॥ ७-१३०-३३ (५०४१९)
दुर्योधनोऽपि राजेन्द्र पाञ्चाल्यस्यौत्तमौजसः ।
जघान चतुरोऽस्याश्वानुभौ तौ पार्ष्णिसारथी ॥ ७-१३०-३४ (५०४२०)
उत्तमौजा हताश्वस्तु हतसूतश्च संयुगे ।
आरुरोह रथं भ्रातुर्युधामन्योरभित्वरन् ॥ ७-१३०-३५ (५०४२१)
स रथं प्राप्य तं भ्रातुर्दुर्योधनहयाञ्शरैः ।
बहुभिस्ताडयामास ते हताः प्रापतन्भुवि ॥ ७-१३०-३६ (५०४२२)
हयेषु पतितेष्वस्य चिच्छेद परमेषुणा ।
युधामन्युर्धनुः शीघ्रं शरावापं च संयुगे ।
ग्अविध्यत्सारथिं चास्य प्राहिणोद्यमसादनम्'॥ ७-१३०-३७ (५०४२३)
हताश्वसूतात्सरथादवतीर्य नराधिपः ।
गदामादाय ते पुत्रः पाञ्चल्यावभ्यधावत ॥ ७-१३०-३८ (५०४२४)
तमापतन्तं सम्प्रेक्ष्य क्रुद्धं कुरुपतिं तदा ।
अवप्लुतौ रथोपस्थाद्युधामन्यूत्तमौजसौ ॥ ७-१३०-३९ (५०४२५)
ततः स हेमचित्रं तं गदया स्यन्दनं गती ।
सङ्क्रुद्धः पोथयामास साश्वसूतध्वजं नृप ॥ ७-१३०-४० (५०४२६)
ग्एतदीदृशकं पुत्रस्तवाकार्षीज्जनाधिप ।
गदया गदिनां श्रेष्ठः सर्वलोकमहारथः'॥ ७-१३०-४१ (५०४२७)
भङ्क्त्वा रथं स पुत्रस्ते हताश्वो हतसारथिः ।
मद्रराजरथं तूर्णमारुरोह परन्तपः ॥ ७-१३०-४२ (५०४२८)
पाञ्चालानां ततो मुख्यौ राजपुत्रौ महारथौ ।
रथावन्यौ समारुह्य बीभत्सुमभिजग्मुतः ॥ ॥ ७-१३०-४३ (५०४२९)

इति श्रीमन्महाभारते द्रोणपर्वणि जयद्रथवधपर्वणि
चतुर्दशदिवसयुद्धे त्रिंशदधिकशततमोऽध्यायः ॥ १३० ॥
Mahabharata - Drona Parva - Chapter Footnotes

५-१३०-१७ तान्प्रसिद्धान् यानक्षान् ।अक्षान् मन्यमानः प्राग् ग्लहतेस्म इत्यन्वयः ॥
५-१३०-१८ यत्र सभायाम ।दूरोदरं द्यूतकारिणम् ॥
५-१३०-२० जयपराजयौ जयः पराजयो वेत्यर्थः ॥
५-१३०-१३० त्रिंशदधिकशततमोऽध्यायः ॥

---

द्रोनपर्व-अध्यय१३१
॥ श्रीः ॥
७.१३१. अध्यायः १३१

Mahabharata - Drona Parva - Chapter Topics
भीमेन कर्णस्य पराजयः ॥१ ॥

Mahabharata - Drona Parva - Chapter Text

७-१३१-० (५०४३०)
सञ्जय उवाच। ७-१३१-०क्ष् (४५९९)
वर्तमाने महाराज सङ्ग्रामे रोमहर्षणे ।
व्याकुलेषु च सर्वेषु पीड्यमानेषु सर्वशः ॥ ७-१३१-१ (५०४३१)
राधेयो भीममानर्च्छ युद्धाय भरतर्षभ ।
यथा नागो वने नागं मत्तो मत्तमभिद्रवेत् ॥ ७-१३१-२ (५०४३२)
ग्ततो व्यायच्छतामस्त्रैः पृथक्पृथगरिन्दमौ ।
मृदुपूर्वं च राधेयो दृढपूर्वं च पाण्डवः'॥ ७-१३१-३ (५०४३३)
धृतराष्ट्र उवाच। ७-१३१-४क्ष् (४६००)
यौ तौ कर्णश्च भीमश्च सम्प्रयुद्धौ महाबलौ ।
अर्जुनस्य रथोपान्ते कीदृशः सोऽभवद्रणः ॥ ७-१३१-४ (५०४३४)
पूर्वं हि निर्जितः कर्णो भीमसेनेन संयुगे ।
कथं भूयः स राधेयो भीममागान्महारथः ॥ ७-१३१-५ (५०४३५)
भीमो वा सूततनयं प्रत्युद्यातः कथं रणे ।
महारथसमाख्यातं पृथिव्यां प्रवरं रथम् ॥ ७-१३१-६ (५०४३६)
भीष्मद्रोणावतिक्रम्य धर्मराजो युधिष्ठिरः ।
नान्यतो भयमादत्त विना कर्णान्महारथात् ॥ ७-१३१-७ (५०४३७)
भयाद्यस्य महाबाहो न शेते बहुलाः समाः ।
चिन्तयन्नित्यशो वीर्यं राधेयस्य महात्मनः ।
तं कथं सूतपुत्रं तु भीमोऽयोधयताहवे ॥ ७-१३१-८ (५०४३८)

ब्रह्मण्यं वीर्यसम्पन्नं समरेष्वनिवर्तिनम् ।
कथं कर्णं युधां श्रेष्ठं योधयामास पाण्डवः ॥ ७-१३१-९ (५०४३९)
यौ तौ समीयतुर्वीरौ वैकर्तनवृकोदरौ ।
कथं तावत्र युध्येतां महाबलपराक्रमौ ॥ ७-१३१-१० (५०४४०)
भ्रातृत्वं दर्शितं पूर्वं घृणी चापि स सूतजः ।
कथं भीमेन युयुधे कुन्त्या वाक्यमनुस्मरन् ॥ ७-१३१-११ (५०४४१)
भीमो वा सूतपुत्रेण स्मरन्वैरं पुरा कृतम् ।
अयुध्यत कथं शूरः कर्णेन सह संयुगे ॥ ७-१३१-१२ (५०४४२)
आशास्ते च सदा सूतपुत्रे दुर्योधनो मम ।
कर्णो जेष्यति सङ्ग्रामे समस्तान्पाण्डवानिति ॥ ७-१३१-१३ (५०४४३)
जयाशा यत्र पुत्रस्य मम मन्दस्य संयुगे ।
स कथं भीमकर्माणं भीमसेनमयोधयत् ॥ ७-१३१-१४ (५०४४४)
यं समासाद्य पुत्रैर्मे कृतं वैरं महारथैः ।
तं सूततनयं तात कथं भीमो ह्ययोधयत् ॥ ७-१३१-१५ (५०४४५)
अनेकान्विप्रकारांश्च सूतपुत्रसमुद्भवान् ।
स्मरमाणः कथं भीमो युयुधे सूतसूनुना ॥ ७-१३१-१६ (५०४४६)
योऽजयत्पृथिवीं सर्वां रथेनैकेन वीर्यवान् ।
तं सूततनयं युद्धे कथं भीमो ह्ययोधयत् ॥ ७-१३१-१७ (५०४४७)
यो जातः कुण्डलाभ्यां च कवचेन सहैव च ।
तं सूतपुत्रं समरे भीमः कथमयोधयत् ॥ ७-१३१-१८ (५०४४८)
ग़अस्त्रहेतोः पुरा तात भार्गवं समपूजयत् ।
तस्य प्रसादाद्ब्रह्मास्त्रं लब्धवांश्च भृगूत्तमात्'॥ ७-१३१-१९ (५०४४९)
यथा तयोर्युद्धमभूद्यश्चासीद्विजयी तयोः ।
तन्ममाचक्ष्व तत्त्वेन कुशलो ह्यसि सञ्जय ॥ ७-१३१-२० (५०४५०)
सञ्चय उवाच। ७-१३१-२१क्ष् (४६०१)
भीमसेनस्तु राधेयमुत्सृज्य रथिनां वरम् ।
इयेष गन्तुं यत्रास्तां वीरौ कृष्णधनञ्चयौ ॥ ७-१३१-२१ (५०४५१)
तं प्रयान्तमभिद्रुत्य राधेयः कङ्कपत्रिभिः ।
अभ्यवर्षन्महाराज मेघो वृष्ट्येव पर्वतम् ॥ ७-१३१-२२ (५०४५२)
फुल्लता पङ्कजेनेव वक्त्रेण विहसन्बली ।
आजुहाव रणे यान्तं भीममाधिरथिस्तदा ॥ ७-१३१-२३ (५०४५३)
कर्ण उवाच ।
भीमाहितैस्तव रणः स्वप्नेऽपि न विभावितः। ७-१३१-२४ (५०४५४)
तद्दर्शयसि कस्मान्मे पृष्ठं पार्थदिदृक्षया ॥
कुन्त्याः पुत्रस्य सदृशं नेदं पाण्डवनन्दन। ७-१३१-२५ (५०४५५)
तेन मामभितः स्थित्वा शरवर्षैरवाकिर ॥ ७-१३१-२६ (५०४५६)

सञ्जय उवाच ।
भीमसेनस्तदाह्वानं कर्णान्नामर्षयद्युधि ।
अर्धमण्डलमावृत्य सूतपुत्रमयोधयत् ॥ ७-१३१-२६क्ष् (४६०२)
अवक्रगामिभिर्बाणैरभ्यवर्षन्महायशाः ।
दंशितं द्वैरथे यत्तं सर्वशस्त्रविशारदम् ॥ ७-१३१-२७ (५०४५७)
विधित्सुः कलहस्यान्तं जिघांसुः कर्णमक्षिणोत् ॥ ७-१३१-२८ (५०४५८)
हत्वा तस्यानुगांस्तं च हन्तुकामो महाबलः ।
तस्मै व्यसृजदुग्राणि विविधानि परन्तपः ।
अमर्षात्पाण्डवः क्रुद्धः शरवर्षाणि मारिष ॥ ७-१३१-२९ (५०४५९)
तस्य तानीषुवर्षाणि मत्तद्विरदगामिनः ।
सूतपुत्रोऽस्त्रमायाभिरग्रसत्परमास्त्रवित् ॥ ७-१३१-३० (५०४६०)
स यथावन्महाबाहुर्विद्यया वै सुपूजितः ।
आचार्यवन्महेष्वासः कर्णः पर्यचरद्बली ॥ ७-१३१-३१ (५०४६१)
युध्यमानं तु संरम्भाद्भीमसेनं हसन्निव ।
अभ्यपद्यत कौन्तेयं कर्णो राजन्वृकोदरम् ॥ ७-१३१-३२ (५०४६२)
तन्नामृष्यत कौन्तेयः कर्णस्य स्मितमाहवे ।
युध्यमानेषु वीरेषु पश्यत्सु च समन्ततः ॥ ७-१३१-३३ (५०४६३)
तं भीमसेनः सङ्ग्राप्तं वत्सदन्तैः स्तनान्तरे ।
विव्याध बलवान्क्रुद्धस्तोत्रैरिव महाद्विपम् ॥ ७-१३१-३४ (५०४६४)
पुनश्च सूतपुत्रं तु स्वर्णपुङ्खैः शिलाशितैः ।
सुमुक्तैश्चित्रवर्माणं निर्बिभेद त्रिसप्तभिः ॥ ७-१३१-३५ (५०४६५)
कर्णो जाम्बूनदैर्जालैः सञ्छन्नान्वातरंहसः ।
हयान्विव्याध भीमस्य पञ्चभिः पञ्चभिः शरैः ॥ ७-१३१-३६ (५०४६६)
ततो बाणमयं जलं भीमसेनरथं प्रति ।
कर्णेन विहितं राजन्निमेषार्धाददृश्यत ॥ ७-१३१-३७ (५०४६७)
सरथः सध्वजस्तत्र ससूतः पाण्डवस्तदा ।
प्राच्छाद्यत महाराज कर्णचापच्युतैः शरैः ॥ ७-१३१-३८ (५०४६८)
तस्य कर्णश्चतुःषष्ट्या व्यधमत्कवचं दृढम् ।
क्रुद्धश्चाप्यहनत्पार्थं नाराचैर्मर्मभेदिभिः ॥ ७-१३१-३९ (५०४६९)
ततोऽचिन्त्य महाबाहुः कर्णकार्मुकनिःसृतान् ।
समाश्लिष्यदसम्भ्रान्तः सूतपुत्रं वृकोदरः ॥ ७-१३१-४० (५०४७०)
स कर्णचापप्रभवानिषूनाशीविषोपमान् ।
बिभ्रद्भीमो महाराज न जगाम व्यथां रणे ॥ ७-१३१-४१ (५०४७१)
ततो द्वात्रिंशता भल्लैर्निशितैस्तिग्मतेजनैः ।
विव्याध समरे कर्णं भीमसेनः प्रतापवान् ॥ ७-१३१-४२ (५०४७२)
अयत्नेनैव तं कर्णः शरैर्भृशमवाकिरत् ।

भीमसेनं महाबाहुं सैन्धवस्य वधैषिणम् ॥ ७-१३१-४३ (५०४७३)
मृदुपूर्वं तु राधेयो भीममाजावयोधयत् ।
क्रोधपूर्वं तथा भीमः पूर्ववैरमनुस्मरन् ॥ ७-१३१-४४ (५०४७४)
तं भीमसेनो नामृष्यदवमानममर्षणः ।
स तस्मै व्यसृजत्तूर्णं शरवर्षममित्रहा ॥ ७-१३१-४५ (५०४७५)
ते शराः प्रेषितास्तेन भीमसेनेन संयुगे ।
निपेतुः सर्वतो वीरे कूजन्त इव पक्षिणः ॥ ७-१३१-४६ (५०४७६)
हेमपुङ्खा महावेगा भीमसेनधनुश्च्युताः ।
प्राच्छादयंस्ते राधेयं शलभा इव पावकम् ॥ ७-१३१-४७ (५०४७७)
कर्णस्तु रथिनां श्रेष्ठश्छाद्यमानः समन्ततः ।
राजन्व्यसृजदुग्राणि शरवर्षाणि भारत ॥ ७-१३१-४८ (५०४७८)
तस्य तानशनिप्रख्यानिषून्समरशोभिनः ।
चिच्छेद बहुभिर्भल्लैरसम्प्राप्तान्वृकोदरः ॥ ७-१३१-४९ (५०४७९)
पुनश्च शरवर्षेण च्छादयामास भारत ।
कर्णो वैकर्तनो युद्धे भीमसेनमरिन्दमः ॥ ७-१३१-५० (५०४८०)
तत्र भारत भीमं तु दृष्टवन्तः स्म सायकैः ।
समाचिततनुं सङ्ख्ये श्वाविधं शललैरिव ॥ ७-१३१-५१ (५०४८१)
हेमपुङ्खाञ्छिलाधौतान्कर्णचापच्युताञ्छरान् ।
दधार समरे वीरः स्वरश्मीनिव रश्मिमान्' ॥ ७-१३१-५२ (५०४८२)
रुधिरोक्षितसर्वाङ्गो भीमसेनो व्यराजत ।
समृद्धकुसुमापीडो वसन्तेऽशोकवृक्षवत् ॥ ७-१३१-५३ (५०४८३)
तत्तु भीमो महाबाहोः कर्णस्य चरितं रणे ।
नामृष्यत महाबाहुः क्रोधादुद्वृत्तलोचनः ॥ ७-१३१-५४ (५०४८४)
स कर्णं पञ्चविंशत्या नाराचानां समार्पयत् ।
महीधरमिव श्वेतं गूढपादैर्विषोल्बणैः ॥ ७-१३१-५५ (५०४८५)
पुनरेव च विव्याध षड्भिरष्टाभिरेव च ।
मर्मस्वमरविक्रान्तः सूतपुत्रं तनुत्यजम् ॥ ७-१३१-५६ (५०४८६)
पुनरन्येन बाणेन भीमसेनः प्रतापवान् ।
चिच्छेद कार्मुकं तूर्णं कर्णस्य प्रहसन्निव ॥ ७-१३१-५७ (५०४८७)
जघान चतुरश्चाश्वान्सूतं च त्वरितः शरैः ।
नाराचैरर्करश्म्याभैः कर्णं विव्याध चोरसि ॥ ७-१३१-५८ (५०४८८)
ते जग्मुर्धरणीमाशु कर्णं निर्भिद्य पत्रिणः ।
यथा जलधरं भित्त्वा दिवाकरमरीचयः ॥ ७-१३१-५९ (५०४८९)
स वैक्लव्यं महत्प्राप्य च्छिन्नधन्वा शराहतः ।
तथा पुरुषमानी स लज्जामुत्सृज्य भारत ।
भीमसेनभयात्कर्णः प्रत्यपायाद्रथान्तरम् ॥ ॥ ७-१३१-६० (५०४९०)

इति श्रीमन्महाभारते द्रोणपर्वणि जयद्रथवधपर्वणि चतुर्दशदिवसयुद्धे एकत्रिंशदधिकशततमोऽध्यायः ॥ १३१ ॥
Mahabharata - Drona Parva - Chapter Footnotes

५-१३१-११ पूर्वमुद्योगे दर्शितमुङ्गाविवं भ्रातृत्वं कुन्त्या वाक्यं च चतुर्णमवध्यत्वलक्षणं चानुस्मरन्नित्यन्वयः ॥
५-१३१-२५ अभितः सम्मुखे ॥
५-१३१-१३१ एकत्रिंशदधिकशततमोऽध्यायः ॥

---

द्रोनपर्व-अध्यय१३२
॥ श्रीः ॥
७.१३२. अध्यायः १३२

Mahabharata - Drona Parva - Chapter Topics
भीमकर्णयोर्युद्धम् ॥ १ ॥

Mahabharata - Drona Parva - Chapter Text

७-१३२-० (५०४९१)
धृतराष्ट्र उवाच। ७-१३२-०क्ष् (४६०३)
श्स्वयं शिष्यो महेशस्य भृगूत्तमधनुर्धरः ।
शिष्यत्वं प्राप्तवान्कर्णस्तस्य तुल्योऽस्त्रविद्यया ॥ ७-१३२-१ (५०४९२)
तद्विशिष्टोऽपि वा कर्णः शिष्यः शिष्यगुणैर्युतः ।
कुन्तीपुत्रेण भीमेन निर्जितः स तु लीलया ॥ ७-१३२-२ (५०४९३)
यस्मिञ्जयाशा महती पुत्राणां मम सञ्जय ।
तं भीमाद्विमुखं दृष्ट्वा किन्नु दुर्योधनोऽब्रवीत् ॥ ७-१३२-३ (५०४९४)
कथं च युयुधे भीमो वीर्यश्लाघी महाबलः ॥ ७-१३२-४ (५०४९५)
कर्णो वा समरे तात किमकार्षीदतः परम् ।
भीमसेनं रणे दृष्ट्वा ज्वलन्तमिव पावकम् ॥ ७-१३२-५ (५०४९६)
सञ्जय उवाच। ७-१३२-६क्ष् (४६०४)
रथमन्यं समास्थाय विधिवत्कल्पितं पुनः ।
अभ्ययात्पाण्डवं कर्णो वातोद्धूत इवार्णवः ॥ ७-१३२-६ (५०४९७)
क्रुद्धमाधिरथिं दृष्ट्वा पुत्रास्तव विशाम्पते ।
भीमसेनममन्यन्त वैश्वानरमुखे हुतम् ॥ ७-१३२-७ (५०४९८)
चापशब्दं ततः कृत्वा तलशब्दं च भैरवम् ।

अभ्यद्रवत राधेयो भीमसेनरथं प्रति ॥ ७-१३२-८ (५०४९९)
पुनरेव तयो राजन्घोर आसीत्समागमः ।
वैकर्तनस्य शूरस्य भीमस्य च महात्मनः ॥ ७-१३२-९ (५०५००)
संरब्धौ हि महाबाहू परस्परवधैषिणौ ।
अन्योन्यभीक्षाञ्चक्राते दहन्ताविव लोचनैः ॥ ७-१३२-१० (५०५०१)
क्रोधरक्रेक्षणौ तीव्रौ निःश्वसन्ताविवोरगौ ।
शूरावन्योन्यमासाद्य ततक्षतुररिन्दमौ ॥ ७-१३२-११ (५०५०२)
व्याघ्राविव सुसंरब्धौ श्येनाविव च शीघ्रगौ ।
शरभाविव सङ्क्रुद्धौ युयुधाते परस्परम् ॥ ७-१३२-१२ (५०५०३)
ततो भीमः स्मरन्क्लेशानक्षद्यूते वनेऽपि च ।
विराटनगरे चैव दुःखं प्राप्तमरिन्दमः ॥ ७-१३२-१३ (५०५०४)
राष्ट्राणां स्फीतरत्नानां हरणं च तवात्मजैः ।
सततं च परिक्लेशान्सपुत्रेण त्वया कृतान् ॥ ७-१३२-१४ (५०५०५)
दग्धुमैच्छश्च यः कुन्तीं सपुत्रां त्वमनागसम् ।
कृष्णायाश्च परिक्लेशं सभामध्ये दुरात्मभिः ॥ ७-१३२-१५ (५०५०६)
केशपक्षग्रहं चैव दुःशासनकृतं तथा ।
परुषाणि च वाक्यानि कर्णोनोक्तानि भारत ॥ ७-१३२-१६ (५०५०७)
पतिमन्यं परीप्सस्व न सन्ति पतयस्तव ।
पतिता नरके पार्थाः सर्वे षण्डतिलोपमाः ॥ ७-१३२-१७ (५०५०८)
समक्षं तव कौरव्य यदूचुः कौरवास्तदा ।
दासीभावेन कृष्णां च भोक्तुकामाः सुतास्तव ॥ ७-१३२-१८ (५०५०९)
यच्चापि तान्प्रव्रजतः कृष्णाजिननिवासिनः ।
परुषाण्युक्तवान्कर्णः सभायां सन्निधौ तव ॥ ७-१३२-१९ (५०५१०)
तृणीकृत्य च यत्पार्थांस्तव पुत्रो ववल्ग ह ।
विषमस्थान्समस्थो हि संरब्धो गतचेतनः ॥ ७-१३२-२० (५०५११)
बाल्यात्प्रभृति चारिघ्नः स्वानि दुःखानि चिन्तयन् ।
निरविद्यत धर्मात्मा जीवितेन वृकोदरः ॥ ७-१३२-२१ (५०५१२)
ततो विष्फार्य सुमहद्धेमपृष्ठं दुरासदम् ।
चापं भरतशार्दूलस्त्यक्तात्मा कर्णमभ्ययात् ॥ ७-१३२-२२ (५०५१३)
स सायकयैर्जालैर्भीमः कर्णरथं प्रति ।
भानुमद्भिः शिलाधौतैर्भानोः प्राच्छादयत्प्रभां  ७-१३२-२३ (५०५१४)
ततः प्रहस्याधिरथिस्तूर्णमस्यञ्शिताञ्शरान् ।
व्यधमद्भीमसेनस्य शरजालानि पत्रिभिः ॥ ७-१३२-२४ (५०५१५)
महारथो महाबाहुर्महाबाणैर्महाबलः ।
विव्याधाधिरथिर्भीमं नवभिर्निशितैस्तदा ॥ ७-१३२-२५ (५०५१६)
स तोत्रैरिव मातङ्गो वार्यमाणः पतत्त्रिभः ।

अभ्यधावदसम्भ्रान्तः सूतपुत्रं वृकोदरः ॥ ७-१३२-२६ (५०५१७)
तमापतन्तं वेगेन रभसं पाण्डवर्षभम् ।
कर्णः प्रत्युद्ययौ युद्धे मत्तो मत्तमिव द्विपम् ॥ ७-१३२-२७ (५०५१८)
ततः प्रध्याप्य जलजं भेरीशतसमस्वनम् ।
अक्षुभ्यत बलं हर्षादुद्धूत इव सागरः ॥ ७-१३२-२८ (५०५१९)
तदुद्धूतं बलं दृष्ट्वा नागाश्वरथपत्तिमत् ।
भीमः कर्णं समासाद्य च्छादयामास सायकैः ॥ ७-१३२-२९ (५०५२०)
अश्वानृक्षसवर्णांश्च हंसवर्णैर्हयोत्तमैः ।
व्यामिश्रयद्रणे कर्णः पाण्डवं छादयञ्छरैः ॥ ७-१३२-३० (५०५२१)
ऋक्षवर्णान्हयान्कर्कैर्मिश्रान्मारुतरंहसः ।
निरीक्ष्य तव पुत्राणां हाहाकृतमभूद्बलम् ॥ ७-१३२-३१ (५०५२२)
ते हया बह्वशोभन्त मिश्रिता वातरंहसः ।
सितासिता महाराज यथा व्योम्नि वलाहकाः ॥ ७-१३२-३२ (५०५२३)
संरब्धौ क्रोधताम्राक्षौ प्रेक्ष्य कर्णवृकोदरौ ।
सन्त्रस्ताः समकम्पन्त त्वदीयानां महारथाः ॥ ७-१३२-३३ (५०५२४)
यमराष्ट्रोपमं घोरमासीदायोधनं तयोः ।
दुर्दर्शं भरतश्रेष्ठ प्रेतराजपुत्रं यथा ॥ ७-१३२-३४ (५०५२५)
समाजमिव तच्चित्रं प्रेक्षमाणा महारथाः ।
नालक्षयञ्जयं व्यक्तमेकस्यैव महारणे ॥ ७-१३२-३५ (५०५२६)
तयोः प्रैक्षन्त सम्मर्दं सन्निकृष्टं महास्त्रयोः ।
तव दुर्मन्त्रिते राजन्सपुत्रस्य विशाम्पते ॥ ७-१३२-३६ (५०५२७)
छादयन्तौ हि शत्रुघ्नावन्योन्यं सायकैः शितैः ।
शरजालावृतं व्योम चक्रातेऽद्भुतविक्रमौ ॥ ७-१३२-३७ (५०५२८)
तावन्योन्यं जिघांसन्तौ शरैस्तीक्ष्णैर्महारथौ ।
प्रेक्षणीयतरावास्तां वृष्टिमन्ताविवाम्बुदौ ॥ ७-१३२-३८ (५०५२९)
सुवर्णविकृतान्वाणान्विमुञ्चन्तावरिन्दमौ ।
भास्वरं व्योम चक्राते महोल्काभिरिव प्रभो ॥ ७-१३२-३९ (५०५३०)
ताभ्यां मुक्ताः शरा राजन्गार्ध्रपत्राश्चकाशिरे ।
श्रेण्यः शरदि मत्तानां सारसनामिवाम्बरे ॥ ७-१३२-४० (५०५३१)
संसक्तं सूतपुत्रेण दृष्ट्वा भीममरिन्दमम् ।
अतिभारममन्येतां भीमे कृष्णधनञ्जयौ ॥ ७-१३२-४१ (५०५३२)
तत्राधिरथिभीमाभ्यां शरैर्मुक्तैर्दृढं हताः ।
इषुपातमतिक्रम्य पेतुरश्वनरद्विपाः ॥ ७-१३२-४२ (५०५३३)
पतद्भिः पतितैश्चान्यैर्गतासुभिरनेकशः ।
कृतो राजन्महाराज पुत्राणां ते जनक्षयः ॥ ७-१३२-४३ (५०५३४)
मनुष्याश्वगजानां च शरीरैर्गतजीवितैः ।

क्षणेन भूमिः सञ्जज्ञे संवृता भरतर्षभ ॥ ॥ ७-१३२-४४ (५०५३५)

इति श्रीमन्महाभारते द्रोणपर्वणि जयद्रथवधपर्वणि चतुर्दशदिवसयुद्धे द्वात्रिंशदधिकरशततमोऽध्यायः ॥ १३२ ॥

Mahabharata - Drona Parva - Chapter Footnotes

५-१३२-१ कुण्डलितौ द्वौ श्लोकौ झ । पुस्तके एव वर्तेते। भृगूत्तमधनुर्धरो रामः ॥
५-१३२-३१ कर्कैः श्वेतैरश्वैः ॥
५-१३२-३५ समाजं रङ्गं । एकस्यैव कस्यचित् नान्यस्य ॥
५-१३२-१३२ द्वात्रिंशदधिकशततमोऽध्यायः ॥

---

द्रोनपर्व-अध्यय१३३
॥ श्रीः ॥
७.१३३. अध्यायः १३३

Mahabharata - Drona Parva - Chapter Topics
भीमेन कर्णसहकारिणो दुर्जयस्य वधः ॥ १ ॥

Mahabharata - Drona Parva - Chapter Text

७-१३३-० (५०५३६)
धृतराष्ट्र उवाच। ७-१३३-०क्ष् (४६०५)
अत्यद्भुतमहं मन्ये भीमसेनस्य विक्रमम् ।
यत्कर्णं योधयामास समरे लघुविक्रमः ॥ ७-१३३-१ (५०५३७)
त्रिदशानपि वा युक्तान्सर्वशस्त्रधरान्युधि ।
वारयेद्यो रणे कर्णः सयक्षासुरमानुषान् ॥ ७-१३३-२ (५०५३८)
स कथं पाण्डवं युद्धे भ्राजमानमिव श्रिया ।
नातरत्संयुगे तात तन्ममाचक्ष्व सञ्जय ॥ ७-१३३-३ (५०५३९)
कथं च युद्धं सम्भूतं तयोः प्राणदुरोदरे ।
अत्र मन्ये समायत्तो जयो वाऽजय एव च ॥ ७-१३३-४ (५०५४०)
कर्णं प्राप्य रणे सूत मम पुत्रः सुयोधनः ।
जेतुमुत्सहते पार्थान्सगोविन्दान्ससात्वतान् ॥ ७-१३३-५ (५०५४१)
श्रुत्वा तु निर्जितं कर्णमसकृद्भीमकर्मणा ।
भीमसेनेन समरे मोह आविशतीव माम् ॥ ७-१३३-६ (५०५४२)
विनष्टान्कौरवान्मन्ये मम पुत्रस्य दुर्नयैः ।

नहि कर्णो महेष्वासान्पार्थाञ्जेष्यति सञ्जय ॥ ७-१३३-७ (५०५४३)
कृतवान्यानि युद्धानि कर्णः पाण्डुसुतैः सह ।
सर्वत्र पाण्डवाः कर्णमजयंस्ते रणाजिरे ॥ ७-१३३-८ (५०५४४)
अजेयाः पाण्डवास्तात देवैरपि सवासवैः ।
न च तद्बुध्यते मन्दः पुत्रो दुर्योधनो मम ॥ ७-१३३-९ (५०५४५)
धनं धनेश्वरस्येव हृत्वा पार्थस्य मे सुतः ।
मधुप्रेप्सुरिवाबुद्धिः प्रपातं नावबुध्यते ॥ ७-१३३-१० (५०५४६)
निकृत्या निकृतिप्रज्ञो राज्यं हृत्वा महात्मनाम् ।
जितमित्येव मन्वानः पाण्डवानवमन्यते ॥ ७-१३३-११ (५०५४७)
पुत्रस्नेहाभिभूतेन मया चाप्यकृतात्मना ।
धर्मे स्थिता महात्मानो निकृताः पाण्डुनन्दनाः ॥ ७-१३३-१२ (५०५४८)
शमकामः ससोदर्यो दीर्घप्रेक्षी युधिष्ठिरः ।
अशक्त इति मत्वा तु मम पुत्रैर्निराकृतः ॥ ७-१३३-१३ (५०५४९)
तानि दुःखान्यनेकानि विप्रकारांश्च सर्वशः ।
हृदि कृत्वा महाबाहुर्भीमोऽयुध्यत सूतजम् ॥ ७-१३३-१४ (५०५५०)
तस्मान्मे सञ्जय ब्रूहि कर्णभीमौ यथा रणे ।
अयुध्येतां युधांश्रेष्ठौ परस्परवधैषिणौ ॥ ७-१३३-१५ (५०५५१)
सञ्जय उवाच। ७-१३३-१६क्ष् (४६०६)
शृणु राजन्यथावृत्तं सङ्ग्रामं कर्णभीमयोः ।
परस्परवधप्रेप्स्वोर्वनकुञ्जरयोरिव ॥ ७-१३३-१६ (५०५५२)
राजन्वैकर्तनो भीमं क्रुद्धः क्रुद्धमरिन्दमम् ।
पराक्रान्तं पराक्रम्य विव्याध त्रिंशता शरैः ॥ ७-१३३-१७ (५०५५३)
महावेगैः प्रसन्नाग्रैः शातकुम्भपरिष्कृतैः ।
नातरद्भरतश्रेष्ठ भीमं वैकर्तनः शरैः ॥ ७-१३३-१८ (५०५५४)
तस्यास्यतो धनुर्भीमश्चकर्त विशिखैस्त्रिभिः ।
रथनीडाच्च यन्तारं भल्लेनापातयत्क्षितौ ॥ ७-१३३-१९ (५०५५५)
स काङ्क्षन्भीमसेनस्य वधं वैकर्तनो भृशम् ।
शक्तिं कनकवैदूर्यचित्रदण्डां परामृशत् ॥ ७-१३३-२० (५०५५६)
प्रगृह्य च महाशक्तिं कालरात्रिमिवापराम् ।
समुत्क्षिप्य च राधेयः सन्धाय च महाबलः ।
चिक्षेप भीमसेनाय जीवितान्तकरीमिव ॥ ७-१३३-२१ (५०५५७)
शक्तिं विसृज्य राधेयः पुरन्दर इवाशनिम् ।
ननाद सुमहानादं बलवान्सूतनन्दनः ॥ ७-१३३-२२ (५०५५८)
तं च नादं ततः श्रुत्वा पुत्रास्ते हर्षिताऽभवन् ॥ ७-१३३-२३ (५०५५९)
शक्तिं वियति चिच्छेद भीमः सप्तभिराशुगैः ॥ ७-१३३-२४ (५०५६०)
छित्त्वा शक्तिं ततो भीमो निर्मुक्तोरगसन्निभाम् ।

मार्गमाणामिव प्राणान्सूतपुत्रस्य मारिष ॥ ७-१३३-२५ (५०५६१)
प्राहिणोत्कृतसंरम्भः शरान्बर्हिणवाससः ।
स्वर्णपुङ्खाञ्शिलाधौतान्यमदण्डोपमान्मृधे ॥ ७-१३३-२६ (५०५६२)
कर्णोऽप्यन्यद्धनुर्गृह्य हेमपृष्ठं दुरासदम् ।
विकृष्य तन्महच्चापं व्यसृजत्सायकांस्तदा ॥ ७-१३३-२७ (५०५६३)
तान्पाण्डुपुत्रश्चिच्छेद नवभिर्नतपर्वभिः ।
वसुषेणेन निर्मुक्तान्नव राजन्महाशरान् ।
छित्त्वा भीमो महाराज नादं सिंह इवानदत् ॥ ७-१३३-२८ (५०५६४)
तौ वृषाविव नर्दन्तौ बलिनौ वासितान्तरे ।
शार्दूलाविव चान्योन्यमामिषार्थेऽभ्यगर्जताम् ॥ ७-१३३-२९ (५०५६५)
अन्योन्यं प्रजिहीर्षन्तावन्योन्यस्यान्तरैषिणौ ।
अन्योन्यमभिवीक्षन्तौ गोष्ठेष्विव महर्षभौ ॥ ७-१३३-३० (५०५६६)
महागजाविवसाद्य विषाणाग्रैः परस्परम् ।
शरैः पूर्णायतोत्सृष्टैरन्योन्यमभिजघ्नतुः ॥ ७-१३३-३१ (५०५६७)
निर्दहन्तौ महाराज शस्त्रवृष्ट्या परस्परम् ।
अन्योन्यमभिवीक्षन्तौ कोपाद्विवृतलोचनौ ॥ ७-१३३-३२ (५०५६८)
प्रहसन्तौ तथाऽन्योन्यं भर्त्सयन्तौ मुहुर्मुहुः ।
शङ्खशब्दं च कुर्वाणौ युयुधाते परस्परम् ॥ ७-१३३-३३ (५०५६९)
तस्य भीमः पुनश्चापं मुष्टौ चिच्छेद मारिष ।
शङ्खवर्णांश्च तानश्वान्बाणैर्निन्ये यमक्षयम् ।
सारथिं च तथाप्यस्य रथनीडादपातयत् ॥ ७-१३३-३४ (५०५७०)
ततो वैकर्तनः कर्णश्चिन्तां प्राप दुरत्ययाम् ।
स च्छाद्यमानः समरे हताश्वो हतसारथिः ।
मोहितः शरजालेन कर्तव्यं नाभ्यपद्यत ॥ ७-१३३-३५ (५०५७१)
तथा कृच्छ्रगतं दृष्ट्वा कर्णं दुर्योधनो नृपः ।
वेपमान इव क्रोधाद्व्यादिदेशाथ दुर्जयम् ॥ ७-१३३-३६ (५०५७२)
गच्छ दुर्जय राधेयं पुरा ग्रसति पाण्डवः ।
जहि तूबरकं क्षिप्रं कर्णस्य बलमादधत् ॥ ७-१३३-३७ (५०५७३)
एवमुक्तस्तथेत्युक्त्वा तव पुत्रं तवात्मजः ।
अभ्यद्रवद्भीमसेनं व्यासक्तं विकिरञ्छरैः ॥ ७-१३३-३८ (५०५७४)
स भीमं नवभिर्बाणैरश्वानष्टभिरार्दयत् ।
षड्भिः सूतं त्रिभिः केतं पुनस्तं चापि सप्तभिः ॥ ७-१३३-३९ (५०५७५)
भीमसेनोऽपि सङ्क्रुद्धः साश्वयन्तारमाशुगैः ।
दुर्जयं भिन्नमर्माणमनयद्यमसादनम् ॥ ७-१३३-४० (५०५७६)
बाढं हतं क्षितौ क्षुण्णं वेष्टमानं यथोरगम् ।
रुदन्नार्तस्तव सुतं कर्णश्चक्रे प्रदक्षिणम् ॥ ७-१३३-४१ (५०५७७)

स तु तं विरथं कृत्वा स्मयन्नत्यन्तवैरिणम् ।
समाचिनोद्बाणगणैः शतघ्नीभिश्च शङ्कुभिः ॥ ७-१३३-४२ (५०५७८)
तथाप्यतिरथः कर्णो भिद्यमानोऽस्य सायकैः ।
न जहौ समरे भीमं क्रुद्धरूपं परन्तपः ॥ ॥ ७-१३३-४३ (५०५७९)

इति श्रीमन्महाभारते द्रोणपर्वणि जयद्रथवधपर्वणि
चतुर्दशदिवसयुद्धे त्रयस्त्रिंशदधिकशततमोऽध्यायः ॥ १३३ ॥
Mahabharata - Drona Parva - Chapter Footnotes

५-१३३-४ प्राणदुरोदरे प्राणद्युते ॥
५-१३३-१३३ त्रयस्त्रिंशदधिकशततमोऽध्यायः ॥

---

द्रोनपर्व-अध्यय१३४
॥ श्रीः ॥
७.१३४. अध्यायः १३४

Mahabharata - Drona Parva - Chapter Topics
भीमेन पराजितस्य कर्णस्य पलायनम् ॥ १ ॥

Mahabharata - Drona Parva - Chapter Text

७-१३४-० (५०५८०)
सञ्जय उवाच। ७-१३४-०क्ष् (४६०७)
सर्वथा विरथः कर्णः पुनर्भीमेन निर्जितः ।
रथमन्यं समास्थाय पुनर्विव्याध पाण्डवम् ॥ ७-१३४-१ (५०५८१)
महागजाविवासाद्य विषाणाग्रैः परस्परम् ।
शरैः पूर्णायतोत्सृष्टैरन्योन्यमभिजघ्नतुः ॥ ७-१३४-२ (५०५८२)
अथ कर्णः शरव्रातैर्भीमसेनं समार्पयत् ।
ननाद च महानादं पुनर्विव्याध चोरसि ॥ ७-१३४-३ (५०५८३)
तं भीमो दशभिर्बाणैः प्रत्यविध्यदजिह्मगैः ।
पुनर्विव्याध सप्तत्या शराणां नतपर्वणाम् ॥ ७-१३४-४ (५०५८४)
कर्णस्तु नवभिर्भीमं भित्त्वा राजंस्तनान्तरे ।
ध्वजमेकेन विव्याध विशोकं च त्रिभिः शरैः ॥ ७-१३४-५ (५०५८५)
सायकानां ततः पार्थस्त्रिषष्ट्या प्रत्यविध्यत ।
तोत्रैरिव महानागं कशाभिरिव वाजिनम् ॥ ७-१३४-६ (५०५८६)
सोऽतिविद्धो महाराज पाण्डवेन यशस्विना ।

सृक्विणी लेलिहन्वीरः क्रोधरक्तान्तलोचनः ॥ ७-१३४-७ (५०५८७)
ततः शरं महाराज सर्वकायावदारणम् ।
प्राहिणोद्भीमसेनाय बलायेन्द्र इवाशनिम् ॥ ७-१३४-८ (५०५८८)
स निर्भिद्य रणे पार्थं सूतपुत्रधनुश्च्युतः ।
अगच्छद्दारयन्भूमिं चित्रपुङ्खः शिलीमुखः ॥ ७-१३४-९ (५०५८९)
ततो भीमो महाबाहुः क्रोधसंरक्तलोचनः ।
वज्रकल्पां चतुष्किष्कुं गुर्वीं रुक्माङ्गदां गदाम् ।
प्राहिणोत्मूतपुत्राय षडस्रामविचारयन् ॥ ७-१३४-१० (५०५९०)
तया जघानाधिरथेः सदश्वान्साधुवाहिनः ।
गदया भारतः क्रुद्धो वज्रेणेन्द्र इवासुरान् ॥ ७-१३४-११ (५०५९१)
ततो भीमो महाबाहुः क्षुराभ्यां भरतर्षभ ।
ध्वजमाधिरथेश्छित्त्वा सूतमभ्यहनच्छरैः ॥ ७-१३४-१२ (५०५९२)
हताश्वसूतमुत्सृज्य स रथं पतितध्वजम् ।
विष्फारयन्धनुः कर्णस्तस्थौ भारत दुर्मनाः ॥ ७-१३४-१३ (५०५९३)
तत्राद्भुतमपश्याम राधेयस्य पराक्रमम् ।
विरथो रथिनां श्रेष्ठो वारयामास यद्रिपुम् ॥ ७-१३४-१४ (५०५९४)
विरथं तं नरश्रेष्ठं दृष्ट्वाऽऽधिरथिमाहवे ।
दुर्योधनस्ततो राजन्नभ्यभाषत दुर्मुखम् ॥ ७-१३४-१५ (५०५९५)
एष दुर्मुख राधेयो भीमेन विरथीकृतः ।
तं रथेन नरश्रेष्ठ सम्पादय महारथम् ॥ ७-१३४-१६ (५०५९६)
ततो दुर्योधनवचः श्रुत्वा भारत दुर्मुखः ।
त्वरमाणोऽभ्યयात्कर्णं भीमं चावारयच्छरैः ॥ ७-१३४-१७ (५०५९७)
दुर्मुखं प्रेक्ष्य सङ्ग्रामे सूतपुत्रपदानुगम् ।
वायुपुत्रः प्रहृष्टोऽभूत्सृक्विणी परिसंलिहन् ॥ ७-१३४-१८ (५०५९८)
ततः कर्णं महाराज वारयित्वा शिलीमुखैः ।
दुर्मुखाय रथं तूर्णं प्रेषयामास पाण्डवः ॥ ७-१३४-१९ (५०५९९)
तस्मिन्क्षणे महाराज नवभिर्नतपर्वभिः ।
सुमुखैर्दुर्मुखं भीमः शरैर्निन्ये यमक्षयम् ॥ ७-१३४-२० (५०६००)
ततस्तमेवाधिरथिः स्यन्दनं दुर्मुखे हते ।
आस्थितः प्रबभौ राजन्दीप्यमान इवांशुमान् ॥ ७-१३४-२१ (५०६०१)
शयानं भिन्नमर्माणं दुर्मुखं शोणितोक्षितम् ।
दृष्ट्वा कर्णोऽश्रुपूर्णाक्षो मुहूर्तं नाभ्यवर्तत ॥ ७-१३४-२२ (५०६०२)
तं गतासुमतिक्रम्य कृत्वा कर्णः प्रदक्षिणम् ।
दीर्घमुष्णं श्वसन्वीरो न किञ्चित्प्रत्यपद्यत ॥ ७-१३४-२३ (५०६०३)
तस्मिंस्तु विवरे राजन्नाराचान्गार्धवाससः ।
प्राहिणोत्सूतपुत्राय भीमसेनश्चतुर्दश ॥ ७-१३४-२४ (५०६०४)

ते तस्य कवचं भित्त्वा स्वर्णचित्रं महोजसः ।
हेमपुङ्खा महाराज व्यशोभन्त दिशो दश ॥ ७-१३४-२५ (५०६०५)
अपिबन्सूत पुत्रस्य शोणितं रक्तभोजनाः ।
क्रुद्धा इव मनुष्येन्द्र भुजङ्गाः कालचोदिताः ॥ ७-१३४-२६ (५०६०६)
प्रसर्पमाणा मेदिन्यां ते व्यरोचन्त मार्गणाः ।
अर्धप्रविष्टाः संरब्धा बिलानीव महोरगाः ॥ ७-१३४-२७ (५०६०७)
तं प्रत्यविध्यद्राधेयो जाम्बूनदविभूषितैः ।
चतुर्दशभिरत्युग्रैर्नाराचैरविचारयन् ॥ ७-१३४-२८ (५०६०८)
ते भीमसेनस्य भुजं सव्यं निर्भिद्य पत्रिणः ।
प्राविशन्मेदिनीं भीमाः क्रौञ्चं पत्ररथा इव ॥ ७-१३४-२९ (५०६०९)
ते व्यरोचन्त नाराचाः प्रविशन्तो वसुन्धराम् ।
गच्छत्यस्तं दिनकरे दीप्यमाना इवांशवः ॥ ७-१३४-३० (५०६१०)
स निर्भिन्नो रणे भीमो नाराचैर्मर्मभेदिभिः ।
सुस्राव रुधिरं भूरि पर्वतः सलिलं यथा ॥ ७-१३४-३१ (५०६११)
स भीमस्त्रिभिरायस्तः सूतपुत्रं पतत्रिभिः ।
सुपर्णवेगैर्विव्याध सारथिं चास्य सप्तभिः ॥ ७-१३४-३२ (५०६१२)
स विह्वलो महाराज कर्णो भीमशराहतः ।
प्राद्रवज्जवनैरश्वै रणं हित्वा महाभयात् ॥ ७-१३४-३३ (५०६१३)
भीमसेनस्तु विष्फार्य चापं हेमपरिष्कृतम् ।
आहवेऽतिरथोऽतिष्ठज्ज्वलन्निव हुताशनः ॥ ॥ ७-१३४-३४ (५०६१४)

इति श्रीमन्महाभारते द्रोणपर्वणि जयद्रथवधपर्वणि
चतुर्दशदिवसयुद्धे चतुस्त्रिंशदधिकशततमोऽध्यायः ॥ १३४ ॥
Mahabharata - Drona Parva - Chapter Footnotes

५-१३४-१० ततः शैक्यां चतुष्किष्कुं इति क ख ङ पाठः ॥
५-१३४-३२ सुष्ठु पर्णानां पत्राणां वेगो येषाम् ॥
३२ ॥
५-१३४-१३४ चतुस्त्रिंशदधिकशततमोऽध्यायः ॥

---

द्रोनपर्व-अध्यय१३५
॥ श्रीः ॥
७.१३५. अध्यायः १३५

Mahabharata - Drona Parva - Chapter Topics
भीमेन दुर्मर्षणादिदुर्योधनानुजानां पञ्चानां हननम् ॥ १ ॥

७-१३५-० (५०६१५)
धृतराष्ट्र उवाच। ७-१३५-०क्ष् (४६०८)
दैवमेव परं मन्ये धिक्पौरुषमनर्थकम् ।
यत्राधिरथिरायत्तौ नातरत्पाण्डवं रणे ॥ ७-१३५-१ (५०६१६)
कर्णः पार्थान्सगोविन्दाञ्जेतुमुत्सहते रणे ।
न च कर्णसमं लोके पश्यामि कञ्चन ।
इति दुर्योधनस्याहमश्रौषं जल्पतो मुहुः ॥ ७-१३५-२ (५०६१७)
कर्णो हि बलवाञ्छूरो दृढधन्वा जितक्लमः ।
इति मामब्रवीत्सूत मन्दो दुर्योधनः पुरा ॥ ७-१३५-३ (५०६१८)
वसुषेणसहायं मां नालं देवाऽपि संयुगे ।
किं नु पाण्डुसुता राजन्गतसत्वा विचेतसः ॥ ७-१३५-४ (५०६१९)
तत्र तं निर्जितं दृष्ट्वा भुजङ्गमिव निर्विषम् ।
युद्धात्कर्णमपक्रान्तं किंस्विद्दुर्योधनोऽब्रवीत् ॥ ७-१३५-५ (५०६२०)
अहो दुर्मुखमेवैकं युद्धानामविशारदम् ।
प्रावेशयद्धुतवहं पतङ्गमिव मोहितः ॥ ७-१३५-६ (५०६२१)
अश्वत्थामा मद्रराजः कृपः कर्णश्च सङ्गताः ।
न शक्त्याः प्रमुखे स्थातुं नूनं भीमस्य सञ्जय ॥ ७-१३५-७ (५०६२२)
तेऽपि चास्य महाघोरं बलं नागायुतोपमम् ।
जानन्तो व्यवसायं च क्रूरं मारुततेजसः ॥ ७-१३५-८ (५०६२३)
किमर्थं क्रूरकर्माणं यमकालान्तकोपमम् ।
बलसंरम्भवीर्यज्ञाः कोपयिष्यन्ति संयुगे ॥ ७-१३५-९ (५०६२४)
कर्णस्त्वेको महाबाहुः स्वबाहुबलदर्पितम् ।
भीमसेनमनादृत्य रणेऽयुध्यत सूतजः ॥ ७-१३५-१० (५०६२५)
योऽजयत्समरे कर्णं पुरन्दर इवासुरम् ।
न स पाण्डुसुतो जेतुं शक्यः केनचिदाहवे ॥ ७-१३५-११ (५०६२६)
द्रोणं यः सम्प्रमथ्यैकः प्रविष्टो मम वाहिनीम् ।
भीमो धनञ्जयान्वेषी कस्तमार्च्छेज्जिजीविषु ॥ ७-१३५-१२ (५०६२७)
को हि सञ्जय भीमस्य स्थातुमुत्सहतेऽग्रतः ।
उद्यताशनिहस्तस्य महेन्द्रस्येव दानवः ॥ ७-१३५-१३ (५०६२८)
प्रेतराजपुरं प्राप्य निवर्तेतापि मानवः ।
न भीमसेनं सम्प्राप्य निवर्तेत कदाचन ॥ ७-१३५-१४ (५०६२९)
पतङ्गा इव वह्निं ते प्राविशन्नल्पचेतसः ।
ये भीमसेनं सङ्क्रुद्धमन्वधावन्विमोहिताः ॥ ७-१३५-१५ (५०६३०)

यत्तत्सभायां भीमेन मम पुत्रवधाश्रयम् ।
उक्तं संरम्भिणोग्रेण कुरूणां शृण्वतां तदा ॥ ७-१३५-१६ (५०६३१)
तन्नूनमभिसञ्चिन्त्य दृष्ट्वा कर्णं च निर्जितम् ।
दुःशासनः सह भ्रात्रा भयाद्भीमादुपारमत् ॥ ७-१३५-१७ (५०६३२)
यश्च सञ्जय दुर्बुद्धिरब्रवीत्समितौ मुहुः ।
कर्णो दुःशासनोऽहं च जेष्यामो युधि पाण्डवान् ॥ ७-१३५-१८ (५०६३३)
स नूनं विरथं दृष्ट्वा कर्णं भीमेन निर्जितम् ।
प्रत्याख्यानाच्च कृष्णस्य भृशं तप्यति पुत्रकः ॥ ७-१३५-१९ (५०६३४)
दृष्ट्वा भ्रातॄन्हतान्सङ्ख्ये भीमसेनेन दंशितान् ।
आत्मापराधात्सम्मूढो नूनं तप्यति पुत्रकः ॥ ७-१३५-२० (५०६३५)
को हि जीवितमन्विच्छन्प्रतीपं पाण्डवं व्रजेत् ।
भीमं भीमायुधं क्रुद्धं साक्षात्कालमिव स्थितम् ॥ ७-१३५-२१ (५०६३६)
बडबामुखमध्यस्थो मुच्येतापि हि मानवः ।
न भीममुखसम्प्राप्तो मुच्येदिति मतिर्मम ॥ ७-१३५-२२ (५०६३७)
न पार्था न च पञ्चाला न च केशवसात्यकी ।
जानते युधि संरब्धा जीवितं परिरक्षितुम् ॥ ७-१३५-२३ (५०६३८)
अहो मम सुतानां हि विपन्नं सूत जीवितम् ॥ ७-१३५-२४ (५०६३९)
सञ्जय उवाच। ७-१३५-२५क्ष् (४६०९)
यस्त्वं शोचसि कौरव्य वर्तमाने महाभये ।
त्वमस्य जगतो मूलं विनाशस्य न संशयः ॥ ७-१३५-२५ (५०६४०)
स्वयं वैरं महत्कृत्वा पुत्राणां वचने स्थितः ।
उच्यमानो न गृह्णीषे मर्त्यः पथ्यमिवौषधम् ॥ ७-१३५-२६ (५०६४१)
स्वयं पीत्वा महाराज कालकूटं सुदुर्जरम् ।
तस्येदानीं फलं कृत्स्नमवाप्नुहि नरोत्तम ॥ ७-१३५-२७ (५०६४२)
यत्तु कुत्सयसे योधान्युध्यमानान्महाबलान् ।
तत्र ते वर्तयिष्यामि यथा युद्धमवर्तत ॥ ७-१३५-२८ (५०६४३)
दृष्ट्वा कर्णं तु पुत्रास्ते भीमसेनपराजितम् ।
नामृष्यन्त महेष्वासाः सोदर्याः पञ्च भारत ॥ ७-१३५-२९ (५०६४४)
दुर्मर्षणो दुःसहश्च दुर्मदो दुर्धरो जयः ।
पाण्डवं चित्रसन्नाहास्तं प्रतीपमुपाद्रवन् ॥ ७-१३५-३० (५०६४५)
ते समन्तान्महाबाहुं परिवार्य वृकोदरम् ।
दिशः शरैः समावृण्वञ्शलभानामिव व्रजैः ॥ ७-१३५-३१ (५०६४६)
आगच्छतस्तान्सहसा कुमारान्देवरूपिणः ।
प्रतिजग्राह समरे भीमसेनो हसन्निव ॥ ७-१३५-३२ (५०६४७)
तव दृष्ट्वा तु तनयान्दुर्मर्षणपुरोगमान् ।
अभ्यवर्तत राधेयो भीमसेनं महाबलम् ॥ ७-१३५-३३ (५०६४८)

विसृजन्विशिखांस्तीक्ष्णान्स्वर्णपुङ्खांञ्छिलाशितान् ।
तं तु भीमोऽभ्ययात्तूर्णं वार्यमाणः सुतैस्तव ॥ ७-१३५-३४ (५०६४९)
कुरवस्तु ततः कर्णं परिवार्य समन्ततः ।
अवाकिरन्भीमसेनं शरैः सन्नतपर्वभिः ॥ ७-१३५-३५ (५०६५०)
तान्बाणैः पञ्चविंशत्या साश्वान्राजन्नरर्षभान् ।
ससूतान्भीमधनुषो भीमो निन्ये यमक्षयम् ॥ ७-१३५-३६ (५०६५१)
प्रापतन्स्यन्दनेभ्यस्ते सार्धं सूतैर्गतासवः ।
चित्रपुष्पधरा भग्ना वातेनेव महाद्रुमाः ॥ ७-१३५-३७ (५०६५२)
तत्राद्भुतमपश्याम भीमसेनस्य विक्रमम् ।
संवार्याधिरथिं बाणैर्यज्जघान तवात्मजान् ॥ ७-१३५-३८ (५०६५३)
स वार्यमाणो भीमेन शितैर्बाणैः समन्ततः ।
सूतपुत्रो महाराज भीमसेनमवैक्षत ॥ ७-१३५-३९ (५०६५४)
तं भीससेनः संरम्भात्क्रोधसंरक्तलोचनः ।
विष्फार्य सुमहच्चापं मुहुः कर्णमवैक्षत ॥ ॥ ७-१३५-४० (५०६५५)

इति श्रीमन्महाभारते द्रोणपर्वणि जयद्रथवधपर्वणि
चतुर्दशदिवसयुद्धे पञ्चत्रिंशदधिकशततमोऽध्यायः ॥१३५ ॥
Mahabharata - Drona Parva - Chapter Footnotes

५-१३५-९ यमः संयमनव्यापारः कालः कलनव्यापरः अन्तको
मारणव्यापारः तदुपमम् ॥
५-१३५-१३५ पञ्चत्रिंशदधिकशततमोऽध्यायः ॥

---

द्रोनपर्व-अध्यय१३६
॥ श्रीः ॥
७.१३६. अध्यायः १३६

Mahabharata - Drona Parva - Chapter Topics
भीमेन चित्रोपचित्रादिदुर्योधनानुजवधः ॥ १ ॥

Mahabharata - Drona Parva - Chapter Text

७-१३६-० (५०६५६)
सञ्जय उवाच। ७-१३६-०क्ष् (४६१०)
तवात्मजांस्तु पतितान्दृष्ट्वा कर्णः प्रतापवान् ।
क्रोधेन महताऽऽविष्टो निर्विण्णोऽभूत्स जीवितो ॥ ७-१३६-१ (५०६५७)

आगस्कृतमिवात्मानं मेने चाधिरथिस्तदा ।
यत्प्रत्यक्षं तव सुता भीमेन निहता रणे ॥ ७-१३६-२ (५०६५८)
भीमसेनस्ततः क्रुद्धः कर्णस्य निशिताञ्शरान् ।
निचखान् स सम्भ्रान्तः पूर्ववैरमनुस्मरन् ॥ ७-१३६-३ (५०६५९)
स भीमं पञ्चभिर्विद्ध्वा राधेयः प्रहसन्निव ।
पुनर्विव्याध सप्तत्या स्वर्णपुङ्खैः शिलाशितैः ॥ ७-१३६-४ (५०६६०)
अविचिन्त्याथ तान्बाणान्कर्णेनास्तान्वृकोदरः ।
रणे विव्याध राधेयं शरेणानतपर्वणा ॥ ७-१३६-५ (५०६६१)
पुनश्च विशिखैस्तीक्ष्णैर्विद्ध्वा मर्मसु पञ्चभिः ।
धनुश्चिच्छेद भल्लेन सूत पुत्रस्य मारिष ॥ ७-१३६-६ (५०६६२)
अथान्यद्धनुरादाय कर्णो भारत दुर्मनाः ।
इषुभिश्छादयामास मीमसेनं परन्तपः ॥ ७-१३६-७ (५०६६३)
तस्य भीमो हयान्हत्वा विनिहत्य च सारथिम् ।
प्रजहास महाहासं कृतप्रतिकृतं महत् ॥ ७-१३६-८ (५०६६४)
इषुभिः कार्मुकं चास्य चकर्त पुरुषर्षभः ।
तत्पपात महाराज स्वर्णपृष्ठं महास्वनम् ॥ ७-१३६-९ (५०६६५)
अवारोहद्रथात्तस्मादथ कर्णो महारथः ।
गदां गृहीत्वा समरे भीमाय प्राहिणोद्रुषा ॥ ७-१३६-१० (५०६६६)
तामापतन्तीमालक्ष्य भीमसेनो महागदाम् ।
शरैरवारयद्राजन्सर्वसैन्यस्य पश्यतः ॥ ७-१३६-११ (५०६६७)
ततो बाणसहस्राणि प्रेषयामास पाण्डवः ।
सूतपुत्रवधाकाङ्क्षी त्वरमाणः पराक्रमी ॥ ७-१३६-१२ (५०६६८)
तानिषूनिषुभिः कर्णो वारयित्वा महामृधे ।
कवचं भीमसेनस्य पाटयामास सायकैः ॥ ७-१३६-१३ (५०६६९)
अथैनं पञ्चविंशत्या नाराचानां समार्पयत् ।
पश्यतां सर्वसैन्यानां तदद्भुतमिवाभवत् ॥ ७-१३६-१४ (५०६७०)
ततो भीमो महाबाहुर्नवभिर्नतपर्वभिः ।
प्रेषयामास सङ्क्रुद्धः सूतपुत्रस्य मारिष ॥ ७-१३६-१५ (५०६७१)
ते तस्य कवचं भित्त्वा तथा बाहुं च दक्षिणम् ।
अभ्ययुर्धरणीं तीक्ष्णा वल्मीकमिव पन्नगाः ॥ ७-१३६-१६ (५०६७२)
स च्छाद्यमानो बाणौघैर्भीमसेनधनुश्च्युतैः ।
पुनरेवाभवत्कर्णो भीमसेनात्पराङ्मुखः ॥ ७-१३६-१७ (५०६७३)
तं पराङ्मुखमालोक्य पदातिं सूतनन्दनम् ।
कौन्तेयशरसञ्छन्नं राजा दुर्योधनोऽब्रवीत् ॥ ७-१३६-१८ (५०६७४)
त्वरध्वं सर्वतो यत्ता राधेयस्य रथं प्रति ।
ततस्तव सुता राजञ्श्रुत्वा भ्रातुर्वचो द्रुतम् ॥ ७-१३६-१९ (५०६७५)

अभ्ययुः पाण्डवं युद्धे विसृजन्तः शिलीमुखान् ।
चित्रोपचित्रश्चित्राक्षश्चारुचित्रः शरासनः ॥ ७-१३६-२० (५०६७६)
चित्रायुधश्चित्रवर्मा समरे चित्रयोधिनः ।
तानापतत एवाशु भीमसेनो महारथः ॥ ७-१३६-२१ (५०६७७)
एकैकेन शरेणाजौ पातयामास ते सुतान् ।
ते हता न्यपतन्भूमौ वातरूग्णा इव द्रुमाः ॥ ७-१३६-२२ (५०६७८)
दृष्ट्वा विनिहतान्पुत्रांस्तव राजन्महारथान् ।
अश्रुपूर्णमुखः कर्णः क्षत्तुः सस्मार तद्वचः ॥ ७-१३६-२३ (५०६७९)
रथं चान्यं समास्थाय विधिवत्कल्पितं पुनः ।
अभ्ययात्पाण्डवं युद्धे त्वरमाणः पराक्रमी ॥ ७-१३६-२४ (५०६८०)
तावन्योन्यं शरैर्भित्त्वा स्वर्णपुङ्खैः शिलाशितैः ।
व्यभ्राजेतां यथा मेघौ संस्यूतौ सूर्यरश्मिभिः ॥ ७-१३६-२५ (५०६८१)
षट्त्रिंशद्भिस्ततो भल्लैर्निशितैस्तिग्मतेजनैः ।
व्यधमत्कवनं क्रुद्धः सूतपुत्रस्य पाण्डवः ॥ ७-१३६-२६ (५०६८२)
सूतपुत्रोऽपि कौन्तेयं शरैः सन्नतपर्वभिः ।
पञ्चाशता महाबाहुर्विव्याध भरतर्षभ ॥ ७-१३६-२७ (५०६८३)
रक्तचन्दनदिग्धाङ्गौ शरैः कृतमहाव्रणौ ।
शोणिताक्तौ व्यराजेतां कालसूर्याविवोदितौ ॥ ७-१३६-२८ (५०६८४)
तौ शोणितोक्षितैर्गात्रैः शरैश्छिन्नतनुच्छदौ ।
विवृताङ्गौ व्यराजेतां निर्मुक्ताविव पन्नगौ ॥ ७-१३६-२९ (५०६८५)
ग्क्रोधाग्नितेजसा दिप्तौ संरम्भाद्रक्तलोचनौ ।
व्यभ्राजेतां महाराज विधूमाविव पावकौ'॥ ७-१३६-३० (५०६८६)
व्याघ्राविव नरव्याघ्रौ दंष्ट्राभिरितरेतरम् ।
शरधारासृजौ वीरौ मेघाविव ववर्षतुः ॥ ७-१३६-३१ (५०६८७)
वारणाविव चान्योन्यं विषाणाभ्यामरिन्दमौ ।
निर्भिन्दन्तौ स्वगात्राणि सायकैश्चारु रेजतुः ॥ ७-१३६-३२ (५०६८८)
नादयन्तौ प्रहर्षन्तौ विक्रीडन्तौ परस्परम् ।
मण्डलानि विकुर्वाणौ रथाभ्यां रथिषूत्तमौ ॥ ७-१३६-३३ (५०६८९)
वृषाविवाथ नर्दन्तौ बलिनौ वासितान्तरे ।
सिंहाविव पराक्रान्तौ नरसिंहौ महाबलौ ॥ ७-१३६-३४ (५०६९०)
परस्परं वीक्षमाणौ क्रोधसंरक्तलोचनौ ।
युयुधाते महावीर्यौ शक्रवैरोचनी यथा ॥ ७-१३६-३५ (५०६९१)
ततो भीमो महाबाहुर्बाहुभ्यां विक्षिपन्धनुः ।
व्यराजत रणे राजन्सविद्युदिव तोयदः ॥ ७-१३६-३६ (५०६९२)
सनेमिघोषस्तनितश्चापविद्युच्छराम्बुभिः ।
भीमसेनमहामेघः कर्णपर्वतमावृणोत् ॥ ७-१३६-३७ (५०६९३)

ततः शरसहस्रेण सम्यगस्तेन भारत ।
पाण्डवो व्यकिरत्कर्णं भीमो भीमपराक्रमः ॥ ७-१३६-३८ (५०६९४)
तत्रापश्यंस्तव सुता भीमसेनस्य विक्रमम् ।
सुपुङ्खैः कङ्कवासोभिर्यत्कर्णं छादयञ्शरैः ॥ ७-१३६-३९ (५०६९५)
स नन्दयन्रणे पार्थं केशवं च यशस्विनम् ।
सात्यकिं चक्ररक्षौ च भीमः कर्णमयोधयत् ॥ ७-१३६-४० (५०६९६)
विक्रमं भुजयोर्वीर्यं धैर्यं च विदितात्मनः ।
पुत्रास्तव महाराज दृष्ट्वा विमनसोऽभवन् ॥ ॥ ७-१३६-४१ (५०६९७)

इति श्रीमन्महाभारते द्रोणपर्वणि जयद्रथवधपर्वणि
चतुर्दशदिवसयुद्धे षट्त्रिंशदधिकशततमोऽध्यायः ॥ १३६ ॥
Mahabharata - Drona Parva - Chapter Footnotes

५-१३६-१० अवारोहदवातरत् ॥
५-१३६-२० चित्रोपचित्रः चित्रश्चासावुपचित्रश्चेति चित्रोपचित्रः ॥
५-१३६-१३६ षट्त्रिंशदधिकशततमोऽध्यायः ॥

---

द्रोनपर्व-अध्यय१३७
॥ श्रीः ॥
७.१३७. अध्यायः १३७

Mahabharata - Drona Parva - Chapter Topics
Mahabharata - Drona Parva - Chapter Text

७-१३७-० (५०६९८)
॥ ७-१३७-५३ (५०७५१)

इति श्रीमन्महाभारते द्रोणपर्वणि द्रोणाभिषेकपर्वणि
Mahabharata - Drona Parva - Chapter Footnotes

५-१३७-१ ५-१३७- ५-१३७- ५-१३७- ५-१३७- ५-१३७- ५-१३७- ५-१३७-
५-१३७- ५-१३७- ५-१३७- ५-१३७-

---

द्रोनपर्व-अध्यय१३८
॥ श्रीः ॥

७.१३८. अध्यायः १३८

Mahabharata - Drona Parva - Chapter Topics
Mahabharata - Drona Parva - Chapter Text

७-१६-० (५०७५२)
॥ ७-१६-२९ (५०७८१)

इति श्रीमन्महाभारते द्रोणपर्वणि द्रोणाभिषेकपर्वणि
Mahabharata - Drona Parva - Chapter Footnotes

५-१६-१ ५-१६- ५-१६- ५-१६- ५-१६- ५-१६- ५-१६- ५-१६- ५-१६-
५-१६- ५-१६- ५-१६-

---

द्रोनपर्व-अध्यय१३९
॥ श्रीः ॥
७.१३९. अध्यायः १३९

Mahabharata - Drona Parva - Chapter Topics
भीमकर्णयुद्धवर्णनम् ॥ १ ॥

Mahabharata - Drona Parva - Chapter Text

७-१३९-० (५०७८२)
सञ्जय उवाच। ७-१३९-०क्ष् (४६१३)
ततः कर्णो महाराज भीमं विद्धा त्रिभिः शूरैः ।
ग्पुनश्च षड्भिस्तीक्ष्णाग्रैरविध्यत्कङ्कपत्रिभिः'।
मुमोच शरवर्षाणि विचित्राणि बहूनि च ॥ ७-१३९-१ (५०७८३)
वध्यमानो महाबाहुः सूतपुत्रेण पाण्डवः ।
न विव्यथे भीमसेनो भिद्यमान इवाचलः ॥ ७-१३९-२ (५०७८४)
स कर्णं कर्णिना कर्णे पीतेन निशितेन च ।
विव्याध सुभृशं सङ्ख्ये तैलधौतेन मारिष ॥ ७-१३९-३ (५०७८५)
स कुण्डलं महच्चारु कर्णस्यापातयद्भुवि ।
तपनीयं महाराज दीप्तं ज्योतिरिवाम्बरात् ॥ ७-१३९-४ (५०७८६)
अथापरेण भल्लेन सूतपुत्रं स्तनान्तरे ।
आजघान भृशं क्रुद्धो हसन्निव वृकोदरः ॥ ७-१३९-५ (५०७८७)

पुनरस्य त्वरन्भीपो नाराचान्दश भारत ।
रणे प्रैषीन्महाबाहुर्निर्मुक्ताशीविषोपमान् ॥ ७-१३९-६ (५०७८८)
ते ललाटं विनिर्भिद्य सूतपुत्रस्य भारत ।
विविशुश्चोदितास्तेन वल्मीकमिव पन्नगाः ॥ ७-१३९-७ (५०७८९)
ललाटस्थैस्ततो बाणैः सूतपुत्रो व्यरोचत ।
नीलोत्पलमयीं मालां धारयन्वै यथा पुरा ॥ ७-१३९-८ (५०७९०)
सोऽतिविद्धो भृशं कर्णः पाण्डवेन तरस्विना ।
रथकूबरमालम्ब्य न्यमीलयत लोचने ॥ ७-१३९-९ (५०७९१)
स मुहूर्तात्पुनः संज्ञां लेभे कर्णः परन्तपः ।
रुधिरोक्षितसर्वाङ्गः क्रोधमाहारयत्परम् ॥ ७-१३९-१० (५०७९२)
ततः क्रुद्धो रणे कर्णः पीडितो दृढधन्वना ।
वेगं चक्रे महावेगो भीमसेनरथं प्रति ॥ ७-१३९-११ (५०७९३)
तस्मै कर्णः शतं राजन्निषूणां गार्ध्रवाससाम् ।
अमर्षी बलवान्क्रुद्धः प्रेषयामास भारत ॥ ७-१३९-१२ (५०७९४)
ततः प्रासृजदुग्राणि शरवर्षाणि पाण्डवः ।
समरे तमनादृत्य तस्य वीर्यमचिन्तयन् ॥ ७-१३९-१३ (५०७९५)
कर्णस्ततो महाराज पाण्डवं नवभिः शरैः ।
आजघानोऽसि क्रुद्धः क्रुद्धरूपं परन्तप ॥ ७-१३९-१४ (५०७९६)
तावुभौ नरशार्दूलौ शार्दूलाविव दंष्ट्रिणौ ।
ग्शरदंष्ट्रौ समासाद्य ततक्षतुररिन्दमौ'।
जिमूताविव चान्योन्यं प्रववर्षतुराहवे ॥ ७-१३९-१५ (५०७९७)
तलशब्दरवैश्चैव त्रासयेतां परस्परम् ।
शरजालैश्च विविधैस्त्रासयामासतुर्मृधे ॥ ७-१३९-१६ (५०७९८)
अन्योन्यं समरे क्रुद्धौ कृतप्रतिकृतैषिणौ ।
ततो भीमो महाबाहुः सूतपुत्रस्य भारत ॥ ७-१३९-१७ (५०७९९)
क्षुरप्रेण धनुश्छित्त्वा ननाद परवीरहा ।
तदपास्य धनुश्छिन्नं सूतपुत्रो महारथः ॥ ७-१३९-१८ (५०८००)
अन्यत्कार्मुकमादत्त भारघ्नं वेगवत्तरम् ।
तदप्यथ निमेषार्धाच्चिच्छेदास्य वृकोदरः ॥ ७-१३९-१९ (५०८०१)
तृतीयं च चतुर्थं च पञ्चमं षष्ठमेव हि ।
सप्तमं चाष्टमं चैव नवमं दशमं तथा ॥ ७-१३९-२० (५०८०२)
एकादशं द्वादशं च त्रयोधशमथापि च ।
चतुर्दशं पञ्चदशं षोडशं च वृकोदरः ॥ ७-१३९-२१ (५०८०३)
तथा सप्तदशं वेगादष्टादशमथापि वा ।
बहूनि भीमश्चिच्छेद कर्णस्यैवं धनूंषि हि ।
निमेषार्धात्ततः कर्णो धनुर्हस्तो व्यतिष्ठत ॥ ७-१३९-२२ (५०८०४)

दृष्ट्वा स कुरुसौवीरसिन्धुवीरबलक्षयम् ।
स वर्मध्वजशस्त्रैश्च पतितैः संवृतां महीम् ॥ ७-१३९-२३ (५०८०५)
ग्रथैर्विमथितैर्भल्लैरश्वैश्वान्यैः प्रवल्गितैः ।
भ्रष्टश्रीकैर्नरवरैः पांसुकुण्ठितमूर्धजैः'॥ ७-१३९-२४ (५०८०६)
हस्त्यश्वरथदेहांश्च गतासून्प्रेक्ष्य सर्वशः ।
सूतपुत्रस्य संरम्भाद्दीप्तं वपुरजायत ॥ ७-१३९-२५ (५०८०७)
स विष्फार्य महच्चापं कार्तस्वरविभूषितम् ।
भीमं प्रैक्षत राधेयो घोरं घोरेण चक्षुषा ॥ ७-१३९-२६ (५०८०८)
ततः क्रुद्धः शरानस्यन्सूतपुत्रो व्यरो चत ।
मध्यन्दिनगतोऽर्चिष्माञ्शरदीव दिवाकरः ॥ ७-१३९-२७ (५०८०९)
मरीचिविकचस्येव राजन्भानुमतो वपुः ।
आसीदाधिरथेर्घोरं वपुः शरशताचितम् ॥ ७-१३९-२८ (५०८१०)
कराभ्यामाददानस्य सन्दधानस्य चाशुगान् ।
कर्षतो मुञ्चतो बाणान्नान्तरं ददृशे रणे ॥ ७-१३९-२९ (५०८११)
अग्निचक्रोपमं घोरं मण्डलीकृतमायुधम् ।
कर्णस्यासीन्महीपाल सव्यं दक्षिणमस्यतः ॥ ७-१३९-३० (५०८१२)
स्वर्णपुङ्खाः सुनिशिताः कर्मचापच्युताः शराः ।
प्राच्छादयन्महाराज दिशः सूर्य इवांशुभिः ॥ ७-१३९-३१ (५०८१३)
ततः कनकपुङ्खानां शराणां नतपर्वणाम् ।
धनुश्च्युतानां वियति ददृशे बहुधा व्रजः ॥ ७-१३९-३२ (५०८१४)
बाणासनादाधिरथेः प्रभवन्ति स्म सायकाः ।
श्रेणीकृता व्यरोचन्त राजन्क्रौञ्चा इवाम्बरे ॥ ७-१३९-३३ (५०८१५)
गार्ध्रपत्राञ्शिलाधौतान्कार्तस्वरविभूषितान् ।
महावेगान्प्रदीप्ताग्रान्मुमोचाधिरथिः शरान् ॥ ७-१३९-३४ (५०८१६)
ते तु चापबलोद्धूताः शातकुम्भविभूषिताः ।
अजस्रमपतन्बाणा भीमसेनरथं प्रति ॥ ७-१३९-३५ (५०८१७)
ते व्योम्नि रुक्मविकृता व्यकाशन्त सहस्रशः ।
शलभानामिव व्राताः शराः कर्णसमीरिताः ॥ ७-१३९-३६ (५०८१८)
चापादाधिरथेर्मुक्ताः प्रपतन्तश्चकाशिरे ।
एको दीर्घ इवात्यर्थमाकाशे संस्थितः शरः ॥ ७-१३९-३७ (५०८१९)
पर्वतं वारिधाराभिच्छादयन्निव तोयदः ।
कर्णः प्राच्छादयत्क्रुद्धो भीमं सायकवृष्टिभिः ॥ ७-१३९-३८ (५०८२०)
तत्र भारत भीमस्य बलं वीर्यं पराक्रमम् ।
व्यवसायं च पुत्रास्ते ददृशुः सहसैनिकाः ॥ ७-१३९-३९ (५०८२१)
तां समुद्रमिवोद्धूतां शरवृष्टिं समुत्थिताम् ।
अचिन्तयित्वा भीमस्तु क्रुद्धः कर्णमुपाद्रवत् ॥ ७-१३९-४० (५०८२२)

रुक्मपृष्ठं महच्चापं भीमस्यासीद्विशाम्पते ।
आकर्षान्मण्डलीभूतं शक्रचापमिवापरम् ।
तस्माच्छराः प्रादुरासन्पूरयन्त इवाम्बरम् ॥ ७-१३९-४१ (५०८२३)
सुवर्णपुङ्खैर्भीमेन सायकैर्नतपर्वभिः ।
गगने रचिता माला काञ्चनीव व्यरोचत ॥ ७-१३९-४२ (५०८२४)
ततो व्योम्नि विषक्तानि शरजालानि भागशः ।
आहतानि व्यशीर्यन्त भीमसेनस्य पत्रिभिः ॥ ७-१३९-४३ (५०८२५)
कर्णस्य शरजालौघैर्भीमसेनस्य चोभयोः ।
अग्निस्फुलिङ्गसंस्पर्शैरञ्जोगतिभिराहवे ।
तैस्तैः कनकपुङ्खानां द्यौरासीत्संवृता व्रजैः ॥ ७-१३९-४४ (५०८२६)
न स्म सूर्यस्तदा भाति न स्म वाति समीरणः ।
शरजालावृते व्योम्नि न प्राज्ञायत किञ्चन ॥ ७-१३९-४५ (५०८२७)
स भिमं छादयन्बाणैः सूतपुत्रः पृथग्विधैः ।
उपारोहदनादृत्य तस्य वीर्यं महात्मनः ॥ ७-१३९-४६ (५०८२८)
तयोर्विसृजतोस्तत्र शरजालानि मारिष ।
वायुभूतान्यदृश्यन्त संसक्तानीतरेतरम् ॥ ७-१३९-४७ (५०८२९)
अन्योन्यशरसंसम्पर्शात्तयोर्मनुजसिंहयोः ।
आकाशे भरतश्रेष्ठ पावकः समजायत ॥ ७-१३९-४८ (५०८३०)
तथा कर्णः शितान्बाणान्कर्मारपरिमार्जितान् ।
सुवर्णविकृतान्क्रुद्धः प्राहिणोद्वधकाङ्क्षया ॥ ७-१३९-४९ (५०८३१)
तानन्तरिक्षे विशिखैस्त्रिधैकैकमशातयत् ।
विशेषयन्सूतपुत्रं भीमस्तिष्ठेति चाब्रवीत् ॥ ७-१३९-५० (५०८३२)
पुनश्चासृजदुग्राणि शरवर्षाणि पाण्डवः ।
अमर्षी बलवान्क्रुद्धो दिधक्षन्निव पावकः ॥ ७-१३९-५१ (५०८३३)
ततश्चटचटाशब्दो गोधाघातादभूत्तयोः ॥ ७-१३९-५२ (५०८३४)
तलशब्दश्च सुमहान्सिंहनादश्च भैरवः ।
रथनेमिनिनादश्च ज्याशब्दश्चैव दारुणः ॥ ७-१३९-५३ (५०८३५)
योधा व्युपारमन्युद्धाद्दिदृक्षन्तः पराक्रमम् ।
कर्णपाण्डवयो राजन्परस्परवधैषिणोः ॥ ७-१३९-५४ (५०८३६)
देवर्षिसिद्धगन्धर्वाः साधुसाध्वित्यपूजयन् ।
मुमुचुः पुष्पवर्षं च विद्याधरगणास्तथा ॥ ७-१३९-५५ (५०८३७)
ततो भीमो महाबाहुः संरम्भी दृढविक्रमः ।
अस्त्रैरस्त्राणि संवार्य शरैर्विव्याध सूतजम् ॥ ७-१३९-५६ (५०८३८)
कर्णोऽपि भीमसेनस्य निवार्येषून्महाबलः ।
प्राहिणोन्नव नाराचानाशीविषसमान्रणे ॥ ७-१३९-५७ (५०८३९)
तावद्भिरथ तान्भीमो व्योम्नि चिच्छेद पत्रिभिः ।

नाराचान्सूत पुत्रस्य तिष्ठतिष्ठेति चाब्रवीत् ॥ ७-१३९-५८ (५०८४०)
ततो भीमो महाबाहुः शरं क्रुद्धान्तकोपमम् ।
मुमोचाधिरथेर्वीरो यमदण्डमिवापरम् ॥ ७-१३९-५९ (५०८४१)
तमापतन्तं चिच्छेद राधेयः प्रहसन्निव ।
त्रिभिः शरैः शरं राजन्पाण्डवस्य प्रतापवान् ॥ ७-१३९-६० (५०८४२)
पुनश्चासृजदुग्राणि शरवर्षाणि पाण्डवः ।
तस्य तान्याददे कर्णः सर्वाण्यस्त्राण्यभीतवत् ।
युध्यमानस्य भीमस्य सूतपुत्रोऽस्त्रमायया ॥ ७-१३९-६१ (५०८४३)
तस्येषुधी धनुर्ज्यां च बाणैः सन्नतपर्वभिः ।
रश्मीन्योक्त्राणि चाश्वानां क्रुद्धः कर्णोऽच्छिनन्मृधे। ७-१३९-६२ (५०८४४)
तस्याश्वांश्च पुनर्हत्वा सूतं विव्याध पञ्चभिः ।
सोपसृत्य द्रुतं सूतो युधामन्यो रथं ययौ ॥ ७-१३९-६३ (५०८४५)
विहसन्निव भीमस्य क्रुद्धः कालानलद्युतिः ।
ध्वजं चिच्छेद राधेयः पताकां च व्यपातयत् ॥ ७-१३९-६४ (५०८४६)
स विधन्वा महाबाहुरथ शक्तिं परामृशत् ।
तां व्यवासृजदाविध्य क्रुद्धः कर्णरथं प्रति ॥ ७-१३९-६५ (५०८४७)
तामाधिरथिरायस्तः शक्तिं काञ्चनभूषणाम् ।
आपतन्तीं महोल्काभां चिच्छेद दशभिः शरैः ॥ ७-१३९-६६ (५०८४८)
साऽपतद्दशधा छिन्ना कर्णस्य निशितैः शरैः ।
अस्यतः सूतपुत्रस्य मित्रार्थे चित्रयोधिनः ॥ ७-१३९-६७ (५०८४९)
स चर्मादत्त कौन्तेयो जातरूपपरिष्कृतम् ।
खड्गं चान्यतरप्रेप्सुर्जयं मरणमेव वा ॥ ७-१३९-६८ (५०८५०)
तदस्य तरसा क्रुद्धो व्यधमच्चर्म सुप्रभम् ।
शरैर्बहुभिरत्युग्रैः प्रहसन्निव भारत ॥ ७-१३९-६९ (५०८५१)
स विचर्मा महाराज विरथः क्रोधमूर्च्छितः ।
असिं प्रासृजदाविध्य त्वरन्कर्णरथं प्रति ॥ ७-१३९-७० (५०८५२)
स धनुः सूतपुत्रस्य सज्यं छित्त्वा महानसिः ।
पपात भुवि राजेन्द्र क्रुद्धः सर्प इवाम्बरात् ॥ ७-१३९-७१ (५०८५३)
ततः प्रहस्याधिरथिरन्यदादाय कार्मुकम् ।
शत्रुघ्नं समरे क्रुद्धो दृढज्यं वेगवत्तरम् ॥ ७-१३९-७२ (५०८५४)
व्यायच्छत्स शरान्कर्णः कुन्तीपुत्रजिघांसया ।
सहस्रशो महाराज रुक्मपुङ्खान्सुतेजनान् ॥ ७-१३९-७३ (५०८५५)
स वध्यमानो बलवान्कर्णचापच्युतैः शरैः ।
वैहायसं प्राक्रमद्वै कर्णस्य रथमाविशत् ॥ ७-१३९-७४ (५०८५६)
स तस्य चरितं दृष्ट्वा सङ्ग्रामे विजयैषिणः ।
ध्वजालयस्थो राधेयो भीमसेनमवञ्चयत् ॥ ७-१३९-७५ (५०८५७)

तमदृष्ट्वा रथोपस्थे निलीनं व्यथितेन्द्रियम् ।
ध्वजमस्य समारुह्य तस्मै भीमो महीतले ॥ ७-१३९-७६ (५०८५८)
तदस्य कुरवः सर्वे चाणाश्चाभ्यपूजयन् ।
यदियेष रथात्कर्णं हर्तुं तार्क्ष्य इवोरगम् ॥ ७-१३९-७७ (५०८५९)
स च्छिन्नधन्वा विरथः स्वधर्ममनुपालयन् ।
स्वरथं पृष्ठतः कृत्वा युद्धायैव व्यवस्थितः ॥ ७-१३९-७८ (५०८६०)
तद्विचिन्त्य स राधेयस्तत एनं समभ्ययात् ।
संरम्भात्पाण्डवं सङ्ख्ये युद्धाय समुपस्थितम् ॥ ७-१३९-७९ (५०८६१)
तौ समेतौ महाराज स्पर्धमानौ महाबलौ ।
जीमूताविव घर्मान्ते गर्जमानौ नरर्षभौ ॥ ७-१३९-८० (५०८६२)
तयोरासीत्संप्रहारः क्रुद्धयोर्नरसिंहयोः ।
अमृष्यमाणयोः सङ्ख्ये देवदानवयोरिव ॥ ७-१३९-८१ (५०८६३)
क्षीणशस्त्रस्तु कौन्तेयः कर्णेन समभिद्रुतः ।
दृष्ट्वाऽर्जुनहतान्नागान्पतितान्पर्वतोपमान् ।
रथमार्गविघातार्थं व्यायुधः प्रविवेश ह ॥ ७-१३९-८२ (५०८६४)
हस्तिनां व्रजमासाद्य रथदुर्गं प्रविश्य च ।
पाण्डवो जीविताकाङ्क्षी राधेयं नाभ्यवर्तत ॥ ७-१३९-८३ (५०८६५)
व्यवस्थानमथाकाङ्क्षन्धनञ्जयशरैर्हतम् ।
उद्यम्य कुञ्जरं पार्थस्तस्थौ परपुरञ्जयः ॥ ७-१३९-८४ (५०८६६)
महौषधिसमायुक्तं हनूमानिव पर्वतम् ।
तमस्य विशिखैः कर्णो व्यधमत्कुञ्जरं पुनः ॥ ७-१३९-८५ (५०८६७)
हस्त्यङ्गान्यथ कर्णाय प्राहिणोत्पाण्डुनन्दनः ।
चक्राण्यश्वांस्तथा चान्यद्यद्यत्पश्यति भूतले ॥ ७-१३९-८६ (५०८६८)
तत्तदादाय चिक्षेप क्रुद्धः कर्णाय पाण्डवः ।
तदस्य सर्वं चिच्छेद क्षिप्तंक्षिप्तं शितैः शरैः ॥ ७-१३९-८७ (५०८६९)
भीमोऽपि मुष्टिमुद्यम्य वज्रगर्भं सुदारुणम् ।
हन्तुमैच्छत्सूतपुत्रं संस्मरन्नर्जुनं क्षणात् ॥ ७-१३९-८८ (५०८७०)
शक्तोऽपि नावधीत्कर्णं समर्थः पाण्डुनन्दनः ।
रक्षमाणः प्रतिज्ञां तां या कृता सव्यसाचिना ॥ ७-१३९-८९ (५०८७१)
तमेवं व्याकुलं भीमं भूयोभूयः शितैः शरैः ।
मूर्च्छयाभिपरीताङ्गमकरोत्सूतनन्दनः ॥ ७-१३९-९० (५०८७२)
व्यायुधं नावधीच्चैनं कर्णः कुन्त्या वचः स्मरन् ।
धनुषोग्रेण तं कर्णः सोऽभिद्रुत्य परामृशत् ॥ ७-१३९-९१ (५०८७३)
धनुषा स्पृष्टमात्रेण क्रुद्धः सर्प इव श्वसन् ।
आच्छिद्य स धनुस्तस्य कर्णं मूर्धन्यताडयत् ॥ ७-१३९-९२ (५०८७४)
ताडितो भीमसेनेन क्रोधादारक्तलोचनः ।

विहसन्निव राधेयो वाक्यमेतदुवाच ह ॥ ७-१३९-९३ (५०८७५)
पुनः पुनस्तूबरक मूढ औदरिकेति च ।
अकृतास्त्रक मा योत्सीर्बाल सङ्ग्रामकातर ॥ ७-१३९-९४ (५०८७६)
यत्र भोज्यं बहुविधं भक्ष्यं पेयं च पाण्डव ।
तत्र त्वं दुर्मते योग्यो न युद्धेषु कदाचन ॥ ७-१३९-९५ (५०८७७)
मूलपुष्पफलाहारो व्रतेषु नियमेषु च ।
उचितस्त्वं वने भीम न त्वं युद्धविशारदः ॥ ७-१३९-९६ (५०८७८)
क्व युद्धं क्व मुनित्वं च वनं गच्छ वृकोदर ।
न त्वं युद्धोचितस्तात वनवासरतिर्भवान् ॥ ७-१३९-९७ (५०८७९)
सूदान्भृत्यजनान्दासांस्त्वं गृहे त्वरयन्भृशम् ।
योग्यस्ताडयितुं क्रोधाद्भोजनार्थं वृकोदर ॥ ७-१३९-९८ (५०८८०)
मुनिर्भूत्वाऽथवा भीम फलान्यादत्स्व दुर्मते ।
वनाय व्रज कौन्तेय न त्वं युद्धविशारदः ॥ ७-१३९-९९ (५०८८१)
फलमूलाशने शक्तस्त्वं तथाऽतिथिपूजने ।
न त्वां शस्त्रसमुद्योगे योग्यं मन्ये वृकोदर ॥ ७-१३९-१०० (५०८८२)
ग्सञ्जय उवाच। ७-१३९-१०१क्ष् (४६१४)
एवं तं विरथं दृष्ट्वा स्मृत्वा कर्णोऽब्रवीद्वचः'॥ ७-१३९-१०१ (५०८८३)
कौमारे यानि वृत्तानि विप्रियाणि विशाम्पते ।
तानि सर्वाणि चाप्येव रूक्षाण्यश्रावयद्भृशम् ॥ ७-१३९-१०२ (५०८८४)
अथैनं तत्र संलीनमस्पृशद्धनुषा पुनः ।
प्रहसंश्च पुनर्वाक्यं भीममाह वृषस्तदा ॥ ७-१३९-१०३ (५०८८५)
योद्धव्यं मारिषान्यत्र न योद्धव्यं च मादृशैः ।
मादृशैर्युध्यमानानामेतच्चान्यच्च विद्यते ॥ ७-१३९-१०४ (५०८८६)
गच्छ वा यत्र तौ कृष्णौ तौ त्वां रक्षिष्यतो रणे ।
गृहं वा गच्छ कौन्तेय किं ते युद्धेन बालक ॥ ७-१३९-१०५ (५०८८७)
सञ्जय उवाच। ७-१३९-१०६क्ष् (४६१५)
कर्णस्य वचनं श्रुत्वा भीमसेनोऽतिदारुणम् ।
उवाच कर्णं प्रहसन्सर्वेषां शृण्वतां वचः ॥ ७-१३९-१०६ (५०८८८)
जितस्त्वमसकृद्दुष्ट कत्थसे किं वृथात्मना ।
जयाजयौ महेन्द्रस्य लोके दृष्टौ पुरातनैः ॥ ७-१३९-१०७ (५०८८९)
मल्लयुद्धं मया सार्धं कुरु दुष्कुलसम्भव ।
महाबलो महाभोगी कीचको निहतो यथा ।
तथा त्वां घातयिष्यामि पश्यत्सु सर्वराजसु ॥ ७-१३९-१०८ (५०८९०)
भीमस्य मतमाज्ञाय कर्णो बुद्धिमतां वरः ।
विरराम रणात्तस्मात्पश्यतां सर्वधन्विनाम् ॥ ७-१३९-१०९ (५०८९१)
एवं तं विरथं कृत्वा कर्णो राजन्व्यकत्थयत् ।

प्रसुखे वृष्णिसिंहस्य पार्थस्य च महात्मनः ॥ ७-१३९-११० (५०८९२)
तं ब्रुवाणं तु भीमः स काङ्क्षन्भीमपराक्रमः ।
न चाकार्षीन्मृतं स्मृत्वा ह्यर्जुनस्य महाबलम् ॥ ७-१३९-१११ (५०८९३)
तस्य कार्मुकमारुज्य बभञ्जाशुपराक्रमी ॥ ७-१३९-११२ (५०८९४)
ततो दृष्ट्वा महाराज वासुदेवो महाद्युतिः ।
अर्जुनार्जुन पश्येमं भीमं कर्णेन बाधितम् ॥ ७-१३९-११३ (५०८९५)
सञ्जय उवाच। ७-१३९-११४क्ष् (४६१६)
एवमुक्तस्तदा पार्थः केशवेन महात्मना ।
भीमसेनं तथाभूतं क्रोधसंरक्तलोचनः ।
अमर्षवशमापन्नो निर्दहन्निव चक्षुषा'॥ ७-१३९-११४ (५०८९६)
ततो राजञ्शिलाधौताञ्शराञ्शाखामृगध्वजः ।
प्राहिणोत्सूतपुत्राय केशवेन प्रचोदितः ॥ ७-१३९-११५ (५०८९७)
ततः पार्थभुजोत्सृष्टाः शराः कनकभूषणाः ।
गाण्डीवप्रभवाः कर्णं हंसाः क्रौञ्चमिवाविशन् ॥ ७-१३९-११६ (५०८९८)
स भुजङ्गैरिवाविष्टैर्गाण्डीवप्रेषितैः शरैः ।
भीमसेनादपासेधत्सूतपुत्रं धनञ्जयः ॥ ७-१३९-११७ (५०८९९)
स च्छिन्नधन्वा भीमेन धनञ्जयशराहतः ।
कर्णो भीमादपायासीद्रथेन महता द्रुतम् ॥ ७-१३९-११८ (५०९००)
भीमोऽपि सात्यकेर्वाहं समारुह्य नरर्षभः ।
अन्वयाद्भ्रातरं सङ्ख्ये पाण्डवं सव्यसाचिनम् ॥ ७-१३९-११९ (५०९०१)
ततः कर्णं समुद्दिश्य त्वरमाणो धनञ्चयः ।
नाराचं क्रोधताम्राक्षः प्रैषीन्मृत्युमिवान्तकः ॥ ७-१३९-१२० (५०९०२)
स गरुत्मानिवाकशे प्रार्थयन्भुजगोत्तमम् ।
नाराचोऽभ्यपतत्कर्णं तूर्णं गाण्डीवचोदितः ॥ ७-१३९-१२१ (५०९०३)
तमन्तरिक्षे नाराचं द्रौणिश्चिच्छेद पत्रिणा ।
धनञ्जयभयात्कर्णमुज्जिहीर्षन्महारथः ॥ ७-१३९-१२२ (५०९०४)
ततो द्रौणिं चतुःषष्ट्या विव्याध कुपितोऽर्जुनः ।
शिलीमुखैर्महाराज मागास्तिष्ठेति चाब्रवीत् ॥ ७-१३९-१२३ (५०९०५)
स तु मत्तगजाकीर्णमनीकं रथसङ्कुलम् ।
तूर्णमभ्याविशद्द्रौणिर्धनञ्जयशरार्दितः ॥ ७-१३९-१२४ (५०९०६)
ततः सुवर्णपृष्ठानां चापानां कूजतां रणे ।
शब्दं गाण्डीवघोषेण कौन्तेयोऽभ्यभवद्बली ॥ ७-१३९-१२५ (५०९०७)
धनञ्जयस्तथाऽऽयान्तं पृष्ठतो द्रौणिमभ्यगात् ।
नातिदीर्घमिवाध्वानं शरैः सन्त्रासयन्बलम् ॥ ७-१३९-१२६ (५०९०८)
विदार्य देहान्नाराचैर्नरवारणवाजिनाम् ।
कङ्कबर्हिणवासोभिर्बलं व्यधमदर्जुनः ॥ ७-१३९-१२७ (५०९०९)

तद्बलं भरतश्रेष्ठ सवाजिद्विपमानवम् ।
पाकशासनिरायत्तः पार्थः स निजघान ह ॥ ॥ ७-१३९-१२८ (५०९१०)

इति श्रीमन्महाभारते द्रोणपर्वणि जयद्रथवधपर्वणि
चतुर्दशदिवसयुद्धे एकोनचत्वारिंशदधिकशततमोऽध्यायः
॥ १३९ ॥
Mahabharata - Drona Parva - Chapter Footnotes

५-१३९-४६ उपारोहत्सन्निकर्षमगात् ॥
५-१३९-४७ वायुभूतानि वातोद्भूतान्यतिवेगवन्ति वा ॥
५-१३९-७४ वैहायसमाकाशम् ॥
५-१३९-७५ लयमङ्गसङ्कोचम् ॥
५-१३९-८७ तद्रथादिसाधनम् ॥
५-१३९-८८ वज्रगर्भमन्तर्विहिताङ्गुष्ठम् ॥
५-१३९-८९ समर्थः समीचीनार्थो धर्मापेक्षीति यावत् ॥
५-१३९-९४ तूबरकः पुंश्चिह्नरहितः षण्ड इतियावत्
। तूबरोऽश्मश्रुपुरुषे इत्युपक्रम्य पुरुषव्यञ्जनत्यक्तो इति
मेदिनी। औदरिको बह्वाशी ॥
५-१३९-९६ व्रतेषु नियमेषु आगन्तुकेषु ॥
५-१३९-१०३ संलीनं सङ्कुचिताङ्गम् ॥
५-१३९-११० व्यकत्थयत् भर्त्सितवान् ॥
५-१३९-१३९ एकोनचत्वारिंशदधिकशततमोऽध्यायः ॥

---

द्रोनपर्व-अध्यय१४०
॥ श्रीः ॥
७.१४०. अध्यायः १४०

Mahabharata - Drona Parva - Chapter Topics
सात्यकिना अलम्बुसदधः ॥ १ ॥

Mahabharata - Drona Parva - Chapter Text

७-१४०-० (५०९११)
धृतराष्ट्र उवाच। ७-१४०-०क्ष् (४६१७)
ग्दातव्यमद्य मन्येऽहं पाण्डवानां स्वकं पुनः ।
न विग्रहो हि बलिना श्रेयसे स्याद्यथातथा ॥ ७-१४०-१ (५०९१२)

पादयोः प्रणतेनापि भुक्त्वाऽप्युच्छिष्टमप्यरेः ।
अतोऽन्यद्वापि कृत्वैव जीव्यं लोके नरेण वै ॥ ७-१४०-२ (५०९१३)
जीवतैव परो लोकः साध्यते चैव सर्वथा ।
अजीवतस्तथैवासीन्न सुखं न परा गतिः ॥ ७-१४०-३ (५०९१४)
विनाशे सर्वथोत्पन्ने न बालो बुध्यते क्रियाम् ।
मिथ्याभिमानदग्धो हि न बुद्ध्येत कृताकृते'॥ ७-१४०-४ (५०९१५)
अहन्यहनि मे दीप्तं यशः पतति सञ्जय ।
हता मे बहवो योधा मन्ये कालस्य पर्ययम् ॥ ७-१४०-५ (५०९१६)
धनञ्जयः सुसङ्क्रुद्धः प्रविष्टो मामकं बलम् ।
रक्षितं द्रौणिकर्णाभ्यामप्रवेश्यं सुरैरपि ॥ ७-१४०-६ (५०९१७)
ताभ्यामूर्जितवीर्याभ्यामाप्यायितपराक्रमः ।
सहितः कृष्णभीमाभ्यां शिनीनामृषभेण च ॥ ७-१४०-७ (५०९१८)
तदाप्रभृति मां शोको दहत्यग्निरिवाशयम् ।
ग्रस्तानिव प्रपश्यामि भूमिपालान्ससैन्धवान् ॥ ७-१४०-८ (५०९१९)
अप्रियं सुमहत्कृत्वा सिन्धुराजः किरीटिनः ।
ग्क्रुद्धस्य देवराजस्य शक्रस्येव महाद्युतेः'।
चक्षुर्विषयमापन्नः कथं जीवितमाप्नुयात् ॥ ७-१४०-९ (५०९२०)
अनुमानाच्च पश्यामि नास्ति सञ्जय सैन्धवः ।
युद्धं तु तद्यथावृत्तं तन्ममाचक्ष्व तत्त्वतः ॥ ७-१४०-१० (५०९२१)
यच्च विक्षोभ्य महतीं सेनामालोड्य चासकृत् ।
एकः प्रविष्टः सङ्क्रुद्धो नलिनीमिव कुञ्जरः ॥ ७-१४०-११ (५०९२२)
तस्य मे वृष्णिवीरस्य ब्रूहि युद्धं यथातथम् ।
धनञ्जयार्थे यत्तस्य कुशलो ह्यसि सञ्जय ॥ ७-१४०-१२ (५०९२३)
सञ्जय उवाच। ७-१४०-१३क्ष् (४६१८)
तथा तु वैकर्त नपीडितं तं
भीमं प्रयान्तं पुरुषप्रवीरम् ।
समीक्ष्य राजन्नरवीरमध्ये
शिनिप्रवीरोऽनुययौ रथेन ॥ ७-१४०-१३ (५०९२४)
नदन्यथा वज्रधरस्तपान्ते
ज्वलन्यथा जलदान्ते च सूर्यः ।
निघ्नन्नमित्रान्धनुषा दृढेन
स कम्पयंस्तव पुत्रस्य सेनाम् ॥ ७-१४०-१४ (५०९२५)
तं यान्तमश्वै रजतप्रकाशै--
रायोधने वीरतरं नदन्तम् ।
नाशक्नुवन्वारयितुं त्वदीयाः
सर्वे रथा भारत माधवाग्र्यम् ॥ ७-१४०-१५ (५०९२६)

अमर्षपूर्णस्त्वनिवृत्तयोधी
शरासनी काञ्चनवर्मधारी ।
अलम्बुसः सात्यकिं माधवाग्र्य--
मवारयद्राजवरोऽभिपत्य ॥ ७-१४०-१६ (५०९२७)
तयोरभूद्भारत सम्प्रहारो
यथाविधो नैव बभूव कश्चित् ।
प्रेक्षन्त एवाहवशोभिनौ तौ
योधास्त्वदीयाश्च परे च सर्वे ॥ ७-१४०-१७ (५०९२८)
आविध्यदेनं दशभिः पृषत्कै--
रलम्बुसो राजवरः प्रसह्य ।
अनागतानेव तु तान्पृषत्कां--
श्चिच्छेद बाणैः शिनिपुङ्गवोऽपि ॥ ७-१४०-१८ (५०९२९)
पुनः स बाणैस्त्रिभिरग्निकल्पै--
राकर्णपूर्णैर्निशितैः सपुङ्खैः ।
विव्याध देहावरणं विदार्य
ते सात्यकेराविविशुः शरीरम् ॥ ७-१४०-१९ (५०९३०)
तैः कायमस्याग्न्यनिलप्रभावै--
र्विदार्य बाणैर्निशितैर्ज्वलद्भिः ।
आजघ्निवांस्तान्रजतप्रकाशा--
नश्वांश्चतुर्भिश्चतुरः प्रसह्य ॥ ७-१४०-२० (५०९३१)
तथा तु तेनाभिहतस्तरस्वी
नप्ता शिनेश्चक्रधरप्रभावः ।
अलम्बुसस्योत्तमवेगवद्भि--
रश्वांशाचतुर्भिर्निजघान बाणैः ॥ ७-१४०-२१ (५०९३२)
अथास्य सूतस्य शिरो निकृत्य
भल्लेन कालानलसन्निभेन ।
सकुण्डलं पूर्मशशिप्रकाशं
भ्राजिष्णु वक्त्रं निचकर्त देहात् ॥ ७-१४०-२२ (५०९३३)
निहत्य तं पार्थिवपुत्रपौत्रं
सङ्ख्ये यदूनामृषभः प्रमाथी ।
ततोऽन्वयादर्जुनमेव वीरः
सैन्यानि राजंस्तव सन्निवार्य ॥ ७-१४०-२३ (५०९३४)
अन्वागतं वृष्णिवीरं समीक्ष्य
तथारिमध्ये परिवर्तमानम् ।
घ्नन्तं कुरूणामिषुभिर्बलानि
पुनःपुनर्वायुमिवाभ्रपूगान् ॥ ७-१४०-२४ (५०९३५)

ततोऽवहन्सैन्धवाः साधुदान्ता
गोक्षीरकुन्देन्दुहिमप्रकाशाः ।
सुवर्णजालावतताः सदश्वा
यतोयतः कामयते नृसिंहः ॥ ७-१४०-२५ (५०९३६)
अथात्मजास्ते सहिताऽभिपेतु--
रन्ये च योधास्त्वरितास्त्वदीयाः ।
कृत्वा मुखं भारतयोधमुख्यं
दुःशासनं त्वत्सुतमाजमीढ ॥ ७-१४०-२६ (५०९३७)
ते सर्वतः सम्परिवार्य सङ्ख्ये
शैनेयमाजघ्नुरनीकसाहाः ।
स चापि तान्प्रवरः सात्वतानां
न्यवारयद्बाणजालेन वीरः ॥ ७-१४०-२७ (५०९३८)
निवार्य तांस्तूर्णममित्रघाती
नप्ता शिनेः पत्रिभिरग्निकल्पैः ।
दुःशासनस्याभिजघान वाहा--
ञ्जवीयसस्तन्मनसोऽपि बाणैः ॥ ७-१४०-२८ (५०९३९)
ततोऽर्जुनो हर्षमवाप सङ्ख्ये
कृष्णश्च दृष्ट्वा पुरुषप्रवीरम् ॥ ॥ ७-१४०-२९ (५०९४०)

इति श्रीमन्महाभारते द्रोणपर्वणि जयद्रथवधपर्वणि
चतुर्दशदिवसयुद्धे चत्वारिंशदधिकशततमोऽध्यायः ॥१४० ॥
Mahabharata - Drona Parva - Chapter Footnotes

५-१४०-१७ प्रेक्षन्तः प्रेक्षकाः ।बभूवेत्येतत् बहुवचनतया
परिणतमनुषज्यते ॥
५-१४०-१८ प्रसह्य अनादृत्य ॥
५-१४०-१४० चत्वारिंशदधिकशततमोऽध्यायः ॥

---

द्रोनपर्व-अध्यय१४१
॥ श्रीः ॥
७.१४१. अध्यायः १४१

Mahabharata - Drona Parva - Chapter Topics
सात्यकेरर्जुनदर्शनं भूरिश्रवसा समागमश्च ॥१ ॥

Mahabharata - Drona Parva - Chapter Text

७-१४१-० (५०९४१)
सञ्जय उवाच। ७-१४१-०क्ष् (४६१९)
तमुद्यतं महाबाहुं दुःशासनरथं प्रति ।
त्वरितं त्वरणीयेषु धनञ्जयजयैषिणम् ॥ ७-१४१-१ (५०९४२)
त्रिगर्तानां महेष्वासाः सुवर्णविकृतध्वजाः ।
सेनासमुद्रमाविष्टमनन्तं पर्यवारयन् ॥ ७-१४१-२ (५०९४३)
अथैनं रथवंशेन सर्वतः सन्निवार्य ते ।
अवाकिरञ्छरव्रातैः क्रुद्धाः परमधन्विनः ॥ ७-१४१-३ (५०९४४)
अजयद्राजपुत्रांस्तान्भ्राजमानान्महारणे ।
एकः पञ्चाशतं शत्रून्सात्यकिः सत्यविक्रमः ॥ ७-१४१-४ (५०९४५)
सम्प्राप्य भारतीमध्यं तलघोषसमाकुलम् ।
असिशक्तिगदापूर्णमप्लुवं सागरं यथा ॥ ७-१४१-५ (५०९४६)
ग्अथैनमनुवृत्तास्तु त्रिगर्ताः सहिताः पुनः ।
तीव्रेण रथवंशेन महता पर्यवारयन् ।
विकर्षन्तोऽतिमात्राणि चापानि भरतर्षभ'॥ ७-१४१-६ (५०९४७)
तत्राद्भुतमपश्याम शैनेयचरितं रणे ।
प्रतीच्यां दिशि तं दृष्ट्वा प्राच्यां पश्यामि लाघवात् ॥ ७-१४१-७ (५०९४८)
उदीचीं दक्षिणां प्राचीं प्रतीचीं विदिशस्तथा ।
पुनर्मध्यगतो वीर आहवे युद्धदुर्मदः ॥ ७-१४१-८ (५०९४९)
एकः पर्यचरन्रङ्गे बहुधा स महाबलः ।
नृत्यन्निवाचरच्छूरो यथा रथशतं तथा ॥ ७-१४१-९ (५०९५०)
तद्दृष्ट्वा चरितं तस्य सिंहविक्रान्तगामिनः ।
त्रिगर्ताः सन्न्यवर्तन्त सन्तप्ताः स्वजनं प्रति ॥ ७-१४१-१० (५०९५१)
तमन्ये शूरसेनानां शूराः सङ्ख्ये न्यवारयन् ।
नियच्छन्तः शरव्रातैर्मत्तं द्विपमिवाङ्कुशैः ॥ ७-१४१-११ (५०९५२)
तैर्व्यवाहरदार्यात्मा मुहूर्तादेव सात्यकिः ।
ततः कलिङ्गैर्युयुधे सोऽचिन्त्यबलविक्रमः ॥ ७-१४१-१२ (५०९५३)
तां च सेनामतिक्रम्य कलिङ्गानां दुरत्ययाम् ।
अथ पार्थं महाबाहुर्धनञ्जयमुपासदत् ॥ ७-१४१-१३ (५०९५४)
तरन्निव जले श्रान्तो यथा स्थलमुपेयिवान् ।
तं दृष्ट्वा पुरुषव्याघ्रं युयुधानः समाश्वसत् ॥ ७-१४१-१४ (५०९५५)
तमायान्तमभिप्रेक्ष्य केशवः पार्थमब्रवीत् ।
असावायाति शैनेयस्तव पार्थ पदानुगः ॥ ७-१४१-१५ (५०९५६)
एष शिष्यः सखा चैव तव सत्यपराक्रमः ।
सर्वान्योधांस्तृणीकृत्य विजिग्ये पुरुषर्षभः ॥ ७-१४१-१६ (५०९५७)

एष कौरवयोधानां कृत्वा घोरमुपद्रवम् ।
तव प्राणैः प्रियतमः किरीटिन्नेति सात्यकिः ॥ ७-१४१-१७ (५०९५८)
एष द्रोणं तथा भोजं कृतवर्माणमेव च ।
कदर्थीकृत्य विशिखैः फल्गुनाभ्येति सात्यकिः ॥ ७-१४१-१८ (५०९५९)
धर्मराजप्रियान्वेषी हत्वा योधान्वरान्वरान् ।
शूरश्चैव कृतास्त्रश्च फल्गुनाभ्येति सात्यकिः ॥ ७-१४१-१९ (५०९६०)
कृत्वा सुदुष्करं कर्म सैन्यमध्ये महाबलः ।
तव दर्शनमन्विच्छन्पाण्डवाभ्येति सात्यकिः ॥ ७-१४१-२० (५०९६१)
बहूनेकरथेनाजौ योधयित्वा महारथान् ।
आचार्यप्रमुखान्पार्थ प्रयात्येष स सात्यकिः ॥ ७-१४१-२१ (५०९६२)
स्वबाहुबलमाश्रित्य विदार्य च वरूथिनीम् ।
प्रेषितो धर्मराजेन पार्थैषोऽभ्येति सात्यकिः ॥ ७-१४१-२२ (५०९६३)
प्रियः शिष्यश्च ते पार्थ त्वया तुल्यपराक्रमः ।
विद्राव्यं महतीं सेनामेष ह्यायाति सात्यकिः ॥ ७-१४१-२३ (५०९६४)
यस्य नास्ति समो योधः कौरवेषु कथञ्चन ।
सोऽयमायाति कौन्तेय सात्यकिर्युद्धदुर्मदः ॥ ७-१४१-२४ (५०९६५)
कुरुसैन्याद्विमुक्तो वै सिंहो मध्याद्गवामिव ।
निहत्य बहुलाः सेनाः पार्थैषोऽब्येति सात्यकिः ॥ ७-१४१-२५ (५०९६६)
एष राजसहस्राणां वक्त्रैः पङ्कजसन्निभैः ।
आस्तीर्य वसुधां पार्थ क्षिप्रमायाति सात्यकिः ॥ ७-१४१-२६ (५०९६७)
एष दुर्योधनं जित्वा भ्रातृभिः सहितं रणे ।
निहत्य जलसन्धं च क्षिप्रमायाति सात्यकिः ॥ ७-१४१-२७ (५०९६८)
रुधिरौघवतीं कृत्वा नदीं शोणितकर्दमाम् ।
तृणवद्व्यस्य कौरव्यानेष ह्यायाति सात्यकिः ॥ ७-१४१-२८ (५०९६९)
सञ्जय उवाच। ७-१४१-२९क्ष् (४६२०)
ततः प्रहृष्टः कौन्तेयः केशवं वाक्यमब्रवीत् ।
न मे प्रियं महाबाहो यन्मामभ्येति सात्यकिः ॥ ७-१४१-२९ (५०९७०)
न हि जानामि वृत्तान्तं धर्मराजस्य केशव ।
सात्वतेन विहीनः स यदि जीवति वा न वा ॥ ७-१४१-३० (५०९७१)
एतेन हि महाबाहो रक्षितव्यः स पार्थिवः ।
तमेष कथमुत्सृज्य मम कृष्ण पदानुगः ॥ ७-१४१-३१ (५०९७२)
राजा द्रोणाय चोत्सृष्टः सैन्धवश्चानिपातितः ।
प्रत्युद्याति च शैनेयमेष भूरिश्रवा रणे ॥ ७-१४१-३२ (५०९७३)
सोऽयं गुरुतरो भारः सैन्धवार्थे समाहितः ।
ज्ञातव्यश्च हि मे राजा रक्षितव्यश्च सात्यकिः ॥ ७-१४१-३३ (५०९७४)
जयद्रथश्च हन्तव्यो लम्बते च दिवाकरः ।

श्रान्तश्चैष महाबाहुरल्पप्राणश्च साम्प्रतम् ॥ ७-१४१-३४ (५०९७५)
परिश्रान्ता हयाश्चास्य हययन्ता च माधव ।
न च भूरिश्रवाः श्रान्तः ससहायश्च केशव ॥ ७-१४१-३५ (५०९७६)
अपीदानीं भवेदस्य क्षेममस्मिन्समागमे ।
कच्चिन्न सागरं तीर्त्वा सात्यकिः सत्यविक्रमः ।
गोष्पदं प्राप्य सीदेत महौजाः शिनिपुङ्गवः ॥ ७-१४१-३६ (५०९७७)
अपि कौरवमुख्येन कृतास्त्रेण महात्मना ।
समेत्य भूरिश्रवसा स्वस्तिमान्सात्यकिर्भवेत् ॥ ७-१४१-३७ (५०९७८)
व्यतिक्रममिमं मन्ये धर्मराजस्य केशव ।
आचार्याद्भयमुत्सृज्य यः प्रैषयत सात्यकिम् ॥ ७-१४१-३८ (५०९७९)
ग्रहणं धर्मराजस्य खगः श्येन इवामिषम् ।
नित्यमाशंसते द्रोणः कच्चित्स्यात्कुशली नृपः ॥ ॥ ७-१४१-३९ (५०९८०)

इति श्रीमन्महाभारते द्रोणपर्वणि जयद्रथवधपर्वणि
चतुर्दशदिवसयुद्धे एकचत्वारिंशदधिकशततमोऽध्यायः ॥ १४१ ॥
Mahabharata - Drona Parva - Chapter Footnotes

५-१४१-१ तुरणीयेषु कृत्येषु ॥
५-१४१-१४१ एकचत्वारिंशदधिकशततमोऽध्यायः ॥

---

द्रोनपर्व-अध्यय१४२
॥ श्रीः ॥
७.१४२. अध्यायः १४२

Mahabharata - Drona Parva - Chapter Topics
सात्यकिभूरिश्रवसोर्युद्धम् ॥ १ ॥
सात्यकिशिरच्छेदायोन्नमितस्य स्वङ्गभृतो भूरिश्रवोभुजस्यार्जुनेन
सञ्छेदः ॥ २ ॥

Mahabharata - Drona Parva - Chapter Text

७-१४२-० (५०९८१)
सञ्जय उवाच। ७-१४२-०क्ष् (४६२१)
तमापतन्तं सम्प्रेक्ष्य सात्वतं युद्धदुर्मदम् ।
क्रोधाद्भूरिश्रवा राजन्सहसा समुपाद्रवत् ॥ ७-१४२-१ (५०९८२)
तमब्रवीन्महाराज कौरव्यः शिनिपुङ्गवम् ।

अद्य प्राप्तोऽपि दिष्ट्या मे चक्षुर्विषयमित्युत ॥ ७-१४२-२ (५०९८३)
चिराभिलषितं काममहं प्राप्स्यामि संयुगे ।
न हि मे मोक्ष्यसे जीवन्यदि नोत्सृजसे रणम् ॥ ७-१४२-३ (५०९८४)
अद्य त्वां समरे हत्वा नित्यं शूराभिमानिनम् ।
नन्दयिष्यामि दाशार्हं कुरुराजं सुयोधनम् ॥ ७-१४२-४ (५०९८५)
अद्य मद्बाणनिर्दग्धं पतितं धरणीतले ।
द्रक्ष्यतस्त्वां रणे वीरौ सहितौ केशवार्जुनौ ॥ ७-१४२-५ (५०९८६)
अद्य धर्मसुतो राजा श्रुत्वा त्वां निहतं मया ।
सव्रीडो भविता सद्यो येनासीह प्रवेशितः ॥ ७-१४२-६ (५०९८७)
अद्य मे विक्रमं पार्थो विज्ञास्यति धनञ्जयः ।
त्वयि भूमौ विनिहते शयाने रुधिरोक्षिते ॥ ७-१४२-७ (५०९८८)
चिराभिलषितो ह्येष त्वया सह समागमः ।
पुरा देवासुरे युद्धे शक्रस्य बलिना यथा ॥ ७-१४२-८ (५०९८९)
अद्य युद्धं महाघोरं तव दास्यामि सात्वत ।
ततो ज्ञास्यसि तत्त्वेन मद्वीर्यबलपौरुषम् ॥ ७-१४२-९ (५०९९०)
अद्य संयमनीं याता मया त्वं निहतो रणे ।
यथा रामानुजेनाजौ रावणिर्लक्ष्मणेन ह ॥ ७-१४२-१० (५०९९१)
अद्य कृष्णश्च पार्थश्च धर्मराजश्च माधव ।
हते त्वयि निरुत्साहारणं त्यक्ष्यन्त्यसंशयम् ॥ ७-१४२-११ (५०९९२)
अद्य तेऽपचितिं कृत्वा शितैर्माधव सायकैः ।
तत्स्त्रियो नन्दयिष्यामि ये त्वया निहता रणे ॥ ७-१४२-१२ (५०९९३)
मच्चक्षुर्विषये प्राप्तो न त्वं माधव मोक्ष्यसे ।
सिंहस्य विषयं प्राप्तो यथा क्षुद्रमृगस्तथा ॥ ७-१४२-१३ (५०९९४)
सञ्जय उवाच। ७-१४२-१४क्ष् (४६२२)
युयुधानस्तु तं राजन्प्रत्युवाच हसन्निव ।
कौरवेय न सन्त्रासो विद्यते मम संयुगे ॥ ७-१४२-१४ (५०९९५)
नाहं भीषयितुं शक्यो वाङ्मात्रेण तु केवलम् ।
स मां निहन्यात्सङ्ग्रामे यो मां कुर्यान्निरायुधम् ॥ ७-१४२-१५ (५०९९६)
समास्तु शाश्वतीर्हन्याद्यो मां हन्याद्धि संयुगे ।
किं वृथोक्तेन बहुना कर्मणा तत्समाचर ॥ ७-१४२-१६ (५०९९७)
शारदस्येव मेघस्य गर्जितं निष्फलं हि ते ।
श्रुत्वा त्वद्गर्जितं वीर हास्यं हि मम जायते ॥ ७-१४२-१७ (५०९९८)
चिरकालेप्सितं लोके युद्धमद्यास्तु कौरव ।
त्वरते मे मतिस्तात तव युद्धाभिकाङ्क्षिणी ।
नाहत्वाऽहं निवर्तिष्ये त्वामद्य पुरुषाधम ॥ ७-१४२-१८ (५०९९९)
सञ्जय उवाच। ७-१४२-१९क्ष् (४६२३)

अन्योन्यं तौ तथा वाग्भिस्तक्षन्तौ नरपुङ्गवौ ।
जिघांसू परमक्रुद्धभिजघ्नतुराहवे ॥ ७-१४२-१९ (५१०००)
समेतौ तौ महेष्वासौ शुष्मिणौ स्पर्धिनौ रणे ।
द्विरदाविव सङ्क्रुद्धौ वासितार्थे मदोत्कटौ ॥ ७-१४२-२० (५१००१)
भूरिश्रवाः सात्यकिश्च ववर्षतुररिन्दमौ ।
शरवर्षाणि घोराणि मेघाविव परस्परम् ॥ ७-१४२-२१ (५१००२)
सौमदत्तिस्तु शैनेयं प्रच्छाद्येषुभिराशुगैः ।
जिघांसुर्भरतश्रेष्ठ विव्याध निशितैः शरैः ॥ ७-१४२-२२ (५१००३)
दशभिः सात्यकिं विद्धवा सौमदत्तिरथापरान् ।
मुमोच निशितान्बाणाञ्जिघांसुः शिनिपुङ्गवं ॥ ७-१४२-२३ (५१००४)
तानस्य विशिखांस्तीक्ष्णानन्तरिक्षे विशाम्पते ।
अप्राप्तानस्त्रमायाभिरग्रसत्सात्यकिः प्रभो ॥ ७-१४२-२४ (५१००५)
तौ पृथक्षस्त्रवर्षाभ्यामवर्षेतां परस्परम् ।
उत्तमाभिजनौ वीरौ कुरुवृष्मियशस्करौ ॥ ७-१४२-२५ (५१००६)
तौ नखैरिव शार्दूलौ दन्तैरिव महाद्विपौ ।
रथशक्तिभिरन्योन्यं विशिखैश्चाप्यकृन्तताम् ॥ ७-१४२-२६ (५१००७)
निर्भिदन्तौ हि गात्राणि विक्षरन्तौ च शोणितम् ।
व्यष्टम्भयेतामन्योन्यं प्राणद्यूताभिदेविनौ ॥ ७-१४२-२७ (५१००८)
एवमुत्तमकर्माणौ कुरुवृष्णियशस्करौ ।
परस्परमयुध्येतां वारणाविव यूथपौ ॥ ७-१४२-२८ (५१००९)
तावदीर्घेण कालेन ब्रह्मलोकपुरस्कृतौ ।
यियासन्तौ परं स्थानमन्योन्यं सञ्जगर्जतुः ॥ ७-१४२-२९ (५१०१०)
सात्यकिः सौमदत्तिश्च शरवृष्ट्या परस्परम् ।
हृष्टवद्धार्तराष्ट्राणां पश्यतामभ्यवर्षताम् ॥ ७-१४२-३० (५१०११)
सम्प्रैक्षन्त जनास्तौ तु युध्यमानौ युधाम्पती ।
यूथपौ वासिताहेतोः प्रयुद्धाविव कुञ्जरौ ॥ ७-१४२-३१ (५१०१२)
ग्भूयोभूयः शरै राजंस्तक्षन्तौ क्रोधमूर्च्छितौ ।
अयुध्येतां महारङ्गे वने केसरिणाविव ॥ ७-१४२-३२ (५१०१३)
मर्मज्ञाविव सङ्क्रुद्धौ जिघांसन्तौ जगर्जतुः ।
विमर्दन्तावथान्योन्यं बलवज्रधराविव ॥ ७-१४२-३३ (५१०१४)
अथान्योन्यं पताकाश्च रथोपकरणानि च ।
सञ्चिच्छिदतुरायान्तौ बाणैः सन्नतपर्वभिः ॥ ७-१४२-३४ (५१०१५)
पुनश्च शरवर्षाभ्यामन्योन्यमभिवर्षताम् ।
उभौ तु जघ्नतुस्तूर्णमितरेतरसारथी'॥ ७-१४२-३५ (५१०१६)
अन्योन्यस्य हयान्हत्वा धनुषी विनिकृत्य च ।
विरथावसियुद्धाय समेयातां महारणे ॥ ७-१४२-३६ (५१०१७)

आर्षभे चर्मणी चित्रे प्रगृह्य विपुले शुभे ।
विकोशौ चाप्यसी कृत्वा समरे तौ विचेरतुः ॥ ७-१४२-३७ (५१०१८)
चरन्तौ विविधान्मार्गान्मण्डलानि च भागशः ।
मुहुराजघ्नतुः क्रुद्धावन्योन्यमरिमर्दनौ ।
सखड्गौ चित्रवर्माणौ सनिष्काङ्गदभूषणौ ॥ ७-१४२-३८ (५१०१९)
भ्रान्तमुद्भ्रान्तमाविद्धमाप्लुतं विप्लुतं सृतम् ।
सम्पातं समुदीर्णं च दर्शयन्तौ यशस्विनौ ॥ ७-१४२-३९ (५१०२०)
असिभ्यां सम्प्रजह्राते परस्परमरिन्दमौ ।
उभौ छिद्रैषिणौ वीरावुभौ चित्रं ववल्गतुः ॥ ७-१४२-४० (५१०२१)
दर्शयन्तावुभौ शिक्षां लाघवं सौष्ठवं तथा ।
रणे रणकृतां श्रेष्ठावन्योन्यं पर्यकर्षताम् ॥ ७-१४२-४१ (५१०२२)
मुहूर्तमिव राजेन्द्र समाहत्य परस्परम् ।
पश्यतां सर्वसैन्यानां वीरावाश्वसतां पुनः ॥ ७-१४२-४२ (५१०२३)
असिभ्यां चर्मणी चित्रे शतचन्द्रे नराधिप ।
निकृत्य पुरुषव्याघ्रौ बाहुयुद्धं प्रचक्रतुः ॥ ७-१४२-४३ (५१०२४)
व्यूढोरस्कौ दीर्घभुजौ नियुद्धकुशलावुभौ ।
बाहुभिः समसज्जेतामायसैः परिघैरिव ॥ ७-१४२-४४ (५१०२५)
तयो राजन्भुजाघातनिग्रहप्रग्रहास्तथा ।
शिक्षाबलसमुद्भूताः सर्वयोधप्रहर्षणाः ॥ ७-१४२-४५ (५१०२६)
तयोर्नृवरयो राजन्समरे युध्यमानयोः ।
भीमोऽभवन्महाशब्दो वज्रपर्वतयोरिव ॥ ७-१४२-४६ (५१०२७)
द्विपाविव विषाणाग्रैः शृङ्गैरिव महर्षभौ ।
भुजयोक्त्रावबन्धैश्च शिरोभ्यां चावघातनैः ॥ ७-१४२-४७ (५१०२८)
पादावकर्षसन्धानैस्तोमराङ्कुशलासनैः ।
पादोदरविबन्धैश्च भूमावुद्भ्रमणैस्तथा ॥ ७-१४२-४८ (५१०२९)
गतप्रत्यागताक्षेपैः पातनोत्थानसम्पुतैः ।
युयुधाते महात्मानौ कुरुसात्वतपुङ्गवौ ॥ ७-१४२-४९ (५१०३०)
द्वात्रिंशत्कारणानि स्युर्यानि युद्धानि भारत ।
तान्यदर्शयतां तत्र युध्यमानौ महाबलौ ॥ ७-१४२-५० (५१०३१)
क्षीणायुधे सात्वते युध्यमाने
ततोऽब्रवीदर्जुनं वासुदेवः ।
पश्यस्वैनं विरथं युध्यमानं
रणे वरं सर्वधनुर्धराणाम् ॥ ७-१४२-५१ (५१०३२)
गसिन्धुराजवधे सक्तं पार्थं कृष्णोऽब्रवीत्पुनः ।
सीदन्तं सात्यकिं पश्य पार्थैनं परिरक्ष च'॥ ७-१४२-५२ (५१०३३)
प्रविष्टो भारतीं भित्त्वा तव पाण्डव पृष्ठतः ।

योधितश्च महावीर्यैः सर्वैर्भारत भारतैः ॥ ७-१४२-५३ (५१०३४)
धार्तराष्ट्राश्च ये मुख्या ये च मुख्या महारथाः ।
निहता वृष्णिवीरेण शतशोऽथ सहस्रशः ॥ ७-१४२-५४ (५१०३५)
परिश्रान्तं युधां श्रेष्ठं सम्प्राप्तो भूरिदक्षिणः ।
युद्धाकाङ्क्षी समायान्तं नैतत्सममिवार्जुन ॥ ७-१४२-५५ (५१०३६)
ततो भूरिश्रवाः क्रुद्धः सात्यकिं युद्धदुर्मदः ।
उद्यम्याभ्याहनद्राजन्मत्तो मत्तमिव द्विपम् ॥ ७-१४२-५६ (५१०३७)
ततो जलदनिर्घोषः समीपे नृपसत्तम ।
हाहाकारो महानासीत्सैन्यानां भरतर्षभ ।
यदुद्यम्य महाबाहुः सात्यकिं न्यहनद्भुवि ॥ ७-१४२-५७ (५१०३८)
रथस्थयोर्द्वयोर्युद्धे क्रुद्धयोर्योधमुख्ययोः ।
केशवार्युनयो राजन्समरे प्रेक्षमाणयोः ॥ ७-१४२-५८ (५१०३९)
अथ कृष्णो महाबाहुरर्जुनं प्रत्यभाषत ।
पश्य वृष्ण्यन्धकव्याघ्रं सौमदत्तिवशं गतम् ॥ ७-१४२-५९ (५१०४०)
परिश्रान्तं गतं भूमौ कृत्वा कर्म सुदुष्करम् ।
तवान्तेवासिनं वीरं पालयार्जुन सात्यकिम् ॥ ७-१४२-६० (५१०४१)
न वशं यज्ञशीलस्य गच्छेदेष वरोऽर्जुन ।
त्वत्कृते पुरुषव्याघ्र तदाऽऽशु क्रियतां विभो ॥ ७-१४२-६१ (५१०४२)
सञ्जय उवाच। ७-१४२-६२क्ष् (४६२४)
स सिंह इव मातङ्गं विकर्षन्भूरिदक्षिणः ।
व्यरोचत कुरुश्रेष्ठः सात्वतप्रवरं युधि ॥ ७-१४२-६२ (५१०४३)
अथाब्रवीद्धृष्टमना वासुदेवं धनञ्जयः ।
पश्य वृष्णिप्रवीरेण क्रीडन्तं कुरुपुङ्गवम् ।
महाद्विपेनेव वने मत्तेन हरियूथपम् ॥ ७-१४२-६३ (५१०४४)
ग्मामेव च महाबाहो परियान्ति महारथाः ।
यथाशक्ति यतन्तो मां योधयन्तो जनार्दन ॥ ७-१४२-६४ (५१०४५)
ध्रुवं च योधयाम्येताञ्छिद्रान्वेषणतत्परान् ।
रक्षामि सात्यकिं चैव सौमदत्तिवशं गतम् ॥ ७-१४२-६५ (५१०४६)
अप्राप्तोऽयं मया कृष्म हन्तुं भूरिश्रवा रणे ।
अन्येन तु समासक्तं मम नोत्सहते मनः ॥ ७-१४२-६६ (५१०४७)
अवश्यं च मया कृष्ण वृष्णिवीरस्य रक्षणम् ।
मदर्थं युध्यमानस्य कार्यं प्राणैरपि प्रभो ॥ ७-१४२-६७ (५१०४८)
अधर्मो वाऽस्तु धर्मो वा मम माधव माधवः ।
परेण निहतो मा स्म प्राणान्हासीन्महारथः ॥ ७-१४२-६८ (५१०४९)
सञ्जय उवाच। ७-१४२-६९क्ष् (४६२५)
एवमुक्त्वाऽर्जुनः कृष्णं परानाशु शितैः शरैः ।

छादयामास सङ्क्रुद्धः परे चापि धनञ्जयम् ॥ ७-१४२-६९ (५१०५०)
एवं स्म युध्यते वीरः सात्यकिं च मुहुर्मुहुः ।
प्रेक्षते स्म नरव्याघ्रो भूरिश्रवसमेव च'॥ ७-१४२-७० (५१०५१)
तथा तु कृष्यमाणं तं दृष्ट्वा सात्यकिमाहवे ।
वासुदेवस्तदा वाक्यं भूयोऽप्यर्जुनमब्रवीत् ॥ ७-१४२-७१ (५१०५२)
पश्य वृष्ण्यन्धकव्याघ्रं सौमदत्तिवशं गतम् ।
तव शिष्यं महाबाहो धनुष्यनवमं त्वया ॥ ७-१४२-७२ (५१०५३)
अनित्यो विक्रमः पार्थ यत्र भूरिश्रवा रणे ।
विशेषयति वार्ष्णेयं सात्यकिं सत्यविक्रमम् ॥ ७-१४२-७३ (५१०५४)
ग्बहुभिर्महारथैरेष पराक्रान्तैर्युयुत्सुभिः ।
युद्ध्वा भृशं परिश्रान्तः क्षीणायुधरपरिच्छदः'॥ ७-१४२-७४ (५१०५५)
सञ्जय उवाच। ७-१४२-७५क्ष् (४६२६)
एवमुक्तो महाराज वासुदेवेन पाण्डवः ।
मनसा पूजयामास भूरिश्रवसमाहवे ॥ ७-१४२-७५ (५१०५६)
विकर्षन्सात्वतां श्रेष्ठं क्रीडमान इवाहवे ।
स हर्षयति मां भूयः कुरूणां नन्दिवर्धनः ॥ ७-१४२-७६ (५१०५७)
प्रवरं वृष्णिवीराणां यन्निहन्त्येष सात्यकिम् ।
महाद्विपमिवारण्ये कर्षन्निव हरिर्भृशम् ॥ ७-१४२-७७ (५१०५८)
एवं तु मनसा राजन्पार्थः सम्पूज्य कौरवम् ।
ग्अयुध्यतारिभिर्वीरस्तं च सम्प्रेक्षते मुहुः'॥ ७-१४२-७८ (५१०५९)
अथ कोशाद्विनिष्कृष्य खङ्गं भूरिश्रवाः शितम् ।
मूर्धजेषु च जग्राह पदा चोरस्याताडयत् ।
ग्आक्रम्य चाप्यथोद्यम्य सहासिं सुभुजो भुजम् ॥ ७-१४२-७९ (५१०६०)
शुशुभे स भुजस्तस्य तपनीयविभूषणः ।
मध्ये रथसमूहस्य इन्द्रध्वज इवोच्छ्रितः ॥ ७-१४२-८० (५१०६१)
हाहाकृतमभूत्सर्वं पाण्डवानां महद्बलम् ।
तावकाश्च मुदा युक्ताः सिंहनादं विचुक्रुशुः ॥ ७-१४२-८१ (५१०६२)
निमीलिताक्षास्त्वभवञ्जनाः सङ्ग्रामभीरवः ।
तथा भूरिश्रवोग्रस्ते सात्वते नष्टविक्रमे ॥ ७-१४२-८२ (५१०६३)
वासुदेवं महाबाहुरर्जुनः प्रत्यभाषत ।
सैन्धवे सक्तदृष्टित्वान्न तं पश्यामि माधवम् ॥ ७-१४२-८३ (५१०६४)
एष त्वसुकरं कर्म यादवार्थे करोम्यहम् ।
मम शिष्यो ममार्थाय युध्यते मम शत्रुभिः ।
तं कृष्ण मोक्षयिष्यामि दावात्सिंहशिशुं यथा'॥ ७-१४२-८४ (५१०६५)
सञ्जय उवाच। ७-१४२-८५क्ष् (४६२७)
इत्युक्त्वा वचनं कुर्वन्वासुदेवस्य पाण्डवः ।

ततः क्षुरप्रं निशितं गाण्डीवे समयोजयत् ॥ ७-१४२-८५ (५१०६६)
पार्थबाहुविसृष्टः स महोल्केव नभश्च्युता ।
सखड्गं यज्ञशीलस्य बाहुं दक्षिणमच्छिनत् ॥ ॥ ७-१४२-८६ (५१०६७)

इति श्रीमन्महाभारते द्रोणपर्वणि जयद्रथवधपर्वणि
चतुर्दशदिवसयुद्धे द्विचत्वारिंशदधिकशततमोऽध्यायः ॥ १४२ ॥
Mahabharata - Drona Parva - Chapter Footnotes

५-१४२-२ उतात्यर्थम् ॥
५-१४२-१६ शाश्वतीः समाः सर्वकालम् । तुरवधारणे। नित्यमेव असौ
हन्यात्। जय एव तस्येत्यर्थः ॥
५-१४२-२९ ब्रह्मलोकपुरस्कृतौ ब्राह्मणसमूह सत्कृतौ ॥
५-१४२-४५ भुजाघातो भुजस्फोटः । निग्रहो हस्तधारणम्। प्रग्रहो
गलहस्तकः ॥
५-१४२-४७ भुजयोक्त्रावबन्धैर्बाहुपाशवेष्टनैः । अवघातनैस्ताडनैः ॥
५-१४२-४८ पादशब्दः प्रत्येकं सम्बध्यते ।
पादावकर्षैश्चरणावकर्षणैः। पादसन्धानैश्चरणच्छन्दितकैः।
तोमरैरतिस्फोटनैः। अङ्कुशैरवलुञ्चनैः। पादोदरविबन्धैः
पादाभ्यामुदरक्रोडीकरणैः। उद्भ्रमणैः परिवर्तनैः ॥
५-१४२-४९ गतैर्गमनैः प्रत्यागतैरावर्तनैः
। आक्षेपैरास्फालनैः। पातनैर्भूमिप्रापणैः उत्थानैः
उत्पतनैः। सम्प्लुतैः विष्फारानुबन्धैः ॥
५-१४२-५५ समर नुरूपम् ॥
५-१४२-५६ अभ्याहनदास्फालितवान् ॥
५-१४२-१४२ द्विचत्वारिशदधिकशततमोऽध्यायः ॥

---

द्रोनपर्व-अध्यय१४३
॥ श्रीः ॥
७.१४३. अध्यायः १४३

Mahabharata - Drona Parva - Chapter Topics
अर्जुनच्छिन्नभुजस्य भूरिश्रवसः तदुपालम्भपूर्वकं प्रायोपवेशः ॥ १ ॥
सात्यकिना भूरिश्रवश्शिरश्छेदः ॥ २ ॥

Mahabharata - Drona Parva - Chapter Text

७-१४३-० (५१०६८)
सञ्जय उवाच। ७-१४३-०क्ष् (४६२८)
स बाहुर्न्यपतद्भूमौ सखड्गः सशुभाङ्गदः ।
आदधज्जीवलोकस्य दुःखमद्भुतमुत्तमः ।
ग्यन्त्रमुक्तो महेन्द्रस्य ध्वजो वृत्तोत्सवो यथा'॥ ७-१४३-१ (५१०६९)
प्रहरिष्यन्हृतो बाहुरदृश्यते किरीटिना ।
वेगेन न्यपतद्भूमौ पञ्चास्य इव पन्नगः ॥ ७-१४३-२ (५१०७०)
स मोघं कृतमात्मानं दृष्ट्वा पार्थेन कौरवः ।
उत्सृज्य सात्यकिं क्रोधाद्गर्हयामास पाण्डवम् ॥ ७-१४३-३ (५१०७१)
ग्स विबाहुर्महाराज एकपक्ष इवाण्डजः ।
एकचक्रो रथो यद्वद्धरणीमास्थितो नृपः ।
उवाच पाण्डवं चैव सर्वक्षत्रस्य पश्यतः ॥ ७-१४३-४ (५१०७२)
भूरिश्रवा उवाच। ७-१४३-५क्ष् (४६२९)
नृशंसं बत कौन्तेय कर्मेदं कृतवानसि ।
अपश्यतो विषक्तस्य यन्मे त्वं बाहुमच्छिनः ॥ ७-१४३-५ (५१०७३)
येषु येषु नरः पार्थ वर्तते सुसमाहितः ।
आशु तच्छीलतामेति तदिदं दृश्यते त्वयि ॥ ७-१४३-६ (५१०७४)
किं नु वक्ष्यसि राजानं धर्मपुत्रं युधिष्ठिरम्
किं कुर्वाणो मया सङ्ख्ये हतो भूरिश्रवा इति ॥ ७-१४३-७ (५१०७५)
इदमिन्द्रेण ते साक्षादुपदिष्टं महात्मना ।
अस्त्रं रुद्रेण वा पार्थ द्रोणेनाथ कृपेण वा ॥ ७-१४३-८ (५१०७६)
ननु नामास्त्रधर्मज्ञस्त्वं लोकेऽभ्यधिकः परैः ।
सोऽयुध्यमानस्य कथं रणे प्रहृतवानसि ॥ ७-१४३-९ (५१०७७)
न प्रमत्ताय भीताय विरथाय प्रयाचते ।
व्यसने वर्तमानाय प्रहरन्ति मनीषिणः ॥ ७-१४३-१० (५१०७८)
इदं तु नीचाचरितमसत्पुरुषसेवितम् ।
कथमाचरितं पार्थ पापकर्म सुदुष्करम् ॥ ७-१४३-११ (५१०७९)
आर्येण सुकरं त्वाहुरार्यकर्म धनञ्जय ।
अनार्यकर्म त्वार्येण सुदुष्करतमं भुवि ॥ ७-१४३-१२ (५१०८०)
कथं हि राजवंश्यस्त्वं कौरवेयो विशेषतः ।
क्षत्रधर्मादपक्रान्तः सुवृत्तश्चारितव्रतः ॥ ७-१४३-१३ (५१०८१)
ग्अल्पस्त्वपराधोऽत्र न त्वां तात विगर्हये ।
वार्ष्णेयापशदं प्राप्य क्षुद्रं कृतमिदं त्वया'॥ ७-१४३-१४ (५१०८२)
इदं तु यदतिक्षुद्रं वार्ष्णेयार्थे कृतं त्वया ।
वासुदेवमतं नूनं नैतत्त्वय्युपपद्यते ॥ ७-१४३-१५ (५१०८३)
को हि नाम प्रमत्ताय परेण सह युध्यते ।

ईदृशं व्यसनं दद्याद्यो न कृष्णसखो भवेत् ॥ ७-१४३-१६ (५१०८४)
व्रात्याः सङ्क्लिष्टकर्माणः प्रकृत्यैव च गर्हिताः ।
वृष्ण्यन्धकाः कथं पार्थ प्रमाणं भवता कृताः ॥ ७-१४३-१७ (५१०८५)
सञ्जय उवाच। ७-१४३-१८क्ष् (४६३०)
एवमुक्तो रणे पार्थो भूरिश्रवसमब्रवीत् ।
व्यक्तं हि जीर्यमाणोऽपि बुद्धिं जरयते नरः ।
अनर्थकमिदं सर्वं यत्त्वया व्याहृतं प्रभो ॥ ७-१४३-१८ (५१०८६)
जानन्नेव हृषीकेशं गर्हसे मां च पाण्डवम् ।
सङ्ग्रामाणां हि धर्मज्ञः सर्वशास्त्रार्थपारगः ॥ ७-१४३-१९ (५१०८७)
न चाधर्ममहं कुर्यां जानंश्चैव हि मुह्यसे ॥ ७-१४३-२० (५१०८८)
युध्यन्ते क्षत्रियाः शत्रून्स्वैःस्वैः परिवृता नराः ।
भ्रातृभिः पितृभिः पुत्रैस्तथा सम्बन्धिबान्धवैः ।
वयस्यैरथ मित्रैश्च स्वबाहुबलमाश्रिताः ॥ ७-१४३-२१ (५१०८९)
स कथं सात्यकिं शिष्यं सुखसम्बन्धिमेव च ।
अस्मदर्थे च युध्यन्तं त्यक्त्वा प्राणान्सुदुस्त्यजान् ॥ ७-१४३-२२ (५१०९०)
मम बाहुं रणे राजन्दक्षिणं युद्धदुर्मदम् ।
क़त्वया निकृष्यमाणं च दृष्टवानस्मि निष्क्रियम् ॥ ७-१४३-२३ (५१०९१)
न च त्वं रक्षितव्यो हि एको रणगतेन हि ।
यो यस्य युध्यतेऽर्थाय संरक्ष्यो नराधिप ।
तै रक्ष्यमाणैः स नृपो रक्षितव्यो महामृधे ॥ ७-१४३-२४ (५१०९२)
यद्यहं सात्यकिं दृष्ट्वा तूष्णीमासिष्य आहवे ।
ततस्तेन वियोगश्च प्राप्यं नरकमेव च ॥ ७-१४३-२५ (५१०९३)
रक्षितव्यो मया यस्मात्तस्माल्लब्धो मया स च ।
यशश्चैव स्वपक्षेभ्यः फलं मित्रस्य रक्षणात् ॥ ७-१४३-२६ (५१०९४)
यच्च मां गर्हसे राजन्कृष्णेन सह सङ्गतम् ।
कस्तेन सङ्गमं नेच्छेत्तत्र ते बुद्धिविभ्रमः ॥ ७-१४३-२७ (५१०९५)
आबद्धकवचस्येह रथमारुह्य तिष्ठतः ।
सर्वायुधैरुपेतस्य प्रतियोद्धृप्रतीक्षिणः ॥ ७-१४३-२८ (५१०९६)
अस्मिन्नथगजानीके हयपत्तिसमाकुले ।
सिंहनादोद्धतरवे गम्भीरे सैन्यसागरे ॥ ७-१४३-२९ (५१०९७)
स्वैश्चापि समुपेतस्य विक्रान्तस्य तथा रणे ।
सात्यकेन कथं योग्यः सङ्ग्रामस्ते भविष्यति ॥ ७-१४३-३० (५१०९८)
बहुभिः सह सङ्गम्य निर्जित्य च महारथान् ।
श्रान्तश्च श्रान्तवाहश्च क्षीणसर्वायुधस्त्वया ।
समेतः सात्यकिः सङ्ख्ये निर्जितश्च महारथः ॥ ७-१४३-३१ (५१०९९)
ईदृशं सात्यकिं सङ्ख्ये निर्जित्य च महारथम् ।

अधिकत्वं विजानीपे स्ववीर्यवशमागतम् ॥ ७-१४३-३२ (५११००)
इच्छसि त्वं शिरस्तस्य असिना हर्तुमाहवे ।
तथा कृच्छ्रगतं दृष्ट्वा सात्यकिं कः क्षमिष्यति ।
एकस्यैकेन हि कथं सङ्ग्रामः सम्भविष्यति ॥ ७-१४३-३३ (५११०१)
त्वं तु गर्हय चात्मानं स्वधर्मं यो न रक्षसि ।
कथं रक्षिष्यसे वीर ये वै त्वां संश्रिता जनाः ॥ ७-१४३-३४ (५११०२)
आत्तशस्त्रस्य हि रणे वृष्णिपुत्रं जिघांसतः ।
छिन्नवान्यदहं बाहुं नैतल्लोकविगर्हितम् ॥ ७-१४३-३५ (५११०३)
न्यस्तशस्त्रस्य हि पुनर्विकलस्य विवर्मणः ।
अभिमन्योर्वधं तात धार्मिकः को नु पूजयेत् ॥ ७-१४३-३६ (५११०४)
सञ्जय उवाच। ७-१४३-३७क्ष् (४६३१)
एवमुक्तो महाबाहुर्यूपकेतुर्महायशाः ।
युयुधानं समुत्सृज्य रणे प्रायमुपाविशत् ॥ ७-१४३-३७ (५११०५)
शरानास्तीर्य सव्येन पाणिना पुण्यलक्षणः ।
यियासुर्ब्रह्मलोकाय प्राणान्प्राणेष्वथाजुहोत् ॥ ७-१४३-३८ (५११०६)
सूर्ये चक्षुः समाधाय प्रसन्नं सलिले मनः ।
ध्यायन्महोपनिषदं योगयुक्तोऽभवन्मुनिः ॥ ७-१४३-३९ (५११०७)
ततस्ते सर्वसेनासु जनाः कृष्णधनञ्जयौ ।
गर्हयामासुरप्येतौ शशंसुर्भूरिदक्षिणम् ॥ ७-१४३-४० (५११०८)
निन्द्यमानौ तथा कृष्णौ नोचतुः किञ्चिदप्रियम् ।
ततः प्रशस्यमानश्च नाहृष्यद्यूपकेतनः ॥ ७-१४३-४१ (५११०९)
तांस्तथावादिनो राजन्पुत्रांस्तव धनञ्जयः ।
अमृष्यमाणो मनसा तेषां तस्य च भाषितम् ॥ ७-१४३-४२ (५१११०)
असङ्क्रुद्धमना वाचः स्मारयन्निव भारत ।
उवाच पाण्डुतनयः साक्षेपमिव फल्गुनः ॥ ७-१४३-४३ (५११११)
मम सर्वेऽपि राजानो जानन्त्येतन्महाव्रतम् ।
न शक्यो मामको हन्तुं यो मे स्याद्बाणगोचरे ॥ ७-१४३-४४ (५१११२)
यूपकेतुं समीक्ष्यैतन्न मां गर्हितुमर्हथ ।
न हि धर्ममविज्ञाय युक्तं गर्हयितुं परम् ॥ ७-१४३-४५ (५१११३)
न्यस्तशस्त्रस्य बालस्य विरथस्य विवर्मणः ।
ग्नाभिमन्योर्वधं यूयं गर्हयध्वं कुतस्तदा ॥ ७-१४३-४६ (५१११४)
दुर्योधनस्य क्षुद्रस्य अप्रमाणे च तिष्ठतः ।
सौमदत्तेरथं साधुः सर्वसाहाय्यकारिणः ॥ ७-१४३-४७ (५१११५)
अस्मदीया मया रक्ष्याः प्राणबाध उपस्थिते ।
ये मे प्रत्यक्षतो वीरा हन्येरन्निति मे मतिः ॥ ७-१४३-४८ (५१११६)
सात्यकश्च वशं नीतः कौरवेण महात्मना ।

ततो मयैतच्चरितं प्रतिज्ञारक्षणं प्रति ॥ ७-१४३-४९ (५१११७)
सञ्जय उवाच। ७-१४३-५०क्ष् (४६३२)
पुनश्च कृपयाऽऽविष्टो बहु तत्तद्विचिन्तयन् ।
उवाच चैनं कौरव्यमर्जुनः शोकपीडितः ॥ ७-१४३-५० (५१११८)
धिगस्तु क्षत्रधर्मं तु यत्र त्वं पुरुषेश्वरः ।
अवस्थामीदृशीं प्राप्तः शरण्यः शरणप्रदः ॥ ७-१४३-५१ (५१११९)
नातिभारः कृतान्तस्य विद्यते कुरुनन्दन ।
यत्र त्वं पुरुषव्याघ्रः प्राप्तः पापामिमां दशाम् ॥ ७-१४३-५२ (५११२०)
नात्मनः सुकृतस्यास्य फलं वै नृपसत्तम ।
यत्र त्वं कुरुशार्दूल प्राप्तः पापामिमां दशाम् ॥ ७-१४३-५३ (५११२१)
रौरवं नरकं भीमं गमिष्यति सुयोधनः ।
यत्कृते नरशार्दूलः प्राप्तः पापामिमां दशाम् ॥ ७-१४३-५४ (५११२२)
को हि नाम पुमाँल्लोके मादृशः पुरुषोत्तम ।
प्रहरेत्त्वद्विधे त्वद्य प्रतिज्ञा यदि नो भवेत्'॥ ७-१४३-५५ (५११२३)
एवमुक्तः स पार्थेन शिरसा भूमिमस्पृशत् ।
पाणिना चैव सव्येन प्राहिणोदस्य दक्षिणम् ॥ ७-१४३-५६ (५११२४)
एतत्पार्थस्य तु वचस्ततः श्रुत्वा महाद्युतिः ।
युपकेतुर्महाराज तूष्णीमासीदवाङ्मुखः ॥ ७-१४३-५७ (५११२५)
अर्जुन उवाच। ७-१४३-५८क्ष् (४६३३)
या प्रीतिर्धर्मराजे मे भीमे च बलिनां वरे ।
नकुले सहदेवे च सा मे त्वयि शलाग्रज ॥ ७-१४३-५८ (५११२६)
मया त्वं समनुज्ञातः कृष्णेन च महात्मना ।
गच्छ पुण्यकृतां लोकाञ्छिबिरौशीनरो यथा ॥ ७-१४३-५९ (५११२७)
वासुदेव उवाच। ७-१४३-६०क्ष् (४६३४)
ये लोका मम विमलाः सकृद्विभाता
ब्रह्माद्यैः सुरवृषभैरपीष्यमाणाः ।
तान्क्षिप्रं व्रज सतताग्निहोत्रयाजि--
न्मत्तुल्यो भव गरुडोत्तमाङ्गयानः ॥ ७-१४३-६० (५११२८)
सञ्जय उवाच। ७-१४३-६१क्ष् (४६३५)
ग्धनञ्जये ब्रुवत्येवं घृणया च परिप्लुते ।
अवाङ्मुखा बभूवुश्च सैनिकाः सर्व एव ते ॥ ७-१४३-६१ (५११२९)
मुहूर्तादिव विश्रम्य सात्यकिः क्रोधमूर्च्छितः ।
अमर्षवशमापन्नः सौमदत्तिनिराकृतः'॥ ७-१४३-६२ (५११३०)
उत्थितः स तु शैनेयो विमुक्तः सौमदत्तिना ।
सङ्गमादाय चिच्छित्सुः शिरस्तस्य महात्मनः ॥ ७-१४३-६३ (५११३१)
निहतं पाण्डुपुत्रेण प्रसक्तं भूरिदक्षिणम् ।

इयेष सात्यकिर्हन्तुं शलाग्रजमकल्मषम् ॥ ७-१४३-६४ (५११३२)
निकृत्तभुजमासीनं छिन्नहस्तमिव द्विपम् ।
क्रोशतां सर्वसैन्यानां निन्द्यमानः सुदुर्मनाः ॥ ७-१४३-६५ (५११३३)
वार्यमाणः स कृष्णेन पार्थेन च महात्मना ।
भीमेन चक्रक्षाभ्यामश्वत्थाम्ना कृपेण च ॥ ७-१४३-६६ (५११३४)
कर्णेन वृषसेनेन सैन्धवेन तथैव च ।
विक्रोशतां च सैन्यानामवधीत्तं धृतव्रतम् ॥ ७-१४३-६७ (५११३५)
प्रायोपविष्टस्य रणे पार्थेन च्छिन्नबाहुनः ।
सात्यकिः कौरवेयस्य खड्गेनापाहरच्छिरः ॥ ७-१४३-६८ (५११३६)
नाभ्यनन्दन्त तं सैन्याः सात्यकिं तेन कर्मणा ।
अर्जुनेन हतं पूर्वं यज्जघान कुरूद्वहम् ॥ ७-१४३-६९ (५११३७)
सहस्राक्षसमं चैव सिद्धचारणमानवाः ।
भूरिश्रवसमालोक्य युद्धे प्रायगतं हतम् ॥ ७-१४३-७० (५११३८)
अपूजयन्त तं देवा विस्मितास्तेऽस्य कर्मभिः ।
पक्षवादांश्च सुबहून्प्रावदंस्तव सैनिकाः ॥ ७-१४३-७१ (५११३९)
न वार्ष्णेयस्यापराधो भवितव्यं हि तत्तथा ।
तस्मान्मन्युर्न वः कार्यः क्रोधो दुःखतरो नृणाम् ॥ ७-१४३-७२ (५११४०)
हन्तव्यश्चैष वीरेण नात्र कार्या विचारणा ।
विहितो ह्यस्य धात्रैव मृत्युः सात्यकिराहवे ॥ ७-१४३-७३ (५११४१)
ग्मर्तव्यमेव सर्वेण चरमं पूर्वमेव वा ।
मन्यध्वं मृत इत्येष माभूद्वो बुद्धिलाघवम् ॥ ७-१४३-७४ (५११४२)
तस्मिन्हते महाबाहौ यूपकेतौ महात्मनि ।
धिगेनमिति चाक्रन्दन्क्षत्रियाः क्रोधमूर्च्छिताः ॥ ७-१४३-७५ (५११४३)
अन्ये न युक्तमित्येव भवितव्यं तथेति च ।
केचिदासन्विमनसः केचिद्दुःखसमन्विताः'॥ ७-१४३-७६ (५११४४)
सात्यकिरुवाच। ७-१४३-७७क्ष् (४६३६)
न हन्तव्यो न हन्तव्य इति मन्दाः प्रभाषत ।
धर्मवादैरधर्मिष्ठा धर्मकञ्चुकमास्थिताः ॥ ७-१४३-७७ (५११४५)
यदा बालः सुभद्रायाः सुतः शस्त्रनिनाकृतः ।
युष्माभिर्निहतो युद्धे तदा धर्मः क्व वो गतः ॥ ७-१४३-७८ (५११४६)
मया त्वेतत्प्रतिज्ञातं क्षेपे कस्मिंश्चिदेव हि ।
ग्श्रुत्वा तत्सर्वभावेन गर्हयध्वं न चार्जुनम् ।
शृणुध्वं सर्वमेवेह श्रुत्वा गर्हथ मानवाः'॥ ७-१४३-७९ (५११४७)
यो मां निष्पिष्य सङ्ग्रमे जीवन्हन्यात्पदा रुषा ।
स मे वध्यो भवेच्छत्रुर्यद्यपि स्यान्मुनिव्रतः ॥ ७-१४३-८० (५११४८)
चेष्टमानं प्रतीघाते सभुजं मां सचक्षुषः ।

मन्यध्वं मृत इत्येवमेतद्वो बुद्धिलाघवम् ॥ ७-१४३-८१ (५११४९)
युक्तो ह्यस्य प्रतीघातः कृतो मे कुरुपुङ्गवाः ॥ ७-१४३-८२ (५११५०)
यत्तु पार्थेन मां दृष्ट्वा प्रतिज्ञामभिरक्षता ।
सखड्गोऽस्य हृतो बाहुरेतेनैवास्मि वञ्चितः ॥ ७-१४३-८३ (५११५१)
भवितव्यं हि यद्भावि दैवं चेष्टयते हि तत् ।
सोयं हतो विमर्देऽस्मिन्किमत्राधर्मचेष्टितम् ॥ ७-१४३-८४ (५११५२)
अपि चापं पुरा गीतः श्लोको वाल्मीकिना भुवि ।
न हन्तव्याः स्त्रिय इति यद्ब्रवीषि प्लवङ्गम ॥ ७-१४३-८५ (५११५३)
सर्वकालं मनुष्येण व्यवसायवता सदा ।
पीडाकरममित्राणां यत्स्यात्कर्तव्यमेव तत् ।
अनुष्ठितं मया तच्च कस्माद्गर्हथ मूढवत् ॥ ७-१४३-८६ (५११५४)
सञ्चय उवाच। ७-१४३-८७क्ष् (४६३७)
एवमुक्ते महाराज सर्वे कौरवपुङ्गवाः ।
न स्म किंचिदभाषन्त मनसा समपूजयन् ॥ ७-१४३-८७ (५११५५)
मन्त्रभिपूतस्य महाध्वरेषु
यशस्विनो भूरिसहस्रदस्य ।
मुनेरिवारण्यगतस्य तस्य
न तत्र कश्चिद्वधमभ्यनन्दत् ॥ ७-१४३-८८ (५११५६)
सुनीलकेशं वरदस्य तस्य
सूरस्य पारावतलोहिताक्षम् ।
अश्वस्य मेध्यस्य शिरो निकृत्तं
न्यस्तं हविर्धानमिवान्तरेण ॥ ७-१४३-८९ (५११५७)
स तेजसा शस्त्रकृतेन पूतो
महाहवे देहवरं विसृज्य ।
आक्रामदूर्ध्वं वरदो वरार्हो
व्यावृत्त्य धर्मेण परेम रोदसी ॥ ॥ ७-१४३-९० (५११५८)

इति श्रीमन्महाभारते द्रोणपर्वणि जयद्रथवधपर्वणि
चतुर्दशदिवसयुद्धे त्रिचत्वारिंशदधिकशततमोऽध्यायः ॥ १४३ ॥

Mahabharata - Drona Parva - Chapter Footnotes

५-१४३-५ विषक्तस्यान्यासक्तस्य ॥
५-१४३-६ येषुयेषु सत्स्वसत्सु वा ॥
५-१४३-क्त एतदादि ३५ त्तमश्लोकपर्यन्तं विद्यमानानां श्लोकानां स्थाने अधोलिखिताः श्लोकाः झ । पुस्तके सन्ति। नचात्मा रक्षितव्यो वै राजन्रणगतेन हि। यो यस्य युज्यतेऽर्थेषु स वै रक्ष्यो नराधिप ॥

१ ॥
तै रक्ष्यमाणैः स नृपो रक्षितव्यो महामृधे । यद्यहं सात्यकिं पश्ये वध्यमानं महारणे ॥
२ ॥
ततस्तस्य वियोगेन पापं मेऽनर्थतो भवेत् । रक्षितश्च मया यस्मात्तस्मात्क्रुध्यसि किं मयि ॥
३ ॥
यच्च मे गर्हसे राजन्नन्येन सह सङ्गतम् । अहं त्वया विनिकृतस्तत्र मे बुद्धिविभ्रमः ॥
४ ॥
कवचं धुन्वतस्तुभ्यं रथं चारोहतः स्वयम् । धनुर्ज्यां कर्षतश्चैव युध्यतः सह शत्रुभिः ॥
५ ॥
एवं रथगजाकीर्णे हयपत्तिसमाकुले । सिंहनादोद्गतरवे गम्भीरे सैन्यसागरे ॥
६ ॥
स्वैः परैश्च समेतेभ्यः सात्वतेन च सङ्गमे । एकस्यैकेन हि कथं सङ्ग्रमः सम्भविष्यति ॥
७ ॥
बहुभिः सह सङ्गम्य निर्जित्य च महारथान् । श्रान्तश्च श्रान्तवाहश्च विमनाः शस्त्रपीडितः ॥
८ ॥
ईदृशं सात्यकिं संख्ये निर्जित्य च महारथम् । अधिकत्वं विजानीषे स्ववीर्यवशमागतम् ॥
९ ॥
यदिच्छसि शिरश्चास्य असिना हन्तुमाहवे । तथा कृच्छ्रगतं चैव सात्यकिं कः क्षमिष्यति ॥
१० ॥
त्वं वै विगर्हयात्मानमात्मानं यो न रक्षसि । कथं करिष्यसे वीर यो वा त्वां संश्रयेज्जनः ॥
११ ॥
५-१४३-२३ दक्षिणं बाहुं तत्स्थनीयम् ॥
५-१४३-३७ प्रायं आमरणानशनं प्रारब्धवान् ॥
५-१४३-३८ प्राणानसून् प्राणेषुवायुषु अजुहोदाहितवान् ॥
५-१४३-३९ प्रसन्नमकल्पमषम् ॥
५-१४३-४९ स कथं च वधं नीतः इति ङ । पाठः। सः सात्यकिः

वधसुह्दिस्येति शेषः ॥
५-१४३-५२ नातिहारः कृतान्तस्येति ठ पाठः । अतिहारः परिहारः ॥
५-१४३-५६ दक्षिणं कृत्तमात्मनः पाणिं अस्यार्जुनस्य समीपे प्राहिणोत् प्रहितवान् ॥
५-१४३-६० ये लोका इति श्लोकः झ घ ञ
। पुस्तकेष्वेवास्ति। सकृद्विभाताः सहप्रकाशाः। गरुडस्योत्तमाङ्गेन पृष्ठेन यानं यस्य ॥
५-१४३-६४ प्रसक्तमन्यासक्तम् ॥
५-१४३-७९ क्षेपे निन्दामाम् । जीवन्निति द्वितीयार्थे प्रथमा ॥
५-१४३-८५ न हन्तव्या इत्यर्थं घ ङ झ ञ । पाठेष्वेवास्ति ॥
५-१४३-८९ वरदस्यार्थितार्थप्रदातुः । हविर्धानमन्तरेण हविर्गृहस्य मध्ये ॥
५-१४३-१४३ त्रिचत्वारिंशदधिकशततमोऽध्यायः ॥

---

द्रोनपर्व-अध्यय१४४
॥ श्रीः ॥
७.१४४. अध्यायः १४४

Mahabharata - Drona Parva - Chapter Topics
सञ्जयेन धृतराष्ट्रम्प्रति सात्यकेः भूरिश्रवसा पराभवकारणकथनम् ॥ १ ॥
तथा यादवानां प्रशंसनम् ॥ २ ॥

Mahabharata - Drona Parva - Chapter Text

७-१४४-० (५११५९)
धृतराष्ट्र उवाच। ७-१४४-०क्ष् (४६३८)
अजितो द्रोणराधेयविकर्णकृतवर्मभिः ।
ग्यश्चैवोत्सहते वेतुं समस्तं मामकं बलम'।
तीर्णः सैन्यार्णवं वीरः प्रतिश्रुत्य युधिष्ठिरे ॥ ७-१४४-१ (५११६०)
स कथं कौरवेयेण समरेष्वनिवारितः ।
निगृह्य भूरिश्रवसा बलाद्भुवि निपातितः ॥ ७-१४४-२ (५११६१)
सञ्जय उवाच। ७-१४४-३क्ष् (४६३९)
शृणु राजन्निहोत्पत्तिं शैनेयस्य यथा पुरा ।
यथा च भूरिश्रवसो यत्र ते संशयो नृप ॥ ७-१४४-३ (५११६२)
ग्ब्रह्मणस्त्वभवत्पुत्रो मानसोऽत्रिर्महातपाः'।

अत्रेः पुत्रोऽभवत्सोमः सोमस्य तु बुधः स्मृतः ॥ ७-१४४-४ (५११६३)
बुधस्यैलो महाबाहुः पुत्र आसीत्पुरूरवाः ।
पुरूरवस आयुस्तु आयुषो नहुषः सुतः ॥ ७-१४४-५ (५११६४)
नहुषस्य ययातिस्तु राजा देवर्षिसम्मतः ।
ययातेर्देवयान्यां तु यदुर्ज्येष्ठोऽभवत्सुतः ॥ ७-१४४-६ (५११६५)
यदोरभूदन्ववाये आजमीढ इति स्मृतः ।
यादवस्तस्य तु सुतः शूरस्त्रैलोक्यसम्मतः ॥ ७-१४४-७ (५११६६)
शूरस्य शौरिर्नृवरो वसुदेवो महायशाः ।
धनुष्यनवरः शूरः कार्तवीर्यसमो युधि ।
धनुष्यनवरः शूरः कार्तवीर्यसमो युधि ।
तद्वार्यश्चापि तत्रैव कुले शिनिरभून्नृप ॥ ७-१४४-८ (५११६७)
एतस्मिन्नेव काले तु देवकस्य महात्मनः ।
दुहितः स्वयंवरे राजन्सर्वक्षत्रसमागमे ॥ ७-१४४-९ (५११६८)
तत्र वै देवकीं देवीं वसुदेवार्थमाशु वै ।
निर्जित्व पार्थिवान्सर्वान्रथमारोपयच्छिनिः ॥ ७-१४४-१० (५११६९)
तां दृष्ट्वा देवकीं शूरो रथस्थां पुरुषर्षभः ।
नामृष्यत महातेजाः सोमदत्तः शिनेर्नृप ॥ ७-१४४-११ (५११७०)
तयोर्युद्धमभूद्राजन्दिनार्धं चित्रमुद्भतम् ।
बाहुयुद्धं सुबलिनोः प्रसक्तं पुरुषर्षभः ॥ ७-१४४-१२ (५११७१)
शिनिना सोमदत्तस्तु प्रसह्य भुवि पातितः ।
असिमुद्यम्य केशेषु प्रगृह्य च पदा हतः ॥ ७-१४४-१३ (५११७२)
मध्ये राजसहस्राणां प्रेक्षकाणां समन्ततः ।
कृपया च पुनस्तेन स जीवेति विसर्जितः ॥ ७-१४४-१४ (५११७३)
तदवस्थः कृतस्तेन सोमदत्तोऽथ मारिष ।
प्रासादयन्महादेवममर्षवशमास्थितः ॥ ७-१४४-१५ (५११७४)
तस्य तुष्टो महादेवो वराणां वरदः प्रभुः ।
वरेण च्छन्दयामास स तु वव्रे वरं नृपः ॥ ७-१४४-१६ (५११७५)
पुत्रमिच्छामि भगवन्यो निपात्य शिनेः सुतम् ।
मध्ये राजसहस्राणां पदा हन्याच्च संयुगे ॥ ७-१४४-१७ (५११७६)
तस्य तद्वचनं श्रुत्वा सोमदत्तस्य पार्थिव ।
एवमस्त्विति तत्रोक्त्वा स देवोऽन्तरधीयत ।
स तेन वरदानेन लब्धवान्भूरिदक्षिणम् ॥ ७-१४४-१८ (५११७७)
अपातयच्च समरे सौमदत्तिः शिनेः सुतम् ।
पश्यतां सर्वसैन्यानां पदा चैनमताडयत् ॥ ७-१४४-१९ (५११७८)
एतत्ते कथितं राजन्यन्मां त्वं परिपृच्छसि ।
न हि शक्यो रणे जेतुं सात्वतो मनुजर्षभैः ॥ ७-१४४-२० (५११७९)

लब्धलक्ष्याश्च सङ्ग्रामे बहुशश्चित्रयोधिनः ।
देवदानवगन्धर्वान्विजेतारो ह्यविस्मिताः ।
स्ववीर्यविजये युक्ता नैते परपरिग्रहाः ॥ ७-१४४-२१ (५११८०)
न तुल्यं वृष्णिभिरिह दृश्यते किञ्चन प्रभो ।
भूतं भव्यं भविष्यच्च बलेन भरतर्षभ ॥ ७-१४४-२२ (५११८१)
न ज्ञातिमवमन्यन्ते वृद्धानां शासने रताः ॥ ७-१४४-२३ (५११८२)
न देवासुरगन्धर्वा न यक्षोरगराक्षसाः ।
जेतारो वृष्णिवीराणां किं पुनर्मानवा रणे ॥ ७-१४४-२४ (५११८३)
ब्रह्मद्रव्ये गुरुद्रव्ये ज्ञातिस्वे चाप्यहिंसकाः ।
एतेषां रक्षितारश्च ये स्युः कस्याञ्चिदापदि ॥ ७-१४४-२५ (५११८४)
अर्थवन्तो न चोत्सिक्ता ब्रह्मण्याः सत्यवादिनः ।
समर्थान्नावमन्यन्ते दीनानभ्युद्धरन्ति च ॥ ७-१४४-२६ (५११८५)
नित्यं देवपरा दान्तास्त्रातारश्चाविकत्थनाः ।
तेन वृष्णिप्रवीराणां चक्रं न प्रतिहन्यते ॥ ७-१४४-२७ (५११८६)
अपि मेरुं वहेत्कश्चित्तरेद्वा मकरालयम् ।
न तु वृष्णिप्रवीराणां समेत्यान्तं व्रजेन्नृप ॥ ७-१४४-२८ (५११८७)
एतत्ते सर्वमाख्यातं यत्र ते संशयः प्रभो ।
कुरुराज नरश्रेष्ठ तव व्यपनयो महान् ॥ ॥ ७-१४४-२९ (५११८८)

इति श्रीमन्महाभारते द्रोणपर्वणि जयद्रथवधपर्वणि
चतुर्दशदिवसयुद्धे चतुश्चत्वारिंशदधिकशततमोऽध्यायः
॥ १४४ ॥
Mahabharata - Drona Parva - Chapter Footnotes

५-१४४-२१ परपग्रहाः रिपराधीनाः ॥
२१ ॥
५-१४४-२७ चक्रं प्रतापः ॥
५-१४४-१४४ चतुश्चत्वारिंशदधिकशततमोऽध्यायः ॥

---

द्रोनपर्व-अध्यय१४५
॥ श्रीः ॥
७.१४५. अध्यायः १४५

Mahabharata - Drona Parva - Chapter Topics
कृष्णार्जुनयोः संवादः कर्णसात्यक्योर्युद्धं च ॥ १ ॥

७-१४५-० (५११८९)
धृतराष्ट्र उवाच। ७-१४५-०क्ष् (४६४०)
तदवस्थे हे तस्मिन्भूरिश्रवसि कौरवे ।
यथा भूयोऽभवद्युद्धं तन्ममाचक्ष्व सञ्जय ॥ ७-१४५-१ (५११९०)
सञ्जय उवाच। ७-१४५-२क्ष् (४६४१)
भूरिश्रवसि सङ्क्रान्ते परलोकाय भारत ।
वासुदेवं महाबाहुरर्जुनः समचूचुदत् ॥ ७-१४५-२ (५११९१)
अर्जुन उवाच। ७-१४५-३क्ष् (४६४२)
चोदयाश्वान्भृशं कृष्ण यतो राजा जयद्रथः ।
श्श्रूयते पुण्डरीकाक्ष त्रिषु धर्मेषु वर्तते ॥
प्रतिज्ञां सफलां चापि कर्तुमर्हसि मेऽनघ ॥ ७-१४५-३ (५११९२)
अस्तमेति महाबाहो त्वरमाणो दिवाकरः ॥ ७-१४५-४ (५११९३)
एतद्धि पुरुषव्याघ्र महदब्युद्यतं मया ।
कार्यं संरक्ष्यते चैष कुरुसेनामहारथैः ॥ ७-१४५-५ (५११९४)
यथा नाभ्येति सूर्योऽस्तं यथा सत्यं भवेद्वचः ।
चोदयाश्वांस्तथा कृष्ण यथा हन्यां जयद्रथम् ॥ ७-१४५-६ (५११९५)
ग्ततः कृष्णो महाबाहुरश्वान्रजतसन्निभान् ।
हयज्ञश्चोदयामास जयद्रथवधं प्रति ॥ ७-१४५-७ (५११९६)
तं प्रयान्तममोघेषुमुत्पतद्भिरिवाशुगैः ।
त्वरमाणा महाराज सेनामुख्याः समाद्रवन् ॥ ७-१४५-८ (५११९७)
दुर्योधनश्च कर्णश्च वृषसेनोऽथ मद्रराट् ।
अश्वत्थामा कृपश्चैव स्वयमेव च सैन्धवः ॥ ७-१४५-९ (५११९८)
समासाद्य च बीभत्सुः सैन्धवं समुपस्थितम् ।
नेत्राभ्यां क्रोधदीप्ताभ्यां सम्प्रैक्षन्निर्दहन्निव'॥ ७-१४५-१० (५११९९)
यथाग्निरिन्धनेद्धौ वै क्रोधेन्धनसमीरितः ।
सैन्धवस्य मुखं त्यक्त्वा कर्णः सात्वतमभ्ययात् ॥ ७-१४५-११ (५१२००)
उपायान्तंक्ष तु राधेयं दृष्ट्वा पार्थो महारथः ।
प्रहसन्देवकीपुत्रमिदं वचनमब्रवीत् ॥ ७-१४५-१२ (५१२०१)
एष प्रयात्याधिरथिः सात्यकेः स्यन्दनं प्रति ।
न मृष्यति हतं नूनं भूरिश्रवसमाहवे ॥ ७-१४५-१३ (५१२०२)
यत्र यात्येष तत्र त्वं चोदयाश्वाञ्जनार्दन ।
न सौमदत्तिपदवीं गमयेत्सात्यकिं वृषः ॥ ७-१४५-१४ (५१२०३)
सञ्जय उवाच। ७-१४५-१५क्ष् (४६४३)
एवमुक्तो महाबाहुः केशवः सव्यसाचिना ।

प्रत्युवाच महातेजाः कालयुक्तमिदं वचः ॥ ७-१४५-१५ (५१२०४)
अलमेष महाबाहुः कर्णायैकोऽपि पाण्डव ।
किं पुनर्द्रौपदेयाभ्यां सहितः सात्वतर्षभः ॥ ७-१४५-१६ (५१२०५)
न च तावत्क्षमः पार्थ तव कर्णेन सङ्गरः ।
प्रज्वलन्ती महोल्केव तिष्ठत्यस्मिन्हि वासवी ।
त्वदर्थं पूज्यमानैषा रक्ष्यते परवीरहन् ॥ ७-१४५-१७ (५१२०६)
ग्न कर्णं प्राकृतं मन्ये तेन योद्धुं न साम्प्रतम् ।
यः कर्णो बलवानेष शक्तोऽस्माञ्जेतुमोजसा ॥ ७-१४५-१८ (५१२०७)
कर्णस्यैष महान्दोषो यद्वयेन पदेपदे ।
प्रमादाच्च घृणित्वाच्च तेन शोचिति मे मनः'॥ ७-१४५-१९ (५१२०८)
अतः कर्णः प्रयात्वत्र सात्वतस्य यथा तथा ।
अहं ज्ञास्यामि कौन्तेय कालमस्य दुरात्मनः ॥ ७-१४५-२० (५१२०९)
यत्रैनं विशिखैस्तीक्ष्णैः पातयिष्यसि भूतले ।
तदा गन्तासि पार्थ त्वं तेन योद्धुं दुरात्मना ॥ ७-१४५-२१ (५१२१०)
धृतराष्ट्र उवाच। ७-१४५-२२क्ष् (४६४४)
योऽसौ कर्णेन वीरस्य वार्ष्णेयस्य समागमः ।
हते तु भूरिश्रवसि तद्युद्धमभवत्कथम् ॥ ७-१४५-२२ (५१२११)
सात्यकिश्चापि विरथः कं समारूढवान्रथम् ।
चक्ररक्षौ च पाञ्चाल्यौ तन्ममाचक्ष्व सञ्जय ॥ ७-१४५-२३ (५१२१२)
सञ्जय उवाच। ७-१४५-२४क्ष् (४६४५)
हन्त ते कथयिष्यामि यथावृत्तं महारणे ।
पश्यतां सर्वसैन्यानां केशवार्युनयोरपि ।
शुश्रूषस्व स्थिरो भूत्वा दुराचरितमात्मनः ॥ ७-१४५-२४ (५१२१३)
क्ष्क्ष्मेव हि कृष्णस्य मनोगतमिदं प्रभो ।
विजेतव्यो यथा वीरः सात्यकिः सौमदत्तिना ॥ ७-१४५-२५ (५१२१४)
अतीतानागते राजन्स हि वेत्ति जनार्दनः ।
ततः सूतं समाहूय दारुकं संदिदेश ह। ७-१४५-२६ (५१२१५)
रथो मे युज्यतां कल्यमिति राजन्महाबालः ॥
न हि देवा न गन्धर्वा न यक्षोरगराक्षसाः ।
मानवा वाऽपि जेतारः कृष्णयोः सन्ति केचन। ७-१४५-२७ (५१२१६)
पितामहपुरोगाश्च देवाः सिद्धाश्च तं विदुः ।
तयोः प्रभावमतुलं शृणु युद्धं तु तत्तथा ॥ ७-१४५-२८ (५१२१७)
सात्यकिं विरथं दृष्ट्वा कर्णं चाभ्युद्यतं रणे ।
दध्मौ शङ्खं महानादमार्षभेणाथ माधवः ॥ ७-१४५-२९ (५१२१८)
दारुकोऽवेत्य सन्देशं श्रुत्वा शङ्खस्य च स्वनम् ।
रथमन्वानयत्तस्मै सुपर्णोच्छ्रितकेतनम् ॥ ७-१४५-३० (५१२१९)

स केशवस्यानुमते रथं दारुकसंयुतम् ।
आरुरोह शिनेः पौत्रो ज्वलनादित्यसन्निभम् ॥ ७-१४५-३१ (५१२२०)
कामगैः शैब्यसुग्रीवमेघपुष्पवलाहकैः ।
हयोदग्रैर्महावेगैर्हेमभाण्डविभूषितैः ॥ ७-१४५-३२ (५१२२१)
युक्तं समारुह्य च तं विमानप्रतिमं रथम् ।
अभ्यद्रवत राधेयं प्रवपन्सायकान्बहून् ॥ ७-१४५-३३ (५१२२२)
चक्ररक्षावपि तदा युधामन्यूत्तमौजसौ ।
धनञ्जयरथं हित्वा राधेयं प्रत्युदीयतुः ॥ ७-१४५-३४ (५१२२३)
राधेयोऽपि महाराज शरवर्षं समुत्सृजन् ।
अभ्यद्रवत्सुसङ्क्रुद्धो रणे शैनेयमच्युतम् ॥ ७-१४५-३५ (५१२२४)
नैव दैवं न गान्धर्वं नासुरं न च राक्षसम् ।
तादृशं भुवि नो युद्धं दिवि वा श्रुतमित्युत ।
उपारसत तत्सैन्यं सरथाश्वनरद्विपम् ॥ ७-१४५-३६ (५१२२५)
तयोर्दृष्ट्वा महाराज कर्म सम्मूढचेतसः ।
सर्वे च समपश्यन्त तद्युद्धमतिमानुषम् ॥ ७-१४५-३७ (५१२२६)
तयोर्नृवरयो राजन्सारथ्यं दारुकस्य च ॥ ७-१४५-३८ (५१२२७)
गतप्रत्यागतावृत्तैर्मण्डलैः सन्निवर्तनैः ।
सारथेस्तु रथस्थस्य काश्यपेयस्य विस्मिताः ॥ ७-१४५-३९ (५१२२८)
नभस्तलगताश्चैव देवगान्धर्वदानवाः ।
अतीवावहिता द्रष्टुं कर्णशैनेययो रणम् ॥ ७-१४५-४० (५१२२९)
मित्रार्थे तौ पराक्रान्तौ शुष्मिणौ स्पर्धिनौ रमे ॥ ७-१४५-४१ (५१२३०)
कर्णश्चामरसङ्काशो युयुधानश्च सात्यकिः ।
अन्योन्यं तौ महाराज शरवर्षैरवर्षताम् ॥ ७-१४५-४२ (५१२३१)
प्रममाथ शिनेः पौत्रं कर्णः सायकवृष्टिभिः ।
अमृष्यमाणो निधनं कौरव्यजलसन्धयोः ॥ ७-१४५-४३ (५१२३२)
कर्णः शोकसमाविष्टो महोरग इव श्वसन् ।
स शैनेयं रणे क्रुद्धः प्रदहन्निव चक्षुषा ।
अभ्यधावत वेगेन पुनःपुनररिन्दम ॥ ७-१४५-४४ (५१२३३)
तं तु सक्रोधमालोक्य सात्यकिः प्रत्ययुध्यत ।
महता शरवर्षेण गजं प्रतिगजो यथा ॥ ७-१४५-४५ (५१२३४)
तौ समेतौ नरव्याघ्रौ व्याघ्राविव तरस्विनौ ।
अन्योन्यं सन्ततक्षाते रणेऽनुपमविक्रमौ ॥ ७-१४५-४६ (५१२३५)
ततः कर्णं शिनेः पौत्रः सर्वपारसवैः शरैः ।
बिभेद सर्वगात्रेषु पुनःपुनररिन्दम ॥ ७-१४५-४७ (५१२३६)
सारथिं चास्य भल्लेन रथनीडादपातयत् ।
अश्वांश्च चतुरः श्वेतान्निजघान शितैः शरैः ॥ ७-१४५-४८ (५१२३७)

छित्त्वा ध्वजं रथं चैव शतधा पुनर्षर्षभ ।
चकार विरथं कर्णं तव पुत्रस्य पश्यतः ॥ ७-१४५-४९ (५१२३८)
ततो विमनसो राजंस्तावकास्ते महारथाः ।
वृषसेनः कर्णसुतः शल्यो मद्राधिपस्तथा। ७-१४५-५० (५१२३९)
द्रोणपुत्रश्च शैनेयं सर्वतः पर्यवारयन् ॥
ततः पर्याकुलं सर्वं न प्राज्ञायत किंचन ॥ ७-१४५-५१ (५१२४०)
तथा सात्यकिना वीरे विरथे सूतजे कृते ।
हाहाकारस्ततो राजन्सर्वसैन्येष्वभून्महान् ॥ ७-१४५-५२ (५१२४१)
कर्णोऽपि विरथो राजन्सात्वतेन कृतः शरैः ।
दुर्योधनरथं तूर्णमारुरोह विनिःश्वसन् ॥ ७-१४५-५३ (५१२४२)
मानयंस्तव पुत्रस्य बाल्यात्प्रभृति सौहृदम् ।
कृतां राज्यप्रदानेन प्रतिज्ञां परिपालयन् ॥ ७-१४५-५४ (५१२४३)
तथा तु विरथं कर्णं पुत्रांश्च परिपालयन् ॥
दुःशासनमुखान्वीरान्नावधीत्सात्यकिर्वशी ॥ ७-१४५-५५ (५१२४४)
रक्षन्प्रतिज्ञां भीमेन पार्थेन च पुराकृताम् ।
विरथान्विह्वलांश्चक्रे न तु प्राणैर्व्ययोजयत् ॥ ७-१४५-५६ (५१२४५)
भीमसेनेन तु वदः पुत्राणां ते प्रतिश्रुतः ।
अनुद्यूते च पार्थेन वधः कर्णस्य संश्रुतः ॥ ७-१४५-५७ (५१२४६)
वधे त्वकुर्वन्यत्नं ते तस्य कर्णमुखास्तदा ।
नाशक्नुवंस्ततो हन्तुं सात्यकिं प्रवरा रथाः ॥ ७-१४५-५८ (५१२४७)
द्रौणिश्च कृतवर्मा च तथैवान्ये महारथाः ।
निर्जिता धनुषैकेन शतशः क्षत्रियर्षभाः ।
काङ्क्षता परलोकं च धर्मराजस्य च प्रियम् ॥ ७-१४५-५९ (५१२४८)
कृष्णयोः सदृशो वीर्ये सात्यकिः शत्रुतापनः ।
जितवान्सर्वसैन्यानि तावकानि हसन्निव ॥ ७-१४५-६० (५१२४९)
कृष्णो वाऽपि भवेल्लोके पार्थो वाऽपि धनुर्धरः ।
शैनेयो वा नरव्याघ्र चतुर्थस्तु न विद्यते ॥ ७-१४५-६१ (५१२५०)
धृतराष्ट्र उवाच। ७-१४५-६२क्ष् (४६४६)
अजय्यं वासुदेवस्य रथमास्थाय सात्यकिः ।
विरथं कृतवान्कर्णं वासुदेवसमो युधि ।
दारुकेण समायुक्तः स्वबाहुबलदर्पितः ॥ ७-१४५-६२ (५१२५१)
कच्चिदन्यं समारूढः सात्यकिः शत्रुतापनः ।
एतदिच्छाम्यहं श्रोतुं कुशलो ह्यसि भाषितुम् ।
असह्यं तमहं मन्ये तन्ममाचक्ष्व सञ्जय ॥ ७-१४५-६३ (५१२५२)
सञ्जय उवाच। ७-१४५-६४क्ष् (४६४७)
शृणु राजन्यथावृत्तं रथमन्यं महामतिः ।

दारुकस्यानुजस्तूर्णं कल्पनाविदिकल्पितम् ॥ ७-१४५-६४ (५१२५३)
आयसैः काञ्चनैश्चापि पट्टैः सन्नद्धकूबरम् ।
तारासहस्रखचितं सिंहध्वजपताकिनम् ॥ ७-१४५-६५ (५१२५४)
अश्वैर्वातजवैर्युक्तं हेमभाण्डपरिच्छदैः ।
सैन्धवैरिन्दुसङ्काशैः सर्वशब्दातिगैर्दृढैः ॥ ७-१४५-६६ (५१२५५)
चित्रकाञ्चनसन्नाहैर्वाजिमुख्यैर्विशाम्पते ।
घण्टाजालाकुलरवं शक्तितोमरविद्युतम् ॥ ७-१४५-६७ (५१२५६)
युक्तं साङ्ग्रामिकैर्द्रव्यैर्बहुशस्त्रपरिच्छदैः ।
रथं सम्पादयामास मेघगम्भीरनिःस्वनम् ॥ ७-१४५-६८ (५१२५७)
तं समारुह्य शैनेयस्तव सैन्यमुपाद्रवत् ।
दारुकोऽपि यथाकामं प्रययौ केशवान्तिकम् ॥ ७-१४५-६९ (५१२५८)
कर्णस्यापि रथं राजञ्शङ्खगोक्षीरपाण्डुरैः ।
चित्रकाञ्चनसन्नाहैः सदश्वैर्वेगवत्तरैः ॥ ७-१४५-७० (५१२५९)
हेमकक्ष्याध्वजोपेतं क्लृप्तयन्त्रपताकिनम् ।
अग्र्यं रथं सुयन्तारं बहुशस्त्रपरिच्छदम् ।
उपाजह्रुस्तमास्थाय कर्णोऽप्यभ्यद्रवद्रिपून् ॥ ७-१४५-७१ (५१२६०)
एतत्ते सर्वमाख्यातं यन्मां त्वं परिपृच्छसि ।
भूयश्चापि निबोधेमं तवापन्नयजं क्षयम् ॥ ७-१४५-७२ (५१२६१)
एकत्रिंशत्तव सुता भीमसेनेन पातिताः ।
दुर्मुखं प्रमुखे कृत्वा सततं चित्रयोधिनम् ॥ ७-१४५-७३ (५१२६२)
शतशो निहताः शूराः सात्वतेनार्जुनेन च ।
भीष्मं प्रमुखतः कृत्वा भगदत्तं च भारत ।
एवमेष क्षयो वृत्तो राजन्दुर्मन्त्रिते तव ॥ ॥ ७-१४५-७४ (५१२६३)

इति श्रीमन्महाभारते द्रोणपर्वणि जयद्रथवधपर्वणि
चतुर्दशदिवसयुद्धे पञ्चत्वारिंशदधिकशततमोऽध्यायः
॥ १४५ ॥

Mahabharata - Drona Parva - Chapter Footnotes

५-१४५-३ हेपुण्डरीकाक्ष स जयद्रथस्त्रिषु धर्मेषु वर्तते
इति श्रूयते के पुनस्ते त्रयो धर्माः ।अत्रोच्यते। यदि युध्यमानो
हन्यते तदा तूर्णं स्वर्गप्राप्तिरेव तस्य धर्मः। अथ पलायमानो
हन्यते तदा नरकप्राप्तिरेव तस्य धर्मः। अथ मद्भयात्स्वदेशं
गच्छति तदा यशःशरीरनाश एव तस्य धर्मः। यावदसौ
युद्धाभिमुखः प्रथमधर्मे तिष्ठति तावदेव हन्तुमुचितः अतः
शीघ्रमश्वांश्चोदयेति। कुण्डलितोऽयं श्लोकार्धः झ पुस्तक एव

दृश्यते ॥
५-१४५-७ हयज्ञः हयहृदयज्ञः ॥
५-१४५-८ आशुगैः मारुतैः ॥
५-१४५-१४ वृषः कर्णः ॥
५-१४५-क्र इत आरभ्य उत्तराध्यायस्थ--मन्दरश्मिः
सहस्रांशुरस्तङ्गिरिमुपाद्रवत् इति २५ तमश्लोकपर्यन्तं विद्यमानाः
श्लोकः झ ।पुस्तके जयद्रथवधादनन्तरं वर्तन्ते।५-१४५-१७
वासवी शक्तिरिति शेषः। ।
५-१४५-२० यथा प्रयाति तथा प्रयात्विति योज्यम् ।ज्ञास्यमि ज्ञापयिष्यामि ॥
५-१४५-२१ यत्र काले ॥
५-१४५-२५ पूर्वं पूर्वेद्युः ॥
५-१४५-२६ कल्यं प्रातः ॥
५-१४५-२९ आर्षभेण स्वार्थे तद्धितः ।ऋषभस्वरेण ॥
५-१४५-३९ काश्यपेयस्य दारुकस्य ॥
५-१४५-५७ अनुद्यूते पुनर्द्यूते ॥
५-१४५-१४५ पञ्चचत्वारिंशदधिकशततमोऽध्यायः ॥

---

द्रोनपर्व-अध्यय१४६
॥ श्रीः ॥
७.१४६. अध्यायः १४६

Mahabharata - Drona Parva - Chapter Topics
अर्जुनेन कर्णंप्रति तत्कुतभीमगर्हणातितिक्षया तद्गर्हणपूर्वकं
तत्सुतवधप्रतिज्ञा ॥१ ॥
कर्णदुर्योधनसंवादः सङ्कुलयुद्धं च ॥२ ॥

Mahabharata - Drona Parva - Chapter Text

७-१४६-० (५१२६४)
धृतराष्ट्र उवाच।७-१४६-०क्ष् (४६४८)
तथा गतेषु शूरेषु तेषां मम च सञ्जय ।
किंस्विद्भीमार्जुनौ चैव सात्यकिश्चाकरोत्तदा ॥७-१४६-१ (५१२६५)
सञ्जय उवाच।७-१४६-२क्ष् (४६४९)
विरथो भीमसेनो वै कर्णवाक्शल्यपीडितः ।
अमर्षवशमापन्नः फल्गुनं वाक्यमब्रवीत् ॥७-१४६-२ (५१२६६)
पुनःपुनस्तूबरक मूढ औदरिकेति च ।

अकृतास्त्रक मा योत्सीर्बाल सङ्ग्रामकातर ॥ ७-१४६-३ (५१२६७)
इति मामब्रवीत्कर्णः पश्यतस्ते धनञ्जय ।
एवं वक्ता च मे वध्यस्तेन चोक्तस्तथा ह्यहम् ॥ ७-१४६-४ (५१२६८)
एतद्व्रतं महाबाहो त्वया सह कृतं मया ।
तथैतन्मम कौन्तेय यथा तव न संशयः ॥ ७-१४६-५ (५१२६९)
तद्वधाय नरश्रेष्ठ स्मरैतद्वचनं मम ।
यथा भवति तत्सत्यं तथा कुरु धनञ्जय ॥ ७-१४६-६ (५१२७०)
तच्छ्रुत्वा वचनं तस्य भीमस्यामितविक्रमः ।
ततोऽर्जुनोऽब्रवीत्कर्णं किञ्चिदभ्येत्य संयुगे ॥ ७-१४६-७ (५१२७१)
कर्णकर्ण वृथादृष्टे सूतपुत्रात्मसंस्तुत ।
अधर्मबुद्धे शृणु मे यत्त्वां वक्ष्यामि साम्प्रतम् ॥ ७-१४६-८ (५१२७२)
द्वावेवं कर्ण शूराणां रणे दृष्टौ जयाजयौ ।
तौ चाप्यनित्यौ राधेय वासवस्यापि युध्यतः ॥ ७-१४६-९ (५१२७३)
ग्रणमुत्सृज्य निर्लज्ज गच्छसे च पुनः पुनः ।
माहात्म्यं पश्य भीमस्य कर्म जन्म कुले तथा ।
नोक्तवान्परुषं यत्त्वां पलायनपरायणम् ॥ ७-१४६-१० (५१२७४)
भूयस्त्वमपि सङ्गम्यं सकृदेव यदृच्छया ।
विरथं कृतवान्वीरं पाण्डवं सूतदायद ॥ ७-१४६-११ (५१२७५)
कुलस्य सदृशं चापि राधेय कृतवानसि ।
नैकान्तसिद्धिः सङ्ग्रामे वासवस्यापि विद्यते'॥ ७-१४६-१२ (५१२७६)
मुमूर्षुर्युयुधानेन विरथो विकलेन्द्रियः ।
मद्वध्यस्त्वमिति ज्ञात्वा जित्वा जीवन्विसर्जितः ॥ ७-१४६-१३ (५१२७७)
यदृच्छया रणे भीमं युध्यमानं महाबलम् ।
कथञ्चिद्विरथं कृत्वा यत्त्वं रूक्षमभाषथाः ।
अधर्मस्त्वेष सुमहाननार्यचरितं च तत् ॥ ७-१४६-१४ (५१२७८)
नारिं जित्वाऽतिकत्थन्ते न च जल्पन्ति दुर्वचः ।
न च कञ्चन निन्दन्ति सन्तः शूरा नरर्षभाः ॥ ७-१४६-१५ (५१२७९)
त्वं तु प्राकृतविज्ञानस्तत्तद्वदसि सूतज ।
बह्वबद्धमकर्ण्यं च चापलादपरीक्षितम् ॥ ७-१४६-१६ (५१२८०)
युध्यमानं पराक्रान्तं शूरमार्यव्रते रतम् ।
यदवोचोऽप्रियं भीमं नैतत्सत्यं वचस्तव ।
पश्यतां सर्वसैन्यानां केशवस्य ममैव च ॥ ७-१४६-१७ (५१२८१)
विरथो भीमसेनेन कृतोऽसि बहुशो रणे ।
न च त्वां परुषं किञ्चिदुक्तवान्पाण्डुनन्दनः ॥ ७-१४६-१८ (५१२८२)
यस्मात्तु बहु रूक्षं च श्रावितस्ते वृकोदरः ।
परोक्षं यच्च सौभद्रो युष्माभिर्बहुभिर्हतः ।

तस्मादस्यावलेपस्य सद्यः फलमवाप्नुहि ॥ ७-१४६-१९ (५१२८३)
त्वया तस्य धनुश्छिन्नमात्मनाशाय दुर्मते ।
तस्माद्वध्योऽसि मे मूढ सभृत्यसुतबान्धवः ॥ ७-१४६-२० (५१२८४)
कुरु त्वं सर्वकृत्यानि महत्ते भयमागतम् ।
हन्ताऽस्मि वृषसेनं ते प्रेक्षमाणस्य संयुगे ॥ ७-१४६-२१ (५१२८५)
ये चान्येऽप्युपयास्यन्ति बुद्धिमोहेन मां नृपाः ।
तांश्च सर्वान्हनिष्यामि सत्येनायुधमालभे ॥ ७-१४६-२२ (५१२८६)
त्वां च मूढाकृतप्रज्ञमतिमानिनमाहवे ।
दृष्ट्वा दुर्योधनो मन्दो भृशं तप्स्यति पातितम् ॥ ७-१४६-२३ (५१२८७)
सञ्जय उवाच। ७-१४६-२४क्ष् (४६५०)
अर्जुनेन प्रतिज्ञाते वधे कर्णसुतस्य तु ।
महान्सुतुमुलः शब्दो बभूव रथिनां तदा ॥ ७-१४६-२४ (५१२८८)
तस्मिन्नाकुलसङ्ग्रामे वर्तमाने महाभये ।
मन्दरश्मिः सहस्रांशुरस्तङ्गिरिमुपाद्रवत् ॥ ७-१४६-२५ (५१२८९)
ततो दुर्योधनो राजा राधेयं त्वरितोऽब्रवीत् ।
अर्जुनं प्रेक्ष्य संयातं जयद्रथवधं प्रति ॥ ७-१४६-२६ (५१२९०)
ग्अमानुषाणि कर्माणि कुर्वन्तौ भरतर्षभ ।
सात्यकिं भीमसेनं च यत्तौ तौ दर्शयन्निव ॥ ७-१४६-२७ (५१२९१)
अयं स वैकर्तन युद्धकालो
विदर्शयस्वात्मबलं महात्मन् ।
यथा न वध्येत रणेऽर्जुनेन
जयद्रथः कर्ण तथा कुरुष्व ॥ ७-१४६-२८ (५१२९२)
अल्पावशेषो दिवसो हि साम्प्रतं
निवारयेहाद्य रिपुं शरौघैः ।
दिनक्षयं प्राप्य नरप्रवीर
ध्रुवो हि नः कर्ण जयो भविष्यति ॥ ७-१४६-२९ (५१२९३)
सैन्धवे रक्ष्यमाणे तु सूर्यस्यास्तमनं प्रति ।
मिथ्याप्रतिज्ञः कौन्तेयः प्रवेक्ष्यति हुताशनम् ॥ ७-१४६-३० (५१२९४)
अनर्जुनायां च भुवि मुहूर्तमपि मानद ।
जीवितुं नोत्सहेरन्वै भ्रातरोऽस्य सहानुगाः ॥ ७-१४६-३१ (५१२९५)
पाण्डवेषु विनष्टेषु सशैलवनकाननाम् ।
वसुन्धरामिमां कर्ण भोक्ष्यामो महतकण्टकाम् ॥ ७-१४६-३२ (५१२९६)
दैवेनोपहतः पार्थो विपरीतश्च मानद ।
कार्याकार्यमजानानः प्रतिज्ञां कृतवान्रणे ॥ ७-१४६-३३ (५१२९७)
नूनमात्मविनाशाय पाण्डवेन किरीटिना ।
मिथ्याप्रतिज्ञैव कृता जयद्रथवधं प्रति ॥ ७-१४६-३४ (५१२९८)

कथं जीवति दुर्धर्षे त्वपि राधेय फल्गुनः ।
अनस्तङ्गत आदित्ये हन्यात्सैन्धवकं नृपम् ॥ ७-१४६-३५ (५१२९९)
रक्षितं मद्रराजेन कृपेण च महात्मना ।
जयद्रथं रणमुखे कथं हन्याद्धनञ्जयः ॥ ७-१४६-३६ (५१३००)
द्रौणिना रक्ष्यमाणं च मया दुःशासनेन च ।
कथं प्राप्स्यति बीभत्सुः सैन्धवं कालचोदितः ॥ ७-१४६-३७ (५१३०१)
युध्यन्ते बहवः शूरा लम्बते च दिवाकरः ।
शङ्के जयद्रथं पार्थो नैव प्राप्स्यति मानद ॥ ७-१४६-३८ (५१३०२)
स त्वं कर्ण मया सार्धं शूरैश्चान्यैर्महारथैः ।
द्रौणिना त्वं हि सहितो मद्रेशेन कृपेण च ।
युध्यस्व यत्नमास्थाय परं पार्थेन संयुगे ॥ ७-१४६-३९ (५१३०३)
एवमुक्तस्तु राधेयस्तव पुत्रेण मारिष ।
दुर्योधनमिदं वाक्यं प्रत्युवाच कुरूत्तमम् ॥ ७-१४६-४० (५१३०४)
दृढलक्ष्येण वीरेण भीमसेनेन धन्विना ।
भृशं भिन्नतनुः सङ्ख्ये शरजालैरनेकशः ॥ ७-१४६-४१ (५१३०५)
स्थातव्यमिति तिष्ठामि रणे सम्प्रति मानद ।
नाङ्गमिङ्गति किञ्चिन्मे सन्तप्तस्य महेषुभिः ।
योत्स्यामि तु यथाशक्त्या त्वदर्थं जीवितं मम ॥ ७-१४६-४२ (५१३०६)
ग्तत्तथा प्रयतिष्येऽहं परं शक्त्याxxxx सुयोधन'।
यथा पाण्डवमुख्योऽसौ न हनिष्याति सैन्धवम् ॥ ७-१४६-४३ (५१३०७)
न हि मे युध्यमानस्य सायकानस्यतः शितान् ।
सैन्धवं प्राप्स्यते वीरः सव्यसाची धनञ्जयः ॥ ७-१४६-४४ (५१३०८)
यत्तु भक्तिमता कार्यं सततं हितकाङ्क्षिणा ।
तत्करिष्यामि कौरव्य जयो दैवे प्रतिष्ठितः ॥ ७-१४६-४५ (५१३०९)
सैन्धवार्थे परं यत्नं करिष्याम्यद्य संयुगे ।
त्वत्प्रियार्थं महाराज जयो दैवे प्रतिष्ठितः ॥ ७-१४६-४६ (५१३१०)
अद्य योत्स्येऽर्जुमहं पौरुषं स्वं व्यपाश्रितः ।
त्वदर्थे पुरुषव्याघ्र जयो दैवे प्रतिष्ठितः ॥ ७-१४६-४७ (५१३११)
अद्य युद्धं कुरुश्रेष्ठ मम पार्थस्य चोभयोः ।
पश्यन्तु सर्वसैन्यानि दारुणं रोमहर्षणम् ॥ ७-१४६-४८ (५१३१२)
सञ्जय उवाच। ७-१४६-४९क्ष् (४६५१)
कर्णकौरवयोरेवं रणे संभाषमाणयोः ।
अर्जुनो निशितैर्बाणैर्जघान तव वाहिनीम् ॥ ७-१४६-४९ (५१३१३)
चिच्छेद निशितैर्बाणैः शूराणामनिवर्तिनाम् ॥ ७-१४६-५० (५१३१४)
भुजान्परिघसङ्काशान्हस्तिहस्तोपमान्रणे ।
शिरांसि च महाबाहुश्चिच्छेद निशितैः शरैः ॥ ७-१४६-५१ (५१३१५)

हस्तिहस्तान्द्विपस्कन्धान्रथाक्षांश्च समन्ततः ।
शोणिताक्तान्हयारोहान्गृहीतप्रासतोमरान् ॥ ७-१४६-५२ (५१३१६)
क्षुरैश्चिच्छेद बीभत्सुर्द्विधैकैकं त्रिधैव च ।
हयान्वारणमुख्यांश्च पदातींश्च समन्ततः ।
ध्वजांश्छत्राणि चापानि चामराणि शिरांसि च ॥ ७-१४६-५३ (५१३१७)
कक्षमग्निरिवोद्धूतः प्रादहत्तव वाहिनीम् ।
अचिरेण महीं पार्थश्चकार रुधिरोत्तराम् ॥ ७-१४६-५४ (५१३१८)
हतभूयिष्ठयोधं तत्कृत्वा तव बलं बली ।
आससाद दुराधर्षः सैन्धवं सत्यविक्रमः ॥ ७-१४६-५५ (५१३१९)
बीभत्सुर्भीमसेनेन सात्वतेन च रक्षितः ।
प्रबभौ भरतश्रेष्ठ ज्वलन्निव हुताशनः ॥ ७-१४६-५६ (५१३२०)
तं तथाऽवस्थितं दृष्ट्वा त्वदीया वीरसंमताः ।
नामृष्यन्त महेष्वासाः पाण्डवं पुरुषर्षभाः ॥ ७-१४६-५७ (५१३२१)
दुर्योधनश्च कर्णश्च वृषसेनोऽथ मद्रराट् ।
अश्वत्थामा कृपश्चैव स्वयमेव च सैन्धवः ॥ ७-१४६-५८ (५१३२२)
सन्नद्धाः सैन्धवस्यार्थे समावृण्वन्किरीटिनम् ।
नृत्यन्तं रथमार्गेषु धनुर्ज्यातलनिःस्वनैः ॥ ७-१४६-५९ (५१३२३)
सङ्ग्रामकोविदं पार्थं सर्वे युद्धविशारदाः ।
अभीताः पर्यवर्तन्त व्यादितास्यमिवान्तकम् ॥ ७-१४६-६० (५१३२४)
सैन्धवं पृष्ठतः कृत्वा जिघांसन्तोऽच्युतार्जुनौ ।
सूर्यास्तमनमिच्छन्तो लोहितायति भास्करे ॥ ७-१४६-६१ (५१३२५)
ते भुजैर्भोगिभोगाभैर्धनूंष्यानम्य सायकान् ।
मुमुचुःसूर्यरश्म्याभाञ्छतशः फल्गुनं प्रति ॥ ७-१४६-६२ (५१३२६)
ततस्तानस्यमानांश्च किरीटी युद्धदुर्मदः ।
द्विधा त्रिधाऽष्टधैकैकं छित्त्वा विव्याध तान्रथान् ॥ ७-१४६-६३ (५१३२७)
सिंहलाङ्गूलकेतुस्तु दर्शयन्वीर्यमात्मनः ।
शारद्वतीसुतो राजन्नर्जुनं प्रत्यवारयन् ॥ ७-१४६-६४ (५१३२८)
स विद्धा दशभिः पार्थं वासुदेवं च सप्तभिः ।
अतिष्ठद्रथमार्गेषु सैन्धवं प्रतिपालयन् ॥ ७-१४६-६५ (५१३२९)
अथैनं कौरवश्रेष्ठाः सर्व एव महारथाः ।
महता रथवंशेन सर्वतः प्रत्यवारयन् ॥ ७-१४६-६६ (५१३३०)
विष्फारयन्तश्चापानि विसृजन्तश्च सायकान् ।
सैन्धवं पर्यरक्षन्त शासनात्तनयस्य ते ॥ ७-१४६-६७ (५१३३१)
ततः पार्थस्य शूरस्य बाह्वोर्बलमदृश्यत ।
इषूणामक्षयत्वं च धनुषो गाण्डिवस्य च ॥ ७-१४६-६८ (५१३३२)
अस्त्रैरस्त्राणि संवार्य द्रौणेः शारद्वतस्य च ।

एकैकं दशभिर्बाणैः सर्वानेव समार्पयत् ॥ ७-१४६-६९ (५१३३३)
तं द्रौणिः पञ्चविंशत्या वृषसेनश्च सप्तभिः ।
दुर्योधनश्च विंशत्या कर्णशल्यौ त्रिभिस्त्रिभिः ॥ ७-१४६-७० (५१३३४)
त एनमभिगर्जन्तो विध्यन्तश्च पुनःपुनः ।
विधुन्वन्तश्च चापानि सर्वतः प्रत्यवारयन् ॥ ७-१४६-७१ (५१३३५)
श्लिष्टं च सर्वतश्चक्रू रथमण्डलमाशु ते ।
सूर्यास्तमनमिच्छन्तस्त्वरमाणा महारथाः ॥ ७-१४६-७२ (५१३३६)
त एनमभिनर्दन्तौ विधुन्वाना धनूंषि च ।
सिषिचुर्मार्गणैस्तीक्ष्णैर्गिरिं मेघा इवाम्बुभिः ॥ ७-१४६-७३ (५१३३७)
ते महास्त्राणि दिव्यानि तत्र राजन्व्यदर्शयन् ।
धनञ्जयस्य गात्रे तु शूराः परिघबाहवः ॥ ७-१४६-७४ (५१३३८)
गनिवार्य ताञ्शरव्रातैर्दिव्यान्यस्त्राणि दर्शयन्'।
हतभूयिष्ठयोधं तत्कृत्वा तव बलं बली ।
आससाद दुराधर्षः सैन्धवं सत्यविक्रमः ॥ ७-१४६-७५ (५१३३९)
तं कर्णः संयुगे राजन्प्रत्यवारयदाशुगैः ।
मिषतो भीमसेनस्य सात्वतस्य च भारत ॥ ७-१४६-७६ (५१३४०)
तं पार्थो दशभिर्बाणैः प्रत्यविध्यद्रणाजिरे ।
सूतपूत्रं महाबाहुः सर्वसैन्यस्य पश्यतः ॥ ७-१४६-७७ (५१३४१)
सात्वतश्च त्रिभिर्बाणैः कर्णं विव्याध मारिष ।
भीमसेनस्त्रिभिश्चैव पुनः पार्थश्च सप्तभिः ॥ ७-१४६-७८ (५१३४२)
तान्कर्णः प्रतिविव्याध षष्ट्याषष्ट्या महारथः ।
तद्युद्धमभवद्राजन्कर्णस्य बहुभिः सह ॥ ७-१४६-७९ (५१३४३)
तत्राद्भुतमपश्याम सूतपुत्रस्य मारिष ।
यदेकः समरे क्रुद्धस्त्रीन्रथान्पर्थवारयत् ॥ ७-१४६-८० (५१३४४)
फल्गुनस्तु महाबाहुः कर्णं वैकर्तनं रणे ।
सायकानां शतेनैव सर्वमर्मस्वताडयत् ॥ ७-१४६-८१ (५१३४५)
रुधिरोक्षितसर्वाङ्गः सूतपुत्रः प्रतापवान् ।
शरैः पञ्चाशता वीरः फल्गुनं प्रत्यविध्यत ॥ ७-१४६-८२ (५१३४६)
तस्य तल्लाघवं दृष्ट्वा नामृष्यत रणेऽर्जुनः ।
तस्य पार्थो धनुश्छित्त्वा विव्याधैनं स्तनान्तरे ।
सायकैर्नवभिर्वीरस्त्वरमाणो धनञ्जयः ॥ ७-१४६-८३ (५१३४७)
अथान्यद्धनुरादाय सूतपुत्रः प्रतापवान् ।
सायकैरष्टसाहस्रैश्छादयामास पाण्डवम् ॥ ७-१४६-८४ (५१३४८)
तां बाणवृष्टिमतुलां कर्णचापसमुत्थिताम् ।
व्यधमत्सायकैः पार्थः शलभानिव मारुतः ॥ ७-१४६-८५ (५१३४९)
छादयामास च तदा सायकैरर्जुनो रणे ।

पश्यतां सर्पयोधानां दर्शयन्पाणिलाघवम् ॥ ७-१४६-८६ (५१३५०)
वधार्थं चास्य समरे सायकं सूर्यवर्चसम् ।
चिक्षेप त्वरया युक्तस्त्वराकाले धनञ्जयः ॥ ७-१४६-८७ (५१३५१)
तमापतन्तं वेगेन द्रौणिश्चिच्छेद सायकम् ।
अर्धचन्द्रेण तीक्ष्णेन स च्छिन्नः प्रापतद्भुवि ॥ ७-१४६-८८ (५१३५२)
कर्णोऽपि द्विषतां हन्ता छादयामास फल्गुनम् ।
सायकैर्बहुसाहस्रैः कृतप्रतिकृतेप्सया ॥ ७-१४६-८९ (५१३५३)
तौ वृषाविव नर्दन्तौ नरसिंहौ महारथौ ।
सायकैस्तु प्रतिच्छन्नं चक्रतुः खमजिह्मगैः ॥ ७-१४६-९० (५१३५४)
अदृश्यौ च शरौघैस्तौ निघ्नन्तावितरेतरम् ।
कर्ण पार्थोऽस्मि तिष्ठत्वं कर्णोऽहं तिष्ठ फल्गुन ॥ ७-१४६-९१ (५१३५५)
इत्येवं तर्जयन्तौ तौ वाक्शल्यैस्तु परस्परम् ।
विध्येतां समरे वीरौ चित्रं लघु च सुष्ठु च ॥ ७-१४६-९२ (५१३५६)
प्रेक्षणीयौ चाभवतां सर्वयोधसमागमे ।
प्रशस्यामानौ समरे सिद्धचारणपन्नगैः ॥ ७-१४६-९३ (५१३५७)
अयुध्येतां महाराज परस्परवधैषिणौ ।
ततो दुर्योधनो राजंस्तावकानभ्यभाषत ॥ ७-१४६-९४ (५१३५८)
यत्नाद्रक्षत राधेयं नाहत्वा समरेऽर्जुनम् ।
निवर्तिष्यति राधेयो न वाऽजित्वाऽद्य फल्गुनं ॥ ७-१४६-९५ (५१३५९)
एतस्मिन्नतरे राजन्दृष्ट्वा कर्णस्य विक्रमम् ।
आकर्णमुक्तैरिषुभिः कर्णस्य चतुरो हयान् ।
अनयत्प्रेतलोकाय चतुर्भिः श्वेतवाहनः ॥ ७-१४६-९६ (५१३६०)
सारथिं चास्य भल्लेन रथनीडादपातयत् ।
छादयामास स शरैस्तव पुत्रस्य पश्यतः ॥ ७-१४६-९७ (५१३६१)
सञ्छाद्यमानः समरे हताश्वो हतसारथिः ।
मोहितः शरजालेन कर्तव्यं नाभ्यपद्यत ॥ ७-१४६-९८ (५१३६२)
तं तथा विरथं दृष्ट्वा रथमारोप्य तं तदा ।
अश्वत्थामा महाराज भूयोऽर्जुनमयोधयत् ॥ ७-१४६-९९ (५१३६३)
मद्रराजश्च कौन्तेयमविध्यत्त्रिंशता शरैः ।
ग्आवव्रेऽर्जुनमार्गं च शरजालेन भारत'॥ ७-१४६-१०० (५१३६४)
शारद्वतस्तु विंशत्यं वासुदेवं समार्पयत् ।
धनञ्जयं द्वादशभिराजघान शिलीमुखैः ॥
चतुर्भिः सिन्धुराजश्च वृषसेनश्च सप्तभिः ।
पृथक्पृथङ्महाराज विव्यधुः कृष्णपाण्डवौ ॥ ७-१४६-१०१ (५१३६५)
तथैव तान्प्रत्यविध्यत्कुन्तीपुत्रो धनञ्जयः ।
द्रोणपुत्रं चतुःषष्ट्या मद्रराजं शतेन च ॥

सैन्धवं दशभिर्बाणैर्वृषसेनं त्रिभिः शरैः ।
शारद्वतं च विंशत्या विद्ध्वा पार्थो ननाद ह ॥ ७-१४६-१०२ (५१३६६)
ते प्रतिज्ञाप्रतीघातमिच्छन्तः सव्यसाचिनः ।
सहितास्तावकास्तूर्णमभिपेतुर्धनञ्जयम् ॥ ७-१४६-१०३ (५१३६७)
अथार्जुनः सर्वतो वारुणास्त्रं
प्रादुश्चक्रे त्रासयन्धार्तराष्ट्रान् ।
तं प्रत्युदीयः कुरुवः पाण्डुपुत्रं
रथैर्महार्हैः शरवर्षं सृजन्तः ॥ ७-१४६-१०४ (५१३६८)
ततस्तु तस्मिंस्तुमले समुत्थिते
सुदारुणे भारतमोहनीये ।
नो मुह्यत प्राप्य स राजपुत्रः
किरीटमाली व्यसृजच्छरौघान् ॥ ७-१४६-१०५ (५१३६९)
वधप्रेप्सुः सव्यसाची कुरूणां
स्मरन्क्लेशान्द्वादशवर्षवृत्तान् ।
गाण्डीवमुक्तैरिषुभिर्महात्मा
सर्वा दिशो व्यावृणोदप्रमेयः ॥ ७-१४६-१०६ (५१३७०)
प्रदीप्तोल्कमभवच्चान्तरिक्षं
मृतेषु देहेष्वपतन्वयांसि ।
यत्पिङ्गलज्येन किरीटमाली
क्रुद्धो रिपूनाजगवेन हन्ति ॥ ७-१४६-१०७ (५१३७१)
ततः किरीटि महता महायशाः
शरासनेनास्य शराननीकजित् ।
हयप्रवेकोत्तमनागघूर्णिता--
न्कुरुप्रवीरानिषुभिर्व्यापातयत् ॥ ७-१४६-१०८ (५१३७२)
गदाश्च गुर्वीः परिघानयस्मया--
नसींश्च शक्तीश्च रणे नराधिपाः ।
महान्ति शस्त्राणि च भीमदर्शनाः
प्रगृह्य पार्थं सहसाऽभिदुद्रुवुः ॥ ७-१४६-१११ (५१३७३)
ततो युगान्ताभ्रसमस्वनं मह--
न्महेन्द्रचापप्रतिमं च गाण्डिवम् ।
चकर्ष दोर्भ्यां विहसन्भृशं ययौ
दहंस्त्वहीयान्यमराष्ट्रवर्धनः ॥ ७-१४६-११२ (५१३७४)
स तानुदीर्णान्सरथान्सवारणा--
न्पदातिसङ्घांश्च महाधनुर्धरः ।
विपन्नसर्वायुधजीवितान्रणे
चकार वीरो यमराष्ट्रवर्धनान् ॥ ॥ ७-१४६-११३ (५१३७५)

इति श्रीमन्महाभारते द्रोणपर्वणि जयद्रथवधपर्वणि
चतुर्दशदिवसयुद्धे षट्चत्वारिंशदधिकशततमोऽध्यायः
॥ १४६ ॥
Mahabharata - Drona Parva - Chapter Footnotes

५-१४६-३३ उपहतो मोहितः । विपरीतोऽन्यथाभूतप्रकृतिः ॥
५-१४६-४१ दृढलक्ष्येण दृढप्रहारेण ॥
५-१४६-४५ प्रतिष्ठितः अधीनः ॥
५-१४६-१०६ सर्वतोदारमस्त्रं इति । क ख ट पाठः । सर्वतः
सारमस्त्रं इति ङ । पाठः ॥
५-१४६-१०७ प्राप्य युद्धमिति शेषः ॥
५-१४६-११० आस्य समन्ततः क्षिप्त्वा ॥
५-१४६-१४६ षट्चत्वारिंशदधिकचततमोऽध्यायः ॥

---

द्रोनपर्व-अध्यय१४७
॥ श्रीः ॥
७.१४७. अध्यायः १४७

Mahabharata - Drona Parva - Chapter Topics
अल्पशेषे दिवसे तिरोहिते च जयद्रथे कृष्णेनान्धकारसर्जनेन
सूर्यबिम्बपिधानम् ॥ १ ॥
अदृश्यमाने भानौ जयद्रथे च निःशङ्कमात्मानमाविष्कुर्वति
अर्जुनेन कृष्णचोदनया तच्छिरश्छेदः ॥ २ ॥
कृष्णेनार्जुनम्प्रति जयद्रथशिरः बूतले न निपातनीयमित्युक्ते तेन
तम्प्रति तत्कारणकथनप्रार्थना ॥ ३ ॥

Mahabharata - Drona Parva - Chapter Text

७-१४७-० (५१३७६)
सञ्जय उवाच। ७-१४७-०क्ष् (४६५२)
श्रुत्वा निनादं धनुषश्च तस्य
विस्पषृमुत्कष्टमिवान्तकस्य ।
शक्राशनिस्फोटसमं सुघोरं
विकृष्यमाणस्य धनञ्जयेन ॥ ७-१४७-१ (५१३७७)
त्रासोद्विग्नं तथोद्धान्तं त्वदीयं तद्बलं नृप ।

युगान्तवातसङ्क्षुब्धं चलद्वीचितरङ्गितम् ।
प्रलीनमीनमकरं सागराम्भ इवाभवत् ॥ ७-१४७-२ (५१३७८)
ग्मध्यन्दिनगतं सूर्यमापतन्तमिवाम्बरे ।
न शेकुः सर्वभूतानि पाण्डवं प्रतिवीक्षितुम्'॥ ७-१४७-३ (५१३७९)
स रणे व्यचरत्पार्थः प्रेक्ष्यमाणो धनञ्जयः ।
युगपद्दिक्षु सर्वासु सर्वाण्यस्त्राणि दर्शयन् ॥ ७-१४७-४ (५१३८०)
आददानं महाराज सन्दधानं च पाण्डवम् ।
उत्कर्षन्तं सृजन्तं च न स्म पश्याम लाघवात् ॥ ७-१४७-५ (५१३८१)
श्ततः क्रुद्धो महाबाहुरैन्द्रमस्त्रं दुरासदम् ।
प्रादुश्चक्रे महाराज त्रासयन्सर्वभारतान् ॥ ७-१४७-६ (५१३८२)
ततः शराः प्रादुरासन्दिव्यास्त्रप्रतिमन्त्रिताः ।
प्रदीपाश्च शिखिमुखाः शतशोऽथ सहस्रशः ॥ ७-१४७-७ (५१३८३)
आकर्णपूर्णनिर्मुक्तैरग्न्यर्कांशुनिभैः शरैः ।
नभोऽभवत्तद्दुष्प्रेक्ष्यमुल्काभिरिव संवृतम् ॥ ७-१४७-८ (५१३८४)
ततः शस्त्रान्धकारं तत्कौरवैः समुदीरितम् ।
अशक्यं मनसाऽप्यन्यैः पाण्डवः सम्भ्रमन्निव ॥ ७-१४७-९ (५१३८५)
नाशयामास विक्रम्य शरैर्दिव्यास्त्रमन्त्रितैः ।
नैशं तमोंशुभिः क्षिप्रं दिनादाविव भास्करः ॥ ७-१४७-१० (५१३८६)
ततस्तु तावकं सैन्यं दीप्तैः शरगभस्तिभिः ।
आक्षिपत्पल्वलाम्बूनि निदाघार्क इव प्रभुः ॥ ७-१४७-११ (५१३८७)
ततो दिव्यास्त्रविदुषा प्रहिताः सायकांशवः ।
समाप्लवन्द्विषत्सैन्यं लोकं भागोरिवांशवः ॥ ७-१४७-१२ (५१३८८)
अथापरे समुत्सृष्टा विशिखास्तिग्मतेजसः ।
हृदयान्याशु वीराणां विविशुः प्रियबन्धुवत् ॥ ७-१४७-१३ (५१३८९)
य एनमीयुः समरे त्वद्योधाः शूरमानिनः ।
शलभा इव ते दीप्तमग्निं प्राप्य ययुः क्षयम् ॥ ७-१४७-१४ (५१३९०)
एवं स मृद्नञ्शत्रूणां जीवितानि यशांसि च ।
पार्थश्चचार सङ्ग्रामे मृत्युर्विग्रहवानिव ॥ ७-१४७-१५ (५१३९१)
स किरीटानि वस्त्राणि साङ्गदान्विपुलान्भुजान् ।
सकुण्डलयुगान्कर्णान्केषाञ्चिदहरच्छरैः ॥ ७-१४७-१६ (५१३९२)
सतोमरान्गजस्थानां सप्रासान्हयसादिनाम् ।
सचर्मणः पदातीनां रथिनां च सधन्वनः ।
सप्रतोदान्नियन्तॄणां बाहूंश्चिच्छेद पाण्डवः ॥ ७-१४७-१७ (५१३९३)
प्रदीप्तोग्रशरार्जिष्मान्बभौ तत्र धनञ्जयः ।
सविस्फुलिङ्गाग्रशिखो ज्वलन्निव हुताशनः ॥ ७-१४७-१८ (५१३९४)
तं देवराजप्रतिमं सर्वशस्त्रभृतां वरम् ।

युगपद्दिक्षु सर्वासु रथस्थं पुरुषर्षभम् ॥ ७-१४७-१९ (५१३९५)
निक्षिपन्तं महास्त्राणि प्रेक्षणीयं धनञ्जयम् ।
नृत्यन्तं रथमार्गेषु धनुर्ज्यातलनादिनम् ॥ ७-१४७-२० (५१३९६)
निरीक्षितुं न शेकुस्ते यत्नवन्तोऽपि पार्थिवाः ।
मध्यन्दिनगतं सूर्यं प्रतपन्तमिवाम्बरे ॥ ७-१४७-२१ (५१३९७)
दीप्तोग्रसम्भृतशरः किरीटी विरराज ह ।
वर्षास्विवोदीर्णजलः सेन्द्रधन्वाम्बुदो महान् ॥ ७-१४७-२२ (५१३९८)
महास्त्रसंप्लुवे तस्मिञ्जिष्णुना सम्प्रवर्तिते ।
सुदुस्तरे महाघोरे ममज्जुर्योधपुङ्गवाः ॥ ७-१४७-२३ (५१३९९)
उत्कृत्तवदनैर्देहैः शरीरैः कृत्तबाहुभिः ।
भुजैश्च पाणिनिर्मुक्तैः पाणिभिर्व्यङ्गुलीकृतैः ॥ ७-१४७-२४ (५१४००)
कृत्ताग्रहस्तैः करिभिः कृत्तदन्तैर्मदोत्कटैः ।
हयैश्च विधुरग्रीवै रथैश्च शकलीकृतैः ॥ ७-१४७-२५ (५१४०१)
निकृत्तान्त्रैः कृत्तपादैस्तथाऽन्यैः कृत्तसन्धिभिः ।
निश्चेष्टैर्विस्फुरद्भिश्च शतशोऽथ सहस्रशः ॥ ७-१४७-२६ (५१४०२)
मृत्योराघातललितं तत्पार्थायोधनं महत् ।
अपश्याम महीपाल भीरूणां भयवर्धनम् ॥ ७-१४७-२७ (५१४०३)
आक्रीडमिव रुद्रस्य पुराभ्यर्दयतः पशून् ।
गजानां क्षुरनिर्मुक्तैः करैः सभुजगेव भूः ॥ ७-१४७-२८ (५१४०४)
क्वचिद्बभौ स्रग्विणीव वक्त्रपद्मैः समाचिता ।
विचित्रोष्णीषमुकुटैः केयूराङ्गदकुण्डलैः ॥ ७-१४७-२९ (५१४०५)
स्वर्णचित्रतनुत्रैश्च भाण्डैश्च गजवाजिनाम् ।
किरीटशतसङ्कीर्णा तत्र तत्र समाचिता ।
विराज भृशं चित्रा मही नववधूरिव ॥ ७-१४७-३० (५१४०६)
मज्जामेदःकर्दमिनीं शोणितौघतरङ्गिणीम् ।
मर्मास्थिभिरगाधां च केशशैवलशाद्वलाम् ॥ ७-१४७-३१ (५१४०७)
शिरोबाहूपलतटां रुग्णक्रोडास्थिसङ्कटाम् ।
चित्रध्वजपताकाढ्यां छत्राचापोर्मिमालिनीम् ॥ ७-१४७-३२ (५१४०८)
विगतासुमहाकायां गजदेहाभिसङ्कुलाम् ।
रथोडुपशताकीर्णां हयसङ्घातरोधसम् ॥ ७-१४७-३३ (५१४०९)
रथचक्रयुगेषाक्षकूबरैरतिदुर्गमाम् ।
प्रासासिशक्तिपरशुविशिखाहिदुरासदाम् ॥ ७-१४७-३४ (५१४१०)
बलकङ्कमहानक्रां गोमायुमकरोत्कटाम् ।
गृध्रोदग्रमहाग्राहां शिवाविरुतभैरवाम् ॥ ७-१४७-३५ (५१४११)
नृत्यत्प्रेतपिशाचाद्यैर्भूताकीर्णां सहस्रशः ।
गतासुयोधनिश्चेष्टशरीरशतवाहिनीम् ॥ ७-१४७-३६ (५१४१२)

महाप्रतिभयां रौद्रां घोरां वैतरणीमिव ।
नदीं प्रवर्तयामास भीरूणां भयवर्धिनीम् ॥ ७-१४७-३७ (५१४१३)
तं दृष्ट्वा तस्य विक्रान्तमन्तकस्येव रूपिणः ।
अभूतपूर्वं कुरुषु भयमागाद्रणाजिरे ॥ ७-१४७-३८ (५१४१४)
तत आदाय वीराणामस्त्रैरस्त्राणि पाण्डवः ।
आत्मानं रौद्रमाचष्ट रौद्रकर्मण्यधिष्ठितः ॥ ७-१४७-३९ (५१४१५)
ततो रथवरान्राजन्नत्यतिक्रामदर्जुनः ॥ ७-१४७-४० (५१४१६)
मध्यन्दिनगतं सूर्यं प्रतपन्तमिवाम्बरे ।
न शेकुः सर्वभूतानि पाण्डवं प्रतिवीक्षितुम् ॥ ७-१४७-४१ (५१४१७)
प्रसृतांस्तस्य गाण्डीवाच्छरव्रातान्महात्मनः ।
सङ्ग्रामे सम्प्रपश्यामो हंसपङ्क्तिरिवाम्बरे ॥ ७-१४७-४२ (५१४१८)
विनिवार्य स वीराणामस्त्रैरस्त्राणि सर्वतः ।
दर्शयन्रौद्रमात्मानमुग्रे कर्मणि धिष्ठितः ॥ ७-१४७-४३ (५१४१९)
स तान्रथवरान्राजन्नत्याक्रामत्तदाऽर्जुनः ।
मोहयन्निव नाराचैर्जयद्रथवधेप्सया ॥ ७-१४७-४४ (५१४२०)
विसृजन्दिक्षु सर्वासु शरानच्युतसारथिः ।
सरथो व्यचरत्तूर्णं प्रेक्षणीयो धनञ्जयः ॥ ७-१४७-४५ (५१४२१)
भ्रमन्त इव शूरस्य शरव्राताः महात्मनः ।
अदृश्यन्तान्तरिक्षस्थाः शतशोऽथ सहस्रशः ॥ ७-१४७-४६ (५१४२२)
आददानं महेष्वासं सन्दधानं च सायकम् ।
विसृजन्तं च कौन्तेयं नानुपश्याम वै तदा ॥ ७-१४७-४७ (५१४२३)
तथा सर्वा दिशो राजन्सर्वांश्च रथिनो रणे ।
आकुलीकृत्य कौन्तेयो जयद्रथमुपाद्रवत् ।
विव्याध च चतुःषष्ट्या शराणां नतपर्वणाम् ॥ ७-१४७-४८ (५१४२४)
श्सैन्धवाभिमुखं यान्तं योधाः सम्प्रेक्ष्य पाण्डवम् ।
न्यवर्तन्त रणाद्वीरा निराशास्तस्य जीविते ॥ ७-१४७-४९ (५१४२५)
यो योऽभ्यधावदाक्रन्दे तावकः पाण्डवं रणे ।
तस्यतस्यान्तगा बाणाः शरीरे न्यपतन्प्रभो ॥ ७-१४७-५० (५१४२६)
कबन्धसङ्कुलं चक्रे तव सैन्यं महारथः ।
अर्जुनो जयतां श्रेष्ठः शरैरग्न्यंशुसन्निभैः ॥ ७-१४७-५१ (५१४२७)
एवं तत्तव राजेन्द्र चतुरङ्गबलं तदा ।
व्याकुलीकृत्य कौन्तेयो जयद्रथमुपाद्रवत् ॥ ७-१४७-५२ (५१४२८)
द्रौणिं पञ्चाशताऽविध्यद्वृषसेनं त्रिभिः शरैः ।
कृपायमाणः कौन्तेयः कृपं नवभिरार्दयत् ॥ ७-१४७-५३ (५१४२९)
शल्यं षोडशभिर्बाणैः कर्णं द्वात्रिंशता शरैः ।
सैन्धवं तु चतुःषष्ट्या विद्ध्वा सिंह इवानदत् ॥ ७-१४७-५४ (५१४३०)

सैन्धवस्तु तथा विद्धः शरैर्गाण्डीवधन्वना ।
न चक्षमे सुसङ्क्रुद्धस्तोत्रार्दित इव द्विपः ॥ ७-१४७-५५ (५१४३१)
स वराहध्वजस्तूर्णं गार्ध्रपत्रानजिह्मगान् ।
क्रुद्धाशीविषसङ्काशान्कर्मारपरिमार्जितान् ॥ ७-१४७-५६ (५१४३२)
आकर्णपूर्णांश्चिक्षेप फल्गुनस्य रथं प्रति ।
त्रिभिस्तु विद्वा गोविन्दं नाराचैः षड्भिरर्जुनम् ॥ ७-१४७-५७ (५१४३३)
अष्टभिर्वाजिनोऽविध्यद्ध्वजं चैकेन पत्रिणा ।
‘भूयश्चैवार्जुनं सङ्ख्ये शरवर्षैरवाकिरत्’॥ ७-१४७-५८ (५१४३४)
स विक्षिप्यार्जुनस्तूर्णं सैन्धवप्रहिताञ्शरान् ।
युगपत्तस्य चिच्छेद शराभ्यां सैन्धवस्य ह ।
सारथेश्च शिरः कायाद्ध्वजं च समलङ्कृतम् ॥ ७-१४७-५९ (५१४३५)
स च्छिन्नयष्टिः सुमहान्धनञ्जयशराहतः ।
वराहः सिन्धुराजस्य पपातेन्दुसमप्रभः ॥ ७-१४७-६० (५१४३६)
आदित्यं प्रेक्षमाणस्तु बीभत्सुः सृक्विणी लिहन् ।
अपश्यन्नान्तरं तस्य रक्षिभिः संवृतस्य वै ॥ ७-१४७-६१ (५१४३७)
अभवक्त्रोधरक्ताक्षो व्यात्तानन इवान्तकः ।
अथाब्रवीद्वासुदेवः कुन्तीपुत्रं धनञ्जयम् ॥ ७-१४७-६२ (५१४३८)
नैव शक्यस्त्वया हन्तुं निर्व्याजं भरतर्षभ ।
स्रक्ष्याम्यहमुपायं तमादित्यस्यापवारणे ।
ततोऽस्तं गतमादित्यं मंस्यते सिन्धुराडिह ॥ ७-१४७-६३ (५१४३९)
ततोऽस्य विस्मयः पार्थ हर्षश्चैव भविष्यति ।
आत्मजीवितलाभाच्च प्रतिज्ञायाश्च नाशनात् ॥ ७-१४७-६४ (५१४४०)
अस्तङ्गतमिवादित्यं दृष्ट्वा मोहेन बालिशः ।
न हि शक्ष्यत्यथाऽऽत्मानं रक्षितुं हर्षसम्भवात् ॥ ७-१४७-६५ (५१४४१)
एतस्मिन्नेव काले तु प्रहर्तव्यं धनञ्जय ।
जयद्रथस्य क्षुद्रस्य सविदुर्दर्शनार्थिनः ॥ ७-१४७-६६ (५१४४२)
सञ्जय उवाच। ७-१४७-६७क्ष् (४६५३)
एवमुक्त्वा ततः पार्थं क्षिप्रमेवाहरत्प्रभाम् ।
जनार्दनेन सृष्टं वै तम आदित्यनाशनम् ॥ ७-१४७-६७ (५१४४३)
पार्थस्य बलमज्ञानात्तमो दृष्ट्वा सुदुःखितम् ।
अभवंस्तावका योधा हर्षसङ्कुलचेतसः ॥ ७-१४७-६८ (५१४४४)
ते प्रहृष्टा रणे राजन्नपश्यन्सैनिका रविम् ।
उन्नाम्य वक्त्राणि तदा स च राजा जयद्रथः ॥ ७-१४७-६९ (५१४४५)
वीक्षमाणे ततस्तस्मिन्सिन्धुराजे दिवाकरम् ।
उन्नमय्य शिरोग्रीवां वीक्षते सूर्यमण्डलम् ।
तस्य शीघ्रं पृषत्केन कायाच्छीर्षमपाहर ॥ ७-१४७-७० (५१४४६)

केशवेनैवमुक्तः सन्नमर्षाद्रक्तलोचनः ।
उद्बबर्ह शरं तीक्ष्णममरैरपि दुःसहम् ॥ ७-१४७-७१ (५१४४७)
एवं तूणीशयं घोरमिन्द्राशनिसमप्रभम् ।
वर्मभेदिनमत्यर्थं गन्धमाल्यार्चितं सदा ।
विससर्ज ततस्तूर्णं सैन्धवस्य रथं प्रति ॥ ७-१४७-७२ (५१४४८)
स तु गाण्डीवनिर्मुक्तः शरः श्येन इवाशुनः ।
शकुन्तमिव वृक्षाग्रात्सैन्धवस्याहरच्छिरः ॥ ७-१४७-७३ (५१४४९)
प्रपतिष्यति शीर्षे तु कृष्णोऽर्जुनमथाब्रवीत् ।
पार्थ पार्थ शिरो ह्येतद्यथा नेयान्महीतलम् ।
तथा कुरु कुरुश्रेष्ठ वक्ष्ये तस्यापि कारणम् ॥ ७-१४७-७४ (५१४५०)
श्रुत्वा तु वचनं तस्य त्वरमाणोऽस्त्रमायया ।
तथाऽहरच्छिरस्तस्य शरैरूर्ध्वं धनञ्जयः ।
दुर्हृदामपहर्षाय सुहृदां हर्षणाय च ॥ ७-१४७-७५ (५१४५१)
तिर्यगूर्ध्वमधश्चैव पुनरूर्ध्वमथापि च ।
दीर्घकालमवाक्चैव सम्प्रक्रीडन्निवार्जुनः ॥ ७-१४७-७६ (५१४५२)
तत्सैन्यं सर्वतोपश्यन्महदाश्चर्यमद्भुतम् ।
प्रापयत्स शिरो यस्माद्योधयन्नेव पार्थिवान् ॥ ७-१४७-७७ (५१४५३)
शरैः कन्दुकवत्कृत्वा तस्यालोकाय पाण्डवः ।
स्यमन्तपञ्चकाद्बाह्ये शिरस्तदहरच्छरैः ॥ ७-१४७-७८ (५१४५४)
जयद्रथस्यार्जुनबाणनालं
मुखारविन्दं रुधिराम्बुसिक्तम् ।
दृष्टं नरैश्चोपरिवर्तमानं
विद्याधरोत्सृष्टमिवैकपद्मम् ॥ ७-१४७-७९ (५१४५५)
स देवशत्रूनिव देवराजः
किरीटमाली व्यधमत्सपत्नान् ।
यथा तमांस्यभ्युदितस्तमोघ्नः
पूर्णां प्रतिज्ञां स समाप्य वीरः ॥ ७-१४७-८० (५१४५६)
अथाब्रवीत्केशवं पाण्डवेयः
कियन्तमध्यवानमिदं हरामि ।
किमर्थमेतन्न निपात्यमुर्व्यां
क्व च प्रयातव्यमिदं च शंस ।
शक्नोम्यहं यत्र भवान्ब्रवीति ७-१४७-८१ (५१४५७)
७-१४७-८१फ़्”
तं भूमिदेशं च शिरो विनेतुम् ॥ ॥

इति श्रीमन्महाभारते द्रोणपर्वणि जयद्रथवधपर्वणि

चतुर्दशदिवसयुद्धे सप्तचत्वारिंशदधिकशततमोऽध्यायः
॥ १४७ ॥
Mahabharata - Drona Parva - Chapter Footnotes

५-१४७-६ कुण्डलितः पाठो झ । पुस्तक एवास्ति ॥
५-१४७-४९ कुण्डलितः पाठः झ पुस्तक एव विद्यते ॥
५-१४७-६७ उक्ता सृष्टं तमः कर्तृ प्रभामहरदित्यन्वयः ॥
५-१४७-६८ बलं सैन्यं कर्तृ ॥
५-१४७-१४७ सप्तचत्वारिंशदधिकशततमोऽध्यायः ॥
५-१४७-क अथाब्रवीदित्यादीनां वीक्षते सूर्यमण्डलं इत्यन्तानां श्लोकानां स्थाने अधोलिखिताः श्लोकाः ङ पुस्तके वर्तन्ते । अनस्तमित आदित्ये अतान्निर्जित्य सैन्धवः। न शक्योहन्तुमित्येवं मन्यमानो जनार्दनः ॥
१ ॥
सस्मार चक्रं दैत्यारिर्हरिश्चक्रं सुदर्शनम् । तदादिदेश भगवान्स्मृतमात्रमुपस्थितम् ॥
२ ॥
अस्तं गतमिवादित्यं तमसा च्छादयेति च । तत्तथोक्तं भगवता तमो भूत्वा विशाम्पते ॥
३ ॥
अन्धं तम इवाज्ञानामादित्यस्याहरत्प्रभाम् । उन्नमय्य शिरोग्रीवामपश्यत्सैन्धवो रविम् ॥
४ ॥
अथार्जुनं हृषीकेशः शोकपूर्णमथाब्रवीत् । पश्य कौन्तेय सिन्धूनामधिपं पापकारिणम् ॥
५ ॥
एष तिष्ठति मध्ये वै स्यन्दनस्य धनञ्जय ।

---

द्रोनपर्व-अध्यय१४८
॥ श्रीः ॥
७.१४८. अध्यायः १४८

Mahabharata - Drona Parva - Chapter Topics
कृष्णेनार्जुनं प्रति सैन्धवमूर्ध्नो धरण्यामनिपातनीयत्वे कारणाभिधानम् ॥ १ ॥
कृष्णाज्ञयाऽर्जुनेन स्यमन्तपञ्चके सन्ध्य मुपासमानस्य वृद्धक्षत्रस्योत्सङ्गे जयद्रथशिरसो निपातनम् ॥ २ ॥

उत्तिष्ठमानस्य तस्योत्सङ्गाच्छिरसि धरणौ पतिते वृद्ध
क्षत्रमूर्ध्नो विदारणम् ॥ ३ ॥

Mahabharata - Drona Parva - Chapter Text

७-१४८-० (५१४५८)
सञ्जय उवाच। ७-१४८-०क्ष् (४६५४)
एवस्मिन्नेव काले तु त्वरमाणे दिवाकरे ।
अब्रवीत्पाण्डवं तत्र त्वरमाणो जनार्दनः ॥ ७-१४८-१ (५१४५९)
पार्थ पार्थ शिरो ह्येनद्यत्कृते न पतेद्भुवि ।
श्रूयतां तद्यथावृत्तं कारणं सैन्धवं क्नप्रति ॥ ७-१४८-२ (५१४६०)
वृद्धक्षत्रः सैन्धवस्य पिता जगति विश्रुतः ।
स च घोरेण तपसा दैन्धवं प्राप्तवान्सुतम् ॥ ७-१४८-३ (५१४६१)
जयद्रथममित्रघ्नं वागुवाचाशरीरिणी ।
नृपमन्तर्हिता वाणी मेघदुन्दुभिनिःस्वना ॥ ७-१४८-४ (५१४६२)
तवात्मजो मनुष्येन्द्र कुलशीलदमादिभिः ।
गुणैर्भविष्यति विभो सदृशो वंशयोर्द्वयोः ।
क्षत्रियप्रवरो लोके नित्यं शूराभिसत्कृतः ॥ ७-१४८-५ (५१४६३)
शिरश्छेत्स्यति सङ्क्रुद्धः शत्रुश्चालक्षितो भुवि ॥ ७-१४८-६ (५१४६४)
एतच्छ्रुत्वा सिन्धुराजो ध्यात्वा चिरमरिन्दमः ।
ज्ञातीन्सर्वानुवाचेदं पुत्रस्नेहाभिचोदितः ॥ ७-१४८-७ (५१४६५)
सङ्ग्रामे युध्यमानस्य वहतो महतीं धुरम् ।
धरण्यां मम पुत्रस्य पातयिष्यति यः शिरः ॥ ७-१४८-८ (५१४६६)
तस्यापि शतधा मूर्धा फलिष्यति न संशयः ।
ग्यदि चेदस्ति मे लाभस्तपसो वा दमस्य वा'॥ ७-१४८-९ (५१४६७)
एवमुक्त्वा ततो राज्ये स्थापयित्वा जयद्रथम् ।
वृद्धक्षत्रो वनं यातस्तपश्चोग्रं समास्थितः ॥ ७-१४८-१० (५१४६८)
सोऽयं तप्यति तेजस्वी तपो घोरं दुरासदम् ।
स्यमन्तपञ्चकादस्माद्बहिर्वानरकेतन ॥ ७-१४८-११ (५१४६९)
तस्माज्जयद्रथस्य त्वं शिरश्छित्त्वा महामृधे ।
दिव्येनास्त्रेण रिपुहन्घोरेणाद्भुतकर्मणा ॥ ७-१४८-१२ (५१४७०)
सकुण्डलं सिन्धुपतेः प्रभञ्जनसुतानुज ।
उत्सङ्गे पातयस्वास्य वृद्धक्षत्रस्य भारत ॥ ७-१४८-१३ (५१४७१)
अथ त्वमस्य मूर्धानं पातयिष्यसि भूतले ।
तवापि शतधा मूर्धा फलिष्यति न संशयः ॥ ७-१४८-१४ (५१४७२)
यथा चेदं न जानीयात्स राजा तपसि स्थितः ।

तथा कुरु कुरुश्रेष्ठ दिव्यमस्त्रमुपाश्रितः ॥ ७-१४८-१५ (५१४७३)
न ह्यसाध्यमकार्यं वा विद्यते तव किञ्चन ।
समस्तेष्वपि लोकेषु त्रिषु वासवनन्दन ॥ ७-१४८-१६ (५१४७४)
ग्यथैतत्सैन्धवशिरः शरैरेव धनञ्जय ।
वृद्धक्षत्रे पतत्येव तथा नीतिर्विधीयताम्'॥ ७-१४८-१७ (५१४७५)
सञ्जय उवाच। ७-१४८-१८क्ष् (४६५५)
ततः सुमहदाश्चर्यं तत्रापश्याम भारत ।
स्यमन्तपञ्चकाद्बाह्यं शिरो यद्व्यहरत्ततः ॥ ७-१४८-१८ (५१४७६)
एतस्मिन्नेव काले तु वृद्धक्षत्रो महीपतिः ।
सन्ध्यामुपास्ते तेजस्वी सम्बन्धी तव मारिष ॥ ७-१४८-१९ (५१४७७)
उपासीनस्य तस्याथ कृष्णकेशं सकुण्डलम् ।
सिन्धुराजस्य मूर्धानमुत्सङ्गे समपातयत् ॥ ७-१४८-२० (५१४७८)
तस्योत्सङ्गे निपतितं शिरस्तच्चारुकुण्डलम् ।
वृद्धक्षत्रस्य नृपतेरलक्षितमरिन्दम ॥ ७-१४८-२१ (५१४७९)
कृतजप्यस्य तस्याथ वृद्धक्षत्रस्य भारत ।
प्रोत्तिष्ठतस्तत्सहसा शिरोऽगच्छद्धरातलम् ॥ ७-१४८-२२ (५१४८०)
ततस्तस्य नरेन्द्रस्य पुत्रमूर्धनि भूतले ।
गते तस्यापि शतधा मूर्धाऽगच्छदरिन्दम ॥ ७-१४८-२३ (५१४८१)
ततः सर्वाणि सैन्यानि विस्मयं जग्मुरुत्तमम् ।
वासुदेवश्च बीभत्सुं प्रशशंस महारथम् ॥ ७-१४८-२४ (५१४८२)
ग्ततो दृष्ट्वा विनिहतं सिन्धुराजं जयद्रथम् ।
कर्मणा तेन पार्थस्य विस्मिताः सर्वदेवताः ॥ ७-१४८-२५ (५१४८३)
सर्वदा समरे यस्य गोप्ता नित्यं जनार्दनः ।
कथं तस्य जयो न स्यादिति भूतानि मेनिरे ॥ ७-१४८-२६ (५१४८४)
एतदर्थं शिरस्तस्य व्यापयामास पाण्डवः ।
स्यमन्तपञ्चकाद्बाह्यं शरैरेव यथाक्रमम् ॥ ७-१४८-२७ (५१४८५)
कृत्वा तच्च महत्कर्म निहत्य च जयद्रथम् ।
अस्त्रं पाशुपतं पार्थः संहर्तुमुपचक्रमे ॥ ७-१४८-२८ (५१४८६)
संहरत्यपि कौन्तेये तदस्त्रं तत्र भारत ।
ववौ शीतः सुगन्धश्च पवनो ह्लादयन्निव ॥ ७-१४८-२९ (५१४८७)
संहारं च प्रमोक्षं च दृष्ट्वा तत्र दिवौकसः ।
विस्मयं परमं जग्मुः प्रशशंसुश्च पाण्डवम् ॥ ७-१४८-३० (५१४८८)
एवमस्त्रेण तान्वीरो योधयित्वा धनञ्जयः ।
जयद्रथशिरः पश्चाद्व्यापयामास पाण्डवः ॥ ७-१४८-३१ (५१४८९)
तच्छिरश्च्यावमानं तु ददृशुस्तावका युधि ।
शल्यकर्णकृपा राजन्मोहिताः सव्यसाचिना ॥ ७-१४८-३२ (५१४९०)

शिरसि च्याविते तस्य शरैराशीविषोपमैः ।
पश्चात्कायोऽपतद्भूमिं शोचयन्सर्वपार्थिवान् ॥ ७-१४८-३३ (५१४९१)
दृष्ट्वा तु निहतं सङ्ख्ये सिन्धुराजं महारथम् ।
पुत्राणां तव नेत्रेभ्यो दुःखादास्रं प्रवर्तत'॥ ७-१४८-३४ (५१४९२)
ततो विनिहते राजन्सिन्धुराजे किरीटिना ।
तमस्तद्वासुदेवेन संहृतं भरतर्षभ ॥ ७-१४८-३५ (५१४९३)
पश्चाज्ज्ञातं महीपाल तव पुत्रैः सहानुगैः ।
वासुदेवप्रयुक्तेयं मायेति नृपसत्तम ॥ ७-१४८-३६ (५१४९४)
एवं स निहतो राजन्पार्थेनामिततेजसा ।
अक्षौहिणीरष्ट हत्वा जामाता तव सैन्धवः ॥ ७-१४८-३७ (५१४९५)
हतं जयद्रथं दृष्ट्वा तव पुत्रा नराधिप ।
दुःखादश्रूणि मुमुचुर्निराशाश्चाभवञ्जये ॥ ७-१४८-३८ (५१४९६)
ततो जयद्रथे राजन्हते पार्थेन केशवः ।
दध्मौ शङ्खं महाबाहुरर्जुनश्च परन्तपः ॥ ७-१४८-३९ (५१४९७)
भीमश्च वृष्णिसिंहश्च युधामन्युश्च भारत ।
उत्तमौजाश्च विक्रान्तः शङ्खान्दध्मुः पृथक्पृथक् ॥ ७-१४८-४० (५१४९८)
श्रुत्वा महान्तं तं शब्दं धर्मराजो युधिष्ठिरः ।
सैन्धनं निहतं मेने फल्गुनेन महात्मना ॥ ७-१४८-४१ (५१४९९)
ततो वादित्रघोषेण स्वान्योधान्पर्यहर्षयत् ।
अभ्यवर्तत सङ्ग्रामे भारद्वाजं युयुत्सया ॥ ७-१४८-४२ (५१५००)
ततः प्रववृते राजन्नस्तं गच्छति भास्करे ।
द्रोणस्य सोमकैः सार्धं सङ्ग्रामो रोमहर्षणः ॥ ७-१४८-४३ (५१५०१)
ते तु सर्वे प्रयत्नेन भारद्वाजं जिघांसवः ।
सैन्धवे निहते राजन्नयुध्यन्त महारथाः ॥ ७-१४८-४४ (५१५०२)
पाण्डवास्तु जयं लब्ध्वा सैन्धवं विनिहत्य च ।
अयोधयंस्तु ते द्रोणं जयोऽन्मत्तास्ततस्ततः ॥ ७-१४८-४५ (५१५०३)
अर्जुनोऽपि ततो योधांस्तावकान्रथसत्तमान् ।
अयोधयन्महाबाहुर्हत्वा सैन्धवकं नृपम् ॥ ॥ ७-१४८-४६ (५१५०४)

इति श्रीमन्महाभारते द्रोणपर्वणि जयद्रथवधपर्वणि
चतुर्दशदिसयुद्धे अष्टचत्वारिंशदधिकशततमोऽध्यायः ॥ १४८ ॥
Mahabharata - Drona Parva - Chapter Footnotes

५-१४८-क १४७ तमाध्याये आदित्यं प्रेक्षमाणस्तु इत्यादि ६१
तमश्लोकमारभ्य १४८ तमाध्याये श्रूयतां तद्यथावृत्तं कारणं
सैन्धवं प्रतीति २ तीयश्लोकपर्यन्तं विद्यमानानां २३ विंशतिश्लोकानां

स्थाने ग घ ङ झ पुस्तकेषु अधोलिखिताः ४५ श्लोका दृश्यन्ते
। एतस्मिन्नेव काले तु द्रुतं गच्छति भास्करे। अब्रवीत्पाण्डवं राजंस्त्वरमाणो जनार्दनः ॥
१ ॥
एष मध्ये कृतः षड्भिः पार्थ वीरैर्महारथैः । जीवितेप्सुर्महाबाहो भीतस्तिष्ठति सैन्धवः ॥
२ ॥
एतानर्निर्जित्य रणे षड्रथान्पुरुषर्षभ । न शक्यः शैन्धवो हन्तुं यतो निर्व्याजमर्जुन ॥
३ ॥
योगमत्र विधास्यामि सूर्यस्यावरणं प्रति । अस्तं गत इति व्यक्तं द्रक्ष्यत्येकः स सिन्धुराट् ॥
४ ॥
हर्षेण जीविताकाङ्क्षी विनाशार्थं तव प्रभो । न गोप्स्यति दुराचारः स आत्मानं कथञ्चन ॥
५ ॥
तत्र च्छिद्रे प्रहर्तव्यं त्वयास्त कुरुसत्तम । व्यपेक्षा नैव कर्तव्या गतोऽस्तमिति भास्करः ॥
६ ॥
एवमस्त्विति बीभत्सुः केशवं प्रत्यभाषत । ततोऽसृजत्तमः कृष्णः सूर्यस्यावरणं प्रति ॥
७ ॥
योगी योगेन संयुक्तो योगिनामीश्वरो हरिः ॥
८ ॥
सृष्टे तमसि कृष्णेन गतोऽस्तमिति भास्करः । त्वदीया जहृषुर्योधाः पार्थनाशान्नराधिप ॥
९ ॥
ते प्रहृष्टा रणे राजन्नापश्यन्सैनिका रविम् । उन्नाम्य वक्त्राणि तदा स च राजा जयद्रथः ॥
१० ॥
वीक्षमाणे ततस्तस्मिन्सिन्धुराजे दिवाकरम् । पुनरेवाब्रवीत्कृष्णो धनञ्जयमिदं वचः ॥
११ ॥
पश्य सिन्धुपतिं वीरं प्रेक्षमाणं दिवाकरम् । भयं हि विप्रमुच्यैतत्त्वत्तो भरतसत्तम ॥
१२ ॥

अयं कालो महाबाहो वधायास्य दुरात्मनः ।छिन्धि मूर्धानमस्याशु कुरु साफल्यमात्मनः ॥
१३ ॥
इत्येवं केशवोनोक्तः पाण्डुपुत्रः प्रतापवान् ।न्यवधीत्तावकं सैन्यं शरैरर्काग्निसन्निभैः ॥
१४ ॥
कृपं विव्याध विंशत्या कर्णं पञ्चाशता शरैः ।शल्यं दुर्योधनं चैव षड्भिः षड्भिरताडयत् ॥
१५ ॥
वृषसेनं तथाष्टाभिः षष्ट्या सैन्धवमेव च ।तथैव स महाबाहुस्त्वदीयान्पाण्डुनन्दनः।गाढं विद्ध्वा शरै राजञ्जयद्रथमुपाद्रवत् ॥
१६ ॥
तं समीपस्थितं दृष्ट्वा लेलिहानमिवानलम् ।जयद्रथस्य गोप्तारः संशयं परमं गताः ॥
१७ ततः सर्वे महाराज तव योधा जयैषिणः ।सिषिचुः शरधाराभिः पाकशासनिमाहवे ॥
१८ सञ्छाद्यमानः कौन्तेयः शरजालैरनेकशः ।अक्रुध्यत्स महाबाहुरजितः कुरुनन्दनः ॥
१९ ॥
ततः शरमयं जालं तुमुलं पाकशासनिः ।व्यसृजत्पुरुषव्याघ्रस्तव सैन्यजिघांसया ॥
२० ॥
ते हन्यमाना वीरणे योधा राजन्रणे तव ।प्रजहुः सैन्धवं भीता द्वौ समं नाप्यधावताम् ॥
२१ ॥
तत्राद्भुतमपश्याम कुन्तीपुत्रस्य विक्रमम् ।तादृङ्ग भावी भूतो वा यच्चकार महायशाः ॥
२२ ॥
द्विपान्द्विपगतांश्चैव हयान्हयगतानपि ।तथा स रथिनश्चैव न्यहन्रुद्रः पशूनिव ॥
२३ ॥
न तत्र समरे कश्चिन्मया दृष्टो नराधिप ।गजो वाजी नरो वापि यो न पार्थशराहतः ॥
२४ ॥
रजसा तमसा चैव योधाः सञ्छन्नचक्षुषः ।कश्मलं

प्राविशन्घोरं नान्वजानन्परस्परम् ॥
२५ ॥
ते शरैर्भिन्नमर्माणः सैनिकाः पार्थचोदितैः । वभ्रमुश्चस्खलुः
पेतुः सेदुर्मम्लुश्च भारत ॥
२६ ॥
तस्मिंन्महाभीषणके प्रजानामिव सङ्क्षये । रणे महति दुष्पारे
वर्तमाने सुदारुणे ॥
२७ ॥
शोणितस्य प्रसेकेन शीघ्रत्वादनिलस्य च । अशाम्यत्तद्रजो
भौममसृक्सिक्ते धरातले ॥
२८ ॥
आनाभि निरमज्जंश्च रथचक्राणि शोणिते । मत्ता वेगवता
राजंस्तावकानां रणाङ्गणे ॥
२९ ॥
हस्तिनश्च हतारोहा दारिताङ्गाः सहस्रशः । स्वान्यनीकानि मृद्नन्त
आर्तनादाः प्रदुद्रुवुः ॥
३० ॥
हयाश्च पतितारोहाः पत्तयश्च नराधिप
। प्रदुद्रुवुर्भयाद्राजन्धनञ्जयशराहताः ॥
३१ ॥
मुक्तकेशा विकवचाः क्षरन्तः क्षतजं क्षतैः । प्रापलायन्त
सन्त्रस्तास्त्यक्त्वा रणशिरो जनाः ॥
३२ ॥
ऊरुग्राहगृहीताश्च केचित्तत्राभवन्भूवि । हतानां चापरे मध्ये
द्विरदानां निलिल्यिरे ॥
३३ ॥
एवं तव बलं राजन्द्रावयित्वा धनञ्जयः । न्यवधीत्सायकैर्घोरैः
सिन्धुराजस्य रक्षिणः ॥
३४ ॥
द्रौणिं कृपं कर्णशल्यौ वृषसेनं सुयोधनम् । छादयामास
तीव्रेण शरजालेन पाण्डवः ॥
३५ ॥
न गृह्णन्नक्षिपरन्राजन्मुञ्चन्नापि च सन्दधत् । अदृश्यतार्जुनः
सङ्ख्ये शीघ्रास्त्रत्वात्कथञ्चन ॥
३६ ॥
धनुर्मण्डलमेवास्य दृश्यते स्मास्यतः सदा । सायकाश्च

व्यदृश्यन्त निश्वरन्तः समन्ततः ॥
३७ ॥
कर्णस्य तु धनुश्छित्त्वा वृषसेनस्य चैव ह । शल्यस्य सूतं भल्लेन रथनीडादपातयत् ॥
३८ ॥
गाढविद्धावुभौ कृत्वा शरैः स्वस्रीयमातुलौ । अर्जुनो जयतां श्रेष्ठो द्रौणिशारद्वतौ रणे ॥
३९ ॥
एवं तान्व्याकुलीकृत्य त्वदीयानां महारथान् । उज्जहार शरं घोरं पाण्डवोऽनलसन्निभम् ॥
४० ॥
इन्द्राशनिसमप्रख्यं दिव्यमस्त्राभिमन्त्रितम् । सर्वभारसहं शश्वद्ग्रन्धमाल्यार्चितं महत् ॥
४१ ॥
वज्रेणास्त्रेण संयोज्य विधिवत्कुरुनन्दनः । समादधन्महाबाहुर्गाण्डीवे क्षिप्रमर्जुनः ॥
४२ ॥
तस्मिन्सन्धीयमाने तु शरे ज्वलनतेजसि । अन्तरिक्षे महानादो भूतानामभवन्नृप ॥
४३ ॥
अब्रवीच्च पुनस्तत्र त्वरमाणो जनार्दनः । धनञ्जय शिरश्छिन्धि सैन्धवस्य दुरात्मनः ॥
४४ ॥
अस्तं महीधरश्रेष्ठं यियासति दिवाकरः । शृणुष्वैतच्च वाक्यं मे जयद्रथवधं पर्ति ॥
४५ ॥

---

द्रोनपर्व-अध्यय१४९
॥ श्रीः ॥
७.१४९. अध्यायः १४९

Mahabharata - Drona Parva - Chapter Topics
अर्जुनेन निजशराहतिमोहितं कृपम्प्रति शोचनम् ॥ १ ॥
सार्जुनेन कृष्णेन युधिष्ठिरमेत्य जयद्रथवधकथनम् ॥ २ ॥
भीमादीनां युधिष्ठिरसमीपसमागमनम् ॥ ३ ॥

७-१४९-० (५१५०५)
धृतराष्ट्र उवाच। ७-१४९-०क्ष् (४६५६)
तस्मिन्विनिहते वीरे सैन्धवे सव्यसाचिना ।
मामका यदकुर्वन्त तन्ममाचक्ष्व सञ्जय ॥ ७-१४९-१ (५१५०६)
ग्पश्यतां सर्वसैन्यानां मामकानां महारणे ।
अहन्यत कथं युद्धे सैन्धवः सव्यसाचिना ॥ ७-१४९-२ (५१५०७)
कथं द्रौणिकृपैर्गुप्तः कर्णेन च महारणे ।
फल्गुनाग्निमुखं घोरं प्रविष्टः साधु सैन्धवः ॥ ७-१४९-३ (५१५०८)
तस्मिन्हते महेष्वासे मन्दात्मा स सुयोधनः ।
भ्रातृबिः सहितः सूत किमकार्षीदनन्तरम्'॥ ७-१४९-४ (५१५०९)
सञ्जय उवाच। ७-१४९-५क्ष् (४६५७)
सैन्धवं निहतं दृष्ट्वा रणे पार्थेन भारत ।
अमर्षवशमापन्नः कृपः शारद्वतस्ततः ॥ ७-१४९-५ (५१५१०)
महता शरवर्षेण पाण्डवं समवाकिरत् ।
द्रौणिश्चाभ्यद्रवद्राजन्रथमास्थाय फल्गुनम् ॥ ७-१४९-६ (५१५११)
तावेतौ रथिनां श्रेष्ठौ रथाभ्यां रथसत्तमौ ।
उभावुभयतस्तीक्ष्णैर्विशिखैरभ्यवर्षताम् ॥ ७-१४९-७ (५१५१२)
स तथा शरवर्षाभ्यां सुमहद्भ्यां महाभुजः ।
पीड्यमानः परामार्तिमगमद्रथिनां वरः ॥ ७-१४९-८ (५१५१३)
सोऽजिघांसुर्गुरुं सङ्ख्ये गुरोस्तनयमेव च ।
चकाराचार्यकं तत्र कुन्तीपुत्रो धनञ्जयः ॥ ७-१४९-९ (५१५१४)
अस्त्रैरस्त्राणि संवार्य द्रौणेः शारद्वतस्य च ।
मन्दवेगानिषूंस्ताभ्यामजिघांसुरवासृजत् ॥ ७-१४९-१० (५१५१५)
तेन नातिभृशं त्रस्तौ विशिखैर्भृशपीडितौ ।
बहुत्वात्तु परामार्तिं शराणां तावगच्छताम् ॥ ७-१४९-११ (५१५१६)
अथ शारद्वतो राजन्कौन्तेयशरपीडितः ।
अवासीदद्रथोपस्थे मूर्च्छामभिजगाम ह ॥ ७-१४९-१२ (५१५१७)
विह्वलं तमभिज्ञाय भर्तारं शरपीडितम् ।
हतोऽयमिति च ज्ञात्वा सारथिस्तमपावहत् ॥ ७-१४९-१३ (५१५१८)
तस्मिन्भग्ने महाराज कृपे शारद्वते युधि ।
अश्वत्थामाप्यपायासीत्पाण्डवेयाद्रथान्तरम् ॥ ७-१४९-१४ (५१५१९)
दृष्ट्वा शारद्वतं पार्थो मूर्च्छितं शरपीडितम् ।
धिग्धिङ्मामिति चैवोक्त्वा कृपणं पर्यदेवयत् ।
अश्रुपूर्णमुखो दीनो वचनं चेदमब्रवीत् ॥ ७-१४९-१५ (५१५२०)

पश्यन्निदं महाप्राज्ञः क्षत्ता राजानमुक्तवान् ।
कुलान्तकरणे पापे जातमात्रे सुयोधने ॥ ७-१४९-१६ (५१५२१)
नीयतां परलोकाय साध्वयं कुलपांसनः ।
अस्माद्धि कुरुमुख्यानां महदुत्पत्स्यते भयम् ॥ ७-१४९-१७ (५१५२२)
तदिदं समनुप्राप्तं वचनं सत्यवादिनः ।
तत्कृते ह्यद्य पश्यामि शरतल्पगतं गुरुम् ॥ ७-१४९-१८ (५१५२३)
धिगस्तु क्षात्रमाचारं धिगस्तु बलपौरुषम् ।
को हि ब्राह्मणमाचार्यमभिद्रुह्येत मादृशः ॥ ७-१४९-१९ (५१५२४)
ऋषिपुत्रो ममाचार्यो द्रोणस्य परमः सखा ।
एष शेते रथोपस्थे कृपो मद्बाणपीडितः ॥ ७-१४९-२० (५१५२५)
अकामयानेन मया विशिखैरर्दितो भृशम् ।
अवसीदन्रथोपस्थे प्राणान्पीडयतीव मे ॥ ७-१४९-२१ (५१५२६)
पुत्रशोकाभितप्तेन शरैरभ्यर्दितेन च ।
अभ्यस्तो बहुभिर्बाणैर्दशधर्मगतेन वै ॥ ७-१४९-२२ (५१५२७)
ग्शरार्दितः स हि मया प्रेक्षमाणो महाद्युतिः'।
शोचयत्येष नियतं भूयः पुत्रवधाद्धि माम् ।
कृपणं स्वरथे सन्नं पश्य कृष्ण यथागतम् ॥ ७-१४९-२३ (५१५२८)
उपाकृत्य तु वै विद्यामाचार्येभ्यो नरर्षभाः ।
प्रयच्छन्तीह ये कामान्देवत्वमुपयान्ति ते ॥ ७-१४९-२४ (५१५२९)
ये च विद्यामुपादाय गुरुभ्यः पुरुषाधमाः। ७-१४९-२५ (५१५३०)
घ्नन्ति तानेव दुर्वृत्तास्ते वै निरयगामिनः ॥ ७-१४९-२५ (५१५३१)
तदिदं नरकायाद्य कृतं कर्म मया ध्रुवम् ।
आचार्यं शरवर्षेण रथे सादयता कृपम् ॥ ७-१४९-२६ (५१५३२)
यत्तत्पूर्वमुपाकुर्वन्नस्त्रं मामब्रवीत्कृपः ।
न कथञ्चन कौरव्य प्रहर्तव्यं गुराविति ॥ ७-१४९-२७ (५१५३३)
तदिदं वचनं साधोराचार्यस्य महात्मनः ।
नानुष्ठितं तमेवाजौ विशिखैरभिवर्षता ॥ ७-१४९-२८ (५१५३४)
नमस्तस्मै सुपूज्याय गौतमायापलायिने ।
धिगस्तु मम वार्ष्णेय यदस्मै प्रहराम्यहम् ॥ ७-१४९-२९ (५१५३५)
सञ्जय उवाच। ७-१४९-३०क्ष् (४६५८)
तथा विलपमाने तु सव्यसाचिनि तं प्रति ।
क़ततो राजन्हृष्टीकेशः संङ्गामशिरसि स्थितम् ।
तीर्णप्रतिज्ञं बीभत्सुं परिष्वज्यैनमब्रवीत् ॥ ७-१४९-३० (५१५३६)
दिष्ट्या सम्पादिता जिष्णो प्रतिज्ञा महती त्वया ।
दिष्ट्या विनिहतः पापो वृद्धक्षत्रः सहात्मजः ॥ ७-१४९-३१ (५१५३७)
धार्तराष्ट्रबलं प्राप्य देवसेनापि भारत ।

सीदेत समरे जिष्णो नात्र कार्या विचारणा ॥ ७-१४९-३२ (५१५३८)
न तं पश्यामि लोकेषु चिन्तयन्पुरुषं क्वचित् ।
त्वदृते पुरुषव्याघ्र य एतद्योधयेद्बलम् ॥ ७-१४९-३३ (५१५३९)
महाप्रभावा बहवस्त्वया तुल्याधिकापि वा ।
समेताः पृथिवीपाला धार्तराष्ट्रस्य कारणात् ॥ ७-१४९-३४ (५१५४०)
ते त्वां प्राप्य रणे क्रुद्धा नाभ्यवर्तन्त दंशिताः ।
तव वीर्यं बलं चैव रुद्रशक्रान्तकोपमम् ॥ ७-१४९-३५ (५१५४१)
नेदृशं शक्नुयात्कश्चिद्रमे कर्तुं पराक्रमम् ।
यादृशं कृतवानद्य त्वमेकः शत्रुतापनः ॥ ७-१४९-३६ (५१५४२)
एवमेव हते कर्णे सानुबन्धे दुरात्मनि ।
वर्धयिष्यामि भूयस्त्वां विजितारिं हतद्विषम् ॥ ७-१४९-३७ (५१५४३)
तमर्जुनः प्रत्युवाच प्रसादात्तव माधव ।
प्रतिज्ञेयं मया तीर्णा विबुधैरपि दुस्तरा ॥ ७-१४९-३८ (५१५४४)
अनाश्चार्यो जयस्तेषां येषां नाथोऽसि केशव ।
त्वत्प्रसादान्महीं कृत्स्नां संप्राप्स्यति युधिष्ठिरः ॥ ७-१४९-३९ (५१५४५)
तवैष भारो धार्ष्णेय तवैव विजयः प्रभो ।
वर्धनीयास्तव वयं प्रेष्याश्च मधुसूदन ॥ ७-१४९-४० (५१५४६)
एवमुक्तस्ततः कृष्णः शनकैर्वाहयन्हयान् ।
दर्शयामास पार्थाय क्रूरमायोधनं महत् ॥ ७-१४९-४१ (५१५४७)
श्रीकृष्ण उवाच। ७-१४९-४२क्ष् (४६५९)
प्रार्थयन्तो जये युद्धे प्रथितं च महद्यशः ।
पृथिव्यां शेरते शूराः पार्थिवास्त्वच्छरैर्हताः ॥ ७-१४९-४२ (५१५४८)
विकीर्णशस्त्राभरणा विपन्नाश्वरथद्विपाः ।
सञ्छिन्नभिन्नमर्माणो वैक्लव्यं परमं गताः ॥ ७-१४९-४३ (५१५४९)
ससत्वा गतसत्वाश्च प्रभया परया युताः ।
सजीवा इव लक्ष्यन्ते गतसत्वा नराधिपाः ॥ ७-१४९-४४ (५१५५०)
तेषां शरैः स्वर्णपुङ्खैः शस्त्रैश्च विविधैः शितैः ।
वाहनैरायुधैश्चैव सम्पूर्णां पश्य मेदिनीम् ॥ ७-१४९-४५ (५१५५१)
वर्मभिश्चर्मभिर्हारैः शिरोभिश्च सकुण्डलैः ।
उष्णीषैर्मकुटैः स्रग्भिश्चूडामणिभिरम्बरैः ॥ ७-१४९-४६ (५१५५२)
कण्ठसूत्रैरङ्गदैश्च निष्कैरपि च सप्रभैः ।
अन्यैश्चाभरणैश्चित्रैर्भाति भारत मेदिनी ॥ ७-१४९-४७ (५१५५३)
श्अनुकर्षैरुपासङ्गैः पताकाभिर्ध्वजैस्तथा ।
उपस्करैरधिष्ठानैरीषादण्डकबन्धुरैः ॥ ७-१४९-४८ (५१५५४)
चक्रैः प्रमथितैश्चित्रैरक्षैश्च बहुधा रणे ।
युगैर्योक्त्रैः कलापैश्च धनुर्भिः सायकैस्तथा ॥ ७-१४९-४९ (५१५५५)

परिस्तोमैः कुथाभिश्च परिघैरङ्कुशैस्तथा ।
शक्तिभिर्भिण्डिपालैश्च तूणैः शूलैः परश्वथैः ॥ ७-१४९-५० (५१५५६)
प्रासैश्च तोमरैश्चैव कुन्तैर्यष्टिभिरेव च ।
शतघ्नीभिर्भुशुण्डीभिः खड्गैः परशुभिस्तथा ॥ ७-१४९-५१ (५१५५७)
मुसलैर्मुद्गरैश्चैव गदाभिः कुणपैस्तथा ।
सुवर्णविकृताभिश्च कशाभिर्भरतर्षभ ॥ ७-१४९-५२ (५१५५८)
घण्टाभिश्च गजेन्द्राणां भाण्डैश्च विविधैरपि ।
स्रग्भिश्च नानाभरणैर्वस्त्रैश्चैव महाधनैः ।
अपविद्धैर्बभौ भूमिर्ग्रहैर्द्यौरिव शारदी ॥ ७-१४९-५३ (५१५५९)
पृथिव्यां पृथिवीहेतोः पृथिवीपतयो हताः ।
पृथिवीमुपगुह्याङ्गैः सुप्ताः कान्तामिव प्रियाम् ॥ ७-१४९-५४ (५१५६०)
इमांश्च गिरिकूटाभान्नागानैरावतोपमान् ।
क्षरतः शोणितं भूरि शस्त्रच्छेददरीमुखैः ।
दरीमुखैरिव गिरीन्गैरिकाम्बुपरिस्रवान् ॥ ७-१४९-५५ (५१५६१)
तांश्च बाणहतान्वीर पश्य निष्टनतः क्षितौ ।
हयांश्च पतितान्पश्य स्वर्णभाण्डविभूषितान् ॥ ७-१४९-५६ (५१५६२)
गन्धर्वनगराकारान्रथांश्च निहतेश्वरान् ।
छिन्नध्वजपताकाक्षान्विचक्रान्हतसारथीन् ॥ ७-१४९-५७ (५१५६३)
निकृत्तकूबरयुगान्भग्नेषान्बन्धुरान्प्रभो ।
पश्य पार्थ हयान्भूमौ विमानोपमदर्शनान् ॥ ७-१४९-५८ (५१५६४)
पत्तींश्च निहतान्वीर शतशोऽथ सहस्रशः ।
धनुर्भृतश्चर्मभृतः शयानान्रुधिरोक्षितान् ॥ ७-१४९-५९ (५१५६५)
महीमालिङ्ग्य सर्वाङ्गैः पांसुध्वस्तशिरोरुहान् ।
पश्य योधान्महाबाहो त्वच्छरैर्भिन्नविग्रहान् ॥ ७-१४९-६० (५१५६६)
निपातितद्विपरथाजिसङ्कुल--
मसृग्वसापिशितसमृद्धकर्दमम् ।
निशाचरश्ववृकपिशाचमोदनं
महीतलं नरवर पश्य दुर्दृशम् ॥ ७-१४९-६१ (५१५६७)
इदंमहत्त्वय्युपपद्यते प्रभो
रणाजिरे कर्म यशोऽभिवर्धनम् ।
शतक्रतौ चापि च देवसत्तमे
महाहवे जघ्नुषि दैत्यदानवान् ॥ ७-१४९-६२ (५१५६८)
सञ्जय उवाच। ७-१४९-६३क्ष् (४६६०)
एवं सन्दर्शयन्कृष्णो रणभूमिं किरीटिने ।
स्वैः समेतः समुदितैः पाञ्चजन्यं व्यनादयत् ॥ ७-१४९-६३ (५१५६९)
ग्सात्यकिः पार्थमभ्यायाद्भीमसेनश्च पाण्डवः ।

युधामन्यूत्तमौजौ च पाञ्चालस्यात्मजावुभौ ॥ ७-१४९-६४ (५१५७०)
ते निवार्य शरैर्द्रौणिं कर्णं च सह भूमिपैः ।
आगच्छन्रथिनश्चैव यत्र राजा युधिष्ठिरः'॥ ७-१४९-६५ (५१५७१)
स दर्शयन्नेव किरीटिनेऽरिहा
जनार्दनस्तामरिभूमिमञ्जसा ।
अजातशत्रुं समुपेत्य पाण्डवं
निवेदयामास हतं जयद्रथम् ॥ ॥ ७-१४९-६६ (५१५७२)

इति श्रीमन्महाभारते द्रोणपर्वणि जयद्रथवधपर्वणि
चतुर्दशदिवसयुद्धे एकोनपञ्चाशदधिकशततमोऽध्यायः ॥१४९ ॥
Mahabharata - Drona Parva - Chapter Footnotes

५-१४९-९ अजिघांसुर्हन्तमनिच्छन् ।आचार्यकं गुरोः सम्मानम् ॥
५-१४९-१२ अवासीददवसन्नः ॥
५-१४९-१६ इदं कुलक्षयगुरुद्रोहादिकम् ॥
५-१४९-१८ शरतल्पगतं शरपञ्जरगतम् ॥
५-१४९-२२ अभ्यस्तोऽसकृन्निहतः ।दशधर्मगतेन दुरवस्थागतेन ॥
५-१४९-२३ शोचयति शोकं कारयति ।एष द्रोणः। भूयोऽधिकं
पुत्रवधात् ॥
५-१४९-२४ उपाकृत्य अधीत्य ॥
५-१४९-२७ उपाकुर्वन् आध्यापयन् ॥
५-१४९-क़ ततो राजन्हृषीकेश इत्यादि महाप्रभावा बहवस्त्वया
तुल्याधिकापि वा इत्यन्ताः सार्धचत्वारः श्लोकाः झ ।पुस्तके १४६
तमाध्यायस्य २५ तमश्लोकादुपरि विद्यन्ते। ५-१४९-४८ कुण्डलिताः श्लोकाः
झ पुस्तक एव दृश्यन्ते। ।
५-१४९-१४९ एकोनपञ्चाशदधिकशततमोऽध्यायः ॥

---

द्रोनपर्व-अध्यय१५०
॥ श्रीः ॥
७.१५०. अध्यायः १५०

Mahabharata - Drona Parva - Chapter Topics
युधिष्ठिरेण स्वाभिवादकानां कृष्णभीमार्जुनसात्यकीनामालिङ्गनादिना
सत्कारः ॥ १ ॥
कृष्णयुधिष्ठिरयोः संलापः ॥ २ ॥

७-१५०-० (५१५७३)
सञ्जय उवाच। ७-१५०-०क्ष् (४६६१)
ततो राजानमभ्येत्य धर्मपुत्रं युधिष्ठिरम् ।
ववन्दे सम्प्रहृष्टात्मा हते पार्थेन सैन्धवे ॥ ७-१५०-१ (५१५७४)
दिष्ट्या वर्धसि राजेन्द्र हतशत्रुर्नरोत्तम ।
दिष्ट्या निस्तीर्णवांशैव प्रतिज्ञामनुजस्तव ॥ ७-१५०-२ (५१५७५)
स त्वेवमुक्तः कृष्णेन हृष्टः परपुरञ्जयः ।
ततो युधिष्ठिरो राजा रथादाप्लुत्य भारत ।
पर्यष्वजत्तदा कृष्णावानन्दाश्रुपरिप्लुतः ॥ ७-१५०-३ (५१५७६)
प्रमृज्य वदनं शुभ्रं पुण्डरीकसमप्रभम् ।
अब्रवीद्वासुदेवं च पाण्डवं च धनञ्जयम् ॥ ७-१५०-४ (५१५७७)
प्रियमेतदुपश्रुत्य त्वत्तः पुष्करलोचन ।
नान्तं गच्छामि हर्षस्य तितीर्षुरुदधेरिव ॥ ७-१५०-५ (५१५७८)
अत्यद्भुतमिदं कृष्ण कृतं पार्थेन धीमता ।
दिष्ट्या पश्यामि सङ्ग्रामे तीर्णभारौ महारथौ ॥ ७-१५०-६ (५१५७९)
दिष्ट्या च निहतः पापः सैन्धवः पुरुषाधमः ।
ग्दिष्ट्या शत्रुगणाश्चैव निमग्नाः शोकसागरे'॥ ७-१५०-७ (५१५८०)
कृष्ण दिष्ट्या मम प्रीतिर्महती प्रतिपादिता ।
त्वया गुप्तेन गोविन्द घ्नता पापं जयद्रथम् ॥ ७-१५०-८ (५१५८१)
किन्तु नात्यद्भुतं तेषां येषां नस्त्वं समाश्रयः ।
न तेषां दुष्कृतं किञ्चित्त्रिषु लोकेषु विद्यते ।
सर्वलोकगुरुर्येषां त्वं नाथो मधुसूदन ॥ ७-१५०-९ (५१५८२)
त्वत्प्रसादाद्धि गोविन्द वयं जेष्यामहे रिपून् ।
ग्यथा पुरा प्रसादात्ते दानवान्पाकशासनः ॥ ७-१५०-१० (५१५८३)
पृथिव्या विजयो वापि त्रैलोक्यविजयोऽपि वा ।
ध्रुवो हि तेषां वार्ष्णेय येषां तुष्टोऽसि मानद ॥ ७-१५०-११ (५१५८४)
न तेषां विद्यते पापं सङ्ग्रामे वा पराजयः ।
त्रिदशेश्वर नाथस्त्वं येषां तुष्टोऽसि माधव ॥ ७-१५०-१२ (५१५८५)
त्वत्प्रसादाद्धृषीकेश शक्रः सुरगणेश्वरः ।
त्रैलोक्यविजयं श्रीमान्प्राप्तवान्रणमूर्धनि ॥ ७-१५०-१३ (५१५८६)
तव चैव प्रसादेन त्रिदशास्त्रिदशेश्वराः ।
अमरत्वं गताः कृष्ण लोकांश्चाश्नुवतेऽक्षयान्'॥ ७-१५०-१४ (५१५८७)
स्थितः सर्वात्मना नित्यं प्रियेषु च हितेषु च ।
त्वां चैवास्माभिराश्रित्य कृतः शस्त्रसमुद्यमः ।

सुरैरिवासुरवधे शक्रं शक्रानुजाहवे ॥ ७-१५०-१५ (५१५८८)
असंभाव्यमिदं कर्म देवैरपि जनार्दन ।
त्वद्बुद्धिबलवीर्येण कृतवानेष फल्गुनः ॥ ७-१५०-१६ (५१५८९)
बाल्यात्प्रभृति ते कृष्ण कर्माणि श्रुतवानहम् ।
अमानुषाणि दिव्यानि महान्ति च बहूनि च ।
तदैवाज्ञासिषं शत्रून्हतान्प्राप्तां च मेदिनीम् ॥ ७-१५०-१७ (५१५९०)
त्वत्प्रसादसमुत्थेन विक्रमेणारिसूदन ।
सुरेशत्वं गतः शक्रो हत्वा दैत्यान्सहस्रशः ॥ ७-१५०-१८ (५१५९१)
त्वत्प्रसादाद्धृषीकेश जगत्स्थावरजङ्गमम् ।
स्ववर्त्मनि स्थितं वीर जपरहोमेषु वर्तते ॥ ७-१५०-१९ (५१५९२)
एकार्णवमिदं पूर्वं सर्वमासीत्तमोमयम् ।
त्वत्प्रसादान्माहाबाहो जगत्प्राप्तं नरोत्तम ॥ ७-१५०-२० (५१५९३)
स्रष्टारं सर्वलोकानां परमात्मानमव्ययम् ।
ये पश्यन्ति हृषीकेश न ते मुह्यन्ति कर्हिचित् ॥ ७-१५०-२१ (५१५९४)
पुराणं परमं देवं देवदेवं सनातनम् ।
ये प्रपन्नाः सुरगुरुं न ते मुह्यन्ति कर्हिचित् ॥ ७-१५०-२२ (५१५९५)
अनादिनिधनं देवं लोककर्तारमव्ययम् ।
ये भक्तास्त्वां हृषीकेश दुर्गाण्यतितरन्ति ते ॥ ७-१५०-२३ (५१५९६)
परं पुराणं पुरुषं पराणां परमं च यत् ।
प्रपद्यतस्तत्परमं परा भूतिर्विधीयते ॥ ७-१५०-२४ (५१५९७)
गायन्ति चतुरो वेदा यश्च देवेषु गीयते ।
तं प्रपद्य महात्मानं भूतिमश्नाम्यनुत्तमाम् ॥ ७-१५०-२५ (५१५९८)
परमेश परेशेश तिर्यगीश नरेश्वर ।
सर्वेश्वरेश्वरेशेन नमस्ते पुरुषोत्तम ॥ ७-१५०-२६ (५१५९९)
त्वमीशेशेश्वरेशान प्रभो वर्धस्व माधव ।
प्रभवाप्यय सर्वस्य सर्वात्मन्पृथुलोचन ॥ ७-१५०-२७ (५१६००)
धनञ्जयसखा यश्च धनञ्जयहितश्च यः ।
धनञ्जयस्य गोप्ता तं प्रपद्य सुखमेधते ॥ ७-१५०-२८ (५१६०१)
श्मार्कण्डेयः पुराणर्षिश्चरितज्ञस्तवानघ ।
माहात्म्यमनुभावं पुरा फीर्तितवान्मुनिः ॥ ७-१५०-२९ (५१६०२)
असितो देवलश्चैव नारदश्च महातपाः ।
पितामहश्च मे व्यासस्त्वामाहुर्विधिमुत्तमम् ॥ ७-१५०-३० (५१६०३)
त्वं तेजस्त्वं परं ब्रह्म त्वं सत्यं त्वं महत्तपः ।
त्वं श्रेयस्त्वं यशश्चाग्र्यं कारणं जगतस्तथा ॥ ७-१५०-३१ (५१६०४)
त्वया सृष्टमिदं सर्वं जगत्स्थावरजङ्गमम् ।
प्रलये समनुप्राप्ते त्वां वै निविशते पुनः ॥ ७-१५०-३२ (५१६०५)

अनादिनिधनं देवं विश्वस्येशं जगत्पते ।
धातारमजमव्यक्तमाहुर्वेदविदो जनाः ॥ ७-१५०-३३ (५१६०६)
भूतात्मानं महात्मानमनन्तं विश्वतोमुखम् ।
अपि देवा न जानन्ति गुह्यमाद्यं जगत्पतिम् ।
नारायणं परं देवं परमात्मानमीश्वरम् ॥ ७-१५०-३४ (५१६०७)
ज्ञानयोनिं हरिं विष्णुं मुमुक्षूणां परायणम् ।
परं पुराणं पुरुषं पुराणानां परं च यत् ॥ ७-१५०-३५ (५१६०८)
एवमादिगुणानां ते कर्मणां दिवि चेह च ।
अतीतभूतभव्यानां सङ्ख्याताऽत्र न विद्यते ॥ ७-१५०-३६ (५१६०९)
सर्वतो रक्षणीयाः स्म शक्रेणेव दिवौकसः ।
यैस्त्वं सर्वगुणोपेतः सुहृन्न उपपादितः ॥ ७-१५०-३७ (५१६१०)
इत्येवं धर्मराजेन हरिरुक्तो महायशाः ।
अनुरूपमिदं वाक्यं प्रत्युवाच जनार्दनः ॥ ७-१५०-३८ (५१६११)
भवता तपसोग्रेण धर्मेण परमेण च ।
साधुत्वादार्जवाच्चैव हतः पापो जयद्रथः ॥ ७-१५०-३९ (५१६१२)
अयं च पुरुषव्याघ्र त्वदनुध्यानसंवृतः ।
हत्वा योधसहस्राणि न्यहञ्जिष्णुर्जयद्रथम् ॥ ७-१५०-४० (५१६१३)
कृतित्वे बाहुवीर्ये च तथैवासम्भ्रमेऽपि च ।
शीघ्रतामोधबुद्धित्वे नास्ति पार्थसमः क्वचित् ॥ ७-१५०-४१ (५१६१४)
तदयं भरतश्रेष्ठ भ्राता तेऽद्य यदर्जुनः ।
सैन्यक्षयं रणे कृत्वा सिन्धुराजशिरोऽहरत् ॥ ७-१५०-४२ (५१६१५)
ततो धर्मसुतो जिष्णुं परिष्वज्य विशाम्पते ।
प्रमृज्य वदनं तस्य पर्याश्वासयत प्रभुः ॥ ७-१५०-४३ (५१६१६)
अतीव सुमहत्कर्म कृतवानसि फल्गुन ।
असह्यं चाविषह्यं च देवैरपि सवासवैः ॥ ७-१५०-४४ (५१६१७)
दिष्टा निस्तीर्णभारोऽसि हतारिश्चासि शत्रुहन् ।
दिष्ट्या सत्या प्रतिज्ञेयं कृता हत्वा जयद्रथम् ॥ ७-१५०-४५ (५१६१८)
एवमुक्त्वा गुडाकेशं धर्मराजो महायशाः ।
पस्पर्श पुण्यगन्धेन पृष्ठे हस्तेन पार्थिवाः ॥ ७-१५०-४६ (५१६१९)
सञ्जय उवाच। ७-१५०-४७क्ष् (४६६२)
एवमुक्तौ महात्मानावुभौ केशवपाण्डवौ ।
तावब्रूतां तदा कृष्णौ राजानं पृथिवीपतिम् ॥ ७-१५०-४७ (५१६२०)
तव कोपाग्निना दग्धः पापो राजञ्जयद्रथः ।
उत्तीर्णं चापि सुमहद्धार्तराष्ट्रबलं रणे ॥ ७-१५०-४८ (५१६२१)
युधिष्ठिर उवाच। ७-१५०-४९क्ष् (४६६३)
हन्यन्ते निहताश्चैव विनङ्क्ष्यन्ति च केशव ।

तव क्रोधहता ह्येते कौरवाः शत्रुसूदन ॥ ७-१५०-४९ (५१६२२)
त्वां हि चक्षुर्हणं वीर कोपयित्वा सुयोधनः ।
समित्रबन्धुः समरे प्राणांस्त्यक्ष्यति दुर्मतिः ॥ ७-१५०-५० (५१६२३)
तव क्रोधहतः पूर्वं देवैरपि सुदुर्जयः ।
शरतल्पगतः शेते भीष्मः कुरुपितामहः ॥ ७-१५०-५१ (५१६२४)
दुर्लभो विजयस्तेषां सम्प्रामे रिपुघातिनाम् ।
याता मृत्युवशं ते वै येषां क्रुद्धोऽपि माधव ॥ ७-१५०-५२ (५१६२५)
राज्यं प्राणाः श्रियः पुत्राः सौख्यानि विविधानि च ।
अचिरात्तस्य नश्यन्ति येषां क्रुद्धोऽसि मानद ॥ ७-१५०-५३ (५१६२६)
भगवानुवाच। ७-१५०-५४क्ष् (४६६४)
विनष्टान्कौरवान्मन्ये सपुत्रपशुबान्धवान् ।
राजधर्मपरे नित्यं त्वयि क्रुद्धे परन्तप ॥ ७-१५०-५४ (५१६२७)
सञ्जय उवाच। ७-१५०-५५क्ष् (४६६५)
ततो भीमो महाबाहुः सात्यकिश्च महारथः ।
अभिवाद्य गुरुं ज्येष्ठं मार्गणैः क्षतविक्षतौ ।
क्षितावास्तां महेष्वासौ पाञ्चाल्यपरिवारितौ ॥ ७-१५०-५५ (५१६२८)
तौ दृष्ट्वा मुदितो वीरौ प्राञ्जली चाग्रतः स्थितौ ।
अभ्यनन्दत कौन्तेयस्तावुभौ भीमसात्यकी ॥ ७-१५०-५६ (५१६२९)
दिष्ट्या पश्यामि वा शूरौ विमुक्तौ सैन्यसागरात् ।
द्रोणग्राहदुराधर्षाद्धार्दिक्यमकरालयात् ॥ ७-१५०-५७ (५१६३०)
दिष्ट्या विनिर्जिताः सङ्ख्ये पृथिव्यां सर्वपार्थिवाः ।
युवां विजयिनौ चापि दिष्ट्या पश्यामि संयुगे ॥ ७-१५०-५८ (५१६३१)
दिष्ट्या द्रोणो जितः सङ्ख्ये हार्दिक्यश्च महाबलः ।
दिष्ट्या विकर्णिभिः कर्णो रणे नीतः पराभवम् ॥ ७-१५०-५९ (५१६३२)
विमुखश्च कृतः शल्यो युवाभ्यां पुरुषर्षभौ ।
दिष्ट्या युवां कुशलिनौ सङ्ग्रामात्पुनरागतौ ।
पश्यामि रथिनां श्रेष्ठावुभौ युद्धविशारदौ ॥ ७-१५०-६० (५१६३३)
मम वाक्यकरौ वीरौ मम गौरवयन्त्रितौ ।
सैन्यार्णवं समुत्तीर्णौ दिष्ट्या पश्यामि वामहम् ॥ ७-१५०-६१ (५१६३४)
समरश्लाघिनौ वीरौ समरेष्वपराजितौ ।
मम वाक्यसमौ चैव दिष्ट्या पश्यामि वामहम् ॥ ७-१५०-६२ (५१६३५)
इत्युक्त्वा पाण्डवो राजन्युयुधानवृकोदरौ ।
सस्वजे पुरुषव्याघ्रौ हर्षाद्बाष्पं मुपोच ह ॥ ७-१५०-६३ (५१६३६)
ततः प्रमुदितं सर्वं बलमासीद्विशाम्पते ।
पाण्डवानां रणे हृष्टं युद्धाय तु मनो दधे ॥ ॥ ७-१५०-६४ (५१६३७)

इति श्रीमन्महाभारते द्रोणपर्वणि जयद्रथवधपर्वणि
चतुर्दशदिवसयुद्धे पञ्चाशदधिकशततमोऽध्यायः ॥ १५० ॥
Mahabharata - Drona Parva - Chapter Footnotes

५-१५०-८ गुप्तेन अर्जुनेनेति शेषः ॥
८ ॥
५-१५०-१५ शक्रानुजेति कृष्णं प्रति सम्बोधनम् ॥
५-१५०-२५ चतुरश्चत्वारः ॥
५-१५०-२७ त्वमिति । हेईशेश रुद्राद्याराध्य। ईश्वरा
राजानस्तेषामपीशानो धर्मः। तदेतत्क्षत्रस्य क्षत्रं यद्धर्म इति
श्रुतेस्तस्यापि प्रभो। धर्मस्य प्रभुरच्युत इति स्मृतेः ॥
५-१५०-२८ सखा वयस्यः । हितः प्रियकृत्। गोप्ता दुःखनिवारकः ॥
५-१५०-२९ कुण्डलितः पाठः झ । पुस्तक एव दृश्यते ॥
५-१५०-४८ उत्तीर्णं लङ्घितम् ॥
५-१५०-५० चक्षुर्हणं क्रोधदृष्टिमात्रेण हन्तारम् ॥
५-१५०-१५० पञ्चाशदधिकशततमोऽध्यायः ॥

---

द्रोनपर्व-अध्यय१५१
॥ श्रीः ॥
७.१५१. अध्यायः १५१

Mahabharata - Drona Parva - Chapter Topics
सैन्धववधदुःखितेन दुर्योधनेन द्रोणमेत्य आत्मोपालम्भपूर्वकं
परिशोचनम् ॥ १ ॥

Mahabharata - Drona Parva - Chapter Text

७-१५१-० (५१६३८)
सञ्जय उवाच। ७-१५१-०क्ष् (४६६६)
सैन्धवे निहते राजन्पुत्रस्तव सुयोधनः ।
श्अश्रुपूर्णमुखो दीनो निरुत्साहो द्विषज्जये ॥ ७-१५१-१ (५१६३९)
दुर्मना निःश्वसन्दुष्टो भग्नदंष्ट्र इवोरगः ।
आगस्कृत्सर्वलोकस्य पुत्रस्तेऽर्तिं परामगात् ॥ ७-१५१-२ (५१६४०)
दृष्ट्वा तत्कदनं घोरं स्वबलस्य कृतं महत् ।
जिष्णुना भीमसेनेन सात्वतेन च संयुगे ॥ ७-१५१-३ (५१६४१)
स विवर्णः कृशो दीनो बाष्पविप्लुतलोचनः ॥

अमन्यतार्जुनसमो न योद्धा भुवि विद्यते ॥ ७-१५१-४ (५१६४२)
न द्रोणो न च राधेयो नाश्वत्थामा कृपो न च ।
पार्थस्य सम्मखे स्थातुं पर्याप्ता इति मारिष ॥ ७-१५१-५ (५१६४३)
निर्जित्य हि रणे पार्थः सर्वान्मम महारथान् ।
अवधीत्सैन्धवं सङ्ख्ये न च कश्चिदवारयत् ॥ ७-१५१-६ (५१६४४)
सर्वथा हतमेवेदं कौरवाणां महद्बलम् ।
न ह्यस्य विद्यते त्राता साक्षादपि पुरन्दरः ॥ ७-१५१-७ (५१६४५)
यमुपाश्रित्य सङ्ग्रामे कृतः शस्त्रसमुद्यमः ।
स कर्णो निर्जितः सङ्ख्ये हतश्चैव जयद्रथः ॥ ७-१५१-८ (५१६४६)
ग्परुषाणि सभामध्ये प्रोक्तवान्यो हि पाण्डवान् ।
स कर्णो निर्जितः सङ्ख्ये सैन्धवश्च निपातितः ॥ ७-१५१-९ (५१६४७)
यस्य वीर्यं समाश्रित्य शमं याचन्तमच्युतम् ।
तृणवत्तमहं मन्ये स कर्णो निर्जितो युधि ॥ ७-१५१-१० (५१६४८)
एवं क्लान्तमना राजन्नुपायाद्रोणमीक्षितुम् ।
आगस्कृत्सर्वलोकस्य पुत्रस्ते भरतर्षभ ॥ ७-१५१-११ (५१६४९)
ततस्तत्सर्वमाचख्यौ कुरूणां वैशसं महत् ।
परान्विजयतश्चापि धार्तराष्ट्रान्निमज्जतः ॥ ७-१५१-१२ (५१६५०)
दुर्योधन उवाच। ७-१५१-१३क्ष् (४६६७)
पश्य मूर्धाभिषिक्तानामाचार्य कदनं महत् ।
कृत्वा प्रमुखतः शूरं भीष्मं मम पितामहम् ॥ ७-१५१-१३ (५१६५१)
तं निहत्य प्रलुब्धोऽयं शिखण्डी पूर्णमानसः ।
पाञ्चाल्यैः सहितः सर्वैः सेनाग्रमभिवर्तते ॥ ७-१५१-१४ (५१६५२)
अपरश्चापि दुर्धर्षः शिष्यस्ते सव्यसाचिना ।
अक्षौहिणीः सप्त हत्वा हतो राजा जयद्रथः ॥ ७-१५१-१५ (५१६५३)
अस्मद्विजयकामानां सुहृदामुपकारिणाम् ।
गन्ताऽस्मि कथमानृण्यं गतानां यमसादनम् ॥ ७-१५१-१६ (५१६५४)
ये मदर्थं परीप्सन्ते वसुधां वसुधाधिपाः ।
ते हित्वा वसुधैश्वर्यं वसुधामधिशेरते ॥ ७-१५१-१७ (५१६५५)
सोऽहं कापुरुषः क-त्वा मित्राणां क्षयमीदृशम् ।
अश्वमेधसहस्रेण पावितुं न समुत्सहे ॥ ७-१५१-१८ (५१६५६)
मम लुब्धस्य पापस्य तथा धर्मापचायिनः ।
व्यायामेन जिगीषन्तः प्राप्ता वैवस्वतक्षयम् ॥ ७-१५१-१९ (५१६५७)
कथं पतितवृत्तस्य पृथिवी सुहृदां द्रुहः ।
विवरं नाशकद्दातुं मम पार्थिवसंसदि ॥ ७-१५१-२० (५१६५८)
योऽहं रुधिरसिक्ताङ्गं राज्ञां मध्ये पितामहम् ।
शयानं नाशकं त्रातुं भीष्ममायोधने हतम् ॥ ७-१५१-२१ (५१६५९)

तं मामनार्यपुरुषं मित्रद्रुहमधार्मिकम् ।
किं वक्ष्यति हि दुर्धर्षः समेत्य परलोकजित् ॥ ७-१५१-२२ (५१६६०)
जलसन्धं महेष्वासं पश्य सात्यकिना हतम् ।
मदर्थमुद्यतं शूरं प्राणांस्त्यक्त्वा महारथम् ॥ ७-१५१-२३ (५१६६१)
काम्भोजं निहतं दृष्ट्वा तथालम्बुसमेव च ।
अन्यान्बहूंश्च सुहृदो जीवितार्थोऽद्य को मम ॥ ७-१५१-२४ (५१६६२)
व्यायच्छन्तो हताः शूरा मदर्थे ये पराङ्मुखाः ।
यतमानाः परं शक्त्या विजेतुमहितान्मम ॥ ७-१५१-२५ (५१६६३)
तेषां गत्वाऽहमानृण्यमद्य शक्त्या परन्तप ।
तर्पयिष्यामि तानेव जलेन यमुनामनु ॥ ७-१५१-२६ (५१६६४)
सत्यं ते प्रतिजानामि सर्वशस्त्रभृतां वर ।
इष्टापूर्तेन च शपे वीर्येण च सुतैरपि ॥ ७-१५१-२७ (५१६६५)
निहत्य तान्रमे सर्वान्पाञ्चालान्पाण्डवैः सह ।
सान्तिं लब्धाऽस्मि तेषां वा रणे गन्ता सलोकताम् ७-१५१-२८ (५१६६६)
सोऽहं तत्र गमिष्यामि यत्र ते पुरुषर्षभाः ।
हता मदर्थे सङ्ग्रामे युध्यमानाः किरीटिना ॥ ५-१५१-३० न हीदानीं
सहाया मे परीप्सन्त्यनुपस्कृताः ।
श्रेयो हि पाण्डून्मन्यन्ते न तथास्मान्महाभुज ॥ ७-१५१-२९ (५१६६७)
स्वयं हि मृत्युर्विहितः सत्यसन्धेन संयुगे ।
भवानुपेक्षां कुरुते शिष्यत्वादर्जुनस्य हि ॥ ७-१५१-३१ (५१६६८)
अतो विनिहताः सर्वे येऽस्मज्जयचिकीर्षवः ।
कर्णमेव तु पश्यामि सम्प्रत्यस्मज्जयैषिणम् ॥ ७-१५१-३२ (५१६६९)
यो हि मित्रमविज्ञाय याथातथ्येन मन्दधीः ।
मित्रार्थे योजयत्येनं तस्य सोऽर्थोऽवसीदति ॥ ७-१५१-३३ (५१६७०)
तादृग्रूपं कृतमिदं मम कार्यं सुहृत्तमैः ।
मोहाल्लुब्धस्य पापस्य जिह्मस्य धनमीहतः ॥ ७-१५१-३४ (५१६७१)
यौ मे युद्धस्य कृत्यस्य जिह्माचारैः समीयतुः ।
हतो जयद्रथश्चैव सौमदत्तिश्च विर्यवान् ।
अभीषाहाः शूरसेनाः शिबयोऽथ वसातयः ॥ ७-१५१-३५ (५१६७२)
सोऽहमद्य गमिष्यामि यत्र ते पुरुषर्षभाः ।
हता मदर्थे सङ्ग्रामे युध्यमानाः किरीटिना ॥ ७-१५१-३६ (५१६७३)
न हि मे जीवितेनार्थस्तानृते पुरुषर्षभान् ।
आचार्यः पाण्डुपुत्राणामनुजानातु नो भवान् ॥ ॥ ७-१५१-३७ (५१६७४)

इति श्रीमन्महाभारते द्रोणपर्वणि जयद्रथवधपर्वणि
चतुर्दशदिवसयुद्धे एकपञ्चाशदधिकशततमोऽध्यायः ॥ १५१ ॥

५-१५१-१ आर्तिमिति च्छेदः ॥
५-१५१- प्रलुब्धः प्रकृष्टो लुब्धकस्तद्वद्वञ्चकत्वात् ॥
५-१५१- धर्मापचायिनः धर्मक्षेपकस्य ॥
५-१५१- आचार्यः पाण्डुपुत्राणामित्यपालम्भः ॥
५-१५१- एकपञ्चाशदधिकशततमोऽध्यायः ॥
१५१ ॥

---

द्रोनपर्व-अध्यय१५२
॥ श्रीः ॥
७.१५२. अध्यायः १५२

Mahabharata - Drona Parva - Chapter Topics
द्रोणेन सोपालम्भं दुर्योधनाश्वासनपूर्वकं रणाय निर्याणम् ॥ १ ॥

Mahabharata - Drona Parva - Chapter Text

७-१५२-० (५१६७५)
धृतराष्ट्र उवाच। ७-१५२-०क्ष् (४६६८)
सिन्धुराजे हते तात समरे सव्यसाचिना ।
तथैव भूरिश्रवसि किमासीद्वो मनस्तदा ॥ ७-१५२-१ (५१६७६)
दुर्योधनेन च द्रोणस्तथोक्तः कुरसंसदि ।
किमुक्तवान्परं तस्मात्तन्ममाचक्ष्व सञ्जय ॥ ७-१५२-२ (५१६७७)
सञ्जय उवाच। ७-१५२-३क्ष् (४६६९)
निष्टानको महानासीत्सैन्यानां तव भारत ।
सैन्धवं निहतं दृष्ट्वा भूरिश्रवसमेव च ॥ ७-१५२-३ (५१६७८)
मन्त्रितं तव पुत्रस्य ते सर्वमवमेनिरे ।
येन मन्त्रैण निहताः शतशः क्षत्रियर्षभाः ॥ ७-१५२-४ (५१६७९)
द्रोणस्तु तद्वचः श्रुत्वा पुत्रस्य तव दुर्मनाः ।
मुहूर्तमिव च ध्यात्वा भृशमार्तोऽभ्यभाषत ॥ ७-१५२-५ (५१६८०)
द्रोण उवाच। ७-१५२-६क्ष् (४६७०)
दुर्योधन किमेवं मां वाक्षरैरुपकृन्तसि ।
अजय्यं सततं सङ्ख्ये ब्रुवाणं सव्यसाचिनम् ॥ ७-१५२-६ (५१६८१)
एतेनवार्जुनं ज्ञातुमलं कौरव संयुगे ।
यच्छिखण्ड्यवधीद्भीष्मं पाल्यमानः किरीटिना ॥ ७-१५२-७ (५१६८२)

अवध्यं निहतं दृष्ट्वा संयुगे देवदानवैः ।
तदैवाज्ञासिषमहं नेयमस्तीति भारती ॥ ७-१५२-८ (५१६८३)
यं पुंसां त्रिषु लोकेषु सर्वशूरममंस्म हि ।
तस्मिन्निपतिते भीष्मे कं शेषं पर्युपास्महे ॥ ७-१५२-९ (५१६८४)
यान्स्म तान्लहते तात शकुनिः कुरुसंसदि ।
अक्षान्न तेऽक्षा निशिता बाणास्ते शत्रुतापनाः। ७-१५२-१० (५१६८५)
ग्अक्षांस्तु मन्यसे बाणाञ्छोभमानाञ्छिताञ्शरान्'
त एते घ्नन्ति नस्तात विशिखाः पार्थचोदिताः ।
तांस्तदाऽऽख्यायमानस्त्वं विदुरेण न बुद्धवान् ॥ ७-१५२-११ (५१६८६)
यास्ता विलपतश्चापि विदुरस्य महात्मनः ।
धीरस्य वाचो नाश्रौषीः क्षेमाय वदतः शिवाः ॥ ७-१५२-१२ (५१६८७)
तदिदं वर्तते घोरमागतं वैशसं महत् ।
तस्यावमानाद्वाक्यस्य दुःशासनकृतेन च ॥ ७-१५२-१३ (५१६८८)
योऽवमन्य वचः पथ्यं सुहृदामाप्तकारिणाम् ।
स्वमतं कुरुते मूढः स शोच्यो नचिरादिव ॥ ७-१५२-१४ (५१६८९)
यच्च नः प्रेक्षमाणानां कृष्णामानाय्य तत्सभाम् ।
अनर्हन्तीं कुले जातां सर्वधर्मानुचारिणीम् ॥ ७-१५२-१५ (५१६९०)
तस्याधर्मस्य गान्धारे फलं प्राप्तमिदं महत् ।
नोचेत्पापं परे लोके त्वमृच्छेथास्ततोऽधिकम् ॥ ७-१५२-१६ (५१६९१)
यच्च तान्पाण्डवान्द्यूते विषमेण विजित्य ह ।
प्राव्राजयस्तदाऽरण्ये रौरवाजिनवाससः ॥ ७-१५२-१७ (५१६९२)
पुत्राणामिव चैतेषां धर्ममाचरतां सदा ।
द्रुह्येत्को नु नरो लोके मदन्यो ब्राह्मणब्रुवः ॥ ७-१५२-१८ (५१६९३)
पाण्डवानामयं कोपस्त्वया शकुनिना सह ।
आहृतो धृतराष्ट्रस्य सम्मते कुरु संसदि ॥ ७-१५२-१९ (५१६९४)
दुःशासनेन संयुक्तः कर्णेन परिवर्धितः ।
क्षत्तुर्वाक्यमनादृत्य त्वयाऽभ्यस्तः पुनः पुनः ॥ ७-१५२-२० (५१६९५)
ग्स हि नः क्रोधवृक्षश्च कृतमूलो महात्मनाम् ।
तस्य पुष्पफले राजन्नुपभुङ्क्ष्व महाबल'॥ ७-१५२-२१ (५१६९६)
यत्ताः सर्वे पराभूताः पर्यवारयतार्जुनम् ।
सिन्धुराजानमाश्रित्य स वो मध्ये कथं हतः ॥ ७-१५२-२२ (५१६९७)
कथं त्वयि च कर्णे च कृपे शल्ये च जीवति ।
अश्वत्थाम्नि च कौरव्य निधनं सैन्धवोऽगमत् ॥ ७-१५२-२३ (५१६९८)
युध्यन्तः सर्वराजानस्तेजस्विन उपासते ।
सिन्धुराजं परित्रातुं वो मध्ये कथं हतः ॥ ७-१५२-२४ (५१६९९)
मय्येव हि विशेषेण तथा दुर्योधन त्वयि ।

आशंसत परित्राणमर्जुनात्स महीपतिः ॥ ७-१५२-२५ (५१७००)
ततस्तस्मिन्परित्राणमलब्धवति फल्गुनात् ।
न किञ्चिदनुपश्यामि जीवितस्थानमात्मनः ॥ ७-१५२-२६ (५१७०१)
मज्जन्तमिव चात्मानं धृष्टद्युम्नस्य संयुगे ।
पश्याम्यहत्वा पाञ्चालान्सह तेन शिखण्डिना ॥ ७-१५२-२७ (५१७०२)
तन्मां किमभितप्यन्तं वाक्षरैरेव कृन्तसि ।
अशक्तः सिन्धुराजस्य भूत्वा त्राणाय भारत ॥ ७-१५२-२८ (५१७०३)
सौवर्णं सत्यसन्धस्य ध्वजमक्लिष्टकर्मणः ।
अपश्यन्युधि भीष्मस्य कथमाशंससे जयम् ॥ ७-१५२-२९ (५१७०४)
मध्ये महारथानां किं शेषं तत्र मन्यसे ।
हतो भूरिश्रवाश्चैव किं शेषं तत्र मन्यसे ॥ ७-१५२-३० (५१७०५)
कृप एव च दुर्धर्षो यदि जीवति पार्थिव ।
यो नागात्सिन्धुराजस्य वर्त्म तं पूजयाम्यहम् ॥ ७-१५२-३१ (५१७०६)
यत्रापश्यं हतं भीष्मं पश्यतस्तेऽनुजस्य वै ।
दुःशासनस्य कौरव्य कुर्वाणं कर्म दुष्करम् ॥ ७-१५२-३२ (५१७०७)
अवध्यकल्पं सङ्ग्रामे देवैरपि सवासवैः ।
न ते वसुन्धराऽस्तीति तदाहं चिन्तये नृप ॥ ७-१५२-३३ (५१७०८)
इमानि पाण्डवानां च सृज्जयानां च भारत ।
अनीकान्याद्रवन्ते मां सहितान्यद्य भारत ॥ ७-१५२-३४ (५१७०९)
नाहत्वा सर्वपाञ्चलान्कवचस्य विमोक्षणम् ।
कर्ताऽस्मि समरे कर्म धार्तराष्ट्र हितं तव ॥ ७-१५२-३५ (५१७१०)
राजन्ब्रूयाः सुतं मे त्वमश्वत्थामानमाहवे ।
न सोमकाः प्रमोक्तव्या जीवितं परिरक्षता ॥ ७-१५२-३६ (५१७११)
यच्च पित्राऽनुशिष्टोऽसि तद्वचः परिपालय ।
आनृशंस्ये दमे सत्ये चार्जवे च स्थिरो भव ॥ ७-१५२-३७ (५१७१२)
धर्मार्थकामकुशलो धर्मार्थावप्यपीडयन् ।
धर्मप्रधानकार्याणि कुर्याश्चेति पुनः पुनः ॥ ७-१५२-३८ (५१७१३)
चक्षुर्मनोभ्यां सन्तोष्या विप्राः पूज्याश्च शक्तितः ।
न चैषां विप्रियं कार्यं ते हि वह्निशिखोपमाः ॥ ७-१५२-३९ (५१७१४)
एष त्वहमनीकानि प्रविशाम्यरिसूदन ।
रणाय महते राजंस्त्वया वाक्षरपीडितः ॥ ७-१५२-४० (५१७१५)
त्वं च दुर्योधन बलं यदि शक्तोऽसि पालय ।
रात्रावपि च योद्धव्याः संरब्धाः कुरुसृञ्जयाः ॥ ७-१५२-४१ (५१७१६)
एवमुक्त्वा ततः प्रायाद्द्रोणः पाण्वसृञ्जयान् ।
मुष्णन्क्षत्रियतेजांसि नक्षत्राणामिवांशुमान् ॥ ॥ ७-१५२-४२ (५१७१७)

इति श्रीमन्महाभारते द्रोणपर्वणि जयद्रथवधपर्वणि
चतुर्दशदिवसयुद्धे द्विपञ्चाशदधिकशततमोऽध्यायः ॥ १५२ ॥
Mahabharata - Drona Parva - Chapter Footnotes

५-१५२-३ निष्टानकः सव्यथः शब्दः ॥
५-१५२-८ इयं सेना नास्तीत्यस्य नष्टेत्यर्थः ॥
५-१५२-१० ग्लहते पातयति ॥
५-१५२-१६ नोचेदिति । परेलोकेऽधिकः पापिनां क्लेश इहत्वल्पेनैव
भोगेन निस्तार इति भावः ॥
नेह चेत्परलोके यत्पापमिच्छेत्ततोऽधिकम् इति क । पाठः। न
भवेत्परलोके यत्तप्तमिच्छेत्ततोऽधिकम्। इति ख। पाठः। नोचेत्पापं
परं लोके त्वं मन्येथास्ततोऽधिकम् इति ङ।पाठः। नेह वै परलोकाय
पापमिच्छेत पार्थिवः इति ट ङ।पाठः ॥
५-१५२-२० अभ्यस्त आवर्तितः ॥
५-१५२-२२ यस्तु शर्वाद्वरं लब्ध्वा पर्यवारयदर्जुनम् । सिन्धुराजः
समाश्रित्य स वो मध्ये कथं हतः इति क ख।पाठः। यत्ताः
सर्वे पुरा भूत्वा अर्जुनं पर्यवारयन्। सिन्धुराजाः समाश्रित्य
स वो मध्ये कथं हतः इति ट।पाठः। यत्तत्सर्वे परं
भूत्वा पर्यवारयतार्जुनम्। सिन्धुराजानमाश्रित्य स वो
मध्ये कथं हतः इति ङ। पाठः। यत्तत्सर्वे पराभूय
पर्यवारयतार्जुनिम्। सिन्धुराजानमाश्रित्य स वो मध्ये कथं हतः
इति ङ। पाठः ॥
५-१५२-२७ पश्याम्यहं वै पाञ्चालान्सह तेन शिखण्डिना इति
क ट ङ।पाठः । धृष्टद्युम्नस्य किल्पिषे इति झ।पाठः ॥
५-१५२-१५२ द्विपञ्चाशदधिकशततमोऽध्यायः ॥

---

द्रोनपर्व-अध्यय१५३
॥ श्रीः ॥
७.१५३. अध्यायः १५३

Mahabharata - Drona Parva - Chapter Topics
दुर्योधनेन कर्णंप्रति जयद्रथवधे द्रोणस्य
पार्थपक्षपातादौदासीन्यस्य हेतुत्वेऽभिहिते कर्णेन
तन्निराकरणपूर्वकं दैवस्यैव तत्र हेतुत्वकथनम् ॥ १ ॥
रात्रियुद्धारम्भः ॥ २ ॥

७-१५३-० (५१७१८)
सञ्जय उवाच। ७-१५३-०क्ष् (४६७१)
ततो दुर्योधनो राजा द्रोणेनैवं प्रचोदितः ।
अमर्षवशमापन्नो युद्धायैव मनो दधे ।
अब्रवीच्च तदा कर्णं पुत्रो दुर्योधनस्तव ॥ ७-१५३-१ (५१७१९)
पश्य कृष्णसहायेन पाण्डवेन किरीटिना ।
आचार्यविहितं व्यूहं भित्त्वा देवैः सुदुर्भिदम् ॥ ७-१५३-२ (५१७२०)
तव व्यायच्छमानस्य द्रोणस्य च महात्मनः ।
मिषतां योधमुख्यानां सैन्धवो विनिपातितः ॥ ७-१५३-३ (५१७२१)
पश्य राधेय पृथ्वीशाः पृथिव्यां प्रवरा युधि ।
पार्थेनैकेन निहताः सिंहेनेवेतरे मृगाः ॥ ७-१५३-४ (५१७२२)
मम व्यायच्छमानस्य समरे शत्रुसूदन ।
अल्पावशेषं सैन्यं मे कृतं शक्रात्मजेन ह ॥ ७-१५३-५ (५१७२३)
कथं वै युध्यमानस्य द्रोणस्य युधि फल्गुनः ।
भिन्द्यात्सुदुर्भिदं व्यूहं यतमानोऽपि संयुगे ॥ ७-१५३-६ (५१७२४)
प्रतिज्ञाया गतः पारं हत्वा सैन्धवमर्जुनः ॥ ७-१५३-७ (५१७२५)
पश्य राधेय पृथ्वीशान्पृथिव्यां पातितान्बहून् ।
पार्थेन निहतान्सङ्ख्ये महेन्द्रोपमविक्रमान् ॥ ७-१५३-८ (५१७२६)
अनिच्छतः कथं वीर द्रोणस्य युधि पाण्डवः ।
भिन्द्यात्सुदुर्भिदं व्यूहं यतमानस्य शुष्मिणः ॥ ७-१५३-९ (५१७२७)
दयितः फल्गुनो नित्यमाचार्यस्य महात्मनः ।
ततोऽस्य दत्तवान्द्वारमयुद्धेनैव शत्रुहन् ॥ ७-१५३-१० (५१७२८)
अभयं सिन्धुराजाय दत्त्वा द्रोणः परन्तपः ।
प्रादात्किरीटिने द्वारं पश्यन्निर्गुणतां मयि ॥ ७-१५३-११ (५१७२९)
यद्यदास्यदनुज्ञां वै पूर्वमेव गृहान्प्रति ।
प्रस्थातुं सिन्धुराजस्य न भवेज्जीवितक्षयः ॥ ७-१५३-१२ (५१७३०)
जयद्रथो जीवितार्थी गच्छमानो गृहान्प्रति ।
मयाऽनार्येण संरुद्धो द्रोणात्प्राप्याभयं रणे ॥ ७-१५३-१३ (५१७३१)
ग्रक्षामि सैन्धवं युद्धे नैनं प्राप्स्यति फल्गुनः ।
मम सैन्यविनाशाय रुद्धो विप्रेण सैन्धवः ॥ ७-१५३-१४ (५१७३२)
तस्य मे मन्दभाग्यस्य यतमानस्य संयुगे ।
हतानि सर्वसैन्यानि हतो राजा जयद्रथः ॥ ७-१५३-१५ (५१७३३)
पश्य योधवरान्कर्ण शतशोऽथ सहस्रशः ।
पार्थनामाङ्कितैर्बाणैः सर्वे नीता यमक्षयम् ॥ ७-१५३-१६ (५१७३४)

कथमेकरथेनाजौ बहूनां नः प्रपश्यताम् ।
विपन्नः सैन्धवो राजा योधाश्चैव सहस्रशः'॥ ७-१५३-१७ (५१७३५)
अद्य मे भ्रातरः क्षीणाश्चित्रसेनादयो रणे ।
भामसनं समासाद्य पश्यतां नोदुरात्मनाम् ॥ ७-१५३-१८ (५१७३६)
कर्ण उवाच। ७-१५३-१९क्ष् (४६७२)
आचार्यं मा विगर्हस्व शक्त्याऽसौ युध्यते द्विजः ।
यथाबलं यथोत्साहं त्यक्त्वा जीवितमात्मनः ॥ ७-१५३-१९ (५१७३७)
यद्येनं समतिक्रम्य प्रविष्टः श्वेतवाहनः ।
नात्र सूक्ष्मोऽपि दोषःस्यादाचार्यस्य कथञ्चन ॥ ७-१५३-२० (५१७३८)
कृती दक्षो युवा शूरः कृतास्त्रो लघुविक्रमः ।
दिव्यास्त्रयुक्तमास्थाय रथं वानरलक्षणम् ॥ ७-१५३-२१ (५१७३९)
कृष्णेन च गृहीताश्वमभेद्यकचावृतः ।
गाण्डीवमजरं दिव्यं धनुरादाय वीर्यवान् ॥ ७-१५३-२२ (५१७४०)
प्रवर्षन्निशितान्बाणान्बाहुद्रविणदर्पितः ।
यदर्जुनोऽभ्ययाद्द्रोणमुपपन्नं हि तस्य तत् ॥ ७-१५३-२३ (५१७४१)
आचार्यः स्थविरो राजञ्शीघ्रयाने तथाऽक्षमः ।
बाहुव्यायामचेष्टायामशक्तस्तु नराधिप ॥ ७-१५३-२४ (५१७४२)
तेनैवमभ्यतिक्रान्तः श्वेताश्वः कृष्णसारथिः ।
तस्य दोषं न पश्यामि द्रोणस्यानेन हेतुना ॥ ७-१५३-२५ (५१७४३)
अजय्यान्पाण्डवान्मन्ये द्रोणोनास्त्रविदा मृधे ।
तथा ह्येनमतिक्रम्य प्रविष्टः श्वेतवाहनः ॥ ७-१५३-२६ (५१७४४)
सततं चेष्टमानानां निकृत्या विक्रमेण च ।
दैवादिष्टोऽन्यथाभावो न मन्ये विद्यते क्वचित् ॥ ७-१५३-२७ (५१७४५)
यतो नो युध्यमानानां परं शक्त्या सुयोधन ।
सैन्धवो निहतो युद्धे दैवमत्र परं स्मृतम् ॥ ७-१५३-२८ (५१७४६)
परं यत्नं कुर्वतां च त्वया सार्धं रणाजिरे ।
हत्वाऽस्माकं पौरुषं वै दैवं पश्चात्करोति नः ॥ ७-१५३-२९ (५१७४७)
दैवोपसृष्टपुरुषो यत्कर्म कुरुते क्वचित् ।
कृतं कृतं हि तत्तस्यट दैवेन विनिपात्यते ॥ ७-१५३-३० (५१७४८)
यत्कर्तव्यं मनुष्येण व्यवसायवता सदा ।
तत्कार्यमविशङ्केन सिद्धिर्दैवे प्रतिष्ठिता ॥ ७-१५३-३१ (५१७४९)
निकृत्या वञ्चिताः पार्था विषयोगैश्च भारत ।
दग्धा जतुगृहे चापि द्यूतेन च पराजिताः ॥ ७-१५३-३२ (५१७५०)
राजनीतिं समाश्रित्य प्रहिताश्चैव काननम् ।
यत्नेन च कृतं तत्तद्दैवेन विनिपातितम् ॥ ७-१५३-३३ (५१७५१)
युध्यस्व यत्नमास्थय दैवं कृत्वा निरर्थकम् ।

यततस्तव तेषां च दैवं मार्गेण यास्यति ॥ ७-१५३-३४ (५१७५२)
न तेषां मतिपूर्वं हि सुकृतं दृश्यते क्वचित् ।
दुष्कृतं तव वा वीर बुद्ध्या हीनं कुरूद्वह ॥ ७-१५३-३५ (५१७५३)
दैवं प्रमाणं सर्वस्य सुकृतस्येतरस्य वा ।
अनन्यकर्म दैवं हि जागर्ति स्वपतामपि ।
ग्तेन युक्तो हि पुरुषः कार्याकार्ये नियुज्यते'॥ ७-१५३-३६ (५१७५४)
बहूनि तव सैन्यानि योधाश्च बहवस्तव ।
न तथा पाण्डुपुत्राणामेवं युद्धमवर्तत ॥ ७-१५३-३७ (५१७५५)
तैरल्पैर्बहवो यूयं क्षयं नीताः प्रहारिणः ।
शङ्के दैवस्य तत्कर्म पौरुषं येन नाशितम् ॥ ७-१५३-३८ (५१७५६)
सञ्जय उवाच। ७-१५३-३९क्ष् (४६७३)
एवं संभाषमाणानां बहु तत्तज्जनाधिप ।
पाण्डवानामनीकानि समदृश्यन्त संयुगे ॥ ७-१५३-३९ (५१७५७)
ततः प्रववृते युद्धं व्यतिषक्तरथद्विपम् ।
तावकानां परैः सार्धं राजन्दुर्मन्त्रिते तव ॥ ॥ ७-१५३-४० (५१७५८)

इति श्रीमन्महाभारते द्रोणपर्वणि जयद्रथवधपर्वणि
चतुर्दशदिवसयुद्धे त्रिपञ्चाशदधिकशततमोऽध्यायः ॥ १५३ ॥
Mahabharata - Drona Parva - Chapter Footnotes

५-१५३-१२ यद्यदास्यत् दद्याच्चेदित्यर्थः । सिन्धुराजस्य
नाभविध्यज्जनक्षय इति झ। पाठः ॥
५-१५३-२७ अन्यथाभावः पराजयो दैवादिष्टः । नतु द्रोणापराधज
इति भावः ॥
दैवदृष्ट्याऽन्यथाभावो न मन्युर्विद्यते क्वचित् इति
क । पाठः। दैवदिष्टान्यथाभावो न मन्युर्विद्यते क्वचित् इति
ख पाठः ॥
५-१५३-३० दैवोपसृष्टो दुर्दैवग्रस्तः ॥
५-१५३-३५ तेषां जयहेतुः सुकृतं तव वा पराजयहेतुः दुष्कृतं
नास्तीत्याह । न तेषामिति ॥
५-१५३-१५३ त्रिषञ्चाशदधिकशततमोऽध्यायः ॥

---

द्रोनपर्व-अध्यय१५४
॥ श्रीः ॥
७.१५४. अध्यायः १५४

Mahabharata - Drona Parva - Chapter Topics
युधिष्ठिरेण दुर्योधनपराजयः ॥ १ ॥

Mahabharata - Drona Parva - Chapter Text

७-१५४-० (५१७५९)
सञ्जय उवाच। ७-१५४-०क्ष् (४६७४)
तदुदीर्णं रथाश्वौघं बलं तव जनाधिप ।
पाण्डुसेनामतिक्रम्य योधयामास सर्वतः ॥ ७-१५४-१ (५१७६०)
पाञ्चालाः कुरवश्चैव योधयन्तः परस्परम् ।
यमराष्ट्राय महते परलोकाय दीक्षिताः ॥ ७-१५४-२ (५१७६१)
शूराः शूरैः समागम्य शरतोमरशक्तिभिः ।
विव्यधुः समरेऽन्योन्यं निन्युश्चैव यमक्षयम् ॥ ७-१५४-३ (५१७६२)
रथिनां रथिभिः सार्धं रुधिरस्रावदारुणम् ।
प्रावर्तत महद्युद्धं निघ्नतामितरेतरम् ॥ ७-१५४-४ (५१७६३)
वारणाश्च महाराज समासाद्य परस्परम् ।
विषाणैर्दारयामासुः सुसङ्क्रुद्धा मदोत्कटाः ॥ ७-१५४-५ (५१७६४)
हयारोहान्हयारोहाः प्रासशक्तिपरश्वथैः ।
बिभिदुस्तुमुले युद्धे प्रार्थयन्तो महद्यशः ॥ ७-१५४-६ (५१७६५)
पत्तयश्च महाबाहो शतशः शस्त्रपाणयः ।
अन्योन्यमार्दयन्राजन्नित्यं यत्ताः पराक्रमे ॥ ७-१५४-७ (५१७६६)
गोत्राणां नामधेयानां कुलानां चैव मारिष ।
श्रवणाद्धि विजानीमः पाञ्चालान्कुरुभिः सह ॥ ७-१५४-८ (५१७६७)
तेऽन्योन्यं समरे योधाः शरशक्तिपरश्वथैः ।
प्रैषयन्परलोकाय विचरन्तो ह्यभीतवत् ॥ ७-१५४-९ (५१७६८)
शरैर्दश दिशो राजंस्तेषां मुक्तैः सहस्रशः ।
न भ्राजन्ते यथा पूर्वं भास्करस्य च नाशनात् ॥ ७-१५४-१० (५१७६९)
तथा प्रयुध्यमानेषु पाण्डवेयेषु भारत ।
दुर्योधनो महाराज व्यवागाहत तद्बलम् ॥ ७-१५४-११ (५१७७०)
सैन्धवस्य वधेनैव भृशं दुःखसमन्वितः ।
मर्तव्यमिति संचिन्त्य प्राविशच्च द्विषद्बलम् ॥ ७-१५४-१२ (५१७७१)
नादयन्रथघोषेण कम्पयन्निव मेदिनीम् ।
अभ्यवर्तत पुत्रस्ते पाण्डवानामनीकिनीम् ॥ ७-१५४-१३ (५१७७२)
स सन्निपातस्तुमुलस्तस्य तेषां च भारत ।
अभवत्सर्वसैन्यानामभावकरमो महान् ॥ ७-१५४-१४ (५१७७३)
ग्धृतराष्ट्र उवाच। ७-१५४-१५क्ष् (४६७५)

तथा हतेषु सैन्येषु तथा कृच्छ्रगतः स्वयम् ।
कच्चिद्दुर्योधनः सूत नाकार्षीत्पृष्ठतो रणम् ॥ ७-१५४-१५ (५१७७४)
एकस्य च बहुनां च सन्निपातो महानभूत् ।
विशेषतो हि नृपतेर्विषमं प्रतिभाति मे ॥ ७-१५४-१६ (५१७७५)
सोऽत्यन्तसुखसंवृद्धो रक्ष्यो लोकस्य चेश्वरः ।
एको बहून्समासाद्य कच्चिन्नासीत्पराङ्मुखः ॥ ७-१५४-१७ (५१७७६)
द्रोणः कर्णः कृपश्चैव कृतवर्मा च सात्वतः ।
नावारयन्कथं युद्धे राजानं राज्यकाङ्क्षिणः ॥ ७-१५४-१८ (५१७७७)
सर्वोपायैर्हि युद्धेषु रक्षितव्यो महीपतिः ।
एषा नीतिः परा युद्धे दृष्टा तत्र मनीषिभिः ॥ ७-१५४-१९ (५१७७८)
प्रविष्टे वै मम सुते परेषां वै महद्बलम् ।
मामका रथिनां श्रेष्ठाः किमकुर्वत सञ्जय ॥ ७-१५४-२० (५१७७९)
सञ्जय उवाच। ७-१५४-२१क्ष् (४६७६)
राजन्सङ्ग्राममाश्चर्यं पुत्रस्य तव भारत ।
एकस्य च बहूनां च शृणु मे ब्रुवतो ध्रुवम् ॥ ७-१५४-२१ (५१७८०)
द्रोणेन वार्यमाणोऽसौ कर्णेन च कृपेण च ।
प्राविशत्पाण्डवीं सेनां मकरः सागरं यथा ॥ ७-१५४-२२ (५१७८१)
किरन्निषुसहस्राणि तत्रतत्र तथातथा ।
पाञ्चालान्पाण्डवांश्चैव विव्याध निशितैः शरैः ॥ ७-१५४-२३ (५१७८२)
यथोदयगतः सूर्यो रश्मिभिर्नाशयेत्तमः ।
तथा पुत्रस्तव बलं नाशयत्तन्महाबलः'॥ ७-१५४-२४ (५१७८३)
यथा मध्यन्दिने सूर्यं प्रतपन्तं गभस्तिभिः ।
तथा तव सुतं मध्ये प्रतपन्तं शरार्चिभिः ।
न शेकुर्भारतं युद्धे पाण्डवाः समुदीक्षितुम् ॥ ७-१५४-२५ (५१७८४)
पलायनकृतोत्साहा निरुत्साहा द्विषज्जये ।
पर्यधावन्त पाञ्चाला वध्यमाना महात्मना ॥ ७-१५४-२६ (५१७८५)
रुक्मपुङ्खैः प्रसन्नाग्रैस्तव पुत्रेण धन्विना ।
अर्द्यमानाः शरैस्तूर्णं न्यपतन्पाण्डुसैनिकाः ॥ ७-१५४-२७ (५१७८६)
ग्व्यद्रवंश्च भयाद्योधा दृष्ट्वा तं परमाहवे ।
व्यात्ताननमिव प्राप्तमन्तकं प्राणहारिणम्'॥ ७-१५४-२८ (५१७८७)
न तादृशं रमे कर्म कृतवन्तस्तु तावकाः ।
यादृशं कृतवान्राजा पुत्रस्तव विशाम्पते ॥ ७-१५४-२९ (५१७८८)
पुत्रेण तव सा सेना पाण्डवी मथिता रणे ।
नलिनी द्विरदेनेव समन्तात्फुल्लपङ्कजा ॥ ७-१५४-३० (५१७८९)
क्षीणतोयानिलार्काभ्यां हतत्विडिव पद्मिनी ।
बभूव पाण्डवी सेना तव पुत्रस्य तेजसा ॥ ७-१५४-३१ (५१७९०)

पाण्डुसेनां हतां दृष्ट्वा तव पुत्रेण भारत ।
भीमसेनपुरोगास्तु पाञ्चालाः समुपाद्रवन् ॥ ७-१५४-३२ (५१७९१)
स भीमसेनं दशभिर्माद्रीपुत्रौ त्रिभिस्त्रिभिः ।
विराटद्रुपदौ षड्भिः शतेन च शिखण्डिनम् ॥ ७-१५४-३३ (५१७९२)
धृष्टद्युम्नं च सप्तत्या धर्मपुत्रं च सप्तभिः ।
केकयांश्चैव चेदींश्च बहुभिर्निशितैः शरैः ॥ ७-१५४-३४ (५१७९३)
सात्वतं पञ्चभिर्विद्ध्वा द्रौपदेयांस्त्रिभिस्त्रिभिः ।
घटोत्कचं च समरे विद्ध्वा सिंह इवानदत् ॥ ७-१५४-३५ (५१७९४)
शतशश्चापरान्योधान्सद्विपांश्च महारणे ।
शरैरवचकर्तोग्रैः क्रुद्धोऽन्तक इव प्रजाः ॥ ७-१५४-३६ (५१७९५)
सा तेन पाण्डवी सेना वध्यमाना शिलीमुखैः ।
तव पुत्रेण सङ्ग्रामे विदुद्राव नराधिप ॥ ७-१५४-३७ (५१७९६)
तं तपन्तमिवादित्यं कुरुराजं महाहवे ।
नाशकन्वीक्षितुं राजन्पाण्डुपुत्रस्य सैनिकाः ॥ ७-१५४-३८ (५१७९७)
ततो युधिष्ठिरो राजा कुपितो राजसत्तम ।
अभ्यधावत्कुरुपतिं तव पुत्रं जिघांसया ॥ ७-१५४-३९ (५१७९८)
तावुभौ युधि कौरव्यौ समीयतुररिन्दमौ ।
स्वार्थहेतोः पराक्रान्तौ दुर्योधनयुधिष्ठिरौ ॥ ७-१५४-४० (५१७९९)
ततो दुर्योधनः क्रुद्धः शरैः सन्नतपर्वभिः ।
विव्याध दशभिस्तूर्णं ध्वजं चिच्छेद चेषुणा ॥ ७-१५४-४१ (५१८००)
इन्द्रसेनं त्रिभिश्चैव ललाटे जघ्निवान्नृप ।
सारथिं दयितं राज्ञः पाण्डवस्य महात्मनः ॥ ७-१५४-४२ (५१८०१)
धनुश्च पुनरन्येन चकर्तास्य महारथः ।
चतुर्भिश्चतुरश्चैव बाणैर्विव्याध वाजिनाः ॥ ७-१५४-४३ (५१८०२)
ततो युधिष्ठिरः क्रुद्धो निमेषादिव कार्मुकम् ।
अन्यदादाय वेगेन कौरवं प्रत्यवारयत् ॥ ७-१५४-४४ (५१८०३)
तस्य तान्निघ्नतः शत्रून्रुक्मपृष्ठं महद्धनुः ।
भल्लाभ्यां पण्डवो ज्येष्ठस्त्रिधा चिच्छेद मारिष ॥ ७-१५४-४५ (५१८०४)
विव्याध चैनं दशभिः सम्यगस्तैः शितैः शरैः ।
मर्म भित्त्वा तु ते सर्वे संलग्नाः क्षितिमाविशन् ॥ ७-१५४-४६ (५१८०५)
ततः परिवृता योधाः परिवव्रुर्युधिष्ठिरम् ।
वृत्रेण सह युध्यन्तं यद्वद्देवाः शतक्रतुम् ॥ ७-१५४-४७ (५१८०६)
ततो युधिष्ठिरो राजा तव पुत्रस्य मारिष ।
शरं च सूर्यरश्म्याभमत्युग्रमनिवारणम् ।
हा हतोऽसीति राजानमुक्त्वाऽमुञ्चद्युधिष्ठिरः ॥ ७-१५४-४८ (५१८०७)
स तेनाकर्णमुक्तेन विद्धो बाणेन कौरवः ।

निषसाद रथोपस्थे भृशं सम्मूढचेतनः ॥ ७-१५४-४९ (५१८०८)
ततः पाञ्चाल्यसेनानां भृशमासीद्रवो महान् ।
हतो राजेति राजेन्द्र मुदितानां समन्ततः ॥ ७-१५४-५० (५१८०९)
बाणशब्दरवश्चोग्रः शुश्रुवे तत्र मारिष ।
अथ द्रोणो द्रुतं तत्र प्रत्यदृश्यत संयुगे ॥ ७-१५४-५१ (५१८१०)
हृष्टो दुर्योधनश्चापि दृढमादाय कार्मुकम् ।
तिष्ठतिष्ठेति राजानं ब्रुवन्पाण्डवमभ्ययात् ॥ ७-१५४-५२ (५१८११)
प्रत्युद्ययुस्तं त्वरिताः पाञ्चाला जयगृद्धिनः ।
तान्द्रोणः प्रतिजग्राह परीप्सन्कुरुसत्तमम् ।
चण्डवातः समुद्धूतो मेघानम्बुमुचो यथा ॥ ७-१५४-५३ (५१८१२)
ततो राजन्महानासीत्सङ्ग्रामो भूरिवर्धनः ।
तावकानां परेषां च समेतानां युयुत्सया ॥ ॥ ७-१५४-५४ (५१८१३)

इति श्रीमन्महाभारते द्रोणपर्वणि घटोत्कचवधपर्वणि
चतुर्दशरात्रियुद्धे चतुःपञ्चाशदधिकशततमोऽध्यायः ॥१५४ ॥
Mahabharata - Drona Parva - Chapter Footnotes

५-१५४-८ गोत्रं पित्रादि नाम शैनेय सात्यके इत्यादि ।कुलं
पाण्ड्यपाञ्चाल्येत्यादि ॥
५-१५४-४६ सम्यगस्तैः दृढं प्रक्षिप्तैः ॥
५-१५४-५१ बाणशब्दरवो बाणशब्दसहितो रवः प्राणिशब्दः ॥
५-१५४-५४ भूरिवर्धनो बहुच्छेदनः ॥
५-१५४-१५४ चतुःपञ्चाशदधिकशततमोऽध्यायः ॥

---

द्रोनपर्व-अध्यय१५५
॥ श्रीः ॥
७.१५५. अध्यायः १५५

Mahabharata - Drona Parva - Chapter Topics
द्रोणयुद्धवर्णनम् ॥१ ॥

Mahabharata - Drona Parva - Chapter Text

७-१५५-० (५१८१४)
धृतराष्ट्र उवाच। ७-१५५-०क्ष् (४६७७)
यत्तदा प्राविशत्पाण्डूनाचार्यः कुपितो बली ।

उक्ता दुर्योधनं मन्दं मम शास्त्रातिगं सुतम् ॥ ७-१५५-१ (५१८१५)
प्रविश्य विचरन्तं च रथे शूरमवस्थितम् ।
कथं द्रोणं महेष्वासं पाण्डवाः पर्यवारयन् ॥ ७-१५५-२ (५१८१६)
केऽरक्षन्दक्षिणं चक्रमाचार्यस्य महाहवे ।
के चोत्तरमरक्षन्त निघ्नतः शास्त्रवान्बहून् ॥ ७-१५५-३ (५१८१७)
के चास्य पृष्ठतोऽन्वासन्वीरा वीरस्य योधिनः ।
के पुरस्तादवर्तन्त रथिनस्तस्य शत्रवः ॥ ७-१५५-४ (५१८१८)
मन्ये तानस्पृशच्छीतमतिवेलमनार्तवम् ।
मन्ये ते समवेपन्त गावो वै शिशिरे यथा ॥ ७-१५५-५ (५१८१९)
यत्प्राविशन्महेष्वासः पाञ्चालानपराजितः ।
नृत्यन्स रथमार्गेषु सर्वशस्त्रभृतां वरः ॥ ७-१५५-६ (५१८२०)
निर्दहन्सर्वसैन्यानि पाञ्चालानां रथर्षभः ।
धूमकेतुरिव क्रुद्धः कथं मृत्युमुपेयिवान् ॥ ७-१५५-७ (५१८२१)
सञ्जय उवाच। ७-१५५-८क्ष् (४६७८)
सायाह्ने सैन्धवं हत्वा राज्ञा पार्थः समेत्य च ।
सात्यकिश्च महेष्वासो द्रोणमेवाभ्यधावताम् ॥ ७-१५५-८ (५१८२२)
तथा युधिष्ठिरस्तूर्णं भीमसेनश्च पाण्डवः ।
पृथक्चमूभ्यां संयत्तौ द्रोणमेवाभ्यधावताम् ॥ ७-१५५-९ (५१८२३)
तथैव नकुलो धीमान्सहदेवश्च दुर्जयः ।
धृष्टद्युम्नः शतानीको विराटश्च सकेकयः ।
मात्स्याः साल्वाः ससेनाश्च द्रोणमेव ययुर्युधि ॥ ७-१५५-१० (५१८२४)
द्रुपदश्च तथा राजा पाञ्चालैरभिरक्षितः ।
धृष्टद्युम्नपिता राजन्द्रोणमेवाभ्यवर्तत ॥ ७-१५५-११ (५१८२५)
द्रौपदेया महेष्वासा राक्षसश्च घटोत्कचः ।
ससैन्यास्ते न्यवर्तन्त द्रोणमेव महाद्युतिम् ॥ ७-१५५-१२ (५१८२६)
प्रभद्रकाश्च पाञ्चालाः षट्सहस्राः प्रहारिणः ।
द्रोणमेवाभ्यवर्तन्त पुरस्कृत्य शिखण्डिनम् ॥ ७-१५५-१३ (५१८२७)
तथेतरे नरव्याघ्राः पाण्डवानां महारथाः ।
सहिताः सन्न्यवर्तन्त द्रोणमेव द्विजर्षभम् ॥ ७-१५५-१४ (५१८२८)
तेषु शूरेषु युद्धाय गतेषु भरतर्षभ ।
बभूव रजनी घोरा भीरूणां भयवर्धिनी ॥ ७-१५५-१५ (५१८२९)
योधानामशिवा रौद्रा राजन्नन्तकगामिनी ।
कुञ्जराश्वमनुष्याणां प्राणान्तकरणी तदा ॥ ७-१५५-१६ (५१८३०)
तस्यां रजन्यां घोरायां नदन्त्यः सर्वतः शिवाः ।
न्यवेदयन्भयं घोरं सज्वालकबलैर्मुखैः ॥ ७-१५५-१७ (५१८३१)
उलूकाश्चाप्यदृश्यन्त शंसन्तो विपुलं भयम् ।

विशेषतः कौरवाणां ध्वजिन्यामतिदारुणाः ॥ ७-१५५-१८ (५१८३२)
ततः सैन्येषु राजेन्द्र शब्दः समभवन्महान् ।
भेरीशब्देन महता मृदङ्गानां स्वनेन च ॥ ७-१५५-१९ (५१८३३)
गजानां बृंहितैश्चापि तुरङ्गाणां च हेषितैः ।
खुरशब्दनिपातैश्च तुमुलः सर्वतोऽभवत् ॥ ७-१५५-२० (५१८३४)
ततः समभवद्युद्धं सन्ध्यायामतिदारुणम् ।
द्रोणस्य च महाराज सृञ्जयानां च सर्वशः ॥ ७-१५५-२१ (५१८३५)
तमसा चावृते लोके न प्राज्ञायत किञ्चन ।
सैन्येन रजसा चैव समन्तादुत्थितेन ह ॥ ७-१५५-२२ (५१८३६)
नरस्याश्वस्य नागस्य समसज्जत शोणितम् ।
नापश्याम रजो भौमं कश्मलेनाभिसंवृताः ॥ ७-१५५-२३ (५१८३७)
रात्रौ वंशवनस्येव दह्यमानस्य पर्वते ।
घोरश्चटचटाशब्दः शस्त्राणां पततामभूत् ॥ ७-१५५-२४ (५१८३८)
मृदङ्गानकनिर्ह्रादैर्झर्झरैः पटहैस्तथा ।
फेत्कारैर्हेषितैः शब्दैः सर्वमैवाकुलं बभौ ॥ ७-१५५-२५ (५१८३९)
नैव स्वे न परे राजन्प्राज्ञायन्त तमोवृते ।
उन्मत्तमिव तत्सर्वं बभूव रजनीमुखे ॥ ७-१५५-२६ (५१८४०)
भौमं रजोऽथ राजेन्द्र शोणितेन प्रणाशितम् ।
शातकौम्भैश्च कवचैर्भूषणैश्च तमोऽनशत् ॥ ७-१५५-२७ (५१८४१)
ततः सा भारती सेना मणिहेमविभूषिता ।
द्यौरिवासीत्सनक्षत्रा रजन्यां भरतर्षभ ॥ ७-१५५-२८ (५१८४२)
गोमायुबलसङ्घुष्टा शक्तिध्वजसमाकुला ।
वारणाभिरुता घोरा क्ष्वेडितोत्क्रुष्टनादिता ॥ ७-१५५-२९ (५१८४३)
तत्राभवन्महाशब्दस्तुमुलो रोमहर्षणः ।
समावृण्वन्दिशः सर्वा महेन्द्राशनिनिःस्वनः ॥ ७-१५५-३० (५१८४४)
सा निशीथे महाराज सेनाऽदृश्यत भारती ।
अङ्गदैः कुण्डलैर्निष्कैः शस्त्रैश्चैवावभासिता ॥ ७-१५५-३१ (५१८४५)
तत्र नागा रथाश्चैव जाम्बूनदविभूषिताः ।
निशायां प्रत्यदृश्यन्त मेघा इव सविद्युतः ॥ ७-१५५-३२ (५१८४६)
ऋष्टिशक्तिगदाबाणमुसलप्रासपट्टसाः ।
सम्पतन्तो व्यदृश्यन्त भ्राजमाना इवाग्नयः ॥ ७-१५५-३३ (५१८४७)
दुर्योधनपुरोवातां रथनागवलाहकाम् ।
वादित्रघोषस्तनितां चापविद्युद्ध्वजैर्वृताम् ॥ ७-१५५-३४ (५१८४८)
द्रोणपाण्डवपर्जन्यां खङ्गशक्तिगदाशनिम् ।
शरधारास्त्रपवनां शस्त्रपातोष्मसङ्कुलाम् ॥ ७-१५५-३५ (५१८४९)
घोरां विस्मापनीमुग्रां जीवितच्छिदमप्लुवाम् ।

तां प्राविशन्नतिभयां नदीं युद्धचिकीर्षवः ॥ ७-१५५-३६ (५१८५०)
तस्मिन्रात्रिमुखे घोरे महाशब्दनिनादिते ।
भीरूणां त्रासजनने शूराणां हर्षवर्धने ॥ ७-१५५-३७ (५१८५१)
रात्रियुद्धे महाघोरे वर्तमाने सुदारुणे ।
द्रोणमभ्यद्रवन्क्रुद्धाः सहिताः पाण्डुसृञ्जयाः ॥ ७-१५५-३८ (५१८५२)
ये ये प्रमुखतो राजन्नावर्तन्त महारथाः ।
तान्सर्वान्विमुखांश्चक्रे कांश्चिन्निन्ये यमक्षयम् ॥ ७-१५५-३९ (५१८५३)
तानि नागसहस्राणि रथानामयुतानि च ।
पदातिहयसङ्घानां प्रयुतान्यर्बुदानि च ।
द्रोणेनैकेन नाराचैर्निर्भिन्नानि निशामुखे ॥ ॥ ७-१५५-४० (५१८५४)

इति श्रीमन्महाभारते द्रोणपर्वणि घटोत्कचवधपर्वणि
चतुर्दशरात्रियुद्धे पञ्चपञ्चाशदधिकशततमोऽध्यायः
॥ १५५ ॥

Mahabharata - Drona Parva - Chapter Footnotes

५-१५५-१ शास्त्रातिगं शास्त्रमाज्ञा ॥
५-१५५-७ धूमकेतुरग्निः ॥
५-१५५-१४ सन्न्यवर्तन्त सम्मुखं नितरामवर्तन्त ॥
५-१५५-१५५ पञ्चपञ्चाशदधिकशततमोऽध्यायः ॥

---

द्रोनपर्व-अध्यय१५६
॥ श्रीः ॥
७.१५६. अध्यायः १५६

Mahabharata - Drona Parva - Chapter Topics

भीमेन दुर्मददुष्कर्णादिवधः ॥ १ ॥

Mahabharata - Drona Parva - Chapter Text

७-१५६-० (५१८५५)
धृतराष्ट्र उवाच। ७-१५६-०क्ष् (४६७९)
तस्मिन्प्रविष्टे दुर्धर्षे सृञ्जयानमितौजसि ।
अमृष्यमाणे संरब्धे का वोऽभूद्वै मतिस्तदा ॥ ७-१५६-१ (५१८५६)
दुर्योधनं तथा पुत्रमुक्त्वा शास्त्रातिगं मम ।
यत्प्राविशदमेयात्मा किं पार्थः प्रत्यपद्यत ॥ ७-१५६-२ (५१८५७)

निहते सैन्धवे वीरे भूरिश्रवसि चैव ह ।
यदाऽभ्यगान्महातेजाः पाञ्चालानपराजितः ॥ ७-१५६-३ (५१८५८)
किममन्यत दुर्धर्षे प्रविष्टे शत्रुतापने ।
दुर्योधनस्तु किं कृत्यं प्राप्तकालममन्यत ॥ ७-१५६-४ (५१८५९)
के च तं वरदं वीरमन्वयुर्द्विजसत्तमम् ।
के चास्य पृष्ठतोऽगच्छन्वीराः शूरस्य युध्यतः ।
के पुरस्तादवर्तन्त निघ्नन्तः शास्त्रवान्रणे ॥ ७-१५६-५ (५१८६०)
मन्येऽहं पाण्डवान्सर्वान्भारद्वाजशरार्दितान् ।
शिशिरे कम्पमाना वै कृशा गाव इव प्रभो ॥ ७-१५६-६ (५१८६१)
प्रविश्य स महेष्वासः पाञ्चालानरिमर्दनः ।
कथं नु पुरुषव्याघ्रः पञ्चत्वमुपजग्मिवान् ॥ ७-१५६-७ (५१८६२)
सर्वेषु योधेषु च सङ्गतेषु
रात्रौ समेतेषु महारथेषु ।
संलोड्यमानेषु पृथग्बलेषु
के वस्तदानीं मतिमन्त आसन् ॥ ७-१५६-८ (५१८६३)
हतांश्चैव विषक्तांश्च पराभूतांश्च शंससि ।
रथिनो विरथांश्चैव कृतान्युद्धेषु मामकान् ॥ ५-१५६-१० तेषां
संलोड्यमानानां पाण्डवैर्हतचेतसाम् ।
अन्धे तमसि मग्नानामभवत्का मतिस्तदा ॥ ७-१५६-९ (५१८६४)
प्रहृष्टांश्चाप्युदग्रांश्च सन्तुष्टांश्चैव पाण्डवान् ।
शंससीहाप्रहृष्टांश्च विभ्रष्टांश्चैव मामकान् ॥ ७-१५६-११ (५१८६५)
कथमेषां तदा तत्र पार्थानामपलायिनाम् ।
प्रकाशमभवद्रात्रौ कथं कुरुषु सञ्जय ॥ ७-१५६-१२ (५१८६६)
सञ्जय उवाच। ७-१५६-१३क्ष् (४६८०)
रात्रियुद्धे तदा राजन्वर्तमाने सुदारुणे ।
द्रोणमभ्यद्रवन्सर्वे पाण्डवाः सह सोमकैः ॥ ७-१५६-१३ (५१८६७)
ततो द्रोणः केकयांश्च धृष्टद्युम्नस्य चात्मजान् ।
सम्प्रैषयत्प्रेतलोकं सर्वानिषुभिराशुगैः ॥ ७-१५६-१४ (५१८६८)
तस्य प्रमुखतो राजन्येऽवर्तन्त महारथाः ।
तान्सर्वान्प्रेषयामास पितृलोकं स भारत ॥ ७-१५६-१५ (५१८६९)
प्रमथ्नन्तं तदा वीरान्भारद्वाजं महारथम् ।
अभ्यवर्तत सङ्क्रुद्धः शिबी राजा प्रतापवान् ॥ ७-१५६-१६ (५१८७०)
तमापतन्तं सम्प्रेक्ष्य पाण्डवानां महारथम् ।
विव्याध दशभिर्द्रोणः सर्वपारशवैः शितैः ॥ ७-१५६-१७ (५१८७१)
तं शिबिः प्रतिविव्याध त्रिंशता निशितैः शरैः ।
सारथिं चास्य भुल्लेन स्मयमानो न्यपातयत् ॥ ७-१५६-१८ (५१८७२)

तस्य द्रोणो हयान्हत्वा सारथिं च महात्मनः ।
अथाऽस्य सशिरस्त्राणं शिरः कायादपाहरत् ॥ ७-१५६-१९ (५१८७३)
ततोऽस्य सारथिं क्षिप्रमन्यं दुर्योधनोऽदिशत् ।
स तेन सङ्गृहीताश्वः पुनरभ्यद्रवद्रिपून् ॥ ७-१५६-२० (५१८७४)
कलिङ्गानामनीकेन कालिङ्गस्य सुतो रणे ।
पूर्वं पितृवधात्क्रुद्धो भीमसेनमुपाद्रवत् ॥ ७-१५६-२१ (५१८७५)
स भीमं पञ्चभिर्विद्ध्वा पुनर्विव्याध सप्तभिः ।
विशोकं त्रिभिरानर्च्छद्ध्वजमेकेन पत्रिणा ॥ ७-१५६-२२ (५१८७६)
कलिङ्गानां तु तं शूरं क्रुद्धं क्रुद्धो वृकोदरः ।
रथाद्रथमभिद्रुत्य मुष्टिनाऽभिजघान ह ॥ ७-१५६-२३ (५१८७७)
तस्य मुष्टिहतस्याजौ पाण्डवेन बलीयसा ।
सर्वाण्यस्थीनि सहसा प्रापतन्वै पृथक्पृथक् ॥ ७-१५६-२४ (५१८७८)
ग्तस्मिन्हते तदा तेन सिंहनादो महानभूत् ।
पाञ्चालानां महाराज साधुसाध्विति पाण्डवम्'॥ ७-१५६-२५ (५१८७९)
तं कर्णो भ्रातरश्चास्य नामृष्यन्त परन्तप ।
ते भीमसेनं नाराचैर्जघ्नुराशीविषोपमैः ॥ ७-१५६-२६ (५१८८०)
ततः शत्रुरथं त्यक्त्वा भीमो ध्रुमरथं गतः ।
ध्रुमं चास्यन्तमनिशं मुष्टिना समपोथयत् ॥ ७-१५६-२७ (५१८८१)
ग्यथा काचमणिर्न्यस्तो मुष्टिनैकेन लीलया ।
स हतः सर्वथा चूर्णो रक्तमेवोदपद्यत ॥ ७-१५६-२८ (५१८८२)
तथा चूर्णमभूत्तत्र कर्णभ्राता ध्रुमस्तथा'।
स तदा पाण्डुपुत्रेण बलिनाऽभिहतोऽपतत् ॥ ७-१५६-२९ (५१८८३)
तं निहत्य महाराज भीमसेनो महाबलः ।
जयरातरथं प्राप्य मुहुः सिंह इवानदत् ॥ ७-१५६-३० (५१८८४)
जयरातं तु चरणे गृह्य भीमो महाबलः ।
सूतं चास्य महाबाहुर्गृह्य राजंस्तथैव च ॥ ७-१५६-३१ (५१८८५)
पादयोर्गृह्य तौ वीरौ भीमः कर्णस्य पश्यतः ।
भूमावाविद्ध्य जघ्ने स तौ च प्राणैर्व्ययुज्यताम् ॥ ७-१५६-३२ (५१८८६)
कर्णस्तु पाण्डवे शक्तिं काञ्चनीं समवासृजत् ।
ततस्तामेव जग्राह प्रहसन्पाण्डुनन्दनः ॥ ७-१५६-३३ (५१८८७)
कर्णायैव च दुर्धर्षश्चिक्षेपाजौ वृकोदरः ।
तामापतन्तीं चिच्छेद शकुनिस्तैलपायिना ॥ ७-१५६-३४ (५१८८८)
एतत्कृत्वा महत्कर्म रणेऽद्भुतपराक्रमः ।
पुनः स्वरथमास्थाय दुद्राव तव वाहिनीम् ॥ ७-१५६-३५ (५१८८९)
तमायान्तं जिघांसन्तं भीमं क्रुद्धमिवान्तकम् ।
न्यवारयन्महाबाहुं तव पुत्रा विशाम्पते ।

महता शरवर्षेण च्छादयन्तो महारथाः ॥ ७-१५६-३६ (५१८९०)
दुर्मदस्य ततो भीमः प्रहसन्निव संयुगे ।
सारथिं च हयांश्चैव शरैर्निन्ये यमक्षयम् ॥ ७-१५६-३७ (५१८९१)
दुर्मदस्तु ततो यानं दुष्कर्णस्यावचक्रमे ।
तावेकरथमारूढौ भ्रातरौ परतापनौ। ७-१५६-३८ (५१८९२)
सङ्ग्रामशिरसो मध्ये भीमं द्वावप्यधावताम् ।
यथाम्बुपतिमित्रौ हि तारकं दैत्यसत्तमम् ॥ ७-१५६-३९ (५१८९३)
ततस्तु दुर्मदश्चैव दुष्कर्णश्च तवात्मजौ ।
रथमेकं समारुह्य भीमं बाणैरविध्यताम् ॥ ७-१५६-४० (५१८९४)
ततः कर्णस्य मिषतो द्रौणेर्दुर्योधनस्य च ।
कृपस्य सोमदत्तस्य बाह्लीकस्य च पाण्डवः ॥ ७-१५६-४१ (५१८९५)
दुर्मदस्य च वीरस्य दुष्कर्णस्य च तं रथम् ।
पादप्रहारेण धरां प्रावेशयदरिन्दमः ॥ ७-१५६-४२ (५१८९६)
ततः सुतौ ते बलिनौ शूरौ दुष्कर्णदुर्मदौ ।
मुष्टिनाऽऽहत्य सङ्क्रुद्धौ ममर्द चरणेन ह ॥ ७-१५६-४३ (५१८९७)
ततो हाहाकृते सैन्ये दृष्ट्वा भीमं नृपाऽब्रुवन् ।
रुद्रोऽयं भीमरूपेण धार्तराष्ट्रेषु युध्यति ॥ ७-१५६-४४ (५१८९८)
एवमुक्त्वा पलायन्ते सर्वे भारत पार्थिवाः ।
विसंज्ञा वाहयन्वाहान्न च द्वौ सह धावतः ॥ ७-१५६-४५ (५१८९९)
ततो बले भृशलुलिते निशामुखे
सुपूजितो नृपवृषभैर्वृकोदरः ।
महाबलः कमलविबुद्धलोचनो
युधिष्ठिरं नृपतिमपूजयद्बली ॥ ७-१५६-४६ (५१९००)
ततो यमौ द्रुपदविराटकेकया
युधिष्ठिरश्चापि परां मुदं ययुः ।
वृकोदरं भृशमनुपूजयंश्च ते
यथान्धके प्रतिनिहते हरं सुराः ॥ ७-१५६-४७ (५१९०१)
ततः सुतास्ते वरुणात्मजोपमा
रुपान्विताः सह गुरुणा महात्मना ।
वृकोदरं सरथपदातिकुञ्जरा
युयुत्सवो भृशमभिपर्यवारयन् ॥ ७-१५६-४८ (५१९०२)
ग्ततो यमौ द्रुपदसुताः ससैनिका
युधिष्ठिरद्रुपदविराटसात्वताः ।
घटोत्कचो जयविजयौ द्रुमो वृकः
ससृञ्जयास्तव तनयानवारयन्'॥ ७-१५६-४९ (५१९०३)
ततोऽभवत्तिमिरघनैरिवावृते

महाभये भयदमतीव दारुणम् ।
निशामुखे वृकबलगृध्रमोदनं
महात्मना नृपवर युद्धमद्भुतम् ॥ ॥ ७-१५६-५० (५१९०४)

इति श्रीमन्महाभारते द्रोणपर्वणि घटोत्कचवधपर्वणि
चतुर्दशरात्रियुद्धे षट्पञ्चाशदधिकशततमोऽध्यायः ॥ १५६ ॥
Mahabharata - Drona Parva - Chapter Footnotes

५-१५६-१ गावः गाः ॥
५-१५६- कमलविबुद्धलोचनो विलसत्पद्मनेत्रः ॥
५-१५६- गुरुणा द्रोणेन ॥
५-१५६- तिमिराण्येव घनास्तैः ॥
५-१५६- षट्पञ्चाशदधिकशततमोऽध्यायः ॥
१५६ ॥

---

द्रोनपर्व-अध्यय१५७
॥ श्रीः ॥
७.१५७. अध्यायः १५७

Mahabharata - Drona Parva - Chapter Topics
सात्यकिना सोमदत्तपराजयः ॥ १ ॥
अश्वत्थामघटोत्कचयुद्धमश्वत्थामपराक्रमश्च ॥ २ ॥

Mahabharata - Drona Parva - Chapter Text

७-१५७-० (५१९०५)
सञ्जय उवाच। ७-१५७-०क्ष् (४६८१)
प्रायोपविष्टे तु हते पुत्रे सात्यकिना तदा ।
सोमदत्तो भृशं क्रुद्धः सात्यकिं वाक्यमब्रवीत् ॥ ७-१५७-१ (५१९०६)
क्षत्रधर्मः परो दृष्टो यस्तु देवैर्महात्मभिः ।
तं त्वं सात्वत सन्तज्य दस्युधर्मे कथं रतः ॥ ७-१५७-२ (५१९०७)
पराङ्मुखाय दीनाय न्यस्तशस्त्राय याचते ।
क्षत्रधर्मरतः प्राज्ञः कथं नु प्रहरेद्रणे ॥ ७-१५७-३ (५१९०८)
द्वावेव किल वृष्णीनां तत्र ख्यातौ महारथौ ।
प्रद्युम्नश्च महाबाहुस्त्वं चैव युधि सात्वत ॥ ७-१५७-४ (५१९०९)
कथं प्रायोपविष्टाय पार्थेन च्छिन्नबाहवे ।

नृशंसं बत दीनं च तादृशं कृतवानसि ॥ ७-१५७-५ (५१९१०)
कर्ममस्तस्य दुर्वृत्त फलं प्राप्नुहि संयुगे ।
अद्य छेत्स्यामि ते मूढ शिरो विक्रम्य पत्रिणा ॥ ७-१५७-६ (५१९११)
शपे सात्वत पुत्राभ्यामिष्टेन सुकृतेन च ।
अनतीतामिमां रात्रिं यदि त्वां वीरमानिनम् ॥ ७-१५७-७ (५१९१२)
अरक्ष्यमाणं पार्थेन जिष्णुना ससुतानुजम् ।
न हन्यां नरके घोरे पतेयं वृष्णिपांसन ॥ ७-१५७-८ (५१९१३)
एवमुक्त्वा सुसङ्क्रुद्धः सोमदत्तो महाबलः ।
दध्मौ शङ्खं च तारेण सिंहनादं ननाद च ॥ ७-१५७-९ (५१९१४)
ततः कमलपत्राक्षः सिंहदंष्ट्रो दुरासदः ।
सात्यकिर्भृशसङ्क्रुद्धः सोमदत्तमथाब्रवीत् ॥ ७-१५७-१० (५१९१५)
कौरवेय न मे त्रासः कथञ्चिदपि विद्यते ।
त्वया सार्धमथान्यैश्च युध्यतो हृदि कश्चन ॥ ७-१५७-११ (५१९१६)
यदि सर्वेण सैन्येन गुप्तो मां योधयिष्यसि ।
तथापि न व्यथा काचित्त्वयि स्यान्मम कौरव ॥ ७-१५७-१२ (५१९१७)
युद्धसारेण वाक्येन असतां सम्मतेन च ।
नाहं भीषयितुं शक्यः क्षत्रवृत्ते स्थितस्त्वया ॥ ७-१५७-१३ (५१९१८)
यदि तेऽस्ति युयुत्साऽद्य मया सह नराधिप ।
निर्दयो निशितैर्बाणैः प्रहर प्रहरामि ते ॥ ७-१५७-१४ (५१९१९)
हतो भूरिश्रवा वीरस्तव पुत्रो महारथः ।
शलश्चैव महाराज भ्रातृव्यसनकर्षितः ॥ ७-१५७-१५ (५१९२०)
त्वां चाप्यद्य वधिष्यामि सहपुत्रं सबान्धवम् ।
तिष्ठेदानीं रणे यत्तः कौरवोऽसि महारथः ॥ ७-१५७-१६ (५१९२१)
यस्मिन्दानं दमः शौचमहिंसा ह्रीर्धृतिः क्षमा ।
अनपायानि सर्वाणि नित्यं राज्ञि युधिष्ठिरे ॥ ७-१५७-१७ (५१९२२)
मृदङ्गकेतोस्तस्य त्वं तेजसा निहतः पुरा ।
सकर्णसौबलः सङ्ख्ये विनाशमुपयास्यसि ॥ ७-१५७-१८ (५१९२३)
शपेऽहं कृष्णचरणैरिष्टापूर्तेन चैव ह ।
यदि त्वां ससुतं पापं न हन्यां युधि रोषितः ॥ ७-१५७-१९ (५१९२४)
अपयास्यसि चोत्यक्त्वा रणं मुक्तो भविष्यसि ॥ ७-१५७-२० (५१९२५)
एवमाभाष्य चान्योन्यं क्रोधसंरक्तलोचनौ ।
प्रवृत्तौ शरसम्पातं कर्तुं पुरुषसत्तमौ ॥ ७-१५७-२१ (५१९२६)
ततो रथसहस्रेण नागानामयुतेन च ।
दुर्योधनः सोमदत्तं परिवार्य व्यवस्थितः ॥ ७-१५७-२२ (५१९२७)
शकुनिश्च सुसङ्क्रुद्धः सर्वशस्त्रभृतां वरः ।
पुत्रपौत्रैः परिवृतो भ्रातृभिश्चेन्द्रविक्रमैः ।

श्यालस्तव महाबाहुर्वज्रसंहननो युवा ॥ ७-१५७-२३ (५११२८)
साग्रं शतसहस्रं तु हयानां तस्य धीमतः ।
सोमदत्तं महेष्वासं समन्तात्पर्यरक्षत ॥ ७-१५७-२४ (५११२९)
रक्ष्यमाणश्च बलिभिश्छादयामास सात्यकिम् ।
तं छाद्यमानं विशिखैर्दृष्ट्वा सन्नतपर्वभिः ॥ ७-१५७-२५ (५११३०)
धृष्टद्युम्नोऽभ्ययात्क्रुद्धः प्रगृह्य महतीं चमूम् ।
ग्अभ्यरक्षन्महाबाहुः सात्वतं सत्यविक्रमम्'॥ ७-१५७-२६ (५११३१)
चण्डवाताभिसृष्टानामुदधीनामिव स्वनः ।
आसीद्राजन्बलौघानामन्योन्यमभिनिघ्नताम् ॥ ७-१५७-२७ (५११३२)
विव्याध सोमदत्तस्तु सात्वतं नवभिः शरैः ।
सात्यकिर्नवभिश्चैनमवधीत्कुरुपुङ्गवम् ॥ ७-१५७-२८ (५११३३)
सोऽतिविद्धो बलवता समरे दृढधन्विना ।
रथोपस्थं समासाद्य मुमोह गतचेतनः ॥ ७-१५७-२९ (५११३४)
तं विमूढं समालक्ष्य सारथिस्त्वरयाऽन्वितः ।
अपोवाह रणाद्वीरं सोमदत्तं महारथम् ॥ ७-१५७-३० (५११३५)
तं विसंज्ञं समालक्ष्य युयुधानशरार्दितम् ।
अभ्यद्रवत्ततो द्रोणो यदुवीरजिघांसया ॥ ७-१५७-३१ (५११३६)
तमायान्तमभिप्रेक्ष्य युधिष्ठिरपुरोगमाः ।
परिवव्रुर्महात्मानं परीप्सन्तो यदूत्तमम् ॥ ७-१५७-३२ (५११३७)
ततः प्रववृते युद्धं द्रोणस्य सह पाण्डवैः ।
बलेरिव सुरैः पूर्वं त्रैलोक्यजयकाङ्क्षया ॥ ७-१५७-३३ (५११३८)
ततः सायकजालेन पाण्डवानीकमावृणोत् ।
भारद्वाजो महातेजा विव्याध च युधिष्ठिरम् ॥ ७-१५७-३४ (५११३९)
सात्यकिं दशभिर्बाणैर्विंशत्या पार्षतं शरैः ।
भीमसेनं च नवभिर्नकुलं पञ्चभिस्तथा ॥ ७-१५७-३५ (५११४०)
सहदेवं तथाऽष्टाभिः शतेन च शिखण्डिनम् ।
द्रौपदेयान्महाबाहुः पञ्चभिः पञ्जभिः शरैः ॥ ७-१५७-३६ (५११४१)
विराटं मत्स्यमष्टाभिर्द्रुपदं दशभिः शरैः ।
युधामन्युं त्रिभिः षड्भिरुत्तमौजसमाहवे ।
अन्यांश्च सैनिकान्विद्ध्वा युधिष्ठिरमुपाद्रवत् ॥ ७-१५७-३७ (५११४२)
ते वध्यमाना द्रोणेन पाण्डुपुत्रस्य सैनिकाः ।
प्राद्रवन्वै भयाद्राजन्सार्तनादा दिशो दश ॥ ७-१५७-३८ (५११४३)
काल्यमानं तु तत्सैन्यं दृष्ट्वा द्रोणेन फल्गुनः ।
किञ्चिदागतसंरम्भो गुरुं पार्थोऽभ्ययाद्द्रुतम् ॥ ७-१५७-३९ (५११४४)
दृष्ट्वा द्रोणं तु बीभत्सुमभिधावन्तमाहवे ।
सन्न्यवर्तत तत्सैन्यं पुनर्यौधिष्ठिरं बलम् ॥ ७-१५७-४० (५११४५)

ततो युद्धमभूद्भूयो भारद्वाजस्य पाण्डवैः ॥ ७-१५७-४१ (५११९४६)
द्रोणस्तव सुतै राजन्सर्वतः परिवारितः ।
व्यधमत्पाण्डुसैन्यानि तूलराशिमिवानलः ॥ ७-१५७-४२ (५११९४७)
तं ज्वलन्तमिवादित्यं दीप्तानलसमद्युतिम् ।
राजन्ननिशमत्यन्तं दृष्ट्वा द्रोणं शरार्चिषम् ॥ ७-१५७-४३ (५११९४८)
मण्डलीकृतधन्वानं तपन्तमिव भास्करम् ।
दहन्तमहितान्सैन्ये नैनं कश्चिदवारयत् ॥ ७-१५७-४४ (५११९४९)
योयो हि प्रमुखे तस्य तस्थौ द्रोणस्य पुरूषः ।
तस्यतस्य शिरश्छित्त्वा ययुर्द्रोणशराः क्षितिम् ॥ ७-१५७-४५ (५११९५०)
एवं सा पाण्डवी सेना वध्यमाना महात्मना ।
प्रदुद्राव पुनर्भीता पश्यतः सव्यसाचिनः ॥ ७-१५७-४६ (५११९५१)
सम्प्रभग्नं बलं दृष्ट्वा द्रोणेन निशि भारत ।
गोविन्दमब्रवीज्जिष्णुर्गच्छ द्रोणरथं प्रति ॥ ७-१५७-४७ (५११९५२)
ततो रजतगोक्षीरकुन्देन्दुसदृशप्रभान् ।
चोदयामास दाशार्हो हयान्द्रोणरथं प्रति ॥ ७-१५७-४८ (५११९५३)
भीमसेनोऽपि तं दृष्ट्वा यान्तं द्रोणाय फल्गुनम् ।
स्वसारथिमुवाचेदं द्रोणानीकाय मां वह ॥ ७-१५७-४९ (५११९५४)
सोऽपि तस्य वचः श्रुत्वा विशोकोऽवहयद्धयान् ।
पृष्ठतः सत्यसन्धस्य जिष्णोर्भरतसत्तम ॥ ७-१५७-५० (५११९५५)
तौ दृष्ट्वा भ्रातरौ यत्तौ द्रोणानीकमभिद्रुतौ ।
पाञ्चालाः सृञ्जया मात्स्याश्चेदिकारूशकोसलाः ।
अन्वगच्छन्महाराज केकयाश्च महारथाः ॥ ७-१५७-५१ (५११९५६)
ततो राजन्नभूद्धोरः सङ्ग्रामो रोमहर्षणः ॥ ७-१५७-५२ (५११९५७)
बीभत्सुर्दक्षिणं पार्श्वमुत्तरं च वृकोदरः ।
महद्भ्यां रथबृन्दाभ्यां बलं जगृहतुस्तव ॥ ७-१५७-५३ (५११९५८)
तौ दृष्ट्वा पुरुषव्याघ्रौ भीमसेनधनञ्जयौ ।
धृष्टद्युम्नोऽभ्ययाद्राजन्सात्यकिश्च महाबलः ॥ ७-१५७-५४ (५११९५९)
चण्डवाताभिपन्नानामुदधीनामिव स्वनः ।
आसीद्राजन्बलौघानां तदाऽन्योन्यमभिघ्नतां ७-१५७-५५ (५११९६०)
सौमदत्तिवधात्क्रुद्धो दृष्ट्वा सात्यकिमाहवे ।
द्रौणिरभ्यद्रवद्राजन्वधाय कृतनिश्चयः ॥ ७-१५७-५६ (५११९६१)
तमापतन्तं सम्प्रेक्ष्य शैनेयस्य रथं प्रति ।
भैमसेनिः सुसङ्क्रुद्धः प्रत्यमित्रमवारयत् ॥ ७-१५७-५७ (५११९६२)
कार्ष्णायसं महाघोरमृक्षचर्मपरिच्छदम् ।
महान्तं रथमास्थाय त्रिंशन्नल्वान्तरान्तरम् ॥ ७-१५७-५८ (५११९६३)
विक्षिप्तयन्त्रसन्नाहं महामेघौघनिःस्वनम् ।

युक्तं गजनिभैर्वाहैर्न हयैर्नापि वारणैः ॥ ७-१५७-५९ (५१९६४)
विक्षिप्तपक्षचरणविवृताक्षेण कूजता ।
ध्वजेनोच्छ्रितदण्डेन गृध्रराजेन राजितम् ॥ ७-१५७-६० (५१९६५)
लोहितार्द्रपताकं तु आन्त्रमालाविभूषितम् ।
अष्टचक्रसमायुक्तमास्थाय विपुलं रथम् ॥ ७-१५७-६१ (५१९६६)
शूलमुद्गरधारिण्या शैलपादपहस्तया ।
रक्षसां घोररूपाणामक्षौहिण्या समावृतः ॥ ७-१५७-६२ (५१९६७)
तमुद्यतमहाचापं निशाम्य व्यथिता नृपाः ।
युगान्तकालसमये दण्डहस्तमिवान्तकम् ॥ ७-१५७-६३ (५१९६८)
ततस्तं गिरिशृङ्गाभं भीमरूपं भयावहम् ।
दंष्ट्राकरालोग्रमुखं शङ्कुकर्णं महाहनुम् ॥ ७-१५७-६४ (५१९६९)
ऊर्ध्वकेशं विरूपाक्षं दीप्तास्यं निम्नितोदरम् ।
महाश्वभ्रगलद्वारं किरीटच्छन्नमूर्धजम् ॥ ७-१५७-६५ (५१९७०)
त्रासनं सर्वभूतानां व्यात्ताननभिवान्तकम् ।
वीक्ष्य दीप्तमिवायान्तं रिपुविक्षोभकारिणम् ॥ ७-१५७-६६ (५१९७१)
तमुद्यतमहाचापं राक्षसेन्द्रं घटोत्कचम् ।
भयार्दिता प्रचुक्षोभ पुत्रस्य तव वाहिनी ।
वायुना क्षोभितावर्ता गङ्गेवोर्ध्वतरङ्गिणी ॥ ७-१५७-६७ (५१९७२)
घटोत्कचप्रयुक्तेन सिंहनादेन भीषिताः ।
प्रसुस्रुवुर्गजा मूत्रं विव्यथुश्च नरा भृशम् ॥ ७-१५७-६८ (५१९७३)
ततोऽश्मवृष्टिरत्यर्थमासीत्तत्र समन्ततः ।
सन्ध्याकालाधिकबलैः प्रयुक्ता राक्षसैः क्षितौ ॥ ७-१५७-६९ (५१९७४)
आयसानि च चक्राणि भुशुण्ड्यः प्रासतोमराः ।
पतन्त्यविरताः शूलाः शतघ्न्यः पट्टसास्तथा ॥ ७-१५७-७० (५१९७५)
तदुग्रमतिरौद्रं च दृष्ट्वा युद्धं नराधिपाः ।
तनयास्तव कर्णश्च व्यथिताः प्राद्रवन्दिशः ॥ ७-१५७-७१ (५१९७६)
तत्रैकोऽस्त्रबलश्लाघी द्रौणिर्मानी न विव्यथे ।
व्यधमच्च शरैर्मायां घटोत्कचविनिर्मिताम् ॥ ७-१५७-७२ (५१९७७)
विहतायां तु मायायाममर्षी स घटोत्कचः ।
विससर्ज शरान्घोरांस्तेऽश्वत्थामानमाविशन् ।
भुजङ्गा इव वेगेन वल्मीकं क्रोधमूर्च्छिताः ॥ ७-१५७-७३ (५१९७८)
ते शरा रुधिराक्ताङ्गा भित्त्वा शारद्वतीसुतम् ।
विविशुर्धरणीं शीघ्रा रुक्मपुङ्खाः शिलाशिताः ॥ ७-१५७-७४ (५१९७९)
अश्वत्थामा तु सङ्क्रुद्धो लघुहस्तः प्रतापवान् ।
घटोत्कचमभिक्रुद्धं बिभेद दशभिः शरैः ॥ ७-१५७-७५ (५१९८०)
घटोत्कचोऽतिविद्धस्तु द्रोणपुत्रेण मर्मसु ।

चक्रं शतसहस्रारमगृह्णाद्व्यथितो भृशम् ॥ ७-१५७-७६ (५११८१)
क्षुरान्तं बालसूर्याभं मणिवज्रविभूषितम् ।
अश्वत्थाम्नि स चिक्षेप भैमसेनिर्जिघांसया ॥ ७-१५७-७७ (५११८२)
वेगेन महता गच्छद्विक्षिप्तं द्रौणिना शरैः ।
अभाग्यस्येव सङ्कल्पस्तन्मोघमपतद्भुवि ॥ ७-१५७-७८ (५११८३)
घटोत्कचस्ततस्तूर्णं दृष्ट्वा चक्रं निपातितम् ।
द्रौणिं प्राच्छादयद्बाणैः स्वर्भानुरिव भास्करम् ॥ ७-१५७-७९ (५११८४)
घटोत्कचसुतः श्रीमान्भिन्नाञ्जनचयोपमः ।
रुरोध द्रौणिमायान्तं प्रभञ्जनमिवाद्रिराट् ॥ ७-१५७-८० (५११८५)
पौत्रेण भीमसेनस्य शरैरञ्जनपर्वणा ।
बभौ मेघेन धाराभिर्गिरिर्मेरुरिवावृतः ॥ ७-१५७-८१ (५११८६)
अश्वत्थामा त्वसम्भ्रान्तो रुद्रोपेन्द्रेन्द्रविक्रमः ।
ध्वजमेकेन बाणेन चिच्छेदाञ्जनपर्वणः ॥ ७-१५७-८२ (५११८७)
द्वाभ्यां तु रथयन्तारौ त्रिभिश्चास्य त्रिवेणुकम् ।
धनुरेकेन चिच्छेद चतुर्भिश्चतुरो हयान् ॥ ७-१५७-८३ (५११८८)
विरथस्योद्यतं हस्ताद्धेमबिन्दुभिराचितम् ।
विशिखेन सतीक्ष्णेन खड्गमस्य द्विधाऽकरोत् ॥ ७-१५७-८४ (५११८९)
गदा हेमाङ्गदा राजंस्तूर्णं हैडिम्बिसूनुना ।
भ्राम्योत्क्षिप्ताशरैःसापि द्रौणिनाभ्याहताऽपतत् ॥ ७-१५७-८५ (५११९०)
ततोऽन्तरिक्षमुत्प्लुत्य कालमेघ इवोन्नदन् ।
ववर्षाञ्जनपर्वा स द्रुमवर्षं नभस्तलात् ॥ ७-१५७-८६ (५११९१)
ततो मायाधरं द्रौणिर्घटोत्कचसुतं दिवि ।
मार्गणैरभिविव्याध धनं सूर्य इवांशुभिः ॥ ७-१५७-८७ (५११९२)
सोऽवतीर्य पुरस्तस्थौ रथे हेमविभूषिते ।
महीगत इवात्युग्रः श्रीमानञ्जनपर्वतः ॥ ७-१५७-८८ (५११९३)
तमयस्मयवर्माणं द्रौणिर्भीमात्मजात्मजम् ।
जघानाञ्जनपर्वाणं महेश्वर इवान्धकम् ॥ ७-१५७-८९ (५११९४)
अथ दृष्ट्वा हतं पुत्रमश्वत्थाम्ना महाबलम् ।
द्रौणेः सकाशमभ्येत्य रोषात्प्रस्फुरिताधरः ॥ ७-१५७-९० (५११९५)
प्राह वाक्यमसम्भ्रान्तो वीरं शारद्वतीसुतम् ।
दहन्तं पाण्डवानीकं वनमग्निमिवोच्छ्रितम् ॥ ७-१५७-९१ (५११९६)
घटोत्कच उवाच। ७-१५७-९२क्ष् (४६८२)
तिष्ठतिष्ठ न मे जीवन्द्रोणपुत्र गमिष्यसि ।
त्वामद्य निहनिष्यामि क्रौञ्चमग्निसुतो यथा ॥ ७-१५७-९२ (५११९७)
अश्वत्थामोवाच। ७-१५७-९३क्ष् (४६८३)
गच्छ वत्स सहान्यैस्त्वं युध्यस्वामरविक्रम ।

न हि पुत्रेण हैडिम्ब पिता न्याय्यः प्रबाधितुम् ॥ ७-१५७-९३ (५१९९८)
कामं खलु न रोषो मे हैडिम्बे विद्यते त्वयि ।
किं तु रोषान्वितो जन्तुर्हन्यादात्मानमप्युत ॥ ७-१५७-९४ (५१९९९)
सञ्जय उवाच। ७-१५७-९५क्ष् (४६८४)
श्रुत्वैतत्क्रोधताम्राक्षः पुत्रशोकसमन्वितः ।
अश्वत्थामानमायस्तो भैमसेनिरभाषत ॥ ७-१५७-९५ (५२०००)
किमहं कातरो द्रौणे पृथग्जन इवाहवे ॥
यन्मां भीषयसे वाग्भिरसदेतद्वचस्तव ॥ ७-१५७-९६ (५२००१)
भीमात्खलु समुत्पन्नः कुरूणां विपुले कुले ।
पाण्डवानामहं पुत्रः समरेष्वनिवर्तिनाम् ॥ ७-१५७-९७ (५२००२)
रक्षसामधिराजोऽहं दशग्रीवसमो बले ।
तिष्ठतिष्ठ न मे जीवन्द्रोणपुत्र गमिष्यसि ॥ ७-१५७-९८ (५२००३)
युद्धश्रद्धामहं तेऽद्य विनेष्यामि रणाजिरे ॥ ७-१५७-९९ (५२००४)
इत्युक्त्वा क्रोधताम्राक्षो राक्षसः सुमहाबलः ।
द्रौणिमभ्यद्रवत्क्रुद्धो गजेन्द्रमिव केसरी ॥ ७-१५७-१०० (५२००५)
रथाक्षमात्रैरिषुभिरभ्यवर्षद्घटोत्कचः ।
रथिनामृषभं द्रौणिं धाराभिरिव तोयदः ॥ ७-१५७-१०१ (५२००६)
शरवृष्टिं शरैर्द्रौणिरप्राप्तां तां व्यशातयत् ।
ततोन्तरिक्षे बाणानां सङ्ग्रामोऽन्य इवाभवत् ॥ ७-१५७-१०२ (५२००७)
अथास्त्रसम्मर्दकृतैर्विस्फुलिङ्गैस्तदा बभौ ।
विभावरीमुखे व्योम खद्योतैरिव चित्रितम् ॥ ७-१५७-१०३ (५२००८)
निशाम्य निहतां मायां द्रौणिना रणमानिना ।
घटोत्कचस्ततो मायां ससर्जान्तर्हितः पुनः ॥ ७-१५७-१०४ (५२००९)
सोऽभवद्गिरिरत्युच्चः शिखरैस्तरुसङ्कटैः ।
शूलप्रासासिमुसलजलप्रस्रवणो महान् ॥ ७-१५७-१०५ (५२०१०)
तमञ्जनगिरिप्रख्यं द्रौणिर्दृष्ट्वा महीधरम् ।
प्रपतद्भिश्च बहुभिः शस्त्रसङ्घैर्न विव्यथे ॥ ७-१५७-१०६ (५२०११)
ततो हसन्निव द्रौणिर्वज्रमस्त्रमुदैरयत् ।
स ते नास्त्रैण शैलेन्द्रः क्षिप्तः क्षिप्रं व्यनश्यत ॥ ७-१५७-१०७ (५२०१२)
ततः स तोयदो भूत्वा नीलः सेन्द्रायुधो दिवि ।
अश्मवृष्टिभिरत्युग्रो द्रौणिमाच्छादयद्रणे ॥ ७-१५७-१०८ (५२०१३)
अथ सन्धाय वायव्यमस्त्रमस्त्रविदां वरः ।
व्यधमद्द्रोणतनयो नीलमेघं समुत्थितम् ॥ ७-१५७-१०९ (५२०१४)
स मार्गणगणैर्द्रौणिर्दिशः प्रच्छाद्य सर्वशः ।
शतं रथसहस्राणां जघान द्विपदां वरः ॥ ७-१५७-११० (५२०१५)
स दृष्ट्वा पुनरायान्तं रथेनायतकार्मुकम् ।

घटोत्कचमसम्भ्रान्तं राक्षसैर्बहुभिर्वृतम् ॥ ७-१५७-१११ (५२०१६)
सिंहशार्दूलसदृशैर्मत्तद्विरदविक्रमैः ।
गजस्थैश्च रथस्थैश्च वाजिपृष्ठगतैरपि ॥ ७-१५७-११२ (५२०१७)
विकृतास्यशिरोग्रीवैर्हिडिम्बानुचरैः सह ।
पौलस्त्यैर्यातुधानैश्च तामसैश्चेन्द्रविक्रमैः ॥ ७-१५७-११३ (५२०१८)
नानाशस्त्रधरैर्वीरैर्नानाकवचभूषणैः ।
महाबलैर्भीमरवैः संरम्भोद्वृत्तलोचनैः ॥ ७-१५७-११४ (५२०१९)
उपस्थितैस्ततो युद्धे राक्षसैर्युद्धदुर्मदैः ।
विषण्णमभिसम्प्रेक्ष्य पुत्रं ते द्रौणिरब्रवीत् ॥ ७-१५७-११५ (५२०२०)
तिष्ठ दुर्योधनाद्य त्वं न कार्यः सम्भ्रमस्त्वया ।
सहैभिर्भ्रातृभिर्वीरैः पार्थिवैश्चेन्द्रविक्रमैः ॥ ७-१५७-११६ (५२०२१)
निहनिष्याम्यमित्रांस्त न तवास्ति पराजयः ।
सत्यं ते प्रतिजानामि पर्याश्वासय वाहिनीम् ॥ ७-१५७-११७ (५२०२२)
दुर्योधन उवाच ७-१५७-११८क्ष् (४६८५)
न त्वेतदद्भुतं मन्ये यत्ते महदिदं मनः ।
अस्मासु च परा भक्तिस्तव गौतमिनन्दन ॥ ७-१५७-११८ (५२०२३)
सञ्जय उवाच। ७-१५७-११९क्ष् (४६८६)
अश्वत्थामानमुक्त्वैवं ततः सौबलमब्रवीत् ।
वृतं रथसहस्रेण हयानां रणशोभिनाम् ॥ ७-१५७-११९ (५२०२४)
षष्ट्या रथसहस्रैश्च प्रयाहि त्वं धनञ्जयम् ।
कर्णश्च वृषसेनश्च कृपो नीलस्तथैव च ॥ ७-१५७-१२० (५२०२५)
उदीच्याः कृतवर्मा च पुरुमित्रः सुतापनः ।
दुःशासनो निकुम्भश्च कुण्डभेदी पराक्रमः ॥ ७-१५७-१२१ (५२०२६)
पूरञ्जयो दृढरथः पताकी हेमकम्पनः ।
शल्यारुणीन्द्रसेनाश्च सञ्जयो विजयो जयः ॥ ७-१५७-१२२ (५२०२७)
कमलाक्षः परक्राथी जयवर्मा सुदर्शनः ।
एते त्वामनुयास्यन्ति पत्तीनामयुतानि षट् ॥ ७-१५७-१२३ (५२०२८)
जहि भीमं यमौ चोभौ धर्मराजं च मातुल ।
असुरानिव देवेन्द्रो जयाशा मे त्वयि स्थिता ॥ ७-१५७-१२४ (५२०२९)
दारितान्द्रौणिना बाणैर्भृशं विक्षतविग्रहान् ।
जहि मातुल कौन्तेयानसुरानिव पावकिः ॥ ७-१५७-१२५ (५२०३०)
सञ्जय उवाच। ७-१५७-१२६क्ष् (४६८७)
एवमुक्तो ययौ शीघ्रं पुत्रेण तव सौबलः ।
पिप्रीषुस्ते सुतान्राजन्दिधक्षुश्चैव पाण्डवान् ॥ ७-१५७-१२६ (५२०३१)
अथ प्रववृते युद्धं द्रौणिराक्षसयोर्मृधे ।
विभावर्यां सुतुमुलं शक्रप्रह्लादयोरिव ॥ ७-१५७-१२७ (५२०३२)

ततो घटोत्कचो बाणैर्दशभिर्गौतमीसुतम् ।
जघानोरसि सङ्क्रुद्धौ विषाग्निप्रतिमैर्दृढैः ॥ ७-१५७-१२८ (५२०३३)
स तैरभ्याहतो गाढं शरैर्भीमसुतेरितैः ।
चचाल रथमध्यस्थो वातोद्धूत इव द्रुमः ॥ ७-१५७-१२९ (५२०३४)
भूयश्चाञ्जलिकेनाथ मार्गणेन महाप्रभम् ।
द्रौणिहस्तस्थितं चापं चिच्छेदाशु घटोत्कचः ॥ ७-१५७-१३० (५२०३५)
ततोऽन्यद्द्रौणिरादय धनुर्भारसहं महत् ।
ववर्ष विशिखांस्तीक्ष्णान्वारिधारा इवाम्बुदः ॥ ७-१५७-१३१ (५२०३६)
ततः शारद्वतीपुत्रः प्रेषयामास भारत ।
सुवर्णपुङ्खाञ्छत्रुघ्नान्खचरान्खचरं प्रति ॥ ७-१५७-१३२ (५२०३७)
तद्बाणैरर्दितं यूथं रक्षसां पीनवक्षसाम् ।
सिंहैरिव बभौ मत्तं गजानामाकुलं कुलम् ॥ ७-१५७-१३३ (५२०३८)
विधम्य राक्षसान्बाणैः साश्वसूतरथद्विपान् ।
ददाह भगवान्वह्निर्भूतानीव युगक्षये ॥ ७-१५७-१३४ (५२०३९)
स दग्ध्वाऽक्षौहिणीं बामैर्नैर्ऋतीं रुरुचे नृप ।
पुरेव त्रिपुरं दग्ध्वा दिवि देवो महेश्वरः ॥ ७-१५७-१३५ (५२०४०)
युगान्ते सर्वभूतानि दग्ध्वेव वसुरुल्बणः ।
रराज जयतां श्रेष्ठो द्रोणपुत्रस्तवाहितान् ॥ ७-१५७-१३६ (५२०४१)
ततो घटोत्कचः क्रुद्धो रक्षसां भीमकर्मणाम् ।
द्रौणिं हतेति महतीं चोदयामास तां चमूम् ॥ ७-१५७-१३७ (५२०४२)
घटोत्कचस्य तामाज्ञां प्रतिगृह्याथ राक्षसाः ।
दंष्ट्रोज्ज्वला महावक्त्रा घोररूपा भयानकाः ॥ ७-१५७-१३८ (५२०४३)
व्यात्तानना घोरजिह्वाः क्रोधताम्रेक्षणा भृशम् ।
सिंहनादेन महता नादयन्तो वसुन्धराम् ॥ ७-१५७-१३९ (५२०४४)
हन्तुमभ्यद्रवन्द्रौणिं नानाप्रहरणायुधाः ।
शक्तीः शतघ्नीः परिघानशनीः शूलपट्टशान् ॥ ७-१५७-१४० (५२०४५)
खड्गान्गदाभिण्डिपालान्मुसलानि परश्वथान् ।
प्रासानसींस्तोमरांश्च कणपान्कम्पनाञ्छितान् ॥ ७-१५७-१४१ (५२०४६)
स्थूलान्भुशुण्ड्यश्मगदास्थूणान्कार्ष्ण्यायसांस्तथा ।
मुद्गराँश्च महाघोरान्समरे शत्रुदारणान् ॥ ७-१५७-१४२ (५२०४७)
द्रौणिमूर्धन्यसन्त्रस्ता राक्षसा भीमविक्रमाः ।
चिक्षिपुः क्रोधताम्राक्षाः शतशोऽथ सहस्रशः ॥ ७-१५७-१४३ (५२०४८)
तच्छस्त्रवर्षं सुमहद्द्रोणपुत्रस्य मूर्धनि ।
पतमानं समीक्ष्याऽथ योधास्ते व्यथिताऽभवन् ॥ ७-१५७-१४४ (५२०४९)
द्रोणपुत्रस्तु विक्रान्तस्तद्वर्षं घोरमुच्छ्रितम् ।
शरैर्विध्वंसयामास वज्रकल्पैः शिलाशितैः ॥ ७-१५७-१४५ (५२०५०)

ततोऽन्यैर्विशिखैस्तूर्णं स्वर्णपुङ्खैर्महामनाः ।
निजघ्ने राक्षसान्द्रौणिर्दिव्यास्त्रप्रतिमन्त्रितैः ॥ ७-१५७-१४६ (५२०५१)
तद्बाणैरर्दितं यूथं रक्षसां पीनवक्षसाम् ।
सिंहैरिव बभौ मत्तं गजानामाकुलं कुलम् ॥ ७-१५७-१४७ (५२०५२)
ते राक्षसाः सुसङ्क्रुद्धा द्रोणपुत्रेण ताडिताः ।
क्रुद्धाः स्म प्राद्रवन्द्रौणिं जिघांसन्तो महाबलाः ॥ ७-१५७-१४८ (५२०५३)
तत्राद्भुतमिमं द्रौणिर्दर्शयामास विक्रमम् ।
अशक्यं कर्तुमन्येन सर्वभूतेषु भारत ॥ ७-१५७-१४९ (५२०५४)
यदेको राक्षसीं सेनां क्षणाद्द्रौणिर्महास्त्रवित् ।
ददाह ज्वलितैर्बाणै राक्षसेन्द्रस्य पश्यतः ॥ ७-१५७-१५० (५२०५५)
स हत्वा राक्षसानीकं रराज द्रौणिराहवे ।
युगान्ते सर्वभूतानि संवर्तक इवानलः ॥ ७-१५७-१५१ (५२०५६)
तं दहन्तमनीकानि शरैराशीविषोपमैः ।
तेषु राजसहस्रेषु पाण्डवेयेषु भारत ॥ ७-१५७-१५२ (५२०५७)
नैनं निरीक्षितुं कश्चिदशक्नोद्द्रौणिमाहवे ।
ऋते घटोत्कचाद्वीराद्राक्षसेन्द्रान्महाबलात् ॥ ७-१५७-१५३ (५२०५८)
स पुनर्भरतश्रेष्ठ क्रोधादुद्भ्रान्तलोचनः ।
तलं तलेन संहत्य सन्दश्य दशनच्छदम् ॥ ७-१५७-१५४ (५२०५९)
स्व सूतमब्रवीत्क्रुद्धो द्रोणपुत्राय मां वह ।
स ययौ घोररूपेण सुपताकेन भास्वता ॥ ७-१५७-१५५ (५२०६०)
द्वैरथं द्रोणपुत्रेण पुनरप्यरिसूदनः ।
स विनद्य महानादं सिंहवद्भीमविक्रमः ॥ ७-१५७-१५६ (५२०६१)
चिक्षेपाविद्ध्य सङ्ग्रामे द्रोणपुत्राय राक्षसः ।
अष्टघण्टां महाघोरामशनिं देवनिर्मिताम् ॥ ७-१५७-१५७ (५२०६२)
तामवप्लुत्य जग्राह द्रौणिर्न्यस्य रथे धनुः ।
चिक्षेप चैनां तस्यैव स्यन्दनात्सोऽवप्लुप्लुवे ॥ ७-१५७-१५८ (५२०६३)
साश्वसूतध्वजं यानं भस्म कृत्वा महाप्रभा ।
विवेश वसुधां भित्त्वा साऽशनिर्भृशदारुणा ॥ ७-१५७-१५९ (५२०६४)
द्रौणेस्तत्कर्म दृष्ट्वा तु सर्वभूतान्यपूजयन् ।
यदप्लुत्य जग्राह घोरां शङ्करनिर्मिताम् ॥ ७-१५७-१६० (५२०६५)
धृष्टद्युम्नरथं गत्वा भैमसेनिस्ततो नृप ।
धनुर्घोरं समादाय महदिन्द्रायुधोपमम् ।
मुमोच निशितान्बाणान्पुनर्द्रौणेर्महोरसि ॥ ७-१५७-१६१ (५२०६६)
धृष्टद्युम्नस्त्वसम्भ्रान्तो मुमोचाशीविषोपमान् ।
सुवर्णपुङ्खान्विशिखान्द्रोणपुत्रस्य वक्षसि ॥ ७-१५७-१६२ (५२०६७)
ततो मुमोच नाराचान्द्रौणिस्तांश्च सहस्रशः ।

तावप्यग्निशिखप्रख्यैर्जुघ्नतुस्तस्य मार्गणान् ॥ ७-१५७-१६३ (५२०६८)
अतितीव्रं महद्युद्धं तयोः पुरुषसिंहयोः ।
योधानां प्रीतिजननं द्रौणेश्च भरतर्षभ ॥ ७-१५७-१६४ (५२०६९)
ततो रथसहस्रेण द्विरदानां शतैस्त्रिभिः ।
षड्भिर्वाजिसहस्रैश्च भीमस्तं देशमागमत् ॥ ७-१५७-१६५ (५२०७०)
ततो भीमात्मजं रक्षो धृष्टद्युम्नं च सानुगम् ।
अयोधयत धर्मात्मा द्रौणिरक्लिष्टविक्रमः ॥ ७-१५७-१६६ (५२०७१)
तत्राद्भुततमं द्रौणिर्दर्शयामास विक्रमम् ।
अशक्यं कर्तुमन्येन सर्वभूतेषु भारत ॥ ७-१५७-१६७ (५२०७२)
निमेषान्तरमात्रेण साश्वसूतरथद्विपाम् ।
अक्षौहिणीं राक्षसानां शितैर्बाणैरशातयत् ॥ ७-१५७-१६८ (५२०७३)
मिषतो भीमसेनस्य हैडिम्बेः पार्षतस्य च ।
यमयोर्धर्मपुत्रस्य विजयस्याच्युतस्य च ॥ ७-१५७-१६९ (५२०७४)
प्रगाढमञ्जोगतिभिर्नाराचैरभिताडिताः ।
निपेतुर्द्विरदा भूमौ सशृङ्गा इव पर्वताः ॥ ७-१५७-१७० (५२०७५)
निकृत्तैर्हस्तिहस्तैश्च विचलद्भिरितस्ततः ।
रराज वसुधा कीर्णा विसर्पद्भिरिवोरगैः ॥ ७-१५७-१७१ (५२०७६)
क्षिप्तैः काञ्चनदण्डैश्च नृपच्छत्रैः क्षितिर्बभौ ।
द्यौरिवोदितचन्द्रार्का ग्रहाकीर्णा युगक्षये ॥ ७-१५७-१७२ (५२०७७)
प्रवृद्धध्वजमण्डूकां भेरीविस्तीर्णकच्छपाम् ॥
छत्रहंसावलीजुष्टां फेनचामरमालिनीम् ॥ ७-१५७-१७३ (५२०७८)
कङ्कगृध्रमहाग्राहां नैकायुधझषाकुलाम् ।
विस्तीर्णगजपाषाणां हताश्वमकराकुलाम् ॥ ७-१५७-१७४ (५२०७९)
रथक्षिप्तमहावप्रां पताकारुचिरद्रुमाम् ।
शरमीनां महारौद्रां प्रासशक्त्यृष्टिडुण्डुभाम् ॥ ७-१५७-१७५ (५२०८०)
मज्जामांसमहापङ्कां कबन्धावर्जितोडुपाम् ।
केशशैवलकल्माषां भीरूणां कश्मलावहाम् ॥ ७-१५७-१७६ (५२०८१)
नागेन्द्रहययोधानां शरीरव्ययसम्भवाम् ।
शोणितौघमहाघोरां द्रौणिः प्रावर्तयन्नदीम् ॥ ७-१५७-१७७ (५२०८२)
योधार्तरवनिर्घोषां क्षतजोर्मिसमाकुलाम् ।
प्रयान्तीं सुमहाघोरां यमराष्ट्रमहोदधिम् ॥ ७-१५७-१७८ (५२०८३)
निहत्य राक्षसान्बाणैर्द्रौणिर्हैडिम्बिमार्दयत् ।
पुनरप्यतिसङ्क्रुद्धः सवृकोदरपार्षतान् ॥ ७-१५७-१७९ (५२०८४)
स नाराचगणैः पार्थान्द्रौणिर्विद्ध्वा महाबलः ।
जघान सुरथं नाम द्रुपदस्य सुतं विभुः ॥ ७-१५७-१८० (५२०८५)
पुनः शत्रुञ्जयं नाम द्रुपदस्यात्मजं रणे ।

बलानीकं जयानीकं जयाश्वं चाभिजघ्निवान् ॥ ७-१५७-१८१ (५२०८६)
श्रुताह्वयं च राजानं द्रौणिर्निन्ये यमक्षयम् ।
त्रिभिश्चान्यैः शरैस्तीक्ष्णैः सुपुङ्खैर्हेममालिनम् ॥ ७-१५७-१८२ (५२०८७)
जघान स पृषध्रं च चन्द्रसेनं च मारिष ।
कुन्तिभोजसुतांश्चासौ दशभिर्दश जघ्निवान् ॥ ७-१५७-१८३ (५२०८८)
अस्वत्थामा सुसङ्क्रुद्धः सन्धायोग्रमजिह्मगम् ।
मुमोचाकर्णपूर्णेन धनुषा शरमुत्तमम् ।
यमदण्डोपमं घोरमुद्दिश्याशु घटोत्कचम् ॥ ७-१५७-१८४ (५२०८९)
स भित्त्वा हृदयं तस्य राक्षसस्य महाशरः ।
विवेश वसुधां शीघ्रं सपुङ्खः पृथिवीपते ॥ ७-१५७-१८५ (५२०९०)
तं हतं पतितं ज्ञात्वा धृष्टद्युम्नो महारथः ।
द्रौणेः सकाशाद्राजेन्द्र व्यपनिन्ये रथोत्तमम् ॥ ७-१५७-१८६ (५२०९१)
ततः पराङ्मुखनृपं सैन्यं यौधिष्ठिरं नृप ।
पराजित्य रणे वीरो द्रोणपुत्रो ननाद ह ।
पूजितः सर्वभूतेषु तव पुत्रैश्च भारत ॥ ७-१५७-१८७ (५२०९२)
अथ शरशतभिन्नकृत्तदेहै--
र्हतपतितैः क्षणदाचरैः समन्तात् ।
निधनमुपगतैर्मही कृताऽभू--
द्गिरिशिखरैरिव दुर्गमाऽतिरौद्रा ॥ ७-१५७-१८८ (५२०९३)
तं सिद्धगन्धर्वपिशाचसङ्घा
नागाः सुपर्णाः पितरो वयांसि ।
रक्षोगणा भूतगणाश्च द्रौणि--
मपूजयन्नप्सरसः सुराश्च ॥ ॥ ७-१५७-१८९ (५२०९४)

इति श्रीमन्महाभारते द्रोणपर्वणि घटोत्कचवधपर्वणि
चतुर्दशरात्रियुद्धे सप्तपञ्चाशदधिकशततमोऽध्यायः ॥ १५७ ॥
Mahabharata - Drona Parva - Chapter Footnotes

५-१५७-९ तारेणोच्चस्वरेण ॥
५-१५७-१९ कृष्णचरणैः कृष्णयोश्चरणैः ॥
५-१५७-४० द्रोणमभिधावन्तं बीभत्सुं दृष्ट्वा यौधिष्ठिरं बलं
तत्सैन्यं द्रोणसैन्यम्प्रति पुनः सन्न्यवर्ततेति सम्बन्धः ॥
५-१५७-५८ कार्ष्णायसं तीक्ष्णलोहमयम् ॥
५-१५७-५९ न हयैर्नापि वारणैर्गजैः किन्तु पिशाचैः ॥
५-१५७-९३ गच्छ वत्सेति पुत्रेणेति च भीमसेनसम्बन्धात् । प्रबाधितुं
मनः--खेदमुत्पादयितुम् ॥

५-१५७-९४ आत्मानमपि हन्यात्किमु पुत्रमतो जीवनार्थी त्वं निवर्तस्वेति भावः ॥
५-१५७-९५ आयस्तः कोपितः ॥
५-१५७-१३२ शारद्वती कृपी । कचरान्बाणान्। खचरं राक्षसम् ॥
५-१५७-१३६ वसुरुल्बणः अग्निः प्रलयकालिकः ॥
५-१५७-१५७ सप्तपञ्चाशदधिकशततमोऽध्यायः ॥

---

द्रोनपर्व-अध्यय१५८
॥ श्रीः ॥
७.१५८. अध्यायः १५८

Mahabharata - Drona Parva - Chapter Topics
भीमेनः बाह्लीकवधः ॥ १ ॥
तथा दुर्योधनानुजदशकस्य शकुनिभ्रातृपञ्चकस्य च वधः ॥ २ ॥

Mahabharata - Drona Parva - Chapter Text

७-१५८-० (५२०९५)
सञ्जय उवाच। ७-१५८-०क्ष् (४६८८)
द्रुपदस्यात्मजान्दृष्ट्वा कुन्तिभोजसुतांस्तथा ।
द्रोणपुत्रेण निहतान्राक्षसांश्च सहस्रशः ॥ ७-१५८-१ (५२०९६)
युधिष्ठिरो भीमसेनो धृष्टद्युम्नश्च पार्षतः ।
युयुधानश्च संयत्ता युद्धायैव मनो दधुः ॥ ७-१५८-२ (५२०९७)
सोमदत्तः पुनः क्रुद्धो दृष्ट्वा सात्यकिमाहवे ।
महता शरवर्षेण च्छादयामास भारत ॥ ७-१५८-३ (५२०९८)
ततः समभवद्युद्धमतीव भयवर्धनम् ।
त्वदीयानां परेषां च घोरं विजयकाङ्क्षिणाम् ॥ ७-१५८-४ (५२०९९)
तं दृष्ट्वा समुपायान्तं रुक्मपुङ्खैः शिलाशितैः ।
दशभिः सात्वतस्यार्थे भीमो विव्याध सायकैः ॥ ७-१५८-५ (५२१००)
सोमदत्तोऽपि तं वीरं शतेन प्रत्यविध्यत ।
सात्वतस्त्वभिसंक्रुद्धः पुत्राधिभिरभिप्लुतम् ॥ ७-१५८-६ (५२१०१)
वृद्धं वृद्धगुणैर्युक्तं ययातिमिव नाहुषम् ।
विव्याध दशभिस्तीक्ष्णैः शरैर्वज्रनिपातनैः ।
शक्त्या चैनं विनिर्भिद्य पुनर्विव्याध सप्तभिः ॥ ७-१५८-७ (५२१०२)
ततस्तु सात्यकेरर्थे भीमसेनो नवं दृढम् ।
मुमोच परिघं घोरं सोमदत्तस्य मूर्धनि ॥ ७-१५८-८ (५२१०३)

सात्वतोऽप्यग्निसङ्काशं मुमोच शरमुत्तमम् ।
सोमदत्तोरसि क्रुद्धः सुपत्रं निशितं युधि ॥ ७-१५८-९ (५२१०४)
युगपत्पेततुर्वीर घोरौ परिघमार्गणौ ।
शरीरे सोमदत्तस्य स पपात महारथः ॥ ७-१५८-१० (५२१०५)
व्यामोहिते तुनये बाह्लीकस्तमुपाद्रवत् ।
विसृजञ्छरवर्षाणि कालवर्षीव तोयदः ॥ ७-१५८-११ (५२१०६)
भीमोऽथ सात्वतस्यार्थे बाह्लीकं नवभिः शरैः ।
प्रातिपेयं महात्मानं विव्याध रणमूर्धनि ॥ ७-१५८-१२ (५२१०७)
प्रातिपेयस्तु सङ्क्रुद्धः शक्तिं भीमस्य वक्षसि ।
निचखान महाबाहुः पुरन्दर इवाशनिम् ॥ ७-१५८-१३ (५२१०८)
स तथाऽभिहतो भीमश्चकम्पे च मुमोह च ।
प्राप्य चेतश्च बलवान्गदामस्मै ससर्ज ह ॥ ७-१५८-१४ (५२१०९)
सा पाण्डवेन प्रहिता बाह्लीकस्य शिरोऽहरत् ।
स पपात हतः पृथ्व्यां वज्राहत इवाद्रिराट् ॥ ७-१५८-१५ (५२११०)
तस्मिन्विनिहते वीरे बाह्लीके पुरुषर्षभ ।
पुत्रास्तेऽभ्यर्दयन्भीमं दश दाशरथेः समाः ॥ ७-१५८-१६ (५२१११)
नागदत्तो दृढरथो महाबाहुरयोभुजः ।
दृढः सुहस्तो विरजाः प्रमाथ्युग्रोऽनुयाय्यपि ॥ ७-१५८-१७ (५२११२)
तान्दृष्ट्वा चुक्रुधे भीमो जगृहे भारसाधनान् ।
एकमेकं समुद्दिश्य पातयामास मर्मसु ॥ ७-१५८-१८ (५२११३)
ते विद्धा व्यसवः पेतुः स्यन्दनेभ्यो हतौजसः ।
चण्डवातप्रभग्नास्तु पर्वताग्रान्महीरुहाः ॥ ७-१५८-१९ (५२११४)
नाराचैर्दशभिर्भीमस्तान्निहत्य तवात्मजान् ।
कर्णस्य दयितं पुत्रं वृषसेनमवाकिरत् ॥ ७-१५८-२० (५२११५)
ततो वृकरथो नाम भ्राता कर्णस्य विश्रुतः ।
जघान भीमं नाराचैस्तमप्यभ्यद्रवद्बली ॥ ७-१५८-२१ (५२११६)
ततः सप्तरथान्वीरः श्यालानां तव भारत ।
निहत्य भीमो नाराचैः शतचन्द्रमपोथयत् ॥ ७-१५८-२२ (५२११७)
अमर्षयन्तो निहतं शतचन्द्रं महारथम् ।
शकुनेर्भ्रातरो वीरा गवाक्षः शरभो विभुः ॥ ७-१५८-२३ (५२११८)
सुभगो भानुदत्तश्च शूराः पञ्च महारथाः ।
अभिद्रुत्य शरैस्तीक्ष्णैर्भीमसेनमताडयन् ॥ ७-१५८-२४ (५२११९)
स ताड्यमानो नाराचैर्वृष्टिवेगैरिवाचलः ।
जघान पञ्चभिर्बाणैः पञ्चैवातिरथान्बली ॥ ७-१५८-२५ (५२१२०)
तान्दृष्ट्वा निहतान्वीरान्विचेलुर्नृपसत्तमाः ॥ ७-१५८-२६ (५२१२१)
ततो युधिष्ठिरः क्रुद्धस्तवानीकमशातयत् ॥

मिषतः कुम्भयोनेस्तु पुत्राणां तव चानघ ॥ ७-१५८-२७ (५२१२२)
अम्बष्ठान्मालवाञ्छूरांस्त्रिगर्तान्सशिबीनपि ।
प्राहिणोन्मृत्युलोकाय क्रुद्धो युद्धे युधिष्ठिरः ॥ ७-१५८-२८ (५२१२३)
अभीषाहाञ्छूरसेनान्बाह्लीकान्सवसातिकान् ।
निहत्य पृथिवीं राजा चक्रे शोणितकर्दमाम् ॥ ७-१५८-२९ (५२१२४)
यौधेयान्मालवान्राजन्मद्रकाणां गणान्युधि ।
प्राहिणोन्मृत्युलोकाय शूरान्बाणैर्युधिष्ठिरः ॥ ७-१५८-३० (५२१२५)
हताहरत गृह्णीत विध्यत व्यवकृन्तत ।
इत्यासीत्तुमुलः शब्दो युधिष्ठिररथं प्रति ॥ ७-१५८-३१ (५२१२६)
सैन्यानि द्रावयन्तं तं द्रोणो दृष्ट्वा युधिष्ठिरम् ।
चोदितस्तव पुत्रेण सायकैरभ्यवाकिरत् ॥ ७-१५८-३२ (५२१२७)
द्रोणस्तु परमक्रुद्धो वायव्यास्त्रेण पार्थिवम् ।
विव्याध सोऽपि तद्दिव्यमस्त्रमस्त्रेण जघ्निवान् ॥ ७-१५८-३३ (५२१२८)
तस्मिन्विनिहते चास्त्रे भारद्वाजो युधिष्ठिरे ।
वारुणं याम्यमाग्नेयं त्वाष्ट्रं सावित्रमेव च ।
चिक्षेप परमक्रुद्धो जिघांसुः पाण्डुनन्दनम् ॥ ७-१५८-३४ (५२१२९)
क्षिप्तानि क्षिप्यमाणानि तानि चास्त्राणि धर्मजः ।
जघानास्त्रैर्महाबाहुः कुम्भयोनेरवित्रसन् ॥ ७-१५८-३५ (५२१३०)
सत्यां चिकीर्षमाणस्तु प्रतिज्ञां कुम्भसम्भवः ॥ ७-१५८-३६ (५२१३१)
प्रादुश्चक्रेऽस्त्रमैन्द्रं वै प्राजापत्यं च भारत ।
जिघांसुर्धर्मतनयं तव पुत्रहिते रतः ॥ ७-१५८-३७ (५२१३२)
पतिः कुरूणां गजसिंहगामी
विशालवक्षाः पृथुलोहिताक्षः ।
प्रादुश्चकारास्त्रमहीनतेजा
माहेन्द्रमस्त्रं स जघान तेन ॥ ७-१५८-३८ (५२१३३)
विहन्यमानेष्वस्त्रेषु द्रोणः क्रोधसमन्वितः ।
युधिष्ठिरवधं प्रेप्सुर्ब्राह्ममस्त्रमुदैरयत् ॥ ७-१५८-३९ (५२१३४)
ततो नाज्ञासिषं किञ्चिद्घोरेण तमसाऽऽवृते ।
सर्वभूतानि च परं त्रासं जग्मुर्महीपते ॥ ७-१५८-४० (५२१३५)
ब्रह्मास्त्रमुद्यतं दृष्ट्वा कुन्तीपुत्रो युधिष्ठिरः ।
ब्रह्मास्त्रेणैव राजेन्द्र तदस्त्रं प्रत्यवारयत् ॥ ७-१५८-४१ (५२१३६)
ततः सैनिकमुख्यास्ते प्रशशंसुर्नरर्षभौ ।
द्रोणपार्थौ महेष्वासौ सर्वयुद्धविशारदौ ॥ ७-१५८-४२ (५२१३७)
ततः प्रमुच्य कौन्तेयं द्रोणो द्रुपदवाहिनीम् ।
व्यधमत्क्रोधताम्राक्षो वायव्यास्त्रेण भारत ॥ ७-१५८-४३ (५२१३८)
ते हन्यमाना द्रोणेन पाञ्चालाः प्राद्रवन्भयात् ।

पश्यतो भीमसेनस्य पार्थस्य च महात्मनः ॥ ७-१५८-४४ (५२१३९)
ततः किरीटी भीमश्च सहसा सन्न्यवर्तताम् ।
महद्भ्यां रथवंशाभ्यां परिगृह्य बलं तदा ॥ ७-१५८-४५ (५२१४०)
बीभत्सुर्दक्षिणं पार्श्वमुत्तरं च वृकोदरः ।
भारद्वाजं शरौघाभ्यां महद्भ्यामभ्यवर्षताम् ॥ ७-१५८-४६ (५२१४१)
केकयाः सृञ्जयाश्चैव पाञ्चालाश्च महौजसः ।
अन्वगच्छन्महाराज मात्स्याश्च सह सात्वतैः ॥ ७-१५८-४७ (५२१४२)
ततः सा भारती सेना वध्यमाना किरीटिना ।
तमसा निद्रया चैव पुनरेव व्यदीर्यत ॥ ७-१५८-४८ (५२१४३)
द्रोणेन वार्यमाणास्ते स्वयं तव सुतेन च ।
नाशक्यन्त महाराज योधा वारयितुं तदा ॥ ॥ ७-१५८-४९ (५२१४४)

इति श्रीमन्महाभारते द्रोणपर्वणि घटोत्कचवधपर्वणि
चतुर्दशरात्रियुद्धे अष्टपञ्चाशदधिकशततमोऽध्यायः ॥ १५८ ॥
Mahabharata - Drona Parva - Chapter Footnotes

५-१५८-१२ प्रातिपेयं प्रतीपपुत्रम् ॥
५-१५८-३८ पतिः कुरूणां युधिष्ठिरः । माहेन्द्रमन्यत्स जघानेति
झ पाठः ॥
५-१५८-१५८ अष्टपञ्चाशदधिकशततमोऽध्यायः ॥

---

द्रोनपर्व-अध्यय१५९
॥ श्रीः ॥
७.१५९. अध्यायः १५९

Mahabharata - Drona Parva - Chapter Topics
कर्णेन पाण्डवहननं प्रतिजानानमात्मानमधिक्षिपतः कृपस्य
जिह्वाच्छेदप्रतिज्ञानम् ॥ १ ॥

Mahabharata - Drona Parva - Chapter Text

७-१५९-० (५२१४५)
सञ्जय उवाच । ७-१५९-०क्ष् (४६८९)
उदीर्यमाणं तद्दृष्ट्वा पाण्डवानां महद्बलम् ।
अविषह्यं च मन्वानः कर्णं दुर्योधनोऽब्रवीत् ॥ ७-१५९-१ (५२१४६)
अयं स कालः सम्प्राप्तो मित्राणां मित्रवत्सल ।

त्रायस्व समरे कर्ण सर्वान्योधान्महारथान् ॥ ७-१५९-२ (५२१४७)
पाञ्चालैर्मत्स्यकैकेयैः पाण्डवैश्च महारथैः ।
वृतान्समन्तात्सहृक्रुद्धैर्निः श्वसद्भिरिवोरगैः ॥ ७-१५९-३ (५२१४८)
एते नदन्ति संहृष्टाः पाण्डवा जितकाशिनः ।
शक्रोपमाश्च बहवः पाञ्चालानां रथव्रजाः ॥ ७-१५९-४ (५२१४९)
कर्ण उवाच। ७-१५९-५क्ष् (४६९०)
परित्रातुमिह प्राप्तो यदि पार्थं पुरन्दरः ।
तमप्याशु पराजित्य ततो हन्ताऽस्मि पाण्डवम् ॥ ७-१५९-५ (५२१५०)
सत्यं ते प्रतिजानामि समाश्वसिहि भारत ।
हन्तास्मि पाण्डुतनयान्पाञ्चालांश्च समागतान् ॥ ७-१५९-६ (५२१५१)
जयं ते प्रतिदास्यामि वासवस्येव पावकिः ।
प्रियं तव मया कार्यमिति जीवामि पार्थिव ॥ ७-१५९-७ (५२१५२)
सर्वेषामेव पार्थानां फल्गुनो बलवत्तरः ।
तस्यामोघां विमोक्ष्यामिशक्तिं शक्रविनिर्मितां ॥ ७-१५९-८ (५२१५३)
तस्मिन्हते महेष्वासे भ्रातरस्तस्य मानद ।
तव वश्या भविष्यन्ति वनं यास्यन्ति वा पुनः ॥ ७-१५९-९ (५२१५४)
मयि जीवति कौरव्य विषादं मा कृथाः क्वचित् ।
अहं जेष्यामि समरे सहितान्सर्वपाण्डवान् ॥ ७-१५९-१० (५२१५५)
पाञ्चालान्केकयांश्चैव वृष्णींश्चापि समागतान् ।
बाणौघैः शकलीकृत्य तव दास्यामि मेदिनीम् ॥ ७-१५९-११ (५२१५६)
सञ्जय उवाच। ७-१५९-१२क्ष् (४६९१)
एवं ब्रुवाणं कर्णं तु कृपः शारद्वतोऽब्रवीत् ।
स्मयन्निव महाबाहुः सूतपुत्रमिदं वचः ॥ ७-१५९-१२ (५२१५७)
शोभनं शोभनं कर्ण सनाथः कुरुपुङ्गवः ।
त्वया नाथेन राधेय वचसा यदि सिध्यति ॥ ७-१५९-१३ (५२१५८)
बहुशः कत्थसे कर्ण कौरवस्य समीपतः ।
न तु ते विक्रमः कश्चिद्दृश्यते फलमेव वा ॥ ७-१५९-१४ (५२१५९)
समागमः पाण्डुसुतैर्दृष्टस्ते बहुशो युधि ।
सर्वत्र निर्जितश्चासि पाण्डवैः सूतनन्दन ॥ ७-१५९-१५ (५२१६०)
ह्रियमाणे तदा कर्ण गन्धर्वैर्धृतराष्ट्रजे ।
तदाऽयुध्यन्त सैन्यानि त्वमेकोऽग्रेऽपलायिथाः ॥ ७-१५९-१६ (५२१६१)
विराटनगरे चापि समेताः सर्वकौरवाः ।
पार्थेन निर्जिता युद्धे त्वं च कर्ण सहानुजः ॥ ७-१५९-१७ (५२१६२)
एकस्याप्यसमर्थस्त्वं फल्गुनस्य रणाजिरे ।
कथमुत्सहसे जेतुं सकृष्णान्सर्वपाण्डवान् ॥ ७-१५९-१८ (५२१६३)
अब्रुवन्कर्ण युध्यस्व कत्थसे बहु सूतज ।

अनुक्त्वा विक्रमेद्यस्तु तद्वै सत्पुरुषव्रतम् ॥ ७-१५९-१९ (५२१६४)
गर्जित्वा सूतपुत्र त्वं शारदाभ्र इवाजलः ।
निष्फलो दृश्यसे कर्ण तच्च राजा न बुध्यते ॥ ७-१५९-२० (५२१६५)
तावद्गर्जस्व राधेय यावत्पार्थं न पश्यसि ।
आरात्पार्थं हि ते दृष्ट्वा दुर्लभं गर्जितं पुनः ॥ ७-१५९-२१ (५२१६६)
त्वमनासाद्य तान्बाणान्फल्गुनस्य विगर्जसि ।
पार्थसायकविद्धस्य दुर्लभं गर्जितं तव ॥ ७-१५९-२२ (५२१६७)
बाहुभिः क्षत्रियाः शूरा वाग्भिः शूरा द्विजातयः ।
धनुषा फल्गुनः शूरः कर्णः शूरो मनोरथैः ।
तोषितो येन रुद्रोऽपि कः पार्थं प्रतिघातयेत् ॥ ७-१५९-२३ (५२१६८)
एवं संरुषितस्तेन तदा शारद्वतेन ह ।
कर्णः प्रहरतां श्रेष्ठः कृपं वाक्यमथाब्रवीत् ॥ ७-१५९-२४ (५२१६९)
शूरा गर्जन्ति सततं प्रावृषीव वलाहकाः ।
फलं चाशु प्रयच्छन्ति बीजमुप्तमनूषरे ॥ ७-१५९-२५ (५२१७०)
दोषमत्र न पश्यामि शूराणां रणमूर्धनि ।
तत्तद्विकत्थमानानां भारं चोद्वहतां मृधे ॥ ७-१५९-२६ (५२१७१)
यं भारं पुरुषो वोढुं मनसा हि व्यवस्यति ।
दैवमस्य ध्रुवं तत्र साहाय्यायोपपद्यते ॥ ७-१५९-२७ (५२१७२)
व्यवसायद्वितीयोऽहं मनसा भारमुद्वहन् ।
हत्वा पाण्डुसुतानाजौ सकृष्णान्सहसात्वतान् ।
गर्जामि यद्यहं विप्र तव किं तत्र नश्यति ॥ ७-१५९-२८ (५२१७३)
वृथा शूरा न गर्जन्ति सजला इव तोयदाः ।
सामर्थ्यमात्मनो ज्ञात्वा ततो गर्जन्ति पण्डिताः ॥ ७-१५९-२९ (५२१७४)
सोऽहमद्य रणे यत्तौ सहितौ कृष्मपाण्डवौ ।
उत्सहामि रणे जेतुं ततो गर्जामि गौतम ॥ ७-१५९-३० (५२१७५)
पश्य त्वं गर्जितस्यास्य फलं मे विप्र सानुगान् ।
हत्वा पाण्डुसुतानाजौ सहकृष्णान्ससात्वतान् ।
दुर्योधनाय दास्यामि पृथिवीं हतकण्टकाम् ॥ ७-१५९-३१ (५२१७६)
कृप उवाच। ७-१५९-३२क्ष् (४६९२)
मनोरथप्रलापा मे न ग्राह्यास्तव सूतज ॥ ७-१५९-३२ (५२१७७)
सदा क्षिपसि वै कृष्णौ धर्मराजं च पाण्डवम् ।
ध्रुवस्तत्र जयः कर्ण यत्र युद्धविशारदौ ॥ ७-१५९-३३ (५२१७८)
देवगन्धर्वयक्षाणां मनुष्योरगरक्षसाम् ।
दंशितानामपि रणे अजेयौ कृष्णपाण्डवौ ॥ ७-१५९-३४ (५२१७९)
ब्रह्मण्यः सत्यवाग्दान्तो गुरुदैवतपूजकः ।
नित्यं धर्मरतश्चैव कृतास्त्रश्च विशेषतः ॥ ७-१५९-३५ (५२१८०)

धृतिमांश्च कृतज्ञश्च धर्मपुत्रो युधिष्ठिरः ।
भ्रातरश्चास्य बलिनः सर्वास्त्रेषु कृतश्रमाः ॥ ७-१५९-३६ (५२१८१)
गुरुवृत्तिरताः प्राज्ञा धर्मनित्या यशस्विनः ।
सम्बन्धिनश्चेन्द्रवीर्याः स्वनुर्ताः प्रहारिणः ॥ ७-१५९-३७ (५२१८२)
धृष्टद्युम्नः शिखण्डी च दौर्मुखिर्जनमेजयः ।
चन्द्रसेनो रुद्रसेनः कीर्तिधर्मा ध्रुवो धरः ॥ ७-१५९-३८ (५२१८३)
वसुचन्द्रो दामचन्द्रः सिंहचन्द्रः सुतेजनः ।
द्रुपदस्य तथा पुत्रा द्रुपदश्च महास्त्रवित् ॥ ७-१५९-३९ (५२१८४)
येषामर्थाय संयत्तो मत्स्यराजः सहानुजः ।
शतानीकः सूर्यदत्तः श्रुतानीकः श्रुतध्वजः ॥ ७-१५९-४० (५२१८५)
बलानीको जयानीको जयाश्वो रथवाहनः ।
चन्द्रोदयः समरथो विराटभ्रातरः शुभाः ॥ ७-१५९-४१ (५२१८६)
यमौ च द्रौपदेयाश्च राक्षसश्च घटोत्कचः ।
येषामर्थाय युध्यन्ते न तेषां विद्यते क्षयः ॥ ७-१५९-४२ (५२१८७)
एते चान्ये च बहवो गणाः पाण्डुसुतस्य वै ॥ ७-१५९-४३ (५२१८८)
कामं खलु जगत्सर्वं सदेवासुरमानुषम् ।
सयक्षराक्षसगणं सभूतभुजगद्विपम् ।
निःशेषमस्त्रवीर्येण कुर्वाते भीमफल्गुनौ ॥ ७-१५९-४४ (५२१८९)
युधिष्ठिरश्च पृथिवीं निर्दहेद्घोरचक्षुषा ॥ ७-१५९-४५ (५२१९०)
अप्रमेयबलः शौरिर्येषामर्थे च दंशितः ।
कथं तान्संयुगे कर्ण जेतुमुत्सहसे परान् ॥ ७-१५९-४६ (५२१९१)
महानपनयस्त्वेष नित्यं हि तव सूतज ।
यस्त्वमुत्सहसे योद्धुं समरे शौरिणा सह ॥ ७-१५९-४७ (५२१९२)
सञ्जय उवाच। ७-१५९-४८क्ष् (४६९३)
एवमुक्तस्तु राधेयः प्रहसन्भरतर्षभ ।
अब्रवीच्च तदा कर्णो गुरुं शारद्वतं कृपम् ॥ ७-१५९-४८ (५२१९३)
सत्यमुक्तं त्वया ब्रह्मन्पाण्डवान्प्रति यद्वचः ।
एते चान्ये च बहवो गुणाः पाण्डुसुतेषु वै ॥ ७-१५९-४९ (५२१९४)
अजय्याश्च रणे पार्था देवैरपि सवासवैः ।
सदैत्ययक्षगन्धर्वैः पिशाचोरगराक्षसैः ॥ ७-१५९-५० (५२१९५)
तथापि पार्थाञ्जेष्यामि शक्त्या वासवदत्तया ।
मम ह्यमोघा दत्तेयं शक्तिः शक्रेण वै द्विज ।
एतया निहनिष्यामि सव्यसाचिनमाहवे ॥ ७-१५९-५१ (५२१९६)
हते तु पाण्डवे कृष्णे भ्रातरश्चास्य सोदराः ।
अनर्जुना न शक्ष्यन्ति महीं भोक्तुं कथञ्चन ॥ ७-१५९-५२ (५२१९७)
तेषु नष्टेषु सर्वेषु पृथिवीयं ससागरा ।

अयत्नात्कौरवेन्द्रस्य वशे स्थास्यति गौतम् ॥ ७-१५९-५३ (५२१९८)
सुनीतैरिह सर्वार्थाः सिध्यन्ते नात्र संशयः ।
एतमर्थमहं ज्ञात्वा ततो गर्जामि गौतम ॥ ७-१५९-५४ (५२१९९)
त्वं तु विप्रश्च वृद्धश्च अशक्तश्चापि संयुगे ।
कृतस्नेहश्च पार्थेषु मोहान्मामवमन्यसे ॥ ७-१५९-५५ (५२२००)
यद्येवं वक्ष्यसे भूयो ममाप्रियमिह द्विज ।
ततस्ते खड्गमुद्यम्य जिह्वां छेत्स्यामि दुर्मते ॥ ७-१५९-५६ (५२२०१)
यच्चापि पाण्डवान्विप्र स्तोतुमिच्छसि संयुगे ।
भीषयन्सर्वसैन्यानि कौरवेयांश्च दुर्मते ॥ ७-१५९-५७ (५२२०२)
अत्रापि शृणु मे वाक्यं यथावद्ब्रुवतो द्विज ।
दुर्योधनश्च द्रोणश्च शकुनिर्दुर्मुखो जयः ॥ ७-१५९-५८ (५२२०३)
दुःशासनो वृषसेनो मद्राजस्त्वमेव च ।
सोमदत्तश्च भूरिश्च तथा द्रौणिर्विविंशतिः ॥ ७-१५९-५९ (५२२०४)
तिष्ठेयुर्दंशिता यत्रा सर्वे युद्धविशारदाः ।
जयेदेतान्नरः को नु शक्रतुल्यबलोऽप्यरिः ॥ ७-१५९-६० (५२२०५)
शूराश्च हि कृतास्त्राश्च बलिनः स्वर्गलिप्सवः ।
धर्मज्ञा युद्धकुशला हन्युर्युद्धे सुरानपि ॥ ७-१५९-६१ (५२२०६)
एते स्थास्यन्ति सङ्ग्रामे पाण्डवानां वधार्थिनः ।
जयमाकाङ्क्षमाणा हि कौरवेयस्य दंशिताः ॥ ७-१५९-६२ (५२२०७)
दैवायत्तमहं मन्ये जयं सुबलिनामपि ।
यत्र भीष्मो महाबाहुः शेते शरशताचितः ॥ ७-१५९-६३ (५२२०८)
विकर्णश्चित्रसेनश्च बाह्लीकोऽथ जयद्रथः ।
भूरिश्रवा जयश्चैव जलसन्धः सुदक्षिणः ॥ ७-१५९-६४ (५२२०९)
शलश्च रथिनां श्रेष्ठो भगदत्तश्च वीर्यवान् ।
एते चान्ये च राजानो देवैरपि सुदुर्जयाः ॥ ७-१५९-६५ (५२२१०)
निहताः समरे शूराः पाण्डवैर्बलवत्तराः ।
किमन्यद्दैवसंयोगान्मन्यसे पुरुषाधम ॥ ७-१५९-६६ (५२२११)
यांश्च तांस्तौषि सततं दुर्योधनरिपून्द्विज ।
तेषामपि हताः शूराः शतशोऽथ सहस्रशः ॥ ७-१५९-६७ (५२२१२)
क्षीयन्ते सर्वसैन्यानि कुरूणां पाण्डवैः सह ।
प्रभावं नात्र पाश्यामि पाण्डवानां कथञ्चन ॥ ७-१५९-६८ (५२२१३)
यस्तान्बलवतो नित्यं मन्यसे त्वं द्विजाधम ।
यतिष्येऽहं यथाशक्ति योद्धुं तैः सह संयुगे ।
दुर्योधनहितार्थाय जयो दैवे प्रतिष्ठितः ॥ ॥ ७-१५९-६९ (५२२१४)

इति श्रीमन्महाभारते द्रोणपर्वणि घटोत्कचवधपर्वणि

चतुर्दशरात्रियुद्धे एकोनषष्ट्यधिकशततमोऽध्यायः ॥ १५९ ॥

---

द्रोनपर्व-अध्यय१६०
॥ श्रीः ॥
७.१६०. अध्यायः १६०

Mahabharata - Drona Parva - Chapter Topics
कृपगर्हणातितिक्षया कर्णवधायाक्ष्युत्तिष्ठतोऽश्वत्थाम्नः
कृपदुर्योधनाक्ष्यां निवारणम् ॥ १ ॥
अर्जुनेन कर्णपराजयो दुर्योधनेन रणाय द्रौणिचोदना च ॥ २ ॥

Mahabharata - Drona Parva - Chapter Text

७-१६०-० (५२२१५)
सञ्जय उवाच। ७-१६०-०क्ष् (४६९४)
तथा परुषितं दृष्ट्वा सूतपुत्रेण मातुलम् ।
खड्गमुद्यम्य वेगेन द्रौणिरभ्यपतद्द्रुतम् ॥ ७-१६०-१ (५२२१६)
ततः परमसङ्क्रुद्धः सिंहो मत्तमिव द्विपम् ।
प्रेक्षतः कुरुराजस्य द्रौणिः कर्णं समभ्ययात् ॥ ७-१६०-२ (५२२१७)
अश्वत्थामोवाच। ७-१६०-३क्ष् (४६९५)
यदर्युनगुणांस्तथ्यान्कीर्तयानं नराधम ।
शूरं द्वेषात्सुदुर्बुद्धे त्वं भर्त्सयसि मातुलम् ॥ ७-१६०-३ (५२२१८)
विकत्थमानः शौर्येण सर्वलोकधनुर्धरम् ॥
दर्पोत्सेधगृहीतोऽद्य न कञ्चिद्गणयन्मृधे ॥ ७-१६०-४ (५२२१९)
क्व ते वीर्यं क्व चास्त्राणि यं त्वां निर्जित्य संयुगे ।
गाण्डीवधन्वा हतवान्प्रेक्षतस्ते जयद्रथम् ॥ ७-१६०-५ (५२२२०)
येन साक्षान्महादेवो योधितः समरे पुरा ।
तमिच्छसि वृथा जेतुं सूताधम मनोरथैः ॥ ७-१६०-६ (५२२२१)
यं हि कृष्णेन सहितं सर्वशस्त्रभृतां वरम् ।
जेतुं न शक्ताः सहिताः सेन्द्रा अपि सुरासुराः ॥ ७-१६०-७ (५२२२२)
लोकैकवीरमजितमर्जुनं सूत संयुगे ।
किं पुनस्त्वं सुदुर्बुद्धे सहैभिर्वसुधाधिपैः ॥ ७-१६०-८ (५२२२३)
कर्ण पश्य सुदुर्बुद्धे तिष्ठेदानीं नराधम ।
एष तेऽद्य शिरः कायादुद्धरामि सुदुर्मते ॥
सञ्जय उवाच। ७-१६०-९ (५२२२४)
तमुद्यतं तु वेगेन राजा दुर्योधनः स्वयम् ।

न्यवारयन्महातेजाः कृपश्च द्विपदां वरः ॥ ७-१६०-१० (५२२२५)
कर्ण उवाच। ७-१६०-११क्ष् (४६९६)
शूरोऽयं समरश्लाघी दुर्मतिश्च द्विजाधमः ।
आसादयतु मद्वीर्यं मुञ्चेमं कुरुसत्तम ॥ ७-१६०-११ (५२२२६)
अश्वत्थामोवाच। ७-१६०-१२क्ष् (४६९७)
तैवतत्क्षम्यतेऽस्माभिः सूतात्मज सुदुर्मते ।
दर्पमुत्सिक्तमेतत्ते फल्गुनो नाशयिष्यति ॥ ७-१६०-१२ (५२२२७)
दुर्योधन उवाच। ७-१६०-१३क्ष् (४६९८)
अश्वत्थामन्प्रसीदस्व क्षन्तुमर्हसि मानद ।
कोपः खलु न कर्तव्यः सूतपुत्रं कथञ्चन ॥ ७-१६०-१३ (५२२२८)
त्वयि कर्णे कृपे द्रोणे मद्रराजेऽथ सौबले ।
महत्कार्यं समासक्तं प्रसीद द्विजसत्तम ॥ ७-१६०-१४ (५२२२९)
एते ह्यभिमुखाः सर्वे राधेयेन युयुत्सवः ।
आयान्ति पाण्डवा ब्रह्मन्नाह्वयन्तः समन्ततः ॥ ७-१६०-१५ (५२२३०)
सञ्जय उवाच। ७-१६०-१६क्ष् (४६९९)
प्रसाद्यमानस्तु ततो राज्ञा द्रौणिर्महामनाः ।
प्रससाद महाराज क्रोधवेगसमन्वितः ॥ ७-१६०-१६ (५२२३१)
ततः कृपोऽप्युवाचेदमाचार्यः सुमहामनाः ।
सौम्यस्वभावाद्राजनेन्द्र क्षिप्रमागतमार्दवः ॥ ७-१६०-१७ (५२२३२)
कृप उवाच। ७-१६०-१८क्ष् (४७००)
तवैतत्क्षम्यतेऽस्माभिः सूतात्मज सुदुर्मते ।
दर्पमुत्सिक्तमेतत्ते फल्गुनो नाशयिष्यति ॥ ७-१६०-१८ (५२२३३)
सञ्जय उवाच। ७-१६०-१९क्ष् (४७०१)
ततस्ते पाण्डवा राजन्पाञ्चालाश्च यशस्विनः ।
आजग्मुः सहिताः कर्णं तर्जयन्तः समन्ततः ॥ ७-१६०-१९ (५२२३४)
कर्णोऽपि रथिनां श्रेष्ठश्चापमुद्यम्य वीर्यवान् ।
कौरवाग्र्यैः परिवृतः शक्रो देवगणैरिव ।
पर्यतिष्ठत तेजस्वी स्वबाहुबलमाश्रितः ॥ ७-१६०-२० (५२२३५)
ततः प्रववृते युद्धं कर्णस्य सह पाण्डवैः ।
भीषणं सुमहाराज सिंहनादविराजितम् ॥ ७-१६०-२१ (५२२३६)
ततस्ते पाण्डवा राजन्पाञ्चालाश्च यशस्विनः ।
दृष्ट्वा कर्णं महाबाहुमुच्चैः शब्दमथानदन् ॥ ७-१६०-२२ (५२२३७)
अयं कर्णः कुतः कर्णस्तिष्ठ कर्ण महारणे ।
युध्यस्व सहितोऽस्माभिर्दुरात्मन्पुरुषाधम ॥ ७-१६०-२३ (५२२३८)
अन्ये तु दृष्ट्वा राधेयं क्रोधरक्तेक्षणाऽब्रुवन् ।
हन्यतामयमुत्सिक्तः सूतपुत्रोऽल्पचेतनः ।

सर्वैः पार्थिवशार्दूलैर्नानेनार्थोऽस्ति जीवता। ७-१६०-२४ (५२२३९)
अत्यन्तवैरी पार्थानां सततं पापपूरुषः ।
एष मूलमनर्थानां दुर्योधनमते स्थितः ॥ ७-१६०-२५ (५२२४०)
घ्नतैनमिति जल्पन्तः क्षत्रियाः समुपाद्रवन् ।
महता शरवर्षेण च्छादयन्तो महारथाः ।
वधार्थं सूतपुत्रस्य पाण्डवेयेन चोदिताः ॥ ७-१६०-२६ (५२२४१)
तांस्तु सर्वांस्तथा दृष्ट्वा धावमानान्महारथान् ।
न विव्यथे सूतपुत्रो न च त्रासमगच्छत ॥ ७-१६०-२७ (५२२४२)
दृष्ट्वा सागरकल्पं तमुद्धूतं सैन्यसागरम् ।
पिप्रीषुस्तव पुत्राणां सङ्ग्रामेष्वपराजितः ॥ ७-१६०-२८ (५२२४३)
सायकौघेन बलवान्क्षिप्रकारी महाबलः ।
वारयामास तत्सैन्यं समन्ताद्भरतर्षभ ॥ ७-१६०-२९ (५२२४४)
ततस्तु शरवर्षेण पार्थिवास्तमवारयन् ।
धनूम्पि ते विधुन्वानाः शतशोऽथ सहस्रशः ।
अयोधयन्त राधेयं शक्रं दैत्यगणा इव ॥ ७-१६०-३० (५२२४५)
शरवर्पं तु तत्कर्णः पार्थिवैः समुदीरितम् ।
शरवर्षेण महता समन्ताद्व्यकिरत्प्रभो ॥ ७-१६०-३१ (५२२४६)
तद्युद्धमभवत्तेषां कृतप्रतिकृतैषिणाम् ।
यथा देवासुरे युद्धे शक्रस्य सह दानैवः ॥ ७-१६०-३२ (५२२४७)
तत्राद्भुतमपश्याम सूतपुत्रस्य लाघवम् ।
यदेनं सर्वतो यत्ता नाप्नुवन्ति परे युधि ॥ ७-१६०-३३ (५२२४८)
निवार्य च शरौघांस्तान्पार्थिवानां महारथः ।
युगेष्वीषासु च्छत्रेषु ध्वजेषु च हयेषु च ।
आत्मनामाङ्कितान्घोरान्राधेयः प्राहिणोच्छरान् ॥ ७-१६०-३४ (५२२४९)
ततस्ते व्याकुलीभूता राजानः कर्णपीडिताः ।
बभ्रमुस्तत्र तत्रैव गावः शीतार्दिता इव ॥ ७-१६०-३५ (५२२५०)
हयानां वध्यमानानां गजानां रथिनां तथा ।
तत्रतत्राभ्यवेक्षाम सङ्घान्कर्णेन ताडितान् ॥ ७-१६०-३६ (५२२५१)
शिरोभिः पतितै राजन्बाहुभिश्च समन्ततः ।
आस्तीर्णा वसुधा सर्वा शूराणामनिवर्तिनाम् ॥ ७-१६०-३७ (५२२५२)
हतैश्च हन्यमानैश्च निष्टनद्भिश्च सर्वशः ।
बभूवायोधनं रौद्रं वैवस्वतपुरोपमम् ॥ ७-१६०-३८ (५२२५३)
ततो दुर्योधनो राजा दृष्ट्वा कर्णस्य विक्रमम् ।
अश्वत्थामानमासाद्य वाक्यमेतदुवाच ह ॥ ७-१६०-३९ (५२२५४)
युध्यतेऽसौ रणे कर्णो दंशितः सर्वपार्थिवैः ॥ ७-१६०-४० (५२२५५)
पश्यैतां द्रवतीं सेनां कर्णसायकपीडिताम् ।

कार्तिकेयेन विध्वस्तामासुरीं पृतनामिव ॥ ७-१६०-४१ (५२२५६)
दृष्ट्वैतां निर्जितां सेनां रणे कर्णेन धीमता ।
अभियात्येष बीभत्सुः सूतपुत्रजिघांसया ॥ ७-१६०-४२ (५२२५७)
तद्यथा प्रेक्षमाणानां सूतपुत्रं महारथम् ।
न हन्यात्पाण्डवः सङ्ख्ये तथा नीतिर्विधीयतां ॥ ७-१६०-४३ (५२२५८)
ततो द्रौणिः कृपः शल्यो हार्दिक्यश्च महारथः ।
प्रत्युद्ययुस्तदा पार्थं सूतपुत्रपरीप्सया ।
आयान्तं वीक्ष्य कौन्तेयं शक्रं दैत्यचमूमिव ॥ ७-१६०-४४ (५२२५९)
बीभत्सुरपि राजेन्द्र पाञ्चालैरभिसंवृतः ।
प्रत्युद्ययौ तदा कर्णं यथा वृत्रं शतक्रतुः ॥ ७-१६०-४५ (५२२६०)
धृतराष्ट्र उवाच। ७-१६०-४६क्ष् (४७०२)
संरब्धं फल्गुनं दृष्ट्वा कालान्तकयमोपमम् ।
कर्णो वैकर्तनः सूत प्रत्यपद्यत्किमुत्तरम् ॥ ७-१६०-४६ (५२२६१)
यो ह्यस्पर्धत पार्थेन नित्यमेव महारथः ।
आशंसते च बीभत्सुं युद्धे जेतुं सुदारुणम् ॥ ७-१६०-४७ (५२२६२)
स तु तं सहसा प्राप्तं नित्यमत्यन्तवैरिणम् ।
कर्णो वैकर्तनः सूत किमुत्तरमपद्यत ॥ ७-१६०-४८ (५२२६३)
सञ्जय उवाच। ७-१६०-४९क्ष् (४७०३)
आयान्तं पाण्डवं दृष्ट्वा गजं प्रतिगजो यथा ।
असम्भ्रान्तो रणे कर्णः प्रत्युदीयाद्धनञ्जयम् ॥ ७-१६०-४९ (५२२६४)
तमापतन्तं वेगेन वैकर्तनमजिह्मगैः ।
छादयामास पार्थोऽथ कर्णस्तु विजयं शरैः ॥ ७-१६०-५० (५२२६५)
स कर्णं शरजालेन च्छादयामास पाण्डवः ।
ततः कर्णः सुसंरब्धः शरैस्त्रिभिरविध्यत ॥ ७-१६०-५१ (५२२६६)
तस्य तल्लाघवं पार्थो नामृष्यत महाबलः ॥ ७-१६०-५२ (५२२६७)
तस्मै बाणाञ्शिलाधौतान्प्रसन्नाग्रानजिह्मगान् ।
प्राहिणोत्सूतपुत्राय त्रिशतं शत्रुतापनः ॥ ७-१६०-५३ (५२२६८)
विव्याध चैनं संरब्धो बाणेनैकेन वीर्यवान् ।
सव्ये भुजाग्रे बलवान्नाराचेन हसन्निव ॥ ७-१६०-५४ (५२२६९)
तस्य विद्धस्य बाणेन कराच्चापं पपात ह ॥ ७-१६०-५५ (५२२७०)
पुनरादाय तच्चापं निमेषार्धान्महाबलः ।
छादयामास बाणौघैः फल्गुनं कृतहस्तवत् ॥ ७-१६०-५६ (५२२७१)
शरवृष्टिं तु तां मुक्तां सूतपुत्रेण भारत ।
व्यधमच्छरवर्षेण स्मयन्निव धनञ्जयः ॥ ७-१६०-५७ (५२२७२)
तौ परस्परमासाद्य शरवर्षेण पार्थिव ।
छादयेतां महेष्वासौ कृतप्रतिकृतैषिणौ ॥ ७-१६०-५८ (५२२७३)

तदद्भुतं महद्युद्धं कर्णपाण्डवयोर्मृधे ।
क्रुद्धयोर्वासिताहेतोर्वन्ययोर्गजयोरिव ॥ ७-१६०-५९ (५२२७४)
ततः पार्थो महेष्वासो दृष्ट्वा कर्णस्य विक्रमम् ।
मुष्टिदेशे धनुस्तस्य चिच्छेद त्वरयाऽन्वितः ॥ ७-१६०-६० (५२२७५)
अश्वांश्च चतुरो भल्लैरनयद्यमसादनम् ।
सारथेश्च शिरः कायादहरच्छत्रुतापनः ॥ ७-१६०-६१ (५२२७६)
अथैनं छिन्नधन्वानं हताश्वं हतसारथिम् ।
विव्याध सायकैः पार्थश्चतुर्भिः पाण्डुनन्दनः ॥ ७-१६०-६२ (५२२७७)
हताश्वात्तु रथात्तूर्णमवप्लुत्य नरर्षभः ।
आरुरोह रथं तूर्णं कृपस्य शरपीडितः ॥ ७-१६०-६३ (५२२७८)
स नुन्नोऽर्जुनबाणौघैराचितः शल्यको यथा ।
जीवितार्थमभिप्रेप्सुः कृपस्य रथमारुहत् ॥ ७-१६०-६४ (५२२७९)
राधेयं निर्जितं दृष्ट्वा तावका भरतर्षभ ।
धनञ्जयशरैर्नुन्नाः प्राद्रवन्त दिशो दश ॥ ७-१६०-६५ (५२२८०)
द्रवतस्तान्समालोक्य राजा दुर्योधनो नृप ।
निवर्तयामास तदा वाक्यमेतदुवाच ह ॥ ७-१६०-६६ (५२२८१)
अलं द्रुतेन वः शूरास्तिष्ठध्वं क्षत्रियर्षभाः ।
एष पार्थवधायाहं स्वयं गच्छामि संयुगे ।
अहं पार्थान्हनिष्यामि सपाञ्चालान्ससोमकान् ॥ ७-१६०-६७ (५२२८२)
अद्य मे युध्यमानस्य सह गाण्डीवधन्वना ।
द्रक्ष्यन्ति विक्रमं पार्थाः कालस्येव युगक्षये ॥ ७-१६०-६८ (५२२८३)
अद्य मद्बाणजालानि विमुक्तानि सहस्रशः ।
द्रक्ष्यन्ति समरे योधाः शलभानामिवायतीः ॥ ७-१६०-६९ (५२२८४)
अद्य बाणमयं वर्षं सृजतो मम धन्विनः ।
जीमूतस्येव घर्मान्ते द्रक्ष्यन्ति युधि सैनिकाः ॥ ७-१६०-७० (५२२८५)
जेष्याम्यद्य रणे पार्थं सायकैर्नतपर्वभिः ।
तिष्ठध्वं समरे शूरा भयं त्यजत फल्गुनात् ॥ ७-१६०-७१ (५२२८६)
न हि मद्वीर्यमासाद्य फल्गुनः प्रसहिष्यति ।
यथा वेलां समासाद्य सागरो मकरालयः ॥ ७-१६०-७२ (५२२८७)
इत्युक्त्वा प्रययौ राजा सैन्येन महता वृतः ।
फल्गुनं प्रतिदुर्धर्षः क्रोधात्संरक्तलोचनः ॥ ७-१६०-७३ (५२२८८)
तं प्रयान्तं महाबाहुं दृष्ट्वा शारद्वतस्तदा ।
अश्वत्थामानमासाद्य वाक्यमेतदुवाच ह ॥ ७-१६०-७४ (५२२८९)
एष राजा महाबाहुरमर्षी क्रोधमूर्च्छितः ।
पतङ्गवृत्तिमास्थाय फल्गुनं योद्धुमिच्छति ॥ ७-१६०-७५ (५२२९०)
यावन्नः पश्यमानानां प्राणान्पार्थेन संगतः ।

न जह्यात्पुरुषव्याघ्रस्तावद्वारय कौरवम् ॥ ७-१६०-७६ (५२२९१)
यावत्फल्गुनबाणानां गोचरं नाद्य गच्छति ।
कौरवः पार्थिवो वीरस्तावद्वारय संयुगे ॥ ७-१६०-७७ (५२२९२)
यावत्पार्थशरैर्घोरैर्निर्मुक्तोरगसन्निभैः ।
न भस्मीक्रियते राजा तावद्युद्धान्निवार्यताम् ॥ ७-१६०-७८ (५२२९३)
अयुक्तमिव पश्यामि तिष्ठत्स्वस्मासु मानद ।
स्वयं युद्धाय यद्राजा पार्थं यात्यसहायवान् ॥ ७-१६०-७९ (५२२९४)
दुर्लभं जीवितं मन्ये कौरव्यस्य किरीटिना ।
युध्यमानस्य पार्थेन शार्दूलेनेव हस्तिनः ॥ ७-१६०-८० (५२२९५)
मातुलेनैवमुक्तस्तु द्रौणिः शस्त्रभृतां वरः ।
दुर्योधनमिदं वाक्यं त्वरितः समभाषत ॥ ७-१६०-८१ (५२२९६)
मयि जीवति गान्धारे न युद्धं गन्तुमर्हसि ।
मामनादृत्य कौरव्य तव नित्यं हितैषिणम् ॥ ७-१६०-८२ (५२२९७)
न हि सम्भ्रमः कार्यः पार्थस्य विजयं प्रति ।
अहमावारयिष्यामि पार्थं तिष्ठ सुयोधन ॥ ७-१६०-८३ (५२२९८)
दुर्योधन उवाच। ७-१६०-८४क्ष् (४७०४)
आचार्यः पाण्डुपुत्रान्वै पुत्रवत्परिरक्षति ।
त्वमप्युपेक्षां कुरुषे तेषु नित्यं द्विजोत्तम् ॥ ७-१६०-८४ (५२२९९)
मम वा मन्दभाग्यत्वान्मन्दस्ते विक्रमो युधि ।
धर्मराजप्नियार्थं वा द्रौपद्या वा न विद्म तत् ॥ ७-१६०-८५ (५२३००)
धिगस्तु मम लुब्धस्य यत्कृते सर्वबान्धवाः ।
सुखार्हाः परमं दुःखं प्राप्नुवन्त्यपराजिताः ॥ ७-१६०-८६ (५२३०१)
को हि शस्त्रविदां मुख्यो महेश्वरसमो युधि ।
शत्रुं न क्षपयेच्छक्तो यो न स्याद्गौतमीसुतः ॥ ७-१६०-८७ (५२३०२)
अश्वत्थामन्प्रसीदस्व नाशयैतान्ममाहितान् ।
तवास्त्रगोचरे शक्ताः स्थातुं देवा न दानवाः ॥ ७-१६०-८८ (५२३०३)
पाञ्चालान्सोमकांश्चैव जहि द्रौणे सहानुगान् ।
वयं शेषान्हनिष्यामस्त्वयैव परिरक्षिताः ॥ ७-१६०-८९ (५२३०४)
एते हि सोमका विप्र पाञ्चालाश्च यशस्विनः ।
मम सैन्येषु सङ्क्रुद्धा विचरन्ति दवाग्निवत् ॥ ७-१६०-९० (५२३०५)
तान्वारय महाबाहो केकयांश्च नरोत्तम ।
पुरा कुर्वन्ति निःशेषं रक्ष्यमाणाः किरीटिना ॥ ७-१६०-९१ (५२३०६)
अश्वत्थामंस्त्वरायुक्तो याहि शीघ्रमरिन्दम ।
आदौ वा यदि वा पश्चात्तवेदं कर्म मारिष ॥ ७-१६०-९२ (५२३०७)
त्वमुत्पन्नो महाबाहो पाञ्चालानां वधं प्रति ।
करिष्यसि जगत्सर्वमपाञ्चालं किलोद्यतः ॥ ७-१६०-९३ (५२३०८)

एवं सिद्धाऽब्रुवन्वाचो भविष्यति च तत्तथा ।
तस्मात्त्वं पुरुषव्याघ्र पाञ्चालाञ्जहि सानुगान् ॥ ७-१६०-९४ (५२३०९)
न तेऽस्त्रगोचरे शक्ताः स्थातुं देवाः सवासवाः ।
किमु पार्थाः सपाञ्चालाः सत्यमेतद्ब्रवीमि ते ॥ ७-१६०-९५ (५२३१०)
न त्वां समर्थाः सङ्ग्रामे पाण्डवाः सह सोमकैः ।
बलाद्योधयितुं वीर सत्यमेतद्ब्रवीमि ते ॥ ७-१६०-९६ (५२३११)
गच्छगच्छ महाबाहो न नः कालात्ययो भवेत् ।
इयं हि द्रवते सेना पार्तसायकपीडिता ॥ ७-१६०-९७ (५२३१२)
शक्तो ह्यसि महाबाहो दिव्येन स्वेन तेजसा ।
निग्रहे पाण्डुपुत्राणां पाञ्चालानां च मानद ॥ ॥ ७-१६०-९८ (५२३१३)

इति श्रीमन्महाभारते द्रोणपर्वणि घटोत्कचवधपर्वणि
चतुर्दशरात्रियुद्धे षष्ट्यधिकशततमोऽध्यायः ॥ १६० ॥
Mahabharata - Drona Parva - Chapter Footnotes

५-१६०-४ कञ्चिद्धनुर्धरं नगणयन्नित्यन्वयः ॥

---

द्रोनपर्व-अध्यय१६१
॥ श्रीः ॥
७.१६१. अध्यायः १६१

Mahabharata - Drona Parva - Chapter Topics
द्रौणिधृष्टद्युम्नयोर्युद्धम् । द्रौणिपराक्रमः ॥ १ ॥

Mahabharata - Drona Parva - Chapter Text

७-१६१-० (५२३१४)
सञ्जय उवाच। ७-१६१-०क्ष् (४७०५)
दुर्योधनेनैवमुक्तो द्रौणिराहवदुर्मदः ।
चकारारिवधे यत्नमिन्द्रो दैत्यवधे यथा ।
प्रत्युवाच महाबाहुस्तव पुत्रमिदं वचः ॥ ७-१६१-१ (५२३१५)
सत्यमेतन्महाबाहो यथा वदसि कौरव ।
प्रिया हि पाण्डवा नित्यं मम चापि पितुश्च मे ॥ ७-१६१-२ (५२३१६)
तथैवावां प्रियौ तेषां न तु युद्धे कुरूद्वह ।
शक्तितस्तात युध्यामस्त्यक्त्वा प्राणानभीतवत् ॥ ७-१६१-३ (५२३१७)
अहं कर्णश्च शल्यश्च कृपो हार्दिक्य एव च ।

निमेषात्पाण्डवीं सेनां क्षपयेम नृपोत्तम ॥ ७-१६१-४ (५२३१८)
ते चापि कौरवीं सेनां निमेषार्धात्कुरूद्वह ।
क्षपयेयुर्महाबाहो न स्याम यदि संयुगे ॥ ७-१६१-५ (५२३१९)
युध्याम पाण्डवाच्छक्त्या ते चाप्यस्मान्यथाबलम् ।
तेजस्तेजः समासाद्य प्रशमं यातु भारत ॥ ७-१६१-६ (५२३२०)
अशक्त्या तरसा जेतुं पाण्डवानामनीकिनी ।
जीवत्सु पाण्डुपुत्रेषु तद्धि सत्यं ब्रवीमि ते ॥ ७-१६१-७ (५२३२१)
आत्मार्थं युध्यमानास्ते समर्थाः पाण्डुनन्दनाः ।
किमर्थं तव सैन्यानि न हनिष्यन्ति भारत ॥ ७-१६१-८ (५२३२२)
त्वं तु लुब्धतमो राजन्निकृतिज्ञश्च कौरव ।
सर्वाभिशङ्की मानी च ततोऽस्मानभिशङ्कसे ॥ ७-१६१-९ (५२३२३)
मन्ये त्वं कुत्सितो राजन्पापात्मा पापपूरुषः ।
अन्यानपि स नः क्षुद्र शङ्कसे पापभावितः ॥ ७-१६१-१० (५२३२४)
अहं तु यत्नमास्थाय त्वदर्थे त्यक्तजीवितः ।
एष गच्छामि सङ्ग्रामं त्वत्कृते कुरुनन्दन ।
योत्स्येऽहं शत्रुभिः सार्धं जेष्यामि च वरान्वरान् ॥ ७-१६१-११ (५२३२५)
पाञ्चालैः सह योत्स्यामि सोमकैः केकयैस्तथा ।
पाण्डवेयैश्च सङ्ग्रामे त्वत्प्रियार्थमरिन्दम ॥ ७-१६१-१२ (५२३२६)
अद्य मद्बाणनिर्दग्धाः पाञ्चालाः सोमकास्तथा ।
सिंहेनेवार्दिता गावो विद्रविष्यन्ति सर्वशः ॥ ७-१६१-१३ (५२३२७)
अद्य धर्मसुतो राजा दृष्ट्वा मम पराक्रमम् ।
अश्वत्थाममयं लोकं मंस्यते सह सोमकैः ॥ ७-१६१-१४ (५२३२८)
आगमिष्यति निर्वेदं धर्मपुत्रो युधिष्ठिरः ।
दृष्ट्वा विनिहतान्सङ्ख्ये पाञ्चालान्सोमकैः सह ॥ ७-१६१-१५ (५२३२९)
ये मां युद्धेऽभियोत्स्यन्ति तान्हनिष्यामि भारत ।
न हि ते वीर मोक्ष्यन्ते मद्बाह्वन्तरमागताः ॥ ७-१६१-१६ (५२३३०)
एवमुक्त्वा महाबाहुः पुत्रं दुर्योधनं तव ।
अभ्यवर्तत युद्धाय त्रासयन्सर्वधन्विनः ।
चिकीर्षुस्तव पुत्राणां प्रियं प्राणभृतां वरः ॥ ७-१६१-१७ (५२३३१)
ततोऽब्रवीत्सकैकेयान्पाञ्चालान्गौतमीसुतः ॥ ७-१६१-१८ (५२३३२)
प्रहरध्वमितः सर्वे मम गात्रे महारथाः ।
स्थिरीभूताश्च युध्यध्वं दर्शयन्तोऽस्त्रलाघवम् ॥ ७-१६१-१९ (५२३३३)
एवमुक्तास्तु ते सर्वे शस्त्रवृष्टीरपातयन् ।
द्रौणिं प्रति महाराज जलं जलधरा इव ॥ ७-१६१-२० (५२३३४)
तान्निहत्य शरान्द्रौणिर्दश वीरानपोथयत् ।
प्रमुखे पाण्डुपुत्राणां धृष्टद्युम्नस्य च प्रभो ॥ ७-१६१-२१ (५२३३५)

ते हन्यमानाः समरे पाञ्चालाः सोमकास्तथा ।
परित्यज्य रणे द्रौणिं व्यद्रवन्त दिशो दश ॥ ७-१६१-२२ (५२३३६)
तान्दृष्ट्वा द्रवतः शूरान्पाञ्चालान्सहसोमकान् ।
धृष्टद्युम्नो महाराज द्रौणिमभ्यद्रवद्रणे ॥ ७-१६१-२३ (५२३३७)
ततः काञ्चनचित्राणां सजलाम्बुदनादिनाम् ।
वृतः शतेन शूराणां रथानामनिवर्तिनाम् ॥ ७-१६१-२४ (५२३३८)
पुत्रः पाञ्चालराजस्य धृष्टद्युम्नो महारथः ।
द्रौणिमित्यब्रवीद्वाक्यं दृष्ट्वा योधान्निपातितान् ॥ ७-१६१-२५ (५२३३९)
आचार्यपुत्र भद्रं ते किमन्यैर्निहतैस्तव ।
समागच्छ मया सार्धं यदि शूरोऽसि संयुगे ।
अहं त्वां निहनिष्यामि तिष्ठेदानीं ममाग्रतः ॥ ७-१६१-२६ (५२३४०)
ततस्तमाचार्यसुतं धृष्टद्युम्नः प्रतापवान् ।
मर्मभिद्भिः शरैस्तीक्ष्णैर्जघान भरतर्षभ ॥ ७-१६१-२७ (५२३४१)
ते तु पङ्क्तीकृता द्रौणिं शरा विविशुराशुगाः ।
रुक्मपुङ्खाः प्रसन्नाग्राः सर्वकायावदारणाः ।
मध्वर्थिन इवोद्दामा भ्रमराः पुष्पितं द्रुमम् ॥ ७-१६१-२८ (५२३४२)
सोऽतिविद्धो भृशं क्रुद्धः पदाक्रान्त इवोरगः ।
मानी द्रौणिरसम्भ्रान्तो बाणपाणिरभाषत ॥ ७-१६१-२९ (५२३४३)
धृष्टद्युम्न स्थिरो भूत्वा मुहूर्तं प्रतिपालय ।
यावत्त्वां निशितैर्बाणैः प्रेषयामि यमक्षयम् ॥ ७-१६१-३० (५२३४४)
द्रौणिरेवमथाभाष्य पार्षतं परवीरहा ।
छादयामास बाणौघैः समन्ताल्लुघुहस्तवत् ॥ ७-१६१-३१ (५२३४५)
स बाध्यमानः समरे द्रौणिना युद्धदुर्मदः ।
द्रौणिं पाञ्चालतनयो वाग्भिरातर्जयत्तदा ॥ ७-१६१-३२ (५२३४६)
न जानीषे प्रतिज्ञां मे विप्रोत्पत्तिं तथैव च ।
द्रोणं हत्वा किल मया हन्तव्यस्त्वं सुदुर्मते ॥ ७-१६१-३३ (५२३४७)
ततस्त्वाऽहं न हन्म्यद्य द्रोणे जीवति संयुगे ॥ ७-१६१-३४ (५२३४८)
इमां तु रजनीं प्राप्तामप्रभातां सुदुर्मते ।
निहत्य पितरं तेऽद्य ततस्त्वामपि संयुगे ।
नेष्यामि प्रेतलोकाय ह्येतन्मे मनसि स्थितम् ॥ ७-१६१-३५ (५२३४९)
यस्ते पार्थेषु विद्वेषो या भक्तिः कौरवेषु च ।
तां दर्शय स्थिरो भूत्वा न मे जीवन्विमोक्ष्यसे ॥ ७-१६१-३६ (५२३५०)
यो हि ब्राह्मण्यमुत्सृज्य क्षत्रधर्मरतो द्विजः ।
स वध्यः सर्वलोकस्य यथा त्वं पुरुषाधमः ॥ ७-१६१-३७ (५२३५१)
इत्युक्तः परुषं वाक्यं पार्षतेन द्विजोत्तमः ।
क्रोधमाहारयत्तीव्रं तिष्ठतिष्ठेति चाब्रवीत् ॥ ७-१६१-३८ (५२३५२)

निर्दहन्निव चक्षुर्भ्यां पार्षतं सोऽभ्यवैक्षत ।
छादयामास च शरैर्निःश्वसन्पन्नगो यथा ॥ ७-१६१-३९ (५२३५३)
स च्छाद्यमानः समरे द्रौणिना राजसत्तम ।
सर्वपाञ्चालसेनाभिः संवृतो रथसत्तमः ॥ ७-१६१-४० (५२३५४)
नाकम्पत महाबाहुः स्ववीर्यं समुपाश्रितः ।
सायकांश्चैव विविधानश्वत्थाम्नि मुमोच ह ॥ ७-१६१-४१ (५२३५५)
तौ पुनः सन्न्यवर्तेतां प्राणद्यूतपणे रणे ।
निपीडयन्तौ बाणौघैः परस्परममर्षिणौ ।
उत्सृजन्तौ महेष्वासौ शरवृष्टीः समन्ततः ॥ ७-१६१-४२ (५२३५६)
द्रौणिपार्षतयोर्युद्धं घोररूपं भयानकम् ।
दृष्ट्वा सम्पूजयामासुः सिद्धचारणवादिकाः ॥ ७-१६१-४३ (५२३५७)
शरौघैः पूरयन्तौ तावाकाशं च दिशस्तथा ।
अलक्ष्यौ समयुध्येतां महत्कृत्वा शरैस्तमः ॥ ७-१६१-४४ (५२३५८)
नृत्यमानाविव रणे मण्डलीकृतकार्मुकौ ।
परस्परवधे यत्तौ सर्वभूतभयङ्करौ ॥ ७-१६१-४५ (५२३५९)
अयुध्येतां महाबाहू चित्रं लघु च सुष्ठु च ।
सम्पूज्यमानौ समरे योधमुख्यैः सहस्रशः ॥ ७-१६१-४६ (५२३६०)
तौ प्रबुद्धौ रणे दृष्ट्वा वने वन्यौ गजाविव ।
उभयोः सेनयोर्हर्षस्तुमुलः समपद्यत ॥ ७-१६१-४७ (५२३६१)
सिंहनादरवाश्चासन्दध्मुः शङ्खांश्च सैनिकाः ।
वादित्राण्यभ्यवाद्यन्त शतशोऽथ सहस्रशः ॥ ७-१६१-४८ (५२३६२)
तस्मिंस्तु तुमुले युद्धे भीरुणां भयवर्धने ।
मुहूर्तमपि तद्युद्धं समरूपं तदाऽभवत् ॥ ७-१६१-४९ (५२३६३)
ततो द्रौणिर्महाराज पार्षतस्य महात्मनः ।
ध्वजं धनुस्तथा छत्रमुभौ च पार्ष्णिसारथी ।
सूतमश्वांश्च चतुरो निहत्याभ्यद्रवद्रणे ॥ ७-१६१-५० (५२३६४)
पाञ्चालांश्चैव तान्सर्वान्बाणैः सन्नतपर्वभिः ।
व्यद्रावयदमेयात्मा शतशोऽथ सहस्रशः ॥ ७-१६१-५१ (५२३६५)
ततस्तु विव्यथे सेना पाण्डवी भरतर्षभ ।
दृष्ट्वा द्रौणेर्महत्कर्म वासवस्येव संयुगे ॥ ७-१६१-५२ (५२३६६)
शतेन च शतं हत्वा पाञ्चालानां महारथः ।
त्रिभिश्च निशितैर्बाणैर्हत्वा त्रीन्वै महारथान् ॥ ७-१६१-५३ (५२३६७)
द्रौणिर्द्रुपदपुत्रस्य फल्गुनस्य च पश्यतः ।
नाशयामास पाञ्चालान्भूयिष्ठं ये व्यवस्थिताः ॥ ७-१६१-५४ (५२३६८)
ते वध्यमानाः पाञ्चालाः समरे सह सृञ्जयैः ।
अगच्छन्द्रौणिमुत्सृज्य विप्रकीर्णरथध्वजाः ॥ ७-१६१-५५ (५२३६९)

स जित्वा समरे शत्रून्द्रोणपुत्रो महारथः ।
ननाद सुमहानादं तपान्ते जलदो यथा ॥ ७-१६१-५६ (५२३७०)
स निहत्य बहूञ्छूरानश्वत्थामा व्यरोचत ।
युगान्ते सर्वभूतानि भस्म कृत्वेव पावकः ॥ ७-१६१-५७ (५२३७१)
सम्पूज्यमानो युधि कौरवेयै--
र्निर्जित्य सङ्ख्येऽरिगणान्सहस्रशः ।
व्यरोचत द्रोणसुतः प्रतापवा--
न्यथा सुरेन्द्रोऽरिगणान्निहत्य वै ॥ ॥ ७-१६१-५८ (५२३७२)

इति श्रीमन्महाभारते द्रोणपर्वणि घटोत्कचवधपर्वणि चतुर्दशरात्रियुद्धे एकषष्ट्यधिकशततमोऽध्यायः ॥१६१ ॥
Mahabharata - Drona Parva - Chapter Footnotes

५-१६१-९ निकृतिर्वञ्चनम् ॥
५-१६१-४३ वादिकाः वन्दिनः ॥
५-१६१-१६१ एकषष्ट्यधिकशततमोऽध्यायः ॥

---

द्रोनपर्व-अध्यय१६२
॥ श्रीः ॥
७.१६२. अध्यायः १६२

Mahabharata - Drona Parva - Chapter Topics
सङ्कुलयुद्धवर्णनम् ॥१ ॥

Mahabharata - Drona Parva - Chapter Text

७-१६२-० (५२३७३)
सञ्जय उवाच। ७-१६२-०क्ष् (४७०६)
ततो युधिष्ठिरश्चैव भीमसेनश्च पाण्डवः ।
द्रोणपुत्रं महाराज समन्तात्पर्यवारयन् ॥ ७-१६२-१ (५२३७४)
ततो दुर्योधनो राजा भारद्वाजेन संवृतः ।
अभ्ययात्पाण्डवान्सङ्ख्ये ततो युद्धमवर्तत ।
घोररूपं महाराज भीरूणां भयवर्धनम् ॥ ७-१६२-२ (५२३७५)
अम्बष्ठान्मालवान्वङ्गाञ्छिबींस्त्रैगर्तकानपि ।
प्राहिणोन्मृत्युलोकाय गणान्क्रुद्धो वृकोदरः ॥ ७-१६२-३ (५२३७६)
अभीषाहाञ्छूरसेनान्क्षत्रियान्युद्धदुर्मदान् ।

निकृत्य पृथिवीं चक्रे भीमः शोणितकर्दमाम् ॥ ७-१६२-४ (५२३७७)
यौधेयानद्रिजान्राजन्मद्रकान्मालवानपि ।
प्राहिणोन्मृत्युलोकाय किरीटी निशितैः शरैः ॥ ७-१६२-५ (५२३७८)
प्रगाढमञ्चोगतिभिर्नाराचैरभिताडिताः ।
निपेतुर्द्विरदा भूमौ द्विशृङ्गा इव पर्वताः ॥ ७-१६२-६ (५२३७९)
निकृत्तैर्हस्तिहस्तैश्च चेष्टमानैरितस्ततः ।
रराज वसुधाऽऽकीर्णा विसर्पद्भिरिवोरगैः ॥ ७-१६२-७ (५२३८०)
क्षिप्तैः कनकचित्रैश्च नृपच्छत्रैः क्षितिर्बभौ ।
द्यौरिवादित्यचन्द्राद्यैर्ग्रहैः कीर्णा युगक्षये ॥ ७-१६२-८ (५२३८१)
हत प्रहरताभीता विध्यत व्यवकृन्तत ।
इत्यासीत्तुमुलः शब्दः शोणाश्वस्य रथं प्रति ॥ ७-१६२-९ (५२३८२)
द्रोणस्तु परमक्रुद्धो वायव्यास्त्रेण संयुगे ।
व्यधमत्तान्महवायुर्मेघानिव दुरत्ययः ॥ ७-१६२-१० (५२३८३)
ते हन्यमाना द्रोणेन पाञ्चालाः प्राद्रवन्भयात् ।
पश्यतो भीमसेनस्य पार्थस्य च महात्मनः ॥ ७-१६२-११ (५२३८४)
ततः किरीटि भीमश्च सहसा सन्न्यवर्तताम् ।
महता रथवंशेन परिगृह्य बलं महत् ॥ ७-१६२-१२ (५२३८५)
बीभत्सुर्दक्षिणं वार्श्वमुत्तरं तु वृकोदरः ।
भारद्वाजं शरौघाभ्यां महद्भ्यामभ्यवर्षताम् ॥ ७-१६२-१३ (५२३८६)
तौ तथा सृञ्जयाश्चैव पाञ्चालाश्च महौजसः ।
अन्वगच्छन्महाराज मात्स्यैश्च सह सोमकैः ॥ ७-१६२-१४ (५२३८७)
तथैव तव पुत्रस्य रथोदाराः प्रहारिणः ।
महत्या सेनया राजञ्जग्मुर्द्रोणरथं प्रति ॥ ७-१६२-१५ (५२३८८)
ततः सा भारती सेना हन्यमाना किरीटिना ।
तमसा निद्रया चैव पुनरेव व्यदीर्यत ॥ ७-१६२-१६ (५२३८९)
द्रोणेन वार्यमाणास्ते स्वयं तव सुतेन च ।
नाशक्यन्त महाराज योधा वारयितुं तदा ॥ ७-१६२-१७ (५२३९०)
सा पाण्डुपुत्रस्य शरैर्दीर्यमाणा महाचमूः ।
तमसा संवृते लोके व्यद्रवत्सर्वतोमुखी ॥ ७-१६२-१८ (५२३९१)
उत्सृज्य शतशो वाहांस्तत्र केचिन्नराधिपाः ।
प्राद्रवन्त महाराज भयाविष्टाः समन्ततः ॥ ॥ ७-१६२-१९ (५२३९२)

इति श्रीमन्महाभारते द्रोणपर्वणि घटोत्कचवधपर्वणि
चतुर्दशरात्रियुद्धे द्विषष्ट्यधिकशततमोऽध्यायः ॥१६२ ॥

---

द्रोनपर्व-अध्यय१६३

॥ श्रीः ॥
७.१६३. अध्यायः १६३

Mahabharata - Drona Parva - Chapter Topics
सात्यकिना सोमदत्तवधः ॥ १ ॥
द्रोणयुधिष्ठिरयुद्धम् ॥ २ ॥

Mahabharata - Drona Parva - Chapter Text

७-१६३-० (५२३९३)
सञ्जय उवाच। ७-१६३-०क्ष् (४७०७)
सोमदत्तं तु सम्प्रेक्ष्य विधुन्वानं महद्धनुः ।
सात्यकिः प्राह यन्तारं सोमदत्ताय मां वह ॥ ७-१६३-१ (५२३९४)
न ह्यहत्वा रणे शत्रुं सोमदत्तं महाबलम् ।
निवर्तिष्ये रणात्सूत सत्यमेतद्वचो मम ॥ ७-१६३-२ (५२३९५)
ततः सम्प्रैषयद्यन्ता सैन्धवांस्तान्मनोजवान् ।
तुरङ्गामाञ्छङ्खवर्णान्सर्वशब्दातिगान्रणे ॥ ७-१६३-३ (५२३९६)
तेऽवहन्युयुधानं तु मनोमारुतरंहसः ।
यथेन्द्रं हरयो राजन्पुरा दैत्यवधोद्यतम् ॥ ७-१६३-४ (५२३९७)
तमापतन्तं सम्प्रेक्ष्य सात्वतं रभसं रणे ।
सोमदत्तो महाबाहुरसम्भ्रान्तो न्यवर्तत ॥ ७-१६३-५ (५२३९८)
विमुञ्चञ्छरवर्षाणि पर्जन्य इव वृष्टिमान् ।
छादयामास शैनेयं जलदो भास्करं यथा ॥ ७-१६३-६ (५२३९९)
असम्भ्रान्तश्च समरे सात्यकिः कुरुपुङ्गवम् ।
छादयामास बाणौघैः समन्ताद्भरतर्षभ ॥ ७-१६३-७ (५२४००)
सोमदत्तस्तुतं षष्ट्या विव्याधोरसि माधवम् ।
सात्यकिश्चापि तं राजन्नविध्यत्सायकैः शितैः ॥ ७-१६३-८ (५२४०१)
तावन्योन्यं शरैः कृत्तौ व्यराजेतां नरर्षभौ ।
सुपुष्पौ पुष्पसमये पुष्पिताविव किंशकौ ॥ ७-१६३-९ (५२४०२)
रुधिरोक्षितसर्वाङ्गौ कुरुवृष्णियशस्करौ ।
परस्परमवेक्षेतां दहन्ताविव लोचनैः ॥ ७-१६३-१० (५२४०३)
रथमण्डलमार्गेषु चरन्तावरिमर्दनौ ।
घोररूपौ हितावास्तां वृष्टिमन्ताविवाम्बुदौ ॥ ७-१६३-११ (५२४०४)
शरसम्भिन्नगात्रौ तु सर्वतः शखलीकृतौ ।
श्वाविधाविव राजेन्द्र दृश्येतां शरविक्षतौ ॥ ७-१६३-१२ (५२४०५)
सुवर्णपुङ्खैरिषुभिराचितौ तौ व्यराजताम् ।

खद्योतैरावृतौ राजन्प्रावृषीव वनस्पती ॥ ७-१६३-१३ (५२४०६)
सम्प्रदीपितसर्वाङ्गौ सायकैस्तैर्महारथौ ।
अदृश्येतां रणे क्रुद्धावुल्काभिरिव कुञ्जरौ ॥ ७-१६३-१४ (५२४०७)
ततो युधि महारज सोमदत्तो महारथः ।
अर्धचन्द्रेम चिच्छेद माधवस्य महद्धनुः ॥ ७-१६३-१५ (५२४०८)
अथैनं पञ्चविंशत्या सायकानां समार्पयत् ।
त्वरमाणस्त्वराकाले पुनश्च दशभिः शरैः ॥ ७-१६३-१६ (५२४०९)
अथान्यद्धनुरादाय सात्यकिर्वेगवत्तरम् ।
पञ्चभिः सायकैस्तूर्णं सोमदत्तमविध्यत ॥ ७-१६३-१७ (५२४१०)
ततोऽपरेण भल्लेन ध्वजं चिच्छेद काञ्चनम् ।
बाह्लीकस्य रणे राजन्सात्यकिः प्रहसन्निव ॥ ७-१६३-१८ (५२४११)
सोमदत्तस्त्वसम्भ्रान्तो दृष्ट्वा केतुं निपातितम् ।
शैनेयं पञ्चविंशत्या सायकानां समाचिनोत् ॥ ७-१६३-१९ (५२४१२)
सात्वतोऽपि रणे क्रुद्धः सोमदत्तस्य धन्विनः ।
धनुश्छिच्छेद भल्लेन क्षुरप्रेण शितेन ह ॥ ७-१६३-२० (५२४१३)
अथैनं रुक्मपुङ्खानां शतेन नतपर्वणाम् ।
आचिनोद्बहुधा राजन्भग्नदंष्ट्रमिव द्विपम् ॥ ७-१६३-२१ (५२४१४)
अथान्यद्धनुरादाय सोमदत्तो महारथः ।
सात्यकिं छादयामास शरवृष्ट्या महाबलः ॥ ७-१६३-२२ (५२४१५)
सोमदत्तं तु सङ्क्रुद्धो रणे विव्याध सात्यकिः ।
सात्यकिं शरजालेन सोमदत्तोऽप्यपीडयत् ॥ ७-१६३-२३ (५२४१६)
दशभिः सात्वतस्यार्थे भीमोऽहन्बाह्लिकात्मजम् ।
सोमदत्तोप्यसम्भ्रान्तो भीममार्च्छच्छितैः शरैः ॥ ७-१६३-२४ (५२४१७)
ततस्तु सात्वतस्यार्थे भीमसेनो नवं दृढम् ।
मुमोच परिघं घोरं सोमदत्तस्य वक्षसि ॥ ७-१६३-२५ (५२४१८)
तमापतन्तं वेगेन परिघं घोरदर्शनम् ।
द्विधा चिच्छेद समरे प्रहसन्निव कौरवः ॥ ७-१६३-२६ (५२४१९)
स पपात द्विधा च्छिन्न आयसः परिघो महान् ।
महीधरस्येव महच्छिखरं वज्रदारितम् ॥ ७-१६३-२७ (५२४२०)
ततस्तु सात्यकी राजन्सोमदत्तस्य संयुगे ।
धनुश्चिच्छेद भल्लेन हस्तावापं च पञ्चभिः ॥ ७-१६३-२८ (५२४२१)
ततश्चतुर्भिश्च शरैस्तूर्णं तांस्तुरगोत्तमान् ।
समीपं प्रेषयामास प्रेतराजस्य भारत ॥ ७-१६३-२९ (५२४२२)
सारथेश्च शिरः कायाद्भल्लेन नतपर्वणा ।
जहार नरशार्दूलः प्रहसञ्छिनिपुङ्गवः ॥ ७-१६३-३० (५२४२३)
ततः शरं महाघोरं ज्वलन्तमिव पावकम् ।

मुमोच सात्वतो राजन्स्वर्णपुङ्गं शिलाशितम् ॥ ७-१६३-३१ (५२४२४)
स विमुक्तो बलवता शैनेयेन शरोत्तमः ।
घोरस्तस्योरसि विभो निपपाताशु भारत ॥ ७-१६३-३२ (५२४२५)
सोऽतिविद्धो महाराज सात्वतेन महारथः ।
सोमदत्तो महाबाहुर्निपपात ममार च ॥ ७-१६३-३३ (५२४२६)
तं दृष्ट्वा निहतं तत्र सोमदत्तं महारथाः ।
महता शरवर्षेण युयुधानमुपाद्रवन् ॥ ७-१६३-३४ (५२४२७)
छाद्यमानं शरैर्दृष्ट्वा युयुधानं युधिष्ठिरः ।
पाण्डवाश्च महाराज सह सर्वैः प्रभद्रकैः ।
महत्या सेनया सार्धं द्रोणानीकमुपाद्रवन् ॥ ७-१६३-३५ (५२४२८)
ततो युधिष्ठिरः क्रुद्धस्तावकानां महाबलम् ।
शरैर्विद्रावयामास भारद्वाजस्य पश्यतः ॥ ७-१६३-३६ (५२४२९)
सैन्यानि द्रावयन्तं तु द्रोणो दृष्ट्वा युधिष्ठिरम् ।
अभिदुद्राव वेगेन क्रोधसंरक्तलोचनः ॥ ७-१६३-३७ (५२४३०)
ततः सुनिशितैर्बाणैः पार्थं विव्याध सप्तभिः ।
युधिष्ठिरोऽपि सङ्क्रुद्धः प्रतिविव्याध पञ्चभिः ॥ ७-१६३-३८ (५२४३१)
सोऽतिविद्धो महाबाहुः सृक्विणी परिसंलिहन् ।
युधिष्ठिरस्य चिच्छेद ध्वजं कार्मुकमेव च ॥ ७-१६३-३९ (५२४३२)
स च्छिन्नधन्वा त्वरितस्त्वराकाले नृपोत्तमः ।
अन्यदादत्त वेगेन कार्मुकं समरे दृढम् ॥ ७-१६३-४० (५२४३३)
ततः शरसहस्रेण द्रोणं विव्याध पार्थिवः ।
साश्वसूतध्वजरथं तदद्भुतमिवाभवत् ॥ ७-१६३-४१ (५२४३४)
ततो मुहूर्तं व्यथितः शरपातप्रपीडितः ।
निषसाद रथोपस्थे द्रोणो भरतसत्तम ॥ ७-१६३-४२ (५२४३५)
प्रतिलभ्य ततः संज्ञां मुहूर्ताद्द्विजसत्तमः ।
क्रोधेन महताऽऽविष्टो वायव्यास्त्रमवासृजत् ॥ ७-१६३-४३ (५२४३६)
असम्भ्रान्तस्ततः पार्थो वायव्येनैव वीर्यवान् ।
तदस्त्रमस्त्रेण रणे स्तम्भयामास भारत ॥ ७-१६३-४४ (५२४३७)
चिच्छेद च धनुर्दीर्घं ब्राह्मणस्य च पाण्डवः ।
ततोऽन्यद्धनुरादत्त द्रोणः क्षत्रियमर्दनः ।
तदप्यस्य शितैर्भल्लैश्चिच्छेद कुरुपुङ्गवः ॥ ७-१६३-४५ (५२४३८)
ततोऽब्रवीद्वासुदेवः कुन्तीपुत्रं युधिष्ठिरम् ॥ ७-१६३-४६ (५२४३९)
युधिष्ठिर महाबाहो यत्त्वां वक्ष्यामि तच्छृणु ।
उपारमस्व युद्धे त्वं द्रोणाद्भरतसत्तम ॥ ७-१६३-४७ (५२४४०)
यतते हि सदा द्रोणो ग्रहणे तव संयुगे ।
नानुरूपमहं मन्ये युद्धमस्य त्वया सह ॥ ७-१६३-४८ (५२४४१)

योऽस्य सृष्टो विनाशाय स एवैनं हनिष्यति ।
परिवर्ज्य गुरुं याहि यत्र राजा सुयोधनः ॥ ७-१६३-४९ (५२४४२)
राजा राज्ञा हि योद्धव्यो नाराज्ञा युद्धमिष्यते ।
तत्र त्वं गच्छ कौन्तेय हस्त्यश्वरथसंवृतः ॥ ७-१६३-५० (५२४४३)
यावन्मात्रेण च मया सहायेन धनञ्जयः ।
भीमश्च रथशार्दूलो युध्यते कौरवैः सह ॥ ७-१६३-५१ (५२४४४)
वासुदेववचः श्रुत्वा धर्मराजो युधिष्ठिरः ।
मुहूर्तं चिन्तयित्वा तु ततो दारुणमाहवम् ॥ ७-१६३-५२ (५२४४५)
प्रायाद्द्रुतममित्रघ्नो यत्र भीमो व्यवस्थितः ।
विनिघ्नंस्तावकान्योधान्व्यादितास्य इवान्तकः ॥ ७-१६३-५३ (५२४४६)
रथघोषेण महता नादयन्वसुधातलम् ।
पर्जन्य इव धर्मान्ते नादयन्वै दिशो दश ।
भीमस्य निघ्नतः शत्रून्पार्ष्णिं जाग्रह पाण्डवः ॥ ७-१६३-५४ (५२४४७)
द्रोणोऽपि पाण्डुपाञ्चालान्व्यधमद्रजनीमुखे ।
ग्नादयंस्तलघोषेण तव सैन्यानि मारिष'॥ ॥ ७-१६३-५५ (५२४४८)

इति श्रीमन्महाभारते द्रोणपर्वणि घटोत्कचवधपर्वणि
चतुर्दशरात्रियुद्धे त्रिषष्ट्यधिकशततमोऽध्यायः ॥१६३ ॥
Mahabharata - Drona Parva - Chapter Footnotes

५-१६३-१८ बाह्लीकस्य सोमदत्तस्य ॥
५-१६३-१६३ त्रिषष्ट्यधिकशततमोऽध्यायः ॥

---

द्रोनपर्व-अध्यय१६४
॥ श्रीः ॥
७.१६४. अध्यायः १६४

Mahabharata - Drona Parva - Chapter Topics
सेनाद्वये दीपोद्योxxx नम् ॥१ ॥

Mahabharata - Drona Parva - Chapter Text

७-१६४-० (५२४४९)
सञ्जय उवाच। ७-१६४-०क्ष् (४७०८)
वर्तमाने यथा यद्धे घोररूपे भयावहे ।
तमसा संवृते लोके रजसा च महीपते ॥ ७-१६४-१ (५२४५०)

नापश्यन्त रणे योधाः परस्परमवस्थिताः ।
अनुमानेन संज्ञाभिर्युद्धं तद्ववृधे महत् ॥ ७-१६४-२ (५२४५१)
नरनागाश्वमथनं परमं रोमहर्षणम् ।
द्रोणकर्णकृपा वीरा भीमपार्षतसात्यकाः ।
अन्योन्यं क्षोभयामासुः सैन्यानि नृपसत्तम ॥ ७-१६४-३ (५२४५२)
वध्यमानानि सैन्यानि समन्तात्तैर्महारथैः ।
तमसा संवृते चैव समन्ताद्विप्रदुद्रुवुः ॥ ७-१६४-४ (५२४५३)
ते सर्वतो विद्रवन्तो योधा विध्वस्तचेतनाः ।
अहन्यन्त महाराज धावमानाश्च संयुगे ॥ ७-१६४-५ (५२४५४)
महारथसहस्राणि जघ्नुरन्योन्यमाहवे ।
अन्ये तमसि मूढानि पुत्रस्य तव मन्त्रिते ॥ ७-१६४-६ (५२४५५)
ततः सर्वाणि सैन्यानि सेनागोपाश्च भारत ।
व्यमुह्यन्त रणे तत्र तमसा संवृते सति ॥ ७-१६४-७ (५२४५६)
धृतराष्ट्र उवाच। ७-१६४-८क्ष् (४७०९)
तेषां संलोड्यमानानां पाण्डवैर्विहतौजसाम् ।
अन्धे तमसि मग्नानामासीत्किं वो मनस्तदा ॥ ७-१६४-८ (५२४५७)
कथं प्रकाशस्तेषां वा मम सैन्यस्य वा पुनः ।
बभूव लोके तमसा तथा सञ्जय संवृते ॥ ७-१६४-९ (५२४५८)
सञ्जय उवाच। ७-१६४-१०क्ष् (४७१०)
ततः सर्वाणि सैन्यानि हतशिष्टानि यानि वै ।
सेनागोप्तॄनथादिश्य पुनर्व्यूहमकल्पयत् ॥ ७-१६४-१० (५२४५९)
द्रोणः पुरस्ताज्जघने तु शल्य--
स्तथा द्रौणिः कृतवर्मा सौबलश्च ।
स्वयं तु सर्वाणि बलानि राज--
न्राजाऽभ्ययाद्गोपयन्वै निशायाम् ॥ ७-१६४-११ (५२४६०)
उवाच सर्वांश्च पदातिसङ्घा--
न्दुर्योधनः पार्थिवसान्त्वपूर्वम् ।
उत्सृज्य सर्वे परमायुधानि
गृह्णीत हस्तैर्ज्वलितान्प्रदीपान् ॥ ७-१६४-१२ (५२४६१)
ते चोदिताः पार्थिवसत्तमेन
ततः प्रहृष्टा जगृहुः प्रदीपान् ॥ ७-१६४-१३ (५२४६२)
देवर्षिगन्धर्वसुरर्षिसङ्घा
विद्याधराश्चाप्सरसां गणाश्च ।
नागाः सयक्षोरगकिन्नराश्च
हृष्टा दिविस्था जगृहुः प्रदीपान् ॥ ७-१६४-१४ (५२४६३)
दिग्धैर्वतेभ्यश्च समापतन्तो--

ऽदृश्यन्त दीपाः ससुगन्धितैलाः ।
विशेषतो नारदपर्वताभ्यां
सम्बोध्यमानाः कुरुपाण्डवार्थम् ॥ ७-१६४-१५ (५२४६४)
सा भूय एव ध्वजिनी विभक्ता
व्यरोचताग्निप्रभया निशायाम् ।
महाधनैराभरणैश्च दिव्यैः
शस्त्रैश्च दीप्तैरपि सम्पतद्भिः ॥ ७-१६४-१६ (५२४६५)
रथेरथे पञ्च विदीपकास्तु
प्रदीपकास्तत्र गजे त्रयश्च ।
प्रत्यश्वमेकश्च महाप्रदीपः
कृतास्तु तैः पाण्डवैः कौरवेयैः ॥ ७-१६४-१७ (५२४६६)
क्षणेन सर्वे विहिताः प्रदीपा
व्यादीपयन्तो ध्वजिनीं तवासु ॥ ७-१६४-१८ (५२४६७)
सर्वास्तु सेना व्यतिसेव्यमानाः
पदातिभिः पावकतैलहस्तैः ।
प्रकाश्यमाना ददृशुर्निशायां
यथान्तरिक्षे जलदास्तडिद्भिः ॥ ७-१६४-१९ (५२४६८)
प्रकाशितायां तु ततो ध्वजिन्यां
द्रोणोऽग्निकल्पः प्रतपन्सपत्नान् ।
रराज राजेन्दर सुवर्णवर्मा
मध्यं गतः सूर्य इवांशुमाली ॥ ७-१६४-२० (५२४६९)
जाम्बूनदेष्वाभरणेषु चैव
निष्केषु शुद्धेषु शरासनेषु ।
पीतेषु शस्त्रेषु च पावकस्य
प्रतिप्रभास्तत्र तदा बभूवुः ॥ ७-१६४-२१ (५२४७०)
गदाश्च शैक्याः परिघाश्च शुभ्रा
रथेषु शक्त्यश्च विवर्तमानाः ।
प्रतिप्रभारश्मिभिराजमीढ
पुनःपुनः सञ्जनयन्ति दीपान् ॥ ७-१६४-२२ (५२४७१)
छत्राणि वालव्यजनानि खड्गा
दीप्ता महोल्काश्च तथैव राजन् ।
व्याघूर्णमानाश्च सुवर्णमाला
व्यायच्छतां तत्र तदा विरेजुः ॥ ७-१६४-२३ (५२४७२)
शस्त्रप्रभाभिश्च विराजमानं
दीपप्रभाभिश्च तदा बलं तत् ।
प्रकाशितं चाभरणप्रभाभि--

भृशं प्रकाशं नृपते बभूव ॥ ७-१६४-२४ (५२४७३)
पीतानि शस्त्राण्यसृगुक्षितानि
वीरावधूतानि तनुच्छदानि ।
दीप्तां प्रभां प्राजनयन्त तत्र
तपात्यये विद्युदिवान्तरिक्षे ॥ ७-१६४-२५ (५२४७४)
प्रकम्पितानामभिघातवेगै--
रभिघ्नतां चापततां जवेन ।
वक्राण्यकाशन्त तदा नराणां
वाय्वीरितानीव महाम्बुजानि ॥ ७-१६४-२६ (५२४७५)
महावने दारुमये प्रदीप्ते
यथा प्रभा भास्करस्यापि नश्येत् ।
तथा तदाऽऽसीद्ध्वजिनी प्रदीप्ता
महाभया भारत भीमरूपा ॥ ७-१६४-२७ (५२४७६)
तत्संप्रदीप्तां बलमस्मदीयं
निशाम्य पार्थास्त्वरितास्तथैव ।
सर्वेषु सैन्येषु पदातिसङ्घा--
नचोदयंस्तेऽपि चक्रुः प्रदीपान् ॥ ७-१६४-२८ (५२४७७)
गजेगजे सप्त कृपाः प्रदीपा
रथेरथे चैव दश प्रदीपाः ।
द्वावश्वपृष्ठे परिपार्श्वतोऽन्ये
ध्वजेषु चान्ये जघनेषु चान्ये ॥ ७-१६४-२९ (५२४७८)
सेनासु सर्वासु च पार्श्वतोऽन्ये
पश्चात्पुरस्ताच्च समन्ततश्च ।
मध्ये तथाऽन्ये ज्वलिताग्निहस्ता
व्यदीपयन्पाण्डुसुतस्य सेनाम् ॥ ७-१६४-३० (५२४७९)
मध्ये तथाऽन्ये ज्वलिताग्निहस्ताः
सेनाद्वयेऽपि स्म नरा विचेरुः ॥ ७-१६४-३१ (५२४८०)
सर्वेषु सैन्येषु पदातिसङ्घा
विमिश्रिता हस्तिरथाश्वबृन्दैः ।
व्यदीपयंस्ते ध्वजिनीं प्रदीप्ता--
स्तथा बलं पाण्डवेयाभिगुप्तम् ॥ ७-१६४-३२ (५२४८१)
तेन प्रदीप्तेन तथा प्रदीप्तं--
बलं तवासीद्बलवद्बलेन ।
भाः कुर्वता भानुमता ग्रहेण
दिवाकरेणाग्निरिवाभिगुप्तः ॥ ७-१६४-३३ (५२४८२)
तयोः प्रभाः पृथिवीमन्तरिक्षं

सर्वा व्यतिक्रम्य दिशश्च वृद्धाः ।
तेन प्रकाशेन भृशं प्रकाशं
बभूव तेषां तव चैव सैन्यम् ॥ ७-१६४-३४ (५२४८३)
तेन प्रकाशेन दिवं गतेन
सम्बोधिता देवगणाश्च राजन् ।
गन्धर्वयक्षासुरसिद्धसङ्घाः
समागमन्नप्सरसश्च सर्वाः ॥ ७-१६४-३५ (५२४८४)
तद्देवगन्धर्वसमाकुलं च
यक्षासुरेन्द्राप्सरसां गणैश्च ।
हतैश्च शूरैर्दिवमारुहद्भि--
रायोधनं दिव्यकल्पं बभूव ॥ ७-१६४-३६ (५२४८५)
रथाश्वनागाकुलदीपदीप्तं
संरब्धयोधं हतविद्रुताश्वम् ।
महद्बलं व्यूढरथाश्वनागं
सुरासुरव्यूहसमं बभूव ॥ ७-१६४-३७ (५२४८६)
तच्छक्तिसङ्घाकुलचण्डवातं
महारथाभ्रं गजवाजिघोषम् ।
शस्त्रौगवर्षं रुधिराम्बुधारं
निशि प्रवृत्तं रथदुर्दिनं तत् ॥ ७-१६४-३८ (५२४८७)
तस्मिन्महाग्निप्रतिमो महात्मा
सन्तापयन्पाण्डवान्विप्रमुख्यः ।
गभस्तिभिर्मध्यगतो यथाऽर्को
वर्षात्यये तद्वदभून्नरेन्द्र ॥ ॥ ७-१६४-३९ (५२४८८)

इति श्रीमन्महाभारते द्रोणपर्वणि घटोत्कचवधपर्वणि
चतुर्दशरात्रियुद्धे चतुःषष्ठ्यधिकशततमोऽध्यायः ॥१६४ ॥
Mahabharata - Drona Parva - Chapter Footnotes

५-१६४-६ अन्धे आन्ध्यहेतौ ॥
५-१६४-८ वो युष्मत्सम्बन्धिनां मनः किं किंविधम् ।कातरं धृष्टं वेत्यर्थः ॥
५-१६४-१० तत इति ।द्रोण इत्यपकृयते।तेषां सैन्यानां व्यूहमिध्याहृत्य योज्यम् ॥
५-१६४-१४ देवर्षीति ।भुवि पदातिभिर्दीपेषु गृहीतेषु दिविस्था देवा अपि दीपान् जगृहुर्युद्धोत्सवप्रेक्षकाः ॥
५-१६४-१६४ चतुःषष्ठ्यधिकशततमोऽध्यायः ॥

द्रोनपर्व-अध्यय१६५
॥ श्रीः ॥
७.१६५. अध्यायः १६५

Mahabharata - Drona Parva - Chapter Topics
सङ्कुलयुद्धम् ॥ ३ ॥

Mahabharata - Drona Parva - Chapter Text

७-१६५-० (५२४८९)
सञ्जय उवाच। ७-१६५-०क्ष् (४७११)
प्रकाशिते तदा लोके रजसा तमसावृते ।
समाजग्मुरथो वीराः परस्परवधैषिणः ॥ ७-१६५-१ (५२४९०)
ते समेत्य रणे राजञ्शस्त्रप्रासासिधारिणः ।
परस्परमुदैक्षन्त परस्परकृतागसः ॥ ७-१६५-२ (५२४९१)
प्रदीपानां सहस्रैश्च दीप्यमानैः समन्ततः ।
रत्नाचितैः स्वर्णदण्डैर्गन्धतैलावसिञ्चितैः ॥ ७-१६५-३ (५२४९२)
देवगन्धर्वदीपाद्यैः प्रभाभिरधिकोज्ज्वलैः ।
विरराज तदा भूमिर्ग्रहैर्द्यौरिव भारत ॥ ७-१६५-४ (५२४९३)
उल्काशतैः प्रज्वलितै रणभूमिर्व्यराजत ।
दह्यमानेव लोकानामभावे च वसुन्धरा ॥ ७-१६५-५ (५२४९४)
व्यदीप्यन्त दिशः सर्वाः प्रदीपैस्तैः समन्ततः ।
वर्षाप्रदोषे खद्योतैर्वृता वृक्षा इवाबभुः ॥ ७-१६५-६ (५२४९५)
असज्जन्त ततो वीरा विरेष्वेव पृथक्पृथक् ।
नागा नागैः समाजग्मुस्तुरगा हयसादिभिः ।
रथा रथवरैरेव समजग्मुर्मुदा युताः ॥ ७-१६५-७ (५२४९६)
तस्मिन्रात्रिमुखे घोरे तव पुत्रस्य शासनात् ।
चतुरङ्गस्य सैन्यस्य सम्पातश्च महारनभूत् ॥ ७-१६५-८ (५२४९७)
ततोऽर्जुनो महाराज कौरवाणामनीकिनीम् ।
व्यधमत्त्वरया युक्तः क्षपयन्सर्वपार्थिवान् ॥ ७-१६५-९ (५२४९८)
धृतराष्ट्र उवाच। ७-१६५-१०क्ष् (४७१२)
तस्मिन्प्रविष्टे संरब्धे मम पुत्रस्य वाहिनीम् ।
अमृष्यमाणे दुर्धर्षे कथमासीन्मनो हि वः ॥ ७-१६५-१० (५२४९९)
किमकुर्वत सैन्यानि प्रविष्टे परषीडने ।
दुर्योधनश्च किं कृत्यं प्राप्तकालममन्यत ॥ ७-१६५-११ (५२५००)

के चैनं समरे वीरं प्रत्युद्ययुररिन्दमाः ।
द्रोणं च के व्यरक्षन्त प्रविष्टे श्वेतवाहने ॥ ७-१६५-१२ (५२५०१)
केऽरक्षन्दक्षिणं चक्रं के च द्रोणस्य सव्यतः ।
के पृष्ठतश्चाप्यभवन्वीरा वीरान्विनिघ्नतः ।
के पुरस्तादगच्छन्त निघ्नन्तः शास्त्रवान्रणे ॥ ७-१६५-१३ (५२५०२)
यत्प्राविशन्महेष्वासः पाञ्चालनापराजिताः ।
नृत्यन्निव नरव्याघ्रो रथमार्गेषु वीर्यवान् ॥ ७-१६५-१४ (५२५०३)
यो ददाह शरैर्द्रोणः पाञ्चालानां रथव्रजान् ।
धूमकेतुरिव क्रुद्धः कथं मृत्युमुपेयिवान् ॥ ७-१६५-१५ (५२५०४)
अव्यग्रानेव हि परान्कथयस्यपराजितान् ।
हृष्टानुदीर्णान्सङ्ग्रामे न तथा सूत मामकान् ॥ ७-१६५-१६ (५२५०५)
हतांश्चैव विदीर्णांश्च विप्रकीर्णांश्च शंससि ।
रथिनो विरथांश्चैव कृतान्युद्धेषु मामकान् ॥ ७-१६५-१७ (५२५०६)
सञ्जय उवाच। ७-१६५-१८क्ष् (४७१३)
द्रोणस्य मतमाज्ञाय योद्धुकामस्य तां निशाम् ।
दुर्योधनो महाराज वश्यान्भ्रातॄनुवाच ह ॥ ७-१६५-१८ (५२५०७)
कर्णं च वृषसेनं च मद्रराजं च कौरव ।
दुर्धर्षं दीर्घबाहुं च ये च तेषां पदानुगाः ॥ ७-१६५-१९ (५२५०८)
द्रोणं यत्ताः पराक्रान्ताः सर्वे रक्षन्तु पृष्ठतः ।
हार्दिक्यो दक्षिणं चक्रं शल्यश्चैवोत्तरं तथा ॥ ७-१६५-२० (५२५०९)
त्रिगर्तानां च ये शूरा हतशिष्टा महारथाः ।
तांश्चैव पुरतः सर्वान्पुत्रस्ते समचोदयत् ॥ ७-१६५-२१ (५२५१०)
दुर्योधन उवाच। ७-१६५-२२क्ष् (४७१४)
आचार्यो हि सुसंयत्तो भृशं यत्ताश्च पाण्डवाः ।
तं रक्षत सुसंयत्ता निघ्नन्तं शास्त्रवान्रणे ॥ ७-१६५-२२ (५२५११)
द्रोणो हि बलवान्युद्धे क्षिप्रहस्तः प्रतापवान् ।
निर्जयेत्त्रिदशान्युद्धे किमु पार्थान्ससोमकान् ॥ ७-१६५-२३ (५२५१२)
ते यूयं सहिताः सर्वे भृशं यत्ता महारथाः ।
द्रोणं रक्षत पाञ्चालाद्धृष्टद्युम्नान्महारथात् ॥ ७-१६५-२४ (५२५१३)
पाण्डवीयेषु सैन्येषु न तं पश्याम कञ्चन ।
यो योधयेद्रणे द्रोणं धृष्टद्युम्नादृते पुमान् ॥ ७-१६५-२५ (५२५१४)
तस्मात्सर्वात्मना मन्ये भारद्वाजस्य रक्षणम् ।
सुगुप्तः पाण्डवान्हन्यात्सृञ्जयांश्च ससोमकान् ॥ ७-१६५-२६ (५२५१५)
सृञ्जयेष्वथ सर्वेषु निहतेषु चमूमुखे ।
धृष्टद्युम्नं रमे द्रौणिर्हनिष्यति न संशयः ॥ ७-१६५-२७ (५२५१६)
तथाऽर्जुनं च राधेयो हनिष्यति महारथः ।

भीमसेनमहं चापि युद्धेजेष्यामि दीक्षितः ।
शेषांश्च पाण्डवान्योधाः प्रसभं हीनतेजसः ॥ ७-१६५-२८ (५२५१७)
सोयं मम जयो व्यक्तो दीर्घकालं भविष्यति ।
तस्माद्रक्षत सङ्ग्रामे द्रोणमेव महारथम् ॥ ७-१६५-२९ (५२५१८)
इत्युक्त्वा भरतश्रेष्ठ पुत्रो दुर्योधनस्तव ।
व्यादिदेश तथा सैन्यं तस्मिंस्तमसि दारुणे ॥ ७-१६५-३० (५२५१९)
ततः प्रववृते युद्धं रात्रौ भरतसत्तम ।
उभयोः सेनयोर्घोरं परस्परजिगीषया ॥ ७-१६५-३१ (५२५२०)
अर्जुनः कौरवं सैन्यमर्जुनं चापि कौरवाः ।
नानाशस्त्रसमावायैरन्योन्यं समपीडयन् ॥ ७-१६५-३२ (५२५२१)
द्रौणिः पाञ्चालराजं च भारद्वाजश्च सृञ्जयान् ।
छादयांचक्रिरे सङ्ख्ये शरैः सन्नतपर्वभिः ॥ ७-१६५-३३ (५२५२२)
पाण्डुपाञ्चालसैन्यानां कौरवाणां च भारत ।
आसीन्निष्टानको घोरो निघ्नतामितरेतरम् ॥ ७-१६५-३४ (५२५२३)
नैवास्माभिस्तथा पूर्वैर्दृष्टपूर्वं तथाविधम् ।
युद्धं यादृशमेवासीत्तां रात्रिं सुभयावहम् ॥ ॥ ७-१६५-३५ (५२५२४)

इति श्रीमन्महाभारते द्रोणपर्वणि घटोत्कचवधपर्वणि
चतुर्दशरात्रियुद्धे पञ्चषष्ट्यधिकशततमोऽध्यायः ॥१६५ ॥

---

द्रोनपर्व-अध्यय१६६
॥ श्रीः ॥
७.१६६. अध्यायः १६६

Mahabharata - Drona Parva - Chapter Topics
कृतवर्मणा युधिष्ठिरपराजयः ॥१ ॥

Mahabharata - Drona Parva - Chapter Text

७-१६६-० (५२५२५)
सञ्जय उवाच। ७-१६६-०क्ष् (४७१५)
वर्तमाने तदा रौद्रे रात्रियुद्धे विशाम्पते ।
सर्वभूतक्षयकरे धर्मपुत्रो युधिष्ठिरः ॥ ७-१६६-१ (५२५२६)
अब्रवीत्पाण्डवांश्चैव पाञ्चालांश्चैव सोमकान् ।
अभिद्रवत संयात द्रोणमेव जिघांसया ॥ ७-१६६-२ (५२५२७)
राज्ञस्ते वचनाद्राजन्पाञ्चालाः सृञ्जयास्तथा ।

द्रोणमेवाभ्यवर्तन्त नदन्तो भैरवान्रवान् ॥ ७-१६६-३ (५२५२८)
तान्वयं प्रतिगर्जन्तः प्रत्युद्याताः स्म हर्षिताः ।
यथाशक्ति यथोत्साहं यथासत्वं च संयुगे ॥ ७-१६६-४ (५२५२९)
कृतवर्मा तु हार्दिक्यो युधिष्ठिरमुपाद्रवत् ।
द्रोणं प्रति समायान्तं मत्तो मत्तमिव द्विपम् ॥ ७-१६६-५ (५२५३०)
शैनेयं शरवर्षाणि विकिरन्तं समन्ततः ।
अभ्ययात्कौरवो राजन्भूरिः सङ्ग्राममूर्धनि ॥ ७-१६६-६ (५२५३१)
सहदेवमथायान्तं द्रोणप्रेप्सुं महारथम् ।
कर्णो वैकर्तनो राजन्वारयामास पाण्डवम् ॥ ७-१६६-७ (५२५३२)
भीमसेनमथायान्तं व्यादितास्यामिवान्तकम् ।
स्वयं दुर्योधनो राजा प्रतीपं मृत्युमाव्रजत् ॥ ७-१६६-८ (५२५३३)
नकुलं च युधां श्रेष्ठं सर्वयुद्धविशारदम् ।
शकुनिः सौबलो राजन्वारयामास सत्वरः ॥ ७-१६६-९ (५२५३४)
शिखण्डिनमथायान्तं रथेन रथिनां वरम् ।
कृपः शारद्वतो राजन्वारयामास संयुगे ॥ ७-१६६-१० (५२५३५)
प्रतिविन्ध्यमथायान्तं मयूरसदृशैर्हयैः ।
दुःशासनो महाराज यत्तो यत्तमवारयत् ॥ ७-१६६-११ (५२५३६)
भैमसेनिमथायान्तं मायाशतविशारदम् ।
अश्वत्थामा महाराज राक्षसं प्रत्यषेधयत् ॥ ७-१६६-१२ (५२५३७)
द्रुपदं वृषसेनस्तु ससैन्यं सपदानुगम् ।
वारयामास समरे द्रोणप्रेप्सुं महारथम् ॥ ७-१६६-१३ (५२५३८)
विराटं द्रुतमायान्तं द्रोणस्य निधनं प्रति ।
मद्रराजः सुसङ्क्रुद्धो वारयामास भारत ॥ ७-१६६-१४ (५२५३९)
शतानीकमथायान्तं नाकुलिं रभसं रणे ।
चित्रसेनो रुरोधाशु शरैर्द्रोणपरीप्सया ॥ ७-१६६-१५ (५२५४०)
अर्जुनं च युधांश्रेष्ठं प्राद्रवन्तं महारथम् ।
अलायुधो महाराज राक्षसेन्द्रो न्यवारयत् ॥ ७-१६६-१६ (५२५४१)
तथा द्रोणं महेष्वासं निघ्नन्तं शात्रवान्रणे ।
धृष्टद्युम्नोऽथ पाञ्चाल्यो हृष्टरूपमवारयत् ॥ ७-१६६-१७ (५२५४२)
तथाऽन्यान्पाण्डुपुत्राणां समायातान्महारथान् ।
तावका रथिनो राजन्वारयामासुरोजसा ॥ ७-१६६-१८ (५२५४३)
गजारोहा गजैस्तूर्णं सन्निपत्य महामृधे ।
योधयन्तः स्म दृश्यन्ते शतशोऽथ सहस्रशः ॥ ७-१६६-१९ (५२५४४)
निशीथे तुरगा राजन्द्रावयन्तः परस्परम् ।
समदृश्यन्त वेगेन पक्षवन्तो यथाऽद्रयः ॥ ७-१६६-२० (५२५४५)
सादिनः सादिभिः सार्धं प्रासशक्त्यृष्टिपाणयः ।

समागच्छन्महाराज विनदन्तः पृथक्पृथक् ॥ ७-१६६-२१ (५२५४६)
नरास्तु बहवस्तत्र समाजग्मुः परस्परम् ।
गादाभिर्मुसलैश्चैव नानाशस्त्रैश्च संयुगे ॥ ७-१६६-२२ (५२५४७)
कृतवर्मा तु हार्दिक्यो धर्मपुत्रं युधिष्ठिरम् ।
वारयामास सङ्क्रुद्धो वेलेवोद्वृत्तमर्णवम् ॥ ७-१६६-२३ (५२५४८)
युधिष्ठिरस्तु हार्दिक्यं विद्ध्वा पञ्चभिराशुगैः ।
पुनर्विव्याध विंशत्या तिष्ठतिष्ठेति चाब्रवीत् ॥ ७-१६६-२४ (५२५४९)
कृतवर्मा तु सङ्क्रुद्धो धर्मपुत्रस्य मारिष ।
धनुश्चिच्छेद भल्लेन तं च विव्याध सप्तभिः ॥ ७-१६६-२५ (५२५५०)
अथान्यद्धनुरादाय धर्मपुत्रो महारथः ।
हार्दिक्यं दशभिर्बाणैर्बाह्वोरुरसि चार्पयत् ॥ ७-१६६-२६ (५२५५१)
माधवस्तु रणे विद्धो धर्मपुत्रेण मारिष ।
प्राकम्पत च रोषेण सप्तभिश्चार्दयच्छरैः ॥ ७-१६६-२७ (५२५५२)
तस्य पार्थो धनुश्छित्त्वा हस्तावापं निकृत्य च ।
प्राहिणोन्निशितान्बाणान्पञ्च राजञ्छिलाशितान् ॥ ७-१६६-२८ (५२५५३)
ते तस्य कवचं भित्त्वा हेमचित्रं महाधनम् ।
प्राविशन्धरणीं भित्त्वा वल्मीकमिव पन्नगाः ॥ ७-१६६-२९ (५२५५४)
अक्ष्णोर्निमेषमात्रेण सोऽन्यदादाय कार्मुकम् ।
विव्याध पाण्डवं षष्ट्या सूतं च नवभिः शरैः ॥ ७-१६६-३० (५२५५५)
तस्य शक्तिममेयात्मा पाण्डवो भुजगोपमाम् ।
चिक्षेप भरश्रेष्ठ रथे न्यस्य महद्धनुः ॥ ७-१६६-३१ (५२५५६)
सा हेमचित्रा महती पाण्डवेयेन प्रेरिता ।
निर्भिद्य दक्षिणं बाहुं प्राविशद्धरणीतलम् ॥ ७-१६६-३२ (५२५५७)
एतस्मिन्नेव काले तु गृह्य पार्थः पुनर्धनुः ।
हार्दिक्यं छादयामास शरैः सन्नतपर्वभिः ॥ ७-१६६-३३ (५२५५८)
ततस्तु समरे शूरो वृष्णीनां प्रवरो रथी ।
व्यश्वसूतरथं चक्रे निमेषार्धाद्युधिष्ठिरम् ॥ ७-१६६-३४ (५२५५९)
ततस्तु पाण्डवो ज्येष्ठः खड्गं चर्म समाददे ।
तदस्य निशितैर्बाणैर्व्यधमन्माधवो रणे ॥ ७-१६६-३५ (५२५६०)
तोमरं तु ततो गृह्य स्वर्णदण्डं दुरासदम् ।
प्रैषयत्समरे तूर्णं हार्दिक्यस्य युधिष्ठिरः ॥ ७-१६६-३६ (५२५६१)
तमापतन्तं सहसा धर्मराजभुजच्युतम् ।
द्विधा चिच्छेद हार्दिक्यः कृतहस्तः स्मयन्निव ॥ ७-१६६-३७ (५२५६२)
ततः शरशतेनाजौ धर्मपुत्रमवाकिरत् ।
कवचं चास्य सङ्क्रुद्धः शरैस्तीक्ष्णैरदारयत् ॥ ७-१६६-३८ (५२५६३)
हार्दिक्यशरसञ्छन्नं कवचं तन्महाधनम् ।

व्यशीर्यत रणे राजंस्ताराजालमिवाम्बरात् ॥ ७-१६६-३९ (५२५६४)
स च्छिन्नधन्वा विरथः शीर्णवर्मा शरार्दितः ।
अपायासीद्रणात्तूर्णं धर्मपुत्रो युधिष्ठिरः ॥ ७-१६६-४० (५२५६५)
कृतवर्मा तु निर्जित्य धर्मात्मानं युधिष्ठिरम् ।
पुनर्द्रोणस्य जुगुपे चक्रमेव महात्मनः ॥ ॥ ७-१६६-४१ (५२५६६)

इति श्रीमन्महाभारते द्रोणपर्वणि घटोत्कचवधपर्वणि
चतुर्दशरात्रियुद्धे षट्षष्ट्यधिकशततमोऽध्यायः ॥ १६६ ॥
Mahabharata - Drona Parva - Chapter Footnotes

५-१६६-१२ भैमसेनिं घटोत्कचम् ॥
५-१६६-२७ माधवः कृतवर्मा ॥
५-१६६-१६६ षट्षष्ट्यधिकशततमोऽध्यायः ॥

---

द्रोनपर्व-अध्यय१६७
॥ श्रीः ॥
७.१६७. अध्यायः १६७

Mahabharata - Drona Parva - Chapter Topics
सात्यकिना भूरिनाम्नो राज्ञो वधः ॥ १ ॥
द्रौणिना घटोत्कचपराजयः ॥ २ ॥
भीमेन दुर्योधनपराभवः ॥ ३ ॥

Mahabharata - Drona Parva - Chapter Text

७-१६७-० (५२५६७)
सञ्जय उवाच। ७-१६७-०क्ष् (४७१६)
भूरिस्तु समरे राजञ्शैनेयं रथिनां वरम् ।
आपतन्तमपासेधत्प्रयाणादिव कुञ्जरम् ॥ ७-१६७-१ (५२५६८)
अथैनं सात्यकिः क्रुद्धः पञ्चभिर्निशितैः शरैः ।
विव्याध हृदये तस्य प्रास्रवत्तस्य शोणितम् ॥ ७-१६७-२ (५२५६९)
तथैव कौरवो युद्धे शैनेयं युद्धदुर्मदम् ।
दशिभिर्निशितैस्तीक्ष्णैरविध्यत भुजान्तरे ॥ ७-१६७-३ (५२५७०)
तावन्योन्यं महाराज ततक्षाते शरैर्भृशम् ।
क्रोधसंरक्तनयनौ क्रोधाद्विष्फार्य कार्मुके ॥ ७-१६७-४ (५२५७१)
तयोरासीन्महाराज शस्त्रवृष्टिः सुदारुणा ।

क्रुद्धयोः सायकमुचोर्यमान्तकनिकाशयोः ॥ ७-१६७-५ (५२५७२)
तावन्योन्यं शरैः राजन्सञ्छाद्य समवस्थितौ ।
मुहूर्तं चैव तद्युद्धं समरूपमिवाभावत् ॥ ७-१६७-६ (५२५७३)
ततः क्रुद्धो महाराज शैनेयः प्रहसन्निव ।
धनुश्चिच्छेद समरे कौरव्यस्य महात्मनः ॥ ७-१६७-७ (५२५७४)
अथैनं छिन्नधन्वानं नवभिर्निशितैः शरैः ।
विव्याध हृदये तूर्णं तिष्ठतिष्ठेति चाब्रवीत् ॥ ७-१६७-८ (५२५७५)
सोऽतिविद्धो बलवता शत्रुणा शत्रुतापनः ।
धनुरन्यत्समादाय सात्वतं प्रत्यविध्यत ॥ ७-१६७-९ (५२५७६)
स विद्धवा सात्वतं बाणैस्त्रिभिरेव विशाम्पते ।
धनुश्चिच्छेद भल्लेन सुतीक्ष्णेन हसन्निव ॥ ७-१६७-१० (५२५७७)
छिन्नधन्वा महाराज सात्यकिः क्रोधमूर्च्छितः ।
प्रजहार महावेगां शक्तिं तस्य महोरसि ॥ ७-१६७-११ (५२५७८)
स तु शक्त्या विभिन्नाङ्गो निपपात रथोत्तमात् ।
लोहिताङ्ग इवाकाशाद्दीप्तरश्मिर्यदृच्छया ॥ ७-१६७-१२ (५२५७९)
तं तु दृष्ट्वा हतं शूरमश्वत्थामा महारथः ।
अभ्यधावत वेगेन शैनेयं प्रति संयुगे ॥ ७-१६७-१३ (५२५८०)
तिष्ठतिष्ठेति चाभाष्य शैनेयं स नराधिप ।
अभ्यवर्षच्छरौघेण मेरुं वृष्ट्या यथाम्बुदः ॥ ७-१६७-१४ (५२५८१)
तमापतन्तं संरब्धं शैनेयस्य रथं प्रति ।
घटोत्कचोऽब्रवीद्राजन्नाहं मुक्त्वा महारथः ॥ ७-१६७-१५ (५२५८२)
तिष्ठतिष्ठ न मे जीवन्द्रोणपुत्र गमिष्यसि ।
एष त्वां निहनिष्यामि महिषं मृगराडिव ॥ ७-१६७-१६ (५२५८३)
युद्धश्रद्धामहं तेऽद्य विनेष्यामि रणाजिरे ।
इत्युक्त्वा क्रोधताम्राक्षो राक्षसः परवीरहा ।
द्रोणिमभ्यद्रवत्क्रुद्धो गजेन्द्रमिव केसरी ॥ ७-१६७-१७ (५२५८४)
रथाक्षमात्रैरिषुभिरभ्यवर्षद्धटोत्कचः ।
रथिनामृषभं द्रौणिं धाराभिरिव तोयदः ॥ ७-१६७-१८ (५२५८५)
शरवृष्टिं तु तां प्राप्तां शरैराशीविषोपमैः ।
शातयामास समरे तरसा द्रौणिरुत्स्मयन् ॥ ७-१६७-१९ (५२५८६)
ततः शरशतैस्तीक्ष्णैर्मर्मभेदिभिराशुगैः ।
समाचिनोद्राक्षसेन्द्रं घटोत्कचमरिन्दमम् ॥ ७-१६७-२० (५२५८७)
स शरैराचितस्तेन राक्षसो रणमूर्धनि ।
व्यकाशत महाराज श्वाविच्छललतो यथा ॥ ७-१६७-२१ (५२५८८)
ततः क्रोधसमाविष्टो भैमसेनिः प्रतापवान् ।
शरैरवचकर्तोग्रैर्द्रौणिं वज्राशनिप्रभैः ॥ ७-१६७-२२ (५२५८९)

क्षुरप्रैरर्धचन्द्रैश्च नाराचैः सशिलीमुखैः ।
वराहकर्णैर्नालीकैर्विकर्णैश्चाभ्यवीवृषत् ॥ ७-१६७-२३ (५२५९०)
तां शस्त्रवृष्टिमतुलां वज्राशनिसमस्वनाम् ।
पतन्तीमुपरि क्रुद्धो द्रौणिरव्यथितेन्द्रियः ॥ ७-१६७-२४ (५२५९१)
सुदुःसहां शरैर्घोरैर्दिव्यास्त्रप्रतिमन्त्रितैः ।
व्यधमत्सुमहातेजा महाभ्राणीव मारुतः ॥ ७-१६७-२५ (५२५९२)
ततोऽन्तरिक्षे बाणानां सङ्ग्रामोऽन्य इवाभवत् ।
घोररूपो महाराज योधानां हर्षवर्धनः ॥ ७-१६७-२६ (५२५९३)
ततोऽस्त्रसन्धर्षकृतैर्विस्फुलिङ्गैः समन्ततः ।
वमौ निशामुखे व्योम खद्योतैरिव संवृतम् ॥ ७-१६७-२७ (५२५९४)
स मार्गणगणैर्द्रौणिर्दिशः प्रच्छाद्य सर्वतः ।
प्रियार्थं तव पुत्राणां राक्षसं समवाकिरत् ॥ ७-१६७-२८ (५२५९५)
ततः प्रववृते युद्धं द्रौणिराक्षसयोर्मृधे ।
विगाढे रजनीमध्ये शक्रप्रह्लादयोरिव ॥ ७-१६७-२९ (५२५९६)
ततो घटोत्कचो बाणैर्दशभिर्द्रौणिमाहवे ।
जघानोरसि सङ्क्रुद्धः कालज्वलनसन्निभैः ॥ ७-१६७-३० (५२५९७)
स तैरभ्यायतैर्विद्धो राक्षसेन महाबलः ।
चचाल समरे द्रौणिर्वातनुन्न इव द्रुमः ॥ ७-१६७-३१ (५२५९८)
स मोहं समरे प्राप्तो ध्वजयष्टिं समाश्रितः ॥ ७-१६७-३२ (५२५९९)
ततो हाहाकृतं सैन्यं तव सर्वं जनाधिप ।
हतं स्म मेनिरे सर्वे द्रोणसूनुं जनाधिपाः ॥ ७-१६७-३३ (५२६००)
तं तु दृष्ट्वा तथावस्थमश्वत्थामानमाहवे ।
पाञ्चालाः सृञ्जयाश्चैव सिंहनादं प्रचक्रिरे ॥ ७-१६७-३४ (५२६०१)
प्रतिलभ्य ततः संज्ञामश्वत्थामा महाबलः ।
धनुः प्रपीड्य वामेन करेणामित्रकर्शनः ॥ ७-१६७-३५ (५२६०२)
मुमोचाकर्णपूर्णेन धनुषा शरमुत्तमम् ।
यमदण्डोपमं घोरमुद्दिश्याशु घटोत्कचम् ॥ ७-१६७-३६ (५२६०३)
स भित्त्वा हृदयं तस्य राक्षसस्य शरोत्तमः ।
विवेश वसुधामुग्रः सपुङ्खः पृथिवीपते ॥ ७-१६७-३७ (५२६०४)
सोऽतिविद्धो महाराज रथोपस्थ उपाविशत् ।
राक्षसेन्द्रः पुबलवान्द्रौणिना रणशालिना ॥ ७-१६७-३८ (५२६०५)
दृष्ट्वा विमूढं हैडिम्बं सारथिस्तु रणाजिरात् ।
द्रौणेः सकाशात्सम्भ्रान्तस्त्वपनिन्येत्वरान्वितः ॥ ७-१६७-३९ (५२६०६)
तथा तु समरे विद्ध्वा राक्षसेन्द्रं घटोत्कचम् ।
ननाद सुमहानादं द्रोणपुत्रो महारथः ॥ ७-१६७-४० (५२६०७)
पूजितस्तव पुत्रैश्च सर्वयोधैश्च भारत ।

वपुषाऽतिप्रजज्वाल मध्याह्न इव भास्करः ॥ ७-१६७-४१ (५२६०८)
भीमसेनं तु युध्यन्तं भारद्वाजरथं प्रति ।
स्वयं दुर्योधनो राजा प्रत्यविध्यच्छितैः शरैः ॥ ७-१६७-४२ (५२६०९)
तं भीमसेनो दशभिः शरैर्विव्याध मारिष ।
दुर्योधनोऽपि विंशत्या शराणां प्रत्यविध्यत ॥ ७-१६७-४३ (५२६१०)
तौ सायकैरवच्छिन्नावदृश्येतां रणाजिरे ।
मेघजालसमाच्छन्नौ नभसीवेन्दुभास्करौ ॥ ७-१६७-४४ (५२६११)
अथ दुर्योधनो राजा भीमं विव्याध पत्रिभिः ।
पञ्चभिर्भरतश्रेष्ठ तिष्ठतिष्ठेति चाब्रवीत् ॥ ७-१६७-४५ (५२६१२)
तस्य भीमो धनुश्छित्त्वा ध्वजं च दशभिः शरैः ।
विव्याध कौरवश्रेष्ठं नवत्या नतपर्वणाम् ॥ ७-१६७-४६ (५२६१३)
ततो दुर्योधनः क्रुद्धो भनुरन्यन्महत्तरम् ।
गृहीत्वा भरतश्रेष्ठो भीमसेनं शितैः शरैः ।
अपीडयद्रणमुखे पश्यतां सर्वधन्विनाम् ॥ ७-१६७-४७ (५२६१४)
तान्निहत्य शरान्भीमो दुर्योधनधनुश्च्युतान् ।
कौरवं पञ्चविंशत्या क्षुद्रकाणां समार्पयत् ॥ ७-१६७-४८ (५२६१५)
दुर्योधनस्तु सङ्क्रुद्धो भीमसेनस्य मारिष ।
क्षुरप्रेण धनुश्छित्त्वा दशभिः प्रत्यविध्यत ॥ ७-१६७-४९ (५२६१६)
अथान्यद्धनुरादाय भीमसेनो महाबलः ।
विव्याध नृपतिं तूर्णं सप्तभिर्निशितैः शरैः ॥ ७-१६७-५० (५२६१७)
तदप्यस्य धनुः क्षिप्रं चिच्छेद लघुहस्तवत् ।
द्वितीयं च तृतीयं च चतुर्थं पञ्चमं तथा ॥ ७-१६७-५१ (५२६१८)
आत्तमात्तं महाराज भीमस्य धनुराच्छिनत् ।
तव पुत्रो महाराज जितकाशी मदोत्कटः ॥ ७-१६७-५२ (५२६१९)
स तथा भिद्यमानेषु कार्मुकेषु पुनः पुनः ।
शक्तिं चिक्षेप समरे सर्वपारशवीं शुभाम् ॥ ७-१६७-५३ (५२६२०)
मृत्योरिव स्वसारं हि दीप्तां वह्निशिखामिव ।
सीमन्तमिव कुर्वन्तीं नभसोऽग्निसमप्रभाम् ॥ ७-१६७-५४ (५२६२१)
अप्राप्तामेव तां शक्तिं त्रिधा चिच्छेद कौरवः ।
पश्यतः सर्वलोकस्य भीमस्य च महात्मनः ॥ ७-१६७-५५ (५२६२२)
ततो भीमो महाराज गदां गुर्वीं महाप्रभाम् ।
चिक्षेपाविध्य वेगेन दुर्योधनरथं प्रति ॥ ७-१६७-५६ (५२६२३)
ततः सा सहसा वाहांस्तव पुत्रस्य संयुगे ।
सारथिं च गदा गुर्वी ममर्दास्य रथं पुनः ॥ ७-१६७-५७ (५२६२४)
पुत्रस्तु तव राजेन्द्र भीमाद्भीतः प्रणश्य च ।
आरुरोह रथं चान्यं नन्दकस्य महात्मनः ॥ ७-१६७-५८ (५२६२५)

ततो भीमो हतं मत्वा तव पुत्रं महारथम् ।
सिंहनादं महच्चक्रे तर्जयन्निशि कौरवान् ॥ ७-१६७-५९ (५२६२६)
तावकाः सैनिकाश्चापि मेनिरे निहतं नृपम् ।
ततोऽतिचुक्रुशुः सर्वे ते हाहेति समन्ततः ॥ ७-१६७-६० (५२६२७)
तेषां तु निनदं श्रुत्वा त्रस्तानां सर्वयोधिनाम् ।
भीमसेनस्य नादं च श्रुत्वा राजन्महात्मनः ॥ ७-१६७-६१ (५२६२८)
ततो युधिष्ठिरो राजा हतं मत्वा सुयोधनम् ।
अभ्यवर्तत वेगेन यत्र पार्थो वृकोदरः ॥ ७-१६७-६२ (५२६२९)
पाञ्चलाः केकया मात्स्याः सृञ्जयाश्च विशाम्पते ।
सर्वोद्योगेनाभिजग्मुद्रोणमेव युयुत्सया ॥ ७-१६७-६३ (५२६३०)
तत्रासीत्सुमहद्युद्धं द्रोणस्याथ परैः सह ।
घोरे तमसि मग्नानां निघ्नतामितरेतरम् ॥ ॥ ७-१६७-६४ (५२६३१)

इति श्रीमन्महाभारते द्रोणपर्वणि घटोत्कचवधपर्वणि
चतुर्दशरात्रियुद्धे सप्तषष्ट्यधिक शततमोऽध्यायः ॥ १६७ ॥
Mahabharata - Drona Parva - Chapter Footnotes

५-१६७-१ प्रयाणाद्यानस्थानात् । प्रवणादिति पाठे प्रवणं प्रकृष्टं
वनं जलम् ॥
५-१६७-२ तस्य सात्यकेः । तस्य तस्माद्धृदयात् ॥
५-१६७-१२ लोहिताङ्गः कुजः । यदृच्छया दैवेनेत्यभूतोपमा ॥
५-१६७-१६ महिषमसुरम् । महिषं षण्मुखो यथा इति घ ङ झ पाठः ॥
५-१६७-२१ श्वाविच्छल्यकः । शललतः शललीभिः ॥
५-१६७-५८ प्रणश्य निलीनो भूत्वा ॥
५-१६७-१६७ सप्तषष्ट्यधिकशततमोऽध्यायः ॥
१६७ ॥

---

द्रोनपर्व-अध्यय१६८
॥ श्रीः ॥
७.१६८. अध्यायः १६८

Mahabharata - Drona Parva - Chapter Topics
कर्णेन सहदेवस्य पराजयपूर्वकमवहेलनम् ॥ १ ॥
शल्येन विराटपराजयः ॥ २ ॥
अर्जुनेनालायुधपराजयः ॥ ३ ॥

७-१६८-० (५२६३२)
सञ्जय उवाच। ७-१६८-०क्ष् (४७१७)
सहदेवमथायान्तं द्रोणप्रेप्सुं विशाम्पते ।
कर्णो वैकर्तनो युद्धे वारयामास भारत ॥ ७-१६८-१ (५२६३३)
सहदेवस्तु राधेयं विद्ध्वा नवभिराशुगैः ।
पुनर्विव्याध दशभिर्विशिखैर्नतपर्वभिः ॥ ७-१६८-२ (५२६३४)
तं कर्णः प्रतिविव्याध शतेन नतपर्वणाम् ।
सज्यं चास्य धनुः शीघ्रं चिच्छेद लघुहस्तवत् ॥ ७-१६८-३ (५२६३५)
ततोऽन्यद्धनुरादाय माद्रीपुत्रः प्रतापवान ।
कर्णं विव्याध विंशत्या तदद्भुतमिवाभवत् ॥ ७-१६८-४ (५२६३६)
तस्य कर्णो हयान्हत्वा शरैः सन्नतपर्वभिः ।
सारथिं चास्य भल्लेन द्रुतं निन्ये यमक्षयम् ॥ ७-१६८-५ (५२६३७)
विरथः सहदेवस्तु खड्गं चर्म समाददे ।
तदप्यस्य शरैः कर्णो व्यधमत्प्रहसन्निव ॥ ७-१६८-६ (५२६३८)
अथ गुर्वीं महाघोरां हेमचित्रां महागदाम् ।
प्रेषयामास सङ्क्रुद्धो वैकर्तनरथं प्रति ॥ ७-१६८-७ (५२६३९)
तामापतन्तीं सहसा सहदेवप्रचोदिताम् ।
व्यष्टम्भयच्छरैः कर्णो भूमौ चैनामपातयत् ॥ ७-१६८-८ (५२६४०)
गदां विनिहतां दृष्ट्वा सहदेवस्त्वरान्वितः ।
शक्तिं चिक्षेप कर्णाय तामप्यस्याच्छिनच्छरैः ॥ ७-१६८-९ (५२६४१)
ससम्भ्रमं ततस्तूर्णमवप्लुत्य रथोत्तमात् ।
सहदेवो महाराज दृष्ट्वा कर्णं व्यवस्थितम् ॥ ७-१६८-१० (५२६४२)
रथचक्रं प्रगृह्याजौ मुमोचाधिरथं प्रति ।
तदापतद्वै सहसा कालचक्रमिवोद्यतम् ।
शरैरनेकसाहस्रैराच्छिनत्सूतनन्दनः ॥ ७-१६८-११ (५२६४३)
तस्मिंस्तु निहते चक्रे सूतजेन महात्मना ।
ईषादण्डकयोक्त्रांश्च युगानि विविधानि च ॥ ७-१६८-१२ (५२६४४)
हस्त्यङ्गानि तथाश्वांश्च मृतांश्च पुरुषान्बहून् ।
चिक्षेप कर्णमुद्दिश्य कर्णस्तान्व्यधमच्छरैः ॥ ७-१६८-१३ (५२६४५)
स निरायुधमात्मानं ज्ञात्वा माद्रवतीसुतः ।
वार्यमाणस्तु विशिखैः सहदेवो रणं जहौ ॥ ७-१६८-१४ (५२६४६)
तमभिद्रुत्य राधेयो मुहूर्ताद्भरतर्षभ ।
अब्रवीत्प्रहसन्वाक्यं सहदेवं विशाम्पते ॥ ७-१६८-१५ (५२६४७)
मा युध्यस्व रणेऽधीर विशिष्टै रथिभिः सह। ७-१६८-१६ (५२६४८)

सदृशैर्युध्य माद्रेय वचो मे मा विशङ्किथाः ॥
अथैनं धनुषोग्रेण तुदन्भूयोऽब्रवीद्वचः ॥ ७-१६८-१७ (५२६४९)
एषोऽर्जुनो रणे तूर्णं युध्यते कुरुभिः सह ।
तत्र गच्छस्व माद्रेय गृहं वा यदि मन्यसे ॥ ७-१६८-१८ (५२६५०)
एवमुक्त्वा तु तं कर्णो रथेन रथिनां वरः ।
प्रायात्पाञ्चालपाण्डूनां सैन्यानि प्रदहन्निव ॥ ७-१६८-१९ (५२६५१)
वधं प्राप्तं तु माद्रेयं नावधीत्समरेऽरिहा ।
कुन्त्याःस्मृत्वा वचो राजन्सत्यसन्धो महायशाः ॥ ७-१६८-२० (५२६५२)
सहदेवस्ततो राजन्विमनाः शरपीडितः ।
कर्णवाक्षरतप्तश्च जीवितान्निरविद्यत ॥ ७-१६८-२१ (५२६५३)
आरुरोह रथं चापि पाञ्चाल्यस्य महात्मनः ।
जनमेजयस्य समरे त्वरायुक्तो महारथः ॥ ७-१६८-२२ (५२६५४)
विराटं सहसेनं तु द्रोणार्थे द्रुतमागतम् ।
मद्रराजः शरौघेण च्छादयामास धन्विनम् ॥ ७-१६८-२३ (५२६५५)
तयोः समभवद्युद्धं समरे दृढधन्विनोः ।
यादृशं ह्यभवद्राजञ्जम्भवासवयोः पुरा ॥ ७-१६८-२४ (५२६५६)
मद्रराजो महाराज विराटं वाहिनीपतिम् ।
आजघ्ने त्वरितस्तूर्णं शतेन नतपर्वणाम् ॥ ७-१६८-२५ (५२६५७)
प्रतिविव्याध तं राजन्नवभिर्निशितै शरैः ।
पुनश्चैनं त्रिसप्तत्या भूयश्चैव शतेन तु ॥ ७-१६८-२६ (५२६५८)
तस्य मद्राधिपो हत्वा चतुरो रथवाजिनः ।
सूतं ध्वजं च समरे शराभ्यां सन्न्यपातयत् ॥ ७-१६८-२७ (५२६५९)
हताश्वात्तु रथात्तूर्णमवप्लुत्य महारथः ।
तस्थौ विष्फारयंश्चापं विमुञ्चंश्च शिताञ्छरान् ॥ ७-१६८-२८ (५२६६०)
शतानीकस्ततो दृष्ट्वा भ्रातरं हतवाहनम् ।
रथेनाभ्यपतत्तूर्णं सर्वलोकस्य पश्यतः ॥ ७-१६८-२९ (५२६६१)
शतानीकमथायान्तं मद्राराजो महामृधे ।
विशिखैर्बहुभिर्विद्ध्वा ततो निन्ये यमक्षयम् ॥ ७-१६८-३० (५२६६२)
तस्मिंस्तु निहते वीरे विराटो रथसत्तमः ।
आरुरोह रथं तूर्णं तमेव ध्वजमालिनम् ॥ ७-१६८-३१ (५२६६३)
ततो विष्फार्य नयने क्रोधाद्द्विगुणविक्रमः ।
मद्रराजरथं तूर्णं छादयामास पत्रिभिः ॥ ७-१६८-३२ (५२६६४)
ततो मद्राधिपः क्रुद्धः शरेणानतपर्वणा ।
आजघानोरसि दृढं विराटं वाहिनीपतिम् ॥ ७-१६८-३३ (५२६६५)
सोऽतिविद्धो महाराज रथोपस्थ उपाविशत् ।
कश्मलं चाविशत्तीव्रं विराटो भरतर्षभ ।

सारथिस्तमपोवाह समरे शरविक्षतम् ॥ ७-१६८-३४ (५२६६६)
ततः सा महती सेना प्राद्रवन्निशि भारत ।
वध्यमाना शरशतैः शल्येनाहवशोभिना ॥ ७-१६८-३५ (५२६६७)
तां दृष्ट्वा विद्रुतां सेनां वासुदेवधनञ्जयौ ।
प्रयातौ तत्र राजेन्द्र यत्र शल्यो व्यवस्थितः ॥ ७-१६८-३६ (५२६६८)
तौ तु प्रत्युद्ययौ राजन्राक्षसेन्द्रो ह्यलायुधः ।
अष्टचक्रसमायुक्तमास्थाय प्रवरं रथम् ॥ ७-१६८-३७ (५२६६९)
तुरङ्गममुखैर्युक्तं पिशाचैर्घोरदर्शनैः ।
लोहितार्द्रपताकं तं रक्तमाल्यविभूषितम् ।
कार्ष्णायसमयं घोरमृक्षचर्मसमावृतम् ॥ ७-१६८-३८ (५२६७०)
रौद्रेण चित्रपक्षेण विवृताक्षेण कूजता ।
ध्वजेनोच्छ्रितदण्डेन गृध्रराजेन राजता ।
स बभौ राक्षसो राजन्भिन्नाञ्जनचयोपमः ॥ ७-१६८-३९ (५२६७१)
रुरोधार्जुनमायान्तं प्रभञ्जनमिवाद्रिराट् ।
किरन्बाणगणान्राजञ्शतशोऽर्जुनमूर्धनि ॥ ७-१६८-४० (५२६७२)
अतितीव्रं महाद्युद्धं नरराक्षसयोस्तदा ।
द्रष्टृणां प्रीतिजननं सर्वेषां तत्र भारत ।
गृध्रकाकबलोलूककङ्कगोमायुहर्षणम् ॥ ७-१६८-४१ (५२६७३)
तमर्जुनः शतेनैव पत्रिणां समताडयत् ।
नवभिश्च शितैर्बाणैर्ध्वजं चिच्छेद भारत ॥ ७-१६८-४२ (५२६७४)
सारथिं च त्रिभिर्बाणैस्त्रिभिरेव त्रिवेणुकम् ।
धनुरेकेन चिच्छेद चतुर्भिश्चतुरो हयान् ॥ ७-१६८-४३ (५२६७५)
पुनः सज्यं कृतं चापं तदप्यस्य द्विधाऽच्छिनत् ।
विरथस्योद्यतं खड्गं शरेणास्य द्विधाऽकरोत् ॥ ७-१६८-४४ (५२६७६)
अथैनं निशितैर्बाणैश्चतुर्भिर्भरतर्षभ ।
पार्थोऽविध्यद्राक्षसेन्द्रं स विद्धः प्राद्रवद्भयात् ॥ ७-१६८-४५ (५२६७७)
तं विजित्यार्जुनस्तूर्णं द्रोणान्तिकमुपाययौ ।
किरञ्शरगणान्राजन्नरवारणवाजिषु ॥ ७-१६८-४६ (५२६७८)
वध्यमाना महाराज पाण्डवेन यशस्विना ।
सैनिका न्यपतन्नुर्व्यां वातनुन्ना इव द्रुमाः ॥ ७-१६८-४७ (५२६७९)
तेषु तूत्साद्यमानेषु फल्गुनेन महात्मना ।
सम्प्राद्रवद्बलं सर्वं पुत्राणां ते विशाम्पते ॥ ॥ ७-१६८-४८ (५२६८०)

इति श्रीमन्महाभारते द्रोणपर्वणि घटोत्कचवधपर्वणि
चतुर्दशरात्रियुद्धे अष्टषष्ट्यधिकशततमोऽध्यायः ॥ १६८ ॥

द्रोनपर्व-अध्यय१६९
॥ श्रीः ॥
७.१६९. अध्यायः १६९

Mahabharata - Drona Parva - Chapter Topics
सङ्कुलयुद्धम् ॥ १ ॥

Mahabharata - Drona Parva - Chapter Text

७-१६९-० (५२६८१)
सञ्जय उवाच। ७-१६९-०क्ष् (४७१८)
शतानीकं शरैस्तूर्णं निर्दहन्तं चमूं तव ।
चित्रसेनस्तव सुतो वारयामास भारत ॥ ७-१६९-१ (५२६८२)
नाकुलिश्चित्रसेनं तु विद्ध्वा पञ्चभिराशुगैः ।
स तु तं प्रतिविव्याध दशभिर्निशितैः शरैः ॥ ७-१६९-२ (५२६८३)
चित्रसेनो महाराज शतानीकं पुनर्युधि ।
नवभिर्निशितैर्बाणैराजघान स्तनान्तरे ॥ ७-१६९-३ (५२६८४)
नाकुलिस्तस्य विशिखैर्वर्म सन्नतपर्वभिः ।
गात्रात्सञ्चावयामास तदद्भुतमिवाभवत् ॥ ७-१६९-४ (५२६८५)
सोपेतवर्मा पुत्रस्ते विरराज भृशं नृप ।
उत्सृज्य काले राजेन्द्र निर्मोकमिव पन्नगः ॥ ७-१६९-५ (५२६८६)
ततोऽस्य निशितैर्बाणैर्ध्वजं चिच्छेद नाकुलिः ।
धनुश्चैव महाराज यतमानस्य संयुगे ॥ ७-१६९-६ (५२६८७)
स च्छिन्नधन्वा समरे विवर्मा च महारथः ।
धनुरन्यन्महाराज जग्राहारिविदारणम् ॥ ७-१६९-७ (५२६८८)
ततस्तूर्णं चित्रसेनो नाकुलिं नवभिः शरैः ।
विव्याध समरे क्रुद्धो भरतानां महारथः ॥ ७-१६९-८ (५२६८९)
शतानीकोऽथ सङ्क्रुद्धश्चित्रसेनस्य मारिष ।
जघान चतुरो वाहान्सारथिं च नरोत्तमः ॥ ७-१६९-९ (५२६९०)
अवप्लुत्य रथात्तस्माच्चित्रसेनो महारथः ।
नाकुलिं पञ्चविंशत्या शराणामार्दयद्बली ॥ ७-१६९-१० (५२६९१)
तस्य तत्कुर्वतः कर्म नकुलस्य सुतो रणे ।
अर्धचन्द्रेण चिच्छेद चापं रत्नविभूषितम् ॥ ७-१६९-११ (५२६९२)
स च्छिन्नधन्वा विरथो हताश्वो हतसारथिः ।
आरुरोह रथं तूर्णं हार्दिक्यस्य महात्मनः ॥ ७-१६९-१२ (५२६९३)
द्रुपदं तु सहानीकं द्रोणप्रेप्सुं महारथम् ।

वृषसेनोऽभ्ययात्तूर्णं किरञ्शरशतैस्तदा ॥ ७-१६९-१३ (५२६९४)
यज्ञसेनस्तु समरे कर्णपुत्रं महारथम् ।
षष्ट्या शराणां विव्याध बाह्वोरुरसि चानघ ॥ ७-१६९-१४ (५२६९५)
वृषसेनस्तु सङ्क्रुद्धो यज्ञसेनं रथे स्थितम् ।
बहुभिः सायकैस्तीक्ष्णैराजघान स्तनान्तरे ॥ ७-१६९-१५ (५२६९६)
तावुभौ शरनुन्नाङ्गौ शरकण्टकितौ रणे ।
व्यभ्राजेतां महाराज श्वाविधौ शललैरिव ॥ ७-१६९-१६ (५२६९७)
रुक्मपुङ्खैः प्रसन्नाग्रैः शरैश्छिन्नतनुच्छदौ ।
रुधिरौघपरिक्लिन्नौ व्यभ्राजेतां महामृधे ॥ ७-१६९-१७ (५२६९८)
तपनीयनिभौ चित्रौ कल्पवृक्षाविवाद्भुतौ ।
किंशुकाविव चोत्फुल्लौ व्यकाशेतां रणाजिरे ॥ ७-१६९-१८ (५२६९९)
वृषसेनस्ततो राजन्द्रुपदं नवभिः शरैः ।
विद्ध्वा विव्याध सप्तत्या पुनरन्यैस्त्रिभिस्त्रिभिः ॥ ७-१६९-१९ (५२७००)
ततः शरसहस्राणि विमुञ्चन्विबभौ तदा ।
कर्णपुत्रो महाराज वर्षमाण इवाम्बुदः ॥ ७-१६९-२० (५२७०१)
द्रुपदस्तु ततः क्रुद्धो वृषसेनस्य कार्मुकम् ।
द्विधा चिच्छेद भल्लेन पीतेन निशितेन च ॥ ७-१६९-२१ (५२७०२)
सोऽन्यत्कार्मुकमादाय रुक्मबद्धं नवं दृढम् ।
तूणादाकृष्य विमलं भल्लं पीतं शितं दृढम् ॥ ७-१६९-२२ (५२७०३)
कार्मुके योजयित्वा तं द्रुपदं सन्निरीक्ष्य च ।
आकर्णपूर्णं मुमुचे त्रासयन्सर्वसोमकान् ॥ ७-१६९-२३ (५२७०४)
हृदयं तस्य भित्त्वा च जगाम वसुधातलम् ।
कश्मलं प्राविशद्राजा वृषसेनशराहतः ॥ ७-१६९-२४ (५२७०५)
सारथिस्तमपोवाह स्मरन्सारथिचेष्टितम् ।
तस्मिन्प्रभग्ने राजेन्द्र पाञ्चालानां महारथे ॥ ७-१६९-२५ (५२७०६)
ततस्तु द्रुपदानीकं शरैश्छिन्नतनुच्छदम् ।
सम्प्राद्रवद्रणाद्राजन्निशीथे भैरवे सति ॥ ७-१६९-२६ (५२७०७)
प्रदीपैरपरित्यक्तैर्ज्वलद्भिस्तैः समन्ततः ।
व्यराजद्वसुधा तत्र वीताभ्रा द्यौरिव ग्रहैः ॥ ७-१६९-२७ (५२७०८)
तथाङ्गदैर्निपतितैर्व्यराजत वसुन्धरा ।
प्रावृट्काले महाराज विद्युद्भिरिव तोयदः ॥ ७-१६९-२८ (५२७०९)
ततः कर्णसुतात्त्रस्ताः सोमका विप्रदुद्रुवुः ।
यथेन्द्रभयवित्रस्ता दानवास्तारकामये ॥ ७-१६९-२९ (५२७१०)
तेनार्द्यमानाः समरे द्रवमाणाश्च सोमकाः ।
व्यराजन्त महाराज प्रदीपैरवभासिताः ॥ ७-१६९-३० (५२७११)
तांस्तु निर्जित्य समरे कर्णपुत्रो व्यरोचत ।

मध्यन्दिनमनुप्राप्तो घर्मांशुरिव भारत ॥ ७-१६९-३१ (५२७१२)
तेषु राजसहस्रेषु तावकेषु परेषु च ।
एक एव ज्वलंस्तस्थौ वृषसेनः प्रतापवान् ॥। ७-१६९-३२ (५२७१३)
स विजित्य रणे शूरान्सोमकानां महारथान् ।
जगाम त्वरितस्तत्र यत्र राजा युधिष्ठिरः ॥ ७-१६९-३३ (५२७१४)
प्रतिविन्ध्यमथ क्रुद्धं प्रदहन्तं रणे रिपून् ।
दुःशासनस्तव सुतः प्रत्यगच्छन्महारथः ॥ ७-१६९-३४ (५२७१५)
तयोः समागमो राजंश्चित्ररूपो बभूव ह ।
व्यपेतजलदे व्योम्नि बुधभास्करयोरिव ॥ ७-१६९-३५ (५२७१६)
प्रतिविन्ध्यं तु समरे कुर्वाणां कर्म दुष्करम् ।
ग्अपूजयन्महाराज तव सैन्ये महारथाः'।
दुःशासनस्त्रिभिर्बाणैर्ललाटे समविध्यत ॥ ७-१६९-३६ (५२७१७)
सोऽतिविद्धो बलवता तव पुत्रेण धन्विना ।
विरराज महाबाहुः सशृङ्ग इव पर्वतः ॥ ७-१६९-३७ (५२७१८)
दुःशासनं तु समरे प्रतिविन्ध्यो महारथः ।
नवभिः सायकैर्विद्धा पुनर्विव्याध सप्तभिः ॥ ७-१६९-३८ (५२७१९)
तत्र भारत पुत्रस्ते कृतवान्कर्म दुष्करम् ।
प्रतिविन्ध्यहयानुग्रैः पातयामास सायकैः ॥ ७-१६९-३९ (५२७२०)
सारथिं चास्य भल्लेन ध्वजं च समपातयत् ।
रथं च तिलशो राजन्व्यधमत्तस्य धन्विनः ॥ ७-१६९-४० (५२७२१)
पताकाश्च सतूणीरा रश्मीन्योक्त्राणि च प्रभो ।
चिच्छेद तिलशः क्रुद्धःशरैः सन्नतपर्वभिः ॥ ७-१६९-४१ (५२७२२)
विरथः स तु धर्मात्मा धनुष्पाणिरवस्थितः ।
अयोधयत्तव सुतं किरञ्शरशतान्बहून् ॥ ७-१६९-४२ (५२७२३)
क्षुरप्रेण धनुस्तस्य चिच्छेद तनयस्तव ।
अथैनं दशभिर्बाणैश्छिन्नधन्वानमार्दयत् ॥ ७-१६९-४३ (५२७२४)
तं दृष्ट्वा विरथं तत्र भ्रातरोऽस्य महारथाः ।
अन्ववर्तन्त सङ्ग्रामे महत्या सेनया सह ॥ ७-१६९-४४ (५२७२५)
आप्लुतः स ततो यानं सुतसोमस्य भास्वरम् ।
धनुर्गृह्य महाराज विव्याध तनयं तव ॥ ७-१६९-४५ (५२७२६)
ततस्तु तावकाः सर्वे परिवार्य सुतं तव ।
अभ्यवर्तन्त वेगेन महत्या सेनया वृताः ॥ ७-१६९-४६ (५२७२७)
ततः प्रववृते युद्धं तव तेषां च भारत ।
निशीथे दारुणे काले यमराष्ट्रविवर्धनम् ॥ ॥ ७-१६९-४७ (५२७२८)

इति श्रीमन्महाभारते द्रोणपर्वणि घटोत्कचवधपर्वणि

चतुर्दशरात्रियुद्धे एकोनसप्तत्यधिकशततमोऽध्यायः ॥ १६९ ॥
Mahabharata - Drona Parva - Chapter Footnotes

५-१६९-१ कुण्डलिताः पञ्च श्लोकाः घ ङ झ पुस्तकेष्वेव सन्ति ॥

---

द्रोनपर्व-अध्यय१७०
॥ श्रीः ॥
७.१७०. अध्यायः १७०

Mahabharata - Drona Parva - Chapter Topics
नकुलकृपाभ्यां शकुनिशिखण्डिपराजयः ॥ १ ॥

Mahabharata - Drona Parva - Chapter Text

७-१७०-० (५२७२९)
सञ्चय उवाच। ७-१७०-०क्ष् (४७१९)
नकुलं रभसं युद्धे निघ्नन्तं वाहिनीं तव ।
अभ्ययात्सौबलः क्रुद्धस्तिष्ठतिष्ठेति चाब्रवीत् ॥ ७-१७०-१ (५२७३०)
कृतवैरौ तु तौ वीरावन्योन्यवधकाङ्क्षिणौ ।
शरैः पूर्णायतोत्सृष्टैरन्योन्यमभिजघ्नतुः ॥ ७-१७०-२ (५२७३१)
यथैव नकुलो राजञ्शरवर्षाण्यमुञ्चत ।
तथैव सौबलश्चापि शिक्षां सन्दर्शयन्युधि ॥ ७-१७०-३ (५२७३२)
तावुभौ समरे शूरौ शरकण्टकिनौ तदा ।
व्यराजेतां महाराज श्वाविधौ शललैरिव ॥ ७-१७०-४ (५२७३३)
रुक्मपुङ्खैरजिह्माग्रैः शरैश्छिन्नतनुच्छदौ ।
रुधिरौघपरिक्लिन्नौ व्यभ्राजेतां महामृधे ॥ ७-१७०-५ (५२७३४)
तपनीयनिभौ चित्रौ कल्पवृक्षाविव द्रुमौ ।
किंशुकाविव चोत्फुल्लौ प्रकाशेते रणाजिरे ॥ ७-१७०-६ (५२७३५)
तावुभौ समरे शूरौ शरकण्टकिनौ तदा ।
व्यराजेतां महारान्कण्टकैरिव शाल्मली ॥ ७-१७०-७ (५२७३६)
सुजिह्मं प्रेक्षमाणौ च राजन्विवृतलोचनौ ।
क्रोधसंरक्तनयनौ निर्दहन्तौ परस्परम् ॥ ७-१७०-८ (५२७३७)
श्यालस्तु तव सङ्क्रुद्धो माद्रीपुत्रं हसन्निव ।
कर्णिनैकेन विव्याध हृदये निशितेन ह ॥ ७-१७०-९ (५२७३८)
नकुलस्तु भृशं विद्धः श्यालेन तव धन्विना ।
निषसाद रथोपस्थे कश्मलं चाविशन्महत् ॥ ७-१७०-१० (५२७३९)

अत्यन्तवैरिणां दृप्तं दृष्ट्वा शत्रुं तथाऽऽगतम् ।
ननाद शकुनी राजंस्तपान्ते जलदो यथा ॥ ७-१७०-११ (५२७४०)
प्रतिलभ्य ततः संज्ञां नकुलः पाण्डुनन्दनः ।
अभ्ययात्सौबलं भूयो व्यात्तानन इवान्तकः ॥ ७-१७०-१२ (५२७४१)
सङ्क्रुद्धः शकुनिं षष्ट्या विव्याध भरतर्षभ ।
पुनश्चैनं शतेनैव नाराचानां स्तनान्तरे ॥ ७-१७०-१३ (५२७४२)
अथास्य सशरं चापं मुष्टिदेशेऽच्छिनत्तदा ।
ध्वजं च त्वरितं छित्त्वा रथाद्भूमावपातयत् ॥ ७-१७०-१४ (५२७४३)
विशिखेन च तीक्ष्णेन पीतेन निशितेन च ।
ऊरू निर्भिद्य चैकेन नकुलः पाण्डुनन्दनः ।
श्येनं सपक्षं व्याधेन पातयामास तं तदा ॥ ७-१७०-१५ (५२७४४)
सोऽतिविद्धो महाराज रथोपस्थ उपाविशत् ।
ध्वजयष्टिं परिक्लिश्य कामुकः कामिनीं यथा ॥ ७-१७०-१६ (५२७४५)
तं विसंज्ञं निपतितं दृष्ट्वा श्यालं तवानघ ।
अपोवाह रथेनाशु सारथिर्ध्वजिनीमुखात् ॥ ७-१७०-१७ (५२७४६)
ततः सञ्चुक्रुशुः पार्था ये च तेषां पदानुगाः ॥ ७-१७०-१८ (५२७४७)
निर्जित्य च रणे शत्रुं नकुलः शत्रुतापनः ।
अब्रवीत्सारथिं क्रुद्धो द्रोणानीकाय मां वह ॥ ७-१७०-१९ (५२७४८)
तस्य तद्वचनं श्रुत्वा माद्रीपुत्रस्य सारथिः ।
प्रायात्तेन तदा राजन्यत्र द्रोणो व्यवस्थितः ॥ ७-१७०-२० (५२७४९)
शिखण्डिनं तु समरे द्रोणप्रेप्सुं विशाम्पते ।
कृपः शारद्वतो यत्तः प्रत्यगच्छत्स वेगितः ॥ ७-१७०-२१ (५२७५०)
गौतमं द्रुतमायान्तं द्रोणानीकमरिन्दमम् ।
विव्याध नवभिर्भल्लैः शिखण्डी प्रहसन्निव ॥ ७-१७०-२२ (५२७५१)
तमाचार्यो महाराज विद्ध्वा पञ्चभिराशुगैः ॥
पुनर्विव्याध विंशत्या पुत्राणां प्रियकृत्तव ॥ ७-१७०-२३ (५२७५२)
महद्युद्धं तयोरासीद्घोररूपं भयानकम् ॥
यथा देवासुरे युद्धे शम्बरामरराजयोः ॥ ७-१७०-२४ (५२७५३)
शरजालावृतं व्योम चक्रतुस्तौ महारथौ ।
मेघाविव तपापाये वीरौ समरदुर्मदौ ।
प्रकृत्या घोररूपं तदासीद्घोरतरं पुनः ॥ ७-१७०-२५ (५२७५४)
रात्रिश्च भरतश्रेष्ठ योधानां युद्धशालिनाम् ।
कालरात्रिनिभा ह्यासीद्घोररूपा भयानका ॥ ७-१७०-२६ (५२७५५)
शिखण्डी तु महाराज गौतमस्य महद्धनुः ।
अर्धचन्द्रेण चिच्छेद सज्यं सविशिखं तदा ॥ ७-१७०-२७ (५२७५६)
तस्य क्रुद्धः कृपो राजञ्शक्तिं चिक्षेप दारुणाम् ।

स्वर्णदण्डामकुण्ठाग्रां कर्मारपरिमार्जिताम् ॥ ७-१७०-२८ (५२७५७)
तामापतन्तीं चिच्छेद शिखण्डी बहुभिः शरैः ।
सापतन्मेदिनीं कृत्ता भासयन्ती महाप्रभा ॥ ७-१७०-२९ (५२७५८)
अथान्यद्धनुरादाय गौतमो रथिनां वारः ।
प्राच्छादयच्छितैर्बाणैर्महाराज शिखण्डिनम् ॥ ७-१७०-३० (५२७५९)
स च्छाद्यमानः समरे गौतमेन यशस्विना ।
न्यषीदत रथोपस्थे शिखण्डी रथिनां वरः ॥ ७-१७०-३१ (५२७६०)
सीदन्तं चैनमालोक्य कृपः शारद्वतो युधि ।
आजघ्ने बहुभिर्बाणैर्जिघांसन्निव भारत ॥ ७-१७०-३२ (५२७६१)
विमुखं तु रणे दृष्ट्वा याज्ञसेनिं महारथम् ।
पाञ्चालाः सोमकाश्चैव परिवव्रुः समन्ततः ॥ ७-१७०-३३ (५२७६२)
तथैव तव पुत्राश्च परिवव्रुर्द्विजोत्तमम् ।
महत्या सेनया सार्धं ततो युद्धमवर्तत ॥ ७-१७०-३४ (५२७६३)
रथानां च रणे राजन्नन्योन्यमभिधावताम् ।
बभूव तुमुलः शब्दो मेघानां गर्जतामिव ॥ ७-१७०-३५ (५२७६४)
द्रवतां सादिनां चैव गजानां च विशाम्पते ।
अन्योन्यमभितो राजन्क्रूरमायोधनं बभौ ॥ ७-१७०-३६ (५२७६५)
पत्तीनां द्रवतां चैव पादशब्देन मेदिनी ।
अकम्पत महाराज भयत्रस्तेव चाङ्गना ॥ ७-१७०-३७ (५२७६६)
रथिनो रथमारुह्य प्रद्रुता वेगवत्तरम् ।
अगृह्णन्बहवो राजञ्शलभान्वायसा इव ॥ ७-१७०-३८ (५२७६७)
तथा गजान्प्रभिन्नांश्च सम्प्रभिन्ना महागजाः ।
तस्मिन्नेव पदे यत्ता निगृह्णन्ति स्म भारत ॥ ७-१७०-३९ (५२७६८)
सादी सादिनमासाद्य पत्तयश्च पदातिनम् ।
समासाद्य रणेऽन्योन्यं संरब्धा नातिचक्रमुः ॥ ७-१७०-४० (५२७६९)
धावतां द्रवतां चैव पुनरावर्ततामपि ।
बभूव तत्र सैन्यानां शब्दः सुविपुलो निशि ॥ ७-१७०-४१ (५२७७०)
दीप्यमानाः प्रदीपाश्च रथवारणवाजिषु ।
अदृश्यन्त महाराज महोल्का इव खाच्च्युताः ॥ ७-१७०-४२ (५२७७१)
सा निशा भरतश्रेष्ठ प्रदीपैरवभासिता ।
दिवसप्रतिमा राजन्बभूव रणमूर्धनि ॥ ७-१७०-४३ (५२७७२)
आदित्येन यथा व्याप्तं तमो लोके प्रणश्यति ।
तथा नष्टं तमो घोरं दीपैर्दीप्तैरितस्ततः ॥ ७-१७०-४४ (५२७७३)
दिवं च पृथिवीं चैव दिशश्च प्रदिशस्तथा ।
रजसा तमसा व्याप्ता द्योतिताः प्रभया पुनः ॥ ७-१७०-४५ (५२७७४)
अस्त्राणां कवचनानां च मणीनां च महात्मनाम् ।

अन्तर्दधुः प्रभाः सर्वा दीपैस्तैरवभासिताः ॥ ७-१७०-४६ (५२७७५)
तस्मिन्कोलाहले युद्धे वर्तमाने निशामुखे ।
न किञ्चिद्विदुरात्मानमयमस्मीति भारत ॥ ७-१७०-४७ (५२७७६)
अवधीत्समरे पुत्रं पिता भरतसत्तम ।
पुत्रश्च पितरं मोहात्सखायं च सखा तथा ।
स्वस्रीयं मातुलश्चापि स्वस्रीयश्चापि मातुलम् ॥ ७-१७०-४८ (५२७७७)
स्वे स्वान्परे परांश्चापि निजघ्नुरितरेतरम् ।
निर्मर्यादमभूद्युद्धं रात्रौ भीरुभयानकम् ॥ ॥ ७-१७०-४९ (५२७७८)

इति श्रीमन्महाभारते द्रोणपर्वणि घटोत्कचवधपर्वणि
चतुर्दशरात्रियुद्धे सप्तत्यधिकशततमोऽध्यायः ॥१७० ॥
Mahabharata - Drona Parva - Chapter Footnotes

५-१६९-१५ ऊरू इति ।मण्डलं चरतः शकुनेर्द्वावूरू एकेनैव बाणेन
बिभेद यथा खे श्येनां पक्षाभ्यां सहितं वामदक्षिणगामिनं
पातयेदेवमिति लुप्तोपमा। व्याधेन बाणेन। विध्यत्यनेनेति व्याधो बाणः ॥
५-१७०-१६ परिक्लिश्य क्लेशेन ध्वजयष्टिं श्रित इति शेषः ॥
५-१७०-३८ प्रदुता रथिनो वेगवत्तरं रथमारुह्य तत्पतिमगृह्णन् ॥
५-१७०-१७० सप्तत्यधिकशततमोऽध्यायः ॥

---

द्रोनपर्व-अध्यय१७१
॥ श्रीः ॥
७.१७१. अध्यायः १७१

Mahabharata - Drona Parva - Chapter Topics
द्रोणधृष्टद्युम्नादीनां सङ्कुलयुद्धम् ॥ १ ॥

Mahabharata - Drona Parva - Chapter Text

७-१७१-० (५२७७९)
सञ्जय उवाच। ७-१७१-०क्ष् (४७२०)
तस्मिन्सुतुमुले युद्धे वर्तमाने भयावहे ।
धृष्टद्युम्नो महाराज द्रोणमेवाभ्यवर्तत ॥ ७-१७१-१ (५२७८०)
सन्दधानो धनुःश्रेष्ठं ज्यां विकुर्षन्पुनः पुनः ।
अभ्यद्रवत द्रोणस्य रथं रुक्मविभूषितम् ॥ ७-१७१-२ (५२७८१)
धृष्टद्युम्नमथायान्तं द्रोणस्यान्तचिकीर्षया ।

परिवव्रुर्महाराज पाञ्चालाः पाण्डवैः सह ॥ ७-१७१-३ (५२७८२)
तथा परिवृतं दृष्ट्वा द्रोणमाचार्यसत्तमम् ।
पुत्रास्ते सर्वतो यत्ता ररक्षुर्द्रोणमाहवे ॥ ७-१७१-४ (५२७८३)
बलार्णवौ ततस्तौ तु समेयातां निशामुखे ।
गातोद्धूतौ क्षुब्धसत्वौ भैरवौ सागराविव ॥ ७-१७१-५ (५२७८४)
ततो द्रोणं महाराज पाञ्चाल्यः पञ्चभिः शरैः ।
विव्याध हृदये तूर्णं सिंहनादं ननाद च ॥ ७-१७१-६ (५२७८५)
तं द्रोणः पञ्चविंशत्या विद्ध्वा भारत संयुगे ।
चिच्छेदान्येन भल्लेन धनुरस्य महास्वनम् ॥ ७-१७१-७ (५२७८६)
धृष्टद्युम्नस्तु निर्विद्धो द्रोणेन भरतर्षभ ।
उत्ससर्ज धनुस्तूर्णं सन्दश्य दशनच्छदम् ॥ ७-१७१-८ (५२७८७)
ततः क्रुद्धो महाराज धृष्टद्युम्नः प्रतापवान् ।
आददेऽन्यद्धनुःश्रेष्ठं द्रोणस्यान्तचिकीर्षया ॥ ७-१७१-९ (५२७८८)
विकृष्य च धनुश्चित्रमाकर्णात्परवीरहा ।
द्रोणस्यानत्करं घोरं व्यसृजत्सायकं ततः ॥ ७-१७१-१० (५२७८९)
स विसृष्टो बलवता शरो घोरो महामृधे ।
भासयामास तत्सैन्यं दिवाकर इवोदितः ॥ ७-१७१-११ (५२७९०)
तं तु दृष्ट्वा शरं घोरं देवगन्धर्वमानवाः ।
स्वस्त्यस्तु समरे राजन्द्रोणायेत्यब्रुवन्वचः ॥ ७-१७१-१२ (५२७९१)
तं तु सायकमायान्तमाचार्यस्य रथं प्रति ।
कर्णो द्वादशधआ राजंश्चिच्छेद कृतहस्तवत् ॥ ७-१७१-१३ (५२७९२)
स च्छिन्नो बहुधा राजन्सूतपुत्रेण धन्विना ।
निपपात शरस्तूर्णं निर्विषो भुजगो यथा ॥ ७-१७१-१४ (५२७९३)
गच्छित्त्वा तु समरे बाणं शरैः सन्नतपर्वभिः'।
धृष्टद्युम्नं ततः कर्णो विव्याध दशभिः शरैः ॥ ७-१७१-१५ (५२७९४)
पञ्चभिर्द्रोणपुत्रस्तु स्वयं द्रोणस्तु सप्तभिः ।
शल्यश्च दशभिर्बाणैस्त्रिभिर्दुःशासनस्तथा ॥ ७-१७१-१६ (५२७९५)
दुर्योधनस्तु विंशत्या शकुनिश्चापि पञ्चभिः ।
पाञ्चाल्यं त्वरयाऽविध्यन्सर्व एव महारथाः ॥ ७-१७१-१७ (५२७९६)
स विद्धः सप्तभिर्घोरैर्द्रोणस्यार्थे महाहवे ।
सर्वानसम्भ्रमाद्राज प्रत्यविद्धयत्त्रिभिस्त्रिभिः ।
द्रोणं द्रौणिं च कर्णं च विव्याध च तवात्मजम् ॥ ७-१७१-१८ (५२७९७)
ते भिन्ना धन्विना तेन धृष्टद्युम्नं पुनर्मृधे ।
विव्यधुः पञ्चभिस्तूर्णमेकैको रथिनां वरः ॥ ७-१७१-१९ (५२७९८)
द्रुमसेनस्तु सङ्क्रुद्धो राजन्विव्याध पत्रिणा ।
त्रिभिश्चान्यैः शरैस्तूर्णं तिष्ठ तिष्ठेति चाब्रवीत् ॥ ७-१७१-२० (५२७९९)

स तु तं प्रतिविव्याध त्रिभिस्तीक्ष्णैरजिह्मगैः ।
स्वर्णपुङ्खैः शिलाधौतैः प्राणान्तकरमैर्युधि ॥ ७-१७१-२१ (५२८००)
भल्लेनान्येन तु पुनः सुवर्णोज्ज्वलकुण्डलम् ।
निचकर्त शिरः कायाद्द्रुमसेनस्य वीर्यवान् ॥ ७-१७१-२२ (५२८०१)
तच्छिरो न्यपतद्भूमौ सन्दष्टौष्ठपुटं रणे ।
महावातसमुद्धूतं पक्वं तालफलं यथा ॥ ७-१७१-२३ (५२८०२)
तान्स विद्ध्वा पुनर्योधान्वीरः सुनिशितैः शरैः ।
राधेयस्याच्छिनद्भल्लैः कार्मुकं चित्रयोधिनः ॥ ७-१७१-२४ (५२८०३)
न तु तन्ममृषे कर्णो धनुषश्छेदनं तथा ।
निकर्तनमिवात्युग्रं लाङ्गूलस्य महाहरिः ॥ ७-१७१-२५ (५२८०४)
सोऽन्यद्धनुः समादाय क्रोधरक्तेक्षणः श्वसन् ।
अभ्यद्रवच्छरौघैस्तं धृष्टद्युम्नं महाबलम् ॥ ७-१७१-२६ (५२८०५)
दृष्ट्वा कर्णं तु संरब्धं ते वीराः षड्रथर्षभाः ।
पाञ्चाल्यपुत्रं त्वरिताः परिवव्रुर्जिघांसया ॥ ७-१७१-२७ (५२८०६)
षण्णां योधप्रवीराणां तावकानां पुरस्कृतम् ।
मृत्योरास्यमनुप्राप्तं धृष्टद्युम्नममंस्महि ॥ ७-१७१-२८ (५२८०७)
पतस्मिन्नेव काले तु दाशार्हो विकिरञ्छरान् ।
धृष्टद्युम्नं पराक्रान्तं सात्यकिः प्रत्यपद्यत ॥ ७-१७१-२९ (५२८०८)
तमायान्तं महेष्वासं सात्यकिं युद्धदुर्मदम् ।
राधेयो दशभिर्बाणैः प्रत्यविध्यदजिह्मगैः ॥ ७-१७१-३० (५२८०९)
तं सात्यकिर्महाराज विव्याध दशभिः शरैः ।
पश्यतां सर्ववीराणां मा गास्तिष्ठेति चाब्रवीत् ॥ ७-१७१-३१ (५२८१०)
स सात्यकेस्तु बलिनः कर्णस्य च महात्मनः ।
आसीत्समागमो राजन्बलिवासवयोरिव ॥ ७-१७१-३२ (५२८११)
त्रासयन्रथघोषेण क्षत्रियान्क्षत्रियर्षभः ।
राजीवलोचनं कर्णं सात्यकिः प्रत्यविध्यत ॥ ७-१७१-३३ (५२८१२)
कम्पयन्निव घोषेण धनुषो वसुधां बली ।
सूतपुत्रो महाराज सात्यकिं प्रत्ययोधयत् ॥ ७-१७१-३४ (५२८१३)
विपाठकर्णिनाराचैर्वत्सदन्तैः क्षुरैरपि ।
कर्णः शरशतैश्चापि शैनेयं प्रत्यविध्यत ॥ ७-१७१-३५ (५२८१४)
तथैव युध्यमानोऽपि वृष्णीनां प्रवरो युधि ।
अभ्यवर्षच्छरैः कर्णं तद्युद्धमभवत्समम् ॥ ७-१७१-३६ (५२८१५)
तावकाश्च महाराज कर्णपुत्रश्च दंशितः ।
सात्यकिं विव्यधुस्तूर्णं समन्तान्निशितैः शरैः ॥ ७-१७१-३७ (५२८१६)
अस्त्रैरस्त्राणि संवार्य तेषां कर्णस्य वा विभो ।
अविध्यत्सात्यकिः क्रुद्धो वृषसेनं स्तनान्तरे ॥ ७-१७१-३८ (५२८१७)

तेन बाणेन निर्विद्धो वृषसेनो विशाम्पते ।
न्यपतत्स रथे मूढो धनुरुत्सृज्य वीर्यवान् ॥ ७-१७१-३९ (५२८१८)
ततः कर्णो हतं मत्वा वृषसेनं महारथम् ।
पुत्रशोकाभिसन्तप्तः सात्यकिं प्रत्यपीडयत् ॥ ७-१७१-४० (५२८१९)
पीड्यमानस्तु कर्णेन युयुधानो महारथः ।
विव्याध बहुभिः कर्णं त्वरमाणः पुनःपुनः ॥ ७-१७१-४१ (५२८२०)
स कर्णं दशभिर्विद्ध्वा वृषसेनं च सप्तभिः ।
स हस्तावापधनुषी तयोश्चिच्छेद सात्वतः ॥ ७-१७१-४२ (५२८२१)
तावन्ये धनुषी सज्जे कृत्वा शत्रुभयङ्करे ॥
युयुधानमाविध्येतां समन्तान्निशितैः शरैः ॥ ७-१७१-४३ (५२८२२)
वर्तमाने तु सङ्ग्रमे तस्मिन्वीरवरक्षये ।
अतीव शुश्रुवे राजन्गाण्डीवस्य महास्वनः ॥ ७-१७१-४४ (५२८२३)
श्रुत्वा तु रथनिर्घोषं गाण्डीवस्य च निःस्वनम् ।
सूतपुत्रोऽब्रवीद्राजन्दुर्योधनमिदं वचः ॥ ७-१७१-४५ (५२८२४)
एष सर्वां चमूं हत्वा मुख्यांश्चैव नरर्षभान् ।
पौरवांश्च महेष्वासो विक्षिपन्नुत्तमं धनुः ॥ ७-१७१-४६ (५२८२५)
पार्थो विजयते तत्र गाण्डीवनिनदो महान् ।
श्रूयते रथघोषश्च वासवस्येव नर्दतः ॥ ७-१७१-४७ (५२८२६)
करोति पाण्डवो व्यक्तं कर्मौपयिकमात्मनः ।
एषा विदार्यते राजन्बहुधा भारती चमूः ॥ ७-१७१-४८ (५२८२७)
विप्रकीर्णान्यनीकानि न हि तिष्ठन्ति कर्हिचित् ।
वातेनेव समुद्धूतमभ्रजालं विदीर्यते ॥ ७-१७१-४९ (५२८२८)
सव्यसाचिनमासाद्य भिन्ना नौरिव सागरे ॥ ७-१७१-५० (५२८२९)
द्रवतां योधमुख्यानां गाण्डीवप्रेषितैः शरैः ।
विद्धानां शतशो राजञ्श्रूयते निःस्वनो महान् ॥ ७-१७१-५१ (५२८३०)
शृणु दुन्दुभिनिर्घोषमर्जुनस्य रथं प्रति ।
निशीथे राजशार्दूल स्तनयित्नोरिवाम्बरे ॥ ७-१७१-५२ (५२८३१)
हाहाकाररवांश्चैव सिंहनादांश्च पुष्कलान् ।
शृणु शब्दान्बहुविधानर्जुनस्य रथं प्रति ॥ ७-१७१-५३ (५२८३२)
अयं मध्ये स्थितोऽस्माकं सात्यकिः सात्वतां वरः ।
इह चेल्लभ्यते लक्ष्यं कृत्स्नाञ्जेष्यामहे परान् ॥ ७-१७१-५४ (५२८३३)
एष पाञ्चालराजस्य पुत्रो द्रोणेन सङ्गतः ।
सर्वतः संवृतो योधैः शूरैश्च रथसत्तमैः ॥ ७-१७१-५५ (५२८३४)
सात्यकिं यदि हन्याम धृष्टद्युम्नं च पार्षतम् ।
असंशयं महाराज ध्रुवो नो विजयो भवेत् ॥ ७-१७१-५६ (५२८३५)
सौभद्रवदिमौ वीरौ परिवार्य महारथौ ।

प्रयतायो महाराज निहन्तुं वृष्णिपार्षतौ ॥ ७-१७१-५७ (५२८३६)
सव्यसाची पुरोऽभ्येति द्रोणानीकाय भारत ।
संसक्तं सात्यकिं ज्ञात्वा बहुभिः कुरुपुङ्गवैः ॥ ७-१७१-५८ (५२८३७)
तत्र गच्छन्तु बहवः प्रवरा रथसत्तमाः ।
यावत्पार्थो न जानाति सात्यकिं बहुभिर्वृतम् ॥ ७-१७१-५९ (५२८३८)
ते त्वरध्वं तथा शूराः शराणां मोक्षणे भृशम् ।
यथा त्विह व्रजत्येष परलोकाय माधवः ।
तथा कुरु महाराज सुनीत्या सुप्रयुक्तया ॥ ७-१७१-६० (५२८३९)
कर्णस्य मतमास्थाय पुत्रस्ते प्राह सौबलम् ।
यथेन्द्रः समरे राजन्प्राह विष्णुं यशस्विनम् ॥ ७-१७१-६१ (५२८४०)
वृतः सहस्रैर्दशभिर्गजानामनिवर्तिनाम् ।
रथैश्च दशसाहस्रैस्तूर्णं याहि धनञ्जयम्। ७-१७१-६२ (५२८४१)
दुःशासनो दुर्विषहः सुबाहुर्दुः प्रधर्षणः ।
एते त्वामनुयास्यन्ति पत्तिभिर्बहुभिर्वृताः ॥ ७-१७१-६३ (५२८४२)
जहि कृष्णौ महाबाहो धर्मराजं च मातुल ।
नकुलं सहदेवं च भीमसेनं तथैव च ॥ ७-१७१-६४ (५२८४३)
देवानामिव देवेन्द्रे जयाशा त्वयि मे स्थिता ।
जहि मातुल कौन्तेयानसुरानिव पावकिः ॥ ७-१७१-६५ (५२८४४)
एवमुक्तो ययौ पार्थान्पुत्रेण तव सौबलः ।
महत्या सेनया सार्धं सह पुत्रैश्च ते विभो ॥ ७-१७१-६६ (५२८४५)
प्रियार्थं तव पुत्राणां दिधक्षुः पाण्डुनन्दनान् ।
ततः प्रववृते युद्धं तावकानां परैः सह ॥ ७-१७१-६७ (५२८४६)
प्रयाते सौबले राजन्पाण्डवानामनीकिनीम् ।
बलेन महता युक्ताः सूतपुत्रस्तु सात्वतम् ॥ ७-१७१-६८ (५२८४७)
अभ्ययात्त्वरितो युद्धे किरञ्शरशतान्बहून् ।
तथैव पार्थिवाः सर्वे सात्यकिं पर्यवारयन् ॥ ७-१७१-६९ (५२८४८)
भारद्वाजस्ततो गत्वा धृष्टद्युम्नरथं प्रति ।
महद्युद्धं तदासीत्तुं द्रोणस्य निशि भारत ।
धृष्टद्युम्नेन वीरेण पाञ्चालैश्च सहाद्भुतम् ॥ ॥ ७-१७१-७० (५२८४९)

इति श्रीमन्महाभारते द्रोणपर्वणि घटोत्कचवधपर्वणि
चतुर्दशरात्रियुद्धे एकसप्तत्यधिकशततमोऽध्यायः ॥ १७१ ॥

Mahabharata - Drona Parva - Chapter Footnotes

५-१७१-२० द्युमत्सेन इति पाठान्तरम् ॥
५-१७१-२५ हरिः सिंहः ॥

५-१७१-२७ षड्रथर्षभाः दुर्योधनदुःशसासनद्रोणकर्णशल्यशकुनयः ॥
५-१७१-४८ औपयिकं युक्तम् ॥
५-१७१-५४ इह सात्यकिरूपं लक्ष्यं लभ्यतेचेत् । अयं वशीक्रियतेचेदित्यर्थः ॥
५-१७१-६० माधवो मधुवंशजः सात्यकिः ॥
५-१७१-६५ पाविकः स्कन्दः ॥
५-१७१-१७१ एकसप्तत्यधिकशततमोऽध्यायः ॥

---

द्रोनपर्व-अध्यय१७२
॥ श्रीः ॥
७.१७२. अध्यायः १७२

Mahabharata - Drona Parva - Chapter Topics
सङ्कुलयुद्धम् ॥ १ ॥
धृष्टद्युम्नादीनां हर्षात्सिंहनादः ॥ २ ॥

Mahabharata - Drona Parva - Chapter Text

७-१७२-० (५२८५०)
सञ्जय उवाच। ७-१७२-०क्ष् (४७२१)
ततस्ते प्राद्रवन्सर्वे त्वरिता युद्धदुर्मदाः ।
अमृष्यमाणाः संरब्धा युयुधानरथं प्रति ॥ ७-१७२-१ (५२८५१)
ते रथैः कल्पितै राजन्हेमरूप्यविभूषितैः ।
सादिभिश्च गजैश्चैव परिवव्रुः समन्ततः ॥ ७-१७२-२ (५२८५२)
अथैनं कोष्ठकीकृत्य सर्वतस्ते महारथाः ।
सिंहनादांस्ततश्चक्रुस्तर्जयन्ति स्म सात्यकिम् ॥ ७-१७२-३ (५२८५३)
तेऽभ्यवर्षञ्छरैस्तीक्ष्णैः सात्यकिं सत्यविक्रमम् ।
त्वरमाणा महावीरा माधवस्य वधैषिणः ॥ ७-१७२-४ (५२८५४)
तान्दृष्ट्वा पततस्तूर्णं शैनेयः परवीरहा ।
प्रत्यगृह्णान्महाबाहुः प्रमुञ्चन्विशिखान्बहून् ॥ ७-१७२-५ (५२८५५)
तत्र वीरो महेष्वासः सात्यकिर्युद्धदुर्मदः ।
निचकर्त शिरांस्युग्रैः शरैः सन्नतपर्वभिः ॥ ७-१७२-६ (५२८५६)
हस्तिहस्तान्हयग्रीवा बाहूनपि च सायुधान् ।
क्षुरप्रैः शातयामास तावकानां स माधवः ॥ ७-१७२-७ (५२८५७)
पतितैश्चामरैश्चैव श्वेतच्छत्रैश्च भारत ।
बभूव धरणी पूर्णा नक्षत्रैर्द्यौरिव प्रभो ॥ ७-१७२-८ (५२८५८)

एतेषां युयुधानेन युध्यतां युधि भारत ।
बभूव तुमुलः शब्दः प्रेतानां क्रन्दतामिव ॥ ७-१७२-९ (५२८५९)
तेन शब्देन महता पूरिताऽभूद्वसुन्धरा ।
रात्रिः समभवच्चैव तीव्ररूपा भयावहा ॥ ७-१७२-१० (५२८६०)
दीर्यमाणं बलं दृष्ट्वा युयुधानशराहतम् ।
श्रुत्वा च विपुलं नादं निशीथे रोमहर्षणे ॥ ७-१७२-११ (५२८६१)
सुतस्तवाब्रवीद्राजन्सारथिंरथिनां वरः ।
यत्रैष शब्दस्तत्राश्वांश्चोदयेति पुनःपुनः ॥ ७-१७२-१२ (५२८६२)
तेन सञ्चोद्यमानस्तु ततस्तांस्तुरगोत्तमान् ।
सूतः सञ्चोदयामास युयुधानरथं प्रति ॥ ७-१७२-१३ (५२८६३)
ततो दुर्योधनः क्रुद्धो दृढधन्वा जितक्लमः ।
शीघ्रहस्तश्चित्रयोधी युयुधानमुपाद्रवत् ॥ ७-१७२-१४ (५२८६४)
ततः पूर्णायतोत्सृष्टैः शरैः शोणितभोजनैः ।
दुर्योधनं द्वादशभिर्माधवः प्रत्यविध्यत ॥ ७-१७२-१५ (५२८६५)
दुर्योधनस्तेन तथा पूर्वमेवार्दितः शरैः ।
शैनेयं दशभिर्बाणैः प्रत्यविध्यदमर्षितः ॥ ७-१७२-१६ (५२८६६)
ततः समभवद्युद्धं तुमुलं भरतर्षभ ।
पाञ्चालानां च सर्वेषां भरतानां च दारुणम् ॥ ७-१७२-१७ (५२८६७)
शैनेयस्तु रणे क्रुद्धस्तव पुत्रं महारथम् ।
सायकानामशीत्या तु विव्याधोरसि भारत ॥ ७-१७२-१८ (५२८६८)
ततोऽस्य वाहान्समरे शरैर्निन्ये यमक्षयम् ।
सारथिं च रथात्तूर्णं पातयामास पत्रिणा ॥ ७-१७२-१९ (५२८६९)
हताश्वे तु रथेऽतिष्ठन्पुत्रस्तव विशाम्पते ।
मुमोच निशितान्बाणाञ्शैनेयस्य रथं प्रति ॥ ७-१७२-२० (५२८७०)
शरान्पञ्चसतांस्तस्मै शैनेयः कृतहस्तवत् ।
चिच्छेद समरे राजन्प्रेषितांस्तनयेन ते ॥ ७-१७२-२१ (५२८७१)
अथापरेण भल्लेन मुष्टिदेशे महद्धनुः ।
चिच्छेद तरसा युद्धे तव पुत्रस्य माधव ॥ ७-१७२-२२ (५२८७२)
विरथो विधनुष्कश्च सर्वलोकेश्वरः प्रभुः ।
आरुरोह रथं तूर्णं भास्वरं कृतवर्मणः ॥ ७-१७२-२३ (५२८७३)
दुर्योधने परावृत्ते शैनेयस्तव वाहिनीम् ।
द्रावयामास विशिखैर्निशामध्ये विशाम्पते ॥ ७-१७२-२४ (५२८७४)
शकुनिश्चार्जुनं राजन्परिवार्य समन्ततः ।
रथैरनेकसाहस्रैर्गजैश्चापि सहस्रशः ।
तथा हयसहस्रैश्च नानाशस्त्रैरवाकिरत् ॥ ७-१७२-२५ (५२८७५)
ते महास्त्राणि सर्वाणि विकिरन्तोऽर्जुनं प्रति ।

अर्जुनं योधयन्ति स्म क्षत्रियाः कालचोदिताः ॥ ७-१७२-२६ (५२८७६)
तान्यर्जुनः सहस्राणि रथवारणवाजिनाम् ।
प्रत्यवारयदायस्तः प्रकुर्वन्विपुलं क्षयम् ॥ ७-१७२-२७ (५२८७७)
ततस्तु समरे शूरः शकुनिः सौबलस्तदा ।
विव्याध निशितैर्बाणैरर्जुनं प्रहसन्निव ॥ ७-१७२-२८ (५२८७८)
पुनश्चैव शतेनास्य संरुरोध महारथम् ॥ ७-१७२-२९ (५२८७९)
तमर्जुनस्तु विंशत्या विव्याध युधि भारत ।
अथेतरान्महेष्वासांस्त्रिभिस्त्रिभिरविध्यत ॥ ७-१७२-३० (५२८८०)
निवार्य तान्बाणगणैर्युधि राजन्धनञ्जयः ।
जघान तावकान्योधान्वज्रपाणिरिवासुरान् ॥ ७-१७२-३१ (५२८८१)
भुजैश्छिन्नैर्महीपाल हस्तिहस्तोपमैर्मृधे ।
समाकीर्णा मही भाति पञ्चास्यैरिव पन्नगैः ॥ ७-१७२-३२ (५२८८२)
शिरोभिः सकिरीटैश्च सुनसैश्चारुकुण्डलैः ।
सन्दष्टौष्ठपुटैः क्रुद्धैस्तथैवोद्वृत्तलोचनैः ॥ ७-१७२-३३ (५२८८३)
निष्कचूडामणिधरैः क्षत्रियाणां पियंवदैः ।
पङ्कजैरिव विन्यस्तैः पर्वतैर्विबभौ मही ॥ ७-१७२-३४ (५२८८४)
कृत्वा तत्कर्म बीभत्सुरुग्रमुग्रपराक्रमः ।
विव्याध शकुनिं भूयः पञ्चभिर्नतपर्वभिः ॥ ७-१७२-३५ (५२८८५)
अताडयदुलूकं च त्रिभिरेव तथा शरैः ।
उलूकं पुनराजघ्ने त्रिभिरेव महायशाः ॥ ७-१७२-३६ (५२८८६)
स तु तेन समाविद्ध क्रोधाद्द्विगुणविक्रमः ।
शरैरनेकसाहस्रैः सोऽर्जुनं प्रत्यविध्यत ॥ ७-१७२-३७ (५२८८७)
तमुलूकस्तथा विद्धा वासुदेवमताडयत् ।
ननाद च महानादं पूरयन्निव मेदिनीम् ॥ ७-१७२-३८ (५२८८८)
अर्जुनः शकुनेश्चापं सायकैरच्छिनद्रणे ।
निन्ये च चतुरो वाहान्यमस्य सदनं प्रति ॥ ७-१७२-३९ (५२८८९)
ततो रथादवप्लुत्य सौबलो भरतर्षभ ।
उलूकस्य रथं तूर्णमारुरोह विशाम्पते ॥ ७-१७२-४० (५२८९०)
तावेकरथमारूढौ पितापुत्रौ महारथौ ।
पार्थं सिषिचतुर्बाणैर्गिरिं मेघाविवाम्बुभिः ॥ ७-१७२-४१ (५२८९१)
तौ तु विद्धा महाराज पाण्डवो निशितैः शरैः ।
विद्रावयंस्तव चमूं शतशो व्यधमच्छरैः ॥ ७-१७२-४२ (५२८९२)
अनिलेन यथाऽभ्राणि विच्छिन्नानि समन्ततः ।
विच्छिन्नानि तथा राजन्बलान्यासन्विशाम्पते ॥ ७-१७२-४३ (५२८९३)
तद्बलं भरतश्रेष्ठ वध्यमानं तदा निशि ।
प्रदुद्राव दिशः सर्वा वीक्षमाणं भयार्दितम् ॥ ७-१७२-४४ (५२८९४)

उत्सृज्य वाहान्समरे चोदयन्तस्तथाऽपरे ।
सम्भ्रान्ताः पर्यधावन्त तस्मिंस्तमसि दारुणे ॥ ७-१७२-४५ (५२८९५)
विजित्य समरे योधांस्तावकान्भरतर्षभ ।
दध्मतुर्मुदितौ शङ्खौ वासुदेवधनञ्जयौ ॥ ७-१७२-४६ (५२८९६)
धृष्टद्युम्नो महाराज द्रोणं विद्ध्वा त्रिभिः शरैः ।
चिच्छेद धनुषस्तूर्णं ज्यां शरेण शितेन ह ॥ ७-१७२-४७ (५२८९७)
तन्निधाय धनुर्भूमौ द्रोणः क्षत्रियमर्दनः ।
आददेऽन्यद्धनुः शूरो वेगवत्सारवत्तरम् ॥ ७-१७२-४८ (५२८९८)
धृष्टद्युम्नं ततो द्रोणो विद्ध्वा सप्तभिराशुगैः ।
सारथिं पञ्चभिर्बाणै राजन्विव्याध संयुगे ॥ ७-१७२-४९ (५२८९९)
तं निवार्य शरैस्तूर्णं धृष्टद्युम्नो महारथः ।
व्यधमत्कौरवीं सेनामासुरीं मघवानिव ॥ ७-१७२-५० (५२९००)
वध्यमाने बले तस्मिंस्तव पुत्रस्य मारिष ।
प्रावर्तत नदी घोरां शोणितौघतरङ्गिणी ॥ ७-१७२-५१ (५२९०१)
उभयोः सेनयोर्मध्ये नराधद्विपवाहिनी ।
तथा वैतरणी राजन्यतराजुपुरं प्रति ॥ ७-१७२-५२ (५२९०२)
द्रावयित्वा तु तत्सैन्यं धृष्टद्युम्नः प्रतापवान् ।
अभ्यराजत तेजस्वी शक्रो देवगणेष्विव ॥ ७-१७२-५३ (५२९०३)
अथ दध्मुर्महाशङ्खान्धृष्टद्युम्नशिखण्डिनौ ।
यमौ च युयुधानश्च पाण्डक्य वृकोदरः ॥ ७-१७२-५४ (५२९०४)
जित्वा रथसहस्राणि तावकानां महारथाः ।
सिंहनादरवांश्चक्रुः पाण्डवा जितकाशिनः ॥ ७-१७२-५५ (५२९०५)
पश्यतस्तव पुत्रस्य कर्णस्य च रणोत्कटाः ।
तथा द्रोणस्य शूरस्य द्रौणेश्चैव विशाम्पते ॥ ॥ ७-१७२-५६ (५२९०६)

इति श्रीमन्महाभारते द्रोणपर्वणि घटोत्कचवधपर्वणि
चतुर्दशरात्रियुद्धे द्विसप्तत्यधिकशततमोऽध्यायः ॥१७२ ॥

---

द्रोनपर्व-अध्यय१७३
॥ श्रीः ॥
७.१७३. अध्यायः १७३

Mahabharata - Drona Parva - Chapter Topics
द्रोणकर्णयोः सात्यकिधृष्टद्युम्नाक्ष्यां युद्धम् ॥१ ॥

Mahabharata - Drona Parva - Chapter Text

७-१७३-० (५२९०७)
सञ्जय उवाच। ७-१७३-०क्ष् (४७२२)
विद्रुतं स्वबलं दृष्ट्वा वध्यमानं महात्मभिः ।
क्रोधेन महताऽविष्टः पुत्रस्तव विशाम्पते ॥ ७-१७३-१ (५२९०८)
अभ्येत्य सहसा कर्णं द्रोणं च जयतां वरम् ।
अमर्षवशमापन्नो वाक्यज्ञो वाक्यमब्रवीत् ॥ ७-१७३-२ (५२९०९)
भवद्भ्यामिह सङ्ग्रामः क्रुद्धाभ्यां सम्प्रवर्तितः ।
आहवे निहतं दृष्ट्वा सैन्धवं सव्यसाचिना ॥ ७-१७३-३ (५२९१०)
निहन्यमानां पाण्डूनां बलेन मम वाहिनीम् ।
भूत्वा तद्विजये शक्तावशक्ताविव पश्यतः ॥ ७-१७३-४ (५२९११)
यद्यहं भवतोस्त्याज्यो न वाच्योऽस्मि तदैव हि ।
आवां पाण्डुसुतान्सङ्ख्ये जेष्याव इति मानदौ ॥ ७-१७३-५ (५२९१२)
तदैवाहं वचः श्रुत्वा भवद्भ्यामनुसम्पतम् ।
नाकरिष्यमिदं पार्थैर्वैरं योधविनाशनम् ॥ ७-१७३-६ (५२९१३)
यदि नाहं परित्याज्यो भवद्भ्यां पुरुषर्षभौ ॥
युध्यतामनुरूपेण विक्रमेण सुविक्रमौ ॥ ७-१७३-७ (५२९१४)
वाक्प्रतोदेन तौ वीरौ प्रणुन्नौ तनयेन ते ।
प्रावर्तयेतां सङ्ग्रामं घट्टिताविव पन्नगौ ॥ ७-१७३-८ (५२९१५)
ततस्तौ रथिनां श्रेष्ठौ सर्वलोकधनुर्धरौ ।
शैनेयप्रमुखान्पार्थानभिदुद्रुवत् रणे ॥ ७-१७३-९ (५२९१६)
तथैव सहिताः पार्थाः सर्वसैन्येन संवृताः ।
अभ्यवर्तन्त तौ वीरौ नर्दमानौ मुहुर्मुहुः ॥ ७-१७३-१० (५२९१७)
अथ द्रोणो महेष्वासो दशभिः शिनिपुङ्गवम् ।
अविध्यत्त्वरितं क्रुद्धः सर्वशस्त्रभृतां वरः ॥ ७-१७३-११ (५२९१८)
कर्णश्च दशभिर्बाणैः पुत्रश्च तव सप्तभिः ।
दशभिर्वृषसेनश्च सौबलश्चापि सप्तभिः ।
एते कौरव सङ्क्रन्दे शैनेयं पर्यवाकिरन् ॥ ७-१७३-१२ (५२९१९)
दृष्ट्वा च समरे द्रोणं निघ्नन्तं पाण्डवीं चमूम् ।
विव्यधुः सोमकास्तूर्णं समन्ताच्छरवृष्टिभिः ॥ ७-१७३-१३ (५२९२०)
तत्र द्रोणोऽहरत्प्राणान्क्षत्रियाणां विशाम्पते ।
रश्मिभिर्भास्करो राजंस्तमांसीव समन्ततः ॥ ७-१७३-१४ (५२९२१)
द्रोणेन वध्यमानानां पाञ्चालानां विशाम्पते ।
शुश्रुवे तुमुलः शब्दः क्रोशतामितरेतरम् ॥ ७-१७३-१५ (५२९२२)
पुत्रानन्ये पितॄनन्ये भ्रातॄनन्ये च मातुलान् ।
भागिनेयान्वयस्यांश्च तथा सम्बन्धिबान्धवान् ।

उत्सृज्योत्सृज्य गच्छन्ति त्वरिता जीवितेप्सवः ॥ ७-१७३-१६ (५२९२३)
अपरे मोहिता मोहात्तमेवाभिमुखा ययुः ।
पाण्डवानां रणे योधाः परलोकं गताः परे ॥ ७-१७३-१७ (५२९२४)
सा तथा पाण्वी सेना पीड्यमाना महात्मना ।
निशि सम्प्राद्रवद्राजन्नुत्सृज्योल्काः सहस्रशः ॥ ७-१७३-१८ (५२९२५)
पश्यतो भीमसेनस्य विजयस्याच्युतस्य च ।
ययमोर्धर्मपुत्रस्य पार्षतस्य च पश्यतः ॥ ७-१७३-१९ (५२९२६)
तमसा संवृते लोके न प्राज्ञायत किञ्चन ।
कौरवाणां प्रकाशेन दृश्यन्ते विद्रुताः परे ॥ ७-१७३-२० (५२९२७)
द्रवमाणं तु तत्सैन्यं द्रोणकर्णौ महारथौ ।
जघ्नतुः पृष्ठतो राजन्किरन्तौ सायकान्बहून् ॥ ७-१७३-२१ (५२९२८)
पाञ्चालेषु प्रभग्नेषु क्षीयमाणेषु सर्वतः ।
जनार्दनो दीनमानाः प्रत्यभाषत फल्गुनम् ॥ ७-१७३-२२ (५२९२९)
द्रोणकर्णौ महेष्वासावेतौ पार्षतसात्यकी ।
पाञ्चालांश्चैव सहितौ जघ्नतुः सायकैर्भृशम् ॥ ७-१७३-२३ (५२९३०)
एतयोः शरवर्षेण प्रभग्ना नो महारथाः ।
वार्यमाणापि कौन्तेय पृतना नावतिष्ठते ॥ ७-१७३-२४ (५२९३१)
तां तु विद्रवतीं दृष्ट्वा ऊचतुः केशवार्जुनौ ।
मा विद्रवत वित्रस्ता भयं त्यजत पाण्डवाः ॥ ७-१७३-२५ (५२९३२)
तावावां सर्वसैन्यैश्च व्यूहैः सम्यगुदायुधैः ।
द्रोणं च सूतपुत्रं च प्रयतावः प्रबाधितुम् ॥ ७-१७३-२६ (५२९३३)
एतौ हि बलिनौ शूरौ कृतास्त्रौ जितकाशिनौ ।
उपेक्षितौ बलं तूर्णं नाशयेतां निशामिमाम् ॥ ७-१७३-२७ (५२९३४)
सञ्जय उवाच ।
तयोः संवदतोरेवं भीमकर्मा महाबलः। ७-१७३-२८ (५२९३५)
आयाद्वृकोदरः शीघ्रं पुनरावर्त्य वाहिनीम् ॥
वृकोदरमथायान्तं दृष्ट्वा तत्र जनार्दनः। ७-१७३-२९ (५२९३६)
पुनरेवाब्रवीद्राजन्हर्षयन्निव पाण्डवम् ॥
एष भीमो रणश्लाघी वृतः सोमकपाण्डवैः। ७-१७३-३० (५२९३७)
अभ्यवर्तत वेगेन द्रोणकर्णौ महारथौ ॥
एतेन सहितो युद्धय पाञ्चालैश्च महारथैः। ७-१७३-३१ (५२९३८)
आश्वासनार्थं सैन्यानां सर्वेषां पाण्डुनन्दन ॥
ततस्तौ पुरुषव्याघ्रावुभौ माधवपाण्डवौ। ७-१७३-३२ (५२९३९)
द्रोणकर्णौ समासाद्य धिष्ठितौ रणमूर्धनि ॥ ७-१७३-३३ (५२९४०)
सञ्जय उवाच ।
ततस्तत्पुनरावृत्तं युधिष्ठिरबलं महत् ।

ततो द्रोणश्च कर्णश्च परान्ममृदतुर्युधि ॥ ७-१७३-३३क्ष् (४७२३)
स सम्प्रहारस्तुमुलो निशि प्रत्यभवन्महान् ।
यथा सागरयो राजंश्चन्द्रोदयविरुद्धयोः ॥ ७-१७३-३४ (५२९४१)
तत उत्सृज्य पाणिभ्यां प्रदीपांस्तव वाहिनी ।
युयुधे पाण्डवैः सार्धमुन्मत्तवदसङ्कुला ॥ ७-१७३-३५ (५२९४२)
रजसा तमसा चैव संवृते भृशदारुणे ।
केवलं नामगोत्रेण प्रायुध्यन्त जयैषिणः ॥ ७-१७३-३६ (५२९४३)
अश्रूयन्त हि नामानि श्राव्यमाणानि पार्थिवैः ।
प्रहरद्भिर्महाराज स्वयंवर इवाहवे ॥ ७-१७३-३७ (५२९४४)
निःशब्दमासीत्सहसा पुनः शब्दो महानभूत् ।
क्रुद्धानां युध्यमानानां जीयतां जयतामपि ॥ ७-१७३-३८ (५२९४५)
यत्रयत्र स्म दृश्यन्ते प्रदीपाः कुरुसत्तम ।
तत्रतत्र स्म शूरास्ते निपतन्ति पतङ्गवत् ॥ ७-१७३-३९ (५२९४६)
तथा संयुध्यमानानां विगाढाऽऽसीन्महानिशा ।
पाण्डवानां च राजेन्द्र कौरवाणां च सर्वशः ॥ ॥ ७-१७३-४० (५२९४७)

इति श्रीमन्महाभारते द्रोणपर्वणि घटोत्कचवधपर्वणि
चतुर्दशरात्रियुद्धे त्रिसप्तत्यधिकशततमोऽध्यायः ॥ १७३ ॥
Mahabharata - Drona Parva - Chapter Footnotes

५-१७३-८ घट्टितौ मर्दितौ ॥
५-१७३-१२ सङ्क्रन्दे युद्धे ॥
५-१७३-२३ सात्यकी इति द्वितीयान्तम् ॥
५-१७३-१७३ त्रिसप्तत्यधिकशततमोऽध्यायः ॥

---

द्रोनपर्व-अध्यय१७४
॥ श्रीः ॥
७.१७४. अध्यायः १७४

Mahabharata - Drona Parva - Chapter Topics
कर्णं युयुत्सोरर्जुनस्य कृष्णेन सहेतुकथनं तेन युद्धनिषेधः ॥ १ ॥
कृष्णार्जुनचोदनया घटोत्कचस्य कर्णेन सह रणारम्भः ॥ २ ॥

Mahabharata - Drona Parva - Chapter Text

७-१७४-० (५२९४८)

सञ्जय उवाच। ७-१७४-०क्ष् (४७२४)
ततः कर्णो रणे दृष्ट्वा पार्षतं परवीरहा ।
आजघानरोसि शरैर्दशभिर्मर्मभेदिभिः ॥ ७-१७४-१ (५२९४९)
प्रतिविव्याध तं तूर्णं धृष्टद्युम्नोपि मारिष ।
दशभिः सायकैर्हृष्टस्तिष्ठतिष्ठेति चाब्रवीत् ॥ ७-१७४-२ (५२९५०)
तावन्योन्यं शरैः सङ्ख्ये सञ्छाद्य सुमहारथैः ।
पुनः पूर्णायतोत्सृष्टैर्विव्यधाते परस्परम् ॥ ७-१७४-३ (५२९५१)
ततः पाञ्चालमुख्यस्य धृष्टद्युम्नस्य संयुगे ।
सारथिं चतुरश्चाश्वान्कर्णो विव्याध सायकैः ॥ ७-१७४-४ (५२९५२)
कार्मुकप्रवरं चापि प्रचिच्छेद शितैः शरैः ।
सारथिं चास्य भल्लेन रथनीडादपातयत् ॥ ७-१७४-५ (५२९५३)
धृष्टद्युम्नस्तु विरथो हताश्वो हतसारथिः ।
गृहीत्वा परिघं घोरं कर्णस्याश्वानपीडयत् ॥ ७-१७४-६ (५२९५४)
विद्धश्च बहुभिस्तेन शरैराशीविषोपमैः ।
ततो युधिष्ठिरानीकं पद्भ्यामेवान्वपद्यत ॥ ७-१७४-७ (५२९५५)
आरुरोह रथं चापि सहदेवस्य मारिष ।
प्रयातुकामः कर्णाय वारितो धर्मसूनुना ॥ ७-१७४-८ (५२९५६)
कर्णस्तु सुमहातेजाः सिंहनादविमिश्रितम् ।
धनुःशब्दं महच्चक्रे दध्मौ तारेण चाम्बुजम् ॥ ७-१७४-९ (५२९५७)
दृष्ट्वा विनिर्जितं युद्धे पार्षतं ते महारथाः ।
अमर्षवशमापन्नाः पाञ्चालाः सहसोमकाः ॥ ७-१७४-१० (५२९५८)
सूतपुत्रवधार्थाय शस्त्राण्यादाय सर्वशः ।
प्रययुः कर्णमुद्दिश्य मृत्युं कृत्वा निवर्तनम् ॥ ७-१७४-११ (५२९५९)
कर्णस्यापि रथे वाहानन्यान्सूतोऽभ्ययोजयत् ।
शङ्खवर्णान्महावेगान्सैन्धवान्साधुवाहिनः ॥ ७-१७४-१२ (५२९६०)
लब्धलक्षस्तु राधेयः पञ्चालानां महारथान् ।
अभ्यपीडयदायस्तः शरैर्मेघ इवाचलम् ॥ ७-१७४-१३ (५२९६१)
सा पीड्यमाना कर्णेन पाञ्चालानां महाचमूः ।
सम्प्राद्रवत्सुसन्त्रस्ता सिंहेनेवार्दिता मृगी ॥ ७-१७४-१४ (५२९६२)
पतितास्तुरगेभ्यश्च गजेभ्यश्च महीतले ।
रथेभ्यश्च नरास्तूर्णमदृश्यन्त ततस्ततः ॥ ७-१७४-१५ (५२९६३)
धावमानस्य योधस्य क्षुरप्रैः स महामृधे ।
बाहू चिच्छेद वै कर्णः शिरश्चैव सकुण्डलम् ॥ ७-१७४-१६ (५२९६४)
ऊरू चिच्छेद चान्यस्य गजस्थस्य विशाम्पते ।
वाजिपृष्ठगतस्यापि भूमिष्ठस्य च मारिष ॥ ७-१७४-१७ (५२९६५)
नाज्ञासिषुर्धावमाना बहवश्च महारथाः ।

सञ्छिन्नान्यात्मगात्राणि वाहनानि च संयुगे ॥ ७-१७४-१८ (५२९६६)
ते वध्यमानाः समरे पाञ्चालाः सृञ्जयैः सह ।
तृणप्रस्पन्दनाच्चापि सूतपुत्रं स्म मेनिरे ॥ ७-१७४-१९ (५२९६७)
अपि स्वं समरे योधं धावमानं विचेतसम् ।
कर्णमेवाभ्यमन्यन्त ततो भीता द्रवन्ति ते ॥ ७-१७४-२० (५२९६८)
तान्यनीकानि भग्नानि द्रवमाणानि भारत ।
अभ्यद्रवद्द्रुतं कर्णः पृष्ठतो विकिरञ्छरान् ॥ ७-१७४-२१ (५२९६९)
अवेक्षमाणास्त्वन्योन्यं सुसम्मूढा विचेतसः ।
नाशक्नुवन्नवस्थातुं काल्यमाना महात्मना ॥ ७-१७४-२२ (५२९७०)
कर्णेनाभ्याहता राजन्पाञ्चालाः परमेषुभिः ।
द्रोणेन च दिशः सर्वा वीक्षमाणाः प्रदुद्रुवुः ॥ ७-१७४-२३ (५२९७१)
ततो युधिष्ठिरो राजा स्वसैन्यं प्रेक्ष्य विद्रुतम् ।
अपयाने मनः कृत्वा फल्गुनं वाक्यमब्रवीत् ॥ ७-१७४-२४ (५२९७२)
पश्य कर्णं महेष्वासं धनुष्पाणिमवस्थितम् ।
निशीथे दारुणे काले तपन्तमिव भास्करम् ॥ ७-१७४-२५ (५२९७३)
कर्णसायकनुन्नानां क्रोशतामेष निःस्वनः ।
अनिशं श्रूयते पार्थ त्वद्बन्धूनामनाथवत् ॥ ७-१७४-२६ (५२९७४)
यथा विसृजतश्चास्य सन्दधानस्य चाशुगान् ।
पश्यामि नान्तरं पार्थ क्षपयिष्यति नो ध्रुवम् ॥ ७-१७४-२७ (५२९७५)
यदत्रानन्तरं कार्यं प्राप्तकाल च पश्यसि ।
कर्णस्य वधसंयुक्तं तत्कुरुष्व धनञ्जय ॥ ७-१७४-२८ (५२९७६)
एवमुक्तो महाराज पार्थः कृष्णमथाब्रवीत् ।
भीतः कुन्तीसुतो राजा राधेयस्याद्य विक्रमात् ॥ ७-१७४-२९ (५२९७७)
एवं गते प्राप्तकालं कर्णानीके पुनः पुनः ।
भवान्व्यवस्यतु क्षिप्रं द्रवते हि वरूथिनी ॥ ७-१७४-३० (५२९७८)
द्रोणसायकनुन्नानां भग्नानां मधुसूदन ।
कर्णेन त्रास्यमानानामवस्थानं न विद्यते ॥ ७-१७४-३१ (५२९७९)
पश्यामि च तथा कर्णं विचरन्तमभीतवत् ।
द्रवमाणान्रथोदारान्किरन्तं निशितैः शरैः ॥ ७-१७४-३२ (५२९८०)
नैनं शक्ष्यामि संसोढुं चरन्तं रणमूर्धनि ।
प्रत्यक्षं वृष्णिशार्दूल पादस्पर्शमिवोरगः ॥ ७-१७४-३३ (५२९८१)
स सवांस्तत्र यात्वाशु यत्र कर्णो महारथः ।
अहमेनं हनिष्यामि मां वैष मधुसूदन ॥ ७-१७४-३४ (५२९८२)
श्रीवासुदेव उवाच। ७-१७४-३५क्ष् (४७२५)
पश्यामि कर्णं कौन्तेय देवराजमिवाहवे ।
विचरन्तं नरव्याघ्रमतिमानुषविक्रमम् ॥ ७-१७४-३५ (५२९८३)

नैतस्यान्योऽस्ति सङ्ग्रामे प्रत्युद्याता धनञ्जय ।
ऋते त्वां पुरुषव्याघ्र राक्षसाद्वा घटोत्कचात् ॥ ७-१७४-३६ (५२९८४)
न तु तावदहं मन्ये प्राप्तकालं तवानघ ।
समागमं महाबाहो सूतपुत्रेण संयुगे ॥ ७-१७४-३७ (५२९८५)
दीप्यमाना महोल्केव तिष्ठत्यस्य हि वासवी ।
त्वदर्थं हि महाबाहो सूतपुत्रेण संयुगे ॥ ७-१७४-३८ (५२९८६)
रक्ष्यते शक्तिरेषा हि रौद्रां रूपं बिभर्ति च ।
घटोत्कचस्तु राधेयं प्रत्युद्यातु महाबलः ॥ ७-१७४-३९ (५२९८७)
स हि भीमेन बलिना जातः सुरपराक्रमः ।
तस्मिन्नस्त्राणि दिव्यानि राक्षसान्यासुराणि च ॥ ७-१७४-४० (५२९८८)
सततं चानुरक्तो वो हितैषी च घटोत्कचः ।
विजेष्यति रणे कर्णमिति मे नात्र संशयः ॥ ७-१७४-४१ (५२९८९)
सञ्जय उवाच। ७-१७४-४२क्ष् (४७२६)
एवमुक्तो महाबाहुः पार्थः पुष्करलोचनः ।
आजुहावाथ तद्रक्षस्तच्चासीत्प्रादुरग्रतः ॥ ७-१७४-४२ (५२९९०)
कवची सशरः खड्गी सधन्वा च विशाम्पते ।
अभिवाद्य ततः कृष्णं पाण्डवं च धनञ्जयम् ।
अब्रवीच्च तदा कृष्णमयमस्म्यनुशाधि माम् ॥ ७-१७४-४३ (५२९९१)
ततस्तं मेघसङ्काशं दीप्तास्यं दीप्तकुण्डलम् ।
अभ्यभाषत हैडिम्बिं दाशार्हः प्रहसन्निव ॥ ७-१७४-४४ (५२९९२)
वासुदेव उवाच। ७-१७४-४५क्ष् (४७२७)
घटोत्कच विजानीहि यत्त्वां वक्ष्यामि पुत्रक ।
प्राप्तो विक्रमकालोऽयं तव नान्यस्य कस्याचित् ।
स त्वं निमज्जतां युद्धे बन्धूनां बान्धवो भव ॥ ७-१७४-४५ (५२९९३)
यावन्ति च तवास्त्राणि सन्ति मायाश्च राक्षसीः ।
ग्अद्यैव समयस्तेषां मायानां चैव राक्षस'॥ ७-१७४-४६ (५२९९४)
पश्य कर्णेन हैडिम्बे पाण्डवानामनीकिनीम् ।
काल्यमानां रणे तात सिंहनेवेतरान्मृगान् ॥ ७-१७४-४७ (५२९९५)
एष कर्णो महेष्वासो मतिमान्दृढविक्रमः ।
पाण्वानामनीकेषु निहन्ति क्षत्रियर्षभान् ॥ ७-१७४-४८ (५२९९६)
किरन्तः शरवर्षाणि महान्ति दृढधन्विनः ।
न शक्नुवन्त्यवस्थातुं पीड्यमानाः शरार्चिषा ॥ ७-१७४-४९ (५२९९७)
निशीथे सूतपुत्रेण शरवर्षेण पीडिताः ।
एते द्रवन्ति पाञ्चालाः सिंहेनेवार्दिता मृशाः ॥ ७-१७४-५० (५२९९८)
एतस्यैवं प्रवृद्धस्य सूतपुत्रस्य संयुगे ।
निषेद्धा विद्यते नान्यस्त्वामृते भीमविक्रम ॥ ७-१७४-५१ (५२९९९)

स त्वं कुरु महाबाहो कर्म युक्तमिहात्मनः ।
मातुलानां पितॄणां च तेसजोऽस्त्रबलस्य च ॥ ७-१७४-५२ (५३०००)
एतदर्थे हि हैडिम्बे पुत्रानिच्छन्ति मानवाः ।
कथं नस्तारयेद्दुःखात्स त्वं तारय बान्धवान् ॥ ७-१७४-५३ (५३००१)
इच्छन्ति पितरः पुत्रान्स्वार्थहेतोर्घटोत्कच ।
हहलोकात्परे लोके तारयिष्यन्ति ये हिताः ॥ ७-१७४-५४ (५३००२)
तव ह्यत्र बलं भीमं मायाश्च तव दुस्तराः ।
सङ्क्रामे युध्यमानस्य सततं भीमनन्दन ॥ ७-१७४-५५ (५३००३)
पाण्डवानां प्रभग्नानां कर्णेन निशि सायकैः ।
मज्जतां धार्तराष्ट्रेषु भव पारं परन्तप ॥ ७-१७४-५६ (५३००४)
रात्रौ हि राक्षसा भूयो भवन्त्यमितविक्रमाः ।
बलवन्तः सुदुर्धर्षाः शूरा विक्रान्तचारिणः ॥ ७-१७४-५७ (५३००५)
जहि कर्णं हमेष्वासं निशीथे मायया रणे ।
पार्था द्रोणं वधिष्यन्ति धृष्टद्युम्नपुरोगमाः ॥ ७-१७४-५८ (५३००६)
सञ्जय उवाच। ७-१७४-५९क्ष् (४७२८)
केशवस्य वचः श्रुत्वा बीभत्सुरपि राक्षसम् ।
अभ्यभाषत कौरव्य घटोत्कचमरिन्दमम् ॥ ७-१७४-५९ (५३००७)
घटोत्कच भवांश्चैव दीर्घबाहुश्च सात्यकिः ।
मतौ मे सर्वसैन्येषु भीमसेनश्च पाण्डवः ॥ ७-१७४-६० (५३००८)
तद्भवान्यातु कर्णेन द्वैरथं युध्यतां निशि ।
सात्यकिः पृष्ठगोपस्ते भविष्यति महारथः ॥ ७-१७४-६१ (५३००९)
जहि कर्णं रणे शूरं सात्वतेन सहायवान् ।
यथेन्द्रस्तारकं पूर्वं स्कन्देन सह जघ्निवान् ॥ ७-१७४-६२ (५३०१०)
घटोत्कच उवाच। ७-१७४-६३क्ष् (४७२९)
गएवमेव महाबाहो यथा वदसि मां प्रभो ।
त्वया नियुक्तो गच्छामि कर्णस्य बधकाङ्क्षया'॥ ७-१७४-६३ (५३०११)
अलमेवास्मि कर्णाय द्रोणायालं च भारत ।
अन्येषां क्षत्रियाणां च कृतास्त्राणां महात्मनाम् ॥ ७-१७४-६४ (५३०१२)
अद्य दास्यामि सङ्ग्रामं सूतपुत्राय तं निशि ।
यं जनाः सम्प्रवक्ष्यन्ति यावद्भूमिर्धरिष्यति ॥ ७-१७४-६५ (५३०१३)
न चात्र शूरान्मोक्ष्यामि न भीतान्न कृताञ्जलीन् ।
सर्वानेव वधिष्यामि राक्षसं धर्ममास्थितः ॥ ७-१७४-६६ (५३०१४)
सञ्जय उवाच। ७-१७४-६७क्ष् (४७३०)
एवमुक्त्वा महाबाहुर्हैडिम्बिः परवीरहा ।
अभ्ययात्तुमुले कर्णं तव सैन्यं विभीषयन् ॥ ७-१७४-६७ (५३०१५)
तमापतन्तं सङ्क्रुद्धं दीप्तास्यं दीप्तमूर्धजम् ।

प्रहसन्पुरुषव्याघ्रः प्रतिजग्राह सूतजः ॥ ७-१७४-६८ (५३०१६)
तयोः समभवद्युद्धं कर्णराक्षसयोर्निशि ।
गर्जतो राजशार्दूल शक्रप्रह्लादयोरिव ॥ ॥ ७-१७४-६९ (५३०१७)

इति श्रीमन्महाभारते द्रोणपर्वणि घटोत्कचवधपर्वणि
चतुर्दशरात्रियुद्धे चतुःसप्तत्यधिकशततमोऽध्यायः ॥१७४ ॥
Mahabharata - Drona Parva - Chapter Footnotes

५-१७४-१३ आयस्तः प्रयत्नवान् ॥
५-१७४-१७४ चतुःसप्तत्यधिकशततमोऽध्यायः ॥

---

द्रोनपर्व-अध्यय१७५
॥ श्रीः ॥
७.१७५. अध्यायः १७५

Mahabharata - Drona Parva - Chapter Topics
घटोत्कचेन जटासुरसुतवधः ॥१ ॥

Mahabharata - Drona Parva - Chapter Text

७-१७५-० (५३०१८)
सञ्जय उवाच। ७-१७५-०क्ष् (४७३१)
दृष्ट्वा घटोत्कचं राजन्सूतपुत्ररथं प्रति ।
आयान्तं तु तथायुक्तं जिघांसुं कर्णमाहवे ।
अब्रवीत्तत्र पुत्रस्ते दुःशासनमिदं वचः ॥ ७-१७५-१ (५३०१९)
एतद्रक्षो रणे तूर्णं दृष्ट्वा कर्णस्य विक्रमम् ।
अभियाति द्रुतं कर्णं तद्वारय महारथम् ॥ ७-१७५-२ (५३०२०)
वृतः सैन्येन महता याहि यत्र महाबलः ।
कर्णो वैकर्तनो युद्धे राक्षसेन युयुत्सति ॥ ७-१७५-३ (५३०२१)
रक्ष कर्णं रणे यत्तो वृतः सैन्येन मानद ।
मा कर्णं राक्षसो घोरः प्रमादान्नाशयिष्यति ॥ ७-१७५-४ (५३०२२)
एतस्मिन्नन्तरे राजञ्जटासुरसुतो बली ।
दुर्योधनमुपागम्य प्राह प्रहरतां वरः ॥ ७-१७५-५ (५३०२३)
दुर्योधन तवामित्रान्प्रख्यातान्युद्धदुर्मदान् ।
पाण्डवान्हन्तुमिच्छामि त्वयाऽऽज्ञप्तः सहानुगान् ॥ ७-१७५-६ (५३०२४)
जटासुरो मम पिता रक्षसां ग्रामणीः पुरा ।

प्रयुज्य कर्म रक्षोघ्नं क्षुद्रैः पार्थैर्निपातितः ॥ ७-१७५-७ (५३०२५)
तस्यापचितिमिच्छामि शत्रुशोणितपूजया ।
शत्रुमांसैश्च राजेन्द्र मामनुज्ञातुमर्हसि ॥ ७-१७५-८ (५३०२६)
तमब्रवीत्ततो राजा प्रीयमाणः पुनःपुनः ।
द्रोणकर्णादिभिः सार्धं पर्याप्तोऽहं द्विषद्वधे ॥ ७-१७५-९ (५३०२७)
त्वं तु गच्छ मयाऽऽज्ञप्तो जहि युद्धे घटोत्कचम् ।
राक्षसं क्रूरकर्माणं रक्षोमानुषसम्भवम् ॥ ७-१७५-१० (५३०२८)
पाण्डवानां हितं नित्यं हस्त्यश्वरथघातिनम् ।
वैहायसगतं युद्धे प्रेषयेर्यमसादनम् ॥ ७-१७५-११ (५३०२९)
तथेत्युक्त्वा महाकायः समाहूय घटोत्कचम् ।
जाटासुरिर्भैमसेनिं नानाशस्त्रैरवाकिरत् ॥ ७-१७५-१२ (५३०३०)
अलम्बलं च कर्णं च कुरुसैन्यं च दुस्तरम् ।
हैडिम्बिः प्रममाथैको महाबातोम्बुदानिव ॥ ७-१७५-१३ (५३०३१)
ततो मायाबलं दृष्ट्वा रक्षस्तूर्णमलम्बलः ।
घटोत्कचं शरव्रातैर्नानालिङ्गैः समार्पयत् ॥ ७-१७५-१४ (५३०३२)
विद्धा च बहुभिर्बाणैर्भैमसेनिं महाबलः ।
व्यद्रावयच्छरव्रातैः पाण्डवानामनीकिनीम् ॥ ७-१७५-१५ (५३०३३)
तेन विद्राव्यमाणानि पाण्डुसैन्यानि भारत ।
निशीथे विप्रकीर्यन्ते वातनुन्ना घना इव ॥ ७-१७५-१६ (५३०३४)
घटोत्कचशरैर्नुन्ना तथैव तव वाहिनी ।
निशीथे प्राद्रवद्राजन्नुत्सृज्योल्काः सहस्रशः ॥ ७-१७५-१७ (५३०३५)
अलम्बलस्ततः क्रुद्धो भैमसेनिं महामृधे ।
आजघ्ने दशभिर्बाणैस्तोत्रैरिव महाद्विपम् ॥ ७-१७५-१८ (५३०३६)
तिक्ष्शस्तस्य संवाहं सूतं सर्वायुधानि च ।
घटोत्कचः प्रचिच्छेद प्रणदंश्चातिदारुणम् ॥ ७-१७५-१९ (५३०३७)
ततः कर्णं शरव्रातैः कुरूनन्यान्सहस्रशः ।
अलम्बलं चाभ्यवर्षन्मेघो मेरुमिवाचलम् ॥ ७-१७५-२० (५३०३८)
ततः सञ्चुक्षुभे सैन्यं कुरूणां राक्षसार्दितम् ।
उपर्युपरि चान्योन्यं चतुरङ्गं ममर्द ह ॥ ७-१७५-२१ (५३०३९)
जाटासुरिर्महाराज विरथो हतसारथिः ।
घटोत्कचं रणे क्रुद्धो मुष्टिनाऽभ्यहनद्दृढम् ॥ ७-१७५-२२ (५३०४०)
मुष्टिनाऽभ्याहतस्तेन प्रचचाल घटोत्कचः ।
क्षितिकम्पे यथा शैलः सवृक्षस्तृणगुल्मवान् ॥ ७-१७५-२३ (५३०४१)
ततः स परिघाभेन द्विट्सङ्घघ्नेन बाहुना ।
जाटासुरिं भैमसेनिरवधीन्मुष्टिना भृशम् ॥ ७-१७५-२४ (५३०४२)
तं प्रमथ्य ततः क्रुद्धस्तूर्णं हैडिम्बिराक्षिपत् ।

दोर्भ्यामिन्द्रध्वजाभाभ्यां निष्पिपेष च भूतले ॥ ७-१७५-२५ (५३०४३)
जाटासुरिर्मोक्षयित्वा आत्मानं च घटोत्कचात् ।
पुनरुत्थाय वेगेन घटोत्कचमुपाद्रावत् ॥ ७-१७५-२६ (५३०४४)
अलम्बलोऽपि विक्षिप्य समुत्क्षिप्य च राक्षसम् ।
घटोत्कचं रणे रोषान्निष्पिपेष च भूतले ॥ ७-१७५-२७ (५३०४५)
तयो समभवद्युद्धं गर्जतोरतिकाययोः ।
घटोत्कचालम्बलयोस्तुमुलं रोमहर्षणम् ॥ ७-१७५-२८ (५३०४६)
विशेषयन्तावन्योन्यं मायाभिरतिमायिनौ ।
युयुधाते महावीर्याविन्द्रवैरोचनाविव ॥ ७-१७५-२९ (५३०४७)
पावकाम्बुनिधी भूत्वा पुनर्गरुडतक्षकौ ।
पुनर्मेघमहाबत्तौ पुनर्वज्रमहाचलौ ॥ ७-१७५-३० (५३०४८)
पुनः कुञ्जरशार्दूलौ पुनः स्वर्भानुभास्करौ ।
एवं मायाशतसृजावन्योन्यवधकाङ्क्षिणौ ।
भृशं चित्रमयुध्येतामलम्बलघटोत्कचौ ॥ ७-१७५-३१ (५३०४९)
परिघैश्च गदाभिश्च प्रासमुद्गरपट्टसैः ।
मुसलैः पर्वताग्रैश्च तावन्योन्यं विजघ्नतुः ॥ ७-१७५-३२ (५३०५०)
हयाभ्यां च गजाभ्यां च रथाभ्यां च पदातिभिः ।
युयुधाते महामायौ राक्षसप्रवरौ युधि ॥ ७-१७५-३३ (५३०५१)
ततो घटोत्कचो राजन्नलम्बलवधेप्सया ।
उत्पतात भृशं क्रुद्धः श्येनवन्निपपात च ॥ ७-१७५-३४ (५३०५२)
गृहीत्वा च महाकायं राक्षसेन्द्रमलम्बलम् ।
उद्यम्य न्यवधीद्भूमौ मयं विष्णुरिवाहवे ॥ ७-१७५-३५ (५३०५३)
ततो घटोत्कचः खड्गमुद्धृत्याद्भुतदर्शनम् ।
रौद्रस्य कायाद्धि शिरो भीमं विकृतदर्शनम् ॥ ७-१७५-३६ (५३०५४)
स्फुरतस्तस्य समरे नदतश्चातिभैरवम् ।
निचकर्त महाराज शत्रोमितविक्रमः ॥ ७-१७५-३७ (५३०५५)
शिरस्तच्चापि सङ्गृह्य केशेषु रुधिरोक्षितम् ।
ययौ घटोत्कचस्तूर्णं दुर्योधनरथं प्रति ॥ ७-१७५-३८ (५३०५६)
ग्द्रोणकर्णकृपान्योधानतीत्य सुमहाबलः'।
अभ्येत्य च महाबाहुः स्मयमानः स राक्षसः ॥ ७-१७५-३९ (५३०५७)
शिरो रथेऽस्य निक्षिप्य विकृताननमूर्धजम् ।
प्राणदद्भैरवं नादं प्रावृषीव वलाहकः ॥ ७-१७५-४० (५३०५८)
अब्रवीच्च ततो राजन्दुर्योधनमिदं वचः ॥ ७-१७५-४१ (५३०५९)
एष ते निहतो बन्धुस्त्वया दृष्टोऽस्य विक्रमः ।
पुनर्द्रष्टासि कर्णस्य निष्ठामेतां तथाऽऽत्मनः ॥ ७-१७५-४२ (५३०६०)
स्वधर्ममर्थं कामं च त्रितयं योऽभिवाञ्छति ।

रिक्तपाणिर्न पश्येत राजानं ब्राह्मणं स्त्रियम् ।
तिष्ठस्व तावत्सुप्रीतो यावत्कर्णं वधाम्यहम् ॥ ७-१७५-४३ (५३०६१)
सञ्जय उवाच। ७-१७५-४४क्ष् (४७३२)
एवमुक्त्वा ततः प्रायात्कर्णं प्रति नरेश्वरः ।
किरञ्छरगणांस्तीक्ष्णान्नुषितो रणमूर्धनि ॥ ७-१७५-४४ (५३०६२)
ततः समभवद्युद्धं घोररूपं भयानकम् ।
विस्मापनं महाराज नरराक्षसयोर्मृधे ॥ ॥ ७-१७५-४५ (५३०६३)

इति श्रीमन्महाभारते द्रोणपर्वणि घटोत्कचवधपर्वणि
चतुर्दशरात्रियुद्धे पञ्चसप्तत्यधिकशततमोऽध्यायः ॥ १७५ ॥
Mahabharata - Drona Parva - Chapter Footnotes

५-१७५-८ अपचिनिं निष्कृतिम् ॥
५-१७५-४२ निष्ठां नाशम् ॥
५-१७५-१७५ पञ्चसप्तत्यधिकशततमोऽध्यायः ॥

---

द्रोनपर्व-अध्यय१७६
॥ श्रीः ॥
७.१७६. अध्यायः १७६

Mahabharata - Drona Parva - Chapter Topics
कर्णघटोत्कचयोर्युद्धम् ॥ १ ॥

Mahabharata - Drona Parva - Chapter Text

७-१७६-० (५३०६४)
धृतराष्ट्र उवाच। ७-१७६-०क्ष् (४७३३)
यत्तद्वैकर्तनः कर्णो राक्षसश्च घटोत्कचः ।
निशीथे समसज्जेतां तद्युद्धमभवत्कथम् ॥ ७-१७६-१ (५३०६५)
कीदृशं चाभवद्रूपं तस्य घोरस्य रक्षसः ।
येन वैकर्तनः कर्णः सङ्ग्रामे तेन निर्जितः ॥ ७-१७६-२ (५३०६६)
रथश्च कीदृशस्तस्य मायाः सर्वायुधानि च ।
किम्प्रमाणा हयास्तस्य रथकेतुर्धनुस्तथा ॥ ७-१७६-३ (५३०६७)
कीदृशं वर्म चैवास्य शिरस्त्राणं च कीदृशम् ।
पृष्टस्त्वमेतदाचक्ष्व कुशलो ह्यसि सञ्जय ॥ ७-१७६-४ (५३०६८)
सञ्जय उवाच। ७-१७६-५क्ष् (४७३४)

लोहिताक्षो महाकायस्ताम्रास्यो निम्नितोदरः ।
ऊर्ध्वरोमा हरिश्मश्रुः शङ्कुकर्णो महाहनुः ॥ ७-१७६-५ (५३०६९)
आकर्णदारितास्यश्च तीक्ष्णदंष्ट्रः करालवान् ।
सुदीर्घताम्रजिह्वोष्ठो लम्बभ्रूः स्थूलनासिकः ॥ ७-१७६-६ (५३०७०)
नीलाङ्गो लोहितग्रीवो गिरिवर्ष्मा भयङ्करः ।
महाकायो महाबाहुर्महाशीर्षो महाबलः ॥ ७-१७६-७ (५३०७१)
विकृतः परुषस्पर्शो विकचोद्वृद्धपिण्डकः ।
स्थूलस्फिग्गूढनाभिश्च शिथिलोपचयो महान् ॥ ७-१७६-८ (५३०७२)
तथैव हस्ताभरणी महामायोऽङ्गदी तथा ।
उरसाऽधारयन्निष्कमग्निमालां यथाऽचलः ॥ ७-१७६-९ (५३०७३)
तस्य हेममयं चित्रं बहुरूपाङ्गशभितम् ।
तोरणप्रतिमं शुभ्रं किरीटं मूर्ध्न्यशोभत ॥ ७-१७६-१० (५३०७४)
कुण्डले बालसूर्याभे मालां हेममयीं शुभाम् ।
धारयन्विपुलं कांस्यं कवचं च महाप्रभम् ।
ताराजालनिभं राजन्पूर्णचन्द्रसमप्रभम् ॥ ७-१७६-११ (५३०७५)
कण्ठसूत्रं महच्चापि तपनीयमधारयत् ।
स तेन विभ्राजत वै सविद्युदिव तोयदः ॥ ७-१७६-१२ (५३०७६)
किङ्किणीशतनिर्घोपं रक्तध्वजपताकिनम् ।
ऋक्षचर्मावनद्धाङ्गं नल्वमात्रं महारथम् ॥ ७-१७६-१३ (५३०७७)
सर्वायुधवरोपेतमास्थितं ध्वजमालिनम् ।
अष्टचक्रसमायुक्तं मेघगम्भीरनिःस्वनम् ॥ ७-१७६-१४ (५३०७८)
मत्तमातङ्गसङ्काशा लोहिताक्षा विभीपणाः ।
कालवर्णासमायुक्ता बलवन्तः शतं हयाः ॥ ७-१७६-१५ (५३०७९)
वहन्तो राक्षसं घोरं वालवन्तो जितश्रमाः ।
विपुलाभिः सटाभिस्ते हेषमाणा मुहुर्मुहुः ॥ ७-१७६-१६ (५३०८०)
मुखैर्नानाविधाकारैर्वेगवन्तो हयोत्तमाः ।
रथेऽस्य युक्ता गकर्जन्तोऽवहंस्ते राक्षसाधिपम् ॥ ७-१७६-१७ (५३०८१)
राक्षसोऽस्य विरूपाक्षः सूतो दीप्तास्यकुण्डलः ।
ग्घोररूपो महाकायः करालो विकृताननः'।
रश्मिभिः सूर्यरश्म्याह्वैः सञ्जग्राह हयान्रणे ॥ ७-१७६-१८ (५३०८२)
स तेन सहितस्तस्थावरुणेन यथा रविः ।
संसक्त इव चाभ्रेण यथाऽद्रिर्महता महान् ॥ ७-१७६-१९ (५३०८३)
दिवस्पृक्सुमहान्केतुः स्यन्दनेऽस्य समुच्छ्रितः ।
रक्तोत्तमाङ्गः क्रव्यादो गृध्रः परमभीषणः ॥ ७-१७६-२० (५३०८४)
वासवाशनिनिर्घोषं दृढज्यमतिविक्षिपन् ।
व्यक्तं किष्कुपरीणाहं द्वादशारत्नि कार्मुकम् ॥ ७-१७६-२१ (५३०८५)

रथाक्षमात्रैरिपुभिः सर्वाः प्रच्छादयन्दिशः ।
तस्यां वीरापहारिण्यां निशायां कर्णमभ्ययात् ॥ ७-१७६-२२ (५३०८६)
तस्य विक्षिपतश्चापं रथे विष्टभ्य तिष्ठतः ।
अश्रूयत धनुर्घोषो विस्फूर्जितमिवाशनेः ॥ ७-१७६-२३ (५३०८७)
तेन वित्रास्यमानानि तव सैन्यानि भारत ।
समकम्पन्त सर्वाणि सिन्धोरिव महोर्मयः ॥ ७-१७६-२४ (५३०८८)
तमापतन्तं सम्प्रेक्ष्य विरूपाक्षं विभीषणम् ।
उत्स्मयन्निव राधेयस्त्वरमाणोऽभ्यवारयत् ॥ ७-१७६-२५ (५३०८९)
ततः कर्णोऽभ्ययादेनमस्यन्नस्यन्तमन्तिकात् ।
मातङ्ग इव मातङ्गं यूथर्षभमिवर्षभः ॥ ७-१७६-२६ (५३०९०)
स सन्निपातस्तुमुलस्तयोरासीद्विशाम्पते ।
कर्णराक्षसयो राजन्निन्द्रशम्बरयोरिव ॥ ७-१७६-२७ (५३०९१)
तौ प्रगृह्य महावेगे धनुषी भीमनिःस्वने ।
प्राच्छादयेतामन्योन्यं तक्षमाणौ महेषुभिः ॥ ७-१७६-२८ (५३०९२)
ततः पूर्णायतोत्सृष्टैरिषुभिर्नतपर्वभिः ।
न्यवारयेतामन्योन्यं कांस्ये निर्भिद्य वर्मणी ॥ ७-१७६-२९ (५३०९३)
तौ नखैरिव शार्दूलौ दन्तैरिव महाद्विपौ ।
रथशक्तिभिरन्योन्यं विशिखैश्च ततक्षतुः ॥ ७-१७६-३० (५३०९४)
सञ्छिन्दन्तौ च गात्राणि सन्दधानौ च सायकान् ।
दहन्तौ च शरोल्काभिर्दुष्प्रेक्ष्यौ च बभूवतुः ॥ ७-१७६-३१ (५३०९५)
तौ तु विक्षतसर्वाङ्गौ रुधिरौघपरिप्लुतौ ।
विभ्राजेतां यथा वारि स्रवन्तौ गैरिकाचलौ ॥ ७-१७६-३२ (५३०९६)
तौ शराग्रविनुन्नाङ्गौ निर्भिन्दन्तौ परस्परम् ।
नाकम्पयेतामन्योन्यं यतमानौ महाद्युती ॥ ७-१७६-३३ (५३०९७)
तत्प्रवृत्तं निशायुद्धं चिरं सममिवाभवत् ।
प्राणयोर्दीव्यतो राजन्कर्णराक्षसयोर्मृधे ॥ ७-१७६-३४ (५३०९८)
तस्य सन्दधतस्तीक्ष्णाञ्छरांश्चासक्तमस्यतः ।
धनुर्घोषेण वित्रस्ताः स्वे परे च तदाऽभवन् ॥ ७-१७६-३५ (५३०९९)
घटोत्कचं यदा कर्णो विशेषयति नो नृप ।
ततः प्रादुष्करोद्दिव्यमस्त्रमस्त्रविदां वरः ॥ ७-१७६-३६ (५३१००)
कर्णेन सन्धितं दृष्ट्वा दिव्यमस्त्रं घटोत्कचः ।
प्रादुश्चक्रे महामायां राक्षसीं पाण्डुनन्दनः ॥ ७-१७६-३७ (५३१०१)
शूलमुद्गरधारिण्या शैलपादपहस्तया ।
रक्षसां घोररूपाणां महत्या सेनया वृतः ॥ ७-१७६-३८ (५३१०२)
तमुद्यतमहाचापं दृष्ट्वा ते व्यथिता नृपाः ।
भूतान्तकमिवायान्तं कालदण्डोग्रधारिणम् ॥ ७-१७६-३९ (५३१०३)

घटोत्कचप्रयुक्तेन सिंहनादेन भीषिताः ।
प्रसुस्रुवुर्गजा मूत्रं विव्यधुश्च नरा भृशम् ॥ ७-१७६-४० (५३१०४)
ततोऽश्मवृष्टिरत्युग्रा महत्यासीत्समन्ततः ।
अर्धरात्रेऽधिकबलैर्विमुक्ता रक्षसां बलैः ॥ ७-१७६-४१ (५३१०५)
आयसानि च चक्राणि भुशुण्ड्यः शक्तितोमराः ।
पतन्त्यविरलाः शूलाः शतघ्न्यः पट्टसास्तथा ॥ ७-१७६-४२ (५३१०६)
तदुग्रमतिरौद्रं च दृष्ट्वा युद्धं नराधिप ।
पुत्राश्च तव योधाश्च व्यथिता विप्रदुद्रुवुः ॥ ७-१७६-४३ (५३१०७)
तत्रैकोऽस्तबलश्लाघी कर्णो मानी न विव्यथे ।
व्यधमच्च शरैर्मायां तां घटोत्कचनिर्मिताम् ॥ ७-१७६-४४ (५३१०८)
मायायां तु प्रहीणायाममर्षाच्च घटोत्कचः ।
विससर्ज शरान्घोरान्सूत पुत्रं त आविशन् ॥ ७-१७६-४५ (५३१०९)
ततस्ते रुधिराभ्यक्ता भित्त्वा कर्णं महाहवे ।
विविशुर्धरणीं बाणाः सङ्क्रुद्धा इव पन्नगाः ॥ ७-१७६-४६ (५३११०)
सूतपुत्रस्तु सङ्क्रुद्धो लघुहस्तः प्रतापवान् ।
घटोत्कचमतिक्रम्य बिभेद दशभिः शरैः ॥ ७-१७६-४७ (५३१११)
घटोत्कचो विनिर्भिन्नः सूतपुत्रेण मर्मसु ।
चक्रं दिव्यं सहस्रारमगृह्णाद्व्यथितो भृशम् ॥ ७-१७६-४८ (५३११२)
क्षुरान्तं बालसूर्याभं मणिरत्नविभूषितम् ।
चिक्षेपाधिरथेः क्रुद्धो भैमसेनिर्जिघांसया ॥ ७-१७६-४९ (५३११३)
प्रविद्धमतिवेगेन विक्षिप्तं कर्णसायकैः ।
अभाग्यस्येव सङ्कल्पस्तन्मोघमपतद्भुवि ॥ ७-१७६-५० (५३११४)
घटोत्कचस्तु सङ्क्रुद्धो दृष्ट्वा चक्रं निपातितम् ।
कर्णं प्राच्छादयद्बाणैः स्वर्भानुरिव भास्करम् ॥ ७-१७६-५१ (५३११५)
सूतपुत्रस्त्वसम्भ्रान्तो रुद्रोपेन्द्रेन्द्रविक्रमः ।
घटोत्कचरथं तूर्णं छादयामास पत्रिभिः ॥ ७-१७६-५२ (५३११६)
घटोत्कचेन क्रुद्धेन गदा हेमाङ्गदा तदा ।
क्षिप्ता भ्राम्य शरैः साऽपि कर्णेनाभ्याहताऽपतत् ॥ ७-१७६-५३ (५३११७)
ततोऽन्तरिक्षमुत्पत्य कालमेघ इवोन्नदन् ।
प्रववर्ष महाकायो द्रुमवर्षं नभस्तलात् ॥ ७-१७६-५४ (५३११८)
ततो मायाविनं कर्णो भीमसेनसुतं दिवि ।
मार्गणैरभिविव्याध घनं सूर्य इवांशुभिः ॥ ७-१७६-५५ (५३११९)
तस्य सर्वान्हयान्हत्वा सञ्छिद्य शतधा रथम् ।
अभ्यवर्षच्छरैः कर्णः पर्जन्य इव वृष्टिमान् ॥ ७-१७६-५६ (५३१२०)
न चास्यासीदनिर्भिन्नं गात्रे द्व्यङ्गुलमन्तरम् ।
सोऽदृश्यत मुहूर्तेन श्वाविच्छललितो यथा ॥ ७-१७६-५७ (५३१२१)

न हयान्न रथं तस्य न ध्वजं न घटोत्कचम् ।
दृष्टवन्तः स्म समरे शरौघैरभिसंवृतम् ॥ ७-१७६-५८ (५३१२२)
स तु कर्णस्य तद्दिव्यमस्त्रमस्त्रेण शातयन् ।
मायायुद्धेन मायावी सूतपुत्रमयोधयत् ॥ ७-१७६-५९ (५३१२३)
सोऽयोधयत्तदा कर्णं मायया लाघवेन च ।
अलक्ष्यमाणानि दिवि शरजालानि चापतन् ॥ ७-१७६-६० (५३१२४)
भैमसेनिर्महामायो मायया कुरुसत्तम ।
विचचार महाकायो मोहयन्निव भारत ॥ ७-१७६-६१ (५३१२५)
स तु कृत्वा विरूपाणि वदनान्यशुभानि च ।
अग्रसत्सूतपुत्रस्य दिव्यान्यस्त्राणि मायया ॥ ७-१७६-६२ (५३१२६)
पुनश्चापि महाकायः सञ्छिन्नः शतधा रणे ।
गतसत्वो निरुत्साहः पतितः खाद्व्यदृश्यत ॥ ७-१७६-६३ (५३१२७)
तं हतं मन्यमानाः स्म प्राणदन्कुरुपुङ्गवाः ।
अथ देहैर्नवैरन्यैर्दिक्षु सर्वास्वदृश्यत ॥ ७-१७६-६४ (५३१२८)
पुनश्चापि महाकायः शतशीर्षः शतोदरः ।
व्यदृश्यत महाबाहुर्मैनाक इव पर्वतः ॥ ७-१७६-६५ (५३१२९)
अङ्गुष्ठमात्रो भूत्वा च पुनरेव स राक्षसः ।
सागरोर्मिरिवोद्धूतस्तिर्यगूर्ध्वमवर्तत ॥ ७-१७६-६६ (५३१३०)
वसुधां दारयित्वा च पुनरप्यु न्यमज्जत ।
अदृश्यत तदा तत्र पुनरुन्मज्जितोऽन्यतः ॥ ७-१७६-६७ (५३१३१)
सोऽवतीर्य पुनस्तस्थौ रथे हेमपरिष्कृते ।
क्षितिं खं च दिशश्चैव माययाऽभ्येत्य दंशितः ॥ ७-१७६-६८ (५३१३२)
गत्वा कर्णरथाभ्याशं व्यचरत्कुण्डलाननः ।
प्राह वाक्यमसम्भ्रान्तः सूतपुत्रं विशाम्पते ॥ ७-१७६-६९ (५३१३३)
तिष्ठेदानीं क्व मे जीवन्सूतपुत्र गमिष्यसि ।
युद्धश्रद्धामहं तेऽद्य विनेष्यामि रमाजिरे ॥ ७-१७६-७० (५३१३४)
इत्युक्त्वा रोषताम्राक्षं रक्षः क्रूरपराक्रमम् ।
उत्पपातान्तरिक्षं च जहास च सुविस्तरम् ।
कर्णमभ्यहनच्चैव गजेन्द्रमिव केसरी ॥ ७-१७६-७१ (५३१३५)
रथाक्षमात्रैरिषुभिरभ्यवर्षद्धटोत्कचः। ७-१७६-७२ (५३१३६)
शरवृष्टिं च तां कर्णो दूरात्प्राप्तामशातयत् ॥ ७-१७६-७३ (५३१३७)
दृष्ट्वा च विहतां मायां कर्णेन भरतर्षभ ।
घटोत्कचस्ततो मायां ससर्जान्तर्हितः पुनः ॥ ७-१७६-७४ (५३१३८)
सोऽभवद्गिरिरत्युच्चः शिखरैस्तरुसङ्कटैः ।
शूलप्रासासिमुसलजलप्रस्रवणो महान् ॥ ७-१७६-७५ (५३१३९)
तमञ्जनचयप्रख्यं कर्णो दृष्ट्वा महीधरम् ।

प्रपातैरायुधान्युग्राण्युद्वहन्तं न चुक्षुभे ॥ ७-१७६-७६ (५३१४०)
स्मयन्निव ततः कर्णो दिव्यमस्त्रमुदैरयत् ।
ततः सोऽस्त्रेण शैलेन्द्रो विक्षिप्तो वै व्यनश्यत ॥ ७-१७६-७७ (५३१४१)
ततः स तोयदो भूत्वा नीलः सेन्द्रायुधो दिवि ।
अश्मवृष्टिभिरत्युग्रः सूतपुत्रमवाकिरत् ॥ ७-१७६-७८ (५३१४२)
अथ सन्धाय वायव्यमस्त्रमस्त्रविदां वरः ।
व्यधमत्कालमेघं तं कर्णो वैकर्तनो वृषः ॥ ७-१७६-७९ (५३१४३)
स मार्गणगणैः कर्णो दिशः प्रच्छाद्य सर्वशः ।
जघानास्त्रं महाराज घटोत्कचसमीरितम् ॥ ७-१७६-८० (५३१४४)
ततः प्रहस्य समरे भैमसेनिर्महाबलः ।
प्रादुश्चक्रे महामायां कर्णं प्रति महारथम् ॥ ७-१७६-८१ (५३१४५)
स दृष्ट्वा पुनरायान्तं रथेन रथिनां वरम् ।
घटोत्कचमसम्भ्रान्तं राक्षसैर्बहुभिर्वृतम् ॥ ७-१७६-८२ (५३१४६)
सिंहशार्दूलसदृशैर्मत्तमातङ्गविक्रमैः ।
गजस्थैश्च रथस्थैश्च वाजिपृष्ठगतैस्तथा। ७-१७६-८२ (५३१४७)
नानाशस्त्रधरैर्घोरैर्नानाकवचभूषणैः ॥
वृतं घटोत्कचं क्रूरैर्मरुद्भिरिव वासवम्। ७-१७६-८३ (५३१४८)
दृष्ट्वा कर्णो महेष्वासो योधयामास राक्षसम् ॥
घटोत्कचस्ततः कर्णं विद्धा पञ्चभिराशुगैः। ७-१७६-८४ (५३१४९)
ननाद भैरवं नादं भीषयन्सर्वपार्थिवान् ॥
भूयश्चाञ्जलिकेनाथ स मार्गणगणं महत्। ७-१७६-८५ (५३१५०)
कर्णहस्तस्थितं चापं चिच्छेदाशु घटोत्कचः ॥
अथान्यद्धनुरादाय दृढं भारसहं महत्। ७-१७६-८६ (५३१५१)
विचकर्ष बलात्कर्ण इन्द्रायुधमिवोच्छ्रितम् ॥
ततः कर्णो महाराज प्रेषयामास सायकान्। ७-१७६-८७ (५३१५२)
सुवर्णपुङ्खाञ्छत्रुघ्नान्खेचरान्राक्षसान्प्रति ॥
तद्बाणैरर्दितं यूथं रक्षसां पीनवक्षसाम्। ७-१७६-८८ (५३१५३)
सिंहेनेवार्दितं वन्यं गजानामाकुलं कुलम् ॥
विधम्य राक्षसान्बाणैः साश्वसूतगजान्विभुः। ७-१७६-८९ (५३१५४)
ददाह भगवान्वह्निर्भूतानीव युगक्षये ॥
स हत्वा राक्षसीं सेनां शुशुभे सूतनन्दनः। ७-१७६-९० (५३१५५)
पुरेव त्रिपुरं दग्ध्वा दिवि देवो महेश्वरः ॥
तेषु राजसहस्रेषु पाण्डवेयेषु मारिष। ७-१७६-९१ (५३१५६)
नैनं निरीक्षितुमपि कश्चिच्छक्नोति पार्थिव ॥
ऋते घटोत्कचाद्राजन्राक्षसेन्द्रान्महाबलात्। ७-१७६-९२ (५३१५७)
भीमवीर्यबलोपेतात्क्रुद्धाद्वैवस्वतादिव ॥

तस्य क्रुद्धस्य नेत्राभ्यां पावकः समजायत। ७-१७६-९३ (५३१५८)
महोल्काभ्यां यथा राजन्सार्जिषः स्नेहबिन्दवः ॥
तलं तलेन संहत्य सन्दश्य दशनच्छदम्। ७-१७६-९४ (५३१५९)
रथमास्थाय च पुनर्मायया निर्मितं तदा ॥
युक्तं गजनिभैर्वाहैः पिशाचवदनैः खरैः। ७-१७६-९५ (५३१६०)
स सूतमब्रवीत्क्रुद्धः सूतपुत्राय मां वह ॥ ७-१७६-९६ (५३१६१)
स ययौ घोररूपेण रथेन रथिनां वरः ।
द्वैरथं सूतपुत्रेण पुनरेव विशाम्पते ॥
स चिक्षेप पुनः क्रुद्धः सुतपुत्राय राक्षसः। ७-१७६-९७ (५३१६२)
अष्टचक्रां महाघोरामशनिं रुद्रनिर्मिताम् ॥ ७-१७६-९८ (५३१६३)
द्वियोजनसमुत्सेधां योजनायामविस्तराम् ।
आयसीं निचितां शूलैः कदम्बमिव केशरैः ॥ ७-१७६-९९ (५३१६४)
तामवप्लुत्य जग्राह कर्णो न्यस्य महद्धनुः ।
चिक्षेप चैनां तस्यैव स्यन्दनात्सोऽवपुप्लुवे ॥ ७-१७६-१०० (५३१६५)
साश्वसूतध्वजं यानं भस्म कृत्वा महाप्रभा ।
विवेश वसुधां भित्त्वा सुरास्तत्र विसिस्मियुः ॥ ७-१७६-१०१ (५३१६६)
कर्णं तु सर्वभूतानि पूजयामासुरञ्जसा ।
यदप्लुत्य जग्राह देवसृष्टां महाशनिम् ॥ ७-१७६-१०२ (५३१६७)
एवं कृत्वा रणे कर्ण आरुरोह रथं पुनः ।
ततो मुमोच नाराचान्सूतपुत्रः परन्तपः ॥ ७-१७६-१०३ (५३१६८)
अशक्यं कर्तुमन्येन सर्वभूतेषु मानद ।
यदकार्षीत्तदा कर्णः सङ्ग्रामे भीमदर्शने ॥ ७-१७६-१०४ (५३१६९)
स हन्यमानो नाराचैर्धाराभिरिव पर्वतः ।
गन्धर्वनगराकारः पुनरन्तरधीयत ॥ ७-१७६-१०५ (५३१७०)
एवं स वै महाकायो मायया लाघवेन च ।
अस्त्राणि तानि दिव्यानि जघान रिपुसूदनः ॥ ७-१७६-१०६ (५३१७१)
निहन्यमानेष्वस्त्रेषु मायया तेन रक्षसा ।
असम्भ्रान्तस्तदा कर्णस्तद्रक्षः प्रत्ययुध्यत ॥ ७-१७६-१०७ (५३१७२)
ततः क्रुद्धो महाराज भैमसेनिर्महाबलः ।
चकार बहुधाऽऽत्मानं भीषयाणो महारथान् ॥ ७-१७६-१०८ (५३१७३)
ततो दिग्भ्यः समापेतुः सिंहव्याघ्रतरक्षवः ।
अग्निजिह्वाश्च भुजगा विहगाश्चाप्ययोमुखाः ॥ ७-१७६-१०९ (५३१७४)
स कीर्यमाणो विशिखैः कर्णचापच्युतैः शरैः ।
नागराडिव दुष्प्रेक्ष्यस्तत्रैवान्तरधीयत ॥ ७-१७६-११० (५३१७५)
राक्षसाश्च पिशाचाश्च यातुधानास्तथैव च ।
शालावृकाश्च बहवो वृकाश्च विकृताननाः ॥ ७-१७६-१११ (५३१७६)

ते कर्णं क्षपयिष्यन्तः सर्वतः समुपाद्रवन् ।
अथैनं वाग्भिरुग्राभिस्त्रासयाञ्चिक्रिरे तदा ॥ ७-१७६-११२ (५३१७७)
उद्यतैर्बहुभिर्घोरैरायुधैः शोणितोक्षितैः ।
तेषामनेकैरेकैकं कर्णो विव्याध सायकैः ॥ ७-१७६-११३ (५३१७८)
प्रतिहत्य तु तां मायां दिव्येनास्त्रेण राक्षसीम् ।
आजघान हयानस्य शरैः सन्नतपर्वभिः ॥ ७-१७६-११४ (५३१७९)
ते भग्ना विक्षताङ्गाश्च भिन्नपृष्ठाश्च सायकैः ।
वसुधामन्वपद्यन्त पश्यतस्तस्य रक्षसः ॥ ७-१७६-११५ (५३१८०)
स भग्नमायो हैडिम्बिः कर्णं वैकर्तनं तदा ।
एष ते विदधे मृत्युमित्युक्त्वान्तरधीयत ॥ ॥ ७-१७६-११६ (५३१८१)

इति श्रीमन्महाभारते द्रोणपर्वणि घटोत्कचवधपर्वणि
चतुर्दशरात्रियुद्धे षट्सप्तत्यधिकशततमोऽध्यायः ॥ १७६ ॥
Mahabharata - Drona Parva - Chapter Footnotes

५-१७६-५ निम्नितोदरः निम्नितं
पृष्ठवंशसंलग्नमशनहीनस्येवोदरं यस्येत्यर्थः ॥
५-१७६-६ करालवान् उन्नतदन्तचतुष्कः ॥
५-१७६-८ विकचश्चासावुद्वृद्धपिण्डो दृढाङ्गः को मूर्धा यस्य स
विकचोद्वृद्धपिण्डकः ।शिथिलोपचयः स्फिक्प्रदेशे एव शिथिलः
श्लथ उपचयो वृद्धिर्यस्य ॥
५-१७६-१३ नल्वो हस्तचतुःशतम् ॥
५-१७६-२९ विष्कुर्हस्तस्तन्मितः परीणाहो विस्तारो यस्य
।अरत्निर्निरष्टमांशः करः ॥
५-१७६-३० रथः स्यन्दनदेहयोरिति कोशाद्देहानुकूलशक्तिमद्भिरिति वा ॥
५-१७६-३५ तस्य घटोत्कचस्या ।आसक्तमन्योन्यसंसक्तं
यथास्यात्तथाशरानस्यतः ॥
५-१७६-९४ उल्काभ्यां सजर्रसमिश्रोल्मुकाभ्याम् ।ततो हि दीप्तस्य
सर्जरसस्य कणाः सस्नेहत्वात्सार्चिष एव पतन्तीति प्रसिद्धम् ॥
५-१७६-१७६ षट्सप्तत्यधिकशततमोऽध्यायः ॥

---

द्रोनपर्व-अध्यय१७७
॥ श्रीः ॥
७.१७७. अध्यायः १७७

Mahabharata - Drona Parva - Chapter Topics

बकादिबन्धुवधाङ्गीमे चिरवैरिणा अलायुधराक्षसेन सुयोधनादायोधनाक्ष्यनुज्ञामुपलक्ष्य घटोत्कचं प्रत्यभिगमनम्
॥ १ ॥

Mahabharata - Drona Parva - Chapter Text

७-१७७-० (५३१८२)
सञ्जय उवाच। ७-१७७-०क्ष् (४७३५)
तस्मिंस्तथा वर्तमाने कर्णराक्षसयोर्मृधे ।
अलायुधो राक्षसेन्द्रो वीर्यवानभ्यवर्तत ॥ ७-१७७-१ (५३१८३)
महत्या सेनया युक्तो दुर्योधनमुपागमत् ।
राक्षसानां विरूपाणां सहस्रैः परिवारितः ।
नानारूपधरैर्वीरैः पूर्ववैरमनुस्मरन् ॥ ७-१७७-२ (५३१८४)
तस्य ज्ञातिर्हि विक्रान्तो ब्राह्मणादो बको हतः ।
किर्मीरश्च महातेजा हिडिम्बश्च सखा तदा ॥ ७-१७७-३ (५३१८५)
स दीर्घकालाध्युषितं पूर्ववैरमनुस्मरन् ।
विज्ञायैतन्निशायुद्धं जिघांसुर्भीममाहवे ॥ ७-१७७-४ (५३१८६)
स मत्त इव मातङ्गः सङ्क्रुद्ध इव चोरगः ।
दुर्योधनमिदं वाक्यमब्रवीद्युद्धलालसः ॥ ७-१७७-५ (५३१८७)
विदितं ते महाराज यथा भीमेन राक्षसाः ।
हिडिम्बबककिर्मीरा निहता मम बान्धवाः ॥ ७-१७७-६ (५३१८८)
परामर्शश्च कन्याया हिडिम्बायाः कृतः पुरा ।
किमन्यद्राक्षसानन्यानस्मांश्च परिभूय ह ॥ ७-१७७-७ (५३१८९)
तमहं सगणं राजन्सवाजिरथकुञ्जरम् ।
हैडिम्बिं च सहामात्यं हन्तुमभ्यागतः स्वयम् ॥ ७-१७७-८ (५३१९०)
अद्य कुन्तीसुतान्सर्वान्वासुदेवपुरोगमान् ।
हत्वा सम्भक्षयिष्यामि सर्वैरनुचरैः सह ॥ ७-१७७-९ (५३१९१)
निवारय बलं सर्वं वयं योत्स्याम पाण्डवान् ॥ ७-१७७-१० (५३१९२)
तस्यैतद्वचनं श्रुत्वा हृष्टो दुर्योधनस्तदा ।
प्रतिपूज्याब्रवीद्वाक्यं भ्रातृभिः परिवारितः ॥ ७-१७७-११ (५३१९३)
त्वां पुरस्कृत्य सगणं वयं योत्स्यामहे परान् ।
न हि वैरान्तमनसः स्थास्यन्ति मम सैनिकाः ॥ ७-१७७-१२ (५३१९४)
एवमस्त्विति राजानमुक्त्वा राक्षसपुङ्गवः ।
अभ्ययात्त्वरितो भैमिं सहितः पुरुषादकैः ॥ ७-१७७-१३ (५३१९५)
दीप्यमानेन वपुषा रथेनादित्यवर्चसा ।
तादृशेनैव राजेन्द्र यादृशेन घटोत्कचः ॥ ७-१७७-१४ (५३१९६)

तस्याप्यतुलनिर्घोपो बहुतोरणचित्रितः ।
ऋक्षचर्मावनद्धाङ्गो नल्वमात्रो महारथः ॥ ७-१७७-१५ (५३१९७)
तस्यापि तुरगाः शीघ्रा हस्तिकायाः खरस्वनाः ।
शतं युक्ता महाकाया मांसशोणितभोजनाः ॥ ७-१७७-१६ (५३१९८)
तस्यापि रथनिर्घोपो महामेघरवोपमः ।
स्यापि सुमहच्चापं दृढज्यं कनकोज्ज्वलम् ॥
तस्याप्यक्षसमा बाणा रुक्म पुङ्खाः शिलाशिताः ।
सोऽपि वीरो महाबाहुर्यथैव स घटोत्कचः ॥ ७-१७७-१७ (५३१९९)
तस्यापि गोमायुबलाभिगुप्तो
बभूव केतुर्ज्वलनार्कतुल्यः ।
स चापि रूपेण घटोत्कचस्य
श्रीमत्तमो ह्यन्तकसन्निकाशः ॥ ७-१७७-१९ (५३२००)
दीप्ताङ्गदो दीप्तकिरीटमाली
बद्धस्रगुष्णीषनिबद्धखड्गः ।
गदी भुशुण्डी मुसली हली च
शरासनी वारणतुल्यवर्ष्मा ॥ ७-१७७-२० (५३२०१)
रथेन तेनानलवर्चसा तदा
विद्रावयन्पाण्डववाहिनीं ताम् ।
रराज सङ्ख्ये परिवर्तमानो
विद्युन्माली मेघ इवान्तरिक्षे ॥ ७-१७७-२१ (५३२०२)
ते चापि सर्वप्रवरा नरेन्द्रा
महाबला वर्मिमश्चर्मिणश्च ।
हर्षान्विता युयुधुस्तस्य राजन्
समन्ततः पाण्डवयोधवीराः ॥ ॥ ७-१७७-२२ (५३२०३)

इति श्रीमन्महाभारते द्रोणपर्वणि घटोत्कचवधपर्वणि
चतुर्दशरात्रियुद्धे सप्तसप्तत्यधिकशततमोऽध्यायः ॥१७७ ॥

---

द्रोनपर्व-अध्यय१७८
॥ श्रीः ॥
७.१७८. अध्यायः १७८

Mahabharata - Drona Parva - Chapter Topics
भीमालायुधयोर्युद्धम् ॥१ ॥

Mahabharata - Drona Parva - Chapter Text

७-१७८-० (५३२०४)
सञ्जय उवाच। ७-१७८-०क्ष् (४७३६)
तमागतमभिप्रेक्ष्य भीमकर्माणमाहवे ।
हर्षमाहारयाञ्चक्रुः कुरवः सर्व एव ते ॥ ७-१७८-१ (५३२०५)
तथैव तव पुत्रास्ते दुर्योधनपुरोगमाः ।
अप्लुवाः प्लवमासाद्य तर्तुकामा इवार्णवम् ॥ ७-१७८-२ (५३२०६)
पुनर्जातमिवात्मानं मन्वानाः पुरुषर्षभाः ।
अलायुधं राक्षसेन्द्रं स्वागतेनाभ्यपूजयन् ॥ ७-१७८-३ (५३२०७)
तस्मिंस्त्वमानुषे युद्धे वर्तमाने महाभये ।
कर्णराक्षसयोर्नक्तं दारुणप्रतिदर्शने ॥ ७-१७८-४ (५३२०८)
ग्न द्रौणिर्न कृपद्रोणौ न शल्यो न च माधवः ।
एक एव तु तेनासीद्योद्धा कर्णो रणे वृषा'॥ ७-१७८-५ (५३२०९)
उपप्रैक्षन्त पाञ्चालाः स्मयमानाः सराजकाः ।
व्यभ्रमंस्तावकाश्चापि घूर्णमानास्ततस्ततः ॥ ७-१७८-६ (५३२१०)
चुक्रुशुर्नेदमस्तीति द्रोणद्रौणिकृपादयः ।
तत्कर्म दृष्ट्वा सम्भ्रान्ता हैडिम्बस्य रणाजिरे ॥ ७-१७८-७ (५३२११)
सर्वमाविग्नमभवद्धाहाभूतमचेतनम् ।
तव सैन्यं महाराज निराशं कर्णजीविते ॥ ७-१७८-८ (५३२१२)
दुर्योधनस्तु सम्प्रेक्ष्य कर्णमार्तिं परां गतम् ।
अलायुधं राक्षसेन्द्रं समाहूयेदमब्रवीत् ॥ ७-१७८-९ (५३२१३)
एष वैकर्तनः कर्णो हैडिम्बेन समागतः ।
कुरुते कर्म सुमहद्यदस्योपयिकं मृधे ॥ ७-१७८-१० (५३२१४)
पश्यैतान्पार्थिवाञ्शूरान्निहतान्भैमसेनिना ।
नानाशस्त्रैरभिहतान्पादपानिव दन्तिना ॥ ७-१७८-११ (५३२१५)
तवैष भारः समरे ज्ञातिमध्ये मया कृतः ।
तवैवानुमते वीर तं विक्रम्य निबर्हय ॥ ७-१७८-१२ (५३२१६)
पुरा वैकर्तनं कर्णमेष पापो घटोत्कचः ।
मायाबलं समाश्रित्य कर्षयत्यरिकर्शन ॥ ७-१७८-१३ (५३२१७)
एवमुक्तः स राज्ञा तु राक्षसो भीमविक्रमः ।
तथेत्युक्त्वा महाबाहुर्घटोत्कचमुपाद्रवत् ॥ ७-१७८-१४ (५३२१८)
ततः कर्णं समुत्सृज्य भैमसेनिरपि प्रभो ।
प्रत्यमित्रमुपायान्तमर्दयामास मार्गणैः ॥ ७-१७८-१५ (५३२१९)
तयोः समभवद्युद्धं क्रुद्धयो राक्षसेन्द्रयोः ।
मत्तयोर्वासिताहेतोर्द्विपयोरिव कानने ॥ ७-१७८-१६ (५३२२०)
रक्षसा विप्रमुक्तस्तु कर्णोऽपि रथिनां वरः ।

अभ्यद्रवद्भीमसेनं रथेनादित्यवर्चसा ॥ ७-१७८-१७ (५३२२१)
तमायान्तमनादृत्य दृष्ट्वा ग्रस्तं घटोत्कचम् ।
अलायुधेन समरे सिंहेनेव गवां पतिम् ॥ ७-१७८-१८ (५३२२२)
रथेनादित्यवपुषा भीमः प्रहरतां वरः ।
किरञ्छरौघान्प्रययावलायुधरथं प्रति ॥ ७-१७८-१९ (५३२२३)
तमायान्तमभिप्रेक्ष्य स तदाऽलायुधः प्रभो ।
घटोत्कचं समुत्सृज्य भीमसेनं समाह्वयत् ॥ ७-१७८-२० (५३२२४)
तं भीमः सहसाऽभ्येत्य राक्षसान्तकरः प्रभो ।
सगणं राक्षसेन्द्रं तं शरवर्षैरवाकिरत् ॥ ७-१७८-२१ (५३२२५)
तथैवालायुधो राजञ्शिलाधौतैरजिह्मगैः ।
अभ्यवर्षत कौन्तेयं पुनःपुनररिन्दम ॥ ७-१७८-२२ (५३२२६)
तथा ते राक्षसाः सर्वे भीमसेनमुपाद्रवन् ।
नानाप्रहरणा भीमास्त्वत्सुतानां जयैषिणः ॥ ७-१७८-२३ (५३२२७)
स ताड्यमानो बहुभिर्भीमसेनो महाबलः ।
पञ्चभिः पञ्चभिः सर्वांस्तानविध्यच्छितैः शरैः ॥ ७-१७८-२४ (५३२२८)
ते वध्यमाना भीमेन राक्षसाः क्रूरबुद्धयः ।
विनेदुस्तुमुलान्नादान्दुद्रुवुस्ते दिशो दश ॥ ७-१७८-२५ (५३२२९)
तांस्त्रास्यमानान्भीमेन दृष्ट्वा रक्षो मबहालम् ।
अभिदुद्राव वेगेन शरैश्चैनमवाकिरत् ॥ ७-१७८-२६ (५३२३०)
तं भीमसेनः समरे तीक्ष्णाग्रैरक्षिणोच्छरैः ॥  ७-१७८-२७ (५३२३१)
अलायुधस्तु तानस्तान्भीमेन विशिखान्रणे ।
चिच्छेद कांश्चित्समरे त्वरया कांश्चिदग्रहीत् ॥ ७-१७८-२८ (५३२३२)
स तं दृष्ट्वा राक्षसेन्द्रं भीमो भीमपराक्रमः ।
गदां चिक्षेप वेगेन वज्रपातोपमां तदा ॥ ७-१७८-२९ (५३२३३)
तामापतन्तीं वेगेन गदां ज्वालाकुलां ततः ।
गदया ताडयामास सा गदा भीममाव्रजत् ॥ ७-१७८-३० (५३२३४)
स राक्षसेन्द्रं कौन्तेयः शरवर्षैरवाकिरत् ।
तानप्यस्याकरोन्मोघान्राक्षसो निशितैः शरैः ॥ ७-१७८-३१ (५३२३५)
ते चापि राक्षसाः सर्वे रजन्यां भीमरूपिणः ।
शासनाद्राक्षसेन्द्रस्य निजघ्नू रथकुञ्जरान् ॥ ७-१७८-३२ (५३२३६)
पाञ्चालाः सृञ्जयाश्चैव वाजिनः परमद्विपाः ।
न शान्तिं लेभिरे तत्र राक्षसैर्भृशपीडिताः ॥ ७-१७८-३३ (५३२३७)
तं तु दृष्ट्वा महाघोरं वर्तमानं महाहवम् ।
अब्रवीत्पुण्डरीकाक्षो धनञ्जयमिदं वचः ॥ ७-१७८-३४ (५३२३८)
पश्य भीमं महाबाहुं राक्षसेन्द्रवशं गतम् ।
पदमस्यानुगच्छ त्वं मा विचारय पाण्डव ॥ ७-१७८-३५ (५३२३९)

धृष्टद्युम्नः शिखण्डी च युधामन्यूत्तमौजसौ ।
सहितौ द्रौपदेयाश्च कर्णं यान्तु महारथाः ॥ ७-१७८-३६ (५३२४०)
नकुलः सहदेवश्च युयुधानश्च वीर्यवान् ।
इतरान्राक्षसान्घ्नन्तु शासनात्तव पाण्डव ॥ ७-१७८-३७ (५३२४१)
त्वमपीमां महाबाहो चमूं द्रोणपुरस्कृताम् ।
मारयस्व नरव्याघ्र महद्धि भयमागतम् ॥ ७-१७८-३८ (५३२४२)
एवमुक्ते तु कृष्णेन यथोद्दिष्टा महारथाः ।
जग्मुर्वैकर्तनं कर्णं राक्षसांश्चैव तान्रणे ॥ ७-१७८-३९ (५३२४३)
अथ पूर्णायतोत्सृष्टैः शरैराशीविषोपमैः ।
धनुश्चिच्छेद भीमस्य राक्षसेन्द्रः प्रतापवान् ॥ ७-१७८-४० (५३२४४)
हयांश्चास्य शितैर्बाणैः सारथिं च महाबलः ।
जघान मिषतः सङ्ख्ये भीमसेनस्य राक्षसः ॥ ७-१७८-४१ (५३२४५)
सोऽवतीर्य रथोपस्थाद्धताश्वो हतसारथिः ।
तस्मै गुर्वीं गदां घोरां विनदन्नुत्ससर्ज ह ॥ ७-१७८-४२ (५३२४६)
ततस्तां भीमनिर्घोषामापतन्तीं महागदाम् ।
गदया राक्षसो घोरो निजघान ननाद च ॥ ७-१७८-४३ (५३२४७)
तद्दृष्ट्वा राक्षसेन्द्रस्य घोरं कर्म भयावहम् ।
भीमसेनः प्रहृष्टात्मा गदामाशु परामृशत् ॥ ७-१७८-४४ (५३२४८)
तयोः समभवद्युद्धं तुमुलं नरराक्षसोः ।
गदानिपातसंह्रादैर्भुवं कम्पयतोर्भृशम् ॥ ७-१७८-४५ (५३२४९)
गदाविमुक्तौ तौ भूयः समासाद्येतरेतरम् ।
मुष्टिभिर्वज्रसंह्रादैरन्योन्यमभिजघ्नतुः ॥ ७-१७८-४६ (५३२५०)
रथचक्रैर्युगैरक्षैरधिष्ठानैरुपस्करैः ।
यथासन्नमुपादाय निजघ्नतुरमर्षणौ ॥ ७-१७८-४७ (५३२५१)
तौ विक्षरन्तौ रुधिरं समासाद्येतरेतरम् ।
मत्ताविव महानागौ चकृषाते पुनः पुनः ॥ ७-१७८-४८ (५३२५२)
तावपश्यद्धृषीकेशः पाण्डवानां हिते रतः ।
स भीमसेनरक्षार्थं हैडिम्बिं पर्यचोदयत् ॥ ॥ ७-१७८-४९ (५३२५३)

इति श्रीमन्महाभारते द्रोणपर्वणि घटोत्कचवधपर्वणि
चतुर्दशरात्रियुद्धे अष्टसप्तत्यधिकशततमोऽध्यायः ॥ १७८ ॥
Mahabharata - Drona Parva - Chapter Footnotes

५-१७८-५ माधवः कृतवर्मा ॥
५-१७८-७ इदमस्मत्सैन्यम् ॥
५-१७८-१७८ अष्टसप्तत्यधिकशततमोऽध्यायः ॥

द्रोनपर्व-अध्यय१७९
॥ श्रीः ॥
७.१७९. अध्यायः १७९

Mahabharata - Drona Parva - Chapter Topics
घटोत्कचेनाऽलायुधवधः ॥ १ ॥

Mahabharata - Drona Parva - Chapter Text

७-१७९-० (५३२५४)
सञ्जय उवाच। ७-१७९-०क्ष् (४७३७)
संदृश्य समरे भीमं रक्षसा ग्रस्तमन्तिकात् ।
वासुदेवोऽब्रवीद्राजन्घटोत्कचमिदं वचः ॥ ७-१७९-१ (५३२५५)
पश्य भीमं महाबाहो रक्षसा ग्रस्तमाहवे ।
पश्यतां सर्वसैन्यानां तव चैव महाद्युते ॥ ७-१७९-२ (५३२५६)
स कर्णं त्वं समुत्सृज्य राक्षसेन्द्रमलायुधम् ।
जहि क्षिप्रं महाबाहो पश्चात्कर्णं बधिष्यसि ॥ ७-१७९-३ (५३२५७)
स वार्ष्णेयवचः श्रुत्वा कर्णमुत्सृज्य वीर्यवान् ।
युयुधे राक्षसेन्द्रेण बकभ्रात्रा घटोत्कचः ॥ ७-१७९-४ (५३२५८)
तयोः सुतुमुलं युद्धं बभूव निशि रक्षसोः ।
अलायुधस्य चैवोग्रं हेडिम्बेश्चापि भारत ॥ ७-१७९-५ (५३२५९)
अलायुधस्य योधांश्च राक्षसान्भीमदर्शनान् ।
वेगेनापततः शूरान्प्रगृहीतशरासनान् ॥ ७-१७९-६ (५३२६०)
आत्तायुधः सुसङ्क्रुद्धो युयुधानो महारथः ।
नकुलः सहदेवश्च चिच्छिदुर्निशितैः शरैः ॥ ७-१७९-७ (५३२६१)
सर्वांश्च समरे राजन्किरीटी क्षत्रियर्षभान् ।
परिचिक्षेप बीभत्सुः सर्वतः प्रकिरञ्छरान् ॥ ७-१७९-८ (५३२६२)
कर्णश्च समरे राजन्व्यद्रावयत पार्थिवान् ।
धृष्टद्युम्नशिखण्ड्यादीन्पाञ्चालानां पहारथान् ॥ ७-१७९-९ (५३२६३)
तान्वध्यमानान्दृष्ट्वाऽथ भीमो भीमपराक्रमः ।
अभ्ययात्त्वरितः कर्णं विशिखान्प्रकिरन्रणे ॥ ७-१७९-१० (५३२६४)
ततस्तेऽप्यमाययुर्हत्वा राक्षसान्यत्र सूतजः ।
नकुलः सहदेवश्च सात्यकिश्च महारथः ।
ते कर्णं योधयामासुः पाञ्चाला द्रोणमेव तु ॥ ७-१७९-११ (५३२६५)
अलायुधस्तु सङ्क्रुद्धो घटोत्कचमरिन्दमम् ।

परिघेणातिकायेन ताडयामास मूर्धनि ॥ ७-१७९-१२ (५३२६६)
स तु तेन प्रहारेण भैमसेनिर्महाबलः ।
ईषन्मूर्छितमात्मानमस्तम्भयत वीर्यवान् ॥ ७-१७९-१३ (५३२६७)
ततो दीप्ताग्निसङ्काशां शतघण्टामलङ्कृताम् ।
चिक्षेप तस्मै समरे गदां काञ्चनभूषिताम् ॥ ७-१७९-१४ (५३२६८)
सा हयांश्च रथं चास्य सारथिं च महास्वना ।
चूर्णयामास वेगेन विसृष्टा भीमकर्मणा ॥ ७-१७९-१५ (५३२६९)
स भग्नहयचक्राक्षाद्विशीर्णध्वजकूबरात् ।
उत्पपात रथात्तूर्णं मायामास्थाय राक्षसीम् ॥ ७-१७९-१६ (५३२७०)
स समास्थाय मायां तु ववर्ष रुधिरं बहु ।
विद्युद्विभ्राजितं चासीत्तुमुलाभ्राकुलं नभः ॥ ७-१७९-१७ (५३२७१)
ततो वज्रनिपाताश्च साशनिस्तनयित्नवः ।
महांश्चटचटाशब्दस्तत्रासीच्च महाहवे ॥ ७-१७९-१८ (५३२७२)
तां प्रेक्ष्य महतीं मायां राक्षसो राक्षसस्य च ।
ऊर्ध्वमुत्पत्य हैडिम्बिस्तां मायां माययाऽवधीत् ॥ ७-१७९-१९ (५३२७३)
सोऽभिवीक्ष्य हतां मायां मायावी माययैव हि ।
अश्मवर्षं सुतुमुलं विससर्ज घटोत्कचे ॥ ७-१७९-२० (५३२७४)
अश्मवर्षं स तं घोरं शरवर्षेण वीर्यवान् ।
दिक्षु विध्वंसयामास तदद्भुतमिवाभवत् ॥ ७-१७९-२१ (५३२७५)
ततो नानाप्रहरणैरन्योन्यमभिवर्षताम् ।
आयसैः परिघैः शूलैर्गदामुसलमुद्गरैः ॥ ७-१७९-२२ (५३२७६)
पिनाकैः करवालैश्च तोमरप्रासकम्पनैः ।
नाराचैर्निशितैर्भल्लैः शरैश्चक्रैः परश्वधैः ॥ ७-१७९-२३ (५३२७७)
अयोगुडैर्भिण्डिपालैर्गोशीर्षोलूखलैरपि ।
उत्पाटितैर्महाशाखैर्विविधैर्जगतीरुहैः ॥ ७-१७९-२४ (५३२७८)
शमीपीलूकदम्बैश्च चम्पकैश्चैव भारत ।
इङ्गुदैर्बदरीभिश्च कोविदारैश्च पुष्पितैः ॥ ७-१७९-२५ (५३२७९)
पलाशैश्चारिमेदैश्च प्लुक्षन्यग्रोधपिप्पलैः ।
महद्भिः समरे तस्मिन्नन्योन्यमभिजघ्नतुः ॥ ७-१७९-२६ (५३२८०)
विपुलैः पर्वताग्रैश्च नानाधातुभिराचितैः ।
तेषां शब्दो महानासीद्वज्राणां भिद्यतामिव ॥ ७-१७९-२७ (५३२८१)
युद्धं समभवद्घोरं भैम्यलायुधयोर्नृप ।
हरीन्द्रयोर्यथा राजन्वालिसुग्रीवयोः पुरा ॥ ७-१७९-२८ (५३२८२)
तौ युद्ध्वा विविधैर्घोरैरायुधैर्विशिखैस्तथा ।
उत्सृज्य च शितौ खड्गावन्योन्यमभिपेततुः ॥ ७-१७९-२९ (५३२८३)
तावन्योन्यमभिद्रुत्य केशेषु सुमहाबलौ ।

भुजाभ्यां पर्यगृह्णीतां महाकायौ महाबलौ ॥ ७-१७९-३० (५३२८४)
तौ स्विन्नगात्रौ प्रस्वेदं सुस्रुवाते जनाधिप ।
रुधिरं च महाकायावतिवृष्टाविवाम्बुदौ ॥ ७-१७९-३१ (५३२८५)
अथाभिपत्य वेगेन समुद्भ्राम्य च राक्षसम् ।
बलेनाक्षिप्य हैडिम्बिश्चकर्तास्य शिरो महत् ॥ ७-१७९-३२ (५३२८६)
सोऽपहृत्य शिरस्तस्य कुण्डलाभ्यां विभूषितम् ।
तदा सुतुमुलं नादं ननाद सुमहाबलः ॥ ७-१७९-३३ (५३२८७)
हतं दृष्ट्वा महाकायं बकज्ञातिमरिन्दमम् ।
पाञ्चालाः पाण्डवाश्चैव सिंहनादान्विनेदिरे ॥ ७-१७९-३४ (५३२८८)
ततो भेरीसहस्राणि शङ्खानामयुतानि च ।
अवादयन्पाण्डवेया राक्षसे निहते युधि ॥ ७-१७९-३५ (५३२८९)
अतीव सा निशा तेषां बभूव विजयावहा ।
विद्योतमाना विबभौ समन्ताद्दीपमालिनी ॥ ७-१७९-३६ (५३२९०)
अलायुधस्य तु शिरो भैमसेनिर्महाबलः ।
दुर्योधनस्य प्रमुखे चिक्षेप गतचेतसः ॥ ७-१७९-३७ (५३२९१)
अथ दुर्योधनो राजा दृष्ट्वा हतमलायुधम् ।
बभूव परमोद्विग्नः सह सैन्येन भारत ॥ ७-१७९-३८ (५३२९२)
तेन ह्यस्य प्रतिज्ञातं भीमसेनमहं युधि ।
हन्तेति स्वयमागम्य स्मरता वैरमुत्तमम् ॥ ७-१७९-३९ (५३२९३)
ध्रुवं स तेन हन्तव्य इत्यमन्यत पार्थिवः ।
जीवितं चिरकालं भ्रातॄणां चाप्यमन्यत ॥ ७-१७९-४० (५३२९४)
स तं दृष्ट्वा विनिहतं भीमसेनात्मजेन वै ।
प्रतिज्ञां भीमसेनस्य पूर्णामेवाभ्यमन्यत ॥ ॥ ७-१७९-४१ (५३२९५)

इति श्रीमन्महाभारते द्रोणपर्वणि घटोत्कचवधपर्वणि
चतुर्दशरात्रियुद्धे एकोनाशीत्यधिकशततमोऽध्यायः ॥ १७९ ॥
Mahabharata - Drona Parva - Chapter Footnotes

५-१७९-२८ हरीन्द्रयोः सिंहमुख्ययोः ॥
५-१७९-१७९ एकोनाशीत्यधिकशततमोऽध्यायः ॥

---

द्रोनपर्व-अध्यय१८०
॥ श्रीः ॥
७.१८०. अध्यायः १८०

Mahabharata - Drona Parva - Chapter Topics

कर्णेन घटोत्कचवधः ॥१ ॥

Mahabharata - Drona Parva - Chapter Text

७-१८०-० (५३२९६)
सञ्जय उवाच। ७-१८०-०क्ष् (४७३८)
निहत्यालायुधं रक्षः प्रहृष्टात्मा घटोत्कचः ।
ननाद विविधान्नादान्वाहिन्या प्रमुखे तव ॥ ७-१८०-१ (५३२९७)
तस्य तं तुमुलं शब्दं श्रुत्वा हृदयकम्पनम् ।
तावकानां महाराज भयमासीत्सुदारुणम् ॥ ७-१८०-२ (५३२९८)
अलायुधविषक्तं तु भैमसेनिं महाबलम् ।
दृष्ट्वा कर्णो महाबाहुः पाञ्चालान्समुपाद्रवत् ॥ ७-१८०-३ (५३२९९)
दशभिर्दशभिर्बाणैर्धृष्टद्युम्नशिखण्डिनौ ।
दृढैः पूर्णायतोत्सृष्टैर्बिभेद नतपर्वभिः ॥ ७-१८०-४ (५३३००)
ततः परमनाराचैर्युधामन्यूत्तमौजसौ ।
सात्यकिं च रथोदारं कम्पयमास मार्गणैः ॥ ७-१८०-५ (५३३०१)
तेषामप्यस्यतां सङ्ख्ये सर्वेषां सव्यदक्षिणम् ।
मण्डलान्येव चापानि व्यदृश्यन्त जनाधिप ॥ ७-१८०-६ (५३३०२)
तेषां ज्यातलनिर्घोषो रथनेमिस्वनश्च ह ।
मेघानामिव घर्मान्ते बभूव तुमुलो निशि ॥ ७-१८०-७ (५३३०३)
ज्यानेमिघोषस्तनयित्नुमान्वै
धनुस्तटिन्मण्डलकेतुशृङ्गः ।
शरौघवर्षाकुलवृष्टिमांश्च
सङ्क्राममेघः स बभूव राजन् ॥ ७-१८०-८ (५३३०४)
तदद्भुतं शैल इवाप्रकम्पो
वर्षं महाशैलसमानसारः ।
विध्वंसयामास रणे नरेनद्र
वैकर्तनः शत्रुगणावमर्दी ॥ ७-१८०-९ (५३३०५)
ततोऽतुलैर्वज्रनिपातकल्पैः
शितैः शरैः काञ्चनचित्रपुङ्खैः ।
शत्रून्व्यपोहत्समरे महात्मा
वैकर्तनः पुत्रहिते रतस्ते ॥ ७-१८०-१० (५३३०६)
सञ्छिन्नभिन्नध्वजिनश्च केचि--
त्केचिच्छरैरर्दितभिन्नदेहाः ।
केचिद्विसूता विहयाश्च केचि--
द्वैकर्तनेनाशु कृता बभूवुः ॥ ७-१८०-११ (५३३०७)

अविन्दमानास्त्वथ शर्म सङ्ख्ये
यौधिष्ठिरं ते बलमभ्यपद्यन् ।
तान्प्रेक्ष्य भग्नान्विमुखीकृतांश्च
घटोत्कचो रोषमतीव चक्रे ॥ ७-१८०-१२ (५३३०८)
आस्थाय तं काञ्चनरत्नचित्रं
रथोत्तमं सिंहवत्सन्ननाद ।
वैकर्तनं कर्णमुपेत्य चापि
विव्याध वज्रप्रतिमैः पृषत्कैः ॥ ७-१८०-१३ (५३३०९)
तौ कर्णिनाराचशिलीमुखैश्च
नालीकदण्डासनवत्सदन्तैः ।
वराहकर्णैः सविपाठशृङ्गि-
क्षुरप्रवर्षैश्च विनेदतुः खम् ॥ ७-१८०-१४ (५३३१०)
तद्बाणधारावृतमन्तरिक्षं
तिर्यग्गताभिः समरे रराज ।
सुवर्णपुङ्खज्वलितप्रभाभि--
र्विचित्रपुष्पाभिरिव प्रजाभिः ॥ ७-१८०-१५ (५३३११)
समाहितावप्रतिमप्रभावा--
वन्योन्यमाजघ्नतुरुत्तमास्त्रैः ।
तयोर्हि वीरोत्तमयोर्न कश्चि--
द्ददर्श तस्मिन्समरे विशेषम् ॥ ७-१८०-१६ (५३३१२)
अतीव तच्चित्रमतुल्यरूपं
बभूव युद्धं रविभीमसून्वोः ।
समाकुलं शस्त्रनिपातघोरं
दिवीव राह्वंशुमतोः प्रमत्तम् ॥ ७-१८०-१७ (५३३१३)
सञ्जय उवाच। ७-१८०-१८क्ष् (४७३९)
घटोत्कचं यदा कर्णो न विशेषयते नृप ।
ततः प्रादुश्चकारोग्रमत्त्रमस्त्रविदां वरः ॥ ७-१८०-१८ (५३३१४)
तेनास्त्रेणावधीत्तस्य रथं सहयसारथिम् ।
विरथश्चापि हैडिम्बिः क्षिप्रमन्तरधीयत ॥ ७-१८०-१९ (५३३१५)
धृतराष्ट्र उवाच। ७-१८०-२०क्ष् (४७४०)
तस्मिन्नन्तर्हिते तूर्णं कुटयोधिनि राक्षसे ।
मामकैः प्रतिपन्नं यत्तन्ममाचक्ष्व सञ्जय ॥ ७-१८०-२० (५३३१६)
सञ्जय उवाच। ७-१८०-२१क्ष् (४७४१)
अन्तर्हितं राक्षसेन्द्रं विदित्वा
सम्प्राक्रोशन्कुरवः सर्व एव ।
कथं नायं राक्षसः कूटयोधी

हन्यात्कर्णं समरेऽदृश्यमानः ॥ ७-१८०-२१ (५३३१७)
ततः कर्णो लघुचित्रास्त्रयोधी
सर्वा दिशः प्रावृणोद्बाणजालैः ।
न वै किञ्चित्प्रापतत्तत्र भूतं
तमोभूते सायकैरन्तरिक्षे ॥ ७-१८०-२२ (५३३१८)
नैवाददानो न च सन्दधानो
न चेषुधीस्पृशमानः कारग्रैः ।
अदृश्यद्वै लाघवात्सूतपुत्रः
सर्वं बाणैश्छादयानोऽन्तरिक्षम् ॥ ७-१८०-२३ (५३३१९)
ततो मायां दारुणामन्तरिक्षे
घोरां भीमां विहितां राक्षसेन ।
अपश्याम लोहिताभ्रप्रकाशां
देदीप्यन्तीमग्निशिखामिवोग्राम् ॥ ७-१८०-२४ (५३३२०)
ततस्तस्यां विद्युतः प्रादुरास--
न्नुल्काश्चापि ज्वलिताः कौरवेन्द्र ।
घोपश्चास्यः प्रादुरासीत्सुघोरः
सहस्रशो नदतां दुन्दुभीनाम् ॥ ७-१८०-२५ (५३३२१)
ततः शराः प्रापतन्रुक्मपुङ्खाः
शक्त्यृष्टिप्रासमुसलान्यायुधानि ।
परश्वथास्तैलधौताश्च खङ्गाः
प्रदीप्ताग्रास्तोमराः पट्टसाश्च ॥ ७-१८०-२६ (५३३२२)
मयूखिनः परिघा लोहबद्धा
गदाश्चित्राः शितधाराश्च शूलाः ।
गुर्व्यो गदा हेमपट्टावनद्धाः
शतघ्न्यश्च प्रादुरासन्समन्तात् ॥ ७-१८०-२७ (५३३२३)
महाशिलाश्चापतंस्तत्रतत्र
सहस्रशः साशनयश्च वज्राः ।
चक्राणि चानेकशतक्षुराणि
प्रादुर्बभूवुर्ज्वलनप्रभाणि ॥ ७-१८०-२८ (५३३२४)
तां शक्तिपाषाणपरश्वथानां
प्रासासिवज्राशनिमुद्गराणाम् ।
वृष्टिं विशालां ज्वलितां पतन्तीं
कर्णः शरौघैर्न शशाक हन्तुम् ॥ ७-१८०-२९ (५३३२५)
शराहतानां पततां हयानां
वज्राहतानां च तथा गजानाम् ।
शिलाहतानां च महारथानां

महान्निनादः पततां बभूव ॥ ७-१८०-३० (५३३२६)
सुभीमनानाविधशस्त्रपातै--
र्घटोत्कचेनाभिहतं समन्तात् ।
दौर्योधनं वै बलमार्तरूप--
मावर्तमानं ददृशे भ्रमत्तत् ॥ ७-१८०-३१ (५३३२७)
हाहाकृतं सम्परिवर्तमानं
संलीयमानं च विषण्णरूपम् ।
ते त्वार्यभावात्पुरुषप्रवीराः
पराङ्मुखा नो बभूवुस्तदानीम् ॥ ७-१८०-३२ (५३३२८)
तां राक्षसीं भीमरूपां सुघोरां
वृष्टिं महाशस्त्रमयीं पतन्तीम् ।
दृष्ट्वा बलौघांश्च निपात्यमाना--
न्महद्भयं तव पुत्रान्विवेश ॥ ७-१८०-३३ (५३३२९)
शिवाश्च वैश्वानरदीप्तजिह्वाः
सुभीमनादाः शतशो नदन्तीः ।
रक्षोगणान्नर्दतश्चापि वीक्ष्य
नरेन्द्र योधा व्यथिता बभूवुः ॥ ७-१८०-३४ (५३३३०)
ते दीप्तजिह्वानलतीक्ष्णदंष्ट्रा
विभीषणाः शैलनिकाशकायाः ।
नभोगताः शक्तिविषक्तहस्ता
मेघा व्यमुञ्चन्निव वृष्टिमुग्राम् ॥ ७-१८०-३५ (५३३३१)
तैराहतास्ते शरशक्तिशूलै--
र्गदाभिरुग्रैः परिघैश्च दीप्तैः ।
वज्रैः पिनाकैरशनिप्रहारैः
शतघ्निचक्रैर्मथिताश्च पेतुः ॥ ७-१८०-३६ (५३३३२)
शूला भुशुण्ड्योऽश्मगुडाः शतघ्न्यः
स्थूलाश्च कार्ष्णायसपट्टनद्धाः ।
तेऽवाकिरंस्तव पुत्रस्य सैन्यं
ततो रौद्रं कश्मलं प्रादुरासीत् ॥ ७-१८०-३७ (५३३३३)
विकीर्णान्त्रा विहतैरुत्तमाङ्गैः
सम्भग्नाङ्गः शिश्यिरे तत्र शूराः ।
छिन्ना हयाः कुञ्जराश्चापि भग्ना
न मुच्यन्ते याचमानाः सुभीताः ॥ ७-१८०-३८ (५३३३४)
एवं महच्छस्त्रवर्षं सृजन्त--
स्ते यातुधाना भुवि घोररूपाः ।
मायाः सृष्टास्तत्र घटोत्कचेन

नामुञ्चन्वै याचमानं न भीतम् ॥ ७-१८०-३९ (५३३३५)
तस्मिन्घोरे कुरुवीरावमर्दे
कालोत्सृष्टे क्षत्रियाणामभावे ।
ते वै भग्नाः सहसा व्यद्रवन्त
प्राक्रोशन्तः कौरवाः सर्व एव ॥ ७-१८०-४० (५३३३६)
पलायध्वं कुरवो नैतदस्ति
सेन्द्रा देवा घ्नन्ति नः पाण्डवार्थे ।
तथा तेषां मज्जतां भारतानां
तस्मिन्द्वीपः सूतपुत्रो बभूव ॥ ७-१८०-४१ (५३३३७)
तस्मिन्सङ्क्रन्दे तुमुले वर्तमाने
सैन्ये भग्ने लीयमाने कुरूणाम् ।
अनीकानां प्रविभागे प्रकाशे
न ज्ञायन्ते कुरवो नेतरे च ॥ ७-१८०-४२ (५३३३८)
निर्मर्यादे विद्रवे घोररूपे
सर्वा दिशः प्रेक्षमाणाः स्म शून्याः ।
तां शस्त्रवृष्टिमुरसा गाहमानं
कर्णं स्मैकं तत्र राजन्नपश्यन् ॥ ७-१८०-४३ (५३३३९)
ततो बाणैरावृणोदन्तरिक्षं
दिव्यां मायां योधयन्राक्षसस्य ।
ह्रीमान्कुर्वन्दुष्करं चार्यकर्म
नैवामुह्यत्संयुगे सूतपुत्रः ॥ ७-१८०-४४ (५३३४०)
ततो भीताः समुदैक्षन्त कर्णं
राजन्सर्वे सैन्धवा बाह्लिकाश्च ।
असम्मोहं पूजयन्तोऽस्य सङ्ख्ये
सम्पश्यन्तो विजयं राक्षसस्य ॥ ७-१८०-४५ (५३३४१)
तेनोत्सृष्टा चक्रयुक्ता शतघ्नी
समं सर्वांश्चतुरोऽश्वाञ्जघान ।
ते जानुभिर्जगतीमन्वपद्य--
न्गतासवो निर्दशनाक्षिजिह्वाः ॥ ७-१८०-४६ (५३३४२)
ततो हताश्वादवरुह्य याना--
दन्तर्मनाः कुरुषु प्राद्रवत्सु ।
दिव्ये चास्त्रे मायया वध्यमाने
नैवामुह्यच्चिन्तयन्त्प्राप्तकालम् ॥ ७-१८०-४७ (५३३४३)
ततोऽब्रुवन्कुरवः सर्व एव
कर्णं दृष्ट्वा घोररूपां च मायाम् ।
शक्त्या रक्षो जहि कर्णाद्य तूर्णं

नश्यन्त्येते कुरवो धार्तराष्ट्राः ॥ ७-१८०-४८ (५३३४४)
करिष्यतः किञ्च नो भीमपार्थौ
तपन्तमेनं जहि पापं निशीथे ।
यो नः सङ्ग्रामाद्घोररूपाद्विमुच्ये--
त्स नः पार्थान्सबालान्योधयेत ॥ ७-१८०-४९ (५३३४५)
तस्मादेनं राक्षसं घोररूपं
शक्त्या जहि त्वं दत्तया वासवेन ।
मा कौरवाः सर्व एवेन्द्रकल्पा
रात्रियुद्धे कर्ण नेशुः सयोधाः ॥ ७-१८०-५० (५३३४६)
स वध्यमानो रक्षसा वै निशीथे
दृष्ट्वा राजंस्त्रास्यमानं बलं च ।
महच्छ्रुत्वा निनदं कौरवाणां
मतिं दध्रे शक्तिमोक्षाय कर्णः ॥ ७-१८०-५१ (५३३४७)
स वै क्रुद्धः सिंह इवात्यमर्षी
नामर्षयन्प्रतिघातं रणेऽसौ ।
शक्तिं श्रेष्ठां वैजयन्तीमसह्यां
समाददे तस्य वधं चिकीर्षन् ॥ ७-१८०-५२ (५३३४८)
याऽसौ राजन्निहिता वर्षपूगा--
न्वधायाजौ सत्कृता फल्गुनस्य ।
यां वै प्रादात्सूत पुत्राय शक्रः
शक्तिं श्रेष्ठां कुण्डलाभ्यां निमाय ॥ ७-१८०-५३ (५३३४९)
तां वै शक्तिं लेलिहानां प्रदीप्तां
पाशैर्युक्तामन्तकस्येव जिह्वाम् ।
मृत्योः स्वसारं ज्वलितामिवोल्कां
वैकर्तनः प्राहिणोद्राक्षसाय ॥ ७-१८०-५४ (५३३५०)
तामुत्तमां परकायावहन्त्रीं
दृष्ट्वा शक्तिं बाहुसंस्थां ज्वलन्तीम् ।
भीतं रक्षो विप्रदुद्राव राजन्
कृत्वाऽऽत्मानं विन्ध्यतुल्यप्रमाणम् ॥ ७-१८०-५५ (५३३५१)
दृष्ट्वा शक्तिं कर्णबाह्वन्तरस्थां
नेदुर्भूतान्यन्तरिक्षे नरेन्द्र ।
ववुर्वातास्तुमुलाश्चापि राज--
न्सनिर्घाता चाशनिर्गां जगाम ॥ ७-१८०-५६ (५३३५२)
सा तां मायां भस्म कृत्वा ज्वलन्ती
भित्त्वा गाढं हृदयं राक्षसस्य ।
ऊर्ध्वं ययौ दीप्यमाना निशायां

नक्षत्राणामन्तराण्याविवेश ॥ ७-१८०-५७ (५३३५३)
स निर्भिन्नो विविधैरस्त्रपूगै--
र्दिव्यैर्नागैर्मानुषै राक्षसैश्च ।
नदन्नादान्विविधान्भैरवांश्च
प्राणानिष्टांस्त्याजितः शक्रशक्त्या ॥ ७-१८०-५८ (५३३५४)
इदं चान्यच्चित्रमाश्चर्यरूपं
चकारासौ कर्म शत्रुक्षयाय ।
तस्मिन्काले शक्तिनिर्भिन्नमर्मा
बभौ राजञ्शैलमेघप्रकाशः ॥ ७-१८०-५९ (५३३५५)
ततोऽन्तरिक्षादपतद्गतासुः
स राक्षसेन्द्रो भुवि भिन्नदेहः ।
अवाक्शिराः स्तब्धगात्रो विजिह्वो
घटोत्कचो महदास्थाय रूपम् ॥ ७-१८०-६० (५३३५६)
स तद्रूपं भैरवं भीमकर्मा
भीमं कृत्वा भैमसेनिः पपात ।
हतोऽप्येवं तव सैन्यैकदेश--
मपोथयत्स्वेन देहेन राजन् ॥ ७-१८०-६१ (५३३५७)
पतद्रक्षः स्वेन कायेन तूर्ण--
मतिप्रमाणेन विवर्धता च ।
प्रियं कुर्वन्पाण्डवानां गतासु--
रक्षौहिणीं तव तूर्णं जघान ॥ ७-१८०-६२ (५३३५८)
ततो मिश्राः प्राणदन्सिंहनादै--
र्भेर्यः शङ्खा मुरजाश्चानकाश्च ।
दग्धां मायां निहतं राक्षसं च
दृष्ट्वा हृष्टवाः प्राणदन्कौरवेयाः ॥ ७-१८०-६३ (५३३५९)
ततः कर्णः कुरुभिः पूज्यमानो
यथा शक्रो वृत्रवधे मरुद्भिः ।
अन्वारूढस्तव पुत्रस्य यानं
हृष्टश्चापि प्राविशत्तत्स्वसैन्यम् ॥ ॥ ७-१८०-६४ (५३३६०)

इति श्रीमन्महाभारते द्रोणपर्वणि घटोत्कचवधपर्वणि
चतुर्दशरात्रियुद्धे अशीत्यधिकशततमोऽध्यायः ॥१८० ॥

Mahabharata - Drona Parva - Chapter Footnotes

५-१८०-८ केतुशृङ्गः ध्वजशिखरः ॥
५-१८०-१५ तिर्यग्गताभिरिषुपङ्क्तिभिरिति शेषः ॥

५-१८०-२० प्रतिपन्नं कर्तव्यत्वेन ज्ञातमनुष्ठितं च ॥
५-१८०-२३ अदृश्यात् अदृश्यत ॥
५-१८०-४३ उरसा हार्दबलेन ॥
५-१८०-१८० अशीत्यधिकशततमोऽध्यायः ॥

---

द्रोनपर्व-अध्यय१८१
॥ श्रीः ॥
७.१८१. अध्यायः १८१

Mahabharata - Drona Parva - Chapter Topics
घटोत्कचनिधनात्सर्वेषु शोचत्सु हर्षादात्मानं परिष्वजमानं कृष्णं प्रत्यर्जुनेन हर्षहेतुप्रश्नः ॥ १ ॥
कृष्णेन तदभिधानपूर्वकं कर्णप्रभावप्रशंसनम् ॥ २ ॥

Mahabharata - Drona Parva - Chapter Text

७-१८१-० (५३३६१)
ंधृतराष्ट्र उवाच। ७-१८१-०क्ष् (४७४२)
तस्मिन्हते महामाये महातेजसि राक्षसे ।
अमर्षिताः पाण्डवेयाः किमकुर्वन्महारणे ॥ ७-१८१-१ (५३३६२)
मर्दिताश्च भृशं युद्धे किमकुर्वन्त सञ्जय ॥ ७-१८१-२ (५३३६३)
ये च तेऽभ्यद्रवन्द्रोणं व्यूढानीकं प्रहारिणः ।
सृञ्जयाः सह पाञ्चालैस्तेऽरुर्वन्किं महारणे ॥ ७-१८१-३ (५३३६४)
सौमदत्तिवधाद्द्रोणमायत्तं सैन्धवस्य च ।
अमर्षाज्जीवितं त्यक्त्वा गाहमानं वरूथिनीम् ॥ ७-१८१-४ (५३३६५)
जृम्भमाणमिव व्याघ्रं व्यात्ताननमिवान्तकम् ।
कथं प्रत्युद्ययुर्द्रोणमजय्यं कुरुसृञ्जयाः ॥ ७-१८१-५ (५३३६६)
आचार्यं ये च रक्षन्ति दुर्योधनपुरोगमाः ।
द्रौणिकर्णकृपास्तात ते ह्यकुर्वन्किमाहवे ॥ ७-१८१-६ (५३३६७)
भारद्वाजं जिघांसन्तौ सव्यसाचिवृकोदरौ ।
आर्च्छतां मामकान्युद्धे कथं सञ्जय शंस मे ॥ ७-१८१-७ (५३३६८)
सिन्धुराजवधेनेमे घटोत्कचवधेन ते ।
अमर्षिताश्च सङ्क्रुद्धा रणं चक्रुः कथं युधि'॥ ७-१८१-८ (५३३६९)
सञ्जय उवाच। ७-१८१-९क्ष् (४७४३)
हैडिम्बिं निहतं दृष्ट्वा विशीर्णमिव पर्वतम् ।
बभूवुः पाण्डवाः सर्वे शोकबाष्पाकुलेक्षणाः ॥ ७-१८१-९ (५३३७०)

वासुदेवस्तु हर्षेण महताऽभिपरिप्लुतः ।
ननाद सिंहवन्नादं व्यथयन्निव भारत ॥ ७-१८१-१० (५३३७१)
हतं घटोत्कचं ज्ञात्वा वासुदेवः प्रतापवान् ।
विनद्य च महानादं पर्यष्वजत फल्गुनम् ॥ ७-१८१-११ (५३३७२)
स विनद्य महानादमभीशून्सन्नियम्य च ।
ननर्त हर्षसंवीतो वातोद्धूत इव द्रुमः ॥ ७-१८१-१२ (५३३७३)
ततः परिष्वज्य पुनः पार्थमास्फोट्य चासकृत् ।
रथोपस्थगतो धीमान्प्राणदत्पुनरच्युतः ॥ ७-१८१-१३ (५३३७४)
प्रहृष्टमनसं ज्ञात्वा वासुदेवं महाबलः ।
अर्जुनोऽथाब्रवीद्राजन्नातिहृष्टमना इव ॥ ७-१८१-१४ (५३३७५)
अतिहर्षोऽयमस्थाने तवाद्य मधुसूदन ।
शोकस्थाने तु सम्प्राप्ते हैडिम्बस्य वधेन तु ॥ ७-१८१-१५ (५३३७६)
विमुखानीह सैन्यानि हतं दृष्ट्वा घटोत्कचम् ।
वयं च भृशमुद्विग्ना हेडिम्बेस्तु निपातनात् ॥ ७-१८१-१६ (५३३७७)
नैतत्कारणमल्पं हि भविष्यति जनार्दन ।
तदद्य शंस मे पृष्टः सत्यं सत्यवतां वर ॥ ७-१८१-१७ (५३३७८)
यद्येतन्न रहस्यं ते वक्तुमर्हस्यरिन्दम ।
धैर्यस्य विकृतिं ब्रूहि त्वमद्य मधुसूदन ॥ ७-१८१-१८ (५३३७९)
समुद्रस्येव संशोषं मेरोरिव विसर्पणम् ।
तथैतदद्य मन्येऽहं तव कर्म जनार्दन ॥ ७-१८१-१९ (५३३८०)
वासुदेव उवाच। ७-१८१-२०क्ष् (४७४४)
अतिहर्षमिमं प्राप्तं शृणु मे त्वं धनञ्जय ।
अतीव मनसः सद्यः प्रसादकरमुत्तमम् ॥ ७-१८१-२० (५३३८१)
शक्तिं घटोत्कचेनेमां व्यंसयित्वा महाद्युते ।
कर्णं निहतमेवाजौ विद्धि सद्यो धनञ्जय ॥ ७-१८१-२१ (५३३८२)
शक्तिहस्तं पुनः कर्णं को लोकेऽस्ति पुमानिह ।
य एनमभितस्तिष्ठेत्कार्तिकेयमिवाहवे ॥ ७-१८१-२२ (५३३८३)
दिष्ट्याऽपनीतकवचो दिष्ट्याऽपहृतकुण्डलः ।
दिष्ट्या सा व्यंसिता शक्तिरमोघाऽस्य घटोत्कचे ॥ ७-१८१-२३ (५३३८४)
यदि हि स्यात्सकवचस्तथैव स्यात्सकुण्डलः ।
सामरानपि लोकांस्त्रीनेकः कर्णो जयेद्रणे ॥ ७-१८१-२४ (५३३८५)
वासवो वा कुबेरो वा वरुणो वा जलेश्वरः ।
यमो वा नोत्सहेत्कर्णं रणे प्रतिसमासितुम् ॥ ७-१८१-२५ (५३३८६)
गाण्डीवमुद्यम्य भवांश्चक्रं चाहं सुदर्शनम् ।
न शक्तौ स्वो रणे जेतुं तथायुक्तं नरर्षभम् ॥ ७-१८१-२६ (५३३८७)
त्वद्धितार्थं तु शक्रेण मायापहृतकुण्डलः ।

विहीनकवचश्चायं कृतः परपुरञ्जयः ॥ ७-१८१-२७ (५३३८८)
उत्कृत्य कवचं यस्मात्कुण्डले विमले च ते ।
प्रादाच्छक्राय वै कर्णस्तस्माद्वैकर्तनः स्मृतः ॥ ७-१८१-२८ (५३३८९)
आशिविष इव क्रुद्धः स्तम्भितो मन्त्रतेजसा ।
तथाऽद्य भाति कर्णो मे शान्तज्वाल इवानलः ॥ ७-१८१-२९ (५३३९०)
यदाप्रभृति कर्णाय शक्तिर्दत्ता महात्मना ।
वासवेन महाबाहो क्षिप्ता याऽसौ घटत्कचे ॥ ७-१८१-३० (५३३९१)
कुण्डलाभ्यां निमायाथ दिव्येन कवचेन च ।
तां प्राप्यामन्यत वृषा सततं त्वां हतं रणे ॥ ७-१८१-३१ (५३३९२)
एवं गतोऽपि शक्योऽयं हतुं नान्येन केनचित् ।
ऋते त्वां पुरुषव्याघ्र शपे सत्येन चानघ ॥ ७-१८१-३२ (५३३९३)
ब्रह्मण्यः सत्यवादी च सपस्वी नियतव्रतः ।
रिपुष्वपि दयावांश्च तस्मात्कर्णो वृषा स्मृतः ॥ ७-१८१-३३ (५३३९४)
युद्धशौण्डो महाबाहुर्नित्योद्यतशरासनः ।
केसरीव वने नर्दन्मत्तमातङ्गयूथपान् ।
विमर्दन्रथशार्दूलान्राजते रणमूर्धनिxxx ॥ ७-१८१-३४ (५३३९५)
मध्यंगत इवादित्यो यो न शक्यो निरीक्षितुम् ।
त्वदीयैः पुरुषव्याघ्र योधमुख्यैर्महात्सभिः ॥ ७-१८१-३५ (५३३९६)
शरजालसहस्रांशुः शरदीव दिxxxx ॥ ७-१८१-३६ (५३३९७)
तपान्ते जलदो यद्वच्छरधाराः क्षरन्मुहुः ।
दिव्यास्त्रजलदः कर्णः पर्जन्य इव वृष्टिमान् ॥ ७-१८१-३७ (५३३९८)
त्रिदशैरपि चास्यद्भिः शरवर्षं समन्ततः ।
अशक्यस्तदयं जेतुं स्रवद्भिर्मांसशोणितम् ॥ ७-१८१-३८ (५३३९९)
कवचेन विहीनश्च कुण्डलाभ्यां च पाण्डव ।
सोऽद्य मानुषतां प्राप्तो विमुक्तः शक्रदत्तया ॥ ७-१८१-३९ (५३४००)
एको हि योगोऽस्य भवेद्वधाय
च्छिद्रे ह्येनं स्वप्रमत्तः प्रमत्तम् ।
कृच्छ्रं प्राप्तं रथचक्रे विमग्ने
हन्याः पूर्वं त्वं तु संज्ञां विचार्य ॥ ७-१८१-४० (५३४०१)
न ह्युद्यतास्त्रं युधि हन्यादजय्य--
मप्येकवीरो बलभित्सवज्रः ॥ ७-१८१-४१ (५३४०२)
जरासन्धश्चेदिराजो महात्मा
महाबाहुश्चैकलव्यो निषादः ।
एकैकशो निहताः सर्व एते
योगैस्तैस्तैस्त्वद्धितार्थं मयैव ॥ ७-१८१-४२ (५३४०३)
अथापरे निहता राक्षसेन्द्रा

हिडिम्बकिर्मीरबकप्रधानाः ।
अलायुधः परचक्रावमर्दी
घटोत्कचश्चोग्रकर्मा तरस्वी ॥ ॥ ७-१८१-४३ (५३४०४)

इति श्रीमन्महाभारते द्रोणपर्वणि घटोत्कचवधपर्वणि
चतुर्दशरात्रियुद्धे एकाशीत्यधिकशततमोऽध्यायः ॥ १८१ ॥
Mahabharata - Drona Parva - Chapter Footnotes

५-१८१-१८ धैर्यस्य वैकृतं इति झ । पाठे अस्मत्पक्षक्षयेण
तव हर्षोऽस्मद्धैर्यविनाशक इत्यर्थखः ॥
५-१८१-३१ कुण्डलाभ्यां निमाय विनिमयं कृत्वा ॥
५-१८१-३३ वृषा धर्मप्रधानः ॥
५-१८१-३७ पर्जन्यइव वृष्टिमान् । नेता नेतृभिरस्यद्भिः
शरवर्षाणि वर्षताम्। सोऽद्य मानुषतामित्यादि क टङ पाठः ॥
५-१८१-१८१ एकाशीत्यधिकशततमोऽध्यायः ॥

---

द्रोनपर्व-अध्यय१८२
॥ श्रीः ॥
७.१८२. अध्यायः १८२

Mahabharata - Drona Parva - Chapter Topics
श्रीकृष्णेनार्जुनम्प्रति जरासन्धादिपराक्रमकथनपूर्वकं तेषां
दुर्जयतया पूर्वमेव स्वेनोपायैर्हननकथनम् ॥ १ ॥

Mahabharata - Drona Parva - Chapter Text

७-१८२-० (५३४०५)
अर्जुन उवाच। ७-१८२-०क्ष् (४७४५)
कथमस्मद्धितार्थं ते कैश्च योगैर्जनार्दन ।
जरासन्धप्रभृतयो घातिताः पृथिवीश्वराः ॥ ७-१८२-१ (५३४०६)
वासुदेव उवाच। ७-१८२-२क्ष् (४७४६)
जरासन्धश्चेदिराजो नैषादिश्च महाबलः ।
यदि स्युर्न हताः पूर्वमिदानीं स्युर्भयङ्कराः ॥ ७-१८२-२ (५३४०७)
दुर्योधनस्तानवश्यं वृणुयाद्रथसत्तमान् ।
तेऽस्मासु नित्यविद्विष्टाः संश्रयेयुश्च कौरवान् ॥ ७-१८२-३ (५३४०८)
ते हि वीरा महेष्वासाः कृतास्त्रा दृढयोधिनः ।

धार्तराष्ट्रचमूं कृत्स्नां रक्षेयुरमरा इव ॥ ७-१८२-४ (५३४०९)
सूतपुत्रो जरासन्धश्चेदिराजो निषादजः ।
सुयोधनं समाश्रित्य तपेरन्पृथिवीमिमाम् ॥ ७-१८२-५ (५३४१०)
योगैरभिहता यैस्ते तन्मे शृणु धनञ्जय ।
अजय्या हि विना योगैर्मृधे ते दैवतैरपि ॥ ७-१८२-६ (५३४११)
एकैको हि पृथक् तेषां समस्तां रिपुवाहिनीम् ।
योधयेत्समरे पार्थ लोकपालाभिरक्षिताम् ॥ ७-१८२-७ (५३४१२)
जरासन्धो हि रुषितो रौहिणेयप्रधर्षितः ।
अस्मद्वधार्थं चिक्षेप गदां वै सर्वघातिनीम् ॥ ७-१८२-८ (५३४१३)
सीमन्तमिव कुर्वाणा नभसः पावकप्रभा ।
अदृश्यतापतन्ती सा शक्रमुक्ता यथाऽशनिः ॥ ७-१८२-९ (५३४१४)
तामापतन्तीं दृष्ट्वैव गदां रोहिणिनन्दनः ।
प्रतिघातार्थमस्त्रं वै स्थूणाकर्णमवासृजत् ॥ ७-१८२-१० (५३४१५)
अस्त्रवेगप्रतिहता सा गदा प्रापतद्भुवि ।
दारयन्ती धरां देवीं कम्पयन्तीव पर्वतान् ॥ ७-१८२-११ (५३४१६)
तत्र सा राक्षसी घोरा जरानाम्नी सुविक्रमा ।
सन्दधे सा हि सञ्जातं जरासन्धमरिन्दमम् ॥ ७-१८२-१२ (५३४१७)
द्वाभ्यां जातो हि मातृभ्यामर्धदेहः पृथक्पृथक् ।
जरया सन्धितो यस्माज्जरासन्धस्ततोऽभवत् ॥ ७-१८२-१३ (५३४१८)
सा तु भूमिं गता पार्थ हता ससुतबान्दवा ।
गदया तेन चास्त्रेण स्थूणाकर्णेन राक्षसी ॥ ७-१८२-१४ (५३४१९)
विनाभूतः स गदया जरासन्धो महामृधे ।
निहतो भीमसेनेन पश्यतस्ते धनञ्जय ॥ ७-१८२-१५ (५३४२०)
यदि हि स्याद्गदापाणिर्जरासन्धः प्रतापवान् ।
सेन्द्रा देवा न तं हन्तुं रणे शक्ता नरोत्तम ॥ ७-१८२-१६ (५३४२१)
त्वद्धितार्थं च नैषादिरङ्गुष्ठेन वियोजितः ।
द्रोणेनाचार्यकं कृत्वा छद्मना सत्यविक्रमः ॥ ७-१८२-१७ (५३४२२)
स तु बद्धाङ्गुलित्राणो नैषादिर्दृढविक्रमः ।
अतिमानी वचनरो बभौ राम इवापरः ॥ ७-१८२-१८ (५३४२३)
एकलव्यं हि साङ्गुष्ठमशक्ता देवदानवाः ।
सराक्षसोरगाः पार्थ विजेतुं युधि कर्हिचित् ॥ ७-१८२-१९ (५३४२४)
किमु मानुषमात्रेण शक्यः स्यात्प्रतिवीक्षितुम् ।
दृढमुष्टिः कृती नित्यमस्यमानो दिवानिशम् ॥ ७-१८२-२० (५३४२५)
त्वद्धितार्थं तु स मया हतः सङ्ग्राममूर्धनि ॥ ७-१८२-२१ (५३४२६)
चेदिराजश्च विक्रान्तः प्रत्यक्षं निहतस्तव ।
स चाप्यशक्यः सङ्ग्रामे जेतुं सर्वसुरासुरैः ॥ ७-१८२-२२ (५३४२७)

वधार्थं तस्य जातोऽहमन्येषां च सुरद्विषाम् ।
त्वत्सहायो नरव्याघ्र लोकानां हितकाम्यया ॥ ७-१८२-२३ (५३४२८)
हिडिम्बबककिर्मीरा भीमसेनेन पातिताः ।
रावणेन समप्राणा ब्रह्मयज्ञविनाशनाः ॥ ७-१८२-२४ (५३४२९)
हतस्तथैव मायावी हैडिम्बेनाप्यलायुधः ।
हैडिम्बश्चाप्युपायेन शक्त्या कर्णेन घातितः ॥ ७-१८२-२५ (५३४३०)
यदि ह्येनं नाहनिष्यत्कर्णः शक्त्या महामृधे ।
मयां वध्योऽभविष्यत्स भैमसेनिर्घटोत्कचः ।
मया न निहतः पूर्वमेष युष्मत्प्रियेप्सया ॥ ७-१८२-२६ (५३४३१)
एष हि ब्राह्मणद्वेषी यज्ञद्वेषी च राक्षसः ।
धर्मस्य लोप्ता पापात्मा तस्मादेव निपातितः ।
व्यंसिता चाप्यूपायेन शक्रदत्ता मयाऽनघ ॥ ७-१८२-२७ (५३४३२)
येहि धर्मस्य लोप्तारो वध्यास्ते मम पाण्डव ।
धर्मसंस्थापनार्थं हि प्रतिज्ञैषा ममाव्यया ॥ ७-१८२-२८ (५३४३३)
ब्रह्म सत्यं दमः शौचं धर्मो ह्रीः श्रीर्धृतिः क्षमा ।
यत्र तत्र रमे नित्यमहं सत्येन ते शपे ॥ ७-१८२-२९ (५३४३४)
न विषादस्त्वया कार्यः कर्णं वैकर्तनं प्रति ।
उपदेक्ष्याम्युपायं ते येन तं प्रसहिष्यसि ॥ ७-१८२-३० (५३४३५)
सुयोधनं चापि रणे हनिष्यति वृकोदरः ।
तस्यापि च वधोपायं वक्ष्यामि तव पाण्डव ॥ ७-१८२-३१ (५३४३६)
वर्धते तुमुलस्त्वेष शब्दः पचरमूं प्रति ।
विद्रवन्ति च सैन्यानि त्वदीयानि दिशो दश ॥ ७-१८२-३२ (५३४३७)
लब्धलक्ष्या हि कौरव्या विधमन्ति चमूं तव ।
दहत्येष च वः सैन्यं द्रोणः प्रहरतां वरः ॥ ॥ ७-१८२-३३ (५३४३८)

इति श्रीमन्महाभारते द्रोणपर्वणि घटोत्कचवधपर्वणि
चतुर्दशरात्रियुद्धे द्व्यशीत्यधिकथततमोऽध्यायः ॥ १८२ ॥
Mahabharata - Drona Parva - Chapter Footnotes

५-१८२-१ योगैरुपायैः ॥
५-१८२- रौक्मिणेयप्रधर्षितः इति क ङ पाठः ॥
५-१८२- व्यंसिता व्यर्थीकृता शक्तिरिति शेषः ॥
५-१८२-द्व्यशीत्यधिकशततमोऽध्यायः ॥
१८२ ॥

---

द्रोनपर्व-अध्यय१८३

॥ श्रीः ॥
७.१८३. अध्यायः १८३

Mahabharata - Drona Parva - Chapter Topics
धृतराष्ट्रेण सञ्जयम्प्रति कर्णेन अर्जुने शक्तेरमोक्षणकारणप्रश्ने सञ्जयेन सात्यकिम्प्रति कृष्णोक्ततदुत्तरकथनम् ॥ १ ॥

Mahabharata - Drona Parva - Chapter Text

७-१८३-० (५३४३९)
धृतराष्ट्र उवाच। ७-१८३-०क्ष् (४७४७)
एकवीरवधे मोघा शक्तिः सूतात्मजे यदा ।
कस्मात्सर्वान्समुत्सृज्य स तां पार्थे न मुक्तवान् ॥ ७-१८३-१ (५३४४०)
तस्मिन्हते हता हि स्युः सर्वे पाण्डवसृञ्जयाः ।
एकवीरवधे कस्माद्युद्धे न जयमादधे ॥ ७-१८३-२ (५३४४१)
आहूतो न निवर्तेयमिति तस्य महाव्रतम् ।
स्वयं मार्गयितव्यः स सूतपुत्रेण फल्गुनः ॥ ७-१८३-३ (५३४४२)
ततो द्वैरथमानीय फल्गुनं शक्तदत्तया ।
जघान न वृषा कस्मात्तन्ममाचक्ष्व सञ्जय ॥ ७-१८३-४ (५३४४३)
नूनं बुद्धिविहीनश्चाप्यसहायश्च मे सुतः ।
शत्रुभिर्व्यंसितः पापः कथं नु स जयेदरीन् ॥ ७-१८३-५ (५३४४४)
या ह्यस्य परमा शक्तिर्जयस्य च परायणम् ।
सा शक्तिर्वासुदेवेन व्यंसिता च घटोत्कचे ॥ ७-१८३-६ (५३४४५)
कुणेर्यथा हस्तगतं हियेद्बिल्वं बलीयसा ।
तथा शक्तिरमोघा सा मोघीभूता घटोत्कचे ॥ ७-१८३-७ (५३४४६)
यथा वराहस्य शुनश्च युध्यतो--
स्तयोरभावे श्वपचस्य लाभः ।
मन्ये विद्वन्वासुदेवस्य तद्व--
द्युद्धे लाभः कर्णहैडिम्बयोर्वै ॥ ७-१८३-८ (५३४४७)
घटोत्कचो यदि हन्याद्धि कर्णं
परो लाभः स भवेत्पाण्डवानाम् ।
वैकर्तनो वा यदि तं निहन्या--
त्तथापि कृत्यं शक्तिनाशात्कृतं स्यात् ॥ ७-१८३-९ (५३४४८)
इति प्राज्ञः प्रज्ञयैतद्विचिन्त्य
घटोत्कचं सूतपुत्रेण युद्धे ।

अघातयद्वासुदेवो नृसिंहः
प्रियं कुर्वन्पाण्डवानां हितं च ॥ ७-१८३-१० (५३४४९)
सञ्जय उवाच। ७-१८३-११क्ष् (४७४८)
एतच्चिकीर्षितं ज्ञात्वा कर्णे मधुनिहा नृप ।
नियोजयामास तदा द्वैरथे राक्षसेश्वरम् ॥ ७-१८३-११ (५३४५०)
घटोत्कचं महावीर्यं महाबुद्धिर्जनार्दनः ।
अमोघाया विघातार्थं राजन्दुर्मन्त्रिते तव ॥ ७-१८३-१२ (५३४५१)
तदैव कृतकार्या हि वयं स्याम कुरूद्वह ।
न रक्षेद्यदि कृष्णस्तं पार्थं कर्णान्महारथात् ॥ ७-१८३-१३ (५३४५२)
साश्वध्वजरथः सङ्ख्ये धृतराष्ट्र पतेद्भुवि ।
विना जनार्दनं पार्थो योगानामीश्वरं प्रभुम् ॥ ७-१८३-१४ (५३४५३)
तैस्तैरुपायैर्बहुभी रक्ष्यमाणः स पार्थिव ।
जयत्यभिमुखः शत्रून्पार्थः कृष्णेन पालितः ॥ ७-१८३-१५ (५३४५४)
सविशेषं त्वमेयात्मा कृष्णो रक्षेन्न फल्गुनम् ।
हन्यात्क्षिप्रं हि कौन्तेयं शक्तिर्वृक्षमिवाशनिः ॥ ७-१८३-१६ (५३४५५)
धृतराष्ट्र उवाच। ७-१८३-१७क्ष् (४७४९)
विरोधी च कुमन्त्री च प्राज्ञमानी ममात्मजः ।
यस्यैष समतिक्रान्तो वधोपायो जयं प्रति ॥ ७-१८३-१७ (५३४५६)
स वा कर्णो महाबुद्धिः सर्वशस्त्रभृतां वरः ।
न मुक्तवान्कथं सूतताममोघां धनञ्जये ॥ ७-१८३-१८ (५३४५७)
तवापि समतिक्रान्तमेतद्गावल्गणे कथम् ।
एतमर्थं महाबुद्धे यत्त्वया नावबोधितः ॥ ७-१८३-१९ (५३४५८)
सञ्जय उवाच। ७-१८३-२०क्ष् (४७५०)
दुर्योधनस्य शकुनेर्मम दुःशासनस्य च ।
रात्रौ रात्रौ भवत्येषा नित्यमेव विकत्थना ॥ ७-१८३-२० (५३४५९)
श्वः सर्वसैन्यानुत्सृज्य जहि कर्ण धनञ्जयम् ।
प्रेष्यवत्पाण्डुपाञ्चालानुपभोक्ष्यामहे ततः ॥ ७-१८३-२१ (५३४६०)
अथवा निहते पार्थे पाण्डवान्यतमं ततः ।
स्थापयेद्यदि वार्ष्णेयस्तस्मात्कृष्णो हि हन्यताम् ॥ ७-१८३-२२ (५३४६१)
कृष्णो हि मूलं पाण्डूनां पार्थः स्कन्ध इवोद्गतः ।
शाखा इवेतरे पार्थाः पाञ्चालाः पत्रसंज्ञिताः ॥ ७-१८३-२३ (५३४६२)
कृष्णाश्रयाः कृष्णबलाः कृष्णनाथाश्च पाण्डवाः ।
कृष्णः परायणं चैषां ज्योतिषामिव चन्द्रमाः ॥ ७-१८३-२४ (५३४६३)
तस्मात्पर्णानि शाखाश्च स्कन्धं चोत्सृज्य सूतज ।
कृष्णं हि विद्धि पाण्डूनां मूलं सर्वत्र सर्वदा ॥ ७-१८३-२५ (५३४६४)
हन्याद्यदि हि दाशार्हं कर्णो यादवनन्दनम् ।

कृत्स्ना वसुमती राजन्वशे तस्य न संशयः ॥ ७-१८३-२६ (५३४६५)
यदि हि स निहतः शयीत भूमौ
यदुकुलपाण्डवनन्दनो महात्मा ।
ननु तव वसुधा नरेन्द्र सर्वा
सगिरिसमुद्रवना वशं व्रजेत ॥ ७-१८३-२७ (५३४६६)
सा तु बुद्धिः कृताऽप्येवं जाग्रति त्रिदशेश्वरे ।
अप्रमेये हृषीकेशे युद्धकाले त्वमुह्यत ॥ ७-१८३-२८ (५३४६७)
अर्जुनं चापि राधेयात्सदा रक्षति केशवः ।
न ह्येनमैच्छत्प्रमुखे सौतेः स्थापयितुं रणे ॥ ७-१८३-२९ (५३४६८)
अन्यांश्चास्मै रथोदारानुपास्थापयदच्युतः ।
अमोघां तां कथं शक्तिं मोघां कुर्यामिति प्रभो ॥ ७-१८३-३० (५३४६९)
यश्चैवं रक्षते पार्थं कर्णात्कृष्णो महामनाः ।
आत्मानं स कथं राजन्न रक्षेत्पुरुपोत्तमः ॥ ७-१८३-३१ (५३४७०)
परिचिन्त्य तु पश्यामि चक्रायुधमरिन्दमम् ।
न सोऽस्ति त्रिषु लोकेषु यो जयेत जनार्दनम् ॥ ७-१८३-३२ (५३४७१)
सञ्जय उवाच। ७-१८३-३३क्ष् (४७५१)
ततः कृष्णं महाबाहुं सात्यकिः सत्यविक्रमः ।
पप्रच्छ रथशार्दूलः कर्णं प्रति महारथः ॥ ७-१८३-३३ (५३४७२)
अयं च प्रत्ययः कर्णे शक्तिश्चामितविक्रमा ।
किमर्थं सूतपुत्रेण न मुक्ता फल्गुने तु सा ॥ ७-१८३-३४ (५३४७३)
वासुदेव उवाच। ७-१८३-३५क्ष् (४७५२)
दुःशासनश्च कर्णश्च शकुनिश्च ससैन्धवः ।
सततं मन्त्रयन्ति स्म दुर्योधनपुरोगमाः। ७-१८३-३५ (५३४७४)
कर्णकर्ण महेष्वास रणेऽमितपराक्रम ।
नान्यस्य शक्तिरेषा ते मोक्तव्या जयतां वर ॥ ७-१८३-३६ (५३४७५)
ऋते महारथात्कर्ण कुन्तीपुत्राद्धनञ्जयात् ।
स हि तेषामतियशा देवानामिव वासवः ॥ ७-१८३-३७ (५३४७६)
तस्मिन्विनिहते पार्थे पाण्डवाः सृञ्जयैः सह ।
भविष्यन्ति गतात्मानः सुरा इव निरग्नयः ॥ ७-१८३-३८ (५३४७७)
तथेति च प्रतिज्ञातं कर्णेन शिनिपुङ्गव ।
हृदि नित्यं च कर्णस्य वधो गाण्डीवधन्वनः ॥ ७-१८३-३९ (५३४७८)
अहमेव तु राधेयं मोहयामि युधांवर ।
ततो नावासृजच्छक्तिं पाण्डवे श्वेतवाहने ॥ ७-१८३-४० (५३४७९)
फल्गुनस्य हि सा मृत्युरिति चिन्तयतोऽनिशम् ।
न निद्रा न च मे हार्षो मनसोऽस्ति युधांवर ॥ ७-१८३-४१ (५३४८०)
घटोत्कचे व्यंसितां तु दृष्ट्वा तां शिनिपुङ्गव ।

मृत्योरास्यान्तरान्मुक्तं पस्याम्यद्य धनञ्जयम् ॥ ७-१८३-४२ (५३४८१)
न पिता न च मे माता न यूयं भ्रातरस्तथा ।
न च प्राणास्तथा रक्ष्या यथा बीभत्सुराहवे ॥ ७-१८३-४३ (५३४८२)
त्रैलोक्यराज्याद्यत्किञ्चिद्भवेदन्यत्सुदुर्लभम् ।
नेच्छेयं सात्वताहं तद्विना पार्थं धनञ्जयम् ॥ ७-१८३-४४ (५३४८३)
अतः प्रहर्षः सुमहान्युयुधानाद्य मेऽभवत् ।
मृतं प्रत्यागतमिव दृष्ट्वा पार्थं धनञ्जयम् ॥ ७-१८३-४५ (५३४८४)
अतश्च प्रहितो युद्धे मया कर्णाय राक्षसः ।
न ह्यन्यः समरे रात्रौ शक्तः कर्णं प्रबाधितुम् ॥ ७-१८३-४६ (५३४८५)
सञ्जय उवाच। ७-१८३-४७क्ष् (४७५३)
इति सात्यकये प्राह तदा देवकिनन्दनः ।
धनञ्जयहिते युक्तस्तत्प्रिये सततं रतः ॥ ॥ ७-१८३-४७ (५३४८६)

इति श्रीमन्महाभारते द्रोणपर्वणि घटोत्कचवधपर्वणि
चतुर्दशरात्रियुद्धे त्र्यशीत्यधिकशततमोऽध्यायः ॥१८३ ॥
Mahabharata - Drona Parva - Chapter Footnotes

५-१८३-७ हियेत् हियेत ॥
५-१८३-११ एतत्प्रकृतशक्त्यार्जुनहननम् ॥
५-१८३-१७ सविशेषात्त्वमोघायाः कृष्णोऽरक्षत पाण्डवम इति झ
। पाठः। एष कृत्स्नः जयम्प्रति अर्जुनस्येत्यर्थः ॥
५-१८३-३८ निरग्नयोऽग्निंविना मुखहीना इवेत्यर्थः ॥
५-१८३-४७ हिते आमुष्मिके श्रेयसि । प्रिये ऐहिके कल्याणे ॥
५-१८३-१८३ व्यशीत्यधिकशततमोऽध्यायः ॥

---

द्रोनपर्व-अध्ययश्८४
॥ श्रीः ॥
७.१८४. अध्यायः १८४

Mahabharata - Drona Parva - Chapter Topics
कर्णशक्तेर्घटोत्कचवधेन वैफल्याद्धृतराष्ट्रेण शोचनम् ॥ १ ॥
युधिष्ठिरेण कृष्णे घटोत्कचकृतोपकारनिवेदनपूर्वकं शोचन ॥ २ ॥
व्यासेन क्रोधात्कर्णजिघांसया गच्छन्तं युधिष्ठिरमेत्य
समाश्वासनेन तं निवर्त्य पुनरन्तर्धानम् ॥ ३ ॥

Mahabharata - Drona Parva - Chapter Text

७-१८४-० (५३४८७)
धृतराष्ट्र उवाच। ७-१८४-०क्ष् (४७५४)
कर्णदुर्योधनादीनां शकुनेः सौबलस्य च ।
अपनीतं महत्तात तव चैव विशेषतः ॥ ७-१८४-१ (५३४८८)
यदि जानीथ तां शक्तिमेकघ्नीं सततं रणे ।
अनिवार्यामसह्यां च देवैरपि सवासवैः ॥ ७-१८४-२ (५३४८९)
सा किमर्थं तु कर्णेन प्रवृत्ते समरे पुरा ।
न देवकीसुते मुक्ता फल्गुने वाऽपि सञ्जय ॥ ७-१८४-३ (५३४९०)
सञ्जय उवाच। ७-१८४-४क्ष् (४७५५)
सङ्ग्रामाद्विनिवृत्तानां सर्वेषां नो विशाम्पते ।
रात्रौ कुरुकुलश्रेष्ठ मन्त्रोऽयं समजायत ॥ ७-१८४-४ (५३४९१)
प्रभातमात्रे श्वोभूते केशवायार्जुनाय वा ।
शक्तिरेषा हि मोक्तव्या कर्णकर्णेनि नित्यशः ॥ ७-१८४-५ (५३४९२)
ततः प्रभातसमये राजन्कर्णस्य दैवतैः ।
अन्येषां चैव योधानां सा बुद्धिर्नाश्यते पुनः ॥ ७-१८४-६ (५३४९३)
दैवमेव परं मन्ये यत्कर्णो हस्तसंस्थया ।
न जघान रणे पार्थं कृष्णं वा देवकीसुतम् ॥ ७-१८४-७ (५३४९४)
तस्य हस्तस्थिता शक्तिः कालरात्रिरिवोद्यता ।
दैवोपहतबुद्धित्वान्न तां कर्णो विमुक्तवान् ॥ ७-१८४-८ (५३४९५)
कृष्णे वा देवकीपुत्रे मोहितो देवमायया ।
पार्थे वा शक्रकल्पे वै वधार्थं वासवीं प्रभो ॥ ७-१८४-९ (५३४९६)
धृतराष्ट्र उवाच। ७-१८४-१०क्ष् (४७५६)
दैवेनोपहता यूयं स्वबुद्ध्या केशवस्य च ।
गता हि वासवी हत्वा तृणभूतं घटोत्कचम् ॥ ७-१८४-१० (५३४९७)
कर्णश्च मम पुत्राश्च सर्वे चान्ये च पार्थिवाः ।
तेन वै दुष्प्रणीतेन गता वैवस्वतक्षयम् ॥ ७-१८४-११ (५३४९८)
भूय एव तु मे शंस यथा युद्धमवर्तत ।
कुरूणां पाण्डवानां च हैडिम्बौ निहते तदा ॥ ७-१८४-१२ (५३४९९)
ये च तेऽभ्यद्रवन्द्रोणं व्यूढानीकाः प्रहारिणः ।
सृञ्जयाः सह पाञ्चालैस्तेऽप्यकुर्वन्कथं रणम् ॥ ७-१८४-१३ (५३५००)
सौमदत्तेर्वधाद्द्रोणमायान्तं सैन्धवस्य च ।
अमर्षाज्जीवितं त्यक्त्वा गाहमानं वरूथिनीम् ॥ ७-१८४-१४ (५३५०१)
जृम्भमाणमिव व्याघ्रं व्यात्ताननमिवान्तकम् ।
कथं प्रत्युद्ययुर्द्रोणमस्यन्तं पाण्डुसृञ्जयाः ॥ ७-१८४-१५ (५३५०२)
आचार्यं ये च तेऽरक्षन्दुर्योधनपुरोगमाः ।

द्रौणिकर्णकृपास्तात ते वाऽकुर्वन्किमाहवे ॥ ७-१८४-१६ (५३५०३)
भारद्वाजं जिघांसन्तौ सव्यसाचिवृकोदरौ ।
समार्च्छन्मामका युद्धे कथं सञ्जय शंस मे ॥ ७-१८४-१७ (५३५०४)
सिन्धुराजवधेनेमे घटोत्कचवधेन ते ।
अमर्पिताः सुसङ्क्रुद्धा रणं चक्रुः कथं निशि ॥ ७-१८४-१८ (५३५०५)
सञ्जय उवाच। ७-१८४-१९क्ष् (४७५७)
हते घटोत्कचे राजन्कर्णेन निशि राक्षसे ।
प्रणदत्सु च हृष्टेषु तावकेषु युयुत्सुषु ॥ ७-१८४-१९ (५३५०६)
आपतत्सु च वेगेन वध्यमाने बलेऽपि च ।
विगाढायां रजन्यां च राजा दैन्यं परं गतः ॥ ७-१८४-२० (५३५०७)
अब्रवीच्च महाबाहुर्भीमसेनमिदं वचः ।
आवारय महाबाहो धार्तराष्ट्रस्य वाहिनीम् ॥ ७-१८४-२१ (५३५०८)
हैडिम्बेस्चैव घातेन मोहो मामाविशन्महान् ।
एवं भीमं समादिश्य स्वरथे समुपाविशत् ॥ ७-१८४-२२ (५३५०९)
अश्रुपूर्णमुखो राजा निःश्वसंश्च पुनःपुनः ।
कश्मलं प्राविशद्घोरं दृष्ट्वा कर्णस्य विक्रमम् ॥ ७-१८४-२३ (५३५१०)
तं तथा व्यथितं दृष्ट्वा कृष्णो वचनमब्रवीत् ॥ ७-१८४-२४ (५३५११)
मा व्यथां कुरु कौन्तेय नैतत्त्वय्युपपद्यते ।
वैक्लव्यं भरतश्रेष्ठ यथा प्राकृतपूरुषे ॥ ७-१८४-२५ (५३५१२)
उत्तिष्ठ राजन्युध्यस्व वह गुर्वीं धुरं विभो ।
त्वयि वैक्लव्यमापन्ने संशयो विजये भवेत् ॥ ७-१८४-२६ (५३५१३)
श्रुत्वा कृष्णस्य वचनं धर्मराजो युधिष्ठिरः ।
विमृज्य नेत्रे पाणिभ्यां कृष्णं वचनमब्रवीत् ॥ ७-१८४-२७ (५३५१४)
विदिता मे महाबाहो धर्माणां परमा गतिः ।
ब्रह्महत्याफलं तस्य यः कृतं नावबुध्यते ॥ ७-१८४-२८ (५३५१५)
अस्माकं हि वनस्थानां हैडिम्बेन महात्सना ।
बालेनापि सता तेन कृतं साह्यं जनार्दन ॥ ७-१८४-२९ (५३५१६)
अस्त्रहेतोर्गतं ज्ञात्वा पाण्डवं स्वेतवाहनम् ।
असौ कृष्ण महेष्वासः काम्यके मामुपस्थितः ॥ ७-१८४-३० (५३५१७)
उषितश्च सहास्माभिर्यावन्नासीद्धनञ्जयः ।
गन्धमादनयात्रायां दुर्गेभ्यश्च स्म तारिताः ।
पाञ्चाली च परिश्रान्ता पृष्ठेनोढा महात्मना ॥ ७-१८४-३१ (५३५१८)
आरम्भांश्चैव युद्धानां यदेष कृतवान्प्रभो ।
मदर्थे दुष्करं कर्म कृतं तेन महाहवे ॥ ७-१८४-३२ (५३५१९)
स्वभावाद्या च मे प्रीतिः सहदेवे जनार्दन ।
सैव मे द्विगुणा प्रीती राक्षसेन्द्रे घटोत्कचे ॥ ७-१८४-३३ (५३५२०)

भक्तश्च मेहाबाहुः प्रियोऽस्याहं प्रियश्च मे ।
तेन विन्दामि वार्ष्णेय कश्मलं शोकतापिताः ॥ ७-१८४-३४ (५३५२१)
पश्य सैन्यानि वार्ष्णेय द्राव्यमाणानि कौरवैः ।
द्रोणकर्णौ तु संयत्तौ पश्य युद्धे महारथौ ॥ ७-१८४-३५ (५३५२२)
निशीथे पाण्डवं सैन्यमाभ्यां माधव मर्दितम् ।
गजाभ्यामिव मत्ताभ्यां यथा नलवनं महत् ॥ ७-१८४-३६ (५३५२३)
अनादृत्य बलं बाह्वोर्भीमसेनस्य माधव ।
चित्रास्त्रतां च पार्थस्य विक्रमन्ते च कौरवाः ॥ ७-१८४-३७ (५३५२४)
एष द्रोणश्च कर्णश्च राजा चैव सुयोधनः ।
निहत्य राक्षसं युद्धे हृष्टा नर्दन्ति संयुगे ॥ ७-१८४-३८ (५३५२५)
कथं वाऽसमासु जीवत्सु त्वयि चैव जनार्दन ।
हैडिम्बिः प्राप्तवान्मृत्यं सूतपुत्रेण सङ्गतः ॥ ७-१८४-३९ (५३५२६)
कदर्थीकृत्य नः सर्वान्पश्यतः सव्यसाचिनः ।
निहतो राक्षसः कृष्ण भैमसेनिर्महाबलः ॥ ७-१८४-४० (५३५२७)
यदाऽभिमन्युर्निहतो धार्तराष्ट्रैर्दुरात्मभिः ।
नासीत्तत्र रणे कृष्ण सव्यसाची महारथः ॥ ७-१८४-४१ (५३५२८)
निरुद्धाश्च वयं सर्वे सैन्धवेन दुरात्मना ।
निमित्तमभवद्द्रोणः सपुत्रस्तत्र कर्मणि ॥ ७-१८४-४२ (५३५२९)
उपदिष्टो वधोपायः कर्णस्य गुरुणा स्वयम् ।
व्यायच्छतश्च खड्गेन द्विधा खड्गं चकार ह ॥ ७-१८४-४३ (५३५३०)
व्यसने वर्तमानस्य कृतवर्मा नृशंसवत् ।
अश्वाञ्जघान सहसा तथोभौ पार्ष्णिसारथी ।
तथेतरे महेष्वासाः सौभद्रं युध्यपातयन् ॥ ७-१८४-४४ (५३५३१)
अल्पे च कारणे कृष्ण हतो गाण्डीवधन्वना ।
सैन्धवो यादवश्रेष्ठ तच्च नातिप्रियं मम ॥ ७-१८४-४५ (५३५३२)
यदि शत्रुवधो न्याय्यो भवेत्कर्तुं हि पाण्डवैः ।
कर्णद्रोणौ रणे पूर्वं हन्तव्याविति मे मतिः ॥ ७-१८४-४६ (५३५३३)
एतौ हि मूलं दुःखानामस्माकं पुरुषर्षभ ।
एतौ रणे समासाद्य समाश्वस्तः सुयोधनः ॥ ७-१८४-४७ (५३५३४)
यत्र वध्यो भवेद्द्रोणः सूतपुत्रश्च सानुगः ।
तत्रावधीन्महाबाहुः सैन्धवं दूरवासिनम् ॥ ७-१८४-४८ (५३५३५)
अवश्यं तु मया कार्यः सूतपुत्रस्य निग्रहः ।
ततो यास्याम्यहं वीर स्वयं कर्णजिघांसया ॥ ७-१८४-४९ (५३५३६)
भीमसेनो महाबाहुर्द्रोणानीकेन सङ्गतः ॥ ७-१८४-५० (५३५३७)
एवमुक्त्वा ययौ तूर्णं त्वरमाणो युधिष्ठिरः ।
स विष्फार्य महच्चापं शङ्खं प्रध्माप्य भैरवम् ॥ ७-१८४-५१ (५३५३८)

ततो रथसहस्रेण गजानां च शतैस्त्रिभिः ।
वाजिभिः पञ्चसाहस्रैः पाञ्चालैः सप्रभद्रकैः ।
वृतः शिखण्डी त्वरितो राजानं पृष्ठतोऽन्वयात् ॥ ७-१८४-५२ (५३५३९)
ततो भेरीः समाजघ्नुः पणवानकगोमुखान् ।
शङ्खशब्दरवांश्चैव पाणिशब्दांश्च दंशिताः ।
पाञ्चालाः पाण्डवाश्चैव युधिष्ठिरपुरोगमाः ॥ ७-१८४-५३ (५३५४०)
ततोऽब्रवीन्महाबाहुर्वासुदेवो धनञ्जयम् ॥ ७-१८४-५४ (५३५४१)
एष प्रयाति त्वरितः क्रोधाविष्टो युधिष्ठिरः ।
जिघांसुः सूतपुत्रस्य तस्योपेक्षा न युज्यते ॥ ७-१८४-५५ (५३५४२)
एवमुक्त्वा हृषीकेशः शीघ्रमश्वानचोदयत् ।
दूरं प्रयान्तं राजानमन्वगच्छज्जनार्दनः ॥ ७-१८४-५६ (५३५४३)
तं दृष्ट्वा सहसा यान्तं भूतपुत्रजिघांसया ।
शोकोपहतसङ्कल्पं दह्यमानमिवाग्निना ।
अभिगम्याब्रवीद्व्यासो धर्मपुत्रं युधिष्ठिरम् ॥ ७-१८४-५७ (५३५४४)
व्यास उवाच। ७-१८४-५८क्ष् (४७५८)
कर्णमासाद्य सङ्ग्रामे दिष्ट्या जीवति फल्गुनः ॥ ७-१८४-५८ (५३५४५)
सव्यसाचिवधाकाङ्क्षी शक्तिं रक्षितवान्हि सः ।
न चागाद्द्वैरथं जिष्णुर्दिष्ट्या तेन महारणे ॥ ७-१८४-५९ (५३५४६)
सृजेतां स्पर्धिनावेतौ दिव्यान्यस्त्राणि सर्वशः ।
वध्मानेषु चास्त्रेषु पीडितः सूतनन्दनः ॥ ७-१८४-६० (५३५४७)
वासवीं समरे शक्तिं ध्रुवं मुञ्चेद्युधिष्ठिर ।
ततो भवेत्ते व्यसनं घोरं भरतसत्तम ॥ ७-१८४-६१ (५३५४८)
दिष्ट्या रक्षो हतं युद्धे सूतपुत्रेण मानद ।
वासवीं कारणं कृत्वा कालेनोपहतो ह्यसौ ॥ ७-१८४-६२ (५३५४९)
तवैव कारणाद्रक्षो निहतं तात संयुगे ।
मा क्रुधो भरतश्रेष्ठ मा च शोके मनः कृथाः ॥ ७-१८४-६३ (५३५५०)
प्राणिनामिह सर्वेषामेषा निष्ठा युधिष्ठिर ।
भ्रातृभिः सहितः सर्वैः पार्थिवैश्च महात्मभिः ॥ ७-१८४-६४ (५३५५१)
कौरवान्समरे राजन्प्रतियुध्यस्व भारत ।
पञ्चमे दिवसे तात पृथिवी ते भविष्यति ॥ ७-१८४-६५ (५३५५२)
नित्यं च पुरुषव्याघ्र धर्ममेवानुचिन्तय ।
आनृशंस्यं तपो दानं क्षमां सत्यं च पाण्डव ॥ ७-१८४-६६ (५३५५३)
सेवेथाः परमप्रीतो यतो धर्मस्ततो जयः ।
इत्युक्त्वा पाण्डवं व्यासस्तत्रैवान्तरधीयत ॥ ॥ ७-१८४-६७ (५३५५४)

इति श्रीमन्महाभारते द्रोणपर्वणि घटोत्कचवधपर्वणि

चतुर्दशरात्रियुद्धे चतुरशीत्यधिकशततमोऽध्यायः ॥ १८४ ॥

Mahabharata - Drona Parva - Chapter Footnotes

५-१८४-१ महत् जयालम्बनममोघशक्तिरूपमिति शेषः । अपनीतं ना
शितम् । महदपनीतं अन्याय इति वा ॥
५-१८४-११ दुष्प्रणीतेन दुर्न येन ॥
५-१८४-३२ अभिज्ञश्चैवेति झ । पाठः ॥
५-१८४-१८४ चतुरशीत्यधिकशततमोध्यायः ॥

---

द्रोनपर्व-अध्यय१८५
॥ श्रीः ॥
७.१८५. अध्यायः १८५

Mahabharata - Drona Parva - Chapter Topics

निद्रोपद्रुतानां सैन्यानामर्जुनाज्ञया स्वापेन श्रान्तिमपनीय
चन्द्रोदयानन्तरं युद्धारम्भः ॥ १ ॥

Mahabharata - Drona Parva - Chapter Text

७-१८५-० (५३५५५)
सञ्जय उवाच । ७-१८५-०क्ष् (४७५९)
व्यासेनैवमथोक्तस्तु धर्मराजो युधिष्ठिरः ।
स्वयं कर्णवधाद्वीरो निवृत्तो भरतर्षभ ॥ ७-१८५-१ (५३५५६)
घटोत्कचे तु निहते सूतपुत्रेण ता निशाम् ।
दुःखामर्षवशं प्राप्तो धर्मराजो युधिष्ठिरः ॥ ७-१८५-२ (५३५५७)
दृष्ट्वा भीमेन महतीं वार्यमाणां चमूं तव ।
धृष्टद्युम्नमुवाचेदं कुम्भयोनिं निवारय ॥ ७-१८५-३ (५३५५८)
त्वं हि द्रोणविनाशाय समुत्पन्नो हुताशनात् ।
सशरः कवची खड्गी धन्वी च परतापनः ।
अभिद्रव रणे हृष्टो मा च ते भीः कथञ्चन ॥ ७-१८५-४ (५३५५९)
जनमेजयः शिखण्डी च दौर्मुखिश्च यशोधरः ।
अभिद्रवन्तु संहृष्टाः कुम्भयोनिं समन्ततः ॥ ७-१८५-५ (५३५६०)
नकुलः सहदेवश्च द्रौपदेयाः प्रभद्रकाः ।
द्रुपदश्च विराटश्च पुत्रभ्रातृसमन्वितौ ॥ ७-१८५-६ (५३५६१)
सात्यकिः केकयाश्चैव पाण्डवश्च धनञ्जयः ।
अभिद्रवन्तु वेगेन कुम्भयोनिवधेप्सया ॥ ७-१८५-७ (५३५६२)

तथैव रथिनः सर्वे हस्त्यश्वं यच्च किञ्चन ।
पदाताश्च रणे द्रोणं पातयन्तु महारथम् ॥ ७-१८५-८ (५३५६३)
तथाऽऽज्ञप्तास्तु ते सर्वे पाण्डवेन महात्मना ।
अभ्यद्रवन्त वेगेन कुम्भयोनिवधेप्सया ॥ ७-१८५-९ (५३५६४)
आगच्छतस्तान्सहसा सर्वोद्योगेन पाण्डवान् ।
प्रतिजग्राह समरे द्रोणः शस्त्रभृतां वरः ॥ ७-१८५-१० (५३५६५)
ततो दुर्योधनो राजा सर्वोद्योगेन पाण्डवान् ।
अभ्यद्रवत्सुसङ्क्रुद्ध इच्छन्द्रोणस्य जीवितम् ॥ ७-१८५-११ (५३५६६)
ततः प्रववृते युद्धं श्रान्तवाहनसैनिकम् ।
पाण्डवानां कुरूणां च गर्जतामितरेतरम् ॥ ७-१८५-१२ (५३५६७)
निद्रान्धास्ते महाराज परिश्रान्ताश्च संयुगे ।
नाभ्यपद्यन्त समरे काञ्चिच्चेष्टां महारथाः ॥ ७-१८५-१३ (५३५६८)
त्रियामा रजनी चैषा घोररूपा भयानका ।
सहस्रयामप्रतिमा बभूव प्राणहारिणी ॥ ७-१८५-१४ (५३५६९)
वध्यतां च तथा तेषां क्षतानां च विशेषतः ।
घोरा रात्रिः समाजज्ञे निद्रान्धानां विशेषतः ॥ ७-१८५-१५ (५३५७०)
सर्वे ह्यासन्निरुत्साहाः क्षत्रिया दीनचेतसः ।
तव चैव परेषां च गतास्त्रा विगतेषवः ॥ ७-१८५-१६ (५३५७१)
ते तदा पारयन्तश्च भ्रमन्तश्च विशेषतः ।
स्वधर्ममनुपश्यन्तो न जहुः स्वामनीकिनीम् ॥ ७-१८५-१७ (५३५७२)
अस्त्राण्यन्ये समुत्सृज्य निद्रान्धाः शेरते जनाः ।
रथेष्वन्ये गजेष्वन्ये हयेष्वन्ये च भारत ॥ ७-१८५-१८ (५३५७३)
निद्रान्धा नो बुबुधिरे काञ्चिच्चेष्टां नराधिप ।
तानन्ये समरे योधाः प्रेषयन्ति यमक्षयम् ॥ ७-१८५-१९ (५३५७४)
स्वप्नायमानांस्त्वपरे परानतिविचेतसः ।
आत्मानं समरे जघ्नुः स्वानेव च परानपि ॥ ७-१८५-२० (५३५७५)
नानावाचो विमुञ्चन्तो निद्रान्धास्ते महारणे ॥ ७-१८५-२१ (५३५७६)
अस्माकं च महाराज परेभ्यो बहवो जनाः ।
योद्धव्यमिति तिष्ठन्तो निदासंरक्तलोचनाः ॥ ७-१८५-२२ (५३५७७)
संसर्पन्तो रणे केचिन्निद्रान्धास्ते तथापरान् ।
जघ्नुः शूरा रणे शूरांस्तस्मिंस्तमसि दारुणे ॥ ७-१८५-२३ (५३५७८)
हन्यमानमथात्मावनं परैश्च बहवो जनाः ।
नाभ्यजानन्त समरे निद्रया मोहिता भृशम् ॥ ७-१८५-२४ (५३५७९)
तेषामेतादृशीं चेष्टां विज्ञाय पुरुषर्षभः ।
उवाच वाक्यं बीभत्सुरुच्चैः सन्नादयन्दिशः ॥ ७-१८५-२५ (५३५८०)
श्रान्ता भवन्तो निद्रान्धाः सर्व एव सवाहनाः ।

तमसा च वृते सैन्ये रजसा बहुलेन च ॥ ७-१८५-२६ (५३५८१)
ते यूयं यदि मन्यध्वमुपारमत सैनिकाः ।
निमीलयत चात्रैव रणभूमौ मुहूर्तकम् ॥ ७-१८५-२७ (५३५८२)
ततो विनिद्रा विश्रान्ताश्चन्द्रमस्युदिते पुनः ।
संसाधयिष्यथान्योन्यं स्वर्गाय कुरुपाण्डवाः ॥ ७-१८५-२८ (५३५८३)
तद्वचः सर्वधर्मज्ञा धार्मिकस्य विशाम्पते ।
अरोचयन्त सैन्यानि तथा चान्योन्यमब्रुवन् ॥ ७-१८५-२९ (५३५८४)
चुक्रुशुः कर्णकर्णेनि तथा दुर्योधनेति च ।
उपारमत पाण्डूनां विरता हि वरूथिनी ॥ ७-१८५-३० (५३५८५)
तथा विक्रोशमानस्य फल्गुनस्य ततस्ततः ।
उपारमत पाण्डूनां सेना तव च भारत ॥ ७-१८५-३१ (५३५८६)
तामस्य वाचं देवाश्च ऋषयश्च महात्मनः ।
सर्वसैन्यानि चाक्षुद्रां प्रहृष्टाः प्रत्यपूजयन् ॥ ७-१८५-३२ (५३५८७)
तत्सम्पूज्य वचोऽक्रूरं सर्वसैन्यानि भारत ।
मुहूर्तमस्वपन्राजञ्श्रान्तानि भरतर्षभ ॥ ७-१८५-३३ (५३५८८)
सा तु सम्प्राप्य विश्रामं ध्वजिनी तव भारत ।
सुखमाप्तवती वीरमर्जुनं प्रत्यपूजयत् ॥ ७-१८५-३४ (५३५८९)
त्वयि वेदास्तथास्त्राणि त्वयि बुद्धिपराक्रमौ ।
धर्मस्त्वयि महाबाहो दया भूतेषु चानघ ॥ ७-१८५-३५ (५३५९०)
यच्चाश्वस्तास्तवेच्छामः शर्म पार्थ तदस्तु ते ।
मनसश्च प्रियानर्थान्वीर क्षिप्रमवाप्नुहि ॥ ७-१८५-३६ (५३५९१)
इति ते तं नरव्याघ्रं प्रशंसन्तो महारथाः ।
निद्रया समवाक्षिप्तास्तूष्णीमासन्विशाम्पते ॥ ७-१८५-३७ (५३५९२)
ग्वीरा वारणकुम्भेषु सुषुपुर्युद्धकर्शिताः ।
रात्रौ रतिपरिश्रान्ताः कामिनीनां कुचेष्विव'॥ ७-१८५-३८ (५३५९३)
अश्वपृष्ठेषु चाप्यन्ये रथनीडेषु चापरे ।
गजस्कन्धगताश्चान्ये शेरते चापरे क्षितौ ॥ ७-१८५-३९ (५३५९४)
सायुधाः सगदाश्चैव सखड्गाः सपरश्वथाः ।
सप्रासकवचाश्चान्ये नराः सुप्ताः पृथक्पृथक् ॥ ७-१८५-४० (५३५९५)
गजास्ते पन्नगाभोगैर्हस्तैर्भूरेणुगुण्ठितैः ।
निद्रान्धा वसुधां चक्रुर्घ्राणनिः श्वासशीतलाम् ॥ ७-१८५-४१ (५३५९६)
सुप्ताः शुशुभिरे तत्र निःश्वसन्तो महीतले ।
विकीर्णा गिरयो यद्वन्निःश्वसद्भिर्महोरगैः ॥ ७-१८५-४२ (५३५९७)
समां च विषमां चक्रुः खुराग्रैर्विकृतां महीम् ।
हयाः काञ्चनयोक्त्रास्ते केसरालम्बिभिर्युगैः ।
सुषुपुस्तत्र राजेन्द्र युक्ता वाहेषु सर्वशः ॥ ७-१८५-४३ (५३५९८)

एवं हयाश्च नागाश्च योधाश्च भरतर्षभ ।
युद्धाद्विरम्य सुषुपुः श्रमेण महताऽन्विताः ॥ ७-१८५-४४ (५३५९९)
तत्तथा निद्रया भग्नं तद्बभौ निःस्वनं बलम् ।
कुशलैः शिल्पिभिर्न्यस्तं पटे चित्रमिवाद्भुतम् ॥ ७-१८५-४५ (५३६००)
ते क्षत्रियाः कुण्डलिनो युवानः
परस्परं सायकविक्षताङ्गाः ।
कुम्भेषु लीनाः सुषुपुर्गजानां
कुचेषु लग्ना इव कामिनीनाम् ॥ ७-१८५-४६ (५३६०१)
ततः कुमुदनाथेन कामिनीगण्डपाण्डुना ।
नेत्रानन्देन चन्द्रेण माहेन्द्री दिगलङ्कृता ॥ ७-१८५-४७ (५३६०२)
दशशताक्षककुब्दरिनिःसृतः
किरणकेसरभासुरपिञ्जरः ।
तिमिरवारणवृथविदारणः
समुदियादुदयाचलकेसरी ॥ ७-१८५-४८ (५३६०३)
हरवृषोत्तमगात्रसमद्युतिः
स्मरशरासनपूर्णसमप्रभः ।
नववधूस्मितचारुमनोहरः
प्रविसृतः कुमुदाकरबान्धवः ॥ ७-१८५-४९ (५३६०४)
ततो मुहूर्ताद्भगवान्पुरस्ताच्छशलक्षणः ।
अरुणं दर्शयामास ग्रसञ्ज्योतिः प्रभां प्रभुः ॥ ७-१८५-५० (५३६०५)
अरुणस्य तु तस्यानु जातरूपसमप्रभम् ।
रश्मिजालं महच्चन्द्रो मन्दं मन्दमवासृजत् ॥ ७-१८५-५१ (५३६०६)
उत्सारयन्तः प्रभया तमस्ते चन्द्ररश्मयः ।
पर्यगच्छञ्छनैः सर्वा दिशः खं च क्षितिं तथा ॥ ७-१८५-५२ (५३६०७)
ततो मुहूर्ताद्भुवनं ज्योतिर्भूतमिवाभवत् ।
अप्रख्यमप्रकाशं च जगामाशु तमस्तथा ॥ ७-१८५-५३ (५३६०८)
प्रतिप्रकाशिते लोके दिवाभूते निशाकरे ।
विचेरुर्न विचेरुश्च राजन्नक्तञ्चरास्ततः ॥ ७-१८५-५४ (५३६०९)
बोध्यमानं तु तत्सैन्यं राजंश्चन्द्रस्य रश्मिभिः ।
बुबुधे शतपत्राणां वनं सूर्यांशुभिर्यथा ॥ ७-१८५-५५ (५३६१०)
यथा चन्द्रोदयोद्धूतः क्षुभितः सागरोऽभवत् ।
तथा चन्द्रोदयोद्धूतः क्षुभितश्च बलार्णवः ॥ ७-१८५-५६ (५३६११)
ततः प्रववृते युद्धं पुनरेव विशाम्पते ।
लोके लोकविनाशाय परं लोकमभीप्सताम् ॥ ॥ ७-१८५-५७ (५३६१२)

इति श्रीमन्महाभारते द्रोणपर्वणि द्रोणवधपर्वणि

चतुर्दशरात्रियुद्धे पञ्चाशीत्यधिकशततमोऽध्यायः ॥ १८५ ॥
Mahabharata - Drona Parva - Chapter Footnotes

५-१८५-२८ सङ्ग्राममिति झ पाठः ॥
५-१८५-१८५ पञ्चाशीत्यधिकशततमोऽध्यायः ॥

---

द्रोनपर्व-अध्यय१८६
॥ श्रीः ॥
७.१८६. अध्यायः १८६

Mahabharata - Drona Parva - Chapter Topics
दुर्योधनोपालम्भकोपितेन द्रोणेन
पार्थदुर्योधनप्रशंसाधिक्षेपपूर्वकं रणाय निःसरणम् ॥ १ ॥

Mahabharata - Drona Parva - Chapter Text

७-१८६-० (५३६१३)
सञ्जय उवाच। ७-१८६-०क्ष् (४७६०)
ततो दुर्योधनो द्रोममभिगम्याब्रवीदिदम् ।
अमर्षवशमापन्नो जनयन्हर्षतेजसी ॥ ७-१८६-१ (५३६१४)
दुर्योधन उवाच। ७-१८६-२क्ष् (४७६१)
न मर्षणीयाः सङ्ग्रामे विश्रमन्तः श्रमान्विताः ।
सपत्ना ग्लानमनसो लब्धलक्षा विशेषतः ॥ ७-१८६-२ (५३६१५)
यत्तु मर्षितमस्माभिर्भवतः प्रियकाम्यया ।
त एते परिविश्रान्ताः पाण्डवा बलवत्तराः ॥ ७-१८६-३ (५३६१६)
सर्वथा परिहीनाः स्म तेजसा च बलेन च ।
भवता पाल्यमानास्ते विवर्धन्ते पुनःपुनः ॥ ७-१८६-४ (५३६१७)
दिव्यान्यस्त्राणि सर्वाणि ब्राह्मादीनि च यानि ह ।
तानि सर्वामि तिष्ठन्ति भवत्येव विशेषतः ॥ ७-१८६-५ (५३६१८)
न पाण्डवेया न वयं नान्ये लोके धनुर्धराः ।
युध्यमानस्य ते तुल्याः सत्यमेतद्ब्रवीमि ते ॥ ७-१८६-६ (५३६१९)
ससुरासुरगन्धर्वानिमाँलोकान्द्विजोत्तम ।
सर्वास्त्रविद्भवान्हन्याद्दिव्यैरस्त्रैर्न संशयः ॥ ७-१८६-७ (५३६२०)
स भवान्मर्षयत्येनांस्तव तुल्यानवेत्य च ।
शिष्यत्वं वा पुरस्कृत्य मम वा मन्दभाग्यताम् ॥ ७-१८६-८ (५३६२१)
सञ्जय उवाच। ७-१८६-९क्ष् (४७६२)

एवमुद्धर्षितो द्रोणः कोपितश्च सुतेन ते ।
समन्युरब्रवीद्राजन्दुर्योधनमिदं वचः ॥ ७-१८६-९ (५३६२२)
स्थविरः सन्परं शक्त्या घटे दुर्योधनाहवे ।
अतः परं मया कार्यं क्षुद्रं विजयगृद्धिना ।
अनस्त्रविदयं सर्वो हन्तव्योऽस्त्रविदा जनः ॥ ७-१८६-१० (५३६२३)
यद्भवान्मन्यते चापि शुभं वा यदि वाऽशुभम् ।
तद्वै कर्ताऽस्मि कौरव्य वचनात्तव नान्यथा ॥ ७-१८६-११ (५३६२५)
निहत्य सर्वपाञ्चालान्युद्धे कृत्वा पराक्रमम् ।
विमोक्ष्ये कवचं राजन्सत्येनायुधमालभे ॥ ७-१८६-१२ (५३६२६)
मन्यसे यच्च कौन्तेयमर्जुनं श्रान्तमाहवे ।
तस्य वीर्यं महाबाहो शृणु सत्येन कौरव ॥ ७-१८६-१३ (५३६२७)
तं न देवा न गन्धर्वा न यक्षा न च राक्षसाः ।
उत्सहन्ते रणे जेतुं कुपितं सव्यसाचिनम् ॥ ७-१८६-१४ (५३६२८)
खाण्डवे येन भगवान्प्रत्युद्यातः सुरेश्वरः ।
सायकैर्वारितश्चापि वर्षमाणो महात्मना ॥ ७-१८६-१५ (५३६२९)
यक्षा नागास्तथा दैत्या ये चान्ये बलगर्विताः ।
निहताः पुरुषेन्द्रेण तच्चापि विदितं तव ॥ ७-१८६-१६ (५३६३०)
गन्धर्वा घोषयात्रायां चित्रसेनादयो जिताः ।
यूयं तैर्ह्रियमाणाश्च मोक्षिता दृढधन्वना ॥ ७-१८६-१७ (५३६३१)
निवातकवचाश्चापि देवानां शत्रवस्तथा ।
सुरैरवध्याः सङ्ग्रामे तेन वीरेण निर्जिताः ॥ ७-१८६-१८ (५३६३२)
दानवानां सहस्राणि हिरण्यपुरवासिनाम् ।
विजिग्ये पुरुषव्याघ्रः स शक्यो मानुषैः कथम् ॥ ७-१८६-१९ (५३६३३)
प्रत्यक्षं चैव ते सर्वं यथा बलमिदं तव ।
क्षपितं पाण्डुपुत्रेण चेष्टतां नो विशाम्पते ॥ ७-१८६-२० (५३६३४)
सञ्जय उवाच। ७-१८६-२१क्ष् (४७६३)
तं तदाऽभिप्रशंसन्तमर्जुनं कुपितस्तदा ।
द्रोणं तव सुतो राजन्पुनरेवेदमब्रवीत् ॥ ७-१८६-२१ (५३६३५)
अहं दुःशासनः कर्णः शकुनिर्मातुलश्च मे ।
हनिष्यामोऽर्जुनं सङ्ख्ये द्विधा कृत्वाऽद्य भारतीम् ।
गतिष्ठ स त्वं महाबाहो नित्यं शिष्यः प्रियस्तव'॥ ७-१८६-२२ (५३६३६)
तस्य तद्वचनं श्रुत्वा भारद्वाजो हसन्निव ।
अन्ववर्तत राजानं स्वस्ति तेऽस्त्विति चाब्रवीत् ॥ ७-१८६-२३ (५३६३७)
को हि गाण्डीवधन्वानं ज्वलन्तमिव तेजसा ।
अक्षयं क्षपयेत्कश्चित्क्षत्रियः क्षत्रियर्षभम् ॥ ७-१८६-२४ (५३६३८)
तं न वित्तपतिर्नेन्द्रो न यमो न जलेश्वरः ।

नासुरोरगरक्षांसि क्षपयेयुः सहायुधम् ॥ ७-१८६-२५ (५३६३९)
मूढास्त्वेतानि भाषन्ते यानीमान्यात्थ भारत ।
युद्धे ह्यर्जुनमासाद्य स्वस्तिमान्को व्रजेद्गृहान् ॥ ७-१८६-२६ (५३६४०)
त्वं तु सर्वाभिशङ्कित्वान्निष्ठुरः पापनिश्चयः ।
श्रेयसस्त्वद्धिते युक्तांस्तत्तद्वक्तुमिहेच्छसि ॥ ७-१८६-२७ (५३६४१)
गच्छ त्वमपि कौन्तेयमात्मार्थे जहि माचिरम् ।
त्वमप्याशंससे योद्धुं कुलजः क्षत्रियो ह्यसि ॥ ७-१८६-२८ (५३६४२)
इमान्किं क्षत्रियान्सर्वान्घातयिष्यस्यनागसः ।
त्वस्य मूलं वैरस्य तस्मादासादयार्जुनम् ॥ ७-१८६-२९ (५३६४३)
एष ते मातुलः प्राज्ञः क्षत्रधर्ममनुव्रतः ।
दुर्द्युतदेवी गान्धारे प्रयात्वर्जुनमाहवे ॥ ७-१८६-३० (५३६४४)
एषोऽक्षकुशलो जिह्मो द्यूतकृत्कितवः शठः ।
देविता निकृतिप्रज्ञो युधि जेष्यति पाण्डवान् ॥ ७-१८६-३१ (५३६४५)
त्वया कथितमत्यर्थं कर्णेन सह हृष्टवत् ।
असकृच्छून्यवन्मोहाद्धृतराष्ट्रस्य शृण्वतः ॥ ७-१८६-३२ (५३६४६)
अहं च तात कर्णश्च भ्राता दुःशानश्च मे ।
पाण्डुपुत्रान्हनिष्यामः सहिताः समरे त्रयः ॥ ७-१८६-३३ (५३६४७)
इति ते कत्थमानस्य श्रुतं संसदिसंसदि ।
अनुतिष्ठ प्रतिज्ञां तां सत्यवाग्भव तैः सह ॥ ७-१८६-३४ (५३६४८)
एष ते पाण्डवः शत्रुरविशङ्कोऽग्रतः स्थितः ।
क्षत्रधर्ममवेक्षस्व श्लाघ्यस्तव वधो जयात् ॥ ७-१८६-३५ (५३६४९)
दत्तं भुक्तमधीतं च प्राप्तमैश्वर्यमीप्सितम् ।
कृतकृत्योऽनृणश्चासि मा भैर्युध्यस्व पाण्डवम् ॥ ७-१८६-३६ (५३६५०)
इत्युक्त्वा समरे द्रोणो न्यवर्तत यतः परे ।
द्वैधीकृत्य ततः सेनां युद्धं समभवत्तदा ॥ ॥ ७-१८६-३७ (५३६५१)

इति श्रीमन्महाभारते द्रोणपर्वणि द्रोणवधपर्वणि
चतुर्दशरात्रियुद्धे षडशीत्यधिकशततमोऽध्यायः ॥ १८६ ॥

---

द्रोनपर्व-अध्यय१८७
॥ श्रीः ॥
७.१८७. अध्यायः १८७

Mahabharata - Drona Parva - Chapter Topics
द्रोणेन द्रुपदविराटादीनां वधः ॥ १ ॥
भीमेन निष्ठुरभाषणेन धृष्टद्युम्नमुद्योज्य द्रोणानीकाभिगमनम् ॥ २ ॥

चतुर्दशरात्रियुद्धसमाप्तिः ॥ ३ ॥

Mahabharata - Drona Parva - Chapter Text

७-१८७-० (५३६५२)
सञ्जय उवाच। ७-१८७-०क्ष् (४७६४)
त्रिभागमात्रेषायां रात्र्यां युद्धमवर्तत ।
कुरूणां पाण्डवानां च संहृष्टानां विशाम्पते ॥ ७-१८७-१ (५३६५३)
अथ चन्द्रप्रभां मुष्णन्नादित्यस्य पुरःसरः ।
अरुणोऽभ्युदयाञ्चक्रे ताम्रीकुर्वन्निवाम्बरम् ॥ ७-१८७-२ (५३६५४)
ग्प्रकाशमकरोद्व्योम जगत्संरञ्जयन्निव'।
प्राच्यां दिशि सहस्रांशोररुणेनारुणीकृतम् ।
तापनीयं यथा चक्रं भ्राजते रविमण्डलम् ॥ ७-१८७-३ (५३६५५)
ततो रथाश्वांश्च मनुष्ययाना--
न्युत्सृज्य सर्वे कुरुपाण्डुयोधाः ।
दिवाकरस्याभिमुखं जपन्तः
सन्ध्यागताः प्राञ्जलयो बभूवुः ॥ ७-१८७-४ (५३६५६)
ततो द्वैधीकृते सैन्ये द्रोणः सोमकपाण्डवान् ।
अभ्यद्रवत्सपाञ्चालान्दुर्योधनपुरोगमः ॥ ७-१८७-५ (५३६५७)
द्वैधीकृतान्कुरून्दृष्ट्वा माधवोऽर्जुनमब्रवीत् ।
सपत्नान्सव्यतः कुर्याः सव्यसाचिन्निमान्कुरून् ॥ ७-१८७-६ (५३६५८)
स माधवमनुज्ञाय कुरुष्वेति धनञ्जयः ।
द्रोणकर्णौ महेष्वासौ सव्यतः पर्यवर्तत ॥ ७-१८७-७ (५३६५९)
अभिप्रायं तु कृष्णस्य ज्ञात्वा परपुरञ्जयः ।
आजिशीर्षगतं पार्थं भीमसेनोऽभ्युवाच ह ॥ ७-१८७-८ (५३६६०)
भीमसेन उवाच। ७-१८७-९क्ष् (४७६५)
अर्जुनार्जुन बीभत्सो शृणुष्वैतद्वचो मम ।
यदर्थं क्षत्रिया सूते तस्य कालोऽयमागतः ॥ ७-१८७-९ (५३६६१)
अस्मिंश्चेदागते काले श्रेयो न प्रतिपत्स्यसे ।
असम्भावितरूपस्त्वं सुनृशंसं करिष्यसि ॥ ७-१८७-१० (५३६६२)
सत्यश्रीधर्मयशसां वीर्येणानृण्यमाप्नुहि ।
भिन्ध्यनीकं युधांश्रेष्ठ प्रतिज्ञां सफलां कुरु ॥ ७-१८७-११ (५३६६३)
सञ्जय उवाच। ७-१८७-१२क्ष् (४७६६)
स सव्यसाची भीमेन चोदितः केशवेन च ।
कर्णद्रोणावतिक्रम्य समन्तात्पर्यवारयत् ॥ ७-१८७-१२ (५३६६४)
तमाजिशीर्षमायान्तं दहन्तं क्षत्रियर्षभान् ।

पराक्रान्तं पराक्रम्य ततः क्षत्रियपुङ्गवाः ।
नाशक्नुवन्वारयितुं वर्धमानमिवानलम् ॥ ७-१८७-१३ (५३६६५)
अथ दुर्योधनः कर्णः शकुनिश्चापि सौबलः ।
अभ्यवर्षञ्छरव्रातैः कुन्तीपुत्रं धनञ्जयम् ॥ ७-१८७-१४ (५३६६६)
तेषामस्त्राणि सर्वेषामुत्तमास्त्रविदां वरः ।
कदर्थीकृत्य राजेन्द्र शरवर्षैरवाकिरत् ॥ ७-१८७-१५ (५३६६७)
अस्त्रैरस्त्राणि संवार्य लघुहस्तो धनञ्जयः ।
सर्वानविध्यन्निशितैर्दशभिर्दशभिः शरैः ॥ ७-१८७-१६ (५३६६८)
उद्धूता रजसो वृष्टिः शरवृष्टिस्तथैव च ।
तमश्च घोरं शब्दश्च तदा समभवन्महान् ॥ ७-१८७-१७ (५३६६९)
न द्यौर्न भूमिर्न दिशः प्राज्ञायन्त तथागते ।
सैन्येन रजसा मूढं सर्वमन्धमिवाभवत् ॥ ७-१८७-१८ (५३६७०)
नैव ते न वयं राजन्प्राज्ञासिष्म परस्परम् ।
ग्शब्दमात्रेण जानीमो वयं ते च परस्परम्'।
उद्देशेन हि तेन स्म समयुध्यन्त पार्थिवाः ॥ ७-१८७-१९ (५३६७१)
विरथा रथिनो राजन्समासाद्य परस्परम् ।
केशेषु समसज्जन्त कवचेषु भुजेषु च ॥ ७-१८७-२० (५३६७२)
हताश्वा हतसूताश्च निश्चेष्टा रथिनो हताः ।
जीवन्त इव तत्र स्म व्यदृश्यन्त भयार्दिताः ॥ ७-१८७-२१ (५३६७३)
हतान्गजान्समाश्लिष्य पर्वतानिव वाजिनः ।
गतसत्वा व्यदृश्यन्त तथैव सह सादिभिः ॥ ७-१८७-२२ (५३६७४)
ततस्त्वभ्यवसृत्यैव सङ्ग्रामादुत्तरां दिशम् ।
आतिष्ठदाहवे द्रोणो विधूमोऽग्निरिव ज्वलन् ॥ ७-१८७-२३ (५३६७५)
तमाजिशीर्षादेकान्तमपक्रान्तं निशम्य तु ।
समकम्पन्त सैन्यानि पाण्डवानां विशाम्पते ॥ ७-१८७-२४ (५३६७६)
भ्राजमानं श्रिया युक्तं ज्वलन्तमिव तेजसा ।
द्रोणं दृष्ट्वा परे त्रेसुश्चेरुर्मम्लुश्च भारत ॥ ७-१८७-२५ (५३६७७)
आह्वयन्तं परानीकं प्रभिन्नमिव वारणम् ।
नैनमाशंसिरे जेतुं दानवा वासवं यथा ॥ ७-१८७-२६ (५३६७८)
केचिदासन्निरुत्साहाः केचित्क्रुद्धा मनस्विनः ।
विस्मिताश्चाभवन्केचित्केचिद्धृष्टाऽभवन्युधि ॥ ७-१८७-२७ (५३६७९)
हस्तैर्हस्ताग्रमपरे प्रत्यपिम्पन्नराधिपाः ।
अपरे दशनैरोष्ठानदशन्क्रोधमूर्च्छिताः ॥ ७-१८७-२८ (५३६८०)
व्याक्षिपन्नायुधान्यन्ये ममृदुश्चापरे भुजान् ।
अन्ये चान्वपतन्द्रोणं त्यक्तात्मानो महौजसः ॥ ७-१८७-२९ (५३६८१)
पाञ्चालास्तु विशेषेण द्रोणसायकपीडिताः ।

समसज्जन्त राजेन्द्र समरे भृशवेदनाः ॥ ७-१८७-३० (५३६८२)
ततो विराटद्रुपदौ द्रोणं प्रति ययू रणे ।
तथा चरन्तं सङ्ग्रामे भृशं समरदुर्जयम् ॥ ७-१८७-३१ (५३६८३)
द्रुपदस्य ततः पौत्रास्त्रय एव विशाम्पते ।
चेदयश्च महेष्वासा द्रोणमेवाभ्ययुर्युधि ॥ ७-१८७-३२ (५३६८४)
तेषां द्रुपदपौत्राणां त्रयाणां निशितैः शरैः ।
त्रिभिर्द्रोणोऽहरत्प्राणांस्ते हता न्यपतन्भुवि ॥ ७-१८७-३३ (५३६८५)
ततो द्रोणोऽजयद्युद्धे चेदिकैकेयसृञ्जयान् ।
मात्स्यांश्चैवाजयत्कृत्स्नान्भारद्वाजो महारथान् ॥ ७-१८७-३४ (५३६८६)
ततस्तु द्रुपदः क्रोधाच्छरवर्षमवासृजत् ।
द्रोणं प्रति महाराज विराटश्चैव संयुगे ॥ ७-१८७-३५ (५३६८७)
तं निहत्येषुवर्षं तु द्रोणः क्षत्रियमर्दनः ।
तौ शरैश्छादयामास विराटद्रुपदावुभौ ॥ ७-१८७-३६ (५३६८८)
द्रोणेन च्छाद्यमानौ तु क्रुद्धौ सङ्ग्राममूर्धनि ।
द्रोणं शरैर्विव्यधतुः परमं क्रोधमास्थितौ ॥ ७-१८७-३७ (५३६८९)
तत द्रोणो महाराज क्रोधामर्षसमन्वितः ।
भल्लाभ्यां भृशतीक्ष्णाभ्यां चिच्छेद धनुषी तयोः ॥ ७-१८७-३८ (५३६९०)
ततो विराटः कुपितः समरे तोमरान्दश ।
दश चिक्षेप च शरान्द्रोणस्य वधकाङ्क्षया ॥ ७-१८७-३९ (५३६९१)
शक्तिं च द्रुपदो घोरामायसीं स्वर्णभूषिताम् ।
चिक्षेप भुजगेन्द्राभां क्रुद्धो द्रोणरथं प्रति ॥ ७-१८७-४० (५३६९२)
ततो भल्लैः सुनिशितैश्छित्त्वा तांस्तोमारान्दश ।
शक्तिं कनकवैदूर्यां द्रोणश्चिच्छेद सायकैः ॥ ७-१८७-४१ (५३६९३)
ततो द्रोणः सुपीताभ्यां भल्लाभ्यामरिमर्दनः ।
द्रुपदं च विराटं च प्रेषयामास मृत्यवे ॥ ७-१८७-४२ (५३६९४)
हते विराटे द्रुपदे केकयेषु तथैव च ।
तथैव चेदिमात्स्येषु पाञ्चालेषु तथैव च ॥ ७-१८७-४३ (५३६९५)
हतेषु त्रिषु वीरेषु द्रुपदस्य च नप्तृषु ।
द्रोणस्य कर्म तद्दृष्ट्वा कोपदुःखसमन्वितः ।
शशाप रथिनां मध्ये धृष्टद्युम्नो महामनाः ॥ ७-१८७-४४ (५३६९६)
इष्टापूर्तात्तथा क्षात्राद्ब्राह्मण्याच्च स नश्यतु ।
द्रोणो यस्याद्य मुच्येत यं वा द्रोणः पराभवेत् ॥ ७-१८७-४५ (५३६९७)
इति तेषां प्रतिश्रुत्य मध्ये सर्वधनुष्मताम् ।
आयाद्द्रोणं सहानीकाः पाञ्चाल्यश्च परवीरहा ॥ ७-१८७-४६ (५३६९८)
पाञ्चालास्त्वेकतो द्रोणभ्यघ्नन्पाण्डवैः सह ।
दुर्योधनश्च कर्णश्च शकुनिश्चापि सौबलः ।

सोदर्याश्च यथा मुख्यास्तेऽरक्षन्द्रोणमाहवे ॥ ७-१८७-४७ (५३६९९)
रक्ष्यमाणं तथा द्रोणं सर्वैस्तैस्तु महारथैः ।
यतमानास्तु पाञ्चाला न शेकुः प्रतिवीक्षितुम् ॥ ७-१८७-४८ (५३७००)
तत्राक्रुध्यद्भीमसेनो धृष्टद्युम्नस्य मारिष ।
स एनं वाग्भिरुग्राभिस्ततक्ष पुरुषर्षभः ॥ ७-१८७-४९ (५३७०१)
भीमसेन उवाच। ७-१८७-५०क्ष् (४७६७)
द्रुपदस्य कुले जातः सर्वास्त्रेष्वस्त्रवित्तमः ।
कः क्षत्रियो मन्यमानः प्रेक्षेतारिमवस्थितम् ॥ ७-१८७-५० (५३७०२)
पितृपुत्रवधं प्राप्य पुंस्त्वं को वा प्रहर्षयेत् ।
विशेषतस्तु शपथं शपित्वा राजसंसदि ॥ ७-१८७-५१ (५३७०३)
एष वैश्वानर इव समिद्धः स्वेन तेजसा ।
शरचापेन्धनो द्रोणः क्षत्रं दहति तेजसा ॥ ७-१८७-५२ (५३७०४)
पुरा करोति निःशेषां पाण्डवानामनीकिनीम् ।
स्थिताः पश्यत मे कर्म द्रोणमेव व्रजाम्यहम् ॥ ७-१८७-५३ (५३७०५)
इत्युक्त्वा प्राविशत्क्रुद्धो द्रोणानीकं वृकोदरः ।
शरैः पूर्णायतोत्सृष्टैर्द्रावयंस्तव वाहिनीम् ॥ ७-१८७-५४ (५३७०६)
धृष्टद्युम्नोऽपि पाञ्चाल्यः प्रविश्य महतीं चमूम् ।
आससाद रणे द्रोणं तदासीत्तुमुलं महत् ॥ ७-१८७-५५ (५३७०७)
नैव नस्तादृशं युद्धं दृष्टपूर्वं न च श्रुतम् ।
यथा सूर्योदये राजन्समुत्पिञ्जोऽभवन्महान् ॥ ७-१८७-५६ (५३७०८)
संसक्तान्येव चादृश्यन्रथवृन्दानि मारिष ।
हतानि च विकीर्णानि सरीराणि शरीरिणाम् ॥ ७-१८७-५७ (५३७०९)
केचिदन्यत्र गच्छन्तः पथि चान्यैरुपद्रुताः ।
विमुखाः पृष्ठतश्चान्ये ताड्यन्ते पार्श्वतः परे ॥ ७-१८७-५८ (५३७१०)
तथा संसक्तयुद्धं तदभवद्भृशदारुणम् ।
अथ सन्ध्यागतः सूर्यः क्षणेन समपद्यत ॥ ॥ ७-१८७-५९ (५३७११)

इति श्रीमन्महाभारते द्रोणपर्वणि द्रोणवधपर्वणि
चतुर्दशरात्रियुद्धे सप्ताशीत्यधिकशततमोऽध्यायः ॥ १८७ ॥
Mahabharata - Drona Parva - Chapter Footnotes

५-१८७-१ त्रिभागमात्रशेषायां मुहूर्तत्रयावशिष्टायाम् । तत्र
सूर्योदयोत्तरं त्रयोदश्यां द्रोणस्य नाशः। त्रयोदश्यां
शुक्लयि युद्धारम्भस्य--हेमन्ते प्रथमेमासे शुक्लपक्षे
त्रयोदशीम्। प्रवृत्तं भारतं युद्धमिति भारतसावित्र्यामुक्तस्य
चोपपत्तिः सिध्यति ॥

५-१८७-४४ शशाप शपथं कृतवान् ॥
५-१८७-४५ इष्टं यागहोमादि । आपूर्तं क्षेत्रारामादि। क्षात्रं द्रुपदकुलोत्पन्नत्वात्। ब्राह्मण्यं याजोपयाजयोर्ब्राह्मणयेस्तपसा ब्राह्मणरूपादग्नेश्च जातत्वात्। एतत्सर्वं तस्य नश्यतु। यस्य शत्रुर्द्रोणो मुच्येत मरणं न प्राप्नुयात्। यं वा मां वा। द्रोणो यदि पराभवेदिति ॥
५-१८७-१८७ सप्ताशीत्याधिकशततमोऽध्यायः ॥

---

द्रोनपर्व-अध्यय१८८
॥ श्रीः ॥
७.१८८. अध्यायः १८८

Mahabharata - Drona Parva - Chapter Topics
पञ्चदशदिवसयुद्धारम्भः ॥ १ ॥
सङ्कुलयुद्धम् । नकुलेन दुर्योधनपराजयः ॥ २ ॥

Mahabharata - Drona Parva - Chapter Text

७-१८८-० (५३७१२)
सञ्जय उवाच। ७-१८८-०क्ष् (४७६८)
ते तथैव महाराज दंशिता रणमूर्धनि ।
सन्ध्यागतं सहस्रांशुमादित्यमुपतस्थिरे ॥ ७-१८८-१ (५३७१३)
उदिते तु सहस्रांशौ तप्तकाञ्चनसप्रभे ।
प्रकाशितेषु लोकेषु पुनर्युद्धमवर्तत ॥ ७-१८८-२ (५३७१४)
द्वन्द्वानि तत्र यान्यासन्संसक्तानि पुरोदयात् ।
तान्येवाभ्युदिते सूर्ये समसज्जन्त भारत ॥ ७-१८८-३ (५३७१५)
रथैर्हया हयैर्नागाः पादातैश्चापि कुञ्जराः ।
हयैर्हयाः समाजग्मुः पादाताश्च पदातिभिः ॥ ७-१८८-४ (५३७१६)
रथा रथैरिभैर्नागास्तथैव भरतर्षभ ।
संसक्ताश्च वियुक्ताश्च योधाः सन्न्यपतन्रणे ॥ ७-१८८-५ (५३७१७)
ते रात्रौ कृतकर्माणः श्रान्ताः सूर्यस्य तेजसा ।
क्षुत्पिपासापरीताङ्गा विसंज्ञा बहवोऽभवन् ॥ ७-१८८-६ (५३७१८)
शङ्खबेरीमृदङ्गानां कुञ्जराणां च गर्जताम् ।
विष्फारितविकृष्टानां कार्मुकाणां च कूजताम् ॥ ७-१८८-७ (५३७१९)
शब्दः समभवद्राजन्दिविस्पृग्भरतर्षभ ।
द्रवतां च पदातीनां शस्त्राणां पततामपि ॥ ७-१८८-८ (५३७२०)

हयानां हेषतां चापि रथानां च निवर्तताम् ।
क्रोशतां गर्जतां चैव तदासीत्तुमुलं महत् ॥ ७-१८८-९ (५३७२१)
विवृद्धस्तुमुलः शब्दो द्यामगच्छन्महांस्तदा ।
नानायुधनिकृत्तानां चेष्टतामातुरः स्वनः ॥ ७-१८८-१० (५३७२२)
भूमावश्रूयत महांस्तदाऽऽसीत्कृपणं महत् ।
पततां पात्यमानानां पत्त्यश्वरथदन्तिनाम् ॥ ७-१८८-११ (५३७२३)
तेषु सर्वेष्वनीकेषु व्यतिषक्तेष्वनेकशः ।
स्वे स्वाञ्जघ्नुः परे स्वांश्च स्वान्परेषां परे परान्। ७-१८८-१२ (५३७२४)
वीरबाहुविसृष्टाश्च योधेषु च गजेषु च ।
राशयः प्रत्यदृश्यन्त वाससां नेजनेष्विव ॥ ७-१८८-१३ (५३७२५)
उद्यतप्रतिपिष्टानां खड्गानां वीरबाहुभिः ।
स एव शब्दस्तद्रूपो वाससां निज्यतामिव ॥ ७-१८८-१४ (५३७२६)
अर्धासिभिस्तथा खड्गैस्तोमरैः सपरश्वथैः ।
निकृष्टयुद्धं संसक्तं महदासीत्सुदारुणम् ॥ ७-१८८-१५ (५३७२७)
गजाश्वकायप्रभवां नरदेहप्रवाहिनीम् ।
शस्त्रमत्स्यसुसम्पूर्णां मांसशोणितकर्दमाम् ॥ ७-१८८-१६ (५३७२८)
आर्तनादस्वनवतीं पताकाशस्त्रफेनिलाम् ।
नदीं प्रावर्तयन्वीराः परलोकौघगामिनीम् ॥ ७-१८८-१७ (५३७२९)
शरशक्त्यर्दिता क्लान्ता रात्रिमूढात्पचेतसः ।
विष्टभ्य सर्वगात्राणि व्यतिष्ठन्गजवाजिनः ॥ ७-१८८-१८ (५३७३०)
संशुष्कवदना वीराः शिरोभिश्चारुकुण्डलैः ।
युद्धोपकरणैश्चान्यैस्तत्रतत्र चकाशिरे ॥ ७-१८८-१९ (५३७३१)
क्रव्यादसङ्घैराकीर्णं मृतैरर्धमृतैरपि ।
नासीद्रथपथस्तत्र सर्वमायोधनं प्रति ॥ ७-१८८-२० (५३७३२)
मज्जत्सु चक्रेषु रथान्सत्वमास्थाय वाजिनः ।
कथञ्चिदवहन्श्रान्ता वेपमानाः शरार्दिताः ।
कुलसत्वबलोपेता वाजिनो वारणोपमाः ॥ ७-१८८-२१ (५३७३३)
विह्वलं तूर्णमुद्भ्रान्तं सभयं भारतातुरम् ।
बलमासीत्तदा सर्वमृते द्रोणार्जुनावुभौ ॥ ७-१८८-२२ (५३७३४)
तावेवास्तां निलयनं तावार्तायनमेव च ।
तावेवान्ये समासाद्य जग्मुर्वैवस्वतक्षयम् ॥ ७-१८८-२३ (५३७३५)
आविग्नमभवत्सर्वं कौरवाणां महद्बलम् ।
पाञ्चालानां च संसक्तं न प्राज्ञायत किञ्चन ॥ ७-१८८-२४ (५३७३६)
अन्तकाक्रीडसदृशं भीरूणां भयवर्धनम् ।
पृथिव्यां राजवंश्यानामुत्थिते महति क्षये ॥ ७-१८८-२५ (५३७३७)
न तत्र कर्णं द्रोणं वा नार्जुनं न युधिष्ठिरम् ।

न भीमसेनं न यमौ न पाञ्चाल्यं न सात्यकिम् ॥ ७-१८८-२६ (५३७३८)
न च दुःशासनं द्रौणिं न दुर्योधनसौबलौ ।
न कृपं मद्रराजं च कृतवर्माणमेव च ॥ ७-१८८-२७ (५३७३९)
न चान्यान्नैव चात्मानं न क्षितिं न दिशस्तथा ।
पश्याम राजन्संसक्तान्सैन्येन रजसा धृतान् ॥ ७-१८८-२८ (५३७४०)
सम्भ्रान्ते तुमुले घोरे रजोमेघे समुत्थिते ।
त्रियामामिव संप्राप्काममन्यन्त निशाचराः ॥ ७-१८८-२९ (५३७४१)
न ज्ञायन्ते कौरवेया न पाञ्चाला न पाण्डवाः ।
न दिशो द्यौर्न चोर्वी च न समं विषमं तथा ॥ ७-१८८-३० (५३७४२)
हस्तसंस्पर्शमापन्नान्परानप्यथवा स्वकान् ।
न्यपातयंस्तदा युद्धे नराः स्म विजयैषिणः ॥ ७-१८८-३१ (५३७४३)
उद्धूतत्वात्तु रजसः प्रसेकाच्छोणितस्य च ।
प्राशाम्यत रजो भौमं शीघ्रत्वादनिलस्य च ॥ ७-१८८-३२ (५३७४४)
तत्र नागा हया योधा रथिनोऽथ पदातयः ।
पारिजातवनानीव व्यरोचन्रुधिरोक्षिताः ॥ ७-१८८-३३ (५३७४५)
ततो दुर्योधनः कर्णो द्रोणो दुःशासनस्तथा ।
पाण्डवैः समसज्जन्त चतुर्भिश्चतुरो रथाः ॥ ७-१८८-३४ (५३७४६)
दुर्योधनः सह भ्रात्रा यमाभ्यां समसज्जत ।
वृकोदरेण राधेयो भारद्वाजेन चार्जुनः ॥ ७-१८८-३५ (५३७४७)
तद्घोरं महदाश्चर्यं युद्धं दैवासुरोपमम् ।
रथर्षभाणामुग्राणां सन्निपातममानुषम् ॥ ७-१८८-३६ (५३७४८)
रथमार्गैर्विचित्रैस्तैर्विचित्ररथसङ्कुलम् ।
अपश्यन्रथिनो युद्धं विचित्रं चित्रयोधिनाम् ॥ ७-१८८-३७ (५३७४९)
यतमानाः पराक्रान्ताः परस्परजिगीषवः ।
जीमूता इव घर्मान्ते शरवर्षैरवाकिरन् ॥ ७-१८८-३८ (५३७५०)
ते रथान्सूर्यसङ्काशानास्थिताः पुरुषर्षभाः ।
अशोभन्त यथा मेघाः शारदाश्चलविद्युतः ॥ ७-१८८-३९ (५३७५१)
योधास्ते तु महाराज क्रोधामर्षसमन्विताः ।
स्पर्धिनश्च महेष्वासाः कृतयत्ना धनुर्धराः ।
अभ्यगच्छंस्तथाऽन्योन्यं मत्ता गजवृषा इव ॥ ७-१८८-४० (५३७५२)
न नूनं देहभेदोऽस्ति काले राजन्ननागते ।
यत्र सर्वे न युगपद्व्यशीर्यन्त महारथाः ॥ ७-१८८-४१ (५३७५३)
बाहुभिश्चपरणैश्छिन्नैः शिरोभिश्च सकुण्डलैः ।
कार्मुकैर्विशिखैः प्रासैः खड्गैः परशुपट्टसैः ॥ ७-१८८-४२ (५३७५४)
नालीकैः क्षुद्रनाराचैर्नखरैः शक्तितोमरैः ।
अन्यैश्च विविधाकारैर्धौतैः प्रहरणोत्तमैः ॥ ७-१८८-४३ (५३७५५)

विचित्रैर्विविधाकारैः शरीरावरणैरपि ।
विचित्रैश्च रथैर्भग्नैर्हतैश्च गजवाजिभिः ॥ ७-१८८-४४ (५३७५६)
शून्यैश्चैव नगाकारैर्हतयोधध्वजै रथैः ।
अमनुष्यैर्हयैस्त्रस्तैः कृष्यमाणैस्ततस्ततः ॥ ७-१८८-४५ (५३७५७)
वातायमानैरसकृद्धतवीरैरलंकृतैः ।
व्यजनैः कङ्कटैश्चैव ध्वजैश्च विनिपातितैः ॥ ७-१८८-४६ (५३७५८)
छत्रैराभरणैर्वस्त्रैर्माल्यैश्च ससुगन्धिभिः ।
हारैः किरीटैर्मुकुटैरुष्णीषैः किङ्किणीगणैः ॥ ७-१८८-४७ (५३७५९)
उरस्थैर्मणिभिर्निष्कैश्चूडामणिभिरेव च ।
आसीदायोधनं तत्र नभस्तारागणैरिव ॥ ७-१८८-४८ (५३७६०)
ततो दुर्योधनस्यासीन्नकुलेन समागमः ।
अमर्षितेन क्रुद्धस्य क्रुद्धेनामर्षितस्य च ॥ ७-१८८-४९ (५३७६१)
अपसव्यं चकाराथ माद्रीपुत्रस्तवात्मजम् ।
किरञ्छरशतैर्हृष्टस्तत्र नादो महानभूत् ॥ ७-१८८-५० (५३७६२)
अपसव्यं कृतं सङ्ख्ये भ्रातृव्येनात्यमर्षिणा ।
नामृष्यत तमप्याजौ प्रतिचक्रे परन्तपः ।
पुत्रस्तव महाराज राजा दुर्योधनो द्रुतम् ॥ ७-१८८-५१ (५३७६३)
ततः प्रतिचिकीर्षन्तमपसव्यं तु ते सुतम् ।
न्यवारयत तेजस्वी नकुलश्चित्रमार्गवित् ॥ ७-१८८-५२ (५३७६४)
स सर्वतो निवार्यैनं शरजालेन पीडयन् ।
विमुखं नकुलश्चक्रे तत्सैन्याः समपूजयन् ॥ ७-१८८-५३ (५३७६५)
तिष्ठतिष्ठेति नकुलो बभाषे तनयं तव ।
संस्मृत्य सर्वदुःखानि तव दुर्मन्त्रितं च तत् ॥ ॥ ७-१८८-५४ (५३७६६)

इति श्रीमन्महाभारते द्रोणपर्वणि द्रोणवधपर्वणि
चतुर्दशरात्रियुद्धे अष्टाशीत्यधिकशततमोऽध्यायः ॥ १८८ ॥
Mahabharata - Drona Parva - Chapter Footnotes

५-१८८-१२ स्वे कौरवाः स्वान् स्वभृत्यान्परे पाण्डवाः स्वान्
स्वभृत्यान् । स्वे इत्यनुवर्तते। परेषां पाण्डवानां स्वान्
स्वे कौरवाः परेषां पाण्डवानां परान् कौरवान् परे पाण्डवा
जघ्नुरित्यन्वयः। परेषामित्युभयत्र सम्बध्यते। स्वपरविभागो
वक्तुः सञ्जयस्यानुरोधात् ॥
५-१८८-१३ निज्यन्ते प्रक्षाल्यन्ते वासांसि येषु ते प्रदेशा नेजनानि
तेषु यथा वाससां राशयो भवन्त्येवमुद्यतानां प्रतिकूलं पिष्टानां च
खड्गानां राशयः प्रत्यदृश्यन्त । निज्यतां क्षालनैः उद्यम्योद्यम्य

शिलायां स्फाल्यमानानाम्। स्लोकद्वयम् ॥
५-१८८-१४ निज्यन्ते प्रक्षाल्यन्ते वासांसि येषु ते प्रदेशा नेजनानि तेषु यथा वाससां राशयो भवन्त्येवमुद्यतानां प्रतिकूलं पिष्टानां च खड्गानां राशयः प्रत्यदृश्यन्त । निज्यतां क्षालनैः उद्यम्योद्यम्य शिलायां स्फाल्यमानानाम्। स्लोकद्वयम् ॥
५-१८८-१५ अर्धासिभिरेकधारैः ॥
५-१८८-२३ निलयनमाश्रयः । आर्तायनं आर्तानां भयवारणं स्वीयानाम्। शत्रूणां तु तावेव मृत्युकरावित्यर्थः ॥
५-१८८-३४ चतुरश्चत्वारः ॥
५-१८८-३५ भ्रात्रा दुःशासनेन ॥
५-१८८-१८८ अष्टाशीत्यधिकशततमोऽध्यायः ॥

---

द्रोनपर्व-अध्यय१८९
॥ श्रीः ॥
७.१८९. अध्यायः १८९

Mahabharata - Drona Parva - Chapter Topics
द्रोणार्जुनादीनां सङ्कुलयुद्धम् ॥ १ ॥

Mahabharata - Drona Parva - Chapter Text

७-१८९-० (५३७६७)
सञ्जय उवाच। ७-१८९-०क्ष् (४७६९)
ततो दुःशासनः क्रुद्धः सहदेवमुपाद्रवत् ।
रथवेगेन तीव्रेण कम्पयन्निव मेदिनीम् ॥ ७-१८९-१ (५३७६८)
तस्यापतत एवाशु भल्लेनामित्रकर्शनः ।
माद्रीपुत्रः शिरो यन्तुः सशिरस्त्राणमच्छिनत् ॥ ७-१८९-२ (५३७६९)
नैनं दुःशासनः सूतं नापि कश्चन सैनिकः ।
कृत्तोत्तमाङ्गमाशुत्वात्सहदेवेन बुद्धवान् ॥ ७-१८९-३ (५३७७०)
यदा त्वसङ्गृहीतत्वात्प्रयान्त्यश्वा यथासुखम् ।
ततो दुःशासनः सूतं बुबुधे गतचेतसम् ॥ ७-१८९-४ (५३७७१)
स हयान्सन्निगृह्याजौ स्वयं हयविशारदः ।
युयुधे रथिनां श्रेष्ठो लघु चित्रं च सुष्ठु च ॥ ७-१८९-५ (५३७७२)
तदस्यापूजयन्कर्म स्वे परे चापि संयुगे ।
हतसूतरथेनाजौ व्यचरद्यदभीतवत् ॥ ७-१८९-६ (५३७७३)
सहदेवस्तु तानश्वांस्तीक्ष्णैर्बाणैरवाकिरत् ।

पीड्यमानाः शरैश्चाशु प्राद्रवंस्ते ततस्ततः ॥ ७-१८९-७ (५३७७४)
स रश्मिषु विषक्तत्वादुत्सर्ज शरासनम् ।
धनुषा कर्म कुर्वंस्तु रश्मींश्च पुनरुत्सृजत् ॥ ७-१८९-८ (५३७७५)
छिद्रेष्वेतेषु तं बाणैर्माद्रीपुत्रोऽभ्यवाकिरत् ।
परीप्संस्त्वत्सुतं कर्णस्तदन्तरमवापतत् ॥ ७-१८९-९ (५३७७६)
वृकोदरस्ततः कर्णं त्रिभिर्भल्लैः समाहितः ।
आकर्णपूर्णैरभ्यघ्नद्बाह्वोरुरसि चानदत् ॥ ७-१८९-१० (५३७७७)
स निवृत्तस्ततः कर्णः सङ्घट्टित इवोरगः ।
भीममावारयामास विकिरन्निशिताञ्छरान् ।
ततोऽभूत्तुमुलं युद्धं भीमराधेययोस्तदा ॥ ७-१८९-११ (५३७७८)
तौ वृषाविव नर्दन्तौ विवृत्तनयनावुभौ ।
वेगेन महताऽन्योन्यं संरब्धावभिपेततुः ॥ ७-१८९-१२ (५३७७९)
अभिसंश्लिष्टयोस्तत्र तयोराहवशौण्डयोः ।
विच्छिन्नशरपातत्वाद्गदायुद्धमवर्तत ॥ ७-१८९-१३ (५३७८०)
गदया भीमसेनस्तु कर्णस्य रथकूबरम् ।
बिभेद शतधा राजंस्तदद्भुतमिवाभवत् ॥ ७-१८९-१४ (५३७८१)
ततो भीमस्य राधेयो गदामाविध्य वीर्यवान् ।
अवासृजद्रथे तां तु बिभेद गदया गदाम् ॥ ७-१८९-१५ (५३७८२)
ततो भीमः पुनर्गुर्वीं चिक्षेपाधिरथेर्गदाम् ।
तां गदां बहुभिः कर्णः सुपुङ्खैः सुप्रवेजितैः ॥ ७-१८९-१६ (५३७८३)
प्रत्यविध्यत्पुनश्चान्यैः सा भीमं पुनराव्रजत् ।
व्यालीव मन्त्राभिहता कर्णबाणैरभिद्रुता ॥ ७-१८९-१७ (५३७८४)
तस्याः प्रतिनिपातेन भीमस्य विपुलो ध्वजः ।
पपात सारथिश्चास्य मुमोह च गदाहतः ॥ ७-१८९-१८ (५३७८५)
स कर्णं सायकानष्टौ व्यसृजत्क्रोधमूर्च्छितः ।
तैस्तस्य निशितैस्तीक्ष्णैर्भीमसेनो महाबलः ॥ ७-१८९-१९ (५३७८६)
चिच्छेद परवीरघ्नः प्रहसन्निव भारत ।
ध्वजं शरासनं चैव शरावापं च भारत ॥ ७-१८९-२० (५३७८७)
कर्णोऽप्यन्यद्धनुर्गृह्य हेमपृष्ठं दुरासदम् ।
ततः पुनस्तु राधेयो हयानस्य रथेषुभिः ।
ऋक्षवर्णाञ्जघानाशु तथोभौ पार्ष्णिसारथी ॥ ७-१८९-२१ (५३७८८)
स विपन्नरथो भीमो नकुलस्याप्लुतो रथम् ।
हरिर्यथा गिरेः शृङ्गं समाक्रमदरिन्दमः ॥ ७-१८९-२२ (५३७८९)
तथा द्रोणार्जुनौ चित्रमयुध्येतां महारथौ ।
आचार्यशिष्यौ राजेन्द्र कृतप्रतिकृतौ युधि ॥ ७-१८९-२३ (५३७९०)
लघुसन्धानयोगाभ्यां रथयोश्च रणेन च ।

मोहयन्तौ मनुष्याणां चक्षूंषि च मनांसि च ॥ ७-१८९-२४ (५३७९१)
उपारमन्त ते सर्वे योधाऽस्माकं परे तथा ।
विचित्रान्पृतनामध्ये रथमार्गानुदीर्य तौ। ७-१८९-२५ (५३७९२)
अन्योन्यमपसव्यं च कर्तुं वीरौ तदेषतुः ॥ ७-१८९-२६ (५३७९३)
पराक्रमं तयोर्योधा ददृशुस्ते सुविस्मिताः ॥ ७-१८९-२७ (५३७९४)
तयोः समभवद्युद्धं द्रोणपाण्डवयोर्महत् ।
आमिषार्थे महाराज गगने श्येनयोरिव ॥ ७-१८९-२८ (५३७९५)
यद्यच्चकार द्रोणस्तु कुन्तीपुत्रजिगीषया ।
तत्तत्प्रतिजघानाशु प्रहसंस्तस्य पाण्डवः ॥ ७-१८९-२९ (५३७९६)
यदा द्रोणो न शक्नोति पाण्डवं स्म विशेषितुम् ।
ततः प्रादुश्चकारास्त्रमस्त्रमार्गविशारदः ॥ ७-१८९-३० (५३७९७)
ऐन्द्रं पाशुपतं त्वाष्ट्रं वायव्यमथ वारुणम् ।
मुक्तंमुक्तं द्रोणचापात्तज्जघान धनञ्जयः ॥ ७-१८९-३१ (५३७९८)
अस्त्राण्यस्त्रैर्यदा तस्य विधिवद्धन्ति पाण्डवः ।
ततोऽस्त्रैः परमैर्दिव्यैर्द्रोणः पार्थमवाकिरत् ॥ ७-१८९-३२ (५३७९९)
यद्यदस्त्रं स पार्थाय प्रयुङ्क्ते विजिगीषया ।
तस्यतस्य विघाताय तत्तद्धि कुरुतेऽर्जुनः ॥ ७-१८९-३३ (५३८००)
स वध्यमानेष्वस्त्रेषु दिव्येष्वपि यथाविधि ।
अर्जुनेनार्जुनं द्रोणो मनसैवाभ्यपूजयत् ॥ ७-१८९-३४ (५३८०१)
मेने चात्मानमधिकं पृथिव्यामधि भारत ।
तेन शिष्येण सर्वेभ्यः शस्त्रविद्भ्य परन्तपः ॥ ७-१८९-३५ (५३८०२)
वार्यमाणस्तु पार्थेन तथा मध्ये महात्मनाम् ।
यतमानोऽर्जुनं प्रीत्या प्रीयते स्मार्जुनेन सः ॥ ७-१८९-३६ (५३८०३)
ततोऽन्तरिक्षे देवाश्च गन्धर्वाश्च सहस्रशः ।
ऋषयः सिद्धसङ्घाश्च व्यतिष्ठन्त दिदृक्षया ॥ ७-१८९-३७ (५३८०४)
तदप्सरोभिराकीर्णं यक्षगन्धर्वसङ्कुलम् ।
श्रीमदाकाशमभवद्भूयो मेघाकुलं यथा ॥ ७-१८९-३८ (५३८०५)
तत्रास्मान्तर्हिता वाचो व्यचरन्त पुनः पुनः ।
द्रोणपार्थस्तवोपेता व्यश्रूयन्त नराधिप ॥ ७-१८९-३९ (५३८०६)
विसृज्यमानेष्वस्त्रेषु ज्वालयस्तु दिशो दश ।
अब्रुवंस्तत्र सिद्धाश्च ऋषयश्च समागताः ॥ ७-१८९-४० (५३८०७)
नैवेदं मानुषं युद्धं नासुरं न च राक्षसम् ।
न दैवं न च गान्धर्वं ब्राह्मणं ध्रुवमिदं परम् ॥ ७-१८९-४१ (५३८०८)
विचित्रमिदमाश्चर्यं न नो दृष्टं न च श्रुतम् ।
अति पाण्डवमाचार्यो द्रोणं चाप्यति पाण्डवः ॥ ७-१८९-४२ (५३८०९)
नानयोरन्तरं शक्यं द्रष्टुमन्येन केनचित् ॥ ७-१८९-४३ (५३८१०)

यदि रुद्रो द्विधाकृत्य युध्येतात्मानमात्मना ।
तत्र शक्योपमा कर्तुमन्यत्र तु न विद्यते ॥ ७-१८९-४४ (५३८११)
ज्ञानमेकस्थमाचार्ये ज्ञानं योगश्च पाण्डवे ।
शौर्यमेकस्थमाचार्ये बलं शौर्यं च पाण्डवे। ७-१८९-४५ (५३८१२)
नेमौ शक्यौ महेष्वासौ युद्धे क्षपयितुं परैः ।
इच्छमानौ पुनरिमौ हन्येतां सामरं जगत् ॥ ७-१८९-४६ (५३८१३)
इत्यब्रुवन्महाराज दृष्ट्वा तौ पुरुषर्षभौ ।
अन्तर्हितानि भूतानि प्रकाशानि च सर्वशः ॥ ७-१८९-४७ (५३८१४)
ग्यदा द्रोणं महाराज विशेषयति पाण्डवः'।
ततो द्रोणो ब्राह्ममस्त्रं प्रादुश्चक्रे महामतिः ॥ ७-१८९-४८ (५३८१५)
ग्तदस्त्रं संहितं राजन्घोररूपं महाहवे'।
सन्तापयद्रणे पार्थं भूतान्यन्तर्हितानि च ॥ ७-१८९-४९ (५३८१६)
ततश्चचाल पृथिवी सपर्वतवनद्रुमा ।
ग्सरितश्च प्रतिस्रोतः प्रवहुर्वै क्षणान्तरम्'।
ववौ च विषमो वायुः सागराश्चापि चुक्षुभुः ॥ ७-१८९-५० (५३८१७)
ततस्त्रासो महानासीत्कुरुपाण्डवसेनयोः ।
सर्वेषां चैव भूतानामुद्यतेऽस्त्रे महात्मना ॥ ७-१८९-५१ (५३८१८)
ततः पार्थोऽप्यसम्भ्रान्तस्तदस्त्रं प्रतिजघ्निवान् ।
ब्रह्मास्त्रेणैव राजेन्द्र ततः सर्वमशीशमत् ॥ ७-१८९-५२ (५३८१९)
यदा न गम्यते पारं तयोरन्यतरस्य वा ।
ततः सङ्कुलयुद्धेन तद्युद्धं व्याकुलीकृतम् ॥ ७-१८९-५३ (५३८२०)
नाज्ञायत ततः किञ्चित्पुनरेव विशाम्पते ।
प्रवृत्ते तुमुले युद्धे द्रोणपाण्डवयोर्नृप ॥ ७-१८९-५४ (५३८२१)
ग्द्रोणो मुक्त्वा रणे पार्थं पाञ्चालानन्वधावत ।
अर्जुनोपि रणे द्रोणं त्यक्त्वा प्राद्रवयत्कुरून् ॥ ७-१८९-५५ (५३८२२)
शरौघैरथ ताभ्यां तु छायाभूतं महामृधे ।
तुमलं प्रबभौ राजन्सर्वस्य जगतो भयम्'॥ ७-१८९-५६ (५३८२३)
शरजालैः समाकीर्णे मेघजालैरिवाम्बरे ।
नापतच्च ततः कश्चिदन्तरिक्षचरस्तदा ॥ ॥ ७-१८९-५७ (५३८२४)

इति श्रीमन्महाभारते द्रोणपर्वणि द्रोणवधपर्वणि
पञ्चदशदिसयुद्धे एकोननवत्यधिकशततमोऽध्यायः ॥ १८९ ॥

Mahabharata - Drona Parva - Chapter Footnotes

५-१८९-४५ ज्ञानमेकस्थमिति आचार्यो ज्ञानस्य
शौर्यस्य चावधिरित्यर्थः । अर्जुनस्तु योगेन बलेन

चाधिकः। कृष्णसारथिगाण्डीवदिव्यरथध्वजबुद्ध्यादिभिर्यौवनेन च युक्तत्वात्। तथाच योगबलाभ्यां मार्चार्यसाम्यं प्राप्त इत्यर्थः ॥
५-१८९-५७ नापतत् बाणैरन्तरिक्षस्य पूरितत्वादिति भावः ॥
५-१८९-१८९ एकोननवत्यधिकशततमोऽध्यायः ॥

---

द्रोनपर्व-अध्यय१९०
॥ श्रीः ॥
७.१९०. अध्यायः १९०

Mahabharata - Drona Parva - Chapter Topics
सात्यकिदुर्योधनादीनां सङ्कुलयुद्धवर्णनम् ॥ १ ॥

Mahabharata - Drona Parva - Chapter Text

७-१९०-० (५३८२५)
सञ्जय उवाच। ७-१९०-०क्ष् (४७७०)
तस्मिंस्तथा वर्तमाने गजाश्वनरसंक्षये ।
दुःशासनो महाराज धृष्टद्युम्नमयोधयत् ॥ ७-१९०-१ (५३८२६)
स तु रुक्मरथासक्तो दुःशासनशरार्दितः ।
अमर्षात्तव पुत्रस्य शरैर्वाहानवाकिरत् ॥ ७-१९०-२ (५३८२७)
क्षणेन स रथस्तस्य सध्वजः सहसारथिः ।
नादृश्यत महाराज पार्षतस्य शरैश्चितः ॥ ७-१९०-३ (५३८२८)
दुःशासनस्तु राजेन्द्र पाञ्चाल्यस्य महात्मनः ।
नाशकत्प्रमुखे स्थातुं शरजालप्रपीडितः ॥ ७-१९०-४ (५३८२९)
स तु दुःशासनं बाणैर्विमुखीकृत्य पार्षतः ।
किरञ्छरसहस्राणि द्रोणमेवाभ्ययाद्रणे ॥ ७-१९०-५ (५३८३०)
अभ्यपद्यत हार्दिक्यः कृतवर्मा त्वनन्तरम् ।
सोदर्याणां त्रयश्चैव त एनं पर्यवारयन् ॥ ७-१९०-६ (५३८३१)
तं यमौ पृष्ठतोऽन्वैतां रक्षन्तौ पुरुषर्षभौ ।
द्रोणायाभिमुखं यान्तं दीप्यमानमिवानलम् ॥ ७-१९०-७ (५३८३२)
सम्प्रहारमकुर्वंस्ते सर्वे च सुमहारथाः ।
अमर्षिताः सत्त्ववन्तः कृत्वा मरणमग्रतः ॥ ७-१९०-८ (५३८३३)
शुद्धात्मानः शुद्धवृत्ता राजन्स्वर्गपुरस्कृताः ।
आर्यं युद्धमकुर्वन्त परस्परजिगीषवः ॥ ७-१९०-९ (५३८३४)
शुक्लाभिजनकर्माणो मतिमन्तो जनाधिप ।
धर्मयुद्धमयुध्यन्त प्रेप्सन्तो गतिमुत्तमाम् ॥ ७-१९०-१० (५३८३५)

न तत्रासीदधर्मिष्ठमशस्तं युद्धमेव च ।
नात्र कर्णी न नालीको न लिप्तो न च बस्तिकः ॥ ७-१९०-११ (५३८३६)
न सूची कपिशो नैव न गवास्थिर्गजास्थिजः ।
न चूली बलिशस्तत्र न यमी नापि पाचकः ।
इषुरासीन्न संश्लिष्टो न पूतिर्न च जिह्मगः ॥ ७-१९०-१२ (५३८३७)
ऋजून्येव विशुद्धानि सर्वे शस्त्राण्यधारयन् ।
सुयुद्धेन पराँल्लोकानीप्सन्तः कीर्तिमेव च ॥ ७-१९०-१३ (५३८३८)
तदासीत्तुमुलं युद्धं सर्वदोषविवर्जितम् ।
चतुर्णां तव योधानां तैस्त्रिभिः पाण्डवैः सह ॥ ७-१९०-१४ (५३८३९)
धृष्टद्युम्नस्तु तान्दृष्ट्वा तव राजन्नर्थर्षभान् ।
यमाभ्यां वारितान्वीराञ्छीघ्रास्त्रो द्रोणमभ्ययात् ॥ ७-१९०-१५ (५३८४०)
निवारितास्तु ते वीरास्तयोः पुरुषसिंहयोः ।
समसज्जन्त चत्वारो वाताः पर्वतयोरिव ॥ ७-१९०-१६ (५३८४१)
द्वाभ्यां द्वाभ्यां यमौ सार्धं रथाभ्यां रथपुङ्गवौ ।
समासक्तौ ततो द्रोणं धृष्टद्युम्नोऽभ्यवर्तत ॥ ७-१९०-१७ (५३८४२)
दृष्ट्वा द्रोणाय पाञ्चाल्यं व्रजन्तं युद्धदुर्मदम् ।
यमाभ्यां तांश्च संसक्तांस्तदन्तरमुपाद्रवत् ॥ ७-१९०-१८ (५३८४३)
दुर्योधनो महाराज किरञ्छोणितभोजनान् ।
तं सात्यकिः शीघ्रतरं पुनरेवाभ्यवर्तत ॥ ७-१९०-१९ (५३८४४)
तौ परस्परमासाद्य समीपे कुरुमाधवौ ।
हसमानौ नृशार्दूलावभीतौ समसज्जताम् ॥ ७-१९०-२० (५३८४५)
बाल्यवृत्तानि सर्वाणि प्रीयमाणौ विचिन्त्य तौ ।
अन्योन्यं प्रेक्षमाणौ च स्मयमानौ पुनःपुनः ॥ ७-१९०-२१ (५३८४६)
अथ दुर्योधनो राजा सात्यकिं समभाषत ।
प्रियं सखायं सततं गर्हयन्वृत्तमात्मनः ॥ ७-१९०-२२ (५३८४७)
धिक् क्रोधं धिक्सखे लोभं धिङ्मोहं धिगमर्षितम् ।
धिगस्तु क्षात्रमाचारं धिगस्तु बलमौरसम् ॥ ७-१९०-२३ (५३८४८)
यत्र मामभिसन्धत्से त्वां चाहं शिनिपुङ्गव ।
त्वं हि प्राणैः प्रियतरो ममाहं च सदा तव ॥ ७-१९०-२४ (५३८४९)
स्मरामि तानि सर्वाणि बाल्यवृत्तानि यानि नौ ।
तानि सर्वाणि जीर्णानि साम्प्रतं नो रणाजिरे ।
किमन्यत्क्रोधलोभाभ्यां युद्धमेवाद्य सात्वत ॥ ७-१९०-२५ (५३८५०)
तं तथावादिनं तत्र सात्यकिः प्रत्यभाषत ।
प्रहसन्विशिखांस्तीक्ष्णानुद्यम्य परमास्त्रवित् ॥ ७-१९०-२६ (५३८५१)
नेयं सभा राजपुत्र नाचार्यस्य निवेशनम् ।
यत्र क्रीडितमस्माभिस्तदा राजन्समागतैः ॥ ७-१९०-२७ (५३८५२)

दुर्योधन उवाच। ७-१९०-२८क्ष् (४७७१)
क्व सा क्रीडा गताऽस्माकं बाल्ये वै शिनिपुङ्गव ।
क्व च युद्धमिदं भूयः कालो हि दुरतिक्रमः ॥ ७-१९०-२८ (५३८५३)
किन्तु नो विद्यते कृत्यं धनेन धनलिप्सया ।
यत्र युध्यामहे सर्वे धनलोभात्समागताः ॥ ७-१९०-२९ (५३८५४)
सञ्जय उवाय। ७-१९०-३०क्ष् (४७७२)
तं तथावादिनं तत्र राजानं माधवोऽब्रवीत् ।
एवं वृत्तं सदा क्षात्रं युध्यन्तीह गुरूनपि ॥ ७-१९०-३० (५३८५५)
यदि तेऽहं प्रियो राजञ्जहि मां मा चिरं कृथाः ।
त्वत्कृते सुकृतांल्लोकान्गच्छेयं भरतर्षभ ॥ ७-१९०-३१ (५३८५६)
या ते शक्तिर्बलं यच्च तत्क्षिप्रं मयि दर्शय ।
नेच्छामि तदहं द्रष्टुं मित्राणां व्यसनं महत् ॥ ७-१९०-३२ (५३८५७)
इत्येवं व्यक्तमाभाष्य प्रतिभाष्य च सात्यकिः ।
अभ्ययात्तूर्णमव्यग्रो दयां नाकुरुतात्मनि ॥ ७-१९०-३३ (५३८५८)
तमायान्तं महाबाहुं प्रत्यगृह्णात्तवात्मजः ।
शरैश्चावाकिरद्राजञ्शैनेयं तनयस्तव ॥ ७-१९०-३४ (५३८५९)
ततः प्रववृते युद्धं कुरुमाधवसिंहयोः ।
अन्योन्यं क्रुद्धयोर्घोरं यथा द्विरदसिंहयोः ॥ ७-१९०-३५ (५३८६०)
ततः पूर्णायतोत्सृष्टैः सात्वतं युद्धदुर्मदम् ।
दुर्योधनः प्रत्यविध्यत्कुपितो दशभिः शरैः ॥ ७-१९०-३६ (५३८६१)
तं सात्यकिः प्रत्यविध्यत्तथैवावाकिरच्छरैः ।
पञ्चाशता पुनश्चाजौ त्रिंशता दशभिश्च ह ॥ ७-१९०-३७ (५३८६२)
सात्यकिं तु रणे राजन्प्रहसंस्तनयस्तव ।
आकर्णपूर्णैर्निशितैर्विव्याध त्रिंशता शरैः ॥ ७-१९०-३८ (५३८६३)
ततोऽस्य सशरं चापं क्षुरप्रेण द्विधाऽच्छिनत् ॥ ७-१९०-३९ (५३८६४)
सोऽन्यत्कार्मुकमादाय लघुहस्तस्ततो दृढम् ।
सात्यकिर्व्यसृजच्चापि शरश्रेणीं सुतस्य ते ॥ ७-१९०-४० (५३८६५)
तामापतन्तीं सहसा शरश्रेणीं जिघांसया ।
चिच्छेद बहुधा राजा तत उच्चुक्रुशुर्जनाः ॥ ७-१९०-४१ (५३८६६)
सात्यकिं च त्रिसप्तत्या पीडयामास वेगितः ।
स्वर्णपुङ्खैः शिलाधौतैराकर्णापूर्णनिःसृतैः ॥ ७-१९०-४२ (५३८६७)
तस्य सन्दधतश्चेषु संहितेषु च कार्मुकम् ।
आच्छिनत्सात्यकिस्तूर्णं शरैश्चैवाप्यवीविधत् ॥ ७-१९०-४३ (५३८६८)
स गाढविद्धो व्यथितः प्रत्यपायाद्रथान्तरे ।
दुर्योधनो महाराज दाशार्हशरपीडितः ॥ ७-१९०-४४ (५३८६९)
समाश्वस्य तु पुत्रस्ते सात्यकिं पुनरभ्ययात् ।

विसृजन्निषुजालानि युयुधानरथं प्रति ॥ ७-१९०-४५ (५३८७०)
तथैव सात्यकिर्बाणान्दुर्योधनरथं प्रति ।
सततं विसृजन्राजंस्तत्सङ्कुलमवर्तत ॥ ७-१९०-४६ (५३८७१)
तत्रेषुभिः क्षिप्यमाणैः पतद्भिश्च शरीरिषु ।
अग्नेरिव महाकक्षैः शब्दः समभवन्महान् ॥ ७-१९०-४७ (५३८७२)
तयोः शरसहस्रैश्च सञ्छन्नं वसुधातलम् ।
अगम्यरूपं च शरैराकाशं समपद्यत ॥ ७-१९०-४८ (५३८७३)
तत्राप्यधिकमालक्ष्य माधवं रथसत्तमम् ।
क्षिप्रमभ्यपतत्कर्णः परीप्संस्तनयं तव ॥ ७-१९०-४९ (५३८७४)
न तु तं मर्षयामास भीमसेनो महाबलः ।
सोऽभ्ययात्त्वरितः कर्णं विसृजन्सायकान्बहून् ॥ ७-१९०-५० (५३८७५)
तस्य कर्णः शितान्बाणान्प्रतिहन्य हसन्निव ।
धनुः शरांश्च चिच्छेद सूतं चाभ्यहनच्छरैः ॥ ७-१९०-५१ (५३८७६)
भीमसेनस्तु सङ्क्रुद्धो गदामादाय पाण्डवः ।
ध्वजं धनुश्च सूतं च सम्ममर्दाहवे रिपोः ॥ ७-१९०-५२ (५३८७७)
रथचक्रं च कर्णस्य बभञ्ज स महाबलः ।
भग्नचक्रे रथेऽतिष्ठदकम्पः शैलराडिव ॥ ७-१९०-५३ (५३८७८)
एकचक्रं रथं तस्य तमूहुः सुचिरं हयाः ।
एकचक्रमिवार्कस्य रथं सप्त हया यथा ॥ ७-१९०-५४ (५३८७९)
अमृष्यमाणः कर्णस्तु भीमसेनमयुध्यत ।
विविधैरिषुजालैश्च नानाशस्त्रैश्च संयुगे ॥ ७-१९०-५५ (५३८८०)
भीमसेनस्तु सङ्क्रुद्धः सूतपुत्रमयोधयत् ।
तस्मिंस्तथा वर्तमाने क्रुद्धो धर्मसुतोऽब्रवीत् ।
पाञ्चालानां नरव्याघ्रान्मात्स्यांश्च पुरुषर्षभान् ॥ ७-१९०-५६ (५३८८१)
ये नः प्राणाः शिरो ये च ये नो योधा महारथाः ।
त एते धार्तराष्ट्रेषु विषक्ताः पुरुषर्षभान् ॥ ७-१९०-५७ (५३८८२)
ये नः प्राणाः शिरो ये च ये नो योधा महारथाः ।
त एते धार्तराष्ट्रेषु विषक्ताः पुरुषर्षभाः ॥ ७-१९०-५८ (५३८८३)
किं तिष्ठत यथा मूढाः सर्वे विगतचेतसः ।
तत्र गच्छत यत्रैते युध्यन्ते मामका रथाः ॥ ७-१९०-५९ (५३८८४)
क्षत्रधर्मं पुरस्कृत्य सर्व एव गतज्वराः ।
जयन्तो वध्यमानाश्च गतिमिष्टां गमिष्यथ ॥ ७-१९०-६० (५३८८५)
ते राज्ञा चोदिता वीरा योत्स्यमाना महारथाः ।
चतुर्धा वाहिनीं कृत्वा त्वरिता द्रोणमभ्ययुः ॥ ७-१९०-६१ (५३८८६)
पाञ्चालास्त्वेकतो द्रोणमभ्यघ्नन्निशितैः शरैः ।
भीमसेनपुरोगाश्चाप्येकतः पर्यवारयन् ॥ ७-१९०-६२ (५३८८७)

आसंस्तु पाण्डुपुत्राणां त्रयो जिह्मा महारथाः ।
यमौ च भीमसेनश्च प्राक्रोशंस्ते धनञ्जयम् ॥ ७-१९०-६३ (५३८८८)
अभिद्रवार्जुन क्षिप्रं कुरून्द्रोणादपानुद ।
तत एनं हनिष्यन्ति पाञ्चाला हतरक्षिणम् ॥ ७-१९०-६४ (५३८८९)
कौरवेयांस्ततः पार्थः ससा समुपाद्रवत् ।
पाञ्चालानेव तु द्रोणो धृष्टद्युम्नपुरोगमान् ।
ममर्दुस्तरसा वीराः पञ्चमेऽहनि भारत ॥ ॥ ७-१९०-६५ (५३८९०)

इति श्रीमन्महाभारते द्रोणपर्वणि पञ्चदशदिवसयुद्धे
नवत्यधिकशततमोऽध्यायः ॥ १९० ॥

Mahabharata - Drona Parva - Chapter Footnotes

५-१९०-६ त्रयो धृष्टद्युम्नोऽन्यौ द्वौ च ॥
५-१९०-१० शुक्लः शुद्धोऽभिजनो वंशो येषां ते स्वयं
शोधितकर्माणश्च ॥
५-१९०-११ अशस्तमप्रशस्यम् । प्रशस्यत्वमाह नात्रेति। कर्णी
विलोमकण्टकद्वययुक्तः। सहि उद्द्रियमाणोऽन्त्राण्युद्धरति। नालीकः
अल्पत्वाद्देहमग्रः सन् दुरुद्धरः। न लिप्तो विषेणेति शेषः। बस्तिकः
शल्यदण्डसन्धौ शिथिलस्तस्योद्धरणे शल्यं बस्तिमध्ये मज्जति
दण्डमात्रं निः--सरति। (अन्ये बस्तक इति पठित्वा शृङ्गघटित
इति व्याचख्युः)॥
५-१९०-२० हिंसमानाविति क ख पाठः ॥
५-१९०-३३ अभ्ययात्तूर्णमव्यग्रो निरपेक्षो विशाम्पते क ख पाठः ॥
५-१९०-१९० नवत्यधिकशततमोऽध्यायः ॥

---

द्रोनपर्व-अध्यय१९१
॥ श्रीः ॥
७.१९१. अध्यायः १९१

Mahabharata - Drona Parva - Chapter Topics

कृष्णेन युधिष्ठिरम्प्रति द्रोणजये तस्य शस्त्रन्यासस्य
तत्रचाश्वत्थामवधश्रवणस्य हेतुत्वकथनम् ॥ १ ॥
भीमेनाश्वत्थामनाम्नि गजे निहते युधिष्ठिरेण कृष्णचोदनया
द्रोणम्प्रति तद्विवक्षया अश्वत्थामा हत इति कथनम् ॥ २ ॥

Mahabharata - Drona Parva - Chapter Text

७-१९१-० (५३८९१)
सञ्जय उवाच। ७-१९१-०क्ष् (४७७३)
पाञ्चालानां ततो द्रोणोऽप्यकरोत्कदनं महत् ।
यथा क्रुद्धो रणे शक्रो दानवानां क्षयं पुरा ॥ ७-१९१-१ (५३८९२)
द्रोणास्त्रेण महाराज वध्यमानाः परे युधि ।
नात्रसन्त रणे द्रोणत्सत्ववन्तो महारथाः ॥ ७-१९१-२ (५३८९३)
युध्यमाना महाराज पाञ्चालाः सृञ्जयास्तथा ।
द्रोणमेवाभ्ययुर्युद्धे योधयन्तो महारथाः ॥ ७-१९१-३ (५३८९४)
तेषां तु च्छाद्यमानानां पाञ्चालानां समन्ततः ।
अभवद्भैरवो नादो वध्यतां शरवृष्टिभिः ॥ ७-१९१-४ (५३८९५)
वध्यमानेषु सङ्ग्रामे पाञ्चालेषु महात्मना ।
उदीर्यमाणे द्रोणास्त्रे पाण्डवान्भयमाविशत् ॥ ७-१९१-५ (५३८९६)
दृष्ट्वाऽश्वनरयोधानां विपुलं च क्षयं युधि ।
पाण्डवेया महाराज नाशशंसुर्जयं तदा ॥ ७-१९१-६ (५३८९७)
कच्चिद्द्रोणो न नः सर्वान्क्षपयेत्परमास्त्रवित् ।
समिद्धः शिशिरापाये दहन्कक्षमिवानलः ॥ ७-१९१-७ (५३८९८)
न चैनं संयुगे कश्चित्समर्थः प्रतिवीक्षितुम् ।
न चैनमर्जुनो जातु प्रतियुध्येत धर्मवित् ॥ ७-१९१-८ (५३८९९)
त्रस्तान्कुन्तीसुतान्दृष्ट्वा द्रोणसायकपीडितान् ।
मतिमाञ्श्रेयसे युक्तः केशवोऽर्जुनमब्रवीत् ॥ ७-१९१-९ (५३९००)
नैष युद्धेन सङ्ग्रामे जेतुं शक्यः कथञ्चन ।
सधनुर्धन्विनां श्रेष्ठो देवैरपि सवासवैः ॥ ७-१९१-१० (५३९०१)
न्यस्तशस्त्रस्तु सङ्गारमे शक्यो हन्तुं भवेन्नृभिः ।
आस्थीयतां जये योगो धर्ममुत्सृज्य पाण्डवाः ।
यथा न संयुगे सर्वान्निहन्याद्रुक्मवाहनः ॥ ७-१९१-११ (५३९०२)
अश्वत्थाम्नि हते नैष युध्येदिति मतिर्मम ।
तं हतं संयुगे कश्चिदस्मै शंसतु मानवः ॥ ७-१९१-१२ (५३९०३)
एतन्नारोचयद्राजन्कुन्तीपुत्रो धनञ्जयः ।
अन्ये त्वरोचयन्सर्वे कृच्छ्रेण तु युधिष्ठिरः ॥ ७-१९१-१३ (५३९०४)
ततो भीमो महाबाहुरनीकेषु महागजम् ।
जघान गदया राजन्नश्वत्थामानमित्युत ।
परप्रमथनं घोरं मालवस्येन्द्रवर्मणः ॥ ७-१९१-१४ (५३९०५)
भीमसेनस्तु सव्रीडमुपेत्य द्रोणमाहवे ।
अश्वत्थामा हत इति शब्दमुच्चैश्चकार ह ॥ ७-१९१-१५ (५३९०६)
अश्वत्थामेति हि गजः ख्यातो नाम्ना हतोऽभवत् ।

कृत्वा मनसि तं भीमो मिथ्या व्याहृतवांस्तदा ॥ ७-१९१-१६ (५३९०७)
भीमसेनवचः श्रुत्वा द्रोणस्तत्परमाप्रियम् ।
मनसा सन्नागात्रोऽभूद्यथा सैकतमम्भसि ॥ ७-१९१-१७ (५३९०८)
शङ्कमानः स तन्मिथ्या वीर्यज्ञः स्वसुतस्य वै ।
हतः स इति च श्रुत्वा नैव धैर्यादकम्पत ॥ ७-१९१-१८ (५३९०९)
स लब्ध्वा चेतनां द्रोणः क्षणेनैव समाश्वसत् ।
अनुचिन्त्यात्मनः पुत्रमविषह्यमरातिभिः ॥ ७-१९१-१९ (५३९१०)
स पार्षतमभिद्रुत्य जिघांसुर्मृत्युमात्मनः ।
अवाकिरत्सहस्रेण तीक्ष्णानां कङ्कपत्रिणाम् ॥ ७-१९१-२० (५३९११)
तं विंशतिसहस्राणि पाञ्चालानां नरर्षभाः ।
यथा चरन्तं सङ्ग्रामे सर्वतोऽवाकिरञ्छरैः ॥ ७-१९१-२१ (५३९१२)
शरैस्तैराचितं द्रोणं नापश्याम महारथम् ।
भास्करं जलदै रुद्धं वर्षास्विव विशाम्पते ॥ ७-१९१-२२ (५३९१३)
विधूय तान्बाणगणान्पाञ्चालानां महारथः ।
प्रादुश्चक्रे ततो द्रोणो ब्राह्ममस्त्रं परन्तपः ॥ ७-१९१-२३ (५३९१४)
वधाय तेषां शूराणां पाञ्चालानाममर्षितः ।
ततो व्यरोचत द्रोणो विनिघ्नन्सर्वसैनिकान् ॥ ७-१९१-२४ (५३९१५)
शिरांस्यापातयच्चापि पाञ्चालानां महामृधे ।
तथैव परिघाकारान्बाहून्कनकभूषणान् ॥ ७-१९१-२५ (५३९१६)
ते वध्यमानाः समरे भारद्वाजेन पार्थिवाः ।
मेदिन्यामन्वकीर्यन्त वातनुन्ना इव द्रुमाः ॥ ७-१९१-२६ (५३९१७)
कुञ्जराणां च पततां हयौघानां च भारत ।
अगम्यरूपा पृथिवी मांसशोणितकर्दमा ॥ ७-१९१-२७ (५३९१८)
हत्वा विंशतिसाहस्रान्पाञ्चालानां रथव्रजान् ।
अतिष्ठदाहवे द्रोणो विधूमोऽग्निरिव ज्वलन् ॥ ७-१९१-२८ (५३९१९)
तथैव च पुनः क्रुद्धो भारद्वाजः प्रतापवान् ।
वसुदानस्य भल्लेन शिरः कायादपाहरत् ॥ ७-१९१-२९ (५३९२०)
पुनः पञ्चशतान्मात्स्यान्षट्सहस्रांश्च सृञ्जयान् ।
हस्तिनामयुतं हत्वा जघानाश्वायुतं पुनः ॥ ७-१९१-३० (५३९२१)
क्षत्रियाणामभावाय दृष्ट्वा द्रोणमवस्थितम् ।
ऋषयोऽभ्यागतास्तूर्णं हव्यवाहपुरोगमाः ॥ ७-१९१-३१ (५३९२२)
विश्वामित्रो जमदग्निर्भरद्वाजोऽथ गौतमः ।
वसिष्ठः कश्यपोऽत्रिश्च ब्रह्मलोकं निनीषवः ॥ ७-१९१-३२ (५३९२३)
सिकताः पृश्नयो गर्गा वालखिल्या मरीचिपाः ।
भृगवोऽङ्गिरसश्चैव सूक्ष्माश्चान्ये महर्षयः ॥ ७-१९१-३३ (५३९२४)
त एनमब्रुवन्सर्वे द्रोणमाहरवशोभिनम् ।

अधर्मतः कृतं युद्धं समयो निधनस्य ते ॥ ७-१९१-३४ (५३९२५)
न्यस्यायुधं रणे द्रोण समीक्षास्मानवस्थितान् ।
नातः क्रूरतरं कर्म पुनः कर्तुमिहार्हसि ॥ ७-१९१-३५ (५३९२६)
वेदवेदाङ्गविदुषः सत्यधर्मरतस्य ते ।
ब्राह्मणस्य विशेषेण तवैतन्नोपपद्यते ॥ ७-१९१-३६ (५३९२७)
त्यजायुधममोघेषो तिष्ठ वर्त्मनि शाश्वते ।
परिपूर्णश्च कालस्ते वस्तुं लोकेऽद्य मानुषे ॥ ७-१९१-३७ (५३९२८)
ब्रह्मास्त्रेण त्वया दग्धा अनस्त्रज्ञा नरा भुवि ।
यदेतदीदृशं विप्र कृतं कर्म न साधु तत् ॥ ७-१९१-३८ (५३९२९)
न्यस्यायुधं रणे विप्र द्रोण मा त्वं चिरं कृथाः ।
मा पापिष्ठतरं कर्म करिष्यसि पुनर्द्विज ॥ ७-१९१-३९ (५३९३०)
इति तेषां वचः श्रुत्वा भीमसेनवचः स्मरन् ।
धृष्टद्युम्नं च सम्प्रेक्ष्य रणे स विमनाऽभवत् ॥ ७-१९१-४० (५३९३१)
सन्दिह्यमानो व्यथितः कुन्तीपुत्रं युधिष्ठिरम् ।
अहतं वा हतं वेति पप्रच्छ सुतमात्मनः ॥ ७-१९१-४१ (५३९३२)
स्थिरा बुद्धिर्हि द्रोणस्य न पार्थो वक्ष्यतेऽनृतम् ।
त्रयाणामपि लोकानामैश्वर्यार्थे कथञ्चन ॥ ७-१९१-४२ (५३९३३)
तस्मात्तं परिपप्रच्छ नान्यं कञ्चिद्द्विजर्षभः ।
तस्मिंस्तस्य हि सत्याशा बाल्यात्प्रभृति पाण्डवे ॥ ७-१९१-४३ (५३९३४)
ततो निष्पाण्डवामुर्वीं करिष्यन्तं युधाम्पतिम् ।
द्रोणं ज्ञात्वा धर्मराजं गोविन्दो व्यथितोऽब्रवीत् ॥ ७-१९१-४४ (५३९३५)
यद्यर्धदिवसं द्रोणो युध्यते मन्युमास्थितः ।
सत्यं ब्रवीमि ते सेना विनाशं समुपैष्यति ॥ ७-१९१-४५ (५३९३६)
स भवांस्त्रातु नो द्रोणात्सत्याज्ज्यायोऽनृतं वचः ।
अनृतं जीवितस्यार्थे वदन्न स्पृश्यतेऽनृतैः ॥ ७-१९१-४६ (५३९३७)
तयोः संवदतोरेवं भीमसेनोऽब्रवीदिदम् ॥ ७-१९१-४७ (५३९३८)
श्रुत्वैवं तु महाराज वधोपायं महात्मनः ।
गाहमानस्य ते सेनां मालवस्येन्द्रवर्मणः ॥ ७-१९१-४८ (५३९३९)
अश्वत्थामेति विख्यातो गजः शक्रगजोपमः ।
निहतो युधि विक्रम्य ततोऽहं द्रोणमब्रुवम् ॥ ७-१९१-४९ (५३९४०)
अश्वत्थामा हतो ब्रह्मन्निवर्तस्वाहवादिति ।
नूनं नाश्रद्दधद्वाक्यमेष मे पुरुषर्षभः ॥ ७-१९१-५० (५३९४१)
स त्वं गोविन्दवाक्यानि मानयस्व जयैषिणः ।
द्रोणाय निहतं शंस राजञ्शारद्वतीसुतम् ॥ ७-१९१-५१ (५३९४२)
त्वयोक्ते नैव युध्येत जातु राजन्द्विजर्षभः ।
सत्यवागिति लोकेऽस्मिन्भवान्ख्यातो जनाधिप ॥ ७-१९१-५२ (५३९४३)

तस्य तद्वचनं श्रुत्वा कृष्णवाक्यप्रचोदितः ।
भावित्वाच्च महाराज वक्तुं समुपचक्रमे ॥ ७-१९१-५३ (५३९४४)
तमतथ्यभये मग्नो जये सक्तो युधिष्ठिरः ।
ग्अश्वत्थामा हति शब्दमुच्चैश्चकार ह'।
अव्यक्तमब्रवीद्राजन्हतः कुञ्जर इत्युत ॥ ७-१९१-५४ (५३९४५)
तस्य पूर्वं रथः पृथ्व्याश्चतुरङ्गुलमुच्छ्रितः ।
बभूवैवं च तेनोक्ते तस्य वाहाः स्पृशन्महीम् ॥ ७-१९१-५५ (५३९४६)
युधिष्ठिरात्तु तद्वाक्यं श्रुत्वा द्रोणो महारथः ।
पुत्रव्यसनसन्तप्तो निराशो जीवितेऽभवत् ॥ ७-१९१-५६ (५३९४७)
आगस्कृतमिवात्मानं पाण्डवानां महात्मनाम् ।
ऋषिवाक्येन मन्वानः श्रुत्वा च निहतं सुतम् ॥ ७-१९१-५७ (५३९४८)
विचेताः परमोद्विग्नो धृष्टद्युम्नमवेक्ष्य च ।
योद्धुं नाशक्नुवद्राजन्यथापूर्वमरिन्दमः ॥ ॥ ७-१९१-५८ (५३९४९)

इति श्रीमन्महाभारते द्रोणपर्वणि द्रोणवधपर्वणि
पञ्चदशदिवसयुद्धे एकनवत्यधिकशततमोऽध्यायः ॥ १९१ ॥
Mahabharata - Drona Parva - Chapter Footnotes

५-१९१-५१ जयैषिण इत्यस्य गोविन्दवाक्यानीत्यत्रैकदेशे गोविन्देऽन्वयः ॥
५-१९१-१९१ एकनवत्यधिकशततमोऽध्यायः ॥
१९१ ॥

---

द्रोनपर्व-अध्यय१९२
॥ श्रीः ॥
७.१९२. अध्यायः १९२

Mahabharata - Drona Parva - Chapter Topics
अश्वत्थामवधश्रवणनिर्विण्णद्रोणमारणाय धृष्टद्युम्नसमुद्यमः ॥ १ ॥
द्रोणग्रस्तस्य धृष्टद्युम्नस्य सात्यकिना विमोचनम् ॥ २ ॥

Mahabharata - Drona Parva - Chapter Text

७-१९२-० (५३९५०)
सञ्जय उवाच। ७-१९२-०क्ष् (४७७४)
तं दृष्ट्वा परमोद्विग्नं शोकोपहतचेतसम् ।
पाञ्चालराजस्य सुतो धृष्टद्युम्नः समाद्रवत् ॥ ७-१९२-१ (५३९५१)

य इष्ट्वा मनुजेन्द्रेण द्रुपदेन महामखे ।
लब्धो द्रोणविनाशाय समिद्धाद्धव्यवाहनात् ॥ ७-१९२-२ (५३९५२)
स धनुर्जैत्रमादाय घोरं जलदनिःस्वनम् ।
दृढज्यमजरं दिव्यं शरं चाशीविषोपमम् ॥ ७-१९२-३ (५३९५३)
सन्दधे कार्मुके तस्मिंस्ततस्तमनलोपमम् ।
द्रोणं जिघांस्तुः पाञ्चाल्यो महाज्वालमिवानलम् ॥ ७-१९२-४ (५३९५४)
तस्य रूपं शरस्यासीद्धनुर्ज्यामण्डलान्तरे ।
द्योततो भास्करस्येव घनान्ते परिवेषिणः ॥ ७-१९२-५ (५३९५५)
पार्षतेन परामृष्टं ज्वलन्तमिव तद्धनुः ।
अन्तकालमनुप्राप्तं मेनिरे वीक्ष्य सैनिकाः ॥ ७-१९२-६ (५३९५६)
तमिषुं संहतं तेन भारद्वाजः प्रतापवान् ।
दृष्ट्वाऽमन्यत देहस्य कालपर्यायमागतम् ॥ ७-१९२-७ (५३९५७)
ततः प्रयत्नमातिष्ठदाचार्यस्तस्य वारमे ।
न चास्यास्त्राणि राजेन्द्र पादुरासन्महात्मनः ॥ ७-१९२-८ (५३९५८)
तस्य त्वहानि चत्वारि क्षपा चैकाऽस्यतो गता ।
तस्य चाह्नस्त्रिभागेन क्षयं जग्मुः पतत्रिणः ॥ ७-१९२-९ (५३९५९)
स शरक्षयमासाद्य पुत्रशोकेन चार्दितः ।
विविधानां च दिव्यामानमस्त्राणामप्रसादतः ॥ ७-१९२-१० (५३९६०)
उत्स्रष्टुकामः शस्त्राणि ऋषिवाक्यप्रचोदितः ।
तेजसा पूर्यमाणश्च युयुधे न यथा पुरा ॥ ७-१९२-११ (५३९६१)
भूयश्चान्यत्समादाय दिव्यमाङ्गिरसं धनुः ।
शरांश्च ब्रह्मदण्डाभान्धृष्टद्युम्नमयोधयत् ॥ ७-१९२-१२ (५३९६२)
ततस्तं शरवर्षेण महता समवाकिरत् ।
व्यशातयच्च सङ्क्रुद्धो धृष्टद्युम्नममर्षणम् ॥ ७-१९२-१३ (५३९६३)
शरांश्च शतधा तस्य द्रोणश्चिच्छेद सायकैः ।
ध्वजं धनुश्च निशितैः सारथिं चाप्यपातयत् ॥ ७-१९२-१४ (५३९६४)
धृष्टद्युम्नः प्रहस्यान्यत्पुनरादाय कार्मुकम् ।
शितेन चैनं बाणेन प्रत्यविध्यत्स्तनान्तरे ॥ ७-१९२-१५ (५३९६५)
सोऽतिविद्धो महेष्वासोऽसम्भ्रान्त इव संयुगे ।
भल्लेन शितधारेण चिच्छेदास्य पुनर्धनुः ॥ ७-१९२-१६ (५३९६६)
यच्चास्य बाणविकृतं धनूंषि च विशाम्पते ।
सर्वं चिच्छेद दुर्धर्षो गदां खड्गं च वर्जयन् ॥ ७-१९२-१७ (५३९६७)
धृष्टद्युम्नं च विव्याध नवभिर्निशितैः शरैः ।
जीवितान्तकरैः क्रुद्धः शिलाधौतैः परन्तपः ॥ ७-१९२-१८ (५३९६८)
धृष्टद्युम्नोऽथ तस्याश्वान्स्वरथाश्वैर्महारथः ।
व्यामिश्रयदमेयात्मा ब्राह्मस्त्रमुदीरयन् ॥ ७-१९२-१९ (५३९६९)

ते मिश्रा बह्वशोभन्त जवना वातरंहसः ।
पारावतसवर्णाश्च शोणाश्च भरतर्षभ ॥ ७-१९२-२० (५३९७०)
यथा सविद्युतो मेघा नदन्तो जलदागमे ।
तथा रेजुर्महाराज मिश्रिता रणमूर्धनि ॥ ७-१९२-२१ (५३९७१)
ईषाबन्धं चक्रबन्धं रथबन्धं तथैव च ।
प्राणाशयदमेयात्मा धृष्टद्युम्नस्य स द्विजः ॥ ७-१९२-२२ (५३९७२)
स च्छिन्नधन्वा पाञ्चाल्यो निकृत्तध्वजसारथिः ।
उत्तमामापदं प्राप्य गदां वीरः परामृशत् ॥ ७-१९२-२३ (५३९७३)
तामस्य विशिखैस्तीक्ष्णैः क्षिप्यमाणां महारथः ।
निजघानः शरैर्द्रोणः क्रुद्धः सत्यपराक्रमः ॥ ७-१९२-२४ (५३९७४)
तां तु दृष्ट्वा नरव्याघ्रो द्रोणेन निहतां शरैः ।
विमलं खड्गमादत्त शतचन्द्रं च भानुमत् ॥ ७-१९२-२५ (५३९७५)
असंशयं तथाभूतः पाञ्चाल्यः साध्वमन्यत ।
वधमाचार्यमुख्यस्य प्राप्तकालं महात्मनः ॥ ७-१९२-२६ (५३९७६)
ततः स रथनीडस्थं स्वरथस्य रथेपया ।
अगच्छदसिमुद्यम्य शतचन्द्रं च भानुमत् ॥ ७-१९२-२७ (५३९७७)
चिकीर्षुर्दुष्करं कर्म धृष्टद्युम्नो महारथः ।
इयेष वक्षो भेत्तुं स भारद्वाजस्य संयुगे ॥ ७-१९२-२८ (५३९७८)
सोऽतिष्ठद्युगमध्ये वै युगसन्नहनेषु च ।
जघनार्धेषु चाश्वानां तत्सैन्याः समपूजयन् ॥ ७-१९२-२९ (५३९७९)
तिष्ठतो युगपालीपु शोणानप्यधितिष्ठतः ।
नापश्यदन्तरं द्रोणस्तदद्भुतमिवाभवत् ॥ ७-१९२-३० (५३९८०)
क्षिप्रं श्येनस्य चरतो यथैवामिषगृद्धिनः ।
तद्वदासीदभीसारो द्रोमपार्षतयो रणे ॥ ७-१९२-३१ (५३९८१)
तस्य पारावतानश्वान्रथशक्त्या पराभिनत् ।
सर्वानेकैकशो द्रोणो रक्तानश्वान्विवर्जयन् ॥ ७-१९२-३२ (५३९८२)
ते हता न्यपतन्भूमौ धृष्टद्युम्नस्य वाजिनः ।
शोणास्तु पर्यमुच्यन्त रथबन्धाद्विशाम्पते ॥ ७-१९२-३३ (५३९८३)
तान्हयान्निहतान्दृष्ट्वा द्विजाग्र्येण स पार्षतः ।
नामृष्यत युधां श्रेष्ठो याज्ञसेनिर्महारथः ॥ ७-१९२-३४ (५३९८४)
विरथः स गृहीत्वा तु खड्गं खड्गभृतां वरः ।
द्रोणमभ्यपतद्राजन्वैनतेय इवोरगम् ॥ ७-१९२-३५ (५३९८५)
तस्य रूपं बभौ राजन्भारद्वाजं जिघांसतः ।
यथा रूपं पुरा विष्णोर्हिरण्यकशिपोर्वधे ॥ ७-१९२-३६ (५३९८६)
स तदा विविधान्मर्गान्प्रवरांश्चैकविंशतिम् ।
दर्शयामास कौरव्य पार्षतो विचरन्रणे ॥ ७-१९२-३७ (५३९८७)

भ्रान्तमुद्भ्रान्तमाविद्धमाप्लुतं प्रसृतं सृतम् ।
परिवृत्तं निवृत्तं च खड्गं चर्म च धारयन् ॥ ७-१९२-३८ (५३९८८)
सम्पातं समुदीर्णं च दर्शयामास पार्षतः ।
भारतं कौशिकं चैव सात्वतं चैव शिक्षया। ७-१९२-३९ (५३९८९)
दर्शयन्व्यचरद्युद्धे द्रोणस्यान्तचिकीर्षया ॥
चरतस्तस्य तान्मर्गान्विचित्रान्खड्गचर्मिणः ।
व्यस्मयन्त रणे योधा देवताश्च समागताः ॥ ७-१९२-४० (५३९९०)
ततः शरसहस्रेण शतचन्द्रमपातयत् ।
चर्म खड्गं च सम्बाधे धृष्टद्युम्नस्य स द्विजः ॥ ७-१९२-४१ (५३९९१)
ये तु वैतस्तिका नाम शरा आसन्नयोधिनः ।
निकृष्टयुद्धे द्रोणस्य नान्येषां सन्ति ते शराः ॥ ७-१९२-४२ (५३९९२)
ऋते शारद्वतात्पर्थाद्द्रौणेर्वैकर्तनात्तथा ।
प्रद्युम्नयुयुधानाभ्यामभिमन्योश्च भारत ॥ ७-१९२-४३ (५३९९३)
अथास्येषु समाधत्त दृढं परमसम्मतम् ।
अन्तेवासिनमाचार्यो जिघांसुः पुत्रसम्मितम् ॥ ७-१९२-४४ (५३९९४)
तं शरैर्दशभिस्तीक्ष्णैश्चिच्छेद शिनिपुङ्गवः ।
पश्यतस्तव पुत्रस्य कर्णस्य च महात्मनः ।
ग्रस्तमाचार्यमुख्येन धृष्टद्युम्नममोचयत् ॥ ७-१९२-४५ (५३९९५)
चरन्तं रथमार्गेषु सात्यकिं सत्यविक्रमम् ।
द्रोणकर्मान्तरगतं कृपस्यापि च भारत ।
अपश्येतां महात्मानौ विष्वक्सेनधनञ्जयौ ॥ ७-१९२-४६ (५३९९६)
अपूजयेतां वार्ष्णेयं ब्रुवाणौ साधुसाध्विति ।
दिव्यान्यस्त्राणि सर्वेषां युधि निघ्नतमच्युतम् ॥ ७-१९२-४७ (५३९९७)
धनञ्जयस्ततः कृष्णमब्रवीत्पश्य केशव ।
आचार्यरथमुख्यानां मध्ये क्रीडन्मधूद्वहः ॥ ७-१९२-४८ (५३९९८)
आनन्दयति मां भूयः सात्यकिः परवीरहा ।
माद्रीपुत्रौ च भीमं च राजानं च युधिष्ठिरम् ॥ ७-१९२-४९ (५३९९९)
यच्छिक्षयाऽनुद्धतः सन्रणे चरति सात्यकिः ।
महारथानुपक्रीडन्वृष्णीनां कीर्तिवर्धनः ॥ ७-१९२-५० (५४०००)
तमेते प्रतिनन्दन्ति सिद्धाः सैन्याश्च विस्मिताः ।
अजय्यं समरे दृष्ट्वा साधुसाध्विति सात्यकिम् ।
योधाश्चोभयतः सर्वे कर्मभिः समपूजयन् ॥ ॥ ७-१९२-५१ (५४००१)

इति श्रीमन्महाभारते द्रोणपर्वणि द्रोणवधपर्वणि
पञ्चदशदिवसयुद्धे द्विनवत्यधिकशततमोऽध्यायः ॥१९२ ॥
Mahabharata - Drona Parva - Chapter Footnotes

५-१९२-३८ खड्गं चर्म च धारयन्भ्रान्तादित्रयोदशविधं सञ्चरणं दर्शयामासेति सम्बन्धः ॥
५-१९२-४१ सम्बाधे रणसङ्कटे ॥
५-१९२-४२ वैतस्तिकाः वितस्तिप्रमाणाः ॥
५-१९२-१९२ द्विनवत्यधिकशततमोऽध्यायः ॥

---

द्रोनपर्व-अध्यय१९३
॥ श्रीः ॥
७.१९३. अध्यायः १९३

Mahabharata - Drona Parva - Chapter Topics
द्रोणधृष्टद्युम्नयोर्युद्धम् ॥ १ ॥
द्रोणेन सोपालम्भभीमवचः श्रवणेन शस्त्रन्यासपूर्वकं योगेन शीरत्यागः ॥ २ ॥
शरीरार्न्निर्गच्छतस्तेजोरूपस्य द्रोणस्य सञ्जयादिभिः पञ्चभिरेवावलोकनम् ॥ ३ ॥
धृष्टद्युम्नेन द्रोणशिरश्छेदः ॥ ४ ॥

Mahabharata - Drona Parva - Chapter Text

७-१९३-० (५४००२)
सञ्जय उवाच। ७-१९३-०क्ष् (४७७५)
श्सात्वतस्यक्क तु तत्कर्म दृष्ट्वा दुर्योधनादयः ।
शैनेयं सर्वतः क्रुद्धा वारयामासुरञ्जसा ॥ ७-१९३-१ (५४००३)
कृपकर्णौ च समरे पुत्राश्च तव मारिष ॥
शैनेयं त्वरयाऽभ्येत्य विनिघ्नन्निशितैः शरैः ॥ ७-१९३-२ (५४००४)
युधिष्ठिरस्ततो राजा माद्रीपुत्रौ च पाण्डवौ ।
भीमसेनश्च बलवान्सात्यकिं पर्यवारयन् ॥ ७-१९३-३ (५४००५)
कर्णश्च शरवर्षेण गौतमश्च महारथः ।
दुर्योधनादयस्ते च शैनेयं पर्यवारयन् ॥ ७-१९३-४ (५४००६)
तां वृष्टिं सहसा राजन्नुत्थितां घोररूपिणीम् ।
वारयामास शैनेयो योधयंस्तान्महारथान् ॥ ७-१९३-५ (५४००७)
तेषामस्त्राणि दिव्यानि संहितानि महात्मनाम् ।
वारयामास विधिवद्दिव्यैरस्त्रैर्महामृधे ॥ ७-१९३-६ (५४००८)
क्रूरमायोधनं जज्ञे तस्मिन्राजसमागमे ।

रुद्रस्येव हि क्रुद्धस्य निघ्नतस्तान्पशून्पुरा ॥ ७-१९३-७ (५४००९)
हस्तानामुत्तमाङ्गानां कार्मुकाणां च भारत ।
छत्राणां चापविद्धानां चामराणां च सञ्चयैः ।
राशयः स्म व्यदृश्यन्त तत्रतत्र रणाजिरे ॥ ७-१९३-८ (५४०१०)
भग्नचक्रै रथैश्चापि पातितैश्च महाध्वजैः ।
सादिभिश्च हतैः शूरैः सङ्कीर्णा वसुधाऽभवत् ॥ ७-१९३-९ (५४०११)
बाणपातनिकृत्तास्तु योधास्ते कुरुसत्तम ।
चेष्टन्तो विविधाश्चेष्टा व्यदृश्यन्त महाहवे ॥ ७-१९३-१० (५४०१२)
वर्तमाने तथा युद्धे घोरे देवासुरोपमे ।
अब्रवीत्क्षत्रियांस्तत्र धर्मराजो युधिष्ठिरः ॥ ७-१९३-११ (५४०१३)
अभिद्रवत संयत्ताः कुम्भयोनिं महारथाः ।
एषो हि पार्षतो वीरो भारद्वाजेन सङ्गतः ॥ ७-१९३-१२ (५४०१४)
घटते च यथाशक्ति भारद्वाजस्य नाशने ।
यादृशानि हि रूपाणि दृश्यन्तेऽस्य महारणे ॥ ७-१९३-१३ (५४०१५)
अद्य द्रोणं रणे क्रुद्धो घातयिष्यति पार्षतः ।
ते यूयं सहिता भूत्वा युध्यध्वं कुम्भसम्भवम्। ७-१९३-१४ (५४०१६)
युधिष्ठिरसमाज्ञप्ताः सृञ्जयानां महारथाः ।
अभ्यद्रवन्त संयत्ता भारद्वाजजिघांसवः ॥ ७-१९३-१५ (५४०१७)
तान्समापततः सर्वान्भारद्वाजो महारथः ।
अभ्यवर्तत वेगेन मर्तव्यमिति निश्चितः ॥ ७-१९३-१६ (५४०१८)
प्रयाते सत्यसन्धे तु समकम्पत मेदिनी ।
ववुर्वाताः सनिर्घातास्त्रासयाना वरूथिनीम् ॥ ७-१९३-१७ (५४०१९)
पपात महती चोल्का आदित्यान्निश्चरन्त्युत ।
दीपयन्ती उभे सेने शंसन्तीव महद्भयम् ॥ ७-१९३-१८ (५४०२०)
जज्वलुश्चैव शस्त्राणि भारद्वाजस्य मारिष ।
रथाः स्वनन्ति चात्यर्थं हयाश्चाश्रूण्यवासृजन् ॥ ७-१९३-१९ (५४०२१)
हतौजा इव चाप्यासीद्भारद्वाजो महारथः ।
प्रास्फुरन्नयनं चास्य वामबाहुस्तथैव च ॥ ७-१९३-२० (५४०२२)
विमनाश्चाभवद्युद्धे दृष्ट्वा पार्षतमग्रतः ॥ ७-१९३-२१ (५४०२३)
ऋषीणां ब्रह्मवादानां स्वर्गस्य गमनं प्रति ।
सुयुद्धेन ततः प्राणानुत्स्रष्टुमुपचक्रमे ॥ ७-१९३-२२ (५४०२४)
ततश्चतुर्दिशं सैन्यैर्द्रुपदस्याभिसंवृतः ।
निर्दहन्क्षत्रियव्रातान्द्रोणः पर्यचरद्रणे ॥ ७-१९३-२३ (५४०२५)
हत्वा विंशतिसाहस्रान्क्षत्रियानरिमर्दनः ।
दशायुतानि करिणामवधीद्विशिखैः शितैः ॥ ७-१९३-२४ (५४०२६)
सोऽतिष्ठदाहवे यत्तो विधूमोऽग्निरिव ज्वलन् ।

क्षत्रियाणामभावाय ब्राह्ममस्त्रं समास्थितः ॥ ७-१९३-२५ (५४०२७)
पाञ्चाल्यं विरथं भीमो हतसर्वायुधं बली ।
सुविपण्णं महात्मानं त्वरमाणः समभ्ययात् ॥ ७-१९३-२६ (५४०२८)
ततः स्वरथमारोप्य पाञ्चाल्यमरिमर्दनः ।
अब्रवीदभिसम्प्रेक्ष्य द्रोणमस्यन्तमन्तिकात् ॥ ७-१९३-२७ (५४०२९)
न त्वदन्य इहाचार्यं योद्धुमुत्सहते पुमान् ।
त्वरस्व प्राग्वधायैव त्वयि भारः समाहितः ॥ ७-१९३-२८ (५४०३०)
स तथोक्तो महाबाहुः सर्वभारसहं धनुः ।
अभिपत्याददे क्षिप्रमायुधप्रवरं दृढम् ॥ ७-१९३-२९ (५४०३१)
संरब्धश्च शरानस्यन्द्रोणं दुर्वारणं रणे ।
विवारयिपुराचार्यं शरवर्षैरवाकिरत् ॥ ७-१९३-३० (५४०३२)
तौ न्यवारयतां श्रेष्ठौ संरब्धौ रणशोभिनौ ।
उदीरयेतां ब्राह्माणि दिव्यान्यस्त्राण्यनेकशः ॥ ७-१९३-३१ (५४०३३)
स महास्त्रैर्महाराज द्रोणमाच्छादयद्रणे ।
निहत्य सर्वाण्यस्त्राणि भारद्वाजस्य पार्षतः ॥ ७-१९३-३२ (५४०३४)
स वसातीञ्शिवींस्चैव वाह्लीकान्कौरवानपि ।
रक्षिष्यमाणान्सङ्ग्रामे द्रोणं व्यधमदच्युतः ॥ ७-१९३-३३ (५४०३५)
धृष्टद्युम्नस्तथा राजन्गभस्तिभिरिवांशुमान् ।
वभौ प्रच्छादयन्नाशाः शरजालैः समन्ततः ॥ ७-१९३-३४ (५४०३६)
तस्य द्रोणो धनुश्छित्त्वा विद्धवा चैनं शिलीमुखैः ।
मर्माण्यभ्यहनद्भूयः स व्यथां परमामगात् ॥ ७-१९३-३५ (५४०३७)
ततो भीमो दृढक्रोधो द्रोणस्याश्लिष्य तं रथम् ।
शनकैरिव राजेन्द्र द्रोणं वचनमब्रवीत् ॥ ७-१९३-३६ (५४०३८)
यदि नाम न युध्येरञ्शिक्षिता ब्रह्मबन्धवः ।
स्वकर्मभिरसन्तुष्टा न स्म क्षत्रं क्षयं व्रजेत् ॥ ७-१९३-३७ (५४०३९)
अहिंसां सर्वभूतेषु धर्मं ज्यायस्तरं विदुः ।
तस्य च ब्राह्मणो मूलं भवांश्च ब्रह्मवित्तमः ॥ ७-१९३-३८ (५४०४०)
श्वपाकवन्म्लेच्छगणान्हत्वा चान्यान्पृथग्विधान् ।
ग्भरन्ति हि सुतान्दारांस्तद्वदज्ञानमोहिताः'॥ ७-१९३-३९ (५४०४१)
अज्ञानान्मूढवद्ब्रह्मन्पुत्रदारधनेप्सया ।
एकस्यार्थे बहून्हत्वा पुत्रस्याधर्मविद्यया ।
स्वकर्मस्थान्विकर्मस्थो न व्यपत्रपसे कथम् ॥ ७-१९३-४० (५४०४२)
ग्आचारहीन निर्लज्ज ब्रह्मवन्धो वरायुध ।
इदानीं तिष्ठ दुर्बुद्धे न मे जीवन्विमोक्ष्यसे ॥ ७-१९३-४१ (५४०४३)
यस्यार्थे शस्त्रमादाय यमपेक्ष्य च जीवसि ।
स चाद्य पतितः शेते पृष्टेनावेदितस्तवः ॥ ७-१९३-४२ (५४०४४)

ग्स वै च निहतः शेते तव पुत्रः सुमन्दधीः'।
धर्मराजस्य तद्वाक्यं नाभिशङ्कितुमर्हसि ॥ ७-१९३-४३ (५४०४५)
एवमुक्तस्ततो द्रोणो भीमेनोत्सृज्य तद्धनुः ।
ग्सन्न्यासाय शरीरस्य योक्ष्यमाणः स वै द्विजः'।
सर्वाण्यस्त्राणि धर्मात्मा हातुकामोऽभ्यभापत ॥ ७-१९३-४४ (५४०४६)
ग्कर्णं दुर्योधनं राजंस्त्वरमाणः पराक्रमम्'।
कर्णकर्ण महेष्वास कृप दुर्योधनेति च ॥ ७-१९३-४५ (५४०४७)
सङ्ग्रामे क्रियतां यत्नो ब्रवीम्येष पुनःपुनः ।
पाण्डवेभ्यः शिवं वोस्तु शस्त्रमभ्युत्सृजाम्यहम् ।
इति तत्र महाराज प्राक्रोशद्द्रौणिमेव च ॥ ७-१९३-४६ (५४०४८)
उत्सृज्य च रणे शस्त्रं रथोपस्थे निविश्य च ।
अभयं सर्वभूतानां प्रददौ योगमीयिवान् ॥ ७-१९३-४७ (५४०४९)
तस्य तच्छिद्रनाज्ञाय धृष्टद्युम्नः प्रतापवान् ।
सशरं तद्धनुर्घोरं सन्न्यस्याथ रथे ततः ।
खड्गी रथादवप्लुत्य सहसा द्रोणमभ्ययात् ॥ ७-१९३-४८ (५४०५०)
ग्प्रद्रुते त्वथ द्रोणाय धृष्टद्युम्ने महारथे'।
हाहाकृतानि भूतानि मानुषाणीतराणि च ॥ ७-१९३-४९ (५४०५१)
द्रोणं तथागतं दृष्ट्वा धृष्टद्युम्नवशं गतम् ।
हाहाकारं भृशं चक्रुरहो धिगिति चाब्रुवन् ॥ ७-१९३-५० (५४०५२)
द्रोणोऽपि शस्त्राण्युत्सृज्य परमं साङ्ख्यमास्थितः ।
तथोक्त्वा योगमास्थाय ज्योतिर्भूतो महातपाः ॥ ७-१९३-५१ (५४०५३)
पुराणं पुरुषं विष्णुं जगाम मनसा परम् ।
मुखं किञ्चित्समुन्नाम्य विष्टब्योरस्तथाग्रतः ॥ ७-१९३-५२ (५४०५४)
निमीलिताक्षः सत्वस्थो निक्षिप्य हृदि धारणाम् ।
ओमित्येकाक्षरं ब्रह्म ज्योतिर्भूतो महातपाः ॥ ७-१९३-५३ (५४०५५)
स्मरित्वा देवदेवेशमक्षरं परमं प्रभुम् ।
दिवमाक्रामदाचार्यः साक्षात्सद्भिर्दुराक्रमाम् ॥ ७-१९३-५४ (५४०५६)
ग्मूर्धानं तस्य निर्भिद्य ज्योती राजन्महात्मनः ।
जगाम परमं स्थानं देहं न्यस्य रथोत्तमे'॥ ७-१९३-५५ (५४०५७)
द्वौ सूर्याविति नो बुद्धिरासीत्तस्मिंस्तथागते ।
एकरूपमिवाभासीज्योतिर्भिः पूरितं नभः ॥ ७-१९३-५६ (५४०५८)
समपद्यत चोल्काभं द्रोणस्य निधने तदा ।
निमेषमात्रेण च तज्ज्योतिरन्तरधीयत ॥ ७-१९३-५७ (५४०५९)
आसीत्किलकिलाशब्दः प्रहृष्टानां दिवौकसाम् ।
ब्रह्मलोकगते द्रोणे धृष्टद्युम्ने च मोहिते ॥ ७-१९३-५८ (५४०६०)
वयमेव तदाऽद्राक्ष्म पञ्च मानुषयोनयः ।

योगयुक्तं महात्मानं गच्छन्तं परमां गतिम् ॥ ७-१९३-५९ (५४०६१)
अहं धनञ्जयः पार्थः कृपः शारद्वतो द्विजः ।
वासुदेवश्च वार्ष्णेयो धर्मपुत्रश्च पाण्डवः ॥ ७-१९३-६० (५४०६२)
अन्ये तु सर्वे नापश्यन्भारद्वाजस्य धीमतः ।
महिमानं महाराज योगयुक्तस्य गच्छतः ।
ब्रह्मलोकं महद्दिव्यं देवगुह्यं हि तत्परम् ॥ ७-१९३-६१ (५४०६३)
गतिं परमिकां प्राप्तमजानन्तो नृयोनयः ।
नापश्यन्गाच्छमानं हि तं सार्धमृषिपुङ्गवैः ।
आचार्यं योगमास्थाय ब्रह्मलोकमरिन्दमम् ॥ ७-१९३-६२ (५४०६४)
वितुन्नाङ्गं शरव्रातैरन्यस्तायुधमसृक्क्षरम् ।
विकृष्य पार्षतः खड्गं क्रोधामर्षवशं गतः ।
दृश्यमानः सर्वभूतैः केशपक्षे परामृशत् ॥ ७-१९३-६३ (५४०६५)
तस्य मूर्धानमालम्ब्य गतसत्वस्य देहिनः ।
किञ्चिदब्रुवतः कायाद्विचकर्तासिना शिरः ॥ ७-१९३-६४ (५४०६६)
हर्षेण महता महता युक्तो भारद्वाजे निपातिते ।
सिंहनादरवं चक्रे भ्रामयन्खड्गमाहवे ॥ ७-१९३-६५ (५४०६७)
आकर्णपलितः श्यामो वयसाऽशीतिपञ्चकः ।
त्वत्कृते व्यचरत्सङ्ख्ये स तु षोडशवर्षवत् ॥ ७-१९३-६६ (५४०६८)
उक्तवाश्च महाबाहुः कुन्तीपुत्रो धनञ्जयः ।
जीवन्तमानयाचार्यं मा वधीर्द्रुपदात्मज ॥ ७-१९३-६७ (५४०६९)
न हन्तव्यो न हन्तव्य इति ते सैनिकाश्च ह ।
उत्क्रोशन्नर्जुनश्चैव सानुक्रोशस्तमाव्रजत् ॥ ७-१९३-६८ (५४०७०)
क्रोशमानेऽर्जुने चैव पार्थिवेषु च सर्वशः ।
धृष्टद्युम्नोऽवधीद्द्रोणं रथतल्पे नरर्षभम् ॥ ७-१९३-६९ (५४०७१)
शोणितेन परिक्लिन्नो रथाद्भूमिमथापतत् ।
लोहिताङ्ग इवादित्यो दुर्धर्षः समपद्यत ॥ ७-१९३-७० (५४०७२)
एवं तं निहतं सङ्ख्ये ददृशे सैनिको जनः ।
धृष्टद्युम्नस्तु तद्राजन्भारद्वाजशिरोऽहरत् ॥ ७-१९३-७१ (५४०७३)
तावकानां महेष्वासः प्रमुखे तत्समाक्षिपत् ।
ते तु दृष्ट्वा शिरो राजन्भारद्वाजस्य तावकाः ॥ ७-१९३-७२ (५४०७४)
पलायनकृतोत्साहा दुद्रुवः सर्वतोदिशम् ।
द्रोणस्तु दिवमास्थाय नक्षत्रपथमाविशत् ॥ ७-१९३-७३ (५४०७५)
अहमेव तदाऽद्राक्षं द्रोणस्य निधनं नृप ।
ऋषेः प्रसादात्कृष्णस्य सत्यवत्याः सुतस्य च ॥ ७-१९३-७४ (५४०७६)
विधूमामिह संयान्तीमुल्कां प्रज्वलितामिव ।
अपश्याम दिवं स्तब्ध्वा गच्छन्तं तं महाद्युतिम् ॥ ७-१९३-७५ (५४०७७)

हते द्रोणे निरुत्साहाः कुरुपाण्डवसृञ्जयाः ।
अभ्यद्रवन्महावेगास्ततः सैन्यं व्यदीर्यत ॥ ७-१९३-७६ (५४०७८)
निहता हतभूयिष्ठाः सङ्ग्रामे निशितैः शरैः ।
तावका निहते द्रोणे गतासव इवाभवन् ॥ ७-१९३-७७ (५४०७९)
पराजयमथावाप्य परत्र च महद्भयम् ।
उभयेनैव ते हीना व्यनिन्दन्मतिमात्मनः ॥ ७-१९३-७८ (५४०८०)
अन्विच्छन्तः शरीरं तु भारद्वाजस्य पार्थिवाः ।
नान्वगच्छन्महाराज कबन्धायुतसङ्कुले ॥ ७-१९३-७९ (५४०८१)
ग्पतिते त्वथ संरब्धे सेनायां तत्र भारत ।
उदिष्ठन्कबन्धानां सहस्राण्येकविंशतिः ॥ ७-१९३-८० (५४०८२)
शोणितेन परिक्लिन्ना रणभूमिश्च भारत ।
लोहितार्द्र इवादित्यो दुर्दर्शश्चाभवत्तदा'॥ ७-१९३-८१ (५४०८३)
पाण्डवास्तु जयं लब्ध्वा परत्र च महद्यशः ।
बाणशङ्खरवांश्चक्रुः सिंहनादांश्च पुष्कलान् ॥ ७-१९३-८२ (५४०८४)
भीमसेनस्ततो राजन्धृष्टद्युम्नश्च पार्षतः ।
वरूथिन्यामनृत्येतां परिष्वज्य परस्परम् ॥ ७-१९३-८३ (५४०८५)
अब्रवीच्च तदा भीमः पार्षतं शत्रुतापनम् ।
भूयोऽहं त्वां परिष्वज्य परिवक्ष्यामि पार्षत ।
सूतपुत्रे हते पापे धार्तराष्ट्रे च संयुगे ॥ ७-१९३-८४ (५४०८६)
एतावदुक्त्वा भीमस्तु हर्षेण महता युतः ।
बाहुशब्देन पृथिवीं कम्पयामास पाण्डवः ॥ ७-१९३-८५ (५४०८७)
तस्य शब्देन वित्रस्ताः प्राद्रवंस्तावका युधि ।
क्षत्रधर्मं समुत्सृज्य पलायनपरायणाः ॥ ७-१९३-८६ (५४०८८)
पाण्डवास्तु जयं लब्धा हृष्टा ह्यासन्विशाम्पते ।
अरिक्षयं च सङ्ग्रामे तेन ते सुखमाप्नुवन् ॥ ॥ ७-१९३-८७ (५४०८९)

इति श्रीमन्महाभारते द्रोणपर्वणि द्रोणवधपर्वणि
पञ्चदशदिवसयुद्धे त्रिनवत्यधिकशततमोऽध्यायः ॥ १९३ ॥
Mahabharata - Drona Parva - Chapter Footnotes

५-१९३-१२ एषो हीति सन्धिरार्षः ॥
५-१९३-२२ ब्रह्मवादानां वेदतुल्यानां वचनानाम् । द्वितीयार्थे
षष्ठी। श्रुत्येति शेषः ॥
५-१९३-क कुण्डलिताः २२ श्लोकाः झपुस्तकएव दृश्यन्ते। ५-१९३-४२
पृष्ठेन त्वया पृष्ठेन युधिष्ठिरेण आवेदितः हत इति
निवेदितः। ।

५-१९३-७८ परत्र च महद्भयमिति पलायनस्य परलोकविरुद्धत्वात्
। उभयेन लोकद्वयेन हीना रहिताः ॥
५-१९३-१९३ त्रिनवत्यधिकशततमोऽध्यायः ॥

---

द्रोनपर्व-अध्यय१९४
॥ श्रीः ॥
७.१९४. अध्यायः १९४

Mahabharata - Drona Parva - Chapter Topics
दुर्योधनचोदनया कृपेण द्रोणवधं श्रावितस्याश्वत्थाम्नः
कोपोदयः ॥१ ॥

Mahabharata - Drona Parva - Chapter Text

७-१९४-० (५४०९०)
सञ्जय उवाच। ७-१९४-०क्ष् (४७७६)
ततो द्रोणे हते राजन्कुरवः शस्त्रपीडिताः ।
हतप्रवीरा विध्वस्ता भृशं शोकपरायणाः ॥ ७-१९४-१ (५४०९१)
उदीर्णांश्च परान्दृष्ट्वा हर्षमाणान्पुनः पुनः ।
अश्रुपूर्णेक्षणास्त्रस्ता दीनास्त्वासन्विशाम्पते ॥ ७-१९४-२ (५४०९२)
विचेतसो हतोत्साहाः कश्मलाभिहतौजसः ।
आर्तस्वरेण महता पुत्रं ते पर्यवारयन् ॥ ७-१९४-३ (५४०९३)
वेषण्णवदना दीना वीक्षमाणा दिशो दश ।
अश्रुकण्ठा यथा दैत्या हिरण्याक्षे पुरा हते ॥ ७-१९४-४ (५४०९४)
स तैः परिवृतो राजा त्रस्तैः क्षुद्रमृगैरिव ।
अशक्नुवन्नवस्थातुमपायात्तनयस्तव ॥ ७-१९४-५ (५४०९५)
क्षुत्पिपासापरिम्लानास्ते योधास्तव भारत ।
आदित्येनेव सन्तप्ता भृशं विमनसोऽभवन् ॥ ७-१९४-६ (५४०९६)
भास्करस्येव पतनं समुद्रस्येव शोषणम् ।
विपर्यासं यथा मेरोर्वासवस्येव निर्जयम् ॥ ७-१९४-७ (५४०९७)
अप्रेक्षणीयं तद्दृष्ट्वा भारद्वाजस्य पातनम् ।
त्रस्तरूपतरा राजन्कौरवाः प्राद्रवन्भयात् ॥ ७-१९४-८ (५४०९८)
गान्धारराजः शकुनिस्त्रस्तस्त्रस्ततरैः सह ।
हतं रुक्मरथं श्रुत्वा प्राद्रवत्सहितो रथैः ॥ ७-१९४-९ (५४०९९)
वरूथिनीं वेगवतीं विद्रुतां सपताकिनीम् ।
परिगृह्य महासेनां सूतपुत्रोऽपयाद्भयात् ॥ ७-१९४-१० (५४१००)

रथनागाश्वकलिलां पुरस्कृत्य तु वाहिनीम् ।
मद्राणामीश्वरः शल्यो वीक्षमाणोऽपयाद्भयात् ॥ ७-१९४-११ (५४१०१)
हतप्रवीरैर्भूयिष्ठैर्ध्वजैर्बहुपताकिभिः ।
वृतः शारद्वतोऽगच्छत्कष्टङ्कष्टमिति ब्रुवन् ॥ ७-१९४-१२ (५४१०२)
भोजनीकेन शिष्टेन कलिङ्गारट्टबाह्लिकैः ।
कृतवर्मा वृतो राजन्प्रायात्सुजवनैर्हयैः ॥ ७-१९४-१३ (५४१०३)
पदातिगणसंयुक्तस्त्रस्तो राजन्भयार्दितः ।
उलूकः प्राद्रवत्तत्र दृष्ट्वा द्रोणं निपातितम् ॥ ७-१९४-१४ (५४१०४)
दर्शनीयो युवा चैव शौर्येण कृतलक्षणः ।
दुःशासनो भृशोद्विग्नः प्राद्रवद्गजसंवृतः ॥ ७-१९४-१५ (५४१०५)
रथानामयुतं गृह्य त्रिसाहस्रं च दन्तिनाम् ।
वृषसेनो ययौ तूर्णं दृष्ट्वा द्रोणं निपातितम् ॥ ७-१९४-१६ (५४१०६)
गजाश्वरथसंयुक्तो वृतश्चैव पदातिभिः ।
दुर्योधनो महाराज प्रायात्तत्र महारथः ॥ ७-१९४-१७ (५४१०७)
संशप्तकगणान्गृह्य हतशेषान्किरीटिना ।
सुशर्मा प्राद्रावद्राजन्दृष्ट्वा द्रोणं निपातितम् ॥ ७-१९४-१८ (५४१०८)
गजान्रथान्समारुह्य व्युदस्य च हयाञ्जनाः ।
प्राद्रवन्सर्वतः सङ्ख्ये दृष्ट्वा रुक्मरथं हतम् ॥ ७-१९४-१९ (५४१०९)
त्वरयन्तः पितॄनन्ये भ्रातॄनन्येऽथ मातुलान् ।
पुत्रानन्ये वयस्यांश्च प्राद्रवन्कुरवस्तदा ॥ ७-१९४-२० (५४११०)
चोदयन्तश्च सैन्यानि स्वस्त्रीयांश्च तथाऽपरे ।
सम्बन्धिनस्तथाऽन्ये च प्राद्रवन्त दिशो दश ॥ ७-१९४-२१ (५४१११)
प्रकीर्णकेशा विध्वस्ता न द्वावेकत्र धावतः ।
नेदमस्तीति मन्वाना हतोत्साहा हतौजसः ॥ ७-१९४-२२ (५४११२)
उत्सृज्य कवचानन्ये प्राद्रवंस्तावका विभो ।
अन्योन्यं ते समाक्रोशन्सैनिका भरतर्षभ ॥ ७-१९४-२३ (५४११३)
तिष्ठतिष्ठेति न च ते स्वयं तत्रावतस्थिरे ।
धुर्यानुन्मुच्य च रथाद्धतसूतात्स्वलङ्कृतान् ।
अधिरुह्य हयान्योधाः क्षिप्रं पद्भिरचोदयन् ॥ ७-१९४-२४ (५४११४)
द्रमाणे तथा सैन्ये त्रस्तरूपे हतौजसि ।
प्रतिस्रोत इव ग्राहो द्रोणपुत्रः परानियात् ॥ ७-१९४-२५ (५४११५)
तस्यासीत्सुमहद्युद्धं शिखण्डिप्रमुखैर्गणैः ।
प्रभद्रकैश्च पाञ्चालैश्चेदिभिश्च सकेकयैः ॥ ७-१९४-२६ (५४११६)
हत्वा बहुविधाः सेनाः पाण्डूनां युद्धदुर्मदः ।
कथञ्चित्सङ्कटान्मुक्तो मत्तद्विरदविक्रमः ॥ ७-१९४-२७ (५४११७)
द्रवमाणं बलं दृष्ट्वा पलायनकृतक्षणम् ।

दुर्योधनं समासाद्य द्रोणपुत्रोऽब्रवीदिदम् ॥ ७-१९४-२८ (५४११८)
किमियं द्रवते सेना त्रस्तरूपेव भारत ।
द्रवमाणां च राजेन्द्र नावस्थापयसे रणे ॥ ७-१९४-२९ (५४११९)
त्वं चापि न यथा पूर्वं प्रकृतिस्थो नराधिप ।
कर्णप्रभृतयश्चेमे नावतिष्ठन्ति पार्थिव ॥ ७-१९४-३० (५४१२०)
अन्येष्वपि च युद्धेषु नैव सेनाऽद्रवत्तदा ।
कच्चित्क्षेमं महाबाहो तव सैन्यस्य भारत ॥ ७-१९४-३१ (५४१२१)
कस्मिन्निदं हते राजन्रथसिंहे बलं तव ।
एतामवस्थां संप्राप्तं तन्ममाचक्ष्व कौरव ॥ ७-१९४-३२ (५४१२२)
तत्तु दुर्योधनः श्रुत्वा द्रोणपुत्रस्य भाषितम् ।
घोरमप्रियमाख्यातुं नाशक्नोत्पार्थिवर्षभः ॥ ७-१९४-३३ (५४१२३)
भिन्ना नौरिव ते पुत्रो मग्नः शोकमहार्णवे ।
बाष्पेणापिहितो दृष्ट्वा द्रोणपुत्रं रथे स्थितम् ॥ ७-१९४-३४ (५४१२४)
ततः शारद्वतं राजा सव्रीडमिदमब्रवीत् ।
शंसात्र भद्रं ते सर्वं यथा सैन्यमिदं द्रुतम् ॥ ७-१९४-३५ (५४१२५)
अथ शारद्वतो राजन्नार्तिमार्च्छन्पुनःपुनः ।
शशंस द्रोणपुत्राय यथा द्रोणो निपातितः ॥ ७-१९४-३६ (५४१२६)
कृप उवाच। ७-१९४-३७क्ष् (४७७७)
वयं द्रोणं पुरस्कृत्य पृथिव्यां प्रवरं रथम् ।
प्रावर्तयाम सङ्ग्रामं पाञ्चालैरेव केवलम् ॥ ७-१९४-३७ (५४१२७)
ततः प्रवृत्ते सङ्ग्रमे विमिश्राः कुरुसोमकाः ।
अन्योन्यमभिगर्जन्तः शस्त्रैर्देहानपातयन् ॥ ७-१९४-३८ (५४१२८)
वर्तमाने तथा युद्धे क्षीयमाणेषु संयुगे ।
धार्तराष्ट्रेषु सङ्क्रुद्धः पिता तेऽस्त्रमुदैरयत् ॥ ७-१९४-३९ (५४१२९)
ततो द्रोणो ब्राह्ममस्त्रं विकुर्वाणो नरर्षभः ।
व्यहनच्छात्रवान्भल्लैः शतशोऽथ सहस्रशः ॥ ७-१९४-४० (५४१३०)
पाण्डवाः केकया मात्स्याः पाञ्चालाश्च विशेषतः ।
सङ्ख्ये द्रोणरथं प्राप्य व्यनशन्कालचोदिताः ॥ ७-१९४-४१ (५४१३१)
सहस्रं नरसिंहानां द्विसाहस्रं च दन्तिनाम् ।
द्रोणो ब्रह्मास्त्रयोगेन प्रेषयामास मृत्यवे ॥ ७-१९४-४२ (५४१३२)
आकर्णपलितश्यामो वयसाऽशीतिपञ्चकः ।
रणे पर्यचरद्द्रोणो वृद्धः षोडशवर्षवत् ॥ ७-१९४-४३ (५४१३३)
क्लिश्यमानेषु सैन्येषु वध्यमानेषु राजसु ।
अमर्षवशमापन्नाः पाञ्चाला विमुखाऽभवन् ॥ ७-१९४-४४ (५४१३४)
तेषु किञ्चित्प्रभग्नेषु विमुखेषु सपत्नजित् ।
दिव्यमस्त्रं विकुर्वाणो बभूवार्क इवोदितः ॥ ७-१९४-४५ (५४१३५)

स मध्यं प्राप्य पाण्डूनां शररश्मिः प्रतापवान् ।
मध्यं गत इवादित्यो दुष्प्रेक्ष्यस्ते पिताऽभवत् ॥ ७-१९४-४६ (५४१३६)
ते दह्यमाना द्रोणेन सूर्येणेव विराजता ।
दग्धवीर्या निरुत्साहा बभूवुर्गतचेतसाः ॥ ७-१९४-४७ (५४१३७)
तान्दृष्ट्वा पीडितान्बाणैर्द्रोणेन मधुसूदनः ।
जयैषी पाण्डुपुत्राणामिदं वचनमब्रवीत् ॥ ७-१९४-४८ (५४१३८)
नैष जातु नरैः शक्यो जेतुं शस्त्रभृतां वरः ।
अपि वृत्रहणा सङ्ख्ये रथयूथपयूथपः ॥ ७-१९४-४९ (५४१३९)
ते यूयं धर्ममुत्सृज्य जयं रक्षत पाण्डवाः ।
यथा वः संयुगे सर्वान्न हन्याद्रुक्मवाहनः ॥ ७-१९४-५० (५४१४०)
अश्वत्थाम्नि हते नैष युध्येदिति मतिर्मम ।
हतं तं संयुगे कश्चिदाख्यात्वस्मै मृषा नरः ॥ ७-१९४-५१ (५४१४१)
एतन्नारोचयद्वाक्यं कुन्तीपुत्रो धनञ्जयः ।
अरोचयंस्तु सर्वेऽन्ये कृच्छ्रेण तु युधिष्ठिरः ॥ ७-१९४-५२ (५४१४२)
भीमसेनस्तु सव्रीडमब्रवीत्पितरं तव ।
अश्वत्थामा हत इति तं नाबुध्यत ते पिता ॥ ७-१९४-५३ (५४१४३)
स शङ्कमानस्तन्मिथ्या धर्मराजमपृच्छत ।
हतं वाऽप्यहतं वाऽऽजौ त्वां पिता पुत्रवत्सलः ॥ ७-१९४-५४ (५४१४४)
तमतथ्यभये मग्नो जये सक्तो युधिष्ठिरः ।
अश्वत्थामानमायोधे हतं दृष्ट्वा महागजम् ॥ ७-१९४-५५ (५४१४५)
भीमेन गिरिवर्ष्माणं मालवस्येन्द्रवर्मणः ।
उपसृत्य तदा द्रोणमुच्चैरिदमुवाच ह ॥ ७-१९४-५६ (५४१४६)
यस्यार्थे शस्त्रमादत्से यमवेक्ष्य च जीवसि ।
पुत्रस्ते दयितो नित्यं सोश्वत्थामा निपातितः ॥ ७-१९४-५७ (५४१४७)
शेते विनिहतो भूमौ वने सिंहशिशुर्यथा ॥  ७-१९४-५८ (५४१४८)
जानन्नप्यनृतस्याथ दोषान्स द्विजसत्तमम् ।
अव्यक्तमब्रवीद्राजा हतः कुञ्जर इत्युत ॥ ७-१९४-५९ (५४१४९)
स त्वां निहतमाक्रन्दे श्रुत्वा सन्तापतापितः ।
नियम्य दिव्यान्यस्त्राणि नायुध्यत यथा पुरा ॥ ७-१९४-६० (५४१५०)
तं दृष्ट्वा परमोद्विग्नं शोकातुरमचेतसम् ।
पाञ्चालराजस्य सुतः क्रुरकर्मा समाद्रवत् ॥ ७-१९४-६१ (५४१५१)
तं दृष्ट्वा परमोद्विग्नं शोकातुरमचेतसम् ।
दिव्यान्यस्त्राण्यथोत्सृज्य रणे प्रायमुपाविशत् ॥ ७-१९४-६२ (५४१५२)
ततोऽस्य केशान्सव्येन गृहीत्वा पाणिना तदा ।
पार्षतः क्रोशमानानां वीराणामच्छिनच्छिरः ॥ ७-१९४-६३ (५४१५३)
न हन्तव्यो न हन्तव्य इति ते सर्वतोऽब्रुवन् ।

तथैव चार्जुनो वाहादवरुह्यैनमाद्रवत् ॥ ७-१९४-६४ (५४१५४)
उद्यम्य त्वरितो बाहुं ब्रुवाणश्च पुनःपुनः ।
जीवन्तमानयाचार्यं मावधीरिति धर्मवित् ॥ ७-१९४-६५ (५४१५५)
तथा निवार्यमाणेन कौरवैरर्जुनेन च ।
हत एव नृशंसेन पिता तव नरर्षभ ॥ ७-१९४-६६ (५४१५६)
सैनिकाश्च ततः सर्वे प्राद्रवन्त भयार्दिताः ।
वयं चापि निरुत्साहा हते पितरि तेऽनघ ॥ ७-१९४-६७ (५४१५७)
सञ्जय उवाच। ७-१९४-६८क्ष् (४७७८)
तच्छ्रुत्वा द्रोणपुत्रस्तु निधनं पितुराहवे ।
क्रोधमाहारयत्तीव्रं दण्डाहत इवोरगः ॥ ७-१९४-६८ (५४१५८)
ततः क्रुद्धो रणे द्रौणिर्भृशं जज्वाल मारिष ।
यथेन्धनं महत्प्राप्य प्राज्वलद्धव्यवाहनः ॥ ७-१९४-६९ (५४१५९)
तलं तलेन निष्पिष्य दन्तैर्दन्तानुपास्पृशत् ।
निःश्वसन्नुरगो यद्वल्लोहिताक्षोऽभवत्तदा ॥ ॥ ७-१९४-७० (५४१६०)

इति श्रीमन्महाभारते द्रोणपर्वणि नारायणास्त्रमोक्षपर्वणि
पञ्चदशदिवसयुद्धे चतुर्नवत्यधिकशततमोऽध्यायः ॥ १९४ ॥

---

द्रोनपर्व-अध्यय१९५
॥ श्रीः ॥
७.१९५. अध्यायः १९५

Mahabharata - Drona Parva - Chapter Topics
धृतराष्ट्रेण सञ्जयम्प्रति द्रोणवधश्राविणाश्वत्थाम्ना किमुक्तमिति
प्रश्नः ॥ १ ॥

Mahabharata - Drona Parva - Chapter Text

७-१९५-० (५४१६१)
धृतराष्ट्र उवाच। ७-१९५-०क्ष् (४७७९)
अधर्मेण हतं श्रुत्वा धृष्टद्युम्नेन सञ्जय ।
ब्राह्मणं पितरं वृद्धमश्वत्थामा किमब्रवीत् ॥ ७-१९५-१ (५४१६२)
मानवं वारुणाग्नेयं ब्राह्ममस्त्रं च वीर्यवान् ।
ऐन्द्रं नारायणं चैव यस्मिन्नित्यं प्रतिष्ठितम् ॥ ७-१९५-२ (५४१६३)
तमधर्मेण धर्मिष्ठं धृष्टद्युम्नेन संयुगे ।
श्रुत्वा निहतमाचार्यं सोऽश्वत्थामा किमब्रवीत् ॥ ७-१९५-३ (५४१६४)

येन रामादवाप्येह धनुर्वेदं महात्मना ।
प्रोक्तान्यस्त्राणि दिव्यानि पुत्राय गुणकाङ्क्षिणा ॥ ७-१९५-४ (५४१६५)
एकमेव हि लोकेऽस्मिन्नात्मतो गुणवत्तरम् ।
इच्छन्ति पुरुषाः पुत्रं लोके नान्यं कथञ्चन ॥ ७-१९५-५ (५४१६६)
आचार्याणां भवन्त्येव रहस्यानि महात्मनाम् ।
तानि पुत्राय वा दद्युः शिष्यायानुगताय वा ॥ ७-१९५-६ (५४१६७)
स शिष्यः प्राप्य तत्सर्वं सविशेषं च सञ्जय ।
शूरः शारद्वतीपुत्रः सङ्ख्ये द्रोणादनन्तरः ॥ ७-१९५-७ (५४१६८)
रामस्य तु समः शस्त्रे पुरन्दरसमो युधि ।
कार्तवीर्यसमो वीर्ये बृहस्पतिसमो मतौ ॥ ७-१९५-८ (५४१६९)
महीधरसमः स्थैर्ये तेजसाऽग्निसमो युवा ।
समुद्र इव गाम्भीर्ये क्रोधे चाशीविषोपमः ॥ ७-१९५-९ (५४१७०)
स रथी प्रथमो लोके दृढधन्वा जितक्लमः ।
शीघ्रोऽनिल इवाक्रन्दे चरन्क्रुद्ध इवान्तकः ॥ ७-१९५-१० (५४१७१)
अस्यता येन सङ्ग्रामे धरण्यभिनिपीडिता ।
ग्मेघस्तनितनिर्घोषं कम्पते भयविह्वलाः'।
यो न व्यथति सङ्ग्रमे वीरः सत्यपराक्रमः ॥ ७-१९५-११ (५४१७२)
वेदस्नातो व्रतस्नातो धनुर्वेदे च पारगः ।
महोदधिरिवाक्षोभ्यो रामो दाशरथिर्यथा ॥ ७-१९५-१२ (५४१७३)
तमधर्मेण धर्मिष्ठं धृष्टद्युम्नेन संयुगे ।
श्रुत्वा निहतमाचार्यमश्वत्थामा किमब्रवीत् ॥ ७-१९५-१३ (५४१७४)
धृष्टद्युम्नस्य यो मृत्युः सृष्टस्तेन महात्मना ।
यथा द्रोणस्य पाञ्चाल्यो यज्ञसेनसुतोऽभवत् ॥ ७-१९५-१४ (५४१७५)
तं नृशंसेन पापेन क्रूरेणादीर्घदर्शिना ।
श्रुत्वा निहतमाचार्यमश्वत्थामा किमब्रवीत् ॥ ॥ ७-१९५-१५ (५४१७६)

इति श्रीमन्महाभारते द्रोणपर्वणि नारायणास्त्रमोक्षपर्वणि
पञ्चदशदिवसयुद्धे पञ्चनवत्यधिकशततमोऽध्यायः ॥ १९५ ॥
Mahabharata - Drona Parva - Chapter Footnotes

५-१९५-४ पुत्राय गुरुकाङ्क्षिणे इति क झ पाठः ॥
५-१९५-१९५ पञ्चनवत्यधिकशततमोऽध्यायः ॥

---

द्रोनपर्व-अध्यय१९६
॥ श्रीः ॥
७.१९६. अध्यायः १९६

Mahabharata - Drona Parva - Chapter Topics
अश्वत्थाम्ना सक्रोधं युधिष्ठिराद्युपालभ्यः ॥१ ॥
तथा द्रोणस्य नारायणास्त्रलाभप्रकारादिकथनपूर्वकं तेन
पाण्डवादिवध प्रतिज्ञानम् ॥२ ॥

Mahabharata - Drona Parva - Chapter Text

७-१९६-० (५४१७७)
सञ्जय उवाच। ७-१९६-०क्ष् (४७८०)
छद्मना निहतं श्रुत्वा पितरं पापकर्मणा ।
बाष्पेणापूर्यत द्रौणी रोषेण च नरर्षभ ॥ ७-१९६-१ (५४१७८)
तस्य क्रुद्धस्य राजेन्द्र वपुर्दीप्तमदृश्यत ।
अन्तकस्येव भूतानि जिहीर्षोः कालपर्यये ॥ ७-१९६-२ (५४१७९)
अश्रूपूर्णे ततो नेत्रे व्यपमृज्य पुनः पुनः ।
उवाच कोपान्निःश्वस्य दुर्योधनमिदं वचः ॥ ७-१९६-३ (५४१८०)
पिता मम यथा क्षुद्रैर्न्यस्तशस्त्रो निपातितः ।
धर्मध्वजवता पापं कृतं तद्विदितं मम ।
अनार्यं सुनृशंसं च धर्मपुत्रस्य मे श्रुतम् ॥ ७-१९६-४ (५४१८१)
युद्धेष्वपि प्रवृत्तानां ध्रुवं जयपराजयौ ।
द्वयमेतद्भवेद्राजन्वधस्तत्र प्रशस्यते ॥ ७-१९६-५ (५४१८२)
न्यायवृत्तो वधो यस्तु संङ्ग्रामे युध्यतो भवेत् ।
न स दुःखाय भवति तथा दृष्टो हि स द्विजैः ॥ ७-१९६-६ (५४१८३)
गतः स वीरलोकाय पिता मम न संशयः ।
न शोच्यः पुरुषव्याघ्र यस्तदा निधनं गतः ॥ ७-१९६-७ (५४१८४)
यत्तु धर्मप्रवृतः सन्केशग्रहणमाप्तवान् ।
पश्यतां सर्वसैन्यानां तन्मे मर्माणि कृन्तति ॥ ७-१९६-८ (५४१८५)
मयि जीवति यत्तातः केशग्रहमवाप्तवान् ।
कथमन्ये करिष्यन्ति पुत्रेभ्यः पुत्रिणः स्पृहाम् ॥ ७-१९६-९ (५४१८६)
कामात्क्रोधादविज्ञानाद्दर्षाद्बाल्येन वा पुनः ।
विधर्मकाणि कुर्वन्ति तथा परिभवन्ति च ॥ ७-१९६-१० (५४१८७)
तदिदं पार्षतेनेह महदाधर्मिकं कृतम् ।
अवज्ञाय च मां नूनं नृशंसेन दुरात्मना ॥ ७-१९६-११ (५४१८८)
तस्यानुबन्धं द्रष्टाऽसौ धृष्टद्युम्नः सुदारुणम् ।
अकार्यं परमं कृत्वा मिथ्यावादी च पाण्डवः ॥ ७-१९६-१२ (५४१८९)
यो ह्यसौ छद्मनाऽऽचार्यं शस्त्रं सन्न्यासयत्तदा ।

तस्याद्य धर्मराजस्य भूमिः पास्यति शोणितम् ॥ ७-१९६-१३ (५४१९०)
शपे सत्येन कौरव्य इष्टापूर्तेन चैव ह ।
अहत्वा सर्वपाञ्चालाञ्जीवेयं न कथञ्चन ॥ ७-१९६-१४ (५४१९१)
सर्वोपायैर्यतिष्यामि पाञ्चालानामहं वधे ।
धृष्टद्युम्नं च समरे हन्ताऽहं पापकारिणम् ॥ ७-१९६-१५ (५४१९२)
कर्मणा येन तेनेह मृदुना दारुणेन च ।
पाञ्चालानां वधं कृत्वा शान्तिं लब्धास्मि कौरव ॥ ७-१९६-१६ (५४१९३)
यदर्थं पुरुषव्याघ्र पुत्रानिच्छन्ति मानवाः ।
प्रेत्य चेह च सम्प्राप्तात्त्रायन्ते महतो भयात् ॥ ७-१९६-१७ (५४१९४)
पित्रा तु मम साऽवस्था प्राप्ता निर्बन्धुना यथा ।
मयि शैलप्रतीकाशे पुत्रे शिष्ये च जीवति ॥ ७-१९६-१८ (५४१९५)
धिङ्ममास्त्राणि दिव्यानि धिग्बाहू धिक्पराक्रमम् ।
यं स्म द्रोणः सुतं प्राप्य केशग्रहमवाप्तवान् ॥ ७-१९६-१९ (५४१९६)
स तथाहं करिष्यासि यथा भरतसत्तम ।
परलोकगतस्यापि भविष्याम्यनृणः पितुः ॥ ७-१९६-२० (५४१९७)
आर्येण हि न वक्तव्या कदाचित्स्तुतिरात्मनः ।
पितुर्वधममृष्यंस्तु वक्ष्याम्यद्येह पौरुषम् ॥ ७-१९६-२१ (५४१९८)
अद्य पश्यन्तु मे वीर्यं पाण्डवाः सजनार्दनाः ।
मृद्नतः सर्वसैन्यानि युगान्तमिव कुर्वतः ॥ ७-१९६-२२ (५४१९९)
न हि देवा न गन्धर्वा नासुरा न च राक्षसाः ।
अद्य शक्ता रणे जेतुं रथस्थं मां नरर्षभाः ॥ ७-१९६-२३ (५४२००)
मदन्यो नास्ति लोकेऽस्मिन्नर्जुनाद्वाऽस्त्रवित्क्वचित् ।
अहं हि ज्वलतां मध्ये मयूखानामिवांशुमान् ।
प्रयोक्ता देवसृष्टानामस्त्राणां पृतनागतः ॥ ७-१९६-२४ (५४२०१)
भृशमिष्वसनादद्य मत्प्रयुक्ता महाहवे ।
दर्शयन्तः शरा वीर्यं प्रमथिष्यन्ति पाण्डवान् ॥ ७-१९६-२५ (५४२०२)
अद्य सर्वा दिशो राजन्धाराभिरिव सङ्कुलाः ।
आवृताः पत्रिभिस्तीक्ष्णैर्द्रष्टारो मामकैरिह ॥ ७-१९६-२६ (५४२०३)
विकिरञ्छरजालानि सर्वतो भैरवस्वनान् ।
शत्रून्निपातयिष्यामि महावात इव द्रुमान् ॥ ७-१९६-२७ (५४२०४)
न हि जानाति बीभत्सुस्तदस्त्रं न जनार्दनः ।
न भीमसेनो न यमौ न च राजा युधिष्ठिरः ॥ ७-१९६-२८ (५४२०५)
न पार्षतो दुरात्माऽसौ न शिखण्डी न सात्यकिः ।
यदिदं मयि कौरव्य सकल्यं सनिवर्तनम् ॥ ७-१९६-२९ (५४२०६)
नारायणाय मे पित्रा प्रणम्य विधिपूर्वकम् ।
उपहारः पुरा दत्तो ब्रह्मरूप उपस्थितः ॥ ७-१९६-३० (५४२०७)

तं स्वयं प्रतिगृह्याथ भगवान्स वरं ददौ ।
वव्रे पिता मे परममस्त्रं नारायणं ततः ॥ ७-१९६-३१ (५४२०८)
अथैनमब्रवीद्राजन्भागवान्देवसत्तमः ।
भविता त्वत्समो नान्यः कश्चिद्युधि नरः क्वचित् ॥ ७-१९६-३२ (५४२०९)
न त्विदं सहसा ब्रह्मन्प्रयोक्तव्यं कथञ्चन ।
न ह्येतदस्त्रमन्यत्र वधाच्छत्रोर्निवर्तते ॥ ७-१९६-३३ (५४२१०)
न चैतच्छक्यते जेतुं को न वध्येत वै प्रभो ।
अवध्यमपि हन्याद्धि तस्मान्नैतत्प्रयोजयेत् ॥ ७-१९६-३४ (५४२११)
अथ सङ्ख्ये रथस्यैव शस्त्राणां च विसर्जनम् ।
प्रयाचनं च शत्रूणां गमनं शरणस्य च ॥ ७-१९६-३५ (५४२१२)
एते प्रशमने योगा महास्त्रस्य परन्तप ।
सर्वथा पीडितो हिंस्यादवध्यान्पीडयन्रणे ॥ ७-१९६-३६ (५४२१३)
तज्जग्राह पिता मह्यमब्रवीच्चैव स प्रभुः ।
त्वं वधिष्यसि सर्वाणि शस्त्रवर्षाण्यनेकशः ।
अनेनास्त्रेण सङ्ग्रामे तेजसा च ज्वलिष्यसि ॥ ७-१९६-३७ (५४२१४)
एवमुक्त्वा स भगवान्दिवमाचक्रमे प्रभुः ।
एतन्नारायणादस्त्रं तत्प्राप्तं पितृबन्धुना ॥ ७-१९६-३८ (५४२१५)
तेनाहं पाण्डवांश्चैव पाञ्चालान्मात्स्यकेकयान् ।
विद्रावयिष्यामि रणे शचीपतिरिवासुरान् ॥ ७-१९६-३९ (५४२१६)
यथायथाऽहमिच्छेयं तथा भूत्वा शरा मम ।
निपतेयुः सपत्नेषु विक्रमत्स्वपि भारत ॥ ७-१९६-४० (५४२१७)
यथेष्टमश्मवर्षेण प्रवर्षिष्ये रणे स्थितः ।
अयोमुखैश्च विहगैर्द्रावयिष्ये महारथान् ॥ ७-१९६-४१ (५४२१८)
परश्वथांश्च निशितानुत्स्रक्ष्येऽहमसंशयम् ॥ ७-१९६-४२ (५४२१९)
सोऽहं नारायणास्त्रेण महता शत्रुतापनः ।
शत्रून्विध्वंसयिष्यामि कदर्थीकृत्य पाण्डवान् ॥ ७-१९६-४३ (५४२२०)
मित्रब्रह्मगुरुद्रोही जाल्मकः सुविगर्हितः ।
पाञ्चालापशदश्चाद्य न मे जीवन्विमोक्ष्यते ॥ ७-१९६-४४ (५४२२१)
तच्छ्रुत्वा द्रोणपुत्रस्य पर्यवर्तत वाहिनी ।
ततः सर्वे महाशङ्खान्दध्मुः पुरुषसत्तमाः ।
भेरीश्चाभ्यहनन्हृष्टा डिण्डिभांश्च सहस्रशः ॥ ७-१९६-४५ (५४२२२)
तथा ननाद वसुधा खुरनेमिप्रपीडिता ।
स शब्दस्तुमुलः खं द्यां पृथिवीं च व्यनादयत् ॥ ७-१९६-४६ (५४२२३)
तं शब्दं पाण्डवाः श्रुत्वा पर्जन्यनिनदोपमम् ।
समेत्य रथिनां श्रेष्ठाः सहिताश्चाप्यमन्त्रयन् ॥ ७-१९६-४७ (५४२२४)
तथोक्त्वा द्रोणपुत्रस्तु वार्युपस्पृश्य भारत ।

प्रादुश्चकार तद्दिव्यमस्त्रं नारायणं तदा ॥ ॥ ७-१९६-४८ (५४२२५)

इति श्रीमन्महाभारते द्रोणपर्वणि नारायणास्त्रमोक्षपर्वणि पञ्चदशदिवसयुद्धे षण्णवत्यधिकशततमोऽध्यायः ॥ १९६ ॥

Mahabharata - Drona Parva - Chapter Footnotes

५-१९६-४ धर्मध्वजवता दाम्भिकेन । तत् अनृतवचनरूपं पापम्। अनार्यं नीचयोग्यं कर्म ॥
५-१९६-१० बाल्येन चापकेन । विधर्मकाणि धर्मविरुद्धानि ॥
५-१९६-१२ अनुबन्धं फलम् । पाण्डवश्च अनुबन्धं द्रष्टेत्यनुषज्यते ॥
५-१९६-२४ मयूखानां मयूखवताम् ॥
५-१९६-२९ कल्यः प्रयोगः । निवर्तनमुपसंहारः ॥
५-१९६-३० ब्रह्मरूपो वेदरूपः । वैदिकैर्मन्त्रैः स्तुतवानित्यर्थः ॥
५-१९६-३४ शक्यते ज्ञातुं केन वध्येदिति प्रभो इति झ । पाठः। तत्र केन प्रत्यस्त्रेण वध्येत् वध्येत इति ज्ञातुमित्यर्थः ॥
५-१९६-३५ रथस्यैव विसर्जनम् । शस्त्राणामपि विसर्जनं च। प्रयाचनं मावधीरिति याचनं। शरणस्य गमनं त्वमेव शरणं न इति कीर्तनं च ॥
५-१९६-३६ पीडितः पीडितं शस्त्रान्तरेण बाधितम् । पुंस्त्वमार्षम् ॥
५-१९६-३८ पितृबन्धुना मया ॥
५-१९६-४४ जाल्मको मूर्ख ॥
५-१९६-१९६ षण्णवत्यधिकशततमोऽध्यायः ॥

---

द्रोनपर्व-अध्यय१९७
॥ श्रीः ॥
७.१९७. अध्यायः १९७

Mahabharata - Drona Parva - Chapter Topics

कुरुसेनाहरवश्रवणभीतेन युधिष्ठिरेण पलायितसेनाप्रतिनिवर्तकप्रश्ने अर्जुनेन तत्कथनपूर्वकं द्रोणवधोपेक्षणादात्मोपालम्भः ॥ १ ॥

Mahabharata - Drona Parva - Chapter Text

७-१९७-० (५४२२६)
सञ्जय उवाच। ७-१९७-०क्ष् (४७८१)

प्रादुर्भूते ततस्तस्मिन्नस्त्रे नारायणे प्रभो ।
प्रावात्सपृषतो वायुरनभ्रे स्तनयित्नुमान् ॥ ७-१९७-१ (५४२२७)
चचाल पृथिवी चापि चुक्षुभे च महोदधिः ।
प्रतिस्रोतः प्रवृत्ताश्च गन्तुं तत्र समुद्रगाः ॥ ७-१९७-२ (५४२२८)
शिखराणि व्यशीर्यन्त गिरीणां तत्र भारत ।
अपसव्यं मृगाश्चैव पाण्डुसेनां प्रचक्रिरे ॥ ७-१९७-३ (५४२२९)
तमसा तावकीर्यन्त सूर्यश्च कलुषोऽभवत् ।
सम्पतन्ति च भूतानि क्रव्यादानि प्रहृष्टवत् ॥ ७-१९७-४ (५४२३०)
देवदानवगन्धर्वास्त्रस्तास्त्वासन्विशाम्पते ।
कथङ्कथाऽभवत्तीव्रा दृष्ट्वा तद्व्याकुलं महत् ॥ ७-१९७-५ (५४२३१)
व्यथिताः सर्वराजानस्त्रस्ताश्चासन्विशाम्पते ।
तद्दृष्ट्वा घोररूपं वै द्रौणेरस्त्रं भयावहम् ॥ ७-१९७-६ (५४२३२)
धृतराष्ट्र उवाच। ७-१९७-७क्ष् (४७८२)
निवर्तितेषु सैन्येषु द्रोणपुत्रेण संयुगे ।
भृशं शोकाभितप्तेन पितुर्वधममृष्यता ॥ ७-१९७-७ (५४२३३)
कुरूनापततो दृष्ट्वा धृष्टद्युम्नस्य रक्षणे ।
को मन्त्रः पाण्डवेष्वासीत्तन्ममाचक्ष्व सञ्जय ॥ ७-१९७-८ (५४२३४)
सञ्जय उवाच। ७-१९७-९क्ष् (४७८३)
प्रागेव विद्रुतान्दृष्ट्वा धार्तराष्ट्रान्युधिष्ठिरः ।
पुनश्च तुमुलं शब्दं श्रुत्वाऽर्जुनमथाब्रवीत् ॥ ७-१९७-९ (५४२३५)
युधिष्ठिर उवाच। ७-१९७-१०क्ष् (४७८४)
आचार्ये निहते द्रोणे धृष्टद्युम्नेन संयुगे ।
निहते वज्रहस्तेन यथा वृत्रे महासुरे ॥ ७-१९७-१० (५४२३६)
नाशंसन्तो जयं युद्धे दीनात्मानो धनञ्जय ।
आत्मत्राणे मतिं कृत्वा प्राद्रवन्कुरवो रणात् ॥ ७-१९७-११ (५४२३७)
केचिद्भ्रान्तै रथैस्तूर्णं निहतैः पार्ष्णियन्तृभिः ।
विपताकध्वजच्छत्रैः पार्थिवाः शीर्णकूबरैः ॥ ७-१९७-१२ (५४२३८)
भग्ननीडैराकुलाश्वैः प्रारुह्यान्यान्विचेतसः ।
भीताः पादैर्हयान्केचित्त्वरयन्तः स्वयं रथान् ॥ ७-१९७-१३ (५४२३९)
भग्नाक्षयुगचक्रैश्च व्याकृष्यन्त समन्ततः ।
रथान्विशीर्णानुत्सृज्य पद्भिः केचिच्च विद्रुताः ॥ ७-१९७-१४ (५४२४०)
हयपृष्ठगताश्चान्ये कृष्यन्तेऽर्धच्युतासनाः ।
गजस्कन्धेषु संस्यूता नाराचैश्चलितासनाः ॥ ७-१९७-१५ (५४२४१)
शरार्तैर्विद्रुतैर्नागैर्हृताः केचिद्दिशो दश ।
विशस्त्रकवचनाश्चान्ये वाहनेभ्यः क्षितिं गताः ॥ ७-१९७-१६ (५४२४२)
सञ्छिन्ना नेमिभिश्चैव मृदिताश्च हयद्विपैः ।

क्रोशन्तस्तात पुत्रेति पलायन्ते परे भयात् ॥ ७-१९७-१७ (५४२४३)
नाभिजानन्ति चान्योन्यं कश्मलाभिहतौजसः ।
पुत्रान्पितॄन्सखीन्भ्रातॄन्समारोप्य दृढक्षतान् ॥ ७-१९७-१८ (५४२४४)
जलेन क्लेदयन्त्यन्ये विमुच्य कवचनान्यपि ।
ग्पलायनपराश्चान्ये योधाः शतसहस्रशः'॥ ७-१९७-१९ (५४२४५)
अवस्थां तादृशीं प्राप्य हते द्रोणे द्रुतं बलम् ।
पुनरावर्तितं केन यदि जानासि शंस मे ॥ ७-१९७-२० (५४२४६)
हयानां हेषतां शब्दः कुञ्जराणां च बृंहताम् ।
रथनेमिस्वनैश्चात्र विमिश्रः श्रूयते महान् ॥ ७-१९७-२१ (५४२४७)
एते शब्दा भृशं तीव्राः प्रवृत्ताः कुरुसागरे ।
मुमुर्मुहुरुदीर्यन्ते कम्पयन्त्यपि मामकान् ॥ ७-१९७-२२ (५४२४८)
य एष तुमुलः शब्दः श्रूयते रोमहर्षणः ।
सेन्द्रानप्येष लोकांस्त्रीन्ग्रसेदिति मतिर्मम ॥ ७-१९७-२३ (५४२४९)
मन्ये वज्रधरस्यैष निनादो भैरवस्वनः ।
द्रोणे हते कौरवार्यं व्यक्तमभ्येति वासवः ॥ ७-१९७-२४ (५४२५०)
प्रहृष्टरोमकूपाः स्मः संविग्नरथकुञ्जराः ।
धनञ्जय गुरुं श्रुत्वा तत्र नादं सुभीषणम् ॥ ७-१९७-२५ (५४२५१)
क एष कौरवान्दीर्णानवस्थाप्य महारथः ।
निवर्तयति युद्धार्थं मृधे देवेश्वरो यथा ॥ ७-१९७-२६ (५४२५२)
अर्जुन उवाच। ७-१९७-२७क्ष् (४७८५)
उद्यम्यात्मानमुग्राय कर्मणे वीर्यमास्थिताः ।
धमन्ति कौरवाः शङ्खान्यस्य वीर्यं समाश्रिताः ॥ ७-१९७-२७ (५४२५३)
यत्र ते संशयो राजन्न्यस्तशस्त्रे गुरौ हते ।
धार्तराष्ट्रानवस्थाप्य क एष नदतीति हि ॥ ७-१९७-२८ (५४२५४)
ह्रीमन्तं तं महाबाहुं मत्तद्विरदगामिनम् ।
ग्इन्द्रविष्मुसमं वीर्ये कोपेऽन्तकमिव स्थितम् ॥ ७-१९७-२९ (५४२५५)
बृहस्पतिसमं बुद्ध्या नीतिमन्तं महारथम्'।
आख्यास्याम्युग्रकर्माणं कुरूणामभयङ्करम् ॥ ७-१९७-३० (५४२५६)
यस्मिञ्जाते ददौ द्रोणो गवां दशशतं धनम् ।
ब्राह्मणेभ्यो महार्हेभ्यः सोऽश्वत्थामैष गर्जति ॥ ७-१९७-३१ (५४२५७)
जातमात्रेण वीरेण येनोच्चैः श्रवसा यथा ।
हेषता कम्पिता भूमिर्लोकाश्च सकलास्त्रयः ॥ ७-१९७-३२ (५४२५८)
तच्छ्रुत्वान्तर्हितं भूतं नाम तस्याकरोत्तदा ।
अश्वत्थामेति सोऽद्यैष शूरो नदति पाण्डव ॥ ७-१९७-३३ (५४२५९)
यो ह्यनाथ इवाक्रम्य पार्षतेन हतस्तथा ।
कर्मणा सुनृशंसेन तस्य नाथो व्यवस्थितः ॥ ७-१९७-३४ (५४२६०)

गुरुं मे यत्र पाञ्चाल्यः केशपक्षे परामृशत् ।
तन्न जातुं क्षमेद्द्रौणिर्जानन्पौरुषमात्मनः ॥
ग्स हि तेनैव नः सर्वान्क्षपयेदिति मे मतिः'॥ ७-१९७-३५ (५४२६१)
उपचीर्णो गुरुर्मिथ्या भवता राज्यकारणात् ।
धर्मज्ञेन सता नाम सोऽधर्मः सुमहान्कृतः ॥ ७-१९७-३६ (५४२६२)
चिरं स्थास्यति चाकीर्तिस्त्रैलोक्ये सचराचरे ।
रामे वालिवधाद्यद्वदेवं द्रोणे निपातिते ॥ ७-१९७-३७ (५४२६३)
सर्वधर्मोपपन्नोऽयं स मे शिष्यश्च पाण्डवः ।
नायं वक्ष्यति मिथ्येति प्रत्ययं कृतवांस्त्वयि ॥ ७-१९७-३८ (५४२६४)
स सत्यकञ्चुकं नाम प्रविष्टेन ततोऽनृतम् ।
आचार्य उक्तो भवता हतः कुञ्जर इत्युत ॥ ७-१९७-३९ (५४२६५)
ततः शस्त्रं समुत्सृज्य निर्ममो गतचेतनः ।
आसीत्सुविह्वलो राजन्यथा दृष्टस्त्वया विभुः ॥ ७-१९७-४० (५४२६६)
स तु शोकसमाविष्टो विमुखः पुत्रवत्सलः ।
शाश्वतं धर्ममुत्सृज्य गुरुः शिष्येण घातितः ॥ ७-१९७-४१ (५४२६७)
न्यस्तशस्त्रमधर्मेण घातयित्वा गुरुं भवान् ।
रक्षत्विदानीं सामात्यो यदि शक्तोसि पार्षतम् ॥ ७-१९७-४२ (५४२६८)
ग्रस्तमाचार्य पुत्रेण क्रुद्धेन हतबन्धुना ।
सर्वे वयं परित्रातुं न शक्ष्यामोऽद्य पार्षतम् ॥ ७-१९७-४३ (५४२६९)
सौहार्दं सर्वभूतेषु यः करोत्यतिमानुषः ।
सोऽद्य केशग्रहं श्रुत्वा पितुर्धक्ष्यति नो रणे ॥ ७-१९७-४४ (५४२७०)
विक्रोशमाने हि मयि भृशमाचार्यगृद्धिनि ।
अपाकीर्य स्वयं धर्मं शिष्येण निहतो गुरुः ॥ ७-१९७-४५ (५४२७१)
यदा गतं वयो भूयः शिष्टमल्पतरं च नः ।
तस्येदानीं विरोधोऽयमधर्मोऽयं कृतो महान् ॥ ७-१९७-४६ (५४२७२)
पितेव नित्यं सौहार्दात्पितेव हि च धर्मतः ।
सोऽल्पकालस्य राज्यस्य कारमाद्घातितो गुरुः ॥ ७-१९७-४७ (५४२७३)
धृतराष्ट्रेण भीष्माय द्रोणाय च विशाम्पते ।
विसृष्टा पृथिवी सर्वा सह पुत्रैश्च तत्परैः ॥ ७-१९७-४८ (५४२७४)
सम्प्राप्य तादृशीं वृत्तिं सत्कृतः सततं परैः ।
अब्रवीत्सततं पुत्रान्मामेवाभ्यधिकं गुरुः ॥ ७-१९७-४९ (५४२७५)
अवेक्षमाणस्त्वां मां च न्यस्तास्त्रश्चाहवे हतः ।
न त्वेनं युध्यमानं वै हन्यादपि शतक्रतुः ॥ ७-१९७-५० (५४२७६)
तस्याचार्यस्य वृद्धस्य द्रोहो नित्योपकारिणः ।
कृतो ह्यनार्यैरस्माभीर राज्यार्थे लुब्धबुद्धिभिः ॥ ७-१९७-५१ (५४२७७)
अहो बत महत्पापं कृतं कर्म सुदारुणम् ।

यद्राज्यसुखलोभेन द्रोणोऽयं साधुघातितः ॥ ७-१९७-५२ (५४२७८)
पुत्रान्भ्रातॄन्पितॄन्दाराञ्जीवितं चैव वासविः ।
त्यजेत्सर्वं मम प्रेम्णा जानात्येवं हि मे गुरुः ॥ ७-१९७-५३ (५४२७९)
स मया राज्यकामेन हन्यमानो ह्युपेक्षितः ।
तस्मादर्वाक्शिरा राजन्प्राप्तोऽस्मि नरकं प्रभो ॥ ७-१९७-५४ (५४२८०)
ब्राह्मणं वृद्धमाचार्यं न्यस्तशस्त्रं महामुनिम् ।
घातयित्वाऽद्य राज्यार्थे मृतं श्रेयो न जीवितम् ॥ ॥ ७-१९७-५५ (५४२८१)

इति श्रीमन्महाभारते द्रोणपर्वणि नारायणास्त्रमोक्षपर्वणि
पञ्चदशदिवसयुद्धे सप्तनवत्यधिकशततमोऽध्यायः ॥ १९७ ॥
Mahabharata - Drona Parva - Chapter Footnotes

५-१९७-१ सपृषतः सजलबिन्दुः । अनभ्रे अप्रावृषिकाले ॥
५-१९७-५ कथङ्कथा कथं कर्तव्यं कथं कर्तव्यमित्येवंशब्दः ॥
५-१९७-८ रक्षणे मन्त्रः क आसीदिति सम्बन्धः ॥
५-१९७-३० व्याघ्रास्यमुग्रकर्माणमिति झ पाठः ॥
५-१९७-३१ यस्मिन्निति दशशतामेत्यनेन सर्वगोधनं ददाविति ज्ञेयम्
। अन्यथा एकधेन्वर्थं द्रुपदं प्रति द्रोणगमनस्यासम्भवः। यद्वा
भाविनीं सम्पदमभिलक्ष्यैतद्दानं द्रष्टव्यम्। पुत्रोत्पत्तिकाले तस्य
निर्धनत्वोक्तेः ॥
५-१९७-३९ सत्यकञ्जुकं सत्याभासमनृतम् ॥
५-१९७-५३ वासविरर्जुनः ॥
५-१९७-१९७ सप्तनवत्यधिकशततमोऽध्यायः ॥

---

द्रोनपर्व-अध्यय१९८
॥ श्रीः ॥
७.१९८. अध्यायः १९८

Mahabharata - Drona Parva - Chapter Topics
साधिक्षेपमश्वत्थामतो युधिष्ठिरं भीषयन्तं पार्थंप्रति भीमेन
सामर्षमात्मबलवर्णनादिपूर्वकं स्वेनाश्वत्थामादिविजयप्रतिज्ञानम्
॥ १ ॥
धृष्टद्युम्नेनाप्यर्जुनं प्रति सक्रोधं क्षात्रधर्मादिकथनपूर्वकं
स्वकृतद्रोणवधस्य धार्मिकत्वकथनम् ॥ २ ॥

Mahabharata - Drona Parva - Chapter Text

७-१९८-० (५४२८२)
सञ्जय उवाच। ७-१९८-०क्ष् (४७८६)
अर्जुनस्य वचः श्रुत्वा नोचुस्तत्र महारथाः ।
अप्रियं वा प्रियं वाऽपि महाराज धनञ्जयम् ॥ ७-१९८-१ (५४२८३)
ततः क्रुद्धो महाबाहुर्भीमसेनोऽभ्यभाषत ।
कुत्सयन्निव कौन्तेयमर्जुनं भरतर्षभ ॥ ७-१९८-२ (५४२८४)
मुनिर्यथाऽरण्यगतो भाषते धर्मसंहितम् ।
न्यस्तदण्डो यथा पार्थ ब्राह्मणः संशितव्रतः ॥ ७-१९८-३ (५४२८५)
क्षतत्राता क्षताज्जीवन्क्षन्ता स्त्रीष्वपि साधुषु ।
क्षत्रियः क्षितिमाप्नोति क्षिप्रं धर्मं यशः श्रियः ॥ ७-१९८-४ (५४२८६)
स भवान्क्षत्रियगुणैर्युक्तः सर्वैः कुलोद्वहः ।
अविपश्चिद्यथा वाचं व्याहरन्नाद्य शोभसे ॥ ७-१९८-५ (५४२८७)
पराक्रमस्ते कौन्तेय शक्रस्येव शचीपतेः ।
न चातिवर्तसे धर्मं वेलामिव महोदधिः ॥ ७-१९८-६ (५४२८८)
न पूजयेत्त्वां कोन्वद्य यत्त्रयोदशवार्षिकम् ।
अमर्षं पृष्ठतः कृत्वा धर्ममेवाभिकाङ्क्षसे ॥ ७-१९८-७ (५४२८९)
दिष्ट्या तात मनस्तेऽद्य स्वधर्ममनुवर्तते ।
आनृशंस्ये च ते दिष्ट्या बुद्धिः सततमच्युत ॥ ७-१९८-८ (५४२९०)
यत्तु धर्मप्रवृत्तस्य हृतं राज्यमधर्मतः ।
द्रौपदी च परामृष्टा सभामानीय शत्रुभिः ॥ ७-१९८-९ (५४२९१)
वनं प्रव्राजिताश्चास्म वल्कलाजिनवाससः ।
अनर्हमाणास्तं भावं त्रयोदश समाः परैः ॥ ७-१९८-१० (५४२९२)
ग्बहूनि क्षाम्य शत्रूणां सत्यधर्मरता वयम् ।
तथा तन्मर्षयित्वा तु यथा ते उत्पथे स्थिताः'॥ ७-१९८-११ (५४२९३)
एतान्यमर्षस्थानानि मर्षितानि त्वयाऽघन ।
क्षत्रधर्मप्रसक्तेन सर्वमेतदनुष्ठितम् ॥ ७-१९८-१२ (५४२९४)
तमधर्ममपाकृष्टं स्मृत्वाऽद्य सहितस्त्वया ।
सानुबन्धान्हनिष्यामि क्षुद्रान्राज्यहरानहम् ॥ ७-१९८-१३ (५४२९५)
त्वया हि कथितं पूर्वं युद्धायाभ्यागता वयम् ।
घटामहे यथाशक्ति त्वं तु नोऽद्य जुगुप्ससे ॥ ७-१९८-१४ (५४२९६)
स्वधर्मं नेच्छसे ज्ञातुं वृथा वचनमेव ते ।
भयार्दितानामस्माकं वाचा मर्माणि कृन्तसि ॥ ७-१९८-१५ (५४२९७)
वपन्व्रणे क्षारमिव क्षतानां शत्रुकर्शन ।
विदीर्यते मे हृदयं त्वया वाक्शल्यपीडितम् ॥ ७-१९८-१६ (५४२९८)
अधर्ममेन विपुलं धार्मिकः सन्न बुध्यसे ।

यत्त्वमात्मानमस्मांश्च प्रशंस्यान्न प्रशंससि ॥ ७-१९८-१७ (५४२९९)
वासुदेवे स्थिते चापि द्रोणपुत्रं प्रशंससि ।
यः कलां षोडशीं पूर्णां धनञ्जय न तेऽर्हति ॥ ७-१९८-१८ (५४३००)
स्वयमेवात्मनो दोषान्ब्रुवाणः किं न लज्जसे ॥ ७-१९८-१९ (५४३०१)
ग्मम नागायुतं पार्थ बलं बाह्वोर्विधीयते'।
दारयेयं महीं क्रोधाद्विकिरेयं च पर्वतान् ॥ ७-१९८-२० (५४३०२)
आविध्यैतां गदां गुर्वी भीमां काञ्चनमालिनीम् ।
गिरिप्रकाशान्क्षितिजान्भञ्जेयमनिलो यथा ॥ ७-१९८-२१ (५४३०३)
द्रावयेयं शरैश्चापि सेन्द्रान्देवान्समागतान् ।
सराक्षसगणान्पार्थ सासुरोरगमानवान् ॥ ७-१९८-२२ (५४३०४)
स त्वमेवंविधं जानन्भ्रातरं मां नरर्षभ ।
द्रोणपुत्राद्भयं कर्तुं नार्हस्यमितविक्रम ॥ ७-१९८-२३ (५४३०५)
अथवा तिष्ठ बीभत्सो सह सर्वैः सहोदरैः ।
अहमेनं गदापाणिर्जेष्याम्येको महाहवे ॥ ७-१९८-२४ (५४३०६)
ततः पाञ्चालराजस्य पुत्रः पार्थमथाब्रवीत् ।
सङ्क्रुद्धमिव नर्दन्तं हिरण्यकशिपुर्हरिम् ॥ ७-१९८-२५ (५४३०७)
धृष्टद्युम्न उवाच। ७-१९८-२६क्ष् (४७८७)
बीभत्सो विप्रकर्माणि विहितानि मनीषिभिः ।
याजनाध्यापने दानं यथा यज्ञप्रतिग्रहौ ॥ ७-१९८-२६ (५४३०८)
षष्ठमध्ययनं नाम तेषां कस्मिन्प्रतिष्ठितः ।
हतो द्रोणो मया ह्येवं किं मां पार्थ विगर्हसे ॥ ७-१९८-२७ (५४३०९)
अपक्रान्तः स्वधर्माच्च क्षात्रधर्मं व्यपाश्रितः ।
अधर्मेण हतस्तस्मादस्त्रेण क्षुद्रकर्मकृत् ॥ ७-१९८-२८ (५४३१०)
तथा मायां प्रयुञ्जानमसह्यं ब्राह्मणब्रुवम् ।
प्रतिमायी निहन्याद्यो न युक्तं पार्थ तत्र किम् ॥ ७-१९८-२९ (५४३११)
तस्मिंस्तथा मया शस्ते यदि द्रौणायनी रुषा ।
कुरुते भैरवं नादं तत्र किं मम हीयते ॥ ७-१९८-३० (५४३१२)
न चाद्भुतमिदं मन्ये यद्द्रौणिश्चात्र गर्जति ।
घातयिष्यति कौरव्यान्परित्रातुमशक्नुवन् ॥ ७-१९८-३१ (५४३१३)
यच्च मां धार्मिको भूत्वा ब्रवीषि गुरुघातिनम् ।
तदर्थमहमुत्पन्नः पाञ्चाल्यस्य सुतोऽनलात् ॥ ७-१९८-३२ (५४३१४)
यस्य कार्यमकार्यं वा युध्यतः स्यात्समं रणे ।
तं कथं ब्राह्मणं ब्रूयाः क्षत्रियं वा धनञ्जय ॥ ७-१९८-३३ (५४३१५)
यो ह्यनस्त्रविदो हन्याद्ब्रह्मास्त्रैः क्रोधमूर्च्छितः ।
सर्वोपायैर्न स कथं वध्यः पुरुषसत्तम ॥ ७-१९८-३४ (५४३१६)
विशेषात्पितृहन्ता मे न स वध्यः कथं मया ।

योऽयं पापः सुदुर्मेधा बान्धवान्युधि जघ्निवान् ।
तस्य विप्रब्रुववधे कथं पापं भवेन्मम'॥ ७-१९८-३५ (५४३१७)
विधर्मिणं धर्मविद्भिः प्रोक्तं तेषां विषोपमम् ।
जानन्धर्मार्थतत्त्वज्ञ किं मामर्जुन गर्हसे ॥ ७-१९८-३६ (५४३१८)
नृशंसः स मयाऽऽक्रम्य रथ एव निपातितः ।
तन्मामनिन्द्यं बीभत्सो किमर्थं नाभिनन्दसे ॥ ७-१९८-३७ (५४३१९)
कालानलसमं पार्थ ज्वलार्कविषोपमम् ।
भीमं द्रोणशिरश्छिन्नं न प्रशंससि मे कथम् ॥ ७-१९८-३८ (५४३२०)
योऽसौ ममैव नान्यस्य बान्धवान्युधि जघ्निवान् ।
छित्त्वाऽपि तस्य मूर्धानं नैवास्मि विगतज्वरेः ॥ ७-१९८-३९ (५४३२१)
तच्च मे कृन्तते मर्म यन्न तस्य शिरो मया ।
निषादविषये क्षिप्तं जयद्रथशिरो यथा ॥ ७-१९८-४० (५४३२२)
अथावधश्च शत्रूणामधर्मः श्रूयतेऽर्जुन ।
क्षत्रियस्य हि धर्मोऽयं हन्याद्धन्येत वा पुनः ॥ ७-१९८-४१ (५४३२३)
स शत्रुर्निहतः सङ्ख्ये मया धर्मेण पाण्डव ।
यथा त्वया हतः शूरो भगदत्तः पितुः सखा ॥ ७-१९८-४२ (५४३२४)
पितामहं रणे हत्वा मन्यसे धर्ममात्मनः ।
मया शत्रौ हते कस्मात्पापे धर्मं न मन्यसे ॥ ७-१९८-४३ (५४३२५)
सम्बन्धावनतं पार्थ न मां त्वं वक्तुमर्हसि ।
स्वगात्रकृतसोपानं निषण्णमिव दन्तिनम् ॥ ७-१९८-४४ (५४३२६)
क्षमामि ते सर्वमेव वाग्व्यतिक्रममर्जुन ।
द्रौपद्या द्रौपदेयानां कृते नान्येन हेतुना ॥ ७-१९८-४५ (५४३२७)
कुलक्रमागतं वैरं ममाचार्येण विश्रुतम् ।
तथा जानात्ययं लोको न यूयं पाण्डुनन्दनाः ॥ ७-१९८-४६ (५४३२८)
नानृती पाण्डवो ज्येष्ठो नाहं वाऽधार्मिकोऽर्जुन ।
ग्न क्षत्रिय इति प्राहुर्यो न हन्ति रणाजिरे ॥ ७-१९८-४७ (५४३२९)
पितरं वा गुरुं वाऽपि जिघांसु पुत्रशिष्ययोः ।
जिह्मेन वाऽप्यजिह्मेन हन्यादेवाविचारयन् ॥ ७-१९८-४८ (५४३३०)
इत्युक्तं ब्रह्मणा पूर्वं क्षत्रियाणां द्विषद्वधे ।
तस्माच्छिष्येण निहतः शत्रुर्मे ब्राह्मणब्रुवः ॥ ७-१९८-४९ (५४३३१)
यः क्षत्रियसुतो हन्यात्पितरं वा गुरुं च वा ।
अनिष्टं क्षत्रियो हन्यात्स वै क्षत्रिय उच्यते'।
शिष्यद्रोही हतः पापो युध्यस्व विजयस्तव ॥ ॥ ७-१९८-५० (५४३३२)

इति श्रीमन्महाभारते द्रोणपर्वणि नारायणास्त्रमोक्षपर्वणि
अष्टनवत्यधिकशततमोऽध्यायः ॥१९८ ॥

५-१९८-२५ हिरण्यकशिपुं हरिरिति क ख पाठः ॥
५-१९८-१९८ अष्टनवत्यधिकशततमोऽध्यायः ॥

---

द्रोनपर्व-अध्यय१९९
॥ श्रीः ॥
७.१९९. अध्यायः १९९

Mahabharata - Drona Parva - Chapter Topics
सात्यकिनिष्ठुरभाषणरुष्टेन धृष्टद्युम्नेन सममर्मोद्घाटनं
तद्गर्हणम् ॥ १ ॥
धृष्टद्युम्नजिघांसया गदामुद्यम्यापततः सात्यकेः कृष्णचोदितेन
भीमेन निवारणम् ॥ २ ॥
सर्वेषां पुनर्युद्धोद्यमः ॥ ३ ॥

Mahabharata - Drona Parva - Chapter Text

७-१९९-० (५४३३३)
धृतराष्ट्र उवाच। ७-१९९-०क्ष् (४७८८)
साङ्गा वेदा यथान्यायं येनाधीता महात्मना ।
यस्मिन्साक्षाद्धनुर्वेदो ह्रीनिषेवे प्रतिष्ठितः ॥ ७-१९९-१ (५४३३४)
यस्य प्रसादात्कुर्वन्ति कर्माणि पुरुषर्षभाः ।
अमानुषाणि सङ्ग्रामे देवैरसुकराणि च ॥ ७-१९९-२ (५४३३५)
तस्मिन्नाक्रुश्यति द्रोणे समक्षं पापकर्मणा ।
नीचं कर्म कृतं तेन क्षुद्रेण गुरुघातिना ॥ ७-१९९-३ (५४३३६)
नामर्षं तत्र कुर्वन्ति धिक्क्षात्रं धिगमर्षिताम् ॥ ७-१९९-४ (५४३३७)
पार्थाः सर्वे च राजानः पृथिव्यां ये धनुर्धराः ।
श्रुत्वा किमाहुः पाञ्चाल्यं तन्ममाचक्ष्व सञ्जय ॥ ७-१९९-५ (५४३३८)
सञ्जय उवाच। ७-१९९-६क्ष् (४७८९)
श्रुत्वा द्रुपदपुत्रस्य ता वाचः क्रूरकर्मणः ।
तूष्णीं बभूवू राजानः सर्व एव विशाम्पते ॥ ७-१९९-६ (५४३३९)
अर्जुनस्तु कटाक्षेण जिह्मं विप्रेक्ष्य पार्षतम् ।
सबाष्पमतिनिःश्वस्य धिग्धिगित्येव चाब्रवीत् ॥ ७-१९९-७ (५४३४०)
युधिष्ठिरश्च भीमश्च यमौ कृष्णस्तथाऽपरे ।
आसन्सुव्रीडिता राजन्सात्यकिस्त्वब्रवीदिदम् ॥ ७-१९९-८ (५४३४१)

नेहास्ति पुरुषः कश्चिद्य इमं पापपूरुषम् ।
भाषमाणमकल्याणं शीघ्रं हन्यान्नराधमम् ॥ ७-१९९-९ (५४३४२)
एते त्वां पाण्डवाः सर्वे कुत्सयन्ति विवित्सया ।
कर्मणा तेन पापेन श्वपाकं ब्राह्मणा इव ॥ ७-१९९-१० (५४३४३)
एतत्कृत्वा महत्पापं निन्दितः सर्वसाधुभिः ।
न लज्जसे कथं वक्तुं समितिं प्राप्य शोभनाम् ॥ ७-१९९-११ (५४३४४)
कथं च शतधा जिह्वा न ते मूर्धा च दीर्यते ।
गुरुमाक्रोशतः क्षुद्र न चाधर्मेण पात्यसे ॥ ७-१९९-१२ (५४३४५)
वाच्यस्त्वमसि पार्थैश्च सर्वैश्चान्धकवृष्णिभिः ।
यत्कर्म कलुषं कृत्वा श्लाघसे जनसंसदि ॥ ७-१९९-१३ (५४३४६)
अकार्यं तादृशं कृत्वा पुनरेव गुरुं क्षिपन् ।
वध्यस्त्वं न त्वयार्थोऽस्ति मुहूर्तमपि जीवता ॥ ७-१९९-१४ (५४३४७)
कस्त्वेतद्व्यवसेत्पायं त्वदन्यः पुरुषाधम ।
निगृह्य केशेषु वधं गुरोर्धर्मात्मनः सतः ॥ ७-१९९-१५ (५४३४८)
सप्तावरे तथा पूर्वे बान्धवास्ते निमज्जिताः ।
यशसा च परित्यक्तास्त्वां प्राप्य कुलपांसनम् ॥ ७-१९९-१६ (५४३४९)
उक्तवांश्चापि यत्पार्थे भीष्मं प्रति नरर्षभ ।
तथान्तो विहितस्तेन स्वयमेव महात्मना ॥ ७-१९९-१७ (५४३५०)
तस्यापि तव सोदर्यो निहन्ता पापकृत्तमः ।
नान्यः पाञ्चालपुत्रेभ्यो विद्यते भुवि पापकृत् ॥ ७-१९९-१८ (५४३५१)
स चापि सृष्टः पित्रा ते भीष्मस्यान्तकरः किल ।
शिखण्डी रक्षितस्तेन स च मृत्युर्महात्मनः ॥ ७-१९९-१९ (५४३५२)
पाञ्चालाश्चलिता धर्मात्क्षुद्रा मित्रगुरुद्रुहः ।
त्वां प्राप्य सहसोदर्यं धिक्कृतं सर्वसाधुभिः ॥ ७-१९९-२० (५४३५३)
पुनश्चेदीदृशीं वाचं मत्समीपे वदिष्यसि ।
शिरस्ते पोथयिष्यामि गदया वज्रकल्पया ॥ ७-१९९-२१ (५४३५४)
त्वां च ब्रह्महणं दृष्ट्वा जनः सूर्यमवेक्षते ।
ब्रह्महत्या हि ते पापं प्रायश्चित्तार्थमात्मनः ॥ ७-१९९-२२ (५४३५५)
पाञ्चालक सुदुर्वृत्त ममैव गुरुमग्रतः ।
गुरोर्गुरुं च भूयोऽपि क्षिपन्नैव हि लज्जसे ॥ ७-१९९-२३ (५४३५६)
तिष्ठतिष्ठ सहस्वैकं गदापातमिमं मम ।
तव चापि सहिष्येऽहं गदापातानेकशः ॥ ७-१९९-२४ (५४३५७)
सात्वतेनैवमाक्षिप्तः पार्षतः परुषाक्षरम् ।
संरब्धं सात्यकिं प्राह सङ्क्रुद्धः प्रहसन्निव ॥ ७-१९९-२५ (५४३५८)
धृष्टद्युम्न उवाच। ७-१९९-२६क्ष् (४७९०)
श्रूयतेश्रूयते चेति क्षम्यते चेति माधव ।

सदाऽनार्योऽशुभः साधुं पुरुषं क्षेप्तुमिच्छति ॥ ७-१९९-२६ (५४३५९)
क्षमा प्रशस्यते लोके न तु पापोऽर्हति क्षमाम् ।
क्षमावन्तं हि पापात्मा जितोऽयमिति मन्यते ॥ ७-१९९-२७ (५४३६०)
स त्वं क्षुद्रसमाचारो नीचात्मा पापनिश्चयः ।
आकेशाग्रान्नखाग्राच्च वक्तव्यो वक्तुमिच्छसि ॥ ७-१९९-२८ (५४३६१)
ग्वरं हि ते मृतिः पाप न च ते चित्तमीदृशम् ।
श्रोतुं वक्तव्यतामूलं नीचाचाराश्च मानवाः ।
परान्क्षिपन्ति दोषेण स्वेषु दोषेष्वदृष्टयः'॥ ७-१९९-२९ (५४३६२)
यः स भूरिश्रवाश्छिन्नभुजः प्रायगतस्त्वया ।
वार्यमाणेन हि हतस्ततः पापतरं नु किम् ॥ ७-१९९-३० (५४३६३)
प्रेषमाणो मया द्रोणो दिव्येनास्त्रेण संयुगे ।
विसृष्टशस्त्रो निहतः किं तत्र कुर दुष्कृतम् ॥ ७-१९९-३१ (५४३६४)
अयुध्यमानं यस्त्वाजौ तथा प्रायगतं मुनिम् ।
छिन्नबाहुं परैर्हन्यात्सात्यके स कथं वदेत् ॥ ७-१९९-३२ (५४३६५)
निहत्य त्वां पदा भूमौ स विकर्षति वीर्यवान् ।
किं तदा न निहंस्येनं भूत्वा पुरुषसत्तमः ॥ ७-१९९-३३ (५४३६६)
त्वया पुनरनार्येण पूर्वं पार्थेन निर्जितः ।
यदा तदा हतः शूरः सौमदत्तिः प्रतापवान् ॥ ७-१९९-३४ (५४३६७)
यत्रयत्र तु पाण्डूनां द्रोणो द्रावयते चमूम् ।
किरञ्छरसहस्राणि तत्रतत्र प्रयाम्यहम् ॥ ७-१९९-३५ (५४३६८)
स त्वमेवंविधं कृत्वा कर्म चण्डालवत्स्वयम् ।
वक्तुमर्हसि वक्तव्यः कस्मात्त्वं परुषाण्यथ ॥ ७-१९९-३६ (५४३६९)
कर्ता त्वं कर्मणो ह्यस्य नाहं वृष्णिकुलाधम ।
पापानां च त्वमावासः कर्मणां मा पुनर्वद ॥ ७-१९९-३७ (५४३७०)
जोषमास्व न मां भूयो वक्तुमर्हस्यतः परम् ।
अधरोत्तरमेतद्धि यन्मां त्वं वक्तुमर्हसि ॥ ७-१९९-३८ (५४३७१)
अथ वक्ष्यसि मां मौर्ख्याद्भूयः परुषमीदृशम् ।
गमयिष्यामि बाणैस्त्वां युधि वैवस्वतक्षयम् ॥ ७-१९९-३९ (५४३७२)
न चैव मूर्ख धर्मेण केवलेनैव शक्यते ।
तेषामपि ह्यधर्मेण चेष्टितं शृणु यादृशम् ॥ ७-१९९-४० (५४३७३)
वञ्चितः पाण्डवः पूर्वमधर्मेण युधिष्ठिरः ।
द्रौपदी च परिक्लिष्टा तथाऽधर्मेण सात्यके ॥ ७-१९९-४१ (५४३७४)
प्रव्राजिता वनं सर्वे पाण्डवाः सह कृष्णया ।
सर्वस्वमपकृष्टं च तथाऽधर्मेण बालिश ॥ ७-१९९-४२ (५४३७५)
अधर्मेणापकृष्टश्च मद्रराजः परैरितः ।
अधर्मेण तथा बालः सौभद्रो विनिपातितः ॥ ७-१९९-४३ (५४३७६)

इतोऽप्यधर्मेण हतो भीष्मः परपुरञ्जयः ।
भूरिश्रवा ह्यधर्मेण त्वया धर्मविदा हतः ॥ ७-१९९-४४ (५४३७७)
एवं परैराचरितं पाण्डवेयैश्च संयुगे ।
रक्षमाणैर्जयं वीरैर्धर्मज्ञैरपि सात्वत ॥ ७-१९९-४५ (५४३७८)
दुर्ज्ञेयः स परो धर्मस्तथाऽधर्मश्च दुर्विदः ।
युध्यस्व कौरवैः सार्धं मा गाः पितृनिवेशनम् ॥ ७-१९९-४६ (५४३७९)
सञ्जय उवाच। ७-१९९-४७क्ष् (४७९१)
एवमादीनि वाक्यानि क्रूराणि परुषाणि च ।
श्रावितः सात्यकिः श्रीमानाकम्पित इवाभवत् ॥ ७-१९९-४७ (५४३८०)
तच्छ्रुत्वा क्रोधताम्राक्षः सात्यकिस्त्वाददे गदाम् ।
विनिः श्वस्य यथा सर्पः प्रणिधाय रथे धनुः ॥ ७-१९९-४८ (५४३८१)
ततोऽभिपत्य पाञ्चाल्यं संरम्भेणेदमब्रवीत् ।
न त्वां वक्ष्यामि परुषं हनिष्ये त्वां वधक्षमम् ॥ ७-१९९-४९ (५४३८२)
तमापतन्तं सहसा महाबलममर्षणम् ।
पाञ्चाल्यायाभिसङ्क्रुद्धमन्तकायान्तकोपमम् ॥ ७-१९९-५० (५४३८३)
चोदितो वासुदेवेन भीमसेनो महाबलः ।
अवप्लुत्य रथात्तूर्णं बाहुभ्यां समवारयत् ॥ ७-१९९-५१ (५४३८४)
द्रवमाणं तथा क्रुद्धं सात्यकिं पाण्डवो बली ।
प्रस्पन्दमानमादाय जगाम बलिनं बलात् ॥ ७-१९९-५२ (५४३८५)
स्थित्वा विष्टभ्य चरणौ भीमेन शिनिपुङ्गवः ।
निगृहीतः पदे षष्ठे बलेन बलिनां वरः ॥ ७-१९९-५३ (५४३८६)
अवरुह्य रथात्तूर्णं ध्रियमाणं बलीयसा ।
उवाच श्लक्ष्णया वाचा सहदेवो विशाम्पते ॥ ७-१९९-५४ (५४३८७)
अस्माकं पुरुषव्याघ्र मित्रमन्यन्न विद्यते ।
परमन्धकवृष्णिभ्यः पाञ्चलेभ्यश्च मारिष ॥ ७-१९९-५५ (५४३८८)
तथैवान्धकवृष्णीनां तथैव च विशेषतः ।
कृष्णस्य च तथाऽस्मत्तो मित्रमन्यन्न विद्यते ॥ ७-१९९-५६ (५४३८९)
पाञ्चालानां च वार्ष्णेय समुद्रान्तां विचिन्वताम् ।
नान्यदस्ति परं मित्रं यथा पाण्डववृष्णयः ॥ ७-१९९-५७ (५४३९०)
स भवानीदृशं मित्रं मन्यते च यथा भवान् ।
भवन्तश्च यथाऽस्माकं भवतां च तथा वयम् ॥ ७-१९९-५८ (५४३९१)
स एवं सर्वधर्मज्ञ मित्रधर्ममनुस्मरन् ।
नियच्छ मन्युं पाञ्चाल्यात्प्रशाम्य शिनिपुङ्गवा ॥ ७-१९९-५९ (५४३९२)
पार्षतस्य क्षम त्वं वै क्षमतां पार्षतश्च ते ।
वयं क्षमयितारश्च किमन्यत्र शमाद्भवेत् ॥ ७-१९९-६० (५४३९३)
प्रशाम्यमाने शैनेये सहदेवेन मारिष ।

पाञ्चालराजस्य सुतः प्रहसन्निदमब्रवीत् ॥ ७-१९९-६१ (५४३९४)
मुञ्चमुञ्च शिनेः पौत्रं भीम युद्धमदान्वितम् ।
आसादयतु मामेष धराधरमिवानिलः ॥ ७-१९९-६२ (५४३९५)
यावदस्य शितैर्बाणैः संरम्भं विनयाम्यहम् ।
युद्धश्रुद्धां च कौन्तेय जीवितं चास्य संयुगे ॥ ७-१९९-६३ (५४३९६)
किं नु शक्यं मया कर्तुं यत्कार्यमिदमुच्यताम् ।
सुमहत्पाण्डुपुत्राणामायान्त्येते हि कौरवाः ॥ ७-१९९-६४ (५४३९७)
अथवा फल्गुनः सर्वान्वारयिष्यति संयुगे ।
अहमप्यस्य मूर्धानं पातयिष्यामि सायकैः ॥ ७-१९९-६५ (५४३९८)
मन्यते च्छिन्नबाहुं मां भूरिश्रवसमाहवे ।
उत्सृजैनमहं चैनमेष वा मां हनिष्यति ॥ ७-१९९-६६ (५४३९९)
शृण्वन्पाञ्चालवाक्यानि सात्यकिः सर्पवच्छ्वसन् ।
भीमबाह्वन्तरे सक्तो विस्फुरत्यनिशं बली ॥ ७-१९९-६७ (५४४००)
तौ वृषाविव नर्दन्तौ बलिनौ बाहुशालिनौ ।
त्वरया वासुदेवश्च धर्मराजश्च मारिष ।
यत्नेन महता वीरौ वारयामासतुस्ततः ॥ ७-१९९-६८ (५४४०१)
निवार्य परमेष्वासौ कोपसंरक्तलोचनौ ।
युयुत्सूनपरान्सङ्ख्ये प्रतीयुः क्षत्रियर्षभाः ॥ ॥ ७-१९९-६९ (५४४०२)

इति श्रीमन्महाभारते द्रोणपर्वणि नारायणास्त्रमोक्षपर्वणि
पञ्चदशदिवसयुद्धे एकोनद्विशततमोऽध्यायः ॥ १९९ ॥

---

द्रोनपर्व-अध्यय२००
॥ श्रीः ॥
७.२००. अध्यायः २००

Mahabharata - Drona Parva - Chapter Topics
द्रोणमारणरुष्टेनाश्वत्थाम्ना वैरिसेनायां नारायणास्त्रप्रयोगः ॥ १ ॥
अस्त्रतेजसा पीड्यमानानां कृष्णवचनात् यानावरोहणशस्त्रन्यासादिना
आत्मरक्षणम् ॥ २ ॥
भीमे एकस्मिन्नेव शस्त्रधारणेन प्रतियुध्यमाने सति
तन्मस्तकेऽस्त्रस्य प्रज्वलनम् ॥ ३ ॥

Mahabharata - Drona Parva - Chapter Text

७-२००-० (५४४०३)

सञ्जय उवच। ७-२००-०क्ष् (४७९२)
ततः स कदनं चक्रे रिपूणां द्रोणनन्दनः ।
युगान्ते सर्वभूतानां कालसृष्ट इवान्तकः ॥ ७-२००-१ (५४४०४)
ध्वजद्रुमं शस्त्रशृङ्गं हतनागमहाशिलम् ।
अश्वकिम्पुरुषाकीर्णं शरासनलतावृतम् ॥ ७-२००-२ (५४४०५)
क्रव्यादपक्षिसङ्घुष्टं भूतयक्षणाकुलम् ।
निहत्य शात्रवान्भल्लैः सोऽचिनोद्देहपर्वतम् ॥ ७-२००-३ (५४४०६)
ततो वेगेन महता विनद्य स नरर्षभः ।
प्रतिज्ञां श्रावयामास पुनरेव तवात्मजम् ॥ ७-२००-४ (५४४०७)
यदत्र च्छद्मनाऽऽचार्यं धर्मकञ्चुकमास्थितः ।
मुञ्च शस्त्रमिति प्राह कुन्तीपुत्रो युधिष्ठिरः ॥ ७-२००-५ (५४४०८)
तस्मात्सम्पश्यतस्तस्य द्रावयिष्यानि वाहिनीम् ।
विद्राव्यसर्वान्हन्ताऽस्मि जाल्मं पाञ्चाल्यमेव तु ॥ ७-२००-६ (५४४०९)
सर्वानेतान्हनिष्यामि यदि योत्स्यन्ति मां रणे ।
सत्यं ते प्रतिजानामि परिवर्तय वाहिनीम् ॥ ७-२००-७ (५४४१०)
तच्छ्रुत्वा तव पुत्रस्तु वाहिनीं पर्यवर्तयत् ।
सिंहनादेन महता व्यपोह्य सुमहद्भयम् ॥ ७-२००-८ (५४४११)
ततः समागमो राजन्कुरुपाण्डवसेनयोः ।
पुनरेवाभवत्तीव्रः पूर्णसागरयोरिव ॥ ७-२००-९ (५४४१२)
संरब्धा हि स्थिरीभूता द्रोण पुत्रेण कौरवाः ।
उदग्राः पाण्डुपाञ्चाला द्रोणस्य निधनेन च ॥ ७-२००-१० (५४४१३)
तेषां परमहृष्टानां जयमात्मनि पश्यताम् ।
संरब्धानां महावेगः प्रादुरासीद्विशाम्पते ॥ ७-२००-११ (५४४१४)
यथा शिलोच्चये शैलः सागरैः सागरो यथा ।
प्रतिहन्येत राजेन्द्र तथाऽसन्कुरुपाण्डवाः ॥ ७-२००-१२ (५४४१५)
ग्चुक्षुभे पृथिवी सर्वा दिशश्च प्रतिसस्वनुः ।
सम्भ्रान्तान्यपि भूतानि जलजान्यपि मारिष ।
ते च सर्वे तदा योधाः सम्प्रहृष्टा युयुत्सवः'॥ ७-२००-१३ (५४४१६)
ततः शङ्खसहस्राणि भेरीणामयुतानि च ।
अवादयन्त संहृष्टाः कुरुपाण्डवसैनिकाः ॥ ७-२००-१४ (५४४१७)
यथा निर्मथ्यमानस्य सागरस्य तु निःस्वनः ।
अभवत्तव सैन्यस्य सुमहानद्भुतोपमः ॥ ७-२००-१५ (५४४१८)
ग्वर्तमाने तथा शब्दे रौद्रे तस्मिन्भयानके ।
सम्पतत्सु रथौघेषु तव तेषां च भारत'॥ ७-२००-१६ (५४४१९)
प्रादुश्चक्रे ततो द्रौणिरस्त्रं नारायणं तदा ।
अभिसन्धाय पाण्डूनां पाञ्चालानां च वाहिनीं ॥ ७-२००-१७ (५४४२०)

प्रादुरासंस्ततो बाणा दीप्ताग्राः खे सहस्रशः ।
पाण्डवान्क्षपयिष्यन्तो दीप्तास्यः पन्नगा इव ॥ ७-२००-१८ (५४४२१)
ते दिशः खं च सैन्यं च समावृण्वन्महाहवे ।
मुहूर्ताद्भास्करस्येव लोके राजन्गभस्तयः ॥ ७-२००-१९ (५४४२२)
तथाऽपरे द्योतमाना ज्योतींषीवामलाम्बरे ।
प्रादुरासन्महाराज कार्ष्णायसमया गुडाः ॥ ७-२००-२० (५४४२३)
चतुश्चक्रा द्विचक्राश्च शतघ्नो बहुला गदाः ।
चक्राणि च क्षुरान्तानि मण्डलानीव भास्वतः ॥ ७-२००-२१ (५४४२४)
शस्त्राकृतिभिराकीर्णमतीव पुरुषर्षभ ।
दृष्ट्वान्तरिक्षमाविग्नाः पाण्डुपाञ्चालसृञ्जयाः ॥ ७-२००-२२ (५४४२५)
यथायथा ह्ययुध्यन्त पाण्डवानां महारथाः ।
तथातथा तदस्त्रं वै व्यवर्धत जनाधिप ॥ ७-२००-२३ (५४४२६)
वध्यमानास्तदाऽस्त्रेण तेन नारायणेन वै ।
दह्यमानाऽनलेनेव सर्वतोऽभ्यर्दिता रणे ॥ ७-२००-२४ (५४४२७)
यथा हि शिशिरापाये दहेत्कक्षं हुताशनः ।
तथा तदस्त्रं पाण्डूनां ददाह ध्वजिनीं प्रभो ॥ ७-२००-२५ (५४४२८)
आपूर्यमाणेनास्त्रेण सैन्ये क्षीयति च प्रभो ।
जगाम परमं त्रासं धर्मपुत्रो युधिष्ठिरः ॥ ७-२००-२६ (५४४२९)
द्रवमाणं तु तत्सैन्यं दृष्ट्वा विगतचेतनम् ।
मध्यस्थतां च पार्थस्य धर्मपुत्रोऽब्रवीदिदम् ॥ ७-२००-२७ (५४४३०)
धृष्टद्युम्न पलायस्व सह पाञ्चालसेनया ।
सात्यके त्वं च गच्छस्व वृष्ण्यन्धकवृतो महान् ॥ ७-२००-२८ (५४४३१)
वासुदेवोऽपि धर्मात्मा करिष्यत्यात्मनः क्षमम् ।
श्रेयो ह्युपदिशत्येष लोकस्य किमुतात्मनः ॥ ७-२००-२९ (५४४३२)
सङ्ग्रामस्तु न कर्तव्यः सर्वसैन्यान्ब्रवीमि वः ।
अहं हि सह सोदर्यैः प्रवेक्ष्ये हव्यवाहनम् ॥ ७-२००-३० (५४४३३)
भीष्मद्रोणार्णवं तीर्त्वा सङ्ग्रामे भीरुदुस्तरे ।
विमज्जिष्यामि सलिले सगणो द्रौणिगोष्पदे ॥ ७-२००-३१ (५४४३४)
कामः सम्पद्यतामस्य बीभत्सोराशु मां प्रति ।
कल्याणवृत्तिराचार्यो मया युधि निपातितः ॥ ७-२००-३२ (५४४३५)
येन बालः स सौभद्रो युद्धानामविशारदः ।
समर्थैर्बहुभिः क्रूरैर्घातितो नाभिपालितः ॥ ७-२००-३३ (५४४३६)
येन विब्रुवती प्रश्नं तथा कृष्णा सभां गता ।
उपेक्षिता सपुत्रेण दासीभावं नियच्छती ॥ ७-२००-३४ (५४४३७)
ग्रक्षणे च महान्यत्नः सैन्धवस्य कृतो युधि ।
अर्जुनस्य विघातार्थं प्रतिज्ञा येन रक्षिता ॥ ७-२००-३५ (५४४३८)

व्यूहद्वारि वयं चैव धृता येन जिगीषवः ।
वारितं च महत्सैन्यं प्रविशत्तद्यथाबलम्'॥ ७-२००-३६ (५४४३९)
जिघांसुर्धार्तराष्ट्रश्च श्रान्तेष्वन्येषु फल्गुनम् ।
कवचेन तथा गुप्तो रक्षार्थं सैन्धवस्य च ॥ ७-२००-३७ (५४४४०)
येन ब्रह्मास्त्रविदुषा पाञ्चालाः सत्यजिन्मुखाः ।
कुर्वाणा मज्जये यत्नं समूला विनिपातिताः ॥ ७-२००-३८ (५४४४१)
ग्ग्रहणे च परो यत्नः कृतस्तेन यथा मम ।
विदितं सर्वमेवैतद्भवतां सर्वयोधिनाम्'॥ ७-२००-३९ (५४४४२)
येन प्रव्राज्यमानाश्च राज्याद्वयमधर्मतः ।
निवार्यमाणेनास्माभिरनुगन्तुं तदेषिताः ॥ ७-२००-४० (५४४४३)
ग्वनवासान्निवृत्तानां समये च तथा कृते ।
स्नेहश्च दर्शितो नित्यं प्रत्यक्षं वो महारथाः'॥ ७-२००-४१ (५४४४४)
योऽसावत्यन्तमस्मासु कुर्वाणः सौहृदं परम् ।
हतस्तदर्थे मरणं गमिष्यामि सबान्धवः ॥ ७-२००-४२ (५४४४५)
सञ्जय उवाच। ७-२००-४३क्ष् (४७९३)
एवं ब्रुवति कौन्तेये दाशार्हस्त्वरितस्ततः ।
निवार्य सैन्यं बाहुभ्यामिदं वचनमब्रवीत् ॥ ७-२००-४३ (५४४४६)
शीघ्रं न्यस्यत शस्त्राणि वाहेभ्यश्चावरोहत ।
एष योगोऽत्र विहितः प्रतिघाते महात्मनः ॥ ७-२००-४४ (५४४४७)
द्विपाश्वस्यन्दनेभ्यश्च क्षितिं सर्वेऽवरोहत ।
एवमेतन्न वो हन्यादस्त्रं भूमौ निरायुधान् ॥ ७-२००-४५ (५४४४८)
यथायथा हि युध्यन्ते योधा ह्यस्त्रमिदं प्रति ।
तथातथा भवन्त्येते कौरवा बलवत्तराः ॥ ७-२००-४६ (५४४४९)
निक्षेप्स्यन्ति च शस्त्राणि वाहनेभ्योऽवरुह्य ये ।
येऽञ्जलिं कुर्वते वीर नमस्ति च विवाहनाः ।
तान्नैतदस्त्रं सङ्ग्रामे निहनिष्यति मानवान् ॥ ७-२००-४७ (५४४५०)
ये त्वेतत्प्रतियोत्स्यन्ति मनसाऽपीह केचन ।
निहनिष्यति तान्सर्वान्रसातलगतानपि ॥ ७-२००-४८ (५४४५१)
ते वचस्तस्य तच्छ्रुत्वा वासुदेवस्य भारत ।
ईषुः सर्वे समुत्स्रष्टुं मनोभिः करणेन च ॥ ७-२००-४९ (५४४५२)
तत उत्स्रष्टुकामांस्तानस्त्राण्यालक्ष्य पाण्डवः ।
भीमसेनोऽब्रवीद्राजन्निदं संहर्षयन्वचः ॥ ७-२००-५० (५४४५३)
न कथञ्चन शस्त्राणि मोक्तव्यानीह केनचित् ।
अहमावारयिष्यामि द्रोणपुत्रास्त्रमाशुगैः ॥ ७-२००-५१ (५४४५४)
गदयाऽप्यनया गुर्व्या हेमविग्रहया रणे ।
कालवत्प्रहरिष्यामि द्रौणेरस्त्रं विशातयन् ॥ ७-२००-५२ (५४४५५)

न हि मे विक्रमे तुल्यः कश्चिदस्ति पुमानिह ।
यथैव सवितुस्तुल्यं ज्योतिरन्यन्न विद्यते ॥ ७-२००-५३ (५४४५६)
पश्यतेमौ हि मे बाहू नागराजकरोपमौ ।
समर्थौ पर्वतस्यापि शैशिरस्य निपातने ॥ ७-२००-५४ (५४४५७)
नागायुतसमप्राणो ह्यहमेको नरेष्विह ।
शक्रो यथाऽप्रतिद्वन्द्वो दिवि देवेषु विश्रुतः ॥ ७-२००-५५ (५४४५८)
अद्य पश्यत मे वीर्यं बाह्वोः पीनांसयोर्युधि ।
ज्वलमानस्य दीप्तस्य द्रौणेरस्त्रस्य वारणे ॥ ७-२००-५६ (५४४५९)
यदि नारायणास्त्रस्य प्रतियोद्धा न विद्यते ।
अद्यैतत्प्रतियोत्स्यामि पश्यत्सु कुरुपाण्डुपु ॥ ७-२००-५७ (५४४६०)
अर्जुनार्जुन बीभत्सो न न्यस्यं गाण्डिवं त्वया ।
शशाङ्कस्येव ते पङ्को नैर्मल्यं पातयिष्यति ॥ ७-२००-५८ (५४४६१)
अर्जुन उवाच। ७-२००-५९क्ष् (४७९४)
भीम नारायणास्त्रे मे गोषु च ब्राह्मणेषु च ।
एतेषु गाण्डिवं न्यस्यमेतद्धि व्रतमुत्तमम् ॥ ७-२००-५९ (५४४६२)
एवमुक्तस्ततो भीमो द्रोणपुत्रमरिन्दमम् ।
अभ्ययान्मेघघोषेण रथेनादित्यवर्चसा ॥ ७-२००-६० (५४४६३)
ग्कम्पयन्मेदिनीं सर्वां त्रासयंश्च चमूं तव ।
शङ्खशब्दं महत्कृत्वा भुजशब्दं च पाण्डवः ॥ ७-२००-६१ (५४४६४)
तस्य शङ्खस्वनं श्रुत्वा बाहुशब्दं च तावकाः ।
समन्तात्कोष्ठकीकृत्य शरव्रातैरवाकिरन्'॥ ७-२००-६२ (५४४६५)
स एनमिषुजालेन लघुत्वाच्छीघ्रविक्रमः ।
निमेषमात्रेणासाद्य कुन्तीपुत्रोऽभ्यवाकिरत् ॥ ७-२००-६३ (५४४६६)
ततो द्रौणिः प्रहस्यैनं द्रवन्तमभिभाष्य च ।
अवाकिरत्प्रदीप्ताग्रैः शरैस्तैरभिमन्त्रितैः ॥ ७-२००-६४ (५४४६७)
पन्नगैरिव दीप्तास्यैर्वमद्भिर्ज्वलनं रणे ।
अवकीर्णोऽभवत्पार्थः स्फुलिङ्गैरिव काञ्चनैः ॥ ७-२००-६५ (५४४६८)
तस्य रूपमभूद्राजन्भीमसेनस्य संयुगे ।
खद्योतैरावृतस्येव पर्वतस्य दिनक्षये ॥ ७-२००-६६ (५४४६९)
तदस्त्रं द्रोणपुत्रस्य तस्मिन्प्रतिसमस्यति ।
अवर्धत महाराज यथाऽग्निरनिलोद्धतः ॥ ७-२००-६७ (५४४७०)
विवर्धमानमालक्ष्य तदस्त्रं भीमविक्रमम् ।
पाण्डुसैन्यमृते भीमं सुमहद्भयमाविशत् ॥ ७-२००-६८ (५४४७१)
ततः शस्त्राणि ते सर्वे समुत्सृज्य महीतले ।
अवारोहन्रथेभ्यश्च हस्त्यश्वेभ्यश्च सर्वशः ॥ ७-२००-६९ (५४४७२)
तेषु निक्षिप्तशस्त्रेषु वाहनेभ्यश्च्युतेषु च ।

तदस्त्रवीर्यं विपुलं भीममूर्धन्यथापतत् ॥ ७-२००-७० (५४४७३)
हाहाकृतानि भूतानि पाण्डवाश्च विशेषतः ।
भीमसेनमपश्यन्त तेजसा संवृतं तथा ॥ ॥ ७-२००-७१ (५४४७४)

इति श्रीमन्महाभारते द्रोणपर्वणि नारायणास्त्रमोक्षपर्वणि
पञ्चदशदिवसयुद्धे द्विशततमोऽध्यायः ॥ २०० ॥
Mahabharata - Drona Parva - Chapter Footnotes

५-२००-२० गुडाः गोलाः हला इति क । क। पाठः ॥
५-२००-४० अस्माभिरस्मदीयैर्विदुरादिभिर्निवार्यमाणेन निषिध्यमानेनापि
तद्वनमनुगन्तुं प्रवेष्टुमेषिता अनुमता नतु प्रतिषिद्धा इत्यर्थः ॥
५-२००-२०० द्विशततमोऽध्यायः ॥

---

द्रोनपर्व-अध्यय२०१
॥ श्रीः ॥
७.२०१. अध्यायः २०१

Mahabharata - Drona Parva - Chapter Topics
नारयणास्त्रेणावेष्टिते भीमे कृष्णार्जुनाश्यां हस्ततः
शस्त्रापकर्षणपूर्वकं रथादवरोपिते सत्यस्त्रस्य प्रशमनम् ॥ १ ॥
ततः सङ्कुलयुद्धम् ॥ २ ॥

Mahabharata - Drona Parva - Chapter Text

७-२०१-० (५४४७५)
सञ्जय उवाय। ७-२०१-०क्ष् (४७९५)
भीमसेनं समाकीर्णं दृष्ट्वाऽस्त्रेण धनञ्जयः ।
तेजसः प्रतिघातार्थं वारुणेन समावृणोत् ॥ ७-२०१-१ (५४४७६)
नालक्षयत तत्कश्चिद्वारुणास्त्रेण संवृतम् ।
अर्जुनस्य लघुत्वाच्च संवृतत्वाच्च तेजसः ॥ ७-२०१-२ (५४४७७)
साश्वसूतरथो भीमो द्रोणपुत्रास्त्रसंवृतः ।
अग्नावग्निरिव न्यस्तो ज्वालामाली सुदुर्दृशः ॥ ७-२०१-३ (५४४७८)
यथा रात्रिक्षये राजञ्ज्योतीष्यस्तगिरिं प्रति ।
समापेतुस्तथा बाणा भीमसेनरथं प्रति ॥ ७-२०१-४ (५४४७९)
स हि भीमो रथश्चास्य हयाः सूतश्च मारिष ।
संवृता द्रोणपुत्रेण पावकान्तर्गताऽभवन् ॥ ७-२०१-५ (५४४८०)

यथा जग्ध्वा जगत्कृत्स्नं समये सचराचरम् ।
गच्छेद्वह्निर्विभोरास्यं तथाऽस्त्रं भीममावृणोत् ॥ ७-२०१-६ (५४४८१)
सूर्यमग्निः प्रविष्टः स्याद्यथा चाग्निं दिवाकरः ।
तथा प्रविष्टं तत्तेजो न आज्ञायत पाण्डवः ॥ ७-२०१-७ (५४४८२)
ग्तदस्त्रं भीमहुङ्कारादपयाति पुनःपुनः ।
पुनः पुनस्तमायाति हुंकारात्तं विमुञ्चति ।
ततो देवाः सगन्धर्वा भीमं दृष्ट्वा सुविस्मिताः'॥ ७-२०१-८ (५४४८३)
विकीर्णमस्त्रं तद्दृष्ट्वा तथा भीमरथं प्रति ।
उदीर्यमाणं द्रौणिं च निष्प्रतिद्वन्द्वमाहवे ॥ ७-२०१-९ (५४४८४)
सर्वसैन्यं च पाण्डूनां न्यस्तशस्त्रमचेतनम् ।
युधिष्ठिरपुरोगांश्च विमुखांस्तान्महारथनान् ॥ ७-२०१-१० (५४४८५)
अर्जुनो वासुदेवश्च त्वरमाणौ महाद्युती ।
अवप्लुत्य रथाद्वीरौ भीममाद्रवतां ततः ॥ ७-२०१-११ (५४४८६)
ततस्तद्द्रोणपुत्रस्य तेजोऽस्त्रबलसम्भवम् ।
विगाह्य तौ सुबलिनौ माययाऽविशतां तथा ॥ ७-२०१-१२ (५४४८७)
न्यस्तशस्त्रौ ततस्तौ तु नादहत्सोऽस्त्रजोऽनलः ।
वारुणास्त्रप्रयोगाच्च वीर्यवत्त्वाच्च कृष्णयोः ॥ ७-२०१-१३ (५४४८८)
ततश्चकृषतुर्भीमं सर्वशस्त्रायुधानि च ।
नारायणास्त्रशान्त्यर्थं नरनारायणौ बलात् ॥ ७-२०१-१४ (५४४८९)
आकृष्यमाणः कौन्तेयो नदत्येव महारवम् ।
वर्धते चैव तद्घोरं द्रौणेरस्त्रं सुदुर्जयम् ॥ ७-२०१-१५ (५४४९०)
तमब्रवीद्वासुदेवः किमिदं पाण्डुनन्दन ।
वार्यमाणोऽपि कौन्तेय यद्युद्धान्न निवर्तसे ॥ ७-२०१-१६ (५४४९१)
यदि युद्धेन जेयाः स्युरिमे कौरवनन्दनाः ।
वयमप्यत्र युध्येम तथा चेमे नरर्षभाः ॥ ७-२०१-१७ (५४४९२)
रथेभ्यस्त्ववतीर्णाः स्म सर्वे एव हि तावकाः ।
तस्मात्त्वमपि कौन्तेय रथात्तूर्णमपाक्रम ॥ ७-२०१-१८ (५४४९३)
एवमुक्त्वा तु तं कृष्णो रथाद्भूमिमवर्तयत् ।
निःश्वसन्तं यथा नागं क्रोधसंरक्तलोचनम् ॥ ७-२०१-१९ (५४४९४)
यदाऽपकृष्टः स रथान्न्यासितश्चायुधं भुवि ।
ततो नारायणास्त्रं तत्प्रशान्तं शत्रुतापनम् ॥ ७-२०१-२० (५४४९५)
सञ्जय उवाच। ७-२०१-२१क्ष् (४७९६)
तस्मिन्प्रशान्ते विधिना तेन तेजसि दुःसहे ।
बभूवुर्विमलाः सर्वा दिशः प्रदिश एव च ॥ ७-२०१-२१ (५४४९६)
प्रववुश्च शिवा वाताः प्रशान्ता मृगपक्षिणः ।
वाहनानि च हृष्टानि प्रशान्तेऽस्त्रे सुदुर्जये ॥ ७-२०१-२२ (५४४९७)

व्यपोढे च ततो घोरे तस्मिंस्तेजसि भारत ।
बभौ भीमो निशापाये धीमान्सूर्य इवोदितः ॥ ७-२०१-२३ (५४४९८)
हतशेषं बलं तत्तु पाण्डवानामतिष्ठत ।
अस्त्रव्युपरमाद्धृष्टं तव पुत्रजिघांसया ॥ ७-२०१-२४ (५४४९९)
व्यवस्थिते बले तस्मिन्नस्त्रे प्रतिहते तथा ।
दुर्योधनो महाराज द्रोणपुत्रमथाब्रवीत् ॥ ७-२०१-२५ (५४५००)
अश्वत्थामन्पुनः शीघ्रमस्त्रमेतत्प्रयोजय ।
अवस्थिता हि पाञ्चालाः पुनरेते जयैषिणः ॥ ७-२०१-२६ (५४५०१)
अश्वत्थामा तथोक्तस्तु तव पुत्रेण मारिष ।
सुदीनमभिनिः श्वस्य राजानमिदमब्रवीत् ॥ ७-२०१-२७ (५४५०२)
नैतदावर्तते राजन्नस्त्रं द्विर्नोपपद्यते ।
आवृतं हि निवर्तेत प्रयोक्तारं न संशयः ॥ ७-२०१-२८ (५४५०३)
एष चास्त्रप्रतीघातं वासुदेवः प्रयुक्तवान् ।
ग्अस्य तु ह्येष वै दाता मानुषेषु न विद्यते ॥ ७-२०१-२९ (५४५०४)
परावरज्ञो लोकानां न तदस्ति न वेत्ति यत् ।
तदेतदस्त्रं प्रशमं यातं कृष्णस्य मन्त्रितैः'॥ ७-२०१-३० (५४५०५)
द्विविधो विहितः सङ्ख्ये वधः शस्त्रोर्जनाधिप ।
पराजयो वा मृत्युर्वा श्रेयान्मृत्युर्न निर्जयः ॥ ७-२०१-३१ (५४५०६)
विजितास्त्वारयो ह्योते शस्त्रोत्सर्गान्मृतोपमाः ॥ ७-२०१-३२ (५४५०७)
दुर्योधन उवाच। ७-२०१-३३क्ष् (४७९७)
आचार्यपुत्र यद्येतद्द्विरस्त्रं न प्रयुज्यते ।
अन्यैर्गुरुघ्ना वध्यन्तामस्त्रैरस्त्रविदां वर ॥ ७-२०१-३३ (५४५०८)
त्वयि शस्त्राणि दिव्यानि त्र्यम्बके चामितौजसि ।
ग्घ्नतैतान्सुमहावीर्य शात्रवान्युद्धकोविदः'।
इच्छतो न हि ते मुच्येत्सङ्क्रुद्धो हि पुरन्दरः ॥ ७-२०१-३४ (५४५०९)
धृतराष्ट्र उवाच। ७-२०१-३५क्ष् (४७९८)
तस्मिन्नस्त्रे प्रतिहते द्रोणे चोपधिना हते ।
तथा दुर्योधनेनोक्तो द्रौणिः किमकरोत्पुनः ॥ ७-२०१-३५ (५४५१०)
दृष्ट्वा पार्थांश्च सङ्ग्रामे युद्धाय समुपस्थितान् ।
नारायणास्त्रनिर्मुक्तांश्चरतः पृतनामुखे ॥ ७-२०१-३६ (५४५११)
सञ्जय उवाच। ७-२०१-३७क्ष् (४७९९)
जानन्पितुः स निधनं सिंहलाङ्गूलकेतनः ।
सक्रोधो भयमुत्सृज्य सोऽभिदुद्राव पार्षतम् ॥ ७-२०१-३७ (५४५१२)
अभिद्रुत्य च विंशत्या क्षुद्रकाणां नरर्षभ ।
पञ्चभिश्चातिवेगेन विव्याध पुरुषर्षभः ॥ ७-२०१-३८ (५४५१३)
धृष्टद्युम्नस्ततो राजञ्ज्वलन्तमिव पावकम् ।

द्रोणपुत्रं त्रिषष्ट्या तु राजन्विव्याध पत्रिणाम् ॥ ७-२०१-३९ (५४५१४)
सारथिं चास्य विंशत्या स्वर्णपुङ्खैः शिलाशितैः ।
हयांश्च चतुरोऽविध्यच्चतुर्भिर्निशितैः शरैः ॥ ७-२०१-४० (५४५१५)
विद्ध्वा विद्धाऽनदद्द्रौणिं कम्पयन्निव मेदिनीम् ।
आददे सर्वलोकस्य प्राणानिव महारणे ॥ ७-२०१-४१ (५४५१६)
पार्षतस्तु बली राजन्कृतास्त्रः कृतनिश्चयः ।
द्रौणिमेवाभिदुद्राव मृत्युं कृत्वा निवर्तनम् ॥ ७-२०१-४२ (५४५१७)
ततो बाणमयं वर्षं द्रोणपुत्रस्य मूर्धनि ।
अवासृजदमेयात्मा पाञ्चाल्यो रथिनांवरः ॥ ७-२०१-४३ (५४५१८)
तं द्रौणिः समरे क्रुद्धं छादयामास पत्रिभिः ।
विव्याध चैनं दशभिः पितुर्वधमनुस्मरन् ॥ ७-२०१-४४ (५४५१९)
द्वाभ्यां च सुविसृष्टाभ्यां क्षुराभ्यां ध्वजकार्मुके ।
छित्त्वा पाञ्चालराजस्य द्रौणिरन्यैः समार्दयत् ॥ ७-२०१-४५ (५४५२०)
व्यश्वसूतरथं चैनं द्रौणिश्चक्रे महाहावे ।
तस्य चानुचरान्सर्वान्क्रुद्धः प्राद्रावयच्छरैः ॥ ७-२०१-४६ (५४५२१)
ततः प्रदुद्रुवे सैन्यं पाञ्चालानां विशाम्पते ।
सम्भ्रान्तरूपमार्तं च न परस्परमैक्षत ॥ ७-२०१-४७ (५४५२२)
दृष्ट्वा तु विमुखान्योधान्धृष्टद्युम्नं च पीडितम् ।
शैनेयोऽचोदयत्तूर्णं रथं द्रौणिरथं प्रति ॥ ७-२०१-४८ (५४५२३)
अष्टभिर्निशितैर्बाणैरश्वत्थामानमार्दयत् ।
विंशत्या पुनराहत्य नानारूपैरमर्षणः ।
विव्याध च तथा सूतं चतुर्भिश्चतुरो हयान् ॥ ७-२०१-४९ (५४५२४)
श्धनुर्ध्वजंक्र ; संयत्तश्चिच्छेद कृतहस्तवत् ।
स साश्वं व्यधमच्चापि रथं हेमपरिष्कृतम् ।
हृदि विव्याध समरे त्रिंशता सायकैर्भृशम् ॥ ७-२०१-५० (५४५२५)
एवं स पीडितो राजन्नश्वत्थामा महाबालः ।
शरजालैः परिवृतः कर्तव्यं नान्वपद्यत ॥ ७-२०१-५१ (५४५२६)
एवं गते गुरोः पुत्रे तव पुत्रो महारथः ।
कृपकर्णादिभिः सार्धं शरैः सात्वतमावृणोत् ॥ ७-२०१-५२ (५४५२७)
दुर्योधनस्तु विंशत्या कृपः शारद्वतस्त्रिभिः ।
कृतवर्माऽथ दशभिः कर्णः पञ्चाशता शरैः ॥ ७-२०१-५३ (५४५२८)
दुःशासनः शतेनैव वृषसेनश्च सप्तभिः ।
सात्यकिं विव्यधुस्तूर्णं समन्तान्निशितैः शरैः ॥ ७-२०१-५४ (५४५२९)
ततः स सात्यकी राजन्सर्वानेव महारथान् ।
विरथान्विमुखांश्चैव क्षणेनैवाकरोन्नृप ॥ ७-२०१-५५ (५४५३०)
अश्वत्थामा तु सम्प्राप्य चेतनां भरतर्षभ ।

चिन्तयामास दुःखार्तो निःश्वसंश्च पुनःपुनः ॥ ७-२०१-५६ (५४५३१)
अथो रथान्तरं द्रौणिः समारुह्य परन्तपः ।
सात्यकिं वारयामास किरञ्शरशतान्बहून् ॥ ७-२०१-५७ (५४५३२)
तमापतन्तं सम्प्रेक्ष्य भारद्वाजसुतं रणे ।
विरथं विमुखं चैव पुनश्चक्रे महारथः ॥ ७-२०१-५८ (५४५३३)
ततस्ते पाण्डवा राजन्दृष्ट्वा सात्यकिविक्रमम् ।
शङ्खशब्दान्भृशं चक्रुः सिंहनादांश्च नेदिरे ॥ ७-२०१-५९ (५४५३४)
एवं तं विरथं कृत्वा सात्यकिः सत्यविक्रमः ।
जघान वृषसेनस्य त्रिसाहस्रान्महारथान् ॥ ७-२०१-६० (५४५३५)
अयुतं दन्तिनां सार्धं कृपस्य निजघान सः ।
पञ्चायुतानि चाश्वानां शकुनेर्निजघान ह ॥ ७-२०१-६१ (५४५३६)
ततो द्रौणिर्महाराज रथमारुह्य वीर्यवान् ।
सात्यकिं प्रति सङ्क्रुद्धः प्रययौ तद्वधेप्सया। ७-२०१-६२ (५४५३७)
पुनस्तमागतं दृष्ट्वा शनेयो निशितैः शरैः ।
अदारयत्क्रुरतरैः पुनःपुनररिन्दम ॥ ७-२०१-६३ (५४५३८)
सोऽतिविद्धो महेष्वासो नानालिङ्गैरमर्षणः ।
युयुधानेन वै द्रौणिः प्रहसन्वाक्यमब्रवीत् ॥ ७-२०१-६४ (५४५३९)
शैनेयाब्युपपत्तिं ते जानाम्याचार्यघातिनि ।
न चैनं त्रास्यसि मया ग्रस्तमात्मानमेव च ॥ ७-२०१-६५ (५४५४०)
शपेत्मनाऽहं शैनेय सत्येन तपसा तथा ।
अहत्वा सर्वपाञ्चालान्यदि शान्तिमहं लभे ॥ ७-२०१-६६ (५४५४१)
यद्बलं पाण्डवेयानां वृष्णीनामपि यद्बलम् ।
क्रियतां सर्वमेवेह निहनिष्यामि सोमकान् ॥ ७-२०१-६७ (५४५४२)
एवमुक्त्वाऽर्करम्याभं सुतीक्ष्णं तं शरोत्तमम् ।
व्यसृजत्सात्वते द्रौणिर्वज्रं वृत्रे यथा हरिः ॥ ७-२०१-६८ (५४५४३)
स तं निर्भिद्य तेनास्तः सायकः शरावरम् ।
विवेश वसुधां भित्त्वा श्वसन्बिलमिवोरगः ॥ ७-२०१-६९ (५४५४४)
स भिन्नकवचः शूरस्तोत्रार्दित इव द्विपः ।
विमुच्य सशरं चापं भूरिव्रणपरिस्रवः ॥ ७-२०१-७० (५४५४५)
सीदन्रुधिरसिक्तश्च रथोपस्थ उपाविशत् ।
सूतेनापहृतस्तूर्णं द्रोणपुत्राद्रथान्तरम् ॥ ७-२०१-७१ (५४५४६)
अथान्येन सुपुङ्खेन शरेणानतपर्वणा ।
आजघान भ्रवोर्मध्ये धृष्टद्युम्नं परन्तपः ॥ ७-२०१-७२ (५४५४७)
स पूर्वमतिविद्धश्च भृशं पस्चाच्च पीडितः ।
ससदाथ च पाञ्चाल्यो व्यपाश्रयत च ध्वजम् ॥ ७-२०१-७३ (५४५४८)
तं नागमिव सिंहेन दृष्ट्वा राजञ्शरार्दितम् ।

जवेनाभ्यद्रवञ्छूराः पञ्च पाण्डवतो रथाः ॥ ७-२०१-७४ (५४५४९)
किरीटी भीमसेनश्च वृद्धक्षत्रश्च पौरवः ।
युवराजश्च चेदीनां मालवश्च सुदर्शनः ॥ ७-२०१-७५ (५४५५०)
एते हाहाकृताः सर्वे प्रगृहीतशरासनाः ।
वीरं द्रौणायनिं वीराः सर्वतः पर्यवारयन् ॥ ७-२०१-७६ (५४५५१)
ते विंशतिपदे यत्ता गुरुपुत्रममर्षणम् ।
पञ्चभिः पञ्चभिर्बाणैरभ्यघ्नन्सर्वतः समम् ॥ ७-२०१-७७ (५४५५२)
आशीविषाभैर्विंशत्या पञ्चभिस्तु शितैः शरैः ।
चिच्छेद युगपद्द्रौणिः पञ्चविंशतिसायकान् ॥ ७-२०१-७८ (५४५५३)
सप्तभिस्तु शितैर्बाणैः पौरवं द्रौणिरार्दयत् ।
मालवं त्रिभिरेकेन पार्थं षड्भिर्वृकोदरम्। ७-२०१-७९ (५४५५४)
ततस्ते विव्यधुः सर्वे द्रौणिं राजन्महारथाः ।
युगपच्च पृथक्चैव रुक्मपुङ्खैः शिलाशितैः ॥ ७-२०१-८० (५४५५५)
युवराजश्च विंशत्या द्रौणिं विव्याध पत्रिभिः ।
पार्थश्च पुनरष्टाभिस्तथा सर्वे त्रिभिस्त्रिभिः ॥ ७-२०१-८१ (५४५५६)
ततोऽर्जुनं षड्भिरथाजघान
द्रौणायनिर्दशभिर्वासुदेवम् ।
भीमं दशार्धैर्युवारजं चतुर्भि-
र्द्वाभ्यां द्वाभ्यां मालवं पौरवं च ॥ ७-२०१-८२ (५४५५७)
सूतं विद्ध्वाः भीमसेनस्य षड्भि--
र्द्वाभ्यां विद्ध्वा कार्मुकं च ध्वजं च ।
पुनः पार्थं शरवर्षेण विद्ध्वा
द्रौणिर्घोरं सिंहनादं ननाद ॥ ७-२०१-८३ (५४५५८)
तस्यास्यतस्तान्निशितान्पीतधारा--
न्द्रौणेः शरान्पृष्ठतश्चाग्रतश्च ।
धरा वियद्द्यौः प्रदिशो दिशश्च
च्छन्ना बाणैरभवन्धोररूपैः ॥ ७-२०१-८४ (५४५५९)
आसन्नस्य स्वरथं तीव्रतेजाः
सुदर्शनस्येन्द्रकेतुप्रकाशौ ।
भुजौ शिरश्चेन्द्रसमानवीर्य--
स्त्रिभिः शरैर्युगपत्सञ्चकर्त ॥ ७-२०१-८५ (५४५६०)
स पौरवं रथशक्त्या निहत्य
च्छित्त्वा रथं तिलशश्चास्य बाणैः ।
छित्त्वा च बाहू वरचन्दनाक्तौ
भल्लेन कायाच्छिर उच्चकर्त ॥ ७-२०१-८६ (५४५६१)
युवानमिन्दीवरदामवर्णं

चेदिप्रभुं युवराजं प्रसह्य ।
बाणैस्त्वरावाञ्ज्वलिताग्निकल्पै--
र्विद्ध्वा प्रादान्मृत्येव साश्वसूतम् ॥ ७-२०१-८७ (४४५६२)
श्क्रमालवं पौरवं चैव युवराजं च चेदिपम् ।
दृष्ट्वा समक्षं निहतं द्रोणपुत्रोण पाण्डवः ।
भीमसेनो महाबाहुः क्रोधमाहारयत्परम् ॥ ७-२०१-८८ (४४५६३)
ततः शरशतैस्तीक्ष्णैः सङ्क्रुद्धाशीविषोपमैः ।
छादयामास समरे द्रोणपुत्रं परन्तपः ॥ ७-२०१-८९ (४४५६४)
ततो द्रौणिर्महातेजाः शरवर्षं निहत्य तम् ।
विव्याध निशितैर्बाणैर्भीमसेनममर्षणः ॥ ७-२०१-९० (४४५६५)
ततो भीमो महाबाहुर्द्रौणेर्युधि महाबलः ।
क्षुरप्रेण धनुश्छित्त्वा द्रौणिं विव्याध पत्रिणा ॥ ७-२०१-९१ (४४५६६)
तदपास्य धनुश्छिन्नं द्रोणपुत्रो महामनाः ।
अन्यत्कार्मुकमादाय भीमं विव्याध पत्रिभिः ॥ ७-२०१-९२ (४४५६७)
तौ द्रौणिभीमौ समरे पराक्रान्तौ महाबलौ ।
अवर्षतां शरवर्षं वृष्टिमन्ताविवाम्बुदौ ॥ ७-२०१-९३ (४४५६८)
भीमनामाङ्किता बाणाः स्वर्णपुङ्खाः शिलाशिताः ।
द्रौणिं सञ्छादयामासुर्घनौघा इव भास्करम् ॥ ७-२०१-९४ (४४५६९)
तथैव द्रौणिनिर्मुक्तैर्भीमः सन्नतपर्वभिः ।
अवाकीर्यत स क्षिप्रं शरैः शतसहस्रशः ॥ ७-२०१-९५ (४४५७०)
स च्छाद्यमानः समरे द्रौणिना रणशालिना ।
न विव्यथे महाराज तदद्भुतमिवाभवत् ॥ ७-२०१-९६ (४४५७१)
ततो भीमो महाबाहुः कार्तस्वरविभूषितान् ।
नाराचान्दश सम्प्रैषीद्यमदण्डनिभाञ्छितान् ॥ ७-२०१-९७ (४४५७२)
ते जत्रुदेशमासाद्य द्रोणपुत्रस्य मारिष ।
निर्भिद्य विविशुस्तूर्णं वल्मीकमिव पन्नगाः ॥ ७-२०१-९८ (४४५७३)
सोऽतिविद्धो भृशं द्रौणिः पाण्डवेन महात्मना ।
ध्वजयष्टिं समासाद्य न्यमीलयत लोचने ॥ ७-२०१-९९ (४४५७४)
स मुहूर्तात्पुनः संज्ञां लब्ध्वा द्रौणिर्नराधिप ।
क्रोधं परममातस्थौ समरे रुधिरोक्षितः ॥ ७-२०१-१०० (४४५७५)
दृढं सोऽभिहतस्तेन पाण्डवेन महात्मना ।
वेगं चक्रे महाबाहुर्भीमसेनरथं प्रति ॥ ७-२०१-१०१ (४४५७६)
तत आकर्णपूर्णानां शराणां तिग्मतेजसाम् ।
शतमाशीविषाभानां प्रेषयामास भारत ॥ ७-२०१-१०२ (४४५७७)
भीमोऽपि समरश्लाघी तस्य वीर्यमचिन्तयत् ।
तूर्णं प्रासृजदुग्राणि शरवर्षाणि पाण्डवः ॥ ७-२०१-१०३ (४४५७८)

ततो द्रौणिर्महाराज च्छित्त्वाऽस्य विशिखैर्धनुः ।
आजघानोरसि क्रुद्धः पाण्डवं निशितैः शरैः ॥ ७-२०१-१०४ (५४५७९)
ततोऽन्यद्धनुरादाय भीमसेनो ह्यमर्षणः ।
विव्याध निशितैर्बाणैर्द्रौणिं पञ्चभिराहवे ॥ ७-२०१-१०५ (५४५८०)
जीमूताविव घर्मान्ते तौ शरौघप्रवर्षिणौ ।
अन्योन्यक्रोधताम्राक्षौ छादयामासतुर्युधि ॥ ७-२०१-१०६ (५४५८१)
तलशब्दैस्ततो घोरैस्त्रासयन्तौ परस्परम् ।
अयुध्येतां सुसंरब्धौ कृतप्रतिकृतैषिणौ ॥ ७-२०१-१०७ (५४५८२)
ततो विष्फार्य सुमहच्चापं रुक्मविभूषितम् ।
भीमं प्रैक्षत स द्रौणिः शरानस्यन्तमन्तिकात् ।
शरद्यहर्मध्यगतो दीप्तार्चिरिव भास्करः ॥ ७-२०१-१०८ (५४५८३)
आददनास्य विशिखान्सन्दधानस्य चाशुगान् ।
विकर्षतो मुञ्चतश्च नान्तरं ददृशुर्जनाः ॥ ७-२०१-१०९ (५४५८४)
अलातचक्रप्रतिमं तस्य मण्डलमायुधम् ।
द्रौणेरासीन्महाराज बाणान्विसृजतस्तदा ॥ ७-२०१-११० (५४५८५)
धनुश्च्युताः शरास्तस्य शतशोऽथ सहस्रशः ।
आकाशे प्रत्यदृश्यन्त शलभानामिवायतीः ॥ ७-२०१-१११ (५४५८६)
ते तु द्रौणिविनिर्मुक्ताः शरा हेमविभूषिताः ।
अजस्रमन्वकीर्यन्त घोरा भीमरथं प्रति ॥ ७-२०१-११२ (५४५८७)
तत्राद्भुतकमपश्याम भीमसेनस्य विक्रमम् ।
बलं वीर्यं प्रभावं च व्यवसायं च भारत ॥ ७-२०१-११३ (५४५८८)
तां स मेघादिवोद्भूतां बाणवृष्टिं समन्ततः ।
जलवृष्टिं महाघोरां तपान्त इव चिन्तयन् ॥ ७-२०१-११४ (५४५८९)
द्रोणपुत्रवधप्रेप्सुर्भीमो भीमपराक्रमः ।
अमुञ्चच्छरवर्षाणि प्रावृषीव बलाहकः ॥ ७-२०१-११५ (५४५९०)
तद्रुक्मपृष्टं भीमस्य धनुर्घोरं महारणे ।
विकृष्यमाणं विबभौ शक्रचापमिवापरम् ॥ ७-२०१-११६ (५४५९१)
तस्माच्छराः प्रादुरासञ्छतशोऽथ सहस्रशः ।
सञ्छादयन्तः समरे द्रौणिमाहवशोभिनम् ॥ ७-२०१-११७ (५४५९२)
तयोर्विसृजतोरेवं शरजालानि मारिष ।
वायुरप्यन्तरा राजन्नाशक्नोत्प्रतिसर्पितुम् ॥ ७-२०१-११८ (५४५९३)
तथा द्रौणिर्महाराज शरान्हेमविभूषितान् ।
तैलधौतान्प्रसन्नाग्रान्प्राहिणोद्वधकाङ्क्षया ॥ ७-२०१-११९ (५४५९४)
तानन्तरिक्षे विशिखैस्त्रिधैकैकमशातयत्
विशेषयन्द्रोणसुतं तिष्ठतिष्ठेति चाब्रवीत् ॥ ७-२०१-१२० (५४५९५)
पुनश्च शरवर्षाणि घोराण्युग्राणि पाण्डवः ।

व्यसृजद्बलवानक्रुद्धो द्रोणपुत्रवधेप्सया ॥ ७-२०१-१२१ (५४५९६)
ततोऽस्त्रमायया तूर्णं शरवृष्टिं निवार्य ताम् ।
धनुश्चिच्छेद भीमस्य द्रोणपुत्रो महास्त्रवित् ।
शरैश्चैनं सुबहुभिः क्रुद्धः सङ्ख्ये पराभिनत् ॥ ७-२०१-१२२ (५४५९७)
स छिन्नधन्वा बलवान्रथशक्तिं सुदारुणाम् ॥
वेगेनाविध्य चिक्षेप द्रोणपुत्ररथं प्रति ॥ ७-२०१-१२३ (५४५९८)
तामापतन्तीं सहसा महोल्काभां शितैः शरैः ।
चिच्छेद समरे द्रौणिर्दर्शयन्पाणिलाघवम् ॥ ७-२०१-१२४ (५४५९९)
एतस्मिन्नन्तरे भीमो दृढमादाय कार्मुकम् ।
द्रौणिं विव्याध विशिखैः स्मयमानो वृकोदरः ॥ ७-२०१-१२५ (५४६००)
ततो द्रौणिर्महाराज भीमसेनस्य सारथिम् ।
ललाटे दारयामास शरेणानतपर्वणा ॥ ७-२०१-१२६ (५४६०१)
सोऽतिविद्धो बलवता द्रोणपुत्रेण सारथिः ।
व्यामोहमगमद्राजन्नश्मीनुत्सृज्य वाजिनां ॥ ७-२०१-१२७ (५४६०२)
ततोऽश्वाः प्राद्रवंस्तूर्णं मोहिते रथसारथौ ।
भीमसेनस्य राजेनद्र पश्यतां सर्वधन्विनाम् ॥ ७-२०१-१२८ (५४६०३)
तं दृष्ट्वा प्रद्रुतैरश्वैरपकृष्टं रणाजिरात् ।
दध्मौ प्रमुदितः शङ्खं बृहन्तमपराजितः ॥ ७-२०१-१२९ (५४६०४)
ततः सर्वे च पाञ्चाला भीमसेनश्च पाण्डवः ।
धृष्टद्युम्नरथं त्यक्त्वा भीताः सम्प्राद्रवन्दिशः ॥ ७-२०१-१३० (५४६०५)
तान्प्रभग्नांस्ततो द्रौणिः पृष्ठतो विकिरञ्शरान् ।
अभ्यवर्तत वेगेन कालयन्पाण्डुवाहिनीम् ॥ ७-२०१-१३१ (५४६०६)
ते वध्यमानाः समरे द्रोणपुत्रेण पार्थिवाः ।
द्रोणपुत्रभयाद्राजन्दिशः सर्वाश्च भेजिरे ॥ ॥ ७-२०१-१३२ (५४६०७)

इति श्रीमन्महाभारते द्रोणपर्वण नारायणास्त्रमोक्षपर्वणि
पञ्चदशदिवसयुद्धे एकाधिकद्विशततमोऽध्यायः ॥ २०१ ॥
Mahabharata - Drona Parva - Chapter Footnotes

५-२०१-क़ एतदादि १४ श्लोकाः झ ।पुस्त एव दृश्यन्ते।५-२०१-क़
एतदादि ४२ श्लोकाः झ।पाठ एव सन्ति ।

---

द्रोनपर्व-अध्यय२०२
॥ श्रीः ॥
७.२०२. अध्यायः २०२

Mahabharata - Drona Parva - Chapter Topics
नारायणास्त्रे विफलीकृते पुनरश्वत्थाम्नाऽऽग्नेयास्त्रप्रयोगः ॥ १ ॥
तस्यापि पार्थेन व्यर्थीकरणे दूयमानेन द्रौणिना शस्त्रन्यासपूर्वकं
रणाङ्कणान्निर्गमनम् ॥ २ ॥
निर्गच्छता च तेन यदृच्छासमागतं व्यासं प्रति
निजास्त्रवैफल्यकारणप्रश्नः ॥ ३ ॥
व्यासेन कृष्णार्जुनयोर्नरनारायणात्मकत्वे कथिते प्रतिनिवृत्तेन
द्रौणिना सेनावहारः ॥ ४ ॥

Mahabharata - Drona Parva - Chapter Text

७-२०२-० (५४६०८)
सञ्जय उवाच। ७-२०२-०क्ष् (४८००)
तत्प्रभग्नं बलं दृष्ट्वा कुन्तीपुत्रो धनञ्जयः ।
न्यवारयदमेयात्मा द्रोणपुत्रजयेप्सया ॥ ७-२०२-१ (५४६०९)
ततस्ते सैनिका राजन्सर्वे तत्रावतस्थिरे ।
संस्थाप्यमाना यत्नेन गोविन्देनार्जुनेन च ॥ ७-२०२-२ (५४६१०)
एक एव च बीभत्सुः सोमकावयवैः सह ।
मात्स्यैरन्यैश्च संधाय कौरवान्सन्न्यवर्तत ॥ ७-२०२-३ (५४६११)
ततो द्रुतमतिक्रम्य सिंहलाङ्गूलकेतनम् ।
सव्यसाची महेष्वासमश्वत्थामानमब्रवीत् ॥ ७-२०२-४ (५४६१२)
य शक्तिर्यच्च विज्ञानं यद्वीर्यं यच्च पौरुषम् ।
धार्तराष्ट्रेषु या प्रीतिर्द्वेषोऽस्मासु च यच्च ते ॥ ७-२०२-५ (५४६१३)
यच्च भूयोऽस्ति तेजस्ते तत्सर्वं मयि दर्शय ।
स एव द्रोणहन्ता ते दर्पं छेत्स्यति पार्षतः ॥ ७-२०२-६ (५४६१४)
कालानलसमप्रख्यं द्विषामन्तकोपमम् ।
समासादय पाञ्चाल्यं मां चापि सहकेशवम् ।
दर्पं नाशयितास्म्यद्य तवोद्वृत्तस्य संयुगे ॥ ७-२०२-७ (५४६१५)
धृतराष्ट्र उवाच। ७-२०२-८क्ष् (४८०१)
आचार्यपुत्रो मानार्हो बलवांश्चापि सञ्जय ।
प्रीतिर्धनञ्जये चास्य प्रियश्चापि महात्मनः ॥ ७-२०२-८ (५४६१६)
न भूतपूर्वं बीभत्सोर्वाक्यं परुषमीदृशम् ॥
अथ कस्मात्स कौन्तेयः सखायं रूक्षमुक्तवान् ॥ ७-२०२-९ (५४६१७)
सञ्जय उवाच। ७-२०२-१०क्ष् (४८०२)
युवराजे हते चैव वृद्धक्षत्रे च पौरवे ।
इष्वस्त्रविधिसम्पन्ने मालवे च सुदर्शने ॥ ७-२०२-१० (५४६१८)

धृष्टद्युम्ने सात्यकौ च भीमे चापि पारजिते ।
युधिष्ठिरस्य तैर्वाक्यैर्मर्मण्यपि च घट्टिते। ७-२०२-११ (५४६१९)
अन्तर्भेदे च सञ्जाते दुःखं संस्मृत्य च प्रभो ।
अभूतपूर्वो बीभत्सोर्दुःखान्मन्युरजायत ॥ ७-२०२-१२ (५४६२०)
तस्मादनर्हमश्लीलमप्रियं द्रोणिमुक्तवान् ।
मान्यमाचार्यतनयं रूक्षं कापुरुषं यथा ॥ ७-२०२-१३ (५४६२१)
एवमुक्तः श्वसन्क्रोधान्महेष्वासतमो नृप ।
पार्थेन परुषं वाक्यं सर्वमर्मभिदा गिरा ॥ ७-२०२-१४ (५४६२२)
द्रौणिश्चुकोप पार्थाय कृष्णाय च विशेषतः ।
स तु यत्तो रथे स्थित्वा वार्युपस्पृश्य वीर्यवान् ॥ ७-२०२-१५ (५४६२३)
देवैरपि सुदुर्धर्षमस्त्रमाग्नेयमाददे ।
दृश्यादृश्यानरिगणानुद्दिश्याचार्यनन्दनः ॥ ७-२०२-१६ (५४६२४)
सोऽभिमन्त्र्य शरं दीप्तं विधूममिव पावकम् ।
सर्वतः क्रोधमाविश्य चिक्षेप परवीरहा ॥ ७-२०२-१७ (५४६२५)
ततस्तुमुलमाकाशे शरवर्षमजायत ।
पावकार्चिपरीतं तत्पार्थमेवाभिपुप्लुवे ॥ ७-२०२-१८ (५४६२६)
उल्काश्च गगनात्पेतुर्दिशश्च न चकाशिरे ।
तमश्च सहसा रौद्रं चमूमवततार ताम् ॥ ७-२०२-१९ (५४६२७)
रक्षांसि च पिशाचाश्च विनेदुरतिसङ्गताः ।
ववुश्चाशिशिरा वाताः सूर्यो नैव तताप च ॥ ७-२०२-२० (५४६२८)
वायसाश्चापि चाक्रन्दन्दिक्षु सर्वासु भैरवम् ।
रुधिरं चापि वर्षन्तो निनेदुस्तोयदा दिवि ॥ ७-२०२-२१ (५४६२९)
पक्षिणः पशवो गावो विनेदुश्चापि सुव्रताः ।
परमं प्रयतात्मानो न शान्तिमुपलेभिरे ॥ ७-२०२-२२ (५४६३०)
भ्रान्तसर्वमहाभूतमावर्तितदिवाकरम् ।
त्रैलोक्यमभिसन्तप्तं ज्वराविष्टमिवाभवत् ॥ ७-२०२-२३ (५४६३१)
अस्त्रतेजोभिसन्तप्ता नागा भूमिशयास्तथा ।
निःश्वसन्तः समुत्पेतुस्तेजो घोरं मुमुक्षवः ॥ ७-२०२-२४ (५४६३२)
जलजानि च सत्वानि दह्यमानानि भारत ।
न शान्तिमुपजग्मुर्हि तप्यमानैर्जलाशयैः ॥ ७-२०२-२५ (५४६३३)
दिग्भ्यः प्रदिग्भ्यः खाद्भूमेः सर्वतः शरवृष्टयः ।
उच्चावचा निपेतुर्वै गरुडानिलरंहसः ॥ ७-२०२-२६ (५४६३४)
तैः शरैर्द्रोणपुत्रस्य वज्रवेगैः समाहताः ।
प्रदग्धा रिपवः पेतुरग्निदग्धा इव द्रुमाः ॥ ७-२०२-२७ (५४६३५)
दह्यमाना महानागाः पेतुरुर्व्यां समन्ततः ।
नदन्तो भैरवान्नादाञ्ज्वलदोपमनिस्वनान् ॥ ७-२०२-२८ (५४६३६)

अपरे प्रद्रुता नागा भयत्रस्ता विशाम्पते ।
त्रेसुर्दिशो यथा पूर्वं वने दावाग्निसंवृताः ॥ ७-२०२-२९ (५४६३७)
द्रुमाणां शिखराणीव दावदग्धानि मारिष ।
अश्वबृन्दान्यदृश्यन्त रथबृन्दानि भारत ।
अपतन्त रथौघाश्च तत्रतत्र सहस्रशः ॥ ७-२०२-३० (५४६३८)
तत्सैन्यं भयसंविग्नं ददाह युधि भारत ।
युगान्ते सर्वभूतानि संवर्तक इवानलः ॥ ७-२०२-३१ (५४६३९)
दृष्ट्वा तु पाण्डवीं सेनां दह्यमानां महाहवे ।
प्रहृष्टास्तावका राजन्सिंहनादान्विनेदिरे ॥ ७-२०२-३२ (५४६४०)
ततस्तूर्यसहस्राणि नानालिङ्गानि भारत ।
तूर्णमाजघ्निरे हृष्टास्तावका जितकाशिनः ॥ ७-२०२-३३ (५४६४१)
कृत्स्ना ह्यक्षौहिणी राजन्सव्यसाची च पाण्डवः ।
तमसा संवृते लोके नादृश्यन्त महाहवे ॥ ७-२०२-३४ (५४६४२)
नैव नस्तादृशं राजन्दृष्टपूर्वं न च श्रुतम् ।
यादृशं द्रोणपुत्रेण सृष्टमस्त्रममर्षिणा ॥ ७-२०२-३५ (५४६४३)
अर्जुनस्तु महाराज ब्राह्ममस्त्रमुदैरयत् ।
सर्वास्त्रप्रतिघातार्थं विहितं पद्मयोनिना ॥ ७-२०२-३६ (५४६४४)
ततो मुहूर्तादिव तत्तमो व्युपशशाम ह ।
प्रववौ चानिलः शीतो दिशश्च विमला बभुः ॥ ७-२०२-३७ (५४६४५)
तत्राद्भुतमपश्याम कृत्स्नामक्षौहिणीं हताम् ।
अनभिज्ञेयरूपां च प्रदग्धामस्त्रतेजसा ॥ ७-२०२-३८ (५४६४६)
ततो वीरौ महेष्वासौ विमुक्तौ केशवार्जुनौ ।
सहितौ प्रत्यदृश्येतां नभसीव तमोनुदौ ।
ततो गण्डीवधनन्वा च केशवश्चाक्षतावुभौ ॥ ७-२०२-३९ (५४६४७)
सपताकध्वजहयः सानुकर्षवरायुधः ।
प्रबभौ सरथो युक्तस्तावकानां भयङ्करः ॥ ७-२०२-४० (५४६४८)
ततः किलकिलाशब्दः शङ्खभेरीस्वनैः सह ।
पाण्डवानां प्रहृष्टानां क्षणेन समजायत ॥ ७-२०२-४१ (५४६४९)
हताविति तयोरासीत्सेनयोरुभयोर्मतिः ।
तरसाऽभ्यागतौ दृष्ट्वा सहितौ कैशवार्जुनौ ॥ ७-२०२-४२ (५४६५०)
तावक्षतौ प्रमुदितौ दध्मतुर्वारिजोत्तमौ ।
दृष्ट्वा प्रमुदितान्पार्थांस्त्वदीया व्यथिताऽभवन् ॥ ७-२०२-४३ (५४६५१)
विमुक्तौ च महात्मानौ दृष्ट्वा द्रौणिः सुदुःखितः ।
मुहूर्तं चिन्तयामास किन्त्वेतदिति मारिष ॥ ७-२०२-४४ (५४६५२)
चिन्तयित्वा तु राजेन्द्र ध्यानशोकपरायणः ।
निःश्वसन्दीर्घमुष्णं च विमनाश्चाभवत्ततः ॥ ७-२०२-४५ (५४६५३)

सञ्जय उवाच। ७-२०२-४६क्ष् (४८०३)
ततो द्रौणिर्धनुस्त्यक्त्वा रथात्प्रस्कन्द्य वेगितः ।
धिग्धिक्सर्वमिदं मिथ्येत्युक्त्वा सम्प्राद्रवद्रणात् ॥ ७-२०२-४६ (५४६५४)
ततः स्निग्धाम्बुदाभासं वेदावासमकल्मषम् ।
वेदव्यासं सरस्वत्यावासं व्यासं ददर्श ह ॥ ७-२०२-४७ (५४६५५)
तं द्रौणिरग्रतो दृष्ट्वा स्थितं कुरुकुलोद्वहम् ।
सन्नकण्ठोऽब्रवीद्वाक्यमभिवाद्य सुदीनवत् ॥ ७-२०२-४८ (५४६५६)
भोभो माया यदृच्छा वा दैवं वा किमिदं भवेत् ।
अस्त्रं त्विदं कथं मिथ्या मम कश्च व्यतिक्रमः ॥ ७-२०२-४९ (५४६५७)
अधरोत्तरमेतद्वा लोकानां वा पराभवः ।
यदिमौ जीवतः कृष्णौ कालो हि दुरतिक्रमः ॥ ७-२०२-५० (५४६५८)
नासुरा न च गन्धर्वा न पिशाचा न राक्षसाः ।
न सर्पा यक्षपतगा न मनुष्याः कथञ्चन ॥ ७-२०२-५१ (५४६५९)
उत्सहन्तेऽन्यथा कर्तुमेतदस्त्रं मयेरितम् ।
तदिदं केवलं हत्वा शान्तमक्षौहिणीं ज्वलत् ॥ ७-२०२-५२ (५४६६०)
सर्वघानि मया मुक्तमस्त्रं परमदारुणम् ।
केनेमौ मर्त्यधर्माणौ नाधाक्षीत्केशवार्जुनौ ॥ ७-२०२-५३ (५४६६१)
एतत्प्रब्रूहि भगवन्मया पृष्टो यथातथम् ।
श्रोतुमिच्छामि तत्त्वेन सर्वमेतन्महामुने ॥ ७-२०२-५४ (५४६६२)
व्यास उवाच। ७-२०२-५५क्ष् (४८०४)
महान्तमेवमर्थं मां यं त्वं पृच्छसि विस्मयात् ।
तं प्रवक्ष्यामि ते सर्वं समाधाय मनः शृणु ॥ ७-२०२-५५ (५४६६३)
योऽसौ नारायणो नाम पूर्वेषामपि पूर्वजः ।
ग्आदिदेवो जगन्नाथो लोककर्ता स्वयं प्रभुः ॥ ७-२०२-५६ (५४६६४)
आद्यः सर्वस्य लोकस्य अनादिनिधनोऽच्युतः ।
व्याकुर्वते यस्य तत्त्वं श्रुतयो मुनयश्च ह ॥ ७-२०२-५७ (५४६६५)
अतोऽजय्यः सर्वभूतैर्मनसाऽपि जगत्पतिः ।
तस्मादिमं जेतुकाम अज्ञानतमसा वृतः ॥ ७-२०२-५८ (५४६६६)
मा शुचः पुरुषव्याघ्र विद्धि तद्वदिहार्जुनम् ।
तस्य शक्तिरसौ पार्थास्तस्माच्छोकमिमं त्यज ॥ ७-२०२-५९ (५४६६७)
विश्वेश्वरोऽयं लोकादिः परमात्मा ह्यधोक्षजः ।
सहस्रसंहितादंशादेकांशोऽयमजायत ॥ ७-२०२-६० (५४६६८)
देवानां हितकामार्थं लोकानां चैव सत्तमः’।
अजायत च कार्यार्थं पुत्रो धर्मस्य विश्वकृत् ॥ ७-२०२-६१ (५४६६९)
स तपस्तीव्रमातस्थे शिशिरं गिरिमास्थितः ।
ऊर्ध्वबाहुर्महातेजा ज्वलनादित्यसन्निभः ॥ ७-२०२-६२ (५४६७०)

षष्टिं वर्षसहस्राणि तावन्त्येव शतानि च ।
अशोषयत्तदाऽऽत्मानं वायुभक्षोऽम्बुजेक्षणः ॥ ७-२०२-६३ (५४६७१)
अथापरं तपस्तप्त्वा द्विस्ततोऽन्यत्पुनर्महत् ।
द्यावापृथिव्योर्विवरं तेजसा समपूरयत् ॥ ७-२०२-६४ (५४६७२)
स तेन तपसा तात ब्रह्मभूतो यदाऽभवत् ।
ततो विश्वेश्वरं योनिं विश्वस्य जगतः पतिम् ।
ददर्श भृशदुर्धर्षं सर्वदेवैरभिष्टुतम् ॥ ७-२०२-६५ (५४६७३)
अणीयांसमणुभ्यश्च बृहद्भयश्च बृहत्तमम् ।
रुद्रमीशानवृषभं हरं शंभुं कपर्दिनम् ॥ ७-२०२-६६ (५४६७४)
चेकितानं परां योनिं तिष्ठतो गच्छतश्च ह ।
दुर्वारणं सुदुर्धर्षं दुर्निरीक्ष्यं दुरासदम् ।
अतिमन्युं महात्मानं सर्वभूतप्रचेतसम् ॥ ७-२०२-६७ (५४६७५)
दिव्यं चापमिषुधी चाददानं
हिरण्यवर्माणमनन्तवीर्यम् ।
पिनाकिनं वज्रिणं दीप्तशूलं
परश्वथिं गदिनं चायतासिम् ॥ ७-२०२-६८ (५४६७६)
बभ्रूजटामण्डलचन्द्रमौलिं
व्याघ्राजिनं परिघिणं दण्डपाणिम् ।
शुभाङ्गदं नागयज्ञोपवीतं
विश्वैर्गणैः शोभितं भूतसङ्घैः ।
एकीभूतं तपसां सन्निधानं
वचोधिकैः सुष्टुतमिष्टवाग्भिः ॥ ७-२०२-६९ (५४६७७)
जलं दिशं खं क्षितिं चन्द्रसूर्यौ
हुताशवायुप्रतिमं सुरेशम् ।
नालं द्रष्टुं यं जना भिन्नवृत्ता
ब्रह्मद्विषघ्नममृतस्य योनिम् ॥ ७-२०२-७० (५४६७८)
यं पश्यन्ति ब्राह्मणाः साधुवृत्ताः
क्षीणे पापे मनसा वीतशोकाः ।
तन्निष्ठात्मा तपसा धर्ममीड्यं
तद्भक्त्या वै विश्वरूपं ददर्श ॥ ७-२०२-७१ (५४६७९)
दृष्ट्वा चैनं वाङ्मनोबुद्धिदेहैः
संहृष्टात्मा मुमुदे वासुदेवः ॥ ७-२०२-७२ (५४६८०)
अक्षमालापरिक्षिप्तं ज्योतिषां परमं निधिम् ।
रुद्रं नारायणो दृष्ट्वा ववन्दे विश्वसम्भवम् ॥ ७-२०२-७३ (५४६८१)
वरदं पृथुचार्वङ्ग्या पार्वत्या सहितं प्रभुम् ।
क्रीडमानं महात्मानं भूतसङ्घगणैर्वृतम् ॥ ७-२०२-७४ (५४६८२)

अजमीशानमव्यक्तं कारणात्मानमच्युतम् ।
अभिवाद्याथ रुद्राय सद्योऽन्धकनिपातिने ।
पद्माक्षस्तं विरुपाक्षमभितुष्टाव भक्तिमान् ॥ ७-२०२-७५ (५४६८३)
श्रीनारायण उवाच। ७-२०२-७६क्ष् (४८०५)
त्वत्सम्भूता भूतकृतो वरेण्य
गोसारोऽस्य भुवनस्यादिदेव ।
आविश्येमां धरणीं येऽभ्यरक्षन्
पुरा पुराणीं तव देव सृष्टिम् ॥
सुरासुरान्नागरक्षःपिशाचा--
न्नरान्सुपर्णानथ गन्धर्वयक्षान्। ७-२०२-७६ (५४६८४)
पृथग्विधान्भूतसङ्घांश्च विश्वां--
स्त्वत्सम्भूतान्विद्म सर्वांस्तथैव ॥ ७-२०२-७७ (५४६८५)
ऐन्द्रं याम्यं वारुणं वैत्तपाल्यं
पैत्रं त्वाष्ट्रं कर्म सौम्यं च तुभ्यम् ॥ ७-२०२-७८ (५४६८६)
रूपं ज्योतिः शब्द आकाशवायुः
स्पर्शः स्वाद्यं सलिलं गन्ध उर्वी ।
कालो ब्रह्मा ब्रह्म च ब्राह्मणाश्च
त्वत्सम्भूताः स्थास्नु चरिष्णु चेदम् ॥ ७-२०२-७९ (५४६८७)
अद्भयः स्तोका यान्ति यथा पृथक्त्वं
ताभिश्चैक्यं संक्षये यान्ति भूयः ।
एवं विद्वान्प्रभवं चाप्ययं च
त्वसम्भूतं तव सायुज्यमेति ॥ ७-२०२-८० (५४६८८)
दिव्यामृतौ मानसौ द्वौ सुपर्णा--
ववाक्षाखः पिप्पलः सप्तगोप्तः ।
वाचश्चार्था देवताः लोकपाला
लोकानन्ये ये पुरा धारयित्वा ।
गता हि तेभ्यः परमं तत्परं च
त्वत्सम्भूतास्ते च तेभ्यः परस्त्वम् ॥ ७-२०२-८१ (५४६८९)
भूतं भव्यं भविता चाप्रधृष्यं
त्वत्सम्भूता भुवनानीह विश्वा ।
भक्तं च मां भजमानं भजस्व
प्रीत्या मां वै लोकपितामहेश ॥ ७-२०२-८२ (५४६९०)
आत्मानं त्वमात्मनो न व्यबोधं
विद्वानेवं गच्छि ब्रह्म शुक्रम् ।
अस्तौषं त्वां तव संमानमिच्छ--
निचिन्वन्वै सदृशं देववर्य ।

सुदुर्लभान्देहि परान्ममेष्टा--
नभिष्टुतः प्रविकार्षीश्च मायाम् ॥ ७-२०२-८३ (५४६९१)
व्यास उवाच। ७-२०२-८४क्ष् (४८०६)
तस्मै वरानचिन्त्यात्मा देवदेवः पिनाकधृत् ।
विष्णवे देवमुख्याय प्रायच्छदृषिसंस्तुतः ॥ ७-२०२-८४ (५४६९२)
श्रीभगवानुवाच। ७-२०२-८५क्ष् (४८०७)
मत्प्रसादान्मनुष्येषु देवगन्धर्वयोनिषु ।
अप्रमेयबलात्मा त्वं नारायण भविष्यसि ॥ ७-२०२-८५ (५४६९३)
न च त्वां प्रसहिष्यन्ति देवासुरमहोरगाः ।
न पिशाचा न गन्धर्वा न यक्षा न च राक्षसाः ॥ ७-२०२-८६ (५४६९४)
न सुपर्णास्तथा नागा न च विश्वे वियोनिजाः ।
न कश्चित्त्वां च देवोऽपि समरेषु विजेष्यति ॥ ७-२०२-८७ (५४६९५)
न शस्त्रेण न वज्रेण नाग्निना न च वारिणा ।
न चार्द्रेण न शुष्केण त्रसेन स्थावरेण च ॥ ७-२०२-८८ (५४६९६)
न हस्तेन न पादेन न काष्ठेन न लोष्टुना ।
कश्चित्तव रुजां कर्ता मत्प्रसादात्कथञ्चन ।
अपि वै समरं गत्वा भविष्यसि ममाधिकः ॥ ७-२०२-८९ (५४६९७)
एवमादीन्वराँल्लब्ध्वा प्रसादादथ शूलिनः ।
स एष देवश्चरति मायया मोहयञ्जगत् ॥ ७-२०२-९० (५४६९८)
तस्यैव तपसा जातो नरो नाम महामुनिः ।
तुल्यमेतेन देवेन तं जानीह्यर्जुनं सदा ॥ ७-२०२-९१ (५४६९९)
तावेतौ पूर्वदेवानां परमोपचितादृषी ।
लोकयात्राविधानार्थं दानवानां वधाय च ।
धर्मसंस्थापनार्थाय सञ्जायेते युगेयुगे ॥ ७-२०२-९२ (५४७००)
तथैव कर्मणा कृत्स्नं महतस्तपरसोऽपि च ।
तेजो वाग्भिश्च विद्वंस्त्वं जातो रुद्रान्महामते ॥ ७-२०२-९३ (५४७०१)
स भवान्देववत्प्राज्ञो ज्ञात्वा भवमयं जगत् ।
अवाकर्षस्त्वमात्मानं नियमैस्तत्प्रियेप्सया ॥ ७-२०२-९४ (५४७०२)
शुभ्रमत्र हविः कृत्वा महापुरुषविग्रहम् ।
ईजिवांस्त्वं जपैर्होमैरुपहारैश्च मानद ॥ ७-२०२-९५ (५४७०३)
स तथा पूज्यमानस्ते पूर्वदेवोऽप्यतूतुषत् ।
पुष्कलांश्च वरान्प्रादात्तव विद्वन्हृदि स्थितान् ॥ ७-२०२-९६ (५४७०४)
जन्मकर्मतपोयोगास्तयोस्तव च पुष्कलाः ।
ताभ्यां लिङ्गेऽर्चितो देवस्त्वयाऽर्चायां युगेयुगे ।
देवदेवस्त्वचिन्त्यात्मा अजेयो विष्णुसम्भवः ॥ ७-२०२-९७ (५४७०५)
सर्वरूपं भवं ज्ञात्वा लिङ्गे योऽर्चयति प्रभुम् ।

आत्मयोगाश्च तस्मिन्वै शास्त्रयोगाश्च शाश्वताः ॥ ७-२०२-९८ (५४७०६)
एवं देवा यजन्तो हि सिद्धाश्च परमर्षयः ।
प्रार्थयन्ते परं लोके स्थाणुमेव च शाश्वतम् ॥ ७-२०२-९९ (५४७०७)
श्स एषक़ रुद्रभक्तश्च केशवो रुद्रसम्भवः ꣹
कृष्ण एव हि यष्टव्यो यज्ञैश्चैव सनातनः ॥ ७-२०२-१०० (५४७०८)
सर्वभूतभवं ज्ञात्वा लिङ्गमर्चति यः प्रभोः ।
तस्मिन्नभ्यधिकां प्रीतिं करोति वृषभध्वजः ॥ ७-२०२-१०१ (५४७०९)
सञ्जय उवाच। ७-२०२-१०२क्ष् (४८०८)
तस्य तद्वचनं श्रुत्वा द्रोणपुत्रो महारथः ।
नमश्चकार रुद्राय बहुमेने च केशवम् ॥ ७-२०२-१०२ (५४७१०)
हृष्टरोमा च वश्यात्मा सोऽभिवाद्य महर्षये ।
वरूथिनीमभिप्रेक्ष्य ह्यवहारमकारयत् ॥ ७-२०२-१०३ (५४७११)
ततः प्रत्यवहारोऽभूत्पाण्डवानां विशाम्पते ।
कौरवाणां च दीनानां द्रोणे युधि निपातिते ॥ ७-२०२-१०४ (५४७१२)
युद्धं कृत्वा दिनान्पञ्च द्रोणो हत्वा वरूथिनीम् ।
ब्रह्मलोकं गतो राजन्ब्राह्मणो वेदपारगः ॥ ॥ ७-२०२-१०५ (५४७१३)

इति श्रीमन्महाभारते द्रोणपर्वणि नारायणास्त्रमोक्षपर्वणि
पञ्चदशदिवसयुद्धे द्व्यधिकद्विशततमोऽध्यायः ॥ २०२ ॥
Mahabharata - Drona Parva - Chapter Footnotes

५-२०२-२ राजन्नैव तत्रावतस्थिरे इति ट । पाठः ॥
५-२०२-३ सोमकावयवैः सोमकानामवयवरूपैर्माण्डलिकैः ॥
५-२०२-७ उद्वृत्तस्य उच्छास्त्रवर्तिनः ॥
५-२०२-१० युवराजे चेदिपतौ ॥
५-२०२-१२ अन्तर्भेदे हृदयवैक्लव्ये । दुःखं पुत्रवधादिजम् ॥
५-२०२-१३ अश्लीलं जुगुप्सितम् । अप्रियं परुषम् ॥
५-२०२-२१ क्रव्यादाश्चापि चाक्रन्दन् इति ट।पाठः ॥
५-२०२-२२ प्रयतात्मानो योगिनोऽपि समाधिच्युता बभूवुरित्यर्थः ॥
५-२०२-२३ आवर्तितदिवाकरं विश्वं सर्वं भ्रमतीवेत्यमन्यतेत्यर्थः ॥
५-२०२-२४ त्रेसुः शब्दं चक्रुः । यथा वने इति सम्बन्धः ॥
५-२०२-२९ युगान्ते प्रलये । संवर्तकः संहारकः ॥
५-२०२-३१ तमोनुदौ चन्द्रसूर्यौ ॥
५-२०२-३९ तयोर्विषये ॥
५-२०२-४२ वेदानां व्यासं शाखाप्रशाखाभेदेन विभाजकम् । सरस्वत्या
अग्नोपवेदस्मृत्यादिरूपायां आवासम्। व्यासमिति पाठे विस्तारम्। आवासं

च सरस्वत्याः स वै व्यास ददर्शह इति क ग ट पाठः ॥
५-२०२-४७ कुरवो धृतराष्ट्राद्यास्तेषां कुलोद्वहम् ॥
५-२०२-४८ माया नष्टयोरप्यनष्टत्वेन दर्शनम् । यदृच्छा अस्त्रशक्तोरनियमः ॥
५-२०२-४९ अधरोत्तरं विपरीतम् ॥
५-२०२-५० शिशिरं गिरिं हिमाचलम् ॥
५-२०२-६२ योगी विश्वस्येति क ख ग पाठः । पतिं पालयितारम् ॥
५-२०२-६५ ईशानानां ब्रह्मादीनामपि वृषभं श्रेष्ठम् । कपर्दिनं जटाजूटवन्तम् ॥
५-२०२-६६ चेकितानं चेतयतम् । तिष्ठतः ५-२०२-६७ स्थावरस्या। गच्छतो जङ्गमस्य। दुर्वारणं दुर्निषेधम्। अतिमन्युं तीव्रकोपं दुष्टेषु ॥
५-२०२-६८ परश्वथिं परश्वथवन्तम् ॥
५-२०२-७६ भूतकृतः प्रजापतयः ॥
५-२०२-७८ एन्द्रं इन्द्रदैवत्यं कर्म तुभ्यं त्वदर्थमेव । सर्वेषां देवानां नाम्ना त्वमेव तर्पणीय इत्यर्थः ॥
५-२०२-७९ आकाश इति लुप्तविभक्तिकम् । स्वाद्यं रसः। ब्रह्म वेदाः यज्ञाश्च। स्थास्नु स्थावरम्। चरिष्णु जङ्गमम् ॥
५-२०२-८० अङ्ग्याः समुद्रेभ्यः स्तोकाः वर्षबिन्दवः । संक्षये प्लये एकार्णवे ॥
५-२०२-८३ अभिष्टुतो यानकार्षीरिह त्वम् इति क ख पाठः ॥
५-२०२-८४ ऋषिणा नारायणेन संस्तुतः ॥
५-२०२-८७ वियोनिजाः सिंहव्याघ्रादयः । नागान विश्वे विश्वयोनयः इति क ख पाठः ॥
५-२०२-८८ त्रसेन जङ्गमेन ॥
५-२०२-८९ गत्वा प्राप्य ॥
५-२०२-९२ पूर्वदेवानां ब्रह्मविष्णुरुद्राणां मध्ये एतौ विष्णुरूपिणावृषी नरनारायणौ परमोपचितावत्यन्ततपः सम्पन्नौ ॥
५-२०२-९४ देववत् नारायणवत् । अवाकर्षः अवमतं कृशं कृतवानस्यात्मानं शीरम् ॥
५-२०२-९५ शुभ्रं दीप्तितम् । शुभभौर्वं नवं कृत्वेति क ख ग पाठः ॥
५-२०२-९८ आत्मयोगात्तमीशानं शास्त्रयोगाच्च शाश्वतमिति क ख ग पाठः ॥
५-२०२-१०३ महर्षये व्यासाय ॥
५-२०२-२०२ द्व्यधिकद्विशततमोऽध्यायः ॥

द्रोनपर्व-अध्यय२०३
॥ श्रीः ॥
७.२०३. अध्यायः २०३

Mahabharata - Drona Parva - Chapter Topics
इतरालक्षितं पुरतः स्वानुकूलं युध्यमानं शूलपाणिं कञ्चन पुरुषप्रवरमवलोकयता पार्थेन स क इति यदृच्छासमागतं व्यासं प्रति प्रश्नः ॥ १ ॥
तेन तम्प्रति तस्य तस्य पशुपतित्वोक्त्या शतरुद्रीयपठनेन सविस्तरं तद्गुणगणवर्णनम् ॥ २ ॥

Mahabharata - Drona Parva - Chapter Text

७-२०३-० (५४७१४)
धृतराष्ट्र उवाच। ७-२०३-०क्ष् (४८०९)
तस्मिन्नतिरथे द्रोणे निहते तत्र सञ्जय ।
मामकाः पाण्डवाश्चैव किमकुर्वन्नतः परम् ॥ ७-२०३-१ (५४७१५)
सञ्जय उवाच। ७-२०३-२क्ष् (४८१०)
तस्मिन्नतिरथे द्रोणे निहते पार्षतेन वै ।
कौरवेषु च भग्नेषु कुन्तीपुत्रो धनञ्जयः ॥ ७-२०३-२ (५४७१६)
दृष्ट्वा सुमहदाश्चर्यमात्मनो विजयावहम् ।
मुनिं स्निग्धाम्बुदाभासं वेदव्यासमकल्मषम् ।
यदृच्छयाऽऽगतं व्यासं पप्रच्छ भरतर्षभ ॥ ७-२०३-३ (५४७१७)
अर्जुन उवाच। ७-२०३-४क्ष् (४८११)
सङ्ग्रामे न्यहनं शत्रूञ्शरौघैर्विमलैरहम् ।
अग्रतो लक्षये यान्तं पुरुषं पावकप्रभम् ॥ ७-२०३-४ (५४७१८)
ज्वलन्तं शूलमुद्यम्य यां दिशं प्रतिपद्यते ।
तस्यां दिशि विदीर्यन्ते शत्रवो मे महामुने ॥ ७-२०३-५ (५४७१९)
तेन भग्नानरीन्सर्वान्मद्भग्नान्मन्यते जनः ।
तेन भग्नानि सैन्यानि पृष्ठतोऽनुव्रजाम्यहम् ॥ ७-२०३-६ (५४७२०)
भगवंस्तन्ममाचक्ष्व को वै स पुरुषोत्तमः ।
शूलपाणिर्मया दृष्टस्तेजसा सूर्यसन्निभः ॥ ७-२०३-७ (५४७२१)
न पद्भ्यां स्पृशते भूमिं न च शूलं विमुञ्चति ।
शूलाच्छूलसहस्राणि निष्पेतुस्तस्य तेजसा ॥ ७-२०३-८ (५४७२२)
व्यास उवाच। ७-२०३-९क्ष् (४८१२)

प्रजापतीनां प्रथमं तैजसं पुरुषं प्रभुम् ।
भुवनं भूर्भुवं देवं तेजसां प्रवरं प्रभुम् ॥ ७-२०३-९ (५४७२३)
ईशानं वरदं पार्थ दृष्टवानसि शङ्करम् ।
तं गच्छ शरणं देवं वरदं भुवनेश्वरम् ॥ ७-२०३-१० (५४७२४)
महादेवं महात्मानमीशानं जटिलं विभुम् ।
त्र्यक्षं महाभुजं रुद्रं शिखिनं चीवराससम् ॥ ७-२०३-११ (५४७२५)
महादेवं हरं स्थाणुं वरदं भुवनेश्वरम् ।
जगत्प्रधानमजितं जगत्प्रीतिमधीश्वरम् ॥ ७-२०३-१२ (५४७२६)
जगद्योनिं जगद्बीजं जयिनं जगतो गतिम् ।
विश्वात्मानं विश्वसृजं विश्वमूर्तिं यशस्विनम् ॥ ७-२०३-१३ (५४७२७)
विश्वेश्वरं विश्वनरं कर्मणामीश्वरं प्रभुम् ।
शंभुं स्वयंभुं भूतेशं भूतभव्यभवोद्भवम् ॥ ७-२०३-१४ (५४७२८)
योगं योगेश्वरं सर्वं सर्वलोकेश्वरेश्वरम् ।
सर्वश्रेष्ठं जगच्छ्रेष्ठं वरिष्ठं परमेष्ठिनम् ॥ ७-२०३-१५ (५४७२९)
लोकत्रयविधातारमेकं लोकत्रयाश्रयम् ।
शुद्धात्मानं भवं भीमं शशाङ्ककृतशेखरम् ॥ ७-२०३-१६ (५४७३०)
शाश्वतं भूधरं देवं सर्ववागीश्वरेश्वरम् ।
सुदुर्जयं जगन्नाथं जन्ममृत्युजरातिगम् ॥ ७-२०३-१७ (५४७३१)
ज्ञानात्मानं ज्ञानगम्यं ज्ञानश्रेष्ठं सुदुर्विदम् ।
दातारं चैव भक्तानां प्रसादविहितान्वरान् ॥ ७-२०३-१८ (५४७३२)
तस्य पारिषदा दिव्या रूपैर्नानाविधैर्विभोः ।
वामना जटिला मुण्डा ह्रस्वग्रीवा महोदराः ॥ ७-२०३-१९ (५४७३३)
महाकाया महोत्साहा महाकर्णास्तथाऽपरे ।
आननैर्विकृतैः पादैः पार्थ वेषैश्च वैकृतैः ॥ ७-२०३-२० (५४७३४)
ईदृशैः स महादेवः पूज्यमानो महेश्वरः ।
स शिवस्तात तेजस्वी प्रसादाद्याति तेऽग्रतः ॥ ७-२०३-२१ (५४७३५)
तस्मिन्घोरे सदा पार्थ सङ्ग्रामे रोमहर्षणे ।
द्रौणिकर्णकृपैर्गुप्तां महेष्वासैः प्रहारिभिः ॥ ७-२०३-२२ (५४७३६)
कस्तां सेनां तदा पार्थ मनसाऽपि प्रधर्षयेत् ।
ऋते देवान्महेष्वासाद्बहुरूपान्महेश्वरात् ॥ ७-२०३-२३ (५४७३७)
स्थातुमुत्सहते कश्चिन्न तस्मिन्नग्रतः स्थिते ।
न हि भूतं समं तेन त्रिषु लोकेषु विद्यते ॥ ७-२०३-२४ (५४७३८)
गन्धेनापि हि सङ्ग्रामे तस्य क्रुद्धस्य शत्रवः ।
विसंज्ञा हतभूयिष्ठा वेपन्ति च पतन्ति च ॥ ७-२०३-२५ (५४७३९)
तस्मै नमस्तु कुर्वन्तो देवास्तिष्ठन्ति वै दिवि ।
ये चान्ये मानवा लोके ये च स्वर्गजितो नराः ॥ ७-२०३-२६ (५४७४०)

ये भक्ता वरदं देव शिवं रुद्रमुमापतिम् ।
अनन्यभावेन सदा सर्वेशं समुपासते ॥ ७-२०३-२७ (५४७४१)
ग्सङ्ग्रामेषु जयं प्राप्य पालयन्ति महीमिमाम्'।
इह लोके सुखं प्राप्य ते यान्ति परमां गतिम् ॥ ७-२०३-२८ (५४७४२)
नमस्कुरुष्व कौन्तेय तस्मै शान्ताय वै सदा ।
रुद्राय शितिकण्ठाय कनिष्ठाय सुवर्चसे ॥ ७-२०३-२९ (५४७४३)
कपर्दिने करालाय हर्यक्षवरदाय च ।
याम्यायाव्यक्तकेशाय सद्वृत्ते शङ्कराय च ॥ ७-२०३-३० (५४७४४)
काम्याय हरिनेत्राय स्थाणवे पुरुषाय च ॥ ७-२०३-३१ (५४७४५)
ग्नमो वृक्षाय सेनान्ये मध्यमाय नमोनमः'।
हरिकेशाय मुण्डाय कृशायोत्तारणाय च ।
भास्कारय सुतीर्थाय देवदेवाय रंहसे ॥ ७-२०३-३२ (५४७४६)
बहुरूपाय सर्वाय प्रियाय प्रियवाससे ।
उष्णीषिणे सुवक्त्राय सहस्राक्षाय मीढुषे ॥ ७-२०३-३३ (५४७४७)
गिरिशाय प्रशान्ताय पतये चीरवाससे ।
हिरण्यबाहवे राजन्नुग्राय पतये दिशाम् ॥ ७-२०३-३४ (५४७४८)
पर्जन्यपतये चैव भूतानां पतये नमः ।
वृक्षाणां पतये चैव गवां च पतये नमः ॥ ७-२०३-३५ (५४७४९)
वृक्षैरावृतकायाय सेनान्ये मध्यमाय च ।
स्रुवहस्ताय देवाय धन्विने भार्गवाय च ॥ ७-२०३-३६ (५४७५०)
बहुरूपाय विश्वस्य पतये मुञ्चवाससे ।
सहस्रशिरसे चैव सहस्रचरणाय च ।
सहस्रबाहवे चैव सहस्रवदनाय च ॥ ७-२०३-३७ (५४७५१)
शरणं गच्छ कौन्तेय वरदं भुवनेश्वरम् ।
उमापतिं विरूपाक्षं दक्षयज्ञनिबर्हणम् ॥ ७-२०३-३८ (५४७५२)
प्रजानां पतिमव्यग्रं भूतानां पतिमव्ययम् ।
कपर्दिनं वृषावर्तं वृषनाभं वृषध्वजम् ॥ ७-२०३-३९ (५४७५३)
वृषदर्पं वृषपतिं वृषशृङ्गं वृषर्षभम् ।
वृषाङ्गं वृषभोदारं वृषभं वृषभेक्षणम् ॥ ७-२०३-४० (५४७५४)
वृषायुधं वृषशरं वृषभूतं वृषेश्वरम् ।
महोदरं महाकायं द्वीपिचर्मनिवासिनम् ॥ ७-२०३-४१ (५४७५५)
लोकेशं वरदं पुण्यं ब्रह्मण्यं ब्राह्मणप्रियम् ।
त्रिशूलपाणिं वरदं खड्गचर्मधरं प्रभुम् ॥ ७-२०३-४२ (५४७५६)
पिनाकिनं खड्गधरं लोकानां पतिमीश्वरम् ।
प्रपद्ये शरणं देवं शरण्यं चीरवाससम् ॥ ७-२०३-४३ (५४७५७)
नमस्तस्मै सुरेशाय गणानां पतये नमः ।

सुवाससे नमस्तुभ्यं सुव्रताय सुधन्विने ॥ ७-२०३-४४ (५४७५८)
धनुर्धराय देवाय प्रियधन्वाय धन्विने ।
धन्वन्तराय धनुषे धन्वाचार्याय ते नमः ॥ ७-२०३-४५ (५४७५९)
उग्रायुधाय देवाय नमः सुरवराय च ।
नमोस्तु बहुरूपाय नमोस्तु बहुधन्विने ॥ ७-२०३-४६ (५४७६०)
नमोस्तु स्थाणवे नित्यं नमस्तस्मै तपस्विने ।
नमोस्तु त्रिपुरघ्नाय भगघ्नाय च वै नमः। ७-२०३-४७ (५४७६१)
वनस्पतीनां पतये नराणां पतये नमः ।
मातॄणां पतये चैव गणानां पतये नमः ॥ ७-२०३-४८ (५४७६२)
गवां च पतये नित्यं यज्ञानां पतये नमः ।
अपां च पतये नित्यं देवानां पतये नमः ॥ ७-२०३-४९ (५४७६३)
पूष्णो दन्तविनाशाय त्र्यक्षाय वरदाय च ।
नीलकण्ठाय पिङ्गाय स्वर्णकेशाय वै नमः ॥ ७-२०३-५० (५४७६४)
कर्माणि यानि दिव्यानि महादेवस्य धीमतः ।
तानि ते कीर्तयिष्यामि तथाप्रज्ञं यथाश्रुतम् ॥ ७-२०३-५१ (५४७६५)
न सुरा नासुरा लोके न गन्धर्वा न राक्षसाः ।
सुखमेधन्ति कुपिते तस्मिन्नपि गुरागताः ॥ ७-२०३-५२ (५४७६६)
दक्षस्य यजमानस्य विधिवत्संभृतं पुरा ।
विव्याध कुपितो यज्ञं निर्दयस्त्वभवत्तदा ।
धनुषा बाणमुत्सृज्य सघोषं विननाद च ॥ ७-२०३-५३ (५४७६७)
तेन शर्म कुतः शान्तिं लेभिरे स्म सुरास्तदा ।
विद्रुते सहसा यज्ञे कुपिते च महेश्वरे ॥ ७-२०३-५४ (५४७६८)
तेन ज्यातलघोषेण सर्वे लोकाः समाकुलाः ।
बभूवुर्वशगाः पार्थ निपेतुश्च सुरासुराः ॥ ७-२०३-५५ (५४७६९)
आपश्चुक्षुभिरे सर्वाश्चकम्पे च वसुन्धरा ।
पर्वताश्च व्यशीर्यन्त दिशो नागाश्च मोहिताः ॥ ७-२०३-५६ (५४७७०)
अन्धेन तमसा लोका न प्राकाशन्त संवृताः ।
जघ्निवान्सह सूर्येण सर्वेषां ज्योतिषां प्रभाः ॥ ७-२०३-५७ (५४७७१)
चुक्षुभुर्भयभीताश्च शान्तिं चक्रुस्तथैव च ।
ऋषयः सर्वभूतानामात्मनश्च सुखैषिणः ॥ ७-२०३-५८ (५४७७२)
पूषाणमभ्यद्रवत शङ्करः प्रहसन्निव ।
पुरोडाशं भक्षयतो दशनान्वै व्यशातयत् ॥ ७-२०३-५९ (५४७७३)
ततो निश्चक्रमुर्देवा वेपमाना भयार्दिताः ॥ ७-२०३-६० (५४७७४)
पुनश्च सन्दधे दीप्तान्देवानां निशिताञ्शरान् ।
सधूमान्सस्फुलिङ्गांश्च विद्युत्तोयदसन्निभान् ॥ ७-२०३-६१ (५४७७५)
तं दृष्ट्वा तु सुराः सर्वे प्रणिपत्य महेश्वरम् ।

रुद्रस्य यज्ञभागं च विशिष्टं ते त्वकल्पयन् ॥ ७-२०३-६२ (५४७७६)
भयेन त्रिदशा राजञ्छरणं च प्रपेदिरे ।
तेन चैवातिकोपेन स यज्ञः सन्धितस्तदा ।
भग्नाश्चापि सुरा आसन्भीताश्चाद्यापि तं प्रति ॥ ७-२०३-६३ (५४७७७)
असुराणां पुराण्यासंस्त्रीणि वीर्यवतां दिवि ।
आयसं राजतं चैव सौवर्णं परमं महत् ॥ ७-२०३-६४ (५४७७८)
सौवर्णं कमलाक्षस्य तारकाक्षस्य राजतम् ।
तृतीयं तु पुरं तेषां विद्युन्मालिन आयसम् ।
न शक्तस्तानि मघवान्भेत्तुं सर्वायुधैरपि ॥ ७-२०३-६५ (५४७७९)
अथ सर्वे सुरा रुद्रं जग्मुः शरणमर्दिताः ।
ते तमूचुर्महात्मानं सर्वे देवाः सवासवाः ॥ ७-२०३-६६ (५४७८०)
ब्रह्मदत्तवरा ह्येते घोरास्त्रिपुरवासिनः ।
पीडयन्त्यधिकं लोकं यस्मात्ते वरदर्पिताः ॥ ७-२०३-६७ (५४७८१)
त्वदृते देवदेवेश नान्यः शक्तः कथञ्चन ।
हन्तुं दैत्यान्महादेव जहि तांस्त्वं सुरद्विपः ॥ ७-२०३-६८ (५४७८२)
रुद्र रौद्रा भविष्यन्ति पशवः सर्वकर्मसु ।
निपातयिष्यसे चैतानसुरान्भुवनेश्वर ॥ ७-२०३-६९ (५४७८३)
स तथोक्तस्तथेत्युक्त्वा देवानां हितकाम्यया ।
गन्धमादनविन्ध्यौ च कृत्वा वंशध्वजौ हरः ॥ ७-२०३-७० (५४७८४)
पृथ्वीं ससागरवनां रथं कृत्वा तु शङ्करः ।
अक्षं कृत्वा तु नागेन्द्रं शेषं नाम त्रिलोचनः ॥ ७-२०३-७१ (५४७८५)
चक्रे कृत्वा तु चन्द्रार्कौ देवदेवः पिनाकधृत् ।
अणी कृत्वैलपत्रं च पुष्पदन्तं च त्र्यम्बकः ॥ ७-२०३-७२ (५४७८६)
यूपं कृत्वा तु मलयमवनाहं च तक्षकम् ॥ ७-२०३-७३ (५४७८७)
योक्त्राङ्गानि च सत्वानि कृत्वा शर्वः प्रतापवान् ।
वेदान्कृत्वाऽथ चतुरश्चतुरश्वान्महेश्वरः ॥ ७-२०३-७४ (५४७८८)
उपदेवान्खलीनांश्च कृत्वा लोकत्रयेश्वरः ।
गायत्रीं प्रग्रहं कृत्वा सावित्रीं च महेश्वरः ॥ ७-२०३-७५ (५४७८९)
कृत्वोंकारं प्रतोदं च ब्रह्माणं चैव सारथिम् ।
गाण्डीवं मन्दरं कृत्वा गुणं कृत्वा तु वासुकिम् ॥ ७-२०३-७६ (५४७९०)
विष्णुं शरोत्तमं कृत्वा शल्यमग्निं तथैव च ।
वायुं कृत्वाऽथ वाजाभ्यां पुङ्खे वैवस्वतं यमम् ॥ ७-२०३-७७ (५४७९१)
विद्युत्कृत्वाऽथ निश्राणं मेरुं कृत्वाऽथ वै ध्वजम् ।
आरुह्य स रथं दिव्यं सर्वदेवमयं शिवः ॥ ७-२०३-७८ (५४७९२)
त्रिपुरस्य वधार्थाय स्थाणुः प्रहरतां वरः ।
असुराणामन्तकरः श्रीमानतुलविक्रमः ॥ ७-२०३-७९ (५४७९३)

स्तूयमानः सुरैः पार्थ ऋषिभिश्च तपोधनैः ।
स्थानं माहेश्वरं कृत्वा दिव्यमप्रतिमं प्रभुः ।
अतिष्ठत्स्थाणुभूतः स सहस्रं परिवत्सरान् ॥ ७-२०३-८० (५४७९४)
यदा त्रीणि समेतानि अन्तरिक्षे पुराणि च ।
त्रिपर्वणा त्रिशल्येन तदा तानि बिभेद सः ॥ ७-२०३-८१ (५४७९५)
पुराणि न च तं शेकुर्दानवाः प्रतिवीक्षितुम् ।
शरं कालाग्निसंयुक्तं विष्णुसोमसमायुतम् ॥ ७-२०३-८२ (५४७९६)
पुराणि दग्धवन्तं तं देवी याता प्रवीक्षितुम् ।
ग्देव्याः स्वयंवरे वृत्तं शृणुष्वान्यद्धनञ्जय'॥ ७-२०३-८३ (५४७९७)
बालमङ्कगतं कृत्वा स्वयं पञ्चशिखं पुनः ।
उमा जिज्ञासमाना वै कोयमित्यब्रवीत्सुरान् ॥ ७-२०३-८४ (५४७९८)
असूयतश्च शक्रस्य वज्रेण प्रहरिष्यतः ।
बाहुं सवज्रं तं तस्य क्रुद्धस्यास्तम्भयत्प्रभुः ।
श्प्रहस्यक्ष भगवांस्तूर्णं सर्वलोकेश्वरो विभुः ॥ ७-२०३-८५ (५४७९९)
ततः स स्तम्भितभुजः शक्रो देवगणैर्वृतः ।
जगाम ससुरस्तूर्णं ब्रह्माणं प्रभुमव्ययम् ॥ ७-२०३-८६ (५४८००)
ते तं प्रणम्य शिरसा प्रोचुः प्राञ्जलयस्तदा ॥ ७-२०३-८७ (५४८०१)
किमप्यङ्कगतं ब्रह्मन्पार्वत्या भूतमद्भुतम् ।
बालरूपधरं दृष्ट्वा नास्माभिरभिलक्षितः ॥ ७-२०३-८८ (५४८०२)
तस्मात्त्वां प्रष्टुमिच्छामो निर्जिता येन वै वयम् ।
अयुध्यता हि बालेन लीलया सपुरंदराः ॥ ७-२०३-८९ (५४८०३)
तेषां तद्वचनं श्रुत्वा ब्रह्मा ब्रह्मविदां वरः ।
ध्यात्वा स शंभुं भगवान्बालं चामिततेजसम् ।
उवाच भगवान्ब्रह्मा शक्रादींश्च सुरोत्तमान् ॥ ७-२०३-९० (५४८०४)
चराचरस्य जगतः प्रभुः स भगवान्हरः ।
तस्मात्परतरं नान्यत्किञ्चिदस्ति महेश्वरात् ॥ ७-२०३-९१ (५४८०५)
यो दृष्टो ह्युमया सार्धं युष्माभिरमितद्युतिः ।
स पार्वत्याः कृते शर्वः कृतवान्बालरूपताम् ॥ ७-२०३-९२ (५४८०६)
ते मया सहिता यूयं प्रापद्यध्वं तमेव हिघ ।
स एष भगवान्देवः सर्वलोकेश्वरः प्रभुः ॥ ७-२०३-९३ (५४८०७)
न सम्बबुधिरे चैनं देवास्तं भुवनेश्वरम् ।
सप्रजापतयः सर्वे बालार्कसदृशप्रभम् ॥ ७-२०३-९४ (५४८०८)
अथाभ्येत्य ततो ब्रह्मा दृष्ट्वा स च महेश्वरम् ।
अयं श्रेष्ठ इति ज्ञात्वा ववन्दे तं पितामहः ॥ ७-२०३-९५ (५४८०९)
श्ब्रह्मोवाच। ७-२०३-९६क्ष् (४८१३)
त्वं यज्ञो भुनस्यास्य त्वं गतिस्त्वं परायणम् ।

त्वं भवस्त्वं महादेवस्त्वं धाम परमं पदम् ॥ ७-२०३-९६ (५४८१०)
त्वया सर्वमिदं व्याप्तं जगत्स्थावरजङ्गमम् ॥ ७-२०३-९७ (५४८११)
भगवन्भूतभव्येश लोकनाथ जगत्पते ।
प्रसादं कुरु शक्रस्य त्वया क्रोधार्दितस्य वै ॥ ७-२०३-९८ (५४८१२)
व्यास उवाच। ७-२०३-९९क्ष् (४८१४)
पद्मयोनिवचः श्रुत्वा ततः प्रीतो महेश्वरः
प्रसादाभिमुखो भूत्वा अट्टहासमथाकरोत् ॥ ७-२०३-९९ (५४८१३)
ततः प्रसादयामासुरुमां रुद्रं च ते सुराः ।
अभवच्च पुनर्बाहुर्यथाप्रकृति वज्रिणः ॥ ७-२०३-१०० (५४८१४)
तेषां प्रसन्नो भगवान्सपत्नीको वृषध्वजः ।
देवानां त्रिदशश्रेष्ठो दक्षयज्ञविनाशनः ॥ ७-२०३-१०१ (५४८१५)
स वै रुद्रः स च शिवः सोऽग्निः सर्वश्च सर्ववित् ।
स चेन्द्रश्चैव वायुश्च सोऽश्विनौ च स विद्युतः ॥ ७-२०३-१० (५४८१६)
स भवः स च पर्जन्यो महादेवः सनातनः ।
स चन्द्रमाः स चेशानः स सूर्यो वरुणश्च सः ॥ ७-२०३-१० (५४८१७)
स कालः सोऽन्तको मृत्युः स यमो रात्र्यहानि तु ।
मासार्धमासा ऋतवः सन्ध्ये संवत्सरश्च सः ॥ ७-२०३-१० (५४८१८)
धाता च स विधाता च विश्वात्मा विश्वकर्मकृत् ।
सर्वामां देवतानां च धारयत्यवपुर्वपुः ॥ ७-२०३-१० (५४८१९)
सर्वदेवैः स्तुतो देवः सैकधा बहुधा च सः ।
शतधा सहस्रधा चैव भूयः शतसहस्रधाः ॥ ७-२०३-१० (५४८२०)
द्वे तनू तस्य देवस्य वेदज्ञा ब्राह्मणा विदुः ।
घोरा चान्या शिवा चान्या ते तनू बहुधा पुनः ॥ ७-२०३-१० (५४८२१)
घोरा तु यातुधानस्य सोऽग्निर्विष्णुः स भास्करः ।
सौम्यातु पुनरेवास्य आपो ज्योतींषि चन्द्रमाः ॥ ७-२०३-१० (५४८२२)
वेदाः साङ्गोपनिषदः पुराणाध्यात्मनिश्चयाः ।
यदत्र परमं गुह्यं स वै देवो महेश्वरः ॥
ईदृशश्च महादेवो भूयांश्च भगवानजः। ७-२०३-१० (५४८२३)
न हि सर्वे मया शक्या वक्तुं भगवतो गुणाः ॥
अपि वर्षसहस्रेण सततं पाण्डुनन्दन ।
सर्वैर्ग्रहैर्गृहीतान्वै सर्वपापसमन्वितान् ॥ ७-२०३-१० (५४८२४)
स मोचयति सुप्रीतः शरण्यः शरणागतान् ।
आयुरारोग्यमैश्वर्यं वित्तं कामांश्च पुष्कलान् ॥ ७-२०३-११२ (५४८२५)
स ददाति मनुष्येभ्यः स चैवाक्षिपते पुनः ।
सेन्द्रादिषु च देवेषु तस्य चैश्वर्यमुच्यते ॥ ७-२०३-११३ (५४८२६)
स चैव वेत्ति लोकेषु मनुष्याणां शुभाशुभे ।

ऐश्वर्याच्चैव कामानामीश्वरश्च स उच्यते ॥ ७-२०३-११४ (५४८२७)
महेश्वरश्च महतां भूतानामीश्वरश्च सः ।
बहुभिर्बहुधा रूपैर्विश्वं व्याप्नोति वै जगत् ॥ ७-२०३-११५ (५४८२८)
तस्य देवस्य यद्वक्त्रं समुद्रे तदधिष्ठितम् ।
बडबामुखेति विख्यातं पिबत्तोयमयं हविः ॥ ७-२०३-११६ (५४८२९)
एष चैव श्मशानेषु देवो वसति नित्यशः ।
यजन्त्येनं जनास्तत्र वीरस्थान इतीश्वरम् ॥ ७-२०३-११७ (५४८३०)
अस्य दीप्तानि रूपाणि घोराणि च बहूनि च ।
लोके यान्यस्य पूज्यन्ते मनुष्याः प्रवदन्ति च ॥ ७-२०३-११८ (५४८३१)
नामधेयानि लोकेषु बहून्यस्य यथार्थवत् ।
निरुच्यन्ते महत्त्वाच्च विभुत्वात्कर्मणस्तथा ॥ ७-२०३-११९ (५४८३२)
वेदे चास्य समाम्नातं शतरुद्रियमुत्तमम् ।
नाम्ना चानन्तरुद्रेति ह्युपस्थानं महात्मनः ॥ ७-२०३-१२० (५४८३३)
स कामानां प्रभुर्देवो ये दिव्या ये च मानुषाः ।
स विभुः स प्रभुर्देवोविश्वं व्याप्नोति वै महत् ॥ ७-२०३-१२१ (५४८३४)
ज्येष्ठं भूतं वदन्त्येनं ब्राह्मणा मनुयस्तथा ।
प्रथमो ह्येष देवानां मुखादस्यानलोऽभवत् ॥ ७-२०३-१२२ (५४८३५)
सर्वथा यत्पशून्पाति तैश्च यद्रमते पुनः ।
तेषामधिपतिर्यच्च तस्मात्पशुपतिः स्मृतः ॥ ७-२०३-१२३ (५४८३६)
दिव्यं च ब्रह्मचर्येण लिङ्गमस्य यथास्थितम् ।
महयत्येष लोकांश्च महेश्वर इति स्मृतः ॥ ७-२०३-१२४ (५४८३७)
ऋषयश्चैव देवाश्च गन्धर्वाप्यरसस्तथा ।
लिङ्गमस्यार्चयन्ति स्म तच्चाप्यूर्ध्वं समास्थितम् ॥ ७-२०३-१२५ (५४८३८)
पूज्यमाने ततस्तस्मिन्मोदते स महेश्वरः ।
सुखी प्रीतश्च भवति प्रहृष्टश्चैव शङ्करः ॥ ७-२०३-१२६ (५४८३९)
यदस्य बहुधा रूपं भूतभव्यभवस्थितम् ।
स्थावरं जङ्गमं चैव बहुरूपस्ततः स्मृतः ॥ ७-२०३-१२७ (५४८४०)
एकाक्षो जाज्वलन्नास्ते सर्वतोक्षिमयोऽपि वा ।
क्रोधाद्यश्चाविशल्लोकांस्तस्मात्सर्व इति स्मृतः ॥ ७-२०३-१२८ (५४८४१)
धूम्ररूपं च यत्तस्य धूर्जटिस्तेन चोच्यते ।
विश्वे देवाश्च यत्तस्मिन्विश्वरूपस्ततः स्मृतः ॥ ७-२०३-१२९ (५४८४२)
तिस्रो देवीर्यदा चैव भजते भुवनेश्वरः ।
द्यामपः पृथिवीं चैव त्र्यम्बकश्च ततः स्मृतः ॥ ७-२०३-१३० (५४८४३)
समेधयति यन्नित्यं सर्वार्थान्सर्वकर्मसु ।
शिवमिच्छन्मनुष्याणां तस्मादेष शिवः स्मृतः ॥ ७-२०३-१३१ (५४८४४)
सहस्राक्षोऽयुताक्षो वा सर्वतोक्षिमयोऽपि वा ।

यच्च विश्वं महत्पाति महादेवस्ततः स्मृतः ॥ ७-२०३-१३२ (५४८४५)
महत्पूर्वं स्थितो यच्च प्राणोत्पत्तिस्थितश्च यत् ।
स्थितलिङ्गश्च यन्नित्यं तस्मात्स्थाणुरिति स्मृतः ॥ ७-२०३-१३३ (५४८४६)
श्सूर्याचन्द्रमसोर्लोके प्रकाशन्ते रुचश्च याः ।
ताः केशसंज्ञितास्त्र्यक्षे व्योमकेशस्ततः स्मृतः ॥ ७-२०३-१३४ (५४८४७)
भूतं भव्यं भविष्यं च सर्वं जगदशेषतः ।
भव एव ततो यस्माद्भूतभव्यभवोद्भवः ॥ ७-२०३-१३५ (५४८४८)
कपिः श्रेष्ठ इति प्रोक्तो धर्मश्च वृष उच्यते ।
स देवदेवो भगवान्कीर्त्यतेऽतो वृषाकपिः ॥ ७-२०३-१३६ (५४८४९)
ब्रह्माणमिन्द्रं वरुणं यमं धनदमेव च ।
निगृह्य हरते यस्मात्तस्माद्धर इति स्मृतः ॥ ७-२०३-१३७ (५४८५०)
निमीलिताभ्यां नेत्राभ्यां बलाद्देवो महेश्वरः ।
ललाटे नेत्रमसृजत्तेन त्र्यक्षः स उच्यते ॥ ७-२०३-१३८ (५४८५१)
विषमस्थः शरीरेषु समश्च प्राणिनामिह ।
स वायुर्विषमस्थेषु प्राणोऽपानः शरीरिषु ॥ ७-२०३-१३९ (५४८५२)
पूजयेद्विग्रहं यस्तु लिङ्गं चापि महात्मनः ।
लिङ्गं पूजयिता नित्यं महतीं श्रियमश्नुते ॥ ७-२०३-१४० (५४८५३)
ऊरुभ्यामर्धमाग्नेयं सोमोऽर्धं च शिवा तनुः ।
आत्मनोऽर्धं तथा चाग्निः सोमोर्धं पुनरुच्यते ॥ ७-२०३-१४१ (५४८५४)
तैजसी महती दीप्ता देवेभ्योऽस्य शिवा तनुः ।
भास्वती मानुषेष्वस्य तनुर्घोराऽग्निरुच्यते ॥ ७-२०३-१४२ (५४८५५)
ब्रह्मचर्यं चरत्येष शिवा याऽस्य तनुस्तया ।
याऽस्य घोरतरा मूर्तिः सर्वानत्ति तयेश्वरः ॥ ७-२०३-१४३ (५४८५६)
यन्निर्दहति यत्तीक्ष्णो यदुग्रो यत्प्रतापवान् ।
मांसशोणितमज्जादो यत्ततो रुद्र उच्यते ॥ ७-२०३-१४४ (५४८५७)
एष देवो महादेवो योऽसौ पार्थ तवाग्रतः ।
सङ्ग्रामे शास्त्रवान्निघ्नंस्त्वया दृष्टः पिनाकधृत ॥ ७-२०३-१४५ (५४८५८)
सिन्धुराजवधार्थाय प्रतिज्ञाते त्वयाऽनघ ।
कृष्णेन दर्शितः स्वप्ने यस्तु शैलेन्द्रमूर्धनि ॥ ७-२०३-१४६ (५४८५९)
एष वै भगवान्देवः सङ्ग्रामे याति तेऽग्रतः ।
येन दत्तानि तेऽस्त्राणि यैस्त्वया दानवा हताः ॥ ७-२०३-१४७ (५४८६०)
धन्यं यशस्यमायुष्यं पुण्यं वेदैश्च सम्मितम् ।
देवदेवस्य ते पार्थ व्याख्यातं शतरुद्रियम्। ७-२०३-१४८ (५४८६१)
सर्वार्थसाधनं पुण्यं सर्वकिल्बिषनाशनम् ।
सर्वपापप्रशमनं सर्वदुःखभयापहम् ॥ ७-२०३-१४९ (५४८६२)
चतुर्विधमिदं स्तोत्रं यः शृणोति नरः सदा ।

विजित्य शत्रून्सर्वान्स रुद्रलोके महीयते ॥ ७-२०३-१५० (५४८६३)
चरितं महात्मनो नित्यं साङ्ग्रामिकमिदं स्मृतम् ।
पठन्वै शतरुद्रीयं शृण्वंश्च सततोत्थितः ॥ ७-२०३-१५१ (५४८६४)
भक्तो विश्वेश्वरं देवं मानुषेषु च यः सदा ।
वरान्कामान्स लभते प्रसन्ने त्र्यम्बके नरः ॥ ७-२०३-१५२ (५४८६५)
गच्छ युध्यस्व कौन्तेय न तवास्ति पराजयः ।
गस्य मन्त्री च गोप्ता च पार्श्वस्थो हि जनार्दनः ॥ ७-२०३-१५३ (५४८६६)
सञ्जय उवाच। ७-२०३-१५४क्ष् (४८१५)
एवमुक्त्वाऽर्जुनं सङ्ख्ये पराशरसुतस्तदा ।
जगाम भरतश्रेष्ठ यथागतमरिन्दम ॥ ७-२०३-१५४ (५४८६७)
ग्वेशंपायन उवाच। ७-२०३-१५५क्ष् (४८१६)
एतदाख्याय वै सूतो राज्ञः सर्वं तु सञ्जयः ।
प्रयातः शिबिरायैव द्रष्टुं कर्णस्य वैशसम् ॥ ७-२०३-१५५ (५४८६८)
युद्धं कृत्वा महद्घोरं पञ्चाहानि महाबलः ।
ब्राह्मणो निहतो राजन्ब्रह्मलोकमवाप्तवान् ॥ ७-२०३-१५६ (५४८६९)
स्वधीते यत्फलं वेदे तदस्मिन्नपि पर्वणि ।
क्षत्रियाणामभीरूणां युक्तमत्र महद्यशः ॥ ७-२०३-१५७ (५४८७०)
य इदं पठते पर्व शृणुयाद्वाऽपि नित्यशः ।
स मुच्यते महापापैः कृतैर्घोरैश्च कर्मभिः ॥ ७-२०३-१५८ (५४८७१)
यज्ञावाप्तिर्ब्राह्मणस्येह नित्यं
घोरे युद्धे क्षत्रियाणां यशश्च ।
शेषौ वर्णौ काममिष्टं लभेते
पुत्रान्पौत्रान्नित्यमिष्टांस्तथैव ॥ ॥ ७-२०३-१५९ (५४८७२)

इति श्रीमन्महाभारते शतसाहस्र्यां संहितायां वैयासिक्यां
द्रोणपर्वणि नारायणास्त्रमोक्षपर्वणि त्र्यधिकद्विशततमोऽध्यायः
॥ २०३ ॥ समाप्तं नारायणास्त्रमोक्षपर्व ॥ ८ ॥ द्रोणपर्व च
समाप्तम्॥ ७ ॥

Mahabharata - Drona Parva - Chapter Footnotes

७-२०३-३ यदृच्छया ॥
७-२०३-११ जटिलं शिखिनमिति रुपभेदाभिप्रायेण विशेषणद्वयं योज्यम् ॥
७-२०३-१२ जगत्प्रीतिं जगदानन्दकरम् ॥
७-२०३-१३ जगद्योनिं जगद्बीजमिति जगतां मातापितृरूपम् ॥
७-२०३-१४ विश्वनरं विश्वस्य नेतारम् । भूतस्य भव्यस्य भवस्य
वर्तमानस्य चोद्भवम् ॥

७-२०३-१५ योगेश्वरं योगिनामीशम् । योगानां फलप्रदं वा ॥
७-२०३-१७ सुदुर्जयमत्यन्तं दुष्प्रापमनधिकारिभिः ॥
७-२०३-५१ कर्माणि चैव घोराणि महादेवस्य धन्विनः इति क ख पाठः ॥
७-२०३-५२ गुहागताः पातालगता अपीत्यर्थः ॥
७-२०३-५७ तमसा संवृता न प्राकाशन्त न प्राज्ञायन्त ॥
७-२०३-५८ चक्रुर्ऋषय इति सम्बन्धः ॥
७-२०३-५९ पूषाणं पूषणम् ॥
७-२०३-६० नताः स्म ते इति पाठे नता लीनाः सन्तो
निश्चक्रमुर्यज्ञदेशादपक्रान्ताः ॥
७-२०३-६१ देवानां लीनानामपि वधायेति शेषः ॥
७-२०३-६३ अतिकोपेन अतिक्रान्तकोपेन शान्तेनेत्यर्थः । ततः प्रभृति
पूर्वं भग्नाः सन्तोऽद्यापि भीताः सन्तीत्यर्थः ॥
७-२०३-७० वंशध्वजौ अल्पौ ध्वजौ पार्श्वद्वयस्थौ । महाध्वजस्तु
मेरुरिति वक्ष्यते ॥
७-२०३-७२ अणी युगान्तबन्धने द्वौ नागौ ॥
७-२०३-७३ यूपं युगम् । अवनाहं त्रिवेणुयुगबन्धनरज्जुम् ॥
७-२०३-७४ योक्त्राणि । अङ्गानि चाकर्षादीनि। सत्वानि सरीसृपपर्वतादीनि
च ॥
७-२०३-७५ उपवेदान् आयुर्वेदधनुर्वेदगान्धर्ववेदपश्चिमाम्नायान्
। खलीनान् खडियाळीति प्रसिद्धान्। गायत्रीसावित्र्यौ प्रग्रहं रश्मीन् ॥
७-२०३-७७ वाजाभ्यां पक्षाभ्यां पक्षयोरित्यर्थः ॥
७-२०३-७८ विद्युत् विद्युतम् । निश्चाणं निशितम् ॥
७-२०३-८० स्थानं स्थीयतेस्मिन्निति योगाद्व्यूहम् । स्थाणुरचलः ॥
७-२०३-८१ समेतानि समसूत्रगतानि । त्रिपर्वणा त्रीणि
विष्णुवायुवैवस्वताख्यानि शरपक्षपुङ्खरूपाणि पर्वाणि यस्य
तेन। त्रिशल्येन गार्हपत्यदक्षिणाग्न्याहवनीयरूपाऽग्नित्रयशल्येन ॥
७-२०३-९६ गतिः पालकः । परायणं लयस्थानम्। भव उत्पत्तिकारणम् ॥
७-२०३-९८ ईशः शिक्षकः । नाथः नायकः। पतिः पालकः ॥
७-२०३-१२० शतरुद्रियं नमस्ते रुद्र मन्यव इति याजुषः प्रपाठकः
। उपस्थानं रुद्रोपस्थानमन्त्रभूतम् ॥
७-२०३-१२१ कामानां दिव्यानां मानुषाणां च स प्रभुर्दाता । विभुर्व्यापकः ॥
७-२०३-२०३ त्र्यधिकद्विशततमोऽध्यायः ॥

---

.. karnaparva 08 Kumbhaghonam Edition ..

## ॥ ८ कर्णपर्व ॥

८. कर्णपर्व

कर्नपर्व-अध्यय००१

॥ श्रीः ॥

८.१. अध्यायः १

Mahabharata - Karna Parva - Chapter Topics

शिबिराद्धास्तिनपुरमुपगतवता सञ्जयेन धृतराष्ट्रंप्रति
कर्णादिनिधनकथनम् ॥ १ ॥
तच्छ्रवणेन मूर्च्छामुपगतवतो धृतराष्ट्रस्य
सञ्जयादिभिराश्वासनम् ॥ २ ॥

Mahabharata - Karna Parva - Chapter Text

८-१-० (५४८७३)
श्रीवेदव्यासाय नमः। ८-१-०क्ष् (४८१७)
नारायणं नमस्कृत्य नरं चैव नरोत्तमम् ।
देवीं सरस्वतीं व्यासं ततो जयमुदीरयेत् ॥ ८-१-१ (५४८७४)
ग्वैशम्पायन उवाच ।
शिबिराद्धास्तिनपुरं प्राप्य भारत सञ्जयः ।
प्रविवेश महाबाहुर्धृतराष्ट्रनिवेशनम् ॥ ८-१-१क्ष् (४८१८)
शोकेनापहतः सूतो विलपन्भृशदुःखितः ।
चिन्तयन्निधनं घोरं सूतपुत्रस्य पाण्डवैः ॥ ८-१-२ (५४८७५)
अन्तःपुरं प्रविश्यैव सञ्जयो राजसत्तमम् ।
अश्रुपूर्णो भृशं त्रस्तो राजानमुपजग्मिवान् ॥ ८-१-३ (५४८७६)
उपस्थाय च राजानं विनिश्वस्य च सूतजः ।
नातिहृष्टमना राजन्निदं वचनमब्रवीत् ॥ ८-१-४ (५४८७७)
सञ्जय उवाच। ८-१-५क्ष् (४८१९)
सञ्चयोऽहं महाराज नमस्ते भरतर्षभ ।
हतो वैकर्तनः कर्णः कृत्वा कर्म सुदुष्करम् ॥ ८-१-५ (५४८७८)

चेदिकाशिकरूशानां मत्स्यानां सोमकैः सह ।
कृत्वाऽसौ कदनं शेते वातनुन्न इव द्रुमः ॥ ८-१-६ (५४८७९)
गोष्ठमध्येव ऋषभो गोव्रजैः परिवारितः ।
व्यालेन निहतो यद्वत्तथाऽसौ निहतः परैः ॥ ८-१-७ (५४८८०)
निराशान्पाण्डवान्कृत्वा दृढं राजन्ससात्यकान् ।
पाञ्चालानां रथांश्चैव विनिहत्य सहस्रशः ॥ ८-१-८ (५४८८१)
जित्वा शूरान्महेष्वासान्विद्राव्य च दिशोदश ।
हतो वैकर्तनः कर्णः पाण्डवेन किरीटिना ॥ ८-१-९ (५४८८२)
वैरस्य गत आनृण्यं दुर्गमस्य दुरात्मभिः ।
हत्वा कर्णं महाराज विशल्यः पाण्डवोऽभवत् ॥ ८-१-१० (५४८८३)
शोषणं सागराणां वा पतनं वा विवस्वतः ।
विशीर्णत्वं यथा मेरोस्तथा कर्णस्य पातनम् ॥ ८-१-११ (५४८८४)
योधाश्च बहवो राजन्हतास्तत्र जयैषिणः ।
राजानो राजपुत्राश्च शूराः परिघबाहवः ॥ ८-१-१२ (५४८८५)
रथौघाश्च नरौघाश्च हता राजन्सहस्रशः ।
वारणा निहतास्तत्र वाजिनश्च महाहवे ॥ ८-१-१३ (५४८८६)
क्षत्रियाश्च महाराज सेनयोरुभयोर्हताः ।
परस्परं वै वीक्ष्यात्र परस्परकृतागसः ॥ ८-१-१४ (५४८८७)
किञ्चिच्छेषान्परान्कृत्वा तीर्त्वा पाण्डववाहिनीम् ।
पार्थवेलां समासाद्य हतो वैकर्तनो वृषा ॥ ८-१-१५ (५४८८८)
जयाशा धार्तराष्ट्राणां वैरस्य च मुखं नृप ।
तीर्णं तत्पाण्डवै राजन्यत्पुरा नावबुध्यसे ॥ ८-१-१६ (५४८८९)
प्रोच्यमानं महाराज बन्धुभिर्हितबुद्धिभिः ।
तदिदं समनुप्राप्तं व्यसनं त्वां महाभयम् ॥ ८-१-१७ (५४८९०)
पुत्राणां राज्यकामेन त्वया राजन्हितैषिणा ।
चरितान्यहितान्येव तेषां ते फलमागतम् ॥ ८-१-१८ (५४८९१)
हतो दुःशासनो राजन्यथोक्तं पाण्डवेन तु ।
प्रतिज्ञा भीमसेनेन निस्तीर्णा सा चमूमुखे ॥ ८-१-१९ (५४८९२)
पीतं च क्षतजं तस्य धार्तराष्ट्रस्य संयुगे ।
पाण्डवेन महाराज कर्म कृत्वा सुदुष्करमक्' ॥ ८-१-२० (५४८९३)
वैशम्पायन उवाच। ८-१-२१क्ष् (४८२०)
एतच्छ्रुत्वा महाराज धृतराष्ट्रोऽम्बिकासुतः ।
शोकस्यान्तमपश्यन्वै हतं मत्वा सुयोधनम् ।
विह्वलः पतितो भूमौ नष्टचेता इव द्विपः ॥ ८-१-२१ (५४८९४)
तस्मिन्निपतिते भूमौ विह्वले राजसत्तमे ।
आर्तनादो महानासीत्स्त्रीणां भरतसत्तम ॥ ८-१-२२ (५४८९५)

श शब्दः पृथिवीं कृत्स्नां पूरयामास सर्वशः ॥ ८-१-२३ (५४८९६)
शोकार्णवे महाघोरे निमग्ना भरतस्त्रियः ।
रुरुदुर्दुःखशोकार्ता भृशमुद्विग्नचेतसः ॥ ८-१-२४ (५४८९७)
राजानं च समासाद्य गान्धारी भरतर्षभ ।
निःसंज्ञा पतिता भूमौ सर्वाण्यन्तः पुराणि च ॥ ८-१-२५ (५४८९८)
ततस्ताः सञ्जयो राजन्समाश्वासयदातुराः ।
मुह्यामानाः सुबहुशो मुञ्चन्तीर्वारि नेत्रजम् ॥ ८-१-२६ (५४८९९)
समाश्वस्ताः स्त्रियस्तास्तु वेपमाना मुहुर्मुहुः ।
कदल्य इव वातेन धूयमानाः समन्ततः ॥ ८-१-२७ (५४९००)
राजानं विदुरश्चापि प्रज्ञाचक्षुषमीश्वरम् ।
आश्वासयामास तदा सिञ्चंस्तोयेन कौरवम् ॥ ८-१-२८ (५४९०१)
स लब्ध्वा सनकैः संज्ञां ताश्च दृष्ट्वा स्त्रियो नृपः ।
उन्मत्त इव राजेन्द्र स्थितस्तूर्ष्णीं विशाम्पते ॥ ८-१-२९ (५४९०२)
ततो ध्यात्वा चिरं कालं निःश्वस्य च पुनःपुनः ।
स्वान्पुत्रान्गर्हयामास बहुमेने च पाण्डवान् ॥ ८-१-३० (५४९०३)
गर्हयंश्चात्मनो बुद्धिं शकुनेः सौबलस्य च ।
ध्यात्वा तु सुचिरं कालं वेपमानो मुहुर्मुहुः ॥ ८-१-३१ (५४९०४)
संस्तभ्य च मनो भूयो राजा धैर्यसमन्वितः ।
पुनर्गावल्गणिं सूतं पर्यपृच्छत सञ्जयम् ॥ ८-१-३२ (५४९०५)
न त्वया कथितं वाक्यं श्रुतं सञ्जय तन्मया ॥ ८-१-३३ (५४९०६)
कच्चिद्दुर्योधनः सूत न गतो वै यमक्षयम् ।
जये निराशः पुत्रो मे सततं जयकामुकः ।
ब्रूहि सञ्जय तत्त्वेन पुनरुक्तां कथामिमाम् ॥ ८-१-३४ (५४९०७)
वैशम्पायन उवाच। ८-१-३५क्ष् (४८२१)
एवमुक्तोऽब्रवीत्सूतो राजानं जनमेजय ।
हतो वैकर्तनो राजन्सहपुत्रैर्महारथः ।
भ्रातृभिश्च महेष्वासैः सूतपुत्रैस्तनुत्यजैः ॥ ८-१-३५ (५४९०८)
दुःशासनश्च निहतः पाण्डवेन यशस्विना ।
पीतं च रुधिरं कोपाद्भीमसेनेन संयुगे ॥ ८-१-३६ (५४९०९)
ग्वैशम्पायन उवाच। ८-१-३७क्ष् (४८२२)
एतच्छ्रुत्वा महाराज धृतराष्ट्रोऽम्बिकासुतः ।
दह्यमानोऽब्रवीत्सूतं मुहूर्तं तिष्ठ सञ्जय ।
व्याकुलं मे मनस्तात मा तावत्किंचिदुच्यताम् ॥ ८-१-३७ (५४९१०)
राजापि नाब्रवीत्किञ्चित्सञ्जयो विदुरस्तथा ।
तूष्णीम्भूतस्तदा सोऽथ बभूव जगतीपतिः'॥ ॥ ८-१-३८ (५४९११)

इति श्रीमन्महाभारते कर्णपर्वणि प्रथमोऽध्यायः ॥१ ॥

Mahabharata - Karna Parva - Chapter Topics

दुर्योधनादिभिः कर्णस्य सैनापत्येऽभिषेचनपूर्वकं युद्धाय निर्याणम् ॥१ ॥

जनमेजयेन वैशम्पायनम्प्रति कर्णमरणश्राविणो धृतराष्ट्रस्य प्रवृत्तिप्रश्नः ॥२ ॥

Mahabharata - Karna Parva - Chapter Text

८-१-० (५४९१२)
श्रीकृष्णाय नमः ॥८-१-०क्ष् (४८२३)
श्नारायणं नमस्कृत्य नरं चैव नरोत्तमम् ।
देवीं सरस्वतीं चैव ततो जयमुदीरयेत् ॥८-१-१ (५४९१३)
वैशम्पायन उवाच।८-१-२क्ष् (४८२४)
ततो द्रोणे हते राजन्दुर्योधनमुखा नृपाः ।
भृशमुद्विग्नमनसो द्रोणपुत्रमुपागमन् ॥८-१-२ (५४९१४)
ते द्रोणमनुशोचन्तः कश्मलाभिहतौजसः ।
पर्युपासन्त शोकार्तास्ततः शारद्वतीसुतम् ॥८-१-३ (५४९१५)
ते मुहूर्तं समाश्वस्य हेतुभिः शास्त्रसम्मितैः ।
रात्र्यागमे महीपालाः स्वानि वेश्मानि भेजिरे ॥८-१-४ (५४९१६)
ते वेश्मस्वपि कौरव्य पृथ्वीशा नाप्नुवन्सुखम् ।
चिन्तयन्तः क्षयं तीव्रं दुःखशोकसमन्विताः ॥८-१-५ (५४९१७)
विशेषतः सूतपुत्रो राजा चैव सुयोधनः ।
दुःशासनश्च शकुनिः सौबलश्च महाबलः ॥८-१-६ (५४९१८)
उषितास्ते निशां तां तु दुर्योधननिवेशने ।
चिन्तयन्तः परिक्लेशान्पाण्डवानां महात्मनाम् ॥८-१-७ (५४९१९)
यत्तद्द्यूते परिक्लिष्टा कृष्णा चानायिता सभाम् ।
तत्स्मरन्तोऽनुशोचन्तो भृशमुद्विग्नचतेतसः ॥८-१-८ (५४९२०)
तथा तु सञ्चिन्तयतां तान्क्लेशान्द्यूतकारितान् ।
दुःखेन क्षणदा राजञ्जगामाब्दशतोपमा ॥८-१-९ (५४९२१)
ततः प्रभाते विमले स्थिता दिष्टस्य शासने ।
चक्रुरावश्यकं सर्वे विधिदृष्टेन कर्मणा ॥८-१-१० (५४९२२)
ते कृत्वाऽवश्यकार्याणि समाश्वस्य च भारत ।
योगमाज्ञापयामासुर्युद्धाय च विनिर्ययुः ॥८-१-११ (५४९२३)
कर्णं सेनापतिं कृत्वा कृतकौतुकमङ्गलाः ।
पूजयित्वा द्विजश्रेष्ठान्दधिपात्रघृताक्षतैः ॥८-१-१२ (५४९२४)

गोभिरश्वैश्च निष्कैश्च वासोभिश्च महाधनैः ।
वन्द्यमाना जयाशीर्भिः सूतमागधबन्दिभिः ॥ ८-१-१३ (५४९२५)
तथैव पाण्डवा राजन्कृतपूर्वाह्णिकक्रियाः ।
शिबिरान्निर्ययुस्तूर्णं युद्धाय कृतनिश्चयाः ॥ ८-१-१४ (५४९२६)
ततः प्रववृते युद्धं तुमुलं रोमहर्षणम् ।
कुरूणां पाण्डवानां च परस्परजयैषिणाम् ॥ ८-१-१५ (५४९२७)
तयोर्द्वौ दिवसौ युद्धं कुरुपाण्डवसेनयोः ।
कर्णे सेनापतौ राजन्बभूवाद्भुतदर्शनम् ॥ ८-१-१६ (५४९२८)
ततः शत्रुक्षयं कृत्वा सुमहान्तं रणे वृषः ।
पश्यतां धार्तराष्ट्राणां फल्गुनेन निपातितः ॥ ८-१-१७ (५४९२९)
ततस्तु सञ्जयः सर्वं गत्वा नागपुरं द्रुतम् ।
आचष्ट धृतराष्ट्राय यद्वृत्तं कुरुजाङ्गले ॥ ८-१-१८ (५४९३०)
जनमयेजय उवाच। ८-१-१९क्ष् (४८२५)
आपगेयं हतं श्रुत्वा द्रोणं चापि महारथम् ।
आजगाम परामार्तिं वृद्धो राजाऽम्बिकासुतः ॥ ८-१-१९ (५४९३१)
स श्रुत्वा निहतं कर्णं दुर्योधनहितैषिणम् ।
कथं द्विजवर प्राणानधारयत दुःखितः ॥ ८-१-२० (५४९३२)
यस्मिञ्जयाशां पुत्राणां सममन्यत पार्थिवः ।
तस्मिन्हते स कौरव्यः कथं प्राणानधारयत् ॥ ८-१-२१ (५४९३३)
दुर्मरं तदहं मन्ये नृणां कृच्छ्रेऽपि वर्तताम् ।
यत्र कर्णं हतं श्रुत्वा नात्यजज्जीवितं नृपः ॥ ८-१-२२ (५४९३४)
तथा शान्तनवं वृद्धं ब्रह्मन्बाह्लीकमेव च ।
द्रोणं च सोमदत्तं च भूरिश्रवसमेव च ॥ ८-१-२३ (५४९३५)
तथैव चान्यान्सुहृदः पुत्रान्पौत्रांश्च पातितान् ।
श्रुत्वा यन्नाजहात्प्राणांस्तन्मन्ये दुष्करं द्विज ॥ ८-१-२४ (५४९३६)
एतन्मे सर्वमाचक्ष्व विस्तरेण महामुने ।
न हि तृप्यामि पूर्वेषां शृण्वानश्चरितं महत् ॥ ॥ ८-१-२५ (५४९३७)

इति श्रीमन्महाभारते कर्णपर्वणि षोडशदिवसयुद्धारम्भे
प्रथमोऽध्यायः ॥ १ ॥

Mahabharata - Karna Parva - Chapter Topics

धृतराष्ट्रेण भीष्मद्रोणौ प्रत्यनुशोचनपूर्वकं सञ्जयम्प्रति
दुर्योधनादिप्रवृत्तिप्रश्नः ॥ १ ॥

Mahabharata - Karna Parva - Chapter Text

८-१-० (५४९३८)
वैशम्पायन उवाच। ८-१-०क्ष् (४८२६)
हते कर्णे महाराज निशि गावल्गणिस्तदा ।
दीनो ययौ नागपुरमश्वैर्वातसमैर्जवे ॥ ८-१-१ (५४९३९)
स हास्तिनपुरं गत्वा भृशमुद्विग्नचेतनः ।
जगाम धृतराष्ट्रस्य क्षयं प्रक्षीणबान्धवम् ॥ ८-१-२ (५४९४०)
स तमुद्वीक्ष्य राजानं कश्मलाभिहतौजसम् ।
ववन्दे प्राञ्जलिर्भूत्वा मूर्ध्ना पादौ नृपस्य ह ॥ ८-१-३ (५४९४१)
सम्पूज्य च यथान्यायं धृतराष्ट्रं महीपतिम् ।
हा कष्टमिति चोक्त्वा स ततो वचनमाददे ॥ ८-१-४ (५४९४२)
सञ्जयोऽहं क्षितिपते कच्चिदास्ते सुखं भवान् ।
स्वदोषैरापदं प्राप्य कच्चिन्नाद्य विमुह्यति ॥ ८-१-५ (५४९४३)
हितान्युक्तानि विदुरद्रोणगाङ्गेयकेशवैः ।
अगृहीतान्यनुस्मृत्य कच्चिन्न कुरुषे व्यथाम् ॥ ८-१-६ (५४९४४)
रामनारदकण्वाद्यैर्हितमुक्तं सभातले ।
न गृहीतमनुस्मृत्य कच्चिन्न कुरुषे व्यथाम् ॥ ८-१-७ (५४९४५)
सुहृदस्त्वद्धिते युक्तान्भीष्मद्रोणमुखान्परैः ।
निहतान्युधि संस्मृत्य कच्चिन्न कुरुषे व्यथाम् ॥ ८-१-८ (५४९४६)
तमेवंवादिनं राजा सूतपुत्रं कृताजलिम् ।
सुदीर्घमथ निःश्वस्य दुःखार्त इदमब्रवीत् ॥ ८-१-९ (५४९४७)
धृतराष्ट्र उवाच। ८-१-१०क्ष् (४८२७)
आपगेये हते शूरे दिव्यास्त्रवति सञ्जय ।
द्रोणे च परमेष्वासे भृशं मे व्यथितं मनः ॥ ८-१-१० (५४९४८)
यो रथानां सहस्राणि दंशितानां दशैव तु ।
अहन्यहनि तेजस्वी निजघ्ने वसुसम्भवः ॥ ८-१-११ (५४९४९)
तं हतं यज्ञसेनस्य पुत्रेणेह शिखण्डिना ।
पाण्डवेयाभिगुप्तेन श्रुत्वा मे व्यथितं मनः ॥ ८-१-१२ (५४९५०)
भार्गवः प्रददौ यस्मै परमास्त्रं महाहवे ।
साक्षाद्रामेण यो बाल्ये धनुर्वेद उपाकृतः ॥ ८-१-१३ (५४९५१)
यस्य प्रसादात्कौन्तेया राजपुत्रा महारथाः ।
महारथत्वं सम्प्राप्तास्तथाऽन्ये वसुधाधिपाः ॥ ८-१-१४ (५४९५२)
तं द्रोणं निहतं श्रुत्वा धृष्टद्युम्नेन संयुगे ।
सत्यसन्धं महेष्वासं भृशं मे व्यथितं मनः ॥ ८-१-१५ (५४९५३)
ययोर्लोके पुमानस्त्रे न समोऽस्ति चतुर्विधे ।
तौ द्रोणभीष्मौ श्रुत्वा तु हतौ मे व्यथितं मनः ॥ ८-१-१६ (५४९५४)
त्रैलोक्ये यस्य चास्त्रेषु न पुमान्विद्यते समः ।

तं द्रोणं निहतं श्रुत्वा किमकुर्वत मामकाः ॥ ८-१-१७ (५४९५५)
संशप्तकानां च बले पाण्डवेन महात्मना ।
धनञ्जयेन विक्रम्य गमिते यमसादनम् ॥ ८-१-१८ (५४९५६)
नारायणास्त्रे च हते द्रोणपुत्रस्य धीमतः ।
विप्रद्रुतानहं मन्येनिमग्नाञ्शोकसागरे। ८-१-१९ (५४९५७)
प्लवमानान्हते द्रोणे सन्ननौकानिवार्णवे ॥
दुर्योधनस्य कर्णस्य भोजस्य कृतवर्मणः। ८-१-२० (५४९५८)
मद्रराजस्य शल्यस्य द्रौणेश्चैव कृपस्य च ॥
मत्पुत्रस्य च शेषस्य तथाऽन्येषां च सञ्जय। ८-१-२१ (५४९५९)
विप्रद्रुतेष्वनीकेषु मुखवर्णोऽभवत्कथम् ॥
एतत्सर्वं यथावृत्तं तथा गावल्गणे मम। ८-१-२२ (५४९६०)
आचक्ष्व पाण्डवेयानां मामकानां च विक्रमम् ॥ ८-१-२३ (५४९६१)
सञ्जय उवाच। ८-१-२३क्ष् (४८२८)
तवापराधाद्यद्वृत्तं कौरवेयेषु मारिष ।
तच्छ्रुत्वा मा व्यथां कार्षीर्दिष्टे न व्यथते बुधः ॥ ८-१-२४ (५४९६२)
यस्मादभावी भावी वा भवेदर्थो नरं प्रति ।
अप्राप्तौ तस्य वा प्राप्तौ न कश्चिद्व्यथते बुधः ॥ ८-१-२५ (५४९६३)
धृतराष्ट्र उवाच। ८-१-२६क्ष् (४८२९)
न व्यथाऽभ्यधिका काचिद्विद्यते मम सञ्जय ।
दिष्टमेतत्पुरा मन्ये कथयस्य यथेच्छकम् ॥ ॥ ८-१-२६ (५४९६४)

इति श्रीमन्महाभारते कर्णपर्वणि द्वितीयोऽध्यायः ॥ २ ॥

Mahabharata - Karna Parva - Chapter Topics

दुर्योधनेन द्रोणमरणनिर्विण्णानां सैनिकानां कर्णगुणानुवर्णनेन प्रोत्साहनम् ॥ १ ॥
सञ्जयेन धृतराष्ट्रम्प्रति कर्णपराक मप्रशंसनपूर्वकं तन्निधनकथनम् ॥ २ ॥

Mahabharata - Karna Parva - Chapter Text

८-१-० (५४९६५)
सञ्जय उवाच। ८-१-०क्ष् (४८३०)
हते द्रोणे महेष्वासे तव पुत्रा महारथाः ।
बभूवुरस्वस्थमुखा विषण्णा गतचेतसः ॥ ८-१-१ (५४९६६)
अवाङ्मुखाः शस्त्रभृतः सर्व एव विशाम्पते ।
अवेक्षमाणाः शोकार्ता नाभ्यभाषन्परस्परम् ॥ ८-१-२ (५४९६७)

तान्दृष्ट्वा व्यथिताकारान्सैन्यानि तव भारत ।
ऊर्ध्वमेव निरैक्षन्त दुःखत्रस्तान्यनेकशः ॥ ८-१-३ (५४९६८)
शस्त्राण्येषां तु राजेन्द्र शोणिताक्तानि सर्वशः ।
प्राभ्रश्यन्त कराग्रेभ्यो दृष्ट्वा द्रोणं हतं युधि ॥ ८-१-४ (५४९६९)
तानि बद्धान्यरिष्टानि लम्बमानानि भारत ।
अदृश्यन्त महाराज नक्षत्राणि यथा दिवि ॥ ८-१-५ (५४९७०)
तथा तु स्तिमितं दृष्ट्वा गतसत्वमवस्थितम् ।
बलं तव महाराज राजा दुर्योधनोऽब्रवीत् ॥ ८-१-६ (५४९७१)
भवतां बाहुवीर्यं हि समाश्रित्य मया युधि ।
पाण्डवेयाः समाहूता युद्धं चेदं प्रवर्तितम् ॥ ८-१-७ (५४९७२)
तदिदं निहते द्रोणे विषण्णमिव लक्ष्यते ।
युध्यमानाश्च समरे योधा वध्यन्ति सर्वशः ॥ ८-१-८ (५४९७३)
जयो वाऽपि वधो वाऽपि युध्यमानस्य संयुगे ।
भवेत्किमत्र चित्रं वै युध्यध्वं सर्वतोमुखाः ॥ ८-१-९ (५४९७४)
पश्यध्वं च महात्मानं कर्णं वैकर्तनं युधि ।
प्रचरन्तं महेष्वासं दिव्यैरस्त्रैर्महाबलम् ॥ ८-१-१० (५४९७५)
यस्य वै युधि सन्त्रासात्कुन्तीपुत्रो धनञ्जयः ।
निवर्तते सदा मन्दः सिंहात्क्षुद्रमृगो यथा ॥ ८-१-११ (५४९७६)
येन नागायुतप्राणो भीमसेनो महाबलः ।
मानुषेणैव युद्धेन तामवस्थां प्रवेशितः ॥ ८-१-१२ (५४९७७)
येन दिव्यास्त्रविच्छूरो मायावी स घटोत्कचः ।
अमोघया रणे शक्त्या निहतो भैरवं नदन् ॥ ८-१-१३ (५४९७८)
तस्य दुर्वारवीर्यस्य सत्यसन्धस्य धीमतः ।
बाह्वोर्द्रविणमक्षय्यमद्य द्रक्ष्यथ संयुगे ॥ ८-१-१४ (५४९७९)
द्रोणपुत्रस्य विक्रान्तं राधेयस्यैव चोभयोः ।
पश्यन्तु पाण्डुपुत्रास्ते विष्णुवासवयोरिव ॥ ८-१-१५ (५४९८०)
सर्व एव भवन्तश्च शक्ताः प्रत्येकशोऽपि वा ।
पाण्डुपुत्रान्रणे हन्तुं ससैन्यान्किसु संहताः ।
वीर्यवन्तः कृतास्त्राश्च द्रक्ष्यथाद्य परस्परम् ॥ ८-१-१६ (५४९८१)
सञ्जय उवाच। ८-१-१७क्ष् (४८३१)
एवमुक्त्वा ततः कर्णं चक्रे सेनापतिं तदा ।
तव पुत्रो महावीर्यो भ्रातृभिः सहितोऽनघ ॥ ८-१-१७ (५४९८२)
सैनापत्यमथावाप्य कर्णो राजन्महारथः ।
सिंहनादं विनद्योच्चैः प्रायुध्यत रणोत्कटः ॥ ८-१-१८ (५४९८३)
ससृञ्जयानां सर्वेषां पाञ्चालानां च मारिष ।
केकयानां विदेहानां चकार कदनं महत् ॥ ८-१-१९ (५४९८४)

तस्येषुधाराः शतशः प्रादुरासञ्छरासनात् ।
अग्रे पुङ्खेषु संसक्ता यथा भ्रमरपङ्क्तयः ॥ ८-१-२० (५४९८५)
स पीडयित्वा पाञ्चालान्पाण्डवांश्च तरस्विनः ।
हत्वा सहस्रशो योधानर्जुनेन निपातितः ॥ ॥ ८-१-२१ (५४९८६)

इति श्रीमन्महाभारते कर्णपर्वणि तृतीयोऽध्यायः ॥ ३ ॥
Mahabharata - Karna Parva - Chapter Footnotes

८-१-२१ विह्वलः चलनासमर्थः काष्ठवत्पतितः ॥
८-१-२५ अन्तःपुराणि स्त्रियः ॥
८-१-२७ कदल्यइव वेपमाना आसन्निति शेषः ॥
८-१-२९ दृष्ट्वा मनसैवात्मप्रत्ययेन दुःखवतीर्ज्ञात्वा ॥
८-१-३४ इष्टवियोगमात्रेण दशरथादिर्मृतः । अस्यतु जये
नैराश्यमधिकं मरणकारणमस्तीति भावः ॥
८-१-१ प्रथमोऽध्यायः ॥

---

कर्नपर्व-अध्यय००२
॥ श्रीः ॥
८.२. अध्यायः २

Mahabharata - Karna Parva - Chapter Topics
धृतराष्ट्रेण निजसेनायां निहतानां नामनिवेदनं चोदितेन सञ्जयेन
तत्कथनम् ॥ १ ॥

Mahabharata - Karna Parva - Chapter Text

८-२-० (५४९८७)
ग्जनमेजय उवाच। ८-२-०क्ष् (४८३२)
तच्छ्रुत्वा कर्णहननं पुत्रांश्चैव पलायितान् ।
धृतराष्ट्रो नृपश्चैव द्विजश्रेष्ठ किमब्रवीत् ॥ ८-२-१ (५४९८८)
प्राप्तवान्व्यसनं घोरं पुत्रव्यसनजं महत् ।
काले यदुक्तवांस्तस्मिंस्तन्ममाचक्ष्व तत्त्वतः'॥ ८-२-२ (५४९८९)
वैशम्पायन उवाच। ८-२-३क्ष् (४८३३)
एतच्छ्रुत्वा महाराज धृतराष्ट्रोऽम्बिकासुतः ।
अब्रवीत्सञ्जयं सूतं शोकसंविग्नमानसः ॥ ८-२-३ (५४९९०)
दुष्प्रणीतेन मे तात पुत्रस्यादीर्घजीविनः ।

हतं वैकर्तनं श्रुत्वा शोको मर्माणि कृन्तति ॥ ८-२-४ (५४९९१)
तस्य मे संशयं छिन्धि दुःखपारं तितीर्षतः ।
कुरूणां सृञ्जयानां च के जीवन्ति के मृताः ॥ ८-२-५ (५४९९२)
सञ्जय उवाच। ८-२-६क्ष् (४८३४)
हतः शान्तनवो राजन्दुराधर्षः प्रतापवान् ।
हत्वा पाण्डवयोधानामर्बुदं दशभिर्दिनैः ॥ ८-२-६ (५४९९३)
तथा द्रोणो महेष्वासः पाञ्चालानां रथव्रजान् ।
निहत्य युधि दुर्धर्षः पञ्चाद्रुक्मरथो हतः ॥ ८-२-७ (५४९९४)
हतशेषस्य भीष्मेण द्रोणेन च महात्मना ।
अर्धं निहत्य सैन्यस्य कर्णो वैकर्तनो हतः ॥ ८-२-८ (५४९९५)
विविंशतिर्महाराज राजपुत्रो महाबलः ।
आनर्तयोधाञ्शतशो निहत्य निहतो रणे ॥ ८-२-९ (५४९९६)
तथा पुत्रो विकर्णस्ते क्षत्रव्रतमनुस्मरन् ।
क्षीणबाणो हतः शूरः स्थितो ह्यभिमुखः परैः ॥ ८-२-१० (५४९९७)
धोररूपान्परिक्लेशान्दुर्योधनकृतान्बहून् ।
प्रतिज्ञां स्मरता तेन भीमसेनेन पातितः ॥ ८-२-११ (५४९९८)
विन्दानुविन्दावावन्त्यौ राजपुत्रौ महारथौ ।
कृत्वा स्वसुकरं कर्म गतौ वैवस्वतक्षयम् ॥ ८-२-१२ (५४९९९)
सिन्धुराष्ट्रमुखानीह दश राष्ट्राणि यानिह ।
यस्य तिष्ठन्ति वचने यः स्थितस्तव शासने ॥ ८-२-१३ (५५०००)
अक्षौहिणीर्दशैकां च विनिर्जित्य शितैः शरैः ।
सोऽर्जुनेन हतो राजन्महावीर्यो जयद्रथः ॥ ८-२-१४ (५५००१)
तथा दुर्योधनसुतस्तरस्वी युद्धदुर्मदः ।
वर्तमानः पितुः शास्त्रे सौभद्रेण निपातितः ॥ ८-२-१५ (५५००२)
तथा दौःशासनिः सूरो बाहुशाली रणोत्कटः ।
द्रौपदेयेन सङ्गम्य गमितो यमसादनम् ॥ ८-२-१६ (५५००३)
किरातानामधिपतिः सागरानूपवासिनाम् ।
देवराजस्य धर्मात्मा प्रियो बहुमतः सखा ॥ ८-२-१७ (५५००४)
भगदत्तो महीपालः क्षत्रधर्मरतः सदा ।
धनञ्जयेन विक्रम्य गमितो यमसादनम् ॥ ८-२-१८ (५५००५)
तथा कौरवदायादो न्यस्तशस्त्रो महायशाः ।
हतो भूरिश्रवा राजञ्शूरः सात्यकिना युधि ॥ ८-२-१९ (५५००६)
श्रुतायुरपि चाम्बष्ठः क्षत्रियाणां धुरन्धरः ।
चरन्नभीतवत्सङ्ख्ये निहतः सव्यसाचिना ॥ ८-२-२० (५५००७)
तव पुत्रः सदामर्षी कृतास्त्रो युद्धदुर्मदः ।
दुःशासनो महाराज भीमसेनेन पातितः ॥ ८-२-२१ (५५००८)

यस्य राजन्गजानीकं बहुसाहस्रमद्भुतम् ।
सुदक्षिणः स सङ्ग्रामे निहतः सव्यसाचिना ॥ ८-२-२२ (५५००९)
कोसलानामधिपतिर्हत्वा बहुमतान्परान् ।
सौभद्रेणेह विक्रम्य गमितो यमसादनम् ॥ ८-२-२३ (५५०१०)
बहुशो योधयित्वा तु भीमसेनं महारथम् ।
चित्रसेनस्तव सुतो भीमसेनेन पातितः ॥ ८-२-२४ (५५०११)
मद्रराजात्मजः शूरः परेषां भयवर्धनः ।
असिचर्मधरः श्रीमान्सौभद्रेण निपातितः ॥ ८-२-२५ (५५०१२)
समः कर्णस्य समरे यः स कर्णस्य पश्यतः ।
वृषसेनो महातेजाः शीघ्रास्त्रो दृढविक्रमः ॥ ८-२-२६ (५५०१३)
अभिमन्योर्वधं स्मृत्वा प्रतिज्ञामपि चात्मनः ।
धनञ्जयेन विक्रम्य गमितो यमसादनम् ॥ ८-२-२७ (५५०१४)
नित्यं प्रसक्तवैरो यः पाण्डवैः पृथिवीपतिः ।
विश्राव्य वैरं पार्थेन श्रुतायुः स निपातितः ॥ ८-२-२८ (५५०१५)
शल्यपुत्रस्तु विक्रान्तः सहदेवेन मारिष ।
हतो रुक्मरथो राजञ्श्यालो मातुलजो युधि ॥ ८-२-२९ (५५०१६)
राजा भागीरथो वृद्धो बृहत्क्षत्रश्च केकयः ।
पराक्रमन्तौ विक्रान्तौ निहतौ वीर्यवत्तरौ ॥ ८-२-३० (५५०१७)
भगदत्तसुतो राजन्कृतप्रज्ञो मंहाबलः ।
श्येनवच्चरता सङ्ख्ये नकुलेन निपातितः ॥ ८-२-३१ (५५०१८)
पितामहस्तव तथा बाह्लीकः सह बाह्लिकैः ।
निहतो भीमसेनेन महाबालपराक्रमः ॥ ८-२-३२ (५५०१९)
जयत्सेनस्तथा राजञ्जारासन्धिर्महाबलः ।
मागधो निहतः सङ्ख्ये सौभद्रेण महात्मना ॥ ८-२-३३ (५५०२०)
पुत्रस्ते दुर्मुखो राजन्दुःसहश्च महारथः ।
गदया भीमसेनेन निहतौ शूरमानिनौ ॥ ८-२-३४ (५५०२१)
दुर्मर्षणो दुर्विषहो दुर्जयश्च महारथः ।
कृत्वा त्वसुकरं कर्म गता वैवस्वतक्षयम् ॥ ८-२-३५ (५५०२२)
उभौ कलिङ्गवृषकौ भ्रातरौ युद्धदुर्मदौ ।
कृत्वा चासुकरं कर्म गतौ वैवस्वतक्षयम् ॥ ८-२-३६ (५५०२३)
सचिवो वृषपर्वा ते शूरः परमवीर्यवान् ।
भीमसेनेन विक्रम्य गमितो यमसादनम् ॥ ८-२-३७ (५५०२४)
तथैव पौरवो राजा नागायुतबलो महान् ।
समरे पाण्डुपुत्रेण निहतः सव्यसाचिना ॥ ८-२-३८ (५५०२५)
वसातयो महाराज द्विसाहस्राः प्रहारिणः ।
शूरसेनाश्च विक्रान्ताः सर्वे युधि निपातिताः ॥ ८-२-३९ (५५०२६)

अभीषाहाः कवचिनः प्रहरन्तो रणोत्कटाः ।
शिबयश्च रथोदाराः कालिङ्गसहिता हताः ॥ ८-२-४० (५५०२७)
गोकुले नित्यसंवृद्धा युद्धे परमकोपनाः ।
गोपालाः कृतवीरास्ते निहताः सव्यसाचिना ॥ ८-२-४१ (५५०२८)
श्रेणयो बहुसाहस्राः संशप्तकगणाश्च ये ।
ते सर्वे पार्थमासाद्य गदा वैवस्वतक्षयम् ॥ ८-२-४२ (५५०२९)
श्यालौ तव महाराज राजानौ वृषकाचलौ ।
त्वदर्थमतिविक्रान्तौ निहतौ सव्यसाचिना ॥ ८-२-४३ (५५०३०)
उग्रकर्मा महेष्वासो नामतः कर्मतस्तथा ।
साल्वराजो महाबाहुर्भीमसेनेन पातितः ॥ ८-२-४४ (५५०३१)
ओघवांश्च महाराज बृहन्तः सहितौ रणे ।
पराक्रमन्तौ मित्रार्थे गतौ वैवस्वतक्षयम् ॥ ८-२-४५ (५५०३२)
तथैव रथिनां श्रेष्ठः क्षेमधूर्तिर्विशाम्पते ।
निहतो गदया राजन्भीमसेनेन संयुगे ॥ ८-२-४६ (५५०३३)
तथा राजन्महेष्वासो जलसन्धौ महाबलः ।
सुमहत्कदनं कृत्वा हतः सात्यकिना रणे ॥ ८-२-४७ (५५०३४)
अलम्बुसो राक्षसेन्द्रः खरबन्धुरयानवान् ।
घटोत्कचेन विक्रम्य गमितो यमसादनम् ॥ ८-२-४८ (५५०३५)
राधेयः सूतपुत्रश्च भ्रातरश्च महारथाः ।
केकयाः सर्वशश्चापि निहताः स्व्यसाचिना ॥ ८-२-४९ (५५०३६)
मालवा मद्रकाश्चैव द्राविडाश्चोग्रकर्मिणः ।
यौधेयाश्च ललित्थाश्च क्षुद्रकाश्चाप्युशीनराः ॥ ८-२-५० (५५०३७)
मावेल्लकास्तुण्डिकेराः सावित्रीपुत्रकाश्च ये ।
प्राच्योदीच्याः प्रतीच्याश्च दाक्षिणात्याश्च मारिष ॥ ८-२-५१ (५५०३८)
पत्तीनां निहताः सङ्घा हयानां प्रयुतानि च ।
रथव्रजाश्च निहता हताश्च वरवारणाः ॥ ८-२-५२ (५५०३९)
सध्वजाः सायुधाः शूराः सवर्माम्बरभूषणाः ।
कालेन महताऽऽयस्ताः कुशलैर्ये च वर्धिताः ॥ ८-२-५३ (५५०४०)
ते हताः समरे राजन्पार्थेनाक्लिष्टकर्मणा ।
अन्ये तथाऽमितबलाः परस्परवधैषिणः ॥ ८-२-५४ (५५०४१)
एते चान्ये च बहवो राजानः सगणा रणे ।
हताः सहस्रशो राजन्यन्मां त्वं परिपृच्छसि ॥ ८-२-५५ (५५०४२)
एवमेष क्षयो वृत्तः कर्णार्जुनसमागमे ।
महेन्द्रेण यथा वृत्रो यथा रामेण रावणः ॥ ८-२-५६ (५५०४३)
यथा कृष्णेन नरको मुरुश्च निहतो रणे ।
कार्तवीर्यश्च रामेण भार्गवेण यथा हतः ॥ ८-२-५७ (५५०४४)

सज्ञातिबान्धवः शूरः समरे युद्धदुर्मदः ।
रणे कृत्वा महद्युद्धं घोरं त्रैलोक्यमोहनम् ॥ ८-२-५८ (५५०४५)
यथा स्कन्देन महिषो यथा रुद्रेण चान्धकः ।
तथाऽर्जुनेन स हतो द्वैरथे युद्धदुर्मदः ॥ ८-२-५९ (५५०४६)
सामात्यबान्धवो राजन्कर्णः प्रहरतां वरः ।
जयाशा धार्तराष्ट्राणां वैरस्य च मुखं नृपः ॥ ८-२-६० (५५०४७)
तीर्णं तत्पाण्डवै राजन्यत्पुरा नावबुध्यसे ।
उच्यमानो महाराज बन्धुभिर्हितकाङ्क्षिभिः ॥ ८-२-६१ (५५०४८)
ग्न कृतं च त्वया पूर्वं दैवेन विधिना बलात्'।
तदिदं समनुप्राप्तं व्यसनं सुमहात्ययम् ॥ ८-२-६२ (५५०४९)
गाणां राज्यकामानां त्वया राजन्हितैषिणा ।
अहितान्येव चीर्णानि तेषां ते फलमागतम् ॥ ॥ ८-२-६३ (५५०५०)

इति श्रीमन्महाभारते कर्णपर्वणि द्वितीयोऽध्यायः ॥ २ ॥
Mahabharata - Karna Parva - Chapter Footnotes

८-२-३५ दुर्मनाश्च महारथः इति क ख ङ पाठः । विकर्णश्च
महाबलः इति ङ । पाठः ॥
८-२-४८ खरबन्धुरयानवान् गर्दभसंयुतरथवान् । अलायुधो
राक्षसेन्द्रो बकबन्धुरयानवान् इति क ख ङ पाठः ॥
८-२-५९ कर्णस्तथा हत इत्यनुकृष्यते ॥
८-२-२ द्वितीयोऽध्यायः ॥

---

कर्नपर्व-अध्यय००३
॥ श्रीः ॥
८.३. अध्यायः ३

Mahabharata - Karna Parva - Chapter Topics
सञ्जयेन धृतराष्ट्रम्पति युद्धे निहतानां परेषां नामकथनम् ॥ १ ॥

Mahabharata - Karna Parva - Chapter Text

८-३-० (५५०५१)
धृतराष्ट्र उवाच । ८-३-०क्ष् (४८३५)
आख्याता मामकास्तात निहता युधि पाण्डवैः ।
हतांश्च पाण्डवेयानां मामकैर्ब्रूहि सञ्जय ॥ ८-३-१ (५५०५२)

सञ्जय उवाच। ८-३-२क्ष् (४८३६)
कृतिनो युधि विक्रान्ता महासत्वा महाबलाः ।
सानुबन्धाः सहामात्या गाङ्गेयेन निपातिताः ॥ ८-३-२ (५५०५३)
नारायणा वल्लवाश्च रामाश्च शतशो परे ।
अनुरक्ताश्च वीरेण भीष्मेण युधि पातिताः ॥ ८-३-३ (५५०५४)
समः किरीटिना सङ्ख्ये वीर्येण च बलेन च ।
सत्यजित्सत्यसन्धेन द्रोणेन निहतो युधि ॥ ८-३-४ (५५०५५)
पाञ्चालानां महेष्वासाः सर्वे युद्धविशारदाः ।
द्रोणेन सह सङ्गम्य गता वैवस्वतक्षयम् ॥ ८-३-५ (५५०५६)
तथा विराटद्रुपदौ वृद्धौ सहसुतौ नृपौ ।
पराक्रमन्तौ मित्रार्थे द्रोणेन निहतौ रणे ॥ ८-३-६ (५५०५७)
यो बाल एव समरे सम्मितः सव्यसाचिना ।
केशवेन च दुर्धर्षो बलदेवेन चाभिभूः ॥ ८-३-७ (५५०५८)
परेषां कदनं कृत्वा महद्रणविशारदः ।
परिवार्य मदामात्रैः षड्भिः परमकै रथैः ।
अशक्नुवद्भिर्बीभत्सुमभिमन्युर्निपातितः ॥ ८-३-८ (५५०५९)
कृतं तं विरथं वीरं क्षत्रधर्मे व्यवस्थितम् ।
दौःशासनिर्महाराज सौभद्रं हतवान्रणे ॥ ८-३-९ (५५०६०)
पटच्चरनिहन्ता च महत्या सेनया वृतः ।
अम्बष्ठस्य सुतः श्रीमान्मित्रहेतोः पराक्रमन् ॥ ८-३-१० (५५०६१)
आसाद्य लक्ष्मणं वीरं दुर्योधनसुतं रणे ।
सुमहत्कदनं कृत्वा गतो वैवस्वतक्षयम् ॥ ८-३-११ (५५०६२)
बृहन्तः सुमहेष्वासः कृतास्त्रो युद्धदुर्मदः ।
दुःशासनेन विक्रम्य गमितो यमसादनम् ॥ ८-३-१२ (५५०६३)
मणिमान्दण्डधारश्च राजानौ युद्धदुर्मदौ ।
पराक्रमन्तौ मित्रार्थे द्रोणेन युधि पातितौ ॥ ८-३-१३ (५५०६४)
अंशुमान्भोजराजस्तु सहसैन्यो महारथः ।
भारद्वाजेन विक्रम्य गमितो यमसादनम् ॥ ८-३-१४ (५५०६५)
सामुद्रश्चित्रसेनश्च सह पुत्रेण भारत ।
समुद्रसेनेन बलाद्गमितो यमसादनम् ॥ ८-३-१५ (५५०६६)
अनूपवासी नीलश्च व्याघ्रदत्तश्च वीर्यवान् ।
अश्वत्थाम्ना विकर्णेन गमितौ यमसादनम् ॥ ८-३-१६ (५५०६७)
चित्रायुधश्चित्रयोधी कृत्वा च कदनं महत् ।
चित्रमार्गेण विक्रम्य विकर्णेन हतो मृधे। ८-३-१७ (५५०६८)
वृकोदरसमो युद्धे वृतः केकयजो युधि ।
केकयेन च विक्रम्य भ्राता भ्रात्रा निपातितः ॥ ८-३-१८ (५५०६९)

जनमेजयो गदायोधी पार्वतीयः प्रतापवान् ।
दुर्मुखेन महाराज तव पुत्रेण पातितः ॥ ८-३-१९ (५५०७०)
रोचमानौ नरव्याघ्रौ रोचमानौ ग्रहाविव ।
द्रौणेन युगपद्राजन्दिवं सम्प्रातितौ शरैः ॥ ८-३-२० (५५०७१)
नृपाश्च प्रतियुध्यन्तः पराक्रान्ता विशाम्पते ।
कृत्वा नसुकरं कर्म गता वैवस्वतक्षयम् ॥ ८-३-२१ (५५०७२)
पुरुजित्कुन्तिभोजश्च मातुलौ सव्यसाचिनः ।
संग्रामनिर्जिताँल्लोकान्गमितौ द्रोणसायकैः ॥ ८-३-२२ (५५०७३)
अभिभूः काशिराजश्च काशिकैर्बहुभिर्वृतः ।
वसुदानस्य पुत्रेण त्याजितो देहमाहवे ॥ ८-३-२३ (५५०७४)
अमितौजा युधामन्युरुत्तमौजाश्च वीर्यवान् ।
निहत्य शतशः सूरानस्मदीयैर्निपातिताः ॥ ८-३-२४ (५५०७५)
मित्रवर्मा च पाञ्चाल्यः क्षत्रधर्मा च भारत ।
द्रोणेन परमेष्वासौ गमितौ यमसादनम् ॥ ८-३-२५ (५५०७६)
शिखण्डितनयो युद्धे क्षत्रदेवो युधाम्पतिः ।
लक्ष्मणेन हतो राजंस्तव पौत्रेण भारत ॥ ८-३-२६ (५५०७७)
सुचित्रश्चित्रवर्मा च पितापुत्रौ महारथौ ।
प्रचरन्तौ महावीरौ द्रोणेन निहतौ रणे ॥ ८-३-२७ (५५०७८)
वार्धक्षेमिर्महाराज समुद्र इव पर्वणि ।
आयुधक्षयमासाद्य प्रशान्तिं परमां गतः ॥ ८-३-२८ (५५०७९)
सेनाबिन्दुसुतः श्रेष्ठः शास्त्रवान्प्रहरन्युधि ।
बाह्लिकेन महाराज कौरवेन्द्रेण पातितः ॥ ८-३-२९ (५५०८०)
धृष्टकेतुर्महाराज चेदीनां प्रवरो रथः ।
कृत्वा नसुकरं कर्म गतो वैवस्वतक्षयम् ॥ ८-३-३० (५५०८१)
तथा सत्यधृतिर्वीरः कृत्वा कदनमाहवे ।
पाण्डवार्थे पराक्रान्तो गमितो यमसादनम् ॥ ८-३-३१ (५५०८२)
पुत्रस्तु शिशुपालस्य सुकेतुः पृथिवीपतिः ।
निहत्य शात्रवान्सङ्ख्ये द्रोणेन निहतो युधि ॥ ८-३-३२ (५५०८३)
तथा सत्यधृतिर्वीरो मदिराश्वश्च वीर्यवान् ।
सूर्यदत्तश्च विक्रान्तो निहतो द्रोणसायकैः ॥ ८-३-३३ (५५०८४)
ग्मात्स्यादवरजः श्रीमाञ्शतानीको निपातितः ।
श्रेणिमांश्च महाराज युध्यमानः पराक्रमी ।
कृत्वा नसुकरं कर्म गतो वैवस्वतक्षयम् ॥ ८-३-३४ (५५०८५)
तथैव युधि विक्रान्तो मागधः परमास्त्रवित् ।
भीष्मेण निहतो राजञ्शेतेऽद्य परवीरहा ॥ ८-३-३५ (५५०८६)
विराटपुत्रः शङ्खस्तु उत्तरश्च महारथः ।

कुर्वन्तौ सुमहत्कर्म गतौ वैवस्वतक्षयम् ॥ ८-३-३६ (५५०८७)
वसुदानश्च कदनं कुर्वाणोऽतीव संयुगे ।
भारद्वाजेन विक्रम्य गमितो यमसादनम् ॥ ८-३-३७ (५५०८८)
एते चान्ये च बहवः पाण्डवानां महारथाः ।
हता द्रोणेन विक्रम्य यन्मां त्वं परिपृच्छसि ॥ ॥ ८-३-३८ (५५०८९)

इति श्रीमन्महाभारते कर्णपर्वणि तृतीयोऽध्यायः ॥ ३ ॥
Mahabharata - Karna Parva - Chapter Footnotes

८-३-२० रोचमानौ एकानामानौ भ्रातरौ ॥
८-३-३ तृतीयोऽध्यायः ॥

---

कर्नपर्व-अध्यय००४
॥ श्रीः ॥
८.४. अध्यायः ४

Mahabharata - Karna Parva - Chapter Topics
सञ्जयेन धृतराष्ट्रम्प्रति हतावशिष्टानां नामकथनम् ॥ १ ॥

Mahabharata - Karna Parva - Chapter Text

८-४-० (५५०९०)
धृतराष्ट्र उवाच। ८-४-०क्ष् (४८३७)
मामकस्यास्य सैन्यस्य हृतोत्सेकस्य सञ्जय ।
अवशेषं न पश्यामि ककुदे मृदिते सति ॥ ८-४-१ (५५०९१)
तौ हि वीरौ महेष्वासौ मदर्थे कुरुसत्तमौ ।
भीष्मद्रोणौ हतौ श्रुत्वा कोन्वर्थो जीवितेन मे ॥ ८-४-२ (५५०९२)
न च मृष्यामि राधेयं हतमाहवशोभिनम् ।
यस्य बाह्वोर्बलं तुल्यं कुञ्जराणां शतं शतम् ॥ ८-४-३ (५५०९३)
हतप्रवरसैन्यं मे यथा शंससि सञ्जय ।
अहतानपि मे शंस येऽत्र जीवन्ति केचन ॥ ८-४-४ (५५०९४)
एतेषु हि मृतेष्वद्य ये त्वया परिकीर्तिताः ।
येऽपि जीवन्ति ते सर्वे मृता इति मतिर्मम ॥ ८-४-५ (५५०९५)
सञ्जय उवाच। ८-४-६क्ष् (४८३८)
यस्मिन्महास्त्राणि समर्पितानि
चित्राणि शुभ्राणि चतुर्विधानि ।

दिव्यानि राजन्विहितानि चैव
द्रोणेन वीरे द्विजसत्तमेन ॥ ८-४-६ (५५०९६)
महारथः कृतिमान्क्षिप्रहस्तो
दृढायुधो दृढमुष्टिर्दृढेषुः ।
स वीर्यवान्द्रोणपुत्रस्तरस्वी
व्यवस्थितो योद्धुकामस्त्वदर्थे ॥ ८-४-७ (५५०९७)
आनर्तवासी हृदिकात्मजोऽसौ
महारथः सात्वतानां वरिष्ठः ।
स्वयं भोजः कृतवर्मा कृतास्त्रो
व्यवस्थितो योद्धुकामस्त्वदर्थे ॥ ८-४-८ (५५०९८)
आर्तायनिः समरे दुष्प्रकम्प्यः
सेनाग्रणीः प्रथमस्तावकानाम् ।
यः स्वस्रीयान्पाण्डवेयान्विसृज्य
सत्यां वाचं स्वां चिकीर्षुस्तरस्वी ॥ ८-४-९ (५५०९९)
तजोवधं सूतपुत्रस्य सङ्ख्ये
प्रतिश्रुत्याजातशत्रोः पुरस्तात् ।
दुराधर्षः शक्रसमानवीर्यः
शल्यः स्थितो योद्धुकामस्त्वदर्थे ॥ ८-४-१० (५५१००)
शारद्वतो गौतमश्चापि राज--
न्महाबाहुचित्रास्त्रयोधी ।
धनुश्चित्रं सुमहद्भावरसाहं
व्यवस्थितो योद्धुकामः प्रगृह्य ॥ ८-४-११ (५५१०१)
गान्धारराजः ससुतश्च राज--
न्दुर्द्यूतदेवी कलहप्रियश्च ।
गान्धारमुख्यैर्यवनैश्च राज--
न्व्यवस्थितो योद्धुकामस्त्वदर्थे ॥ ८-४-१२ (५५१०२)
महारथः केकयराजपुत्रः
सदश्वयुक्तं च पताकिनं च ।
रथं समारुह्य कुरुप्रवीर
व्यवस्थितो योद्धुकामस्त्वदर्थे ॥ ८-४-१३ (५५१०३)
तथा सुतस्ते ज्वलनार्कवर्णं
रथं समास्थाय कुरुप्रवीरः ।
व्यवस्थितः पुरुमित्रो नरेन्द्र
व्यभ्रे सूर्यो भ्राजमानो यथा खे ॥ ८-४-१४ (५५१०४)
दुर्योधनो नागकुलस्य मध्ये
व्यवस्थितः सिंह इवाबभासे ।

रथेन जाम्बूनदभूषणेन
व्यवस्थितः समरे योत्स्यमानः ॥ ८-४-१५ (५५१०५)
स राजमध्ये पुरुषप्रवीरो
रराज जाम्बूनदचित्रवर्मा ।
पद्मप्रभो वह्निरिवाल्पधूमो
मेघान्तरे सूर्य इव प्रकाशः ॥ ८-४-१६ (५५१०६)
तथा सुषेणोऽप्यसिचर्मपाणि--
स्तवात्मजः सत्यसेनश्च वीरः ।
व्यवस्थितौ चित्रसेनेन सार्धं
हृष्टात्मानौ समरे योद्धकामौ ॥ ८-४-१७ (५५१०७)
ह्रीनिषेवो भारतराजपुत्र
उग्रायुधः श्रुतवर्मा जयश्च ।
शलश्च सत्यव्रतदुःशलौ च
व्यवस्थिताः सहसैन्या नराग्र्याः ॥ ८-४-१८ (५५१०८)
कैतव्यानामधिपः शूरमानी
रणेरणे शत्रुहा राजपुत्रः ।
रथी हयी नागपत्तिप्रयायी
व्यवस्थितो योद्धुकामस्त्वदर्थे ॥ ८-४-१९ (५५१०९)
वीरः श्रुतायुश्च धृतायुधश्च
चित्राङ्गदश्चित्रसेनश्च वीरः ।
व्यवस्थिता योद्धुकामा नराग्र्याः
प्रहारिणो मानिनः सत्यसन्धाः ॥ ८-४-२० (५५११०)
कर्णात्मजः सत्यसन्धो महात्मा
व्यवस्थितः समरे योद्धुकामः ॥ ८-४-२१ (५५१११)
अथापरौ कर्णसुतौ वरास्त्रौ
व्यवस्थितौ लघुहस्तौ नरेन्द्र ।
बले महत्युल्बणसत्ववीर्यौ
समास्थितौ योद्धुकामौ त्वदर्थे ॥ ८-४-२२ (५५११२)
एतैश्च मुख्यैरपरैश्च राज--
न्योधप्रवीरैरमितप्रभावैः ।
व्यवस्थितो नागकुलस्य मध्ये
यथा महेन्द्रः कुरुराजो जयाय ॥ ८-४-२३ (५५११३)
धृतराष्ट्र उवाच। ८-४-२४क्ष् (४८३९)
आख्याता जीवमाना ये परे सैन्या यथायथम् ।
इतीदमवगच्छामि व्यक्तमर्थाभिपत्तितः ॥ ८-४-२४ (५५११४)
वैशम्पायन उवाच। ८-४-२५क्ष् (४८४०)

एवं ब्रुवन्नेव तदा धृतराष्ट्रोऽम्बिकासुतः ।
हतप्रवीरं भूयिष्ठं किञ्चिच्छेषं स्वकं बलम् ।
श्रुत्वा व्यामोहमागच्छच्छोकव्याकुलितेन्द्रियः ॥ ८-४-२५ (५५११५)
व्याकुलं मे मनस्तात श्रुत्वा सुमहदप्रियम् ॥
मनो मुह्यति चाङ्गानि न च शक्नोमि धावितुम् ।
इत्येवमुक्त्वा वचनं धृतराष्ट्रोऽम्बिकासुतः ।
भ्रान्तचित्तस्ततः सोऽथ बभूव जगतीपतिः ॥ ॥ ८-४-२६ (५५११६)

इति श्रीमन्महाभारते कर्णपर्वणि चतुर्थोऽध्यायः ॥ ४ ॥
Mahabharata - Karna Parva - Chapter Footnotes

८-४-१ ककुदे प्रधानपुरुषसमूहे भीष्मद्रोणकर्णरूपे मृदितेनाशिते
सति ॥
८-४-५ मृताः मृतप्रायाः ॥
८-४-६ चतुर्विधानि दृढदूरसूक्ष्मशब्दवेधीनि । विहितानि
धनुर्वेदोदितानि ॥
८-४-७ कृतिमान् अवन्ध्ययत्नः ॥
८-४-९ आर्तायनिः शल्यः । स्वस्रीयान् भागिनेयान् ॥
८-४-१९ नागपत्तिप्रयायी नागैः पत्तिभिश्च प्रयातुं शीलमस्य
। नागरथप्रयायीति पाठान्तरम् ॥
८-४-२४ सैन्याः सेनामर्हन्ति ते राजानः । यथायथं
पक्षद्वयेऽपि जीवमाना आख्याताः। इदं भाविजयपराजयादिकम्। इति
अनेन पक्षद्वयबलतोलनेन व्यक्तं स्पृष्टमभिगच्छामि
जानामि। अर्थाभिपत्तितः फलोपपत्तितः। तेन जयो मदीयानां
नास्तीति निश्चिनोमीति भावः। आख्याता वै जीवमानाः परेभ्योऽन्ये
यथा ध्रुवम्। इतीदमवगच्छामि व्यक्तमर्थो व्यवस्थितः। इति
क खड़ पाठः ॥
८-४-४ चतुर्थोऽध्यायः ॥

---

कर्नपर्व-अध्यय००५
॥ श्रीः ॥
८.५. अध्यायः ५

Mahabharata - Karna Parva - Chapter Topics
धृतराष्ट्रेण कर्णगुणानुवर्णनपूर्वकं शोचनम् ॥ १ ॥

८-५-० (५५११७)
जनमेजय उवाच। ८-५-०क्ष् (४८४१)
श्रुत्वा कर्णं हतं युद्धे पुत्रांश्चैव पलायिनः ।
नरेन्द्रः किञ्चिदाश्वस्तो द्विजश्रेष्ठ किमब्रवीत् ॥ ८-५-१ (५५११८)
प्राप्तवान्परमं दुःखं पुत्रव्यसनजं महत् ।
तस्मिन्यदुक्तवान्काले तन्ममाचक्ष्व पृच्छतः ॥ ८-५-२ (५५११९)
वैशम्पायन उवाच। ८-५-३क्ष् (४८४२)
श्रुत्वा कर्णस्य निधनमश्रद्धेयमिवाद्भुतम् ।
भूतसम्मोहनं भीमं मेरोः संसर्पणं यथा ॥ ८-५-३ (५५१२०)
चित्तमोहमिवायुक्तं भार्गवस्य महामतेः ।
पराजयमिवेन्द्रस्य द्विषद्भ्यो भीमकर्मणः ॥ ८-५-४ (५५१२१)
दिवः प्रपतनं भानोरुर्व्यामिव महाद्युतेः ।
संशोषणमिवाचिन्त्यं समुद्रस्याक्षयाम्भसः ॥ ८-५-५ (५५१२२)
महीवियद्दिगम्बूनां सर्वनाशमिवाद्भुतम् ।
कर्मणोरिव वैफल्यमुभयोः पुण्यपापयोः ॥ ८-५-६ (५५१२३)
सञ्चिन्त्य निपुणं बुद्ध्या धृतराष्ट्रो जनेश्वरः ।
नेदमस्तीति सञ्चिन्त्य कर्णस्य समरे वधम् ॥ ८-५-७ (५५१२४)
प्राणिनामेवमात्मत्वात्स्यादपीति विचार्य च ।
शोकाग्निना दह्यमानो धम्यमान इवाशये ॥ ८-५-८ (५५१२५)
विस्रस्ताङ्गः श्वसन्दीनो हाहेत्युक्त्वा सुदुःखितः ।
विललाप महाराज धृतराष्ट्रोऽम्बिकासुतः ॥ ८-५-९ (५५१२६)
धृतराष्ट्र उवाच। ८-५-१०क्ष् (४८४३)
सञ्जयाधिरथिर्वीरः सिंहद्विरदविक्रमः ।
वृषभप्रतिमस्कन्धो वृषभाक्षगतिस्वरः ॥ ८-५-१० (५५१२७)
वृषभो वृषभस्येव यो युद्धे न निवर्तते ।
शत्रोरपि महेन्द्रस्य वज्रसंहननो युवा ॥ ८-५-११ (५५१२८)
यस्य ज्यातलशब्देन शरवृष्टिरवेण च ।
रथाश्वनरमातङ्गा नावतिष्ठन्ति संयुगे ॥ ८-५-१२ (५५१२९)
यमाश्रित्य महाबाहुं द्विषत्सङ्घघ्नमच्युतम् ।
दुर्योधनोऽकरोद्वैरं पाण्डुपुत्रैर्महारथैः ॥ ८-५-१३ (५५१३०)
स कथं रथिनां श्रेष्ठः कर्णः पार्थेन संयुगे ।
निहतः पुरुषव्याघ्रः प्रसह्यासह्यविक्रमः ॥ ८-५-१४ (५५१३१)
यो नामन्यत वै नित्यमच्युतं च धनञ्जयम् ।
न वृष्णीन्सहितानन्यान्स्वबाहुबलदर्पितः ॥ ८-५-१५ (५५१३२)

शार्ङ्गगाण्डीवधन्वानौ सहितावपराजितौ ।
अहं दिव्याद्रथादेकः पातयिष्यामि संयुगे ॥ ८-५-१६ (५५१३३)
इति यः सततं मन्दमवोचल्लोभमोहितम् ।
दुर्योधनमवाचीनं राज्यकामुकमातुरम् ॥ ८-५-१७ (५५१३४)
योऽजयत्सर्वकाम्भोजानावन्त्यान्केकयैः सह ।
गान्धारान्मद्रकान्मात्स्यांस्त्रिगर्तांस्तङ्क्णाञ्शकान्। ८-५-१८ (५५१३५)
पाञ्चालांश्च विदेहांश्च कुलिन्दान्काशिकोसलान्
सूह्मानङ्गांश्च वङ्गांश्च निषादान्पुण्ड्रकीकटान् ॥ ८-५-१९ (५५१३६)
वत्सान्कलिङ्गान्दरदानश्मकानृषिकानपि ।
ग्शबरान्हारहूणांश्च प्रघूणान्सरलानपि ॥ ८-५-२० (५५१३७)
म्लेच्छराष्ट्राधिपांश्चैव दुर्गानाटविकांस्तथा'।
जित्वैतान्समरे वीरः प्रदीप्तैः कङ्कपत्रिभिः ॥ ८-५-२१ (५५१३८)
करमाहारयामास जित्वा सर्वानरींस्तथा ।
दुर्योधनस्य वृद्ध्यर्थं राधेयो रथिनां वरः ।
दिव्यास्त्रविमन्हातेजाः कर्णो वैकर्तनो वृषः ॥ ८-५-२२ (५५१३९)
सेनागोपश्च स कथं शत्रुभिः परमास्त्रवित् ।
घातितः पाण्डवैः शूरैः समरे वीर्यशालिभिः ॥ ८-५-२३ (५५१४०)
वृषो महेन्द्रो देवेषु वृषः कर्णो नरेष्वपि ।
तृतीयमन्यं लोकेषु वृषं नैवानुशुश्रुम ॥ ८-५-२४ (५५१४१)
उच्चैः श्रवा वरोऽश्वानां राज्ञां वैश्रवणो वरः ।
वरो महेन्द्रो देवानां कर्णः प्रहरतां वरः ॥ ८-५-२५ (५५१४२)
योऽजितः पार्थिवैः शूरैः समर्थैर्वीर्यशालिभिः ।
दुर्योधनस्य वृद्ध्यर्थं कृत्स्नामुर्वीमथाजयत् ॥ ८-५-२६ (५५१४३)
यं लब्ध्वा मागधो राजा सांत्वमानोऽथ सौहृदैः ।
अरौत्सीत्पार्थिवं क्षत्रमृते यादवकौरवान् ॥ ८-५-२७ (५५१४४)
तं श्रुत्वा निहतं कर्णं द्वैरथे सव्यसाचिना ।
शोकार्णवे निमग्नोऽहं भिन्ना नौरिव सागरे ॥ ८-५-२८ (५५१४५)
तं वृषं निहतं श्रुत्वा द्वैरथे रथिनां वरम् ।
शोकार्णवे निमग्नोऽहमप्लुवः सागरे यथा ॥ ८-५-२९ (५५१४६)
ईदृशैर्यद्यहं दुःखैर्न विनश्यामि सञ्जय ।
वज्राद्दृढतरं मन्ये हृदयं मम दुर्भिदम् ॥ ८-५-३० (५५१४७)
ज्ञातिसंबन्धिमित्राणामिमं श्रुत्वा पराभवम् ।
को मदन्यः पुमाँल्लोके न जह्यात्सूत जीवितम् ॥ ८-५-३१ (५५१४८)
विषमग्निं प्रपातं च पर्वताग्रादहं वृणे ।
ग्महाप्रस्थानगमनं जलं प्रायोपवेशनम्'।
न हि शक्ष्यामि दुःखानि सोढुं कष्टानि सञ्जय ॥ ॥ ८-५-३२ (५५१४९)

इति श्रीमन्महाभारते कर्णपर्वणि पञ्चमोऽध्यायः ॥ ५ ॥

Mahabharata - Karna Parva - Chapter Footnotes

८-५-१ पुत्रांश्चैव निपातितान् इति झ पाठः ॥
८-५-४ भार्गवस्य रामस्य शुक्रस्य वा ॥
८-५-७ कर्णस्य वधं सञ्चिन्त्य मनस्यालोच्य इदं कृत्स्नं जगत्स्वसैन्यं वा नास्तीति सञ्चिन्त्य निश्चित्य विललापेति तृतीयेन सम्बन्धः ॥
८-५-१७ अवाचीनं चिन्तयाऽधोमुखम् ॥
८-५-२४ जलवर्षित्वाद्देवेषु महेन्द्रो वृषः ।धनवर्षित्वान्मनुष्येषु कर्णोवृषः।तृतीयमेवमभितो वृष्टिकर्तारं वृषम् ॥
८-५-२९ नौकाहीनः ॥
८-५-५ पञ्चमोऽध्यायः ॥

---

कर्नपर्व-अध्यय००६

॥ श्रीः ॥

८.६. अध्यायः ६

Mahabharata - Karna Parva - Chapter Topics

कर्णवधश्रवणानन्तरीयकधृतराष्ट्रप्रवृत्तिं पृष्टेन वैशम्पायनेन कर्णदुर्योधनस्तुतिनिन्दापूर्वकं सञ्जयम्प्रति कर्णार्जुनयुद्धकथनचोदनारूपधृतराष्ट्रप्रवृत्तिकथनम् ॥ १ ॥

Mahabharata - Karna Parva - Chapter Text

८-६-० (५५१५०)
सञ्जय उवाच। ८-६-०क्ष् (४८४४)
श्रिया कुलेन यशसा तपसा च श्रुतेन च ।
त्वामद्य सन्तो मन्यन्ते ययातिमिव नाहुषम् ॥ ८-६-१ (५५१५१)
श्रुते महर्षिप्रतिमः कृतकृत्योऽसि पार्थिव ।
पर्यवस्थापयात्मानं मा विषादे मनः कृथाः ॥ ८-६-२ (५५१५२)
धृतराष्ट्र उवाच। ८-६-३क्ष् (४८४५)
दैवमेव परं मन्ये धिक्पौरुषमनर्थकम् ।
यत्र सालप्रतीकाशः कर्णोऽहन्यत संयुगे ॥ ८-६-३ (५५१५३)

हत्वा युधिष्ठिरानीकं पाञ्चालानां रथव्रजान् ।
प्रताप्य शरवर्षेण दिशः सर्वा महारथः ॥ ८-६-४ (५५१५४)
मोहयित्वा रणे पार्थान्वज्रहस्त इवासुरान् ।
स कथं निहतः शेते वायुरुग्ण इव द्रुमः ॥ ८-६-५ (५५१५५)
शोकस्यान्तं न पश्यामि पारं जलनिधेरिव ।
चिन्ता मे वर्धतेऽतीव मुमूर्षा चापि जायते ॥ ८-६-६ (५५१५६)
कर्णस्य निधनं श्रुत्वा विजयं फल्गुनस्य च ।
अश्रद्धेयमहं मन्ये वधं कर्णस्य सञ्जय ॥ ८-६-७ (५५१५७)
वज्रसारमिदं नूनं हृदयं दुर्भिदं मम ।
यच्छ्रुत्वा पुरुषव्याघ्रं हतं कर्णं न दीर्यते ॥ ८-६-८ (५५१५८)
आयुर्नूनं सुदीर्घं मे विहितं दैवतैः पुरा ।
यत्र कर्णं हतं श्रुत्वा जीवामीह सुदुःखितः ॥ ८-६-९ (५५१५९)
धिग्जीवितमिदं चैव सुहृद्धीनस्य सञ्जय ।
अद्य चाहं दशामेतां गतः सञ्जय गर्हिताम् ।
कृपणं वर्तयिष्यामि शोच्यः सर्वस्य मन्दधीः ॥ ८-६-१० (५५१६०)
अहमेव पुरा भूत्वा सर्वलोकस्य सत्कृतः ।
परिभूतः कथं सूत परैः शक्ष्यामि जीवितुम् ॥ ८-६-११ (५५१६१)
दुःखाद्दुःखतरं भन्ये प्राप्तवानस्मि सञ्जय ।
भीष्मद्रोणवधेनैव कर्णस्य च महात्मनः ॥ ८-६-१२ (५५१६२)
नावशेषं प्रपश्यामि सूतपुत्रे हते युधि ।
सहि पारं महानासीत्पुत्राणां मम सञ्जय ॥ ८-६-१३ (५५१६३)
युद्धे हि निहतः शूरो विसृजन्सायकान्बहून् ।
को हि मे जीवितेनार्थस्तमृते पुरुषर्षभम् ॥ ८-६-१४ (५५१६४)
रथादाधिरथिर्नूनं न्यपतत्सायकार्दितः ।
पर्वतस्येव शिखरं व ज्रपाताद्विदारितम् ॥ ८-६-१५ (५५१६५)
स शेते पृथिवीं नूनं शोभयन्रुधिरोक्षितः ।
मातङ्ग इव मत्तेन मताङ्गेन निपातितः ॥ ८-६-१६ (५५१६६)
यो बलं धार्तराष्ट्राणां पाण्डवानां यतो भयम् ।
सोऽर्जुनेन हतः कर्णः प्रतिमानं धनुष्मताम् ॥ ८-६-१७ (५५१६७)
स हि वीरो महेष्वासो मित्राणामभयङ्करः ।
शेते विनिहतो वीरः शक्रेणेव पुरा बलः ॥ ८-६-१८ (५५१६८)
पङ्गोरिवाध्वगमनं दरिद्रस्येव कामितम् ।
दुर्योधनस्य लोभश्च समान्येतानि सञ्जय ॥ ८-६-१९ (५५१६९)
अन्यथा चिन्तितं कार्यमन्यथा तत्तु जायते ।
अहो नु बलवद्दैवं कालश्च दुरतिक्रमः ॥ ८-६-२० (५५१७०)
पलायमानः कृपणो दीनात्मा दीनपौरुषः ।

कच्चिद्विनिहतः सूत पुत्रो दुःशासनो मम ॥ ८-६-२१ (५५१७१)
कच्चिन्न दीनाचरितं कृतवांस्तात संयुगे ।
कच्चिन्न निहतः शूरा यथाऽन्ये क्षत्रियर्षभाः ॥ ८-६-२२ (५५१७२)
युधिष्ठिरस्य वचनं मा युद्धमिति सर्वदा ।
दुर्योधनो नाभ्यगृह्णान्मूढः पथ्यमिवौषधम् ॥ ८-६-२३ (५५१७३)
शतल्पे शयानेन भीष्मेण सुमहात्मना ।
पानीयं याचितः पार्थः सोविध्यन्मेदिनीतलम् ॥ ८-६-२४ (५५१७४)
जलस्य धारां जनितां दृष्ट्वा पाण्डुसुतेन च ।
अब्रवीत्स महाबाहुस्तात संशाम्य पाण्डवैः ॥ ८-६-२५ (५५१७५)
प्रशमाद्धि भवेच्छान्तिर्मदन्तं युद्धमस्तु वः ।
भ्रातृभावेन पृथिवीं भुङ्क्ष्व पाण्डुसुतैः सह ॥ ८-६-२६ (५५१७६)
अकुर्वन्वचनं तस्य नूनं शोचति पुत्रकः ।
तदिदं समनुप्राप्त वचनं दीर्घदर्शिनः ॥ ८-६-२७ (५५१७७)
अहं तु निहतामात्यो हतपुत्रश्च सञ्जय ।
द्यूततः कृच्छ्रमापन्नो लूनपक्ष इव द्विजः ॥ ८-६-२८ (५५१७८)
यथा हि शकुनिं गृह्य छित्त्वा पक्षौ च सञ्जय ।
विसर्जयन्ति संहृष्टाः क्रीडमानाः कुमारकाः ॥ ८-६-२९ (५५१७९)
लूनपक्षतया तस्य गमनं नोपपद्यते ।
तथाहमपि सम्प्राप्तो लूनपक्ष इव द्विजः ॥ ८-६-३० (५५१८०)
क्षीणः सर्वार्थहीनश्च निर्ज्ञातिर्बन्धुवर्जितः ।
कां दिशं प्रतिपत्स्यामि दीनः शत्रुवशं गतः ॥ ८-६-३१ (५५१८१)
वैशम्पायन उवाच। ८-६-३२क्ष् (४८४६)
इत्येवं धृतराष्ट्रोऽथ विलप्य बहुदुःखितः ।
प्रोवाच सञ्जयं भूयः सोकव्याकुलमानसः ॥ ८-६-३२ (५५१८२)
धृतराष्ट्र उवाच। ८-६-३३क्ष् (४८४७)
योऽजयत्सर्वकाम्भोजानम्बष्ठान्कैकयैः सह ।
गान्धारांश्च विदेहांश्च जित्वा कार्यार्थमाहवे ॥ ८-६-३३ (५५१८३)
दुर्योधनस्य वृद्ध्यर्थं योऽजयत्पृथिवीं प्रभुः ।
स जितः पाण्डवैः शूरैः समरे वाहुशालिभिः ॥ ८-६-३४ (५५१८४)
तस्मिन्हते महेष्वासे कर्णे युधि किरीटिना ।
के वीराः पर्यतिष्ठन्त तन्ममाचक्ष्व सञ्जय ॥ ८-६-३५ (५५१८५)
कच्चिन्नैकः परित्यक्तः पाण्डवैर्निहतो रणे ।
उक्तं त्वया पुरा तात यथा वीरो निपातितः ॥ ८-६-३६ (५५१८६)
भीष्ममप्रतियुध्यन्तं शिखण्डी सायकोत्तमैः ।
पातयामास समरे सर्वशस्त्रभृतां वरम् ॥ ८-६-३७ (५५१८७)
तथा द्रौपदिना द्रोणो न्यस्तसर्वायुधो युधि ।

ग्धर्मराजवचः श्रुत्वा अश्वत्थामा हतस्त्विति'॥ ८-६-३८ (५५१८८)
युक्तयोगो महेष्वासः शरैर्बहुभिराचितः ।
निहतः खङ्गमुद्यम्य धृष्टद्युम्नेन सञ्जय ॥ ८-६-३९ (५५१८९)
अन्तरेण हतावेतौ छलेन च विशेषतः ।
अश्रौषमहमेतद्वै भीष्मद्रोणौ निपातितौ ॥ ८-६-४० (५५१९०)
भीष्मद्रोणौ हि समरे न हन्याद्वज्रभृत्स्वयम् ।
न्यायेन युध्यन्समरे तद्वै सत्यं ब्रवीमि ते ॥ ८-६-४१ (५५१९१)
कर्णं त्वस्यन्तमस्त्राणि दिव्यानि च बहूनि च ।
कथमिन्द्रोपमं वीरं मृत्युर्युद्धे समस्पृशत् ॥ ८-६-४२ (५५१९२)
यस्य विद्युत्प्रभां शक्तिं दिव्यां कनकभूषणाम् ।
प्रायच्छद्द्विषतां हन्त्रीं कुण्डलाभ्यां पुरन्दरः ॥ ८-६-४३ (५५१९३)
यस्य सर्पमुखो दिव्यः शरः काञ्चनभूषणः ।
अशेत निशितः पत्री समरेष्वरिसूदनः ॥ ८-६-४४ (५५१९४)
भीष्मद्रोणमुखान्वीरान्योऽवमत्य महारथान् ।
जामदग्न्यान्महाघोरं ब्राह्ममस्त्रमशिक्षत ॥ ८-६-४५ (५५१९५)
यश्च द्रोणमुखान्दृष्ट्वा विमुखानर्दिताञ्शरैः ।
सौभद्रस्य महाबाहुर्व्यधमत्कार्मुकं शितैः ॥ ८-६-४६ (५५१९६)
यश्च नागायुतप्राणं वज्ररंहसमच्युतम् ।
विरथं सहसा कृत्वा भीमसेनमपाहसत् ॥ ८-६-४७ (५५१९७)
सहदेवं च निर्जित्य शरैः सन्नतपर्वभिः ।
कृपया विरथं कृत्वा नाहनद्धर्मचिन्तया ॥ ८-६-४८ (५५१९८)
यश्च मायासहस्राणि विकुर्वाणं जयैषिणम् ।
घटोत्कचं राक्षसेन्द्रं शक्रशक्त्या निजघ्निवान् ॥ ८-६-४९ (५५१९९)
एवांश्च दिवसान्यस्य युद्धे भीतो धनञ्जयः ।
नागमद्द्वैरथं वीरः स कथं निहतो रणे ॥ ८-६-५० (५५२००)
श्संशप्तकानां योधा ये आह्वयन्त सदाऽन्यतः ।
एतान्हत्वा हनिष्यामि पश्चाद्वैकर्तनं रणे ॥ ८-६-५१ (५५२०१)
इति व्यपदिशन्पार्थो वर्जयन्सूतजं रणे ।
स कथं निहतो वीरः पार्थेन परवीरहा ॥ ८-६-५२ (५५२०२)
रथभङ्गो न चेत्तस्य धनुर्वा न व्यशीर्यत ।
न चेदस्त्राणि नष्टानि स कथं निहतः परैः ॥ ८-६-५३ (५५२०३)
को हि शक्तो रणे कर्णं विधुन्वानं महद्धनुः ।
विमुञ्चन्तं शरान्घोरान्दिव्यान्यस्त्राणि चाहवे ।
जेतुं पुरुषशार्दूलं शार्दूलमिव वेगिनम् ॥ ८-६-५४ (५५२०४)
ध्रवं तस्य धनुश्छिन्नं रथो वाऽपि महीं गतः ।
अस्त्राणि वा प्रनष्टानि यथा शंससि मे हतम् ।

न ह्यन्यदपि पश्यामि कारणं तस्य नाशने ॥ ८-६-५५ (५५२०५)
न हिन्मि फल्गुनं यावत्तावत्पादौ न धावये ।
इति यस्य महाघोरं व्रतमासीन्महात्मनः ॥ ८-६-५६ (५५२०६)
यस्य भीतो रमे निद्रां धर्मराजो युधिष्ठिरः ।
त्रयोदशसमा नित्यं नाभजत्पुरुषर्षभः ॥ ८-६-५७ (५५२०७)
यस्य वीर्यवतो वीर्यमुपाश्रित्य महात्मनः ।
मम पुत्रः सभां भार्यां पाण्डूनां नीतवान्बलात् ॥ ८-६-५८ (५५२०८)
तत्रापि च सभामध्ये पाण्डवानां च पश्यताम् ।
दासभार्येति पाञ्चालीमब्रवीत्कुरुसन्निधौ ॥ ८-६-५९ (५५२०९)
श्न सन्ति तपयः कृष्णे सर्वे षण्डतिलैः समाः ।
उपतिष्ठस्व भर्तारमन्यं वा वरवर्णिनि ॥ ८-६-६० (५५२१०)
इत्येवं यः पुरा वाचो रूक्षाः संश्रावयन्नृषा ।
सभायां सूतजः कृष्णां स कथं निहतः परैः ॥ ८-६-६१ (५५२११)
यदि भीष्मो रणश्लाघी द्रोणो वा युधि दुर्मदः ।
न हनिष्यति कौन्तेयान्पक्षपातात्सुयोधन ।
सर्वानेव हनिष्यामि व्येतु ते मानसो ज्वरः ॥ ८-६-६२ (५५२१२)
किं करिष्यति गाण्डीवमक्षय्यौ च महेषुधी ।
स्निग्धचन्दनदिग्धस्य मच्छरस्याभिधावतः ।
स नूनमृषभस्कन्धो ह्यर्जुनेन कथं हतः ॥{ ८-६-६३ (५५२१३)
यश्च गाण्डीवमुक्तानां स्पर्शमुग्रमचिन्तयन् ।
अपतिर्ह्यसि कृष्णेति ब्रुवन्पार्थानवैक्षत ॥ ८-६-६४ (५५२१४)
यस्य नासीद्भयं पार्थात्सपुत्रात्सजनार्दनात् ।
स्वबाहुबलमाश्रित्य मुहूर्तमपि सञ्जय ॥ ८-६-६५ (५५२१५)
तस्य नाऽहं वधं मन्ये देवैरपि सवासवैः ।
प्रतीपमभिघावद्भिः किं पुनस्तात पाण्डवैः ॥ ८-६-६६ (५५२१६)
न हि ज्यां संसम्पृशानस्य तलत्रे वाऽपि गृह्णतः ।
पुमानाधिरथेः स्थातुं कश्चित्प्रमुखतोऽर्हति ॥ ८-६-६७ (५५२१७)
अपि स्यान्मेदिनी हीना सोमसूर्यप्रभांशुभिः ।
न वध- पुरुषेन्द्रस्य संयुगेष्वपलायिनः ॥ ८-६-६८ (५५२१८)
येन मन्दः सहायेन भ्रात्रा दुःशासनेन च ।
वासुदेवस्य दुर्बुद्धिः प्रत्याख्यानमरोचत ॥ ८-६-६९ (५५२१९)
स नूनं वृषभस्कन्धं कर्णं दृष्ट्वा निपातितम् ।
दुःशासनं च निहतं मन्ये शोचति पुत्रकः ॥ ८-६-७० (५५२२०)
हतं वैकर्तनं दृष्ट्वा द्वैरथे सव्यसाचिना ।
जयतः पाण्डवान्दृष्ट्वा किंस्विद्दुर्योधनोऽब्रवीत् ॥ ८-६-७१ (५५२२१)
श्दुर्मर्षणं हतं दृष्ट्वा वृषसेनं च संयुगे ।

प्रभग्नं च बलं दृष्ट्वा वध्यमानं महारथैः ॥ ८-६-७२ (५५२२२)
पराङ्मुखांश्च राज्ञस्तु पलायनपरायणान् ।
विद्रुतान्रथिनो दृष्ट्वा मन्ये शोचति पुत्रकः ॥ ८-६-७३ (५५२२३)
अनेयश्चाभिमानी च दुर्बुद्धिरजितेन्द्रियः ।
हतोत्साहं बलं दृष्ट्वा किंस्विदुर्योधनोऽब्रवीत् ॥ ८-६-७४ (५५२२४)
स्वयं वैरं महत्कृत्वा वार्यमाणः सुहृद्गणैः ।
प्रधने हतभूयिष्ठैः किंस्विद्दुर्योधनोऽब्रवीत् ॥ ८-६-७५ (५५२२५)
भ्रातरं निहतं दृष्ट्वा भीमसेनेन संयुगे ।
रुधिरे पीयमाने च किंस्विद्द्दुर्योधनोऽब्रवीत् ॥ ८-६-७६ (५५२२६)
सह गान्धारराजेन सभायां यदभाषत ।
कर्णोऽर्जुनं रणे हन्ता हते तस्मिन्किमब्रवीत् ॥ ८-६-७७ (५५२२७)
द्यूतं कृत्वा पुरा हृष्टो वञ्चयित्वा च पाण्डवान् ।
शकुनिः सौबलस्तात हते कर्णे किमब्रवीत् ॥ ८-६-७८ (५५२२८)
कृतवर्मा महेष्वासः सात्वतानां महारथः ।
हतं वैकर्तनं दृष्ट्वा हार्दिक्यः किमभाषत ॥ ८-६-७९ (५५२२९)
ब्राह्मणाः क्षत्रिया वैश्या यस्य शिक्षामुपासते ।
धनुर्वेदं चिकीर्षन्तो द्रोणपुत्रस्य धीमतः ॥ ८-६-८० (५५२३०)
युवा रूपेण सम्पन्नो दर्शनीयो महायशाः ।
अश्वत्थामा हते कर्णे किमभाषत सञ्जय ॥ ८-६-८१ (५५२३१)
आचार्यो यो धनुर्वेदे गौतमो रथसत्तमः ।
कृपः शारद्वतस्तात हते कर्णे किमब्रवीत् ॥ ८-६-८२ (५५२३२)
मद्रराजो महेष्वासः शल्यः समितिशोभनः ।
दृष्ट्वा विनिहतं कर्णं सारथ्ये रथिनां वरः ।
किमभाषत सौवीरो मद्राणामधिपो बली ॥ ८-६-८३ (५५२३३)
दृष्ट्वा विनिहतं सर्वे योधा वारणदुर्जयाः ।
ये च केन राजानः पृथिव्यां योद्धुमागताः ।
वैकर्तनं हतं दृष्टवा कान्यभाषन्त सञ्जय ॥ ८-६-८४ (५५२३४)
द्रोणे तु निहते वीरे रथव्याघ्रे नरर्षभे ।
के वा मुखमनीकानामासन्सञ्जय भागशः ॥ ८-६-८५ (५५२३५)
मद्रराजः कथं शल्यो नियुक्तो रथिनां वरः ।
वैकर्तनस्य सारथ्ये तन्ममाचक्ष्व सञ्जय ॥ ८-६-८६ (५५२३६)
केऽरक्षन्दक्षिणं चक्रं सूतपुत्रस्य युध्यतः ।
वामं चक्रं ररक्षुर्वा के वा वीरस्य पृष्ठतः ॥ ८-६-८७ (५५२३७)
के कर्णं न जहुः शूराः के क्षुद्राः प्राद्रवंस्ततः ।
कथं च वः समेतानां हतः कर्णो महारथः ॥ ८-६-८८ (५५२३८)
पाण्डवाश्च स्वयं शूराः प्रत्युदीयुर्महारथाः ।

सृजन्तः शरवर्षाणि वारिधारा इवाम्बुदाः ॥ ८-६-८९ (५५२३९)
स च सर्पमुखो दिव्यो महेषुप्रवरस्तदा ।
व्यर्थः कथं समभवत्तन्ममाचक्ष्व सञ्जय ॥ ८-६-९० (५५२४०)
मामकस्यास्य सैन्यस्य हतोत्सेधस्य सञ्जय ।
अवशेषं न पश्यामि ककुदे मृदिते सति ॥ ८-६-९१ (५५२४१)
तौ हि वीरौ महेष्वासौ मदर्थे त्यक्तजीवितौ ।
भीष्मद्रोणौ हतौ श्रुत्वा को न्वर्थो जीवितेन मे ॥ ८-६-९२ (५५२४२)
पुनः पुनर्न मृष्यामि वधं कर्णस्य पाण्डवैः ।
यस्य बाह्वोर्बलं तुल्यं कुञ्जराणां शतं शतम् ॥ ८-६-९३ (५५२४३)
द्रोणे हते च यद्वृत्तं कौरवाणां परैः सह ।
सङ्ग्रामे नरवीराणां तन्ममाचक्ष्व सञ्जय ॥ ८-६-९४ (५५२४४)
यथा कर्णश्च कौन्तेयैः सह युद्धमयोजयत् ।
तथा च द्विषतां हन्ता रणे शान्तस्तदुच्यताम् ॥ ॥ ८-६-९५ (५५२४५)

इति श्रीमन्महाभारते कर्णपर्वणि षष्ठोऽध्यायः ॥ ६ ॥
Mahabharata - Karna Parva - Chapter Footnotes

८-६-३७ अप्रतियुध्यन्तं शिखण्डिना प्रतियुद्धगनङ्गीकुर्वाणम् ॥
८-६-३८ द्रौपदिना द्रुपदपुत्रेण धृष्टद्युम्नेन ॥
८-६-४० फलेन च विशेषतः इति क ङ पाठः । बलेन च
विशेषतः इति ख। पाठः ॥
८-६-४३ कुण्डलाभ्यां सकवचाभ्यां । तादर्थ्ये चतुर्थी ॥
८-६-४४ अशेत निहतः पत्री समरेष्वरिसूदनः इति ख पाठः । अशेत
निहतः पत्री चन्दनेष्वरिसूदनः इति झ पाठः ॥
८-६-५३ रथसङ्गो न चेत्तस्य इति कङ पाठः । अहंकांरो न
चेत्तस्य इति ख। पाठः ॥
८-६-६६ प्रातिभट्येन अभिधावद्भिः सर्वदिग्भ्यः समागतैः ॥
८-६-६७ आधिरथेः अधिरथपुत्रस्य ॥
८-६-६८ सोमसूर्यमहाचर्यात्प्रकर्षेण भातीति योगाच्च प्रभो
वह्निस्तेषां त्रयाणामंशुभिर्मुयूखैः ॥
८-६-६९ मन्दो दुर्योधनः ॥
८-६-७४ अनेय अशिक्षणीयः । यतोऽभिमानी विद्वत्त्वाभिमानी। एतएव
दुर्बुद्धिः हितमजानन् ॥
८-६-७५ प्रधने रणे ॥
८-६-८४ कानि वाक्यानीति शेषः ॥
८-६-८९ प्रत्युदीयुः कथमिति शेषः ॥

८-६-९१ हतोत्सेधस्य विनष्टोत्कर्षस्या ॥
८-६-६ षष्ठोऽध्यायः ॥

---

कर्नपर्व-अध्यय००७
॥ श्रीः ॥
८.७. अध्यायः ७

Mahabharata - Karna Parva - Chapter Topics
अश्वत्थामवचनाद्दुर्योधनेन सैनापत्येऽभिषिक्तेन कर्णेन रणाय सेनानियोजनम् ॥ १ ॥

Mahabharata - Karna Parva - Chapter Text

८-७-० (५५२४६)
सञ्जय उवाच। ८-७-०क्ष् (४८४८)
हते द्रोणे महेष्वासे तस्मिन्नहनि भारत ।
कृते च मोघसंकल्पे द्रोणपुत्रे महारथे ॥ ८-७-१ (५५२४७)
द्रवमाणे महाराज कौरवाणां बलार्णवे ।
व्यूह्य पार्थः स्वकं सैन्यमतिष्ठद्भ्रातृभिर्वृतः ॥ ८-७-२ (५५२४८)
तमवस्थितमाज्ञाय पुत्रस्ते भरतर्षभ ।
विद्रुतं स्वबलं दृष्ट्वा पौरुषेण न्यवारयत् ॥ ८-७-३ (५५२४९)
स्वमनीकमवस्थाप्य बाहुवीर्यमुपाश्रितः ।
युद्ध्वा च सुचिरं कालं पाण्डवैः सह भारत ॥ ८-७-४ (५५२५०)
लब्धलक्षैः परैर्हृष्टैर्व्यायच्छद्भिश्चिरं तदा ।
सन्ध्याकालं समासाद्य प्रत्याहारमकारयत् ॥ ८-७-५ (५५२५१)
गनिवेश्य बलवद्धोरं क्षुत्पिपासाबलैर्युतम् ।
श्रमेण महता युक्तं तथा द्रोणवधेन च ॥ ८-७-६ (५५२५२)
दीनरूपा रणे कर्म कृत्वा घोरं च शर्वरीम् ।
विशं प्राप्य सा सेना विश्रम्य मुदिताऽभवत्'॥ ८-७-७ (५५२५३)
कृत्वाऽवहारं सैन्यानां प्रविश्य शिबिरं स्वकम् ।
कुरवः सहिता मन्त्रं मन्त्रयाञ्चक्रिरे मिथः ॥ ८-७-८ (५५२५४)
पर्यङ्केषु परार्ध्येषु स्पर्ध्यास्तरणवत्सु च ।
वरासनेषूपविष्टाः सुखशय्यास्विवामराः ॥ ८-७-९ (५५२५५)
ततो दुर्योधनो राजा साम्ना परमवल्गुना ।
तानाभाष्य महेष्वासान्प्राप्तकालमभाषत ॥ ८-७-१० (५५२५६)
मतं मतिमतां श्रेष्ठाः सर्वे प्रब्रूत मा चिरम् ।

एवङ्गतेन यत्कार्यं भवेत्कार्यतरं नृपाः ॥ ८-७-११ (५५२५७)
सञ्जय उवाच। ८-७-१२क्ष् (४८४९)
एवमुक्ते नरेन्द्रेण नरसिंहा युयुत्सवः ।
चक्रुर्नानाविधाश्चेष्टाः सिंहासनगतास्तदा ॥ ८-७-१२ (५५२५८)
तेषां निशाम्येङ्गितानि युद्धे प्राणाञ्जुहूषताम् ।
समुद्वीक्ष्य मुखं राज्ञो बालार्कसमवर्चसम् ।
आचार्यपुत्रो मेधावी वाक्यज्ञो वाक्यमाददे ॥ ८-७-१३ (५५२५९)
रागो योगस्तथा दाक्ष्यां नयश्चेत्यर्थसाधकाः ।
उपायाः पण्डितैः प्रोक्तास्ते तु दैवमुपाश्रिताः ॥ ८-७-१४ (५५२६०)
लोकप्रवीरा येऽस्माकं देवकल्पा महारथाः ।
नीतिमन्तस्तथा युक्ता दक्षा रक्ताश्च ते हताः ॥ ८-७-१५ (५५२६१)
न त्वेव कार्यं नैराश्यमस्माभिर्विजयं प्रति ।
सुनीतैरिह सर्वार्थैर्दैवमप्यनुलोम्यते ॥ ८-७-१६ (५५२६२)
ते वयं प्रवरं नृणां सर्वैर्योधगुणैर्युतम् ।
कर्णमेवाभिषेभ्यामः सैनापत्येन भारत ॥ ८-७-१७ (५५२६३)
कर्णं सेनापतिं कृत्वा प्रमथिष्यामहे रिपून् ॥ ८-७-१८ (५५२६४)
एष ह्यतिबलः शूरः कृतास्त्रो युद्धदुर्मदः ।
वैवस्वत इवासह्यः शक्तो जेतुं रणे निपून् ॥ ८-७-१९ (५५२६५)
एतदाचार्यतनयाच्छ्रुत्वा राजंस्तवात्मजः ।
ग्दुर्योधनो महाराज भृशं प्रीतमनास्तदा'॥ ८-७-२० (५५२६६)
आशां बहुमतीं चक्रे वर्णं प्रति स वै तदा ।
हते भीष्मे च द्रोणे च कर्णो जेष्यति पाण्डवान् ॥ ८-७-२१ (५५२६७)
तामाशां हृदये कृत्वा समाश्वस्य च भारत ।
श्ततो दुर्योधनः प्रीतः प्रियं श्रुत्वाऽस्य तद्वचः ।
प्रीतिसत्कारसंयुक्तं तथ्यमात्महितं शुभम् ।॥ ८-७-२२ (५५२६८)
स्वं मनः समवस्थाप्य बाहुवीर्यमुपाश्रितः ॥ ८-७-२३ (५५२६९)
ग्प्रियसत्कारसंयुक्तं तथ्यमात्महिते रतम्'।
दुर्योधनो महाराज राधेयमिदमब्रवीत् ॥ ८-७-२४ (५५२७०)
कर्ण जानामि ते वीर्यं सौहृदं परमं मयि ।
तथाऽपि त्वां महाबाहो प्रवक्ष्यामि हितं वचः ॥ ८-७-२५ (५५२७१)
श्रुत्वा यथेष्टं च कुरु वीर यत्तव रोचते ।
भवान्प्राज्ञतमो नित्यं मम चैव परा गतिः ॥ ८-७-२६ (५५२७२)
भीष्मद्रोणावतिरथौ हतौ सेनापती मम ।
सेनापतिर्भवानस्तु ताभ्यां द्रविणवत्तरः ॥ ८-७-२७ (५५२७३)
वृद्धो च तौ महेष्वासौ सापेक्षो च धनञ्जये ।
मानितौ च मया वीरौ राधेय वचनात्तव ॥ ८-७-२८ (५५२७४)

पितामहत्वं सम्प्रेक्ष्य पाण्डुपुत्रा महारणे ।
रक्षितास्तात भीष्मेण दिवसानि दशैव तु ॥ ८-७-२९ (५५२७५)
न्यस्तशस्त्रे तु भवति हतो भीष्मः पितामहः ।
शिखण्डिनं पुरुस्कृत्य फल्गुनेन महाहवे ॥ ८-७-३० (५५२७६)
हते तस्मिन्महेष्वासे शरतल्पगते तथा ।
त्वयोक्ते पुरुषव्याघ्र द्रोणो ह्यासीत्पुरःसरः ॥ ८-७-३१ (५५२७७)
तेनापि रक्षिताः पार्थाः शिष्यत्वादिति मे मतिः ।
स चापि निहतो वृद्धो धृष्टद्युम्नेन सत्वरम् ॥ ८-७-३२ (५५२७८)
निहताभ्यां प्रधानाभ्यां ताभ्यामतुलविक्रम ।
त्वत्समं समरे योधं नान्यं पश्यामि चिन्तयन् ॥ ८-७-३३ (५५२७९)
भवानेव तु नः शक्तो विजयाय न संशयः ।
पूर्वं मध्ये च पश्चाच्च तथैव विहितं हितम् ॥ ८-७-३४ (५५२८०)
स भवान्धुर्यवत्सङ्ख्ये धुरमुद्वोऽढुमर्हति ।
अभिषेचय सैनान्ये स्वयमात्मानमात्मना ॥ ८-७-३५ (५५२८१)
देवतानां यथा स्कन्दः सेनानीः प्रभुरव्ययः ।
तथा भवानिमां सेनां धार्तराष्ट्रीं बिभर्तु वै ॥ ८-७-३६ (५५२८२)
जहि शत्रुगणान्सर्वान्महेन्द्रो दानवानिव ।
अवस्थितं रमे दृष्ट्वा पाण्डवास्त्वां महारथाः ।
द्रविष्यन्ति च पाञ्चाला विष्णुं दृष्ट्वेव दानवाः ॥ ८-७-३७ (५५२८३)
तस्मात्त्वं पुरुषव्याघ्र प्रकर्षैतां महाचमूम् ॥ ८-७-३८ (५५२८४)
भवत्यवस्थिते यत्ते पाण्डवा मन्दचेतसः ।
द्रविष्यन्ति सहामात्याः पाञ्चालाः सृञ्जयाश्च ह। ८-७-३९ (५५२८५)
यथा ह्यभ्युदितः सूर्यः प्रतपन्स्वेन तेजसा ।
व्यपोहति तमस्तीव्रं तथा शत्रून्प्रतापय ॥ ८-७-४० (५५२८६)
सञ्जय उवाच। ८-७-४१क्ष् (४८५०)
एवमुक्तस्तु राधेयो राज्ञा दुर्योधनेन ह ।
राज्ञां मध्ये महाबाहुः प्रीतात्मा स महाबलः ।
हर्षयन्नब्रवीत्कर्णो दुर्योधनमिदं वचः ॥ ८-७-४१ (५५२८७)
कर्ण उवाच। ८-७-४२क्ष् (४८५१)
उक्तमेतन्मया पूर्वं गान्धारे तव सन्निधौ ।
जेष्यामि पाण्डवान्सर्वान्सपुत्रान्सजनार्दनान् ॥ ८-७-४२ (५५२८८)
सेनापतिर्भविष्यामि तवाहं नात्र संशयः ।
स्थिरो भव महाराज जितान्विद्धि च पाण्डवान् ॥ ८-७-४३ (५५२८९)
सञ्जय उवाच। ८-७-४४क्ष् (४८५२)
एवमुक्तो महाराज ततो दुर्याधनो नृपः ।
उत्तस्थौ राजभिः सार्धं देवैरिव शतक्रतुः ॥ ८-७-४४ (५५२९०)

सैनापत्येन सत्कर्तुं कर्णं स्कन्दमिवामराः ।
ततोऽभिषिषिचुः कर्णं विधिदृष्टेन कर्मणा ॥ ८-७-४५ (५५२९१)
दुर्योधनमुक्ता राजन्राजानो विजयैषिणः ।
शातकुम्भमयैः कुम्भेर्माहेयैश्चाभिमन्त्रितैः ॥ ८-७-४६ (५५२९२)
तोयपूर्णैर्विषाणैश्च द्विपखङ्गमहर्षभैः ।
मणिमुक्तायुतैश्चान्यैः पुण्यगन्धैस्तथौषधैः ॥ ८-७-४७ (५५२९३)
औदुम्बरे सुखासीनमासने क्षौमसंवृते ।
शास्त्रदृष्टेन विधिना सम्भारैश्च सुसम्भृतैः ॥ ८-७-४८ (५५२९४)
ब्राह्मणः क्षत्रिया वैश्यास्तथा शूद्राश्च सम्मताः ।
तुष्टुवुस्तं महात्मानमभिषिक्तं वरासने ॥ ८-७-४९ (५५२९५)
ततोऽभिषिक्ते राजेन्द्र निष्कैर्गोभिर्धनेन च ।
वाचयामास विप्राग्र्यान्राधेयः परवीरहा ॥ ८-७-५० (५५२९६)
ग्स व्यरोचत राधेयः सूतमागधबन्दिभिः ।
स्तूयमानो यथा भानुरुदये ब्रह्मवादिभिः ॥ ८-७-५१ (५५२९७)
ततः पुण्याहघोषेण वादित्रनिनदेन च ।
जयशब्देन शूराणां तुमुलः सर्वतोऽभवत् ॥ ८-७-५२ (५५२९८)
जयेत्यूचुर्नृपाः सर्वे राधेयं तत्र सङ्गताः'॥ ८-७-५३ (५५२९९)
जय पार्थान्सगोविन्दान्सानुगांस्तान्महामृधे ।
इति तं बन्दिनः प्राहुर्द्विजाश्च पुरुषर्षभम् ॥ ८-७-५४ (५५३००)
जहि पार्थान्सपाञ्चालान्राधेय विजयाय नः ।
उद्यन्निव सदा भानुस्तमांस्युग्रैर्गभस्तिभिः ॥ ८-७-५५ (५५३०१)
न ह्यलं त्वद्विसृष्टानां शराणां वै सकेशवाः ।
उलूकाः सूर्यरश्मीनां ज्वलतामिव दर्शने ॥ ८-७-५६ (५५३०२)
न हि पार्थाः सपाञ्चालाः स्थातुं शक्तास्तवाग्रतः ।
आत्तवज्रस्य समरे महेन्द्रस्येव दानवाः ॥ ८-७-५७ (५५३०३)
ग्सञ्जय उवाच। ८-७-५८क्ष् (४८५३)
स सत्कृतः स्तूयमानः सुहृद्गणवृतो रुषा ।
कर्णो दुर्योधनं वाक्यमब्रवीत्प्रहसन्प्रियम् ॥ ८-७-५८ (५५३०४)
दुर्योधनाद्य सगणं पाण्डूनां प्रवरैः सह ।
फल्गुनं सूदयिष्यामि त्वत्प्रियार्थं सबान्धवम् ॥ ८-७-५९ (५५३०५)
सपर्वतार्णवद्वीपां शाधि गां गतपाण्डवाम् ।
पुत्रपौत्रप्रपौत्रेषु प्रतिष्ठां गमयिष्यमि ॥ ८-७-६० (५५३०६)
नासह्यं विद्यते मह्यं त्वत्प्रियार्थमरिन्दम ।
सत्यधर्मानुरक्तस्य सिद्धिरात्मवतो यथा ॥ ८-७-६१ (५५३०७)
अभिषिक्तस्तु राघेयः प्रभया सोऽमितप्रभः ।
अत्यरिच्यत रूपेण दिवाकर इवापरः ॥ ८-७-६२ (५५३०८)

सैनापत्ये तु राधेयमभिषिच्य सुतस्तव ।
अमन्यत तदात्मानं कृतार्थं कालचोदितः ॥ ८-७-६३ (५५३०९)
कर्णोऽपि राज्ञः संप्राप्य सैनापत्यमरिन्दमः ।
योगमाज्ञापयामास सूर्यस्योदयनं प्रति ॥ ८-७-६४ (५५३१०)
तव पुत्रैर्वृतः कर्णः शुशुभे तत्र भारत ।
देवैरिव यथा स्कन्दः सङ्ग्रामे तारकामये ॥ ॥ ८-७-६५ (५५३११)

इति श्रीमन्महाभारते कर्णपर्वणि सप्तमोऽध्यायः ॥ ७ ॥

Mahabharata - Karna Parva - Chapter Footnotes

८-७-३ स्वबलम्प्रति विद्रुतं दृष्ट्वा ॥
८-७-५ लब्धलक्षैः प्राप्ताजयैः । व्यायच्छद्भिः
यतमानैः। प्रत्याहारं प्रत्यक्हारम्। प्रत्यहारमिति वा पाठः ॥
८-७-९ पर्यङ्केष्वेव वरासनेषु ॥
८-७-११ कार्यतरं आवश्यकतरं यत्कार्यं कर्तव्यं परं मतं
सम्मतं तत् प्रब्रूत ॥
८-७-१२ चेष्टाः शौर्याभिनयरूपाः भुजास्फालनाद्याः ॥
८-७-१३ निशाम्य आलोच्य । वर्चसं छान्दसष्टच् ॥
८-७-१४ रागः स्वामिभक्तिः । योगो देशकालादिसम्पत्तिः। दाक्ष्यं
बलम्। नयो नीतिः ॥
८-७-१६ सर्वार्थैः रागादिभिः सुनीतैः दैवमनुलोम्यतेऽनुकूलं क्रियते
। न केवलं रागाद्यपेक्षया दैवस्य प्राबल्यमपितु दैवापेक्षयापि
सुप्रणीता रागादयः प्रबला इत्यर्थः ॥
८-७-२१ बहुमतीं वाहुल्यवतीं अतिशयितामिति यावत् ॥
८-७-२२ शुभं वचः श्रुत्वा मनः समवस्थाप्य समाधायाब्रवीदिति
द्वयोः सम्बन्धः ॥
८-७-२७ ताभ्यां सकाशात् द्रविणवत्तरः बलवत्तरः ॥
८-७-३४ विहितं त्वयेति शेषः ॥
८-७-३५ सैनान्ये सेनानीत्ये ॥
८-७-४६ शातकुम्भमयैः सौवर्णैर्माहेयैर्महीमयैश्च कुम्भैः ॥
८-७-४७ विषाणैः द्विपस्य गजस्य दन्तमयैः पात्रैः । खङ्गस्य
गण्डकस्य। महर्षभस्य गवयस्य च शृङ्गैः। विषाणं
दन्तशृङ्गयोरिति विश्वः। द्विपखङ्गमहर्षभीयैरिति तद्धितलोप
आर्षः ॥
८-७-५६ शराणां दर्शनेपि नालं किमुत स्पर्शे इत्यर्थः ॥
८-७-७ सप्तमोऽध्यायः ॥

कर्नपर्व-अध्यय००८
॥ श्रीः ॥
८.८. अध्यायः ८

Mahabharata - Karna Parva - Chapter Topics
कर्णार्जुनाक्ष्यां व्यूहरचनापूर्वकं रणाय निर्याणम् ॥१ ॥

Mahabharata - Karna Parva - Chapter Text

८-८-० (५५३१२)
धृतराष्ट्र उवाच। ८-८-०क्ष् (४८५४)
सैनापत्यं तु सम्प्राप्य कर्णो वैकर्तनस्तदा ।
तथोक्तश्च स्वयं राज्ञा स्निग्धं भ्रातृसमं वचः ॥ ८-८-१ (५५३१३)
हितश्च प्रियकामश्च मम पुत्रस्य नित्यशः ।
अकरोत्किं महाप्राज्ञस्तन्ममाचक्ष्व सञ्जय ॥ ८-८-२ (५५३१४)
सञ्जय उवाच। ८-८-३क्ष् (४८५५)
कर्णस्य मतमाज्ञाय पुत्रास्ते भरतर्षभ ।
योगमाज्ञापयामासुर्नन्दितूर्यपुरःसरम् ॥ ८-८-३ (५५३१५)
महत्यपररात्रे च तव सैन्यस्य मारिष ।
योगो योग इति ह्याशु प्रादुरासीन्महास्वनः ॥ ८-८-४ (५५३१६)
कल्पतां नागमुख्यानां रथानां च वरुथिनाम् ।
सन्नह्यतां नराणां च वाजिनां च विशाम्पते ॥ ८-८-५ (५५३१७)
क्रोशतां चैव योधानां त्वरितानां परस्परम् ।
बभूव तुमुलः शब्दो दिवस्पृक्सुमहांस्ततः ॥ ८-८-६ (५५३१८)
ततः श्वेतपताकेन बलाकावर्णवाजिना ।
हेमपृष्ठेन धनुषा नागकक्षेण केतुना ॥ ८-८-७ (५५३१९)
तूणीरशतपूर्णेन सगदेन वरूथिना ।
शतघ्नीकिङ्किणीशक्तिशूलतोमरधारिणा ॥ ८-८-८ (५५३२०)
कार्मुकैरुपपन्नेन विमलादित्यवर्चसा ।
रथेनाभिपताकेन सुतपुत्रो ह्यदृश्यत ॥ ८-८-९ (५५३२१)
ध्मापयन्वारिजं राजन्हेमजालविभूषिन्तम् ।
विधुन्वानो महच्चापं कार्तस्वरविभूषितम् ॥ ८-८-१० (५५३२२)
दृष्ट्वा कर्णं महेष्वासं रथस्थं रथिनां वरम् ।
भानुमन्तमिवोद्यन्तं तमो घ्नन्तं दुरासदम् ॥ ८-८-११ (५५३२३)
न भीष्मव्यसनं केचिन्नापि द्रोणस्य मारिष ।

नान्येषां पुरुषव्याघ्र मेनिरे तत्र कौरवाः ॥ ८-८-१२ (५५३२४)
ततस्तु त्वरयन्योधाञ्शङ्खशब्देन मारिष ।
कर्णो निष्कर्षयामास कौरवाणां महद्बलम् ॥ ८-८-१३ (५५३२५)
व्यूहं व्यूह्य महेष्वासो मकरं शत्रुतापनः ।
प्रत्युद्ययौ तथा कर्णः पाण्डवान्विजिगीषया ॥ ८-८-१४ (५५३२६)
मकरस्य तु तुण्डे वै कर्णो राजन्व्यवस्थितः ।
नेत्राभ्यां शकुनिः शूर उलूकश्च महारथः ॥ ८-८-१५ (५५३२७)
द्रोणपुत्रस्तु शिरसि ग्रीवायां सर्वसोदराः ।
मध्येदुर्योधनो राजा बलेन महता वृतः ॥ ८-८-१६ (५५३२८)
वामपादे तु राजेन्द्र कृतवर्मा व्यवस्थितः ।
नारायणबलैर्युक्तो गोपालैर्युद्धदुर्मदैः ॥ ८-८-१७ (५५३२९)
पादे तु दक्षिणे राजन्गौतमः सत्यविक्रमः ।
त्रिगर्तैः सुमहेष्वासैर्दाक्षिणात्यैश्च संवृतः ॥ ८-८-१८ (५५३३०)
अनुपादे तु यो वामस्तत्र शल्यो व्यवस्थितः ।
महत्या सेनया सार्धं मद्रदेशसमुत्थया ॥ ८-८-१९ (५५३३१)
दक्षिणे तु महाराज सुषेणः सत्यसङ्गरः ।
वृतो रथसहस्रेण दन्तिनां च त्रिभिः शतैः ॥ ८-८-२० (५५३३२)
पुच्छे ह्यास्तां महावीर्यौ भ्रातरौ पार्थिवौ तदा ।
चित्रश्च चित्रसेनश्च महत्या सेनया वृतौ ॥ ८-८-२१ (५५३३३)
तथा प्रयाते राजेन्द्र कर्णे नरवरोत्तमे ।
धनञ्जयमभिप्रेक्ष्य धर्मराजोऽब्रवीदिदम् ॥ ८-८-२२ (५५३३४)
पश्य पार्थ यथा सेना धार्तराष्ट्रीह संयुगे ।
कर्णेन विहिता वीर गुप्ता वीरैर्महारथैः ॥ ८-८-२३ (५५३३५)
हतवीरतमा ह्येषा धार्तराष्ट्री महाचमूः ।
फल्गुशेषा महाबाहो तृणैस्तुल्या मता मम ॥ ८-८-२४ (५५३३६)
एको ह्यत्र महेष्वासः सूतपुत्रो विराजते ।
सदेवासुरगन्धर्वैः सकिन्नरमहोरगैः ।
चराचरैस्त्रिभिर्लोकैरजेयो यो महारथः ॥ ८-८-२५ (५५३३७)
तं हत्वाऽद्य महाबाहो विजयस्तव फल्गुन ।
उद्धृतश्च भवेच्छल्यो मम द्वादशवार्षिकः ॥ ८-८-२६ (५५३३८)
एवं ज्ञात्वा महाबाहो व्यूहं व्यूह यथेच्छसि ॥ ८-८-२७ (५५३३९)
सञ्जय उवाच। ८-८-२८क्ष् (४८५६)
भ्रातुरेतद्वचः श्रुत्वा पाण्डवः श्वेतवाहनः ।
अर्धचन्द्रेण व्यूहेन प्रत्यव्यूहत तां चमूम् ॥ ८-८-२८ (५५३४०)
वामपार्श्वे तु तस्याथ भीमसेनो व्यवस्थितः ।
दक्षिणे च महेष्वासो धृष्टद्युम्नो व्यवस्थितः ॥ ८-१-२९ (५५३४१)

मध्ये व्यूहस्य राजा तु पाण्डवश्च धनञ्जयः ।
नकुलः सहदेवश्च धर्मराजस्य पृष्ठतः ॥ ८-८-३० (५५३४२)
चक्ररक्षौ तु पाञ्चाल्यौ युधामन्यूत्तमौजसौ ।
पार्थं न जहतुर्युद्धे पाल्यमानौ किरीटिना ॥ ८-८-३१ (५५३४३)
शेषां नृपतयो वीराः स्थिता व्यूहस्य दंशिताः ।
यथाभागं यथोत्साहं यथायत्नं च भारत ॥ ८-८-३२ (५५३४४)
एवमेतन्महाव्यूहं व्यूह्य भारत पाण्डवाः ।
तावकाश्च महेष्वासा युद्धायैव मनो दधुः ॥ ८-८-३३ (५५३४५)
दृष्ट्वा व्यूढां तव चमूं सूतपुत्रेण संयुगे ।
निहतान्पाण्डवान्मेने धार्तराष्ट्रः सबान्धवः ॥ ८-८-३४ (५५३४६)
तथैव पाण्डवीं सेनां व्यूढां दृष्ट्वा युधिष्ठिरः ।
धार्तराष्ट्रान्हतान्मेने सकर्णान्वै जनाधिपः ॥ ८-८-३५ (५५३४७)
ततः शङ्खाश्च भेर्यश्च पणवानकगोमुखाः ।
डिण्डिमाश्चाप्यहन्यन्त झर्झराश्च समन्ततः ॥ ८-८-३६ (५५३४८)
सेनयोरुभयो राजन्प्रावाद्यन्त महास्वनाः ।
सिंहनादश्च सञ्जज्ञे शूराणां जयगृद्धिनाम् ॥ ८-८-३७ (५५३४९)
हयहेषितशब्दाश्च वारणानां च बृंहिताः ।
रथनेमिस्वनाश्चोग्राः सम्बभूवुर्जनाधिप ॥ ८-८-३८ (५५३५०)
न द्रोणव्यसनं कश्चिज्जानीते तत्र भारत ।
दृष्ट्वा कर्णं महेष्वासं मुखे व्यूहस्य दंशितम् ॥ ८-८-३९ (५५३५१)
उभे सैन्ये महाराज प्रहृष्टनरसङ्कुले ।
योद्धुकामे स्थिते राजन्हन्तुमन्योन्यमोजसा ॥ ८-८-४० (५५३५२)
विजये जातसंरम्भे दृष्ट्वाऽन्योन्यं व्यवस्थिते ।
अनीकमध्ये राजेन्द्र चेरतुः कर्णपाण्डवौ ॥ ८-८-४१ (५५३५३)
नृत्यन्त्याविव ते सेने समेयातां परस्परम् ।
तयोः पक्षप्रपक्षेभ्यो निर्ययुर्युद्धलिप्सवः ॥ ८-८-४२ (५५३५४)
ततः प्रववृते युद्धं नरवारणवाजिनाम् ।
रथानां च महाराज अन्योन्यमभिनिघ्नताम् ॥ ॥ ८-८-४३ (५५३५५)

इति श्रीमन्महाभारते कर्णपर्वणि षोडशदिवसयुद्धारम्भे
अष्टमोऽध्यायः ॥ ८ ॥

Mahabharata - Karna Parva - Chapter Footnotes

८-८-३ नन्दितूर्यमानन्दवाद्यम् ॥
८-८-५ कल्पतां सन्नह्यमाननाम् । वरूथिनां रथगुप्तिमताम् । सन्नह्यतां नराणां सन्नह्यमानानां गजादीनां च शब्दो बभूवेति द्वयोः सम्बन्धः

॥
८-८-७ श्वेतेत्यादिविशेषणद्वयं रथेनेत्यस्य ॥
८-८-९ अभिपताकेन वायोः प्रातिकूल्यादभिमुखपताकेन
। एतत्पराजयसूचकम् ॥
८-८-१९ अनुपादे पादस्थानस्यापि पश्चाद्भागे ॥
८-८-२० दक्षिणे अनुपादे ॥
८-८-२७ व्यूह रचय ॥
८-८-८ अष्टमोऽध्यायः ॥

---

कर्नपर्व-अध्यय००९
॥ श्रीः ॥
८.९. अध्यायः ९

Mahabharata - Karna Parva - Chapter Topics
सङ्कुलयुद्धम् ॥ १ ॥
भीमेन क्षेमधूर्तिवधः ॥ २ ॥

Mahabharata - Karna Parva - Chapter Text

८-९-० (५५३५६)
सञ्जय उवाच। ८-९-०क्ष् (४८५७)
ते सेनेऽन्योन्यमासाद्य प्रहृष्टाश्वनरद्विपे ।
बृहत्यौ सम्प्रजहाते देवासुरचमूसमे ॥ ८-९-१ (५५३५७)
ततो नानारथाश्वेभाः पत्तयश्चोग्रविक्रमाः ।
सम्प्रहारान्भृशं चक्रुर्देहपाप्मविनाशनान् ॥ ८-९-२ (५५३५८)
पूर्णचन्द्रार्कपद्मानां कान्तित्विङ्गन्धतः समैः ।
उत्तमाङ्गैर्नृसिंहानां नृसिंहास्तस्तरुर्महीम् ॥ ८-९-३ (५५३५९)
अर्धचन्द्रैस्तथा भल्लैः क्षुरप्रैरसिपट्टसैः ।
परश्वथैश्चापहृतान्युत्तमाङ्गानि युध्यताम् ॥ ८-९-४ (५५३६०)
व्यायतायतबाहूनां व्यायतायतबाहुभिः ।
वाहवः पातिता रेजुर्धरण्यां सायुधाङ्गदैः ॥ ८-९-५ (५५३६१)
तैः स्फुरद्भिर्मही भाति रक्ताङ्गुलितलैस्तथा ।
गरुडप्रहितैरुग्रैः पञ्चास्यैरुरगैरिव ॥ ८-९-६ (५५३६२)
द्विरदस्यन्दनाश्वेभ्यः पेतुर्वीरा द्विषद्धताः ।
विमानेभ्यो यथा क्षीणे पुण्ये स्वर्गदस्तथा ॥ ८-९-७ (५५३६३)
गदाभिरन्ये गुर्वीभिः परिघैर्मुसलैरपि ।

पोथिताः शतशः पेतुर्वीरा वीरतरै रणे ॥ ८-९-८ (५५३६४)
रथा रथैर्विमथिता मत्ता मत्तैर्द्विपा द्विपैः ।
सादिनः सादिभिश्चैव तस्मिन्परमसङ्कुले ॥ ८-९-९ (५५३६५)
रथैर्नरा रथा नागैरश्वारोहाश्च पत्तिभिः ।
अश्वारोहैः पदाताश्च निहता युधि शेरते ॥ ८-९-१० (५५३६६)
रथाश्वपत्तयो नागै रथाश्वेभाश्च पत्तिभिः ।
रथपत्तिद्विपाश्वाश्चै रथैश्चापि नरद्विपाः ॥ ८-९-११ (५५३६७)
रथाश्वेभनराणां तु नराश्वेभरथैः कृतम् ।
पाणिपादैश्च शस्त्रैश्च रथैश्च कदनं महत् ॥ ८-९-१२ (५५३६८)
तथा तस्मिन्बले शूरैर्वध्यमाने हतेऽपि च ।
अस्मानभ्याययुः पार्था वृकोदरपुरोगमाः ॥ ८-९-१३ (५५३६९)
वृष्टद्युम्नः शिखण्डी च द्रौपदेयाः प्रभद्रकाः ।
सात्यकिश्चेकितानश्च द्राविडैः सैनिकैः सह ॥ ८-९-१४ (५५३७०)
वृता व्यूहेन महता पाण्ड्याश्चोलाः सकेरलाः ।
व्यूढोरस्का दीर्घभुजाः प्रांशवः पृथुलोचनाः ॥ ८-९-१५ (५५३७१)
आपीडिनो रक्तदन्ता मत्तमातङ्गविक्रमाः ।
नानाविरागवसाना गन्धचूर्णावचूर्णिताः ॥ ८-९-१६ (५५३७२)
बद्धासयः पाशहस्ता वारणप्रतिवारणाः ।
समानमृत्यवो राजन्नात्यजन्त परस्परम् ॥ ८-९-१७ (५५३७३)
कलापिनश्चापहस्ता दीर्घकेशाः प्रियंवदाः ।
पत्तयः सायकैर्विद्धा घोररूपपराक्रमाः ॥ ८-९-१८ (५५३७४)
अथापरे पुनः शूराश्चेदिपाञ्चालकेकयाः ।
कारूशाः कोसलाः काञ्च्या मागधाश्चापि दुद्रुवुः ॥ ८-९-१९ (५५३७५)
तेषां रथाश्वनागाश्च प्रवराश्चोग्रपत्तयः ।
नानाबाणरवैर्हृष्टा नृत्यन्ति च हसन्ति च ॥ ८-९-२० (५५३७६)
तस्य सैन्यस्य महतो महामात्रवरैर्वृतः ।
मध्ये वृकोदरोऽभ्यायात्त्वदीयान्नागधूर्गतः ॥ ८-९-२१ (५५३७७)
स नागप्रवरोऽत्युग्रो विधिवत्कल्पितो बभौ ।
उदयाग्राद्रिभवनं यथाऽभ्युदितभास्करम् ॥ ८-९-२२ (५५३७८)
तस्यायसं वर्मवरं वररत्नविभूषितम् ।
ताराव्याप्तस्य नभसः शारदस्य समं त्विषा ॥ ८-९-२३ (५५३७९)
स तोमरव्यग्रकरश्चारुमौलिः स्वलङ्कृतः ।
शरन्मध्यन्दिनार्काभस्तेजया प्रदाहद्रिपून् ॥ ८-९-२४ (५५३८०)
तं दृष्ट्वा द्विरदं दूरात्क्षेमधूर्तिर्द्विपस्थित ।
आह्वयन्नभिदुद्राव प्रहसन्पृतनामुखे ॥ ८-९-२५ (५५३८१)
तयोः समभवद्युद्धं द्विपयोरुग्ररूपयोः ।

यदृच्छया द्रुतवतोर्महापर्वतयोरिव ॥ ८-९-२६ (५५३८२)
संसक्तनागौ तौ वीरौ तोमरैरितरेतरम् ।
बलवत्सूर्यरश्म्याभैर्भित्त्वाऽन्योन्यं विनेदतुः ॥ ८-९-२७ (५५३८३)
व्यपसृत्य तु नागाभ्यां मण्डलानि विचेरतुः ।
प्रगृह्य चोभौ धनुषी जघ्नतुर्वै परस्परम् ॥ ८-९-२८ (५५३८४)
क्ष्वेडितास्फोटितरवैर्बाणशब्दैस्तु सर्वतः ।
तौ जनं हर्षयन्तौ च सिंहनादं प्रचक्रतुः ॥ ८-९-२९ (५५३८५)
समुद्यतकराभ्यां तौ द्विपाभ्यां कृतिनावुभौ ।
वातोद्धूतपताकाभ्यां युयुधाते महाबलौ ॥ ८-९-३० (५५३८६)
तावन्योन्यस्य धनुषी छित्त्वाऽन्योन्यं विनेदतुः ।
शक्तितोमरवर्षेण प्रावृण्मेघाविवाम्बुभिः ॥ ८-९-३१ (५५३८७)
क्षेमधूर्तिस्तदा भीमं तोमरेण स्तनान्तरे ।
निर्बिभेदातिवेगेन षड्भिश्चाप्यपरैर्नदन् ॥ ८-९-३२ (५५३८८)
स भीमसेनः शुशुभे तोमरैरङ्गमाश्रितैः ।
क्रोधदीप्तवपुर्मेघैः सप्तसप्तिरिवांशमान् ॥ ८-९-३३ (५५३८९)
ततो भास्करवर्णाभमञ्चोगतिमयस्मायम् ।
ससर्ज तोमरं भीमः प्रत्यमित्राय यत्नवान् ॥ ८-९-३४ (५५३९०)
ततः करूशाधिपतिश्चापमानम्य सायकैः ।
दशभिस्तोमरं भित्त्वा षष्ट्या विव्याध पाण्डवम् ॥ ८-९-३५ (५५३९१)
अथ कार्मुकमादाय भीमो जलदनिः स्वनम् ।
रिपोरभ्यर्दयन्नागमुन्नदन्पाण्डवाः शरैः ॥ ८-९-३६ (५५३९२)
स शरौघार्दितो नागो भीमसेनेन संयुगे ।
गृह्यमाणोऽपि नातिष्ठद्वातोद्धूत इवाम्बुदः ॥ ८-९-३७ (५५३९३)
तमभ्यधावद्द्विरदं भीमो भीमस्य नागराट् ।
महावातेरितं मेघं वातोद्धूत इवाम्बुदः ॥ ८-९-३८ (५५३९४)
सन्निवार्यात्मनो नागं क्षेमधूर्तिः प्रतापवान् ।
विव्याधाभिद्रुतं बाणैर्भीमसेनस्य कुञ्जरम् ॥ ८-९-३९ (५५३९५)
ततः साधुविसृष्टेन क्षुरेणानतपर्वणा ।
छित्त्वा शरासनं शत्रोर्नागं चापि प्रमार्दयत् ॥ ८-९-४० (५५३९६)
ततः क्रुद्धो रणे भीमं क्षेमधूर्तिः पराभिनत् ।
जघान चास्य द्विरदं नाराचैः सर्वमर्मसु ॥ ८-९-४१ (५५३९७)
स पपात महानागो भीमसेनस्य भारत ।
पुरा नागस्य पतनादवप्लुत्य स्थितो महीम् ॥ ८-९-४२ (५५३९८)
भीमसेनोऽपि तन्नागं गदया समपोथयत् ।
तस्मात्प्रमथितान्नागात्क्षेमधूर्तिरवप्लुतः ॥ ८-९-४३ (५५३९९)
ग्उद्धृत्य स्वङ्गं निशितमभ्यधावत्स पाण्डवम्'।

उद्यतायुधमायान्तं सदयाऽहन्वृकोदरः ॥ ८-९-४४ (५५४००)
स पपात हतः सासिर्व्यसुस्तमभितो द्विपम् ।
वज्रप्रभग्नमचलं सिंहो वज्रहतो यथा ॥ ८-९-४५ (५५४०१)
तं हतं नृपतिं दृष्ट्वा करूशानां यशस्करम् ।
प्राद्रावद्व्यथिता सेना त्वदीया भरतर्षभ ॥ ॥ ८-९-४६ (५५४०२)

इति श्रीमन्महाभारते कर्णपर्वणि षोडशदिवसयुद्धे नवमोऽध्यायः ॥ ९ ॥
Mahabharata - Karna Parva - Chapter Footnotes

८-९-३ तस्तरुः आस्तीर्णवन्तः ॥
८-९-५ व्यायताः पुष्टाः आयताः दीर्घाः ॥
८-९-६ प्रहितैः निरस्तैः । ओहाक् त्यागे ॥
८-९-१६ आपिडिनः भूषावन्तः । नाना पृथक् विविधरागाणि वसनानि
येषां ते विरागवसनाः ॥
८-९-२१ नागधूर्गतः गजस्कन्धगतः ॥
८-९-२२ उदयाग्राद्रिभवनं उदयाद्रेरप्रभवनम्
। अग्राद्रीत्यग्रशब्दस्य पूर्वनिपात आर्षः। उदयनामा अग्राद्रिः
पूर्वपर्वतः स एव भवनमिति वा ॥
८-९-२३ शारदस्य शरदा उपलक्षितस्य ॥
८-९-२४ चारुमौलिः रम्यकिरीटः ॥
८-९-३३ स भीमसेनः मेघैः सप्तसप्तिरिवांशुमान् । यथा
मेघान्तर्हितस्य सूर्यस्य मरीचयः रश्मिरूपेण सर्वतः प्रचरन्ति
एवं रश्मिस्थानीयास्तोमराः ॥
८-९-३४ अञ्जोगतिं ऋजुगतिम् ॥
८-९-३७ गृह्यमाणः निगृह्य माणः क्षेमधूर्तिना ॥
८-९-४४ अहन्हतवान् ॥
८-९-४५ हतः गदया शकलीकृताः । अतएव अभितोद्विपं द्विपस्याभितः
पपात ॥
८-९-९ नवमोऽध्यायः ॥

---

कर्नपर्व-अध्यय०१०
॥ श्रीः ॥
८.१०. अध्यायः १०

Mahabharata - Karna Parva - Chapter Topics
द्वन्द्वयुद्धम् ॥ १ ॥

सात्यकिना विन्दानुविन्दवधः ॥ २ ॥

Mahabharata - Karna Parva - Chapter Text

८-१०-० (५५४०३)
सञ्चय उवाच। ८-१०-०क्ष् (४८५८)
ततः कर्णो महेष्वासः पाण्डवानामनीकिनीम् ।
जघान समरे शूरः सन्नतपर्वभिः ॥ ८-१०-१ (५५४०४)
तथैव पाण्डवा राजंस्तव पुत्रस्य वाहिनीम् ।
कर्णस्य प्रमुखे क्रुद्धा निजघ्नुस्ते महारथाः ॥ ८-१०-२ (५५४०५)
कर्णोऽपि राजन्समरे व्यहनत्पाण्डवीं चमूम् ।
नाराचैरर्करश्म्याभैः कर्मारपरिमार्जितैः ॥ ८-१०-३ (५५४०६)
तत्र भारत कर्णेन नाराचैस्ताडिता गजाः ।
नेदुः सेदुश्च मम्लुश्च बभ्रमुश्च दिशो दश ॥ ८-१०-४ (५५४०७)
वध्यमाने बले तस्मिन्सूतपुत्रेण मारिष ।
नकुलोऽभ्यद्रवत्तूर्णं सूतपुत्रं महारणे ॥ ८-१०-५ (५५४०८)
भीमसेनस्तथा द्रौणिं कुर्वाणं कर्म दुष्करम् ।
विन्दानुविन्दौ कैकेयौ सात्यकिः समवारयत् ॥ ८-१०-६ (५५४०९)
श्रुतकर्माणमायान्तं चित्रसेनो महीपतिः ।
प्रतिविन्ध्यस्तथा चित्रं चित्रकेतनकार्मुकम् ॥ ८-१०-७ (५५४१०)
दुर्योधनस्तु राजानं धर्मपुत्रं युधिष्ठिरम् ।
संशप्तकगणा हृष्टा ह्यभ्यधावन्धनञ्जयम् ॥ ८-१०-८ (५५४११)
धृष्टद्युम्नः कृपं चापि तस्मिन्वीरवरक्षये ।
शिखण्डी कृतवर्माणं समासादयदच्युतम् ॥ ८-१०-९ (५५४१२)
श्रुतकीर्तिस्तथा शल्यं माद्रीपुत्रः सुतं तव ।
दुःशासनं महाराज सहदेवः प्रतापवान् ॥ ८-१०-१० (५५४१३)
कैकेयौ सात्यकिं युद्धे शरवर्षेण भास्वता ।
सात्यकिः केकयौ चापि च्छादयामास भारत ॥ ८-१०-११ (५५४१४)
तावेनं भ्रातरौ वीरौ जघ्नतुर्हृदये भृशम् ।
विषाणाभ्यां यथा नागौ प्रतिनागं महावने ॥ ८-१०-१२ (५५४१५)
शरसम्भिन्नवर्माणौ तावुभौ भ्रातरौ रणे ।
सात्यकिं सत्यकर्माणं राजन्विव्यधतुः शरैः ॥ ८-१०-१३ (५५४१६)
तौ सात्यकिर्महाराज प्रहसन्सर्वतोदिशः ।
छादयञ्छरवर्षेण वारयामास भारत ॥ ८-१०-१४ (५५४१७)
वार्यमाणौ ततस्तौ हि शैनेयशरवृष्टिभिः ।
शैनेयस्य रथं तूर्णं छादयामासतुः शरैः ॥ ८-१०-१५ (५५४१८)

तयोस्तु धनुषी चित्रे छित्त्वा शौरिर्महायशाः ।
अथ तौ सायकैस्तीक्ष्णैर्वारयामास सात्यकिः ॥ ८-१०-१६ (५५४१९)
अथान्ये धनुषी चित्रे प्रगृह्य च महाशरान् ।
सात्यकिं छादयन्तौ तौ चेरतुर्लघु सुष्ठु च ॥ ८-१०-१७ (५५४२०)
ताभ्यां मुक्ता महाबाणाः कङ्कबर्हिणवाससः ।
द्योतयन्तो दिशः सर्वाः सम्पेतुः स्वर्णभूषणाः ॥ ८-१०-१८ (५५४२१)
बाणान्धकारमभवत्तयो राजन्महामृधे ।
अन्योन्यस्य धनुश्चैव चिच्छिदुस्ते महारथाः ॥ ८-१०-१९ (५५४२२)
ततः क्रुद्धो महाराज सात्वतो युद्धदुर्मदः ।
धनुरन्यत्समादाय सज्यं कृत्वा च संयुगे ॥ ८-१०-२० (५५४२३)
क्षुरप्रेण सुतीक्ष्णेन ह्यनुविन्दशिरोऽहरत् ।
अपतत्तच्छिरो राजन्कुण्डलोपचितं महत् ॥ ८-१०-२१ (५५४२४)
शम्बरस्य शिरो यद्वन्निहतस्य महारणे ।
शोचयन्केकयान्सर्वाञ्जगामाशु वसुन्धराम् ॥ ८-१०-२२ (५५४२५)
तं दृष्ट्वा निहतं शूरं भ्राता तस्य महारथः ।
सज्यमन्यद्धनुः कृत्वा शैनेयं पर्यवारयत् ॥ ८-१०-२३ (५५४२६)
स षष्ट्या सात्यकिं विद्ध्वा स्वर्णपुङ्खैः शिलाशितैः ।
ननाद बलवन्नादं तिष्ठतिष्ठेति चाब्रवीत् ॥ ८-१०-२४ (५५४२७)
सात्यकिं च ततस्तूर्णं केकयानां महारथः ।
शरैरनेकसाहस्रैर्बाह्वोरुरसि चार्पयत् ॥ ८-१०-२५ (५५४२८)
स शरैः क्षतसर्वाङ्गः सात्यकिः सत्यविक्रमः ।
रराज समरे राजन्सपुष्प इव किंशुकः ॥ ८-१०-२६ (५५४२९)
सात्यकिः समरे विद्धः कैकेयेन महात्मना ।
कैकेयं पञ्चविंशत्या विव्याध प्रहसन्निव ॥ ८-१०-२७ (५५४३०)
तावन्योन्यस्य समरे सञ्छिद्य धनुषी शुभे ।
हत्वा च सारथी तूर्णं हयांश्च रथिनां वरौ ॥ ८-१०-२८ (५५४३१)
विरथावसियुद्धाय समाजग्मतुराहवे ।
शतचन्द्रचिते गृह्य चर्मणी सुभुजौ तथा ॥ ८-१०-२९ (५५४३२)
विरोचेतां महारङ्गे निस्त्रिंशबरधारिणौ ।
यथा देवासुरे युद्धे जम्भशक्रौ महाबलौ ॥ ८-१०-३० (५५४३३)
मण्डलानि ततस्तौ तु विचन्तौ महारणे ।
अन्योन्यमभितस्तूर्णं समाजग्मतुराहवे ॥ ८-१०-३१ (५५४३४)
अन्योन्यस्य वधे चैव चक्रतुर्यत्नमुत्तमम् ।
कैकेयस्य द्विधा चर्म ततश्चिच्छेद सात्वतः ॥ ८-१०-३२ (५५४३५)
सात्यकेस्तु तथैवासौ चर्म चिच्छेद पार्थिवः ।
चर्म च्छित्त्वा तु कैकेयस्तारागणशतैर्वृतम् ।

चचार मण्डलान्येव गतप्रत्यागतानि च ॥ ८-१०-३३ (५५४३६)
तं चरन्तं महारङ्गे निस्त्रिंशवरधारिणम् ।
अपहस्तेन चिच्छेद शैनेयस्त्वरयाऽन्वितः ॥ ८-१०-३४ (५५४३७)
सवर्मा केकयो राजन्द्विधा च्छिन्नो महारणे ।
निपपात महेष्वासो वज्राहत इवात्वलः ॥ ८-१०-३५ (५५४३८)
तं निहत्य रणे शूरः शैनेयो रथसत्तमः ।
युधामन्युरथं तूर्णमारुरोह परन्तपः ॥ ८-१०-३६ (५५४३९)
ततोऽन्यं रथमास्थाय विधिवत्कल्पितं पुनः ।
केकयानां महत्सैन्यं व्यधमत्सात्यकिः शरैः ॥ ८-१०-३७ (५५४४०)
सा वध्यमाना समरे केकयानां महाचमूः ।
तमुत्सृज्य रणे शत्रुं प्रदुद्राव दिशो दश ॥ ॥ ८-१०-३८ (५५४४१)

इति श्रीमन्महाभारते कर्णपर्वणि षोडशदिवसयुद्धे दशमोऽध्यायः
॥ १० ॥
Mahabharata - Karna Parva - Chapter Footnotes

८-१०-६ द्रौणिमभ्यद्रवत् ॥
८-१०-९ कृपेण युयुधे इति शेषः ॥
८-१०-१० माद्रीपुत्रः सुतं तवेत्यस्य व्याख्या दुःशासनमिति ॥
८-१०-१७ लघु शीघ्रम् । सुष्ठु शोभनम् ॥
८-१०-२१ उपचितसमलङ्कृतम् ॥
८-१०-३४ अपहस्तेन तिर्यग्घस्तेन ॥
८-१०-१० दशमोऽध्यायः ॥

---

कर्नपर्व-अध्यय०११
॥ श्रीः ॥
८.११. अध्यायः ११

Mahabharata - Karna Parva - Chapter Topics
प्रतिविन्ध्यश्रुतकर्मक्ष्यां चित्रचित्रसेनयोः संहारः ॥ १ ॥

Mahabharata - Karna Parva - Chapter Text

८-११-० (५५४४२)
सञ्जय उवाच। ८-११-०क्ष् (४८५९)
श्रुतकर्मा ततो राजंश्चित्रसेनं महीपतिम् ।

आजघ्ने समरे क्रुद्धः पञ्चाशद्भिः शिलीमुखैः ॥ ८-११-१ (५५४४३)
चित्रसेनस्तु तं राजन्नवभिर्नतपर्वभिः ।
श्रुतकर्माणमाहत्य सूतं विव्याध पञ्चभिः ॥ ८-११-२ (५५४४४)
श्रुतकर्मा ततः क्रुद्धश्चित्रसेनं चमूमुखे ।
नाराचेन सुतीक्ष्णेन मर्मदेशे समार्पयत् ॥ ८-११-३ (५५४४५)
सोऽतिविद्धो महाराज नाराचेन महात्मना ।
मूर्च्छामभिययौ वीरः कश्मलं चाविवेश ह ॥ ८-११-४ (५५४४६)
एतस्मिन्नन्तरे चैनं श्रुतकीर्तिर्महायशाः ।
नवत्या जगतीपालं छादयामास पत्रिभिः ॥ ८-११-५ (५५४४७)
प्रतिलभ्य ततः संज्ञां चित्रसेनो महारथः ।
धनुश्चिच्छेद भल्लेन तं च विव्याध सप्तभिः ॥ ८-११-६ (५५४४८)
सोऽन्यत्कार्मुकमादाय वेगघ्नं रुक्मभूषितम् ।
चित्ररूपधरं चक्रे चित्रसेनं शरोर्मिभिः ॥ ८-११-७ (५५४४९)
स शरैश्चित्रितो राजा चित्रमाल्यधरो युवा ।
अशोभत महारङ्गे श्वाविच्छललो यथा ॥ ८-११-८ (५५४५०)
श्रुतकर्माणमथ वै नाराचेन स्तनान्तरे ।
बिभेद तरसा शूरस्तिष्ठतिष्ठेति चाब्रवीत् ॥ ८-११-९ (५५४५१)
श्रुतकर्माणि समरे नाराचेन समर्पितः ।
सुस्राव रुधिरं तत्र गैरिकाम्बु यथाऽचलः ॥ ८-११-१० (५५४५२)
ततः स रुधिराक्ताङ्गो रुधिरेण कृतच्छविः ।
रराज समरे वीरः सपुष्प इव किंशुकः ॥ ८-११-११ (५५४५३)
श्रुतकर्मा ततो राजञ्शत्रुणा समभिद्रुतः ।
शत्रुसंवारणं क्रुद्धो द्विधा चिच्छेद कार्मुकम् ॥ ८-११-१२ (५५४५४)
अथैनं छिन्नधन्वानं नाराचानां शतैस्त्रिभिः ।
छादयन्समरे राजन्विव्याध च सुपत्रिभिः ॥ ८-११-१३ (५५४५५)
ततोऽपरेण भल्लेन तीक्ष्णेन निशितेन च ।
जहार सशिरस्त्राणं शिरस्तस्य महात्मनः ॥ ८-११-१४ (५५४५६)
तच्छिरो न्यपतद्भूमौ चित्रसेनस्य दीप्तिमत् ।
यदृच्छया यथा चन्द्रश्च्युतः स्वर्गान्महीतलम् ॥ ८-११-१५ (५५४५७)
राजानं निहतं दृष्ट्वा तेऽभिसारं तु मारिष ।
अभ्यद्रवन्त वेगेन चित्रसेनस्य सैनिकाः ॥ ८-११-१६ (५५४५८)
ततः क्रुद्धो महेष्वासस्तत्सैन्यं प्राद्रवच्छरैः ।
अन्तकाले यथा क्रुद्धः सर्वभूतानि प्रेतराट् ॥ ८-११-१७ (५५४५९)
ते वध्यमानाः समरे तव पौत्रेण धन्विना ।
व्यद्रवन्त दिशस्तूर्णं दावदग्धा इव द्विपाः ॥ ८-११-१८ (५५४६०)
तांस्तु विद्रवतो दृष्ट्वा निरुत्साहान्द्विषज्जये ।

द्रावयन्निषुभिस्तीक्ष्णैः श्रुतकर्मा व्यरोचत ॥ ८-११-१९ (५५४६१)
प्रतिविन्ध्यस्ततश्चित्रं भित्त्वा पञ्चभिराशुगैः ।
सारथिं च त्रिभिर्विद्ध्वा ध्वजमेकेषुणापि च ॥ ८-११-२० (५५४६२)
तं चित्रो नवभिर्भल्लैर्बाह्वोरुरसि चार्पयत् ।
स्वर्णपुङ्खैः प्रसन्नाग्नैः कङ्कबर्हिणवाजितैः ॥ ८-११-२१ (५५४६३)
प्रतिविन्ध्यो धनुश्छित्त्वा तस्य बारत सायकैः ।
पञ्चभिर्निशितैर्बाणैरथैनं स हि जघ्निवान् ॥ ८-११-२२ (५५४६४)
ततः शक्तिं महाराज स्वर्णघण्टां दुरासदाम् ।
प्राहिणोत्प्रतिविन्ध्याय विचिन्वन्तीमसूनिव ॥ ८-११-२३ (५५४६५)
तामापतन्ती सहसा शक्तिमुल्कामिवाम्बरे ।
द्विधा चिच्छेद समरे प्रतिविन्ध्यो हसन्निव ॥ ८-११-२४ (५५४६६)
सा पपात द्विधा छिन्ना प्रतिविन्ध्यशरैः शितैः ।
युगान्ते सर्वभूतानि त्रासयन्ती यथाऽशनिः ॥ ८-११-२५ (५५४६७)
शक्तिं तां प्रहतां दृष्ट्वा चित्रो गृह्य महागदाम् ।
प्रतिविन्ध्याय चिक्षेप रुक्मजालविभूषिताम् ॥ ८-११-२६ (५५४६८)
सा जघान हयांस्तस्य सारथिं च महारणे ।
रथं प्रमृद्य वेगेन धरमीमन्वपद्यत ॥ ८-११-२७ (५५४६९)
एतस्मिन्नेव काले तु रथादाप्लुत्य भारत ।
शक्तिं चिक्षेप चित्राय स्वर्णदण्डामलङ्कृताम् ॥ ८-११-२८ (५५४७०)
तामापतन्तीं जग्राह चित्रो राजन्महामनाः ।
ततस्तामेव चिक्षेप प्रतिविन्ध्याय पार्थिवः ॥ ८-११-२९ (५५४७१)
समासाद्य रणे शूरं प्रतिविन्ध्यं महाप्रभा ।
निर्भिद्य दक्षिणं बाहुं निपपात महीतले ।
पतिताऽभासयच्चैव तं देशमशनिर्यथा ॥ ८-११-३० (५५४७२)
प्रतिविन्ध्यस्ततो राजंस्तोमरं हेमभूषितम् ।
प्रेषयामास सङ्क्रुद्धश्चित्रस्य वधकाङ्क्षया ॥ ८-११-३१ (५५४७३)
स तस्य गात्रावरणं भित्त्वा हृदयमेव च ।
जगाम धरणीं तूर्णं महोरग इवाशयम् ॥ ८-११-३२ (५५४७४)
स पपात तदा राजा तोमरेण समाहतः ।
प्रसार्य विपुलौ बाहू पीनौ पिघसन्निभौ ॥ ८-११-३३ (५५४७५)
चित्रं सम्प्रेक्ष्य निहतं तावका रणशोभिनः ।
अभ्यद्रवन्त वेगेन प्रतिविन्ध्यं समन्ततः ॥ ८-११-३४ (५५४७६)
सृजन्तो विविधान्बाणाञ्शतघ्नीश्च सकिङ्किणीः ।
तमवच्छादयामासुः सूर्यमभ्रगणा इव ॥ ८-११-३५ (५५४७७)
तान्विधम्य महाबाहुः शरजालेन संयुगे ।
व्यद्रावयत्तव चमूं वज्रहस्त इवासुरीम् ॥ ८-११-३६ (५५४७८)

ते वध्यमानाः समरे तावकाः पाण्डवैर्नृप ।
विप्रकीर्यन्त सहसा वातनुन्ना घना इव ॥ ८-११-३७ (५५४७९)
विप्रद्रुते बले तस्मिन्वध्यमाने समन्ततः ।
द्रौणिरेकोऽभ्ययात्तूर्णं भीमसेनं महाबलम् ॥ ८-११-३८ (५५४८०)
तः समागमो घोरो बभूव सहसा तयोः ।
यथा दैवासुरे युद्धे वृत्रवासवयोरिव ॥ ॥ ८-११-३९ (५५४८१)

इति श्रीमन्महाभारते कर्णपर्वणि षोडशदिवसयुद्धे एकादशोऽध्यायः ॥ ११ ॥

Mahabharata - Karna Parva - Chapter Footnotes

८-११-२ आहत्य सन्ताज्य ॥
८-११-४ मूर्च्छा अर्धनिद्राम् । कश्मलमचि त्तत्वम् ॥
८-११-५ एवं श्रुतकर्माणम् ॥
८-११-६ तं श्रुतकर्माणम् ॥
८-११-११ कृतच्छविः आहितशोभः ॥
८-११-१३ सुपत्रिभिः शोभनपुङ्खव ङ्गिर्नाराचानां शतैः ॥
८-११-१७ प्रेतराट् यमः ॥
८-११-१८ दावो दावग्निस्तेन दग्धाः ॥
८-११-३२ गात्रावरणं कवचम् ॥
८-११-११ एकादशोऽध्यायः ॥

---

कर्नपर्व-अध्यय०१२
॥ श्रीः ॥
८.१२. अध्यायः १२

Mahabharata - Karna Parva - Chapter Topics
भीमाश्वत्थाम्नोर्युद्धम् ॥ १ ॥

Mahabharata - Karna Parva - Chapter Text

८-१२-० (५५४८२)
सञ्जय उवाच। ८-१२-०क्ष् (४८६०)
भीमसेनं ततो द्रौणी राजन्विव्याध पत्रिणा ।
परया त्वरया युक्तो दर्शयन्नस्त्रलाघवम् ॥ ८-१२-१ (५५४८३)
अथैनं पुनराजघ्ने नवत्या निशितैः शरैः ।

सर्वमर्माणि सम्प्रेक्ष्य मर्मज्ञो लघुहस्तवत् ॥ ८-१२-२ (५५४८४)
भीमसेनः समाकीर्णो द्रौणिना निशितैः शरैः ।
रराज समरे राजन्रश्मिवानिव भास्करः ॥ ८-१२-३ (५५४८५)
ततः शरसहस्रेण सुप्रयुक्तेन पाण्डवः ।
द्रोणपुत्रमवच्छाद्य सिंहनादममुञ्चत ॥ ८-१२-४ (५५४८६)
शरैः सरांस्ततो द्रौणिः संवार्य युधि पाण्डवम् ।
ललाटेऽभ्याहनद्राजन्नाराचेन स्मयन्निव ॥ ८-१२-५ (५५४८७)
ललाटस्थं ततो बाणं धारयामास पाण्डवः ।
यथा शृङ्गं वने दृप्तः खड्गो धारयते नृप ॥ ८-१२-६ (५५४८८)
ततो द्रौणिं रणे भीमो यतमानं पराक्रमी ।
त्रिभिर्विव्याध नाराचैर्ललाटे विस्मयन्निव ॥ ८-१२-७ (५५४८९)
ललाटस्थैस्ततो बाणैर्ब्राह्मणोऽसौ व्यशोभत ।
प्रावृषीव यथा सिक्तस्त्रिशृङ्गः पर्वतोत्तमः ॥ ८-१२-८ (५५४९०)
ततः शरशतैर्द्रौणिरर्दयामास पाण्डवम् ।
न चैनं कम्पयामास मातरिश्वेव पर्वतम् ॥ ८-१२-९ (५५४९१)
तथैव पांण्डवो युद्धे द्रौणिं शरशतैः शितैः ।
नाकम्पयत संहृष्टो वार्योध इव पर्वतम् ॥ ८-१२-१० (५५४९२)
तावन्योन्यं शरैर्घोरैश्छादयानौ महारथौ ।
रथवर्यगतौ वीरौ शुशुभाते बलोत्कटौ ॥ ८-१२-११ (५५४९३)
आदित्याविव सन्दीप्तौ लोकक्षयकरावुभौ ।
स्वरश्मिभिरिवान्योन्यं तापयन्तौ शरोत्तमैः ॥ ८-१२-१२ (५५४९४)
ततः प्रविकृते यत्नं कुर्वाणौ तौ महारणे ।
कृतप्रतिकृते यत्तौ शरसङ्घैरभीतवत् ॥ ८-१२-१३ (५५४९५)
व्याघ्राविव च सङ्ग्रामे चेरतुस्तौ नरोत्तमौ ।
शरदंष्ट्रौ दुराधर्षौ चापवक्त्रौ भयङ्करौ ॥ ८-१२-१४ (५५४९६)
अभूतां तावदृश्यौ च शरजालैः समन्ततः ।
मेघजालैरिव च्छन्नौ गगने चन्द्रभास्करौ ॥ ८-१२-१५ (५५४९७)
चकाशेते मुहूर्तेन ततस्तावप्यरिन्दमौ ।
विमुक्तावभ्रजालेन अङ्गारकबुधाविव ॥ ८-१२-१६ (५५४९८)
अथ तत्रैव सङ्ग्रमे वर्तमाने सुदारुणे ।
अपसव्यं ततश्चक्रे द्रौणिस्तत्र वृकोदरम् ॥ ८-१२-१७ (५५४९९)
किरञ्छरशतैरुग्रैर्धाराभिरिव पर्वतम् ।
न तु तन्ममृषे भीमः शत्रोर्विजलक्षणम् ॥ ८-१२-१८ (५५५००)
प्रतिचक्रे ततो राजन्पाण्डवोऽप्यपसव्यतः ।
मण्डलानां विभागेन गतप्रत्यागतेन च ॥ ८-१२-१९ (५५५०१)
बभूव तुमुलं युद्धं तयोः पुरुषसिंहयोः ।

चरित्वा विविधान्मार्गान्मण्डलस्थानमेव च ॥ ८-१२-२० (५५५०२)
शरैः पूर्णायतोत्सृष्टैरन्योन्यमभिजघ्नतुः ।
अन्योन्यस्य वधे चैव चक्रतुर्यत्नमुत्तमम् ॥ ८-१२-२१ (५५५०३)
ईषतुर्विरथं चैव कर्तुमन्योन्यमाहवे ।
ततो द्रौणिर्महास्त्राणि प्रादुश्चक्रे महारथः ॥ ८-१२-२२ (५५५०४)
तान्यस्त्रैरेव समरे प्रतिजघ्नेऽथ पाण्डवः ।
ततो घोरं महाराज अस्त्रयुद्धमवर्तत ॥ ८-१२-२३ (५५५०५)
ग्रहयुद्धं यथा घोरं प्रजासंहरणे ह्यभूत् ।
ते वाणाः समसज्जन्त मुक्तास्ताभ्यां तु भारत ॥ ८-१२-२४ (५५५०६)
द्योतग्रन्तो दिशः सर्वास्तव सैन्यं समन्ततः ।
बाणसङ्घैर्वृतं घोरमाकाशं समपद्यत ॥ ८-१२-२५ (५५५०७)
उल्कापातावृतं युद्धं प्रजानां संक्षये नृप ।
बाणाभिघातात्सञ्जज्ञे तत्र भारत पावकः ॥ ८-१२-२६ (५५५०८)
सविस्फुलिङ्गो दीप्तार्चिर्योऽदहद्वाहिनीद्वयम् ।
तत्र सिद्धा महाराज सम्पतन्तोऽब्रुवन्वचः ॥ ८-१२-२७ (५५५०९)
युद्धानामति सर्वेषां युद्धमेतदिति प्रभो ।
सर्वयुद्धानि चैतस्य कलां नार्हन्ति षोडशीम् ॥ ८-१२-२८ (५५५१०)
नेदृशं च पुनर्युद्धं भविष्यति कदाचन ।
अहो ज्ञानेन सम्पन्नावुभ ब्राह्मणक्षत्रियौ ॥ ८-१२-२९ (५५५११)
अहो शौर्येण सम्पन्नावुभौ चोग्रपराक्रमौ ।
अहो भीमबलो भीम एतस्य च कृतास्त्रता ॥ ८-१२-३० (५५५१२)
अहो वीर्यस्य सारत्वमहो सौष्ठवमेतयोः ।
स्थितावेतौ हि समरे कालान्तकयमोपमौ ॥ ८-१२-३१ (५५५१३)
रुद्रौ द्वावि सम्भूतौ यथा द्वाविव भास्करौ ।
यमौ वा पुरुषव्याघ्रौ घोररूपावुभौ रणे ॥ ८-१२-३२ (५५५१४)
इति वाचः स्म श्रूयन्ते सिद्धानां वै मुहुर्मुहुः ।
सिंहनादश्च सञ्जज्ञे समेतानां दिवौकसाम् ॥ ८-१२-३३ (५५५१५)
अद्भुतं चाप्यचिन्त्यं च दृष्ट्वा कर्म तयो रणे ।
सिद्धचारणसङ्घानां विस्मयः समपद्यत ॥ ८-१२-३४ (५५५१६)
प्रशंसन्ति तदा देवाः सिद्धाश्च परमर्षयः ।
साधु द्रौणे महाबाहो साधु भीमेति चाब्रुवन् ॥ ८-१२-३५ (५५५१७)
तौ शूरौ समरे राजन्परस्परकृतागसौ ।
परस्परमुदीक्षेतां क्रोधादुद्वृत्य चक्षुषी ॥ ८-१२-३६ (५५५१८)
क्रोधरक्तेक्षणौ तौ तु क्रोधात्प्रस्फुरिताधरौ ।
क्रोधात्संदष्टदशनौ तथैव दशनच्छदौ ॥ ८-१२-३७ (५५५१९)
अन्योन्यं छादयन्तौ स्म शरवृष्ट्या महारथौ ।

शराम्बुधारो समरे शस्त्रविद्युत्प्रकाशिनौ ॥ ८-१२-३८ (५५५२०)
तावन्यन्यं ध्वजं विद्ध्वा सारथिं च महारणे ।
अन्योन्यस्य हयान्विद्ध्वा बिभिदाते परस्परम् ॥ ८-१२-३९ (५५५२१)
ततः क्रुद्धौ महाराज बाणौ गृह्य महाहवे ।
उभौ चिक्षिपतुस्तूर्णमन्योन्यस्य वधैषिणौ ॥ ८-१२-४० (५५५२२)
तौ सायकौ महाराज द्योतमानौ चमूमुखे ।
आजघ्नतुः समासाद्य वज्रवेगौ दुरासदौ ॥ ८-१२-४१ (५५५२३)
तौ परस्परवेगाच्च शराभ्यां च भृशाहतौ ।
निपेततुर्महावीर्यौ रथोपस्थे तयोस्तदा ॥ ८-१२-४२ (५५५२४)
ततस्तु सारथिर्ज्ञात्वा द्रोणपुत्रमचेतनम् ।
अपोवाह रणाद्राजन्सर्वसैन्यस्य पश्यतः ॥ ८-१२-४३ (५५५२५)
८-१२-४४ (५५५२६)
तथैव पाण्डवं राजन्विह्वलन्तं मुहुर्मुहुः ।
अपोवाह रथेनाजौ विशोकः शत्रुतापनम्। । ॥ कइति श्रीमन्महाभारते
कर्णपर्वणि षोडशदिवसयुद्धे द्वादशोऽध्यायः ॥ १२
॥ क झ। पन्तके एतदनन्तरं स्थिताः सप्ताध्याया एतत्पाठे क्रमेण
५२-५३-५४-५५-५६-५९-६० तमाध्यायतया वर्तन्ते ।
Mahabharata - Karna Parva - Chapter Footnotes

८-१२-६ खड्गः पण्डकः ॥
८-१२-१३ कृतप्रतिकृते अन्योन्यास्त्नप्रतिघाते ॥
८-१२-२२ ईषतुः इच्छां चक्रतुः ॥
८-१२-२६ उल्कानामन्योन्या भिमुखं पातास्तैरावृतमिवेति लुप्तोपमा ॥
८-१२-३७ तथैव दशनच्छदौ क्रोधात्सन्दष्टोष्टौ ॥
८-१२-१२ द्वादशोऽध्यायः ॥

---

कर्नपर्व-अध्यय०१३
॥ श्रीः ॥
८.१३. अध्यायः १३

Mahabharata - Karna Parva - Chapter Topics
शल्येन श्रुतकीर्तिपराजयः ॥
Mahabharata - Karna Parva - Chapter Text

८-१३-० (५५५२७)
ग्सञ्जय उवाच। ८-१३-०क्ष् (४८६१)

श्रुतकीर्तिमथायान्तं किरन्तं निशिताञ्शरान् ।
मद्रराजो महाराज वारयामास हृष्टवत् ॥ ८-१३-१ (५५५२८)
मद्रराजं समासाद्य श्रुतकीर्तिर्महारथः ।
विव्याध भल्लैर्विंशत्या कार्तस्वरविभूषितैः ॥ ८-१३-२ (५५५२९)
प्रतिविव्याध तं शल्यं त्रिभिस्तूर्णमजिह्मगैः ।
सारथिं चास्य भल्लेन भृशं विव्याध भारत ॥ ८-१३-३ (५५५३०)
स शल्यं शरवर्षेण च्छादयामास संयुगे ।
मुमोच निशितान्बाणान्मद्रराजरथं प्रति ॥ ८-१३-४ (५५५३१)
ततः शल्यो महाराज श्रुतकीर्तिभुजच्युतान् ।
चिच्छेद समरे बाणासन्बणैः सन्नतपर्वभिः ॥ ८-१३-५ (५५५३२)
श्रुतकीर्तिस्ततः शल्यं भित्त्वा नवभिरायसैः ।
सारथिं त्रिभिरानर्च्छत्पुनः शल्यं च पञ्चभिः ॥ ८-१३-६ (५५५३३)
तस्य शल्यो धनुश्छित्त्वा हस्तावापं निकृत्य च ।
विव्याध समरे तूर्णं सप्तभिस्तं शरोत्तमैः ॥ ८-१३-७ (५५५३४)
अथान्यद्धनुरादाय श्रुतकीर्तिर्महारथः ।
भद्रेश्वरं चतुःषष्ट्या बाह्वोरुरसि चार्पयत् ॥ ८-१३-८ (५५५३५)
ततस्तु समरे राजंस्तेन विद्धः शिलीमुखैः ।
क्षिक्ष्वव्याध तं चापि नवत्या निशितैः शरैः ॥ ८-१३-९ (५५५३६)
तस्य मद्रेश्वरश्चापं पुनश्चिच्छेद मारिष ।
स च्छिन्नधन्वा समरे गदां चिक्षेप सत्वरः ॥ ८-१३-१० (५५५३७)
पट्टैर्जाम्बूनदैर्बद्धां रुप्यपट्टैश्च भारत ।
भ्राजमानां यथा नारीं दिव्यवस्त्रविभूषिताम् ॥ ८-१३-११ (५५५३८)
तामापतन्तीं सहसा दीप्यमानाशनिप्रभाम् ।
शरैरनेकसाहस्रैर्व्यष्टम्भयत मद्रराट् ॥ ८-१३-१२ (५५५३९)
विष्टभ्य च गदां वीरः पातयित्वा च भूतले ।
श्रुकीर्तिमथायत्तो राजन्विव्याध पञ्चभिः ॥ ८-१३-१३ (५५५४०)
तस्य शक्तिं रमे भूयश्चिक्षेप भुजोपमाम् ।
तां द्विधा चाछिनच्छल्यो मेदिन्यां सा त्वशीर्यत ॥ ८-१३-१४ (५५५४१)
तस्य शल्यः क्षुरप्रेण यन्तुः कायाच्छिरोऽहरत् ।
बालहस्ताद्यथा श्येन आमिषं वै नरोत्तम ॥ ८-१३-१५ (५५५४२)
स पपात रथोपस्थात्सारथिस्तस्य भारत ।
ततस्ते प्राद्रवन्सङ्ख्ये हय्नास्तस्य महात्मनः ॥ ८-१३-१६ (५५५४३)
पलायमानैस्तैरश्वैः सोपनीतो रमाजिरात् ।
श्रुतकीर्तिर्महाराज पश्यतां सर्वयोधिनाम् ॥ ८-१३-१७ (५५५४४)
ततो मद्रेश्वरो राजा पाण्डवानामनीकिनीम् ।
व्यगाहत मुदा युक्तो नलिनीं द्विरदो यथा ॥ ८-१३-१८ (५५५४५)

लोलयामास स बलं सिंहः पशुगणानिव ।
शल्यस्तत्र महारङ्गे पाण्डवानां महात्मनाम् ॥ ८-१३-१९ (५५५४६)
निपात्य पाण्डुपाञ्चालान्पृतनासु व्यवस्थितः ।
अशोभत रणे शल्यो विधूमोऽग्निरिव ज्वलन् ॥ ८-१३-२० (५५५४७)
सेनाकक्षं महद्दग्ध्वा कक्षमग्निरिवोत्थितः ।
स्थितो रराज समरे पुरं दग्ध्वेव शङ्करः ॥ ॥ ८-१३-२१ (५५५४८)

इति श्रीमन्महाभारते कर्णपर्वणि षोडशदिवसयुद्धे
त्रयोदशोऽध्यायः ॥ १३ ॥

---

कर्नपर्व-अध्यय०१४
॥ श्रीः ॥
८.१४. अध्यायः १४

Mahabharata - Karna Parva - Chapter Topics
सहदेवेन दुःशासनपराजयः ॥ १ ॥

Mahabharata - Karna Parva - Chapter Text

८-१४-० (५५५४९)
सञ्जय उवाच। ८-१४-०क्ष् (४८६२)
सहदेवं तथा क्रुद्धं निघ्नन्तं तव वाहिनीम् ।
दुःशासनो महाराज भ्राता भ्रातरमभ्ययात् ॥ ८-१४-१ (५५५५०)
तौ समेतौ महाराज दृष्ट्वा तत्र महारथाः ।
सिंहनादरवांश्चक्रुर्वासांस्यादुधुवुश्च ह ॥ ८-१४-२ (५५५५१)
ततो भारत रुष्टेन तव पुत्रेण धन्विना ।
पाण्डुपुत्रस्त्रिभिर्बाणैर्वक्षस्यभिहतो बली ॥ ८-१४-३ (५५५५२)
सहदेवस्ततो राजन्नाराचेन तवात्मजम् ।
विद्ध्वा विव्याध सप्तत्या सारथिं च त्रिभिः शरैः ॥ ८-१४-४ (५५५५३)
दुःशासनस्ततश्चापं छित्त्वा राजन्महाहवे ।
सहदेवं त्रिसप्तत्या बाहोरुरसि चार्पयत् ॥ ८-१४-५ (५५५५४)
सहदेवस्तु सङ्क्रुद्धः खङ्गं गृह्य महाहवे ।
आविध्य प्रासृजत्तूर्णं तव पुत्रथं प्रति ॥ ८-१४-६ (५५५५५)
समार्गणगुणं चापं छित्त्वा तस्य महानसिः ।
निपपात ततो भूमौ च्युतः सर्प इवाम्बरात् ॥ ८-१४-७ (५५५५६)
अथान्यद्धनुरादाय सहदेवः प्रतापवान् ।

दुःशासनाय चिक्षेप बाणमन्तकरं ततः ॥ ८-१४-८ (५५५५७)
तमापतन्तं विशिखं यमदण्डोपमत्विषम् ।
खड्गेन शितधारेण द्विधा चिच्छेद कौरवः ॥ ८-१४-९ (५५५५८)
ततस्तं निशितं खड्गमाविध्य युधि सत्वरः ।
धनुश्चान्यत्समादाय शरं जग्राह वीर्यवान् ॥ ८-१४-१० (५५५५९)
तमापतन्तं सहसा निस्त्रिंशं निशितैः शरैः ।
पातयामास समरे सहदेवो हसन्निव ॥ ८-१४-११ (५५५६०)
ततो बाणांश्चतुः षष्टिं तव पुत्रो महारणे ।
सहदेवरथं तूर्णं प्रेषयामास भारत ॥ ८-१४-१२ (५५५६१)
ताञ्छरान्समरे राजन्वेगेनापपतो बहून् ।
एकैकं पञ्चभिर्बाणैः सहदेवो न्यकृतन्तत ॥ ८-१४-१३ (५५५६२)
सन्निवार्य महाबाणान्सहदेवः प्रतापवान् ।
अथास्मै सुबहून्बाणान्प्रेषयामास संयुगे ॥ ८-१४-१४ (५५५६३)
तान्वाणांस्तव पुत्रोऽपि छित्त्वैकैकं त्रिभिः शरैः ।
ननाद सुमहानादं नादयानो वसुंधराम् ॥ ८-१४-१५ (५५५६४)
ततो दुःशासनो राजन्द्वाभ्यां पाण्डुसुतं रणे ।
सारथिं नवभिर्बाणैर्माद्रेयस्य समाचिनोत् ॥ ८-१४-१६ (५५५६५)
ततः क्रुद्धो महाराज सदहेवः प्रतापवान् ।
समाधत्त शरं घोरं मृत्युकालान्तकोपमम् ॥ ८-१४-१७ (५५५६६)
विकृष्य बलवच्चापं तव पुत्राय सोऽसृजत् ।
स तं निर्भिद्य वेगेन भित्त्वा च कवचं महत् ॥ ८-१४-१८ (५५५६७)
प्राविशद्धरणीं राजन्वल्मीकमिव पन्नगः ।
ततः सम्मुमुहे राजंस्तव पुत्रो महारथः ॥ ८-१४-१९ (५५५६८)
मूढं चैनं समालोक्य सारथिस्त्वरितो रथम् ।
अपोवाह भृशं त्रस्तो वध्यमानं शितैः शरैः ॥ ८-१४-२० (५५५६९)
पराजित्य रणे तं तु कौरव्यं पाण्डुनन्दनः ।
दुर्योधनबलं दृष्ट्वा प्रममाथ समन्ततः ॥ ८-१४-२१ (५५५७०)
पिपीलिकपुटं राजन्यथा मृद्नन्नरो रुषा ।
तथा सा कौरवी सेना मृदिता तेन भारत ॥ ॥ ८-१४-२२ (५५५७१)

इति श्रीमन्महाभारते कर्णपर्वणि षोडशदिवसयुद्धे
चतुर्दशोऽध्यायः ॥ १४ ॥

Mahabharata - Karna Parva - Chapter Footnotes

८-१४-१ आदुधुषुः भ्रामितवन्तः ॥
८-१४-२२ पिपीलिकपुटं पिपीलिकावासपटलम् ॥

८-१४-१४ चतुर्दशोऽध्यायः ॥

---

कर्नपर्व-अध्यय०१५
॥ श्रीः ॥
८.१५. अध्यायः १५

Mahabharata - Karna Parva - Chapter Topics
कर्णनकुलयोर्युद्धम् ॥ १ ॥
कर्णेन नकुलस्य पराभावनपूर्वकं सोपहासमधिक्षेपः ॥ २ ॥

Mahabharata - Karna Parva - Chapter Text

८-१५-० (५५५७२)
सञ्जय उवाच। ८-१५-०क्ष् (४८६३)
नकुलं रभसं युद्धे द्रावयन्तं वरूथिनीम् ।
कर्णो वैकर्तनो राजन्वारयामास वै रुषा ॥ ८-१५-१ (५५५७३)
नकुलस्तु ततः कर्णं प्रहसन्निदमब्रवीत् ॥
चिरस्य बत दृष्टोऽहं दैवतैः सौम्यचक्षुषा। ८-१५-२ (५५५७४)
यस्य मे त्वं रणे पाप चक्षुर्विषयमागतः ॥
त्वं हि मूलमनर्थानां वैरस्य कलहस्य च। ८-१५-३ (५५५७५)
त्वद्दोषात्कुरवः क्षीणाः समासाद्य परस्परम् ।
त्वामद्य समरे हत्वा कृतकृत्योऽस्मि विज्वरः ॥ ८-१५-४ (५५५७६)
एवमुक्तः प्रत्युवाच नकुलं सूतनन्दनः ।
सदृशं राजपुत्रस्य धन्विनश्च विशेषतः ॥ ८-१५-५ (५५५७७)
प्रहरस्व च मे वीर पश्यामस्तव पौरुषम् ।
कर्म कृत्वा रमे शूर ततः कत्थितुमर्हसि ॥ ८-१५-६ (५५५७८)
अनुक्त्वा समरे तात शूरा युध्यन्ति शक्तितः ।
प्रयुध्यस्व मया शक्त्या हनिष्ये दर्पमेव ते ॥ ८-१५-७ (५५५७९)
इत्युक्त्वा प्राहरत्तूर्णं पाण्डुपुत्राय सूतजः ।
विव्याध चैनं समरे त्रिसप्तत्या शिलीमुखैः ॥ ८-१५-८ (५५५८०)
नकुलस्तु ततो विद्धः सूतपुत्रेण भारत ।
अशीत्याऽऽशीविषप्रख्यैः सूतपुत्रमविध्यत ॥ ८-१५-९ (५५५८१)
तस्य कर्णो धनुश्छित्त्वा स्वर्णपुङ्खैः शिलाशितैः ।
त्रिंशता परमेष्वासः शरैः पाण्डवमर्दयत् ॥ ८-१५-१० (५५५८२)
ते तस्य कवचं भित्त्वा पपुः शोणितमाहवे ।
आशीविषा यथा नागा भित्त्वा गां सलिलं पपुः ॥ ८-१५-११ (५५५८३)

अथान्यद्धनुरादाय हेमपृष्ठं दुरासदम् ।
कर्णं विव्याध सप्तत्या सारथिञ्च त्रिभिः शरैः ॥ ८-१५-१२ (५५५८४)
ततः क्रुद्धो महाराज नकुलः परवीहा ।
क्षुरप्रेण सुतीक्ष्णेन कर्णस्य धनुराच्छिनत् ॥ ८-१५-१३ (५५५८५)
अथैनं छिन्नधन्वानं सायकानां शतैस्त्रिभिः ।
आजघ्ने प्रहसन्वीरः सर्वलोकमहारथम् ॥ ८-१५-१४ (५५५८६)
कर्णमभ्यर्दितं दृष्ट्वा पाण्डुपुत्रेण मारिष ।
विस्मयं परमं जग्मुर्ऋषयः सह दैवतैः ॥ ८-१५-१५ (५५५८७)
अथान्यद्धनुरादाय कर्णो वैकर्तनस्तदा ।
नकुलं पञ्चभिर्बाणैर्जत्रुदेशे समार्पयत् ॥ ८-१५-१६ (५५५८८)
उरस्थैरथ तैर्बाणैर्माद्रीपुत्रो व्यरोचत ।
स्वरश्मिभिरिवादित्यो भुवने विसृजन्प्रभाम् ॥ ८-१५-१७ (५५५८९)
नकुलस्तु ततः कर्णं विद्ध्वा सप्तभिराशुगैः ।
अथास्य धनुषः कोटिं पुनश्चिच्छेद मारिष ॥ ८-१५-१८ (५५५९०)
सोऽन्यत्कार्मुकमादाय समरे वेगवत्तरम् ।
नकुलस्य ततो बैणैः समन्ताच्छादयद्दिशः ॥ ८-१५-१९ (५५५९१)
सञ्छाद्यमानः सहसा कर्णचाप्युतैः सरैः ।
चिच्छेद स शरांस्तूर्णं शरैरेव महारथः ॥ ८-१५-२० (५५५९२)
ततो बाणमयं जालं विततं व्योम्न्यदृश्यत ।
खद्योतानामिव व्रातैः सम्पतद्भिर्यथा नभः ॥ ८-१५-२१ (५५५९३)
तैर्विमुक्तैः शरशतैश्छादितं गगनं तदा ।
शलभानां यथा व्रातैस्तद्वदासीद्विशाम्पते ॥ ८-१५-२२ (५५५९४)
ते शरा हेमविकृताः सम्पन्तौ मुहुर्मुहुः ।
श्रेणीकृता व्यकाशान्त क्रौञ्चाः श्रेणीकृता इव ॥ ८-१५-२३ (५५५९५)
बाणजालवृते व्योम्नि च्छादिते च दिवाकरे ।
न स्म सम्पतते भूतं किञ्चिदप्यन्तरिक्षगम् ॥ ८-१५-२४ (५५५९६)
निरुद्धे तत्र मार्गे च शरसङ्घैः समन्ततः ।
व्यरोचेतां महात्मानौ कालसूर्याविवोदितौ ॥ ८-१५-२५ (५५५९७)
कर्णचापच्युतैर्बाणैर्वध्यमानास्तु सोमकाः ।
अवालीयन्त राजेन्द्र वेदनार्ता भृशार्दिताः ॥ ८-१५-२६ (५५५९८)
नकुलस्य तथा बाणैर्हन्यमाना चमूस्तव ।
व्यशीर्यत दिशो राजन्वातनुन्ना इवाम्बुदाः ॥ ८-१५-२७ (५५५९९)
ते सेने हन्यमाने तु ताभ्यां दिव्यैर्महाशरैः ।
शरपातमपाक्रम्य तस्थतुः प्रेक्षिके तदा ॥ ८-१५-२८ (५५६००)
प्रोत्सारितजने तस्मिन्कर्णपाण्डवयोः शरैः ।
अविध्येतां महात्मानावन्योन्यं शरवृष्टिभिः ॥ ८-१५-२९ (५५६०१)

विदर्शयन्तौ दिव्यानि शस्त्राणि रणमूर्धनि ।
छादयन्तौ च सहसा परस्परवधैषिणौ ॥ ८-१५-३० (५५६०२)
नकुलेन शरा मुक्ता कङ्कबर्हिणवाससः ।
सूतपुत्रमवच्छाद्य व्यतिष्ठन्त यथाऽम्बरे ॥ ८-१५-३१ (५५६०३)
तथैव सूतपुत्रेण प्रेषिताः परमाहवे ।
पाण्डुपुत्रमवच्छाद्य व्यतिष्ठन्ताम्बरे शराः ॥ ८-१५-३२ (५५६०४)
शरवेश्मप्रविष्टौ तौ ददृशाते न कैश्चन ।
सूर्याचन्द्रमसौ राजञ्छाद्यमानौ घनैरिव ॥ ८-१५-३३ (५५६०५)
ततः क्रुद्धो रणे कर्णः कृत्वा घोरतरं वपुः ।
पाण्डवं छादयामास समन्ताच्छरवृष्टिभिः ॥ ८-१५-३४ (५५६०६)
सोऽतिच्छन्नो महाराज सूतपुत्रेण पाण्डवः ।
न चकार व्यथां राजन्भास्करो जलदैर्यथा ॥ ८-१५-३५ (५५६०७)
ततः प्रहस्याधिरथिः शरजालानि मारिष ।
प्रेषयामास समरे शतशोऽथ सहस्रशः ॥ ८-१५-३६ (५५६०८)
एकच्छायमभूत्सर्वं तस्य बाणैर्महात्मनः ॥
अभ्रच्छायेव सञ्जज्ञे सम्पतद्भिः शरोत्तमैः ॥ ८-१५-३७ (५५६०९)
ततः कर्णो महाराज धनुश्छित्त्वा महात्मनः ।
सारथिं पातयामास रथनीडाद्धसन्निव ॥ ८-१५-३८ (५५६१०)
ततोऽश्वांश्चतुरश्चास्य चतुर्भिर्निशितैः शरैः ।
यमस्य भवनं तूर्णं प्रेषयामास भारत ॥ ८-१५-३९ (५५६११)
अथास्य तं रथं दिव्यं तिलशो व्यधमच्छरैः ।
पताकां चक्ररक्षांश्च गदां खड्गं च मारिष ॥ ८-१५-४० (५५६१२)
शतचन्द्रं च तच्चर्म सर्वोपकरणानि च ।
ग्सुवर्णविकृतं तच्च धनुः शरमाहवे'॥ ८-१५-४१ (५५६१३)
हताश्वो विरथश्चैव विवर्मा च विशाम्पते ।
अवतीर्य रथात्तूर्णं परिघं गृह्य धिष्ठितः ॥ ८-१५-४२ (५५६१४)
तमुद्यतं महारघोरं परिघं तस्य सूतजः ।
व्यहनत्सायकै राजन्सुतीक्ष्णैर्भारसाधनैः ॥ ८-१५-४३ (५५६१५)
व्यायुधं चैनमालक्ष्य शरैः सन्नतपर्वभिः ।
आर्पयद्बहुभिः कर्णो न चैनं समपीडयत् ॥ ८-१५-४४ (५५६१६)
स हन्यमानः समरे कृतास्त्रेण बलीयसा ।
प्राद्रवत्सहसा राजन्नकुलो व्याकुलेन्द्रियः ॥ ८-१५-४५ (५५६१७)
तमभिद्रुत्य राधेयः प्रहसन्वै पुनःपुनः ।
सज्यमस्य धनुः कण्ठे व्यवासृजत भारत ॥ ८-१५-४६ (५५६१८)
ततः स शुशुभे राजन्कण्ठासक्तमहाधनुः ।
परिवेषमनुप्राप्तो यथा स्याद्व्योम्नि चन्द्रमाः ॥ ८-१५-४७ (५५६१९)

यथैव चासितो मेघः शक्रचापेन शोभितः ।
ग्अशोभत महाराज पाण्डुपुत्रस्तथा रणे' ॥ ८-१५-४८ (५५६२०)
तमब्रवीत्ततः कर्णो व्यर्थं व्याहृतवानसि ।
वदेदानीं पुनर्हृष्टो वध्यमानः पुनःपुनः ॥ ८-१५-४९ (५५६२१)
मा योत्सीः कुरुभिः सार्धं बलवद्भिश्च पाण्डव ।
सदृशैस्तात युध्यस्व व्रीडां मा कुरु पाण्डव ॥ ८-१५-५० (५५६२२)
गृहं वा गच्छ माद्रेय यत्र वा कृष्णफल्गुनौ ।
एवमुक्त्वा महाराज विससर्ज स तं तदा ॥ ८-१५-५१ (५५६२३)
वधप्राप्तं तु तं शूरो नाहनद्धर्मवित्तदा ।
स्मृत्वा कुन्त्या वचो राजंस्तत एनं व्यसर्जयत् ॥ ८-१५-५२ (५५६२४)
विसृष्टः पाण्डवो राजन्सूतपुत्रेण धन्विना ।
व्रीडन्निव जगामाथ युधिष्ठिररथं प्रति ॥ ८-१५-५३ (५५६२५)
आरुरोह रथं चापि सूतपुत्रप्रतापितः ।
निःश्वसन्दुःखसन्तप्तः कुम्भक्षिप्त इवोरगः ॥ ८-१५-५४ (५५६२६)
तं विजित्याथ कर्णोऽपि पाञ्चालांस्त्वरितो ययौ ।
रथेनातिपताकेन चन्द्रवर्णहयेन च ॥ ८-१५-५५ (५५६२७)
तत्राक्रन्दो महानासीत्पाण्डवानां विशाम्पते ।
दृष्ट्वा सेनापतिं यान्तं पाञ्चालानां रथव्रजान् ॥ ८-१५-५६ (५५६२८)
तत्राकरोन्महाराज कदनं सूतनन्दनः ।
मध्यं प्राप्ते दिनकरे चक्रवद्विचरन्प्रभुः ॥ ८-१५-५७ (५५६२९)
भग्नचक्रै रथैः कैश्चिच्छिन्नध्यवजपताकिभिः ।
हताश्वैर्हतसूतैश्च भग्नाक्षैश्चैव मारिष ।
ह्रियमाणानपश्याम पाञ्चालानां रथव्रजान् ॥ ८-१५-५८ (५५६३०)
तत्रतत्र च सम्भ्रान्ता विचेरुरथ कुञ्जराः ।
दावाग्न्यभिपरीताङ्गा यथैव स्युर्महावने ॥ ८-१५-५९ (५५६३१)
भिन्नकुम्भाः सरुधिराश्छिन्नहस्ताश्च वारणाः ।
छिन्नगात्रावराश्चैव च्छिन्नवालधयोऽपरे ।
छिन्नाभ्राणीव सम्पेतुर्हन्यमाना महात्मना ॥ ८-१५-६० (५५६३२)
अपरे त्रासिता नागा नाराचशरतोमरैः ।
तमेवाभिमुखं जग्मुः शलभा इव पावकम् ॥ ८-१५-६१ (५५६३३)
अपरे निष्टनन्तश्च व्यदृश्यन्त महाद्विपाः ।
क्षरन्तः शोणितं गात्रैर्नगा इव जलस्रवाः ॥ ८-१५-६२ (५५६३४)
उरश्छदैर्वियुक्तांश्च वालबन्धैश्च वाजिनः ।
राजतैश्च तथा कांस्यैः सौवर्णैश्चैव भूषणैः ॥ ८-१५-६३ (५५६३५)
हीनांश्चाभरणैश्चैव खलीनैश्च विवर्जितान् ।
चामरैश्च कुथाभिश्च तूणीरैः पतितैरपि ॥ ८-१५-६४ (५५६३६)

निहतैः सादिभिश्चैव शूरैराहवशोभितैः ।
अपश्याम रणे तत्र भ्राम्यमाणान्हयोत्तमान् ॥ ८-१५-६५ (५५६३७)
प्रासैः खङ्गैश्च रहितानृष्टिभिश्चापि भारत ।
हयसादीनपश्याम कञ्चुकोष्णीषधारिणः ॥ ८-१५-६६ (५५६३८)
निहतान्वध्यमानांश्च वेपमानांश्च भारत ।
नागाङ्गावयवैर्हीनांस्तत्रतत्रैव भारत ॥ ८-१५-६७ (५५६३९)
रथान्हेमपरिष्कारान्संयुक्ताञ्जवनैर्हयैः ।
भ्राम्यमाणानपश्याम हतेषु रथिषु द्रुतम् ॥ ८-१५-६८ (५५६४०)
भग्नाक्षकूबरान्कांश्चिद्भग्नचक्रांश्च भारत ।
विपताकध्वजांश्चान्याञ्छिन्नेषादण्डबन्धुरान् ॥ ८-१५-६९ (५५६४१)
विहीनान्रथिनस्तत्र धावमानांस्ततस्ततः ।
सूतपुत्रशरैस्तीक्ष्णैर्हन्यमानान्विशाम्पते ॥ ८-१५-७० (५५६४२)
विशस्त्रांश्च तथैवान्यान्सशस्त्रांश्च हतान्बहून् ।
तारकाजालसञ्छन्नान्वरघण्टाविशोभितान् ॥ ८-१५-७१ (५५६४३)
नानावर्णविचित्राभिः पताकाभिरलङ्कृतान् ।
वारमआननुपश्याम धावमानान्समन्ततः ॥ ८-१५-७२ (५५६४४)
शिरांसि बाहूनूरूंश्च च्छिन्नानन्यांस्तथैव च ।
कर्णचापच्युतैर्बाणैरपश्याम समन्ततः ॥ ८-१५-७३ (५५६४५)
महान्व्यतिकरो रौद्रो योधानामन्वपद्यत ।
कर्णसायकनुन्नानां युध्यतां च शितैः शरैः ॥ ८-१५-७४ (५५६४६)
ते वध्यमानाः समरे सूतपुत्रेण सृञ्जयाः ।
तमेवाभिमुखं यान्ति पतङ्गा इव पावकम् ॥ ८-१५-७५ (५५६४७)
तं दहन्तमनीकानि तत्रतत्र महारथम् ।
क्षत्रिया वर्जयामासुर्युगान्ताग्निमिवोल्बणम् ॥ ८-१५-७६ (५५६४८)
हतशेषास्तु ये वीराः पाञ्चालानां महारथाः ।
तान्प्रभग्नान्दुतान्वीरः पृष्ठो विकिरञ्छरैः ।
अभ्यधावत तेजस्वी विशीर्णवचनध्वजान् ॥ ८-१५-७७ (५५६४९)
तापयामास तान्बाणैः सूतपुत्रो महाबलः ।
मध्यन्दिनमनुप्राप्तो भूतानीव तमोनुदः ॥ ॥ ८-१५-७८ (५५६५०)

इति श्रीमन्महाभारते कर्णपर्वणि षोडशदिवसयुद्धे
पञ्चदशोऽध्यायः ॥ १५ ॥

Mahabharata - Karna Parva - Chapter Footnotes

८-१५-१ रभसं रणोत्सुकम् ॥
८-१५-११ आशीविषा यथा राजन्भित्त्वा गां सलिलं भृशम् । इति

क ख ट पाठः ॥
८-१५-२५ बालसूर्याविवोदितौ इति ख पाठः ॥
८-१५-३७ एकबाणमभूत्सर्वं इति क ट पाठः ॥
८-१५-५८ म्रियमाणान्पश्याम इति क ख ट पाठः ॥
८-१५-६७ नागाङ्गावयवैरित्यर्धं झ पुस्तकएव दृश्यते ॥
८-१५-१५ पञ्चदशोऽध्यायः ॥

---

कर्नपर्व-अध्यय०१६
॥ श्रीः ॥
८.१६. अध्यायः १६

Mahabharata - Karna Parva - Chapter Topics
युयुत्सूलूकयोर्युद्धम् ॥ १ ॥
शकुनिसुतसोमयोर्युद्धम् ॥ २ ॥

Mahabharata - Karna Parva - Chapter Text

८-१६-० (५५६५१)
सञ्जय उवाच। ८-१६-०क्ष् (४८६४)
युयुत्सुं तव पुत्रस्य द्रावयन्तं बलं महत् ।
उलूको न्यपतत्तूर्णं तिष्ठतिष्ठेति चाब्रवीत् ॥ ८-१६-१ (५५६५२)
युयुत्सुश्च ततो राजञ्शितधारेण पत्रिणा ।
उलूकं ताडयामास वज्रेणेव महाबलम् ॥ ८-१६-२ (५५६५३)
उलूकस्तु ततः क्रुद्धस्तव पुत्रस्य संयुगे ।
क्षुरप्रेण धनुश्छित्त्वा ताडयामास कर्णिना ॥ ८-१६-३ (५५६५४)
तदपास्य धनुश्छिन्नं युयुत्सर्वेगवत्तरम् ।
अन्यदादत्त सुमहच्चापं संरक्तलोचनः ॥ ८-१६-४ (५५६५५)
शाकुनिं तु ततः षष्ट्या विव्याध भरतर्षभ ।
सारथिं त्रिभिरानर्च्छत्तं च भूयो व्यविध्यत ॥ ८-१६-५ (५५६५६)
उलूकस्तं तु विंशत्या विद्ध्वा स्वर्णविभूषितैः ।
अथास्य समरे क्रुद्धो ध्वजं चिच्छेद काञ्चनम् ॥ ८-१६-६ (५५६५७)
स च्छिन्नयष्टिः सुमहाञ्शीर्यमाणो महाध्वजः ।
पपात प्रमुखे राजन्युयुत्सोः काञ्चनध्वजः ॥ ८-१६-७ (५५६५८)
ध्वजमुन्मथितं दृष्ट्वा युयुत्सुः क्रोधमूर्च्छितः ।
उलूकं पञ्चभिर्बाणैराजघान स्तनान्तरे ॥ ८-१६-८ (५५६५९)
उलूकस्तस्य समरे तैलधौतेन मारिष ।

शिरश्चिच्छेद भल्लेन यन्तुर्भरतसत्तम ॥ ८-१६-९ (५५६६०)
तच्छिन्नमपतद्भूमौ युयुत्सोः सारथेस्तदा ।
तारारूपं यथा चित्रं निपपात महीतले ॥ ८-१६-१० (५५६६१)
जघान चतुरोऽश्वांश्च तं च विव्याध पञ्चभिः ।
सोऽतिविद्धो बलवता प्रत्यपायाद्रथान्तरम् ॥ ८-१६-११ (५५६६२)
तं निर्जित्य रणे राजन्नुलूकस्त्वरितो ययौ ।
पाञ्चालान्सृञ्जयांश्चैव विनिघ्नन्निशितैः शरैः ॥ ८-१६-१२ (५५६६३)
शतानीकं महाराज श्रुतकर्मा सुतस्तव ।
व्यश्वसूतरथं चक्रे निमेषार्धादसम्भ्रमः ॥ ८-१६-१३ (५५६६४)
हताश्वे तु रथे तिष्ठञ्शतानीको महारथः ।
गदां चिक्षेप सङ्क्रुद्धस्तव पुत्रस्य मारिष ॥ ८-१६-१४ (५५६६५)
सा कृत्वा स्यन्दनं भस्म हयांश्चैव ससारथीन् ।
पपात धरणीं तूर्णं दारयन्तीव भारत ॥ ८-१६-१५ (५५६६६)
तावुभौ विरथौ वीरौ कुरूणां कीर्तिवर्धनौ ।
व्यपाक्रमेतां युद्धात्तु प्रेक्षमाणौ परस्परम् ॥ ८-१६-१६ (५५६६७)
पुत्रस्तु तव सम्भ्रान्तो विविंशो रथमारुहत् ।
शतानीकोऽपि त्वरितः प्रतिविन्ध्यरथं गतः ॥ ८-१६-१७ (५५६६८)
सुतमोमं तु शकुनिर्विद्ध्वा तु निशितैः शरैः ।
नाकम्पयत सङ्क्रुद्धो वार्योघ इव पर्वतम् ॥ ८-१६-१८ (५५६६९)
सुतसोमस्तु तं दृष्ट्वा पितुरत्यन्तवैरिणम् ।
शरैरनेकसाहस्रैश्छादयामास भारत ॥ ८-१६-१९ (५५६७०)
ताञ्शराञ्शकुनिस्तूर्णं चिच्छेदान्यैः पतत्रिभिः ।
लघ्वस्त्रश्चित्रयोधी च जितकाशी च संयुगे ॥ ८-१६-२० (५५६७१)
निवार्य समरे चापि शरांस्तान्निशितैः शरैः ।
आजघान सुसङ्क्रुद्धः सुतसोमं त्रिभिः शरैः ॥ ८-१६-२१ (५५६७२)
ग्नाकम्पयत सङ्क्रुद्धो वार्योघ इव पर्वतम्'।
तस्याश्वान्केतनं सूतं तिलशो व्यधमच्छरैः ।
श्यालस्तव महाराज तत उच्चुक्रुशुर्जनाः ॥ ८-१६-२२ (५५६७३)
हताश्वो विरथश्चैव छिन्नकेतुश्च मारिष ।
धन्वी धनुर्वरं गृह्य रथाद्भूमावतिष्ठत ॥ ८-१६-२३ (५५६७४)
व्यसृजत्सायकांश्चैव स्वर्णपुङ्खाञ्शिलाशितान् ।
छादयामासुरथ ते तव श्यालस्य तं रथम् ।
शळभानामिव व्राताः शरव्राता महारथम् ॥ ८-१६-२४ (५५६७५)
सञ्छाद्यमानोऽपि दृढं विव्यथे नैव सौबलः ।
प्रममाथ शरांस्तस्य शरव्रातैर्महायशाः ॥ ८-१६-२५ (५५६७६)
तत्रातुष्यन्त योधाश्च सिद्धाश्चापि दिवि स्थिताः ।

सुतसोमस्य तत्कर्म दृष्ट्वाऽश्रद्धेयमद्भुतम् ।
रथस्थं शकुनिं यत्तु पदातिः समयोधयत् ॥ ८-१६-२६ (५५६७७)
तस्य तीक्ष्णैर्महावेगैर्भल्लैः सन्नतपर्वभिः ।
व्यहनत्कारामुकं राजंस्तूणीरांश्चैव सर्वशः ॥ ८-१६-२७ (५५६७८)
स च्छिन्नधन्वा विरथः खड्गमुद्यम्य चानदत् ।
वैदूर्योत्पलवर्णाभं दन्तिदन्तमयत्सरुम् ॥ ८-१६-२८ (५५६७९)
भ्राम्यमाणं ततस्तं तु विमलाम्बरवर्चसम् ।
कालदण्डोपमं मेने सुतसोमस्य धीमतः ॥ ८-१६-२९ (५५६८०)
सोऽचरत्सहसा खड्गी मण्डलानि सहस्रशः ।
चतुर्दश महाराज शिक्षाबलसमन्वितः ॥ ८-१६-३० (५५६८१)
भ्रान्तमुद्भ्रान्तमाविद्धमाप्लुतं विप्लुतं सृतम् ।
सम्पातसमुदीर्णे च दर्शयामास संयुगे ॥ ८-१६-३१ (५५६८२)
सौबलस्तु ततस्तस्य शरांश्चिक्षेप वीर्यवान् ।
तानापतत एवाशु चिच्छेद परमासिना ॥ ८-१६-३२ (५५६८३)
ततः क्रुद्धो महाराज सौबलः परवीरहा ।
प्राहिणोत्सुतसोमाय शरानाशीविषोपमान् ॥ ८-१६-३३ (५५६८४)
चिच्छेद तांस्तु खड्गेन शिक्षया च बलेन च ।
दर्शयँल्लाघवं युद्धे तार्क्ष्यतुल्यपराक्रमः ॥ ८-१६-३४ (५५६८५)
तस्य सञ्चरतो राजन्मण्डलावर्तने तदा ।
क्षुरप्रेण सुतीक्ष्णेन खड्गं चिच्छेद सुप्रभम् ॥ ८-१६-३५ (५५६८६)
स च्छिन्नः सहसा भूमौ निपपात महानसिः ।
अधर्मस्य स्थितं हस्ते सुत्सरोस्तत्र भारत ॥ ८-१६-३६ (५५६८७)
छिन्नमाज्ञाय निस्त्रिंशमवप्लुत्य पदानि षट् ।
प्राविध्यत ततः शेषं सुतसोमो महारथः ॥ ८-१६-३७ (५५६८८)
तच्छित्त्वा सगुणं चापं रणे तस्य महात्मनः ।
पपात धरणीं तूर्णं स्वर्णवज्रविभूषितम् ॥ ८-१६-३८ (५५६८९)
सुतसोमस्ततोऽगच्छच्छ्रुतकीर्तेर्महारथम् ।
सौबलोऽपि धनुर्गृह्य घोरमन्यत्सुदुर्जयम् ॥ ८-१६-३९ (५५६९०)
अभ्ययात्पाण्डवानीकं निघ्नञ्शत्रुगणान्बहून् ।
तत्र नादो महानासीत्पाण्डवानां विशाम्पते ॥ ८-१६-४० (५५६९१)
सौबलं समरे दृष्ट्वा विचरन्तमभीतवत् ।
तान्यनीकानि दृप्तानि शस्त्रवन्ति महान्ति च ।
द्राव्यमाणान्यदृश्यन्त सौबलेन महात्मना ॥ ८-१६-४१ (५५६९२)
यथा दैत्यचमूं राजन्देवराजो ममर्द ह ।
तथैव पार्ण्वीं सेनां सौबलेयो व्यनाशयत् ॥ ॥ ८-१६-४२ (५५६९३)

इति श्रीमन्महाभारते कर्णपर्वणि षोडशदिवसयुद्धे षोडशोऽध्यायः
॥ १६ ॥
Mahabharata - Karna Parva - Chapter Footnotes

८-१६-३५ मण्डलानामावर्तने अनुलोमविलोमाभ्यासे ॥
८-१६-३६ असेः सुत्सरोः शोभनमुष्टेः ॥
८-१६-१६ षोडशोऽध्यायः ॥

---

कर्नपर्व-अध्यय०१७
॥ श्रीः ॥
८.१७. अध्यायः १७

Mahabharata - Karna Parva - Chapter Topics
कृपकृतवर्मक्ष्यां धृष्टद्युम्नशिखण्डिनोः पराजयः ॥ १ ॥

Mahabharata - Karna Parva - Chapter Text

८-१७-० (५५६९४)
सञ्जय उवाच। ८-१७-०क्ष् (४८६५)
धृष्टद्युम्नं कृपो राजन्वारयामास संयुगे ।
यथा दृष्ट्वा वने सिंहं शरभो वारयेद्युधि ॥ ८-१७-१ (५५६९५)
निरुद्धः पार्षतस्तेन गौतमेन बलीयसा ।
पदात्पदं विचलितुं नाशकत्तत्र भारत ॥ ८-१७-२ (५५६९६)
गौतमस्य रथं दृष्ट्वा धृष्टद्युम्नरथं प्रति ।
वित्रेसुः सर्वभूतानि क्षयं प्राप्तं च मेनिरे ॥ ८-१७-३ (५५६९७)
तदा जल्पन्ति पाण्डूनां रथिनः सादिनस्तथा ।
द्रोणस्य निधनान्नूनं सङ्क्रुद्धो द्विपदां वरः ॥ ८-१७-४ (५५६९८)
शारद्वतो महातेजा दिव्यास्त्रविदुदारधीः ।
अपि स्वस्ति भवेदद्य धृष्टद्युम्नस्य गौतमात् ॥ ८-१७-५ (५५६९९)
अपीयं वाहिनी कृत्स्ना मुच्येत महतो भयात् ।
अप्ययं ब्राह्मणः सर्वान्न नो हन्यात्समागतान् ॥ ८-१७-६ (५५७००)
यादृशं दृश्यते रूपमन्तकप्रतिमं रणे ।
गमिष्यत्यद्य पदवीं भारद्वाजस्य गौतमः ॥ ८-१७-७ (५५७०१)
आचार्यः क्षिप्रहस्तश्च विजयी च सदा युधि ।
अस्त्रवान्वीर्यसम्पन्नः क्रोधेन च समन्वितः ॥ ८-१७-८ (५५७०२)
पार्षतश्च महायुद्धे विमुखोऽद्याभिलक्ष्यते ।

इत्येवं विविधा वाचस्तावकानां परैः सह ।
व्यश्रूयन्त महाराज तयोस्तत्र समागमे ॥ ८-१७-९ (५५७०३)
विनिःश्वस्य ततः क्रोधात्कृपः शारद्वतो नृप ।
पार्षतं चार्दयामास निश्चेष्टं सर्वमर्मसु ॥ ८-१७-१० (५५७०४)
स हन्यमानः समरे गौतमेन महात्मना ।
कर्तव्यं न स्म जानाति मोहेन महता वृतः ॥ ८-१७-११ (५५७०५)
तमब्रवीत्ततो यन्ता कच्चित्क्षेमं तु पार्षत ।
ईदृशं व्यसनं युद्धे न ते दृष्टं मया क्वचित् ॥ ८-१७-१२ (५५७०६)
दैवयोगात्तु ते बाणा नापतन्मर्मभेदिनः ।
प्रेषिता द्विजमुख्येन मर्माण्युद्दिश्य सर्वतः ॥ ८-१७-१३ (५५७०७)
व्यावर्तये रथं तूर्णं नदीवेगमिवार्णवात् ।
अवध्यं ब्राह्मणं मन्ये येन ते विक्रमो हतः ॥ ८-१७-१४ (५५७०८)
धृष्टद्युम्नस्ततो राजञ्शनकैरब्रवीद्वचः ।
मुह्यते मे मनस्तात गात्रस्वेदश्च जायते ॥ ८-१७-१५ (५५७०९)
वेपथुश्च शरीरे मे रोमहर्षश्च सारथे ।
वर्जयन्ब्राह्मणं युद्धे शनैर्याहि यतोऽर्जुनः ॥ ८-१७-१६ (५५७१०)
अर्जुनं भीमसेनं वा समरे प्राप्य सारथे ।
क्षेममद्य भवेन्मह्यमिति मे नैष्ठिकी मतिः ॥ ८-१७-१७ (५५७११)
ततः प्रायान्महाराज सारथिस्त्वरयन्हयान् ।
यतो भीमो महेष्वासो युयुधे तव सैनिकैः ॥ ८-१७-१८ (५५७१२)
प्रद्रुतं च रथं दृष्ट्वा धृष्टद्युम्नस्य मारिष ।
किरञ्शरशतान्येव गौतमोऽनुययौ तदा ॥ ८-१७-१९ (५५७१३)
शङ्खं च पूरयामास मुहुर्मुहुररिन्दमः ।
पार्षतं त्रासयामास महेन्द्रो नमुचिं यथा ॥ ८-१७-२० (५५७१४)
शिखण्डिनं तु समरे भीष्ममृत्युं दुरासदम् ।
हार्दिक्यो वारयामास स्मयन्निव मुहुर्मुहुः ॥ ८-१७-२१ (५५७१५)
शिखण्डी तु समासाद्य हृदिकानां महारथम् ।
पञ्चभिर्निशितैर्भल्लैर्जत्रुदेशे समाहनत् ॥ ८-१७-२२ (५५७१६)
कृतवर्मा तु सङ्क्रुद्धो भित्त्वा षष्ट्या पतत्रिभिः ।
धनुरेकेन चिच्छेद हसन्राजन्महारथः ॥ ८-१७-२३ (५५७१७)
अथान्यद्धनुरादाय द्रुपदस्यात्मजो बली ।
तिष्ठतिष्ठेति सङ्क्रुद्धो हार्दिक्यं प्रत्यभाषत ॥ ८-१७-२४ (५५७१८)
ततोऽस्य नवतिं बाणान्रुक्मपुङ्खान्सुतेजनान् ।
प्रेषयामास राजेन्द्र तेऽस्याभ्रश्यन्त वर्मणः ॥ ८-१७-२५ (५५७१९)
वितथांस्तान्समालक्ष्य पतितांश्च महीतले ।
क्षुरप्रेण सुतीक्ष्णेन कार्मुकं चिच्छिदे भृशम् ॥ ८-१७-२६ (५५७२०)

अथैनं छिन्नधन्वानं भग्नशृङ्गमिवर्षभम् ।
अशीत्या मार्गणैः क्रुद्धो बाह्वोरुरसि चार्पयत् ॥ ८-१७-२७ (५५७२१)
कृतवर्मा तु सङ्क्रुद्धो मार्गणैः क्षतविक्षतः ।
ववाम रुधिरं गात्रैः कुम्भवक्त्रादिवोदकम् ॥ ८-१७-२८ (५५७२२)
रुधिरेण परिक्लिन्नः कृतवर्मा त्वराजत ।
वर्षेण क्लेदितो राजन्यथा गैरिकपर्वतः ॥ ८-१७-२९ (५५७२३)
अथान्यद्धनुरादाय समार्गणगुणं प्रभुः ।
शिखण्डिनं बाणगणैः स्कन्धदेशे व्यताडयत् ॥ ८-१७-३० (५५७२४)
स्कन्धदेशस्थितैर्बाणैः शिखण्डी तु व्यराजत ।
शाखाप्रशाखाविपुलः सुमहान्पादपो यथा ॥ ८-१७-३१ (५५७२५)
तावन्योन्यं भृशं विद्ध्वा रुधिरेण समुक्षितौ ।
ग्पोप्लुयमानौ हि यथा महान्तौ शोणितह्रदे ।
तद्वद्विरेजतुर्वीरौ शोणितेन परिप्लुतौ ॥ ८-१७-३२ (५५७२६)
यथा च किंशुकौ फुल्लौ पुष्पमासे समागते ।
रुधिरोक्षितसर्वाङ्गौ रक्तचन्दनरूषितौ ।
भुजगाविव सङ्क्रुद्धौ रेजतुस्तौ नरोत्तमौ ॥ ८-१७-३३ (५५७२७)
तावुभौ शरवनुन्नाङ्गौ परस्परशरक्षतौ'।
अन्योन्यशृङ्गाभिहतौ रेजतुर्वृषभाविव ॥ ८-१७-३४ (५५७२८)
अन्योन्यस्य वधे यत्नं कुर्वाणौ तौ महारथौ ।
रथाभ्यां चेरतुस्तत्र मण्डलानि सहस्रशः ॥ ८-१७-३५ (५५७२९)
कृतवर्मा महाराज पार्षतं निशितैः शरैः ।
रणे विव्याध सप्तत्या स्वर्णपुङ्खैः शिलाशितैः ॥ ८-१७-३६ (५५७३०)
ततोऽस्य समरे बाणं भोजः प्रहरतां वरः ।
जीवितान्तकरं घोरं व्यसृजत्त्वरयाऽन्वितः ॥ ८-१७-३७ (५५७३१)
स तेनाभिहतो राजन्मूर्च्छामाशु समाविशत् ।
ध्वजयष्टिं च सहसा शिश्रिये कश्मलावृतः ॥ ८-१७-३८ (५५७३२)
अपोवाह रणात्तूर्णं सारथी रथिनां वरम् ।
हार्दिक्यशरसन्तप्तं निःश्वसन्तं पुनःपुनः ॥ ८-१७-३९ (५५७३३)
पराजिते ततः शूरे द्रुपदस्यात्मजे प्रभो ।
व्यद्रवत्पाण्डवी सेना व्यधमाना समन्ततः ॥ ॥ ८-१७-४० (५५७३४)

इति श्रीमन्महाभारते कर्णपर्वणि षोडशदिवसयुद्धे
सप्तदशोऽध्यायः ॥ १७ ॥

Mahabharata - Karna Parva - Chapter Footnotes

८-१७-१ शरभोऽष्टपादः सिंहघाती पशुपक्षिशरीरो नृसिंहवत्

द्यात्मा ॥
८-१७-१२ ईदृशं व्यसनं यद्धेन मे दृष्टं कदाचन
। दैवयोगादिमे बाणा न जघ्नर्मम चाहवे इति क ख ट पाठः ॥
८-१७-१३ ईदृशं व्यसनं यद्धेन मे दृष्टं कदाचन
। दैवयोगादिमे बाणा न जघ्नर्मम चाहवे इति क ख ट पाठः ॥
८-१७-२५ अभ्रश्यन्त भ्रष्टाः । वर्म न चिच्छिदुरित्यर्थः ॥
८-१७-२८ ववाम वान्तवान् ॥
८-१७-३६ पार्षतं शिखंडिनं ॥
८-१७-१७ सप्तदशोऽध्यायः ॥

---

कर्नपर्व-अध्यय०१८
॥ श्रीः ॥
८.१८. अध्यायः १८

Mahabharata - Karna Parva - Chapter Topics
अर्जुनेन संशप्तकपराजयः ॥ १ ॥

Mahabharata - Karna Parva - Chapter Text

८-१८-० (५५७३५)
सञ्जय उवाच। ८-१८-०क्ष् (४८६६)
श्वेताश्वोऽपि महाराज व्यधमत्तावकं बलम् ।
यथा वायुः समासाद्य तूलराशिं समन्ततः ॥ ८-१८-१ (५५७३६)
प्रत्युद्ययुस्त्रिगर्तास्तं शिबयः कौरवैः सह ।
वसातयोऽथ साल्वाश्च गोपालाश्च यशस्विनः ॥ ८-१८-२ (५५७३७)
सत्यदेवः सत्यकीर्तिर्मित्रदेवः श्रुतञ्जयः ।
सौश्रुतिश्चन्द्रदेवश्च मित्रवर्मा च भारत ॥ ८-१८-३ (५५७३८)
त्रिगर्तराजः समरे भ्रातृभिः परिवारितः ।
पुत्रैश्चैव महेष्वासैर्नानाशस्त्रविशारदैः ॥ ८-१८-४ (५५७३९)
व्यसृजन्त शस्त्रातान्किरन्तोऽर्जुनमाहवे ।
अभ्यवर्तन्त सहसा वार्योघा इव सागरम् ॥ ८-१८-५ (५५७४०)
ते त्वर्जुनं समासाद्य योधाः शतसहस्रशः ।
अगच्छन्विलयं सर्वे तार्क्ष्यं दृष्ट्वेव पन्नगाः ॥ ८-१८-६ (५५७४१)
ते हन्यमानाः समरे न जहुः पाण्डवं रणे ।
हन्यमाना महाराज शलभा इव पावकम् ॥ ८-१८-७ (५५७४२)
सत्यदेवस्त्रिभिर्बाणैर्विव्याध युधि पाण्डवम् ।

मित्रदेवस्त्रिषष्ट्या तु चन्द्रदेवस्तु सप्तभिः ॥ ८-१८-८ (५५७४३)
मित्रवर्मा त्रिसप्तत्या सौश्रुतिश्चापि सप्तभिः ।
श्रुतंजयस्तु विंशत्या सुशर्मा नवभिः शरैः ॥ ८-१८-९ (५५७४४)
स विद्धो बहुभिः सङ्ख्ये प्रतिविव्याध तान्नृपान् ।
सौश्रुतिं सप्तभिर्विद्ध्वा चन्द्रदेवं त्रिभिः शरैः ॥ ८-१८-१० (५५७४५)
श्रुतंजयं च विंशत्या चन्द्रदेवं तथाऽष्टभिः ।
मित्रदेवं शतेनैव सत्यदेवं त्रिभिः शरैः ॥ ८-१८-११ (५५७४६)
नवभिर्मित्रवर्माणं सुशर्माणं तथाऽष्टभिः ।
श्रुतञ्जयं च राजानं हत्वा तत्र शिलाशितैः ॥ ८-१८-१२ (५५७४७)
सौश्रुतेः सशिरस्त्राणं शिरः कायादपाहरत् ।
त्वरितश्चन्द्रदेवं च शरैर्निन्ये यमक्षयम् ॥ ८-१८-१३ (५५७४८)
तथेतरान्महाराज यतमानान्महारथान् ।
पञ्चभिः पञ्चभिर्बाणैरेकैकं प्रत्यवारयत् ॥ ८-१८-१४ (५५७४९)
सत्यदेवस्तु सङ्क्रुद्धस्तोमरं व्यसृजन्महत् ।
समुद्दिश्य रणे कृष्णं सिंहनादं ननाद च ॥ ८-१८-१५ (५५७५०)
स निर्भिद्य भुजं सव्यं माधवस्य महात्मनः ।
अयस्मयः स्वर्णदण्डो जगाम धरणीं तदा ॥ ८-१८-१६ (५५७५१)
माधवस्य तु विद्धस्य तोमरेण महारणे ।
प्रतोदः प्रापतद्धस्ताद्रश्मयश्च विशाम्पते ॥ ८-१८-१७ (५५७५२)
वासुदेवं विभिन्नाङ्गं दृष्ट्वा पार्थो धनञ्जयः ।
क्रोधमाहारयत्तीव्रं कृष्णं चेदमुवाच ह ॥ ८-१८-१८ (५५७५३)
प्रापयाश्वान्महाबाहो सत्यदेवं प्रति प्रभो ।
यावदेनं शरैस्तीक्ष्णैर्नयामि यमसादनम् ॥ ८-१८-१९ (५५७५४)
प्रतोदं गृह्य सोऽन्यत्तु रश्मीन्सङ्गृह्य च द्रुतम् ।
वाहयामास तानश्वान्सत्यदेवरथं प्रति ॥ ८-१८-२० (५५७५५)
विष्वक्सेनं सुनिर्विद्धं दृष्ट्वा पार्थो धनञ्जयः ।
सत्यदेवं शरैस्तीक्ष्णैर्वारयित्वा महारथः ॥ ८-१८-२१ (५५७५६)
ततः सुनिशितैर्भल्लै राज्ञस्तस्य महच्छिरः ।
कुम्डलोपचितं कायाच्चकर्त पृतनान्तरे ॥ ८-१८-२२ (५५७५७)
तन्निकृत्य शितैर्बाणैर्मित्रवर्माणमाक्षिपत् ।
वत्सदन्तेन तीक्ष्णेन सारथिं चास्य मारिष ॥ ८-१८-२३ (५५७५८)
ततः शरशतैर्भूयः संशप्तकगणान्बली ।
पातयामास सङ्क्रुद्धः शतशोऽथ सहस्रशः ॥ ८-१८-२४ (५५७५९)
ततो रजतपुङ्खेन राजञ्शीर्षं महात्मनः ।
मित्रदेवस्य चिच्छेद क्षुरप्रेण महारथः ।
सुशर्माणं सुसङ्क्रुद्धो जत्रुदेशे समाहनत् ॥ ८-१८-२५ (५५७६०)

ततः संशप्तकाः सर्वे परिवार्य धनञ्जयम् ।
शस्त्रौघैर्ममृदुः क्रुद्धा नादयन्तो दिशो दश ॥ ८-१८-२६ (५५७६१)
अभ्यर्दितस्तु तज्जिष्णुः शक्रतुल्यपराक्रमः ।
ऐन्द्रमस्त्रममेयात्मा प्रादुश्चक्रे महारथः ॥ ८-१८-२७ (५५७६२)
ततः शरसहस्राणि प्रादुरासन्विशाम्पते ।
ग्कार्मुकात्पाण्डुपुत्रस्य पार्थस्यामिततेजसः'॥ ८-१८-२८ (५५७६३)
ततस्तु च्छिद्यमानानां ध्वजानां धनुषां तथा ।
रथानां सपताकानां तूणीराणां युगैः सह ॥ ८-१८-२९ (५५७६४)
अक्षाणामथ चक्राणां योक्त्राणां रश्मिभिः सह ।
कूबराणां वरूथानां पृषत्कानां च संयुगे ॥ ८-१८-३० (५५७६५)
अश्वानां पततां चापि प्रासानामृष्टिभिः सह ।
गदानां परिघानां च शक्तितोमरपट्टसैः ॥ ८-१८-३१ (५५७६६)
शतघ्नीनां सचक्राणां भुजानां चोरुभिः सह ।
कण्ठसूत्राङ्गदानां च केयूराणां च मारिष ॥ ८-१८-३२ (५५७६७)
हाराणामथ निष्काणां तनुत्राणां च भारत ।
छत्राणां व्यजनानां च शिरसां कुमुटैः सह ।
राशयश्चात्र दृश्यन्ते पतितानां महीतले ॥ ८-१८-३३ (५५७६८)
सकुण्डलानि स्वक्षीमि पूर्णचन्द्रनिभानि च ।
शिरांस्युर्व्यामदृश्यन्त ताराजालमिवाम्बरे ॥ ८-१८-३४ (५५७६९)
सुस्रग्वीणि सुवासांसि चन्दनेनोक्षितानि च ।
शरीराणि व्यदृश्यन्त निहतानां महीतले ॥ ८-१८-३५ (५५७७०)
रुद्रस्याक्रीडसदृशं घोरमायोधनं तदा ॥ ८-१८-३६ (५५७७१)
निहतै राजपुत्रैश्च क्षत्रियैश्च महाबलैः ।
ग्अर्जुनेन महाराज तत्रतत्र महारणे'॥ ८-१८-३७ (५५७७२)
हस्तिभिः पतितैश्चैव तुरङ्गैश्चाभवन्मही ।
अगम्यरूपा समरे विशीर्णैरिव पर्वतैः ॥ ८-१८-३८ (५५७७३)
नासीद्रथपथस्तस्य पाण्डवस्य महात्मनः ।
निघ्नतः शात्रवान्भल्लैर्हस्त्यश्वं चास्यतो महत् ॥ ८-१८-३९ (५५७७४)
स्वानुगा इव सीदन्ति रथचक्राणि मारिष ।
चरतस्तस्य सङ्ग्रामे तस्मिंल्लोहितकर्दमे ॥ ८-१८-४० (५५७७५)
सीदमानानि चक्राणि समुहूस्तुरगा भृशम् ।
श्रमेण महता युक्ता मनोमारुतरंहसः ॥ ८-१८-४१ (५५७७६)
वध्यमानं तु तत्सैन्यं पाण्डुपुत्रेण धन्विना ।
प्रायशो विमुखं सर्वं नावतिष्ठत भारत ॥ ८-१८-४२ (५५७७७)
ताञ्जित्वा समरे जिष्णुः संशप्तकगणान्बहून् ।
विरराज तदा पार्थो विधूमोऽग्निरिव ज्वलन् ॥ ॥ ८-१८-४३ (५५७७८)

इति श्रीमन्महाभारते कर्णपर्वणि षोडशदिवसयुद्धे
अष्टादशोऽध्यायः ॥ १८ ॥
Mahabharata - Karna Parva - Chapter Footnotes

८-१८-३९ आसीद्रथपथस्तस्य इति घ ङ । पाठः। आसादितस्ततो
रान्रथचक्रे विशाम्पते इति क पाठः। आच्छादितं ततो
राजन्रथचक्रं च मारिष इति ख पाठः ॥
८-१८-४१ सीदमानानि पङ्कमज्जनात् ॥
८-१८-१८ अष्टादशोऽध्यायः ॥

---

कर्नपर्व-अध्यय०१९
॥ श्रीः ॥
८.१९. अध्यायः १९

Mahabharata - Karna Parva - Chapter Topics
सङ्कुलयुद्धम् ॥ १ ॥

Mahabharata - Karna Parva - Chapter Text

८-१९-० (५५७७९)
सञ्जय उवाच। ८-१९-०क्ष् (४८६७)
युधिष्ठिरं महाराज विसृजन्तं शरान्बहून् ।
स्वयं दुर्योधनो राजा प्रत्यगृह्णादभीतवत् ॥ ८-१९-१ (५५७८०)
तमापतन्तं सहसा तव पुत्रं महारथम् ।
धर्मराजो द्रुतं विद्ध्वा तिष्ठतिष्ठेति चाब्रवीत् ॥ ८-१९-२ (५५७८१)
स तु तं प्रतिविव्याध नवभिर्निशितैः शरैः ।
सारथिं चास्य भल्लेन भृशं क्रुद्धोऽभ्यताडयत् ॥ ८-१९-३ (५५७८२)
ततो युधिष्ठिरो राजन्स्वर्णपुङ्खाञ्शिलीमुखान् ।
दुर्योधनाय चिक्षेप त्रयोदश शिलाशितान् ॥ ८-१९-४ (५५७८३)
चतुर्भिश्चतुरो वाहांस्तस्य हत्वा महारथः ।
पञ्चमेन शिरः कायात्सारथेश्च समाक्षिपत् ॥ ८-१९-५ (५५७८४)
षष्ठेन तु ध्वजं राज्ञः सप्तमेन तु कार्मुकम् ।
अष्टमेन तथा खड्गं पातयामास भूतले ।
पञ्चभिर्नृपतिं चापि धर्मराजोऽर्दयद्भृशम् ॥ ८-१९-६ (५५७८५)
हताश्वात्तु रथात्तस्मादवप्लुत्य सुतस्तव ।

उत्तमं व्यसनं प्राप्तो भूमावेवावतिष्ठत ॥ ८-१९-७ (५५७८६)
तं तु कृच्छ्रगतं दृष्ट्वा कर्णद्रौणिकृपादयः ।
अभ्यवर्तन्त सहसा परीप्सन्तो नराधिपम् ॥ ८-१९-८ (५५७८७)
अथ पाण्डुसुताः सर्वे परिवार्य युधिष्ठिरम् ।
अन्वयुः समरे राजंस्ततो युद्धमवर्तत ॥ ८-१९-९ (५५७८८)
ततस्तूर्यसहस्राणि प्रावाद्यन्त महामृधे ॥ ८-१९-१० (५५७८९)
क्ष्वेलाः किलकिलाशब्दाः प्रादुरासन्महीपते ।
यत्राभ्यगच्छन्समरे पाञ्चालाः कौरवैः सह ॥ ८-१९-११ (५५७९०)
नरा नरैः समाजग्मुर्वारणा वरवारणैः ।
रथाश्च रथिभिः सार्धं हयाश्च हयसादिभिः ॥ ८-१९-१२ (५५७९१)
द्वन्द्वान्यासन्महाराज प्रेक्षणीयानि संयुगे ।
विविधान्यप्यचिन्त्यानि शस्त्रवन्त्युत्तमानि च ॥ ८-१९-१३ (५५७९२)
ते शूराः समरे सर्वे चित्रं लघु च सुष्ठु च ।
अयुध्यन्त महावेगाः परस्परवधैषिणः ॥ ८-१९-१४ (५५७९३)
अन्योन्यं समरे जघ्नुर्योधव्रतमनुष्ठिताः ।
न हि ते समरं चक्रुः पृष्ठतो वै कथञ्चन ॥ ८-१९-१५ (५५७९४)
मुहूर्तमेव तद्युद्धमासीन्मधुरदर्शनम् ।
तत उन्मत्तवद्राजन्निर्मर्यादमवर्तत ॥ ८-१९-१६ (५५७९५)
रथी नागं समासाद्य दारयन्निशितैः शरैः ।
प्रेषयामास कालाय शरैः सन्नतपर्वभिः ॥ ८-१९-१७ (५५७९६)
नागा हयान्समासाद्य विक्षिपन्तो बहून्रणे ।
दारयामासुरत्युग्रं तत्रतत्र तदातदा ॥ ८-१९-१८ (५५७९७)
हयारोहाश्च बहवः परिवार्य हयोत्तमान् ।
तलशब्दरवांश्चक्रुः सम्पतन्तस्ततस्ततः ॥ ८-१९-१९ (५५७९८)
धावमानांस्ततस्तांस्तु द्रवमाणान्महागजान् ।
पार्श्वतः पृष्ठतश्चैव निजघ्नुर्हयसादिनः ॥ ८-१९-२० (५५७९९)
विद्राव्य च बहूनश्वान्नागा राजन्मदोत्कटाः ।
विषाणैश्चापरे जघ्नुर्ममृदुश्चापरे भृशम् ॥ ८-१९-२१ (५५८००)
साश्वारोहांश्च तुरगान्विषाणैर्विव्यधू रुषा ।
अपरे चिक्षिपुर्वेगात्प्रगृह्यातिबलास्तदा ॥ ८-१९-२२ (५५८०१)
पादातैराहता नागा विवरेषु समन्ततः ।
चक्रुरार्तस्वरं घोरं दुद्रुवुश्च दिशो दश ॥ ८-१९-२३ (५५८०२)
पदातीनां तु सहसा प्रद्रुतानां महाहवे ।
उत्सृज्याभरणं तूर्णमववव्रू रणाजिरे ॥ ८-१९-२४ (५५८०३)
निमित्तं मन्यमानास्तु परिणाम्य महागजाः ।
जगृहुर्बिभिदुश्चैव चित्राण्याभरणानि च ॥ ८-१९-२५ (५५८०४)

तांस्तु तत्र प्रसक्तान्वै परिन्वार्य पदातयः ।
हस्त्यारोहान्निजघ्नुस्ते महावेगा बलोत्कटाः ॥ ८-१९-२६ (५५८०५)
अपरे हस्तिभिर्हस्तैः खं विक्षिप्ता महाहवे ।
निपतन्तो विषाणाग्रैर्भृशं विद्धाः सुशिक्षितैः ॥ ८-१९-२७ (५५८०६)
अपरे सहसा गृह्य विषाणैरेव सूदिताः ।
सेनान्तरं समासाद्य केचित्तत्र महागजैः ॥ ८-१९-२८ (५५८०७)
क्षुण्णगात्रा महाराज विक्षिप्य च पुनःपुनः ।
अपरे व्यजनानीव विभ्राम्य निहता मृधे ॥ ८-१९-२९ (५५८०८)
पुरःसराश्च नागानामपरेषां विशाम्पते ।
शरीराण्यतिविद्धानि तत्रतत्र रणाजिरे ॥ ८-१९-३० (५५८०९)
प्रतिमानेषु कुम्भेषु दन्तवेष्टेषु चापरे ।
निगृहीता भृशं नागाः प्रासतोमरशक्तिभिः ॥ ८-१९-३१ (५५८१०)
निगृह्य च गजाः केचित् पार्श्वस्थैर्भृशदारुणैः ।
रथाश्वसादिभिस्तत्र सम्भिन्ना न्यपतन्भुवि ॥ ८-१९-३२ (५५८११)
सहयाः सादिनस्तत्र तोमरेण महामृधे ।
भूमावमृद्नन्वेगेन सचर्माणं पदातिनम् ॥ ८-१९-३३ (५५८१२)
चच्छा सावरणान्कांश्चित्तत्रतत्र विशाम्पते ।
रथान्नागाः समासाद्य परिगृह्य च मारिष ।
व्याक्षिपन्सहसा तत्र घोररूपे भयानके ॥ ८-१९-३४ (५५८१३)
नाराचैर्निहताश्चापि गजाः पेतुर्महाबलाः ।
पर्वतस्येव शिखरं वज्ररुग्णं महीतले ॥ ८-१९-३५ (५५८१४)
योधा योधान्समासाद्य मुष्टिभिर्व्यहनन्युधि ।
केशेष्वन्योन्यमाक्षिप्य चिक्षिपुर्बिभिदुश्च ह ॥ ८-१९-३६ (५५८१५)
उद्यम्य च भुजानन्ये निक्षिप्य च महीतले ।
पदा चोरः समाक्रम्य स्फुरतोऽपाहरच्छिरः ॥ ८-१९-३७ (५५८१६)
पततश्चापरो राजन्विजहारासिना शिरः ।
ग्मृतमन्यो महाराज पदा ताडितवांस्तदा'॥ ८-१९-३८ (५५८१७)
जीवतश्च तथैवान्यः शस्त्रं काये न्यमज्जयत् ।
मुष्टियुद्धं महच्चासीद्योधानां तत्र भारत ।
तथा केशग्रहश्चोग्रो बाहुयुद्धं च भैरवम् ॥ ८-१९-३९ (५५८१८)
समासक्तस्य चान्येन अविज्ञातस्तथाऽपरः ।
जहार समरे प्राणान्नानाशस्त्रैरनेकधा ॥ ८-१९-४० (५५८१९)
संसक्तेषु च योधेषु वर्तमाने च सङ्कुले ।
कबन्धान्युत्थितानि स्युः शतशोऽथ सहस्रशः ॥ ८-१९-४१ (५५८२०)
शोणितैः सिच्यमानानि शस्त्राणि कवचानि च ।
महारागानुरक्तानि वस्त्राणीव चकाशिरे ॥ ८-१९-४२ (५५८२१)

एवमेतन्महद्युद्धं दारुणं शस्त्रसङ्कुलम् ।
उन्मत्तगङ्गाप्रतिमं शब्देनापूरयज्जगत् ॥ ८-१९-४३ (५५८२२)
नैव स्वे न परे राजन्विज्ञायन्ते शरातुराः ।
योद्धव्यमिति युध्यन्ते राजानो जयगृद्धिनः ॥ ८-१९-४४ (५५८२३)
स्वान्स्वे जघ्नुर्महराज परांश्चैव समागतान् ।
उभयोः सेनयोर्वीरैर्व्याकुलं समपद्यत ॥ ८-१९-४५ (५५८२४)
रथैर्भग्नैर्महाराज वारणैश्च निपातितैः ।
हयैश्च पतितैस्तत्र नरैश्च विनिपातितैः ॥ ८-१९-४६ (५५८२५)
अगम्यरूपा पृथिवी क्षणेन समपद्यत ।
क्षणेनासीन्महीपाल क्षतजौघप्रवर्तिनी ॥ ८-१९-४७ (५५८२६)
पाञ्चालानहतत्कर्णस्त्रिगर्तांश्च धनञ्जयः ।
भीमसेनः कुरून्राजन्हस्त्यनीकं च सर्वशः ॥ ८-१९-४८ (५५८२७)
एवमेष क्षयो वृत्तः कुरुपाण्डवसेनयोः ।
अपराह्णे गते सूर्ये काङ्क्षतां विपुलं यशः ॥ ॥ ८-१९-४९ (५५८२८)

इति श्रीमन्महाभारते कर्णपर्वणि षोडशदिवसयुद्धे
एकोनविंशोऽध्यायः ॥ १९ ॥
Mahabharata - Karna Parva - Chapter Footnotes

८-१९-२४ आभरणमववव्रुः अवगत्य वृतवन्तः ॥
८-१९-२५ निमित्तं जयहेतुम् । महान्ता गजा येषां ते महागजा गजारोहा
जगृहुर्हस्तिभिर्ग्राहयामासुः। परिणाम्य हस्तिनमिति शेषः। बिभि
दुश्च शत्रून्गाजैरेव ॥
८-१९-३१ प्रतिमानेषु गजदन्तान्तरालेषु । प्रासैः कुम्भेषु
तोमरैर्दन्तवेष्टेषु शक्तिमिश्च निगृहीताः। प्रतिमानं प्रतिच्छाया
गजदन्तान्तरालयोरिति मेदिनी ॥
८-१९-१९ एकोनविंशोऽध्यायः ॥

---

कर्नपर्व-अध्यय०२०
॥ श्रीः ॥
८.२०. अध्यायः २०

Mahabharata - Karna Parva - Chapter Topics
युधिष्ठिरेण दुर्योधनपराजयः ॥ १ ॥

Mahabharata - Karna Parva - Chapter Text

८-२०-० (५५८२९)
धृतराष्ट्र उवाच। ८-२०-०क्ष् (४८६८)
अतितीव्राणि दुःखानि दुःसहानि बहूनि च ।
त्वत्तोऽहं सञ्जयाश्रौषं पुत्राणां चैव सङ्क्षयम् ॥ ८-२०-१ (५५८३०)
यथा त्वं मे कथयसे यथा युद्धमवर्तत ।
न सन्ति सूत कौरव्या इति मे निश्चिता मतिः ॥ ८-२०-२ (५५८३१)
दुर्योधनश्च विरथः कृतस्तत्र महारथः ।
धर्मपुत्रः कथं चक्रे तस्य वा नृपतिः कथम् ॥ ८-२०-३ (५५८३२)
अपराह्णे कथं युद्धमभवद्रोमहर्षणम् ।
तन्ममाचक्ष्व तत्त्वेन कुशलो ह्यसि सञ्जय ॥ ८-२०-४ (५५८३३)
सञ्जय उवाच। ८-२०-५क्ष् (४८६९)
संसक्तेषु तु सैन्येषु वध्यमानेषु भागशः ।
रथमन्यं समास्थाय पुत्रस्तव विशाम्पते ॥ ८-२०-५ (५५८३४)
क्रोधेन महता युक्तः सविषो भुजगो यथा ।
दुर्योधनः समालक्ष्य धर्मराजं युधिष्ठिरम् ।
प्रोवाच सूतं त्वरितो याहियाहीति भारत ॥ ८-२०-६ (५५८३५)
तत्र मां प्रापय क्षिप्रं सारथे यत्र पाण्डवः ।
ध्रियमाणातप्रतेण राजा राजति दंशितः ॥ ८-२०-७ (५५८३६)
स सूतश्चोदितो राज्ञा राज्ञः स्यन्दनमुत्तमम् ।
युधिष्ठिरस्याभिमुखं प्रेषयामास संयुगे ॥ ८-२०-८ (५५८३७)
ततो युधिष्ठिरः क्रुद्धः प्रभिन्न इव कुञ्जरः ।
सारथिं चोदयामास याहि यत्र सुयोधनः ॥ ८-२०-९ (५५८३८)
तौ समाजग्मतुर्वीरौ भ्रातरौ रथसत्तमौ ॥ ८-२०-१० (५५८३९)
समेत्य च महावीरौ संरब्धौ युद्धदुर्मदौ ।
ववर्षतुर्महेष्वासौ शरैरन्योन्यमाहवे ॥ ८-२०-११ (५५८४०)
ततो दुर्योधनो राजा धर्मशीलस्य मारिष ।
शिलाशितेन भल्लेन धनुश्चिच्छेद संयुगे ॥ ८-२०-१२ (५५८४१)
तं नामृष्यत सङ्क्रुद्धो ह्यवमानं युधिष्ठिरः ।
अपविध्य धनुश्छिन्नं क्रोधसंरक्तलोचनः ॥ ८-२०-१३ (५५८४२)
अन्यत्कार्मुकमादाय धर्मपुत्रश्चमूमुखे ।
दुर्योधनस्य चिच्छेद ध्वजं कार्मुकमेव च ॥ ८-२०-१४ (५५८४३)
अथान्यद्धनुरादाय पुत्रस्ते भरतर्षभ ।
ग्युधिष्ठिरस्य चिक्षेप शरान्कनकभूषणान् ।
रुक्मपुङ्खान्प्रसन्नाग्रान्सविषानिव पन्नगान्'॥ ८-२०-१५ (५५८४४)
तावन्योन्यं सुसङ्क्रुद्धौ शस्त्रवर्षाण्यमुञ्चताम् ।

सिंहाविव सुसंरब्धौ परस्परजिगीषया ॥ ८-२०-१६ (५५८४५)
जघ्नतुस्तौ रणेऽन्योन्यं नर्दमानौ वृषाविव ।
अन्तरं मार्गमाणौ च चेरतुस्तौ महारथौ ॥ ८-२०-१७ (५५८४६)
ततः पूर्णायतोत्सृष्टैः शरैस्तौ तु कृतव्रणौ ।
विरेजतुर्महाराज किंशुकाविव पुष्पितौ ॥ ८-२०-१८ (५५८४७)
ततो राजन्विमुञ्चन्तौ सिंहनादान्मुहुर्मुहुः ।
तलयोश्च तथा शब्दान्धनुषश्च महाहवे ॥ ८-२०-१९ (५५८४८)
शङ्खशब्दवरांश्चैव चक्रतुस्तौ नरेश्वरौ ।
अन्योन्यं तौ महाराज पीडयांचक्रतुर्भृशम् ॥ ८-२०-२० (५५८४९)
ततो युधिष्ठिरो राजा पुत्रं तव शरैस्त्रिभिः ।
आजघानोरसि क्रुद्धो वज्रवेगैर्दुरासदैः ॥ ८-२०-२१ (५५८५०)
प्रतिविव्याध तं तूर्णं तव पुत्रो महीपतिः ।
पञ्चभिर्निशितैर्बाणैः स्वर्णपुङ्खैः शिलाशितैः ॥ ८-२०-२२ (५५८५१)
ततो दुर्योधनो राजा शक्तिं चिक्षेप भारत ।
सर्वपारशवीं तीक्ष्णां महोल्काप्रतिमां तदा ॥ ८-२०-२३ (५५८५२)
तामापतन्तीं सहसा धर्मराजः शितैः शरैः ।
त्रिभिश्चिच्छेद सहसा तं च विव्याध पञ्चभिः ॥ ८-२०-२४ (५५८५३)
निपपात ततः साऽथ स्वर्णदण्डा महास्वना ।
निपतन्ती महोल्केव व्यराजच्छिखिसन्निभा ॥ ८-२०-२५ (५५८५४)
शक्तिं विनिहतां दृष्ट्वा पुत्रस्तव विशाम्पते ।
नवभिर्निशितैर्भल्लैर्निजघान युधिष्ठिरम् ॥ ८-२०-२६ (५५८५५)
सोऽतिविद्धो बलवता शत्रुणआ शत्रुतापनः ।
दुर्योधनं समुद्दिश्य बाणं जग्राह सत्वरः ॥ ८-२०-२७ (५५८५६)
समाधत्त च तं बाणं धनुर्मध्ये महाबलः ।
चिक्षेप च महाराज ततः क्रुद्धः पराक्रमी ॥ ८-२०-२८ (५५८५७)
स तु बाणः समासाद्य तव पुत्रं महारथम् ।
व्यामोहयत राजानं धरणीं च ददार ह ॥ ८-२०-२९ (५५८५८)
ततो दुर्योधनः क्रुद्धो गदामुद्यम्य वेगितः ।
विधित्सुः कलहस्यान्तं धर्मराजमुपाद्रवत् ॥ ८-२०-३० (५५८५९)
तमुद्यतगदं दृष्ट्वा दण्डहस्तमिवान्तकम् ।
धर्मराजो महाशक्तिं प्राहिणोत्तव सूनवे ॥ ८-२०-३१ (५५८६०)
दीप्यमानां महावेगां महोल्कां ज्वलितामिव ।
यमदण्डनिभां घोरां कालरात्रिमिवापराम् ॥ ८-२०-३२ (५५८६१)
रथस्थः स तया विद्धो वर्म भित्त्वा स्तनान्तरे ।
भृशं संविग्नहृदयः पपात च मुमोह च ॥ ८-२०-३३ (५५८६२)
नभस्तमाह च ततः प्रतिज्ञामनुपालय ।

नायं वध्यस्तव नृप इत्युक्तः स न्यवर्तत ॥ ८-२०-३४ (५५८६३)
ततस्त्वरितमागम्य कृतवर्मा तवात्मजम् ।
प्रत्यपद्यत राजानं निम्नं व्यसनार्णवे ॥ ८-२०-३५ (५५८६४)
गदामादाय भीमोऽपि हेमपट्टपरिष्कृताम् ।
अभिदुद्राव वेगेन कृतवर्माणमाहवे ॥ ८-२०-३६ (५५८६५)
एवं तदभवद्युद्धं त्वदीयानां परैः सह ।
अपराह्णे महाराज काङ्क्षतां विजयं युधि ॥ ॥ ८-२०-३७ (५५८६६)

इति श्रीमन्महाभारते कर्णपर्वणि षोडशदिवसयुद्धे विंशोऽध्यायः
॥ २० ॥
Mahabharata - Karna Parva - Chapter Footnotes

८-२०-१ अतितीव्राणि युद्धानीति क ट ड़ पाठः ॥
८-२०-३ तस्य तं च नृपतिर्दुर्योधनः कथमयुध्यत इति शेषः ॥
८-२०-१३ अपविध्य त्यक्त्वा ॥
८-२०-२३ सर्वपारशवीं सर्वपारशवीं सर्वविनाशिनीं गौरादिः
। तिरस्कारे विनाशे च पुंसि पारशवः इति मेदिनी ॥ ८-२०-२५
दीपयन्ती महोल्काभा राजञ्शक्तिर्दिशो दश इति ड पाठः॥
८-२०-३४ भीमस्तमाह च ततः प्रतिज्ञामनुचिन्तयन् इति झ पाठः ॥
८-२०-२० विंशोऽध्यायः ॥

---

कर्नपर्व-अध्यय०२१
॥ श्रीः ॥
८.२१. अध्यायः २१

Mahabharata - Karna Parva - Chapter Topics
सङ्कुलयुद्धम् ॥ १ ॥
षोडशदिवसयुद्धोपसंहारः ॥ २ ॥

Mahabharata - Karna Parva - Chapter Text

८-२१-० (५५८६७)
सञ्जय उवाच। ८-२१-०क्ष् (४८७०)
ततः कर्णं पुरस्कृत्य त्वदीया युद्धदुर्मदाः ।
पुनरावृत्य सङ्ग्रामं चक्रुर्देवासुरोपमम् ॥ ८-२१-१ (५५८६८)
द्विरदनररथाश्वशङ्खशब्दैः

परिहृषिता विविधैश्च शस्त्रपातैः ।
द्विरदरथपदातिसादिसङ्घाः
परिकुपिताभिमुखाः प्रजघ्निरे ते ॥ ८-२१-२ (५५८६९)
शितपरश्वथसासिपट्टसै--
रिषुभिरनेकविधैश्च सूदिताः ।
द्विरदरथहया महाहवे
वरपुरुषैः पुरुषाश्च वाहनैः ॥ ८-२१-३ (५५८७०)
कमलदिनकरेन्दुसन्निभैः
सितदशनैः सुमुखाक्षिनासिकैः ।
रुचिरमकुटकुण्डलैर्मही
पुरुषशिरोभिरुपस्तृता बभौ ॥ ८-२१-४ (५५८७१)
परिघमुसलशक्तितौमरै--
र्नखरभुशुण्डिगदाशतैर्हताः ।
द्विरदनरहयाः सहस्रशो
रुधिरनदीप्रवहास्तदाऽभवन् ॥ ८-२१-५ (५५८७२)
प्रहतरथनराश्वकुञ्जरं
प्रतिभयदर्शनमुल्बणव्रणम् ।
तदहितहतमाबभौ बलं
पितृपतिराष्ट्रमिव प्रजाक्षये ॥ ८-२१-६ (५५८७३)
अथ तव नरदेव सैनिका--
स्तव च सुताः सुरसूनुसन्निभाः ।
अमितबलपुरः सरा रणे
कुरुवृषभाः शिनिपुत्रमभ्ययुः ॥ ८-२१-७ (५५८७४)
तदतिरुधिरभीममाबभौ
पुरुषवराश्वरथद्विपाकुलम् ।
लवणजलसमुद्धतस्वनं
बलमसुरामरसैन्यसप्रभम् ॥ ८-२१-८ (५५८७५)
सुरपतिसमविक्रमस्तत--
स्त्रिदशवरावरजोपमं युधि ।
दिनकरकिरणप्रभैः पृषत्कै
रवितनयोऽभ्यहनच्छिनिप्रवीरम् ॥ ८-२१-९ (५५८७६)
तमपि सरथवाजिसारथिं
शिनिवृषभो विविधैः शरैस्त्वरन् ।
भुजगविषसमप्रभै रणे
पुरुषवरं समवास्तृणोत्तदा ॥ ८-२१-१० (५५८७७)
शिनिवृषभशरैर्निपीडितं

तव सुहृदो वसुषेणमभ्ययुः ।
त्वरितमतिरथा रथर्षभं
द्विरदरथाश्वपदातिभिः सह ॥ ८-२१-११ (५५८७८)
तदुदधिनिभमाद्रवद्बलं
त्वरिततरैः समभिद्रुतं परैः ।
द्रुपदसुतमुखैस्तदाऽभवत्
पुरुषरथाश्वगजक्षयो महान् ॥ ८-२१-१२ (५५८७९)
अथ पुरुषवरौ कृताह्निकौ
भवमभिपूज्य यथाविधि प्रभुम् ।
अरिवधकृतनिश्चयौ द्रुतं
तव बलमर्जुनकेशवौ सृतौ ॥ ८-२१-१३ (५५८८०)
जलदनिनदनिःस्वनं रथं
पवनविधूतपताककेतनम् ।
सितहयमुपयान्तमन्तिकं
कृतमनसो ददृशुस्तदाऽरयः ॥ ८-२१-१४ (५५८८१)
अथ विष्फार्य गाण्डीवं रथे नृत्यन्निवार्जुनः ।
शरसम्बाधमकरोत्खं दिशः प्रदिशस्तथा ॥ ८-२१-१५ (५५८८२)
रथान्विमानप्रतिमान्मज्जयन्सायुधध्वजान् ।
ससारथींस्तदा बाणैरभ्राणीवानिलोऽवधीत् ॥ ८-२१-१६ (५५८८३)
गजान्गजप्रयन्तॄंश्च वैजयन्त्यायुधध्वजान् ।
सादिनोऽश्वांश्च पत्तींश्च शरैर्निन्ये यमक्षयम् ॥ ८-२१-१७ (५५८८४)
तमन्तकमिव क्रुद्धमनिवार्यं महारथम् ।
दुर्योधनोऽभ्ययादेको निघ्नन्बाणैरजिह्मगैः ॥ ८-२१-१८ (५५८८५)
तस्यार्जुनो धनुः सूतमश्वान्केतुं च सायकैः ।
हत्वा सप्तभिरेकेन च्छत्रं चिच्छेद पत्रिणा ॥ ८-२१-१९ (५५८८६)
नवमं च समाधाय व्यसृजत्प्राणघातिनम् ।
दुर्योधनायेषुवरं तं द्रौणिः सप्तधाऽच्छिनत् ॥ ८-२१-२० (५५८८७)
ततो द्रौणेर्धनुश्छित्वा हत्वा चाश्वरथाञ्शरैः ।
कृपस्यापि तदत्युग्रं धनुश्चिच्छेद पाण्डवः ॥ ८-२१-२१ (५५८८८)
हार्दिक्यस्य धनुश्छित्त्वा ध्वजं चाश्वांस्तदाऽवधीत् ।
दुःशासनस्येष्वसनं छित्त्वा राधेयमभ्ययात् ॥ ८-२१-२२ (५५८८९)
अथ सात्यकिमुत्सृज्य त्वरन्कर्णोऽर्जुनं त्रिभिः ।
विद्ध्वा विव्याध विंशत्या कृष्णं पार्थं पुनःपुनः ॥ ८-२१-२३ (५५८९०)
न ग्लानिरासीत्कर्णस्य क्षिपतः सायकान्बहून् ।
रणे विनिघ्नतः शत्रून्क्रुद्धस्येव शतक्रतोः ॥ ८-२१-२४ (५५८९१)
अथ सात्यकिरागत्य कर्णं विद्ध्वा शितैः शरैः ।

नवत्या नवभिश्चोग्रैः शतेन पुनरार्पयत् ॥ ८-२१-२५ (५५८९२)
ततः प्रवीराः पार्थानां सर्वे कर्णमपीडयन् ।
युधामन्युः शिखण्डी च द्रौपदेयाः प्रभद्रकाः ॥ ८-२१-२६ (५५८९३)
उत्तमौजा युयुत्सुश्च यमौ पार्षत एव च ।
चेदिकारूशमात्स्यानां केकयानां च यद्बलं ॥ ८-२१-२७ (५५८९४)
चेकितानश्च बलवान्धर्मराजश्च सुव्रतः ।
एते रथाश्वद्विरदैः पत्तिभिश्चोग्रविक्रमैः ॥ ८-२१-२८ (५५८९५)
परिवार्य रणे कर्णं नानाशस्त्रैरवाकिरन् ।
भाषन्तो वाग्भिरुग्राभिः सर्वे कर्णवधे धृताः ॥ ८-२१-२९ (५५८९६)
तां शस्त्रवृष्टिं बहुधा कर्णश्छित्त्वा शितैः शरैः ।
अपोवाहास्त्रवीर्येण द्रुमं भङ्क्त्वेव मारुतः ॥ ८-२१-३० (५५८९७)
रथिनः समहामात्रान्गजानश्वान्ससादिनः ।
पत्तिव्रातांश्च सङ्क्रुद्धो निघ्नन्कर्णो व्यदृश्यत ॥ ८-२१-३१ (५५८९८)
तद्वध्यमानं पाण्डूनां बलं कर्णास्त्रतेजसा ।
विशस्त्रपत्रदेहासु प्राय आसीत्पराङ्मुखम् ॥ ८-२१-३२ (५५८९९)
अथ कर्णास्त्रमस्त्रेण प्रतिहत्यार्जुनः स्मयन् ।
दिशं खं चैव भूमिं च प्रावृणोच्छरवृष्टिभिः ॥ ८-२१-३३ (५५९००)
मुसलानीव सम्पेतुः परिघा इव चेषवः ।
शतघ्न्य इव चाप्यन्ये वज्राण्युग्राणि चापरे ॥ ८-२१-३४ (५५९०१)
तैर्वध्यमानं तत्सैन्यं सपत्त्यश्वरथद्विपम् ।
निमीलिताक्षमत्यर्थं बभ्राम च ननाद च ॥ ८-२१-३५ (५५९०२)
निष्कैवल्यं तदा युद्धं प्रापुरश्वनरद्विपाः ।
हन्यमानाः शरैरार्तास्तदा भीताः प्रदुद्रुवुः ॥ ८-२१-३६ (५५९०३)
त्वदीयानां तदा युद्धे संसक्तानां जयैषिणाम् ।
गिरिमस्तं समासाद्य प्रत्यपद्यत भानुमान् ॥ ८-२१-३७ (५५९०४)
तमसा च महाराज रजसा च विशेषतः ।
न किञ्चित्प्रत्यपश्याम शुभं वा यदि वाऽशुभम् ॥ ८-२१-३८ (५५९०५)
ते त्रस्यन्तो महेष्वासा रात्रियुद्धस्य भारत ।
अपयानं ततश्चक्रुः सहिताः सर्वयोधिभिः ॥ ८-२१-३९ (५५९०६)
कौरवेष्वपयातेषु तदा राजन्दिनक्षये ।
जयं सुमनसः प्राप्य पार्थाः स्वशिबिरं ययुः ॥ ८-२१-४० (५५९०७)
वादित्रशब्दैर्विविधैः सिंहनादैः सगर्जितैः ।
परानुवहन्तश्च स्तुवन्तश्चाच्युतार्जुनौ ॥ ८-२१-४१ (५५९०८)
कृतेऽवहारे तैर्वीरैः सैनिकाः सर्व एव ते ।
आशीर्वाचः पाण्डवेषु प्रायुञ्जन्त नरेश्वराः ॥ ८-२१-४२ (५५९०९)
ततः कृतेऽवहारे च प्रहृष्टास्तत्र पाण्डवाः ।

निशायां शिबिरं गत्वा न्यवसन्त नरेश्वराः ॥ ८-२१-४३ (५५९१०)
ततो रक्षः पिशाचाश्च श्वापदाश्चैव सङ्घशः ।
जग्मुरायोधनं घोरं रुद्रस्याक्रीडसन्निभम् ॥ ॥ ८-२१-४४ (५५९११)

इति श्रीमन्महाभारते कर्णपर्वणि षोडशदिवसयुद्धे
एकविंशोऽध्यायः ॥ २१ ॥
Mahabharata - Karna Parva - Chapter Footnotes

८-२१-८ लवणजलः क्षारसमुद्रः ॥
८-२१-९ त्रिदशवरावरजोपमं विष्णुतुल्यम् ॥
८-२१-१३ सूतावागतौ ॥
८-२१-३६ निष्कैवल्यं निश्चितं कैवल्यं मरणं यस्मिंस्तत्तथा ॥
८-२१-३७ प्रत्यपद्यत प्रविष्टः ॥
८-२१-२१ एकविंशोऽध्यायः ॥

---

कर्नपर्व-अध्यय०२२
॥ श्रीः ॥
८.२२. अध्यायः २२

Mahabharata - Karna Parva - Chapter Topics
कृष्णतुल्यसारथेरभावात्स्वस्यार्जुनान्न्यूनतां मन्यमानेन कर्णेन
दुर्योधनं प्रति शल्यस्य सारथ्ये नियोजनचोदना ॥ १ ॥

Mahabharata - Karna Parva - Chapter Text

८-२२-० (५५९१२)
धृतराष्ट्र उवाच। ८-२२-०क्ष् (४८७१)
स्वेन च्छन्देन नः सर्वानवधीद्व्यक्तमर्जुनः ।
न ह्यस्य समरे मुच्येदन्तकोऽप्याततायिनः ॥ ८-२२-१ (५५९१३)
पार्थो ह्येकोऽहरद्भद्रामेकश्चाग्निमतर्पयत् ।
एकश्चेमां महीं जित्वा चक्रे बलिभृतो नृपान् ॥ ८-२२-२ (५५९१४)
एको निवातकवचनानहनद्दिव्यकार्मुकः ।
एकः किरातरूपेण स्थितं शर्वमयोधयत् ॥ ८-२२-३ (५५९१५)
एको ह्यरक्षद्भरतानेको भवमतोषयत् ।
तेनैकेन जिताः सर्वे मदीया ह्युग्रतेजसः ॥ ८-२२-४ (५५९१६)
न ते निन्द्याः प्रशस्यास्ते यत्ते चक्रुर्ब्रवीहि तत् ।

ततो दुर्योधनः सूत पश्चात्किमकरोत्तदा ॥ ८-२२-५ (५५९१७)
सञ्जय उवाच। ८-२२-६क्ष् (४८७२)
हतप्रहतविध्वस्ता विवर्मायुधवाहनाः ।
दीनस्वरा दूयमाना मानिनः शत्रुनिर्जिताः ॥ ८-२२-६ (५५९१८)
शिबिरस्थाः पुनर्मन्त्रं मन्त्रयन्ति स्म कौरवाः ।
भग्नदंष्ट्रा हतविषाः पादाक्रान्ता इवोरगाः ॥ ८-२२-७ (५५९१९)
तानब्रवीत्ततः कर्णः क्रुद्धः सर्प इव श्वसन् ।
करं करेण निष्पीड्य प्रेक्षमाणस्तवात्मजम् ॥ ८-२२-८ (५५९२०)
यत्तो दृढश्च दक्षश्च धृतिमानर्जुनः सदा ।
सम्बोधयति चाप्येनं यथाकालमधोक्षजः ॥ ८-२२-९ (५५९२१)
सहसाऽस्त्रविसर्गेण वयं तेनाद्य वञ्चिताः ।
श्वस्त्वहं तस्य सङ्कल्पं सर्वं हन्ता महीपते ॥ ८-२२-१० (५५९२२)
एवमुक्तस्तथेत्युक्त्वा सोऽनुजज्ञे नृपोत्तमान् ।
तेऽनुज्ञाता नृपाः सर्वे स्वानि वेश्मानि भेजिरे ॥ ८-२२-११ (५५९२३)
सुखोषितास्तां रजनीं हृष्टा युद्धाय निर्ययुः ।
तेऽपश्यन्विहितं व्यूहं धर्मराजेन दुर्जयम् ।
प्रयत्नात्कुरुमुख्येन बृहस्पत्युशनोमतात् ॥ ८-२२-१२ (५५९२४)
अथ प्रतीपकर्तारं प्रवीरं परवीरहा ।
सस्मार वृषभस्कन्धं कर्णं दुर्योधनस्तदा ॥ ८-२२-१३ (५५९२५)
पुरन्दरसमं युद्धे मरुद्गणसमं बले ।
कार्तवीर्यसमं वीर्ये कर्णं राज्ञोऽगमन्मनः ॥ ८-२२-१४ (५५९२६)
सर्वेषां चैव सैन्यानां कर्णमेवागमन्मनः ।
सूतपुत्रं महेष्वासं बन्धुमात्ययिकेष्विव ॥ ८-२२-१५ (५५९२७)
धृतराष्ट्र उवाच। ८-२२-१६क्ष् (४८७३)
ततो दुर्योधनः सूत पश्चात्किमकरोत्तदा ।
यद्वोऽगमन्मनो मन्दाः कर्णं वैकर्तनं प्रति ॥ ८-२२-१६ (५५९२८)
अप्यपश्यत राधेयं शीतार्ता इव भास्करम् ।
कृतेऽवहारे सैन्यानां प्रवृत्ते च रणे पुनः ॥ ८-२२-१७ (५५९२९)
ग्दुर्योधनं च तत्राजौ पाण्डवेन भृशार्दितम् ।
पराक्रान्तान्पाण्डुसुतान्दृष्ट्वाऽपि भृशार्दितम्'॥ ८-२२-१८ (५५९३०)
कथं वैकर्तनः कर्णस्तत्रायुध्यत सञ्जय ।
कथं च पाण्डवाः सर्वे युयुधुस्तत्र सूतजम् ॥ ८-२२-१९ (५५९३१)
कर्णो ह्येको महाबाहुर्हन्यात्पार्थान्ससृञ्जयान् ।
कर्णस्य भुजयोर्वीर्यं शक्रविष्णुसमं युधि ॥ ८-२२-२० (५५९३२)
तस्य शस्त्राणि घोराणि विक्रमश्च महात्मनः ।
कर्णमाश्रित्य सङ्ग्रामे मत्तो दुर्योधनो नृपः ॥ ८-२२-२१ (५५९३३)

दुर्योधनं ततो दृष्ट्वा पाण्डवेन भृशार्दितम् ।
पराक्रान्तान्पाण्डुसुतान्दृष्ट्वा चापि महारथः ॥ ८-२२-२२ (५५९३४)
कर्णमाश्रित्य सङ्ग्रामे मन्दो दुर्योधनः पुनः ।
जेतुमुत्सहते पार्थान्सपुत्रान्सहकेशवान् ॥ ८-२२-२३ (५५९३५)
ग्यः सौबलं तथा तात नीतिमानिति मन्यते ।
कर्णं चाग्रतिमं युद्धे देवैरपि दुरुत्सहम् ॥ ८-२२-२४ (५५९३६)
मन्यतेऽभ्यधिकं पार्थादेवं चास्य हृदि स्थितम् ।
विजेष्यति रणे कर्ण एकः पर्थान्ससोमकान् ।
मम चैव सदा मन्दः शंसते नित्यमग्रतः'॥ ८-२२-२५ (५५९३७)
अहो बत महद्दुःखं यत्र पाण्डुसुतान्रणे ।
नातरद्रभसः कर्णो दैवं नूनं परायणम् ॥ ८-२२-२६ (५५९३८)
अहो द्यूतस्य निष्ठेयं घोरा सम्प्रति वर्तते ॥ ८-२२-२७ (५५९३९)
अहो तीव्राणि दुःखानि दुर्योधनकृतान्यहम् ।
सोढा घोराणि बहुशः शल्यभूतानि सञ्जय ॥ ८-२२-२८ (५५९४०)
सौबलं च तदा तात नीतिमानिति मन्यते ।
कर्णश्च रभसो नित्यं राजा त चाप्यनुव्रतः ॥ ८-२२-२९ (५५९४१)
यदेवं वर्तमानेषु महायुद्धेषु सञ्जय ।
अश्रौषं निहतान्पुत्रान्नित्यमेव विनिर्जितान् ॥ ८-२२-३० (५५९४२)
न पाण्डवानां समरे कश्चिदस्ति हतः किल ।
स्त्रीमध्यमिव गाहन्ते दैवं तु बलवत्तरम् ॥ ८-२२-३१ (५५९४३)
सञ्जय उवाच। ८-२२-३२क्ष् (४८७४)
श्राजन्पूर्वनिमित्तानि धर्मिष्ठानि विचिन्तयघ। ८-२२-३२ (५५९४४)
अतिक्रान्तं हि यत्कार्यं पश्चाच्चिन्तयते नरः ।
तच्चास्य न भवेत्कार्यं चिन्तया च विनश्यति ॥ ८-२२-३३ (५५९४५)
तदिदं तव कार्यं तु दूरप्राप्तं विजानता ।
न कृतं यत्त्वया पूर्वं प्राप्ताप्राप्तविचारणम् ॥ ८-२२-३४ (५५९४६)
उक्तोऽसि बहुधा राज्ञन्मा युध्यस्वेति पाण्डवैः ।
न च तत्त्वग्रहीर्द्वेषात्पाण्डवेषु विशाम्पते ॥ ८-२२-३५ (५५९४७)
त्वया पापानि घोराणि समाचीर्णानि पाण्डुषु ।
त्वत्कृते वर्तते घोरः पार्थिवानां जनक्षयः ॥ ८-२२-३६ (५५९४८)
तत्त्विदानीमतिक्रान्तं मा शुचो भरतर्षभ ।
शृणु सर्वं यथावृत्तं घोरं वैशसमुच्यते ॥ ८-२२-३७ (५५९४९)
प्रभातायां रजन्यां तु कर्णो राजानमभ्ययात् ।
समेत्य च महाबाहुर्दुर्योधनमथाब्रवीत् ॥ ८-२२-३८ (५५९५०)
कर्ण उवाच। ८-२२-३९क्ष् (४८७५)
अद्य राजन्समेष्यामि पाण्डवेन यशस्विना ।

निहनिष्यामि तं वीरं स वा मां निहनिष्यति ॥ ८-२२-३९ (५५९५१)
बहुत्वान्मम कार्याणां तथा पार्थस्य भारत ।
नाभूत्समागमो राजन्मम चैवार्जुनस्य च ॥ ८-२२-४० (५५९५२)
इदं तु मे यथाप्रज्ञं शृणु वाक्यं विशाम्पते ।
अनिहत्य रणे पार्थं नाहमेष्यामि भारत ॥ ८-२२-४१ (५५९५३)
हतप्रवीरे सैन्येऽस्मिन्मयि चावस्थिते युधि ।
अभियास्यति मां पार्थः शक्रशक्तिविनाकृतम् ॥ ८-२२-४२ (५५९५४)
ततः श्रेयस्करं यच्च तन्निबोध जनेश्वर ।
आयुधानां च मे वीर्यं दिव्यानामर्जुनस्य च ॥ ८-२२-४३ (५५९५५)
कार्यस्य महतो भेदे लाघवे दूरपातने ।
सौष्ठवे चास्त्रपाते च सव्यसाची न मत्समः ॥ ८-२२-४४ (५५९५६)
प्राणे शौर्येऽथ विज्ञाने विक्रमे चापि भारत ।
निमित्तज्ञानयोगे च सव्यसाची न मत्समः ॥ ८-२२-४५ (५५९५७)
सर्वायुधमहामात्रं विजयं नाम तद्धनुः ।
इन्द्रार्थं प्रियकामेन निर्मितं विश्वकर्मणा ॥ ८-२२-४६ (५५९५८)
येन दैत्यगणान्राजञ्जितवान्वै शतक्रतुः ।
यस्य घोषेण दैत्यानां व्यामुह्यन्त दिशो दश ॥ ८-२२-४७ (५५९५९)
तद्भार्गवाय प्रायच्छच्छक्रः परमसम्मतम् ।
तद्दिव्यं भार्गवो मह्यमददद्धनुरुत्तमम् ॥ ८-२२-४८ (५५९६०)
तेन योत्स्ये महाबाहुमर्जुनं जयतां वरम् ।
यथेन्द्रः समरे सर्वान्दैतेयान्वै समागतान् ।
'निजघान तथा सर्वाञ्जेष्यामि युधि पाण्डवान्'॥ ८-२२-४९ (५५९६१)
धनुर्घोरं रामदत्तं गाण्डीवात्तद्विशिष्यते ।
त्रिस्सप्तकृत्वः पृथिवी धनुषा येन निर्जिता ॥ ८-२२-५० (५५९६२)
धनुषो ह्यस्य कर्माणि दिव्यानि प्राह भार्गवः ।
तद्रामो ह्यददन्मह्यं तेन योत्स्यामि पाण्डवम् ॥ ८-२२-५१ (५५९६३)
अद्य दुर्योधनाहं त्वां नन्दयिष्ये सबान्धवम् ।
निहत्य समरे वीरमर्जुनं जयतां वरम् ॥ ८-२२-५२ (५५९६४)
सपर्वतवनद्वीपा हतवीरा ससागरा ।
पुत्रपौत्रप्रतिष्ठा ते भविष्यत्यद्य पार्थिव ॥ ८-२२-५३ (५५९६५)
नाशक्यं विद्यते मेऽद्य त्वत्प्रियार्थं विशेषतः ।
सम्यग्धर्मानुरक्तस्य सिद्धिरात्मवतो यथा ॥ ८-२२-५४ (५५९६६)
न हि मे विक्रमं सोढुं स शक्तोऽग्निं तरुर्यथा ।
अवश्यं तु मया वाच्यं येन हीनोऽस्मि फल्गुनात् ॥ ८-२२-५५ (५५९६७)
ज्या तस्य धनुषो दिव्या तथाऽक्षय्ये महेषुधी ।
सारथिस्तस्य गोविन्दो मम तादृङ्ग विद्यते ॥ ८-२२-५६ (५५९६८)

तस्य दिव्यं धनुः श्रेष्ठं गाण्डीवमजितं युधि ।
विजयं च महद्दिव्यं ममापि धनुरुत्तमम् ॥ ८-२२-५७ (५५१६९)
तत्राहमधिकः पार्थाद्धनुषा तेन पार्थिव ।
येन चाप्यधिको वीरः पाण्डवस्तन्निबोध मे ॥ ८-२२-५८ (५५१७०)
रश्मिग्राहश्च दाशार्हः सर्वलोकनमस्कृतः ।
अग्निदत्तश्च वै दिव्यो रथः काञ्चनभूषणः ॥ ८-२२-५९ (५५१७१)
अच्छेद्याः सर्वतो वीर वाजिनश्च मनोजवाः ।
ध्वजश्च दिव्यो द्युतिमान्वानरोपि भयङ्करः ॥ ८-२२-६० (५५१७२)
कृष्णश्च जगतः स्रष्टा रथं तमभिरक्षति ।
एभिस्त्रिभिरहं हीनो युद्धमिच्छामि पाण्डवम् ॥ ८-२२-६१ (५५१७३)
अयं तु सदृशः शौरेः शल्यः समितिशोभनः ।
सारथ्यं यदि मे कुर्याद्ध्रुवस्ते विजयो भवेत् ॥ ८-२२-६२ (५५१७४)
तस्य मे सारथिः शल्यो भवत्वसुकरः परैः ।
नाराचान्गार्ध्रपत्रांश्च शकटानि वहन्तु मे ॥ ८-२२-६३ (५५१७५)
रथाश्च मुख्या राजेन्द्र युक्ता वाजिभिरुत्तमैः ।
आयान्तु पश्चात्सततं मामेव भरतर्षभ ॥ ८-२२-६४ (५५१७६)
एवमभ्यधिकः पार्थाद्भविष्यामि गुणैरहम् ।
शल्योप्यभ्यधिकः कृष्णादर्जुनादपिचाप्यहम् ॥ ८-२२-६५ (५५१७७)
यथाऽश्वहृदयं वेद दाशार्हः परवीरहा ।
तथा शल्यो विजानीते हयज्ञानं महारथः ॥ ८-२२-६६ (५५१७८)
बाहुवीर्ये समो नास्ति मद्रराजस्य कश्चन ।
तथाऽस्त्रे मत्समो नास्ति कश्चिदेव धनुर्धरः ॥ ८-२२-६७ (५५१७९)
तथा शल्यसमो नास्ति हयज्ञाने हि कश्चन ।
सोऽयमभ्यधिकः कृष्णाद्भविष्यति रथो मम ॥ ८-२२-६८ (५५१८०)
एवं कृते रथस्थोऽहं गुणैरभ्यधिकोऽर्जुनात् ।
विजयेयमहं सङ्ख्ये फल्गुनं कुरुसत्तम ॥ ८-२२-६९ (५५१८१)
समुद्यातुं न शक्ष्यन्ति देवा अपि सवासवाः ।
एतत्कृतं महाराज त्वयेच्छामि परन्तप ॥ ८-२२-७० (५५१८२)
क्रियतामेष कामो मे मा वः कालोऽत्यगादयम् ।
एवं कृते कृतं मह्यं त्वया सर्वं भविष्यति ॥ ८-२२-७१ (५५१८३)
ततो द्रक्ष्यसि सङ्ग्रामे यत्करिष्यामि भारत ।
सर्वथा पाण्डवान्सङ्ख्ये विजेष्ये वै समागतान् ॥ ८-२२-७२ (५५१८४)
न हि मे समरे शक्ताः समुद्यातुं सुरासुराः ।
किमु पाण्डुसुता राजन्रणे मानुषयोनयः ॥ ८-२२-७३ (५५१८५)
सञ्जय उवाच। ८-२२-७४क्ष् (४८७६)
एवमुक्तस्तव सुतः कर्णेनाहवशोभिना ।

सम्पूज्य सम्प्रहृष्टात्मा ततो राधेयमब्रवीत् ॥ ८-२२-७४ (५५९८६)
दुर्योधन उवाच। ८-२२-७५क्ष् (४८७७)
एवमेतत्करिष्यामि यथा त्वं कर्ण मन्यसे ।
सोपासङ्गा रथाः साश्वाः स्वनुयास्यन्ति संयुगे ॥ ८-२२-७५ (५५९८७)
नाराचान्गार्ध्रपत्रांश्च शकटानि वहन्तु ते ।
अनुयास्याम कर्ण त्वां वयं सर्वे च पार्थिवाः ॥ ८-२२-७६ (५५९८८)
सञ्जय उवाच। ८-२२-७७क्ष् (४८७८)
एवमुक्त्वा महाराज तव पुत्रः प्रतापवान् ।
अभिगम्याब्रवीद्राजा मद्रराजमिदं वचः ॥ ॥ ८-२२-७७ (५५९८९)

इति श्रीमन्महाभारते कर्णपर्वणि द्वाविंशोऽध्यायः ॥ २२ ॥
Mahabharata - Karna Parva - Chapter Footnotes

८-२२-१ स्वेन च्छन्देन इच्छया । आततायिनः शस्त्रपाणेः ॥
८-२२-२ भद्रां सुभद्राम् । बलिभृतः करदान् ॥
८-२२-४ अरक्षत घोषयात्रायाम् । भरतान्दुर्योधनादीन् ॥
८-२२-६ हतास्ताडिताः । प्रहताश्छिन्नावयवाः। विध्वस्ताः वाहनेभ्योऽधः पातिताः ॥
८-२२-१० सहसा अकस्मात् सहस्राक्षनिसृष्ट्या च शक्त्या तेन स्म वञ्चिताः इति ख । पाठः। सहस्राक्षनिसर्गेय शक्त्या तेन स्म वञ्चिताः इति ट ।पाठः ॥
८-२२-१२ वृहस्पत्युशनोमते इति झ ।पाठः तत्र स्थितेनेति शेषः ॥
८-२२-१३ प्रतीपकर्तारं शत्रूणां छेत्तारम् । प्रवीरं प्रकृष्टं वीरम् ॥
८-२२-१५ आत्ययिकेषु प्राणसङ्कटेषु ॥
८-२२-१७ अप्यपश्यत । अपिः प्रश्ने ॥
८-२२-२७ निष्ठा विपाकः ॥
८-२२-२९ कर्णश्च नीतिमानिति मन्यत इति पूर्वेणान्वयः ॥
८-२२-३१ स्त्रीमध्यमिव गाहन्ते निर्भयाः सेनां मृद्नन्तीत्यर्थः ॥
८-२२-३२ निमितानि द्यूतादीनि धर्मिष्ठानीतिविपरीतलक्षणा । अधर्मिष्ठानीत्यर्थः ॥
८-२२-३४ प्राप्ताप्राप्तविचरणं युक्तायुक्तपरीक्षणं न कृतमित्यन्वयः ॥
८-२२-४३ जीवानामर्जुनस्य चेति खड ।पाठः ॥
८-२२-४४ कार्यस्य कर्तव्यस्य परकीयस्य भेदे विनाशे । लाघवे शैघ्र्ये। सौष्ठवे कौशले ॥
८-२२-४५ प्राणे शारीरबले । शौर्ये मानसबले विज्ञाने अस्त्रशिक्षायाम्। विक्रमे फलोपधानेऽस्त्राणाम्। निमित्तज्ञानयोगे

लक्षसम्बन्धावधारणे। प्राणस्थैर्ये च वीर्ये च इति
क ख ङ पाठः ॥
८-२२-४६ महामात्रं श्रेष्ठम् ॥
८-२२-५४ सिद्धिर्मोक्षः । आत्मवतो जितचित्तस्य ॥
८-२२-५५ न भीमो विक्रमं सोढुं इति क ङ पाठः ॥
८-२२-२२ द्वाविंशोऽध्यायः ॥

---

कर्नपर्व-अध्यय०२३
॥ श्रीः ॥
८.२३. अध्यायः २३

Mahabharata - Karna Parva - Chapter Topics
दुर्योधनप्रार्थनया शल्येन
कृच्छ्रात्कर्णरथसारथ्यकरणाक्ष्युपगमः ॥ १ ॥

Mahabharata - Karna Parva - Chapter Text

८-२३-० (५५९९०)
सञ्जय उवाच। ८-२३-०क्ष् (४८७९)
एवमुक्तो महाराज तव पुत्रः प्रतापवान् ।
मद्रेश्वरं प्रति रणे सुरसैन्यभयङ्करम् ।
सर्वं तथाऽकरोत्तूर्णं राधेयस्तद्यथाऽब्रवीत् ॥ ८-२३-१ (५५९९१)
मद्राजं च समरे प्रणम्य च महारथम् ।
विनयेनोपसङ्गम्य प्रणयाद्वाक्यमब्रवीत् ॥ ८-२३-२ (५५९९२)
सत्यव्रत महाभाग द्विषतां तापवर्धन ।
मद्रेश्वर रणेशूर परसैन्यभयङ्कर ॥ ८-२३-३ (५५९९३)
ग्मत्प्रियार्थं हितार्थं च तथा पार्थवधाय च'।
श्रुतवानसि कर्णस्य ब्रुवतो वदतां वर ।
यथा नृपतिसिंहानां मध्ये त्वां वरये स्वयम् ॥ ८-२३-४ (५५९९४)
तत्त्वामप्रतिवीर्याद्य शत्रुपक्षक्षयावह ।
मद्रेश्वर प्रयाचेऽहं शिरसा विनयेन च ॥ ८-२३-५ (५५९९५)
तस्मात्पार्थविनाशार्थं हितार्थं मम चैव हि ।
त्वं पाहि सर्वतः कर्णं भवं ब्रह्मेव सुव्रत ॥ ८-२३-६ (५५९९६)
सारथ्यं रथिनां श्रेष्ठ प्रणयात्कर्तुमर्हसि ।
त्वयि यन्तरि राधेयो विद्विषो मे विजेष्यते ॥ ८-२३-७ (५५९९७)
अभीषूणां हि कर्णस्य ग्रहीतान्यो न विद्यते ।

ऋते हि त्वां महाभाग वासुदेवसमं युधि ॥ ८-२३-८ (५५९९८)
स पाहि सर्वथा कर्णं यथा ब्रह्मा महेश्वरम् ।
यथा च सर्वथाऽऽपत्सु वार्ष्णेयः पाति पाण्डवम् ।
तथा मद्रेश्वराद्य त्वं राधेयं प्रतिपालय ॥ ८-२३-९ (५५९९९)
भीष्मो द्रोणः कृपः कर्णो भवान्भोजश्च वीर्यवान् ।
शकुनिः सौबलो द्रौणिरहमेव च नो बलम् ॥ ८-२३-१० (५६०००)
एवमेष कृतो भागो नवधा पृथिवीपते ।
न च भागोऽत्र भीष्मस्य द्रोणस्य च महात्मनः ॥ ८-२३-११ (५६००१)
ताभ्यामतीत्य तौ भागौ निहता मम शत्रवः ।
वृद्धौ हि तौ महेष्वासौ छलेन निहतौ युधि ॥ ८-२३-१२ (५६००२)
कृत्वा चासुकरं कर्म गतौ स्वर्गमितोऽनघ ।
तथान्ये पुरुषव्याघ्राः परैर्विनिहता युधि ॥ ८-२३-१३ (५६००३)
अस्मदीयाश्च बहवः स्वर्गाय गमिताः परैः ।
त्यक्त्वा प्राणानय्थाशक्ति चेष्टां कृत्वा च पुष्कलाम्। ८-२३-१४ (५६००४)
तदिदं हतभूयिष्ठं बलं मम नराधिप ।
पूर्वमप्यल्पकैः पार्थैर्हतं किमुत साम्प्रतम् ॥ ८-२३-१५ (५६००५)
बलवन्तो महात्मानः कौन्तेयाः सत्यविक्रमाः ।
बलं शेषं न हन्युर्मे यथा तत्कुरु पार्थिव ॥ ८-२३-१६ (५६००६)
हतवीरमिदं सैन्यं पाण्डवैः समरे विभो ।
कर्णो ह्येको महाबाहुरस्मत्प्रियहिते रतः ॥ ८-२३-१७ (५६००७)
भवांश्च पुरुषव्याघ्र सर्वलोकमहारथः ।
शल्य कर्णोऽर्जुनेनाद्य योद्धुमिच्छति संयुगे ॥ ८-२३-१८ (५६००८)
तस्मिञ्जयाशा विपुला मद्रराज नराधिप ।
तस्याभीषुग्रहवरो नान्योऽस्ति भुवि कश्चन ॥ ८-२३-१९ (५६००९)
पार्थस्य समरे कृष्णो यथाऽभीषुग्रहो वरः ।
तथा त्वमपि कर्णस्य रथेऽभीषुग्रहो भव ॥ ८-२३-२० (५६०१०)
तेन युक्तो रणे पार्थो रक्ष्यमाणश्च पार्थिव ।
यानि कर्माणि कुरुते प्रत्यक्षाणि तथैव तत् ॥ ८-२३-२१ (५६०११)
पूर्वं नः समरे ह्येवमधीदर्जुनो रिपून् ।
इदानीं विक्रमो ह्यस्य कृष्णेन सहितस्य च ॥ ८-२३-२२ (५६०१२)
कृष्णेन सहितः पार्थो धार्तराष्ट्रीं महाचमूम् ।
अहन्यहनि मद्रेश द्रावयन्दृश्यते युधि ॥ ८-२३-२३ (५६०१३)
भागोऽवशिष्टः कर्णस्य तव चैव महाद्युते ।
तं भागं सह कर्णेन युगपन्नाशयाद्य हि ॥ ८-२३-२४ (५६०१४)
अरुणेन यथा सार्धं तमः सूर्यो व्यपोहति ।
तथा कर्णेन सहितो जहि पार्थं महाहवे ॥ ८-२३-२५ (५६०१५)

उद्यन्तौ च यथा सूर्यौ बालसूर्यसमप्रभौ ।
कर्णशल्यौ रणे दृष्ट्वा विद्रवन्तु महारथाः ॥ ८-२३-२६ (५६०१६)
सूर्यारुषौ यथा दृष्ट्वा तमो नश्यति मारिष ।
तथा नश्यन्तु कौन्तेयाः सपाञ्चालाः ससृञ्जयाः ॥ ८-२३-२७ (५६०१७)
रथिनां प्रवरः कर्णो यन्तॄणां प्रवरो भवान् ।
संयोगो युवयोर्लोके नाभून्न च भविष्यति ॥ ८-२३-२८ (५६०१८)
यथा सर्वास्ववस्थासु वार्ष्णेयः पाति पाण्डवम् ।
तथा भवान्परित्रातु कर्णं वैकर्तनं रणे ।
ग्सारथ्यं क्रियतां तस्य युध्यमानस्य संयुगे ॥ ८-२३-२९ (५६०१९)
यथा च समरे कृष्णो रक्षते सर्वतोऽर्जुनम् ।
तथा त्वमपि राधेयं रक्षस्व च महारणे'॥ ८-२३-३० (५६०२०)
त्वया सारथिना ह्येष अप्रधृष्यो भविष्यति ।
देवतानामपि रणे सशक्राणां महीपते ।
किं पुनः पाण्डवेयानां मा विशङ्कीर्वचो मम ॥ ८-२३-३१ (५६०२१)
सञ्जय उवाच। ८-२३-३२क्ष् (४८८०)
दुर्योधनवचः श्रुत्वा शल्यः क्रोधसमन्वितः ।
ग्धार्तराष्ट्रमथोवाच सृक्विणी परिलेलिहन्'॥ ८-२३-३२ (५६०२२)
त्रिशिखां भ्रुकुटिं कृत्वा धुन्वन्हस्तौ पुनःपुनः ।
क्रोधरक्ते महानेत्रे परिवृत्य महाभुजः ।
कुलैश्वर्यश्रुतबलैर्दृप्तः शल्योऽब्रवीदिदम् ॥ ८-२३-३३ (५६०२३)
शल्य उवाच। ८-२३-३४क्ष् (४८८१)
न मामर्हसि राजेद्र नियोक्तुं कर्मणीदृशे ।
न हि पापीयसः श्रेयान्प्रेष्यत्वं कर्तुमर्हति ॥ ८-२३-३४ (५६०२४)
यो ह्यभ्युपगतं मित्रं गरीयांसं विशेषतः ।
वशे पापीयसो धत्ते तत्कार्यमधरोत्तरम् ॥ ८-२३-३५ (५६०२५)
ब्रह्मणा ब्राह्मणाः सृष्टा मुखात्क्षत्रं च बाहुतः ।
ऊरुभ्यामथ वैश्या वै शूद्राः पद्भ्यामिति श्रुतिः ॥ ८-२३-३६ (५६०२६)
तेभ्यो वर्णविशेषाश्च प्रतिलोमानुलोमजाः ।
अथान्योन्यस्य संयोगाच्चातुर्वर्ण्यस्य भारत ॥ ८-२३-३७ (५६०२७)
गोप्तारः सङ्गृहीतारो दातारः क्षत्रियाः स्मृताः ॥ ८-२३-३८ (५६०२८)
याजनाध्यापनैर्विप्रा विशुद्धैश्च प्रतिग्रहैः ।
लोकस्यानुग्रहार्थाय स्थापिता ब्राह्मणा भुवि ॥ ८-२३-३९ (५६०२९)
कृषिश्च पाशुपाल्यं च विशां दानं च धर्मतः ।
ब्रह्मक्षत्रविशां शूद्रा विहिताः परिचारकाः ॥ ८-२३-४० (५६०३०)
ब्रह्मक्षत्रस्य विहिताः सूता वै परिचारकाः ।
न क्षत्रियो वै सूतानां शृणुयाच्च कथञ्चन ॥ ८-२३-४१ (५६०३१)

अहं मूर्धाभिषिक्तो हि राजर्षिकुलजो नृपः ।
महारथसमाख्यातः सेव्यः स्तुत्यश्च वन्दिनां ॥ ८-२३-४२ (५६०३२)
सोऽमहेतादृशो भूत्वा नेहारिबलसूदनः ।
सूतपुत्रस्य सङ्ग्रामे सारथ्यं कर्तुमुत्सहे ॥ ८-२३-४३ (५६०३३)
अवमन्यसे मां गान्धारे ध्रुवं चाप्यतिशङ्कसे ।
यस्माद्ब्रवीषि विस्रब्धः सारथ्यं क्रियतामिति ॥ ८-२३-४४ (५६०३४)
अस्मत्तोऽभ्यधिकं कर्णं मन्वानस्त्वं प्रशंससि ।
न चाहं युधि राधेयं गणये तुल्यमात्मनः ॥ ८-२३-४५ (५६०३५)
आदिश्यतामभ्यधिको ममांशः पृथिवीपते ।
तमहं समरे हत्वा गमिष्यामि यथागतम् ॥ ८-२३-४६ (५६०३६)
अथवाप्येक एवाहं योत्स्यामि तव शत्रुभिः ।
पश्य वीर्यं ममाद्य त्वं सङ्ग्रामे दहतो रिपून् ॥ ८-२३-४७ (५६०३७)
न चापि कामान्कौरव्य निधाय हृदये पुमान् ।
अस्मद्विधः प्रवर्तेत मा मा त्वमतिशङ्किथाः ॥ ८-२३-४८ (५६०३८)
अपि चाप्यवमानो मे न कर्तव्यः कथञ्चन ।
पश्य भीमौ मम भुजौ वज्रसंहननौ दृढौ ॥ ८-२३-४९ (५६०३९)
धनुः पश्य च मे चित्रं शरांश्चाशीविषपमान् ।
रथं च पश्य मे चित्रं सदश्वैर्वातवेगिभिः ॥ ८-२३-५० (५६०४०)
गदां च पश्य गान्धारे हेमपट्टविभूषिताम् ।
दारयेयं महीं क्रुद्धो विकिरेयं च पर्वतान् ।
शोषयेयं समुद्रांश्च पातयेयं च भास्करम् ॥ ८-२३-५१ (५६०४१)
तं मामेवंविधं राजन्समर्थमरिनिग्रहे ।
कस्माद्युनङ्क्षि सारथ्ये सूतस्याधिरथेस्तु माम् ॥ ८-२३-५२ (५६०४२)
न चापि मम राधेयः कलामर्हति षोडशीम् ॥ ८-२३-५३ (५६०४३)
सकर्णा ये त्रयो लोकाः सार्जुनाः सजनार्दनाः ।
निबद्धांस्तन्त्रणे राजन्न गणेयं कथञ्चन ॥ ८-२३-५४ (५६०४४)
न चाहं प्राकृतः कश्चिन्न चास्म्यधिगतः स्वयम् ।
अयं चाप्यवमानो मे न कर्तव्यः कथञ्चन ॥ ८-२३-५५ (५६०४५)
आपृच्छे त्वाद्य गान्धारे यास्यामि विषयं प्रति ।
न चाहं सूतपुत्रस्य सारथ्यमुपजग्मिवान् ॥ ८-२३-५६ (५६०४६)
अवमानमहं प्राप्य न योत्स्यामि कथञ्चन ।
आपृच्छे त्वाऽद्य गान्धारे गमिष्यामि गृहाय वै ॥ ८-२३-५७ (५६०४७)
सञ्जय उवाच। ८-२३-५८क्ष् (४८८२)
एवमुक्त्वा महाराज शल्यः समितिशोभनः ।
उत्थाय प्रययौ तूर्णं राजमध्यादमर्षितः ॥ ८-२३-५८ (५६०४८)
प्रणयाद्बहुमानाच्च तं निगृह्य सुतस्तव ।

अब्रवीन्मधुरं वाक्यं साम्ना सर्वार्थसाधकम् ॥ ८-२३-५९ (५६०४९)
यथा शल्य त्वमात्थेदमेवमेतदसंशयम् ।
अभिप्रायस्तु मे कश्चित्तं निबोध जनेश्वर ॥ ८-२३-६० (५६०५०)
न कर्णोऽभ्यधिकस्त्वत्तो न चान्ये चैव पार्थिवाः ।
न च मद्रेश्वर त्वां वै कृष्णः सोढुं च शक्ष्यति ॥ ८-२३-६१ (५६०५१)
ऋतमेव हि पूर्वास्ते वदन्ति पुरुषोत्तमाः ।
तस्मादार्तायनिः प्रोक्तो भवानिति मतिर्मम ॥ ८-२३-६२ (५६०५२)
शल्यबूतस्तु शत्रूणां यस्मात्त्वं युधि मानद ।
तस्माच्छल्येति ते नाम कथ्यते पृथिवीतले ॥ ८-२३-६३ (५६०५३)
यदेतद्व्याहृतं पूर्वं भवता भूरिदक्षिण ।
तदेव कुरु धर्मज्ञ मदर्थं यद्यदुच्यते ॥ ८-२३-६४ (५६०५४)
न च त्वत्तो हि राधेयो न चाहमपि वीर्यवान् ।
वृणेऽहं त्वां हयाग्र्याणां यन्तारमिह संयुगे ॥ ८-२३-६५ (५६०५५)
मन्ये चाभ्यधिकं शल्य गुणैः कर्णं धनञ्जयात् ।
भवन्तं वासुदेवाच्च लोकोऽयमतिमन्यते ॥ ८-२३-६६ (५६०५६)
कर्णो ह्यभ्यधिकः पार्थादस्त्रैरेव नरर्षभ ।
भवानभ्यधिकः कृष्णादश्वज्ञाने बले तथा ॥ ८-२३-६७ (५६०५७)
यथाऽश्वहृदयं वेद वासुदेवो महामनाः ।
द्विगुणं त्वं तथा वेत्सि मद्रराजेश्वरात्मज ॥ ८-२३-६८ (५६०५८)
शल्य उवाच। ८-२३-६९क्ष् (४८८३)
यन्मां ब्रवीषि गान्धारे मध्ये सैन्यस्य कौरव ।
विशिष्टं देवकीपुत्रात्प्रीतिमानस्म्यहं त्वयि ॥ ८-२३-६९ (५६०५९)
एष सारथ्यमातिष्ठे राधेयस्य यशस्विनः ।
युध्यतः पाण्डवाग्र्येण यथा त्वं वीर मन्यसे ॥ ८-२३-७० (५६०६०)
समयश्च हि मे वीर कश्चिद्वैकर्तनं प्रति ।
उत्सृजेयं यथाश्रद्धमहं वाचोऽस्य सन्निधौ ॥ ८-२३-७१ (५६०६१)
सञ्जय उवाच। ८-२३-७२क्ष् (४८८४)
तथेति राजन्पुत्रस्ते सह कर्णेन भारत। ८-२३-७२ (५६०६२)
अब्रवीन्मद्रराजस्य मतं भरतसxxxx ॥ ॥ ८-२३-७२ (५६०६३)

इति श्रीमन्महाभारते कर्णपर्वणि त्रयोविंशोऽध्यायः ॥ २३ ॥
Mahabharata - Karna Parva - Chapter Footnotes

८-२३-८ अभीषूणां हयरश्मीनाम् ॥
८-२३-२२ पुनर्नः समरे राजन्मावधीदर्जुनो रिपून् ।इति क पाठः ॥
८-२३-२९ त्रातु त्रायताम् ॥

८-२३-३४ पापीयसः नीचयोनेः प्रेष्यत्वं दासत्वम् ॥
८-२३-४१ न विट्शूद्रस्य संयोगं शृणु चान्यं ममानघ इति
क ख पाठः ॥
८-२३-६२ ऋतमेव अयनं आश्रयो येषां ते ऋतायनास्तेषां
गोत्रापत्यमार्तायनिस्त्वम् ॥
८-२३-७१ वाच उत्सृजेयं ताः अनेन क्षन्तव्या इति भावः ॥
८-२३-२३ त्रयोविंशोऽध्यायः ॥

---

कर्नपर्व-अध्यय०२४
॥ श्रीः ॥
८.२४. अध्यायः २४

Mahabharata - Karna Parva - Chapter Topics
दुर्योधनेन शल्यम्प्रति त्रिपुरासुरकथाकथनारम्भः ॥१ ॥
त्रिपुरासुरोपद्रुतैर्देवैः स्तुल्या रुद्रप्रसादनम् ॥२ ॥

Mahabharata - Karna Parva - Chapter Text

८-२४-० (४६०६४)
दुर्योधन उवाच। ८-२४-०क्ष् (४८८५)
भूय एव तु मद्रेश यत्त्वा वक्ष्यामि तच्छृणु ।
यथा पुरावृत्तमिदं युद्धे देवासुरे प्रभो ॥ ८-२४-१ (४६०६५)
यदुक्तवान्पितुर्मह्यं मार्कण्डेयो महातपाः ।
ब्रुवतस्तदशेषेण मम राजर्षिसत्तम ।
निबोध मनसा चात्र न ते कार्या विचारणा ॥ ८-२४-२ (४६०६६)
ग्समुत्पन्नो हि राजानः प्रमोह इति निश्चयम् ।
कृत्वा चैव व्यवस्यन्ति सर्वे धर्मार्थनिश्चयान् ॥ ८-२४-३ (४६०६७)
देवानामसुराणां च महानासीत्समुच्छ्रयः ।
सैंहिकेयास्तदोद्वृत्ता विबुधानवसूदयन् ।
ते निरस्तः कृता देवैर्दानवा बलगर्विताः'॥ ८-२४-४ (४६०६८)
तत्रासीत्प्रथमो राजन्सङ्ग्रामस्तारकामयः ।
निर्जिताश्च ततो दैत्या दैवतैरिति नः श्रुतिः ॥ ८-२४-५ (४६०६९)
भग्नदर्पा निरुत्साहाः पातालं विविशुस्तदा ॥ ८-२४-६ (४६०७०)
निर्जितेषु च दैत्येषु तारकस्य सुतास्त्रयः ।
ताराक्षः कमलाक्षश्च विद्युन्माली च पार्थिव ॥ ८-२४-७ (४६०७१)
तप उग्रं समास्थाय नियमे परमे स्थिताः ।

तपसा कर्णयामासुर्देहांस्ताञ्शत्रुकर्शनाः ॥ ८-२४-८ (५६०७२)
दमेन तपसा चैव नियमेन समाधिना ।
तेषां पितामहः प्रीतो वरदः प्रददौ वरम् ॥ ८-२४-९ (५६०७३)
अवध्यत्वं च ते सर्वे सर्वभूतेषु सर्वदा ।
सहिता वरयामासः सर्वलोकपितामहम् ॥ ८-२४-१० (५६०७४)
तानब्रवीत्तदा देवः सर्वलोकगुरुः प्रभुः ।
नास्ति सर्वामरत्वं वै निवर्तध्वमितोऽसुराः ।
अन्यं वरं वृणीध्वं वै रोचते यादृशो हि वः ॥ ८-२४-११ (५६०७५)
ततस्ते सहिता राजन्सम्प्रधार्यासकृद्बहुः ।
सर्वलोकेश्वरं वाक्यं प्रणम्यैनमथाऽब्रुवन् ॥ ८-२४-१२ (५६०७६)
वस्तुमिच्छाम नगरं कर्तुं कामगमं शुभम् ।
सर्वकामसमृद्धार्थमवध्यं देवदानवैः ॥ ८-२४-१३ (५६०७७)
यक्षरक्षोरगगणैर्नानाजातिभिरेव च ।
न कृत्याभिर्न शस्त्रैश्च न शापैर्ब्रह्मवादिनाम् ।
वध्येत त्रिपुरं देव प्रयच्छेः प्रपितामह ॥ ८-२४-१४ (५६०७८)
वयं पुराणि त्रीण्येव समास्थाय महीमिमाम् ।
विचरिष्याम लोकेऽस्मिंस्त्वत्प्रसादपुरस्कृताः ॥ ८-२४-१५ (५६०७९)
ततो वर्षसहस्रेषु समेष्यामः परस्परम् ।
एकीभावं गमिष्यन्ति पुराण्येतानि चानघ ॥ ८-२४-१६ (५६०८०)
समागतानि चैतानि यो हन्याद्भगवांस्तदा ।
एकेषुणा देववरः स नो मृत्युर्भविष्यति ॥ ८-२४-१७ (५६०८१)
दुर्योधन उवाच। ८-२४-१८क्ष् (४८८६)
तेषां तद्वचनं श्रुत्वा दानवानां पितामहः ।
एवमस्त्विति तान्देवः प्रत्युक्त्वा प्राविशद्दिवम् ॥ ८-२४-१८ (५६०८२)
ते तु लब्धवराः प्रीताः सम्प्रधार्य परस्परम् ।
पुरत्रयविसृष्ट्यर्थं मयं वव्रुर्महारथाः ।
विश्वकार्माणमजरं दैत्यदानवपूजितम् ॥ ८-२४-१९ (५६०८३)
ततो मयः स्वतपसा चक्रे धीमान्पुराणि च ।
त्रीणि काञ्चनमेकं वै रौप्यं कार्ष्णायसं तथा ॥ ८-२४-२० (५६०८४)
काञ्चनं दिवि तत्रासीदन्तरिक्षे च राजतम् ।
आयसं चाभवद्भौमं तदा तेषां परन्तप ॥ ८-२४-२१ (५६०८५)
एकैकं योजनशतं विस्तृतं तावदायतम् ।
दृढं चाट्टालकयुतं बृहत्प्राकारतोरणम् ॥ ८-२४-२२ (५६०८६)
गृहप्रवरसम्बाधमसम्बाधमहापथम् ।
प्रासादैर्विविधैश्चापि द्वारैश्चैवोपशोभितम् ॥ ८-२४-२३ (५६०८७)
त्रिपुरं तेषु चाप्यासन्राजानो वै पृथक्पृथक् ।

दिव्यमाल्याम्बरधरा दैतेया राजसत्तम ॥ ८-२४-२४ (५६०८८)
काञ्चनं तारकाक्षस्य दिव्यमासीन्महात्मनः ।
राजतं कमलाक्षस्य विद्युन्मालिन आयसम् ॥ ८-२४-२५ (५६०८९)
त्रयस्ते दैत्यराजानस्त्रींल्लोकानाशु तेजसा ।
आक्रम्य तस्थुरूचुश्च कश्च नाम प्रजापतिः ॥ ८-२४-२६ (५६०९०)
तेषां दानवमुख्यानां प्रयुतान्यर्बुदानि च ।
कोट्यश्चाप्रतिवीराणां समाजग्मुस्ततस्ततः ॥ ८-२४-२७ (५६०९१)
मांसाशिनः सुदृप्ताश्च सुरैर्विनिकृताः पुरा ।
महदैश्वर्यमिच्छन्तस्त्रिपुरं दुर्गमाश्रिताः ॥ ८-२४-२८ (५६०९२)
सर्वेषां च पुनश्चैषां सर्वयोगवहो मयः ।
तमाश्रित्य हि ते सर्वेऽवर्तयन्नकुतोभयाः ॥ ८-२४-२९ (५६०९३)
यो हि यं मनसा कामं दध्यौ त्रिपुरसंश्रयः ।
तस्मै तस्मै मयस्तं तं विदधे मायया तदा ॥ ८-२४-३० (५६०९४)
तारकाक्षसुतश्चासीद्धरिर्नाम महाबलः ।
तपस्तेपे परमकं येनातुष्यत्पितामहः ॥ ८-२४-३१ (५६०९५)
सन्तुष्टमवृणोद्देवं वापी भवतुः नः पुरे ।
शस्त्रैर्विनिहता यत्र क्षिप्ताः स्युर्बलवत्तराः ॥ ८-२४-३२ (५६०९६)
स तु लब्ध्वा वरं वीरस्तारकाक्षसुतो हरिः ।
ससृजे तत्र वापीं तां मृतसञ्जीविनीं प्रभो ॥ ८-२४-३३ (५६०९७)
येन रूपेण यो दैत्यो येन वेषेण चाप्यथ ।
क्षिप्यते निहतो वाप्यां तादृशेनैव जायते ।
सम्पूर्णबलवीर्यस्तु राजञ्छौर्यसमन्वितः ॥ ८-२४-३४ (५६०९८)
एवं वीर्येण संयुक्तां कृतां तेन महात्मना ।
तां प्राप्य त्रैपुरा वापीं लोकान्सर्वान्बबाधिरे ॥ ८-२४-३५ (५६०९९)
महता तपसा सिद्धाः सुराणां भयवर्धनाः ।
एकस्मिन्निहते दैत्ये सृजन्ति स्म दशासुरान् ।
न तेषां विद्यते युद्ध क्षयो राजन्कथञ्चन ॥ ८-२४-३६ (५६१००)
ततस्ते लोभमोहाभ्यामभिभूता विचेतसः ।
निर्भीकाः सहिताः सर्वे स्थापिताः समलोलुपाः ॥ ८-२४-३७ (५६१०१)
विद्राव्य सगणान्देवांस्तत्रतत्र तदातदा ।
विचेरुः स्वेन कामेन वरदानेन दर्पिताः ॥ ८-२४-३८ (५६१०२)
देवोद्यानानि सर्वाणि स्थानानि च दिवौकसाम् ।
ऋषीणामाश्रमान्पुण्यान्रम्याञ्चनपदांस्तथा ।
उत्सादयन्त मर्यादां दानवा दुष्टचारिणः ॥ ८-२४-३९ (५६१०३)
निःस्थानाश्च कृता देवा ऋषयः पितृभिः सह ।
दैत्यैस्त्रिभिस्त्रयो लोका ह्याक्रान्तास्तैः सुरेतरैः ॥ ८-२४-४० (५६१०४)

पीड्यमानेषु लोकेषु ततः शक्रो मरुद्वृतः ।
पुराण्यायोधयाञ्चक्रे वज्रहस्तः समन्ततः ॥ ८-२४-४१ (५६१०५)
नाशकत्तान्यभेद्यानि यदा भेत्तुं पुरन्दरः ।
पुराणि वरदत्तानि धात्रा तेन नराधिप ॥ ८-२४-४२ (५६१०६)
तदा भीतः सुरपतिर्मुक्त्वा तानि पुराण्यथ ।
तैरेव विबुधैः सार्धं पितामहमरिन्दम ।
जगामाथ तदाख्यातुं विप्रकारं सुरेतरैः ॥ ८-२४-४३ (५६१०७)
ते तत्त्वं सर्वमाख्याय शिरोभिः सम्प्रणम्य च ।
तद्वधोपायमाचक्ष्व भगवन्निति चाब्रुवन् ॥ ८-२४-४४ (५६१०८)
श्रुत्वा तद्भगवान्देवो देवानिदमुवाच ह ।
श्रूयतां त्रिदशाः सर्वे यथेदं वाक्यगौरवम् ॥ ८-२४-४५ (५६१०९)
दुरात्मानोऽसुरा नित्यं ते चापि विबुधा मम ।
न शक्नुवन्ति ते (ये) सर्वे युष्मान्वै पीडयन्ति ते ॥ ८-२४-४६ (५६११०)
अहं समस्तु सर्वेषां भूतानां नात्र संशयः ।
अविनीता निहन्तव्या इत्येवं प्रब्रवीमि वः ॥ ८-२४-४७ (५६१११)
एकेषुणा (हि) विभेद्यानि तानि दुर्गाणि नान्यथा ।
शक्तस्तु तानि बाणेन भेत्तुं कामं त्रिलोचनः ॥ ८-२४-४८ (५६११२)
ते यूयं स्थाणुमीशानं जिष्मुमक्लिष्टकारिणम् ।
योद्धारं वृणुत क्षिप्रं स तान्हन्ता सुरेतरान् ॥ ८-२४-४९ (५६११३)
ते देवास्तेन वाक्येन चोदिताः प्रणताः स्थिताः ।
दिव्यं वर्षसहस्रं वै तपस्तप्त्वा सुरर्षभाः ।
शुभात्मानो महात्मानो जग्मुर्वै वृषभध्वजम् ॥ ८-२४-५० (५६११४)
ब्रह्माणमग्रतः कृत्वा शरण्यं शरणागताः ।
तपः परममाजग्मुर्गृणन्तो ब्रह्म शाश्वतम् ॥ ८-२४-५१ (५६११५)
अनङ्गमथनं सर्वे भवं सर्वात्मना गताः ।
देवदेवं परं स्थाणुं वरदं त्र्यम्बकं शिवम् ॥ ८-२४-५२ (५६११६)
शर्वमीड्यमजं रुद्रं शशाङ्काङ्कितमूर्धजम् ।
तुष्टुवुर्वाग्भिरुग्राभिर्भयेष्वभयमच्युतम् ।
सर्वात्मानं महात्मानं येनाप्तं विश्वमात्मना ॥ ८-२४-५३ (५६११७)
तपोविशेषैर्विविधैर्योगं यो वेद चात्मनः ।
यः साङ्ख्यमात्मना वेत्ति यस्य चात्मा वेशे सदा ॥ ८-२४-५४ (५६११८)
तं ते ददृशुरीशानं तेजोराशिमुमापतिम् ।
ग्परेण यत्नेन भवं त्रिदशाः शर्वमीश्वरम्'।
अनन्यसदृशं लोके प्रतपन्तमकल्मषम् ॥ ८-२४-५५ (५६११९)
एकश्च भगवांस्तत्र नानारूपमकल्पयत् ।
आत्मनः प्रतिरूपाणि रूपाण्यथ महात्मनि ।

परस्परस्य चापश्यन्सर्वे परमविस्मिताः ॥ ८-२४-५६ (५६१२०)
सर्वभूतमयं दृष्ट्वा तमजं जगतः परिम् ।
देवा ब्रह्मर्षयश्चैव शिरोभिर्धरणीं गताः ॥ ८-२४-५७ (५६१२१)
तान्स्वस्तिवाच्य चाभ्यर्च्य समुत्थाप्य च शङ्करः ।
ब्रूतब्रूतेति भगवान्स्मयमानोऽभ्यभाषत ॥ ८-२४-५८ (५६१२२)
त्र्यम्बकेणाभ्यनुज्ञातास्ततस्ते स्वस्थचेतसः ।
नमो नमो नमस्तेऽस्तु प्रभो इत्यब्रुवन्भवम् ॥ ८-२४-५९ (५६१२३)
नमो देवाधिदेवाय प्रियाधाघ्नेऽतिमन्यवे ।
प्रजापतिमखघ्नाय प्रजापतिभिरीड्यते ॥ ८-२४-६० (५६१२४)
नमः स्तुताय स्तुत्याय स्तूयमानाय शम्भवे ।
विलोहिताय रुद्राय नीलग्रीवाय शूलिने ॥ ८-२४-६१ (५६१२५)
अमोघाय मृगाक्षाय प्रवरायुधयोधिने ।
अर्हाय चैव शुद्धाय क्षयाय क्रथनाय च ॥ ८-२४-६२ (५६१२६)
दुर्वारणाय शुक्राय ब्रह्मणे ब्रह्मचारिणे ।
ईशानायाप्रमेयाय निहन्त्रे चर्मवाससे ॥ ८-२४-६३ (५६१२७)
तपोरताय पिङ्गाय व्रतिने कृत्तिवाससे ।
कुमारपित्रे त्र्यक्षाय प्रवरायुधधारिणे ॥ ८-२४-६४ (५६१२८)
प्रपन्नार्तिविनाशाय ब्रह्मद्विट्सङ्घघातिने ।
वनस्पतीनां पतये वनानां पतये नमः ॥ ८-२४-६५ (५६१२९)
गवां च पतये नित्यं यज्ञानां पतये नमः ।
नमोस्तु ते ससैन्याय त्र्यम्बकायामितौजसे ।
मनोवाक्कर्मभिर्देव त्वां प्रपन्नान्भजस्व नः ॥ ८-२४-६६ (५६१३०)
ततः प्रसन्नो भगवान्स्वागतेनाभिनन्द्य च ।
प्रोवाच व्येतु वस्त्रासो ब्रूत किं करवाणि वः ॥ ८-२४-६७ (५६१३१)
ग्देवाः शर्वस्य वचनं श्रुत्वा हर्षमुपागताः'॥ ॥ ८-२४-६८ (५६१३२)

इति श्रीमन्महाभारते कर्णपर्वणि चतुर्विंशोऽध्यायः ॥ २४ ॥
Mahabharata - Karna Parva - Chapter Footnotes

८-२४-२ पितुः पुरतः । मह्यं मम ॥
८-२४-५ तारकामयः तारकासुर एवामयो रोगवत्पराभवहेतुर्यत्र स तथा ॥
८-२४-६० ईड्यते ईड्यमानाय । कर्मणीदमपौरुषम् ॥
८-२४-६६ भजस्व इष्टैः कामैः पूरयस्व ॥
८-२४-६८ व्येतु व्यपगच्छतु ॥
८-२४-२४ चतुर्विंशोऽध्याय ॥

कर्नपर्व-अध्यय०२५
॥ श्रीः ॥
८.२५. अध्यायः २५

Mahabharata - Karna Parva - Chapter Topics
देवै रुद्रवचनात्तस्य स्वस्वार्धबलदानपूर्वकं
त्रिपुरसंहारायाभिषेचनम् ॥ १ ॥

Mahabharata - Karna Parva - Chapter Text

८-२५-० (५६१३३)
दुर्योधन उवाच। ८-२५-०क्ष् (४८८७)
पितृदेवर्षिसङ्घेभ्योऽभये दत्ते महात्मना ।
सत्कृत्य शंकरं प्राह ब्रह्मा लोकपितामहः ॥ ८-२५-१ (५६१३४)
इमान्यसुरदुर्गाणि लोकांस्त्रीनाक्रमन्ति हि ।
कश्च प्रजापतिर्घोरांस्तान्सर्वाञ्जहि मा चिरम् ॥ ८-२५-२ (५६१३५)
वरातिसर्गाद्देवेश प्राजापत्यमिदं परम् ।
मयाऽधितिष्ठता दत्तो दानवेभ्यो महान्वरः ॥ ८-२५-३ (५६१३६)
नास्त्यन्यो युधि तेषां वै निहन्ता इति नः श्रुतम् ।
तानतिक्रान्तमर्यादान्नान्यः संहर्तुमर्हति ।
त्वामृते सर्वभूतेश त्वं ह्येषां प्रत्यरिर्वधे ॥ ८-२५-४ (५६१३७)
स त्वं देव प्रपन्नानां याचतां च दिवोकसाम् ।
कुरु प्रसादं वरद दानवाञ्जहि संयुगे ॥ ८-२५-५ (५६१३८)
त्वत्प्रसादाज्जगत्सर्वं सुखमैधत मानद ।
शरण्यस्त्वं हि देवानां वयं त्वां शरणं गताः ॥ ८-२५-६ (५६१३९)
ईश्वर उवाच। ८-२५-७क्ष् (४८८८)
हन्तव्याः शत्रवः सर्वे युष्माकमिति मे मतिः ।
न त्वेकश्चोत्सहे हन्तुं बलिनः सुरविद्विषः ॥ ८-२५-७ (५६१४०)
ते यूयं सहिताः सर्वे मदीयेनापि तेजसा ।
जयध्वं युधि तान्सर्वान्सङ्घातेन महाबलान् ॥ ८-२५-८ (५६१४१)
देवा ऊचुः। ८-२५-९क्ष् (४८८९)
अस्मत्तेजोबलं यावत्तावद्द्विगुणमेव वा ।
तत्तेषामिति मन्यामो दृष्टतेजोबला हि ते ॥ ८-२५-९ (५६१४२)
ईश्वर उवाच। ८-२५-१०क्ष् (४८९०)
वध्यास्ते सर्वथा पापा ये युष्मास्वपराधिनः ।
मम तेजोबलार्धेन सर्वे मृद्नथ शात्रवान् ॥ ८-२५-१० (५६१४३)

देवा ऊचुः। ८-२५-११क्ष् (४८९१)
बिभर्तुं तव तेजोर्धं न शक्ष्याम सुरेश्वर ।
सर्वेषां नो बलार्धेन त्वमेव जहि शात्रवान् ॥ ८-२५-११ (५६१४४)
वयं च सर्वथा देव रक्षणीयास्तथैव च ।
स नो रक्ष महादेव त्वमेव जहि शात्रवान् ॥ ८-२५-१२ (५६१४५)
ईश्वर उवाच। ८-२५-१३क्ष् (४८९२)
मम तेजो न शक्ता हि सर्वे धारयितुं यदि ।
अहमेनान्वधिष्यामि युष्मत्तेजोर्धसंयुतः ॥ ८-२५-१३ (५६१४६)
बलार्धं यदि मे देवा न धारयितुमाहवे ।
शक्ताः सर्वे हि सङ्गम्य यूयं तत्प्रब्रवीमि वः ॥ ८-२५-१४ (५६१४७)
समा भवन्ति मे सर्वे दानवाश्चामराश्च ये ।
शिवोऽस्मि सर्वभूतानां शिवत्वं तेन मे सुराः ॥ ८-२५-१५ (५६१४८)
किन्त्वधर्मेण वर्तन्ते यस्मात्ते सुरशत्रवः ।
तस्माद्वध्या मयाप्येते युष्माकं च हितेप्सया ॥ ८-२५-१६ (५६१४९)
शरणं वः प्रपन्नानां धर्मेण च जिगीषताम् ।
साहाय्यं वः करिष्यामि निहनिष्यामि वो रिपून् ॥ ८-२५-१७ (५६१५०)
दीयतां च बलार्धं मे सर्वैरपि पृथक्पृथक् ।
पशुत्वं चैव मे लोकाः सर्वे कल्पन्तु पीडिताः ॥ ८-२५-१८ (५६१५१)
पशूनां तु पतित्वं मे भवत्वद्य दिवौकसः ।
एवं न पापं प्राप्स्यामि पशून्हत्वा सुरद्विपः ॥ ८-२५-१९ (५६१५२)
कल्पयध्वं रथं दिव्यं रथाश्वांश्चैव पारगान् ।
धनुः शरं सारथिं च ततो जेष्यामि वो रिपून् ॥ ८-२५-२० (५६१५३)
इति श्रुत्वा वचो देवा देवदेवस्य भूपतेः ।
विषादमगमन्सर्वे पशुत्वं प्रति शङ्किताः ॥ ८-२५-२१ (५६१५४)
तेषां भावं भवो ज्ञात्वा देवस्तानब्रवीदिदम् ।
मा वोस्तु पशुभावेऽस्मिन्भयं विबुधसत्तमाः ॥ ८-२५-२२ (५६१५५)
श्रूयतां पशुभावस्य विमोक्षः क्रियतां च सः ॥ ८-२५-२३ (५६१५६)
यो वः पशुपतेश्चर्यां चरिष्यति स मोक्ष्यते ।
पशुत्वादिति सत्यं वः प्रतिजाने समागमे ॥ ८-२५-२४ (५६१५७)
ये चाप्यन्ये चरिष्यन्ति व्रतं मोक्ष्यन्ति तेऽपि च ॥ ८-२५-२५ (५६१५८)
नै(त्य)ष्ठिकं द्वादशाब्दं वा अर्धमब्दमृतुत्रयम् ।
मासं द्वादशरात्रं गुह्यं व्रतं दिव्यं चरिष्यथ ॥ ८-२५-२६ (५६१५९)
तं तथेत्यब्रुवन्देवा देवदेवनमस्कृतम् ।
ऊचुश्चेदं गृहाणेदं तेजसोऽर्धमिति प्रभुम् ॥ ८-२५-२७ (५६१६०)
प्रत्युवाच तथेत्येव शूलधृद्राजसत्तम ।
ततस्ते प्रददुः सर्वे तेजसोऽर्धं महात्मने ॥ ८-२५-२८ (५६१६१)

सर्वमादाय सर्वेषां तेजसोऽर्धं दिवौकसाम् ।
तेजसाप्यधिको भूत्वा भूयोऽप्यतिबलोऽभवत् ॥ ८-२५-२९ (५६१६२)
ततः प्रभृति देवानां देवदेवोऽभवद्भवः ।
पतिश्च सर्वभूतानां पशूनां चाभवत्तदा ॥ ८-२५-३० (५६१६३)
तस्मात्पशुपतिश्चोक्तो भवत्वाच्च भवेति वै ॥
अर्धमादाय सर्वेषां तेजसा प्रज्वलन्निव। ८-२५-३१ (५६१६४)
भासयामास तान्सर्वान्देवदेवो महाद्युतिः ॥
ततोऽभिषिषिच्युः सर्वे सुरा रुद्रं पुरारिणम्। ८-२५-३२ (५६१६५)
महादेव इति ह्यासीद्देवदेवो महेश्वरः ॥ ॥ ८-२५-३३ (५६१६६)

इति श्रीमन्महाभारते कर्णपर्वणि पञ्चविंशोऽध्यायः ॥ २५ ॥

---

कर्नपर्व-अध्यय०२६
॥ श्रीः ॥
८.२६. अध्यायः २६

Mahabharata - Karna Parva - Chapter Topics
देबानामाज्ञया विश्वकर्मणा भूम्यादिसाधनै रुद्राय रथनिर्माणम् ॥ १ ॥

Mahabharata - Karna Parva - Chapter Text

८-२६-० (५६१६७)
दुर्योधन उवाच। ८-२६-०क्ष् (४८९३)
तेजसोऽर्धं सुरा दत्त्वा शङ्कराय महात्मने ।
पशुत्वमपि चोपेत्य विश्वकर्माणमव्ययम् ॥ ८-२६-१ (५६१६८)
ऊचुः सर्वे समाभाष्य रथः सङ्कल्प्यतामिति ।
विश्वकर्माऽपि सञ्चिन्त्य रथं दिव्यमकल्पयत् ॥ ८-२६-२ (५६१६९)
समेतां पृथिवीं देवी विशालां पुरमालिनीम् ।
सपर्वतवनद्वीपां चक्रे भूतधरां रथम् ॥ ८-२६-३ (५६१७०)
ईषां नक्षत्रवंशं च छत्रं मेरुमहागिरिम् ।
अनेकद्रुसञ्छन्नं रत्नाकरमनुत्तमम् ॥ ८-२६-४ (५६१७१)
हिमवन्तं च विन्ध्यं च नानाद्रुमलताकुलम् ।
अवस्करं प्रतिष्ठानं कल्पयामास वै तदा ॥ ८-२६-५ (५६१७२)
अस्तंगिरिमधिष्ठानं नानाद्विजगणायुतम् ।
चकार भगवांस्त्वष्टा उदयं रथकूबरम् ॥ ८-२६-६ (५६१७३)
मीननक्रझषावासं दानवालयमुत्तमम् ।

समुद्रमक्षं विदधे पत्तनाकरशोभितम् ॥ ८-२६-७ (५६१७४)
चक्रं चक्रे चन्द्रमसं तारकागणमण्डितम् ।
दिवाकरं चाप्यपरं चक्रं चक्रेंऽशुमालिनम् ॥ ८-२६-८ (५६१७५)
गङ्गां सरस्वतीं तूर्णीं चक्रे विश्वकृदव्ययः ।
अलङ्कारा रथस्यासन्नापगाः सरितस्तथा ॥ ८-२६-९ (५६१७६)
त्रीनग्नीन्मन्त्रवच्चक्रे रथस्याथ त्रिवेणुकम् ।
अनुकर्षान्रथे दीप्तान्वरूथांश्चापि तारकाः ॥ ८-२६-१० (५६१७७)
ओषधीर्वीरुधश्चैव घण्टाजालं च भानुमत् ।
अलञ्चकार च रथं मासपक्षर्तुभिर्विभुः ॥ ८-२६-११ (५६१७८)
अहोरात्रैः कलाभिश्च काष्ठाभिरयनैस्तथा ।
द्यां युगं युगपर्वाणि संवर्तकबलाहरकान् ॥ ८-२६-१२ (५६१७९)
शम्यां धृतिं च मेधां च स्थितिं सन्नतिमेव च ।
ऋघ्वेदं सामवेदं च धुर्यावश्वावकल्पयत् ॥ ८-२६-१३ (५६१८०)
पृष्ठाश्वौ तु यजुर्वेदः कल्पितोऽथर्वणस्तथा ।
अश्वानां चाप्यलङ्कारं विदधे पदसञ्चयम् ॥ ८-२६-१४ (५६१८१)
सिनीवालीमनुमतिं कुहूं राकां च सुप्रभाम् ।
योक्ताणि चक्रे चाश्वानां कूश्माण्डांश्चापि पन्नगान्। ८-२६-१५ (५६१८२)
तालपृष्ठोऽथ नहुषः कार्कोटकधनञ्जयौ ।
इतरे चाभवन्नागा हयानां वाहबन्धनम् ॥ ८-२६-१६ (५६१८३)
अभीशवः षडङ्गानि कल्पितानि महीपते ।
ओङ्कारः कल्पितस्तस्य प्रतोदो विश्वकर्मणा ॥ ८-२६-१७ (५६१८४)
यज्ञाः सर्वे पृथक्लृप्ता रथाङ्गानि च भागशः ।
अधिष्ठानं मनश्चासीत्परिरथ्या सरस्वती ॥ ८-२६-१८ (५६१८५)
नानावर्णानि शस्त्राणि पताकाः पवनेरिताः ।
विद्युदिन्द्रधनुर्युक्तं रथं दीप्त्या व्यदीपयत् ॥ ८-२६-१९ (५६१८६)
वर्म योद्धुं च विहितं नमो ग्रहगणाकुलम् ।
अभेद्यं भानुमच्चित्रं कालचक्रपरिक्षतम् ॥ ८-२६-२० (५६१८७)
एवमस्मिन्महाराज कल्पिते रथसत्तमे ।
त्वष्ट्रा मनुजशार्दूल द्विषतां भयवर्धने ॥ ८-२६-२१ (५६१८८)
स्वान्यायुधानि दिव्यानि न्यदधाच्छङ्करो रथे ।
ध्वजयष्टिं वियत्कृत्वा स्थापयामास गोवृषम् ॥ ८-२६-२२ (५६१८९)
ब्रह्मदण्डः कालदम्डो रुद्रदण्डश्च ते ज्वराः ।
परिष्कारा र्थस्यासन्समन्ताद्दिशमुद्धताः ॥ ८-२६-२३ (५६१९०)
विचित्रमृतुभिः षड्भिः कृत्वा संवत्सरं धनुः ।
छायामेवात्मनश्चक्रे धनुर्ज्यामक्षयां ध्रुवाम् ॥ ८-२६-२४ (५६१९१)
कालो हि भगवान्रुद्रस्तच्च संवत्सरं धनुः ।

तस्माद्रौद्री कालरात्री ज्या कृता धनुषो जरा ॥ ८-२६-२५ (५६१९२)
ततो रथे रथाश्वांस्तानृषयः समयोजयन् ।
एकैकशः सुसंहृष्टानादाय सुधृतव्रताः ॥ ८-२६-२६ (५६१९३)
दक्षिणस्यां धुरि कृत ऋग्वेदो मन्त्रपारगैः ।
सव्यतः सामवेदश्च युक्तो राजन्महर्षिभिः ॥ ८-२६-२७ (५६१९४)
पार्ष्णिदक्षिणतो युक्तो यजुर्वेदः सुरद्विजैः ।
इतरस्यां तथा पार्ष्ण्यां युक्तो राजन्नथर्वणः ॥ ८-२६-२८ (५६१९५)
एवं ते वाजिनो युक्ता यज्ञविद्भिस्तथा रथे ।
अशोभन्त तथा युक्ता यथैवाध्वरमध्यगाः ॥ ८-२६-२९ (५६१९६)
कल्पयित्वा रथं दिव्यं ततो बाणमकल्पयत् ।
चिन्तयित्वा हरिं विष्णुमव्ययं यज्ञवाहनम् ॥ ८-२६-३० (५६१९७)
शरं सङ्कल्पयाञ्चक्रे विश्वकर्मा महामनाः ।
तस्य वाजांश्च पुङ्खं च कल्पयामास वै तदा ॥ ८-२६-३१ (५६१९८)
पुण्यगन्धवहं राजञ्श्वसनं राजसत्तम ।
अग्नीषोमौ शरमुखे कल्पयामास वै तदा ॥ ८-२६-३२ (५६१९९)
अग्नीषोमात्मकं कृत्स्नमुच्यते वैष्णवं जगत् ।
विष्णुरात्मा भगवतो भवस्यामिततेजसः ॥ ८-२६-३३ (५६२००)
तस्माद्धनुर्ज्यासंस्पर्शं स विषेहे शरस्य वै ।
तस्मिञ्शरे तीक्ष्णमन्युममुञ्चद्दुःसहं प्रभुः ॥ ८-२६-३४ (५६२०१)
भृग्वङ्गिरोमन्युभवः क्रोधाग्निरतिदुःसहः ।
स नीललोहितो धूम्रः कृत्तिवासा भयानकः ॥ ८-२६-३५ (५६२०२)
आदित्यायुतसङ्काशस्तेजोज्वालावृतो भवः ।
दुश्चर्यच्यावको जेता हन्ता ब्रह्मद्विषां वरः ॥ ८-२६-३६ (५६२०३)
तस्याङ्गानि समाश्रित्य स्थितं विश्वमिदं जगत् ।
जङ्गमाजङ्गमं राजञ्छुशुभेऽद्भुतदर्शनम् ॥ ८-२६-३७ (५६२०४)
दृष्टा तु तं रथं दिव्यं कवची स शरासनी ।
आददे स शरं दिव्यं सोमविष्णवग्निवायुजम् ॥ ८-२६-३८ (५६२०५)
तमादाय महादेवस्त्रासयन्दैत्यदानवान् ।
आरुरोह तदा यत्तः कम्पयन्निव रोदसी ॥ ८-२६-३९ (५६२०६)
महर्षिभिः स्तूयमानो वन्द्यमानश्च वन्दिभिः ।
उपनृत्तश्चाप्सरसां गणैर्नृत्तविशारदैः ॥ ८-२६-४० (५६२०७)
स शोभमानो वरदः खड्गी बाणी शरासनी ।
हसन्निवाब्रवीद्देवः सारथिः को भवेदिति ॥ ॥ ८-२६-४१ (५६२०८)

इति श्रीमन्महाभारते कर्णपर्वणि षड्विंशोऽध्यायः ॥ २६ ॥

कर्नपर्व-अध्यय०२७
॥ श्रीः ॥
८.२७. अध्यायः २७

Mahabharata - Karna Parva - Chapter Topics
देवानां प्रार्थनया ब्रह्मणा रुद्ररथसारथ्यकरणम् ॥ १ ॥
रुद्रेण त्रिपुरदहनम् ॥ २ ॥
दुर्योधनेन दृष्टान्तप्रदर्शनपूर्वकं शल्यम्प्रति
कर्णरथसारथ्यकरणप्रार्थना ॥ ३ ॥

Mahabharata - Karna Parva - Chapter Text

८-२७-० (५६२०९)
दुर्योधन उवाच। ८-२७-०क्ष् (४८९४)
तमब्रुवन्देवगणा यं भवान्सन्नियोक्ष्यते ।
स भविष्यति देवेश सारथिस्ते न संशयः ॥ ८-२७-१ (५६२१०)
तानब्रवीन्महादेवो मत्तः श्रेष्ठतरो हि यः ।
तं सारथिं कुरुध्वं वै स्वयं सञ्चिन्त्य मा चिरम् ॥ ८-२७-२ (५६२११)
एतच्छ्रुत्वा वचो देवाः सर्वे गत्वा पितामहम् ।
प्रणिपत्योचुरेकाग्राः प्रसाद्यैनं महर्षिभिः ॥ ८-२७-३ (५६२१२)
त्वया यत्कथितं देव त्रिदशारिनिबर्हणे ।
तथा तत्कृतमस्माभिः प्रसन्नश्च वृषध्वजः ॥ ८-२७-४ (५६२१३)
रथश्च विहितोऽस्माभिर्विचित्रायुधसंवृतः ।
सारथिं च न जानीमः कः स्यात्तस्मिन्रथोत्तमे ॥ ८-२७-५ (५६२१४)
तस्माद्विधीयतां कश्चित्सारथिर्देवसत्तम ।
सफलां तां गिरं देव कर्तुमर्हसि नो विभो ।
एवमस्मासु हि पुरा भगवन्नुक्तवानसि ॥ ८-२७-६ (५६२१५)
सदैव युक्तो रथसत्तमो वै
दुराधर्षो द्रावणः शात्रवाणाम् ।
पिनाकधन्वा विहितोऽत्र योद्धा
विभीषयन्दानवानुद्यतोऽसौ ॥ ८-२७-७ (५६२१६)
तथैव वेदाश्च हया रथाग्र्य
धरा सशैला च रथो महात्मनः ।
नक्षत्रवंशानुगतो वरूथी
यस्मिन्योद्धा सारथिनाऽभिरक्ष्यः ॥ ८-२७-८ (५६२१७)
तत्र सारथिरेष्टव्यः सर्वैरेतैर्विशेषवान् ॥ ८-२७-९ (५६२१८)

तं प्रविष्टा रथं देवा रथयोद्वारमेव च ।
कवचानि च शस्त्राणि कार्मुकं च पितामह ॥ ८-२७-१० (५६२१९)
त्वामृते सारथिं तत्र नान्यं पश्यामहे वयम् ।
त्वं हि सर्वैर्गणैर्युक्तोदेवताभ्योऽधिकः प्रभो ॥ ८-२७-११ (५६२२०)
त्वं देव शक्तो लोकेश नियन्तुं प्रद्रुतानिमान् ।
वेदांश्च सोपनिषदः सारथिर्भव नः स्वयम् ॥ ८-२७-१२ (५६२२१)
योद्धुं बलेन वीर्येण सत्वेन विनयेन च ।
अधिकःसारथिःकार्यो नास्ति चान्योऽधिको भवात् ॥ ८-२७-१३ (५६२२२)
स भवांस्तारयत्वस्मान्कुरु सारथ्यमव्यय ।
भवानभ्यधिकस्त्वत्तो नान्योस्ति भविता त्विह ॥ ८-२७-१४ (५६२२३)
त्वं हि देवेश सर्वैस्तु विशिष्टो वदतां वर ।
तं रथं त्वं समारुह्य संयच्छ परमान्हयान् ॥ ८-२७-१५ (५६२२४)
तव प्रसादाद्वध्येयुर्देव दैवतकण्टकाः ।
स नो रक्ष महाबाहो दैत्येभ्यो महतो भयात् ॥ ८-२७-१६ (५६२२५)
त्वं हि नो गतिरव्यग्र तवं न्त्रे गोप्ता महाव्रत ।
त्वत्प्रसादात्सुराः सर्वे पूज्यन्ते त्रिदिवे प्रभो ॥ ८-२७-१७ (५६२२६)
इति ते शिरसाऽगच्छंस्त्रिलोकेशं पितामहम् ।
देवाः प्रसादयामासुः सारथ्यायेति नः श्रुतम् ॥ ८-२७-१८ (५६२२७)
ब्रह्मोवाच। ८-२७-१९क्ष् (४८९५)
एवमेतत्सुरास्तथ्यं नान्यस्त्वभ्यधिको भवात् ।
सारथित्वं करिष्यामि शङ्करस्य महात्मनः ॥ ८-२७-१९ (५६२२८)
सर्वथा रथिनः श्रेयान्कर्तव्यो रथसारथिः ।
तस्मादेतद्यथातत्त्वं ज्ञात्वा युष्मांश्च सङ्गतान् ।
संयच्छामि हयानेष विबुधाय कपर्दिने ॥ ८-२७-२० (५६२२९)
दुर्योधन उवाच। ८-२७-२१क्ष् (४८९६)
एवमुक्त्वा जटाभारं संयम्य प्रपितामहः ।
परिधायाजिनं गाढं सन्न्यस्य च कमण्डलुम् ।
प्रतोदपाणिर्भगवानारुरोह रथं तदा ॥ ८-२७-२१ (५६२३०)
सारथौ कल्पिते देवैरीशानस्य महात्मनः ।
तस्मिन्नारोहति रथं कल्पितं लोकसम्भृतम् ।
शिरोभिः पतिता भूमौ तुरगा वेदसम्भृताः ॥ ८-२७-२२ (५६२३१)
उभाभ्यां लोकनाथाभ्यामास्थितं रथसत्तमम् ।
ओढुं न शक्ता वेदाश्वा जानुभ्यामपतन्महीम् ॥ ८-२७-२३ (५६२३२)
अभीशुभिस्तु भगवानुद्यम्य च हयान्विभुः ।
अस्तु वीर्यं च शौर्यं च वेदाश्वानामिति प्रभुः ।
रथं सञ्चोदयामास देवानां प्रभुरव्ययः ॥ ८-२७-२४ (५६२३३)

ततोऽधिरूढे वरदे रथं पशुपतिस्तदा ।
साधुसाध्विति देवेशं स्मयमानोऽभ्यभाषत ॥ ८-२७-२५ (५६२३४)
याहि देव यतो दैत्याश्चोदयाश्वानरिन्दम ।
पश्य बाह्वोर्बलं मेऽद्य निघ्नतः शात्रवान्रणे ॥ ८-२७-२६ (५६२३५)
ततोऽश्वांश्चोदयामास मनोमारुतरंहसः ।
पुराण्युद्दिश्य खस्थानि दानवानां तरस्विनाम् ॥ ८-२७-२७ (५६२३६)
ततस्ते सहसोत्पत्य वेदाख्या रथवाजिनः ।
क्षणेन तेन दैत्यानां पुराणि प्रापयन्हरम् ॥ ८-२७-२८ (५६२३७)
अथर्वाङ्गिरसौ चास्तां चक्ररक्षौ महात्मनः ।
अथाधिज्यं धनुः कृत्वा शर्वः सन्धाय तं शरम् ।
युक्त्वा पाशुपतास्त्रेण त्रिपुरं समचिन्तयत् ॥ ८-२७-२९ (५६२३८)
तस्मिन्स्थिते ततो राजन्रुद्रे सज्जितकार्मुके ।
पुराणि तेन कालेन जग्मुरेकत्वमाशु वै ॥ ८-२७-३० (५६२३९)
एकीभावं गते चैव त्रिपुरत्वमुपागते ।
बभूव तुमुलो हर्षो देवतानां महात्मनाम् ॥ ८-२७-३१ (५६२४०)
ततो देवगुणाः सर्वे सिद्धाश्च परमर्षयः ।
जयेति वाचो मुमुचुः संस्तुवन्तो महेश्वरम् ॥ ८-२७-३२ (५६२४१)
ततोऽग्रतः प्रादुरभूत्त्रिपुरं जघ्नुषोऽसुरान् ।
अनिर्देश्याग्र्यवपुषो देवस्यासह्यतेजसः ॥ ८-२७-३३ (५६२४२)
त्रीणि दृष्ट्वैव संस्थानि पुराण्यथ पिनाकधृत् ।
स तद्विकृष्य भगवान्दिव्यं लोकेश्वरो धनुः ।
त्रैलोक्यसारं तमिषुं मुमोच त्रिपुरं प्रति ॥ ८-२७-३४ (५६२४३)
एकबाणेन तं देवस्त्रिपुरं परमेश्वरः ।
निजघ्ने सासुरगणं देवदेवो महेश्वरः ॥ ८-२७-३५ (५६२४४)
बाणतेजोग्निदग्धं तद्विप्रकीर्णं सहस्रधा ।
महदार्तस्वरं कृत्वा नावशेषमुपागतम् ।
मद्रेश सासुरगणं प्रापतत्पश्चिमार्णवे ॥ ८-२७-३६ (५६२४५)
एवं हि त्रिपुरं दग्धं दानवाश्चाप्यशेषतः ।
महेश्वरेण क्रुद्धेन त्रैलोक्यस्य हितैषिणा ॥ ८-२७-३७ (५६२४६)
स चात्मक्रोधजो विह्निर्दहेत्युक्तो निवारितः ।
त्रैलोक्यमविशेषेण पुनर्दग्धुं प्रचक्रमे ॥ ८-२७-३८ (५६२४७)
कालाग्निमिव निर्दग्धुमुत्थितं तं पुनः पुनः ।
माकार्षीर्भस्मासाल्लोकानिति त्र्यक्षोऽब्रवीद्वचः ॥ ८-२७-३९ (५६२४८)
ततः प्रकृतिमापन्ना देलोकास्तथर्षयः ।
तुष्टुवुर्वाग्भिरग्र्याभिः स्थाणुं त्रिपुरवैरिणम् ॥ ८-२७-४० (५६२४९)
तेऽनुज्ञाता भगवता सर्वे जग्मुर्यथागतम् ।

कृतकामाः प्रसन्नेन प्रजापतिमुखाः सुराः ॥ ८-२७-४१ (५६२५०)
एवं रुद्रस्य कृतवान्सारथ्यं तु पितामहः ।
संयच्छ तुरगानस्य राधेयस्य महात्मनः ॥ ८-२७-४२ (५६२५१)
त्वं हि कृष्णाच्च कर्णाच्च फल्गुनाच्च गुणाधिकः ।
बलतो रूपतो योगादस्त्रसम्पद एव च ॥ ८-२७-४३ (५६२५२)
समासक्तं महीपाल कुरु मे हितमीप्सितम् ।
युद्धे ह्ययं रुद्रकल्पस्त्वं च ब्रह्मसमोऽनघ ।
तस्माच्छक्तौ युवां जेतुं मच्छत्रून्दिवि वा सुरान् ॥ ८-२७-४४ (५६२५३)
स यथा शल्य कर्णोऽयं श्वेताश्वं कृष्णसारथिम् ।
प्रमथ्य हन्यात्कौन्तेयं तथा नीतिर्विधीयताम् ॥ ८-२७-४५ (५६२५४)
त्वयि राज्यं सुखं चैव जीवितं जयमेव च ।
समासक्तं महीपाल कुरु मे हितमीप्सितम् ॥ ८-२७-४६ (५६२५५)
संयच्छास्य हयान्राजन्मत्प्रियार्थं परन्तप ॥ ॥ ८-२७-४७ (५६२५६)

इति श्रीमन्महाभारते कर्णपर्वणि सप्तविंशोऽध्यायः ॥ २७ ॥

---

कर्नपर्व-अध्यय०२८
॥ श्रीः ॥
८.२८. अध्यायः २८

Mahabharata - Karna Parva - Chapter Topics
दुर्योधनेन कर्णसारथ्ये शङ्कमानं शल्यम्प्रति
परशुरामचरित्रकीर्तनपूर्वकं कर्णस्य तदन्तेवासित्वादिगुणवत्तया
तत्सारथ्य करणे दोषाभावप्रतिपादनम् ॥ १ ॥

Mahabharata - Karna Parva - Chapter Text

८-२८-० (५६२५७)
दुर्योधन उवाच। ८-२८-०क्ष् (४८९७)
इमं चाप्यपरं भूय इति हासं निबोध मे ।
पितुर्मम सकाशे वै ब्राह्मणः प्राह धर्मवित् ॥ ८-२८-१ (५६२५८)
श्रुत्वा चैतद्वचश्चित्रं हेतुकार्यार्थतत्त्ववित् ।
कुरु शल्य विनिश्चित्य मा भूदत्र विचारणा ॥ ८-२८-२ (५६२५९)
भार्गवाणां कुले जातो जमदग्निर्महातपाः ।
तस्य रामेति विख्यातः पुत्रस्तेजोगुणान्वितः ॥ ८-२८-३ (५६२६०)
स तीव्रं तप आस्थाय सम्प्रसादितवान्भवम् ।

अस्त्रहेतोः प्रसन्नात्मा नियतः संयतेन्द्रियः ॥ ८-२८-४ (५६२६१)
तस्मै तुष्टो महादेवो भक्त्या च प्रशमेन च ।
हृद्गतं चास्य विज्ञाय दर्शयामास शङ्करः ।
प्रत्यक्षेण महादेवः स्वां तनुं सर्वशङ्करः ॥ ८-२८-५ (५६२६२)
शङ्कर उवाच। ८-२८-६क्ष् (४८९८)
राम तुष्टोऽस्मि भद्रं ते विदितं तव चेप्सितम् ।
कुरुष्व पूतमात्मानं सर्वमेतदवाप्स्यसि ॥ ८-२८-६ (५६२६३)
दास्यामि ते तदाऽस्त्राणि यदा पूतो भविष्यसि ।
अपात्रमसमर्थं च दहन्त्यस्त्राणि भार्गव ॥ ८-२८-७ (५६२६४)
इत्युक्तो जामदग्न्यस्तु देवदेवेन शूलिना ।
प्रत्युवाच महात्मानं शिरसाऽवनतः प्रभुम् ॥ ८-२८-८ (५६२६५)
यदा जानासि देवेश पात्रं मामस्त्रधारणे ।
तदा शुश्रूषतेऽस्त्राणि भवान्मे दातुमर्हति ॥ ८-२८-९ (५६२६६)
ततः स तपसा चैव व्रतेन नियमेन च ।
पूजोपहारबलिभिर्होममन्त्रपुरस्कृतैः ॥ ८-२८-१० (५६२६७)
समाराधितवाञ्शर्वं बहुवर्षगणांस्तदा ।
प्रसन्नश्च महादेवो भार्गवस्य महात्मनः ॥ ८-२८-११ (५६२६८)
असकृच्चाब्रवीत्तस्य गुणान्देव्याः सकाशतः ।
भक्तिमानेष सततं मयि रामो दृढव्रतः ॥ ८-२८-१२ (५६२६९)
एवमस्य गुणान्प्रीतो बहुशो कथयद्विभुः ।
देवतानां पितॄणां च समक्षमरिसूदन ॥ ८-२८-१३ (५६२७०)
एतस्मिन्नेव काले तु दैत्या ह्यासन्महाबलाः ।
तैस्तदा दर्पमोहाद्धि अबाध्यन्त दिवौकसः ॥ ८-२८-१४ (५६२७१)
ततः सम्भूय विबुधास्तान्हन्तुं कृतनिश्चयाः ।
चक्रुः शत्रुवधे यत्नं दैत्याञ्चेतुमशक्नुवन् ॥ ८-२८-१५ (५६२७२)
अभिगम्य ततो देवा महेश्वरमुमापतिम् ।
प्रासादयंस्तदा भक्त्या जहि शत्रुगणानिति ॥ ८-२८-१६ (५६२७३)
प्रतिज्ञाय ततो देवो देवतानां रिपुक्षयम् ।
रामं भार्गवमाहूय सोऽभ्यभाषत शङ्करः ॥ ८-२८-१७ (५६२७४)
रिपून्भार्गव देवानां जहि सर्वान्समागतान् ।
लोकानां हितकामार्थं मत्प्रियार्थं तथैव च ॥ ८-२८-१८ (५६२७५)
परशुराम उवाच। ८-२८-१९क्ष् (४८९९)
का शक्तिर्मम देवेश अकृतास्त्रस्य संयुगे ।
निहन्तुं दानवान्सर्वान्कृतास्त्रान्युद्धदुर्मदान् ॥ ८-२८-१९ (५६२७६)
ईश्वर उवाच। ८-२८-२०क्ष् (४९००)
गच्छ त्वं मदनुज्ञानान्निहनिष्यसि शात्रवान् ।

विजित्य च रिपून्सर्वान्गुणान्प्राप्स्यसि पुष्कलान् ॥ ८-२८-२० (५६२७७)
दुर्योधन उवाच। ८-२८-२१क्ष् (४९०१)
एतच्छ्रुत्वा तु वचनं प्रतिगृह्य च सर्वशः ।
रामः कृतस्वस्त्ययनः प्रययौ दानवान्प्रति ॥ ८-२८-२१ (५६२७८)
ततोऽजयद्देवशत्रून्महादर्पबलान्वितान् ।
वज्राशनिसमस्पर्शैः प्रहारैरेव भार्गवः ॥ ८-२८-२२ (५६२७९)
स दानवैः क्षततनुर्जामदग्न्यो नृपोत्तम ।
संस्पृष्टः स्थाणुना सद्यो निर्व्रणः समपद्यत ॥ ८-२८-२३ (५६२८०)
प्रीतश्च भगवान्देवः कर्मणा तेन तस्य वै ।
वरान्प्रादाद्बहुविधान्भार्गवाय महात्मने ॥ ८-२८-२४ (५६२८१)
उक्तश्च प्रीतियुक्तेन देवदेवेन शूलिना ॥ ८-२८-२५ (५६२८२)
निपातात्तव शस्त्राणां शरीरे याऽभवद्रुजा ।
तया ते मानुषं कर्म व्यपोहं भृगुनन्दन ।
गृहाणास्त्राणि दिव्यानि मत्सकाशाद्यथेप्सितं ॥ ८-२८-२६ (५६२८३)
ततोऽस्त्राणि समग्राणि वरांश्च मनसेप्सितान् ।
लब्ध्वा बहुविधान्रामः प्रणम्यशिरसा शिवम् ।
अनुज्ञां प्राप्य देवेशाज्जगाम स महातपाः ॥ ८-२८-२७ (५६२८४)
एवमेतत्पुरावृत्तं तथा कथितवानृषिः ॥ ८-२८-२८ (५६२८५)
भार्गवोऽपि ददौ सर्वं धनुर्वेदं महात्मने ।
कर्णाय पुरुषव्याघ्रः सुप्रीतेनान्तरात्मना ॥ ८-२८-२९ (५६२८६)
वृजिनं न भवेत्किञ्चिदस्य कर्णस्य पार्थिव ।
सूतेन वर्धितो नित्यं न सूतो नृप एव सः ॥ ८-२८-३० (५६२८७)
विशुद्धयोनिं विज्ञाय दिव्यान्यस्त्राण्यदाद्भृगुः ।
नापि सूतकुले जातं मन्ये कर्णं कथञ्चन ।
देवपुत्रमदं मन्ये क्षत्रियाणां कुलोद्भवम् ॥ ८-२८-३१ (५६२८८)
विसृष्टमविबोधार्थं कुलस्येति मतिर्मम ।
सर्वथा न ह्यसो शल्य कर्णः सूतकुलोद्भवः ॥ ८-२८-३२ (५६२८९)
सकुण्डलं सकवचं दीर्घबाहुमरिन्दमम् ।
कथमादित्यसङ्काशं मृगी सिंहं प्रसूयते ॥ ८-२८-३३ (५६२९०)
पश्य ह्यस्य भुजौ पीनौ नागराजकरोपमौ ।
वक्षः पश्य विशालं च सर्वशस्त्रसहं रणे ॥ ८-२८-३४ (५६२९१)
न त्वेव प्राकृतः कश्चित्कर्णो वैकर्तनो वृषा ।
महात्माह्येष राजेन्द्र रामशिष्यः प्रतापवान् ॥ ॥ ८-२८-३५ (५६२९२)

इति श्रीमन्महाभारते कर्णपर्वणि अष्टविंशोऽध्यायः ॥ २८ ॥
Mahabharata - Karna Parva - Chapter Footnotes

८-२८-१ नाशक्नुवन्निति नञध्याहारेण योजना ॥
८-२८-२८ अष्टाविंशोऽध्यायः ॥

---

कर्नपर्व-अध्यय०२९
॥ श्रीः ॥
८.२९. अध्यायः २९

Mahabharata - Karna Parva - Chapter Topics
दुर्योधनप्रार्थितेन शल्येन समयकरणपूर्वकं
कर्णरथसारथ्यस्वीकरणम् ॥ १ ॥

Mahabharata - Karna Parva - Chapter Text

८-२९-० (५६२९३)
दुर्योधन उवाच। ८-२९-०क्ष् (४९०२)
एवं स भगवान्देवः सर्वलोकपितामहः ।
सारथ्यमकरोत्तत्र ब्रह्मा रुद्रोऽभवद्रथी ॥ ८-२९-१ (५६२९४)
रथिनोऽभ्यधिको वीर कर्तव्यो रथसारथिः ।
तस्मात्त्वं पुरुषव्याघ्र नियच्छ तुरगान्युधि ॥ ८-२९-२ (५६२९५)
यथा देवगणैस्तत्र वृतो यत्नात्पितामहः ।
तथाऽस्माभिर्भवान्यत्नात्कर्णादभ्यधिको वृतः ॥ ८-२९-३ (५६२९६)
यथा देवैर्महाराज ईश्वरादधिको वृतः ।
तथा देवैर्महाराज क्षिप्रं रुद्रस्येव पितामहः ।
नियच्छ तुरगान्युद्धे राधेयस्य महाद्युते ॥ ८-२९-४ (५६२९७)
शल्य उवाच। ८-२९-५क्ष् (४९०३)
मयाप्येतन्नरश्रेष्ठ बहुशो नरसिंहयोः ।
कथ्यमानं श्रुतं दिव्यमाख्यानमतिमानुषम् ॥ ८-२९-५ (५६२९८)
यथा च चक्रे सारथ्यं भवस्य प्रपितामहः ।
यथाऽसुराश्च निहता इषुणैकेन भारत ॥ ८-२९-६ (५६२९९)
कृष्णस्य चापि विदितं सर्वमेतत्पुरा ह्यभूत् ॥ ८-२९-७ (५६३००)
यथा पितामहो जज्ञे भगवान्सारथिस्तदा ।
अनागतमतिक्रान्तं वेद कृष्णोऽपि तत्त्वतः ॥ ८-२९-८ (५६३०१)
एतदर्थं विदित्वाऽपि सारथ्यमुपजग्मिवान् ।
स्वयम्भूरिव रुद्रस्य कृष्णः पार्थस्य भारत ॥ ८-२९-९ (५६३०२)
यदि हन्याच्च कौन्तेयं सूतपुत्रः कथञ्चनः ।

दृष्ट्वा पार्थं हि निहतं स्वयं योत्स्यति केशवः ॥ ८-२९-१० (५६३०३)
शङ्खचक्रगदापाणिर्धक्ष्यते तव वाहिनीम् ।
न चापि तस्य क्रुद्धस्य वार्ष्णेयस्य महात्मनः ।
स्थास्यते प्रत्यनीकेषु कश्चिदत्र नृपस्तव ॥ ८-२९-११ (५६३०४)
सञ्जय उवाच। ८-२९-१२ (५६३०५)
तं तथा भाषमाणं तु मद्रराजमरिन्दमः ।
प्रत्युवाच महाबाहुरदीनात्मा सुतस्तव ॥ ८-२९-१२ (५६३०६)
मावमंस्था महाबाहो कर्णं वैकर्तनं रणे ।
सर्वशस्त्रभृतां श्रेष्ठं सर्वशास्त्रार्थपरागम् ॥ ८-२९-१३ (५६३०७)
यस्य ज्यातलनिर्घोषं श्रुत्वा भयकरं महत् ।
पाण्डवेयानि सैन्यानि विद्रवन्ति दिशो दश ॥ ८-२९-१४ (५६३०८)
प्रत्यक्ष ते महाबाहो यथा रात्रौ घटोत्कचः ।
मायाशतानि कुर्वाणो हतो मायापुरस्कृतः ॥ ८-२९-१५ (५६३०९)
न चातिष्ठत बीभत्सुः प्रत्यनीके कथञ्चन ।
एतांश्च दिवसान्सर्वान्भयेन महता वृतः ॥ ८-२९-१६ (५६३१०)
भीमसेनश्च बलवान्धनुष्कोट्याभिचोदितः ।
उक्तश्च संज्ञया राजन्मूढ औदरिको यथा ॥ ८-२९-१७ (५६३११)
माद्रीपुत्रौ तथा शूरौ येन जित्वा महारणे ।
कमप्यर्थं पुरस्कृत्य न हतौ युधि मारिष ॥ ८-२९-१८ (५६३१२)
येन वृष्णिप्रवीरस्तु सात्यकिः सात्वतां वरः ।
निर्जित्य समरे शूरो विरथश्च बलात्कृतः ॥ ८-२९-१९ (५६३१३)
सृञ्जयाश्चेतरे सर्वे धृष्टद्युम्नपुरोगमाः ।
असकृन्निर्जिताः सङ्ख्ये स्मयमानेन संयुगे ॥ ८-२९-२० (५६३१४)
तं कथं पाण्डवा युद्धे विजेष्यन्ति महारथम् ।
यो हन्यात्समरे क्रुद्धो वज्रहस्तं पुरन्दरम् ॥ ८-२९-२१ (५६३१५)
त्वं च सर्वास्त्रविद्वीरः सर्वविद्यास्त्रपारगः ।
बाहुवीर्येण ते तुल्यः पृथिव्यां नास्ति कश्चन ॥ ८-२९-२२ (५६३१६)
त्वं शल्यभूतः शत्रूणामविषह्यः पराक्रमे ।
ततस्त्वमुच्यसे राजञ्शल्य इत्यरिसूदन ॥ ८-२९-२३ (५६३१७)
तव बाहुबलं प्राप्य न शेकुः सर्वसात्वताः ।
तव बाहुबलाद्राजन्किं नु कृष्णो बलाधिकः ॥ ८-२९-२४ (५६३१८)
यथा हि कृष्णेन बलं धार्यं वै फल्गुने हते ।
तथा कर्णात्ययीभावे त्वया धार्यं महद्बलम् ॥ ८-२९-२५ (५६३१९)
किमर्थं समरे सैन्यं वासुदेवो न्यवारयत् ।
किमर्थं च भवान्सैन्यं न हनिष्यति मारिष ॥ ८-२९-२६ (५६३२०)
त्वत्कृते पदवीं गन्तुमिच्छेयं युधि मारिष ।

सोदराणां च वीराणां सर्वेषां च महीक्षिताम् ॥ ८-२९-२७ (५६३२१)
शल्य उवाच। ८-२९-२८क्ष् (४९०४)
यन्मां ब्रवीषि गान्धारे अग्रे सैन्यस्य मानद ।
विशिष्टं देवकीपुत्रात्प्रीतिमानस्म्यहं त्वयि ॥ ८-२९-२८ (५६३२२)
एष सारथ्यमातिष्ठे राधेयस्य यशस्विनः ।
युध्यतः पाण्डवाग्र्येण यथा त्वं वीर मन्यसे ॥ ८-२९-२९ (५६३२३)
समयश्च हि मे वीर कश्चिद्वैकर्तनं प्रति ।
उत्सृजेयं यथाश्रद्धमहं वाचोऽस्य सन्निधौ ॥ ८-२९-३० (५६३२४)
सञ्जय उवाच। ८-२९-३१क्ष् (४९०५)
तथेति राजन्पुत्रस्ते सह कर्णेन मारिष ।
अब्रवीत्मद्रराजानं सर्वक्षत्रस्य सन्निधौ ॥ ८-२९-३१ (५६३२५)
सारथ्यस्याभ्युपगमाच्छल्येनाश्वासितस्तदा ।
दुर्योधनस्तदा हृष्टः कर्णं तमभिषस्वजे ॥ ८-२९-३२ (५६३२६)
अब्रवीच्च पुनः कर्णं स्तूयमानः सुतस्तव ।
जहि पार्थान्रणे सर्वान्महेन्द्रो दानवानिव ॥ ८-२९-३३ (५६३२७)
स शल्येनाभ्युपगते हयानां सन्नियच्छने ।
कर्णो हृष्टमना भूयो दुर्योधनभाषत ॥ ८-२९-३४ (५६३२८)
नातिहृष्टमना ह्येष मद्रराजोऽभिभाषते ।
राजन्मधुरया वाचा पुनरेनं ब्रवीहि वै ॥ ८-२९-३५ (५६३२९)
ततो राजा महाप्राज्ञः सर्वास्त्रकुशलो बली ।
दुर्योधनोऽब्रवीच्छल्यं मद्रराजं महीपतिम् ॥ ८-२९-३६ (५६३३०)
पूरयन्निव घोषेण मेघगम्भीरया गिरा ।
शल्य कर्णोऽर्जुनेनाद्य योद्धव्यमिति मन्यते ॥ ८-२९-३७ (५६३३१)
तस्य त्वं पुरुषव्याघ्र नियच्छ तुरगान्युधि ।
कर्णो हत्वेतरान्सर्वान्फल्गुनं हन्तुमिच्छति ।
तस्याभीषुग्रहे राजन्प्रयाचे त्वां पुनः पुनः ॥ ८-२९-३८ (५६३३२)
पार्थस्य सचिवः कृष्णो यथाऽभीषुग्रहो वरः ।
तथा त्वमपि राधेयं सर्वतः परिपालय ॥ ८-२९-३९ (५६३३३)
सञ्जय उवाच। ८-२९-४०क्ष् (४९०६)
ततः शल्यः परिष्वज्य सुतं ते वाक्यमब्रवीत् ।
दुर्योधनममित्रघ्नं प्रीतो मद्राधिपस्तदा ॥ ८-२९-४० (५६३३४)
शल्य उवाच। ८-२९-४१क्ष् (४९०७)
एवं चेन्मन्यसे राजन्गान्धारे प्रियदर्शन ।
तस्मात्ते यत्प्रियं किञ्चित्तत्सर्वं करवाण्यहम् ॥ ८-२९-४१ (५६३३५)
यत्रास्मि भरतश्रेष्ठ योग्यः कर्मणि कर्हिचित् ।
तत्र सर्वात्मना युक्तो वक्ष्ये कार्यं परन्तप ॥ ८-२९-४२ (५६३३६)

यत्तु कर्णमहं ब्रूयां हितकामः प्रियाप्रिये ।
मम तत्क्षमतां सर्वं भवान्कर्णश्च सर्वशः ॥ ८-२९-४३ (५६३३७)
कर्ण उवाच। ८-२९-४४क्ष् (४९०८)
ईशानस्य यथा ब्रह्मा यथा पार्थस्य केशवः ।
तथा नित्यं हिते युक्तो मद्रराज भवस्व नः ॥ ८-२९-४४ (५६३३८)
शल्य उवाच। ८-२९-४५क्ष् (४९०९)
आत्मनिन्दात्मपूजा च परनिन्दा परस्तवः ।
अनाचरितमार्याणां वृत्तमेतच्चतुर्विधम् ॥ ८-२९-४५ (५६३३९)
यत्तु विद्वन्प्रवक्ष्यामि प्रxxxx यार्थमहं तव ।
आत्मनः स्तवसंयुक्तं तन्निबोध यथातथम् ॥ ८-२९-४६ (५६३४०)
अहं शक्रस्य सारथ्ये योग्यो मातलिवत्प्रभो ।
अप्रमादात्प्रयोगाच्च ज्ञानविद्याचिकित्सनैः ॥ ८-२९-४७ (५६३४१)
ततः पार्थेन सङ्ग्रामे युध्यमानस्य तेऽनघ ।
वाहयिष्यामि तुरगान्विज्वरो भव सूतज ॥ ॥ ८-२९-४८ (५६३४२)

इति श्रीमन्महाभारते कर्णपर्वणि एकोनत्रिंशोऽध्यायः ॥ २९ ॥
Mahabharata - Karna Parva - Chapter Footnotes

८-२९-५ नरसिंहयोः कृष्णार्जुनयोः ।अतस्तयोः साम्यं मम
कीर्तिकरमेवेति भावः। सुरसिंहयोरिति पाठे रुद्रपितामहयोः ॥
८-२९-२६ किमर्थमिति ।सारथ्यामात्रं प्रतिज्ञाय प्रातिभव्यं
चेत्कृष्णः कुर्यात्तर्हि त्वं युध्यन् तद्वन्मिथ्याप्रतिज्ञो न
भविष्यसीति भावः ॥
८-२९-२७ पदवीमानृण्यम् ॥
८-२९-४२ वक्ष्ये वोढास्मि ॥
८-२९-४५ आत्म निन्दापरस्तवावपि श्रेयस ।निन्द्यौ
किमुतात्मपूजापरनिन्दे। तदुभयमहं करोमीति भावः ॥
८-२९-४७ अप्रमादोऽवधानम्
। प्रयोगोऽश्वप्रेरणम्। ज्ञानमागामिदोषावेक्षणम्। विद्या
तत्परिहारज्ञानम्। चिकित्सनं दोषपरिहारसामर्थ्यम् ॥
८-२९-२९ एकोनत्रिंशोऽध्यायः ॥

---

कर्नपर्व-अध्यय०३०
॥ श्रीः ॥
८.३०. अध्यायः ३०

Mahabharata - Karna Parva - Chapter Topics
शल्येन सारथीभूयाधिष्ठितं रथमधिष्ठाय कर्णस्य रणाय निर्याणम् ॥ १ ॥

Mahabharata - Karna Parva - Chapter Text

८-३०-० (५६३४३)
दुर्योधन उवाच। ८-३०-०क्ष् (४९१०)
अयं ते कर्ण सारथ्यं मद्रराजः करिष्यति ।
कृष्णादभ्यधिको यन्ता देवेशस्येव मातलिः ॥ ८-३०-१ (५६३४४)
यथा हरिहयैर्युक्तं सङ्गृह्णाति स मातलिः ।
शल्यस्तथा तवाद्यायं संयन्ता रथवाजिनाम् ॥ ८-३०-२ (५६३४५)
योधे त्वयि रथस्थे च मद्रराजे च सारथौ ।
रथश्रेष्ठो ध्रुवं सङ्ख्ये पार्थानभिभविष्यति ॥ ८-३०-३ (५६३४६)
सञ्जय उवाच। ८-३०-४क्ष् (४९११)
ततो दुर्योधनो भूयो मद्रराजं तरस्विनम् ।
उवाच राजन्सङ्ग्रामेऽध्युषिते पर्युपस्थिते ॥ ८-३०-४ (५६३४७)
कर्णस्य यच्छ सङ्ग्रामे मद्रराज हयोत्तमान् ।
त्वयाऽभिगुप्तो राधेयो विजेष्यति धनञ्जयम् ॥ ८-३०-५ (५६३४८)
इत्युक्तो रथमास्थाय तथेति प्राह भारत ।
शल्येऽभ्युपगते कर्णः सारथिं सुमनाऽब्रवीत् ॥ ८-३०-६ (५६३४९)
त्वं सूत स्यन्दनं मह्यं कल्पयेत्यसकृत्त्वरन् ॥ ८-३०-७ (५६३५०)
ततो जैत्रं रथवरं गन्धर्वनगरोपमम् ।
विधिवत्कल्पितं भद्रं जयेत्युक्त्वा न्यवेदयत् ॥ ८-३०-८ (५६३५१)
तं रथं रथिनां श्रेष्ठः कर्णोऽभ्यर्च्य यथाविधि ।
सम्पादितं ब्रह्मविदा पूर्वमेव पुरोधसा ॥ ८-३०-९ (५६३५२)
कृत्वा प्रदक्षिणं यत्नादुपस्थाय च भास्करम् ।
समीपस्थं मद्रराजमारोह त्वमथाब्रवीत् ॥ ८-३०-१० (५६३५३)
ततः कर्णस्य दुर्धर्षं स्यन्दनप्रवरं महत् ।
आरुरोह महातेजाः शल्यः सिंह इवाचलम् ॥ ८-३०-११ (५६३५४)
ततः शल्याश्रितं दृष्ट्वा कर्णः स्वं रथमुत्तमम् ।
अध्यतिष्ठद्यथाऽम्भोदं विद्युत्वन्तं दिवाकरः ॥ ८-३०-१२ (५६३५५)
तावेकरथमारूढावादित्याग्निसमत्विषौ ।
अभ्राजेतां यथा मेघं सूर्याग्नी सहितौ दिवि ॥ ८-३०-१३ (५६३५६)
संस्तूयमानौ तौ वीरौ तदास्तां द्युतिमत्तमौ ।
ऋत्विक्सदस्यैरिन्द्राग्नी स्तूयमानाविवाध्वरे ॥ ८-३०-१४ (५६३५७)

स शल्यसङ्गृहीताश्वे रथे कर्णः स्थितो बभौ ।
धनुर्विष्फारयन्घोरं परिवेषीव भास्करः ॥ ८-३०-१५ (५६३५८)
आस्थितः स रथश्रेष्ठं कर्णः शरगभस्तिमान् ।
प्रबभौ पुरुषव्याघ्रो मन्दरस्थ इवांशुमान् ॥ ८-३०-१६ (५६३५९)
तं रथस्थं महाबाहुं युद्धायामिततेजसम् ।
दुर्योधनस्तु राधेयमिदं वचनमब्रवीत् ॥ ८-३०-१७ (५६३६०)
अकृतं द्रोणभीष्माभ्यां दुष्करं कर्म संयुगे ।
कुरुष्वाधिरथे वीर मिषतां सर्वधन्विनाम् ॥ ८-३०-१८ (५६३६१)
मनोगतं मम ह्यासीद्भीष्मद्रोणौ महारथौ ।
अर्जुनं भीमसेनं च निहन्ताराविति ध्रुवम् ॥ ८-३०-१९ (५६३६२)
ताभ्यां यदकृतं वीर वीरकर्म महामृधे ।
तत्कर्म कुरु राधेय वज्रपाणिरिवापरः ॥ ८-३०-२० (५६३६३)
गृहाण धर्मराजं वा जहि वा त्वं धनञ्जयम् ।
भीमसेनं च राधेय माद्रीपुत्रौ यमावपि ॥ ८-३०-२१ (५६३६४)
जयश्च तेऽस्तु भद्रं ते प्रयाहि पुरुषर्षभ ।
पाण्डुपुत्रस्य सैन्यानि कुरु सर्वाणि भस्मसात् ॥ ८-३०-२२ (५६३६५)
ततस्तूर्यसहस्राणि भेरीणामयुतानि च ।
वाद्यमानान्यरोचन्त मेघशब्दो यथा दिवि ॥ ८-३०-२३ (५६३६६)
प्रतिगृह्य तु तद्वाक्यं रथस्थो रथरुत्तमः ।
अभ्यभाषत राधेयः शल्यं युद्धविशारदम् ॥ ८-३०-२४ (५६३६७)
चोदयाश्वान्महाबाहो यावद्धन्मि धनञ्जयम् ।
भीमसेनं यमौ चोभौ राजानं च युधिष्ठिरम् ॥ ८-३०-२५ (५६३६८)
अद्य पश्यतु मे शल्य बाहुवीर्यं धनञ्जयः ।
अस्यतः कङ्कपत्राणां सहस्राणि शतानि च ॥ ८-३०-२६ (५६३६९)
अद्य क्षेप्स्याम्यहं शल्य शरान्परमतेजनान् ।
पाण्डवानां विनाशाय दुर्योधनजयाय च ॥ ८-३०-२७ (५६३७०)
सञ्जय उवाच। ८-३०-२८क्ष् (४९१२)
एतच्छ्रुत्वा वचस्तस्य शल्यः कर्णं वचोऽब्रवीत् ।
कथं नु तान्महावीर्यान्पाण्डवानवमन्यसे ॥ ८-३०-२८ (५६३७१)
सर्वास्त्रज्ञान्महेष्वासान्सर्वानेन महाबलान् ।
अनिवर्तिनो महाभागानजय्यान्सत्यविक्रमान् ।
अपि सञ्जनयेयुर्ये भयं साक्षाच्छतक्रतोः ॥ ८-३०-२९ (५६३७२)
यदा श्रोष्यसि निर्घोषं विस्फूर्जितमिवाशनेः ।
राधेय पार्थधनुषस्तदा नैवं वदिष्यसि ॥ ८-३०-३० (५६३७३)
यदा द्रक्ष्यसि भीमेन कुञ्जरानीकमाहवे ।
विशीर्णदन्तं निहतं तदा नैवं वदिष्यसि ॥ ८-३०-३१ (५६३७४)

यदा द्रक्ष्यसि सङ्ग्रामे धर्मपुत्रं यमौ तथा ।
शितैः पृषत्कैः कुर्वाणानभ्रच्छायामिवाम्बरे ॥ ८-३०-३२ (५६३७५)
अस्यतः क्षिण्वतश्चारींल्लघुहस्तान्दुरासदान् ।
पार्थिवागपि चान्यांस्त्वं तदा नैवं वदिष्यसि ॥ ८-३०-३३ (५६३७६)
सञ्जय उवाच। ८-३०-३४क्ष् (४९१३)
अनादृत्य तु तद्वाक्यं मद्रराजे भाषितम् ।
द्रक्ष्यस्यद्येत्यवोचत्तं शल्यं कर्णो जनेश्वर ॥ ॥ ८-३०-३४ (५६३७७)

इति श्रीमन्महाभारते कर्णपर्वणि त्रिंशोऽध्यायः ॥ ३० ॥
Mahabharata - Karna Parva - Chapter Footnotes

८-३०-२ हरिहयैरिन्द्रतुरगैर्युक्तं रथम् ॥
८-३०-४ अध्युषिते प्रातःकाले ॥
८-३०-३० त्रिंशोऽध्यायः ॥

---

कर्नपर्व-अध्यय०३१
॥ श्रीः ॥
८.३१. अध्यायः ३१

Mahabharata - Karna Parva - Chapter Topics
कर्णस्य रणप्रयाणकाले दुर्निमित्तप्रादुर्भावः ॥ १ ॥
कर्णेनात्मश्लाघनपूर्वकं पार्थवधे प्रतिज्ञाते तदसहमानेन
शल्येनार्जुनप्रशंसनपूर्वकं कर्णोपालम्भः ॥ २ ॥

Mahabharata - Karna Parva - Chapter Text

८-३१-० (५६३७८)
सञ्जय उवाच। ८-३१-०क्ष् (४९१४)
दृष्ट्वा कर्णं महावीर्यं युयुत्सं समवस्थितम् ।
चुक्रुशुः कुरवः सर्वे हृष्टरूपाः समन्ततः ॥ ८-३१-१ (५६३७९)
ततो दुन्दुभिनिर्घोषैर्भेरीणां निनदेन च ।
कोणशब्दैश्च विविधैर्गर्जितैश्च तरस्विनाम् ।
निर्ययुस्तावकाः सर्वे मृत्युं कृत्वा निवर्तनम् ॥ ८-३१-२ (५६३८०)
प्रयाते तु ततः कर्णे रथेषु मदितेषु च ।
चचाल च मही सर्वा ररास च सुविस्वरम् ॥ ८-३१-३ (५६३८१)
निःसरन्तो व्यदृश्यन्त सूर्यात्सप्त महाग्रहाः ॥ ८-३१-४ (५६३८२)

उल्कापाताश्च सञ्जज्ञुर्दिग्दाहाश्चैव दारुणाः ।
तथाऽशन्यश्च सम्पेतुर्ववुर्वाताश्च भैरवाः ॥ ८-३१-५ (५६३८३)
मृगपक्षिगणाश्चैव पृतनां बहुशस्तव ।
अपसव्यं तदा चक्रुर्वेदयन्तो महाभयम् ॥ ८-३१-६ (५६३८४)
प्रस्थितस्य च कर्णस्य निपेतुस्तुरगा भुवि ।
अस्थिवर्षं च पतितमन्तरिक्षाद्भयानकम् ॥ ८-३१-७ (५६३८५)
जज्वलुश्चैव शस्त्राणि ध्वजाश्चैव चकम्पिरे ।
अश्रूणि च व्यमुञ्चन्त वाहनानि विशाम्पते ॥ ८-३१-८ (५६३८६)
एते चान्ये च बहव उत्पातास्तत्र मारिष ।
समुत्पेतुर्विनाशाय कौरवाणां सुदारुणाः ॥ ८-३१-९ (५६३८७)
न च तान्गणयामासुः सर्वे दैवेन मोहिताः ।
प्रस्थितं सूतपुत्रं च जयेत्सूचुर्नराधिपाः ॥ ८-३१-१० (५६३८८)
गशल्येन सहितं दृष्ट्वा कर्णमाहवशोभिनम्'।
निर्जितान्पाण्डवांश्चैव मेनिरे तत्र कौरवाः ॥ ८-३१-११ (५६३८९)
ततो रथस्थः परवीरहन्ता
भीष्मद्रोणवतिवीर्यौ समीक्ष्य ।
समुज्ज्वलन्भास्करपावकाभो
वैकर्तनोऽसौ रथकुञ्जरो वृषा ॥ ८-३१-१२ (५६३९०)
अलं मनुष्यस्य सुखाय वर्तितुं
तथाहि युद्ध निहतः परैर्गुरुः ॥ ८-३१-२० (५६३९८)
हुताशनादित्यसमानतेजसं
पराक्रमे विष्णुपुरन्दरोपमम् ॥
नये ब-हस्पत्युशनःसमं सदा
न चैनमस्त्रं तदुपास्त दुःसहम् ॥ ८-३१-२१ (५६३९९)
सम्प्राक्रुष्टे रुदितस्त्रीकुमारे
पराभूते पौरुषे धार्तराष्ट्रे ।
कृत्यं मया नाद्य जानामि शल्य
प्रयाहि तस्माद्द्विषतामनीकम् ॥ ८-३१-२२ (५६४००)
स यत्र राजा पाण्डवः सत्यसन्धो
व्यवस्थितो भीमसेनार्जुनौ च ।
स वासुदेवः सात्यकिः सृञ्जयाश्च
यमौ च कस्तान्विषहेन्मदन्यः ॥ ८-३१-२३ (५६४०१)
तस्मात्क्षिप्रं मद्रपते प्रयाहि
रणे पाञ्चालान्पाण्डवान्सृञ्जयांश्च ।
तान्वा हनिष्यामि समेत्य सङ्ख्ये
यास्यामि वा द्रोणमुखो यमाय ॥ ८-३१-२४ (५६४०२)

न त्वेवाहं न गमिष्यामि मध्ये
तेषां शूराणामिति शल्याद्य विद्धि ।
मित्रद्रोहो मर्षणीयो न मेऽयं
त्यक्त्वा प्राणाननुयास्यामि द्रोणम् ॥ ८-३१-२५ (५६४०३)
प्राज्ञस्य मूढस्य च जीवितान्ते
नास्ति प्रमोक्षोऽन्तकसन्निभस्य ।
अतो विद्वन्नभियोत्स्यामि पार्थं
दिष्टं न शक्यं व्यतिवर्तितुं वै ॥ ८-३१-२६ (५६४०४)
कल्याणवृत्तः सततं हि राजा
वैचित्रवीर्यस्य सुतो ममासीत् ।
तस्यार्थसिद्ध्यर्थमहं त्यजामि
प्रियान्भोगान्दुस्त्यजं जीवितं च ॥ ८-३१-२७ (५६४०५)
वैयाघ्रचर्माणमकूजनाक्षं
हैमं त्रिकोशं रजतत्रिवेणुम् ।
रथप्रबर्हं तुरगप्रबार्है--
र्युक्तं प्रादान्मह्यमिमं हि रामः ॥ ८-३१-२८ (५६४०६)
धनूंषि चित्राणि निरीक्ष्य शल्य
ध्वजान्गदाः सायकांश्चोग्ररूपान् ।
असिं च दीप्तं परमायुधं च
शङ्खं च शुभ्रं स्वनवन्तमुग्रम् ॥ ८-३१-२९ (५६४०७)
पताकिनं वज्रनिपातनिः स्वनं
सिताश्वयुक्तं शुभतूणशोभितम् ।
इमं समास्थाय रथर्षभं रणे
दृढं हनिष्याम्यहमर्जुनं बलात् ॥ ८-३१-३० (५६४०८)
तं चेन्मृत्युः सर्वहरोऽभिरक्षे--
त्सदाऽप्रमत्तः समरे पाण्डुपुत्रम् ।
तं वा हनिष्यामि रणे समेत्य
यास्यामि वा द्रोणमुखो यमाय ॥ ८-३१-३१ (५६४०९)
यमवरुणकुबेरवासवा वा
यदि युगपत्सगणा महाहवे ।
जुगुपुरिह समेत्य फल्गुनं
किमु बहुना सह तैर्जयामि तम् ॥ ८-३१-३२ (५६४१०)
सञ्जय उवाच। ८-३१-३३क्ष् (४९१५)
इति रणरभसस्य कत्थत--
स्तदुपनिशम्य वचः स मद्रराट् ।
अवहसदवमन्य वीर्यवान्

प्रतिषिषिधे च जगाद चोत्तरम् ॥ ८-३१-३३ (५६४११)
शल्य उवाच। ८-३१-३४क्ष् (४९१६)
विरम विरम कर्ण कत्थना--
दतिरभसोऽप्यतिवाचमुक्तवान् ।
क्व च हि नरवरो धनञ्जयः
क्व पुनरिह त्वमहो नराधमः ॥ ८-३१-३४ (५६४१२)
यदुसदनमुपेन्द्रपालितं
त्रिदिवमिवामरराजरक्षितम् ।
प्रसभमतिविलोड्य को हरे--
त्पुरुषवरावरजामृतेऽर्जुनात् ॥ ८-३१-३५ (५६४१३)
त्रिभुवनसृजमीश्वरेश्वरं
क इह पुमान्भवमाह्वयेद्युधि ।
मृगवधकलहे ऋतेऽर्जुनात्
सुरपतिवीर्यसमप्रभावतः ॥ ८-३१-३६ (५६४१४)
असुरसुरमहोरगान्नरान्
गरुडपिशाचसयक्षराक्षसान् ।
इषुभिरजयदग्निगौरवात्
स्वभिलषितं च हविर्ददौ जयः ॥ ८-३१-३७ (५६४१५)
स्मरसि ननु यदा परैर्हृतः
सहधृतराष्ट्रसुतो विमोक्षितः ।
अधिरथज नरोत्तमैर्युतान्
कुरुषु बहून्विनिहत्य तानरीन् ॥ ८-३१-३८ (५६४१६)
प्रथममपि पलायिते त्वयि
प्रियकलहा धृतराष्ट्रसूनवः ।
स्मरसि ननु यदा प्रमोचिताः
खचरगणानवजित्य पाण्डवैः ॥ ८-३१-३९ (५६४१७)
समुदितबलवाहनाः पुनः
पुरुषवरेण जिताः स्थ गोग्रहे ।
सगुरुगुरुसुताः सभीष्मकाः
किमु न जितः स तदा त्वयाऽर्जुनः ॥ ८-३१-४० (५६४१८)
इदमपरमुपस्थितं पुन--
स्तव निधनाय सुयुद्धमद्य वै ।
यदि न रिपुभयात्पलायसे
समरगतोऽद्य हतोऽसि सूतज ॥ ८-३१-४१ (५६४१९)
सञ्जय उवाच। ८-३१-४२क्ष् (४९१७)
इति बहुपरुषं प्रभाषति

प्रमनसि मद्रपतौ रिपुस्तवम् ।
भृशमभिरुषितः सरन्तपः
कुरुपृतनापतिराह मद्रपम् ॥ ८-३१-४२ (५६४२०)
कर्ण उवाच। ८-३१-४३क्ष् (४९१८)
भवतु भवतु किं विकत्थसे
ननु मर्म तस्य हि युद्धमुद्यतम् ।
यदि स जयति मामिहाहवे
तत इदमस्तु सुकत्थितं तव ॥ ८-३१-४३ (५६४२१)
सञ्जय उवाच। ८-३१-४४क्ष् (४९१९)
एवमस्त्वित मद्रेश उक्त्वा नोत्तरमुक्तवान् ।
याहि शल्येति चाप्येनं कंर्णः प्राह युयुत्सया ॥ ८-३१-४४ (५६४२२)
स रथः प्रययौ शत्रून्निघ्नतः शल्यसारथिः ।
निघ्नन्नमित्रान्समरे तमोघ्नः सविता यथा ॥ ८-३१-४५ (५६४२३)
ततः प्रायात्प्रीतिमान्वै रथेन
वैयाघ्रेण श्वेतयुजाऽथ कर्णः ।
स चालोक्य ध्वजिनीं पाण्डवानां
धनञ्जयं त्वरया पर्यपृच्छत् ॥ ॥ ८-३१-४६ (५६४२४)

इति श्रीमन्महाभारते कर्णपर्वणि एकत्रिंशोऽध्यायः ॥ ३१ ॥
Mahabharata - Karna Parva - Chapter Footnotes

८-३१-२ तरस्विनामश्वादीनाम् ॥
८-३१-३ रराम शब्दं चकार ॥
८-३१-४ निःसरन्तो युद्धार्थमिति शेषः
। सूर्यात्सूर्यमारभ्य। सूर्यादयोऽन्योन्यं युध्यन्तीत्यर्थः ॥
८-३१-१२ भीष्मद्रोणौ अतिक्रान्तं वीर्यं ययोस्तावतिवीर्यौ समीक्ष्य
स्वकृत्यमालोच्य जगादेत्युत्तरेणान्वयः ॥
८-३१-१६ ८-३१-१८ आतुरान् आसन्नमृत्यून् ॥
८-३१-१९ भावxxxxx माति निश्चयम् ॥
८-३१-२० अस्त्रादीनि मनुष्यस्य सुखायxxxxxx गिति सम्बन्धः ॥
८-३१-२१ उपास्त उपातिष्ठत । त्रातुमिxxxxxx अस्त्रादि ॥
८-३१-२५ तेषां भीष्मादीनां मध्ये न गमिष्यामीति न अपितु
गमिष्याम्येवेत्यर्थः । सङ्ग्रामात्पलायने हि मित्रस्य दुर्योधनस्य
द्रोहः कृतः स्यात्तच्चासह्यम् ॥
८-३१-२६ जीवितान्ते आयुषः समाप्तौ प्रमोक्षो मृत्युनिवर्तनम् ॥
८-३१-२८ वैयाघ्रचर्माणं व्याघ्रचर्मपरिवृतम् ॥

८-३१-३३ रणरभसस्य रणोत्कटस्य ॥
८-३१-३४ अतिरभसोऽपि त्वं अतिवाचं स्वसामर्थ्यादधिकाम् ॥
८-३१-३५ पुरुषवरस्य कृष्णस्यावरजां कनीयसीं सुभद्राम् ॥
८-३१-३९ खचरगणान् गन्धर्वान् ॥
८-३१-४६ श्वेतयुजा श्वेताश्वयुजा ॥
८-३१-३१ एकत्रिंशोऽध्यायः ॥

---

कर्नपर्व-अध्यय०३२
॥ श्रीः ॥
८.३२. अध्यायः ३२

Mahabharata - Karna Parva - Chapter Topics
कर्णेन स्वस्यार्जुनप्रदर्शकाय तदभिमतपारितोषिकप्रदानप्रतिज्ञानम्
॥ १ ॥

Mahabharata - Karna Parva - Chapter Text

८-३२-० (५६४२५)
सञ्जय उवाच। ८-३२-०क्ष् (४९२०)
प्रयत्नेन तदा कर्णो हर्षयन्वाहिनीं तव ।
एकैकं समरे दृष्ट्वा पाण्डवं पर्यपृच्छत ॥ ८-३२-१ (५६४२६)
यो ममाद्य महात्मानं दर्शयेच्छ्वेतवाहनम् ।
तस्मै दद्यामभिप्रेतं धनं यन्मनसेच्छति ॥ ८-३२-२ (५६४२७)
न चेत्तदभिमन्येत तस्मै दद्यामहं पुनः ।
शकटं रत्नसम्पूर्णं यो मे ब्रूयाद्धनञ्जयम् ॥ ८-३२-३ (५६४२८)
न चेत्तदभिमन्येत पुरुषोऽर्जुनदर्शिवान् ।
शतं दद्यां गवां तस्मै नैत्यकं कांस्यदोहनम् ॥ ८-३२-४ (५६४२९)
शतं ग्रामवरांश्चैव दद्यामर्जुनदर्शिने ।
तथा तस्मै पुनर्दद्यां श्वेतमश्वतरीरथम् ।
युक्तमञ्जनकेशीभिर्यो मे ब्रूयाद्धनञ्जयम् ॥ ८-३२-५ (५६४३०)
न चेत्तदभिमन्येत पुरुषोऽर्जुनदर्शिवान् ।
अन्यं वाऽस्मै पुनर्दद्यां सौवर्णं हस्तिषङ्गवम् ॥ ८-३२-६ (५६४३१)
तथाप्यस्मै पुनर्दद्यां स्त्रीणां शतमलङ्कृतम् ।
श्यामानां निष्ककण्ठीनां गीतवाद्यविपश्चिताम् ॥ ८-३२-७ (५६४३२)
न चेत्तदभिमन्येत पुरुषोऽर्जुनदर्शिवान् ।
तस्मै दद्यां शतं नागाञ्शतं ग्रामाञ्शतं रथान् ॥ ८-३२-८ (५६४३३)

सुवर्णस्य च मुख्यस्य हयाग्र्याणां शतं शतान् ।
ऋद्ध्या गुणैः सुदान्तांश्च धुर्यवाहान्सुशिक्षितान् ॥ ८-३२-९ (५६४३४)
तथा सुवर्णशृङ्गीणां गोधेनूनां चतुःशतम् ।
दद्यां तस्मै सवत्सानां यो मे ब्रूयाद्धनञ्जयम् ॥ ८-३२-१० (५६४३५)
न चेत्तदभिमन्येत पुरुषोऽर्जुनदर्शिवान् ।
अन्यदस्मै वरं दद्यां श्वेतान्पञ्चशतान्हयान् ॥ ८-३२-११ (५६४३६)
हेमभाण्डपरिच्छन्नान्सुमृष्टमणिभूषणान् ।
सुदान्तानपि चैवाहं दद्यामष्टादशापरान् ॥ ८-३२-१२ (५६४३७)
रथं च शुभ्रं सौवर्णं दद्यां तस्मै स्वलङ्कृतम् ।
युक्तं परमकाम्भोजैर्यो मे ब्रूयाद्धनञ्जयम् ॥ ८-३२-१३ (५६४३८)
न चेत्तदभिमन्येत पुरुषोऽर्जुनदर्शिवान् ।
अन्यदस्मै वरं दद्यां कुञ्जराणां शतानि षट् ॥ ८-३२-१४ (५६४३९)
काञ्चनैर्विविधैर्भाण्डैराच्छन्नान्हेममालिनः ।
उत्पन्नानपरान्तेषु विनीतान्हस्तिशिक्षकैः ॥ ८-३२-१५ (५६४४०)
न चेत्तदभिमन्येत पुरुषोऽर्जुनदर्शिवान् ।
अन्यदस्मै वरं दद्यां वैश्यग्रामांश्चतुर्दश ॥ ८-३२-१६ (५६४४१)
सुस्फीतान्धनसंयुक्तान्प्रत्यासन्नवनोदकान् ।
अकुतोभयान्सुसम्पन्नान्राजभोज्यांश्चतुर्दश ॥ ८-३२-१७ (५६४४२)
दासीनां निष्ककण्ठीनां मागधीनां शतं तथा ।
प्रत्यग्रवयसां दद्यां यो मे ब्रूयाद्धनञ्जयम् ॥ ८-३२-१८ (५६४४३)
न चेत्तदभिमन्येत पुरुषोऽर्जुनदर्शिवान् ।
अन्यं तस्मै वरं दद्यां यमसौ कामयेत्स्वयम् ॥ ८-३२-१९ (५६४४४)
पुत्रदारान्विहायैव यदन्यद्वित्तमस्ति मे ।
तच्च तस्मै पुनर्दद्यां यद्यच्च मनसेच्छति ॥ ८-३२-२० (५६४४५)
हत्वा च सहितौ कृष्णौ तयोर्वित्तानि सर्वशः ।
तस्मै दद्यामहं यो मे प्रब्रूयात्केशवार्जुनौ ॥ ८-३२-२१ (५६४४६)
सञ्जय उवाच। ८-३२-२२क्ष् (४९२१)
एता वाचः सुबहुशः कर्ण उच्चारयन्युधि ।
दध्मौ सागरसम्भूतं सुस्वरं शङ्खमुत्तमम् ॥ ८-३२-२२ (५६४४७)
ता वाचः सूतपुत्रस्य तथा युक्ता निशम्य तु ।
दुर्योधनो महाराज संहृष्टः सानुजोऽभवत् ॥ ८-३२-२३ (५६४४८)
ततो दुन्दुभिनिर्घोषो मृदङ्गानां च सर्वशा ।
सिंहनादः सवादित्रः कुञ्चराणां च निःस्वनः ॥ ८-३२-२४ (५६४४९)
प्रादुरासीत्तदा राजंस्त्वत्सैन्ये पुरुषर्षभ ।
योधानां सम्प्रहृष्टानां तथा समभवत्स्वनः ॥ ८-३२-२५ (५६४५०)
तथा प्रहृष्टे सैन्ये तं प्लुवमानं महारथम् ।

विकत्थमानं च तदा राधेयमरिकर्शनम् ।
मद्रराजः प्रहस्येदं वचनं प्रत्यभाषत ॥ ॥ ८-३२-२६ (५६४५१)

इति श्रीमन्महाभारते कर्णपर्वणि द्वात्रिंशोऽध्यायः ॥ ३२ ॥
Mahabharata - Karna Parva - Chapter Footnotes

८-३२-३ अभिमन्येत अल्पमित्यवजानीत ॥
८-३२-५ अञ्जनकेशीभिः कृष्णकेशीभिरश्वतरीभिर्युवतीभिर्वा युक्तम् ॥
८-३२-६ हस्तिषङ्गवं हस्तिषद्कम् षट्त्वे षङ्गवजित्यनेन
षङ्गवच्प्रत्ययः ।हस्तिषङ्गवमिच्छन्ति वीराः षद्के च
दन्तिनामिति प्राञ्चः। अन्यं वा सौवर्णरथमिति शेषः। हस्तितुल्याः
षट् गाव उक्षाणो यस्मिन् तम्। षट्हस्तिन एव गोवत् वोढारो यस्य
तादृशम् ॥
८-३२-७ श्यामानामप्रजातानाम् । निष्कमुरोभूषणम् ॥
८-३२-९ शतंशतान्दशसहस्राणि । ऋद्ध्या पुष्ट्या। सुदान्तान्
विनीतान्। धुर्यवाहान् रथोद्वहनक्षमान् ॥
८-३२-१२ भाण्डमाभरणम् ॥
८-३२-१५ अपरान्तेषु पश्चिमकच्छेषु ॥
८-३२-१८ प्रत्यग्रवयसामभिनवयौवनानाम् ॥
८-३२-२६ प्लवमानं प्रयान्तम् ॥
८-३२-३२ द्वात्रिंशोऽध्यायः ॥

---

कर्नपर्व-अध्यय०३३
॥ श्रीः ॥
८.३३. अध्यायः ३३

Mahabharata - Karna Parva - Chapter Topics
कर्णगर्वोक्तिमसहमानेन शल्येन तद्ग्रर्हणम् ॥ १ ॥

Mahabharata - Karna Parva - Chapter Text

८-३३-० (५६४५२)
शल्य उवाच। ८-३३-०क्ष् (४९२२)
मा सूतपुत्र मन्येत(थाः) सौवर्णं हस्तिषङ्गवम् ।
प्रयच्छसि मुधैव त्वं द्रक्ष्यस्यद्य धनञ्जयम् ॥ ८-३३-१ (५६४५३)
मा सूतपुत्र दानेन सौवर्णं हस्तिषङ्गवम् ।

प्रयच्छ पुरुषायाद्य द्रक्ष्यसि त्वं धनञ्जयम् ॥ ८-३३-२ (५६४५४)
बलेन मत्तस्त्यजसि वसु वैश्रवणो यथा ।
अयत्नेनैव राधेय द्रष्टास्यद्य धनञ्जयम् ॥ ८-३३-३ (५६४५५)
पुरा सृजसि यच्चापि वित्तं बहु च मूढवत् ।
अपात्रदानाद्ये दोषास्तान्मोहान्नावबुध्यसे ॥ ८-३३-४ (५६४५६)
यत्प्रवेदयसे वित्तं बहु तेन खलु त्वया ।
शक्यं बहुविधैर्यज्ञैर्यष्टुं सूत यजस्व तैः ॥ ८-३३-५ (५६४५७)
यच्च प्रार्थयसे हन्तुं कृष्णौ मोहाद्वृथैव तत् ।
न हि शुश्रुम सम्मर्दे क्रोष्ट्रा सिंहौ निपातितौ ॥ ८-३३-६ (५६४५८)
अप्रार्थितं प्रार्थयसे सुहृदो न हि सन्ति ते ।
ये त्वां निवारयन्त्याशु प्रपतन्तं हुताशने ॥ ८-३३-७ (५६४५९)
कार्याकार्यं न जानीषे कालपक्कोऽस्यसंशयम् ।
बह्वबद्धमकर्णीयं को हि ब्रूयाज्जिजीविषुः ॥ ८-३३-८ (५६४६०)
समुद्रतरणं दोर्भ्यां कण्ठे बद्धवा यथा शिलाम् ।
गिर्यग्राद्वा निपतनं तादृक्त्व चिकीर्षितम् ॥ ८-३३-९ (५६४६१)
सहितः सर्वयोधैस्त्वं व्यूढानीकैः सुरक्षितः ।
धनञ्जयेन युध्यस्व श्रेयश्चेत्प्राप्तुमिच्छसि ॥ ८-३३-१० (५६४६२)
हितार्थं धार्तराष्ट्रस्य ब्रवीमि त्वां न हिंसया ।
श्रद्धस्वेदं मया प्रोक्तं यदि तेऽस्ति जिजीविषा ॥ ८-३३-११ (५६४६३)
कर्ण उवाच। ८-३३-१२क्ष् (४९२३)
स्वबाहुवीर्यमाश्रित्य प्रार्थयाम्यर्जुनं रणे ।
त्वं तु मित्रमुखः शत्रुर्मां भीषयितुमिच्छसि ॥ ८-३३-१२ (५६४६४)
न मामस्मादभिप्रायात्कश्चिदद्य निवर्तयेत् ।
अपीन्द्रो वज्रमुद्यम्य किमु मर्त्यः कथञ्चन ॥ ८-३३-१३ (५६४६५)
सञ्जय उवाच। ८-३३-१४क्ष् (४९२४)
इति कर्णस्य वाक्यान्ते शल्यः प्राहोत्तरं वचः ।
चुकोपयिषुरत्यर्थं कर्णं मद्रेश्वरः पुनः ॥ ८-३३-१४ (५६४६६)
यदा वै त्वां फल्गुनबाहुवेगा--
ज्ज्याचोदिता वेगवन्तोऽग्निकल्पाः ।
अन्वेतारः कङ्कपत्राः शिताग्रा--
स्त्यक्ष्यत्येषा स्वां तदा कर्ण बुद्धिः ॥ ८-३३-१५ (५६४६७)
यदा दिव्यं धनुरादाय पार्थः
प्रतापयन्पृतनां सव्यसाची ।
त्वां मर्दयिष्यत्यसुखैः पृषत्कै--
स्तदापृच्छां त्यक्ष्यसे पाण्डवस्य ॥ ८-३३-१६ (५६४६८)
बालश्चन्द्रं मातुरङ्के शयानो

यथा कश्चित्प्रार्थयतेऽपहर्तुम् ।
तद्वन्मोहाद्द्योतामानं रथस्थं
जेतुं पार्थं काङ्क्षसे सूतपुत्र ॥ ८-३३-१७ (५६४६९)
हरादस्त्रं तीक्ष्णधारं यथाऽद्य
सर्वाणि गात्राणि निकर्षसि त्वम् ।
सुतीक्ष्णशस्त्रोपमकर्मणेह
युयुत्ससे फल्गुनेनाद्य कर्ण ॥ ८-३३-१८ (५६४७०)
हन्यादसिं तीक्ष्णधारं यथाऽतः
सुतेजनं निहितं वै पृथिव्याम् ।
तथा खनस्यद्य शितान्पृषत्का--
न्यथार्थयस्यर्जुनेनेह युद्धम् ॥ ८-३३-१९ (५६४७१)
त्रिशूलमाश्लिष्य सुतीक्ष्णधारं
सर्वाणि गात्राणि विघर्षसि त्वम् ।
सुतीक्ष्णधारोपमकर्मणा त्वं
युयुत्ससे योऽर्जुनेनाद्य कर्ण ॥ ८-३३-२० (५६४७२)
क्रुद्धं सिंहं केसरिणं बृहन्तं
बालो मूढः क्षुद्रमृगस्तरस्वी ।
समाह्वयेद्धृष्टमुपेत्य योद्धुं
तथा त्वमद्याह्वयसे हि पार्थम् ॥ ८-३३-२१ (५६४७३)
मा सूतपुत्राह्वय राजपुत्रं
महावीर्यं केसरिणं यथैव ।
वने शृगालः पिशितेन तृप्तः
पार्थं समासाद्य विनङ्क्ष्यसि त्वम् ॥ ८-३३-२२ (५६४७४)
ईषादन्तं महानागं प्रभिन्नकरटामुखम् ।
शशको हयसे युद्धे कर्ण पार्थं धनञ्जयम् ॥ ८-३३-२३ (५६४७५)
विलस्थं कृष्णसर्पं त्वं जाल्यात्काष्ठेन विध्यसि ।
महाविषं पूर्णकोपं यत्पार्थं योद्धुमिच्छसि ॥ ८-३३-२४ (५६४७६)
सिंहं केसरिणं क्रुद्धमभिक्रम्याभिनर्दसे ।
शृगाल इव मूढस्त्वं नृसिंहं कर्ण पाण्डवम् ॥ ८-३३-२५ (५६४७७)
सुपर्णं पतगश्रेष्ठं वैनतेयं तरस्विनम् ।
स्वगेवाह्वयसे पार्थं तथा कर्ण धनञ्जयम् ॥ ८-३३-२६ (५६४७८)
सर्वाम्भसां निधिं भीमं मूर्तिमन्तं झषाकुलम् ।
चन्द्रोदये विवर्धन्तमप्लुवस्त्वं तितीर्षसि ॥ ८-३३-२७ (५६४७९)
ऋषभं दुन्दुभिग्रीवं तीक्ष्णशृङ्गं प्रहारिणम् ।
वत्स आह्वयसे युद्धे कर्ण पार्थं धनञ्जयम् ॥ ८-३३-२८ (५६४८०)
महामेघं महाघोषं दर्दुरः प्रतिनर्दसि ।

बाणतोयप्रदं काले नरपर्जन्यमर्जुनम् ॥ ८-३३-२९ (५६४८१)
यथा च श्वा गृहस्थस्तु व्याघ्रं वनगतं भषेत् ।
तथा त्वं भषसे कर्ण नरव्याघ्रं धनञ्जयम् ॥ ८-३३-३० (५६४८२)
शृगालो हि वने कर्ण शशैः परिवृतो वसन् ।
मन्यते सिंहमात्मानं यावत्सिंहं न पश्यति ॥ ८-३३-३१ (५६४८३)
तथा त्वमपि राधेय सिंहमात्मानमिच्छसि ।
अपश्यञ्शत्रुदमनं नरसिंहं रणेऽर्जुनम् ॥ ८-३३-३२ (५६४८४)
व्याघ्रं त्वं मन्यसेऽऽत्मानं यावत्कृष्णौ न पश्यसि ।
समास्थितावेकरथे सूर्याचन्द्रमसाविव ॥ ८-३३-३३ (५६४८५)
यावद्गाण्डीवघोषं त्वं न शृणोषि महाहवे ।
तावदेव त्वया कर्ण शक्यं वक्तुं यथेच्छसि ॥ ८-३३-३४ (५६४८६)
रथशङ्खधनुःशब्दैर्नादयन्तं दिशो दश ।
नर्दन्तमिव शार्दूलं दृष्ट्वा क्रोष्टा भविष्यसि ॥ ८-३३-३५ (५६४८७)
नित्यमेव शृगालस्त्वं नित्यं सिंहो धनञ्जयः ।
वीरप्रद्वेषणान्मूढ तस्मात्क्रोष्टेव लक्ष्यसे ॥ ८-३३-३६ (५६४८८)
यथाऽऽखुः स्याद्बिडालश्च श्वा व्याघ्रश्च बलाबले ।
यथा शृगालः सिंहश्च यथा च शशकुञ्जरौ ॥ ८-३३-३७ (५६४८९)
यथाऽनृतं च सत्यं च यथा चापि विषामृते ।
तथा त्वमपि पार्थश्च प्रख्यातावात्मकर्मभिः ॥ ॥ ८-३३-३८ (५६४९०)

इति श्रीमन्महाभारते कर्णपर्वणि त्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥
Mahabharata - Karna Parva - Chapter Footnotes

८-३३-३ वसु वित्तम् । द्रष्टासि द्रक्ष्यसि ॥
८-३३-८ अबद्धं अनर्थकम् । अकर्णीयं अनाकर्णनीयम् ॥
८-३३-१० सहितो युध्यस्व नत्वेकाकी ॥
८-३३-२७ झषैर्मीनैराकुलं पूर्णम् । अप्लवः बाहुभ्यामित्यर्थः ॥
८-३३-२८ दुन्दुभिग्नीवं दुन्दुभिखनकण्ठम् ॥
८-३३-३३ त्रयस्त्रिंशोऽध्यायः ॥

---

कर्नपर्व-अध्यय०३४
॥ श्रीः ॥
८.३४. अध्यायः ३४

Mahabharata - Karna Parva - Chapter Topics
कर्णेन मर्मोद्घाटनपूर्वकं शल्यगर्हणम् ॥ १ ॥

८-३४-० (५६४९१)
सञ्जय उवाच। ८-३४-०क्ष् (४९२५)
अधिक्षिप्तस्तु राधेयः शल्येनामिततेजसा ।
शल्यमाह सुसङ्क्रुद्धो वाक्षल्यमवधारयन् ॥ ८-३४-१ (५६४९२)
कर्ण उवाच। ८-३४-२क्ष् (४९२६)
गुणान्गुणवतां शल्य गुणवान्वेत्ति नागुणः ।
त्वं तु नित्यं गुणैर्हीनः किं ज्ञास्यसि गुणागुणान् ॥ ८-३४-२ (५६४९३)
अर्जुनस्य महास्त्राणि क्रोधं वीर्यं धनुः शरान् ।
अहं शल्याभिजानामि न त्वं जानासि तत्तथा ॥ ८-३४-३ (५६४९४)
तथा कृष्णस्य माहात्म्यमृषभस्य महीक्षिताम् ।
यथाहं शल्य जानामि न त्वं जानासि तत्तथा ॥ ८-३४-४ (५६४९५)
एवमेवात्मनो वीर्यमहं वीर्यं च पाण्डवे ।
जानंस्तावाह्वये युद्धे शल्य नाग्निं पतङ्गवत् ॥ ८-३४-५ (५६४९६)
अस्ति चाऽयमिषुः शल्य सुपुङ्खो रक्तभोजनः ।
एकस्तूणीशयः पत्री सुधौतः समलङ्कृतः ॥ ८-३४-६ (५६४९७)
शेते चन्दनचूर्णेन पूजितो बहुलाः समाः ।
आहेयो विषवानुग्रो नराश्वद्विपसङ्घहा ॥ ८-३४-७ (५६४९८)
घोररूपो महारौद्रस्तनुत्रास्थिविदारणः ।
निर्भिन्द्यां येन रुष्टोऽहमपि मेरुं महागिरिम् ॥ ८-३४-८ (५६४९९)
तमहं जातु नास्येयमन्यस्मिन्फल्गुनादृते ।
कृष्णाद्वा देवकीपुत्रात्सत्यं चापि शृणुष्व मे ॥ ८-३४-९ (५६५००)
तेनाहमिषुणा शल्य वासुदेवधनञ्जयौ ।
योत्स्ये परमसंरब्धौ तत्कर्म सदृशं मम ॥ ८-३४-१० (५६५०१)
सर्वेषां वृष्णिवीराणां कृष्णे लक्ष्मीः प्रतिष्ठिता ।
सर्वेषां पाण्डुपुत्राणां जयः पार्थे प्रतिष्ठितः ।
उभयं तु समासाद्य को निवर्तितुमर्हति ॥ ८-३४-११ (५६५०२)
तावेतौ पुरुषव्याघ्रौ समेतौ स्यन्दने स्थितौ ।
मामेकमभिसंयुद्धौ सुजातं पश्य शल्य मे ॥ ८-३४-१२ (५६५०३)
पितृष्वसामातुलजौ भ्रातरावपराजितौ ।
मणी सूत्र इव प्रोतौ द्रष्टासि निहतौ मया ॥ ८-३४-१३ (५६५०४)
अर्जुने गाण्डिवं कृष्णे चक्रं तार्क्ष्यकपिध्वजौ ।
भीरूणां त्रासजननं शल्य हर्षकरं मम ॥ ८-३४-१४ (५६५०५)
त्वं तु दुष्प्रकृतिर्मूढो महायुद्धेष्वकोविदः ।

भयावदीर्णः सन्त्रासादबद्धं बहुः भाषसे ॥ ८-३४-१५ (५६५०६)
संस्तौषि तौ तु केनापि हेतुना त्वं कुदेशज ।
तौ हत्वा समरे हन्ता त्वामद्य सह बान्धवम् ॥ ८-३४-१६ (५६५०७)
पापदेशज दुर्बुद्धे क्षुद्र क्षत्रियपांसन ।
सुहृद्रूपो रिपुः किं मां कृष्णाभ्यां भीषयिष्यसि ॥ ८-३४-१७ (५६५०८)
तौ वा मामद्य हन्तारौ हनिष्ये वाऽपि तावहम् ।
नाहं बिभेमि कृष्णाभ्यां विजानन्नात्मनो बलम् ॥ ८-३४-१८ (५६५०९)
वासुदेवसहस्रं वा फल्गुनानां शतानि वा ।
अहमेको हनिष्यामि जोषमास्स्व कुदेशज ॥ ८-३४-१९ (५६५१०)
स्त्रियो बालाश्च वृद्धाश्च प्रायः क्रीडागता जनाः ॥ ८-३४-२० (५६५११)
या गाथाः सम्प्रगायन्ति कुर्वतोऽध्ययनं यथा ।
ता गाथाः शृणु मे शल्य मद्रकेषु दुरात्मसु ॥ ८-३४-२१ (५६५१२)
ब्राह्मणैः कथिताः पूर्वं यथावद्राजसन्निधौ ।
श्रुत्वा चैकमना मूढ मम वा ब्रूहि चोत्तरम् ॥ ८-३४-२२ (५६५१३)
मित्रध्रुङ्मद्रको नित्यं यो नो द्वेष्टि स मद्रकः ।
मद्रके सङ्गतं नास्ति क्षुद्रवाक्ये नराधमे ॥ ८-३४-२३ (५६५१४)
दुरात्मा मद्रको नित्यं नित्यमानृतिकोऽनृजुः ।
यच्चान्यदपि दौरात्म्यं मद्रकेष्विति नः श्रुतम् ॥ ८-३४-२४ (५६५१५)
पिता पुत्रश्च माता च श्वश्रूश्वशुरमातुलाः ।
भगिनी दुहिता भ्राता नप्ताऽन्ये ते च बान्धवाः ॥ ८-३४-२५ (५६५१६)
वयस्याभ्यागताश्चान्ये दासीदासाश्च सङ्गताः ।
पुम्भिर्विमिश्रा नार्यश्च ज्ञाताज्ञाताः स्वयेच्छया ॥ ८-३४-२६ (५६५१७)
येषां गृहेष्वशिष्टानां सक्तुमद्याशिनां सदा ।
पीत्वा शीधु सगोमांसं क्रन्दन्ति च हसन्ति च ॥ ८-३४-२७ (५६५१८)
गायन्ति चाप्यबद्धानि प्रवर्तन्ते च कामतः ।
कामप्रलापिनोऽन्योन्यं तेषु धर्मःकथं भवेत् ॥ ८-३४-२८ (५६५१९)
मद्रकेष्ववलिप्तेषु प्रख्याताशुभकर्मसु ।
नापि वैरं न सौहार्दं मद्रकेण समाचरेत् ॥ ८-३४-२९ (५६५२०)
मद्रके सङ्गतं नास्ति मद्रको हि सदा मलः ।
मद्रकेषु च संसृष्टं शौचं गान्धारकेषु च ॥ ८-३४-३० (५६५२१)
राजयाजकयाज्ये हि यथा दत्तं हविर्नशेत् ।
शूद्रसंस्कारको विप्रो यथा याति पराभवम् ॥ ८-३४-३१ (५६५२२)
यथा ब्रह्मद्विषो नित्यं गच्छन्तीह पराभवम् ।
यथैव संगतं कृत्वा नरः पतति मद्रकैः ॥ ८-३४-३२ (५६५२३)
बालेष्वपि सदा न स्म धनं वृश्चिक ते विषम् ।
आथर्वणेन मन्त्रेण सर्वशान्तिः कृता मया ॥ ८-३४-३३ (५६५२४)

इति वृश्चिकदष्टस्य विषवेगहतस्य च ।
कुर्वन्ति भेषजं प्राज्ञाः सत्यं तच्चापि दृश्यते ॥ ८-३४-३४ (५६५२५)
एवं विद्वञ्जोषमास्स्व ब्रूहि चात्रोत्तरं वचः ।
वासांस्युत्सृज्य नृत्यन्ति स्त्रियो मद्यविमोहिताः ॥ ८-३४-३५ (५६५२६)
मैथुनेऽसङ्गताश्चापि यथाकामवराश्च ताः ।
तासां पुत्र कथं धर्मं मद्रको वक्तुमर्हति ॥ ८-३४-३६ (५६५२७)
यास्तिष्ठन्त्यः प्रमेहन्ति यथैवोष्ट्रदशेरकाः ।
तासां विभ्रष्टधर्माणां निर्लज्जानां ततस्ततः ।
त्वं पुत्रस्तादृशीनां हि धर्मं वक्तुमिहेच्छसि ॥ ८-३४-३७ (५६५२८)
सौवीरकं याच्यमाना मद्रिका कर्षति स्फिचौ ।
अदातुकामा वचनमिदं वदति दारुणम् ॥ ८-३४-३८ (५६५२९)
मा मां सौवीरकं कश्चिद्याचतां दयितं मम ।
पुत्रं दद्यां पतिं दद्यां न तु दद्यां सुवीरकम् ॥ ८-३४-३९ (५६५३०)
गौर्यो बृहत्यो निर्ह्रीका मद्रिकाः कम्पलावृताः ।
घस्मरा नष्टशौचाश्च प्राय इत्यनुशुश्रुम ॥ ८-३४-४० (५६५३१)
पमेहित्वा स्फिचौ भूमौ घर्षन्त्यो हीनशोधनाः ।
शुद्धा नाद्भिर्न मृद्भिश्च नित्योच्छिष्टा भवन्ति हि ॥ ८-३४-४१ (५६५३२)
एवमादि मयाऽन्यैर्वा शक्यं वक्तुं भवेद्बहु ।
आकेशान्तान्नखाग्राच्च वक्तव्येषु कुकर्मसु ॥ ८-३४-४२ (५६५३३)
मद्रकाः सिन्धुसौवीरा धर्मं विद्युः कथं त्विह ।
पापदेशोद्भवा म्लेच्छा धर्माणामविचक्षणाः ॥ ८-३४-४३ (५६५३४)
एष मुख्यतमो धर्मः क्षत्रियस्येति नः श्रुतम् ।
यदाजौ निहतः शेते सद्भिः समभिपूजितः ॥ ८-३४-४४ (५६५३५)
आयुधानां साम्पराये यन्मुञ्चेयमहं ततः ।
ममैष प्रथमः कल्पो निधने स्वर्गमिच्छतः ॥ ८-३४-४५ (५६५३६)
सोयं प्रियसखा चास्मि धार्तराष्ट्रस्य धीमतः ।
तदर्थे हि मम प्राणा यच्च मे विद्यते वसु ॥ ८-३४-४६ (५६५३७)
व्यक्तं त्वमप्युपहितः पाण्डवैः पापदेशज ।
यथा चामित्रवत्सर्वं त्वमस्मासु प्रवर्तसे ॥ ८-३४-४७ (५६५३८)
कामं न खलु शक्योऽहं त्वद्विधानां शतैरपि ।
सङ्ग्रामाद्विमुखः कर्तुं धर्मज्ञ इव नास्तिकैः ॥ ८-३४-४८ (५६५३९)
सारङ्ग इव घर्मार्तः कामं विलप शुष्य च ।
नाहं भीषयितुं शक्यः क्षत्रधर्मे व्यवस्थितः ॥ ८-३४-४९ (५६५४०)
तनुत्यजां नृसिंहानामाहवेष्वनिवर्तिनाम् ।
या गतिर्गुरुणा प्रोक्ता प्रेम्णा रामेण तां स्मरे ॥ ८-३४-५० (५६५४१)
स्वेषां त्राणार्थमुद्यन्तं वधार्थं द्विषतामपि ।

विद्धि मामास्थितं वृत्तं पौरूरवसमुत्तमम् ॥ ८-३४-५१ (५६५४२)
न तद्भूतं प्रपश्यामि त्रिषु लोकेषु मद्रप ।
यो मामस्मादभिप्रायाद्वारयेदिति मे मतिः ॥ ८-३४-५२ (५६५४३)
एवं विद्वञ्जोषमास्स्व त्रासात्किं बहु भाषसे ।
न त्वां हत्वा प्रदास्यामि क्रव्याद्भ्यो मद्रकाधम् ॥ ८-३४-५३ (५६५४४)
मित्रप्रतीक्षया शल्य धृतराष्ट्रस्य चोभयोः ।
अपवादतितिक्षाभिस्त्रिभिरेतैर्हि जीवसि ॥ ८-३४-५४ (५६५४५)
पुनश्चेदीदृशं वाक्यं मद्रराज वदिष्यसि ।
शिरस्ते पातयिष्यासि गदया वज्रकल्पया ॥ ८-३४-५५ (५६५४६)
श्रोतारस्त्विदमद्येह द्रष्टारो व्रा कुदेशज ।
कर्णं वा जघ्नतुः कृष्णौ कर्णो वा निजघान तौ ॥ ८-३४-५६ (५६५४७)
एवमुक्त्वा तु राधेयः पुनरेव विशाम्पते ।
अब्रवीन्मद्रराजानं याहियाहीत्यसम्भ्रमम् ॥ ॥ ८-३४-५७ (५६५४८)

इति श्रीमन्महाभारते कर्णपर्वणि चतुस्त्रिंशोऽध्यायः ॥ ३४ ॥
Mahabharata - Karna Parva - Chapter Footnotes

८-३४-७ आहेयः सर्पमयः ॥
८-३४-९ नास्येयं न क्षिपेयम् ॥
८-३४-१२ सुजातं शोभनं जन्म ॥
८-३४-१३ प्रोतौ एकसूत्रे मणीइव प्रेमसम्बद्धौ ॥
८-३४-१९ जोषं तूष्णीम् । आस्स्व तिष्ठ ॥
८-३४-२० क्रीडागताः लीलया आगताः ॥
८-३४-२१ मद्रकेषु कुत्सितेषुमद्रदेशेषु ॥
८-३४-२२ क्षम वा ब्रूहि चोत्तरम् इति झ पाठः ॥
८-३४-२४ अनृतेन चरतीत्यानृतिकः ॥
८-३४-२६ पुम्भिः पुरुषैः विमिश्राः सङ्गताः । इच्छया
मैथुनिनोऽज्ञातवत् ज्ञाता अप्यविगीता इत्यर्थः ॥
८-३४-२७ येषां मद्रकाणां सक्तुमिश्रितमत्स्याशिनाम् । शीधु मद्यम् ॥
८-३४-३० मद्रकेषु संसृष्टं नष्टं एवं गान्धारकेषु शौचं
नष्टं भवेत् ॥
८-३४-३१ राजा याजको यस्य तस्मिन्याज्ये हविर्नष्टं भवेत् ॥
८-३४-३२ यथैवेति । यथा मद्रकैः सङ्गतं कृत्वा पतति
हेवृश्चिक तथा ते विषं हतमित्यध्याहारः। यद्येतत्सत्यं
तर्हि तव विषं नश्यत्विति मन्त्रेण सर्वथा विषं
नश्यतीत्यर्थः। मयेत्यात्मानुभवसिद्धमिदमिति द्योतयति ॥

८-३४-३३ यथैवेति ।यथा मद्रकैः सङ्गतं कृत्वा पतति हेवृश्चिक तथा ते विषं हतमित्यध्याहारः। यद्येतत्सत्यं तर्हि तव विषं नश्यत्विति मन्त्रेण सर्वथा विषं नश्यतीत्यर्थः। मयेत्यात्मानुभवसिद्धमिदमिति द्योतयति ॥
८-३४-३६ यथाकामं वरयन्तिताः ।मैथुने सङ्गता याश्च तथा कामकराश्च ह। तासां पुत्रो मम कथं मद्रको योगमर्हति। इति क।पाठः यथेळकाः इति ट। पाठः ॥
८-३४-३७ प्रमेहन्ति मूत्रयन्ते ।दशेरकाः गर्दभाः। यथैवोष्ट्रा यथेळकाः इति ट।पाठः ॥
८-३४-३८ सुवीरकं काञ्जिकम् ।स्फिचौ कटिप्रोथौ ॥
८-३४-४० निर्ह्रीकाः निर्लज्जाः ।घस्मराः बहुभक्षकाः ॥
८-३४-४२ वक्तव्येषु गर्हणीयेषु ॥
८-३४-४५ साम्पराये समूहे सङ्ग्राये इत्यर्थः ।मुञ्जेयं जीवितमिति शेषः ॥
८-३४-४७ उपहितः उपजप्त ॥
८-३४-४९ सारङ्ग इव घर्मान्ते इति कड़।पाठः ॥
८-३४-५४ अपवादो निन्दा तितिक्षा च तैस्त्रिभित्रहितुभिः ॥
८-३४-३४ चतुस्त्रिंशोऽध्यायः ॥

---

कर्नपर्व-अध्यय०३५
॥ श्रीः ॥
८.३५. अध्यायः ३५

Mahabharata - Karna Parva - Chapter Topics
शल्येन कर्णंप्रति हंसकाकीयाख्यानकथनम् ॥१ ॥

Mahabharata - Karna Parva - Chapter Text

८-३५-० (५६५४९)
सञ्जय उवाच। ८-३५-०क्ष् (४९२७)
मारिषाधिरथेः श्रुत्वा वाचो युद्धाभिनन्दिनः ।
शल्योऽब्रवीत्पुनः कर्णं निदर्शनमुदाहरन् ॥ ८-३५-१ (५६५५०)
जातोऽहं यज्वनां वंशे सङ्ग्रामेष्वनिवर्तिनाम् ।
राज्ञां मूर्धाभिषिक्तानां स्वयं धर्मपरायणः ॥ ८-३५-२ (५६५५१)
यथैव मत्तो मद्येन त्वं तथा लक्ष्यसे वृष ।
तथाऽद्य त्वां प्रमाद्यन्तं चिकित्सेयं सुहृत्तया ॥ ८-३५-३ (५६५५२)
इमां काकोपमां कर्ण प्रोच्यमानां निबोध मे ।

श्रुत्वा यथेष्टं कुर्यास्त्वं निहीन कुलपांसन ॥ ८-३५-४ (५६५५३)
नाहमात्मनि किञ्चिद्वै किल्बिषं कर्ण संस्मरे ।
येन मां त्वं महाबाहो हन्तुमिच्चस्यनागसम् ॥ ८-३५-५ (५६५५४)
अवश्यं तु मया वाच्यं बुद्ध्वा तव हिताहितम् ।
विशेषतो रथस्थेन राज्ञश्चैव हितैषिणा ॥ ८-३५-६ (५६५५५)
समं च विषमं चैव रथिनश्च बलाबलम् ।
श्रमः खेदश्च सततं हयानां रथिना सह ॥ ८-३५-७ (५६५५६)
आयुधस्य परिज्ञानं रुतं च मृगपक्षिणाम् ।
सारं चैवाप्यासरं च शल्यानां च प्रतिक्रिया ॥ ८-३५-८ (५६५५७)
अस्त्रयोगं च युद्धं च निमित्तानि तथैव च ।
सर्वमेतन्मया ज्ञेयं रथस्यास्य कुटुम्बिना ।
अतस्त्वां कथये कर्ण निदर्शनमिदं पुनः ॥ ८-३५-९ (५६५५८)
वैश्यः किल समुद्रान्ते प्रभूतधनधान्यवान् ।
यज्वा दानपतिः क्षान्तः स्वकर्मस्थोऽभवच्छुचिः ॥ ८-३५-१० (५६५५९)
बहुपुत्रः प्रियापत्यः सर्वभूतानुकम्पकः ।
राज्ञो धर्मप्रधानस्य राष्ट्रे वसति निर्भयः ॥ ८-३५-११ (५६५६०)
पुत्राणां तस्य बालानां कुमाराणां यशस्विनाम् ।
काको बहूनामभवदुच्छिष्टकृतभोजनः ॥ ८-३५-१२ (५६५६१)
तस्मैसदा प्रयच्छन्ति वैश्यपुत्राः कुमारकाः ।
मांसोदनं दधि क्षीरं पायसं मधुसर्पिषी ॥ ८-३५-१३ (५६५६२)
स चोच्छिष्टभृतः काको वैश्यपुत्रैः कुमारकैः ।
सदृशान्पक्षिणो दृप्तः श्रेयससश्चावमन्यते ॥ ८-३५-१४ (५६५६३)
अथ हंसाः समुद्रान्ते प्रजग्मुरतिपातिनः ।
गरुडस्य गतौ तुल्याश्चक्राङ्गा हृष्टचेतसः ॥ ८-३५-१५ (५६५६४)
कुमरारकास्तदा हंसान्दृष्ट्वा काकमथाब्रुवन् ।
भवानेव विशिष्टोऽसि पतत्रिभ्यो विहङ्गम ॥ ८-३५-१६ (५६५६५)
एतेऽतिपातिनः पश्य विहङ्गान्वियदाश्रितान् ।
एहि त्वमपि शक्तो हि कस्मान्न पतितं त्वया ॥ ८-३५-१७ (५६५६६)
प्रतार्यमाणस्तैः सर्वैरल्पबुद्धिभङरण्डजः ।
तद्वचः सत्यमित्येव मौर्ख्याद्दर्पाच्च जज्ञिवान् ॥ ८-३५-१८ (५६५६७)
तान्सोनुपत्य जिज्ञासुः क एषां श्रेष्ठभागिति ।
उच्छिष्टदर्पितः काको बहूनामेकपातिनाम् ॥ ८-३५-१९ (५६५६८)
तेषां यं प्रवरं मेने हंसानां दूरपातिनाम् ।
स तमाह्वत दुर्बुद्धिः पताव इति पक्षिणम् ।
तच्छ्रुत्वा प्राहसन्हंसा ये तत्रासन्समागताः ॥ ८-३५-२० (५६५६९)
भाषतो बहु काकस्य बालिश्यात्पततां वराः ।

इदमूचुः स्म चक्राङ्गावचः काकं विङ्गमाः ॥ ८-३५-२१ (५६५७०)
हंसा ऊचुः। ८-३५-२२क्ष् (४९२८)
वयं हंसाश्चरामेमां पृथिवीं मानसौकसः ।
पक्षिणां च वयं नित्यं दूरपातेन पूजिताः ॥ ८-३५-२२ (५६५७१)
कथं हंसं नु बलिनं चक्राङ्गं दूरपातिनम् ।
काको भूत्वा निपतने समाह्वयसि दुर्मते ।
कथं त्वं पतिता काक सहास्माभिर्ब्रवीहि तत् ॥ ८-३५-२३ (५६५७२)
अथ हंसवचो मूढः कुत्सयित्वा पुनः पुनः ।
प्रजगादोत्तरं काकः कत्थनो जातिलाघवात् ॥ ८-३५-२४ (५६५७३)
काक उवाच। ८-३५-२५क्ष् (४९२९)
शतमेकं च पातानां पतिताऽस्मि न संशयः ।
शतयोजनमेकैकं विचित्रं विविधं तथा ॥ ८-३५-२५ (५६५७४)
उड्डीनमवडीनं च प्रडीनं डीनमेव च ।
निडीनमथ संडीनं तिर्यक्डीनगतानि च ॥ ८-३५-२६ (५६५७५)
विडीनं परिडीनं च पराडीनं सुडीनकम् ।
अभिडीनं महाडीनं निर्डीनमतिडीनकम् ॥ ८-३५-२७ (५६५७६)
अवडीनं प्रडीनं च संडीनं डीनडीनकम् ।
संडीनोड्डीनडीनं च पुनर्डीनविडीनकम् ॥ ८-३५-२८ (५६५७७)
संपातं समुदीषं च ततोऽन्यद्व्यतिरिक्तकम् ।
गतागतं प्रतिगतं बह्वीश्च निकुलीनकाः ।
कर्ताऽस्मि मिषतां वोऽद्य ततो द्रक्षयथ मे बलम् ॥ ८-३५-२९ (५६५७८)
तेषामन्यतमेनाहं पतिष्यामि विहायसम् ।
प्रदिशध्वं यथान्यायं केन हंसाः पताम्यहम् ॥ ८-३५-३० (५६५७९)
ते वै ध्रुवं विनिश्चित्य सम्पतध्वं मया सह ।
पातैरेभिः खलु खगाः पतितुं खे निराश्रये ॥ ८-३५-३१ (५६५८०)
एवमुक्ते तु काकेन प्रहस्यैको विहंगमः ।
उवाच काकं राधेय वचनं तन्निबोध मे ॥ ८-३५-३२ (५६५८१)
हंस उवाच। ८-३५-३३क्ष् (४९३०)
शतमेकं च पातानां त्वं काक पतिता ध्रुवम् ।
एकमेव तु यं पातं विदुः सर्वे विहङ्गमाः ।
तमहं पतिता काक नान्यं जानामि कञ्चन ॥ ८-३५-३३ (५६५८२)
काक उवाच। ८-३५-३४क्ष् (४९३१)
पत त्वमपि तत्राशु येन पातेन मन्यसे ॥ ८-३५-३४ (५६५८३)
अथ काकं प्रजहसुर्ये तत्रासन्समागताः ।
कथमेकेन पातेन हंसः पातशतं जयेत् ।
एकेन वायस त्वैनं पातेनाभिभविष्यति ॥ ८-३५-३५ (५६५८४)

हंसश्चोत्पतितः काको बलवानाशुविक्रमः ।
प्रपेततुः स्पर्धया च ततस्तौ हंसवायसौ ।
उपर्युपरि वेगेन समुद्रं मकरालयम् ॥ ८-३५-३६ (५६५८५)
हंसस्त्वेकेन पातेन काकः पातशतेन च ।
स्पर्धिनौ सहितौ तूर्णं खमास्थाय तरस्विनौ ॥ ८-३५-३७ (५६५८६)
हंसस्तु मृदुनैकेन विक्रान्तुमुपचक्रमे ।
पूर्वमेव तु वै काकः स तं तूर्णं प्रचक्रमे ॥ ८-३५-३८ (५६५८७)
नात्यहीयत काकश्च मुहूर्तमिव सूतज ॥ ८-३५-३९ (५६५८८)
काकोपि हंसं चापल्याच्छीघ्रतां प्रतिदर्शयन् ।
वेगेनातीत्य तरसा पुनरेति मुहुर्मुहुः ॥ ८-३५-४० (५६५८९)
तुण्डेनाभ्यहनच्चैनं कुर्वन्नामापसव्यतः ।
रोरूयन्निव चाप्येनं समाह्वयति वै मुहुः ।
विसिस्मापयिषुः पातैर्दर्शयन्नात्मनः क्रियाम् ॥ ८-३५-४१ (५६५९०)
अथ तानि विचित्राणि पतितानीतराणि च ।
दृष्ट्वा प्रमुदिताः काका विनेदुरधिकैः स्वरैः ॥ ८-३५-४२ (५६५९१)
हंसाश्चापहसन्ति स्म प्रवदन्ति प्रियाणि च ।
कुर्वाणा विविधान्रावानिच्छन्तो जयमात्मनः ॥ ८-३५-४३ (५६५९२)
उत्पत्योत्पत्य च प्राहुर्मुहूर्तमिति चेति च ।
वृक्षाग्रेभ्यः स्थलेभ्यश्च निपतन्त्युत्पतन्ति च ॥ ८-३५-४४ (५६५९३)
अवमत्य च हंसं तमिदं काकोऽब्रवीद्वचः ।
योऽसावुत्पतितो हंसः सोऽसावेव प्रहीयते ॥ ८-३५-४५ (५६५९४)
अथ हंसस्तु तच्छ्रुत्वा भाषितं पततांवरः ।
विगाह्य हंसो विक्षोभ्य प्रापतत्पश्चिमां दिशम् ॥ ८-३५-४६ (५६५९५)
उपर्युपरि वेगेन सागरं मकरालयम् ।
बहुसत्वसमाकीर्णं वीचीभिर्भीमदर्शनम् ॥ ८-३५-४७ (५६५९६)
अथाचिरेण राधेय काको वेगादहीयत ।
ततोऽतीव परिश्रान्तः कथञ्चिद्धंसमन्वगात् ॥ ८-३५-४८ (५६५९७)
भीश्चैनमाविशत्तीव्रं काकं कर्ण विचेतसम् ।
द्वीपान्द्रुमान्वितान्पश्यन्विश्रमार्थं श्रमातुरः ।
निपतेयं क्वनु श्रान्त इति तस्मिञ्जलार्णवे ॥ ८-३५-४९ (५६५९८)
अवगाह्य समुद्रोऽपि बहुसत्वगणालयः ।
महान्भूतशतोद्भासी नभसस्तु विशिष्यते ॥ ८-३५-५० (५६५९९)
गाम्भीर्याद्धि समुद्रस्य न विशेषं कुलाधम ।
दिशश्च नाम्भसां कर्ण समुद्रस्था विदुर्जनाः ।
विपश्चितोप्यपारत्वात्किं पुनः कर्ण वायसः ॥ ८-३५-५१ (५६६००)
अथ हंसोप्यतिक्रामन्मुहूर्तमिव दूरतः ।

अतिक्रम्य च चक्राङ्गः काकं तं समुदैक्षत ॥ ८-३५-५२ (५६६०१)
शनकैः परिहीनं तं परिश्रान्तमचेतसम् ।
अवेक्षमाणस्तं काकं प्रत्यागम्य हसन्निव ॥ ८-३५-५३ (५६६०२)
तं प्रहस्य च चक्राङ्गः काकं मन्दगतिं तदा ।
हीयमानमथो दृष्ट्वा हंसः प्राह यथार्थवत् ।
उज्जिहीर्षुर्निमज्जन्तं स्मरन्सत्पुरुषव्रतम् ॥ ८-३५-५४ (५६६०३)
बहूनि पतितानि त्वमाचक्षाणो मुहुर्मुहुः ।
पतस्यव्याहरन्खेदं ततो गर्ह्यं प्रभाषसे ॥ ८-३५-५५ (५६६०४)
जलं नाम पतितं काक यत्त्वं पतसि साम्प्रतम् ।
जलं स्पृशसि पक्षाभ्यां तुण्डेन च पुनः पुनः ॥ ८-३५-५६ (५६६०५)
प्रब्रूहि कतमोऽयं ते पातो वर्तति वायस ।
एह्येहि काक शीघ्रं त्वमेष त्वां परिपालये ॥ ८-३५-५७ (५६६०६)
स पक्षाभ्यां स्पृशन्नार्तस्तुण्डेन च जलं तदा ।
काको दृढं परिश्रान्तः सहसा निपपात ह ॥ ८-३५-५८ (५६६०७)
सागराम्भसि तं दृष्ट्वा पततन्तं दीनचेतसम् ।
म्रियमाणमिदं वाक्यं हंसः काकमुवाच ह ॥ ८-३५-५९ (५६६०८)
शतमेकं च पातानां पताम्यहमिति स्म ह ।
श्लाघन्नात्मानमद्य त्वं काक भाषितवानसि ॥ ८-३५-६० (५६६०९)
स त्वमेकशतं पातं पतन्नभ्यधिको मया ।
कथमेवं परिश्रान्तः पतितोऽसि महार्णवे ॥ ८-३५-६१ (५६६१०)
प्रत्युवाच ततः काकः सीदमान इदं वचः ।
उपरीतं तदा हंसं प्रसमीक्ष्य प्रसादयन् ॥ ८-३५-६२ (५६६११)
उच्छिष्टान्नेन पुष्टोऽहं दर्पोत्सिक्तः कुसत्वतः ।
सुपर्ण इव चात्मानं ज्ञातवान्पुत्रलाघवात् ॥ ८-३५-६३ (५६६१२)
शरणं त्वां प्रपन्नोऽहमुदकान्तमवाप्नुयाम् ।
हंसेदानीं परिश्रान्तमापदो मां समुद्धर ॥ ८-३५-६४ (५६६१३)
यदि नाम पुनर्जीवन्गच्छेयं स्वं निवेशनम् ।
नैनं पुनर्हीनमपि क्षेप्ताऽहं खे विचारिणम् ॥ ८-३५-६५ (५६६१४)
तमेवं करुणं दीनं विलपन्तमचेतसम् ।
काककाकेति वाशन्तं निमज्जन्तं महार्णवे ।
कृपयाऽभिपरीतो वै कृपां चक्रे दुरात्मनि ॥ ८-३५-६६ (५६६१५)
अथ तं पततं दीनं जलक्लिन्नमचेतनम् ।
पद्भ्यामुत्क्षिप्य वेपन्तं पृष्ठमारो पयत्तदा ॥ ८-३५-६७ (५६६१६)
स हंसः पृष्ठमारोप्य काकं कर्णं विचेतसम् ।
अविस्मयंस्तदा कर्ण पुनरेव समानयत् ।
तमेव देशं तरसा स्पर्धया पेततुर्यतः ॥ ८-३५-६८ (५६६१७)

उत्सृज्य त्वब्रवीन्मैवं पुनः कार्यं त्वयेति ह ।
स्थाप्य चैनं पुनर्द्वीपे समाश्वस्य च विक्लवम् ।
गतो यथेप्सितं देशं हंसो मन इवाशुगः ॥ ८-३५-६९ (५६६१८)
एवमुच्छिष्टपुष्टः स काकोऽहंसपराजितः ।
बलं वीर्यं महत्कर्ण त्यक्त्वा क्षान्तिमुपागतः ॥ ८-३५-७० (५६६१९)
उच्छिष्टभोजनः काको यथा वैश्यकुले पुरा ।
एवं त्वमुच्छिष्टभृतो धार्तराष्ट्रैर्न संशयः ॥ ८-३५-७१ (५६६२०)
सदृशाञ्श्रेयसश्चापि सर्वान्कर्णावमन्यसे ।
द्रोणद्रौणिकृपैर्गुप्तो भीष्मेणान्यैश्च कौरवैः ॥ ८-३५-७२ (५६६२१)
विराटनगरे पार्थमेकं किं नावधीस्तदा ।
यत्र व्यस्ताः समस्ताश्च निर्जिताः स्थ किरीटिना
सृगाला इव सिंहेन क्व ते वीर्यं तदा गतम् ॥ ८-३५-७३ (५६६२२)
भ्रातरं निहतं दृष्ट्वा समरे सव्यसाचिना ।
पश्यतां कुरवीराणां प्रथमं त्वं पलायितः ॥ ८-३५-७४ (५६६२३)
तथा द्वैतवने कर्ण गन्धर्वैः समभिद्रुतान् ।
कुरून्सदारानुत्सृज्य त्वमेवाग्रे पलायितः ॥ ८-३५-७५ (५६६२४)
हत्वा जित्वा च गन्धर्वांश्चित्रसेनमुखान्रणे ।
कर्ण दुर्योधनं पार्थः सभ्रातृकममोक्षयत् ॥ ८-३५-७६ (५६६२५)
पुनः प्रभावः पार्थस्य पुराणः केशवस्य च ।
कथितः कर्ण रामेण सभायां कुरुसंसदि ॥ ८-३५-७७ (५६६२६)
सततं च त्वमश्रौषीर्वचनं द्रोणभीष्मयोः ।
अवध्यौ वदतोः कृष्णौ सन्निधौ च महीक्षिताम् ॥ ८-३५-७८ (५६६२७)
कियन्तं तत्र वक्ष्यामि येनयेन धनञ्जयः ।
त्वत्तोऽतिरिक्तः सर्वेभ्यो भूतेभ्यो ब्राह्मणो यथा ॥ ८-३५-७९ (५६६२८)
इदानीमेव द्रष्टासि प्रधाने स्यन्दने स्थितौ ।
पुत्रं च वसुदेवस्य कुन्तीपुत्रं च पाण्डवम् ॥ ८-३५-८० (५६६२९)
यथाऽश्रयत चक्राङ्गं वायसो बुद्धिमास्थितः ।
तथाश्रयस्व वार्ष्णेयं पाण्डवं च धनञ्जयम् ॥ ८-३५-८१ (५६६३०)
यदा त्वं युधि विक्रान्तौ वासुदेवधनञ्जयौ ।
द्रष्टास्येकरथे कर्ण तदा नैवं वदिष्यसि ॥ ८-३५-८२ (५६६३१)
यदा शरशतैः पार्थो दर्पं तव वधिष्यति ।
तदा त्वमन्तरं द्रष्टा आत्मनश्चार्जुनस्य च ॥ ८-३५-८३ (५६६३२)
देवासुरमनुष्येषु प्रख्यातौ यौ नरोत्तमौ ।
तौ मावमंस्था मौर्ख्यात्त्वं स्वद्योत इव रोचनौ ॥ ८-३५-८४ (५६६३३)
सूर्याचन्द्रमसौ यद्वत्तद्वदजुनकेशवौ ।
प्रकाश्येनाभिविख्यातौ त्वं तु खद्योतवन्नृषु ॥ ८-३५-८५ (५६६३४)

एवं विद्वन्मावमंस्थाः सूतपुत्राच्युतार्जुनौ ।
नरसिंहौ नरश्वा त्वं जोषमास्स्व विकत्थसे ॥ ॥ ८-३५-८६ (५६६३५)

इति श्रीमन्महाभारते कर्णपर्वणि पञ्चत्रिंशोऽध्यायः ॥ ३५ ॥
Mahabharata - Karna Parva - Chapter Footnotes

८-३५-८ रुतं जयपराजयसूचकम् ॥
८-३५-९ निमित्तानि दिव्यान्तरिक्षभौमानि ग्रहाद्यानुकूल्यप्रातिकूल्यादीति
। निदर्शनं दृष्टान्तम् ॥
८-३५-१५ अतिपातिनः गत्यतिशयगामिनः । चक्राङ्गाः मानसचारिणः ॥
८-३५-१६ पतत्रिभ्योऽन्येभ्यः प्रतार्यमाणोऽन्यथाप्रत्याय्यमानः ॥
८-३५-१९ श्रेष्ठभाक् श्रेष्ठं अङ्गं भजते ॥
८-३५-२० पताव गच्छावः ॥
८-३५-२९ मिषतां पश्यताम् ॥
८-३५-३० केन पातेन ॥
८-३५-३३ एकं मुख्यम् ॥
८-३५-३५ कथमेकेन पातेन जयेम शतपातिनम् । एकेनैव स यात्वेनं
पातेनाभिविष्यसि इति ट पाठः ॥
८-३५-३५ पञ्चत्रिंशोऽध्यायः ॥

---

कर्नपर्व-अध्यय०३६
॥ श्रीः ॥
८.३६. अध्यायः ३६

Mahabharata - Karna Parva - Chapter Topics
कर्णेन शल्यम्प्रति स्वस्य परशुरामात् तथा कुतश्चिद्ब्राह्मणाच्च
शापप्राप्तिकथनम् ॥ १ ॥

Mahabharata - Karna Parva - Chapter Text

८-३६-० (५६६३६)
सञ्जय उवाच। ८-३६-०क्ष् (४९३२)
मद्राधिपस्याधिरथिर्महात्मा
वचो निशम्याप्रियमप्रतीतः ।
उवाच शल्यं विदितं ममैत--
द्यथाविधावर्जुनवासुदेवौ ॥ ८-३६-१ (५६६३७)

शौरे रथं वाहयतोऽर्जुनस्य
बलं महास्त्राणि च पाण्डवस्य ।
अहं विजानामि यथावदद्य
परोक्षभूतं तव तत्तु शल्य ॥ ८-३६-२ (५६६३८)
तौ चाप्यहं शस्त्रभृतां वरिष्ठौ
व्यपेतभीर्योधयिष्यामि कृष्णौ ।
सन्तापयत्यभ्यधिकं हि रामा--
च्छापोऽद्य मां ब्राह्मणसत्तमाच्च ॥ ८-३६-३ (५६६३९)
ग्पुरा महेन्द्राद्रिवरे समुद्रे
तपस्विनं राममुपेत्य शल्य ।
अस्त्रार्थिनं माऽद्य शिष्यं गृहाणे--
त्यथाऽब्रुवं ब्राह्मणच्छद्मना च ॥ ८-३६-४ (५६६४०)
तत्रावसं ब्राह्मण इत्यविप्रो
ब्रह्मास्त्रलोभादनृतेन चाहम् ।
तज्जामदग्न्येन परं महास्त्रं
समन्त्रयुक्तं विहितं ममासीत् ॥ ८-३६-५ (५६६४१)
अस्त्रं यदा तद्विदितं ममासी--
त्तदाऽब्रवीद्ब्राह्मणो मां महर्षिः ।
आपद्गतेनास्त्रमिदं प्रयोज्यं
त्वया रणे गच्छता साधयेति'॥ ८-३६-६ (५६६४२)
तत्रापि मे देवराजेन विघ्नो
हितार्थिना फल्गुनस्यैव शल्य ।
कृतो विभेदेन ममोरुमेत्य
प्रविश्य कीटस्य तनुं विरूपाम् ॥ ८-३६-७ (५६६४३)
ममोरुमेत्य प्रबिभेद कीटः
सुप्ते गुरौ तत्र शिरो निधाय ।
ऊरुप्रभेदाच्च महान्बभूव
शरीरतो मे घनशोणितौघः ॥ ८-३६-८ (५६६४४)
गुरोर्भयाच्चापि न चेलिवानहं
ततो विबुद्धो ददृशे स विप्रः ।
स धैर्ययुक्तं प्रसमीक्ष्य मां वै
न त्वं विप्रः कोऽसि सत्यं वदेति ॥ ८-३६-९ (५६६४५)
तस्मै तदाऽऽत्मानमहं यथाव--
दाख्यातवान्सूत इत्येव शल्य ।
स मां निशाम्याथ महातपस्वी
संशप्तवान्रोषपरीतचेताः ॥ ८-३६-१० (५६६४६)

सूत त्वया ह्याप्तमिदं तवास्त्रं
न कर्मकाले प्रतिभास्यतीति ।
अन्यत्र तु स्यात्तव मृत्युकाला--
दब्राह्मणे ब्रह्म न हि ध्रुवं स्यात् ॥ ८-३६-११ (५६६४७)
तदद्य पर्याप्तमतीव मेऽस्त्र--
मुपस्थितेऽस्मिंस्तुमुले विमर्दे ॥ ८-३६-१२ (५६६४८)
शल्योग्रधन्वानमहं वरिष्ठं
तरस्विनं भीममसह्यवीर्यम् ।
सत्यप्रतिज्ञं युधि पाण्डवेयं
धनञ्जयं मृत्युमुखं नयिष्ये ॥ ८-३६-१३ (५६६४९)
अस्त्रं ततोऽन्यत्प्रतिपन्नमद्य
येन क्षेप्स्ये समरे शत्रुपूगान् ।
प्रतापिनं बलवन्तं कृतास्त्रं
तमुग्रधन्वानममितौजसं च ।
क्रूरं शूरं रौद्रममित्रसाहं
धनञ्जयं संयुगेऽहं हनिष्ये ॥ ८-३६-१४ (५६६५०)
अपांपतिर्वेगवानप्रमेयो
निमज्जयिष्यन्बहुलाः प्रजा इव ।
महारवं यः कुरुते समुद्रो
वेलेव तं वारयाम्यप्रमेयम् ॥ ८-३६-१५ (५६६५१)
प्रमुञ्चन्तं बाणसङ्घानमेया--
न्मर्मच्छिदो वीरहणः सुपत्रान् ।
कुन्तीपुत्रं प्रतियोत्स्यामि युद्धे
ज्यां कर्षतामुत्तमं मर्त्यलोके ॥ ८-३६-१६ (५६६५२)
एवं बलेनातिबलं महास्त्रं
समुद्रकल्पं सुदुरापमुग्रम् ।
शरौघिणं पार्थिवान्मज्जयन्तं
वेलेव पार्थमिषुभिर्वारयिष्ये ॥ ८-३६-१७ (५६६५३)
कृती कृतास्त्रो दृढहस्तयोधी
दिव्यास्त्रविच्छ्वेतहयः प्रमाथी ।
सुरासुरान्युधि वै यो जयेत
तेनाद्य मे पश्य युद्धं सुघोरम् ॥ ८-३६-१८ (५६६५४)
अभीमानी पाण्डवो युद्धकामो
ह्यमानुषैरस्यति मां महास्त्रैः ।
तस्यास्त्रमस्त्रैरभिभूय सङ्ख्ये
बाणोत्तमैः पातयिष्यामि पार्थम् ॥ ८-३६-१९ (५६६५५)

सहस्ररश्मिप्रतिमं ज्वलन्तं
दिशश्च सर्वाः प्रतपन्तमुग्रम् ।
तमोनुदं मेघ इवातिमात्रं
धनञ्जयं छादयिष्यामि बाणैः ॥ ८-३६-२० (५६६५६)
वैश्वानरं धूमकेतुं ज्वलन्तं
तेजस्विनं नरवीरान्दहन्तम् ।
पर्जन्यभूतः शरवर्षैर्यथाऽग्निं
तथा पार्थं शमयिष्यामि युद्धे ॥ ८-३६-२१ (५६६५७)
आशीविषं दृष्टिहणं सुघोरं
सुतीक्ष्णदंष्ट्रं ज्वलनप्रभवाम् ।
क्रोधात्प्रदीप्तानलवद्दहन्तं
कुन्तीपुत्रं शमयिष्यामि भल्लैः ॥ ८-३६-२२ (५६६५८)
प्रवाहिणं बलवन्तं महौजसं
प्रभञ्जनं मातरिश्वानमुग्रम् ।
युद्धे सहिष्ये हिमवानिवाचलो
धनञ्जयं क्रुद्धममृष्यमाणम्। ८-३६-२३ (५६६५९)
विशारदं रथमार्गेषु शक्तं
धुर्यं नित्यं समरेषु प्रवीरम् ।
लोके वरं सर्वधनुर्धराणां
धनञ्जयं संयुगेऽहं हनिष्ये ॥ ८-३६-२४ (५६६६०)
अद्याहवे यस्य न तुल्यमन्यं
मन्ये मनुष्यं धनुराददानम् ।
सर्वामिमां यः पृथिवीं सहेत
तथापि तेनाद्य रणे समेष्ये ॥ ८-३६-२५ (५६६६१)
यः सर्वभूतानि सदैवतानि
प्रस्थेऽजयत्खाण्डवे सव्यसाची
को जीवितं रक्षमाणो हि तेन
युयुत्सतेऽस्त्रैर्मानुषो मामृतेऽन्यः ॥ ८-३६-२६ (५६६६२)
मानी कृतास्त्रः कृतहस्तयोधी
दिव्यास्त्रविच्छ्वेतहयः प्रमाथी ।
तस्याहमद्यातिरथस्य काया--
च्छिरो हरिष्यामि शितैः पृषत्कैः। ८-३६-२७ (५६६६३)
योत्स्याम्येनं शल्य धनञ्जयं वै
मृत्युं पुरस्कृत्य रणे जयं वा ।
अन्यो हि न ह्येकरथेन मर्त्यो
युध्येत यः पाण्डवमिन्द्रकल्पम् ८-३६-२८ (५६६६४)

तस्याहवे पौरुषं पाण्डवस्य
ब्रूयां पृष्टः समितौ क्षत्रियाणाम्
किं त्वं मूर्खः प्रहसन्मूढचेता
आख्यासि मे पौरुषं फल्गुनस्य ॥ ८-३६-२९ (५६६६५)
अत्यप्रियो यः पुरुषो निष्ठुरो हि
क्षुद्रः क्षेप्ता क्षमिणश्चाक्षमावान् ।
हन्यामहं त्वादृशानां शतानि
क्षमाम्यहं क्षमिणां काल एषः ॥ ८-३६-३० (५६६६६)
अवोचस्त्वं पाण्डवार्थे प्रियाणि
प्रधर्षयन्मां मूढवत्पापकर्मन् ।
मय्यार्जवे जिह्ममतिर्यतस्त्वं
मित्रद्रोही साप्तपदं हि मित्रम् ॥ ८-३६-३१ (५६६६७)
कालस्त्वयं प्रत्युपयाति दारुणो
दुर्योधनो युद्धमुपागमद्यत् ।
तस्यार्थसिद्धिं त्वभिकाङ्क्षमाण--
स्तमन्वेष्ये यत्र चैकान्तमस्ति ॥ ८-३६-३२ (५६६६८)
ग्तथाप्यहं पाण्डववासुदेवौ
योत्स्ये रणे मद्विधस्यैव कर्म ।
न प्राकृतः सज्जते वै कदाचि--
द्यः प्रत्युदीयात्कृष्णधनञ्जयौ तौ'॥ ८-३६-३३ (५६६६९)
मित्रं मिन्देर्नन्दतेः प्रीयतेर्वा
सन्त्रायतेर्मिनुतेर्मोदतेर्वा ।
दुर्योधने सर्वमिदं ममास्ति
तच्चापि सर्वं मम वेत्ति राजा ॥ ८-३६-३४ (५६६७०)
शत्रुः शदेः शासतेर्वा श्यतेर्वा
शृणातेर्वा श्वसतेः सीदतेर्वा ।
श्रमेः शुचो बहुशः सूदतेश्च
प्रायेण सर्वं त्वयि तच्च मह्यम् ॥ ८-३६-३५ (५६६७१)
दुर्योधनार्थं तव च प्रियार्थं
यशोर्थमात्मार्थमपीश्वरार्थम् ।
तस्मादहं पाण्डववासुदेवौ
योत्स्ये यत्नात्कर्म च पश्य मेऽद्य ॥ ८-३६-३६ (५६६७२)
ग्शल्याद्याहं सङ्गतः पाण्डवेन
मुच्येयं चेज्जीवमानः कथञ्चित् ।
शश्वन्मृत्योः स्यामनाधृष्यरूपो
व्यक्तं तस्मात्संयुगाद्विप्रमुक्ताः'॥ ८-३६-३७ (५६६७३)

अस्त्रं ब्राह्मं मनसा सञ्जपन्वै
यदाऽस्यते क्रोधितः सव्यसाची ।
तदापि मे नैव मुच्येत पार्थो
न चेत्पतेद्विषमे मेऽद्य चक्रम् ॥ ८-३६-३८ (५६६७४)
अस्त्राणि विद्धवा समरे गतानि
ब्राह्माणि दिव्यान्यथ मानुषाणि ।
आसादयिष्याम्यहमुग्रवीर्यं
नागोत्तमं नाग इव प्रभिन्नः ॥ ८-३६-३९ (५६६७५)
वैवस्वताद्दण्डहस्ताद्वरुणाद्वापि पाशिनः ।
सगदाद्वा धनपतेः सवज्राद्वा सुराधिपात् ॥ ८-३६-४० (५६६७६)
अथान्यस्मादपि सुरादमित्रादाततायिनः ।
इति शल्य विजानीहि यथा नाहं बिभेम्युत ॥ ८-३६-४१ (५६६७७)
तस्मान्न मे भयं पार्थान्नापि चैव जनार्दनात् ।
सह युद्धं हि मे ताभ्यां साम्पराये भविष्यति ॥ ८-३६-४२ (५६६७८)
श्वभ्रे ते पततां चक्रमिति मां ब्राह्मणोऽब्रवीत् ।
युध्यमानस्य सङ्ग्रामे प्राप्तस्यैकायनं भयम् ॥ ८-३६-४३ (५६६७९)
तस्माद्बिभेमि बलवद्ब्राह्मणव्याहृतादहम् ।
एते हि सोमराजान ईश्वराः सुखदुःखयोः ॥ ८-३६-४४ (५६६८०)
कदाचिब्राह्मणस्याथ योग्यहेतेरहं नृप ।
अजानन्नक्षिपं बाणं घोररूपं भयावहम् ॥ ८-३६-४५ (५६६८१)
होमधेन्वास्ततो वत्सः प्रमत्त इषुणा हतः ।
चरन्वै विजने शल्य ततोऽनु व्याजहार सः ॥ ८-३६-४६ (५६६८२)
यस्माद्वत्सस्त्वया चात्र होमधेन्वा हतो नृप ।
तस्मात्त्वमपि राधेय वाक्षल्यं महदाप्नुहि ॥ ८-३६-४७ (५६६८३)
श्वभ्रे ते पतिता चक्रं युध्यमानस्य शत्रुणा ।
प्राप्त एकायने काले मृत्युसाधारणे त्वयि ॥ ८-३६-४८ (५६६८४)
स्पर्धसे येन सङ्ग्रामे यदर्थं घटसेऽनिशम् ।
तत एव ध्रुवं मृत्युं सूत प्राप्स्यसि संयुगे ॥ ८-३६-४९ (५६६८५)
अहं प्रसादयाञ्चक्रे ब्राह्मणं संशितव्रतम् ॥ ८-३६-५० (५६६८६)
गवां दशशतं वित्तं बलीवर्दांश्च षट्शतम् ।
प्रच्छन्नं काञ्चनैः कामं ब्राह्मणार्थमहं तदा ॥ ८-३६-५१ (५६६८७)
दासीशतं निष्ककण्ठं शतमश्वतरीरथान् ।
कन्यानां निष्ककण्ठीनां सहस्रं समलंकृतम् ॥ ८-३६-५२ (५६६८८)
ईषादन्तान्नागशतान्दासीदासशतानि च ।
दद्मि तैर्द्विजमुख्यो मे प्रसादं न चकार सः ॥ ८-३६-५३ (५६६८९)
कृष्णानां श्वेतवत्सानां गोशतानि चतुर्दश ।

ददन्हि न लभे तस्मात्प्रसादं द्विजसत्तमात् ॥ ८-३६-५४ (५६६९०)
यत्किञ्चिन्मामकं वित्तं त्वदधीनं करोमि तत् ।
इति मां याचमानं वै ब्राह्मणः प्रत्यवारयत् ।
क्रोधदीप्तेक्षणः शळ्य निर्दहन्निव चक्षुषा ॥ ८-३६-५५ (५६६९१)
व्याहृतं यन्मया सूत तत्तथा न तदन्यथा ।
अनृतोक्तं प्रजां हन्यात्ततः पापमवाप्नुयाम् ॥ ८-३६-५६ (५६६९२)
तस्माद्धर्माभिरक्षार्थं नानृतं वक्तुमुत्सहे ।
मा त्वं ब्रह्मगतिं हिंस्याः प्रायश्चित्तं कृतं त्वया ॥ ८-३६-५७ (५६६९३)
मद्वाक्यं नानृतं लोके कश्चित्कुर्यात्समाप्नुहि ।
ग्यन्मयोक्तं सरोषेण गच्छ सूतज माचिरम् ॥ ८-३६-५८ (५६६९४)
इति मामसकृत्क्रुद्धः स उवाच द्विजोत्तमः ।
एते हि सोमराजान ईश्वराः सुखदुःखयोः ॥ ८-३६-५९ (५६६९५)
नाहं बिभेमि बीभत्सोर्न शल्य मधुसूदनाम् ।
तस्माद्बिभेम्यहं शापात्तेन सत्येन ते शपे ॥ ८-३६-६० (५६६९६)
सह युद्धं समेताभ्यामद्येदं समुपस्थितम् ।
युद्धेऽस्मिञ्जीवितं मेऽद्य शल्य संशयमागतम् ॥ ८-३६-६१ (५६६९७)
शक्रोऽप्यमरराट् ताभ्यामुपगम्याहवं सह ।
संशयं परमं गच्छेत्कथं वा मन्यते भवान् ॥ ८-३६-६२ (५६६९८)
इत्येवं ते मयाऽऽख्यातं क्षिप्तेन न सुहृत्तया ।
जानामि त्वाऽधिक्षिपन्तं दोषमात्मगतं शृणु'॥ ॥ ८-३६-६३ (५६६९९)

इति श्रीमन्महाभारते कर्णपर्वणि षट्तत्रिंशोऽध्यायः ॥ ३६ ॥

Mahabharata - Karna Parva - Chapter Footnotes

८-३६-९ चेलिवान् चलितवान् ॥
८-३६-११ कर्मकाले स्वप्रतिज्ञारक्षणकाले ॥
८-३६-१४ अस्त्रं ततौ रामदत्तादस्त्रादन्यत्प्रतिपन्नं प्राप्त अहिबाणाख्य मित्यर्थः ॥
८-३६-२४ रथमार्गेष्यसक्तं इति ट पाठः । रथमार्गेष्वनित्यं इति ख पाठः ॥
८-३६-२६ खाण्डवे खाण्डxxxxx ८-३६-३१ आर्जवे कर्तव्ये सति ॥
८-३६-३४ अहं सिद्धिं काङ्क्षमाणोऽस्मि । त्वं तु तन्मन्यसे यत्र ऐकान्त्यं सख्यां नास्ति। अस्मत्पक्षीयोप्यन्यतत्र स्नोहवानसीत्यर्थः। तदेवाह मित्रमिति। मिन्दयति मेदयति वा स्नेहार्थान्मिन्देर्मिदेर्वा मित्रमिति रूपम्। नन्दतेरित्यतत्र मदतेरिति पाठः। मदी हर्षे इत्यस्य वा रूपम्। मादयनि तर्पयतीति वा

मादयतेर्मित्रम्। मिदतेस्त्राणार्थस्य वा मिदेरिदं रूपम्। नन्दयतेः प्रीयतेः संन्त्रायततेर्वाऽर्थे वर्तमानस्य मिदेर्मित्रमिति वार्थः। मिनुते मानं करोति सर्वे हितमस्य सङ्गृह्णातीति वा मोदतेऽस्य सुखेनेति वा मित्रमित्येतेऽर्थाः मयि सन्तीत्यर्थः ॥
८-३६-३५ शत्रुरिति शदेः शातनार्थात् शास्तेः शासनार्थात् श्यतेस्तनूकरणार्थात् शृणातेर्हिंसार्थात् श्वसतेरुच्छ्वासार्थादन्तर्भावितण्यर्थात् सीदतेः सूदतेर्वा दन्त्यस्थाने तालव्यस्योपसर्जनात् शत्रुरिति शब्द उतत्पन्नस्तदर्थश्च सर्वस्त्वय्यस्तीत्यर्थः ॥
८-३६-४४ सोमराजान ब्राह्मणाः ॥
८-३६-५७ मा त्वं ब्राह्मणगर्हः स्याः इति क पाठः ॥
८-३६-५८ तदनुव्याहृतं कुर्यात्सर्वलोकेपि सूतज इति ख पाठः । नैतत्ते व्याहृतं कुर्या सममेकोऽपि सूततज इति कङ पाठः। नैतदव्याहतं कुर्यात्सर्वलोकोऽपि सूतज इति ट पाठः ॥
८-३६-३६ षट्त्रिंशोऽध्यायः ॥

---

कर्नपर्व-अध्यय०३७
॥ श्रीः ॥
८.३७. अध्यायः ३७

Mahabharata - Karna Parva - Chapter Topics
कर्णेन सोपहासं शल्यगर्हणम् ॥१ ॥

Mahabharata - Karna Parva - Chapter Text

८-३७-० (५६७००)
सञ्जय उवाच। ८-३७-०क्ष् (४९३३)
ततः पुनर्महाराज मद्रराजमरिन्दमः ।
अभ्यभाषत राधेयः सन्निवार्योत्तरं वचः ॥ ८-३७-१ (५६७०१)
निर्भर्त्सनार्थं शल्य त्वं यत्तु जल्पितवानसि ।
नाहं शक्यस्त्वया वाचा विभीषयितुमाहवे ॥ ८-३७-२ (५६७०२)
यदि मां देवताः सर्वा योधयेयुः सवासवाः ।
तथापि मे भयं न स्यात्किमु पार्थात्सकेशवात् ॥ ८-३७-३ (५६७०३)
नाहं भीषयितुं शक्यः शुद्धकर्णा महाहवे ।
अभिजानीहि शक्तस्त्वमन्यं भीषयितुं रणे ॥ ८-३७-४ (५६७०४)
नीचस्य बलमेतावत्पारुष्यं यतत्त्वमात्थ माम् ।

अशक्तो हि गुणान्वक्तुं वल्गसे बहु दुर्मते ॥ ८-३७-५ (५६७०५)
न हि कर्णः समुद्भूतो भयार्थमिह मद्रक ।
विक्रमार्थमहं जातो यशोर्थं च तथाऽऽत्मनः ॥ ८-३७-६ (५६७०६)
सखिभावेन सौहार्दान्मितत्रभावेन चैव हि ।
कारणैस्त्रिभिरेतैस्त्वं शल्य जीवसि साम्प्रतम् ॥ ८-३७-७ (५६७०७)
राज्ञश्च धार्तराष्ट्रस्य कार्यं सुमहदुद्यतम् ।
मयि तच्चाहितं शल्य तेन जीवसि मे क्षणम् ॥ ८-३७-८ (५६७०८)
कृतश्च समयः पूर्वं क्षन्तव्यं विप्रियं तव ।
ग्समयः परिपाल्यो मे तेन जीवसि साम्प्रतम्'॥ ८-३७-९ (५६७०९)
ऋते शल्यसहस्रेण विजयेयमहं परान् ।
मित्रद्रोहस्तु पापीयानिति जीवसि साम्प्रतम् ॥ ८-३७-१० (५६७१०)
शल्य उवाच। ८-३७-११क्ष् (४९३४)
आर्तप्रलापांस्त्वं कर्ण यान्ब्रवीषि परान्प्रति ।
न ते कर्णसहस्रेण शक्या जेतुं परे युधि ॥ ८-३७-११ (५६७११)
सञ्जय उवाच। ८-३७-१२क्ष् (४९३५)
तथा ब्रुवन्तं परुषं कर्णो मद्राधिपं तदा ।
परुषं द्विगुणं भूयः प्रोवाचाप्रियदर्शनम् ॥ ८-३७-१२ (५६७१२)
इदं त्वमेकाग्रमनाः शृणु मद्रजनाधिप ।
सन्निधौ धृतराष्ट्रस्य प्रोच्यमानं मया श्रुतम् ॥ ८-३७-१३ (५६७१३)
देशांश्च विविधांश्चित्रान्पूर्ववृत्तांश्च पार्थिवान् ।
ब्राह्मणाः कथयन्ति स्म धृतराष्ट्रनिवेशने ॥ ८-३७-१४ (५६७१४)
तत्र वृद्धः पुरावृत्ताः कथाः कश्चिद्द्विजोत्तमः ।
बाह्लीकदेशं मद्रांश्च कुत्सयन्वाक्यमब्रवीत् ॥ ८-३७-१५ (५६७१५)
बहिष्कृता हिमवतता गङ्गया च तिरस्कृताः ।
सरस्वत्या यमुनया कुरुक्षेत्रेण चापि ये ॥ ८-३७-१६ (५६७१६)
पञ्चानां सिन्धुषष्ठानां नदीनां येऽन्तराश्रिताः ।
तान्धर्मबाह्यानशुचीन्बाह्लीकानपि वर्जयेत् ॥ ८-३७-१७ (५६७१७)
गोवर्धनो नाम वटः सुभाण्डं नाम पत्तनम् ।
एतद्राजन्कलिद्वारमाकुमारात्स्मराम्यहम् ॥ ८-३७-१८ (५६७१८)
कार्येणात्यर्थगूढेन बाह्लीकेषूषितं मया ।
तत एषां समाचारः संवासाद्विदितो मया ॥ ८-३७-१९ (५६७१९)
शाकलं नाम नगरमापगानामनिम्नगा ।
चण्डाला नाम बाह्लीकास्तेषां वृत्तं सुनिन्दितम् ॥ ८-३७-२० (५६७२०)
पानं गुडासवं पीत्वा गोमांसं लशुनैः सह ।
अपूपसक्तुमद्यानामाशिताः शीलवर्जिताः ॥ ८-३७-२१ (५६७२१)
गायन्त्यथ च नृत्यन्ति स्त्रियो मत्ता विवाससः ।

नगरापणवेशेषु बहिर्माल्यानुलेपनाः ॥ ८-३७-२२ (५६७२२)
मत्ताः प्रगीतविरुतैः खरोष्ट्रनिनदोपमैः ।
अनावृता मैथुने ताः कामचाराश्च सर्वशः ॥ ८-३७-२३ (५६७२३)
आहुरन्योन्यसूक्तानि प्रब्रुवाणा मदोत्कxxx : ।
हेहतेहेहतेत्येवं स्वामिभर्तृहतेति च ॥ ८-३७-२४ (५६७२४)
आक्रोशन्त्यः प्रनृत्यन्ति व्रात्याः पर्वस्वसंयताः ।
तासां किलावलिप्तानां निवसन्कुरुजाङ्गले ॥ ८-३७-२५ (५६७२५)
कश्चिद्बाह्लीकदुष्टानां नातिहृष्टमना जगौ ।
सा नूनं बृहती गौरी सूक्ष्मकम्बलवासिनी ॥ ८-३७-२६ (५६७२६)
मामनुस्मरती शेते बाह्लीकं कुरुवासिनम् ।
शतद्रुं नु कदा तीर्त्वा तां च रम्यामिरावतीम् ।
गत्वा स्वदेशं द्रक्ष्यामि स्थूलजङ्घाः शुभाः स्त्रियः ॥ ८-३७-२७ (५६७२७)
मनःशिलोज्ज्वलापाङ्ग्यो गौर्यस्ताः काकुकूजिताः ।
कम्बलाजिनसंवीता रुदन्त्यः प्रियदर्शनाः ॥ ८-३७-२८ (५६७२८)
मृदङ्गानकशङ्खानां मर्दलानां च निःस्वनैः ।
खरोष्ट्राश्वतरैश्चैव मत्ता यास्यामहे सुखम् ॥ ८-३७-२९ (५६७२९)
शमीपीलुकरीराणां वनेषु सुखवर्त्मसु ।
अपूपान्सक्तुपिण्डांश्च प्राश्नन्तो मथितान्वितान् ॥ ८-३७-३० (५६७३०)
पथिषु प्रबलो भूत्वा तथा सम्पततोऽध्वगान् ।
चेलापहारं कुर्वाणास्ताडयिष्याम भूयसः ॥ ८-३७-३१ (५६७३१)
एवंशीलेषु व्रात्येषु बाह्लीकेषु दुरात्मसु ।
कश्चेतयानो निवसेन्मुहूर्तमपि मानवः ॥ ८-३७-३२ (५६७३२)
कर्ण उवाच। ८-३७-३३क्ष् (४९३६)
ईदृशा ब्राह्मणेनोक्ता बाह्लीका मोघचारिणः ।
येषां षड्भागहर्ता त्वमुभयोः पुण्यपापयोः ॥ ८-३७-३३ (५६७३३)
इत्युक्त्वा ब्राह्मणः साधुरुत्तरं पुनरुक्तवान् ।
बाह्लीकेष्वविनीतेषु प्रोच्यमानं निबोध तत् ॥ ८-३७-३४ (५६७३४)
ततत्र स्म राक्षसी गाति कृष्णचतुर्दशीम् ।
नगरे शाकले स्फीते आहत्य निशि दुन्दुभिम् ॥ ८-३७-३५ (५६७३५)
कथं वस्तादृशो गाथाः पुनर्गास्यामि शाकले ।
गव्यस्य तृप्ता मांसस्य पीत्वा गौडं सुरासवम् ॥ ८-३७-३६ (५६७३६)
गौरीभिः सह नारीभिर्बृहतीभिः स्वलङ्कृता ।
पलाण्डुगण्डूषयुताः खादन्तश्चैशिकान्बहून् ॥ ८-३७-३७ (५६७३७)
वाराहं कौक्कुटं मांसं गव्यं गार्दभमौष्ट्रकम् ।
धानाश्च ये न खादन्ति तेषां जन्म निरर्थकम् ॥ ८-३७-३८ (५६७३८)
एवं गायन्ति ये मत्ताः शीधुना पीलुकावने ।

सबालवृद्धाः क्रन्दन्ति तेषां धर्मः कथं भवेत् ॥ ८-३७-३९ (५६७३९)
यत्र लोकेश्वरः कृष्णो देवदेवो जनार्दनः ।
विस्मृतः पुरुषैरुग्रैस्तेषां धर्मः कथं भवेत् ॥ ८-३७-४० (५६७४०)
इति शल्य विजानीहि हन्त भूयो ब्रवीमि ते ।
यदन्योप्युक्तवानस्मान्ब्राह्मणः कुरुसंसदि ॥ ८-३७-४१ (५६७४१)
पञ्चनद्यो वहन्त्येता यत्र पीलुवनान्युत ।
शतद्रुश्च विपाशा च तृतीयैरावती तथा ॥ ८-३७-४२ (५६७४२)
चन्द्रभागा वितस्ता च सिन्धुषष्ठा महानदी ।
आरट्टा नाम बह्लीका एतेष्वार्यो हि नो वसेत् ॥ ८-३७-४३ (५६७४३)
व्रात्यानां दासमीयानां विदेहानामयज्वनाम् ।
न देवाः प्रतिगृह्णन्ति पितरो ब्राह्मणास्तथा ॥ ८-३७-४४ (५६७४४)
तेषां प्रनष्टधर्माणां बाह्लीकानामिति श्रुतिः ।
ब्राह्मणेन यथा प्रोक्तं विदुषा साधुसंसदि ॥ ८-३७-४५ (५६७४५)
काष्ठकुण्डेषु बाह्लीका मृण्मयेषु च भुञ्जते ।
सक्तुमद्यावलिप्तेषु श्वावलीढेषु निर्घृणाः ॥ ८-३७-४६ (५६७४६)
आविकं चौष्ट्रिकं चैव क्षीरं गार्दभमेव च ।
तद्विकारांश्च बाह्लीकाः खादन्ति च पिबन्ति च ॥ ८-३७-४७ (५६७४७)
पात्रसङ्करिणो जाल्माः सर्वान्नक्षीरभोजनाः ।
आरट्टा नाम बाह्लीका वर्जनीया विपश्चिता ॥ ८-३७-४८ (५६७४८)
इति शल्य विजानीहि हन्त भूयो ब्रवीमि ते ।
यदन्योऽप्युक्तवान्मह्यं ब्राह्मणः कुरुसंसदि ॥ ८-३७-४९ (५६७४९)
युगन्धरे पयः पीत्वा प्रोष्य चाप्यच्युतस्थले ।
तद्वद्भूतिलये स्नात्वा कथं स्वर्गं गमिष्यति ॥ ८-३७-५० (५६७५०)
पञ्चनद्यो वहन्त्येता यत्र निःसृत्य पर्वतात् ।
आरट्टा नाम बाह्लीका न तेष्वार्यो द्व्यहं वसेत् ॥ ८-३७-५१ (५६७५१)
बाह्लीका नाम हीकश्च विपाशायां पिशाचकौ ।
तयोरपत्यं बाह्लीका नैषा सृष्टिः प्रजापतेः ॥ ८-३७-५२ (५६७५२)
ते कथं विविधान्धर्मान्ज्ञास्यन्ते हीनयोनयः ॥ ८-३७-५३ (५६७५३)
कारस्करान्माहिषकान्करम्भान्कटकालिकान् ।
कर्करान्वीरकान्वीरा उन्मत्तांश्च विवर्जयेत् ॥ ८-३७-५४ (५६७५४)
इति तीर्थानुसञ्चारी राक्षसी काचिदब्रवीत् ।
एकरात्रमुषित्वेह महोलूखलमेखला ॥ ८-३७-५५ (५६७५५)
आरट्टा नाम ते देशा बाह्लीकं नाम तद्वनम् ।
वसातिसिन्धुसौवीरा इति प्रायोऽतिकुत्सिताः ॥ ॥ ८-३७-५६ (५६७५६)

इति श्रीमन्महाभारते कर्णपर्वणि सप्तत्रिंशोऽध्यायः ॥ ३७ ॥

८-३७-८ एतदेव त्रयं व्याचष्टे राज्ञश्चेत्यादिना ॥
८-३७-१७ पञ्चानां वक्ष्यमाणानाम् । सिन्धुः षष्ठी यासाम्। अन्तरमवकाशमाश्रिताः ॥
८-३७-१८ गोवर्धनः गवां छेदनस्थानम् ॥
८-३७-२० वृत्तं चरित्रम् ॥
८-३७-२३ अनावृताः स्वपरपुरुषविवेकहीनाः ॥
८-३७-२४ सूक्तानि विनोदवचनानि । हेहते भोलिङ्गताडिते xxx क्रोशे द्वित्वम्। संधिश्छान्दसः। स्वामिहते भर्तृहते इति च तद्वत् ॥
८-३७-२५ पर्वसु उत्सवदिनेषु आक्रोशन्त्यः गालयन्त्यः । तासां पतिरिति शेषः ॥
८-३७-२९ खरादियानैः ॥
८-३७-३० मथितं तक्रम् ॥
८-३७-३१ भूयसः बहून् ॥
८-३७-३८ वाराहं विड्वाहजम ॥
८-३७-३७ सप्तत्रिंशोऽध्यायः ॥

---

कर्नपर्व-अध्यय०३८
॥ श्रीः ॥
८.३८. अध्यायः ३८

Mahabharata - Karna Parva - Chapter Topics
शल्यकर्णयोर्वाक्कलहः ॥ १ ॥
दुर्योधनेन तयोः सान्त्वनम् ॥ २ ॥

Mahabharata - Karna Parva - Chapter Text

८-३८-० (५६७५७)
कर्ण उवाच। ८-३८-०क्ष् (४९३७)
इति शल्य विजानीहि हन्त भूयो ब्रवीमि ते ।
उन्यमानं मया सम्यक्त्वमेकाग्रमनाः शृणु ॥ ८-३८-१ (५६७५८)
ब्राह्मणः किल नो गेहमध्यगच्छत्पुराऽतिथिः ।
आचारं तत्र सम्प्रेक्ष्य प्रीतो वचनमब्रवीत् ॥ ८-३८-२ (५६७५९)
मया हिमवतः शृङ्गमेकेनाध्युषितं चिरम् ।
दृष्टाश्च बहवो देशा नानाधर्मसमावृताः ॥ ८-३८-३ (५६७६०)

न च केन च धर्मेण विरुध्यन्ते प्रजा इमाः ।
सर्वाश्चाप्याचरन्धर्मं यदुक्तं वेदपारगैः ॥ ८-३८-४ (५६७६१)
अटता तु मया देशान्नानाधर्मसमाकुलान् ।
आगच्छता महाराज बाह्लीकेषु निशामितम् ॥ ८-३८-५ (५६७६२)
तत्र वै ब्राह्मणो भूत्वा पुनर्भवति क्षत्रियः ।
वैश्यः शूद्रश्च बाह्लीकस्ततो भवति नापितः ॥ ८-३८-६ (५६७६३)
नापितश्च ततो भूत्वा पुनर्भवति ब्राह्मणः ।
द्विजो भूत्वा च तत्रैव पुनर्दासोऽभिजायते ॥ ८-३८-७ (५६७६४)
भवन्त्येककुले विप्राः शिष्टा ये कामचारिणः ।
गान्धारा मद्रकाश्चैव बाह्लीकाश्चाप्यतेजसः ॥ ८-३८-८ (५६७६५)
एतन्मया श्रुतं तत्र धर्मसङ्करकारकम् ।
कृत्स्नामटित्वा पृथिवीं बाह्लीकेषु विपर्ययः ॥ ८-३८-९ (५६७६६)
इति शल्य विजानीहि हन्त भूयो ब्रवीमि ते ।
यदप्यन्योऽब्रवीद्वाक्यं बाह्लीकानां विकुत्सितं ॥ ८-३८-१० (५६७६७)
आनीयेहाक्षता काचिदारट्टात्किल दस्युभिः ।
अधर्मतश्चोपयाता सा तानभ्यशपत्ततः ॥ ८-३८-११ (५६७६८)
बालां बन्धुमतीं यन्मामधर्मेणोपगच्छथ ।
तस्मात्कुमार्यः स्वैरिण्यो भविष्यन्ति कुलेषु वः ॥ ८-३८-१२ (५६७६९)
न चैवास्मात्प्रमोक्षध्वं घोराच्छापान्नराधमाः ।
तस्मात्तेषां भागहरः कथं धर्मान्वदिष्यसि ॥ ८-३८-१३ (५६७७०)
कुरवः सहपाञ्चालाः साल्वा मात्स्याः सनैमिशाः ।
कोसलाः काशपौण्ड्राश्च कालिङ्गा मागधास्तथा ॥ ८-३८-१४ (५६७७१)
चेदयश्च महाभागा धर्मं जानन्ति शाश्वतम् ।
नानादेशेष्वसन्तश्च प्रायो बाह्यालयानृते ॥ ८-३८-१५ (५६७७२)
आमत्स्येभ्यः कुरुपाञ्चालसाल्वा
आनैमिशाच्चेदयो ये विशिष्टाः ।
धर्मं पुराणमुपजीवन्ति सन्तो
मद्रानृते पाञ्चनदांश्च जिह्मान् ॥ ८-३८-१६ (५६७७३)
एवं विद्वान्धर्मकथासु राजं--
स्तूष्णींभूतः शल्य भवेः सदा त्वम् ।
त्वं तस्य गोप्ता च जनस्य राजा
षड्भागहर्ता शुभदुष्कृतस्य ॥ ८-३८-१७ (५६७७४)
अथवा दुष्कृतस्य त्वं हर्ता तेषामरक्षिता ।
रक्षिता पुण्यभाग्राजा प्रजानां त्वं ह्यपुण्यभाक् ॥ ८-३८-१८ (५६७७५)
पूज्यमाने पुरा धर्मे सर्वदेशेषु शाश्वते ।
धर्मं पाञ्चनदं दृष्ट्वा धिगित्याह पितामहः ॥ ८-३८-१९ (५६७७६)

व्रात्यानां दाशकीयानां कृतेऽप्यशुभकर्मणाम् ।
ब्रह्मणा निन्दितान्धर्मान्कश्चित्सिद्धात्मकोऽब्रवीत् ॥ ८-३८-२० (५६७७७)
इति पाञ्चनदं धर्मवमेने पितामहः ।
स्वधर्मस्थेषु वर्णेषु सोऽप्येतान्नाभ्यपूजयत् ॥ ८-३८-२१ (५६७७८)
इति शल्य विजानीहि हन्त भूयो ब्रवीमि ते ।
कल्माषपादः सरसि निमज्जन्राक्षसोऽब्रवीत् ॥ ८-३८-२२ (५६७७९)
क्षत्रियस्य मलं भैक्ष्यं ब्राह्मणस्याश्रुतं मलम् ।
मलं पृथिव्या बाह्लीकाः स्त्रीणां कौतूहलं मलम् ॥ ८-३८-२३ (५६७८०)
निमज्जमानमुद्धृत्य कश्चिद्राजा निशाचरम् ।
अपृच्छत्तेन चाख्यातं तच्छृणुष्व नराधिप ॥ ८-३८-२४ (५६७८१)
मानुषाणां मलं म्लेच्छा म्लेच्छानां मुष्टिका मलम् ।
मुष्टिकानां मलं षण्ढाः षण्ढानां राजयाजकाः ॥ ८-३८-२५ (५६७८२)
राजयाजकयाज्यानां मद्रकाणां च यन्मलम् ।
तद्भवेद्वै तव मलं यद्यस्मान्न विमुञ्चसि ॥ ८-३८-२६ (५६७८३)
इति रक्षोपसृष्टेषु विषवीर्यहतेषु च ।
विद्वद्भिर्भेषजं दृष्टं संसिद्धवचनोत्तरम् ॥ ८-३८-२७ (५६७८४)
ब्राहयाः पञ्चालाः कौरवेयास्तु धर्म्याः
सत्या मत्स्याः शूरसेनाश्च याज्याः ।
प्राच्या दासा वृषला दाक्षिणात्याः
स्तेना बाह्लीकाः सङ्कार वै सुराष्ट्राः ॥ ८-३८-२८ (५६७८५)
कृतघ्नता परवित्तापहारो
मद्यपानं गुरुदारावमर्दः ।
वाक्पारुष्यं गोवधो रात्रिचर्या
बहिर्गेहं परवस्त्रोपभोगः ॥ ८-३८-२९ (५६७८६)
येषां धर्मस्तान्प्रति नास्त्यधर्मो
ह्यारट्टजान्पाञ्चनदान्धिगस्तु ।
आपाञ्चालाः कुरवो नैमिशाश्च
मत्स्याश्चैवाप्यनुजानन्ति धर्मम् ।
अथोदीच्याश्चोदयो भागधाश्च
शिष्टान्धर्मानुपजीवन्ति वृद्धाः ॥ ८-३८-३० (५६७८७)
प्राचीं दिशं श्रिता देवा जातवेदःपुरोगमाः ।
दक्षिणा पितृभिर्गुप्ता यमेन शुभकर्मणा ॥ ८-३८-३१ (५६७८८)
प्रतीचीं वरुणः पाति पालयन्नसुरान्बहून् ।
उदीचीं भगवान्सोम ब्रह्मा च ब्राह्मणैः सह ॥ ८-३८-३२ (५६७८९)
रक्षःपिशाचान्हिमवान्गुह्यकान्गन्धमादनः ।
ध्रुवं सर्वाणि भूतानि विष्णुः पाति सुरोत्तमः ॥ ८-३८-३३ (५६७९०)

इङ्गितज्ञाश्च मगधाः प्रेक्षितज्ञाश्च कोसलाः ।
अर्धोक्ताः कुरुपाञ्चालाः सर्वोक्ता दाक्षिणापथाः ॥ ८-३८-३४ (५६७९१)
पार्वतीयाश्च विषया यथैव गिरयस्तथा ।
सर्वज्ञा यवना राजञ्शूराश्चैव विशेषतः ।
म्लेच्छाः स्वसंज्ञानियता नानुक्तमितरे जनाः ॥ ८-३८-३५ (५६७९२)
प्रतिरब्धास्तु बाह्लीका न च केचन मद्रकाः ।
स त्वमेतादृशः शल्य नोत्तरं वक्तुमर्हसि ॥ ८-३८-३६ (५६७९३)
एवं ज्ञात्वा जोषमास्स्व प्रतीपं
मा स्म क्रुद्धः पापभृतां वरिष्ठ ।
पूर्वं हत्वा त्वां सपुत्रं बलैश्च
पश्चाद्धंस्ये वासुदेवार्जुनौ च ॥ ८-३८-३७ (५६७९४)
शल्य उवाच। ८-३८-३८क्ष् (४९३८)
आतुराणां परित्यागः स्वदारसुतविक्रयः ।
अङ्गे प्रवर्तते कर्ण येषामधिपतिर्भवान् ॥ ८-३८-३८ (५६७९५)
रथातिरथसङ्ख्यायां यत्त्वां भीष्मस्तदाब्रवीत् ।
तान्विदित्वाऽत्मनो दोषान्निर्मन्युर्भव मा क्रुधः ॥ ८-३८-३९ (५६७९६)
सर्वत्र ब्राह्मणाः सन्ति सन्ति सर्वत्र क्षत्रियाः ।
वैश्याः शूद्रास्तथा कर्ण स्त्रियः साध्व्यश्च सुव्रताः ॥ ८-३८-४० (५६७९७)
रमन्ते चोपहासेन पुरुषाः पुरुषैः सह ।
अन्योन्येन रताः क्षीबा देशेदेशे च मैथुनम् ॥ ८-३८-४१ (५६७९८)
परवाच्येषु निपुणः सर्वो भवति सर्वदा ।
आत्मवाच्यं न जानीते जानन्नपि च मुह्यति ॥ ८-३८-४२ (५६७९९)
सर्वत्र सन्ति राजनः स्वंस्वं धर्ममनुव्रताः ।
दुर्मनुष्यान्निगृह्णन्ति सन्ति सर्वत्र धार्मिकाः ॥ ८-३८-४३ (५६८००)
न कर्ण देशसामान्यात्सर्वः पापं निषेवते ।
यादृशाः स्वस्वभावेन देशांस्तांस्तादृशान्विदुः ॥ ८-३८-४४ (५६८०१)
सञ्जय उवाच। ८-३८-४५क्ष् (४९३९)
तततो दुर्योधनो राजा कर्णशल्याववारयत् ।
सखिभावेन राधेयं शल्यं सौजन्यकेन च ॥ ८-३८-४५ (५६८०२)
ततो निवारितः कर्णो धार्तराष्ट्रेण मारिष ।
प्हहस्य तत्र राजेन्द्रं यादि शल्येत्यचोदयत् ॥ ॥ ८-३८-४६ (५६८०३)

इति श्रीमन्महाभारते कर्णपर्वणि अष्टत्रिंशोऽध्यायः ॥ ३८ ॥

Mahabharata - Karna Parva - Chapter Footnotes

८-३८-५ निशामिर्त श्रुतम् ॥

८-३८-६ ब्राह्मणो भूत्केत्यादि तज्जातीयकर्माचरणनिवन्धनम् ॥
८-३८-८ विप्राः प्रसृष्टा इति पाठे कुले एकएव विप्रो भवत्यन्ये भ्रातरः प्रसृष्टाः सङ्कीर्णिक्रिया इत्यर्थः ॥
८-३८-९ तत्र बाह्लीकेषु । धर्मसङ्करकारको विपर्ययः श्रुत इति लिङ्गं विपरिणेयम्। विपर्ययो विहितवैपरीत्यम् ॥
८-३८-२० कृते कृतयुगे ॥
८-३८-२१ नाभ्यपूजयत् न प्रशंसितवान् ॥
८-३८-२५ म्लेच्छाः पापरता धर्माधर्मविचारहीनाः । म्लेच्छः पापरते जातिभेदे स्यादपभाषणे इति विश्वः। षंढा वर्षवराः ॥
८-३८-२७ रक्षोपसृष्टेषु रक्षसा उपद्रुतेषु ॥
८-३८-२८ प्राच्या दासाः शूद्रधर्माणः । दाशा इति पाठे मत्स्यजीविनः। वृषं धर्मं लान्ति आददते ते वृषलाः धर्मसङ्ग्रहपराः धर्मद्रोहिण इति वा ॥
८-३८-२९ बहिर्गेहं रात्रिचर्या प्रच्छन्नं चौर्यपारदार्यादि ॥
८-३८-३१ प्राचीमित्यत्र जातवेद इत्यनेनाग्नेयीसहिता प्राची देवानामाश्रया दक्षिणा पितॄणां तत्रैव श्राद्धादिधर्मो दृश्यते ॥
८-३८-३२ एवं प्रतीचीं वरुणः उदीचीं सोम इति कुबेरेशानयोर्ग्रहणम् । परिशेषान्नैर्ऋत्यां वायव्यां च बाह्लीकाश्रयायां नैर्ऋतास्त्वादृशा वातूलाश्च सन्तीत्यर्थः ॥
८-३८-३३ तथा रक्षःपिशाचाश्च हिमवन्तं नगोत्तमम् । गुह्यकाश्च महाराज पर्वतं गन्धमादनम् इति झ पाठः। एवमपि सबाह्लीकान्सनैर्ऋतान् देशान् विष्णुः पाति पर्जन्यवत् न देशान्तरेष्विव बाह्लीकेषु विशेषतो देवतानुग्रहो दृश्यत इत्यभिप्रायः ॥
८-३८-३४ अतएव तेषां मौढ्यं वर्णयति इङ्गितज्ञाश्चेति । अर्धोक्ताः कुरुपाञ्चालाः साल्वाः कृत्स्नानुशासनाः इति झ। पाठः ॥
८-३८-३५ विषमाः दुःखसाध्याः । सर्वं जानन्तोऽपि यवना म्लेच्छाश्च स्वसंज्ञायां स्वीयैः कृतो यो धर्मसंकेतस्तत्रैव नियताः। वैदिकं धर्मं न मानयन्तीत्यर्थः। इतरे त्वनुक्तं हितं नावबुध्यन्ते ॥
८-३८-३६ प्रतिरथा इतिपाठे हितवादिति प्रतिकूलाः । गुरुद्रोहिण इत्यर्थः। तादृशश्च त्वं हितोपदेष्टारं मां निन्दसीत्यर्थः ॥
८-३८-३८ अष्टत्रिंशोऽध्यायः ॥

---

कर्नपर्व-अध्यय०३९
॥ श्रीः ॥
८.३९. अध्यायः ३९

Mahabharata - Karna Parva - Chapter Topics
शल्यकर्णयोः संवादः ॥ १ ॥
सेनाद्वयस्य परस्परमेलनम् ॥ २ ॥

Mahabharata - Karna Parva - Chapter Text

८-३९-० (५६८०४)
सञ्जय उवाच। ८-३९-०क्ष् (४९४०)
ततः परानीकभिदं व्यूहमप्रतिमं कृतम् ।
समीक्ष्य कर्णः पार्थानां धृष्टद्युम्नाभिरक्षितम् ॥ ८-३९-१ (५६८०५)
प्रययौ रथघोषेण सिंहनादरवेण च ।
वादित्राणां च निनदैः कम्पयन्निव मेदिनीम् ॥ ८-३९-२ (५६८०६)
सञ्जय उवाच। ८-३९-३क्ष् (४९४१)
ततः प्रयान्तं राधेयं मद्रराजः स्मयन्निव ।
अवधूय इदं वाक्यमब्रवीत्कुरुसन्निधौ ॥ ८-३९-३ (५६८०७)
चमूं तवेमां विपुलां समृद्धा--
मसङ्ख्येयामश्वनराकुलां च ।
तथा प्रवेष्टा समरे धनञ्जयः
कक्षं दहन्दीप्त इवाश्रयाशी ॥ ८-३९-४ (५६८०८)
रथे स्तितौ वीरवरौ वरेण्यौ
सिंहस्कन्धौ लोहितपद्मनेत्रौ ।
द्रष्टा भवानद्य विना प्रयत्ना--
त्तथाहि मे शकुना वेदयन्ति ॥ ८-३९-५ (५६८०९)
अद्य द्रष्टाऽसि तं वीरं श्वेताश्वं कृष्णसारथिम् ।
निघ्नन्तं शात्रवान्सङ्ख्ये यं कर्ण परिपृच्छसि ॥ ८-३९-६ (५६८१०)
अद्य तौ पुरुषव्याघ्रौ लोहिताक्षौ परन्तपौ ।
वासुदेवार्जुनौ कर्ण द्रष्टाऽस्यमितविक्रमौ ॥ ८-३९-७ (५६८११)
सारथिर्यस्य गोविन्दो गाण्डीवं यस्य कार्मुकम् ।
तं चेद्धन्ताऽसि राधेय त्वं नो राजा भविष्यसि ॥ ८-३९-८ (५६८१२)
प्रवात्येष महावायुरभितस्तव वाहिनीम् ।
क्रव्यादा व्याहरन्त्येते मृगाः कुर्वन्ति भैरवम् ॥ ८-३९-९ (५६८१३)
पश्य कर्ण महाघोरं भयं वै रोमहर्षणम् ।
अर्कं जीमूतसङ्काशः कबन्धो वार्य तिष्ठति ॥ ८-३९-१० (५६८१४)
पश्य यूथं मृगशतं मृगाणां सर्वतोदिशम् ।
ररास दीप्तलाङ्गूलमादित्यामभि संस्थितम् ॥ ८-३९-११ (५६८१५)
पश्य काकांश्च गृध्रांश्च समवेतान्सहस्रशः ।

आदित्यमभिवीक्षन्ते ह्यशिवाः कर्ण सस्वराः ॥ ८-३९-१२ (५६८१६)
श्वेतवाजिसमायुक्ते तव कर्ण महारथे ।
पताकाः प्रज्वलन्त्येता ध्वजश्चातीव कम्पते ॥ ८-३९-१३ (५६८१७)
उदीर्यतो हयान्पश्य महाकायान्महाजवान् ।
प्लवमानान्महावीर्यानाकाशे गरुडानिव ॥ ८-३९-१४ (५६८१८)
ध्रुवमेषु निमित्तेषु भूमिमावृत्य पार्थिवाः ।
स्वप्स्यन्ति निहताः कर्ण शतशोऽथ सहस्रशः ॥ ८-३९-१५ (५६८१९)
शङ्खानां तुमुलः शब्दः श्रूयते रोमहर्षणः ।
आनकानां च राधेय मृदङ्गानां च हन्यताम् ॥ ८-३९-१६ (५६८२०)
शृणु शब्दान्बहुविधान्नराश्वरथवाजिनाम् ।
ज्यातलत्रेषुशब्दांश्च शृणु कर्ण महात्मनाम् ॥ ८-३९-१७ (५६८२१)
हेमरूप्यप्रमृष्टानां वाससां शिल्पिनिर्मिताः ।
सहेमचन्द्रताराभाः पताकाः किङ्किणीयुताः ॥ ८-३९-१८ (५६८२२)
नानावर्णा रणे भान्ति श्वसनेन प्रकम्पिताः ।
पश्य कर्णार्जुनस्यैताः सौदामिन्य इवाम्बुदे ॥ ८-३९-१९ (५६८२३)
ध्वजाः कणकणायन्ते वातेनातिसमीरिताः ।
सपताकरथाश्चापि पाञ्चालानां महात्मनाम् ॥ ८-३९-२० (५६८२४)
एष रेणुः समुद्भूतो दिवमावृत्य तिष्ठति ।
गजवाजिप्रणुन्ना च कम्पते कर्ण मेदिनी ॥ ८-३९-२१ (५६८२५)
श्रूयते मेघसङ्काशो रथनेमिस्वनस्तथा ।
पश्य कुन्तीसुतं वीरं बीभत्सुमपराजितम् ।
प्रहरिष्यन्तमायान्तं कपिप्रवरकेतनम् ॥ ८-३९-२२ (५६८२६)
गजाश्वरथपत्त्योघांस्तावकान्युधि निघ्नतः ।
ध्वजाग्रं दृश्यते तस्य ज्याशब्दश्चैव श्रूयते ॥ ८-३९-२३ (५६८२७)
एष संशप्तकान्भूयस्तानेवाभिमुखो गतः ।
करोति कदनं चैष सङ्ग्रामे द्विषतां बली ॥ ८-३९-२४ (५६८२८)
सञ्जय उवाच। ८-३९-२५क्ष् (४९४२)
इति ब्रुवाणं मद्रेशं कर्णः प्रोवाच मन्युमान् ॥ ८-३९-२५ (५६८२९)
पश्य संशप्तकैः क्रुद्धैः समन्तात्समभिद्रुतः ।
एष सूर्य इवाम्भोदैश्छन्नः पार्थो न दृश्यते ।
एष दान्तोऽर्जुनः शल्य निमग्नः शोकसागरे ॥ ८-३९-२६ (५६८३०)
शल्य उवाच। ८-३९-२७क्ष् (४९४३)
वरुणं कोऽम्भसा हन्यादिन्धनेन च कोऽनलम् ।
कोवाऽनिलं निगृह्णीयात्पिबेद्वा को महार्णवम् ॥ ८-३९-२७ (५६८३१)
ईदृग्रूपमहं मन्ये पार्थस्य युधि निर्जयम् ।
न हि शक्योऽर्जुनो जेतुं युधि देवासुरैरपि ॥ ८-३९-२८ (५६८३२)

अथैघं परितोषस्ते वाग्भिस्त्वं सुमाना भव ।
न हि शक्यो युधा जेतुमन्यं कुरु मनोरथम् ॥ ८-३९-२९ (५६८३३)
बाहुभ्यामुद्धरेद्भूमिं दहेत्क्रुद्ध इमाः प्रजाः ।
पातयेत्त्रिदिवाद्देवान्नार्जुनं समरे जयेत् ॥ ८-३९-३० (५६८३४)
पश्य कुन्तीसुतं भीमं वीरमक्लिष्टकारिणम् ।
प्रहरन्तं महाबाहुं स्थितं मेरुमिवाचलम् ॥ ८-३९-३१ (५६८३५)
अमर्षी पुरुषव्याघ्रः सदा वैरमनुस्मरन् ।
एष भीमो जयप्रेप्सुर्युधि तिष्ठति वीर्यवान् ॥ ८-३९-३२ (५६८३६)
एष धर्मभृतां श्रेष्ठो धर्मराजो युधिष्ठिरः ।
तिष्ठत्यसुकरः सङ्ख्ये परैः परपुरञ्जयः ॥ ८-३९-३३ (५६८३७)
एतौ च पुरुषव्याघ्रावाश्विनेयौ महारथौ ।
नकुलः सहदेवश्च तिष्ठतो युधि दुर्जयौ ॥ ८-३९-३४ (५६८३८)
एते तिष्ठन्ति कार्ष्णेयाः पञ्च पञ्चाचला इव ।
योत्स्यमाना महावीर्या भीमार्जुनसमा युधि ॥ ८-३९-३५ (५६८३९)
एते द्रुपदपुत्राश्च धृष्टद्युम्नपुरोगमाः ।
हीनाः सत्यजिता वीरास्तिष्ठन्ति परमौजसः ॥ ८-३९-३६ (५६८४०)
यत्र कृष्णार्जुनौ वीरौ यत्र राजा युधिष्ठिरः ।
तत्र धर्मश्च सत्यं च यतो धर्मस्ततो जयः ॥ ८-३९-३७ (५६८४१)
इति संवदतोरेव तयोः पुरुषसिंहयोः ।
ते सेने समसज्जेतां ङ्गायमुनवङ्गृशम् ॥ ॥ ८-३९-३८ (५६८४२)

इति श्रीमन्महाभारते कर्णपर्वणि एकोनचत्वारिंशोऽध्यायः ॥ ३९ ॥

---

कर्नपर्व-अध्यय०४०
॥ श्रीः ॥
८.४०. अध्यायः ४०

Mahabharata - Karna Parva - Chapter Topics
दुर्योधनेन सेनाप्रोत्साहनम् ॥ १ ॥
भीमेन दुर्योधनपराजयपूर्वकं गजानीकवधः ॥ २ ॥

Mahabharata - Karna Parva - Chapter Text

८-४०-० (५६८४३)
सञ्जय उवाच। ८-४०-०क्ष् (४९४४)
दुर्योधनस्ततः कर्णमुपेत्य भरतर्षभ ।

अब्रवीन्मद्रराजं च तथैवान्यान्महारथान् ॥ ८-४०-१ (५६८४४)
यदृच्छयाऽयमव्यग्रो धर्मः परमकः सखा ।
सुखिनः क्षत्रियाः कर्ण लभन्ते युद्धमीदृशम् ॥ ८-४०-२ (५६८४५)
यादृशं क्षत्रियैः शूरैः शूराणां दीव्यतां युधि ।
इष्टं भवति राधेय तदिदं समुपस्थितम् ॥ ८-४०-३ (५६८४६)
हत्वा तु पाण्डवान्युद्धे स्थिरामुर्वीं प्रशासथ ।
निहता वा परैर्युद्धे वीरलोकानवाप्स्यथ ॥ ८-४०-४ (५६८४७)
दुर्योधनस्य वचनं श्रुत्वा तत्क्षत्रियर्षभाः ।
सिंहनादानुदक्रोशन्वादित्राणि च जघ्निरे ॥ ८-४०-५ (५६८४८)
तस्मिन्प्रमुदिते सैन्ये त्वदीये भरतर्षभ ।
हर्षयंस्तावकान्योधान्द्रौणिर्विचनमब्रवीत् ॥ ८-४०-६ (५६८४९)
प्रत्यक्षं सर्वसैन्यानां भवतां चापि पश्यताम् ।
न्यस्तशस्त्रो मम पिता धृष्टद्युम्नेन पातितः ॥ ८-४०-७ (५६८५०)
स तेनाहममर्षेण पित्रर्थे चापि भारत ।
धृष्टद्युम्नमहत्वाऽहं न विमोक्ष्यामि दंशनम् ॥ ८-४०-८ (५६८५१)
कृत्वाऽनृतां प्रतिज्ञां वो नास्मि प्राप्ता महत्फलम् ।
अर्जुनं भीमसेनं च यश्च मां प्रतियोत्स्यति ।
सर्वांस्तान्प्रमथिष्यामि इति मे निश्चिता मतिः ॥ ८-४०-९ (५६८५२)
सञ्जय उवाच। ८-४०-१०क्ष् (४९४५)
एवमुक्ते ततः सर्वा हर्षिता भारती चमूः ।
अभ्यवर्तत कौन्तेयांस्तथा तां चापि पाण्डवाः ॥ ८-४०-१० (५६८५३)
स सन्निपातो रथयूथपानां
महाहवे भारत लोभनीये ।
जनक्षयः कालयुगान्तकल्पः
प्रावर्तताग्रे कुरुसृञ्जयानाम् ॥ ८-४०-११ (५६८५४)
ततः प्रवृत्ते युधि सम्प्रहारे
भूतानि सर्वाणि सदैवतानि ।
आसन्समेतानि सहाप्सरोभि--
निरीक्षतीभिर्युधि वीरसङ्घान् ॥ ८-४०-१२ (५६८५५)
दिव्यैश्च गन्धैः परमैश्च पुष्पै--
रन्यैश्च रत्नैर्विविधैर्नराग्र्याः ।
रणेषु कर्मोद्वहताः प्रहृष्टा-
ननन्दयन्नप्सरसः प्रहृष्टाः ॥ ८-४०-१३ (५६८५६)
समीरणस्तांस्तु निषेव्य गन्धा--
न्निषेवते तानपि योधमुख्यान् ।
निषेव्यमाणास्त्वनिलेन योधाः

परस्परं चुक्रुशुराजिमध्ये ॥ ८-४०-१४ (५६८५७)
तथा तु तस्मिंस्तुमुले प्रवृत्ते
दुर्योधनः क्रोधममृष्यमाणः ।
ग्अवेभ्य भीमं बलमध्यसंस्थः
समार्पयत्क्षुद्रकाणां शतेन ॥ ८-४०-१५ (५६८५८)
दुःशासनश्चित्रसेनश्च वीर--
स्तथोलूकः कितवः सौबलश्च ।
गजानीकैः सर्वतो भीमसेनं
तथाविषक्तं सहसैवाभ्यगच्छन् ॥ ८-४०-१६ (५६८५९)
तमापतन्तं सम्प्रेक्ष्य गजानीकं वृकोदरः ।
दुर्योधनं महाबाहुः शरवर्षैरवाकिरत् ॥ ८-४०-१७ (५६८६०)
दुर्योधनं ततो भीमः सायकैर्वज्रसन्निभैः ।
पाण्डवो विमुखीकृत्य गजानभ्यद्रवद्बली ॥ ८-४०-१८ (५६८६१)
ततः पावकसङ्काशैर्भीमबाणैरवक्रगैः ।
शलभैरिव नागांस्तानर्दयामास पाण्डवः ॥ ८-४०-१९ (५६८६२)
ततः कुञ्जरयूथानि भीमसेनो महाबलः ।
व्यधमन्निशितैर्बाणैर्महावातो घनानिव ॥ ८-४०-२० (५६८६३)
नित्यमत्ताश्च मातङ्गाः शूरैर्मत्तैरधिष्ठिताः ।
आरोहकैर्महामात्रैस्तोमराङ्कुरापाणिभिः ॥ ८-४०-२१ (५६८६४)
सुवर्णजालैः प्रच्छन्ना मणिजालैश्च कुञ्जराः ।
रूप्यजाम्बूनदाभासः क्षुरमालाभ्यलङ्कृताः ॥ ८-४०-२२ (५६८६५)
वध्यमानाः शरै राजन्भीमसेनेन ते गजाः ।
विभिन्नहृदयाः केचित्तत्रैवाभ्यपतन्भुवि ॥ ८-४०-२३ (५६८६६)
निपतद्भिर्महावेगैर्हेमभाण्डविभूषितैः ।
अशोभत महाराज धातुचित्रैरिवाचलैः ॥ ८-४०-२४ (५६८६७)
दीप्ताभरणवद्भिश्च गजपृष्ठनिपातितैः ।
सङ्गरः शुशुभे राजन्क्षीणपुण्यैरिवामरैः ॥ ८-४०-२५ (५६८६८)
महापरिघसङ्काशौ चन्दनागरुरूषितौ ।
अपश्यं भीमसेनस्य धनुर्विक्षिपतो भुजौ ॥ ८-४०-२६ (५६८६९)
तस्य ज्यातलनिर्घोषमस्यतः सव्यदक्षिणम् ।
तं श्रुत्वाऽभ्यद्रवन्नागा भीमसेनभयार्दिताः ॥ ८-४०-२७ (५६८७०)
तस्य भीमस्य तत्कर्म राजन्नेकस्य धीमतः ।
अपश्याम महाराज तद्भुतमिवाभवत्'॥ ॥ ८-४०-२८ (५६८७१)

इति श्रीमन्महाभारते कर्णपर्वणि सप्तदशदिवसयुद्धे
चत्वारिंशोऽध्यायः ॥ ४० ॥

कर्नपर्व-अध्यय०४१
॥ श्रीः ॥
८.४१. अध्यायः ४१

Mahabharata - Karna Parva - Chapter Topics
सेनाद्वये व्यूहरचनावर्णनम् ॥ १ ॥

Mahabharata - Karna Parva - Chapter Text

८-४१-० (५६८७२)
सञ्जय उवाच। ८-४१-०क्ष् (४९४६)
ततः परानीकभिदं व्यूहमप्रतिमं महत् ।
समीक्ष्य कर्णः पार्थानां धृष्टद्युम्नाभिरक्षितम् ॥ ८-४१-१ (५६८७३)
प्रययौ रथघोषेण सिंहनादरवेण च ।
वादित्राणां च निनदैः कम्पयन्निव मेदिनीम् ॥ ८-४१-२ (५६८७४)
वेपमान इव क्रोधाद्युद्धशौण्डः परन्तपः ।
प्रतिव्यूह्य महातेजा यथावद्भरतर्षभ ॥ ८-४१-३ (५६८७५)
व्यधमत्पाण्डवीं सेनामासुरीं मघवानिव ।
युधिष्ठिरं चाभ्यहनदपसव्यं चकारह ॥ ८-४१-४ (५६८७६)
कर्णस्य रथघोषेण मौर्वीनिष्पेषणेन च ।
सुसङ्ग्राहेण रश्मीनां समकम्पन्त सृञ्जयाः ॥ ८-४१-५ (५६८७७)
तानि सर्वाणि सैन्यानि कर्ण दृष्ट्वा विशाम्पते ।
बभूवुः सम्प्रहृष्टानि तावकानि युयुत्सया ॥ ८-४१-६ (५६८७८)
अश्रूयन्त ततो वाचस्तावकानां विशाम्पते ।
कर्णार्जुनमहायुद्धमेतदद्य भविष्यति ॥ ८-४१-७ (५६८७९)
अद्य दुर्योधनो राजा हतामित्रो भविष्यति ।
अद्य कर्णं रणे दृष्ट्वा फल्गुनो विद्रविष्यति ॥ ८-४१-८ (५६८८०)
अद्य तावद्वयं युद्धे कर्णस्यैवानुगामिनः ।
कर्णबाणमयं भीमं युद्धं द्रक्ष्याम संयुगे ॥ ८-४१-९ (५६८८१)
चिरकालेप्सितमिदमद्येदानीं भविष्यति ।
अद्य द्रक्ष्याम सङ्ग्रामं घोरं देवासुरोपमम् ॥ ८-४१-१० (५६८८२)
अद्येदानीं महद्युद्धं भविष्यति भयानकम् ।
अद्येदानीं जयो नित्यमेकस्यैकस्य वा रणे ॥ ८-४१-११ (५६८८३)
अर्जुनं किल राधेयो वधिष्यति महारणे ।
अथवा कं नरं लोके न स्पृशन्ति मनोरथाः ॥ ८-४१-१२ (५६८८४)

इत्युक्त्वा विविधा वाचः कुरवः कुरुनन्दन ।
आजघ्नुः पटहांश्चैव तूर्यांश्चैव सहस्रशः ॥ ८-४१-१३ (५६८८५)
भेरीनादांश्च विविधान्सिंहनादांश्च पुष्कलान् ।
मुरजानां महाशब्दानानकानां महारवान् ॥ ८-४१-१४ (५६८८६)
नृत्यमानाश्च बहुशस्तर्जमानाश्च मारिष ।
अन्योन्यमभ्ययुर्युद्धे युद्धरङ्गगता नराः ॥ ८-४१-१५ (५६८८७)
तेषां पदाता नागानां पादरक्षाः समन्ततः ।
पट्टसासिधराः शूराश्चापबाणमुसुण्ठिनः ॥ ८-४१-१६ (५६८८८)
भिण्डिपालधराश्चैव शूरलहस्ताः सुचक्रिणः ।
तेषां समागमो घोरो देवासुररणोपमः ॥ ८-४१-१७ (५६८८९)
धृतराष्ट्र उवाच। ८-४१-१८क्ष् (४९४७)
कथं सञ्जय राधेयः प्रत्यव्यूहत पाण्डवान् ।
धृष्टद्युम्नमुखान्सङ्ख्ये भीमसेनाभिरक्षितान् ।
सर्वानेव महेष्वासानजय्यानमरैरपि ॥ ८-४१-१८ (५६८९०)
के च प्रपक्षौ पक्षौ वा मम सैन्यस्य सञ्जय ।
प्रविभज्य यथान्यायमवतस्थुः सुदंशिताः ॥ ८-४१-१९ (५६८९१)
कथं पाण्डुसुताश्चापि प्रत्यव्यूहन्त मामकान् ।
कथं चैतन्महद्युद्धं प्रावर्तत सुदारुणम् ॥ ८-४१-२० (५६८९२)
क्व च बीभत्सुरभवद्यत्कर्णोऽयाद्युधिष्ठिरम् ।
को ह्यर्जुनस्य सान्निध्ये शक्तो जेतुं युधिष्ठिरम् ॥ ८-४१-२१ (५६८९३)
सर्वभूतानि यो ह्येकः खाण्डवे जितबान्पुरा ।
कस्तमन्यस्तु राधेयात्प्रतियुध्येज्जिजीविषुः ॥ ८-४१-२२ (५६८९४)
सञ्जय उवाच। ८-४१-२३क्ष् (४९४८)
शृणु व्यूहस्य रचनामर्जुनश्च यथा गतः ।
परिवार्य नृपान्सर्वान्सङ्ग्रामश्चाभवद्यथा ॥ ८-४१-२३ (५६८९५)
कृपः शारद्वतो राजन्मागधाश्च तरस्विनः ।
सात्वतः कृतवर्मा च दक्षिणं पक्षमाश्रिताः ॥ ८-४१-२४ (५६८९६)
तेषां प्रपक्षे शकुनिरुलूकश्च महारथः ।
सादिभिर्विमलप्रासैस्तदानीमभ्यरक्षताम् ॥ ८-४१-२५ (५६८९७)
गान्धारैश्चाप्यसम्भ्रान्तैः पार्वतीयैश्च दुर्जयैः ।
शलभानामिव व्रातैः पिशाचैरिव दुर्दृशैः ॥ ८-४१-२६ (५६८९८)
चतुर्विंशत्सहस्राणि रथानामनिवर्तिनाम् ।
संशप्तका युद्धशौण्डा वामपार्श्वमपालयन् ॥ ८-४१-२७ (५६८९९)
समन्वितास्तव सुतैः कृष्णार्जुनजिघांसवः ।
तेषां प्रपक्षाः काम्भोजाः शकाश्च यवनैः सह ॥ ८-४१-२८ (५६९००)
निदेशात्सूतपुत्रस्य सरथाश्वेभपत्तयः ।

आह्वयन्तोऽर्जुनं तस्थुः केशवं च महाबलम् ॥ ८-४१-२९ (५६९०१)
ततः सेनामुखे कर्णोऽप्यवातिष्ठत दंशितः ।
चित्रवर्माङ्गदः स्रग्वी पालयन्वाहिनीमुखम् ॥ ८-४१-३० (५६९०२)
रक्षमाणैः सुसंरब्धैः पुत्रैः शस्त्रभृतां वरः ।
वाहिनीं प्रमुखे वीरः सम्प्रकर्षन्नशोभत ॥ ८-४१-३१ (५६९०३)
अशोकस्तु महाबाहुः सूर्यवैश्वानरप्रभः ।
महाद्विपस्कन्धगतः पिङ्गाक्षः प्रियदर्शनः ।
दुःशासनो वृतः सैन्यैः स्थितो व्यूहस्य पृष्ठतः ॥ ८-४१-३२ (५६९०४)
तन्मध्ये स महाबाहुः स्वयं दुर्योधनो नृपः ।
चित्राश्वैश्चित्रसन्नाहैः सोदर्यैरभिरक्षितः ॥ ८-४१-३३ (५६९०५)
रक्ष्यमाणो महावीर्यैः सहितैर्मद्रकेकयैः ।
अशोभत महाराज देवैरिव शतक्रतुः ॥ ८-४१-३४ (५६९०६)
अश्वत्थामा कुरूणां च ये प्रवीरा महारथाः ।
नित्यमत्ताश्च मातङ्गाः शूरैर्म्लेच्छैः समन्विताः ।
अन्वयुस्तद्रथानीकं क्षरन्त इव तोयदाः ॥ ८-४१-३५ (५६९०७)
ते ध्वजैर्वैजयन्तीभिर्ज्वलद्भिः परमायुधैः ।
सादिभिश्चास्थिता रेजुर्द्रुमवन्त इवाचलाः ॥ ८-४१-३६ (५६९०८)
तेषां पदातिनागानां पादरक्षाः सहस्रशः ।
पट्टसासिधराः शूरा बभूवुरनिवर्तिनः ॥ ८-४१-३७ (५६९०९)
सादिभिः स्यन्दनैर्नागैरधिकं समलङ्कृतैः ।
स व्यूहराजो विबभौ देवासुरचमूपमः ॥ ८-४१-३८ (५६९१०)
बार्हस्पत्यः सुविहितो नायकेन विपश्चिता ।
नृत्यतीव महाव्यूहः परेषां भयमादधत् ॥ ८-४१-३९ (५६९११)
तस्य पक्षप्रपक्षेभ्यो निष्पतन्ति युयुत्सवः ।
हस्त्यश्वरथमातङ्गाः प्रावृषीव बलाहकाः ॥ ८-४१-४० (५६९१२)
ततः सेनामुखे कर्णं दृष्ट्वा राजा युधिष्ठिरः ।
धनञ्जयममित्रघ्नमेकवीरमुवाच ह ॥ ८-४१-४१ (५६९१३)
पश्यार्जुन महाव्यूहं कर्णेन विहितं रणे ।
युक्तं पक्षैः प्रपक्षैश्च परानीकं प्रकाशते ॥ ८-४१-४२ (५६९१४)
तत्समीपगतं ह्येतत्प्रत्यमित्रं महद्बलम् ।
यथा नाभिभवत्यस्मांस्तथा नीतिर्विधीयताम् ॥ ८-४१-४३ (५६९१५)
सञ्जय उवाच। ८-४१-४४क्ष् (४९४९)
एवमुक्तोऽर्जुनो राज्ञा प्राञ्जलिर्नृपमब्रवीत् ॥ ८-४१-४४ (५६९१६)
यथा यथा भवानाह तत्तथा न तदन्यथा ।
यत्तस्य विहितं कार्यं तत्करिष्यामि सुव्रत ।
प्रधानमथ चैवास्य विनाशं च करोम्यहम् ॥ ८-४१-४५ (५६९१७)

तस्मात्त्वं जहि राधेयं भीमसेनः सुयोधनम् ।
वृषसेनं च नकुलः सहदेवोऽपि सौबलम् ॥ ८-४१-४६ (५६९१८)
दुःशानं शतानीको हार्दिक्यं शिनिपुङ्गवः ।
धृष्टद्युम्नो द्रोणसुतं स्वयं योत्स्याम्यहं कृपम् ॥ ८-४१-४७ (५६९१९)
द्रौपदेया धार्तराष्ट्राञ्शिष्टान्सह शिखण्डिना ।
ते ते च तांस्तानहितानस्माकं घ्नन्तु मामकाः ॥ ८-४१-४८ (५६९२०)
सञ्जय उवाच। ८-४१-४९क्ष् (४९५०)
इत्युक्तो धर्मराजेन तथेत्युक्त्वा धनञ्जयः ।
व्यादिदेश स्वसैन्यानि स्वयं चागाच्चमूमुखम् ॥ ८-४१-४९ (५६९२१)
धनञ्जयो महाराज दक्षिणं पक्षमास्थितः ।
भीमसेनो महाबाहुर्वामं पक्षमुपाश्रितः ॥ ८-४१-५० (५६९२२)
सात्यकिर्द्रौपदेयाश्च स्वयं राजा च पाण्डवः ।
व्यूहस्य प्रमुखे तस्थुः स्वेनानीकेन संवृताः ॥ ८-४१-५१ (५६९२३)
स्वबलेनारिसैन्यं तत्प्रत्यवस्थाप्य पाण्डवः ।
प्रत्यव्यूहत्पुरस्कृत्य धृष्टद्युम्नशिखण्डिनौ ॥ ८-४१-५२ (५६९२४)
तत्सादिनागकलिलं पदातिरथसङ्कुलम् ।
धृष्टद्युम्नमुखं घोरमशोभत महद्बलम् ॥ ॥ ८-४१-५३ (५६९२५)

इति श्रीमन्महाभारते कर्णपर्वणि एकचत्वारिंशोऽध्यायः ॥ ४१ ॥

---

कर्नपर्व-अध्यय०४२
॥ श्रीः ॥
८.४२. अध्यायः ४२

Mahabharata - Karna Parva - Chapter Topics
सङ्कुलयुद्धम् ॥ १ ॥

Mahabharata - Karna Parva - Chapter Text

८-४२-० (५६९२६)
धृतराष्ट्र उवाच। ८-४२-०क्ष् (४९५१)
तथा व्यूढेष्वनीकेषु संसक्तेषु च सञ्जय ।
संशप्तकाः कथं पार्थं कथं कर्णं च पाण्डवाः ॥ ८-४२-१ (५६९२७)
एतद्विस्तरशो युद्धं प्रब्रूहि कुशलो ह्यसि ।
न हि तृप्यामि वीराणां शृण्वानो युधि विक्रमम् ॥ ८-४२-२ (५६९२८)
सञ्जय उवाच। ८-४२-३क्ष् (४९५२)

तत्संस्थिमथो दृष्ट्वा प्रत्यमित्रं महद्बलम् ।
प्रत्यव्यूहत्ततः कर्णो हितार्थं तनयस्य ते ॥ ८-४२-३ (५६९२९)
तत्सादिनागकलिलं पदातिरथसङ्कुलम् ।
धृष्टद्युम्नमुखं घोरमशोभत महद्बलम् ॥ ८-४२-४ (५६९३०)
पारावतसवर्णाश्वश्चन्द्रसूर्यसमद्युतिः ।
स पार्षतो बभौ धन्वी कालो विग्रहवानिव ॥ ८-४२-५ (५६९३१)
पार्षतं त्वभितस्तस्थुर्द्रौपदेया युयुत्सवः ।
सानुगा दीप्तवपुषश्चन्द्रं तारागणा इव ॥ ८-४२-६ (५६९३२)
अथ व्यूढेष्वनीकेषु प्रेक्ष्य संशप्तकान्रणे ।
क्रुद्धोऽर्जुनोऽभिदुद्राव व्याक्षिपन्गाण्डिवं धनुः ॥ ८-४२-७ (५६९३३)
अथ संशप्तकाः पार्थमभ्यधावन्वधैषिणः ।
विजये धृतसङ्कल्पा मृत्युं कृत्वानिवर्तनम् ॥ ८-४२-८ (५६९३४)
तदश्वसङ्घबहुलं पत्तिनागरथाकुलम् ।
उदीर्यमाणं संरब्धं धनञ्जयमभिद्रवत् ॥ ८-४२-९ (५६९३५)
तदुद्यतं महत्सैन्यं सागरौघसमं जवे ।
पार्थवेलां समासाद्य विष्ठितं समदृश्यत ॥ ८-४२-१० (५६९३६)
मृद्नन्तं शवर्षौघैर्द्रुतमर्जुनमार्दयत् ॥ ८-४२-११ (५६९३७)
स सम्प्रहारस्तुमुलस्तेषामासीत्किरीटिना ।
तस्यैव तु यथा राजन्निवातकवचैः सह ॥ ८-४२-१२ (५६९३८)
रथानश्वान्ध्वजान्नागान्पत्तीन्गाजगतानपि ।
इषून्धनूंषि खड्गांश्च चक्राणि च परश्वथान् ॥ ८-४२-१३ (५६९३९)
सायुधानुद्यतान्बाहून्विविधान्यायुधानि च ।
चिच्छेद द्विषतां पार्थः शिरांसि च सहस्रशः ॥ ८-४२-१४ (५६९४०)
तस्मिन्सैन्यमहावर्ते पातालतलसन्निभे ।
निमग्नं तं रथं मत्वा नेदुः संशप्तका मुदा ॥ ८-४२-१५ (५६९४१)
स पुरस्तादरीन्हत्वा पुनरुत्तरतोऽवधीत् ।
दक्षिणेन च पश्चाच्च क्रुद्धो रुद्रः पशूनिव ॥ ८-४२-१६ (५६९४२)
अथ पाञ्चालचेदीनां सृढ्जयानां च मारिष ।
त्वदीयैः सह सङ्ग्राम आसीत्परमदारुणः ॥ ८-४२-१७ (५६९४३)
कृपश्च कृतवर्मा च शकुनिश्चापि सौबलः ।
हृष्टसेनाः सुसंरब्धा रथानीकप्रहारिणः ॥ ८-४२-१८ (५६९४४)
कोसलैः काश्यमत्स्यैश्च कारूशैः केकयैरपि ।
शूरसेनैः शूरवरैर्युयुधुर्युद्धदुर्मदाः ॥ ८-४२-१९ (५६९४५)
तेषामन्तकरं युद्धं देहपाप्मविनाशनम् ।
क्षत्रविट्शूद्रवीराणां धर्म्यं स्वर्ग्यं यशस्करम् ॥ ८-४२-२० (५६९४६)
दुर्योधनोऽथ सहितो भ्रातृभिर्भरतर्षभ ।

गुप्तः कुरुप्रवीरैश्च मद्राणां च महारथैः ॥ ८-४२-२१ (५६९४७)
पाण्डवैः सह पाञ्चालैश्चेदिभिः सात्यकेन च ।
युध्यमानं रणे कर्णं कुरुवीरोऽभ्यपालयत् ॥ ८-४२-२२ (५६९४८)
कर्णोऽपि निशितैर्बाणैर्विनिहत्य महाचमूम् ।
प्रमृद्य च रथश्रेष्ठान्युधिष्ठिरमपीडयत् ॥ ८-४२-२३ (५६९४९)
विपत्रायुधदेहासून्कृत्वा शत्रून्सहस्रशः ।
युक्त्वा स्वर्गयशोभ्यां च स्वेभ्यो मुदमुदावहत् ॥ ८-४२-२४ (५६९५०)
तद्विगाह्य महानीकं सूतपुत्रो महारथः ।
नदीं प्रवर्तयामास शोणितौघतरङ्गिणीम् ॥ ८-४२-२५ (५६९५१)
शोणितोदां क्षुण्णमत्स्थां नागनक्रदुरत्ययाम् ।
मांलमज्जाकर्दमिनीं चक्रकूर्ममहोडुपाम् ॥ ८-४२-२६ (५६९५२)
पातितैर्मेघसङ्काशैस्तत्रतत्र महाद्विपैः ।
अशनीभिरिव ध्वस्ता नदी राजन्विराजते ॥ ८-४२-२७ (५६९५३)
तां शरोर्मिमहावर्तां छत्रहंससमाकुलाम् ।
तनुत्रोष्णीषसङ्घाटामस्थिपाषाणसङ्कुलाम् ॥ ८-४२-२८ (५६९५४)
अपारामनपारां च शङ्खदुन्दुभिघोषिणीम् ।
रौद्रां नदीं महाराज रजसा सर्वतोवृताम् ॥ ८-४२-२९ (५६९५५)
अतितीक्ष्णां नराकीर्णां नदीमन्तकगामिनीम् ।
समं च विषमं चैव समायान्तीं महाभयाम् ॥ ८-४२-३० (५६९५६)
आकुलाश्चात्र सीदन्ति नराः शोणितकर्दमे ।
नरैरभिपरिक्षिप्ता यथा राजन्महाद्रुमाः ॥ ८-४२-३१ (५६९५७)
ततस्ते तत्रतत्रैव प्रचरन्तो महानदीम् ।
विचेरुः सर्वतो योधा नौवारणमहारथैः ॥ ८-४२-३२ (५६९५८)
शोणितेन समं राजन्कृतमासीत्समन्ततः ।
नदीवेगैर्यथा भूमिस्तद्वदासीद्विशापते ॥ ८-४२-३३ (५६९५९)
एवं भारत सङ्ग्रामो नरवाजिगजक्षयः ।
कुरूणां सृञ्जयानां च देवासुरसमोऽभवत् ॥ ॥ ८-४२-३४ (५६९६०)

इति श्रीमन्महाभारते कर्णपर्वणि सप्तदशदिवसयुद्धे
द्विचत्वारिंशोऽध्यायः ॥ ४२ ॥

Mahabharata - Karna Parva - Chapter Footnotes

८-४२-२० क्षत्रविट्शूद्रवीराणामित्यनेन ब्राह्मणादृते युद्धं
सर्वेषां श्रेयस्करमित्यर्थः ॥
८-४२-२४ युक्त्वा योजयित्वा ॥
८-४२-४२ द्विचत्वारिंशोऽध्यायः ॥

कर्नपर्व-अध्यय०४३
॥ श्रीः ॥
८.४३. अध्यायः ४३

Mahabharata - Karna Parva - Chapter Topics
सङ्कुलयुद्धम् ॥१ ॥

Mahabharata - Karna Parva - Chapter Text

८-४३-० (५६९६१)
धृतराष्ट्र उवाच। ८-४३-०क्ष् (४९५३)
युक्तं प्रविश्य पार्थानां सैन्यं कुर्वञ्जनक्षयम् ।
कर्णो राजानमभ्येत्य तन्ममाचक्ष्व सञ्जय ॥ ८-४३-१ (५६९६२)
के च प्रवीराः पार्थानां युधि कर्णमवारयन् ।
कांश्च प्रमथ्याधिरथिर्युधिष्ठिरमपीडयत् ॥ ८-४३-२ (५६९६३)
सञ्जय उवाच। ८-४३-३क्ष् (४९५४)
धृष्टद्युम्नमुखान्पार्थान्दृष्ट्वा कर्णो व्यवस्थितान् ।
समभ्यधावत्त्वरितः पाञ्चालाञ्छत्रुकर्शनः ॥ ८-४३-३ (५६९६४)
तं तूर्णमभिधावन्तं पाञ्चाला जितकाशिनः ।
प्रत्युद्ययुर्महात्मानं हंसाः सर इवोष्णगे ॥ ८-४३-४ (५६९६५)
ततः शङ्खसहस्राणां निःस्वनो हृदयङ्गमः ।
प्रादुरासीदुभयतो भेरीशब्दश्च दारुणः ॥ ८-४३-५ (५६९६६)
नानाबाणनिनादश्च द्विपाश्वरथनिःस्वनः ।
सिंहनादश्च वीराणामभवद्दारुणस्तदा ॥ ८-४३-६ (५६९६७)
साद्रिद्रुमार्णवा भूमिः सवाताम्बुदमम्बरम् ।
सार्केन्दुग्रहनक्षत्रा द्यौश्च व्यक्तं विघूर्णिता ॥ ८-४३-७ (५६९६८)
इति भूतानि तं शब्दं मेनिरे ते च विव्यथुः ।
यानि चाप्यल्पसत्वानि प्रायस्तानि मृतानि वै ॥ ८-४३-८ (५६९६९)
अथ कर्णो भृशं क्रुद्धः शीघ्रमस्त्रमुदीरयन् ।
जघान पाण्डवीं सेनामासुरीं मघवानिव ॥ ८-४३-९ (५६९७०)
स पाण्डवबलं कर्णः प्रविश्य विसृजञ्छरान् ।
प्रभद्रकाणां प्रवरानहनत्सप्तसप्ततिम् ॥ ८-४३-१० (५६९७१)
ततः सुपुङ्खैर्निशितैरथ श्रष्ठो रथेषुभिः ।
अवधीत्पञ्चविंशत्या पाञ्चालान्पञ्चविंशतिम् ॥ ८-४३-११ (५६९७२)
सुवर्णपुङ्खैर्नाराचैः परकायविदारणैः ।

चेदिकानवधीद्वीरः शतशोऽथ सहस्रशः ॥ ८-४३-१२ (५६९७३)
तं तथा समरे कर्म कुर्वाणमतिमानुषम् ।
परिवव्रुर्महाराज पाञ्चालानां रथव्रजाः ॥ ८-४३-१३ (५६९७४)
ततः सन्धाय विशिखान्पञ्च भारत दुःसहान् ।
पाञ्चालानवधीत्पञ्च कर्णो वैकर्तनो वृषः ॥ ८-४३-१४ (५६९७५)
भानुदेवं चित्रसेनं सेनाबिन्दुं च भारत ।
तपनं शूरसेनं च पाञ्चालानहनद्रणे ॥ ८-४३-१५ (५६९७६)
पाञ्चालेषु च शूरेषु वध्यमानेषु सायकैः ।
हाहाकारो महानासीत्पाञ्चालानां महाहवे ॥ ८-४३-१६ (५६९७७)
तेषां सहक्रीडमानानां हाहाकारं प्रकुर्वताम् ।
पुनरेव च तान्कर्णो जघानाशु पतत्त्रिभिः ॥ ८-४३-१७ (५६९७८)
चक्ररक्षौ तु कर्णस्य पुत्रौ मारिष दुर्जयौ ।
सुषेणः सत्यसेनश्च त्यक्त्वा प्राणानयुध्यताम् ॥ ८-४३-१८ (५६९७९)
पृष्ठगोप्ता तु कर्णस्य ज्येष्ठः पुत्रो महारथः ।
वृषसेनोऽन्वयात्कर्णं पृष्ठतः परिपालयन् ॥ ८-४३-१९ (५६९८०)
धृष्टद्युम्नः सात्यकिश्च द्रौपदेया वृकोदरः ।
जनमेजयः शिखण्डी च प्रवीराश्च प्रभद्रकाः ॥ ८-४३-२० (५६९८१)
चेदिकेकयपाञ्चाला यमौ मात्स्याश्च दंशिताः ।
समभ्यधावन्राधेयं जिघांसन्तः प्रहारिणम् ॥ ८-४३-२१ (५६९८२)
त एनं विविधैः शस्त्रैः शरधाराभिरेव च ।
अभ्यवर्षन्विमर्दन्तं प्रावृषीवाम्बुदा गिरिम् ॥ ८-४३-२२ (५६९८३)
पितरं तु परीप्सन्तः कर्णपुत्राः प्रहारिणः ।
त्वदीयाश्चापरे राजन्वीरा वीरानवारयन् ॥ ८-४३-२३ (५६९८४)
सुषेणो भीमसेनस्य च्छित्त्वा भल्लेन कार्मुकम् ।
नाराचैः सप्तबिर्विद्ध्वा हृदि भीमं ननाद ह ॥ ८-४३-२४ (५६९८५)
अथान्यद्धनुरादाय सुदृढं भीमविक्रमः ।
सज्यं वृकोदरः कृत्वा सुषेणस्याच्छिनद्धनुः ॥ ८-४३-२५ (५६९८६)
विव्याध चैनं दशभिः क्रुद्धो नृत्यन्निवेषुभिः ।
कर्णं च तूर्णं विव्याध त्रिसप्तत्या शितैः शरैः ॥ ८-४३-२६ (५६९८७)
सत्यसेनं च दशभिः साश्वसूतायुधध्वजम् ।
पश्यतां सुहृदां मध्ये कर्णपुत्रमपातयत् ॥ ८-४३-२७ (५६९८८)
क्षुरप्रणुन्नं तत्तस्य शिरश्चन्द्रनिभाननम् ।
शुभदर्शनमेवासीन्नालभ्रष्टमिवाम्बुजम् ॥ ८-४३-२८ (५६९८९)
हत्वा कर्णसुतं भीमस्तावकान्पुनरार्दयत् ।
कृपहार्दिक्ययोश्छित्त्वा चापौ तावप्यथार्दयत् ॥ ८-४३-२९ (५६९९०)
दुःशासनं त्रिभिर्विद्ध्वा शकुनिं षड्भिरायसैः ।

उलूकं च पतत्रिं च चकार विरथावुभौ ॥ ८-४३-३० (५६९९१)
हे सुषेण हतोऽसीति ब्रुवन्नादत्त सायकम् ।
तमस्य कर्णश्चिच्छेद त्रिभिश्चैनमताडयत् ॥ ८-४३-३१ (५६९९२)
अथान्यं परिजग्राह सुपर्वाणं सुतेजनम् ।
सुषेणायासृजद्भीमस्तमप्यस्याच्छिनद्वृषः ॥ ८-४३-३२ (५६९९३)
पुनः कर्णस्त्रिसप्तत्या भीमसेनमथेषुभिः ।
पुत्रं परीप्सन्विव्याध क्रुद्धः शत्रुजिघांसया ॥ ८-४३-३३ (५६९९४)
सुषेणस्तु धनुर्गृह्य भारसाधनमुत्तमम् ।
नकुलंपञ्चभिर्बाणैर्बाह्वोरुरसि चार्पयत् ॥ ८-४३-३४ (५६९९५)
नकुलस्तं तु विंशत्या विद्ध्वा भारसहैर्दृढैः ।
ननाद बलवन्नादं कर्णस्य भयमादधत् ॥ ८-४३-३५ (५६९९६)
तं सुषेणो महाराज विद्ध्वा दशभिराशुगैः ।
चिच्छेद च धनुः शीघ्रं क्षुरप्रेण महारथः ॥ ८-४३-३६ (५६९९७)
अथान्यद्धनुरादाय नकुलः क्रोधमूर्च्छितः ।
सुषेणं नवभिर्बाणैर्वारयामास संयुगे ॥ ८-४३-३७ (५६९९८)
स तु बाणैर्दिशो राजन्नाच्छाद्य परवीरहा ॥
आजघ्ने सारथिं चास्य सुषेणं च ततस्त्रिभिः ।
चिच्छेद चास्य सुदृढं धनुर्भल्लैस्त्रिभिस्त्रिधा ॥ ८-४३-३८ (५६९९९)
अथान्यद्धनुरादाय सुषेणः क्रोधमूर्च्छितः ।
आविध्यन्नकुलं षष्ट्या सहदेवं च सप्तभिः ॥ ८-४३-३९ (५७०००)
तद्युद्धं सुमहद्घोरमासीद्देवासुरोपमम् ।
निघ्नतां सायकैस्तूर्णमन्योन्यस्य वधं प्रति ॥ ८-४३-४० (५७००१)
सात्यकिर्वृषसेनं तु विद्ध्वा सप्तभिरायसैः ।
ग्पुनर्विव्याध सप्तत्या सारथिं च त्रिभिः शितैः ॥ ८-४३-४१ (५७००२)
वृषसेनस्तु शैनेयं शरेणानतपर्वणा ।
आजघान महाराज शङ्खदेशे महारथम् ॥ ८-४३-४२ (५७००३)
शैनेयो वृषसेनेन पत्रिणा परिपीडितः ।
कोपं चक्रे महाराज क्रुद्धो वेगं च दारुणम् ॥ ८-४३-४३ (५७००४)
जग्राहेषुवरान्वीरः शीघ्रं वै दश पञ्च च ।
सात्यकिर्वृषसेनस्य सूतं हत्वा त्रिभिः शरैः'॥ ८-४३-४४ (५७००५)
धनुश्चिच्छेद भल्लेन जघानाश्वांश्च सप्तभिः ।
ध्वजमेकेषुणोन्मथ्य त्रिभिश्तं हृद्यताडयत् ॥ ८-४३-४५ (५७००६)
अथावसन्नः स्वरथे मुहूर्तात्पुनरुत्थितः ।
स रणे युयुधानेन विसूताश्वरथध्वजः ।
कृतो जिघांसुः शैनेयं खड्गचर्मधृगभ्ययात् ॥ ८-४३-४६ (५७००७)
तस्य चापततः शीघ्रं वृषसेनस्य सात्यकिः ।

वाराहकर्णैर्दशभिरविध्यदसिचर्मणी ॥ ८-४३-४७ (५७००८)
दुःशासनस्तु तं दृष्ट्वा विरथं व्यायुधं कृतम् ।
आरोप्य स्वरथं तूर्णमपोवाह रथान्तरम् ॥ ८-४३-४८ (५७००९)
अथान्यं रथमास्थाय वृषसेनो महारथः ।
द्रौपदेयांस्त्रिसप्तत्या युयुधानं च पञ्चभिः ॥ ८-४३-४९ (५७०१०)
भीमसेनं चतुःषष्ट्या सहदेवं च पञ्चभिः ।
नकुलं त्रिंशता बाणैः शतानीकं च सप्तभिः ॥ ८-४३-५० (५७०११)
शिखण्डिनं च दशभिर्धर्मराजं शतेन च ।
एतांश्चान्यांश्च राजेन्द्र प्रवीराञ्जयगृद्धिनः ॥ ८-४३-५१ (५७०१२)
अभ्यर्दयन्महेष्वासः कर्णपुत्रो विशाम्पते ।
कर्णस्य युधि दुर्धर्षस्ततः पृष्ठमपालयत् ॥ ८-४३-५२ (५७०१३)
युयुधानं च राधेयो नवैर्नवभिरायसैः ।
विसूताश्वरथं कृत्वा ललाटे त्रिभिरार्पयत् ॥ ८-४३-५३ (५७०१४)
स त्वन्यं रथमास्थाय विधिवत्कल्पितं पुनः ।
युयुधे पाण्डुभिः सार्धं कर्णस्य व्यधमद्बलम् ॥ ८-४३-५४ (५७०१५)
धृष्टद्युम्नस्ततः कर्णमविध्यद्दशभिः शरैः ।
द्रौपदेयास्त्रिसप्तत्या युयुधानस्तु सप्तभिः ॥ ८-४३-५५ (५७०१६)
भीमसेनश्चतुःषष्ट्या सहदेवश्च सप्तिभिः ।
नकुलस्त्रिंशता बाणैः शतानीकस्तु सप्तभिः ॥ ८-४३-५६ (५७०१७)
शिखण्डी दशभिर्वीरो धर्मराजः शतेन तु ।
एते चान्ये च राजेन्द्र प्रवीरा जयगृद्धिनः ।
अभ्यर्दयन्महेष्वासं सूतपुत्रं महामृधे ॥ ८-४३-५७ (५७०१८)
तान्सूतपुत्रो विशिखैर्दशभिर्दशभिः शरैः ।
रथेनानुचरन्वीरः प्रत्यविध्यदरिन्दमः। ८-४३-५८ (५७०१९)
ग्सात्यकिं भीमसेनं च धृष्टद्युम्नं शिखण्डिनम् ।
द्रौपदेयांश्च संरब्धान्यतमानान्महारथान् ॥ ८-४३-५९ (५७०२०)
पश्यतां सर्वसैन्यानामथैनान्सूतनन्दनः ।
विरथान्रथिनः श्रेष्ठान्निमेषार्धाच्चकार ह ॥ ८-४३-६० (५७०२१)
अमोघत्वाच्च बाणानां भूतसङ्घा विसिप्मयुः'॥ ८-४३-६१ (५७०२२)
तत्रास्त्रवीर्यं कर्णस्य लाघवं च महात्मनः ।
अपश्याम महाभाग तदद्भुतमिवाभवत् ॥ ८-४३-६२ (५७०२३)
न ह्याददानं ददृशुः सन्दधानं च सायकान् ।
विमुञ्चन्तं च संरम्भाद पश्यन्नैव तं जनाः ॥ ८-४३-६३ (५७०२४)
प्रतीच्यां दिशि तं दृष्ट्वा प्राच्यां पश्याम लाघवात् ।
न च पश्याम राजेन्द्र क्व नु कर्णो व्यतिष्ठत ॥ ८-४३-६४ (५७०२५)
इषूनेवास्य पश्यामो विनिकीर्णाऽन्समन्ततः ।

छादयानान्दिशो राजञ्शलभानामिव व्रजान् ॥ ८-४३-६५ (५७०२६)
तस्य तैरिषुभिस्त्रीक्ष्णैः सम्पतद्भिः सहस्रशः ।
मरीचिभिरिवोष्णांशोः शरैः सन्नतपर्वभिः ॥ ८-४३-६६ (५७०२७)
व्याप्ताः सर्वा दिशो राजन्योधाश्च ददृशुस्तदा ।
शरैः संवृतमाकाशं तत्राभ्रैरिव चाभवत् ॥ ८-४३-६७ (५७०२८)
द्यौर्वियद्भूर्दिशश्चैव प्रच्छन्ना निशितैः शरैः ।
अरुणाभ्रावृताकारं तस्मिन्देशे बभौ वियत् ॥ ८-४३-६८ (५७०२९)
ततः पुनरमेयात्मा कर्णो राजा महारथः ।
न्यहनत्समरे योधान्योधवृत्तमनुष्ठितः ॥ ८-४३-६९ (५७०३०)
नृत्यन्निव हि राधेयश्चापहस्तो रणाजिरे ।
यैर्विद्धः प्रत्यविद्ध्यत्तानेकैकं त्रिगुणैः शरैः ॥ ८-४३-७० (५७०३१)
शतैश्च दशभिश्चैतान्पुनर्विद्ध्वा ननाद च ।
साश्वसूतध्वजच्छत्रास्ततस्ते विवरं ददुः ॥ ८-४३-७१ (५७०३२)
ग्ते हन्यमानाः कर्णेन पलायन्त दिशो दश ।
नादयन्तो दिशः सर्वाः कर्मत्रस्ता विचेतसः'॥ ८-४३-७२ (५७०३३)
तान्प्रमथ्य महेष्वासान्राधेयः शरवृष्टिभिः ।
राजानीकमसम्बाधं प्राविशच्छत्रुकर्शनः ॥ ८-४३-७३ (५७०३४)
स रथांस्त्रिशतं हत्वा चेदीनामनिवर्तिनाम् ।
राधेयो निशितैर्बाणैस्ततोऽभ्यागाद्युधिष्ठिरम् ॥ ८-४३-७४ (५७०३५)
ग्ततस्ते विरथाः शूरा रथानन्यान्समास्थिताः ।
परिवव्रुर्महाराज धर्मपुत्रं युधिष्ठिरम्'॥ ८-४३-७५ (५७०३६)
ततस्ते तु परे राजञ्छिखण्डी च ससात्यकिः ।
राधेयात्परिरक्षन्तो राजानं पर्यवारयन् ।
मुञ्चन्तो विविधान्बाणान्स्वर्णपुङ्खाञ्शिलाशितान् ॥ ८-४३-७६ (५७०३७)
तथैव तावकाः सर्वे कर्णं दुर्वारणं रणे ।
यत्ताः शूरा महेष्वासाः पर्यरक्षन्त सर्वशः ॥ ८-४३-७७ (५७०३८)
नानावादित्रघोषाश्च प्रादुरासन्विशाम्पते ।
सिंहनादश्च सञ्जज्ञे शूराणामभिगर्जताम् ॥ ८-४३-७८ (५७०३९)
ततः पुनः समाजग्मुरभीताः कुरुपाण्डवाः ।
युधिष्ठिरमुखाः पार्थाः सूतपुत्रमुखा वयम् ॥ ॥ ८-४३-७९ (५७०४०)

इति श्रीमन्महाभारते कर्णपर्वणि सप्तदशदिवसयुद्धे
त्रिचत्वारिंशोऽध्यायः ॥ ४३ ॥

Mahabharata - Karna Parva - Chapter Footnotes

८-४३-१ अभ्येत्य यदकरोत्तन्ममाचक्ष्वेत्यन्वयः ॥

८-४३-२२ विमर्दन्तं विमृद्नन्तम् ॥
८-४३-७१ विवरं अन्तरं ददुः प्रसृता इत्यर्थः ॥
८-४३-४३ त्रिचत्वारिंशोऽध्यायः ॥

---

कर्नपर्व-अध्यय०४४
॥ श्रीः ॥
८.४४. अध्यायः ४४

Mahabharata - Karna Parva - Chapter Topics
कर्णेन युधिष्ठिरस्य पराजयपूर्वकमपहासः ॥ १ ॥
सङ्कुलयुद्धम् ॥ २ ॥

Mahabharata - Karna Parva - Chapter Text

८-४४-० (५७०४१)
सञ्जय उवाच। ८-४४-०क्ष् (४९५५)
विदार्य कर्णस्तां सेनां युधिष्ठिरमथाद्रवत् ।
रथहस्त्यश्वपत्तीनां सहस्रैः परिवारितः ॥ ८-४४-१ (५७०४२)
नानायुधसहस्राणि प्रेरितान्यरिभिर्वृषः ।
छित्त्वा बाणशतैरुग्रैस्तानविध्यदसम्भ्रमात् ॥ ८-४४-२ (५७०४३)
निचकर्त शिरांस्येषां बाहूनूरूंश्च सूतजः ॥
ते हता भूतले पेतुर्भग्नाश्चान्ये विदुद्रुवुः ॥ ८-४४-३ (५७०४४)
द्रविडान्ध्रनिषादास्तु पुनः सात्यकिचोदिताः ।
प्रभ्यद्रवञ्जिघांसन्तः पत्तयः कर्णमाहवे ॥ ८-४४-४ (५७०४५)
ते विबाहुशिरस्त्राणाः प्रहताः कर्णसायकैः ।
पेतुः पृथिव्यां युगपच्छिन्नं सालवनं यथा ॥ ८-४४-५ (५७०४६)
एवं योधशतान्याजौ सहस्राण्ययुतानि च ।
हतानीयुर्महीं देहैर्यशसाऽपूरयन्दिशः ॥ ८-४४-६ (५७०४७)
अथ वैकर्तनं कर्णं रणे क्रुद्धमिवान्तकम् ।
रुरुधुः पाण्डुपाञ्चाला व्याधिं मन्त्रौषधा इव ॥ ८-४४-७ (५७०४८)
स तान्प्रमृद्याब्यपतत्पुनरेव युधिष्ठिरम् ।
मन्त्रौषधिक्रियातीतो व्याधिरत्युल्बणो यथा ॥ ८-४४-८ (५७०४९)
स राजगृद्धिभी रुद्धः पाण्डुपाञ्चालकेकयैः ।
नाशकत्तानतिक्रान्तुं मृत्युर्ब्राह्मविदो यथा ॥ ८-४४-९ (५७०५०)
ततो युधिष्ठिरः कर्णमदूरस्थं निवारितम् ।
ग्तैर्योधप्रमुखैर्वीरं दृष्ट्वा विव्याध सायकैः ॥ ८-४४-१० (५७०५१)

कर्णः पार्थशराविद्धस्तोत्रार्दित इव द्विपः ।
प्रमथ्य सहितान्वीरान्युधिष्ठिरमपीडयत् ॥ ८-४४-११ (५७०५२)
ततो युधिष्ठिरः कर्णमासाद्य जयतां वरम्'।
अब्रवीत्परवीरघ्नं क्रोधसंरक्तलोचनः ॥ ८-४४-१२ (५७०५३)
कर्णकर्ण वृथादृष्टे सूतपुत्र वचः शृणु ।
सदा स्पर्धसि सङ्ग्रामे फल्गुनेन तरस्विना ॥ ८-४४-१३ (५७०५४)
यथाऽस्मान्बाधसे नित्यं धार्तराष्ट्रमते स्थितः ।
यद्बलं यच्च ते वीर्यं प्रद्वेषो यस्तु पाण्डुषु ॥ ८-४४-१४ (५७०५५)
तत्सर्वं दर्शयस्वाद्य पौरुषं महदास्थितः ।
युद्धश्रद्धां च तेऽद्याहं विनेष्यामि महाहवे ॥ ८-४४-१५ (५७०५६)
एवमुक्त्वा महाराज कर्णं पाण्डुसुतस्तदा ।
सुवर्णपुङ्खैर्दशभिर्विव्यादायस्मयैः शरैः ॥ ८-४४-१६ (५७०५७)
तं सूतपुत्रो दशभिः प्रत्यविद्ध्यदरिन्दमः ।
वत्सदन्तैर्महेष्वासः प्रहसन्निव भारत ॥ ८-४४-१७ (५७०५८)
सोऽवज्ञाय तु निर्विद्धः सूतपुत्रेण पाण्डवः ।
प्रजज्वाल ततः क्रोधाद्धविषेव हुताशनः ॥ ८-४४-१८ (५७०५९)
ज्वालामालापरिक्षिप्तो राज्ञो देहो व्यदृश्यत ।
युगान्ते दग्धुकामस्य संवर्ताग्नेरिवापरः ॥ ८-४४-१९ (५७०६०)
ततो विस्फार्य सुमहच्चापं हेमपरिष्कृतम् ।
समाधत्त शितं बाणं गिरीणामपि दारणम् ॥ ८-४४-२० (५७०६१)
ततः पूर्णायतोत्कृष्टं यमदण्डनिभं शरम् ।
मुमोच त्वरितो राजा सूतपुत्रजिघांसया ॥ ८-४४-२१ (५७०६२)
स तु वेगवता मुक्तो बाणो वज्राशनिस्वनः ।
विवेश सहसा कर्णं सव्ये पार्श्वे महारथम् ॥ ८-४४-२२ (५७०६३)
स तु तेन प्रहारेण पीडितः प्रमुमोह वै ।
स्रस्तगात्रो महाबाहुर्धनुरुत्सृज्य कम्पितः ॥ ८-४४-२३ (५७०६४)
गतासुरिव निश्चेताः शल्यस्याभिमुखोऽपतत् ।
राजाऽपि भूयो नाजघ्ने कर्णं पार्थहितेप्सया ॥ ८-४४-२४ (५७०६५)
ततो हाहाकृतं सर्वं धार्तराष्ट्रबलं महत् ।
विवर्णमुखमार्तं च कर्णं दृष्ट्वा तथागतम् ॥ ८-४४-२५ (५७०६६)
सिंहनादाश्च सञ्जज्ञुः क्ष्वेलाः किलकिलास्तथा ।
पाण्डवानां महाराज दृष्ट्वा राज्ञः पराक्रमम् ॥ ८-४४-२६ (५७०६७)
प्रतिलभ्य तु राधेयः संज्ञां नातिचिरादिव ।
दध्रे राजविनाशाय मनः क्रूरपराक्रमः ॥ ८-४४-२७ (५७०६८)
स हेमविकृतं चापं विस्फार्य विजयं महत् ।
अवाकिरदमेयात्मा पाण्डवं निशितैः शरैः ॥ ८-४४-२८ (५७०६९)

ततः क्षुराभ्यां पाञ्चाल्यौ चक्ररक्षौ महात्मनः ।
जघान चन्द्रदेवं च दण्डधारं च संयुगे ॥ ८-४४-२९ (५७०७०)
तावुभौ धर्मराजस्य प्रवीरौ युधि भारत ।
रथाभ्याशे चकाशेते चन्द्रस्येव पुनर्वसू ॥ ८-४४-३० (५७०७१)
युधिष्ठिरः पुनः कर्णमविद्ध्यत्त्रिंशता शरैः ।
सुषेणं सत्यसेनं च त्रिभिस्त्रिभिरताडयत् ॥ ८-४४-३१ (५७०७२)
शल्यं नवत्या विव्याध त्रिसप्तत्या च सूतजम् ।
तांस्तस्य गोप्तॄन्विव्याध त्रिभिस्त्रिभिरजिह्मगैः ॥ ८-४४-३२ (५७०७३)
ततः प्रहस्याधिरथिः षष्ठ्या राजञ्शितैः शरैः ।
विद्ध्वा युधिष्ठिरं सङ्ख्ये ननादातिरथस्तदा ॥ ८-४४-३३ (५७०७४)
ततः प्रवीराः पाण्डूनामभ्यधावन्नमर्षिताः ।
युधिष्ठिरं परीप्सन्तः कर्णमभ्यर्दयञ्छरैः ॥ ८-४४-३४ (५७०७५)
सात्यकिश्चेकितानश्च युयुत्सुः पाण्ड्य एव च ।
धृष्टद्युम्नः शिखण्डी च द्रौपदेयाः प्रभद्रकाः ॥ ८-४४-३५ (५७०७६)
यमौ च भीमसेनश्च शिशुपालस्य चात्मजः ।
कारूशा मात्स्यशेषाश्च केकयाः काशिकोसलाः ॥ ८-४४-३६ (५७०७७)
एते च त्वरिता वीरा वसुषेणमताडयन् ।
जनमेजयश्च पाञ्चाल्यः कर्णं विव्याध सायकैः ॥ ८-४४-३७ (५७०७८)
वाराहकर्णनाराचैर्नालीकैर्निशितैः शरैः ।
वत्सदन्तैर्विपाठैश्च क्षुरप्रैश्चटकामुखैः ॥ ८-४४-३८ (५७०७९)
नानाप्रहरणैश्चोग्रै रथहस्त्यश्वसादिभिः ।
सर्वतोऽभ्यद्रवत्कर्णं परिवार्य जिघांसया ॥ ८-४४-३९ (५७०८०)
स पाण्डवानां प्रवरैः सर्वतः समभिद्रुतः ।
छाद्यमानः शिततैर्घोरैः स्वस्वनामाङ्कितैः शरैः ॥ ८-४४-४० (५७०८१)
न चचाल रणे कर्णो महेन्द्रो दानवैरिव ।
गनिजघान महेष्वासान्पाञ्चालानेकविंशतिम् ॥ ८-४४-४१ (५७०८२)
ततः पुनरमेयात्मा चेदीनां प्रवरान्दश ।
न्यहनद्भरतश्रेष्ठ कर्णो वैकर्तनस्तदा ॥ ८-४४-४२ (५७०८३)
तस्य बाणसहस्राणि सम्प्रपन्नानि मारिष ।
दृश्यन्ते दिक्षु सर्वासु शलभानामिव व्रजाः ॥ ८-४४-४३ (५७०८४)
कर्णनामाङ्किता बाणाः स्वर्णपुङ्खाः सुतेजनाः ।
नराश्वकायान्निर्भिद्य पेतुरुर्व्यां समन्ततः ॥ ८-४४-४४ (५७०८५)
कर्णेनैकेन समरे चेदीनां प्रवरास्तदा ।
सृञ्जयानां च सर्वेषां शतशो निहता रणे ॥ ८-४४-४५ (५७०८६)
कर्णस्य शरसञ्छन्नं बभूव तुमुलं तमः ।
नाज्ञायत ततः किञ्चित्परेषामात्मनोऽपि वा ॥ ८-४४-४६ (५७०८७)

तस्मिंस्तमसि भूते च क्षत्रियाणां भयङ्करे ।
विचचार महबिहुर्निर्दहन्क्षत्रियान्बहून्'॥ ८-४४-४७ (५७०८८)
ततः शरमहाज्वालो वीर्योष्मा कर्णपावकः ।
निर्दहन्पाण्डववनं चारु पर्यचरद्रणे ॥ ८-४४-४८ (५७०८९)
ग्ततस्तेषां महाराज पाण्डवानां महारथाः ।
सृञ्जयानां च सर्वेषां शतशोऽथ सहस्रशः ।
अस्त्रैः कर्णं महेष्वासं समन्तात्पर्यवारयन् ॥ ८-४४-४९ (५७०९०)
स संवार्य महास्त्राणि महेष्वासो महात्मनाम् ।
प्रहस्य पुरुषेन्द्रस्य कर्णश्चिच्छेद कार्मुकम्'॥ ८-४४-५० (५७०९१)
ततः सन्धाय नवतिं निमेषान्नतपर्वणाम् ।
बिभेद कवचं राज्ञो रणे कर्णः शितैः शरैः ॥ ८-४४-५१ (५७०९२)
तद्वर्म हेमविकृतं रत्नचित्रं बभौ पतत् ।
सविद्युदभ्रं सवितुः श्लिष्टं वातहतं यथा ॥ ८-४४-५२ (५७०९३)
तदङ्गात्पुरुषेन्द्रस्य भ्रष्टं वर्म व्यरोचत ।
रत्नैरलंवृतं चित्रैर्व्यभ्नं निशि यथा नभः ॥ ८-४४-५३ (५७०९४)
भिन्नवर्मा शरैः पार्थो रुधिरेण समुक्षितः ।
बभासे पुरुषश्रेष्ठ उद्यन्निव दिवाकरः ॥ ८-४४-५४ (५७०९५)
स शराचितसर्वाङ्गश्छिन्नवर्माऽथ संयुगे ।
क्षात्रं धर्मं समास्थाय सिंहनादमकुर्वत ॥ ८-४४-५५ (५७०९६)
नर्दित्वा च चिरं कालं पाण्डवो रभसो रणे ।
शक्तिं चिक्षेप वेगेन प्रदीप्तामशनीमिव ॥ ८-४४-५६ (५७०९७)
तां ज्वलन्तीमिवाकाशे शक्तिं शप्तभिराशुगैः ।
भल्लैश्चिच्छेद राधेयः सा त्वशीर्यत वै रणे ॥ ८-४४-५७ (५७०९८)
हृदि बाह्वोर्ललाटे च क्षिप्रकारी युधिष्ठिरः ।
चतुर्भिस्तोमरैः कर्णं ताडयित्वाऽनदन्मुदा ॥ ८-४४-५८ (५७०९९)
उद्भिन्नरुधिरः कर्णः क्रुद्धः सर्प इव श्वसन् ।
जघान सूतं पार्थस्य पार्ष्णिं च नवभिः शरैः ॥ ८-४४-५९ (५७१००)
ध्वजं चिच्छेद नृपतेस्त्रिभिर्विव्याध चैव तम् ।
इषुधी चास्य चिच्छेद रथं च तिलशोऽच्छिनत् ॥ ८-४४-६० (५७१०१)
एतस्मिन्नन्तरे शूराः पाण्डवानां महारथाः ।
ववृषुः शरवर्षाणि राधेयं प्रति भारत ॥ ८-४४-६१ (५७१०२)
सात्यकिः पञ्चविंशत्या शिखण्डी नवभिः शरैः ।
अवर्षतां महाराज राधेयं शत्रुकर्शनम् ॥ ८-४४-६२ (५७१०३)
शैनेयं तु ततः क्रुद्धः कर्णः पञ्चभिरायसैः ।
विव्याध समरे राजंस्त्रिभिश्चान्यैः शिलीमुखैः ॥ ८-४४-६३ (५७१०४)
दक्षिणं तु भुजं तस्य त्रिभिः कर्णोऽभ्यविध्यत ।

सव्यं षोडशभिर्बाणैर्यन्तारं चास्य सप्तभिः ॥ ८-४४-६४ (५७१०५)
अथास्य चतुरो वाहांश्चतुर्भिर्निशितैः शरैः ।
सूतपुत्रोऽनयत्क्षिप्रं यमस्य सदनं प्रति ॥ ८-४४-६५ (५७१०६)
अथापरेण भल्लेन धनुश्छित्त्वा महारथः ।
सारथेः सशिरस्त्राणं शिरः कायादपाहरत् ॥ ८-४४-६६ (५७१०७)
हताश्वसूते तु रथे स्थितः स शिनिपुङ्गवः ।
शक्तिं चिक्षेप कर्णाय वैदूर्यमणिभूषिताम् ॥ ८-४४-६७ (५७१०८)
तामापतन्तीं सहसा द्विधा चिच्छेद भारत ।
कर्णो वै धन्विनां श्रेष्ठस्तांश्च सर्वानवारयत् ॥ ८-४४-६८ (५७१०९)
ततस्तान्निशितैर्बाणैः पाण्डवानां महारथान् ।
न्यवारयदमेयात्मा शिक्षया च बलेन च ॥ ८-४४-६९ (५७११०)
अर्दयित्वा शरैस्तांस्तु सिंहः क्षुद्रमृगानिव ।
पीडयन्धर्मराजानं शरैः सन्नतपर्वभिः ।
अभ्यद्रवत राधेयो धर्मपुत्रं शितैः शरैः ॥ ८-४४-७० (५७१११)
ततः पार्थो ह्यपासासीद्धताश्वो हतसारथिः ।
अशक्नुवन्मुखे स्थातुं ततः कर्णस्य दुर्मनाः ॥ ८-४४-७१ (५७११२)
तमभिद्रुत्य राधेयः पाण्डुपुत्रं युधिष्ठिरम् ।
अब्रवीत्प्रहसन्राजन्कुत्सयन्निव पाण्डवम् ॥ ८-४४-७२ (५७११३)
कथं नाम कुले जातः क्षत्रधर्मे व्यवस्थितः ।
प्रजह्यात्समरे शत्रून्प्राणान्रक्ष महाहवे ॥ ८-४४-७३ (५७११४)
न भवान्क्षत्रधर्मेषु कुशलोऽसीति मे मतिः ।
ब्राह्मे बले भवान्युक्तः स्वाध्याये यज्ञकर्मणि ॥ ८-४४-७४ (५७११५)
मा स्म युध्यस्व कौन्तेय मा स्म वीरान्समासदः ।
मा चैवं विप्रियं ब्रूहि मा च त्वं भज संयुगम् ॥ ८-४४-७५ (५७११६)
वक्तव्या मारिषाऽन्ये तु न वक्तव्यास्तु मादृशाः ।
मादृशान्हि ब्रुवन्युद्धे एतदन्यच्च लप्स्यसे ॥ ८-४४-७६ (५७११७)
स्वगृहं गच्छ कौन्तेय यत्र वा केशवार्जुनौ ।
न हि त्वां समरे राजन्हन्यात्कर्णः कथञ्चन ॥ ८-४४-७७ (५७११८)
सञ्जय उवाच। ८-४४-७८क्ष् (४९५६)
वरप्रदानं कुन्त्यास्तु कर्णः स्मृत्वा महारथः ।
वधप्राप्तं तु कौन्तेयं नावधीत्पुरुषोत्तमः ॥ ८-४४-७८ (५७११९)
एवमुक्त्वा ततः पार्थं विसृज्य च महाबलः ।
न्यहनत्पाण्डवीं सेनां वज्रहस्त इवासुरीम् ॥ ८-४४-७९ (५७१२०)
ततोऽपायाद्द्रुतं राजन्व्रीडन्निव नरेश्वरः ॥ ८-४४-८० (५७१२१)
अथापयातं राजानं मत्वाऽन्वीयुस्तमच्युतम् ।
चेदिपाण्डवपाञ्चालाः सात्यकिश्च महारथः ।

द्रौपदेयास्तथा शूरा माद्रीपुत्रौ च पाण्डवौ ॥ ८-४४-८१ (५७१२२)
ततो युधिष्ठिरानीकं दृष्ट्वा कर्णः पराङ्मुखम् ।
कुरुभिः सहितो वीरः प्रहृष्टः पृष्ठतोऽन्वगात् ॥ ८-४४-८२ (५७१२३)
भेरीशङ्खमृदङ्गानां कार्मुकाणां च निःस्वनः ।
बभूव धार्तराष्ट्राणां सिंहनादरवस्तथा ॥ ८-४४-८३ (५७१२४)
युधिष्ठिरस्तु कौरव्य रथमारुह्य सत्वरम् ।
श्रुतकीर्तेर्महाराज दृष्ट्वा तत्कर्णविक्रमम् ॥ ८-४४-८४ (५७१२५)
काल्यमानं बलं दृष्ट्वा सूतपुत्रेण मारिष ।
स्वान्योधानब्रवीत्क्रुद्धो निघ्नतैतान्किमासत ॥ ८-४४-८५ (५७१२६)
ततो राज्ञाऽभ्यनुज्ञाताः पाण्डवानां महारथाः ।
भीमसेनमुखाः सर्वे पुत्रांस्ते प्रत्युपाद्रवन् ॥ ८-४४-८६ (५७१२७)
अभवत्तुमुलः शब्दो योधानां तत्र भारत ।
रथहस्त्यश्वपत्तीनां द्रवतां निनदो महान् ।
उद्यतप्रतिविष्टानां शस्त्राणां च ततस्ततः ॥ ८-४४-८७ (५७१२८)
आगच्छत प्रहरत क्षिप्रं विपरिधावत ।
इति ब्रुवाणा ह्यन्योन्यं जघ्नुर्योधा महारणे ॥ ८-४४-८८ (५७१२९)
अभ्रच्छायेव तत्रासीच्छरवृष्टिभिरम्बरे ।
समावृतैर्नरवरैर्निघ्नद्भिरितरेतरम् ॥ ८-४४-८९ (५७१३०)
विपताकध्वजच्छत्रा व्यश्वसूतरथायुधाः ।
व्यङ्गाङ्गावयवाः पेतुः क्षितौ क्षीणाः क्षितीश्वराः ।
शिखराणीव शैलानां वज्रभिन्नानि मानिष ॥ ८-४४-९० (५७१३१)
सारोहा निहताः पेतुर्द्विपा भिन्ना महीतले ।
छिन्नभिन्नविपर्यस्तवर्मालङ्कारविग्रहाः ॥ ८-४४-९१ (५७१३२)
सारोहास्तुरगाः पेतुर्हतवीराः सहस्रशः ।
विप्रविद्वायुधाङ्गाश्च द्विरदा रथिभिर्हताः ।
प्रतिवीरैश्च सम्मर्दे पत्तिसङ्घाः सहस्रशः ॥ ८-४४-९२ (५७१३३)
विशालायतताम्राक्षैः पद्मेन्दुसदृशाननैः ।
शिरोभिर्युद्धशौण्डानां सर्वतः संवृता मही ॥ ८-४४-९३ (५७१३४)
यथा भुवि तथा व्योम्नि निःस्वनं शुश्रुवुर्जनाः ।
विमानेऽप्सरसां सङ्घैर्गीतवादित्रनिःस्वनैः ॥ ८-४४-९४ (५७१३५)
हतानभिमुखान्वीरान्वीरैः शतसहस्रशः ।
आरोप्यारोप्य गच्छन्ति विमानेष्वप्सरोगणाः ॥ ८-४४-९५ (५७१३६)
तद्दृष्ट्वा महदाश्चर्यं प्रत्यक्षं स्वर्गलिप्सया ।
प्रहृष्टमनसः शूराः क्षिप्रं जघ्नुः परस्परम् ॥ ८-४४-९६ (५७१३७)
रथिनो रथिभिः सार्धं चित्रं युयुधुराहवे ।
पत्तयः पत्तिभिर्नागाः सह नागैर्हयैर्हयोः ॥ ८-४४-९७ (५७१३८)

एवं प्रवृत्ते सङ्ग्रामे गजवाजिनरक्षये ।
सैन्येन रजसा वृत्तते स्वे स्वाञ्जघ्नुः परे परान् ॥ ८-४४-९८ (५७१३९)
कचाकचं युद्धमासीद्दन्तादन्ति नखानखि ।
मुष्टियुद्धं नियुद्धं च देहपाप्मविनाशनम् ॥ ८-४४-९९ (५७१४०)
तथा वर्ततति सङ्ग्रमे गजवाजिनरक्षये ।
नराश्वनागदेहेभ्यः प्रसृता लोहितापगा ॥ ८-४४-१०० (५७१४१)
गजाश्वनरदेहान्सा व्युवाह पतितान्बहून् ।
नराश्वगजसम्बाधे नराश्वगजसादिनाम् ॥ ८-४४-१० (५७१४२)
लोहितोदा महाघोरा मांसशोणितकर्दमा ।
नराश्वगजदेहान्वै वहन्ती भीरुभीषणा ॥ ८-४४-१० (५७१४३)
तस्या नद्याः परं पारं व्रजन्ति विजयैषिणः ।
नागेन च प्लवन्तो वै निमज्ज्योन्मज्ज्य चापरे ॥ ८-४४-१० (५७१४४)
ते तु लोहितदिग्धाङ्गा रक्तवर्मायुधाम्बराः ।
सस्नुस्ततस्यां पपुश्चास्रं मम्लुश्च भरतर्षभ ॥ ८-४४-१० (५७१४५)
रथानश्वान्नारान्नागानायुधाभरणानि च ।
वर्माणि चाप्यपश्याम पतितानि सहस्रशः ।
खं द्यां भूमिं दिशश्चैव प्रायः पश्याम लोहिताः ॥ ८-४४-१० (५७१४६)
लोहितस्य तु गन्धेन स्पर्देन च रसेन च ।
रूपेण चातिरक्ततेन शब्देन च विसर्पता ।
विषादः सुमहानासीत्प्रायः सैन्यस्य भारत ॥ ८-४४-१० (५७१४७)
तत्तु विप्रहतं सैन्यं भीमसेनमुखैस्तव ।
भूयः समाद्रवन्वीराः सातत्यकिप्रमुखास्तदा ॥ ८-४४-१० (५७१४८)
तेषामापतततां वेगमविषह्यं निरीक्ष्य च ।
पुत्राणां ते महासैन्यमासीद्राजन्पराङ्मुखम् ॥ ८-४४-१० (५७१४९)
तत्प्रकीर्णरथाश्वेभं नरवाजिसमाकुलम् ।
विध्वस्तवर्मकवचं प्रविद्धायुधकार्मुकम् ॥ ८-४४-१० (५७१५०)
व्यद्रवत्तावकं सैन्यं लोड्यमानं समन्ततः ।
सिंहार्दितमिवारण्ये यथा गजकुलं तथा ॥ ॥ ८-४४-१० (५७१५१)

इति श्रीमन्महाभारते कर्णपर्वणि सप्तदशदिवसयुद्धे
चतुश्चत्वारिंशोऽध्यायः ॥ ४४ ॥

Mahabharata - Karna Parva - Chapter Footnotes

८-४४-८ मन्त्रौषधक्रिया व्याधिर्विधिहीनक्रिया इव इति ख ट पाठः ॥
८-४४-१९ कचाकचि युद्धं इति झ पाठः ॥
८-४४-४४ चतुश्चत्वारिंशोऽध्यायः ॥

कर्नपर्व-अध्यय०४५
॥ श्रीः ॥
८.४५. अध्यायः ४५

Mahabharata - Karna Parva - Chapter Topics
कर्णं पराजित्य जिघांसोर्भीमस्य शल्येन हेतुकयहपूर्वकं निषेधनम्
॥ १ ॥

Mahabharata - Karna Parva - Chapter Text

८-४५-० (५७१५२)
सञ्जय उवाच। ८-४५-०क्ष् (४९५७)
तानभिद्रवतो दृष्ट्वा पाण्डवांस्तावकं बलम्। ८-४५-१ (५७१५३)
अन्तमद्य गमिष्यामि तस्य दुःखस्य पार्षत ॥ ८-४५-१० (५७१६२)
हन्तास्म्यद्य रणे कर्णं स वा मां निहनिष्यति ।
सङ्ग्रामेऽद्य सुघोरेऽस्मिन्सत्यमेतद्ब्रवीमि वः ॥ ८-४५-११ (५७१६३)
राजानमद्य भवतां न्यासभूतं ददानि वै ।
तस्य संरक्षणे सर्वे यतध्वं विगतज्वराः ॥ ८-४५-१२ (५७१६४)
एवमुक्त्वा महाबाहुः प्रायादाधिरथिं प्रति ।
सिंहनादेन महता सर्वाः सन्नादयन्दिशः ॥ ८-४५-१३ (५७१६५)
दृष्ट्वा त्वरितमायान्तं भीमं युद्धाभिनन्दिनम् ।
सूतपुत्रमथोवाच मद्राणामीश्वरो विभुः ॥ ८-४५-१४ (५७१६६)
शल्य उवाच। ८-४५-१५क्ष् (४९५८)
पश्य कर्ण महाबाहुं सङ्क्रुद्धं पाण्डुनन्दनम् ।
दीर्घकालार्जितं क्रोधं मोक्तुकामं त्वयि ध्रुवम् ॥ ८-४५-१५ (५७१६७)
ईदृशं नास्य रूपं मे दृष्टपूर्वं कदाचन ।
अभिमन्यौ हते कर्ण राक्षसे च घटोत्कचे ॥ ८-४५-१६ (५७१६८)
त्रैलोक्यस्य समस्तस्य शक्तः क्रुद्धो निवारणे ।
बिभर्ति सदृशं रूपं युगान्ताग्निसमप्रभम् ॥ ८-४५-१७ (५७१६९)
सञ्जय उवाच। ८-४५-१८क्ष् (४९५९)
इति ब्रुवति राधेयं मद्राणामीश्वरे नृप ।
अभ्यवर्तत वै कर्णं क्रोधदीप्ततो वृकोदरः ॥ ८-४५-१८ (५७१७०)
अथागतं तु सम्प्रेक्ष्य भीमं युद्धाभिनन्दिनम् ।
अब्रवीद्वचनं शल्यं राधेयः प्रहसन्निव ॥ ८-४५-१९ (५७१७१)
यदुक्तं वचनं मेऽद्य त्वया मद्रजनेश्वर ।

भीमसेनं प्रति विभो तत्सत्यं नात्र संशयः ॥ ८-४५-२० (५७१७२)
एष शूरश्च वीरश्च क्रोधनश्च वृकोदरः ।
निरपेक्षः शरीरे च प्राणतश्च बलाधिकः ॥ ८-४५-२१ (५७१७३)
अज्ञातवासं वसता विराटनगरे तदा ।
द्रौपद्याः प्रियकामेन केवलं बाहुसंश्रयात् ।
गूढभावं समाश्रित्य कीचकः सगणो हतः ॥ ८-४५-२२ (५७१७४)
सोऽद्य सङ्ग्रामशिरसि सन्नद्धः क्रोधमूर्च्छितः ।
किं करोद्यतदण्डेन मृत्युनापि व्रजेद्रणम् ॥ ८-४५-२३ (५७१७५)
चिरकालाभिलषितो ममायं तु मनोरथः ।
अर्जुनं समरे हन्यां मां वा हन्याद्धनञ्जयः ॥ ८-४५-२४ (५७१७६)
स मे कदाचिदद्यैव भवेद्भीमसमागमात् ॥ ८-४५-२५ (५७१७७)
निहते भीमसेने वा यदि वा विरथीकृते ।
अभियास्यति मां पार्थस्तन्मे साधु भविष्यति ।
अत्र यन्मन्यसे प्राप्तं तच्छीघ्रं सम्प्रधारय ॥ ८-४५-२६ (५७१७८)
सञ्जय उवाच। ८-४५-२७क्ष् (४९६०)
एतच्छ्रुत्वा तु वचनं राधेयस्यामितौजसः ।
उवाच वचनं शल्यः सूतपुत्रं तथागतम् ॥ ८-४५-२७ (५७१७९)
अभियाहि महाबाहो भीमसेनं महाबलम् ।
निरपेक्षश्च युध्यस्व शक्तिं स्वां सम्प्रदर्शयन् ॥ ८-४५-२८ (५७१८०)
यस्ते कामोऽभिलषितश्चिरात्प्रभृति हृद्गततः ।
स वै सम्पत्स्यते कर्ण सत्यमेतद्ब्रवीमि ते ॥ ८-४५-२९ (५७१८१)
एवमुक्ते ततः कर्णः शल्यं पुनरभाषत ।
हन्ताऽहमेनं संरब्धं मां वा हन्ता वृकोदरः ॥ ८-४५-३० (५७१८२)
एवमुक्त्वा महाराज राधेयो रथिनां वरः ।
युद्धे मनः समाधाय याहि याहीत्यचोदयत् ॥ ८-४५-३१ (५७१८३)
ततः प्रायाद्रथेनाशु शल्यस्तत्र विशाम्पते ।
यत्र भीमो महेष्वासो व्यद्रावयत वाहिनीम् ॥ ८-४५-३२ (५७१८४)
ततस्तूर्यनिनादश्च भेरीणां च महास्वनः ।
उदतिष्ठच्च राजेन्द्र कर्णभीमसमागमे ॥ ८-४५-३३ (५७१८५)
भीमसेनोऽथ सङ्क्रुद्धस्तस्य सैन्यं दुरासदम् ।
नाराचैर्विमलैस्तीक्ष्णैर्दिशः प्राद्रावयद्बली ॥ ८-४५-३४ (५७१८६)
स सन्निपातस्ततुमुलो घोररूपो विशाम्पते ।
आसीद्रौद्रो महाराज कर्णपाण्डवयोर्मृधे ॥ ८-४५-३५ (५७१८७)
ततो मुहूर्ताद्राजेन्द्र नातिकृच्छ्राद्धसन्निव ।
भीमसेनो महाबाहुः कर्णं प्रेप्सुरभिद्रवत् ॥ ८-४५-३६ (५७१८८)
समापतन्तं सम्प्रेक्ष्य कर्णो वैकर्तनो वृषा ।

आजघान सुसङ्क्रुद्धो नाराचेन स्तनान्तरे ।
पुनश्चैनममेयात्मा शरवर्षैरवाकिरत् ॥ ८-४५-३७ (५७१८९)
स विद्धः सूतपुत्रेण च्छादयामास पत्रिभिः ।
विव्याध निशितैः कर्णं नवभिर्नतपर्वभिः ॥ ८-४५-३८ (५७१९०)
तस्य कर्णो धनुर्मध्ये द्विधा चिच्छेद पत्रिभिः ॥ ८-४५-३९ (५७१९१)
अथैनं छिन्नधन्वानं प्रतत्यविध्यत्स्तनान्तरे ।
नाराचेन सुतीक्ष्णेन सर्वावरणभेदिना ॥ ८-४५-४० (५७१९२)
सोऽन्यत्कार्मुकमादाय सूततपुत्रं वृकोदरः ।
राजन्मर्मसु मर्मज्ञो विव्याध निशितैः शरैः ।
ननाद बलवन्नादं कम्पयन्निव रोदसी ॥ ८-४५-४१ (५७१९३)
ततं कर्णः पञ्चविंशत्या नाराचानां समार्पयत् ।
मदोत्कटं वने दृप्ततमुल्काभिरिव कुञ्जरम् ॥ ८-४५-४२ (५७१९४)
ततः सायकभिन्नाङ्गः पाण्डवः क्रोधमूर्च्छितः ।
संरम्भामर्षताम्राक्षः सूतपुत्रवधेप्सया ॥ ८-४५-४३ (५७१९५)
स कार्मुके महावेगं भारसाधनमुत्तमम् ।
गिरीणामपि भेत्तारं सायकं समयोजयत् ॥ ८-४५-४४ (५७१९६)
विकृष्य बलवच्चापमाकर्णादतिमारुतिः ।
तं मुमोच महेष्वासः क्रुद्धः कर्णजिघांसया ॥ ८-४५-४५ (५७१९७)
स विसृष्टो बलवता बाणो वज्राशनिस्वनः ।
अदारयद्रणे कर्णं वज्रवेगो यथाऽचलम् ॥ ८-४५-४६ (५७१९८)
स भीमसेनाभिहतः सूतपुत्रः कुरूद्वह ।
निषसाद रथोपस्थे विसंज्ञः पृतनापतिः ।
ग्रुधिरेणावसिक्ताङ्गो गतासुवदरिन्दमः ॥ ८-४५-४७ (५७१९९)
एतस्मिन्नन्तरे दृष्ट्वा मद्रराजो वृकोदरम् ।
जिघांसुं छेत्तुमायान्तं साधयन्निदमब्रवीत् ॥ ८-४५-४८ (५७२००)
भीमसेन महाबाहो यतत्तत्वां वक्ष्यामि तच्छृणु ।
वचनं हेतुसम्पन्नं श्रुत्वा चैतत्तथा कुरु ॥ ८-४५-४९ (५७२०१)
अर्जुनेन प्रतिज्ञातो वधः कर्णस्य शुष्मिणः ।
तां तथा कुरु भद्रं ते प्रतिज्ञां सव्यसाचिनः ॥ ८-४५-५० (५७२०२)
भीमसेन उवाच। ८-४५-५१क्ष् (४९६१)
दृढव्रतत्वं पार्थस्य जानामि नृपसत्तम ।
राज्ञस्तु धर्षणं पापः कृतवान्मम सन्निधौ ॥ ८-४५-५१ (५७२०३)
ततः कोपाभिभूतेन शेषं न गणितं मया ।
पतिते चापि राधेये न मे मन्युः शमं गतः)।
जिह्वोद्धरणमेवास्य प्राप्तकालं मतं मम ॥ ८-४५-५२ (५७२०४)
अनेन सुनृशंसेन समवेतेषु राजसु ।

अस्माकं शृण्वतां शल्य यानि वाक्यानि मातुल ।
असहेयानि नीचानि बहूनि श्रावितानि भो ॥ ८-४५-५३ (५७२०५)
नूनं चैतत्प्रतिज्ञातं दूरस्थस्यापि पार्थिव ।
छेदनं चास्य जिह्वायास्तदैवाकाङ्क्षितं मया ।
राज्ञस्तु प्रियकामेन कालोऽयं परिपालितः ॥ ८-४५-५४ (५७२०६)
भवता तु यदुक्तोऽस्मि वाक्यं हेत्वर्थसंहितम् ।
तद्गृहीतं महारात कटुकस्थमिवौषधम् ॥ ८-४५-५५ (५७२०७)
हीनप्रतिज्ञो बीभत्सुर्न हि जीवेत कर्हिचित् ।
अस्मिन्विनष्टे नष्टाः स्मः सर्व एव सकेशवाः ॥ ८-४५-५६ (५७२०८)
अद्य चैव नृशंसात्मा पापः पापकृतां वरः ।
गमिष्यतति परीभावं दृष्टमात्रः किरीटिना ॥ ८-४५-५७ (५७२०९)
युधिष्ठिरस्य कोपेन पूर्वं दग्धो नृशंसकृत् ।
त्वया संरक्षिततस्तत्वद्य मत्समीपादुपागतः ॥ ८-४५-५८ (५७२१०)
सञ्जय उवाच ।' ८-४५-५९क्ष् (४९६२)
एवं मद्राधिपः श्रुत्वा विसंज्ञं सूतनन्दनम् ।
अपोवाह रथेनाजौ कर्णमाहवशोभिनम् ॥ ८-४५-५९ (५७२११)
पराजिते ततः कर्णे धार्तराष्ट्री महाचमूः ।
व्यपायात्सर्वतो भग्ना हाहाभूता समन्ततः ॥ ॥ ८-४५-६० (५७२१२)

इति श्रीमन्महाभारते कर्णपर्वणि सप्ततदशदिवसयुद्धे
पञ्चचत्वारिंशोऽध्यायः ॥ ४५ ॥
Mahabharata - Karna Parva - Chapter Footnotes

८-४५-५९ ततो मद्राधिपो दृष्ट्वा इति झ पाठः ॥
८-४५-४५ पञ्चत्वारिंशोऽध्यायः ॥

---

कर्नपर्व-अध्यय०४६
॥ श्रीः ॥
८.४६. अध्यायः ४६

Mahabharata - Karna Parva - Chapter Topics
भीमकर्णयोर्युद्धम् ॥ १ ॥
भीमेन दुर्योधनानुजानां कतिपयानां हननम् ॥ २ ॥
सङ्कुलयुद्धं च ॥ ३ ॥

Mahabharata - Karna Parva - Chapter Text

८-४६-० (५७२१३)
धृतराष्ट्र उवाच। ८-४६-०क्ष् (४९६३)
सुदुष्करमिदं कर्म कृतं भीमेन सञ्जय ।
येन कर्णो महाबाहू रथोपस्थे निपातितः ॥ ८-४६-१ (५७२१४)
कर्णो ह्येको रणे हन्ता पाण्डवान्सृञ्जयैः सह ।
इति दुर्योधनः सूत प्राब्रवीन्मां मुहुर्मुहुः ॥ ८-४६-२ (५७२१५)
पराजितं तु राधेयं दृष्ट्वा भीमेन संयुगे ।
ततः परं किमकरोत्पुत्रो दुर्योधनो मम ॥ ८-४६-३ (५७२१६)
सञ्जय उवाच। ८-४६-४क्ष् (४९६४)
विमुखं प्रेक्ष्य राधेयं सूतपुत्रं महाहवे ।
पुत्रस्तव महाराज सोदर्यानिदमब्रवीत् ॥ ८-४६-४ (५७२१७)
शीघ्रं गच्छत भद्रं वो राधेयं परिरक्षत ।
भीमसेनभयेऽगाधे मज्जन्तं व्यसनार्णवे ॥ ८-४६-५ (५७२१८)
ते तु राज्ञा समादिष्टा भीमसेनं जिघांसवः ।
अभ्यवर्तन्त सङ्क्रुद्धाः पतङ्गाः पावकं यथा ॥ ८-४६-६ (५७२१९)
श्रुतायुर्दुर्धरः क्राथो विवित्सुर्विकटः समः ।
निषङ्गी कवची पाशी तथा नन्दोपनन्दकौ ॥ ८-४६-७ (५७२२०)
दुष्प्रधर्षः सुबाहुश्च वातवेगसुवर्चसौ ।
धनुर्ग्राहो दुर्मदश्च जलसन्धः शलः सहः ॥ ८-४६-८ (५७२२१)
एते रथैः परिवृता वीर्यवन्तो महाबलाः ।
भीमसेनं समासाद्य समन्तात्पर्यवारयन् ॥ ८-४६-९ (५७२२२)
ते व्यमुञ्चञ्छरव्रातान्नानालिङ्गान्समन्ततः ।
स तैरभ्यर्द्यमानस्तु भीमसेनो महाबलः ॥ ८-४६-१० (५७२२३)
तेषामापततां क्षिप्रं सुतानां ते जनाधिप ।
रथैः पञ्चशतैः सार्धं पञ्चाशदहनद्रथान् ॥ ८-४६-११ (५७२२४)
विवित्सोस्तु ततः क्रुद्धो भल्लेनापाहरच्छिरः ।
भीमसेनो महाराज तत्पपात हतं भुवि ॥ ८-४६-१२ (५७२२५)
सकुण्डलशिरस्त्राणं पूर्णचन्द्रोपमं तथा ।
ग्अशोभत महाराज पूर्णचन्द्र इवाम्बरे'॥ ८-४६-१३ (५७२२६)
तं दृष्ट्वा निहतं शूरं भ्रातरः सर्वतस्तदा ।
अभ्यद्रवन्त समरे भीमं भीमपराक्रमम् ॥ ८-४६-१४ (५७२२७)
ततोऽपराभ्यां भल्लाभ्यां पुत्रयोस्ते महाहवे ।
जहार समरे प्राणान्भीमो भीमपराक्रमः ॥ ८-४६-१५ (५७२२८)
तौ धरामन्वपद्येतां वातरुग्णाविव द्रुमौ ।
विकटश्च सहश्चोमौ देवपुत्रोपमौ नृप ॥ ८-४६-१६ (५७२२९)

ततस्तु त्वरितो भीमः क्राथं निन्ये यमक्षयम् ।
नाराचेन सुतीक्ष्णेन स हतो न्यपतद्भुवि ॥ ८-४६-१७ (५७२३०)
हाहाकारस्ततस्तीव्रः सम्बभूव जनेश्वर ।
वध्यमानेषु वीरेषु तव पुत्रेषु धन्विषु ॥ ८-४६-१८ (५७२३१)
तेषां सुलुलिते सैन्ये पुनर्भीमो महाबलः ।
नन्दोपनन्दौ समरे प्रैषयद्यमसादनम् ॥ ८-४६-१९ (५७२३२)
ततस्ते प्राद्रवन्भीताः पुत्रास्ते विह्वलीकृताः ।
भीमसेनं रणे दृष्ट्वा कालान्तकयमोपमम् ॥ ८-४६-२० (५७२३३)
पुत्रांस्ते निहतान्दृष्ट्वा सूतपुत्रः सुदुर्मनाः ।
हंसवर्णान्हयान्भूयः प्रैषयद्यत्र पाण्डवः ॥ ८-४६-२१ (५७२३४)
ते प्रेषिता महाराज मद्रराजेन वाजिनः ।
भीमसेनरथं प्राप्य समसज्जन्त वेगिताः ॥ ८-४६-२२ (५७२३५)
स सन्निपातस्तुमुलो घोररूपो विशाम्पते ।
आसीद्रौद्रो महाराज कर्णपाण्डवयोर्मृधे ॥ ८-४६-२३ (५७२३६)
दृष्ट्वा मम महाराज तौ समेतौ महारथौ ।
आसीद्बुद्धिः कथं युद्धमेतदद्य भविष्यति ॥ ८-४६-२४ (५७२३७)
ततो भीमो रणश्लाघी छादयामास पत्रिभिः ।
कर्णं रणे महाराज पुत्राणां तव पश्यताम् ॥ ८-४६-२५ (५७२३८)
ततः कर्णो भृशं क्रुद्धो भीमं नवभिरायसैः ।
विव्याध परमास्त्रज्ञो भल्लैः सन्नतपर्वभिः ॥ ८-४६-२६ (५७२३९)
तान्निहत्य महाबाहुर्भीमो भीमपराक्रमः ।
आकर्णपूर्णैर्विशिखैः कर्णं विव्याध सप्तभिः ॥ ८-४६-२७ (५७२४०)
ततः कर्णो महाराज आशीविष इव श्वसन् ।
शरवर्षेण महता छादयामास पाण्डवम् ॥ ८-४६-२८ (५७२४१)
भीमोऽपि ततं शरव्रातैश्छादयित्वा महारथम् ।
पश्यतां कौरवेयाणां विननर्द महाबलः ॥ ८-४६-२९ (५७२४२)
ततः कर्णो भृशं क्रुद्धो दृढमादाय कार्मुकम् ।
भीमं विव्याध दशभिः कङ्कपत्रैः शिलाशितैः ।
कार्मुकं चास्य चिच्छेद भल्लेन निशितेन च ॥ ८-४६-३० (५७२४३)
ततो भीमो महाबाहुर्हेमपट्टविभूषितम् ।
परिघं घोरमादाय मृतत्युदण्डमिवापरम् ।
कर्णस्य निधनाकाङ्क्षी चिक्षेपातिबलो नदन् ॥ ८-४६-३१ (५७२४४)
तमापतन्तं परिघं वज्राशनिसमस्वनम् ।
चिच्छेद बहुधा कर्णः शरैराशीविषोपमैः ॥ ८-४६-३२ (५७२४५)
ततः कार्मुकमादाय भीमो दृढतरं तदा ।
छादयामास विशिखैः कर्णं परबलार्दनम् ॥ ८-४६-३३ (५७२४६)

ततो युद्धमभूद्घोरं कर्णपाण्डवयोर्मृधे ।
बलीन्द्रयोरिव मुहुः परस्परवधैषिणोः ॥ ८-४६-३४ (५७२४७)
ततः कर्णो महाराज भीमसेनं त्रिभिः शरैः ।
आकर्णपूर्णैर्विव्याध दृढमानम्य कार्मुकम् ॥ ८-४६-३५ (५७२४८)
सोऽतिविद्धो महेष्वासः कर्णेन बलिनां वरः ।
घोरमादत्त विशिखं कर्णकायावदारणम् ॥ ८-४६-३६ (५७२४९)
तस्य भित्त्वा तनुत्राणं भित्त्वा कायं च सायकः ।
प्राविशद्धरणीं राजन्वल्मीकमिव पन्नगः ॥ ८-४६-३७ (५७२५०)
स तेनातिप्रहारेण व्यथितो विह्वलन्निव ॥
सञ्चचाल रथे कर्णः क्षितिकम्पे यथाऽचलः ॥ ८-४६-३८ (५७२५१)
ततः कर्णो महाराज रोषामर्षसमन्वितः ।
भीमं तं पञ्चविंशत्या नाराचानां समार्पयत् ॥ ८-४६-३९ (५७२५२)
चिच्छेद कार्मुकं तूर्णं पाण्डवस्याशु पत्रिणा ॥ ८-४६-४० (५७२५३)
तततो मुहूर्ताद्राजेन्द्र नातिकृच्छ्राद्धसन्निव ।
विरथं भीमकर्माणं भीमं कर्णश्चकार ह ॥ ८-४६-४१ (५७२५४)
विरथो भरतश्रेष्ठ प्रहसन्ननिलोपमः ।
गदां गृह्य महाबाहुरपतत्स्यन्दनोत्तमात् ॥ ८-४६-४२ (५७२५५)
गदया च महाराज कर्णस्य रथकूबरम् ।
पोथयामास सङ्क्रुद्धः समरे शत्रुतापनः ॥ ८-४६-४३ (५७२५६)
स क्रोधवशमापन्नः पाण्डुपुत्रः प्रतापवान् ।
विद्राव्य गदया वीरस्तव पुत्रान्महाहवे ॥ ८-४६-४४ (५७२५७)
नागान्सप्तशतान्राजन्नीषादन्तान्प्रहारिणः ।
व्यधमत्सहसा भीमः क्रुद्धरूपः परन्तपः ॥ ८-४६-४५ (५७२५८)
दन्तवेष्टेषु नेत्रेषु कुम्भेषु च कटेषु च ।
मर्मस्वपि च मर्मज्ञस्तान्नागानवधीद्बली ॥ ८-४६-४६ (५७२५९)
ग्अर्दिता भीमसेनेन विनदन्तो भृशातुराः'।
ततस्ते प्राद्रवन्भीताः प्रहताश्च पुनःपुनः ।
महामात्रास्तमावव्रुर्मेघा इव दिवाकरम् ॥ ८-४६-४७ (५७२६०)
तान्स सप्तशतान्नागान्सारोहायुधकेतनान् ।
भूमिष्ठो गदया जघ्ने वज्रेणेन्द्र इवाचलान् ॥ ८-४६-४८ (५७२६१)
ततः सुबलपुत्रस्य नागानतिबलान्पुनः ।
पोथयामास कौन्तेयो द्विपञ्चाशदरिन्दमः ॥ ८-४६-४९ (५७२६२)
तथा रथशततं साग्रं पत्तींश्च शतशोऽपरान् ।
न्यहनत्पाण्डवो युद्धे तापयंस्तव वाहिनीम् ॥ ८-४६-५० (५७२६३)
प्रताप्यमानं सूर्येण भीमेन च महात्मना ।
तव सैन्यं सञ्चुकोच चर्माग्नावाहितं यथा ॥ ८-४६-५१ (५७२६४)

ते भीमभयसन्त्रस्तास्तावका भरतर्षभ ।
विहाय समरे कर्णं दुद्रुवुर्वै दिशो दश ॥ ८-४६-५२ (५७२६५)
रथाः पञ्चशताश्चान्ये ह्रादिनः शरवर्षिणः ।
भीममभ्यद्रवन्घ्नन्तः शरपूगैः समन्ततः ॥ ८-४६-५३ (५७२६६)
तान्स पञ्चशतान्वीरान्सपताकध्वजायुधान् ।
पोथयामास गदया भीमो विष्णुरिवासुरान् ॥ ८-४६-५४ (५७२६७)
ततः शकुनिनिर्दिष्टाः सादिनः शूरसम्मताः ।
त्रिसाहस्राण्यभिययुः शरशक्त्यृष्टिपाणयः ॥ ८-४६-५५ (५७२६८)
तान्प्रत्युद्गम्य यवनान्साश्वारोहांस्तदाऽरिहा ।
विविधान्विचरन्मार्गान्गदया समपोथयत् ॥ ८-४६-५६ (५७२६९)
तेषामासीन्महाञ्छब्दस्ताडितानां च सर्वशः ।
अग्निभिर्दह्यमानानां नलानामिव भारत ॥ ८-४६-५७ (५७२७०)
एवं सुबलपुत्रस्य त्रिसाहस्रान्हयोत्तमान् ।
हत्वाऽन्यं रथमास्थाय क्रुद्धो राधेयमभ्ययात् ॥ ८-४६-५८ (५७२७१)
कर्णोऽपि समरे राजन्धर्मपुत्रमरिन्दमम् ।
स शरैश्छादयामास सारथिं चाप्यपातयत् ॥ ८-४६-५९ (५७२७२)
ततः स प्रद्रुतं सैन्यं दृष्ट्वा कर्णो महारथः ।
अन्वधावत्किरन्बाणैः कङ्कपत्रैरजिह्मगैः ॥ ८-४६-६० (५७२७३)
राजानमभिधावन्तं शरैरावृत्य रोदसी ।
क्रुद्धः प्रच्छादयामास शरजालेन मारुतिः ॥ ८-४६-६१ (५७२७४)
सन्निवृत्तस्ततस्तूर्णं राधेयः शत्रुकर्शनः ।
भीमं प्रच्छादयामास समन्तान्निशितैः शरैः ॥ ८-४६-६२ (५७२७५)
भीमसेनरथप्रेप्सुं कर्णं भारत सात्यकिः ।
अभ्यर्दयदमेयात्मा पार्ष्णिग्रहणकारणात् ॥ ८-४६-६३ (५७२७६)
भीमसेनरथप्रेप्सुं कर्णो भारत सात्यकिम् ।
अभ्यवर्तत शैनेयमर्दयञ्छरवृष्टिभिः ॥ ८-४६-६४ (५७२७७)
तावन्योन्यं समासाद्य वृषभौ सर्वधन्विनाम् ।
विसृजन्तौ शरान्दीप्तान्विभ्राजेतां मनस्विनौ ॥ ८-४६-६५ (५७२७८)
ताभ्यां वियति राजेन्द्र विततततं भीमदर्शनम् ।
क्रौञ्चपृष्ठारुणं रौद्रं बाणजालं व्यदृश्यत ॥ ८-४६-६६ (५७२७९)
नैव सूर्यप्रभा राजन्न दिशः प्रदिशस्तथा ।
प्राज्ञासिष्म वयं ते वा शरैर्मुक्तैः सहस्रशः ॥ ८-४६-६७ (५७२८०)
मध्याह्ने तपतो राजन्भास्करस्य महाप्रभाः ।
हृताः सर्वाः शरौघैस्तैः कर्णमाधवयोस्तदा ॥ ८-४६-६८ (५७२८१)
सौबलं कृतवर्माणं द्रौणिमाधिरथिं कृपम् ।
संसक्तान्पाण्डवैर्दृष्ट्वा निवृत्ताः कुरवः पुनः ॥ ८-४६-६९ (५७२८२)

तेषामापततां शब्दस्तीव्र आसीद्विशाम्पते ।
उद्वृत्तानां यथा वृष्ट्या सागराणां भयावहः ॥ ८-४६-७० (५७२८३)
ते सेने भृशसंसक्ते दृष्ट्वाऽन्योन्यं महाहवे ।
हर्षेण महता युक्ते परिगृह्य परस्परम् ॥ ८-४६-७१ (५७२८४)
ततः प्रववृते युद्धं मध्यं प्राप्ते दिवाकरे ।
यादृशं नैवमस्माभिर्दृष्टपूर्वं न च श्रुतम् ॥ ८-४६-७२ (५७२८५)
बलौघस्तु समासाद्य बलौघं सहसा रणे ।
उपसर्पत वेगेन वार्योघ इव सागरम् ॥ ८-४६-७३ (५७२८६)
आसीन्निनादः सुमहान्बाणौघानां परस्परम् ।
गर्जतां सागरौघाणां यथा स्यान्निःस्वनो महान् ॥ ८-४६-७४ (५७२८७)
ते तु सेने समासाद्य वेगवत्यौ परस्परम् ।
एकीभावमनुप्राप्ते नद्याविव समागमे ॥ ८-४६-७५ (५७२८८)
ततः प्रववृते युद्धं घोररूपं विशाम्पते ।
कुरूणां पाण्डवानां च लिप्सतां सुमहद्यशः ॥ ८-४६-७६ (५७२८९)
शूराणां गर्जतां तत्र ह्यविच्छेदकृता गिरः ।
श्रूयन्ते विविधा राजन्नामान्युद्दिश्य भारत ॥ ८-४६-७७ (५७२९०)
यस्य यद्धि रणे व्यङ्गं पितृतो मातृतोऽपि वा ।
कर्मतः शीलतो वाऽपि स तच्छ्रावयते युधि ॥ ८-४६-७८ (५७२९१)
तान्दृष्ट्वा समरे शूशांस्तर्जमानान्परस्परम् ।
अभवन्मे मती राजन्नैषामस्तीति जीवितम् ॥ ८-४६-७९ (५७२९२)
तेषां दृष्ट्वा तु क्रुद्धानां वपूंष्यमिततेजसाम् ।
अभवन्मे भयं तीव्रं कथमेतद्भविष्यति ॥ ८-४६-८० (५७२९३)
ततस्ते पाण्डवा राजन्कौरवाश्च महारथाः ।
ततक्षुः सायकैस्तूर्णमन्योन्यं विजयैषिणः ॥ ॥ ८-४६-८१ (५७२९४)

इति श्रीमन्महाभारते कर्णपर्वणि सप्तदशदिवसयुद्धे
षट्चत्वारिंशोऽध्यायः ॥ ४६ ॥

---

कर्नपर्व-अध्यय०४७
॥ श्रीः ॥
८.४७. अध्यायः ४७

Mahabharata - Karna Parva - Chapter Topics
सङ्कुलयुद्धम् ॥ १ ॥

Mahabharata - Karna Parva - Chapter Text

८-४७-० (५७२९५)
सञ्जय उवाच। ८-४७-०क्ष् (४९६५)
क्षत्रियास्ते महाराज परस्परवधैषिणः ।
अन्योन्यं समरे जघ्नुः कृतवैरा महौजसः ॥ ८-४७-१ (५७२९६)
रथौघाश्च हयौघाश्च नरौघाश्च समन्ततः ।
गजौघाश्च महाराज संसक्ताश्च परस्परम् ॥ ८-४७-२ (५७२९७)
गदानां परिघाणां च शक्तीनां च परस्परम् ।
प्रासानां भिण्डिपालानां मुसुण्ठीनां च सर्वशः ॥ ८-४७-३ (५७२९८)
सम्पातं चानुपश्याम सङ्ग्रामे भृशदारुणे ।
शलभा इव सम्पेतुः शरवृष्ट्यः समन्ततः ॥ ८-४७-४ (५७२९९)
नागान्नागाः समासाद्य व्यधमन्त परस्परम् ।
हया हयांश्च समरे रथिनो रथिनस्तथा ॥ ८-४७-५ (५७३००)
पत्तयः पत्तिसङ्घांश्च हयसङ्घांश्च पत्तयः ।
पत्तयो रथमातङ्गान्रथा हस्त्यश्वमेव च ।
नागाश्च समरे त्र्यङ्गं ममृदुः शीघ्रगा नृप ॥ ८-४७-६ (५७३०१)
वध्यतां तत्र शूराणां क्रोशतां च परस्परम् ।
घोरमायोधनं जज्ञे पशूनां घातने यथा ॥ ८-४७-७ (५७३०२)
रुधिरेण समास्तीर्णा बभौ भारत मेदिनी ।
शक्रगोपगणाकीर्णा प्रावृषीव वसुन्धरा ॥ ८-४७-८ (५७३०३)
यथा वा वाससी शुक्ले महारजनरञ्जिते ।
बिभ्रती युवती श्यामा तद्वदासीद्वसुन्धरा ॥ ८-४७-९ (५७३०४)
ग्बद्धचूडामणिधरैः शिरोभिश्चारुकुण्डलैः ।
उज्झितैर्वृषभाक्षाणां भ्राजते स्म वसुन्धरा'॥ ८-४७-१० (५७३०५)
शशशोणितदिग्धेव शातकुम्भमयीव च ।
ग्भूर्बभौ भरतश्रेष्ठ शान्तार्चिर्भिरिवानलैः ॥' ८-४७-११ (५७३०६)
छिन्नानां चोत्तमाङ्गानां बाहूनां चोरुभिः सह ।
कुण्डलानां पिनद्धानां भूषणानां च भारत ॥ ८-४७-१२ (५७३०७)
निष्काणां हेमसूत्राणां शरीराणां च धन्विनाम् ।
चर्मणां सपताकानां सङ्घास्तत्रापतन्भुवि। ८-४७-१३ (५७३०८)
ग्अगम्यकल्पा पृथिवी सर्वतो भृशकर्दमा'॥
गजा गजान्समासाद्य विषाणैरार्दयन्नृप ।
विषाणाग्रहतास्तत्र भ्राजन्ते द्विरदोत्तमाः ।
रुधिरेणावसिक्ताङ्गा गैरिकप्रस्रवा इव ।
ग्प्रावृट्काले महाराज मेघा इव सविद्युतः'॥ ८-४७-१४ (५७३०९)
स्यन्दमाना यथा भान्ति पर्वता धातुमण्डिताः ।

ग्तथा रेजू रणे नागा रुधिरेण समाप्लुताः'॥ ८-४७-१५ (५७३१०)
तोमरान्सादिभिर्मुक्तान्प्रतिमानस्थितान्बहून् ।
हस्तैरुद्धृत्य तान्नागा बभञ्जुश्चापरे रणे ॥ ८-४७-१६ (५७३११)
नाराचैश्छिन्नवर्माणो भ्राजन्ते स्म गजोत्तमाः ।
हिमागमे यथा राजन्व्यभ्रा इव महीधराः ॥ ८-४७-१७ (५७३१२)
शरैः कनकपुङ्खैश्च चिता रेजुर्गजोत्तमाः ।
उल्काभिः सम्प्रदीप्ताग्राः पर्वता इव भारत ॥ ८-४७-१८ (५७३१३)
केचिदभ्याहता नागैर्नागा नगवरोपमाः ।
न चेलुः समरात्तस्माच्छिन्नपक्षा इवाद्रयः ॥ ८-४७-१९ (५७३१४)
अपरे प्राद्रवन्नागाः शरार्ता व्रणपीडिताः ।
प्रतिमानैश्च कुम्भैश्च पेतुरुर्व्यां महाहवे ॥ ८-४७-२० (५७३१५)
निषेदुः सिंहवच्चान्ये नदन्तो भैरवान्रवान् ।
वेमुश्च बहवो राजंश्चुक्रुशुश्चापरे गजाः ॥ ८-४७-२१ (५७३१६)
हयाश्च निहता बाणैर्हेमभाण्डविभूषिताः ।
निषेदुश्चैव मम्लुश्च बभ्रमुश्च दिशो दश ॥ ८-४७-२२ (५७३१७)
अपरे क्लिश्यमानाश्च व्यवेष्टन्त महीतले ।
भावान्बहुविधांश्चक्रुस्ताडिताः शरतोमरैः ॥ ८-४७-२३ (५७३१८)
नरास्तु निहता भूमौ कूजन्तस्तत्र मारिप ।
दृष्ट्वा च बान्धवानन्ये पितॄनन्ये पितामहान् ॥ ८-४७-२४ (५७३१९)
धावमानान्परांश्चान्ये दृष्ट्वान्ये तत्र भारत ।
ख्यातानि गोत्रनामानि शशंसुरितरेतरम् ॥ ८-४७-२५ (५७३२०)
तेषां छिन्ना महाराज भुजाः कनकभूषणाः ।
उद्वेष्टन्ते विवेष्टन्ते भ्रमन्ति ह्युत्पतन्ति च ॥ ८-४७-२६ (५७३२१)
निपतन्ति तथैवान्ये स्फुरन्ति च सहस्रशः ।
वेगांश्चान्ये रमे चक्रुः पञ्चास्या इव पन्नगाः ॥ ८-४७-२७ (५७३२२)
ते भुजा भोगिभोगाभाश्चन्दनाक्ता विशाम्पते ।
लोहितार्द्रा भृशं रेजुस्तपनीयध्वजा इव ॥ ८-४७-२८ (५७३२३)
वर्तमाने तथा घोरे सङ्कुले सर्वतो दिशम् ।
अविज्ञाताः स्म युध्यन्ते विनिघ्नन्तः परस्परम् ॥ ८-४७-२९ (५७३२४)
भौमेन रजसाकीर्णे शस्त्रसम्पातसङ्कुले ।
नैव स्वे न परे राजन्व्यज्ञायन्त तमोवृताः ॥ ८-४७-३० (५७३२५)
तथा तदभवद्युद्धं घोररूपं भयानकम् ।
लोहितोदा महानद्यः प्रसस्रुस्तत्र चासकृत् ॥ ८-४७-३१ (५७३२६)
शीर्षपाषाणसञ्छन्नाः केशशैवलशाद्वलाः ।
अस्थिमीनसमाकीर्णा धनुःशरगदोडुपाः ॥ ८-४७-३२ (५७३२७)
मांसशोणितपङ्किन्यो घोररूपाः सुदारुणाः ।

नदीः प्रवर्तयामासुः सोणितौघविवर्धिनीः ॥ ८-४७-३३ (५७३२८)
भीरुवित्रासकारिण्यः शूराणां हर्षवर्धनाः ।
ता नद्यो घोररूपास्तु नयन्त्यो यमसादनम् ॥ ८-४७-३४ (५७३२९)
अवगाढान्मज्जयन्त्यः क्षत्रस्याजनयन्भयम् ।
क्रव्यादानां नरव्याघ्र नर्दतां तत्रतत्र ह ॥ ८-४७-३५ (५७३३०)
घोरमायोधनं जज्ञे प्रेतराजपुरोपमम् ।
उत्थितान्यगणेयानि कबन्धानि समन्ततः ॥ ८-४७-३६ (५७३३१)
नृत्यन्ति वै भूतगणाः सुतृप्ता मांसशोणितैः ।
पीत्वा च शोणितं तत्र वसां भुक्त्वा च भारत ॥ ८-४७-३७ (५७३३२)
मेदोमज्जावसामत्तास्तृप्ता मांसस्य चैव ह ।
धावमानाः स्म दृश्यन्ते काकगृध्रबकास्तथा ॥ ८-४७-३८ (५७३३३)
शूरास्तु समरे राजन्भयं त्यक्त्वा सुदुस्त्यजम् ।
योधव्रतसमाख्याताश्चक्रुः कर्माण्यभीतवत् ॥ ८-४७-३९ (५७३३४)
शरशक्तिसमाकीर्णे क्रव्यादगणसङ्कुले ।
व्यचरन्त रणे शूराः ख्यापयन्तः स्वपौरुषम् ॥ ८-४७-४० (५७३३५)
अन्योन्यं श्रावयन्ति स्म नामगोत्राणि भारत ।
पितृनामानि च रणे गोत्रनामानि वा विभो ॥ ८-४७-४१ (५७३३६)
श्रावयाणाश्च बहवस्तत्र योधा विशाम्पते ।
अन्योन्यमवमृद्नन्तः शक्तितोमरपट्टसैः ॥ ८-४७-४२ (५७३३७)
वर्तमाने तथा युद्धे घोररूपे सुदारुणे ।
व्यषीदत्कौरवी सेना भिन्ना नौरिव सागरे ॥ ॥ ८-४७-४३ (५७३३८)

इति श्रीमन्महाभारते कर्णपर्वणि सप्तदशदिवसयुद्धे
सप्तचत्वारिंशोऽध्यायः ॥ ४७ ॥
Mahabharata - Karna Parva - Chapter Footnotes

८-४७-४ वृष्व्यः वृष्टयः ॥
८-४७-४७ सप्तचत्वारिंशोऽध्यायः ॥

---

कर्नपर्व-अध्यय०४८
॥ श्रीः ॥
८.४८. अध्यायः ४८

Mahabharata - Karna Parva - Chapter Topics
अर्जुनस्य संशप्तकैर्युद्धम् ॥ १ ॥

८-४८-० (५७३३९)
सञ्जय उवाच। ८-४८-०क्ष् (४९६६)
वर्तमाने तथा युद्धे क्षत्रियाणां निमज्जने ।
गाण्डीवस्य महाघोषः श्रूयते युधि मारिष ॥ ८-४८-१ (५७३४०)
संशप्तकानामकरोत्कदनं यत्र पाण्डवः ।
कोसलानां तथा राजन्नारायणबलस्य च ॥ ८-४८-२ (५७३४१)
संशप्तकास्तु समरे शरवृष्टिः समन्ततः ।
अपातयन्पार्थमूर्ध्नि जयगृद्धाः प्रमन्यवः ॥ ८-४८-३ (५७३४२)
तां शस्त्रवृष्टिमायान्तीमुरसा धारयन्प्रभुः ।
व्यगाहत परान्पार्थो विनिघ्नन्रथिनां वरान् ॥ ८-४८-४ (५७३४३)
विक्षोभ्य तु रथानीकं कङ्कपत्रैः शिलाशितैः ।
आससाद ततः पार्थः सुशर्माणं महारथम् ॥ ८-४८-५ (५७३४४)
स तस्य शरवर्षाणि ववर्ष रथिनां वरः ।
तथा संशप्तकाश्चैव पार्थस्य समरे स्थिताः ॥ ८-४८-६ (५७३४५)
सुशर्मा तु ततः पार्थं विद्धवा दशभिराशुगैः ।
जनार्दनं त्रिभिर्बाणैरहनद्दक्षिणे भुजे ॥ ८-४८-७ (५७३४६)
ततोऽपरेण भल्लेन केतुं पार्थस्य मारिष ।
विव्याध समरे राजन्सुशर्मा क्रोधमूर्च्छितः ॥ ८-४८-८ (५७३४७)
स वानरवरो राजन्विश्वकर्मकृतो महान् ।
ननाद सुमहानादं नृत्यन्निव विभीषयन् ॥ ८-४८-९ (५७३४८)
कपेस्तु निनदं श्रुत्वा सन्त्रस्ता तव वाहिनी ।
भयं विपुलमासाद्य निश्चेष्टा समपद्यत ॥ ८-४८-१० (५७३४९)
ततः सा शुशुभे सेना निश्चेष्टाऽवस्थिता नृप ।
नानापुष्पसमाकीर्णं यथा चित्रीकृतं वनम् ॥ ८-४८-११ (५७३५०)
प्रतिलभ्य ततः संज्ञां योधास्ते कुरुसत्तम ।
अर्जुनं सिषिचुर्बाणैः पर्वतं जलदा इव ॥ ८-४८-१२ (५७३५१)
सञ्छाद्य समरे पार्थं परिवव्रुः समन्ततः ।
ते हयान्रथचक्रे तु रथेषां चापि मारिष ।
ग्रहीतुं प्रचक्रमुश्चैव क्रोधाविष्टाः समन्ततः ॥ ८-४८-१३ (५७३५२)
निगृह्य तु रथं तस्य योधास्ते तु सहस्रशः ।
रथबन्धं प्रचक्रुर्हि पाण्डवस्यामितौजसः ॥ ८-४८-१४ (५७३५३)
रथमारुरुहुः केचित्कृष्णपार्थौ जिघृक्षवः ।
संशप्तकानां योधास्ते सिंहनादांश्च नेदिरे ॥ ८-४८-१५ (५७३५४)
अपरे जगृहुश्चैव केशवस्य महाभुजौ ।

पार्थं चैके महाराज रथस्थं जगृहुर्मुदा ॥ ८-४८-१६ (५७३५५)
अच्युतः स महाबाहुर्विधुन्वन्व्रणमूर्धनि ।
पातयामास तान्सर्वान्दुष्टहस्तीव हस्तिपान् ॥ ८-४८-१७ (५७३५६)
स रथस्तैर्गृहीतस्तु पाण्डवस्य महात्मनः ।
स्पन्दितुं नाशकद्राजंस्तदद्भुतमिवाभवत् ॥ ८-४८-१८ (५७३५७)
ततः पार्थो महाबाहुः संवृतः स्तैर्महारथैः ।
निगृहीतं रथं दृष्ट्वा तांश्चाप्याद्रवतो बहून् ॥ ८-४८-१९ (५७३५८)
रथारूढांश्च सुबहून्पदाऽऽक्षिप्य न्यपातयत् ।
अपातयदसम्भ्रान्तः शरैरासन्नयोधिभिः ॥ ८-४८-२० (५७३५९)
तांस्तापयित्वा समरे पार्थः परपुरञ्जयः ।
स्मयन्निव महाबाहुः केशवं वाक्यमब्रवीत् ॥ ८-४८-२१ (५७३६०)
पश्य कृष्ण महाबाहो संशप्तकगणान्बहून् ।
कुर्वतोऽसुकरं कर्म मुमूर्षून्कालचोदितान् ॥ ८-४८-२२ (५७३६१)
रथबन्धमिमं प्राप्य पृथिव्यां नास्ति कश्चन ।
यः सहेत पुमाँल्लोके मदन्यः क्षत्रियर्षभः ॥ ८-४८-२३ (५७३६२)
पश्यैततानद्य समरे मत्प्रयुक्तैः सुतेजनैः ।
पात्यमानान्रणे कृष्ण शरैराशीविषोपमैः ॥ ८-४८-२४ (५७३६३)
इत्येवमुक्त्वा बीभत्सुः शङ्खप्रवरमुत्तमम् ।
व्यनादयदमेयात्मा देवदत्तं महामृधे ॥ ८-४८-२५ (५७३६४)
देवदत्तस्वनं श्रुत्वा केशवोऽपि महायशाः ।
पाञ्चजन्यस्वनं चक्रे पूरयन्निव रोदसी ॥ ८-४८-२६ (५७३६५)
तयोः शङ्खस्वनं श्रुत्वा संशप्तकवरूथिनी ।
सञ्चचाल महाराज वित्रस्ता चाद्रवद्भृशम् ॥ ८-४८-२७ (५७३६६)
नागमस्त्रं ततः पार्थः प्रादुश्चक्रे हसन्निव ।
पादबन्धं स तेषां वै चक्रे तेन महास्त्रवित् ॥ ८-४८-२८ (५७३६७)
यानुद्दिश्य रणे पार्थः पादबन्धं चकार ह ।
ते बद्धाः पादबन्धेन योधाः संशप्तकास्तदा ॥ ८-४८-२९ (५७३६८)
निर्विचेष्टास्तदाऽभूवन्पाण्डवस्यास्त्रतेजसा ।
निर्विचेष्टांस्ततो योधानवधीत्पाण्डुनन्दनः ।
यथेन्द्रः समरे दैत्यांस्तारकस्य वधे पुरा ॥ ८-४८-३० (५७३६९)
ते वध्यमानाः समरे मुमुचुस्तं रथोत्तमम् ।
आयुधानि च सर्वाणि विस्रष्टुमुपचक्रमुः ॥ ८-४८-३१ (५७३७०)
ततः सुशर्मा राजेन्द्र गृहीतां वीक्ष्य वाहिनीम् ।
सौपर्णमस्त्रं त्वरितः प्रादुश्चक्रे महारथः ॥ ८-४८-३२ (५७३७१)
ततः सुपर्णाः सम्पेतुर्भक्षयन्तो भुजङ्गमान् ।
ततो विदुद्रुवुर्नागास्तान्दृष्ट्वा खेचरान्नृप ॥ ८-४८-३३ (५७३७२)

तद्विमुक्तं बलं रेजे पादबन्धाद्विशाम्पते ।
मेघबन्धाद्यथा मुक्तो भास्करस्तापयन्प्रजाः ॥ ८-४८-३४ (५७३७३)
विप्रमुक्ताः स्वका योधाः फल्गुनस्य रथं प्रति ।
ससृजुः शरसङ्घांश्च शस्त्रसङ्घांश्च मारिष ॥ ८-४८-३५ (५७३७४)
तां महास्त्रमयीं वृष्टिं शरैः सञ्छिद्य भारत ।
अवधीत्सततो योधान्वासविः परवीरहा ॥ ८-४८-३६ (५७३७५)
सुशर्मा तु ततो राजन्बाणेन नतपर्वणा ।
अर्जुनं हृदये विद्ध्वा विव्याधान्यैस्त्रिसप्तभिः ॥ ८-४८-३७ (५७३७६)
स गाढविद्धो व्यथितो रथोपस्थ उपाविशतत् ।
तत उच्चुक्रुशुः सर्वे हतः पार्थ इति ब्रुवन् ॥ ८-४८-३८ (५७३७७)
ततः शङ्खनिनादाश्च भेरीशब्दाश्च पुष्कलाः ।
नानावादित्रनिनदाः सिंहनादाश्च जज्ञिरे ॥ ८-४८-३९ (५७३७८)
प्रतिलभ्य ततः संज्ञां श्वेताश्वः कृष्णसारथिः ।
सोऽतिविद्धो महेष्वासः शरैराशीविपोपमैः ।
सुशर्माणं महाराज क्रोधाविष्टो महारथः ॥ ८-४८-४० (५७३७९)
ततः शरशतैः पार्थः सञ्छाद्यैनं क्षणाद्रणे ।
दिशस्तु वारयामास बाणैस्तत्र महास्त्रवित् ॥ ८-४८-४१ (५७३८०)
विमुखीकृत्य समरे सुशर्माणं धनञ्जयः ।
ऐन्द्रमस्त्रममेयात्मा प्रादुश्चक्रे हसन्निव ॥ ८-४८-४२ (५७३८१)
ततो बाणसहस्राणि तदुत्सृष्टानि मारिष ।
सर्वदिक्षु व्यदृश्यन्त सूदयन्ति रथद्विपान् ॥ ८-४८-४३ (५७३८२)
हयान्पत्तींश्च समरे शस्त्रैः शतसहस्रशः ।
रराज समरे राजञ्शक्रो निघ्नन्निवासुरान् ॥ ८-४८-४४ (५७३८३)
वध्यमाने ततः सैन्ये भयं सुमहदाविशत् ।
संशप्तकगणानां च गोपालानां च भारत ॥ ८-४८-४५ (५७३८४)
न हि तत्र पुमान्कश्चिद्योऽर्जुनं प्रतिबुध्यते ।
पश्यतां तत्र वीराणामहन्यत बलं तव ॥ ८-४८-४६ (५७३८५)
हन्यमानं च तदभून्निश्चेष्टं च पराक्रमे ॥ ८-४८-४७ (५७३८६)
अयुतं तत्र योधानां हत्वा पाण्डुसुतो रणे ।
व्यभ्राजत महाराज विधूमोऽग्निरिव ज्वलन् ॥ ८-४८-४८ (५७३८७)
चतुर्दशसहस्राणि यानि दृष्टनि भारत ।
रथानामयुतं चैव त्रिसहस्राश्च दन्तिनः ॥ ८-४८-४९ (५७३८८)
ततः संशप्तका भूयः परिवव्रुर्धनञ्जयम् ।
मर्तव्यमिति निश्चित्य जयं वाप्यनिवर्तनम् ॥ ८-४८-५० (५७३८९)
तत्र युद्धं महच्चासीत्तावकानां विशाम्पते ।
शूरेण बलिना सार्धं पाण्डवेन किरीटिना ।

जित्वा तान्न्यहनत्पार्थः शत्रूञ्शक्र इवासुरान् ॥ ॥ ८-४८-५१ (५७३९०)

इति श्रीमन्महाभारते कर्णपर्वणि सप्तदशदिवसयुद्धे
अष्टचत्वारिंशोऽध्यायः ॥ ४८ ॥

---

कर्नपर्व-अध्यय०४९
॥ श्रीः ॥
८.४९. अध्यायः ४९

Mahabharata - Karna Parva - Chapter Topics
सङ्कुलयुद्धम् ॥ १ ॥

Mahabharata - Karna Parva - Chapter Text

८-४९-० (५७३९१)
सञ्जय उवाच। ८-४९-०क्ष् (४९६७)
कृतवर्मा कृपो द्रौणिः सूतपुत्रश्च मारिष ।
उलूकः सौबलश्चैव राजा च सह सोदरैः ॥ ८-४९-१ (५७३९२)
सीदमानां चमूं दृष्ट्वा पाण्डुपुत्रभयार्दिताम् ।
समुज्जह्रुः स्म वेगेन भिन्नां नावमिवार्णवे ॥ ८-४९-२ (५७३९३)
ततो युद्धमतीवासीन्मुहूर्तमिव भारत ।
भीरूणां त्रासजननं शूराणां हर्षवर्धनम् ॥ ८-४९-३ (५७३९४)
कृपेण शरवर्षाणि प्रतिमुक्तानि संयुगे ।
सृञ्जयांश्छादयामासुः शलभानां व्रजा इव ॥ ८-४९-४ (५७३९५)
शिखण्डी च ततः क्रुद्धो गौतमं त्वरितो ययौ ।
ववर्ष शरवर्षाणि समन्ताद्द्विजपुङ्गवम् ॥ ८-४९-५ (५७३९६)
कृपस्तु शरवर्षं तद्विनिहत्य महास्त्रवित् ।
शिखण्डिनं रणे क्रुद्धो विव्याध दशभिः शरैः ॥ ८-४९-६ (५७३९७)
ततः शिखण्डी कुपितः शरैः सप्तभिराहवे ।
कृपं विव्याध कुपितं कङ्कपत्रैरजिह्मगैः ॥ ८-४९-७ (५७३९८)
ततः कृपः शरैस्तीक्ष्णैः सोऽतिविद्धो महारथः ।
गततः सुनिशितैस्तीक्ष्णैः क्षुरप्रैर्हेमभूषितैः'।
व्यश्वसूतरथं चक्रे शिखण्डिनमथो द्विजः ॥ ८-४९-८ (५७३९९)
हताश्वात्तु ततो यानादवप्लुत्य महारथः ।
खड्गं चर्म तथा गृह्य सत्वरं ब्राह्मणं ययौ ॥ ८-४९-९ (५७४००)
तमापतन्तं सहसा शरैः सन्नतपर्वभिः ।

वारयामास समरे तदद्भुतमिवाभवत् ॥ ८-४९-१० (५७४०१)
तत्राद्भुतमपश्याम शिलानां प्लवनं यथा ।
निश्चेष्टो यद्रणे राजञ्छिखण्डी समतिष्ठत ॥ ८-४९-११ (५७४०२)
कृपेण वारितं दृष्ट्वा शिखण्डिनमथो नृप ।
प्रत्युद्ययौ कृपं तूर्णं धृष्टद्युम्नो महारथः ॥ ८-४९-१२ (५७४०३)
धृष्टद्युम्नं ततो यान्तं शारद्वतरथं प्रति ।
प्रतिजग्राह वेगेन कृतवर्मा महारथः ॥ ८-४९-१३ (५७४०४)
युधिष्ठिरमथायान्तं शारद्वतरथं प्रति ।
सपुत्रं सहसैन्यं च द्रोणपुत्रो न्यवारयत् ॥ ८-४९-१४ (५७४०५)
नकुलं सहदेवं च त्वरमाणौ महारथौ ।
प्रतिजग्राह ते पुत्रः शरवर्षेण वारयन् ॥ ८-४९-१५ (५७४०६)
भीमसेनं करूशांश्च केकयान्सह सृञ्जयैः ।
कर्णो वैकर्तनो युद्धे वारयामास भारत ॥ ८-४९-१६ (५७४०७)
शिखण्डिने ततो बाणान्कृपः शारद्वतो युधि ।
प्राहिणोत्तवरया युक्तो बीभत्सोरथ सन्निधौ ॥ ८-४९-१७ (५७४०८)
ताञ्छरान्प्रेषितांस्तेन समन्तात्स्वर्णभूषितान् ।
चिच्छेद खङ्गमाविध्य भ्रामयंश्च पुनः पुनः ॥ ८-४९-१८ (५७४०९)
शतचन्द्रं च तच्चर्म गौतमस्तस्य भारत ।
व्यधमत्सायकैस्तूर्णं तत उच्चुकुशुर्जनाः ॥ ८-४९-१९ (५७४१०)
स विचर्मा महाराज खङ्गपाणिरुपाद्रवत् ।
कृपस्तं शरसङ्घातैराद्रवन्तमपीडयत् ॥ ८-४९-२० (५७४११)
शारद्वतशरैर्ग्रस्तं क्लिश्यमानं महाबलः ।
चित्रकेतुसुतो राजन्सुकेतुस्त्वरितो ययौ ॥ ८-४९-२१ (५७४१२)
विकिरन्ब्राह्मणं युद्धे बहुभिर्निशितैः शरैः ।
अभ्यापतदमेयात्मा गौतमस्य रथं प्रति ॥ ८-४९-२२ (५७४१३)
दृष्ट्वा विषक्तं तं चैव ब्राह्मणं च निवारितम् ।
अपयातस्ततस्तूर्णं शिखण्डी राजसत्तम ॥ ८-४९-२३ (५७४१४)
सुकेतुस्तु ततो राजन्गौतमं नवभिः शरैः ।
विद्धवा विव्याध सप्तत्या पुनश्चैनं त्रिभिः शरैः ॥ ८-४९-२४ (५७४१५)
अथास्य सशरं चापं पुनश्चिच्छेद मारिष ।
सारथिं च शरेणास्य मृशं मर्मस्वताडयत् ॥ ८-४९-२५ (५७४१६)
गौतमस्तु ततः क्रुद्धो धनुर्गृह्य नवं दृढम् ।
सुकेतुं त्रिंशता बाणैः सर्वमर्मस्वताडयत् ॥ ८-४९-२६ (५७४१७)
स विह्वलितसर्वाङ्गः प्रचचाल रथोत्तमे ।
भूमिकम्पे यथा वृक्षश्चचालाकम्पितो भृशम् ॥ ८-४९-२७ (५७४१८)
चलतस्तस्य कायात्तु शिरो ज्वलितकुण्डलम् ।

सोष्णीषं सशिरस्त्राणं क्षुरप्रेण त्वपातयत् ॥ ८-४९-२८ (५७४१९)
तच्छिरः प्रापतद्भूमौ श्येनाहृतमिवामिषम् ।
ततोऽस्य कायो वसुधां पश्चात्प्रापतदच्युत ॥ ८-४९-२९ (५७४२०)
तस्मिन्हते महाराज पुत्रास्तस्य पदानुगाः ।
गौतमं समरे त्यक्त्वा दुद्रुवुस्ते दिशो दश ॥ ८-४९-३० (५७४२१)
धृष्टद्युम्नं तु समरे सन्निवार्य महारथः ।
कृतवर्माऽब्रवीद्धृष्टस्तिष्ठतिष्ठेति भारत ॥ ८-४९-३१ (५७४२२)
तदभूत्तुमुलं युद्धं वृष्णिपार्षतयो रणे ।
आमिषार्थे यथा युद्धं श्येनयोः क्रुद्धयोर्नृप ॥ ८-४९-३२ (५७४२३)
धृष्टद्युम्नस्तु समरे हार्दिक्यं नवभिः शरैः ।
आजघानोरसि क्रुद्धः पीडयन्हृदिकात्मजम् ॥ ८-४९-३३ (५७४२४)
कृतवर्मा तु समरे पार्षतेन दृढाहतः ।
पार्षतं सरथं साश्वं छादयामास सायकैः ॥ ८-४९-३४ (५७४२५)
सरथश्छादितो राजन्धृष्टद्युम्नो न दृश्यते ।
मेघैरिव परिच्छन्नो भास्करो जलधारिभिः ॥ ८-४९-३५ (५७४२६)
विधूय तं बाणगणं शरैः कनकभूषणैः ।
व्यरोचत रणे राजन्धृष्टद्युम्नः कृतव्रणः ॥ ८-४९-३६ (५७४२७)
ततस्तु पार्षतः क्रुद्धः शस्त्रवृष्टिं सुदारुणाम् ।
कृतवर्माणमासाद्य व्यसृजत्पृतनापतिः ॥ ८-४९-३७ (५७४२८)
तामापतन्तीं सहसा शस्त्रवृष्टिं सुदारुणाम् ।
शरैरनेकसाहस्रैर्हार्दिक्योऽवारयद्युधि ॥ ८-४९-३८ (५७४२९)
दृष्ट्वा तु वारितां युद्धे शस्त्रवृष्टिं दुरासदाम् ।
कृतवर्माणमासाद्य वारयामास पार्षतः ॥ ८-४९-३९ (५७४३०)
ग्यथा युग्मरथेनाजौ वाहान्वाहेरमिश्रयत् ।
गृहीत्वा चर्म खड्गं च रथं तस्यावपुप्लुवे ॥ ८-४९-४० (५७४३१)
मिलितेष्वथ वाहेषु प्रत्यासन्ने च पार्षते ।
दृष्ट्वाऽपदानं तस्याशु गदां जग्राह सात्वतः ॥ ८-४९-४१ (५७४३२)
गदापाणिस्ततो राजन्नथात्तूर्णमवप्लुतः ।
तमदृष्ट्वा रथोपस्थे सारथिं समताडयत् ॥ ८-४९-४२ (५७४३३)
खड्गेन शितधारेण स हतः प्रापतद्रथात् ।
कृतवर्मा ततो हृष्टस्तलशब्दं चकार ह ॥ ८-४९-४३ (५७४३४)
पार्षतं चाब्रवीद्राजन्नेह्येहीति पुनःपुनः ।
स तं न ममृषे युद्धे तलशब्दं समीरितम् ॥ ८-४९-४४ (५७४३५)
अवप्लुत्य रथात्तस्मात्स्वरथं पुनरास्थितः ।
अभ्ययात्स तु तत्तूर्णं तिष्ठतिष्ठेति चाब्रवीत् ॥ ८-४९-४५ (५७४३६)
ततो राजन्महेष्वासं कृतवर्माणमाशु वै ।

गदां गृह्य पुनर्वेगात्कृतवर्माणमाहनत् ॥ ८-४९-४६ (५७४३७)
सोऽतिविद्धो बलवता न्यपतन्मूर्च्छया हतः ।
श्रुतर्वा रथमारोप्य अपोवाह रणाजिरात्'॥ ८-४९-४७ (५७४३८)
धृष्टद्युम्नस्तु समरे दृष्ट्वा शत्रुं महारथः ।
कौरवान्समरे तूर्णं वारयामास सायकैः ॥ ८-४९-४८ (५७४३९)
ततस्ते तावका योधा धृष्टद्युम्नमुपाद्रवन् ।
सिंहनादरवांश्चक्रुस्ततो युद्धमवर्तत ॥ ॥ ८-४९-४९ (५७४४०)

इति श्रीमन्महाभारते कर्णपर्वणि सप्तदशदिवसयुद्धे
एकोनपञ्चाशोऽध्यायः ॥ ४९ ॥

---

कर्नपर्व-अध्यय०५०
॥ श्रीः ॥
८.५०. अध्यायः ५०

Mahabharata - Karna Parva - Chapter Topics
सङ्कुलयुद्धम् ॥ १ ॥
अश्वत्थाम्ना युधिष्ठिरपराजयः ॥ २ ॥

Mahabharata - Karna Parva - Chapter Text

८-५०-० (५७४४१)
सञ्जय उवाच। ८-५०-०क्ष् (४९६८)
द्रौणिर्युधिष्ठिरं दृष्ट्वा शैनेयेनाभिरक्षितम् ।
द्रौपदेयैस्तथा शूरैरभ्यवर्तत हृष्टवत् ॥ ८-५०-१ (५७४४२)
किरन्निषुगणान्घोरान्हेमपुङ्खाञ्शिलाशितान् ।
दर्शयन्विविधान्मार्गाञ्शिक्षया लघुहस्तवान् ॥ ८-५०-२ (५७४४३)
खं पुरयञ्शरैस्तीक्ष्णैर्वेगवद्भिः समन्ततः ।
युधिष्ठिरस्य समरे दिशः सर्वाः समावृणोत् ॥ ८-५०-३ (५७४४४)
भारद्वाजशरैश्छन्नं न प्राज्ञायत किञ्चन ।
बाणभूतमभूत्सर्वमायोधनशिरो महत् ॥ ८-५०-४ (५७४४५)
बाणजालं दिविष्टं तत्स्वर्णपुङ्खविभूषितम् ।
शुशुभे भरतश्रेष्ठ विमानमिव विष्ठितम् ॥ ८-५०-५ (५७४४६)
तेन च्छन्ने रणे राजन्बाणजालेन भास्वता ।
अभ्रच्छायेव सजज्ञे हतरश्मिस्तमोनुदः ॥ ८-५०-६ (५७४४७)
तदद्भुतमपश्याम बाणभूते नभस्थले ।

न स्म सम्पतते भूतं द्रौणेर्दृष्ट्वा पराक्रमम् ॥ ८-५०-७ (५७४४८)
सात्यकिर्यतमानस्तु धर्मराजस्तु पाण्डवः ।
तथेतराणि सैन्यानि न स्म चक्रुः पराक्रमम् ॥ ८-५०-८ (५७४४९)
लाघवं द्रोणपुत्रस्य दृष्ट्वा तत्र महारथाः ।
व्यस्मयन्त महाराज न चैनं प्रत्युदीक्षितुम् ॥ ८-५०-९ (५७४५०)
शेकुस्ते सर्वराजानस्तपन्तमिव भास्करम् ।
वध्यमाने ततः सैन्ये द्रौपदेया महारथाः ॥ ८-५०-१० (५७४५१)
सात्यकिर्धर्मराजश्च पाञ्चालाश्चापि सङ्गताः ।
त्यक्त्वा मृत्युभयं घोरं द्रौणायनिभुपाद्रवन् ॥ ८-५०-११ (५७४५२)
सात्यकिः सप्तविंशत्या द्रौणिं विद्ध्वा शिलीमुखैः ।
पुनर्विव्याध नाराचैः सप्तभिः स्वर्णभूषितैः ॥ ८-५०-१२ (५७४५३)
युधिष्ठिरस्त्रिसप्तत्या प्रतिविन्ध्यश्च सप्तभिः ।
श्रुतकर्मा त्रिभिर्बाणैः श्रुतकीर्तिश्च सप्तभिः। ८-५०-१३ (५७४५४)
सुतसोमस्तु नवभिः शतानीकश्च सप्तभिः ।
अन्ये च वहवः शूरा विव्यधुस्तं समन्ततः ॥ ८-५०-१४ (५७४५५)
स तु क्रुद्धस्ततो राजन्नाशीविप इव श्वसन् ।
सात्यकिं पञ्चविंशत्या प्राविध्यत शिलीमुखैः ॥ ८-५०-१५ (५७४५६)
श्रुतकीर्तिं च नवभिः सुतसोमं च पञ्चभिः ।
अष्टभिः श्रुतकर्माणं प्रतिबिन्ध्यं त्रिभिः शरैः ॥ ८-५०-१६ (५७४५७)
शतानीकं च नवभिर्धर्मपुत्रं च पञ्चभिः ।
तथेतरांस्ततः शूरान्द्वाभ्यां द्वाभ्यामताडयत् ।
श्रुतकीर्तेस्तथा चापं चिच्छेद निशितैः शरैः ॥ ८-५०-१७ (५७४५८)
अथान्यद्धनुरादाय श्रुतकीर्तिर्महारथः ।
द्रौणायनिं त्रिभिर्विद्ध्वा विव्याधान्यैः शितैः शरैः ॥ ८-५०-१८ (५७४५९)
ततो द्रौणिर्महाराज शरवर्षेण भारिष ।
छादयामास तत्सैन्यं समन्ताद्भरतर्षभ ॥ ८-५०-१९ (५७४६०)
ततः पुनरमेयात्मा धर्मराजस्य कार्मुकम् ।
द्रौणिश्चिच्छेद विहसन्विव्याध च शरैस्त्रिभिः ॥ ८-५०-२० (५७४६१)
ततो धर्मसुतो राजन्प्रगृह्यान्यन्महद्धनुः ।
द्रोणपुत्रं त्रिपष्टक्ष्क्ष् ततु बाह्वोरुरसि चार्पययत् ॥ ८-५०-२१ (५७४६२)
सात्यकिस्तु ततः क्रुद्धो द्रौणेः प्रहरतो रणे ।
अर्धचन्द्रेणतीक्ष्णेन धनुश्छित्त्वाऽनदद्भृशम् ॥ ८-५०-२२ (५७४६३)
छिन्नधन्वा ततो द्रौणिः शक्त्या शक्तिमतां वरः ।
सारथिं पातयामास शैनेयस्य रथाद्रुतम् ॥ ८-५०-२३ (५७४६४)
अथान्यद्धनुरादाय द्रोणपुत्रः प्रतापवान् ।
शैनेयं शरवर्षेण च्छादयामास भारत ॥ ८-५०-२४ (५७४६५)

तस्याश्वाः प्रद्रुताः सङ्ख्ये पतिते रथसारथौ ।
तत्रतत्रैव धावन्तः समदृश्यन्त भारत ॥ ८-५०-२५ (५७४६६)
युधिष्ठिरपुरोगास्तु द्रौणिं शस्त्रभृतां वरम् ।
अभ्यवर्षन्त वेगेन विसृजन्तः शिताञ्छरान् ॥ ८-५०-२६ (५७४६७)
सहसा पततस्तान्वै क्रुद्धरूपान्परन्तपः ।
प्रहसन्प्रतिजग्राह द्रोणपुत्रो महारणे ॥ ८-५०-२७ (५७४६८)
ततः शरशतज्वालः सेनाकक्षं महारणे ।
द्रौणिर्ददाह समरे कक्षमग्निरिवोत्थितः ॥ ८-५०-२८ (५७४६९)
तद्बलं पाण्डुपुत्रस्य द्रोणपुत्रप्रतापितम् ।
चुक्षुभे भरतश्रेष्ठ तस्मिन्नेव चमूमुखे ॥ ८-५०-२९ (५७४७०)
तद्बलं पाण्डवेयस्य द्रोणपुत्रः शरार्चिषा ।
तापयन्भरतश्रेष्ठ गभस्तिभिरिवांशुमान् ॥ ८-५०-३० (५७४७१)
तत्पच्यमानं मर्षेण ब्राह्मणस्य च सायकैः ।
क्षुभ्यते पाण्डवं सैन्यं तिमिनेव नदीमुखम् ॥ ८-५०-३१ (५७४७२)
दृष्ट्वा चैव महाराज द्रोणपुत्रपराक्रमम् ।
सर्वान्दुर्योधनः पार्थान्हतान्युद्धेऽभ्यमन्यत ॥ ८-५०-३२ (५७४७३)
युधिष्ठिरस्तु त्वरितो द्रौणिं पीड्य महारथम् ।
अब्रवीद्द्रोणपुत्रं स रोषामर्षसमन्वितः ॥ ८-५०-३३ (५७४७४)
‘जानामि त्वां युधि श्रेष्ठ वीर्यवन्तं बलान्वितम् ।
कृतास्त्रं कृतिनं चैव तथा लघुपराक्रमम् ॥ ८-५०-३४ (५७४७५)
बलमेतद्भवान्सर्वं पार्षते यदि दर्सयेत् ।
ततस्त्वां बलवन्तं च कृतविद्यं च विद्महे ॥ ८-५०-३५ (५७४७६)
न हि वै पार्षतं दृष्ट्वा समरे शत्रुसूदनम् ।
भवेत्तव बलं किञ्चिद्ब्रवीमि त्वां न तु द्विजम्’॥ ८-५०-३६ (५७४७७)
नैव नाम तव प्रीतिर्नैव नाम कृतज्ञता ।
यतस्त्वं पुरुषव्याघ्र मामेवाद्य जिघांससि ॥ ८-५०-३७ (५७४७८)
ब्राह्मणेन तपः कार्यं शमश्च दमएव च ।
क्षत्रियेण धनुर्नाभ्यं स भवान्ब्राह्मणब्रुवः ॥ ८-५०-३८ (५७४७९)
मिषतस्ते महावाहो युधि जेष्यामि कौरवान् ।
कुरुष्व समरे कर्म ब्रह्मबन्धे यथेष्टतः ॥ ८-५०-३९ (५७४८०)
एवमुक्तो महाराज द्रोणपुत्रः सयन्निव ।
युक्त तत्त्वं च सञ्चिन्त्य नोत्तरं किञ्चिदब्रवीत् ॥ ८-५०-४० (५७४८१)
अनुक्त्वा च ततः किञ्चिच्छरवर्षेण पाण्डवम् ।
छादयामास समरे क्रुद्धोऽन्तक इव प्रजाः ॥ ८-५०-४१ (५७४८२)
स च्छाद्यमानस्तु तदा द्रोणपुत्रेण मारिष ।
पार्थोऽपयातः शीघ्रं वै प्रगृह्य महतीं चमूम् ॥ ८-५०-४२ (५७४८३)

अपयाते ततस्तस्मिन्धर्मपुत्रे युधिष्ठिरे ।
द्रोणपुत्रः स्थितो राजन्प्रत्यादेशान्महात्मनः ॥ ८-५०-४३ (५७४८४)
ततो युधिष्ठिरो राजंस्त्यक्त्वा द्रौणिं महाहवे ।
प्रययौ तावकं सैन्यं युक्तः क्रुराय कर्मणे ॥ ॥ ८-५०-४४ (५७४८५)

इति श्रीमन्महाभारते कर्णपर्वणि सप्तदशदिवसयुद्धे
पञ्चाशोऽध्यायः ॥ ५० ॥

---

कर्नपर्व-अध्यय०५१
॥ श्रीः ॥
८.५१. अध्यायः ५१

Mahabharata - Karna Parva - Chapter Topics
सङ्कुलयुद्धम् ॥ १ ॥

Mahabharata - Karna Parva - Chapter Text

८-५१-० (५७४८६)
सञ्जय उवाच। ८-५१-०क्ष् (४९६९)
भीमसेनं सपाञ्चालं चेदिकेकयसंवृतम् ।
सेनापतिः स्वयं क्रुद्धो वारयामास सायकैः ॥ ८-५१-१ (५७४८७)
ततस्तु चेदिकारूशान्सृढजयांश्च महारथान् ।
कर्णो जघान समरे भीमसेनस्य पश्यतः ॥ ८-५१-२ (५७४८८)
भीमसेनस्ततः कर्णं विहाय रथसत्तमम् ।
प्रययौ कौरवं सैन्यं कक्षमग्निरिव ज्वलन् ॥ ८-५१-३ (५७४८९)
सूतपुत्रोऽपि समरे पाञ्चालान्केकयांस्तथा ।
सृञ्जयांश्च महेष्वासान्निजघानं सहस्रशः ॥ ८-५१-४ (५७४९०)
संशप्तकेषु पार्थश्च कौरवेषु वृकोदरः ।
पाञ्चालेषु तथा कर्णः क्षयं चक्रुर्महारथाः ॥ ८-५१-५ (५७४९१)
ते क्षत्रिया दह्यमानास्त्रिभिस्तैः पावकोपमैः ।
जग्मुर्विनाशं समरे राजन्दुर्मन्त्रिते तव ॥ ८-५१-६ (५७४९२)
ततो दुर्योधनः क्रुद्दो नकुलं नवभिः शरैः ।
विव्याध भरतश्रेष्ठ चतुरश्चास्य वाजिनः ॥ ८-५१-७ (५७४९३)
ततः परममेयात्मा तव पुत्रो जनाधिप ।
क्षुरेण सहदेवस्य ध्वजं चिच्छेद काञ्चनम् ॥ ८-५१-८ (५७४९४)
नकुलस्तु ततः क्रुद्धस्तव पुत्रं च सप्तभिः ।

जघान समरे राजन्सहदेवश्च पञ्चभिः ॥ ८-५१-९ (५७४९५)
तावुभौ भरतश्रेष्ठौ ज्येष्ठौ सर्वधनुष्मताम् ।
विव्याधोरसि सङ्क्रुद्धः पञ्चभिः पञ्चभिः शरैः ॥ ८-५१-१० (५७४९६)
ततोऽपराभ्यां भल्लाभ्यां धनुषी समकृन्तत ।
यमयोः प्रसभं वीरो विव्याधाशु त्रिभिस्त्रिभिः ॥ ८-५१-११ (५७४९७)
तावन्ये धनुषी श्रेष्ठे शक्रचापनिभे शुभे ।
प्रगृह्य रेजतुः शूरौ देवपुत्रसमौ युधि ॥ ८-५१-१२ (५७४९८)
ततस्तौ रभसौ युद्धे भ्रातरौ भ्रातरं युधि ।
शरैर्ववर्षतुर्घोरैर्महामेघौ यथाऽचलम् ॥ ८-५१-१३ (५७४९९)
ततः क्रुद्धो महाराज तव पुत्रो महारथः ।
पाण्डुपुत्रौ महेष्वासौ वारयामास पत्रिभिः ॥ ८-५१-१४ (५७५००)
धनुर्मण्डलमेवास्य ददृशे युधि भारत ।
सायकाश्चाप्यदृश्यन्त निश्चरन्तः समन्ततः ॥ ८-५१-१५ (५७५०१)
ग्तस्य सायकसञ्छन्नौ माद्रेयौ न विरेजतुः ।
मेघच्छन्नौ यथा व्योम्नि चन्द्रसूर्यौ गतप्रभौ ॥ ८-५१-१६ (५७५०२)
ते तु बाणा महाराज स्वर्णपुङ्खाः शिलाशिताः'।
आच्छादयन्दिशः सर्वाः सूर्यस्येव मरीचयः ॥ ८-५१-१७ (५७५०३)
वाणभूते ततस्तस्मिन्सञ्छन्ने च नभस्तले ।
राज्ञस्तु ददृशे रूपं कालान्तकयमोपमम् ॥ ८-५१-१८ (५७५०४)
पराक्रमं तु तं दृष्ट्वा तव सूनोर्महारथाः ।
मृत्योरुपान्तिकं प्राप्तौ माद्रीपुत्रौ स्म मेनिरे ॥ ८-५१-१९ (५७५०५)
ततः सेनापती राजन्पाण्डवानां महारथः ।
पार्षतः प्रययौ तत्र यत्र राजा सुयोधनः ॥ ८-५१-२० (५७५०६)
माद्रीपुत्रौ ततः शूरौ व्यतिक्रम्य महारथौ ।
धृष्टद्युम्नस्तव सुतं पीडयामास सायकैः ॥ ८-५१-२१ (५७५०७)
तमविध्यदमेयात्मा तव पुत्रो ह्यमर्पणः ।
पाञ्चाल्यं पञ्चविंशत्या प्रहस्य पुरुषर्षभः ॥ ८-५१-२२ (५७५०८)
ततः पुनरमेयात्मा तव पुत्रो ह्यमर्षणः ।
विद्ध्वा ननाद पाञ्चाल्यं षष्ट्या पञ्चभिरेव च ॥ ८-५१-२३ (५७५०९)
तथास्य सशरं चापं मुष्टिदेशे विशाम्पते ।
क्षुरप्रेण सुतीक्ष्णेन राजा चिच्छेद संयुगे ॥ ८-५१-२४ (५७५१०)
तदपास्य धनुश्छिन्नं पाञ्चाल्यः शत्रुकर्शनः ।
अन्यदादत्त वेगेन धनुर्भारसहं नवम् ॥ ८-५१-२५ (५७५११)
क्रोधाद्रुधिररक्ताक्षः संरम्भात्प्रज्वलन्निव ।
अशोभत महेष्वासो धृष्टद्युम्नः कृतव्रणः ॥ ८-५१-२६ (५७५१२)
स पञ्चदश नाराचाञ्श्वसतः पन्नगानिव ।

जिघांसुर्भरतश्रेष्ठं धृष्टद्युम्नो व्यपासृजत् ॥ ८-५१-२७ (५७५१३)
ते वर्म हेमविकृतं भित्त्वा राज्ञः शिलीमुखाः ।
विविशुर्वसुधां वेगात्कङ्कबर्हिणवाससः ॥ ८-५१-२८ (५७५१४)
सोऽतिविद्धो महाराज पुत्रस्तेऽतिव्यराजत ।
वसन्तकाले सुमहान्प्रफुल्ल इव किंशुकः ॥ ८-५१-२९ (५७५१५)
स च्छिन्नवर्मा नाराचप्रहारैर्झर्झरीकृतः ।
धृष्टद्युम्नस्य भल्लेन क्रुद्धश्चिच्छेद कार्मुकम् ॥ ८-५१-३० (५७५१६)
अथैनं छिन्नधन्वानं त्वरमाणो महीपतिः ।
सायकैर्दशभी राजन्भ्रुवोर्मध्ये समार्पयत् ॥ ८-५१-३१ (५७५१७)
तस्य तेऽशोभयन्वक्त्रं कर्मारपरिमार्जिताः ।
प्रफुल्लं पङ्कजं यद्वद्भमरा मधुलिप्सवः ॥ ८-५१-३२ (५७५१८)
तदपास्य धनुश्छिन्नं दृष्टद्युम्नो महामनाः ।
अन्यदादत्त वेगेन धनुर्भल्लांश्च षोडश ॥ ८-५१-३३ (५७५१९)
ततो दुर्योधनस्याश्वान्हत्वा सूतं च पञ्चभिः ।
धनुश्चिच्छेद भल्लेन जातरूपपरिष्कृतम् ॥ ८-५१-३४ (५७५२०)
रथं सोपस्करं छत्रं शक्तिं खड्गं गदां ध्वजम् ।
भल्लैश्चिच्छेद दशभिः पुत्रस्य तव पार्षतः ॥ ८-५१-३५ (५७५२१)
तपनीयाङ्गदं छत्रं नागं मणिमयं शुभम् ।
ध्वजं कुरुपतेश्छिन्नं ददृशुः सर्वपार्थिवाः ॥ ८-५१-३६ (५७५२२)
दुर्योधनं तु विरथं छिन्नवर्मायुधध्वजम् ।
भ्रातरं समुदैक्षन्त सोदरा भरतर्षभ ॥ ८-५१-३७ (५७५२३)
तमारोप्य रथे राजन्कुण्डधारो महारथम् ।
अपाहरदसम्भ्रान्तो धृष्टद्युम्नस्य पश्यतः ॥ ८-५१-३८ (५७५२४)
कर्णस्तु सात्यकिं हित्वा राजगृघ्नुरमर्षणः ।
द्रोमहन्तारमुग्रेषुं ससाराभिमुखो रणे ॥ ८-५१-३९ (५७५२५)
तं पृष्ठतोऽन्वयात्तूर्णं शैनेयोऽभिहतः शरैः ।
वारणं जघनोपान्ते विषाणाभ्यामिव द्विपः ॥ ८-५१-४० (५७५२६)
स भारतपुरोगानां राज्ञां च सुमहात्मनाम् ।
कर्णपार्षतयोर्युद्धे सङ्क्रुद्धानां महारणे ॥ ८-५१-४१ (५७५२७)
न पाण्डवानां नास्माकं कश्चिदासीत्पराङ्मुखः ।
प्रत्यदृश्यत यत्कर्णः पाञ्चालांस्त्वरितो ययौ ॥ ८-५१-४२ (५७५२८)
तस्मिन्क्षणे नरश्रेष्ठ गजवाजिरथक्षयः ।
प्रादुरासीदुभयतो राजन्मध्यगतेऽहनि ॥ ८-५१-४३ (५७५२९)
पाञ्चालास्तु महाराज त्वरिता विजिगीषवः ।
सर्वतोऽभ्यद्रवन्कर्णं पतत्त्रिण इव द्रुमम् ॥ ८-५१-४४ (५७५३०)
तेषामाधिरथिः क्रुद्धः प्रधानान्वै तरस्विनः ।

विचिन्वन्निव बाणौघैः समासादयदग्रतः ॥ ८-५१-४५ (५७५३१)
व्याघ्रकेतुः सुशर्मा च शुक्रश्चित्रायुधः ऋतुः ।
दुर्जयो रोचमानश्च सिंहसेनस्तथाऽष्टमः ।
महता रथवंशेन परिवव्रुर्नरोत्तमम् ॥ ८-५१-४६ (५७५३२)
सृजन्तः सायकांस्तूर्णं कर्णमाहवशोभिनम् ।
यतमानांस्तु ताञ्शूरान्मनुजेन्द्रः शितैः शरैः ।
अष्टाभिरष्टौ राधेयः पाञ्चालान्न्यहनद्रणे ॥ ८-५१-४७ (५७५३३)
अथापरान्महाराज सूतपुत्रः प्रतापवान् ।
जघान बहुसाहस्रान्योधान्युद्धविशारदान् ॥ ८-५१-४८ (५७५३४)
विष्णुं च विष्णुवर्माणं देवापिं भद्रमेव च ।
दण्डधारं च समरे चित्रं चित्रायुधं हरिम् ॥ ८-५१-४९ (५७५३५)
सिंहकेतुं रोचमानं शलभं च महारथम् ।
निजघान सुसङ्क्रुद्धश्चेदीनां च महारथान् ॥ ८-५१-५० (५७५३६)
तेषामाददतः प्राणानासीदाधिरथेर्वपुः ।
शोणिताभ्युक्षिताङ्गस्य रुद्रस्यैवातिभैरवम् ॥ ८-५१-५१ (५७५३७)
तत्र भारत कर्णेन मातङ्गास्ताडिताः शरैः ।
सर्वतोऽभ्यद्रवन्भीताः कुर्वन्तो महदाकुलम् ॥ ८-५१-५२ (५७५३८)
निपेतुरुर्व्यां समरे कर्णसायकताडिताः ।
कुर्वन्तो विविधान्नादान्वज्रनुन्ना इवाचलाः ॥ ८-५१-५३ (५७५३९)
गजवाजिमनुष्यैश्च निपतद्भिः समन्ततः ।
रथैर्भग्नैर्ध्वजैश्चैव समास्तीर्यत मेदिनी ॥ ८-५१-५४ (५७५४०)
नैवं भाष्मो न च द्रोणो नान्ये युधि च तावकाः ।
चक्रुः स्म तादृशं कर्म यादृशं कृतवान्रणे ॥ ८-५१-५५ (५७५४१)
मृगमध्ये यथा सिंहो दृश्यते निर्भयश्चरन् ।
पाञ्चालानां तथा मध्ये कर्णोऽचरदभीतवत् ॥ ८-५१-५६ (५७५४२)
सूतपुत्रोऽथ नागेषु हयेषु च रथेषु च ।
नरेषु च नरव्याघ्रश्चकार कदनं महत् ॥ ८-५१-५७ (५७५४३)
यथा मृगगणांस्त्रस्तान्सिंहो द्रावयते दिशः ।
पाञ्चालानां रथव्रातान्कर्णो व्यद्रावयत्तथा ॥ ८-५१-५८ (५७५४४)
सिंहं स्म हि यथा प्राप्य न जीवन्ति मृगाः क्वचित् ।
तथा कर्णमनुप्राप्ता न जीवन्ति स्म सृञ्जयाः ॥ ८-५१-५९ (५७५४५)
वैश्वानरमुखं प्राप्य दह्यन्ते शलभा यथा ।
कर्णाग्निं समरे प्राप्य दग्धा भारत सृञ्जयः ॥ ८-५१-६० (५७५४६)
चेदिष्वेकेन कर्णेन पाञ्चालेषु च भारत ।
वेश्राव्य नाम निहता बहवः शूरसम्पताः ॥ ८-५१-६१ (५७५४७)
मम चासीन्मती राजन्दृष्ट्वा कर्णस्य विक्रमम् ।

नैकोऽप्याधिरथेर्जीवन्पाञ्चाल्यो मोक्ष्यते युधि ॥ ८-५१-६२ (५७५४८)
सङ्ख्ये विमर्द्य पाञ्चालान्सूतपुत्रः पुनः पुनः ।
अभ्यधावत्सुसङ्क्रुद्धः कुन्तीपुत्रं युधिष्ठिरम् ॥ ८-५१-६३ (५७५४९)
धृष्टद्युम्नश्च राजानं द्रौपदेयाश्च मारिष ।
परिवव्रुरमित्रघ्नं शतशश्चापरे जनाः ॥ ८-५१-६४ (५७५५०)
शिखण्डी सहदेवश्च नकुलो नाकुलिस्तथा ।
जनमेजयः शिनेर्नप्ता बहवश्च प्रभद्रकाः ॥ ८-५१-६५ (५७५५१)
एते पुरोगमा भूत्वा धृष्टद्युम्नश्च संयुगे ।
कर्णमस्यन्तमिष्वस्त्रैस्ततक्षुरमितौजसम् ॥ ८-५१-६६ (५७५५२)
तांस्तत्राधिरथिः सङ्ख्ये चेदिपाञ्चालपाण्डवान् ।
एको बहूनभ्यपतद्गरुत्मानिव पन्नगान् ॥ ८-५१-६७ (५७५५३)
तैः कर्णस्याभवद्युद्धं घोररूपं विशाम्पते ।
तादृग्यादृक्पुरावृत्तं देवानां दानवैः सह ॥ ८-५१-६८ (५७५५४)
तान्समेतान्महेष्वासाञ्शरवर्षौधवर्षिणः ।
एको व्यधमदव्यग्रस्तमांसीव दिवाकरः ॥ ८-५१-६९ (५७५५५)
भीमसेनस्तु संसक्ते राधेये पाण्डवैः सह ।
सर्वतोऽभ्यहनत्क्रुद्धो यमदण्डनिभैः शरैः ॥ ८-५१-७० (५७५५६)
बाह्लीकान्केकयान्मात्स्यान्वासात्यान्मद्रसैन्धवान् ।
एकः सङ्ख्ये महेष्वासो योधयन्बह्वशोभत ॥ ८-५१-७१ (५७५५७)
तत्र मर्मसु भीमेन नाराचैस्ताडिता गजाः ।
प्रपतन्तो हतारोहाः कम्पयन्ति स्म मेदिनीम् ॥ ८-५१-७२ (५७५५८)
वाजिनश्च हतारोहाः पत्तयश्च गतासवः ।
अशेरत महाराज वमन्तो रुधिरं बहु ॥ ८-५१-७३ (५७५५९)
ताडिताः सहसा नागा भीमसेनेन मारिष ।
निपतन्ति महावेगा वज्ररुग्णा इवाचलाः ॥ ८-५१-७४ (५७५६०)
पतितैस्तैर्महाराज वेगवद्भिर्महारथैः ।
शुशुभे वसुधा राजन्विकीर्णैरिव पर्वतैः ॥ ८-५१-७५ (५७५६१)
सहस्रशश्च रथिनः पत्तयः पतितायुधाः ।
अक्षताः समदृश्यन्त भीमाङ्गीता गतासवः ॥ ८-५१-७६ (५७५६२)
रथिभिः सादिभिः सूतैः पादातैर्वाजिभिर्गजैः ।
भीमसेनशरैश्छिन्नैराच्छन्ना सुधाभवत् ॥
तत्स्तम्भितमिवातिष्ठद्भीमसेनभयार्दितम्। ८-५१-७७ (५७५६३)
दुर्योधनबलं सर्वं निरुत्साहं कृतं रणे ।
निश्चेष्टं तुमुलं दीनं बभौ तस्मिन्महारणे ॥ ८-५१-७८ (५७५६४)
प्रसन्नसलिले काले यथा स्यात्सागरो नृप ।
तद्वत्तव बलं तद्वै निश्चलं समवस्थितम् ॥ ८-५१-७९ (५७५६५)

मन्युवीर्यबलोपेतं दर्पात्प्रत्यवरोपितम् ।
अभवत्तव पुत्रस्य तत्सैन्यं निष्प्रभं तदा ॥ ८-५१-८० (५७५६६)
ते बले भरतश्रेष्ठ वध्यमाने परस्परम् ।
रुधिरौघपरिक्लिन्ने रुधिरार्द्रे बभूवतुः ॥ ८-५१-८१ (५७५६७)
सूतपुत्रोऽवधीत्क्रुद्धः पाण्डवानामनीकिनीम् ।
भीमसेनः कुरूणां च त्रिगर्तानां धनञ्जयः ॥ ८-५१-८२ (५७५६८)
वर्तमाने तथा रोद्रे सङ्ग्रामेऽद्भुतदर्शने ।
निहत्य पृतनामध्यं संशप्तकगणान्बहून् ।
अर्जुनो जयतां श्रेष्ठो वासुदेवमथाब्रवीत् ॥ ८-५१-८३ (५७५६९)
प्रभग्नं बलमेतद्धि योत्स्यमानं मया सह ।
एते धावन्ति सगणाः संशप्तकमहारथाः ॥ ८-५१-८४ (५७५७०)
ग्दुर्जया ह्येव समरे देवैरपि सवासवैः'।
अपारयन्तो मद्बाणान्सिंहशब्दं मृगा इव ॥ ८-५१-८५ (५७५७१)
दीर्यते च महत्सैन्यं सृञ्जयानां महारणे ।
ग्कुरवश्चाभिधावन्ति भीमसेनभयार्दिताः'॥ ८-५१-८६ (५७५७२)
हस्तिकक्ष्यो ह्यसौ कृष्ण केतुः कर्णस्य धीमतः ।
दृश्यते राजसैन्यस्य मध्ये विचरतो मुहुः ॥ ८-५१-८७ (५७५७३)
न च कर्णं रणे शक्ता जेतुमेते महारथाः ।
जानीते हि भवान्कर्णं वीर्यवन्तं पराक्रमे ॥ ८-५१-८८ (५७५७४)
तत्र याहि यतः कर्णो द्रावयत्येष नो बलम् ।
त्रिगर्तान्वर्जयन्याहि सूतपुत्रं महारथम् ।
एतन्मे रोचते कृष्ण यथा वा तव रोचते ॥ ८-५१-८९ (५७५७५)
एतच्छ्रुत्वा वचस्तस्य गोविन्दः प्रहसन्निव ।
अब्रवीदर्जुनं तूर्णं कौरवान्याहि पाण्डव ॥ ८-५१-९० (५७५७६)
ततस्तव महासैन्यं गोविन्दप्रेरिता हयाः ।
हंसवर्णा विशंस्तूर्णं वहन्तोऽर्जुनमाहवे ॥ ८-५१-९१ (५७५७७)
केशवप्रेरितैरश्वैः श्वेतैः काञ्चनभूषणैः ।
प्रविशद्भिस्तव बलं चतुर्दिशमदीर्यत ॥ ८-५१-९२ (५७५७८)
मेघस्तनितनिर्हादः स रथो वानरध्वजः ।
चलत्पताकस्तां सेनां विमानं द्यामिवाविशत् ॥ ८-५१-९३ (५७५७९)
तौ विदार्य महासेनां प्रविष्टौ केशवार्जुनो ।
क्रुद्धौ संरम्भरक्ताक्षौ विभ्राजेतां महाद्युती ॥ ८-५१-९४ (५७५८०)
युद्धशौण्डौ समाहूतावागतौ तौ रणाध्वरम् ।
यज्वभिर्विधिना हूतौ मखं देवाविवाश्विनौ ॥ ८-५१-९५ (५७५८१)
ग्क्रोधताम्रेक्षणौ शूरौ शुशुभाते महाबलौ ।
मदोत्कटौ यथा नागौ दृष्टिसञ्चारचारिणौ'॥ ८-५१-९६ (५७५८२)

क्रुद्धौ तौ तु नरव्याघ्रो योगवन्तौ बभूवतुः ।
तलशब्देन रुषितौ महानागाविवोत्कटौ ॥ ८-५१-९७ (५७५८३)
विगाह्य तु रथानीकमश्वसङ्घांश्च फल्गुनः ।
व्यचरत्पृतनामध्ये पाशहस्त इवानत्कः ॥ ८-५१-९८ (५७५८४)
तं दृष्ट्वा युधि विक्रान्तं सेनायां तव भारत ।
संशप्तकगणान्भूयः पुत्रस्ते समचूचुदत् ॥ ८-५१-९९ (५७५८५)
ततो रथसहस्रेण द्विरदानां त्रिभिः शतैः ।
चतुर्दशसहस्रैस्तु तुरगाणां महाहवे ।
द्वाभ्यां शतसहस्राभ्यां पदातीनां च धन्विनाम् ॥ ८-५१-१०० (५७५८६)
शूराणां लब्धलक्षाणां विदितानां समन्ततः ।
अभ्यवर्तन्त कौन्तेयं छादयन्तो महारथाः ॥ ८-५१-१०० (५७५८७)
शरवर्षैर्महाराज सर्वतः पाण्डुनन्दनम् ।
स च्छाद्यमानः समरे शरैः परबलार्दनः ॥ ८-५१-१०१ (५७५८८)
दर्शयन्रौद्रमात्मानं पाशहस्त इवान्तकः ।
निघ्नन्संशप्तकान्पार्थः प्रेक्षणीयतरोऽभवत् ॥ ८-५१-१०२ (५७५८९)
ततो विद्युत्प्रभैर्बाणैः कार्तस्वरविभूषितैः ।
निरन्तरमिवाकाशमासीच्छन्नं किरीटिना ॥ ८-५१-१०३ (५७५९०)
किरीटिचापनिर्मुक्तैः सम्पतद्भिर्महाशरैः ।
समाच्छन्नं बभौ सर्वं काद्रवेयैरिव प्रभो ॥ ८-५१-१०४ (५७५९१)
रुक्मपुङ्खाञ्शरान्घोरान्प्रसन्नान्नतपर्वणः ।
अवासृजदमेयात्मा दिक्षु सर्वासु पाण्डवः ॥ ८-५१-१०५ (५७५९२)
मही वियद्दिशः सर्वाः समुद्रा गिरयोऽपि वा ।
स्फुटन्तीति जना जज्ञुः पार्थस्य तलनिःस्वनात् ॥ ८-५१-१०६ (५७५९३)
हत्वा दशसहस्राणि पार्थिवानां महारथः ।
संशप्तकानां कौन्तेयः प्रपक्षं त्वरितोभ्ययात् ॥ ८-५१-१०७ (५७५९४)
प्रपक्षं च समासाद्य पार्थः काम्भोजरक्षितम् ।
प्रममाथ बलं भल्लैर्दानवानिव वासवः ॥ ८-५१-१०८ (५७५९५)
प्रचिच्छेदाशु भल्लेन द्विषतामाततायिनाम् ।
शस्त्रपाणींस्तथा बाहूंस्तथापि च शिरांस्युत ॥ ८-५१-१०९ (५७५९६)
अङ्गाङ्गावयवैश्छिन्नैर्व्यायुधास्तेऽपतन्भुवि ।
विष्वग्वाताभिसम्भग्ना बहुशाखा इव द्रुमाः ॥ ८-५१-११० (५७५९७)
हस्त्यश्वरथपत्तीनां व्रातान्निघ्नन्तमर्जुनम् ।
सुदक्षिणादवरजः शरवृष्ट्याभ्यवीवृषत् ॥ ८-५१-११२ (५७५९८)
तस्यास्यतोऽर्धचन्द्राभ्यां स बाहू परिघोपमौ ।
पूर्णचन्द्राभवक्त्रं च क्षुरेणापाहरच्छिरः ॥ ८-५१-११३ (५७५९९)
तत्पपात ततो वेगात्स्वलोहितपरिष्कृतम् ।

मनः शिलागिरेः शृङ्गं व्ज्रेणेवावदारितम् ॥ ८-५१-११४ (५७६००)
सुदक्षिणादवरजं काम्भोजा ददृशुर्हतम् ।
प्रांशुं कमलपत्राक्षमत्यर्थं प्रियदर्शनम् ।
काञ्चनस्तम्भसदृशं भिन्नं हेमगिरिं यथा ॥ ८-५१-११५ (५७६०१)
ततोऽभवत्पुनर्युद्धं घोरमत्यर्थमद्भुतम् ।
नानावस्थाश्च योधानां बभूवुस्तत्र युध्यताम् ॥ ८-५१-११६ (५७६०२)
पार्थेषुनिहतैरश्वैः काम्भोजैर्यवनैः शकैः ।
शोणिताक्तैस्तदा रक्तं सर्वामासीद्दिशां पते ॥ ८-५१-११७ (५७६०३)
रथैर्हताश्वसूतैश्च हतारोहैश्च वाजिभिः ।
द्विरदैश्च हतारोहैर्महामात्रैर्हतद्विपैः ॥ ८-५१-११८ (५७६०४)
अन्योन्येन महाराज विनाशः पृथिवीक्षिताम् ।
आसीत्क्रुद्धेऽर्जुने कर्णे भीमसेने च दारुणम् ॥ ८-५१-११९ (५७६०५)
तस्मिन्प्रपक्षे पक्षे च वध्यमाने मदोत्कटः ।
अर्जुनं जयतां श्रेष्ठं त्वरितो द्रौणिरभ्ययात् ॥ ८-५१-१२० (५७६०६)
विधुन्वानो महच्चापं कार्तस्वरविभूषितम् ।
आददानः शरान्घोरान्स्वरश्मीनिव भास्करः ॥ ८-५१-१२१ (५७६०७)
तयोरासीन्महद्युद्धं धर्मभ्रात्रोरनैष्ठिकम् ।
विस्मापयिषतोर्लोकं यशश्चोत्तममिच्छतोः ॥ ८-५१-१२२ (५७६०८)
संशप्तकांस्तु कौन्तेयः कुरूंश्चापि वृकोदरः ।
सूतपुत्रस्तु पाञ्चालांस्त्रयोऽघ्नंस्त्वरिताः शरैः ॥ ८-५१-१२३ (५७६०९)
एवमेष महाराज विनाशः पृथिवीक्षिताम् ।
युद्धं घोरं तथा त्वासीत्त्रिधाभूते चमूमुखे ॥ ॥ ८-५१-१२४ (५७६१०)

इति श्रीमन्महाभारते कर्णपर्वणि सप्तदशदिवसयुद्धे
एकपञ्चाशोऽध्यायः ॥ ५१ ॥ क्र एतदनन्तरं झ पुस्तके विद्यमाना
कथा अस्मिन्पाठे---५७--५८ तमाध्याययोर्वर्तते ।

---

कर्नपर्व-अध्यय०५२
॥ श्रीः ॥
८.५२. अध्यायः ५२

Mahabharata - Karna Parva - Chapter Topics
संशप्तकैर्युध्यमानस्य पार्थस्याश्वत्थाम्नाऽऽह्वानम् ॥ १ ॥
तयोर्युद्धम् ॥ २ ॥

Mahabharata - Karna Parva - Chapter Text

८-५२-० (५७६११)
धृतराष्ट्र उवाच। ८-५२-०क्ष् (४९७०)
कथं संशप्तकैः सार्धमर्जुनस्याभवद्रणः ।
सूतपुत्रस्य पाञ्चालैः कथं युद्धं प्रवर्तितम् ॥ ८-५२-१ (५७६१२)
अश्वत्थाम्नस्तु यद्युद्धमर्जुनस्य च सञ्जय ।
अन्येषां च मदीयानां पाण्डवैस्तद्ब्रवीहि मे ॥ ८-५२-२ (५७६१३)
सञ्जय उवाच। ८-५२-३क्ष् (४९७१)
शृणु राजन्यथावृत्तं सङ्ग्रामं ब्रुवतो मम ।
वीराणां शत्रुभिः सार्धं देहपाप्मविनाशनम् ॥ ८-५२-३ (५७६१४)
पार्थः संशप्तकबलं प्रविश्यार्णवसन्निभम् ।
व्यक्षोभयदमित्रघ्नो महावात इवार्णवम् ॥ ८-५२-४ (५७६१५)
पूर्णचन्द्राभवक्राणि स्वक्षिभ्रूदशनानि च ।
शिरांस्युन्मथ्य वीराणां शितैर्भल्लैर्धनञ्जयः ।
सन्तस्तार क्षितिं क्षिप्रं विनालैर्नलिनैरिव ॥ ८-५२-५ (५७६१६)
सुवृत्तानायतान्पुष्टांश्चन्दनागुरुभूषितान् ।
सायुधान्सतलत्रांश्च पञ्चास्योरगसन्निभान् ।
बाहून्क्षुरैरमित्राणां चिच्छेद समरेऽर्जुनः ॥ ८-५२-६ (५७६१७)
धुर्यान्धुर्योतरान्सूतान्ध्वजांश्चापानि सायकान् ।
पाणीन्नितान्तनिशितैर्भल्लैश्चिच्छेद पाण्डवः ॥ ८-५२-७ (५७६१८)
रथान्द्विपान्हयांश्चैव सारोहानर्जुनो युधि ।
शरैरनेकसाहस्रैर्निन्ये राजन्यमक्षयम् ॥ ८-५२-८ (५७६१९)
तं प्रवीराः सुसंरब्धा नर्दमाना इवर्षभाः ।
वासितार्थमिव क्रुद्धमभिद्रुत्य महोत्कटाः ।
निघ्नन्तमभिजघ्नुस्ते शरैः शृङ्गैरिवर्षभाः ॥ ८-५२-९ (५७६२०)
तस्य तेषां च तद्युद्धमभवद्रोमहर्षणम् ।
त्रैलोक्यविजये यद्वद्दैत्यानां सह वज्रिणा ॥ ८-५२-१० (५७६२१)
अस्त्रैरस्त्राणि संवार्य द्विषतां सर्वतोऽर्जुनः ।
इषुभिर्बहुभिस्तूर्णं विद्ध्वा प्राणाञ्जहार सः ॥ ८-५२-११ (५७६२२)
छिन्नत्रिवेणुचक्राक्षान्हतयोधान्ससारथीन् ।
विध्वस्तायुधतूणीरान्समुन्मथितकेतनान् ॥ ८-५२-१२ (५७६२३)
सञ्छिन्नयोक्ररश्मीषान्वित्रिवेणून्विकूबरान् ।
विस्रस्तबन्धुरयुगान्विस्रस्ताक्षप्रमण्डलान् ॥ ८-५२-१३ (५७६२४)
रथान्विशकलीकुर्वन्महाभ्राणीव मारुतः ॥ ८-५२-१४ (५७६२५)
विस्मापकं प्रेक्षकाणां द्विषतां भयवर्धनम् ।
महारथसहस्रस्य समं कर्माकरोज्जयः ॥ ८-५२-१५ (५७६२६)

सिद्धदेवर्षिसङ्घाश्च चारणाश्चापि तुष्टुवुः ॥ ८-५२-१६ (५७६२७)
देवदुन्दुभयो नेदुः पुष्पवर्षाणि चापतन् ।
केशवार्जुनयोर्मूर्ध्नि प्राह वाक्वाशरीरिणी ॥ ८-५२-१७ (५७६२८)
चन्द्राग्न्यनिलसूर्याणां कान्तिदीप्तिबलद्युतीः ।
यौ सदा बिभ्रतुर्वीराविमौ तौ केशवार्जुनौ ॥ ८-५२-१८ (५७६२९)
ब्रह्मेशानाविव पुरा वीरावेकरथे स्थितौ ।
सर्वभूतवरौ वीरौ नरनारायणाविमौ ॥ ८-५२-१९ (५७६३०)
इत्येतन्महदाश्चर्यं दृष्ट्वा श्रुत्वा च भारत ।
अश्वत्थामा सुसङ्क्रुद्धः कृष्णावभ्यद्रवद्रणे ॥ ८-५२-२० (५७६३१)
अथ पाण्डवमस्यन्तममित्रान्तकराञ्छरान् ।
सेषुणा पाणिनाऽऽहूय प्रहसन्द्रौणिरब्रवीत् ॥ ८-५२-२१ (५७६३२)
यदि मां मन्यसे वीर प्राप्तमर्हमिहातिथिम् ।
ततः सर्वात्मना त्वद्य युद्धातिथ्यं प्रयच्छ मे ॥ ८-५२-२२ (५७६३३)
एवमाचार्यपुत्रेण समाहूतो युयुत्सया ।
बहुमेनेऽर्जुनोऽऽत्मानमिति चाह जनार्दनम् ॥ ८-५२-२३ (५७६३४)
संशप्तकाश्च मे वध्या द्रौणिराह्वयते च माम् ।
यदत्रानन्तरं प्राप्तं शंस मे तद्धि माधव ॥ ८-५२-२४ (५७६३५)
आतिथ्यकर्माभ्युत्थाय दीयतां यदि मन्यसे ।
एवमुक्तोऽवहत्पार्थं कृष्णोद्रोणात्मजान्तिके ॥ ८-५२-२५ (५७६३६)
शैक्ष्येण विधिनाऽऽहूतं वायुरिन्द्रमिवाध्वरे ।
तमामन्त्र्यैकमनसं केशवो द्रौणिमब्रवीत् ॥ ८-५२-२६ (५७६३७)
अश्वत्थामन्स्थिरो भूत्वा प्रहराशु सहस्व च ।
निर्वेष्टुं भर्तृपिण्डं हि कालोऽयमुपजीविनाम् ॥ ८-५२-२७ (५७६३८)
सूक्ष्मो विवादो विप्राणां सूक्ष्मौ क्षास्त्रौ जयाजयौ ॥ ८-५२-२८ (५७६३९)
नहि संक्षमसे मोहाद्दिव्यां पार्थस्य सत्क्रियाम् ।
समाप्तिमिच्छन्युध्यस्व स्यिरो भूत्वाऽद्य पाण्डवं ॥ ८-५२-२९ (५७६४०)
इत्युक्तो वासुदेवेन तथेत्युक्त्वा द्विजोत्तमः ।
विव्याध केशवं षष्ट्या नाराचैरर्जुनं त्रिभिः ॥ ८-५२-३० (५७६४१)
तस्यार्जुनः सुसङ्क्रुद्धस्त्रिभिर्बाणैः शरासनम् ।
चिच्छेदाथान्यदादत्त द्रौणिर्घोरतरं धनुः ॥ ८-५२-३१ (५७६४२)
सज्यं कृत्वा निमेषाच्च विव्याधार्जुनकेशवौ ।
त्रिभिः शतैर्वासुदेवं सहस्रेण च पाण्डवम् ॥ ८-५२-३२ (५७६४३)
ततः शरसहस्राणि प्रयुतान्यर्बुदानि च ।
ससृजे द्रौणिरायस्तः स्तम्भयामास चार्जुनम् ॥ ८-५२-३३ (५७६४४)
इषुधेर्धनुषो ज्यायास्त्वङ्गुलिभ्यश्च मारिष ।
बाह्वोः कराभ्यामुरसो वदनाद्घ्राणनेत्रतः ॥ ८-५२-३४ (५७६४५)

कर्णाभ्यां शिरसोऽङ्गेभ्यो लोमवर्मभ्य एव च ।
रथध्वजाभ्यां च शरा निष्पेतुर्ब्रह्मवादिनः ॥ ८-५२-३५ (५७६४६)
शरजालेन महता बद्धवा माधवपाण्डवौ ।
ननाद सुदितो द्रौणिर्महामेघौघनिःस्वनम् ॥ ८-५२-३६ (५७६४७)
ग्तैः पतद्भिर्महाराज द्रौणिमुक्तैः समन्ततः ।
सञ्छादितौ रथस्थौ तावुभौ कृष्णधनञ्जयौ ॥ ८-५२-३७ (५७६४८)
दतः शरxxxxxx क्ष्णैर्भारद्वाजः प्रतापवान् ।
निxxxxx चक्रे रथे माधवपाण्डवौ ॥ ८-५२-३८ (५७६४९)
xxxx जङ्गमं स्थावरं तथा ।
चराचरसा मोप्तारौ दृष्ट्वा सञ्छादितौ शरैः ॥ ८-५२-३९ (५७६५०)
सिद्धचारxxxxx श्च संपेतुर्शै समन्ततः ।
अपि xxxxxxxx लोकानामिति चाब्रुवन् ॥ ८-५२-४० (५७६५१)
न मया xxxxxxxxxx राजन्दृष्टपूर्वः पराक्रमः ।
xxxxxxxxxxxx कृष्णो छादयतो रणे ॥ ८-५२-४१ (५७६५२)
xxxxxxxxxxx शब्दं रथानां त्रासनं रणे ।
xxxxxxxxxx राजन्सिंहस्य नदतो यथा ॥ ८-५२-४२ (५७६५३)
चरतो युद्धे सव्यं दक्षिणमस्यतः ।
विद्युदम्भोधरस्येव भ्राजमाना व्यदृश्यत ॥ ८-५२-४३ (५७६५४)
स तदा क्षिप्रकारी च दृढहस्तश्च पाण्डवः ।
प्रमोहं परमं गत्वा प्रेक्षन्नास्ते धनञ्जयः ॥ ८-५२-४४ (५७६५५)
विक्रमं चरतो युद्धे सव्यं दक्षिणमस्यतः ।
विक्रमं च हृतं मेने आत्मनस्तेन संयुगे ॥ ८-५२-४५ (५७६५६)
अथास्य समरे राजन्वपुरासीत्सुदुर्दृशम् ।
द्रौणेस्तत्कुर्वतः कर्म यादृग्रूपं पिनाकिनः ॥ ८-५२-४६ (५७६५७)
वर्धमाने ततस्तत्र द्रोणपुत्रे विशाम्पते ।
हीयमाने च कौन्तेये कृष्णं रोषः समाविशत् ॥ ८-५२-४७ (५७६५८)
स रोषान्निश्वसन्राजन्निर्दहन्निव चक्षुषा ।
द्रौणिं ददर्श सङ्ग्रामे फल्गुनं च मुहुर्मुहुः ॥ ८-५२-४८ (५७६५९)
ततः कृष्णोऽब्रवीत्क्रुद्धः पार्थं सप्रणयं वचः ॥ ८-५२-४९ (५७६६०)
अत्यद्भुततमिदं पार्थ त्वयि पश्यामि संयुगे ।
यत्त्वां विशेषयत्याजौ द्रोणपुत्रोऽद्य भारत ॥ ८-५२-५० (५७६६१)
कच्चित्ते गाण्डिवं हस्ते मुष्टिर्वा न व्यशीर्यत ।
कच्चिद्वीर्यं यथापूर्वं भुजयोर्वा बलं तव ॥ ८-५२-५१ (५७६६२)
उदीर्यमाणं हि रणे पश्यामि द्रौणिमाहवे ।
गुरुपुत्र इति ह्येनं मानयन्पाण्डवर्षभ ।
उपेक्षां मा कृथाः पार्थ नायं काल उपेक्षितुम्'॥ ८-५२-५२ (५७६६३)

अर्जुन उवाच। ८-५२-५३क्ष् (४९७२)
पश्य माधव दौरात्म्यं गुरुपुत्रस्य मां प्रति ।
वधं प्राप्तौ मन्यते नौ प्रावेश्य शवरेश्मनि ।
एषोस्मि हन्मि सङ्कल्पं शिक्षया च बलेन च ॥ ८-५२-५३ (५७६६४)
ग्एवमुक्त्वाऽस्य चिच्छेद भल्लैः कर्मारमार्जितैः ।
धनुश्छत्रं पताकां च रथशक्तिं गदां वराम्'॥ ८-५२-५४ (५७६६५)
अश्वत्थाम्नः शरानस्ताञ्छित्त्वैकैकं त्रिधा त्रिधा ।
व्यधमद्गरतश्रेष्ठो नीहारमिव मारुतः ॥ ८-५२-५५ (५७६६६)
ततः संशप्तकान्भूयः साश्वसूतरथद्विपान् ।
ध्वजपत्तिगणानुग्रैर्बाणैर्विव्याध पाण्डवः ॥ ८-५२-५६ (५७६६७)
ये ये ददृशिरे तत्र यद्यद्रूपास्तदा जनाः ।
ते ते तत्र शरैर्व्याप्तं मेनिरेऽऽत्मानमात्मना ॥ ८-५२-५७ (५७६६८)
ते गाण्डीवप्रमुक्तास्तु नानारूपाः पतत्रिणः ।
क्रोशे साग्रे स्थिताञ्जघ्नुर्द्विपांश्च पुरुषान्रणे ॥ ८-५२-५८ (५७६६९)
भल्लैश्छिन्नाः कराः पेतुः करिणां मदवर्षिणाम् ।
यथा वने परशुभिर्निकृत्ताः शाल्मलिद्रुमाः ॥ ८-५२-५९ (५७६७०)
पश्चात्तु शैलवत्पतुस्ते गजाः सह सादिभिः ।
वज्रिवज्रावमथिता यथैवाद्रिचयास्तथा ॥ ८-५२-६० (५७६७१)
गन्धर्वनगराकारान्रथांश्चैव सुकल्पितान् ।
विनीतैर्जवनैर्युक्तानास्थितान्युद्धदुर्मदैः ॥ ८-५२-६१ (५७६७२)
शरैर्विशकलीकुर्वन्नमित्रानभ्यवीवृषत् ।
स्वलङ्कृतानश्वसादीन्पत्तींश्चाहन्धनञ्जयः ॥ ८-५२-६२ (५७६७३)
धनञ्जययुगान्तार्कः संशप्तकमहार्णवम् ।
व्यशोषयत दुःशोषं तीक्ष्णैः शरगभस्तिभिः ॥ ८-५२-६३ (५७६७४)
पुनर्द्रौणिमहाशैलं नाराचैर्वज्रसन्निभैः ।
निर्बिभेद महावेगैस्त्वरन्वज्रीव पर्वतम् ॥ ८-५२-६४ (५७६७५)
तमाचार्यसुतः क्रुद्धः साश्वयन्तारमाशुगैः ।
युयुत्सुरागमद्योद्धुं पार्थस्तानच्छिनच्छरान् ॥ ८-५२-६५ (५७६७६)
ततः परमसङ्क्रुद्धः काण्डकोशमवासृजत् ।
अश्वत्थामाभिरूपाय गृहानतिथये यथा ॥ ८-५२-६६ (५७६७७)
अथ संशप्तकांस्त्यक्त्वा पाण्डवो द्रौणिमभ्ययात् ।
अपाङ्क्तेयानिव त्यक्त्वा दाता पाङ्क्तेयमर्थिनम् ॥ ८-५२-६७ (५७६७८)
ग्स्थिताः संशप्तका राजन्दृष्ट्वा युद्धं महात्मनोः'॥ ॥ ८-५२-६८ (५७६७९)

इति श्रीमन्महाभारते कर्णपर्वणि सप्तदशदिवसयुद्धे
द्विपञ्चाशोऽध्यायः ॥ ५२ ॥

८-५२-१ वासिता पुष्पवती गौस्तदर्थम् ॥
८-५२-१२ त्रिवेणुः उभयतः-- काष्ठद्वयसहितो धूर्दण्डः
। अक्षश्चक्राधारदण्डः ॥
८-५२-१३ योक्राणि बन्धनरज्जवः । रश्मयः
प्रग्रहाः। कूबरस्त्रिवेणोरग्रभागः। बन्धुरं रथतल्पः युगं
धूरग्रकाष्ठम्। अक्षप्रमण्डलं रथनीडाक्षयोः सन्धानकाष्ठजातम्
॥
८-५२-१४ विशकलीकुर्वन् विशेषेण शकलीकुर्वन् ॥
८-५२-१५ चन्द्रादीनां कान्त्यादीन् यथासंख्यं विभ्रतुः ॥
८-५२-२२ अर्हं पूजयितुं योग्यम् ॥
८-५२-२४ अनन्तरं प्रथमम् ॥
८-५२-२६ जैत्रेण विधिना इति झ पाठः ॥
८-५२-३३ अयन्तः यत्नवान् ॥
८-५२-३४ इषुषिप्रभृतिभ्यः शराः पेतुः लोमभ्योऽपि च चेतुस्तत्र
हेतुः ब्रह्मवादिनः योगबलवत इत्यर्थः ॥
८-५२-६४ महत् शैलं शिलासमूहो यस्मिन् तं महाशैलं पर्वतमिव ॥
८-५२-६६ काण्डकोशं बाणनिषङ्गम् ॥
८-५२-५२ द्विपञ्चाशोऽध्यायः ॥
५२ ॥

---

कर्नपर्व-अध्यय०५३
॥ श्रीः ॥
८.५३. अध्यायः ५३

Mahabharata - Karna Parva - Chapter Topics
अर्जुनेनाश्वत्थामपराजयः ॥ १ ॥

Mahabharata - Karna Parva - Chapter Text

८-५३-० (५७६८०)
सञ्जय उवाच। ८-५३-०क्ष् (४९७३)
ततः समभवद्युद्धं शुक्राङ्गिरसवर्चसोः ।
नक्षत्रमभितो व्योम्नि शुक्राङ्गिरसयोरिव ॥ ८-५३-१ (५७६८१)
सन्तापयन्तावन्योन्यं दीप्तैः शरगभस्तिभिः ।

लोकत्रासकरावास्तां विमार्गस्थौ ग्रहाविव ॥ ८-५३-२ (५७६८२)
ततोऽविध्यद्भुवोर्मध्ये नाराचैरर्जुनो भृशम् ।
स तेन विबभौ द्रौणिरूर्ध्वरश्मिर्यथा रविः ॥ ८-५३-३ (५७६८३)
अथ कृष्णौ शरशतैरश्वत्थाम्नाऽर्दितौ भृशम् ।
स्वरश्मिजालविकचौ युगान्तार्काविवासुतः ॥ ८-५३-४ (५७६८४)
ततोऽर्जुनः सर्वतोधारमस्त्र--
मवासृजद्वासुदेवेऽभिभूते ।
द्रौणायनिश्चाभ्यहनत्पृषत्कै--
र्वज्राग्निवैवस्वतदण्डकल्पैः ॥ ८-५३-५ (५७६८५)
स केशवं चार्जुनं चातितेजा
विव्याध मर्मस्वतिरौद्रकर्मा ।
बाणैः सुमुक्तैरतितीव्रवेगै--
र्यैराहतो मृत्युरपि व्यथेत ॥ ८-५३-६ (५७६८६)
द्रौणेरिषूनिषुभिः सन्निवार्य
व्यायच्छतस्तद्द्विगुणैः सुपुङ्खैः ।
तं साश्वसूतध्वजमेकवीर--
मावृत्य संशप्तकसैन्यमार्च्छत् ॥ ८-५३-७ (५७६८७)
धनूंषि बाणानिषुधीर्धनुर्ज्याः
पाणीन्भुजान्पाणिगतं च शस्त्रम् ।
छत्राणि केतूंस्तुरगान्रथेषां
वस्त्राणि माल्यान्यथा भूषणानि ॥ ८-५३-८ (५७६८८)
चर्माणि वर्माणि मनोरमाणि
प्रसह्य चैषां स शिरांसि चैव ।
चिच्छेद पार्थो द्विषतां सुमुक्तै--
र्बाणैः स्थितानामपराङ्मुखानाम् ॥ ८-५३-९ (५७६८९)
सुकल्पिताः स्मन्दनवाजिनागाः
समास्थिताः कृतयत्नैर्नृवीरैः ।
पार्थेरितैर्बाणशतैर्निरस्ता--
स्तैरेव सार्धं नृवरैर्विनेशुः ॥ ८-५३-१० (५७६९०)
पद्मार्कपूर्णेन्दुनिभाननानि
किरीटमाल्याभरणोज्ज्वलानि ।
भल्लार्धचन्द्रक्षुरसन्निकृत्ता--
न्यपातयच्छत्रुशिरांस्यजस्रम् ॥ ८-५३-११ (५७६९१)
अथ द्विपैर्दैत्यरिपुद्विपाभै--
र्देवारिकल्पा बलमन्युकल्पैः ।
कलिङ्गवङ्गाङ्गनिषादवीरा

जिघांसवः पाण्डवमभ्यधावन् ॥ ८-५३-१२ (५७६९२)
तेषां द्विपानां निचकर्त पार्थो
वर्माणि चर्माणि करान्नियन्तॄन् ।
ध्वजाः पताकाश्च ततः प्रपेतु--
र्वज्राहतानीव गिरेः शिरांसि ॥ ८-५३-१३ (५७६९३)
तेषु प्रभग्नेषु गुरोस्तनूजं
बाणैः किरीटि नवसूर्यवर्णैः ।
प्रच्छादयामास महाभ्रजालै--
र्वायुः समुद्यन्तमिवांशुमन्तम् ॥ ८-५३-१४ (५७६९४)
ततोऽर्जुनेषूनिषुभिर्निरस्य
द्रौणिः शितैरर्जुनवासुदेवौ ।
प्रच्छादयित्वा दिवि चन्द्रसूर्यौ
ननाद सोऽम्भोद इवातपान्ते ॥ ८-५३-१५ (५७६९५)
तमर्जुनस्तांश्च पुनस्त्वदीया--
नभ्यर्दितस्तैरभिसृत्य शस्त्रैः ।
वाणान्धकारं सहसैव कृत्त्वा
विव्याध पार्थो वरहेमपुङ्खैः ॥ ८-५३-१६ (५७६९६)
नाप्याददत्सन्दधन्नैव मुञ्च--
न्बाणान्रथेऽदृश्यत सव्यसाची ।
रथांश्च नागांस्तुरगान्पदातीन्
संस्यूतदेहान्ददृशुर्हतांश्च ॥ ८-५३-१७ (५७६९७)
सन्धाय नाराचवरान्दशाशु
द्रौणिस्त्वरन्नेकमिवोत्ससर्ज ।
तेषां च पञ्चार्जुनमभ्यविध्य--
न्पञ्चाच्युतं निर्बिभुदुः सुपुङ्खाः ॥ ८-५३-१८ (५७६९८)
तैराहतौ सर्वमनुष्यमुख्या--
वसृक्स्रवन्तौ धनदेन्द्रकल्पौ ।
समाप्तविद्येन तथाऽभिभूतौ
हतौ रणे ताविति मेनिरेऽन्ये ॥ ८-५३-१९ (५७६९९)
अथार्जुनं प्राह दशार्हनाथः
प्रमाद्यसे किं जहि योधमेतम् ।
कुर्याद्धि दोषं समुपेक्षितोऽयं
कष्टो भवेद्व्याधिरिवाक्रियावान् ॥ ८-५३-२० (५७७००)
तथेति चोक्त्वाऽच्युतमप्रमादी
द्रौणेः प्रहस्याशु किरीटमाली ।
भुजौ वरौ चन्दनसारदिग्धौ

वक्षः शिरोऽथाप्रतिमौ तथोरू ॥ ८-५३-२१ (५७७०१)
गाण्डीवमुक्तैः कुपिताहिकल्पै--
द्रौणिं शरैः संयति निर्बिभेद ।
छित्त्वा तु रश्मींस्तुरगानविध्य--
त्ते तं रणादूहुरतीव दूरम् ॥ ८-५३-२२ (५७७०२)
स तैर्हृतो वातजवैस्तुरङ्गै-
र्द्रौणिर्दृढं पार्थशराभिभूतः ।
आवृत्य नैव व्यषहत्स योद्धुं
पार्थेन सार्धं मतिमान्विमृश्य। ८-५३-२३ (५७७०३)
जानञ्जयं नियतं वृष्णिवीरे
धनञ्जये चाङ्गिरसां वरिष्ठः ॥
विवेश कर्णस्य बलं तरस्वी
भग्नोत्साहः क्षीणवाणास्त्रयोगः ॥ ८-५३-२४ (५७७०४)
प्रतीपकामे तु रणादश्वत्थाम्नि हृते हयैः ।
मन्त्रौषधिक्रियायोगैर्व्याधौ देहादिवाहृते ॥ ८-५३-२५ (५७७०५)
संशप्तकानभिमुखौ प्रयातौ केशवार्जुनौ ।
वातोद्धूतपताकेन स्यन्दनेनौघनादिना ॥ ॥ ८-५३-२६ (५७७०६)

इति श्रीमन्महाभारते कर्णपर्वणि सप्तदशदिवसयुद्धे
त्रिपञ्चाशोऽध्यायः ॥ ५३ ॥
Mahabharata - Karna Parva - Chapter Footnotes

८-५३-१ नक्षत्रमभितः नक्षत्रं लक्षीकृत्य ॥
८-५३-२ विमार्गस्थौ वक्रातिचारगौ ॥
८-५३-४ कृष्णौ कृष्णार्जुनौ आसतुः दीपयाञ्चक्रतुः ॥
८-५३-५ सर्वतोधारं सर्वतोऽस्त्रधारावर्षकं
। सर्वतोवारमिति घ ङ पाठः। वज्रकल्पैः अमोघैः। अग्निकल्पैः
दाहकैः। वैवस्वतदण्डकल्पैः प्राणहरैः ॥
८-५३-७ ध्यायच्छतो यतमानस्य । आच्छर्तगतवान् ॥
८-५३-१० सुकल्पिताः सुसन्नद्धाः ॥
८-५३-१३ करान् शुण्डाः ॥
८-५३-१६ तं अश्वत्थामानम् । तान् तदन्यान्। तैः कृतं त्राणान्धकारं
कृत्वा छित्त्वा। कृती छेदन ॥
८-५३-१७ संस्यूताः अन्योन्यं सन्धट्टवन्तः ॥
८-५३-१९ समाप्तविद्येन समग्रधनुर्वेदविदा ॥
८-५३-२० अक्रियावान् प्रतिकाररहितः ॥

८-५३-२२ अविकर्णैः अविकर्णतुल्याग्रैः ॥
८-५३-२३ अङ्गिरसां अङ्गिरोगोत्राणां मध्ये ॥
८-५३-२६ ओघनादिना जलौघवन्नादवता ॥
८-५३-५३ त्रिपञ्चाशोऽध्यायः ॥

---

कर्नपर्व-अध्यय०५४
॥ श्रीः ॥
८.५४. अध्यायः ५४

Mahabharata - Karna Parva - Chapter Topics
अर्जुनेन दण्डदण्डधारयोर्वधः ॥१ ॥

Mahabharata - Karna Parva - Chapter Text

८-५४-० (५७७०७)
सञ्जय उवाच। ८-५४-०क्ष् (४९७४)
अथोत्तरेण पाण्डूनां सेनायां ध्वनिरुत्थितः ।
रथनागाश्वपत्तीनां दण्डधारेण वध्यताम् ॥ ८-५४-१ (५७७०८)
निवर्तयित्वा तु रथं केशवोऽर्जुनमब्रवीत् ।
वाहयन्नेव तुरगान्गारुडानिलरंहसः ॥ ८-५४-२ (५७७०९)
मागधोऽसावतिक्रान्तो द्विरदेन प्रमाथिना ।
भगदत्तादनवमः शिक्षया च बलेन च ॥ ८-५४-३ (५७७१०)
एनं हत्वा निहन्ताऽसि पुनः संशप्तकानिति ।
वाक्यान्ते प्रापयत्पार्थं दण्डधारगजं प्रति ॥ ८-५४-४ (५७७११)
स मागधानां प्रवरो महाबलोऽ--
शुभग्रहो योधगणैः समन्वितः ।
सपत्नसेनां प्रममाथ दारुणो
भीमं समग्रां बलवानिव ग्रहम् ॥ ८-५४-५ (५७७१२)
सुकल्पितं दानवनागसन्निभं
महाभ्रनिर्हादसमस्वनं रणे ।
समास्थितो नागवरं नरेश्वरो
रथाश्वमातङ्गनरप्रमाथिनम् ॥ ८-५४-६ (५७७१३)
स नागयन्तॄन्समरे महारथा--
न्सपत्तिसङ्घांस्तुरगान्ससादिनः ।
द्विपांश्च बाणैर्निजघान वीर्यवा--
न्समन्ततो घ्नन्निव कालचक्रवत् ॥ ८-५४-७ (५७७१४)

नरांस्तु कांस्यायसवर्मभूषणा--
न्निपात्य साश्वानपि पत्तिभिः सह ।
व्यपोथयद्दन्तिवरेण शुष्मिणा
सशब्दवत्स्थूलनलं यथा तथा ॥ ८-५४-८ (५७७१५)
अथार्जुनो ज्यातलनेमिनिःस्वने
मृदङ्गभेरीबहुशङ्खनादिते ।
रथाश्वमातङ्गसहस्रनादिते
रथोत्तमेनाभ्यपतद्द्विपोत्तमम् ॥ ८-५४-९ (५७७१६)
ततोऽर्जुनं द्वादशभिः शरोत्तमै--
र्जनार्दनं षोडशभिः समार्पयत् ।
स दण्डधारस्तुरगांस्त्रिभिस्त्रिभि---
स्ततो ननाद प्रजहास चासकृत् ॥ ८-५४-१० (५७७१७)
ततोऽस्य पार्थः सगुणेषुकार्मुकं
चकर्त भल्लैर्ध्वजमप्यलङ्कृतम् ।
पुनर्नियन्तॄन्सहपादगोप्तृभि--
स्ततः स चुक्रोध गिरिव्रजेश्वरः ॥ ८-५४-११ (५७७१८)
ततोऽर्जुनं भिन्नकटेन दन्तिना
घनाघनेनानिलतुल्यरंहसा ।
अतीव चुक्रोधयिषुर्जनार्दनं
घनञ्जयं चाभिजघान तोमरैः ॥ ८-५४-१२ (५७७१९)
अथास्य बाहू द्विपहस्तसन्निभौ
शिरश्च पूर्णेन्दुनिभाननं त्रिभिः ।
क्षुरैः प्रचिच्छेद सहैव पाण्डव--
स्ततो द्विपं बाणशतैः समर्पयत् ॥ ८-५४-१३ (५७७२०)
स पार्थबाणैस्तपनीयभूषणैः
समावृतः काञ्चनवर्मभृद्द्विपः ।
भृशं चकाशे निशि पर्वतो यथा
दावाग्निना प्रज्वलितौषधिद्रुमः ॥ ८-५४-१४ (५७७२१)
स वेदनार्तोऽम्बुदनिस्वनो नदं--
श्चरन्भ्रमन्प्रस्खलितान्तरोऽद्रवत् ।
पपात रुग्णः सनियन्तृकस्तथा ॥
यथा गिरिर्वज्रविदारितस्तथा ॥ ८-५४-१५ (५७७२२)
हिमावदानेन सुवर्णमालिना
हिमाद्रिकूटप्रतिमेन दन्तिना ।
हते रणे भ्रातरि दण्ड आव्रज--
ज्जिघांसुरिन्द्रावरजं धनञ्जयम् ॥ ८-५४-१६ (५७७२३)

सतोमरैरर्करप्रभैस्त्रिभि--
र्जनार्दनं पञ्चभिरर्जुनं शितैः ।
समर्पयित्वा विननाद चार्दयं--
स्ततोऽस्य बाहू निचकर्त पाण्डवः ॥ ८-५४-१७ (५७७२४)
क्षुरप्रकृत्तौ विपुलौ सतोमरौ
शुभाङ्गदौ चन्दनरूषितौ भुजौ ।
गजात्पतन्तौ युगपद्विरेजतु--
र्यथोरगौ पर्वतशृङ्गवन्महीम् ॥ ८-५४-१८ (५७७२५)
अथाऽर्धचन्द्रेण हतं किरीटिना
पपात दण्डस्य शिरः क्षितिं द्विपात् ।
स शोणितार्द्रो निपतन्विरेजे
दिवाकरोऽस्तादिव पश्चिमां दिशम् ॥ ८-५४-१९ (५७७२६)
अथ द्विपं श्वेतनगाग्रसन्निभं
दिवाकरांशुप्रतिमैः शरोत्तमैः ।
बिभेद पार्थः स पपात नादयन्
हिमाद्रिकूटं कुलिशाहतं यथा ॥ ८-५४-२० (५७७२७)
ततोऽपरं तत्प्रतिमा गजोत्तमा
जिगीषवः संयति सव्यसाचिना ।
तथा कृतास्तेऽपि यथैव तौ द्विपौ
ततः प्रभग्नं सुमहद्रिपोर्बलम् ॥ ८-५४-२१ (५७७२८)
गजा रथाश्वाः पुरुषाश्च सङ्घशः
परस्परघ्नाः परिपेतुराहवे ।
परस्परं प्रस्खलिताः समाहता
भृशं च तत्तद्बहुभाषिणो हताः ॥ ८-५४-२२ (५७७२९)
अथार्जुनं स्वे परिवार्य सैनिकाः
पुरन्दरं देवगणा इवाब्रुवन् ।
अभैष्म यस्मान्मरणादिव प्रजाः
स वीर दिष्ट्या निहतस्त्वया रिपुः ॥ ८-५४-२३ (५७७३०)
न चेत्परित्रास्यदिमाञ्जनान्भया--
द्द्विषद्भिरेवं बलिभिः प्रपीडितान् ।
तथाऽभविष्यद्द्विषतां प्रमोदनं
यथा हतेष्वेष्विह नोऽरिसूदन ॥ ८-५४-२४ (५७७३१)
इतीव भूयश्च सुहृद्भिरीडिता
निशम्य वाचः सुमनास्तदाऽर्जुनः ।
यथाऽनुरूपं प्रतिपूज्य तं जनं
जगाम संशप्तकसङ्घहा पुनः ॥ ॥ ८-५४-२५ (५७७३२)

इति श्रीमन्महाभारते कर्णपर्वणि सप्तदशदिवसयुद्धे
चतुःपञ्चाशोऽध्यायः ॥ ५४ ॥

Mahabharata - Karna Parva - Chapter Footnotes

८-५४-१ उत्तरेण उत्तरतः । वध्यतां वध्यमानानाम् ॥
८-५४-३ अनवमः अहीनः ॥
८-५४-५ स मागधानां प्रवरोऽङ्कुशग्रहे ग्रहेऽप्रसह्यो विकचो यथा ग्रहः । सपत्नसेनां प्रममाथ दारुणो महीं समग्रां विकचो यथा ग्रहः। इति झ पाठः। तत्र इत्यर्थः। अङ्कुशग्रहे अङ्कुशधारमे हङ्कियुद्धे इत्यर्थः। ग्रहे आदित्यादिग्रहसमूहे युद्धपरिग्रहे च अप्रसह्यः। विकचः कचोपलक्षितशिरोरहितः केतुरूपी ग्रह इव। विकचो विस्तीर्णो ग्रहो धूमकेतुरूपी उत्पातग्रहः ॥
८-५४-८ शुष्मिणा बलवता । स्थूलसुषिरं नलं तृणविशेषम् ॥
८-५४-११ सगुणेषुकार्मुकं मौर्वीबाणसहितं धनुः । नियन्तॄन् नियन्तारम् ॥
८-५४-१२ धनाधनो घतुकमत्तदन्तिनोरिति विश्वः ॥
८-५४-१३ सहैव युगपत् ॥
८-५४-१५ स्खलितान्तरः मध्येस्खलतित्यर्थः ॥
८-५४-१६ इन्द्रावरजं कृष्णम् ॥
८-५४-१९ अस्तात् अत्वाचलात् ॥
८-५४-२१ तौ दण्डधारतद्भ्रात्रोर्द्विपौ यथा साध्यक्षौ कृत्तौ छिन्नौ तथा तेपि कृताः ॥
८-५४-५४ चतुःपञ्चाशोऽध्यायः ॥

---

कर्नपर्व-अध्यय०५५
॥ श्रीः ॥
८.५५. अध्यायः ५५

Mahabharata - Karna Parva - Chapter Topics

अर्जुनेन संशप्तकानां वधः ॥ १ ॥

Mahabharata - Karna Parva - Chapter Text

८-५५-० (५७७३३)
सञ्जय उवाच। ८-५५-०क्ष् (४९७५)
प्रत्येत्याथ पुनर्जिष्णुर्जित्वा संशप्तकान्बभौ ।

वक्रानुवक्रगमनादङ्गारक इव ग्रहः ॥ ८-५५-१ (५७७३४)
पार्थबाणहता राजन्नराश्वरथकुञ्जराः ।
विचेलुर्बभ्रमुर्नेशुः पेतुर्मम्लुश्च भारत ॥ ८-५५-२ (५७७३५)
धुर्यान्धुर्येतरान्सूतान्ध्वजांश्चपासिसायकान् ।
पाणीन्पाणिगताञ्शस्त्रान्बाहूनपि शिरांसि च ॥ ८-५५-३ (५७७३६)
भल्लैः क्षुरैरर्धचन्द्रैर्वत्सदन्तैश्च पाण्डवः ।
चिच्छेदामित्रवीराणां समरे प्रतियुध्यताम् ॥ ८-५५-४ (५७७३७)
तं प्रवीरास्त्वदीयानां नर्दमानाऽभिदुद्रुवुः ।
वासितार्थे युयुत्सन्तो वृषभा वृषभं यथा ।
निपतन्त्यर्जुनं शूराः शतशोऽथ सहस्रशः ॥ ८-५५-५ (५७७३८)
तेषां तस्य च तद्युद्धमभवद्रोमहर्षणम् ।
त्रैलोक्यविजये यादृग्दैत्यानां सह वज्रिणा ॥ ८-५५-६ (५७७३९)
तमविध्यत्त्रिभिर्बाणैर्दन्दशूकैरिवाहिभिः ।
उग्रायुधस्य तस्याशु शिरः कायादपाहरत् ॥ ८-५५-७ (५७७४०)
तेऽर्जुनं सर्वतः क्रुद्धा नानाशस्त्रैरवीवृषन् ।
मरुद्भिः प्रेरिता मेघा हिमवन्तमिवोष्णगे ॥ ८-५५-८ (५७७४१)
अस्त्रैरस्त्राणिं संवार्य द्विषतां सर्वतोऽर्जुनः ।
सम्यगस्तैः शरैः सर्वानहितानहनद्बहून् ॥ ८-५५-९ (५७७४२)
छिन्नत्रिवेणुजङ्घेषान्हताश्वान्हतसारथीन् ।
विस्रस्तहस्ततूणीरान्विचक्रथकेतनान् ॥ ८-५५-१० (५७७४३)
सञ्छिन्नरश्मियोक्त्राक्षान्व्यनुकर्षयुगान्रथान् ।
विध्वस्तसर्वसन्नाहान्बाणैश्चक्रेऽर्जुनस्त्वरन् ॥ ८-५५-११ (५७७४४)
ते रथास्तत्र विध्वस्ताः परार्द्ध्या भान्त्यनेकशः ।
धनिनामिव वेश्मानि हतान्यग्न्यनिलाम्बुभिः ॥ ८-५५-१२ (५७७४५)
द्विपाः सम्भिन्नमर्माणो वज्राशनिसमैः शरैः ।
पेतुर्गिर्यग्रवेश्मानि वज्रवाताग्निभिर्यथा ॥ ८-५५-१३ (५७७४६)
अनेकैश्च शिलाधौतैर्वज्रानलविषोपमैः ।
शरैर्निजघ्निवान्पार्थो महेन्द्र इव दानवान् ॥ ८-५५-१४ (५७७४७)
सारोहास्तुरगाः पेतुर्बहवोऽर्जुनताडिताः ।
निर्जिह्वान्त्राः क्षितौ क्षीणा रुधिरार्द्राः सुदुर्दृशः ॥ ८-५५-१५ (५७७४८)
नराश्वनागा नाराचैः संस्यूताः सव्यसाचिना ।
बभ्रमुश्चस्खलुः पेतुर्नेदुर्मम्लुश्च मारिष ॥ ८-५५-१६ (५७७४९)
महार्हवर्माभरणा नानारूपाम्बरायुधाः ।
सरथाश्वद्विपा वीरा हताः पार्थेन शेरते ॥ ८-५५-१७ (५७७५०)
निर्भयाः पुण्यकर्माणो विशिष्टाभिजनश्रुताः ।
गताः शरीरैर्वसुधामूर्जितैः कर्मभिर्दिवम् ॥ ८-५५-१८ (५७७५१)

अथार्जुनरथं वीरास्त्वदीयाः समभिद्रवन् ।
नानाजनपदाध्यक्षाः सगणा जातमन्यवः ॥ ८-५५-१९ (५७७५२)
उह्यमना रथाश्वैभैः पत्तयश्च जिघांसवः ।
समभ्यधावन्नस्यन्तो विविधं क्षिप्रमायुधम् ॥ ८-५५-२० (५७७५३)
तदायुधमहावर्षं क्षिप्तं योधमहाम्बुदैः ।
व्यधमन्निशितैर्बाणैः क्षिप्रमर्जुनमारुतः ॥ ८-५५-२१ (५७७५४)
साश्वपत्तिद्विपरथं महाशस्त्रौघसम्प्लवम् ॥
सहसा सन्तितीर्षन्तं पार्थं शस्त्रास्त्रसेतुना ॥ ८-५५-२२ (५७७५५)
अथाब्रवीद्वासुदेवः पार्थ किं क्रीडसेऽनघ ।
संशप्तकान्प्रमथ्यैनांस्ततः कर्णवधे त्वर ॥ ८-५५-२३ (५७७५६)
तथेत्युक्त्वाऽर्जुनः कृष्णं शिष्टान्संशप्तकांस्तदा ।
क्षपयिष्यंस्तदा बाणैर्दैत्यानिन्द्र इवावधीत् ॥ ८-५५-२४ (५७७५७)
आददत्सन्दधन्नेषून्दृष्टः कैश्चिद्रणेऽर्जुनः ।
विमुञ्चन्वा शराञ्शीघ्रं दृश्यन्ते वै नरा हताः ॥ ८-५५-२५ (५७७५८)
आश्चर्यमिति गोविन्दो ब्रुवन्नश्वानचोदयत् ।
हंसांशुगौरास्ते सेनां हंसाः सर इवाविशन् ॥ ८-५५-२६ (५७७५९)
ततः सङ्ग्रामभूमिं तां वर्तमाने जनक्षये ।
अवेक्षमाणो गोविन्दः सव्यसाचिनमब्रवीत् ॥ ८-५५-२७ (५७७६०)
एष पार्थ महारौद्रो वर्तते भरतक्षयः ।
पृथिव्यां पार्थिवानां वै दुर्योधनकृते महान् ॥ ८-५५-२८ (५७७६१)
पश्य भारत चापानि रुक्मपृष्ठानि धन्विनाम् ।
हतानामपविद्धानि कलापानिषुधींस्तथा ॥ ८-५५-२९ (५७७६२)
जातरूपमयैः पुङ्खैः शरांश्च नतपर्वणः ।
तैलधौतांश्च नाराचान्निर्मुक्तानिव पन्नगान् ॥ ८-५५-३० (५७७६३)
आकीर्णांस्तोमरान्वाहांश्छत्रान्हेमविभूषितान् ।
चर्माणि चापविद्धानि रुक्मपृष्ठानि भारत ॥ ८-५५-३१ (५७७६४)
सुवर्णविकृतान्प्रासाञ्शक्तीः कनकभूषिताः ।
जाम्बूनदमयैः पट्टैर्बद्धाश्च विपुला गदाः ॥ ८-५५-३२ (५७७६५)
जातरूपमयीश्चर्ष्टीः पट्टसान्हेमभूषितान् ।
दण्डैः कनकचित्रैश्च विप्रविद्धान्परश्वथान् ॥ ८-५५-३३ (५७७६६)
परिघान्भिण्डिपालांश्च भुशुण्डीः कणपानपि ।
अयस्कुन्तांश्च पतितान्मुसलानि गुरूणि च ॥ ८-५५-३४ (५७७६७)
नानाविधानि शस्त्राणि प्रगृह्य जयगृद्धिनः ।
जीवन्त इव दृश्यन्ते गतसत्वास्तरस्विनः ॥ ८-५५-३५ (५७७६८)
गदाविमथितैर्गात्रैर्मुसलैर्भिन्नमस्तकान् ।
गजवाजिरथैः क्षुण्णान्पश्य योधान्सहस्रशः ॥ ८-५५-३६ (५७७६९)

मनुष्यगजवाजीनां शरशक्त्यृष्टितोमरैः ।
निस्त्रिंशैः पट्टसैः प्रासैर्नखरैर्लगुडैरपि ॥ ८-५५-३७ (५७७७०)
शरीरैर्बहुधा छिन्नैः शोणितौघपरिप्लुतैः ।
गतासुभिरमित्रघ्न संवृता रणभूमयः ॥ ८-५५-३८ (५७७७१)
बाहुभिश्चन्दनादिग्धैः साङ्गदैः शुभभूषणैः ।
सतलत्रैः सकेयूरैर्भाति भारत मेदिनी ॥ ८-५५-३९ (५७७७२)
साङ्गुलित्रैर्भुजाग्रैश्च विप्रविद्धैरलङ्कृतैः ।
हस्तिहस्तोपमैश्छिन्नैरूरुभिश्च तरस्विनाम् ॥ ८-५५-४० (५७७७३)
बद्धचूडामणिवरैः शिरोभिश्च सकुण्डलैः ।
गनिकृत्तैर्वृषभाक्षाणां शरीरैश्चापि सङ्घशः ॥ ८-५५-४१ (५७७७४)
गजवाजिमनुष्याणां शरशक्त्यृष्टितोमरैः ।
कबन्धैः शोणितादिग्धैश्छिन्नगात्रशिरोधरैः ।
भूर्भाति भरतश्रेष्ठ शान्ताग्निभिरिवाध्वरे'॥ ८-५५-४२ (५७७७५)
रथांश्च बहुधा भग्नान्हेमकिङ्किणिनः शुभान् ।
अश्वांश्च बुहधा पश्य शोणितेन परिप्लुतान् ॥ ८-५५-४३ (५७७७६)
अनुकर्षानुपासङ्गान्पताका विविधान्ध्वजान् ।
योधानां च महाशङ्खान्पाण्डुरांश्च प्रकीर्णकान् ।
निरस्तजिह्वान्मातङ्गाञ्शयानान्पर्वतोपमान् ॥ ८-५५-४४ (५७७७७)
वैजयन्तीर्विचित्राश्च हतांश्च गजयोधिनः ।
वारणानां परिस्तोमान्संयुक्तानेककम्बलान् ॥ ८-५५-४५ (५७७७८)
विपाटितविचित्राश्च रूपचित्राः कुथास्तथा ।
भिन्नाश्च बहुधा घण्टाः पतद्भिश्चूर्णिता गजैः ॥ ८-५५-४६ (५७७७९)
वैदूर्यमणिदण्डांश्च पतितांश्चाङ्कुशान्भुवि ।
अश्वानां च युगापीडान्रत्नचित्रानुरश्छदान् ॥ ८-५५-४७ (५७७८०)
विद्धाः सादिध्वजाग्रेषु सुवर्णविकृताः कुथाः ।
विचित्रान्मणिचित्रांश्च जातरूपपरिष्कृतान् ॥ ८-५५-४८ (५७७८१)
अश्वास्तरपरिस्तोमान्राङ्कवान्पतितान्भुवि ।
चूडामणीन्नरेन्द्राणां विचित्राः काञ्चनस्रजः ।
छत्राणि चापविद्धानि चामरव्यजनानि च ॥ ८-५५-४९ (५७७८२)
चन्द्रनक्षत्रभासैश्च वदनैश्चारुकुण्डलैः ।
क्लृप्तश्मश्रुभिरत्यर्थं वीराणां समलङ्कृतैः ।
वदनैः पश्य सञ्छन्नां महीं शोणितकर्दमाम् ॥ ८-५५-५० (५७७८३)
सजीवांश्च नरान्पश्य कूजमानान्समन्ततः ।
उपास्यमानांश्च बहून्न्यस्तशस्त्रैश्च भूपते ।
ज्ञातिभिश्च जलक्लिन्नान्रोदमानैर्मुहुर्मुहुः ॥ ८-५५-५१ (५७७८४)
उत्क्रान्तानपरान्योधाञ्छादयित्वा तरस्विनः ।

पुनर्युद्धाय गच्छन्ति जये लुब्धाः प्रमन्यवः ॥ ८-५५-५२ (५७७८५)
अपरे तत्रतत्रैव परिधावन्ति मानवाः ।
सन्निवृत्ताश्च ते शूरा दृष्टा चैतान्विचेतसः ॥ ८-५५-५३ (५७७८६)
जलं त्यक्त्वा प्रधावन्ति क्रोशमानाः परस्परम् ।
जलं पीत्वा मृतान्पश्य पिबतोऽन्यांश्च भारत ॥ ८-५५-५४ (५७७८७)
परिष्वज्य प्रियानन्ये बान्धवान्बन्धुवत्सलाः ।
विसंज्ञान्समरे योधांस्तत्रतत्र महारणे ॥ ८-५५-५५ (५७७८८)
पश्यापरान्नरश्रेष्ठ सन्दष्टोष्ठपुटान्पुनः ।
भृकुटीकुटिलैर्वक्त्रैः प्रेक्षमाणान्महारणम् ॥ ८-५५-५६ (५७७८९)
एतत्तवैवानुरूपं कर्मार्जुन महाहवे ।
दिवि वा देवराजस्य त्वया यत्कृतमाहवे ॥ ८-५५-५७ (५७७९०)
सञ्जय उवाच। ८-५५-५८क्ष् (४९७६)
एवं तां दर्शयन्कृष्णो युद्धभूमिं किरीटिने ।
गच्छन्नेवाशृणोच्छब्दं दुर्योधनबले महत् ॥ ८-५५-५८ (५७७९१)
शङ्खदुन्दुभिनिर्घोषं भेरीपणवनिःस्वनम् ।
रथाश्वनरनागानां पादशब्दांश्च दारुणान् ॥ ८-५५-५९ (५७७९२)
प्रविश्य तद्बलं कृष्णस्तुरगैर्वातवेगितैः ।
पाण्ड्येनाभ्यर्दितं सैन्यं त्वदीयं वीक्ष्य विस्मितः ॥ ८-५५-६० (५७७९३)
स हि नानाविधैर्बाणैरिष्वस्त्रप्रवरो युधि ।
न्यहनद्द्विषतां पूगान्गतासूनन्तको यथा ॥ ८-५५-६१ (५७७९४)
गजवाजिमनुष्याणां शरीराणि शितैः शरैः ।
भित्त्वा प्रहरतां श्रेष्ठो विदेहासूनपातयत् ॥ ८-५५-६२ (५७७९५)
शत्रुप्रवीरैरस्त्राणि नानाशस्त्राणि सायकैः ।
छित्त्वा तानवधीच्छत्रून्पाण्ड्यः शक्र इवासुरान् ॥ ॥ ८-५५-६३ (५७७९६)

इति श्रीमन्महाभारते कर्णपर्वणि सप्तदशदिवसयुद्धे
पञ्चपञ्चाशोऽध्यायः ॥ ५५ ॥

Mahabharata - Karna Parva - Chapter Footnotes

८-५५-३ धुर्यान् श्रेष्ठान् । धुर्यगतानिति पाठे वाहान् ॥
८-५५-५ वासितार्थे स्त्रीनिमित्तम् ॥
८-५५-७ दन्दशूकैः दंशनशीलैः । अपाहरदर्जुन इति शेषः ॥
८-५५-८ उष्णगे ग्रीष्मे गते सति प्रावृषीत्यर्थः । उष्णे ग्रीष्मो
गतोऽतीतो यत्र स उष्णगः कालविशेष इति विग्रहः ॥
८-५५-९ अस्तैः क्षिप्तैः ॥
८-५५-११ अनुकर्षः रथाधस्थं दारु ॥

८-५५-१५ निर्जिह्वान्त्राः निर्गताः जिह्वाः अन्त्राणि च येषां ते ॥
८-५५-२९ कलापान् अलङ्कारान् ॥
८-५५-३१ आकीर्णान् सर्वतोविक्षिप्तान् ॥
८-५५-३७ वाजीनां शरीरैरिति सम्बन्धः । दैर्ध्यमार्षम् ॥
८-५५-५५ पञ्चपञ्चाशोऽध्यायः ॥
५५ ॥

---

कर्नपर्व-अध्यय०५६
॥ श्रीः ॥
८.५६. अध्यायः ५६

Mahabharata - Karna Parva - Chapter Topics
अश्वत्थाम्ना पाण्ड्यवधः ॥ १ ॥

Mahabharata - Karna Parva - Chapter Text

८-५६-० (५७७९७)
धृतराष्ट्र उवाच। ८-५६-०क्ष् (४९७७)
प्रोक्तस्त्वया पूर्वमेव प्रवीरो लोकविश्रुतः ।
न त्वस्य कर्म सङ्ग्रामे त्वया सञ्जय कीर्तितम् ॥ ८-५६-१ (५७७९८)
तस्य विस्तरशो ब्रूहि प्रवीरस्याद्य विक्रमम् ।
शिक्षां प्रभावं वीर्यं च प्रमाणं दर्पमेव च ॥ ८-५६-२ (५७७९९)
सञ्जय उवाच। ८-५६-३क्ष् (४९७८)
भीष्मद्रोणकृपद्रौणिकर्णार्जुनजनार्दनान् ।
समाप्तविद्यान्धनुषि श्रेष्ठान्यान्सप्त मन्यसे ॥ ८-५६-३ (५७८००)
यो ह्याक्षिपति वीर्येण सर्वानेतान्महारथान् ।
न मेने चात्मना तुल्यं कञ्चिदेव नरेश्वरम् ॥ ८-५६-४ (५७८०१)
तुल्यतांद्रोणभीष्माभ्यामात्मनो यो न मृष्यते ।
वासुदेवार्जुनाभ्यां च न्यूनतां नैच्छतात्मनि ॥ ८-५६-५ (५७८०२)
स पाण्ड्योऽर्थपतिश्रेष्ठः सर्वशस्त्रभृतां वरः ।
कर्णस्यानीकमहनत्पाशहस्त इवान्तकः ॥ ८-५६-६ (५७८०३)
तदुदीर्णरथाश्वेभं पत्तिप्रवरसङ्कुलम् ।
कुलालचक्रवद्भ्रान्तं पाण्ड्येनाभ्याहतं बलात् ॥ ८-५६-७ (५७८०४)
व्यश्वसूतध्वजरथान्विप्रयुक्तयुगान्रथान् ।
सम्यगस्तैः शरैः पाण्ड्यो वायुर्मेघानिवाक्षिपत् ॥ ८-५६-८ (५७८०५)
द्विरदान्प्रवरारोहान्विपताकायुधध्वजान् ।

स पादरक्षानहनद्वज्रेणाद्रीनिवाद्रिहा ॥ ८-५६-९ (५७८०६)
स शक्तिप्रासतूणीरानश्वारोहान्हयानपि ।
पुलिन्दखसबाह्लीकनिषादान्ध्रककुन्तलान् ॥ ८-५६-१० (५७८०७)
दाक्षिणात्यांश्च भोजांश्च शूरान्सङ्ग्रामकर्कशान् ।
विशस्त्रकवचान्बाणैः कृत्वा पाण्ड्योऽकरोद्व्यसून् ॥ ८-५६-११ (५७८०८)
चतुरङ्गं बलं बाणैर्निघ्नन्तं पाण्डयमाहवे ।
दृष्ट्वा द्रौणिरसम्भ्रान्तमसम्भ्रान्तस्ततोऽभ्ययात् ॥ ८-५६-१२ (५७८०९)
आभाष्य चैनं मधुरमभीतं तमभीतवत् ।
प्राह प्रहरतां श्रेष्ठः स्मितपूर्वं समाह्वयत् ॥ ८-५६-१३ (५७८१०)
राजन्कमलपत्राक्ष प्रधानायुधवाहन ।
वज्रसंहननप्रख्य प्रख्यातबलपौरुष ॥ ८-५६-१४ (५७८११)
मुष्टिक्लिष्टाङ्गुलिभ्यां च व्यायताभ्यां महद्धनुः ।
दोर्भ्यां विस्फारयन्भासि महाजलदवङ्कृशम् ॥ ८-५६-१५ (५७८१२)
शरवर्षैर्महावेगैरमित्रानभिवर्षतः ।
मदन्यं नानुपश्यामि प्रतिवीरं तवाहवे ॥ ८-५६-१६ (५७८१३)
रथद्विरदपत्त्यश्वानेकः प्रमथसे बहून् ।
मृगसङ्घानिवारण्ये विभीर्भीमबलो हरिः ॥ ८-५६-१७ (५७८१४)
महता रथघोषेण दिवं भूमिं च नादयन् ।
वर्षान्ते सस्यां सूर्यो भाभिरादीपयन्निव ॥ ८-५६-१८ (५७८१५)
संस्पृशानः शरैः पूर्णौ तूणी चाशीविषोपमैः ।
मयैवैकेन युध्यस्व त्र्यम्बकेनान्धको यथा ॥ ८-५६-१९ (५७८१६)
एवमुक्तस्तथेत्युक्त्वा प्रमथ्यैनं स पार्थिवः ।
कर्णिना द्रोणतनयं विव्याध मलयध्वजः ॥ ८-५६-२० (५७८१७)
मर्मभेदिभिरत्युग्रैर्बाणैरग्निशिखोपमैः ।
मर्मस्वभ्यहनद्द्रौणिः पाण्ड्यमाचार्यनन्दनः ॥ ८-५६-२१ (५७८१८)
ततोऽपरान्नवांस्तूर्णं नाराचान्कङ्कवाससः ।
गत्या दशम्या संयुक्तानश्वत्थामाऽप्यवासृजत् ॥ ८-५६-२२ (५७८१९)
तानच्छिनत्तदा पाण्ड्यश्चतुर्भिरपरैः शरैः ।
चतुरोऽभ्याहनच्चाश्वानाशु ते व्यसवोऽभवन् ॥ ८-५६-२३ (५७८२०)
अथ द्रोणसुतस्येषूंस्ताञ्छित्त्वा निशितैः शरैः ।
धनुर्ज्यां विततां पाण्ड्यश्चिच्छेदादित्यतेजसः ॥ ८-५६-२४ (५७८२१)
दिव्यं धनुरथाधिज्यं कृत्वा द्रौणिरमित्रहा ।
प्रेक्ष्य चाशु रथे युक्तान्नरैरन्यान्हयोत्तमान् ॥ ८-५६-२५ (५७८२२)
ततः शरसहस्राणि प्रेषयामास वै द्विजः ।
इषुसम्बाधमाकाशमकरोद्दिश एव च ॥ ८-५६-२६ (५७८२३)
ततस्तानस्यतः सर्वान्द्रौणेर्बाणान्महात्मनः ।

जानानोप्यक्षयान्पाण्ड्यो शातयत्पुरुषर्षभः ॥ ८-५६-२७ (५७८२४)
प्रयुक्तांस्तान्प्रयत्नेन छित्त्वा द्रौणेरिषूनरिः ।
चक्ररक्षौ रणे तस्य प्राणुदन्निशितैः शरैः ॥ ८-५६-२८ (५७८२५)
अथ तल्लाघवं दृष्ट्वा मण्डलीकृतकार्मुकः ।
प्रास्यद्द्रोणसुतो बाणान्वृष्टिं पूषानुजो यथा ॥ ८-५६-२९ (५७८२६)
अष्टावष्टगवान्यूहुः शकटानि यदायुधम् ।
अह्नस्तदष्टभागेन द्रौणिश्चिक्षेप मारिष ॥ ८-५६-३० (५७८२७)
तमन्तकमिव क्रुद्धमन्तकालान्तकोपमम् ।
ये ये ददृशिरे रूपं विसंज्ञाः प्रायशोऽभवन् ॥ ८-५६-३१ (५७८२८)
आचार्यपुत्रस्तां सेनां बाणवृष्ट्या व्यवीवृषत् ।
पर्जन्य इव घर्मान्ते वृष्ट्या साद्रिद्रुमां महिम् ॥ ८-५६-३२ (५७८२९)
द्रौणिपर्जन्यमुक्तां तां बाणवृष्टिं सुदुःसहाम् ।
वायव्यास्त्रेण स क्षिप्रं विद्धवा पाण्ड्यातिलोऽनदत् ॥ ८-५६-३३ (५७८३०)
तस्य नानदतः केतुं चन्दनागुरुरूषितम् ।
मलयप्रतिमं द्रौणिश्छित्त्वाश्वांश्चतुरोऽहनत् ॥ ८-५६-३४ (५७८३१)
सूतमेकेषुणा हत्वा महाजलदनिःस्वनम् ।
धनुश्छित्त्वाऽर्धचन्द्रेण तिलशो व्यधमद्रथम् ॥ ८-५६-३५ (५७८३२)
अस्त्रैरस्त्राणि संवार्य छित्त्वा सर्वायुधानि च ।
प्राप्तमप्यहितं द्रौणिर्नाहनद्युद्धतृष्णया ॥ ८-५६-३६ (५७८३३)
हतेश्वरो दन्तिवरः सुकल्पित--
सत्वराभिसृष्टः प्रतिशब्दगो बली ।
तमाद्रवद्द्रौणिशराहतस्त्वरन्
जवेन कृत्वा प्रतिहस्तिगर्जितम् ॥ ८-५६-३७ (५७८३४)
तं वारणं वारणयुद्धकोविदो
द्विपोत्तमं पर्वतसानुसन्निभम् ।
समभ्यतिष्ठन्मलयध्वजस्त्वर--
न्यथाऽद्रिशृङ्गं हरिरुन्नदंस्तथा ॥ ८-५६-३८ (५७८३५)
स तोमरं भास्कररश्मिवर्चसं
बलास्त्रसर्गोत्तमयत्नमन्युभिः ।
ससर्ज शीघ्रं परिपीडयन्गजं
गुरोः सुताय द्रविडेश्वरो नदन् ॥ ८-५६-३९ (५७८३६)
मणिप्रवेकोत्तमवज्रहाटकै--
रलङ्कृतं चांशुकमाल्यमौक्तिकैः ।
हतो मयासीत्यसकृन्मुदा नद--
न्पराभिनद्द्रौणिवराङ्गभूषणम् ॥ ८-५६-४० (५७८३७)
तदर्कचन्द्रग्रहपावकत्विषं

भृशाभिघातात्पतितं विघूर्णितम् ।
महेन्द्रवज्राभिहतं महास्वनं
यथाऽद्रिशृङ्गं भरणीतले तथा ॥ ८-५६-४१ (५७८३८)
ततः प्रजज्वाल परेण मन्युना'
पादाहतो नागपतिर्यथा तथा ।
समाददे चान्तकदण्डसन्निभा--
निषूनमित्रान्तकरांश्चतुर्दश ॥ ८-५६-४२ (५७८३९)
द्विपस्य पादाग्रकरान्स पञ्चभि--
र्नृपस्य बाहू च शिरोऽथ च त्रिभिः ।
जघान षड्भिः षडृतूपमत्विषः
स पाण्ड्यराजानुचरान्महारथान् ॥ ८-५६-४३ (५७८४०)
सुदीर्घवृत्तौ वरचन्दनोक्षितौ
सुवर्णमुक्तामणिवज्रभूषणौ ।
भुजौ धरायां पतितौ नृपस्य तौ
विचेष्टतुस्तार्क्ष्यहताविवोरगौ ॥ ८-५६-४४ (५७८४१)
शिरश्च तत्पूर्णशशिप्रभाननं
सरोषताम्रायतनेत्रमुन्नसम् ।
क्षितावपि भ्राजति तत्सकुण्डलं
विशाखयोर्मध्यगतः शशी यथा ॥ ८-५६-४५ (५७८४२)
३स तु द्विपः पञ्चभिरुत्तमेषुभिः
कृतः षडंशश्चतुरो नृपस्त्रिभिः ।
कृतो दशांशः कुशलेन युध्यता
यथा हविस्तद्दश दैवतं तथा ॥ ८-५६-४६ (५७८४३)
स पादशो राक्षसभोजनान्बहून्
प्रदाय पाण्ड्योऽश्वमनुष्यकुञ्जरान् ।
स्वधामिवाप्य ज्वलनः पितृप्रिय--
स्ततः प्रशान्तः सलिलप्रवाहतः६ ॥ ८-५६-४७ (५७८४४)
समाप्तविद्यं तु गुरोः सुतं नृपः
समाप्तकर्माणमुपेत्य ते सुतः ।
सुहृद्वृतोऽत्यर्थमपूजयन्मुदा
जिते बलौ विष्णुमिवामरेश्वरः ॥ ॥ ८-५६-४८ (५७८४५)

इति श्रीमन्महाभारते कर्णपर्वणि सप्तदशदिवसयुद्धे
षट्पञ्चाशोऽध्यायः ॥ ५६ ॥
Mahabharata - Karna Parva - Chapter Footnotes

८-५६-१० पाण्ड्यः व्यसूनकरोदिति द्वयोः सम्बन्धः ॥
८-५६-१३ अनुस्मृत्य ह्याभीतवत् इति ख पाठः ।अनुसृत्य हि भीतवत् इति क ङ पाठः ॥
८-५६-१६ वर्षतः मत् मत्तः ॥
८-५६-१७ प्रमथसे प्रमथ्नासि ॥
८-५६-२० मलयवत् कृत्रिमो ध्वजो यस्य ।मलयध्वज इति प्रवीरस्यैव नामान्तरं वा ॥
८-५६-२२ गत्या दशम्या ।उन्मुख्यभिमुखी तिर्यङ् मन्दा गोमूत्रिका ध्रुवा।स्खलित यमकाक्रान्ता क्रुष्टेतीषुगतीर्विदुः।दशमीगतिस्तु शिरसा सह दूरपातिनी अतिकुष्टानाम।तया गत्या ॥
८-५६-२९ पूषानुजः पर्जन्यः ॥
८-५६-३० अष्टवृषभवाह्यानि अष्टौ शकटानि यादयुधसम्भारं ऊहुः वहन्ति तत्सर्वं अह्नोऽष्टमभागेन यामार्धेन क्षीणगित्यर्थः ॥
८-५६-३७ हतेश्वरो यः कश्चित् तं पाण्ड्यम् ॥
८-५६-३८ मलयध्वजः पाप्डस्तं यदृच्छयागतं वारणं समभ्यतिष्ठत् ॥
८-५६-३९ बलेन अस्त्रसर्गे य उत्तमो यत्नस्तेन मन्युना च तैः ।परिपीडयन् अङ्कुशेन कोपयन् ॥
८-५६-४० द्रौणेः वराङ्गभूष किरिटम् ॥
८-५६-४२ इषून् समाददे द्रौणिरिति शेषः ॥
८-५६-४६ चतुरः चतुरंशः ।एवं स गजो दशधाभक्तो यथा दशहविष्कायामिष्टौ पिष्टपिण्डो दशधा क्रियते तथेत्यर्थः ॥
८-५६-४७ पाण्ड्योऽश्वादीन् पादशः प्रदाय खण्डयित्वा प्रशान्तः द्रौणिबाणैरिति शेषः ।यथा स्वधां प्रेतशरीररूपं हविः प्राप्य पितृप्रियो ज्वलनः श्मशानाग्निः जलेन शाम्यति तद्वदित्यर्थः ॥
८-५६-४८ समाप्तविद्यं सम्यगाप्तविद्यम् ।समाप्तकर्माणं कृतकृत्यम् ॥
८-५६-५६ षट्पञ्चाशोऽध्यायः ॥

---

कर्नपर्व-अध्यय०५७
॥ श्रीः ॥
८.५७. अध्यायः ५७

Mahabharata - Karna Parva - Chapter Topics
सङ्कुलयुद्धम् ॥ १ ॥

Mahabharata - Karna Parva - Chapter Text

८-५७-० (५७८४६)
दृतराष्ट्र उवाच। ८-५७-०क्ष् (४९७९)
पाण्ड्ये हते किमकरोदर्जुनो जयतांवरः ।
एकवीरेण कर्णेन द्राविते च युधिष्ठिरे ॥ ८-५७-१ (५७८४७)
समाप्तविद्यो बलवान्युक्तो वीरश्च पाण्डवः ।
सर्वभूतेष्वनुज्ञातः शङ्करेण महात्मना ॥ ८-५७-२ (५७८४८)
तस्मान्महद्भयं तीव्रममित्रघ्नाद्धनञ्जयात् ।
स यत्तत्राकरोत्पार्थस्तन्ममाचक्ष्व सञ्जय ॥ ८-५७-३ (५७८४९)
सञ्जय उवाच। ८-५७-४क्ष् (४९८०)
हते पाण्ड्येऽर्जुनं कृष्णस्त्वरन्नाह वचो हितम् ।
हतं पश्य स्वराजानमपयातांश्च पाण्डवान् ॥ ८-५७-४ (५७८५०)
कर्णं पश्य महारङ्गे ज्वलन्तमिव पावकम् ।
असौ भीमो महेष्वासः प्रतिवृत्तो रणं प्रति ॥ ८-५७-५ (५७८५१)
त इमे नानुवर्तन्ते धृष्टद्युम्नपुरोगमाः ।
पाञ्चालाः सृञ्जयाश्चैव पाण्डवानां चमूमुखम् ॥ ८-५७-६ (५७८५२)
ग्निवृत्तैश्च पुनः पार्थैर्भग्नं शत्रुबलं महत्'।
कौरवान्द्रवतो ह्येष कर्णो वारयते भृशम् ॥ ८-५७-७ (५७८५३)
अन्तकप्रतिमो वेगे शक्रतुल्यपराक्रमः ।
असौ गच्छति कौन्तेय द्रौणिः शस्त्रभृतां वरः ॥ ८-५७-८ (५७८५४)
तमेष प्रद्रुतः सङ्ख्ये धृष्टद्युम्नो महारथः ।
अश्वत्थाम्ना हताः सङ्ख्ये सर्वे कौन्तेय सृञ्जयाः ॥ ८-५७-९ (५७८५५)
रथाश्वनरनागानां कृतं च कदनं महत् ।
इत्येतत्सर्वमाचष्ट वासुदेवः किरीटिने ॥ ८-५७-१० (५७८५६)
एतच्छ्रुत्वा च दृष्ट्वा च भ्रातृणां व्यसनं महत् ।
वाहयाश्वान्हृषीकेश क्षिप्रमित्याह पाण्डवः ॥ ८-५७-११ (५७८५७)
ततः प्रायाद्धृषीकेशो रथेनाप्रतिमो युधि ।
ग्ततो रेणुः समभवत्पुनस्तत्र महारणे ॥ ८-५७-१२ (५७८५८)
ततो राजन्महानासीत्सङ्ग्रामो रोमहर्षणः ।
सिंहनादरवाश्चात्र प्रादुरासन्समागमे ।
उभयोः सेनयो राजन्मृत्युं कृत्वा निवर्तनम् ॥ ८-५७-१३ (५७८५९)
ततः हुनः समाजग्मुरभीताः कुरुसृञ्जयाः ।
युधिषरमुखाः पार्था वैकर्तनमुखा वयम् ॥ ८-५७-१४ (५७८६०)
ततः प्रववृते यूद्धं घोररूपं विशाम्पते ।
कर्णस्य पाण्डवानां च यमराष्ट्रविवर्धनम् ॥ ८-५७-१५ (५७८६१)
तस्मिन्प्रवृत्ते सङ्ग्रामे तुमुले रोमहर्षणे ।
संशप्तकेषु वीरेषु किञ्चिच्छेषेषु भारत ॥ ८-५७-१६ (५७८६२)

धृष्टद्युम्नो महाराज सहितः सर्वराजभिः ।
कर्णमेवाभिदुद्राव पाण्डवाश्च महारथाः ॥ ८-५७-१७ (५७८६३)
आगच्छमानांस्तान्दृष्ट्वा सङ्ग्रमे विजयैषिणः ।
दधारैको रणे कार्णो जलौघानिव पर्वतः ॥ ८-५७-१८ (५७८६४)
समासाद्य तु ते कर्णं व्यशीर्यन्त महारथाः ।
यथाऽचलं समासाद्य वार्योधाः सर्वतोदिशम् ॥ ८-५७-१९ (५७८६५)
तयोरासीन्महाराज सङ्ग्रामो घोरदर्शनः ।
प्रवृद्धयोर्महारङ्गे बलिनोर्विजिगीषतोः ॥ ८-५७-२० (५७८६६)
धृष्टद्युम्नस्तु राधेयं शरेणानतपर्वणा ।
छादयामास सङ्क्रुद्धस्तिष्ठतिष्ठेति चाब्रवीत् ॥ ८-५७-२१ (५७८६७)
विजयं तु धनुः श्रेष्ठं विधून्वानो महारथः ।
पार्षतस्य धनुश्छित्त्वा शरांश्चाशीविषोपमान् ॥ ८-५७-२२ (५७८६८)
ववर्ष शरवर्षाणि तोयवर्षानिवाम्बुदः ।
छादयामास सङ्क्रुद्धः पार्षतं नवभिः शरैः ॥ ८-५७-२३ (५७८६९)
ते हेमविकृतं वर्म भित्त्वा तस्य महात्मनः ।
शोणिताक्ता व्यराजन्त शक्रगोपा इवानघ ॥ ८-५७-२४ (५७८७०)
तदपास्य धनुश्छिन्नं धृष्टद्युम्नः प्रतापवान् ।
ततोऽन्यद्धनुरादाय सारवज्ञारसाधनम् ।
कर्णं विव्याध सप्तत्या शरैः सन्नतपर्वभिः ॥ ८-५७-२५ (५७८७१)
तथैव राजन्कर्णोऽपि पार्षतं शत्रुतापनम् ।
द्रोणशत्रुं महेष्वासो विव्याध निशितैः शरैः ॥ ८-५७-२६ (५७८७२)
पुनरन्यं महाराज शरं कनकभूषणम् ।
प्रेषयामास समरे मृत्युदण्डमिवापरम् ॥ ८-५७-२७ (५७८७३)
तमापतन्तं सहसा घोररूपं विशाम्पते ।
चिच्छेद शतधा राजन्पार्षतः कृतहस्तवत् ॥ ८-५७-२८ (५७८७४)
दृष्टवान्पतितं भूमौ शरं कर्णो विशाम्पते ॥ ८-५७-२९ (५७८७५)
पार्षतः शरवर्षेण समन्तात्पर्यवारयत् ।
विव्याध चैनं त्वरितो नाराचैः सप्तभिस्तदा ॥ ८-५७-३० (५७८७६)
तं प्रत्यविध्यद्दशभिः शरैर्हेमविभूषितैः ।
तयोर्युद्धं समभवद्दृष्टिश्रोत्रमनोहरम् ॥ ८-५७-३१ (५७८७७)
आसीद्घोरं च चित्रं च प्रेक्षणीयं च सर्वशः ॥ ८-५७-३२ (५७८७८)
सर्वेषां तत्र भूतानां रोमहर्षो व्यजायत ।
दृष्ट्वा तत्समरे कर्म कर्णपार्षतयोर्नृप ॥ ८-५७-३३ (५७८७९)
एतस्मिन्नन्तरे द्रौणिरभ्ययात्तं महारथम् ।
पार्षतं शत्रुदमनं शत्रुवीर्यासुनाशनम् ॥ ८-५७-३४ (५७८८०)
स दृष्ट्वा समरे यान्तमभीतं च महारथम् ।

अभ्यभाषत सङ्क्रुद्धः पार्षतं शत्रुतापनम् ॥ ८-५७-३५ (५७८८१)
रथं रथेन सम्पीड्य पार्षतस्य तु ब्राह्मणः ॥ ८-५७-३६ (५७८८२)
तिष्ठतिष्ठेति ब्रह्मघ्न न मे जीवन्विमोक्ष्यसे ।
इत्युक्त्वा सुभृशं वीरः शीघ्रकृन्निशितैः शरैः ।
छादयामास समरे यतमानो महारथः ॥ ८-५७-३७ (५७८८३)
यत्नतः परया शक्त्या धृष्टद्युम्नं महारथम् ।
योधयामास समरे क्रुद्धरूपो विशाम्पते ॥ ८-५७-३८ (५७८८४)
तयोस्तु सन्निपाते हि घोररूपो विशाम्पते ॥ ८-५७-३९ (५७८८५)
यथा हि समरे द्रौणिः पार्षतं दृश्यत मारिष ।
नातिहृष्टमना ह्यासीन्मन्वानो मृत्युमात्मनः ॥ ८-५७-४० (५७८८६)
स ज्ञात्वा पितुरत्यन्तरैरिणं तु महाहवे ।
आत्मानं समरे ज्ञात्वाऽशस्त्रवध्यं महाबलः ।
जवेनाभिययौ द्रौणिं कालः कालक्षये यथा ॥ ८-५७-४१ (५७८८७)
द्रौणिस्तु दृष्ट्वा राजेन्द्र धृष्टद्युम्नमवस्थितम् ।
क्रोधेन निःश्वसन्वीरः पार्षदं समभिद्रवत् ॥ ८-५७-४२ (५७८८८)
तावन्योन्यं तु दृष्ट्वैव संरम्भं जग्मतुः परम् ।
प्रगृह्य महती चापे शरासनसमन्विते ॥ ८-५७-४३ (५७८८९)
अथाब्रवीन्महाराज द्रोणपुत्रः प्रतापवान् ।
धृष्टद्युम्नं समीपस्थं त्वरमाणो विशाम्पते ॥ ८-५७-४४ (५७८९०)
पाञ्चालापशदाद्य त्वां प्रेषयामि यमक्षयम् ।
पापं हि यत्त्वया कर्म कृतं तातं घ्नता रणे ॥ ८-५७-४५ (५७८९१)
अद्य त्वं प्राप्स्यसे तद्वै यथा ह्यकुशलस्तथा ।
अरक्ष्यमाणः पार्थेन यदि तिष्ठसि संयुगे ।
नापक्रामसि वा मोहात्सत्यमेतद्ब्रवीमि ते ॥ ॥ ८-५७-४६ (५७८९२)

इति श्रीमन्महाभारते कर्णपर्वणि सप्तदशदिवसयुद्धे
सप्तपञ्चाशोऽध्यायः ॥ ५७ ॥
Mahabharata - Karna Parva - Chapter Footnotes

८-५७-२ अनुज्ञातः त्वं अजय्यो भविष्यसीत्यनुगृहीतः ॥
८-५७-५७ सप्तपञ्चाशोऽध्यायः ॥

---

कर्नपर्व-अध्यय०५८
॥ श्रीः ॥
८.५८. अध्यायः ५८

Mahabharata - Karna Parva - Chapter Topics
अर्जुनस्य द्रौणिग्रस्तधृष्टद्युम्नरक्षणपूर्वकं द्रौणिं निर्जित्य संशप्तकान्प्रति गमनम् ॥१ ॥

Mahabharata - Karna Parva - Chapter Text

८-५८-० (५७८९३)
सञ्जय उवाच। ८-५८-०क्ष् (४९८१)
एवमुक्तः प्रत्युवाच धृष्टद्युम्नः प्रतापवान् ।
आशिषं तां प्रवक्तव्यां मामको दास्यते तव ॥८-५८-१ (५७८९४)
येनैव ते पितुर्दत्ता यतमानस्य संयुगे ।
एष ते प्रतिवाक्यं वै असिर्दास्यति मामकः ।
येन कृत्तं तव पितुर्यतमानस्य तच्छिरः ॥ ८-५८-२ (५७८९५)
यदि तावन्मया द्रोणो निहतो ब्राह्मणब्रुवः ।
त्वामिदानीं कथं युद्धे न हनिष्यामि किल्बिषम् ॥८-५८-३ (५७८९६)
एवमुक्त्वा महातेजाः सेनापतिररिन्दमः ।
सुतीक्ष्णेनाथ भल्लेन द्रौणिं विव्याध पार्षतः ॥८-५८-४ (५७८९७)
ततो द्रौणिः सुसङ्क्रुद्धः शरैः सन्नतपर्वभिः ।
आच्छादयद्दिशो राजन्धृष्टद्युम्नस्य संयुगे ॥८-५८-५ (५७८९८)
नैवान्तरिक्षं न दिशो नापि योधाः सहस्रशः ।
दृश्यन्ते वै महाराज शरैश्छन्नाः समन्ततः ।
एकः सन्वारयामास प्रेक्षणीयः समन्ततः ॥ ८-५८-६ (५७८९९)
तथैव पार्षतो राजन्द्रौणिमाहवशोभिनम् ।
शरैः सञ्छादयामास सूतपुत्रस्य पश्यतः ॥८-५८-७ (५७९००)
राधेयोऽपि महाराज पाञ्चालान्सह पाण्डवैः ।
द्रौपदेया युधामन्युमुत्तमौजसमेव च ॥८-५८-८ (५७९०१)
सात्यकिश्च महाराज योधांश्चान्यान्सहस्रशः ।
एकस्तान्वारयामास प्रेक्षणीयः समन्ततः ॥८-५८-९ (५७९०२)
धृष्टद्युम्नस्तु समरे द्रौणेश्चिच्छेद कार्मुकम् ।
क्षुरप्रेण सुतीक्ष्णेन पश्यतां सर्वयोधिनाम् ॥८-५८-१० (५७९०३)
तदपास्य धनुश्छिन्नमन्यदादत्त कार्मुकम् ।
वेगवत्समरे घोरं शरांश्चाशीविषोपमान् ॥८-५८-११ (५७९०४)
स पार्षतस्य राजेन्द्र धनुः शक्तिं गदां ध्वजम् ।
हयान्सूतं रथं चैव निमेषाद्व्यधमच्छरैः ॥८-५८-१२ (५७९०५)
स च्छिन्नधन्वा विरथो हताश्वो हतसारथिः ।
खड्गमादत्त विपुलं शतचन्द्रं च भानुमत् ॥८-५८-१३ (५७९०६)

द्रौणिस्तदपि राजेन्द्र भल्लैः क्षिप्रं महारथः ।
चिच्छेद समरे वीरः क्षिप्रहस्तो दृढायुधः ॥ ८-५८-१४ (५७९०७)
रथादनवरूढस्य धन्विनो बाहुशालिनः ।
पश्यतां सर्वसैन्यानां तदद्भुतमिवाभवत् ॥ ८-५८-१५ (५७९०८)
धृष्टद्युम्नं तु विरथं हताश्वरथसारथिम् ।
शस्त्रैश्च बहुधा विद्धमस्त्रैश्च शकलीकृतम् ।
नातरद्भरतश्रेष्ठ यदमानो महारथः ॥ ८-५८-१६ (५७९०९)
तस्यान्तमिषुभी राजन्यदा द्रौणिर्न गच्छति ।
अथ त्यक्त्वा रथं वीरः पार्षतं त्वरितोऽन्वगात् ।
प्रगृह्य विपुलं खड्गं जातरूपपरिष्कृतम् ॥ ८-५८-१७ (५७९१०)
तस्य सम्पततो राजन्वपुरासीन्महात्मनः ।
गरुडस्येव ततो जिघृक्षोः पन्नगोत्तमम् ॥ ८-५८-१८ (५७९११)
एतस्मिन्नेव काले तु केशवः परवीरहा ।
अब्रवीद्भरतश्रेष्ठमर्जुनं जयतां वरम् ॥ ८-५८-१९ (५७९१२)
पश्य द्रौणिं पार्षतस्य यतमानं वधं प्रति ।
यत्नं करोति विपुलं हन्याच्चैनं न संशयः ॥ ८-५८-२० (५७९१३)
त्रायस्वैनं महाबाहो पार्षतं युद्धदुर्मदम् ।
द्रौणेरास्यगतं वीर मृत्योरास्यगतं यथा ॥ ८-५८-२१ (५७९१४)
एवमुक्त्वा महाराज वासुदेवः प्रतापवान् ।
प्रैषयत्तुरगान्यत्र द्रौणिर्वीरो व्यवस्थितः ॥ ८-५८-२२ (५७९१५)
ते हयाश्चन्द्रसङ्काशाः केशवेन प्रचोदिताः ।
पिबन्त इव चाकाशं जग्मुर्द्रौणेर्महारथम् ॥ ८-५८-२३ (५७९१६)
दृष्ट्वा द्रौणिर्महाराज वासुदेवधनंजयौ ।
धृष्टद्युम्नवधे राजंश्चक्रे यत्नं महाबलः ॥ ८-५८-२४ (५७९१७)
विकृष्यमाणं दृष्ट्वै धृष्टद्युम्नं जनेश्वर ।
शरांश्चिक्षेप वै पार्थो द्रौणिं प्रति महारथः ॥ ८-५८-२५ (५७९१८)
ते शरा हेमविकृता गाण्डीवप्रेषिता भृशम् ।
द्रौणिमासाद्य विविशुर्वल्मीकमिव पन्नगाः ॥ ८-५८-२६ (५७९१९)
विद्धस्तु तैः शरैर्घोरैर्द्रोणपुत्रः प्रतापवान् ।
उत्सृज्य समरे राजन्पाञ्चालममितौजसम् ॥ ८-५८-२७ (५७९२०)
आरुरोह रथं वीरो धनञ्जयशरार्दितः ।
प्रगृह्य च धनुः श्रेष्ठं पार्थं विव्याध सायकैः ॥ ८-५८-२८ (५७९२१)
एतस्मिन्नन्तरे शूरः सहदेवो जनाधिप ।
अपोवाह रथेनाजौ पार्षतं शत्रुतापनम् ॥ ८-५८-२९ (५७९२२)
अर्जुनोऽपि महाराज द्रौणिं विव्याध पत्रिभिः ।
तं द्रोणपुत्रः संरब्धो बाह्वोरुरसि चार्पयत् ॥ ८-५८-३० (५७९२३)

क्रोधितस्तु रणे पार्थो नाराचं कालसन्निभम् ।
द्रोणपुत्राय चिक्षेप यमदण्डमिवापरम् ॥ ८-५८-३१ (५७९२४)
स ब्राह्मणस्यांसदेशे निपपात महाद्युतेः ।
स विह्वलो महाराज शरवेगेन संयुगे ।
निषसाद रथोपस्थे वैक्लव्यं परमं ययौ ॥ ८-५८-३२ (५७९२५)
तं तु मत्वा हतं वीरं सारथिः शत्रुकर्शनम् ।
अपोवाह रणेनाजौ त्वरमाणो रणाजिरात् ॥ ८-५८-३३ (५७९२६)
अथोद्घुष्टं महाराज पाञ्चालैर्जितकाशिभिः ।
मोक्षितं पार्षतं दृष्ट्वा द्रोणपुत्रं च पीडितम् ॥ ८-५८-३४ (५७९२७)
वादित्राणि च दिव्यानि प्रावाद्यन्त सहस्रशः ।
सिंहनादश्च सञ्जज्ञे दृष्ट्वा युद्धं तदद्भुतम् ॥ ८-५८-३५ (५७९२८)
ततः कर्णो महाराज व्याक्षिपद्विजयं धनुः ।
दृष्ट्वार्जुनं रणे क्रुद्धः प्रेक्षते च मुहुर्मुहुः ।
द्वैरथं चापि पार्थेन गन्तुकामो महाद्युतिः ॥ ८-५८-३६ (५७९२९)
एवं कृत्वाऽब्रवीत्पार्थो वासुदेवं धनञ्जयः ।
याहि संशप्तकान्कृष्ण कार्यमेतत्परं मम ॥ ८-५८-३७ (५७९३०)
ततः प्रयातो गोविन्दः श्रुत्वा पाण्डवभाषितम् ।
रथेनातिपताकेन मनोमारुतरंहसा ॥ ८-५८-३८ (५७९३१)
एवमेष क्षयो वृत्तः पृथिव्यां पृथिवीपते ।
तावकानां परेषां च राजन्दुर्मन्त्रिते तव ॥ ॥ ८-५८-३९ (५७९३२)

इति श्रीमन्महाभारते कर्णपर्वणि सप्तदशदिवसयुद्धे
अष्टपञ्चाशोऽध्यायः ॥ ५८ ॥

---

कर्नपर्व-अध्यय०५९
॥ श्रीः ॥
८.५९. अध्यायः ५९

Mahabharata - Karna Parva - Chapter Topics
सङ्कुलयुद्धम् ॥ १ ॥

Mahabharata - Karna Parva - Chapter Text

८-५९-० (५७९३३)
सञ्जय उवाच। ८-५९-०क्ष् (४९८२)
ततः प्रववृते भूयः सङ्ग्रामो राजसत्तम ।

कर्णस्य पाण्डवानां च यमराष्ट्रविवर्धनः ॥ ८-५९-१ (५७९३४)
धनूंषि बाणान्परिघानसिपट्टसतोमरान् ।
मुसलानि भुशुण्डीश्च शक्तिरिष्टिपरश्वथान् ॥ ८-५९-२ (५७९३५)
गदाः प्रासान्शितान्कुन्तान्भिंडिपालान्महाङ्कुशान् ।
प्रगृह्य क्षिप्रमापेतुः परस्परजिघांसया ॥ ८-५९-३ (५७९३६)
बाणज्यातलशब्देन द्यां दिशः प्रदिशो वियत् ।
पृथिवीं नेमिघोषेण नादयन्तोऽभ्ययुः परान् ॥ ८-५९-४ (५७९३७)
तेन शब्देन महता संहृष्टाश्चक्रुराहवम् ।
वीरा वीरैर्महाप्तोरकलहान्तं तितीर्षवः ॥ ८-५९-५ (५७९३८)
ज्यातलत्रधनुःशब्दाञ्शस्त्राणां च निपात्यताम् ।
ताडितानां च पतता निनादांश्च पदातिनाम् ॥ ८-५९-६ (५७९३९)
बाणशब्दांश्च विविधाञ्शूराणां चाभिगर्जताम् ।
श्रुत्वा गजा भृशं त्रेसुः पेतुर्मम्लुश्च सैनिकाः ॥ ८-५९-७ (५७९४०)
तेषां निनदतां चैव शस्त्रवर्षं च मुञ्चताम् ।
बहूनाधिरथिर्वीरः प्रममाथेषुभिः परान् ॥ ८-५९-८ (५७९४१)
पञ्च पाञ्चालवीराणां रथान्दश च पञ्च च ।
साश्वसूतध्वजान्कर्णः शरैर्निन्ये यमक्षयम् ॥ ८-५९-९ (५७९४२)
योधमुख्या महावीर्याः पाण्डूनां कर्णमाहवे ।
शिक्षितास्तमभिद्रुत्य परिवव्रुः समन्ततः ॥ ८-५९-१० (५७९४३)
ततः कर्णो द्विषत्सेनां शरवर्षैर्विलोडयन् ।
विजगाहाण्डजाकीर्णां पद्मिनीमिव यूथपः ॥ ८-५९-११ (५७९४४)
द्विषत्सैन्यमवस्कन्द्य राधेयो धनुरुत्तमम् ।
विधुन्वानः शितैर्बाणैः शिरांस्युन्मथ्य पातयत् ॥ ८-५९-१२ (५७९४५)
ग्हस्तिनः समहामात्रान्साश्वारोहान्हयानपि ।
रथिनोऽप्येकबाणेन भ्रमतश्चावपातयत्' ॥ ८-५९-१३ (५७९४६)
वर्म वा चर्म वाऽश्रित्य निपातमपि देहिनः ।
विषेहुर्नास्य संस्पर्शं द्वितीयस्य पतत्त्रिणः ॥ ८-५९-१४ (५७९४७)
वर्मयुक्तेषु देहेषु धनुषोऽस्यञ्शिताञ्शरान् ।
मौर्व्या तलत्रे न्यहनत्कशया वाजिनो यथा ॥ ८-५९-१५ (५७९४८)
पाण्डुसृञ्जयपाञ्चालाञ्शरगोचरमागतान् ।
ममर्द तरसा कर्णः सिंहो मृगगणानिव ॥ ८-५९-१६ (५७९४९)
ततः पाञ्चालपुत्रश्च द्रौपदेयाश्च मारिष ।
यमौ च युयुधानश्च त्वरिताः कर्णमभ्ययुः ॥ ८-५९-१७ (५७९५०)
तेषु व्यायच्छमानेषु कुरुपाञ्चालपाण्डुषु ।
प्रियानसून्रणे त्यक्त्वा योधा जघ्नुः परस्परम् ॥ ८-५९-१८ (५७९५१)
सुसन्नद्धाः कवचिनः सशिरस्त्राणभूषणाः ।

गदाभिर्मुसलैश्चान्ये परिघैश्च महाबालाः ॥ ८-५९-१९ (५७९५२)
समभ्यधावन्त भृशं कालदण्डैरिवोद्यतैः ।
नर्दन्तश्चाह्वयन्तश्च प्रवल्गन्तश्च मारिष ॥ ८-५९-२० (५७९५३)
ततो निजघ्नुरन्योन्यं पेतुश्चान्योन्यताडिताः ।
वमन्तो रुधिरं गात्रैर्विमस्तिष्केक्षमायुधाः ॥ ८-५९-२१ (५७९५४)
दन्तपूर्णैः सरुधिरैर्वक्त्रैर्दाडिमसन्निभैः ।
जीवन्त इव चाप्येके तस्थुः शस्त्रौघबृंहिताः ॥ ८-५९-२२ (५७९५५)
परश्वथैश्चाप्यपरे पट्टसैरसिभिस्तथा ।
शक्तिभिर्भिण्डिपालैश्च नखरप्रासतोमरैः ॥ ८-५९-२३ (५७९५६)
ततक्षुश्चिच्छिदुश्चान्ये बिभिदुश्चिक्षिपुस्तथा ।
सञ्चकर्तुश्च जघ्नुश्च राजन्योधा महारणे ॥ ८-५९-२४ (५७९५७)
पेतुरन्योन्यनिहता व्यसवो रुधिरोक्षिताः ।
क्षरन्तः स्वरसं रक्तं प्रकृत्ताश्चन्दना इव ॥ ८-५९-२५ (५७९५८)
रथै रथा विनिहता हस्तिभिश्चापि हस्तिनः ।
नरैर्नरा हताः पेतुरश्वाश्चाश्वैः सहस्रशः ॥ ८-५९-२६ (५७९५९)
ध्वजाः शिरांसि च्छिन्नाः पेतुर्महीतले ॥
ग्वध्यतां दारुणाः शब्दाः पततां स्तनतामपि। ८-५९-२७ (५७९६०)
क्षुरैर्भल्लार्धचन्द्रैश्च च्छिन्नाः पेतुर्महीतले ॥
नराश्वेभरथानां हिनराश्वेभरथैस्तथा'॥ ८-५९-२८ (५७९६१)
नरांश्च नागांश्च रथान्हयान्ममृदुराहवे ॥ ८-५९-२९ (५७९६२)
अश्वारोहैर्हताः शूराश्छिन्नहस्ताश्च दन्तिनः ।
सपताकाध्वजाः पेतुर्विशीर्णा इव पर्वताः ॥ ८-५९-३० (५७९६३)
पत्तिभिश्च समाप्लुत्य द्विरदाः स्यन्दनास्तथा ।
हताश्च हन्यमानाश्च पतिताश्चैव सर्वशः ॥ ८-५९-३१ (५७९६४)
अश्वारोहाः समासाद्य त्वरिताः पत्तिभिर्हताः ।
सादिभिः पत्तिसङ्घाश्च निहता युधि शेरते ॥ ८-५९-३२ (५७९६५)
मृदितानीव पद्मानि प्रम्लाना इव च स्रजः ।
हतानां वदनान्यासन्गात्राणि च महाहवे ॥ ८-५९-३३ (५७९६६)
रूपाण्यत्यर्थकान्तानि द्विरदाश्वनृणां नृप ।
समुन्नानीव वस्त्राणि ययुर्दुर्दर्शतां पराम् ॥ ॥ ८-५९-३४ (५७९६७)

इति श्रीमन्महाभारते कर्णपर्वणि सप्तदशदिवसयुद्धे
एकोनषष्टितमोऽध्यायः ॥ ५९ ॥

Mahabharata - Karna Parva - Chapter Footnotes

८-५९-४ द्यांस्वर्गम् । वियदन्तरिक्षम् ॥

८-५९-११ अण्डजैर्जलपक्षिभिः सारसादिभिराकीर्णा व्याप्ताम् ॥
८-५९-१५ मौर्व्या मौर्वीच्युतैः शरैर्बाणैस्तलत्रे ज्याघातवारणस्थाने न्यहनत् ॥
८-५९-१८ व्यायच्छमानेषु यतमानेषु ॥
८-५९-१९ परिघैर्हता इति शेषः । समभ्यधावन्तेत्युत्तरेणान्वयः ॥
८-५९-२१ मस्तिष्कं शिरोभागस्थमांसपिण्डः ॥
८-५९-२३ परश्वथैस्ततक्षुः । पट्टिशैरसिभिश्च चिच्छिदुः। शक्तिभिर्बिभिदुः। भिन्दिपालैश्चिक्षिपुः। नखरैः सञ्चकर्तुः। प्रासतोमरैर्जघ्नुः ॥
८-५९-२५ चन्दना रक्तचन्दनाः ॥
८-५९-३३ पद्मानीव बदनानि । स्रजइव गात्राणि ॥
८-५९-३४ समुन्नानि क्षारक्लिन्नानि मलिनानि ॥
८-५९-५९ एकोनषष्टितमोऽध्यायः ॥

---

कर्नपर्व-अध्यय०६०
॥ श्रीः ॥
८.६०. अध्यायः ६०

Mahabharata - Karna Parva - Chapter Topics
गजयुद्धम् ॥ १ ॥
सङ्कुलयुद्धम् ॥ २ ॥

Mahabharata - Karna Parva - Chapter Text

८-६०-० (५७९६८)
सञ्जय उवाच। ८-६०-०क्ष् (४९८३)
हस्तिभिस्तु महामात्रास्तव पुत्रेण चोदिताः ।
धृष्टद्युम्नं घ्नतेत्याशु क्रुद्धाः पार्षतमभ्ययुः ॥ ८-६०-१ (५७९६९)
प्राच्याश्च दाक्षिणात्याश्च प्रवरा गजयोधिनः ।
अङ्गा वङ्गाश्च पुण्ड्राश्च मागधास्ताम्रलिप्तकाः ॥ ८-६०-२ (५७९७०)
मेकलाः कोशला मद्रा दशार्णा निषधास्तथा ।
गजयुद्धेषु कुशलाः कलिङ्गैः सह भारत ॥ ८-६०-३ (५७९७१)
शरतोमरनाराचैर्वृष्टिमन्त इवाम्बुदाः ।
सिषिचुस्ते ततः सर्वे पाञ्चालबलमाहवे ॥ ८-६०-४ (५७९७२)
तानभिद्रवतो नागान्मदवेगसमुद्धतान् ।
विपाठक्षुरनाराचैर्धृष्टद्युम्नो ह्यवीवृषत् ॥ ८-६०-५ (५७९७३)

एकैकं दशभिः षड्भिरष्टाभिरपि पार्षतः ।
द्विरदानभिविव्याध क्षिप्रं गिरिनिभाञ्शरैः ॥ ८-६०-६ (५७९७४)
प्रच्छाद्यमानं द्विरदैर्मेघैरिव दिवाकरम् ।
पर्ययुः पाण्डुपाञ्चाला नदन्तो ह्यात्तकार्मुकाः ॥ ८-६०-७ (५७९७५)
तान्नागानभिवर्षन्तो ज्यातलत्रविनादिनः ।
वीरनृत्यं प्रनृत्यन्तः शूरतालप्रचोदितैः ।
नकुलः सहदेवश्च द्रौपदेयाः प्रभद्रकाः ॥ ८-६०-८ (५७९७६)
सात्यकिश्च शिखण्डी च चेकितानश्च वीर्यवान् ।
समन्तात्सिषिचुर्वीरा मेघास्तोयैरिवाचलान् ॥ ८-६०-९ (५७९७७)
ते म्लेच्छैः प्रेषिता नागा नरानश्वान्रथानपि ।
हस्तैराक्षिप्य ममृदुः पद्भिश्चाप्यतिमन्यवः ॥ ८-६०-१० (५७९७८)
बिभिदुश्च विषाणाग्रैः समाक्षिप्य च चिक्षिपुः ।
विषाणलग्नाश्चाप्यन्ये परिपेतुर्विभीषणाः ॥ ८-६०-११ (५७९७९)
प्रमुखे वर्तमानं तु द्विपमङ्गस्य सात्यकिः ।
नाराचेनोग्रवेगेन भित्त्वा मर्माण्यताडयत् ॥ ८-६०-१२ (५७९८०)
तस्यावर्जितकायस्य द्विरदादुत्पतिष्यतः ।
नाराचेनाहनद्वक्षः सात्यकिः सोऽपतद्भुवि ॥ ८-६०-१३ (५७९८१)
पुण्ड्रस्यापततो नागं चलन्तमिव पर्वतम् ।
सहदेवः प्रसन्नाग्रैर्नाराचैरहनत्त्रिभिः ॥ ८-६०-१४ (५७९८२)
विपताकं वियन्तारं विवर्मध्वजजीवितम् ।
तं कृत्वा द्विरदं भूयः सहदेवोऽङ्गमभ्ययात् ॥ ८-६०-१५ (५७९८३)
सहदेवं तु नकुलो वारयित्वाङ्गमार्दयत् ।
नाराचैर्यमदण्डाभैस्त्रिभिर्नागं शतेन तम् ॥ ८-६०-१६ (५७९८४)
दिवाकरकरप्रख्यानङ्गश्चिक्षेप तोमरान् ।
नकुलाय शतान्यष्टौ त्रिधैकैकं तु सोऽच्छिनत् ॥ ८-६०-१७ (५७९८५)
तथाऽर्धचन्द्रेण शिरस्तस्य चिच्छेद पाण्डवः ।
स पपात हतो म्लेच्छस्तेनैव सह दन्तिना ॥ ८-६०-१८ (५७९८६)
अथाङ्गपुत्रे निहते हस्तिशिक्षाविशारदे ।
अङ्गाः क्रुद्धा महामात्रा नागैर्नकुलमभ्ययुः ॥ ८-६०-१९ (५७९८७)
चलत्पताकैः सुमुखैर्हेमकक्ष्यातनुच्छदैः ।
मिमर्दिषन्तस्त्वरिताः प्रदीप्तैरिव पर्वतैः ॥ ८-६०-२० (५७९८८)
मेकलोत्कलकालिङ्गा निषधास्ताम्रलिप्तकाः ।
शरतोमरवर्षाणि विमुञ्चन्तो जिघांसवः ॥ ८-६०-२१ (५७९८९)
तैश्छाद्यमानं नकुलं निशाकरमिवाम्बुदैः ।
परिपेतुः सुसंरब्धाः पाण्डुपाञ्चालसात्यकाः ॥ ८-६०-२२ (५७९९०)
ततस्तदभवद्युद्धं रथिनां हस्तिभिः सह ।

सृजतां शरवर्षाणि तोमरांश्च सहस्रशः ॥ ८-६०-२३ (५७९९१)
नागानां प्रास्फुटन्कुम्भा मर्माणि च नखानि च ।
दन्ताश्चैवातिविद्धानां नाराचैर्हेमभूषणैः ॥ ८-६०-२४ (५७९९२)
तेषामष्टौ महानागांश्चतुःषष्ट्या सुतेजनैः ।
नाराचैः सहदेवस्तान्पातयामास सादिभिः ॥ ८-६०-२५ (५७९९३)
अञ्जोगतिभिरायम्य प्रयत्नाद्धनुरुत्तमम् ।
नाराचैरहनन्नागान्नकुलः कुलनन्दनः ॥ ८-६०-२६ (५७९९४)
ततः पाञ्चालशैनेयौ द्रौपदेयाः प्रभद्रकाः ।
शिखण्डी च महानागान्सिषिचुः शरवृष्टिभिः ॥ ८-६०-२७ (५७९९५)
ते पाण्डुयोधाम्बुधरैः शत्रुद्विरदपर्वताः ।
बाणवर्षैर्हताः पेतुर्वज्रवर्षैरिवाचलाः ॥ ८-६०-२८ (५७९९६)
एवं हत्वा तव गजांस्ते पाण्डुरथकुञ्जराः ।
द्रुतं सेनां च वर्षन्तो भिन्नकूलामिवापगाम् ॥ ८-६०-२९ (५७९९७)
तां ते सेनां समालोड्य पाण्डुपुत्रस्य सैनिकाः ।
विक्षोभयित्वा च पुनः कर्णं समभिदुद्रुवुः ॥ ॥ ८-६०-३० (५७९९८)

इति श्रीमन्महाभारते कर्णपर्वणि सप्तदशदिवसयुद्धे
षष्टितमोऽध्यायः ॥ ६० ॥

Mahabharata - Karna Parva - Chapter Footnotes

८-६०-७ प्रच्छाद्यमानं धृष्टद्युम्नम् ॥
८-६०-१३ आवर्जितः प्रहारवञ्चनेन रक्षितः कायो येन तस्य ॥
८-६०-६० षष्टितमोऽध्यायः ॥

---

कर्नपर्व-अध्यय०६१
॥ श्रीः ॥
८.६१. अध्यायः ६१

Mahabharata - Karna Parva - Chapter Topics

कृष्णेनार्जुनम्प्रति कुरूणां युधिष्ठिरग्रहणोद्यमकथनम् ॥ १ ॥

Mahabharata - Karna Parva - Chapter Text

८-६१-० (५७९९९)
सञ्जय उवाच। ८-६१-०क्ष् (४९८४)
तेषां प्रवृत्ते सङ्ग्रामे विपुले शोणितोदके ।

रराज लोहितेनोर्वी संसिक्ता बहुधा भृशम् ॥ ८-६१-१ (५८०००)
ततो रजसि संशान्ते प्रकाशः सर्वतोऽभवत् ।
एतस्मिन्नन्तरे पार्थं कृष्णो वचनमब्रवीत् ।
दर्शयन्निव कौन्तेयं धर्मराजं युधिष्ठिरम् ॥ ८-६१-२ (५८००१)
एष पाण्डव ते भ्राता धार्तराष्ट्रैर्महाबलैः ।
जिघांसुभिर्महेष्वासैः शीघ्रं पार्थोऽनुसार्यते ॥ ८-६१-३ (५८००२)
तमन्वगेव पाञ्चालाश्चेदिमात्स्याश्च भारत ।
अनुयान्ति महात्मानं परीप्सन्तो महाजवाः ॥ ८-६१-४ (५८००३)
एष दुर्योधनः पार्थ गजानीकेन दंशितः ।
राजा सर्वस्य लोकस्य राजानमनुधावति ॥ ८-६१-५ (५८००४)
जिघांसुः पुरुषव्याघ्रं भ्रातृभिः सहितो बली ।
आशीविषसमस्पर्शैः सर्वायुधविशारदैः ॥ ८-६१-६ (५८००५)
नदद्भिः सिंहनादांश्च धमद्भिश्चापि वारिजान् ।
बलवद्भिर्महेष्वासैर्विधून्वानैर्धनूंषि च ॥ ८-६१-७ (५८००६)
एते जिघृक्षवो यान्ति द्विपाश्वरथपत्तयः ।
युधिष्ठिरं धार्तराष्ट्रो रत्नोत्तममिवार्थिनः ॥ ८-६१-८ (५८००७)
पश्य सात्वतभीमाभ्यां निरुद्धा विष्ठिताः पुनः ।
जिहीर्षवोऽमृतं दैत्याः शक्राग्निभ्यामिवाहवे ॥ ८-६१-९ (५८००८)
एते बहुत्वात्त्वरिताः पुनर्गच्छन्ति पाण्डवम् ।
समुद्रमिव वार्योघाः प्रावृट्काले महारथाः ॥ ८-६१-१० (५८००९)
मृत्योर्मुखगतं मन्ये कुन्तीपुत्रं युधिष्ठिरम् ।
हुतमग्नौ च कौन्तेयं दुर्योधनवशं गतम् ॥ ८-६१-११ (५८०१०)
यथायुक्तमनीकं हि धार्तराष्ट्रस्य पाण्डव ।
नास्य शक्रोऽपि मुच्येत सम्प्राप्तो बाणगोचरम् ॥ ८-६१-१२ (५८०११)
दुर्योधनस्य वीरस्य शरौघाञ्शीघ्रमस्यतः ।
सङ्क्रुद्धस्यान्तकस्येव को वेगं संसहेद्रणे ॥ ८-६१-१३ (५८०१२)
रसतस्तस्य वीरस्य द्रौणेः शारद्वतस्य च ।
कर्णस्य चेषुवेगो वै पर्वतानपि शातयेत् ॥ ८-६१-१४ (५८०१३)
कर्णेन च कृतो राजा विमुखोऽद्य तु दृश्यते ॥ ८-६१-१५ (५८०१४)
बलवाँल्लुघुहस्तश्च कृती युद्धविशारदः ।
राधेयः पाण्डवश्रेष्ठं शक्तः पीडयितुं रणे ।
सहितो धृतराष्ट्रस्य पुत्रैः शूरैर्महाबलैः ॥ ८-६१-१६ (५८०१५)
तस्यैभिर्युध्यमानस्य सङ्ग्रामे शंसितात्मनः ।
अन्यैरपि च पार्थस्य कृतं कर्म महारथैः ॥ ८-६१-१७ (५८०१६)
उपवासकृशो राजा भृशं भरतसत्तमः ।
ब्राह्मो बले स्थितो ह्येष न क्षात्रे हि बले विभुः ॥ ८-६१-१८ (५८०१७)

कर्णेन चाभियुक्तोऽयं भूपतिः शत्रुतापनः ।
संशयं समनुप्राप्तः पाण्डवो वै युधिष्ठिरः ॥ ८-६१-१९ (५८०१८)
न जीवति महाराजो मन्ये पार्थ युधिष्ठिरः ।
यद्भीमसेनः सहते सिंहनादममर्षणः ॥ ८-६१-२० (५८०१९)
नर्दतां धार्तराष्ट्राणां पुनःपुनररिन्दमः ।
धमतां च महाशङ्खान्सङ्ग्रामे जितकाशिनाम् ॥ ८-६१-२१ (५८०२०)
युधिष्ठिरं पाण्डवेयं हतेति भरतर्षभ ।
सञ्चोदयत्यसौ कर्णो धार्तराष्ट्रान्महाबलान् ॥ ८-६१-२२ (५८०२१)
स्थूणाकर्णास्त्रजालेन पार्थ पाशुपतेन च ।
प्रच्छादयन्ति राजानमनुयान्ति महारथाः ॥ ॥ ८-६१-२३ (५८०२२)

इति श्रीमन्महाभारते कर्णपर्वणि सप्तदशदिवसयुद्धे
एकषष्टितमोऽध्यायः ॥ ६१ ॥
Mahabharata - Karna Parva - Chapter Footnotes

८-६१-९ जिहीर्षवो युधिष्ठिरं हर्तुमिच्छन्तः ॥
८-६१-१७ तस्य युधिष्ठिरस्य कर्म कर्तव्यं पराजयाख्यम्
। एभिर्दुर्योधनादिभिः कृतं निष्पादितम् ॥
८-६१-१८ तत्र हेतुः । ब्राह्मे बलं क्षमायाम् क्षात्रे बले निष्ठुरत्वे ॥
८-६१-२२ हत नाशयतेति कर्णश्चोदयतीति सम्बन्धः ॥
८-६१-२३ स्थूणाकर्णो गन्धर्वः ॥
८-६१-६१ एकषष्टितमोऽध्यायः ॥

---

कर्नपर्व-अध्यय०६२
॥ श्रीः ॥
८.६२. अध्यायः ६२

Mahabharata - Karna Parva - Chapter Topics
कृष्णेनार्जुनम्प्रति युधिष्ठिरस्य कर्णेन पराभवकथनपूर्वकं
कर्णयुद्धप्रदर्शनम् ॥ १ ॥
तथा भीमसेनयुद्धप्रदर्शनम् ॥ २ ॥

Mahabharata - Karna Parva - Chapter Text

८-६२-० (५८०२३)
श्रीभगवानुवाच । ८-६२-०क्ष् (४९८५)

आतुरो मे मतो राजा अविपह्यश्च भारत ।
यथैनमनुवर्तन्ते पञ्चालाः सह पाण्डवैः ॥ ८-६२-१ (५८०२४)
त्वरमाणास्त्वराकाले सर्वशस्त्रभृतां वराः ।
मज्जन्तमिव पाताले बलिनो ह्युज्जिहीर्षवः ॥ ८-६२-२ (५८०२५)
न केतुर्दृश्यते राज्ञः कर्णस्य पिहितः शरैः ।
पश्यतोर्यमयोः पार्थ सात्यकेश्च शिखण्डिनः ॥ ८-६२-३ (५८०२६)
धृष्टद्युम्नस्य भीमस्य शतानीकस्य वा विभो ।
पाञ्चालानां च सर्वेषां चेदीनां चैव भारत ॥ ८-६२-४ (५८०२७)
एष कर्णो रणे पार्थ पाण्डवानामनीकिनीम् ।
शरैर्विध्वंसयामास नलिनीमिव कुञ्जरः ॥ ८-६२-५ (५८०२८)
एते द्रवन्ति रथिनस्त्वदीयाः पाण्डुनन्दन ।
पश्य पश्य यथा पार्थ गच्छन्त्येते महारथाः ॥ ८-६२-६ (५८०२९)
एते भारत मातङ्गाः कर्णेनाभिहताः शरैः ।
आर्तनादान्विकुर्वाणा विद्रवन्ति दिशो दश ॥ ८-६२-७ (५८०३०)
रथानां द्रवते वृन्दमेतच्चैव समन्ततः ।
द्राव्यमाणं रणे पार्थ कर्णेनामिततेजसा ॥ ८-६२-८ (५८०३१)
हस्तिकक्ष्यां रणे पश्य चरन्तीं तत्रतत्र ह ।
रथस्थं सूतपुत्रस्य केतुं केतुमतां वर ॥ ८-६२-९ (५८०३२)
असौ धावति राधेयो भीमसेनरथं प्रति ।
किरञ्शरशतान्येव विनिघ्नंस्तव वाहिनीम् ॥ ८-६२-१० (५८०३३)
एते नश्यन्ति पाञ्चाला द्राव्यमाणा महात्मना ।
शक्रेणेव यथा दैत्या द्राव्यमाणा महात्मना ॥ ८-६२-११ (५८०३४)
एष कर्णो रणे जित्वा पाञ्चालान्पाण्डुसृञ्जयान् ।
दिशो विप्रेक्षते सर्वास्त्वदर्थमिति मे मतिः ॥ ८-६२-१२ (५८०३५)
एष कर्णो धनुःश्रेष्ठं विधून्वन्बहुशोभते ।
शत्रुं जित्वा यथा शक्रो देवसङ्घैः समावृतः ॥ ८-६२-१३ (५८०३६)
एते नर्दन्ति कौरव्या दृष्ट्वा कर्णस्य विक्रमम् ।
त्रासयन्तो रणे पाण्डून्सृंजयांश्च समन्ततः ॥ ८-६२-१४ (५८०३७)
एष सर्वात्मना पाण्डूंस्त्रासयित्वा महारणे ।
अभिभाषति राधेयः सर्वसैन्यानि मानद ॥ ८-६२-१५ (५८०३८)
अभिद्रवत भद्रं वो द्रुतं द्रवत कौरवाः ।
यथा न जीववान्कश्चिन्मुच्येत युधि सृञ्जयः ॥ ८-६२-१६ (५८०३९)
तथा कुरुत संयत्ता वयं यास्याम पृष्ठतः ।
एवमुक्त्वा गतो ह्येष पृष्ठतो विकिरञ्छरान् ॥ ८-६२-१७ (५८०४०)
पश्य कर्णं रणे पार्थ श्वेतच्छत्रविराजितम् ।
उदयं पर्वतं यद्वच्छशाङ्केनाभिशोभितम् ॥ ८-६२-१८ (५८०४१)

पूर्णचन्द्रनिकाशेन मूर्ध्नि च्छत्रेण भारत ।
ध्रियमाणेन समरे श्रीमच्छतशलाकिना ॥ ८-६२-१९ (५८०४२)
एष त्वां प्रेक्षते कर्णः सकटाक्षं धनञ्जय ।
उत्तमं यत्नमास्थाय ध्रुवमेष्यति संयुगे ॥ ८-६२-२० (५८०४३)
पश्य ह्येनं महाबाहो विधुन्वानं महद्धनुः ।
शरांश्चाशीविषाकारान्विसृजन्तं महारणे ॥ ८-६२-२१ (५८०४४)
असौ निवृत्तो राधेयो दृष्ट्वा ते वानरध्वजम् ।
प्रार्थयन्समरं पार्थ त्वया सह परन्तप ।
वधाय ह्यात्मनोऽभ्येति पावकं शलभो यथा ॥ ८-६२-२२ (५८०४५)
कर्णमेकाकिनं दृष्ट्वा धार्तराष्ट्रो रणाजिरे ।
त्वां च पार्थाभिसंरब्धं कर्णं प्रति महारथम् ॥ ८-६२-२३ (५८०४६)
कृतागसं च राधेयं धर्मात्मनि युधिष्ठिरे ।
अत्मानं च कृतार्थं च समीक्ष्य भरतर्षभ ॥ ८-६२-२४ (५८०४७)
असौ दुर्योधनः क्रुद्धो रथानीकेन भारत ।
रिरक्षिषुः सुसंवृत्तो धार्तराष्ट्रो निवर्तते ॥ ८-६२-२५ (५८०४८)
सर्वैः सहैभिर्दुष्टात्मा बध्यतां च प्रयत्नतः ।
त्वया यशश्च राज्यं च सुखं चोत्तममिच्छता ॥ ८-६२-२६ (५८०४९)
अदीनयोर्विश्रुतयोर्युवयोर्योत्स्यमानयोः ।
देवासुरे पार्थ मृधे देवदानवयोरिव ।
पश्यन्तु कौरवाः सर्वे तव पार्थ पराक्रमम् ॥ ८-६२-२७ (५८०५०)
त्वां च दृष्ट्वातिसंरब्धं कर्णं च भरतर्षम् ।
असौ दुर्योधनः क्रुद्धो नोत्तरं प्रतिपद्यते ॥ ८-६२-२८ (५८०५१)
आत्मानं च कृतात्मानं समीक्ष्य भरतर्षभ ।
कृतागसं च राधेयं धर्मात्मनि युधिष्ठिरे ॥ ८-६२-२९ (५८०५२)
प्रतिपद्यस्व कौन्तेय प्राप्तकालमनन्तरम् ।
आर्यां युद्धे मतिं कृत्वा प्रत्येहि रथयूथपम् ॥ ८-६२-३० (५८०५३)
पञ्च ह्येतानि मुख्यानि रथानां रथसत्तम ।
शतान्यxxxxxx जलिनां तिन्मतेजसाम् ॥ ८-६२-३१ (५८०५४)
पञ्च नाघxxxxx द्विगुणा वाजिनस्तथा ।
अभिसंहत्य कौन्तेय पदाताः प्रयुतानि च ॥ ८-६२-३२ (५८०५५)
xxxxxxxx वीर बलं तामभिवर्तते ।
द्रोमपुत्रं पुरस्कृत्य तच्छीघ्रं सन्निषूदय ॥ ८-६२-३३ (५८०५६)
निकृत्यैतद्रथानीकं बलिनं लोकविश्रुतम् ।
सूतपुत्रे महेष्वासे दर्शयात्मानमात्मना ॥ ८-६२-३४ (५८०५७)
xxxxxxxxxxxxxxx भरतर्षभ ।
xxxxxxxxxxxxx पाञ्चालानभिघावति। ८-६२-३५ (५८०५८)

xxxxxx  हि पश्यामि धृष्टद्युम्नरथं प्रति ।
xxxxxx  पाञ्चालानिति मन्ये परन्तप ॥ ८-६२-३६ (५८०५९)
आचचक्षे प्रियं पार्थ तवेदं भरतर्षभ ।
राजासौ कुशली श्रीमान्धर्मपुत्रो युधिष्ठिरः ॥ ८-६२-३७ (५८०६०)
असौ भीमो महाबाहुः सन्निवृत्तश्चमूयुखे ।
वृतः सृञ्जय सैन्येन शैनेयेन च भप्तत ॥ ८-६२-३८ (५८०६१)
वध्यन्त एते समरे कौरवा निशितैः शरैः ।
भीमसेनेन कौन्तेय पाञ्चालैश्च महात्मभिः ॥ ८-६२-३९ (५८०६२)
सेना हि धार्तराष्ट्रस्य विमुखा व्यद्रवद्रणात् ।
वेगेन भीमसेनस्य विहता विविधैः शरैः ॥ ८-६२-४० (५८०६३)
विपन्नसस्येव मही रुधिरेण समुक्षिता ।
भारती भरतश्रेष्ठ सेना कृपणदर्शना ॥ ८-६२-४१ (५८०६४)
निवृत्तं पश्य कौन्तेय भीमसेनं युधाम्पतिम् ।
आशीविषमिव क्रुद्धं तस्माद्द्रवति भारति ॥ ८-६२-४२ (५८०६५)
पीतरक्तासितसितास्ताराचन्द्रार्कमण्डिताः ।
पताका विप्रकीर्यन्ते छत्राण्येतानि चार्जुन ॥ ८-६२-४३ (५८०६६)
सौवर्णा राजताश्चैव तैजसाश्च पृथग्विधाः ।
केतवोऽभिनिपात्यन्ते हस्त्यश्वं च प्रकीर्यते ॥ ८-६२-४४ (५८०६७)
रथेभ्यः प्रपतन्त्येते रथिनो विगतासवः ।
नानावर्णैर्हता बाणैः पाञ्चालैरपलायिभिः ॥ ८-६२-४५ (५८०६८)
निर्मनुष्यान्गजानश्वान्रथांश्चैव धनञ्जय ।
समाद्रवन्ति पाञ्चाला धार्तराष्ट्रांस्तरस्विनः ॥ ८-६२-४६ (५८०६९)
विमृद्नन्ति नरव्याघ्रा भीमसेनबलाश्रयात् ।
बलं परेषां दुर्धर्षं त्यक्त्वा प्राणानरिन्दम् ॥ ८-६२-४७ (५८०७०)
एते नर्दन्ति पाञ्चाला ध्मापयन्ति च वारिजान् ।
अभिद्रवन्ति च रणे मृद्नन्तः सायकैः परान् ॥ ८-६२-४८ (५८०७१)
पश्य स्वर्गस्य माहात्म्यं पाञ्चाला हि पराक्रमात् ।
धार्तराष्ट्रान्विनिघ्नन्तो विशन्त्येते रथोत्तमान् ॥ ८-६२-४९ (५८०७२)
श्शस्त्रमाच्छिद्य शत्रूणां सायुधानां निरायुधाः ।
तेनैवैतानमोघास्त्रा निघ्नन्ति च नदन्ति च ॥ ८-६२-५० (५८०७३)
शिरांस्येतानि पात्यन्ते शत्रूणां बाहवोऽपि च ।
रथनागहया वीरा यशस्याः सर्व एव चघ ॥ ८-६२-५१ (५८०७४)
सर्वतश्चाभिपन्नैषा धार्तराष्ट्री महाचमूः ।
त्यक्त्वा प्राणान्महेष्वासैः पाञ्चालैः परिपात्यते ॥ ८-६२-५२ (५८०७५)
सुहृदश्च पराक्रान्ताः कृपकर्णादयो विभो ।
निवारणे महेष्वासाः पाञ्चालानां परन्तप ॥ ८-६२-५३ (५८०७६)

अनिवृत्तांश्च भीतांस्तान्धार्तराष्ट्रान्परन्तप ।
धृष्टद्युम्नमुखा वीरा घ्नन्ति शत्रून्सहस्रशः ॥ ८-६२-५४ (५८०७७)
रथाश्च विविधाः सर्वे निवृत्ते भरतर्षभे ।
विवर्णमुखभूयिष्ठा धार्तराष्ट्री महाचमूः ॥ ८-६२-५५ (५८०७८)
पश्य भीमेन नाराचैर्भिन्ना नागाः पतन्त्यमी ।
वज्रिवज्रहतानीव शिखराणि धराभृताम् ॥ ८-६२-५६ (५८०७९)
भीमसेनस्य निर्विद्धा बाणैः सन्नतपर्वभिः ।
स्वान्यनीकानि मृद्गन्तो द्रवन्त्येते महागजाः ॥ ८-६२-५७ (५८०८०)
गएते द्रवन्ति कुरवो भीमसेनभयार्दिताः ।
त्यक्त्वा रथान्गजांश्चैव हयांश्चैव सहस्रशः ॥ ८-६२-५८ (५८०८१)
हस्त्यश्वरथपत्तीनां द्रवतां निःस्वनं शृणु ।
भीमसेनस्य निनदं द्रावयानस्य कौरवान् ॥ ८-६२-५९ (५८०८२)
अभिजानामि भीमस्य सिंहनादं पुनःपुनः'।
नदतः पाण्डवेयस्य सङ्ग्रामे जितकाशिनः ॥ ८-६२-६० (५८०८३)
एष नैषादिरभ्येति द्विपमुख्येन पाण्डवम् ।
विसृजंस्तोमरान्क्रुद्धो दण्डपाणिरिवान्तकः ॥ ८-६२-६१ (५८०८४)
तस्य चैव भुजौ छिन्नौ भीमसेनेन गर्जतः ।
नागश्च क्रकरप्रख्यैर्नाराचैर्दशभिर्हतः ॥ ८-६२-६२ (५८०८५)
हन्तैते पुनरायान्ति नागा ह्यन्ये प्रहारिणः ।
नीलाञ्जनचयप्रख्या महामात्रैरधिष्ठिताः ॥ ८-६२-६३ (५८०८६)
शक्तितोमरसङ्घैर्विनिघ्नन्तो वृकोदरम् ।
सप्तसप्त च नागस्था वैजयन्त्यश्च सध्वजाः ।
नवत्या निशितैर्बाणैश्छिन्नाः पार्थाग्रजेन ते ॥ ८-६२-६४ (५८०८७)
दशभिर्दशभिश्चैको नाराचैर्निहतो गजः ॥ ८-६२-६५ (५८०८८)
न चासौ धार्तराष्ट्राणां श्रूयते निनदस्तथा ।
पुरन्दरसमे क्रुद्धे निवृत्ते भरतर्षभे ॥ ८-६२-६६ (५८०८९)
अक्षौहिण्यस्तथा तिस्रो धार्तराष्ट्रस्य सङ्गताः ।
क्रुद्धेन भीमसेनेन नरसिंहेन वारिताः ॥ ८-६२-६७ (५८०९०)
न शक्नुवन्ति वै पार्थं पार्थिवाः समुदीक्षितुम् ।
मध्यन्दिनगतं सूर्यं यथा दुर्बलचक्षुषः ॥ ८-६२-६८ (५८०९१)
एते भीमस्य सन्त्रस्ताः सिंहस्येवेतरे मृगाः ।
शरैः सन्त्रासिताः सङ्ख्ये न लभन्ते सुखं क्वचित् ॥ ८-६२-६९ (५८०९२)
राधेयो बहुभिः सार्धमसौ गच्छति वेगितः ।
वर्धयित्वा तु भीरुं तं पार्श्वतो ह्यानयद्धनुः ।
तं पालयन्महाराजं धार्तराष्ट्रं बलान्वितः ॥ ८-६२-७० (५८०९३)
सञ्जय उवाच। ८-६२-७१क्ष् (४९८६)

एतच्छ्रुत्वा महाबाहुर्वासुदेवाद्धनञ्जयः ।
भीमसेनेन तत्कर्म कृतं दृष्ट्वा सुदुष्करम् ।
अर्जुनो व्यधमच्छिष्टान्संशप्तकगणान्बहून् ॥ ८-६२-७१ (५८०९४)
ते वध्यमानाः पार्थेन संशप्तकगणाः प्रभो ।
शक्रस्यातिथितां गत्वा विशोका ह्यभवंस्तदा ॥ ८-६२-७२ (५८०९५)
नारायणांस्तु गोपालान्व्यधमत्पाण्डुनन्दनः ।
उत्तमं वेxxxxx प्तास्थाय चण्डवायुर्धनानिव ॥ ८-६२-७३ (५८०९६)
अन्वकीर्यन्त भीतास्ते तत्रतत्रैव भारत ।
लुलितांश्च ततः शूरानहनत्पुरुषोत्तमः ॥ ८-६२-७४ (५८०९७)
पुनश्च पुरुषव्याघ्रः शरैः सन्नतपर्वभिः ।
जघान धार्तराष्ट्रस्य चतुर्विधबलां चमूम् ॥ ॥ ८-६२-७५ (५८०९८)

इति श्रीमन्महाभारते कर्णपर्वणि सप्तदशदिवसयुद्धे
द्विषष्टितमोऽध्यायः ॥ ६२ ॥
Mahabharata - Karna Parva - Chapter Footnotes

८-६२-९ हस्तिकक्ष्यां केतुमिति सम्बन्धः ॥
८-६२-१९ छत्रेणोपलक्षितः ॥
८-६२-३४ द्रोणपुत्रे महेष्वासे इति क ट पाठः ॥
८-६२-६२ द्विषष्टितमोऽध्यायः ॥

---

कर्नपर्व-अध्यय०६३
॥ श्रीः ॥
८.६३. अध्यायः ६३

Mahabharata - Karna Parva - Chapter Topics
रणाय राज्ञां द्वन्द्वीभावः ॥ १ ॥
कर्णेन शिखण्डिपराजयः ॥ २ ॥
धृष्टद्युम्नदुःशासनयोर्युद्धम् ॥ ३ ॥

Mahabharata - Karna Parva - Chapter Text

८-६३-० (५८०९९)
धृतराष्ट्र उवाच। ८-६३-०क्ष् (४९८७)
निवृत्ते भीमसेने च पाण्डवे च युधिष्ठिरे ।
वध्यमाने बले चापि मामके पाण्डुसृञ्जयैः ॥ ८-६३-१ (५८१००)

द्रवमाणे बलौघे च निराक्रन्दे मुहुर्मुहुः ।
ग्अवशेषं न पश्यामि मम सैन्येषु सञ्जय ॥ ८-६३-२ (५८१०१)
अहो बत दशां प्राप्तो न हि शक्ष्यामि जीवितुम् ।
जयकाङ्क्षी कथं सूत पुत्राणामनिवर्तिनाम् ॥ ८-६३-३ (५८१०२)
कथं जीवामि निहताञ्श्रुत्वा च मम सैनिकान् ।
बहुनाऽद्य किमुक्तेन दैवं तेषां परायणम्'॥ ८-६३-४ (५८१०३)
मामकाः किमकुर्वन्त तन्ममाचक्ष्व सञ्जय ॥ ८-६३-५ (५८१०४)
सञ्जय उवाच। ८-६३-६क्ष् (४९८८)
दृष्ट्वा भीमं महाबाहुं तव पुत्रः प्रतापवान् ।
क्रोधरक्तेक्षणो राजन्भीमसेनमभिद्रवत् ॥ ८-६३-६ (५८१०५)
गतिष्ठतिष्ठ पृथापुत्र पश्य मेऽद्य पराक्रमम् ।
अद्य त्वां प्रेषायष्यामि यमस्य सदनं प्राते ।
इत्युक्त्वा प्रययौ कर्णो यत्र भीमो व्यवस्थितः'॥ ८-६३-७ (५८१०६)
तावकं तु बलं दृष्ट्वा भीमसेनात्पराङ्मुखम् ।
यत्नेन महता कर्णः पर्यवस्थापयद्बली ॥ ८-६३-८ (५८१०७)
व्यवस्थाप्य महाबाहुस्तव पुत्रस्य वाहिनीम् ।
प्रत्युद्ययौ तदा कर्णः पाण्डवान्युद्धदुर्मदान् ॥ ८-६३-९ (५८१०८)
प्रत्युद्ययुश्च राधेयं पाण्डवानां महारथाः ।
धुन्वानाः कार्मुकाण्याजौ विक्षिपन्तश्च सायकान् ॥ ८-६३-१० (५८१०९)
भीमसेनः शिनेर्नप्ता शिखण्डी जनमेजयः ।
धृष्टद्युम्नश्च बलवान्सर्वे चापि प्रभद्रकाः ॥ ८-६३-११ (५८११०)
पाञ्चालानां नरव्याघ्राः समन्तात्त्व वाहिनीम् ।
अभ्यद्रवन्त सङ्क्रुद्धाः समरे जितकाशिनः ॥ ८-६३-१२ (५८१११)
तथैव तावका राजन्पाण्डवानामनीकिनीम् ।
अभ्यद्रवन्त त्वरिता जिघांसन्तो महारथान् ॥ ८-६३-१३ (५८११२)
रथनागाश्वकलिलं पत्तिध्वजसमाकुलम् ।
बभूव पुरुषव्याघ्र सैन्यमद्भुतदर्शनम् ॥ ८-६३-१४ (५८११३)
शिखण्डी तु ययौ कर्णं धृष्टद्युम्नः सुतं तव ।
दुःशासनं महाराज महासेनः समभ्ययात् ॥ ८-६३-१५ (५८११४)
नकुलो वृषसेनं तु चित्रसेनं युधिष्ठिरः ।
उलूकं समरे राजन्सहदेवः समभ्ययात् ॥ ८-६३-१६ (५८११५)
सात्यकिः शकुनिं चापि द्रौपदेयाश्च कौरवान् ।
अर्जुनं च रणे यत्तो द्रोणपुत्रो महारथः ॥ ८-६३-१७ (५८११६)
युधामन्युं महेष्वासं गौतमोऽभ्यपतद्रणे ।
कृतवर्मा च बलवानुत्तमौजसमाद्रवत् ॥ ८-६३-१८ (५८११७)
भीमसेनः कुरून्सर्वान्पुत्रांश्च तव मारिष ।

सहानीकान्महाबाहुरेक एव न्यवारयत् ॥ ८-६३-१९ (५८११८)
शिखण्डी तु ततः कर्णं विचरन्तमभीतवत् ।
भीष्महन्ता महाराज वारयामास पत्रिभिः ॥ ८-६३-२० (५८११९)
प्रतिरुद्धस्ततः कर्णो रोषात्प्रस्फुरिताधरः ।
शिखण्डिनं त्रिभिर्बाणैर्भ्रुवोर्मध्येऽभ्यताडयत् ॥ ८-६३-२१ (५८१२०)
धारयंस्तु स तान्वाणाञ्शिखण्डी बह्वशोभत ।
राजतः पर्वतो यद्वत्त्रिभिः शृङ्गैः समन्वितः ॥ ८-६३-२२ (५८१२१)
सोऽतिविद्धो महेष्वासः सूतपुत्रेण संयुगे ।
कर्णं विव्याध समरे नवत्या निशितैः शरैः ॥ ८-६३-२३ (५८१२२)
तस्य कर्णो हयान्हत्वा सारथिं च शरैः ।
उन्ममाथ ध्वजं चास्य क्षुरप्रेण महारथः ॥ ८-६३-२४ (५८१२३)
हताश्वात्तु ततो यानादवप्लुत्य महारथः ।
शक्तिं चिक्षेप कर्णाय सङ्क्रुद्धः शत्रुतापनः ॥ ८-६३-२५ (५८१२४)
तां छित्त्वा समरे कर्णस्त्रिभिर्भारत सायकैः ।
शिखण्डिनमथाविध्यन्नवभिर्निशितैः शरैः ॥ ८-६३-२६ (५८१२५)
कर्णचापच्युतान्बाणान्वर्जयंस्तु नरोत्तमः ।
अपयातस्ततस्तूर्णं शिखण्डी भृशविक्षतः ॥ ८-६३-२७ (५८१२६)
ततः कर्णो महाराज पाण्डुसैन्यान्यशातयत् ।
तूलराशिं समासाद्य यथा वायुर्महाबलः ॥ ८-६३-२८ (५८१२७)
धृष्टद्युम्नो महाराज तव पुत्रेण पीडितः ।
दुःशासनं त्रिभिर्बाणैः प्रत्यविध्यत्स्तनान्तरे ॥ ८-६३-२९ (५८१२८)
तस्य दुःशासनो बाहुं सव्यं विव्याध मारिष ।
स तेन रुक्मपुङ्खेन भल्लेन नतपर्वणा ॥ ८-६३-३० (५८१२९)
धृष्टद्युम्नस्तु निर्विद्धः शरं घोरममर्षणः ।
दुःशासनाय सङ्क्रुद्धः प्रेषयामास भारत ॥ ८-६३-३१ (५८१३०)
आपतन्तं महावेगं धृष्टद्युम्नसमीरितम् ।
शरैश्चिच्छेद पुत्रस्ते त्रिभिरेव विशाम्पते ॥ ८-६३-३२ (५८१३१)
अथापरैः षोडशभिर्भल्लैः कनकभूषणैः ।
धृष्टद्युम्नं समासाद्य बाह्वोरुरसि चार्पयत् ॥ ८-६३-३३ (५८१३२)
ततः स पार्षतः क्रुद्धो धनुश्चिच्छेद मारिष ।
क्षुरप्रेण सुतीक्ष्णेन तत उच्चुक्रुशुर्जनाः ॥ ८-६३-३४ (५८१३३)
अथान्यद्धनुरादाय पुत्रस्ते प्रहसन्निव ।
धृष्टद्युम्नं शरव्रातैः समन्तात्पर्यवारयत् ॥ ८-६३-३५ (५८१३४)
तव पुत्रस्य ते दृष्ट्वा विक्रमं सुमहात्मनः ।
व्यस्मयन्त रणे योधाः सिद्धाश्चाप्सरसस्तथा ॥ ८-६३-३६ (५८१३५)
धृष्टद्युम्नं तु पश्याम घटमानं महाबलम् ।

दुःशासनेन संरुद्धं सिंहेनेव महागजम् ॥ ॥ ८-६३-३७ (५८१३६)

इति श्रीमन्महाभारते कर्णपर्वणि सप्तदशदिवसयुद्धे
त्रिषष्टितमोऽध्यायः ॥ ६३ ॥

---

कर्नपर्व-अध्यय०६४
॥ श्रीः ॥
८.६४. अध्यायः ६४

Mahabharata - Karna Parva - Chapter Topics
सङ्कुलयुद्धम् ॥ १ ॥

Mahabharata - Karna Parva - Chapter Text

८-६४-० (५८१३७)
सञ्जय उवाच। ८-६४-०क्ष् (४९८९)
ततः सरथनागाश्वाः पाञ्चालाः पाण्डुसृञ्जयाः ।
सेनापतिं परीप्सन्तो रुरुधुस्तनयं तव ॥ ८-६४-१ (५८१३८)
ततः प्रववृते युद्धं तावकानां परैः सह ।
घोरं प्राणभृतां काले भीमरूपं परन्तप ॥ ८-६४-२ (५८१३९)
नकुलो वृषसेनं तु विद्धवा पञ्चभिरायसैः ।
पितुः समीपे तिष्ठन्तं त्रिभिरन्त्यैरविध्यत ॥ ८-६४-३ (५८१४०)
नकुलं तु ततः शूरो वृषसेनो हसन्निव ।
नाराचेन सुतीक्ष्णेन विव्याध हृदये भृशम्'॥ ८-६४-४ (५८१४१)
सोऽतिविद्धो बलवता शत्रुणा शत्रुकर्शन ।
शत्रुं विव्याध विंशत्या सूतं चैवास्य सप्तभिः ॥ ८-६४-५ (५८१४२)
ततः शरसहस्रेण तावुभौ पुरुषर्षभौ ।
अन्योन्यमाच्छादयतां तवाभज्यत वाहिनी ॥ ८-६४-६ (५८१४३)
स दृष्ट्वा प्रद्रुतां सेनां धार्तराष्ट्रस्य सूतजः ।
निवारयामास बलादनुपत्य विशाम्पते ॥ ८-६४-७ (५८१४४)
गएतस्मिन्नन्तरे युद्धं कष्टमासीद्विशाम्पते'।
निवृत्ते तु ततः सैन्ये नकुलः कौरवान्ययौ ॥ ८-६४-८ (५८१४५)
कर्णपुत्रस्तु समरे हित्वा नकुलमेव तु ।
जुगोप चक्रं त्वरितो राधेयस्यैव मारिष ॥ ८-६४-९ (५८१४६)
उलूकस्तु रणे क्रुद्धः सहदेवेन मारिष ।
गनिवारितः शरशतैः क्रुद्धेन रणमूर्धनि ॥ ८-६४-१० (५८१४७)

तस्याश्वांश्चतुरो हत्वा सहदेवः प्रतापवान् ।
सारथिं प्रेषयामास यमस्य सदनं प्रति ॥ ८-६४-११ (५८१४८)
उलूकस्तु ततो यानादवप्लुत्य विशाम्पते ।
त्रिगर्तानां बलं तूर्णं जगाम पितृनन्दनः ॥ ८-६४-१२ (५८१४९)
सात्यकिः शकुनिं विद्ध्वा विंशत्या निशितैः शरैः ।
ध्वजं चिच्छेद भल्लेन सौबलस्य हसन्निव ॥ ८-६४-१३ (५८१५०)
सौबलस्तस्य समरे क्रुद्धो राजन्प्रतापवान् ।
विदार्य कवचं भूयो ध्वजं चिच्छेद काञ्चनम् ॥ ८-६४-१४ (५८१५१)
तथैनं निशितैर्बाणैः सात्यकिः प्रत्यविध्यत ।
सारथिं च महाराज त्रिभिरेव समार्पयत् ॥ ८-६४-१५ (५८१५२)
अथास्य वाहांस्त्वरितः शरैर्निन्ये यमक्षयम् ।
ततोऽवप्लुत्य सहसा शकुनिर्भरतर्षभ ॥ ८-६४-१६ (५८१५३)
आरुरोह रथं तूर्णमुलूकस्य महात्मनः ।
अपोवाहाथ शीघ्रं स शैनेयाद्युद्धशालिनः ॥ ८-६४-१७ (५८१५४)
सात्यकिस्तु रण राजंस्तावकानामनीकिनीम् ।
अभिदुद्राव वेगेन ततोऽनीकमभज्यत ॥ ८-६४-१८ (५८१५५)
शैनेयशरसञ्छन्नं तव सैन्यं विशाम्पते ।
भेजे दशा दिशस्तूर्णं न्यपतच्च गतासुवत् ॥ ८-६४-१९ (५८१५६)
भीमसेनं तव सुतो वारयामास संयुगे ॥ ८-६४-२० (५८१५७)
तं तु भीमो मुहूर्तेन व्यश्वसूतरथध्वजम् ।
चक्रे लोकेश्वरं तत्र तेनातुष्यन्त वै जनाः ॥ ८-६४-२१ (५८१५८)
ततोऽपायान्नृपस्तस्माद्भीमसेनभयार्दितः ।
कुरुसैन्यं ततः सर्वं भीमसेनमुपाद्रवत् ।
तत्र नादो महानासीद्भीमसेनं जिघांसताम् ॥ ८-६४-२२ (५८१५९)
युधामन्युः कृपं विद्ध्वा धनुरस्याशु चिच्छदे ।
अथान्यद्धनुरादाय कृपः शस्त्रभृतां वरः ।
युधामन्योर्ध्वजं सूतं छत्रं चापातयत्क्षितौ ॥ ८-६४-२३ (५८१६०)
ततोऽपायाद्रथेनैव युधामन्युर्महारथः ॥ ८-६४-२४ (५८१६१)
उत्तमौजाश्च हार्दिक्यं भीमं भीमपराक्रमम् ।
छादयामास सहसा मेघो वृष्ट्येव पर्वतम् ॥ ८-६४-२५ (५८१६२)
तद्युद्धमासीत्सुमहद्घोररूपं परन्तप ।
तादृशं न मया युद्धं दृष्टपूर्वं विशाम्पते ॥ ८-६४-२६ (५८१६३)
कृतवर्मा ततो राजन्नुत्तमौजसमाहवे ।
हृदि विव्याध सहसा रथोपस्थ उपाविशत् ॥ ८-६४-२७ (५८१६४)
सारथिस्तमपोवाह रथेन रथिनां वरम् ।
ततस्तु सात्वतो राजन्पाण्डुसैन्यमभिद्रवत् ॥ ८-६४-२८ (५८१६५)

श्दुःशासनः सौबलश्च गजानीकेन पाण्डवम् ।
महता परिवार्यैव क्षुद्रकैरभ्यताडयत् ॥ ८-६४-२९ (५८१६६)
ततो भीमः शरशतैर्दुर्योधनममर्षणम् ।
विमुखीकृत्य तरसा गजानीकमुपाद्रवत् ॥ ८-६४-३० (५८१६७)
तमापतन्तं सहसा गजानीकं वृकोदरः ।
दृष्ट्वैव सुभृशं क्रुद्धो दिव्यमस्त्रमुदैरयत् ॥ ८-६४-३१ (५८१६८)
गजैर्गजानभ्यहनद्वज्रेणेन्द्र इवासुरान् ॥ ८-६४-३२ (५८१६९)
ततोऽन्तरिक्षं बाणौघैः शलभैरिव पादपम् ।
छादयामास समरे गजान्निघ्नन्वृकोदरः ॥ ८-६४-३३ (५८१७०)
ततः कुञ्जरयूथानि समेतानि सहस्रशः ।
व्यधमत्तरसा भीमो मेघसङ्घानिवानिलः ॥ ८-६४-३४ (५८१७१)
सुवर्णजालापिहिता मणिजालैश्च कुञ्जराः ।
रेजुरभ्यधिकं संख्ये विद्युत्वन्त इवाम्बुदाः ॥ ८-६४-३५ (५८१७२)
ते वध्यमाना भीमेन गजा राजन्विदुद्रुवुः ।
केचिद्विभिन्नहृदयाः कुञ्जरा न्यपतन्भुवि ॥ ८-६४-३६ (५८१७३)
पतितैर्निपतद्भिश्च गजैर्हेमविभूषितैः ।
अशोभत मही तत्र विशीर्णैरिव पर्वतैः ॥ ८-६४-३७ (५८१७४)
दीप्ताभै रत्नवद्भिश्च पतितैर्गजयोधिभिः ।
रराज भूमिः पतितैः क्षीणपुण्यैरिव ग्रहैः ॥ ८-६४-३८ (५८१७५)
ततो भिन्नकटा नागा भिन्नकुम्भकरास्तथा ।
दुद्रुवुः शतशः संख्ये भीमसेनशराहताः ॥ ८-६४-३९ (५८१७६)
केचिद्वमन्तो रुधिरं भयार्ताः पर्वतोपमाः ।
व्यद्रवञ्छरविद्धाङ्गा धातुचित्रा इवाचलाः ॥ ८-६४-४० (५८१७७)
महाभुजगसङ्काशौ चन्दनागुरुरूषितौ ।
अपश्यं भीमसेनस्य धनुर्विक्षिपतो भुजौ ॥ ८-६४-४१ (५८१७८)
तस्य ज्यातलनिर्घोषं श्रुत्वाशनिसमस्वनम् ।
विमुञ्चन्तः शकृन्मूत्रं गजाः प्राद्रुद्रुवुर्भृशम् ॥ ८-६४-४२ (५८१७९)
भीमसेनस्य तत्कर्म राजन्नेकस्य धीमतः ।
निघ्नतः सर्वभूतानि रुद्रस्येव च निर्बभौ ॥८ ॥ ८-६४-४३ (५८१८०)

इति श्रीमन्महाभारते कर्णपर्वणि सप्तदशदिवसयुद्धे
चतुःषष्टितमोऽध्यायः ॥ ६४ ॥

---

कर्नपर्व-अध्यय०६५
॥ श्रीः ॥
८.६५. अध्यायः ६५

Mahabharata - Karna Parva - Chapter Topics

सङ्कुलयुद्धम् ॥१ ॥

Mahabharata - Karna Parva - Chapter Text

८-६५-० (५८१८१)
सञ्जय उवाच। ८-६५-०क्ष् (४९९०)
ततः श्वेताश्वसंयुक्ते नारायणसमाहिते ।
तिष्ठन्रथवरे श्रीमानर्जुनः समपद्यत ॥ ८-६५-१ (५८१८२)
तद्बलं नृपतिश्रेष्ठ तावकं विजयो रणे ।
व्यक्षोभयदुदीर्णाश्वं महोदधिमिवानिलः ॥ ८-६५-२ (५८१८३)
दुर्योधनस्तव सुतः प्रमत्ते श्वेतवाहने ।
अभ्येत्य सहसा क्रुद्धः सैन्यार्धेनाभिसंवृतः ॥ ८-६५-३ (५८१८४)
पर्यवारयदायान्तं युधिष्ठिरममर्षणम् ।
क्षुरप्राणां त्रिसप्तत्या ततोऽविध्यत पाण्डवम् ॥ ८-६५-४ (५८१८५)
अक्रुध्यत भृशं तत्र कुन्तीपुत्रो युधिष्ठिरः ।
स भल्लांस्त्रिंशतस्तूर्णं तव पुत्रे न्यवेशयत् ॥ ८-६५-५ (५८१८६)
ततो धावन्त कौरव्या जिघृक्षन्तो युधिष्ठिरम् ॥ ८-६५-६ (५८१८७)
दुष्टभावान्पराञ्ज्ञात्वा समवेता महारथाः ।
आजग्मुस्तं परीप्सन्तः कुन्तीपुत्रं युधिष्ठिरम् ॥ ८-६५-७ (५८१८८)
ग्सञ्जय उवाच। ८-६५-८क्ष् (४९९१)
युधिष्ठिरश्चित्रसेनं शरवर्षैरवाकिरत् ।
चित्रसेनस्तु कौन्तेयं सङ्क्रुद्धः समवारयत् ॥ ८-६५-८ (५८१८९)
मुहूर्ताद्विमुखीकृत्य चित्रसेनं स धर्मराट् ।
तावकं सैन्यमभ्यघ्नत्समन्तान्निशितैः शरैः ॥ ८-६५-९ (५८१९०)
तावका हि माबाहो दुर्योधनपुरोगमाः ।
युधिष्ठिरं जिघृक्षन्तः सर्वसैन्यं समाक्षिपन् ॥ ८-६५-१० (५८१९१)
दृष्टप्रभावांस्तान्मत्वा समवेतान्महारथान् ।
आजग्मुः सम्परीप्सन्तः पाण्डवेयं युधिष्ठिरम्'॥ ८-६५-११ (५८१९२)
नकुलः सहदेवश्च धृष्टद्युम्नश्च पार्षतः ।
अक्षौहिण्या परिवृतास्तेऽभ्यधावन्युधिष्ठिरम् ॥ ८-६५-१२ (५८१९३)
भीमसेनश्च नाराचैर्मृद्गंस्तव महारथान् ।
अभ्यधावदभिप्रेप्सू राजानं शत्रुभिर्वृतम् ॥ ८-६५-१३ (५८१९४)
तांस्तु सर्वान्महेष्वासान्कर्णो वैकर्तनो वृषा ।
शरवर्षेण महता प्रत्यवारयदागतान् ॥ ८-६५-१४ (५८१९५)

शरौघान्विसृजन्तस्ते प्रेयन्तश्च कुञ्जरान् ।
न शेकुर्यत्नवन्तोऽपि राधेयं प्रतिवीक्षितुम् ॥ ८-६५-१५ (५८१९६)
तांश्च सर्वान्महेष्वासान्सर्वशस्त्रविशारदान् ।
महता शरवर्षेण राधेयः प्रत्यवारयत् ॥ ८-६५-१६ (५८१९७)
दुर्योधनं च विंशत्या नाराचानां कृती बली ।
अविध्यत्तूर्णमभ्येत्य सहदेवो महीपतिम् ॥ ८-६५-१७ (५८१९८)
स विद्धः सहदेवेन रराज बलसन्निधौ ।
प्रभिन्न इव मातङ्गो रुधिरेण परिप्लुतः ॥ ८-६५-१८ (५८१९९)
दृष्ट्वा तव सुतं तत्र गाढविद्धं सुतेजनैः ।
अभ्यधावद्दृढं क्रुद्धो राधेयो रथिनां वरः ॥ ८-६५-१९ (५८२००)
दुर्योधनं तथा दृष्ट्वा शीघ्रमस्त्रमुदीर्य सः ।
अवधीत्पाण्डवानीकं पाञ्चालांश्चैव मारिष ॥ ८-६५-२० (५८२०१)
ततो यौधिष्ठिरं सैन्यं वध्यमानं महात्मना ।
सहसा प्राद्रावद्राजन्सूतपुत्रशरार्दितम् ॥ ८-६५-२१ (५८२०२)
विविधा विशिखास्तत्र सम्पतन्ति परस्परम् ।
भल्लाः पुङ्खसमाश्लिष्टाः सूतपुत्रधनुश्च्युताः ॥ ८-६५-२२ (५८२०३)
अन्तरिक्षे शरौघाणां पततां च परस्परम् ।
सङ्घर्षेण महाराज पावकः समजायत ॥ ८-६५-२३ (५८२०४)
तकतो दशदिशः कर्णः शलभैरिव यायिभिः ।
अभ्यघ्नंस्तरसा राजञ्शरैः परशरीरगैः ॥ ८-६५-२४ (५८२०५)
रक्तचन्दनसन्दिग्धौ मणिहेमविभूषितौ ।
बाहू व्यत्यक्षिपत्कर्णः परमास्त्रं विदर्शयन् ॥ ८-६५-२५ (५८२०६)
ततः सर्वा दिशो राजन्सायकैर्विप्रमोहयन् ।
अपीडयद्भृशं कर्णो धर्मराजं युधिष्ठिरम् ॥ ८-६५-२६ (५८२०७)
ततः क्रुद्धो महाराज धर्मपुत्रो युधिष्ठिरः ।
निशितैरिषुभिः कर्णं पञ्चाशद्भिः समार्पयत् ॥ ८-६५-२७ (५८२०८)
श्बाणान्धकारमभवत्तद्युद्धं घोरदर्शनम् ।
हाहाकारो महानासीत्तावकानां विशाम्पते ॥ ८-६५-२८ (५८२०९)
वध्यमाने तदा सैन्ये धर्मपुत्रेण मारिष ।
सायकैर्विविधैस्तीक्ष्णैः कङ्कपत्रैः शिलाशितैः ।
भल्लैरनेकैर्विविधैः शक्त्यृष्टिमुसलैरपि ॥ ८-६५-२९ (५८२१०)
यत्र यत्र स धर्मात्मा दुष्टां दृष्टिं व्यसर्जयत् ।
तत्र तत्र व्यशीर्यन्त तावका भरतर्षभ ॥ ८-६५-३० (५८२११)
कर्णोऽपि भृशसङ्क्रुद्धो धर्मराजं युधिष्ठिरम् ।
नाराचैरर्धचन्द्रैश्च वत्सदन्तैश्च संयुगे ॥ ८-६५-३१ (५८२१२)
अमर्षी क्रोधनश्चैव रोषप्रस्फुरिताननः ।

सायकैरप्रमेयात्मा युधिष्ठिरमभिद्रवत् ॥ ८-६५-३२ (५८२१३)
युधिष्ठिरश्चापि स तं स्वर्णपुङ्खैः शितैः शरैः ॥ ८-६५-३३
(५८२१४)
प्रहसन्निव तं कर्णः कङ्कपत्रैः शिलाशितैः ।
उरस्यविध्यद्राजानं कुन्तीपुत्रं युधिष्ठिरम् ॥ ८-६५-३४ (५८२१५)
स पीडितो भृशं तेन धर्मराजो युधिष्ठिरः ।
उपविश्य रथोपस्थे सूतं याहीत्यनोदयत् ॥ ८-६५-३५ (५८२१६)
अक्रोशन्त ततः सर्वे धार्तराष्ट्राः सराजकाः ।
गृह्णीध्वमिति राजानमभ्यधावन्त सर्वशः ॥ ८-६५-३६ (५८२१७)
ततः शताः सप्तदश केकयानां प्रहारिणाम् ।
पञ्चालैः सहिता राजन्धार्तराष्ट्रान्न्यवारयन् ॥ ८-६५-३७ (५८२१८)
तस्मिन्सुतुमुले युद्धे वर्तमाने जनक्षये ।
दुर्योधनश्च भीमश्च समेयातां महाबलौ ॥ ॥ ८-६५-३८ (५८२१९)

इति श्रीमन्महाभारते कर्णपर्वणि सप्तदशदिवसयुद्धे
पञ्चषष्टितमोऽध्यायः ॥ ६५ ॥

---

कर्नपर्व-अध्यय०६६
॥ श्रीः ॥
८.६६. अध्यायः ६६

Mahabharata - Karna Parva - Chapter Topics
कर्णबाणपीडितस्य युधिष्ठिरस्य विश्रमाय स्वशिबिरप्रवेशः ॥ १ ॥

Mahabharata - Karna Parva - Chapter Text

८-६६-० (५८२२०)
सञ्जय उवाच। ८-६६-०क्ष् (४९९२)
कर्णोऽपि शरजालेन केकयानां महारथान् ।
व्यधमत्परमेष्वासानग्रानीके व्यवस्थितान् ॥ ८-६६-१ (५८२२१)
तेषां प्रयतमानानां राधेयस्य निवारणे ।
रथान्पञ्चशतान्कर्णः प्राहिणोद्यमसादनम् ॥ ८-६६-२ (५८२२२)
अविषह्यतमं दृष्ट्वा राधेयं युधि योधिनः ।
भीमसेनमुपागच्छन्कर्णबाणप्रपीडिताः ॥ ८-६६-३ (५८२२३)
रथानीकं विदार्यैव शरै राजन्ननेकधा ।
कर्ण एकरथेनैव युधिष्ठिरमुपाद्रवत् ॥ ८-६६-४ (५८२२४)

सेनानिवेशं गच्छन्तं मार्गणैर्भृशपीडितम् ।
यमयोर्मध्यगं वीरं शनैर्यान्तं विचेतसम् ॥ ८-६६-५ (५८२२५)
स समासाद्य राजानं दुर्योधनहितेप्सया ।
सूतपुत्रस्त्रिभिस्तीक्ष्णैर्विव्याध परमेषुभिः ॥ ८-६६-६ (५८२२६)
तथैव राजा राधेयं प्रत्यविध्यत्स्तनान्तरे ।
शरैस्त्रिभिश्च यन्तारं चतुर्भिश्चतुरो हयान् ॥ ८-६६-७ (५८२२७)
चक्ररक्षौ नृपसुतौ माद्रीपुत्रौ परन्तपौ ।
तावप्यधावतां कर्णं राजानं मा वधीदिति ॥ ८-६६-८ (५८२२८)
तौ पृथक्षरवर्षाभ्यां राधेयं समवर्षताम् ।
नकुलः सहदेवश्च परमं यत्नमास्थितौ ॥ ८-६६-९ (५८२२९)
तथैव तौ प्रत्यविध्यत्सूतपुत्रः प्रतापवान् ।
भल्लाभ्यां शितधाराभ्यां महात्मानावरिन्दमौ ॥ ८-६६-१० (५८२३०)
दन्तवर्णांस्तु राधेयो निजघान मनोजवान् ।
युधिष्ठिरस्य सङ्ग्रामे कालवालान्हयोत्तमान् ॥ ८-६६-११ (५८२३१)
ततोऽपरेण भल्लेन शिरस्त्राणमपातयत् ।
कौन्तेयस्य महेष्वासः प्रहसन्निव सूतजः ॥ ८-६६-१२ (५८२३२)
तथैव नकुलस्यापि हयान्हत्वा महारथः ।
ततोऽपरेण भल्लेन भृशं तीक्ष्णेन भारत ।
धनुश्चिच्छेद वीरस्य माद्रीपुत्रस्य धीमतः ॥ ८-६६-१३ (५८२३३)
तौ हताश्वौ हतरथौ पाण्डवौ भृशविक्षतौ ।
भ्रातरावारुरुहतुः सहदेवरथं तदा ॥ ८-६६-१४ (५८२३४)
तौ दृष्ट्वा मातुलस्तत्र विरथौ परवीरहा ।
अभ्यभाषत राधेयं मद्रराजोऽनुकम्पया ॥ ८-६६-१५ (५८२३५)
मार्गितव्यस्त्वया कर्ण कुन्तीपुत्रो धनञ्जयः ।
अतस्त्वं धर्मराजेन किमर्थमिह युध्यसे ॥ ८-६६-१६ (५८२३६)
श्क्षीणशस्त्रास्त्राकवचः क्षीणबाणो विबाणधिः ।
श्रान्तसारथिवाहश्च च्छन्नोऽस्त्रैररिभिस्तथा ।
पार्थमासाद्य राधेय उपहास्यो भविष्यसि ॥८ ८-६६-१७ (५८२३७)
तथापि कर्णः संरब्धो युधिष्ठिरमपीडयत् ।
शरैस्तीक्ष्णैर्महावीर्यैर्माद्रीपुत्रौ च पाण्डवौ ॥ ८-६६-१८ (५८२३८)
ततः शल्यः प्रहस्येदं कर्णं पुनरुवाच ह ।
रथस्थमतिसंरब्धं युधिष्ठिरवधे स्थितम् ॥ ८-६६-१९ (५८२३९)
यदर्थं धार्तराष्ट्रेण सततं मानितो भवान् ।
तं पार्थं जहि राधेय किं ते हत्वा युधिष्ठिरम् ।
ग्हते यस्मिन्ध्रुवं पार्थः सर्वाञ्जेष्यति नो रथान् ॥ ८-६६-२० (५८२४०)
तस्मिन्हि धार्तराष्ट्रस्य निहते तु ध्रुवो जयः ।

ध्वजोऽसौ दृश्यते तस्य रोचमानोंऽशुमानिव ।
सारो ह्येष महाबाहो किं ते हत्वा युधिष्ठिरम् ॥' ८-६६-२१ (५८२४१)
शङ्खयोर्ध्मातयोः शब्दः सुमहानेष कृष्णयोः ।
श्रूयते चापघोषश्च प्रावृषीवाम्बुदस्य ह ॥ ८-६६-२२ (५८२४२)
असौ निघ्नन्रथोदारानर्जुनः शरवृष्टिभिः ।
सर्वां ग्रसति नः सेनां कर्ण पश्यैनमाहवे ॥ ८-६६-२३ (५८२४३)
पृष्ठरक्षौ च शूरस्य युधामन्यूत्तमौजसौ ॥ ८-६६-२४ (५८२४४)
उत्तरं चास्य वै शूरश्चक्रं रक्षति सात्यकिः ।
धृष्टद्युम्नस्तथा चास्य चक्रं रक्षति दक्षिणम् ॥ ८-६६-२५ (५८२४५)
भीमसेनश्च वै राज्ञा धार्तराष्ट्रेण युध्यते ।
यथा न हन्यात्तं भीमः सर्वेषां नोऽद्य पश्यताम् ।
कुरु राधेय वै राजा यथा मुच्येत तत्तथा ॥ ८-६६-२६ (५८२४६)
xxxx भीमसेनेन ग्रस्तमाहवशोभिना ।
यदि नामाद्य मुच्येत विस्मयः सुमहान्भवेत् ॥ ८-६६-२७ (५८२४७)
परित्राह्येनमभ्येत्य संशयं परमं गतम् ।
किं नु माद्रीसुतौ हत्वा राजानं वा युधिष्ठिरम् ॥ ८-६६-२८ (५८२४८)
इति शल्यवचः श्रुत्वा राधेयः पृथिवीपते ।
दृष्ट्वा दुर्योधनं चैव भीमग्रस्तं महाहवे ॥ ८-६६-२९ (५८२४९)
राजगृध्नुर्भृशं चैव शल्यवाक्यप्रचोदितः ।
अजातशत्रुमुत्सृज्य माद्रीपुत्रौ च पाण्डवौ ॥ ८-६६-३० (५८२५०)
तव पुत्रं परित्रातुमभ्यधावत वीर्यवान् ।
मद्रराजप्रणुदितैरश्वैराकाशगैरिव ॥ ८-६६-३१ (५८२५१)
गते कर्णे तु कौन्तेयः पाण्डुपुत्रो युधिष्ठिरः ।
अपायाज्जवनैरश्वैः सहदेवस्य मारिष ॥ ८-६६-३२ (५८२५२)
श्ताभ्यां स सहितस्तूर्णं व्रीडन्निव नरेश्वरःघ ।
प्राप्य सेनानिवेशं स्वं मार्गणैर्भृशविक्षतः ॥ ८-६६-३३ (५८२५३)
अवतीर्य रथात्तूर्णमाविशच्छयनं शुभम् ।
अपेतशल्यो राजा तु हृच्छल्येनाभिपीडितः ॥ ८-६६-३४ (५८२५४)
सोऽब्रवीद्भ्रातरौ राजा माद्रीपुत्रौ महारथौ ।
गच्छन्त त्वरितौ वीरौ यत्र भीमो व्यवस्थितः ॥ ८-६६-३५ (५८२५५)
ग्ततस्ते पाण्डवाः सर्वे समाभाष्य परस्परम् ।
अनीकं भीमसेनस्य पाण्डवावभ्यगच्छताम्'।
जीमूत इव नर्दंस्तु युध्यते स वृकोदरः ॥ ८-६६-३६ (५८२५६)
ततोऽन्यं रथमास्थाय नकुलो रथपुङ्गवः ।
सहदेवश्च तेजस्वी भ्रातरौ शत्रुकर्शनौ ॥ ८-६६-३७ (५८२५७)
तुरगैरग्र्यरंहोभिर्यत्र भीमस्तरस्विनौ ।

अनीकैः सहितौ तत्र भ्रातरौ समवस्थितौ ॥ ॥ ८-६६-३८ (५८२५८)

इति श्रीमन्महाभारते कर्णपर्वणि सप्तदशदिवसयुद्धे
षट्षष्टितमोऽध्यायः ॥ ६६ ॥

---

कर्नपर्व-अध्यय०६७
॥ श्रीः ॥
८.६७. अध्यायः ६७

Mahabharata - Karna Parva - Chapter Topics
पार्थेनाश्वत्थाम्नि पराजिते कर्णेन
भार्गवास्त्रप्रयोगात्पाण्डवसेनापीडनम् ॥ १ ॥

Mahabharata - Karna Parva - Chapter Text

८-६७-० (५८२५९)
सञ्जय उवाच। ८-६७-०क्ष् (४९९३)
द्रौणिस्तु रथवंशेन महता परिवारितः ।
अपतत्सहसा राजन्यत्र पार्थो व्यवस्थितः ॥ ८-६७-१ (५८२६०)
तमापतन्तं सहसा शूरः शौरिसहायवान् ।
दधार समरे पार्थो वेलेव मकरालयम् ॥ ८-६७-२ (५८२६१)
ततः क्रुद्धो महाराज द्रोणपुत्रः प्रतापवान् ।
अर्जुनं वासुदेवं च च्छादयामास सायकैः ॥ ८-६७-३ (५८२६२)
अवच्छन्नौ ततः कृष्णौ दृष्ट्वा तत्र महारथाः ।
विस्मयं परमं गत्वा प्रैक्षन्त कुरवस्तदा ॥ ८-६७-४ (५८२६३)
अर्जुनस्तु ततो दिव्यमस्त्रं चक्रे हसन्निव ।
तदस्त्रं वारयामास ब्राह्मणो युधि भारत ॥ ८-६७-५ (५८२६४)
यद्यद्धि व्याक्षिपद्युद्धे फल्गुनोऽस्त्रं जिघांसया ।
तत्तदस्त्रैर्महेष्वासो द्रोणपुत्रो जघान ह ॥ ८-६७-६ (५८२६५)
अस्त्रयुद्धे महाराज वर्तमाने महाभये ।
अपश्याम रणे द्रौणिं व्यात्ताननमिवान्तकम् ॥ ८-६७-७ (५८२६६)
स दिशः प्रदिशश्चैव च्छादयित्वा ह्यजिह्मगैः ।
वासुदेवं त्रिभिर्बाणैरविध्यद्दक्षिणे भुजे ॥ ८-६७-८ (५८२६७)
ततोऽर्जुनो रथान्सर्वान्हत्वा तस्य पदानुगान् ।
चकार समरे भूमिं शोणितौघपरिप्लुताम् ।
श्सर्बलोकवहां रौद्रां परलोकवहां नदीम्ঘ ॥ ८-६७-९ (५८२६८)

सरथा रथिनः पेतुः पार्थचापच्युतैः शरैः ॥ ८-६७-१० (५८२६९)
श्द्रौणेरपहतान्सङ्ख्ये ददृशु स च तां तथा ।
प्रावर्तयन्महाघोरां नदीं परवहां तदा ॥ ८-६७-११ (५८२७०)
तयोस्तु व्याकुले युद्धे द्रौणेः पार्थस्य दारुणे ।
अमर्यादं योधयन्तः पर्यधावन्त पृष्ठतः ॥ ८-६७-१२ (५८२७१)
रथैर्हताश्वसूतैश्च हतारोहैश्च वाजिभिः ।
द्विरदैश्च हतारोहैर्महामात्रैर्हतद्विपैः ॥ ८-६७-१३ (५८२७२)
पार्थेन समरे राजन्कृतो घोरो जनक्षयः ।
निहता रथिनः पेतुः पार्थचापच्युतैः शरैः ॥ ८-६७-१४ (५८२७३)
हयाश्च पर्यधावन्त मुक्तयोक्त्रास्ततस्ततः ।
तद्दृष्ट्वा कर्म पार्थस्य द्रौणिराहवशोभिनः ॥ ८-६७-१५ (५८२७४)
अर्जुनं जयतां श्रेष्ठं त्वरितोऽभ्येत्य वीर्यवान् ।
विधुन्वानो महच्चापं कार्तस्वरविभूषितम् ॥ ८-६७-१६ (५८२७५)
अवाकिरत्ततो द्रौमिः समन्तान्निशितैः शरैः ।
भूयोऽर्जुनं महाराज द्रौणिरायम्य पत्रिणा ॥ ८-६७-१७ (५८२७६)
वक्षोदेशे भृशं पार्थं ताडयामास निर्दयम् ।
सोऽतिविद्धो रणे तेन द्रोणपुत्रेण भारत ॥ ८-६७-१८ (५८२७७)
गाण्डीवधन्वा प्रसभं शरवर्षैरुदारधीः ।
सञ्छाद्य समरे द्रौणिं चिच्छेदास्य च कार्मुकम् ॥ ८-६७-१९ (५८२७८)
स च्छिन्नधन्वा परिधं वज्रस्पर्शसमं युधि ।
आदाय चिक्षेप तदा द्रोणपुत्रः किरीटिने ॥ ८-६७-२० (५८२७९)
तमापन्ततं परिघं जाम्बूनदपरिष्कृतम् ।
चिच्छेद सहसा राजन्प्रहसन्निव पाण्डवः ॥ ८-६७-२१ (५८२८०)
स पपात तदा भूमौ निकृत्तः पार्थसायकैः ।
विकीर्णः पर्वतो राजन्यथा वज्रेण ताडितः ॥ ८-६७-२२ (५८२८१)
ततः क्रुद्धो महाराज द्रोणपुत्रो महारथः ।
ऐन्द्रेण चास्त्रवेगेन बीभत्सुं समवाकिरत् ॥ ८-६७-२३ (५८२८२)
तस्येन्द्रजालावततं समीक्ष्य
पार्थो राजन्गाण्डिवमाददे सः ।
ऐन्द्रं जालं प्रत्यहरत्तरस्वी
वरास्त्रमादाय महेन्द्रसृष्टम् ॥ ८-६७-२४ (५८२८३)
विदार्य तज्जालमथेन्द्रमुक्तं
पार्थस्ततो द्रौणिरथं क्षणेन ।
प्रच्छादयामास ततोऽभ्युपेत्य
द्रौणिस्तदा पार्थशराभिभूतः ॥ ८-६७-२५ (५८२८४)
विगाह्य तां पाण्डवबाणवृष्टिं

शरैः परं नाम ततः प्रकाश्य ।
शतेन कृष्णं सहसाभ्यविद्ध्या--
त्रिभिः शतैरर्जुनं क्षुद्रकाणाम् ॥ ८-६७-२६ (५८२८५)
ततोऽर्जुनः सायकानां शतेन
गुरोः सुतं मर्मसु निर्बिभेद ।
अश्वांश्च सूतं च तथा धनुर्ज्या--
मवाकिरत्पश्यतां तावकानाम् ॥ ८-६७-२७ (५८२८६)
स विद्ध्वा मर्मसु द्रौणिं पाण्डवः परवीरहा ।
सारथिं चास्य भल्लेन रथनीडादपातयत् ॥ ८-६७-२८ (५८२८७)
स सङ्गृह्य स्वयं वाहान्कृष्णौ प्राच्छदयच्छरैः ।
तत्राद्भुतमपश्याम द्रौणेराशु पराक्रमम् ॥ ८-६७-२९ (५८२८८)
संयच्छंस्तुरगान्यच्च फल्गुनं चाप्ययोधयत् ।
तदस्य समरे राजन्सर्वभूतान्यपूजयन् ॥ ८-६७-३० (५८२८९)
ग्तेनास्य समरे योधास्तुष्टुवुः सर्व एव ते ।
यदा निजगृहे पार्थो द्रोणपुत्रेण धन्विना ॥ ८-६७-३१ (५८२९०)
तदा प्रहस्य बीभत्सुर्द्रोणपुत्रस्य संयुगे ।
क्षिप्रं रश्मीनथाश्वानां क्षुरप्रैश्चिच्छिदे जयः ॥ ८-६७-३२ (५८२९१)
प्राद्रवंस्तुरगास्तस्य शरवेगप्रपीडिताः ।
ततोऽभून्निनदो घोरस्तव सैन्यस्य भारत ॥ ८-६७-३३ (५८२९२)
पाण्डवास्तु जयं लब्ध्वा तव सैन्यं समाद्रवन् ।
समन्तान्निशितान्बाणान्विमुञ्चन्तो जयैषिणः ॥ ८-६७-३४ (५८२९३)
तावकी चतुरङ्गैषा पाण्डवैस्तु महाचमूः ।
पुनःपुनरथो वीरैः प्रभग्ना जितकाशिभिः ॥ ८-६७-३५ (५८२९४)
पश्यतां ते महाराज पुत्राणां चित्रयोधिनाम् ।
शकुनेः सौबलेयस्य कर्णस्य च विशाम्पते ॥ ८-६७-३६ (५८२९५)
वार्यमाणा महासेना पुत्रैस्तव जनेश्वर ।
न चातिष्ठत सङ्ग्रामे पीड्यमाना समन्ततः ॥ ८-६७-३७ (५८२९६)
ततो योधैर्महाराज पलायद्भिः समन्ततः ।
अभवद्व्याकुलं भीतं पुत्राणां ते महद्बलम् ॥ ८-६७-३८ (५८२९७)
तिष्ठतिष्ठेति सततं सूतपुत्रस्य जल्पतः ।
नावतिष्ठति सा सेना वध्यमाना महात्मभिः ॥ ८-६७-३९ (५८२९८)
अथोत्क्रुष्टं महाराज पाण्डवैर्जितकाशिभिः ।
धार्तराष्ट्रबलं दृष्ट्वा विद्रुतं वै समन्ततः ॥ ८-६७-४० (५८२९९)
ततो दुर्योधनः कर्णमब्रवीत्प्रणयादिव ।
पश्य कर्ण महासेनां पाण्डवैरर्दितां भृशम् ॥ ८-६७-४१ (५८३००)
त्वयि तिष्ठति सन्त्रासात्समन्तात्प्रपलायते ।

एतज्ज्ञत्वा महाबाहो कुरु प्राप्तमरिन्दम ॥ ८-६७-४२ (५८३०१)
सहस्राणि च योधानां त्वामेव पुरुषोत्तम ।
क्रोशन्ते समरे वीर द्राव्यमाणानि पाण्डवैः ॥ ८-६७-४३ (५८३०२)
सञ्जय उवाच। ८-६७-४४क्ष् (४९९४)
एतच्छ्रुत्वा तु राधेयो दुर्योधनवचो महत् ।
मद्रराजमिदं वाक्यमब्रवीत्प्रहसन्निव ॥ ८-६७-४४ (५८३०३)
पश्य मे भुजयोर्वीर्यमस्त्राणां च जनेश्वर ।
अद्य हन्मि रणे सर्वान्पाञ्चालान्पाण्डुभिः सह ॥ ८-६७-४५ (५८३०४)
वाहयाश्वान्नरव्याघ्र मद्राधिप न संशयः ।
एवमुक्त्वा महाराज सूतपुत्रः प्रतापवान् ॥ ८-६७-४६ (५८३०५)
प्रगृह्य विजयं वीरो धनुःश्रेष्ठं पुरातनम् ।
सज्यं कृत्वा महाराज सम्मृज्य च पुनः पुनः ॥ ८-६७-४७ (५८३०६)
सन्निवार्य च तान्योधान्सत्येन शपथेन च ।
प्रायोजयदमेयात्मा भार्गवास्त्रं महाबलः ॥ ८-६७-४८ (५८३०७)
तस्माद्राजन्सहस्राणि प्रयुतान्यर्बुदानि च ।
कोटिशश्च शरास्तीक्ष्णा निरगच्छन्महामृधे ॥ ८-६७-४९ (५८३०८)
ज्वलितैस्तैः शरैर्घोरैः कङ्कबर्हिणवाजितैः ।
सञ्छन्ना पाण्डवी सेना न प्राज्ञायत किञ्चन ॥ ८-६७-५० (५८३०९)
हाहाकारो महानासीत्पाण्डवानां विशाम्पते ।
पीडितानां बलवता भार्गवास्त्रेण संयुगे ॥ ८-६७-५१ (५८३१०)
निपतद्भिर्गजै राजन्नश्वैश्चापि सहस्रशः ।
रथैश्चापि नरव्याघ्र नरैश्चैव समन्ततः ॥ ८-६७-५२ (५८३११)
प्राकम्पत मही राजन्निहतैस्तैः समन्ततः ।
व्याकुलं सर्वमभवत्पाण्डवानां महद्बलम् ॥ ८-६७-५३ (५८३१२)
कर्णस्त्वेको युधां श्रेष्ठो विधूम इव पावकः ।
दहञ्शत्रून्नरव्याघ्रः शुशुभे स परन्तपः ॥ ८-६७-५४ (५८३१३)
ते वध्यमानाः कर्णेन पाञ्चालाश्चेदिभिः सह ।
तत्र तत्र व्यमुह्यन्त वनदाहे यथा द्विपाः ॥ ८-६७-५५ (५८३१४)
चुक्रुशुश्च नरव्याघ्र यथाप्राणं नरोत्तमाः ।
तेषां तु क्रोशतां दीनं भीतानां रणमूर्धनि ॥ ८-६७-५६ (५८३१५)
धावतां च ततो राजंस्त्रस्तानां च समन्ततः ।
आर्तनादो बभूवात्र भूतानामिव सम्प्लुवे ॥ ८-६७-५७ (५८३१६)
वध्यमानांस्तु तान्दृष्ट्वा सूतपुत्रेण मारिष ॥
वित्रेसुः सर्वभूतानि तिर्यग्योनिगतान्यपि ॥ ८-६७-५८ (५८३१७)
ते वध्यमाताः समरे सूतपुत्रेण सृञ्जयाः ।
अर्जुनं वासुदेवं च क्रोशन्ति च मुहुर्मुहुः ।

प्रेतराजपुरे यद्वत्प्रेतराजं विचेतसः ॥ ८-६७-५९ (५८३१८)
श्रुत्वा तु निनदं तेषां वध्यतां कर्णसायकैः ।
अथाब्रवीद्वासुदेवं कुन्तीपुत्रो धनञ्जयः ।
भार्गवास्त्रं महाघोरं दृष्ट्वा तत्र समीरितम् ॥ ८-६७-६० (५८३१९)
पश्य कृष्ण महाबाहो भार्गवास्त्रस्य विक्रमम् ।
नैतदस्त्रं हि समरे शक्यं हन्तुं कथञ्चन ॥ ८-६७-६१ (५८३२०)
सूतपुत्रं च संरब्धं पश्य कृष्ण महारणे ।
अन्तकप्रतिमं वीर्ये कुर्वाणं कर्म दारुणम् ॥ ८-६७-६२ (५८३२१)
अभीक्ष्णं चोदयन्नश्वान्प्रेक्षते मां मुहुर्मुहुः ।
नच शक्ष्यामि कर्णस्य संयुगेऽहं पलायितुम् ॥ ८-६७-६३ (५८३२२)
जीवन्प्राप्नोति पुरुषः सङ्ख्ये जयपराजयौ ।
मृतस्य तु हृषीकेश भङ्ग एव कुतो जयः ॥ ८-६७-६४ (५८३२३)
एष कर्णो रणे भाति मध्याह्न इव भास्करः ।
निवर्तय रथं कृष्ण जीवन्भद्राणि पश्यति ॥ ॥ ८-६७-६५ (५८३२४)

इति श्रीमन्महाभारते कर्णपर्वणि सप्तद्वशदिवसयुद्धे
सप्तषष्टितमोऽध्यायः ॥ ६७ ॥

---

कर्नपर्व-अध्यय०६८
॥ श्रीः ॥
८.६८. अध्यायः ६८

Mahabharata - Karna Parva - Chapter Topics
कर्णबाणव्यथापनोदनाय युधिष्ठिरं शिबिरगतं विज्ञाय
शत्रुनिग्रहे भीमनियोजनपूर्वकमर्जुनेन सह श्रीकृष्णस्य
तत्समीपं प्रति गमनम् ॥ १ ॥

Mahabharata - Karna Parva - Chapter Text

८-६८-० (५८३२५)
सञ्जय उवाच। ८-६८-०क्ष् (४९९५)
ततो जनार्दनः श्रुत्वा तस्य वाक्यं विशाम्पते ।
रथेनापययौ क्षिप्रं सङ्ग्रामादिति भारत ॥ ८-६८-१ (५८३२६)
प्रत्यनीकमवस्थाप्य भीमं भीमपराक्रमम् ।
अलं विषहितुं ह्येष कुरूणां सम्प्रपश्यताम् ॥ ८-६८-२ (५८३२७)
कर्णं च समरे राजन्ग्राहयिष्यञ्श्रमं प्रति ।

विश्वमार्थं च कौरव्य पार्थस्य च महात्मनः ।
अपयातो रणाद्वीरो राजानं द्रष्टुमेव च ॥ ८-६८-३ (५८३२८)
अर्जुनं चाब्रवीत्कृष्णो भृशं राजा परिक्षतः ।
तमाश्वास्य कुरुश्रेष्ठ ततः कर्णं हनिष्यसि ॥ ८-६८-४ (५८३२९)
ततो धनञ्जयः श्रुत्वा राजानं शल्यपीडितम् ।
याहियाहिति बहुशो वासुदेवमचोदयत् ।
राजानं प्रति वार्ष्णेय दूयते मे दृढं मनः ॥ ८-६८-५ (५८३३०)
स चोद्यमानः पार्थेन केशिघ्नो वृष्णिनन्दनः ।
रथेनापययौ क्षिप्रं सङ्ग्रामाद्घोरदर्शनात् ॥ ८-६८-६ (५८३३१)
गच्छन्नेव तु कौन्तेयो धर्मराजदिदृक्षया ।
सैन्यमालोकयामास नापश्यत्तत्र चाग्रजम् ॥ ८-६८-७ (५८३३२)
युद्धं कृत्वा तु कौन्तेयो द्रोणपुत्रेण भारत ।
दुःसहं वज्रिणा सङ्ख्ये पराजित्य गुरोः सुतम् ॥ ८-६८-८ (५८३३३)
द्रौणिं पराजित्य ततोग्रधन्वा
कृत्वा महद्दुष्करं शूरकर्म ।
आलोकयामास ततः स्वसैन्यं
धनञ्जयः शत्रुभिरप्रधृष्यः ॥ ८-६८-९ (५८३३४)
संयुध्यमानान्पृतनामुखस्था--
ञ्शूरः शूरान्हर्षयन्सव्यसाची ।
पूर्वापदानैः प्रथितैः प्रशंस--
न्स्थितांश्चकारात्मरथाननीके ॥ ८-६८-१० (५८३३५)
अपश्यमानस्तु किरीटमाली
युधिष्ठिरं भ्रातरमाजमीढम् ।
उवाच भीमं तरसाभ्युपेत्य
राज्ञः प्रवृत्तिस्त्विह कुत्र चेति ॥ ८-६८-११ (५८३३६)
भीमसेन उवाच। ८-६८-१२क्ष् (४९९६)
अपयात इतो राजा धर्मपुत्रो युधिष्ठिरः ।
कर्णबाणाभितप्ताङ्गो यदि जीवेत्कथञ्चन ॥ ८-६८-१२ (५८३३७)
अर्जुन उवाच। ८-६८-१३क्ष् (४९९७)
तस्माद्भवाञ्शीघ्रमितः प्रयातु
ज्ञातुं प्रवृत्तिं पुरुषर्षभस्य ।
नूनं स विद्धोऽतिभृशं पृषत्कैः
कर्णेन राजा शिबिरं गतोऽसौ ॥ ८-६८-१३ (५८३३८)
यः सम्प्रहारैर्युधि सम्प्रवृत्ते
द्रोणेन विद्धोऽतिभृशं तरस्वी ।
तस्थौ स तत्रापि जयप्रतीक्षो

द्रोणेन यावन्न हतः किलासीत् ॥ ८-६८-१४ (५८३३९)
स संशयं गमितः पाण्डवाग्र्यः
सङ्ख्येऽद्य कर्णेन महानुभावः ।
ज्ञातुं प्रयाह्याशु तमद्य भीम
स्थास्याम्यहं शत्रुगणान्निरुध्य ॥ ८-६८-१५ (५८३४०)
भीमसेन उवाच। ८-६८-१६क्ष् (४९९८)
त्वमेव जानीहि महानुभाव
राज्ञः प्रवृत्तिं भरतर्षभस्य ।
अहं हि यद्यर्जुन याम्यमित्रा
वदन्ति मां भीत इति प्रवीराः ॥ ८-६८-१६ (५८३४१)
ततोऽब्रवीदर्जुनो भीमसेनं
संशप्तकाः प्रत्यनीकस्थिता मे ।
एतानहत्वाद्य मया न शक्य--
मितोपयातुं रिपुसङ्घमध्यात् ॥ ८-६८-१७ (५८३४२)
अथाब्रवीदर्जुनं भीमसेनः
स्ववीर्यमासाद्य कुरुप्रवीर ।
संशप्तकान्प्रतियोत्स्यामि सङ्ख्ये
सर्वानहं याहि धनञ्जय त्वम् ॥ ८-६८-१८ (५८३४३)
तद्भीमसेनस्य वचो निशम्य
धनञ्जयो भ्रातुरमित्रमध्ये ।
द्रष्टुं कुरुश्रेष्ठमभिप्रयास्य--
न्प्रोवाच वृष्णिप्रवरं तदानीम् ॥ ८-६८-१९ (५८३४४)
अर्जुन उवाच। ८-६८-२०क्ष् (४९९९)
ग्राजानं प्रति वार्ष्णेय दूयते मे दृढं मनः'।
चोदयाश्वान्हृषीकेश विहायैतद्बलार्णवम् ।
अजातशत्रुं राजानं द्रष्टुमिच्छामि केशव ॥ ८-६८-२० (५८३४५)
सञ्जय उवाच। ८-६८-२१क्ष् (५०००)
गतं रथ चोदयामास बीभत्सोर्वचनाद्धरिः'॥ ८-६८-२१ (५८३४६)
ततो हयान्सर्वदाशार्हमुख्यः
प्रचोदयन्भीममुवाच चेदम् ।
नैतच्चित्रं तव कर्माद्य भीम
यास्यावहे जहि पार्थारिसङ्घान् ॥ ८-६८-२२ (५८३४७)
ततो ययौ हृषीकेशो यत्र राजा युधिष्ठिरः ।
शीघ्राच्छीघ्रतरो राजन्वाजिभिर्गरुडोपमैः ॥ ८-६८-२३ (५८३४८)
प्रत्यनीके त्ववस्थाप्य भीमसेनमरिन्दमम् ।
सन्दिश्य चैनं राजेन्द्र युद्धं प्रति वृकोदरम् ॥ ८-६८-२४ (५८३४९)

ततस्तु गत्वा पुरुषप्रवीरौ
राजानमासाद्य शयानमेकम् ।
रथादुभौ प्रत्यवरुह्य तस्मा--
द्ववन्दतुर्धर्मराजस्य पादौ ॥ ८-६८-२५ (५८३५०)
ग्इत्येवमुपसङ्गृह्य उभौ तु पाञ्जली स्थितौ ।
शस्त्रक्षतौ महाराज रुधिरेण समुक्षितौ ।
निहत्य वाहिनीं तुभ्यमपयातौ रणाजिरात्'॥ ८-६८-२६ (५८३५१)
तं दृष्ट्वा पुरुषव्याघ्रं क्षेमिणं पुरुषर्षभम् ।
मुदाभ्यनन्दतां कृष्णावश्विनाविव वासवम् ॥ ८-६८-२७ (५८३५२)
तावभ्यनन्दद्राजापि विवस्वानश्विनाविव ।
हते महासुरे जम्भे शक्रविष्णू यथा गुरुः ॥ ८-६८-२८ (५८३५३)
मन्यमानो हतं कर्णं प्रीतः परपुरञ्जयः ।
ग्स भूत्वा पुरुषव्याघ्रो राजा तत्र युधिष्ठिरः'।
हर्षगद्गदया वाचा प्रीतः प्राह परन्तपः ॥ ॥ ८-६८-२९ (५८३५४)

इति श्रीमन्महाभारते कर्णपर्वणि सप्तदशदिवसयुद्धे
अष्टषष्टितमोऽध्यायः ॥ ६८ ॥
Mahabharata - Karna Parva - Chapter Footnotes

८-६८-९ ततोग्रधन्वा विस्तारितोग्रचापः ॥
८-६८-११ उवाच तं पप्रच्छ ॥
८-६८-२४ प्रत्यनीके शत्रुसैन्यरामीपे ॥
८-६८-६८ अष्टषष्टितमोऽध्यायः ॥

---

कर्नपर्व-अध्यय०६९
॥ श्रीः ॥
८.६९. अध्यायः ६९

Mahabharata - Karna Parva - Chapter Topics
युधिष्ठिरेण कर्णशरविक्षतस्यात्मनो दिदृक्षया स्वशिबिरमुपागतौ
कृष्णार्जुनौ दृष्ट्वा पार्थेन राधेयस्य वधभ्रमेण पार्थस्य
प्रशंसनम् ॥ १ ॥

Mahabharata - Karna Parva - Chapter Text

८-६९-० (५८३५५)

सञ्जय उवाच। ८-६९-०क्ष् (५००१)
श्अथोपयातौ पृथुलोहिताक्षौ
शराचिताङ्गौ रुधिरप्रदिग्धौ ।
समीक्ष्य सेनाग्रनरप्रवीरौ
युधिष्ठिरो वाक्यमिदं बभाषे ॥ ८-६९-१ (५८३५६)
ततो युधिष्ठिरो दृष्ट्वा सहितौ केशवार्जुनौ ।
हतमाधिरथिं मेने सङ्ख्ये गाण्डीवधन्वना ॥ ८-६९-२ (५८३५७)
तावभ्यनन्दत्कौन्तेयः साम्ना परमवल्गुना ।
स्मितपूर्वममित्रघ्न पूजयन्भरतर्षभ ॥ ८-६९-३ (५८३५८)
युधिष्ठिर उवाच। ८-६९-४क्ष् (५००२)
स्वागतं देवकीपुत्र स्वागतं ते धनञ्जय ।
प्रियं मे दर्शनं वाढं युवयोर्नरसिंहयोः ॥ ८-६९-४ (५८३५९)
अरिष्टयोरक्षतयोः कर्णं हत्वा महारथम् ।
आशीविपसमं युद्धे सर्वशस्त्रविशारदम् ॥ ८-६९-५ (५८३६०)
अग्रगं धार्तराष्ट्राणां सर्वेषां शर्म वर्म च ।
रक्षितं वृषसेनेन सुषेणेन च धन्विना ॥ ८-६९-६ (५८३६१)
अनुज्ञातं महावीर्यं रामेणास्त्रे सुदुर्जयम् ।
अग्र्यं सर्वस्य लोकस्य रथिनं लोकविश्रुतम् ॥ ८-६९-७ (५८३६२)
त्रातारं धार्तराष्ट्राणां गन्तारं वाहिनीमुखे ।
हन्तारं परसैन्यानाममित्रगणमर्दनम् ॥ ८-६९-८ (५८३६३)
दुर्योधनहिते युक्तमस्मद्दुःखाय चोद्यतम् ।
अप्रधृष्यं महायुद्धे देवैरपि सवासवैः ॥ ८-६९-९ (५८३६४)
अनलानिलयोस्तुल्यं तेजसा च बलेन च ।
पातालमिव गम्भीरं सुहृदां नन्दिवर्धनम् ॥ ८-६९-१० (५८३६५)
अन्तकं मम मित्राणां हत्वा कर्णं महामृधे ।
दिष्ट्या युवामनुप्राप्तौ हत्वाऽसुरमिवामरौ ॥ ८-६९-११ (५८३६६)
तेन युद्धमभीतेन मयाऽद्याप्यच्युतार्जुनौ ।
कृतं घोरं महाबाहू धृष्टद्युम्नस्य पश्यतः ।
अन्तकेनेव क्रुद्धेन प्रजाः सर्वा जिघांसता ॥ ८-६९-१२ (५८३६७)
तेन केतुश्च मे च्छिन्नो हतौ च पार्ष्णिसारथी ।
हतवाहः कृतश्चास्मि युयुधानस्य पश्यतः ॥ ८-६९-१३ (५८३६८)
धृष्टद्युम्नस्य यमयोर्वीरस्य च शिखण्डिनः ।
पश्यतां द्रौपदेयानां शतद्रोश्च महात्मनः ॥ ८-६९-१४ (५८३६९)
एताञ्जित्वा महावीर्यः कर्णः शत्रुगणान्बहून् ।
जितवान्मां महाबाहो यतमानो महारणे ॥ ८-६९-१५ (५८३७०)
अनुसृत्य च मां युद्धे परुषाण्युक्तवान्बहु ।

तत्र तत्र युधां श्रेष्ठ परिभूय न संशयः ॥ ८-६९-१६ (५८३७१)
भीमसेनप्रभावात्तु यज्जीवामि धनञ्जय ।
बहुनात्र किमुक्तेन हते सोढुं समुत्सहे ॥ ८-६९-१७ (५८३७२)
त्रयोदशाहं वर्षाणि यस्माद्भीतो धनञ्जय ।
न स्म निद्रां लभे रात्रौ न चाहनि सुखं क्वचित् ॥ ८-६९-१८ (५८३७३)
तस्य द्वेषेण संयुक्तः परिदह्ये धनञ्जय ।
आत्मनो मरणं जानन्वाध्रीणस इव द्विजः ॥ ८-६९-१९ (५८३७४)
तस्यायमगमत्कालश्चिन्तयानस्य मे चिरम् ।
कथं कर्णो मया शक्यो युद्धे क्षपयितुं भवेत् ॥ ८-६९-२० (५८३७५)
जाग्रत्स्वपंश्च कौन्तेय कर्णमेव स्मराम्यहम् ।
पश्यामि तत्रतत्रैव कर्णभूतमिदं जगत् ॥ ८-६९-२१ (५८३७६)
यत्र यत्र हि गच्छामि कर्णाद्भीतो धनञ्जय ।
तत्र तत्र हि पश्यामि कर्णमेवाग्रतः स्थितम् ॥ ८-६९-२२ (५८३७७)
सोऽहं तेनैव वीरेण समरेष्वपलायिना ।
सहयः सरथः पार्थ जित्वा जीवन्विसर्जितः ॥ ८-६९-२३ (५८३७८)
को नु मे जीवितेनार्थो राज्येनार्थो भवेत्पुनः ।
ममैवं विक्षतस्याद्य कर्णेनाहवशोभिना ॥ ८-६९-२४ (५८३७९)
न प्राप्तपूर्वं यद्भीष्मात्कृपाद्द्रोणाच्च संयुगे ।
तत्प्राप्तमद्य मे युद्धे सूतपुत्रान्महारथात् ॥ ८-६९-२५ (५८३८०)
स त्वां पृच्छामि कौन्तेय यथा न कुशलस्तथा ।
तन्ममाचक्ष्व कार्त्स्न्येन यथा कर्णो हतस्त्वया ॥ ८-६९-२६ (५८३८१)
शक्रतुल्यबलो युद्धे यमतुल्यः पराक्रमे ।
रामतुल्यस्तथास्त्रेषु स कथं ते निषूदितः ॥ ८-६९-२७ (५८३८२)
महारथसमाख्यातः सर्वयुद्धविशारदः ।
धनुर्धराणां प्रवरः सर्वेषां वै सदार्जुन ॥ ८-६९-२८ (५८३८३)
पूजितो धृतराष्ट्रेण सपुत्रेण विशाम्पते ।
त्वदर्थमेव राधेयः स कथं निहतस्त्वया ॥ ८-६९-२९ (५८३८४)
धार्तराष्ट्रस्य योद्धारः सर्व एव सदार्जुन ।
तव मृत्युं रणे कर्णं मन्यन्ते पुरुषर्षभ ॥ ८-६९-३० (५८३८५)
स त्वया पुरुषव्याघ्र कथं युद्धे निषूदितः ।
तन्ममाचक्ष्व कौन्तेय यथा कर्णो हतस्त्वया ॥ ८-६९-३१ (५८३८६)
सोत्सेधमस्य च शिरः पश्यतां सुहृदां हृतम् ।
त्वया पुरुषशार्दूल सिंहेनेव यथा रुरोः ॥ ८-६९-३२ (५८३८७)
सर्वा दिशः पर्यपतत्त्वदर्थं
त्वां सूतपुत्रः समरे परीप्सन् ।
दित्सन्नृणां शकटं रत्नपूर्णं

कथं त्वयासौ निहतोऽद्य कर्णः ॥ ८-६९-३३ (५८३८८)
त्वया रणे निहतः सूतपुत्रः
कच्चित्कृतं मे परमं त्वयाद्य
प्रियं रणे सूतपुत्रं निहत्य ॥ ८-६९-३४ (५८३८९)
सर्वा दिशः पर्यपतत्त्वदर्थं
मुदान्वितो गर्वितः सूतपुत्रः ।
स शूरमानी समरे समेत्य
कच्चित्त्वया निहतः सूतपुत्रः ॥ ८-६९-३५ (५८३९०)
राज्यं परं हस्तिगवाश्वयुक्तं
रथं दित्सुर्यः परेभ्यस्त्वदर्थे ।
त्वया रणे स्पर्धते यः स पापः
कच्चित्त्वया निहतः पापबुद्धिः ॥ ८-६९-३६ (५८३९१)
योऽसौ नित्यं शौर्यमदेन मत्तो
विकत्थते संसदि कौरवाणाम् ।
प्रीत्यर्थं वै तात सुयोधनस्य
कच्चित्स पापो निहतस्त्वयाद्य ॥ ८-६९-३७ (५८३९२)
कच्चित्समागम्य धनुःप्रमुक्तै--
स्त्वत्प्रेषितैर्लोहमयैर्विहंगैः ।
शेते भिन्नः पांसुषु सूतपुत्रः
कच्चिद्भग्नौ धार्तराष्ट्रस्य बाहू ॥ ८-६९-३८ (५८३९३)
योऽसौ सदा श्लाघते राजमध्ये
दुर्योधनं हर्षयन्दर्पयुक्तः ।
हन्ताऽस्मि सर्वानिति पाण्डुपुत्रा--
नहं हन्ता फल्गुनस्येति मोहात् ॥ ८-६९-३९ (५८३९४)
कच्चिद्वचोऽस्य वितथं त्वया कृतं
यत्तत्प्रियामवदत्तात कर्णः ।
सभामध्ये रूक्षमनेकरूपं
धिक्पाण्डवानपतिस्त्वं हि कृष्णे ॥ ८-६९-४० (५८३९५)
कच्चिद्ध्रुवं शत्रुरयं महात्मा
ह्यधारयद्द्वादश यः समास्तु ।
कर्णो व्रतं घोरममित्रसाहो
दुर्योधनस्यार्थनिविष्टबुद्धिः ॥ ८-६९-४१ (५८३९६)
पादौ न धावे यावदहं न हन्मि
धनञ्जयं समरेषूग्रवेगम् ।
कच्चिद्रणे फल्गुन तं निहत्य
कच्चिद्व्रतं तस्य भग्नं त्वयाऽद्य ॥ ८-६९-४२ (५८३९७)

योऽसौ कृष्णामब्रवीद्दुष्टबुद्धिः
कर्णः सभायां कुरुवीरमध्ये ।
किं पाण्डवांस्त्वं न जहासि कृष्णे
सुदुर्बलान्पतितान्हीनसत्वान् ॥ ८-६९-४३ (५८३९८)
योऽसौ कर्णः प्रत्यजानात्त्वदर्थे
नाहं हत्वा सह कृष्णेन पार्थम् ।
इहोपयातेति स पापबुद्धिः
कच्चिच्छेते शरसम्भिन्नगात्रः ॥ ८-६९-४४ (५८३९९)
कच्चित्सङ्ग्रामो विदितो वै तवायं
समागमे सृञ्जय कौरवाणाम् ।
येनावस्थामीदृशीं प्रापितोऽहं
कच्चित्त्वया सोऽद्य हतो दुरात्मा ॥ ८-६९-४५ (५८४००)
कच्चित्त्वया तस्य सुमन्दबुद्धे--
र्गाण्डीवमुक्तैर्विशिखैर्ज्वलद्भिः ।
सकुण्डलं भानुमदुत्तमाङ्गं
कायात्प्रकृत्तं युधि सव्यसाचिन् ॥ ८-६९-४६ (५८४०१)
यत्तन्मया बाणसमर्पितेन
ध्यातोऽसि कर्णस्य वधाय वीर ।
तन्मे त्वया कच्चिदमोघमद्य
ध्यानं कृतं कर्णनिपातनेन ॥ ८-६९-४७ (५८४०२)
यद्दर्पपूर्णः स सुयोधनोऽस्मा--
न्दिधक्षते कर्णसमाश्रयेण ।
कच्चित्त्वया सोऽद्य समाश्रयोऽस्य
भग्नः पराक्रम्य सुयोधनस्य ॥ ८-६९-४८ (५८४०३)
यो नः पुरा षण्ढतिलानवोच--
त्सभामध्ये कौरवाणां समक्षम् ।
स दुर्मतिः कच्चिदुपेत्य सङ्ख्ये
त्वया हतः सूतपुत्रोऽत्यमर्षी ॥ ८-६९-४९ (५८४०४)
यः प्राहिणोत्सूतपुत्रो दुरात्मा
कृष्णां जितां सौबलेहानयेति ।
स मन्दबुद्धिर्निहतः प्रसह्य
वैकर्तनस्त्वद्य कच्चिन्महात्मन् ॥ ८-६९-५० (५८४०५)
यः शस्त्रभृच्छ्रेष्ठतमं पृथिव्यां
पितामहं व्याक्षिपदल्पचेताः ।
सङ्ख्यायमानोऽर्धरथः स कच्चि--
त्त्वयां हतोऽद्याधिरथिर्महात्मन् ॥ ८-६९-५१ (५८४०६)

अमर्षजं निकृतिसमीरणेरितं
हृदि स्थितं ज्वलनमिमं सदा मम ।
हतो मया सोऽद्य समेत्य कर्ण
इति ब्रुवन्प्रशमयसेऽद्य फल्गुन ॥ ॥ ८-६९-५२ (५८४०७)

इति श्रीमन्महाभारते कर्णपर्वणि सप्तदशदिवसयुद्धे
एकोनसप्ततितमोऽध्यायः ॥ ६९ ॥
Mahabharata - Karna Parva - Chapter Footnotes

८-६९-५ अरिष्टयोः शुभयोः ॥
८-६९-७ अनुज्ञातं अनुगृहीतम् ॥
८-६९-१० अनलानिलयोरिति क्रमात्तेजोबलाभ्याम् ॥
८-६९-१३ अपसव्यः कृतश्चास्मि इति ख घ पाठः ॥
८-६९-१७ नाहं तं सोढुमुत्सहे इति क ङ पाठः ॥
८-६९-१९ कृष्णग्रीवो रक्तशिराः श्वेतपक्षो विहगमः । स वै
वाध्रीणसः प्रोक्तो याज्ञिकैः पितृकर्मणीति प्राञ्चः । वाघ्रीणस इव
द्विप इति झ पाठः ॥
८-६९-२६ यथा नः कुशलं तथा इति क ङ पाठः ॥
८-६९-३८ विहङ्गैर्वाणैः ॥
८-६९-३९ श्लाघते आत्मानमिति शेषः ॥
८-६९-४७ बाणेभ्यः समर्पितेन कर्णबाणैरत्यन्तं प्रविद्धेनेत्यर्थः ॥
८-६९-६९ एकोनसप्ततितमोऽध्यायः ॥

---

कर्नपर्व-अध्यय०७०
॥ श्रीः ॥
८.७०. अध्यायः ७०

Mahabharata - Karna Parva - Chapter Topics
अर्जुनेन स्ययुद्धानुवादपूर्वकं युधिष्ठिरम्प्रति कर्णवधप्रतिज्ञानम्
॥ १ ॥

Mahabharata - Karna Parva - Chapter Text

८-७०-० (५८४०८)
सञ्जय उवाच। ८-७०-०क्ष् (५००३)
तद्धर्मशीलस्य वचो निशम्य

राज्ञः क्रुद्धस्यातिरथो महात्मा ।
उवाच दुर्मर्षमदीनसत्वो
युधिष्ठिरं जिष्णुरनन्तवीर्यः ॥ ८-७०-१ (५८४०९)
द्रोणं हतं पार्थ कर्णो विदित्वा
भिन्नां नावविमावत्यगाधे कुरूणाम् ।
सम्मुह्यमानान्धार्तराष्ट्रान्विदित्वा
निरुत्साहांश्च विजये परेषाम् ॥ ८-७०-२ (५८४१०)
सोदर्यवत्त्वरितोऽमितौजा
उत्तारयिष्यन्धृतराष्ट्रस्य पुत्रान् ।
रणे रथेनाधिरथिर्महात्मा
ततो हि मां त्वरितः सोऽभ्यधावत् ॥ ८-७०-३ (५८४११)
संशप्तकैर्युध्यमानस्य मेऽद्य
सेनाग्रयायी कुरुसैन्यस्य राजन् ।
आशीविषाभान्विकिरञ्शरौघा--
न्द्रौणिः पुरस्तात्सहसाध्यतिष्ठत् ॥ ८-७०-४ (५८४१२)
स मे दृष्ट्वा शूरतमो ध्वजाग्रं
समादिशद्रथसङ्घाननेकान् ।
तेषामहं पञ्चशतं निहत्य
आसादयं द्रोणपुत्रं नदन्तम् ॥ ८-७०-५ (५८४१३)
स द्रोणपुत्रः सदृशं महात्मा
मामप्यरौत्सीत्तदनीकमध्ये ।
किरञ्शरौघान्बहुरूपान्विचित्रा--
न्स्वातीगतः शुक्र इवातिवर्षन् ॥ ८-७०-६ (५८४१४)
स मे रान्सर्वतः कङ्कपत्रा--
नवासृजद्वै पृथिवीप्रकाशान् ।
निवार्य तूर्णं परमाजिमध्ये
ततोऽपि मां बाणगणैः समार्पयत् ॥ ८-७०-७ (५८४१५)
आकर्षणं वापि विकृष्य मुक्तं
न दृश्यते तस्य महारथस्य ।
न सन्दधानः कुत आददानो
न व्याक्षिपन्न विकर्षन्विमुञ्चन् ॥ ८-७०-८ (५८४१६)
सव्येन वा यदि वा दक्षिणेन
न ज्ञायते कतरेणास्यतीति ।
आचार्यवत्समरे पर्यवर्त--
न्महच्चित्रं दर्शयन्सर्वतः स्म ॥ ८-७०-९ (५८४१७)
दृष्टीविषं चासुहरं परेषां

सर्वा दिशः पूरयानं शरौघैः ।
अलातचक्रप्रतिमं महात्मनः
सदा नतं कार्मुकं ब्रह्मबन्धोः ॥ ८-७०-१० (५८४१८)
ततोऽपरान्बाणगणाननेका--
नाकर्णपूर्णायतविप्रमुक्तान् ।
ससर्ज शीघ्रास्त्रबलेन वीर--
स्तोयं यथा प्रावृषि कालमेघः ॥ ८-७०-११ (५८४१९)
आविध्यन्मां पञ्चभिर्द्रोणपुत्रः
शितैः शरैः पञ्चभिर्वासुदेवम् ।
अभ्यघ्नं बाणैस्तमहं सुधारै--
र्निमेषमात्रेण सुवर्णपुङ्खैः ॥ ८-७०-१२ (५८४२०)
स निर्विद्धो विरथो द्रोणपुत्रो
रथानीकं चाधिरथेर्विवेश ।
मयाभिभूतान्स्वरथप्रबर्हा--
नस्त्रं च पश्यन्रुधिरप्रदिग्धम् ॥ ८-७०-१३ (५८४२१)
ततोऽभिभूतं युधि वीक्ष्य सैन्यं
विध्वस्तयोधं द्रुतनागयूथम् ।
पञ्चाशता रथमुख्यैः समेतः
कर्णस्त्वरन्नभ्यपतत्प्रमाथी ॥ ८-७०-१४ (५८४२२)
तान्सूदयित्वाऽहमपास्य कर्णं
द्रष्टुं भवन्तं त्वरयोपयातः ।
सर्वे पाञ्चाला ह्युद्विजन्ते स्म कर्णं
दृष्ट्वा गावः केसरिणं यथैव ॥ ८-७०-१५ (५८४२३)
मृत्योरास्यं व्यात्तमिवाभिपद्य
प्रभद्रकाः कर्णमासाद्य सर्वे ।
यास्यामि तांस्तारयिष्यन्बलौघा--
द्दिष्ट्या भवान्स्वस्तिमान्पार्थ दृष्टः ॥ ८-७०-१६ (५८४२४)
हनिष्येऽहं भारत सूतपुत्र--
मस्मिन्सङ्ग्रामे यदि दृश्यतेऽद्य ।
आयाहि पश्याद्य युयुत्समानौ
मां सूतपुत्रं च धृतौ रणाय ॥ ८-७०-१७ (५८४२५)
महाझषस्येव मुखं प्रपन्नाः
प्रभद्रकाः कर्णमुखं प्रपन्नाः ।
षट्साहस्रा भारत राजपुत्राः
स्वर्गाय लोकाय रणे निमग्नाः ॥ ८-७०-१८ (५८४२६)
तानद्य यास्यामि रणाद्विमोक्तुं

सर्वात्मना सूतपुत्रं च हन्तुम् ॥ ८-७०-१९ (५८४२७)
अथ प्रवीरेण महानुभाव
द्विषत्सैन्यं निर्दहन्विस्तरेण ।
समेत्याहं सूतपुत्रेण सङ्ख्ये
वज्रीव वृत्रेण नरेन्द्रमुख्य ॥ ८-७०-२० (५८४२८)
एवं गते किञ्च मयाऽद्य शक्यं
कार्यं कर्तुं निग्रहे सूतजस्य ।
तथैव राज्ञश्च सुयोधनस्य
ये चापि मां योद्धुकामाः समेताः ॥ ८-७०-२१ (५८४२९)
कर्णं न चेदद्य निहन्मि राज--
न्सबान्धवं युध्यमानं प्रसह्य ।
प्रतिश्रुत्याऽकुर्वतां या गतिर्वै
कष्टां यायां तामहं राजसिंह ॥ ८-७०-२२ (५८४३०)
आमन्त्रये त्वां ब्रूहि रणे जयं मे
पुरा भीमं धार्तराष्ट्रा ग्रसन्ति ।
सौतिं हनिष्यामि नरेन्द्रसिंह
सैन्यं तथा शत्रुगणांश्च सर्वान् ॥ ॥ ८-७०-२३ (५८४३१)

इति श्रीमन्महाभारते कर्णपर्वणि सप्तदशदिवसयुद्धे
सप्ततितमोऽध्यायः ॥ ७० ॥

---

कर्नपर्व-अध्यय०७१
॥ श्रीः ॥
८.७१. अध्यायः ७१

Mahabharata - Karna Parva - Chapter Topics
कर्णस्यामारणज्ञानाद्रुष्टेन युधिष्ठिरेण अर्जुनम्प्रति गर्हणपूर्वकं
कृष्णकरे गाण्डीवदानचोदना ॥ १ ॥

Mahabharata - Karna Parva - Chapter Text

८-७३-० (५८४३२)
सञ्जय उवाच। ८-७३-०क्ष् (५००४)
वैकर्तनं कुशलिनं निशम्य
क्रुद्धः पार्थः फल्गूनस्यामितौजाः ।
धनञ्जयं वाक्यमुवाच राजा

युधिष्ठिरः कर्णशराभितप्तः ॥ ८-७३-१ (५८४३३)
इमां च वसतिं हित्वा भयात्कर्णेन फल्गुन ।
अहं च भीमसेनश्च माद्रीपुत्रौ च पाण्डवौ ॥ ८-७३-२ (५८४३४)
वासुदेवेन सहिता वयं कर्णेन निर्जिताः ।
पुनरेव वनं गत्वा तपश्चर्यां च कुर्महे ।
अथवा धार्तराष्ट्राणां परिचर्यां चरामहे ॥ ८-७३-३ (५८४३५)
इत्येवमुक्त्वा बीभत्सुं रोषात्संरक्तलोचनः ।
अब्रवीत्पुनरेवात्र धर्मराजो युधिष्ठिरः ॥ ८-७३-४ (५८४३६)
इदं यदि द्वैतवने तु सूक्तं
कर्णं नियोद्धुं न सहे नृपेति ।
वयं ततः प्राप्तकालं यथाव--
त्कृत्वाऽभ्युपेक्षाम तथैव राज्यम् ॥ ८-७३-५ (५८४३७)
मयि प्रतिश्रुत्य वधं हि तस्य
बलस्य चार्धस्य तथैव युद्धे ।
आनीय मां शत्रुमध्ये स कस्मा--
त्समुन्नाम्य स्थण्डिले प्रत्यपिंष्ठाः ॥ ८-७३-६ (५८४३८)
अन्वास्य सत्येन यदात्थ पार्थ
सत्यं शपन्वासुदेवेन सार्धम् ।
तन्नः सत्यमफलं ह्यकार्षीः
फलस्य काले चाच्छिन्नः पुष्पवृक्षम् ॥ ८-७३-७ (५८४३९)
प्रच्छादितस्त्वं बालिश दुर्यशोभि--
रनर्थवाक्योऽस्यर्जुन नैव साधुः ।
त्यक्त्वा भीमं सर्वभीमेषु भीमं
संयोजितस्त्वं सूतपुत्रं निहन्तुम् ॥ ८-७३-८ (५८४४०)
यत्तद्वृथा वागुवाचान्तरिक्षे
सप्ताह्नि जाते त्वयि मन्दबुद्धौ ।
अपापीयान्वासवात्कुन्तिजातो
बहून्सङ्ग्रामानयमेव जेता ॥ ८-७३-९ (५८४४१)
अयं जेता पाण्डवो देवसङ्घान्
सर्वाणि भूतान्यपि चोत्तमौजाः ।
अयं जेता मद्रकलिङ्गजाता--
न्दैत्यांश्च रक्षांसि समागतानि ॥ ८-७३-१० (५८४४२)
भूमिं च सर्वां निखिलेन जेता
कुरूंश्च जेता स्वगणांश्च जेता ।
अस्मात्परो नो भविता धनुर्धरो
नैष्यन्न भूतः कश्चिदेनं विजेता ॥ ८-७३-११ (५८४४३)

इच्छन्नयं सर्वभूतानि कुर्या--
द्वशी वशे सर्वसमाप्तविद्यः ।
कान्त्या शशाङ्कस्य जवेन वायोः
स्थैर्येण मेरोः क्षमया पृथिव्याः ॥ ८-७३-१२ (५८४४४)
अग्नेश्च तापे धनदस्य लक्ष्म्या
शौर्येण शक्रस्य जयेन विष्णोः ।
तुल्यो महात्मा तव कुन्ति पुत्रो
जातोऽदितेर्विष्णुरिवामितौजाः ॥ ८-७३-१३ (५८४४५)
स्वेषां जयाय द्विषतां वधाय
जातो महात्मा तव नन्दिकर्ता ।
इत्यन्तरिक्षे शतशृङ्गमूर्ध्नि
तपस्विनां शृण्वतां वागुवाच ॥ ८-७३-१४ (५८४४६)
एवंविधस्त्वं न च भूतस्तथाद्य
देवाश्च नूनमनृतं वदन्ति ॥ ८-७३-१५ (५८४४७)
तथा परेषामृषिसत्तमानां
श्रुत्वा गिरः पूजयतां सदा त्वाम् ।
न सन्नतिं यामि सुयोधनस्य
न त्वां जानाम्याधिरथेर्भयार्तम् ॥ ८-७३-१६ (५८४४८)
त्वष्ट्रा कृतं वाहमकूजनाक्षं
शुभं समास्थाय कपिध्वजं तम् ।
खड्गं गृहीत्वा हेमचित्रावनद्धं
धनुर्वरं गाण्डिवं तालमात्रम् ।
त्वं वासुदेवेनोह्यमानः कथं नु
कर्णाद्भीतो व्यपयातोऽसि पार्थ ॥ ८-७३-१७ (५८४४९)
पूर्वं यदुक्तं हि सुयोधनेन
न फल्गुनः प्रमुखे स्थास्यतीति ।
कर्णस्य युद्धे हि महाबलस्य
मौर्ख्यात्तु तन्नावबुद्धं मयाऽसीत् ॥ ८-७३-१८ (५८४५०)
तेनाद्य तप्स्ये भृशमप्रमेयं
यन्मित्रवर्गो नरकं प्रविष्टः ।
तदैव वाच्योऽस्मि ननु त्वयाऽहं
न योत्स्येऽहं सूतपुत्रं कथञ्चित् ॥ ८-७३-१९ (५८४५१)
ततो नाहं सृञ्जयान्केकयांश्च
समानयेयं सुहृदो रणाय ॥ ८-७३-२० (५८४५२)
एवं गते किं च मयाऽद्य शक्यं
कार्यं कर्तुं निग्रहे सूतजस्य ।

तथैव राज्ञश्च सुयोधनस्य
ये वापि मां योद्धुकामाः समेताः ॥ ८-७३-२१ (५८४५३)
धिगस्तु मज्जीवितमद्य कृष्ण
योऽहं वशं सूतपुत्रस्य यातः ।
मध्ये कुरूणां समुयोधनानां
ये चाप्यन्ये योद्धुकामाः समेताः ॥ ८-७३-२२ (५८४५४)
एकः स मे भीमसेनोऽद्यं नाथो
येनाभिपन्नोऽस्मि रणे महाभये ।
विमोच्य मां चापि रुपान्वितस्ततः
शरेण तीक्ष्णेन बिभेद कर्णम् ॥ ८-७३-२३ (५८४५५)
त्यक्त्वा प्राणान्समरे भीमसेन--
श्चक्रे युद्धं कुरुमुख्यैः समेतैः ।
गदाग्रहस्तो रुधिरोक्षिताङ्ग--
श्चरन्रणे काल इवान्तकाले ॥ ८-७३-२४ (५८४५६)
असौ हि भीमस्य महानिनादो
मुहुर्महुः श्रूयते धार्तराष्ट्रैः ।
यदि स्म जीवेत्समरे निहन्ता
महारथानां प्रवरो नरोत्तमः ॥ ८-७३-२५ (५८४५७)
तवाभिमन्युस्तनयोऽद्य पार्थ
न चास्मि गन्ता समरे पराभवम् ।
अथापि जीवेत्समरे घटोत्कच--
स्तथाऽपि नाहं समरे पराङ्मुखः ॥ ८-७३-२६ (५८४५८)
भीमस्य पुत्रः समराग्रयायी
महास्त्रविन्नापि तवानुरूपः ।
यं तं xxx  साद्य रिपोर्बलं नो
निमीलिताक्षं भयविप्लुतं भवेत् ॥ ८-७३-२७ (५८४५९)
xxxxx  निशि युद्धमेक--
स्त्यक्सा रणं यत्व भयाद्रवन्ते ॥ ८-७३-२८ (५८४६०)
स चेत्समासाद्य महानुभावः
कर्णं रणे बाणगणैः प्रमोह्यः ।
धैर्ये स्थितेनापि च सूतजेन
शक्या हतो वासवदत्तया तया ॥ ८-७३-२९ (५८४६१)
ममैव भाग्यानि पुरा कृतानि
पापानि नूनं फलवन्ति युद्धे ।
तृणं च कृत्वा समरे भवन्तं
ततोऽहमेवं निकृतो दुरात्मना ।

वैकर्तनेनैव तथा कृतोऽहं
यथा ह्यशक्तः क्रियते त्वबान्धवः ॥ ८-७३-३० (५८४६२)
आपद्गतं यश्च नरो विमोक्षये--
त्स बान्धवः स्नेहयुतः सुहृच्च ।
एवं पुराणा ऋषयो वदन्ति
धर्मः सदा सद्भिरनुष्ठितश्च ॥ ८-७३-३१ (५८४६३)
खड्गं विभ्रज्जातरूपत्सरुं च
धनुर्वेदं गाण्डिवं तालमात्रम् ।
स केशवेनोह्यमानः कथं नु
कर्णात्पार्थस्त्वमपैतुं समैषीः ॥ ८-७३-३२ (५८४६४)
स गाण्डीवं केशवाय प्रदाय
यन्ता भवेस्त्वं यदि केशवस्य ।
ततस्तरेत्केशवः कर्णमुग्रं
मरुत्सस्वो वृत्रमिवात्तवज्रः ॥ ८-७३-३३ (५८४६५)
मासेऽपतिष्यो यदि पञ्चमे त्वं
न वा गर्भो यद्यभवः पृथायाः ।
मत्तः श्रेयान्राजपुत्रोऽभविष्य--
न्न ते यशः फल्गुन इत्यपेयात् ॥ ॥ ८-७३-३४ (५८४६६)

इति श्रीमन्महाभारते कर्णपर्वणि सप्तदशदिवसयुद्धे
एकसप्ततितमोऽध्यायः ॥ ७१ ॥

---

कर्नपर्व-अध्यय०७२
॥ श्रीः ॥
८.७२. अध्यायः ७२

Mahabharata - Karna Parva - Chapter Topics
xxxxxxxxxxxxxx तेन तन्निवेदनम् ॥ १ ॥
कृष्णेन वधप्रतिनिधित्वेन युधिष्ठिराधिक्षेपxxxxxxx ॥ २ ॥

Mahabharata - Karna Parva - Chapter Text

८-७२-० (५८४६७)
सञ्जय उवाच। ८-७२-०क्ष् (५००५)
युधिष्ठिरेणैxxxx क्तः कौन्तेयः श्वेतवाहनः ।
असिं जग्राह सङ्क्रुद्धो जिघांसुर्भरतर्षभम् ॥ ८-७२-१ (५८४६८)

तस्य कोपं समाज्ञाय चित्तज्ञः केशवस्तदा ।
उवाच किमिदं खङ्गं गृह्णास्यर्जुन शंम मे ॥ ८-७२-२ (५८४६९)
नेह पश्यामि योद्धव्यं त्वया किञ्चिद्धनञ्जय ।
नेहागता धार्तराष्ट्राः सर्वे भीमेन वारिताः ॥ ८-७२-३ (५८४७०)
उपागतोऽसि कौन्तेय राजा द्रष्टव्य इत्यसौ ।
स राजा भवता दृष्टः कुशली च युधिष्ठिरः ॥ ८-७२-४ (५८४७१)
तं दृष्ट्वा नृपशार्दूलं शार्दूलसमविक्रमम् ।
हर्षकाले च सम्प्राप्ते कस्मात्त्वां मन्युराविशत् ॥ ८-७२-५ (५८४७२)
न तं पश्यामि कौन्तेय यस्ते वध्यो भवेदिह ।
प्रहर्तुमिच्छसे कस्मात्किं वा ते चित्तविभ्रमः ॥ ८-७२-६ (५८४७३)
कस्माद्भवान्महाखङ्गं परिगृह्णात्यकारणात्। ८-७२-७ (५८४७४)
तत्त्वां पृच्छामि कौन्तेय किमिदं ते चिकीर्षितम् ।
परामृशसि यत्क्रुद्धः खङ्गमद्भुतविक्रम ॥ ८-७२-८ (५८४७५)
एवमुक्तः कटाक्षेण प्रेक्षमाणो युधिष्ठिरम् ।
अर्जुनः प्राह गोविन्दं क्रुद्धः सर्प इव श्वसन् ॥ ८-७२-९ (५८४७६)
अन्यस्मै देहि गाण्डीवमिति मां यः प्रचोदयेत् ।
भिन्द्यामहं तस्य शिर इत्युपांशु व्रतं मम ।
युधिष्ठिरेण तेनाहमुक्तश्चास्मि जनार्दन ॥ ८-७२-१० (५८४७७)
यदुक्तोऽहमदीनार्थं राज्ञाऽनेन यशस्विना ।
समक्षं तव गोविन्द न तत्क्षन्तुमिहोत्सहे ॥ ८-७२-११ (५८४७८)
तस्मादेनं विधिष्यामि राजानं धर्मचारिणाम् ।
प्रतिज्ञां पालयिष्यामि हत्वैनं नरसत्तमम् ॥ ८-७२-१२ (५८४७९)
एतदर्थं मया खह्गो गृहीतो यदुनन्दन ।
सोऽहं युधिष्ठिरं हत्वा सत्यस्यानृण्यतां गतः ।
विशोको विज्वरश्चापि भविष्यामि जनार्दन ॥ ८-७२-१३ (५८४८०)
किं वा त्वं मन्यसे प्राप्तमस्मिन्कार्य उपस्थिते ।
त्वमस्य जगतस्तात वेत्थ सर्वं गतागतम् ॥ ८-७२-१४ (५८४८१)
ग्जातस्त्वत्तो हि धर्मश्चाधर्मश्चेति परा श्रुतिः'।
तत्तथा प्रकरिष्यामि यथा मां वक्ष्यते भवान् ॥ ८-७२-१५ (५८४८२)
सञ्जय उवाच। ८-७२-१६क्ष् (५००६)
धिग्धिगित्येव गोविन्दः पार्थमुक्त्वाब्रवीत्पुनः ॥ ८-७२-१६ (५८४८३)
कृष्ण उवाच। ८-७२-१७क्ष् (५००७)
इदानीं पार्थ जानामि न वृद्धाः सेवितास्त्वया ।
अकाले पुरुषव्याघ्र संरम्भं यद्भवानगात् ॥ ८-७२-१७ (५८४८४)
न हि धर्मविगज्ञैरेवं कार्यं धनञ्जय ।
यथा त्वं पाण्डवाद्येह धर्मभीरुरण्डितः ॥ ८-७२-१८ (५८४८५)

योऽकार्याणां क्रियायाश्च संयोगं नावबुध्यते ।
कार्याणामक्रियायाश्च स पार्थ पुरुषाधमः ॥ ८-७२-१९ (५८४८६)
अनुसृत्य तु ये धर्मं कवयः समुपस्थिताः ।
समासविस्तरविदां न तेषां वेत्सि निश्चयम् ॥ ८-७२-२० (५८४८७)
अनिश्चयज्ञो हि नरः कार्याकार्यविनिश्चये ।
एवं स मुह्यत्यवशो यथा त्वं पार्थ मुह्यसि ॥ ८-७२-२१ (५८४८८)
न हि कार्यमकार्यं वा सुखं ज्ञातुं कथञ्चन ।
श्रुतेन ज्ञायते सर्वं तच्च त्वं नावहुध्यसे ॥ ८-७२-२२ (५८४८९)
अविज्ञानादिह भवान्सत्यं रक्षति धर्मवित् ।
प्राणिनां त्वं वधं पार्थ धार्मिको नावबुध्यसे ॥ ८-७२-२३ (५८४९०)
प्राणिनां हि वधात्तात वृथा धर्मो मतो मम ।
अनृतं तु भवेद्वाच्यं न तु हिंसा कदाचन ॥ ८-७२-२४ (५८४९१)
स कथं भ्रातरं ज्येष्ठं राजानं धर्मकोविदम् ।
हन्याद्भवान्नरश्रेष्ठ प्राकृतोऽन्यः पुमानिव ॥ ८-७२-२५ (५८४९२)
अयुध्यमानस्य गुरोस्तथाऽशत्रोश्च मानद ।
पराङ्मुखस्य द्रवतः शरणं चापि गच्छतः ॥ ८-७२-२६ (५८४९३)
कृताञ्जलेः प्रपन्नस्य प्रमत्तस्य तथैव च ।
न वधः पूज्यते सद्भिस्तच्च सर्वं गुरौ तव ॥ ८-७२-२७ (५८४९४)
त्वया चैतद्व्रतं पार्थ बालेनेव कृतं पुरा ।
तस्मादधर्मसंयुक्तं मौर्ख्यादिव व्यवस्यसि ॥ ८-७२-२८ (५८४९५)
स्वगुरुं पार्थ कस्मात्त्वं हन्तुकामोऽभिधावसि ।
असम्प्रधार्य धर्माणां गतिं सूक्ष्मां दुरत्ययाम् ॥ ८-७२-२९ (५८४९६)
इदं धर्मरहस्यं च तव वक्ष्यामि पाण्डव ।
यद्ब्रूयात्तव भीष्मो वा राजा वापि युधिष्ठिरः ॥ ८-७२-३० (५८४९७)
विदुरो वा पुनः क्षत्ता गान्धारी वा यशस्विनी ।
कुन्ती वा भरतश्रेष्ठ द्रौपदी वा यशस्विनी ।
तत्ते वक्ष्यामि तत्त्वेन निबोधैतद्धनञ्जय ॥ ८-७२-३१ (५८४९८)
सत्यस्यं वचनं साधु न सत्याद्विद्यते परम् ।
सुदुर्विदं हि तत्त्वेन तत्सत्यमिति मे सतिः ॥ ८-७२-३२ (५८४९९)
भवेत्सत्यमवक्तव्यं वक्तव्यमनृतं भवेत् ।
यत्रानृतं भवेत्सत्यं सत्यं चाप्यनृतं भवेत् ॥ ८-७२-३३ (५८५००)
विवाहकाले रतिसम्प्रयोगे
प्राणात्यये सर्वत्रनापहारे ।
विप्रस्य चार्थे ह्यनृतं वदेत
पञ्चानृतान्याहुरपातकानि ॥ ८-७२-३४ (५८५०१)
सर्वस्वस्यापहारे तु वक्तव्यमनृतं भवेत् ॥

तत्रानृतं भवेत्सत्यं सत्यं चाप्यनृतं भवेत् ॥ ८-७२-३५ (५८५०२)
तादृशो हन्यते बालो यस्य सत्यमनिश्चितम् ।
सत्यानृते विनिश्चित्य ततो भवति धर्मवित् ॥ ८-७२-३६ (५८५०३)
किमाश्चर्यं कृतप्रज्ञः पुरुषोऽपि सुदारुणः ।
सुमहत्प्राप्नुयात्पुण्यं बलाकोऽन्धवधादिव ॥ ८-७२-३७ (५८५०४)
किमाश्चर्यं पुनर्मूढो धर्मकामो ह्यपण्डितः ।
सुमहत्प्राप्नुयात्पापमापगास्विव कौशिकः ॥ ८-७२-३८ (५८५०५)
अर्जुन उवाच। ८-७२-३९क्ष् (५००८)
आचक्ष्व भगवन्नेतद्यथा विन्दाम्यहं तथा ।
वलाकस्यानुसम्बद्धं नदीनां कौशिकस्य च ॥ ८-७२-३९ (५८५०६)
वासुदेव उवाच। ८-७२-४०क्ष् (५००९)
मृगव्याधोऽभवत्कश्चिद्बलाको नाम भारत ।
यात्रार्थं पुत्रदाराणां मृगान्हन्ति न कामतः ॥ ८-७२-४० (५८५०७)
वृद्धौ च मातापितरौ बिभर्त्यन्यांश्च संश्रितान् ।
स्वधर्मनिरतो नित्यं संविभज्यानसूयकः ॥ ८-७२-४१ (५८५०८)
स कदाचिन्मृगप्रेप्सुर्नान्वविन्दन्मृगं क्वचित् ।
अथापश्यत्स पीवानं श्वापदं घ्राणचक्षुषम् ॥ ८-७२-४२ (५८५०९)
अदृष्टपूर्वमपि तत्सत्वं तेन हतं तदा ।
अन्धे हते ततो व्योम्नः पुष्पवर्षं पपात च ॥ ८-७२-४३ (५८५१०)
अप्सरोगीतवादित्रैर्नादितं च मनोरमम् ।
विमानमगमत्स्वर्गान्मृगव्याधनिनीषया ॥ ८-७२-४४ (५८५११)
तद्भूतं सर्वभूतानामभावाय किलार्जुन ।
तपस्तप्त्वा वरं प्राप्तं कृतमन्धं स्वयम्भुवा ॥ ८-७२-४५ (५८५१२)
तद्धत्वा सर्वभूतानामभावकृतनिश्चयम् ।
बलाकोऽगात्स्वर्गलोकमेवं धर्मः सुदुर्विदः ॥ ८-७२-४६ (५८५१३)
कौशिकोऽप्यभवद्विप्रस्तपस्वीनो बहुश्रुतः ।
नदीनां सङ्गमे ग्रामाददूरे स किलावसत् ॥ ८-७२-४७ (५८५१४)
सत्यं मया सदा वाच्यमिति तस्याभवद्व्रतम् ।
सत्यवादीति विख्यातः स तदासीद्धनञ्जय ॥ ८-७२-४८ (५८५१५)
अथ दस्युभयात्केचित्तदा तद्वनमाविशन् ।
तत्रापि दस्यवः क्रुद्धास्तानमार्गन्त यत्नतः ॥ ८-७२-४९ (५८५१६)
अथ कौशिकमभ्येत्य प्रोचुस्ते सत्यवादिनम् ।
कतरेण पथा याता भगवन्निति वै जनाः ।
सत्येन पृष्टः प्रब्रूहि यदि तद्वेत्थ शंस नः ॥ ८-७२-५० (५८५१७)
श्रीकृष्ण उवाच। ८-७२-५१क्ष् (५०१०)
सत्यस्य त्वविभागज्ञः सत्यं तेभ्यः शशंस ह ।

बहुवृक्षलतागुल्ममेतद्गहनमाश्रिताः ।
इति तान्व्यापयामास तेभ्यस्तत्त्वं स कौशिकः ॥ ८-७२-५१ (५८५१८)
ततस्ते तान्समासाद्य क्रूरा जघ्नुरिति श्रुतिः ।
ततोऽधर्मेण महता वाग्दुरुक्तेन कौशिकः ॥ ८-७२-५२ (५८५१९)
गतः सुकष्टं निरयं धर्मसूक्ष्मेष्वतत्त्ववित् ।
दृष्टपूर्वश्रुतो मूढो धर्माणामविशारदः ॥ ८-७२-५३ (५८५२०)
वृद्धानपृच्छन्सन्देहानन्धः श्वभ्रमिवर्च्छति ॥ ८-७२-५४ (५८५२१)
तत्र ते लक्षणोद्देशः कश्चिदेव भविष्यति ।
दुष्करं प्रतिसंख्यानं कात्स्न्र्येनात्र व्यवस्थितिः ॥ ८-७२-५५ (५८५२२)
सत्यं धर्म इति ह्येके वदन्ति बहवो जनाः ।
न च पार्थाभ्यसूयामि नैतत्सर्वत्र शिष्यते ॥ ८-७२-५६ (५८५२३)
श्रुतिस्तु धार्या इत्येके वदन्ति बहवो जनाः ।
न त्वेतत्प्रत्यसूयामि तत्र सर्वं विधीयते ॥ ८-७२-५७ (५८५२४)
यत्स्यादहिंसासंयुक्तं स धर्म इति निश्चयः ।
अहिंसार्थाय हिंस्राणां धर्मप्रवचनं कृतम् ।
धारणाद्धर्ममित्याहुर्धर्मो धारयते प्रजाः ॥ ८-७२-५८ (५८५२५)
प्रभवार्थाय भूतानां धर्मप्रवचनं कृतम् ।
यस्मात्प्रभवसंयुक्तः स धर्म इति निश्चयः ॥ ८-७२-५९ (५८५२६)
येऽन्यायेन जिगीषन्तो धर्मं पृच्छन्ति मानवाः ।
अकूजनेन चेन्मोक्षो नात्र कूजेत्कथञ्चन ॥ ८-७२-६० (५८५२७)
अवश्यं कूजितव्ये ह शङ्केरन्वाप्यकूजनात् ।
येऽन्यायेन जिहीर्षन्तो धर्मं पृच्छन्ति कस्यचित् ।
श्रेयस्तत्रानृतं वक्तुं सत्यादिति विनिश्चितम् ॥ ८-७२-६१ (५८५२८)
प्राणात्यये विवाहे वा सर्वजात्या महाभये ।
सर्वस्वस्य च लोपे वा वक्तव्यमनृतं भवेत् ॥ ८-७२-६२ (५८५२९)
अधर्मं हि न पश्यन्ति मृषोद्यं तत्र पण्डिताः ।
सर्वथाऽभिवदेत्तत्तु नानृतं स्याद्विचक्षणः ॥ ८-७२-६३ (५८५३०)
यः स्तेनैः सह सम्बन्धो मुच्यते शपथादपि ।
भवेत्तत्रानृतं श्रेयः सत्यादिति विचारितम् ॥ ८-७२-६४ (५८५३१)
न च तेभ्यो धनं देयं सत्यादिति कथञ्चन ।
पापेभ्योऽपि धनं दत्तं दातारमपि पीडयेत् ।
तस्माद्धर्मार्थमनृतमुक्त्वा नानृतवाग्भवेत् ॥ ८-७२-६५ (५८५३२)
एष ते लक्षणोद्देशो मयोद्दिष्टो यथाविधि ।
एतज्ज्ञात्वा ब्रूहि पार्थ यदि वध्यो युधिष्ठिरः ॥ ८-७२-६६ (५८५३३)
अर्जुन उवाच। ८-७२-६७क्ष् (५०११)
यथा ब्रूयान्महाप्राज्ञो यथा ब्रूयान्महायशाः ॥ ८-७२-६७ (५८५३४)

सुहृद्ब्रूयाद्यथाऽस्माकं तथोक्तं वचनं त्वया ।
भवान्मातृसमोऽस्माकं भवान्पितृसमोऽपि च ।
गतिश्च परमा कृष्ण त्वमेव च परायणम् ॥ ८-७२-६८ (५८५३५)
न हि ते त्रिषु लोकेषु विद्यतेऽविदितं क्वचित् ।
तस्माद्भवान्परं धर्मं वेद सर्वं यथातथम् ॥ ८-७२-६९ (५८५३६)
अवध्यं पाण्डवं मन्ये धर्मराजं युधिष्ठिरम् ।
अधर्मयुक्ते संयोगे ब्रूहि किञ्चिदनुग्रहम् ॥ ८-७२-७० (५८५३७)
इदं चापरमत्रैव ब्रूहि तत्त्वं विवक्षितम् ॥ ८-७२-७१ (५८५३८)
जानासि दाशार्ह मम व्रतं तु
यो मां ब्रूयात्कश्चन मानुषेषु ।
अन्यस्मै त्वं गाण्डिवं देहि पार्थ
यो मत्तोऽस्त्रे वीर्यतो वा विशिष्टः ॥ ८-७२-७२ (५८५३९)
हन्यामहं केशव तं प्रसह्य
भीमो हन्यात्तूवरकेति चोक्तः ।
वन्मां राजा ह्युक्तवांस्ते समक्षं
धनुर्देहीत्यसकृद्वृष्णिवीरे ॥ ८-७२-७३ (५८५४०)
तं हन्यां चेत्केशव जीवलोके
स्थाता नाहं कालमप्यल्पमात्रम् ।
ध्यात्वा नूनं ह्येनसा चापि मुक्तो
वधं राज्ञो भ्रष्टवीर्यो विचेताः ॥ ८-७२-७४ (५८५४१)
यथा प्रतिज्ञा मम लोकबुद्धौ
भवेत्सत्या धर्मभृतां वरिष्ठ ।
यथा जीवत्पाण्डवोऽहं च कृष्ण
तथा बुद्धिं दातुमप्यर्हसि त्वम् ॥ ८-७२-७५ (५८५४२)
वासुदेव उवाच। ८-७२-७६क्ष् (५०१२)
राजा श्रान्तो विक्षतो दुःखितश्च
कर्णेन सङ्ख्ये निशितैर्बाणसङ्घैः ।
यश्चानिशं सूतपुत्रेण वीर
शरैर्भृशं ताडितो युध्यमानः ॥ ८-७२-७६ (५८५४३)
अतस्त्वमेतेन सरोषमुक्तो
दुःखान्वितेनेदमयुक्तरूपम् ।
अकोपितो ह्येष यदि स्म सङ्ख्ये
कर्णं न हन्यादिति चाब्रवीत्सः ॥ ८-७२-७७ (५८५४४)
जानाति तं पाण्डव एष चापि
पापं लोके कर्णमसह्यमन्यैः ।
ततस्त्वमुक्तो भृशरोषितेन

राज्ञा समक्षं परुषाणि पार्थ ॥ ८-७२-७८ (५८५४५)
नित्योद्युक्ते सततं चाप्रसह्ये
कर्णे द्यूतं ह्यद्य रणे निबद्धम् ।
तस्मिन्हते कुरवो निर्जिताः स्यु--
रेवं बुद्धिः पार्थिवे धर्मपुत्रे ॥ ८-७२-७९ (५८५४६)
ततो बधं नार्हति धर्मपुत्र--
स्त्वया प्रतिज्ञाऽर्जुन पालनीया ।
जीवन्नयं येन मृतो भवेद्धि
तन्मे निबोधेह तवानुरूपम् ॥ ८-७२-८० (५८५४७)
यदा मानं लभते माननार्ह--
स्तदा स वै जीवति जीवलोके ।
यदाऽवमानं लभते महान्तं
तदा जीवन्मृत इत्युच्यते सः ॥ ८-७२-८१ (५८५४८)
सम्मानितः पार्थिवोऽयं सदैव
त्वया च भीमेन तथा यमाभ्याम् ।
वृद्धैश्च लोके पुरुषैश्च शूरै--
स्तस्यापमानं कलया प्रयुङ्क्ष्व ॥ ८-७२-८२ (५८५४९)
त्वमित्यत्रभवन्तं हि ब्रूहि पार्थ युधिष्ठिरम् ।
त्वमित्युक्तो हि निहतो गुरुर्भवति भारत ॥ ८-७२-८३ (५८५५०)
एवमाचर कौन्तेय धर्मराजे युधिष्ठिरे ।
अधर्मयुक्तं संयोगं कुरुष्वैनं कुरूद्वह ॥ ८-७२-८४ (५८५५१)
अथर्वाङ्गिरसी ह्येषा श्रुतीनामुत्तमा श्रुतिः ।
अविचार्यैव कार्यैषा श्रेयस्कामैर्नरैः सदा ॥ ८-७२-८५ (५८५५२)
अवधेन वधः प्रोक्तो यद्गुरुस्त्वमिति प्रभुः ।
तद्ब्रूहि त्वं यन्मयोक्तं धर्मराजस्य धर्मवित् ॥ ८-७२-८६ (५८५५३)
यदा ह्यं पाण्डव धर्मराज--
सत्वत्तोऽयुक्तं लप्स्यते चैव साधु ।
ततोऽस्य पादावभिवाद्य पश्चा--
च्छ्रेयो ब्रूयात्सान्त्वयुक्तं हितं च ॥ ८-७२-८७ (५८५५४)
भ्राता प्राज्ञस्तव कोपं न जातु
कुर्याद्राजा धर्ममार्गानुसारी ।
मुक्तोऽनृताद्भातृवधाच्च पापा--
द्धृष्टः कर्णं त्वं जहि पार्थ पश्चात् ॥ ॥ ८-७२-८८ (५८५५५)

इति श्रीमन्महाभारते कर्णपर्वणि सप्तदशदिवसयुद्धे
द्विसप्ततितमोऽध्यायः ॥ ७२ ॥

८-७२-२२ सुखं अनधीत्येत्यर्थः । श्रुतेन शास्त्रेण ॥
८-७२-२६ अशत्रोः अशातनीयस्य अवध्यस्य ॥
८-७२-४७ तपस्वीनः तपस्विनामिनः श्रेष्ठः ॥
८-७२-५२ यथा चाल्पश्रुतो मूढो धर्माणामविभागवित्
। वृद्धानपृष्ट्वा सन्देहं महच्छ्वभ्रमिहार्हति। इति ङ। पाठः ॥
८-७२-५७ तत्र ते लक्षणोद्देशात्कश्चिदत्र भविष्यति इति
कङ पाठः । दुष्करं परमं ज्ञानं तर्केणानुव्यवस्याति इति
ङ पाठः। दुष्करं प्रतिसङ्ख्यानं कात्स्न्येंनास्य व्यवस्यति इति
व घङ पाठः। श्रुतेर्धर्म इति ह्येके इति ङ पाठः ॥
८-७२-६२ प्राणात्यये विधाहे वा सर्वज्ञातिवधात्यये
। नर्मण्यभिप्रवृत्ते वा न च प्रोक्तं मृषा भवेत् इति
झ ङ पाठः ॥
८-७२-६३ अधर्मं नात्र पश्यन्ति धर्मतत्वार्थदर्शिनः इति ङ पाठः ॥
८-७२-६४ यः स्तेनैः सह सम्बन्धान्मुच्यते शपथैरपि
। श्रेयस्तत्रानृतं वक्तुं तत्सत्यमविचारितम्। इति ङ। पाठः ॥
८-७२-६५ शक्ये सति कथञ्चन इति ङ । पाठः ॥
८-७२-७० अनुग्रहं अवधेन प्रतिज्ञारक्षणम् ॥
८-७२-७४ तं हन्यामिति स्थाता न न स्थास्ये । एनसा मुक्तोपि
कृतप्रायश्चित्तोऽपि न स्थास्ये इत्यर्थः। किं कृत्वा राज्ञो वधं
ध्यात्वा ॥
८-७२-७८ समक्षं आवयोरिति शेषः ॥
८-७२-७९ कर्णे पणीकृते । द्युतं युद्धरूपम् ॥
८-७२-८३ अत्र भवन्तं मान्यं त्वमिति ब्रूहि ॥
८-७२-८४ एवं पूज्यावमानरूपं संयोगं आत्मनानुष्ठितं कुरुष्व ॥
८-७२-८६ यत् गुरुस्त्वमिति प्रोक्तस्तत् अवधेन शंस्त्रपातनमन्तरेणैव
वधः वधकरं भवतीत्यर्थः ॥
८-७२-७२ द्विसप्ततितमोऽध्यायः ॥

---

कर्नपर्व-अध्यय०७३
॥ श्रीः ॥
८.७३. अध्यायः ७३

Mahabharata - Karna Parva - Chapter Topics
युधिष्ठिराधिक्षेपादात्मवधोद्यतं पार्थं प्रति कृष्णेन

तत्प्रतिनिधितया आत्मप्रशंसनचोदना ॥ १ ॥
अर्जुनेनात्मप्रशंसनानन्तरं युधिष्ठिरक्षमापनम् ॥ २ ॥

Mahabharata - Karna Parva - Chapter Text

८-७३-० (५८५५६)
सञ्जय उवाच। ८-७३-०क्ष् (५०१३)
इत्येवमुक्तस्तु जनार्दनेन
पार्थः प्रशस्याथ सुहृद्वचस्तत् ।
ततोऽब्रवीदर्जुनो धर्मराज--
मनुक्तपूर्वं परुषं प्रसह्य ॥ ८-७३-१ (५८५५७)
मा त्वं राजन्व्याहरस्वाद्य पापं
त्वं तिष्ठसि क्रोशमात्रे व्यपेत्य ।
भीमस्तु मामर्हति गर्हणाय
यो युध्यते सर्वलोकप्रवीरैः ॥ ८-७३-२ (५८५५८)
काले हि शत्रून्परिपीड्य वीरो
हत्वा प्रवीरान्वसुधाधिपानाम् ।
रथप्रधानोत्तमनागमुख्या
युधिप्रवीरा निहताश्च शूराः ॥ ८-७३-३ (५८५५९)
सुदुष्करं कर्म करोति भीमः
कर्तुं यथा नार्हति कश्चिदन्यः ।
रथादवस्कन्द्य गदां परामृशं--
स्तथा रणे हन्ति तथैव वारणान् ॥ ८-७३-४ (५८५६०)
स कुञ्जराणामधिकं सहस्रं
हत्वा नदंस्तुमुलं सिंहनादम् ।
काम्भोजवानायुजपार्वतीया--
नीहामृगाभान्विनिहत्य वाजिनः ॥ ८-७३-५ (५८५६१)
महारथान्दविरदाञ्शैलकल्पा--
न्सहेत यः कुञ्जरान्वध्यमानान् ।
असौ भीमो धार्तराष्ट्रेषु मग्नः
स मामुपालब्धुमरिन्दमोऽर्हति ॥ ८-७३-६ (५८५६२)
वरासिना चाथ नराश्वकुञ्जरां--
स्तथा रथाङ्गैर्धनुषा च हन्त्यरीन् ।
प्रमृद्य पद्भ्यामहितांस्तु हन्ति
पुनश्च दोर्भ्यां शतमन्युविक्रमः ॥ ८-७३-७ (५८५६३)
महाबलो वैश्रवणान्तकोपमः

प्रसह्य हर्ता द्विषतां यशांसि ।
स भीमसेनोऽर्हति गर्हणाय
न त्वं नित्यं रक्ष्यमाणः सुहृद्भिः ॥ ८-७३-८ (५८५६४)
कलिङ्गवङ्गाङ्गनिपादमागधा--
न्सदा महाशैलवलाहकोपमान् ।
निहन्ति यः शत्रुगणाननेकशः
स मां हि वक्तुं प्रभवत्यमानगसम् ॥ ८-७३-९ (५८५६५)
संयुक्तमास्थाय रथं हि काले
धनुर्विधून्वञ्छरपूर्णमुष्टिः ।
सृजेच्च यो बाणसङ्घान्परेषु
महाबलो मेघ इवाम्बुधाराः ॥ ८-७३-१० (५८५६६)
शतान्यष्टौ वारणानामदर्शय--
द्विशातितैः कुम्भघटाग्रहस्तैः ।
यो भीमसेनो निहतारिसङ्घः
स मामुपालब्धुमरिन्दमोऽर्हति ॥ ८-७३-११ (५८५६७)
रथाश्च नागाश्च हयाश्च राज--
न्भीमेनाजौ निहताः सङ्घशोऽद्य ।
राजानश्च बहवो महाबलाः
स मामुपालब्धुमरिन्दमोऽर्हति ॥ ८-७३-१२ (५८५६८)
धृतराष्ट्रपुत्रा बलिनश्च येन
महाबला निहताः प्रायशो वै ।
शूरो युद्धे ह्यप्रतिवार्यवीर्यः
स मामुपालब्धुमरिन्दमोऽर्हति ॥ ८-७३-१३ (५८५६९)
प्रतापयंस्तद्बलमुग्ररूपं
योऽसौ रमे धार्तराष्ट्रस्य वीरः ।
एकः सहेताप्रतिसह्यपौरुष--
स्तेनास्मि वाच्यो न त्वया वै कदाचित् ॥ ८-७३-१४ (५८५७०)
महारथा यत्र यत्रैव युद्धे
भिन्दन्ति सैन्यं तव कामतोऽद्य ।
तत्रैव तत्रैव रणे महात्मा
दृढं भीमः परसङ्घानमृद्नात् ॥ ८-७३-१५ (५८५७१)
तेनास्मि वाच्यो न त्वया हं कदाचि--
न्मा मा वोचः क्रूरमिहाद्य पार्थ ।
नास्मद्विधो वै भवता तु वाच्यो
यथा भवान्सर्वलोकस्य वाच्यः ॥ ८-७३-१६ (५८५७२)
एवं हि मा ते ब्रुवतो नरेन्द्र

कथं न दीर्येच्छतधाऽद्य जिह्वा ।
अहो बतेदं सुनृशंसरूपं
कामादवोचस्त्वमिहाद्य यद्वै ॥ ८-७३-१७ (५८५७३)
बलं न वाधिष्ठितं सत्तमानां
यत्क्षत्रियाणां बहुलं वदन्ति ।
त्वं चाबलो भारत निष्ठुरोऽसि
त्वमेव मां वेत्सि यथाविधोऽहम् ॥ ८-७३-१८ (५८५७४)
नकुलेन राजन्गजवाजियोधा
हताश्च वीराः सहसा समेत्य ।
त्यक्त्वा प्राणान्समरे युद्धकाङ्क्षी
स मामुपालब्धुमरिन्दमोऽर्हति ॥ ८-७३-१९ (५८५७५)
कृतं कर्म सहदेवेन दुष्करं
यो युध्यते परसैन्यावमर्दी ।
न चाब्रवीत्किञ्चिदिहागतो बली
पश्यान्तरं तस्य चेवात्मनश्च ॥ ८-७३-२० (५८५७६)
धृष्टद्युम्नः सात्यकिर्द्रौपदेया
युधामन्युश्चोत्तमौजाः शिखण्डी ।
एतेऽद्य युधि सम्प्रपीडिता--
स्ते मामुलपालब्धुमर्हन्ति न त्वम् ॥ ८-७३-२१ (५८५७७)
त्वन्मूलमस्माभिरिदं हि वैरं
प्राप्तं तथा व्यसनं चातिघोरम् ।
द्यूप्रमत्तेन कृतं त्वयाऽसकृ--
त्कस्मादुपालब्धुमिहार्हसि त्वम् ॥ ८-७३-२२ (५८५७८)
त्वमेव राजन्सततं प्रमत्त--
स्त्वमेव मूढो भारतानामसाधुः ।
त्वां प्राप्य राज्यं च विनष्टमेत--
त्प्राप्ता महत्पाण्डवाश्चापि दास्यम् ॥ ८-७३-२३ (५८५७९)
त्वत्तः कृतोऽस्मकद्वनवासदुःखं
राज्यस्य नाशो ह्यभिमन्योश्च घोरः ।
आत्मानमेवं सुनृशंसरूपं
ज्ञात्वा किमर्थं गर्हसे माद्य वीर ॥ ८-७३-२४ (५८५८०)
लज्जस्व राजन्यदि तेऽस्ति लज्जा
तूष्णीम्भूतः पश्य सर्वं कृतघ्नः ।
भीमो नित्यं समरस्य कर्ता
दर्पस्य भेत्ता पुनरेव नित्यम् ॥ ८-७३-२५ (५८५८१)
स्वयं ह्यशक्तेन नरेन्द्र युद्धे

नरेण कार्या सततं क्षमैव ।
बलं हि वाचि द्विजसत्तमानां
क्षात्रं द्विजा बाहुबलं वदन्ति ॥ ८-७३-२६ (५८५८२)
त्वं वाग्बलो भारत निष्ठुरोऽसि
त्वमेव मां वेत्सि यथाविधोऽहम् ।
घटामि नित्यं तव कर्तुमिष्टं
दारैः सुतैर्जीवितेनात्मना च ॥ ८-७३-२७ (५८५८३)
एवञ्च मां वाक्छलाकैर्हिनत्सि
त्वत्तः सुखं न वयं विद्म किञ्चित् ।
मा मामवंस्था द्रौपदीतल्पकसंस्थो
महारथान्प्रतिहन्मि त्वदर्थे ॥ ८-७३-२८ (५८५८४)
सर्वातिशङ्की भवसि प्रमत्त--
स्त्वत्तः सुखं नाभिजानामि किञ्चित् ।
प्रोक्तः स्वयं सत्यसन्धेन मृत्यु--
स्तव प्रियार्थं नरदेव युद्धे ॥ ८-७३-२९ (५८५८५)
शिखण्डिनाम्ना प्रधने तवार्थे
मयाभिगुप्तेन हतश्च भीष्मः ।
द्रोणो हतो यः सततोपकारी
धृष्टद्युम्नेन स्यन्दनाद्विप्रकृष्टः ॥ ८-७३-३० (५८५८६)
द्रौणिश्च रुद्धः सगणो महात्मा
तथापि ते वै वचनं नृशंसवत् ।
दुःखं प्रियं ते नरदेव कर्तुं
यस्य प्रियं ते न करोम्यहं वै ॥ ८-७३-३१ (५८५८७)
न युच्यते वै दिवि चेह यः पुमा--
न्यस्ते मदन्योऽप्रियमारभेत ।
न चाभिनन्दामि तथाहि राज्यं
यतस्त्वमक्षेषु दृढं प्रसक्तः ॥ ८-७३-३२ (५८५८८)
स्वयं कृतं पापमनार्यजुष्ट--
मस्माभिराजौ व्यसनं तितीर्षसि ॥
अक्षेषु दोषा बहवो विधर्म्याः
श्रुतास्त्वया सहदेवोऽब्रवीद्यान् ॥ ८-७३-३३ (५८५८९)
तान्नेच्छसि त्यक्तुमनार्यजुष्टा--
न्घोरे स्म सर्वे निरये त्वयाऽस्ताः ।
त्वं देविता त्वत्कृते राज्यनाशं--
स्त्वत्सम्भवं व्यसनं नो नरेन्द्र ॥ ८-७३-३४ (५८५९०)
मास्मान्क्रूरैर्वाक्प्रतोदैस्तुदस्त्वं

भूयो राजन्कोपयस्यल्पबुद्ध्या ॥ ८-७३-३५ (५८५९१)
सञ्जय उवाच। ८-७३-३६क्ष् (५०१४)
एता वाचः परुषाः सव्यसाची
स्थिरप्रतिज्ञः श्रावयित्वा नरेन्द्रम् ।
विनिः श्वसञ्ज्येष्ठमनिष्टमुक्त्वा
ततस्तु कोशादसिमुद्बबर्ह ॥ ८-७३-३६ (५८५९२)
तमाह कृष्णः किमिदं पुनर्भवा--
न्विकोशमाकाशनिभं करोत्यसिम् ।
प्रब्रूहि सत्यं पुनरुत्तरं सखे
वचः प्रवक्ष्याभि तवार्थसिद्धये ॥ ८-७३-३७ (५८५९३)
इतीव पृष्टः पुरुषोत्तमेन
सुदुःखितः केशवमाह पार्थः ।
अहं हनिष्ये स्वशरीरमेत--
त्प्रसह्य येनाहितमुक्तवान्गुरुम् ॥ ८-७३-३८ (५८५९४)
निशम्य तत्पार्थवचोऽब्रवीदिदं
जनार्दनो धर्मभृतां वरिष्ठः ।
प्रब्रूहि पार्थ स्वगुणानिहात्मन--
स्ततो हतात्मा भवसीति निश्चयः ॥ ८-७३-३९ (५८५९५)
तथा तु कृष्णस्य वचो निशम्य
ततोऽर्जुनः प्राह धनुः प्रगृह्य ।
युधिष्ठिरं धर्मभृतां वरिष्ठं
शृणुष्व राजन्निति दुर्वचः स्वयम् ॥ ८-७३-४० (५८५९६)
अर्जुन उवाच। ८-७३-४१क्ष् (५०१५)
न मादृशोऽन्यो नरदेव विद्यते
धनुर्धरो देवमृते पिनाकिनम् ।
अहं हि तेनानुमतो महात्मना
क्षणेन हन्यां सचराचरं जगत् ॥ ८-७३-४१ (५८५९७)
मया हि राजन्सदिगीश्वरा दिशो
विजित्य सर्वा भवतः कृता वशे ।
स राजसूयश्च समाप्तदक्षिणः
सभा च दिव्या भवतो ममौजसा ॥ ८-७३-४२ (५८५९८)
पाणी पृषत्कालिखिताविमौ पुन--
र्धनुश्च सव्ये विततं सबाणम् ।
पादौ च मे लक्षणतः प्रशस्तौ
न मादृशं युद्धगतं जयन्ति ॥ ८-७३-४३ (५८५९९)
हता उदीच्या निहताः प्रतीच्याः

प्राच्या निरस्ता दाक्षिणात्या विशस्ताः ।
संशप्तकानां किञ्चिदेवावशिष्टं
सर्वस्य लोकस्य हतं मयाऽर्धम् ॥ ८-७३-४४ (५८६००)
शेते मया निहता शत्रुसेना
छिन्नैर्गात्रैर्भूमितले स्खलन्ती ।
अनस्त्रज्ञान्नैव निहन्मि चास्त्रै--
स्तस्मान्न भस्मैव करोमि लोकान् ॥ ८-७३-४५ (५८६०१)
जैत्रं रथं भीममास्थाय कृष्ण
यावच्छीघ्रं सूतपुत्रं निहन्तुम् ।
राजा भवत्वद्य सुनिर्वृतोऽयं
कर्णं रणे नाशयितास्मि बाणैः ॥ ८-७३-४६ (५८६०२)
इत्येवमुक्त्वा पुनराह पार्थो
युधिष्ठिरं धर्मभृतां वरिष्ठम् ।
अद्यापुत्रा सूतमाता भवित्री
कुन्ती वाथो वा मया तेन वापि ।
सत्यं वदाम्यद्य न कर्णमाजौ
शरैरहत्वा कवचं विमोक्ष्ये ॥ ८-७३-४७ (५८६०३)
सञ्जय उवाच। ८-७३-४८क्ष् (५०१६)
इत्येवमुक्त्वा पुनरेव पार्थो
युधिष्ठिरं धर्मभृतां वरिष्ठम् ।
विमुच्य शस्त्राणि धनुर्विसृज्य
कोशे च खड्गं विनिधाय तूर्णम् ॥ ८-७३-४८ (५८६०४)
स व्रीडया नम्रशिराः किरीटी
युधिष्ठिरं प्राञ्जलिरभ्युवाच ।
प्रसीद राजन्क्षम यन्मयोक्तं
काले भवान्वेत्स्यति तन्नमस्ते ॥ ८-७३-४९ (५८६०५)
ततस्तु पादावुपगृह्य पार्थः
समुत्थितो दीप्ततेजाः किरीटि ।
प्रसाद्य राजानममित्रसाहं
स्थितोऽब्रवीच्चैनमभिप्रतप्तम् ॥ ८-७३-५० (५८६०६)
याम्येष भीमं समराद्विमोक्तुं
सर्वात्मना सूतपुत्रं च हन्तुम् ।
भवत्प्रियार्थं मम जीवितं हि
ब्रवीमि सत्यं तदवेहि राजन् ॥ ८-७३-५१ (५८६०७)
नेदं चिरात्क्षिप्रमिदं भविष्य--
दावर्ततेऽसावभियामि चैनम् ।

अद्याप्यपुत्रा तेन हतेन राधा
कुन्ती मया वा तदिदं विद्धि राजन् ॥ ॥ ८-७३-५२ (५८६०८)

इति श्रीमन्महाभारते कर्णपर्वणि सप्तदशदिवसयुद्धे
त्रिसप्ततितमोऽध्यायः ॥ ७३ ॥
Mahabharata - Karna Parva - Chapter Footnotes

८-७३-२९ सत्यसन्धेन भीष्मेण ॥
८-७३-७३ त्रिसप्ततितमोऽध्यायः ॥

---

कर्नपर्व-अध्यय०७४
॥ श्रीः ॥
८.७४. अध्यायः ७४

Mahabharata - Karna Parva - Chapter Topics
अर्जुनकृतावमानाद्वनं यियासोर्युधिष्ठिरस्य कृष्णेन परिसान्त्वनम् ॥१ ॥

Mahabharata - Karna Parva - Chapter Text

८-७४-० (५८६०९)
सञ्जय उवाच। ८-७४-०क्ष् (५०१७)
एतच्छ्रुत्वा पाण्डवो धर्मराजो
भ्रातुर्वाक्यं परुषं फल्गुनस्य ।
उत्थाय तस्माच्छयनादुवाच
पार्थं ततो दुःखपरीतचेताः ॥ ८-७४-१ (५८६१०)
कृतं मया पार्थ न साधुकर्म
येन प्राप्तं व्यसनं वः सुघोरम् ।
तस्माच्छिरश्छिन्धि ममैतदद्य
कुलान्तकस्याधमपूरुषस्य ॥ ८-७४-२ (५८६११)
पापस्य पाप्मोहतस्य वीर
विमूढबुद्धेरलसस्य भीरोः ।
वृद्धावमन्तुः परुषत्य चैव
किं ते चिरं मामनुसृज्य रूक्षम् ॥ ८-७४-३ (५८६१२)
गच्छाम्यहं वनमद्यैव पापः
सुखं भवान्वर्ततां मद्विहीनः ।
योग्यो राजा भीमसेनो महात्मा

क्लीबस्य किं वा मम राज्यकृत्यम् ॥ ८-७४-४ (५८६१३)
न चापि शक्तः परुषाणि सोढुं
पुनस्तवेमानि रुषान्वितस्य ।
भीमोऽस्तु राजा मम जीवितेन
न कार्यमद्यावमतस्य वीर ॥ ८-७४-५ (५८६१४)
इत्येवमुक्त्वा सहसोत्पपात
रुषान्वितस्तच्छयनं विहाय ।
इयेष निर्गन्तुमथो वनाय
तं वासुदेवः प्रणतोऽभ्युवाच ॥ ८-७४-६ (५८६१५)
न राजन्विदितं तत्ते यथा गाण्डीवधन्वनः ।
प्रतिज्ञा सत्यसन्धस्य गाण्डीवं प्रति विश्रुता ॥ ८-७४-७ (५८६१६)
ब्रूयाद्य एनं गाण्डीवं देह्यन्यस्मै त्वमित्युत ।
वध्योऽस्य स पुमाँल्लोके त्वया चोक्तोयमीदृशम् ॥ ८-७४-८ (५८६१७)
ततः सत्यां प्रतिज्ञां तां पार्थेन प्रतिरक्षता ।
मच्छन्दादवमानोऽयं कृतस्तव महीपते ॥ ८-७४-९ (५८६१८)
गुरूणामवमानो हि वध इत्यभिधीयते ।
तस्मात्क्षम महाबाहो मम पार्थस्य चोभयोः ॥ ८-७४-१० (५८६१९)
व्यतिक्रममिमं राजन्सत्यसंरक्षणं प्रति ।
शरणं त्वां महाराज प्रतिपन्नावुभावपि ॥ ८-७४-११ (५८६२०)
क्षन्तुमर्हसि मे राजन्प्रणतस्याभियाचतः ।
राधेयस्याद्य पापस्य भूमिः पास्यति शोणितम् ॥ ८-७४-१२ (५८६२१)
सत्यं ते प्रतिजानामि हतं विद्ध्यद्य सूतजम् ।
यस्येच्छसि वधं तस्य गतमेवाद्य जिवीतम् ॥ ८-७४-१३ (५८६२२)
इति कृष्णवचः श्रुत्वा धर्मराजो युधिष्ठिरः ।
ससम्भ्रमं हृषीकेशमुत्थाप्य प्रणतं तदा ।
कृताञ्जलिमुवाचेदं वाक्यं यत्समनन्तरम् ॥ ८-७४-१४ (५८६२३)
एवमेव यथात्थ त्वमस्त्येषोऽतिक्रमो मम ।
अनुनीतोऽस्मि गोविन्द तारितश्चास्मि माधव ॥ ८-७४-१५ (५८६२४)
मोचिता व्यसनाद्धोराद्वयमद्य त्वयाच्युत ।
भवन्तं नावमासाद्य ह्यावां व्यसनसागरात् ।
घोरादद्य समुत्तीर्णावुभावज्ञानमोहितौ ॥ ८-७४-१६ (५८६२५)
त्वद्बुद्धिप्लवमासाद्य दुःखशोकार्णवाद्वयम् ।
समुत्तीर्णाः सहामात्याः सनाथाः स्म त्वयाच्युत ॥ ॥ ८-७४-१७ (५८६२६)

इति श्रीमन्महाभारते कर्णपर्वणि चतुःसप्ततितमोऽध्यायः ॥ ७४ ॥

॥ श्रीः ॥
८.७५. अध्यायः ७५

Mahabharata - Karna Parva - Chapter Topics
अर्जुनेन स्वावमानितस्य युधिष्ठिरस्य प्रसादनम् ॥ १ ॥
अर्जुनेन युधिष्टिराग्रे कर्णवधप्रतिज्ञानम् ॥ २ ॥

Mahabharata - Karna Parva - Chapter Text

८-७५-० (५८६२७)
सञ्जय उवाच। ८-७५-०क्ष् (५०१८)
इति स्म कृष्णवचनात्प्रत्युच्चार्य युधिष्ठिरम् ।
बभूव विमनाः पार्थः किञ्चित्कृत्वेव पातकम् ॥ ८-७५-१ (५८६२८)
ततोऽब्रवीद्वासुदेवः प्रहसन्निव पाण्डवम् ।
कथं नाम भवेदेतद्यदि त्वं पार्थ धर्मजम् ॥ ८-७५-२ (५८६२९)
असिना तीक्ष्णधारेण हन्या धर्मे व्यस्थितम् ।
त्वमित्युक्त्वाथ राजानमेवं कश्मलमाविशः ॥ ८-७५-३ (५८६३०)
हत्वा तु नृपतिं पार्थ करिष्यसि किमुत्तरम् ।
एवं हि दुर्विदो धर्मो मन्दप्रज्ञैर्विशेषतः ॥ ८-७५-४ (५८६३१)
स भवान्धर्मभीरुत्वाद्ध्रुवं यायान्महत्तमः ।
नरकं घोररूपं च भ्रातुर्ज्येतुस्य वै वधात् ॥ ८-७५-५ (५८६३२)
स त्वं धर्मभृतां श्रेष्ठं राजानं धर्मसंहितम् ।
प्रसादय कुरुश्रेष्ठमेतदत्र मतं मम ॥ ८-७५-६ (५८६३३)
प्रसाद्य भक्त्या राजानं प्रीते चैव युधिष्ठिरे ।
प्रयावस्त्वरितौ योद्धुं सूतपुत्ररथं प्रति ॥ ८-७५-७ (५८६३४)
हत्वा तु समरे कर्णं त्वमद्य निशितैः शरैः ।
विपुलां प्रीतिमाधत्स्व धर्मपुत्रस्य मानद ॥ ८-७५-८ (५८६३५)
एतदत्र महाबाहो प्राप्तकालं मतं मम ।
एवं कृते कृतं चैव तव कार्यं भविष्यति ॥ ८-७५-९ (५८६३६)
सञ्जय उवाच। ८-७५-१०क्ष् (५०१९)
ततोऽर्जुनो महाराज लज्जपा वै समन्वितः ।
धर्तराजस्य चरणौ प्रपद्य शिरसा नतः ॥ ८-७५-१० (५८६३७)
उवाच भरतश्रेष्ठं प्रसीदेति पुनः पुनः ।
क्षमस्व राजन्यत्प्रोक्तस्त्वं मया धर्मभीरुणा ॥ ८-७५-११ (५८६३८)
पादयोः पतितं दृष्ट्वा धर्मराजो युधिष्ठिरः ।

धनञ्जयममित्रघ्नं रुदन्तं भरतर्षभम् ॥ ८-७५-१२ (५८६३९)
उत्थाप्य भ्रातरं राजा धर्मराजो धनञ्जयम् ।
समाश्लिष्य च सस्नेहं प्ररुरोद महीपतिः ॥ ८-७५-१३ (५८६४०)
रुदित्वा सुचिरं कालं भ्रातरौ सुमहाद्युती ।
कृतशौचौ महाराज प्रीतिमन्तौ बभूवतुः ॥ ८-७५-१४ (५८६४१)
तत आश्लिष्य तं प्रेम्णा मूर्ध्नि चाघ्राय पाण्डवः ।
प्रीत्या परमया युक्तो विस्मयंश्च पुनःपुनः ।
अब्रवीत्तं महेष्वासं धर्मराजो धनञ्जयम् ॥ ८-७५-१५ (५८६४२)
कर्णेन मे महाबाहो सर्वसैन्यस्य पश्यतः ।
कवचं च ध्वजं चैव धनुः शक्तिर्हयाः शराः ।
शरैः कृत्ता महेष्वास यतमानस्य संयुगे ॥ ८-७५-१६ (५८६४३)
सोऽहं दृष्ट्वा रणे तस्य कर्ण कर्णस्य फल्गुन ।
व्यवसीदामि दुःखेन न तु मे जीवितं प्रियम् ॥ ८-७५-१७ (५८६४४)
न चेदद्य हि तं वीरं निहनिष्यसि संयुगे ।
प्राणानेव परित्यक्ष्ये जीवितार्थो हि को मम ॥ ८-७५-१८ (५८६४५)
एवमुक्तः प्रत्युवाच विजयो भरतर्षभ ॥ ८-७५-१९ (५८६४६)
सत्येन ते शपे राजंस्त्वत्पादेन तथैव च ।
भीमेन च नरश्रेष्ठ यमाभ्यां च महीपते ॥ ८-७५-२० (५८६४७)
ंअहमेनं नरश्रेष्ठ सामात्यं च महीपते'।
यथाद्य समरे कर्णं हनिष्यामि हतोपि वा ।
महीतले पतिष्यामि सत्येनायुधमालभे ॥ ८-७५-२१ (५८६४८)
एवमाभाष्य राजानमब्रवीन्माधवं वचः ।
अद्य कर्णं रणे कृष्ण सूदयिष्ये न संशयः ।
त्वमनुध्याहि भद्रं ते वधं तस्य दुरात्मनः ॥ ८-७५-२२ (५८६४९)
एवमुक्तोऽब्रवीत्पार्थं केशवो राजसत्तम ।
शक्तोऽसि भरतश्रेष्ठ यत्नं कर्तुं यदात्थ माम् ॥ ८-७५-२३ (५८६५०)
एष चापि हि मे कामो नित्यमेव महारथ ।
कथं भवान्रणे कर्णं निहन्यादिति सत्तम ॥ ८-७५-२४ (५८६५१)
एवमुक्तस्ततो राजन्पार्थो वचनमब्रवीत् ।
हन्यते द्वैरथे भूयो युज्यन्तां वै रथोत्तमे ॥ ८-७५-२५ (५८६५२)
उपावृत्ताश्च तुरगाः शिक्षिताश्चाश्वसादिभिः ।
रथोपकरणैः सर्वैः सत्वरं यातु मे रथः ॥ ८-७५-२६ (५८६५३)
एवमुक्तो महाराज फल्गुनेन महात्मना ।
उवाच दारुकं कृष्णः कुरु सर्वं यदब्रवीत् ।
अर्जुनो भारतश्रेष्ठः श्रेष्ठः सर्वधनुष्मताम् ॥ ८-७५-२७ (५८६५४)
आज्ञप्तस्त्वथ कृष्णेन दारुको राजसत्तम ।

योजयामास च रथं वैयाघ्नं शत्रुतापनम् ।
सज्जं निवेदयामास पाण्डवस्य महात्मनः ॥ ८-७५-२८ (५८६५५)
युक्तं तु रथमास्थाय दारुकेण महात्मना ।
उपस्थितं रथं दृष्ट्वा पद्मनाभो रणान्तकृत् ।
भूयश्चोवाच मतिमान्माधवो धर्मनन्दनम् ॥ ८-७५-२९ (५८६५६)
युधिष्ठिरेमं बीभत्सुं त्वं सान्त्वयितुमर्हसि ।
अनुज्ञातुं च कर्णस्य वधायाद्य दुरात्मनः ॥ ८-७५-३० (५८६५७)
श्रुत्वा ह्यावां महासंख्ये त्वां कर्णशरपीडितम् ।
प्रवृत्तिं ज्ञातुमायाताविहावां पाण्डुनन्दन ॥ ८-७५-३१ (५८६५८)
दिष्ट्यासि राजन्विरुजो दिष्ट्या न ग्रहणं गतः ।
परिसान्त्वय बीभत्सुं जयमाशाधि चानघ ॥ ८-७५-३२ (५८६५९)
युधिष्ठिर उवाच। ८-७५-३३क्ष् (५०२०)
एह्येहि पार्थ बीभत्सो मां परिष्वज पाण्डव ।
वक्तव्यमुक्तोस्म्यहितं त्वया क्षान्तं च तन्मया ॥ ८-७५-३३ (५८६६०)
अहं त्वामनुजानामि जहि कर्णं धनञ्जय ।
मन्युं च मा कृथाः पार्थ यन्मयोक्तोऽसि दारुणं ॥ ८-७५-३४ (५८६६१)
सञ्जय उवाच। ८-७५-३५क्ष् (५०२१)
ततो धनञ्जयो राजञ्शिरसा प्रणतस्तदा ।
पादौ जग्राह पाणिभ्यां भ्रातुर्ज्येष्ठस्य मारिष ॥ ८-७५-३५ (५८६६२)
तमुत्थाप्य ततो राजा परिष्वज्य च पीडितम् ।
मूर्ध्नुपाघ्राय चैवैनमिदं पुनरुवाच ह ॥ ८-७५-३६ (५८६६३)
धनञ्जय महाबाहो मानितोऽस्मि दृढं त्वया ।
माहात्म्यं विजयं चैवं भूयः प्राप्नुहि शाश्वतम् ॥ ८-७५-३७ (५८६६४)
अर्जुन उवाच। ८-७५-३८क्ष् (५०२२)
अद्य तं पापकर्माणं सानुबन्धं रणे शरैः ।
नयाम्यन्तं समासाद्य राधेयं बलगर्वितम् ॥ ८-७५-३८ (५८६६५)
येन त्वं पीडितो बाणैर्दृढमायम्य कार्मुकम् ।
तस्याद्य कर्मणः कर्णः फलमाप्स्यति दारुणम् ॥ ८-७५-३९ (५८६६६)
अद्य त्वामुपयास्यामि कर्णं हत्वा महीपते ।
सभाजये त्वामाक्रन्दादिति सत्यं ब्रवीमि ते ॥ ८-७५-४० (५८६६७)
नाहत्वा विनिषर्तिष्ये कर्णमद्य रणाजिरात् ।
इति सत्येन ते पादौ स्पृशामि जगतीपते ॥ ८-७५-४१ (५८६६८)
सञ्जय उवाच। ८-७५-४२क्ष् (५०२३)
इति ब्रुवाणं सुमनाः किरीटिनं
युधिष्ठिरः प्राह वचो बृहत्तरम् ।
यशोऽक्षयं जीवितमीप्सितं ते

जयं सदा वीर्यमरिक्षयं तदा ॥ ८-७५-४२ (५८६६९)
प्रयाहि वृद्धिं च दिशन्तु देवता
यथाहमिच्छामि तवास्तु तत्तथा ।
प्रयाहि शीघ्रं जहि कर्णमाहवे
पुरन्दरो वृत्रमिवात्मवृद्धये ॥ ॥ ८-७५-४३ (५८६७०)

इति श्रीमन्महाभारते कर्णपर्वणि सप्तदशदिवसयुद्धे
पञ्चसप्ततितमोऽध्यायः ॥ ७५ ॥

---

कर्नपर्व-अध्यय०७६
॥ श्रीः ॥
८.७६. अध्यायः ७६

Mahabharata - Karna Parva - Chapter Topics
कर्णेन योद्धुंनिर्गच्छतोऽर्जुनस्य शुभनिमित्तप्रादुर्भावः ॥ १ ॥
श्रीकृष्णेनार्जुनस्य प्रोत्साहनम् ॥ २ ॥

Mahabharata - Karna Parva - Chapter Text

८-७६-० (५८६७१)
सञ्जय उवाच। ८-७६-०क्ष् (५०२४)
प्रसाद्य धर्मराजानं प्रहृष्टेनान्तरात्मना ।
सम्पूज्य देवताः सर्व ब्राह्मणान्स्वस्ति वाच्य च ।
सुमङ्गलं स्वस्त्ययनमारुरोह रथोत्तमम् ॥ ८-७६-१ (५८६७२)
तस्य राजा महाप्राज्ञो धर्मराजो युधिष्ठिरः ।
आशिषोऽयुङ्क्त परमाः युक्तं कर्णरथं प्रति ॥ ८-७६-२ (५८६७३)
तमायान्तं महेष्वासं दृष्ट्वा भूतानि भारत ।
निहतं मेनिरे कर्णं पाण्डवेन महात्मना ॥ ८-७६-३ (५८६७४)
बभूवुर्विमलाः सर्वा दिशो राजन्समन्ततः ।
चाषाश्च शतपत्राश्च क्रौञ्चाश्चैव जनेश्वर ।
प्रदक्षिणमकुर्वन्त तदा वै पाण्डुनन्दनम् ॥ ८-७६-४ (५८६७५)
बहवः पक्षिणो राजन्पुन्नामानः शुभाः शिवाः ।
त्वरयन्तोऽर्जुनं युद्धे हृष्टरूपा ववाशिरे ॥ ८-७६-५ (५८६७६)
कङ्का गृध्रा बकाः श्येना वायसाश्च विशाम्पते ।
अग्रतस्तस्य गच्छन्ति भक्ष्यहेतोर्भयानकाः ॥ ८-७६-६ (५८६७७)
निमित्तानि च धन्यानि पाण्डवस्य शशंसिरे ।

विनाशमरिसैन्यानां कर्णस्य च वधं तथा ॥ ८-७६-७ (५८६७८)
प्रयातस्याथ पार्थस्य महान्स्वेदो व्यजायत ।
चिन्ता च विपुला जज्ञे कथं चेदं भविष्यति ॥ ८-७६-८ (५८६७९)
विषण्णं तु ततो ज्ञात्वा सव्यसाचिनमच्युतः ।
सञ्चोदयति तेजस्वी मधुहा वानरध्वजम् ॥ ८-७६-९ (५८६८०)
ततो गाण्डीवधन्वानमब्रवीन्मधुसूदनः ।
दृष्ट्वा पार्थं तथायान्तं चिन्तापरिगतं तदा ॥ ८-७६-१० (५८६८१)
गाण्डीवधन्वन्सङ्ग्रामे ये त्वया धनुषा जिताः ।
न तेषां मानुषो जेता त्वदन्य इह विद्यते ॥ ८-७६-११ (५८६८२)
एते हि बहवः शूराः शक्रतुल्यपराक्रमाः ।
त्वां प्राप्य समरे शूरं प्रयाताः परमां गतिम् ॥ ८-७६-१२ (५८६८३)
को हि द्रोणं च भीष्मं च भगदत्तं च मारिष ।
विन्दानुविन्दावावन्त्यौ काम्भोजं च सुदक्षिणम् ॥ ८-७६-१३ (५८६८४)
श्रुतायुं चाश्रुतायुं च शतायुं च महारथम् ।
प्रत्युद्गम्य भवेत्क्षेमी यो न स्यात्त्वद्विधः प्रभुः ॥ ८-७६-१४ (५८६८५)
तव ह्यस्त्राणि दिव्यानि लाघवं बलमेव च ।
असम्मोहश्च युद्धेषु विज्ञानस्य च सन्नतिः ।
वेधः पातश्च लक्षेषु योगश्चैव तथार्जुन ॥ ८-७६-१५ (५८६८६)
भवान्देवान्सगन्धर्वान्हन्यात्सर्वांश्च राक्षसान् ।
पृथिव्यां तु रणे पार्थ न योद्धा त्वत्समः पुमान् ॥ ८-७६-१६ (५८६८७)
धनुर्गृह्णन्ति ये केचित्क्षत्रिया युद्धदुर्मदाः ।
आत्मनस्तु समं तेषां न पश्यामि शृणोमि च ॥ ८-७६-१७ (५८६८८)
ब्रह्मणा हि प्रजाः सृष्टा गाण्डीवं च महद्धनुः ।
येन त्वं युध्यसे पार्थ तस्मान्नास्ति त्वया समः ॥ ८-७६-१८ (५८६८९)
अवश्यं तु मया वाच्यं यत्पथ्यं तव पाण्डव ।
मावमंस्था महाबाहो कर्णमाहवशोभिनम् ॥ ८-७६-१९ (५८६९०)
कर्णो हि बलवान्दृप्तः कृतास्त्रश्च महारथः ।
कृती च चित्रयोधी च देशकालस्य कोविदः ॥ ८-७६-२० (५८६९१)
बहुनात्र किमुक्तेन संक्षेपाच्छृणु पाण्डव ।
त्वत्समं त्वद्विशिष्टं वा कर्णं मन्ये महारथम् ।
परमं यत्नमास्थाय त्वया वध्यो महाहवे ॥ ८-७६-२१ (५८६९२)
तेजसा वह्निसदृशो वायुवेगसमो जवे ।
अन्तकप्रतिमः क्रोधे सिंहसंहननो बली ॥ ८-७६-२२ (५८६९३)
अष्टरत्निर्महाबाहुर्व्यूढोरस्कः सुदुर्जयः ।
अभिमानी च शूरश्च प्रवीरः प्रियदर्शनः ॥ ८-७६-२३ (५८६९४)
सर्वयोधगुणैर्युक्तो मित्राणामभयङ्करः ।

सततं पाण्डवद्वेषी धार्तराष्ट्रहिते रतः ॥ ८-७६-२४ (५८६९५)
सर्वैरवध्यो राधेयो देवैरपि सवासवैः ।
ऋते त्वामिति मे बुद्धिस्तदद्य जहि सूतजम् ॥
देवैरपि हि संयत्तैर्बिभ्रद्भिर्मांसशोणितम् ।
अशक्यः स रथो जेतुं सर्वैरपि युयुत्सुभिः ॥ ८-७६-२५ (५८६९६)
दुरात्मानं पापवृत्तं नृशंसं
दुष्टप्रज्ञं पाण्डवेयेषु नित्यम् ।
हीनस्वार्थं पाण्डवेयैर्विरोधे
हत्वा कर्णं निश्चितार्थो भवाद्य ॥ ८-७६-२७ (५८६९७)
तं सूतपुत्रं रथिनां वरिष्ठं
निष्कालिकं कालवशं नयाद्य ।
तं सूतपुत्रं रथिनां वरिष्ठं
हत्वा प्रीतिं धर्मराजे कुरुष्व ॥ ८-७६-२८ (५८६९८)
जानामि ते पार्थ वीर्यं यथाव--
द्दुर्वारणीयं च सुरासुरैश्च ।
सदावजानाति हि पाण्डुपुत्रा--
नसौ दर्पात्सूतपुत्रो दुरात्मा ॥ ८-७६-२९ (५८६९९)
आत्मानं मन्यते वीरं येन पापः सुयोधनः ।
तमद्य मूलं पापानां जहि सौतिं धनञ्जय ॥ ८-७६-३० (५८७००)
खड्गजिह्वं धनुरास्यं शरदंष्ट्रं तरस्विनम् ।
दृप्तं पुरुषशार्दूलं जहि कर्णं धनञ्जय ॥ ८-७६-३१ (५८७०१)
अहं त्वामनुजानामि वीर्येण च बलेन च ।
जहि कर्णं रणे शूरं मातङ्गमिव केसरी ॥ ८-७६-३२ (५८७०२)
यस्य वीर्येण वीर्यं ते धार्तराष्ट्रोऽवमन्यते ।
तमद्य पार्थ सङ्ग्रामे कर्णं वैकर्तनं जहि ॥ ॥ ८-७६-३३ (५८७०३)

इति श्रीमन्महाभारते कर्णपर्वणि सप्तदशदिवसयुद्धे
षट्सप्ततितमोऽध्यायः ॥ ७६ ॥

Mahabharata - Karna Parva - Chapter Footnotes

८-७६-२३ रत्निस्त्वेकविंशत्यङ्गुलः । अष्टानां रत्नीनां
अष्टषष्ट्यधिकं शतं अङ्गुलानि च भवन्ति ॥
८-७६-२८ निष्कालिकं निर्गतः कालयिता जेतास्येति तम् ॥
८-७६-७६ षट्सप्ततितमोऽध्यायः ॥

---

कर्नपर्व-अध्यय०७७

॥ श्रीः ॥
८.७७. अध्यायः ७७

Mahabharata - Karna Parva - Chapter Topics
कृष्णेनार्जुनम्प्रति भीष्मादियुद्धनिधनप्रकारानुवादपूर्वकं तेषां वधे तस्यैव मुख्यकारणत्वकथनम् ॥ १ ॥
वाल्यात्प्रभृति दुर्योधनापनयानुस्मराणपूर्वकं सर्वत्र कर्णस्यैव मूलतया महापराधित्वद्योतनेन तस्यावश्यं हननविधानम् ॥ २ ॥

Mahabharata - Karna Parva - Chapter Text

८-७७-० (५८७०४)
सञ्जय उवाच। ८-७७-०क्ष् (५०२५)
ततः पुनरमेयात्मा केशवोऽर्जुनमब्रवीत् ।
कृतसङ्कल्पमायान्तं वधे कर्णस्य भारत ॥ ८-७७-१ (५८७०५)
अद्य सप्तदशाहानि वर्तमानस्य नित्यशः ।
विनाशस्यातिघोरस्य नरवारणवाजिनाम् ॥ ८-७७-२ (५८७०६)
भूत्वा हि विपुला सेना तावकानां परैः सह ।
अन्योन्यं समरं प्राप्य किञ्चिच्छेषा विशाम्पते ॥ ८-७७-३ (५८७०७)
भूत्वा वै कौरवाः पार्थ प्रभूतगजवाजिनः ।
त्वां वै शत्रुं समासाद्य विनष्टा रणमूर्धनि ॥ ८-७७-४ (५८७०८)
एते ते पृथिवीपालाः सृञ्जयाश्च समागताः ।
त्वां समासाद्य दुर्धर्षं पाण्डवाश्च व्यवस्थिताः ॥ ८-७७-५ (५८७०९)
पाञ्चालैः पाण्डवैर्मात्स्यैः कारूशैश्चेदिभिः सह ।
'मगधैः पारिजातैश्च दाक्षिणात्यैः सकेरलैः'।
त्वया गुप्तैरमित्रघ्नैः कृतः शत्रुगणक्षयः ॥ ८-७७-६ (५८७१०)
को हि शक्तो रणे जेतुं कौरवांस्तात संयुगे ।
अन्यत्र पाण्डवाद्युद्धे श्वेताश्वाद्वानरध्वजात् ॥ ८-७७-७ (५८७११)
शक्तस्त्वं हि रणे जेतुं ससुरासुरमानुषान् ।
त्रींल्लोकान्समरे युक्तान्किं पुनः कौरवं बलम् ॥ ८-७७-८ (५८७१२)
भगदत्तं च राजानं कोऽन्यः शक्तस्त्वया विना ।
जेतुं पुरुषशार्दूल योऽपि स्याद्वासवोपमः ॥ ८-७७-९ (५८७१३)
तथेमां विपुलां सेनां गुप्तां पार्थ त्वयाऽनघ ।
न शेकुः पार्थिवाः सर्वे चक्षुर्भिरपि वीक्षितुम् ॥ ८-७७-१० (५८७१४)
तथैव सततं पार्थ रक्षिताभ्यां त्वया रणे ।
धृष्टद्युम्नशिखण्डिभ्यां द्रोणभीष्मौ निपातितौ ॥ ८-७७-११ (५८७१५)

को हि शक्तो रणे पार्थ भारतानां महारथौ ।
भीष्मद्रोणौ युधा जेतुं शक्रतुल्यपराक्रमौ ॥ ८-७७-१२ (५८७१६)
को हि शान्तनवं भीष्मं द्रोणं वैकर्तनं कृपम् ।
द्रौणिं च सौमदत्तिं च कृतवर्माणमेव च ॥ ८-७७-१३ (५८७१७)
सैन्धवं मद्रराजं च राजानं च सुयोधनम् ।
वीरान्कृतास्त्रान्समरे सर्वानेवानिवर्तिनः ॥ ८-७७-१४ (५८७१८)
अक्षौहिणीपतीनुग्रान्संहतान्युद्धदुर्मदान् ।
त्वामृते पुरुषव्याघ्र जेतुं शक्तः पुमानिह ॥ ८-७७-१५ (५८७१९)
श्रेण्यश्च बहुलाः क्षीणाः प्रदीर्णाश्वरथद्विपाः ।
नानाजनपदाश्चोग्राः क्षत्रियाणाममर्षिणाम् ॥ ८-७७-१६ (५८७२०)
गणाश्च दासमीयानां वसातीनां च भारत ।
प्राच्यानां वाटधानानां भोजानां चाभिमानिनाम्। ८-७७-१७ (५८७२१)
उदीर्णाश्वगजा सेना सर्वक्षत्रस्य भारत ।
त्वां समासाद्य निधनं गता भीमं च भारत ॥ ८-७७-१८ (५८७२२)
उग्राश्च भीमकर्माणस्तुषारा यवनाः खशाः ।
दार्वाभिसारा दरदाः शका माठरतङ्गणाः ॥ ८-७७-१९ (५८७२३)
आन्ध्रकाश्च पुलिन्दाश्च किराताश्चोग्रविक्रमाः ।
म्लेच्छाश्च पर्वतीयाश्च सागरानूपवासिनः ॥ ८-७७-२० (५८७२४)
संरम्भिणो युद्धशौण्डा बलिनो दण्डपाणयः ॥ ८-७७-२१ (५८७२५)
एते सुयोधनस्यार्थे संरब्धाः कुरुभिः सह ।
न शक्या युधि निर्जेतुं त्वदन्येन परन्तप ॥ ८-७७-२१ (५८७२६)
एते सुयोधनस्यार्थे संरब्धाः कुरुभिः सह ।
न शक्या युधि निर्जेतुं त्वदन्येन परन्तप ॥ ८-७७-२२ (५८७२७)
धार्तराष्ट्रमुदग्रं हि व्यूढं दृष्ट्वा महद्बलम् ।
यदि त्वं न भवेस्त्राता प्रतीयात्को नु मानवः ॥ ८-७७-२३ (५८७२८)
तत्सागरमिवोद्धूतं रजसा संवृतं बलम् ।
विदार्य पाण्डवैः क्रुद्धैस्त्वया गुप्तैर्हतं विभो ॥ ८-७७-२४ (५८७२९)
मागधानामधिपतिर्जयत्सेनो महाबलः ।
अद्य सप्तैव चाहानि हतः सङ्ख्येऽभिमन्युना ॥ ८-७७-२५ (५८७३०)
ततो दशसहस्राणि गजानां भीमकर्मणाम् ।
जघान गदया भीमस्तस्य राज्ञः परिच्छदम् ॥ ८-७७-२६ (५८७३१)
तथान्येऽभिहता नागा रथाश्च शतशो बलात् ।
तदेवं समरे पार्थ वर्तमाने महाभये ॥ ८-७७-२७ (५८७३२)
भीमसेनं समासाद्य त्वां च पाण्डव कौरवाः ।
सवाजिरथमातङ्गा मृत्युलोकमितो गताः ॥ ८-७७-२८ (५८७३३)
तथा सेनामुखे तत्र निहते पार्थ पाण्डवैः ।

भीष्मः प्रासृजदुग्राणि शरतालानि मारिष ॥ ८-७७-२९ (५८७३४)
सचेदिकाशिपाञ्चालान्करूशान्मात्स्यकेकयान् ।
शरैः प्रच्छाद्य निधनमनयत्परमास्त्रवित् ॥ ८-७७-३० (५८७३५)
तस्य चापच्युतैर्बाणैः परदेहविदारणैः ।
पूर्णमाकाशमभवद्रुक्मपुङ्खैरजिह्मगैः ॥ ८-७७-३१ (५८७३६)
हन्याद्रथसहस्राणि एकैकेनैव मुष्टिना ।
लक्षं नरद्विपान्हत्वा समेतान्समहाबलान् ॥ ८-७७-३२ (५८७३७)
गत्या दशम्या ते गत्वा जघ्नुर्वाजिरथद्विपान् ।
हित्वा नवगतीर्दुष्टाः स बाणानाहवेऽत्यजत् ॥ ८-७७-३३ (५८७३८)
दिनानि दश भीष्मेण निघ्नता तावकं बलम् ।
शून्याः कृता रथोपस्था हताश्च गजवाजिनः ॥ ८-७७-३४ (५८७३९)
'दशमेऽहनि सम्प्राप्ते कृत्वा घोरं पराक्रमम्'।
दर्शयित्वाऽऽत्मनो रूपं रुद्रोपेन्द्रसमं युधि ॥ ८-७७-३५ (५८७४०)
पाण्डवानामनीकानि प्रविगाह्य विशाम्पते ।
विनिघ्नन्पृथिवीपालांश्चेदिपाञ्चालकेकयान् ॥ ८-७७-३६ (५८७४१)
अहनत्पाण्डवीं सेनां रथाश्वगजसङ्कुलाम् ।
मज्जन्तमप्लुवे मन्दमुज्जिहीर्षुः सुयोधनम् ॥ ८-७७-३७ (५८७४२)
तथा चरन्तं समरे तपन्तमिव भास्करम् ।
पदातिकोटिसाहस्राः प्रवरायुधपाणयः ॥ ८-७७-३८ (५८७४३)
न शेकुः सृञ्जया द्रष्टुं तथैवान्ये महीक्षितः ।
विचरन्तं तथा तं तु सङ्ग्रमे जितकाशिनम् ॥ ८-७७-३९ (५८७४४)
सर्वोद्यमेन महता पाण्डवान्समभिद्रवत् ।
स तु विद्राव्य समरे पाण्डवान्सृञ्जयानपि ।
एक एव रणे भीष्म एकवीरत्वमागतः ॥ ८-७७-४० (५८७४५)
तं शिखण्डी समासाद्य त्वया गुप्तो महाव्रतम् ।
जघान पुरुषव्याघ्रं शरैः सन्नतपर्वभिः ॥ ८-७७-४१ (५८७४६)
स एष पतितः शेते शरतल्पे पितामहः ।
त्वां प्राप्य पुरुषव्याघ्रं वृत्रः प्राप्येव वासवम् ॥ ८-७७-४२ (५८७४७)
द्रोणः पञ्चदिनान्युग्रो विधम्य रिपुवाहिनीम् ।
कृत्वा व्यूहमभेद्यं च पातयित्वा महारथान् ॥ ८-७७-४३ (५८७४८)
जयद्रथस्य समरे कृत्वा रक्षां महारथः ।
अन्तकप्रतिमश्चोग्रो रात्रियुद्धेऽदहत्प्रजाः ॥ ८-७७-४४ (५८७४९)
दग्ध्वा योधाञ्छरैर्वीरो भारद्वाजः प्रतापवान् ।
धृष्टद्युम्नं समासाद्य स गतः परमां गतिम् ॥ ८-७७-४५ (५८७५०)
यदि वाऽद्य भवान्युद्धे सूतपुत्रमुखान्रथान् ।
नावारयिष्यः सङ्ग्रामे न स्म द्रोणो व्यनङ्क्ष्यत ॥ ८-७७-४६ (५८७५१)

भवता तु बलं सर्वं धार्तराष्ट्रस्य वारितम् ।
ततो द्रोणो हतो युद्धे पार्षतेन धनञ्जय ॥ ८-७७-४७ (५८७५२)
कश्च शक्तो रणे कर्तुं त्वदन्यः पुरुषब्रुवः ।
यादृशं ते कृतं पार्थ जयद्रथवधं प्रति ॥ ८-७७-४८ (५८७५३)
निवार्य सेनां महतीं हत्वा शूरांश्च पार्थिवान् ।
निहतः सैन्धवो राजा त्वयाऽस्त्रबलतेजसा ॥ ८-७७-४९ (५८७५४)
आश्चर्यं सिन्धुराजस्य वधं जानन्ति पार्थिवाः ।
अनाश्चार्यं हि तत्त्वत्तस्त्वं हि पार्थ महारथः ॥ ८-७७-५० (५८७५५)
त्वां हि प्राप्य रणे क्षत्रमेकाहादिति भारत ।
नश्यमानमहं युक्तं मन्येयमिति मे मतिः ॥ ८-७७-५१ (५८७५६)
सेयं पार्थ चमूर्घोरा धार्तराष्ट्रस्य संयुगे ।
हतसर्वस्वभूयिष्ठा भीष्मद्रोणौ हतौ यथा ॥ ८-७७-५२ (५८७५७)
शीर्णप्रवरयोधाढ्या हतवाजिरथद्विपा ।
हीना सूर्येन्दुनक्षत्रैर्द्यौरिवाभाति भारती ॥ ८-७७-५३ (५८७५८)
विध्वस्ता हि रणे पार्थ सेनेयं भीमविक्रम ।
आसुरीव महासेना देवराजपराक्रमैः ॥ ८-७७-५४ (५८७५९)
तेषां हतावशिष्टास्तु सन्ति पञ्च महारथाः ।
द्रौणिश्च कृतवर्मा च कर्णो मद्राधिपः कृपः ॥ ८-७७-५५ (५८७६०)
तांस्त्वमद्य नरव्याघ्र हत्वा पञ्च महारथान् ।
हतामित्रः प्रयच्छोर्वीं राज्ञे सद्वीपपत्तनाम् ॥ ८-७७-५६ (५८७६१)
साकाशजलपातालां सपर्वतमहावनाम् ।
प्रयच्छामितवीर्याय पार्थायाद्य वसुन्धराम् ॥ ८-७७-५७ (५८७६२)
एतां पुरा विष्णुरिव हत्वा दैतेयदानवान् ।
प्रयच्छ मेदिनीं राज्ञे शक्रायैव हरिर्यथा ॥ ८-७७-५८ (५८७६३)
अद्य मोदन्तु पाञ्चाला निहतेष्वरिषु त्वया ।
विष्णुना निहतेष्वेव दानवेयेषु देवताः ॥ ८-७७-५९ (५८७६४)
यदि वा द्विपदां श्रेष्ठं द्रोणं मानयतो गुरुम् ।
अश्वत्थाम्नि कृपा तेऽस्ति कृपे वाचार्यगौरवात् ॥ ८-७७-६० (५८७६५)
अत्यन्तापचितान्बन्धून्मानयन्मातृबान्धवान् ।
कृतवर्माणमासाद्य न नेष्यासि यमक्षयम् ॥ ८-७७-६१ (५८७६६)
भ्रातरं मातुरासाद्य शल्यं मद्रजनाधिपम् ।
यदि त्वमरविन्दाक्ष दयावान्न जिघाससि ॥ ८-७७-६२ (५८७६७)
एतत्ते सुकृतं कर्म नात्र किञ्चन विद्यते ।
वयमप्यनुजानीमो नात्र दोषोऽस्ति कश्चन ॥ ८-७७-६३ (५८७६८)
इमं पापमतिं क्षुद्रमत्यन्तं पाण्डवान्प्रति ।
कर्णमद्य नरश्रेष्ठ जहि पार्थ शितैः शरैः ॥ ८-७७-६४ (५८७६९)

दहने यत्सपुत्राया निशि मातुस्तवानघ ।
द्यूतार्थे यच्च युष्मासु प्रावर्तत सुयोधनः ।
तस्य सर्वस्य दुष्टात्मा कर्णो वै मूलमित्युत ॥ ८-७७-६५ (५८७७०)
प्रोत्साहयति दुष्टात्मा धार्तराष्ट्रं सुदुर्मतिम् ।
समितौ गदते कर्णस्तमद्य जहि भारत ॥ ८-७७-६६ (५८७७१)
यश्च युष्मासु पापं वै धार्तराष्ट्रः प्रयुक्तवान् ।
तस्य सर्वस्य दुर्बुद्धिः कर्णो मूलमिहार्जुन ॥ ८-७७-६७ (५८७७२)
कर्णं हि मन्यते त्राणं नित्यमेव सुयोधनः ।
ततो मामपि संरब्धो निग्रहीतुं पराक्रमात् ॥ ८-७७-६८ (५८७७३)
स्थिता बुद्धिर्नरेन्द्राणां धार्तराष्ट्रस्य चोभयोः ।
कर्णः पार्थान्रणे सर्वान्नाशयिष्यति सायकैः ॥ ८-७७-६९ (५८७७४)
कर्णमाश्रित्य कौन्तेय धार्तराष्ट्रस्य विग्रहः ।
रुचितो भवता सार्धं जानतोऽपि बलं तव ॥ ८-७७-७० (५८७७५)
कर्णो जल्पति वै नित्यमहं पार्थान्समागतान् ।
वासुदेवं च दाशार्हं विजेष्यामि महारणे ।
समितौ वल्गते कर्णस्तमद्य जहि फल्गुन ॥ ८-७७-७१ (५८७७६)
यच्च युष्मासु पापं वै धार्तराष्ट्रः प्रतापवान् ।
सभायां कृतवान्नित्यं कर्णमाश्रित्य वै पुरा ॥ ८-७७-७२ (५८७७७)
यच्च तं धार्तराष्ट्राणां षड्भिः शूरैर्महारथैः ।
पश्यतां संवृतं शूरं सौभद्रमपराजितम् ॥ ८-७७-७३ (५८७७८)
द्रोणद्रौणिकृपान्वीरान्कम्पयानं महेषुभिः ।
विधमन्तमनीकानि प्रमथन्तं महारथान् ॥ ८-७७-७४ (५८७७९)
मनुष्यवाजिमातङ्गान्प्रेषयन्तं यमक्षयम् ।
शरैः सौभद्रमायान्तं दहन्तमरिवाहिनीम् ॥ ८-७७-७५ (५८७८०)
निर्मनुष्याश्च मातङ्गा विरथाश्च महारथाः ।
प्रद्रवन्ति स्म समरे दिशो भीताऽभिमन्यवे ॥ ८-७७-७६ (५८७८१)
विगतासूंश्च तुरगान्पत्तीन्व्यायुधजीवितान् ।
कुर्वन्तमृषभस्कन्धं कुरुवृष्णियशस्करम् ।
तन्मे दहति गात्राणि सखे सत्येन ते शपे ॥ ८-७७-७७ (५८७८२)
यत्तदासीत्सुदुष्टात्मा कर्णो विनिहतः प्रभुः ।
न शक्तो ह्यभिमन्योस्तु कर्णः स्थातुं रणाग्रतः ॥ ८-७७-७८ (५८७८३)
सौभद्रशरनिर्भिन्नो विसंज्ञः शोणितोक्षितः ।
निश्वसन्क्रोधसन्दीप्तो विमुखः सायकार्दितः ॥ ८-७७-७९ (५८७८४)
तस्थौ स विह्वलः सङ्ख्ये प्रहारजनितच्छविः ।
अपयानकृतोत्साहो निरुत्साहश्च भारत ॥ ८-७७-८० (५८७८५)
दुर्योधनं रणे दृष्ट्वा लज्जमानो मुहुर्मुहुः ।

नापयासीत्ततः पार्थ सोऽभिमन्योर्महारणे ॥ ८-७७-८१ (५८७८६)
दृष्ट्वा द्रोणं वधोपायमभिमन्योश्च पृष्टवान् ।
श्रुत्वा द्रोणवचः क्रूरं ततश्चिच्छेद कार्मुकम् ॥ ८-७७-८२ (५८७८७)
ततश्छिन्नायुधं तेन दृष्ट्वा पञ्च महारथाः ।
स चैव निकृतिप्राज्ञः प्राहिणोच्छरवृष्टिभिः ॥ ८-७७-८३ (५८७८८)
प्रहसन्स तु दुष्टात्मा कर्णो राजा च कौरवः ।
यच्च कर्णोऽब्रवीत्कृष्णां सभायां परुषं वचः ।
प्रमुखे पाण्डवेयानां कुरूणां चैव पश्यताम् ॥ ८-७७-८४ (५८७८९)
विनष्टाः पाण्डवाः कृष्णे शाश्वतं नरकं गताः ।
पतिमन्यं पृथुश्रोणि वृणीष्व मृदुभाषिणि ॥ ८-७७-८५ (५८७९०)
एषा त्वं धृतराष्ट्रस्य दासीभूता निवेशनम् ।
प्रविशारालपक्ष्माक्षि न सन्ति पतयस्तव ॥ ८-७७-८६ (५८७९१)
न पाण्डवाः प्रभवन्ति तव कृष्णे कथञ्चन ।
दासभार्या च पाञ्चालि स्वयं दासी च शोभने ॥ ८-७७-८७ (५८७९२)
अद्य दुर्योधनो राजा पृथिव्यां नृपतिः स्मृतः ।
सर्वे चास्य महिपाला योगक्षेममुपासते ॥ ८-७७-८८ (५८७९३)
पश्येदानीं यदा भद्रे निविष्टाः पाण्डवाः समम् ।
अन्योन्यं समुदीक्षन्ते धार्तराष्ट्रस्य तेजसा ॥ ८-७७-८९ (५८७९४)
व्यक्तं षण्डतिला ह्येते नरके च निमज्जिताः ।
प्रेष्यवच्चापि राजानमुपस्थास्यन्ति कौरवम् ॥ ८-७७-९० (५८७९५)
उक्तवान्स च पातात्मा तथा परमदुर्मतिः ।
पापः पापवचः कर्णः पश्यतस्ते धनञ्जय ॥ ८-७७-९१ (५८७९६)
अस्य पापस्य तद्वाक्यं सुवर्णविकृताः शराः ।
शमयन्ति शिलाधौता नाशयन्तोऽस्य जीवितम् ॥ ८-७७-९२ (५८७९७)
अद्य कर्णं रणे ग्रस्तं पश्यन्तु कुरवस्त्वया ।
स्वर्गावतरणे यत्नं स्वर्गद्वारगतं यथा ॥ ८-७७-९३ (५८७९८)
अद्य ते समरे वीर्यं पश्यन्तु कुरुयोधिनः ।
सूतपुत्रे हते पार्थ जानन्तु त्वां महारथम् ॥ ८-७७-९४ (५८७९९)
अद्य काकवला गृध्रा वायसा जम्बुकास्तथा ।
विप्रकर्षन्तु गात्राणि सूतपुत्रस्य मारिष ॥ ८-७७-९५ (५८८००)
अद्याधिरथिराक्षिप्तो निहतश्च त्वया रणे ।
कुरूणां शोकमाधत्तां पाण्वानां मुदं तदा ॥ ८-७७-९६ (५८८०१)
अद्य त्वां प्रतिमर्दन्तु पाञ्चालाः पाण्डवैः सह ।
यथा वृत्रवधे वृत्ते देवाः सर्वे शतक्रतुम् ॥ ८-७७-९७ (५८८०२)
अद्य कर्णं रणे हत्वा प्राप्य चैवोत्तमं यशः ।
विशोको विज्वरः पार्थ भव बन्धुपुरस्कृतः ॥ ८-७७-९८ (५८८०३)

नरसिंहवपुः कृत्वा यथा शस्तो महासुरः ।
हिरण्यकशिपुर्दैत्यो विष्णुना प्रभविष्णुना ॥ ८-७७-९९ (५८८०४)
तथा त्वमपि राधेयं घोरां कृत्वा महातनुम् ।
जहि युद्धे महाबाहो त्रायस्व च भयात्स्वकान् ॥ ८-७७-१० (५८८०५)
कर्णं हाहाकृतं दीनं विषण्णं त्वच्छरार्दितम् ।
प्रपतन्तं महीं कर्णं पश्यन्तु वसुधाधिपाः ॥ ८-७७-१० (५८८०६)
तं च स्वशोणिते मग्नं शयानं पतितं भुवि ।
अपविद्धायुकधं कर्णमद्य पश्यन्तु बान्धवाः ॥ ८-७७-१० (५८८०७)
तच्चैवाद्य महत्कर्म गाण्डीवप्रेषितैः शरैः ।
रथोपस्थे विशीर्येत ताराराज इवाम्बरात् ॥ ८-७७-१० (५८८०८)
आशु चाद्य शरास्तस्य सम्पतन्तो महाजवैः ।
त्वच्छरैः सन्निकृत्ताग्रा विशीर्यन्ते महीतले ॥ ८-७७-१० (५८८०९)
त्वया चाद्य हते तस्य विक्रमे भरतर्षभ ।
विमुखाः सर्वराजानो भवन्तु गतजीविताः ॥ ८-७७-१० (५८८१०)
तथा चाधिरथौ याते प्रयान्तु कुरवो दिशः ।
मन्वानास्तं रथश्रेष्ठं सर्वलोकेषु धन्विनाम् ॥ ८-७७-१० (५८८११)
स वै चाद्य भयात्त्यक्त्वा धार्तराष्ट्रो महाचमूम् ।
दुर्योधनो भयोद्विग्नो द्रवतु स्वं निवेशनम् ॥ ८-७७-१० (५८८१२)
तथा चाद्य हतं श्रुत्वा धृतराष्ट्रो जनेश्वरः ।
क्षणेन निपतेद्भूमौ विसंज्ञो वै महीपतिः ॥ ८-७७-१० (५८८१३)
अद्य जानन्तु ते पार्थ विक्रमं सर्वयोधिनः ।
यदुवाच सभामध्ये परुषं भारत त्वयि ॥ ८-७७-१० (५८८१४)
यानि चान्यानि दुष्टात्मा पापानि कृतवांस्त्वयि ।
तान्यद्य भरतश्रेष्ठ नाशयन्तु शरास्तव ॥ ८-७७-१० (५८८१५)
शान्तिं कुरु परिक्लेशा कृष्णायाः शत्रुपातन ।
हत्वा शत्रुं रणे श्लाघ्यं गर्जन्तमतिपौरुषम् ॥ ८-७७-१० (५८८१६)
अद्य चाधिरथिर्विद्धस्तव बाणैः समन्ततः ।
मन्यतां त्वां नरव्याघ्र प्रवरं सर्वधन्विनाम् ॥ ८-७७-१० (५८८१७)
गाण्डीवप्रसृतान्वाणानद्य गात्रस्पृशः शरान् ।
यातु कर्णो रणे पार्थ श्वाविच्छललतो यथा ॥ ८-७७-१० (५८८१८)
तं कथं कर्णमासाद्य विद्रवेयुर्महारथाः ।
यस्त्वेकः सर्वपाञ्चालानहन्यहनि नाशयन् ।
कालवच्चरते वीर पाञ्चालानां रथव्रजे ॥ ८-७७-१० (५८८१९)
तमप्यासाद्य समरे मित्रार्थे मित्रवत्सल ।
तथा ज्वलन्तमस्त्रैश्च शूरं सर्वधनुष्मताम् ।
निर्दहन्तं समारूढं दुर्धर्षं द्रोणमञ्जसा ॥ ८-७७-१० (५८८२०)

ते नित्यमुदिता जेतुं युधि शत्रुमरिन्दमाः ।
न चेदाधिरथेर्भीताः पाञ्चालाः स्युः पराङ्मुखाः ॥ ८-७७-१० (५८८२१)
तेषामापततां शूरः पाञ्चालानां तरस्विनाम् ।
आदत्तासूञ्शरैः कर्णः पतङ्गानामिवानलः ॥ ८-७७-१० (५८८२२)
एते द्रवन्ति पाञ्चाला द्राव्यन्ते योधिभिर्ध्रुवम् ।
कर्णेन भरतश्रेष्ठ पश्यपश्य तथाकृतान् ॥ ८-७७-१० (५८८२३)
तान्समारोहतः शूरान्मित्रार्थे त्यक्तजीवितान् ।
निस्तारय महाबाहो कर्णास्त्रात्पावकोपमात् ॥ ८-७७-१० (५८८२४)
अस्त्रं हिरामात्कर्णेन भार्गवादृषिसत्तमात् ।
यदवाप्तं तदा घोरं तस्य रूपमुदीर्यते ॥ ८-७७-१० (५८८२५)
तापनं सर्वसैन्यस्य घोररूपं भयानकम् ।
यमाश्रित्य महासेना ज्वलते स्वेन तेजसा ॥ ८-७७-१० (५८८२६)
एते चरन्ति सङ्ग्रामे कर्णचापच्युताः शराः ।
प्रभया इह शत्रूणां घातयन्तो जनान्प्रभो ॥ ८-७७-१० (५८८२७)
एते भ्रमन्ति पाञ्चाला उत्क्रयन्ति च मारिष ।
कर्णास्त्रं समरे प्राप्य दुर्निवार्यं महात्मभिः ॥ ८-७७-१० (५८८२८)
एष भीमो दृढक्रोधो वृतः पार्थ समन्ततः ।
सृञ्जयैर्योऽजयत्कर्णं पीड्यते निशितैः शरैः ॥ ८-७७-१० (५८८२९)
पाञ्चालान्सृञ्जयांश्चैव पाण्डवांश्चैव भारत ।
उपेक्षितो दहेत्कर्णो रोगो देहमिवान्तकः ॥ ८-७७-१० (५८८३०)
नान्यं त्वत्तो हि पश्यामि योधं यौधिष्ठिरे बले ।
यः समासाद्य राधेयं स्वस्तिमानाव्रजेद्गृहान् ॥ ८-७७-१० (५८८३१)
तमद्य निशितैर्बाणैर्निहत्य भरतर्षभ ।
यथा प्रतिज्ञां त्व पार्थ तीर्त्वा कीर्तिमवाप्स्यसि ॥ ८-७७-१० (५८८३२)
त्वं हि शक्तो रणे कर्णं विजेतुं सह पार्थिवैः ।
नान्यो युधि युधां श्रेष्ठ सत्यमेतद्ब्रवीमि ते ॥ ८-७७-१० (५८८३३)
एतत्कृत्वा महत्कार्मं हत्वा कर्णं महारथम् ।
कृतार्थः सफलः पार्थ सुखी भव नरोत्तम ॥ ॥ ८-७७-१० (५८८३४)

इति श्रीमन्महाभारते कर्णपर्वणि सप्तदशदिवसयुद्धे
सप्तसप्ततितमोऽध्यायः ॥ ७७ ॥

Mahabharata - Karna Parva - Chapter Footnotes

८-७७-२३ यदि त्वं त्राता न भवेस्तर्हि तद्धार्तराष्ट्रं बलं कोनु
प्रतीयाद्गच्छेदिति सम्बन्धः ॥
८-७७-५१ त्वांहीति ।क्षणेन सर्वं भस्मीकर्तुं समर्थं त्वां प्राप्य

एकाहान्नश्यमानं क्षत्रं युक्तं बलवत्तरं मन्येयं जानीयाम्। क्षणेन नाश्यमपि पूर्णैकाहपर्यन्तं स्थायित्वादिति भावः ॥
८-७७-१११ परिक्लेशा परिक्लेशानाम् ॥
८-७७-७७ सप्तसप्ततितमोऽध्यायः ॥

---

कर्नपर्व-अध्यय०७८
॥ श्रीः ॥
८.७८. अध्यायः ७८

Mahabharata - Karna Parva - Chapter Topics
अर्जुनेन कृष्णाग्रे कर्णवधानन्तरभाव्यर्थानुवर्णनपूर्वकं तद्वधप्रतिज्ञा ॥ १ ॥

Mahabharata - Karna Parva - Chapter Text

८-७८-० (५८८३५)
सञ्जय उवाच। ८-७८-०क्ष् (५०२६)
स केशवस्य बीभत्सुः श्रुत्वा भारत भाषितम् ।
विशोकः सम्प्रहृष्टश्च क्षणेन समपद्यत ॥ ८-७८-१ (५८८३६)
ततो ज्यामभिमृज्याशु व्याक्षिपद्गाण्डिवं धनुः ।
दध्रे कर्णविनाशाय केशवं चाभ्यभाषत ॥ ८-७८-२ (५८८३७)
त्वया नाथेन गोविन्द ध्रुव एव जयो मम ।
प्रसन्नो यस्य भगवान्भूतभव्यभविष्यकृत् ॥ ८-७८-३ (५८८३८)
त्वत्सहायो ह्यहं कृष्ण त्रींल्लोकान्वै समागतान् ।
प्रापयेयं परं लोकं किमु कर्णं महाहवे ॥ ८-७८-४ (५८८३९)
पश्यामि द्रवतीं सेनां पाञ्चालानां जनार्दन ।
पश्यामि कर्णं समरे विचरन्तमभीतवत् ॥ ८-७८-५ (५८८४०)
भार्गवास्त्रं च पश्यामि ज्वलन्तं कृष्ण सर्वशः ।
सृष्टं कर्णेन वार्ष्णेय शक्रेणेव महाशनिम् ॥ ८-७८-६ (५८८४१)
अनेन खलु सङ्ग्रामे यत्तु कृष्ण मया कृतम् ।
कथयिष्यन्ति भूतानि यावद्भूमिर्धरिष्यति ॥ ८-७८-७ (५८८४२)
अद्य कृष्ण विकर्णा मे कर्णं नेष्यन्ति मृत्यवे ।
गाण्डीवमुक्ताः क्षिण्वन्तो मम हस्तप्रचोदिताः ॥ ८-७८-८ (५८८४३)
अद्य राजा धृतराष्ट्रः स्वां बुद्धिमवमंस्यते ।
दुर्योधनमराज्यार्हं यया राज्येऽभ्यषेचयत् ॥ ८-७८-९ (५८८४४)
अद्य राज्यात्सुखाच्चैव श्रियो राष्ट्रात्तथा पुरात् ।

पुत्रेभ्यश्च महाबाहो धृतराष्ट्रो विमोक्ष्यति ॥ ८-७८-१० (५८८४५)
गुणवन्तं हि यो हित्वा निर्गुणं कुरुते प्रभुम् ।
स शोचति चिरं कृष्ण क्षिप्रमेवागते क्षये ॥ ८-७८-११ (५८८४६)
यथा च पुरुषः कश्चिच्छित्त्वा चाम्रवणं महत् ।
पलाशसेचने बुद्धिं कृत्वा शोचति मन्दधीः ॥ ८-७८-१२ (५८८४७)
दृष्ट्वा पुष्पं पले गृध्नुः फलं दृष्ट्वाऽनुशोचति ।
तथेदं धृतराष्ट्रस्य पुष्पलुब्धस्य मानद ।
फलं दृष्ट्वा भृशं दुःखं भविष्यति जनार्दन ॥ ८-७८-१३ (५८८४८)
सूतपुत्रे हते त्वद्य निराशो भविता प्रभुः ॥ ८-७८-१४ (५८८४९)
अद्य दुर्योधनो राज्याज्जीविताच्च निराशकः ।
भविष्यति हते कर्णे कृष्ण सत्यं ब्रवीमि ते ॥ ८-७८-१५ (५८८५०)
अद्य दृष्ट्वा मया कर्णं शरैर्विशकलीकृतम् ।
स्मरतां तव वाक्यानि शमं प्रति जनेश्वरः ॥ ८-७८-१६ (५८८५१)
अद्यासौ सौबलः कृष्ण ग्लहाञ्जानातु वै शरान् ।
दुरोदरं च गाण्डीवं गण्डवं च रथं मम ॥ ८-७८-१७ (५८८५२)
अद्य कुन्तीसुतस्याहं दृढं राज्ञः प्रजागरम् ।
व्यपनेष्यामि गोविन्द हत्वा कर्णं शितैः शरैः ॥ ८-७८-१८ (५८८५३)
अद्य कुन्तीसुतो राजा हते सूतसुते मया ।
सुप्रहृष्टमनाः प्रीतश्चिरं सुखमवाप्स्यति ॥ ८-७८-१९ (५८८५४)
अद्य वाहमनाधृष्यं केशवाप्रतिमं शरम् ।
उत्स्रक्ष्यामीहयः कर्णं जीविताद्भ्रंशयिष्यति ॥ ८-७८-२० (५८८५५)
यस्य चैतद्व्रतं मह्यं वधे किल दुरात्मनः ।
पादौन मxxxxxx न्यां न फल्गुनम् ॥ ८-७८-२१ (५८८५६)
xxxxxxx ज् पापस्य मधुसूदन ।
xxxxxxxxxxxxxx सन्नतपर्वभिः ॥ ८-७८-२२ (५८८५७)
xxxxxxxxxxxxxx नान्यं पृथिव्यामनुमन्यते ।
xxxxxxxxx सूतपुत्रस्य भूमिः पास्यति शोणितम् ॥ ८-७८-२३ (५८८५८)
xxxxxxx सूतपुत्रो यदब्रवीत् ।
xxxxxxxxxxx श्लाघमानः स्वकान्गुणान् ॥ ८-७८-२४ (५८८५९)
अनृतं तत्करिष्यन्ति मामका निशिताः शराः ।
आशीविषा इव क्रुद्धास्तस्यपास्यन्ति शोणितम् ॥ ८-७८-२५ (५८८६०)
मया हस्तवता मुक्ता नाराचा वैद्युतत्विषः ।
गाण्डीवसृष्टा दास्यन्ति कर्णस्य परमां गतिम् ॥ ८-७८-२६ (५८८६१)
अद्य तप्स्यति राधेयः पाञ्चालीं यत्तदब्रवीत् ।
सभामध्ये वचः क्रूरं कुत्सयन्पाण्डवान्प्रति ॥ ८-७८-२७ (५८८६२)
एते षण्डतिलाः कृष्णे निर्वीर्या हतविक्रमाः ।

अहं वः पाण्डवेयेभ्यो भयात्त्रास्येति चाब्रवीत् ।
हन्ताऽहं पाण्डवान्सर्वान्सपुत्रानिह भारत ॥ ८-७८-२८ (५८८६३)
अनृतं तत्करिष्यन्ति मामका निशिताः शराः ।
हते वैकर्तने कर्णे सूतपुत्रे दुरात्मनि ॥ ८-७८-२९ (५८८६४)
यस्य वीर्यं समाश्रित्य धार्तराष्ट्रो बृहन्मनाः ।
तमद्य कर्णं हन्तास्मि समरे मधुसूदन ॥ ८-७८-३० (५८८६५)
अद्य कर्णे हते कृष्ण धार्तराष्ट्राः सराजकाः ।
विद्रवन्ति दिशो भीताः सिंहं दृष्ट्वा मृगा इव ॥ ८-७८-३१ (५८८६६)
अद्य दुर्योधनो राजा पृथिवीं नान्ववेक्षते ।
हते कर्णे मया सङ्ख्ये सपुत्रे ससुहृज्जने ॥ ८-७८-३२ (५८८६७)
अद्य कर्णं हतं दृष्ट्वा धार्तराष्ट्रोऽत्यमर्षणः ।
जानातु मां रणे कृष्ण प्रवरं सर्वधन्विनाम् ॥ ८-७८-३३ (५८८६८)
सपुत्रपौत्रः सामात्यः ससुहृच्च निराशिषः ।
पित्र्ये राज्ये निराशश्च धार्तराष्ट्रो निराश्रयः ॥ ८-७८-३४ (५८८६९)
अद्य राजा धर्मपुत्रो हतामित्रो भविष्यति ।
अद्य दुर्योधनो दीप्तां श्रियं राज्यं च हास्यति ॥ ८-७८-३५ (५८८७०)
हते वैकर्तने कर्णे भीष्मे द्रोणे च संयुगे ।
कातरं तद्बलं कृष्ण प्रविष्टं भोक्ष्यते तु यत् ॥ ८-७८-३६ (५८८७१)
अद्यप्रभृति राजानं धर्मपुत्रं युधिष्ठिरम् ।
अनुमोदन्तु सुहृदो ज्ञातपूर्वाश्च ब्राह्मणाः ॥ ८-७८-३७ (५८८७२)
अद्य तं निहतं श्रुत्वा कर्णं वैकर्तनं मया ।
करोतु पटहोन्मिश्रं देवतास्थानपूजनम् ॥ ८-७८-३८ (५८८७३)
अद्य कृष्ण हते कर्णे कुरुतां चिरसम्भृतम् ।
याजनं वै महाबाहो देवतानां यथाविधि ॥ ८-७८-३९ (५८८७४)
अद्य त्वम्बा च कृष्णा च त्वरमाणे परस्परम् ।
सस्वजेतां हृषीकेश सम्पूर्णेऽस्मिन्मनोरथे ॥ ८-७८-४० (५८८७५)
अद्य त्वं पाण्डवो ज्येष्ठस्तथाऽऽर्यश्च वृकोदरः ।
उदीक्षेतां हते कर्णे कृष्ण सौम्येन चक्षुषा ॥ ८-७८-४१ (५८८७६)
अभिवाद्य गुरूनद्य कनिष्ठैश्चाभिवादितः ।
सस्वजानो ह्यहं दोर्भ्यां प्राप्स्यामि विपूलं यशः ॥ ८-७८-४२ (५८८७७)
अद्य कर्णे हते कृष्ण प्रशंसन्तोऽर्जुनं सुराः ।
त्रिदिवं यान्तु संहृष्टाः सङ्गताश्च तपोधनाः ॥ ८-७८-४३ (५८८७८)
अद्य लोकास्त्रयः कृष्ण जानन्तु मम पौरुषम् ।
दृष्ट्वा कर्णं हतं युद्धे द्वैरथे सव्यसाचिना ॥ ८-७८-४४ (५८८७९)
अद्याहमनृणः कृष्ण भविष्यामि धनुष्मताम् ।
रथस्य च शराणां च धनुषो गाण्डिवस्य च ॥ ८-७८-४५ (५८८८०)

मोक्ष्याम्यद्य महद्दुःखं त्रयोदशसमार्जितम् ।
हत्वा कर्णं रणे कृष्ण शम्बरं मघवानिव ॥ ८-७८-४६ (५८८८१)
अद्य कर्णे हते युद्धे सोमकानां महारथाः ।
कृतकार्याः प्रमोदन्तां मित्रकार्येप्सवो युधि ॥ ८-७८-४७ (५८८८२)
न जाने च कथं प्रीतिः शैनेयस्याद्य माधव ।
अहं हत्वा रणे कर्णं पुत्रांश्चास्य जयाधिकान् ।
प्रीतिं दास्यामि भीमस्य सात्यकेर्यमयोस्तथा ॥ ८-७८-४८ (५८८८३)
धृष्टद्युम्नस्य वीरस्य तथैव च शिखण्डिनः ।
अद्यानृण्यं गमिष्यामि हत्वा कर्णं महाहवे ।
धर्मराजस्य संश्रुत्य वार्ष्णेयशपथं मिथः ॥ ८-७८-४९ (५८८८४)
अद्य पश्यन्तु सङ्ग्रामे धनञ्जयममर्षणम् ।
युध्यन्तं कौरवैः सार्धं घातयन्तं च सूतजम् ॥ ८-७८-५० (५८८८५)
भवत्समक्षमं वक्ष्यामि पुनरेवात्मसंस्तवम् ।
इत्यप्यमित्रप्रवरमद्याहं हन्मि सूतजम् ॥ ८-७८-५१ (५८८८६)
धनुर्वेदे मत्समः को नु लोके
पराक्रमे वा मम कोऽस्ति तुल्यः ।
को वाऽप्यन्यो मत्समोऽस्ति क्षमायां
ममानृशंस्ये सदृशोऽस्ति कोऽन्यः ॥ ८-७८-५२ (५८८८७)
अहं धनुष्मान्ससुरासुरांश्च
सर्वाणि भूतानि च सङ्गतानि ।
स्वबाहुवीर्याद्गमये पराभवं
मत्पौरुषं विद्धि परं परेभ्यः ॥ ८-७८-५३ (५८८८८)
शरार्चिषा गाण्डिवेनाहमेकः
सर्वान्कुरूऩ्बाह्लिकांश्चाभिपन्नः ।
हिमात्यये कक्षगतो यथाऽग्निः
स निर्दहेयं सहसा प्रगृह्य ॥ ८-७८-५४ (५८८८९)
पाणी पृषत्कालिखितौ ममैतौ
धनुश्च सङ्ख्ये विततं सबाणम् ।
पादौ चेमौ सुरथौ सध्वजौ च
न मादृशं युद्धगतं भजन्ति ॥ ॥ ८-७८-५५ (५८८९०)

इति श्रीमन्महाभारते कर्णपर्वणि सप्तदशदिवसयुद्धे
अष्टसप्ततितमोऽध्यायः ॥ ७८ ॥

Mahabharata - Karna Parva - Chapter Footnotes

८-७८-६ ज्वलन्तम् । पुंस्त्वमार्षम् ॥

८-७८-१६ स्मारतां स्मरतु ॥
८-७८-१७ मण्डलं द्युते शारीस्थापनपट्टम् । दुरोदरं पाशम् ॥
८-७८-७८ अष्टसप्ततितमोऽध्यायः ॥

---

कर्नपर्व-अध्यय०७९
॥ श्रीः ॥
८.७९. अध्यायः ७९

Mahabharata - Karna Parva - Chapter Topics
द्वन्द्वयुद्धम् ॥१ ॥

Mahabharata - Karna Parva - Chapter Text

८-७९-० (५८८९१)
श्धृतराष्ट्र उवाच। ८-७९-०क्ष् (५०२७)
समागमे पाण्डवसृञ्जयानां
महाभये मामकानामगाधे ।
धनञ्जये तात रणाय याते
कर्णेन तद्युद्धमथोऽत्र कीदृक् ॥ ८-७९-१ (५८८९२)
सञ्जय उवाच। ८-७९-२क्ष् (५०२८)
तेषामनीकानि महाध्वजानि
रणे समृद्धानि सुसङ्गतानि ।
भेरीनिरादोन्मुखराण्यंगर्ज--
न्मेघा इव प्रावृषि मारुतास्ताः ॥ ८-७९-२ (५८८९३)
महागजाभ्राकुलमस्त्रतोयं
वादित्रनेमीतलशब्दवच्च ।
हिरण्यचित्रायुधविद्युतं च
शरासिनाराचमहास्त्रधारम् ॥ ८-७९-३ (५८८९४)
तद्भीमवेगं रुधिरौघवाहि
खड्गाकुलं क्षत्रियजीवघाति ।
अनार्तवं क्रूरमनिष्टवर्षं
बभूव संरम्भकरं प्रजानाम् ॥ ८-७९-४ (५८८९५)
एकं रथं सम्परिवार्य मृत्युं
नयन्त्यनेके च रथाः समेताः ।
एकस्तथैकं रथिनं रथाग्र्यां--
स्तथा रथश्चापि रथाननेकान् ॥ ८-७९-५ (५८८९६)

रथं ससूतं सहयं च कञ्चि--
त्कश्चिद्रती मृत्युवशं निनाय ।
निनाय चाप्येकगजेन कश्चि--
द्रथान्बहून्मृत्युवशे तथाश्वान् ॥ ८-७९-६ (५८८९७)
रथान्ससूतान्सहयान्गजांश्च
सर्वानरीन्मृत्युवशं शरौघैः ।
निन्ये हयांश्चैव तथा ससादी--
न्पदातिसङ्घांश्च तथैव पार्थः ॥ ८-७९-७ (५८८९८)
कृपः शिखण्डी च रणे समेतौ
दुर्योधनं सात्यकिरध्यगच्छत् ।
श्रुतश्रवा द्रोणपुत्रेण सार्धं
युधामन्युश्चित्रसेनेन सार्धम् ॥ ८-७९-८ (५८८९९)
कर्णस्य पुत्रं तु रथी सुषेणं
समागतं सृञ्जयश्चोत्तमौजाः ।
गान्धारराजं सहदेवोऽक्षधूर्तं
महर्षभं सिंह इवाभ्यधावत् ॥ ८-७९-९ (५८९००)
शतानीको नाकुलिः कर्णपुत्रं
युवा युवानं वृषसेनं शरौघैः ।
समार्पयत्कर्णपुत्रश्च शूरः
पाञ्चालेयं शरवर्षैरनेकैः ॥ ८-७९-१० (५८९०१)
रथर्षभः कृतवर्माणभार्च्छ--
न्माद्रीपुत्रो नकुलश्चित्रयोधी ।
पाञ्चालानामधिपो याज्ञसेनिः
सेनापतिः कर्णमार्च्छत्ससैन्यम् ॥ ८-७९-११ (५८९०२)
दुःशासनो भारत भारतं तु
व्यात्ताननं क्रूरमिवान्तकाभम् ।
भीमं रणे शस्त्रभृतां वरिष्ठं
भीमं समार्च्छत्तमसह्यवेगम् ॥ ८-७९-१२ (५८९०३)
कर्णात्मजं तत्र जघान वीर--
स्तथाच्छिनच्चोत्तमौजाः प्रसह्य ।
तस्योत्तमाङ्गं निपपात भूमौ
निनादयद्गां निनदेन खं च ॥ ८-७९-१३ (५८९०४)
सुषेणशीर्षं पतितं पृथिव्यां
विलोक्य कर्णोऽथ तदार्तरूपः ।
क्रोधाद्धयांस्तस्य रथं ध्वजं च
बाणैः सुधारैर्निशितैरकृन्तत् ॥ ८-७९-१४ (५८९०५)

स तूत्तमौजा निशितैः पृषत्कै--
र्विव्याध खड्गेन च भास्वरेण ।
पार्ष्णिग्रहांश्चैव कृपस्य हत्वा
शिखण्डिवाहं स ततोऽध्यरोहत् ॥ ८-७९-१५ (५८९०६)
कृपं तु दृष्ट्वा विरथं रथस्थो
नैच्छच्छरैस्ताडयितुं शिखण्डी ।
तं द्रौणिरावार्य रथं कृपस्य
समुज्जहे पङ्कगतां यथा गाम् ॥ ८-७९-१६ (५८९०७)
हिरण्यवर्मा निशितैः पृषत्कै--
स्तवात्मजानामनिलात्मजो वै ।
अतापयत्सैन्यमतीव भीमः
काले शुचौ मध्यगतो यथाऽर्कः ॥ ॥ ८-७९-१७ (५८९०८)

इति श्रीमन्महाभारते कर्णपर्वणि सप्तदशदिवसयुद्धे
एकोनाशीतितमोऽध्यायः ॥ ७९ ॥
Mahabharata - Karna Parva - Chapter Footnotes

८-७९-१० पाञ्चालेयं पाञ्चालीतनयं नाकुलिम् ॥
८-७९-७९ एकोनाशीतितमोऽध्यायः ॥

---

कर्नपर्व-अध्यय०८०
॥ श्रीः ॥
८.८०. अध्यायः ८०

Mahabharata - Karna Parva - Chapter Topics
भीमसेनविशोकयोः संवादः ॥ १ ॥

Mahabharata - Karna Parva - Chapter Text

८-८०-० (५८९०९)
सञ्जय उवाच। ८-८०-०क्ष् (५०२९)
अथ त्विदानीं तुमुले विमर्दे
द्विषद्भिरेको बहुभिः समावृतः ।
महारणे सारथिमित्युवाच
भीमश्चमूं वाहय धार्तराष्ट्रीम् ।
त्वं सारथे याहि जवेन वाहै--

र्नयाम्येतान्धार्तराष्ट्रान्यमाय ॥ ८-८०-१ (५८९१०)
सञ्चोदितो भीमसेनेन चैवं
स सारथिः पुत्रबलं त्वदीयम् ।
प्रायात्ततः सत्वरमुग्रवेगो
यतो भीमस्तद्बलं गन्तुमैच्छत् ॥ ८-८०-२ (५८९११)
ततोऽपरे नागरथाश्वपत्तिभिः
प्रत्युद्ययुस्तं कुरवः समन्तात् ।
भीमस्य वाहाग्र्यमुदारवेगं
समन्ततो बाणगणैर्निजघ्नुः ॥ ८-८०-३ (५८९१२)
ततः शरानापततो महात्मा
चिच्छेद बाणैस्तपनीयपुङ्खैः ।
ते वै निपेतुस्तपनीयपुङ्खा
द्विधा त्रिधा भीमशरैर्निकृत्ताः ॥ ८-८०-४ (५८९१३)
ततो राजन्नागरथाश्वयूनां
भीमाहतानां वरराजमध्ये ।
घोरो निनादः सुमहानभूत्तदा
वज्राहतानामिव पर्वतानाम् ॥ ८-८०-५ (५८९१४)
ते वध्यमानाश्च नरेन्द्रमुख्या
निर्भिद्यन्तो भीमशरप्रवेकैः ।
भीमं समन्तात्समरेऽभ्यरोहन्
वृक्षं शकुन्ता इव पुष्पहेतोः ॥ ८-८०-६ (५८९१५)
ततोऽभियाते तव सैन्ये स भीमः
प्रादुश्चक्रे वेगमनन्तवेगः ।
यथाऽन्तकाले क्षपयन्दिधक्षु--
र्भूतान्तकृत्काल इवात्तदण्डः ॥ ८-८०-७ (५८९१६)
तस्यातिवेगस्य रणेऽतिवेगं
नाशक्नुवन्धारयितुं त्वदीयाः ।
व्यात्ताननस्यापततो यथैव
कालस्य काले हरतः प्रजा वै ॥ ८-८०-८ (५८९१७)
ततो बलं भारत भारतानां
प्रदह्यमानं समरे महात्मना ।
भीतं दिशोऽकीर्यत भीमनुन्नं
महानिलेनाभ्रगणा यथैव ॥ ८-८०-९ (५८९१८)
ततो धीमान्सारथिमब्रवीद्बली
स भीमसेनः पुनरेव हृष्टः ॥ ८-८०-१० (५८९१९)
सूताभिजानीहि परान्स्वकान्वा

रथान्ध्वजांश्चापततः समेतान् ।
युध्यन्ह्यहं नाभिजानामि किञ्चि--
न्मा सैन्यं स्वं छादयिष्ये प्रमत्तः ॥ ८-८०-११ (५८९२०)
अरीन्विशोकान्हि निरीक्ष्य सर्वतो
महांश्च मन्युः पुनरेति मां भृशम् ।
राजातुरो नागमद्यत्किरीटी
बहूनि दुःखान्यभिचिन्तयामि ॥ ८-८०-१२ (५८९२१)
एतद्दुःखं धारये धर्मराजो
यन्मां हित्वा यातवाञ्शत्रुमध्ये ।
नैनं जीवं नाभिजानाम्यजीवं
बीभत्सुं वा तन्ममाद्यातिदुःखम् ॥ ८-८०-१३ (५८९२२)
सोऽहं द्विषत्सैन्यमुदग्रकल्पं
विनाशयिष्ये परमप्रतीतः ।
एतन्निहत्याजिमध्ये समेतं
प्रीतो भविष्यामि सह त्वयाद्य ॥ ८-८०-१४ (५८९२३)
सर्वांस्तूणान्सायकानामवेक्ष्य
किं शिष्टं स्यात्सायकानां रथे मे ।
का वा जातिः किं प्रमाणं च तेषां
ज्ञात्वा व्यक्तं तत्समाचक्ष्व सूत ।
ग्कति वा सहस्राणि कति वा शतानि
ह्याचक्ष्व मे सारथे क्षिप्रमेव ॥ ८-८०-१५ (५८९२४)
विशोक उवाच। ८-८०-१६क्ष् (५०३०)
सर्वं विदित्वैवमहं वदामि
तवार्थसिद्धिप्रदमद्य वीर ।
कैकेयकाम्भोजसुराष्ट्रबाह्लिका
म्लेच्छाश्च सुह्माः परतङ्कणाश्च। ८-८०-१६ (५८९२५)
मद्राश्च वङ्गा मगधाः कुणिन्दा
आनर्तकावर्तकाः पार्वतीयाः ।
सर्वे गृहीतप्रवरायुधास्त्वां
संवेष्ट्य संवेष्ट्य ततो विवेदुः ॥ ८-८०-१७ (५८९२६)
रथे तवास्मिन्निशिताः सुपीता--
स्ततो भल्ला द्वादश वै सहस्राः'।
षण्मार्गणानामयुतानि वीर
क्षुराश्च भल्लाश्च तथायुताख्याः ॥ ८-८०-१८ (५८९२७)
नाराचानां द्वे सहस्रे च वीर
त्रीण्येप च प्रदराणां स्म पार्थ ।

अस्त्यायुधं पाण्डवेयावशिष्टं
न यद्वहेच्छकटं षड्गवीयम् ॥ ८-८०-१९ (५८९२८)
एतद्विद्वन्मुञ्च सहस्रशोऽपि
गदासिबाहुद्रविणं च तेऽस्ति ।
प्रासाश्च मुद्गराः शक्तयस्तोमराश्च
माभैषीस्त्वं संक्षयादायुधानाम् ॥ ८-८०-२० (५८९२९)
भीमसेन उवाच। ८-८०-२१क्ष् (५०३१)
ग्अद्यैव नूनं कथयन्तु सिद्धां
मम प्रतिज्ञां सर्वलोके विशोक ।
न मोक्ष्यते समरे भीमसेन
एकः शत्रून्समरे वाप्यजैषीत् ।
आशंसितानामिदमेकमस्तु
तन्मे देवाः सकलं साधयन्तु ॥' ८-८०-२१ (५८९३०)
सूताद्य मद्बाहुयुतैः समस्ता--
न्समाहनद्भिः पार्थिवानाशुवेगैः ।
च्छन्नं बाणैराहवं घोररूपं
नष्टादित्यं मृत्युलोकेन तुल्यम् ॥ ८-८०-२२ (५८९३१)
अद्यैतद्वै विदितं पार्थिवानां
भविष्यति ह्याकुमारं च सूत ।
निमग्नो वा समरे भीमसेन
एकः कुरून्वा समरे व्यजैषीत् ॥ ८-८०-२३ (५८९३२)
सर्वे सङ्ख्ये कुरवो निष्पतन्तु
मां वा लोकाः कीर्तयन्त्वाकुमारम् ।
सर्वानेकस्तानहं पातयिष्ये
ते वा सर्वे भीमसेनं तुदन्तु ॥ ८-८०-२४ (५८९३३)
आशास्तारः कर्म चाप्युत्तमं ये
तन्मे देवाः सफलं साधयन्तु ।
आयातीह केशवसारथी रथी
शक्रस्तूर्णं यज्ञ इवोपहूतः ॥ ८-८०-२५ (५८९३४)
ईक्षस्वैतां भारतीं दीर्यमाणा--
मेते कस्माद्विद्रवन्ते नरेन्द्राः ।
व्यक्तं धीमान्सव्यसाची नराग्र्यः
सैन्यं ह्येतच्छादयत्याशु बाणैः ॥ ८-८०-२६ (५८९३५)
पश्य ध्वजांश्च द्रवतो विशोक
नागान्हयान्पत्तिसङ्घांश्च सङ्ख्ये ।
रथान्विकीर्णाञ्शरशक्तिताडिता--

न्पश्यस्वैतान्रथिनश्चैव सूत ॥ ८-८०-२७ (५८९३६)
आपूर्यते कौरवी चाप्यभीक्ष्णं
सेना ह्यसौ सुभृशं हन्यमाना ।
धनञ्जयस्याशनितुल्यवेगै--
र्ग्रस्ता शरैः काञ्चनबर्हजालैः ॥ ८-८०-२८ (५८९३७)
एते द्रवन्ति स्म रथाश्वनागाः
पदातिसङ्घानतिमर्दयन्तः ।
सम्मुह्यमानाः कौरवाः सर्व एव
द्रवन्ति नागा इव दाहभीताः ॥ ८-८०-२९ (५८९३८)
हाहाकृताश्चैव रणे विशोक
मुञ्चन्ति नादान्विपुलान्गजेन्द्राः ॥ ८-८०-३० (५८९३९)
विशोक उवाच। ८-८०-३१क्ष् (५०३२)
किं भीम नैनं त्वमिहाशृणोषि
विस्फारितं गाण्डिवस्यातिघोरम् ।
क्रुद्धेन पार्थेन विकृष्यतोऽद्य
कच्चिन्नेमौ तव कर्णौ विनष्टौ ॥ ८-८०-३१ (५८९४०)
सर्वे कामाः पाण्डव ते समृद्धाः
कपिर्ह्यसौ दृश्यते हस्तिसैन्ये ।
नीलाद्धनाद्विद्युतमुच्चरन्तीं
तथा पश्य विस्फुरन्तीं धनुर्ज्याम् ॥ ८-८०-३२ (५८९४१)
कपिर्ह्यसौ वीक्षते सर्वतो वै
ध्वजाग्रमारुह्य धनञ्जयस्य ।
वित्रासयन्रि पुसङ्घान्विमर्दे
बिभेम्यस्मादात्मनैवाभिवीक्ष्य ॥ ८-८०-३३ (५८९४२)
विभ्राजते चातिमात्रं किरीटं
विचित्रमेतच्च धनञ्जयस्य ।
दिवाकराभो मणिरेष दिव्यो
विभ्राजते चैव किरीटसंस्थः ॥ ८-८०-३४ (५८९४३)
पार्श्वे भीमं पाण्डुराभ्रप्रकाशं
पश्यस्व सङ्खं देवदत्तं सुघोषम् ।
अभीषुहस्तस्य जनार्दनस्य
विगाहमानस्य चमूं परेषाम् ॥ ८-८०-३५ (५८९४४)
रविप्रभं वज्रनाभं क्षुरान्तं
पार्श्वे स्थितं पश्य जनार्दनस्य ।
चक्रं यशोवर्धनं केशवस्य
सदार्चितं यदिभिः पश्य वीर ॥ ८-८०-३६ (५८९४५)

महाद्विपानां सरलद्रुमोपमाः
करा निकृत्ताः प्रपतन्त्यमी क्षुरैः ।
किरीटिना तेन पुनः ससादिनः
शरैर्निकृत्ताः कुलिशैरिवाद्रयः ॥ ८-८०-३७ (५८९४६)
तथैव कृष्णस्य च पाञ्चजन्यं
महार्हमेतं द्विजराजवर्णम् ।
कौन्तेय पश्योरसि कौस्तुभं च
जाज्वल्यमानं विजयां स्रजं च ॥ ८-८०-३८ (५८९४७)
ध्रुवं रथाग्र्यः समुपैति पार्थो
विद्रावयन्सैन्यमिदं परेषाम् ।
सिताभ्रवर्णैरसितप्रयुक्तै--
र्हयैर्महार्हैं रथिनां वरिष्ठः ॥ ८-८०-३९ (५८९४८)
रथान्हयान्पत्तिगणांश्च सायकै--
र्विदारितान्पश्य पतन्त्यमी यथा ।
तवानुजेनामरराजतेजसा
महावनानीव सुपर्णवायुना ॥ ८-८०-४० (५८९४९)
चतुः शतान्पश्य रथानिमान्हतान्
सवाजिसूतान्समरे किरीटिना ।
महेषुभिः सप्तशतानि दन्तिनां
पदातिसादींश्च रथाननेकशः ॥ ८-८०-४१ (५८९५०)
अयं समभ्येति तवान्तिकं बली
निघ्नन्कुरूंश्चित्र इव ग्रहोऽर्जुनः ।
समृद्धकामोऽसि हतास्तवाहिता
बलं तवायुश्च चिराय वर्धताम् ॥ ८-८०-४२ (५८९५१)
भीमसेन उवाच। ८-८०-४३क्ष् (५०३३)
ददानि ते ग्रामवरांश्चतुर्दश
प्रियाख्याने सारथे सुप्रसन्नः ।
दासीशतं चापि रथांश्च विंशतिं
यदर्जुनं वेदयसे विशोक ॥ ॥ ८-८०-४३ (५८९५२)

इति श्रीमन्महाभारते कर्णपर्वणि सप्तदशदिवसयुद्धे
अशीतितमोऽध्यायः ॥ ८० ॥

Mahabharata - Karna Parva - Chapter Footnotes

८-८०-१९ प्रदरा बाणविशेषः ॥
८-८०-३९ असितप्रयुक्तैः कृष्णप्रयुक्तैः ॥

८-८०-८० अशीतितमोऽध्यायः ॥

---

कर्नपर्व-अध्यय०८१
॥ श्रीः ॥
८.८१. अध्यायः ८१

Mahabharata - Karna Parva - Chapter Topics
पार्थपराक्रमः ॥ १ ॥
भीमेन दुर्योधनचोदितस्य शकुनेः पराजयः ॥ २ ॥

Mahabharata - Karna Parva - Chapter Text

८-८१-० (५८९५३)
सञ्जय उवाच। ८-८१-०क्ष् (५०३४)
श्रुत्वा तु रथनिर्घोषं सिंहनादं च संयुगे ।
अर्जुनः प्राह गोविन्दं शीघ्रं वाहय वाजिनः ॥ ८-८१-१ (५८९५४)
अर्जुनस्य वचः श्रुत्वा गोविन्दोऽर्जुनमब्रवीत् ।
एष गच्छामि सुक्षिप्रं यत्र भीमो व्यवस्थितः ॥ ८-८१-२ (५८९५५)
तं यान्तमश्वा हिमशङ्खवर्णाः
सुवर्णमुक्तामणिजालनद्धाः ।
जम्भं जिघांसुं प्रगृहीतवज्रं
हया यथा तत्र यथा वहंस्तदा ॥ ८-८१-३ (५८९५६)
रथाश्वमातङ्गपदातिसङ्घा
बाणस्वनैर्नेमिखुरस्वनैश्च ।
सन्नादयन्तो वसुधां दिशश्च
क्रुद्धा नृसिंहा जयमभ्युदीयः ॥ ८-८१-४ (५८९५७)
तेषां च पार्थस्य च मारिषासी--
द्देहासुपापक्षपणं सुयुद्धम् ।
त्रैलोक्यहेतोरसुरैर्यथासी--
द्देवस्य विष्णोर्जयतां वरस्य ॥ ८-८१-५ (५८९५८)
तैरस्तमुच्चावचमायुधं त--
देकः प्रचिच्छेद किरीटमाली ।
क्षुरार्धचन्द्रैर्निशितैश्च भल्लैः
शिरांसि तेषां बहुधा च बाहून् ॥ ८-८१-६ (५८९५९)
छत्राणि वालव्यजनानि केतू--
नश्वान्रथान्पत्तिगणान्द्विपांश्च ।

ते पेतुरुर्व्यां बहुधा विकृत्ता
वातप्रणुन्नानि यथा वनानि ॥ ८-८१-७ (५८९६०)
सुवर्णजालावनता महागजाः
सवैजयन्तीध्वजयोधकल्पिताः ।
सुवर्णपुङ्खैरिषुभिः समाचिता--
शकाशिरे प्रज्वलिता यथाचलाः ॥ ८-८१-८ (५८९६१)
विदार्य नागाश्वरथान्धञ्जयः
शरोत्तमैर्वासववज्रसन्निभैः ।
द्रुतं ययौ कर्णजिघांसया तथा
यथा मरुत्वान्बलभेदने पुरा ॥ ८-८१-९ (५८९६२)
ततः स पुरुषव्याघ्रस्तव सैन्यमरिन्दमः ।
प्रविवेश महाबाहुर्मकरः सागरं यथा ॥ ८-८१-१० (५८९६३)
तं हृष्टास्तावका राजन्रथपत्तिसमन्विताः ।
गजाश्वसादिबहुलाः पाण्डवं समुपाद्रवन् ॥ ८-८१-११ (५८९६४)
तेषामापततां पार्थमारावः सुमहानभूत् ।
सागरस्येव क्षुब्धस्य यथा स्यात्सलिलस्वनः ॥ ८-८१-१२ (५८९६५)
ते तु तं पुरुषव्याघ्रं व्याघ्रा इव महारथाः ।
अभ्यद्रवन्त सङ्ग्रामे त्यक्त्वा प्राणकृतं भयम् ॥ ८-८१-१३ (५८९६६)
तेषामापततां तत्र शरवर्षाणि मुञ्चताम् ।
अर्जुनो व्यधमत्सैन्यं महावातो घनानिव ॥ ८-८१-१४ (५८९६७)
तेऽर्जुनं सहिता भूत्वा रथवंशैः ग्रहारिणः ।
अभियाय महेष्वासा विव्यधुर्निशितैः शरैः ॥ ८-८१-१५ (५८९६८)
ततोऽर्जुनः सहस्राणि रथवारणवाजिनाम् ।
प्रेषयामास विशिखैर्यमस्य सदनं प्रति ॥ ८-८१-१६ (५८९६९)
ते वध्यमानाः समरे पार्थचापच्युतैः शरैः ।
तत्रतत्र स्म लीयन्ते भये जाते महारथाः ॥ ८-८१-१७ (५८९७०)
तेषां चतुःशतान्वीरान्यतमानान्महारथान् ।
अर्जुनो निशितैर्बाणैरनयद्यमसादनम् ॥ ८-८१-१८ (५८९७१)
ते वध्यमानाः समरे नानालिङ्गैः शितैः शरैः ।
अर्जुनं समभित्यज्य दुद्रुवुर्वै दिशो दश ॥ ८-८१-१९ (५८९७२)
तेषां शब्दो महानासीद्द्रवतां वाहिनीमुखे ।
मेघौघस्येव भद्रं ते गिरिमासाद्य दीर्यतः ॥ ८-८१-२० (५८९७३)
तां तु सेनां भृशं विद्ध्वा द्रावयित्वाऽर्जुनः शरैः ।
प्रायादभिमुखः पार्थः सूतानीकं हि मारिष ॥ ८-८१-२१ (५८९७४)
तस्य शब्दो महानासीत्परानभिमुखस्य वै ।
गरुडस्येव पततः पन्नगार्थे यथा पुरा ॥ ८-८१-२२ (५८९७५)

तं तु शब्दमभिश्रुत्य भीमसेनो महाबलः ।
बभूव परमप्रीतः पार्थदर्शनलालसः ॥ ८-८१-२३ (५८९७६)
श्रुत्वैव पार्थमायान्तं भीमसेनः प्रतापवान् ।
त्यक्त्वा प्राणान्महाराज सेनां तव ममर्द ह ॥ ८-८१-२४ (५८९७७)
स वायुवीर्यप्रतिमो वायुवेगसमो जवे ।
वायुवद्व्यचरद्भीमो वायुपुत्रः प्रतापवान् ॥ ८-८१-२५ (५८९७८)
तेनाद्यमाना राजेन्द्र सेना तव विशाम्पते ।
व्यभ्रश्यत महाराज भिन्ना नौरिव सागरे ॥ ८-८१-२६ (५८९७९)
तां तु सेनां तदा भीमो दर्शयन्पाणिलाघवम् ।
शरैरवचकर्तोग्रैः प्रेपयिष्यन्यमक्षयम् ॥ ८-८१-२७ (५८९८०)
तत्र भारत भीमस्य बलं दृष्ट्वातिमानुषम् ।
व्यत्रस्यन्त रणे योधाः कालस्येव युगक्षये ॥ ८-८१-२८ (५८९८१)
तथाऽर्दितान्भीमबलान्भीमसेनेन भारत ।
दृष्ट्वा दुर्योधनो राजा इदं वचनमब्रवीत् ॥ ८-८१-२९ (५८९८२)
सैनिकांश्च महेष्वासान्योधांश्च भरतर्षभ ।
समादिशन्रणे सर्वान्हत भीममिति स्म ह ॥ ८-८१-३० (५८९८३)
तस्मिन्हते हतं मन्ये पाण्डुसैन्यमशेषतः ॥ ८-८१-३१ (५८९८४)
प्रतिगृह्य च तामाज्ञां तव पुत्रस्य पार्थिवाः ।
भीमं प्रच्छादयामासुः शरवर्षैः समन्ततः ॥ ८-८१-३२ (५८९८५)
गजाश्च बहुला राजन्नराश्च जयगृद्धिनः ।
रथे स्थिताश्च राजेन्द्र परिवव्रुर्वृकोदरम् ॥ ८-८१-३३ (५८९८६)
स तैः परिवृतः शूरैः शूरो राजन्समन्ततः ।
शुशुभे भरतश्रेष्ठो नक्षत्रैरिव चन्द्रमाः ॥ ८-८१-३४ (५८९८७)
परिवेषी यथा सोमः परिपूर्णो विराजते ।
स रराज तथा सङ्ख्ये दर्शनीयो नरोत्तमः ।
निर्विशेषो महाराज विजयेनैव संयुगे ॥ ८-८१-३५ (५८९८८)
तस्य ते पार्थिवाः सर्वे शरवृष्टिं समासृजन् ।
क्रोधरक्तेक्षणाः शूरा हन्तुकामा वृकोदरम् ॥ ८-८१-३६ (५८९८९)
तां विदार्य महासेनां शरैः सन्नतपर्वभिः ।
निश्चक्राम रणाद्भीमो मत्स्यो जालादिवाम्भसि ॥ ८-८१-३७ (५८९९०)
हत्वा दशसहस्राणि गजानामनिवर्तिनाम् ।
नृणां शतसहस्रे द्वे द्वे शते चैव भारत ॥ ८-८१-३८ (५८९९१)
पञ्च चाश्वसहस्राणि रथानां शतमेव च ।
हत्वा प्रास्यन्दयद्भीमो नदीं शोणितवाहिनीम् ॥ ८-८१-३९ (५८९९२)
शोणितोदां रथावर्तां हस्तिग्राहसमाकुलाम् ।
नरमीनाश्वनक्रान्तां केशशैवलशाद्वलाम् ॥ ८-८१-४० (५८९९३)

सञ्छिन्नभुजनागेन्द्रां बहुरत्नापहारिणीम् ।
ऊरुग्राहां मज्जपङ्कां शीर्षोपलसमावृताम् ॥ ८-८१-४१ (५८९९४)
धनुःकाशां शरावापां गदापरिघकेतनाम् ।
हंसछत्रध्वजोपेतामुष्णीषवरफेनिलाम् ॥ ८-८१-४२ (५८९९५)
हारपद्माकरां चैव भूमिरेणूर्मिमालिनीम् ।
आर्यवृत्तवतीं सङ्ख्ये सुतरां भीरुदुस्तराम् ॥ ८-८१-४३ (५८९९६)
योधग्राहवतीं सङ्ख्ये वहन्तीं पितृसादनम् ।
क्षणेन पुरुषव्याघ्रः प्रावर्तयत निम्नगाम् ॥ ८-८१-४४ (५८९९७)
यथा वैतरणीमुग्रां दुस्तरामकृतात्मभिः ।
तथा दुस्तरणीं घोरां भीरूणां भयवर्धनीम् ॥ ८-८१-४५ (५८९९८)
यतोयतः पाण्डवेयः प्रविष्टो रथसत्तमः ।
ततस्ततः प्रापतन्वै योधाः शतसहस्रशः ॥ ८-८१-४६ (५८९९९)
एवं दृष्ट्वा कृतं कर्म भीमसेनेन संयुगे ।
दुर्योधनो महाराज शकुनिं वाक्यमब्रवीत् ॥ ८-८१-४७ (५९०००)
जहि मातुल सङ्ग्रामे भीमसेनं महाबलम् ।
अस्मिञ्जिते जितं मन्ये पाण्डवेयं महाबलम् ॥ ८-८१-४८ (५९००१)
ततः प्रायान्महाराज सौबलेयः प्रतापवान् ।
रणाय महते युक्तो भ्रातृभिः परिवारितः ॥ ८-८१-४९ (५९००२)
स समासाद्य सङ्ग्रामे भीमं भीमपराक्रमम् ।
वारयामास तं वीरो वेलेव मकरालयम् ॥ ८-८१-५० (५९००३)
सन्न्यवर्तत तं भीमो वार्यमाणः शितैः शरैः ।
शकुनिस्तस्य राजेन्द्र वामपार्श्वे स्तनान्तरे ।
प्रेषयामास नाराचान्रुक्मपुङ्खाञ्शिलाशितान् ॥ ८-८१-५१ (५९००४)
वर्म भित्त्वा तु ते घोराः पाण्डवस्य महात्मनः ।
न्यमज्जन्त महाराज कङ्कबर्हिणवाससः ॥ ८-८१-५२ (५९००५)
सोऽतिविद्धो रणे भीमः शरं रुक्मविभूषितम् ।
प्रेषयामास स रुषा सौबलं प्रति भारत ॥ ८-८१-५३ (५९००६)
तमायान्तं शरं घोरं शकुनिः शत्रुतापनः ।
चिच्छेद सप्तधा राजन्कृतहस्तो महाबलः ॥ ८-८१-५४ (५९००७)
तस्मिन्निपतिते भूमौ भीमः क्रुद्धो विशाम्पते ।
धनुश्छिच्छेद भल्लेन सौबलस्य हसन्निव ॥ ८-८१-५५ (५९००८)
तदपास्य धनुश्छिन्नं सौबलेयः प्रतापवान् ।
अन्यदादाय वेगेन धनुर्भल्लांश्च षोडश ।
तैस्तस्य तु महाराज भल्लैः सन्नतपर्वभिः ॥ ८-८१-५६ (५९००९)
द्वाभ्यां स सारथिं ह्याच्छ्र्च्छद्भीमं सप्तभिरेव च ।
ध्वजमेकेन चिच्छेद द्वाभ्यां छत्रं विशाम्पते ।

चतुर्भिश्चतुरो वाहान्विव्याध सुबलात्मजः ॥ ८-८१-५७ (५१०१०)
ततः क्रुद्धो महाराज भीमसेनः प्रतापवान् ।
शक्तिं चिक्षेप समरे रुक्मदण्डामयस्मयीम् ॥ ८-८१-५८ (५१०११)
सा भीमभुजनिर्मुक्ता नागजिह्वेन चञ्चला ।
निपपात रणे तूर्णं सौबलस्य महात्मनः ॥ ८-८१-५९ (५१०१२)
ततस्तामेव संगृह्य शक्तिं कनकभूषणाम् ।
भीमसेनाय चिक्षेप क्रुद्धरूपो विशाम्पते ॥ ८-८१-६० (५१०१३)
सा निर्भिद्य भुजं सव्यं पाण्डवस्य महात्मनः ।
निपपात तदा भूमौ यथा विद्युन्नभश्च्युता ॥ ८-८१-६१ (५१०१४)
अथोत्क्रुष्टं महाराज धार्तराष्ट्रैः समन्ततः ।
न तु तं ममृषे भीमः सिंहनादं तरस्विनाम् ॥ ८-८१-६२ (५१०१५)
अन्यद्गृह्य धनुः सज्यं त्वरमाणो महाबलः ।
मुहूर्तादिव राजेन्द्र च्छादयामास सायकैः ।
सौबलस्य बलं सङ्ख्ये त्यक्त्वा नादं महाबलः ॥ ८-८१-६३ (५१०१६)
तस्याश्वांश्चतुरो हत्वा सूतं चैव विशाम्पते ।
ध्वजं चिच्छेद भल्लेन त्वरमाणः पराक्रमी ॥ ८-८१-६४ (५१०१७)
हताश्वं रथमुत्सृज्य त्वरमाणो नरोत्तमः ।
तस्थौ विस्फारयंश्चापं क्रोधरक्तेक्षणः श्वसन् ॥ ८-८१-६५ (५१०१८)
शरैश्च बहुधा राजन्भीममार्च्छत्समन्ततः ॥ ८-८१-६६ (५१०१९)
प्रतिहत्य तु वेगेन भीमसेनः प्रतापवान् ।
धनुश्चिच्छेद सङ्क्रुद्धो विव्याध च शितैः शरैः ॥ ८-८१-६७ (५१०२०)
सोऽतिविद्धो बलवता शत्रुणा शत्रुकर्शनः ।
निपपात तदा भूमौ किञ्चित्प्राणो नराधिपः ॥ ८-८१-६८ (५१०२१)
ततस्तं विह्वलं ज्ञात्वा पुत्रस्तव विशाम्पते ।
अपोवाह रथेनाजौ भीमसेनस्य पश्यतः ॥ ८-८१-६९ (५१०२२)
शकुनिं विह्वलं दृष्ट्वा धार्तराष्ट्राः पराङ्मुखाः ।
प्रदुद्रुवुर्दिशो भीता भीमसेनभयात्प्रभो ॥ ८-८१-७० (५१०२३)
सौबले निर्जिते राजन्भीमसेनेन धन्विना ।
भयेन महताऽऽविष्टः पुत्रो दुर्योधनस्तव ।
अपायाज्जवनैरश्वैः सापेक्षो मातुलं प्रति ॥ ८-८१-७१ (५१०२४)
पराङ्मुखं तु राजानं दृष्ट्वा सैन्यानि भारत ।
विप्रजग्मुः समुत्सृज्य द्वैरथानि समन्ततः ॥ ८-८१-७२ (५१०२५)
तान्दृष्ट्वा विद्रुतान्सर्वान्धार्तराष्ट्रान्पराङ्मुखान् ।
जवेनाभ्यापतद्भीमः किरञ्शरशतान्बहून् ॥ ८-८१-७३ (५१०२६)
ते वध्यमाना भीमेन धार्तराष्ट्राः पराङ्मुखाः ।
कर्णमासाद्य समरे स्थिता राजन्समन्ततः ॥ ८-८१-७४ (५१०२७)

स हि तेषां महावीर्यो द्वीपोऽभूत्सुमहाबलः ।
भिन्ननौका यथा राजन्द्वीपमासाद्य निर्वृताः ॥ ८-८१-७५ (५९०२८)
भवन्ति पुरुषव्याघ्र नाविकाः कालपर्यये ।
तथा कर्णं समासाद्य तावकाः पुरुषर्षभ ॥ ८-८१-७६ (५९०२९)
समाश्वस्ताः स्थिता राजन्सम्प्रहृष्टाः परस्परम् ।
समाजग्मुश्च युद्धाय मृत्युं कृत्वा निवर्तनम् ॥ ॥ ८-८१-७७ (५९०३०)

इति श्रीमन्महाभारते कर्णपर्वणि सप्तदशदिवसयुद्धे
एकाशीतितमोऽध्यायः ॥ ८१ ॥

---

कर्नपर्व-अध्यय०८२
॥ श्रीः ॥
८.८२. अध्यायः ८२

Mahabharata - Karna Parva - Chapter Topics
कर्णपराक्रमवर्णनम् ॥ १ ॥

Mahabharata - Karna Parva - Chapter Text

८-८२-० (५९०३१)
धृतराष्ट्र उवाच। ८-८२-०क्ष् (५०३५)
ततो भग्नेषु सैन्येषु भीमसेनेन संयुगे ।
दुर्योधनोऽब्रवीत्किं नु सौबलो वाऽपि सञ्जय ॥ ८-८२-१ (५९०३२)
कर्णो वा जयतां श्रेष्ठो योधा वा मामका युधि ।
कृपो वा कृतवर्मा वा द्रौणिर्दुःशासनोऽपि वा ॥ ८-८२-२ (५९०३३)
अत्यद्भुतमहं मन्ये पाण्डवेयस्य विक्रमम् ।
यदेकः समरे सर्वान्योधयामास मामकान् ॥ ८-८२-३ (५९०३४)
यथाप्रतिज्ञं योधानां राधेयः कृतवानपि ।
कुरूणामथ सर्वेषां कर्णः शत्रुनिषूदनः ।
शर्म वर्म प्रतिष्ठा च जीविताशा च सञ्जय ॥ ८-८२-४ (५९०३५)
तद्भग्नं स्वबलं दृष्ट्वा कौन्तेयेनामितौजसा ।
धनुर्दराणां प्रवरः कर्णः किमकरोद्युधि ॥ ८-८२-५ (५९०३६)
पुत्रा वा मम दुर्धर्षा राजानो वा महारथाः ।
एतन्मे सर्वमाचक्ष्व कुशलो ह्यसि सञ्जय ॥ ८-८२-६ (५९०३७)
सञ्जय उवाच। ८-८२-७क्ष् (५०३६)
अपराह्णे महाराज सूतपुत्रः प्रतापवान् ।

जघान सोमकान्सर्वान्भीमसेनस्य पश्यतः ॥ ८-६२-७ (५१०३८)
भीमोऽप्यतिबलं सैन्यं धार्तराष्ट्रं व्यपोथयत् ॥ ८-६२-८ (५१०३९)
द्राव्यमाणं बलं दृष्ट्वा भीमसेनेन धीमता ।
यन्तारमब्रवीत्कर्णः पाञ्चालानेव मां वह ॥ ८-६२-९ (५१०४०)
मद्रराजस्ततः शल्यः श्वेतानश्वान्महाजवान् ।
प्राहिणोच्चेदिपाञ्चालान्करूशांश्च महाबलः ॥ ८-६२-१० (५१०४१)
प्रविश्य च महत्सैन्यं शल्यः परबलार्दनः ।
न्ययच्छत्तुरगान्हृष्टो यत्रयत्र च ते रथाः ॥ ८-६२-११ (५१०४२)
तं रथं मेघसङ्काशं वैयाघ्रपरिवारणम् ।
संदृश्य पाण्डुपञ्चालास्त्रस्ता ह्यासन्विशाम्पते ॥ ८-६२-१२ (५१०४३)
ततो रथस्य निनदः प्रादुरासीन्महारणे ।
पर्जन्यसमनिर्घोषः पर्वतस्येव दीर्यतः ॥ ८-६२-१३ (५१०४४)
ततः शरशतैस्तीक्ष्णैः कर्ण आकर्णनिःसृतैः ।
जघान पाण्डवबलं शतशोऽथ सहस्रशः ॥ ८-६२-१४ (५१०४५)
तं तथा समरे कर्म कुर्वाणमपराजितम् ।
परिवव्रुर्महेष्वासाः पाण्डवानां महारथाः ॥ ८-६२-१५ (५१०४६)
तं शिखण्डी च भीमश्च धृष्टद्युम्नश्च पार्षतः ।
नकुलः सहदेवश्च द्रौपदेयाश्च सात्यकिः ॥ ८-६२-१६ (५१०४७)
परिवव्रुर्जिघांसन्तो राधेयं शरवृष्टिभिः ।
सात्यकिस्तु तदा कर्णं विंशत्या निशितैः शरैः ॥ ८-६२-१७ (५१०४८)
अताडयद्रणे शूरो जत्रुदेशे नरोत्तमः ।
शिखण्डी पञ्चविंशत्या धृष्टद्युम्नश्च सप्तभिः ॥ ८-६२-१८ (५१०४९)
द्रौपदेयाश्चतुःषष्ट्या सहदेवश्च सप्तभिः ।
नकुलश्च शतेनाजौ कर्णं विव्याध सायकैः ॥ ८-६२-१९ (५१०५०)
भीमसेनस्तु राधेयं नवत्या नतपर्वणाम् ।
विव्याध समरे क्रुद्धो जत्रुदेशे महाबलः ॥ ८-६२-२० (५१०५१)
अथ प्रहस्याधिरथिर्व्याक्षिपद्धनुरुत्तमम् ।
मुमोच निशितान्बाणान्पीडयन्सुमहाबलः ॥ ८-६२-२१ (५१०५२)
तान्प्रत्यविध्यद्राधेयः पञ्चभिः पञ्चभिः शरैः ।
सात्यकेस्तु धनुश्छित्त्वा ध्वजं च भरतर्षभ ॥ ८-६२-२२ (५१०५३)
तं तथा नवभिर्बाणैराजघान स्तनान्तरे ।
भीमसेनं ततः क्रुद्धो विव्याध त्रिंशता शरैः ॥ ८-६२-२३ (५१०५४)
सहदेवस्य भल्लेन ध्वजं चिच्छेद मारिष ।
सारथिं च त्रिभिर्बाणैराजघान परन्तपः ॥ ८-६२-२४ (५१०५५)
विरथान्द्रौपदेयांश्च चकार भरतर्षभ ।
अक्ष्णोर्निमेषमात्रेण तदद्भुतमिवाभवत् ॥ ८-६२-२५ (५१०५६)

विमुखीकृत्य तान्सर्वाञ्शरैः सन्नतपर्वभिः ।
पाञ्चालानहनञ्छूरांश्चेदीनां च महारथान् ॥ ८-८२-२६ (५१०५७)
ते वध्यमानाः समरे चेदिमत्स्या विशाम्पते ।
कर्णमेकमभिद्रुत्य शरसङ्घैः समार्पयन् ॥ ८-८२-२७ (५१०५८)
ताञ्जघान शितैर्बाणैः सूतपुत्रो महारथः ।
ते वध्यमानाः समरे चेदिमात्स्या विशाम्पते ।
प्राद्रवन्त रणे भीताः सिंहत्रस्ता मृगा इव ॥ ८-८२-२८ (५१०५९)
एतदत्युद्भतं कर्म दृष्टवानस्मि भारत ।
यदेकः समरे शूरान्सूतपुत्रः प्रतापवान् ॥ ८-८२-२९ (५१०६०)
यतमानान्परं शक्त्या योधयानांश्च धन्विनः ।
पाण्डवेयान्महाराज शरैर्वारितवान्रणे ॥ ८-८२-३० (५१०६१)
तत्र भारत कर्णस्य लाघवेन महात्मनः ।
तुतुषुर्देवताः सर्वाः सिद्धाश्च सह चारणैः ॥ ८-८२-३१ (५१०६२)
अपूजयन्महेष्वासा धार्तराष्ट्रा नरोत्तमम् ।
कर्णं रथवरश्रेष्ठं श्रेष्ठं सर्वधनुष्मताम् ॥ ८-८२-३२ (५१०६३)
ततः कर्णो महाराज ददाह रिपुवाहिनीम् ।
कक्षमिद्धो यथा वह्निर्निदाघे ज्वलितो महान् ॥ ८-८२-३३ (५१०६४)
ते वध्यमानाः कर्णेन पाण्डवेयास्ततस्ततः ।
प्राद्रवन्त रणे भीताः कर्णं दृष्ट्वा महारथम् ॥ ८-८२-३४ (५१०६५)
तत्राक्रन्दो महानासीत्पाञ्चालानां महारणे ।
वध्यतां सायकैस्तीक्ष्णैः कर्णचापवरच्युतैः ॥ ८-८२-३५ (५१०६६)
तेन शब्देन वित्रस्ता पाण्डवानां महाचमूः ।
कर्णमेकं रणे योधं मेनिरे तत्र शात्रवाः ॥ ८-८२-३६ (५१०६७)
तत्राद्भुतं पुनश्चक्रे राधेयः शत्रुकर्शनः ।
यदेनं पाण्डवाः सर्वे न शेकुरभिवीक्षितुम् ॥ ८-८२-३७ (५१०६८)
जलौघः पर्वतश्रेष्ठं यथासाद्य प्रभिद्यते ।
तथा तत्पाण्डवं सैन्यं कर्णमासाद्य दीर्यते ॥ ८-८२-३८ (५१०६९)
कर्णोऽपि समरे राजन्विधूमोऽग्निरिव ज्वलत् ।
दहंस्तस्थौ महाबाहुः पाण्डवानां महाचमूम् ॥ ८-८२-३९ (५१०७०)
शिरांसि च महाराज कर्णां श्चैव सकुण्डलान् ।
बाहूंश्च वीरो वीराणां चिच्छेद लघु चेषुभिः ॥ ८-८२-४० (५१०७१)
हस्तिदन्तत्सरून्खङ्गान्ध्वजाञ्शक्तीर्हयान्गाजान् ।
रथांश्च विविधान्राजन्पताका व्यजनानि च ॥ ८-८२-४१ (५१०७२)
अक्षं च युगयोक्त्राणि चक्राणि विविधानि च ।
चिच्छेद बहुधा कर्णो योधव्रतमनुष्ठितः ॥ ८-८२-४२ (५१०७३)
तत्र भारत कर्णेन निहतैर्गजवाजिभिः ।

अगम्यरूपा पृथिवी मांसशोणितकर्दमा ॥ ८-८२-४३ (५१०७४)
विषमं च समं चैव हतैरश्वपदातिभिः ।
रथैश्च कुञ्जरैश्चैव न प्राज्ञायत किञ्चन ॥ ८-८२-४४ (५१०७५)
नापि स्वे न परे योधाः प्राज्ञायन्त परस्परम् ।
घोरे शरान्धकारे तु कर्णास्त्रे च विजृम्भिते ॥ ८-८२-४५ (५१०७६)
राधेयचापनिर्मुक्तैः शरैः काञ्चनभूषणैः ।
सञ्छादिता महाराज पाण्डवानां महारथाः ॥ ८-८२-४६ (५१०७७)
ते पाण्डवेयाः समरे राधेयेन पुनः पुनः ।
अभज्यन्त महाराज यतमाना महारथाः ॥ ८-८२-४७ (५१०७८)
मृगसङ्घान्यथा क्रुद्धः सिंहो द्रावयते वने ।
पञ्चालानां रथश्रेष्ठान्द्रावयञ्शात्रवांस्तथा ॥ ८-८२-४८ (५१०७९)
कर्णस्तु समरे योधांस्त्रासयन्सुमहायशाः ।
कालयामास तत्सैन्यं यथा पशुगणान्वृकः ॥ ८-८२-४९ (५१०८०)
दृष्ट्वा तु पाण्डवीं मेनां धार्तराष्ट्राः पराङ्मुखीम् ।
तत्राजग्मुर्महेष्वासा रुदन्तो भैरवान्रवान् ॥ ८-८२-५० (५१०८१)
दुर्योधनो हि राजेन्द्र मुदा परमया युतः ।
वादयामास संहृष्टो नानावाद्यानि सर्वशः ॥ ८-८२-५१ (५१०८२)
पाञ्चालाश्च महेष्वासा भग्नास्तत्र नरोत्तमाः ।
न्यवर्तन्त तदा शूरा मृत्युं कृत्वा निवर्तनम् ॥ ८-८२-५२ (५१०८३)
तान्निवृत्तान्रणे शूरान्राधेयः शत्रुतापनः ।
अनेकशो महाराज बभञ्ज पुरुषर्षभः ॥ ८-८२-५३ (५१०८४)
तत्र भारत कर्णेन पाञ्चाला विंशती रथाः ।
निहताः सायकैः क्रोधाच्चेदयश्च परंशताः ॥ ८-८२-५४ (५१०८५)
कृत्वा शून्यान्रथोपस्थान्वाजिपृष्ठांश्च भारत ।
निर्मनुष्यान्गजस्कन्धान्पादातांश्चैव विद्रुतान् ॥ ८-८२-५५ (५१०८६)
आदित्य इव मध्याह्ने दुर्निरीक्ष्यः परन्तपः ।
कालान्तकवपुः शूरः सूतपुत्रोऽभ्यराजत ॥ ८-८२-५६ (५१०८७)
एवमेतन्महाराज नरवाजिरथद्विपान् ।
हत्वा तस्थौ महेष्वासः कर्णोऽरिगणसूदनः ॥ ८-८२-५७ (५१०८८)
यथा भूतगणान्हत्वा कालस्तिष्ठेन्महाबलः ।
तथा स सोमकान्हत्वा तस्थावेको महारथः ॥ ८-८२-५८ (५१०८९)
तत्राद्भुतमपश्याम पाञ्चालानां पराक्रमम् ।
वध्यमानाऽपि यत्कर्णं नाजहू रणमूर्धनि ॥ ८-८२-५९ (५१०९०)
राजा दुःशासनश्चैव कृपः शारद्वतस्तथा ।
अश्वत्थामा कृतवर्मा शकुनिश्च महाबलः ।
व्यहनन्पाण्डवीं सेनां शतशोऽथ सहस्रशः ॥ ८-८२-६० (५१०९१)

कर्मपुत्रौ तु राजेन्द्र भ्रातरौ सत्यविक्रमौ ।
निजघ्नाते बलं क्रुद्धौ पाण्डवानामितस्ततः ॥ ८-८२-६१ (५१०९२)
तत्र युद्धं महच्चासीत्क्रूरं विशसनं महत् ॥ ८-८२-६२ (५१०९३)
तथैव पाण्डवाः शूरा धृष्टद्युम्नशिखण्डिनौ ।
द्रौपदेयाश्च सङ्क्रुद्धा अभ्यघ्नंस्तावकं बलम् ॥ ८-८२-६३ (५१०९४)
एवमेष क्षयो वृत्तः पाण्डवानां ततस्ततः ।
तावकानामपि रणे भीमं प्राप्य महाबलम् ॥ ॥ ८-८२-६४ (५१०९५)

इति श्रीमन्महाभारते कर्णपर्वणि सप्तदशदिवसयुद्धे
द्व्यशीतितमोऽध्यायः ॥ ८२ ॥

---

कर्नपर्व-अध्यय०८३
॥ श्रीः ॥
८.८३. अध्यायः ८३

Mahabharata - Karna Parva - Chapter Topics
पार्थचोदनया कृष्णेन कर्णसमीपम्प्रति रथप्रापणम् ॥ १ ॥
शल्येन कर्णप्रोत्साहनम् ॥ २ ॥
कर्णेन पार्थप्रशंसनपूर्वकं तद्वधप्रतिज्ञा ॥ ३ ॥
सङ्कुलयुद्धम् ॥ ४ ॥

Mahabharata - Karna Parva - Chapter Text

८-८३-० (५१०९६)
सञ्जय उवाच। ८-८३-०क्ष् (५०३७)
हत्वा तु फल्गुनः सेनां कौरवाणां पृथक्पृथक् ।
सूतपुत्रस्य संरम्भं दृष्ट्वा चैव महारणे ॥ ८-८३-१ (५१०९७)
शोणितोदां नदीं कृत्वा मांसमज्जास्थिपङ्किलाम् ।
मनुष्यशीर्षपाषाणां हस्त्यश्वकृतरोधसम् ॥ ८-८३-२ (५१०९८)
शूरास्थित्तयसङ्कीर्णां काकगृध्रानुनादिताम् ।
छत्रहंसप्लुवोपेतां वीरवृक्षापहारिणीम् ॥ ८-८३-३ (५१०९९)
हारपद्माकरवतीमुष्णीषवरफेनिलाम् ।
धनुःशरध्वजोपेतां नरक्षुद्रकपालिनीम् ॥ ८-८३-४ (५११००)
चर्मवर्मभ्रमोपेतां रथोडुपसमाकुलाम् ।
जयैषिणां च सुतरां भीरूणां च सुदुस्तराम् ॥ ८-८३-५ (५११०१)
नदीं प्रावर्तयित्वा च बीभत्सुः परवीरहा ।

वासुदेवमिदं वाक्यमब्रवीत्पुरुषर्षभः ॥ ८-८३-६ (५९१०२)
अर्जुन उवाच। ८-८३-७क्ष् (५०३८)
एष केतू रणे कृष्ण सूतपुत्रस्य दृश्यते ।
भीमसेनादयश्चैते योधयन्ति महारथम् ॥ ८-८३-७ (५९१०३)
एते द्रवन्ति पाञ्चालाः कर्मत्रस्ता जनार्दन ।
एष दुर्योधनो राजा श्वेतच्छत्रेण धार्यते ॥ ८-८३-८ (५९१०४)
कर्णेन भग्नान्पाञ्चालान्द्रावयन्बहु शोभते ।
कृपश्च कृतवर्मा च द्रौणिश्चैव महारथः ॥ ८-८३-९ (५९१०५)
एते रक्षन्ति राजानं सूतपुत्रेण रक्षिताः ।
अवध्यमानास्तेऽस्माभिर्योधयिष्यन्ति सोमकान् ॥ ८-८३-१० (५९१०६)
एष शल्यो रथोपस्थे रश्मिसङ्ग्राहकोविदः ।
सूतपुत्ररथं कृष्ण वाहयन्बहु शोभते ॥ ८-८३-११ (५९१०७)
तत्र मे बुद्धिरुत्पन्ना वाहयात्र रथं मम ।
नाहत्वा समरे कर्णं निवर्तिष्ये कथञ्चन ॥ ८-८३-१२ (५९१०८)
मा स्म कर्णो रणे पार्थान्सृञ्जयांश्च महारथान् ।
निःशेषान्समरे कुर्यात्पश्यतां नो जनार्दन ॥ ८-८३-१३ (५९१०९)
सञ्जय उवाच। ८-८३-१४क्ष् (५०३९)
ततः प्रायाज्जवेनाशु केशवस्तव वाहिनीम् ।
कर्णं प्रति महेष्वासं द्वैरथे सव्यसाचिनः ॥ ८-८३-१४ (५९११०)
स प्रयातो रथेनाशु कृष्णो राजन्महाहवे ।
आश्वासयन्रणे चाशु पाण्डुसैन्यानि सर्वशः ॥ ८-८३-१५ (५९१११)
रथघोषस्ततस्तस्य पाण्डवस्य बभूव ह ।
वासवास्त्रनिपातेन पर्वतेष्विव मारिष ॥ ८-८३-१६ (५९११२)
महता रथघोषेण पाण्डवः सत्यविक्रमः ।
अभ्ययादप्रमेयात्मा निर्जयंस्तव वाहिनीम् ॥ ८-८३-१७ (५९११३)
तमायान्तं समीक्ष्यैव श्वेताश्वं कृष्णसारथिम् ।
मद्रराजोऽब्रवीत्कर्णं केतुं दृष्ट्वा महात्मनः ॥ ८-८३-१८ (५९११४)
अयं स रथ आयाति श्वेताश्वः कृष्णसारथिः ।
निघ्नन्नमित्रान्समरे यं कर्ण परिपृच्छसि ॥ ८-८३-१९ (५९११५)
एष तिष्ठति कौन्तेयः संस्पृशन्गाण्डिवं धनुः ।
तं हनिष्यसि चेदद्य तन्नः श्रेयो भविष्यति ॥ ८-८३-२० (५९११६)
धनुर्ज्या चन्द्रताराङ्का पताकाकिङ्किणीयुता ।
पश्य कर्णार्जुनस्यैषा सौदामन्यम्बरे यथा ॥ ८-८३-२१ (५९११७)
एष ध्वजाग्रे पार्थस्य प्रेक्षमाणः समन्ततः ।
दृश्यते वानरो भीमो वीक्षतां भयवर्धनः ॥ ८-८३-२२ (५९११८)
एतच्चक्रं गदा शङ्खः शार्ङ्गं कृष्णस्य च प्रभो ।

दृश्यते पाण्डवरथे वाहयानस्य वाजिनः ॥ ८-८३-२३ (५९११९)
एतत्कूजति गाण्डीवं विसृष्टं सव्यसाचिना ।
एते हस्तवता मुक्ता घ्नन्त्यमित्राञ्शिताः शराः ॥ ८-८३-२४ (५९१२०)
विशालायतताम्राक्षैः पूर्णचन्द्रनिभाननैः ।
एषा भूः कीर्यते राज्ञां शिरोभिरपलायिनाम् ॥ ८-८३-२५ (५९१२१)
एते परिघसङ्काशाः पुण्यगन्धानुलेपनाः ।
उद्धता रणशूराणां पात्यन्ते सायुधा भुजाः ॥ ८-८३-२६ (५९१२२)
निरस्तजिह्वा नेत्रान्ता वाजिनः सह सादिभिः ।
पतिताः पात्यमानाश्च क्षितौ क्षीणा विशेरते ॥ ८-८३-२७ (५९१२३)
एते पर्वतशृङ्गाणां तुल्या हैमवता गजाः ।
सञ्छिन्नकुम्भाः पार्थेन प्रपतन्त्यद्रयो यथा ॥ ८-८३-२८ (५९१२४)
गन्धर्वनगराकारा रथा हतनरेश्वराः ।
विमानादिव पुण्यान्ते स्वर्गिणो निपतन्त्यमी ॥ ८-८३-२९ (५९१२५)
व्याकुलीकृतमत्यर्थं पश्य सैन्यं किरीटिना ।
नानामृगसहस्राणां यूथं केसरिणा यथा ॥ ८-८३-३० (५९१२६)
त्वामभिप्रेप्सुरायाति कर्ण निघ्नन्वरान्रथान् ।
असज्जमानो राधेय तं याहि प्रति भारत ॥ ८-८३-३१ (५९१२७)
एषा विदीर्यते सेना धार्तराष्ट्री समन्ततः ।
अर्जुनस्य भयात्तूर्णं निघ्नतः शात्रवान्बहून् ॥ ८-८३-३२ (५९१२८)
वर्जयन्सर्वसैन्यानि त्वरते हि धनञ्जयः ।
त्वदर्थमिति मन्येऽहं यथास्योदीर्यते वपुः ॥ ८-८३-३३ (५९१२९)
न ह्यवस्थास्यते पार्थो युयुत्सुः केनचित्सह ।
त्वामृते क्रोधदीप्तो हि पीड्यमाने वृकोदरे ॥ ८-८३-३४ (५९१३०)
विरथं धर्मराजं तु दृष्ट्वा सुदृढविक्षतम् ।
शिखण्डिनं सात्यकिं च धृष्टद्युम्नं च पार्षतम् ॥ ८-८३-३५ (५९१३१)
द्रौपदेयान्युधामन्युमुत्तमौजसमेव च ।
नकुलं सहदेवं च वशगांस्ते समीक्ष्य तु ॥ ८-८३-३६ (५९१३२)
सहसैकरथः पार्थस्त्वामभ्येति परन्तपः ।
क्रोधरक्तेक्षणः क्रुद्धो जिघांसुः सर्वपार्थिवान् ॥ ८-८३-३७ (५९१३३)
त्वरितोऽभिपतत्यस्मांस्त्यक्त्वा सैन्यान्यसंशयम् ।
त्वं कर्ण प्रतियाह्येनं नास्त्यन्यो हि धनुर्धरः ॥ ८-८३-३८ (५९१३४)
न तं पश्यामि लोकेऽस्मिंस्त्वत्तो ह्यन्यं धनुर्धरम् ।
अर्जुनं समरे क्रुद्धं यो वेलामिव वारयेत् ॥ ८-८३-३९ (५९१३५)
न चास्य रक्षां पश्यामि पार्श्वतो न च पृष्ठतः ।
एक एवाभियाति त्वां पश्य साफल्यमात्मनः ॥ ८-८३-४० (५९१३६)
त्वं हि कृष्णौ रणे शक्तो योद्धुमेतौ परन्तपौ ।

तवैव भारो राधेय प्रत्युद्याहि धनञ्जयम् ॥ ८-८३-४१ (५९१३७)
समानो ह्यसि भीष्मेण द्रोमद्रौणिकृपेण च ।
सव्यसाचिनमायान्तं निवारय महारणे ॥ ८-८३-४२ (५९१३८)
लेलिहानं यथा सर्पं गर्जन्तमृषभं यथा ।
वनस्थितं यथा व्याघ्रं जहि कर्ण धनञ्जयम् ॥ ८-८३-४३ (५९१३९)
एते द्रवन्ति समरान्निरपेक्षा नराधिपाः ।
अर्जुनस्य भयत्रस्ता धार्तराष्ट्रा महाबलाः ॥ ८-८३-४४ (५९१४०)
द्रवतामथ तेषां तु नान्योऽस्ति युधि मानवः ।
भयहा यो भवेद्वीरस्त्वामृते सूतनन्दन ॥ ८-८३-४५ (५९१४१)
एते त्वां कुरवः सर्वे द्वीपमासाद्य संयुगे ।
धिष्ठिताः पुरुषव्याघ्र त्वत्तः शरणकाङ्क्षिणः ॥ ८-८३-४६ (५९१४२)
वैदेहाम्बष्ठकाम्भोजास्तथा नग्नजितस्त्वया ।
गान्धाराश्च यया धृत्या जिताः सङ्ख्ये सुदुर्जयाः ।
तां धृतिं कुरुराधेय ततः प्रत्येहि पाण्डवम् ॥ ८-८३-४७ (५९१४३)
वासुदेवं च वार्ष्णेयं प्रीयमाणं किरीटिना ।
प्रत्युद्याहि महाबाहो पौरुषे महति स्थितः ॥ ८-८३-४८ (५९१४४)
कर्ण उवाच। ८-८३-४९क्ष् (५०४०)
प्रकृतिस्थोऽसि मे शल्य इदानीं सम्मतस्तथा ।
प्रतिभासि महाबाहो अभीतश्च धनञ्जयात् ॥ ८-८३-४९ (५९१४५)
पश्य बाह्वोर्बलं मेऽद्य शिक्षितस्य च पश्य मे ।
एकोऽद्य निहनिष्यामि पाण्डवानां महाचमूम् ॥ ८-८३-५० (५९१४६)
कृष्णौ च पुरुषव्याघ्र ततः सत्यं ब्रवीमि ते ।
नाहत्वा युधि तौ वीरौ व्यपयास्ये कथञ्चन ॥ ८-८३-५१ (५९१४७)
शिश्ये वा निहतस्ताभ्यामनित्यो हि रणे जयः ।
कृतार्थोऽद्य भविष्यामि हत्वा वाप्यथ वा हतः ॥ ८-८३-५२ (५९१४८)
शल्य उवाच। ८-८३-५३क्ष् (५०४१)
अजय्यमेनं प्रवदन्ति युद्धे
महारथाः कर्ण रथप्रवीरम् ।
एकाकिन किमु कृष्णाभिगुप्तं
विजेतुमेनं क इहोत्सहेत ॥ ८-८३-५३ (५९१४९)
कर्ण उवाच। ८-८३-५४क्ष् (५०४२)
नैतादृशो जातु बभूव लोके
रथोत्तमो यावदुपश्रुतं नः ।
तमीदृशं प्रतियोत्स्यामि पार्थं
महाहवे पश्य च पौरुषं मे ॥ ८-८३-५४ (५९१५०)
रणे चरत्येष रथप्रवीरः

सितैर्हयैः कौरवराजपुत्रः ।
स वाऽद्य मां नेष्यति कृच्छ्रमेत--
त्कर्णोऽस्यान्तेऽप्यत्र भवेत्समर्थः ॥ ८-८३-५५ (५११५१)
अस्वेदिनौ राजपुत्रस्य हस्ता--
ववेपमानौ जातकिणौ बृहन्तौ ।
दृढायुधः कृतिमान्क्षिप्रहस्तो
न पाण्डवेयेन समोऽस्ति योधः ॥ ८-८३-५६ (५११५२)
गृह्णात्यनेकानपि कङ्कपत्रा--
नेकं यथा तान्प्रतियोज्य चाशु ।
ते क्रोशमात्रे निपतन्त्यमोधाः
कस्तेन योधोऽस्ति समः पृथिव्याम् ॥ ८-८३-५७ (५११५३)
अतोषयत्स्वाण्डवे यो हुताशं
कृष्णद्वितीयोऽतिरथस्तरस्वी ।
लेभे चक्रं यत्र कृष्णो महात्मा
धनुर्गाण्डीवं पाण्डवः सव्यसाची ॥ ८-८३-५८ (५११५४)
श्वेताश्वयुक्तं च सुघोषमुग्रं
रथं महाबाहुरदीनसत्वः ।
महेषुधी चाक्षये दिव्यरूपे
शस्त्राणि दिव्यानि च हव्यवाहात् ॥ ८-८३-५९ (५११५५)
यस्त्विन्द्रलोके निजघान दैत्या--
नसङ्ख्येयान्कालकेयांश्च सर्वान् ।
लेभे शङ्खं देवदत्तं स्म तत्र
को नाम तेनाभ्यधिकः पृथिव्याम् ॥ ८-८३-६० (५११५६)
महादेवं तोषयामास योऽस्त्रैः
साक्षात्सुयुद्धेन महानुभावः ।
लेभे ततः पाशुपतं सुघोरं
त्रैलोक्यसंहारकरं महास्त्रम् ॥ ८-८३-६१ (५११५७)
पृथक्पृथग्लोकपालाः समेता
ददुर्महास्त्राण्यप्रमेयाणि सङ्ख्ये ।
यैस्ताञ्जघानाशु रणे नृसिंहः
सकालकेयानसुरान्समेतान् ॥ ८-८३-६२ (५११५८)
तथा विराटस्य पुरे समेता--
न्सर्वानस्मानेकरथेन जित्वा ।
जहार तद्गोधनमाजिमध्ये
वस्त्राणि चादत्त महारथेभ्यः ॥ ८-८३-६३ (५११५९)
तमीदृशं वीर्यगुणोपपन्नं

कृष्णद्वितीयं परमं नृपाणाम् ।
तमाह्वयन्साहसमुत्तमं वै
जाने स्वयं सर्वलोकस्य शल्य ॥ ८-८३-६४ (५९१६०)
अनन्तवीर्येण च केशवेन
नारायणेनाप्रतिमेन गुप्तः ।
वर्षायुतैर्यस्य गुणा न शक्या
वक्तुं समेतैरपि सर्वलोकैः ॥ ८-८३-६५ (५९१६१)
महात्मनः शङ्खचक्रासिपाणे--
र्विष्णोर्जिष्णोर्वसुदेवात्मजस्य ।
भयं न मे जायते साध्वसं च
दृष्ट्वा कृष्णावेकरथे समेतौ ॥ ८-८३-६६ (५९१६२)
अतीवायं धनुषि राजपुत्रे--
ष्वतीवान्यान्केशवश्चक्रयुद्धे ।
एवंविधौ पाण्डववासुदेवौ
चलेत्स्वदेशाद्धिमवान्न कृष्णौ ॥ ८-८३-६७ (५९१६३)
उभौ हि शूरौ बलिनौ दृढायुधौ
महारथौ संहननोपपन्नौ ।
एतौ वीरौ नरवीरौ समेतौ
स्थानाच्च्युतौ देवकुमाररूपौ ॥ ८-८३-६८ (५९१६४)
अग्न्यादित्याविन्द्रवृहस्पती वा
यमान्तकौ वा शत्रिपूषणौ वा ।
भगांशमित्रावरुणावश्विनौ वा
मरुद्गणौ वा वसवः समेताः ।
व्यस्ताः समस्ताश्च युधा न शक्ता
जेतुं प्रसह्यार्जुनं चाच्युतं च ॥ ८-८३-६९ (५९१६५)
एतौ हि तावर्जुनवासुदेवौ
कोऽन्यः प्रतीयान्मदृते तु शल्य ॥ ८-८३-७० (५९१६६)
सर्वेषां वृष्णिवीराणां कृष्णे लक्ष्मीः प्रतिष्ठिता ।
सर्वेषां पाण्डुपुत्राणां जयः पार्थे प्रतिष्ठितः ॥ ८-८३-७१ (५९१६७)
तावुभौ पुरुषव्याघ्रौ समाने स्यन्दने स्थितौ ।
मामेकमभियोद्धारौ सुजातं बत शल्य मे ॥ ८-८३-७२ (५९१६८)
नैतच्चिरं क्षिप्रमिमं रथं मे
प्रवर्तयैतावभियामि चैवम् ।
अस्मिन्मुहूर्ते निहतौ पश्य कृष्णौ
ताभ्यां हतं वा युधि मां रिपुभ्याम् ॥ ८-८३-७३ (५९१६९)
एवं ब्रुवाणः सहसा महारथ--

स्त्वभ्यद्रवत्पाण्डवं सूतपुत्रः ॥ ८-८३-७४ (५९१७०)
अभ्येत्य पुत्रेण तवाभिनन्दिताः
समेत्य चोक्ताः कुरुवीरसत्तमाः ।
कृपश्च भोजश्च महारथावुभौ
तथैव गान्धारपतिः सहानुजः ।
गुरोः सुतस्तस्य तवात्मजास्तथा
पदातिसङ्घा द्विरदास्तथा तदा ॥ ८-८३-७५ (५९१७१)
निरुध्यताभिद्रवताच्युतार्जुनौ
श्रमेण संयोजयताशु सर्वशः ।
यथा भवद्भिर्भृशविक्षतावुभौ
सुखेन हन्यान्मम वाहिनीपतिः ॥ ८-८३-७६ (५९१७२)
तथेति चोक्त्वा त्वरिताः स्म तेऽर्जुनं
जिघांसवो वीरतराः समाययुः ।
शरैश्च जघ्नुर्युधि तं महारथा
धनञ्जयं कर्णनिदेशकारिणः ।
नदीनदं भूरिजलो महार्णवो
यथा तथा तान्समरेऽर्जुनोऽग्रसत् ॥ ८-८३-७७ (५९१७३)
न सन्दधानो न तथा शरोत्तमान्
प्रमुञ्चमानो रिपुभिः प्रदृश्यते ।
धनञ्जयास्तैः स्म शरैर्विदारिता
हता निपेतुर्नरवाजिकुञ्जराः ॥ ८-८३-७८ (५९१७४)
शरार्चिषं गाण्डिवचारुमण्डलं
युगान्तसूर्यप्रतिमानतेजसम् ।
न कौरवाः शेकुरुदीक्षितुं जयं
यथा रविं व्याधितचक्षुषो जनाः ॥ ८-८३-७९ (५९१७५)
शरोत्तमान्सम्प्रहितान्महारथै
श्चिच्छेद पार्थः प्रहसञ्छरौघैः ।
भूयश्च तानहनद्बाणसङ्घान्
गाण्डीवधन्वायतपूर्णमण्डलम् ॥ ८-८३-८० (५९१७६)
यथोग्ररश्मिः शुचिशुक्रमध्यगः
सुखं विवस्वान्हरते जलौघान् ।
तथार्जुनो बाणगणान्निरस्य
ददाह सेनां तव पार्थिवेन्द्र ॥ ८-८३-८१ (५९१७७)
तमभ्यधावद्विसृजन्कृपः शरां--
स्तथैव भोजस्तव चात्मजः स्वयम् ।
महारथो द्रोणसुतश्च सायकै--

रवाकिरंस्तोयधरा यथाऽचलम् ॥ ८-८३-८२ (४९१७८)
जिघांसुभिस्तान्कुशलैः शरोत्तमान्
महात्मभिः सम्प्रहितान्प्रयत्नतः ।
शरैः प्रतिच्छेद स पाण्डवस्त्वरन्
परान्विनिर्भिद्य च तांस्त्रिभिस्त्रिभिः ॥ ८-८३-८३ (४९१७९)
स गाण्डिवव्यायतपूर्णमण्डल--
स्तपन्रिपूनर्जुनभास्करो वभौ ।
शरोग्ररश्मिः शुचिशुक्रमध्यगो
यथैव सूर्यः परिवेयवांस्तथा ॥ ८-८३-८४ (४९१८०)
अथाग्र्यबाणैर्दशभिर्धनञ्जयं
पराभिनद्द्रोणसुतोऽच्युतं त्रिभिः ।
चतुर्भिरश्वांश्चतुरः कपिं ततः
शरैश्च नाराचवरैरवाकिरत् ॥ ८-८३-८५ (४९१८१)
तथा ततः प्रस्फुरदस्य कार्मुकं
त्रिभिः शरैर्यन्तृशिरश्चकर्त ह ।
हयांश्चतुर्भिश्चतुरस्त्रिभिर्ध्वजं
धनञ्जयो द्रौणिरथादपातयत् ॥ ८-८३-८६ (४९१८२)
स रोषपूर्णो ह्यतिवज्रहाटकै---
रलङ्कृतं तक्षकभोगवर्चसम् ।
स तद्वधे कार्मुकमन्यदाददे
यथा महाहिप्रवरं तथैव च ॥ ८-८३-८७ (४९१८३)
स्वमायुधं चापि विकीर्य भूतले
धनुश्च कृत्वा सगुणं गुणाधिकः ।
समानयंसल्तावजितौ नरोत्तमौ
शरोत्तमैर्द्रौणिरविध्यदन्तिकात् ॥ ८-८३-८८ (४९१८४)
कृपश्च भोजश्च तवात्मजश्च ते
शरैरनेकैर्युधि पाण्डवर्षभम् ।
महारथाः संयुगमूर्धनि स्थिता--
स्तमोनुदं वारिधरा इवापतन् ॥ ८-८३-८९ (४९१८५)
कृपस्य पार्थः शरं शरासनं
हयान्ध्वजान्सारथिमेव पत्रिभिः ।
श्समार्पयद्बाहुसहस्रविक्रम--
स्तथा यथा वज्रधरः पुरा बलेः ॥ ८-८३-९० (४९१८६)
स पार्थबाणैर्विनिपातितायुधो
ध्वजावमर्दे च कृते महाहवे ।
कृतः कृपो बाणसहस्रयन्तितो

यथापगेयः प्रथमं किरीटिना ॥८ ८-८३-९१ (५११८७)
शरैः प्रचिच्छेद तवात्मजस्य
ध्वजं धनुश्च प्रचकर्त नर्दतः ।
जघान चाश्वान्कृतवर्मणः शुभान्
ध्वजं च चिच्छेद तवात्मजस्य ह ॥ ८-८३-९२ (५११८८)
सवाजिसूतेष्वसनान्सकेतना--
ञ्जयान नागाश्वरथांश्च स त्वरन् ।
ततः प्रकीर्णं सुमहद्बलं तव
प्रपीडितं सवितुरिवौजसा भृशम् ॥ ८-८३-९३ (५११८९)
ततोऽर्जुनस्वाशु रथेन केशव--
श्चकार शत्रूनपसव्यमातुरान् ।
ततः प्रयातं त्वरितं धनञ्जयं
शतक्रतुं वृत्रनिजघ्नुषं यथा ।
समन्वधावन्पुनरुत्थितैर्ध्वजै
रथैः सुयुक्तैरपरे युयुत्सवः ॥ ८-८३-९४ (५११९०)
अथाभिसृत्य प्रतिवार्य चाहितान्
धनञ्जयस्यानुचरान्महारथाः ।
शिखण्डिशैनेययमाः शितैः शरै---
र्विदारयन्तो व्यनदन्सुभैरवम् ॥ ८-८३-९५ (५११९१)
ततोऽभिजघ्नुः कुपिताः परस्परं
शरैस्तदाञ्चोगतिभिः सुतेजनैः ।
कुरुप्रवीराः सह पृञ्जयैर्यथा
सुरारयो देवपतिं यथा तथा ॥ ८-८३-९६ (५११९२)
जयेप्सवः स्वर्गमनाय चोत्सुकाः
पतन्ति नागाश्वरथाः परन्तप ।
तथैव सर्वे बहवश्च विव्यधुः
शरैः सुमुक्तैरितरेतरं पृथक् ॥ ८-८३-९७ (५११९३)
शरान्धकारे तु महात्मभिः कृते
महामृधे योधवरैः परस्परम् ।
चतुर्दिशो वै विदिशश्च पार्थिव
प्रभा च सूर्यस्य तमोवृताऽभवत् ॥ ॥ ८-८३-९८ (५११९४)

इति श्रीमन्महाभारते कर्णपर्वणि त्र्यशीतितमोऽध्यायः ॥ ८३ ॥

Mahabharata - Karna Parva - Chapter Footnotes

८-८३-८१ शुचिशुकयोः आषाढज्येष्ठयोर्मध्ये गतः ॥

८-८३-९४ तथार्जुनस्याविरथेन केशव इति ख ट पाठः
। अथार्जुनस्याधिरथेश्च केशव इति क ङ पाठः ॥
८-८३-८३ त्र्यशीतितमोऽध्यायः ॥

---

कर्नपर्व-अध्यय०८४
॥ श्रीः ॥
८.८४. अध्यायः ८४

Mahabharata - Karna Parva - Chapter Topics
सङ्कुतxxxxx ॥ १ ॥

Mahabharata - Karna Parva - Chapter Text

८-८४-० (५९१९५)
सञ्जय उवाच। ८-८४-०क्ष् (५०४३)
xxxxxxxxxxx प्रबरैर्वलैर्भीममभिद्रुतम् ।
xxxxxxxxxx कौन्तेयमुस्थिहीर्षुर्धनञ्जयः ॥ ८-८४-१ (५९१९६)
xxxxxxxxx सेनां मारत सायकैः ।
xxxxxxxxxx परवीरान्धनञ्जयः ॥ ८-८४-२ (५९१९७)
xxxxxxxxxxx शरजालानि भागशः ।
अदृश्यन्त तथान्ये च निजघ्नुस्तव वाहिनीम् ॥ ८-८४-३ (५९१९८)
स पक्षिसङ्घाचरितमाकाशं पूरयञ्शरैः ।
धनञ्जयो महाबाहुः कुरूणामन्तकोऽमयत् ८-८४-४ (५९१९९)
ततो भल्लैः क्षुरप्रैश्च नाराचैर्विमलैरपि ।
गात्राणि प्राच्छिनत्पार्थः शिरांसि च चकर्त ह ॥ ८-८४-५ (५९२००)
छिन्नगात्रैर्विकवचैर्विशिरस्कैः समन्ततः ।
पातितैश्च पतद्भिश्च योधैरासीत्समावृता ॥ ८-८४-६ (५९२०१)
धनञ्जयशराभ्यस्तैः स्यन्दनाश्वरथद्विपैः ।
सञ्छिन्नभिन्नविध्वस्तैर्व्यङ्गाङ्गावयवैः स्तृता ।
गतसत्वैः ससत्वैश्च संवृताऽऽसीद्वसुन्धरा ॥ ८-८४-७ (५९२०२)
सुदुर्गमा सुविषमा घोराऽत्यर्थं सुदुर्दृशा ।
रणभूमिरभूद्राजन्महावैतरणी यथा ॥ ८-८४-८ (५९२०३)
ईषाचक्राक्षभल्लैश्च व्यश्वैः साश्वैश्च युध्यताम् ।
ससूतैर्हतसूतैश्च रथैः स्तीर्णाऽभवन्मही ॥ ८-८४-९ (५९२०४)
सुवर्णवर्मसन्नाहैर्योधैः कनकमालिभिः ।
आस्थिताः क्लृप्तवर्माणो भद्रा नित्यमदा द्विपाः ॥ ८-८४-१० (५९२०५)

क्रुद्धाः क्रुरैर्महामात्रैः प्रेषितार्जुनमभ्ययुः ।
चतुः शता रथवरा हताः पेतुः किरीटिना ॥ ८-८४-११ (५९२०६)
पर्यस्तानीव शृङ्गाणि ससत्वानि महागिरेः ।
धनञ्जयशराभ्यस्तैः स्तीर्णा भूर्वरवारणैः ॥ ८-८४-१२ (५९२०७)
समन्ताज्जलदप्रख्यान्वारणान्मदवर्षिणः ।
अभिपेदेऽर्जुनरथो घनान्भिन्दन्निवांशुमान् ॥ ८-८४-१३ (५९२०८)
हतैर्गजमनुष्याश्वैर्भिन्नैश्च बहुधा रथैः ।
विशस्त्रयन्त्रकवचैर्युद्धशौण्डैर्गतासुभिः ।
उपविद्धायुधैर्मार्गः स्तीर्णोऽभूत्फल्गुनेन वै ॥ ८-८४-१४ (५९२०९)
विस्फारितं च गाण्डीवमत्यासीद्भैरवस्वनम्
सुघोषं वज्रनिष्पेषं स्तनयन्निव तोयदः ॥ ८-८४-१५ (५९२१०)
ततः प्रादीर्यत चमूर्धनञ्जयशराहता ।
महावातसमाविद्धा महानौरिव सागरे ॥ ८-८४-१६ (५९२११)
नानारूपाः प्राणहराः शरा गाण्डीवचोदिताः ।
अलातोल्काशनिप्रख्यास्तव सैन्यं विनिर्दहन् ॥ ८-८४-१७ (५९२१२)
महागिरौ वेणुवनं निशि प्रज्वलितं यथा ।
तथा तव महासैन्यं प्रास्फुरच्छरपीडितम् ॥ ८-८४-१८ (५९२१३)
तद्विनष्टं सुविध्वस्तं तव सैन्यं किरीटिना ।
हतप्रविहतं बाणैः सर्वतः प्रद्रुतं दिशः ॥ ८-८४-१९ (५९२१४)
सश्वापदा मृगगणा दावाग्नित्रासिता यथा ।
कुरवः पर्यवर्तन्त निर्दग्धाः सव्यसाचिना ॥ ८-८४-२० (५९२१५)
उत्सृज्य च महाबाहुं भीमसेनं तथा रणे ।
बलं कुरूणामुद्विग्नं सर्वमासीत्पराङ्मुखम् ॥ ८-८४-२१ (५९२१६)
ततः कुरुषु भग्नेषु बीभत्सुरपराजितः ।
भीमसेनं समासाद्य मुहूर्तं सोऽभ्यवर्तत ॥ ८-८४-२२ (५९२१७)
समागम्य च भीमेन मन्त्रयित्वा च फल्गुनः ।
विशल्यमरुजं चास्मै कथयित्वा युधिष्ठिरम् ॥ ८-८४-२३ (५९२१८)
भीमसेनाभ्यनुज्ञातस्ततः प्रायाद्धनञ्जयः ।
नादन्रथघोषेण पृथिवीं द्यां च भारत ॥ ८-८४-२४ (५९२१९)
ततः परिवृतो वीरैर्दशभिः शत्रुतापनः ।
दुःशासनादवरजैस्तव पुत्रैर्धनञ्जयः ॥ ८-८४-२५ (५९२२०)
ते तमभ्यर्दयन्बाणैरुल्काभिरिव कुञ्जरम् ।
आततेष्वसना वीरा नृत्यन्त इव भारत ॥ ८-८४-२६ (५९२२१)
अपसव्यांस्तु तांश्चक्रे रथेन मधुसूदनः ।
नियुक्तान्हि स तान्मेने यमायाशु किरीटिना ॥ ८-८४-२७ (५९२२२)
तथान्ये प्राणदन्मूढाः पराङ्मुखमिवार्जुनम् ॥ ८-८४-२८ (५९२२३)

तेषां नानदतां केतूनश्वांश्चापानि सारथीन् ।
नाराचैरर्धचन्द्रैश्च क्षिप्रं पार्थो न्यकृन्तत ॥ ८-८४-२९ (५९२२४)
क़अथान्यैर्दशभिर्भल्लैः शिरांस्येषामपातयत् ।
रोषसंरक्तनेत्राणि सन्दष्टौष्ठानि भूतले ॥ ८-८४-३० (५९२२५)
तेषां वक्राणि विबभुर्व्योम्नि तारागणा इव ॥ ८-८४-३१ (५९२२६)
तांस्तु भल्लैर्महावेगैर्दशभिर्दश कौरवान् ।
रुक्माङ्गदान्रुक्मपुङ्खैर्हत्वा प्रायादमित्रहा ॥ ॥ ८-८४-३२ (५९२२७)

इति श्रीमन्महाभारते कर्णपर्वणि सप्तदशदिवसयुद्धे
चतुरशीतितमोऽध्यायः ॥ ८४ ॥
Mahabharata - Karna Parva - Chapter Footnotes

८-८४-क़ अत्रार्जुनकृतं दशधृतराष्ट्रपुत्रहननं
विचारणीयम्। ८-८४-१७ विनिर्दहन्नित्यत्राडभाव आषेः। ।
८-८४-८४ चतुरशीतितमोऽध्यायः ॥

---

कर्नपर्व-अध्यय०८५
॥ श्रीः ॥
८.८५. अध्यायः ८५

Mahabharata - Karna Parva - Chapter Topics
सङ्कुलयुद्धम् ॥ १ ॥

Mahabharata - Karna Parva - Chapter Text

८-८५-० (५९२२८)
सञ्जय उवाच। ८-८५-०क्ष् (५०४४)
तमायान्तं महावेगैरश्वैः कपिवरध्वजम् ।
युद्धायाभ्यद्रवन्दीराः कुरूणां नवतीं रथाः ॥ ८-८५-१ (५९२२९)
कृत्वा संशप्तका घोरं शपथं पारलौकिकम् ।
परिवव्रुर्नरव्याघ्रा नरव्याघ्रं रणेऽर्जुनम् ॥ ८-८५-२ (५९२३०)
कृष्णः श्वेतान्महावेगानश्वान्काञ्चनभूषणान् ।
मुक्ताजालप्रतिच्छन्नान्प्रैषीत्कर्णरथं प्रति ॥ ८-८५-३ (५९२३१)
प्रेक्ष्य कर्णरथं यान्तमरिघ्नं तं धनञ्जयम् ।
बाणवर्षैरभिघ्नन्तः संशप्तकगणा ययुः ॥ ८-८५-४ (५९२३२)
त्वरमाणांस्तु तान्सर्वान्ससूतेष्वसनध्वजान् ।

जघान नवतिं वीरानर्जुनो निशितैः शरैः ॥ ८-८५-५ (५९२३३)
तेऽपतन्त हता बाणैर्नानारूपैः किरीटिना ।
विमानेभ्यः सुकृतिनः स्वर्गात्पुण्यक्षये यथा ॥ ८-८५-६ (५९२३४)
ततः सरथनागाश्वाः कुरवः कुरुसत्तमम् ।
निर्भया भरतश्रेष्ठमभ्यवर्तन्त फल्गुनम् ॥ ८-८५-७ (५९२३५)
तदायस्तमनुष्याश्वमुदीर्णवरवारणम् ।
पुत्राणां ते महासैन्यं समरौत्सीद्धनञ्जयम् ॥ ८-८५-८ (५९२३६)
शक्त्यृष्टितोमरप्रासैर्गदानिस्त्रिंशसायकैः ।
प्राच्छादयन्महेष्वासाः कुरवः कुरुनन्दनम् ॥ ८-८५-९ (५९२३७)
तामन्तरिक्षे विततां शस्त्रवृष्टिं समन्ततः ।
व्यधमत्पाण्डवो बाणैस्तमः सूर्य इवांशुभिः ॥ ८-८५-१० (५९२३८)
ततो म्लेच्छाः स्थिता मत्तैस्त्रयोदशशतैर्गजैः ।
पार्श्वतो व्यहनन्पार्थं तव पुत्रस्य शासनात् ॥ ८-८५-११ (५९२३९)
कर्णिनालीकनाराचैस्तोमरप्रासशक्तिभिः ।
कम्पणैर्भिण्डिपालैश्च रथस्थं पार्थमार्दयन् ॥ ८-८५-१२ (५९२४०)
तां शस्त्रवृष्टिमतुलां द्विपस्थैः प्रेषितां प्रभुः ।
चिच्छेद निशितैर्भल्लैरर्धचन्द्रैश्च फल्गुनः ॥ ८-८५-१३ (५९२४१)
अथ तान्द्विरदान्सर्वान्नानालिङ्गैः शरोत्तमैः ।
सपताकध्वजारोहान्गिरीन्वज्रैरिवाभिनत् ॥ ८-८५-१४ (५९२४२)
ते हेमपुङ्खैरिषुभिरर्दिता हेममालिनः ।
हताः पेतुर्महानागाः साग्निज्वाला इवाद्रयः ॥ ८-८५-१५ (५९२४३)
ततो गाण्डीवनिर्घोषो महानासीद्विशाम्पते ।
स्तनतां कूजतां चैव मनुष्यगजवाजिनाम् ॥ ८-८५-१६ (५९२४४)
कुञ्जराश्च हता राजन्दद्रुवुस्ते समन्ततः ।
अश्वाश्च पर्यधावन्त हतारोहा दिशो दश ॥ ८-८५-१७ (५९२४५)
रथा हीना नहाराज रथिभिर्वाजिभिस्तथा ।
गन्धर्वनगराकारा दृश्यन्ते स्म सहस्रशः ॥ ८-८५-१८ (५९२४६)
अश्वारोहा महाराज धावमाना इतस्ततः ।
तत्रतत्रैव दृश्यन्ते निहताः पार्थसायकैः ॥ ८-८५-१९ (५९२४७)
तस्मिन्क्षणे पाण्डवस्य बाह्वोर्बलमदृश्यत ।
यत्सादिनो वारणांश्च रथांश्चैकोऽजयद्युधि ॥ ८-८५-२० (५९२४८)
असंयुक्ताश्च ते राजन्परिवृत्ता रणं प्रति ।
नरा नागा रथाश्चैव नदन्तोऽर्जुनमभ्ययुः ॥ ८-८५-२१ (५९२४९)
ततस्त्र्यङ्गेण महता बलेन भरतर्षभ ।
दृष्ट्वा परिवृतं राजन्भीमसेनः किरीटिनम् ॥ ८-८५-२२ (५९२५०)
हतावशेषानुत्सृज्य त्वदीयान्कतिचिद्रथान् ।

जवेनाभ्यद्रवद्भीमो धनञ्जयरथं प्रति ॥ ८-८५-२३ (५१२५१)
ततस्तत्प्राद्रवत्सैन्यं हतभूयिष्ठमातुरम् ।
दृष्ट्वाऽर्जुनं तदा भीममागतं भ्रातरं प्रति ॥ ८-८५-२४ (५१२५२)
हतावशिष्टांस्तुरगानर्जुनेन महाबलः ।
भीमो व्यधमदश्रान्तो गदापाणिर्महाहवे ॥ ८-८५-२५ (५१२५३)
ग्गदापाणिं तदा दृष्ट्वा भीमं भारत भारताः ।
मेनिरे तमनुप्राप्तं दण्डपाणिमिवान्तकम्' ॥ ८-८५-२६ (५१२५४)
कालरात्रिमिवात्युग्रां नरनागाश्वभोजनाम् ।
प्राकाराट्टपुरद्वारदारणीमतिदारुणाम् ॥ ८-८५-२७ (५१२५५)
गदां तुरगनाशाय त्वरन्भीमो व्यवासृजत् ।
सा जघान बहूनश्वानश्वारोहांश्च मारिष ॥ ८-८५-२८ (५१२५६)
कांस्यायसतनुत्रांश्च नरानश्वांश्च पाण्डवः ।
पोथयामास गदया सशब्दं तेऽपतन्हताः ॥ ८-८५-२९ (५१२५७)
दन्तैर्दशन्तो वसुधां शेरते क्षतजोक्षिताः ।
भग्नमूर्धास्थिचरणाः क्रव्यादगणभोजनाः ॥ ८-८५-३० (५१२५८)
असृङ्मांसवसाभिश्च तृप्तिमभ्यागता गदा ।
अस्थीन्यप्यश्नती तस्थौ कालरात्रीव दुर्दृशा ॥ ८-८५-३१ (५१२५९)
सहस्राणि दशाश्वानां हत्वा पत्तींश्च भूयसः ।
भीमोऽभ्यधावत्सङ्क्रुद्धो गदापाणिरितस्ततः ॥ ८-८५-३२ (५१२६०)
गदापाणिं ततो भीमं दृष्ट्वा भारत तावकाः ।
मेनिरे समनुप्राप्तं कालदण्डोद्यतं यमम् ॥ ८-८५-३३ (५१२६१)
स मत्त इव मातङ्गः सङ्क्रुद्धः पाण्डुनन्दनः ।
प्रविवेश गजानीकं मकरः सागरं यथा ॥ ८-८५-३४ (५१२६२)
विगाह्य च गजानीकं प्रगृह्य महतीं गदाम् ।
क्षणेन भीमः सङ्क्रुद्धस्तन्निन्ये यमसादनम् ॥ ८-८५-३५ (५१२६३)
गजान्सकङ्कटान्मत्तान्सारोहान्सपताकिनः ।
पततः समपश्याम सपक्षान्पर्वतानिव ॥ ८-८५-३६ (५१२६४)
हत्वा तु तद्गजानीकं भीमसेनो महाबलः ।
पुनः स्वरथमास्थाय पृष्ठतोऽर्जुनमभ्ययात् ॥ ८-८५-३७ (५१२६५)
ततः पराङ्मुखीभूतं निरुत्साहं बलं तव ।
तदानीं तु महाराज प्रायशः शस्त्रवेष्टितम् ॥ ८-८५-३८ (५१२६६)
विलम्बमानं तत्सैन्यमप्रगल्भमवस्थितम् ।
दृष्ट्वा प्राच्छादयद्बाणैरर्जुनः शस्त्रवृष्टिभिः ॥ ८-८५-३९ (५१२६७)
नराश्वरथमातङ्गा युधि गाण्डीवधन्वना ।
शरव्रातैश्चिता रेजुः कदम्बा इव केसरैः ॥ ८-८५-४० (५१२६८)
ततः कुरुणामभवदार्तनादो महान्नृप ।

नराश्वनागासुहनान्दृष्ट्वा बाणान्किरीटिनः ॥ ८-८५-४१ (५१२६९)
हाहाकृतं भृशं त्रस्तं लीयमानं परस्परम् ।
अलातचक्रवत्सैन्यं तदा बभ्राम तावकम् ॥ ८-८५-४२ (५१२७०)
ततोऽर्जुनशरध्वस्तं कुरूणां सुमहद्बलम् ।
न ह्यत्रासीदनिर्भिन्नो रथः सादी हयो गजः ॥ ८-८५-४३ (५१२७१)
आदीप्तमिव तत्सैन्यं शरैश्छिन्नतनुच्छदम् ।
आसीत्स्वशोणितक्लिन्नं रौद्रं नष्टं विशाम्पते ॥ ८-८५-४४ (५१२७२)
तत्सैन्यं हतभूयिष्ठमाहतं निशितैः शरैः ।
न जहौ समरं प्राप्य फल्गुनं शत्रुतापनम् ॥ ८-८५-४५ (५१२७३)
तत्राद्भुतमपश्याम कौरवाणां पराक्रमम् ।
वध्यमानोऽपि यत्पार्थं न जहौ भरतर्षभ ॥ ८-८५-४६ (५१२७४)
तं दृष्ट्वा विक्रमं तस्य कुरवः सव्यसाचिनः ।
निराशाः समपद्यन्त सर्वे कर्णस्य जीविते ॥ ८-८५-४७ (५१२७५)
अविषह्यं तु पार्थस्य शरसंस्पर्शमाहवे ।
मत्वा न्यवर्तन्कुरवो जिता गाण्डीवधन्वना ॥ ८-८५-४८ (५१२७६)
ते हित्वा समरे पार्थं वध्यमानाश्च सायकैः ।
प्रदुद्रुवुर्दिशो भीताश्चुक्रुशुश्चापि सूतजम् ॥ ८-८५-४९ (५१२७७)
तान्विद्रावयते पार्थः किरञ्शरशतान्बहून् ।
हर्षयन्पाण्डवीं सेनां राजानं च युधिष्ठिरम् ॥ ८-८५-५० (५१२७८)
पुत्रास्तव महाराज जग्मुः कर्णरथं प्रति ।
अगाधे मज्जतां तेषां द्वीपः कर्णोऽभवत्तदा ॥ ८-८५-५१ (५१२७९)
कुरवो हि महाराज निर्विषाः पन्नगा इव ।
कर्णमेवोपलीयन्त भयाद्गाण्डीवधन्वनः ॥ ८-८५-५२ (५१२८०)
यथा सर्वाणि भूतानि मृत्योर्भीतानि मारिष ।
उपलीयन्ति सन्त्रासाद्धर्मं लोकपरायणम् ॥ ८-८५-५३ (५१२८१)
तथा कर्णं महेष्वासं पुत्रास्तव नराधिप ।
उपालीयन्त सन्त्रासात्पाण्डवस्य महात्मनः ॥ ८-८५-५४ (५१२८२)
ताञ्शोणितपरिक्लिन्नान्विषमस्थाञ्शरातुरान् ।
मा भैष्टेत्यब्रवीत्कर्णो भीतानाविष्टचेतसः ॥ ८-८५-५५ (५१२८३)
सम्भग्नं हि बलं दृष्ट्वा बलात्पार्थेन तावकम् ।
धनुर्विस्फारयन्कर्णस्तस्थौ शत्रुजिघांसया ॥ ८-८५-५६ (५१२८४)
तान्प्रद्रुतान्कुरून्दृष्ट्वा कर्णः शस्त्रभृतां वरः ।
सञ्चिन्तयित्वा पार्थस्य वधे दध्रे मनः श्वसन् ॥ ८-८५-५७ (५१२८५)
विस्फार्य सुमहच्चापं ततश्चाधिरथिर्वृषः ।
पाञ्चालान्पुनराधावत्पश्यतः सव्यसाचिनः ॥ ८-८५-५८ (५१२८६)
ततः क्षणेन क्षितिपाः क्षतजप्रतिमेक्षणाः ।

शरौघैश्छादयामासुर्महामेघा इवाचलम् ॥ ८-८५-५९ (५९२८७)
ततः शरसहस्राणि कर्णमुक्तानि मारिष ।
पाञ्चालानां हरत्प्राणांस्तमांसीव तमोनुदः ॥ ८-८५-६० (५९२८८)
महदासीत्तदा युद्धं पाञ्चालानां महामते ।
वध्यतां सूतपुत्रेण मित्रार्थे मित्रगृद्धिना ॥ ॥ ८-८५-६१ (५९२८९)

इति श्रीमन्महाभारते कर्णपर्वणि सप्तदशदिवसयुद्धे
पञ्चाशीतितमोऽध्यायः ॥ ८५ ॥
Mahabharata - Karna Parva - Chapter Footnotes

८-८५-१२ मुसलैर्भिन्दिपालैश्च इति झ पाठः ॥
८-८५-८५ पञ्चाशीतितमोऽध्यायः ॥

---

कर्नपर्व-अध्यय०८६
॥ श्रीः ॥
८.८६. अध्यायः ८६

Mahabharata - Karna Parva - Chapter Topics
सङ्कुलयुद्धम् ॥१ ॥
भीमदुःशासनयोः समागमः संवादश्च ॥ २ ॥

Mahabharata - Karna Parva - Chapter Text

८-८६-० (५९२९०)
सञ्जय उवाच। ८-८६-०क्ष् (५०४५)
ततः कर्णः कुरुषु प्रद्रुतेषु
वरूथिना श्वेतहयेन राजन् ।
पाञ्चालपुत्रान्व्यधमत्सूतपुत्रो
महेषुभिर्वात इवाभ्रसङ्घान् ॥ ८-८६-१ (५९२९१)
सूतं रथादञ्जलिकैर्निपात्य
जघान चाश्वाञ्जनमेजयस्य ।
शतानीकं सुतसोमं च भल्लै--
रवाकिरद्धनुषी चाप्यकृन्तत् ॥ ८-८६-२ (५९२९२)
धृष्टद्युम्नं निर्बिभेदाथ षड्भि--
र्जघानाश्वान्दक्षिणांस्तस्य सङ्ख्ये ।
हत्वा चाश्वान्सात्यकेः सूतपुत्रः

कैकेयपुत्रं न्यवधीद्विशोकम् ॥ ८-८६-३ (५१२९३)
तमभ्यधावन्निहते कुमारे
सेनापतिः कैकयो मित्रवर्मा ।
शरैर्विधुन्वन्भृशमुग्रवेगैः
कर्णात्मजं चाप्यहनत्सुदेवम् ॥ ८-८६-४ (५१२९४)
तस्यार्धचन्द्रैस्त्रिभिरुच्चकर्त
प्रहस्य बाहू च शिरश्च कर्णः ।
स स्यन्दनाद्गामगमद्गतासुः
परश्वथैः साल इवावरुग्णः ॥ ८-८६-५ (५१२९५)
हताश्वमञ्जोगमिभिः सुषेणः
शिनिप्रवीरं निशितैः पृषत्कैः ।
प्रच्छाद्य नृत्यन्निव कर्णपुत्रः
शैनेयबाणाभिहतः पपात ॥ ८-८६-६ (५१२९६)
पुत्रे हते क्रोधपरीतयेताः
कर्णः शिनीनां प्रवरं जिघांसुः ।
हतोऽसि हे सात्यक इत्युदीर्य
व्यवासृजद्बाणममित्रसाहम् ॥ ८-८६-७ (५१२९७)
तमस्य चिच्छेद शरं शिखण्डी
त्रिभिस्त्रिभिश्च प्रतुतोद कर्णम् ।
शिखण्डिनः कार्मुकं च ध्वजं च
च्छित्त्वा क्षुराभ्यां न्यहनत्सुजातः ॥ ८-८६-८ (५१२९८)
शिखण्डिनं षड्भिरविध्यदुग्रो
धार्ष्टद्युम्नेः स शिरश्चोच्चकर्त ।
ततोऽभिनत्सुतसोमं क्षुरेण
सुसञ्शितेनाधिरथिर्महात्मा ॥ ८-८६-९ (५१२९९)
अथाक्रन्दे तुमुले वर्तमाने
धार्ष्टद्युम्ने निहते तत्र कृष्णः ।
अपाञ्चाल्यं क्रियते याहि पार्थ
कर्णं जहीत्यब्रवीद्राजसिंह ॥ ८-८६-१० (५१३००)
ततः प्रहस्याशु नरप्रवीरो
रथं रथेनाधिरथेर्जगाम ।
भये तेषां त्राणमिच्छन्सुबाहु--
रभ्याहतानां रथयूथपेन ॥ ८-८६-११ (५१३०१)
ततोऽपरे भारत दुष्प्रकम्प्याः
पाञ्चालानां रथसङ्घाः समेताः ।
प्रतिश्रिता ह्यन्तरिक्षे ग्रहाभा

धनुःप्रवीरास्तु रथप्रवीराः ॥ ८-८६-१२ (५१३०२)
विस्फार्य गाण्डीवमथोग्रघोषं
ज्यया समाहत्य तले भृशं च ।
बाणान्धकारं सहसैव कृत्वा
जघान नागाश्वरथध्वजांश्च ॥ ८-८६-१३ (५१३०३)
श्प्रतिश्रुतः प्राचरदन्तरिक्षे
गुहा गिरीणामपतन्वयांसि ।
यन्मण्डलज्येन विजृम्भमाणो
रौद्रे मुहूर्तेऽभ्यपतत्किरीटी ॥ ८-८६-१४ (५१३०४)
तं भीमसेनोऽनुययौ रथेन
पृष्ठे रक्षन्पाण्डवमेकवीरः ।
तौ राजपुत्रौ त्वरितौ रथाभ्यां
कर्णाय यातावरिभिर्विषक्तौ ॥ ८-८६-१५ (५१३०५)
तत्रान्तरे सुमहान्सूतपुत्र--
श्चक्रे युद्धं सोमकान्सम्प्रमथ्य ।
रथाश्वमातङ्गणाञ्जघान
प्रच्छादयामास शरैर्दिशश्च ॥ ८-८६-१६ (५१३०६)
तमुत्तमौजा जनमेजयश्च
क्रुद्धौ युधामन्युशिखण्डिनौ च ।
कर्णं बिभेदुः सहिताः पृषत्कैः
सन्नर्दमानाः सह पार्षतेन ॥ ८-८६-१७ (५१३०७)
ते पञ्च पाञ्चालरथाः समेता
वैकर्तनं कर्णमभिद्रवन्तः ।
तस्माद्रथाच्च्यावयितुं न शेकु--
र्धैर्यात्कृतात्मानमिवेन्द्रियार्थाः ॥ ८-८६-१८ (५१३०८)
तेषां धनूंषि ध्वजवाजिसूतां--
स्तूर्णं पताकाश्च निकृत्य बाणैः ।
तान्पाञ्चालानभ्यहनत्पृवत्कैः
कर्णस्ततः सिंह इवोन्ननाद ॥ ८-८६-१९ (५१३०९)
तस्यास्यतस्तानभिनिघ्नतश्च
ज्याबाणहस्तस्य धनुःस्वेनन ।
साद्रिद्रुमा स्यात्पृथिवी विशीर्णे--
त्यतीव मत्वा जनता व्यपीदत् ॥ ८-८६-२० (५१३१०)
स शक्रचापप्रतिमेन धन्वना
भृशायतेनाधिरथिः शरान्सृजन् ।
बभौ रणे दीप्तमरीचिमण्डलो

यथांशुमाली परिवेषवांस्तथा ॥ ८-८६-२१ (५१३११)
शिखण्डिनं द्वादशभिः पराभिन--
च्छितैः शरैः षड्भिरथोत्तमौजसम् ।
त्रिभिर्युधामन्युमविध्यदाशुगै--
स्त्रिभिस्त्रिभिः सोमकपार्षतात्मजौ ॥ ८-८६-२२ (५१३१२)
पराजिताः पञ्च महारथास्तु ते
महाहवे सूतसुतेन मारिष ।
निरुद्यमास्तस्थुरमित्रनन्दना
यथेन्द्रियार्थात्मवता पराजिताः ॥ ८-८६-२३ (५१३१३)
निमज्जतस्तानथ कर्णसागरे
विपन्ननावो वणिजो यथार्णवे ।
उद्दध्रिरे नौभिरिवार्णवाद्रथैः
सुकल्पितैर्द्रौपदिजाः स्वमातुलान् ॥ ८-८६-२४ (५१३१४)
ततः शिनीनामृषभः शितैः शरै--
र्निकृत्य कर्णप्रहितानिषून्बहून् ।
विदार्य कर्णं निशितैरयस्मयै--
स्तवात्मजं ज्येष्ठमविध्यदष्टमिः ॥ ८-८६-२५ (५१३१५)
कृपोऽथ भोजश्च तवात्मजस्तथा
स्वयं च कर्णो निशितैरताडयत् ।
स तैश्चतुर्भिर्युयुधे यदूत्तमो
दिगीश्वरैर्दैत्यपतिर्यथा तथा ॥ ८-८६-२६ (५१३१६)
समाततेनेष्वसनेन कूजता
महास्वनेनाशनिपातदीधितिः ।
बभूव दुर्धर्षतरः स सात्यकिः
शरन्नभोमध्यगतो यथा रविः ॥ ८-८६-२७ (५१३१७)
पुनः समास्थाय रथान्सुदंशिताः
शिनिप्रवीरं जुगुपुः परन्तपाः ।
समेत्य पाञ्चालमहारथा रणे
मरुद्गणाः शक्रमिवारिनिग्रहे ॥ ८-८६-२८ (५१३१८)
ततोऽभवद्युद्धमतीव दारुणं
तवाहितानां तव सैनिकैः सह ।
रथाश्वमातङ्गविनाशनं तथा
यथा सुराणामसुरैः पुराऽभवत् ॥ ८-८६-२९ (५१३१९)
रथा द्विपा वाजिपदातयस्तथा
भ्रमन्ति नानाविधशस्त्रवेष्टिताः ।
परस्परेणाभिहताश्च चस्खलु--

र्विनेदुरार्ता व्यसवोऽपतंस्तथा ॥ ८-८६-३० (५१३२०)
तथागतं भीममभीस्तवात्मजः
ससार राजावरजः किरञ्शरैः ।
तमभ्यधावत्त्वरितो वृकोदरो
महारुरुं सिंह इवाभिपेदिवान् ॥ ८-८६-३१ (५१३२१)
ततस्तयोर्युद्धमतीव दारुणं
प्रदीव्यतोः प्राणदुरोदरं द्वयोः ।
परस्परेणाभिनिविष्टरोषयो--
रुदग्रयोः शम्बरशक्रयोर्यथा ॥ ८-८६-३२ (५१३२२)
शरैः शरीरार्तिकरैः सुतेजनै--
र्निजघ्नतुस्तावितरेतरं भृशम् ।
सकृत्प्रभिन्नाविव वासितान्तरे
महागजौ दोर्भिरदीनघातिनौ ॥ ८-८६-३३ (५१३२३)
आलोक्य तौ चैव परस्परं ततः
समं च शूरौ च ससारथी तदा ।
भीमोऽब्रवीद्याहि दुःशासनाय
दुःशासनो याहि वृकोदराय ॥ ८-८६-३४ (५१३२४)
तयो रथौ सारथिसम्प्रचोदितौ
समं रथौ तौ महसा समीयतुः ।
नानायुधच्छत्रपताकिकाध्वजौ
दिवीव पूर्वं बलशक्रयो रणे ॥ ८-८६-३५ (५१३२५)
भीम उवाच। ८-८६-३६क्ष् (५०४६)
दिष्ट्याऽसि दुःशासन अद्य दृष्टः
क्षणं प्रतीच्छे सहवृद्धि मूलम् ।
चिरोदितं यन्मया ते सभायां
कृष्णाभिमर्शेन गृहाण मत्तः ॥ ८-८६-३६ (५१३२६)
स एवमुक्तस्तु ततो महात्मा
दुःशासनो वाक्यमुवाच वीरः ।
सर्वं स्मरन्नेव विसंस्मरामि
उदीर्यमाणं शृणु भीमसेन ॥ ८-८६-३७ (५१३२७)
स्मरामि चात्मप्रभवं चिराय
यज्जातुषे वेश्मनि रात्र्यहानि ।
विश्वासहीना मृगयां चरन्तो
वसन्ति सर्वत्र निराकृतास्तु ॥ ८-८६-३८ (५१३२८)
महाभयं रात्र्यहानि स्मरन्त--
स्तथोपभोगाच्च सुखाच्च हीनाः ।

वनेष्वटन्तो गिरिगह्वराणि
पाञ्चालराजस्य पुरं प्रविष्टाः ॥ ८-८६-३९ (५१३२९)
मायां यूयं कामपि सम्प्रविष्टा
यतो वृतः कृष्णया फल्गुनो वः ।
संभूय पापैस्तदनार्यवृत्तं
कृतं तदा मातृकृतानुरूपम् ॥ ८-८६-४० (५१३३०)
एका वृता पञ्चभिः साभिपन्ना ।
ह्यलज्जमानेश्च परस्परस्य ।
स्मरे सभायां सुबलात्मजेन
दासीकृता यत्सह कृष्णया च ॥ ८-८६-४१ (५१३३१)
सञ्जय उवाच। ८-८६-४२क्ष् (५०४७)
इत्येवमुक्तस्तु तवात्मजेन
पाण्डोः सुतः कोपवशं भृशं
धनुः क्षुराभ्यां ध्वजमेव चाच्छिनत् ।
ललाटमप्यस्य बिभेद पत्रिणा ८-८६-४२ (५१३३२)
शिरश्च कायात्प्रजहार सारथेः ॥
स राजपुत्रोऽन्यदवाप्य कार्मुकं
वृकोदरं द्वादशभिः पराभिनत् ।
स्वयं नियच्छंस्तुरगानजिह्मगैः ८-८६-४३ (५१३३३)
शरैश्च भीमं पुनरप्यवीवृषत् ॥ ॥ ८-८६-४४ (५१३३४)

इति श्रीमन्महाभारते कर्णपर्वणि सप्तदशदिवसयुद्धे
षडशीतितमोऽध्यायः ॥ ८६ ॥
Mahabharata - Karna Parva - Chapter Footnotes

८-८६-१४ प्रतिश्रुतः प्रतिस्वनः ॥
८-८६-८६ षडशीतितमोऽध्यायः ॥

---

कर्नपर्व-अध्यय०८७
॥ श्रीः ॥
८.८७. अध्यायः ८७

Mahabharata - Karna Parva - Chapter Topics
भीमेन राज्ञां समक्षं दुःशासनवक्षसो रक्तपानम् ॥ १ ॥

Mahabharata - Karna Parva - Chapter Text

८-८७-० (५९३३५)
सञ्जय उवाच। ८-८७-०क्ष् (५०४८)
सर राजपुत्रेण समार्च्छदुग्र--
दुःशासनेन निकृतो निकृत्या ॥ ८-८७-१ (५९३३६)
तत्राकरोद्दुष्करं राजपुत्रो
दुःशासनः कुरुवीरो महात्मा ।
यद्भीमसेनं प्रतियोधयद्रणे
जम्भो यथा शक्रमुदारवीर्यम् ॥ ८-८७-२ (५९३३७)
धनुच्छित्त्वा भीमसेनस्य सङ्ख्ये
षड्भिः शरैः सारथिमभ्यविध्यत् ।
ततोऽविध्यत्त्रिंशता भीमसेनं
वरेषुभिर्वन्यमिव द्विपेन्द्रम् ॥ ८-८७-३ (५९३३८)
स कार्मुकं गृह्य तु भारसाधनं
भीमस्तदा राजपुत्रं ह्यविध्यत् ।
पञ्चाशतैर्बाणगणैः स्तनानन्तरे
तोत्रैर्यथा तीव्रवेगं द्विपेन्द्रम् ॥ ८-८७-४ (५९३३९)
ततस्तु राजन्विरथं महात्मा
दुःशासनो भीमसेनं चकार ।
निहत्य सङ्ख्ये चतुरोऽस्य बाहा--
ञ्छित्त्वा रथेषां पुनरेव चाक्षिपत् ॥ ८-८७-५ (५९३४०)
ततः क्षितिस्थो ह्यवरुह्य याना--
द्वृकोदरो मदया तस्य वाहान् ।
यमक्षयं प्रेषयित्वा महात्मा
रथं समाकर्षत राजसूनोः ॥ ८-८७-६ (५९३४१)
तस्मादवप्लुत्य रथात्ससर्ज
दुःशासनस्तोमरमुग्रवेगम् ।
स तेन विद्धो ह्युरसि ह्यप्रमेयो
गदां तस्मै विससर्जाप्रमेयाम् ॥ ८-८७-७ (५९३४२)
ततः क्रोधाद्भीमसेनः कृतानि
सर्वाणि दुःखान्यनुसंस्मरन्वै ।
संस्मृत्य संस्मृत्य तथा प्रतिज्ञा--
मुग्रामसौ राजपुत्रौ व्यषीदत् ॥ ८-८७-८ (५९३४३)
सञ्चिन्तितं रोषमतीव वेगा-
त्त्रयोदशाब्दं पुरुषप्रवीरः ।
प्रगृह्य वज्राशनितुल्यवेगां

गदां करेणाथ वृकोदरो रुषा ॥ ८-८७-९ (५९३४४)
निपातयित्वा पृथिवीतले भृशं
स ताजयामा वृकोदरो बली ।
अतीव सन्ताडितभिन्नगात्रो
दुःशासनो वै निपपात भूमौ ॥ ८-८७-१० (५९३४५)
आक्रम्य कण्ठे युधि राजपुत्रं
संरक्तनेत्रो ह्यब्रवीद्धार्तराष्ट्रम् ।
तद्ब्रूहि किं त्वं परिमार्गमाणो
ह्यस्मान्पराभूय इहागतः पुनः ॥ ८-८७-११ (५९३४६)
दिदीपयंस्तङ्गशदीपितं मे
चिरार्जितं रोषमतिप्रदीप्तम् ।
मधु प्रपास्ये तव कोष्टभाजना--
दित्यब्रवीद्भीमसेनस्तरस्वी ॥ ८-८७-१२ (५९३४७)
दुःशासनं कण्ठदेशे प्रमृद्रं--
स्ततः क्रूरं भीमसेनश्चकार ।
कतं व्यंसयित्वा सहसा ससार
बलादसौ धार्तराष्ट्रस्तरस्वी ॥ ८-८७-१३ (५९३४८)
भीमोऽभिदुद्राव सुतं त्वदीयं
सपत्रतां दर्शयन्धार्तराष्ट्रे ।
मृगं मुहुः सिंहशिशुर्यथा वने
तथाश्वभिद्रुत्य महाबलं बली ॥ ८-८७-१४ (५९३४९)
निगृह्य चैनं परमेण कर्मणा
उत्क्षिप्य चोत्क्षिप्य च तूर्णमेनम् ।
भूमौ तदा निष्पिपेषाथ वीर
असिं विकोशं विमलं चकार ॥ ८-८७-१५ (५९३५०)
तं पातयित्वा तु वृकोदरोऽथ
जगर्ज हर्षेण विनादयन्दिशः ।
नादेन तेनाखिलपार्श्ववर्तिनो
मूर्च्छाकुलाः पतितास्त्वाजमीढ ॥ ८-८७-१६ (५९३५१)
दुःशासनं तत्र समीक्ष्य राज--
न्भीमो महाबाहुरचिन्त्यकर्मा ।
स्मृत्वा च केशग्रहणं च देव्या
वस्त्रापहारं च रजस्वलायाः ॥ ८-८७-१७ (५९३५२)
अनागसो भर्तृपराङ्मुखाया
दुःखानि दत्तान्यपि विप्रचिन्त्या ।
जज्वाल कोपादथ भीमसेन

आज्यप्रसिक्तो हि यथा हुताशः ॥ ८-८७-१८ (५९३५३)
तत्राह कर्णं च सुयोधनं च
कृपं द्रौणिं कृतवर्माणमेव ।
निहन्मि दुःशासनमद्य पापं
संरक्ष्यतामद्य समस्तयोधाः ॥ ८-८७-१९ (५९३५४)
इत्येवमुक्त्वा सहसाभ्यधाव--
न्निहन्तुकामोऽतिबलस्तरस्वी ।
तथा तु विक्रम्य रमे वृकोदरो
महागजं केसरिको यथैव ।
निगृह्य दुःशासनमेकवीरः
सुयोधनस्याधिरथेः समक्षम् ॥ ८-८७-२० (५९३५५)
असिं समुद्यम्य सितं सुधारं
कण्ठे पदाक्रम्य च वेपमानम् ।
उवाच तद्गौरिति यद्ब्रुवाणो
हृष्टोऽवदः कर्णसुयोधनाभ्याम् ॥ ८-८७-२१ (५९३५६)
ये राजसूयावभृथे पवित्रा
जाताः कचा याज्ञसेन्या दुरात्मन् ।
ते पाणिना कतरेणावकृष्टा--
स्तद्ब्रूहि त्वां पृच्छति भीमसेनः ॥ ८-८७-२२ (५९३५७)
श्रुत्वा तु तद्भीमवचः सुघोरं
दुःशासनो भीमसेनं निरीक्ष्य ।
जज्वाल बीमं स तदा स्मयेन
संशृण्वतां कौरवसोमकानाम् ।
उक्तस्तदाजौ स तथा सरोषं
जगाद भीमं परिवृत्तनेत्रः ॥ ८-८७-२३ (५९३५८)
अयं करिकराकारः पीनस्तनविमर्दनः ।
गोसहस्रप्रदाता च क्षत्रियान्तकरः करः ॥ ८-८७-२४ (५९३५९)
अनेन याज्ञसेन्या मे भीम केशा विकर्षिताः ।
पश्यतां कुरुमुख्यानां युष्माकं च सभासदाम् ॥ ८-८७-२५ (५९३६०)
एवं त्वसौ राजसुतं निशम्य
ब्रुवन्तमाजौ विनिपीड्य वक्षः ।
भीमो बलात्तं प्रतिगृह्य दोर्भ्या--
मुच्चैर्ननादाथ समस्तयोधान् ॥ ८-८७-२६ (५९३६१)
उवाच यस्यास्ति बलं स रक्ष--
त्वसौ भवेदद्य निरस्तबाहुः ।
दुःशानं जीवितं प्रोत्सृजन्त--

माक्षिप्य योधांस्तरसा महाबलः ॥ ८-८७-२७ (५१३६२)
एवं क्रुद्धो भीमसेनः करेण
उत्पाटयामास भुजं महात्मा ।
दुःशासनं तेन स वीरमध्ये
जघान वज्राशनिसन्निभेन ॥ ८-८७-२८ (५१३६३)
कण्ठे समाक्रम्य च वेपमानं
कृत्वाऽनु रूपं परमं सुघोरम् ।
कालान्तकाभ्यां सदृशं तदानीं
विदार्य वक्षश्च महारथस्य ॥ ८-८७-२९ (५१३६४)
दुःशासनस्य निपुशासनस्य
उद्धृत्य वक्षः पतितस्य भूमौ ।
ततोऽपिबच्छोणितमस्य कोष्ण--
मास्वाद्य चास्वाद्य च वीक्षमाणः ॥ ८-८७-३० (५१३६५)
क्रुद्धः प्रहृष्टो निजगाद वाक्यं
स्तन्यस्य मातुः पयसोऽमृतस्य ।
माध्वीकजस्येव रसस्य तस्य
मधोश्च पानाद्यवकस्य पानात् ॥ ८-८७-३१ (५१३६६)
पयोदधिभ्यां मथिताच्च मुख्या--
त्तथेक्षुसारस्य मनोहरस्य ।
सर्वेभ्य एवाभ्यधिको रसोऽस्य
मतो ममाद्याहितलोहितस्य ॥ ८-८७-३२ (५१३६७)
एवं ब्रुवाणं पुनरुत्थितं त--
मास्फोट्य वल्गन्तमतिप्रहृष्टम् ।
ये भीमसेनं ददृशुस्तदानीं
प्रायेण तेऽपि व्यथिता निपेतुः ॥ ८-८७-३३ (५१३६८)
ये चापि नासन्पतिता मनुष्या--
स्तेषां करेभ्यः पतितं तु शस्त्रम् ।
भयाच्च सञ्चुक्रुशुरस्वरैस्तदा
निमीलिताक्षा मुमुहुश्च तत्र ॥ ८-८७-३४ (५१३६९)
ये तत्र भीमं रुधिरं पिबन्तं
दुःशासनस्य ददृशुः प्रपन्नाः ।
नायं मनुष्यस्त्विति भाषमाणाः
सर्वेऽपलायन्त भयाभिपन्नाः ॥ ॥ ८-८७-३५ (५१३७०)

इति श्रीमन्महाभारते कर्णपर्वणि सप्तदशदिवसयुद्धे
सप्तशीतितमोऽध्यायः ॥ ८७ ॥

८-८७-२७ योधानाक्षिप्य उवाचेत्यन्वयः ॥
८-८७-३२ अहितस्य शत्रोःदुःशासनस्य लोहितस्य रक्तस्य ॥
८-८७-८७ सप्ताशीतितमोऽध्यायः ॥

---

कर्नपर्व-अध्यय०८८
॥ श्रीः ॥
८.८८. अध्यायः ८८

Mahabharata - Karna Parva - Chapter Topics
दुःशासनवधक्रोधादात्मनामभिद्रुतदतां तदनुजानां भीमेन वधः ॥ १ ॥
दुःशासनादिनिधनाद्बिश्यतः कर्णस्य शल्येन प्रोत्साहनम् ॥ २ ॥
सङ्कुलयुद्धम् ॥ ३ ॥

Mahabharata - Karna Parva - Chapter Text

८-८८-० (५१३७१)
सञ्जय उवाच। ८-८८-०क्ष् (५०४१)
स पीत्वा रुधिरं तस्य चरणौ गृह्य भारत ।
इत्युच्चैर्वचनं प्राह प्रतिनृत्यन्वृकोदरः ॥ ८-८८-१ (५१३७२)
एष ते रुधिरं तीव्रं पिबामि पुरुषादवत् ।
वदेदानीं सुसंरब्धः पुनर्गौरिति गौरिति ॥ ८-८८-२ (५१३७३)
ये चास्मान्प्रतिनृत्यन्ति तदा गौरिति गौरिति ।
तान्वयं प्रतिनृत्यामः पुनर्गौरिति गौरिति ॥ ८-८८-३ (५१३७४)
प्रमाणकोट्यां शयने कालकूटकभोजनम् ।
दंशनं चाहिभिस्तीक्ष्णैर्दाहं जतुगृहे च यत् ॥ ८-८८-४ (५१३७५)
द्यूते च दोषभूयस्त्वमरण्ये वसतिश्च या ।
इष्वस्त्राणि च सङ्ग्रामे अनिलानिलवेश्मसु ॥ ८-८८-५ (५१३७६)
दुःखान्येवाभिजानीमो न सुखानि कदाचन ।
धृतराष्ट्रस्य दौरात्म्यात्सपुत्रस्य वयं सदा ॥ ८-८८-६ (५१३७७)
इत्युच्चैर्वचनं प्रोच्य जयं प्राप्य वृकोदरः ।
पुनरेव महाराज तव सैन्यमभिद्रवत् ॥ ८-८८-७ (५१३७८)
रक्तार्द्रपाणिस्तु ततो महात्मा
गदापाणिः काल इवान्तकाले ।
विभीषयंस्तव पुत्रस्य सैन्य--

मितस्ततो धावति वाहिनीं ते ॥ ८-८८-८ (५१३७९)
ततः क्षणाद्भारत शून्यमासी--
दायोधनं घोरतरं कुरूणाम् ।
यत्राजिमध्ये प्रापिबद्भीमसेनो
दुःशासनस्य रुधिरं क्रोधदीप्तः ॥ ८-८८-९ (५१३८०)
स हत्वा समरे राजन्राजपुत्रं महाबलम् ।
पूर्णकामो मदोदग्रः सिंहो रुरुमिवोत्कटः ॥ ८-८८-१० (५१३८१)
रुधिरार्द्रो महाराज व्यशोभत परन्तपः ।
सपुष्पः किंशुक इव रक्तरक्ततरो बभौ ॥ ८-८८-११ (५१३८२)
रुधिराक्तो घोरवेषः क्रुद्धो राजन्वचोऽब्रवीत् ।
ब्रूहीदानीं पापमते नृशंस पतितो ह्यसि ॥ ८-८८-१२ (५१३८३)
दुःशासने यादृशं संश्रुतं न--
स्तदवाप्तं पाण्डवैः सर्वमेव ।
अत्रैवमाप्स्याम्यपरं द्वितीयं
दुर्योधनं यज्ञपशुं विशस्य ॥ ८-८८-१३ (५१३८४)
शिरो मृदित्वाऽस्य पुनश्च शान्तिं
यास्याम्यहं कौरवाणां समक्षम् ।
या साऽपतिः सा सपतिर्हि जाता
यास्ताः सपत्योऽपतयस्तु जाताः ॥ ८-८८-१४ (५१३८५)
पश्यन्तु चित्रं विविधं हि लोके
ये वै तिलाः षण्डतिला बभूवुः ।
ते चेत्संसिद्धा निधनं गताः परे
किं चित्ररूपं बत जीवलोके ॥ ८-८८-१५ (५१३८६)
एतावदुक्त्वा वचनं प्रहृष्टः
प्राक्रोशदुच्चै रुधिरार्द्रवक्रः ।
ननर्त चैवातिबलो महात्मा
वृत्रं निहत्येव सहस्रनेत्रः ॥ ८-८८-१६ (५१३८७)
दृष्ट्वा तु नृत्यन्तमुदग्रवीर्यं
कालं यथा त्वन्तकाले प्रजानाम् ।
महद्भयं चाधिरथिं विवेश
जये निराशाश्च सुतास्त्वदीयाः ॥ ८-८८-१७ (५१३८८)
दुःशासने तु निहते पुत्रास्तव महारथाः ।
महत्क्रोधविषं वीरा धारयन्तो महाबलाः ।
ते तु राजन्महावीर्या भीमं प्राच्छादयञ्छरैः ॥ ८-८८-१८ (५१३८९)
निषङ्गी कवची खड्गी दण्डधारो धनुर्धरः ।
अलम्बुर्जलसन्धश्च वातवेगसुवर्चसौ ॥ ८-८८-१९ (५१३९०)

एते समेत्य सहिता भ्रातृव्यसनकर्शिताः ।
भीमसेनं महाबाहुं पीडयामासुरञ्जसा ॥ ८-८८-२० (५१३११)
स वध्यमानो विशिखैः समन्तात्तैर्महारथैः ।
भीमः क्रोधाभिरक्ताक्षः क्रुद्धः काल इवाबभौ ॥ ८-८८-२१ (५१३१२)
ततः परिवृतो राजन्नवभिः शत्रुतापनैः ।
दुःशासनादवरजैः पुत्रैस्तव वृकोदरः ॥ ८-८८-२२ (५१३१३)
तांस्तु भल्लैर्महावेगैर्नवभिर्नव भारत ।
रुक्माङ्गदान्रुक्मपुङ्खैः पार्थो निन्ये यमक्षयम् ॥ ८-८८-२३ (५१३१४)
हतेषु तव पुत्रेषु बलं तद्विप्रदुद्रुवे ।
पश्यतः सूतपुत्रस्य पाण्डवस्य भयार्दितम् ॥ ८-८८-२४ (५१३१५)
ततः कर्णं महाराज प्रविवेश महद्भयम् ।
दृष्ट्वा भीमस्य विक्रान्तमन्तकस्य प्रजास्विव ॥ ८-८८-२५ (५१३१६)
तस्य त्वाकारभावज्ञः शल्यः समितिशोभनः। ८-८८-२६ (५१३१७)
उवाच वचनं कर्णं प्राप्तकालं हितं तदा ॥ ८-८८-२७ (५१३१८)
एते द्रवन्ति राजानो भीमसेनभयार्दिताः ।
दुर्योधनश्च सम्मूढो भ्रातृव्यसनकर्शितः ॥ ८-८८-२८ (५१३१९)
दुःशासनस्य रुधिरे पीयमाने महात्मना ।
व्यापन्नचेताः सहसा शोकोपहतचेतनः ॥ ८-८८-२९ (५१४००)
उपासते त्वामेते हि परिवार्य महारथाः ।
कृपप्रभृतयः कर्ण हतशेषाः सहोदराः ॥ ८-८८-३० (५१४०१)
पाण्डवा लब्धलक्षाश्च धनञ्जयपुरोगमाः ।
त्वामेवाभिमुखाः शूरा युद्धाय समुपस्थिताः ॥ ८-८८-३१ (५१४०२)
स त्वं पुरुषशार्दूल पौरुषे महति स्थितः ।
क्षत्रधर्मं पुरस्कृत्य प्रत्युद्याहि धनञ्जयम् ॥ ८-८८-३२ (५१४०३)
भारो हि धार्तराष्ट्रेण त्वयि सर्वः समाहितः ।
तमुद्वह महाबाहो यथाशक्ति यथाबलम् ॥ ८-८८-३३ (५१४०४)
जये स्याद्विपुला कीर्तिर्ध्रुवः स्वर्गः पराजये ।
वृषसेनश्च राधेय सङ्क्रुद्धस्तनयस्तव ।
त्वयि मोहं समापन्ने पाण्डवानभिधावति ॥ ८-८८-३४ (५१४०५)
सञ्जय उवाच। ८-८८-३५क्ष् (५०५०)
एतच्छ्रुत्वा तु वचनं शल्यस्यामिततोजसः ।
हृदि मानुष्यकं भावं कृत्वा युद्धाय सुस्थिरम् ॥ ८-८८-३५ (५१४०६)
ततः क्रुद्धो वृषसेनोऽभ्यधाव--
द्भीमं समायान्तममित्रसाहम् ।
बाणैः किरन्तं प्रतियाति चोग्रं
व्यात्ताननं कालमिवापतन्तम् ॥ ८-८८-३६ (५१४०७)

तमभ्यधावन्नकुलः प्रवीर--
मारादमित्रं प्रतुदन्पृषत्कैः ।
कर्णस्य पुत्रं समरे प्रहृष्टं
जिष्णुर्जिघांसुर्मघवेव जम्भम् ॥ ८-८८-३७ (५९४०८)
ततो ध्वजं स्फाटिकहेमचित्रं
चिच्छेद धैर्यान्नकुलः क्षुरेण ।
कर्णात्मजस्येष्वसनं च चित्रं
भल्लेन जाम्बूनदचित्रनद्धम् ॥ ८-८८-३८ (५९४०९)
अथान्यदादाय धनुः स शीघ्रं
कर्णात्मजः पाण्डवमभ्यविध्यत् ।
दिव्यैरस्त्रैरभ्यवर्षत्तदैनं
कर्णस्य पुत्रो नकुलं कृतास्त्रम् ॥ ८-८८-३९ (५९४१०)
ततः क्रुद्धो नकुलः कर्णपुत्रं
शरैर्महोल्काभिरिवाभ्यपीडयत् ।
स कर्णपुत्रो नकुलस्य राज--
न्सर्वानस्त्रान्वारयदुत्तमास्त्रैः ॥ ८-८८-४० (५९४११)
आसीत्सुघोरं भरतप्रवीर
युद्धं तदा कर्णजपाण्डवाभ्याम् ॥ ८-८८-४१ (५९४१२)
वनायुजान्सुकुमारान्सुशुभ्रा--
नलङ्कृताञ्जातरूपेण चित्रान् ।
जघान चाश्वान्नकुलस्य वीरो
रणाजिरे सूतपुत्रस्य पुत्रः ॥ ८-८८-४२ (५९४१३)
ततो हताश्वादवरुह्य याना--
च्चर्माऽऽददे रुचिरं बर्हिचित्रम् ।
आकाशसङ्काशमसिं प्रगृह्य
प्रकाशमानः खगवच्चचार ॥ ८-८८-४३ (५९४१४)
ततोऽस्य पक्षाननयद्यमाय
द्विसाहस्रान्नकुलः क्षिप्रकारी ।
ते प्रापतन्नसिना वै विशस्ता
यथाऽश्वमेधे पशवः शमित्रा ॥ ८-८८-४४ (५९४१५)
ततस्ततो विजिता युद्धशौण्डा
नानादेश्याः सुहृदः सत्यसन्धाः ।
एकेन शीघ्रं नकुलेन नुन्नाः
सारेप्सुनेवोत्तमचन्दनस्य ॥ ८-८८-४५ (५९४१६)
भूमौ चरन्तं नकुलं रथौघाः
समन्ततः सायकैः प्रत्यगृह्णन् ।

स तुद्यमानो नकुलो विहङ्गै--
श्चचार सङ्ख्ये द्विषतो विनिघ्नन् ॥ ८-८८-४६ (५९४१७)
तं कर्णपुत्रोऽपि चरन्तमाजौ
नराश्वमातङ्गरथप्रवीरान् ।
निघ्नन्तमष्टादशभिः पृषत्कै--
र्विव्याध वीरः स चुकोप विद्धः ॥ ८-८८-४७ (५९४१८)
ततोऽभ्यधावत्समरे जिघांसुः
कर्णात्मजं पाण्डुसुतो नृवीरम् ।
तस्येषुभिर्वधमत्सूतपुत्रो
महारणे वर्म सहस्रभारम् ॥ ८-८८-४८ (५९४१९)
तस्याथ कांस्यं सुशितं सुपीत--
मसिप्रवीरं गुरुभारासाहम् ।
द्विषच्छरीरापहरं सुघोर--
माधून्वतः सर्पमिवात्तकोशम् ॥ ८-८८-४९ (५९४२०)
क्षिप्रं शरैः षड्भिरमित्रसाह--
श्चकर्त खड्गं निशितैः सुधारैः ।
पुनश्च पार्थं निशितैः पृषत्कैः
स्तनान्तरे क्षिप्रमिवात्यविध्यत् ॥ ८-८८-५० (५९४२१)
स भीमसेनस्य रथं च गत्वा
ववर्ष वै शरवर्षं सुघोरम् ॥ ८-८८-५१ (५९४२२)
नकुलमथ विदित्वा छिन्नबाणासनासिं
विरथमरिभिरार्तं कर्णपुत्रास्त्रमग्नम् ।
पवनचलपताका ह्लादिनो वल्गिताश्वाः
परपुरुषनियुक्ताः स्वै रथैः शीघ्रमीयुः ॥ ८-८८-५२ (५९४२३)
द्रुपदसुतवरिष्ठाः पञ्च शैनेयषष्ठा
द्रुपददुहितृपुत्राः पञ्च चामित्रसाहाः ।
द्विरदरथनराश्वान्सूदयन्तस्त्वदीयान्
भगवत इव रुद्राः सङ्ख्यया हेतिमन्तः ॥ ८-८८-५३ (५९४२४)
अथ तव रथमुख्यास्तान्प्रतीयुस्त्वरन्तः
कृपहृदिकसुतौ च द्रौणिदुर्योधनौ च ।
शकुनिशुकवृकाश्च क्राथदेवावृधौ च
द्विरदजलदघोषैः स्यन्दनैः कार्मुकैश्च ॥ ८-८८-५४ (५९४२५)
अथ तव रथवर्यास्तान्दशैकप्रवीरा--
निषुभिरशनिकल्पैस्ताडयन्तो न्यरुन्धन् ।
नवजलदसवर्णैर्हस्तिभिस्तान्स्म वव्रु--
र्गिरिशिखरनिकाशैर्भीमवेगैः कुणिन्दाः ॥ ॥ ८-८८-५५ (५९४२६)

इति श्रीमन्महाभारते कर्णपर्वणि सप्तदशदिवसयुद्धे
अष्टाशीतितमोऽध्यायः ॥ ८८ ॥

---

कर्नपर्व-अध्यय०८९
॥ श्रीः ॥
८.८९. अध्यायः ८९

Mahabharata - Karna Parva - Chapter Topics
सङ्कुलयुद्धम् ॥ १ ॥

Mahabharata - Karna Parva - Chapter Text

८-८९-० (५१४२७)
सञ्जय उवाच। ८-८९-०क्ष् (५०५१)
सुकल्पिता हैमवता महोत्कटा
रणाभिकामैः कृतिभिः समास्थिताः ।
सुवर्णजालैर्वितता बभुर्गजा--
स्तथा यथा खे जलदाः सविद्युतः ॥ ८-८९-१ (५१४२८)
कुणिन्दपुत्रो दशभिर्महायसैः
कृपं ससूताश्वमपीडयद्भृशम् ।
ततः शरद्वत्सुतसायकैर्हतः
सहैव नागेन पपात भूतले ॥ ८-८९-२ (५१४२९)
कुणिन्दपुत्रावरजस्तु तोमरै--
र्दिवाकरांशुप्रतिमैरयस्मयैः ।
जघान भोजस्य हयानथापतन्
क्षणाद्विशस्ताः कृतवर्मणे हयाः ॥ ८-८९-३ (५१४३०)
अथापरे द्रौणिहता महाद्विपा--
स्त्रयः ससर्वायुधयोधकेतनाः ।
निपेतुरुर्व्यां व्यसवो विचेतना--
स्तथा यथा वज्रहता महाचलाः ॥ ८-८९-४ (५१४३१)
कुणिन्दराजावरजादनन्तरः
स्तनान्तरे पत्रिवरैरताडयत् ।
तवात्मजं तस्य तवात्मजः शरैः
शितैः शरीरं व्यहनद्द्विपं च तम् ॥ ८-८९-५ (५१४३२)
स नागराजः सह राजसूनुना

पपात रक्तं बहु सर्वतः क्षरन् ।
महेन्द्रवज्रप्रहतोऽम्बुदागमे
यथा जलं गेरिकपर्वतस्तथा ॥ ८-८९-६ (५९४३३)
कुणिन्दपुत्रप्रहितोऽपरो द्विपः
क्राथं ससूताश्वरथं व्यपोथयत् ।
ततोऽपतत्क्राथसराभिघातितः
सहेश्वरो वज्रहतो यथा गिरिः ॥ ८-८९-७ (५९४३४)
रथी द्विपस्थेन हतोऽपतच्छरैः
क्राथाधिपः पर्वतजेन दुर्जयः ।
सवाजिसूतेष्वसनध्वजस्तथा
यथा महावातहतो महाद्रुमः ॥ ८-८९-८ (५९४३५)
वृको द्विपस्थं गिरिराजवासिनं
भृशं शरैर्द्वादशभिः पराभिनत् ।
ततो वृकं साश्वरथं महाद्विपो
द्रुतं चतुर्भिरणैर्व्यपोथयत् ॥ ८-८९-९ (५९४३६)
स पोथितो नागरवेण वीर्यवा--
न्पराभिनद्द्वादशभिः शिलीमुखैः ।
वृकेण बाणाभिहतोऽपतत्क्षितौ
सवारणो बभ्रुसुतेन सार्धम् ॥ ८-८९-१० (५९४३७)
कुणिन्दराजस्य सुतोऽपरस्तदा
स चापि शूरः सहसा समर्पितः ।
पपात बाणैः सुबलस्य सूनुना
विषाणपुच्छापरगात्रपातिना ॥ ८-८९-११ (५९४३८)
गजेन वाहाञ्शकुनेः कुणिन्दजो
निनाय वैवस्वतमन्दिरं रणे ।
रथं च संक्षुभ्य ननाद नर्दत--
स्ततोऽस्य गान्धारपतिः शिरोऽहरत् ॥ ८-८९-१२ (५९४३९)
ततः कुणिन्देषु गतेषु तेषु
प्रहृष्टरूपास्तव ते महारथाः ।
भृशं प्रदध्मुर्लवणाम्बुसम्भवा--
न्वरांश्च बाणासनपाणयोऽभ्ययुः ॥ ८-८९-१३ (५९४४०)
तथाऽभवद्युद्धमतीव दारुणं
पुनः कुरूणां सह पाण्डुसृञ्जयैः ।
शरासिशक्त्यृष्टिगदापरश्वथै--
र्नराश्वनागासुहरं भृशाकुलम् ॥ ८-८९-१४ (५९४४१)
रथाश्वमातङ्गपदातयस्ततः

परस्परं विप्रहताः क्षितौ पतन् ।
यथा सविद्युत्तटितो जलप्रदाः
समुत्थितैर्दिग्भ्य इवोग्रमारुतैः ॥ ८-८९-१५ (५१४४२)
ततः शतानीकहता महागजा
हया रथाः पत्तिगणाश्च तावकाः ।
सुपर्णवातप्रहता यथोरगा--
स्तथा गता गां विवशा विचूर्णिताः ॥ ८-८९-१६ (५१४४३)
ततोऽभ्यविद्ध्यद्बहुभिः शितैः शरैः
स विन्दपुत्रो नकुलात्मजं स्मयन् ।
ततोऽस्य कोपाद्विचकर्त नाकुलिः
शिरः क्षुरेणाम्बुजसन्निभाननम् ॥ ८-८९-१७ (५१४४४)
ततः शतानीकमविध्यदायसै--
स्त्रिभिः शरैः कर्णसुतोऽर्जुनं त्रिभिः ।
त्रिभिश्च भीमं नकुलं च सप्तभि--
र्जनार्दनं द्वादशभिश्च सायकैः ॥ ८-८९-१८ (५१४४५)
तदस्य कर्मातिमनुष्यकर्मणः
समीक्ष्य हृष्टाः कुरवोऽभ्यपूजयन् ।
पराक्रमज्ञास्तु धनञ्जयस्य ये
हुतोऽयमग्नाविति ते तु मेनिरे ॥ ॥ ८-८९-१९ (५१४४६)

इति श्रीमन्महाभारते कर्णपर्वणि सप्तदशदिवसयुद्धे
एकोननवतितमोऽध्यायः ॥ ८९ ॥

---

कर्नपर्व-अध्यय०९०
॥ श्रीः ॥
८.९०. अध्यायः ९०

Mahabharata - Karna Parva - Chapter Topics
अर्जुनेन कर्णसूनोर्वृषसेनस्य वधः ॥ १ ॥

Mahabharata - Karna Parva - Chapter Text

८-९०-० (५१४४७)
सञ्जय उवाच। ८-९०-०क्ष् (५०५२)
ततः किरीटि परवीरघाती
हताश्वमालोक्य नरप्रवीरः ।

माद्रीसुतं नकुलं लोकमध्ये
समीक्ष्य कृष्णं भृशविक्षतं च ।
समभ्यधावद्वृषसेनमाहवे
स सूतजस्य प्रमुखे स्थितस्तदा ॥ ८-९०-१ (५९४४८)
तमापतन्तं नरवीरमुग्रं
महाहवे बाणसहस्रधारिणम् ।
अभ्यापतत्कर्णसुतो महारथं
यथा महेन्द्रं नमुचिः पुरा तथा ॥ ८-९०-२ (५९४४९)
तौ तत्र शूरौ रथकुञ्जरौ रणे
परस्परस्याभिमुखौ महारथौ ।
ससर्जतुः शरसङ्घाननेका--
न्सम्भ्रान्तरूपौ सुभृशं तदानीम् ॥ ८-९०-३ (५९४५०)
ततो द्रुतं चैकशरेण पार्थं
शितेन विद्ध्वा युधि कर्णपुत्रः ।
ननाद नादं सुमहानुभावो
विद्ध्वेव शक्रं नमुचिः स वीरः ॥ ८-९०-४ (५९४५१)
पुनः स पार्थं वृषसेन उग्रै--
र्बाणैरविद्ध्यद्भुजमूले तु सव्ये ।
तथैव कृष्णं नवभिः समार्दय--
त्पुनश्च पार्थं दशभिर्जघान ॥ ८-९०-५ (५९४५२)
पूर्वं यथा वृषसेनप्रयुक्तै--
रभ्याहतः श्वेतहयः शरैस्तैः ।
संरम्भमीषद्गमितो वधाय
कर्णात्मजस्याथ मनः प्रदध्रे ॥ ८-९०-६ (५९४५३)
ततः किरीटि रणमूर्ध्नि कोपात्
कृत्वा त्रिशाखां भ्रुकुटिं ललाटे ।
मुमोच तूर्णं विशिखान्महात्मा
वधे धृतः कर्णसुतस्य सङ्ख्ये ।
आरक्तनेत्रोऽन्तकशत्रुहन्ता
उवाच कर्णं भृशमुत्स्मयंस्तदा ॥ ८-९०-७ (५९४५४)
दुर्योधनं द्रौणिमुखांश्च सर्वा--
नहं रणे वृषसेनं तमुग्रम् ।
सम्पश्यतः कर्ण तवाद्य सङ्ख्ये
नयामि लोकं निशितैः पृषत्कैः ॥ ८-९०-८ (५९४५५)
ऊनं च तावद्धि जना वदन्ति
सर्वैर्भवद्भिर्मम सूनुर्हतोऽसौ ।

एको रथो मद्विहीनस्तरस्वी
अहं हनिष्ये भवतां समक्षम् ॥ ८-९०-९ (५९४५६)
संरक्ष्यतां रथसंस्थाः सुतोऽय--
महं हनिष्ये भवतां समक्षम् ॥
पश्चाद्वधिष्ये त्वामपि सम्प्रमूढ--
महं हनिष्येऽर्जुन आजिमध्ये ॥ ८-९०-१० (५९४५७)
तमद्य मूलं कलहस्य सङ्ख्ये
दुर्योधनापाश्रय जातदर्पम् ।
त्वामद्य हन्ताऽस्मि रणे प्रसह्य
अस्यैव हन्ता युधि भीमसेनः ।
दुर्योधनस्याधमपूरुषस्य
यस्यानयादेष महान्क्षयोऽभवत् ॥ ८-९०-११ (५९४५८)
स एवमुक्त्वा विनिमृज्य चापं
लक्ष्यं हि कृत्वा वृषसेनमाजौ ।
ससर्ज बाणान्विशिखान्महात्मा
वधाय राजन्कर्णसुतस्य सङ्ख्ये ॥ ८-९०-१२ (५९४५९)
विव्याध चैनं दशभिः पृषत्कै--
र्मर्मस्वशङ्कं प्रहसन्किरीटी ।
चिच्छेद चास्येष्वसनं भुजौ च
क्षुरैश्चतुर्भिर्निशितैः शिरश्च ॥ ८-९०-१३ (५९४६०)
स पार्थबाणाभिहतः पपात
रथाद्विबाहुर्विशिरा धरायाम् ।
सुपुष्पितो वज्रहतोऽतिमात्रो
भग्नो यथा साल इवावकृत्तः ॥ ८-९०-१४ (५९४६१)
तं पार्थबाणाभिहतं पतन्तं
सम्प्रेक्ष्य कर्णः सुतमाशुकारी ।
रथं रथेनाशु जगाम रोषा--
त्किरीटिनः पुत्रवधाभितप्तः ॥ ८-९०-१क्ष१ सञ्जय उवाच। ८-९०-१अ१
तमायान्तमभिप्रेक्ष्य वेलोद्धृत्तमिवार्णवम्। ८-९०-१ब्१ गर्जन्तं
सुमहाकायं दुर्निवारं सुरैरपि। ८-९०-१च्१ अर्जुनं प्राह दाशार्हः
प्रहस्य पुरुषर्षभः॥ ८-९०-२अ२ अयं सरथ आयासि श्वेताश्वः
शल्यसारथिः। ८-९०-२ब्२ येन ते सह योद्धव्यं स्थिरो भव
धनञ्जय॥ ८-९०-३अ३ पश्य चैनं समायुक्तं रथं कर्णस्य
पाण्डव। ८-९०-३ब्३ श्वेतवाजिसमायुक्तं युक्तं राधासुतेन
च॥ ८-९०-४अ४ नानापताकाकलिलं किङ्किणीजालमालिनम्। ८-९०-४ब्४
उह्यमानमिवाकाशो विमानं पाण्डुरैर्हयैः॥ ८-९०-५अ५

ध्वजं च पश्य कर्णस्य नागकक्षं महात्मनः। ८-९०-५ब्५
आखण्डलधनुःप्रख्यमुल्लिखन्तमिवाम्बरम्॥ ८-९०-६अ६ पश्य
कर्णं समायान्तं धार्तराष्ट्रप्रियैषिणम्। ८-९०-६ब्६ शरधारा
विमुञ्चन्तं धारासारमिवाम्बुदम्॥ ८-९०-७अ७ एष मद्रेश्वरो
राजा रथाग्रे पर्यवस्थितः। ८-९०-७ब्७ नियच्छति हयानस्य
राधेयस्यामितौजसः॥ ८-९०-८अ८ शृणु दुन्दुभिनिर्घोषं
शङ्खशब्दं च दारुणम्। ८-९०-८ब्८ सिंहनादांश्च
विविधाञ्शृणु पाण्डव सर्वतः॥ ८-९०-९अ९ अन्तर्धाय
महाशब्दान्कर्णेनामिततेजसा। ८-९०-९ब्९ दोधूयमानस्य
भृशं धनुषः शृणु निःस्वनम्॥ ८-९०-१०अ१० एते
दीर्यन्ति सगणाः पाञ्चालानां महारथाः। ८-९०-१०ब्१०
दृष्ट्वा केसरिणं क्रुद्धं मृगा इव महावने॥ ८-९०-११अ११
सर्वयत्नेन कौन्तेय हन्तुमर्हसि सूतजम्। ८-९०-११ब्११
न हि कर्णशरानन्यः सोढुमुत्सहते नरः॥ ८-९०-१२अ१२
सदेवासुरगन्धर्वांस्त्रीँल्लोकान्सचराचरान्। ८-९०-१२ब्१२ त्वं हि
जेतुं रणे शक्तस्तथैव विदितं मम॥ ८-९०-१३अ१३ भीममुग्रं
महात्मानं त्र्यक्षं शर्वं कपर्दिनम्। ८-९०-१३ब्१३ न शक्ता
द्रष्टुमीशानं किं पुनर्योधितुं प्रभुम्॥ ८-९०-१४अ१४ त्वया
साक्षान्महादेवः सर्वभूतशिवः शिवः। ८-९०-१४ब्१४ युद्धेनाराधितः
स्थाणुर्देवाश्च वरदास्तव॥ ८-९०-१५अ१५ तस्य पार्थ प्रसादेन
देवदेवस्य शूलिनः। ८-९०-१५ब्१५ जहि कर्णं महाबाहो नमुचिं
वृत्रहा यथा॥ ८-९०-१६अ१६ श्रेयस्तेऽस्तु सदा पार्थ युद्धे
जयमवाप्नुहि॥ ८-९०-१६ब्१७क्ष् अर्जुन उवाच। ८-९०-१७अ१७ ध्रुव
एव जयः कृष्ण मम नास्त्यत्र संशयः। ८-९०-१७ब्१७
सर्वलोकगुरुर्यस्त्वं तुष्टोऽसि मधुसूदन॥ ८-९०-१८अ१८
चोदयाश्वान्हृषीकेश रथं मम महारथ। ८-९०-१८ब्१८
नाहत्वा समरे कर्णं निवर्तिष्यति फल्गुनः॥ ८-९०-१९अ१९ अद्य
कर्णं हतं पश्य मच्छरैः शकलीकृतम्। ८-९०-१९ब्१९ मां
वा द्रक्ष्यसि गोविन्द कर्णेन निहतं शरैः॥ ८-९०-२०अ२०
उपस्थितमिदं घोरं युद्धं त्रैलोक्यमोहनम्। ८-९०-२०ब्२०
यज्जनाः कथयिष्यन्ति यावद्भूमिर्धरिष्यति॥ ८-९०-२१अ२१ एवं
ब्रुवंस्तदा पार्थः कृष्णमक्लिष्टकारिणम्। ८-९०-२१ब्२१ प्रत्युद्ययौ
रथेनाशु गजं प्रतिगजो यथा॥ ८-९०-२२अ२२ पुनरप्याह तेजस्वी
पार्थः कृष्णमरिन्दम। ८-९०-२२ब्२२ चोदयाश्वान्हृषीकेश
कालोऽयमतिवर्तते॥ ८-९०-२३अ२३ एवमुक्तस्तदा तेन पाण्डवेन
महात्मना। ८-९०-२३ब्२३ जयेन सम्पूज्य स पाण्डवं तदा ८-९०-२३च्२३

प्रचोदयामास हयान्मनोजवान्॥ ८-९०-२४अ२४ स पाण्डुपुत्रस्य रथो मनोजवः ८-९०-२४ब्२४ क्षणेन कर्णस्य रथाग्रगोऽभवत्॥ ॥
८-९०-२५ (५१४६२)

इति श्रीमन्महाभारते कर्णपर्वणि सप्तदशदिवसयुद्धे नवतितमोऽध्यायःक॥ ९० ॥
Mahabharata - Karna Parva - Chapter Footnotes

८-९०-१ ऊनमिति ।अभिमन्युं साधनैरिति शेषः।साधनैरूनं वदन्तीत्यन्वयः ॥
८-९०-९० नवतितमोऽध्यायः ॥
८-९०-क एतदनन्तरं झ पुस्तके एकोऽध्यायोऽधिको दृश्यते ।

---

कर्नपर्व-अध्यय०९१
॥ श्रीः ॥
८.९१. अध्यायः ९१

Mahabharata - Karna Parva - Chapter Topics
रणाय कर्णार्जुनयोः समागमः ॥ १ ॥
तदवलोकनाय दिवि देवगन्धर्वादीनां समागमः ॥ २ ॥
देवासुरादीनां कर्णार्जु नसमाश्रयणेन द्वैधीभावः ॥ ३ ॥

Mahabharata - Karna Parva - Chapter Text

८-९१-० (५१४६३)
सञ्जय उवाच। ८-९१-०क्ष् (५०५३)
वृषसेनं हतं दृष्ट्वा क्रोधामर्षसमन्वितः ।
पुत्रशोकोद्भवं वारि नेत्राभ्यां समवासृजत् ॥ ८-९१-१ (५१४६४)
रथेन कर्णस्तेजस्वी जगामाभिमुखो रिपुम् ।
युद्धायामर्षताम्राक्षः समाहूय धनञ्जयम् ॥ ८-९१-२ (५१४६५)
तौ रथौ सूर्यसङ्काशौ वैयाघ्रपरिवारितौ ।
समेतौ ददृशुस्तत्र द्वाविवार्कौ समुद्गतौ ॥ ८-९१-३ (५१४६६)
श्वेताश्वौ पुरुषादित्यावास्थितावरिमर्दनौ ।
शुशुभाते महात्मानौ चन्द्रादित्यौ यथा दिवि ।
ग्रथौ चतुर्भिर्जलदैर्भगमित्राविवाम्बरे'॥ ८-९१-४ (५१४६७)
तौ दृष्ट्वा विस्मयं जग्मुः सर्वसैन्यानि मारिष ।

त्रैलोक्यविजये यत्ताविन्द्रवैरोचनाविव ॥ ८-९१-५ (५१४६८)
रथज्यातलनिर्ह्रादैर्बाणशङ्खरवैस्तथा ।
तौ रथावभ्यधावन्त क्षत्रियाः सर्व एव हि ॥ ८-९१-६ (५१४६९)
ध्वजावालोक्य वीराणां विस्मयः समपद्यत ।
हस्तिकक्ष्यां च कर्णस्य वानरं च किरीटिनः ॥ ८-९१-७ (५१४७०)
तौ रथौ सम्प्रसक्तौ तु दृष्ट्वा भारत पार्थिवाः ।
सिंहनादरवांश्चक्रुः साधुवादांश्च पुष्कलान् ॥ ८-९१-८ (५१४७१)
श्रुत्वा तयोर्द्वैरथं च तत्र योधाः सहस्रशः ।
चक्रुर्बाहुस्वनांश्चैव तथा बाणरवं महत् ॥ ८-९१-९ (५१४७२)
आजघ्नुः कुरवस्तत्र वादित्राणि समन्ततः ।
राधेयमभितो दध्मुः शङ्खाञ्शतसहस्रशः ॥ ८-९१-१० (५१४७३)
तथैव पाण्डवाः सर्वे हर्षयन्तो धनञ्जयम् ।
तूर्यशङ्खनिनादेन दिशः सर्वा व्यनादयन् ॥ ८-९१-११ (५१४७४)
क्ष्वेलितास्फोटितोत्क्रुष्टैस्तुमुलं सर्वतोऽभवत् ।
बाहुशब्दैश्च शूराणां कर्णार्जुनसमागमे ॥ ८-९१-१२ (५१४७५)
तौ दृष्ट्वा पुरुषव्याघ्रौ रथस्थौ रथिनां वरौ ।
प्रगृहीतमहाचापौ शरशक्तिध्वजायुतौ ॥ ८-९१-१३ (५१४७६)
वर्मिणौ बद्धनिस्त्रिंशौ श्वेताश्वौ शङ्खशोभितौ ।
तूणीरवसम्पन्नौ द्वावप्येतौ सुदर्शनौ ॥ ८-९१-१४ (५१४७७)
रक्तचन्दनदिग्धाङ्गौ समदौ गोवृषाविव ।
चापविद्युद्ध्वजोपेतौ शस्त्रसम्पत्तियोधिनौ ॥ ८-९१-१५ (५१४७८)
चामरव्यजनोपेतौ श्वेतच्छत्रोपशोभितौ ।
कृष्णशल्यरथोपेतौ तुल्यरूपौ महारथौ ॥ ८-९१-१६ (५१४७९)
सिंहस्कन्धौ दीर्घभुजौ रक्ताक्षौ हेममालिनौ ।
सिंहस्कन्धप्रतीकाशौ व्यूढोरस्कौ महाबलौ ।
अन्योन्यवधमिच्छन्तावन्योन्यजयकाङ्क्षिणौ ॥ ८-९१-१७ (५१४८०)
अन्योन्यमभिधावन्तौ गोष्ठे गोवृषभाविव ।
प्रभिन्नाविव मातङ्गौ सुसंरब्धाविवाचलौ ॥ ८-९१-१८ (५१४८१)
आशीविषशिशुप्रख्यौ यमकालान्तकोपमौ ।
इन्द्रवृत्राविव क्रुद्धौ सूर्यचन्द्रसमप्रभौ ॥ ८-९१-१९ (५१४८२)
महाग्रहाविव क्रुद्धौ युगान्ताय समुत्थितौ ।
देवगर्भौ देवसमौ देवतुल्यौ च रूपतः ॥ ८-९१-२० (५१४८३)
यदृच्छया समायातौ सूर्याचन्द्रमसौ यथा ।
बलिनौ समरे दृप्तौ नानाशस्त्रधरौ युधि ॥ ८-९१-२१ (५१४८४)
तौ दृष्ट्वा पुरुषव्याघ्रौ शार्दूलाविव धिष्ठितौ ।
बभूव परमो हर्षस्तावकानां विशाम्पते ॥ ८-९१-२२ (५१४८५)

संशयः सर्वभूतानां विजये समपद्यत ।
समेतौ पुरुषव्याघ्रौ प्रेक्ष्य कर्णधनञ्जयौ ॥ ८-९१-२३ (५१४८६)
उभौ वरायुधधरावुभौ रणकृतश्रमौ ।
उभौ च बाहुशब्देन नादयन्तौ नभस्तलम् ॥ ८-९१-२४ (५१४८७)
उभौ विश्रुतकर्माणौ पौरुषेण बलेन च ।
उभौ च सदृशौ युद्धे शम्बरामरराजयोः ॥ ८-९१-२५ (५१४८८)
कार्तवीर्यसमौ चोभावुभौ दाशरथेः समौ ।
विष्णुवीर्यसमौ चोभावुभौ भवसमौ युधि ॥ ८-९१-२६ (५१४८९)
उभौ श्वेतहयौ राजन्रथप्रवरवाहिनौ ।
सारथिप्रवरौ चापि उभौ मद्रजनार्दनौ ॥ ८-९१-२७ (५१४९०)
ततो दृष्ट्वा महाराज राजमानौ महारथौ ।
सिद्धचारणसङ्घानां विस्मयः समपद्यत ॥ ८-९१-२८ (५१४९१)
धार्तराष्ट्रास्ततस्तूर्णं सबला भरतर्षभ ।
परिवव्रुर्महात्मानं कर्णमाहवशोभिनम् ॥ ८-९१-२९ (५१४९२)
तथैव पाण्डवा दृष्ट्वा धृष्टद्युम्नपुरोगमाः ।
यमौ च चेकितानश्च प्रहृष्टाश्च प्रभद्रकाः ॥ ८-९१-३० (५१४९३)
नानादेश्याश्च ये शूराः शिष्टा युद्धाभिनन्दिनः ।
ते सर्वे सहिता हृष्टाः परिवव्रुर्धनञ्जयम् ॥ ८-९१-३१ (५१४९४)
रिरक्षिषन्तः शत्रुघ्नाः पत्त्यश्वरथकुञ्जराः ।
धनञ्जयस्य विजये धृताः कर्णवधेऽपि च ॥ ८-९१-३२ (५१४९५)
तथैव तावकाः सर्वे यत्ताः सेनाप्रहारिणः ।
दुर्योधनमुखा राजन्कर्णं जुगुपुराहवे ॥ ८-९१-३३ (५१४९६)
तावकानां रणे कर्णो ग्लहो ह्यासीद्विशाम्पते ।
तथैव पाण्डवेयानां ग्लहः पार्थोऽभवत्तदा ॥ ८-९१-३४ (५१४९७)
तयोस्तु सभ्यास्तत्रासन्प्रेक्षकाश्चाभवन्युधि ।
तत्रैषां ग्लहमानानां ध्रुवौ जयपराजयौ ॥ ८-९१-३५ (५१४९८)
ताभ्यां द्यूतं समासक्तं विजयायेतराय वा ।
अस्माकं पाण्डवानां च स्थितानां रणमूर्धनि ॥ ८-९१-३६ (५१४९९)
तौ तु स्थितौ महाराज समरे युद्धशालिनौ ।
अन्योन्यं प्रतिसंरब्धावन्योन्यवधकाङ्क्षिणौ ॥ ८-९१-३७ (५१५००)
तावुभौ प्रजिहीर्षन्ताविन्द्रवृत्राविव प्रभो ।
भीमरूपधरावास्तां महाधूमाविव ग्रहौ ॥ ८-९१-३८ (५१५०१)
ततोऽन्तरिक्षे सञ्जज्ञे विवादो भरतर्षभ ।
मिथो भेदाश्च भूतानामासन्कर्णार्जुनान्तरे ॥ ८-९१-३९ (५१५०२)
व्याश्रयन्त द्विधा भिन्नाः सर्वे लोकास्तु मारिष ।
देवदानवगन्धर्वाः पिशाचोरगराक्षसाः ।

प्रतिपक्षग्रहं चक्रुः कर्णार्जुनसमागमे ॥ ८-९१-४० (५९५०३)
द्यौरासीत्कर्णपक्षेऽत्र सनक्षत्रा विशाम्पते ।
भूर्विशाला पार्थमाता पुत्रस्य जयकाङ्क्षिणी ॥ ८-९१-४१ (५९५०४)
सागराश्चैव गिरयः सरितश्च नरोत्तम ।
महीजा जलजाश्चैव व्याश्रयन्त किरीटिनम् ॥ ८-९१-४२ (५९५०५)
असुरा यातुधानाश्च गुह्यकाश्च परन्तप ।
कर्णः समभवद्यत्र खेचराणि वयांसि च ॥ ८-९१-४३ (५९५०६)
रत्नानि निधयः सर्वे वेदाश्चाख्यानपञ्चमाः ।
सोपवेदोपनिषदो व्याश्रयन्त किरीटिनम् ॥ ८-९१-४४ (५९५०७)
वासुकिश्चित्रसेनश्च तक्षकश्चोपतक्षकः ।
महीवियज्जलचराः काद्रवेयाश्च सान्वयाः ।
विषवन्तो महानागा वेगिनश्चार्जुनेऽभवन् ॥ ८-९१-४५ (५९५०८)
ऐरावताः सौरभेया वैशालेयाश्च भोगिनः ।
एतेऽभवन्नर्जुनस्य पापाः सर्पाश्च कर्णतः ॥ ८-९१-४६ (५९५०९)
ईहामृगा व्यालमृगा मङ्गला मृगपक्षिणः ।
मङ्गलाः पशवश्चैव सिंहव्याघ्रास्तथैव च ।
पार्थस्य विजये राजन्सर्व एव समाश्रिताः ॥ ८-९१-४७ (५९५१०)
वसवो मरुतः साध्या रुद्रा देवाश्विनावपि ।
अग्नी रुद्रश्च सोमश्च पन्नगाश्च दिशो दश ।
कर्णतः समपद्यन्त श्वसृगालवयांसि च ॥ ८-९१-४८ (५९५११)
वसवश्च महेन्द्रेण मरुतश्च सहाग्निना ।
धनञ्जयस्य ते वर्गा आदित्याः कर्णतोऽभवन् ॥ ८-९१-४९ (५९५१२)
देवताः पितृभिः सार्धमृषिभिश्च परन्तप ।
तुम्बुरुप्रमुखाः सर्वे गन्धर्वा भरतर्षभ ।
यमौ वैश्रवणश्चैव वरुणश्च यतोऽर्जुनः ॥ ८-९१-५० (५९५१३)
देवर्षिब्रह्मर्षिगणाः सर्वे च खचराश्च ये
प्रालेयाः सहमौनेयाः शुभाश्चाप्सरसां गणाः ॥ ८-९१-५१ (५९५१४)
सहाप्सरोभिः शुभ्राभिर्देवदूताश्च गुह्यकाः ।
किरीटिनं संश्रिताः स्म पुण्यगन्धा मनोरमाः ॥ ८-९१-५२ (५९५१५)
अमनोज्ञाश्च ये गन्धास्ते सर्वे कर्णमाश्रिताः ।
विपरीतान्यनिष्टानि भवन्ति विनशिष्यताम् ॥ ८-९१-५३ (५९५१६)
ये त्वन्तकाले पुरुषं विपरीतमुपाश्रितम् ।
प्रविशन्ति नरं क्षिप्रं मृत्युकालेऽभ्युपागते ।
ते भावाः सहिताः कर्णं प्रविष्टाः सूतनन्दनम् ॥ ८-९१-५४ (५९५१७)
ओजस्तेजश्च सिद्धिश्च प्रहर्षः सत्यविक्रमौ ।
मनस्तुष्टिर्जयश्चापि तथाऽऽनन्दो नृपोत्तम ॥ ८-९१-५५ (५९५१८)

ईदृशार्नि नरव्याघ् तस्मिन्सङ्ग्रामसागरे ।
निमित्तानि च शुभ्राणि विविशुर्जिष्णुमाहवे ॥ ८-९१-५६ (५१५१९)
ऋषयो ब्राह्मणैः सार्धमभजन्त किरीटिनम् ॥ ८-९१-५७ (५१५२०)
ततो देवगणैः सार्धं सिद्धाश्च सह चारणैः ।
द्विधा भूता महाराज व्याश्रयन्त नरोत्तमौ ॥ ८-९१-५८ (५१५२१)
विमानानि विचित्राणि गुणवन्ति च सर्वशः ।
समारुह्य समाजग्मुर्द्वैरथं कर्णपार्थयोः ।
अन्तरिक्षे महाराज देवगन्धर्वराक्षसाः ॥ ८-९१-५९ (५१५२२)
एवं सर्वेषु भूतेषु द्विधा भूतेषु भारत ।
आशंसमानेषु जयं राधेयस्यार्जुनस्य च ।
विमानायुतसम्बाधमाकाशमभवत्तदा ॥ ८-९१-६० (५१५२३)
ईहामृगव्यालमृगैर्दिपाश्वरथपङ्क्तिभिः ।
ऊह्यमानाः परे मेघैर्वायुना च मनीषिणः ।
दिदृक्षवः समाजग्मुः कर्णार्जुनसमागमम् ॥ ८-९१-६१ (५१५२४)
देवदानवगन्धर्वा नागयक्षपतत्रिणः ।
महर्षयो देवगणाः पितरश्च स्वधाभुजः ॥ ८-९१-६२ (५१५२५)
तपोविद्यौषधीसिदधा नानारूपाम्बरत्विषः ।
अन्तरिक्षे महाराज विवदन्तोऽवतस्थिरे ॥ ८-९१-६३ (५१५२६)
ब्रह्मा ब्रह्मर्षिभिः सार्धं प्रजापतिभिरेव च ।
आस्थितो यानमाकाशे दिव्यं तेजः समागताः ॥ ८-९१-६४ (५१५२७)
ततः प्रजापतिस्तूर्णमाजगाम महामते ।
द्वैरथं युधि तं द्रुष्टं कर्णपाण्डवयोस्तदा ॥ ८-९१-६५ (५१५२८)
विजित्य कर्णः स्विदिमां वसुन्धरा--
मथार्जुनः स्वित्प्रतिपद्यतेऽखिलाम् ।
इतीश्वरस्यापि बभूव संशयः
प्रजापतेः प्रेक्ष्य तयोर्महद्बलम् ॥ ॥ ८-९१-६६ (५१५२९)

इति श्रीमन्महाभारते कर्णपर्वणि सप्तदशदिवसयुद्धे
एकनवतितमोऽध्यायः ॥ ९१ ॥

---

कर्नपर्व-अध्यय०९२
॥ श्रीः ॥
८.९२. अध्यायः ९२

Mahabharata - Karna Parva - Chapter Topics
कर्णार्जुनसमाश्रयात् लोकक्षयभीरुणा प्रजापतिना ब्रह्माणं प्रति

उभयोः साम्येन जयप्रार्थना ॥ १ ॥
इन्द्रेण सकारणनिरूपणमर्जुनस्यैव जये प्रार्थिते ब्रह्मेशानाभ्यां तदङ्गीकारे देवैर्हर्षात्पुष्पवर्षणम् ॥ २ ॥

Mahabharata - Karna Parva - Chapter Text

८-९२-० (५९५३०)
सञ्जय उवाच। ८-९२-०क्ष् (५०५४)
प्रजापतिस्तु तं दृष्ट्वा देवभागं समागतम् ।
अब्रवीत्तु ततो राजन्पश्यतो वै स्वयंभुवः ॥ ८-९२-१ (५९५३१)
उभावतिरथौ शूरावुभौ दृढपराक्रमौ ।
उभौ सदृशकर्माणौ वज्रिचक्रायुधौपमौ ॥ ८-९२-२ (५९५३२)
अहो बत महद्युद्धं कर्णार्जुनसमागमे ।
भविष्यति महाघोरं वृत्रवासवयोरिव ॥ ८-९२-३ (५९५३३)
प्रजापतिरथोक्त्वैवं स्वयम्भुवमचोदयत् ।
समोऽस्तु विजयः काममुभयोर्नरसिंहयोः ॥ ८-९२-४ (५९५३४)
कर्णार्जुनविवादेन मा नश्येदखिलं जगत् ।
स्वयंभो ब्रूहि तद्वाक्यं समोऽस्तु विजयोऽनयोः ॥ ८-९२-५ (५९५३५)
एवमुक्तस्तु भगवाञ्जये ताभ्यामनिश्चिते ।
इत्यब्रवीन्महाराज महाब्रह्मा प्रजापतिम् ॥ ८-९२-६ (५९५३६)
द्वावप्येतौ हि कृतिनौ द्वावप्यतिबलोत्कटौ ।
भविष्यत्यनयोर्युद्धं त्रैलोक्यस्य भयावहम् ॥ ८-९२-७ (५९५३७)
ततः प्रजापतिं तत्र सहस्राक्षोऽभ्यचोदयत् ।
विजयो ध्रुव एवास्तु पाण्डवस्य महात्मनः ॥ ८-९२-८ (५९५३८)
मनस्वी बलवाञ्शूरः कृतविद्यस्तपोधनः ।
विभर्ति च महातेजा धनुर्वेदमशेषतः ॥ ८-९२-९ (५९५३९)
पार्थः सर्वगुणोपेतो देवकार्यमिदं यतः ।
क्लिश्यन्ते पाण्डवा नित्यं वनवासादिभिर्भृशं ॥ ८-९२-१० (५९५४०)
सम्पन्नस्तपसा चैव पर्याप्तः पुरुषर्षभः ।
अतिक्रामेच्च माहात्म्याद्दिष्टमप्यविचारयन् ॥ ८-९२-११ (५९५४१)
अतिक्रमे च लोकानामभावो नियतो भवेत् ।
नावस्थानं च पश्यामि क्रुद्धयोः कृष्णयोः क्वचित् ॥ ८-९२-१२ (५९५४२)
स्रष्टारौ जगतश्चैतौ ततश्च पुरुषर्षभौ ।
नरनारायणावेतौ पुराणावृषिसत्तमौ ॥ ८-९२-१३ (५९५४३)
अनियम्यौ नियन्तारौ जगतः पुरुषर्षभौ ।
श्नैतयोस्तु समः कश्चिद्दिवि वा मानुषेषु वा ॥ ८-९२-१४ (५९५४४)

अनुगम्यास्त्रयो लोकाः सह देवर्षिचारणैः ।
सर्वदेवगणाश्चापि सर्वभूतानि यानि च ।
अनयोस्तु प्रभावेन वर्तते निखिलं जगत् ॥ ८-९२-१५ (५९५४५)
कामं तु सुकृताँल्लोकानाप्नोतु पुरुषर्षभः ।
कर्णो वैकर्तनः शूरो विजयस्त्वस्तु कृष्णयोः ॥ ८-९२-१६ (५९५४६)
वसूनां समलोकत्वं मरुतां वासमाप्नुयात् ।
सहितो द्रोणभीष्माभ्यां नाकपृष्ठे महीयताम् ॥ ८-९२-१७ (५९५४७)
ग्क्लेशितो हि वने पार्थो दिर्घकालं पितामह ।
तस्मादेष जयेद्युद्धे तपसाऽभ्यधिकोऽर्जुनः ॥ ८-९२-१८ (५९५४८)
पूर्वं भगवता प्रोक्तः कृष्णयोर्विजयो ध्रुवः ।
तत्तथास्तु नमस्तेऽस्तु प्रमो ब्रूहि पितामह ॥ ८-९२-१९ (५९५४९)
तत्सहस्राक्षवचनं निशम्य भगवान्प्रभुः ।
नोवाच तज्जयं तुल्यं तयोः कर्णकिरीटिनोः ॥ ८-९२-२० (५९५५०)
तस्मादाशां गतः शक्रस्तूष्णीम्भूते पितामहे ।
विजयः पाण्डवेयस्य कर्णस्य च वधो भवेत् ॥ ८-९२-२१ (५९५५१)
ब्रह्मेशानौ ततो वाक्यमूचतुर्भुवनेश्वरम् ।
विजयो ध्रुव एवास्तु पाण्डवस्य महात्मनः ॥ ८-९२-२२ (५९५५२)
मनस्वी जयतां शूरः कृतविद्यस्तपोधनः ।
बिभर्ति च महातेजा धनुर्वेदमशेषतः ॥ ८-९२-२३ (५९५५३)
अतिक्रामेच्च माहात्म्याद्दिष्टमप्यविचारयन् ।
अतिक्रमे च लोकानामभावो नियतो भवेत् ॥ ८-९२-२४ (५९५५४)
न च विद्य ह्यवस्थानं क्रुद्धयोः कृष्णयोः क्वचित् ।
स्रष्टारौ जगतश्चैव सतश्च पुरुषर्षभौ ॥ ८-९२-२५ (५९५५५)
कामं तु सुकृताँल्लोकान्प्राप्नोत्वेष परन्तपः ।
कर्णो वैकर्तनः शूरो विजयस्तु नरे ध्रुवः ॥ ८-९२-२६ (५९५५६)
तथोक्ते देवदेवाभ्यां सहस्राक्षोऽब्रवीद्वचः ।
आमन्त्र्य सर्वभूतानि ब्रह्मेशानानुशासनात् ॥ ८-९२-२७ (५९५५७)
श्रुतं भवद्भिर्यत्प्रोक्तं भगवद्भयां जगद्धितम् ।
तत्तथा व्येतु ते रोगः शमाप्नुत विमन्यवः ॥ ८-९२-२८ (५९५५८)
इति श्रुत्वेन्द्रवचनं सर्वभूतानि मानिष ।
विस्मितान्यभवन्राजन्पूजयाञ्चक्रिरे तदा ।
नोचुस्तदा जयं तुल्यं तयोः पुरुषसिंहयोः ॥ ८-९२-२९ (५९५५९)
व्यसृजंश्च सुगन्धीनि पुष्पवर्षाणि हर्षिताः ।
नानारूपाणि विबुधा देवतूर्याण्यवादयन् ॥ ८-९२-३० (५९५६०)
दिदृक्षवश्चाप्रतिमं द्वैरथं नरसिंहयोः ।
विस्मयोत्फुल्लनयना नान्या बुबुधिरे क्रियाः ॥ ॥ ८-९२-३१ (५९५६१)

इति श्रीमन्महाभारते कर्णपर्वणि सप्तदशदिवसयुद्धे
द्विनवतितमोऽध्यायः ॥ ९२ ॥

Mahabharata - Karna Parva - Chapter Footnotes

८-९२-११ दिष्टमपि दैवविहितमपि ॥
८-९२-९२ द्विनवतितमोऽध्यायः ॥

---

कर्नपर्व-अध्यय०९३
॥ श्रीः ॥
८.९३. अध्यायः ९३

Mahabharata - Karna Parva - Chapter Topics

शल्यकर्णयोः सँलापः ॥ १ ॥
कृष्णार्जुनयोः सँलापः ॥ २ ॥
अर्जुनेन कृष्णम्प्रति स्वसामर्थ्यकथनम् ॥ ३ ॥

Mahabharata - Karna Parva - Chapter Text

८-९३-० (५९५६२)
सञ्जय उवाच। ८-९३-०क्ष् (५०५५)
रथौ तयोः श्वेतहयौ दिव्यौ युक्तौ महास्वनौ ।
समास्थितौ लोकवीरौ शङ्खान्दध्मुः पृथक्पृथकम् ।
वासुदेवार्जुनौ वीरौ कर्णशल्यौ च भारत ॥ ८-९३-१ (५९५६३)
तद्भीरुसन्त्रासकरं युद्धं समभवत्तदा ।
अन्योन्यस्पांधेनोरुग्रं शक्रशम्बरयोरिव ॥ ८-९३-२ (५९५६४)
तयोर्ध्वजौ हि विमलौ शुशुभाते रथे स्थितौ ।
राहुकेतू यथाऽऽकाशे उदितौ जगतः क्षये ॥ ८-९३-३ (५९५६५)
कर्णस्याशीविषनिभा रत्नसारमयी दृढा ।
पुरन्दरधनुः प्रख्या हस्तिकक्ष्या विराजते ॥ ८-९३-४ (५९५६६)
कपिश्रेष्ठस्तु पार्थस्य व्यादितास्य इवान्तकः ।
दंष्ट्राभिर्भीषयन्भाभिर्दुर्निरीक्ष्यो रविर्यथा ॥ ८-९३-५ (५९५६७)
युद्धाभिलाषुको भूत्वा ध्वजो गाण्डीवधन्वनः ।
कर्णध्वजमुपातिष्ठत्स्वस्थानाद्वेगवान्कपिः ॥ ८-९३-६ (५९५६८)
उत्पत्य च महावेगः कक्ष्यामभ्याहनत्तदा ।
नखैश्च दशनैश्चैव गरुडः पन्नगं यथा ॥ ८-९३-७ (५९५६९)

सा किङ्किणीकाभरणा कालपाशोपमा तदा ।
अभ्यद्रवत्सुसंरब्धा हस्तिकक्ष्याऽथ तं कपिम् ॥ ८-९३-८ (५९५७०)
तयोर्घोरतरे युद्धे द्वैरथे द्यूत आहिते ।
प्राकुर्वतां ध्वजौ युद्धं पूर्वं पूर्वतरं तदा ॥ ८-९३-९ (५९५७१)
हया हयानभ्यहेषन्स्पर्धमानाः परस्परम् ।
अविध्यत्पुण्डरीकाक्षः शल्यं नयनसायकैः ।
शल्यश्च पुण्डरीकाक्षं तथैवाभिसमैक्षत ॥ ८-९३-१० (५९५७२)
तत्राजयद्वासुदेवः शल्यं नयनसायकैः ।
कर्णं चाप्यजयदृष्ट्या कुन्तीपुत्रो धनञ्जयः ॥ ८-९३-११ (५९५७३)
अयाब्रवीत्सूतपुत्रः शल्यमाभाष्य सस्मितम् ॥ ८-९३-१२ (५९५७४)
यदि पार्थो रणे हन्यादद्य मामिह कर्हिचित् ।
किं करिष्यसि सङ्ग्रामे शल्य सत्यमथोच्यताम् ॥ ८-९३-१३ (५९५७५)
शल्य उवाच। ८-९३-१४क्ष् (५०५६)
यदि कर्ण रणे हन्यादद्य त्वां श्वेतवाहनः ।
उभावेकरथेनाहं हन्यां माधवपाण्डवौ ॥ ८-९३-१४ (५९५७६)
सञ्जय उवाच। ८-९३-१५क्ष् (५०५७)
एवमेव तु गोविन्दमर्जुनः प्रत्यभाषत ।
तं प्रहस्याब्रवीत्कृष्णः पार्थं परमिदं वचः ॥ ८-९३-१५ (५९५७७)
पतेद्दिवाकरः स्थानाच्छीर्येद्भूमिरनेकधा ।
शैत्यमग्निरियान्न त्वां हन्यात्कार्णो धनञ्जय ॥ ८-९३-१६ (५९५७८)
यदि चैतत्कथञ्चित्स्याल्लोकपर्यसनं भवेत् ।
हन्यां कर्णं तथा शल्यं बाहुभ्यामेव संयुगे ॥ ८-९३-१७ (५९५७९)
इति कृष्णवचः श्रुत्वा प्रहसन्कपिकेतनः ।
अर्जुनः प्रत्युवाचेदं कृष्णमक्लिष्टकारिणम् ॥ ८-९३-१८ (५९५८०)
मम तावदपर्याप्तौ कर्णशल्यौ जनार्दन ।
सपताकध्वजं कर्णं सशल्यरथवाजिनम् ॥ ८-९३-१९ (५९५८१)
सच्छत्रकवचं चैव सशक्तिशरकार्मुकम् ।
द्रष्टाऽस्यद्य रणे कृष्ण शरैश्छिन्नमनेकधा ॥ ८-९३-२० (५९५८२)
अद्यैव सरथं साश्वं सशक्तिकवचायुधम् ।
सञ्चूर्णितमिवारण्ये वृक्षं पश्याद्य दन्तिना ॥ ८-९३-२१ (५९५८३)
अद्य राधेयभार्याणां वैधव्यं समुपस्थितम् ।
ध्रुवं स्वप्नेष्वनिष्टानि ताभिर्दृष्टानि माधव ॥ ८-९३-२२ (५९५८४)
द्रष्टासि ध्रुवमद्यैव विधवाः कर्णयोषितः ।
न हि मे शाम्यते मन्युर्यदनेन पुरा कृतम् ॥ ८-९३-२३ (५९५८५)
कृष्णां सभागतां दृष्ट्वा मूढेनादीर्घदर्शिना ।
अस्मांस्तथाऽवहसता क्षिपता च पुनःपुनः ॥ ८-९३-२४ (५९५८६)

अद्य द्रष्टासि गोविन्द कर्णमुन्मथितं मया ।
वारणेनेव मत्तेन पुष्पितं गजतीरुहम् ॥ ८-९३-२५ (५१५८७)
अद्य ता मधुरा वाचः श्रोतासि मधुसूदन ।
दिष्ट्या जयसि वार्ष्णेय इति कर्णे निपातिते ॥ ८-९३-२६ (५१५८८)
अद्याभिमन्युजननीं प्रहृष्टः सांत्वयिष्यसि ।
कुन्तीं पितृष्वसारं च प्रहृष्टः सन् जनार्दन ॥ ८-९३-२७ (५१५८९)
अद्य बाष्पमुखीं कृष्णां सान्त्वयिष्यसि माधव ।
वाग्भिश्चामृतकल्पाभिर्धर्मराजं च पाण्डवम् ॥ ॥ ८-९३-२८ (५१५९०)

इति श्रीमन्महाभारते कर्णपर्वणि सप्तदशदिवसयुद्धे
त्रिनवतितमोऽध्यायः ॥ ९३ ॥
Mahabharata - Karna Parva - Chapter Footnotes

८-९३-६ क्रुद्धोऽभिलषितं गत्वा इति ख ट पाठः ॥
८-९३-९ द्यत आह्वये इति ख ट पाठः ॥
८-९३-९३ त्रिनवतितमोऽध्यायः ॥

---

कर्नपर्व-अध्यय०९४
॥ श्रीः ॥
८.९४. अध्यायः ९४

Mahabharata - Karna Parva - Chapter Topics
कर्णाल्लंनयोर्युद्धारम्भः ॥ १ ॥
द्रौणिना दुर्योधनाय हिताख्यानम् ॥ २ ॥
तेन तदनादृत्य रणाय सेनानियोजनम् ॥ ३ ॥

Mahabharata - Karna Parva - Chapter Text

८-९४-० (५१५९१)
सञ्जय उवाच। ८-९४-०क्ष् (५०५८)
तद्देतनागासुरसिद्धयक्षै--
र्गन्धर्वरक्षोप्सरसां च सङ्घैः ।
ब्रह्मर्षिराजर्षिसुपर्णजुष्टं
बभौ वियद्विस्मयनीयरूपम् ॥ ८-९४-१ (५१५९२)
नानद्यमानं निनदैर्मनोज्ञै--
र्वादित्रगीतस्तुतिनृत्यहासैः ।

सर्वेऽन्तरिक्षं ददृशुर्मनुष्याः
खस्थाश्च तद्विस्मयनीयरूपम् ॥ ८-९४-२ (५९५९३)
ततः प्रहृष्टाः कुरुपाण्डुयोधा
वादित्रशङ्खस्वनसिंहनादैः ।
विनादयन्तो वसुधां दिशश्च
स्वनेन सर्वान्द्विषतो निजघ्नुः ॥ ८-९४-३ (५९५९४)
नराश्वमातङ्गरथैः समाकुलं
शरासिशक्त्यृष्टिनिपातदुःसहम् ।
अभीरुजुष्टं हतदेहसङ्कुलं
रणाजिरं लोहितमाबभौ तदा ॥ ८-९४-४ (५९५९५)
श्बभूव युद्धं कुरुपाण्डवानां
यथा सुराणामसुरैः सहाभवत् ाू
तथा प्रवृते तुमुले सुदारुणे
धनञ्जयश्चाधिरथिश्च सायकैः ।
दिशश्च सैन्यं च शितैरजिह्मगैः
परस्परं प्रावृणुतां सुदंशितौ ॥ ८-९४-५ (५९५९६)
ततस्त्वदीयाश्च परे च सायकैः
कृतेऽन्धकारे ददृशुर्न किञ्चन ।
भयातुरा एकरथौ समाश्रयं--
स्ततोऽभवत्त्वद्भुतमेव सर्वतः ॥ ८-९४-६ (५९५९७)
ततोऽस्त्रमस्त्रेण परस्परं तौ
विधूय वाताविव पूर्वपश्चिमौ ।
घनान्धकारे वितते तमोनुदौ
यथोदितौ तद्वदतीव रेजतुः ॥ ८-९४-७ (५९५९८)
न चाभिसर्तव्यमिति प्रचोदिताः
परे त्वदीयाश्च तथाऽवतस्थिरे ।
महारथौ तौ परिवार्य सर्वतः
सुरासुराः शम्बरवासवाविव ॥ ८-९४-८ (५९५९९)
मृदङ्गभेरीपणवानकस्वनै--
र्निनादिते वाहनशङ्खनिस्वनैः ।
तौ सिंहनादैर्बभतुर्नरोत्तमौ
पतङ्गचन्द्राविव दुःसहावुभौ ॥ ८-९४-९ (५९६००)
महाधनुर्मण्डुलमध्यगावुभौ
सुवर्चसौ बाणसहस्रदीधिती ।
दिधक्षमाणौ सचराचरं जग--
द्युगान्तसूर्याविव दुःसहौ रणे ॥ ८-९४-१० (५९६०१)

उभावजेयावहितान्तकावुभा--
वुभौ जिघांसू कृतिनौ परस्परम् ।
महाहवे वीतभयौ समीयतु--
र्महेन्द्रजम्भाविव कर्णपाण्डवौ ॥ ८-९४-११ (५१६०२)
ततो महास्त्राणि महाधनुर्धरौ
विमुञ्चमानाविषुभिर्भयानकैः ।
नराश्वनागानमितान्निजघ्नतुः
परस्परं चापि महारथौ नृप ॥ ८-९४-१२ (५१६०३)
ततो विसस्रुः पुनरर्दिता नरा
नरोत्तमाभ्यां कुरुपाण्डवाश्रयाः ।
सनागपत्त्यश्वरथा दिशो द्रुता--
स्तथा यथा सिंहहता वनौकसः ॥ ८-९४-१३ (५१६०४)
ततस्तु दुर्योधनभोजसौबलाः
कृपो गुरोश्चापि सुतो महाहवे ।
महारथाः पञ्च धनञ्जयाच्युतौ
शरैः शरीरार्तिकरैरताडयन् ॥ ८-९४-१४ (५१६०५)
धनूंषि तेषामिषुधीन्ध्वजान्हया--
न्रथांश्च सूतांश्च धनञ्जयः शरैः ।
समं प्रमथ्याशु परान्समन्ततः
शरोत्तमैर्द्वादशभिन्न सूतजम् ॥ ८-९४-१५ (५१६०६)
अथाभ्यधावंस्त्वरिताः शतं रथाः
शतं गजाश्चार्जुनमाततायिनः ।
शकास्तुषारा यवनाश्च सादिनः
सहैव काम्भोजवरैर्जिघांसवः ॥ ८-९४-१६ (५१६०७)
वरायुधान्पाणिगतैः शरैः सह
क्षुरैर्न्यकृन्तत्प्रपतञ्शिरांसि च ।
हयांश्च नागांश्च रथांश्च युध्यतो
धनञ्जयश्च शत्रुगणान्क्षितौ क्षिणौत् ॥ ८-९४-१७ (५१६०८)
ततोऽन्तरिक्षे सुरतूर्यनिःस्वनाः
ससाधुवादा हृषितैः समीरिताः ।
निपेतुरप्युत्तमपुष्पवृष्टयः
सुरूपगन्धाः पवनेरिताः शुभाः ॥ ८-९४-१८ (५१६०९)
तदद्भुतं देवमनुष्यसाक्षिकं
समीक्ष्य भूतानि विसिस्मियुस्तदा ।
तवात्मजः सूतसुतश्च न व्यथां
न विस्मयं जग्मतुरेकनिश्चयौ ॥ ८-९४-१९ (५१६१०)

अथाब्रवीद्द्रोणसुतस्तवात्मजं
करं करेण प्रतिपीड्य सान्त्वयन् ।
प्रसीद दुर्योधन शाम्य पाण्डवै--
रलं विरोधेन धिगस्तु विग्रहम् ॥ ८-९४-२० (५९६११)
हतो गुरुर्ब्रह्मसमो महास्त्रवि--
त्तथैव भीष्मप्रमुखा महारथाः ।
अहं त्ववध्यो मम चापि मातुलः
प्रशाधि राज्यं सह पाण्डवैश्चिरम् ॥ ८-९४-२१ (५९६१२)
धनञ्जयः स्यास्यति वारितो मया
जनार्दनो नैव विरोधमिच्छति ।
युधिष्ठिरो भूतहिते रतः सदा
वृकोदरस्तद्वशगस्तथा यमौ ॥ ८-९४-२२ (५९६१३)
त्वया तु पार्थैश्च कृते च संविदे
प्रजाः शिवं प्राप्नुयुरिच्छया तव ।
व्रजन्तु शेषाः स्वपुराणि पार्थिवा
निवृत्तवैराश्च भवन्तु सैनिकाः ।
न चेद्वचः श्रोष्यसि मे नराधिप
ध्रुवं हि तप्तोऽसि हतोऽरिभिर्युधि ॥ ८-९४-२३ (५९६१४)
वृद्धं पितरमालोक्य गान्धारीं च यशस्विनीम् ।
कृपालुर्धर्मराजो हि याचितः शममेष्यति ॥ ८-९४-२४ (५९६१५)
यथोचितं च वै राज्यमनुज्ञास्यति ते प्रभुः ।
विपश्चित्सुमतिर्वीरः सर्वशास्त्रार्थतत्त्ववित् ॥ ८-९४-२५ (५९६१६)
वैरं नेष्यति धर्मात्मा स्वजने नास्त्यतिक्रमः ।
न विग्रहमतिः कृष्णा स्वजने प्रतिनन्दति ॥ ८-९४-२६ (५९६१७)
भीमसेनार्जुनौ चोभौ माद्रीपुत्रौ च पाण्डवौ ।
वासुदेवमते चैव पाण्डवस्य च धीमतः ।
स्थास्यन्ति पुरुषव्याघ्रास्तयोर्वचनगौरवात् ॥ ८-९४-२७ (५९६१८)
रक्ष दुर्योधनात्मानमात्मा सर्वस्य भाजनम् ।
जीवने यत्नमातिष्ठ जीवन्भद्राणि पश्यति ॥ ८-९४-२८ (५९६१९)
राज्यं श्रीश्चैव भद्रं ते जीवमाने च कल्पते ।
मृतस्य तु खलु कौरव्य नैव राज्यं कुतः सुखम् ॥ ८-९४-२९ (५९६२०)
लोकवृत्तमिदं वृत्तं प्रवृत्तं पश्य भारत ।
शाम्य त्वं पाण्डवैः सार्धं शेषं रक्ष कुलस्य च ॥ ८-९४-३० (५९६२१)
मा भूत्स कालः कौरव्य यदाऽहमहितं वचः ।
ब्रूयां कामं महाबाहो माऽवमंस्था वचो मम ॥ ८-९४-३१ (५९६२२)
धर्मिष्ठमिदमत्यर्थं राज्ञश्चैव कुलस्य च ।

एतद्धि परमं श्रेयः कुरुवंशस्य वृद्धये ।
प्रयाहि तं च गान्धारे कुलस्य च सुखावहम् ॥ ८-९४-३२ (५१६२३)
पथ्यमायतिसंयुक्तं कर्णोऽप्यर्जुनमाहवे ।
न जेष्यति नरव्याघ्र इति मे निश्चिता मतिः ॥ ८-९४-३३ (५१६२४)
रोचतां ते नरश्रेष्ठ ममैतद्वचनं शुभम् ।
अतोऽन्यथा हि राजेन्द्र विनाशः सुमहान्भवेत् ॥ ८-९४-३४ (५१६२५)
इदं च दृष्टं जगता सह त्वया
कृतं यदेकेन किरीटमालिना ।
यथा न कुर्याद्बलभिन्न चान्तको
न च प्रचेता भगवान्न यक्षराट् ॥ ८-९४-३५ (५१६२६)
अतोऽपि भूयान्स्वगुणैर्धनञ्जयो
न चातिवर्तिष्यति मे वचोऽखिलम् ।
तवानुयात्रां च सदा करिष्यति
प्रसीद राजेन्द्र शमं त्वमाप्नुहि ॥ ८-९४-३६ (५१६२७)
ममाभिमानः परमः सदा त्वयि
ब्रवीम्यतस्त्वां परमाच्च सौहृदात् ।
निवारयिष्यामि च कर्णमाहवे
महान्हि मेऽस्ति प्रणयोऽथ सूतजे ॥ ८-९४-३७ (५१६२८)
वदन्ति मैत्रीं सहजां विचक्षणा--
स्तथैव साम्ना च धनेन चार्जिताम् ।
प्रतापतश्चोपनतां चतुर्विधां
तदस्ति सर्वं तव पाण्डवेषु ॥ ८-९४-३८ (५१६२९)
निसर्गतस्ते तव वीर बान्धवाः
पुनश्च साम्ना हितमाप्नुयुः प्रभो ।
त्वयि प्रसन्ने यदि मित्रतां गते
हितं कृतं स्याज्जगतस्त्वयाऽतुलम् ॥ ८-९४-३९ (५१६३०)
इतीदमुक्तः सुहृदा वचो हितं
विचिन्त्य निःश्वस्य च दुर्मनाऽब्रवीत् ।
यथा भवानाह सखे तथैव त--
न्ममापि विज्ञापयतो वचः शृणु ॥ ८-९४-४० (५१६३१)
निहत्य दुःशासनमुक्तवान्बहु
प्रहस्य शार्दूलवदेष दुर्मतिः ।
वृकोदरस्तद्धृदये मम स्थितं
न तत्परोक्षं भवतः कुतः शमः ॥ ८-९४-४१ (५१६३२)
न चापि कर्णं प्रसहेद्रणेऽर्जुनो
महागिरिं मेरुमिवोग्रमारुतः ।

न चाश्वसिष्यन्ति पृथात्मजा मयि
प्रसह्य वैरं बहुशो विचिन्त्य ॥ ८-९४-४२ (५१६३३)
न चापि कर्णं गुरुपुत्र संयुगा--
दुपारमेत्यर्हसि वीर भाषितुम् ।
श्रमेण युक्तो महताद्य फल्गुन--
स्तमेष कर्णः प्रसभं हनिष्यति ॥ ८-९४-४३ (५१६३४)
ग्वसुन्धरायाः परिवर्तनं भवे--
द्व्रजेच्च शोषं मकरालयोऽर्णवः ।
प्लवेयुरप्यद्रिवरा महाम्बुधौ
न चार्जुनो जेष्यति कर्णमाहवे ॥ ८-९४-४४ (५१६३५)
अपां पृथिव्या नभसो नभस्वतः
सुतिग्मदीप्तेश्च हिरण्यरेतसः ।
अभाव एषामपि सर्वतो भवे--
न्न चार्जुनो जेष्यति कर्णमाहवे'॥ ८-९४-४५ (५१६३६)
तमेवमुक्त्वाऽप्यनुनीय चासकृ--
त्तवात्मजः स्वाननुशास्ति सैनिकान् ।
द्रुतं घ्नताभिद्रवताहितानिमा--
नहीनसत्वाः किमु जोषमासते ॥ ॥ ८-९४-४६ (५१६३७)

इति श्रीमन्महाभारते कर्णपर्वणि सप्तदशदिवसयुद्धे
चतुर्नवतितमोऽध्यायः ॥९४ ॥
Mahabharata - Karna Parva - Chapter Footnotes

८-९४-६ एकौ मुख्यौ रथौ रथिनौ कर्णार्जुनौ ॥
८-९४-७ तमोनुदौ सूर्यचन्द्रौ ॥
८-९४-८ नच अभिसर्तव्यं नापयातव्यमिति नियमेन प्रचोदिताः प्रेरिताः ॥
८-९४-२३ ध्रुवं हि तप्तासि इति क ख़ड़ पाठः ॥
८-९४-४१ दुःशासनमुक्तवान्वच इति झ पाठः तत्र वचो दुर्योधनस्य
हतस्य शिरः पदा ताडयिष्यामीत्येवंरूपम् ॥
८-९४-९४ चतुर्नवतितमोऽध्यायः ॥

---

कर्नपर्व-अध्यय०९५
॥ श्रीः ॥
८.९५. अध्यायः ९५

Mahabharata - Karna Parva - Chapter Topics

रणे कर्णस्यार्जुनसाम्यमसहमानेन भीमेन सकोपं पार्थप्रोत्साहनम् ॥१ ॥

Mahabharata - Karna Parva - Chapter Text

८-९५-० (५१६३८)
सञ्जय उवाच।८-९५-०क्ष् (५०५९)
तौ शङ्खभेरीनिनदे समृद्धे
समीयतुः श्वेतहयौ नराग्र्यौ ।
वैकर्तनः सूतपुत्रोऽर्जुनश्च
दुर्मन्त्रिते ते ससुतस्य राजन् ॥ ८-९५-१ (५१६३९)
ग्आशीविषावग्निमिवोत्सृजन्तौ
तथा मुखाभ्यामभिनिः श्वसन्तौ ।
यशस्विनौ जज्वलतुर्मृधे तदा
घृतावसिक्ताविव हव्यवाहौ'॥ ८-९५-२ (५१६४०)
यथा गजौ हैमवतौ प्रभिन्नौ
प्रवृद्धदन्ताविव वासितार्थे ।
तथा समाजग्मतुरुग्रवीर्यौ
धनञ्जयश्चाधिरथिश्च वीरौ ॥ ८-९५-३ (५१६४१)
बलाहकेनेव महाबलाहको
यदृच्छया वा गिरिणा यथा गिरिः ।
तथा धनुर्ज्यातलनेमिनिःस्वनौ
समीयतुस्ताविषुवर्षवर्षिणौ ॥ ८-९५-४ (५१६४२)
शरास्त्रशक्त्यृष्टिगदासिसर्पौ
रोषानिलोद्धूतमहोर्मिमालौ ।
यथाऽचलौ द्वौ चलतस्तथा तौ
यथाऽर्णवौ चाशु चतुर्युगान्ते'॥ ८-९५-५ (५१६४३)
प्रवृद्धशृङ्गद्रुमवीरुदोषधी
प्रवृद्धनानाविधनिर्झरौघौ ।
यथाऽचलौ वा चलितौ महाजलै--
स्तथा महास्त्रैरितरेतरं हतः ॥ ८-९५-६ (५१६४४)
स सन्निपातो रथयोर्महानभू--
त्सुरेशवैरोचनयोर्यथा पुरा ।
शरैर्विनुन्नाश्वनियन्तृदेहयोः
सुदुःसहास्त्रैः परिभिन्नदेहयोः ॥ ८-९५-७ (५१६४५)
प्रभूतपद्मोत्पलमत्स्यकच्छपौ
महाह्रदौ पक्षिगणानुनादितौ ।

सुसन्निकृष्टावनिलोद्धतौ यथा
तथा रथौ तौ ध्वजिनौ समीयतुः ॥ ८-९५-८ (५१६४६)
उभौ महेन्द्रस्य समानविक्रमा--
वुभौ महेन्द्रप्रतिमौ महारथौ ।
महेन्द्रवज्रप्रतिमैश्च सायकै--
र्महेन्द्रवृत्राविव सम्प्रजघ्नतुः ॥ ८-९५-९ (५१६४७)
सनागपत्त्यश्वरथे उभे बले
विचित्रवर्माभरणाम्बरायुधे ।
चकम्पतुश्चोन्नदतुश्च विस्मया--
द्वरा वियच्चार्जुनकर्णसङ्गमे ॥ ८-९५-१० (५१६४८)
भुजाः सवस्त्राङ्गुलयः समुच्छ्रिताः
ससिंहनादैर्हृषितैर्दिदृक्षुभिः ।
यदाऽर्जुनं मत्त इव द्विपो द्विपं
समभ्ययादाधिरथिर्जिघांसया ॥ ८-९५-११ (५१६४९)
उदक्रोशन्सोमकास्तत्र पार्थं
त्वरस्व याह्यर्जुन भिन्धि कर्णम् ।
छिन्ध्यस्य मूर्धानमलं चिरेण
श्रद्धां च राज्याद्धृतराष्ट्रसूनोः ॥ ८-९५-१२ (५१६५०)
तथाऽस्माकं बहवस्तत्र योधाः
कर्णं तथा याहि याहीत्यवोचन् ।
जह्यर्जुनं कर्ण ततः सुदीनाः
पुनर्वनं यान्त्वचिराय पार्थाः ॥ ८-९५-१३ (५१६५१)
कर्णोऽथ पूर्वं दशभिः पृषत्कै--
र्गाण्डीवधन्वानमविध्यदाशु ।
जघान तं चापि ततः किरीटी
शरैस्तदाष्टादशभिः सुमुक्तैः ॥ ८-९५-१४ (५१६५२)
पुनश्च कर्णस्त्वरितोऽपि पार्थं
रथेषुभिस्तं दशभिर्जघान ।
तं चापि पार्थो दशभिः शिताग्रैः
कक्ष्यान्तरे तीक्ष्णमुखैरविध्यत् ॥ ८-९५-१५ (५१६५३)
कर्णस्ततो भारत साम्पराये
घोरेऽतिवेलं रणसंविमर्दी ।
जघान पार्थं नवभिः शिताग्रैः
कक्ष्यान्ते नागमिव प्रभिन्नम् ॥ ८-९५-१६ (५१६५४)
ततोऽपराभ्यां युधि सूतपुत्रो
द्वाभ्यां क्षुराभ्यां हरिमाशुकारी ।

समाजघान त्वरया महात्मा
यथा सुरेन्द्रं नमुचिः प्रसह्य ॥ ८-९५-१७ (५९६५५)
तं पाण्डवः पञ्चभिरायसाग्रै--
राकर्णपूर्णैर्निजघान कर्णम् ।
ते शोणितं तस्य पपुस्तदानीं
कालस्य दूता इव पार्थबाणाः ॥ ८-९५-१८ (५९६५६)
कर्णोऽपि पार्थं सह वासुदेवं
समाचिनोद्बारत वत्सदन्तैः ।
परस्परं तौ विशिखैः प्रमुक्तै--
स्ततक्षतुः सूतपुत्रोऽर्जुनश्च ॥ ८-९५-१९ (५९६५७)
परस्परं छिद्रदिदृक्षया च
सुभीममभ्याययतुः प्ररुष्टौ ॥ ८-९५-२० (५९६५८)
ततोऽस्त्रमाग्नेयममित्रतापनं
मुमोच कर्णाय सुरेश्वरात्मजः ।
धनञ्जयात्संयुगमूर्ध्नि निःसृतं
तदा प्रजज्वाल तदस्त्रमुत्तमम् ॥ ८-९५-२१ (५९६५९)
समीक्ष्य कर्णो ज्वलनास्त्रमुद्यतं
स वारुणं तत्प्रशमार्थमाहवे ।
समुत्सृजत्सूतपुत्रः प्रतापवान्
स तेन वह्निं शमयाञ्चकार ॥ ८-९५-२२ (५९६६०)
वलाहकास्त्रेण दिशस्तरस्वी
चकार सर्वास्तिमिरेण संवृताः ।
अपावहन्मेघगणांस्ततस्तान्
समीरणास्त्रेण समीरितेन ॥ ८-९५-२३ (५९६६१)
ततः सोऽस्त्रं दयितं देवराज्ञः
प्रादुश्चक्रे वज्रममित्रतापनः ।
गाण्डीवज्या विमृशंश्चातिमन्यु--
र्धनञ्जयः शत्रुसङ्घप्रमाथी ॥ ८-९५-२४ (५९६६२)
नाराचनालीकवराहकर्णा
गाण्डीवतः प्रादुरासन्सुतीक्ष्णाः ।
सहस्रशो वज्रसमानवेगा--
स्ते सर्वतः पर्यधावन्त घोराः ॥ ८-९५-२५ (५९६६३)
पार्थेषवः कर्णरथं विलग्ना
अधोमुखाः पक्षिगणा दिनान्ते ।
निशानिकेतार्थमिवाशु वृक्षं
जग्राह तान्सूतपुत्रः पृषत्कैः ॥ ८-९५-२६ (५९६६४)

क्षिप्तांस्तथा पाण्डवबाणसङ्घा--
नमृष्यमाणस्य धनञ्जयस्य ।
रणाजिरे त्वन्तकतुल्यकर्मा
वैकर्तनो रोषपरीतचेताः ॥ ८-९५-२७ (५१६६५)
ज्योतिष्प्रभां यद्वदुपागतः स--
न्दिवाकरो नाशयते क्षणेन ।
पार्थस्य तान्बाणगणान्समग्रा--
न्व्यनाशयद्युध्यत एव कर्णः ॥ ८-९५-२८ (५१६६६)
रोषात्प्रदीप्तः सुमहाविमर्दे
भीमस्ततोऽक्रुध्यददीनसत्वः ।
पाणिं स्वपाणौ स विनिष्पिष्य रोषा--
दमर्षितो वाक्यमुवाच पार्थम् ॥ ८-९५-२९ (५१६६७)
त्वां सूतपुत्रो नु कथं किरीटि--
न्नथेषुभिर्हन्ति शिताग्रधारैः ।
धृत्या हि भूतानि ययाऽजयस्त्वं
ग्रासं ददत्खाण्डवे पावकाय ॥ ८-९५-३० (५१६६८)
धृत्या तया सूतपुत्रं जहि त्व--
महं वैनं गदया पोथयिष्ये ।
समेत्य पार्थं सुनृशंसवादी
जीवन्नायं यास्यति कालपक्वः ॥ ॥ ८-९५-३१ (५१६६९)

इति श्रीमन्महाभारते कर्णपर्वणि सप्तदशदिवसयुद्धे
मञ्जनवतितमोऽध्यायः ॥ ९५ ॥
Mahabharata - Karna Parva - Chapter Footnotes

८-९५-६ हतः जघ्नतुरित्यर्थः ॥
८-९५-७ सुदुःसहान्यैः परिशोणितोदकैः इति क ट पाठः ॥
८-९५-३१ मा जीवनं यास्यति सूतपुत्र इति क पाठः ॥
८-९५-९५ पञ्चनवतितमोऽध्यायः ॥

---

कर्नपर्व-अध्यय०९६
॥ श्रीः ॥
८.९६. अध्यायः ९६

Mahabharata - Karna Parva - Chapter Topics
कर्णे युधि वर्धमाने कृष्णेनार्जुनप्रोत्साहनम् ॥ १ ॥

ततोऽर्जुनेन स्वसामर्थ्यप्रकाशनम् ॥ २ ॥

Mahabharata - Karna Parva - Chapter Text

८-९६-० (५१६७०)
सञ्जय उवाच। ८-९६-०क्ष् (५०६०)
अथाब्रवीच्चक्रधरोऽपि पार्थं
दृष्ट्वा रथेषून्प्रतिहन्यमानान् ।
अमूमुषत्पश्यत एव तेऽद्य
ह्यस्त्राणि कर्णोऽस्त्रगणैः किरीटिन् ॥ ८-९६-१ (५१६७१)
स पार्थ किं मुह्यसि वेत्सि चैव ता--
न्दृष्ट्वा समेतान्नदतः कुरूंस्त्वम् ।
कर्णं पुरस्कृत्य विदुर्हि सर्वे
तवास्त्रमस्त्रैर्विनिहन्यमानम् ॥ ८-९६-२ (५१६७२)
यया धृत्या तामसं जघ्निवांस्त्वं
तत्संयुगे तामसांश्चातिघोरान् ।
दम्भोद्भवं चासुरमाहवे त्वं
दर्पोत्सिक्तं वीर्यवन्तं किरीटिन् ।
तया धृत्या त्वं जहि कर्णमद्य
पार्थाहवे त्यक्तुमस्त्रं समर्थः ॥ ८-९६-३ (५१६७३)
अनेन चाशु क्षुरनेमिनाद्य
मया विसृष्टेन सुदर्शनेन ।
छिन्ध्यस्य मूर्धानमरेः प्रसह्य
वज्रेण शक्रो नमुचेरिवारेः ॥ ८-९६-४ (५१६७४)
किरातरूपी भगवान्यया च
त्वया महात्मा परितोषितोऽभूत् ।
स तां पुनर्वीर धृतिं गृहीत्वा
सहानुबन्धं जहि सूतपुत्रम् ॥ ८-९६-५ (५१६७५)
ततो महीं सागरमेखलां त्वं
सपत्तगा ग्रामवतीं समृद्धाम् ।
प्रयच्छ राज्ञे निहतारिसङ्घां
यशश्च पार्थातुलमाप्नुहि त्वम् ॥ ८-९६-६ (५१६७६)
कर्णं पुरस्कृत्य नदन्तिं सर्वे
तवास्त्रमग्र्यं प्रतिहत्य वीराः ।
कुरु प्रयत्नं भरतप्रवीर
द्रवन्त्यमी सृञ्जयाः सोमकाश्च ।

दृष्ट्वाथ कर्णं समरे प्रहृष्टं
त्वां चापि दृष्ट्वा परिहीयमानम् ॥ ८-९६-७ (५१६७७)
सञ्जय उवाच। ८-९६-८क्ष् (५०६१)
सञ्चोदितो भीमजनार्दनाभ्यां
स्मृत्वा तदात्मानमवेत्य सर्वम् ।
इहात्मनश्चागमने विदित्वा
प्रयोजनं केशवमित्युवाच ॥ ८-९६-८ (५१६७८)
प्रादुष्करोम्येष महास्त्रमुग्रं
शिवाय लोकस्य वधाय सौतेः ।
तन्मेऽनुजानातु भवान्सुराश्च
ब्रह्मा शिवो ब्रह्मविदश्च सर्वे ॥ ८-९६-९ (५१६७९)
इति स्मोक्त्वा पाण्डवः सव्यसाची
नमस्कृत्वा ब्रह्मणे सोऽमितात्मा ।
अनुत्तमं ब्राह्ममसह्यमस्त्रं
प्रादुश्चक्रे मनसा यद्विधेयम् ॥ ८-९६-१० (५१६८०)
ततो दिशश्च प्रदिशश्च सर्वाः
समावृणोत्सायकैर्भूरितेजाः ।
गाण्डीवमुक्तैर्भुजगैरिवोग्रै--
र्दिवाकरांशुप्रतिमैर्ज्वलद्भिः ॥ ८-९६-११ (५१६८१)
सृष्टास्तु बाणा भरतर्षभेण
शतं शतं भीममुखाः सुतीक्ष्णाः ।
प्राच्छादयन्कर्णरथं क्षणेन
युगान्तकालार्ककरप्रकाशाः ॥ ८-९६-१२ (५१६८२)
वैकर्तनेनाशु तदाजिमध्ये
सहस्रशो बाणगणा विसृष्टाः ।
ते चाक्षयाः पाण्डवमभ्युपेयुः
पर्जन्यसृष्टा इव वारिधाराः ॥ ८-९६-१३ (५१६८३)
ततः स कृष्णं च किरीटिनं च
वृकोदरं चाप्रतिमप्रभावः ।
त्रिभिस्त्रिभिर्भीमबलो निहत्य
ननाद घोरं महता स्वनेन ॥ ८-९६-१४ (५१६८४)
ततः स बाणाभिहतः किरीटी
भीमं तथा प्रेक्ष्य जनार्दनं च ।
अमृष्यमाणः पुनरेव पार्थः
शरान्दशाष्टौ सममुद्ववर्ष ॥ ८-९६-१५ (५१६८५)
स केतुमेकेन शरेण विद्ध्वा

शल्यं चतुर्भिस्त्रिभिरेव कर्णम् ।
ततः सुमुक्तैर्दशभिर्जघान
सेनापतिं काञ्चनवर्मनद्धम् ॥ ८-९६-१६ (५१६८६)
स राजपुत्रो विशिरा विबाहु--
र्विवाजिसूतो विधनुर्विकेतुः ।
अथो रथाग्रादपतत्प्ररुग्णः
परश्वथैः साल इवावकृत्तः ॥ ८-९६-१७ (५१६८७)
पुनश्च कर्णं त्रिभिरष्टभिश्च
द्वाभ्यां चतुर्भिर्दशभिश्च विद्ध्वा ।
चतुश्शतं द्विरदानां निपात्य
रथाञ्जघानाष्टरथान्किरीटि ।
सहस्रमश्वांश्च पुनश्च सादी--
नष्टौ सहस्राणि च पत्तिवीरान् ॥ ८-९६-१८ (५१६८८)
दृष्ट्वा तु मुख्यावतिविध्यमानौ
वरेषुभिः शूरवरावरिघ्नौ ।
कर्णं च पार्थं च नियम्य वाहा-
न्सर्वे वरिष्ठाश्च ततोऽवतस्थुः ॥ ८-९६-१९ (५१६८९)
प्रच्छादयामास ततः पृषत्कैः
सघोषमाच्छिद्य च गाण्डिवज्याम् ।
अस्मिन्क्षणे फल्गुनं सूतपुत्रः
समाचिनोत्क्षुद्रकाणां शतेन ॥ ८-९६-२० (५१६९०)
निर्मुक्तसर्पप्रतिमैश्च तीक्ष्णै--
स्तैलप्रधौतैः खगपत्रवाजैः ।
षष्ट्या बिभेदाशु च वासुदेवं
तदन्तरे प्रात्वरन्सोमकाश्च ॥ ८-९६-२१ (५१६९१)
ततो नवज्यां सुदृढां किरीटि
स्वबाहुविक्षेपसहां प्रगृह्य ।
समादधे गाण्डिवे क्षिप्रकारी
निमेषमात्रेण महाधनुष्मान् ॥ ८-९६-२२ (५१६९२)
ज्याछेदनं ज्याविधानं च तस्य
नैवावबुध्यत्सूतपुत्रो लघुत्वात् ।
पार्थस्य सङ्ख्ये द्विषतां निहन्तु--
स्तदद्भुतं तत्र बभूव राजन् ॥ ८-९६-२३ (५१६९३)
पार्थोऽपि तां ज्यामवधाय तूर्णं
शरासनज्यामाधिरथेर्विहत्य ।
सुसंरब्धः कर्णशरैः क्षताङ्गो

रणे योधांस्तावकान्प्रत्यगृह्णात् ॥ ८-९६-२४ (५१६९४)
नैवापत्पक्षिगणोऽन्तरिक्षे
पार्थेन चास्त्रेण कृतेऽन्धकारे ॥ ८-९६-२५ (५१६९५)
शल्यं तु पार्थो दशभिर्निमेषा--
द्भृशं तनुत्रे प्रहसन्नविध्यत् ।
ततः कर्णं द्वादशभिः पृषत्कै--
र्विद्धवा पुनः सप्तभिरप्यविध्यत् ॥ ८-९६-२६ (५१६९६)
स पार्थबाणासनवेगनुन्नै--
र्दृढाहतः पत्रिभिरुग्रवेगैः ।
विभिन्नगात्रः क्षतजोक्षिताङ्गः
कर्णो बभौ रुद्र इवान्तकाले ॥ ८-९६-२७ (५१६९७)
ततस्त्रिभिस्तं त्रिदशाधिपोपमं
शरैर्बिभेदाधिरथिर्धनञ्जयम् ।
शरांश्च पञ्च ज्वलनानिवोरगा--
न्प्रवेशयामास जिघांसुरच्युते ॥ ८-९६-२८ (५१६९८)
सुवर्णचित्रं पुरुषोत्तमस्य
वर्माथ भित्त्वाभ्यपतन्सुपुङ्खाः ।
वेगेन गां ते विविशुश्च राज--
न्स्नात्वा कर्णाऽभिमुखाः प्रतीयुः ॥ ८-९६-२९ (५१६९९)
तान्पञ्चभल्लैर्दशभिः सुमुक्तै--
स्त्रिधात्रिधैकैकमथोच्चकर्त ।
धनञ्जयस्ते न्यपतन्पृथिव्यां
यथाऽहयस्ताक्ष्र्यमुखेन कृत्ताः ॥ ८-९६-३० (५१७००)
ततः प्रजज्वाल किरीटमाली
क्रोधेन कक्षं प्रदहन्निवाग्निः ।
स कर्णमाकर्णविकृष्टसृष्टैः
शरैः शरीरान्तकरैर्ज्वलद्भिः ।
मर्मस्वविध्यत्स चचाल दुःखा--
द्धैर्यात्तु तस्थावतिमात्रधैर्यः ॥ ८-९६-३१ (५१७०१)
प्रादुश्चकाराथ शरान्महात्मा
देहं विचिन्वन्निव सूतजस्य ।
शरास्तु ते काञ्चनचित्रपुङ्खाः
सम्पेतुरुर्व्यां शतशो महान्तः ॥ ८-९६-३२ (५१७०२)
ततः शरौघैः प्रदिशो दिशश्च
रविप्रभाः कर्णरथश्च राजन् ।
अदृश्य आसीत्कुपिते धनञ्जये

तुषारनीहारवृतो गिरिर्यथा ॥ ८-९६-३३ (५९७०३)
सचक्ररक्षा अपि पृष्ठगोपाः
कर्णस्य ये चापि पुरःसराश्च ।
भीता द्रवन्ति स्म निहन्यमाना
महेषुभिः पार्थकरप्रणुन्नैः ॥ ८-९६-३४ (५९७०४)
ततोऽर्जुनो वै भरतप्रवीरो
महानुभावः समरे निहन्ता ।
सुयोधनेनानुमतान्विनिघ्न--
न्समुच्छ्रितान्सरथान्सारभूतान् ॥ ८-९६-३५ (५९७०५)
गाण्डीवधन्वा द्विगुणं सहस्रं
कुरुप्रवीरानृषभः कुरूणाम् ।
क्षणेन सर्वान्सरथान्ससूता--
न्निनाय राजन्क्षयमेकवीरः ॥ ८-९६-३६ (५९७०६)
अथो पलायन्त विहाय कर्णं
तवात्मजा ये कुरवश्च शिष्टाः ।
एतानवाकीर्य शरक्षतांश्च
विलप्यमानांस्तनयान्विमृद्नन् ॥ ८-९६-३७ (५९७०७)
सर्वे प्रणेशुः कुरवो विभग्नाः
पार्थेषुभिः सम्परितप्यमानाः ।
सुयोधनेनाथ पुनर्वरिष्ठाः
प्रचोदिताः कर्णरथानुयाने ॥ ८-९६-३८ (५९७०८)
भोः क्षत्रियाः शूरतमास्तु सर्वे
क्षत्रे च धर्मे निरताः स्थ यूयम् ।
न युक्तरूपं भवतां समीपा--
त्पलायनं कर्णमतिप्रहाय ॥ ८-९६-३९ (५९७०९)
तवात्मजेनापि तथोच्यमाना
नैवावतिष्ठन्त भयाद्विवर्णाः ।
क्षणेन नष्टाः प्रदिशो दिशश्च
सर्वे ततः प्रेक्ष्य दिशो विशून्याः ॥ ८-९६-४० (५९७१०)
भयावदीर्णः कुरुभिर्विहीनः
पार्थेषुभिः सम्परितप्यमानः ।
न विव्यधे भारत तत्र कर्णः
प्रतीपमेवार्जुनमभ्यधावत् ॥ ॥ ८-९६-४१ (५९७११)

इति श्रीमन्महाभारते कर्णपर्वणि सप्तदशदिवसयुद्धे
षण्णवतितमोऽध्यायः ॥ ९६ ॥

कर्नपर्व-अध्यय०९७
॥ श्रीः ॥
८.९७. अध्यायः ९७

Mahabharata - Karna Parva - Chapter Topics
रणे हीयमानेन कर्णेनार्जुनस्य शिरो लक्षीकृत्य नागास्त्रप्रयोगः ॥ १ ॥
कृष्णेन पार्थरथे पादनिपीडनेन धरण्यां किञ्चिन्निमज्जिते
तदस्त्रेण शिरोवर्जं पार्थकिरीटमात्रापहारः ॥ २ ॥
कर्णस्य रथचक्रे विप्रशापात् धरण्यां निमग्ने तदुद्दिधीर्षया
तेनपार्थंप्रति मुहूर्तमयुद्धप्रार्थनम् ॥ ३ ॥

Mahabharata - Karna Parva - Chapter Text

८-९७-० (५९७१२)
सञ्जय उवाच। ८-९७-०क्ष् (५०६२)
ततोऽपयाताः शरपातमात्र--
मवस्थिता वै कुरवो नरेन्द्र ।
विद्युत्प्रकाशं ददृशुः समन्ता--
द्धनञ्जयास्त्रं समुदीर्यमाणम् ॥ ८-९७-१ (५९७१३)
ततोऽग्रसत्सूतपुत्रोऽर्जुनस्य
वियद्गतं घोरतरं शरैस्तत् ।
क्रुद्धेन पार्थेन शरं विसृष्टं
वधाय कर्णस्य महाविमर्दे ॥ ८-९७-२ (५९७१४)
श्उदीर्यमाणं स्म कुरून्दहन्तं
सुवर्णपुङ्खैर्विशिखैर्ममर्द ।
कर्णस्त्वमोघेष्वसनं दृढज्यं
विस्फारयित्वा विसृजञ्छरोघान् ॥९ ८-९७-३ (५९७१५)
रामादुपात्तेन महामहिम्ना
ह्याथर्वणेनारिविनाशनेन ।
तदर्जुनास्त्रं व्यधमद्दहन्तं
पार्थं च बाणैर्निशितैरविध्यत् ॥ ८-९७-४ (५९७१६)
ततो विमर्दः सुमहान्बभूव
तत्रार्जुनस्याधिरथेश्च राजन् ।
अन्योन्यमासादयतोः पृषत्कै--
र्विषाणघातैर्द्विपयोरिवाजौ ॥ ८-९७-५ (५९७१७)

ततोऽस्त्रसङ्घातसमावृतं तदा
बभूव राजंस्तुमुलं रणाजिरम् ।
यत्कर्णपार्थौ शरवृष्टिसङ्घै--
र्निरन्तरं चक्रतुरम्बरं तदा ॥ ८-९७-६ (५९७१८)
श्ततो जालं बाणमयं महान्तं
सर्वेऽद्राक्षुः कुरवः सोमकाश्च ।
नान्यं च भूतं ददृशुस्तदा ते
बाणान्धकारे तुमुलेऽथ किञ्चित् ॥ ८-९७-७ (५९७१९)
तौ सन्दधानावनिशं च राजन् ।
समस्यन्तौ चापि शराननेकान् ।
सन्दर्शयेतां युधि मार्गान्विचित्रा--
न्धनुर्धरौ तौ विविधैः कृतास्त्रैः ॥ ८-९७-८ (५९७२०)
तयोरेवं युध्यतोराजिमध्ये
सूतात्मजोऽभूदधिकः कदाचित् ।
पार्थः कदाचित्त्वधिकः किरीटि
वीर्यास्त्रमायाबलपौरुषेण ॥ ८-९७-९ (५९७२१)
दृष्ट्वा तयोस्तं युधि सम्प्रहारं
परस्परस्यान्तरमीक्षमाणयोः ।
घोरं तयोर्दुर्विषहं रणेऽन्यै--
र्योधाः सर्वे विस्मयमभ्यगच्छन् ॥ ८-९७-१० (५९७२२)
ततो भूतान्यन्तरिक्षस्थितानि
तौ कर्णपार्थौ प्रशशंसुर्नरेन्द्र ।
भोः कर्ण साध्वर्जुन साधु चेति
वियत्सु वाणी श्रूयते सर्वतोपि ॥ ८-९७-११ (५९७२३)
तस्मिन्विमर्दे रथवाजिनागै--
स्तदाऽभिघातैर्दलिते हि भूतले ।
ततस्तु पातालतले शयानो
नागोऽश्वसेनः कृतवैरोऽर्जुनेन ॥ ८-९७-१२ (५९७२४)
राजंस्तदा खाण्डवदाहमुक्तो
विवेश कोपाद्वसुधातले यः ।
अथोत्पपातोर्ध्वगतिर्जवेन
सन्दृश्य कर्णार्जुनयोर्विमर्दम् ॥ ८-९७-१३ (५९७२५)
अयं हि कालोस्य दुरात्मनो वै
पार्थस्य वैरप्रतियातनाय ।
सञ्चिन्त्य तूर्णं प्रविवेश चैव
कर्णस्य राजन्शररूपधारी ॥ ८-९७-१४ (५९७२६)

ततोस्त्रसङ्घातसमाकुलं तदा
बभूव जन्यं विततांशुजालम् ।
तत्कर्णपार्थौ शरसङ्घवृष्टिभि--
र्निरन्तरं चक्रतुरम्बरं तदा ॥ ८-९७-१५ (५९७२७)
तद्बाणजालैकमयं महान्तं
सर्वेऽत्रसन्कुरवः सोमकाश्च ।
नान्यत्किञ्चिद्ददृशुः सम्पतद्वै
बाणान्धकारे तुमुलेऽतिमात्रम् ॥ ८-९७-१६ (५९७२८)
ततस्तौ पुरुषव्याघ्रौ सर्वलोकधनुर्धरौ ।
त्यक्तप्राणौ रणे वीरो युद्धश्रममुपागतौ ॥ ८-९७-१७ (५९७२९)
समुत्क्षेपैर्वीक्षमाणौ सिक्तौ चन्दनवारिणा ।
सवालव्यजनैर्दिव्यैर्दिविस्थैरप्सरोगणैः ।
शक्रसूर्यकराब्जाभ्यां प्रमार्जितमुखावुभौ ॥ ८-९७-१८ (५९७३०)
कर्णोऽथ पार्थं न विशेषयद्यदा
भृशं च पार्थेन शराभितप्तः ।
ततस्तु वीरः शरविक्षताङ्गो
दध्रे मनो ह्येकशयस्य तस्य ॥ ८-९७-१९ (५९७३१)
ततो रिपुघ्नं समधत्त कर्णः
सुसञ्चितं सर्पमुखं ज्वलन्तम् ।
रौद्रं शरं सन्नतमुग्रधौतं
पार्थार्थमित्येव चिराभिगुप्तम् ॥ ८-९७-२० (५९७३२)
सदार्चितं चन्दनचूर्णशायितं
सुवर्णतूणीरशयं महार्चिषम् ।
आकर्णपूर्णं विचकर्ष कर्णो
विमोक्तुकामः शरमुग्रवेगम् ॥ ८-९७-२१ (५९७३३)
प्रदीप्तमैरावतवंशसम्भवं
शिरो जिहीर्षुर्युधि सव्यसाचिनः ।
ततः प्रजज्वाल दिशो नभश्च
उल्काश्च घोराः शतशः प्रपेतुः ॥ ८-९७-२२ (५९७३४)
तस्मिंस्तु नागे धनुषि प्रयुक्ते
हाहाकृता लोकपालाः सशक्राः ॥ ८-९७-२३ (५९७३५)
स सूतपुत्रस्तमपाङ्गदेशे
अवाङ्मुखं सन्धयति स्म रोषात् ।
न तं स्म जानाति महानुभाव--
मपाङ्गदेशेऽभिनिविष्टमाजौ ॥ ८-९७-२४ (५९७३६)
श्न चापि तं बुबुधे सूतपुत्रो

बाणे प्रविष्टं योगबलेन नागम् ।
दशशतनयनोऽहिं दृश्य बाणे प्रविष्टं
निहत इति सुतो मे स्रस्तगात्रो बभूव ।
जलजकुसुमयोनिः श्रेष्ठभावो जितात्मा
त्रिदशपतिमवोचन्मा व्यथिष्ठा जये श्रीः ॥ ८-९७-२५ (५९७३७)
ततोऽब्रवीन्मद्रराजो महात्मा
दृष्ट्वा कर्णं प्रहितेषु तमुग्रम् ।
ग्रीवायतः कर्ण न संहितोऽयं
समीक्ष्य सन्धत्स्व शरं परघ्नम् ॥ ८-९७-२६ (५९७३८)
अथाब्रवीत्क्रोधसंरक्तनेत्रो
मद्राधिपं सूतपुत्रो मनस्वी ।
न सन्धत्ते द्विः शरं शल्य कर्णो
न मादृशा जिह्मयुद्धा भवन्ति ॥ ८-९७-२७ (५९७३९)
इतीदमुक्त्वा विससर्ज तं शरं
प्रयत्नतो वर्षगणाभिपूजितम् ।
हतोसि रे फल्गुन इत्यधिक्षिप--
न्नुवाच चोच्चैर्निरमूर्जितां वृषः ॥ ८-९७-२८ (५९७४०)
स सायकः कर्णभुजप्रसृष्टो
हुताशनार्कप्रतिमः सुघोरः ।
गुणच्युतः कर्णधनुःप्रमुक्तो
वियद्गतः प्राज्वलदन्तरिक्षे ॥ ८-९७-२९ (५९७४१)
तमापतन्तं ज्वलितं निरीक्ष्य
वियद्गतं वृष्णिकुलप्रवीरः ।
रथस्य चक्रं सहसा निपीड्य
पञ्चाङ्गुलं मज्जयति स्म वीरः ॥ ८-९७-३० (५९७४२)
ततोऽन्तरिक्षे सुमहान्निनादः
सम्पूजनार्थं मधुसूदनस्य ।
शदिव्याश्च वाचः सहसा बभूवु--
र्दिव्यानि पुष्पाण्यथ सिंहनादाः ।
तस्मिंस्तथा वै धरणीं निमग्ने
रथे प्रयत्नान्मधुसूदनस्य ।॥ ८-९७-३१ (५९७४३)
ततः किरीटं बहुरत्नचित्रं
जघान नागोऽर्जुनमूर्धतो बलात् ।
गिरेः सुजाताङ्कुरपुष्पितद्रुमं
महेन्द्रवज्रं शिखरं यथोत्तमम् ॥ ८-९७-३२ (५९७४४)
ततः किरीटं तपनीयचित्रं

पार्थोत्तमाङ्गादहरत्तरस्वी ।
तद्धेमजालावनतं सुघोरं
सम्प्रज्वलत्तन्निपपात भूमौ ॥ ८-९७-३३ (५९७४५)
ततोऽर्जुनस्योत्तमगात्रभूषणं
सुवर्णमुक्तामणिवज्रचित्रितम् ।
धरावियद्द्योसलिलेषु विश्रुतं
बलं निसर्गोत्तममन्युधिः सदा ॥ ८-९७-३४ (५९७४६)
शरेण मूर्ध्नि प्रजहार सूतजो
दिवाकरेन्दुज्वलनग्रहत्विषम् ।
सुवर्णमुक्तामणिवज्रभूषणं
पुरन्दरार्थं तपसा प्रयत्नतः ॥ ८-९७-३५ (५९७४७)
स्वयं कृतं यद्धिधिना स्वयम्भुवा
महार्हरूपं द्विषतां भयङ्करम् ।
निजघ्नते देवरिपून्सुरेश्वरः
स्वयं ददौ यद्धि मुदाऽर्जुनाय ॥ ८-९७-३६ (५९७४८)
हरिप्रचेतोहरिवित्तगोप्तृभिः
पिनाकपाशाशनिदण्डधारिभिः ।
सुरोत्तमैरप्यविषह्यमर्दितुं
प्रसह्य नागेन जहार तद्भूषा ॥ ८-९७-३७ (५९७४९)
तदुत्तमेषून्मथितं विषाहिना
प्रदीप्तमर्चिष्मदतीव सुन्दरम् ।
पपात पार्थस्य किरीटमुत्तमं
दिवाकरोस्तादिव पर्वताज्ज्वलन् ॥ ८-९७-३८ (५९७५०)
महीवियद्द्योसलिलानि वायुना
प्रसह्य रुग्णानि विघूर्णितानि वा ।
इतीव शब्दं भुवनेषु तत्तथा
जना व्यवस्यन्ति दिशश्च विह्वलाः ॥ ८-९७-३९ (५९७५१)
विना किरीटंक्र शुशुभे स पार्थः
श्यामो युवा शैल त्रिशृङ्गैः ॥ ८-९७-४० (५९७५२)
ततः समुद्ग्रथ्य सितेन वाससा
स्वमूर्धजनाव्यथितस्तदाऽर्जुनः ।
बभौ सुसम्पूर्णमरीचिनेन्दुना
शिरोगतेनोदयपर्वतो यथा ॥ ८-९७-४१ (५९७५३)
स चापि राधेयभुजप्रमुक्तो
हुताशनार्कप्रतिमद्युतिर्महान् ।
महोरगः कृतवैरोऽर्जुनेन

किरीटमाहृत्य समुत्पपात ॥ ८-९७-४२ (५९७५४)
तमुत्पतन्तं द्विपदां वरिष्ठो
दृष्ट्वा वचः पार्थमुवाच कृष्णः ।
महोरगं पाण्डव पश्यपश्य
प्रयोजितं त्वन्निधनार्थमुग्रम् ॥ ८-९७-४३ (५९७५५)
स एवमुक्तो मधुसूदनेन
गाण्डीवधन्वा हरिमुग्रवाचा ।
उवाच को न्वेष ममाद्य नागः
क्षयाय नागाद्गरुडस्य वक्रम् ॥ ८-९७-४४ (५९७५६)
कृष्ण उवाच। ८-९७-४५क्ष् (५०६३)
योऽसौ त्वया खाण्डवे चित्रभानुं
सन्तर्पयाणेन धनुर्धरेण ।
वियद्गतो जननीगुप्तदेहो
मत्वैकरूपं निहताऽस्य माता ॥ ८-९७-४५ (५९७५७)
स एष तद्वैरमनुस्मरन्वै
त्वां प्रार्थयत्यात्मवधाय नूनम् ।
नभश्चुतां प्रज्वलितामिवोल्कां
पश्यैनमायान्तममित्रसाह ॥ ८-९७-४६ (५९७५८)
सञ्जय उवाच। ८-९७-४७क्ष् (५०६४)
ततः स जिष्णुः परिवृत्य रोषा--
च्चिच्छेद षड्भिर्निशितैः सुधारैः ।
नागं वियत्तिर्यगिवोत्पततं
स च्छिन्नगात्रो निपपात भूमौ ॥ ८-९७-४७ (५९७५९)
श्गते च तस्मिन्भुजगे किरीटिना
स्वयं विभुः पार्थिव भूतलादथ ।
समुज्जहाराशु पुनः पतन्तं
रथं भुजाभ्यां पुरुषोत्तमस्ततः ॥ ८-९७-४८ (५९७६०)
तस्मिन्मुहूर्ते दशभिः पृषत्कैः
सिलाशितैर्बर्हिणबर्हवाजितैः ।
विव्याध कर्णः पुरुषप्रवीरो
धनञ्जयं तिर्यगवेक्षमाणः ॥ ८-९७-४९ (५९७६१)
ततोऽर्जुनो द्वादशभिः सुमुक्तै--
र्वराहकर्णैर्जिशितैः समर्प्य ।
नाराचमाशीविषतुल्यवेग--
माकर्णपूर्णायतमुत्ससर्ज ॥ ८-९७-५० (५९७६२)
स चित्रवर्मेषुवरो विदार्य

प्राणान्निरस्यन्निव साधुमुक्तः ।
कर्णस्य पीत्वा रुधिरं विवेश
वसुन्धरां शोणितदिग्धवाजः ॥ ८-९७-५१ (५९७६३)
ततो वृषो बाणनिपातकोपितो
महोरगो दण्डविघट्टितो यथा ।
तदाऽऽशुकारी व्यसृजच्छरोत्तमान्
महाविषः सर्प इवोत्तमं विषम् ॥ ८-९७-५२ (५९७६४)
जनार्दनं द्वादशभिः पराभिन--
न्नवैर्नवत्या च शरैस्तथाऽर्जुनम् ।
शरेण घोरेण पुनश्च पाण्डवं
विदार्य कर्णो व्यनदज्जहास च ॥ ८-९७-५३ (५९७६५)
तमस्य हर्षं ममृषे न पाण्डवो
बिभेद मर्माणि ततोऽस्य मर्मवित् ।
परःशतैः पत्रिभिरिन्द्रविक्रम--
स्तथा यथेन्द्रो बलमोजसा रणे ॥ ८-९७-५४ (५९७६६)
ततः शराणां नवतिं तदाऽर्जुनः
ससर्ज कर्णेऽन्तकदण्डसन्निभाम् ।
तैः पत्रिभिर्विद्धतनुः स विव्यथे
तथा यथा वज्रविदारितोऽचलः ॥ ८-९७-५५ (५९७६७)
मणिप्रवेकोत्तमवज्रहाटकै--
रलङ्कृतं चास्य वराङ्गभूषणम् ।
प्रविद्धमुर्व्यां निपपात पत्रिभि--
र्धनञ्जयेनोत्तमकुण्डलेपि च ॥ ८-९७-५६ (५९७६८)
महाधनं शिल्पिवरैः प्रयत्नतः
कृतं यदस्योत्तमवर्म भास्वरम् ।
सुदीर्घकालेन ततोऽस्य पाण्डवः
क्षणेन बाणैर्बहुधा व्यशातयत् ॥ ८-९७-५७ (५९७६९)
गतस्येषुभिः खण्डितकुण्डलोऽन्तः
परिक्षतश्चाभ्यधिकं तदानीम् ।
स लोहिताङ्गश्रवणश्चकाशे
सलोहिताङ्गश्रवणो यथा दिवि'॥ ८-९७-५८ (५९७७०)
स तं विवर्माणमथोत्तमेषुभिः
शितैश्चतुर्भिः कुपितः पराभिनत् ।
स विव्यथेऽत्यर्थमरिप्रताडितो
यथाऽऽतुरः पित्तकफानिलज्वरैः ॥ ८-९७-५९ (५९७७१)
महाधनुर्मण्डलनिःसृतैः शितैः

क्रियाप्रयत्नप्रहितैर्बलेन च ।
ततश्च कर्णं बहुभिः शरोत्तमै--
र्बिभेद मर्मस्वपि चार्जुनस्त्वरन् ॥ ८-९७-६० (५९७७२)
दृढाहतः पत्रिभिरुग्रवेगैः
पार्थेन कर्णो विविधैः शिताग्रैः ।
बभौ गिरिर्गैरिकधातुरक्तः
क्षरन्प्रपातैरिव रक्तमम्भः ॥ ८-९७-६१ (५९७७३)
श्ततोऽर्जुनः कर्णमवक्रगैर्नवैः
सुवर्णपुङ्खैः सुदृढैरयस्मयैः ।
यमाग्निदण्डप्रतिमैः स्तनान्तरे
पराभिनत्क्रौञ्चमिवाद्रिमग्निजः ॥ ८-९७-६२ (५९७७४)
ततः शरावापमपास्य सूतजो
धनुश्च तच्छक्रशरासनोपमम् ।
ततो रथस्थः स मुमोह च स्खलन् ।
प्रशीर्णमुष्टिः सुभृशाहतः प्रभो ॥ ८-९७-६३ (५९७७५)
न चार्जुनस्तं व्यसने तदेषिवा--
न्निहन्तुमार्यः पुरुषव्रते स्थितः ।
ततस्तमिन्द्रावरजः सुसम्भ्रमा--
दुवाच किं पाण्डव हे प्रमाद्यसे ॥ ८-९७-६४ (५९७७६)
नैवाहितानां सततं विपश्चितः
क्षणं प्रतीक्षन्त्यपि दुर्बलीयसाम् ।
विशेषतोऽरीन्व्यसनेषु पण्डितो
निहत्य धर्मं च यशश्च विन्दते ॥ ८-९७-६५ (५९७७७)
तदेकवीरं तव चाहितं सदा
त्वरस्व कर्णं सहसाऽभिमर्दितुम् ।
पुरा समर्थः समुपैति सूतजो
भिन्धि त्वमेनं नमुचिं यथा हरिः ॥ ८-९७-६६ (५९७७८)
ततस्तदेवेत्यभिपूज्य सत्वरं
जनार्दनं कर्णमविध्यदर्जुनः ।
शरोत्तमैः सर्वकुरूत्तमस्त्वरं--
स्तथा यथा शम्बरहा पुरा बलिम् ॥ ८-९७-६७ (५९७७९)
साश्वं तु कर्णं सरथं किरीटि
समाचिनोद्भारत वत्सदन्तैः ।
प्रच्छादयामास दिशश्च बाणैः
सर्वप्रयत्नात्तपनीयपुङ्खैः ॥ ८-९७-६८ (५९७८०)
सवत्सदन्तैः पृथुपीनवक्षाः

समाचितः सोऽधिरथिर्विभाति ।
सुपुष्पिताशोकपलाशशाल्मलि--
र्यथाऽचलश्चन्दनकाननायुतः ॥ ८-९७-६९ (५९७८१)
शरैः शरीरे बहुभिः समर्पितै--
र्विभाति कर्णः समरे विशाम्पते ।
महीरुहैराचितसानुकन्दरो
यथा गिरीन्द्रः स्फुटकर्णिकारवान् ॥ ८-९७-७० (५९७८२)
स वाणसङ्घान्बहुधा व्यवासृजन्
विभाति कर्णः शरजालरश्मिवान् ।
स लोहितो रक्तगभस्तिमण्डलो
दिवाकरोऽस्ताभिमुखो यथा तथा ॥ ८-९७-७१ (५९७८३)
बाह्वन्तरादाधिरथेर्विमुक्तान्
बाणान्महाहीनिव दीप्यमानान् ।
व्यध्वंसयन्नर्जुनबाहुमुक्ताः
शराः समासाद्य दिशः शिताग्राः ॥ ८-९७-७२ (५९७८४)
श्ततः स कर्णः समवाप्य धैर्यं
बाणान्विमुञ्चन्कुपिताहिकल्पान् ।
विव्याध पार्थं दशभिः पृषत्कैः
कृष्णं च षड्भिः कुपिताहिकल्पैः ॥ ८-९७-७३ (५९७८५)
ततः किरीटि भृशमुग्रनिःस्वनं
महाशरं सर्पविषानलोपमम् ।
अयस्मायं रौद्रमहास्त्रसम्भृतं
महाहवे क्षेप्तुमना महामतिः ॥ ८-९७-७४ (५९७८६)
कालो ह्यदृश्यो नृप विप्रशापा--
न्निदर्शयन्कर्णवधं ब्रुवाणः ।
भूमिस्तु चक्रं ग्रसतीत्यवोच--
त्कर्णस्य तस्मिन्वधकाल आगते ॥ ८-९७-७५ (५९७८७)
न चास्य घोरं प्रतिभाति चास्त्रं
यद्भार्गवोऽस्मै प्रददौ महात्मा ।
चक्रं च वामं ग्रसते भूमिरस्य
प्राप्ते तस्मिन्वधकाले नृवीर ॥ ८-९७-७६ (५९७८८)
ततो रथो घूर्णितवान्नरेन्द्र
शापात्तदा ब्राह्मणसत्तमस्य ।
प्राप्तं वधं शंसति चाप्यथास्त्रं
प्रणश्यमानं द्विजमुख्यशापात् ॥ ८-९७-७७ (५९७८९)
श्ततश्चक्रमपतत्तस्य भूमौ

स विह्वलः समरे सूतपुत्रः ।
सवेदिकश्चैत्य इवातिमात्रः
सुपुष्पितो भूमितले निमग्नः६ ॥ ८-९७-७८ (५१७९०)
मग्ने रथे ब्राह्मणशापमूढो
ह्यस्त्रं च तं मोघमिषु च सर्पम् ।
अमृष्यमाणो व्यसनानि तानि
हस्तौ विधुन्वन्विजगर्ह धर्मम् ॥ ८-९७-७९ (५१७९१)
धर्मप्रधानं किल पाति धर्म
इत्यब्रुवन्धर्मविदः सदैव ।
वयं च धर्मे प्रयताम नित्यं
चर्तुं यथाशक्ति यथाश्रुतं च ।
स चापि निघ्नाति न पाति भक्तान्
मन्ये न नित्यं परिपाति धर्मः ॥ ८-९७-८० (५१७९२)
एवं ब्रुवन्प्रस्खलिताश्वसूतो
विचाल्यमानोऽर्जुनबाणपातैः ।
मर्माभिघाताच्छिथिलः क्रियासु
पुनः पुनर्धर्ममसौ जगर्ह ॥ ८-९७-८१ (५१७९३)
ततः शरैर्भीमतरैरविध्यत्त्रिभिराहवे ।
हस्ते कृष्णं तथा पार्थमभ्यविध्यच्च सप्तभिः ॥ ८-९७-८२ (५१७९४)
ततोऽर्जुनः सप्तदश तिग्मवेगानजिह्मगान् ।
इन्द्राशनिसमान्घोरानसृजत्पावकोपमान् ॥ ८-९७-८३ (५१७९५)
निर्भिद्य ते भीमवेगा ह्यपतन्पृथिवीतले ।
कम्पितात्मा ततः कर्णः शक्त्या चेष्टामदर्शयत् ॥ ८-९७-८४ (५१७९६)
बलेनाथ स संस्तभ्य ब्रह्मास्त्रं समुदैरयत् ।
ऐन्द्रं ततोऽर्जुनश्चापि तं दृष्ट्वाऽभ्युपमन्त्रयत् ॥ ८-९७-८५ (५१७९७)
गाण्डीवं ज्यां च बाणांश्च सोऽनुमन्त्र्य परन्तपः ।
व्यसृजच्छरवर्षाणि वर्षाणीव पुरन्दरः ॥ ८-९७-८६ (५१७९८)
ततस्तेजोमया बाणा रथात्पार्थस्य निःसृताः ।
प्रादुरासन्महावीर्याः कर्णस्य रथमन्तिकात् । ८-९७-८७ (५१७९९)
स कर्णोऽग्रसदस्यास्त्रं कुर्वन्मोक्षं महारथः ॥
ततोऽब्रवीद्वृष्णिवीरस्तस्मिन्नस्त्रे विनाशिते ।
विसृजास्त्रं परं पार्थ राधेयो ग्रसते शरान् ॥ ८-९७-८८ (५१८००)
ततो ब्रह्मास्त्रमत्युग्रं सम्मन्त्र्य समयोजयत् ।
छादयित्वा ततो बाणैः कर्णं प्रत्यस्यदर्जुनः ॥ ८-९७-८९ (५१८०१)
ततः कर्णः शितैर्बाणैर्ज्यां चिच्छेद सुतेजनैः ।
शद्वितीयां च तृतीयां च चतुर्थीं पञ्चमीं तथा ॥ ८-९७-९० (५१८०२)

षष्ठीमथास्य चिच्छेद सप्तमीं च तथाऽष्टमीम् ।
नवमीं दशमीं चास्य तथा चैकादशीं वृषः ।
ज्याशतं शतसन्धानः स कर्णो नावबुध्यते ॥ ८-९७-९१ (५१८०३)
ततो ज्यां विनिधायान्यामभिमन्त्र्य च पाण्डवः ।
शरैरवाकिरत्कर्णं दीप्यमानैरिवाहिभिः ॥ ८-९७-९२ (५१८०४)
तस्य ज्याच्छेदनं कर्णो ज्यावधानं च संयुगे ।
नान्वबुध्यत शीघ्रत्वात्तदद्भुतमिवाभवत् ॥ ८-९७-९३ (५१८०५)
अस्त्रैरस्त्राणि संवार्य प्रनिघ्नन्सव्यसाचिनः ।
चक्रे चाप्यधिकं पार्थात्स्ववीर्यमतिदर्शयन् ॥ ८-९७-९४ (५१८०६)
ततः कर्णोऽर्जुनं दृष्ट्वा स्वस्यास्त्रेण च पीडितम् ।
अभ्यसेत्यब्रवीत्पार्थमातिष्ठास्त्रं व्रजेति च ॥ ८-९७-९५ (५१८०७)
ततोऽग्निसदृशं घोरं शरं सर्पविषोपमम् ।
अश्मसारमं दिव्यमभिमन्त्र्यं परन्तपः ।
रौद्रमस्त्रं समाधाय क्षेप्तुकामः किरीटिने ॥ ८-९७-९६ (५१८०८)
ततोऽग्रसन्मही चक्रं राधेयस्य तदा नृप ॥ ८-९७-९७ (५१८०९)
श्ततोऽवतीर्य राधेयो रथादाशु समुद्यतः ।
चक्रं भुजाभ्यामालम्ब्य समुत्क्षेप्तुमियेष सः ॥ ८-९७-९८ (५१८१०)
सप्तद्वीपा वसुमती सशैलवनकानना ।
गीर्णचक्रा समुत्क्षिप्ता कर्णेन चतुरङ्गुलम् ॥ ८-९७-९९ (५१८११)
ग्रस्तचक्रस्तु राधेयः क्रोधादश्रूण्यवर्तयत् ।
अर्जुनं वीक्ष्य संरब्धमिदं वचनमब्रवीत् ॥ ८-९७-१०० (५१८१२)
भोभो पार्थ महेष्वास मुहुर्तं परिपालय ।
यावच्चक्रमिदं ग्रस्तमुद्धरामि महीतलात् ॥ ८-९७-१०१ (५१८१३)
सव्यं चक्रं महीग्रस्तं दृष्ट्वा दैवादिदं मम ।
पार्थ कापुरुषाचीर्णमभिसन्धिं विसर्जय ॥ ८-९७-१०२ (५१८१४)
न त्वं कापुरुषाचीर्णं मार्गमास्थातुमर्हसि ।
ख्यातस्त्वमसि कौन्तेय विशिष्टो रणकर्मसु ।
विशिष्टतरमेव त्वं कर्तुमर्हसि पाण्डव ॥ ८-९७-१०३ (५१८१५)
प्रकीर्णकेशे विमुखे ब्राह्मणेऽथ कृताञ्जलौ ।
शरणागते न्यस्तशस्त्रेयाचमाने तथाऽर्जुन ॥ ८-९७-१०४ (५१८१६)
अबाणे भ्रष्टकवचे भ्रष्टभग्नायुधे तथा ।
न विमुञ्चन्ति शस्त्राणि शूराः साधुव्रते स्थिताः ॥ ८-९७-१०५ (५१८१७)
त्वं च शूरतमो लोके साधुवृत्तश्च पाण्डव ।
अभिज्ञो युद्धधर्माणां तस्मात्क्षम मुहूर्तकम् ॥ ८-९७-१०६ (५१८१८)
दिव्यास्त्रविदमेयात्मा कार्तवीर्यसमो युधि ।
यावच्चक्रमिदं ग्रस्तमुद्धरामि महाभुज ॥ ८-९७-१०७ (५१८१९)

न मां रथस्थो भूमिष्ठं विकलं हन्तुमर्हसि ।
न वासुदेवात्त्वत्तो वा पाण्डवेय बिभेम्यहम् ॥ ८-९७-१०८ (५१८२०)
त्वं हि क्षत्रियदायादो महालकुलविवर्धनः ।
अतस्त्वां प्रबवीम्येष मुहूर्तं क्षम पाण्डव ॥ ॥ ८-९७-१०९ (५१८२१)

इति श्रीमन्महाभारते कर्णपर्वणि सप्तदशदिवसयुद्धे
सप्तनवतितमोऽध्यायः ॥ ९७ ॥
श्विना किरीटं शंशुभे स पार्थः ।
श्यामो युवा नील इवोच्चशृङ्गः ।
ततः समुद्ग्रथ्य सितेन वाससा
स्वमूर्धजानव्यथितस्तदाऽर्जुनः ।
विभासितः सूर्यमरीचिना दृढं
शिरोगतेनोदयपर्वतो यथा ॥ ८-९७-१ (५१८२२)
गोकर्णा सुमुखी कृतेन इषुणा गोपुत्रसम्प्रेषिता
गोशब्दात्मजभूषणं सुविहितं सुव्यक्तगोऽसुप्रभं
दृष्ट्वा गोगतकं जहार मुकुटं गोशब्दगोपूरि वै
गोकर्णासनमर्दनश्च न ययावप्राप्य मृत्योर्वशं ८-९७-२ (५१८२३)
स सायकः कर्णभुजप्रसृष्टो
हुताशनार्कप्रतिमो महार्हः ।
महोरगः कृतवैरोऽर्जुनेन
किरीटमाहत्य ततो व्यतीयात् ॥ ८-९७-३ (५१८२४)
तं चापि दग्ध्वा तपनीयचित्रं
किरीटमाकृष्य तदर्जुनस्य ।
इयेष गन्तुं पुनरेव तूणं
दृष्टश्च कर्णेन ततोऽब्रवीत्तम् ॥ ८-९७-४ (५१८२५)
मुक्तस्त्वयाऽहं त्वसमीक्ष्य कर्ण
शिरो हृतं यन्न मयाऽर्जुनस्य ।
समीक्ष्य मां मुञ्च रणे त्वमाशु
हन्ताऽस्मि शत्रुं तव चात्मनश्च ॥ ८-९७-५ (५१८२६)
स एवमुक्तो युधि सूतपुत्र--
स्तम्ब्रवीत्को भवानुग्ररूपः ।
नागोऽब्रवीद्विद्धि कृतागसं मां
पार्थेन मातुर्वधजातवैरम् ॥ ८-९७-६ (५१८२७)
यदि स्वयं वज्रधरोऽस्य गोप्ता
तथापि याता पितृराजवेश्मनि। ८-९७-७ (५१८२८)
कर्ण उवाच ।

न नाग कर्णोऽद्य रणे परस्य
बलं समास्थाय जयं बुभूषेत् ॥ ८-९७-७क्ष् (५०६५)
न संदध्यां द्विः शरं चैव नाग
यद्यर्जुनानां शतमेव हन्याम् ।
तमाह कर्णः पुनरेव नागं
तदाऽजिमध्ये रविसूनुसत्तमः ॥ ८-९७-८ (५१८२९)
व्यालास्त्रसर्गोत्तमयत्नमन्युभि--
र्हन्ताऽस्मि पार्थं सुसुखी व्रज त्वम् ।
इत्येवमुक्तो युधि नागराजः
कर्णेन रोषादसहंस्तस्य वाक्यम् ॥ ८-९७-९ (५१८३०)
स्वयं प्रायात्पार्थवधाय राजन्
कृत्वा स्वरूपं विजिघांसुरुग्रः ।
ततः कृष्णः पार्थमुवाच सङ्ख्ये
महोरगं कृतवैरं जहि त्वम् ॥ ८-९७-१० (५१८३१)
८-९७-११ (५१८३२)
स एवमुक्तो मधुसूदनेन
गाण्डीवधन्वा रिपुवीर्यसाहः ।
उवाच को ह्येष ममाद्य नागः
स्वयं य आयाद्गरुडस्य वक्त्रम् ॥८

Mahabharata - Karna Parva - Chapter Footnotes

८-९७-१६ बाणजालैकमयं दृष्ट्वेति शेषः ॥
८-९७-३० पदा विनिष्पिष्य रथोत्तमं स प्रावेशयत्पृथिवीं किञ्चिदेव ।क्षितिं गता जानुभिस्तेऽथ वाहा हेमच्छन्नाश्चन्द्रमरीचिवर्णाः इति झ.पाठः ॥
८-९७-४८ गते गमिते ।विभुः समर्थः ॥
८-९७-४९ बर्हिणानां बर्हा एव वाजाः पक्षाः सञ्जाता येषां तैर्बर्हिणबर्हवाजितैः ॥
८-९७-६२ अग्निजः कार्तिकेयः ॥
८-९७-६४ ईषिवान् मनसि कृतवान् ॥
८-९७-७८ चैत्यः सवेदिको ग्रामसूचको महाद्रुमः ॥
८-९७-८९ प्रत्यस्यत्प्रतिप्राक्षितत् ॥
८-९७-९५ अभ्यस पुनः पुनः अस्त्रं आतिष्ठ वज प्रेरयेत्यब्रवीदिति योजना ।ततः कृष्णोऽर्जुनं दृष्ट्वा कर्णास्त्रेण च पीडितम् इति झ.पाठः ॥
८-९७-९६ क्षेप्तुकामः किरीटवान् इति झ ।पाठः ॥

८-९७-९७ सप्तनवतितमोऽध्यायः ॥
८-९७-क एतदारभ्य गरुडस्य वक्रं इत्यन्तानां चतुर्णां श्लोकानां स्थाने अधोदृश्यमाना एकादश श्लोका झ पुस्तके विद्यन्ते ८-९७-२ गोकर्णा मुकुटं जहारेत्यन्वयः । अर्जुनस्य मुकुटहरणमपि महत्कर्मेति सूचयन्मुकुटं विशिनष्टि। गवि चक्षुषि कर्णौ यस्याः सा गोकर्णा चक्षुःश्रवाः सर्पिणी अर्जुनेन खाण्डवे निहता सती इह निमित्तभूता तस्य मुकुटमेव हृतवती नतु शिरः। अथं हताया हनननिमित्तत्वमत आह। सुमुखी कृतेन इषुणा मोपुत्रसम्प्रेषिता। सन्धिरविवक्षितत्वान्न भवति। शोभनं पुत्रजीवकरं मुखं यस्याः सा सुमुखी। सा हि पुत्रं निगीर्य दह्यमानात् खाण्वादुत्पतन्ती शिरोदेशे अर्जुनेन च्छिन्ना सती स्वयं मृतां पुत्रं च रक्षितवतीत्यादिपर्वण्युपाख्यायते। कृतेन स्वयं निर्मितेन पुत्रेण त्रातेन इषुणा इथुभावं गतेन। आत्मा वै पुत्रनामासीति श्रुतेरिष्वाकारपुत्ररूपेण सम्पन्ना सती। गोमतो रश्मिमतोऽर्कस्य पुत्रेण कर्णेन प्रेषिता। इषुणेतीत्थम्भावे तृतीया। गोपुत्रेति मतुब्लोप आर्षः। किङ्कृत्वा मुकुटं जहारेत्यत आह। सुव्यक्तगोऽसुप्रभं गोगतकं दृष्ट्वा सुव्यक्ताः अतिशयेनाविर्भूता गावो रश्मयस्तेज इति यावत्। सुव्यक्तैर्गोभिरसुभिश्च प्रकर्षेण भासमानं प्रदेशो लक्ष्यते। तत्र गतं विद्यमानं कं शिरो यस्य तम्। अर्जुनस्य ग्रीवादेशं कर्णेन लक्षीकृतं विज्ञाय भगवता स्वभारेणाश्वेषु जानुभ्यामवनीं गमितेषु रश्मिभिः समसूत्रदेशेऽर्जुनस्य शिरो दृष्ट्वापि वेगातिशयात्स्वयं नीचीभवितुमशक्ता सती तद्देशस्थं मुकुटं जहारेत्यर्थः। गोशब्दात्मजभूषणं सुविहितमिति। गौः पृथिवी तया शब्द्यते गोशब्दा अदितिः। इयं वा अदितिरिति पृथिव्या अदितेर्निर्देशात्। तस्या आत्मजस्येन्द्रस्य भूषणं सुविहितं वेधसेति शषः। तथाचात्रैवोक्तम्। पुरन्दरार्थं तपसा प्रयत्नतः स्वयं कृतं यद्विधिना स्वयम्भुवेति। कीदृशं मुकुटम्। वै निश्चितं प्रसिद्धं वा। गोशब्दगोपूरि गोभि रश्मिभिः शब्द्यते रश्मिमानिति कथ्यत इति सूर्यस्तस्येव भुव नगर्भव्यापिनो गावः किरणास्तैर्भुवनं पूरयितुं शीलमस्य तत्तथा। सूर्यसमप्रभमित्यर्थः। ननु चेतनाधिष्ठितो बाणः पुनरेत्या र्जुनं कुतो न हतवानित्यत आह। गोकर्णासनमर्दनश्च न ययावप्राप्य मृत्योर्वशमिति। गोकर्णं सर्पं पुनरर्जुनं हन्तुमिच्छन्तमसनेन बाणक्षेपेण मर्दयति यः स तथाभूतोऽर्नुनश्च तमेव सर्पमनवाप्य मृत्योर्वशं न ययौ। सर्पस्य पुनरागमनं वधश्चात्रैव कीर्त्यते। गौर्नादित्ये बलीवर्दे क्रतुभेदर्षिभेदयो। स्त्री तु स्याद्दिशि भारत्यां भूमौ च

सुरभावपि। नृस्त्रियोः स्वर्गवज्राम्बुरश्मिदृग्बाणलोमस्विति कोशः ॥

---

कर्नपर्व-अध्यय०९८
॥ श्रीः ॥
८.९८. अध्यायः ९८

Mahabharata - Karna Parva - Chapter Topics
पार्थाय धर्मानुवादकं कर्णम्प्रति कृष्णेन
तत्कृतदुष्कृतानुस्मारणपूर्वकं मर्मोद्घाटनम् ॥ १ ॥
कर्णेन स्वबाणाहतिनिर्विण्णेऽर्जुने तदन्तरे रथादवरुह्य
तच्चक्रोद्धरणोद्यमः ॥ २ ॥
तदन्तरे कृष्णचोदनया पार्थेन कर्णशिरश्छेदः ॥ ३ ॥

Mahabharata - Karna Parva - Chapter Text

८-९८-० (५९८३३)
सञ्जय उवाच। ८-९८-०क्ष् (५०६६)
अथाब्रवीद्वासुदेवो महात्मा
राधेय दिष्ट्या स्मरसीह धर्मम् ।
ग्धर्मे हि बद्धा सततं हि पार्था--
स्तेभ्यस्ततो वृद्धिसौ ददाति ॥ ८-९८-१ (५९८३४)
धर्मादपेताः परिपन्थिनस्ते
तस्माद्गता वै कुरवो विनाशम्'।
प्रायेण नीचा व्यसनेषु मग्ना
निन्दन्ति दैवं न तु दुष्कृतं स्वम् ॥ ८-९८-२ (५९८३५)
कृष्णां सभां कर्ण यदेकवस्त्रा--
मानीतवांस्त्वं च सुयोधनश्च ।
दुःशासनः शकुनिः सौबलश्च ।
धर्मस्तदा ते रुचितो न कस्मात् ॥ ८-९८-३ (५९८३६)
यदा सभायां राजानमनक्षज्ञं युधिष्ठिरम् ।
आनीय जितवन्तो वै क्व ते धर्मस्तदा गतः ॥ ८-९८-४ (५९८३७)
वनवासे व्यतीते च कर्ण वर्षे त्रयोदशे ।
न प्रयच्छसि यद्राज्यं क्व ते धर्मस्तदा गतः ॥ ८-९८-५ (५९८३८)
यद्भीमसेनं सर्पैश्च विषयुक्तैश्च भोजनैः ।
आचरस्त्वन्मते राजा क्व ते धर्मस्तदा गतः ॥ ८-९८-६ (५९८३९)
यद्वारणावते पार्थान्सुप्ताञ्जतुगृहे तदा ।

हन्तुकामास्तदा यूयं क्व ते धर्मस्तदा गतः ॥ ८-९८-७ (५९८४०)
यदा रजस्वलां कृष्णां दुःशासनवशे स्थिताम् ।
सभायां प्राहसः कर्ण क्व ते धर्मस्तदा गतः ॥ ८-९८-८ (५९८४१)
यदनार्यैः पुरा कृष्णां क्लिश्यमानामनागसम् ।
उपप्रेक्षसि राधेय क्व ते धर्मस्तदा गतः ॥ ८-९८-९ (५९८४२)
विनष्टाः पाण्डवाः कृष्णे शाश्वतं नरकं गताः ।
पतिमन्यं वृणीष्वेति वदंस्त्वं गजगामिनीम् ।
उपप्रेक्षसि राधेय क्व ते धर्मस्तदा गतः ॥ ८-९८-१० (५९८४३)
राज्यलुब्धः पुनः कर्ण समाह्वयसि पाण्डवान् ।
यदा शकुनिमाश्रित्य क्व ते धर्मस्तदा गतः ॥ ८-९८-११ (५९८४४)
यदाऽभिमन्युं बहवो युद्धे जघ्नुर्महारथाः ।
परिवार्य रणे बालं क्व ते धर्मस्तदा गतः ॥ ८-९८-१२ (५९८४५)
श्यद्येष धर्मस्तत्र न विद्यते हि
किं सर्वथा तालुविशोषणेन ।
अद्येह धर्म्याणि विधत्स्व सूत
तथापि जीवन्न विमोक्ष्यसे हि ॥ ८-९८-१३ (५९८४६)
नलो ह्यक्षैर्निर्जितः पुष्करेण
पुनर्यशो राज्यमवाप वीर्यात् ।
प्राप्तास्तथा पाण्डवा बाहुवीर्या--
त्सर्वैः समेताः परिवृत्तलोभाः ॥ ८-९८-१४ (५९८४७)
निहत्य शत्रून्समरे प्रवृद्धा--
न्ससोमका राज्यमवाप्नुयुस्ते ।
तथा गता धार्तराष्ट्रा विनाशं
धर्माभिगुप्तैः सततं नृसिंहैःछ ॥ ८-९८-१५ (५९८४८)
सञ्जय उवाच। ८-९८-१६क्ष् (५०६७)
एवमुक्तस्तदा कर्णो वासुदेवेन भारत ।
लज्जयावनतो भूत्वा नोत्तरं किञ्चिदुक्तवान् ॥ ८-९८-१६ (५९८४९)
क्रोधात्प्रस्फुरमाणौष्ठो धनुरुद्यम्य भारत ।
योधयामास वै पार्थं महावेगपराक्रमः ॥ ८-९८-१७ (५९८५०)
ततोऽब्रवीद्वासुदेवः फल्गुनं पुरुषर्षभम् ।
दिव्यास्त्रेणैव निर्भिद्य पातयस्व महाबल ॥ ८-९८-१८ (५९८५१)
एवमुक्तस्तु देवेन क्रोधमागात्तदाऽर्जुनः ।
मन्युमभ्याविशद्घोरं स्मृत्वा तत्तु धनञ्जयः ॥ ८-९८-१९ (५९८५२)
तस्य क्रुद्धस्य सर्वेभ्यः स्रोतोभ्यस्तेजसोऽर्चिषः ।
प्रादुरासंस्तदा राजंस्तदद्भुतमिवाभवत् ॥ ८-९८-२० (५९८५३)
तत्समीक्ष्य ततः कर्णो ब्रह्मास्त्रेण धनञ्जयम् ।

अभ्यवर्षत्पुनर्यत्नमकरोद्रथसर्जने ॥ ८-९८-२१ (५९८५४)
ब्रह्मास्त्रेणव तं पार्थो कवर्ष शरवृष्टिभिः ।
तदस्त्रमस्त्रेणावार्य प्रजहार च पाण्डवः ॥ ८-९८-२२ (५९८५५)
ततोऽन्यदस्त्रं कौन्तेयो दयितं जातवेदसः ।
मुमोच कर्णमुद्दिश्य तत्प्रजज्वाल तेजसा ॥ ८-९८-२३ (५९८५६)
वारुणेन ततः कर्णः शमयामास पावक्रम् ।
जीमूतैश्च दिशः सर्वाश्चक्रे तिमिरदुर्दिनाः ॥ ८-९८-२४ (५९८५७)
पाण्डवेयस्त्वसम्भ्रान्तो वायव्यास्त्रेण वीर्यवान् ।
अपोवाह तदाऽभ्राणि राधेयस्य प्रपश्यतः ॥ ८-९८-२५ (५९८५८)
श्ततः शरं महाघोरं ज्वलन्तिमिव पावकम् ।
आददे पाण्डुपुत्रस्य सूतपुत्रो जिघांसया ॥ ८-९८-२६ (५९८५९)
योज्यमाने ततस्तस्मिन्बाणे धनुषि पूजिते ।
चचाल पृथिवी राजन्सशैलवनकानना ॥ ८-९८-२७ (५९८६०)
ववौ सशर्करो वायुर्दिशश्च रजसा वृताः ।
हाहाकारश्च संवज्ञे सुराणां दिवि भारत ॥ ८-९८-२८ (५९८६१)
तमिगुं सन्धितं दृष्ट्वा सूतपुत्रेण मारिष ।
विषादं परमं जग्मुः पाण्डवा दीनचेतसः ॥ ८-९८-२९ (५९८६२)
स सायकः कर्णभुजप्रमुक्तः
शक्राशनिग्रख्यरुचिः शिताग्रः ।
मुलान्तरं प्राप्य धनञ्जयस्य
विवेश वल्मीकमिवोरमोत्तमः ॥ ८-९८-३० (५९८६३)
स राढविद्धः समरे महात्मा
विधूर्णमानः श्लथहस्तगाण्डिवः ।
चचाल वीभत्सुरमित्रमर्दनः
क्षितेः प्रकम्पे च यथाऽचलोत्तमः ॥ ८-९८-३१ (५९८६४)
तदन्तरं प्राप्य वृषो महारथो
रथाङ्गसुर्वीगतमुज्जिहीर्षुः ।
रथादवप्लुत्य निगृह्य दोर्भ्यां
शशाक दैवान्न महाबलोऽपि ॥ ८-९८-३२ (५९८६५)
ततः किरीटि प्रतिलभ्य संज्ञां
जग्राह बाणं यमदण्डकल्पम् ।
ततोऽर्जुनः प्राञ्जलिकं महात्मा
ततोऽब्रवीद्वासुदेवोऽपि पार्थम् ॥ ८-९८-३३ (५९८६६)
छिन्ध्यस्य मूर्धानमरेः शरेण
न यावदारोहति वै रथं वृषः ।
तथैव सम्पूज्य स तद्वचः प्रभो--

स्ततः शरं प्रज्वलितं प्रगृह्य ।
जघान कक्षाममलार्कवर्णां
महारथे रथचक्रे विमग्ने ॥ ८-९८-३४ (५१८६७)
तं हस्तिकक्षाप्रवरं सुकेतुं
सुवर्णमुक्तामणिवज्रजुष्टम् ।
कलाप्रकृष्टोत्तमशिल्पियत्नैः
कृतं सुरूपं तपनीयचित्रम् ॥ ८-९८-३५ (५१८६८)
जयास्पदं तव सैन्यस्य नित्य---
ममित्रवित्रासनमीड्यरूपम् ।
विख्यातमादित्यसुतस्य लोके
त्विषा समं पावकभानुचन्द्रैः ॥ ८-९८-३६ (५१८६९)
ततः क्षुरप्रेण सुसंशितेन
सुवर्णपुङ्खेन हुताग्निवर्चसा ।
श्रिया ज्वलन्तं ध्वजमुन्ममाथ
महारथस्याधिरथेः किरीटी ॥ ८-९८-३७ (५१८७०)
यशश्च दर्पश्च तथा प्रियाणि
सर्वाणि कार्याणि च तेन केतुना ।
साकं कुरूणां हृदयानि चापतन्
बभूव हाहेति च निःस्वनो महान् ॥ ८-९८-३८ (५१८७१)
दृष्ट्वा ध्वजं पातितमाशुकारिणा
कुरुप्रवीरेण निकृत्तमाहवे ।
नाशंसिरे सूतपुत्रस्य सर्वे
जयं तदा भारत ये त्वदीयाः ॥ ८-९८-३९ (५१८७२)
अथ त्वरन्कर्णवधाय पार्थो
महेद्रवज्रानलदण्डसन्निभम् ।
आदत्त चाथाञ्जलिकं निषङ्गा--
त्सहस्ररश्मेरिव रश्मिमुत्तमम् ॥ ८-९८-४० (५१८७३)
मर्मच्छिदं शोणितमांसदिग्धं
वैश्वानरार्कप्रतिमं महार्हम् ।
नराश्वनागासुहरं त्र्यरत्निं
षड्वाजमञ्जोगतिमुग्रवेगम् ॥ ८-९८-४१ (५१८७४)
सहस्रनेत्राशनितुल्यवीर्यं
कालानलं व्यात्तमिवातिघोरम् ।
पिनाकनारायणचक्रसन्निभं
भयङ्करं प्राणभृतां विनाशनम् ॥ ८-९८-४२ (५१८७५)
जग्राह पार्थः स शरं प्रहृष्टो

यो देवसङ्घैरपि दुर्निवार्यः ।
सम्पूजितो यः सततं महात्मा
देवासुरान्यो विजयेन्महेषुः ॥ ८-९८-४३ (५१८७६)
तं वै प्रमृष्टं प्रसमीक्ष्य युद्धे
चचाल सर्वं सचराचरं जगत् ।
कृत्स्नं जगत्स्वस्त्यृषयोऽभिचक्रु--
स्तमुद्यतं प्रेक्ष्य महाहवेषुम् ॥ ८-९८-४४ (५१८७७)
ततस्तु तं वै शरमप्रमेयं
गाण्डीवधन्वा धनुषि व्ययोजयत् ।
युक्त्वा महास्त्रेण परेण चापं
विकृष्य गाण्डीवमुवाच सत्वरम् ॥ ८-९८-४५ (५१८७८)
अयं हास्त्रप्रहितो महाशरः
शरीरहृच्चासुहरश्च दुर्हृदः ।
तपोऽस्ति तप्तं गुरवश्च तोषिता
मया यदीष्टं सुहुतं यदि श्रुतम् ॥ ८-९८-४६ (५१८७९)
अनेन सत्येन निहन्त्वयं शरः
सुसंहितः कर्णमरिं ममोर्जितम् ।
इत्यूचिवांस्तं प्रमुमोच बाणं
धनञ्जयः कर्णवधाय घोरम् ॥ ८-९८-४७ (५१८८०)
कृत्या ह्यथर्वाङ्गिरसी प्रचोदिता
यथा तथा त्वं जहि शात्रवं मम ।
ब्रुवन्किरीटी तमतिप्रहृष्टो--
ऽसृजद्देवानां जयहेतुं महेषुम् ॥ ८-९८-४८ (५१८८१)
जिघांसुरर्केन्दुसमप्रभावः
कर्णं वशी पाण्डवः क्षिप्रकारी ।
ततो विमुक्तो बलिना महेषुः
प्रज्वालयामास नभो दिशश्च ॥ ८-९८-४९ (५१८८२)
सैन्यान्यनेकानि च विप्रमोह्य
गाण्डीवमुक्तेन ततो महात्मा ।
तेनार्जुनस्तन्महनीयमस्य
शिरोऽहरत्सूतपुत्रस्य राजन् ॥ ८-९८-५० (५१८८३)
शरोत्तमेनाञ्जलिकेन राजं--
स्तदा महास्त्रप्रतिमन्त्रितेन ।
पार्थोऽपराह्णे शिर उच्चकर्त
वैकर्तनस्याथ महेन्द्रसूनुः ।
छिन्नं पपाताञ्जलिकेन तूर्णं

कायश्च पश्चाद्धरणीं जगाम ॥ ८-९८-५१ (५९८८४)
तदुद्यतादित्यसमानतेजसं
शरन्नभोमध्यगभास्करोपमम् ।
वराङ्गमुर्व्यामपतच्चमुमूखे
दिवाकरोऽस्तादिव रक्तमण्डलः ॥ ८-९८-५२ (५९८८५)
ततोऽस्य देहं सततं सुखैधितं
सुरूपमत्यर्थसुखं सुगन्धि च ।
परेण कृच्छ्रेण शिरः समत्यज--
द्गृहं महर्धीन्निवसन्निवेश्वरः ॥ ८-९८-५३ (५९८८६)
शरैर्विभिन्नं व्यसु तत्सुवर्चसः
पपात कर्णस्य शरीमुच्छ्रितम् ।
स्रवद्व्रणं गैरिकतोयविस्रवं
गिरेर्यथा वज्रहतं महाशिरः ॥ ८-९८-५४ (५९८८७)
देहाच्च कर्णस्य निपातितस्य
तेजः सूर्यं खं वितत्याविवेश ।
तदद्भुतं सर्वमनुष्ययोधाः
संदृष्टवन्तो निहते स्म कर्णे ॥ ८-९८-५५ (५९८८८)
ततः शङ्खान्पाण्डवा दध्मुरुच्चै--
र्दृष्ट्वा कर्णं पातितं फल्गुनेन ।
तथैव कृष्णश्च धनञ्जयश्च
हृष्टौ यमौ दध्मतुर्वारिजातौ ॥ ८-९८-५६ (५९८८९)
तं सोमकाः प्रेक्ष्य हतं शयानं
सैन्यैः सार्धं सिंहनादान्प्रचक्रुः ।
तूर्याणि सञ्जघ्नुरतीव हृष्टा
वासांसि चैवादुधुवुर्भुजांश्च ॥ ८-९८-५७ (५९८९०)
संवर्धयन्तश्च नरेन्द्र योधाः
पार्थं समाजग्मुरतीव हृष्टाः ।
बलान्विताश्चापरे ह्यप्यनृत्य--
न्नन्योन्यमाश्लिष्य नदन्त ऊचुः ॥ ८-९८-५८ (५९८९१)
दृष्ट्वा तु कर्णं भुवि वा विपन्नं
कृत्तं रथात्सायकैरर्जुनस्य ।
महानिलेनाद्रिमिवापविद्धं
यज्ञावसानेऽग्निमिव प्रशान्तम् ॥ ८-९८-५९ (५९८९२)
तदाननं सूर्यसुतस्य राज--
न्विभ्राजते पद्मिवावनालम् ।
रराज कर्णस्य शिरो निकृत्त--

मस्तंगतं भास्करस्येव बिम्बम् ॥ ८-९८-६० (५१८९३)
शरैराचितसर्वाङ्गः शोणितौघपरिप्लुतः ।
रराज देहः कर्णस्य स्वरश्मिभिरिवांशुमान् ॥ ८-९८-६१ (५१८९४)
प्रताप्य सेनामामित्रीं दीप्तैः शरगभस्तिभिः ।
बलिनार्जुनकालेन नीतोऽस्तं कर्णभास्करः ॥ ८-९८-६२ (५१८९५)
अस्तं गच्छन्यथाऽदित्यः प्रभामादाय गच्छति ।
तथा जीवितमाहाय कर्णस्येषुर्जगाम सः ॥ ८-९८-६३ (५१८९६)
अपराह्णेऽपराह्णस्य सूतपुत्रस्य मारिष ।
छिन्नमञ्जलिकेनाजौ सोत्सेधमपतच्छिरः ॥ ८-९८-६४ (५१८९७)
उपर्युपरि सैन्यानां विनिघ्नन्नितराञ्जनान् ।
शिरः कर्णस्य सोऽत्सेधमिषुः सोप्यहरद्द्रुतम् ॥ ८-९८-६५ (५१८९८)
कर्णं तु शूरं पतितं पृथिव्यां
शराचितं शोणितदिग्धगात्रम् ।
दृष्ट्वा शयानं भुवि मद्रराज--
श्छिन्नध्वजेनाथ ययौ रथेन ॥ ८-९८-६६ (५१८९९)
हते कर्णे कुरवः प्राद्रवन्त
भयार्दिता गाढविद्धाश्च सङ्ख्ये ।
अवेक्षमाणा मुहुरर्जुनस्य
ध्वजं महान्तं वपुषा ज्वलन्तम् ॥ ८-९८-६७ (५१९००)
तच्छिरो भरतश्रेष्ठ शोभयामास मेदिनीम् ।
यदृच्छयेव पतितं मण्डलं चाण्डदीधितेः ॥ ८-९८-६८ (५१९०१)
तं दृष्ट्वा समरविमर्द (बद्ध) लब्धनिद्रं
दष्टोष्ठं रुधिरपीरतकातराक्षम् ।
राधेयं रथवरपृष्ठसन्निषण्णं
हीनांशुर्दिवसकरो मुहूर्तमासीत् ॥ ८-९८-६९ (५१९०२)
निःशब्दतूर्यं हतयोधमुख्यं
प्रशान्तदर्पं धृतराष्ट्रसैन्यम् ।
न शोभते सूर्यसुतेन हीनं
वृन्दं ग्रहाणामिव चन्द्रहीनम् ॥ ८-९८-७० (५१९०३)
सहस्रनेत्रप्रतिमानकर्मणः
सहस्रपत्रप्रतिमाननं शुभम् ।
सहस्ररश्मिर्दिवसक्षये यथा
तथाऽपतत्कर्णशिरो वसुन्धराम् ॥ ८-९८-७१ (५१९०४)
व्यूढोरस्कं कमलवदनं तप्तहेमावभासं
कर्णं दृष्ट्वा भुवि निपतितं पार्थबाणाभितप्तम् ।
पांसुग्रस्तं मलिनमसकृत्पुत्रमन्वीक्षमाणो

मन्दम्मन्दं व्रजति सविता मन्दिरं मन्दरश्मिः ॥ ॥ ८-९८-७२ (५११०५)

इति श्रीमन्महाभारते कर्णपर्वणि सप्तदशदिवसयुद्धे
अष्टनवतितमोऽध्यायः ॥ ९८ ॥
Mahabharata - Karna Parva - Chapter Footnotes

८-९८-६४ अपराह्ने दिवसस्य पश्चिमे भागे ।अपरं चरमम् अहः
मरणदिनं यस्य ॥
८-९८-९८ अष्टनवतितमोऽध्यायः ॥

---

कर्नपर्व-अध्यय०९९
॥ श्रीः ॥
८.९९. अध्यायः ९९

Mahabharata - Karna Parva - Chapter Topics
शल्येन कर्णमरणाद्व्याकुलमनसो दुर्योधनस्य समाश्वासनम् ॥१ ॥
तथा तम्प्रति रणाङ्कणवर्णनम् ॥ २ ॥
देवगन्धर्वादीनां स्वस्वस्थानगमनम् ॥ ३ ॥

Mahabharata - Karna Parva - Chapter Text

८-९९-० (५११०६)
सञ्जय उवाच। ८-९९-०क्ष् (५०६८)
कर्णं तु शूरं पतितं पृथिव्यां
शराचितं शोणितदिग्धगात्रम् ।
यदृच्छया सूर्यमिवावनिं गतं
दिदृक्षवः सम्परिवार्य तस्थुः ॥ ८-९९-१ (५११०७)
प्रहृष्टवित्रस्तविषण्णविस्मिता--
स्तथाऽपरे शोकसमन्विताऽभवन् ।
परे त्वदीयाश्च रणे विशाम्पते
यथायथेष्टं पृतना तथा गता ॥ ८-९९-२ (५११०८)
प्रविद्धवर्माभरणायुधाम्बरं
धनञ्जयेन प्रहतं महारथम् ।
निशाम्य कर्णं कुरवः प्रदुद्रुवु--
र्हतर्षभं केसरिणेव गोकुलम् ॥ ८-९९-३ (५११०९)
कृत्वा दिमर्दं भृशमर्जुनेन

कर्णं हतं केसरिणेव नागम् ।
दृष्ट्वा शयानं युधि मद्रराज--
श्छिन्नध्वजेनापययौ रथेन ॥ ८-९९-४ (५९९१०)
कर्णे हते पार्थभयात्प्रदुद्रुवु--
र्वैकर्तने धार्तराष्ट्राः सशल्याः ।
अवेक्षमाणा मुहुरर्जुनस्य
केतुं महान्तं यशसा ज्वलन्तम् ॥ ८-९९-५ (५९९११)
शल्यस्तु कर्णार्जुनयोर्विमर्दे
बलानि दृष्ट्वा मृदितध्वजानि ।
ययौ स तेनैव रथेन तूर्णं
हेलीकृतः सृञ्जयसोमकैश्च ॥ ८-९९-६ (५९९१२)
निपातितस्यन्दनवाजिनागं
बलं च दृष्ट्वा हतसूतपुत्रम् ।
भीमस्तु भीमेन तदा स्वरेण
समुन्नदद्रोदसी कम्पयंश्च। ८-९९-७ (५९९१३)
आस्फोटयन्नृत्यति वल्गते च
हते कर्णे त्रासयन्धार्तराष्ट्रान् ।
तदा राजन्सृञ्जयाः सोमकाश्च
शङ्खान्दध्मुः सस्वजुश्चापि सर्वे ॥ ८-९९-८ (५९९१४)
परस्परं क्षत्रिया हृष्टरूपाः
सूतात्मजे वै निहते तदानीम् ।
दुर्योधनोऽश्रुप्रतिपूर्णनेत्रो
दीनो मुहुर्निश्वसन्नार्तरूपः ॥ ८-९९-९ (५९९१५)
मद्राधिपश्चापि विमूढचेता--
स्तूर्णं ध्वजेनापहृतेन तेन ।
रथेन दुर्योधनमेत्य तूर्णं
पश्यन्सुदुःखात्तमुवाच राजन् ॥ ८-९९-१० (५९९१६)
विशीर्णनागाश्वरथप्रवीरं
बलं त्वदीयं यमराष्ट्रकल्पम् ।
अन्योन्यमासाद्य हतैः शयानै--
र्नराश्वनागैर्गिरिकूटकल्पैः ॥ ८-९९-११ (५९९१७)
नैतादृशं भारत युद्धमासी--
द्यथा हि कर्णार्जुनयोर्बभूव ।
ग्रस्तौ हि कर्णेन समेत्य कृष्णा--
वन्ये हि सर्वे तव शात्रवेयाः ॥ ८-९९-१२ (५९९१८)
दैवं तु यत्तत्स्ववशे प्रवृत्तं

तत्पाण्डवान्पाति निहन्ति चास्मान् ।
तवार्थसिद्ध्यर्थकरा हि सर्वे
प्रसह्य वीरा निहता द्विषद्भिः ॥ ८-९९-१३ (५९९१९)
कुबेरवैवस्वतवासवानां
तुल्यप्रभावा वरुणस्य चापि ।
वीर्येण शौर्येण पराक्रमेण
तैश्चापि युक्ता विमलैर्गुणौघैः ॥ ८-९९-१४ (५९९२०)
अवध्यकल्पा निहता नरेन्द्रा--
स्तवार्थकामा युधि पाण्डवेयैः ।
तन्मा शुचो भारत दिष्टमेत--
त्पर्यायसिद्धिर्न तु नित्यसिद्धिः ॥ ८-९९-१५ (५९९२१)
एतद्वचो मद्रपतेर्निशम्य
स्वं चाविनीतं मनसा विचिन्त्य ।
दुर्योधनोऽश्रुप्रतिपूर्णनेत्रो
मुहुर्मुहुर्निश्वसन्नार्तरूपः ॥ ८-९९-१६ (५९९२२)
क़तद्ध्यानमूकं कृपणं भृशार्त--
मार्तायनिर्दीनमुवाच राजन् ।
पश्येदमुग्रैर्नरवाजिनागै--
रायोधनं वीर हतैः सुपूर्णम् ॥ ८-९९-१७ (५९९२३)
महीधराभैः पतितैश्च नागैः
सकृत्प्रयत्नैः शरभिन्नगात्रैः ।
प्रविह्वलद्भिश्च गतासुभिश्च
प्रध्वस्तवर्मायुधसर्वयोधैः ॥ ८-९९-१८ (५९९२४)
वज्रापविद्धैरिव चाचलौघै--
र्विभिन्नपाषाणमृगद्रुमौघैः ।
प्रविद्धघण्टाङ्कुशतोमरध्वजैः
सहेमजालै रुधिरौघसम्प्लवैः ॥ ८-९९-१९ (५९९२५)
शरावनुन्नैः पतितैस्तुरङ्गै--
स्तनद्भिरार्तैः क्षतजं वमद्भिः ।
दीनैस्त्रसद्भिः परिवृत्तनेत्रै--
र्मही पतद्भिः कृपणा वभूव ॥ ८-९९-२० (५९९२६)
तथाऽपविद्धैर्गजवाजियूथै--
र्मन्दासुभिश्चापि गतासुभिश्च ।
रथैश्च नागैस्तुरगैश्च नुन्नै--
र्मही महावैतरणीव भाति ॥ ८-९९-२१ (५९९२७)
गजैर्निकृत्तापरहस्तगात्रै--

रुद्वेपमानैः पतितैः पृथिव्याम् ।
रथर्षभैर्नागवराश्वयोधैः
पदातिभिश्चाभिमुखैः परैर्हतैः ॥ ८-९१-२२ (५११२८)
विशीर्णवर्माभरणाम्बरायुधै--
र्युता प्रशान्तैरिव पावकैर्मही ।
शरप्रहाराभिहतैर्महाबलै--
रवेक्षमाणैः पतितैः समन्ततः ॥ ८-९१-२३ (५११२९)
प्रनष्टसंज्ञैः पुनराश्वसद्भि--
र्मही बभौ कुम्भगतैरिवाग्निभिः ।
रत्नैश्च्युतैर्भूरतिदीप्तिमद्भि--
र्नक्तं ग्रहैर्द्यौर्विमलैर्विभाति ॥ ८-९१-२४ (५११३०)
शरास्तु कर्णार्जुनबाहुमुक्ता
विदार्य नागांश्च मनुष्यदेहान् ।
प्राणान्निरस्याशु महीं प्रतीयु--
र्महोरगा वासमिवाभिनम्राः ॥ ८-९१-२५ (५११३१)
हतैर्मनुष्यैश्च गजैश्च सङ्ख्ये
शरावभिन्नै रुधिरप्रदिग्धैः ।
धनञ्जयस्याधिरथेश्च मार्गे
हतैरगम्या वसुधाऽतिदुर्गा ॥ ८-९१-२६ (५११३२)
रथैर्महेषून्मथितैः सुकल्पितैः
सनागयोधाश्ववरायुधध्वजैः
विशीर्णयोक्त्रैर्विनिकीर्णबन्धनै--
र्निकृत्तचक्राक्षयुगत्रिवेणुभिः ॥ ८-९१-२७ (५११३३)
विमुक्तयोक्त्रैश्च रथैरुपस्करैः
कृताभिषङ्गैर्विनिबद्धकूबरैः ।
प्रभग्ननीडैर्मणिहेमभूषितै--
र्वृता मही द्यौरिव शारदैर्घनैः ॥ ८-९१-२८ (५११३४)
निकृष्यमाणा जवनैस्तुरङ्गमै--
र्हतेश्वरा राजरथाः सुकल्पिताः ।
मनुष्यमातङ्गरथाश्वसादिषु
द्रुतं व्रजन्तो बहुधा विघूर्णिताः ॥ ८-९१-२९ (५११३५)
सहेमपृष्ठाः सपरश्वथायुधाः
शिताश्च शूला मुसलाः समुद्गराः ।
चित्राश्च खड्गा विमलाश्च कोशा
गजाश्च जाम्बूनदपट्टनद्धाः ॥ ८-९१-३० (५११३६)
चापानि जाम्बूनदभूषितानि

शराश्च कार्तस्वरचित्रपुङ्खाः ।
ऋष्ट्यश्च पीता विमलाश्च कोशाः
प्रासाश्च दण्डाः कनकप्रभासाः ॥ ८-९९-३१ (५११३७)
शुभ्राणि वालव्यजनानि शङ्खा--
श्छिन्नावरुद्धा विरुचः स्रजश्च ।
कुथाः पताकाम्बरवेष्टनानि
किरीटमाला मकुटाश्च शुभ्राः ॥ ८-९९-३२ (५११३८)
प्रकीर्णका विप्रतिकीर्णकाश्च
प्रधानमुख्यास्तरलाश्च हाराः ।
आपीडकेयूरवराङ्गदानि
ग्रैवेयनिष्काः ससुवर्णसूत्राः ॥ ८-९९-३३ (५११३९)
मण्युत्तमा वज्रसुवर्णयुक्ता
रत्नानि चोच्चावचमङ्गलानि ।
गात्राणि चाभान्ति सुखोचितानि
शिरांसि चेन्दुप्रतिमाननानि ॥ ८-९९-३४ (५११४०)
देहांश्च भोगांश्च परिच्छदांश्च
त्यक्त्वा मनोज्ञा निहताः सुखानि ।
स्वधर्मनिष्ठां महतीमवाप्य
प्राप्ताश्च लोकान्यशसा गतास्ते ॥ ८-९९-३५ (५११४१)
निवर्त दुर्योधन यान्तु सैनिका
व्रजस्व राजञ्शिबिराणि मानद ।
दिवाकरोऽप्येष विलम्बते प्रभो
पुनस्त्वमेवात्र नरेन्द्र कारणम् ॥ ८-९९-३६ (५११४२)
सञ्जय उवाच। ८-९९-३७क्ष् (५०६९)
एतावदुक्त्वा विरराम शल्यो
दुर्योधनं चैव निवर्तयित्वा ।
युद्धाय राजन्विनिविष्टबुद्धि--
र्हा कर्ण हा कर्ण इति ब्रुवाणम् ॥ ८-९९-३७ (५११४३)
तं द्रोणपुत्रप्रमुखा नरेन्द्राः
सर्वे समाश्वास्य ततः प्रजग्मुः ।
निरीक्षमाणा ध्वजमर्जुनस्य
रथं च दिव्यं यशसा ज्वलन्तम् ॥ ८-९९-३८ (५११४४)
नराश्वमातङ्गशरीरजेन
रक्तेन सिक्तां रुधिरेण भूमिम् ।
रक्ताम्बरस्रक्तपनीययोगा--
न्नारीं प्रकाशामिव सर्वरम्याम् ॥ ८-९९-३९ (५११४५)

प्रच्छन्नरूपां रुधिरेण राज
न्रौद्रे मुहूर्तेऽतिविराजमाने ।
नैवावतस्थुः कुरवः समीक्ष्य
प्रव्राजिता नरदेवा यथाऽक्षैः ॥ ८-९९-४० (५१९४६)
वधेन कर्णस्य सुदुःखितास्ते
हा कर्ण हा कर्ण इति ब्रुवाणाः ।
द्रुतं प्रजग्मुः शिबिराणि राज--
न्दिवाकरं रक्तमवेक्षमाणाः ॥ ८-९९-४१ (५१९४७)
गाण्डीवमुक्तैस्तु सुवर्णपुङ्खैः
शिलाशितैः शोणितदिग्धवाजैः ।
शरैश्चिताङ्गोऽपि रराज कर्णो
हतोऽपि दीप्तांशुरिवांशुजालैः ॥ ८-९९-४२ (५१९४८)
कर्णस्य देहं रुधिराम्बुसिक्तं
पुत्रानकुम्पी भगवान्विवस्वान् ।
स्पृष्ट्वा कराग्रैः क्षतजानुरूपैः
स्नातुं तदाऽगादपरं समुद्रम् ॥ ८-९९-४३ (५१९४९)
इतीव सञ्चिन्त्य सुरर्षभाश्च
सम्प्रस्थितास्ते तु यथानिकेतम् ।
सञ्चिन्त्य सर्वा जनता विसस्रु--
र्यथासुखं खे च महीतले च ॥ ८-९९-४४ (५१९५०)
तदद्भुतं प्राणभृतां भयङ्करं
निशाम्य युद्धं कुरुवीरमुख्ययोः ।
समाचितौ कर्णशरैश्च परन्तपौ
तथैव संरेजतुरच्युतार्जुनौ ॥ ८-९९-४५ (५१९५१)
तमो निहत्याभ्युदितौ यथाऽमलौ
शशाङ्कसूर्याविव रश्मिमालिनौ ।
विहाय तान्बाणगणान्महाबलौ
सुहृद्वृतावप्रतिमानविक्रमौ ॥ ८-९९-४६ (५१९५२)
सुखप्रविष्टौ सुखदौ विरेजतुः
सदस्यचिन्त्याविव विष्णुवासवौ ।
सदेवगन्धर्वमनुष्यचारणै--
र्महर्षिभिर्यक्षमहोरगैरपि ।
जयाभिवृद्ध्या परयाऽभिपूजितौ
निहत्य कर्णं परमाहवे तदा ॥ ८-९९-४७ (५१९५३)
यथानुरूपं प्रतिपूज्य तानथ
प्रशस्यमानावतुलैश्च कर्मभिः ।

ननन्दतुश्चैव सुहृद्भिरावृतौ
बलं निहत्येव सुरेशकेशवौ ॥ ॥ ८-९९-४८ (५९९५४)

इति श्रीमन्महाभारते कर्णपर्वणि एकोनशततमोऽध्यायः ॥ ९९ ॥
Mahabharata - Karna Parva - Chapter Text

८-९९-० (५९९५५)
श्धृष्टराष्ट्र उवाच। ८-९९-०क्ष् (५०७०)
तस्मिंस्तु कर्णार्जुनयोर्विमर्दे
दग्धस्य रौद्रेऽहनि विद्रुतस्य ।
बभूव कुरुसृञ्जयानां
बलस्य बाणोन्मथितस्य कीदृक् ॥ ८-९९-१ (५९९५६)
सञ्जय उवाच। ८-९९-२क्ष् (५०७१)
शृणु राजन्नवहितो यथा वृत्तो महाक्षयः ।
घोरो मनुष्यदेहानामाजौ च गजवाजिनाम् ॥ ८-९९-२ (५९९५७)
यत्र कर्णे हते पार्थः सिंहनादमथाकरोत् ।
तदा तव सुतान्राजन्नाविवेश महद्भयम् ॥ ८-९९-३ (५९९५८)
न सन्धातुमनीकानि न चैवाशु पराक्रमे ।
आसीद्बुद्धिर्हते कर्णे तव योधस्य कर्हिचित् ॥ ८-९९-४ (५९९५९)
वणिजो नावि भिन्नायामगाधे विप्लुवे यथा ।
अपारे पारमिच्छन्तो हते द्वीपे किरीटिना ॥ ८-९९-५ (५९९६०)
सूतपुत्रे हते राजन्वित्रस्ताः शस्त्रविक्षताः ।
अनाथा नाथमिच्छन्तो मृगाः सिंहैरिवार्दिताः ॥ ८-९९-६ (५९९६१)
भग्नशृङ्गा वृषा यद्वद्भग्नदंष्ट्रा इवोरगाः ।
प्रत्यपायाम सायाह्ने निर्जिताः सव्यसाचिना ॥ ८-९९-७ (५९९६२)
हतप्रवीरा विध्वस्ता निकृत्ता निशितैः शरैः ।
सूतपुत्रे हते राजन्पुत्रास्ते दुद्रुवुर्भयात् ॥ ८-९९-८ (५९९६३)
विस्रस्तयन्त्रकवचाः कान्दिग्भूता विचेतसः ।
अन्योन्यमवमृद्नन्तो वीक्षमाणा भयार्दिताः ॥ ८-९९-९ (५९९६४)
मामेव नूनं बीभत्सुर्मामेव च वृकोदरः ।
अभियातीति मन्वानाः पेतुर्मम्लुश्च सम्भ्रमात् ॥ ८-९९-१० (५९९६५)
हयानन्ये गजानन्ये रथानन्ये महारथाः ।
आरुह्य जवसम्पन्नाः पदातीन्प्रजहुर्भयात् ॥ ८-९९-११ (५९९६६)
कुञ्जरैः स्यन्दनाः क्षुण्णाः सादिनश्च महारथैः ।
पदातिसङ्घाश्चाश्वौघैः पलायद्भिर्भयार्दितैः ॥ ८-९९-१२ (५९९६७)
व्यालतस्करसङ्कीर्णे सार्थहीना यथा वने ।

सूतपुत्रे हते राजंस्तव योधास्तथाऽभवन् ॥ ८-९९-१३ (५१९६८)
हतारोहा यथा नागाश्छिन्नहस्ता यथा नराः ।
सर्वे पार्थमयं लोकं सम्पश्यन्तो भयार्दिताः ॥ ८-९९-१४ (५१९६९)
सम्प्रेक्ष्य द्रवतः सर्वान्भीमसेनभयार्दितान् ।
दुर्योधनोऽथ स्वं सूतं हाहाकृत्वेदमब्रवीत् ॥ ८-९९-१५ (५१९७०)
नातिक्रमेच्च मां पार्थो धनुष्पाणिमवस्थितम् ।
जघने सर्वसैन्यानां शनैरश्वान्प्रचोदय ॥ ८-९९-१६ (५१९७१)
युध्यमानं हि कौन्तेयं हनिष्यामि न संशयः ।
नोत्सहेन्मामतिक्रान्तुं वेलामिव महोदधिः ॥ ८-९९-१७ (५१९७२)
अद्यार्जुनं सगोविन्दं मानिनं च वृकोदरम् ।
अन्याञ्शिष्टांस्तथा शत्रून्कर्णस्यानृण्यमाप्नुयाम् ॥ ८-९९-१८ (५१९७३)
तच्छ्रुत्वा कुरुराजस्य शूरार्यसदृशं वचः ।
सूतो हेमपरिच्छन्नाञ्शनैरश्वानचोदयत् ॥ ८-९९-१९ (५१९७४)
रथाश्वनागहीनास्तु पादातास्तव मारिष ।
पञ्चविंशतिसाहस्रा युद्धायैव व्यवस्थिताः ॥ ८-९९-२० (५१९७५)
तान्भीमसेनः सङ्क्रुद्धो धृष्टद्युम्नश्च पार्षतः ।
बलेन चतुरङ्गेण संवृत्याजघ्नतुः शरैः ॥ ८-९९-२१ (५१९७६)
प्रत्ययुध्यन्त समरे भीमसेनं सपार्षतम् ।
पार्थपार्षतयोश्चान्ये जगृहुस्तत्र नामनी ॥ ८-९९-२२ (५१९७७)
अक्रुध्यत रणे भीमस्तैस्तदा पर्यवस्थितैः ।
सोऽवतीर्य रथात्तूर्णं गदापाणिरयुध्यत ॥ ८-९९-२३ (५१९७८)
न तान्रथस्थो भूमिष्ठान्धर्मापेक्षी वृकोदरः ।
योधयामास कौन्तेयो भुजवीर्यव्यपाश्रयः ॥ ८-९९-२४ (५१९७९)
जातरूपपरिच्छन्नां प्रगृह्य महतीं गदाम् ।
अवधीत्तावकान्सर्वान्दण्डपाणिरिवान्तकः ॥ ८-९९-२५ (५१९८०)
पदातिनोऽपि सन्त्यक्त्वा प्रियं जीवितमात्मनः ।
भीममभ्यद्रवन्सङ्ख्ये पतङ्गा ज्वलनं यथा ॥ ८-९९-२६ (५१९८१)
आसाद्य भीमसेनं तु संरब्धा युद्धदुर्मदाः ।
विनेशुः सहसा दृष्ट्वा भूतग्रामा इवान्तकम् ॥ ८-९९-२७ (५१९८२)
श्येनवद्विचरन्भीमो गदाहस्तो महाबलः ।
पञ्चविंशतिसाहस्रांस्तावकानवपोथयत् ॥ ८-९९-२८ (५१९८३)
हत्वा तत्पुरुषानीकं भीमः सत्यपराक्रमः ।
धृष्टद्युम्नं पुरस्कृत्य तस्थौ तत्र महाबलः ॥ ८-९९-२९ (५१९८४)
धनञ्जयो रथानीकमभ्यवर्तत वीर्यवान् ।
माद्रीपुत्रौ तु शकुनिं सात्यकिश्च महारथः ।
जवेनाभ्यपतन्हृष्टा घ्नन्तो दौर्योधनं बलम् ॥ ८-९९-३० (५१९८५)

तस्याश्वसादीन्सुबहूंस्ते निहत्य शितैः शरैः ।
समभ्यधावंस्त्वरितास्तत्र युद्धमभून्महत् ॥ ८-९९-३१ (५९९८६)
धनञ्जयोऽपि चाभ्येत्य रथानीकं तव प्रभो ।
विश्रुतं त्रिषु लोकेषु गाण्डीवं विक्षिपन्धनुः ॥ ८-९९-३२ (५९९८७)
कृष्णसारथिमायान्तं दृष्ट्वा श्वेतहयं रथम् ।
अर्जुनं चापि योद्धारं त्वदीयाः प्राद्रवन्भयात् ॥ ८-९९-३३ (५९९८८)
विप्रहीणरथाश्चैव शरैश्च परिकर्शिताः ।
पञ्चविंशतिसाहस्राः कालमार्छन्पदातयः ॥ ८-९९-३४ (५९९८९)
हत्वा तान्पुरुषव्याघ्रः पाञ्चालानां महारथः ।
पुत्राः पाञ्चालराजस्य धृष्टद्युम्नो महामनाः ॥ ८-९९-३५ (५९९९०)
भीमसेनं पुरस्कृत्य नचिरात्प्रत्यदृश्यत ।
महाधनुर्धरः श्रीमानमित्रगणतापनः ॥ ८-९९-३६ (५९९९१)
पारावतसवर्णाश्वं कोविदारमयध्वजम् ।
धृष्टद्युम्नं रणे दृष्ट्वा त्वदीयाः प्राद्रवन्भयात् ॥ ८-९९-३७ (५९९९२)
गान्धारराजं शीघ्रास्त्रमनुसृत्य यशस्विनौ ।
नचिरात्प्रत्यदृश्येतां माद्रीपुत्रौ ससात्यकी ॥ ८-९९-३८ (५९९९३)
चेकितानः शिखण्डी च द्रौपदेयाश्च मारिष ।
हत्वा त्वदीयं सुमहत्सैन्यं शङ्खांस्तथाऽधमन् ॥ ८-९९-३९ (५९९९४)
ते सर्वे तावकान्प्रेक्ष्य द्रवतोऽपि पराङ्मुखान् ।
अभ्यवर्तन्त संरब्धान्वृषाञ्जित्वा यथा वृषाः ॥ ८-९९-४० (५९९९५)
सेनावशेषं तं दृष्ट्वा तव सैन्यस्य पाण्डवः ।
व्यवस्थितः सव्यसाची चुक्रोध बलवान्नृप ॥ ८-९९-४१ (५९९९६)
धनञ्जयो रथानीकमभ्यवर्तत वीर्यवान् ।
विश्रुतं त्रिषु लोकेषु व्याक्षिपद्गाण्डिवं धनुः ॥ ८-९९-४२ (५९९९७)
तत एनाञ्शरव्रातैः सहसा समवाकिरत् ।
तमसा संवृतेनाथ न स्म किञ्चिद्व्यदृश्यत ॥ ८-९९-४३ (५९९९८)
अन्धकारीकृते लोके रजोभूते महीतले ।
योधाः सर्वे महाराज तावकाः प्राद्रावन्भयात् ॥ ८-९९-४४ (५९९९९)
सम्भज्यमाने सैन्ये तु कुरुराजो विशाम्पते ।
परानभिमुखांश्चैव सुतस्ते समुपाद्रवत् ॥ ८-९९-४५ (६००००)
ततो दुर्योधनः सर्वानाजुहावाथ पाण्डवान् ।
युद्धाय भरतश्रेष्ठ देवानिव पुरा बलिः ॥ ८-९९-४६ (६०००१)
त एनमभिगर्जन्तः सहिताः समुपाद्रवन् ।
नानाशस्त्रभृतः क्रुद्धा भर्त्सयन्तो मुहुर्मुहुः ॥ ८-९९-४७ (६०००२)
दुर्योधनोऽप्यसम्भ्रान्तस्तान्रणे निशितैः शरैः ।
तत्रावधीत्ततः क्रुद्धः शतशोऽथ सहस्रशः ॥ ८-९९-४८ (६०००३)

तत्सैन्यं पाण्डवेयानां योधयामास सर्वतः ॥ ८-९९-४९ (६०००४)
तत्राद्भुतमपश्याम तव पुत्रस्य पौरुषम् ।
यदेकः सहितान्सर्वान्रणेऽयुध्यत पाण्डवान् ।
ततोऽपश्यन्महात्मा स स्वसैन्यं भृशदुःखितम् ॥ ८-९९-५० (६०००५)
ततोऽवस्थाप्य राजेन्द्र कृतबुद्धिस्तवात्मजः ।
हर्षयन्निव तान्योधानिदं वचनमब्रवीत् ॥ ८-९९-५१ (६०००६)
न तं देशं प्रपश्यामि यत्र याता भयार्दिताः ।
गतानां यत्र वै मोक्षः पाण्डवात्किं गतेन वः ॥ ८-९९-५२ (६०००७)
अल्पं च बलमेतेषां कृष्णौ च भृशविक्षतौ ।
अद्य सर्वान्हनिष्यामिध्रुवो हि विजयो भवेत् ॥ ८-९९-५३ (६०००८)
विप्रयातांस्तु वो भिन्नान्पाण्डवाः कृतकिल्विषान् ।
अनुसृत्य वधिष्यन्ति श्रेयान्नः समरे वधः ॥ ८-९९-५४ (६०००९)
सुखं साङ्ग्रामिको मृत्युः क्षत्रधर्मेण युध्यताम् ।
मृतो दुःखं न जानीते प्रेत्य चानन्त्यमश्नुते ॥ ८-९९-५५ (६००१०)
शृणुध्वं क्षत्रियाः सर्वे यावन्तः स्थ समागताः ।
यदा शूरं च भीरुं च मारयत्यन्तको मयः ॥ ८-९९-५६ (६००११)
को न मूढो न युध्येत मादृशः क्षत्रियव्रतः ।
द्विषतो भीमसेनस्य क्रुद्धस्य वशमेष्यथा ॥ ८-९९-५७ (६००१२)
पितामहैराचरितं न धर्मं हातुमर्हथ ।
न ह्यधर्मोऽस्ति पापीयान्क्षत्रियस्य पलायनात् ॥ ८-९९-५८ (६००१३)
न युद्धधर्माच्छ्रेयो हि पन्थाः स्वर्गस्य कौरवाः ।
अचिरेण हता लोकान्सद्यो योधाः समश्नुत ॥ ८-९९-५९ (६००१४)
सञ्जय उवाच। ८-९९-६०क्ष् (५०७२)
एवं ब्रुवति पुत्रे ते सैनिका भृशविक्षताः ।
अनवेक्ष्यैव तद्वाक्यं प्राद्रवन्सर्वतो दिशः ॥ ८-९९-६० (६००१५)
सञ्जय उवाच। ८-९९-६१क्ष् (५०७३)
८-९९-६१ (६००१६)
दृष्ट्वा तु सैन्यं परिवृत्यमानं
पुत्रेण ते मद्रपतिस्तदानीम् ।
सन्त्रस्तरूपः परिमूढचेता
दुर्योधनं वाक्यमिदं बभाषेघ ॥
Mahabharata - Karna Parva - Chapter Footnotes

८-९९-२ प्रहृष्टाः अर्जुनादयः । वित्रस्ताः भीरवः। विषण्णाः
शत्रवः। विस्मिताः प्रेक्षकाः ॥
८-९९-क़ अत्र झ पाठे ६१ श्लोका अधिका दृश्यन्ते ८-९९-९९

एकोनशततमोऽध्यायः ॥

---

कर्नपर्व-अध्यय१००
॥ श्रीः ॥
८.१००. अध्यायः १००

Mahabharata - Karna Parva - Chapter Topics
कर्णवधानन्तरं कृष्णार्जुनयोर्युधिष्ठिरसमीपगमनम् ॥ १ ॥

Mahabharata - Karna Parva - Chapter Text

८-१००-० (६००१७)
सञ्जय उवाच। ८-१००-०क्ष् (५०७४)
शरसङ्कृत्तवर्माणं रुधिरोक्षितवक्षसम् ।
गतासुमपि राधेयं नैव लक्ष्मीर्विमुञ्चति ॥ ८-१००-१ (६००१८)
तप्तजाम्बूनदनिभं बालार्कसदृशद्युतिम् ।
जीवन्तमिव तं शूरं सर्वभूतानि मेनिरे ॥ ८-१००-२ (६००१९)
हतस्यापि महाराज सूतपुत्रस्य संयुगे ।
वित्रेसुः सर्वतो योधाः सिंहस्येवेतरे मृगाः ॥ ८-१००-३ (६००२०)
हतोऽपि पुरुषव्याघ्रो व्याहरन्निव लक्ष्यते ।
नाभवद्विकृतिः काचिन्मृतस्यापि महात्मनः ॥ ८-१००-४ (६००२१)
चारुवेषधरं राजंश्चारुमौलिशिरोधरम् ।
तन्मुखं सूतपुत्रस्य पूर्णचन्द्रसमद्युति ॥ ८-१००-५ (६००२२)
कनकोत्तमसह्काशो ज्वलन्निव विभावसुः ।
स शान्तः पुरुषव्याघ्रः पार्थसायकवारिणा ॥ ८-१००-६ (६००२३)
यथाऽग्निर्ज्वलनो दीप्तो जलमासाद्य शाम्यति ।
कर्णाग्निः समरे तद्वत्पार्थमेघेन शामितः ॥ ८-१००-७ (६००२४)
आहृत्य स यशो दीप्तं सुयुद्धेनात्मनो भुवि ।
सपुत्रः समरे कर्णः प्रशान्तः पार्थतेजसा ॥ ८-१००-८ (६००२५)
प्रताप्य पाण्डवान्सर्वान्पाञ्चालानस्त्रतेजसा ।
नानाभरणवान्रजंस्तप्तजाम्बूनदप्रभः ॥ ८-१००-९ (६००२६)
वर्षित्वा शरवर्षाणि प्रताप्य रिपुवाहिनीम् ।
श्रीमानिव सहस्रांशुर्ज्वलन्सर्वान्प्रताप्य च ।
हतो वैकर्तनः कर्णः पादपोऽङ्कुरवानिव ॥ ८-१००-१० (६००२७)
ददानीत्येव यः प्रादान्न नास्तीत्यर्थितोऽवदत् ।
सद्भिः सदा सत्पुरुषः स हतो द्वैरथे वृषा ॥ ८-१००-११ (६००२८)

यस्य ब्राह्मणसात्सर्वं वित्तमासीन्महात्मनः ।
नादेयं ब्राह्मणेष्वासीद्यस्य स्वमपि जीवितम् ॥ ८-१००-१२ (६००२९)
स दातॄणां प्रियो राजन्दाता चैव मनोरथान् ।
स पार्थास्त्रविनिर्दग्धो गतः परमिकां गतिम् ॥ ८-१००-१३ (६००३०)
यमाश्रित्याकरोद्वैरं सुतस्ते स गतो दिवम् ।
आदाय तव पुत्राणां जयाशां सर्म वर्म च ॥ ८-१००-१४ (६००३१)
हते च कर्णे सरितो न सस्रु--
र्जगाम चास्तं कलुषो दिवाकरः ।
श्वेतो ग्रहश्च ज्वलितार्कवर्णो
यमस्य पुत्रोऽभ्युदितः स तिर्यक् ॥ ८-१००-१५ (६००३२)
नभश्चचालाथ ननाद चोर्वी
ववुश्च वाताः परुषाश्च घोराः ।
दिशो बभूवुर्ज्वलिताः सधूमा
महार्णवाः सस्वनुश्चुक्षुभुश्च ॥ ८-१००-१६ (६००३३)
सकाननाश्चाद्रिवराश्चकम्पिरे
प्रविव्यथुर्भूतगणाश्च मारिष ।
बृहस्पतिः सम्परिवार्य रोहिणीं
बभूव चन्द्रार्कसमो विशाम्पते ॥ ८-१००-१७ (६००३४)
हते कर्णे न दिशो विप्रचाराः
सचन्द्रार्का द्यौर्विचचाल भूमिः ।
पपात चोल्का ज्वलनप्रभा च
निशाचरा हृष्टतरा बभूवुः ॥ ८-१००-१८ (६००३५)
शशिप्रकाशाननमर्जुनो यदा
जहार कर्णस्य शिरः शरेण ।
ततोऽन्तरिक्षे सहसैव शब्दो
बभूव हाहेति सुरैर्विमुक्तः ॥ ८-१००-१९ (६००३६)
सदेवगन्धर्वमनुष्यपूजितं
निहत्य कर्णं रिपुमाहवेऽर्जुनः ।
रराज राजन्परमेण तेजसा
यथा पुरा वृत्रवधे शतक्रतुः ॥ ८-१००-२० (६००३७)
पताकिना भीमनिनादकेतुना
रथेन शङ्खस्फटिकावभासिना ।
महेन्द्रवाहप्रतिमेन तावुभौ
महेन्द्रवीर्यप्रतिमानपौरुषौ ॥ ८-१००-२१ (६००३८)
सुवर्णमुक्तामणिवज्रविद्रुमै--
रलङ्कृतेनाप्रतिमेन रंहसा ।

नरोत्तमौ यादवपाण्डुनन्दनौ
दिवाकरौ दीप्तहुताशनाविव ।
रणाजिरे वीतभयौ विरेजतुः
समानयोगाविव विष्णुवासवैः ॥ ८-१००-२२ (६००३९)
ततो धनुर्ज्यातलनेमिनिस्वनैः
प्रसह्य कृत्वा च रिपून्गतप्रभान् ।
स साधयित्वा च रिपूञ्शरौघैः
कपिध्वजः पक्षिवरध्वजश्च ।
प्रदध्मतुः शङ्खवरौ सुघोषौ
मनांस्यरीणामुपतापयन्तौ ॥ ८-१००-२३ (६००४०)
सुवर्णजालावततौ महास्वनौ
हिमावदातौ परिगृह्य पाणिभिः ।
चुचुम्बतुः शङ्खवरौ नृणां वरौ
विघोषयन्तौ विजयं जगत्त्रये ॥ ८-१००-२४ (६००४१)
पाञ्चजन्यस्य निर्घोषो देवदत्तस्य चोभयोः ।
पृथिवीमन्तरिक्षं च दिशश्च समपूरयत् ॥ ८-१००-२५ (६००४२)
वित्रस्ताश्चाभवन्सर्वे कुरवो राजसत्तम ।
शूरयोः शङ्खशब्देन माधवस्यार्जुनस्य च ॥ ८-१००-२६ (६००४३)
तौ शङ्खशब्देन निनादयन्तौ
वनानि शैलान्सरितो गुहाश्च ।
वित्रासयन्तौ तव पुत्रसेनां
युधिष्ठिरं नन्दयितुं प्रयातौ ॥ ८-१००-२७ (६००४४)
ततः प्रजग्मुः कुरवो जवेन
श्रुत्वैव शङ्खस्वनमीर्यमाणम् ।
विहाय मद्राधिपतिं पतिं च
दुर्योधनं भारत भारतानाम् ॥ ८-१००-२८ (६००४५)
ततो रथेनाम्बुदबृन्दनादिना
शरद्वहर्मध्यदिवाकरत्विषा ।
धनञ्जयस्याधिरथेश्च विस्मिताः
प्रशंसमानाः प्रययुस्तदाऽर्जुनम् ॥ ८-१००-२९ (६००४६)
महाहवे तं बहुशोभमानं
धनञ्जयं योधगणैः समेताः ।
तावन्वमोदंश्च जनाः प्रकामं
प्रभाकरावभ्युदितौ यथैव ॥ ॥ ८-१००-३० (६००४७)

इति श्रीमन्महाभारते कर्णपर्वणि शततमोऽध्यायः ॥ १०० ॥

Mahabharata - Karna Parva - Chapter Footnotes

८-१००-१३ सदा स्त्रीणां प्रिय इति झ पाठः ॥
८-१००-१०० शततमोऽध्यायः ॥

---

कर्नपर्व-अध्यय१०१
॥ श्रीः ॥
८.१०१. अध्यायः १०१

Mahabharata - Karna Parva - Chapter Topics
कर्णवधानन्तरमर्जुनेन युधिष्ठिराभिवादनम् ॥ १ ॥
तेन कृष्णार्जुनप्रशंसनम् ॥ २ ॥
कृष्णयुधिष्ठिरसंवादः ॥ ३ ॥

Mahabharata - Karna Parva - Chapter Text

८-१०१-० (६००४८)
सञ्जय उवाच। ८-१०१-०क्ष् (५०७५)
हते वैकर्तने कर्णे कुरवो भयपीडिताः ।
वीक्षमाणा दिशः सर्वाः पलायन्त सहस्रशः ॥ ८-१०१-१ (६००४९)
रावणं निहतं दृष्ट्वा राक्षसा राघवेण वा ।
दिशो भीता द्रवन्नेव तावका भयपीडिताः ॥ ८-१०१-२ (६००५०)
ततो महारवं चक्रुर्योधा राजन्समन्ततः ।
वार्यमाणा भृशोद्विग्नास्तव पुत्रेण भारत ॥ ८-१०१-३ (६००५१)
तेषां तु मतमाज्ञाय पुत्रस्ते भरतर्षभ ।
अवहारं ततश्चक्रे शल्यस्यानुमतेन च ॥ ८-१०१-४ (६००५२)
कृतवर्मा रणे तूर्णं वृतो भारत तावकैः ।
नारायणावशिष्टैश्च शिबिरायैव दुद्रुवे ॥ ८-१०१-५ (६००५३)
अश्वत्थामा ततः शूरो विनिश्वस्य मुहुर्मुहुः ।
पाण्डवानां जयं दृष्ट्वा शिबिरायैव दुद्रुवे ॥ ८-१०१-६ (६००५४)
कृपः शारद्वतो राजन्नागानीकेन भारत ।
महता मेघकल्पेन शिबिरायैव दुद्रुवे ॥ ८-१०१-७ (६००५५)
गान्धाराणां सहस्रेण शकुनिः परिवारितः ।
सुशर्मा च ययौ राजन्वीक्षमाणो भयार्दितः ॥ ८-१०१-८ (६००५६)
दुर्योधनोऽपि स ययौ हृतसर्वस्व आतुरः ।
ज्ञातिशोकसमापन्नश्चिन्तयित्वा मुहुर्मुहुः ॥ ८-१०१-९ (६००५७)

छिन्नध्वजेन शल्यस्तु रथेन रथिनां वरः ।
प्रययौ शिबिरायैव वीक्षमाणो दिशो दश ॥ ८-१०१-१० (६००५८)
ततोऽपरे सुबहुशो भारतानां महारथाः ।
व्यद्रवन्त दिशो भीता भयविह्वलचेतसः ॥ ८-१०१-११ (६००५९)
अश्रूपूर्णा भयोद्विग्ना वेपमाना भयातुराः ।
कुरवः प्राद्रवन्सर्वे दृष्ट्वा कर्णं निपातितम् ॥ ८-१०१-१२ (६००६०)
प्रशंसन्तोऽर्जुनं केचित्केचित्कर्णं महारथाः ।
प्राद्रवन्त रणे भीताः कुरवः कुरुसत्तम ॥ ८-१०१-१३ (६००६१)
तेषां योधसहस्राणां तावकानां महामृधे ।
नासीत्तत्र पुमान्कश्चिद्यस्तु युद्धे मनो दधे ॥ ८-१०१-१४ (६००६२)
कर्णे हते महाराज निराशाः कुरवोऽभवन् ।
जीवनेषु च राज्येषु दारेषु च धनेषु च ॥ ८-१०१-१५ (६००६३)
तान्समानीय पुत्रस्ते यत्नेन महता विभो ।
निवेशाय मनो दध्रे दुःखशोकसमन्वितः ॥ ८-१०१-१६ (६००६४)
तस्याज्ञां शिरसा दीनाः प्रतिगृह्य विशाम्पते ।
विषण्णमनसो भीत्या न्यविशन्त महारथाः ॥ ८-१०१-१७ (६००६५)
चिन्तयन्तो वधं घोरं सूतपुत्रस्य संयुगे ।
अर्जुनस्य जयं युद्धे चिन्तयानाः पुनःपुनः ॥ ८-१०१-१८ (६००६६)
पाण्डवाश्च महेष्वासा न्यविशन्त परन्तपाः ।
प्रहृष्टमनसः सर्वे जित्वा शत्रुं महारथाः ॥ ८-१०१-१९ (६००६७)
ततो युधिष्ठिरं तत्र निविष्टं वै मुदान्वितम् ।
समेत्य सर्वे पाञ्चाला वर्धयन्तो यथाविधि ॥ ८-१०१-२० (६००६८)
अर्जुनस्तु रथात्तूर्णमवरुह्य महायशाः ।
धर्मराजस्य चरणौ पीडयामास हृष्टवत् ॥ ८-१०१-२१ (६००६९)
तमुत्थाप्य महाराज धर्मपुत्रः प्रतापवान् ।
सस्वजे भरतश्रेष्ठमुपजिघ्रन्नुपस्पृशन् ॥ ८-१०१-२२ (६००७०)
नकुलः सहदेवश्च पाण्डवश्च वृकोदरः ।
अभिवाद्य महाराजमस्वजन्त स्म फल्गुनम् ॥ ८-१०१-२३ (६००७१)
धृष्टद्युम्नः शिखण्डी च पाण्डवानां च ये रथाः ।
वर्धयन्ते स्म राजानं निहते सूतनन्दने ॥ ८-१०१-२४ (६००७२)
ततः कृष्णो महाराज सात्यकिश्चापि सात्वतः ।
वर्धयन्ते स्म राजानं निहते सूतनन्दने ॥ ८-१०१-२५ (६००७३)
वासुदेवश्च कौन्तेयं प्रणयादिदमब्रवीत् ।
अद्य राजन्हताः सर्वे धार्तराष्ट्राः सराजकाः ।
हते वैकर्तने कर्णे रथानां प्रवरे रथे ॥ ८-१०१-२६ (६००७४)
यदि लोकास्त्रयः सर्वे योधयेयुः सवासवाः ।

तथापि दुर्जयः सूतस्तव कोपात्तु सूदितः ॥ ८-१०१-२७ (६००७५)
एवमुक्तः प्रत्युवाच धर्मराजो जनार्दनम् ॥ ८-१०१-२८ (६००७६)
तव प्रसादाद्ग्रोविन्द हतः कर्णो महायशाः ।
पाण्डवाश्च जयं प्राप्या नाशिताश्चापि शत्रवः ॥ ८-१०१-२९ (६००७७)
त्वं हि शक्तो भयात्त्रातुं यस्य कस्यचिदाहवे ।
त्वमस्य जगतो गोप्ता पाण्डवानां च सर्वदा ॥ ८-१०१-३० (६००७८)
त्वां समासाद्य शक्रोऽपि मोदते दिवि नित्यशः ।
त्वं पाता पाण्डुपुत्राणां यथैव जगतस्तथा ॥ ८-१०१-३१ (६००७९)
अनाश्चर्यो जयस्तेषां भक्तिर्येषां त्वयि प्रभो ॥ ८-१०१-३२ (६००८०)
त्वया नाथेन गोविन्द नाथवन्तो वयं युधि ।
यथेन्द्रेण पुरा देवास्त्वया चापि जनार्दन ॥ ८-१०१-३३ (६००८१)
स्वप्स्याम्यद्य सुखं कृष्णनिद्रां लप्स्ये त्वहं क्षपाम् ।
विगतं हि भयं मेऽद्य त्वत्प्रसादान्न संशयः ॥ ८-१०१-३४ (६००८२)
एवमुक्तस्तु पार्थेन केशवः प्राह पाण्डवम् ।
निमित्तमात्रं हि वयं तवाप्यस्मिन्मुदागमे ॥ ८-१०१-३५ (६००८३)
यस्य ते भ्रातरः शूरा भीमसेनादयो नृप ।
सम्बन्धिनश्चेन्द्रवीर्याः पार्षतप्रमुखास्तथा ॥ ८-१०१-३६ (६००८४)
अर्हते च भवान्नित्यं प्रियं नित्यं च मद्धितम् ।
प्रियो हि मे त्वमेतेन वचनेन नरोत्तम ॥ ८-१०१-३७ (६००८५)
इत्युक्तो धर्मराजस्तु स्वरथं हेमभूपितम् ।
दन्तवर्णैर्हयैर्युक्तं कालवालैर्महीपतिः ॥ ८-१०१-३८ (६००८६)
आस्थाय पुरुषव्याघ्रः स्वबलेनापि संवृतः ।
प्रययौ बहुवृत्तान्तं द्रष्टुमायोधनं प्रति ॥ ८-१०१-३९ (६००८७)
सम्भाषमाणौ तौ वीर उभौ माधवपाण्डवौ ॥ ८-१०१-४० (६००८८)
स ददर्श रणे कर्णं शयानं पुरुषर्षभम् ।
गाण्डीवमुक्तैर्विशिखैः सर्वतः सन्निपीडितम् ॥ ८-१०१-४१ (६००८९)
सपुत्रं निहतं दृष्ट्वा कर्णं राजा युधिष्ठिरः ।
प्रशशंस नरव्याघ्रावुभौ माधवपाण्डवौ ॥ ८-१०१-४२ (६००९०)
अद्य राजाऽस्मि सर्वस्यां पृथिव्यां मधुसूदन ।
दिष्ट्या जयसि गोविन्द दिष्ट्याशत्रुर्निपातितः ॥ ८-१०१-४३ (६००९१)
एवं सुबहुशो राजन्प्रशशंस जनार्दनम् ।
अर्जुनं च कुरुश्रेष्ठो धर्मराजो युधिष्ठिरः ॥ ८-१०१-४४ (६००९२)
दृष्ट्वा च निहतं कर्णं स पुत्रं पार्थसायकैः ।
पुनर्जातमिवात्मानं मेने कुरुकुलोद्वहः ॥ ८-१०१-४५ (६००९३)
समेत्य च कुरुश्रेष्ठं कुन्तीपुत्रं युधिष्ठिरम् ।
वर्धयन्ति स्म राजानो हर्षयुक्ता महारथाः ॥ ८-१०१-४६ (६००९४)

सञ्जय उवाच। ८-१०१-४७क्ष् (५०७६)
एवमेष क्षयो वृत्तः सुमहाल्लोमहर्षणः ।
तव दुर्मन्त्रिते राजन्दिष्ट्या त्वमनुशोचसि ॥ ८-१०१-४७ (६००९५)
वैशम्पायन उवाच। ८-१०१-४८क्ष् (५०७७)
श्रुत्वैतदप्रियं राजा धृतराष्ट्रो महीपतिः ।
पपात भूमौ निश्चेष्टः कौरव्यः परमासनात् ।
तथा सत्यव्रता देवी गान्धारी दिव्यदर्शना ॥ ८-१०१-४८ (६००९६)
ततस्तूर्णं तु विदुरस्तं नृपं सञ्जयस्तथा ।
पर्याश्वासयतां चैतावुभावेव तु भूमिपम् ॥ ८-१०१-४९ (६००९७)
तथैवाश्वासयामासुर्गान्धारीं कुरुयोषितः ॥ ८-१०१-५० (६००९८)
स दैवं परमं मेने भवितव्यं च भारत ।
ताभ्यामाश्वासितो राजा तूष्णीमास्ते विशाम्पते ॥ ८-१०१-५१ (६००९९)
एवमाख्याय राज्ञे च सञ्जयो राजसत्तम ।
जगाम शिबिरं भूयो हते कर्णे महात्मनि ॥ ८-१०१-५२ (६०१००)
स दृष्ट्वा निहतं शल्यं राजानं च सुयोधनम् ।
शकुनिं सुबहून्राजन्सैनिकांश्च सहस्रशः ॥ ८-१०१-५३ (६०१०१)
तथैव पाण्डवीं सेनां निहतां प्रेक्ष्य सञ्जयः ।
सौप्तिके द्रौणिना राजन्हतवाजिनरद्विपाम् ॥ ८-१०१-५४ (६०१०२)
स हि दृष्ट्वा हतान्सर्वान्समन्ताद्युधि सञ्जयः ।
प्रयातो हास्तिनपुरं शोकार्तो भयविह्वलः ॥ ८-१०१-५५ (६०१०३)
हतेषु पुनरेतेषु प्रभूतगजवाजिषु ।
योधैश्च तैर्महाराज नानादेशसमुद्भवैः ॥ ८-१०१-५६ (६०१०४)
कुरुक्षेत्रं तु तत्सर्वं शून्यमासीद्विशाम्पते ।
निहतैः पाण्डवेयैश्च धार्तराष्ट्रैश्च संयुगे ॥ ८-१०१-५७ (६०१०५)
यथाहि विषयं वृत्तं धार्तराष्ट्रस्य संञ्जयः ।
निवेदयति तत्सर्वं यथावृत्तं यथाविधि ॥ ८-१०१-५८ (६०१०६)
एवं महायुद्धमिदं महात्मनो
धनञ्जयस्याधिरथेश्च यः पठेत् ।
स सम्यगिष्टस्य मखस्य यत्फलं
तदाप्नुयाद्यः शृणुयाच्च नित्यशः ॥ ८-१०१-५९ (६०१०७)
मखो हि विष्णुर्भगवान्सनातनो
वहन्ति यं चाप्यनिलेन्दुभानवः ।
अतोऽनसूयुः शृणुयात्पठेच्च यः
स सर्वलोकांश्च जयेत्सुखी भवेत् ॥ ॥ ८-१०१-६० (६०१०८)

इति श्रीमन्महाभारते शतसाहस्रिकायां संहितायां वैयासिक्यां

कर्णपर्वणि एकाधिकशततमोऽध्यायः ॥ १०१ ॥ ॥ कर्णपर्व
समाप्तम्॥ ८ ॥
अतः परं शल्यपर्व भविष्यति ।
तस्यायमाद्यः श्लोकः ॥ ८-१०१-१ (६०१०९)
जनमेजय उवाच। ८-१०१-२क्ष् (५०७८)
एवं निपातिते कर्णे समरे सव्यसाचिना ।
अल्पावशिष्टाः कुरवः किमकुर्वत वै द्विज ॥ ८-१०१-२ (६०११०)
इदं कर्णपर्व कुम्भघोणस्थेन TI.Ar कृष्णाचार्येण
टी ।आर्।व्यासाचार्येण च मुम्बय्यां निर्णयसागरमुद्रायन्त्रे
मुद्रापितम्। शकाब्दाः १८२९ सन १९०७.

---

.. shalyaparva 09 Kumbhaghonam Edition ..

## ॥ ९ शल्यपर्व ॥

९. शल्यपर्व

**शल्यपर्व-अध्यय००१**

**॥ श्रीः ॥**

**९.१. अध्यायः १**

Mahabharata - Shalya Parva - Chapter Topics

दुर्योधनेन शल्यस्य सैनापत्येऽभिषेचनपूर्वकं पुनर्युद्धाय
निर्याणम् ॥ १ ॥
सञ्जयाच्छल्यदुर्योधनादिवधश्रवणेन मूर्च्छितस्य
धृतराष्ट्रस्य विदुरेण समाश्वासनम् ॥ २ ॥

Mahabharata - Shalya Parva - Chapter Text

९-१-० (६०१११)
श्रीवेदव्यासाय नमः ॥ ९-१-०क्ष् (५०७९)
नारायणं नमस्कृत्य नरं चैव नरोत्तमम् ।
देवीं सरस्वतीं (व्यासं) चैव ततो जयमुदीरयेत् ॥ ९-१-१ (६०११२)
जनमेजय उवाच। ९-१-२क्ष् (५०८०)
एवं निपातिते कर्णे समरे सव्यसाचिना ।
अल्पावशिष्टाः कुरवः किमकुर्वत वै द्विज ॥ ९-१-२ (६०११३)
विदीर्यमाणं च बलं दृष्ट्वा राजा सुयोधनः ।
पाण्डवैः प्राप्तकालं च किं प्रापद्यत कौरवः ॥ ९-१-३ (६०११४)
एतदिच्छाम्यहं श्रोतुं तदाचक्ष्व द्विजोत्तम ।
न हि तृप्यामि पूर्वेषां शृण्वानश्चरितं महत् ॥ ९-१-४ (६०११५)
वैशम्पायन उवाच। ९-१-५क्ष् (५०८१)
ततः कर्णे हते राजन्धार्तराष्ट्रः सुयोधनः ।
भृशं शोकार्णवे मग्नो निराशः सर्वतोऽभवत् ॥ ९-१-५ (६०११६)
हाकर्ण हाकर्ण इति शोचमानो मुहुर्मुहुः ।
कृच्छ्रात्स्वशिबिरं प्रायाद्धतशिष्टैर्नृपैः सह ॥ ९-१-६ (६०११७)

स समाश्वास्यमानोऽपि हेतुभिः शास्त्रनिश्चितैः ।
राजन्विभूतिमिच्छद्भिः सूतपुत्रमनुस्मरन् ॥ ९-१-७ (६०११८)
स दैवं बलवन्मत्वा प्रभाते विमले सति ।
सङ्ग्रामे निश्चयं कृत्वा पुनर्युद्धाय निर्ययौ ॥ ९-१-८ (६०११९)
शल्यं सेनापतिं कृत्वा विधिवद्राजसत्तमम् ।
रणाय निर्ययौ राजा हतशिष्टैर्नृपैः सह ॥ ९-१-९ (६०१२०)
ततः सुतुमुलं युद्धं कुरुपाण्डवसेनयोः ।
बभूव भरतश्रेष्ठ देवासुररणोपमम् ॥ ९-१-१० (६०१२१)
ततः शल्यो महाराज कृत्वा कदनमाहवे ।
पाण्डुसैन्येऽथ मध्याह्ने धर्मराजेन पातितः ॥ ९-१-११ (६०१२२)
ततो दुर्योधनो राजा हतबन्धू रणाजिरात् ।
अपसृत्य ह्रदं घोरं विवेश रिपुजाद्भयात् ॥ ९-१-१२ (६०१२३)
अथापराह्णे तस्याह्नः परिवार्य महारथैः ।
ह्रदादाहूय युद्धाय भीमसेनेन पातितः ॥ ९-१-१३ (६०१२४)
तस्मिंस्तु निहते वीरे महेष्वासास्त्रयो रणे ।
कृतवर्मा कृपो द्रौणिर्जघ्नुः पाण्डवसैनिकान् ॥ ९-१-१४ (६०१२५)
ततः पूर्वाह्णसमये शिबिरादेत्य सञ्जयः ।
प्रविवेश पुरीं दीनो दुःखशोकसमन्वितः ॥ ९-१-१५ (६०१२६)
स प्रविश्य पुरीं सूतो भूजावुच्छ्रित्य दुःखितः ।
वेपमानस्ततो राज्ञः प्रविप्रेश निवेशनम् ॥ ९-१-१६ (६०१२७)
धावतश्चाप्यपश्यxxx तत्रत्यान्पुरुषर्षभान् ।
नष्टचित्तानिवोन्मत्ताञ्शोकेन भृशदुःखितान् ॥ ९-१-१७ (६०१२८)
दृष्ट्वैव च नराञ्शीघ्रं व्याजहारातिदुःखितः ।
अहो बत विपन्नोऽस्मि निधनेन महात्मनः ॥ ९-१-१८ (६०१२९)
अहो सुबलवान्कालो गतिश्च परमा तथा ।
शुक्रतुल्यबलाः सर्वे यत्राहन्यन्त पार्थिवाः ॥ ९-१-१९ (६०१३०)
तं दृष्ट्वैव पुरे राजञ्जनः सर्वः स्म सञ्जयम् ।
प्ररुरोद भयोद्विग्नो हा राजन्निति सुस्वरम् ॥ ९-१-२० (६०१३१)
आकुमारं नरव्याघ्र तत्पुरं वै समन्ततः ।
आर्तनादं महच्चक्रे श्रुत्वा विनिहतं नृपम् ॥ ९-१-२१ (६०१३२)
तथा स विह्वलः सूतः प्रविश्य नृपतिक्षयम् ।
ददर्श नृपतिश्रेष्ठं प्रज्ञाचक्षुषमीश्वरम् ॥ ९-१-२२ (६०१३३)
दृष्ट्वा चासीनमनघं समन्तात्परिवारितम् ।
स्नुषाभिर्भरतश्रेष्ठ गान्धार्या विदुरेण च ।
तथाऽन्यैश्च सुहृद्भिश्च ज्ञातिभिश्च हितैषिभिः ॥ ९-१-२३ (६०१३४)
तमेव चार्थं ध्यायन्तं कर्णस्य निधनं प्रति ।

रुदन्नेवाब्रवीद्वाक्यं राजानं जनमेजय ॥ ९-१-२४ (६०१३५)
नातिहृष्टमनाः सूतो बाष्पसन्दिग्धया गिरा ।
सञ्जयोऽहं नरव्याघ्र नमस्ते भरतर्षभ ॥ ९-१-२५ (६०१३६)
मद्राधिपो हतः शल्यः शकुनिः सौबलस्तथा ।
उलूकः पुरुषव्याघ्र कैतव्यो दृढविक्रमः ॥ ९-१-२६ (६०१३७)
संशप्तका हताः सर्वे काम्भोजाश्च शकैः सह ।
म्लेच्छाश्च पार्वतीयाश्च यवनाश्च निपातिताः ॥ ९-१-२७ (६०१३८)
प्राच्या हता महाराज दाक्षिणात्याश्च सर्वशः ।
उदीच्याश्च हताः सर्वे प्रतीच्याश्च नरोत्तमाः ।
राजानो राजपुत्राश्च सर्वे विनिहता नृप ॥ ९-१-२८ (६०१३९)
कर्णपुत्रो हतः शूरः सत्यसेनो महाबलः ॥ ९-१-२९ (६०१४०)
दुर्योधनो हतो राजा यथोक्तं पाण्डवेन ह ।
xxxxxx महाराज शेते पांसुषु रूषितः ॥ ९-१-३० (६०१४१)
xxxxxx हतो क्ष्क्ष्क्ष् जञ्शिखण्डी चापराजितः ।
उत्तमौज युधामन्युस्तथा सर्वे प्रभद्रकाः ॥ ९-१-३१ (६०१४२)
पाञ्चालश्च नरव्याघ्र चेदयश्च निषूदिताः ।
तव पुत्रा हताः सर्वे द्रौपदेयाश्च भारत ॥ ९-१-३२ (६०१४३)
नरा विनिहताः सर्वे गजाश्च विनिपातिताः ।
रथिनत्र नरव्याघ्र हयाश्च निहता युधि ॥ ९-१-३३ (६०१४४)
निxxxx शिबिरं रावंजावकानां कृतं प्रभो ।
पाण्डवानां च शूराणां समासाद्य परस्परम् ॥ ९-१-३४ (६०१४५)
xxxx स्रीशेषमभवज्जगत्कालेन मोहितम् ।
सप्त पाण्डवतः शिष्टा धार्तराष्ट्रास्त्रयोरथाः ॥ ९-१-३५ (६०१४६)
ते चैव भ्रातरः पञ्च वासुदेवोऽथ सात्यकिः ।
कृपश्च कृतवर्मा च द्रौणिश्च जयतां वरः ॥ ९-१-३६ (६०१४७)
एते शेषा महाराज रथिनो नृपसत्तम ।
अक्षौहिणीनामष्टानां दशानां च न संशयः ॥ ९-१-३७ (६०१४८)
एते शेषा महाराज सर्वेऽन्ये निधनं गताः ।
कालेन निहतं सर्वं जगद्वै भरतर्षभ ।
दुर्योधनं वै पुरतः कृत्वा सर्वे नरा हताः ॥ ९-१-३८ (६०१४९)
वैशम्पायन उवाच। ९-१-३९क्ष् (५०८२)
एतच्छ्रुत्वा वचः क्रूरं धृतराष्ट्रो जनेश्वरः ।
निपपात स राजेन्द्रो गतसत्वो महीतले ॥ ९-१-३९ (६०१५०)
तस्मिन्निपतिते वीरे विदुरोऽपि महायशाः ।
निपपात महाराज शोकव्यसनकर्शितः ॥ ९-१-४० (६०१५१)
गान्धारी च महाभागा सर्वाश्च कुरुयोषितः ।

पतिताः सहसा भूमौ श्रुत्वा घोरतरं वचः ॥ ९-१-४१ (६०१५२)
निःसंज्ञं पतितं भूमौ तदाऽऽसीद्राजमण्डलम् ।
विलापमुक्तोपहतं चित्रं न्यस्तं पटे यथा ॥ ९-१-४२ (६०१५३)
कृच्छ्रेण तु ततो राजा धृतराष्ट्रो महीपतिः ।
शनैरलभत प्राणान्पुत्रव्यसनकर्शितः ॥ ९-१-४३ (६०१५४)
लब्ध्वा तु स नृपः प्राणान्वेपमानः सुदुःखितः ।
निरीक्ष्य च दिशः सर्वाः क्षत्तारं वाक्यमब्रवीत् ॥ ९-१-४४ (६०१५५)
विद्धि क्षत्तर्महाप्राज्ञ त्वं गतिर्भरतर्षभ ।
ममानाथस्य सुभृशं पुत्रैर्हीनस्य सर्वशः ।
एवमुक्त्वा ततो भूयो विसंज्ञो निपपात ह ॥ ९-१-४५ (६०१५६)
तं तथा पतितं दृष्ट्वा बान्धवा येऽस्य केचन ।
शीतैस्ते सिषिचुस्तोयैर्विव्यजुर्व्यजनैरपि ॥ ९-१-४६ (६०१५७)
स तु दीर्घेण कालेन प्रत्याश्वस्तो नराधिपः ।
तूष्णीमासीन्महीपालः पुत्रव्यसनकर्शितः ॥ ९-१-४७ (६०१५८)
निःश्वसञ्जिह्मग इव कुम्भक्षिप्तोऽभवन्नृपः ॥ ९-१-४८ (६०१५९)
सञ्जयोऽप्यरुदत्तत्र दृष्ट्वा राजानमातुरम् ।
तथा सर्वाः स्त्रियश्चैव गान्धारी च यशस्विनी ॥ ९-१-४९ (६०१६०)
ततो दीर्घेण कालेन विदुरं वाक्यमब्रवीत् ।
धृतराष्ट्रो नरश्रेष्ठ मुह्यमानो मुहुर्मुहुः ॥ ९-१-५० (६०१६१)
गच्छन्तु योषितः सर्वा गान्धारी च यशस्विनी ।
तथेमे सुहृदः सर्वे मुह्यते मे मनो भृशम् ॥ ९-१-५१ (६०१६२)
एवमुक्तस्ततः क्षत्ता ताः स्त्रियो भरतर्षभ ।
विसर्जयामास शनैर्मुह्यमानः पुनःपुनः ॥ ९-१-५२ (६०१६३)
निश्चक्रमुस्ततः सर्वाः स्त्रियो भरतसत्तम ।
सुहृदश्च तथा सर्वे दृष्ट्वा राजानमातुरम् ॥ ९-१-५३ (६०१६४)
ततो नरपतिस्तत्र लब्ध्वा संज्ञां परन्तपः ।
गतिर्मे को भवेदद्य इति चिन्तासमाकुलः ।
अपृच्छत्सञ्जयं तत्र रोदमानं भृशातुरम् ॥ ९-१-५४ (६०१६५)
प्राञ्जलिं सञ्जयं दृष्ट्वा रोदमानं मुहुर्मुहुः ।
ज्ञातीन्स्त्रियोऽथ निर्याप्य प्रविश्य विदुरःपुनः ॥ ९-१-५५ (६०१६६)
राजानं शोचमानस्तु तं शोचन्तं मुहुर्मुहुः ।
समाश्वासयत क्षत्ता वचसा मधुरेण च ॥ ॥ ९-१-५६ (६०१६७)

इति श्रीमन्महाभारते कर्णपर्वणि शल्यवधपर्वणि प्रथमोऽध्यायः ॥ १ ॥

Mahabharata - Shalya Parva - Chapter Footnotes

९-१-१२ अपराहे अपरार्धे ॥
९-१-४१ विलापवुक्तोपहतं इति ङ पाठः । विलापयुक्तं सुमहत् इति घ। पाठः ॥
९-१-१ प्रथमोऽध्यायः ॥

---

शल्यपर्व-अध्यय००२
॥ श्रीः ॥
९.२. अध्यायः २

Mahabharata - Shalya Parva - Chapter Topics
धृतराष्ट्रेण सञ्जयस्य पुरतो दुर्योधनवचनानुस्मरणेन विलापः ॥१ ॥

Mahabharata - Shalya Parva - Chapter Text

९-२-० (६०१६८)
वैशम्पायन उवाच। ९-२-०क्ष् (५०८३)
विसृष्टास्वथ नारीषु धृतराष्ट्रोऽम्बिकासुतः ।
विललाप महाराज दुःखाद्दुःखतरं गतः ॥ ९-२-१ (६०१६९)
सधूममिव निःश्वस्य करौ धुन्वन्पुनःपुनः ।
बहु सञ्चिन्तयित्वा तु सञ्जयं वाक्यमब्रवीत् ॥ ९-२-२ (६०१७०)
धृतराष्ट्र उवाच। ९-२-३क्ष् (५०८४)
अहो बत महद्दुःखं यदहं पाण्डवान्रणे ।
क्षेमिणश्चाव्ययांश्चैव त्वत्तः सूत शृणोमि वै ॥ ९-२-३ (६०१७१)
वज्रसारमयं नूनं हृदयं सुदृढं मम ।
यच्छ्रुत्वा निहतान्पुत्रान्दीर्यते न सहस्रधा ॥ ९-२-४ (६०१७२)
चिन्तयित्वा वचस्तेषां बालक्रीडां च सञ्जय ।
अद्य चैव हताञ्श्रुत्वा दीर्यते मे भृशं मनः ॥ ९-२-५ (६०१७३)
अन्धत्वाद्यदि पुत्राणां न मे रूपनिदर्शनम् ।
पुत्रस्नेहकृता प्रीतिर्नित्यमेतेषु धारिता ॥ ९-२-६ (६०१७४)
बालभावमतिक्रम्य यौवनस्थांश्च तानहम् ।
श्रियं प्राप्तांश्च ताञ्श्रुत्वा हृष्ट आसं तदाऽनघ ॥ ९-२-७ (६०१७५)
तानद्य निहताञ्श्रुत्वा हतैश्वर्यान्हतौजसः ।
न लभेयं क्वचिच्छान्तिं पुत्राधिभिरभिप्लुतः ॥ ९-२-८ (६०१७६)
एह्येहि वत्स राजेन्द्र ममानाथस्य पुत्रक ।
त्वया हीनो महाबाहो कां नु यास्याम्यहं गतिम् ॥ ९-२-९ (६०१७७)
कथं त्वं पृथिवीपालांस्त्यक्त्वा तात समागतान् ।

शेषे विनिहतो भूमौ प्राकृतः कुनृपो यथा ॥ ९-२-१० (६०१७८)
गतिर्भूत्वा महाराज ज्ञातीनां सुहृदां तथा ।
अन्धं वृद्धं च मां वीर विहाय क्व नु यास्यसि ॥ ९-२-११ (६०१७९)
सा कृपा सा च ते प्रीतिः सा च राजसु मानिता ।
कथं त्वं निहतः पार्थैः संयुगेष्वपराजितः ॥ ९-२-१२ (६०१८०)
को नु मामुत्थितः काले तातताततेति वक्ष्यति ।
महाराजेति सततं लोकनाथेति चासकृत् ॥ ९-२-१३ (६०१८१)
परिष्वज्य च कं कण्ठे स्नेहेन क्लिन्नलोचनः ।
अनुशास्ताऽस्मि कौरव्य तत्साधु वदमे वचः ॥ ९-२-१४ (६०१८२)
ननु नामाहमश्रौषं वचनं तव पुत्रक ।
भूयसी मम पृथ्वीयं तात पार्थस्य नो तथा ॥ ९-२-१५ (६०१८३)
भगदत्तः कृपः शल्य आवन्त्योऽथ जयद्रथः ।
भूरिश्रवाः सोमदत्तो महाराजश्च बाह्लिकः ॥ ९-२-१६ (६०१८४)
अश्वत्थामा च भोजश्च मागधश्च महाबलः ।
बृहद्बलश्च क्राथश्च शकुनिश्चापि सौबलः ॥ ९-२-१७ (६०१८५)
म्लेच्छाश्च शतसाहस्राः शकाश्च यवनैः सह ।
सुदक्षिणश्च काम्भोजस्त्रिगर्ताधिपतिस्तथा ॥ ९-२-१८ (६०१८६)
भीष्मः पितामहश्चैव भारद्वाजोऽथ गौतमः ।
श्रुतायुश्चाश्रुतायुश्च शतायुश्चापि वीर्यवान् ॥ ९-२-१९ (६०१८७)
जलसन्धोऽथार्ष्यशृङ्गी राक्षसश्चाप्यलायुधः ।
अलम्बुसो वीरबाहुः सुबाहुश्च महारथः ॥ ९-२-२० (६०१८८)
एते चान्ये च बहवो राजानो राजसत्तम ।
मदर्थं प्रहरिष्यन्ति प्राणांस्त्यक्त्वा धनानि च ॥ ९-२-२१ (६०१८९)
तेषां मध्ये स्थितो युद्धे भ्रातृभिः परिवारितः ।
योधयिष्याम्यहं पार्थान्पाञ्चालांश्चैव सर्वशः ॥ ९-२-२२ (६०१९०)
चेदींश्च नृपशार्दूल द्रौपदेयांश्च संयुगे ।
सात्यकिं कुन्तिभोजं च राक्षसं च घटोत्कचम् ॥ ९-२-२३ (६०१९१)
एकोऽप्येषां महाराज समर्थः सन्निवारणे ।
समरे पाण्डवेयानां सङ्क्रुद्धो ह्यभिधावताम् ॥ ९-२-२४ (६०१९२)
किं पुनः सहिता वीराः कृतवैराश्च पाण्डवैः ।
अथवा सर्व एवैते पाण्डवस्यानुयायिभिः ॥ ९-२-२५ (६०१९३)
योत्स्यन्ते सह राजेन्द्र हनिष्यन्ति च तान्मृधे ।
कर्ण एको मया सार्धं निहनिष्यति पाण्डवान् ॥ ९-२-२६ (६०१९४)
ते वै नृपतयो वीराः स्थास्यन्ति मम शासने ॥ ९-२-२७ (६०१९५)
यश्च तेषां प्रणेता वै वासुदेवो महाबलः ।
न स सन्नह्यते राजन्निति मामब्रवीद्वचः ॥ ९-२-२८ (६०१९६)

एवं च वदतः सूत बहुशो मम सन्निधौ ।
युक्तितो ह्यनुपश्यामि निहतान्पाण्डवान्रणे ॥ ९-२-२९ (६०१९७)
तेषां मध्ये स्थिता यत्र हन्यन्ते मम पुत्रकाः ।
व्यायच्छमानाः समरे किमन्यद्भागधेयतः ॥ ९-२-३० (६०१९८)
भीष्मश्च निहतो यत्र लोकनाथः प्रतापवान् ।
शिखण्डिनं समासाद्य मृगेन्द्र इव जम्बुकम् ॥ ९-२-३१ (६०१९९)
द्रोणश्च ब्राह्मणो यत्र सर्वशस्त्रास्त्रपारगः ।
निहतः पाण्डवैः सङ्ख्ये किमन्यद्भागधेयतः ॥ ९-२-३२ (६०२००)
कर्णश्च निहतः सङ्ख्ये दिव्यास्त्रज्ञो महाबलः ।
भूरिश्रवा हतो पत्र सोमदत्तश्च संयुगे ।
बाह्लिकश्च महाराज किमन्यद्भागधेयतः ॥ ९-२-३३ (६०२०१)
भगदत्तो हतो यत्र गजयुद्धविशारदः ।
जयद्रथश्च निहतः किमन्यद्भागधेयतः ॥ ९-२-३४ (६०२०२)
सुदक्षिणो हतो यत्र जलसन्धश्च पौरवः ।
श्रुतायुश्चाश्रुतायुश्च किमन्यद्भागधेयतः ॥ ९-२-३५ (६०२०३)
महाबलस्तथा पाण्ड्यः सर्वशस्त्रभृतां वरः ।
निहतः पाण्डवैः सङ्ख्ये किमन्यद्भागधेयतः ॥ ९-२-३६ (६०२०४)
बृहद्बलो हतो यत्र मागधश्च महाबलः ।
उग्रायुधश्च विक्रान्तः प्रतिमानं धनुष्मताम् ॥ ९-२-३७ (६०२०५)
आवन्त्यो निहतो यत्र त्रैगर्तश्च जनाधिपः ।
संशप्तकाश्च निहताः किमन्यद्भागधेयतः ॥ ९-२-३८ (६०२०६)
अलम्बुसस्तथा राजन्राक्षसश्चाप्यलायुधः ।
आर्ष्यशृङ्गिश्च निहतः किमन्यद्भागधेयतः ॥ ९-२-३९ (६०२०७)
नारायणा हता यत्र गोपाला युद्धदुर्मदाः ।
म्लेच्छाश्च बहुसाहस्राः किमन्यद्भागधेयतः ॥ ९-२-४० (६०२०८)
शकुनिः सौबलो यत्र कैतव्यश्च महाबलः ।
निहतः सबलो वीरः किमन्यद्भागधेयतः ॥ ९-२-४१ (६०२०९)
एते चान्ये च बहवः कृतास्त्रा युद्धदुर्मदाः ।
राजानो राजपुत्राश्च शूराः परिघबाहवः ।
निहता बहवो यत्र किमन्यद्भागधेयतः ॥ ९-२-४२ (६०२१०)
यत्र शूरा महेष्वासाः कृतास्त्रा युद्धदुर्मदाः ।
बहवो निहताः सूत महेन्द्रसमविक्रमाः ॥ ९-२-४३ (६०२११)
नानादेशसमावृत्ताः क्षत्रिया यत्र सञ्जय ।
निहताः समरे सर्वे किमन्यद्भागधेयतः ॥ ९-२-४४ (६०२१२)
पुत्राश्च मे विनिहताः पौत्राश्चैव महाबलाः ।
वयस्या भ्रातरश्चैव किमन्यद्भागधेयतः ॥ ९-२-४५ (६०२१३)

भागधेयसमायुक्तो ध्रुवमुत्पद्यते नरः ।
यस्तु भाग्यसमायुक्तः स शुभं प्राप्नुयान्नरः ॥ ९-२-४६ (६०२१४)
अहं वियुक्तस्तैर्भाग्यैः पुत्रैश्चैवेह सञ्जय ।
कथमद्य भविष्यामि वृद्धः शत्रुवशं गतः ॥ ९-२-४७ (६०२१५)
नान्यदत्र परं मन्ये वनवासादृते प्रभो ।
सोऽहं वनं गमिष्यामि निर्बन्धुर्ज्ञातिसंक्षये ॥ ९-२-४८ (६०२१६)
न हि मेऽन्यद्भवेच्छ्रेयो वनाभ्युपगमादृते ।
इमामवस्थां प्राप्तस्य लूनपक्षस्य सञ्जय ॥ ९-२-४९ (६०२१७)
दुर्योधनो हतो यत्र शल्यश्च निहतो युधि ।
दुःशासनो विविंशश्च विकर्णश्च महाबलः ॥ ९-२-५० (६०२१८)
कथं हि भीमसेनस्य श्रोष्येऽहं शब्दमुत्तमम् ।
एकेन समरे येन हतं पुत्रशतं मम ॥ ९-२-५१ (६०२१९)
असकृद्वदतस्तस्य दुर्योधनवधेन च ।
दुःखशोकाभिसन्तप्तो न श्रोष्ये परुषा गिरः ॥ ९-२-५२ (६०२२०)
वैशम्पायन उवाच। ९-२-५३क्ष् (५०८५)
एवं स शोकसन्तप्तः पार्थिवो हतबान्धवः ।
मुहुर्मुहुर्मुह्यमानः पुत्राधिभिरभिप्लुतः ॥ ९-२-५३ (६०२२१)
विलप्य सुचिरं कालं धृतराष्ट्रोऽम्बिकासुतः ।
दीर्घमुष्णं स निःश्वस्य चिन्तयित्वा पराभवम् ॥ ९-२-५४ (६०२२२)
दुःखेन महता राजन्सन्तप्तो भरतर्षभः ।
पुनर्गावल्गणिं सूतं पर्यपृच्छद्यथातथम् ॥ ९-२-५५ (६०२२३)
धृतराष्ट्र उवाच। ९-२-५६क्ष् (५०८६)
भीष्मद्रोणौ हतौ श्रुत्वा सूतपुत्रं च पातितम् ।
सेनापतिं प्रणेतारं कमकुर्वत मामकाः ॥ ९-२-५६ (६०२२४)
यं यं सेनाप्रणेतारं युधि कुर्वन्ति मामकाः ।
अचिरेणैव कालेन तं तं निघ्नन्ति पाण्डवाः ॥ ९-२-५७ (६०२२५)
रणमूर्ध्नि हतो भीष्मः पश्यतां वः किरीटिना ।
एवमेव हतो द्रोणः सर्वेषामेव पश्यताम् ॥ ९-२-५८ (६०२२६)
एवमेव हतः कर्णः सूतपुत्रः प्रतापवान् ।
सराजकानां सर्वेषां पश्यतां वः किरीटिना ॥ ९-२-५९ (६०२२७)
पूर्वमेवाहमुक्तो वै विदुरेण महात्मना ।
दुर्योधनापराधेन प्रजेयं विनशिष्यति ॥ ९-२-६० (६०२२८)
केचिन्न सम्यक्पश्यन्ति मूढाः सम्यगवेक्ष्य च ।
तदिदं मम मूढस्य तथाभूतं वचः स्म तत् ॥ ९-२-६१ (६०२२९)
यदब्रवीत्स धर्मात्मा विदुरो दीर्घदर्शिवान् ।
तत्तथा समनुप्राप्तं वचनं सत्यवादिनाः ॥ ९-२-६२ (६०२३०)

दैवोपहतचित्तेन यन्मयाऽनुष्ठितं पुरा ।
अनयस्य फलं तस्य ब्रूहि गावल्गणे पुनः ॥ ९-२-६३ (६०२३१)
को वा मुखमनीकानामासीत्कर्णो निपातिते ।
अर्जुनं वासुदेवं च को वा प्रत्युद्ययौ रथी ॥ ९-२-६४ (६०२३२)
केऽरक्षन्दक्षिणं चक्रं मद्रराजस्य संयुगे ।
वामं च योद्धुकामस्य के वा वीरस्य पृष्ठतः ॥ ९-२-६५ (६०२३३)
कथं च वः समेतानां मद्रराजो महारथः ।
निहतः पाण्डवैः सङ्ख्ये पुत्रो वा मम सञ्जय ॥ ९-२-६६ (६०२३४)
ब्रूहि सर्वं यथातत्त्वं भरतानां महाक्षयम् ।
यथा च निहतः सङ्ख्ये पुत्रो दुर्योधनो मम ॥ ९-२-६७ (६०२३५)
पाञ्चालाश्च यथा सर्वे निहताः सपदानुगाः ।
धृष्टद्युम्नः शिखण्डी च द्रौपद्याः पञ्च चात्मजाः ॥ ९-२-६८ (६०२३६)
पाण्डवाश्च यथा मुक्तास्तथोभौ माधवौ युधि ।
कृपश्च कृतवर्मा च भारद्वाजस्य चात्मजः ॥ ९-२-६९ (६०२३७)
यद्यथा यादृशं चैव युद्धं वृत्तं च साम्प्रतम् ।
अखिलं श्रोतुमिच्छामि कुशलो ह्यसि सञ्जय ॥ ॥ ९-२-७० (६०२३८)

इति श्रीमन्महाभारते कर्णपर्वणि शल्यवधपर्वणि द्वितीयोऽध्यायःक्र
॥ २ ॥क्र एतदनन्तरं झ पाठे एकोऽध्यायोऽधिको दृश्यते ।
Mahabharata - Shalya Parva - Chapter Topics
पार्थेन निहते कर्णे पाण्डवभयात्पलायमानां सेनां निवर्त्य
दुर्योधनस्य पुनर्युद्धोद्यमः ॥ १ ॥

Mahabharata - Shalya Parva - Chapter Text

९-२-० (६०२३९)
श्सञ्जय उवाच। ९-२-०क्ष् (५०८७)
शृणु राजन्नवहितो यथावृत्तो महान्क्षयः ।
कुरूणां पाण्डवानां च समासाद्य परस्परम् ॥ ९-२-१ (६०२४०)
निहते सूतपुत्रे तु पाण्डवेन महात्मना ।
विद्रुतेषु च सैन्येषु समानीतेषु चासकृत् ॥ ९-२-२ (६०२४१)
घोरे मनुष्यदेहानामाजौ नरवरक्षये ।
यत्तत्कर्णे हते पार्थः कसिंहनादमथाकरोत् ॥ ९-२-३ (६०२४२)
तदा तव सुतान्राजन्प्राविशत्सुमहद्भयम् ॥ ९-२-४ (६०२४३)
न सन्धातुमनीकानि न चैवाथ पराक्रमे ।
आसीद्बुद्धिर्हते कर्णे तव योधस्य कस्यचित् ॥ ९-२-५ (६०२४४)

वणिजो नावि भिन्नायामगाधे विप्लुवा इव ।
अपारे पारमिच्छन्तो हते द्वीपे किरीटिना ॥ ९-२-६ (६०२४५)
सूतपुत्रो हते राजन्वित्रस्ताः शरविक्षताः ।
अनाथा नाथमिच्छन्तो मृगाः सिंहार्दिता इव ॥ ९-२-७ (६०२४६)
भग्नशृङ्गा इव वृषा शीर्णदंष्ट्रा इवोरगाः ।
प्रत्युपायाम सायाह्ने निर्जिताः सव्यसाचिना ॥ ९-२-८ (६०२४७)
हतप्रवीरा विध्वस्ता निकृत्ता निशितैः शरैः ।
सूतपुत्रे हते राजन्पुत्रास्ते प्राद्रवंस्ततः ॥ ९-२-९ (६०२४८)
विध्वस्तकवचनाः सर्वे कान्दिशीका विचेतसः ।
अन्योन्यमभिनिघ्नन्तो वीक्षमाणा भयाद्दिशः ॥ ९-२-१० (६०२४९)
मामेव नूनं बीभत्सुर्मामेव च वृकोदरः ।
अभियातीति मन्वानाः पेतुर्मम्लुश्च भारत ॥ ९-२-११ (६०२५०)
अश्वानन्ये गजानन्ये रथानन्ये महारथाः ।
आरुह्य जवसम्पन्नाः पादातान्प्रजहुर्भयात् ॥ ९-२-१२ (६०२५१)
कुञ्जरैः स्यन्दना भग्नाः सादिनश्च महारथैः ।
पदातिसङ्घाश्चाश्वौघैः पलायद्भिर्भृशं हताः ॥ ९-२-१३ (६०२५२)
व्यालतस्करसङ्कीर्णे सार्थहीना यथा वने ।
तथा त्वदीया निहते सूतपुत्रे पदाऽभवन् ॥ ९-२-१४ (६०२५३)
हतारोहास्तथा नागाश्छिन्नहस्तास्तथाऽपरे ।
सर्वं पार्थमयं लोकमपश्यन्वै भयार्दिताः ॥ ९-२-१५ (६०२५४)
तान्प्रेक्ष्य द्रवतः सर्वान्भीमसेनभयार्दितान् ।
दुर्योधनोऽथ स्वं सूतं हाहाकृत्वैवमब्रवीत् ॥ ९-२-१६ (६०२५५)
नातिक्रमिष्यते पार्थो धनुष्पाणिमवस्थितम् ।
जघने युध्यमानं मां तूर्णमश्वान्प्रचोदय ॥ ९-२-१७ (६०२५६)
समरे युध्यमानं हि कौन्तेयो मां धनञ्जयः ।
नोत्सहेताप्यतिक्रान्तुं वेलामिव महार्णवः ॥ ९-२-१८ (६०२५७)
अद्यार्जुनं सगोविन्दं मानिनं च वृकोदरम् ।
निहत्य शिष्टाञ्शत्रूंश्च कर्णस्यानृण्यमाप्नुयाम् ॥ ९-२-१९ (६०२५८)
तच्छ्रुत्वा कुरुराजस्य शूरार्यसदृशं वचः ।
सूतो हेमपरिच्छन्नाञ्शनैरश्वानचोदयत् ॥ ९-२-२० (६०२५९)
गजाश्वरथहीनास्तु पादाताश्चैव मारिष ।
पञ्चविंशतिसाहस्राः प्राद्रवञ्शनकैरिव ॥ ९-२-२१ (६०२६०)
तान्भीमसेनः सङ्क्रुद्धो धृष्टद्युम्नश्च पार्षतः ।
बलेन चतुरङ्गेण परिक्षिप्याहनच्छरैः ॥ ९-२-२२ (६०२६१)
प्रत्ययुध्यंस्तु ते सर्वे भीमसेनं सपार्षतम् ।
पार्थपार्षतयोश्चान्ये जगृहुस्तत्र नामनी ॥ ९-२-२३ (६०२६२)

अक्रुध्यत रणे भीमस्तैर्मृधे प्रत्यवस्थितैः ।
सोऽवतीर्य रथात्तूर्णं गदापाणिरयुध्यत ॥ ९-२-२४ (६०२६३)
न तान्रथस्थो भूमिष्ठान्धर्मापेक्षी वृकोदरः ।
योधयामास कौन्तेयो भुजवीर्यमुपाश्रितः ॥ ९-२-२५ (६०२६४)
जातरूपपरिच्छन्नां प्रगृह्य महतीं गदाम् ।
न्यवधीत्तावकान्सर्वान्दण्डपाणिरिवान्तकः ॥ ९-२-२६ (६०२६५)
पदातयो हि संरब्धास्त्यक्तजीवितबान्धवाः ।
भीममभ्यद्रवन्सङ्ख्ये पतङ्गा इव पावकम् ॥ ९-२-२७ (६०२६६)
आसाद्य भीमसेनं ते संरब्धा युद्धदुर्मदाः ।
विनेदुः सहसा दृष्ट्वा भूतग्रामा इवान्तकम् ॥ ९-२-२८ (६०२६७)
श्येनवद्व्यचरद्भीमः खड्गेन गदया तथा ।
पञ्चविंशतिसाहस्रांस्तावकानां व्यपोथयत् ॥ ९-२-२९ (६०२६८)
हत्वा तत्पुरुषानीकं भीमः सत्यपराक्रमः ।
धृष्टद्युम्नं पुरस्कृत्य पुनस्तस्थौ महाबलः ॥ ९-२-३० (६०२६९)
धनञ्जयो रथानीकमन्वपद्यत वीर्यवान् ॥ ९-२-३१ (६०२७०)
माद्रीपुत्रौ च शकुनिं सात्यकिश्च महाबलः ।
जवेनाभ्यपतन्हृष्टा घ्नन्तो दौर्योधनं बलम् ॥ ९-२-३२ (६०२७१)
तस्याश्ववाहान्सुबहूंस्ते निहत्य शितैः शरैः ।
तमन्वधावंस्त्वरितास्तत्र युद्धमवर्तत ॥ ९-२-३३ (६०२७२)
ततो धनञ्जयो राजन्रथानीकमगाहत ।
विश्रुतं त्रिषु लोकेषु गाण्डीवं व्याक्षिपन्धनुः ॥ ९-२-३४ (६०२७३)
कृष्णसारथिमायान्तं दृष्ट्वा श्वेतहयं रथम् ।
अर्जुनं चापि योद्धारं त्वदीयाः प्राद्रावन्भयात् ॥ ९-२-३५ (६०२७४)
विप्रहीनरथाश्वाश्च शरैश्च परिवारिताः ।
पञ्चविंशतिसाहस्राः पार्थमार्च्छन्पदातयः ॥ ९-२-३६ (६०२७५)
हत्वा तत्पुरुषानीकं पाञ्चालानां महारथः ।
भीमसेनं पुरस्कृत्य न चिरात्प्रत्यदृश्यत ॥ ९-२-३७ (६०२७६)
महाधनुर्धरः श्रीमानमित्रगणमर्दनः ।
पुत्रः पाञ्चालराजस्य धृष्टद्युम्नो महायशाः ॥ ९-२-३८ (६०२७७)
पारावतसवर्णाश्वं कोविदारवरध्वजम् ।
धृष्टद्युम्नं रणे दृष्ट्वा त्वदीयाः प्राद्रवन्भयात् ॥ ९-२-३९ (६०२७८)
गान्धारराजं शीघ्रास्त्रमनुसृत्य यशस्विनौ ।
अचिरात्प्रत्यदृश्येतां माद्रीपुत्रौ ससात्यकी ॥ ९-२-४० (६०२७९)
चेकितानः शिखण्डी च द्रौपदेयाश्च मारिष ।
हत्वा त्वदीयं सुमहत्सैन्यं शङ्खानथाधमन् ॥ ९-२-४१ (६०२८०)
ते सर्वे तावकान्प्रेक्ष्य द्रवतो वै पराङ्मुखान् ।

अभ्यधावन्त निघ्नन्तो वृषाञ्चित्वा वृषा इव ॥ ९-२-४२ (६०२८१)
सेनावशेषं तं दृष्ट्वा तव पुत्रस्य पाण्डवः ।
अवस्थितं सव्यसाची चुक्रोध बलवन्नृप ॥ ९-२-४३ (६०२८२)
तत एनं शरै राजन्सहसा समवाकिरत् ।
रजसा चोद्गतेनाथ न स्म किञ्चन दृश्यते ॥ ९-२-४४ (६०२८३)
अन्धकारीकृते लोके शरीभूते महीतले ।
दिशः सर्वा महाराज तावकाः प्राद्रवन्भयात् ॥ ९-२-४५ (६०२८४)
भज्यमानेषु सर्वेषु कुरुराजो विशाम्पते ।
परेषामात्मनश्चैव सैन्ये ते समुपाद्रवत् ॥ ९-२-४६ (६०२८५)
ततो दुर्योधनः सर्वानाजुहावाथ पाण्डवान् ।
युद्धाय भरतश्रेष्ठ देवानिव पुरा बलिः ॥ ९-२-४७ (६०२८६)
त एनमभिगर्जन्तं सहिताः समुपाद्रवन् ।
नानाशस्त्रसृजः क्रुद्धा भर्त्सयन्तो मुहुर्मुहुः ॥ ९-२-४८ (६०२८७)
दुर्योधनोऽप्यसम्भ्रान्तस्तानरीन्व्यधमच्छरैः ॥ ९-२-४९ (६०२८८)
तत्राद्भुतमपश्याम तव पुत्रस्य पौरुषम् ।
यदेनं पाण्डवाः सर्वे न शेकुरतिवर्तितुम् ॥ ९-२-५० (६०२८९)
नातिदूरापयातं च कृतबुद्धि पलायने ।
दुर्योधनः स्वकं सैन्यमपश्यकङ्कशविक्षतम् ॥ ९-२-५१ (६०२९०)
ततोऽवस्थाप्य राजेन्द्र कृतबुद्धिस्तवात्मजः ।
हर्षयन्निव तान्योधांस्ततो वचनमब्रवीत् ॥ ९-२-५२ (६०२९१)
न तं देशं प्रपश्यामि पृथिव्यां पर्वतेषु च ।
यत्र यातान्न वो हन्युः पाण्डवाः किं सृतेन वः ॥ ९-२-५३ (६०२९२)
स्वल्पं चैव बलं तेषां कृष्णौ च भृशविक्षतौ ।
यदि सर्वेऽपि तिष्ठामो ध्रुवं नो विजयो भवेत् ॥ ९-२-५४ (६०२९३)
विप्लयातांस्तु वो भिन्नान्पाण्डवाः कृतकिल्पिषान् ।
अनुसृत्य हनिष्यन्ति श्रेयोः न समरे वधः ॥ ९-२-५५ (६०२९४)
सुखः साङ्ग्रामिको मृत्युः क्षत्रधर्मेण युध्यताम् ।
मृतो दुःखं न जानीते प्रेत्य चानन्त्यमश्नुते ॥ ९-२-५६ (६०२९५)
शृण्वन्तु क्षत्रियाः सर्वे यावन्तोऽत्र समागताः ।
द्विषतो भीमसेनस्य वशमेष्यथ विद्रुताः ॥ ९-२-५७ (६०२९६)
पितामहैराचरितं न धर्मं हातुमर्हथ ।
नान्यत्कर्मास्ति पापीयः क्षत्रियस्य पलायनात् ॥ ९-२-५८ (६०२९७)
न युद्धधर्माच्छ्रेयान्हि पन्थाः स्वर्गस्य कौरवाः ।
सुचिरेणार्जिताँलोकान्सद्यो युद्धात्समश्नुते ॥ ९-२-५९ (६०२९८)
तस्य तद्वचनं राज्ञः पूजयित्वा महारथाः ।
पुनरेवाभ्यवर्तन्त क्षत्रियाः पाण्डवान्प्रति ।

पराजयममृष्यन्त कृतचित्ताश्च विक्रमे ॥ ९-२-६० (६०२९९)
ततः प्रववृते युद्धं पुनरेव सुदारुणम् ।
तावकानां परेषां च देवासुररणोपमम् ॥ ९-२-६१ (६०३००)
युधिष्ठिरपुरोगांश्च सर्वसैन्येन पाण्डवान् ।
अन्वधावन्महाराज पुत्रो दुर्योधनस्तव ॥६ ॥ ९-२-६२ (६०३०१)

इति श्रीमन्महाभारते शल्यपर्वणि शल्यवधपर्वणि अध्यायः ॥
Mahabharata - Shalya Parva - Chapter Footnotes

९-२-२ सधूममिव अत्युष्णित्यर्थः ॥
९-२-१४ परिष्वज्य च मां कण्ठे स्नेहेन क्लिन्नलोचनः । अनुशाधीति कौरव्य तत्साधु वद मे वचः इति झ पाठः ॥
९-२-३७ प्रतिमानं केतुभूतः ॥
९-२-६१ केचित्सम्यक्प्रपश्यन्ति मूढास्तु न तथा परे इति ख पाठः । सम्यगवेक्ष्य निपुणं विभाव्यापि मूढास्तथाभूतं तद्वचः केचिन्न पश्यन्तीति सम्बन्धः। तथाभूतं यथार्थम् ॥
९-२-२ द्वितीयोऽध्यायः ॥

---

शल्यपर्व-अध्यय००३
॥ श्रीः ॥
९.३. अध्यायः ३

Mahabharata - Shalya Parva - Chapter Topics
कृपेण कर्णवधदुःखितं दुर्योधनं प्रति स्वपरक्षयोर्दौर्बल्यप्राबल्याभिधानपूर्वकमुपायं प्रदर्श्य सन्धिविधानम् ॥ १ ॥

Mahabharata - Shalya Parva - Chapter Text

९-१६-० (६०३०२)
सञ्जय उवाच। ९-१६-०क्ष् (५०८८)
शृणु राजन्नवहितो यथावृत्तो महान्क्षयः ।
कुरूणां पाण्डवानां च समासाद्य परस्परम् ॥ ९-१६-१ (६०३०३)
निहते सूतपुत्रे च फल्गुनेन महात्मना ।
विद्रुतेषु च सैन्येषु समानीतेषु चासकृत् ॥ ९-१६-२ (६०३०४)
विमुखे तव पुत्रे च शोकोपहतचेतसि ।

भृशोद्विग्नेषु सैन्येषु दृष्ट्वा पार्थस्य विक्रमम् ॥ ९-१६-३ (६०३०५)
ध्यायमानेषु योधेषु दुःखं प्राप्तेषु भारत ।
बलानां मत्यमानानां श्रुत्वा निनदमुत्तमम् ॥ ९-१६-४ (६०३०६)
अभिज्ञानं नरेन्द्राणां विकृतं प्रेक्ष्य संयुगे ।
पतितानवनीपालान्ध्वजांश्चैव महात्मनाम् ।
रणे विनिहतान्नागान्दृष्ट्वा पत्तींश्च भारत ॥ ९-१६-५ (६०३०७)
आयोधनं महाघोरं रुद्रस्याक्रीडसन्निभम् ।
अप्रख्यातिं गतानां तु राज्ञां शतसहस्रशः ॥ ९-१६-६ (६०३०८)
कृपाविष्टः कृपो दृष्ट्वा वयः शीलसमन्वितः ।
अब्रवीत्तत्र तेजस्वी सोऽभिसृत्य जनाधिपम् ।
दुर्योधनमनुक्रोशाद्वाक्यं वाक्यविशारदः ॥ ९-१६-७ (६०३०९)
दुर्योधन निबोधेयं यत्त्वां वक्ष्यामि कौरव ।
श्रुत्वा कुरु महाराज यदि ते रोचतेऽनघ ॥ ९-१६-८ (६०३१०)
न युद्धधर्माच्छ्रेयान्वै पन्था राजेन्द्र विद्यते ।
यं समाश्रित्य युध्यन्ते क्षत्रियाः क्षत्रियर्षभ ॥ ९-१६-९ (६०३११)
पुत्रो भ्राता पिता चैव स्वस्रीयो मातुलस्तथा ।
सम्बन्धिबान्धवाश्चैव योद्धव्याः क्षत्रजीविन ॥ ९-१६-१० (६०३१२)
वधे चैव परो धर्मस्तथाऽधर्मः पलायने ।
ते स्म घोरां समापन्ना जीविकां जीवितार्थिनः ।
तदत्र प्रतिवक्ष्यामि किञ्चिदेव हितं वचः ॥ ९-१६-११ (६०३१३)
हते भीष्मे च द्रोणे च कर्णे चैव महारथे ।
जयद्रथे च निहते तव भ्रातृषु चानघ ।
लक्ष्मणे तव पुत्रे च किं शेषं पर्युपास्महे ॥ ९-१६-१२ (६०३१४)
येषु भारं समासज्य राज्ये मतिमकुर्महि ।
ते सन्त्यज्य तनूर्याताः शूरा ब्रह्मविदां गतिम् ॥ ९-१६-१३ (६०३१५)
वयं त्विह विनाभूता गुणवद्भिर्महारथैः ।
कृपणं वर्तयिष्यामः पातयित्वा नृपान्बहून् ॥ ९-१६-१४ (६०३१६)
सर्वैरथ च जीवद्भिर्बीभत्सुरपराजितः ।
कृष्णनेत्रो महाबाहुर्देवैरपि दुरासदः ॥ ९-१६-१५ (६०३१७)
इन्द्रकार्मुकवज्राभमिन्द्रकेतुमिवोच्छ्रितम् ।
वानरं केतुमासाद्य सञ्चचाल महाचमूः ॥ ९-१६-१६ (६०३१८)
सिंहनादेन भीमस्य पाञ्चजन्यस्वनेन च ।
गाण्डीवस्य च निर्घोषात्सम्मुह्यन्ते मनांसि नः ॥ ९-१६-१७ (६०३१९)
स्फुरन्तीव महाविद्युन्मुष्णन्ती नयनप्रभाम् ।
अलातमिव चाविद्धं गाण्डवीं समदृश्यत ॥ ९-१६-१८ (६०३२०)
जाम्बूनदविचित्रं च धूयमानं महद्धनुः ।

दृश्यते दिक्षु सर्वासु विद्युदभ्रघनेष्विव ॥९-१६-१९ (६०३२१)
उह्यमानश्च कृष्णेन वायुनेव बलाहकः ।
तावकं तद्बलं राजन्नर्जुनोऽस्त्रविशारदः ।
गहनं शिशिरापाये ददाहाग्निरिवोल्बणः ॥ ९-१६-२० (६०३२२)
गाहमानमनीकानि महेन्द्रसदृशप्रभम् ।
विक्षोभयन्तं सेनां वै त्रासयन्तं च पार्थिवान् ।
धनञ्जयमपश्याम नलिनीमिव कुञ्जरम् ॥ ९-१६-२१ (६०३२३)
त्रासयन्तं तथा योधान्धनुर्घोषेण पांण्डवम् ।
भूय एनमपश्याम सिंहं मृगगणानिव ॥९-१६-२२ (६०३२४)
सर्वलोकमहेष्वासो वृषभौ सर्वधन्विनाम् ।
आमुक्तकवचौ कृष्णौ लोकमध्ये विरेजतुः ॥९-१६-२३ (६०३२५)
अद्य सप्तदशाहानि वर्तमानस्य भारत ।
सङ्ग्रामस्यातिघोरस्य युध्यतां चाभितो युधि ॥९-१६-२४ (६०३२६)
वायुनेव विधूतानि एव सैन्यानि गच्छता ।
शरदम्भोदजालानि विशीर्यन्ते समन्ततः ॥९-१६-२५ (६०३२७)
तां नावमिव पर्यस्तां मज्जमानां महार्णवे ।
तव सेनां महाराज सव्यसाची व्यकम्पयत् ॥९-१६-२६ (६०३२८)
क्वनु ते सूतपुत्रोऽभूत्क्वनु द्रोणः सहात्मजः ।
अहं क्व च क्व चात्मा ते हार्दिक्यश्च तथा क्वनु ॥९-१६-२७ (६०३२९)
दुःशासनश्च ते भ्राता भ्रातृभिः सहितः क्वनु ॥ ९-१६-२८ (६०३३०)
वाणगोचरसम्प्राप्तं युध्यमानं जयद्रथम् ।
सम्बन्धिनस्ते भ्रातॄंश्च साहयान्मातुलांस्तथा ।
सर्वान्विक्रम्य मिपतो लोकमाक्रम्य मूर्धनि ॥ ९-१६-२९ (६०३३१)
जयद्रथो हतो राजन्किन्नु शेषमुपास्महे ।
को वेह स पुमानास्ते यो विजेष्यति पाण्डवम् ॥९-१६-३० (६०३३२)
तस्य चास्त्राणि दिव्यानि विदितानि महात्मनः ।
गाण्डीवस्य च निर्घोषो धैर्याणि हरते हि नः ॥९-१६-३१ (६०३३३)
नष्टचन्द्रा यथा रात्रिः सेनेयं हतनायका ।
नागभग्नद्रुमा शुष्का नदीव प्रतिभाति मे ॥९-१६-३२ (६०३३४)
ध्वजिन्यां हतनेत्रायां यथेष्टं श्वेतवाहनः ।
चरिष्यति महाराजः कक्षेष्वग्निरिव ज्वलन् ॥९-१६-३३ (६०३३५)
सात्यकेश्चैव यो वेगो भीमसेनस्य चोभयोः ।
दारयेत गिरीन्सर्वाञ्शोषयेच्चैव सागरान् ॥९-१६-३४ (६०३३६)
उवाच वाक्यं यद्भीमः सभामध्ये विशाम्पते ।
कृतं तत्सफलं सर्वं भूयश्चैव करिष्यति ॥९-१६-३५ (६०३३७)
प्रमुखस्थे तदा कर्णे बलं पाण्डवरक्षितम् ।

दुरासदं तदा गुप्तं व्यूढं गाण्डीवधन्वना ॥ ९-१६-३६ (६०३३८)
युष्माभिस्तानि चीर्णानि यान्यसाधूनि साधुषु ।
अकारणकृतान्येव तेषां वः फलमागतम् ॥ ९-१६-३७ (६०३३९)
आत्मनोऽर्थे त्वया लोके यत्नतः सर्व आहृतः ।
स ते संशयितस्तात आत्मा च भरतर्षभ ॥ ९-१६-३८ (६०३४०)
रक्ष दुर्योधनात्मानमात्मा सर्वस्य भाजनम् ।
भिन्ने हि भाजने तात दिशो गच्छति तद्गतम् ॥ ९-१६-३९ (६०३४१)
हीयमानेन वै सन्धिः पर्येष्टव्यः समेन वा ।
विग्रहो वर्धमानेन नीतिरेषा बृहस्पतेः ॥ ९-१६-४० (६०३४२)
ते वयं पाण्डुपुत्रेभ्यो हीनाः स्म बलशक्तितः ।
अत्र ते पाण्डवैः सार्धं सन्धिं मन्ये क्षमं प्रभो ॥ ९-१६-४१ (६०३४३)
न जानीते हि यः श्रेयः श्रेयसश्चावमन्यते ।
स क्षिप्रं भ्रश्यते राज्यान्न च श्रेयोऽनुविन्दति ॥ ९-१६-४२ (६०३४४)
अणिपत्य हि राजानं राज्यं यदि लभेमहि ।
श्रेयः स्यान्न तु मौढ्येन राजन्गान्तुं पराभवम् ॥ ९-१६-४३ (६०३४५)
वैचित्रवीर्यवचनात्कृपाशीलो युधिष्ठिरः ।
विनियुञ्जीत राज्ये त्वां गोविन्दवचनेन च ॥ ९-१६-४४ (६०३४६)
ग्अजातशत्रुः कौरव्यो गुरुशुश्रूषणे रतः ।
धृतराष्ट्रस्य वचनं नावमंस्यति धार्मिकः ॥ ९-१६-४५ (६०३४७)
कुर्वन्ति भ्रातरश्चास्य वचनं नात्र संशयः ॥ ९-१६-४६ (६०३४८)
यद्ब्रूयाद्धि हृषीकेशो राजानमपराजितम् ।
अर्जुनो भीमसेनश्च सर्वे कुर्युरसंशयम् ॥ ९-१६-४७ (६०३४९)
नातिक्रमिष्यते कृष्णो वचनं पाण्डवस्य तु ।
धृतराष्ट्रस्य मन्येऽहं नापि कृष्णस्य पाण्डवः ॥ ९-१६-४८ (६०३५०)
एतत्क्षममहं मन्ये तव पार्थैरविग्रहम् ।
न त्वां ब्रवीमि कार्पण्यान्न प्राणपरिरक्षणात् ॥ ९-१६-४९ (६०३५१)
पथ्यं राजन्ब्रवीमि त्वां तत्परासुः स्मरिष्यसि ॥ ९-१६-५० (६०३५२)
इति वृद्धो विलप्यैतत्कृपः शारद्वतो वचः ।
दीर्घमुष्णं च निःश्वस्यशुशोच च मुमोह च ॥ ॥ ९-१६-५१ (६०३५३)

इति श्रीमन्महाभारते शल्यपर्वणि शल्यवधपर्वणि तृतीयोऽध्यायः
॥ ३ ॥

Mahabharata - Shalya Parva - Chapter Footnotes

९-१६-१२ शेषास्त्वां पर्युपास्महे इति ङ पाठः ॥
९-१६-१५ कृष्णो नेत्रं नेता यस्य स तथा ॥

९-१६-२४ वर्तमानस्य सङ्ग्रामस्य अभितो वध्यतां वध्यमानानां च अद्य सप्तदशाहानि जातानीत्यन्वयः ।जातानीति शेषः ॥
९-१६-४७ अर्जुनं भीमसेनं च इति झ ।पाठः। असंशयं गतवैरमित्यर्थः ॥
९-१६-४८ वचनं कौरवस्य तु इति झ ।पाठः ॥
९-१६-३ तृतीयोऽध्यायः ॥

---

शल्यपर्व-अध्यय००४
॥ श्रीः ॥
९.४. अध्यायः ४

Mahabharata - Shalya Parva - Chapter Topics
दुर्योधनेन कृपम्प्रति कारणकथनपूर्वकं सन्ध्यनङ्गीकरणम् ॥ १ ॥

Mahabharata - Shalya Parva - Chapter Text

९-१६-० (६०३५४)
सञ्जय उवाच। ९-१६-०क्ष् (५०८९)
एवमुक्तस्ततो राजा गौतमेन तपस्विना ।
निःश्वस्य दीर्घमुष्णं च तूष्णीमासीद्विशाम्पते ॥ ९-१६-१ (६०३५५)
ततो मुहूर्तं स ध्यात्वा तव पुत्रो महामनाः ।
कृपं शारद्वतं वाक्यमित्युवाच परन्तपः ॥ ९-१६-२ (६०३५६)
यत्किञ्चित्सुहृदा वाच्यं तत्सर्वं श्रावितो ह्यहम् ।
कृतं च भवता सर्वं प्राणान्सन्त्यज्य युध्यता ॥ ९-१६-३ (६०३५७)
गाहमानमनीकानि युध्यमानं महारथैः ।
पाण्डवैरतितेजोभिर्लोकस्त्वामनुदृष्टवान् ॥ ९-१६-४ (६०३५८)
सुहृदा यदिदं वाक्यं भवता श्रावितो ह्यहम् ।
न मां प्रीणाति तत्सर्वं मुमूर्षोरिव भेषजम् ॥ ९-१६-५ (६०३५९)
हेतुकारणसंयुक्तं हितं वचनमुत्तमम् ।
उच्यमानं महाबाहो न मे विप्राग्र्य रोचने ॥ ९-१६-६ (६०३६०)
राज्याद्विनिकृतोऽस्माभिःकथं सोस्मासु विश्वसेत् ॥ ९-१६-७ (६०३६१)
अक्षद्यूते च नृपतिर्जितोऽस्माभिर्महाधनः ।
स कथं मम वाक्यानि श्रद्दध्याद्भूय एव तु ॥ ९-१६-८ (६०३६२)
तथा दूत्येन सम्प्राप्तः कृष्णः पार्थहिते रतः ।
प्रलब्धश्च हृषीकेशस्तच्च कर्माविचारितम् ।
स च मे वचनं ब्रह्मन्कथमेवाभिमन्यते ॥ ९-१६-९ (६०३६३)

विललाप च यत्कृष्णा सभामध्ये समेयुषी ।
न तन्मर्षयते कृष्णो न राज्यहरणं तथा ॥ ९-१६-१० (६०३६४)
एकप्राणावुभौ कृष्णावन्योन्यमभिसंश्रितौ ।
पुरा यच्छ्रुतमेवासीदद्य पश्यामि तत्प्रभो ॥ ९-१६-११ (६०३६५)
स्वस्रीयं निहतं दृष्ट्वा दुःखं स्वपिति केशवः ।
कृतागसो व यं तस्य हितं मे स कथं चरेत् ॥ ९-१६-१२ (६०३६६)
अभिमन्योर्विनाशेन न शर्म लभतेऽर्जुनः ।
स कथं मद्धिते यत्नं प्रकरिष्यति याचितः ॥ ९-१६-१३ (६०३६७)
मध्यमः पाण्डवस्तीक्ष्णो भीमसेनो महाबलः ।
प्रतिज्ञातं च तेनोग्रं भज्येतापि न सन्नमेत् ॥ ९-१६-१४ (६०३६८)
उभौ तौ बद्धनिस्त्रिंशावुभौ चाबद्धकङ्कटौ ।
कृतवैरावुभौ वीरौ यमावपि यमोपमौ ॥ ९-१६-१५ (६०३६९)
धृष्टद्युम्नः शिखण्डी च कृतवैरौ मया सह ।
तौ कथं मद्धिते यत्नं कुर्यातां द्विजसत्तम ॥ ९-१६-१६ (६०३७०)
दुःशासनेन यत्कृष्णा एकवस्त्रा रजस्वला ।
परिक्लिष्टा सभामध्ये सर्वलोकस्य पश्यतः ॥ ९-१६-१७ (६०३७१)
तथा विवसनां दीनां स्मरन्त्यद्यापि पाण्डवाः ।
न निवारयितुं शक्याः सङ्ग्रामात्ते परन्तपाः ॥ ९-१६-१८ (६०३७२)
यदा च द्रौपदी क्लिष्टा मद्विनाशाय दुःखिता ।
उग्रं तेपे तपः कृष्णा भर्तॄणामर्थसिद्धये ।
स्थण्डिले नित्यदा शेते यावद्वैरस्य यातनम् ॥ ९-१६-१९ (६०३७३)
निक्षिप्य मानं दर्पं च वासुदेवसहोदरा ।
कृष्णायाः प्रेष्यवद्भूत्वा शुश्रूषां कुरुते सदा ॥ ९-१६-२० (६०३७४)
इति सर्वं समुन्नद्धं न निर्वाति कथञ्चन ।
अभिमन्योर्विनाशेन स सन्धेयः कथं मया ॥ ९-१६-२१ (६०३७५)
कथं च राजा भुक्त्वेमां पृथिवीं सागराम्बराम् ।
पाण्डवानां प्रसादेन भोक्ष्ये राज्यमहं कथम् ॥ ९-१६-२२ (६०३७६)
उपर्युपरि राज्ञां वै ज्वलित्वा भास्करो यथा ।
युधिष्ठिरं कथं पञ्चादनुयास्यामि दासवत् ॥ ९-१६-२३ (६०३७७)
कथं भुक्त्वा स्वयं भोगान्दत्त्वा दायांश्च पुष्कलान् ।
कृपणं वर्तयिष्यामि कृपणैः सह जीविकाम् ॥ ९-१६-२४ (६०३७८)
नाभ्यसूयामि ते वाक्यमुक्तं स्निग्धं हितं त्वया ॥
न तु सन्धिमहं मन्ये प्राप्तकालं कथञ्चन। ९-१६-२५ (६०३७९)
सुनीतमनुपश्यामि सुयुद्धेन परन्तप ॥ ९-१६-२६ (६०३८०)
नायं क्लीबायितुं कालः संयोद्धुं काल एव नः ॥ ९-१६-२७ (६०३८१)
इष्टं मे बहुभिर्यज्ञैर्दत्ता विप्रेषु दक्षिणाः ।

प्राप्ताः कामाः श्रुता वेदाः शत्रूणां मूर्ध्नि च स्थितम् ॥ ९-१६-२८ (६०३८२)
भृत्या मे सुभृतास्तात दीनश्चाभ्युद्धृतो जनः ।
नोत्साहेऽद्य द्विजश्रेष्ठ पाण्डवान्वक्तुमीदृशम् ॥ ९-१६-२९ (६०३८३)
जितानि परराष्ट्राणि स्वराष्ट्रमनुपालितम् ।
भुक्ताश्च विविधा भोगास्त्रिवर्गः सेवितो मया ॥ ९-१६-३० (६०३८४)
पितॄणां गतमानृण्यं क्षत्रधर्मस्य चोभयोः ।
न ध्रुवं सुखमस्तीह कुतो राष्ट्रं कुतो यशः ।
इह कीर्तिर्विचेतव्या सा च युद्धेन नान्यथा ॥ ९-१६-३१ (६०३८५)
वृथा च यत्क्षत्रियस्य निधनं तद्विगर्हितम् ।
अधर्मः सुमहानेष यच्छय्यामरणं गृहे ॥ ९-१६-३२ (६०३८६)
अरण्ये यो विमुच्येत सङ्ग्रामे वा तनुं नृपः ।
क्रतूनाहृत्य महतो महिमानं स गच्छति ॥ ९-१६-३३ (६०३८७)
कृपणं विलपन्नार्तो जरयाऽभिपरिप्लुतः ।
म्रियते रुदतां मध्ये ज्ञातीनां न स पूरुषः ॥ ९-१६-३४ (६०३८८)
त्यक्त्वा तु विविधान्भोगान्प्राप्तानां परमां गतिम् ।
अपीदानीं सुयुद्धेन गच्छेयं यत्सलोकताम् ॥ ९-१६-३५ (६०३८९)
शूराणामार्यवृत्तानां सङ्क्रामेष्वनिवर्तिनाम् ।
धीमतां सत्यसन्धानां सर्वेषां क्रतुयाजिनाम् ।
शस्त्रावभृथपूतानां ध्रुवो वासस्त्रिविष्टपे ॥ ९-१६-३६ (६०३९०)
मुदा नूनं प्रपश्यन्ति युद्धे ह्यप्सरसां गणाः ॥ ९-१६-३७ (६०३९१)
पश्यन्ति नूनं पितरः पूजितान्सुरसंसदि ।
अप्सरोभिः परिवृतान्मोदमानांस्त्रिविष्टपे ॥ ९-१६-३८ (६०३९२)
पन्थानममरैर्यान्तं शूरैश्चैवानिवर्तिभिः ।
अपि तत्सङ्गतं मार्गं वयमध्यारुहेमहि ॥ ९-१६-३९ (६०३९३)
पितामहेन वृद्धेन तथाऽचार्येण धीमता ।
जयद्रथेन कर्णेन तथा दुःशासनेन च ॥ ९-१६-४० (६०३९४)
घटमाना मदर्थेऽस्मिन्हताः शूरा जनाधिपाः ।
शेरते लोहिताक्ताङ्गाः पृथिव्यां शरविक्षताः ॥ ९-१६-४१ (६०३९५)
उत्तमास्त्रविदः शूरा यथोक्तक्रतुयाजिनः ।
त्यक्त्वा प्राणान्यथान्यायमिन्द्रसद्मसु धिष्ठितः ॥ ९-१६-४२ (६०३९६)
तैः स्वयं रचितो मार्गो दुर्गमो हि पुनर्भवेत् ।
सम्पतद्भिर्महावेगैरितो यास्यामि सद्गतिम् ॥ ९-१६-४३ (६०३९७)
ये मदर्थे हताः शूरास्तेषां कृतमनुस्मरन् ।
ऋणं तत्प्रतियुञ्जानो न राज्ये मन आदधे ॥ ९-१६-४४ (६०३९८)
पातयित्वा वयस्यांश्च भ्रातॄनथ पितामहान् ।
जीवितं यदि रक्षेयं लोको मां गर्हयेद्ध्रुवम् ॥ ९-१६-४५ (६०३९९)

कीदृशं च भवेद्राज्यं मम हीनस्य बन्धुभिः ।
सखिभिश्च विशेषेण प्रणिपत्य च पाण्डवम् ॥ ९-१६-४६ (६०४००)
सोऽहमेतादृशं कृत्वा जगतोऽस्य पराभवम् ।
सुयुद्धेन हतः स्वर्गं प्राप्सामि न तदन्यथा ॥ ९-१६-४७ (६०४०१)
सञ्जय उवाच। ९-१६-४८क्ष् (५०९०)
एं दुर्योधनेनोक्ते सर्वे सम्पूज्य तद्वचः ।
साधुसाध्विति राजानं क्षत्रियाः सम्बभाषिरे ॥ ९-१६-४८ (६०४०२)
पराजयमशोचन्तः कृतचित्ताश्च विक्रमे ।
सर्वे सुनिश्चिता योद्धुमुदग्रमनसोऽभवन् ॥ ९-१६-४९ (६०४०३)
ततो वाहान्समाश्वास्य सर्वे युद्धाभिनन्दिनः ।
ऊने द्वियोजने गत्वा प्रत्यतिष्ठन्त कौरवाः ॥ ९-१६-५० (६०४०४)
आकाशे विद्रुमे पुण्ये प्रस्थे हिमवतः शुभे ।
अरुणां सरस्वतीं प्राप्य पपुः सस्नुश्च तेजलम् ॥ ९-१६-५१ (६०४०५)
तव पुत्रकृतोत्साहाः पर्यवर्तन्त ते ततः ।
पर्यवस्थाप्य चात्मानमन्योन्येन पुनस्तदा ।
सर्वे राजन्न्यवर्तन्त क्षत्रियाः कालचोदिताः ॥ ॥ ९-१६-५२ (६०४०६)

इति श्रीमन्महाभारते शल्यपर्वणि शल्यवधपर्वणि चतुर्थोऽध्यायः
॥ ४ ॥

Mahabharata - Shalya Parva - Chapter Footnotes

९-१६-११ पुरा यच्छान्तमेवासीत् इति क ।पाठः। पुरा यः शन्तमो
नासीदद्य पश्यामि तं कथम् इति ङ।पाठः ॥
९-१६-१५ उरश्छदः कङ्कटक इत्यमरः ॥
९-१६-३२ विप्रवन्मरणं गृहे इति क।पाठः ।विण्मूत्रमरणं गृहे
इति ङ। पाठः ॥
९-१६-४ चतुर्थोऽध्यायः ॥

---

शल्यपर्व-अध्यय००५
॥ श्रीः ॥
९.५. अध्यायः ५

Mahabharata - Shalya Parva - Chapter Topics
दुर्योधनेन कृपम्प्रति कारणकथनपूर्वकं सन्ध्यनङ्गीकरणम् ॥ १ ॥

Mahabharata - Shalya Parva - Chapter Text

९-१६-० (६०४०७)
सञ्जय उवाच। ९-१६-०क्ष् (५०९१)
एवमुक्तस्ततो राजा गौतमेन तपस्विना ।
निःश्वस्य दीर्घमुष्णं च तूष्णीमासीद्विशाम्पते ॥ ९-१६-१ (६०४०८)
ततो मुहूर्तं स ध्यात्वा तव पुत्रो महामनाः ।
कृपं शारद्वतं वाक्यमित्युवाच परन्तपः ॥ ९-१६-२ (६०४०९)
यत्किञ्चित्सुहृदा वाच्यं तत्सर्वं श्रावितो ह्यहम् ।
कृतं च भवता सर्वं प्राणान्सन्त्यज्य युध्यता ॥ ९-१६-३ (६०४१०)
गाहमानमनीकानि युध्यमानं महारथैः ।
पाण्डवैरतितेजोभिर्लोकस्त्वामनुदृष्टवान् ॥ ९-१६-४ (६०४११)
सुहृदा यदिदं वाक्यं भवता श्रावितो ह्यहम् ।
न मां प्रीणाति तत्सर्वं मुमूर्षोरिव भेषजम् ॥ ९-१६-५ (६०४१२)
हेतुकारणसंयुक्तं हितं वचनमुत्तमम् ।
उच्यमानं महाबाहो न मे विप्राग्र्य रोचने ॥ ९-१६-६ (६०४१३)
राज्याद्विनिकृतोऽस्माभिः कथं सोस्मासु विश्वसेत् ॥ ९-१६-७ (६०४१४)
अक्षद्यूते च नृपतिर्जितोऽस्माभिर्महाधनः ।
स कथं मम वाक्यानि श्रद्दध्याद्भूय एव तु ॥ ९-१६-८ (६०४१५)
तथा दूत्येन सम्प्राप्तः कृष्णः पार्थहिते रतः ।
प्रलब्धश्च हृषीकेशस्तच्च कर्माविचारितम् ।
स च मे वचनं ब्रह्मन्कथमेवाभिमन्यते ॥ ९-१६-९ (६०४१६)
विललाप च यत्कृष्णा सभामध्ये समेयुषी ।
न तन्मर्षयते कृष्णो न राज्यहरणं तथा ॥ ९-१६-१० (६०४१७)
एकप्राणावुभौ कृष्णावन्योन्यमभिसंश्रितौ ।
पुरा यच्छ्रुतमेवासीदद्य पश्यामि तत्प्रभो ॥ ९-१६-११ (६०४१८)
स्वस्रीयं निहतं दृष्ट्वा दुःखं स्वपिति केशवः ।
कृतागसो वयं तस्य हितं मे स कथं चरेत् ॥ ९-१६-१२ (६०४१९)
अभिमन्योर्विनाशेन न शर्म लभतेऽर्जुनः ।
स कथं मद्धिते यत्नं प्रकरिष्यति याचितः ॥ ९-१६-१३ (६०४२०)
मध्यमः पाण्डवस्तीक्ष्णो भीमसेनो महाबलः ।
प्रतिज्ञातं च तेनोग्रं भज्येतापि न सन्नमेत् ॥ ९-१६-१४ (६०४२१)
उभौ तौ बद्धनिस्त्रिंशावुभौ चाबद्धकङ्कटौ ।
कृतवैरावुभौ वीरौ यमावपि यमोपमौ ॥ ९-१६-१५ (६०४२२)
धृष्टद्युम्नः शिखण्डी च कृतवैरौ मया सह ।
तौ कथं मद्धिते यत्नं कुर्यातां द्विजसत्तम ॥ ९-१६-१६ (६०४२३)
दुःशासनेन यत्कृष्णा एकवस्त्रा रजस्वला ।

परिक्लिष्टा सभामध्ये सर्वलोकस्य पश्यतः ॥ ९-१६-१७ (६०४२४)
कथा विवसनां दीनां स्मरन्त्यद्यापि पाण्डवाः ।
न निवारयितुं शक्याः सङ्ग्रामत्ते परन्तपाः ॥ ९-१६-१८ (६०४२५)
यदा च द्रौपदी क्लिष्टा मद्विनाशाय दुःखिता ।
उग्रं तेपे तपः कृष्णा भर्तॄणामर्थसिद्धये ।
स्थण्डिले नित्यदा शेते यावद्वैरस्य यातनम् ॥ ९-१६-१९ (६०४२६)
निक्षिप्य मानं दर्पं च वासुदेवसहोदरा ।
कृष्णायाः प्रेष्यवद्भूत्वा शुश्रूषां कुरुते सदा ॥ ९-१६-२० (६०४२७)
इति सर्वं समुन्नद्धं न निर्वाति कथञ्चन ।
अभिमन्योर्विनाशेन स सन्धेयः कथं मया ॥ ९-१६-२१ (६०४२८)
कथं च राजा भुक्त्वेमां पृथिवीं सागराम्बराम् ।
पाण्डवानां प्रसादेन भोक्ष्ये राज्यमहं कथम् ॥ ९-१६-२२ (६०४२९)
उपर्युपरि राज्ञां वै ज्वलित्वा भास्करो यथा ।
युधिष्ठिरं कथं पश्चादनुयास्यामि दासवत् ॥ ९-१६-२३ (६०४३०)
कथं भुक्त्वा स्वयं भोगान्दत्त्वा दायांश्च पुष्कलान् ।
कृपणं वर्तयिष्यामि कृपणैः सह जीविकाम् ॥ ९-१६-२४ (६०४३१)
नाभ्यसूयामि ते वाक्यमुक्तं स्निग्धं हितं त्वया ॥ ९-१६-२५ (६०४३२)
न तु सन्धिमहं मन्ये प्राप्तकालं कथञ्चन ।
सुनीतमनुपश्यामि सुयुद्धेन परन्तप ॥ ९-१६-२६ (६०४३३)
नायं क्लीबायितुं कालः संयोद्धुं काल एव नः ॥ ९-१६-२७ (६०४३४)
इष्टं मे बहुभिर्यज्ञैर्दत्ता विप्रेषु दक्षिणाः ।
प्राप्ताः कामाः श्रुता वेदाः शत्रूणां मूर्ध्नि च स्थितम् ॥ ९-१६-२८ (६०४३५)
भृत्या मे सुभृतास्तात दीनश्चाभ्युद्धृतो जनः ।
नोत्सहेऽद्य द्विजश्रेष्ठ पाण्डवान्वक्तुमीदृशम् ॥ ९-१६-२९ (६०४३६)
जितानि परराष्ट्राणि स्वराष्ट्रमनुपालितम् ।
भुक्ताश्च विविधा भोगास्त्रिवर्गः सेवितो मया ॥ ५५ ॥ ९-१६-३० (६०४३७)

इति श्रीमन्महाभारते

Mahabharata - Shalya Parva - Chapter Footnotes

९-१६-१ ९-१६- ९-१६- ९-१६- ९-१६- ९-१६- ९-१६- ९-१६- ९-१६-
९-१६- ९-१६-

---

शल्यपर्व-अध्यय००६

॥ श्रीः ॥

९.६. अध्यायः ६

Mahabharata - Shalya Parva - Chapter Topics

दुर्योधनेन शल्यस्य सैनापत्येऽभिषेचनम् ॥ १ ॥
कृष्णेन युधिष्ठिरम्प्रति शल्यवधविधानम् ॥ २ ॥

Mahabharata - Shalya Parva - Chapter Text

९-६-० (६०४३८)
सञ्जय उवाच। ९-६-०क्ष् (५०९२)
एतच्छ्रुत्वा वचो राज्ञो मद्रराजः प्रतापवान् ।
दुर्योधनं तदा राजन्वाक्यमेतदुवाच ह ॥ ९-६-१ (६०४३९)
दुर्योधन महाबाहो शृणु वाक्यविदां वर ।
यावेतौ मन्यसे कृष्णौ रथस्थौ रथिनांवरौ ।
न मे तुल्यावुभावेतौ बाहुवीर्ये कथञ्चन ॥ ९-६-२ (६०४४०)
उद्यतां पृथिवीं सर्वां ससुरासुरमानवाम् ।
योधयेयं रणमुखे सङ्क्रुद्धः किमु पाण्डवान् ॥ ९-६-३ (६०४४१)
विजेष्यामि रणे पार्थान्सोमकांश्च समागतान् ।
अहं सेनाप्रमेता ते भविष्यामि न संशयः ॥ ९-६-४ (६०४४२)
तं च व्यूहं विधास्यामि न क (त) रिष्यन्ति यं परे ।
इति सत्यं ब्रवीम्येष दुर्योधन न संशयः ॥ ९-६-५ (६०४४३)
ग्अद्यैवाहं रणे सर्वान्पाञ्चालान्सह पाण्डवैः ।
निहनिष्यामि वा राजन्स्वर्गं यास्यामि वा हतः ॥ ९-६-६ (६०४४४)
अद्य पश्यन्तु मां लोका विचरन्तमभीतवत् ॥ ९-६-७ (६०४४५)
अद्य पाण्डुसुताः सर्वे वासुदेवः ससात्यकिः ।
पाञ्चालाश्चेदयश्चैव द्रौपदेयाश्च सर्वशः ।
धृष्टद्युम्नः शिखण्डी च सर्वे चापि प्रभद्रकाः ॥ ९-६-८ (६०४४६)
विक्रमं मम पश्यन्तु धनुषश्च महद्बलम् ।
लाघवं चास्त्रवीर्यं च भुजयोश्च बलं युधि ॥ ९-६-९ (६०४४७)
अद्य पश्यन्तु मे पार्थाः सिद्धाश्च सह चारणैः ।
यादृशं मे बलं बाह्वोः सम्पदस्त्रेषु या च मे ॥ ९-६-१० (६०४४८)
अद्य मे विक्रमं दृष्ट्वा पाण्डवानां महारथाः ।
प्रतीकारपरा भूत्वा चेष्टन्ते विविधाः क्रियाः ॥ ९-६-११ (६०४४९)
अद्य सैन्यानि पाण्डूनां द्रावयिष्ये समन्ततः ॥ ९-६-१२ (६०४५०)
द्रोणभीष्मावति विमो सूतपुत्रं च संयुगे ।
विचरिष्ये रणमुखे प्रियार्थं तव कौरव ॥ ९-६-१३ (६०४५१)
सञ्जय उवाच। ९-६-१४क्ष् (५०९३)

एवमुक्तस्ततो राजा मद्राधिपतिमञ्जसा ।
अभ्यषिञ्चत सेनाया मध्ये भरतसत्तम ।
विधिना शास्त्रदृष्टेन क्लिष्टरूपो विशाम्पते ॥ ९-६-१४ (६०४५२)
अभिषिक्ते ततस्तस्मिन्सिंहनादो महानभूत् ।
तव सैन्येऽभ्यवाद्यन्त वादित्राणि च भारत ॥ ९-६-१५ (६०४५३)
हृष्टाश्चासंस्तथा योधा मद्रकाश्च महारथाः ।
तुष्टुवुश्चैव राजानं शल्यमाहवशोभिनम् ॥ ९-६-१६ (६०४५४)
जय राजंश्चिरं जीव जहि शत्रून्समागतान् ।
तव बाहुबलं प्राप्य धार्तराष्ट्रो महाबलः ।
निखिलां पृथिवीं सर्वां प्रशास्तु निहतद्विषम् ॥ ९-६-१७ (६०४५५)
त्वं हि शक्तो रणे जेतुं ससुरासुरमानवान् ।
मर्त्यधर्माण इह तु किमु सृञ्जयसोमकान् ॥ ९-६-१८ (६०४५६)
एवं सम्पूज्यमानस्तु मद्राणामधिपो बली ।
हर्षं प्राप तदा वीरो दुरापमकृतात्मभिः ॥ ९-६-१९ (६०४५७)
सञ्जय उवाच। ९-६-२०क्ष् (५०९४)
अभिषिक्ते तथा शल्ये तव सैन्येषु मानद ।
न कर्णव्यसनं किञ्चिन्मेनिरे तत्र भारत ॥ ९-६-२० (६०४५८)
हृष्टाः सुमनसश्चैव बभूवुस्तत्र सैनिकाः ।
मेनिरे निहतान्पार्थान्मद्रराजवशङ्गतान् ॥ ९-६-२१ (६०४५९)
प्रहर्षं प्राप्य सेना तु तावकी भरतर्षभ ।
तां रात्रिं सुखिता सुप्ता हर्षचित्ता च साभवत् ॥ ९-६-२२ (६०४६०)
सैन्यस्य तव तं शब्दं श्रुत्वा राजा युधिष्ठिरः ।
वार्ष्णेयमब्रवीद्वाक्यं सर्वक्षत्रस्य पश्यतः ॥ ९-६-२३ (६०४६१)
मद्रराजः कृतः शल्यो धार्तराष्ट्रेण माधव ।
सेनापतिर्महेष्वासः सर्वसैन्येषु पूजितः ॥ ९-६-२४ (६०४६२)
एतज्ज्ञात्वा यथाभूतं कुरु माधव यत्क्षमम् ।
भवान्नेता च गोप्ता च विधत्स्व यदनन्तरम् ॥ ९-६-२५ (६०४६३)
तमब्रवीन्महाराज वासुदेवो जनाधिपम् ।
आर्तायनिमहं जाने यथातत्त्वेन भारत ॥ ९-६-२६ (६०४६४)
वीर्यवांश्च महातेजा महात्मा च विशेषतः ।
कृती च चित्रयोधी च संयुक्तो लाघवेन च ॥ ९-६-२७ (६०४६५)
यादृग्भीष्मस्तथा द्रोणो यादृक्कर्णश्च संयुगे ।
तादृशस्तद्विशिष्टो वा मद्रराजो मतो मम ॥ ९-६-२८ (६०४६६)
युध्यमानस्य तस्याहं चिन्तयानश्च भारत ।
योद्धारं नाधिगच्छामि तुल्यरूपं जनाधिप ॥ ९-६-२९ (६०४६७)
शिखण्ड्यर्जुनभीमानां सात्वतस्य च भारत ।

धृष्टद्युम्नस्य च तथा बलेनाभ्यधिको रणे ॥ ९-६-३० (६०४६८)
मद्रराजो महाराजः सिंहद्विरदविक्रमः ।
विचरिष्यत्यभीः काले कालः क्रुद्धः प्रजास्विव ॥ ९-६-३१ (६०४६९)
तस्याद्य न प्रपश्यामि प्रतियोद्धारमाहने ।
त्वामृते पुरुषव्याघ्र शार्दूलसमविक्रमम् ॥ ९-६-३२ (६०४७०)
स त्वमेको हि लोकेऽस्मिन्नान्यस्त्वत्तः पुमान्भवेत् ।
मद्रराजं रणे क्रुद्धं यो हन्यात्कुरुनन्दन ॥ ९-६-३३ (६०४७१)
अहन्यहनि युध्यन्तं क्षोभयन्तं बलं तव ।
तस्माज्जहि रणे शल्यं मघवानिव शम्बरम् ॥ ९-६-३४ (६०४७२)
सौतेः पश्चादसौ वीरो धार्तराष्ट्रेण सत्कृतः ।
तवैव हि जयो नूनं हते मद्रेश्वरे युधि। ९-६-३५ (६०४७३)
तस्मिन्हते हतं सर्वं धार्तराष्ट्रबलं महत् ॥
एतच्छ्रुत्वा महाराज वचनं मम साम्प्रतम्। ९-६-३६ (६०४७४)
प्रत्युद्याहि रणे पार्थ मद्रराजं महारथम् ॥
जहि चैनं महाबाहो वासवो नमुचिं यथा ॥ ९-६-३७ (६०४७५)
न चैवात्र दया कार्या मातुलोऽयं ममेति वै ।
क्षत्रवर्म पुरस्कृत्य जहि मद्रजनेश्वरम् ॥ ९-६-३८ (६०४७६)
द्रोणभीष्मार्णवं तीर्त्वा कर्णपातालसम्भवम् ।
मा निमज्जस्व सगणः शल्यमासाद्य गोष्पदम्। ९-६-३९ (६०४७७)
यच्च ते तपसो वीर्यं यच्च क्षात्रं बलं तव ।
तद्दर्शय रणे सर्वं जहि चैनं महारथम् ॥ ९-६-४० (६०४७८)
सञ्जय उवाच। ९-६-४१क्ष् (५०९५)
एतावदुक्त्वा वचनं केशवः परवीरहा ।
जगाम शिबिरं सायं पूज्यमानोऽथ पाण्डवैः ॥ ९-६-४१ (६०४७९)
केशवे तु तदा याते धर्मपुत्रो युधिष्ठिरः ।
विसृज्य सर्वान्भ्रातॄंश्च पाञ्चालानथ सोमकान् ।
सुष्वाप रजनीं तां तु विशल्य इव कुञ्जरः ॥ ९-६-४२ (६०४८०)
ते च सर्वे महेष्वासाः पाञ्चालाः पाण्डवास्तथा ।
कर्णस्य निधने हृष्टाः सुषुपुस्तां निशां तदा ॥ ९-६-४३ (६०४८१)
गतज्वरं महेष्वासं तीर्णपारं महारथम् ।
बभूव पाण्डवेयानां सैन्यं च मुदितं निशि ।
सूतपुत्रस्य निधनाज्जयं लब्ध्वा च मारिष ॥ ॥ ९-६-४४ (६०४८२)

इति श्रीमन्महाभारते कर्णपर्वणि शल्यवधपर्वणि षष्ठोऽध्यायः ॥ ६ ॥
Mahabharata - Shalya Parva - Chapter Footnotes

९-६-१४ क्लिष्टरूपः पराजयनिश्चयात् ॥
९-६-१८ मर्त्यधर्माणः मर्त्यधर्मणः ॥
९-६-६ षष्ठोऽध्यायः ॥

---

शल्यपर्व-अध्यय००७
॥ श्रीः ॥
९.७. अध्यायः ७

Mahabharata - Shalya Parva - Chapter Topics
उभयसैन्यानां व्यूहरचनापूर्वकं द्वन्द्वीभूय युद्धाय निर्गमनम् ॥१ ॥

Mahabharata - Shalya Parva - Chapter Text

९-७-० (६०४८३)
सञ्जय उवाच। ९-७-०क्ष् (५०९६)
व्यतीतायां रजन्यां तु राजा दुर्योधनस्तदा ।
अब्रवीत्तावकान्सर्वान्सन्नह्यन्तां महारथाः ॥ ९-७-१ (६०४८४)
राज्ञश्च मतमाज्ञाय समनह्यत सा चमूः ।
अयोजयन्रथांस्तूर्णं पर्यधावंस्तथा परे ॥ ९-७-२ (६०४८५)
अकल्प्यन्त च मातङ्गाः समनह्यन्त पत्तयः ।
हयानास्तरणोपेतांश्चक्रुरन्ये सहस्रशः ॥ ९-७-३ (६०४८६)
वादित्राणां च निनदः प्रादुरासीद्विशाम्पते ।
योधानां सैन्यमुख्यानामन्योन्यं प्रतिगर्जताम् ॥ ९-७-४ (६०४८७)
ततो बलानि सर्वाणि हतशिष्टानि भारत ।
सन्नद्धानि व्यदृश्यन्त मृत्युं कृत्वा निवर्तनम् ॥ ९-७-५ (६०४८८)
शल्यं सेनापतिं कृत्वा मद्रराजं महारथाः ।
प्रविभज्य बलं सर्वमनीकेषु व्यवस्थिताः ॥ ९-७-६ (६०४८९)
ततः सर्वे समागम्य पुत्रेण तव सैनिकाः ।
कृपश्च कृतवर्मा च द्रौणिः शल्योऽथ सौबलः ।
अन्ये च पार्थिवाः शेषाः समयं चक्रुरादृताः ॥ ९-७-७ (६०४९०)
ग्अद्याचार्यसुतो द्रौणिर्नैको युध्येत शत्रुभिः'।
न न एकेन योद्धव्यं कथञ्चिदपि पाण्डवैः ॥ ९-७-८ (६०४९१)
यो ह्येकः पाण्डवैर्युध्येद्यो वा युध्यन्तमुत्सृजेत् ।
स पञ्चभिर्भवेद्युक्तः पातकैश्चोपपातकैः ।
अन्योन्यं परिरक्षद्भिर्योद्धव्यं सहितैश्च नः ॥ ९-७-९ (६०४९२)
एवं ते समयं कृत्वा सर्वे तत्र महारथाः ।

मद्रराजं पुरस्कृत्य तूर्णमभ्यद्रवन्परान् ॥ ९-७-१० (६०४९३)
तथैव पाण्डवा राजन्व्यूह्य सैन्यं महारणे ।
अभ्ययुः कौरवान्युद्धे योत्स्यमानाः समन्ततः ॥ ९-७-११ (६०४९४)
ततो बलं समभवत्क्षुब्धार्णवसमस्वनम् ।
समुद्भूतार्णवाकारमुदीर्णरथकुञ्जरम् ॥ ९-७-१२ (६०४९५)
धृतराष्ट्र उवाच। ९-७-१३क्ष् (५०९७)
द्रोणस्य चैव भीष्मस्य राधेयस्य च मे श्रुतम् ।
पातनं शंस मे भूयः शल्यस्याथ सुतस्य मे ॥ ९-७-१३ (६०४९६)
कथं रणे हतः शल्यो धर्मराजेन सञ्जय ।
भीमेन च महाबाहुः पुत्रो दुर्योधनो मम ॥ ९-७-१४ (६०४९७)
सञ्जय उवाच। ९-७-१५क्ष् (५०९८)
क्षयं मनुष्यदेहानां तथा नागाश्वसङ्क्षयम् ।
शृणु राजन्स्थिरो भूत्वा सङ्ग्रामं शंसतो मम ॥ ९-७-१५ (६०४९८)
आशा बलवती राजन्पुत्राणां तेऽभवत्तदा ॥ ९-७-१६ (६०४९९)
हते द्रोणे च भीष्मे च सूतपुत्रे च पातिते ।
शल्यः पार्थान्रणे सर्वान्निहनिष्यति मारिष ॥ ९-७-१७ (६०५००)
तामाशां हृदये कृत्वा समाश्वस्य च भारत ।
मद्रराजं च समरे समाश्रित्य महारथम् ।
नाथवन्तं तदाऽऽत्मानममन्यत सुतस्तव ॥ ९-७-१८ (६०५०१)
यदा कर्णे हते पार्थाः सिंहनादं प्रचक्रिरे ।
तदा राजन्धार्तराष्ट्रान्प्रविवेश महद्भयम् ॥ ९-७-१९ (६०५०२)
तान्समाश्वास्य तु तदा मद्रराजः प्रतापवान् ।
व्यूह्य व्यूहं महाराज सर्वतोभद्रमृद्धिमत् ॥ ९-७-२० (६०५०३)
प्रत्युद्ययौ रणे पार्थान्मद्रराजः प्रतापवान् ।
विधून्वन्कार्मुकं चित्रं भारघ्नं वेगवत्तरम् ।
रथप्रवरमास्थाय सैन्धवाश्वं महारथः ॥ ९-७-२१ (६०५०४)
तस्य सूतो महाराज रथस्थोऽशोभयद्रथम् ।
स तेन संवृतो वीरो रथेनामित्रकर्शनः ।
तस्थौ शूरो महाराज पुत्राणां ते भयप्रणुत् ॥ ९-७-२२ (६०५०५)
प्रयाणे मद्रराजोऽभून्मुखं व्यूहस्य दंशितः ।
मद्रकैः सहितो वीरैः कर्णपुत्रैश्च दुर्जयैः ॥ ९-७-२३ (६०५०६)
सव्येऽभूत्कृतवर्मा च त्रिगर्तैः परिवारितः ।
गौतमो दक्षिणे पार्श्वे शकैश्च यवनैः सह ॥ ९-७-२४ (६०५०७)
अश्वत्थामा पृष्ठतोऽभूत्काम्भोजैः परिवारितः ।
दुर्योधनोऽभवन्मध्ये रक्षितः कुरुपुङ्गवैः ॥ ९-७-२५ (६०५०८)
हयानीकेन महता सौबलश्चापि संवृतः ।

प्रययौ सर्वसैन्येन कैतव्यश्च महारथः ॥ ९-७-२६ (६०५०९)
पाण्डवाश्च महेष्वासा व्यूह्य सैन्यमरिन्दमाः ।
त्रिधाभूता महाराज तव सैन्यमुपाद्रवन् ॥ ९-७-२७ (६०५१०)
धृष्टद्युम्नः शिखण्डी च सात्यकिस्च महारथः ।
शल्यस्य वाहिनीं हन्तुमभिदुद्रुवुराहवे ॥ ९-७-२८ (६०५११)
ततो युधिष्ठिरो राजा स्वेनानीकेन संवृतः ।
शल्यमेवाभिदुद्राव जिघांसुर्भरतर्षभः ॥ ९-७-२९ (६०५१२)
हार्दिक्यं च महेष्वासमर्जुनः शत्रुपूगहा ।
संशप्तकगणांश्चैव वेगितोऽभिविदुद्रुवे ॥ ९-७-३० (६०५१३)
गौतमं भीमसेनो वै सोमकाश्च महारथाः ।
अभ्यद्रवन्त राजेनद्र जिघांसन्तः परान्युधि ॥ ९-७-३१ (६०५१४)
माद्रीपुत्रौ तु शकुनिमुलूकं च महारथम् ।
ससैन्यौ सहसैन्यौ तावुपतस्थतुराहवे ॥ ९-७-३२ (६०५१५)
तथैवायुतशो योधास्तावकाः पाण्डवान्रणे ।
अभ्यवर्तन्त सङ्क्रुद्धा विविधायुधपाणयः ॥ ९-७-३३ (६०५१६)
धृतराष्ट्र उवाच। ९-७-३४क्ष् (५०९९)
हते भीष्मे हमेष्वासे द्रोणे कर्णे जयद्रथे ।
कुरुष्वल्पावशिष्टेषु पाण्डवेषु च संयुगे ॥ ९-७-३४ (६०५१७)
संरब्धेषु च पार्थेषु पराक्रान्तेषु सञ्जय ।
मामकानां परेषां च किं शिष्टमभवद्बलम् ॥ ९-७-३५ (६०५१८)
सञ्जय उवाच। ९-७-३६क्ष् (५१००)
यथा वयं परे राजन्युद्धाय समुपस्थिताः ।
यावच्चासीद्बलं शिष्टं सङ्ग्रामे तन्निबोध मे ॥ ९-७-३६ (६०५१९)
एकादश सहस्राणि रथानां भरतर्षभ ।
दश दन्तिसहस्राणि सप्त चैव शतानि च ॥ ९-७-३७ (६०५२०)
पूर्णे शतसहस्रे द्वे हयानां तत्र भारत ।
पत्तिकोट्यस्तथा तिस्रो बलमेतत्तवाभवत् ॥ ९-७-३८ (६०५२१)
रथानां षट्सहस्राणि षट्सहस्राश्च कुञ्जराः ।
दश चाश्वसहस्राणि पत्तिकोटी च भारत ॥ ९-७-३९ (६०५२२)
एतद्बलं पाण्डवानामभवच्छेषमाहवे ।
एत एव समाजग्मुर्युद्धाय भरतर्षभ ॥ ९-७-४० (६०५२३)
एवं विभज्य राजेन्द्र मद्रराजमते स्थिताः ।
पाण्डवान्प्रत्युदीयाम जयगृद्धाः प्रमन्यवः ॥ ९-७-४१ (६०५२४)
तथैव पाण्डवाः शूराः समरे जितकाशिनः ।
उपयाता नरव्याघ्राः पाञ्चालाश्च यशस्विनः ॥ ९-७-४२ (६०५२५)
एवमेते बलौघेन परस्परवधैषिणः ।

उपयाता नरव्याघ्राः पूर्वां सन्ध्यां प्रति प्रभो ॥९-७-४३ (६०५२६)
ततः प्रववृते युद्धं घोररूपं भयानकम् ।
तावकानां परेषां च निघ्नतामितरेतरम् ॥ ॥९-७-४४ (६०५२७)

इति श्रीमन्महाभारते शल्यपर्वणि शल्यवधपर्वणि सप्तमोऽध्यायः ॥ ७ ॥
Mahabharata - Shalya Parva - Chapter Footnotes

९-७-३९ पत्तिकोटी इति द्विवचनम् ॥
९-७-७ सप्तमोऽध्यायः ॥

---

शल्यपर्व-अध्यय००८
॥ श्रीः ॥
९.८. अध्यायः ८

Mahabharata - Shalya Parva - Chapter Topics
अष्टादशदिवसयुद्धारम्भ्यः ॥ १ ॥
सङ्कुलयुद्धम् ॥ २ ॥

Mahabharata - Shalya Parva - Chapter Text

९-८-० (६०५२८)
सञ्जय उवाच। ९-८-०क्ष् (५१०१)
ततः प्रववृते युद्धं कुरूणां भयवर्धनम् ।
सृञ्जयैः सह राजेन्द्र घोरं देवासुरोपमम् ॥ ९-८-१ (६०५२९)
नरा रथा गजौघाश्च वाजिनश्च सहस्रशः ।
वाजिनश्च पराक्रान्ताः समाजग्मुः परस्परम् ॥ ९-८-२ (६०५३०)
गजानां भीमरूपाणां द्रवतां निःस्वनो महान् ।
अश्रूयत यथा काले जलदानां नभस्तले ॥ ९-८-३ (६०५३१)
नागैरभ्याहताः केचित्सरथा रथिनोऽपतन् ।
व्यद्रवन्त रणे भीता द्राव्यमाणा मदोत्कटैः ॥ ९-८-४ (६०५३२)
हयौघान्पादरक्षांश्च रथिनस्तत्र शिक्षिताः ।
शरैः सम्प्रेषयामासुः परलोकाय भारत ॥ ९-८-५ (६०५३३)
सादिनः शिक्षिता राजन्परिवार्य महारथान् ।
विचरन्तो रणेऽभ्यघ्नन्प्रासशक्त्यृष्टिभिस्तथा ॥ ९-८-६ (६०५३४)
धन्विनः पुरुषाः केचित्परिवार्य महारथान् ।
एकं बहव आसाद्य प्रैषयन्यमसादनम् ॥ ९-८-७ (६०५३५)

नागान्रथवरांश्चान्ये परिवार्य महारथाः ।
सोत्तरा युधि निर्जघ्नुर्द्रवमाणं महारथम् ॥ ९-८-८ (६०५३६)
तथा च रथिनं क्रुद्धं विकिरन्तं शरान्बहून् ।
नागा जघ्नुर्महाराज परिवार्य समन्ततः ॥ ९-८-९ (६०५३७)
नागा नागमभिद्रुत्य रथी च रथिनं रणे ।
शक्तितोमरनाराचैर्निजघ्नुस्तत्र भारत ॥ ९-८-१० (६०५३८)
पादातानवमृद्नन्तो रथवारणवाजिनः ।
रणमध्ये व्यदृश्यन्त कुर्वन्तो महदाकुलम् ॥ ९-८-११ (६०५३९)
हयाश्च पर्यधावन्त चामरैरुपशोभिताः ।
हंसा हिमवतः प्रस्थे पिबन्त इव मेदिनीम् ॥ ९-८-१२ (६०५४०)
तेषां तु वाजिनां भूमिः खुरैश्चित्रा विशाम्पते ।
अशोभत यथा नारी करजैः क्षतविक्षता ॥ ९-८-१३ (६०५४१)
वाजिनां खुरशब्देन रथनेमिस्वनेन च ।
पत्तीनां चापि शब्देन नागानां बृंहितेन च ॥ ९-८-१४ (६०५४२)
वादित्राणां च घोषेण शङ्खानां निनदेन च ।
अभवन्नादिता भूमिर्निर्घातैरिव भारत ॥ ९-८-१५ (६०५४३)
धनुषां कूजमानानां शस्त्रौघानां च पात्यताम् ।
कवचानां प्रभाभिश्च न प्राज्ञायत किञ्चन ॥ ९-८-१६ (६०५४४)
बहवो बाहवश्छिन्ना नागराजकरोपमाः ।
उद्वेष्टन्ते विचेष्टन्ते वेगं कुर्वन्ति दारुणम् ॥ ९-८-१७ (६०५४५)
शिरसां च महाराज पततां धरणीतले ।
च्युतानामिव तालेभ्यः फलानां श्रूयते स्वनः ॥ ९-८-१८ (६०५४६)
शिरोभिः पतितैर्भाति रुधिरार्द्रैर्वसुन्धरा ।
तपनीयनिभैः काले नलिनैरिव भारत ॥ ९-८-१९ (६०५४७)
उद्वृत्तनयनैस्तैस्तु गतसत्वैः सुविक्षतैः ।
व्यभ्राजत मही राजन्पुण्डरीकैरिवावृता ॥ ९-८-२० (६०५४८)
बाहुभिश्चन्दनादिग्धैः सकेयूरैर्महाधनैः ।
पतितैर्भाति राजेन्द्र महाशक्रध्वजैरिव ॥ ९-८-२१ (६०५४९)
ऊरुभिश्च नरेन्द्राणां विनिकृत्तैर्महाहवे ।
हस्तिहस्तोपमैर्जज्ञे संवृतं तद्रणाङ्गणम् ॥ ९-८-२२ (६०५५०)
कबन्धशतसङ्कीर्णं छत्रचामरसङ्कुलम् ।
सेनावनं तच्छुशुभे वनं पुष्पाचितं यथा ॥ ९-८-२३ (६०५५१)
तत्र योधा महाराज विचरन्तो ह्यभीतवत् ।
दृश्यन्ते रुधिराक्ताङ्गाः पुष्पिता इव किंशुकाः ॥ ९-८-२४ (६०५५२)
मातङ्गाश्चाप्यदृश्यन्त शरतोमरपीडिताः ।
पतन्तस्तत्र तवैव छिन्नाभ्रासदृशा रणे ॥ ९-८-२५ (६०५५३)

गजानीकं महाराज वध्यमानं महात्मभिः ।
व्यदीर्यत दिशः सर्वा वातनुन्ना धना इव ॥ ९-८-२६ (६०५५४)
ते गजा धनसङ्काशाः पेतुरुर्व्यां समन्ततः ।
वज्रनुन्ना इव बभुः पर्वता युगसङ्क्षये ॥ ९-८-२७ (६०५५५)
हयानां सादिभिः सार्धं पतितानां महीतले ।
राशयः स्म प्रदृश्यन्ते गिरिमात्रांस्ततस्ततः ॥ ९-८-२८ (६०५५६)
सञ्जज्ञे रणभूमौ तु परलोकवहा नदी ।
शोणितोदा रथावर्ता ध्वजवृक्षास्थिशर्करा ॥ ९-८-२९ (६०५५७)
भुजनक्रा धनुःस्रोता हस्तिशैला हयोपला ।
मेदोमज्जाकर्दमिनी छत्रहंसा गदोडुपा ॥ ९-८-३० (६०५५८)
कवचोष्णीषसञ्छन्ना पताकारुचिरद्रुमा ।
चक्रचक्रावलीजुष्टा त्रिवेणूरगसंवृता ॥ ९-८-३१ (६०५५९)
शूराणां हर्षजननी भीरूणां भयवर्धनी ।
प्रावर्तत नदी रौद्रा कुरुसृञ्जयसङ्गमे ॥ ९-८-३२ (६०५६०)
तां नदीं परलोकाय वहन्तीमतिभैरवाम् ।
तेरुर्वाहननौभिस्ते शूराः परिघबाहवः ॥ ९-८-३३ (६०५६१)
वर्तमाने तदा युद्धे निर्मर्यादे विशाम्पते ।
चतुरङ्गक्षये घोरे युद्धे देवासुरोपमे ॥ ९-८-३४ (६०५६२)
व्याक्रोशन्बान्धवानन्ये तत्र तत्र परन्तप ।
क्रोशद्भिर्दयितैरन्ये भयार्ता न निवर्तिरे ॥ ९-८-३५ (६०५६३)
निर्मर्यादे तथा युद्धे वर्तमाने भयानके ।
अर्जुनो भीमसेनश्च मोहयाञ्चक्रतुः परान् ॥ ९-८-३६ (६०५६४)
सा वध्यमाना महती सेना तव नराधिप ।
अमुह्यत्तत्र तत्रैव योषिन्मदवशादिव ॥ ९-८-३७ (६०५६५)
मोहयित्वा च तां सेनां भीमसेनधनञ्जयौ ।
दध्मतुर्वारिजौ तत्र सिंहनादांश्च चक्रतुः ॥ ९-८-३८ (६०५६६)
श्रुत्वैव तु महाशब्दं धृष्टद्युम्नशिखण्डिनौ ।
धर्मराजं पुरस्कृत्य मद्रराजमभिद्रुतौ ॥ ९-८-३९ (६०५६७)
तत्राश्चर्यमपश्याम घोररूपं महद्भयम् ।
शल्येन सङ्गताः शूरा यदयुध्यन्त भागशः ॥ ९-८-४० (६०५६८)
माद्रीपुत्रौ तु रभसौ कृतास्त्रौ युद्धदुर्मदौ ।
अभ्ययातां त्वरायुक्तौ जिगीषन्तौ बलं तव ॥ ९-८-४१ (६०५६९)
ततोऽभ्यावर्तत बलं तावकं भरतर्षभ ।
शरैः प्रणुन्नं बहुधा पाण्डवैर्जितकाशिभिः ॥ ९-८-४२ (६०५७०)
वध्यमाना चमूः सा तु पुत्राणां प्रेक्षतां तव ।
भेजे दश दिशो राजन्प्रणुन्ना शरवृष्टिभिः ॥ ९-८-४३ (६०५७१)

हाहाकारो महाञ्जज्ञे योधानां तत्र भारत ।
तिष्ठतिष्ठेति चाप्यासीद्द्रावितानां महात्मनाम् ॥ ९-८-४४ (६०५७२)
क्षत्रियाणां तथाऽन्योन्यं संयुगे जयमिच्छताम् ।
प्राद्रवन्नेव सम्भग्नाः पाण्डवैस्तव सैनिकाः ॥ ९-८-४५ (६०५७३)
त्यक्त्वा युद्धे प्रियान्पुत्रान्भ्रातॄनथ पितामहान् ।
मातुलान्भागिनेयांश्च वयस्यानपि भारत ॥ ९-८-४६ (६०५७४)
हयान्द्विपांस्त्वरयन्तो योधा जग्मुः समन्ततः ।
आत्मत्राणकृतोत्साहास्तावका भरतर्षभ ॥ ॥ ९-८-४७ (६०५७५)

इति श्रीमन्महाभारते शल्यपर्वणि शल्यवधपर्वणि
अष्टादशदिवसयुद्धे अष्टमोऽध्यायः ॥ ८ ॥
Mahabharata - Shalya Parva - Chapter Footnotes

९-८-३५ न निवर्तिरे न निवर्तिताः ॥
९-८-८ अष्टमोऽध्यायः ॥

---

शल्यपर्व-अध्यय००९
॥ श्रीः ॥
९.९. अध्यायः ९

Mahabharata - Shalya Parva - Chapter Topics
नकुकेन कर्णपुत्राणां त्रयाणां मारणम् ॥ १ ॥

Mahabharata - Shalya Parva - Chapter Text

९-९-० (६०५७६)
सञ्जय उवाच। ९-९-०क्ष् (५१०२)
तत्प्रभग्नं बलं दृष्ट्वा मद्रराजः प्रतापवान् ।
उवाच सारथिं तूर्णं चोदयाश्वान्महाजवान् ॥ ९-९-१ (६०५७७)
एष तिष्ठति वै राजा पाण्डुपुत्रो युधिष्ठिरः ।
छत्रेण ध्रियमाणेन पाण्डुरेण विराजता ॥ ९-९-२ (६०५७८)
अत्र मां प्रापय क्षिप्रं पश्य मे सारथे बलम् ।
न समर्था हि मे पार्थाः स्थातुमद्य पुरो युधि ॥ ९-९-३ (६०५७९)
एवमुक्तस्ततः प्रायान्मद्रराजस्य सारथिः ।
यत्रा राजा सत्यसन्धो धर्मपुत्रो युधिष्ठिरः ॥ ९-९-४ (६०५८०)
आपतन्तं च सहसा पाण्डवानां महद्बलम् ।

दधारैको रणे शल्यो वेलोद्धूत्तमिवार्णवम् ॥ ९-९-५ (६०५८१)
पाण्डवानां बलौघस्तु शल्यमासाद्य मारिष ।
व्यतिष्ठत तदा युद्धे सिन्धोर्वेग इवाचलम् ॥ ९-९-६ (६०५८२)
मद्रराजं तु समरे दृष्ट्वा युद्धाय धिष्ठितम् ।
कुरवः सन्न्यवर्तन्त मृत्युं कृत्वा निवर्तनम् ॥ ९-९-७ (६०५८३)
तेषु राजन्निवृत्तेषु व्यूढानीकेषु सर्वशः ।
प्रावर्तत महारौद्रः सङ्ग्रामः शोणितोदकः ॥ ९-९-८ (६०५८४)
समार्च्छच्चित्रसेनं तु नकुलो युद्धदुर्मदः ।
तौ परस्परमासाद्य चित्रकार्मुकधारिणौ ॥ ९-९-९ (६०५८५)
मेघाविव यथोद्वृत्तौ दक्षिणोत्तरवर्षिणौ ।
शरतोयैः सिषिचतुस्तौ परस्परमाहवे ॥ ९-९-१० (६०५८६)
नान्तरं तत्र पश्यामः पाण्डवस्येतरस्य च ।
उभौ कृतास्त्रौ बलिनौ रथचर्याविशारदौ ।
परस्परवधे यत्तौ छिद्रान्वेषणतत्परौ ॥ ९-९-११ (६०५८७)
चित्रसेनस्तु भल्लेन पीतेन निशितेन च ।
नकुलस्य महाराज मुष्टिदेशेऽच्छिनद्धनुः ॥ ९-९-१२ (६०५८८)
अथैनं छिन्नधन्वानं रुक्मपुङ्खैः शिलाशितैः ।
त्रिभिः शरैरसम्भ्रान्तो ललाटे वै समार्पयत् ॥ ९-९-१३ (६०५८९)
हयांश्चास्य शरैस्तीक्ष्णैः प्रेषयामास मृत्यवे ।
तथा ध्वजं सारथिं च त्रिभिस्त्रिभिरपातयत् ॥ ९-९-१४ (६०५९०)
स शत्रुभुजनिर्मुक्तैर्ललाटस्थैस्त्रिभिः शरैः ।
नकुलः शुशुभे राजंस्त्रिशृङ्ग इव पर्वतः ॥ ९-९-१५ (६०५९१)
स च्छिन्नधन्वा विरथः खड्गमादाय चर्म च ।
रथादवातरद्वीरः शैलाग्रादिव केसरी ॥ ९-९-१६ (६०५९२)
पद्मामापततस्तस्य शस्वृष्टिं समासृजत् ।
नकुलोऽप्यग्रसत्तां वै चर्मणा लघुविक्रमः ॥ ९-९-१७ (६०५९३)
चित्रसेनरथं प्राप्य चित्रयोधी जितश्रमः ।
आरुरोह महाबाहुः सर्वसैन्यस्य पश्यतः ॥ ९-९-१८ (६०५९४)
सकुण्डलं समुकुटं सुनसं स्वायतेक्षणम् ।
चित्रसेनशिरः कायादपाहरत पाण्डवः ॥ ९-९-१९ (६०५९५)
स पपात रथात्तस्माद्दिवाकरसमद्युतिः ॥ ९-९-२० (६०५९६)
चित्रसेनशिरस्तत्तु दृष्ट्वा तत्र महारथाः ।
साधुवादस्वनांश्चक्रुः सिंहनादांश्च पुष्कलान् ॥ ९-९-२१ (६०५९७)
विशस्तं भ्रातरं दृष्ट्वा कर्णपुत्रौ महारथौ ।
सुशर्मा सत्यसेनश्च मुञ्चन्तौ विविधाञ्शरान् ॥ ९-९-२२ (६०५९८)
ततोऽभ्यधावतां तूर्णं पाण्डवं रथिनां वरम् ।

जिघांसन्तौ यथा नागं व्याघ्रौ राजन्महावने ॥ ९-९-२३ (६०५९९)
तावभ्येत्य महाबाहू द्वावप्यतिमहारथौ ।
शरौषान्सम्यगस्यन्तौ जीमूतौ सलिलं यथा ॥ ९-९-२४ (६०६००)
स शरैः सर्वतो विद्धः प्रहृष्ट इव पाण्डवः ।
अन्यत्कार्मुकमादाय रथमारुह्य वेगवान् ।
अतिष्ठत रणे वीरः क्रुद्धरूप इवान्तकः ॥ ९-९-२५ (६०६०१)
तस्य तौ भ्रातरौ राजञ्शरैः सन्नतपर्वभिः ।
रथं विशकलीकर्तुं समारब्धौ विशाम्पते ॥ ९-९-२६ (६०६०२)
ततः प्रहस्य नकुलश्चतुर्भिश्चतुरो रणे ।
जघान निशितैर्बाणैः सत्यसेनस्य वाजिनः ॥ ९-९-२७ (६०६०३)
ततः सन्धाय नारचं रुक्मपुङ्खं शिलाशितम् ।
धनुश्चिच्छेद राजेन्द्र सत्यसेनस्य पाण्डवः ॥ ९-९-२८ (६०६०४)
अथान्यं रथमास्थाय धनुरादाय चापरम् ।
सत्यसेनः सुशर्मा च पाण्डवं पर्यधावताम् ॥ ९-९-२९ (६०६०५)
अविध्यत्तावसम्भ्रान्तौ माद्रीपुत्रः प्रतापवान् ।
द्वाभ्यां द्वाभ्यां महाराज शराभ्यां रणमूर्धनि ॥ ९-९-३० (६०६०६)
सुशर्मा तु ततः क्रुद्धः पाण्डवस्य महद्धनुः ।
चिच्छेद प्रहसन्युद्धे क्षुरप्रेण महारथः ॥ ९-९-३१ (६०६०७)
अथान्यद्धनुरादाय नकुलः क्रोधमूच्छितः ।
सुशर्माणं पञ्चभिर्विद्ध्वा ध्वजमेकेन चिच्छिदे ॥ ९-९-३२ (६०६०८)
सत्यसेनस्य स धनुर्हस्तावपं च मारिष ।
चिच्छेद तरसा युद्धे तत उच्चुक्रुशुर्जनाः ॥ ९-९-३३ (६०६०९)
अथान्यद्धनुरादाय वेगघ्नं भारसाधनम् ।
शरैः सञ्छादयामास समन्तात्पाण्डुनन्दनम् ॥ ९-९-३४ (६०६१०)
सन्निवार्य तु तान्बाणान्नकुलः परवीरहा ।
सत्यसेनसुशर्माणौ द्वाभ्यां द्वाभ्यामविध्यत ॥ ९-९-३५ (६०६११)
तावेनं प्रत्यविध्येतां पृथक्पृथगजिह्मगैः ।
सारथिं चास्य राजेन्द्र शितैर्विव्यधतुः शरैः ॥ ९-९-३६ (६०६१२)
सत्यसेनो रथेषां तु नकुलस्य धनुस्तथा ।
पृथक् शराभ्यां चिच्छेद कृतहस्तः प्रतापवान् ॥ ९-९-३७ (६०६१३)
स रथेऽतिरथस्तिष्ठन्रथशक्तिं परामृशत् ॥
स्वर्णदण्डामकुण्ठाग्रां तैलधौतां सुनिर्मलाम्। ९-९-३८ (६०६१४)
लेलिहानामिव विमो नागकन्यां महाविषाम् ॥ ९-९-३९ (६०६१५)
समुद्यम्य च चिक्षेप सत्यसेनस्य संयुगे ॥ ९-९-४० (६०६१६)
सा तस्य हृदयं गत्या विभेद शतधा नृप ।
स पवात रथाद्भूमिं यतसत्वोऽल्पत्तेतनः ॥ ९-९-४१ (६०६१७)

भ्रातरं निहतं दृष्ट्वा सुशर्मा क्रोधमूर्च्छितः ।
अभ्यवर्षच्छरैस्तूर्णं पादातं पाण्डुनन्दनम् ॥ ९-९-४२ (६०६१८)
चतुर्भिश्चतुरो वाहान्ध्वजं छित्त्वा च पञ्चभिः ।
त्रिभिर्वै सारथिं हत्वा कर्णपुत्रो ननाद ह ॥ ९-९-४३ (६०६१९)
नकुलं विरथं दृष्ट्वा द्रौपदेयो महारथम् ।
सुतसोमोऽभिदुद्राव परीप्सन्पितरं रणे ॥ ९-९-४४ (६०६२०)
ततोऽधिरुह्य नकुलः सुतसोमस्य तं रथम् ।
शुशुभे भरतश्रेष्ठो गिरिस्य इव केसरी ॥ ९-९-४५ (६०६२१)
अन्यत्कार्मुकमादाय सुशर्माणमयोधयत् ॥ ९-९-४६ (६०६२२)
तत्र तौ शरवर्षाभ्यां समासाद्य परस्परम् ।
परस्परवधे यत्नं चक्रतुः सुमहारथौ ॥ ९-९-४७ (६०६२३)
सुशर्मा तु ततः क्रुद्धः पाण्डवं विशिखैस्त्रिभिः ।
सुतसोमं तु विंशत्या बाह्वोरुरसि चार्पयत् ॥ ९-९-४८ (६०६२४)
ततः क्रुद्धो महाराज नकुलः परवीरहा ।
शरैस्तस्य दिशः सर्वाश्छादयामास वीर्यवान् ॥ ९-९-४९ (६०६२५)
ततो गृहीत्वा तीक्ष्णाग्रमर्धचन्द्रं सुतेजनम् ।
आकर्णपूर्णं चिक्षेप कर्णपुत्राय संयुगे ॥ ९-९-५० (६०६२६)
तस्य तेन शिरः कायाज्जहार नृपसत्तम ।
पश्यतां सर्वसैन्यानां तदद्भुतमिवाभवत् ॥ ९-९-५१ (६०६२७)
स हतः प्रापतद्राजन्नकुलेन महात्मना ।
नदीपेxxxxxxx णस्तीरजः पादपो महान् ॥ ९-९-५२ (६०६२८)
कर्णपुत्रवचं दृष्ट्वा नकुलस्य च विक्रमम् ।
प्रदुद्राव भवात्सेना तावकी भरतर्षभ ॥ ९-९-५३ (६०६२९)
तां तु सेनां महाराज्ञ मद्रराजः प्रतापवान् ।
xxxxxx शूरः सेनापतिररिन्दमः ॥ ९-९-५४ (६०६३०)
xxxxxx व्यवस्याप्य च वाहिनीम् ।
xxxxxxx भूशं कृत्वा धनुःशब्दं च दारुणम् ॥ ९-९-५५ (६०६३१)
xxxxxx सगरे राजन्रांक्षेता दृढधन्वना ।
प्रत्युद्ययुश्च तांस्ते तु समन्ताद्विगतव्यथाः ॥ ९-९-५६ (६०६३२)
मद्रराजं महेष्वासं परिवार्य समन्ततः ।
स्थिता राजन्महासेना योद्धुकामा समन्ततः ॥ ९-९-५७ (६०६३३)
सात्यकिर्भीमसेनश्च माद्रीपुत्रौ च पाण्डवौ ।
युधिष्ठिरं पुरस्कृत्य ह्रीनिषेवमरिन्दमम् ॥ ९-९-५८ (६०६३४)
परिवार्य रणे वीराः सिंहनादं प्रचक्रिरे ।
बाणशङ्खरवांस्तीव्रान्क्ष्वेलाश्च विविधा दधुः ॥ ९-९-५९ (६०६३५)
तथैव तावकाः सर्वे मद्राधिपतिमञ्जसा ।

परिवार्य सुसंरब्धाः पुनर्युद्धमरोचयन् ॥ ९-९-६० (६०६३६)
ततः प्रववृते युद्धं भीरूणां भयवर्धनम् ।
तावकानां परेषां च मृत्युं कृत्वा निबर्तनम् ॥ ९-९-६१ (६०६३७)
यथा देवासुरं युद्धं पूर्वमासीद्विशाम्पते ।
अभीतानां तथाऽऽसीत्तद्यमराष्ट्रविवर्धनम् ॥ ९-९-६२ (६०६३८)
ततः कपिध्वजो राजन्हत्वा संशप्तकान्रणे ।
अभ्यद्रवत तां सेनां कौरवीं पाण्डुनन्दनः ॥ ९-९-६३ (६०६३९)
तथैव पाण्डवाः सर्वे धृष्टद्युम्नपुरोगमाः ।
अभ्यधावन्ततां सेनां विसृजन्तः शिताञ्शरान् ॥ ९-९-६४ (६०६४०)
पाण्डवैरवकीर्णानां सम्मोहः समजायत ।
न च जज्ञुस्त्वनीकानि दिशो वा विदिशस्तथा ॥ ९-९-६५ (६०६४१)
आपूर्यमाणा निशितैः शरैः पाण्डवचोदितैः ।
हतप्रवीरा विध्वस्ता वार्यमाणा समन्ततः ।
कौरव्यवध्यत चमूः पाण्डुपुत्रैर्महारथैः ॥ ९-९-६६ (६०६४२)
तथैव पाण्डवं सैन्यं शरै राजन्समन्ततः ।
रणेऽहन्यत पुत्रैस्ते शतशोऽथ सहस्रशः ॥ ९-९-६७ (६०६४३)
ते सेने भृशसन्तप्ते वध्यमाने परस्परम् ।
व्याकुले समपद्येतां वर्षासु सरिताविव ॥ ९-९-६८ (६०६४४)
आविवेश ततस्तीव्रं तावकानां महद्भयम् ।
पाण्डवानां च राजेन्द्र तथाभूते महाहवे ॥ ॥ ९-९-६९ (६०६४५)

इति श्रीमन्महाभारतेयथा शल्यपर्वणि शल्यवधपर्वणि
अष्टादशदिवसयुद्धे नवमोऽध्यायः ॥ ९ ॥
Mahabharata - Shalya Parva - Chapter Footnotes

९-९-९ चित्रसेनः कर्णपुत्रः ॥
९-९-९ नवमोऽध्यायः ॥
९ ॥

---

शल्यपर्व-अध्यय०१०
॥ श्रीः ॥
९.१०. अध्यायः १०

Mahabharata - Shalya Parva - Chapter Topics
सङ्कुलयुद्धम् ॥ १ ॥

९-१०-० (६०६४६)
सञ्जय उवाच। ९-१०-०क्ष् (५१०३)
तस्मिन्विलुलिते सैन्ये वध्यमाने परस्परम् ।
द्रवमाणेषु योधेषु विद्रवत्सु च दन्तिषु ॥ ९-१०-१ (६०६४७)
कूजतां स्तनतां चैव पदातीनां महाहवे ।
निहतेषु महाराज हयेषु बहुधा तदा ॥ ९-१०-२ (६०६४८)
प्रक्षये दारुणे घोरे संहारे सर्वदेहिनाम् ।
नानाशस्त्रसमावापे व्यतिषक्तरथद्विपे ॥ ९-१०-३ (६०६४९)
हर्षणे युद्धशौण्डानां भीरूणां भयवर्धने ।
गाहमानेषु योधेषु परस्परवधैषिषु ॥ ९-१०-४ (६०६५०)
प्राणादाने महाघोरे वर्तमाने दुरोदरे ।
सङ्ग्रामे घोररूपे तु यमराष्ट्रविवर्धने ॥ ९-१०-५ (६०६५१)
पाण्डवास्तावकं सैन्यं व्यधमन्निशितैः शरैः ।
तथैव तावका योधा जघ्नुः पाण्डवसैनिकान् ॥ ९-१०-६ (६०६५२)
तस्मिंस्तथा वर्तमाने युद्धे भीरुभयावहे ।
पूर्वाह्णे चापि सम्प्राप्ते भास्करोदयनं प्रति ॥ ९-१०-७ (६०६५३)
लब्धलक्षाः परे राजन्रक्षितास्तु महात्मना ।
अयोधयंस्तव बलं मृत्युं कृत्वा निवर्तनम् ॥ ९-१०-८ (६०६५४)
बलिभिः पाण्डवैर्दृप्तैर्लब्धलक्षैः प्रहारिभिः ।
कौरव्यसीदत्पृतना मृगीवाग्निबयाकुला ॥ ९-१०-९ (६०६५५)
तां दृष्ट्वा सीदतीं सेनां पङ्के गामिव दुर्बलाम् ।
उज्जिहीर्षुस्तदा शल्यः प्रायात्पाण्डुसुतान्प्रति ॥ ९-१०-१० (६०६५६)
मद्रराजः सुसङ्क्रुद्धो गृहीत्वा धनुरुत्तमम् ।
अभ्यद्रवत सङ्ग्रामे पाण्डवानाततायिनः ॥ ९-१०-११ (६०६५७)
पाण्डवा अपि भूपाल समरे जितकाशिनः ।
मद्रराजं समासाद्य बिभिदुर्निशितैः शरैः ॥ ९-१०-१२ (६०६५८)
ततः शरशतैस्तीक्ष्णैर्मद्रराजो महारथः ।
अर्दयामास तां सेनां धर्मराजस्य पश्यतः ॥ ९-१०-१३ (६०६५९)
प्रादुरासन्निमित्तानि नानारूपाण्यनेकशः ।
चचाल शब्दं कुर्वाणा मही चापि सपर्वता ॥ ९-१०-१४ (६०६६०)
श्सदण्डशूला दीप्ताग्रा दीर्यमाणाः समन्ततः ᳵ
उल्का भूमिं दिवः पेतुराहत्य रविमण्डलम् ॥ ९-१०-१५ (६०६६१)
मृगाश्च महिषाश्चापि पक्षिणश्च विशाम्पते ।
अपसव्यं तदा चक्रुः सेनां ते बहुशो नृप ॥ ९-१०-१६ (६०६६२)

श्भृगुसूनुधरापुत्रौ शशिजेन समन्वितौ ।
चरमं पाण्डुपुत्राणां पुरस्तात्सर्वभूभुजाम् ॥ ९-१०-१७ (६०६६३)
शस्त्राग्रेष्वभवज्ज्वाला नेत्राण्याहत्य वर्षती ।
शिरः स्वलीयन्त भृशं काकोलूकाश्च केतुषु ॥ ९-१०-१८ (६०६६४)
ततस्तद्युद्धमत्युग्रमभवत्सहचारिणाम् ।
तथा सर्वाण्यनीकानि सन्निपत्य जनाधिप ॥ ९-१०-१९ (६०६६५)
अभ्यघ्नत्कौरवो राजा पाण्डवानामनीकिनीम् ।
शल्यस्तु शरवर्षेण वर्षन्निव सहस्रदृक् ॥ ९-१०-२० (६०६६६)
अभ्यवर्षत धर्मात्मा कुन्तीपुत्रं युधिष्ठिरम् ।
भीमसेनं शरैश्चापि रुक्मपुङ्खैः शिलाशितैः ॥ ९-१०-२१ (६०६६७)
द्रौपदेयांस्तथा सर्वान्माद्रीपुत्रौ च पाण्डवौ ।
धृष्टद्युम्नं च शैनेयं शिखण्डिनमथापि च ॥ ९-१०-२२ (६०६६८)
एकैकं दशभिर्बाणैर्विव्याध स महाबलः ।
ततोऽसृजद्बाणवर्षं घर्मान्ते मघवानिव ॥ ९-१०-२३ (६०६६९)
ततः प्रभद्रका राजन्सोमकाश्च सहस्रशः ।
पतिताः पात्यमानाश्च दृश्यन्ते शल्यसायकैः ॥ ९-१०-२४ (६०६७०)
भ्रमराणामिव व्राताः शलभानामिव व्रजाः ।
ह्रादिन्य इव मेघेभ्यः शल्यस्य न्यपतञ्शराः ॥ ९-१०-२५ (६०६७१)
द्विरदास्तुरगाश्चार्ताः पत्तयो रथिनस्तथा ।
शल्यस्य बाणैरपतन्बभ्रमुर्व्यनदंस्तथा ॥ ९-१०-२६ (६०६७२)
आविष्ट इव मद्रेशो मन्युना पौरुषेण च ।
प्राच्छादयदरीन्सङ्ख्ये कालसृष्ट इवान्तकः ।
विनर्दमानो मद्रेशो मेघह्रादो महाबलः ॥ ९-१०-२७ (६०६७३)
सा वध्यमाना शल्येन पाण्डवानामनीकिनी ।
अजातशत्रुं कौन्तेयमभ्यधावद्युधिष्ठिरम् ॥ ९-१०-२८ (६०६७४)
तां सम्मर्द्य शतैः सङ्ख्ये लघुहस्तः शितैः शरैः ।
बाणवर्षेण महता युधिष्ठिरमताडयत् ॥ ९-१०-२९ (६०६७५)
तमापतन्तं जात्यश्वैः क्रुद्धो राजा युधिष्ठिरः ।
अवारयच्छरैस्तीक्ष्णैर्महाद्विपमिवाङ्कुशैः ॥ ९-१०-३० (६०६७६)
तस्य शल्यः शरं घोरं मुमोचाशीविषोपमम् ।
सोऽभ्यविध्यन्महात्मानं वेगेनाभ्यपतच्च गाम् ॥ ९-१०-३१ (६०६७७)
ततो वृकोदरः क्रुद्धः शल्यं विव्याध सप्तभिः ।
पञ्चभिः सहदेवस्तु नकुलो दशभिः शरैः ॥ ९-१०-३२ (६०६७८)
द्रौपदेयाश्च शत्रुघ्नं शूरमार्तायनिं शरैः ।
अभ्यवर्षन्महाराज मेघा इव महीधरम् ॥ ९-१०-३३ (६०६७९)
ततो दृष्ट्वा वार्यमाणं शल्यं पार्थैः समन्ततः ।

कृतवर्मा कृपश्चैव सङ्क्रुद्धावभ्यधावताम् ॥९-१०-३४ (६०६८०)
उलूकश्च महावीर्यः शकुनिश्चापि सौबलः ।
समागम्याथ शनकैरश्वत्थामा महाबलः ।
तव पुत्राश्च कार्त्स्न्येन जुगुपुः शल्यमाहवे ॥ ९-१०-३५ (६०६८१)
भीमसेनं त्रिभिर्विद्ध्वा कृतवर्मा शिलीमुखैः ।
बाणवर्षेण महता क्रुद्धरूपमवारयत् ।
धृष्टद्युम्नं ततः क्रुद्धो बाणवर्षैरपीडयत् ॥ ९-१०-३६ (६०६८२)
द्रौपदेयांश्च शकुनिर्यमौ च द्रौणिरभ्ययात् ॥ ९-१०-३७ (६०६८३)
दुर्योधनो युधांश्रेष्ठ आहवे केशवार्जुनौ ।
समभ्ययादुग्रतेजाः शरैश्चाप्यहनद्बली ॥९-१०-३८ (६०६८४)
एवं द्वन्द्वशतान्यासंस्त्वदीयानां परैः सह ।
घोररूपाणि चित्राणि तत्रतत्र विशाम्पते ॥९-१०-३९ (६०६८५)
ऋक्षवर्णाञ्जघानाश्वान्भोजो भीमस्य संयुगे ।
सोऽवतीर्य रथोपस्थाद्धताश्वात्पाण्डुनन्दनः ।
कालो दण्डमिवोद्यम्य गदापाणिरयुध्यत ॥ ९-१०-४० (६०६८६)
प्रमुखे सहदेवस्य जघानाश्वान्स मद्रराट् ।
ततः शल्यस्य तनयं सहदेवोऽसिनावधीत् ॥९-१०-४१ (६०६८७)
गौतमः पुनराचार्यो धृष्टद्युम्नमयोधयत् ।
असम्भ्रान्तमसम्भ्रान्तो यत्नवान्यत्नवत्तरम् ॥९-१०-४२ (६०६८८)
द्रौपदेयांस्तथा वीरानेकैकं दशभिः शरैः ।
अविद्ध्यदाचार्यसुतो नातिक्रुद्धो हसन्निव ॥९-१०-४३ (६०६८९)
श्पुनश्च भीमसेनस्य जघानाश्वांस्तथाऽऽहवे ।
सोऽवतीर्य रथात्तूर्णं हताश्वः पाण्डुनन्दनः ॥९-१०-४४ (६०६९०)
कालो दण्डमिवोद्यम्य गदां क्रुद्धो महाबलः ।
पोथयामास तुरगान्रथं च कृतवर्मणः ।
कृतवर्मा त्ववप्लुत्य रथात्तस्मादपाक्रमत् ॥ ९-१०-४५ (६०६९१)
शल्योऽपि राजन्सङ्क्रुद्धो निघ्नन्सोमकपाण्डवान् ।
पुनरेव शितैर्बाणैर्युधिष्ठिरमपीडयत् ॥९-१०-४६ (६०६९२)
तस्य भीमो रणे क्रुद्धः सन्दश्य दशनच्छदम् ।
विनाशायाभिसन्धाय गदामादाय वीर्यवान् ॥९-१०-४७ (६०६९३)
यमदण्डप्रतीकाशां कालरात्रिमिवोद्यताम् ।
गजवाजिमनुष्याणां देहान्तकरणीमति ॥९-१०-४८ (६०६९४)
हेमपट्टपरिक्षिप्तामुल्कां प्रज्वलितामिव ।
शैक्यां व्यालीमिवात्युग्रां वज्रकल्पामयोमयीम् ॥९-१०-४९ (६०६९५)
चन्दनागुरुपङ्काक्तां प्रमदामीप्सितामिव ।
वसामेदोपदिग्धाङ्गीं जिह्वां वैवस्वतीमिव ॥९-१०-५० (६०६९६)

पटुघण्टाशतरवां वासवीमशनीमिव ।
निर्मुक्ताशीविषाकारां पृक्तां गजमदैरपि ॥ ९-१०-५१ (६०६९७)
त्रासनीं सर्वभूतानां स्वसैन्यपरिहर्षिणीम् ।
मनुष्यलोके विख्यातां गिरिशृङ्गविदारणीम् ॥ ९-१०-५२ (६०६९८)
यया कैलासभवने महेश्वरसखं बली ।
आह्वयामास कौन्तेयः सङ्क्रुद्धमलकाधिपम् ॥ ९-१०-५३ (६०६९९)
यया मायामयान्दृप्तान्सुबहून्धनदालये ।
जघान गुह्यकान्क्रुद्धो मन्दारार्थे महाबलः ।
निवार्यमाणो बहुभिर्द्रौपद्याः प्रियमास्थितः ॥ ९-१०-५४ (६०७००)
तां वज्रमणिरत्नौघकल्माषां वज्रगौरवाम् ।
समुद्यम्य महाबाहुः शल्यमभ्यपतद्रणे ॥ ९-१०-५५ (६०७०१)
गदया युद्धकुशलस्तया दारुणनादया ।
पोथयामास शल्यस्य चतुरोऽश्वान्महाजवान् ॥ ९-१०-५६ (६०७०२)
ततः शल्यो रणे क्रुद्धः पीने वक्षसि तोमरम् ।
निचखान नदन्वीरोवर्म भित्त्वा च सोभ्ययात् ॥ ९-१०-५७ (६०७०३)
वृकोदरस्त्वसम्भ्रान्तस्तमेवोद्धृत्य तोमरम् ।
यन्तारं मद्रराजस्य निर्बिभेद तदा हृदि ॥ ९-१०-५८ (६०७०४)
स भिन्नवर्मा रुधिरं वमन्वित्रस्तमानसः ।
पपाताभिमुखो भीमं मद्रराजस्त्वपाक्रमत् ॥ ९-१०-५९ (६०७०५)
कृतप्रतिकृतं दृष्ट्वा शल्यो विस्मितमानसः ।
गदामाश्रित्य धर्मात्मा प्रत्यमित्रमवैक्षत ॥ ९-१०-६० (६०७०६)
ततः सुमनसः पार्था भीमसेनमपूजयन् ।
ते दृष्ट्वा कर्म सङ्ग्रामे घोरमक्लिष्टकर्मणः ॥ ॥ ९-१०-६१ (६०७०७)

इति श्रीमन्महाभारते शल्यपर्वणि शल्यवधपर्वणि
अष्टादशदिवसयुद्धे दशमोऽध्यायः ॥ १० ॥

Mahabharata - Shalya Parva - Chapter Footnotes

९-१०-१७ भृग्विति । सर्वभूभुजां कृत्स्नपृथ्वीपतीनां
पाण्डुपुत्राणां पाण्डवानां चरमं विलोमगणनया प्रथमं
युधिष्ठिरमभिलक्ष्य शक्रभौमबुधाः सप्तमस्थाने बलावहाः
आसन्। एतच्च सर्वभूभुजामिति फलस्य जनकमित्यर्थः ॥
९-१०-१८ आहत्य स्पृष्ट्वा । वर्षती भुवि पतन्ती ॥
९-१०-४९ परिक्षिप्तां परिच्छन्नाम् ॥
९-१०-५१ वासवीमैन्द्रीम् । रासनीमिति पाठे शब्दवतीम् ॥
९-१०-५३ महेश्वरसखं कुबेरम् ॥

९-१०-१० दशमोऽध्यायः ॥

---

शल्यपर्व-अध्यय०११
॥ श्रीः ॥
९.११. अध्यायः ११

Mahabharata - Shalya Parva - Chapter Topics
शल्यभीमयोर्गदायुद्धम् ॥ १ ॥

Mahabharata - Shalya Parva - Chapter Text

९-११-० (६०७०८)
सञ्जय उवाच। ९-११-०क्ष् (५१०४)
पतितं प्रेक्ष्य यन्तारं शल्यः शैक्यायसीं गदाम् ।
आदाय तरसा राजंस्तस्थौ गिरिरिवाचलः ॥ ९-११-१ (६०७०९)
तं दीप्तमिव कालाग्निं पाशहस्तमिवान्तकम् ।
सशृङ्गमिव कैलासं सवज्रमिव वासवम् ॥ ९-११-२ (६०७१०)
सशूलमिव हर्यक्षं सचक्रमिव चक्रिणम् ।
सशक्तिमिव सेनान्यं वने मत्तमिव द्विपम् ।
जवेनाभ्यपतद्भीमः प्रगृह्य महतीं गदाम् ॥ ९-११-३ (६०७११)
ततः शङ्खप्रणादश्च तूर्याणां च सहस्रशः ।
सिंहनादश्च सञ्जज्ञे शूराणां हर्षवर्धनः ॥ ९-११-४ (६०७१२)
प्रैक्षन्त सर्वतस्तौ हि योधा मत्ताविव द्विपौ ।
तावकाश्चापरे चैव साधुसाध्वित्यपूजयन् ॥ ९-११-५ (६०७१३)
न हि मद्राधिपादन्यो रामाद्वा यदुनन्दनात् ।
सोढुमुत्सहते वेगं भीमसेनस्य संयुगे ॥ ९-११-६ (६०७१४)
तथा मद्राधिपस्यापि गदावेगं महात्मनः ।
सोढुमुत्सहते नान्यः पुमान्युधि वृकोदरात् ॥ ९-११-७ (६०७१५)
तौ वृषाविव नर्दन्तौ मण्डलानि विचेरतुः ।
आवर्तितौ गदाहस्तौ मद्रराजवृकोदरौ ॥ ९-११-८ (६०७१६)
मण्डलावर्तमार्गेषु गदाविहरणेषु च ।
निर्विशेषमभूद्युद्धं तयोः पुरुषसिंहयोः ॥ ९-११-९ (६०७१७)
तप्तहेममयैः शुभ्रैर्बभूव भयवर्धिनी ।
अग्निज्वालैरिवाबद्धा पट्टैः शल्यस्य सा गदा ॥ ९-११-१० (६०७१८)
तथैव चरतो मार्गान्मण्डलेषु महात्मनः ।
विद्युदभ्रप्रतीकाशा भीमस्य शुशुभे गदा ॥ ९-११-११ (६०७१९)

ताडिता मद्रराजेन भीमस्य गदया गदा ।
दह्यमानेव खे राजन्साऽसृजत्पावकार्चिषः ॥ ९-११-१२ (६०७२०)
तथा भीमेन शल्यस्य ताडिता गदया गदा ।
अङ्गारवर्षं मुमुचे तदद्भुतमिवाभवत् ॥ ९-११-१३ (६०७२१)
दन्तैरिव महानागौ शृङ्गैरिव महर्षभौ ।
तौ विरेजतुरन्योन्यं गदाग्राभ्यां परिक्षतौ ॥ ९-११-१४ (६०७२२)
तौ गदाभिहतैर्गात्रैः क्षणेन रुधिरोक्षितौ ।
प्रेक्षणीयतरावास्तां पुष्पिताविव किंशुकौ ॥ ९-११-१५ (६०७२३)
गदया मद्रराजस्य सव्यदक्षिणमाहतः ।
भीमसेनो महाबाहुर्न चचालाचलो यथा ॥ ९-११-१६ (६०७२४)
तथा भीमगदावेगैस्ताड्यमानो मुहुर्मुहुः ।
शल्यो न विव्यथे राजन्दन्तिनेव महागिरिः ॥ ९-११-१७ (६०७२५)
शुश्रुवे दिक्षु सर्वासु तयोः पुरुषसिंहयोः ।
गदानिपातसंह्रादो वज्रयोरिव निःस्वनः ॥ ९-११-१८ (६०७२६)
निवृत्य तु महावीर्यौ समुच्छ्रितमहागदौ ।
पुनरन्तरमार्गस्थौ पण्डलानि विचेरतुः ॥ ९-११-१९ (६०७२७)
अथाभ्येत्य पदान्यष्टौ सन्निपातोऽभवत्तयोः ।
उद्यम्य लोहदण्डाभ्यामतिमानुषकर्मणोः ॥ ९-११-२० (६०७२८)
पोथयन्तौ तदाऽन्योन्यं मण्डलानि विचेरतुः ।
क्रियाविशेषं कृतिनौ दर्शयामासतुस्तदा ॥ ९-११-२१ (६०७२९)
अभ्युद्यतगदौ वीरौ सशृङ्गाविव पर्वतौ ।
तावाजघ्नतुरन्योन्यं मण्डलानि विचेरतुः ॥ ९-११-२२ (६०७३०)
क्रियाविशेषकृतिनौ रणभूमितलेऽचलौ ।
तौ परस्परसंरम्भाद्गदाभ्यां सुभृशाहतौ ॥ ९-११-२३ (६०७३१)
युगपत्पेततुर्वीरावुभाविन्द्रबली इव ।
उभयः सेनयोर्योधास्तदा हाहाकृताभवन् ॥ ९-११-२४ (६०७३२)
भृशं मर्मस्वभिहतावुभावास्तां सुविह्वलौ ॥ ९-११-२५ (६०७३३)
ततः स्वरथमारोप्य मद्राणामृषभं रणे ।
अपोवाह कृपः शल्यं तूर्णमायोधनादथ ॥ ९-११-२६ (६०७३४)
क्षीबवद्विह्वलत्वात्तु निमेषात्पुनरुत्थितः ।
भीमसेनो गदापाणिः समाह्वयत मद्रपम् ॥ ९-११-२७ (६०७३५)
ततस्तु तावकाः शूरा नानाशस्त्रसमायुताः ।
नानावादित्रशब्देन पाण्डुसेनामयोधयन् ॥ ९-११-२८ (६०७३६)
भुजावुच्छ्रित्य शस्त्रं च शब्देन महता ततः ।
अभ्यद्रवन्महाराज दुर्योधनपुरोगमाः ॥ ९-११-२९ (६०७३७)
तदनीकमभिप्रेक्ष्य ततस्ते पाण्डुनन्दनाः ।

प्रययुः सिंहनादेन दुर्योधनवधेप्सया ॥ ९-११-३० (६०७३८)
तेषामापततां तूर्णं पुत्रस्ते भरतर्षभ ।
प्राप्तेन चेकितानं वै विव्याध हृदये भृशम् ॥ ९-११-३१ (६०७३९)
पपात रथोपस्थे तव पुत्रेण पातितः ।
रुधिरौघपरिक्लिन्नः प्रविश्य विपुलं तमः ॥ ९-११-३२ (६०७४०)
चेकितानं हतं दृष्ट्वा पाण्डवेया महारथाः ।
असक्तमभ्यवर्षन्त शरवर्षाणि भागशः ॥ ९-११-३३ (६०७४१)
तावकानामनीकेषु पाण्डवा जितकाशिनः ।
व्यचरन्त महाराज प्रेक्षणीयाः समन्ततः ॥ ९-११-३४ (६०७४२)
कृपश्च कृतवर्मा च सौबलश्च महारथः ।
अयोधयन्धर्मराजं मद्रराजपुरस्कृताः ॥ ९-११-३५ (६०७४३)
भारद्वाजस्य हन्तारं भूरिवीर्यपराक्रमम् ।
दुर्योधनो महाराज धृष्टद्युम्नमयोधयत् ॥ ९-११-३६ (६०७४४)
त्रिसाहस्रास्तथा राजंस्तव पुत्रेण चोदिताः ।
अयोधयन्त विजयं जैगर्तानां महारथाः ॥ ९-११-३७ (६०७४५)
विजये धृतसङ्कल्पाः समरे त्यक्तजीविताः ।
प्राविशंस्तावका राजन्हंसा इव महत्सरः ॥ ९-११-३८ (६०७४६)
ततो युद्धमभूद्धोरं परस्परवधैषिणाम् ।
अन्योन्यवधसंयुक्तमन्योन्यप्रीतिवर्धनम् ॥ ९-११-३९ (६०७४७)
तस्मिन्प्रवृत्ते सङ्ग्रामे राजन्वीरवरक्षये ।
अनिलेनेरितं घोरमुत्तस्थौ पार्थिवं रजः ॥ ९-११-४० (६०७४८)
श्रवणान्नामधेयानां पार्थिवानां च कीर्तनात् ।
परस्परं विजानीमस्तदायुध्यन्नभीतवत् ॥ ९-११-४१ (६०७४९)
तद्रजः पुरुषव्याघ्र शोणितेन प्रशामितम् ।
दिशश्च विमला जातास्तस्मिन्रजसि नाशिते ॥ ९-११-४२ (६०७५०)
तथा प्रवृत्ते सङ्ग्रामे घोररूपे भयानके ।
तावकानां परेषां च नासीत्कश्चित्पराङ्मुखः ॥ ९-११-४३ (६०७५१)
ब्रह्मलोकपरा भूत्वा प्रार्थयन्तो जयं युधि ।
सुयुद्धेन पराक्रान्ता नराः स्वर्गमभीप्सवः ॥ ९-११-४४ (६०७५२)
भर्तृपिण्डविमोक्षार्थं भर्तृकार्यविनिश्चिताः ।
स्वर्गसंसक्तमनसो योधा युयुधिरे तदा ॥ ९-११-४५ (६०७५३)
नानारूपाणि शस्त्राणि विसृजन्तो महारथाः ।
अन्योन्यमभिगर्जन्तः प्रहरन्तः परस्परम् ॥ ९-११-४६ (६०७५४)
हत विध्यत गृह्णीत प्रहरध्वं निकृन्तत ।
इति स्म वाचः श्रूयन्ते तवतेषां च वै बले ॥ ९-११-४७ (६०७५५)
ततः शल्यो महाराज धर्मपुत्रं युधिष्ठिरम् ।

विव्याध निशितैर्बाणैर्हन्तुकामो महारथम् ॥ ९-११-४८ (६०७५६)
तस्य पार्थो महाराज नाराचान्वै चतुर्दश ।
मर्माण्युद्दिश्य मर्मज्ञो निचखान हसन्निव ॥ ९-११-४९ (६०७५७)
आवार्य पाण्डवं बाणैर्हन्तुकामो महाबलः ।
विव्याध समरे क्रुद्धो बहुभिः कङ्कपत्रिभिः ॥ ९-११-५० (६०७५८)
अथ मद्रो महाराज शरेणानतपर्वणा ।
युधिष्ठिरं समाजघ्ने सर्वसैन्यस्य पश्यतः ॥ ९-११-५१ (६०७५९)
धर्मराजोऽपि सङ्क्रुद्धो मद्रराजं महाबलः ।
विव्याध निशितैर्बाणैः कङ्कबर्हिणवाजितैः ॥ ९-११-५२ (६०७६०)
चन्द्रसेनं च सप्तत्या सूतं च नवभिः शरैः ।
द्रुमसेनं चतुःषष्ट्या निजघान महारथः ॥ ९-११-५३ (६०७६१)
चक्ररक्षे हते शल्यः पाण्डवेन महात्मना ।
निजघान ततो राजंश्चेदीन्वै पञ्चविंशतिम् ॥ ९-११-५४ (६०७६२)
सात्यकिं पञ्चविंशत्या भीमसेनं च पञ्चभिः ।
माद्रीपुत्रौ शतेनाजौ विव्याध निशितैः शरैः ॥ ९-११-५५ (६०७६३)
एवं विचरतस्तस्य सङ्ग्रामे राजसत्तम ।
सम्प्रैषयच्छितान्पार्थः शरानाशीविषोपमान् ॥ ९-११-५६ (६०७६४)
ध्वजाग्रं चास्य समरे कुन्तीपुत्रो युधिष्ठिरः ।
प्रमुखे वर्तमानस्य भल्लेनापाहरद्रथात् ॥ ९-११-५७ (६०७६५)
पाण्डुपुत्रेण वै तस्य केतुं छिन्नं महात्मना ।
निपतन्तमपश्याम गिरिशृङ्गमिवाहतम् ॥ ९-११-५८ (६०७६६)
ध्वजं निपतितं दृष्ट्वा पाण्डवं च व्यवस्थितम् ।
सङ्क्रुद्धो मद्रराजोऽभूच्छरवर्षं मुमोच ह ॥ ९-११-५९ (६०७६७)
शल्यः सायकवर्षेण पर्जन्य इव वृष्टिमान् ।
अभ्यवर्षदमेयात्मा क्षत्रियान्क्षत्रियर्षभः ॥ ९-११-६० (६०७६८)
सात्यकिं भीमसेनं च माद्रीपुत्रौ च पाण्डवौ ।
एकैकं पञ्चभिर्विद्ध्वा युधिष्ठिरमपीडयत् ॥ ९-११-६१ (६०७६९)
ततो बाणमयं जालं विततं पाण्डवोरसि ।
अपश्याम महाराज मेघजालमिवोद्गतम् ॥ ९-११-६२ (६०७७०)
तस्य शल्यो रणे क्रुद्धः शरैः सन्नतपर्वभिः ।
दिशः सञ्छादयामास प्रदिशश्च महारथः ॥ ९-११-६३ (६०७७१)
ततो युधिष्ठिरो राजा बाणजालेन पीडितः ।
बभूव हृतविक्रान्तो जम्भो वृत्रहणा यथा ॥ ॥ ९-११-६४ (६०७७२)

इति श्रीमन्महाभारते शल्यपर्वणि शल्यवधपर्वणि
अष्टादशदिवसयुद्धे एकादशोऽध्यायः ॥ ११ ॥

Mahabharata - Shalya Parva - Chapter Footnotes

९-११-३ हर्यक्षं रुद्रम् ॥
९-११-१० शुभ्रैर्दीप्तिमद्भिः ॥
९-११-११ एकादशोऽध्यायः ॥

---

शल्यपर्व-अध्यय०१२
॥ श्रीः ॥
९.१२. अध्यायः १२

Mahabharata - Shalya Parva - Chapter Topics
शल्यपराक्रमवर्णनम् ॥ १ ॥

Mahabharata - Shalya Parva - Chapter Text

९-१२-० (६०७७३)
सञ्जय उवाच। ९-१२-०क्ष् (५१०५)
पीडिते धर्मराजे तु मद्रराजेन मारिष ।
सात्यकिर्भीमसेनश्च माद्रीपुत्रौ च पाण्डवौ ।
परिवार्य रथैः शल्यं पीडयामासुराहवे ॥ ९-१२-१ (६०७७४)
तमेकं बहुभिर्दृष्ट्वा पीड्यमानं महारथैः ।
साधुवादो महाञ्जज्ञे सिद्धाश्चासन्प्रहर्षिताः ॥ ९-१२-२ (६०७७५)
आश्चर्यमित्यभाषन्त मुनयश्चापि सङ्गताः ॥ ९-१२-३ (६०७७६)
भीमसेनो रणे शल्यं शल्यभूतं पराक्रमे ।
एकेन विद्ध्वा बाणेन पुनर्विव्याध सप्तभिः ॥ ९-१२-४ (६०७७७)
सात्यकिश्च शतेनैनं धर्मपुत्रपरीप्सया ।
मद्रेश्वरमवाकीर्य सिंहनादमथानदत् ॥ ९-१२-५ (६०७७८)
नकुलः पञ्चभिश्चैनं सहदेवश्च पञ्चभिः ।
विद्ध्वा तं तु पुनस्तूर्णं ततो विव्याध सप्तभिः ॥ ९-१२-६ (६०७७९)
स तु शूरो रणे यत्तः पीडितस्तैर्महारथैः ।
विकृष्य कार्मुकं घोरं भारघ्नं वेगवत्तरम् ॥ ९-१२-७ (६०७८०)
सात्यकिं पञ्चविंशत्या शल्यो विव्याध मारिष ।
भीमसेनं तु सप्तत्या नकुलं सप्तभिस्तथा ॥ ९-१२-८ (६०७८१)
ततः स विशिखं चापं सहदेवस्य धन्विनः ।
छित्त्वा भल्लेन समरे विव्याधैनं त्रिसप्तभिः ॥ ९-१२-९ (६०७८२)
सहदेवस्तु समरे मातुलं भूरिवर्चसम् ।

सज्यमन्यद्धनुः कृत्वा पञ्चभिः समताडयत् ।
शरैराशीविषाकारैर्ज्वलज्ज्वलनसन्निभैः ॥ ९-१२-१० (६०७८३)
सारथिं चास्य समरे शरेणानतपर्वणा ।
विव्याध भृशसङ्क्रुद्धस्तं वै भूयस्त्रिभिः शरैः ॥ ९-१२-११ (६०७८४)
भीमसेनस्तु सप्तत्या सात्यकिर्नवभिः शरैः ।
धर्मराजस्तथा षष्ट्या गात्रे शल्यं समार्पयत् ॥ ९-१२-१२ (६०७८५)
ततः शल्यो महाराज निर्विद्धस्तैर्महारथैः ।
सुस्राव रुधिरं गात्रैर्गैरिकं पर्वतो यथा ॥ ९-१२-१३ (६०७८६)
तांश्च सर्वान्महेष्वासान्पञ्चभिः पञ्चभिः शरैः ।
विव्याध तरसा राजंस्तदद्भुतमिवाभवत् ॥ ९-१२-१४ (६०७८७)
ततोऽपरेण भल्लेन धर्मपुत्रस्य मारिष ।
धनुश्चिच्छेद समरे सज्जयं स सुमहारथः ॥ ९-१२-१५ (६०७८८)
अथान्यद्धनुरादाय धर्मपुत्रो युधिष्ठिरः ।
साश्वसूतध्वजरथं शल्यं प्राच्छादयच्छरैः ॥ ९-१२-१६ (६०७८९)
स च्छाद्यमानः समरे धर्मपुत्रस्य सायकैः ।
युधिष्ठिरमथाविध्यद्दशभिर्निशितैः शरैः ॥ ९-१२-१७ (६०७९०)
सात्यकिस्तु ततः क्रुद्धो धर्मपुत्रे शरार्दिते ।
मद्राणामधिपं शूरं शरैर्विव्याध पञ्चभिः ॥ ९-१२-१८ (६०७९१)
स सात्यकेः प्रचिच्छेद क्षुरप्रेण महद्धनुः ।
भीमसेनमुखांस्तांश्च त्रिभिस्त्रिभिरताडयत् ॥ ९-१२-१९ (६०७९२)
तस्य क्रुद्धो महाराज सात्यकिः सत्यविक्रमः ।
तोमरं प्रेषयामास स्वर्णदण्डं महारणे ॥ ९-१२-२० (६०७९३)
भीमसेनोऽथ नाराचं ज्वलन्तमिव पन्नगम् ।
नकुलः समरे शक्तिं सहदेवो गदां शुभाम् ।
धर्मराजः शतघ्नीं च जिघांसुः शल्यमाहवे ॥ ९-१२-२१ (६०७९४)
तानापतत एवाशु पञ्चानां वै भुजच्युतान् ।
वारयामास समरे शस्त्रसङ्घैः स मद्रराट् ॥ ९-१२-२२ (६०७९५)
सात्यकिप्रहितं शल्यो भल्लैश्चिच्छेद तोमरम् ।
प्रहितं भीमसेनेन शरं कनकभूषणम् ॥ ९-१२-२३ (६०७९६)
द्विधा चिच्छेद समरे कृतहस्तः प्रतापवान् ।
नकुलप्रेषितां शक्तिं हेमदण्डां भयावहाम् ॥ ९-१२-२४ (६०७९७)
गदां च सहदेवेन शरौघैः समवारयत् ।
शराभ्यां च शतघ्नीं तां राज्ञश्चिच्छेद भारत ॥ ९-१२-२५ (६०७९८)
पश्यतां पाण्डुपुत्राणां सिंहनादं ननाद च ।
नामृष्यत्तत्र शैनेयः शत्रोर्विजयमाहवे ॥ ९-१२-२६ (६०७९९)
अथान्यद्धनुरादाय सात्यकिः क्रोधमूर्च्छितः ।

द्वाभ्यां मद्रेश्वरं विद्वा सारथिं च त्रिभिः शरैः ॥ ९-१२-२७ (६०८००)
ततः शल्यो रणे राजन्सर्वांस्तान्दशभिः शरैः ।
विव्याध भृशसङ्क्रुद्धस्तोत्त्रैरिव महाद्विपान् ॥ ९-१२-२८ (६०८०१)
ते वार्यमाणाः समरे मद्रराज्ञा महारथाः ।
न शेकुः सम्मुखे स्थातुं तस्य शत्रुनिषूदनाः ॥ ९-१२-२९ (६०८०२)
ततो दुर्योधनो राजा दृष्ट्वा शल्यस्य विक्रमम् ।
निहतान्पाण्डवान्मेने पाञ्चालानथ सृञ्जयान्। ९-१२-३० (६०८०३)
ग्तथाविधं महाराज मद्रराजस्य विक्रमम् ।
असह्यं मानवैर्युद्धे तद्बभूव नरर्षभ ॥' ९-१२-३१ (६०८०४)
ततो राजन्महाबाहुर्भीमसेनः प्रतापवान् ।
सन्त्यज्य मनसा प्राणान्मद्राधिपमयोधयत् ॥ ९-१२-३२ (६०८०५)
नकुलः सहदेवश्च सात्यकिश्च महारथः ।
परिवार्य तदा शल्यं समन्ताद्व्यकिरञ्शरैः ॥ ९-१२-३३ (६०८०६)
स चतुर्भिर्महेष्वासैः पाण्डवानां महारथः ।
वृतस्तान्योधयामास मद्रराजः प्रतापवान् ॥ ९-१२-३४ (६०८०७)
तस्य धर्मसुतो राजन्क्षुरप्रेण महाहवे ।
चक्ररक्षं जघानाशु मद्रराजस्य पार्थिवः ॥ ९-१२-३५ (६०८०८)
तस्मिंस्तु निहते शूरे चक्ररक्षे महारथे ।
मद्रराजोऽपि बलवान्सैनिकानावृणोच्छरैः ॥ ९-१२-३६ (६०८०९)
समावृतांस्ततस्तांस्तु राजन्वीक्ष्य स्वसैनिकान् ।
चिन्तयामास समरे धर्मपुत्रो युधिष्ठिरः ॥ ९-१२-३७ (६०८१०)
कथं नु न भवेत्सत्यं तन्माधववचो महत् ।
अपि क्रुद्धो रणे राजन्क्षपयेत बलं मम ॥ ९-१२-३८ (६०८११)
ग्अहं मद्भ्रातरश्चैव सात्यकिश्च महारथः ।
पाञ्चालाः सृञ्जयाश्चैव न शक्तास्म हि मद्रपम् ॥ ९-१२-३९ (६०८१२)
निहनिष्यति चैवाद्य मातुलोऽस्मान्महाबलः ।
गोविन्दवचनं सत्यं कथं भवति किन्त्विदम् ॥ ९-१२-४० (६०८१३)
ततः सरथनागाश्वा पाण्डवाः पाण्डुपूर्वज ।
मद्रराजं समासेदुः पीडयन्तः समन्ततः ॥ ९-१२-४१ (६०८१४)
नानाशस्त्रौघबहुलां शस्त्रवृष्टिं समुद्यताम् ।
व्यधमत्समरे राजा महाभ्राणीव मारुतः ॥ ९-१२-४२ (६०८१५)
ततः कनकपुङ्खां तां शल्यक्षिप्तां वियद्गताम् ।
शरवृष्टिमपश्याम शलभानामिवायतिम् ॥ ९-१२-४३ (६०८१६)
ते शरा मद्रराजेन प्रेषिता रणमूर्धनि ।
सम्पतन्तः स्म दृश्यन्ते शलभानां व्रजा इव ॥ ९-१२-४४ (६०८१७)
मद्रराजधनुर्मुक्तैः शरैः कनकभूषणैः ।

निरन्तरमिवाकाशं सम्बभूव जनाधिप ॥९-१२-४५ (६०८१८)
न पाण्डवानां नास्माकं तत्र किञ्चिद्व्यदृश्यत ।
बाणान्धकारे महति कृते तत्र महाहवे ॥९-१२-४६ (६०८१९)
मद्रराजेन बलिना लाघवाच्छरवृष्टिभिः ।
चाल्यमानं तु तं दृष्ट्वा पाण्डवानां बलार्णवम् ।
विस्मयं परमं जग्मुर्देवगन्धर्वदानवाः ॥ ९-१२-४७ (६०८२०)
स तु तान्सर्वतो यत्ताञ्शरैः सञ्छाद्य मारिष ।
धर्मराजमवच्छाद्य सिंहवद्व्यनदन्मुहुः ॥९-१२-४८ (६०८२१)
ते च्छन्नाः समरे तेन पाण्डवानां महारथाः ।
नाशक्नुवंस्तदा युद्धे प्रत्युद्यातुं महारथम् ॥९-१२-४९ (६०८२२)
धर्मराजपुरोगास्तु भीमसेनमुखा रथाः ।
निजघ्नुः समरे शूरंशल्यमाहवशोभिनम् ॥ ॥९-१२-५० (६०८२३)

इति श्रीमन्महाभारते शल्यपर्वणि शल्यवधपर्वणि
अष्टादशदिवसयुद्धे द्वादशोऽध्यायः ॥१२ ॥
Mahabharata - Shalya Parva - Chapter Footnotes

९-१२-२५ सहदेवेन प्रेषितामिति पूर्वस्मात्सम्बध्यते ॥
९-१२-२७ सारथिं च विव्याधेत्युत्तरस्मादपकृष्यते ॥
९-१२-३८ कथन्नु समरे शक्यं--नहि क्रुद्धो रणे इति झ पाठः ॥
९-१२-१२ द्वादशोऽध्यायः ॥

---

शल्यपर्व-अध्यय०१३
॥ श्रीः ॥
९.१३. अध्यायः १३

Mahabharata - Shalya Parva - Chapter Topics
सङ्कुलयुद्धम् ॥१ ॥

Mahabharata - Shalya Parva - Chapter Text

९-१३-० (६०८२४)
सञ्जय उवाच। ९-१३-०क्ष् (५१०६)
अर्जुनो द्रौणिना विद्धो युद्धे बहुभिरायसैः ।
तस्य चानुचरैः शूरैस्त्रिगर्तानां महारथैः ॥९-१३-१ (६०८२५)
द्रौणिं विव्याध समरे त्रिभिरेव शिलीमुखैः ।

तथेतरान्महेष्वासान्द्वाभ्यां द्वाभ्यां धनञ्जयः ।
भूयश्चैव महाराज शरवर्षैरवाकिरत् ॥ ९-१३-२ (६०८२६)
शरकण्टकितास्ते तु तावका भरतर्षभ ।
न जहुः पार्थमासाद्य ताड्यमानाः शितैः शरैः ॥ ९-१३-३ (६०८२७)
अर्जुनं रथवंशेन द्रोणपुत्रपुरोगमाः ।
परिवार्य मुदा युक्ता योधयन्तश्चकाशिरे ॥ ९-१३-४ (६०८२८)
तैस्तु क्षिप्ताः शरा राजन्कार्तस्वरविभूषिताः ।
अर्जुनस्य रथोपस्थं पूरयामासुरञ्जसा ॥ ९-१३-५ (६०८२९)
तथा कृष्णौ महेष्वासौ वृषभौ सर्वधन्विनाम् ।
विव्यधुश्च शरैर्घोरैः प्रहृष्टा युद्धदुर्मदाः ॥ ९-१३-६ (६०८३०)
कूबरं रथचक्राणि ईषा योक्त्राणि वा विभो ।
युगं चैवानुकर्षं च शरभूतमभूत्तदा ॥ ९-१३-७ (६०८३१)
नैतादृशं दृष्टपूर्वं राजन्नेव च नः श्रुतम् ।
यादृशं तत्र पार्थस्य तावकाः सम्प्रचक्रिरे ॥ ९-१३-८ (६०८३२)
स रथः सर्वतो भाति चित्रपुङ्खैः शितैः शरैः ।
उल्काशतैः सम्प्रदीप्तं विमानमिव भूतले ॥ ९-१३-९ (६०८३३)
ततोऽर्जुनो महाराज शरैः सन्नतपर्वभिः ।
अवाकिरत्तां पृतनां मेघो धृष्ट्येव पर्वतम् ॥ ९-१३-१० (६०८३४)
ते वध्यमानाः समरे पार्थनामाङ्कितैः शरैः ।
पार्थभूतममन्यन्त प्रेक्षमाणास्तथाविधम् ॥ ९-१३-११ (६०८३५)
कोपोद्धूतशरज्वालो धनुःशब्दानिलो महान् ।
सैन्येन्धनं ददाहाशु तावकं पार्थपावकः ॥ ९-१३-१२ (६०८३६)
चक्राणां पततां चापि युगानां च धरातले ।
तूणीराणां पताकानां ध्वजानां च रथैः सह ॥ ९-१३-१३ (६०८३७)
ईषाणामनुकर्षाणां त्रिवेणूनां च भारत ।
अक्षाणामथ योक्त्राणां प्रतोदानां च राशयः ॥ ९-१३-१४ (६०८३८)
शिरसां पततां चापि कुण्डलोष्णीषधारिणाम् ।
भुजानां च महाभाग स्कन्धानां च समन्ततः ॥ ९-१३-१५ (६०८३९)
छत्राणां व्यजनैः सार्धं मकुटानां च राशयः ।
समदृश्यन्त पार्थस्य रथमार्गेषु भारत ॥ ९-१३-१६ (६०८४०)
अगम्यरूपा पृथिवी मांसशोणितकर्दमा ।
भीरूणां त्रासजननी शूराणां हर्षवर्धिनी ।
बभूव भरतश्रेष्ठ रुद्रस्याक्रीडनं यथा ॥ ९-१३-१७ (६०८४१)
हत्वा तु समरे पार्थः सहस्रे द्वे परन्तपः ।
रथानां सवरूथानं विधूमोऽग्निरिव ज्वलन् ॥ ९-१३-१८ (६०८४२)
यथा हि भगवानग्निर्जगद्दग्ध्वा चराचरम् ।

विधूमो दृश्यते राजंस्तथा पार्थो धनञ्जयः ॥ ९-१३-१९ (६०८४३)
द्रौणिस्तु समरे दृष्ट्वा पाण्डवस्य पराक्रमम् ।
रथेनातिपताकेन पाण्डवं प्रत्यवारयत् ॥ ९-१३-२० (६०८४४)
तावुभौ पुरुषव्याघ्रौ श्वेताश्वौ धन्विनां वरौ ।
समीयतुस्तदाऽन्योन्यं परस्परवधैषिणौ ॥ ९-१३-२१ (६०८४५)
तयोरासीन्महाराज बाणवर्षं सुदारुणम् ।
जीमूतयोर्यथा वृष्टिस्तपान्ते भरतर्षभ ॥ ९-१३-२२ (६०८४६)
अन्योन्यस्पर्धिनौ तौ तु शरैः सन्नतपर्वभिः ।
ततक्षतुस्तदाऽन्योन्यं शृङ्गाभ्यां वृषभाविव ॥ ९-१३-२३ (६०८४७)
तयोर्युद्धं महाराज चिरं सममिवाभवत् ।
शस्त्राणां सङ्गमश्चैव घोरस्तत्राभवत्पुनः ॥ ९-१३-२४ (६०८४८)
ततोऽर्जुनं द्वादशभी रुक्मपुङ्खैः सुतेजनैः ।
वासुदेवं च दशभिर्द्रौणिर्विव्याध भारत ॥ ९-१३-२५ (६०८४९)
ततः प्रहस्य बीभत्सुर्व्याक्षिपद्गाण्डिवं धनुः ।
मानयित्वा मुहूर्तं तु गुरुपुत्रं महाहवे ॥ ९-१३-२६ (६०८५०)
व्यश्वसूतरथं चक्रे सव्यसाची परन्तपः ।
मृदुपूर्वं ततश्चैनं पुनःपुनरताडयत् ॥ ९-१३-२७ (६०८५१)
हताश्वे तु रथे तिष्ठन्द्रोणपुत्रस्त्वयस्मयम् ।
मुसलं पाण्डुपुत्राय चिक्षेप परिघोपमम् ॥ ९-१३-२८ (६०८५२)
तमापतन्तं सहसा हेमपट्टविभूषितम् ।
चिच्छेद सप्तधा वीरः पार्थः शत्रुनिबर्हणः ॥ ९-१३-२९ (६०८५३)
स च्छिन्नं मुसलं दृष्ट्वा द्रौणिः परमकोपनः ।
आददे परिघं घोरं नगेन्द्रशिखरोपमम् ।
चिक्षेप चैव पार्थाय द्रौणिर्युद्धविशारदः ॥ ९-१३-३० (६०८५४)
तमन्तकमिव क्रुद्धं परिघं प्रेक्ष्य पाण्डवः ।
अर्जुनस्त्वरितो जघ्ने पञ्चभिः सायकोत्तमैः ॥ ९-१३-३१ (६०८५५)
स च्छिन्नः पतितो भूमौ पार्थबाणैर्महाहवे ।
दारयन्पृथिवीन्द्राणां मनः सब्देन भारत ॥ ९-१३-३२ (६०८५६)
ततोऽपरैस्त्रिभिर्भल्लैर्द्रौणिं विव्याध पाण्डवः ॥ ९-१३-३३ (६०८५७)
सोऽतिविद्धो बलवता पार्थेन सुमहात्मना ।
नाकम्पत तदा द्रौणिः पौरुषेषु व्यवस्थितः ॥ ९-१३-३४ (६०८५८)
सुरथं च ततो राजन्भारद्वाजो महारथम् ।
अवाकिरच्छरव्रातैः सर्वक्षत्रस्य पश्यतः ॥ ९-१३-३५ (६०८५९)
ततस्तु सुरथोऽप्याजौ पाञ्चालानां महारथः ।
रथेन मेघघोषेण द्रौणिमेवाभ्यधावत ॥ ९-१३-३६ (६०८६०)
विकर्षन्वै धनुःश्रेष्ठं सर्वभारसहं दृढम् ।

ज्वलनाशीविषनिभैः शरैस्त्वैनमवाकिरत् ॥ ९-१३-३७ (६०८६१)
सुरथं तं ततः क्रुद्धमापतन्तं महारथम् ।
चुकोप समरे द्रौणिर्दण्डाहत इवोरगः ॥ ९-१३-३८ (६०८६२)
त्रिशिखां भ्रुकुटीं कृत्वा सृक्विणी परिसंलिहन् ।
उद्वीक्ष्य सुरथं रोषाद्धनुर्ज्यामवमृज्य च ।
मुमोच तीक्ष्णं नाराचं यमदण्डोपमद्युतिम् ॥ ९-१३-३९ (६०८६३)
स तस्य हृदयं भित्त्वा प्रविवेशातिवेगितः ।
शक्राशनिरिवोत्सृष्टो विदार्य धरणीतलम् ॥ ९-१३-४० (६०८६४)
ततः स पतितो भूमौ नाराचेन समाहतः ।
वज्रेण च यथा शृङ्गं पर्वतस्येव दीर्यतः ॥ ९-१३-४१ (६०८६५)
तस्मिन्विनिहते वीरे द्रोणपुत्रः प्रतापवान् ।
आरुरोह रथं तूर्णं तमेव रथिनां वरः ॥ ९-१३-४२ (६०८६६)
ततः सज्जो महाराज द्रौणिराहवदुर्मदः ।
अर्जुनं योधयामास संशप्तकवृतो रणे ॥ ९-१३-४३ (६०८६७)
तत्र युद्धं महच्चासीदर्जुनस्य परैः सह ।
मध्यन्दिनगते सूर्ये यमराष्ट्रविवर्धनम् ॥ ९-१३-४४ (६०८६८)
तत्राश्चर्यमपश्याम दृष्ट्वा तेषां पराक्रमम् ।
यदेको युगपद्वीरान्समयोधयदर्जुनः ॥ ९-१३-४५ (६०८६९)
विमर्दः सुमहानासीदर्जुनस्य परैः सह ।
शतक्रतोर्यथापूर्वं महत्या दैत्यसेनया ॥ ॥ ९-१३-४६ (६०८७०)

इति श्रीमन्महाभारते शल्यपर्वणि शल्यवधपर्वणि
अष्टादशदिवसयुद्धे त्रयोदशोऽध्यायः ॥ १३ ॥

---

शल्यपर्व-अध्यय०१४
॥ श्रीः ॥
९.१४. अध्यायः १४

Mahabharata - Shalya Parva - Chapter Topics
सङ्कुलयुद्धम् ॥ १ ॥

Mahabharata - Shalya Parva - Chapter Text

९-१४-० (६०८७१)
सञ्जय उवाच। ९-१४-०क्ष् (५१०७)
दुर्योधनो महाराज धृष्टद्युम्नश्च पार्षतः ।

चक्रतुः सुमहद्युद्धं शरशक्तिसमाकुलम् ॥ ९-१४-१ (६०८७२)
ततो राजन्समापेतुः शरधाराः सहस्रशः ।
अम्बुदानां यथा काले जलधाराः समन्ततः ॥ ९-१४-२ (६०८७३)
राजा च पार्षतं विद्ध्वा शरैः पञ्चभिराशुगैः ।
द्रोणहन्तारमुग्रेषुं पुनर्विव्याध सप्तभिः ॥ ९-१४-३ (६०८७४)
धृष्टद्युम्नस्तु समरे बलवान्दृढविक्रमः ।
सप्तत्या विशिखानां वै दुर्योधनमपीडयत् ॥ ९-१४-४ (६०८७५)
पीडितं वीक्ष्य राजानं सोदर्या भरतर्षभ ।
महत्या सेनया सार्धं परिवव्रुः स्म पार्षतम् ॥ ९-१४-५ (६०८७६)
स तैः परिवृतः शूरः सर्वतोऽतिरथै र्भृशम् ।
व्यचरत्समरे राजन्दर्शयन्नस्त्रलाघवम् ॥ ९-१४-६ (६०८७७)
शिखण्डी कृतवर्माणं गौतमं च महारथम् ॥
प्रभद्रकैः समायुक्तो योधयामास धन्विनौ ॥ ९-१४-७ (६०८७८)
तत्रापि सुमहद्युद्धं घोररूपं विशाम्पते ।
प्राणान्सन्तजतां युद्धे प्राणद्यूताभिदेवने ॥ ९-१४-८ (६०८७९)
शल्यः सायकवर्षाणि विमुञ्जन्सर्वतोदिशम् ।
पाण्डवान्पीडयामास ससात्यकिवृकोदरान् ॥ ९-१४-९ (६०८८०)
तथा तौ तु यमौ यमतुल्यपराक्रमौ ।
योधयामास राजेन्द्र वीर्येणास्त्रबलेन च ॥ ९-१४-१० (६०८८१)
शल्यसायकनुन्नानां पाण्डवानां महामृधे ।
त्रातारं नाध्यगच्छन्त केचित्तत्र महारथाः ॥ ९-१४-११ (६०८८२)
ततस्तु नकुलः शूरो धर्मराजे प्रपीडिते ।
अभिदुद्राव वेगेन मातुलं माद्रिनन्दनः ॥ ९-१४-१२ (६०८८३)
सञ्छाद्य समरे वीरं नकुलः परवीरहा ।
विव्याध चैनं दशभिः स्मयमानः स्तनान्तरे ॥ ९-१४-१३ (६०८८४)
सर्वपारसवैर्बाणैः कर्मारपरिमार्जितैः ।
स्वर्णपुङ्खैः शिलाधौतैर्धनुर्यन्त्रप्रचोदितैः ॥ ९-१४-१४ (६०८८५)
शल्यस्तु पीडितस्तेन स्वस्रीयेण हि मातुलः ।
नकुलं पीडयामास पत्रिभिर्नतपर्वभिः ॥ ९-१४-१५ (६०८८६)
ततो युधिष्ठिरो राजा भीमसेनोऽथ सात्यकिः ।
सहदेवश्च माद्रेणो मद्रराजमुपाद्रवन् ॥ ९-१४-१६ (६०८८७)
तानापतत एवाशु पूरयाणान्रथस्वनैः ।
दिशश्च विदिशश्चैव कम्पयानांश्च मेदिनीम् ।
प्रतिजग्राह समरे सेनापतिरमित्रजित् ॥ ९-१४-१७ (६०८८८)
युधिष्ठिरं त्रिभिर्विद्ध्वा भीमसेनं च पञ्चभिः ।
सात्यकिं च शतेनाजौ सहदेवं त्रिभिः शरैः ॥ ९-१४-१८ (६०८८९)

ततस्तु सशरं चापं नकुलस्य महात्मनः ।
मद्रेश्वरः क्षुरप्रेण मध्ये चिच्छेद मारिष ॥ ९-१४-१९ (६०८९०)
तदपास्य धनुश्छिन्नं ततः शल्यस्य सायकैः ।
अथान्यद्धनुरादाय माद्रीपुत्रो महारथः ।
मद्रराजरथं तूर्णं पूरयामास पत्रिभिः ॥ ९-१४-२० (६०८९१)
युधिष्ठिरस्तु मद्रेशं सहदेवश्च मारिष ।
दशभिर्दशभिर्बाणैरुरस्येनमविध्यताम् ॥ ९-१४-२१ (६०८९२)
भीमसेनस्तु तं षष्ट्या सात्यकिर्दशभिः शरैः ।
मद्रराजमभिद्रुत्य जघ्नतुः क्ष्क्ष्ङ्कपत्रिभिः ॥ ९-१४-२२ (६०८९३)
मद्रराजस्ततः क्रुद्धः सात्यकिं नवभिः शरैः ।
विव्याध भूयः सप्तत्या शराणां नतपर्वणाम् ॥ ९-१४-२३ (६०८९४)
अथास्य सशरं चापं मुष्टौ चिच्छेद मारिष ।
हयांश्च चतुरः सङ्ख्ये प्रेषयामास मृत्यवे ॥ ९-१४-२४ (६०८९५)
विरथं सात्यकिं कृत्वा मद्रराजो महारथः ।
विशिखानां शतेनैनमाजघान समन्ततः ॥ ९-१४-२५ (६०८९६)
माद्रीपुत्रं च संरब्धो भीमसेनं च पाण्डवम् ।
युधिष्ठिरं च कौरव्य विव्याध दशभिः शरैः ॥ ९-१४-२६ (६०८९७)
तत्राद्भुतमपश्याम मद्रराजस्य पौरुषम् ।
यदेनं सहिताः पार्था नाभ्यवर्तन्त संयुगे ॥ ९-१४-२७ (६०८९८)
अथान्यं रथमास्थाय सात्यकिः सत्यविक्रमः ।
पीडितान्पाण्डवान्दृष्ट्वा मद्रराजवशं गतान् ।
अभिदुद्राव वेगेन मद्राणामधिपं बलात् ॥ ९-१४-२८ (६०८९९)
आपतन्तं रथं तस्य शल्यः समितिशोभनः ।
प्रत्युद्ययौ रथेनैव मत्तो मत्तमिव द्विपम् ॥ ९-१४-२९ (६०९००)
स सन्निपातस्तुमुलो बभूवाद्भुतदर्शनः ।
सात्यकेश्चैव शूरस्य मद्राणामधिपस्य च ।
यादृशो वै पुरा वृत्तः शम्बरामरराजयोः ॥ ९-१४-३० (६०९०१)
सात्यकिः प्रेक्ष्य समरे मद्रराजमवस्थितम् ।
विव्याध दशभिर्बाणैस्तिष्ठतिष्ठेति चाब्रवीत् ॥ ९-१४-३१ (६०९०२)
मद्रराजस्तु सुभृशं विद्धस्तेन महात्मना ।
सात्यकिं प्रतिविव्याध चित्रपुङ्खैः शितैः शरैः ॥ ९-१४-३२ (६०९०३)
ततः पार्था महेष्वासाः सात्वताऽभिसृतं नृपम् ।
अभ्यवर्तन्रथैस्तूर्णं मातुलं वधकाङ्क्षया ॥ ९-१४-३३ (६०९०४)
तत आसीत्परामर्दस्तुमुलः शोणितोदकः ।
शूराणां युध्यमानानां सिंहानामिव नर्दताम् ॥ ९-१४-३४ (६०९०५)
तेषामासीन्महाराज व्यधिक्षेपः परस्परम् ।

सिंहानामामिषेप्सूनां कूजतामिव संयुगे ॥ ९-१४-३५ (६०९०६)
तेषां बाणसहस्रौघैराकीर्णा वसुधाऽभवत् ।
अन्तरिक्षं च सहसा बाणभूतमभूत्तदा ॥ ९-१४-३६ (६०९०७)
शरान्धकारं सहसा कृतं तेन समन्ततः ।
अभ्रच्छायेव सञ्जज्ञे शरैर्मुक्तैर्महात्मभिः ॥ ९-१४-३७ (६०९०८)
तत्र राजञ्शरैर्मुक्तैर्निर्मुक्तैरिव पन्नैगः ।
स्वर्णपुङ्खैः प्रकाशद्भिर्व्यरोचन्त दिशस्तदा ॥ ९-१४-३८ (६०९०९)
तत्राद्भुतं परं चक्रे शल्यः शत्रुनिबर्हणः ।
यदेकः समरे शूरो योधयामास वै बहून् ॥ ९-१४-३९ (६०९१०)
मद्रराजभुजोत्सृष्टैः कङ्कबर्हिणवाजितैः ।
सम्पतद्भिः शरैर्घोरैरवाकीर्यत मेदिनी ॥ ९-१४-४० (६०९११)
तत्र शल्यरथं राजन्विचरन्तं महाहवे ।
अपश्याम यथापूर्वं शक्रस्यासुरसंक्षये ॥ ॥ ९-१४-४१ (६०९१२)

इति श्रीमन्महाभारते शल्यपर्वणि शल्यवधपर्वणि
अष्टादशदिवसयुद्धे चतुर्दशोऽध्यायः ॥ १४ ॥

---

शल्यपर्व-अध्यय०१५
॥ श्रीः ॥
९.१५. अध्यायः १५

Mahabharata - Shalya Parva - Chapter Topics
शल्ययुधिष्ठिरयोर्युद्धम् ॥ १ ॥

Mahabharata - Shalya Parva - Chapter Text

९-१५-० (६०९१३)
सञ्जय उवाच। ९-१५-०क्ष् (५१०८)
ततः सेना तव विभो मद्रराजपुरस्कृता ।
पुनरभ्यद्रवत्पार्थान्वेगेन महता रणे ॥ ९-१५-१ (६०९१४)
पीडितास्तावकाः सर्वे प्रधावन्तो रणोत्कटाः ।
क्षणेन चैव पार्थास्ते बहुत्वात्समलोडयन् ॥ ९-१५-२ (६०९१५)
ते वध्यमानाः समरे पाण्डवा नावतस्थिरे ।
क्षणेनैव महाराज पश्यतोः कृष्णपार्थयोः ॥ ९-१५-३ (६०९१६)
ततो धनञ्जयः क्रुद्धः कृपं सह पदानुगैः ।
अवाकिरच्छरौघेण कृतवर्माणमेव च ॥ ९-१५-४ (६०९१७)

शकुनिं सहदेवस्तु सहसैन्यमवाकिरत् ।
नकुलः पार्श्वतः स्थित्वा मद्रराजमयोधयत् ॥ ९-१५-५ (६०९१८)
द्रौपदेया नरेन्द्राश्च भूयिष्ठान्समवारयन् ।
द्रोणपुत्रं च पाञ्चाल्यः शिखण्डी समवारयत् ॥ ९-१५-६ (६०९१९)
भीमसेनस्तु राजानं गदापाणिरवारयत् ।
शल्यं तु सह सैन्येन कुन्तीपुत्रो युधिष्ठिरः ॥ ९-१५-७ (६०९२०)
ततः समभवद्युद्धं संसक्तं तत्रतत्र ह ।
तावकानां परेषां च सङ्ग्रामेष्वनिवर्तिनाम् ॥ ९-१५-८ (६०९२१)
तत्र पश्यामहे कर्म शल्यस्यातिमहद्रणे ।
यदेकः सर्वसैन्यानि पाण्डवानामयोधयत् ॥ ९-१५-९ (६०९२२)
व्यदृश्यत तदा शल्यो युधिष्ठिरसमीपतः ।
क्रूरश्चन्द्रमसोऽभ्याशे शनैश्चर इव ग्रहः ॥ ९-१५-१० (६०९२३)
पीडयित्वा तु राजानं शरैराशीविषोपमैः ।
अभ्यधावत्पुनर्भीमं शरवर्षैरवाकिरत् ॥ ९-१५-११ (६०९२४)
तस्य तल्लाघवं दृष्ट्वा तथैव च कृतास्त्रताम् ।
अपूजयन्ननीकानि परेषां तावकानि च ॥ ९-१५-१२ (६०९२५)
पीड्यमानास्तु शल्येन पाण्डवा भृशाविक्षताः ।
प्राद्रवन्त रणं हित्वा क्रोशमाने युधिष्ठिरे ॥ ९-१५-१३ (६०९२६)
वध्यमानेष्वनीकेषु मद्रराजेन पाण्डवः ।
अमर्षवशमापन्नो धर्मराजो युधिष्ठिरः ॥ ९-१५-१४ (६०९२७)
ततः पौरुषमास्थाय मद्रराजमताडयत् ।
जयो वाऽस्तु वधो वेति कृतबुद्धिर्महारथः ॥ ९-१५-१५ (६०९२८)
समाहूयाब्रवीत्सर्वान्भ्रातॄन्कृष्णं च पाण्डवः ॥ ९-१५-१६ (६०९२९)
भीष्मो द्रोणश्च कर्णश्च ये चान्ये पृथिवीक्षितः ।
कौरवार्थे पराक्रान्ताः सङ्ग्रामे निधनं गताः ।
यथाभागं यथोत्साहं भवन्तः कृतपौरुषाः ॥ ९-१५-१७ (६०९३०)
भागोऽवशिष्ट एकोऽयं मम शल्यो महारथः ।
सोऽहमद्य युधा जेतुमाशंसे मद्रकाधिपम् ॥ ९-१५-१८ (६०९३१)
तत्र यन्मानसं मह्यं तत्सर्वं निगदामि वः ।
चक्ररक्षाविमौ वीरौ मम माद्रवतीसुतौ ॥ ९-१५-१९ (६०९३२)
अजेयौ वासवेनापि समरे शूरसम्मतौ ।
साध्विमौ मातुलं युद्धे क्षत्रधर्मपुरस्कृतौ ॥ ९-१५-२० (६०९३३)
मदर्थे प्रतियुध्येतां मानार्हौ सत्यसङ्गरौ ।
मां वा शल्यो रणे हन्ता तं वाऽहं भद्रमस्तु वः ।
इति सत्यामिमां वाणीं लोकवीरा निबोधत ॥ ९-१५-२१ (६०९३४)
योत्स्येऽहं मातुलेनाद्य क्षात्रधर्मेण पार्थिवाः ।

स्वमंशमभिसन्धाय विजयायेतराय वा ॥ ९-१५-२२ (६०९३५)
तस्य मेऽप्यधिकं शस्त्रं सर्वोपकरणानि च ।
संयुज्यन्तां रथे क्षिप्रं शास्त्रवद्रथयोजकैः ॥ ९-१५-२३ (६०९३६)
शैनेयो दक्षिणं चक्रं धृष्टद्युम्नस्तथोत्तरम् ।
पृष्ठगोपो भवत्वद्य मम पार्थो धनञ्जयः ॥ ९-१५-२४ (६०९३७)
पुरःसरो ममाद्यास्तु भीमः शस्त्रभृतां वरः ।
एवमभ्यधिकः शल्याद्भविष्यामि महामृधे ॥ ९-१५-२५ (६०९३८)
एवमुक्तास्तथा चक्रुस्तदा राज्ञः प्रियैषिणः ॥ ९-१५-२६ (६०९३९)
ततः प्रहर्षः सैव्यानां पुनरासीत्तदाः मृधे ।
पाञ्चालानां सोमकानां मात्स्यानां च विशेषतः ॥ ९-१५-२७ (६०९४०)
प्रतिज्ञातं च सङ्ग्रामे धर्मराजस्य पूजयन् ।
ततः शङ्खांश्च भेरीश्च शतशश्चैव पुष्करान् ।
अवादयन्त पाञ्चालाः सिंहनादांश्च नेदिरे ॥ ९-१५-२८ (६०९४१)
तेऽभ्यधावन्त संरब्धा मद्रराजं तरस्विनम् ।
महता हर्षजेनाथ नादेन कुरुपुङ्गवाः ॥ ९-१५-२९ (६०९४२)
ह्रादेन गजघण्टानां शङ्खानां निनदेन च ।
तूर्यशब्देन महता नादयन्तश्च मेदिनीम् ॥ ९-१५-३० (६०९४३)
तान्प्रत्यगृह्णात्पुत्रस्ते मद्रराजश्च वीर्यवान् ।
महामेघानिव बहूञ्शैलावस्तोदयावुभौ ॥ ९-१५-३१ (६०९४४)
शल्यस्तु समरश्लाघी धर्मराजमरिन्दमम् ।
ववर्ष शरवर्षेण शम्बरं मघवा इव ॥ ९-१५-३२ (६०९४५)
तथैव कुरुराजोऽपि प्रगृह्य रुचिरं धनुः ।
द्रोणोपदेशान्विविधान्दर्शयानो महामनाः ।
ववर्ष शरवर्षाणि चित्रं लघु च सुष्ठु च ॥ ९-१५-३३ (६०९४६)
न चास्य विवरं कश्चिद्ददर्श चरतो रणे ॥ ९-१५-३४ (६०९४७)
तावुभौ विविधैर्बाणैस्ततक्षाते परस्परम् ।
शार्दूलावामिषप्रेप्सू पराक्रान्ताविवाहवे ॥ ९-१५-३५ (६०९४८)
भीमस्तु तव पुत्रेण युद्धशौण्डेन सङ्गतः ॥ ९-१५-३६ (६०९४९)
पाञ्चाल्यः सात्यकिश्चैव माद्रीपुत्रौ च पाण्डवौ ।
शकुनिप्रमुखान्वीरान्प्रत्यगृह्णन्समन्ततः ॥ ९-१५-३७ (६०९५०)
तदासीत्तुमुलं युद्धं पुनरेव जयैषिणाम् ।
तावकानां परेषां च राजन्दुर्मन्त्रिते तव ॥ ९-१५-३८ (६०९५१)
दुर्योधनस्तु भीमस्य शरेणानतपर्वणा ।
चिच्छेदादिश्य सङ्ग्रामे ध्वजं हेमपरिष्कृतम् ॥ ९-१५-३९ (६०९५२)
स किङ्किणीकजालेन महता चारुदर्शनः ।
पपात रुचिरः सिंहो भीमसेनस्य पश्यतः ॥ ९-१५-४० (६०९५३)

पुनश्चास्य धनुश्चित्रं गजराजकरोपमम् ।
क्षुरेण शितधारेण प्रचकर्त नराधिपः ॥ ९-१५-४१ (६०९५४)
स च्छिन्नधन्वा तेजस्वी रथशक्त्या सुतं तव ।
बिभेदोरसि विक्रम्य स रथोपस्थ आविशत् ॥ ९-१५-४२ (६०९५५)
तस्मिन्मोहमनुप्राप्ते पुनरेव वृकोदरः ।
यन्तुरेव शिरः कायात्क्षुरप्रेणाहरत्तदा ॥ ९-१५-४३ (६०९५६)
हतसूता हयास्तस्य रथमादाय भारत ।
व्यद्रवन्त दिशो राजन्हाहाकारस्तदाऽभवत् ॥ ९-१५-४४ (६०९५७)
तमभ्यधावंस्त्राणार्थं द्रोणपुत्रो महारथः ।
कृपश्च कृतवर्मा च पुत्रं ते हि परीप्सवः ॥ ९-१५-४५ (६०९५८)
तस्मिन्विलुलिते सैन्ये त्रस्तांस्तस्य पदानुगान् ।
गाण्डीवधन्वा विस्फार्य धनुस्तानहनच्छरैः ॥ ९-१५-४६ (६०९५९)
युधिष्ठिरस्तु मद्रेशमभ्यधावदमर्षितः ।
स्वयं सन्नोदयन्नश्वान्दन्तवर्णान्मनोजवान् ॥ ९-१५-४७ (६०९६०)
तत्राश्चर्यपमश्याम कुन्तीपुत्रे युधिष्ठिरे ।
पुरा भूत्वा मृदुर्दान्तो यत्तदा दारुणोऽभवत् ॥ ९-१५-४८ (६०९६१)
विवृताक्षश्च कौन्तेयो वेपमानश्च मन्युना ।
चिच्छेद योधान्निशितैः शरैः शतसहस्रशः ॥ ९-१५-४९ (६०९६२)
यांयां प्रत्युद्ययौ सेनां तांतां ज्येष्ठः स पाण्डवः ।
शरैरपातयद्राजन्गिरीन्वज्रैरिवोत्तमैः ॥ ९-१५-५० (६०९६३)
साश्वसूतध्वजरथान्रथिनः पातयन्बहून् ।
अक्रीडदेको बलवान्पवनस्तोयदानिव ॥ ९-१५-५१ (६०९६४)
साश्वारोहांश्च तुरगान्पत्तींश्चैव सहस्रधा ।
व्यपोथयत सङ्ग्रामे क्रुद्धो रुद्रः पशूनिव ॥ ९-१५-५२ (६०९६५)
शून्यमायोधनं कृत्वा शरवर्षैः समन्ततः ।
अभ्यद्रवत मद्रेशं तिष्ठतिष्ठेति चाब्रवीत् ॥ ९-१५-५३ (६०९६६)
तस्य तच्चरितं दृष्ट्वा संग्रामे भीमकर्मणः ।
वित्रेसुस्तावकाः सर्वे शल्यस्त्वेनं समभ्ययात् ॥ ९-१५-५४ (६०९६७)
ततस्तौ भृशसङ्क्रुद्धौ प्रध्माय सलिलोद्भवौ ।
समाहूय तदाऽन्योन्यं भर्त्सयन्तौ समीयतुः ॥ ९-१५-५५ (६०९६८)
शल्यस्तु शरवर्षेण पीडयामास पाण्डवम् ।
मद्रराजं तु कौन्तेयः शरवर्षैरवाकिरत् ॥ ९-१५-५६ (६०९६९)
अदृश्येतां तदा राजन्कङ्कपत्रिभिराचितौ ।
उद्भिन्नरुधिरौ शूरौ मद्रराजयुधिष्ठिरौ ।
पुष्पिताविव रेजाते वने शाल्मलिकिंशुकौ ॥ ९-१५-५७ (६०९७०)
दीव्यमानौ महात्मानौ प्राणद्यूतेन दुर्मदौ ।

दृष्ट्वा सर्वाणि सैन्यानि नाध्यवस्यंस्तयोर्जयम् ॥ ९-१५-५८ (६०९७१)
हत्वा मद्राधिपं पार्थो भोक्ष्यतेऽद्य वसुन्धराम् ।
शल्यो वा पाण्डवं हत्वा दद्याद्दुर्योधनाय गाम् ॥ ९-१५-५९ (६०९७२)
इतीव निश्चयो नाभूद्योधानां तत्र भारत ।
प्रदक्षिणमभूत्सर्वं धर्मराजस्य युध्यतः ॥ ९-१५-६० (६०९७३)
ततः शरशतं शल्यो मुमोचाशु युधिष्ठिरे ।
धनुश्चास्य शिताग्रेण बाणेन निरुकृन्तत ॥ ९-१५-६१ (६०९७४)
सोऽन्यत्कार्मुकमादाय शल्यं शरशतैस्त्रिभिः ।
अविध्यत्कार्मुकं चास्य क्षुरेण निरकृन्तत ॥ ९-१५-६२ (६०९७५)
अथास्य निजघानाश्वांश्चतुरो नतपर्वभिः ।
द्वाभ्यामतिशिताग्राभ्यामुभौ तत्पार्ष्णिसारथी ॥ ९-१५-६३ (६०९७६)
ततोऽस्य दीप्यमानेन पीतेन निशितेन च ।
प्रमुखे वर्तमानस्य भल्लेनापाहरद्ध्वजम् ॥ ९-१५-६४ (६०९७७)
ततः प्रभग्नं तत्सैन्यं दौर्योधनमरिन्दम ॥ ९-१५-६५ (६०९७८)
ततो मद्राधिपं द्रौणिरभ्यधावत्तथा कृतम् ।
आरोप्य चैनं स्वरथं त्वरमाणः प्रदुद्रुवे ॥ ९-१५-६६ (६०९७९)
मुहूर्तमिव तौ गत्वा नर्दमाने युधिष्ठिरे ।
गत्वा ततो मद्रपतिरन्यं स्यन्दनमास्थितः ॥ ९-१५-६७ (६०९८०)
विधिवत्कल्पितं शुभ्रं महाम्बुदनिनादिनम् ।
सज्जयन्त्रोपकरणं द्विषतां रोमहर्षणम् ॥ ९-१५-६८ (६०९८१)
तथान्यद्धनुरादाय बलवान्वेगवत्तरम् ॥
युधिष्ठिरं मद्रपतिर्भित्त्वा सिंह इवानदत् ॥ ९-१५-६९ (६०९८२)
ततः स शरवर्षेण पर्जन्य इव वृष्टिमान् ।
अभ्यवर्षदमेयात्मा क्षत्रियान्क्षत्रियर्षभः ॥ ९-१५-७० (६०९८३)
सात्यकिं दशभिर्विद्ध्वा भीमसेनं त्रिभिः शरैः ।
सहदेवं त्रिभिर्विद्धा युधिष्ठिरमपीडयत् ॥ ९-१५-७१ (६०९८४)
तांस्तानन्यान्महेष्वासान्साश्वान्सरथकूबरान् ।
अर्दयामास विशिखैरुल्काभिरिव कुञ्जरान् ॥ ९-१५-७२ (६०९८५)
कुञ्जरान्कुञ्जरारोहानश्वप्रयायिनः ।
रथांश्च रथिभिः सार्धं जघान रथिनां वरः ॥ ९-१५-७३ (६०९८६)
बाहूंश्चिच्छेद तरसा सायुधान्केतनानि च ।
चकार च महीं योधैः स्तीर्णां वेदीं कुशैरिव ॥ ९-१५-७४ (६०९८७)
तथा तमरिसैन्यानि घ्नन्तं मृत्युमिवान्तकम् ।
परिवव्रुर्भृशं क्रुद्धाः पाण्डुपाञ्चालसोमकाः ॥ ॥ ९-१५-७५ (६०९८८)

इति श्रीमन्महाभारते शल्यपर्वणि शल्यवधपर्वणि

अष्टादशदिवसयुद्धे पञ्चदशोऽध्यायः ॥१५ ॥
Mahabharata - Shalya Parva - Chapter Footnotes

९-१५-४२ रथशक्त्या रथस्थया शक्त्या ॥
९-१५-५० यां यामभ्यगमत्सेनां तां तां व्यनीनशत् ।न्यपातयत कौन्तेयो गिरीन्वज्र इवोत्तमान्।इति क ख पाठः ॥
९-१५-६७ मुहूर्तमिव तान्हत्वा नर्दमीने युधिष्ठिरे इति क ख पाठः ॥
९-१५-१५ पञ्चदशोऽध्यायः ॥

---

शल्यपर्व-अध्यय०१६
॥ श्रीः ॥
९.१६. अध्यायः १६

Mahabharata - Shalya Parva - Chapter Topics
युधिष्ठिरेण शल्यशल्यानुजयोर्वधः ॥१ ॥

Mahabharata - Shalya Parva - Chapter Text

९-१६-० (६०९८९)
सञ्जय उवाच।९-१६-०क्ष् (५१०९)
तं भीमसेनश्च शिनेश्च नप्ता
माद्र्याश्च पुत्रौ पुरुषप्रवीरौ ।
समागतं भीमबलेन राज्ञा
पर्यापुरन्योन्यमथाह्वयन्त ॥ ९-१६-१ (६०९९०)
ततस्तु शूराः समरे नरेन्द्र
नरेश्वरं प्राप्य युधां वरिष्ठम् ।
आवार्य चैनं समरे नृवीरा
जघ्नुः शितैः पत्रिभिरुग्रवेगैः ॥ ९-१६-२ (६०९९१)
संरक्षितो भीमसेनेन राजा
माद्रीसुताभ्यामथ माधवेन ।
मद्राधिपं पत्रिभिरुग्रवेगैः
स्तनान्तरे धर्मसुतो निजघ्ने ॥ ९-१६-३ (६०९९२)
ततो रणे तावकानां रथौघाः
समीक्ष्य मद्राधिपतिं शरार्तम् ।
पर्यावव्रुः प्रवराः सर्वयोधा
दुर्योधनस्यानुमते पुरस्तात् ॥ ९-१६-४ (६०९९३)

ततो द्रुतं मद्रजनाधिपो रणे
युधिष्ठिरं सप्तभिरभ्यविद्ध्यत् ।
तं चापि पार्थौ नवभिः पृषत्कै--
र्विव्याध राजंस्तुमुले महात्मा ॥ ९-१६-५ (६०९९४)
आकर्णपूर्णायतसम्प्रयुक्तैः
शरैस्तदा संयति तैलधौतैः ।
अन्योन्यमाच्छादयतां महारथौ
मद्राधिपश्चापि युधिष्ठिरश्च ॥ ९-१६-६ (६०९९५)
ततस्तु तूर्णं समरे महारथौ
परस्परस्यान्तरमीक्षमाणौ ।
शरैर्भृशं विव्यधतुर्नृपोत्तमौ
महबलौ शत्रुभिरप्रधृष्यौ ॥ ९-१६-७ (६०९९६)
तयोर्धनुर्ज्यातलनिःस्वनो महा--
न्महेन्द्रवज्राशनितुल्यनिः स्वनः ।
परस्परं बाणगणैर्महात्मनोः
प्रवर्षतोर्मद्रपपाण्डुवीरयोः ॥ ९-१६-८ (६०९९७)
तौ चेरतुर्व्याघ्रशिशुप्रकाशौ
महावनेष्वामिषगृद्धिनाविव ।
विषाणिनौ नागवराविवोभौ
ततक्षतुः संयति जातदर्पौ ॥ ९-१६-९ (६०९९८)
ततस्तु मद्राधिपतिर्महात्मा
युधिष्ठिरं भीमबलं प्रसह्य ।
विव्याध वीरं हृदयेऽतिवेगं
शरेण सूर्याग्निसमप्रभेण ॥ ९-१६-१० (६०९९९)
ततोऽतिविद्धोऽथ युधिष्ठिरोऽपि
सुसम्प्रयुक्तेन शरेण राजन् ।
जघान मद्राधिपतिं महात्मा
मुदं च लेभे वृषभः कुरूणाम् ॥ ९-१६-११ (६१०००)
ततो मुहूर्तादिव पार्थिवेन्द्रो
लब्ध्वा संज्ञां क्रोधसंरक्तनेत्रः ।
शरेण पार्थं त्वरितो जघान
सहस्रनेत्रप्रतिमप्रभावः ॥ ९-१६-१२ (६१००१)
त्वरंस्ततो धर्मसुतो महात्मा
शल्यस्य कोपान्नवभिः पृषत्कैः ।
भित्त्वा ह्युरस्तपनीयं च वर्म
जघान षड्भिस्त्वपरैः पृषत्कैः ॥ ९-१६-१३ (६१००२)

ततस्तु मद्राधिपतिः प्रकृष्टं
धनुर्विकृष्य व्यसृजत्पृषत्कान् ।
द्वाभ्यां शराभ्यां च तथैव राज्ञ--
श्चिच्छेद चापं कुरुपुङ्गवस्य ॥ ९-१६-१४ (६१००३)
नवं ततोऽन्यत्समरे प्रगृह्य
राजा धनुर्घोरतरं महात्मा ।
शल्यं तु विव्याध शरैः समन्ता--
द्यथा महेन्द्रो नमुचिं शिताग्रैः ॥ ९-१६-१५ (६१००४)
ततस्तु शल्यो नवभिः पृषत्कै--
र्भीमस्य राज्ञश्च युधिष्ठिरस्य ।
निकृत्य रौक्मे पटुवर्मणी तयो--
र्विदारयामास भुजौ महात्मा ॥ ९-१६-१६ (६१००५)
ततोऽपरेण ज्वलनार्कतेजसा
क्षुरेण राज्ञो धनुरुन्ममाथ ।
कृपश्च तस्यैव जघान सूतं
षड्भिः शरैः सोऽभिमुखः पपात ॥ ९-१६-१७ (६१००६)
मद्राधिपश्चापि युधिष्ठिरस्य
शरैश्चतुर्भिर्निजघान वाहान् ।
वाहांश्च हत्वा व्यकरोन्महात्मा
योधक्षयं धर्मसुतस्य राज्ञः ॥ ९-१६-१८ (६१००७)
ग्यदद्भुतं कर्म न शक्यमन्यैः
सुदुःसहं तत्कृतवन्तमेकम् ।
शल्यो नरेन्द्रः सविषण्णभावा--
द्विचिन्तयामास मृदङ्गकेतुः ॥ ९-१६-१९ (६१००८)
किमेतदिन्द्रावरजस्य वाक्यं
मोघं भवत्यद्य विधेर्बलेन ।
जहीति शल्यं ह्यवदत्तदाऽऽजौ
न लोकनाथस्य वचोऽन्यथा स्यात् ॥' ९-१६-२० (६१००९)
तथा कृते राजनि भीमसेनो
मद्राधिपस्याथ ततो महात्मा ।
छित्त्वा धनुर्वेगवता शरेण
द्वाभ्यामविध्यत्सुभृशं नरेन्द्रम् ॥ ९-१६-२१ (६१०१०)
तथापरेणास्य जहार यन्तुः
कायाच्छिरः संहननीयमध्यात् ।
जघान चाश्वांश्चतुरः सुशीघ्रं
तथा भृशं कुपितो भीमसेनः ॥ ९-१६-२२ (६१०११)

तमग्रणीः सर्वधनुर्धराणा--
मेकं चरन्तं समरेऽतिवेगम् ।
भीमः शतेन व्यकिरच्छराणां
माद्रीपुत्रः सहदेवस्तथैव ॥ ९-१६-२३ (६१०१२)
तैः सायकैर्मोहितं वीक्ष्य शल्यं
भीमः शरैरस्य चकर्त वर्म ।
स भीमसेनेन निकृत्तवर्मा
मद्राधिपश्चर्म सहस्रतारम् ॥ ९-१६-२४ (६१०१३)
प्रगृह्य खड्गं च रथान्महात्मा
प्रस्कन्द्य कुन्तीसुतमभ्यधावत् ।
छित्त्वा रथेषां नकुलस्य सोऽथ
युधिष्ठिरं भीमबलोऽभ्यधावत् ॥ ९-१६-२५ (६१०१४)
तं चापि राजानमथोत्पतन्तं
क्रुद्धं यथैवान्तकमापतन्तम् ।
धृष्टद्युम्नो द्रौपदेयाः शिखण्डी
शिनेश्च नप्ता सहसा परीयुः ॥ ९-१६-२६ (६१०१५)
अथास्य चर्माप्रतिमं न्यकृन्त--
द्भीमो महात्मा नवभिः पृषत्कैः ।
खड्गं च भल्लैर्निचकर्त मुष्टौ
नदन्प्रहृष्टस्तव सैन्यमध्ये ॥ ९-१६-२७ (६१०१६)
तत्कर्म भीमस्य समीक्ष्य हृष्टा--
स्ते पाण्डवानां प्रवरा रथौघाः ।
नादं च चक्रुर्भृशमुत्स्मयन्तः
शङ्खांश्च दध्मुः शशिसन्निकाशान् ॥ ९-१६-२८ (६१०१७)
तेनाथ शब्देन विभीषणेन
तथाऽभितप्तं बलमप्रधृष्यम् ।
स्वेदाभिभूतं रुधिरोक्षिताङ्गं
विसञ्ज्ञकल्पं च तदा विषण्णम् ॥ ९-१६-२९ (६१०१८)
स मद्रराजः सहसा विकीर्णो
भीमाग्रगैः पाण्डवयोधमुख्यैः ।
युधिष्ठिरस्याभिमुखं जवेन
सिंहो यथा मृगहेतोः प्रयातः ॥ ९-१६-३० (६१०१९)
स धर्मराजो निहताश्वसूतः
क्रोधेन दीप्तो ज्वलनप्रकाशः ।
दृष्ट्वा च मद्राधिपतिं स्म तूर्णं
समभ्यधावत्तमरिं बलेन ॥ ९-१६-३१ (६१०२०)

गोविन्दवाक्यं त्वरितं विचिन्त्य
दध्रे मतिं शल्यविनाशनाय ।
स धर्मराजो निहताश्वसूतो
रथे तिष्ठञ्शक्तिमथान्वकर्षत् ॥ ९-१६-३२ (६१०२१)
तच्चक्षक्ष् शल्यस्य निशाम्य कर्म
तमात्मनो भागमथावशिष्टम् ।
कृत्वा मनः शल्यवधे महात्मा
यथोक्तमिन्द्रावरजस्य चक्रे ॥ ९-१६-३३ (६१०२२)
स धर्मराजो मणिहेमदण्डां
जग्राह शक्तिं कनकप्रकाशाम् ।
नेत्रे च दीप्ते सहसा विवृत्य
मद्राधिपं क्रुद्धमना निरैक्षत् ॥ ९-१६-३४ (६१०२३)
निरीक्षितो धर्मसुतेन राज्ञा
षूतात्मना निर्हृतकल्मषेण ।
आसीन्न यद्भस्मसान्मद्रराज--
स्तदद्भुतं मे प्रतिभाति राजन् ॥ ९-१६-३५ (६१०२४)
ततस्तु शक्तिं रुचिरोग्रदण्डां
मणिप्रवेकोज्ज्वलितां प्रदीप्ताम् ।
चिक्षेप वेगात्सुभृशं महात्मा
मद्राधिपाय प्रवरः कुरूणाम् ॥ ९-१६-३६ (६१०२५)
दीप्तामथैनां प्रहितां बलेन
सविस्फुलिङ्गां सहसापतन्तीम् ।
प्रैक्षन्त सर्वे कुरवः समेता
दिवो युगान्ते महतीमिवोल्काम् ॥ ९-१६-३७ (६१०२६)
तां कालरात्रीमिव पाशहस्तां
यमस्य धात्रीमिव चोग्ररूपाम् ।
स ब्रह्मदण्डप्रतिमाममोघां
ससर्ज यत्तो युधि धर्मराजः ॥ ९-१६-३८ (६१०२७)
गन्धस्रगग्र्यासनपानभोजनै--
रभ्यर्चितां पाण्डुसुतैः प्रयत्नात् ।
सांवर्तकाग्निप्रतिमां ज्वलन्तीं
कृत्यामथर्वाङ्गिरसीमिवोग्राम् ॥ ९-१६-३९ (६१०२८)
ईशानहेतोः प्रतिनिर्मितां तां
त्वष्ट्रा रिपूणामसुदेहभक्ष्याम् ।
भूम्यन्तरिक्षद्युजलाश्रयाणि
प्रसह्य भूतानि निहन्तुमीशाम् ॥ ९-१६-४० (६१०२९)

घण्टापताकां मणिवज्रभूषां
वैदूर्यचित्रां तपनीयदण्डाम् ।
त्वष्ट्रा प्रयत्नान्नियमेन क्लृप्तां
ब्रह्मद्विषामन्तकरीममाघाम् ॥ ९-१६-४१ (६१०३०)
बलप्रयत्नादनिरोधवेगां
मन्त्रैश्च घोरैरपि पूरयित्वा ।
ससर्ज मार्गेण च तां खगानां
वधाय मद्राधिपतेस्तदानीम् ॥ ९-१६-४२ (६१०३१)
हतो ह्यसावित्यभिगर्जमानो
रुद्रोऽन्धकायान्तकरं यथेषुम् ।
प्रसार्य बाहुं सुदृढं सुपाणिं
क्रोधेन नृत्यन्निव धर्मराजः ॥ ९-१६-४३ (६१०३२)
ग्स्फुरत्प्रभामण्डलिनोंशुजालै--
र्धर्मात्मनो मद्रविनाशकाले ।
पुरत्रयप्रोत्सरणे पुरस्ता--
न्माहेश्वरं रूपमभूत्तदानीम् ॥ ९-१६-४४ (६१०३३)
आवर्तनाकुञ्चितबाहुदण्डः
सन्ध्याविहारी तनुवृत्तमध्यः ।
विशालवक्षा भगवान्हरो यथा
सुदुर्निरीक्ष्योऽभवदर्जुनाग्रजः'॥ ९-१६-४५ (६१०३४)
तां सर्वशक्त्या प्रहितां सुशक्तिं
युधिष्ठिरेणाप्रतिवार्यवीर्याम् ।
प्रतिग्रहायाभिननन्द शल्यः
सम्यग्घुतामग्निरिवाज्यधाराम् ॥ ९-१६-४६ (६१०३५)
सा तस्य वर्माभिविदार्य शुभ्र--
मुरो विशालं च तथैव भित्त्वा ।
विवेश गां तोयमिवाप्रसक्ता
यशो विशालं नृपतेर्हरन्ती ॥ ९-१६-४७ (६१०३६)
नासाक्षिकर्णास्यविनिः सृतेन
प्रस्यन्दता च व्रणसम्भवेन ।
संसिक्तगात्रो रुधिरेण सोऽभू--
त्क्रौञ्चो यथा स्कन्दहतो महाद्रिः ॥ ९-१६-४८ (६१०३७)
प्रसार्य बाहू च रथाद्गतो गां
सञ्छिन्नवर्मा कुरुनन्दनेन ।
महेन्द्रवाहप्रतिमो महात्मा
वज्राहतं शृङ्गमिवाचलस्य ॥ ९-१६-४९ (६१०३८)

ततो निपतितः सोऽभूदिन्द्रध्वज इवोच्छ्रितः ।
बाहू प्रसार्याभिमुखो धर्मराजस्य मद्रराट् ।
स तथा भिन्नसर्वाङ्गो रुधिरेण समुक्षितः ॥ ९-१६-५० (६१०३९)
प्रत्युद्गत इव प्रेम्णा भूम्या स नरपुङ्गवः ।
प्रियया कान्तया कान्तः पतमान इवोरसि ॥ ९-१६-५१ (६१०४०)
चिरं भुक्त्वा वसुमतीं प्रियां कान्तामिव प्रभुः ।
सर्वैरङ्गैः समाश्लिष्य प्रसुप्त इव चाभवत् ॥ ९-१६-५२ (६१०४१)
धर्म्ये धर्मात्मना युद्धे निहतो धर्मसूनुना ।
सम्यक्स्फीत इवोत्सृष्टः प्रशान्तोऽग्निरिवाध्वरे ॥ ९-१६-५३ (६१०४२)
शक्त्या विभिन्नहृदयं विप्रविद्धायुधध्वजम् ।
संशान्तमपि मद्रेशं लक्ष्मीर्नैव विमुञ्चति ॥ ९-१६-५४ (६१०४३)
ततो युधिष्ठिरश्चापमादायेन्द्रधनुष्प्रभम् ।
व्यधमद्द्विषतः सङ्ख्ये खगराडिव पन्नगान् ।
देहान्सुनिशितैर्भल्लै रिपूणां नाशयन्क्षणात् ॥ ९-१६-५५ (६१०४४)
ततः पार्थस्य बाणौघैरावृताः सैनिकास्तव ।
निमीलिताक्षाः क्षिण्वन्ति भृशमन्योन्यकर्शिताः ।
क्षरन्तो रुधिरं देहैर्विशस्त्रायुधजीविताः ॥ ९-१६-५६ (६१०४५)
ततः शल्ये निपतिते मद्रराजानुजो युवा ।
भ्रातुस्तुल्यो गुणैः सर्वै रथी पाण्डवमभ्ययात् ॥ ९-१६-५७ (६१०४६)
विव्याध च नरश्रेष्ठो नाराचैर्बहुभिस्त्वरन् ।
हतस्यापचितिं भ्रातुश्चिकीर्षुर्युद्धदुर्मदः ॥ ९-१६-५८ (६१०४७)
तं विव्याधाशुगैः षड्भिर्धर्मराजस्त्वरन्निव ।
कार्मुकं चास्य चिच्छेद क्षुराभ्यां ध्वजमेव च ॥ ९-१६-५९ (६१०४८)
ततोऽस्य दीप्यमानेन सुदृढेन शितेन च ।
प्रमुखे वर्तमानस्य भल्लेनापाहरच्छिरः ॥ ९-१६-६० (६१०४९)
सकुण्डलं तद्ददृशे पतमानं शिरो रथात् ।
पुण्यक्षयमनुप्राप्य पतन्स्वर्गादिव च्युतः ॥ ९-१६-६१ (६१०५०)
तस्यापकृत्तशीर्षं तु शरीरं पतितं रथात् ।
रुधिरेणावसिक्ताङ्गं दृष्ट्वा सैन्यमभज्यत ॥ ९-१६-६२ (६१०५१)
विचित्रकवचे तस्मिन्हते मद्रनृपानुजे ।
हाहाकारं प्रकुर्वाणाः कुरवोऽभिप्रदुद्रुवुः ॥ ९-१६-६३ (६१०५२)
शल्यानुजं हतं दृष्ट्वा तावकास्त्यक्तजीविताः ।
वित्रेसुः पाण्डवभयात्प्रविध्वस्तास्तदा भृशम् ॥ ९-१६-६४ (६१०५३)
तांस्तथा भज्यमानांस्तु कौरवान्भरतर्षभ ।
शिनेर्नप्ताऽकिरन्बाणैरभ्यवर्तत सात्यकिः ॥ ९-१६-६५ (६१०५४)
तमायान्तं महेष्वासं दुष्प्रसह्यं दुरासदम् ।

हार्दिक्यस्त्वरितो राजन्प्रत्यगृह्णादभीतवत् ॥ ९-१६-६६ (६१०५५)
तौ समेतौ महात्मानौ वार्ष्णेयौ वरवाजिनौ ।
हार्दिक्यः सात्यकिश्चैव सिंहाविव बलोत्कटौ ॥ ९-१६-६७ (६१०५६)
इषुभिर्विमलाभासैश्छादयन्तौ परस्परम् ।
अर्चिर्भिरिव सूर्यस्य दिवाकरसमप्रभौ ॥ ९-१६-६८ (६१०५७)
चापमार्गबलोद्धूतान्मार्गणान्वृष्णिसिंहयोः ।
आकाशगानपश्याम पतङ्गानिव शीघ्रगान् ॥ ९-१६-६९ (६१०५८)
सात्यकिं दशभिर्विद्ध्वा हयांश्चास्य त्रिभिः शरैः ।
चापमेकेन चिच्छेद हार्दिक्यो नतपर्वणा ॥ ९-१६-७० (६१०५९)
तन्निकृत्तं धनुःश्रेष्ठमपास्य शिनिपुङ्गवः ।
अन्यदादत्त वेगेन धनुर्जलदनिःस्वनम् ॥ ९-१६-७१ (६१०६०)
तदादाय धनुःश्रेष्ठं वरिष्ठः सर्वधन्विनाम् ।
हार्दिक्यं दशभिर्बाणैः प्रत्यविध्यत्स्तनान्तरे ॥ ९-१६-७२ (६१०६१)
ततो युगं रथेषां च च्छित्त्वा भल्लैः सुसंयतैः ।
अश्वांस्तस्यावधीत्तूर्णमुभौ च पार्ष्णिसारथी ॥ ९-१६-७३ (६१०६२)
हार्दिक्यं विरथं दृष्ट्वा कृपः शारद्वतः प्रभो ।
अपोवाह ततः क्षिप्रं रथमारोप्य वीर्यवान् ॥ ९-१६-७४ (६१०६३)
मद्रराजे हते राजन्विरथे कृतवर्मणि ।
दुर्योधनबलं सर्वं पुनरासीत्पराङ्मुखम् ॥ ९-१६-७५ (६१०६४)
स्व परे नान्वबुध्यन्त सैन्येन रजसा वृते ।
बलं तु हतभूयिष्ठं त्रस्तमासीत्पराङ्मुखम् ॥ ९-१६-७६ (६१०६५)
ततो मुहूर्तात्तेऽपश्यन्रजो भौमं समुत्थितम् ।
विविधैः शोणितस्रावैः प्रशान्तं पुरुषर्षभ ॥ ९-१६-७७ (६१०६६)
ततो दुर्योधनो दृष्ट्वा भग्नं स्वबलमन्तिकात् ।
जवेनापततः पार्थानेकः सर्वानवारयत् ॥ ९-१६-७८ (६१०६७)
पाण्डवान्सरथान्दृष्ट्वा धृष्टद्युम्नं च पार्षतम् ।
आनर्त्तं च दुराधर्षं शितैर्बाणैरवारयत् ॥ ९-१६-७९ (६१०६८)
तं परे नाभ्यवर्तन्त मर्त्या मृत्युमिवागतम् ।
अथान्यं रथमास्थाय हार्दिक्योऽपि न्यवर्तत ॥ ९-१६-८० (६१०६९)
ततो युधिष्ठिरो राजा त्वरमाणो महारथः ।
चतुर्भिर्निजघानाश्वान्पत्रिभिः कृतवर्मणः ।
विव्याध गौतमं चापि षड्भिर्भल्लैः सुतेजनैः ॥ ९-१६-८१ (६१०७०)
अश्वत्थामाः ततो राज्ञा हताश्वं विरथीकृतम् ।
तमपोवाह हार्दिक्यं स्वरथेन युधिष्ठिरात् ॥ ९-१६-८२ (६१०७१)
ततः शारद्वतः षड्भिः प्रत्यविध्यद्युधिष्ठिरम् ।
विव्याध चाश्वान्निशितैस्तस्याष्टाभिः शिलीमुखैः ॥ ९-१६-८३ (६१०७२)

एवमेतन्महाराज युद्धशेषमवर्तत ।
तव दुर्मन्त्रिते राजन्सहपुत्रस्य भारत ॥ ९-१६-८४ (६१०७३)
तस्मिन्महेष्वासधरे विशस्ते
सङ्ग्रामममध्ये कुरुपुङ्गवेन ।
पार्थाः समेताः परमप्रहृष्टाः
शङ्खान्प्रदध्मुर्हतमीक्ष्य शल्यम् ॥ ९-१६-८५ (६१०७४)
युधिष्ठिरं च प्रशशंसुराजौ
पुरा सुरा वृत्रवधे यथेन्द्रम् ।
चक्रुश्च नानाविधवाद्यशब्दा--
न्निनादयन्तो वसुधां समन्तात् ॥ ॥ ९-१६-८६ (६१०७५)

इति श्रीमन्महाभारते शल्यपर्वणि शल्यवधपर्वणि
अष्टादशदिवसयुद्धे षोडशोऽध्यायः ॥ १६ ॥
Mahabharata - Shalya Parva - Chapter Footnotes

९-१६-२२ संहननीयो दृढसन्धिको मध्यो यस्य तस्मात्कायात् ॥
९-१६-४७ तोयमिव सुप्रवेशाङ्गाम् । अप्रसक्तः अप्रतिहता। नृपतेः
शल्यस्य ॥
९-१६-१६ षोडशोऽध्यायः ॥

---

शल्यपर्व-अध्यय०१७
॥ श्रीः ॥
९.१७. अध्यायः १७

Mahabharata - Shalya Parva - Chapter Topics
सङ्कुलयुद्धम् ॥ १ ॥

Mahabharata - Shalya Parva - Chapter Text

९-१७-० (६१०७६)
सञ्जय उवाच। ९-१७-०क्ष् (५११०)
शल्येऽथ निहते राजन्मद्रराजपदानुगाः ।
रथाः सप्तशता वीरा दुद्रुवुर्महतो बलात् ॥ ९-१७-१ (६१०७७)
दुर्योधनस्तु द्विरदमारुह्याचलसन्निभम् ।
छत्रेण ध्रियमाणेन वीज्यमानश्च चामरैः ।
न गन्तव्यं न गन्तव्यमिति मद्रानवारयत् ॥ ९-१७-२ (६१०७८)

दुर्योधनेन ते वीरा वार्यमाणाः पुनः पुनः ।
युधिष्ठिरं जिघांसन्तः पाण्डूनां प्राविशन्बलम् ॥ ९-१७-३ (६१०७९)
ते तु शूरा महाराज कृतचित्ताश्च योधने ।
धनुःशब्दं महत्कृत्वा सहायुध्यन्त पाण्डवैः ॥ ९-१७-४ (६१०८०)
श्रुत्वा च निहतं शल्यं धर्मपुत्रं च पीडितम् ।
मद्रराजप्रिये युक्तैर्मद्रकाणां महारथैः ॥ ९-१७-५ (६१०८१)
आजगाम ततः पार्थो गाण्डीवं विक्षिपन्धनुः ।
पूरयन्रथघोषेण दिशः सर्वा महारथः ॥ ९-१७-६ (६१०८२)
ततोऽर्जुनश्च भीमश्च माद्रीपुत्रौ च पाण्डवौ ।
सात्यकिश्च नरव्याघ्रो द्रौपदेयाश्च सर्वशः ॥ ९-१७-७ (६१०८३)
धृष्टद्युम्नः शिखण्डी च पाञ्चालाः सह सोमकैः ।
युधिष्ठिरं परीप्सन्तः समन्तात्पर्यवारयन् ॥ ९-१७-८ (६१०८४)
ते समन्तात्परिवृताः पाण्डवैः पुरुषर्षभैः ।
क्षोभयन्ति स्म तां सेनां मकराः सागरं यथा ।
वृक्षानिव महावाताः कम्पयन्ति स्म तावकाः ॥ ९-१७-९ (६१०८५)
पुरोवातेन गङ्गेव--क्षोभ्यमाणा महानदी ।
अक्षोभ्यत तदा राजन्पाण्डूनां ध्वजिनी ततः ॥ ९-१७-१० (६१०८६)
प्रस्कन्द्य सेनां महतीं महात्मानो महारथाः ।
बहवश्चुक्रुशुस्तत्र क्व स राजा युधिष्ठिरः ।
भ्रातरो वाऽस्य ते शूरा दृश्यन्ते नेह केचन ॥ ९-१७-११ (६१०८७)
धृष्टद्युम्नोऽथ शैनेयो द्रौपदेयाश्च सर्वशः ।
पाञ्चालाश्च महावीर्याः शिखण्डी च महारथः ॥ ९-१७-१२ (६१०८८)
एवं तान्वादिनः शूरान्द्रौपदेया महारथाः ।
अभ्यघ्नन्युयुधानश्च मद्रराजपदानुगान् ॥ ९-१७-१३ (६१०८९)
चक्रैर्विमथितैः केचित्केचिच्छिन्नैर्महाध्वजैः ।
सम्प्रदृश्यन्त समरे तावका निहताः परैः ॥ ९-१७-१४ (६१०९०)
आलोक्य पाण्डवान्युद्धे योधा राजन्समन्ततः ।
वार्यमाणा ययुर्वेगात्पुत्रेण तव भारत ॥ ९-१७-१५ (६१०९१)
दुर्योधनश्च तान्वीरान्वारयामास सान्त्वयन् ।
न चास्य शासनं केचित्तत्र चक्रुर्महारथाः ॥ ९-१७-१६ (६१०९२)
ततो गान्धारराजस्य पुत्रः शकुनिरब्रवीत् ।
दुर्योधनं महाराज वचनं वचनक्षमम् ॥ ९-१७-१७ (६१०९३)
किं नः सम्प्रेक्षमाणानां मद्राणां हन्यते बलम् ।
न युक्तमेतत्समरे त्वयि तिष्ठति भारत ॥ ९-१७-१८ (६१०९४)
सहितैर्नाम योद्धव्यमित्येष समयः कृतः ।
अथ कस्मात्स्मरन्नेव घ्नतो मर्षयसे नृप ॥ ९-१७-१९ (६१०९५)

दुर्योधन उवाच। ९-१७-२०क्ष् (५१११)
वार्यमाणा मया पूर्वं नैते चक्रुर्वचो मम ।
एते विनिहताः सर्वे प्रस्कन्नाः पाण्डुवाहिनीम् ॥ ९-१७-२० (६१०९६)
शकुनिरुवाच। ९-१७-२१क्ष् (५११२)
न भर्तुः शासनं वीरा रणे कुर्वन्त्यमर्षिताः ।
अलं क्रोद्धुमथैतेषां नायं काल उपेक्षितुम् ॥ ९-१७-२१ (६१०९७)
यामः सर्वेऽत्र सम्भूय सवाजिरथकुञ्जराः ।
परित्रातुं महेष्वासान्मद्रराजपदानुगान् ॥ ९-१७-२२ (६१०९८)
अन्योन्यं परिरक्षामो यत्नेन महता नृप ।
एवं सर्वेऽनुसञ्चिन्त्य प्रययुर्यत्र सैनिकाः ॥ ९-१७-२३ (६१०९९)
सञ्जय उवाच। ९-१७-२४क्ष् (५११३)
एवमुक्तस्तदा राजा बलेन महता वृतः ।
प्रययौ सिंहनादेन कम्पयन्निव मेदिनीम् ॥ ९-१७-२४ (६११००)
हत विध्यत गृह्णीत प्रहरध्वं निकृन्तत ।
इत्यासीत्तुमुलः शब्दस्तव सैन्यस्य भारत ॥ ९-१७-२५ (६११०१)
पाण्डवास्तु रणे दृष्ट्वा मद्रराजपदानुगान् ।
सहितानभ्यवर्तन्त गुल्ममास्थाय मध्यमम् ॥ ९-१७-२६ (६११०२)
ते मुहूर्ताद्रणे वीरा हस्ताहस्ति विशाम्पते ।
निहताः प्रत्यदृश्यन्त मद्रराजपदानुगाः ॥ ९-१७-२७ (६११०३)
ततो नः सम्प्रयातानां हता मद्रास्तरस्विनः ।
हृष्टाः किलकिलाशब्दमकुर्वन्सहिताः परे ॥ ९-१७-२८ (६११०४)
अथोत्थितानि रुण्डानि समदृश्यन्त सर्वशः ।
पपात महती चोल्का मध्येनादित्यमण्डलम् ॥ ९-१७-२९ (६११०५)
रथैर्भग्नयुगाक्षैश्च निहतैश्च महारथैः ।
अश्वैर्निपातितैश्चैव सञ्छन्नाऽभूद्वसुन्धरा ॥ ९-१७-३० (६११०६)
वातायमानैस्तुरगैर्युगासक्तैस्ततस्ततः ।
अकृष्यन्त महाराज योधास्तत्र रणाजिरे ॥ ९-१७-३१ (६११०७)
भग्नचक्रान्रथान्केचिदहरंस्तुरगा रणे ।
रथार्धं केचिदादाय दिशो दश विबभ्रमुः ।
तत्रतत्र व्यदृश्यन्त योक्त्रैः श्लिष्टाः स्म वाजिनः ॥ ९-१७-३२ (६११०८)
रथिनः पतमानाश्च दृश्यन्ते स्म नरोत्तमाः ।
गगनात्प्रच्युताः सिद्धाः पुण्यानामिव सङ्क्षये ॥ ९-१७-३३ (६११०९)
निहतेषु च शूरेषु मद्रराजानुगेषु वै ।
अस्मानापततश्चापि दृष्ट्वा पार्था महारथाः ॥ ९-१७-३४ (६१११०)
अभ्यवर्तन्त वेगेन जयगृद्धाः प्रहारिणः ।
बाणशब्दरवान्कृत्वा विमिश्राञ्शङ्खनिःस्वनैः ॥ ९-१७-३५ (६११११)

अस्मांस्तु पुनरासाद्य लब्धलक्षाः प्रहारिणः ।
शरासनानि धुन्वानाः सिंहनादान्प्रचुक्रुशुः ॥ ९-१७-३६ (६१११२)
ततो हतमभिप्रेक्ष्य मद्रराजबलं महत् ।
मद्रराजं च समरे दृष्ट्वा शूरं निपातितम् ।
दुर्योधनबलं सर्वं पुनरासीत्पराङ्मुखम् ॥ ९-१७-३७ (६१११३)
वध्यमानं महाराज पाण्डवैर्जितकाशिभिः ।
दिशो भेजेऽथ सम्भ्रान्तं त्रासितं दृढधन्विभिः ॥ ॥ ९-१७-३८ (६१११४)

इति श्रीमन्महाभारते शल्यवपर्वणि शल्यवधपर्वणि
अष्टादशदिवसयुद्धे सप्तदशोऽध्यायः ॥ १७ ॥
Mahabharata - Shalya Parva - Chapter Footnotes

९-१७-२० प्रस्कन्नाः प्रपन्नाः ॥
९-१७-१७ सप्तदशोऽध्यायः ॥

---

शल्यपर्व-अध्यय०१८
॥ श्रीः ॥
९.१८. अध्यायः १८

Mahabharata - Shalya Parva - Chapter Topics
सङ्कुलयुद्धम् ॥ १ ॥

Mahabharata - Shalya Parva - Chapter Text

९-१८-० (६१११५)
सञ्जय उवाच। ९-१८-०क्ष् (५११४)
पातिते युधि दुर्धर्षे मद्रराजे महारथे ।
तावकास्तव पुत्राश्च प्रायशो विमुखाऽभवन् ॥ ९-१८-१ (६१११६)
वणिजो नावि भिन्नायां यथागाधे महार्णवे ।
अपारे पारमिच्छन्तो हते शूरे महात्मनि ॥ ९-१८-२ (६१११७)
मद्रराजे महाराज वित्रस्ताः शरविक्षताः ।
अनाथा नाथमिच्छन्तो मृगाः सिंहार्दिता इव ॥ ९-१८-३ (६१११८)
वृषा यथा भग्नशृङ्गाः शीर्णदन्ता यथा गजाः ।
मध्याह्ने प्रत्यपायाम निर्जिताऽजातशत्रुणा ॥ ९-१८-४ (६१११९)
न संस्थातुमनीकानि न च राजन्पराक्रमे ।
आसीद्बुद्धिर्हते शल्ये तव योधस्य कस्यचित् ॥ ९-१८-५ (६११२०)

भीष्मे द्रोणे च निहते सूतपुत्रे च पातिते ।
यद्दुःखं तव योधानां भयं चासीद्विशाम्पते ॥ ९-१८-६ (६११२१)
तद्भयं स च नः शोको भूय एवाभ्यवर्तत ।
निराशाश्च जये राजन्हते शल्ये महारथे ॥ ९-१८-७ (६११२२)
हतप्रवीरा विध्वस्ता निकृत्ताश्च शितैः शरैः ।
मद्रराजे हते राजन्योधास्ते प्राद्रवन्भयात् ॥ ९-१८-८ (६११२३)
अश्वानन्ये गजानन्ये रथानन्ये महारथाः ।
आरुह्य जवसम्पन्ना पादाताः प्राद्रवंस्तथा ॥ ९-१८-९ (६११२४)
द्विसाहस्राश्च महातङ्गा गिरिरूपाः प्रहारिणः ।
क्षक्ष्प्राद्रवन्हते शल्ये अङ्कुशाङ्गुष्ठनोदिताः ॥ ९-१८-१० (६११२५)
ते रणाद्भरतश्रेष्ठ तावकाः प्राद्रवन्दिशः ।
धावतश्चाप्यपश्याम श्वसमानाञ्शराहतान् ॥ ९-१८-११ (६११२६)
तान्प्रभग्नान्हतान्दृष्ट्वा हतोत्साहान्पराजितान् ।
अभ्यवर्तन्त पाञ्चालाः पाण्डवाश्च जयैषिणः ॥ ९-१८-१२ (६११२७)
बाणशब्दरवाश्चापि सिंहनादाश्च पुष्कलाः ।
शङ्खशब्दश्च शूराणां दारुणः समपद्यत ॥ ९-१८-१३ (६११२८)
दृष्ट्वा तु कौरवं सैन्यं भयत्रस्तं प्रविद्रुतम् ।
अन्योन्यं समभाषन्त पाञ्चालाः पाण्डवैः सह ॥ ९-१८-१४ (६११२९)
अद्य राजा सत्यधृतिर्हतामित्रो युधिष्ठिरः ।
अद्य दुर्योधनो हीनो दीप्तया नृपतिश्रिया ॥ ९-१८-१५ (६११३०)
अद्य श्रुत्वा हतं पुत्रं धृतराष्ट्रो जनेश्वरः ।
निःसंज्ञः पतितो भूमौ किल्बिषं प्रतिपत्स्यते ॥ ९-१८-१६ (६११३१)
अद्य जानाति बीभत्सुं समर्थं स्वधन्विनाम् ।
अद्यात्मानं च दुर्मेधा गर्हयिष्यति पापकृत् ॥ ९-१८-१७ (६११३२)
अद्य क्षत्तुर्वचः सत्यं स्मरतां ब्रुवतो हितम् ।
अद्यप्रभृति पार्थं च प्रेष्यभूत इवाचरन् ।
विजानातु नृपो दुःखं यत्प्राप्तं पाण्डुनन्दनैः ॥ ९-१८-१८ (६११३३)
अद्य कृष्णस्य माहात्म्यं विजानातु महीपतिः ।
अद्यार्जुनधनुर्घोषं घोरं जानातु संयुगे ॥ ९-१८-१९ (६११३४)
अत्त्राणां च बलं सर्वं बाह्वोश्च बलमाहवे ।
ग्पुत्राणां च वधं घोरं भीमेन श्रोष्यते नृपः'॥ ९-१८-२० (६११३५)
अद्य ज्ञास्यति भीमस्य बलं घोरं महात्मनः ।
हते दुर्योधने युद्धे शक्रेणेव तु शम्बरे ॥ ९-१८-२१ (६११३६)
यत्कृतं भीमसेनेन दुःशासनवधे तदा ।
कोऽन्यः कर्ताऽस्ति तल्लोके ऋते भीमान्महाबलात्। ९-१८-२२ (६११३७)
अद्य ज्येष्ठस्य जानीतां पाण्डवस्य पराक्रमम् ।

मद्रराजं हतं श्रुत्वा देवैरपि सुदुःसहम् ॥ ९-१८-२३ (६११३८)
अद्य ज्ञास्यति सङ्ग्रामे माद्रीपुत्रौ सुदुःसहौ ।
निहते सौबले वीरे गान्धारेषु च सर्वशः ॥ ९-१८-२४ (६११३९)
xxxx न तेषां स्याद्येषां योद्धा धनञ्जयः ।
xxxxx धृष्टद्युम्नश्च पार्षतः ॥ ९-१८-२५ (६११४०)
xxxx पञ्च माद्रीपुत्रौ च पाण्डवौ ।
शिखण्डी च महेष्वासो राजा चैव युधिष्ठिरः ॥ ९-१८-२६ (६११४१)
येषां च जगतो नाथो नाथः कृष्णो जनार्दनः ।
कथं तेषां जयो न स्याद्येषां धर्मो व्यपाश्रयः ॥ ९-१८-२७ (६११४२)
ग्लाभस्तेषां जयस्तेषां कुतस्तेषां पराभवः ।
येषां नाथो हृषीकेशः सर्वलोकविभुर्हरिः'॥ ९-१८-२८ (६११४३)
भीष्मं द्रोणं च कर्णं च मद्रराजानमेव च ।
तथाऽन्यान्नृपतीन्वीराञ्शतशोऽथ सहस्रशः ॥ ९-१८-२९ (६११४४)
कोऽन्यः शक्तो रणे जेतुमृते पार्थाद्युधिष्ठिरात् ।
यस्य नाथो हृषीकेशः सदा सत्ययशोनिधिः ॥ ९-१८-३० (६११४५)
इत्येवं वदमानास्ते हर्षेण महता युताः ।
प्रभग्नांस्तावकान्योधान्संहृष्टाः पृष्ठतोऽन्वयुः ॥ ९-१८-३१ (६११४६)
धनञ्जयो रथानीकमभ्यवर्तत वीर्यवान् ।
माद्रीपुत्रौ च शकुनिं सात्यकिश्च महारथः ॥ ९-१८-३२ (६११४७)
तान्प्रेक्ष्य द्रवतः सर्वान्भीमसेनभयार्दितान् ।
दुर्योधनस्तदा सूतमब्रवीद्विस्मयन्निव ॥ ९-१८-३३ (६११४८)
मामतिक्रमते पार्थो धनुष्पाणिमवस्थितम् ।
जघने सर्वसैन्यानां शनैरश्वान्प्रचोदय ॥ ९-१८-३४ (६११४९)
जघने युध्यमानं हि कौन्तेयो मां न संशयः ।
नोत्सहेदभ्यतिक्रान्तुं वेलामिव महोदधिः ॥ ९-१८-३५ (६११५०)
पश्य सैन्यं महत्सूत पाण्डवैः समभिद्रुतम् ।
सैन्यरेणुं समुद्भूतं पश्य चैनं समन्ततः ॥ ९-१८-३६ (६११५१)
सिंहनादांश्च समुद्भूतं पश्य चैनं समन्ततः ॥
तस्माद्याहि शनैः सूत जघनं परिपालय ॥ ९-१८-३७ (६११५२)
मयि स्थिते च समरे निरुद्धेषु च पाण्डुषु ।
पुनरावर्तते तूर्णं मामकं बलमोजसा ॥ ९-१८-३८ (६११५३)
तच्छ्रुत्वा तव पुत्रस्य शूरस्य सदृशं वचः ।
सारथिर्हेमसञ्छन्नाञ्शनैरश्वानचोदयत् ॥ ९-१८-३९ (६११५४)
गजाश्वरथिभिर्हीनास्त्यक्तात्मानः पदातयः ।
एकविंशतिसाहस्राः संयुगायावतस्थिरे ॥ ९-१८-४० (६११५५)
नानादेशसमुद्भूता नानारञ्जितवाससः ।

अवस्थितास्तदा योधाः प्रार्थयन्तो महद्यशः ॥ ९-१८-४१ (६११५६)
तेषामापततां तत्र संहृष्टानां परस्परम् ।
सम्मर्दः सुमहाञ्चज्ञे घोररूपो भयानकः ॥ ९-१८-४२ (६११५७)
भीमसेनं तदा राजन्धृष्टद्युम्नं च पार्षतम् ।
बलेन चतुरङ्गेण नानादेश्यानवारयत् ॥ ९-१८-४३ (६११५८)
भीममेवाभ्यवर्तन्त रणेऽन्ये तु पदातयः ।
प्रक्ष्वेड्यास्फोट्य संहृष्टा वीरलोकं यियासवः ॥ ९-१८-४४ (६११५९)
आसाद्य भीमसेनं तु संरब्धा युद्धदुर्मदाः ।
धार्तराष्ट्रा विनेदुर्हि नान्यामकथनयन्कथाम् ।
परिवार्य रणे भीमं निजघ्नुस्ते समन्ततः ॥ ९-१८-४५ (६११६०)
स वध्यमानः समरे पदातिगणसंवृतः ।
न चचाल ततः स्थानान्मैनाक इव पर्वतः ॥ ९-१८-४६ (६११६१)
ते तु क्रुद्धा महाराज पाण्डवस्य महारथम् ।
निग्रहीतुं प्रवृत्ता हि योधांश्चान्यानवारयन् ॥ ९-१८-४७ (६११६२)
अक्रुध्यत रणे भीमस्तैस्तदा पर्यवस्थितैः ।
सोऽवतीर्य रथात्तूर्णं पदातिः समवस्थितः ॥ ९-१८-४८ (६११६३)
जातरूपप्रतिच्छन्नां प्रगृह्य महतीं गदाम् ।
अवधीत्तावकान्योधान्दण्डपाणिरिवान्तकः ॥ ९-१८-४९ (६११६४)
रथाश्वविप्रहीणांस्तु तान्भीमो गदया बली ।
एकविंशतिसाहस्रान्पदातीन्समपोथयत् ॥ ९-१८-५० (६११६५)
हत्वा तत्पुरुषानीकं भीमः सत्यपराक्रमः ।
धृष्टद्युम्नं पुरस्कृत्य न चिरात्प्रत्यदृश्यत ॥ ९-१८-५१ (६११६६)
पादाता निहता भूमौ शिश्यिरे रुधिरोक्षिताः ।
सम्भग्ना इव वातेन कर्णिकाराः सुपुष्पिताः ॥ ९-१८-५२ (६११६७)
नानाशस्त्रसमायुक्ता नानाकुण्डलधारिणः ।
नानाजात्या हतास्तत्र नादेशसमागताः ॥ ९-१८-५३ (६११६८)
पताकाध्वजसञ्छन्नं पदातीनां महद्बलम् ।
निकृत्तं विबभौ रौद्रं घोररूपं भयावहम् ॥ ९-१८-५४ (६११६९)
युधिष्ठिरपुरोगाश्च सहसैन्या महारथाः ।
अभ्यधावन्महात्मानं पुत्रं दुर्योधनं तव ॥ ९-१८-५५ (६११७०)
ते सर्वे तावकान्दृष्ट्वा महेष्वासान्पराङ्मुखान् ।
नाभ्यवर्तन्त ते पुत्रं वेलामिव महोर्मयः ॥ ९-१८-५६ (६११७१)
तदद्भुतमपश्याम तव पुत्रस्य पौरुषम् ।
यदेकं सहिताः पार्था न शेकुरतिवर्तितुम् ॥ ९-१८-५७ (६११७२)
नातिदूरापयातं तु कृतबुद्धिं पलायने ।
दुर्योधनः स्वकं सैन्यमब्रवीद्भृशविक्षतम् ॥ ९-१८-५८ (६११७३)

न तं देशं प्रपश्यामि पृथिव्यां पर्वतेषु च ।
यत्र यातान्न वा हन्युः पाण्डवाः किं सृतेन वः ॥ ९-१८-५९ (६११७४)
अल्पं च बलमेतेषां कृष्णौ च भृशविक्षतौ ।
यदि सर्वेऽत्र तिष्ठामो ध्रुवं नो विजयो भवेत् ॥ ९-१८-६० (६११७५)
विप्रयातांस्तु वो भिन्नान्पाण्डवाः कृतविप्रियाः ।
अनुयाय हनिष्यन्ति श्रेयान्नः समरे वधः ॥ ९-१८-६१ (६११७६)
शृण्वन्तु क्षत्रियाः सर्वे यावन्तोऽत्र समागताः ।
यदा शूरं च भीरुं च मारयत्यन्तकः सदा ॥ ९-१८-६२ (६११७७)
को नु मूढो न युध्येत पुरुषः क्षत्रियो ध्रुवम् ।
श्रेयान्नो भीमसेनस्य क्रुद्धस्याभिमुखे स्थितः ॥ ९-१८-६३ (६११७८)
सुखः साङ्ग्रामिको मृत्युर्दुःखो व्याधिजरादिभिः ।
मर्त्येनावश्यमर्तव्यं गृहेष्वपि कदाचन ॥ ९-१८-६४ (६११७९)
युध्यतः क्षत्रधर्मेण मृत्युरेष सनातनः ।
हत्वेह सुखमाप्नोति हतः प्रेत्य महत्फलम् ॥ ९-१८-६५ (६११८०)
न युद्धधर्माच्छ्रेयान्वै पन्थाः स्वर्गस्य कौरवाः ।
अचिरेणैव ताँल्लोकान्हतो युद्धे समश्नुते ॥ ९-१८-६६ (६११८१)
श्रुत्वा तद्वचनं तस्य पूजयित्वा च पार्थिवाः ।
पुनरेवाभ्यवर्तन्त पाण्डवानाततायिनः ॥ ९-१८-६७ (६११८२)
तानापतत एवाशु व्यूढानीकाः प्रहारिणः ।
प्रत्युद्ययुस्तदा पार्था जयगृद्धाः प्रमन्यवः ॥ ९-१८-६८ (६११८३)
धनञ्जयो रथेनाजावभ्यवर्तत वीर्यवान् ।
विश्रुतं त्रिषु लोकेषु व्याक्षिपन्गाण्डिवं धनुः ॥ ९-१८-६९ (६११८४)
माद्रीपुत्रौ च शकुनिं सात्यकिश्च महाबलः ।
जवेनाभ्यपतन्हृष्टा यत्ता वै तावकं बलम् ॥ ॥ ९-१८-७० (६११८५)

इति श्रीमन्महाभारते शल्यपर्वणि शल्यवधपर्वणि
अष्टादशदिवसयुद्धे अष्टादशोऽध्यायः ॥ १८ ॥
Mahabharata - Shalya Parva - Chapter Footnotes

९-१८-३४ न मातेक्रमते पाथः इति ङ ।पाठः। न मानसस्यते इति
क पाठः ॥
९-१८-१८ अष्टादशोऽध्यायः ॥

---

शल्यपर्व-अध्यय०१९
॥ श्रीः ॥
९.१९. अध्यायः १९

Mahabharata - Shalya Parva - Chapter Topics
सात्यकिना साल्ववधः ॥ १ ॥

Mahabharata - Shalya Parva - Chapter Text

९-१९-० (६११८६)
सञ्जय उवाच। ९-१९-०क्ष् (५११५)
सन्निवृत्तेषु सैन्येषु साल्वो म्लेच्छगणाधिपः ।
अभ्यद्रवत्सुसङ्क्रुद्धः पाण्डवानां महद्बलम् ॥ ९-१९-१ (६११८७)
आस्थाय सुमहानागं प्रभिन्नं पर्वतोपमम् ।
सप्तमैरावतप्रख्यममित्रगणमर्दनम् ॥ ९-१९-२ (६११८८)
योऽसौ महान्भद्रकुलप्रसूतः
सुपूजितो धार्तराष्ट्रेण नित्यम् ।
सुकल्पितः शास्त्रविनिश्चयज्ञैः
सदौपवाह्यः समरेषु राजन् ॥ ९-१९-३ (६११८९)
ऐरावतं दैत्यगणान्विमृद्न--
ञ्शक्रो यथा सञ्जनयन्भयानि ।
तमास्थितो राजवरो बभूव
यथोदयस्थः सविता क्षपान्ते ॥ ९-१९-४ (६११९०)
स तेन नागप्रवरेण राज--
न्नभ्युद्ययौ पाण्डुसुतान्समेतान् ।
शितैः पृषत्कैर्विददार वेगै--
र्महेन्द्रवज्रप्रतिमैः सुघोरैः ॥ ९-१९-५ (६११९१)
ततः शरान्वै सृजतो महारणे
योधांश्च राजन्नयतो यमालयम् ।
नास्यान्तरं ददृशुः स्वे परे वा
यथा पुरा वज्रधरस्य दैत्याः ॥ ९-१९-६ (६११९२)
ते पाण्डवाः सोमकाः सृञ्जयाश्च
तमेकनागं ददृशुः समन्तात् ।
सहस्रशो वै विचरन्तमेकं
यथा महेन्द्रस्य गजं समीपे ॥ ९-१९-७ (६११९३)
सन्द्राव्यमाणं तु बलं परेषां
परेतकल्पं विबभौ समन्ततः ।
नैवावतस्थे समरे भृशं भया--
द्विमृद्यमानं तु परस्परं तदा ॥ ९-१९-८ (६११९४)

ततः प्रभग्ना सहसा महाचमूः
सा पाण्डवी तेन नराधिपेन ।
दिशश्चतस्रः सहसा विधाविता
गजेन्द्रवेगं तमपारयन्ती ॥ ९-१९-९ (६११९५)
दृष्ट्वा च तां वेगवता प्रभग्नां
सर्वे त्वदीया युधि योधमुख्याः ।
अपूजयंस्ते तु नराधिपं तं
दध्मुश्च शङ्खाञ्शशिसन्निकाशान् ॥ ९-१९-१० (६११९६)
श्रुत्वा निनादं त्वथ कौरवाणां
हर्षाद्विमुक्तं सह शङ्खशब्दैः ।
सेनापतिः पाण्डवसृञ्जयानां
पाञ्चालपुत्रो ममृषे न कोपात् ॥ ९-१९-११ (६११९७)
ततस्तु तं वै द्विरदं महात्मा
प्रत्युद्ययौ त्वरमाणो जयाय ।
जम्भो यथा शक्रसमागमे वै
नागेन्द्रमैरावणमिन्द्रवाह्यम् ॥ ९-१९-१२ (६११९८)
तमापतन्तं सहसा तु दृष्ट्वा
पाञ्चालपुत्रं युधि राजसिंहः ।
तं वै द्विपं प्रेषयामास तूर्णं
वधाय राजन्द्रुपदात्मजस्य ॥ ९-१९-१३ (६११९९)
स तं द्विपेन्द्रं सहसापतन्त--
मविध्यदग्निप्रतिमैः पृषत्कैः ।
कर्मारधौतैर्निशितैर्ज्वलद्भि--
र्नाराचमुख्यैस्त्रिभिरुग्रवेगैः ॥ ९-१९-१४ (६१२००)
ततोऽपरान्पञ्चशतान्महात्मा
नाराचमुख्यान्विससर्ज कुम्भे ।
स तैस्तु विद्धः परमद्विपो रणे
तदा परावृत्य भृशं प्रदुद्रुवे ॥ ९-१९-१५ (६१२०१)
तं नागराजं सहसा प्रणुन्नं
विद्राव्यमाणं विनिवर्त्य साल्वः ।
तोत्राङ्कुशैः प्रेषयामास तूर्णं
पाञ्चालराजस्य सुतं प्रदिश्य ॥ ९-१९-१६ (६१२०२)
दृष्ट्वा पतन्तं सहसा तु नागं
धृष्टद्युम्नः स्वरथाच्छीघ्रमेव ।
गदां प्रगृह्योग्रजवेन वीरो
भूमिं प्रपन्नो भयविह्वलाङ्गः ॥ ९-१९-१७ (६१२०३)

स तं रथं हेमविभूषिताङ्गं
साश्वं ससूतं सहसा विमृद्य ।
उत्क्षिप्य हस्तेन नदन्महाद्विपो
विपोथयामास वसुन्धरातले ॥ ९-१९-१८ (६१२०४)
पाञ्चालराजस्य सुतं च दृष्ट्वा
तदार्दितं नागवरेण तेन ।
तमभ्यधावत्सहसा जवेन
भीमः शिखण्डी च शिनेश्च नप्ता ॥ ९-१९-१९ (६१२०५)
शरैश्च वेगं सहसा निगृह्य
तस्याभितो व्यापततो गजस्य ।
स सङ्गृहीतो रथिभिर्गजो वै
चचाल तैर्वार्यमाणश्च सङ्ख्ये ॥ ९-१९-२० (६१२०६)
ततः पृषत्कान्प्रववर्ष राजा
सूर्यो यथा रश्मिजालं समन्तात् ।
तैराशुगैर्वध्यमाना रथौघाः
प्रदुद्रुवुः सहितास्तत्रतत्र ॥ ९-१९-२१ (६१२०७)
तत्कर्म साल्वस्य समीक्ष्य सर्वे
पाञ्चालपुत्रा नृप सृञ्जयाश्च ।
हाहाकारैर्नादयन्ति स्म युद्धे
द्विपं समन्ताद्रुरुधुर्नराग्र्याः ॥ ९-१९-२२ (६१२०८)
पाञ्चालपुत्रस्त्वरितस्तु शूरो
गदां प्रगृह्याचलशृङ्गकल्पाम् ।
ससम्भ्रमं भारत शत्रुघाती
जवेन वीरोऽनुससार नागम् ॥ ९-१९-२३ (६१२०९)
ततस्तु नागं धरणीधराभं
मदं स्रवन्तं जलदप्रकाशम् ।
गदां समाविध्य भृशं जघान
पाञ्चालराजस्य सुतस्तरस्वी ॥ ९-१९-२४ (६१२१०)
स भिन्नकुम्भः सहसा विनद्य
मुखात्प्रभूतं क्षतजं विमुञ्चन् ।
पपात नागो धरमीधराभः
क्षितिप्रकम्पाच्चलितो यथाऽद्रिः ॥ ९-१९-२५ (६१२११)
निपात्यमाने तु तदा गजेन्द्रे
हाहाकृते तव पुत्रस्य सैन्ये ।
स साल्वराजस्य शिनिप्रवीरो
जहार भल्लेन शिरः शितेन ॥ ९-१९-२६ (६१२१२)

ह्रतोत्तमाङ्गो युधि सात्वतेन
पपात भूमौ सह नागराज्ञा ।
यथाऽद्रिशृङ्गं सुमहत्प्रणुन्नं
वज्रेण देवाधिपचोदितेन ॥ ॥ ९-१९-२७ (६१२१३)

इति श्रीमन्महाभारते शल्यवधपर्वणि शल्यवधपर्वणि
अष्टादशदिवसयुद्धे एकोनविंशोऽध्यायः ॥१९ ॥

---

शल्यपर्व-अध्यय०२०
॥ श्रीः ॥
९.२०. अध्यायः २०

Mahabharata - Shalya Parva - Chapter Topics
सात्यकिना कृतवर्मपराजयः ॥१ ॥

Mahabharata - Shalya Parva - Chapter Text

९-२०-० (६१२१४)
सञ्जय उवाच। ९-२०-०क्ष् (५११६)
तस्मिंस्तु निहते शूरे साल्वे समितिशोभने ।
तवाभज्यद्बलं वेगाद्वातेनेव महाद्रुमः ॥ ९-२०-१ (६१२१५)
तत्प्रभग्नं बलं दृष्ट्वा कृतवर्मा महारथः ।
दधार समरे शूरः शत्रुसैन्यं महाबलः ॥ ९-२०-२ (६१२१६)
सन्निवृत्तास्तु ते शूरा दृष्ट्वा सात्वतमाहवे ।
शैलोपमं स्थिरं राजन्कीर्यमाणं शरैर्युधि ॥ ९-२०-३ (६१२१७)
ततः प्रववृते युद्धं कुरूणां पाण्डवैः सह ।
निवृत्तानां महाराज मृत्युं कृत्वा निवर्तनम् ॥ ९-२०-४ (६१२१८)
तत्राश्चर्यमभूद्युद्धं सात्वतस्य परैः सह ।
यदेको वारयामास पाण्डुसेनां दुरासदाम् ॥ ९-२०-५ (६१२१९)
तेषामन्योन्यसुहृदां कृते कर्मणि दुष्करे ।
सिंहनादः प्रहृष्टानां दिविस्पृक्सुमहानभूत् ॥ ९-२०-६ (६१२२०)
तेन शब्देन वित्रस्तान्पाञ्चालान्भरतर्षभ ।
शिनेर्नप्ता महाबाहुरन्वपद्यत सात्यकिः ॥ ९-२०-७ (६१२२१)
स समासाद्य राजानं क्षेमधूर्तिं महाबलम् ।
सप्तभिर्निशितैर्बाणैरनयद्यमसादनम् ॥ ९-२०-८ (६१२२२)
तमायान्तं महाबाहुं प्रवपन्तं शिताञ्शरान् ।

जवेनाभ्यपतद्धीमान्हार्दिक्यः शिनिपुङ्गवम् ॥ ९-२०-९ (६१२२३)
तौ सिंहाविव नर्दन्तौ धन्विनौ रथिनां वरौ ।
अन्योन्यमभिधावन्तौ शस्त्रप्रवरधारिणौ ॥ ९-२०-१० (६१२२४)
पाण्डवाः सहपाञ्चाला योधाश्चान्ये नृपोत्तमाः ।
प्रेक्षकाः समपद्यन्त तयोः पुरुषसिंहयोः ॥ ९-२०-११ (६१२२५)
नाराचैर्वत्सदन्तैश्च वृष्ण्यन्धकमहारथौ ।
अभिजघ्नतुरन्योन्यं प्रहृष्टाविव कुञ्चरौ ॥ ९-२०-१२ (६१२२६)
चरन्तौ विविधान्मार्गान्हार्दिक्यशिनिपुङ्गवौ ।
मुहुरन्तर्दधाते तौ बाणवृष्ट्या परस्परम् ॥ ९-२०-१३ (६१२२७)
चापवेगबलोद्धूतान्मार्गणान्वृष्णिसिंहयोः ।
आकाशे समपश्याम पतङ्गानिव शीघ्रगान् ॥ ९-२०-१४ (६१२२८)
तमेकं सत्यकर्माणमासाद्य हृदिकात्मजः ।
अविध्यन्निशितैर्बाणैश्चतुर्भिश्चतुरो हयान् ॥ ९-२०-१५ (६१२२९)
स दीर्घबाहुः सङ्क्रुद्धस्तोत्रार्दित इव द्विपः ।
अष्टभिः कृतवर्माणमविध्यत्परमेषुभिः ॥ ९-२०-१६ (६१२३०)
ततः पूर्णायतोत्सृष्टैः कृतवर्मा शिलाशितैः ।
सात्यकिं त्रिभिराहत्य धनुरेकेन चिच्छिदे ॥ ९-२०-१७ (६१२३१)
निकृत्तं तद्धनुःश्रेष्ठमपास्य शिनिपुङ्गवः ।
अन्यदादत्त वेगेन शैनेयः सशरं धनुः ॥ ९-२०-१८ (६१२३२)
तदादाय धनुःश्रेष्ठं वरिष्ठः सर्वधन्विनाम् ।
आरोप्य च धनुः शीघ्रं महावीर्यो महाबलः ॥ ९-२०-१९ (६१२३३)
अमृष्यमाणो धनुषश्छेदनं कृतवर्मणा ।
कुपितोऽतिरथः शीघ्रं कृतवर्माणमभ्ययात् ॥ ९-२०-२० (६१२३४)
ततः सुनिशितैर्बाणैर्दशभिः शिनिपुङ्गवः ।
जघान सूतं चाश्वांश्च ध्वजं च कृतवर्मणः ॥ ९-२०-२१ (६१२३५)
ततो राजन्महेष्वासः कृतवर्मा महारथः ।
हताश्वसूतं सम्प्रेक्ष्य रथं हेमपरिष्कृतम् ॥ ९-२०-२२ (६१२३६)
रोषेण महताऽऽविष्टः शूलमुद्यम्य मारिष ।
चिक्षेप भुजवेगेन जिघांसुः शिनि पुङ्गवम् ॥ ९-२०-२३ (६१२३७)
तच्छूलं सात्वतो ह्याजौ निर्भिद्य निशितैः शरैः ।
चूर्णितं पातयामास मोहयन्निव माधवम् ।
ततोऽपरेण भल्लेन हृद्येनं समताडयत् ॥ ९-२०-२४ (६१२३८)
सुयुद्धे युयुधानेन हताश्वो हतसारथिः ।
कृतवर्मा कृतास्त्रेण धरमीमन्वपद्यत ॥ ९-२०-२५ (६१२३९)
तस्मिन्सात्यकिना वीरे द्वैरथे विरथीकृते ।
समपद्यत सर्वेषां सैन्यानां सुमहद्भयम् ॥ ९-२०-२६ (६१२४०)

पुत्राणां तव चात्यर्थं विषादः समजायत ।
हतसूते हताश्वे तु विरथे कृतवर्मणि ॥ ९-२०-२७ (६१२४१)
हताश्वं च समालक्ष्य हतसूतमरिन्दम ।
अभ्यधावत्कृपो राजञ्जिघांसुः शिनिपुङ्गवम् ॥ ९-२०-२८ (६१२४२)
तमारोप्य रथोपस्थे मिषतां सर्वधन्विनाम् ।
अपोवाह महाबाहुं तूर्णमायोधनादपि ॥ ९-२०-२९ (६१२४३)
शैनेयेऽधिष्ठिते राजन्विरथे कृतवर्मणि ।
दुर्योधनबलं सर्वं पुनरासीत्पराङ्मुखम् ॥ ९-२०-३० (६१२४४)
तत्परे नान्वबुध्यन्त सैन्येन रजसा वृताः ।
तावकाः प्रद्रुता राजन्दुर्योधनमृते नृपम् ॥ ९-२०-३१ (६१२४५)
दुर्योधनस्तु सम्प्रेक्ष्य भग्नं स्वबलमन्तिकात् ।
जवेनाभ्यपतत्तूर्णं सर्वांश्चैको न्यवारयत् ॥ ९-२०-३२ (६१२४६)
पाण्डूंश्च सर्वान्सङ्क्रुद्धो धृष्टद्युम्नं च पार्षतम् ।
शिखण्डिनं द्रौपदेयान्पाञ्चालानां च ये गणाः ॥ ९-२०-३३ (६१२४७)
केकयान्सोमकांश्चैव सृञ्जयांश्चैव मारिष ।
असम्भ्रमं दुराधर्षः शितैर्बाणैरवाकिरत् ॥ ९-२०-३४ (६१२४८)
अतिष्ठदाहवे यत्तः पुत्रस्तव महाबलः ।
यथा यज्ञे महानग्निर्मन्त्रपूतः प्रकाशते ।
तथा दुर्योधनो राजा सङ्ग्रामे सर्वतोऽभवत् ॥ ९-२०-३५ (६१२४९)
तं परे नाभ्यवर्तन्त मर्त्या मृत्युमिवाहवे ।
अथान्यं रथमास्थाय हार्दिक्यः समपद्यत ॥ ॥ ९-२०-३६ (६१२५०)

इति श्रीमन्महाभारते शल्यपर्वमि शल्यवधपर्वणि
अष्टादशदिवसयुद्धे विंशोऽध्यायः ॥ २० ॥
Mahabharata - Shalya Parva - Chapter Footnotes

९-२०-३ सात्वतं कृतवर्माणम् ॥
९-२०-२० विंशोऽध्यायः ॥

---

शल्यपर्व-अध्यय०२१
॥ श्रीः ॥
९.२१. अध्यायः २१

Mahabharata - Shalya Parva - Chapter Topics
सङ्कुलयुद्धम् ॥ १ ॥

९-२१-० (६१२५१)
सञ्जय उवाच। ९-२१-०क्ष् (५११७)
पुत्रस्तु ते महाराज रथस्थो रथिनां वरः ।
दुरुत्सहो बभौ युद्धे यथा रुद्रः प्रतापवान् ॥ ९-२१-१ (६१२५२)
तस्य बाणसहस्रैस्तु प्रच्छन्ना ह्यभवन्मही ।
परांश्च सिषिचे बाणैर्धाराभिरिव पर्वतान् ॥ ९-२१-२ (६१२५३)
न च सोऽस्ति पुमान्कश्चित्पाण्डवानां बलार्णवे ।
हयो गजो रथो वाऽपि यः स्याद्बाणैरविक्षतः ॥ ९-२१-३ (६१२५४)
यं यं हि समरे योधं प्रपश्यामि विशाम्पते ।
स स बाणैश्चितोऽभूद्वै पुत्रेण तव भारत ॥ ९-२१-४ (६१२५५)
यथा सैन्येन रजसा समुद्धूतेन वाहिनी ।
प्रत्यदृश्यत सञ्छन्ना तथा बाणैर्महात्मनः ॥ ९-२१-५ (६१२५६)
बाणभूतामपश्याम पृथिवीं पृथिवीपते ।
दुर्योधनेन प्रकृतां क्षिप्रहस्तेन धन्विना ॥ ९-२१-६ (६१२५७)
तेषु योधसहस्रेषु तावकेषु परेषु च ।
नास्ति दुर्योधनसमः पुमानिति मतिर्मम ॥ ९-२१-७ (६१२५८)
तत्राद्भुतमपश्याम तव पुत्रस्य विक्रमम् ।
यदेकं सहिताः पार्था नाभ्यवर्तन्त भारत ॥ ९-२१-८ (६१२५९)
युधिष्ठिरं शतेनाजौ विव्याध भरतर्षभ ।
भीमसेनं च सप्तत्या सहदेवं च पञ्चभिः ॥ ९-२१-९ (६१२६०)
नकुलं च चतुःषष्ट्या धृष्टद्युम्नं च पञ्चभिः ।
पञ्चभिर्द्रौपदेयांश्च त्रिभिर्विव्याध सात्यकिम् ॥ ९-२१-१० (६१२६१)
धनुश्चिच्छेद भल्लेन सहदेवस्य मारिष ।
तदपास्य धनुश्छिन्नं माद्रीपुत्रः प्रतापवान् ॥ ९-२१-११ (६१२६२)
अभ्यद्रवत राजानं प्रगृह्यान्यन्महद्धनुः ।
ततो दुर्योधनं सङ्ख्ये विव्याध दशभिः शरैः ॥ ९-२१-१२ (६१२६३)
नकुलस्तु ततो वीरो राजानं नवभिः शरैः ।
घोररूपैर्महेष्वासो विव्याध च ननाद च ॥ ९-२१-१३ (६१२६४)
सात्यकिश्चैव राजानं शरेणानतपर्वणा ।
द्रौपदेयास्त्रिसप्तत्या धर्मराजश्च पञ्चभिः ।
अशीत्या भीमसेनश्च शरै राजानमार्पयन् ॥ ९-२१-१४ (६१२६५)
समन्तात्कीर्यमाणस्तु बाणसङ्घैर्महात्मभिः ।
न चचाल महाराज सर्वसैन्यस्य पश्यतः ॥ ९-२१-१५ (६१२६६)
लाघवात्सौष्ठवाच्चापि वीर्याच्चापि महात्मनः ।

अति सर्वाणि भूतानि ददृशुः सर्वपार्थिवाः ॥ ९-२१-१६ (६१२६७)
धार्तराष्ट्रा हि राजेन्द्र योधास्तु स्वल्पमन्तरम् ।
अपश्यमाना राजानं पर्यवर्तन्त दंशिताः ॥ ९-२१-१७ (६१२६८)
तेषामापततां घोरस्तुमुलः समपद्यत ।
क्षुब्धस्य हि समुद्रस्य प्रावृट्काले यथा स्वनः ॥ ९-२१-१८ (६१२६९)
समासाद्य रणे ते तु राजानमपराजितम् ।
प्रत्युद्ययुर्महेष्वासाः पाण्डवानाततायिनः ॥ ९-२१-१९ (६१२७०)
भीमसेनं रणे क्रुद्धो द्रोणपुत्रो न्यवारयत् ।
तयोर्बाणैर्महाराज प्रमुक्तैः सर्वतोदिशम् ।
नाज्ञायन्त रणे वीरा न दिशः प्रदिशस्तथा ॥ ९-२१-२० (६१२७१)
तावुभौ क्रूरकर्माणावुभौ भारतदुःसहौ ।
घोररूपमयुध्येतां कृतप्रतिकृतैषिणौ ॥ ९-२१-२१ (६१२७२)
त्रासयन्तौ दिशः सर्वा ज्याक्षेपकठिनत्वचौ ।
शकुनिस्तु रणे वीरो युधिष्ठिरमपीडयत् ॥ ९-२१-२२ (६१२७३)
तस्याश्वांश्चतुरो हत्वा सुबलस्य सुतो विभो ।
नादं चकार बलवत्सर्वसैन्यानि कम्पयन् ॥ ९-२१-२३ (६१२७४)
एतस्मिन्नन्तरे वीरं राजानमपराजितम् ।
अपोवाह रथेनाजौ सहदेवः प्रतापवान् ॥ ९-२१-२४ (६१२७५)
अथान्यं रथमास्थाय धर्मपुत्रो युधिष्ठिरः ।
शकुनिं नवभिर्विद्ध्वा पुनर्विव्याध पञ्चभिः ।
ननाद च महानादं प्रवरः सर्वधन्विनाम् ॥ ९-२१-२५ (६१२७६)
तद्युद्धमभवच्चित्रं घोररूपं च मारिष ।
प्रेक्षतां प्रीतिजननं सिद्धचारणसेवितम् ॥ ९-२१-२६ (६१२७७)
उलूकस्तु महेष्वासं नकुलं युद्धदुर्मदम् ।
अभ्यवर्षदमेयात्मा शरवर्षैः समन्ततः ॥ ९-२१-२७ (६१२७८)
तथैव नकुलः शूरः सौबलस्य सुतं रणे ।
शरवर्षेण महता समन्तात्पर्यवारयत् ॥ ९-२१-२८ (६१२७९)
तौ तत्र समरे वीरौ कुलपुत्रौ महारथौ ।
योधयन्तावपश्येतां कृतप्रतिकृतैषिणौ ॥ ९-२१-२९ (६१२८०)
तथैव कृतवर्माणं शैनेयः शत्रुतापनः ।
योधयञ्शुशुभे राजन्बलिं शक्र इवाहवे ॥ ९-२१-३० (६१२८१)
दुर्योधनो धनुश्छित्त्वा धृष्टद्युम्नस्य संयुगे ।
अथैनं छिन्नधन्वानं विव्याध निशितैः शरैः ॥ ९-२१-३१ (६१२८२)
धृष्टद्युम्नोऽपि समरे प्रगृह्य परमायुधम् ।
राजानं योधयामास पश्यतां सर्वधन्विनाम् ॥ ९-२१-३२ (६१२८३)
तयोर्युद्धं महच्चासीत्सङ्ग्रामे भरतर्षभ ।

प्रभिन्नयोर्यथा सक्तं मत्तयोर्वनहस्तिनोः ॥ ९-२१-३३ (६१२८४)
गौतमस्तु रणे क्रुद्धो द्रौपदेयान्महाबालान् ।
विव्याध बहुभिः शूरः शरैः सन्नतपर्वभिः ॥ ९-२१-३४ (६१२८५)
तस्य तैरभवद्युद्धमिन्द्रियैरिव देहिनः ।
घोररूपमसंवार्यं निर्मर्यादमवर्तत ॥ ९-२१-३५ (६१२८६)
ते च सम्पीडयामासुरिन्द्रियाणीव बालिशम् ।
स च तान्प्रतिसंरब्धः प्रत्ययोधयदाहवे ॥ ९-२१-३६ (६१२८७)
एवं चित्रमभूद्युद्धं तस्य तैः सह भारत ।
उत्थायोत्थाय हि यथा देहिनामिन्द्रियैर्विभो ॥ ९-२१-३७ (६१२८८)
नराश्चैव नरैः सार्धं दन्तिनो दन्तिभिस्तथा ।
हया हयैः समासक्ता रथिनो रथिभिः सह ॥ ९-२१-३८ (६१२८९)
सङ्कुलं चाभवद्भूयो घोररूपं विशाम्पते ॥ ९-२१-३९ (६१२९०)
इदं चित्रमिदं घोरमिदं रौद्रमिति प्रभो ।
युद्धान्यासन्महाराज घोराणि च बहूनि च ॥ ९-२१-४० (६१२९१)
ते समासाद्य समरे परस्परमरिन्दमाः ।
व्यनदंश्चैव जघ्नुश्च समाताद्य महाहवे ॥ ९-२१-४१ (६१२९२)
तेषां पत्रसमुद्भूतं रजस्तीव्रमदृश्यत ।
वातेन चोद्धतं राजन्धावद्भिश्चाश्वसादिभिः ॥ ९-२१-४२ (६१२९३)
रथनेमिसमुद्भूतं निःश्वासैश्चापि दन्तिनाम् ।
रजः सन्ध्याभ्रकलिलं दिवाकरपथं ययौ ॥ ९-२१-४३ (६१२९४)
रजसा तेन सम्पृक्तो भास्करो निष्प्रभः कृतः ।
सञ्छादिताऽभवद्भूमिस्ते च शूरा महारथाः ॥ ९-२१-४४ (६१२९५)
मुहूर्तादिव संवृत्तं नीरजस्कं समन्ततः ।
वीरशोणितसिक्तायां भूमौ भरतसत्तम ॥ ९-२१-४५ (६१२९६)
उपाशाम्यत्ततस्तीव्रं तद्रजो घोरदर्शनम् ॥ ९-२१-४६ (६१२९७)
ततोऽपश्यमहं भूयो द्वन्द्वयुद्धानि भारत ।
यथाप्राणं यथाश्रेष्ठं मध्याह्ने वै सुदारुणम् ॥ ९-२१-४७ (६१२९८)
वर्मणां तत्र राजेन्द्र व्यदृश्यन्तोज्ज्वलाः प्रभाः ।
शब्दश्च तुमुलः सङ्ख्ये शराणां पतताभूत्
महावेणुवनस्येव दह्यमानस्य पर्वते ॥ ॥ ९-२१-४८ (६१२९९)

इति श्रीमन्महाभारते शल्यपर्वणि शल्यवधपर्वणि
अष्टादशदिवसयुद्धे एकविंशोऽध्यायः ॥ २१ ॥

Mahabharata - Shalya Parva - Chapter Footnotes

९-२१-४२ पत्रं वाहनम् ॥

९-२१-२१ एकविंशोऽध्यायः ॥

---

शल्यपर्व-अध्यय०२२
॥ श्रीः ॥
९.२२. अध्यायः २२

Mahabharata - Shalya Parva - Chapter Topics
सङ्कुलयुद्धम् ॥१ ॥

Mahabharata - Shalya Parva - Chapter Text

९-२२-० (६१३००)
सञ्जय उवाच। ९-२२-०क्ष् (५११८)
वर्तमाने तदा युद्धे घोररूपे भयानके ।
अभज्यत बलं तत्र तव पुत्रस्य पाण्डवैः ॥ ९-२२-१ (६१३०१)
तांस्तु सर्वानयन्तेन सन्निवार्य महारथाः ।
पुत्रास्ते योधयामासुः पाण्डवानामनीकिनीम् ॥ ९-२२-२ (६१३०२)
निवृत्ताः सहसा योधास्तव पुत्रजयैपिणः ।
सन्निवृत्तेषु तेष्वेवं युद्धमासीत्सुदारुणम् ।
तावकानां परेषां च देवासुररणोपभम् ॥ ९-२२-३ (६१३०३)
परेषां तावकानां च नासीत्कश्चित्पराङ्मुखः ॥ ९-२२-४ (६१३०४)
अनुमानेन युध्यन्ते सञ्ज्ञाभिश्च परस्परम् ।
तेषां क्षयो महानासीद्युध्यतामितरेतरम् ॥ ९-२२-५ (६१३०५)
ततो युधिष्ठिरो राजा क्रोधेन महता युतः ।
जिगीषमाणः सङ्ग्रामे धार्तराष्ट्रान्सराजकान् ॥ ९-२२-६ (६१३०६)
त्रिभिः शारद्वतं विद्ध्वा रुक्मपुङ्खैः शिलाशितैः ।
चतुर्भिर्निजघानाश्वान्कल्याणान्कृतवर्मणः ॥ ९-२२-७ (६१३०७)
अश्वत्थामा तु हार्दिक्यमपोवाह यशस्विनम् ।
अथ शारद्वतोऽष्टाभिः प्रत्यविध्यद्युधिष्ठिरम् ॥ ९-२२-८ (६१३०८)
ततो दुर्योधनो राजा रथान्सप्तशतान्रणे ।
प्रैषयद्यत्र राजाऽसौ धर्मपुत्रो युधिष्ठिरः ॥ ९-२२-९ (६१३०९)
ते रथा रथिभिर्युक्ता मनोमारुतरंहसः ।
अभ्यद्रवन्त सङ्ग्रामे कौन्तेयस्य रथं प्रति ॥ ९-२२-१० (६१३१०)
ते समन्तान्महाराज परिवार्य युधिष्ठिरम् ।
अदृश्यं सायकैश्चक्रुर्मेघा इव दिवाकरम् ॥ ९-२२-११ (६१३११)
तं दृष्ट्वा धर्मराजानं कौरवेयैस्तथावृतम् ।

नामृष्यन्त सुसंरब्धाः शिखण्डिप्रमुखा रथाः ॥ ९-२२-१२ (६१३१२)
रथैरश्ववरैर्युक्तैः किङ्किणीजालसंवृतैः ।
आजग्मुरथ रक्षन्तः कुन्तीपुत्रं युधिष्ठिरम् ॥ ९-२२-१३ (६१३१३)
ततः प्रववृते रौद्रः सङ्ग्रामः शोणितोदकः ।
पाण्डवानां कुरूणां च यमराष्ट्रविवर्धनः ॥ ९-२२-१४ (६१३१४)
रथान्सप्तशतान्हत्वा कुरूणामाततायिनाम् ।
पाण्डवाः सह पाञ्चालैः पुनरेवाभ्यवारयन् ॥ ९-२२-१५ (६१३१५)
तत्र युद्धं महच्चासीत्तव पुत्रस्य पाण्डवैः ।
न च तत्तादृशं दृष्टं नैव चापि परिश्रुतम् ॥ ९-२२-१६ (६१३१६)
वर्तमाने तदा युद्धे निर्मर्यादे समन्ततः ।
वध्यमानेषु योधेषु तावकेष्वितरेषु च ॥ ९-२२-१७ (६१३१७)
विनदत्सु च योधेषु शङ्खवर्यैश्च पूरितैः ।
उत्कृष्टैः सिंहनादैश्च गर्जितैश्चैव धन्विनाम् ॥ ९-२२-१८ (६१३१८)
अतिप्रवृत्ते युद्धे च छिद्यमानेषु मर्मसु ।
धावमानेषु योधेषु जयगृद्धिषु मारिष ॥ ९-२२-१९ (६१३१९)
संहारे सर्वतो जाते पृथिव्यां शोकसम्भवे ।
वह्वीनामुत्तमस्त्रीणां सीमन्तोद्धरणे कृते ॥ ९-२२-२० (६१३२०)
निर्मर्यादे महायुद्धे वर्तमाने सुदारुणे ।
प्रादुरासन्विनाशाय तदोत्पाताः सुदारुणाः ॥ ९-२२-२१ (६१३२१)
चचाल शब्दं कुर्वाणा सपर्वतवना मही ।
सदण्डाः सोल्मुका राजन्कीर्यमाणाः समन्ततः ॥ ९-२२-२२ (६१३२२)
उल्काः पेतुर्दिवो भूमावाहत्य रविमण्डलम् ।
विष्वग्वाताः प्रादुरासन्नीचैः शर्करवर्षिणः ॥ ९-२२-२३ (६१३२३)
अश्रूणि मुमुचुर्नागा वेपथुं चास्पृशन्भृशम् ।
एतान्घोराननादृत्य समुत्पातान्सुदारुणान् ॥ ९-२२-२४ (६१३२४)
पुनर्युद्धाय संयत्ताः क्षत्रियास्तस्थुरव्यथाः ।
रमणीये कुरुक्षेत्रे पुण्ये स्वर्गं यियासवः ॥ ९-२२-२५ (६१३२५)
ततो गान्धारराजस्य पुत्रः शकुनिरब्रवीत् ।
युध्यध्वमग्रतो यावत्पृष्ठतो हन्मि पाण्डवान् ॥ ९-२२-२६ (६१३२६)
ततो नः सम्प्रायातानां मद्रयोधास्तरस्विनः ।
हृष्टाः किलाकिलाशब्दमकुर्वत परे तथा ॥ ९-२२-२७ (६१३२७)
अस्मांस्तु पुनरासाद्य लब्धलक्षा दुरासदाः ।
शरासनानि धुन्वन्तः शरवर्षैरवाकिरन् ॥ ९-२२-२८ (६१३२८)
ततो हतं परैस्तत्र मद्रराजबलं तदा ।
दुर्योधनबलं दृष्ट्वा पुनरासीत्पराङ्मुखम् ॥ ९-२२-२९ (६१३२९)
गान्धारराजस्तु पुनर्वाक्यमाह ततो बली ।

निवर्तध्वमधर्मज्ञा युध्यध्वं किं सृतेन वः ॥ ९-२२-३० (६१३३०)
अनीकं दशसाहस्रमश्वानां भरतर्षभ ।
आसीद्गान्धारराजस्य विशालप्रासयोधिनाम् ॥ ९-२२-३१ (६१३३१)
बलेन तेन विक्रम्य वर्तमाने जनक्षये ।
पृष्ठतः पाण्डवानीकमभ्यघ्नन्निशितैः शरैः ॥ ९-२२-३२ (६१३३२)
तदभ्रमिव वातेन क्षिप्यमाणं समन्ततः ।
अभज्यत महाराज पाण्डूनां सुमहद्बलम् ॥ ९-२२-३३ (६१३३३)
ततो युधिष्ठिरः प्रेक्ष्य भग्नं स्वबलमन्तिकात् ।
अभ्यनोदयदव्यग्रः सहदेवं महाबलम् ॥ ९-२२-३४ (६१३३४)
असौ सुबलपुत्रो नो जघनं पीड्य दंशितः ।
सैन्यानि सूदयत्येष पश्य पाण्डव दुर्मतिः ॥ ९-२२-३५ (६१३३५)
गच्छ त्वं द्रौपदेयैश्च शकुनिं सौबलं जहि ।
रथानीकमहं धक्ष्ये पाञ्चालसहितोऽनघ ॥ ९-२२-३६ (६१३३६)
गच्छन्तु कुञ्जराः सर्वे वाजिनश्च सह त्वया ।
पादाताश्च त्रिसाहस्राः शकुनिं तैर्वृतो जहि ॥ ९-२२-३७ (६१३३७)
ततो गजाः सप्तशताश्चापपाणिभिरास्थिताः ।
पञ्च चाश्वसहस्राणि सहदेवश्च वीर्यवान् ॥ ९-२२-३८ (६१३३८)
पादाताश्च त्रिसाहस्रा द्रौपदेयाश्च सर्वशः ।
रणे ह्यभ्यद्रवंस्ते तु शकुनिं युद्धदुर्मदम् ॥ ९-२२-३९ (६१३३९)
ततस्तु सौबलो राजन्नभ्यतिक्रम्य पाण्डवान् ।
जघान पृष्ठतः सेनां जयगृद्धः प्रतापवान् ॥ ९-२२-४० (६१३४०)
अश्वारोहास्तु संरब्धाः पाण्डवानां तरस्विनाम् ।
प्राविशन्सौबलानीकमभ्यतिक्रम्य तान्रथान् ॥ ९-२२-४१ (६१३४१)
ते तत्र सादिनः शूराः सौबलस्य महद्बलम् ।
रणमध्ये व्यतिष्ठन्त शरवर्षैरवाकिरन् ॥ ९-२२-४२ (६१३४२)
तदुद्यतगदाप्रासमकापुरुषसेवितम् ।
प्रावर्तत महद्युद्धं राजन्दुर्मन्त्रिते तव ॥ ९-२२-४३ (६१३४३)
उपारमन्त ज्याशब्दाः प्रेक्षका रथिनोऽभवन् ।
न हि स्वेषां परेषां वा विशेषः प्रत्यदृश्यत ॥ ९-२२-४४ (६१३४४)
शूरबाहुविसृष्टानां शक्तीनां भरतर्षभ ।
ज्योतिषामिव सम्पातमपश्यन्कुरुपाण्डवाः ॥ ९-२२-४५ (६१३४५)
ऋष्टिभिर्विमलाभिश्च तत्रतत्र विशाम्पते ।
सम्पतन्तीभिराकाशमावृतं बह्वशोभत ॥ ९-२२-४६ (६१३४६)
प्रासानां पततां राजन्रूपमासीत्समन्ततः ।
शलभानामिवाकाशे तदा भरतसत्तम ॥ ९-२२-४७ (६१३४७)
रुधिरोक्षितसर्वाङ्गा विप्रविद्धैर्नियन्तृभिः ।

हयाः परिपतन्तिस्म शतशोऽथ सहस्रशः ॥ ९-२२-४८ (६१३४८)
अन्योन्यं परिपिष्टाश्च समासाद्य परस्परम् ।
सुविक्षताः स्म दृश्यन्ते वमन्तो रुधिरं मुखैः ॥ ९-२२-४९ (६१३४९)
ततोऽभवत्तमो घोरं सैन्येन रजसा वृतम् ।
तानपाक्रमतोऽद्राक्षं तस्माद्देशादरिन्दम ॥ ९-२२-५० (६१३५०)
अश्वान्राजन्मनुष्यांश्च रजसा संवृते सति ।
भूमौ निपतिताश्चान्ये वमन्तो रुधिरं बहु ॥ ९-२२-५१ (६१३५१)
केशाकेशि समालग्ना न शेकुश्चेष्टितुं नराः ।
अन्योन्यमश्वपृष्ठेभ्यो विकर्षन्तो महाबलाः ॥ ९-२२-५२ (६१३५२)
मल्ला इव समासाद्य निजघ्नुरितरेतरम् ।
अश्वैश्च व्यपकृष्यन्त बहवोऽत्र गतासवः ॥ ९-२२-५३ (६१३५३)
भूमौ निपतिताश्चान्ये बहवो विजयैषिणः ।
तत्रतत्र व्यदृश्यन्त पुरुषाः शूरमानिनः ॥ ९-२२-५४ (६१३५४)
रक्तोक्षितैश्छिन्नभुजैरवकृष्टशिरोरुहैः ।
व्यदृश्यत मही कीर्णा शतशोऽथ सहस्रशः ॥ ९-२२-५५ (६१३५५)
दूरं न शक्यं तत्रासीद्गन्तुमश्वेन केनचित् ।
साश्वारोहैर्हतैरश्वैरावृते वसुधातले ॥ ९-२२-५६ (६१३५६)
रुधिरोक्षितसन्नाहैरात्तशस्त्रैरुदायुधैः ।
नानाप्रहरणैर्घोरैः परस्परवधैषिभिः ।
सुसन्निकृष्टे सङ्ग्रामे हतभूयिष्ठसैनिके ॥ ९-२२-५७ (६१३५७)
स मुहूर्तं ततो युद्ध्वा सौबलोऽथ विशाम्पते ।
षट्साहस्रैर्हयैः शिष्टैरपायाच्छकुनिस्ततः ॥ ९-२२-५८ (६१३५८)
तथैव पाण्डवानीकं रुधिरेण समुक्षितम् ।
षट्साहस्रैर्हयैः शिष्टैरपायाच्छ्रान्तवाहनम् ॥ ९-२२-५९ (६१३५९)
अश्वारोहाश्च पाण्डूनामब्रुवन्रुधिरोक्षिताः ।
सुसन्निकृष्टे सङ्ग्रामे भूयिष्ठे त्यक्तजीविताः ॥ ९-२२-६० (६१३६०)
न हि शक्यं रथैर्योद्धुं कुत एव महागजैः ।
रथानेव रथा यान्तु कुञ्जराः कुञ्जरानपि ॥ ९-२२-६१ (६१३६१)
प्रतियातो हि शकुनिः स्वमनीकमवस्थितः ।
न पुनः सौबलो राजा योद्धुमभ्यागमिष्यति ॥ ९-२२-६२ (६१३६२)
ततस्तु द्रौपदेयाश्च ते च मत्ता महाद्विपाः ।
प्रययुर्यत्र पाञ्चाल्यो धृष्टद्युम्नो महारथः ॥ ९-२२-६३ (६१३६३)
सहदेवोऽपि कौरव्य रजोमेघे समुत्थिते ।
एकाकी प्रययौ तत्र यत्र राजा युधिष्ठिरः ॥ ९-२२-६४ (६१३६४)
ततस्तेषु प्रयातेषु शकुनिः सौबलः पुनः ।
पार्श्वतोऽभ्यहनत्क्रुद्धो धृष्टद्युम्नस्य वाहिनीम् ॥ ९-२२-६५ (६१३६५)

तत्पुनस्तुमुलं युद्धं प्राणांस्त्यक्त्वाऽभ्यवर्तत ।
तावकानां परेषां च परस्परवधैषिणाम् ॥ ९-२२-६६ (६१३६६)
ते चान्योन्यमवैक्षन्त तस्मिन्वीरसमागमे ।
योधाः पर्यपतन्राजञ्शतशोऽथ सहस्रशः ॥ ९-२२-६७ (६१३६७)
असिभिश्छिद्यमानानां शिरसां लोकसंक्षये ।
प्रादुरासीन्महाञ्शब्दस्तालानां पततामिव ॥ ९-२२-६८ (६१३६८)
विमुक्तानां शरीराणां छिन्नानां पततां भुवि ।
सायुधानां च बाहूनामूरूणां च विशाम्पते ।
आसीत्कटकटाशब्दः सुमहान्रोमहर्षणः ॥ ९-२२-६९ (६१३६९)
निघ्नन्तो निशितैः शस्त्रैर्भ्रातॄन्पुत्रान्सखीनपि ।
योधाः परिपतन्ति स्म यथाऽऽमिषकृते खगाः ॥ ९-२२-७० (६१३७०)
अन्योन्यं प्रतिसंरब्धाः समासाद्य परस्परम् ।
अहम्पूर्वमहम्पूर्वमिति निघ्नन्सहस्रशः ॥ ९-२२-७१ (६१३७१)
संयातेनासनभ्रष्टैरश्वारोहैर्गतासुभिः ।
हयाः परिपतन्ति स्म शतशोऽथ सहस्रशः ॥ ९-२२-७२ (६१३७२)
स्फुरतां प्रतिपिष्टानामश्वानां शीघ्रगामिनाम् ।
स्तनतां च मनुष्याणां सन्नद्धानां विशाम्पते ॥ ९-२२-७३ (६१३७३)
शक्त्यृष्टिप्रासशब्दश्च तुमुलः समपद्यत ।
भिन्दतां परमर्माणि राजन्दुर्मन्त्रिते तव ॥ ९-२२-७४ (६१३७४)
श्रमाभिभूताः संरब्धा श्रान्तवाहाः पिपासवः ।
विक्षताश्च शितैः शस्त्रैरभ्यवर्न्तत तावकाः ॥ ९-२२-७५ (६१३७५)
मत्ता रुधिरगन्धेन बहवोऽत्र विचेतसः ।
जघ्नुः परान्स्वकांश्चैव प्राप्तान्प्राप्ताननन्तरान् ॥ ९-२२-७६ (६१३७६)
बहवश्च गतप्राणाः क्षत्रिया जयगृद्धिनः ।
भूमावभ्यपतन्राजञ्शरवृष्टिभिरावृताः ॥ ९-२२-७७ (६१३७७)
वृकगृध्रशृगालानां तुमुले मोदनेऽहनि ।
आसीद्बलक्षयो घोरस्तव पुत्रस्य पश्यतः ॥ ९-२२-७८ (६१३७८)
नराश्वकायैः सञ्छन्ना भूमिरासीद्विशाम्पते ।
रुधिरोदकचित्रा च भीरूणां भयवर्धिनी ॥ ९-२२-७९ (६१३७९)
असिभिः पट्टसैः शूलैस्तक्षमाणाः पुनःपुनः ।
तावकाः पाण्वेयाश्च न न्यवर्तन्त भारत ॥ ९-२२-८० (६१३८०)
प्रहरन्तो यथाशक्ति यावत्प्राणस्य धारणम् ।
योधाः परिपतन्ति स्म वमन्तो रुधिरं मुखैः ॥ ९-२२-८१ (६१३८१)
शिरो गृहीत्वा केशेषु कबन्धः स प्रदृश्यते ।
उद्यम्य च शितं खड्गं रुधिरेण परिप्लुतम् ॥ ९-२२-८२ (६१३८२)
तथोत्थितेषु बहुषु कबन्धेषु नराधिप ।

तथा रुधिरगन्धेन योधाः कश्मलमाविशन् ॥ ९-२२-८३ (६१३८३)
मन्दीभूते ततः शब्दे पाण्डवानां महद्बलम् ।
अल्पावशिष्टैस्तुरगैरभ्यवर्तत सौबलः ॥ ९-२२-८४ (६१३८४)
ततोऽभ्यधावंस्त्वरिताः पाण्डवा जयगृद्धिनः ।
पदातयश्च नागाश्च सादिनश्चोद्यतायुधाः ॥ ९-२२-८५ (६१३८५)
कोष्ठकीकृत्य चाप्येनं परिक्षिप्य च सर्वशः ।
शस्त्रैर्नानाविधैर्जघ्नुर्युद्धपारं तितीर्षवः ॥ ९-२२-८६ (६१३८६)
त्वदीयास्तांस्तु सम्प्रेक्ष्य सर्वतः समभिद्रुतान् ।
रथाश्वपत्तिद्विरदाः पाण्डवानभिदुद्रुवुः ॥ ९-२२-८७ (६१३८७)
केचित्पदातयः पद्भिर्मुष्टिभिश्च परस्परम् ।
निजघ्नुः समरे शूराः क्षीणशस्त्रास्ततोऽपतन् ॥ ९-२२-८८ (६१३८८)
रथेभ्यो रथिनः पेतुर्द्विपेभ्यो हस्तिसादिनः ।
विमानेभ्यो दिवो भ्रष्टाः सिद्धाः पुण्यक्षयादिव ॥ ९-२२-८९ (६१३८९)
एवमन्योन्यमायत्ता योधा जघ्नुर्महाहवे ।
पितॄन्भ्रातॄन्वयस्यांश्च पुत्रानपि तथा परे ॥ ९-२२-९० (६१३९०)
एवमासीदमर्यादं युद्धं भरतसत्तम ।
प्रासासिबाणकलिलं वर्तमाने सुदारुणे ॥ ॥ ९-२२-९१ (६१३९१)

इति श्रीमन्महाभारते शल्यपर्वणि शल्यवधपर्वणि
अष्टादशदिवसयुद्धे द्वाविंशोऽध्यायः ॥ २२ ॥

---

शल्यपर्व-अध्यय०२३
॥ श्रीः ॥
९.२३. अध्यायः २३

Mahabharata - Shalya Parva - Chapter Topics
अर्जुनेन दुर्योधनागर्हणपूर्वकं तत्सेनानिबर्हणम् ॥ १ ॥

Mahabharata - Shalya Parva - Chapter Text

९-२३-० (६१३९२)
सञ्जय उवाच। ९-२३-०क्ष् (५११९)
अल्पावशिष्टे सैन्ये तु पाण्डवैर्निहते बले ।
अश्वैः सप्तसहस्रैस्तु उपावर्तत सौबलः ॥ ९-२३-१ (६१३९३)
स यात्वा वाहिनीं तूर्णं चोदयानः स्वकान्युधि ।
युध्यध्वमिति संहृष्टाः पुनःपुनररिन्दमाः ॥ ९-२३-२ (६१३९४)

अपृच्छत्क्षत्रियांस्तत्र क्व नु राजा महाबलः ।
शकुनेस्तद्वचः श्रुत्वा तमूचुर्भरतर्षभ ॥ ९-२३-३ (६१३९५)
असौ तिष्ठति कौरव्यो रणमध्ये महाबलः ।
यत्रैतत्सुमहच्छत्रं पूर्णचन्द्रसमप्रभम् ॥ ९-२३-४ (६१३९६)
यत्र ते सतनुत्राणा रथास्तिष्ठन्ति दंशिताः ।
यत्रैष तुमुलः शब्दः पर्जन्यनिनदोपमः ॥ ९-२३-५ (६१३९७)
तत्र गच्छ द्रुतं राजंस्ततो द्रक्ष्यसि कौरवम् ।
एवमुक्तस्तु तैर्योधैः शकुनिः सौबलस्तदा ॥ ९-२३-६ (६१३९८)
प्रययौ तत्र यत्रास्ते पुत्रस्तव नराधिप ।
सर्वतः संवृतो वीरैः समरे चित्रयोधिभिः ॥ ९-२३-७ (६१३९९)
ततो दुर्योधनं दृष्ट्वा रथानीके व्यवस्थितम् ।
स रथांस्तावकान्सर्वान्हर्षयञ्शकुनिस्ततः ॥ ९-२३-८ (६१४००)
दुर्योधनमिदं वाक्यं हृष्टरूपो विशाम्पते ।
कृतकार्यमिवात्मानं मन्यमानोऽब्रवीन्नृपम् ॥ ९-२३-९ (६१४०१)
जहि राजन्रथानीकमश्वाः सर्वे जिता मया ।
नात्यक्त्वा जीवितं सङ्ख्ये शक्यो जेतुं युधिष्ठिरः ॥ ९-२३-१० (६१४०२)
हते तस्मिन्रथानीके पाण्डवेनाभिपालिते ।
गजानेतान्हनिष्यामः पदातींश्चेतरांस्तथा ॥ ९-२३-११ (६१४०३)
श्रुत्वा तु वचनं तस्य तावका जयगृद्धिनः ।
जवेनाभ्यपतन्हृष्टाः पाण्डवानामनीकिनीम् ॥ ९-२३-१२ (६१४०४)
बद्धनिस्त्रिंशहस्ताश्च प्रगृहीतशरासनाः ।
शरासनानि धून्वानाः सिंहनादान्प्रचक्रिरे ॥ ९-२३-१३ (६१४०५)
ततो ज्यातलनिर्घोषः पुनरासीद्विशाम्पते ।
प्रादुरासीच्छराणां च सुमुक्तानां सुदारुणः ॥ ९-२३-१४ (६१४०६)
तान्समीपगतान्दृष्ट्वा जनानुद्यतकार्मुकान् ।
उवाच देवकीपुत्रं कुन्तीपुत्रो धनञ्जयः ॥ ९-२३-१५ (६१४०७)
चोदयाश्वानसम्भ्रान्तः प्रविशैतद्बलार्णवम् ।
अन्तमद्य गमिष्यामि शत्रूणां निशितैः शरैः ॥ ९-२३-१६ (६१४०८)
अष्टादश दिनान्यद्य युद्धस्यास्य जनार्दन ।
वर्तमानस्य महतः समासाद्य परस्परम् ॥ ९-२३-१७ (६१४०९)
अनन्तकल्पा ध्वजिनी भूत्वा ह्येषां महात्मनाम् ।
क्षयमद्य गता युद्धे पश्य दैवं यथाविधम् ॥ ९-२३-१८ (६१४१०)
समुद्रकल्पं च बलं धार्तराष्ट्रस्य माधव ।
अस्मनासाद्य सञ्जातं गोष्पदोपममच्युत ॥ ९-२३-१९ (६१४११)
हते भीष्मे धीर्ममासीच्छमः स्यादिति माधव ।
न च तत्कृतवान्मूढो धार्तराष्ट्रः सुबालिशः ॥ ९-२३-२० (६१४१२)

उक्तं भीष्मेण यद्वाक्यं हितं तथ्यं च माधव ।
तच्चापि नासौ कृतवान्वीतबुद्धिः सुयोधनः ॥ ९-२३-२१ (६१४१३)
तस्मिंस्तु निहते भीष्मे प्रच्युते पृथिवीपतौ ।
न जाने कारणं किन्तु येन युद्धमवर्तत ॥ ९-२३-२२ (६१४१४)
मूढांस्तु सर्वथा मन्ये धार्तराष्ट्रान्सुबालिशान् ।
पतिते शन्तनोः पुत्रे येऽकार्युः संयुगं पुनः ॥ ९-२३-२३ (६१४१५)
अनन्तरं च निहते द्रोणे ब्रह्मविदां वरे ।
राधेये च विकर्णे च नैव शाम्यति वैशसम् ॥ ९-२३-२४ (६१४१६)
अल्पावशिष्टे सैन्येऽस्मिन्सूतपुत्रे च पातिते ।
सपुत्रे वै नरव्याघ्रे नैव शाम्यति वैशसम् ॥ ९-२३-२५ (६१४१७)
श्रुतायुषि हते वीरे जलसन्धे च मागधे ।
श्रुतायुधे च नृपतौ नैव शाम्यति वैशसम् ॥ ९-२३-२६ (६१४१८)
भूरिश्रवसि शल्ये च साल्ये चैव जनार्दन ।
आवन्त्येषु च वीरेषु नैव शाम्यति वैशसम् ॥ ९-२३-२७ (६१४१९)
जयद्रथे च निहते राक्षसे चाप्यलायुधे ।
बाह्लिके सोमदत्ते च नैव शाम्यति वैशसम् ॥ ९-२३-२८ (६१४२०)
भगदत्ते हते शूरे काम्भोजे च सुदारुणे ।
दुःशासने च निहते नैव शाम्यति वैशसम् ॥ ९-२३-२९ (६१४२१)
दृष्ट्वा विनिहताञ्शूरान्पृथङ्माण्डलिकान्नृपान् ।
बलिनश्च रणे कृष्ण नैव शाम्यति वैशसम् ॥ ९-२३-३० (६१४२२)
अक्षौहिणीपतीन्दृष्ट्वा भीमसेननिपातितान् ।
मोहाद्वा यदि वा लोभान्नैव शाम्यति वैशसम् ॥ ९-२३-३१ (६१४२३)
ग्हतप्रवीरां विध्वस्तां दृष्ट्वा चेमां चमूं रणे ।
अलम्बले च निहते नैव शाम्यति वैशसम् ॥ ९-२३-३२ (६१४२४)
भ्रातॄन्विनिहतान्दृष्ट्वा वयस्यान्मातुलानपि ।
पुत्रान्विनिहतान्दृष्ट्वा नैव शाम्यति वैशसम्'॥ ९-२३-३३ (६१४२५)
को नु राजकुले जातः कौरवेषु विशेषतः ।
निरर्थकं महद्वैरं कुर्यादन्यः सुयोधनात् ॥ ९-२३-३४ (६१४२६)
गुणतोऽभ्यधिकाञ्ज्ञात्वा बलतः शौर्यतोपि वा ।
अमूढः को नु युध्येत जानन्प्राज्ञो हिताहितम् ॥ ९-२३-३५ (६१४२७)
किन्नु तस्य मनो ह्यासीत्त्वयोक्तस्य हितं वचः ।
प्रशमे पाण्डवैः सार्धं सोन्यस्य शृणुयात्कथम् ॥ ९-२३-३६ (६१४२८)
येन शान्तनवो भीष्मो द्रोणो विदुर एव च ।
प्रत्याख्याताः शंमस्यार्थे किन्नु तस्याद्य भेषजम् ॥ ९-२३-३७ (६१४२९)
मौर्ख्याद्येन पिता वृद्धः प्रत्याख्यातो जनार्दन ।
तथा माता हितं वाक्यं भाषमाणा हितैषिणी ॥ ९-२३-३८ (६१४३०)

प्रत्याख्याता ह्यसत्कृत्य स कस्मै रोचयेद्वचः ।
कुलान्तकरणो व्यक्तं जात एष जनार्दन ॥ ९-२३-३९ (६१४३१)
तथास्य दृश्यते चेष्टा नीतिश्चैव विशाम्पते ।
नैष दास्यति नो राज्यमिति मे मतिरच्युत ॥ ९-२३-४० (६१४३२)
उक्तोऽहं बहुशस्तात विदुरेण महात्मना ।
न जीवन्दास्यते भागं धार्तराष्ट्रः सुयोधनः ॥ ९-२३-४१ (६१४३३)
यावत्प्राणा धरिष्यन्ति धार्तराष्ट्रस्य दुर्मतेः ।
तावद्युष्मास्वपापेषु प्रचरिष्यति पापकम् ॥ ९-२३-४२ (६१४३४)
न च युक्तोऽन्यथा जेतुमृते युद्धेन माधव ।
इत्यब्रवीत्सदा मां हि विदुरः सत्यदर्शनः ॥ ९-२३-४३ (६१४३५)
तत्सर्वमद्य जानामि व्यवसायं दुरात्मनः ।
यदुक्तं वचनं तेन विदुरेण महात्मना ॥ ९-२३-४४ (६१४३६)
यो हि श्रुत्वा वचः पथ्यं जामदग्न्याद्यथातथम् ।
अवामन्यत दुर्बुद्धिर्ध्रुवं नाशमुखे स्थितः ॥ ९-२३-४५ (६१४३७)
उक्तं हि बहुभिः सिद्धैर्जातमात्रे सुयोधने ।
एनं प्राप्य दुरात्मानं क्षयं क्षत्रं गमिष्यति ॥ ९-२३-४६ (६१४३८)
तदिदं वचनं तेषां निरुक्तं वै जनार्दन ।
क्षयं याता हि राजानो दुर्योधनकृते भृशम् ॥ ९-२३-४७ (६१४३९)
सोऽद्य सर्वान्रणे योधान्निहनिष्यामि माधव ॥ ९-२३-४८ (६१४४०)
क्षत्रियेषु हतेष्वाशु शून्ये च शिबिरे कृते ।
वधाय चात्मनोऽस्माभिः संयुगं रोचयिष्यति ॥ ९-२३-४९ (६१४४१)
तदन्तं हि भवेद्वैरमनुमानेन माधव ।
एवं पश्यामि वार्ष्णेय चिन्तयन्प्रज्ञया स्वया ।
विदुरस्य च वाक्येन चेष्टया च दुरात्मनः ॥ ९-२३-५० (६१४४२)
तस्माद्याहि चमूं वीर यावद्धन्मि शितैः शरैः ।
दुर्योधनं महाबाहो वाहिनीं चास्य संयुगे ॥ ९-२३-५१ (६१४४३)
क्षेममद्य करिष्यामि धर्मराजस्य माधव ।
हत्वैतद्दुर्बलं सैन्यं धार्तराष्ट्रस्य पश्यतः ॥ ९-२३-५२ (६१४४४)
सञ्जय उवाच। ९-२३-५३क्ष् (५१२०)
अभीशुहस्तो दाशार्हस्तथोक्तः सव्यसाचिना ।
तद्बलौघममित्राणामभीतः प्राविशद्बलात् ॥ ९-२३-५३ (६१४४५)
शरासनवनं घोरं शक्तिकण्टकसङ्कुलम् ।
गदापरिघपाषाणं रथनागमहाद्रुमम् ॥ ९-२३-५४ (६१४४६)
हयपत्तिलताकीर्णं गाहमानो महायशाः ।
व्यचरत्तत्र गोविन्दो रथेनातिपताकिना ॥ ९-२३-५५ (६१४४७)
ते हयाः पाण्डुरा राजन्वहन्तोऽर्जुनमाहवे ।

दिक्षु सर्वास्वदृश्यन्त दाशार्हेण प्रचोदिताः ॥ ९-२३-५६ (६१४४८)
ततः प्रायाद्रथेनाजौ सव्यसाची परन्तपः ।
किरञ्शरशतांस्तीक्ष्णान्वारिधारा घनो यथा ॥ ९-२३-५७ (६१४४९)
प्रादुरासीन्महाञ्शब्दः शराणां नतपर्वणाम् ।
इषुभिश्छाद्यमानानां समरे सव्यसाचिना ॥ ९-२३-५८ (६१४५०)
असज्जन्तस्तनुत्रेषु शरौघाः प्रापतन्भुवि ।
इन्द्राशनिसमस्पर्शा गाण्डीवप्रेषिताः शराः ॥ ९-२३-५९ (६१४५१)
नरान्नागान्समाहत्य हयांश्चापि विशाम्पते ।
अपतन्त रणे बाणाः पतङ्गा इव घोषिणः ॥ ९-२३-६० (६१४५२)
आसीत्सर्वमवच्छन्नं गाण्डीवप्रेषितैः शरैः ।
न प्राज्ञायन्त समरे दिशो वा प्रदिशोपि वा ॥ ९-२३-६१ (६१४५३)
सर्वमासीज्जगत्पूर्णं पार्थनामाङ्कितैः शरैः ।
रुक्मपुङ्खैस्तैलधौतैः कर्मारपरिमार्जितैः ॥ ९-२३-६२ (६१४५४)
ते दह्यमानाः पार्थेन पावकेनेव कुञ्जराः ।
पार्थं न प्राजहुर्घोरा वध्यमानाः शितैः शरैः ॥ ९-२३-६३ (६१४५५)
शरचापधरः पार्थः प्रज्वलन्निव भास्करः ।
ददाह समरे योधान्कक्षमग्निरिव ज्वलन् ॥ ९-२३-६४ (६१४५६)
यथा वनान्ते वनपैर्विसृष्टः
कक्षं दहेत्कृष्णगतिः सुघोषः ।
भूरिद्रुमं शुष्कलतावितानं
भृशं समृद्धो ज्वलनः प्रतापी ॥ ९-२३-६५ (६१४५७)
एवं स नाराचगणम्प्रतापी
शरार्चिरुच्चावचतिग्मतेजाः ।
ददाह सर्वां तव पुत्रसेना--
ममृष्यमाणस्तरसा तरस्वी ॥ ९-२३-६६ (६१४५८)
तस्येषवः प्राणहराः सुमुक्ता
नासज्जन्वै वर्मसु रुक्मपुङ्खाः ।
न च द्वितीयं प्रमुमोच बाणं
नरे हये वा परमद्विपे वा ॥ ९-२३-६७ (६१४५९)
अनेकरूपाकृतिभिर्हि बाणै--
र्महारथानीकमनुप्रविश्य ।
स एव एकस्तव पुत्रस्य सेनां
जघान दैत्यानिव वज्रपाणिः ॥ ॥ ९-२३-६८ (६१४६०)

इति श्रीमन्महाभारते शल्यपर्वणि शल्यवधपर्वणि
अष्टादशदिवसयुद्धे त्रयोविंशोऽध्यायः ॥ २३ ॥

९-२३-४२ पापकं प्रचरिष्यति आचरिष्यति धार्तराष्ट्र इति शेषः ॥
९-२३-२३ त्रयोविंशोऽध्यायः ॥

---

शल्यपर्व-अध्यय०२४
॥ श्रीः ॥
९.२४. अध्यायः २४

Mahabharata - Shalya Parva - Chapter Topics
धृष्टद्युम्नपराजितेन दुर्योधनेनाश्वारोहणेन पलायनम् ॥ १ ॥
अश्वत्थामादिभिस्तदन्वेषणम् ॥ २ ॥

Mahabharata - Shalya Parva - Chapter Text

९-२४-० (६१४६१)
सञ्जय उवाच। ९-२४-०क्ष् (५१२१)
युध्यतां यतमानानां शूराणामनिवर्तनाम् ।
सङ्कल्पमकरोन्मोघं गाण्डीवेन धनञ्जयः ॥ ९-२४-१ (६१४६२)
इन्द्राशनिसमस्पर्शानविषह्यान्महौजसः ।
विसृजन्दृश्यते बाणान्धारा मुञ्चन्निवाम्बुदः ॥ ९-२४-२ (६१४६३)
तत्सैन्यं भरतश्रेष्ठ वध्यमानं किरीटिना ।
सम्प्रदुद्राव सङ्ग्रामात्तव पुत्रस्य पश्यतः ॥ ९-२४-३ (६१४६४)
पितॄन्भ्रातॄन्परित्यज्य वयस्यानपि चापरे ॥ ९-२४-४ (६१४६५)
हतधुर्या रथाः केचिद्धतसूतास्तथा परे ।
भग्नाक्षयुगचक्रेषाः केचिदासन्विशाम्पते ॥ ९-२४-५ (६१४६६)
अन्येषां सायकाः क्षीणास्तथाऽन्ये बाणपीडिताः ।
अक्षता युगपत्केचित्प्राद्रवन्भयपीडिताः ॥ ९-२४-६ (६१४६७)
केचित्पुत्रानुपादाय हतभूयिष्ठबान्धवाः ।
विचुक्रुशुः पितॄंस्त्वन्ये सहायानपरे पुनः ॥ ९-२४-७ (६१४६८)
बान्धवांश्च नरव्याघ्र भ्रातॄन्सम्बन्धिनस्तथा ।
दुद्रुवुः केचिदुत्सृज्य तत्रतत्र विशाम्पते ॥ ९-२४-८ (६१४६९)
बहवोऽत्र भृशं विद्धा मुह्यमाना महारथाः ।
निःश्वसन्ति स्म दृश्यन्ते पार्थबाणहता नराः ॥ ९-२४-९ (६१४७०)
तानन्ये रथमारोप्य ह्याश्वास्य च मुहूर्तकम् ।
विश्रान्ताश्च वितृष्णाश्च पुनर्युद्धाय जग्मिरे ॥ ९-२४-१० (६१४७१)

तानपास्य गताः केचित्पुनरेव युयुत्सवः ।
कुर्वन्तस्तव पुत्रस्य शासनं युद्धदुर्मदाः ॥ ९-२४-११ (६१४७२)
पानीयमपरे पीत्वा पर्याश्वास्य च वाहनम् ।
वर्माणि च समारोप्य केचिद्भरतसत्तम ॥ ९-२४-१२ (६१४७३)
समाश्वास्यापरे भ्रातॄन्निक्षिप्य शिबिरेऽपि च ।
पुत्रानन्ये पितॄनन्ये पुनर्युद्धमरोचयन् ॥ ९-२४-१३ (६१४७४)
सज्जयित्वा रथान्केचिद्यथामुख्यं विशाम्पते ।
आवृत्य पाण्डवानीकं पुनर्युद्धमरोचयन् ॥ ९-२४-१४ (६१४७५)
ते शूराः किङ्किणीजालैः समाच्छन्ना बभासिरे ।
त्रैलोक्यविजये युक्ता यथा दैतेयदानवाः ॥ ९-२४-१५ (६१४७६)
आगम्य सहसा केचिद्रथैः स्वर्णविभूषितैः ।
पाण्डवानामनीकेषु धृष्टद्युम्नमयोधयन् ॥ ९-२४-१६ (६१४७७)
धृष्टद्युम्नोऽपि पाञ्चाल्यः शिखण्डी च महारथः ।
नाकुलिस्तु शतानीको रथानीकमयोधयन् ॥ ९-२४-१७ (६१४७८)
पाञ्चाल्यस्तु ततः क्रुद्धः सैन्येन महता वृतः ।
अभ्यद्रवत्सुसङ्क्रुद्धस्तावकान्हन्तुमुद्यतः ॥ ९-२४-१८ (६१४७९)
ततस्त्वापततस्तस्य तव पुत्रो जनाधिप ।
बाणसङ्घाननेकान्वै प्रेषयामास भारत ॥ ९-२४-१९ (६१४८०)
धृष्टद्युम्नस्ततो राजंस्तव पुत्रेण धन्विना ।
नाराचैरर्धनाराचैर्बहुभिः क्षिप्रकारिभिः ॥ ९-२४-२० (६१४८१)
वत्सदन्तैश्च बाणैश्च कर्मारपरिमार्जितैः ।
अश्वांश्च चतुरो हत्वा बाह्वोरुरसि चार्पितः ॥ ९-२४-२१ (६१४८२)
सोऽतिविद्धो महेष्वासस्तोत्रार्दित इव द्विपः ।
तस्याश्वांश्चतुरो बाणैः प्रेषयामास मृत्यवे ।
सारथेश्चास्य भल्लेन शिरः कायादपाहरत् ॥ ९-२४-२२ (६१४८३)
ततो दुर्योधनो राजा पृष्ठमारुह्य वाजिनः ।
अपाक्रामद्धतरथो नातिदूरमरिन्दमः ॥ ९-२४-२३ (६१४८४)
दृष्टा तु हतविक्रान्तं स्वमनीकं महाबलः ।
तव पुत्रो महाराज प्रययौ यत्र सौबलः ॥ ९-२४-२४ (६१४८५)
ततो रथेषु भग्नेषु त्रिसाहस्रा महाद्विपाः ।
पाण्डवान्रथिनः सर्वान्समन्तात्पर्यवारयन् ॥ ९-२४-२५ (६१४८६)
ते वृताः समरे पञ्च गजानीकेन भारत ।
अशोभन्त महाराज ग्रहास्तारागणैरिव ॥ ९-२४-२६ (६१४८७)
ततोऽर्जुनो महाराज लब्धलक्षौ महाभुजः ।
विनिर्ययौ रथेनैव श्वेताश्वः कृष्णसारथिः ॥ ९-२४-२७ (६१४८८)
तैः समन्तात्परिवृतः कुञ्जरैः पर्वतोपमैः ।

नाराचैर्विमलैस्तीक्ष्णैर्गजानीकमयोधयत् ॥ ९-२४-२८ (६१४८९)
तत्रैकबाणनिहतानपश्याम महागजान् ।
पतितान्पात्यमानांश्च निर्भिन्नान्सव्यसाचिना ॥ ९-२४-२९ (६१४९०)
भीमसेनस्तु तान्दृष्ट्वा नागान्मत्तगजोपमः ।
करेणादाय महतीं गदामभ्यपतद्बली ।
अथाप्लुत्य रथात्तूर्णं दण्डपाणिरिवान्तकः ॥ ९-२४-३० (६१४९१)
तमुद्यतगदं दृष्ट्वा पाण्डवानां महारथम् ।
वित्रेसुस्तावकाः सैन्याः शकृन्मूत्रं च सुस्रुवुः ॥ ९-२४-३१ (६१४९२)
आविग्नं च बलं सर्वं गदाहस्ते वृकोदरे ॥ ९-२४-३२ (६१४९३)
गदया भीमसेनेन भिन्नकुम्भान्निपातितान् ।
धावमानानपश्याम कुञ्जरान्पर्वतोपमान् ॥ ९-२४-३३ (६१४९४)
प्राद्रवन्कुञ्जरास्ते तु भीमसेनगदाहताः ।
पेतुरार्तस्वरं कृत्वा छिन्नपक्षा इवाद्रयः ॥ ९-२४-३४ (६१४९५)
प्रभिन्नकुम्भांस्तु बहून्द्रवमाणानितस्ततः ।
पतमानांश्च सम्प्रेक्ष्य वित्रेसुस्तव सैनिकाः ॥ ९-२४-३५ (६१४९६)
युधिष्ठिरोऽपि सङ्क्रुद्धो माद्रीपुत्रौ च पाण्डवौ ।
गार्ध्रपत्रैः शितैर्बाणैर्जघ्नुर्वै गजयोधिनः ॥ ९-२४-३६ (६१४९७)
धृष्टद्युम्नस्तु समरे पारजित्य नराधिपम् ।
अपक्रान्ते तव सुते हयपृष्ठे समाश्रिते ॥ ९-२४-३७ (६१४९८)
दृष्ट्वा च पाण्डवान्सर्वान्कुञ्चरैः परिवारितान् ।
धृष्टद्युम्नो महाराज सहसा समुपाद्रवत् ॥ ९-२४-३८ (६१४९९)
पुत्रः पाञ्चालराजस्य जिघांसुः कुञ्जरान्ययौ ।
अदृष्ट्वा तु रथानीके दुर्योधनमरिन्दमम् ॥ ९-२४-३९ (६१५००)
अश्वत्थामा कृपश्चैव कृतवर्मा च सात्वतः ।
अपृच्छन्क्षत्रियांस्तत्र क्व नु दुर्योधनो गतः ॥ ९-२४-४० (६१५०१)
तेऽपश्यमाना राजानं वर्तमाने जनक्षये ।
मन्वाना निहतं तत्र तव पुत्रं महारथाः ।
विवर्णवदना भूत्वा पर्यपृच्छन्त ते सुतम् ॥ ९-२४-४१ (६१५०२)
आहुः केचिद्धते सूते प्रयातो यत्र सौबलः ।
हित्वा पाञ्चालराजस्य तदनीकं दुरुत्सहम् ॥ ९-२४-४२ (६१५०३)
अपरे त्वब्रुवंस्तत्र क्षत्रिया भृशविक्षताः ।
दुर्योधनेन किं कार्यं द्रक्ष्यध्वं यदि जीवति ।
युध्यध्वं सहिताः सर्वे किं वो राजा करिष्यति ॥ ९-२४-४३ (६१५०४)
ते क्षत्रियाः क्षतैर्गात्रैर्हतभूयिष्ठवाहनाः ।
शरैः सम्पीड्यमानास्तु नातिव्यक्तमथाब्रुवन् ॥ ९-२४-४४ (६१५०५)
इदं सर्वं बलं हन्मो येन स्म परिवारिताः ।

एते सर्वे गजान्हत्वा उपयान्ति स्म पाण्डवाः ॥ ९-२४-४५ (६१५०६)
श्रुत्वा तु वचनं तेषामश्वत्थामा महाबलः ।
भित्त्वा पाञ्चालराजस्य तदनीकं दुरुत्सहम् ॥ ९-२४-४६ (६१५०७)
कृपश्च कृतवर्मा च प्रययौ यत्र सौबलः ।
रथानीकं परित्यज्य शूराः सुदृढधन्विनः ॥ ९-२४-४७ (६१५०८)
ततस्तेषु प्रयातेषु धृष्टद्युम्नपुरस्कृताः ।
आययुः पाण्डवा राजन्विनिघ्नन्तः स्म तावकान् ॥ ९-२४-४८ (६१५०९)
दृष्ट्वा तु तानापततः सम्प्रहृष्टान्महारथान् ।
पराक्रान्तास्ततो वीरा निराशा जीविते तदा ॥ ९-२४-४९ (६१५१०)
विवर्णमुखभूयिष्ठमभवत्तावकं बलम् ।
परिक्षीणायुधान्दृष्ट्वा तानहं परिवारितान् ॥ ९-२४-५० (६१५११)
राजन्बलेन त्र्यङ्गेन त्यक्त्वा जीवितमात्मनः ।
आत्मना पञ्चमोऽयुध्यं पाञ्चालस्य बलेन ह ॥ ९-२४-५१ (६१५१२)
तस्मिन्देशे व्यवस्थाय यत्र शारद्वतः स्थितः ।
सम्प्रद्रुता वयं पञ्च किरीटिशरपीडिताः ॥ ९-२४-५२ (६१५१३)
धृष्टद्युम्नं महारौद्रं तत्र नाभूद्रणो महान् ।
जितास्तेन वयं सर्वे व्यपयाम रणात्ततः ॥ ९-२४-५३ (६१५१४)
अथापश्यं सात्यकिं तमुपायातं महारथम् ।
रथैश्चतुः शतैर्वीरो मामभ्यद्रवदाहवे ॥ ९-२४-५४ (६१५१५)
धृष्टद्युम्नादहं मुक्तः कञ्चिच्छ्रान्तवाहनात् ।
पतितो माधवानीकं दुष्कृती नरकं यथा ॥ ९-२४-५५ (६१५१६)
तत्र युद्धमभूद्धोरं मुहूर्तमतिदारुणम् ॥  ९-२४-५६ (६१५१७)
सात्यकिस्तु महाबाहुर्मम हत्वा परिच्छदम् ।
जीवग्राहमगृह्णान्मां मूर्च्छितं पतितं भुवि ॥ ९-२४-५७ (६१५१८)
ततो मुहूर्तादिव तद्गजानीकमविध्यत ।
गदया भीमसेनेन नाराचैरर्जुनेन च ॥ ९-२४-५८ (६१५१९)
अभिपिष्टैर्महानागैः समन्तात्पर्वतोपमैः ।
नातिप्रसिद्धेव गतिः पाण्डवानामजायत ॥ ९-२४-५९ (६१५२०)
रथमार्गं ततश्चक्रे भीमसेनो महाबलः ।
पाण्डवानां महाराज व्यपाकर्षन्महागजान् ॥ ९-२४-६० (६१५२१)
अश्वत्थामा कृपश्चैव कृतवर्मा च सात्वतः ।
अपश्यन्तो रथानीके दुर्योधनसमरिन्दमम् ।
राजानं मृगयामासुस्तव पुत्रं महारथम् ॥  ९-२४-६१ (६१५२२)
परित्यज्य च पाञ्चाल्यं प्रयाता यत्र सौबलः ।
राज्ञोऽदर्शनसंविग्ना वर्तमानो जनक्षये ॥ ॥ ९-२४-६२ (६१५२३)

इति श्रीमन्महाभारते शल्यपर्वणि शल्यवधपर्वणि
अष्टादशदिवसयुद्धे चतुर्विंशोऽध्यायः ॥ २४ ॥
Mahabharata - Shalya Parva - Chapter Footnotes

९-२४-४ सम्प्रदुद्रावेति पूर्वस्थं सम्प्रदुद्रुवुरिति विपरिणामेन सम्बध्यते ॥
९-२४-२४ चतुर्विंशोऽध्यायः ॥

---

शल्यपर्व-अध्यय०२५
॥ श्रीः ॥
९.२५. अध्यायः २५

Mahabharata - Shalya Parva - Chapter Topics
भीमेनावशिष्टानां दुर्योधनानुजानां वधः ॥१ ॥

Mahabharata - Shalya Parva - Chapter Text

९-२५-० (६१५२४)
सञ्जय उवाच। ९-२५-०क्ष् (५१२२)
गजानीके हते तस्मिन्पाण्डुपुत्रेण भारत ।
वध्यमाने बले चैव भीमसेनेन संयुगे ॥ ९-२५-१ (६१५२५)
चरन्तं च प्रपश्यामो भीमसेनमरिन्दमम् ।
दण्डहस्तं यथा क्रुद्धमन्तकं प्राणहारिणम् ॥ ९-२५-२ (६१५२६)
समेत्य समरे राजन्हतशेषाः सुतास्तव ।
अदृश्यमाने कौरव्ये पुत्रे दुर्योधने तव ।
सोदर्याः सहिता भूत्वा भीमसेनमुपाद्रवन् ॥ ९-२५-३ (६१५२७)
श्रुतर्वा सञ्जयश्चैव जयत्सेनः श्रुतान्तकः ।
दुर्विमोचनकश्चैव तथा दुर्विषहो बली ॥ ९-२५-४ (६१५२८)
दुर्मर्षणः सुजातश्च जैत्रो भूरिबलो रविः ।
इत्येते सहिता भूत्वा तव पुत्राः समन्ततः ।
भीमसेनमभिद्रुत्य रुरुधुः सर्वतो दिशम् ॥ ९-२५-५ (६१५२९)
ततो भीमो महाराज स्वरथं पुनरास्थितः ।
मुमोच निशितान्बाणान्पुत्राणां तव मर्मसु ॥ ९-२५-६ (६१५३०)
ते कीर्यमाणा भीमेन पुत्रास्तव महारणे ।
भीमसेनमुपासेदुः प्रवाता इव कुञ्जरम् ॥ ९-२५-७ (६१५३१)
ततः क्रुद्धो रणे भीमः शिरो दुर्मर्षणस्य ह ।

क्षुरप्रेण प्रमथ्याशु पातयामास भूतले ॥ ९-२५-८ (६१५३२)
ततोऽपरेण भल्लेन सर्वावरणभेदिना ।
श्रुतान्तमवधीद्धीमस्तव पुत्रं महारथः ॥ ९-२५-९ (६१५३३)
जयत्सेनं ततो विद्वा नाराचेन हसन्निव ।
पातयामास कौरव्यं रथोपस्थादरिन्दमः ।
स पपात रथाद्राजन्भूमौ तूर्णं ममार च ॥ ९-२५-१० (६१५३४)
श्रुतर्वा तु ततो भीमं क्रुद्धो विव्याध मारिष ।
शतेन गृध्रवाजानां शराणां नतपर्वणाम् ॥ ९-२५-११ (६१५३५)
ततः क्रुद्धो रणे भीमो जैत्रं भूरिबलं रविम् ।
त्रीनेतांस्त्रिभिरानर्च्छद्विषाग्निप्रतिमैः शरैः ॥ ९-२५-१२ (६१५३६)
ते हता न्यपतन्भूमौ स्यन्दनेभ्यो महारथाः ।
वसन्ते पुष्पशबला निकृत्ता इव किंशुकाः ॥ ९-२५-१३ (६१५३७)
ततोऽपरेण भल्लेन तीक्ष्णेन च परन्तपः ।
दुर्विमोचनमाहत्य प्रेषयामास मृत्यवे ॥ ९-२५-१४ (६१५३८)
स हतः प्रापतद्भूमौ स्वरथाद्रथिनां वरः ।
गिरेस्तु कूटजो भग्नो मारुतेनेव पादपः ॥ ९-२५-१५ (६१५३९)
दुष्प्रधर्षं ततश्चैव सुजातं च सुतं तव ।
एकैकं न्यहनत्सङ्ख्ये द्वाभ्यांद्वाभ्यां चमूमुखे ।
तौ शिलीमुखविद्धाङ्गौ पेततू रथसत्तमौ ॥ ९-२५-१६ (६१५४०)
ततः पतन्तं समरे अभिवीक्ष्य सुतं तव ।
भल्लेन पातयामास भीमो दुर्विपहं रणे ॥ ९-२५-१७ (६१५४१)
स पपात हतो बाहात्पश्यतां सर्वधन्विनाम् ॥ ९-२५-१८ (६१५४२)
दृष्ट्वा तु निहतान्भ्रातॄन्वहूनेकेन संयुगे ।
अमर्षधशमापसः श्रुतर्वा भीममभ्ययात् ॥ ९-२५-१९ (६१५४३)
विक्षिपन्सुमहच्चापं कार्तस्वरविभूषितम् ।
विमृजन्सायकांश्चैव विषाग्निप्रतिमान्वहून् ॥ ९-२५-२० (६१५४४)
स तु राजन्धनुश्छित्त्वा पाण्डवस्य महामृधे ।
अथैनं छिन्नधन्वानं विंशत्या समवाकिरत् ॥ ९-२५-२१ (६१५४५)
ततोऽन्यद्धनुरादाय भीमसेनो महाबलः ।
अवाकिरत्तव सुतं तिष्ठतिष्ठेति चाब्रवीत् ॥ ९-२५-२२ (६१५४६)
महदासीत्तयोर्युद्धं चित्ररूपं भयानकम् ।
बादृशं समरे पूर्वं तम्भवासवयोर्युधि ॥ ९-२५-२३ (६१५४७)
तयोस्तत्र शितैर्गुक्तैर्यमदण्डनिभैः शरैः ।
समाच्छकाधारा सर्वा त्वं दिशो विदिशस्तथा ॥ ९-२५-२४ (६१५४८)
अतः श्रुतर्वा सङ्क्रुद्धो धनुरादाय सायकैः ।
भीमसेनं रणे राजन्बाह्वोरुरसि चार्पयत् ॥ ९-२५-२५ (६१५४९)

सोऽतिविद्धो महाराज तव पुत्रेण धन्विना ।
भीमः सञ्चुक्षुभे क्रुद्धः पर्वणीव महोदधिः ॥ ९-२५-२६ (६१५५०)
ततो भीमो रुषाविष्टः पुत्रस्य तव मारिष ।
सारथिं चतुरश्चाश्वाञ्शरैर्निन्ये यमक्षयम् ॥ ९-२५-२७ (६१५५१)
विरथं तं समालक्ष्य विशिखैर्लोमवाहिभिः ।
अवाकिरदमेयात्मा दर्शयन्पाणिलाघवम् ॥ ९-२५-२८ (६१५५२)
श्रुतर्वा विरथो राजन्नाददे खङ्गचर्मणी ।
अथास्याददतः खड्गं शतचन्द्रं च भानुमत् ।
क्षुरप्रेणं शिरः कायात्पातयामास पाण्डवः ॥ ९-२५-२९ (६१५५३)
छिन्नोत्तमाङ्गस्य ततः क्षुरप्रेण महात्मना ।
पपात कायः स्वरथाद्वसुधामनुनादयन् ॥ ९-२५-३० (६१५५४)
तस्मिन्निपतिते वीरे तावका भयमोहिताः ।
अभ्यद्रवन्त सङ्ग्रामे भीमसेनं युयुत्सवः ॥ ९-२५-३१ (६१५५५)
तानापतत एवाशु हतशेषाद्बलार्णवात् ।
दंशितान्प्रतिजग्राह भीमसेनः प्रतापवान् ॥ ९-२५-३२ (६१५५६)
ते तु तं वै समासाद्य परिवव्रुः समन्ततः ॥ ९-२५-३३ (६१५५७)
ततस्तु संवृतो भीमस्तावकान्निशितैः शरैः ।
पीडयामास तान्सर्वान्सहस्राक्ष इवासुरान् ॥ ९-२५-३४ (६१५५८)
ततः पञ्चशतान्हत्वा सवरूथान्महारथान् ।
जघान कुञ्जरानीकं पुनः सप्तशतं युधि ॥ ९-२५-३५ (६१५५९)
हत्वा शतसहस्राणि पत्तीनां परमेषुभिः ।
वाजिनां च शतान्यष्टौ पाण्डवः स्म विराजते ॥ ९-२५-३६ (६१५६०)
भीमसेनस्तु कौन्तेयो हत्वा युद्धे सुतांस्तव ।
मेने कृतार्थमात्मानं सफलं जन्म च प्रभो ॥ ९-२५-३७ (६१५६१)
तं तथा युध्यमानं च विनिघ्नन्तं च तावकान् ।
ईक्षितुं नोत्सहन्ते स्म तव सैन्या नराधिप ॥ ९-२५-३८ (६१५६२)
विद्राव्य च कुरून्सर्वांस्तांश्च हत्वा पदानुगान् ।
दोर्भ्यां शब्दं ततश्चक्रे त्रासयानो महाद्विपान् ॥ ९-२५-३९ (६१५६३)
हतभूयिष्ठयोधा तु तव सेना विशाम्पते ।
किञ्चिच्छेषा महाराज कृपणं समपद्यत ॥ ॥ ९-२५-४० (६१५६४)

इति श्रीमन्महाभारते शल्यपर्वणि शल्यवधपर्वणि
अष्टादशदिवसयुद्धे पञ्चविंशोऽध्यायः ॥ २५ ॥

Mahabharata - Shalya Parva - Chapter Footnotes

९-२५-७ प्रवणादिव कुञ्जरमिति झ पाठः ॥

९-२५-२५ पञ्चविंशोऽध्यायः ॥

---

शल्यपर्व-अध्यय०२६
॥ श्रीः ॥
९.२६. अध्यायः २६

Mahabharata - Shalya Parva - Chapter Topics
कृष्णार्जुनयोः संवादः ॥ १ ॥
सङ्कुलयुद्धम् ॥ २ ॥
भीमेन सुदर्शननाम्नो दुर्योधनानुजस्य वधः ॥ ३ ॥

Mahabharata - Shalya Parva - Chapter Text

९-२६-० (६१५६५)
सञ्जय उवाच। ९-२६-०क्ष् (५१२३)
दुर्योधनो महाराज सुदर्शश्चापि ते सुतः ।
हतशेषौ तदा सङ्ख्ये वाजिमध्ये व्यवस्थितौ ॥ ९-२६-१ (६१५६६)
ततो दुर्योधनं दृष्ट्वा वाजिमध्ये व्यवस्थितम् ।
उवाच देवकीपुत्रः कुन्तीपुत्रं धनञ्जयम् ॥ ९-२६-२ (६१५६७)
शत्रवो हतभूयिष्ठा ज्ञातयः परिपालिताः ।
गृहीत्वा सञ्जयं चासौ निवृत्तः शिनिपुङ्गवः ॥ ९-२६-३ (६१५६८)
परिश्रान्तश्च नकुलः सहदेवश्च भारत ।
योधयित्वा रणे पापान्धार्तराष्ट्रान्सहानुगान् ॥ ९-२६-४ (६१५६९)
दुर्योधनमतिक्रम्य त्रय एते व्यवस्थिन्ताः ।
कृपश्च कृतवर्मा च द्रौणिश्चैव महारथः ॥ ९-२६-५ (६१५७०)
असौ तिष्ठति पाञ्चाल्यः श्रिया परमया युतः ।
दुर्योधनबलं हत्वा सह सर्वैः प्रभद्रकैः ॥ ९-२६-६ (६१५७१)
असौ दुर्योधनः पार्थ वाजिमध्ये व्यवस्थितः ।
छत्रेण ध्रियामणेन प्रेक्षमाणो मुहुर्मुहुः ॥ ९-२६-७ (६१५७२)
प्रतिव्यूह्य बलं सर्वं रणमध्ये व्यवस्थितः ।
एनं हत्वा शितैर्बाणैः कृतकृत्यो भविष्यसि ॥ ९-२६-८ (६१५७३)
गजानीकं हतं दृष्ट्वा त्वां च प्राप्तमरिन्दम ।
यावन्न विद्रवन्त्येते तावज्जहि सुयोधन्सम् ॥ ९-२६-९ (६१५७४)
यातु कश्चित्तु पाञ्चाल्यं क्षिप्रमागम्यतामिति ।
परिश्रान्तबलस्तात नैष मुच्येत किल्बिषी ॥ ९-२६-१० (६१५७५)
हत्वा तव बलं सर्वं सङ्ग्रमे धृतराष्ट्रजः ।

जितान्पाण्डुसुतान्प्रत्वा रूपं धारयते महत् ॥ ९-२६-११ (६१५७६)
निहतं स्वबलं दृष्ट्वा पीडितं चापि पाण्डवैः ।
ध्रुवमेष्यति सङ्ग्रमे वधायैवात्मनो नृपः ॥ ९-२६-१२ (६१५७७)
एवमुक्तः फल्गुनस्तु कृष्णं वचनमब्रवीत् ।
धृतराष्ट्रसुताः सर्वे हता भीमेन माधव ।
यावेतावास्थितौ कृष्ण तावद्य नभविष्यतः ॥ ९-२६-१३ (६१५७८)
हतो भीष्मो हतो द्रोणः कर्णो वैकर्तनो हतः ।
मद्रराजो हतः शल्यो हतः कृष्ण जयद्रथः ॥ ९-२६-१४ (६१५७९)
हयाः पञ्चशताः शिष्टाः शकुनेः सौबलस्य च ।
रथानां तु शते शिष्टे द्वे एव तु जनार्दन ।
दन्तिनां च शतं साग्रं त्रिसाहस्राः पदातयः ॥ ९-२६-१५ (६१५८०)
अश्वत्थामा कृपश्चैव त्रिगर्ताधिपतिस्तथा ।
उलूकः शकुनिश्चैव कृतवर्मा च सात्वतः ॥ ९-२६-१६ (६१५८१)
एतद्बलमभूच्छेषं धार्तराष्ट्रस्य माधव ।
मोक्षो न नूनं कालात्तु विद्यते भुवि कस्यचित् ॥ ९-२६-१७ (६१५८२)
तथा विनिहते सैन्ये पश्य दुर्योधनं स्थितम् ।
अद्याह्ना हि महाराजो हतामित्रो भविष्यति ।
न हि मे मोक्ष्यते कश्चित्परेषामिह चिन्तये ॥ ९-२६-१८ (६१५८३)
ये त्वद्य समरं कृष्ण न हास्यन्ति मदोत्कटाः ।
तान्वै सर्वान्हनिष्यामि यद्यपि स्युरमानुषाः ॥ ९-२६-१९ (६१५८४)
अद्य युद्धे समुत्पन्नं दीर्घं राज्ञः प्रजागरम् ।
अपनेष्यामि गान्धारिं घातयित्वा शितैः शरैः ॥ ९-२६-२० (६१५८५)
निकृत्या वै दुराचारो यानि रत्नानि सौबलः ।
सभायामहरद्द्यूते पुनस्तान्याहराम्यहम् ॥ ९-२६-२१ (६१५८६)
अद्य वेत्स्यन्ति मच्छक्तिं सर्वा नागपुरे स्त्रियः ।
श्रुत्वा पतींश्च पुत्रांश्च पाण्डवैर्निहतान्युधि ॥ ९-२६-२२ (६१५८७)
समाप्तमद्य वै कर्म सर्वं कृष्ण भविष्यति ।
अद्य दुर्योधनो दीप्तां श्रियं प्राणांश्च मोक्ष्यति ॥ ९-२६-२३ (६१५८८)
नापयाति भयात्कृष्ण सङ्ग्रामाद्यदि चेन्मम ।
निहतं विद्धि वार्ष्णेय धार्तराष्ट्रं सुबालिशम् ॥ ९-२६-२४ (६१५८९)
मम ह्येतदपर्याप्तं वाजिबृन्दमरिन्दम ।
सोढुं ज्यातलनिर्घोषं याहि यावन्निहन्म्यहम् ॥ ९-२६-२५ (६१५९०)
सञ्जय उवाच। ९-२६-२६क्ष् (५१२४)
एवमुक्तस्तु दाशार्हः पाण्डवेन यशस्विना ।
अचोदयद्धायन्राजन्दुर्योधनबलं प्रति ॥ ९-२६-२६ (६१५९१)
तदनीकमभिप्रेक्ष्य त्रयः सज्जा महारथाः ।

भीमसेनोऽकर्जुनश्चैव सहदेवश्च मारिष ।
प्रययुः सिंहनादेन दुर्योधनजिघांसया ॥ ९-२६-२७ (६१५९२)
तान्प्रेक्ष्य सहितान्सर्वाञ्जवेनोद्यतकार्मुकान् ।
सौबलोऽभ्यद्रवद्युद्धे पाण्डवानाततायिनः ॥ ९-२६-२८ (६१५९३)
सुदर्शनस्त्व मतो भीमसेनं समभ्ययात् ।
सुशर्मा शकुनिश्चैव युयुधाते किरीटिना ॥ ९-२६-२९ (६१५९४)
सहदेवं तव सुतो हयपृष्ठगतोऽभ्ययात् ॥ ९-२६-३० (६१५९५)
ततो हि यत्नतः क्षिप्रं तवं पुत्रो जनाधिप ।
प्रासेन सहदेवस्य शिरसि प्राहरङ्कृशम् ॥ ९-२६-३१ (६१५९६)
सोपाविशद्रथोपस्थे तव सुत्रेण ताडितः ।
रुधिराप्लुतसर्वाङ्ग आशीविष इव श्वसन् ॥ ९-२६-३२ (६१५९७)
प्रतिलभ्य ततः सञ्ज्ञां सहदेवो विशाम्पते ।
दुर्योधनं शरैस्तीक्ष्णैः सङ्क्रुद्धः समवाकिरत् ॥ ९-२६-३३ (६१५९८)
पार्थोऽपि युधि विक्रम्य कुन्तीपुत्रो धनञ्जयः ।
शूराणामश्वपृष्ठेभ्यः शिरांसि निचकर्त ह ॥ ९-२६-३४ (६१५९९)
तदनीकं तदा पार्थो व्यधमद्बहुभिः शरैः ।
पातयित्वा हयान्सर्वांस्त्रिगर्तानां रथान्ययौ ॥ ९-२६-३५ (६१६००)
ततस्ते सहिता भूत्वा त्रिगर्तानां महारथाः ।
अर्जुनं वासुदेवं च शरवर्षैरवाकिरन् ॥ ९-२६-३६ (६१६०१)
सत्यकर्माणमाक्षिप्य क्षुरप्रेण महायशाः ।
ततोऽस्य स्यन्दनस्येषां चिच्छिदे पाण्डुनन्दनः ॥ ९-२६-३७ (६१६०२)
शिलाशितेन च विभो क्षुरप्रेण महायशाः ।
शिरश्चिच्छेद सहसा तप्तकुण्डलभूषणम् ॥ ९-२६-३८ (६१६०३)
सत्येषुमथ चादत्त योधानां मिषतां ततः ।
यथा सिंहो वने राजन्मृगं परि बुभुक्षितः ॥ ९-२६-३९ (६१६०४)
तं निहत्य ततः पार्थः सुशर्माणं त्रिभिः शरैः ।
विद्ध्वा तानहनत्सर्वान्रथान्रुक्मविभूओषितान् ॥ ९-२६-४० (६१६०५)
ततः प्रायात्त्वरन्पार्थो दीर्घकालं सुसंवृतम् ।
मुञ्जन्क्रोधविषं तीक्ष्णं प्रस्थलाधिपतिं प्रति ॥ ९-२६-४१ (६१६०६)
तमर्जुनः पृषत्कानां शतेन भरतर्षभ ।
पूरयित्वा ततो वाहान्प्राहरत्तस्य धन्विनः ॥ ९-२६-४२ (६१६०७)
ततः शरं समादाय यमदण्डोपमं तदा ।
सुशर्माणं समुद्दिश्य चिक्षेपाशु हसन्निव ॥ ९-२६-४३ (६१६०८)
स शरः प्रेषितस्तेन क्रोधदीप्तेन धन्विना ।
सुशर्माणं समासाद्य बिभेद हृदयं रणे ॥ ९-२६-४४ (६१६०९)
स गतासुर्महाराज पपात धरणीतले ।

नन्दयन्पाण्डवान्सर्वान्व्यथयंश्चापि तावकान् ॥ ९-२६-४५ (६१६१०)
सुशर्माणं रणे हत्वा पुत्रानस्य महारथान् ।
सप्त चाष्टौ च त्रिंशच्च सायकैरनयत्क्षयम् ॥ ९-२६-४६ (६१६११)
ततोऽस्य निशितैर्बाणैः सर्वान्हत्वा पदानुगान् ।
अभ्यगाद्भारतीं सेनां हतशेषां महारथः ॥ ९-२६-४७ (६१६१२)
भीमस्तु समरे क्रुद्धः पुत्रं तव जनाधिप ।
सुदर्शनमदृश्यन्तं शरैश्चक्रे हसन्निव ॥ ९-२६-४८ (६१६१३)
ततोऽस्य प्रहसन्क्रुद्धः शिरः कायादपाहरत् ।
क्षुरप्रेण सुतीक्ष्णेन स हतः प्रापतद्भुवि ॥ ९-२६-४९ (६१६१४)
तस्मिंस्तु निहते वीरे ततस्तस्य पदानुगाः ।
परिवव्रू रमे भीमं किरन्तो विविधाञ्शरान् ॥ ९-२६-५० (६१६१५)
ततस्तु निशितैर्बाणैस्तवानीकं वृकोदरः ।
इन्द्राशनिसमस्पर्शैः समन्तात्पर्यवाकिरत् ॥ ९-२६-५१ (६१६१६)
ततः क्षणेन तद्भीमो न्यहनद्भरतर्षभ ॥ ९-२६-५२ (६१६१७)
तेषु तूत्साद्यमानेषु सेनाध्यक्षा महारथाः ।
भीमसेनं समासाद्य ततोऽयुध्यन्त भारत ॥ ९-२६-५३ (६१६१८)
स तान्सर्वाञ्शरैर्घोरैरवाकिरत पाण्डवः ।
तथैव तावका राजन्पाण्डवेयान्महारथान् ।
शरवर्षेण महता समन्तात्पर्यवारयन् ॥ ९-२६-५४ (६१६१९)
व्याकुलं तदभूत्सर्वं पाण्डवानां परैः सह ।
तावकानां च समरे पाण्डवेयैर्युयुत्सताम् ॥ ९-२६-५५ (६१६२०)
तत्र योधास्तदा पेतुः परस्परसमाहताः ।
उभयोः सेनयो राजन्संशोचन्तः स्म बान्धवान् ॥ ॥ ९-२६-५६ (६१६२१)

इति श्रीमन्महाभारते शल्यपर्वणि शल्यवधपर्वणि
अष्टादशदिवसयुद्धे षड्विंशोऽध्यायः ॥ २६ ॥
Mahabharata - Shalya Parva - Chapter Footnotes

९-२६-१७ मोक्षो नूनं कालसृष्टः इति क पाठः ॥
९-२६-२६ षड्विंशोऽध्यायः ॥

---

शल्यपर्व-अध्यय०२७
॥ श्रीः ॥
९.२७. अध्यायः २७

Mahabharata - Shalya Parva - Chapter Topics

सहदेवेन शकुन्युलूकयोर्वधः ॥१ ॥

Mahabharata - Shalya Parva - Chapter Text

९-२७-० (६१६२२)
सञ्जय उवाच। ९-२७-०क्ष् (५१२५)
तस्मिन्प्रवृत्ते सङ्ग्रामे गजवाजिनरश्नो
शकुनिः सौबलो राजन्सहदेवं xxxxxx  यात् ॥ ९-२७-१ (६१६२३)
ततोऽस्यापततस्तूर्णं सहदेवः पतापवान् ।
शरौघान्प्रेषयामास पतङ्गानिव शीघ्रगान् ।
उलूकं च रणे राजन्विव्याध दशभिः शरैः ॥ ९-२७-२ (६१६२४)
शकुनिश्च महाराज भीमं विद्ध्वा त्रिभिः शरैः ।
नवत्या निशितैर्बाणैः सहदेवमवाकिरत् ॥९-२७-३ (६१६२५)
ते शूराः समरे राजन्समासाद्य परस्परम् ।
विव्यधुर्निशितैर्बाणैः कङ्कबर्हिणवाजितैः ।
स्वर्णपुङ्खैः शिलधौतैराकर्णप्रहितैः शरैः ॥ ९-२७-४ (६१६२६)
तेषां चापगुणोत्सृष्टा शरवृष्टिर्विशाम्पते ।
आच्छादयद्दिशः सर्वा धाराभिरिव तोयदः ॥९-२७-५ (६१६२७)
ततः क्रुद्धो रणे भीमः सहदेवश्च भारत ।
चेरतुः कदनं सङ्ख्ये कुर्वन्तौ सुमहाबलौ ॥९-२७-६ (६१६२८)
ताभ्यां शरशतैश्छन्नं तद्बलं तव भारत ।
सान्धकारमिवाकाशमभवत्तत्रतत्र ह ॥९-२७-७ (६१६२९)
अश्वैर्विपरिधावद्भिः शरच्छन्नैर्विशाम्पते ।
तत्रतत्र कृतो मार्गो विकर्षद्भिर्हतान्बहून् ॥९-२७-८ (६१६३०)
निहतानां हयानां च सहैव हयसादिभिः ।
वर्मभिर्विनिकृत्तैश्च प्रासैश्छिन्नैश्च मारिष ॥९-२७-९ (६१६३१)
ऋष्टिभिः शक्तिभिश्चैव सासिप्रासपरश्वथैः ।
सञ्छन्ना पृथिवी जज्ञे कुसुमैः शबला इव ॥९-२७-१० (६१६३२)
योधास्तत्र महाराज समासाद्य परस्परम् ।
व्यचरन्त रणे क्रुद्धा विनिघ्नन्तः परस्परम् ॥९-२७-११ (६१६३३)
उद्वृत्तनयनै रोषात्सन्दष्टौष्ठपुटैर्मुखैः ।
सकुण्डलैर्मही च्छन्ना पद्मकिञ्जल्कसन्निभैः ॥९-२७-१२ (६१६३४)
भुजैश्छिन्नैर्महाराज नागराजकरोपमैः ।
साङ्गदैः सतनुत्रैश्च सासिप्रासपरश्वथैः ॥९-२७-१३ (६१६३५)
कबन्धैरुत्थितैश्छिन्नैर्नृत्यद्भिश्चापरैर्युधि ।
क्रव्यादगणसञ्छन्ना घोराऽभूत्पृथिवी विभो ॥९-२७-१४ (६१६३६)

अल्पावशिष्टे सैन्ये तु कौरवेयान्महाहवे ।
प्रहृष्टाः पाण्डवा भूत्वा निन्यिरे यमसादनम् ॥ ९-२७-१५ (६१६३७)
एतस्मिन्नन्तरे शूरः सौबलेयः प्रतापवान् ।
प्रासेन सहदेवस्य शिरसि प्राहरद्भृशम् ॥ ९-२७-१६ (६१६३८)
स विह्वलो महाराज रथोपस्थ उपाविशत् ॥ ९-२७-१७ (६१६३९)
सहदेवं तथा दृष्ट्वा भीमसेनः प्रतापवान् ।
सर्वसैन्यानि सङ्क्रुद्धो वारयामास भारत ॥ ९-२७-१८ (६१६४०)
निर्बिभेद च नाराचैः शतशोऽथ सहस्रशः ।
स निर्भिद्याकरोच्चैव सिंहनादमरिन्दमः ॥ ९-२७-१९ (६१६४१)
तेन शब्देन वित्रस्ताः सर्वे सहयवारणाः ।
प्राद्रवन्सहसा भीताः शकुनेश्च पदानुगाः ॥ ९-२७-२० (६१६४२)
प्रभग्नानथ तान्दृष्ट्वा राजा दुर्योधनोऽब्रवीत् ।
निवर्तध्वमधर्मज्ञा युध्यध्वं किं सृतेन वः ॥ ९-२७-२१ (६१६४३)
इह कीर्तिं समाधाय प्रेत्य लोकान्समश्नुते ।
प्राणाञ्जहाति यो धीरो युद्धे पृष्ठमदर्शयन् ॥ ९-२७-२२ (६१६४४)
एवमुक्तास्तु ते राज्ञा सौबलस्य पदानुगाः ।
पाण्डवानभ्यवर्तन्त मृत्युं कृत्वा निवर्तनम् ॥ ९-२७-२३ (६१६४५)
द्रवद्भिस्तत्र राजेन्द्र कृतः शब्दोऽतिदारुणः ।
क्षुब्धसागरसङ्काशः क्षुभितैः सर्वतो दिशम् ॥ ९-२७-२४ (६१६४६)
तांस्ततः पुरतो दृष्ट्वा सौबलस्य पदानुगान् ।
प्रत्युद्ययुर्महाराज पाण्डवा विजयोद्यताः ॥ ९-२७-२५ (६१६४७)
प्रत्याश्वस्य च दुर्धर्षः सहदेवो विशाम्पते ।
शकुनिं दशभिर्विद्ध्वा हयांश्चास्य त्रिभिः शरैः ।
धनुश्चिच्छेद च शरैः सौबलस्य हसन्निव ॥ ९-२७-२६ (६१६४८)
अथान्यद्धनुरादाय शकुनिर्युद्धदुर्मदः ।
विव्याध नकुलं षष्ट्या भीमसेनं च सप्ताभिः ॥ ९-२७-२७ (६१६४९)
उलूकोऽपि महाराज भीमं विव्याध सप्तभिः ।
सहदेवं च सप्तत्या परीप्सन्पितरं रणे ॥ ९-२७-२८ (६१६५०)
तं भीमसेनः समरे विव्याध नवभिः शरैः ।
शकुनिं च चतुःषष्ट्या पार्श्वस्थांश्च त्रिभिस्त्रिभिः ॥ ९-२७-२९
(६१६५१)
ते हन्यमाना भीमेन नाराचैस्तैलपायितैः ।
सहदेवं रणे क्रुद्धाश्छादयञ्शरवृष्टिभिः ।
पर्वतं वारिधाराभिः सविद्युत इवाम्बुदाः ॥ ९-२७-३० (६१६५२)
ततोऽस्यापततः शूरः सहदेवः प्रतापवान् ।
उलूकस्य महाराज भल्लेनापाहरच्छिरः ॥ ९-२७-३१ (६१६५३)

स जगाम रथाद्भूमिं सहदेवेन पातितः ।
रुधिराप्लुतसर्वाङ्गो नन्दयन्पाण्डवान्युधि ॥ ९-२७-३२ (६१६५४)
पुत्रं तु निहतं दृष्ट्वा शकुनिस्तत्र भारत ।
साश्रुकण्ठो विनिःश्वस्य क्षत्तुर्वाक्यमनुस्मरन् ॥ ९-२७-३३ (६१६५५)
चिन्तयित्वा मुहूर्तं स बाष्पपूर्णेक्षणः श्वसन् ।
सहदेवं समासाद्य त्रिभिर्विव्याध सायकैः ॥ ९-२७-३४ (६१६५६)
तानपास्य शरान्मुक्ताञ्शरसङ्घैः प्रतापवान् ।
सहदेवो महाराज धनुश्चिच्छेद संयुगे ॥ ९-२७-३५ (६१६५७)
छिन्ने धनुषि राजेन्द्र शकुनिः सौबलस्तदा ।
प्रगृह्य विपुलं खड्गं सहदेवाय प्राहिणोत् ॥ ९-२७-३६ (६१६५८)
तमापतन्तं सहसा घोररूपं विशाम्पते ।
द्विधा चिच्छेद समरे सौबलस्य हसन्निव ॥ ९-२७-३७ (६१६५९)
असिं दृष्ट्वा द्विधा च्छिन्नं प्रगृह्य महतीं गदाम् ।
प्राहिणोत्सहदेवाय सा मोघा न्यपतद्भुवि ॥ ९-२७-३८ (६१६६०)
ततः शक्तिं महाघोरां कालरात्रीमिवोद्यताम् ।
प्रेषयामास सक्रुद्धः पाण्डवं प्रति सौबलः ॥ ९-२७-३९ (६१६६१)
तामापतन्तीं सहसा शरैः कनकभूषणैः ।
त्रिधा चिच्छेद समरे सहदेवो हसन्निव ॥ ९-२७-४० (६१६६२)
सा पपात त्रिधा च्छिन्ना भूमौ कनकभूषणा ।
शीर्यमाणा यथा दीप्ता गगनाद्वै शतह्रदा ॥ ९-२७-४१ (६१६६३)
शक्तिं विनिहतां दृष्ट्वा सौबलं च भयार्दितम् ।
दुद्रुवुस्तावकाः सर्वे भये जाते ससौबलाः ॥ ९-२७-४२ (६१६६४)
अथोत्क्रुष्टं महच्चासीत्पाण्डवैर्जितकाशिभिः ।
धार्तराष्ट्रास्ततः सर्वे प्रायशो विमुखाऽभवन् ॥ ९-२७-४३ (६१६६५)
तान्वै विमनसो दृष्ट्वा माद्रीपुत्रः प्रतापवान् ।
शरैरनेकसाहस्रैर्वारयामास संयुगे ॥ ९-२७-४४ (६१६६६)
ततो गान्धारकैर्गुप्तं पुष्टैरश्वैर्जये धृतम् ।
आससाद रमे यान्तं सहदेवोऽथ सौबलम् ॥ ९-२७-४५ (६१६६७)
स्वमंशमवशिष्टं तं संस्मृत्य शकुनिं नृप ।
रथेन काञ्चनाङ्गेन सहदेवः समभ्ययात् ॥ ९-२७-४६ (६१६६८)
अधिज्यं बलवत्कृत्वा व्याक्षिपन्सुमहद्धनुः ।
स सौबलमभिद्रुत्य गार्ध्रपत्रैः शिलाशितैः ॥ ९-२७-४७ (६१६६९)
भृशमभ्यहन्त्क्रुद्धस्तोत्रैरिव महाद्विपम् ।
उवाच चैनं मेधावी विगृह्य स्मारयन्निव ॥ ९-२७-४८ (६१६७०)
क्षत्रधर्मे स्थिरो भूत्वा युध्यस्व पुरुषो भव ।
यत्तदा भाषसे मूढ गृह्णन्नक्षान्सभातले ।

फलमद्य प्रपद्यस्व कर्मणस्तस्य दुर्मते ॥ ९-२७-४९ (६१६७१)
निहतास्ते दुरात्मानो येऽस्मानवहसन्पुरा ।
दुर्योधनः कुलाङ्गारः शिष्टस्त्वं चास्य मातुलः ॥ ९-२७-५० (६१६७२)
अद्य ते निहनिष्यामि क्षुरेणोन्मथितं शिरः ।
वृक्षात्फलमिवाविद्धं लगुडेन प्रमाथिना ॥ ९-२७-५१ (६१६७३)
एवमुक्त्वा महाराज सहदेवो महाबलः ।
सङ्क्रुद्धो रणशार्दूलो वेगेनाभिजगाम तम् ॥ ९-२७-५२ (६१६७४)
अभिगम्य सुदुर्धर्षः सहदेवो युधां पतिः ।
विकृष्य बलवच्चापं क्रोधेन प्रज्वलन्निव ॥ ९-२७-५३ (६१६७५)
शकुनिं दशभिर्विद्ध्वा चतुर्भिश्चास्य वाजिनः ।
छत्रं ध्वजं धनुश्चास्य च्छित्त्वा सिंह इवानदत् ॥ ९-२७-५४ (६१६७६)
छिन्नध्वजधनुश्छत्रः सहदेवेन सौबलः ।
कृतो विद्धश्च बहुभिः सर्वमर्मसु सायकैः ॥ ९-२७-५५ (६१६७७)
ततो भूयो महाराज सहदेवः प्रतापवान् ।
शकुनेः प्रेषयान्मास शरवृष्टिं दुरासदाम् ॥ ९-२७-५६ (६१६७८)
ततस्तु क्रुद्धः सुबलस्य पुत्रो
माद्रीसुतं सहदेवं विमर्दे ।
प्रासेन जाम्बूनदभूषणेन
जिघांसुरेकोऽभिपपात शीघ्रम् ॥ ९-२७-५७ (६१६७९)
माद्रीसुतस्तस्य समुद्यतं तं
प्रासं सुवृत्तौ च भुजौ रणाग्रे ।
भल्लैस्त्रिभिर्युगपत्सञ्चकर्त
ननाद चोच्चैस्तरसाऽऽजिमध्ये ॥ ९-२७-५८ (६१६८०)
तस्याशुकारी सुसमाहितेन
सुवर्णपुङ्खेन दृढायसेन ।
भल्लेन सर्वावरणातिगेन
शिरः शरीरात्प्रममाथ भूयः ॥ ९-२७-५९ (६१६८१)
शरेण कार्तस्वरभूषितेन
दिवाकराभेण सुसंहितेन ।
हृतोत्तमाङ्गो युधि पाण्डवेन
पपात भूमौ सुबलस्य पुत्रः ॥ ९-२७-६० (६१६८२)
स तच्छिरो वेगवता शरेण
सुवर्णपुङ्खेन शिलाशितेन ।
प्रावेरयत्कुपितः पाण्डुपुत्रो
यत्तत्कुरूणामनयस्य मूलम् ॥ ९-२७-६१ (६१६८३)
भुजौ सुवृत्तौ प्रचकर्त वीरः

पश्चात्कबन्धं रुधिरावसिक्तम् ।
विस्पन्दमानं निपपात घोरं
रथोत्तमात्पार्थिव पार्थिवस्य ॥ ९-२७-६२ (६१६८४)
हृतोत्तमाङ्गं शकुनिं समीक्ष्य
भूमौ शयानं रुधिरार्द्रगात्रम् ।
योधास्त्वदीया भयनष्टसत्वा
दिशः प्रजग्मुः प्रगृहीतशस्त्राः ॥ ९-२७-६३ (६१६८५)
प्रविद्रुताः शुष्कमुखा विसञ्ज्ञा
गाण्डीवघोषेण समाहताश्च ।
भयार्दिता भग्नरथाश्वनागाः
पदातयश्चैव सधार्तराष्ट्राः ॥ ९-२७-६४ (६१६८६)
ततो रथाच्छकुनिं पातयित्वा
मुदान्विता भारत पाण्डवेयाः
शङ्खान्प्रदध्युः समरेऽतिहृष्टाः
सकेशवाः सैनिकान्हर्षयन्तः ॥ ९-२७-६५ (६१६८७)
तं चापि सर्वे प्रतिपूजयन्तो
दृष्ट्वा ब्रुवाणाः सहदेवमाजौ ।
दिष्ट्या हतो नैकृतिको महात्मा
सहात्मजो वीर रणे त्वयेति ॥ ॥ ९-२७-६६ (६१६८८)

इति श्रीमन्महाभारते शल्यपर्वणि शल्यवधपर्वणि
अष्टादशदिवसयुद्धे सप्तविंशोऽध्यायः ॥ २७ ॥
Mahabharata - Shalya Parva - Chapter Footnotes

९-२७-७ अलङ्कृतमिवाकाशं इति क पाठः ॥
९-२७-४९ यत्तदा हृष्यसे मृढ ग्लहन्नक्षैः इति झ पाठः ॥
९-२७-२७ सप्तविंशोऽध्यायः ॥

---

शल्यपर्व-अध्यय०२८
॥ श्रीः ॥
९.२८. अध्यायः २८

Mahabharata - Shalya Parva - Chapter Topics
हतावशिष्टे बले पाण्डवैर्निहते दुर्योधनेन पलायने निर्धारणम् ॥१ ॥

Mahabharata - Shalya Parva - Chapter Text

९-२८-० (६१६८९)
सञ्जय उवाच। ९-२८-०क्ष् (५१२६)
ततः क्रुद्धा महाराज सौबलस्य पदानुगाः ।
त्यक्त्वा जीवितमाक्रन्दे पाण्डवान्पर्यवारयन् ॥ ९-२८-१ (६१६९०)
तानर्जुनः प्रत्यगृह्णात्सहदेवजये धृतः ।
भीमसेनश्च तेजस्वी क्रुद्धाशीविषदर्शनः ॥ ९-२८-२ (६१६९१)
शक्त्यृ-ष्टिप्रासहस्तानां सहदेवं जिघांसताम् ।
सङ्कल्पमकरोन्मोघं गाण्डीवेन धनञ्जयः ॥ ९-२८-३ (६१६९२)
सङ्गृहीतायुधान्बाहून्योधानामभिधावताम् ।
भल्लैश्चिच्छेद बीभत्सुः शिरांस्यपि हयानपि ॥ ९-२८-४ (६१६९३)
ते हयाः प्रत्यपद्यन्त वसुधां विगतासवः ।
चरता लोकवीरेण प्रहताः सव्यसाचिना ॥ ९-२८-५ (६१६९४)
ततो दुर्योधनो राजा दृष्ट्वा स्वबलसङ्क्षयम् ।
हतशेषान्समानीय क्रुद्धो रथगणान्बहून् ॥ ९-२८-६ (६१६९५)
कुञ्जरांश्च हयांश्चैव पादातांश्च समन्ततः ।
उवाच दुःखितान्सर्वान्धार्तराष्ट्र इदं वचः ॥ ९-२८-७ (६१६९६)
समासाद्य रणे सर्वान्पाण्डवान्ससुहृद्गणान् ।
पाञ्चाल्यं चापि सबलं हत्वा शीघ्रं न्यवर्तत ॥ ९-२८-८ (६१६९७)
तस्य ते शिरसा गृह्य वचनं युद्धदुर्मदाः ।
अभ्युद्ययू रणे पार्थांस्तव पुत्रस्य शासनात् ॥ ९-२८-९ (६१६९८)
तानभ्यापततः शीघ्रं हतशेषान्महारणे ।
शरैराशीविषाकारैः पाण्डवाः समवाकिरन् ॥ ९-२८-१० (६१६९९)
तत्सैन्यं भरतश्रेष्ठ मुहूर्तेन महात्मभिः ।
अवध्यत रणं प्राप्य त्रातारं नाभ्यविन्दत ॥ ९-२८-११ (६१७००)
पलायमानं तु भयान्नावतिष्ठति दंशितम् ।
अश्वैर्विपरिधावद्भिः सैन्येन रजसा वृते ॥ ९-२८-१२ (६१७०१)
न प्राज्ञायन्त समरे दिशः सप्रदिशस्तथा ।
ततस्तु पाण्डवानीकान्निःसृत्य बहवो जनाः ॥ ९-२८-१३ (६१७०२)
अभ्यघ्नंस्तावकान्युद्धे मुहूर्तादिव भारत ।
ततो निःशेषमभवत्तत्सन्यं तव भारत ॥ ९-२८-१४ (६१७०३)
अक्षौहिण्यः समेतास्तु तव पुत्रस्य भारत ।
एकादश हता युद्धे ताः प्रभो पाण्डुसृञ्जयैः ॥ ९-२८-१५ (६१७०४)
तेषु राजसहस्रेषु तावकेषु महात्मसु ।
एको दुर्योधनो राजन्नदृश्यत भृशं क्षतः ॥ ९-२८-१६ (६१७०५)
ततो वीक्ष्य दिशः सर्वा दृष्ट्वा शून्यां च मेदिनीम् ।

विहीनः सर्वयोधैश्च पाण्डवान्वीक्ष्य संयुगे ॥ ९-२८-१७ (६१७०६)
मुदितान्सर्वतः सिद्धान्नर्दमानान्समन्ततः ।
बाणशब्दरवांश्चैव श्रुत्वा तेषां महात्मनाम् ॥ ९-२८-१८ (६१७०७)
दुर्योधनो महाराज कश्मलेनाभिसंवृतः ।
अपयो मनश्चक्रे विहीनबलवाहनः ॥ ॥ ९-२८-१९ (६१७०८)

इति श्रीमन्महाभारते शल्यपर्वणि ह्रदप्रवेशपर्वणि
अष्टादशदिवसयुद्धे अष्टाविंशोऽध्यायः ॥ २८ ॥

---

शल्यपर्व-अध्यय०२९
॥ श्रीः ॥
९.२९. अध्यायः २९

Mahabharata - Shalya Parva - Chapter Topics
पाण्डवैर्निहतसहायस्य दुर्योधनस्य गदामादाय ह्रदं प्रति प्रस्थानम् ॥ १ ॥
सञ्जयसंहारायासिमुद्यच्छता सात्यकिना व्यासवचनात्तद्विमोचनम् ॥ २ ॥
हास्तिनपुरं गच्छतः सञ्जयस्य मध्येमार्गं दुर्योधनदर्शनम् ॥ ३ ॥
तेन तस्मिन्धृतराष्ट्राय स्ववृत्तान्तनिवेदनचोदनपूर्वकं ह्रदं
प्रविश्य मायया जलस्तम्भनम् ॥ ४ ॥
तत्रागतैर्द्रौणिकृपकृतवर्मभिः सञ्जयाद्दुर्योधनस्य
ह्रदप्रवेशं विज्ञाय विलप्य पुनः शिबिरगमनम् ॥ ५ ॥
ततो वृद्धपरिजनैर्युयुत्सुना च राजदाराणां नगरप्रापणम् ॥ ६ ॥

Mahabharata - Shalya Parva - Chapter Text

९-२९-० (६१७०९)
धृतराष्ट्र उवाच। ९-२९-०क्ष् (५१२७)
निहते मामके सैन्ये निःशेषे शिबिरे कृते ।
पाण्डवानां बले सूत किन्नु शेषमभूत्तदा ॥ ९-२९-१ (६१७१०)
एतन्मे पृच्छतो ब्रूहि कुशलो ह्यसि सञ्जय ।
यच्च दुर्योधनो मानी कृतवांस्तनयो मम ।
वलक्षयं तथा दृष्ट्वा स एकः पृथिवीपतिः ॥ ९-२९-२ (६१७११)
सञ्जय उवाच। ९-२९-३क्ष् (५१२८)
रथानां द्वे सहस्रे तु सप्त नागशतानि च ।
पञ्च चाश्वसहस्राणि पत्तीनामयुतानि च ॥ ९-२९-३ (६१७१२)
एतच्छेषमभूद्राजन्पाण्डवानां महद्बलम् ।

परिगृह्य हि यद्युद्धे धृष्टद्युम्नो व्यवस्थितः ॥ ९-२९-४ (६१७१३)
एकाकी भरतश्रेष्ठ ततो दुर्योधनो नृपः ।
नापश्यत्समरे कञ्चित्सहायं रथिनां वरः ॥ ९-२९-५ (६१७१४)
नर्दमानान्परान्दृष्ट्वा स्वबलस्य च सङ्क्षयम् ।
दृष्ट्वा भरतशार्दूलः कश्मलेनाभिसंवृतः ।
हतं स्वहयमुत्सृज्य प्राङ्मुखः प्राद्रावद्भयात् ॥ ९-२९-६ (६१७१५)
एकादशचमूभर्ता पुत्रो दुर्योधनस्तव ।
गदामादाय तेजस्वी पदातिः प्रस्थितो ह्रदम् ॥ ९-२९-७ (६१७१६)
नातिदूरं ततो गत्वा पद्भ्यामेव नराधिपः ।
सस्मार वचनं क्षत्तुर्धर्मशीलस्य धीमतः ॥ ९-२९-८ (६१७१७)
इदं नूनं महाप्राज्ञो विदुरो दृष्टवान्पुरा ।
महद्व्यसनमस्माकं क्षत्रियाणां च सर्वशः ॥ ९-२९-९ (६१७१८)
एवं विचिन्तयानस्तु प्रविविक्षुर्ह्रदं नृपः ।
दुःखसन्तप्तहृदयो दृष्ट्वा राजन्बलक्षयम् ॥ ९-२९-१० (६१७१९)
ग्दशैकाक्षौहिणीभर्ता तदा दुर्योधनोऽपि सन् ।
प्राप्तवान्व्यसनं तीव्रं दैवं हि बलवत्तरम्'॥ ९-२९-११ (६१७२०)
पाण्डवास्तु महाराज धृष्टद्युम्नपुरोगमाः ।
अभ्यद्रवन्त सङ्क्रुद्धास्तव राजन्बलं प्रति ॥ ९-२९-१२ (६१७२१)
शक्त्यृष्टिप्रासहस्तानां बलानामभिगर्जताम् ।
सङ्कल्पमकरोन्मोघं गाण्डीवेन धनञ्जयः ॥ ९-२९-१३ (६१७२२)
तान्हत्वा निशितैर्बाणैः सामात्यान्सह बन्धुभिः ।
रथे श्वेतहये तिष्ठन्नर्जुनो बह्वशोभत ॥ ९-२९-१४ (६१७२३)
सुबलस्य हते पुत्रे सवाजिरथकुञ्जरे ।
महावनमिव च्छिन्नमभवत्तावकं बलम् ॥ ९-२९-१५ (६१७२४)
अनेकशतसाहस्रे बले दुर्योधनस्य ह ।
नान्यो महारथो राजञ्जीवमानो व्यदृश्यत ॥ ९-२९-१६ (६१७२५)
द्रोणपुत्रादृते वीरात्तथैव कृतवर्मणः ।
कृपाच्च गौतमाद्राजन्पार्थिवाच्च तवात्मजात् ॥ ९-२९-१७ (६१७२६)
धृष्टद्युम्नस्तु मां दृष्ट्वा हसन्सात्यकिमब्रवीत् ।
किमनेन गृहीतेन नानेनार्थोऽस्ति जीवता ॥ ९-२९-१८ (६१७२७)
धृष्टद्युम्नवचः श्रुत्वा शिनेर्नप्ता महारथः ।
उद्यम्य निशितं खड्गं हन्तुं मामुद्यतस्तदा ॥ ९-२९-१९ (६१७२८)
तमागम्य महाप्राज्ञः कृष्णद्वैपायनोऽब्रवीत् ।
मुच्यतां सञ्जयो जीवन्न हन्तव्यः कथञ्चन ॥ ९-२९-२० (६१७२९)
द्वैपायनवचः श्रुत्वा शिनेर्नप्ता कृताञ्जलिः ।
ततो मामब्रवीन्मुक्त्वा स्वस्ति सञ्जय साधय ॥ ९-२९-२१ (६१७३०)

अनुज्ञातस्त्वहं तेन न्यस्तवर्मा निरायुधः ।
प्रातिष्ठं येन नगरं सायाह्ने रुधिरोक्षितः ॥ ९-२९-२२ (६१७३१)
क्रोशमात्रमपक्रान्तं गदापाणिमवस्थितम् ।
एकं दुर्योधनं राजन्नपश्यं भृशविक्षतम् ॥ ९-२९-२३ (६१७३२)
स तु मामश्रुपूर्णाक्षो नाशक्नोदभिवीक्षितुम् ।
उपप्रैक्षत मां दृष्ट्वा तथा दीनमवस्थितम् ॥ ९-२९-२४ (६१७३३)
तं चाहमपि शोचन्तं दृष्ट्वैकाकिनमाहवे ।
मुहूर्तं नाशकं वक्तुमतिदुःखपरिप्लुतः ॥ ९-२९-२५ (६१७३४)
ग्यस्य मूर्धाभिषिक्तानां सहस्रमणिमौलिनाम् ।
आहृत्य च करं सर्वं स्वस्य वेश्म समागतम् ॥ ९-२९-२६ (६१७३५)
चतुःसागरपर्यन्ता पृथिवी रत्नभूषिता ।
कर्णेनैकेन यस्यार्थे करमाहारिता पुरा ॥ ९-२९-२७ (६१७३६)
यस्याज्ञा परराष्ट्रेषु कर्णेनैव प्रसारिता ।
नाभवद्यस्य शस्त्रेषु खेदो राज्ञः प्रशासतः ॥ ९-२९-२८ (६१७३७)
आसीनो हास्तिनपुरे क्षेमं राज्यमकण्टकम् ।
अन्वपालयदैश्वर्यात्कुबेरमपि नास्मरत् ॥ ९-२९-२९ (६१७३८)
भवनाद्भवनं राजन्प्रयातुं पृथिवीपते ।
देवालयप्रदेशे च पन्था यस्य हिरण्मयः ॥ ९-२९-३० (६१७३९)
पताकावृतसूर्यांशुतोरणोच्छ्रितशोभिताः ।
प्रयाणे पृथिवीभर्तुर्धन्यानामभवन्गृहाः ॥ ९-२९-३१ (६१७४०)
आरुह्यैरावतप्रख्यं नागमिन्द्रसमो बली ।
विभूत्या सुमहत्या यः प्रयाति पृथिवीपते ॥ ९-२९-३२ (६१७४१)
तं भृशक्षतसर्वाङ्गं पद्भ्यामेव धरातले ।
तिष्ठन्तमेकं दृष्ट्वा तु ममाभूत्क्लेश उत्तमः ॥ ९-२९-३३ (६१७४२)
तस्य चैवंविधस्याद्य जगन्नाथस्य भूपते ।
आपदप्रतिमैवाभूद्बलीयान्विधिरेव हि'॥ ९-२९-३४ (६१७४३)
ततोऽस्मै तदहं सर्वमुक्तवान्ग्रहणं तदा ।
द्वैपायनप्रसादाच्च जीवतो मोक्षमाहवे ॥ ९-२९-३५ (६१७४४)
स मुहूर्तमिव ध्यात्वा प्रतिलभ्य च चेतनाम् ।
भ्रातॄंश्च सर्वसैन्यानि पर्यपृच्छत मां ततः ॥ ९-२९-३६ (६१७४५)
तस्मै तदहमाचक्षे सर्वं प्रत्यक्षदर्शिवान् ।
भ्रातॄंश्च निहतान्सर्वान्सैन्यं च विनिपातितम् ॥ ९-२९-३७ (६१७४६)
त्रयः किल रथाः शिष्टास्तावकानां नराधिप ।
इति प्रस्थानकाले मां कृष्णद्वैपायनोऽब्रवीत् ॥ ९-२९-३८ (६१७४७)
स दीर्घमिव निःश्वस्य प्रत्यवेक्ष्य पुनः पुनः ।
असौ मां पाणिना स्पृष्ट्वा पुत्रस्ते पर्यभाषत ॥ ९-२९-३९ (६१७४८)

त्वदन्यो नेह सङ्ग्रामे कश्चिज्जीवति सञ्जय ।
द्वितीयं नेह पश्यामि ससहायाश्च पाण्डवाः ॥ ९-२९-४० (६१७४९)
ब्रूयाः सञ्जय राजानं प्रज्ञाचक्षुषमीश्वरम् ।
दुर्योधनस्तव सुतः प्रविष्टो ह्रदमित्युत ॥ ९-२९-४१ (६१७५०)
सुहृद्भिस्तादृशैर्हीनः पुत्रैर्भ्रातृभिरेव च ।
पाण्डवैश्च हृते राज्ये को नु जीवेत मादृशः ॥ ९-२९-४२ (६१७५१)
आचक्षीथाः सर्वमिदं मां च मुक्तं महाहवात् ।
अस्मिंस्तोयह्रदे गुप्तं जीवन्तं भृशविक्षतम् ॥ ९-२९-४३ (६१७५२)
एवमुक्त्वा महाराज प्राविशत्तं महाह्रदम् ।
अस्तम्भयत तोयं च मायया मनुजाधिपः ॥ ९-२९-४४ (६१७५३)
तस्मिन्ह्रदं प्रविष्टे तु त्रीन्रथाञ्श्रान्तवाहनान् ।
अपश्यं सहितानेकस्तं देशं समुपेयुषः ॥ ९-२९-४५ (६१७५४)
कृपं शारद्वतं वीरं द्रौणिं च रथिनां वरम् ।
भोजं च कृतवर्माणं सहिताञ्शरविक्षतान् ॥ ९-२९-४६ (६१७५५)
ते सर्वे मामभिप्रेक्ष्य तूर्णमश्वाननोदयन् ।
उपयाय तु मामूचुर्दिष्ट्या जीवसि सञ्जय ॥ ९-२९-४७ (६१७५६)
अपृच्छंश्चैव मां सर्वे पुत्रं तव जनाधिपम् ।
कच्चिद्दुर्योधनो राजा स नो जीवति सञ्जय ॥ ९-२९-४८ (६१७५७)
आख्यातवानहं तेभ्यस्तदा कुशलिनं नृपम् ।
तच्चैव सर्वमाचक्षं यन्मां दुर्योधनोऽब्रवीत् ॥ ९-२९-४९ (६१७५८)
ह्रदं चैवाहमाचक्षं यं प्रविष्टो नराधिपः ।
अश्वत्थामा तु तद्राजन्निशम्य वचनं मम ॥ ९-२९-५० (६१७५९)
तं ह्रदं विपुलं प्रेक्ष्य करुणं पर्यदेवयत् ।
अहो धिक्स न जानाति जीवतोऽस्मान्नराधिप ।
पर्याप्ता हि वयं तेन सह योधयितुं परान् ॥ ९-२९-५१ (६१७६०)
ते तु तत्र चिरं कालं विलप्य च महारथाः ।
प्राद्रवन्रथिनां श्रेष्ठा दृष्ट्वा पाण्डुसुतान्रणे ॥ ९-२९-५२ (६१७६१)
ते तु मां रथमारोप्य कृपस्य सुपरिष्कृतम् ।
सेनानिवेशमाजग्मुर्हतशेषास्त्रयो रथाः ॥ ९-२९-५३ (६१७६२)
तत्र गुल्माः परिक्षिप्ताः सूर्ये चास्तमिते सति ।
सर्वे विचुक्रुशुः श्रुत्वा पुत्राणां तव संक्षयम् ॥ ९-२९-५४ (६१७६३)
ततो वृद्धा महाराज योषितां रक्षिणो नराः ।
राजदारानुपादाय प्रययुर्नगरं प्रति ॥ ९-२९-५५ (६१७६४)
तत्र विक्रोशमानानां रुदतीनां च सर्वशः ।
प्रादुरासीन्महाञ्शब्दः श्रुत्वा तद्बलसङ्क्षयम् ॥ ९-२९-५६ (६१७६५)
ततस्ता योषितो राजन्रुदन्त्यो वै मुहुर्मुहुः ।

कुरर्य इव शब्देन नादयन्त्यो महीतलम् ॥ ९-२९-५७ (६१७६६)
आजघ्नुः करजैश्चापि पाणिभिश्च शिरांस्युत ।
लुलुचुश्च तदा केशान्क्रोशन्त्यस्तत्रतत्र ह ॥ ९-२९-५८ (६१७६७)
हाहाकारविनादिन्यो विनिघ्नन्त्य उरांसि च ।
शोचन्त्यस्तत्र रुरुदुः क्रन्दमाना विशाम्पते ॥ ९-२९-५९ (६१७६८)
ततो दुर्योधनामात्याः साश्रुकण्ठा भृशातुराः ।
राजदारानुपामन्त्र्य प्रययुर्नगरं प्रति ॥ ९-२९-६० (६१७६९)
वेत्रव्यासक्तहस्ताश्च द्वाराध्यक्षा विशाम्पते ।
शयनीयानि शुभ्राणि स्पर्ध्यास्तरणवन्ति च ।
समादाय ययुस्तूर्णं नगरं दाररक्षिणः ॥ ९-२९-६१ (६१७७०)
आस्थायाश्वतरीयुक्तान्स्यन्दनानपरे पुनः ।
स्वान्स्वान्दारानुपादाय प्रययुर्नगरं प्रति ॥ ९-२९-६२ (६१७७१)
अदृष्टपूर्वा या नार्यो भास्करेणापि वेश्मसु ।
ददृशुस्ता महाराज जना याताः पुरं प्रति ॥ ९-२९-६३ (६१७७२)
ताः स्त्रियो भरतश्रेष्ठ सौकुमार्यसमन्विताः ।
प्रययुर्नगरं तूर्णं हतस्वपतिबान्धवाः ॥ ९-२९-६४ (६१७७३)
आगोपालाविपालेभ्यो द्रवन्तो नगरं प्रति ।
ययुर्मनुष्याः सम्भ्रान्ता भीमसेनभयार्दिताः ॥ ९-२९-६५ (६१७७४)
अपिचैषां भयं तीव्रं पार्थेभ्योऽभूत्सुदारुणम् ।
प्रेक्षमाणास्तदाऽन्योन्यमाधावन्नगरं प्रति ॥ ९-२९-६६ (६१७७५)
तस्मिंस्तथा वर्तमाने विद्रवे भृशदारुणे ।
युयुत्सुः शोकसम्मूढः प्राप्तकालमचिन्तयत् ॥ ९-२९-६७ (६१७७६)
जितो दुर्योधनः सङ्ख्ये पाण्डवैर्भीमविक्रमैः ।
एकादशचमूभर्ता भ्रातरश्चास्य सूदिताः ॥ ९-२९-६८ (६१७७७)
हताश्च कुरवः सर्वे भीष्मद्रोणपुरः सराः ।
अहमेको विमुक्तस्तु भाग्ययोगाद्यदृच्छया ॥ ९-२९-६९ (६१७७८)
विद्रुतानि च सर्वाणि शिबिराद्वै समन्ततः ।
इतस्ततः पलायन्ते हतनाथा हतौजसः ॥ ९-२९-७० (६१७७९)
अदृष्टपूर्वा दुःखार्ता भयव्याकुललोचनाः ।
हरिणा इव वित्रस्ता वीक्षमाणा दिशो दश ॥ ९-२९-७१ (६१७८०)
दुर्योधनस्य सचिवा ये केचिदवशेषिताः ।
राजदारानुपादाय प्रययुर्नगरं प्रति ।
प्राप्तकालमहं मन्ये प्रवेशं तैः सह प्रभो ॥ ९-२९-७२ (६१७८१)
युधिष्ठिरमनुज्ञाप्य वासुदेवं तथैव च ।
एतमर्थं महाबाहुरुभयोः सन्न्यवेदयत् ॥ ९-२९-७३ (६१७८२)
तस्य प्रीतोऽभवद्राजा नित्यं करुणवेदिता ।

परिष्वज्य महाबाहुर्वैश्यापुत्रं व्यसर्जयत् ॥ ९-२९-७४ (६१७८३)
ततः स रथमास्थाय द्रुतमश्वानचोदयत् ।
संवाहयितवांश्चापि राजदारान्पुरं प्रति ॥ ९-२९-७५ (६१७८४)
तैश्चैव सहितः क्षिप्रमस्तं गच्छति भास्करे ।
प्रविष्टो हास्तिनपुरं बाष्पकण्ठोऽश्रुलोचनः ॥ ९-२९-७६ (६१७८५)
अपश्यत महाप्राज्ञं विदुरं साश्रुलोचनम् ।
राज्ञः समीपान्निष्क्रान्तं शोकोपहतचेतसम् ॥ ९-२९-७७ (६१७८६)
तमब्रवीत्सत्यधृतिः प्रणतं त्वग्रतः स्थितम् ॥ ९-२९-७८ (६१७८७)
विदुर उवाच। ९-२९-७९क्ष् (५१२९)
दिष्ट्या कुरुक्षये वृत्ते अस्मिंस्त्वं पुत्र जीवसि ।
विना राज्ञः पर्वेशार्द्वै किमसि त्वमिहागतः ।
एतद्वै कारणं सर्वं विस्तरेण निवेदय ॥ ९-२९-७९ (६१७८८)
युयुत्सुरुवाच। ९-२९-८०क्ष् (५१३०)
निहते शकुनौ तत्र सज्ञातिसुतबान्धवे ।
हतशेषपरीवारो राजा दुर्योधनस्ततः ।
स्वकं स हयमुत्सृज्य प्राङ्मुखः प्राद्रवद्भयात् ॥ ९-२९-८० (६१७८९)
अपक्रान्ते तु नृपतौ स्कन्धावारनिवेशनात् ।
भयव्याकुलितं सर्वं प्राद्रावन्नगरं प्रति ॥ ९-२९-८१ (६१७९०)
ततो राज्ञः कलत्राणि भ्रातॄणां चास्य सर्वतः ।
वाहनेषु समारोप्य अध्यक्षाः प्राद्रावन्भयात् ॥ ९-२९-८२ (६१७९१)
ततोऽहं समनुज्ञाप्य राजानं सहकेशवम् ।
प्रविष्टो हास्तिनपुरं रक्षन्लोकस्य वाच्यताम् ॥ ९-२९-८३ (६१७९२)
सञ्जय उवाच। ९-२९-८४क्ष् (५१३१)
एतच्छ्रुत्वा तु वचनं वैश्यापुत्रेण भाषितम् ।
प्राप्तकालमिति ज्ञात्वा विदुरः सर्वधर्मवित् ।
अपूजयदमेयात्मा युयुत्सुं वाक्यमब्रवीत् ॥ ९-२९-८४ (६१७९३)
प्राप्तकालमिदं सर्वं ब्रुवता भरतक्षये ।
श्ररक्षितः कुलधर्मश्च सानुक्रोशतया त्वया ॥ ९-२९-८५ (६१७९४)
दिष्ठ्या त्वामिह सङ्ग्राम दस्माद्वीरक्षयात्पुरम् ।
समागतमपश्याम ह्यंशुमन्तमिव प्रजाः ॥ ९-२९-८६ (६१७९५)
अन्धस्यं नृपतेर्यष्टिर्लुब्धस्यादीर्घदर्शिनः ।
बहुशो याच्यमानस्य दैवोपहतचेतसः ।
त्वमेको व्यसनार्तस्य ध्रियसे पुत्र सर्वथाघ ॥ ९-२९-८७ (६१७९६)
अद्य त्वमिह विश्रान्तः श्वोऽभिगन्ता युधिष्ठिरम् ।
एतावदुक्त्वा वचनं विदुरः साश्रुलोचनः ।
युयुत्सुं समनुज्ञाप्य प्रविवेश नृपक्षयम् ॥ ९-२९-८८ (६१७९७)

श्पौरजानपदैर्दुःखाद्धाहेति भृशनादितम् ।
निरानन्दं गतश्रीकं हृतारामिवाशयम् ।
शून्यरूपमपध्वस्तं दुःखाद्दुःखतरोऽभवत् ॥ ९-२९-८९ (६१७९८)
विदुरः सर्वधर्मज्ञो विक्लवेनान्तरात्मना ।
विवेश नगरे राजन्निशश्वास शनैः शनैः ॥ ९-२९-९० (६१७९९)
युयुत्सुरपि तां रात्रिं स्वगृहे न्यवसत्तदा ।
वन्द्यमानः स्वकैश्चापि नाभ्यनन्दत्सुदुःखितः ।
चिन्तयानः क्षयं तीव्रं भरतानां परस्परम् ॥ ॥ ९-२९-९१ (६१८००)

इति श्रीमन्महाभारते शल्यपर्वणि ह्रदप्रवेशपर्वणि
अष्टादशदिवसयुद्धे एकोनत्रिंशोऽध्यायः ॥ २९ ॥
Mahabharata - Shalya Parva - Chapter Footnotes

९-२९-३८ हतो दुर्योधन इति क पाठः ॥
९-२९-३९ अहमेकोऽवशिष्टस्तु इति क पाठः ॥
९-२९-२९ एकोनत्रिंशोऽध्यायः ॥

---

शल्यपर्व-अध्यय०३०
॥ श्रीः ॥
९.३०. अध्यायः ३०

Mahabharata - Shalya Parva - Chapter Topics
कृपद्रौणिकृतवर्मसु ह्रदमेत्य दुर्योधनेन भापमाणेषु तत्र
यदृच्छोपागतैर्व्याधैस्तद्दर्शनम् ॥ १ ॥
व्याधनिवेदनेन सपरिवारैः पाण्डवैर्ह्रदं प्रत्यागमनम् ॥ २ ॥
तद्दर्शनेन कृपादिभिर्दुर्योधनाभ्यनुज्ञानेन
दूरस्थन्यग्नोधतरुमेत्य तन्मूले उपवेशनम् ॥ ३ ॥
दुर्योधनेन पुनर्जलस्तम्भनेन ह्रदप्रवेशनम् ॥ ४ ॥

Mahabharata - Shalya Parva - Chapter Text

९-३०-० (६१९०२)
ग्सञ्जय उवाच। ९-३०-०क्ष् (५१३३)
मुहूर्तादिव राजेन्द्र सर्वं शून्यमदृश्यत ।
मत्तवारणसंघुष्टं शिबिरं विद्रुते बले ॥ ९-३०-१ (६१९०३)
यत्र शब्देन महता नान्वबुध्यन्महारथाः ।

तत्र शब्दं न शृणुमो मनुष्यस्यापि कस्यचित्' ॥ ९-३०-२ (६११९०४)
धृतराष्ट्र उवाच। ९-३०-३क्ष् (५१३४)
हतेषु सर्वसैन्येषु पाण्डुपुत्रै रणाजिरे ।
मामकाश्चावशिष्टास्ते किमकुर्वत सञ्जय ॥ ९-३०-३ (६११९०५)
कृतवर्मा कृपश्चैव द्रोणपुत्रश्च वीर्यवान् ।
दुर्योधनश्च मन्दात्मा राजा किमकरोत्तदा ॥ ९-३०-४ (६११९०६)
सञ्जय उवाच। ९-३०-५क्ष् (५१३५)
सम्प्राद्रवत्सु दारेषु क्षत्रियाणां महात्मनाम् ।
विद्रुते शिबिरे शून्ये भृशोद्विग्नास्त्रयो रथाः ॥ ९-३०-५ (६११९०७)
निशम्य पाण्डुपुत्राणां तदा वैजयिनां स्वनम् ।
विद्रुतं शिबिरं दृष्ट्वा सायाह्ने राजगृद्धिनः ।
स्थानं नारोचयंस्तत्र ततस्ते ह्रदमभ्ययुः ॥ ९-३०-६ (६११९०८)
युधिष्ठिरोऽपि धर्मात्मा भ्रातृभिः सहितो रणे ।
हृष्टः पर्यपतद्राजन्दुर्योधनवधेप्सया ॥ ९-३०-७ (६११९०९)
मार्गमाणास्तु सङ्क्रुद्धास्तव पुत्रं जयैषिणः ।
यत्नतोऽन्वेषमाणास्ते नैवापश्यञ्जनाधिपम् ॥ ९-३०-८ (६११९१०)
यदा दुर्योधनो युद्धं त्यक्त्वा पद्भ्यां पराक्रमत् ।
तं ह्रदं प्राविशच्चापि विष्टभ्यापः स्वमायया ॥ ९-३०-९ (६११९११)
यदा तु पाण्डवाः सर्वे सुपरिश्रान्तवाहनाः ।
ततः स्वशिबिरं प्राप्य व्यतिष्ठन्त ससैनिकाः ॥ ९-३०-१० (६११९१२)
ततः कृपश्च द्रौणिश्च कृतवर्मा च सात्वतः ।
सन्निविष्टेषु पार्थेषु प्रययुस्तं ह्रदं शनैः ॥ ९-३०-११ (६११९१३)
ते तं ह्रदं समासाद्य यत्र शेते जनाधिपः ।
अभ्यभाषन्त दुर्धर्षं राजानं सुप्तमम्भसि ॥ ९-३०-१२ (६११९१४)
राजन्नुत्तिष्ठ युध्यस्व सहास्माभिर्युधिष्ठिरम् ।
जित्वा वा पृथिवीं भुङ्क्ष्व हतो वा स्वर्गमाप्नुहि ॥ ९-३०-१३ (६११९१५)
तेषामपि बलं सर्वं हतं दुर्योधन त्वया ।
प्रतिविद्धाश्च भूयिष्ठं ये शिष्टास्तत्र सैनिकाः ॥ ९-३०-१४ (६११९१६)
न ते वेगं विषहितुं शक्तास्तव विशाम्पते ।
अस्माभिरपि गुप्तस्य तस्मादुत्तिष्ठ भारत ॥ ९-३०-१५ (६११९१७)
दुर्योधन उवाच। ९-३०-१६क्ष् (५१३६)
दिष्ट्या पश्यामि वो मुक्तानीदृशात्पुरुषक्षयात् ।
पाण्डुकौरवसम्मर्दाज्जीवमानान्नरर्षभान् ॥ ९-३०-१६ (६११९१८)
विजेष्यामो वयं सर्वे विश्रान्ता विगतक्लमाः ।
भवन्तश्च परिश्रान्ता वयं च भृशविक्षताः ।
उदीर्णं च बलं तेषां तेन युद्धं न रोचये ॥ ९-३०-१७ (६११९१९)

न त्वेतदद्भुतं वीरा यद्वो महदिदं मनः ।
अस्मासु च परा शक्तिर्न तु कालः पराक्रमे ॥ ९-३०-१८ (६११२०)
विश्रम्यैकां निशामद्य भवद्भिः सहितो रणे ।
प्रतियोत्स्याम्यहं शत्रूञ्श्वो न स्याच्च श्रमो मम ॥ ९-२८-१९ (६११२१)
सञ्जय उवाच। ९-२८-२०क्ष् (५१३७)
एवमुक्तोऽब्रवीद्द्रौणी राजानं युद्धदुर्मदम् ।
उत्तिष्ठ राजन्भद्रं ते विजेष्यामो वयं परान् ॥ ९-२८-२० (६११२२)
इष्टापूर्तेन दानेन सत्येन च जपेन च ।
शपे राजन्यथा ह्यद्य निहनिष्यामि सोमकान् ॥ ९-२८-२१ (६११२३)
मा स्म यज्ञकृतां प्रीतिमाप्नुयां सज्जनोचिताम् ।
यदीमां रजनीं व्युष्टां न हि हन्मि परान्रणे ॥ ९-३०-२२ (६११२४)
नाहत्वा सर्वपाञ्चालान्विमोक्ष्ये कवचं विभो ।
उत्तिष्ठ त्वं ब्रवीम्येतत्तन्मे शृणु जनाधिप ॥ ९-३०-२३ (६११२५)
तेषु सम्बाषमाणेषु व्याधास्तं देशमाययुः ।
मांसभारपरिश्रान्ताः पानीयार्थं यदृच्छया ॥ ९-३०-२४ (६११२६)
ते हि नित्यं महाराज भीमसेनस्य लुब्धकाः ।
मांसभारानुपाजह्रुर्भक्त्या परमया विभो ॥ ९-३०-२५ (६११२७)
ते तत्र धिष्ठितास्तेषां सर्वं तद्वचनं रहः ।
दुर्योधनवचश्चैव शुश्रुवुः सङ्गता मिथः ॥ ९-३०-२६ (६११२८)
तेऽपि सर्वे महेष्वासा अयुद्धार्थिनि कौरवे ।
निर्बन्धं परमं चक्रुस्तदा वै युद्धकाङ्क्षिणः ॥ ९-३०-२७ (६११२९)
तांस्तथा समुदीक्ष्याथ कौरवाणां महारथान् ।
अयुद्धमनसं चैव राजानं स्थितमम्भसि ॥ ९-३०-२८ (६११३०)
तेषां श्रुत्वा च संवादं राज्ञश्च सलिले सतः ।
व्याधा ह्यजानन्राजेन्द्र सलिलस्थं सुयोधनम् ॥ ९-३०-२९ (६११३१)
ते पूर्वं पाण्डुपुत्रेण पृष्टा ह्यासन्सुतं तव ।
यदृच्छोपगतास्तत्र राजानं परिमार्गता ॥ ९-३०-३० (६११३२)
ततस्ते पाण्डुपुत्रस्य स्मृत्वा तद्भाषितं तदा ।
अन्योन्यमब्रुवन्राजन्मृगव्याधाः शनैरिव ॥ ९-३०-३१ (६११३३)
दुर्योधनं ख्यापयामो धनं दास्यति पाण्डवः ।
सुव्यक्तमिह नः ख्यातो ह्रदे दुर्योधनोनृपः ॥ ९-३०-३२ (६११३४)
तस्माद्गच्छामहे सर्वे यत्र राजा युधिष्ठिरः ।
आख्यातुं सलिले सुप्तं दुर्योधनममर्षणम् ॥ ९-३०-३३ (६११३५)
धृतराष्ट्रात्मजं तस्मै भीमसेनाय धीमते ।
शयानं सलिले सर्वे कथयामो धनुर्भृते ॥ ९-३०-३४ (६११३६)
स नो दास्यति सुप्रीतो धनानि बहुलान्युत ।

किं नो मांसेन शुष्केण परिक्लिष्टेन शोषिणा ॥ ९-३०-३५ (६१९३७)
एवमुक्त्वा तु ते व्याधाः सम्प्रहृष्टा धनार्थिनः ।
मांसभारानुपादाय प्रययुः शिबिरं प्रति ॥ ९-३०-३६ (६१९३८)
पाण्डवाश्च महाराज लब्धलक्षाः प्रहारिणः ।
अपश्यमानाः समरे दुर्योधनमवस्थितम् ॥ ९-३०-३७ (६१९३९)
निकृतिज्ञस्य पापस्य तस्याभिगमनेप्सया ।
चारान्सम्प्रेषयामासुः समन्तात्तद्रणाजिरे ॥ ९-३०-३८ (६१९४०)
आगम्य तु ततः सर्वे नष्टं दुर्योधनं नृपम् ।
न्यवेदयन्त सहिता धर्मराजस्य सैनिकाः ॥ ९-३०-३९ (६१९४१)
तेषां तद्वचनं श्रुत्वा चाराणां भरतर्षभ ।
चिन्तामभ्यगमत्तीव्रां निशश्वास च पार्थिवः ॥ ९-३०-४० (६१९४२)
ग्अरिशेषे जीवति तु सन्दिग्धो विजयो भवेत् ।
राज्यं लभे कथं तद्धि पूजितं विजयादिभिः'॥ ९-३०-४१ (६१९४३)
अथ स्थितानां पाण्डूनां दीनानां भरतर्षभ ।
तस्माद्देशादपक्रम्य त्वरिता लुब्धका विभो ॥ ९-३०-४२ (६१९४४)
आजग्मुः शिबिरं हृष्टा दृष्ट्वा दुर्योधनं नृपम् ।
वार्यमाणाः प्रविष्टाश्च भीमसेनस्य पश्यतः ॥ ९-३०-४३ (६१९४५)
ते तु पाण्डवमासाद्य भीमसेनं महाबलम् ।
तस्मै तत्सर्वमाचख्युर्यद्वृत्तं यच्च वै श्रुतम् ॥ ९-३०-४४ (६१९४६)
ततो वृकोदरो राजन्दत्त्वा तेषां धनं बहु ।
धर्मराजाय तत्सर्वमाचचक्षे परन्तपः ॥ ९-३०-४५ (६१९४७)
असौ दुर्योधनो राजन्विज्ञातो मम लुब्धकैः ।
संस्तभ्य सलिलं शेते यस्यार्थे परितप्यसे ॥ ९-३०-४६ (६१९४८)
तद्वचो भीमसेनस्य प्रियं श्रुत्वा विशाम्पते ।
अजातशत्रुः कौन्तेयो हृष्टोऽभूत्सह सोदरैः ॥ ९-३०-४७ (६१९४९)
तं च श्रुत्वा महेष्वासं प्रविष्टं सलिलह्रदे ।
क्षिप्रमेव ततोऽगच्छन्पुरस्कृत्य जनार्दनम् ॥ ९-३०-४८ (६१९५०)
ततः किलकिलाशब्दः प्रादुरासीद्विशाम्पते ।
पाण्डवानां प्रहृष्टानां पाञ्चालानां च सर्वशः ॥ ९-३०-४९ (६१९५१)
सिंहनादांस्ततश्चक्रुः क्ष्वेडाश्च भरतर्षभ ।
त्वरिताः क्षत्रिया राजन्नुदक्रोशन्परस्परम् ॥ ९-३०-५० (६१९५२)
ज्ञातः पापो धार्तराष्ट्रो दृष्टश्चेत्यसकृद्रणे ।
प्राक्रोशन्सोमकास्तत्र हृष्टरूपाः समन्ततः ॥ ९-३०-५१ (६१९५३)
तेषामाशु प्रयातानां रथानां तत्र वेगिनाम् ।
वभूव तुमुलः शब्दो दिवस्पृक् पृथिवीपते ॥ ९-३०-५२ (६१९५४)
दुर्योधनं परीप्सन्तस्तत्रतत्र युधिष्ठिरम् ।

अन्वयुस्त्वरितास्ते वै राजानं श्रान्तवाहनाः ॥ ९-३०-५३ (६१९५५)
अर्जुनो भीमसेनश्च माद्रीपुत्रौ च पाण्डवौ ।
धृष्टद्युम्नश्च पाञ्चाल्यः शिखण्डी चापराजितः ॥ ९-३०-५४ (६१९५६)
उत्तमौजा युधामन्युः सात्यकिश्च महारथः ।
पाञ्चालानां च ये शिष्टा द्रौपदेयाश्च भारत ।
हयाश्च सर्वे नागाश्च शतशश्च पदातयः ॥ ९-३०-५५ (६१९५७)
ततः प्राप्तो महाराज धर्मराजः प्रतापवान् ।
द्वैपायनह्रदं घोरं यत्र दुर्योधनोऽभवत् ॥ ९-३०-५६ (६१९५८)
शीतामलजलं हृद्यं द्वितीयमिव सागरम् ।
मायया सलिलं स्तभ्य यत्राभूत्ते स्थितः सुतः ॥ ९-३०-५७ (६१९५९)
अत्यद्भुतेन विधिना दैवयोगेन भारत ।
सलिलान्तर्गतः शेते दुर्दर्शः कस्यचित्प्रभो। ९-३०-५८ (६१९६०)
मानुषस्य मनुष्येन्द्र गदाहस्तो जनाधिपः ॥ ९-३०-५९ (६१९६१)
ततो दुर्योधनो राजा सलिलान्तर्गतो वसन् ।
शुश्रुवे तुमुलं शब्दं जलदोपमनिःस्वनम् ॥ ९-३०-५९ (६१९६२)
युधिष्ठिरश्च राजेन्द्र तं ह्रदं सह सोदरैः ।
आजगाम महाराज तव पुत्रवधाय वै ॥ ९-३०-६० (६१९६३)
महता शङ्खनादेन रथनेमिस्वनेन च ।
ऊर्ध्वं धुन्वन्महारेणुं कम्पयंश्चापि मेदिनीम् ॥ ९-३०-६१ (६१९६४)
यौधिष्ठिरस्य सैन्यस्य श्रुत्वा शब्दं महारथाः ।
कृतवर्मा कृपो द्रौणी राजानमिदमब्रुवन् ॥ ९-३०-६२ (६१९६५)
इमे ह्यायान्ति संहृष्टाः पाण्डवा जितकाशिनः ।
अपयास्यामहे तावदनुजानातु नो भवान् ॥ ९-३०-६३ (६१९६६)
दुर्योधनस्तु तच्छ्रुत्वा तेषां तत्र तरस्विनाम् ।
तथेत्युक्त्वा ह्रदं तं वै माययाऽस्तम्भयत्प्रभो ॥ ९-३०-६४ (६१९६७)
ते त्वनुज्ञाप्य राजानं भृशं शोकपरायणाः ।
जग्मुर्दूरे महाराज कृपप्रभृतयो रथाः ॥ ९-३०-६५ (६१९६८)
ते गत्वा दूरमध्वानं न्यग्रोधं प्रेक्ष्य मारिष ।
न्यविशन्त भृशं श्रान्ताश्चिन्तयन्तो नृपं प्रति ॥ ९-३०-६६ (६१९६९)
विष्टभ्य सलिलं सुप्तो धार्तराष्ट्रो महाबलः ।
पाण्डवाश्चापि सम्प्राप्तास्तं देशं युद्धमीप्सवः ॥ ९-३०-६७ (६१९७०)
कथं नु युद्धं भविता कथं राजा भविष्यति ।
कथं नु पाण्डवा राजन्प्रतिपत्स्यन्ति कौरवम् ॥ ९-३०-६८ (६१९७१)
इत्येवं चिन्तयानास्तु रथेभ्योऽश्वान्विमुच्य ते ।
तत्रासाञ्चक्रिरे राजन्कृपप्रभृतयो रथाः ॥ ॥ ९-३०-६९ (६१९७२)

इति श्रीमन्महाभारते शल्यपर्वणि ह्रदप्रवेशपर्वणि
अष्टादशदिवसयुद्धे त्रिंशोऽध्यायः ॥ ३० ॥
Mahabharata - Shalya Parva - Chapter Footnotes

९-३०-१८ अस्मासु च परा भक्तिर्दर्शिता कार्यगौरवात् । इति ङ। पाठः ॥
९-३०-२२ यज्ञकृतां प्रीति यज्ञादिजस्य पुण्यस्य फलम् ॥
९-३०-३९ नष्टं अदृश्यत्वं गतं लीनमित्यर्थः ॥
९-३०-३० त्रिंशोऽध्यायः ॥

---

शल्यपर्व-अध्यय०३१
॥ श्रीः ॥
९.३१. अध्यायः ३१

Mahabharata - Shalya Parva - Chapter Topics
युधिष्ठिरेण ह्रदस्थं दुर्योधनं प्रति निष्ठुरोक्तिभिः सन्तर्जनम् ॥ १ ॥
युधिष्ठिरदुर्योधनयोः संवादः ॥ २ ॥

Mahabharata - Shalya Parva - Chapter Text

९-३१-० (६१९७३)
सञ्जय उवाच। ९-३१-०क्ष् (५१३८)
ततस्तेष्वपयातेषु रथेषु त्रिषु पाण्डवाः ।
तं ह्रदं प्रत्यपद्यन्त यत्र दुर्योधनोऽभवत् ॥ ९-३१-१ (६१९७४)
आसाद्य च कुरुश्रेष्ठ तदा द्वैपायनं ह्रदम् ।
स्तम्भितं धार्तराष्ट्रेण दृष्ट्वा तं सलिलाशयम् ॥ ९-३१-२ (६१९७५)
वासुदेवमिदं वाक्यमब्रवीत्कुरुनन्दनः ।
पश्येमां धार्तराष्ट्रेण मायामप्सु प्रयोजिताम् ॥ ९-३१-३ (६१९७६)
विष्टभ्य सलिलं शेते नास्य मानुषतो भयम् ।
दैवीं मायामिमां कृत्वा सलिलान्तर्गतो ह्ययम् ॥ ९-३१-४ (६१९७७)
निकृत्या निकृतिप्रज्ञो न मे जीवन्विमोक्ष्यते ।
यद्यस्य समरे साह्यं कुरुते वज्रभृत्स्वयम् ।
तथाप्येनं हतं युद्धे लोका द्रक्ष्यन्ति माधव ॥ ९-३१-५ (६१९७८)
वासुदेव उवाच। ९-३१-६क्ष् (५१३९)
मायाविन इमां मायां मायया जहि भारत ।
मायावी मायया वध्यः सत्यमेतद्युधिष्ठिर ॥ ९-३१-६ (६१९७९)
क्रियाभ्युपायैर्बहुभिर्मायामप्सु प्रयोज्य च ।

जहि त्वं भरतश्रेष्ठ मायात्मानं सुयोधनम् ॥ ९-३१-७ (६११९८०)
क्रियाभ्युपायैरिन्द्रेण निहता दैत्यदानवाः ।
क्रियाभ्युपायैर्बलिभिर्बलिर्बद्धो महात्मना ॥ ९-३१-८ (६११९८१)
क्रियाभ्युपायपूर्वं वै हिरण्याक्षो महासुरः ।
हिरण्यकशिपुश्चैव क्रिययैव निषूदितौ ॥ ९-३१-९ (६११९८२)
वृत्रश्च निहतो राजन्क्रिययैव महाबलः ।
तथा पौलस्त्यतनयो रावणो नाम राक्षसः ।
रामेण निहतो राजन्सानुबन्धः सहानुगः ॥ ९-३१-१० (६११९८३)
क्रियया योगमास्थाय तथा त्वमपि विक्रम ॥ ९-३१-११ (६११९८४)
क्रियाभ्युपायैर्निहतौ मया राजन्पुरातनौ ।
तारकश्च महादैत्यो विप्रचित्तिश्च वीर्यवान् ॥ ९-३१-१२ (६११९८५)
वातापिरिल्वलश्चैव त्रिशिराश्च तथा विभो ।
सुन्दोपसुन्दावसुरौ क्रिययैव निषूदितौ ॥ ९-३१-१३ (६११९८६)
क्रियाभ्युपायैरिन्द्रेण त्रिदिवं भुज्यते विभो ।
क्रिया बलवती राजन्नान्यत्किंचिद्युधिष्ठिर ॥ ९-३१-१४ (६११९८७)
दैत्याश्च दानवाश्चैव राक्षसाः पार्थिवास्तथा ।
क्रियाभ्युपायैर्निहताः क्रियां तस्मात्समाचर ॥ ९-३१-१५ (६११९८८)
सञ्जय उवाच। ९-३१-१६क्ष् (५११४०)
इत्युक्तो वासुदेवेन पाण्डवः संशितव्रतः ।
जलस्थं तं महाराज तव पुत्रं महाबलम् ।
अभ्यभाषत कौन्तेयः प्रहसन्निव भारत ॥ ९-३१-१६ (६११९८९)
सुयोधन किमर्थोऽयमारम्भोऽप्सु कृतस्त्वया ।
सर्वं क्षत्रं घातयित्वा स्वकुलं च विशाम्पते ॥ ९-३१-१७ (६११९९०)
जलाशयं प्रविष्टोऽद्य वाञ्छञ्जीवितमात्मनः ।
उत्तिष्ठ राजन्युध्यस्व सहास्माभिः सुयोधन ॥ ९-३१-१८ (६११९९१)
स ते दर्पो नरश्रेष्ठ स च मानः क्व ते गतः ।
यस्त्वं संस्तभ्य सलिलं भीतो राजन्व्यवस्थितः ॥ ९-३१-१९ (६११९९२)
सर्वे त्वां शूर इत्येवं जना जल्पन्ति संसदि ।
व्यर्थं तद्भवतो मन्ये शौर्यं सलिलशायिनः ॥ ९-३१-२० (६११९९३)
उत्तिष्ठ राजन्युध्यस्व क्षत्रियोऽसि कुलोद्भवः ।
कौरवेयो विशेषेण कुलं जन्म च संस्मर ॥ ९-३१-२१ (६११९९४)
स कथं कौरवे वंशे प्रशंसञ्जन्म चात्मनः ।
युद्धात्त्रस्ततरस्तोयं प्रविश्य प्रतितिष्ठसि ॥ ९-३१-२२ (६११९९५)
अयुद्धेन व्यवस्थानं नैष धर्मः सनातनः ॥ ९-३१-२३ (६११९९६)
अनार्यजुष्टमस्वर्ग्यं रणे राजन्पलायनम् ।
कथं पारमगत्वा हि युद्धे त्वं वै जिजीविषुः ॥ ९-३१-२४ (६११९९७)

इमान्निपतितान्दृष्ट्वा पुत्रान्भ्रातॄन्पितॄंस्तथा ।
सम्बन्धिनो वयस्यांश्च मातुलान्बान्धवांस्तथा ।
घातयित्वा कथं तात ह्रदे तिष्ठति साम्प्रतम् ॥ ९-३१-२५ (६१९९८)
शूरमानी न शूरस्त्वं मृषा वदसि भारत ।
शूरोऽहमिति दुर्बुद्धे सर्वलोकस्य शृण्वतः ॥ ९-३१-२६ (६१९९९)
न हि शूराः पलायन्ते शत्रून्दृष्ट्वा कथञ्चन ।
ब्रूहि वा त्वं यया वृत्त्या शूर त्यजसि सङ्गरम् ॥ ९-३१-२७ (६२०००)
स त्वमुत्तिष्ठ युध्यस्व विहाय भयमात्मनः ।
घातयित्वा सर्वसैन्यं भ्रातॄंश्चैव सुयोधन ॥ ९-३१-२८ (६२००१)
नेदानीं जीविते बुद्धिः कार्या धर्मचिकीर्षया ।
क्षत्रधर्ममुपाश्रित्य त्वद्विधेन सुयोधन ॥ ९-३१-२९ (६२००२)
यत्तु कर्णमुपाश्रित्य शकुनिं चापि सौबलम् ।
दुःशासनं च मोहात्त्वमात्मानं नावबुद्धवान् ॥ ९-३१-३० (६२००३)
तत्पापं सुमहत्कृत्वा प्रतियुध्यस्व भारत ।
कथं हि त्वद्विधो मोहाद्रोचयेत पलायनम् ॥ ९-३१-३१ (६२००४)
क्व ते तत्पौरुषं यातं क्व च मानः सुयोधन ।
क्व च विक्रान्तता याता क्व च विस्फूर्जितं महत् ॥ ९-३१-३२ (६२००५)
क्व ते कृतास्त्रता याता किं नु शेषे जलाशये ।
स त्वमुत्तिष्ठ युध्यस्व क्षत्रधर्मेण भारत ॥ ९-३१-३३ (६२००६)
अस्मांस्तु वा पराजित्य प्रशाधि पृथिवीमिमाम् ।
अथवा निहतोस्माभिर्भूमौ स्वप्स्यसि भारत ॥ ९-३१-३४ (६२००७)
एष ते परमो धर्मः सृष्टो धात्रा महात्मना ।
तं कुरुष्व यथातथ्यं पौरुषे स्व व्यवस्थितः ॥ ९-३१-३५ (६२००८)
सञ्जय उवाच। ९-३१-३६क्ष् (५१४१)
एवमुक्तो महाराज धर्मपुत्रेण धीमता ।
सलिलस्थस्तव सुत इदं वचनमब्रवीत् ॥ ९-३१-३६ (६२००९)
नैतच्चित्रं महाराज यद्भीः प्राणिनमाविशेत् ।
न च प्राणभयाद्भीतो व्यपयातोऽस्मि भारत ॥ ९-३१-३७ (६२०१०)
अरथश्चानिषङ्गी च निहतः पार्ष्णिसारथिः ।
एकश्चाप्यगणः सङ्ख्ये प्रत्याश्वासमरोचयम् ॥ ९-३१-३८ (६२०११)
न प्राणहेतोर्न भयाच्च विषादाद्विशाम्पते ।
इदमम्भः प्रविष्टोऽस्मि श्रमात्त्विदमनुष्ठितम् ॥ ९-३१-३९ (६२०१२)
त्वं चाश्वसिहि कौन्तेय ये चाप्यनुगतास्तव ।
अहमुत्थाय वः सर्वान्प्रतियोत्स्यामि संयुगे ॥ ९-३१-४० (६२०१३)
युधिष्ठिर उवाच। ९-३१-४१क्ष् (५१४२)
आश्वस्ता एव सर्वे स्म चिरं त्वां मृगयामहे ।

तदिदानीं समुत्तिष्ठ युध्यस्वेह सुयोधन ॥ ९-३१-४१ (६२०१४)
हत्वा वा समरे पार्थान्स्फीतं राज्यमवाप्नुहि ।
निहतो वा रणेऽस्माभिर्वीरलोकमवाप्स्यसि ॥ ९-३१-४२ (६२०१५)
दुर्योधन उवाच। ९-३१-४३क्ष् (५१४३)
यदर्थं राज्यमिच्छामि कुरूणां कुरुनन्दन ।
त इमे निहताः सर्वे भ्रातरो मे जनेश्वर ॥ ९-३१-४३ (६२०१६)
क्षीणरत्नां च पृथिवीं हतक्षत्रियपुङ्गवाम् ।
न ह्युत्सहाम्यहं भोक्तुं विधवामिव योषितम् ॥ ९-३१-४४ (६२०१७)
अद्यापि त्वहमाशंसे त्वां विजेतुं युधिष्ठिर ।
भङ्क्त्वा पाञ्चालपाण्डूनामुत्साहं भरतर्षभ ॥ ९-३१-४५ (६२०१८)
न त्विदानीमहं मन्ये कार्यं युद्धेन कर्हिचित् ।
द्रोणे कर्णे च संशान्ते निहते च पितामहे ॥ ९-३१-४६ (६२०१९)
अस्त्विदानीमियं राजन्केवला पृथिवी तव ।
असहायो हि को राजा राज्यमिच्छेत्प्रशासितुम् ॥ ९-३१-४७ (६२०२०)
सुहृदस्तादृशान्हत्वा पुत्रान्भ्रातॄन्पितॄनपि ।
भवद्भिश्च हृते राज्ये को नु जीवेत मादृशः ॥ ९-३१-४८ (६२०२१)
अहं वनं गमिष्यामि ह्यजिनैः प्रतिवासितः ।
रतिर्हि नास्ति मे राज्ये हतपक्षस्य भारत ॥ ९-३१-४९ (६२०२२)
हतबान्धवभूयिष्ठा हताश्वा हतकुञ्जरा ।
एषा ते पृथिवी राजन्भुङ्क्ष्वैनां विगतज्वरः ॥ ९-३१-५० (६२०२३)
वनमेव गमिष्यामि वसानो मृगचर्मणी ।
न हि मे निर्जनस्यास्ति जीवितेऽद्य स्पृहा विभो ॥ ९-३१-५१ (६२०२४)
गच्छ त्वं भुङ्क्ष्व राजेन्द्र पृथिवीं निहतेश्वराम् ।
हतयोधां नष्टरत्नां शीर्णक्षत्रां यथासुखम् ॥ ९-३१-५२ (६२०२५)
श्सञ्जय उवाच। ९-३१-५३क्ष् (५१४४)
दुर्योधनं तव सुतं सलिलस्थं महायशाः ।
श्रुत्वा तु करुणं वाक्यमभाषत युधिष्ठिरः ॥ ९-३१-५३ (६२०२६)
युधिष्ठिर उवाच। ९-३१-५४क्ष् (५१४५)
आर्तप्रलापान्मा तात सलिलस्थः प्रभाषथाः ।
नैतन्मनसि मे राजन्वाशितं शकुनेरिव ॥ ९-३१-५४ (६२०२७)
यदि वापि समर्थः स्यास्त्वं दानाय सुयोधन ।
नाहमिच्छेयमवनिं त्वया दत्तां प्रशासितुम् ॥ ९-३१-५५ (६२०२८)
अधर्मेण न गृह्णीयां त्वया दत्तां महीमिमाम् ।
न हि धर्मः स्मृतो राजन्क्षत्रियस्य प्रतिग्रहः ॥ ९-३१-५६ (६२०२९)
त्वया दत्तां न चेच्छेयं पृथिवीमखिलामहम् ।
त्वां तु युद्धे विनिर्जित्य भोक्ताऽस्मि वसुधामिमाम् ॥ ९-३१-५७ (६२०३०)

अनीश्वरश्च पृथिवीं कथं त्वं दातुमिच्छसि ।
त्वयेयं पृथिवी राजन्किं न दत्ता तदैव हि ॥ ९-३१-५८ (६२०३१)
धर्मतो याचमानानां प्रशमार्थं कुलस्य नः ।
वार्ष्णेयं प्रथमं राजन्प्रत्याख्याय महाबालम् ॥ ९-३१-५९ (६२०३२)
किमिदानीं ददासि त्वं को हि ते जित्तविभ्रमः ।
अभियुक्तस्तु को राजा दातुमिच्छेद्धि मेदिनीं ॥ ९-३१-६० (६२०३३)
न त्वमद्य महीं दातुमीशः कौरवनन्दन ।
आच्छेत्तुं वा बलाद्राजन्स कथं दातुमिच्छसि ॥ ९-३१-६१ (६२०३४)
मां तु निर्जित्य सङ्ग्रामे पालयेमां वसुन्धराम् ।
सूच्यग्रेणापि यद्भूमेरपि भिद्येत भारत ॥ ९-३१-६२ (६२०३५)
तन्मात्रमपि तन्मह्यं न ददाति पुरा भवान् ।
स कथं पृथिवीमेतां प्रददासि विशाम्पते ॥ ९-३१-६३ (६२०३६)
सूच्यग्रं नात्यजः पूर्वं स कथं त्यजसि क्षितिम् ॥ ९-३१-६४ (६२०३७)
एवमैश्वर्यमासाद्य प्रशास्य पृथिवीमिमाम् ।
को हि मूढो व्यवस्येत शत्रोर्दातुं वसुन्धराम् ॥ ९-३१-६५ (६२०३८)
त्वं तु केवलमौर्ख्येण विमूढो नावबुध्यसे ।
पृथिवीं दातुकामोऽपि जीवंस्त्वं नैव मोक्ष्यसे ॥ ९-३१-६६ (६२०३९)
अस्मान्वा त्वं पराजित्य प्रशाधि पृथिवीमिमाम् ।
अथवा निहतोऽस्माभिर्व्रज लोकाननुत्तमान् ॥ ९-३१-६७ (६२०४०)
आवयोर्जीवतो राजन्मयि च त्वयि च ध्रुवम् ।
संशयः सर्वभूतानां विजये नौ भविष्यति ॥ ९-३१-६८ (६२०४१)
जीवितं त्वयि दुष्प्रापं मयि यत्परिवर्तते ।
जीवयेयमहं कामं न तु त्वं जीवितुं क्षमः ॥ ९-३१-६९ (६२०४२)
दहने हि कृतो यत्नस्त्वयाऽस्मासु विशेषतः ।
आशीविषैर्विषैश्चापि जले जापि प्रवेशनैः ।
त्वया विनिकृता राजन्राज्यस्य हरणेन च ॥ ९-३१-७० (६२०४३)
अप्रियाणां च वचनैर्द्रौपद्याः कर्षणेन च ।
एतस्मात्कारणात्पाप जीवितं न विद्यते ॥ ९-३१-७१ (६२०४४)
उत्तिष्ठोत्तिष्ठ युध्यस्व युद्धे श्रेयो भविष्यति ॥ ९-३१-७२ (६२०४५)
एवं तु विविधा वाचो जययुक्ताः पुनःपुनः ।
कीर्तयन्ति स्म ते वीरास्तत्रतत्र जनाधिप ॥ ॥ ९-३१-७३ (६२०४६)

इति श्रीमन्महाभारते शल्यपर्वणि ह्रदप्रवेशपर्वणि
अष्टादशदिवसयुद्धे एकत्रिंशोऽध्यायः ॥ ३१ ॥
Mahabharata - Shalya Parva - Chapter Footnotes

९-३१-७ कियाभ्युपायैः शत्रुकियानुरूपैः
प्रतीकारैर्धर्म्यैरधर्म्यैर्वेत्यर्थः । एतेतु च्छलकारिणश्छलैरेव
हन्तव्या इति भावः। माययैव सुयोधनं इति क पाठः ॥
९-३१-११ विक्रम विक्रमं कुरुष्व क्रियया योगमास्थाय हतस्त्वाष्ट्रोऽपि
विक्रमात् इति क पाठः ॥
९-३१-१२ क्रियाभ्युपायैर्निहतो मयो नाम महासरः । इति क पाठः ॥
९-३१-२७ हे शूरेति साधिक्षेपसम्बोधनम् । यया वृत्त्या
निमित्तभूतया। वानप्रस्थत्वेन वा न्यस्तशस्त्रत्वेन वा क्लीबत्वेन
वा त्वं सङ्गरं त्यजसि तां वृत्तिं ब्रूहि। न त्वं वानप्रस्थोऽसि
राज्यार्थिवात्। नापि न्यस्तशस्त्रो गदाधारित्वात्। परिशेषात क्लीबोऽस्मीति
मा भाषस्व। युद्धं कुर्विति भावः ॥
९-३१-३२ पौरुषं यत्नः । विक्रान्तता शौर्यम्। विस्फूर्जितं गर्जनम् ॥
९-३१-४९ हतापत्यस्य भारत इति क पाठः ॥
९-३१-५२ निहतत्विषमिति क ङ पाठः ॥
९-३१-३१ एकत्रिंशोऽध्यायः ॥

---

शल्यपर्व-अध्यय०३२
॥ श्रीः ॥
९.३२. अध्यायः ३२

Mahabharata - Shalya Parva - Chapter Topics
युधिष्ठिरकटुभाषणरुष्टेन सुयोधनेन गदयासह ह्रदादुत्थानम् ॥१ ॥
युधिष्ठिरदुर्योधनयोः संवादः ॥ २ ॥

Mahabharata - Shalya Parva - Chapter Text

९-३२-० (६२०४७)
धृतराष्ट्र उवाच। ९-३२-०क्ष् (५१४६)
एवं सन्तर्ज्यमानस्तु मम पुत्रो महीपतिः ।
प्रकृत्या मन्युमान्वीरः कथमासीत्परन्तपः ॥ ९-३२-१ (६२०४८)
न हि सन्तर्जना तेन श्रुतपूर्वा कथञ्चन ।
राजभावेन मान्यश्च सर्वलोकस्य सोऽभवत् ॥ ९-३२-२ (६२०४९)
श्यस्यातपत्रच्छायापि स्वका भानोस्तथा प्रभा ।
खेदायैवाभिमानित्वात्सहेत्सैवं कथं गरिः ॥ ९-३२-३ (६२०५०)
इयं च पृथिवी सर्वा सम्लेच्छाटविका भृशम् ।
प्रसादाद्भ्रियते यस्य प्रत्यक्षं तव सञ्जय ॥ ९-३२-४ (६२०५१)

स तथा तर्ज्यमानस्तु पाण्डुपुत्रैर्विशेषतः ।
विहीनश्च स्वकैर्भृत्यैर्निर्जिते चावृतो भृशम् ॥ ९-३२-५ (६२०५२)
स श्रुत्वा कटुका वाचो जययुक्ताः पुनःपुनः ।
किमब्रवीत्पाण्डवेयांस्तन्ममाचक्ष्व सञ्जय ॥ ९-३२-६ (६२०५३)
सञ्जय उवाच। ९-३२-७क्ष् (५१४७)
तर्ज्यमानस्तदा राजन्नुदकस्थस्तवात्मजः ।
युधिष्ठिरेण राजेन्द्र भ्रातृभिः सहितेन ह ॥ ९-३२-७ (६२०५४)
श्रुत्वा स कटुका वाचो विषमस्थो नराधिपः ।
दीर्घमुष्णं च निःश्वस्य सलिलस्थः पुनःपुनः ॥ ९-३२-८ (६२०५५)
सलिलान्तर्गतो राजा धुन्वन्हस्तौ पुनःपुनः ।
मनश्चकार युद्धाय राजानं चाभ्यभाषत ॥ ९-३२-९ (६२०५६)
यूयं ससुहृदः पार्थाः सर्वे सरथवाहनाः ।
अहमेकः परिद्यूनो विरथो हतवाहनः ॥ ९-३२-१० (६२०५७)
आत्तशस्त्रै रथोपेतैर्बहुभिः परिवास्तिः ।
कथमेकः पदातिः सन्नशस्त्रो योद्धुमुत्सह ॥ ९-३२-११ (६२०५८)
एकैकशश्च मां यूयं योधयध्वं युधिष्ठिर ।
न ह्येको बहुभिर्वीरैर्न्याय्यो योधयितुं युधि ॥ ९-३२-१२ (६२०५९)
विशेषतो विकवचः श्रान्तश्चापत्समाश्रितः ।
भृशं विक्षतगात्रश्च श्रान्तवाहनसैनिकः ॥ ९-३२-१३ (६२०६०)
न मे त्वत्तो भयं राजन्न च पार्थाद्वृकोदरात् ।
फल्गुनाद्वासुदेवाद्वा पाञ्चालेभ्योऽथवा पुनः ॥ ९-३२-१४ (६२०६१)
यमाभ्यां युयुधानाद्वा ये चान्ये तव सैनिकाः ।
एकः सर्वानहं क्रुद्धो वारयिष्ये युधि स्थितः ॥ ९-३२-१५ (६२०६२)
धर्ममूला सतां कीर्तिर्मनुष्याणां जनाधिप ।
धर्मं चैवेह कीर्तिं च पालयन्प्रब्रवीम्यहम् ॥ ९-३२-१६ (६२०६३)
अहमुत्थाय सर्वान्वै प्रतियोत्स्यामि संयुगे ।
अन्वभ्याशं गतान्सर्वान्निहनिष्यामि भारत ॥ ९-३२-१७ (६२०६४)
अद्य वः सरथान्साश्वानशस्त्रो विरथोऽपि सन् ।
नक्षत्राणीव सर्वाणि सविता रात्रिसंक्षये ॥ ९-३२-१८ (६२०६५)
तेजसा नाशयिष्यामि स्थिरीभवत पाण्डवाः ।
अद्यानृण्यं गमिष्यामि क्षत्रियाणां यशस्विनां ॥ ९-३२-१९ (६२०६६)
बाह्लीकद्रोणभीष्माणां कर्णस्य च महात्मनः ।
जयद्रथस्य शूरस्य भगदत्तस्य चोभयोः ॥ ९-३२-२० (६२०६७)
मद्रराजस्य शल्यस्य भूरिश्रवस एव च ।
पुत्राणां भरतश्रेष्ठ शकुनेः सौबलस्य च ॥ ९-३२-२१ (६२०६८)
मेत्राणां सुहृदां चैव बान्धवानां तथैव च ।

प्रानृण्यमद्य गच्छामि हत्वा त्वां भ्रातृभिः सह ॥ ९-३२-२२ (६२०६९)
सञ्जय उवाच। ९-३२-२३क्ष् (५१४८)
एतावदुक्त्वा वचनं विरराम जनाधिपः ।
ग्सलिलान्तर्गतः श्रीमान्पुत्रो दुर्योधनस्तव ॥' ९-३२-२३ (६२०७०)
युधिष्ठिर उवाच। ९-३२-२४क्ष् (५१४९)
दिष्ट्या त्वमपि जानीषे क्षत्रधर्मं सुयोधन ।
दिष्ट्या ते वर्तते बुद्धिर्युद्धायैव महाभुज ॥ ९-३२-२४ (६२०७१)
दिष्ट्या शूरोऽसि गान्धारे दिष्ट्या जानासि सङ्गरम् ।
यस्त्वमेको हि नः सर्वान्सङ्गरे योद्धुमिच्छसि ॥ ९-३२-२५ (६२०७२)
एक एकेन सङ्गम्य यत्ते सम्मतमायुधम् ।
तत्त्वमादाय युध्यस्व प्रेक्षकास्ते वयं स्थिताः ॥ ९-३२-२६ (६२०७३)
अयमिष्टं च ते कामं वीर भूयो ददाम्यहम् ।
हत्वैकं भव नो राजा हतो वा स्वर्गमाप्नुहि ॥ ९-३२-२७ (६२०७४)
दुर्योधन उवाच। ९-३२-२८क्ष् (५१५०)
एकश्चेद्योद्धुमाक्रन्दे वरोऽद्य मम दीयताम् ।
आयुधानामियं चापि मता मे सतं गदा ॥ ९-३२-२८ (६२०७५)
भ्रातणां भवतामेकः शक्यं मां योऽभिमन्यते ।
पदातिर्गदया सङ्ख्ये स युध्यतु मया सह ॥ ९-३२-२९ (६२०७६)
वृत्तानि रथयुद्धानि विचित्रामि पदेपदे ।
इदमेकं गदायुद्धं भवत्वद्याद्भुतं महत् ॥ ९-३२-३० (६२०७७)
अन्नानामपि पर्यायं कर्तुमिच्छन्ति मानवाः ।
युद्धानामपि पर्यायो भवत्वनुमते तव ॥ ९-३२-३१ (६२०७८)
गदया त्वां महाबाहो विजेष्यामि सहानुजम् ।
पाञ्चालान्सृञ्जयांश्चैव ये चान्ये तव सैनिकाः ।
न हि मे सम्भ्रामो जातु शक्रादपि युधिष्ठिर ॥ ९-३२-३२ (६२०७९)
युधिष्ठिर उवाच। ९-३२-३३क्ष् (५१५१)
उत्तिष्ठोत्तिष्ठ गान्धारे मां योधय सुयोधन ।
एक एकेन सङ्गम्य संयुगे गदया बली ॥ ९-३२-३३ (६२०८०)
पुरुषो भव गान्धारे युध्यस्व सुसमाहितः ।
अद्य ते जीवितं नास्ति यदीन्द्रोपि तवाश्रयः ॥ ९-३२-३४ (६२०८१)
सञ्जय उवाच। ९-३२-३५क्ष् (५१५२)
एतत्स नरशार्दूलो नामृष्यत तवात्मजः ।
सलिलान्तर्गतः श्वभ्रे महानाग इव श्वसन् ॥ ९-३२-३५ (६२०८२)
तथाऽसौ वाक्प्रतोदेन तुद्यमानः पुनःपुनः ।
वचो न ममृषे राजन्नुत्तमाश्वः कशामिव ॥ ९-३२-३६ (६२०८३)
सङ्क्षोभ्य सलिलं वेगाद्गदामादाय वीर्यवान् ।

अद्रिसारमयीं गुर्वीं काञ्चनाङ्गदभूषणाम् ।
अन्तर्जलात्समुत्तस्थौ नागेन्द्र इव निःश्वसन् ॥ ९-३२-३७ (६२०८४)
स भित्त्वा स्तम्भितं तोयं स्कन्धे कृत्वायसीं गदाम् ।
उदतिष्ठत पुत्रस्ते प्रतपन्रश्मिवानिव ॥ ९-३२-३८ (६२०८५)
ततः शैक्यायसीं गुर्वीं जातरूपपरिष्कृताम् ।
गदां परामृशद्धीमान्धार्तराष्ट्रो महाबलः ॥ ९-३२-३९ (६२०८६)
गदाहस्तं तु तं दृष्ट्वा सशृङ्गमिव पर्वतम् ।
प्रजानामिव सङ्क्रुद्धं शूलपाणिमिव स्थितम् ॥ ९-३२-४० (६२०८७)
क़सगदो भारतो भाति प्रतपन्भास्करो यथाक़॥ ९-३२-४१ (६२०८८)
तमुत्तीर्णं महाबाहुं गदाहस्तमरिन्दमम् ।
मेनिरे सर्वभूतानि दण्डपाणिमिवान्तकम् ॥ ९-३२-४२ (६२०८९)
वज्रहस्तं यथा शक्रं शूलहस्तं यथा हरम् ।
ददृशुः शर्वपाञ्चालाः पुत्रं तव जनाधिप ॥ ९-३२-४३ (६२०९०)
तमुत्तीर्णं तु सम्प्रेक्ष्य समहृष्यन्त सर्वशः ।
पाञ्चालाः पाण्डवेयाश्च तेऽन्योन्यस्य तलान्ददुः ॥ ९-३२-४४ (६२०९१)
अवहासं तु तं मत्वा पुत्रो दुर्योधनस्तव ।
उद्वृत्य नयने क्रुद्धो दिधक्षुरिव पाण्डवान् ॥ ९-३२-४५ (६२०९२)
त्रिशिखां भ्रुकुटीं कृत्वा सन्दष्टदशनच्छदः ।
प्रत्युवाच ततस्तान्वै पाण्डवान्सह केशवान् ॥ ९-३२-४६ (६२०९३)
दुर्योधन उवाच। ९-३२-४७क्ष् (५१५३)
अस्यावहासस्य फलं प्रतिमोक्ष्यथ पाण्डवाः ।
गमिष्यथ हताः सद्यः सपाञ्चाला यमक्षयम् ॥ ९-३२-४७ (६२०९४)
उत्थिन्तश्च जलात्तस्मात्पुत्रो दुर्योधनस्तव ।
अतिष्ठत गदापाणी रुधिरेण समुक्षितः ॥ ९-३२-४८ (६२०९५)
तस्य शोणितदिग्धस्य सलिलेन समुक्षितम् ।
शरीरं स्म तदा भाति स्रवन्निव महीधारः ॥ ९-३२-४९ (६२०९६)
तमुद्यतगदं वीरं मेनिरे तत्र पाण्डवाः ।
वैवस्वतमिव क्रुद्धं शूलपाणिमिव स्थितम् ॥ ९-३२-५० (६२०९७)
स मेघनिनदो हर्षान्नर्दन्निव च गोवृषः ।
आजुहाव ततः पार्थान्गदया युधि वीर्यवान् ॥ ९-३२-५१ (६२०९८)
दुर्योधन उवाच। ९-३२-५२क्ष् (५१५४)
एकैकेन च मां यूयमासीदत युधिष्ठिर ।
न ह्येको बहुभिर्न्याय्यो वीरो योधयितुं युधि ॥ ९-३२-५२ (६२०९९)
न्यस्तवर्मा विशेषेण श्रान्तश्चाप्सु परिप्लुतः ।
भृशं विक्षतगात्रश्च हतवाहनसैनिकः ॥ ९-३२-५३ (६२१००)
श्अवश्यमेव योद्धव्यं सर्वैरेव मया सह ।

युक्तं त्वयुक्तमित्येतद्वेत्सि त्वं चैव सर्वदा॥ ॥९-३२-५४ (६२१०१)
युधिष्ठिर उवाच। ९-३२-५५क्ष् (५१५५)
मा भूदियं तव प्रज्ञा कथमेकं सुयोधन ।
यदाऽभिमन्युं बहवो जघ्नुर्युधि महारथाः ॥९-३२-५५ (६२१०२)
श्क्षत्रधर्मं भृशं क्रूरं निरपेक्षं सुनिर्घृणम् ।
अन्यथा तु कथं हन्युरभिमन्युं तथागतम् ॥९-३२-५६ (६२१०३)
सर्वे भवन्तो धर्मज्ञाः सर्वे शूरास्तनुत्यजः ।
न्यायेन युध्यतां प्रोक्ता शक्रलोकगतिः परा ॥९-३२-५७ (६२१०४)
यद्येकस्तु न हन्तव्यो बहुभिर्धर्म एव तु ।
तदाऽभिमन्युं बहवो निजघ्नुस्त्वन्मते कथम् ॥९-३२-५८ (६२१०५)
सर्वो विमृशते जन्तुः कृच्छ्रस्थो धर्मदर्शनम् ।
पदस्थः पिहितं द्वारं परलोकस्य पश्यति ॥ ९-३२-५९ (६२१०६)
आमुञ्च कवचं वीर मूर्धजान्यमयस्व च ।
यच्चान्यदपि ते नास्ति तदप्यादत्स्व भारत ॥९-३२-६० (६२१०७)
इममेकं च ते कामं वीर भूयो ददाम्यहम् ।
पञ्चानां पाण्डवेयानां येन त्वं योद्धुमिच्छसि ॥९-३२-६१ (६२१०८)
तं हत्वा वै भवाराजा हतो वा स्वर्गमाप्नुहि ।
ऋते च जीविताद्वीर युद्धे किं कुर्म ते प्रियम् ॥९-३२-६२ (६२१०९)
सञ्जय उवाच। ९-३२-६३क्ष् (५१५६)
ततस्तव सुतो राजन्वर्म जग्राह काञ्चनम् ।
विचित्रं च शिरस्त्राणं जाम्बूनदपरिष्कृतम् ॥९-३२-६३ (६२११०)
सोऽवबद्धशिरस्त्राणः शुभकाञ्चनवर्मभृत् ।
रराज राजन्पुत्रस्ते काञ्चनः शैलराडिव ॥९-३२-६४ (६२१११)
सन्नद्धः सगतो राजन्सज्जः सङ्ग्राममूर्धनि ।
अब्रवीत्पाण्डवान्सर्वान्पुत्रो दुर्योधनस्तव ॥९-३२-६५ (६२११२)
भ्रातॄणां भवतामेको युध्यतां गदया मया ।
सहदेवेन वा योत्स्ये भीमेन नकुलेन वा ॥९-३२-६६ (६२११३)
अथवा फल्गुनेनाद्य त्वया वा भरतर्षभ ।
योत्स्येऽहं सङ्गरं प्राप्य विजेष्ये च रणाजिरे ॥९-३२-६७ (६२११४)
अहमद्य गमिष्यामि वैरस्यान्तं सुदुर्गमम् ।
गदया पुरुषव्याघ्र हेमपट्टनिबद्धया ॥९-३२-६८ (६२११५)
गदायुद्धे न मे कश्चित्सदृशोऽस्तीति चिन्तये ।
गदया वो हनिष्यामि सर्वानेव समागतान् ॥९-३२-६९ (६२११६)
न मे समर्थाः सर्वे वै योद्धुं न्यायेन केचन ।
न युक्तमात्मना वक्तुमेवं गर्वोद्धतं वचः ।
अथवा सफलं ह्येतत्करिष्ये भवतां पुरः ॥ ९-३२-७० (६२११७)

अस्मिन्महूर्ते सत्यं वा मिथ्या वै तद्भविष्यति ॥
गृह्णातु च गदां यो वै योत्स्यतेऽद्य मया सह ॥ ॥ ९-३२-७१ (६२११८)

इति श्रीमन्महाभारते शल्यपर्वणि द्वात्रिंशोऽध्यायः ॥ ३२ ॥
Mahabharata - Shalya Parva - Chapter Footnotes

९-३२-३ आतपत्रेण दुर्योधनः सूर्याद्रक्षित इत्येष प्रवादोऽपि यस्य न स इति भावः ॥
९-३२-१० परिद्यूनः परिश्रान्तः ॥
९-३२-२७ नः अस्माकं पञ्चानां मध्ये एकमपि हत्वा त्वं राजा भवेत्यन्वयः ॥
९-३२-३४ अद्य ते जीवितं नास्ति यद्यपि त्वं मनोजवः इति क ङ पाठः ॥
९-३२-५६ क्षत्रधर्मं अस्तीति शेषः । धर्मोऽस्त्री पुण्यआचारे इति मेदिनी ॥
९-३२-३२ द्वात्रिंशोऽध्यायः ॥

---

शल्यपर्व-अध्यय०३३
॥ श्रीः ॥
९.३३. अध्यायः ३३

Mahabharata - Shalya Parva - Chapter Topics
युधिष्ठिरेण दुर्योधनम्प्रति स्वेष्वन्यतमपराजयेनापि तस्य राज्यप्राप्तिवचने कृष्णेन तम्प्रति सकोपं भीमेनापि दुर्योधनपराजये स्वस्य संशयोक्तिः ॥ १ ॥
भीमेन कृष्णम्प्रति स्वसामर्थ्यप्रकथनपूर्वकं स्वेन दुर्योधनवधस्य सुकरत्वे कथिते कृष्णादिभिस्तत्प्रशंसनम् ॥ २ ॥
भीमदुर्योधनयोर्वीरवादपुर्वकं युद्धोद्यमः ॥ ३ ॥

Mahabharata - Shalya Parva - Chapter Text

९-३३-० (६२११९)
सञ्जय उवाच। ९-३३-०क्ष् (५१५७)
एवं दुर्योधने राजन्गर्जमाने मुहुर्मुहुः ।
युधिष्ठिरस्य सङ्क्रुद्धो वासुदेवोऽब्रवीदिदम् ॥ ९-३३-१ (६२१२०)
यदी नाम ह्ययं यूद्धे वरयेत्त्वां युधिष्ठिर ।
अर्जुनं नकुलं चैव सहदेवमथापि वा ॥ ९-३३-२ (६२१२१)
किमिदं साहसं राजंस्त्वया व्याहृतमीदृशम् ।

एकमेव निहत्याजौ भव राजा कुरुष्विति ॥ ९-३३-३ (६२१२२)
एतेन हि कृता योग्या वर्षाणीह त्रयोदश ।
आयसे पुरुषे राजन्भीमसेनजिघांसया ॥ ९-३३-४ (६२१२३)
कथं नाम भवेत्कार्यमस्माद्धि भरतर्षभ ।
साहसं कृतवांस्त्वं तु ह्यनुक्रोशान्नृपोत्तम ॥ ९-३३-५ (६२१२४)
नान्यमस्यानुपश्यामि प्रतियोद्धारमाहवे ।
ऋते वृकोदरात्पार्थात्स च नातिकृतश्रमः ॥ ९-३३-६ (६२१२५)
तदिदं द्यूतमारब्धं पुनरेव यथा पुरा ।
विषमं शकुनेश्चैव तव चैव विशेषतः ॥ ९-३३-७ (६२१२६)
बली भीमः समर्थश्च कृती राजा सुयोधनः ।
बलवान्वा कृती वेति कृती राजन्विशिष्यते ॥ ९-३३-८ (६२१२७)
सोऽयं राजंस्त्वया शत्रुः समे पथि निवेशितः ।
न्यस्तश्चात्मा सुविषमे कृच्छ्रमापादिता वयम् ॥ ९-३३-९ (६२१२८)
कोऽनु सर्वान्विनिर्जित्य शत्रूनेकेन वैरिणा ।
श्कृच्छ्रप्राप्तेन च तथा हारयेद्राज्यमागतम् ॥
पातितश्चैकबाणेन शोचयेदेवमाहवे ॥ ९-३३-१० (६२१२९)
न हि पश्यामि तं लोके योऽद्य दुर्योधनं रणे ।
गदाहस्तं विजेतुं वै शक्तः स्यादमरोपि हि ॥ ९-३३-११ (६२१३०)
फल्गुनो वा भवान्वाथ माद्रीपुत्रावथापि वा ।
न समर्थानहं मन्ये गदाहस्तस्य संयुगे ॥ ९-३३-१२ (६२१३१)
न त्वं भीमो न नकुलः सहदेवोऽथ फल्गुनः ।
जेतुं न्यायेन शक्तो वै कृती राजा सुयोधनः ॥ ९-३३-१३ (६२१३२)
स कथं वदसे शत्रुं युध्यस्व गदयेति हि ।
एकं च नो निहत्याजौ भव राजेति भारत ॥ ९-३३-१४ (६२१३३)
वृकोदरं समासाद्य संशयो वै जये हि नः ।
न्यायतो युध्यमानानां कृती ह्येष महाबलः ॥ ९-३३-१५ (६२१३४)
श्नूनं न राज्यभागेषा पाण्डोः कुन्त्याश्च सन्ततिः ।
अत्यन्तवनवासाय सृष्टा भैक्ष्याय वा पुनः ॥ ९-३३-१६ (६२१३५)
भीमसेन उवाच। ९-३३-१७क्ष् (५१५८)
मधुसूदन माकार्षीर्विषादं यदुनन्दन ।
अद्य पारं गमिष्यामि वैरस्य भृशदुर्गमम् ॥ ९-३३-१७ (६२१३६)
अहं सुयोधनं सङ्ख्ये हनिष्यामि न संशयः ।
विजयो वै ध्रुवः कृष्ण धर्मराजस्य दृश्यते ॥ ९-३३-१८ (६२१३७)
अध्यर्धेन गुणेनेयं गदा गुरुतरी मम ।
न तथा धार्तराष्ट्रस्य माकार्षीर्माधव व्यथाम् ॥ ९-३३-१९ (६२१३८)
अनया गदयानाहं संयुगे योद्धुमुत्सहे ।

भवन्तः प्रेक्षकाः सर्वे मम सन्तु जनार्दन ॥ ९-३३-२० (६२१३९)
सामरानपि लोकांस्त्रीन्नानाशस्त्रधरान्युधि ।
योधयेयं रणे कृष्ण किमुताद्य सुयोधनम् ॥ ९-३३-२१ (६२१४०)
सञ्जय उवाच। ९-३३-२२क्ष् (५१५९)
तथा सम्भाषमाणं तु वासुदेवो वृकोदरम् ।
हृष्टः सम्पूजयामास वचनं चेदमब्रवीत् ॥ ९-३३-२२ (६२१४१)
त्वामाश्रित्य महाबाहो धर्मराजो युधिष्ठिरः ।
निहतारिः स्वकां दीप्तां श्रियं प्राप्नोत्यसंशयम् ॥ ९-३३-२३ (६२१४२)
त्वया विनिहताः सर्वे धृतराष्ट्रसुता रणे ।
राजानो राजपुत्राश्च नागाश्च विनिपातिताः ॥ ९-३३-२४ (६२१४३)
कलिङ्गा मागधाः प्राच्या गान्धाराः कुरवस्तथा ।
त्वामासाद्य महायुद्धे निहताः पाण्डुनन्दन ॥ ९-३३-२५ (६२१४४)
हत्वा दुर्योधनं चापि प्रयच्छोर्वीं ससागराम् ।
धर्मराजाय कौन्तेय यथा विष्णुः शचीपतेः ॥ ९-३३-२६ (६२१४५)
त्वां च प्राप्य रणे पापो धार्तराष्ट्रो विनङ्क्ष्यति ।
त्वमस्य सक्थिनी भंक्त्वा प्रतिज्ञां पालयिष्यसि ॥ ९-३३-२७ (६२१४६)
यत्नेन ह त्वया पापो योद्धव्यो धृतराष्ट्रजः ।
कृती च बलवांश्चैव युद्धशौण्डश्च नित्यदा ॥ ९-३३-२८ (६२१४७)
ततस्तु सात्यकी राजन्पूजयामास पाण्डवम् ।
विविधाभिश्च तं वाग्भिर्भिमसेनं जनेश्वर ॥ ९-३३-२९ (६२१४८)
पाञ्चालाः पाण्डवेयाश्च धर्मराजपुरोगमाः ।
तद्वचो भीमसेनस्य सर्व एवाभ्यपूजयन् ॥ ९-३३-३० (६२१४९)
ततो भीमबलो भीमो युधिष्ठिरमथाब्रवीत् ।
सृञ्जयैः सह तिष्ठन्तं तपन्तमिव भास्करम् ॥ ९-३३-३१ (६२१५०)
अहमेतेन सङ्गम्य संयुगे योद्धुमुत्सहे ।
न हि शक्तो रणे जेतुं मामेष पुरुषाधमः ॥ ९-३३-३२ (६२१५१)
अद्य क्रोधं विमोक्ष्यामि निहितं हृदये भृशम् ।
सुयोधने धार्तराष्ट्रे खाण्डवेऽग्निमिवार्जुनः ॥ ९-३३-३३ (६२१५२)
शल्यमद्योद्धरिष्यामि तव पाण्डव हृच्छयम् ।
निहते गदया पापे अद्य राजन्सुखी भव ॥ ९-३३-३४ (६२१५३)
अद्य कीर्तिमयीं मालां प्रितमोक्ष्ये तवानघ ।
प्राणाञ्श्रियं च राज्यं च मोक्ष्यतेऽद्य सुयोधनः ॥ ९-३३-३५ (६२१५४)
राजा च धृतराष्ट्रोऽद्य श्रुत्वा पुत्रं मया हतम् ।
स्मरिष्यत्यशुभं कर्म यत्तच्छकुनिबुद्धिजम् ॥ ९-३३-३६ (६२१५५)
इत्युक्त्वा भरतश्रेष्ठो गदामुद्यम्य वीर्यवान् ।
उदतिष्ठत युद्धाय शक्रो वृत्रमिवाह्वयन् ॥ ९-३३-३७ (६२१५६)

श्तदाह्वानममृष्यन्वै तव पुत्रोऽतिवीर्यवान् ।
प्रत्युपस्थित एवाशु मत्तो मत्तमिव द्विपम् ॥ ९-३३-३८ (६२१५७)
गदाहस्तं तव सुतं युद्धाय समुपस्थितम् ।
ददृशुः पाण्डवाः सर्वे कैलासमिव शृङ्गिणम्ष ॥ ९-३३-३९ (६२१५८)
तमेकाकिनमासाद्य धार्तराष्ट्रं महाबलम् ।
वियूथमिव मातङ्गं समहृष्यन्त पाण्डवाः ॥ ९-३३-४० (६२१५९)
श्न सम्भ्रमो न च भयं न च ग्लानिर्न च व्यथा ।
आसीद्दुर्योधनस्यापि स्थितः सिंह इवाहवेष ॥ ९-३३-४१ (६२१६०)
समुद्यतगदं दृष्ट्वा कैलासमिव शृङ्गियाम् ।
भीमसेनस्तदा राजन्दुर्योधनमथाब्रवीत् ॥ ९-३३-४२ (६२१६१)
राज्ञापि धृतराष्ट्रेण त्वया चास्मासु यत्कृतम् ।
स्मर तद्दुष्कृतं कर्म यद्वृत्तं वारणावते। ९-३३-४३ (६२१६२)
द्रौपदी च परामृष्टा समामध्ये रजस्वला ।
द्यूते च वञ्चितो राजा शकूनेर्बुद्धिलाघवात् ॥ ९-३३-४४ (६२१६३)
यानि चान्यानि दुष्टात्मन्पापानि कृतवानसि ।
अनागासु च पार्थेषु तस्य पश्य महत्फलम् ॥ ९-३३-४५ (६२१६४)
त्वत्कृते निहतः शेते शरतल्पे महायशाः ।
याङ्गेयो भरतश्रेष्ठः सर्वेषां नः पितामहः ॥ ९-३३-४६ (६२१६५)
हतो द्रोणश्च कर्णश्च इतः शल्यः प्रतापवान् ।
वैराग्नेरादिकर्ता च शकुनिर्निहतो रणे ॥ ९-३३-४७ (६२१६६)
भ्रातरस्ते हताः शूराः पुत्राश्च सहसैनिकाः ।
राजानश्च हताः शूराः समरेष्वनिवर्तिनः ॥ ९-३३-४८ (६२१६७)
एते चान्ये च निहता बहवः क्षत्रियर्षभाः ।
प्रातिकामी तथा पापो द्रौपद्याः क्लेशकृद्धतः ॥ ९-३३-४९ (६२१६८)
अवशिष्टस्त्वमेवैकः कुलघ्नोऽधमपूरुषः ।
त्वामप्यद्य हनिष्यामि गदया नात्र संशयः ॥ ९-३३-५० (६२१६९)
अद्य तेऽहं रणे दर्पं सर्वं नाशयिता नृप ।
राज्याशां विपुलां चापि पाण्डवेषु च दुष्कृतम् ॥ ९-३३-५१ (६२१७०)
दुर्योधन उवाच। ९-३३-५२क्ष् (५१६०)
किं कत्थितेन बहुना युध्यस्वाद्य मया सह ।
अद्य तेऽहं विनेष्यामि युद्धश्रद्धां वृकोदर ॥ ९-३३-५२ (६२१७१)
किं न पश्यसि मां पाप गदायुद्धे व्यवस्थितम् ।
हिमवच्छिखराकारां प्रगृह्य महतीं गदाम् ॥ ९-३३-५३ (६२१७२)
गदिनं कोऽद्य मां पाप हन्तुमुत्सहते रिपुः ।
न्यायतो युध्यमानस्य देवेष्वपि पुरन्दरः ॥ ९-३३-५४ (६२१७३)
मा वृथा गर्ज कौन्तेय शारदाभ्रमिवाजलम् ।

दर्शयस्व बलं युद्धे यावन्नासून्निहन्मि ते ॥ ९-३३-५५ (६२१७४)
तस्य तद्वचनं श्रुत्वा पाण्डवाः सहसृञ्जयाः ।
सर्वे सम्पूजयामासुस्तद्वचो विजिगीषवः ॥ ९-३३-५६ (६२१७५)
उन्मत्तमिव मातङ्गं तलशब्देन मानवाः ।
भूयः संहर्षयामासू राजन्दुर्योधनं द्विषः ॥ ९-३३-५७ (६२१७६)
बृंहन्ति कुञ्जरास्तत्र हया हेषन्ति चासकृत् ।
शस्त्राणि सम्प्रदीप्यन्ते पाण्डवानां जयैषिणाम् ॥ ॥ ९-३३-५८ (६२१७७)

इति श्रीमन्महाभारते शल्यपर्वणि ह्रदप्रवेशपर्वणि
त्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥
Mahabharata - Shalya Parva - Chapter Footnotes

९-३३-४ योग्या अभ्यासः । योग्यः प्रवीणेत्याद्युपक्रम्य
स्त्र्यभ्यासार्कयोषितोरिति मेदिनी ॥
९-३३-७ शकुनेश्च तव च यथापुरा तथैवेदमिति सम्बन्धः ॥
९-३३-१० पणित्वा चैकपाणेन रोचयेदेव माहवम् इति झ पाठः ॥
९-३३-३३ त्रयस्त्रिंशोऽध्यायः ॥

---

शल्यपर्व-अध्यय०३४
॥ श्रीः ॥
९.३४. अध्यायः ३४

Mahabharata - Shalya Parva - Chapter Topics
xxxxxxxxxx ॥ १ ॥
तस्मिन्पाण्ढवादिभिरर्चितोपविष्टे पुनर्गदायुद्धारम्भः ॥ २ ॥

Mahabharata - Shalya Parva - Chapter Text

९-१६-० (६२१७८)
सञ्जय उवाच। ९-१६-०क्ष् (५१६१)
xxxxxxxxxxx सुसंवृत्ते सुदारुणे ।
xxxxxxxxxxx पाण्डवेषु महात्मसु ॥ ९-१६-१ (६२१७९)
ततस्तालध्वजके रामस्तयोर्युद्ध उपस्थिते ।
श्रुत्वा तच्छिष्ययो राजन्नाजगाम हलायुधः ॥ ९-१६-२ (६२१८०)
तं दृष्ट्वा परमप्रीताः पाण्डवाः सहकेशवाः ।
उपगम्योपसङ्गृह्य विधिवत्प्रत्यपूजयन् ॥ ९-१६-३ (६२१८१)

पूजयित्वा ततः पश्चादिदं वचनमब्रुवन् ।
शिष्ययोः कौशलं युद्धे पश्य रामेति पार्थिव ॥ ९-१६-४ (६२१८२)
अब्रवीच्च तदा रामो दृष्ट्वा कृष्णं सपाण्डवम् ।
दुर्योधनं च कौरव्यं गदापाणिमवस्थितम् ॥ ९-१६-५ (६२१८३)
राम उवाच। ९-१६-६क्ष् (५१६२)
चत्वारिंशदहान्यद्य द्वे च मे निःसृतस्य वै ।
पुष्येण सम्प्रयातोऽस्मि श्रवणे पुनरागतः ।
शिष्ययोर्वै गदायुद्धं द्रष्टुकामोऽस्मि माधव ॥ ९-१६-६ (६२१८४)
ततो युधिष्ठिरो राजा परिष्वज्य हलायुधम् ।
स्वागतं कुशलं चास्मै पर्यपृच्छद्यथातथम् ॥ ९-१६-७ (६२१८५)
कृष्णौ चापि महेष्वासावभिवाद्य हलायुधम् ।
सस्वजाते परिप्रीतौ प्रीयमाणौ यशस्विनौ ॥ ९-१६-८ (६२१८६)
माद्रीपुत्रौ तथा शूरौ द्रौपद्याः पञ्च चात्मजाः ।
अभिवाद्य स्थिता राजन्रौहिणेयं महाबलम् ॥ ९-१६-९ (६२१८७)
भीमसेनोऽथ बलवान्पुत्रस्तव जनाधिप ।
तथैव चोद्यतगदौ पूजयामासतुर्बलम् ॥ ९-१६-१० (६२१८८)
स्वागतेन च ते तत्र प्रतिपूज्य पुनःपुनः ।
पश्य युद्धं महाबाहो इति ते राममब्रुवन् ॥ ९-१६-११ (६२१८९)
एवमुचुर्महात्मानं रौहिणेयं नराधिपाः ॥ ९-१६-१२ (६२१९०)
परिष्वज्य तदा रामः पाण्डवान्सह सृञ्जयान् ।
अपृच्छत्कुशलं सर्वान्पार्थिवांश्चामितौजसः ।
तथैव ते समासाद्य पप्रच्छुस्तमनामयम् ॥ ९-१६-१३ (६२१९१)
प्रत्यभ्यर्च्य हली सर्वान्क्षत्रियांश्च महात्मनः ।
कृत्वा कुशलसम्प्रश्नं संविदं च यथावयः ॥ ९-१६-१४ (६२१९२)
जनार्दनं सात्यकिं च प्रेम्णा सम्परिषस्वजे ।
मूर्ध्नि चैतावुपाघ्राय कुशलं पर्यपृच्छत ॥ ९-१६-१५ (६२१९३)
तौ च तं विधिवद्राजन्पूजयामासतुर्गुरुम् ।
ब्रह्माणामिव देवेशमिन्द्रोपेन्द्रौ मुदान्वितौ ॥ ९-१६-१६ (६२१९४)
ततोऽब्रवीद्धर्मसुतो रौहिणेयमरिन्दमम् ।
इदं भ्रात्रोर्महायुद्धं पश्य रामेति भारत ॥ ९-१६-१७ (६२१९५)
तेषां मध्ये महाबाहुः श्रीमान्केशवपूर्वजः ।
न्यविशत्परमप्रीतः पूज्यमानो महारथैः ॥ ९-१६-१८ (६२१९६)
स बभौ राजमध्यस्थो नीलवासाः सितप्रभः ।
दिवीव नक्षत्रगणैः परिवीतो निशाकरः ॥ ९-१६-१९ (६२१९७)
ततस्तयोः सन्निपातस्तुमुलो रोमहर्षणः ।
आसीदन्तकरो राजन्वैरस्यान्तं विधित्सतोः ॥ ॥ ९-१६-२० (६२१९८)

इति श्रीमन्महाभारते शल्यपर्वणि ह्रदप्रवशपर्वणि
अष्टादशदिवसयुद्धे चतुस्त्रिंशोऽध्यायः ॥ ३४ ॥

---

शल्यपर्व-अध्यय०३५
॥ श्रीः ॥
९.३५. अध्यायः ३५

Mahabharata - Shalya Parva - Chapter Topics
जनमेजयेन वैशम्पायनम्प्रति बलरामस्य तीर्थयात्राप्रकारप्रश्नः ॥ १ ॥
तेन तम्प्रति तत्कथनमुपक्रम्य प्रभासतीर्थस्य तत्पदवाच्यत्वे
हेतुकथनम् ॥ २ ॥

Mahabharata - Shalya Parva - Chapter Text

९-३५-० (६२१९९)
जनमेजय उवाच। ९-३५-०क्ष् (५१६३)
पूर्वमेव यदा रामस्तस्मिन्युद्ध उपस्थिते ।
आमन्त्र्य केशवं यातो वृष्णिभिः सहितः प्रभुः ॥ ९-३५-१ (६२२००)
साहाय्यं धार्तराष्ट्रस्य न च कर्ताऽस्मि केशव ।
न चैव पाण्डुपुत्राणां गमिष्यामि यथागतम् ॥ ९-३५-२ (६२२०१)
एवमुक्त्वा तदा रामो यातः शत्रुनिबर्हणः ।
तस्य चागमनं भूयो ब्रह्मञ्शं सितुमर्हसि ॥ ९-३५-३ (६२२०२)
आख्याहि मे विस्तरशः कथं राम उपस्थितः ।
कथं च दृष्टवान्युद्धं कुशलो ह्यसि सत्तम ॥ ९-३५-४ (६२२०३)
वैशम्पायन उवाच। ९-३५-५क्ष् (५१६४)
उपप्लाव्ये निविष्टेषु पाण्डवेषु महात्मसु ।
प्रेषितो धृतराष्ट्रस्य समीपं मधुसूदनः ॥ ९-३५-५ (६२२०४)
शमं प्रति महाबाहो हितार्थं सर्वदेहिनाम् ॥
स गत्वा हास्तिनपुरं धृतराष्ट्रं समेत्य च। ९-३५-६ (६२२०५)
उक्तवान्वचनं पथ्यं हितं चैव विशेषतः ॥ ९-३५-७ (६२२०६)
न च तत्कृतवान्राजा यथाऽख्यातं हि तत्पुरा ॥ ९-३५-८ (६२२०७)
अनवाप्य शमं तत्र कृष्णः पुरुषसत्तमः ।
आगच्छत महाबाहुरुपप्लाव्यं जनाधिप ॥ ९-३५-९ (६२२०८)
ततः प्रत्यागतः कृष्णो धार्तराष्ट्रविसर्जितः ।
आजगाम नरव्याघ्रः पाण्डवानामनीकिनीम् ।

यथोक्तं च यथावृत्तं गत्वा पाण्डवमब्रवीत् ॥ ९-३५-१० (६२२०९)
न कुर्वन्ति वचो मह्यं कुरवः कालनोदिताः ।
निर्गच्छध्व पाण्डवेयाः पुष्येण सहिता मया ॥ ९-३५-११ (६२२१०)
ततो विभज्यमानेषु बलेषु बलिनां वरः ।
प्रोवाच भ्रातरं कृष्णं रौहिणेयो महामनाः ॥ ९-३५-१२ (६२२११)
तेषामपि महाबाहो साहाय्यं मधुसूदन ।
क्रियतामिति तत्कृष्णो नास्य चक्रे वचस्तदा ॥ ९-३५-१३ (६२२१२)
ततो मन्युपरीतात्मा जगाम यदुनन्दनः ।
तीर्थयात्रां हलधरः सरस्वत्यां महायशाः ।
मैत्रनक्षत्रयोगे स्म सहितः सर्वयादवैः ॥ ९-३५-१४ (६२२१३)
आश्रयामास भोजस्तु दुर्योधनमरिन्दमः ।
युयुधानेन सहितो वासुदेवस्तु पाण्डवान् ॥ ९-३५-१५ (६२२१४)
रौहिणेये गते शूरे पुष्येण मधुसूदनः ।
पाण्डवेयान्पुरस्कृत्य ययावभिमुखः कूरून् ॥ ९-३५-१६ (६२२१५)
गच्छन्नेव पथिस्थस्तु रामः प्रेष्यानुवाच ह ।
सम्भारांस्तीर्थयात्रायां सर्वोपकरणानि च ॥ ९-३५-१७ (६२२१६)
आनयध्वं द्वारकाया अग्नीन्वै याजकांस्तथा ।
सुवर्णरजनं चैव धेनूर्वासांसि वाजिनः ॥ ९-३५-१८ (६२२१७)
कुञ्जरांश्च रथांश्चैव खरोष्ट्रं वाहनानि च ।
क्षिप्रमानीयतां सर्वं तीर्थहेतोः परिच्छदम् ॥ ९-३५-१९ (६२२१८)
प्रतिस्रोतः सरस्वत्या गच्छध्वं शीघ्रगामिनः ।
ऋत्विजश्चानयध्वं वै शतशश्च द्विजर्षभान् ॥ ९-३५-२० (६२२१९)
एवं सन्दिश्य तु प्रेष्यान्बलदेवो महाबलः ।
तीर्थयात्रां ययौ राजन्कुरूणां वैशसे तदा ॥ ९-३५-२१ (६२२२०)
सरस्वत्याः प्रतिस्रोतः समुद्रादभिजग्मिवान ।
रामो यदूत्तमः श्रीमांस्तीर्थयात्रामनुस्मरन् ॥ ९-३५-२२ (६२२२१)
ऋत्विग्भिश्च सुहृद्भिश्च यथाऽन्यैर्द्विजसत्तमैः ।
रथैर्गजैस्तथाऽश्वैश्च प्रेष्यैश्च भरतर्षभ ।
गोखरोष्ट्रप्रयुक्तैश्च यानैश्च बहुभिर्वृतः ॥ ९-३५-२३ (६२२२२)
श्रान्तानां क्लान्तवपुषां शिशूनां विपुलायुषाम् ।
देशेदेशे तु देयानि दानानि विविधानि च ॥ ९-३५-२४ (६२२२३)
अर्चायै चार्थिनां राजन्क्लृप्तानि बहुशस्तथा ।
तानि यानीह देशेषु प्रतीक्षन्ति स्म भारत ॥ ९-३५-२५ (६२२२४)
बुभुक्षितानामर्थाय क्लृप्तमन्नं समन्ततः ॥ ९-३५-२६ (६२२२५)
योयो यत्र द्विजो भोज्यं भोक्तुं कामयते तदा ।
तस्यतस्य तु तत्रैवमुपजह्रुस्तदा नृष ॥ ९-३५-२७ (६२२२६)

तत्रतत्र स्थिता राजन्नौहिणेयस्य शासनात् ।
भक्ष्यपेयस्य कुर्वन्ति राशींस्तत्र समन्ततः ॥ ९-३५-२८ (६२२२७)
वासांसि च महार्हाणि पर्यङ्कास्तरणानि च ।
पूजार्थं तत्र क्लृप्तानि विप्राणां सुखमिच्छताम् ॥ ९-३५-२९ (६२२२८)
यत्र यः स्वपते विप्रो यो वा जागर्ति भारत ।
तत्रतत्रैव सर्वस्य क्लृप्तं सर्वमपश्यत ॥ ९-३५-३० (६२२२९)
यथासुखं जनः सर्वो याति तिष्ठति वै तदा ।
यातुकामस्य यानानि पानानि तृषितस्य च ॥ ९-३५-३१ (६२२३०)
बुभुक्षितस्य चान्नानि स्वादूनि भरतर्षभ ।
उपजह्रुर्नरास्तत्र वस्त्राण्याभरणानि च ॥ ९-३५-३२ (६२२३१)
स पन्थाः प्रबभौ राजन्सर्वस्यैव सुखावहः ।
स्वर्गोपमस्तदा वीर नराणां तत्र गच्छताम् ॥ ९-३५-३३ (६२२३२)
नित्यप्रमुदितोपेतः स्वादुभक्ष्यो जलान्वितः ।
विपण्यापणपण्यानां नानाजनशतैर्वृतः ।
नानाद्रुमलतोपेतो नानारत्नविभूषितः ॥ ९-३५-३४ (६२२३३)
ततो महात्मा नियतो मनस्विनां
पुण्येषु तीर्थेषु वसूनि राजन् ।
ददौ द्विजेभ्यः क्रतुदक्षिणाश्च
यदुप्रवीरो हलभृत्प्रतीतः ॥ ९-३५-३५ (६२२३४)
दोग्ध्रीश्च धेनूश्च सहस्रशो वै
सुवाससः काञ्चनबद्धशृङ्गीः ।
हयांश्च नानाविधदेशजातान्
यानानि दासांश्च शुभान्द्विजेभ्यः ॥ ९-३५-३६ (६२२३५)
रत्नानि मुक्तामणिविद्रुमं चा--
प्यग्र्यं सुवर्णं रजतं सुशुन्द्धम् ।
अयस्मयं ताम्रमयं च भाण्डं
ददौ द्विजातिप्रवरेषु रामः ॥ ९-३५-३७ (६२२३६)
एवं स वित्तं प्रददौ महात्मा
सरस्वतीतीर्थगतेषु भूरि ।
ययौ क्रमेणाप्रतिमप्रभाव--
स्ततः कुरुक्षेत्रमुदारवृत्तः ॥ ९-३५-३८ (६२२३७)
जनमेजय उवाच। ९-३५-३९क्ष् (५१६५)
सारस्वतानां तीर्थानां गुणोत्पत्तिं वदस्व मे ।
फलं च द्विपदां श्रेष्ठ कर्म निर्वृत्तिमेव च ॥ ९-३५-३९ (६२२३८)
यथाक्रमेण भगवंस्तीर्थानामनुपूर्वशः ।
ब्रूहि ब्रह्मविदां श्रेष्ठ परं कौतूहलं हि मे ॥ ९-३५-४० (६२२३९)

वैशम्पायन उवाच। ९-३५-४१क्ष् (५१६६)
तीर्थानां च फलं राजन्गुणोत्पत्तिं च सर्वशः ।
मयोच्यमानं वै पुण्यं शृणु राजेन्द्र कृत्स्नशः ॥ ९-३५-४१ (६२२४०)
पूर्वं महाराज यदुप्रवीर
ऋत्विक्सुहृद्विप्रगणैश्च सार्धम् ।
पुण्यं प्रभासं समुपाजगाम
यत्रोडुराड्यक्ष्मणा क्षीयमाणः ॥ ९-३५-४२ (६२२४१)
विमुक्तशापः पुनराप्य तेजः
सर्वं जगद्भासयते नरेन्द्र ।
एतत्तु तीर्थप्रवरं पृथिव्यां
प्रभासनात्तस्य ततः प्रभासः ॥ ॥ ९-३५-४३ (६२२४२)

इति श्रीमन्महाभारते शल्यपर्वणि ह्रदप्रवेशपर्वणि
अष्टदशदिवसयुद्धे पञ्चत्रिंशोऽध्यायः ॥ ३५ ॥
Mahabharata - Shalya Parva - Chapter Footnotes

९-३५-१४ मैत्रनक्षत्रयोगे अनुराधायां ॥
९-३५-१५ भोजः कृतवर्मा ॥
९-३५-१६ पुष्येण हि पाण्डवेभ्यः प्रयाणं अनुराधातस्तीर्थयात्रार्थमिति
विवेकः ॥
९-३५-३४ विपणिः पाण्यवीथिका ।आपणा हट्टाः। पण्यानि विक्रेयद्रव्याणि ॥
९-३५-३५ कृतदक्षिणाश्चेति क ङ पाठः ॥
९-३५-३९ गुणान् रमणीयत्वादीन् ।उत्पत्तिं सम्भवम्। कर्मनिर्वृत्तिं
तीर्थयात्राविदिसिद्धम्। निवृत्तिमपि कर्मणाम् इति क ङ पाठः ॥
९-३५-४० यथाकमेण तीर्थकमापेक्षया अनुपूर्वशः
गुणोत्पत्त्यादिक्रमापेक्षया ॥
९-३५-४३ प्रभासः प्रभासत्वम् ॥
९-३५-३५ पञ्चत्रिंशोऽध्यायः ॥

---

शल्यपर्व-अध्यय०३६
॥ श्रीः ॥
९.३६. अध्यायः ३६

Mahabharata - Shalya Parva - Chapter Topics
चन्द्रे स्वभार्यास्वश्विन्यादिदंक्षपुत्रीषु इतरोपेक्षणेन
रोहिण्यामेवासक्ते दक्षेण रोषाच्चन्द्रे यक्ष्मप्रक्षेपः ॥ १ ॥

देवै प्रसादितदक्षवचनाच्चन्द्रेण प्रभासतीर्थनिमज्जनेन क्षयरोगपरिहरणम् ॥ २ ॥
बलभद्रेण तत्तीर्थे मज्जनादि ॥ ३ ॥

Mahabharata - Shalya Parva - Chapter Text

९-३६-० (६२२४३)
जनमेजय उवाच। ९-३६-०क्ष् (५१६७)
किमर्थं भगवान्सोमो यक्ष्मणा समगृह्यत ।
कथं च तीर्थप्रवरे तस्मिंश्चन्द्रो न्यमज्जत ॥ ९-३६-१ (६२२४४)
कथमाप्लुत्य तस्मिंस्तु पुनराप्यायितः शशी ।
एतन्मे सर्वमाचक्ष्व विस्तरेण महामुने ॥ ९-३६-२ (६२२४५)
वैशम्पायन उवाच। ९-३६-३क्ष् (५१६८)
दक्षस्य तनयास्तात प्रादुरासन्विशाम्पते ।
स सप्तविंशतिं कन्या दक्ष सोमाय वै ददौ ॥ ९-३६-३ (६२२४६)
नक्षत्रयोगनिरताः सङ्ख्यानार्थं च ताभवन् ।
पत्न्यो वै तस्य राजेन्द्र सोमस्य शुभकर्मणः ॥ ९-३६-४ (६२२४७)
तास्तु सर्वा विशालाक्ष्यो रूपेणाप्रतिमाऽभवन् ।
अत्यरिच्यत तासां तु रोहिणी रुपसम्पदा ॥ ९-३६-५ (६२२४८)
ततस्तस्यां स भगवान्प्रीतिं चक्रे निशाकरः ।
साऽस्य हृद्या बभूवाथ तस्मात्तां बुभुजे सदा ॥ ९-३६-६ (६२२४९)
ततस्ताः कुपिताः सर्वा नक्षत्राख्या महात्मनः ।
ता गत्वा पितरं प्राहुः प्रजापतिमतन्द्रिताः ॥ ९-३६-७ (६२२५०)
सोमो वसति नास्मासु रोहिणीं भजते सदा ।
ता वयं सहिताः सर्वास्त्वत्सकाशे प्रजेश्वर ।
वत्स्यामो नियताहारास्तपश्चरणतत्पराः ॥ ९-३६-८ (६२२५१)
श्रुत्वा तासां तु वचनं दक्षः सोममथाब्रवीत् ।
समं वर्तस्व सर्वासु मा त्वाऽधर्मो महान्स्पृशेत् ॥ ९-३६-९ (६२२५२)
तास्तु सर्वाऽब्रवीद्दक्षो गच्छध्वं शशिनोन्तिकम् ।
समं वत्स्यति सर्वासु चन्द्रमा मम शासनात् ॥ ९-३६-१० (६२२५३)
विसृष्टास्तास्तथा जग्मुः शीतांशोर्भवनं शुभाः ।
तथाऽपि सोमो भगवान्पुनरेव महीपते ।
रोहिण्या सार्धमवसत्प्रीयमाणो मुहुर्मुहुः ॥ ९-३६-११ (६२२५४)
ततस्ताः सहिताः सर्वा भूयः पितरमब्रुवन् ॥ ९-३६-१२ (६२२५५)
सोमो वसति नास्मासु नाकरोद्वचनं तव ।
तव शुश्रूषणे युक्ता वत्स्यामो हि तवान्तिके ॥ ९-३६-१३ (६२२५६)

तासां तद्वचनं श्रुत्वा दक्षः सोममथाब्रवीत् ।
समं वर्तस्व सर्वासु मा त्वां शप्स्ये विरोचन ॥ ९-३६-१४ (६२२५७)
अनादृत्य तु तद्वाक्यं दक्षस्य भगवाञ्शशी ।
रोहिण्या सार्धमवसत्ततस्ताः कुपिताः पुनः ॥ ९-३६-१५ (६२२५८)
गत्वा च पितरं प्राहुः प्रणम्य शिरसा तदा ।
सोमो वसति नास्मासु तस्मान्नः शरणं भव ॥ ९-३६-१६ (६२२५९)
रोहिण्यामेव भगवान्सदा वसति चन्द्रमाः ।
न त्वद्वचो गणयति नास्मासु स्नेहमिच्छति ॥ ९-३६-१७ (६२२६०)
तस्मान्नस्त्राहि सर्वा वै यथा नः सोम आविशेत् ।
तच्छ्रुत्वा भगवान्क्रुद्धो यक्ष्माणं पृथिवीपते ॥ ९-३६-१८ (६२२६१)
ससर्ज रोषात्सोमाय स चोडुपतिमाविशत् ।
स यक्ष्मणाऽभिभूतात्माक्षीयताहरहः शशी ॥ ९-३६-१९ (६२२६२)
यत्नं चाप्यकरोद्राजन्मोक्षार्थं तस्य यक्ष्मणः ।
इष्ट्वेष्टिभिर्महाराज विविधाभिर्निशाकरः ॥ ९-३६-२० (६२२६३)
न चामुच्यत शापाद्वि क्षयं चैवाधिगच्छति ।
क्षीयमाणे ततः सोमे ओषध्यो न प्रजज्ञिरे ॥ ९-३६-२१ (६२२६४)
निरास्वादरसाः सर्वा हतवीर्याश्च सर्वशः ।
ओषधीनां क्षये जाते प्राणिनामपि सङ्क्षयः ॥ ९-३६-२२ (६२२६५)
कृशाश्चासन्प्रजाः सर्वाः क्षीयमाणे निशाकरे ।
ततो देवाः समागम्य सोममूचुर्महीपते ॥ ९-३६-२३ (६२२६६)
किमिदं भवतो रूपमीदृशं सम्प्रकाशते ।
कारणं ब्रूहि नः सर्वं येनेदं ते महद्भयम् ॥ ९-३६-२४ (६२२६७)
श्रुत्वा तु कारणं त्वत्तो विधास्यामस्ततो वयम् ।
एवमुक्तः प्रत्युवाच सर्वांस्ताञ्शशलक्षणः ॥ ९-३६-२५ (६२२६८)
शापस्य कारमं चैव यक्ष्माणं च तथाऽऽत्मनः ।
देवास्तस्य वचः श्रुत्वा गत्वा दक्षमथाऽब्रुवन् ॥ ९-३६-२६ (६२२६९)
प्रसीद भगवन्सोमे शापोऽयं विनिवर्त्यताम् ।
असौ हि चन्द्रमाः क्षीणः किञ्चिच्छेषो हि लक्ष्यते ॥ ९-३६-२७ (६२२७०)
क्षयाच्चैवास्य देवेश प्रजाश्चैव गताः क्षयम् ।
वीरुदोषधयश्चैव बीजानि विविधानि च ।
तथा नरा लोकगुरो प्रसादं कर्तुमर्हसि ॥ ९-३६-२८ (६२२७१)
एवमुक्तस्ततो देवान्प्राह वाक्यं प्रजापतिः ।
नैतच्छक्यं मम वचो व्यावर्तयितुमञ्जसा ॥ ९-३६-२९ (६२२७२)
हेतुना तु महाभागा निवर्तिष्यति केनचित् ।
समं वर्ततु सर्वासु शशी भार्यासु नित्यशः ॥ ९-३६-३० (६२२७३)
सरस्वत्या वरे तीर्थे निमज्जञ्शशलक्षणः ।

पुनर्वर्धिष्यते देवास्तद्वै सत्यं वचो मम ॥ ९-३६-३१ (६२२७४)
मासार्धं च क्षयं सोमो नित्यमेव गमिष्यति ।
मासार्धं तु पुनर्वृद्धिं सत्यमेतद्वचो मम ॥ ९-३६-३२ (६२२७५)
समुद्रं पश्चिमं गत्वा सरस्वत्यब्धिसङ्गमम् ।
आराधयतु देवेशं ततः कान्तिमवाप्स्यति ॥ ९-३६-३३ (६२२७६)
सरस्वतीं ततः सोमः स जगामर्षिशासनात् ।
प्रभासं प्रथमं तीर्थं सरस्वत्या जगाम ह ॥ ९-३६-३४ (६२२७७)
अमावास्यां महातेजास्तत्रामज्जन्महाद्युतिः ।
लोकान्प्रभासयामास शीतांशुत्वमवाप च ॥ ९-३६-३५ (६२२७८)
देवास्तु सर्वे राजेन्द्र प्रसादं प्राप्य पुष्कलम् ।
सोमेन सहिता भूत्वा दक्षस्य प्रमुखेऽभवन् ॥ ९-३६-३६ (६२२७९)
ततः प्रजापतिः सर्वा विससर्जाथ देवताः ।
सोमं च भगवान्प्रीतो भूयो वचनमब्रवीत् ॥ ९-३६-३७ (६२२८०)
मावमंस्थाः स्त्रियः पुत्र मा च विप्रान्कदाचन ।
गच्छ युक्तः सदा भूत्वा कुरु वै शासनं मम ॥ ९-३६-३८ (६२२८१)
स विसृष्टो महाराज जगामाथ स्वमालयम् ।
प्रजाश्च मुदिता भूत्वा ईजिरे च यथा पुरा ॥ ९-३६-३९ (६२२८२)
एवं ते सर्वमाख्यातं यथा शप्तो निशाकरः ।
प्रभासं च यथा तीर्थं तीर्थानां प्रवरं महत् ॥ ९-३६-४० (६२२८३)
अमावास्यां महाराज नित्यशः शशलक्षणः ।
स्नात्वाह्याप्यायते श्रीमान्प्रभासे तीर्थउत्तमे ॥ ९-३६-४१ (६२२८४)
अतश्चैतत्प्रजानन्ति प्रभासमिति भूमिप ।
प्रभां हि परमां लेभे तस्मिंश्चामज्ज्य चन्द्रमाः ॥ ९-३६-४२ (६२२८५)
ग्लोकान्प्रभासयामास पुपोष च वपुस्तथा ।
तत्र स्नात्वा हलीरामो दत्वा प्रीतोऽथ दक्षिणाः'॥ ९-३६-४३ (६२२८६)
ततस्तु चमसोद्भेदमभीतस्त्वगमद्बली ।
चमसोद्भेद इत्येवं यं जनाः कथयन्त्युत ॥ ९-३६-४४ (६२२८७)
तत्र दत्त्वा च दानानि विशिष्टानि हलायुधः ।
उषित्वा रजनीमेकां स्नात्वा च विधिवत्तदा ॥ ९-३६-४५ (६२२८८)
उदपानमथागच्छत्त्वरावान्केशवाग्रजः ।
आद्यं स्वस्त्ययनं चैव तत्रावाप्य महाबलः ॥ ९-३६-४६ (६२२८९)
स्निग्धत्वादोषधीनां च भूमेश्च जनमेजय ।
जानन्ति सिद्धा राजेन्द्र निगूढां तां सरस्वतीम् ॥ ॥ ९-३६-४७ (६२२९०)

इति श्रीमन्महाभारते शल्यपर्वणि ह्रदप्रवेशपर्वणि
अष्टादशदिवसयुद्धे षट्त्रिंशोऽध्यायः ॥ ३६ ॥

Mahabharata - Shalya Parva - Chapter Footnotes

९-३६-९ त्वा त्वां अधर्मः मा स्मृशेत् ॥
९-३६-१४ विरोचन हे विशेषेण रोचमान ।त्वां माशप्स्ये। तव रोचनां शापेन न हरामि तथा यतस्वेत्यर्थः ॥
९-३६-३८ गच्छयतः इति क.पाठः ॥
९-३६-३६ षटत्रिंशोऽध्यायः ॥

---

शल्यपर्व-अध्यय०३७
॥ श्रीः ॥
९.३७. अध्यायः ३७

Mahabharata - Shalya Parva - Chapter Topics
एकतद्वितत्रितनामकानां विप्राणां कथा ॥१ ॥

Mahabharata - Shalya Parva - Chapter Text

९-३७-० (६२२९१)
वैशम्पायन उवाच। ९-३७-०क्ष् (५१६९)
तस्मान्नदीगतं चापि ह्युदपानं यशस्विनः ।
त्रितस्य च महाराज जगामाथ हलायुधः ॥ ९-३७-१ (६२२९२)
तत्र दत्त्वा बहुद्रव्यं पूजयित्वा तथा द्विजान् ।
उपस्पृश्य च तत्रैव प्रहृष्टो मुसलायुधः ॥ ९-३७-२ (६२२९३)
तत्र धर्मपरो ह्यासीत्त्रितः स सुमहातपाः ।
कूपे च वसता तेन सोमः पीतो महात्मना ॥ ९-३७-३ (६२२९४)
तत्र चैनं समुत्सृज्य भ्रातरौ जग्मतुर्गृहान् ।
ततस्तौ वै शशापाथ त्रितो ब्राह्मणसत्तमः ॥ ९-३७-४ (६२२९५)
जनमेजय उवाच। ९-३७-५क्ष् (५१७०)
उदपानं कथं ब्रह्मन्कथं च सुमहातपाः ।
पतितः किं च सन्त्यक्तो भ्रातृभ्यां द्विजसत्तम ॥ ९-३७-५ (६२२९६)
कूपे कथं च हित्वैनं भ्रातरौ जग्मतुर्गृहान् ।
कथं च याजयामास पपौ सोमं च वै कथम् ।
एतदाचक्ष्व मे ब्रह्मन्श्रोतव्यं यदि मन्यसे ॥ ९-३७-६ (६२२९७)
वैशम्पायन उवाच। ९-३७-७क्ष् (५१७१)
आसन्पूर्वयुगे राजन्मुनयो भ्रातरस्त्रयः ।
एकतश्च द्वितश्चैव त्रितश्चादित्यसन्निभाः ॥ ९-३७-७ (६२२९८)

सर्वे प्रजापतिसमाः प्रजावन्तस्तथैव च ।
ब्रह्मलोकजिताः सर्वे तपसा ब्रह्मवादिनः ॥ ९-३७-८ (६२२९९)
तेषां तु तपसा प्रीतो नियमेन दमेन च ।
अभवद्गौतमो नित्यं पिता धर्मरतः सदा ॥ ९-३७-९ (६२३००)
स तु दीर्घेण कालेन तेषां प्रीतिमवाप्य च ।
जगाम भगवान्स्थानमनुरूपमिवात्मनः ॥ ९-३७-१० (६२३०१)
राजानस्तस्य ये ह्यासन्याज्या राजन्महात्मनः ।
ते सर्वे स्वर्गते तस्मिंस्तस्य पुत्रानपूजयन् ॥ ९-३७-११ (६२३०२)
तेषां तु कर्मणा राजंस्तथा चाध्ययनेन च ।
त्रितः स श्रेष्ठतां प्राप यथैवास्य पिता तथा ॥ ९-३७-१२ (६२३०३)
तथा सर्वे महाभागा मुनयः पुण्यलक्षणाः ।
अपूजयन्महाभागं यथास्य पितरं तथा ॥ ९-३७-१३ (६२३०४)
कदाचिद्धि ततो राजन्भ्रातरावेकतद्वितौ ।
यज्ञार्थं चक्रतुश्चिन्तां तथा वित्तार्थमेव च ॥ ९-३७-१४ (६२३०५)
तयोर्बुद्धिः समभवत्त्रितं गृह्य परन्तप ।
याज्यान्सर्वानुपादाय प्रतिगृह्य पशूंस्ततः ।
सोमं पास्यामहे हृष्टाः प्राप्य यज्ञं महाफलम् ॥ ९-३७-१५ (६२३०६)
चक्रुश्चैवं तथा राजन्भ्रातरस्त्रय एव च ।
यथा ते तु परिक्रम्य याज्यान्सर्वान्पशून्प्रति ।
याजयित्वा ततो याज्याँल्लब्ध्वा तु सुबहून्पशून् ॥ ९-३७-१६ (६२३०७)
याज्येन कर्मणा तेन प्रतिगृह्य विधानतः ।
प्राचीं दिशं महात्मान आजग्मुस्ते महर्षयः ॥ ९-३७-१७ (६२३०८)
त्रितस्तेषां महाराज पुरस्ताद्याति हृष्टवत् ।
एकतश्च द्वितश्चैव पृष्ठतः कालयन्पशून् ॥ ९-३७-१८ (६२३०९)
तयोश्चिन्ता समभवदेकतस्य द्वितस्य च ।
कथं च स्युरिमा गाव आवाभ्यां हि विना त्रितम् ॥ ९-३७-१९ (६२३१०)
तावन्योन्यं समाभाष्य एकतश्च द्वितश्च ह ।
यदूचतुर्मिथः पापौ तन्निबोध जनेश्वर ॥ ९-३७-२० (६२३११)
त्रितो यज्ञेषु कुशलस्तथा वेदेषु निष्ठितः ।
ततस्त्रितो बहुतरं गावः समुपलप्स्यते ॥ ९-३७-२१ (६२३१२)
तदावां सहितौ भूत्वा गाः प्रकाल्य व्रजावहे ।
त्रितोऽपि गच्छतां काममावाभ्यां वै विनाकृताः ॥ ९-३७-२२ (६२३१३)
वैशम्पायन उवाच। ९-३७-२३क्ष् (५१७२)
तेषामागच्छतां रात्रौ पथिस्थानां वृकोऽभवत् ।
तत्र कूपो विदूरेऽभूत्सरस्वत्यास्तटे महान् ॥ ९-३७-२३ (६२३१४)
अथ त्रितो वृकं दृष्ट्वा पथि तिष्ठन्तमग्रतः ।

तद्भयादपसर्पन्वै तस्मिन्कूपे पपात ह ।
अगाधे सुमहाघोरे सर्वभूतभयङ्करे ॥ ९-३७-२४ (६२३१५)
त्रितस्ततो महाराज कूपस्थो मुनिसत्तमः ।
आर्तनादं ततश्चक्रे तौ तु शुश्रुवतुर्मुनी ॥ ९-३७-२५ (६२३१६)
त ज्ञात्वा पतितं कूपे भ्रातरावेकतद्वितौ ।
वृकत्रासाच्च लोभाच्च समुत्सृज्य प्रजग्मतुः ॥ ९-३७-२६ (६२३१७)
भ्रातृभ्यां पशुलुब्धाभ्यामुत्सृष्टः स महातपाः ।
उदपाने तदा राजन्निर्जले पांसुपंवृते ॥ ९-३७-२७ (६२३१८)
त्रित आत्मानमालक्ष्य कूपे वीरुत्तृणावृते ।
निमग्नं भरतश्रेष्ठ नरके दुष्कृती यथा ॥ ९-३७-२८ (६२३१९)
ततो ह्यचिन्तयत्प्राज्ञो मृतभूतो ह्यसोमपः ।
सोमः कथं तु पातव्य इहस्थेन मया भवेत् ॥ ९-३७-२९ (६२३२०)
स एवमभिसञ्चिन्त्य तस्मिन्कूपे महातपाः ।
ददर्श वीरुधं तत्र लम्बमानां यदृच्छया ॥ ९-३७-३० (६२३२१)
पांसुग्रस्ते ततः कूपे न्यखनत्सलिलं मुनिः ।
अग्नीन्सङ्कल्पयामास होतॄनात्मानमेव च ॥ ९-३७-३१ (६२३२२)
ततस्तां वीरुधं सोमं सङ्कल्प सुमहातपाः ।
ऋचो जयूंषि सामानि मनसा चिन्तयन्मुनिः ॥ ९-३७-३२ (६२३२३)
ग्रावाणः शर्कराः कृत्वा प्रचक्रेऽभिषवं नृप ।
आज्यं च सलिलं चक्रे भागांश्च त्रिदिवौकसाम् ॥ ९-३७-३३ (६२३२४)
सोमस्याभिषवस्याग्रे प्रवृत्तस्तुमुलो ध्वनिः ।
स चाविशद्दिवं राजन्स्वरश्चैव त्रितस्त वै ॥ ९-३७-३४ (६२३२५)
समवाप च तं यज्ञां यथोक्तं ब्रह्मवादिभिः ॥ ९-३७-३५ (६२३२६)
वर्तमाने महायज्ञे त्रितस्य सुमहात्मनः ।
आविग्नं त्रिदिवं सर्वं कारमं च न बुध्यते ॥ ९-३७-३६ (६२३२७)
ततः सुतुमुलं शब्दं शुश्रावाथ बृहस्पतिः ।
श्रुत्वा चैवाब्रवीत्सर्वान्देवान्देवपुरोहितः ॥ ९-३७-३७ (६२३२८)
त्रितस्य वर्तते यज्ञस्तत्र गच्छामहे सुराः ।
स हि क्रुद्धः सृजेदन्यान्देवानपि महातपाः ॥ ९-३७-३८ (६२३२९)
तच्छ्रुत्वा वचनं तस्य सहिताः सर्वदेवताः ।
प्रययुस्तत्र यत्रास्ते त्रितयज्ञश्च वर्तते ॥ ९-३७-३९ (६२३३०)
ते तत्र गत्वा विबुधास्तं कूपं यत्र स त्रितः ।
ददृशुस्तं महात्मानं दीक्षितं यज्ञकर्मसु ॥ ९-३७-४० (६२३३१)
दृष्ट्वा चैनं महात्मानं श्रिया परमया युतम् ।
ऊचुश्चैनं महाभागं प्राप्ता भागार्थिनो वयम् ॥ ९-३७-४१ (६२३३२)
अथाब्रवीदृषिर्देवान्पश्यध्वं मां दिवौकसः ।

अस्मिन्प्रतिभये कूपे निमग्नं नष्टचेतसम् ॥ ९-३७-४२ (६२३३३)
ततस्त्रितो महाराज भागांस्तेषां यथाविधि ।
मन्त्रयुक्तान्समददात्तेन प्रीतास्तदाऽभवन् ॥ ९-३७-४३ (६२३३४)
ततो यथाविधि प्राप्तान्भागान्प्राप्य दिवौकसः ।
प्रीतात्मानो ददुस्तस्मै वरान्यान्मनसेच्छति ॥ ९-३७-४४ (६२३३५)
स तु वव्रे लवरं देवांस्त्रातुमर्हथ मामितः ।
यश्चाम्भोपस्पृशेत्कूपे स सोमपगतिं लभेत् ॥ ९-३७-४५ (६२३३६)
तत्र चोर्मिमती राजन्नुत्पपात सरस्वती ।
तयोत्क्षिप्तस्त्रितस्तस्थौ पूजयंस्त्रिदिवौकसः ॥ ९-३७-४६ (६२३३७)
तथेति चोक्त्वा विबुधा जग्मू राजन्यथाऽऽगताः ।
त्रितश्चाभ्यागमत्प्रीतः स्वमेव निलयं तदा ॥ ९-३७-४७ (६२३३८)
क्रुद्धस्तु स समासाद्य तावृषी भ्रातरौ तदा ।
उवाच परुषं वाक्यं शशाप च महातपाः ॥ ९-३७-४८ (६२३३९)
पशुलुब्धौ युवां यस्मान्मामुत्सृज्य प्रधावितौ ।
तस्माद्वृकाकृती रौद्रौ दंष्ट्रिणावभितश्चरौ ॥ ९-३७-४९ (६२३४०)
भवितारौ मया शप्तौ पापेनानेन कर्मणा ।
प्रसवश्चैव युवयोर्गोलाङ्गूलर्क्षवानराः ॥ ९-३७-५० (६२३४१)
इत्युक्तेन तदा तेन क्षणादेव विशाम्पते ।
तथाभूतावदृश्येतां वचनात्सत्यवादिनः ॥ ९-३७-५१ (६२३४२)
तत्राप्यमितविक्रान्तः स्पृष्ट्वा तोयं हलायुधः ।
दत्त्वाच विविधान्देयान्पूजयित्वा च वै द्विजान् ॥ ९-३७-५२ (६२३४३)
उदपानं च तं वीक्ष्य प्रशस्य च पुनःपुनः ।
नदीगतमदीनात्मा प्राप्तो विनशनं तदा ॥ ॥ ९-३७-५३ (६२३४४)

इति श्रीमन्महाभारते शल्यपर्वणि ह्रदप्रवेशपर्वणि
सप्तत्रिंशोऽध्यायः ॥ ३७ ॥

Mahabharata - Shalya Parva - Chapter Footnotes

९-३७-६ याजयामास स्वार्थे णिच् यागं कृतवान् ॥
९-३७-८ सर्वे प्रजापतिसुताः प्रजापतय एव च इति क पाठः ॥
९-३७-१६ पशून्प्रतिपश्चर्थम् । दक्षिणार्था गाः प्राप्तुमित्यर्थः ॥
९-३७-१८ त्रितश्चाकालयन्पशून् इति क पाठः ॥
९-३७-२३ पथिस्थाने वृकोऽभवदिति क ङ पाठः ॥
९-३७-४५ यश्चेहोपस्पृशेदिति झ पाठः ॥
९-३७-३७ सप्तत्रिंशोऽध्यायः ॥

॥ श्रीः ॥
९.३८. अध्यायः ३८

Mahabharata - Shalya Parva - Chapter Topics
बलभद्रस्य सरस्वतीतीरस्थानानातीर्थयात्राप्रकारवर्णनम् ॥१ ॥
तत्तत्तीर्थमहिमानुवर्णनं च ॥ २ ॥

Mahabharata - Shalya Parva - Chapter Text

९-३८-० (६२३४५)
वैशम्पायन उवाच। ९-३८-०क्ष् (५१७३)
ततो विनशनं राजन्नाजगाम हलायुधः ।
शूद्राभीरान्प्रति द्वेषाद्यत्र नष्टा सरस्वती ।
तस्मात्तामृषयो नित्यं प्राहुर्विनशनेति च ॥ ९-३८-१ (६२३४६)
तत्राप्युपस्पृश्य बलः सरस्वत्यां महाबलः ।
सुभूमिकं ततोऽगच्छत्सरस्वत्यास्तटे वरे ॥ ९-३८-२ (६२३४७)
तत्र चाप्सरसः शुभ्रा नित्यकालमतन्द्रिताः ।
क्रीडाभिर्विमलाभिश्च क्रीडन्ति विमलाननाः ॥ ९-३८-३ (६२३४८)
तत्र देवाः सगन्धर्वा मासिमासि जनेश्वर ।
अभिगच्छन्ति तत्तीर्थं पुण्यं ब्राह्मणसेवितम् ॥ ९-३८-४ (६२३४९)
तत्र नृत्यन्ति गन्धर्वास्तथैवाप्सरसां गणाः ।
समेत्य सहिता राजन्यथाप्राप्तं यथासुखम् ॥ ९-३८-५ (६२३५०)
तत्र मोदन्ति देवाश्च पितरश्च सवीरुधः ।
पुण्यैः पुष्पैः सदा दिव्यैः कीर्यमाणाः पुनः पुनः ॥ ९-३८-६ (६२३५१)
आक्रीडभूमिः सा राजंस्तासामप्सरसां शुभा ।
सुभूमिकेति विख्याता सरस्वत्यास्तटे वरे ॥ ९-३८-७ (६२३५२)
तत्र स्नात्वा च दत्त्वा च वसु विप्रेषु माधवः ।
श्रुत्वा गीतं च तद्दिव्यं वादित्राणां च निःस्वनम् ॥ ९-३८-८ (६२३५३)
शय्याश्च विपुला दृष्ट्वा देवगन्धर्वरक्षसाम् ।
गन्धर्वाणां ततस्तीर्थमागच्छद्रोहिणीसुतः ॥ ९-३८-९ (६२३५४)
विश्वावसुमुखास्तत्र गन्धर्वाप्सरसां गणाः ।
नृत्तवादित्रगीतं च कुर्वति सुमनोरमम् ॥ ९-३८-१० (६२३५५)
तत्र दत्त्वा हलधरो विप्रेभ्यो विविधं वसु ।
अजाविकं गोखरोष्ट्रं सुवर्णं रजतं तथा ॥ ९-३८-११ (६२३५६)
भोजयित्वा द्विजान्कामैः सन्तर्प्य च महाधनैः ।

प्रययौ सहितो विप्रैः स्तूयमानश्च माधवः ॥ ९-३८-१२ (६२३५७)
तस्माद्गन्धर्वतीर्थाच्च महाबाहुररिन्दमः ।
गर्गस्रोतो महातीर्थमाजगामैककुण्डली ॥ ९-३८-१३ (६२३५८)
तत्र गर्गेण वृद्धेन तपसा भावितात्मना ।
कालज्ञानगतिश्चैव ज्योतिषां च व्यतिक्रमः ॥ ९-३८-१४ (६२३५९)
उत्पाता दारुणाश्चैक शुभाश्च जनमेजय ।
सरस्वत्याः शुभे तीर्थे विदिता वै महात्मना ॥ ९-३८-१५ (६२३६०)
तस्य नाम्ना च तत्तीर्थं गर्गस्रोत इति स्मृतम् ॥ ९-३८-१६ (६२३६१)
तत्र गर्गं महाभागमृषयः सुव्रता नृप ।
उपासाञ्चक्रिरे नित्यं कालज्ञानं प्रति प्रभो ॥ ९-३८-१७ (६२३६२)
तत्र गत्वा महाराज बलः श्वेतानुलेपनः ।
विधिवद्धि धनं दत्त्वा मुनीनां भावितात्मनाम् ॥ ९-३८-१८ (६२३६३)
उच्चावचांस्तथा भक्ष्यान्विप्रेभ्यो विप्रदाय सः ।
नीलवासास्तदाऽगच्छच्छङ्खतीर्थं महायशाः ॥ ९-३८-१९ (६२३६४)
तत्रापश्यन्महाशङ्खं महामेरुमिवोच्छ्रितम् ।
श्वेतपर्वतसङ्काशमृषिसङ्घैर्निषेवितम् ।
सरस्वत्यास्तटे जातं नगं तालध्वजो बली ॥ ९-३८-२० (६२३६५)
यक्षा विद्याधराश्चैव राक्षसाश्चामितौजसः ।
पिशाचाश्चामितबला यत्र सिद्धाः सहस्रशः ॥ ९-३८-२१ (६२३६६)
ते सर्वे ह्यशनं त्यक्त्वा फलं तस्य वनस्पतेः ।
व्रतैश्च नियमैश्चैव कालेकाले स्म भुञ्जते ॥ ९-३८-२२ (६२३६७)
प्राप्तैश्च नियमैस्तैस्तैर्विचरन्तः पृथक्पृथक् ।
अदृश्यमाना मनुजैर्व्यचरन्पुरुषर्षभ ॥ ९-३८-२३ (६२३६८)
एवं ख्यातो नरव्याघ्र लोकेऽस्मिन्स वनस्पतिः ।
तत्र तीर्थं सरस्वत्याः पावनं लोकविश्रुतम् ॥ ९-३८-२४ (६२३६९)
तस्मिंश्च यदुशार्दूलो दत्त्वा तीर्थे पयस्विनीः ।
ताम्रायसानि भाण्डानि वस्त्राणि विविधानि च ॥ ९-३८-२५ (६२३७०)
पूजयित्वा द्विजांश्चैव पूजितश्च तपोधनैः ।
पुण्यं नैसर्गिकं राजन्नाजगाम हलायुधः ॥ ९-३८-२६ (६२३७१)
तत्र गत्वा मुनीन्दृष्ट्वा नानावेषधरान्बलः ।
आप्लुत्य सलिले चापि पूजयामास वै द्विजान् ॥ ९-३८-२७ (६२३७२)
तथैव दत्त्वा विप्रेभ्यः परिभोगान्सुपुष्कलान् ।
ततः प्रायाद्बलो राजन्दक्षिणेन सरस्वतीम् ॥ ९-३८-२८ (६२३७३)
गत्वा चैवं महाबाहुर्नातिदूरे महायशाः ।
धर्मात्मा नागधन्वानं तीर्थमागमदच्युतः ॥ ९-३८-२९ (६२३७४)
यत्र पन्नगराजस्य वासुकेः सन्निवेशनम् ।

महाद्युतेर्महाराज बहुभिः पन्नगैर्वृतम् ॥ ९-३८-३० (६२३७५)
ऋषिणां हि सहस्राणि तत्र नित्यं चतुर्दश ।
यत्र देवाः समागम्य वासुकिं पन्नगोत्तमम् ।
सर्वपन्नगराजानमभ्यषिञ्चन्यथाविधि ॥ ९-३८-३१ (६२३७६)
पन्नगेभ्यो भयं तत्र विद्यते न स्म पौरव ॥ ९-३८-३२ (६२३७७)
तत्रापि विधिवद्दत्वा विप्रेभ्यो रत्नसञ्चयान् ।
प्रायात्प्राचीं दिशं राजंस्तत्र तीर्थान्यनेकशः ॥ ९-३८-३३ (६२३७८)
सहस्रशतसङ्ख्यानि प्रथितानि पदेपदे ।
आप्लुत्य तत्र तीर्थेषु यथोक्तं तत्र चर्षिभिः ॥ ९-३८-३४ (६२३७९)
दत्त्वा वसु द्विजाग्र्येभ्यो निर्जगाम महाबलः ।
तत्रस्थानृषिसङ्घांस्तानभिवाद्य हलायुधः ॥ ९-३८-३५ (६२३८०)
ततो रामोऽगमत्तीर्थमृषिभिः सेक्तिं महत् ।
यत्र भूयो निववृते प्राङ्मुखा वै सरस्वती ॥ ९-३८-३६ (६२३८१)
ऋषीणां नैमिषेयाणावमेक्षार्थं महात्मनाम् ।
निवृत्तां तां सरिच्छ्रेष्ठां तत्र दृष्ट्वा तु लाङ्गली ।
वभूव विस्मितो राजन्बलः श्वेतानुलेपनः ॥ ९-३८-३७ (६२३८२)
जनमेजय उवाच। ९-३८-३८क्ष् (५१७४)
कस्मात्सरस्वती ब्रह्मन्निवृत्ता कप्राङ्मुखी भवत् ।
व्याख्यातमेतदिच्छामि सर्वमध्वर्युसत्तम ॥ ९-३८-३८ (६२३८३)
कस्मिंश्चित्कारणे तत्र विस्मितो यदुनन्दनः ।
निवृत्ता हेतुना केन कथमेव सरिद्वरा ॥ ९-३८-३९ (६२३८४)
वैशम्पायन उवाच। ९-३८-४०क्ष् (५१७५)
पूर्वं कृतयुगे राजन्नैमिषेयास्तपस्विनः ।
वर्तमाने सुविपुले सत्रे द्वादशवार्षिके ॥ ९-३८-४० (६२३८५)
ऋषयो बहवो राजंस्तत्सत्रमभिपेदिरे ।
उषित्वा च महाभागास्तस्मिन्सत्रे यथाविधि ॥ ९-३८-४१ (६२३८६)
निवृत्ते नैमिषे ये वै सत्रे द्वादशवार्षिके ।
आजग्मुर्ऋषयस्तत्र बहवस्तीर्थकारणात् ॥ ९-३८-४२ (६२३८७)
ऋषीणां बहुलत्वात्तु सरस्वत्या विशाम्पते ।
तीर्थानि नगरायन्ते कूले वै दक्षिणोत्तरे ॥ ९-३८-४३ (६२३८८)
समन्तपञ्चकं यावत्तावत्ते द्विजसत्तमाः ।
तीर्थलोभान्नरव्याघ्र नद्यास्तीरं समाश्रिताः ॥ ९-३८-४४ (६२३८९)
जुह्वतां तत्र तेषां तु मुनीनां भावितात्मनाम् ।
स्वाध्यायेनातिमहता बभूवुः पूरिता दिशः ॥ ९-३८-४५ (६२३९०)
अग्निहोत्रैस्ततस्तेषां हूयमानैर्महात्मनाम् ।
अशोभत सरिच्छ्रेष्ठा दीप्यमानैः समन्ततः ॥ ९-३८-४६ (६२३९१)

वालखिल्या महाराज अश्मकुट्टाश्च तापसाः ।
दन्तोलूखलिनश्चान्ये सम्प्रक्षालास्तथा परे ॥ ९-३८-४७ (६२३९२)
वायुभक्षा जलाहाराः पर्णभक्षाश्च तापसाः ।
नानानियमयुक्ताश्च तथा स्थण्डिलशायिनः ॥ ९-३८-४८ (६२३९३)
आसन्वै मुनयस्तवत्र सरस्वत्याः समीपतः ।
शोभयन्तः सरिच्छ्रेष्ठां गङ्गामिव दिवौकसः ॥ ९-३८-४९ (६२३९४)
शतशश्च समापेतुर्ऋषयः सत्रयाजिनः ।
तेऽवकाशं न ददृशुः सरस्वत्या महाव्रताः ।
तेऽवकाशं च ददृशुः कुरुक्षेत्रं (त्रे) महाव्रताः ॥ ९-३८-५० (६२३९५)
ततो यज्ञोपवीतैः स्वैस्तत्र कृत्वा सरस्वतीम् ।
जुहुवुश्चाग्निहोत्रांश्च चक्रुश्च विविधाः क्रियाः ॥ ९-३८-५१ (६२३९६)
ततस्तमृपिसङ्घातं निराशं चिन्तयान्वितम् ।
दर्शयामास राजेन्द्र तेषामर्थे सरस्वती ॥ ९-३८-५२ (६२३९७)
ततः कुञ्जान्बहून्कृत्वा सन्निवृत्ता सरस्वती ।
ऋषीणां पुण्यतपसां कारुण्याज्जनमेजय ॥ ९-३८-५३ (६२३९८)
ततो निवृत्त्य राजेन्द्र तेषामर्थे सरस्वती ।
भूयः प्रतीच्यभिमुखी प्रसुस्राव सरिद्वरा ॥ ९-३८-५४ (६२३९९)
अमोघा गमनं कृत्वा तेषां भूयो जगाम ह ।
अत्यद्भुतं महच्चक्रे तदा राजन्महानदी ॥ ९-३८-५५ (६२४००)
एवं स कुञ्जो राजन्वै नैमिषीय इति स्मृतः ।
कुरुश्रेष्ठ कुरुक्षेत्रे कुरुष्व महतीं क्रियाम् ॥ ९-३८-५६ (६२४०१)
तत्र कुञ्जान्बहून्दृष्ट्वा निवृत्तां च सरस्वतीम् ।
बभूव विस्मयस्तत्र रामस्याथ महात्मनः ॥ ९-३८-५७ (६२४०२)
उपस्पृश्य तु तत्रापि विधिवद्यदुनन्दनः ।
दत्त्वा देयान्द्विजातिभ्यो भाण्डानि विविधानि च ॥ ९-३८-५८ (६२४०३)
भक्ष्यं भोज्यं कच विविधं ब्राह्मणेभ्यः प्रदाय च ।
ततः प्रायाद्बलो राजन्पूज्यमानो द्विजातिभिः ॥ ९-३८-५९ (६२४०४)
सरस्वतीतीर्थवरं नानाद्विजगणायुतम् ।
बदरेङ्गुदश्यामाकाप्लुक्षाश्वत्थबिभीतकैः ॥ ९-३८-६० (६२४०५)
कङ्कोलैश्च पलाश्चैश्च करीरैः पीलुभिस्तथा ।
सरस्वतीतीर्थरुहैस्तरुभिर्विविधैस्तथा ॥ ९-३८-६१ (६२४०६)
करुषकवरैश्चैव बिल्वैराम्रातकैस्तथा ।
अतिमुक्तकषण्डैश्च पारिजातैश्च शोभितम् ॥ ९-३८-६२ (६२४०७)
कदलीवनभूयिष्ठं दृष्टिकान्तं मनोहरम् ।
वाय्वम्बुफलपर्णादैर्दन्तोलूखलिकैरपि ॥ ९-३८-६३ (६२४०८)
तथाऽश्मकुट्टैर्वातेयैर्मुनिभिर्बहुभिर्वृतम् ।

स्वाध्यायघोषसङ्घुष्टं मृगयूथशताकुलम् ॥ ९-३८-६४ (६२४०९)
अहिंस्रैर्धर्मपरमैर्नृभिरत्यर्थरोवितम् ।
सप्तसारस्वतं तीर्थमाजगाम हलायुधः ।
यत्र मङ्कणकः सिद्धस्तपस्तेपे महामुनिः ॥ ॥ ९-३८-६५ (६२४१०)

इति श्रीमन्महाभारते शल्यपर्वणि ह्रदप्रवेशपर्वणि
अष्टविंशोऽध्यायः ॥ ३८ ॥
Mahabharata - Shalya Parva - Chapter Footnotes

९-३८-१ शूद्राभीरान्द्विष्टमाना---इति क पाठः ॥
९-३८-३ शुभ्राः शुचयः ॥
९-३८-९ छायाश्च विपुला इति ङ पाठः ॥
९-३८-१० गन्धर्वाप्सरसान्विंताः इति ङ पाठः ॥
९-३८-१७ कालज्ञानार्थम् ॥
९-३८-२० शङ्कं शङ्कनामानम् । नगं वृक्षम् ॥
९-३८-२६ पुण्यं द्वैतवनं इति झ पाठः ॥
९-३८-३७ अवेक्षार्यमिष्टसिद्ध्यर्थम् ॥
९-३८-३८ इच्छामि श्रोतुमिति शेषः ॥
९-३८-५१ यज्ञोपवीतैः यज्ञसूत्रैः निराशं सरस्वतीजललाभे इत्यर्थः ॥
९-३८-५३ कुज्जान् आत्मनो वासस्थानानि तिर्थविशेषानित्यर्थः ॥
९-३८-३८ अष्टत्रिंशोऽध्यायः ॥

---

शल्यपर्व-अध्यय०३९
॥ श्रीः ॥
९.३९. अध्यायः ३९

Mahabharata - Shalya Parva - Chapter Topics
सरस्वत्याः सप्तधाविभागे कारणाभिधानम् ॥ १ ॥
सप्तभागानां कस्मिंश्चित्तीर्थे एकीभवनात्तत्तीर्थस्य
सप्तसारस्वतनामप्राप्तिः ॥ २ ॥
मङ्कणमुनिचरितप्रतिपादनम् ॥ ३ ॥

Mahabharata - Shalya Parva - Chapter Text

९-३९-० (६२४११)
जनमेजय उवाच। ९-३९-०क्ष् (५१७६)

सप्तसारस्वतं कस्मात्कश्च मङ्कणको मुनिः ।
कथं सिद्धः स भगवान्कश्चास्य नियमोऽभवत् ॥ ९-३९-१ (६२४१२)
कस्य वंशे समुत्पन्नः किं चाधीतं द्विजोत्तम ।
एतन्मे सर्वमाचक्ष्व यथातत्त्वं महामुने ॥ ९-३९-२ (६२४१३)
वैशम्पायन उवाच। ९-३९-३क्ष् (५१७७)
सप्तनद्यः सरस्वत्या याभिर्व्याप्तमिदं जगत् ।
आहूता बलवद्भिर्हि तत्रतत्र सरस्वती ॥ ९-३९-३ (६२४१४)
सुप्रभा काञ्चनाक्षी च विशाला च मनोरमा ।
सरस्वती चौघवती सुरेणुर्विमलोदका ॥ ९-३९-४ (६२४१५)
पितामहस्य महतो वर्तमाने महामखे ।
वितते यज्ञवाटे च संसिद्धेषु द्विजातिषु ॥ ९-३९-५ (६२४१६)
पुण्याहघोषैर्विमलैर्वेदानां निनदैस्तथा ।
देवेषु चैव व्यग्रेषु तस्मिन्यज्ञविधौ तदा ॥ ९-३९-६ (६२४१७)
तत्र चैव महाराज दीक्षिते प्रपितामहे ।
यजतस्तस्य सत्रेण सर्वकामसमृद्धिना ॥ ९-३९-७ (६२४१८)
मनसा चिन्तिता ह्यर्था धर्मार्थकुशलैस्तदा ।
उपतिष्ठन्ति राजेन्द्र द्विजातींस्तत्रतत्र ह ॥ ९-३९-८ (६२४१९)
जगुश्च तत्र गन्धर्वा ननृतुश्चाप्सरोगणाः ।
वादित्राणि च दिव्यानि वादयामासुरञ्जसा ॥ ९-३९-९ (६२४२०)
तस्य यज्ञस्य सम्पत्त्या तुतुषुर्देवतागणाः ।
विस्मयं परमं जग्मुः किमु मानुषयोनयः ॥ ९-३९-१० (६२४२१)
वर्तमाने यथा यज्ञे पुष्करस्थे पितामहे ।
अब्रुवन्नृषयो राजन्नायं यज्ञो महागुणः ॥ ९-३९-११ (६२४२२)
न दृश्यते सरिच्छ्रेष्ठा यस्मादिह सरस्वती ।
तच्छ्रुत्वा भगवान्प्रीतः सस्माराथ सरस्वतीम् ॥ ९-३९-१२ (६२४२३)
पितामहेन यजता आहूता पुष्करेषु वै ।
सुप्रभा नाम राजेन्द्र नाम्ना तत्र सरस्वती ॥ ९-३९-१३ (६२४२४)
तां दृष्ट्वा मुनयस्तुष्टास्त्वरायुक्तां सरस्वतीम् ।
पितामहं मानयन्तीं क्रतुं ते बहुमेनिरे ॥ ९-३९-१४ (६२४२५)
एवमेषा सरिच्छ्रेष्ठा पुष्करेषु सरस्वती ।
पितामहार्थं सम्भूता तुष्ट्यर्थं च मनीषिणाम् ॥ ९-३९-१५ (६२४२६)
नैमिषे मुनयो राजन्समागम्य समासते ।
तत्र चित्राः कथा ह्यासन्वेदं प्रति जनेश्वर ॥ ९-३९-१६ (६२४२७)
यत्र ते मुनयो ह्यासन्नानास्वाध्यायवेदिनः ।
ते समागम्य मुनयः सस्मारुर्वै सरस्वतीम् ॥ ९-३९-१७ (६२४२८)
सा तु ध्याता महाराज मुनिभिः सत्रयाजिभिः ।

समागतानां राजेन्द्र साहाय्यार्थं महात्मनाम् ।
आजगाम महाभागा तत्र पुण्या सरस्वती ॥ ९-३९-१८ (६२४२९)
नैमिषे काञ्चनाक्षी तु मुनीनां सत्रायाजिxxx म् ।
आगता सरितां श्रेष्ठा तत्र भारत पूजित ॥ ९-३९-१९ (६२४३०)
गयस्य यजमानस्य गयेष्वेव महाक्रतुम् ।
आहूता सरितां श्रेष्ठा गययज्ञे सरस्वती ॥ ९-३९-२० (६२४३१)
गयस्य यजमानस्य गयेष्वेव महाक्रतुम् ।
विशालां तु गयस्याहुर्ऋषयः संशितव्रता ॥ ९-३९-२१ (६२४३२)
सरित्सा हिमवत्पार्श्वात्प्रस्रुता शीघ्रगामिनी ।
औद्दालकेस्तथा यज्ञे यजतस्तस्य भारत ॥ ९-३९-२२ (६२४३३)
समेते सर्वतः स्फीते मुनीनां मण्डले तदा ।
उत्तरे कोसलाभागे पुण्ये राजन्महात्मनः ॥ ९-३९-२३ (६२४३४)
औद्दालकेन यजता पूर्वं ध्याता सरस्वती ।
आजगाम सरिच्छ्रेष्ठा तं देशं मुनिकारणात् ॥ ९-३९-२४ (६२४३५)
पूज्यमाना मुनिगणैर्वल्कलाजिनसंवृतैः ।
मनोहरेति विख्याता सा हि तैर्मनसा वृता ॥ ९-३९-२५ (६२४३६)
श्सुरणुऋषभे द्वीपे पुण्ये राजर्षिसेविते ॥
कुरोश्च यजमानस्य कुरुक्षेत्रे महात्मनः ।
आजगाम महाभागा सरिच्छ्रेष्ठा सरस्वती ॥ ९-३९-२६ (६२४३७)
ओघवत्यपि राजेन्द्र वसिष्ठेन महात्मना ।
समाहूता कुरुक्षेत्रे दिव्यतोया सरस्वती ॥ ९-३९-२७ (६२४३८)
दक्षेण यजता चापि गङ्गाद्वारे सरस्वती ।
सुवेणिरिति विख्याता प्रस्रुता शीघ्रगामिनी ॥ ९-३९-२८ (६२४३९)
विमलोदा भगवती ब्रह्मणा यजता पुनः ।
समाहूता ययौ तत्र पुण्ये हैमवते गिरौ ॥ ९-३९-२९ (६२४४०)
एकीभूतास्ततस्तास्तु तस्मिंस्तीर्थे समागताः ।
सप्तसारस्वतं तीर्थं ततस्तु प्रथितं भुवि ॥ ९-३९-३० (६२४४१)
इति सप्तसरस्वत्यो नामतः परिकीर्तिताः ।
सप्तसारस्वतं चैव तीर्थं पुण्यं तथा स्मृतम् ॥ ९-३९-३१ (६२४४२)
शृणु मङ्कणकस्यापि कौमारब्रह्मचारिणः ।
आपगामवगाढस्य राजन्प्रक्रीडितं महत् ॥ ९-३९-३२ (६२४४३)
दृष्ट्वा यदृच्छया तत्र स्त्रियमम्भसि भारत ।
स्नायन्तीं रुचिरापाङ्गीं दिग्वाससमनिन्दिताम्। ९-३९-३३ (६२४४४)
सरस्वत्यां महाराज चस्कन्दे वीर्यमम्भसि ॥
तद्रेतः स तु जग्राह कलशे वै महातपाः। ९-३९-३४ (६२४४५)
ग्ऋषिः परमधर्मात्मा तदा पुरुषसत्तम'॥

सप्तधा प्रविभागं तु कलशस्थं जगाम ह। ९-३९-३५ (६२४४६)
तत्रर्षयः सप्त जाता जज्ञिरे मरुतां गणाः ॥
वायुवेगो वायुबलो वायुहा वायुमण्डलः। ९-३९-३६ (६२४४७)
वायुज्वालो वायुरेता वायुचक्रश्च वीर्यवान् ।
महर्षेश्चरितं यादृक् त्रिषु लोकेषु विश्रुतम् ॥ ९-३९-३७ (६२४४८)
पुरा मङ्कणकः सिद्धः कुशाग्रेणेति नः श्रुतम् ।
क्षतः किल करे राजंस्तस्य शाकरसोऽस्रवत् ॥ ९-३९-३८ (६२४४९)
स वै शाकरसं दृष्ट्वा हर्षाविष्टः प्रनृत्तवान् ॥ ९-३९-३९ (६२४५०)
ततस्तस्मिन्प्रनृत्ते वै स्थावरं जङ्गमं च यत् ।
प्रनृत्तमुभयं वीर सेजसा तस्य मोहितम् ॥ ९-३९-४० (६२४५१)
ब्रह्मादिभिः सुरै राजन्नृषिभिश्च तपोधनैः ।
विज्ञप्तो वै महादेव ऋषेरर्थे नराधिप ।
नायं नृत्येद्यथा देव तथा त्वं कर्तुमर्हसि ॥ ९-३९-४१ (६२४५२)
ततो देवो मुनिं दृष्ट्वा हर्षाविष्टमतीव ह ।
सुगणां हितकामार्थं महादेवोऽभ्यभाषत ॥ ९-३९-४२ (६२४५३)
भोभो ब्राह्मण धर्मज्ञ किमर्थं नृत्यते भवान् ।
हर्षस्थानं किमर्थं च तवेदमधिकं मुने ।
तपस्विनो धर्मपथे स्थितस्य द्विजसत्तम ॥ ९-३९-४३ (६२४५४)
ऋषिरुवाच। ९-३९-४४क्ष् (५१७८)
किं न पश्यसि मे ब्रह्मन्कराच्छाकरसं स्रुतम् ।
यं दृष्ट्वा सम्प्रनृत्तो वै हर्षेण महता विभो ॥ ९-३९-४४ (६२४५५)
तं प्रहस्याब्रवीद्देवो मुनिं रागेण मोहितम् ।
अहं न विस्मयं विप्र गच्छामीति प्रपश्य माम् ॥ ९-३९-४५ (६२४५६)
एवमुक्त्वा मुनिश्रेष्ठं महादेवेन धीमता ।
अङ्गुल्यग्रेण राजेन्द्रस्वाङ्गुष्ठस्ताडितोऽभवत् ॥ ९-३९-४६ (६२४५७)
ततो भस्म क्षताद्राजन्निर्गतं हिमसन्निभम् ॥ ९-३९-४७ (६२४५८)
तद्दृष्ट्वा व्रीडितो राजन्स मुनिः पादयोर्गतः ।
मेने देवं महादेवमिदं चोवाच विस्मितः ॥ ९-३९-४८ (६२४५९)
नान्यं देवादहं मन्ये रुद्रात्परतरं महत् ।
सुरासुरस्य जगतो गतिस्त्वमसि शूलधृक् ॥ ९-३९-४९ (६२४६०)
त्वया सृष्टमिदं विश्वं वदन्तीह मनीषिणः ।
त्वामेव सर्वं विशति पुनरेव युगक्षये ॥ ९-३९-५० (६२४६१)
देवैरपि न शक्यस्त्वं परिज्ञातुं कुतो मया ।
त्वयि सर्वे स्म दृश्यन्ते भावा ये जगति स्थिताः ॥ ९-३९-५१ (६२४६२)
त्वामुपासन्त वरदं देवा ब्रह्मादयोऽनघ ।
सर्वस्त्वमसि देवानां कर्ता कारयिता च ह ॥ ९-३९-५२ (६२४६३)

त्वत्प्रसादात्सुराः सर्वे मोदन्तीहाकुतोभयाः ।
ग्त्वं प्रभुः परमैश्वर्यादधिकं भासि शङ्करः ॥ ९-३९-५३ (६२४६४)
त्वयि ब्रह्मा च विष्णुश्च लोकान्सन्धाय तिष्ठतः ।
त्वन्मूलं च जगत्सर्वं भूतस्थावरजङ्गमम् ॥ ९-३९-५४ (६२४६५)
स्वर्गं च परमं स्थानं नृणामभ्युदयार्थिनाम् ।
ददासि च प्रसन्नस्त्वं भक्तानां परमेश्वर ॥ ९-३९-५५ (६२४६६)
अनावृत्तिपदं नृणां नित्यं निश्श्रेयसार्थिनाम् ।
ददासि कर्मिणां कर्म भावयन्ध्यानयोगतः ॥ ९-३९-५६ (६२४६७)
न वृथाऽस्ति महादेव प्रसादस्ते महेश्वर ।
यस्मात्त्वयोपकरणात्करोमि कमलेक्षण ॥ ९-३९-५७ (६२४६८)
प्रपद्ये शरणं शंभुं सर्वदा सर्वतः स्थितम् ।
कर्मणा मनसा वाचा तमेवाभिभजाम्यहम् ॥ ९-३९-५८ (६२४६९)
जनमेजय उवाच।' ९-३९-५९क्ष् (५१७९)
एवं स्तुत्वा महादेवं स ऋषिः प्रणतोऽभवत् ॥ ९-३९-५९ (६२४७०)
यदिदं चापलं देव कृतमेतत्स्मयादिकम् ।
ततः प्रसादयमि त्वां तपो मे न क्षरेदिति ॥ ९-३९-६० (६२४७१)
ततो देवः प्रीतमनास्तमृषिं पुनरब्रवीत् ।
तपस्ते वर्धतां विप्र मत्प्रसादात्सहस्रधा ॥ ९-३९-६१ (६२४७२)
आश्रमे चेह वत्स्यामि त्वया सार्धमहं सदा ।
सप्तसारस्वते चास्मिन्यो मामर्चिष्यते नरः ॥ ९-३९-६२ (६२४७३)
न तस्य दुर्लभं किञ्चिद्भवितेह परत्र वा ।
सारस्वतं च ते लोकं गमिष्यन्ति न संशयः ॥ ९-३९-६३ (६२४७४)
एतन्मङ्कणकस्यापि चरितं भूरितेजसः ।
स हि पुत्रः सुकन्यायामुत्पन्नो मातरिश्वना ॥ ॥ ९-३९-६४ (६२४७५)

इति श्रीमन्महाभारते शल्यपर्वणि ह्रदप्रवेशपर्वणि
एकोनचत्वारिंशोऽध्यायः ॥ ३९ ॥

Mahabharata - Shalya Parva - Chapter Footnotes

९-३९-४ विशाला सुतनुस्तथा । सरस्वत्योघमाला च सुवेणी निर्मलोदका इति ङ पाठः। सरस्वत्यूर्मिमाला च सुवेणी विमलोदका इति क पाठः ॥
९-३९-१७ सस्मरुः स्मृतवन्तः ॥
९-३९-२० गयेषु गयदेशेषु ॥
९-३९-२५ मनोरमेति विख्याता सा हि तैर्मनसा कृता इति झ पाठः ॥
९-३९-२८ सुरेणुरिति झ पाठः ॥
९-३९-३२ राजन्प्रजपितं महत् इति क पाठः ॥

९-३९-३३ स्नायन्तीं स्नान्तीम् ॥
९-३९-३६ मरुतां प्राणवायूनां एकोनपञ्चाशताम् । एतेषां तपसा मरुतो
दित्यामुत्पन्ना इति कल्पान्तरविषयोऽयमर्थः ॥
९-३९-६० स्मयादिकं गर्दादिकम् ॥
९-३९-३९ एकोनचत्वारिंशोऽध्यायः ॥

---

शल्यपर्व-अध्यय०४०
॥ श्रीः ॥
९.४०. अध्यायः ४०

Mahabharata - Shalya Parva - Chapter Topics
बलरामस्यौशनसतीर्थगमनम् ॥ १ ॥
तत्तीर्थस्य कपालमोचननामप्राप्तिहेतूक्तिः ॥ २ ॥
बलस्य उशंग्वाश्रमगमनम् ॥ ३ ॥
उशङ्गुचरित्रकथनं बलस्य पृथूदकतीर्थे स्नानदानादि ॥ ४ ॥

Mahabharata - Shalya Parva - Chapter Text

९-४०-० (६२४७६)
वैशम्पायन उवाच। ९-४०-०क्ष् (५१८०)
उषित्वा तत्र रामस्तु सम्पूज्याश्रमवासिनः ।
तथा मङ्कणके प्रीतिं शुभां चक्रे हलायुधः ॥ ९-४०-१ (६२४७७)
दत्त्वा दानं द्विजातिभ्यो रजनीं तामुपोष्य च ।
पूजितो मुनिसङ्घैश्च प्रातरुत्थाय लाङ्गली ॥ ९-४०-२ (६२४७८)
अनुज्ञाप्य मुनीन्सर्वान्स्पृष्ट्वा तोयं च भारत ।
प्रययौ त्वरितो रामस्तीर्थहेतोर्महाबलः ॥ ९-४०-३ (६२४७९)
ततस्त्वौशनसं तीर्थमाजगाम हलायुधः ।
कपालमोचनं नाम यत्र मुक्तो महामुनिः ॥ ९-४०-४ (६२४८०)
महता शिरसा राजन्ग्रस्तजङ्घो महोदरः ।
राक्षसस्य महाराज रामक्षिप्तस्य वै पुरा ॥ ९-४०-५ (६२४८१)
तत्र पूर्वं तपस्तप्तं काव्येन सुमहात्मना ।
यत्रास्य नीतिरखिला प्रादुर्भूता महात्मनः ।
यत्रस्थश्चिन्तयामास दैत्यदानवविग्रहम् ॥ ९-४०-६ (६२४८२)
तत्प्राप्य च बलो राजंस्तीर्थप्रवरमुत्तमम् ।
विधिवद्वै ददौ वित्तं ब्राह्मणानां महात्मनाम् ॥ ९-४०-७ (६२४८३)
जनमेजय उवाच। ९-४०-८क्ष् (५१८१)

कपालमोचनं ब्रह्मन्कथं यत्र महामुनिः ।
मुक्तः कथं चास्य शिरो लग्नं केन च हेतुना ॥ ९-४०-८ (६२४८४)
वैशम्पायन उवाच। ९-४०-९क्ष् (५१८२)
पुरा वै दण्डकारण्ये राघवेण महात्मना ।
वसता राजशार्दूल राक्षसाञ्शमयिष्यता ॥ ९-४०-९ (६२४८५)
जनस्थाने शिरश्छिन्नं राक्षसस्य दुरात्मनः ।
क्षुरेण शितधारेण तत्पणात महावने ॥ ९-४०-१० (६२४८६)
महोदरस्य तल्लग्नं जङ्घायां वै यदृच्छया ।
वने विचरतो राजन्नस्थि भित्त्वाऽस्फुरत्तदा ॥ ९-४०-११ (६२४८७)
स तेन लग्नेन तदा द्विजातिर्न शशाक ह ।
अभिगन्तुं महाप्राज्ञस्तीर्थान्यायतनानि च ॥ ९-४०-१२ (६२४८८)
स पूतिना विस्रवता वेदनार्तो महामुनिः ।
जगाम् सर्वतीर्थानि पृथिव्यां चेति नः श्रुतम् ॥ ९-४०-१३ (६२४८९)
स गत्वा सरितः सर्वाः समुद्रांश्च महातपाः ।
कथयामास तत्सर्वमृषीणां भावितात्मनाम् ॥ ९-४०-१४ (६२४९०)
आप्लुत्य सर्वतीर्थेषु न च मोक्षमवाप्तवान् ।
स तु शुश्राव विप्रेन्द्रो मुनीनां वचनं महत् ॥ ९-४०-१५ (६२४९१)
सरस्वत्यास्तीर्थवरं ख्यातमौशनसं तदा ।
सर्वपापप्रशमनं सिद्धिक्षेत्रमनुत्तमम् ॥ ९-४०-१६ (६२४९२)
स तु गत्वा ततस्तत्र तीर्थमौशनसं द्विजः ॥ ९-४०-१७ (६२४९३)
तत औशनसे तीर्थे तस्योपस्पृशतस्तदा ।
xxx च्छिरश्चरणं मुक्त्वा पपातान्तर्जले तदा ॥ ९-४०-१८ (६२४९४)
विमुक्तस्तेन शिरसा परं सुखमवाप ह ।
स चाप्यन्तर्जले मूर्धा जगामादर्शनं विभो ॥ ९-४०-१९ (६२४९५)
ततः स विरुजो राजन्पूतात्मा वीतकल्मषः ।
आजगामाश्रमं प्रीतः कृतकृत्यो महोदरः ॥ ९-४०-२० (६२४९६)
सोऽथ गत्वाऽऽश्रमं पुण्यं विप्रमुक्तो महातपाः ।
कथयामास तत्सर्वमृषीणां भावितात्मनाम् ॥ ९-४०-२१ (६२४९७)
ते श्रुत्वा वचनं तस्य ततस्तीर्थस्य मानद ।
कपालमोचनमिति नाम चक्रुः समागताः ॥ ९-४०-२२ (६२४९८)
स चापि तीर्थप्रवरं पुनर्गत्वा महानृषिः ।
पीत्वा पयःसुविपुलं सिद्धिमायात्तदा मुनिः ॥ ९-४०-२३ (६२४९९)
तत्र दत्त्वा बहून्देयान्विप्रान्सम्पूज्य माधवः ।
जगाम तत्र राजेन्द्र उशङ्गोराश्रमं तदा ॥ ९-४०-२४ (६२५००)
यत्र तप्तं तपो घोरमार्ष्टिषेणेन भारत ।
ब्राह्मण्यं लब्धवान्यत्र विश्वामित्रो महामुनिः ॥ ९-४०-२५ (६२५०१)

सर्वकामसमृद्धं च तदाश्रमपदं महत् ।
मुनिभिर्ब्राह्मणैश्चैव सेवितं सर्वदा विभो ॥ ९-४०-२६ (६२५०२)
ततो हलधरः श्रीमान्ब्राह्मणैः परिवारितः ।
जगाम तत्र राजेन्द्र उशङ्गुस्तनुमत्यजत् ॥ ९-४०-२७ (६२५०३)
उशङ्गुर्ब्राह्मणो वृद्धस्तपोनित्यश्च भारत ।
देहन्यासे कृतमना विचिन्त्य बहुधा तदा ॥ ९-४०-२८ (६२५०४)
ततः सर्वानुपादाय तनयान्वै महातपाः ।
उशङ्गुरब्रवीत्तत्र नयध्वं मां पृथूदकम् ॥ ९-४०-२९ (६२५०५)
विज्ञायातीतवयसमुशङ्गुं ते तपोधनाः ।
तं च तीर्थमपानिन्युः सरस्वत्यास्तपोधनम् ॥ ९-४०-३० (६२५०६)
स तैः पुत्रैस्तदा धीमानानीतो वै सरस्वतीम् ।
पुण्यां तीर्थशतोपेतां विप्रसङ्घैर्निषेविताम् ॥ ९-४०-३१ (६२५०७)
स तत्र विधिना राजन्नाप्लुत्य सुमहातपाः ।
ज्ञात्वा तीर्थगुणांश्चैव प्राहेदमृषिसत्तमः ।
सुप्रीतः पुरुषव्याघ्र सर्वान्पुत्रानुपासतः ॥ ९-४०-३२ (६२५०८)
सरस्वत्युत्तरे तीरे यस्त्यजेदात्मनस्तनुम् ।
पृथूदके जप्यपरो नैनं श्वो मरणं तपेत् ॥ ९-४०-३३ (६२५०९)
ग्इत्युक्त्वा स्वां तनुं त्यक्त्वा प्रपेदे वैष्णवं पदम्’।
तत्राप्लुत्य स धर्मात्मा उपस्पृश्य हलायुधः ।
दत्त्वा चैव बूहून्देयान्विप्राणां विप्रवत्सलः ॥ ९-४०-३४ (६२५१०)
ससर्ज यत्र भगवाँल्लोकाँल्लोकपितामहः ॥ ९-४०-३५ (६२५११)
यत्रार्ष्टिषेणः कौरव्य ब्राह्मण्यं संशितव्रतः ।
तपसा महता राजन्प्राप्तवानृषिसत्तमः ॥ ९-४०-३६ (६२५१२)
सिन्धुद्वीपश्च राजर्षिर्देवापिश्च महातपाः ।
ब्राह्मण्यं लब्धवान्यत्र विश्वामित्रस्तथा मुनिः ॥ ९-४०-३७ (६२५१३)
महातपस्वीं भगवानुग्रतेजा महातपाः ।
तत्राजगाम बलवान्बलभद्रः प्रतापवान् ॥ ॥ ९-४०-३८ (६२५१४)

इति श्रीमन्महाभारते शल्यपर्वणि ह्रदप्रवेशपर्वणि
चत्वारिंशोऽध्यायः ॥ ४० ॥

Mahabharata - Shalya Parva - Chapter Footnotes

९-४०-१७ तीर्थमुपास्पृशदिति शेषः ॥
९-४०-२४ त्रिशङ्कोराश्रमं तदा इति क।पाठः । रुशङ्कोराश्रमं
तदा इति झं। पाठः ॥
९-४०-३३ अक्षयं स्वर्गमाप्नोतीत्यर्थः ॥

९-४०-३६ ब्राह्मणं ब्रह्मसन्घातो वेदसमूह इति यावत् । ततः स्वार्थे ष्यञ्। ब्राह्मणं ब्रह्मसङ्घाते इति मेदिनी ॥
९-४०-४० चत्वारिंशोऽध्यायः ॥

---

शल्यपर्व-अध्यय०४१
॥ श्रीः ॥
९.४१. अध्यायः ४१

Mahabharata - Shalya Parva - Chapter Topics
आर्ष्टिषेणेन पृथूदकतीर्थे तपश्चर्यवा कृत्स्नवेदाधिगमः ॥ १ ॥
विश्वामित्रादीनां तत्तत्तीर्थे तपश्चर्यया ब्राह्मण्याधिगम
॥ बलभद्रस्य तत्र स्नानादिपूर्वकं बकाश्रमम्प्रति गमनम् ॥ ३ ॥

Mahabharata - Shalya Parva - Chapter Text

९-४१-० (६२५१५)
जनमेजय उवाच। ९-४१-०क्ष् (५१८३)
आर्ष्टिषेणस्तथा ब्रह्मन्विपुलं तप्तवांस्तपः ।
सिन्धुद्वीपः कथं चापि ब्राह्मण्यं लब्धवांस्तदा ॥ ९-४१-१ (६२५१६)
देवापिश्च कथं ब्रह्मन्विश्वामित्रश्च सत्तम ।
तन्ममाचक्ष्व भगवन्परं कौतूहलं हि मे ॥ ९-४१-२ (६२५१७)
वैशम्पायन उवाच। ९-४१-३क्ष् (५१८४)
पुरा कृतयुगे राजन्नार्ष्टिषेणो द्विजोत्तमः ।
वसन्गुरुकुले नित्यं नित्यमध्ययने रतः ॥ ९-४१-३ (६२५१८)
तस्य राजन्गुरुकुले वसतो नित्यमेव च ।
समाप्तिं नागमद्विद्या नापि वेदा विशाम्पते ॥ ९-४१-४ (६२५१९)
स निर्विण्णस्ततो राजंस्तपस्तेपे महातपाः ।
ततो वै तपसा तेन प्राप्य वेदाननुत्तमान् ॥ ९-४१-५ (६२५२०)
स विद्वान्वेदयुक्तश्च सिद्धश्चाप्यृषिसत्तमः ।
तत्र तीर्थे वरान्प्रादात्त्रीनेव सुमहातपाः ॥ ९-४१-६ (६२५२१)
अस्मिंस्तीर्थे महानद्या अद्यप्रभृति मानवः ।
आप्लुतो वाजिमेधस्य फलं प्राप्स्यति पुष्कलम् ॥ ९-४१-७ (६२५२२)
अद्यप्रभृति नैवात्र भयं व्यालाद्भविष्यति ।
अपि चाल्पेन कालेन फलं प्राप्स्यति पुष्कलम् ॥ ९-४१-८ (६२५२३)
एवमुक्त्वा महातेजा जगाम त्रिदिवं मुनिः ।
एवं सिद्धः स भगवानार्ष्टिषेणः प्रतापवान् ॥ ९-४१-९ (६२५२४)

तस्मिन्नेव तदा तीर्थे सिन्धुद्वीपः प्रतापवान् ।
देवापिश्च महाराज ब्राह्मण्यं प्रापतुर्महत् ॥ ९-४१-१० (६२५२५)
तथाच कौशिकस्तात तपोनित्यो जितेन्द्रियः ।
तपसा वै सुतप्तेन ब्राह्मणत्वमवाप्तवान् ॥ ९-४१-११ (६२५२६)
गाधिर्नाम महानासीत्क्षत्रियः प्रथितो भुवि ।
तस्य पुत्रोऽभवद्राजन्विश्वामित्रः प्रतापवान् ॥ ९-४१-१२ (६२५२७)
स राजा कौशिकस्तात महायोग्यभवत्किल ।
स पुत्रमभिषिच्याथ विश्वामित्रं महातपाः ॥ ९-४१-१३ (६२५२८)
देहन्यासे मनश्चक्रे तमूचुः प्रणताः प्रजाः ।
न गन्तव्यं महाप्राज्ञ त्राहि चास्मान्महाभयात् ॥ ९-४१-१४ (६२५२९)
एवमुक्तः प्रत्युवाच ततो गाधिः प्रजास्ततः ।
विश्वस्य जगतो गोप्ता भविष्यति सुतो मम ॥ ९-४१-१५ (६२५३०)
इत्युक्त्वा तु ततो गाधिर्विश्वामित्रं निवेश्य च ।
जगाम त्रिदिवं राजन्विश्वामित्रोऽभवन्नृपः ॥ ९-४१-१६ (६२५३१)
न स शक्नोति पृथिवीं यत्नवानपि रक्षितुम् ।
ततः शुश्राव राजा स राक्षसेभ्यो महाभयम् ॥ ९-४१-१७ (६२५३२)
निर्ययौ नगराच्चापि चतुरङ्गबलान्वितः ।
स गत्वा दूरमध्वानं वसिष्ठाश्रममभ्ययात् ॥ ९-४१-१८ (६२५३३)
तस्य ते सैनिका राजंश्चक्रुस्तत्रानयान्बहून् ।
ततस्तु भगवान्विप्रो वसिष्ठो श्रममभ्ययात् ।
ददृशेऽथ ततः सर्वं भज्यमानं महाव्रनम् ॥ ९-४१-१९ (६२५३४)
तस्य क्रुद्धो महाराज वसिष्ठो मुनिसत्तमः ।
सृजस्व शबरान्घोरानिति स्वां गामुवाच ह ॥ ९-४१-२० (६२५३५)
तथोक्ता साऽसृजद्धेनुः पुरुषान्घोरदर्शनान् ।
ते तु तद्बलमासाद्य बभञ्जुः सर्वतोदिशम् ॥ ९-४१-२१ (६२५३६)
तच्छ्रुत्वा विद्रुतं सैन्यं विश्वामित्रस्तु गाधिजः ।
तपः परं मन्यमानस्तपस्येव मनो दधे ॥ ९-४१-२२ (६२५३७)
सोऽस्मिंस्तीर्थवरे राजन्सरस्वत्याः समाहितः ।
नियमैश्चोपवासैश्च कर्शयन्देहमात्मनः ॥ ९-४१-२३ (६२५३८)
जलाहारो वायुभक्षः पर्णाहारश्च सोऽभवत् ।
तथा स्थण्डिलशायी च ये चान्ये नियमाःपृथक् ॥ ९-४१-२४ (६२५३९)
असकृत्तस्य देवास्तु व्रतविघ्नं प्रचक्रिरे ।
न चास्य नियमाद्बुद्धिरपयाति महात्मनः ॥ ९-४१-२५ (६२५४०)
ततः परेण यत्नेन तप्त्वा बहुविधं तपः ।
तेजसा भास्कराकारो गाधिजः समपद्यत ॥ ९-४१-२६ (६२५४१)
तपसा तु तथायुक्तं विश्वामित्रं पितामहः ।

अमन्यत महातेजा वरदोऽदर्शयत्तदा ॥ ९-४१-२७ (६२५४२)
स तु वव्रे वरं राजन्स्यामहं ब्राह्मणस्त्विति ।
तथेति चाब्रवीद्ब्रह्मा सर्वलोकपितामहः ॥ ९-४१-२८ (६२५४३)
स लब्ध्वा तपसोग्रेण ब्राह्मणत्वं महायशाः ।
विचचार महीं कृत्स्नां कृतकामः सुरोपमः ॥ ९-४१-२९ (६२५४४)
तस्मिंस्तीर्थवरे रामः प्रदाय विविधं वसु ।
पयस्विनीस्तथा धेनूर्यानानि शयनानि च ॥ ९-४१-३० (६२५४५)
अथ वस्त्राण्यलङ्कारं भक्ष्यं पेयं च शोभनम् ।
अददन्मुदितो राजन्पूजयित्वा द्विजोत्तमान् ॥ ९-४१-३१ (६२५४६)
ययौ राजंस्ततो रामो बकस्याश्रममन्तिकात् ।
यत्र तेपे तपस्तीव्रं दाल्भ्यो बक इति श्रुतिः ॥ ॥ ९-४१-३२ (६२५४७)

इति श्रीमन्महाभारते शल्यपर्वणि ह्रदप्रवेशपर्वणि
एकचत्वारिंशोऽध्यायः ॥ ४१ ॥

---

शल्यपर्व-अध्यय०४२
॥ श्रीः ॥
९.४२. अध्यायः ४२

Mahabharata - Shalya Parva - Chapter Topics
बलदेवस्यावाकीर्णतीर्थगमनम् ॥ १ ॥
बकमुनिचरित्रकथनम् ॥ २ ॥
बलदेवस्य ततो वसिष्ठापवाहतीर्थगमनम् ॥ ३ ॥

Mahabharata - Shalya Parva - Chapter Text

९-४२-० (६२५४८)
वैशम्पायन उवाच। ९-४२-०क्ष् (५१८५)
ब्रह्मयोनिभिराकीर्णं जगाम यदुनन्दनः ।
यत्र दाल्भ्यो बको राजन्पश्वर्थं सुमहातपाः ।
जुहाव धृतराष्ट्रस्य राष्ट्रं कोपसमन्वितः ॥ ९-४२-१ (६२५४९)
तपसा घोररूपेण कर्शयन्देहमात्मनः ।
क्रोधेन महताऽऽविष्टो धर्मात्मा वै प्रतापवान् ॥ ९-४२-२ (६२५५०)
पुरा हि नैमिशीयानां सत्रे द्वादशवार्षिके ।
वृत्ते विश्वजितोऽन्ते वै पाञ्चालानृषयोऽगमन् ॥ ९-४२-३ (६२५५१)
तत्रेश्वरमयाचन्त दक्षिणार्थं मनस्विनः ।

ग्तत्र ते लेभिरे राजन्पाञ्चालेभ्यो महर्षयः।'
बलान्वितान्वत्सतरान्निर्व्याधीन्सप्तविंशतिम् ॥ ९-४२-४ (६२५५२)
तानब्रवीद्बलो दाल्भ्यो विभजध्वं पशूनिति ।
पशूनेतानहं त्यक्त्वा भिक्षिष्ये राजसत्तमम् ॥ ९-४२-५ (६२५५३)
एवमुक्त्वा वको राजन्नृषीन्सर्वान्प्रतापवान् ।
जगाम धृतराष्ट्रस्य भवनं ब्राह्मणोत्तमः ॥ ९-४२-६ (६२५५४)
स समीपगतो भूत्वा धृतराष्ट्रं जनेश्वरम् ।
अयाचत पशून्दाल्भ्यः स चैनं रुषितोऽब्रवीत् ॥ ९-४२-७ (६२५५५)
यदृच्छया मृता दृष्ट्वा गास्तदा नृपसत्तमः ।
एतान्पशून्नय क्षिप्रं ब्रह्मबन्धो यदीच्छसि ॥ ९-४२-८ (६२५५६)
ऋषिस्त्वथ बकः क्रुद्धश्चिन्तयामास धर्मवित् ।
अहो वत नृशंसं वै वाक्यमुक्तोऽस्मि संसदि ॥ ९-४२-९ (६२५५७)
चिन्तयित्वा मुहूर्तेन रोषाविष्टो द्विजोत्तमः ।
मतिं चक्रे विनाशाय धृतराष्ट्रस्य भूपतेः ॥ ९-४२-१० (६२५५८)
स तूत्कृत्य मृतानां वै मांसानि मुनिसत्तमः ।
जुहाव धृतराष्ट्रस्य राष्ट्रं नरपतेः पुरा ॥ ९-४२-११ (६२५५९)
अवाकर्णे सरस्वत्यास्तीर्थे प्रज्वाल्य पावकम् ।
xxxx दाल्भ्यो महाराज नियमं परमं स्थितः ॥ ९-४२-१२ (६२५६०)
स तैरेव जुहावाग्नौ राष्ट्रं मांसैर्महातपः ॥ ९-४२-१३ (६२५६१)
तस्मिंस्तु विधिवत्सत्रे सम्प्रवृत्ते सुदारुणे ।
अक्षीयत ततो राष्ट्रं धृतराष्ट्रस्य पार्थिव ॥ ९-४२-१४ (६२५६२)
छिxxx मानं क्षक्षक्षक्षक्ष् परशुना विभो
xxxxxxxxxxxx व्यवकीर्थमचेतनम् ॥ ९-४२-१५ (६२५६३)
दृष्ट्वा तथाऽवकीर्णं तु राष्ट्रं च मनुजाधिपः ।
बभूव दुर्मना राजा चिन्तयामास च प्रभुः ॥ ९-४२-१६ (६२५६४)
xxxxxxxxx रद्यत्रं ब्राह्मणैः सहितः पुरा ।
xxxxx गच्छत्तु क्षीयते राष्ट्रमेव च ॥ ९-४२-१७ (६२५६५)
यदा स पार्थिवः खिन्नस्ते च विप्रास्तदाऽनघ ॥ ९-४२-१८ (६२५६६)
यदा चापि न शक्नोति राष्ट्रं मोक्षयितुं नृपः ।
अथ विप्रादिकांस्तत्र पप्रच्छ जनमेजय ॥ ९-४२-१९ (६२५६७)
ततो विप्रादिकाः प्राहुः पशुविप्रकृतस्त्वया ।
मांसैरभिजुहोतीदं तव राष्ट्रं मुनिर्बकः ॥ ९-४२-२० (६२५६८)
तेन ते हूयमानस्य राष्ट्रस्यास्य क्षयो महान् ।
तस्यैतत्तपसः कर्म येन तेऽद्य लयो महान् ॥ ९-४२-२१ (६२५६९)
ग्यदीच्छसि महाबाहो शान्तिं राष्ट्रस्य भूमिप।'
अपां कुञ्जे सरस्वत्यास्तं प्रसादय पार्थिव ॥ ९-४२-२२ (६२५७०)

वैशम्पायन उवाच।९-४२-२३क्ष् (५१८६)
सरस्वतीं ततो गत्वा स राजा बकमब्रवीत् ।
निपत्य शिरसा भूमौ प्राञ्जलिर्भरतर्षभ ॥९-४२-२३ (६२५७१)
प्रसादये त्वां भगवन्नपराधं क्षमस्व मे ।
मम दीनस्य लुब्धस्य मौर्ख्येण हतचेतसः ।
त्वं गतिस्त्वं च मे नाथः प्रसादं कर्तुमर्हसि ॥ ९-४२-२४ (६२५७२)
तं तथा विलपन्तं तु शोकोपहतचेतसम् ।
दृष्ट्वा तस्य कृपा जज्ञे राष्ट्रं तस्य व्यमोचयत् ॥९-४२-२५ (६२५७३)
ऋषिः प्रसन्नस्तस्याभूत्संरम्भं च विहाय सः ।
मोक्षार्थं तस्य राज्यस्य जुहाव पुनराहुतिम् ॥९-४२-२६ (६२५७४)
मोक्षयित्वा ततो ष्ट्रं प्रतिगृह्य पशून्बहून् ।
हृष्टात्मा नैमिशारण्यं जगाम पुनरेव सः ॥९-४२-२७ (६२५७५)
धृतराष्ट्रोऽपि धर्मात्मा स्वस्थचेता महामनाः ।
स्वमेव नगरं राजन्प्रतिपेदे महर्द्धिमत् ॥९-४२-२८ (६२५७६)
तत्र तीर्थे महाराज बृहस्पतिरुदारधीः ।
असुराणामभावाय भवाय च दिवौकसाम् ॥९-४२-२९ (६२५७७)
मांसैरभिजुहावेष्टिमक्षीयन्त ततोऽसुराः ।
दैवतैरपि सम्भग्ना जितकाशिभिराहवे ॥९-४२-३० (६२५७८)
तत्रापि विधिवद्दत्त्वा ब्राह्मणेभ्यो महायशाः ।
वाजिनः कुञ्जरांश्चैव रथांश्वश्वतरीयुतान् ॥९-४२-३१ (६२५७९)
रत्नानि च महार्हाणि धनं धान्यं च पुष्कलम् ।
ययौ तीर्थं महाबाहुर्यायातं पृथिवीपते ॥९-४२-३२ (६२५८०)
तत्र यज्ञे ययातेश्च महाराज सरस्वती ।
सर्पिः पयश्च सुस्राव नाहुषस्य महात्मनः ॥९-४२-३३ (६२५८१)
तत्रेष्ट्वा पुरुषव्याघ्रो ययातिः पृथिवीपतिः ।
आक्रामदूर्ध्वं पुदितो लेभे लोकांश्च पुष्कलान् ॥९-४२-३४ (६२५८२)
पुनस्तत्र च राज्ञस्तु ययातेर्यजतः प्रभोः ।
औदार्यं परमं कृत्वा भक्तिं चात्मनि शाश्वतीम् ।
ददौ कामान्ब्राह्मणेभ्यो वान्यान्यो मनसेच्छति ॥ ९-४२-३५ (६२५८३)
यो यत्र स्थित एवेह आहूतो यज्ञसंस्तरे ।
तस्यतस्य सरिच्छ्रेष्ठा गृहादि शयनादिकम् ।
षड्रसं भोजनं चैव दानं नानाविधं तथा ॥ ९-४२-३६ (६२५८४)
ते मन्यमाना राज्ञस्तु सम्प्रदानमनुत्तमम् ।
राजानं तुष्टुवुः प्रीता दत्त्वा चैवाशिषः शुभाः ॥९-४२-३७ (६२५८५)
तत्र देवाः सगन्धर्वाः प्रीता यज्ञस्य सम्पदा ।
विस्मिता मानुषाश्चासन्दृष्ट्वा तां यज्ञसम्पदम् ॥९-४२-३८ (६२५८६)

ततस्तालकेतुर्महाधर्मकेतु--
र्महात्मा कृतात्मा महादाननित्यः ।
वसिष्ठापवाहं महाभीमवेगं
धृतात्मा जितात्मा समभ्याजगाम ॥ ॥ ९-४२-३९ (६२५८७)

इति श्रीमन्महाभारते शल्यपर्वणि ह्रदप्रवेशपर्वणि
द्विचत्वारिंशोऽध्यायः ॥ ४२ ॥
Mahabharata - Shalya Parva - Chapter Footnotes

९-४२-१ ब्रह्मयोनेरवाकीर्णमिति झ पाठः । तत्र ब्रह्मयोनेः
ब्राह्मण्योत्पादकात्तीर्थादवाकीर्णं नाम द्वाल्भ्यसेवितं तीर्थं
जगामेत्यर्थः ॥
९-४२-३ पाञ्चलान्विश्वजितो महत्मान्ते अगमन् ॥
९-४२-४ ईश्वरं पाञ्चालसजम् ॥
९-४२-५ xxxxxxxxxxx स्वयं तत्र भागं न गृहीतवानित्यर्थः ॥
९-४२-१९ अथ वै प्राश्निकांस्तत्रेति झ पाठः ॥
९-४२-४२ द्विचत्वारिंशोऽध्यायः ॥

---

शल्यपर्व-अध्यय०४३
॥ श्रीः ॥
९.४३. अध्यायः ४३

Mahabharata - Shalya Parva - Chapter Topics
वसिष्ठापवाहतीर्थस्य तन्नामप्राप्तिप्रकारकथनम् ॥ १ ॥

Mahabharata - Shalya Parva - Chapter Text

९-४३-० (६२५८८)
जनमेजय उवाच। ९-४३-०क्ष् (५१८७)
वसिष्ठापवाहो ब्रह्मन्वै भीमवेगः कथं नु सः ।
किमर्थं च सरिच्छ्रेष्ठा तमृषिं प्रत्यवाहयत् ॥ ९-४३-१ (६२५८९)
कथमस्याभवद्वैरं कारणं किं च तत्प्रभो ।
शंस पृष्टो महाप्राज्ञ न हि तृप्यामि कथ्यति ॥ ९-४३-२ (६२५९०)
वैशम्पायन उवाच। ९-४३-३क्ष् (५१८८)
विश्वामित्रस्य विप्रर्षेर्वसिष्ठस्य च भारत ।
भृशं वैरमभूद्राजंस्तपःस्पर्धाकृतं महत् ॥ ९-४३-३ (६२५९१)

आश्रमो वै वसिष्ठस्य स्थाणुतीर्थेऽभवन्महान् ।
पूर्वतः पार्श्वतश्चासीद्विश्वामित्रस्य धीमतः ॥ ९-४३-४ (६२५९२)
यत्र स्थाणुर्महाराज तप्तवान्परमं तपः ।
तत्रास्य कर्म तद्घोरं प्रवदन्ति मनीषिणः ॥ ९-४३-५ (६२५९३)
यत्रेष्ट्वा भगवान्स्थाणुः पूजयित्वा सरस्वतीम् ।
स्थापयामास तत्तीर्थं स्थाणुतीर्थमिति प्रभो ॥ ९-४३-६ (६२५९४)
तत्र तीर्थे सुराः स्कन्दमभ्यषिञ्चन्नराधिप ।
सैनापत्येन महता सुरारिविनिबर्हणम् ॥ ९-४३-७ (६२५९५)
तस्मिन्सारस्वते तीर्थे विश्वामित्रो महामुनिः ।
वसिष्ठं चालयामास तपसोग्रेण तच्छृणु ॥ ९-४३-८ (६२५९६)
विश्वामित्रवसिष्ठौ तावहन्यहनि भारत ।
स्पर्धां तपः कृतां तीव्रां चक्रतुस्तौ वतपोधनौ ॥ ९-४३-९ (६२५९७)
तत्राप्यधिकसन्तप्तो विश्वामित्रो महामुनिः ।
दृष्ट्वा तेजो वसिष्ठस्य चिन्तामभिजगाम ह ॥ ९-४३-१० (६२५९८)
तस्य बुद्धिरियं ह्यासीद्धर्मनित्यस्य भारत ।
इदं सरस्वती तूर्णं मत्समीपं तपोधनम् ॥ ९-४३-११ (६२५९९)
आनयिष्यति वेगेन वसिष्ठं जपतां वरम् ।
इहागतं द्विजश्रेष्ठं हनिष्यामि न संशयः ॥ ९-४३-१२ (६२६००)
एवं निश्चित्य भगवान्विश्वामित्रो महामुनिः ।
सस्मार सरितां श्रेष्ठां क्रोधसंरक्तलोचनः ॥ ९-४३-१३ (६२६०१)
सा ध्याता मुनिना तेन व्याकुलत्वं जगाम ह ।
गत्वा चैनं महावीर्यं महाकोपं च भामिनी ॥ ९-४३-१४ (६२६०२)
तदा तं वेपमानाङ्गी विवर्णा प्राञ्जलिर्भृशम् ।
उपतस्थे मुनिवरं विश्वामित्रं सरस्वती ॥ ९-४३-१५ (६२६०३)
हतवीरा यथा नारी साऽभवद्दुःखिता भृशम् ।
ब्रूहि किं करवाणीति प्रोवाच मुनिसत्तमम् ॥ ९-४३-१६ (६२६०४)
तामुवाच मुनिः क्रुद्धो वसिष्ठं शीघ्रमानय ।
यावदेनं निहन्म्यद्य तच्छ्रुत्वा व्यथिता नदी ॥ ९-४३-१७ (६२६०५)
साञ्जलिं तु ततः कृत्वा पुण्डरीकनिभेक्षणा ।
प्राकम्पत भृशं भीता वायुनेवाहता लता ॥ ९-४३-१८ (६२६०६)
तथारूपां तु तां दृष्ट्वा मुनिराह महानदीम् ।
अविचारं वसिष्ठं त्वमानयस्वान्तिकं मम ॥ ९-४३-१९ (६२६०७)
सा तस्य वचनं श्रुत्वा ज्ञात्वा पापं चिकीर्षितम् ।
वसिष्ठस्य प्रभावं च जानन्त्यप्रतिमं भुवि ॥ ९-४३-२० (६२६०८)
साऽभिगम्य वसिष्ठं च इदमर्थमचोदयत् ।
यदुक्ता सरितांश्रेष्ठा विश्वामित्रेण धीमता ॥ ९-४३-२१ (६२६०९)

उभयोः शापयोर्भीता वेपमाना पुनःपुनः ।
चिन्तयित्वा महाशापमृषिविप्रासिता भृशम् ॥ ९-४३-२२ (६२६१०)
तां कृशां च विवर्णां च दृष्ट्वा चिन्तासमन्विताम् ।
उवाच राजन्धर्मात्मा वसिष्ठो द्विपदां वरः ॥ ९-४३-२३ (६२६११)
पाह्यात्मानं सरिच्छ्रेष्ठे वह मां शीघ्रगामिनी ।
विश्वामित्रः शपेद्धि त्वां मा कृथास्त्वं विचारणाम् ॥ ९-४३-२४ (६२६१२)
तस्य तद्वचनं श्रुत्वा कृपाशीलस्य सा सरित् ।
चिन्तयामास कौरव्य किं कृत्वा सुकृतं भवेत् ॥ ९-४३-२५ (६२६१३)
तस्याश्चिन्ता समुत्पन्ना वसिष्ठो मय्यतीव हि ।
कृतवान्हि दयां नित्यं तस्या कार्यं हितं मया ॥ ९-४३-२६ (६२६१४)
अथ कूले स्वके राजञ्जपन्तमृषिसत्तमम् ।
जुह्वानं कौशिकं प्रेक्ष्य सरस्वत्यभ्यचिन्तयत् ॥ ९-४३-२७ (६२६१५)
इदमन्तरमित्येवं ततः सा सरितां वरा ।
कूलापहारमकरोत्स्वेन वेगेन सा सरित् ॥ ९-४३-२८ (६२६१६)
तेन कूलापहारेण मैत्रावरुणिरौह्यत ।
उह्यमानः स तुष्टाव तदा राजन्सरस्वतीम् ॥ ९-४३-२९ (६२६१७)
पितामहस्य सरसः प्रवृत्ताऽसि सरस्वति ।
व्याप्तं चेदं जगत्सर्वं तवैवाम्भोभिरुत्तमैः ॥ ९-४३-३० (६२६१८)
त्वमेवाकाशगा देवि मेघेषु सृजसे पयः ।
सर्वाश्चापस्त्वमेवेति यथा वयमधीमहि ॥ ९-४३-३१ (६२६१९)
पुष्टिर्द्युतिस्तथा कीर्तिः सिद्धिर्बुद्धिरमा तथा ।
त्वमेव वाणी स्वाहा त्वं तवायत्तमिदं जगत् ।
त्वमेव सर्वभूतेषु वससीह चतुर्विधा ॥ ९-४३-३२ (६२६२०)
वैशम्पायन उवाच। ९-४३-३३क्ष् (५१८९)
एवं सरस्वती राजन्स्तूयमाना महर्षिणा ।
वेगेनोवाह तं विप्रं विश्वामित्राश्रमं प्रति ॥ ९-४३-३३ (६२६२१)
न्यवेदयत चाक्षीक्ष्णं विश्वामित्राय तं मुनिम् ॥ ९-४३-३४ (६२६२२)
तमानीतं सरस्वत्या दृष्ट्वा कोपसमन्वितः ।
अथान्वेषत्प्रहरणं वसिष्ठान्तकरं तदा ॥ ९-४३-३५ (६२६२३)
तं तु क्रुद्धमभिप्रेक्ष्य ब्रह्मवध्याभयान्नदी ।
अपोवाह वसिष्ठं तु प्राचीं दिशमतन्द्रिता ।
उभयोः कुर्वती वाक्यं वञ्चयित्वा च गाधिजम् ॥ ९-४३-३६ (६२६२४)
ततोपवाहितं दृष्ट्वा वसिष्ठमृषिसत्तमम् ।
अब्रवीत्त्वथ सङ्क्रुद्धो विश्वामित्रः सरस्वतीम् ॥ ९-४३-३७ (६२६२५)
यस्मान्मां त्वं सरिच्छ्रेष्ठे वञ्चयित्वा पुनर्गता ।
शोणितं वह कल्याणि राक्षसानां च सम्मतम् ॥ ९-४३-३८ (६२६२६)

ततः सरस्वती शप्ता विश्वामित्रेण धीमता ।
अवहच्छोणितोन्मिश्रं तोयं संवत्सरं तदा ॥ ९-४३-३९ (६२६२७)
अथर्षयश्च देवाश्च गन्धर्वाप्सरसस्तदा ।
सरस्वतीं तथा दृष्ट्वा बभूवुर्भृशदुःखिताः ॥ ९-४३-४० (६२६२८)
एवं वसिष्ठापवाहो लोके ख्यातो जनाधिप ।
आगच्छच्च पुनर्मार्गं स्वमेव सरितां वरा ॥ ॥ ९-४३-४१ (६२६२९)

इति श्रीमन्महाभारते शल्यपर्वणि ह्रदप्रवेशपर्वणि
त्रिचत्वारिंशोऽध्यायः ॥ ४३ ॥

---

शल्यपर्व-अध्यय०४४
॥ श्रीः ॥
९.४४. अध्यायः ४४

Mahabharata - Shalya Parva - Chapter Topics
विश्वामित्रशापाद्रुधिरजलायाः सरस्वत्या ऋषिभिस्त्वपसा शोधनम् ॥ १ ॥
इन्द्रेण सरस्वत्यरुणासङ्गमे यजनादिना ब्रह्महत्यापरिहरणम् ॥ २ ॥
बलरामस्य तत्र स्नानादिपूर्वकं तस्मात्सोमतीर्थगमनम् ॥ ३ ॥

Mahabharata - Shalya Parva - Chapter Text

९-४४-० (६२६३०)
वैशम्पायन उवाच। ९-४४-०क्ष् (५१९०)
स शप्ता तेन क्रुद्धेन विश्वामित्रेण धीमता ।
तस्मिंस्तीर्थवरे शुभ्रं शोणितं समुपावहत् ॥ ९-४४-१ (६२६३१)
अथाजग्मुस्ततो राजन्राक्षसास्तत्र भारत ।
तत्र ते शोणितं सर्वे पिबन्तः सुखमासते ॥ ९-४४-२ (६२६३२)
तृप्ताश्च सुभृशं तेन सुखिता विगतज्वराः ।
नृत्यन्तश्च हसन्तश्च यथा स्वर्गजितस्तथा ॥ ९-४४-३ (६२६३३)
कस्यचित्त्वथ कालस्य ऋषयः सुतपोधनाः ।
तीर्थयात्रां समाजग्मुः सरस्वत्यां महीपते ॥ ९-४४-४ (६२६३४)
तेषु सर्वेषु तीर्थेषु स्वाप्लुत्य मुनिपुङ्गवाः ।
प्राप्य प्रीतिं परां चापि तपोलुब्धा विशारदाः ॥ ९-४४-५ (६२६३५)
प्रययुर्हि ततो राजन्येन तीर्थमसृग्वहम् ।
अथागम्य महाभागास्तत्तीर्थं दारुणं तदा ॥ ९-४४-६ (६२६३६)
दृष्ट्वा तोयं सरस्वत्याः शोणितेन परिप्लुतम् ।

पीयमानं च रक्षोभिर्बहुभिर्नृपसत्तम ॥ ९-४४-७ (६२६३७)
तान्दृष्ट्वा राक्षसान्राजन्मुनयः संशितव्रताः ।
परित्राणे सरस्वत्याः परं यत्नं प्रचक्रिरे ॥ ९-४४-८ (६२६३८)
ते तु सर्वे महाभागाः समागम्य महाव्रताः ।
आहूय सरितां श्रेष्ठामिदं वचनमब्रुवन् ॥ ९-४४-९ (६२६३९)
कारणं ब्रूहि कल्याणि किमर्थं ते ह्रदो ह्ययम् ।
एवमग्राह्यतां यातः श्रुत्वाऽध्यास्यामहे वयम् ॥ ९-४४-१० (६२६४०)
ततः सा सर्वमाचष्ट यथावृत्तं प्रवेपती ।
दुःखितामथ तां दृष्ट्वा ऊचुस्ते वै तपोधनाः ॥ ९-४४-११ (६२६४१)
कारणं श्रुतमस्माभिः शापश्चैव श्रुतोऽनघे ।
करिष्यन्ति तु यत्प्राप्तं सर्व एव तपोधनाः ॥ ९-४४-१२ (६२६४२)
एवमुक्त्वा सरिच्छ्रेष्ठामूचुस्तेऽथ परस्परम् ।
विमोचयामहे सर्वे शापादेतां सरस्वतीम् ॥ ९-४४-१३ (६२६४३)
ते सर्वे ब्राह्मणा राजंस्तपोभिर्नियमैस्तथा ।
उपवासैश्च विविधैर्यमैः कष्टव्रतैस्तथा ॥ ९-४४-१४ (६२६४४)
आराध्य पशुभर्तारं महादेवं जगत्पतिम् ।
मोक्षयामासुस्तां देवीं सरिच्छ्रेष्ठां सरस्वतीम् ॥ ९-४४-१५ (६२६४५)
तेषां तु सा प्रभावेण प्रकृतिस्था सरस्वती ।
प्रसन्नसलिला जज्ञे यथा पूर्वं तथैव हि ।
निर्मुक्ता च सरिच्छ्रेष्ठा विबभौ सा यथा पुरा ॥ ९-४४-१६ (६२६४६)
दृष्ट्वा तोयं सरस्वत्या मुनिभिस्तैस्तथा कृतम् ।
तानेव शरणं जग्मू राक्षसाः क्षुधितास्तथा ॥ ९-४४-१७ (६२६४७)
कृत्वाञ्जलिं ततो राजन्राक्षसाः क्षुधयाऽर्दिताः ।
ऊचुस्तान्वै मुनीन्सर्वान्कृपायुक्तान्पुनःपुनः ॥ ९-४४-१८ (६२६४८)
वयं च क्षुधिताश्चैव धर्माद्धीनाश्च शाश्वतात् ।
न च नः कामकारोऽयं यद्वयं पापकारिणा ॥ ९-४४-१९ (६२६४९)
युष्माकं चाप्रसादेन दुष्कृतेन च कर्मणा ।
पक्षोऽयं वर्धतेऽस्माकं यतः स्मो ब्रह्मराक्षसाः ।
योषितां चैव पापेन योनिदोषकृतेन च ॥ ९-४४-२० (६२६५०)
एवं हि वैश्यशूद्राणां क्षत्रियाणां तथैव च ।
ये ब्राह्मणान्प्रद्विषन्ति ते भवन्तीह राक्षसाः ॥ ९-४४-२१ (६२६५१)
ग्शक्तिमन्तोऽपि ये केचिदाश्रितानां च रक्षणम् ।
न कुर्वन्ति मनुष्यास्ते सम्भवन्तीह राक्षसाः'॥ ९-४४-२२ (६२६५२)
आचार्यमृत्विजं चैव गुरुं वृद्धजनं तथा ।
प्रणिनो येऽवमन्यन्ते ते भवन्तीह राक्षसाः ॥ ९-४४-२३ (६२६५३)
तत्कुरुध्वमिहास्माकं तारणं द्विजसत्तमाः ।

शक्ता भवन्तः सर्वेषां लोकानामपि तारणे ॥ ९-४४-२४ (६२६५४)
तेषां तु वचनं श्रुत्वा तुष्टुवुस्तां महानदीम् ।
मोक्षार्थं रक्षसां तेषामूचुः प्रयतमानसाः ॥ ९-४४-२५ (६२६५५)
ऋषय ऊचुः। ९-४४-२६क्ष् (५१९१)
क्षुतं कीटावपन्नं च यच्चोच्छिष्टाचितं भवेत् ।
सकेशमवधूतं च रुदितोपहतं च यत् ॥ ९-४४-२६ (६२६५६)
श्वभिः संसृष्टमन्नं च भागोऽसौ रक्षसामिह ।
तस्माज्ज्ञात्वा सदा विद्वानेतान्यत्नाद्विवर्जयेत् ।
राक्षसान्नमसौ भुङ्क्ते यो भुङ्क्ते ह्यन्नमीदृशम् ॥ ९-४४-२७ (६२६५७)
शोधयित्वा ततस्तीर्थमृषयस्ते तपोधनाः ।
मोक्षार्थं राक्षसानां च नदीं तां प्रत्यचोदयन् ॥ ९-४४-२८ (६२६५८)
महर्षीणां मतं ज्ञात्वा ततः सा सरितां वरा ।
अरुणामानयामास स्वां तनुं पुरुषर्षभ ॥ ९-४४-२९ (६२६५९)
तस्यान्तेराक्षसाः स्नात्वा तनूस्त्यक्त्वा दिवं गताः ।
अरुणायां महाराज ब्रह्मवध्यापहा हि सा ॥ ९-४४-३० (६२६६०)
एतमर्थमभिज्ञाय देवराजः शतक्रतुः ।
तस्मिंस्तीर्थे वरे स्नात्वा विमुक्तः पाप्मना किल ॥ ९-४४-३१ (६२६६१)
जनमेजय उवाच। ९-४४-३२क्ष् (५१९२)
किमर्थं भगवाञ्शक्रो ब्रह्मवध्यामवाप्तवान् ।
कथमस्मिंश्च तीर्थे वै आप्लुत्याकल्मषोऽभवत् ॥ ९-४४-३२ (६२६६२)
वैशम्पायन उवाच। ९-४४-३३क्ष् (५१९३)
शृणुष्वैतदुपाख्यानं यथावृत्तं जनेश्वर ।
यथा बिभेद समयं नमुचेर्वासवः पुरा ॥ ९-४४-३३ (६२६६३)
जमुचिर्वासवाद्भीतः सूर्यरश्मिं समाविशत् ।
तेनेन्द्रः सख्यमकरोत्समयं चेदमब्रवीत् ॥ ९-४४-३४ (६२६६४)
न चार्द्रेण न शुष्केण न रात्रौ नापि चाहनि ।
वधिष्याम्यसुरश्रेष्ठ सखे सत्येन ते शपे ॥ ९-४४-३५ (६२६६५)
एवं स कृत्वा समयं दृष्ट्वा नीहारमीश्वरः ।
चिच्छेदास्य शिरो राजन्नपां फेनेन वासवः ॥ ९-४४-३६ (६२६६६)
तच्छिरो नमुचेश्छिन्नं पृष्ठतः शक्रमन्वियात् ।
भोभो मित्रह पापेति ब्रुवाणं शक्रमन्तिकात् ॥ ९-४४-३७ (६२६६७)
एवं स शिरसा तेन चोद्यमानः पुनः पुनः ।
पितामहाय सन्तप्त एतमर्थं न्यवेदयत् ॥ ९-४४-३८ (६२६६८)
तमब्रवील्लोकगुरुररुणायां यथाविधि ।
इष्ट्वोपस्पृश देवेन्द्र तीर्थे पापभयापहे ॥ ९-४४-३९ (६२६६९)
शएषा पुण्यजला शक्र कृता मुनिभिरेव तु ।

निगूढमस्यागमनमिहासीत्पूर्वमेव तु ॥ ९-४४-४० (६२६७०)
ततोऽभ्येत्यारुणां देवीं प्लावयामास वारिणा ।
सरस्वत्यारुणायाश्च पुण्योऽयं सङ्गमो महान् ॥ ९-४४-४१ (६२६७१)
इह त्वं यज देवेन्द्र दद दानान्यनेकशः ।
अत्राप्लुत्य सुघोरात्त्वं पातकाद्विप्रमोक्ष्यसे ॥ ९-४४-४२ (६२६७२)
इत्युक्तः स सरस्वत्याः कुञ्जे वै जनमेजय ।
इष्ट्वा यथावद्बलभिदरुणायामुपास्पृशत् ॥ ९-४४-४३ (६२६७३)
स मुक्तः पाप्मना तेन ब्रह्मवध्याकृतेन च ।
जगाम संहृष्टमनास्त्रिदिवं त्रिदशेश्वरः ॥ ९-४४-४४ (६२६७४)
शिरस्तच्चापि नमुचेस्तत्रैवाप्लुत्य भारत ।
लोकान्कामदुधात्प्राप्तमक्षयान्राजसत्तम ॥ ९-४४-४५ (६२६७५)
वैशपायन उवाच। ९-४४-४६क्ष् (५१९४)
तत्राप्युपस्पृश्य बलो महात्मा
दत्त्वा च दानानि पृथग्विधानि ।
अवाप्य धर्मं परमार्यकर्मा
जगाम सोमस्य महत्सुतीर्थम् ॥ ९-४४-४६ (६२६७६)
यत्रायजद्राजसूयेन सोमः
साक्षात्पुरा विधिवत्पार्थिवेन्द्र ।
अत्रिर्धीमान्ब्रह्मपुत्रो बभूव
होता यस्मिन्क्रतुमुख्ये महात्मा ॥ ९-४४-४७ (६२६७७)
यस्यान्तेऽभूत्सुमहद्दानवानां
दैतेयानां राक्षसानां च देवैः ।
सङ्ग्रामो वै तारकाख्यः सुतीव्रो
यत्र स्कन्दस्तारकाख्यं जघान ॥ ९-४४-४८ (६२६७८)
सैनापत्यं लब्धवान्दैवतानां
महासेनो यत्र दैत्यान्तकर्ता ।
साक्षाच्चैवं न्यवसत्कार्तिकेयः
सदा कुमारो यत्र स प्लुक्षराजः ॥ ॥ ९-४४-४९ (६२६७९)

इति श्रीमन्महाभारते शल्यपर्वणि ह्रदप्रवेशपर्वणि
चतुश्चत्वारिंशोऽध्यायः ॥ ४४ ॥

Mahabharata - Shalya Parva - Chapter Footnotes

९-४४-१० अध्यास्यामहे अध्यवसायं करिष्यामहे ॥
९-४४-४९ सदा कुमारो यत्र नक्षत्रधर्मा इति क पाठः । यत्र
नक्षत्रकामः इति ङ पाठः ॥

९-४४-४४ चतुश्चत्वारिंशोऽध्यायः ॥

---

शल्यपर्व-अध्यय०४५
॥ श्रीः ॥
९.४५. अध्यायः ४५

Mahabharata - Shalya Parva - Chapter Topics
कुमारोत्पत्तिवर्णनम् ॥१ ॥

Mahabharata - Shalya Parva - Chapter Text

९-४५-० (६२६८०)
जनमेजय उवाच। ९-४५-०क्ष् (५१९५)
सरस्वत्याः प्रभावोऽयमुक्तस्ते द्विजसत्तम ।
कुमारस्याभिषेकं तु ब्रह्मन्नाख्यातुमर्हसि ॥ ९-४५-१ (६२६८१)
यस्मिन्देशे च काले च यथा च वदतां वर ।
यैश्चाभिषिक्तो भगवान्विधिना येन च प्रभुः ॥ ९-४५-२ (६२६८२)
स्कन्दो यथा च दैत्यानामकरोत्कदनं महत् ।
तथा मे सर्वमाचक्ष्व परं कौतूहलं हि मे ॥ ९-४५-३ (६२६८३)
वैशम्पायन उवाच। ९-४५-४क्ष् (५१९६)
कुरुवंशस्य सदृशं कौतूहलमिदं तव ।
हर्षमुत्पादयत्येव वचो मे जनमेजय ॥ ९-४५-४ (६२६८४)
हन्त ते कथयिष्यामि शृण्वानस्य नराधिप ।
अभिषेकं कुमारस्य प्रभावं च महात्मनः ॥ ९-४५-५ (६२६८५)
तेजो माहेश्वरं स्कन्नमग्नौ प्रपतितं पुरा ।
तत्सर्वं भगवानग्निर्नाशकद्धर्तुमक्षयम् ॥ ९-४५-६ (६२६८६)
तेन सीदति तेजस्वी दीप्तिमान्हव्यवाहनः ।
न चैवं धारयामास ब्रह्मणे उक्तवान्प्रभुः ॥ ९-४५-७ (६२६८७)
स गङ्गामुपसगम्य नियोगाद्ब्रह्मणः प्रभुः ।
गर्भमाहितवान्दिव्यं भास्करोपमतेजसम् ॥ ९-४५-८ (६२६८८)
अथ गङ्गापि तं गर्भमसहन्ती विधारणे
उत्ससर्ज गिरौ रम्ये हिमवत्यमरार्चिते ॥ ९-४५-९ (६२६८९)
स तत्र ववृधे लोकानावृत्य ज्वलनात्मजः ।
ददृशुर्ज्वलनाकारं तं गर्भमथ कृत्तिकाः ॥ ९-४५-१० (६२६९०)
शरस्तम्बे महात्मानमनलात्मजमीश्वरम् ।
ममायमिति ताः सर्वाः पुत्रार्थिन्योऽभिचुक्रुशुः ॥ ९-४५-११ (६२६९१)

तासां विदित्वा भावं तं मातॄणां भगवान्प्रभुः ।
प्रस्नुतानां पयः षड्भिर्वदनैरपिबत्तदा ॥ ९-४५-१२ (६२६९२)
तं प्रभावं समालक्ष्य तस्य बालस्य कृत्तिकाः ।
परं विस्मयमापन्ना देव्यो दिव्यवपुर्धराः ॥ ९-४५-१३ (६२६९३)
यत्रोत्सृष्टश्च गर्भः स गङ्गया निरिमूर्धनि ।
स शैलः काञ्चनः सर्वः सम्बभौ मेरुवत्तदा ॥ ९-४५-१४ (६२६९४)
वर्धता चैव गर्भेण पृथिवी तेन रञ्जिता ।
अतश्च सर्वे संवृत्ता गिरयः काञ्चनात्मकाः ॥ ९-४५-१५ (६२६९५)
कुमारः सुमहावीर्यः कार्तिकेय इति स्मृतः ।
गाङ्गेयः पूर्वमभवन्महाकायो बलान्वितः ॥ ९-४५-१६ (६२६९६)
शमेन तपसा चैव वीर्येण च समन्वितः ।
ववृधेऽतीव राजेन्द्र चन्द्रवत्प्रियदर्शनः। ९-४५-१७ (६२६९७)
स तस्मिन्काञ्चने दिव्ये शरस्तम्बे श्रिया वृतः ।
स्तयमानः सदा शेते गन्धर्वैर्मुनिभिस्तथा ॥ ९-४५-१८ (६२६९८)
तथैनमन्वनृत्यन्त देवकन्याः सहस्रशः ।
दिव्यवादित्रनृत्यज्ञाः स्तुवन्त्यश्चारुदर्शनाः ॥ ९-४५-१९ (६२६९९)
अन्वयुश्चाग्नयः सर्वे गङ्गा च सरितां वरा ।
दधार पृथिवी चैनं बिभ्रती रूपमुत्तमम्। ९-४५-२० (६२७००)
जातकर्मादिकास्तस्य क्रियाश्चक्रे बृहस्पतिः ।
वेदश्चैनं चतुर्मूर्तिरपतस्थे कृताञ्जलिः ॥ ९-४५-२१ (६२७०१)
धनुर्वेदश्चतुष्पादः सास्त्रग्रामः ससङ्ग्रहः ।
तत्रैनं समुपातिष्ठत्साक्षाद्वाणी च केवला ॥ ९-४५-२२ (६२७०२)
स ददर्श महात्मानं देवदेवमुमापतिः ।
शैलपुत्र्या समागम्यभूतसङ्घशतैर्वृतः ॥ ९-४५-२३ (६२७०३)
निकाया भूतसङ्घानां परमाद्भुतदर्शनाः ।
विकृता विकृताकारा विकृताभरणध्वजाः ॥ ९-४५-२४ (६२७०४)
व्याघ्रसिंहर्क्षवदना बिडालमकराननाः ।
वृषदंशमुखाश्चान्ये गजोष्ट्रवदनास्तथा ॥ ९-४५-२५ (६२७०५)
उलूकवदनाः केचिद्गृध्रगोमायुदर्शनाः ।
क्रौञ्चपारावतनिभैर्वदनै राङ्कवैरपि ॥ ९-४५-२६ (६२७०६)
श्वाविच्छल्यकगोधानामजैडकगवां तथा ।
सदृशानि वपूंष्यन्ये तत्रतत्र व्यधारयन् ॥ ९-४५-२७ (६२७०७)
केचिच्छेलाम्बुदप्रख्याश्चक्रालातगदायुधाः ।
केचिदञ्जनपुञ्जाभाः केचिच्छ्वेताचलप्रभाः ॥ ९-४५-२८ (६२७०८)
सप्तमातृगणाश्चैव समाजग्मुर्विशाम्पते ।
साध्या विश्वेऽथ मरुतो वसवः पितरस्तथा ॥ ९-४५-२९ (६२७०९)

रुद्रादित्यास्तथा सिद्धा भुजगा दानवाः खगाः ।
ब्रह्मा स्वयम्भूर्भगवान्सपुत्रः सहविष्णुना ॥ ९-४५-३० (६२७१०)
शक्रस्तथाऽभ्ययाद्द्रष्टुं कुमारममितप्रभम् ।
नारदप्रमुखाश्चापि देवगन्धर्वसत्तमाः ॥ ९-४५-३१ (६२७११)
देवर्षयश्च सिद्धाश्च बृहस्पतिपुरोगमाः ।
पितरो जगतः श्रेष्ठा देवानामपि देवताः ।
तेऽपि तत्र समाजग्मुर्यामा धामाश्च सर्वशः ॥ ९-४५-३२ (६२७१२)
स तु बालोऽपि बलवान्महायोगबलान्वितः ।
अभ्याजगाम देवेशं शूलहस्तं पिनाकिनम् ॥ ९-४५-३३ (६२७१३)
तमाव्रजन्तमालक्ष्य शिवस्यासीन्मनोगतम् ।
युगपच्छैलपुत्र्याश्च गङ्गायाः पावकस्य च ॥ ९-४५-३४ (६२७१४)
कं नु पूर्वमयं बालो गौरवादभ्युपैष्यति ।
अपि मामिति सर्वेषां तेषामासीन्मनोगतम् ॥ ९-४५-३५ (६२७१५)
तेषामेतमभिप्रायं चतुर्णामुपलक्ष्य सः ।
युगपद्योगमास्थाय ससर्ज विविधास्तनूः ॥ ९-४५-३६ (६२७१६)
ततोऽभवच्चतुर्मूर्तिः क्षणेन भगवान्प्रभुः ।
तस्य शाखो विशाखश्च नैगमेयश्च पृष्ठतः ॥ ९-४५-३७ (६२७१७)
एवं स कृत्वा ह्यात्मानं चतुर्धा भगवान्प्रभुः ।
यतो रुद्रस्ततः स्कन्दो जगामाद्भुतदर्शनः ॥ ९-४५-३८ (६२७१८)
विशाखस्तु ययौ देवीं ततो गिरिवरात्मजाम् ।
शाखो ययौ स भगवान्दिव्यमूर्तिर्विभावसुम् ॥ ९-४५-३९ (६२७१९)
नैगमेयोऽगमद्गङ्गां कुमारः पावकप्रभः ॥ ९-४५-४० (६२७२०)
सर्वे भासुरदेहास्ते चत्वारः समरूपिणः ।
तान्समभ्ययुरव्यग्रास्तदद्भुतमिवाभवत् ॥ ९-४५-४१ (६२७२१)
हाहाकारो महानासीद्देवदानवरक्षसाम् ।
तद्दृष्ट्वा महदाश्चर्यमद्भुतं रोमहर्षणम् ॥ ९-४५-४२ (६२७२२)
ततो रुद्रश्च देवी च पावकश्च पितामहम् ।
गङ्गया सहिताः सर्वे प्रणिपेतुर्जगत्पतिम् ॥ ९-४५-४३ (६२७२३)
प्रणिपत्य ततस्ते तु विधिवद्राजपुङ्गव ।
इदमूचुर्वचो राजन्कार्तिकेयप्रियेप्सया ॥ ९-४५-४४ (६२७२४)
अस्य बालस्य भगवन्नाधिपत्य यथेप्सितम् ।
अस्मत्प्रियार्थं देवेश सदृशं दातुमर्हसि ॥ ९-४५-४५ (६२७२५)
ततः स भगवान्धीमान्सर्वलोकपितामहः ।
मनसा चिन्तयामास किमयं लभतामिति ॥ ९-४५-४६ (६२७२६)
ऐश्वर्याणि च सर्वाणि देवगन्धर्वरक्षसाम् ।
भूतयक्षविहङ्गानां पन्नगानां च सर्वशः ॥ ९-४५-४७ (६२७२७)

सर्वमेवादिदेशासौ कौरवेय महात्मनः ।
समर्थं च तमैश्वर्ये महामतिरमन्यत ॥ ९-४५-४८ (६२७२८)
ततो मुहूर्तं स ध्यात्वा देवानां श्रेयसि स्थितः ।
सैनापत्यं ददौ तस्मै सर्व भूतेषु भारत ॥ ९-४५-४९ (६२७२९)
सर्वदेवनिकायानां ये राजानः परिश्रुताः ।
तान्सर्वान्व्यादिदेशास्मै सर्वभूतपितामहः ॥ ९-४५-५० (६२७३०)
ततः कुमारमादाय देवा ब्रह्मपुरोगमाः ।
अभिषेकार्थमाजग्मुः शैलेन्द्रं सहितास्ततः ॥ ९-४५-५१ (६२७३१)
पुण्यां हैमवतीं देवीं सरिच्छ्रेष्ठां सरस्वतीम् ।
समन्तपञ्चके या वै त्रिषु लोकेषु विश्रुता ॥ ९-४५-५२ (६२७३२)
तत्र तीरे सरस्वत्याः पुण्ये सर्वगुणान्विते ।
निषेदुर्देवगन्धर्वाः सर्वे सम्पूर्णमानसाः ॥ ॥ ९-४५-५३ (६२७३३)

इति श्रीमन्महाभारते शल्यपर्वणि ह्रदप्रवेशपर्वणि
पञ्चचत्वारिंशोऽध्यायः ॥ ४५ ॥

Mahabharata - Shalya Parva - Chapter Footnotes

९-४५-६ तत्सर्वभक्षो भगवान्नाशकद्दग्धुमक्षयमिति झ पाठः ॥
९-४५-७ तेनासीददति तेजस्वी इति झ ङ पाठः ॥
९-४५-२५ बिडालवृषदंशौ मार्जारजातिभेदौ तत्सदृशाननौ ॥
९-४५-२७ श्वानशल्यकगोधानामिति क पाठः ॥
९-४५-३७ तस्य स्कन्दस्य पृष्ठतः पश्चात् शाखविशाखनैगमेयाः
आसन् । ते स्कन्देन सह चत्वारः ॥
९-४५-३९ वायुमूर्तिर्विभावसुमिति झ पाठः ॥
९-४५-४२ अद्भुतमदृष्टपूवम् ॥
९-४५-४५ पञ्चचत्वारिंशोऽध्यायः ॥

---

शल्यपर्व-अध्यय०४६
॥ श्रीः ॥
९.४६. अध्यायः ४६

Mahabharata - Shalya Parva - Chapter Topics

बृहस्पत्यादिभिः स्कन्दस्य सैनापत्येऽभिषेचनम् ॥ १ ॥
ब्रह्मादिभिः स्कन्दाय स्वस्वपारिषदानां दानम् ॥ २ ॥

Mahabharata - Shalya Parva - Chapter Text

९-४६-० (६२७३४)
वैशम्पायन उवाच। ९-४६-०क्ष् (५११९७)
ततोऽभिषेकसम्भारान्सर्वान्सम्भृत्य शास्त्रतः ।
बृहस्पतिः समिद्धेऽग्नौ जुहावाग्निं यथाविधि ॥ ९-४६-१ (६२७३५)
ततो हिमवता दत्ते मणिप्रवरशोभिते ।
दिव्यरत्नाचिते पुण्ये निषण्णं परमासने ॥ ९-४६-२ (६२७३६)
सर्वमङ्गलसम्भारैर्विधिमन्त्रपुरस्कृतम् ।
आभिषेचनिकं द्रव्यं गृहीत्वा देवतागणाः ॥ ९-४६-३ (६२७३७)
इन्द्राविष्णू महावीर्यौ सूर्याचन्द्रमसौ तथा ।
धाता चैव विधाता च तथा चैवानिलानलौ ॥ ९-४६-४ (६२७३८)
पूष्णा भगेनार्यम्णा च अंशेन च विवस्वतां ।
रुद्रश्च सहितो धीमान्मित्रेण वरुणेन च ॥ ९-४६-५ (६२७३९)
रुद्रैर्वसुभिरादित्यैरश्विभ्यां च वृतः प्रभुः ।
विश्वैर्देवैर्मरुद्भिश्च साध्यैश्च पितृभिः सह ॥ ९-४६-६ (६२७४०)
गन्धर्वैरप्सरोभिश्च यक्षराक्षसपन्नगैः ।
देवर्षिभिरसङ्ख्यातैस्तथा ब्रह्मर्षिभिस्तथा ॥ ९-४६-७ (६२७४१)
वैखानसैर्वालखिल्यैर्वाय्वाहारैर्मरीचिपैः ।
भृगुभिश्चाङ्गिरोभिश्च यतिभिश्च महात्मभिः ॥ ९-४६-८ (६२७४२)
सर्वैर्विद्याधरैः पुण्यैर्योगसिद्धैस्तथा वृतः ।
पितामहः पुलस्त्यश्च पुलहश्च महातपाः ॥ ९-४६-९ (६२७४३)
अङ्गिराः कश्यपोऽत्रिश्च मरीचिर्भृगुरेव च ।
क्रतुर्हरिः प्रचेताश्च मनुर्दक्षस्तथैव च ॥ ९-४६-१० (६२७४४)
ऋतवश्च ग्रहाश्चैव ज्योतींषि च विशाम्पते ।
मूर्तिमत्यश्च सरितो वेदाश्चैव सनातनाः ॥ ९-४६-११ (६२७४५)
समुद्राश्च ह्रदाश्चैव तीर्थानि विविधानि च ।
पृथिवी द्यौर्दिशश्चैव पादपाश्च जनाधिप ॥ ९-४६-१२ (६२७४६)
अदितिर्देवमाता च ह्रीः श्रीः स्वाहा सरस्वती ।
उमा शची सिनीवाली तथैवानुमतिः कुहूः ॥ ९-४६-१३ (६२७४७)
राका च धिषणा चैव पत्न्यश्चान्या दिवौकसाम् ।
हिमवांश्चैव विन्ध्यश्च मेरुश्चानेकशृङ्गवान् ॥ ९-४६-१४ (६२७४८)
ऐरावतः सानुचरः कलाः काष्ठास्तथैव च ।
मासार्धमासा ऋतवस्तथा रात्र्यहनी नृप ॥ ९-४६-१५ (६२७४९)
उच्चैः श्रवा हयश्रेष्ठो नागराजश्च वासुकिः ।
अरुणो गरुडश्चैव वृक्षाश्चौषधिभिः सह ॥ ९-४६-१६ (६२७५०)
धर्मश्च भगवान्देवः समाजग्मुर्हि सङ्गताः ।

कालो यमश्च मृत्युश्च यमस्यानुचराश्च ये ॥ ९-४६-१७ (६२७५१)
बहुलत्वाच्च नोक्ता ये विविधा देवतागणाः ।
ते कुमाराभिषेकार्थं समाजग्मुस्ततस्ततः ॥ ९-४६-१८ (६२७५२)
जगृहुस्ते तदा राजन्सर्व एव दिवौकसः ।
आभिषेचनिकं भाण्डं मङ्गलानि च सर्वशः ॥ ९-४६-१९ (६२७५३)
दिव्यसम्भारसंयुक्तैः कलशैः काञ्चनैर्नृप ।
सारस्वताभिः पुण्याभिरद्भिस्ताभिरलङ्कृतम् ॥ ९-४६-२० (६२७५४)
अभ्यषिञ्चन्कुमारं वै सम्प्रहृष्टा दिवौकसः ।
सैनापत्ये महात्मानमसुराणां भयङ्करम् ॥ ९-४६-२१ (६२७५५)
पुरा यथा महाराज वरुणं वै जलेश्वरम् ।
तथाऽभ्यषिञ्चद्भगवान्सर्वलोकपितामहः ॥ ९-४६-२२ (६२७५६)
कश्यपश्च महातेजा ये चान्ये सोककीर्तिताः ।
तस्मै ब्रह्मा ददौ प्रीतो बलिनो वातरंहसः ॥ ९-४६-२३ (६२७५७)
कामवीर्यधरान्सिद्धान्महापारिषदान्प्रभुः ।
नन्दिसेनं लोहिताक्षं घण्टाकार्णं च सम्मतम् ॥ ९-४६-२४ (६२७५८)
चतुर्थमस्यानुचरं ख्यातं कुमुदमालिनम् ।
तत्र स्थाणुर्महातेजा महापारिषदं प्रभुः ॥ ९-४६-२५ (६२७५९)
मायाशतधरं कामं कामवीर्यबलान्वितम् ।
ददौ स्कन्दाय राजेन्द्र सुरारिविनिबर्हणम् ॥ ९-४६-२६ (६२७६०)
सहि देवासुरे युद्धे दैत्यानां भीमकर्मणाम् ।
जघान दोर्भ्यां सङ्क्रुद्धः प्रयुतानि चतुर्दश ॥ ९-४६-२७ (६२७६१)
तथा देवा ददुस्तस्मै सेनां नैर्ऋतसङ्कुलाम् ।
देवशत्रुक्षयकरीमजय्यां विश्वरूपिणीम् ॥ ९-४६-२८ (६२७६२)
जयशब्दं तथा चक्रुर्देवाः सर्वे सवासवाः ।
गन्धर्वा यक्षरक्षांसि मुनयः पितरस्तथा ॥ ९-४६-२९ (६२७६३)
ततः प्रादादनुचरौ यमः कालोपमावुभौ ।
उन्माथं च प्रमाथं च महावीर्यौ महाद्युती ॥ ९-४६-३० (६२७६४)
सुभ्राजो भास्वरश्चैव यौ तौ सूर्यानुयायिनौ ।
तौ सूर्यः कार्तिकेयाय ददौ प्रीतः प्रतापवान् ॥ ९-४६-३१ (६२७६५)
कैलासशृङ्गसङ्काशौ श्वेतमाल्यानुलेपनौ ।
सोमोऽप्यनुचरौ प्रादान्मणिं सुमणिमेव च ॥ ९-४६-३२ (६२७६६)
ज्वालाजिह्वं तथा ज्योतिरात्मजाय हुताशनः ।
ददावनुचरौ शूरौ परसैन्यप्रमाथिनौ ॥ ९-४६-३३ (६२७६७)
परिधं च वटं चैव भीमं च सुमहाबलम् ।
दहतिं दहनं चैव प्रचण्डौ वीर्यसम्मतौ ॥ ९-४६-३४ (६२७६८)
अंशोऽप्यनुचरान्पञ्च ददौ स्कन्दाय धीमते ।

उत्क्रोशं सत्करं चैव वज्रदण्डधरावुभौ ॥ ९-४६-३५ (६२७६९)
ददावनलपुत्राय वासवः परवीरहा ।
तौ हि शत्रून्महेन्द्रास्य जघ्नतुः समरे बहून् ॥ ९-४६-३६ (६२७७०)
चक्रं विक्रमकं चैव सङ्क्रमं च महाबलम् ।
स्कन्दाय त्रीननुचरान्ददौ विष्णुर्महायशाः ॥ ९-४६-३७ (६२७७१)
वर्धनं नन्दनं चैव सर्वविद्याविशारदौ ।
स्कन्दाय ददतुः प्रीतावश्विनौ भिषजां वरौ ॥ ९-४६-३८ (६२७७२)
किन्दुं च कुसुमं चैव कुमुदं च महायशाः ।
डम्बराडम्बरौ चैव ददौ धाता महात्मने ॥ ९-४६-३९ (६२७७३)
वक्रानुवक्रौ बलिनौ मेषवक्त्रौ बलोत्कटौ ।
ददौ त्वष्टा महामायौ स्कन्दायानुचरावुभौ ॥ ९-४६-४० (६२७७४)
सुव्रतं सत्यसन्धं च ददौ मित्रो महात्मने ।
कुमाराय महात्मानौ तपोविद्याधरौ प्रभुः ॥ ९-४६-४१ (६२७७५)
सुदर्शनीयौ वरदौ त्रिषु लोकेषु विश्रुतौ ।
सुव्रतं च महात्मानं शुभकर्माणमेव च ॥ ९-४६-४२ (६२७७६)
कार्तिकेयाय सम्प्रादाद्विधाता लोकविश्रुतौ ।
पाणीतकं कालिकं च महामायाविनावुभौ ॥ ९-४६-४३ (६२७७७)
पूषा च पार्षदौ प्रादात्कार्तिकेयाय भारत ।
बलं चातिबलं चैव महावक्त्रौ महाबलौ ॥ ९-४६-४४ (६२७७८)
प्रददौ कार्तिकेयाय वायुर्भरतसत्तम ।
यमं चातियमं चैव तिमिवक्त्रौ महाबलौ ॥ ९-४६-४५ (६२७७९)
प्रददौ कार्तिकेयाय वरुणः सत्यसङ्गरः ।
सुवर्चसं महात्मानं तथैवाप्यतिवर्चसम् ॥ ९-४६-४६ (६२७८०)
हिमवान्प्रददौ राजन्हुताशनसुताय वै ।
काञ्चनं च महात्मानं मेघमालिनमेव च ॥ ९-४६-४७ (६२७८१)
ददावनुचरौ मेरुरग्निपुत्राय भारत ।
स्थिरं चातिस्थिरं चैव मेरुरेवापरौ ददौ ॥ ९-४६-४८ (६२७८२)
महात्मा त्वग्निपुत्राय महाबलपराक्रमौ ।
उच्छृङ्गं चातिशृङ्गं च महापाषाणयोधिनौ ॥ ९-४६-४९ (६२७८३)
प्रददावग्निपुत्राय विन्ध्यः पारिषदावुभौ ।
सङ्ग्रहं विग्रहं चैव समुद्रोऽमि गदाधरौ ॥ ९-४६-५० (६२७८४)
प्रददावग्निपुत्राय महापारिषदावुभौ ।
उन्मादं शङ्कुकर्णं च पुष्पदन्तं तथैव च ॥ ९-४६-५१ (६२७८५)
प्रददावग्निपुत्राय पार्वती शुभदर्शना ।
जयं महाजयं चैव गङ्गा ज्वलनसूनवे ॥ ९-४६-५२ (६२७८६)
प्रददौ पुरुषव्याघ्र वासुकिः पन्नगेश्वरः ।

एवं साध्याश्च रुद्राश्च वसवः पितरस्तथा ॥ ९-४६-५३ (६२७८७)
सागराः सरितश्चैव गिरयश्च महाबलाः ।
ददुः सेनागणाध्यक्षाञ्शूलपट्टसधारिणः ॥ ९-४६-५४ (६२७८८)
दिव्यप्रहरणोपेतान्नानावेषविभूषितान् ।
शृणु नामानि चाप्येषां येऽन्ये स्कन्दस्य सैनिकाः ॥ ९-४६-५५ (६२७८९)
विविधायुधसम्पन्नाश्चित्राभरणभूषिताः ।
शङ्कुकर्णो निकुम्भश्च पद्मः कुमुद एव च ॥ ९-४६-५६ (६२७९०)
अनन्तो द्वादशभुजस्तथा कृष्णोपकृष्णकौ ।
घ्राणश्रवाः कपिस्कन्धः काञ्चनाक्षो जलन्धमः ॥ ९-४६-५७ (६२७९१)
अक्षः सन्तर्जनो राजन्कुनदीकस्तमोन्तकृत् ।
एकाक्षो द्वाशाक्षश्च तथैवैकजटः प्रभुः ॥ ९-४६-५८ (६२७९२)
सहस्रबाहुर्विकटो व्याघ्राक्षः क्षितिकम्पनः ।
पुण्यनामा सुनामा च सुचक्रः प्रियदर्शनः ॥ ९-४६-५९ (६२७९३)
परिश्रुतः कोकनदः प्रियमाल्यानुलेपनः ।
अजोदरो गजशिराः स्कन्धाक्षः शतलोचनः ॥ ९-४६-६० (६२७९४)
ज्वालाजिह्वः करालाक्षः शितिकेशो जटी हरिः ।
परिश्रुतः कोकनदः कृष्णकेशो जटाधरः ॥ ९-४६-६१ (६२७९५)
चतुर्दंष्ट्रोऽष्टजिह्वश्च मेघनादः पृथुश्रवाः ।
विद्युताक्षो धनुर्वक्त्रो जाठरो मारुताशनः ॥ ९-४६-६२ (६२७९६)
उदाराक्षो रथाक्षश्च वज्रनाभो वसुप्रभः ।
समुद्रवेगो राजेन्द्र शैलकम्पी तथैव च ॥ ९-४६-६३ (६२७९७)
वृषो मेषः प्रवाहश्च तथा नन्दोपनन्दकौ ।
धूम्रः श्वेतः कलिङ्गश्च सिद्धार्थो वरदस्तथा ॥ ९-४६-६४ (६२७९८)
प्रियकश्चैव नन्दश्च गोनन्दश्च प्रतपवान् ।
आनन्दश्च प्रमोदश्च स्वस्तिको ध्रुवकस्तथा ॥ ९-४६-६५ (६२७९९)
क्षेमवाहः सुवाहश्च सिद्धपात्रश्च भारत ।
गोव्रजः कनकापीडो महापारिषदेश्वरः ॥ ९-४६-६६ (६२८००)
गायनो हसनश्चैव बाणः खड्गश्च वीर्यवान् ।
वैताली गतिताली च तथा कथकवातिकौ ॥ ९-४६-६७ (६२८०१)
हंसजः पङ्कदिग्धाङ्गः समुद्रोन्मादनश्च ह ।
रणोत्कटः प्रहासश्च श्वेतसिद्धश्च नन्दनः ॥ ९-४६-६८ (६२८०२)
कालकण्ठः प्रभासश्च तथा कुम्भाण्डकोदरः ।
कालकक्षः सितश्चैव भूतानां मथनस्तथा ॥ ९-४६-६९ (६२८०३)
यज्ञवाहः सुवाहश्च देवयाजी च सोमपः ।
मज्जानश्च महातेजाः क्रथक्राथौ च भारत ॥ ९-४६-७० (६२८०४)
तुहरश्च तुहारश्च चित्रदेवश्च वीर्यवान् ।

मधुरः सुप्रसादश्च किरीटी च महाबलः ॥ ९-४६-७१ (६२८०५)
वत्सलो मधुवर्णश्च कलशोदर एव च ।
धर्मदो मन्मथकरः सूचीवक्त्रश्च वीर्यवान् ॥ ९-४६-७२ (६२८०६)
श्वेतवक्त्रः सुवक्त्रश्च चारुवक्त्रश्च पाण्डुरः ।
दण्डबाहुः सुबाहुश्च रजः कोकिलकस्तथा ॥ ९-४६-७३ (६२८०७)
अचलः कनकाक्षश्च बालानामपि यः प्रभुः ।
सञ्चारकः कोकनदो गृध्रपत्रश्च जम्बुकः ॥ ९-४६-७४ (६२८०८)
लोहाजवक्त्रो जवनः कुम्भवक्त्रश्च कुम्भकः ।
स्वर्णग्रीवश्च कृष्णौजा हंसवक्त्रश्च चन्द्रभः ॥ ९-४६-७५ (६२८०९)
पाणिकूर्चाश्च शम्बूकः पञ्चवक्त्रश्च शिक्षकः ।
चाषवक्त्रक्ष जम्बूकः शाकवक्त्रश्च कुञ्जलः ॥ ९-४६-७६ (६२८१०)
योगयोक्ता महात्मानः सततं ब्राह्मणप्रियाः ।
पैतामहा महात्मानो महापारिषदाश्च ये ॥ ९-४६-७७ (६२८११)
यौवनस्थाश्च बालाश्च वृद्धाश्च जनमेजय ।
सहस्रशः पारिषदाः कुमारमुपतस्थिरे ॥ ९-४६-७८ (६२८१२)
वक्त्रैर्नानाविधैर्ये तु शृणु ताञ्चनमेजय ।
कूर्मकुक्कुटवक्त्राश्च शशोलूकमुखास्तथा ॥ ९-४६-७९ (६२८१३)
खरोष्ट्रवदनाश्चान्ये वराहवदनास्तथा ।
मार्जारशशवक्ताश्च दीर्घवक्त्राश्च भारत ॥ ९-४६-८० (६२८१४)
नकुलोलूकवक्त्राश्च काकवक्त्रास्तथा परे ।
आखुबभ्रुकवक्त्राश्च मयूरवदनास्तथा ॥ ९-४६-८१ (६२८१५)
मत्स्यमेषाननाश्चान्ये अजाविमहिषाननाः ।
ऋक्षशार्दूलवक्त्राश्च द्वीतिसिंहाननास्तथा ॥ ९-४६-८२ (६२८१६)
भीमा गजाननाश्चैव तथा नक्रमुखाश्च ये ।
गरुडाननाः कङ्कमुखा वृककाकमुखास्तथा ॥ ९-४६-८३ (६२८१७)
गोखरोष्ट्रमुखाश्चान्ये वृषदंशमुखास्तथा ।
महाजठरपादाङ्गास्तारकाक्षाश्च भारत ॥ ९-४६-८४ (६२८१८)
पारावतमुखाश्चान्ये तथा वृषमुखाः परे ।
कोकिलाभाननाश्चान्ये श्येनतित्तिरिकाननाः ॥ ९-४६-८५ (६२८१९)
कृकलासमुखाश्चैव विरजोम्बरधारिणः ।
व्यालवक्त्राः शूलमुखाश्चण्डवक्त्राः शुभाननाः ॥ ९-४६-८६ (६२८२०)
आशीविषाश्चीरधरा गोनासावदनास्तथा ।
स्थूलोदराः कृशाङ्गाश्च स्थूलाङ्गाश्च कृशोदराः ॥ ९-४६-८७ (६२८२१)
ह्रस्वग्रीवा महाकर्णा नानाव्यालविभूषणाः ।
गजेन्द्रचर्मवसनास्तथा कृष्णाजिनाम्बराः ॥ ९-४६-८८ (६२८२२)
स्कन्धेमुखा महाराज तथाप्युदरतोमुखाः ।

पृष्ठेमुखा हनुमुखास्तथा जङ्घामुखा अपि ॥ ९-४६-८९ (६२८२३)
पार्श्वाननाश्च बहवो नानादेशमुखास्तथा ।
तथा कीटपतङ्गानां सदृशास्या गणेश्वराः ॥ ९-४६-९० (६२८२४)
नानाव्यालमुखाश्चान्ये बहुबाहुशिरोधराः ।
नानावृक्षभुजाः केचित्कटिशीर्षास्तथा परे ॥ ९-४६-९१ (६२८२५)
भुजङ्गभोगवदना नानागुल्मनिवासिनः ।
चीरसंवृतगात्राश्च नानाकनकवाससः ॥ ९-४६-९२ (६२८२६)
नानावेषधराश्चैव नानामाल्यानुलेपनाः ।
नानावस्त्रधराश्चैव चर्मवासस एव च ॥ ९-४६-९३ (६२८२७)
उष्णीषिणो मुकुटिनः सुग्रीवाश्च सुवर्चसः ।
किरीटिनः पञ्चशिखास्तथा काञ्चनमूर्धजाः ॥ ९-४६-९४ (६२८२८)
त्रिशिखा द्विशिखाश्चैव तथा सप्तशिखाः परे ।
शिखण्डिनो मुकुटिनो मुण्डाश्च जटिलास्तथा ॥ ९-४६-९५ (६२८२९)
चित्रमालाधराः केचित्केचिद्रोमाननास्तथा ।
विग्रहैकरसा नित्यमजेताः सुरसत्तमैः ॥ ९-४६-९६ (६२८३०)
कृष्णा निर्मांसवक्त्राश्च दीर्घपृष्ठास्तनूदराः ।
स्थूलपृष्ठा ह्रस्वपृष्ठाः प्रलम्बोदरमेहनाः ॥ ९-४६-९७ (६२८३१)
महाभुजा ह्रस्वभुजा ह्रस्वगात्राश्च वामनाः ।
कुब्जाश्च ह्रस्वजङ्घाश्च हस्तिकर्णशिरोधराः ॥ ९-४६-९८ (६२८३२)
हस्तिनासाः कूर्मनासा वृकनासास्तथा परे ।
दीर्घोच्छ्वासा दीर्घजङ्घा विकराला ह्यधोमुखाः ॥ ९-४६-९९ (६२८३३)
महादंष्ट्रा ह्रस्वदंष्ट्राश्चतुर्दंष्ट्रास्तथा परे ।
वारमेन्द्रनिभाश्चान्ये भीमा राजन्सहस्रशः ॥ ९-४६-१०० (६२८३४)
सुविभक्तशरीराश्च दीप्तिमन्तः स्वलङ्कृताः ।
पिङ्गाक्षाः शङ्कुकर्णाश्च रक्तनासाश्च भारत ॥ ९-४६-१०१ (६२८३५)
पृथुदंष्ट्रा महादंष्ट्राः स्थूलौष्ठा हरिमूर्धजाः ।
नानापादौष्ठदंष्ट्राश्च नानाहस्तशिरोधराः ॥ ९-४६-१०२ (६२८३६)
नानाचर्मभिराच्छन्ना नानाभाषाश्च भारत ।
कुशला देशभाषासु जल्पन्तोऽन्योन्यमीश्वराः ॥ ९-४६-१०३ (६२८३७)
हृष्टाः परिपतन्ति स्म महापारिषदास्तथा ।
दीर्घग्रीवा दीर्घनखा दीर्घपादशिरोभुजाः ॥ ९-४६-१०४ (६२८३८)
पिङ्गाक्षा नीलकण्ठाश्च लम्बकर्णाश्च भारत ।
वृकोदरनिभाश्चैव केचिदञ्जनसन्निभाः ॥ ९-४६-१०५ (६२८३९)
श्वेताक्षा लोहितग्रीवाः पिङ्गाक्षाश्च तथा परे ।
कल्माषा बहवो राजंश्चित्रवर्णाश्च भारत ॥ ९-४६-१०६ (६२८४०)
चामरापीडकनिभाः श्वेतलोहितराजयः ।

नानावर्णाः सवर्णाश्च मयूरसदृशप्रभाः ॥ ९-४६-१०७ (६२८४१)
पुनः प्रहरणान्येषां कीर्त्यमानानि मे शृणु ।
शेषैः कृतः पारिषदैरायुधानां परिग्रहः ॥ ९-४६-१०८ (६२८४२)
पाशोद्यतकराः केचिद्व्यादितास्याः खराननाः ।
पृष्ठाक्षा नीलकण्ठाश्च तथा परिघबाहवः ॥ ९-४६-१०९ (६२८४३)
शतघ्नीचक्रहस्ताश्च तथा मुसलपाणयः ।
असिमुद्ग्ररहस्ताश्च दण्डहस्ताश्च भारत ॥ ९-४६-११० (६२८४४)
गदाभुशुण्डिहस्ताश्च तथा तोमरपाणयः ।
आयुधैर्विविधैर्घोरैर्महात्मानो महाजवाः ॥ ९-४६-१११ (६२८४५)
महाबला महावेगा महापारिषदास्तथा ।
अभिषेकं कुमारस्य दृष्ट्वा हृष्टा रणप्रियाः ॥ ९-४६-११२ (६२८४६)
घण्टाजालपिनद्धाङ्गा ननृतुस्ते महौजसः ।
एते चान्ये च बहवो महापारिषदा नृप ॥ ९-४६-११३ (६२८४७)
उपतस्थुर्महात्मानं कार्तिकेयं यशस्विनम् ।
दिव्याश्चाप्यान्तरिक्षाश्च पार्थिवाश्चानिलोपमाः ॥ ९-४६-११४ (६२८४८)
व्यादिष्टा दैवतैः शूराः स्कन्दस्यानुचराऽभवन् ।
तादृशानां सहस्राणि प्रयुतान्यर्बुदानि च ।
अभिषिक्तं महात्मानं परिवार्योपतस्थिरे ॥ ॥ ९-४६-११५ (६२८४९)

इति श्रीमन्महाभारते शल्यपर्वणि ह्रदप्रवेशपर्वणि
षट्चत्वारिंशोऽध्यायः ॥ ४६ ॥
Mahabharata - Shalya Parva - Chapter Footnotes

९-४६-१३ नागराजश्च वामन इति ख पाठः ॥
९-४६-४५ घसं त्वातिघसं चैवेति ख पाठः ॥
९-४६-४६ षट्चत्वारिंशोऽध्यायः ॥

---

शल्यपर्व-अध्यय०४७
॥ श्रीः ॥
९.४७. अध्यायः ४७

Mahabharata - Shalya Parva - Chapter Topics
कुमारमातृगणस्य नामकीर्तनम् ॥ १ ॥
कुमारेण तारकासुरवधः क्रौञ्चपर्वतभेदनं च ॥ २ ॥

Mahabharata - Shalya Parva - Chapter Text

९-४७-० (६२८५०)
वैशम्पायन उवाच। ९-४७-०क्ष् (५१९८)
शृणु मातृगणान्राजन्कुमारानुचरानिमान् ।
कीर्त्यमानान्मया वीर सपत्नगणसूदनान् ॥ ९-४७-१ (६२८५१)
यशस्विनीनां मातॄणां शृणु नामानि भारत
याभिर्व्याप्तास्त्रयोलोकाः कल्याणीभिश्च भागशः ॥ ९-४७-२ (६२८५२)
प्रभावती विशालाक्षी पालिता गोस्तानी तथा ।
श्रीमती बहुला चैव तथैव बहुपुत्रिका ॥ ९-४७-३ (६२८५३)
अप्सुजाता च गोपाली बृहदम्बालिका तथा ।
जयावती मालतिका ध्रुवरत्ना भयङ्करी ॥ ९-४७-४ (६२८५४)
वसुदामा च दामा च विशोका नन्दिनी तथा ।
एकचूडा महाचूडा चक्रनेमिश्च भारत ॥ ९-४७-५ (६२८५५)
उत्तेजनी जयत्सेना कमलाक्ष्यथ शोभना ।
शत्रुञ्जया तथा चैव क्रोधना शलभी खरी ॥ ९-४७-६ (६२८५६)
माधवी शुभवक्त्रा च तीर्थसेनिश्च भारत ।
गीतप्रिया च कल्याणी रुद्ररोमाऽमिताशना ॥ ९-४७-७ (६२८५७)
मेघस्वना भोगवती सुभ्रूश्च कनकावती ।
अलाताक्षी वीर्यवती विद्युज्जिह्वा च भारत ॥ ९-४७-८ (६२८५८)
पुन्नावती सुनक्षत्रा कन्दरा बहुयोजना ।
सन्तानिका च कौरव्य कमला च महाबला ॥ ९-४७-९ (६२८५९)
सुदामा बहुदामा च सुप्रभा च यशस्विनी ।
नृत्यप्रिया च राजेन्द्र शतोलूखलमेखला ॥ ९-४७-१० (६२८६०)
शतघण्टा शतानन्दा भगनन्दा च भाविनी ।
वपुष्मती चन्द्रशीता भद्रकाली च भारत ॥ ९-४७-११ (६२८६१)
ऋक्षाम्बिका निष्कुटिका वामा चत्वरवासिनी ।
सुमङ्गला स्वस्तिमती बुद्धिकामा जयप्रिया ॥ ९-४७-१२ (६२८६२)
धनदा सुप्रसादा च भवदा च जलेश्वरी ।
एडी भेडी समेडी च वेतालजननी तथा ॥ ९-४७-१३ (६२८६३)
कण्डूतिः कालिका चैव देवमित्रा च भारत ।
वसुश्रीः कोटरा चैव चित्रसेना तथाऽचला ॥ ९-४७-१४ (६२८६४)
कुक्कुटिका शङ्खलिका तथा शकुनिका नृप ।
कुण्डारिका कौकुलिका कुम्भिकाऽथ शतोदरी ॥ ९-४७-१५ (६२८६५)
उत्क्राथिनी जलेला च महावेगा च कङ्कणा ।
मनोजवा कण्टकिनी प्रघसा पूतना तथा ॥ ९-४७-१६ (६२८६६)
केशयन्त्री त्रुटिर्वामा क्रोशनाऽथ तडित्प्रभा ।

मन्दोदरी च मुण्डी च कोटरा मेघवाहिनी ॥ ९-४७-१७ (६२८६७)
सुभगा लम्बिनी लम्बा ताम्रचूडा विकाशिनी ।
ऊर्ध्ववेणीधरा चैव पिङ्गाक्षी लोहमेखला ॥ ९-४७-१८ (६२८६८)
पृथुवस्त्रा मधुलिका मधुकुम्भा तथैव च ।
पक्षालिका मत्कुलिका जरायुर्जर्जरानना ॥ ९-४७-१९ (६२८६९)
ख्याता दहदहा चैव तथा धमधमा नृप ।
खण्डखण्डा च राजेन्द्र पूषणा मणिकुट्टिका ॥ ९-४७-२० (६२८७०)
अमोघा चैव कौरव्य तथा लम्बपयोधरा ।
वेणुवीणाधरा चैव पिङ्गाक्षी लोहमेखला ॥ ९-४७-२१ (६२८७१)
शशोकूलमुखी कृष्णा खरजङ्घा महाजवा ।
शिशुमारमुखी श्वेता लोहिताक्षी विभीषणा ॥ ९-४७-२२ (६२८७२)
जटालिका कामचरी दीर्घजिह्वा बलोत्कटा ।
कालेहिका वामनिका मुकुटा चैव भारत ॥ ९-४७-२३ (६२८७३)
लोहिताक्षी महाकाया हरिपिण्डा च भूमिप ।
एकत्वचा सुकुसुमा कृष्णकर्णी च भारत ॥ ९-४७-२४ (६२८७४)
क्षुरकर्णी चतुष्कर्णी कर्णप्रावरणा तथा ।
चतुष्पथनिकेता च गोकर्णी महिषानना ॥ ९-४७-२५ (६२८७५)
खरकर्णी महाकर्णी भेरीस्वनमहास्वना ।
शङ्खकुम्भश्रवाश्चैव भगदा च महाबला ॥ ९-४७-२६ (६२८७६)
गणा च सुगणा चैव तथा भीत्यथ कामदा ।
चतुष्पथरता चैव भूतितीर्थान्यगोचरी ॥ ९-४७-२७ (६२८७७)
पशुदा वित्तदा चैव सुखदा च महायशाः ।
पयोदा गोमहिषदा सविशाला च भारत ॥ ९-४७-२८ (६२८७८)
प्रतिष्ठा सुप्रतिष्ठा च रोचमाना सुरोचना ।
नौकर्णी मुखकर्णी च विशिरा मन्थिनी तथा ॥ ९-४७-२९ (६२८७९)
एकचन्द्रा मेघकर्णा मेघमाला विरोचना ।
एताश्चान्याश्च बहवो मातरो भरतर्षभ ॥ ९-४७-३० (६२८८०)
कार्तिकेयानुयायिन्यो नानारूपाः सहस्रशः ।
दीर्घनख्यो दीर्घदन्त्यो दीर्घतुण्ड्श्च भारत ॥ ९-४७-३१ (६२८८१)
सबला मधुराश्चैव यौवनस्थाः स्वलङ्कृताः ।
माहात्म्येन च संयुक्ताः कामरूपधरास्तथा ॥ ९-४७-३२ (६२८८२)
निर्मांसगात्र्यः श्वेताश्च तथा काञ्चनसन्निभाः ।
कृष्णमेघनिभाश्चान्या धूम्नाश्च भरतर्षभ ॥ ९-४७-३३ (६२८८३)
अरुणाभा महाभोगा दीर्घकेश्यः सिताम्बराः ।
ऊर्ध्ववेणीधराश्चैव पिङ्गाक्ष्यो लम्बमेखलाः ॥ ९-४७-३४ (६२८८४)
लम्बोदर्यो लम्बकर्णास्तथा लम्बपयोधराः ।

ताम्राक्ष्यस्ताम्रवर्णाश्च हर्यक्ष्यश्च तथाऽपराः ॥ ९-४७-३५ (६२८८५)
वरदाः कामचारिण्यो नित्यं प्रमुदितास्तथा ।
याम्या रौद्रास्तथा सौम्याः कौबेर्योऽथ महाबलाः ॥ ९-४७-३६ (६२८८६)
वारुण्योऽथ च माहेन्द्यस्तथाऽऽग्नेय्यः परन्तप ।
वायव्यश्चाथ कौमार्यो ब्राह्मश्च भरतर्षभ ॥ ९-४७-३७ (६२८८७)
वैष्णव्यश्च तथा सौर्यो वाराह्यश्च महाबलाः ।
रूपेणाप्सरसां तुल्या मनोहार्यो मनोरमाः ॥ ९-४७-३८ (६२८८८)
परपुष्टोपमा वाक्ये तथर्द्ध्या धनदोपमाः ।
शक्रवीर्योपमा युद्धे दीप्ता वह्निसमास्तथा ॥ ९-४७-३९ (६२८८९)
शत्रुणां विग्रहे नित्यं भयदास्ता भवन्त्युत ।
कामरूपधराश्चैव जवे वायुसमास्तथा ॥ ९-४७-४० (६२८९०)
अचिन्त्यबलवीर्याश्च तथाऽचिन्त्यपराक्रमाः ।
वृक्षचत्वरवासिन्यश्चतुष्पथनिकेतनाः ॥ ९-४७-४१ (६२८९१)
गुहाश्मशानवासिन्यः शैलप्रस्रवणालयाः ।
नानाभरणधारिण्यो नानामाल्याम्बरास्तथा ॥ ९-४७-४२ (६२८९२)
नानाविचित्रवेषाश्च नानाभाषास्तथैव च ।
एते चान्ये च मातॄणां गणाः शत्रुभयङ्कराः ॥ ९-४७-४३ (६२८९३)
अनुजग्मुर्महात्मानं त्रिदशेन्द्रस्य सम्मते ।
ततः शक्त्यस्त्रमददद्भगवान्पाकशासनः ॥ ९-४७-४४ (६२८९४)
गुहाय राजशार्दूल विनाशाय सुरद्विषाम् ।
महास्वनां महाघण्टां द्योतमानां सितप्रभाम् ॥ ९-४७-४५ (६२८९५)
अरुणादित्यवर्णां च पताकां भरतर्षभ ।
ददौ पशुपतिस्तस्मै सर्वभूतमहाचमूम् ॥ ९-४७-४६ (६२८९६)
उग्रां नानाप्रहरणां तपोवीर्यबलान्विताम् ।
अजेयां स्वगणैर्युक्तां नाम्ना सेनां धनञ्जयाम् ॥ ९-४७-४७ (६२८९७)
रुद्रतुल्यबलैर्युक्तां योधानामयुतैस्त्रिभिः ।
न सा विजानाति रणात्कदाचिद्विनिवर्तितुम् ॥ ९-४७-४८ (६२८९८)
विष्णुर्ददौ वैजयन्तीं मालां बलविवर्धिनीम् ।
उमा ददौ विरजसी वाससी रविसप्रभे ॥ ९-४७-४९ (६२८९९)
गङ्गा कमण्डलुं दिव्यममृतोद्भवमुत्तमम् ।
ददौ प्रीत्या कुमाराय दण्डं चैव बृहस्पतिः ॥ ९-४७-५० (६२९००)
गरुडो दयितं पुत्रं मयरं चित्रबर्हिणम् ।
अरुणस्ताम्रचूडं च प्रददौ चरणायुधम् ॥ ९-४७-५१ (६२९०१)
छागं तु वरुणो राजा बलवीर्यसमन्वितम् ।
कृष्णाजिनं ततो ब्रह्मा ब्रह्मण्याय ददौ प्रभुः ।
समरेषु जयं चैव प्रददौ लोकभावनः ॥ ९-४७-५२ (६२९०२)

सैनापत्यमनुप्राप्य स्कन्दो देवगणस्य ह ।
शुशुभे ज्वलितोर्चिष्मान्द्वितीय इव पावकः ॥ ९-४७-५३ (६२९०३)
ततः पारिषदैश्चैव मातृभिश्च समन्वितः ।
ययौ देत्यविनाशाय ह्लादयन्सुरपुङ्गवान् ॥ ९-४७-५४ (६२९०४)
सा सेना नैर्ऋती भीमा सघण्टोच्छ्रितकेतना ।
सभेरीशङ्खमुरजा सायुधा सपताकिनी ॥ ९-४७-५५ (६२९०५)
शारदी द्यौरिवाभाति ज्योतिर्भिरिव शोभिता ॥ ९-४७-५६ (६२९०६)
ततो देवनिकायास्ते नानाभूतगणास्तथा ।
वादयामासुरव्यग्रा भेरीः शङ्खांश्च पुष्कलान् ॥ ९-४७-५७ (६२९०७)
पटहान्झर्झरांश्चैव क्रकचान्गोविषाणिकान् ।
आडम्बरान्गोमुखांश्च डिण्डिमांश्च महास्वनान् ॥ ९-४७-५८ (६२९०८)
तुष्टुवुस्ते कुमारं तु सर्वे देवाः सवासवाः ।
जगुश्च देवगन्धर्वा ननृतुश्चाप्सरोगणाः ॥ ९-४७-५९ (६२९०९)
ततः प्रीतो महासेनस्त्रिदशेभ्यो वरं ददौ ।
रिपून्हन्ताऽस्मि समरे ये वो वधचिकीर्षवः ॥ ९-४७-६० (६२९१०)
प्रतिगृह्य वरं देवास्तस्माद्विबुधसत्तमात् ।
प्रीतात्मानो महात्मानो मेनिरे निहतान्रिपून् ॥ ९-४७-६१ (६२९११)
सर्वेषां भूतसङ्घानां हर्षान्नादः समुत्थितः ।
अपूरयत लोकांस्त्रीन्वरे दत्ते महात्मना ॥ ९-४७-६२ (६२९१२)
स निर्ययौ महासेनो महत्या सेनया वृतः ।
वधाय युधि दैत्यानां रक्षार्थं च दिवोकसाम् ॥ ९-४७-६३ (६२९१३)
व्यवसायो जयो धर्मः सिद्धिर्लक्ष्मीर्धृतिः स्मृतिः ।
महासेनस्य सैन्यानामग्रे जग्मुर्नराधिप ॥ ९-४७-६४ (६२९१४)
स तया भीमया देवः शुलमुद्गरहस्तया ।
ज्वलितालातधारिण्या चित्राभरणवर्मया ॥ ९-४७-६५ (६२९१५)
गदामुसलनाराचशक्तितोमरहस्तया ।
दृप्तसिंहनिनादिन्या विनद्य प्रययौ गुहः ॥ ९-४७-६६ (६२९१६)
ग्तं दष्ट्वा सर्वदैतेया राक्षसा दानवास्तथा ।
व्यद्रवन्त दिशः सर्वा भयोद्विग्नाः समन्ततः ॥ ९-४७-६७ (६२९१७)
अभ्यद्रवन्त देवास्तान्विविधायुधपाणयः ।
दृष्ट्वा च स ततः क्रुद्धः स्कन्दस्तेजोबलान्वितः ॥ ९-४७-६८ (६२९१८)
शक्त्यस्त्रं भगवान्भीमं पुनःपुनरवाकिरत् ।
आदधच्चात्मनस्तेजो हविषेद्ध इवानलः ॥ ९-४७-६९ (६२९१९)
अभ्यस्यमाने शक्त्यस्त्रे स्कन्देनामिततेजसा ।
उल्काज्वाला महाराज पपात वसुधातले ॥ ९-४७-७० (६२९२०)
संह्रादयन्तश्च तथा निर्घाताश्चापतन्क्षितौ ।

यथान्तकालसमये सुघोराः स्युस्तथा नृप ॥ ९-४७-७१ (६२९२१)
क्षिप्ता ह्येका यदा शक्तिः सुघोराऽनलसूनुना ।
ततः कोट्यो विनिष्पेतुः शक्तीनां भरतर्षभ ॥ ९-४७-७२ (६२९२२)
ततः प्रीतो महासेनो जघान भगवान्प्रभुः ।
दैत्येन्द्रं तारकं नाम महाबलपराक्रमम् ॥ ९-४७-७३ (६२९२३)
वृतं दैत्यायुतैर्वीरैर्बलिभिर्दशभिर्नृप ।
महिषं चाष्टभिः पद्मैर्वृतं सङ्ख्ये निजघ्निवान् ॥ ९-४७-७४ (६२९२४)
त्रिपादं चायुतशतैर्जघान दशभिर्वृतम् ।
ह्रदोदरं निखर्वैश्च वृतं दशभिरीश्वरः ॥ ९-४७-७५ (६२९२५)
जघानानुचरैः सार्धं विविधायुधपाणिभिः ।
तथाऽकुर्वन्त विपुलं नादं वध्यत्सु शत्रुषु ॥ ९-४७-७६ (६२९२६)
कुमारानुचरा राजन्पूरयन्तो दिशो दश ।
ननृतुश्च ववल्गुश्च जहसुश्च मुदान्विताः ॥ ९-४७-७७ (६२९२७)
शक्त्यस्त्रस्य तु राजेन्द्र ततोऽर्चिर्भिः समन्ततः ।
त्रैलोक्यं त्रासितं सर्वं जृम्भमाणाभिरेव च ॥ ९-४७-७८ (६२९२८)
दग्धाः सहस्रशो दैत्या नादैः स्कन्दस्य चापरे ।
पताकयावधूताश्च हताः केचित्सुरद्विषः ॥ ९-४७-७९ (६२९२९)
केचिद्घण्टारवत्रस्ता निषेदुर्वसुधातले ।
केचित्प्रहरणैश्छिन्ना विनिष्पेतुर्गतायुषः ॥ ९-४७-८० (६२९३०)
एवं सुरद्विषोऽनेकान्बलवानाततायिनः ।
जघान समरे वीरः कार्तिकेयो महाबलः ॥ ९-४७-८१ (६२९३१)
बाणो नामाथ दैतेयो बलेः पुत्रो महाबलः ।
क्रौञ्चं पर्वतमाश्रित्य देवसङ्घानबाधत ॥ ९-४७-८२ (६२९३२)
तमभ्ययान्महासेनः सुरशत्रुमुदारधीः ।
स कार्तिकेयस्य भयात्क्रौञ्चं शरणमीयिवान् ॥ ९-४७-८३ (६२९३३)
ततः क्रौञ्चं महामन्युः क्रौञ्चनादनिनादितम् ।
शक्त्या बिभेद भगवान्कार्तिकेयोऽग्निदत्तया ॥ ९-४७-८४ (६२९३४)
ससालस्कन्धशबलं त्रस्तवानरवारणम् ।
प्रोड्डीनोद्भ्रान्तविहगं विनिष्पतितपन्नगम् ॥ ९-४७-८५ (६२९३५)
गोलाङ्गूलर्क्षसङ्घैश्च द्रवद्भिरनुनादितम् ।
कुरङ्गमविनिर्घोषनिनादितवनान्तरम् ॥ ९-४७-८६ (६२९३६)
विनिष्पतद्भिः शरभैः सिंहैश्च सहसा द्रुतैः ।
शोच्यामपि दशां प्राप्तो रराजेव सपर्वतः ॥ ९-४७-८७ (६२९३७)
विद्याधराः समुत्पेतुस्तस्य शृङ्गनिवासिनः ।
किन्नराश्च समुद्विग्नाः शक्तिपातरवोद्धताः ॥ ९-४७-८८ (६२९३८)
ततो दैत्या विनिष्पेतुः शतशोऽथ सहस्रशः ।

प्रदीप्तात्पर्वतश्रेष्ठाद्विचित्राभरणस्रजः ॥ ९-४७-८९ (६२९३९)
तान्निजघ्नुरतिक्रम्य कुमारानुचरा मृधे ।
स चैव भगवान्क्रुद्धो दैत्येन्द्रस्य सुतं तदा ॥ ९-४७-९० (६२९४०)
सहानुजं जघानाशु वृत्रं देवपतिर्यथा ।
बिभेद क्रौञ्चं शक्त्या च पावकिः परवीरहा ॥ ९-४७-९१ (६२९४१)
बहुधा चैकधा चैव कृत्वाऽऽत्मानं महाबलः ।
शक्तिः क्षिप्ता रणे तस्य पाणिमेति पुनः पुनः ॥ ९-४७-९२ (६२९४२)
एवम्प्रभावो भगवांस्ते भूयश्च पावकिः ।
शौर्याद्द्विगुणयोगेन तेजसा यशसा श्रिया ॥ ९-४७-९३ (६२९४३)
क्रौञ्चस्ते विनिर्भिन्नो दैत्याश्च शतशो हताः ॥ ९-४७-९४ (६२९४४)
ततः स भगवान्देवो निहत्य विबुधद्विषः ।
सभाज्यमानो विबुधैः परं हर्षमवाप ह ॥ ९-४७-९५ (६२९४५)
ततो दुन्दुभयो राजन्नेदुः शङ्खाश्च भारत ।
मुमुचुर्देवयोषाश्च पुष्पवर्षमनुत्तमम् ।
योगिनामीश्वरं देवं शतशोऽथ सहस्रशः ॥ ९-४७-९६ (६२९४६)
दिव्यगन्धमुपादाय ववौ पुण्यश्च मारुतः ।
गन्धर्वास्तुष्टुवुश्चैनं यज्वानश्च महर्षयः ॥ ९-४७-९७ (६२९४७)
केचिदनं व्यवस्यान्ति पितामहसुतं प्रभुम् ।
सनत्कुमारं सर्वेषां ब्रह्मयोनिं तमग्रजम् ॥ ९-४७-९८ (६२९४८)
केचिन्महेश्वरसुतं केचित्पुत्रं विभावसोः ।
उमायाः कृत्तिकानां च गङ्गायाश्च वदन्त्युत ॥ ९-४७-९९ (६२९४९)
एकधा च द्विधा चैव चतुर्धा च महाबलम् ।
योगिनामीश्वरं देवं शतशोऽथ सहस्रशः ॥ ९-४७-१०० (६२९५०)
एतत्ते कथितं राजन्कार्तिकेयाभिषेचनम् ।
शृणु चैव सरस्वत्यास्तीर्थवंशस्य पुण्यताम् ॥ ९-४७-१ (६२९५१)
बभूव तीर्थप्रवरं हतेषु सुरशत्रुषु ।
कुमारेण महाराज त्रिविष्टपमिवापरम् ॥ ९-४७-२ (६२९५२)
ऐश्वर्याणि च तत्रस्थो ददावीशः पृथक्पृथक् ।
ददौ नैर्ऋतमुख्येभ्यस्त्रैलोक्यं पावकात्मजः ॥ ९-४७-३ (६२९५३)
एवं स भगवांस्तस्मिंस्तीर्थे दैत्यकुलान्तकः ।
अभिषिक्तो महाराज देवसेनापतिः सुरैः ॥ ९-४७-४ (६२९५४)
औशनं नाम तत्तीर्थं यत्र पूर्वमपाम्पतिः ।
अभिषिक्तः सुरगणैर्वरुणो भरतर्षभ ॥ ९-४७-५ (६२९५५)
अस्मिंस्तीर्थवरे स्नात्वा स्कन्दं चाभ्यर्च्य लाङ्गली ।
ब्राह्मणेभ्योददौ रुक्मं वासांस्याभरणानि च ॥ ९-४७-६ (६२९५६)
उषित्वा रजनीं तत्र माधवः परवीरहा ।

पूज्यतीर्थवरं तच्च स्पृष्ट्वा तोयं च लाङ्गली ॥ ९-४७-७ (६२९५७)
हृष्टः प्रीतमनाश्चैव ह्यभवन्माधवोत्तमः ।
एतत्ते सर्वमाख्यातं यन्मां त्वं परिपृच्छसि ॥ ९-४७-८ (६२९५८)
यथाऽभिषिक्तो भगवान्स्कन्दो देवैः समागतैः ।
ग्सेनानीश्च कृतो राजन्बाल एव महाबलः'॥ ॥ ९-४७-९ (६२९५९)

इति श्रीमन्महाभारते शल्यपर्वणि ह्रदप्रवेशपर्वणि
सप्तचत्वारिंशोऽध्यायः ॥ ४७ ॥

---

शल्यपर्व-अध्यय०४८
॥ श्रीः ॥
९.४८. अध्यायः ४८

Mahabharata - Shalya Parva - Chapter Topics
देवैर्वरुणस्य जलाधिपत्येऽभिषेचनम् ॥ १ ॥
बलभद्रस्याग्नितीर्थकौबेरतीर्थगमनं तन्महिमानुवर्णनं च ॥ २ ॥

Mahabharata - Shalya Parva - Chapter Text

९-१६-० (६२९६०)
जनमेजय उवाच। ९-१६-०क्ष् (५१९९)
अत्यद्भुतमिदं ब्रह्मञ्श्रुतवानस्मि तत्त्वतः ।
अभिषेकं कुमारस्य विस्तरेण यथाविधि ॥ ९-१६-१ (६२९६१)
यच्छ्रुत्वा पूतमात्मानं विजानामि तपोधन ।
प्रहृष्टानि च रोमाणि प्रसन्नं च मनो मम ॥ ९-१६-२ (६२९६२)
अभिषेकं कुमारस्य दैत्यानां च वधं तथा ।
श्रुत्वा मे परमा प्रीतिर्भूयः कौतूहलं हि मे ॥ ९-१६-३ (६२९६३)
अपाम्पतिः कथं ह्यस्मिन्नभिषिक्तः पुरा सुरैः ।
तन्मे ब्रूहि महाप्रज्ञ कुशलो ह्यसि सत्तम ॥ ९-१६-४ (६२९६४)
वैशम्पायन उवाच। ९-१६-५क्ष् (५२००)
शृणु राजन्निदं चित्रं पूर्वकाले यथाऽभवत् ॥ ९-१६-५ (६२९६५)
आदौ कृतयुगे राजन्वर्तमाने यथाविधि ।
वरुणं देवताः सर्वाः समेत्येदमथाब्रुवन् ॥ ९-१६-६ (६२९६६)
यथाऽस्मान्सुरराट् शक्रो भयेभ्यः पाति सर्वदा ।
तथा त्वमपि सर्वासां सरितां वै पतिर्भव ॥ ९-१६-७ (६२९६७)
वासश्च ते सदा देव सागरे मकरालये ।

समुद्रोऽयं तव वशे भविष्यति नदीपतिः ॥ ९-३६-८ (६२९६८)
सोमेन सार्धं च तव हानिवृद्धी भविष्यतः ।
एवमस्त्विति तान्देवान्वरुणो वाक्यमब्रवीत् ॥ ९-३६-९ (६२९६९)
समागम्य ततः सर्वे वरुणं सागरालयम् ।
अपाम्पतिं प्रचक्रुर्हि विधिदृष्टेन कर्मणा ॥ ९-३६-१० (६२९७०)
अभिषिच्य ततो देवा वरुणं यादसाम्पतिम् ।
जग्मुः स्वान्येव स्थानानि पूजयित्वा जलेश्वरम् ॥ ९-३६-११ (६२९७१)
अभिषिक्तस्ततो देवैर्वरुणोऽपि महायशाः ।
सरितः सागरांश्चैव नदांश्चापि सरांसि च ।
पालयामास विधिना यथा देवाञ्शतक्रतुः ॥ ९-३६-१२ (६२९७२)
ततस्त्रत्राप्युपस्पृश्य दत्त्वा च विविधं वसु ।
अग्नितीर्थं महाप्राज्ञो जगामाथ प्रलम्बहा ।
नष्टो न दृश्यते यत्र शमीगर्भे हुताशनः ॥ ९-३६-१३ (६२९७३)
लोकालोकविनाशे च प्रादुर्भूते तदाऽनघ ।
उपतस्थुः सुरा यत्र सर्वलोकपितामहम् ॥ ९-३६-१४ (६२९७४)
अग्निः प्रनष्टो भगवान्कारणं च न विद्महे ।
सर्वभूतक्षयो राजन्सम्पादय विभोऽनलम् ॥ ९-३६-१५ (६२९७५)
जनमेजय उवाच। ९-३६-१६क्ष् (५२०१)
किमर्थं भगवानग्निः प्रनष्टो लोकभावनाः ।
विज्ञातश्च कथं देवैस्तन्ममाचक्ष्व तत्त्वतः ॥ ९-३६-१६ (६२९७६)
वैशम्पायन उवाच। ९-३६-१७क्ष् (५२०२)
भृगोः शापाद्भृशं भीतो जातवेदाः प्रतापवान् ।
शमीगर्भमथासाद्य ननाश भगवांस्ततः ॥ ९-३६-१७ (६२९७७)
प्रनष्टे तु तदा वह्नौ देवाः सर्वे सवासवाः ।
अन्वैषन्त तदा नष्टं ज्वलनं भृशदुःखिताः ॥ ९-३६-१८ (६२९७८)
ततोऽग्नितीर्थमासाद्य शमीगर्भस्थमेव हि ।
ददृशुर्ज्वलनं तत्र वसमानं यथाविधि ॥ ९-३६-१९ (६२९७९)
देवाः सर्वे नरव्याघ्र बृहस्पतिपुरोगमाः ।
ज्वलनं तं समासाद्य प्रीताऽभूवन्सवासवाः ॥ ९-३६-२० (६२९८०)
पुनर्यथागतं जग्मुः सर्वभक्षश्च सोऽभवत् ।
भृगोः शापान्महाभाग यदुक्तं ब्रह्मवादिना ॥ ९-३६-२१ (६२९८१)
तत्राप्याप्लुत्य मतिमान्ब्रह्मशापान्मुमोच ह ॥ ९-३६-२२ (६२९८२)
तत्राप्लुत्य ततो ब्रह्मा सह देवैः प्रभुः पुरा ।
ससर्ज चान्नानि तथा देवतानां यथाविधि ॥ ९-३६-२३ (६२९८३)
तत्र स्नात्वा च दत्त्वा च वसूनि विविधानि च ।
कौबेरं प्रययौ तीर्थं यत्र तप्त्वा महत्तपः ॥ ९-३६-२४ (६२९८४)

धनाधिपत्यं सम्प्राप्तो राजन्नैलबिलः प्रभुः ॥ ९-१६-२५ (६२९८५)
तत्रस्थमेव तं राजन्धनानि निधयस्तथा ।
उपतद्धतुर्नरश्रेष्ठ तत्तीर्थं लाङ्गली बलः ॥ ९-१६-२६ (६२९८६)
गत्वा स्नात्वा च विधिवद्ब्राह्मणेभ्यो धनं ददौ ।
ददृशे तत्र तत्स्थानं कौबेरे काननोत्तमे ॥ ९-१६-२७ (६२९८७)
पुरा यत्र तपस्तप्तं विपुलं सुमहात्मना ।
यक्षराज्ञा कुबेरेण वरा लब्धाश्च पुष्कलाः ॥ ९-१६-२८ (६२९८८)
धनाधिपत्यं सख्यं च रुद्रेणामिततेजसा ।
सुरत्वं लोकपालत्वं पुत्रं च नलकूबरम् ॥ ९-१६-२९ (६२९८९)
यत्र लेभे महाबाहो धनाधिपतिरञ्जसा ।
अभिषिक्तश्च तत्रैव समागम्य मरुद्गणैः ॥ ९-१६-३० (६२९९०)
वाहनं चास्य तद्दत्तं हंसयुक्तं मनोजवम् ।
विमानं पुष्पकं दिव्यं नैर्ऋतैश्वर्यमेव च ॥ ९-१६-३१ (६२९९१)
तत्राप्लुत्य बलो राजन्दत्त्वा दायांश्च पुष्कलान् ।
जगाम त्वरितो रामस्तीर्थं स्वेतानुलेपनः ॥ ९-१६-३२ (६२९९२)
निषेवितं सर्वसत्वैर्नाम्ना बदरपाचनम् ।
नानर्तुकवनोपेतं सदा पुष्पफलं शुभम् ॥ ॥ ९-१६-३३ (६२९९३)

इति श्रीमन्महाभारते शल्यपर्वणि ह्रदप्रवेशपर्वणि
अष्टचत्वारिंशोऽध्यायः ॥ ४८ ॥
Mahabharata - Shalya Parva - Chapter Footnotes

९-१६-२५ ऐलबिलः कुबेरः ॥
९-१६-४८ अष्टचत्वारिंशोऽध्यायः ॥

---

शल्यपर्व-अध्यय०४९
॥ श्रीः ॥
९.४९. अध्यायः ४९

Mahabharata - Shalya Parva - Chapter Topics
बलरामस्य बदरपाचनतीर्थगमनम् ॥ १ ॥
श्रुतावत्यरुन्धत्योर्महिमानुवर्णनम् ॥ २ ॥

Mahabharata - Shalya Parva - Chapter Text

९-४९-० (६२९९४)

वैशम्पायन उवाच। ९-४९-०क्ष् (५२०३)
ततस्तीर्थवरं रामो ययौ बदरपाचनाम् ।
तपस्विसिद्धचरितं यत्र कन्या धृतव्रता ॥ ९-४९-१ (६२९९५)
भरद्वाजस्य दुहिता रुपेणाप्रतिमा भुवि ।
श्रुतावती नाम विभो कुमारी ब्रह्मचारिणी ॥ ९-४९-२ (६२९९६)
तपश्चचार सात्युग्रं नियमैर्बहुभिर्वृता ।
भर्ता मे देवराजः स्यादिति निश्चित्य भामिनी ॥ ९-४९-३ (६२९९७)
समास्तस्या व्यतिक्रान्ता बह्व्यः कुरुकुलोद्वह ।
चरन्त्या नियमांस्तांस्तांस्त्रीभिस्तीव्रान्सुदुश्चरान् ॥ ९-४९-४ (६२९९८)
तस्यास्तु तेन वृत्तेन तपसा च विशाम्पते ।
भक्त्या च भगवान्प्रीतः परया पाकशासनः ॥ ९-४९-५ (६२९९९)
आजगामाश्रमं तस्यास्त्रिदशाधिपतिः प्रभुः ।
आस्थाय रूपं विप्रर्षेर्वसिष्ठस्य महात्मनः ॥ ९-४९-६ (६३०००)
सा तं दृष्ट्वोग्रतपसं वसिष्ठं तपतां वरम् ।
आचारैर्मुनिभिर्दृष्टैः पूजयामास भारत ॥ ९-४९-७ (६३००१)
उवाच नियमज्ञा च कल्याणी सा प्रियंवदा ।
भगवन्मुनिशार्दूल किमाज्ञापयसि प्रभो ॥ ९-४९-८ (६३००२)
सर्वमद्य यथाशक्ति तव दास्यामि सुव्रत ।
शक्रभक्त्या च ते पाणिं न दास्यामि कथञ्चन ॥ ९-४९-९ (६३००३)
व्रतैश्च नियमैश्चैव तपसा च तपोधन ।
शक्रस्तोषयितव्यो वै मया त्रिभुवनेश्वरः ॥ ९-४९-१० (६३००४)
इत्युक्तो भगवान्देवः स्मयन्निव निरीक्ष्य ताम् ।
उवाच नियमं ज्ञात्वा सांत्वयन्निव भारत ॥ ९-४९-११ (६३००५)
उग्रं तपश्चरसि वै विदिता मेऽसि सुव्रते ।
यदर्थमयमारम्भस्तव कल्याणि हृद्गतः ॥ ९-४९-१२ (६३००६)
तच्च सर्वं यथाभूतं भविष्यति वरानने ।
तपसा लभ्यते सर्वं यथाभूतं भविष्यति ॥ ९-४९-१३ (६३००७)
यथा स्थानानि दिव्यानि विबुधानां शुभानने ।
तपसा तानि प्राप्याणि तपोमूलं महात्सुखम् ॥ ९-४९-१४ (६३००८)
इति कृत्वा तपो घोरं देहं सन्न्यस्य मानवाः ।
देवत्वं यान्ति कल्याणि शृणुष्वैकं वचो मम ॥ ९-४९-१५ (६३००९)
पञ्च चैतानि सुभगे बदराणि शुभव्रते ।
पचेत्युक्त्वा तु भगवाञ्जगाम बलसूदनः ॥ ९-४९-१६ (६३०१०)
आमन्त्र्य तां तु कल्याणीं ततो जप्यं जजाप सः ।
अविदूरे ततस्तस्मादाश्रमात्तीर्थमुत्तमम् ॥ ९-४९-१७ (६३०११)
तच्च तीर्थं महाराज यत्र जप्यं जजाप सः ।

इन्द्रतीर्थेतिविख्यातं त्रिषु लोकेषु मानद ॥ ९-४९-१८ (६३०१२)
तस्य जिज्ञासनार्थं स भगवान्पाकशासनः ।
बदराणामपचनं चकार विबुधाधिपः ॥ ९-४९-१९ (६३०१३)
ततः प्रतप्ता सा राजन्वाग्यता विगतक्लमा ।
तत्परा शुचिसंवीता पावके समधिश्रयत् ।
अपचद्राजशार्दूल बदराणि महाव्रता ॥ ९-४९-२० (६३०१४)
तस्याः पचन्त्याः सुमहान्कालोऽगात्पुरुषर्षभ ।
न च स्म तान्यपच्यन्त दिनं च क्षयमभ्यगात् ॥ ९-४९-२१ (६३०१५)
हुताशनेन दग्धश्च यस्तस्याः काष्ठसञ्चयः ।
अकाष्ठमग्निं सा दृष्ट्वा स्वशरीरमथादहत् ॥ ९-४९-२२ (६३०१६)
पादौ प्रक्षिप्य सा पूर्वं पावके चारुदर्शना ।
दग्धौ दग्धौ पुनः पादावुपावर्तयतानघ ॥ ९-४९-२३ (६३०१७)
चरणे दह्यमाने च नाचिन्तयदनिन्दिता ।
दुःखं कमलपत्राक्षी महर्षिप्रियकाम्यया ॥ ९-४९-२४ (६३०१८)
न वैमनस्यं तस्यास्तु मुखभेदोऽथवाऽभवत् ।
शरीरमग्निना दीप्य जलमध्ये यथा स्थिता ॥ ९-४९-२५ (६३०१९)
तच्चास्याः पचने यत्नं न न्यवर्तत भारत ।
सर्वथा बदराण्येव पक्तव्यानीति कन्यका ॥ ९-४९-२६ (६३०२०)
सा तन्मनसि कृत्वैव महर्षेर्वचनं शुभा ।
अपचद्बदराण्येव न चापच्यन्त भारत ॥ ९-४९-२७ (६३०२१)
तस्यास्तु चरणौ वह्निर्ददाह भगवान्स्वयम् ।
न च तस्या मनोदुःखं स्वल्पमप्यभवत्तदा ॥ ९-४९-२८ (६३०२२)
अथ तत्कर्म दृष्ट्वाऽस्याः प्रीतस्त्रिभुवनेश्वरः ।
ततः सन्दर्शयामास कन्यायै रूपमात्मनः ॥ ९-४९-२९ (६३०२३)
उवाच च सुरश्रेष्ठस्तां कन्यां सुदृढव्रताम् ।
प्रीतोऽस्मि ते शुभे भक्त्या तपसा नियमेन च ॥ ९-४९-३० (६३०२४)
तस्माद्योऽभिमतः कामः स ते सम्पत्स्यते शुभे ।
देहं त्यक्त्वा महाभागे त्रिदिवे मयि वत्स्यसि ॥ ९-४९-३१ (६३०२५)
इदं च ते तीर्थवरं स्थिरं लोके भविष्यति ।
सर्वपापापहं सुभ्रु नाम्ना बदरपाचनम् ।
विख्यातं त्रिषु लोकेषु ब्रह्मर्षिभिरभिप्लुतम् ॥ ९-४९-३२ (६३०२६)
अस्मिन्खलु महाभागे शुभे तीर्थवरेऽनघे ।
त्यक्त्वा सप्तर्षयो जग्मुर्हिमवन्तमरुन्धतीम् ॥ ९-४९-३३ (६३०२७)
ततस्ते वै महाभागा गत्वा तत्र सुसंशिताः ।
वृत्त्यर्थं फलमूलानि समाहर्तुं ययुः किल ॥ ९-४९-३४ (६३०२८)
तेषां वृत्त्यर्थिनां तत्र वसतां हिमवद्वने ।

अनावृष्टिरनुप्राप्ता तदा द्वादशवार्षिकी ॥ ९-४९-३५ (६३०२९)
ते कृत्वा चाश्रमं तत्र न्यवसन्त तपस्विनः ।
अरुन्धत्यपि कल्याणी तपोनित्याऽभवत्तदा ॥ ९-४९-३६ (६३०३०)
अरुन्धतीं ततो दृष्ट्वा तीव्रं नियममास्थिताम् ।
अथागमत्त्रिनयनः सुप्रीतो वरदस्तदा ॥ ९-४९-३७ (६३०३१)
ब्राह्मं रूपं ततः कृत्वा महादेवो महायशाः ।
तामभ्येत्याब्रवीद्देवो भिक्षामिच्छाम्यहं शुभे ॥ ९-४९-३८ (६३०३२)
प्रत्युवाच ततः सा तं ब्राह्मणं चारुदर्शना ।
क्षीणोऽन्नसञ्चयो विप्र बदराणीह भक्षय ॥ ९-४९-३९ (६३०३३)
ततोऽब्रवीन्महादेवः पचस्वैतानि सुव्रते ।
इत्युक्ता साऽपचत्तानि ब्राह्मणप्रियकाम्यया ।
अधिश्रित्य समिद्धेऽग्नौ बदराणि यशस्विनी ॥ ९-४९-४० (६३०३४)
दिव्या मनोरमाः पुण्याः कथाः शुश्राव सा तदा ।
अतीता सा त्वनावृष्टिर्घोरा द्वादशवार्षिकी ॥ ९-४९-४१ (६३०३५)
अनश्नन्त्याः पचन्त्याश्च शृण्वन्त्याश्च कथाः शुभाः ।
दिनोपमः स तस्याथ कालोऽतीतः सुदारुणः ॥ ९-४९-४२ (६३०३६)
ततस्तु मुनयः प्राप्ताः फलान्यादाय पर्वतात् ।
ततः स भगवान्प्रीतः प्रोवाचारुन्धतीं ततः ॥ ९-४९-४३ (६३०३७)
उपसर्पस्व धर्मज्ञे यथापूर्वमिमानृषीन् ।
प्रीतोऽस्मि तव धर्मज्ञे तपसा नियमेन च ॥ ९-४९-४४ (६३०३८)
ततः सन्दर्शयामास स्वरूपं भगवान्हरः ।
ततोऽब्रवीत्तदा तेभ्यस्तस्याश्च चरितं महत् ॥ ९-४९-४५ (६३०३९)
भवद्भिर्हिमवत्पृष्ठे यत्तपः समुपार्जितम् ।
अस्यास्च यत्तपो विप्रा न समं तन्मतं मम ॥ ९-४९-४६ (६३०४०)
अनया हि तपस्विन्या तपस्तप्तं सुदुश्चरम् ।
अनश्नन्त्या पचन्त्या च समा द्वादश पारिताः ॥ ९-४९-४७ (६३०४१)
ततः प्रोवाच भगवांस्तामेवारुन्धतीं पुनः ।
वरं वृणीष्व कल्याणि यत्तेऽभिलषितं हृदि ॥ ९-४९-४८ (६३०४२)
साऽब्रवीत्पृथुताम्राक्षी देवं सप्तर्षिसंसदि ।
भगवान्यदि मे प्रीतस्तीर्थं स्यादिदमद्भुतम् ॥ ९-४९-४९ (६३०४३)
सिद्धदेवर्षिदयितं नाम्ना बदरपाचनम् ।
तथाऽस्मिन्देवदेवेश त्रिरात्रमुषितः शुचिः ॥ ९-४९-५० (६३०४४)
प्राप्नुयादुपवासेन फलं द्वादशवार्षिकम् ।
एवमस्त्विति तां देवः प्रत्युवाच तपस्विनीम् ॥ ९-४९-५१ (६३०४५)
सप्तर्षिभिः स्तुतो देवस्ततो लोकं ययौ तदा ।
ऋषयो विस्मयं जग्मुस्तां दृष्ट्वा चाप्यरुन्धतीम् ।

अश्रान्तां चाविवर्णा च क्षुत्पिपासाऽसमायुताम् ॥ ९-४९-५२ (६३०४६)
एवं सिद्धिः परा प्राप्ता अरुन्धत्या विशुद्धया ।
यथा त्वया महाभागे मदर्थे संशितव्रते ॥ ९-४९-५३ (६३०४७)
विशेषो हि त्वया भद्रे व्रते ह्यस्मिन्समर्पितः ।
तथा चेदं ददाम्यद्य नियमेन सुतोषितः ।
विशेषं तव कल्याणि प्रयच्छामि वरं वरे ॥ ९-४९-५४ (६३०४८)
अरुन्धत्या वरस्तस्या यो दत्तो वै महात्मना ।
तस्य चाहं प्रभावेन तव कल्याणि तेजसा ।
प्रवक्ष्यामि परं भूयो वरमत्र यथाविधि ॥ ९-४९-५५ (६३०४९)
यस्त्वेकां रजनीं तीर्थे वत्स्यते सुसमाहितः ।
सस्नात्वा प्राप्स्यते लोकान्देहन्यासात्सुदुर्लभान् ॥ ९-४९-५६ (६३०५०)
इत्युक्त्वा भगवान्देवः सहस्राक्षः प्रतापवान् ।
श्रुतावतीं ततः पुण्यां जगाम त्रिदिवं पुनः ॥ ९-४९-५७ (६३०५१)
गते वज्रधरे राजंस्तत्र वर्षं पपात ह ।
पुष्पाणां भरतश्रेष्ठ दिव्यानां पुण्यगन्धिनाम् ॥ ९-४९-५८ (६३०५२)
दवदुन्दुभयश्चापि नेदुस्तत्र महास्वनाः ।
मारुतश्च ववौ पुण्यः पुण्यगन्धो विशाम्पते ॥ ९-४९-५९ (६३०५३)
उत्सृज्य तु शुभा देहं जगामास्य च भार्यताम् ।
तपसोग्रेण तं लब्ध्वा तेन रेमे सहाच्युत ॥ ९-४९-६० (६३०५४)
जनमेजय उवाच। ९-४९-६१क्ष् (५२०४)
का तस्या भगवन्माता क्व संवृद्धा च शोभना ।
श्रोतुमिच्छाम्यहं विप्र परं कौतूहलं हि मे ॥ ९-४९-६१ (६३०५५)
वैशम्पायन उवाच। ९-४९-६२क्ष् (५२०५)
भरद्वाजस्य विप्रर्षेः स्कन्नं रेतो महात्मनः ।
दृष्ट्वाऽप्सरसमायान्ती घृताचीं पृथलोचनाम् ॥ ९-४९-६२ (६३०५६)
स तु जग्राह तद्रेतः करेण जपतां वरः ।
तदाऽपतत्पर्णपुटे तत्र सा सम्भवत्सुता ॥ ९-४९-६३ (६३०५७)
तस्यास्तु जातकर्मादि कृत्वा सर्वं तपोधनः ।
नाम चास्याः स कृतवान्भरद्वाजो महामुनिः ॥ ९-४९-६४ (६३०५८)
श्रुतावतीति धर्मात्मा देवर्षिगणसंसदि ।
स्वे च तामाश्रमे न्यस्य जगाम हिमवद्वनम् ॥ ९-४९-६५ (६३०५९)
तत्राप्युपस्पृश्य महानुभावो
वसूनि दत्त्वा च महाद्विजेभ्यः ।
जगाम तीर्थं सुसमाहितात्मा
शक्रस्य वृष्णिप्रवरस्तदानीम् ॥ ॥ ९-४९-६६ (६३०६०)

इति श्रीमन्महाभारते शल्यपर्वणि ह्रदप्रवेशपर्वणि
एकोनपञ्चाशोऽध्यायः ॥ ४९ ॥
Mahabharata - Shalya Parva - Chapter Footnotes

९-४९-२३ उपावर्तयत अग्रेऽग्रे प्रसारितवती ॥
९-४९-२६ तच्चास्या वचनं नित्यमवर्तद्धृदि भारत इति झ पाठः ॥
९-४९-४९ एकोनपञ्चाशोऽध्यायः ॥

---

शल्यपर्व-अध्यय०५०
॥ श्रीः ॥
९.५०. अध्यायः ५०

Mahabharata - Shalya Parva - Chapter Topics
बलभद्रस्येरद्रतीर्थादिगमनम् ॥ १ ॥
तत्तत्तीर्थमाहात्म्यकथनम् ॥ २ ॥

Mahabharata - Shalya Parva - Chapter Text

९-५०-० (६३०६१)
वैशम्पायन उवाच। ९-५०-०क्ष् (५२०६)
इन्द्रतीर्थं ततो गत्वा यदूनां प्रवरो बली ।
विप्रेभ्यो धनरत्नानि ददौ स्नात्वा यथाविधि ॥ ९-५०-१ (६३०६२)
तत्र ह्यमरराजो वै ईजे क्रतुशतेन ह ।
बृहस्पतेश्च देवेशः प्रददौ विपुलं धनम् ॥ ९-५०-२ (६३०६३)
अनर्गलान्सजारूथ्यान्सर्वान्विविधदक्षिणान् ।
आजहर क्रतूंस्तत्र यथोक्तं वेदपारगैः ॥ ९-५०-३ (६३०६४)
तान्क्रतून्भरतश्रेष्ठ शतकृत्वो महाद्युतिः ।
पूरयामास विधिवत्ततः ख्यातः शतक्रतुः ॥ ९-५०-४ (६३०६५)
तस्य नाम्ना तु तत्तीर्थं शिवं पुण्यं सनातनम् ।
इन्द्रतीर्थमिति ख्यातं सर्वपापप्रमोचनम् ॥ ९-५०-५ (६३०६६)
उपस्पृश्य च तत्रापि विधिवन्मुसलायुधः ।
ब्राह्मणान्पूजयित्वा च पानाच्छादुनभोजनैः ॥ ९-५०-६ (६३०६७)
शुभं तीर्थवरं तस्माद्रामतीर्थं जगाम ह ।
यत्र रामो महाभागो भार्गवः सुमहातपाः ॥ ९-५०-७ (६३०६८)
असकृत्पृथिवीं कृत्वा हतक्षत्रियपुङ्गवाम् ।
उपाध्यायं पुरस्कृत्य काश्यपं मुनिसत्तमम् ॥ ९-५०-८ (६३०६९)

अयजद्वाजपेयेन सोऽश्वमेधशतेन च ।
प्रददौ दक्षिणार्थं च पृथिवीं सागराम्बराम् ॥ ९-५०-९ (६३०७०)
रामो दत्त्वा धनं तत्र द्विजेभ्यो जनमेजय ।
उपस्पृश्य यथान्यायं पूजयित्वा तथा द्विजान् ॥ ९-५०-१० (६३०७१)
पुण्यतीर्थे शुभे देशे वसु दत्त्वा हलायुधः ।
मुनींश्चैवाभिवाद्याथ यमुनातीर्थमागमत् ।
यत्रानयामास तदा राजसूयमपाम्पतिः ॥ ९-५०-११ (६३०७२)
दितेः सुतान्महाभागो वरुणो वै सितप्रभः ।
यत्र निर्जित्य सङ्ग्रामे मानुषान्दानवांस्तथा ।
गन्धर्वान्राक्षसांश्चैव वरुणः परवीरहा ॥ ९-५०-१२ (६३०७३)
तस्मिन्क्रतुवरे वृत्ते सङ्ग्रामः समजायत ।
देवानां दानवानां च त्रैलोक्यस्य भयावहः ॥ ९-५०-१३ (६३०७४)
राजसूये क्रतुश्रेष्ठे निवृत्ते जनमेजय ।
जायते सुमहाघोरः संक्षयः क्षत्रियान्प्रति ॥ ९-५०-१४ (६३०७५)
हलायुधस्तदा रामस्तस्मिंस्तीर्थवरे शुभे ।
तत्रस्नात्वा च दत्त्वा च द्विजेभ्यो वसु माधवः ॥ ९-५०-१५ (६३०७६)
वनमाली ततो हृष्टः स्तूयमानो द्विजातिभिः ।
तस्मादादित्यतीर्थं च जगाम कमलेक्षणः ॥ ९-५०-१६ (६३०७७)
यत्रेष्ट्वा भगवाञ्ज्योतिर्भास्करो राजसत्तम ।
ज्योतिषामाधिपत्यं च प्रभावं चाभ्यपद्यत ॥ ९-५०-१७ (६३०७८)
तस्या नद्यास्तु तीरे वै सर्वे देवाः सवासवाः ।
विश्वेदेवाः समरुतो गन्धर्वाप्सरसश्च ह ॥ ९-५०-१८ (६३०७९)
द्वैपायनः शुकश्चैव कृष्णश्च मधुसूदनः ।
यक्षाश्च राक्षसाश्चैव पिशाचाश्च विशाम्पते ॥ ९-५०-१९ (६३०८०)
एते चान्ये च बहवो योगसिद्धाः सहस्रशः ।
तस्मिंस्तीर्थे सरस्वत्याः शिवे पुण्ये परन्तप ॥ ९-५०-२० (६३०८१)
तत्र हत्वा पुरा विष्णुरसुरौ मधुकैटभौ ।
आप्लुत्य भरतश्रेष्ठ तीर्थप्रवर उत्तमे ॥ ९-५०-२१ (६३०८२)
द्वैपायनश्च धर्मात्मा तत्रैवाप्लुत्य भारत ।
सम्प्राप्तः परमं योगं सिद्धिं च परमां गतः ॥ ९-५०-२२ (६३०८३)
असितो देवलश्चैव तस्मिन्नेव महातपाः ।
परमं योगमास्थाय ऋषिर्योगमवाप्तवान् ॥ ॥ ९-५०-२३ (६३०८४)

इति श्रीमन्महाभारते शल्यपर्वणि ह्रदप्रवेशपर्वणि
पञ्चाशोऽध्यायः ॥ ५० ॥
Mahabharata - Shalya Parva - Chapter Footnotes

९-५०-१ आनयामास मुनीनित्यनुषज्ज्यते । राजसूयं कर्तुमिति शेषः ॥
९-५०-५० पञ्चाशत्तमोऽध्यायः ॥

---

शल्यपर्व-अध्यय०५१
॥ श्रीः ॥
९.५१. अध्यायः ५१

Mahabharata - Shalya Parva - Chapter Topics
देवलजैगीषव्ययोश्चरित्रकीर्तनम् ॥ १ ॥
बलभद्रस्यादित्यतीर्थात्सोमतीर्थगमनम् ॥ २ ॥

Mahabharata - Shalya Parva - Chapter Text

९-५१-० (६३०८५)
वैशम्पायन उवाच। ९-५१-०क्ष् (५२०७)
तस्मिन्नेव तु धर्मात्मा वसति स्म तपोधनः ।
गार्हिस्थ्यं धर्ममास्थाय ह्यसितो देवलः पुरा ॥ ९-५१-१ (६३०८६)
धर्मनित्यः शुचिर्दान्तो यज्ञशीलो महातपाः ।
कर्मणा मनसा वाचा समः सर्वेषु जन्तुषु ॥ ९-५१-२ (६३०८७)
अक्रोधनो महाराज तुल्यनिन्दात्मसंस्तुतिः ।
प्रियाप्रिये तुल्यवृत्तिर्यमवत्समदर्शनः ॥ ९-५१-३ (६३०८८)
काञ्चने लोष्ठके चैव समदर्शी महातपाः ।
देवानपूजयन्नित्यमतिथींश्च द्विजैः सह ।
ब्रह्मचर्यरतो नित्यं सदा धर्मपरायणः ॥ ९-५१-४ (६३०८९)
ततोऽभ्येत्य महाभाग योगमास्थाय भिक्षुकः ।
जैगीषव्यो मुनिर्धीमांस्तस्मिंस्तीर्थे समाहितः ॥ ९-५१-५ (६३०९०)
देवलस्याश्रमे राजन्न्यवसत्स महाद्युतिः ।
योगनित्यो महाराज सिद्धिं प्राप्तो महातपाः ॥ ९-५१-६ (६३०९१)
तं तत्र वसमानं तु जैगीषव्यं महामुनिम् ।
देवलो दर्शयन्नेव नैवायुञ्जत धर्मतः ॥ ९-५१-७ (६३०९२)
एवं तयोर्महाराज दीर्घकालो व्यतिक्रमत् ॥ ९-५१-८ (६३०९३)
जैगीषव्यो मुनिस्तं तु ददर्शाथ स केवलम् ।
आहारकाले मतिमान्परिव्राड् जमेजय ॥ ९-५१-९ (६३०९४)
उपातिष्ठत धर्मज्ञो भैक्षकाले स देवलम् ।
गौरवं परमं चक्रे प्रीतिं च विपुलां तथा ॥ ९-५१-१० (६३०९५)

देवलस्तु यथाशक्ति पूजयामास भारत ।
ऋषिदृष्टेन विधिना समा बह्वीः समाहितः ॥ ९-५१-११ (६३०९६)
कदाचित्तस्य नृपते देवलस्य महात्मनः ।
चिन्ता सुमहती जाता मुनिं दृष्ट्वा महाद्युतिम् ॥ ९-५१-१२ (६३०९७)
समास्तु समतिक्रान्ता बह्व्यः पूजयतो मम ।
न चायमलसो भिक्षुरभ्यभाषत किञ्चन ॥ ९-५१-१३ (६३०९८)
एवं विगणयन्नेव स जगाम महोदधिम् ।
अन्तरिक्षचरः श्रीमान्कलशं गृह्य देवलं ॥ ९-५१-१४ (६३०९९)
गच्छन्नेव स धर्मात्मा समुद्रं सरितां परिम् ।
जैगीषव्यं ततोऽपश्यद्गतं प्रागेव भारत ॥ ९-५१-१५ (६३१००)
ततः सविस्मयश्चिन्तां जगामाथामितप्रभः ।
कथं सिक्षुरचं प्राप्तः समुद्रे स्नात एव च ॥ ९-५१-१६ (६३१०१)
इत्येवं चिन्तयामास महर्षिरसितस्तदा ।
स्नात्वा सखुद्रे विधिवच्छुचिर्जप्यं जजाप सः ॥ ९-५१-१७ (६३१०२)
कृतजxxxxx श्रीमानाश्रयं च जगाम ह ।
xxxxxxxxxx गृहीत्वा जनमेजय ॥ ९-५१-१८ (६३१०३)
ततः स प्रविशन्नेव स्वमाश्रमपदं मुनिः ।
xxxxxxxxx तत्र जैगीषव्यमपश्यत ॥ ९-५१-१९ (६३१०४)
न व्याहरति चैवेनं जैगीषव्यः कथञ्चन ।
xxxxxxxx वसति स्म महातपाः ॥ ९-५१-२० (६३१०५)
तं दृष्ट्वा चाप्लुतं तोये सामरे सागरोपमम् ।
प्रविष्टxxxxx चापि पूर्वमेव ददर्श सः ॥ ९-५१-२१ (६३१०६)
xxxxx देवलो राजंश्चिन्तयामास बुद्धिमान् ।
xxxxxxx तपसो जैगीषव्यास्व योगजम् ॥ ९-५१-२२ (६३१०७)
चिन्तयामास राजेन्द्र तदा स मुनिसत्तमः ।
मया दृष्टः समुद्रे च आश्रमे च कथंन्वयम् ॥ ९-५१-२३ (६३१०८)
एवं विगणयन्नेव स मुनिर्मन्त्रपारगः ।
उत्पपाताश्रमात्तस्मादन्तरिक्षं विशाम्पते ।
जिज्ञासार्थं तदा भिक्षोर्जैगीषव्यस्य देवलः ॥ ९-५१-२४ (६३१०९)
सोऽन्तरिक्षचरान्सिद्धान्समपश्यत्समाहितान् ।
जैगीषव्यं च तैः सिद्धैः पूज्यमानमपश्यत ॥ ९-५१-२५ (६३११०)
ततोऽसितः सुसंरब्धो व्यवसायी दृढव्रतः ।
अपश्यद्वै दिवं यातं जैगीषव्यं स देवलः ॥ ९-५१-२६ (६३१११)
तस्माच्च पितृलोकं तं व्रजन्तं सोऽन्वपश्यत ।
पितृलोकाच्च तं यातं याम्यं लोकमपश्यत ॥ ९-५१-२७ (६३११२)
गतस्मादादित्यलोकं च व्रजन्तं सोऽन्वपश्यत।'

तस्मादपि समुत्पत्य सोमलोकमभिष्टुतम् ।
व्रजन्तमन्वपश्यत्स जैगीषव्यं स देवलः ॥ ९-५१-२८ (६३११३)
लोकान्समुत्पतन्तं तु शुभानेकान्तयाजिनाम् ।
ततोऽग्निहोत्रिणां लोकांस्ततश्चाप्युत्पपात ह ॥ ९-५१-२९ (६३११४)
दर्शं च पौर्णमासं च ये यजन्ति तपोधनाः ।
तेभ्यः स ददृशे धीमाँल्लोकेभ्यः पशुयाजिनाम् ।
व्रजन्तं लोकममलमपश्यद्देवपूजितम् ॥ ९-५१-३० (६३११५)
चातुर्मास्यैर्बहुविधैर्यजन्ते ये तपोधनाः ।
तेषां स्थानं ततो यतां तथाऽग्निष्टोमयाजिनाम् ॥ ९-५१-३१ (६३११६)
अग्निष्टुतेन च तथा ये यजन्ति तपोधनः ।
तत्स्थानमनुसम्प्राप्तमन्वपश्यत देवलः ॥ ९-५१-३२ (६३११७)
वाजपेयं क्रतुवरं तथा बहुसुवर्णकम् ।
आहरन्ति महाप्राज्ञास्तेषां लोकेष्वपश्यत ॥ ९-५१-३३ (६३११८)
यजन्ते राजसूयेन पुण्डरीकेण चैव ये ।
तेषां लोकेष्वपश्यच्च जैगीषव्यं स देवलः ॥ ९-५१-३४ (६३११९)
अश्वमेधं क्रतुवरं नरमेधं तथैव च ।
आहरन्ति नरश्रेष्ठास्तेषां लोकेष्वपश्यत ॥ ९-५१-३५ (६३१२०)
सर्वमेधं च दुष्प्रापं तथा सौत्रामणिं च ये ।
तेषां लोकेष्वपश्यच्च जैगीषव्यं स देवलः ॥ ९-५१-३६ (६३१२१)
द्वादशाहैश्च सत्रैश्च यजन्ते विविधैर्नृप ।
तेषां लोकेष्वपश्यच्च जैगीषव्यं स देवलः ॥ ९-५१-३७ (६३१२२)
मैत्रावरुणयोर्लोकानादित्यानां तथैव च ।
सलोकतामनुप्राप्तमपश्यत ततोऽसितः ॥ ९-५१-३८ (६३१२३)
रुद्राणां च वसूनां च स्थानं यच्च बृहस्पतेः ।
तानिं सर्वाण्यतीतं च समपश्यत्ततोऽसितः ॥ ९-५१-३९ (६३१२४)
आरुह्य च गवां लोकं प्रयान्तं ब्रह्मसत्रिणाम् ।
लोकानपश्यद्गच्छन्तं जैगीषव्यं ततोऽसितः ॥ ९-५१-४० (६३१२५)
त्रील्लोँकान्प्रवरान्विप्रमुत्पतन्तं स्वतेजसा ।
पतिव्रतानां लोकांश्च व्रजन्तं सोऽन्वपश्यत ॥ ९-५१-४१ (६३१२६)
ततो मुनिवरं भूयो जैगीषव्यमथासितः ।
नान्वपश्यत लोकस्थमन्तर्हितमरिन्दम ॥ ९-५१-४२ (६३१२७)
सोऽचिन्तयन्महाभागो जैगीषव्यस्य देवलः ।
प्रभावं सुव्रतत्वं च सिद्धिं योगस्य चातुलाम् ॥ ९-५१-४३ (६३१२८)
असितोऽपृच्छत तदा सिद्धाँल्लोकेषु सत्तमान् ।
प्रयतः प्राञ्जलिर्भूत्वा धीरस्तान्ब्रह्मचारिणः ॥ ९-५१-४४ (६३१२९)
जैगीषव्यं न पश्यामि तं शंसन्तु तपोधनाः ।

एतदिच्छाम्यहं श्रोतुं परं कौतूहलं हि मे ॥ ९-५१-४५ (६३१३०)
सिद्धा ऊचुः। ९-५१-४६क्ष् (५२०८)
शृणु देवल भूतार्थं शंसतां नो दृढव्रत ।
जैगीषव्यो गतो लोकं शाश्वतं ब्रह्मणोक्षयम् ॥ ९-५१-४६ (६३१३१)
वैशम्पायन उवाच। ९-५१-४७क्ष् (५२०९)
स श्रुत्वा वचनं तेषां सिद्धानां ब्रह्मचारिणाम् ।
असिता देवलस्तूर्णमुत्पपात पपात च ॥ ९-५१-४७ (६३१३२)
ततः सिद्धास्त ऊचुर्हि देवलं पुनरेव ह ।
न देवलगतिस्तत्र तव गन्तुं तपोधन ।
ब्रह्मणः सदने विप्र जैगीषव्यो यदाप्तवान् ॥ ९-५१-४८ (६३१३३)
वैशम्पायन उवाच। ९-५१-४९क्ष् (५२१०)
तेषां तद्वचनं श्रुत्वा सिद्धानां देवलः पुनः ।
आनुपूर्व्येण लोकांस्तान्सर्वानवततार ह ॥ ९-५१-४९ (६३१३४)
स्वमाश्रमपदं पुण्यमाजगाम पतङ्गवत् ।
प्रविशन्नेव चापश्यज्जैगीषव्यं स देवलः ॥ ९-५१-५० (६३१३५)
ततो बुद्ध्या व्यगणयद्देवलो धर्मयुक्तया ।
दृष्ट्वा प्रभावं तपसो जैगीषव्यस्य योगजम् ॥ ९-५१-५१ (६३१३६)
ततोऽब्रविन्महात्मानं जैगीषव्यं स देवलः ।
विनयावनतो राजन्नुपसर्प्य महामुनिम् ।
मोक्षधर्मं समास्थातुमिच्छेयं भगवन्नहम् ॥ ९-५१-५२ (६३१३७)
तस्य तद्वचनं श्रुत्वा उपदेशं चकार सः ।
विधिं योगस्य परमं कार्याकार्यस्य शास्त्रतः ॥ ९-५१-५३ (६३१३८)
सन्नाये कृतबुद्धिं तं ततो दृष्ट्वा महातपाः ।
सर्वाश्चास्य क्रियाश्चक्रे विधिदृष्टेन कर्मणा ॥ ९-५१-५४ (६३१३९)
सन्न्यासे कृतबुद्धिं तं भूतानि पितृभिः सह ।
ततो दृष्ट्वा प्ररुरुदुः कोऽस्मान्संविभजिष्यति ॥ ९-५१-५५ (६३१४०)
देवलस्तु वचः श्रुत्वा भूतानां करुणं तथा ।
दिशो दश व्याहरतां मोक्षं त्यक्तुं मनो दधे ॥ ९-५१-५६ (६३१४१)
ततस्तु फलमूलानि पवित्राणि च भारत ।
पुष्पाण्योषधयश्चैव रोरूयन्ते सहस्रशः ॥ ९-५१-५७ (६३१४२)
पुनर्नो देवलः क्षुद्रो नूनं छेत्स्यति दुर्मतिः ।
अभयं सर्वभूतेभ्यो यो दत्त्वा नावबुध्यते ॥ ९-५१-५८ (६३१४३)
ततो भूयो व्यगणयत्स्वबुद्ध्या मुनिसत्तमः ।
मोक्षे गार्हस्थ्यधर्मे वा किन्नु श्रेयस्करं भवेत् ॥ ९-५१-५९ (६३१४४)
इति निश्चित्य मनसा देवलो राजसत्तम ।
त्यक्त्वा गार्हस्थ्यधर्मं स मोक्षधर्ममरोचयत् ॥ ९-५१-६० (६३१४५)

एवमादीनि सञ्चिन्त्य देवलो निश्चयान्वितः ।
प्राप्तवान्परमां सिद्धिं परं योगं च भारत ॥ ९-५१-६१ (६३१४६)
ततो देवाः समागम्य बृहस्पतिपुरोगमाः ।
जैगीषव्यं तपश्चास्य प्रशंसन्ति तपस्विनः ॥ ९-५१-६२ (६३१४७)
अथाब्रवीदृषिवरो देवान्वै नारदस्तथा ।
जैगीषव्ये तपो नास्ति विस्मापयति योऽसितम् ॥ ९-५१-६३ (६३१४८)
तमेवंवादिनं धीरं प्रत्यूचुस्ते दिवौकसः ।
नैवमित्येव शंसन्तो जैगीषव्यं महामुनिम् ॥ ९-५१-६४ (६३१४९)
नातः परतरं किञ्चित्तुल्यमस्ति प्रभावतः ।
तेजसस्तपसश्चास्य योगस्य च महात्मनः ॥ ९-५१-६५ (६३१५०)
एवं प्रभावो धर्मात्मा जैगीषव्यस्तथाऽसितः ।
तयोरिदं स्थानवरं तीर्थं चैव महात्मनोः ॥ ९-५१-६६ (६३१५१)
तत्राप्युपस्पृश्य ततो महात्मा
दत्त्वा च वित्तं हलभृद्द्विजेभ्यः ।
अवाप्य धर्मं परमार्थकर्मा
जगाम सोमस्य महाxxxxxx थर्म्। ॥ ९-५१-६७ (६३१५२)

इति श्रीमन्महाभारते शल्यपर्वणि ह्रदप्रवेशपर्वणि
एकपञ्चाशत्तमोऽध्यायः ॥ ५१ ॥
Mahabharata - Shalya Parva - Chapter Footnotes

९-५१-७ नैवापुञ्चत धर्मतः इति छ.पाठः ॥
९-५१-८ न्यतिक्रमत् व्यत्यक्रामत् ॥
९-५१-१६ असितप्रभ इति छ.पाठः ॥
९-५१-४६ भूतार्थं यथाभूतार्थम् ॥
९-५१-४७ उत्पपात ब्रह्मलोकं गन्तुमिति शेषः । पपात च गगनात् ॥
९-५१-५४ सर्वाः क्रिया उत्सर्गेष्ट्यादयः ॥
९-५१-५६ मोक्षं सन्न्यासं त्यक्तुं मनो दधे । उत्सृष्टा नामग्नीनां
पुनराधानं कर्तुमैच्छत् ॥
९-५१-६६ असितो देवल ॥
९-५१-५१ एकपञ्चाशत्ततोऽध्यायः ॥

---

शल्यपर्व-अध्यय०५२
॥ श्रीः ॥
९.५२. अध्यायः ५२

Mahabharata - Shalya Parva - Chapter Topics
दधीचिसारस्वतयोश्चरितवर्णनम् ॥ १ ॥

Mahabharata - Shalya Parva - Chapter Text

९-५२-० (६३१५३)
वैशम्पायन उवाच। ९-५२-०क्ष् (५२११)
यत्रेजिवानुडुपती राजसूयेन भारत ।
यस्मिन्वृत्ते महानासीत्सङ्ग्रामस्तारकामयः ॥ ९-५२-१ (६३१५४)
तत्राप्युपस्पृश्य बलो दत्त्वा दानानि चात्मवान् ।
सारस्वतस्य धर्मात्मा मुनेस्तीर्थं जगाम ह ॥ ९-५२-२ (६३१५५)
यत्र द्वादशवार्षिक्यामनावृष्ट्यां द्विजोत्तमान् ।
वेदानध्यापयामास पुरा सारस्वतो मुनिः ॥ ९-५२-३ (६३१५६)
जनमेजय उवाच। ९-५२-४क्ष् (५२१२)
कथं द्वादशवार्षिक्यामनावृष्ट्यां द्विजोत्तमान् ।
वेदानध्यापयामास पुरा सारस्वतो मुनिः ॥ ९-५२-४ (६३१५७)
वैशम्पायन उवाच। ९-५२-५क्ष् (५२१३)
आसीत्पूर्वं महाराज मुनिर्धीमान्महातपाः ।
दधीचिरिति विख्यातो ब्रह्मचारी जितेन्द्रियः ॥ ९-५२-५ (६३१५८)
तस्यातितपसः शक्रो बिभेति सततं विभो ।
न स लोभयितुं शक्यः फलैर्बहुविधैरपि ॥ ९-५२-६ (६३१५९)
प्रलोभनार्थं तस्याथ प्राहिणोत्पाकशासनः ।
दिव्यामप्सरसं पुण्यां दर्शनीयामलम्बुसाम् ॥ ९-५२-७ (६३१६०)
तस्य तर्पयतो देवान्सरस्वत्यां महात्मनः ।
समीपतो महाराज सोपातिष्ठत भामिनी ॥ ९-५२-८ (६३१६१)
तां दिव्यवपुषं दृष्ट्वा तस्यर्षेर्भावितात्मनः ।
रेतः स्कन्नं सरस्वत्यां तस्मा जग्राह निम्नगा ॥ ९-५२-९ (६३१६२)
कुक्षौ चाप्यदधद्दृष्टा तद्रेतः पुरुषर्षभ ।
सा दधार च तं गर्भं पुत्रहेतोर्महात्मनः ॥थ ९-५२-१० (६३१६३)
सुषुवे चापि समये पुत्रं सारस्वतं वरम् ।
जगाम पुत्रमादाय तमृषिं प्रति च प्रभो ॥ ९-५२-११ (६३१६४)
ऋषिसंसदि तं दृष्ट्वा सा नदी मुनिसत्तमम् ।
ततः प्रोवाच राजेन्द्र ददती पुत्रमस्य तम् ।
ब्रह्मर्षे तव पुत्रोऽयं त्वद्भक्त्या धारितो मया ॥ ९-५२-१२ (६३१६५)
दृष्ट्वा तेऽप्सरसं रेतो यत्स्कन्नं प्रागलम्बुसाम् ।
तत्कुक्षिणाऽहं ब्रह्मर्षे त्वद्भक्त्या धृतवत्यहम् ॥ ९-५२-१३ (६३१६६)

न विनाशमिदं गच्छेत्त्वत्तेज इति निश्चयात् ।
प्रतिगृह्णीष्व पुत्रं स्वं मया दत्तमनिन्दितम् ॥ ९-५२-१४ (६३१६७)
इत्युक्तः प्रतिजग्राह प्रीतिं चावाप पुष्कलाम् ।
पितृवच्चोपजिघ्रत्तं मूर्ध्नि प्रेम्णा द्विजोत्तमः ॥ ९-५२-१५ (६३१६८)
परिष्वज्य चिरं कालं तदा भरतसत्तम ।
सरस्वत्यै वरं प्रादात्प्रीयमाणो महामुनिः ॥ ९-५२-१६ (६३१६९)
विश्वेदेवाः सपितरो गन्धर्वाप्सरसां गणाः ।
तृप्तिं यास्यन्ति सुभगे तर्प्यमाणास्तवाम्भसा ॥ ९-५२-१७ (६३१७०)
इत्युक्त्वा स तु तुष्टाव वचोभिर्वै महानदीम् ।
प्रीतः परमहृष्टात्मा यथावच्छृणु पार्थिव ॥ ९-५२-१८ (६३१७१)
दधीचिरुवाच। ९-५२-१९क्ष् (५२१४)
प्रसृताऽसि महाभागे सरसो ब्रह्मणः पुरा ।
जानन्ति त्वां सरिच्छ्रेष्ठे मुनयः संशितव्रताः ॥ ९-५२-१९ (६३१७२)
मम प्रियकरी चापि सततं प्रियदर्शने ।
तस्मात्सारस्वतं पुत्रमदधा वरवर्णिनि ॥ ९-५२-२० (६३१७३)
तवैव नाम्ना प्रथितः पुत्रस्ते लोकभावनः ।
सारस्वत इति ख्यातो भविष्यति महातपाः ॥ ९-५२-२१ (६३१७४)
एष द्वादशवार्षिक्यामनावृष्ट्यां द्विजर्षभान् ।
सारस्वतो महाभागे वेदानध्यापयिष्यति ॥ ९-५२-२२ (६३१७५)
पुण्याभ्यश्च सरिद्भ्यस्त्वं सदा पुण्यतमा शुभे ।
भविष्यसि महाभागे मत्प्रसादात्सरस्वति ॥ ९-५२-२३ (६३१७६)
एवं स्त संस्तुता तेन वरं लब्ध्वा महानदी ।
पुत्रमादाय मुदिता जगाम भरतर्षभ ॥ ९-५२-२४ (६३१७७)
एतस्मिन्नेव काले तु विरोधे देवदानवैः ।
शक्रः प्रहरणान्विषी लोकांस्त्रीन्विचचार ह ॥ ९-५२-२५ (६३१७८)
न चोपलेभे भगवाञ्शक्रः प्रहरणं तदा ।
यद्वै तेषां भवेद्योग्यं वधाय विबुधद्विषाम् ॥ ९-५२-२६ (६३१७९)
ततोऽब्रवीत्सुराञ्शक्रो न मे शक्याः सुरारयः ।
ऋतेऽस्थिभिर्दधीचस्य निहन्तुं त्रिदशद्विषः ॥ ९-५२-२७ (६३१८०)
तस्माद्यत्नादृषिश्रेष्ठो याच्यतां कार्यसिद्धये ।
दधीचास्थीनि देहीति तैर्वधिष्यामहे रिपून् ॥ ९-५२-२८ (६३१८१)
स च तैर्याचितोऽस्थीनि यत्नादृषिवरस्तदा ।
साहाय्यं नः कुरुष्वेति चकारैवाविचारयन् ॥ ९-५२-२९ (६३१८२)
स लोकानक्षयान्प्राप्तो देवप्रियकरस्तदा ।
तस्यास्थिभिरथो शक्रः सम्प्रहृष्टमनास्तदा ॥ ९-५२-३० (६३१८३)
कारयामास दिव्यानि नानाप्रहरणान्युत ।

गदा वज्राणि चक्राणि गुरून्दण्डांश्च पुष्कलान् ॥ ९-५२-३१ (६३१८४)
स हि तीव्रेण तपसा सम्भृतः परमर्षिणा ।
प्रजापतिसुतेनाथ भृगुणा लोकभावनः ॥ ९-५२-३२ (६३१८५)
अतिकायः स तेजस्वी लोकसारो विनिर्मितः ।
जज्ञे शैलगुरुः प्रांशुर्महिम्ना प्रथितः प्रभुः ॥ ९-५२-३३ (६३१८६)
नित्यमुद्विजते चास्य तेजसः पाकशासनः ॥ ९-५२-३४ (६३१८७)
तेन वज्रेण भगवान्मन्त्रयुक्तेन भारत ।
भृशं क्रोधविसृष्टेन ब्रह्मतेजोद्भवेन च ।
दैत्यदानववीराणां जघान नवतीर्नव ॥ ९-५२-३५ (६३१८८)
अथ काले व्यतिक्रान्ते महत्यतिभयङ्करी ।
अनावृष्टिरनुप्राप्ता राजन्द्वादशवार्षिकी ॥ ९-५२-३६ (६३१८९)
तस्यां द्वादशवार्षिक्यामनावृष्ट्यां महर्षयः ।
वृत्त्यर्थं प्राद्रवन्राजन्क्षुधार्ताः सर्वतोदिशम् ॥ ९-५२-३७ (६३१९०)
दिग्भ्यस्तान्प्रद्रुतान्दृष्ट्वा मुनिः सारस्वतस्तदा ।
गमनाय मतिं चक्रे तं प्रोवाच सरस्वती ॥ ९-५२-३८ (६३१९१)
न गन्तव्यमितः पुत्र तवाहारमहं सदा ।
दास्यामि मत्स्यप्रवरानुष्यतामिह भारत ॥ ९-५२-३९ (६३१९२)
इत्युक्तस्तर्पयामास स पितॄन्देवतास्तथा ।
आहारमकरोन्नित्यं प्राणान्वेदांश्च धारयन् ॥ ९-५२-४० (६३१९३)
अथ तस्यामनावृष्ट्यामतीतायां महर्षयः ।
अन्योन्यं परिपप्रच्छुः पुनः स्वाध्यायकारणात् ॥ ९-५२-४१ (६३१९४)
तेषां क्षुधापरीतानां नष्टा देवा विधावताम् ।
सर्वेषामेव राजेन्द्र न किचित्प्रतिभाति ह ॥ ९-५२-४२ (६३१९५)
अथ कश्चिदृषिस्तेषां सारस्वतमुपेयिवान् ।
कुर्वाणं संशितात्मानं स्वाध्यायमृषिसत्तमम् ॥ ९-५२-४३ (६३१९६)
स गत्वाऽचष्ट तेभ्यश्च सारस्वतमृषिं प्रभुम् ।
स्वाध्यायममरप्रख्यं कुर्वाणं विजने वने ॥ ९-५२-४४ (६३१९७)
ततः सर्वे समाजग्मुस्तत्र राजन्महर्षयः ।
सारस्वतं मुनिश्रेष्ठमिदमूचुः समागताः ॥ ९-५२-४५ (६३१९८)
अस्मानध्यापयस्वेति तानुवाच ततो मुनिः ।
शिष्यत्वमुपागच्छध्वं विधिना च ममेत्युत ॥ ९-५२-४६ (६३१९९)
तत्राब्रुवन्मुनिगणा बालस्त्वमसि पुत्रक ।
स तानाह न मे धर्मो नश्येदिति पुनर्मुनीन् ॥ ९-५२-४७ (६३२००)
यो ह्यधर्मेण वै ब्रूयाद्गृह्णीयाद्योऽप्यधर्मतः ।
म्रियेतां तावुभौ क्षिप्रं स्यातां वा वैरिणावुभौ ॥ ९-५२-४८ (६३२०१)
न हायनैर्न पलितैर्न वित्तेन न बन्धुभिः ।

ऋषयश्चक्रिरे धर्मं योऽनूचानः स नो महान् ॥ ९-५२-४९ (६३२०२)
एतच्छ्रुत्वा वचस्तस्य मनुयस्ते विधानतः ।
तस्माद्वेदाननुप्राप्य पुनर्धर्मं प्रचक्रिरे ॥ ९-५२-५० (६३२०३)
षष्टिर्मुनिसहस्राणि शिष्यत्वं प्रतिपेदिरे ।
सारस्वतस्य विप्रर्षेर्वेदस्वाध्यायकारणात् ॥ ९-५२-५१ (६३२०४)
मुष्टिं मुष्टिं ततः सर्वे दर्भाणां ते ह्युपाहरन् ।
तस्यासनार्थं विप्रर्षेर्बालस्यापि वशे स्थिताः ॥ ९-५२-५२ (६३२०५)
तत्रापि दत्त्वा वसु रौहिणेयो
महाबलः केशवपूर्वजोऽथ
जगाम तीर्थं मुदितः क्रमेण
तं वृद्धकन्याश्रममे व वीरः ॥ ॥ ९-५२-५३ (६३२०६)

इति श्रीमन्महाभारते शल्यपर्वणि ह्रदप्रवेशपर्वणि
द्विपञ्चाशत्तमोऽध्यायः ॥ ५२ ॥
Mahabharata - Shalya Parva - Chapter Footnotes

९-५२-५ दधीच इति इति छ झ पाठः ॥
९-५२-१२ ऋषिसंसादितं दृष्ट्वेति क छ पाठः । तत्र संसादितं
परिवारितमित्यर्थः ॥
९-५२-२८ दधीचोऽस्थीनीति छ पाठः ॥
९-५२-२९ प्राणत्यागं कुरुश्रेष्ठ चकारैवाविचारयषिति झ पाठः ॥
९-५२-३४ अस्य मुनेः ॥
९-५२-३५ तेन तदस्थिजेन वज्रेण नवतीर्नव दशाधिकां अष्टशतीम ॥
९-५२-५२ द्विपञ्चाशत्तमोऽध्यायः ॥

---

शल्यपर्व-अध्यय०५३
॥ श्रीः ॥
९.५३. अध्यायः ५३

Mahabharata - Shalya Parva - Chapter Topics
वृद्धकन्याचरित्रकथनम् ॥ १ ॥

Mahabharata - Shalya Parva - Chapter Text

९-५३-० (६३२०७)
जनमेजय उवाच। ९-५३-०क्ष् (५२१५)

कथं कुमारी भगवंस्तपोयुक्ता ह्यभूत्पुरा ।
किमर्थं च तपस्तेपे को वाऽस्या नियमोऽभवत् ॥ ९-५३-१ (६३२०८)
सुदुष्करमिदं ब्रह्मंस्त्वत्तः श्रुतमनुत्तमम् ।
आख्याहि तत्त्वमखिलं यथा तपसि सा स्थिता ॥ ९-५३-२ (६३२०९)
वैशम्पायन उवाच। ९-५३-३क्ष् (५२१६)
ऋषिरासीन्महावीर्यः कुणिर्गार्ग्यो महायशाः ।
स तप्त्वा विपुलं राजंस्तपो वै तपतां वरः ।
तपसाऽथ सुतां सुभ्रूं समुत्पादितवान्विभुः ॥ ९-५३-३ (६३२१०)
तां च दृष्ट्वा मुनिः प्रीतः कुणिर्गार्ग्यो महायशाः ।
जगाम त्रिदिवं राजन्संत्यज्येह कलेवरम् ॥ ९-५३-४ (६३२११)
सुभ्रूः सा ह्यथ कल्याणी पुण्डरीकनिभेक्षणा ।
महता तपसोग्रेण कृत्वाश्रममनिन्दिता ॥ ९-५३-५ (६३२१२)
उपवासैः पूजयन्ती पितॄन्देवांश्च सा पुरा ।
तस्यास्तु तपसोग्रेण महान्कालोऽत्यगान्नृप ॥ ९-५३-६ (६३२१३)
सा पित्रा दीयमानापि पतिं नैच्छदनिन्दिता ।
आत्मनः सदृशं सा तु भर्तारं नान्वपश्यत ॥ ९-५३-७ (६३२१४)
ततः सा तपसोग्रेण पीडयित्वाऽऽत्मनस्तनुम् ।
पितृदेवार्चनरता बभूव विजने वने ॥ ९-५३-८ (६३२१५)
साऽऽत्मानं मन्यमाना तु कृतकृत्यं श्रमान्विता ।
ग्जगाम वृद्धभावं तु कौमारब्रह्मचारिणी'॥ ९-५३-९ (६३२१६)
वार्धकेन च राजेन्द्र तपसा चैव कर्शिता ।
सा नाशकद्यदा गन्तुं पदात्पदमपि स्वयम् ॥ ९-५३-१० (६३२१७)
चकार गमने बुद्धिं परलोकाय वै तदा ।
मोक्तुकामां तु तां दृष्ट्वा शरीरं नारदोऽब्रवीत् ॥ ९-५३-११ (६३२१८)
असंस्कृतायाः कन्यायाः कुतो लोकास्तवानघे ।
एवं तु श्रुतमस्माभिर्देवलोके महाव्रते ॥ ९-५३-१२ (६३२१९)
तपः परमकं प्राप्तं न तु लोकास्त्वया जिताः ।
तन्नारदवचः श्रुत्वा साऽब्रवीदृषिसंसदि ॥ ९-५३-१३ (६३२२०)
तपसोऽर्धं प्रयच्छामि पाणिग्राहस्य सत्तमाः ।
इत्युक्तेऽस्यास्तु जग्राह पाणिं गालवसम्भवः ॥ ९-५३-१४ (६३२२१)
ऋषिः प्राक् शृङ्गवान्नाम समयं चेममब्रवीत् ।
समयेन तवाद्याहं पाणिं स्प्रक्ष्यामि शोभने ॥ ९-५३-१५ (६३२२२)
यद्येकरात्रं वस्तव्यं त्वया सह मयेति ह ।
तथेति सा प्रतिश्रुत्य तस्मै पाणिं ददौ तदा ॥ ९-५३-१६ (६३२२३)
यथादृष्टेन विधिना हुत्वा चाग्निं विधानतः ।
चक्रे च पाणिग्रहणं तस्योद्वाहं च गालविः ॥ ९-५३-१७ (६३२२४)

सा रात्रावभवद्राजंस्तरुणी वरवर्णिनी ।
दिव्याभरणवस्त्रा च दिव्यगन्धानुलेपना ॥ ९-५३-१८ (६३२२५)
तां दृष्ट्वा गालविः प्रीतो दीपयन्तीमिव श्रिया ।
उवास च क्षपामेकां प्रभाते साऽब्रवीच्च तम् ॥ ९-५३-१९ (६३२२६)
यस्त्वया समयो विप्र कृतो मे तपतां वर ।
तेनोषिताऽस्मि भद्रं ते स्वस्ति तेऽस्तु व्रजाम्यहम् ॥ ९-५३-२० (६३२२७)
सा तु ध्यात्वाऽब्रवीद्भूयो योऽस्मिंस्तीर्थे समाहितः ।
वसते रजनीमेकां तर्पयित्वा दिवौकसः ॥ ९-५३-२१ (६३२२८)
चत्वारिंशतमष्टौ च द्वौ चाष्टौ सम्यगाचरेत् ।
यो ब्रह्मचर्यं वर्षाणि फलं तस्य लभेत सः ॥ ९-५३-२२ (६३२२९)
एवमुक्त्वा ततः साध्वी देहं त्यक्त्वा दिवं गता ।
ऋषिरप्यभवद्दीनस्तस्या रूपं विचिन्तयन् ॥ ९-५३-२३ (६३२३०)
समयेन तपोऽर्धं च कृच्छ्रात्प्रतिगृहीतवान् ।
साधयित्वा तदाऽऽत्मानं तस्याः स गतिमाप्तवान् ।
दुःखितो भरतश्रेष्ठ तस्या रूपबलात्कृतः ॥ ९-५३-२४ (६३२३१)
एतत्ते वृद्धकन्याया व्याख्यातं चरितं महत् ।
तथैव ब्रह्मचर्यं च स्वर्गस्य च गतिः शुभा ॥ ९-५३-२५ (६३२३२)
तत्रस्थश्चापि शुश्राव हतं शल्यं हलायुधः ॥ ९-५३-२६ (६३२३३)
तत्रापि दत्त्वा दानानि द्विजातिभ्यः परन्तपः ।
शुशोच शल्यं सङ्ग्रामे निहतं पाण्डवैस्तदा ॥ ९-५३-२७ (६३२३४)
समन्तपञ्चकद्वारात्ततो निष्क्रम्य माधवः ।
पप्रच्छर्षिगणारामः कुरुक्षेत्रस्य यत्फलम् ॥ ९-५३-२८ (६३२३५)
ते पृष्टा यदुसिंहेन कुरुक्षेत्रफलं विभो
समाचख्युर्महात्मानस्तस्मै सर्वं यथातथम् ॥ ॥ ९-५३-२९ (६३२३६)

इति श्रीमन्महाभारते शल्यपर्वणि ह्रदप्रवेशपर्वणि
त्रिपञ्चाशतमोऽध्यायः ॥ ५३ ॥

Mahabharata - Shalya Parva - Chapter Footnotes

९-५३-३ तपसा संयुता सुभ्रूः समुत्पनः इति छ । पाठः ॥
९-५३-२२ चत्वारिंशतमष्टौ चेति । प्रतिवेदं द्वादशवर्षाणीति
वेदचतुष्टयाध्ययनायाष्टाचत्वारिंशद्वर्षाणि। ततो द्वै वत्सरौ
स्नातकेन गुरोरानृण्यार्थं सेवा कार्या। ततोऽष्टवार्षिकीं कन्यां
परिणीय तस्या यौवनावध्यष्टवर्षाणीत्यष्टपञ्चाशद्वर्षाणि
ब्रह्मचर्यं सर्वस्येष्टम् ॥
९-५३-२४ सङ्गतिमन्वियात् इति छ । पाठः ॥

९-५३-५३ त्रिपञ्चाशोऽध्यायः ॥

---

शल्यपर्व-अध्यय०५४
॥ श्रीः ॥
९.५४. अध्यायः ५४

Mahabharata - Shalya Parva - Chapter Topics
दलभद्राय महर्षिभिः कुरुक्षेत्रमहिमानुवर्णनम् ॥१ ॥

Mahabharata - Shalya Parva - Chapter Text

९-५४-० (६३२३७)
ऋषय ऊचुः। ९-५४-०क्ष् (५२१७)
प्रजापतेरुत्तरवेदिरुच्यते
सनातनं राम समन्तपञ्चकम् ।
समीजिरे यत्र पुरा दिवौकसो
वरेण सत्रेण महावरप्रदाः ॥ ९-५४-१ (६३२३८)
पुरा च राजर्षिवरेण धीमता
बहूनि वर्षाण्यमितेन तेजसा ।
प्रकृष्टमेतत्कुरुणा महात्मना
ततः कुरुक्षेत्रमितीह पप्रथे ॥ ९-५४-२ (६३२३९)
राम उवाच। ९-५४-३क्ष् (५२१८)
किमर्थं कुरुणा कृष्टं क्षेत्रमेतन्महात्मना ।
एतदिच्छाम्यहं श्रोतुं कथ्यमानं तपोधनाः ॥९-५४-३ (६३२४०)
ऋषय ऊचुः। ९-५४-४क्ष् (५२१९)
पुरा किल कुरुं राम कर्षन्तं सततोत्थितम् ।
अभ्येत्य शक्रस्त्रिदिवात्पर्यपृच्छत कारणम् ॥९-५४-४ (६३२४१)
इन्द्र उवाच। ९-५४-५क्ष् (५२२०)
किमिदं वर्तते कर्म प्रयत्नेन परेण च ।
राजर्षे किमभिप्रेत्य येनेयं कृष्यते क्षितिः ॥९-५४-५ (६३२४२)
कुरुरुवाच। ९-५४-६क्ष् (५२२१)
इह ये पुरुषाः क्षेत्रे जनिष्यन्ति शतक्रतो ।
ते गमिष्यन्ति सुकृतां लोकान्पापविवर्जितान् ॥९-५४-६ (६३२४३)
अपहास्य तु तं शक्रो जगाम त्रिदिवं पुनः ।
राजर्षिरप्यनिर्विण्णः कर्षत्येव वसुन्धराम् ॥९-५४-७ (६३२४४)
आगम्यागम्य चैवैनं भूयोभूयोऽपहास्य च ।

शत्रक्रतुरनिर्विण्णं पृष्ट्वापृष्ट्वा जगाम ह ॥ ९-५४-८ (६३२४५)
यदा तु तपसोग्रेण चकर्ष वसुधां नृपः ।
ततः शक्रोऽब्रवीद्देवान्राजर्षेर्यच्चिकीर्षितम् ॥ ९-५४-९ (६३२४६)
एतच्छ्रुत्वाऽब्रुवन्देवाः सहस्राक्षमिदं वचः ।
वरेण च्छन्द्यतां शक्र राजर्षिर्यदि शक्यते ॥ ९-५४-१० (६३२४७)
यदि ह्यत्र प्रसूता वै स्वर्गं गच्छन्ति मानवाः ।
अस्मानिष्ट्वा क्रतुभिर्भागो नो न भविष्यति ॥ ९-५४-११ (६३२४८)
आगम्य च ततः शक्रस्तदा राजर्षिमब्रवीत् ।
अलं खेदेन भवतः क्रियतां वचनं मम ॥ ९-५४-१२ (६३२४९)
मानवा ये निराहारा देहं त्यक्ष्यन्त्यतन्द्रिताः ।
युधि वा निहताः सम्यगपि तिर्यग्गता नृप ॥ ९-५४-१३ (६३२५०)
ते स्वर्गभाजो राजेन्द्र भवन्त्विह हतास्तु ये ।
तथास्त्विति ततो राजा कुरुः शक्रमुवाच ह ॥ ९-५४-१४ (६३२५१)
ततस्तमभ्यनुज्ञाप्य प्रहृष्टेनान्तरात्मना ।
जगाम त्रिदिवं भूयः क्षिप्रं बलनिषूदनः ॥ ९-५४-१५ (६३२५२)
एवमेतद्यदुश्रेष्ठ कृष्टं राजर्षिणा पुरा ।
शक्रेण चाभ्यनुज्ञातः पुण्ये प्राणान्मुमोच ह ॥ ९-५४-१६ (६३२५३)
श्शक्रेण चाभ्यनुज्ञातं ब्राह्मद्यैश्च सुरैस्तथा ।
नातः परतरं पुण्यं भूमेः स्थानं भविष्यति ॥ ९-५४-१७ (६३२५४)
इह तप्स्यन्ति ये केचित्तपः परमकं नराः ।
देहत्यागेन ते सर्वे यास्यन्ति ब्रह्मणः क्षयम् ॥ ९-५४-१८ (६३२५५)
ये पुनः पुण्यभाजो वै दानं दास्यन्ति मानवाः ।
तेषां सहस्रगुणितं भविष्यत्यचिरेण वै ॥ ९-५४-१९ (६३२५६)
ये चेह नित्यं मनुजा निवत्स्यन्ति शुभैषिणः ।
यमस्य विषयं ते तु न द्रक्ष्यन्ति कदाचन ॥ ९-५४-२० (६३२५७)
यक्ष्यन्ति ये च क्रतुभिर्महद्भिर्मनुजेश्वराः ।
तेषां त्रिविष्टपे वासो यावद्भूमिर्धरिष्यति ॥ ९-५४-२१ (६३२५८)
अपि चात्र स्वयं शक्रो जगौ गाथां सुराधिपः ।
कुरुक्षेत्रनिबद्धां वै तां शृणुष्व हलायुध ॥ ९-५४-२२ (६३२५९)
पांसवोऽपि कुरुक्षेत्राद्वायुना समुदीरिताः ।
अपि दुष्कृतकर्माणं नयन्ति परमां गतिम् ॥ ९-५४-२३ (६३२६०)
ग्कुरुक्षेत्रं गमिष्यामि कुरुक्षेत्रे वसाम्यहम् ।
इत्येवं निश्चितो भूत्वा तेन स्वर्गं गमिष्यति ॥ ९-५४-२४ (६३२६१)
कुरुक्षेत्रं गमिष्यामि कुरुक्षेत्रे वसाम्यहम् ।
तथा स्थानं च मौनं च वीरासनमुपास्महे ॥ ९-५४-२५ (६३२६२)
एवं प्रलपमानोऽपि चिन्तयंश्च मुहुर्मुहुः ।

दूरस्थो यदि वा तिष्ठँल्लभेत्स्वर्गं सुनिश्चितम्'॥ ९-५४-२६ (६३२६३)
सुरर्षभा ब्राह्मणसत्तमाश्च
तथा नृगाद्या नरदेवमुख्याः ।
इष्ट्वा महार्हैः क्रतुभिर्नृसिंह
सन्त्यज्य देहान्सुगतिं प्रपन्नाः ॥ ९-५४-२७ (६३२६४)
तंरन्तुकारन्तुकयोर्यदन्तरं
रामहदानां च मचक्रुकस्य च ।
एतत्कुरुक्षेत्रसमन्तपञ्चकं
प्रजापतेरुत्तरवेदिरुच्यते ॥ ९-५४-२८ (६३२६५)
शिवं महापुण्यमिदं दिवौकसां
सुसम्मतं स्वर्गगुणैः समन्वितम् ।
अतश्च सर्वे निहता नृपा रणे
यास्यन्ति पुण्यां गतिमक्षयां सदा ॥ ९-५४-२९ (६३२६६)
श्इत्युवाच स्वयं शक्रः सह ब्रह्मादिभिस्तदा ।
तच्चानुमोदितं सर्वं ब्रह्मविष्णुमहेष्वरैःঃ ॥ ॥ ९-५४-३० (६३२६७)

इति श्रीमन्महाभारते शल्यपर्वणि ह्रदप्रवेशपर्वणि
चतुःपञ्चाशत्तमोऽध्यायः ॥ ५४ ॥
Mahabharata - Shalya Parva - Chapter Footnotes

९-५४-२ पप्रथे प्रसिद्धं बभूव ॥
९-५४-३ परिष्यन्ति शतक्रतो इति झ ।पाठः ॥
९-५४-११ प्रमीता वै इति झ पाठः ॥
९-५४-१८ ब्रह्मणः क्षयं निवासम् ॥
९-५४-२८ आरुन्दुकारुन्दकयोर्यदन्तरं रामह्रदाना च समन्दुकस्य इति
क पाठः ।परमन्दुकस्येति ङ छ पाठः ॥
९-५४-५४ चतुःपञ्चाशत्तमोऽध्यायः ॥

---

शल्यपर्व-अध्यय०५५
॥ श्रीः ॥
९.५५. अध्यायः ५५

Mahabharata - Shalya Parva - Chapter Topics
मित्रावरुणाश्रमे नारदाङ्गीमदुर्योधनयोर्गदायुद्धोपक्रमश्राविणा
बलरामेण तद्दिदृक्षया कुरुक्षेत्रं प्रत्यागमनम् ॥१ ॥

९-५५-० (६३२६८)
वैशम्पायन उवाच। ९-५५-०क्ष् (५२२२)
कुरुक्षेत्रं ततो दृष्ट्वा दत्त्वा देयांश्च सात्वतः ।
आश्रमं सुमहत्पुण्यमगमज्जनमेजय ॥ ९-५५-१ (६३२६९)
मधूकाम्रवणोपेतं प्लक्षन्यग्रोधसङ्कुलम् ।
चिरबिल्वयुतं पुण्यं पनसार्जुनसङ्कुलम् ॥ ९-५५-२ (६३२७०)
तं दृष्ट्वा यादवश्रेष्ठः प्रवरं पुण्यलक्षणम् ।
पप्रच्छ तानृषीन्सर्वान्कस्याश्रमवरस्त्वयम् ॥ ९-५५-३ (६३२७१)
ते तु सर्वे महात्मानमूचू राजन्हलायुधम् ।
शृणु विस्तरशो राम यस्यायं पूर्वमाश्रमः ॥ ९-५५-४ (६३२७२)
अत्र विष्णुः पुरा देवस्तप्तवांस्तप उत्तमम् ।
अत्रास्य विधिवद्यज्ञाः सर्वे वृत्ताः सनातनाः ॥ ९-५५-५ (६३२७३)
अत्रैव ब्राह्मणी वृद्धा कौमारब्रह्मचारिणी ।
योगयुक्ता दिवं याता तपोयुक्ता विशाम्पते ॥ ९-५५-६ (६३२७४)
बभूव श्रीमती राजञ्शाण्डिल्यस्य महात्मनः ।
सुता धृतव्रता साध्वी नियता ब्रह्मचारिणी ॥ ९-५५-७ (६३२७५)
साऽपि प्राप्य परं योगं गता स्वर्गमनुत्तमम् ।
भुक्त्वाऽश्रमेऽश्वमेधस्य फलं फलवतः शुभम् ॥ ९-५५-८ (६३२७६)
गता स्वर्गं महाराज पूजिता च महात्मभिः ।
अभिगम्याश्रमं पुण्यं स दृष्ट्वा यदुनन्दनः ॥ ९-५५-९ (६३२७७)
ऋषींस्तानभिवाद्याथ पार्श्वे हिमवतोऽच्युतः ।
सन्ध्याकार्याणि सर्वाणि निर्वर्त्यारुरुहेऽचलम् ॥ ९-५५-१० (६३२७८)
नातिदूरं ततो गत्वा नगं तालध्वजो बली ।
पुण्ये तीर्थवरे स्नात्वा विस्मयं परमं गतः ॥ ९-५५-११ (६३२७९)
प्रभवं च सरस्वत्याः प्लक्षप्रस्रवणं बलः ।
सम्प्राप्तः कारपचनं तीर्थप्रवरमुत्तमम् ॥ ९-५५-१२ (६३२८०)
हलायुधस्तु तत्रापि दत्त्वा दानं महाबलः ।
आप्लुतः सलिले पुण्ये सुशीते विमले शुचौ ।
सन्तर्पयामास पितॄन्देवांश्च रणदुर्मदः ॥ ९-५५-१३ (६३२८१)
तत्रोष्यैकां तु रजनीं यतिभिर्ब्राह्मणैः सह ।
मित्रावरुणयोः पुण्यं जगामाश्रममच्युतः ॥ ९-५५-१४ (६३२८२)
इन्द्रोऽग्निरर्यमा चैव यत्र प्राक् प्रीतिमाप्नुवम् ।
तं देशं कारपचनात्स तस्मादाजगामह ॥ ९-५५-१५ (६३२८३)
स्नात्वा तत्र च धर्मात्मा परां प्रीतिमवाप्य च ।

ऋषिभिश्चैव सिद्धैश्च सहितो वै महाबलः ।
उपविष्टः कथाः शुभ्राः शुश्राव यदुपुङ्गवः ॥ ९-५५-१६ (६३२८४)
तथा तु तिष्ठतां तेषां नारदो भगवानृषिः ।
आजगामाथ तं देशं यत्र रामो व्यवस्थितः ॥ ९-५५-१७ (६३२८५)
जटामण्डलसंवीतः कुशचीरी महातपाः ।
हेमदण्डधरो राजन्कमण्डलुधरस्तथा ॥ ९-५५-१८ (६३२८६)
महतीं सुखशब्दां तां गृह्य वीणां मनोरमाम् ।
नृत्ये गीते च कुशलो देवब्राह्मणपूजितः ॥ ९-५५-१९ (६३२८७)
प्रभवः कलहानं च नित्यं च कलहप्रियः ।
तं देशमगमद्यत्र श्रीमान्रामो व्यवस्थितः ॥ ९-५५-२० (६३२८८)
प्रत्युत्थाय च तं रामः पूजयित्वा यतव्रतम् ।
देवर्षिं पर्यपृच्छत्स यथावृत्तं कुरून्प्रति ॥ ९-५५-२१ (६३२८९)
तदाऽस्याकथयद्राजन्नारदः सर्ववेदवित् ।
सर्वमेतद्यथावृत्तमतीतं कुरुसंक्षयम् ॥ ९-५५-२२ (६३२९०)
ततोऽब्रवीद्रौहिणेयो नारदं दीनया गिरा ।
किमवस्थं तु तत्क्षत्रं ये तु तत्राभवन्नृपाः ॥ ९-५५-२३ (६३२९१)
श्रुतमेतन्मया पूर्वं सर्वमेव तपोधन ।
विस्तरश्रवणे जातं कौतूहलमतीव मे ॥ ९-५५-२४ (६३२९२)
नारद उवाच। ९-५५-२५क्ष् (५२२३)
पूर्वमेव हतो भीष्मो द्रोणः सिन्धुपतिस्तथा ।
हतो वैकर्तनः कर्णः पुत्राश्चास्य महारथाः ॥ ९-५५-२५ (६३२९३)
भूरिश्रवा रौहिणेय मद्रराजश्च वीर्यवान् ।
एते चान्ये च बहवो हतास्तत्र महाबलाः ॥ ९-५५-२६ (६३२९४)
प्रियान्प्राणान्परित्यज्य प्रियार्थं कौरवस्य वै ।
राजानो राजपुत्राश्च समरेष्वनिवर्तिनः ॥ ९-५५-२७ (६३२९५)
अहतांस्तु महाबाहो शृणु मे तत्र माधव ॥ ९-५५-२८ (६३२९६)
धार्तराष्ट्रबले शेषास्त्रयः समितिमर्दनाः ।
कृपश्च कृतवर्मा च द्रोणपुत्रश्च वीर्यवान् ।
तेऽपि वै विद्रुता राम दिशो दश भयात्तदा ॥ ९-५५-२९ (६३२९७)
दुर्योधनो हते सैन्ये विद्रुतेषु पदातिषु ।
ह्रदं द्वैपायनं नाम विवेश भृशदुःखितः ॥ ९-५५-३० (६३२९८)
शयानं धार्तराष्ट्रं तु सलिले स्तम्भिते तदा ।
पाण्डवाः सह कृष्णेन वाग्भिरुग्राभिरार्दयन् ॥ ९-५५-३१ (६३२९९)
स तुद्यमानो बलवान्वाग्भी राम समन्ततः ।
उत्थितः स ह्रदाद्वीरः प्रगृह्य महतीं गदाम् ॥ ९-५५-३२ (६३३००)
स चाप्युपागतो योद्धुं भीमेन सह साम्प्रतम् ।

भविष्यति तयोरद्य युद्धं राम सुदारुणम् ॥ ९-५५-३३ (६३३०१)
यदि कौतूहलं तेऽस्ति व्रज माधव मा चिरम् ।
पश्य युद्धं महाघोरं शिष्ययोर्यदि मन्यसे ॥ ९-५५-३४ (६३३०२)
वैशम्पायन उवाच। ९-५५-३५क्ष् (५२२४)
नारदस्य वचः श्रुत्वा तानभ्यर्च्य द्विजर्षभान् ।
सर्वान्विसर्जयामास ये तेनाभ्यागताः सह ।
गम्यतां द्वारकां चेति सोऽन्वशादनुयायिनः ॥ ९-५५-३५ (६३३०३)
सोऽवतीर्याचलश्रेष्ठात्प्लक्षप्रस्रवणाच्छुभात् ।
ततः प्रीतमनाः रामः श्रुता तीर्थफलं महत् ।
विप्राणां सन्निधौ श्लोकमगायदिममच्युतः ॥ ९-५५-३६ (६३३०४)
सरस्वतीवाससमा कुतो रतिः
सरस्वतीवाससमाः कुतो गुणाः ।
सरस्वतीं प्राप्य दिवं गता जनाः
सदा स्मरिष्यन्ति नदीं सरस्वतीम् ॥ ९-५५-३७ (६३३०५)
सरस्वती सर्वनदीषु पुण्या
सरस्वती लोकशुभावहा सदा ।
सरस्वतीं प्राप्य जनाः सुदुष्कृतं
सदा न शोचन्ति परत्र चेह च ॥ ९-५५-३८ (६३३०६)
ततो मुहुर्मुहुः प्रीत्या प्रेक्षमाणः सरस्वतीम् ।
हयैर्युक्तं रथं शुभ्रमारुरोह परन्तपः ॥ ९-५५-३९ (६३३०७)
स शीघ्रगामिना तेन रथेन यदुपुङ्गवः ।
दिदृक्षुरभिसम्प्राप्तः शिष्ययुद्धमुपस्थितम् ॥ ९-५५-४० (६३३०८)
एवं तदभवद्युद्धं तुमुलं जनमेजयं ।
यत्र दुःखान्वितो राजा धृतराष्ट्रोऽब्रवीदिदम् ॥ ९-५५-४१ (६३३०९)
धृतराष्ट्र उवाच। ९-५५-४२क्ष् (५२२५)
राम सन्निहितं श्रुत्वा गदायुद्ध उपस्थिते ।
मम पुत्रः कथं भीमं प्रत्ययुध्यत सञ्जय ॥ ॥ ९-५५-४२ (६३३१०)

इति श्रीमन्महाभारते शल्यपर्वणि ह्रदप्रवेशपर्वणि
पञ्चपञ्चाशत्तमोऽध्यायः ॥ ५५ ॥ समाप्तं ह्रदप्रवेशपर्व
॥ २ ॥

Mahabharata - Shalya Parva - Chapter Footnotes

९-५५-१० स्कन्धावाराणि सर्वाणीति क ङ छ पाठः ॥
९-५५-१२ प्लक्षप्रस्रवणं विलमिति क पाठः ॥
९-५५-१९ कच्छपीं सुखशब्दां तामिति क छ झ पाठः ॥

९-५५-३० दुर्योधनो हते शल्ये विद्रुतेषु कृपादिषु इति झ पाठः ॥
९-५५-३८ सरस्वतीं हीनविदेशवासिनः सदा रमरिष्यन्ति इति ङ पाठः
। सरस्वतीहीनविदेशवासिनः इति क पाठः ॥
९-५५-५५ पञ्चपञ्चाशत्तमोऽध्यायः ॥

---

शल्यपर्व-अध्यय०५६
॥ श्रीः ॥
९.५६. अध्यायः ५६

Mahabharata - Shalya Parva - Chapter Topics
(अथ गदायुद्धपर्व ॥ ३ ॥
) गदायुद्धाय सन्नद्धयोर्भीमदुर्योधनयोर्वर्णनम् ॥ १ ॥

Mahabharata - Shalya Parva - Chapter Text

९-५६-० (६३३११)
सञ्जय उवाच। ९-५६-०क्ष् (५२२६)
रामसान्निध्यमागम्य पुत्रो दुर्योधनस्तव ।
योद्धुकामो महाबाहुः समहृष्यत वीर्यवान् ॥ ९-५६-१ (६३३१२)
दृष्ट्वा लाङ्गलिनं राजा प्रत्युत्थाय च भारत ।
प्रीत्याक्र परमया युक्तो युधिष्ठिरमथाब्रवीत् ॥ ९-५६-२ (६३३१३)
दुर्योधन उवाच। ९-५६-३क्ष् (५२२७)
समन्तपञ्चकं पुण्यमितो याम विशाम्पते ।
प्रथितोत्तरवेदी सा देवलोके प्रजापतेः ॥ ९-५६-३ (६३३१४)
तस्मिन्महापुण्यतमे त्रैलोक्यस्य सनातने ।
सङ्ग्रामे निधनं प्राप्य ध्रुवं स्वर्गं गमिष्यसि ॥ ९-५६-४ (६३३१५)
तथेत्युक्त्वा महाराज कुन्तीपुत्रो युधिष्ठिरः ।
समन्तपञ्चकं वीरः प्रायादभिमुखः प्रभुः ॥ ९-५६-५ (६३३१६)
ततो दुर्योधनो राजा प्रगृह्य महतीं गदाम् ।
पद्भ्याममर्षी द्युतिमानगच्छत्पाण्डवैः सह ॥ ९-५६-६ (६३३१७)
तथा यान्तं गदाहस्तं वर्मणा चापि दंशितम् ।
अन्तरिक्षचरा देवाः साधुसाध्वित्यपूजयन् ॥ ९-५६-७ (६३३१८)
वादकाश्च नरास्तत्र दृष्ट्वा ते हर्षमागताः ॥ ९-५६-८ (६३३१९)
स पाण्डवैः परिवृतः कुरुराजस्तवात्मजः ।
मत्तस्येव गजेन्द्रस्य गतिमास्थाय सोऽव्रजत् ॥ ९-५६-९ (६३३२०)
ततः शङ्खनिनादैश्च भेरीणां च महास्वनैः ।

सिंहनादैश्च शूराणां दिशः सर्वाः प्रपूरिताः ॥ ९-५६-१० (६३३२१)
ततस्ते तु कुरुक्षेत्रं प्राप्ता नरवरोत्तमाः ।
प्रतीच्यभिमुखं देशं यथोद्दिष्टं सुतेन ते ।
दक्षिणेन सरस्वत्याः स्वयनं तीर्थमुत्तमम् ॥ ९-५६-११ (६३३२२)
तस्मिन्देशे त्वनिरिणे ते तु युद्धमरोचयन् ॥ ९-५६-१२ (६३३२३)
ततो भीमो महाकोटिं गदां गृह्याथ वर्मभृत् ।
बिभ्रद्रूपं महाराज सदृशं हि गरुत्मतः ॥ ९-५६-१३ (६३३२४)
अवबद्धशिरस्त्राणः शुद्धकाञ्चनवर्मभृत् ।
रराज राजन्पुत्रस्ते काञ्चनः शैलराडिव ॥ ९-५६-१४ (६३३२५)
तौ तथा सङ्गतौ वीरौ भीमदुर्योधनावुभौ ।
संयुगे सम्प्रकाशेते संरब्धाविव कुञ्जरौ ॥ ९-५६-१५ (६३३२६)
रथमण्डलमध्यस्थौ भ्रातरौ तौ नरर्षभौ ।
अशोभेतां महाराज चन्द्रसूर्याविवोदितौ ॥ ९-५६-१६ (६३३२७)
तावन्योन्यं निरीक्षेतां क्रुद्धाविव महोरगौ ।
दहन्तौ लोचनै राजन्परस्परवधैषिणौ ॥ ९-५६-१७ (६३३२८)
संप्रहृष्टमना राजन्गदामादाय कौरवः ।
सृक्विणी संलिहन्राजन्क्रोधरक्तेक्षणः श्वसन् ॥ ९-५६-१८ (६३३२९)
ततो दुर्योधनो राजन्गदामादाय वीर्यवान् ।
भीमसेनमभिप्रेक्ष्य गजो गजमिवाह्वयत् ॥ ९-५६-१९ (६३३३०)
अद्रिसारमयीं भीमस्तथैवादाय वीर्यवान् ।
आह्वयामास नृपतिं सिंहः सिंहं यथा वने ॥ ९-५६-२० (६३३३१)
तावुद्यतगदापाणी दुर्योधनवृकोदरौ ।
संयुगे सम्प्रकाशेतां गिरी सशिखराविव ॥ ९-५६-२१ (६३३३२)
तावुभौ समतिक्रुद्धावुभौ भीमपराक्रमौ ।
उभौ शिष्यौ गदायुद्धे रौहिणेयस्य धीमतः ॥ ९-५६-२२ (६३३३३)
उभौ सदृशकर्माणौ वरुणस्य महाबलौ ।
वासुदेवस्य रामस्य तथा वैश्रवणस्य च ॥ ९-५६-२३ (६३३३४)
सदृशौ तौ महाराज मधुकैटभयोरपि ।
उभौ सदृशकर्माणौ तथा सुन्दोपसुन्दयोः ॥ ९-५६-२४ (६३३३५)
श्रामरावणयोश्चैव वालिसुग्रीवयोस्तथाघ ।
तथैव कालस्य समौ मृत्योश्चैव परन्तपौ ॥ ९-५६-२५ (६३३३६)
अन्योन्यमभिधावन्तौ मत्ताविव महाद्विपौ ।
वासितासङ्गमे दृप्तौ शरदीव मदोत्कटौ ॥ ९-५६-२६ (६३३३७)
उभौ क्रोधविषं दीप्तं वमन्तावुरगाविव ।
अन्योन्यमभिसंरब्धौ प्रेक्षमाणावरिन्दमौ ॥ ९-५६-२७ (६३३३८)
उभौ भरतशार्दूलौ विक्रमेण समन्वितौ ।

सिंहाविव दुराधर्षौ गदायुद्धविशारदौ ॥ ९-५६-२८ (६३३३९)
नखदंष्ट्रायुधौ वीरौ व्याघ्राविव दुरुत्सहौ ।
प्रजासंहरणे क्षुब्धौ समुद्राविव दुस्तरौ ॥ ९-५६-२९ (६३३४०)
लोहिताङ्गाविव क्रुद्धौ प्रतपन्तौ महारथौ ।
श्पूर्वपश्चिमजौ मेघौ प्रेक्षमाणावरिन्दमौ ॥ ९-५६-३० (६३३४१)
गर्जमानौ सुविषमं क्षरन्तौ प्रावृषीव हि ।
रश्मियुक्तौ महात्मानौ दीप्तिमन्तौ महाबलौ ॥ ९-५६-३१ (६३३४२)
ददृशाते कुरुश्रेष्ठौ कालसूर्याविवोदितौ ।
व्याघ्राविव सुसंरब्धौ गर्जन्ताविवतोयदौ ॥ ९-५६-३२ (६३३४३)
जहृषाते महाबाहु सिंहकेसरिणाविव ।
गजाविव सुसंरब्धौ ज्वलिताविव पावकौ ॥ ९-५६-३३ (६३३४४)
ददृशाते महात्मानौ सशृङ्गाविव पर्वतौ ।
रोषात्प्रस्फुरमाणोष्ठौ निरीक्षन्तौ परस्परम् ॥ ९-५६-३४ (६३३४५)
तौ समेतौ महात्मानौ गदाहस्तौ नरोत्तमौ ॎ
उभौ परमसंहृष्टावुभौ परमसम्मतौ ॥ ९-५६-३५ (६३३४६)
सदश्वाविव हेषन्तौ बृंहन्ताविव कुञ्जरौ ।
वृषभाविव गर्जन्तौ दुर्योधनवृकोदरौ ।
दैत्याविव बलोन्मत्तौ रेजतुस्तौ नरोत्तमौ ॥ ९-५६-३६ (६३३४७)
ततो दुर्योधनो राजन्निदमाह युधिष्ठिरम् ।
सृञ्जयैः सह तिष्ठन्तं तपन्तमिव भास्करम् ॥ ९-५६-३७ (६३३४८)
इदं व्यवसितं युद्धं मम भीमस्य चोभयोः ।
उपोपविष्टाः पश्यध्वं विमर्दं नृपसत्तमाः ॥ ९-५६-३८ (६३३४९)
ततः समुपविष्टं तत्सुमहद्राजमण्डलम् ।
विराजमानं ददृशे दिवीवादित्यमण्डलम् ॥ ९-५६-३९ (६३३५०)
तेषां मध्ये महाबाहुः श्रीमान्केशवपूर्वजः ।
उपविष्टो महाराज पूज्यमानः समन्ततः ॥ ९-५६-४० (६३३५१)
शुशुभे राजमध्यस्थो नीलवासाः सितप्रभः ।
नक्षत्रैरिव सम्पूर्णो वृतो निशि निशाकरः ॥ ९-५६-४१ (६३३५२)
तौ तथा तु महाराज गदाहस्तौ सुदुःसहौ ।
अन्योन्यं वाग्भिरुग्राभिस्तक्षमाणौ व्यवस्थितौ ॥ ९-५६-४२ (६३३५३)
अप्रियाणि ततोऽन्योन्यमुक्त्वा तौ कुरुसत्तमौ ।
उदीक्षन्तौ स्थितौ तत्र वृत्रशक्रौ यथाऽऽहवे ॥ ॥ ९-५६-४३ (६३३५४)

इति श्रीमन्महाभारते शल्यपर्वणि गयादुद्धपर्वणि
षट्पञ्चाशत्तमोऽध्यायः। । ५६ ॥ क़एतच्छ्लोकस्य स्थाने झ पुस्तके
अधोलिखिताः पञ्च श्लोका वर्तन्ते। ते च ।

प्रीत्या परमया युक्ताः समभ्यर्च्य यथाविधि ।
आसनं च ददौ तस्मै पर्यपृच्छदनामयम् ॥ ९-५६-१ (६३३५५)
ततो युधिष्ठिरं रामो वाक्यमेतदुवाच ह ।
मधुरं धर्मसंयुक्तं शूराणां हितमेव च ॥ ९-५६-२ (६३३५६)
मया श्रुतं कथयतामृषीणां राजसत्तम ।
कुरुक्षेत्रं परं पुण्यं पावनं स्वर्ग्यमेव च ॥ ९-५६-३ (६३३५७)
देवतैर्ऋषिभिर्जुष्टं ब्राह्मणैश्च महात्मभिः ।
तत्र वै योत्स्यमाना ये देहं त्यक्ष्यन्ति मानवाः ॥ ९-५६-४ (६३३५८)
९-५६-५ (६३३५९)
तेषां स्वर्गे ध्रुवो वासः शक्रेण सह मारिष ।
तस्मात्समन्तपञ्चकमितो याम द्रुतं नृप ॥
Mahabharata - Shalya Parva - Chapter Footnotes

९-५६-८ वातिकाश्चारणा ये तु इति झ पाठः । तत्र वातिकाः वातेन सह गच्छन्ति ते आकाशचारिणः। चारणाः सिद्धविशेषा इत्यर्थः ॥।
९-५६-११ स्वयनं सुगतिदम् ॥
९-५६-१२ अनिरिणे अनूषरे ॥
९-५६-२६ वासितासङ्गमे एककरिणीसङ्गमार्थे दृप्तौ मोहितौ ॥
९-५६-३० लोहिताङ्गौ द्वौ कुजाविवेत्यभूतोपमा ॥
९-५६-३३ जहषाते हर्षं प्रापतुः ॥
९-५६-५६ षट्पञ्चाशत्तमोऽध्यायः ॥

---

शल्यपर्व-अध्यय०५७
॥ श्रीः ॥
९.५७. अध्यायः ५७

Mahabharata - Shalya Parva - Chapter Topics
भीमदुर्योधनयोर्वीरवादः ॥ १ ॥

Mahabharata - Shalya Parva - Chapter Text

९-५७-० (६३३६०)
वैशम्पायन उवाच। ९-५७-०क्ष् (५२२८)
ततो वाग्युद्धमभवत्तुमुलं जनमेजय ।
यत्र दुःखान्वितो राजा धृतराष्ट्रोऽब्रवीदिदम् ॥ ९-५७-१ (६३३६१)
धिगस्तु खलु मानुष्यं यस्य निष्ठेयमीदृशी ।

एकादशचमूभर्ता यत्र पुत्रो ममानघ ॥ ९-५७-२ (६३३६२)
आज्ञाप्य सर्वान्नृपतीन्भुक्त्वा चेमां वसुन्धराम् ।
गदामादाय चैकाकी पदातिः प्रस्थितो रणम् ॥ ९-५७-३ (६३३६३)
भूत्वा हि जगतो नाथो ह्यनाथ इव मे सुतः ।
गदामुद्यम्य यो याति किमन्यद्भागधेयतः ॥ ९-५७-४ (६३३६४)
अहो दुःखं महत्प्राप्तं पुत्रेण मम सञ्जय ।
एवमुक्त्वा स दुःखार्तो विरराम जनाधिपः ॥ ९-५७-५ (६३३६५)
सञ्जय उवाच। ९-५७-६क्ष् (५२२९)
स मेघनिनदो हर्षान्निनदन्निव गोवृषः ।
आजुहाव तदा पार्थं युद्धाय युधि वीर्यवान् ॥ ९-५७-६ (६३३६६)
भीममाह्वयमाने तु कुरुराजे महात्मनि ।
प्रादुरासन्सुघोराणि रूपाणि विविधान्युत ॥ ९-५७-७ (६३३६७)
ववुर्वाताः सनिर्घाताः पांसुवर्षं पपात च ।
बभूवुश्च दिशः सर्वास्तिमिरेण समावृताः ॥ ९-५७-८ (६३३६८)
महास्वनाः सुनिर्वातास्तुमुला रोमहर्षणाः ।
पेतुस्तथोल्काः शतशः स्फोटयन्त्यो नभस्तलात् ॥ ९-५७-९ (६३३६९)
राहुश्चाग्रसदादित्यमपर्वणि विशाम्पते ।
चकम्पे च महाकम्पं पृथिवी सवनद्रुमा ॥ ९-५७-१० (६३३७०)
रूक्षाश्च वाताः प्रववुर्नीचैः शर्करकर्षिणः ।
गिरीणां शिखराण्येव न्यपतन्त महीतले ॥ ९-५७-११ (६३३७१)
मृगा बहुविधाकाराः सम्पतन्ति दीशो दश ।
दीप्ताः शिवाश्चाप्यनदन्घोररूपाः सुदारुणाः ॥ ९-५७-१२ (६३३७२)
निर्घाताश्च महाघोरा बभूवू रोमहर्षणाः ।
दीप्तायां दिशि राजेन्द्र मृगाश्चाशुभवादिनः ॥ ९-५७-१३ (६३३७३)
उदपानगताश्चापो व्यवर्धन्त समन्ततः ।
अशरीरा महानादाः श्रूयन्ते स्म भयानकाः ॥ ९-५७-१४ (६३३७४)
एवमादीनि दृष्ट्वा स निमित्तानि वृकोदरः ।
उवाच भ्रातरं ज्येष्ठं धर्मराजं युधिष्ठिरम् ॥ ९-५७-१५ (६३३७५)
एष शक्यो मया जेतुं मन्दात्मा च सुयोधनः ॥ ९-५७-१६ (६३३७६)
अद्य क्रोधं विमोक्ष्यामि निगूढं हृदयेशयम् ।
सुयोधने कौरवेन्द्रे खाण्डवेऽग्निमिवार्जुनः ॥ ९-५७-१७ (६३३७७)
शल्यमद्योद्धरिष्यामि तव पाण्डव हृच्छयम् ।
निहत्य गदया पापमिमं कुरुकुलान्तकम् ॥ ९-५७-१८ (६३३७८)
अद्य कीर्तिमयीं मालां प्रतिमोक्ष्याम्यहं त्वयि ।
हत्वेमं पापकर्माणं गदया रणमूर्धनि ॥ ९-५७-१९ (६३३७९)
अद्योरुगदया राजन्भेत्ताऽस्मि समरेऽनया ।

नायं प्रवेष्टा नगरं पुनर्वारणसाह्वयम् ॥ ९-५७-२० (६३३८०)
सर्पोत्सर्गस्य शयने विषदानस्य भोजने ।
प्रमाणकोट्यां पातस्य दाहस्य जतुवेश्मनि ॥ ९-५७-२१ (६३३८१)
सभायामवहासस्य सर्वस्वहरणस्य च ।
वर्षमज्ञातवासस्य वनवासस्य चानघ ॥ ९-५७-२२ (६३३८२)
अद्यान्तमेषां दुःखानां गन्ताऽहं भरतर्षभ ।
एकाह्ना विनिहत्येमं भविष्याम्यात्मनोऽनृणः ॥ ९-५७-२३ (६३३८३)
अद्यायुर्धार्तराष्ट्रस्य दुर्मतेरकृतात्मनः ।
समाप्तं भरतश्रेष्ठ मातापित्रोश्च दर्शनम् ॥ ९-५७-२४ (६३३८४)
अद्य सौख्यं तु राजेन्द्र कुरुराजस्य दुर्मतेः ।
समाप्तं च महाराज नारीणां दर्शनं पुनः ॥ ९-५७-२५ (६३३८५)
अद्यायं कुरुराजस्य शन्तनोः कुलपांसनः ।
प्राणाञ्श्रियं च राज्यं च त्यक्त्वा शेष्यति भूतले ॥ ९-५७-२६ (६३३८६)
राजा च धृतराष्ट्रोऽद्य श्रुत्वा पुत्रं निपातितम् ।
स्मरिष्यत्यशुभं कर्म यत्तच्छकुनिबुद्धिजम् ॥ ९-५७-२७ (६३३८७)
इत्युक्त्वा राजशार्दूल गदामादाय वीर्यवान् ।
अभ्यतिष्ठत युद्धाय शक्रो वृत्रमिवाह्वयन् ॥ ९-५७-२८ (६३३८८)
तमुद्यतगदं दृष्ट्वा कैलासमिव शृङ्गिणम् ।
भीमसेनः पुनः क्रुद्धो दुर्योधनमुवाच ह ॥ ९-५७-२९ (६३३८९)
राज्ञश्च धृतराष्ट्रस्य तथा त्वमपि चात्मनः ।
स्मर तद्दुष्कृतं कर्म यद्वृत्तं वारणावते ॥ ९-५७-३० (६३३९०)
द्रौपदी च परिक्लिष्टा सभामध्ये रजस्वला ।
द्यूते च वञ्चितो राजा यत्त्वया सौबलेन च ॥ ९-५७-३१ (६३३९१)
वने दुःखं च यत्प्राप्तमस्माभिस्त्वत्कृतं महत् ।
विराटनगरे चैव योन्यन्तरगतैरिव ।
तत्सर्वं पातयाम्यद्य दिष्ट्या दृष्टोऽसि दुर्मते ॥ ९-५७-३२ (६३३९२)
त्वत्कृतेऽसौ हतः शेते शरतल्पे पितामहः ।
गाङ्गेयो रथिनां श्रेष्ठो रथिना याज्ञसेनिना ॥ ९-५७-३३ (६३३९३)
हतो द्रोणश्च कर्णश्च तथा शल्यः प्रतापवान् ।
वैराग्नेरादिकर्तासौ शकुनिः सौबलो हतः ॥ ९-५७-३४ (६३३९४)
प्रातिकामी तथा पापो द्रौपद्याः क्लेशकृद्धतः ।
भ्रातरस्ते हताः सर्वे शूरा विक्रान्तयोधिनः ॥ ९-५७-३५ (६३३९५)
एते चान्ये च बहवो निहतास्त्वत्कृते नृपाः ।
त्वामद्य निहनिष्यामि गदया नात्र संशयः ॥ ९-५७-३६ (६३३९६)
इत्येवमुच्चै राजानं भाषमाणं वृकोदरम् ।
उवाच गतभी राजन्पुत्रस्ते सत्यविक्रमः ॥ ९-५७-३७ (६३३९७)

किं कत्थनेन बहुना युध्यस्वेह वृकोदर ।
अद्य तेऽहं विनेष्यामि युद्धश्रद्धां कुलाधम ॥ ९-५७-३८ (६३३९८)
इति दुर्योधेनोऽक्षुद्रस्त्वया क्षुद्रबलेन वै ।
शक्यस्त्रासयितुं वाचा न चान्यः प्राकृतो यथा ॥ ९-५७-३९ (६३३९९)
चिरकालेप्सितं दिष्ट्या हृदयस्थमिदं मम ।
त्वया सह गदायुद्धं त्रिदशैरुपपादितम् ॥ ९-५७-४० (६३४००)
किं वाचा बहुनोक्तेन कत्थितेन च दुर्मते ।
वाणी सङ्कोच्यतामेषा कर्मणा मा चिरं कृथाः ॥ ९-५७-४१ (६३४०१)
तस्य तद्वचनं श्रुत्वा सर्व एवाभ्यपूजयन् ।
राजानः सोमकाश्चैव ये तत्रासन्समागताः ॥ ९-५७-४२ (६३४०२)
ततः सम्पूजितः सर्वैः सम्प्रहृष्टतनूरुहः ।
भूयो धीरां मतिं चक्रे युद्धाय कुरुनन्दनः ॥ ९-५७-४३ (६३४०३)
तं मत्तमिव मातङ्गं तलशब्दैर्नराधिपाः ।
भूयः संहर्षयांचक्रुर्दुर्योधनममर्षणम् ॥ ९-५७-४४ (६३४०४)
तं महात्मा महात्मानं गदामुद्यम्य पाण्डवः ।
अभिदुद्राव वेगेन धार्तराष्ट्रं वृकोदरः ॥ ९-५७-४५ (६३४०५)
बृंहन्ति कुञ्चरास्तत्र हया हेषन्ति चासकृत् ।
शस्त्राणि चाप्यदीप्यन्त पाण्डवानां जयैषिणां ॥ ९-५७-४६ (६३४०६)

इति श्रीमन्महाभारते शल्यपर्वणि कदायुद्धपर्वणि
सप्तपञ्चाशत्तमोऽध्यायः ॥ ५७ ॥
Mahabharata - Shalya Parva - Chapter Footnotes

९-५७-१६ नैष शक्तो रणे जेतुं मन्दात्मा मां सुयोधन इति झ पाठः ॥
९-५७-४१ वाणी सम्पद्यतामिति झ पाठः ॥
९-५७-५७ सप्तपञ्चाशत्तमोऽध्यायः ॥

---

शल्यपर्व-अध्यय०५८
॥ श्रीः ॥
९.५८. अध्यायः ५८

Mahabharata - Shalya Parva - Chapter Topics
सञ्जय उवाच ।
Mahabharata - Shalya Parva - Chapter Text

९-५८-० (६३४०७)

सञ्जय उवाच। ९-५८-०क्ष् (५२३०)
ततो दुर्योधनो दृष्ट्वा भीमसेनं तथाऽऽगतम् ।
प्रत्युद्ययावदीनात्मा वेगेन महता नदन् ॥ ९-५८-१ (६३४०८)
समापेततुरन्योन्यं शृङ्गिणौ वृषभाविव ।
महानिर्घातघोषश्च प्रहाराणामजायत ॥ ९-५८-२ (६३४०९)
अभवच्च तयोर्युद्धं तुमुलं रोमहर्षणम् ।
जिघृक्षतोर्यथाऽन्योन्यमिन्द्रप्रह्लादयोरिव ॥ ९-५८-३ (६३४१०)
रुधिरोक्षितसर्वाङ्गौ गदाहस्तौ मनस्विनौ ।
ददृशाते महात्मानौ पुष्पिताविव किंशुकौ ॥ ९-५८-४ (६३४११)
तथा तस्मिन्महायुद्धे वर्तमाने सुदारुणे ।
खद्योतसङ्घैरिव खं दर्शनीयं व्यरोचत ॥ ९-५८-५ (६३४१२)
तथा तस्मिन्वर्तमाने सङ्कुले तुमुले भृशम् ।
उभावपि परिश्रान्तौ युध्यमानावरिन्दमौ ॥ ९-५८-६ (६३४१३)
तौ मुहूर्तं समाश्वस्य पुनरेव परन्तपौ ।
सम्प्रहारयतां चित्रे सम्प्रगृह्य गदे शुभे ॥ ९-५८-७ (६३४१४)
तौ तु दृष्ट्वा महावीर्यौ समाश्वस्तौ नरर्षभौ ।
बलिनौ वारणौ यद्वद्वासितार्थे मदोत्कटौ ॥ ९-५८-८ (६३४१५)
समानवीर्यौ सम्प्रेक्ष्य प्रगृहीतगदावुभौ ।
प्रहर्षं परमं जग्मुर्देवगन्धर्वदानवाः ॥ ९-५८-९ (६३४१६)
प्रगृहीतगदौ दृष्ट्वा दुर्योधनवृकोदरौ ।
संशयः सर्वभूतानां विजये समपद्यत ॥ ९-५८-१० (६३४१७)
समागम्य ततो भूयो भ्रातरौ बलिनां वरौ ।
अन्योन्यस्यान्तरप्रेप्सू प्रचक्रातेऽन्तरं प्रति ॥ ९-५८-११ (६३४१८)
यमदण्डोपमां गुर्वीमिन्द्राशनिमिवोद्यताम् ।
ददृशुः प्रेक्षका राजन्रौद्रीं विशसनीं गदाम् ॥ ९-५८-१२ (६३४१९)
आविद्धयतो गतां तस्य भीमसेनस्य संयुगे ।
शब्दः सुतुमुलो घोरो मुहूर्तं समपद्यत ॥ ९-५८-१३ (६३४२०)
आविद्धयन्तमरिं प्रेक्ष्य धार्तराष्ट्रोऽथ पाण्डवम् ।
गदामतुलवेगां तां विस्मितः सम्बभूव ह ॥ ९-५८-१४ (६३४२१)
चरंश्च विविधान्मार्गान्मण्डलानि च भारत ।
अशोभत तदा वीरो भूय एव वृकोदरः ॥ ९-५८-१५ (६३४२२)
तौ परस्परमासाद्य यत्तावन्योन्यसूदने ।
मार्जाराविव भक्षार्थे ततक्षाते मुहुर्मुहुः ॥ ९-५८-१६ (६३४२३)
अचरद्भीमसेनस्तु मार्गान्बहुविधांस्तथा ।
मण्डलानि विचित्राणि गतप्रत्यागतानि च ॥ ९-५८-१७ (६३४२४)
गोमूत्रिकाणि चित्राणि स्थानानि विविधानि च ।

परिमोक्षं प्रहाराणां वर्जनं परिधावनम् ॥ ९-५८-१८ (६३४२५)
अभिद्रवणमाक्षेपमवस्थानं सविग्रहम् ।
मत्स्योद्वृत्तं सोरुवृत्तमवप्लुतमुपप्लुतम् ॥ ९-५८-१९ (६३४२६)
उपन्यस्तमपन्यस्तं गदायुद्धविशारदौ ।
एवं तौ विचरन्तौ तु न्यघ्नतां वै परस्परम् ॥ ९-५८-२० (६३४२७)
वञ्चयानौ पुनश्चैव चेरतुः कुरुसत्तमौ ।
विक्रीडन्तौ सुबलिनौ मण्डलानि विचेरतुः ॥ ९-५८-२१ (६३४२८)
श्तौ दर्शयन्तौ समरे युद्धक्रीडां समन्ततः ।
गदाभ्यां सहसाऽन्योन्यमाजघ्नतुररिन्दमौ ॥ ९-५८-२२ (६३४२९)
परस्परं समासाद्य दंष्ट्राभ्यां द्विरदौ यथा ।
अशोभेतां महाराज शोणितेन परिप्लुतौ ॥ ९-५८-२३ (६३४३०)
एवं तदभवद्युद्धं घोररूपं परन्तप ।
परिवृत्तेऽहनि क्रूरं वृत्रवासवयोरिव ॥ऽ ९-५८-२४ (६३४३१)
गदाहस्तौ ततस्तौ तु मण्डलावस्थितौ बली ।
दक्षिणं मण्डलं राजन्धार्तराष्ट्रोऽभ्यवर्तत ।
सव्यं तु मण्डलं तत्र भीमसेनोऽभ्यवर्तत ॥ ९-५८-२५ (६३४३२)
तथा तु चरतस्तस्य भीमस्य रणमूर्धनि ।
दुर्योधनो महाराज पार्श्वदेशेऽभ्यताडयत् ॥ ९-५८-२६ (६३४३३)
आहतस्तु ततो भीमः पुत्रेण तव भारत ।
आविध्यत गदां गुर्वीं प्रहारं तमचिन्तयन् ॥ ९-५८-२७ (६३४३४)
इन्द्राशनिसमां घोरां यमदण्डमिवोद्यताम् ।
ददृशुस्ते महाराज भीमसेनस्य तां गदाम् ॥ ९-५८-२८ (६३४३५)
आविध्यन्तं गदां दृष्ट्वा भीमसेनं तवात्मजः ।
समुद्यम्य गदां घोरां प्रत्यविध्यत्परन्तपः ॥ ९-५८-२९ (६३४३६)
गदामारुतवेगेन तव पुत्रस्य भारत ।
शब्द आसीत्सुतुमुलस्तेजश्च समजायत ॥ ९-५८-३० (६३४३७)
स चरन्विविधान्मार्गान्मण्डलानि च भागशः ।
समशोभत तेजस्वी भूयो भीमात्सुयोधनः ॥ ९-५८-३१ (६३४३८)
आविद्धा सर्ववेगेन भीमेन महती गदा ।
सधूमं सार्चिषं चाग्निं मुमोचोग्रमहास्वना ॥ ९-५८-३२ (६३४३९)
आधूतां भीमसेनेन गदां दृष्ट्वा सुयोधनः ।
अद्रिसारमयीं गुर्वीमाविध्यन्बह्वशोभत ॥ ९-५८-३३ (६३४४०)
गदामारुतवेगं हि दृष्ट्वा तस्य महात्मनः ।
भयं विवेश पाण्डूंस्तु सर्वानेव ससात्यकीन् ॥ ९-५८-३४ (६३४४१)
तौ दर्शयन्तौ समरे युद्धक्रीडां समन्ततः ।
गदाभ्यां सहसाऽन्योन्यमाजघ्नतुररिन्दमौ ॥ ९-५८-३५ (६३४४२)

तौ परस्परमासाद्य दंष्ट्राभ्यां द्विरदौ यथा ।
अशोभेतां महाराज शोणितेन परिप्लुतौ ॥ ९-५८-३६ (६३४४३)
एवं तदभवद्युद्धं घोररूपमसंवृतम् ।
परिवृत्तेऽहनि क्रूरं वृत्रवासवयोरिव ॥ ९-५८-३७ (६३४४४)
दृष्ट्वा व्यवस्थितं भीमं तव पुत्रो महाबलः ।
चरंश्चित्रतरान्मार्गान्कौन्तेयमभिदुद्रुवे ॥ ९-५८-३८ (६३४४५)
तस्य भीमो महावेगां जाम्बूनदपरिष्कृताम् ।
अतिक्रुद्धस्य क्रुद्धस्तु ताडयामास तां गदाम् ॥ ९-५८-३९ (६३४४६)
सविस्फुलिङ्गो निर्हादस्तयोस्तत्राभिघातजः ।
प्रादुरासीन्महाराज घृष्टयोर्वज्रयोरिव ॥ ९-५८-४० (६३४४७)
वेगवत्या तया तत्र भीमसेनप्रमुक्तया ।
निपतन्त्या महाराज पृथिवी समकम्पत ॥ ९-५८-४१ (६३४४८)
तां नामृष्यत कौरव्यो गदां प्रतिहतां रणे ।
मत्तो द्विप इव क्रुद्धः प्रतिकुञ्जरदर्शनात् ॥ ९-५८-४२ (६३४४९)
स सव्यं मण्डलं राजा उद्भ्राम्य कृतनिश्चयः ।
आजघ्ने मूर्ध्नि कौन्तेयं गदया भीमवेगया ॥ ९-५८-४३ (६३४५०)
तया त्वभिहतो भीमः पुत्रेण तव पाण्डवः ।
नाकम्पत महाराज तदद्भुतमिवाभवत् ॥ ९-५८-४४ (६३४५१)
आश्चर्यं चापि तद्राजन्सर्वसैन्यान्यपूजयन् ।
यद्गदाभिहतो भीमो नाकम्पत पदात्पदम् ॥ ९-५८-४५ (६३४५२)
ततो गुरुतरां दीप्तां गदां हेमपरिष्कृताम् ।
दुर्योधनाय व्यसृजद्भीमो भीमपराक्रमः ॥ ९-५८-४६ (६३४५३)
तं प्रहारमसम्भ्रान्तो लाघवेन महाबलः ।
मोघं दुर्योधनश्चक्रे तत्राभूद्विस्मयो महान् ॥ ९-५८-४७ (६३४५४)
सा तु मोघा गदा राजन्पतन्ती भीमचोदिता ।
चालयामास पृथिवीं महानिर्घातनिःस्वना: ॥ ९-५८-४८ (६३४५५)
आस्थाय कौशिकान्मार्गानुत्पतन्स पुनः पुनः ।
गदानिपातं प्रज्ञाय भीमसेनं च वञ्चितम् ॥ ९-५८-४९ (६३४५६)
वञ्चयित्वा तदा भीमं गदया कुरुसत्तमः ।
ताडयामास सङ्क्रुद्धो वक्षोदेशे महाबलः ॥ ९-५८-५० (६३४५७)
गदया निहतो भीमो मुह्यमानो महारणे ।
नाभ्यमन्यत कर्तव्यं पुत्रेणाभ्याहतस्तव ॥ ९-५८-५१ (६३४५८)
तस्मिंस्तथा वर्तमाने राजन्सोमकपाण्डवाः ।
भृशोपहतसङ्कल्पा नहृष्टमनसोऽभवन् ॥ ९-५८-५२ (६३४५९)
स तु तेन प्रहारेण मातङ्ग इव रोषितः ।
हस्तिवद्धस्तिसंकाशमभिदुद्राव ते सुतम् ॥ ९-५८-५३ (६३४६०)

ततस्तु तरसा भीमो गदया तनयं तव ।
अभिदुद्राव वेगेन सिंहो वनगजं यथा ॥ ९-५८-५४ (६३४६१)
उपसृत्य तु राजानं गदामोक्षविशारदः ।
आविध्यत गदां राजन्समुद्दिश्य सुतं तव ॥ ९-५८-५५ (६३४६२)
अताडयद्भीमसेनः पार्श्वे दुर्योधनं तदा ।
स विह्वलः प्रहारेण जानुभ्यामगमन्महीम् ॥ ९-५८-५६ (६३४६३)
तस्मिन्कुरुकुलश्रेष्ठे जानुभ्यामवनीं गते ।
उदतिष्ठत्ततो नादः सृञ्जयानां जगत्पते ॥ ९-५८-५७ (६३४६४)
तेषां तु निनदं श्रुत्वा शृञ्जयानां नरर्षभः ।
अमर्षाद्भरतश्रेष्ठ पुत्रस्ते समकुप्यत ॥ ९-५८-५८ (६३४६५)
उत्थाय तु महाबाहुर्महानाग इव श्वसन् ।
दिधक्षन्निव नेत्राभ्यां भीमसेनमवैक्षत ॥ ९-५८-५९ (६३४६६)
ततः स भरतश्रेष्ठो गदापाणिरभिद्रवन् ।
प्रमथिष्यन्निव शिरो भीमसेनस्य संयुगे ॥ ९-५८-६० (६३४६७)
स महात्मा महात्मानं भीमं भीमपराक्रमः ।
अताडयच्छङ्खदेशे न चचालाचलोपमः ॥ ९-५८-६१ (६३४६८)
स भूयः शुशुभे पार्थस्ताडितो गदया रणे ।
उद्भिन्नरुधिरो राजन्प्रभिन्न इव कुञ्जरः ॥ ९-५८-६२ (६३४६९)
ततो गदां वीरहणीमयोमयीं
प्रगृह्य वज्राशनितुल्यनिःस्वनाम् ।
अताडयच्छत्रुममित्रकर्शनो
बलेन विक्रम्य धनञ्जयाग्रजः ॥ ९-५८-६३ (६३४७०)
स भीमसेनाभिहतस्तवात्मजः
पपात सङ्कम्पितदेहबन्धनः ।
सुपुष्पितो मारुतवेगताडितो
वने महासाल इवावघूर्णितः ॥ ९-५८-६४ (६३४७१)
ततः प्रणेदुर्जहृषुश्च पाण्डवाः
समीक्ष्य पुत्रं पतितं क्षितौ तव ।
ततः सुतस्ते प्रतिलभ्य चेतनां
समुत्पपात द्विरदो यथा ह्रदात् ॥ ९-५८-६५ (६३४७२)
स पार्थिवो नित्यममर्षितस्तदा
महारथः शिक्षितवत्परिभ्रमन् ।
अताडयत्पाण्डवमग्रतः स्थितं
स विह्वलाङ्गो जगतीमुपास्पृशत् ॥ ९-५८-६६ (६३४७३)
स सिंहनादं विननाद कौरवो
निपात्य भूमौ युधि भीममोजसा ।

बिभेद चैवाशनितुल्यमोजसा
गदानिपातेन शरीररक्षणम् ॥ ९-५८-६७ (६३४७४)
ततोऽन्तरिक्षे निनदो महानभू--
द्दिवौकसामप्सरसां च नेदुषाम् ।
पपात चोच्चैरमरप्रवेरितं
विचित्रपुष्पोत्करवर्षमुत्तमम् ॥ ९-५८-६८ (६३४७५)
ततः परानाविशदुत्तमं भयं
समीक्ष्य भूमौ पतितं नरोत्तमम् ।
अहीयमानं च बलेन कौरवं
निशाम्य भेदं सुदृढस्य वर्मणः ॥ ९-५८-६९ (६३४७६)
ततो मुहूर्तादुपलभ्य चेतनां
प्रमृज्य वक्त्रं रुधिराक्तमात्मनः ।
धृतिं समालम्ब्य विवृत्य लोचने
बलेन संस्तभ्य वृकोदरः स्थितः ॥ ९-५८-७० (६३४७७)
'ततो यमौ यमसदृशौ पराक्रमे
सपार्षतः शिनितनयश्च वीर्यवान् ।
समाह्वयन्नहमहमित्यभित्वरं--
स्तवात्मजं समभिययुर्वधैषिणः ॥ ९-५८-७१ (६३४७८)
निवर्त्य तान्पुनरपि पाण्डवो बली
तवात्मजं स्वयमभिगम्य कालवत् ।
चचार चाप्यपगतखेदवेपथुः
सुरेश्वरो नमुचिमिवोत्तमं रणे'॥ ॥ ९-५८-७२ (६३४७९)

इति श्रीमन्महाभारते शल्यपर्वणि गदायुद्धपर्वणि
अष्टपञ्चाशत्तमोऽध्यायः ॥ ५८ ॥

Mahabharata - Shalya Parva - Chapter Footnotes

९-५८-३ जिगीषतोर्यथेति झ पाठः ॥
९-५८-४९ आस्थायेति । कौशिकान् कुश उन्मत्तस्तदाचरितान्मार्गानास्थाय
पुनः पुनरुत्पतनेन वञ्चनेन च भीममुन्मत्तीकृत्य गदया
ताडयामासेति द्वयोः सम्बन्धः ॥
९-५८-५२ नहृष्टमनसः खिन्नचेतसः ॥
९-५८-६१ शङ्खदेशे ललाटप्रान्त ॥
९-५८-६९ नेदुषां नाद कृतवतीनाम् ॥
९-५८-५८ अष्टपञ्चाशत्तमोऽध्यायः ॥

शल्यपर्व-अध्यय०५९
॥ श्रीः ॥
९.५९. अध्यायः ५९

Mahabharata - Shalya Parva - Chapter Topics
भीमसेनेन दुर्योधनस्योरुभेदनम् ॥१ ॥

Mahabharata - Shalya Parva - Chapter Text

९-५९-० (६३४८०)
सञ्चय उवाच। ९-५९-०क्ष् (५२३१)
समुदीर्णं ततो दृष्ट्वा सङ्ग्रामं कुरुमुख्ययोः ।
अब्रवीदर्जुनस्तत्र वासुदेवं यशस्विनम् ॥ ९-५९-१ (६३४८१)
अनयोर्वीरयोर्युद्धे को ज्यायान्भवतो मतः ।
कस्य वा को गुणो ज्यायानेतद्वद जनार्दन ॥ ९-५९-२ (६३४८२)
वासुदेव उवाच। ९-५९-३क्ष् (५२३२)
उपदेशोऽनयोस्तुल्यो भीमस्तु बलवत्तरः ।
कृती यत्नपरस्त्वेष धार्तराष्ट्रो वृकोदरात् ॥ ९-५९-३ (६३४८३)
भीमसेनस्तु धर्मेण युध्यमानो न जेष्यति ।
अन्यायेन तु युध्यन्वै हन्यादेव सुयोधनम् ॥ ९-५९-४ (६३४८४)
मायया निर्जिता देवैरसुरा इति नः श्रुतम् ।
विरोचनस्तु शक्रेण मायया निर्जितः स वै ॥ ९-५९-५ (६३४८५)
मायया चाक्षिपत्तेजो वृत्रस्य बलसूदनः ।
तस्मान्मायामयं वीर आतिष्ठतु वृकोदरः ॥ ९-५९-६ (६३४८६)
प्रतिज्ञातं च भीमेन द्यूतकाले धनञ्जय ।
ऊरू भेत्स्यामि ते सङ्ख्ये गदयेति सुयोधनम् ॥ ९-५९-७ (६३४८७)
सोऽयं प्रतिज्ञां तां चापि पारयत्वरिकर्शनः ।
मायाविनं तु राजानं माययैव निकृन्ततु ॥ ९-५९-८ (६३४८८)
यद्येष बलमास्थाय न्यायेन प्रहरिष्यति ।
विषमस्थस्ततो राजा भविष्यति युधिष्ठिरः ॥ ९-५९-९ (६३४८९)
पुनरेव तु वक्ष्यामि पाण्डवेय निबोध मे ।
धर्मराजापराधेन भयं नः पुनरागतम् ॥ ९-५९-१० (६३४९०)
कृत्वा हि सुमहत्कर्म हत्वा भीष्ममुखान्कुरून् ।
जयः प्राप्तो यशः प्राग्र्यं वैरं च प्रतियातितम् ।
तदेवं विजयः प्राप्तः पुनः संशयितः कृतः ॥ ९-५९-११ (६३४९१)
अबुद्धिरेषां महती धर्मराजस्य पाण्डव ।

यदेकविजये वीर पणितं कृतमीदृशम् ॥ ९-५९-१२ (६३४९२)
सुयोधनः कृती वीर एकायनगतस्तथा ॥ ९-५९-१३ (६३४९३)
अपि चोशनसा गीतः श्रूयतेऽयं पुरातनः ।
श्लोकस्तत्त्वार्थसहितस्तन्मे निगदतः शृणु ॥ ९-५९-१४ (६३४९४)
पुनरावर्तमानानां भग्नानां जीवितैषिणाम् ।
भेतव्यमरिशेषाणामेकायनगता हि ते ॥ ९-५९-१५ (६३४९५)
श्साहसोत्पतितानां च निराशानां च जीविते ।
न शक्यमग्रतः स्थातुं शक्रेणापि धनञ्जयघ ॥ ९-५९-१६ (६३४९६)
सुयोधनमिमं भग्नं हतसैन्यं ह्रदं गतम् ।
पराजितं वनप्रेप्सुं निराशं राज्यलम्भने ।
कोऽन्विष्य संयुगे प्राज्ञः पुनर्द्वन्द्वे समाह्वयेत् ॥ ९-५९-१७ (६३४९७)
अपि नो निर्जितं राज्यं न हरेत सुयोधनः ।
यस्त्रयोदशवर्षाणि गदया कृतनिश्रमः ।
चरत्यूर्ध्वं च तिर्यक्व भीमसेनिघांसया ॥ ९-५९-१८ (६३४९८)
एनं चेन्न महाबाहुरन्यायेन हनिष्यति ।
एष वः कौरवो राजा धार्तराष्ट्रो भविष्यति ॥ ९-५९-१९ (६३४९९)
सञ्जय उवाच। ९-५९-२०क्ष् (५२३३)
धनञ्जयस्तु श्रुत्वैतत्केशवस्य महात्मनः ।
प्रेक्षतो भीमसेनस्य सव्यमूरुमताडयत् ॥ ९-५९-२० (६३५००)
गृह्य संज्ञां ततो भीमो गदया व्यचरद्रणे ।
मण्डलानि विचित्राणि यमकानीतराणि च ॥ ९-५९-२१ (६३५०१)
दक्षिणं मण्डलं सव्यं गोमूत्रिकमथापि च ।
व्यचरत्पाण्डवो राजन्नरिं सम्मोहयन्निव ॥ ९-५९-२२ (६३५०२)
तथैव तव पुत्रोऽपि गदामार्गविशारदः ।
व्यचरल्लघु चित्रं च भीमसेनजिघांसया ॥ ९-५९-२३ (६३५०३)
आधुन्वन्तौ गदे घोरे चन्दनागरुरूषिते ।
वैरस्यान्तं परीप्सन्तौ रणे क्रुद्धाविवान्तकौ ॥ ९-५९-२४ (६३५०४)
अन्योन्यं तौ जिघांसन्तौ प्रवीरौ पुरुषर्षभौ ।
युयुधाते गरुत्मन्तौ यथा नागामिषैषिणौ ॥ ९-५९-२५ (६३५०५)
मण्डलानि बिचित्राणि चरतोर्नृपभीमयोः ।
गदासम्पातजास्तत्र प्रजज्ञुः पावकार्चिषः ॥ ९-५९-२६ (६३५०६)
समं प्रहरतोस्तत्र शूरयोर्बलिनोर्मृधे ।
क्षुब्धयोर्वायुना राजन्द्वयोरिव समुद्रयोः ॥ ९-५९-२७ (६३५०७)
तयोः प्रहरतोस्तुल्यं मत्तकुञ्जरयोरिव ।
गदानिर्घातसं ह्रादः प्रहाराणामजायत ॥ ९-५९-२८ (६३५०८)
तस्मिंस्तदा सम्प्रहारे दारुणे सङ्कुले भृशम् ।

उभावपि परिश्रान्तौ युध्यमानावरिन्दमौ ॥ ९-५९-२९ (६३५०९)
तौ मुहूर्तं समाश्वस्य पुनरेव परन्तप ।
अभ्यहारयतां क्रुद्धौ प्रगृह्य महती गदे ॥ ९-५९-३० (६३५१०)
तयोः समभवद्युद्धं घोररूपमसंवृतम् ।
गदानिपाते राजेन्द्र तक्षतोर्वै परस्परम् ॥ ९-५९-३१ (६३५११)
समरे प्रद्रुतौ तौ तु वृषभाक्षौ तरस्विनौ ।
अन्योन्यं जघ्नतुर्वीरौ पङ्कस्थौ महिषाविव ॥ ९-५९-३२ (६३५१२)
जर्झरीकृतसर्वाङ्गौ रुधिरेणाभिसंप्लुतौ ।
ददृशाते हिमवति पुष्पिताविव किंशुकौ ॥ ९-५९-३३ (६३५१३)
दुर्योधनस्तु पार्थेन विवरे सम्प्रदर्शिते ।
ईषदुत्स्मयमानस्तु सहसा प्रससार ह ॥ ९-५९-३४ (६३५१४)
तमभ्याशगतं प्राज्ञः क्षणे प्रेक्ष्य वृकोदरः ।
अवाक्षिपद्गदां तस्मिन्वेगेन महता बली ॥ ९-५९-३५ (६३५१५)
अवक्षेपं तु तं दृष्ट्वा पुत्रस्तव विशाम्पते ।
अपासर्पत्ततः स्थानात्सा मोघा न्यपतद्भुवि ॥ ९-५९-३६ (६३५१६)
मोक्षयित्वा प्रहारं तं सुतस्तव सुसम्भ्रमात् ।
भीमसेनं च गदया प्राहरत्कुरुसत्तम ॥ ९-५९-३७ (६३५१७)
तस्य विस्यन्दमानेन रुधिरेणामितौजसः ।
प्रहारगुरुपाताच्च मूर्छेव समजायत ॥ ९-५९-३८ (६३५१८)
तन्नावुध्यत पुत्रस्ते पीडितं पाण्डवं रणे ।
धारयामास भीमोऽपि शरीरमतिपीडितम् ॥ ९-५९-३९ (६३५१९)
अमन्यत स्थितं ह्येनं प्रहरिष्यन्तमाहवे ।
अतो न प्राहरत्तस्मै पुनरेव तवात्मजः ॥ ९-५९-४० (६३५२०)
ततो मुहूर्तनाश्वस्य दुर्योधनमुपस्थितम् ।
देगेनाभ्ययतद्राजन्गदामादाय पाण्डवः ॥ ९-५९-४१ (६३५२१)
तमापतन्तं सम्प्रेक्ष्य संरब्धगमितौजसम् ।
मोधमस्य प्रहारं तं चिकीर्षुर्भरतर्षभ ॥ ९-५९-४२ (६३५२२)
अवस्याने मतिं कृत्वा पुत्रन्तव महामनाः ।
इयेषोत्पतितुं राजञ्छलयिष्यन्वृकोदरम् ॥ ९-५९-४३ (६३५२३)
अबुध्यद्भीमसेनस्तु राज्ञस्तस्य चिकीर्षितम् ।
अचास्य सममिद्रुत्य समुत्पत्य च सिंहवत् ॥ ९-५९-४४ (६३५२४)
सत्या वञ्चवतो राजन्पुनरेवोत्पतिष्यतः ।
ऊरुभ्यां प्राहिणोद्राजन्गदां वेगेन पाण्डवः ॥ ९-५९-४५ (६३५२५)
सा वज्रनिष्पेषसमा प्रहिता भीमकर्मणा ।
ऊरू दुर्योधनस्याथ बभञ्ज प्रियदर्शनौ ॥ ९-५९-४६ (६३५२६)
स पपात नरव्याघ्रो वसुधामनुनादयन् ।

भग्नोरुर्भीमसेनेन पुत्रस्तव महीपते ॥ ९-५९-४७ (६३५२७)
ववुर्वाताः सनिर्घाताः पांसुवर्षं पपात च ।
चचाल पृथिवी चापि सवृक्षक्षुपपर्वता ॥ ९-५९-४८ (६३५२८)
तस्मिन्निपतिते वीरे पत्यौ सर्वमहीक्षिताम् ।
महास्वना पुनर्दीप्ता सनिर्घाता भयङ्करी ।
पपात चोल्का महती पतिते पृथिवीपतौ ॥ ९-५९-४९ (६३५२९)
तथा शोणितवर्षं च पांसुवर्षं च भारत ।
ववर्ष मघवांस्तत्र तव पुत्रे निपातिते ॥ ९-५९-५० (६३५३०)
यक्षाणां राक्षसानां च पिशाचानां तथैव च ।
अन्तरिक्षे महान्नादस्तत्र भारत शुश्रुवे ॥ ९-५९-५१ (६३५३१)
तेन शब्देन घोरेण मृगाणामथ पक्षिणाम् ।
जज्ञे घोरतरः शब्दो बहूनां सर्वतोदिशम् ॥ ९-५९-५२ (६३५३२)
ये तत्र वाजिनः शेषा गजाश्च मनुजैः सह ।
मुमुचुस्ते महानादं तव पुत्रे निपातिते ॥ ९-५९-५३ (६३५३३)
बेरीशङ्खमृदङ्गानामभवच्च स्वनो महान् ।
अन्तर्भूमिगतश्चैव तव पुत्रे निपातिते ॥ ९-५९-५४ (६३५३४)
श्बहुपादैर्बहुभुजैः कबन्धैर्घोरदर्शनैः ।
नृत्यद्भिर्भयदैर्व्याप्ता दिशस्तत्राभवन्नृप ॥ ९-५९-५५ (६३५३५)
ध्वजवन्तोऽस्त्रवन्तश्च शस्त्रवन्तस्तथैव च ।
प्राकम्पन्त ततो राजंस्तव पुत्रे निपातितेघ ॥ ९-५९-५६ (६३५३६)
ह्रदाः कूपाश्च रुधिरमुद्वमुर्नृपसत्तम ।
नद्यश्च सुमहावेगाः प्रतिस्रोतोवहाऽभवन् ॥ ९-५९-५७ (६३५३७)
पुल्लिङ्गा इव नार्यस्तु स्त्रीलिङ्गाः पुरुषाऽभवन् ।
दुर्योधने तदा राजन्पतिते तनये तव ॥ ९-५९-५८ (६३५३८)
दृष्ट्वा तानद्भुतोत्पातान्पाञ्चालाः पाण्डवैः सह ।
आविग्नमनसः सर्वे बभूवुर्भरतर्षभ ॥ ९-५९-५९ (६३५३९)
ययुर्देवा यथाकामं गन्धर्वाप्सरसस्तथा ।
कथयन्तोऽद्भुतं युद्धं सुतयोस्तव भारत ॥ ९-५९-६० (६३५४०)
तथैव सिद्धा राजेन्द्र तथा वातिकचारणाः ।
नरसिंहौ प्रशंसन्तौ विप्रजग्मुर्यथागतम् ॥ ॥ ९-५९-६१ (६३५४१)

इति श्रीमन्महाभारते शल्यपर्वणि गदायुद्धपर्वणि
एकोनषष्टितमोऽध्यायः ॥ ५९ ॥

Mahabharata - Shalya Parva - Chapter Footnotes

९-५९-१५ अरिशेषाणो पञ्चम्यर्थे षष्ठी ॥

९-५९-३४ सहसैवाभिसारित इति क छ पाठः ॥
९-५९-४५ धृत्या वञ्चयत इति क छ पाठः ॥
९-५९-४८ क्षुपः क्षुद्रवृक्षः ॥
९-५९-५९ एकोनषष्टितमोऽध्यायः ॥

---

शल्यपर्व-अध्यय०६०
॥ श्रीः ॥
९.६०. अध्यायः ६०

Mahabharata - Shalya Parva - Chapter Topics
भीमसेनेन दुर्योधनापनयानुस्मारणपूर्वकं वामपादेन तच्छिरस्ताडनम्
॥ १ ॥
युधिष्ठिरेण दुर्योधनसमाश्वासनम् ॥ २ ॥

Mahabharata - Shalya Parva - Chapter Text

९-६०-० (६३५४२)
सञ्जय उवाच। ९-६०-०क्ष् (५२३४)
तं पातितं ततो दृष्ट्वा महासालमिवोद्गतम् ।
प्रहृष्टमनसः सर्वे बभूवुस्तत्र पाण्डवाः ॥ ९-६०-१ (६३५४३)
उन्मत्तमिव मातङ्गं सिंहेन विनिपातितम् ।
ददृशुर्हृष्टरोमाणः सर्वे ते चापि सोमकाः ॥ ९-६०-२ (६३५४४)
ततो दुर्योधनं हत्वा भीमसेनः प्रतापवान् ।
पातितं कौरवेन्द्रं तमुपगम्येदमब्रवीत् ॥ ९-६०-३ (६३५४५)
गौर्गौरिति पुरा मन्द द्रौपदीमेकवाससम् ।
यत्सभायां हसन्नस्मांस्तदा वदसि दुर्मते ।
तस्यावहासस्य फलमद्य त्वं समवाप्नुहि ॥ ९-६०-४ (६३५४६)
एवमुक्त्वा स वामेन पदा मौलिमुपास्पृशत् ।
शिरश्च राजसिंहस्य पादेन समलोडयत् ॥ ९-६०-५ (६३५४७)
तथैव क्रोधसंरक्तो भीमः परबलार्दनः ।
पुनरेवाब्रवीद्वाक्यं यत्तच्छृणु नराधिप ॥ ९-६०-६ (६३५४८)
येऽस्मान्पुरा प्रनृत्यन्ति मूढा गौरिति गौरिति ।
तान्वयं प्रतिनृत्यामः पुनर्गौरिति गौरिति ॥ ९-६०-७ (६३५४९)
नास्माकं निकृतिर्वह्निर्नाक्षद्यूतं न वञ्चना ।
स्वबाहुबलमाश्रित्य प्रबाधामो वयं रिपून् ॥ ९-६०-८ (६३५५०)
सोऽवाप्य वैरस्य चिरस्य पारं

वृकोदरः प्राह शनैः प्रहस्य ।
युधिष्ठिरं केशवसृञ्जयांश्च
धनञ्जयं माद्रवतीसुतौ च ॥ ९-६०-९ (६३५५१)
रजस्वला द्रौपदीमानयन्ते
ये चाप्यकुर्वन्त सदस्यवस्त्राम्। ९-६०-१०च्तान्पश्यध्वं
पाण्डवैर्धार्तराष्ट्रान्
रणे हतांस्तपसा याज्ञसेन्याः ॥ ९-६०-१० (६३५५२)
ये नः पुरा षण्ढतिलानवोचन्
क्रूरा राज्ञो धृतराष्ट्रस्य पुत्राः ।
ते नो हताः सगणाः सानुबन्धाः
कामं स्वर्गं नरकं वा व्रजामः ॥ ९-६०-११ (६३५५३)
पुनश्च राज्ञः पतितस्य भूमौ
स तां गदां स्कन्धगतां प्रगृह्य ।
वामेन पादेन शिरः प्रमृद्य
दुर्योधनं नैकृतिकेत्यवोचत् ॥ ९-६०-१२ (६३५५४)
हृष्टेन राजन्कुरुपार्थिवस्य
क्षुद्रात्मना भीमसेनेन पादम् ।
दृष्ट्वा कृतं मूर्धनि नाभ्यनन्दन्
धर्मात्मानः सोमकानां प्रबर्हाः ॥ ९-६०-१३ (६३५५५)
तव पुत्रं तथा हत्वा कत्थमानं वृकोदरम् ।
नृत्यमानं च बहुशो धर्मराजोऽब्रवीदिदम् ॥ ९-६०-१४ (६३५५६)
गतोऽसि वैरस्यानृण्यं प्रतिज्ञा पूरिता त्वया ।
शुभेनाथाशुभेनैव कर्मणा विरमाधुना ॥ ९-६०-१५ (६३५५७)
मा शिरोऽस्य पदाऽमर्दीर्मा धर्मस्तेऽतिगो भवेत् ।
राजा ज्ञातिर्हतश्चायं नैतन्न्याय्यं तवानघ ॥ ९-६०-१६ (६३५५८)
एकादशचमूनाथं कुरूणामधिपं तथा ।
मास्प्राक्षीर्भीम पादेन राजानं ज्ञातिमेव च ॥ ९-६०-१७ (६३५५९)
हतबन्धुर्हतामात्यो भ्रष्टसैन्यो हतो मृधे ।
सर्वाकारेण शोच्योऽयं नावहास्योऽयमीश्वरः ॥ ९-६०-१८ (६३५६०)
विध्वस्तोऽयं हतामात्यो हतबन्धुर्हतात्मजः ।
उत्सन्नपिण्डो भ्राता च नैतन्न्याय्यं कृतं त्वया ॥ ९-६०-१९ (६३५६१)
धार्मिको भीमसेनोऽसावित्याहुस्त्वां पुरा जनाः ।
स कस्माद्भीमसेन त्वं राजानमधितिष्ठसि ॥ ९-६०-२० (६३५६२)
इत्युक्त्वा भीमसेनं तु साश्रुकण्ठो युधिष्ठिरः ।
उपसृत्याब्रवीद्दीनो दुर्योधनमरिन्दमम् ॥ ९-६०-२१ (६३५६३)
तात मन्युर्न ते कार्यो नात्मा शोच्यस्त्वया तथा ।

नूनं पूर्वकृतं कर्म सुघोरमनुभूयते ॥ ९-६०-२२ (६३५६४)
धात्रोपदिष्टं विषमं नूनं फलमसंस्कृतम् ।
यद्वयं त्वां जिघांसामस्त्वं चास्मान्कुरुसत्तम ॥ ९-६०-२३ (६३५६५)
आत्मनो ह्यपराधेन महद्व्यसनमीदृशम् ।
प्राप्तवानसि यल्लोभान्मदाद्बाल्याच्च भारत ॥ ९-६०-२४ (६३५६६)
घातयित्वा वयस्यांश्च भ्रातॄनथ पितॄंस्तथा ।
पुत्रान्पौत्रांस्तथा चान्यांस्ततोसि निधनं गतः ॥ ९-६०-२५ (६३५६७)
तवापराधादस्माभिर्भ्रातरस्ते निपातिताः ।
निहता ज्ञातयश्चापि दिष्टं मन्ये दुरत्ययम् ॥ ९-६०-२६ (६३५६८)
श्आत्मा न शोचनीयस्ते श्लाघ्यो मृत्युस्तवानघ ।
वयमेवाधुना शोच्याः सर्वावस्थासु कौरव ॥ ९-६०-२७ (६३५६९)
कृपणं वर्तयिष्यामस्तैर्हीना बन्धुभिः प्रियैः ।
भ्रातॄणां चैव पुत्राणां तथा वै शोकविह्वलाः ॥ ९-६०-२८ (६३५७०)
कथं द्रक्ष्यामि विधवा वधूः शोकपरिप्लुताः ।
त्वमेकः सुस्थितो राजन्स्वर्गे ते निलयो ध्रुवः ।
वयं नरकसंज्ञं वै दुःखं प्राप्स्याम दारुणम् ॥ ९-६०-२९ (६३५७१)
स्नुषाश्च प्रस्नुषाश्चैव धृतराष्ट्रस्य विह्वलाः ।
गर्हयिष्यन्ति नो नूनं विधवाः शोककर्शिताः ॥ ९-६०-३० (६३५७२)
सञ्जय उवाच। ९-६०-३१क्ष् (५२३५)
एवमुक्त्वा सुदुःखार्तो निशश्वास स पार्थिवः ।
विललाप चिरं चापि धर्मपुत्रो युधिष्ठिरः ॥ ॥ ९-६०-३१ (६३५७३)

इति श्रीमन्महाभारते शल्यपर्वणि गदायुद्धपर्वणि
षष्टितमोऽध्यायः ॥ ६० ॥

---

शल्यपर्व-अध्यय०६१
॥ श्रीः ॥
९.६१. अध्यायः ६१

Mahabharata - Shalya Parva - Chapter Topics
भीमे अपनयबुद्ध्या क्रुद्धेन बलरामेण लाङ्गलमुद्यम्य तम्प्रत्यभिगमनम् ॥ १ ॥
कृष्णेन तत्सान्त्वनं ततो बलस्य द्वारकागमनम् ॥ २ ॥
युधिष्ठिरस्य कृष्णेन भीमेन च संलापः ॥ ३ ॥

Mahabharata - Shalya Parva - Chapter Text

९-६१-० (६३५७४)
धृतराष्ट्रा उवाच। ९-६१-०क्ष् (५२३६)
अधर्मेण हतं दृष्ट्वा राजानं माधवोत्तमः ।
किमब्रवीत्तदा सूत बलदेवो महाबलः ॥ ९-६१-१ (६३५७५)
गदायुद्धविशेषज्ञो गदायुद्धविशारदः ।
कृतवान्रौहिणेयो यत्तन्ममाचक्ष्व सञ्जय ॥ ९-६१-२ (६३५७६)
सञ्जय उवाच। ९-६१-३क्ष् (५२३७)
शिरस्यभिहतं दृष्ट्वा भीमसेनेन ते सुतम् ।
रामः प्रहरतां श्रेष्ठश्चुक्रोध बलवद्बली ॥ ९-६१-३ (६३५७७)
ततो मध्ये नरेन्द्राणामूर्ध्वबाहुर्हलायुधः ।
कुर्वन्नार्तस्वरं घोरं धिग्धिग्भीमेत्युवाच ह ॥ ९-६१-४ (६३५७८)
अहो धिग्यदधो नाभेः प्रहृतं धर्मविग्रहे ।
नैतद्दृष्टं गदायुद्धे कृतवान्यद्वृकोदरः ॥ ९-६१-५ (६३५७९)
अधो नाभ्या न हन्तव्यमिति शास्त्रस्य निश्चयः ।
अयं तु शास्त्रमुत्सृज्य स्वच्छन्दात्सम्प्रवर्तते ॥ ९-६१-६ (६३५८०)
तस्य तत्तद्ब्रुवाणस्य रोषः समभवन्महान् ।
श्ततो राजानमालोक्य रोषसंरक्तलोचनः ।
बलदेवो महाराज ततो वचनमब्रवीत् ॥ ९-६१-७ (६३५८१)
न चैष पतितः कृष्ण केवलं मत्समोऽसमः ।
आश्रितस्य तु दौर्बल्यादाश्रयः परिभर्त्स्यते ॥ ९-६१-८ (६३५८२)
ततो लाङ्गलमुद्यम्य भीममभ्यद्रवद्बली ॥ ९-६१-९ (६३५८३)
तस्योर्ध्वबाहोः सदृशं रूपमासीन्महात्मनः ।
बहुधातुविचित्रस्य श्वेतस्येव महागिरेः ॥ ९-६१-१० (६३५८४)
ग्भ्रातृभिः सहितो वीरैः सार्जुनैरस्त्रकोविदैः ।
न विव्यथे महाराज दृष्ट्वा हलधरं बली'॥ ९-६१-११ (६३५८५)
अथ रामं निजग्राह केशवो विनयान्वितः ।
बाहुभ्यां पीनवृत्ताभ्यां प्रयत्नाद्बलवद्बली ॥ ९-६१-१२ (६३५८६)
सितासितौ यदुवरौ शुशुभातेऽधिकं तदा ।
ग्सङ्गताविव राजेन्द्र कैलासाञ्जनपर्वतौ ।
नभोगतौ यथा राजंश्चन्द्रसूर्यौ दिनक्षये ॥ ९-६१-१३ (६३५८७)
उवाच चैनं संरब्धं शमयन्निव केशवः ॥ ९-६१-१४ (६३५८८)
आत्मवृद्धिर्मित्रवृद्धिर्मित्रमित्रोदयस्तथा ।
विपरीतं द्विषत्स्वेतत्षड्विधा वृद्धिरात्मनः ॥ ९-६१-१५ (६३५८९)
आत्मन्यपि च मित्रे च विपरीतं यदा भवेत् ।
तदा विद्यान्मनोग्लानिमाशु शान्तिकरो भवेत् ॥ ९-६१-१६ (६३५९०)

अस्माकं सहजं मित्रं पाण्डवाः शुद्धपौरुषाः ।
स्वकाः पितृष्वसुः पुत्रास्ते परैर्निकृता भृशम् ॥९-६१-१७ (६३५९१)
प्रतिज्ञापालनं धर्मः क्षत्रियस्येति वेत्थ तत् ॥ ९-६१-१८ (६३५९२)
सुयोधनस्य गदया भक्ताऽस्म्यूरू महाहवे ।
इति पूर्वं प्रतिज्ञातं भीमेन हि सभातले ॥९-६१-१९ (६३५९३)
मैत्रेयेणाभिशप्तश्च पूर्वमेव महार्षिणा ।
ऊरू ते भेत्स्यते भीमो गदयेति परन्तप ।
अतो दोषं न पश्यामि मा क्रुध्यस्व प्रलम्बहन् ॥ ९-६१-२० (६३५९४)
यौनः स्वैः सुखहार्दैश्च सम्बन्धः सह पाण्डवैः ।
तेषां वृद्ध्या हि वृद्धिर्नो मा क्रुधः पुरुषर्षभ ॥९-६१-२१ (६३५९५)
वासुदेववचः श्रुत्वा सीरभृत्प्राह धर्मवित् ॥ ९-६१-२२ (६३५९६)
धर्मश्च धारितः सद्भिः स च द्वाभ्यां नियच्छति ।
अर्थश्चाप्यतिलुब्धस्य कामश्चातिप्रसङ्गिणः ॥९-६१-२३ (६३५९७)
धर्मार्थौ धर्मकामौ च कामार्थौ चाप्यपीडयन् ।
धर्मार्थकामान्योऽभ्येति सोत्यन्तं सुखमश्नुते ॥९-६१-२४ (६३५९८)
तदिदं व्याकुलं सर्वं कृतं धर्मस्य पीडनात् ।
भीमसेनेन गोविन्द कामं त्वं तु यथाऽऽत्थ माम् ॥९-६१-२५ (६३५९९)
कृष्ण उवाच।९-६१-२६क्ष् (५२३८)
अरोषणो हि धर्मात्मा सततं धर्मवत्सलः ।
भवान्प्रख्यायते लोके तस्मात्संशाम्य मा क्रुधः ॥९-६१-२६ (६३६००)
प्राप्तं कलियुगं विद्धि प्रतिज्ञां पाण्डवस्य च ।
आनृण्यं यातु वैरस्य प्रतिज्ञायाश्च पाण्डवः ।
गततः पुरुषशार्दूलो हत्वा नैकृतिकं रणे ॥ ९-६१-२७ (६३६०१)
निकृत्या निकृतिप्रज्ञं यो हन्याद्वैरिणं रणे ।
अधर्मो विद्यते नात्र यद्भीमो हतवान्रिपुम् ॥९-६१-२८ (६३६०२)
युध्यमानं रणे वीरं कुरुवृष्णियशस्करम् ।
अनेन कर्णः सन्दिष्टः पृष्ठतो धनुरच्छिनत् ॥९-६१-२९ (६३६०३)
ततः सञ्छिन्नधन्वानं विरथं पौरुषे स्थितम् ।
व्यायुधीकृत्य बहवः सौभद्रमपलायिनम् ॥९-६१-३० (६३६०४)
जन्मप्रभृति लुब्धश्च पापात्मा चैष दुर्मतिः ।
निहतो भीमसेनेन दुर्बुद्धिः कुलपांसनः ॥९-६१-३१ (६३६०५)
प्रतिज्ञां भीमसेनेन त्रयोदशसमार्जिताम् ।
किमर्थं नाभिजानाति युध्यमानो हि शत्रुभिः ॥९-६१-३२ (६३६०६)
ऊर्ध्वमाक्रम्य वेगेन जिघांसन्तं वृकोदरः ।
बिभेद गदया चोरू न स्थाने न च मण्डले'॥९-६१-३३ (६३६०७)
सञ्जय उवाच।९-६१-३४क्ष् (५२३९)

धर्मच्छलमिमं श्रुत्वा केशवात्स विशाम्पते ।
नैव प्रीतमाना रामो वचनं प्राह संसदि ॥ ९-६१-३४ (६३६०८)
हत्वाऽधर्मेण राजानं धर्मात्मानं सुयोधनम् ।
जिह्मयोधीति लोकेऽस्मिन्ख्यातिं यास्यति पाण्डवः ॥ ९-६१-३५ (६३६०९)
दुर्योधनोऽपि धर्मात्मा गतिं यास्यति शाश्वतीम् ।
ऋजुयोधी हतो राजा धर्मराष्ट्रो नराधिपः ॥ ९-६१-३६ (६३६१०)
युद्धदीक्षां प्रविश्याजौ रणयज्ञं वितत्य च ।
हुत्वाऽऽत्मानममित्राग्नौ प्राप चावभृथं यशः ।
ग्स्वर्गं गन्ता महाराजः ससुहृज्ज्ञातिबान्धवः'॥ ९-६१-३७ (६३६११)
इत्युक्त्वा रथमास्थाय रौहिणेयः प्रतापवान् ।
श्वेताभ्रशिखराकारः प्रययौ द्वारकां प्रति ॥ ९-६१-३८ (६३६१२)
पाञ्चालाश्च सवार्ष्णेयाः पाण्डवाश्च विशाम्पते ।
रामे द्वारवतीं याते नातिप्रमनसोऽभवन् ॥ ९-६१-३९ (६३६१३)
ततो युधिष्ठिरं दीनं चिन्तापरमधोमुखम् ।
शोकोपहतसङ्कल्पं वासुदेवोऽब्रवीदिदम् ॥ ९-६१-४० (६३६१४)
वासुदेव उवाच। ९-६१-४१क्ष् (५२४०)
धर्मराज किमर्थं त्वमधर्ममनुमन्यसे ।
हतबन्धोर्यदेतस्य पतितस्य विचेतसः ॥ ९-६१-४१ (६३६१५)
दुर्योधनस्य भीमेन मृद्यमानं शिरः पदा ।
उपप्रेक्षसि कस्मात्त्वं धर्मज्ञः सन्नराधिप ॥ ९-६१-४२ (६३६१६)
युधिष्ठिर उवाच। ९-६१-४३क्ष् (५२४१)
न ममैतत्प्रियं कृष्ण यद्राजानं वृकोदरः ।
पदा मूर्ध्न्यस्पृशत्क्रोधान्न च हृष्ये कुलक्षये ॥ ९-६१-४३ (६३६१७)
निकृत्या निकृता नित्यं धृतराष्ट्रसुतैर्वयम् ।
बहूनि परुषाण्युक्त्वा वनं प्रस्थापिता वयम् ॥ ९-६१-४४ (६३६१८)
भीमसेनस्य तद्दुःखमतीव हृदि वर्तते ।
इति सञ्चिन्त्य वार्ष्णेय मयैतत्समुपेक्षितम् ॥ ९-६१-४५ (६३६१९)
तस्माद्धत्वाऽकृतप्रज्ञं लुब्धं कामवशानुगम् ।
लभतां पाण्डवः कामं धर्मोऽधर्मोऽथवा कृतः ॥ ९-६१-४६ (६३६२०)
सञ्जय उवाच। ९-६१-४७क्ष् (५२४२)
इत्युक्तवति कौन्तेये धर्मराजे युधिष्ठिरे ।
वासुदेवो महाबाहुर्युधिष्ठिरमभाषत ।
काममस्त्वेतदिति वै कृच्छ्राद्यदुकुलोद्वहः ॥ ९-६१-४७ (६३६२१)
इत्युक्त्वा वासुदेवोऽपि वायुपुत्रप्रियेप्सया ।
अन्वमोदत तत्सर्वं यद्भीमेन कृतं युधि ॥ ९-६१-४८ (६३६२२)
ग्अर्जुनोऽपि महाबाहुरप्रीतेनान्तरात्मना ।

नोवाच किञ्चिद्वचनं भ्रातरं साध्वसाधु वा'॥ ९-६१-४९ (६३६२३)
भीमसेनोऽपि हत्वाऽऽजौ तव पुत्रममर्षणः ।
अभिवाद्याग्रतः स्थित्वा सम्प्रहृष्टः कृताञ्जलिः ॥ ९-६१-५० (६३६२४)
प्रोवाच सुमहातेजा धर्मराजं युधिष्ठिरम् ।
हर्षादुत्फुल्लनयनो जितकाशी विशाम्पते ॥ ९-६१-५१ (६३६२५)
तवाद्य पृथिवी सर्वा क्षेमा निहतकण्टका ।
तां प्रशाधि महाराज स्वधर्ममनुपालय ॥ ९-६१-५२ (६३६२६)
यस्तु कर्ताऽस्य वैरस्य निकृत्या निकृतिप्रियः ।
सोऽयं विनिहतः शेते पृथिव्यं पृथिवीपते ॥ ९-६१-५३ (६३६२७)
दुःशासनप्रभृतयः सर्वे ते चोग्रवादिनः ।
राधेयः शकुनिश्चैव हताश्च तव शत्रवः ॥ ९-६१-५४ (६३६२८)
सेयं रत्नसमाकीर्णा मही सवनपर्वता ।
उपावृत्ता महाराज त्वामद्य निहतद्विषम् ॥ ९-६१-५५ (६३६२९)
युधिष्ठिर उवाच। ९-६१-५६क्ष् (५२४३)
गतो वैरस्य निधनं हतो राजा सुयोधनः ।
कृष्णस्य मतमास्थाय विजितेयं वसुन्धरा ॥ ९-६१-५६ (६३६३०)
दिष्ट्या गतस्त्वमानृण्यं मातुः कोपस्य चोभयोः ।
दिष्ट्या जयसि दुर्धर्ष दिष्ट्या शत्रुर्निपातितः ॥ ॥ ९-६१-५७ (६३६३१)

इति श्रीमन्महाभारते शल्यपर्वणि गदायुद्धपर्वणि
एकषष्टितमोऽध्यायः ॥ ६१ ॥

Mahabharata - Shalya Parva - Chapter Footnotes

९-६१-१५ आत्मवृद्धिः शत्रुक्षयः स्वमित्रस्य वृद्धिः शत्रुमित्रस्य
क्षयः स्वमित्रमित्रस्य वृद्धिः शत्रुमित्रमित्रस्य क्षयः एवं
षड्विधा आत्मनो वृद्धिः ॥
९-६१-१६ यदि चोदात्मनो ग्लानिस्तदा शान्तिकर इति क पाठः ॥
९-६१-१९ भक्ता भङ्क्ष्ये ॥
९-६१-२१ यौनः योनिनिमित्तः सम्बन्धः । अस्माकं पितामहः पाण्डवानां
मातामहश्चैक इति यौनसम्बन्धः ॥
९-६१-२२ सीरभृत् रामः ॥
९-६१-२३ धर्मइति । नियच्छति नियममेति अर्थकामाभ्यां धर्मः
सङ्कोचमेतीत्सर्थः ॥
९-६१-२४ धर्मार्थौ कामे नापीडयन् धर्मकावर्थेनापीडयन् कामार्थौ
धर्मेण चापीडयन्नित्यर्थः ॥
९-६१-२५ कामं यथेष्टं त्वं मां प्रति उक्तवानसि नतु धर्म्यं ॥

९-६१-२७ कलियुगारम्भे एतावत्पापं नातीव खेदावहमिति भावः ॥
९-६१-४१ अधर्ममनुपश्यसीति क छ पाठः ॥
९-६१-४६ धर्मोऽधर्मे च वा कृते इति झ पाठः ॥
९-६१-६२ एकषष्टितमोऽध्यायः ॥

---

शल्यपर्व-अध्यय०६२
॥ श्रीः ॥
९.६२. अध्यायः ६२

Mahabharata - Shalya Parva - Chapter Topics
पाञ्चालादिभिर्भीमस्तुतिः ॥१ ॥
कृष्णादुर्योधनयोः परस्परगर्हणम् ॥२ ॥
दुर्योधनेनात्मस्तुतौ तन्मूर्ध्नि गन्धर्वैः पुष्पवर्षणम् ॥३ ॥
भीष्मादिमरणेन दुःखितानां पाण्डवानां कृष्णेन समाश्वासनम् ॥४ ॥

Mahabharata - Shalya Parva - Chapter Text

९-६२-० (६३६३२)
धृतराष्ट्र उवाच। ९-६२-०क्ष् (५२४४)
हतं दुर्योधनं दृष्ट्वा भीमसेनेन संयुगे ।
पाण्डवाः सृञ्जयाश्चैव किमकुर्वत सञ्जय ॥९-६२-१ (६३६३३)
सञ्जय उवाच। ९-६२-२क्ष् (५२४५)
हतं दुर्योधनं दृष्ट्वा भीमसेनेन संयुगे ।
सिंहेनेव महाराज मत्तं वनगजं यथा ॥९-६२-२ (६३६३४)
प्रहृष्टमनसस्तत्र कृष्णेन सह पाण्डवाः ।
पाञ्चालाः सृञ्जयाश्चैव निहते कुरुनन्दने ।
आविध्यन्नुत्तरीयाणि सिंहनादांश्च नेदिरे ॥ ९-६२-३ (६३६३५)
नैतान्हर्षसमाविष्टानियं सेहे वसुन्धरा ॥ ९-६२-४ (६३६३६)
धनूंष्येके व्याक्षिपन्त ज्याश्चाप्यन्ये तथाऽक्षिपन् ।
दध्मुरन्ये महाशङ्खानन्ये जघ्नुश्च दुन्दुभीन् ॥९-६२-५ (६३६३७)
चिक्रीडुश्च तथैवान्ये जहसुश्च तवाहिताः ।
अब्रुवंश्चासकृद्वीरा भीमसेनमिदं वचः ॥९-६२-६ (६३६३८)
दुष्करं भवता कर्म रणेऽद्य सुमहत्कृतम् ।
कौरवेयं रणे हत्वा गदयाऽतिकृतश्रमम् ॥९-६२-७ (६३६३९)
इन्द्रेणेव हि वृत्रस्य वधं परमसंयुगे ।
त्वया कृतममन्यन्त शत्रोर्वधमिमं जनाः ॥९-६२-८ (६३६४०)

चरन्तं विविधान्मार्गान्मण्डलानि च सर्वशः ।
दुर्योधनमिमं शूरं कोऽन्यो हन्याद्वृकोदरात् ॥ ९-६२-९ (६३६४१)
वैरस्य च गतः पारं त्वमिहान्यैः सुदुर्गमम् ।
अशक्यमेतदन्येन सम्पादयितुमीदृशम् ॥ ९-६२-१० (६३६४२)
कुञ्जरेणेव मत्तेन वीरसङ्ग्राममूर्धनि ।
दुर्योधपशिरो दिष्ट्या पादेन मृदितं त्वया ॥ ९-६२-११ (६३६४३)
सिंहेन महिषस्येव कृत्वा सङ्गरमुत्तमम् ।
दुःशासनस्य रुधिरं दिष्ट्या पीतं त्वयाऽनघ ॥ ९-६२-१२ (६३६४४)
ये विप्रकुर्वन्राजानं धर्मात्मानं युधिष्ठिरम् ।
मूर्ध्नि तेषां कृतः पादो दिष्ट्या ते स्वेन कर्मणा ॥ ९-६२-१३ (६३६४५)
अमित्राणामधिष्ठानाद्वधाद्दुर्योधनस्य च ।
भीम दिष्ट्या पृथिव्यां ते प्रथितं सुमहद्यशः ॥ ९-६२-१४ (६३६४६)
एवं नूनं हते वृत्रे शक्रं नन्दन्ति बन्दिनः ।
तथा त्वां निहतामित्रं वयं नन्दाम भारत ॥ ९-६२-१५ (६३६४७)
दुर्योधनवधे यानि रोमाणि हृषितानि नः ।
अद्यापि न विकृष्यन्ते तानि तद्विद्धि भारत ।
इत्यब्रुन्भीमसेनं वातिकास्तत्र सङ्गताः ॥ ९-६२-१६ (६३६४८)
तान्हृष्टान्पुरुषव्याघ्रान्पाञ्चालान्पाण्डवैः सह ।
ब्रुवतोऽसदृशं तत्र प्रोवाच मधुसूदनः ॥ ९-६२-१७ (६३६४९)
न न्याय्यं निहतं शत्रुं भूयो हन्तुं नराधिपाः ।
असकृद्वाग्भिरुग्राभिर्निहतो ह्येष मन्दधीः ॥ ९-६२-१८ (६३६५०)
तदैवैष हतः पापो यदैव निरपत्रपः ।
लुब्धः पापसहायश्च सुहृदां शासनातिगः ॥ ९-६२-१९ (६३६५१)
बहुशो विदुरद्रोणकृपगाङ्गेयसृञ्जयैः ।
पाण्डुभ्यः प्रार्थ्यमानोऽपि पित्र्यमंशं न दत्तवान् ॥ ९-६२-२० (६३६५२)
नैव तेभ्योऽद्य मित्रं वा शत्रुर्वा पुरुषाधमः ।
किमनेन वितुन्नेन वाग्भिः काष्ठसधर्मणा ॥ ९-६२-२१ (६३६५३)
रथेष्वारोहत क्षिप्रं गच्छामो वसुधाधिपाः ।
दिष्ट्या हतोऽयं पापात्मा सामात्यज्ञातिबान्धवः ॥ ९-६२-२२ (६३६५४)
इति श्रुत्वा त्वधिक्षेपं कृष्णाद्दुर्योधनो नृपः ।
अमर्षवशमापन्न उदतिष्ठद्विशाम्पते ॥ ९-६२-२३ (६३६५५)
स्फिग्देशेनोपविष्टः स दोर्भ्यां विष्टभ्य मेदिनीम् ।
दृष्टिं भ्रूसङ्कटां कृत्वा वासुदेवे न्यपातयत् ॥ ९-६२-२४ (६३६५६)
अर्धोन्नतशरीरस्य रूपमासीन्नृपस्य तु ।
क्रुद्धस्याशीविषस्येव च्छिन्नपुच्छस्य भोगिनः ॥ ९-६२-२५ (६३६५७)
प्राणान्तकरिणीं घोरां वेदनामप्यचिन्तयन् ।

दुर्योधनो वासुदेवं वाग्भिरुग्राभिरार्दयत् ॥ ९-६२-२६ (६३६५८)
कंसदासस्य दायाद न ते लज्जाऽस्त्यनेन वै ।
अधर्मेण गदायुद्धे यदहं विनिपातितः ।
ऊरू भिन्धीति भीमस्य स्मृतिं मिथ्याप्रयच्छता ॥ ९-६२-२७ (६३६५९)
किं न विज्ञातमेतन्मे यदर्जुनमवोचथाः ।
घातयित्वा महीपालानृजुयुद्धान्सहस्रशः ।
जिह्मैरुपायैर्बहुभिर्न ते लज्जा न ते घृणा ॥ ९-६२-२८ (६३६६०)
अहन्यहनि शूराणां कुर्वाणः कदनं महत् ।
शिखण्डिनं पुरस्कृत्य घातितस्ते पितामहः ॥ ९-६२-२९ (६३६६१)
अश्वत्थाम्नः सनामानं हत्वा नागं सुदुर्मते ।
आचार्यो न्यासितः शस्त्रं किं तन्न विदितं मया ॥ ९-६२-३० (६३६६२)
स चानेन नृशंसेन धृष्टद्युम्नेन वीर्यवान् ।
पात्यमानस्त्वया दृष्टो न चैनं त्वमवारयः ॥ ९-६२-३१ (६३६६३)
वधार्थं पाण्डुपुत्रस्य याचितां शक्तिमेव च ।
घटोत्कचे व्यंसयतः कस्त्वत्तः पापकृत्तमः ॥ ९-६२-३२ (६३६६४)
छिन्नहस्तः प्रायगतस्तथा भूरिश्रवा बली ।
त्वयाऽभिसृष्टेन हतः शैनेयेन दुरात्मना ॥ ९-६२-३३ (६३६६५)
कुर्वाणश्चोत्तमं कर्म कर्णः पार्थजिगीषया ।
व्यंसनेनाश्वसेनस्य पन्नगेन्द्रस्य वै पुनः ॥ ९-६२-३४ (६३६६६)
पुनश्च पतिते चक्रे व्यसनार्तः पराजितः ।
पापितः समरे कर्णश्चक्रव्याग्रोऽग्रणीर्नृणाम् ॥ ९-६२-३५ (६३६६७)
यदि मां चापि कर्णं च भीष्मद्रोणौ च संयुगे ।
ऋजुना प्रतियुध्येथा न ते स्याद्विजयो ध्रुवम् ॥ ९-६२-३६ (६३६६८)
त्वया पुनरनार्येण जिह्ममार्गेण पार्थिवाः ।
स्वधर्ममनुतिष्ठन्तो वयं चान्ये च घातिताः ॥ ९-६२-३७ (६३६६९)
ग्त्वया मायाविना कृष्ण मायां कर्मप्रमोषिणीम् ।
कृत्वा हतः सिन्धुपतिः किं तन्न विदितं मम'॥ ९-६२-३८ (६३६७०)
वासुदेव उवाच। ९-६२-३९क्ष् (५२४६)
हतस्त्वमसि गान्धारे सभ्रातृसुतबान्धवः ।
सगणः ससुहृच्चैव पापं मार्गमनुष्ठितः ॥ ९-६२-३९ (६३६७१)
तवैव दुष्कृतैर्वीरौ भीष्मद्रोणौ निपातितौ ।
कर्णश्च निहतः सङ्ख्ये तव शीलानुवर्तकः ॥ ९-६२-४० (६३६७२)
याच्यमानं मया मूढ पित्र्यमंशं न दित्ससि ।
पाण्डवेभ्यः स्वराज्यं च लोभाच्छकुनिनिश्चयात् ॥ ९-६२-४१ (६३६७३)
विषं ते भीमसेनाय दत्तं सर्वे च पाण्डवाः ।
प्रदीपिता जतुगृहे मात्रा सह सुदुर्मते ॥ ९-६२-४२ (६३६७४)

सभायां याज्ञसेनी च कृष्टा द्यूते रजस्वला ।
तदैव तावद्दुष्टात्मन्वध्यस्त्वं निरपत्रप ॥ ९-६२-४३ (६३६७५)
अनक्षज्ञं च धर्मज्ञं सौबलेनाक्षवेदिना ।
निकृत्या यत्पराजैषीस्तस्मादसि हतो रणे ॥ ९-६२-४४ (६३६७६)
जयद्रथेन पापेन यत्कृष्णा क्लेशिता वने ।
यातेषु मृगयां चैव तृणबिन्दोरथाश्रमम् ॥ ९-६२-४५ (६३६७७)
अभिमन्युश्च यद्बाल एको बहुभिराहवे ।
त्वद्दोषैर्निहतः पाप तस्मादसि हतो रणे ॥ ९-६२-४६ (६३६७८)
ग्कुर्वाणं कर्म समरे पाण्डवानर्थकाङ्क्षिणम् ।
यच्छिखण्ड्यवधीद्भीष्मं मित्रार्थे न व्यतिक्रमः ॥ ९-६२-४७ (६३६७९)
स्वधर्मं पृष्ठतः कृत्वा आचार्यस्त्वत्प्रियेप्सया ।
पार्षतेन हतः सङ्ख्ये वर्तमानोऽसतां पथि ॥ ९-६२-४८ (६३६८०)
प्रतिज्ञामात्मनः सत्यां चिकीर्षन्समरे निपुम् ।
हतवान्सात्वतो विद्वान्सौमदत्तिं महारथम् ॥ ९-६२-४९ (६३६८१)
अर्जुनः समरे राजन्युध्यमानः कदाचन ।
निन्दितं पुरुषव्याघ्रः करोति न कथञ्चन ॥ ९-६२-५० (६३६८२)
लब्ध्वाऽपि बहुधा छिद्रं वीरवृत्तमनुस्मरन् ।
निजघान रणे कर्णं मैवं वोचः सुदुर्मते ॥ ९-६२-५१ (६३६८३)
देवानां मतमाज्ञाय तेषां प्रियहितेप्सया ।
अर्जुनस्य महानागं मया व्यंसितमस्त्रजम् ॥ ९-६२-५२ (६३६८४)
त्वं च भीष्मश्च कर्णश्च द्रोणो द्रौणायनिस्तथा ।
विराटनगरे तस्य ह्यानृशंस्येन जीविताः ॥ ९-६२-५३ (६३६८५)
स्मर पार्थस्य विक्रान्तं गन्धर्वेषु कृतं तथा ।
अधर्मं नात्र गान्धारे पाण्डवैर्यत्कृतं त्वयि ॥ ९-६२-५४ (६३६८६)
स्वबाहुबलमास्थाय स्वधर्मेण परन्तपाः ।
जितवन्तो रणे वीराः पापोसि निधनं गतः'॥ ९-६२-५५ (६३६८७)
श्यान्यकार्याणि चास्माकं कृतानिति प्रभाषसे ।
वैगुण्येन तवात्यर्थं सर्वं हि तदनुष्ठितम् ॥ ९-६२-५६ (६३६८८)
बृहस्पतेरुशनसो नोपदेशः श्रुतस्त्वया ।
वृद्धा नोपासिताश्चैव हितं वाक्यं न ते श्रुतभ् ॥ ९-६२-५७ (६३६८९)
लोभेनातिबलेन त्वं तृष्णया च वशीकृतः ।
कृतवानस्यकार्याणि विपाकस्तस्य भुज्यताम् ॥- ९-६२-५८ (६३६९०)
दुर्योधन उवाच। ९-६२-५९क्ष् (५२४७)
अधीतं विधिवद्दत्तं भूः प्रभुक्ता ससागरा ।
मूर्ध्नि स्थिममित्राणां को नु स्वन्ततरो मया ॥ ९-६२-५९ (६३६९१)
यदिष्टं क्षत्रबन्धूनां स्वधर्ममनुपश्यताम् ।

तदिदं निधनं प्राप्तं को नु स्वन्ततरो मया ॥ ९-६२-६० (६३६९२)
देवार्हा मानुषा भोगाः प्राप्ता असुलभा नृपैः ।
ऐश्वर्यं चोत्तमं प्राप्तं को नु स्वन्ततरो मया ॥ ९-६२-६१ (६३६९३)
ससुहृत्सानुबन्धस्च स्वर्गं गन्ताऽहमच्युत ।
यूयं गर्हितसङ्कल्पाः शोचन्तो वर्तयिष्यथ ॥ ९-६२-६२ (६३६९४)
ग्न मे विषादो भीमेन पादेन शिर आहतम् ।
काका वा कङ्कगृध्रा वा निधास्यन्ति पदं क्षणात्'॥ ९-६२-६३ (६३६९५)
सञ्जय उवाच। ९-६२-६४क्ष् (५२४८)
अस्य वाक्यस्य निधने कुरुराजस्य धीमतः ।
अपतत्सुमहद्वर्षं पुष्पाणां पुण्यगन्धिनाम् ॥ ९-६२-६४ (६३६९६)
अवादयन्त गन्धर्वा वादित्रं सुमनोहरम् ॥ ९-६२-६५ (६३६९७)
जगुश्चाप्सरसो राज्ञो यशः सम्बद्धमेव च ।
सिद्धाश्च मुमुचुर्वाचः साधुसाध्विति पार्थिव ॥ ९-६२-६६ (६३६९८)
ववौ च सुरभिर्वायुः पुण्यगन्धो मृदुःसुखः ।
व्यराजंश्च दिशः सर्वा नभो वैदूर्यसन्निभम् ॥ ९-६२-६७ (६३६९९)
अत्यद्भुतानि ते दृष्ट्वा वासुदेवपुरोगमाः ।
दुर्योधनस्य पूजां तु दृष्ट्वा व्रीडामुपागमन् ॥ ९-६२-६८ (६३७००)
हतांश्चाधर्मतः श्रुत्वा शोकार्ताः शुशुचुर्हि ते ।
भीष्मं द्रोणं तथा कर्णं भूरिश्रवसमेव च ॥ ९-६२-६९ (६३७०१)
तांस्तु चिन्तापरान्दृष्ट्वा पाण्डवान्दीनचेतसः ।
प्रोवाचेदं वचः कृष्णो मेघदुन्दुभिनिस्वनः ॥ ९-६२-७० (६३७०२)
नैष शक्योऽतिशीघ्रास्त्रस्ते च सर्वे महारथाः ।
ऋजुयुद्धेन विक्रान्ता हन्तुं युष्माभिराहवे ॥ ९-६२-७१ (६३७०३)
उपायान्निहता ह्येते मया तस्मान्नराधिपाः ।
अन्यथा पाण्डवेयानां नाभविष्यज्जयः क्वचित् ॥ ९-६२-७२ (६३७०४)
ते हि सर्वे महेष्वासाश्चत्वारोऽतिरथा मुवि ।
अशक्या धर्मतो हन्तुं लोकपालैरपि स्वयम् ॥ ९-६२-७३ (६३७०५)
तथैवायं गदापाणिर्धार्तराष्ट्रो गतश्रमः ।
अशक्यो धर्मतो हन्तुं कालेनापि दि दण्डिना ॥ ९-६२-७४ (६३७०६)
नैतन्मनसि कर्तव्यं यदयं निहतो नृपः ।
मिथ्याचर्याच्छलोपायैर्बहवः शत्रवो हताः ॥ ९-६२-७५ (६३७०७)
पूर्वैरनुगतो मार्गो देवैरसुरघातिभिः ।
सद्भिश्चानुगतः पन्थाः सर्वैरनुगमिष्यते ॥ ९-६२-७६ (६३७०८)
ग्एवं विधात्रा विहितं स्वयमेषां महात्मनाम् ।
दैवं पुरुषकारेण न शक्यमतिवर्तितुम् ॥ ९-६२-७७ (६३७०९)
भूतं भव्यं भविष्यच्च निमेषाद्यो हनिष्यति ।

कृतान्तमन्यथा कर्तुं नेच्छेत्सोऽयं धनञ्जय ॥' ९-६२-७८ (६३७१०)
कृतकृत्याः स्म सायाह्ने निवासं रोचयामहे ।
साश्वनागरथाः सर्वे विश्राम्यन्तु नराधिपाः ॥ ९-६२-७९ (६३७११)
वासुदेववचः श्रुत्वा तदानीं पाण्डवैः सह ।
पाञ्चाला भृशसंहृष्टा विनेदुः सिंहसङ्घवत् ॥ ९-६२-८० (६३७१२)
ततः प्राध्मापयच्छङ्खं पाञ्चजन्यं जनार्दनः ।
ग्देवदत्तं प्रहृष्टात्मा शङ्खप्रवरमर्जुनः ॥ ९-६२-८१ (६३७१३)
अनन्तविजयं राजा कुन्तीपुत्रो युधिष्ठिरः ।
पोण्ड्रं दध्मौ महाशङ्खं भीमकर्मा वृकोदरः ॥ ९-६२-८२ (६३७१४)
नकुलः सहदेवश्च सुघोषमणिपुष्पकौ ।
धृष्टद्युम्नस्तथा जैत्रं सात्यकिर्नन्दिवर्धनम् ॥ ९-६२-८३ (६३७१५)
तेषां नादेन महता शङ्खानां भरतर्षभ ।
आपुपूरे नभः सर्वं पृथिवी च चचाल ह ॥ ९-६२-८४ (६३७१६)
ततः शङ्खाश्च भेर्यश्च पणवानकगोमुखाः ।
पाण्डुसैन्येष्ववाद्यन्त स शब्दस्तुमुलोऽभवत् ॥ ९-६२-८५ (६३७१७)
अस्तुवन्पाण्डवानन्ये निर्भीश्च स्तुतिमङ्गलैः'।
हृष्टा दुर्योधनं दृष्ट्वा निहतं पुरुषर्षभाः ॥ ॥ ९-६२-८६ (६३७१८)

इति श्रीमन्महाभारते शल्यपर्वणि गदायुद्धपर्वणि
द्विषष्टितमोऽध्यायः ॥ ६२ ॥
Mahabharata - Shalya Parva - Chapter Footnotes

९-६२-२१ नैष योग्योऽद्य मित्रं वेति झ.पाठः ॥
९-६२-६२ द्विषष्टितमोऽध्यायः ॥

---

शल्यपर्व-अध्यय०६३
॥ श्रीः ॥
९.६३. अध्यायः ६३

Mahabharata - Shalya Parva - Chapter Topics
पाञ्चालादिषु स्वस्वशिबिराण्युपगतेषु पाण्डवैर्दुर्योधनशिबिरमेत्य
स्वस्वरथेभ्योऽवतरणम् ॥ १ ॥
कृष्णे रथात्प्रथमं पार्थमवतार्थ पश्चात्स्वयमप्यवतीर्णे
अग्निना तद्ग्रथस्य भस्मीकरणम् ॥ २ ॥
कृष्णेनार्जुनम्प्रति रथदाहस्य कारणकथनम् ॥ ३ ॥
कृष्णचोदनया पाण्डवैरोघवतीतीरे रात्रौ निवसनम् ॥ ४ ॥

कृष्णेन युधिष्ठिरचोदनया गान्धार्याश्वासनाय हास्तिनपुरागमनम् ॥ ५ ॥

Mahabharata - Shalya Parva - Chapter Text

९-६३-० (६३७१९)
सञ्जय उवाच। ९-६३-०क्ष् (५२४९)
ततस्ते प्रययुः सर्वे निवासाय महीक्षितः ।
शङ्खान्प्रध्मापयन्तो वै हृष्टाः परिघबाहवः ॥ ९-६३-१ (६३७२०)
पाण्डवान्गच्छतश्चापि शिबिरं नो विशाम्पते ।
महेष्वासोऽन्वगात्पश्चाद्युयुत्सुः सात्यकिस्तथा ॥ ९-६३-२ (६३७२१)
धृष्टद्युम्नः शिखण्डी च द्रौपदेयाश्च सर्वशः ।
सर्वे चान्ये महेष्वासा ययुः स्वशिबिराण्युत ॥ ९-६३-३ (६३७२२)
ततस्ते प्राविशन्पार्था हतत्विड्कं हतेश्वरम् ।
दुर्योधनस्य शिबिरं रङ्गवन्निःसृते जने ॥ ९-६३-४ (६३७२३)
गतोत्सवं पुरमिव हृतनागमिव ह्रदम् ।
स्त्रीवर्षवरभूयिष्ठं वृद्धामात्यैरधिष्ठितम् ॥ ९-६३-५ (६३७२४)
तत्रैतान्पर्युपातिष्ठन्दुर्योधन पुरःसराः ।
कृताञ्जलिपुटा राजन्काषायमलिनाम्बराः ॥ ९-६३-६ (६३७२५)
शिबिरं समनुप्राप्य कुरुराजस्य पाण्डवाः ।
अवतेरुर्महाराज रथेभ्यो रथसत्तमाः ॥ ९-६३-७ (६३७२६)
ततो गाण्डीवधन्वानमभ्यभाषत केशवः ।
स्थितः प्रियहिते नित्यमतीव भरतर्षभ ॥ ९-६३-८ (६३७२७)
अवरोपय गाण्डीवमक्षयौ च महेषुधी ।
अथाहमवरोक्ष्यामि पश्चाद्भरतसत्तम ।
स्वयं चैवावरोह त्वमेतच्छ्रेयस्तवानघ ॥ ९-६३-९ (६३७२८)
तच्चाकरोत्तथा वीरः पाण्डुपुत्रो धनञ्जयः ॥ ९-६३-१० (६३७२९)
अथ पश्चात्ततः कृष्णो रश्मीनुत्सृज्य वाजिनाम् ।
अवारोहत मेधावी रथाद्गाण्डीवधन्वनः ॥ ९-६३-११ (६३७३०)
अथावतीर्णे भूतानामीश्वरे सुमहात्मनि ।
कपिरप्याश्वपाक्रामत्सहदेवैर्ध्वजालयैः ॥ ९-६३-१२ (६३७३१)
स दग्धो द्रोणकर्णाभ्यां दिव्यैरस्त्रैर्महारथः ।
अथ दीप्तोऽग्निना ह्याशु प्रजज्वाल महीपते ॥ ९-६३-१३ (६३७३२)
सोपासङ्गः सरश्मिश्च साश्वः सयुगबन्धनः ।
भस्मीभूतोऽपतद्भूमौ रथो गाण्डीवधन्वनः ॥ ९-६३-१४ (६३७३३)
तं तथा भस्मभूतं तु दृष्ट्वा पाण्डुसुताः प्रभो ।
अभवन्विस्मिता राजन्नर्जुनश्चेदमब्रवीत् ॥ ९-६३-१५ (६३७३४)

कृताञ्जलिः सप्रणयं प्रणिपत्याभिवाद्य ह ।
गोवन्द कस्माद्भगवन्नथो दग्धोऽयमग्निना ॥ ९-६३-१६ (६३७३५)
किमेतन्महदाश्चर्यमभवद्यदुनन्दन ।
तन्मे ब्रूहि महाबाहो श्रोतव्यं यदि मन्यसे ॥ ९-६३-१७ (६३७३६)
वासुदेव उवाच। ९-६३-१८क्ष् (५२५०)
द्रोणकर्णास्त्रनिर्दग्धः पूर्वमेवायमर्जुन ।
मदास्थितत्वात्समरे न विशीर्णः परन्तप ॥ ९-६३-१८ (६३७३७)
इदानीं तु विशीर्णोऽयं दग्धो ब्रह्मास्त्रतेजसा ।
मया विमुक्तः कौन्तेय त्वय्यद्य कृतकर्मणि ॥ ९-६३-१९ (६३७३८)
सञ्जय उवाच। ९-६३-२०क्ष् (५२५१)
ईषदुत्स्मयमानस्तु भगवान्केशवोऽरिहा ।
परिष्वज्य च राजानं युधिष्ठिरमभाषत ॥ ९-६३-२० (६३७३९)
दिष्ट्या जयसि कौन्तेय दिष्ट्या ते शत्रवो जिताः ।
दिष्ट्या गाण्डीवधन्वा च भीमसेनश्च पाण्डवः ॥ ९-६३-२१ (६३७४०)
त्वं चापि कुशली राजन्माद्रीपुत्रौ च पाण्डवौ ।
मुक्ता वीरक्षयादिस्मात्सङ्ग्रामान्निहतद्विषः ।
क्षिप्रमुत्तरकालानि कुरु कार्याणि भारत ॥ ९-६३-२२ (६३७४१)
उपयातमुपप्लाव्यं सह गाण्डीवधन्वना ।
आनीय मधुपर्कं मां यत्पुरा त्वमवोचथाः ॥ ९-६३-२३ (६३७४२)
एष भ्राता सखा चैव तव कृष्ण धनञ्जयः ।
रक्षितव्यो महाबाहो सर्वास्वापत्स्विति प्रभो ॥ ९-६३-२४ (६३७४३)
तव चैव ब्रुवाणस्य तथेत्येवाहमब्रुवम् ॥ ९-६३-२५ (६३७४४)
स सव्यसाची गुप्तस्ते विजयी च जनेश्वर। ९-६३-२६ (६३७४५)
भ्रातृभिः सह राजेन्द्र शूरः सत्यपराक्रमः ।
मुक्तो वीरक्षयादस्मात्सङ्ग्रामाद्रोमहर्षणात् ॥ ९-६३-२६ (६३७४६)
एवमुक्तस्तु कृष्णेन धर्मराजो युधिष्ठिरः ।
हृष्टरोमा महाराज प्रत्युवाच जनार्दनम् ॥ ९-६३-२७ (६३७४७)
युधिष्ठिर उवाच। ९-६३-२८क्ष् (५२५२)
प्रमुक्तं द्रोणकर्णाभ्यां ब्रह्मास्त्रमरिमर्दन ।
कस्त्वदन्यः सहेत्साक्षादपि वज्री पुरन्दरः ॥ ९-६३-२८ (६३७४८)
भवतस्तु प्रसादेन संग्रामे बहवो हताः ।
महारणगतः पार्थो यच्च नासीत्पराङ्मुखः ॥ ९-६३-२९ (६३७४९)
तथा तव महाबाहो पर्यायैर्बहुभिर्मया ।
कर्मणआमनुसन्धानात्तेजस्वी जगति श्रुता ॥ ९-६३-३० (६३७५०)
उपप्लाव्ये महर्षिर्मे कृष्णद्वैपायनोऽब्रवीत् ।
यतो धर्मस्ततः कृष्णो यतः कृष्णस्ततो जयः ॥ ९-६३-३१ (६३७५१)

ग्एवमुक्तस्ततः कृष्णः प्रत्युवाच युधिष्ठिरम् ।
न तुल्याश्वार्जुनस्येह बलेन कुरुनन्दन ॥९-६३-३२ (६३७५२)
स एष सर्वाण्यस्त्राणि दिव्यानि प्राप्य शङ्करात् ।
सत्समो वा विशिष्टो वा रणे त्वमिति पाण्डवः ।
अनुज्ञातः पाण्डुसुतः पुनः प्रत्यागमन्महीम् ॥ ९-६३-३३ (६३७५३)
भूतं भव्यं भविष्यच्च अनुज्ञातस्त्वया विभो ।
निमेषार्धान्नरव्याघ्रो नयेदिति मतिर्मम ॥९-६३-३४ (६३७५४)
द्रोणं भीष्मं कृपं कर्णं द्रोणपुत्रं जयद्रथम् ।
निहन्तुं शक्नुयात्क्रुद्धो निमेषार्धाद्धनञ्जयः ॥९-६३-३५ (६३७५५)
सदेवासुरगन्धर्वान्सयक्षोरगराक्षसान् ।
त्रीन्वा लोकान्विजेतुं स शक्तः किमिह मानुषान् ॥९-६३-३६ (६३७५६)
विधिना विहितं चासौ मया सञ्चोदितोऽपि सन् ।
न चकार मतिं हन्तुं ततस्ते बलवत्तराः ॥९-६३-३७ (६३७५७)
अत्र गीता मया सुष्ठु गिरः सत्या महीपते ।
दर्सितं मयि सर्वं च तेनासौ जितवान्रिपून् ॥९-६३-३८ (६३७५८)
अर्जुनोऽपि महाबाहुर्मया तुल्यो महीपते ।
स महेश्वरलब्धास्त्रः किं न कुर्याद्विभुः प्रभो ॥' ९-६३-३९ (६३७५९)
इत्येवमुक्ते ते वीराः शिबिरं तव भारत ।
प्रविश्य प्रत्यपद्यन्त कोशरत्नर्धिसञ्चयान् ॥९-६३-४० (६३७६०)
रजतं जातरूपं च मणीनथ च मौक्तिकान् ।
भूषणान्यथ मुख्यानि कम्बलान्यजिनानि च ॥९-६३-४१ (६३७६१)
ग्गजानश्वान्रथांश्चैव महान्ति शयनानि च'।
दासीदासमसंख्येयं राज्योपकरणानि च ॥९-६३-४२ (६३७६२)
ते प्राप्य धनमक्षय्यं त्वदीयं भरतर्षभ ।
उदक्रोशन्महाभागा नरेन्द्र विजितारयः ॥९-६३-४३ (६३७६३)
ते तु वीराः समाश्वस्य वाहनान्यवमुच्य च ।
अतिष्ठन्त मुहुः सर्वे पाण्डवा विगतज्वराः ॥९-६३-४४ (६३७६४)
अथाब्रवीन्महाराज वासुदेवो महायशाः ।
अस्माभिर्मङ्गलार्थाय वस्तव्यं शिबिराद्बहिः ॥९-६३-४५ (६३७६५)
तथेत्युक्त्वा हि ते सर्वे पाण्डवाः सात्यकिस्तथा ।
वासुदेवेन सहिता मङ्गलार्थं बहिर्ययुः ॥९-६३-४६ (६३७६६)
ते समासाद्य सरितं पुण्यामोघवतीं नृप ।
न्यवसन्नथ तां रात्रिं पाण्डवा हतशत्रवः ॥९-६३-४७ (६३७६७)
युधिष्ठिरस्ततो राजा प्राप्तकालमचिन्तयन् ॥ ९-६३-४८ (६३७६८)
तत्र ते गमनं माप्तं रोचते तव माधव ।
गान्धार्याः क्रोधदीप्तायाः प्रशमार्थमरिन्दम ॥९-६३-४९ (६३७६९)

हेतुकारणयुक्तैश्च वाक्यैः कालसमीरितैः ।
क्षिप्रमेव महाभाग गान्धारीं प्रशमिष्यसि ।
पितामहश्च भगवान्व्यासस्तत्र भविष्यति ॥ ९-६३-५० (६३७७०)
ततः सम्प्रेषयामासुर्यादवं नागसाह्वयम् ॥ ९-६३-५१ (६३७७१)
स च प्रायाज्जवेनाशु वासुदेवः प्रतापवान् ।
दारुकं रथमारोप्य येन राजाऽम्बिकासुतः ॥ ९-६३-५२ (६३७७२)
तमूचुः सम्प्रयास्यन्तं शैब्यसुग्रीववाहनम् ।
प्रत्याश्वासय गान्धारीं हतपुत्रां यशस्विनीम् ॥ ९-६३-५३ (६३७७३)
स प्रायात्पाण्डवैरुक्तस्तत्पुरं सात्वतां वरः ।
आससाद ततः क्षिप्रं गान्धारीं निहतात्मजाम् ॥ ॥ ९-६३-५४ (६३७७४)

इति श्रीमन्महाभारते शल्यपर्वणि गदायुद्धपर्वणि
त्रिषष्टितमोऽध्यायः ॥ ६३ ॥
Mahabharata - Shalya Parva - Chapter Footnotes

९-६३-५ वर्षवरः षण्ढः ॥
९-६३-६ दुर्योधनस्य पुरसराः दुर्योधनपुरः सराः ॥
९-६३-३० तेजस्वीति गतिः श्रुता इति छ.पाठः । तथैव च महाबाहो
मनुसन्तानं तेजसश्च गतीः शुभाः इति झ.पाठः ॥
९-६३-६३ त्रिषष्टितमोऽध्यायः ॥

---

शल्यपर्व-अध्यय०६४
॥ श्रीः ॥
९.६४. अध्यायः ६४

Mahabharata - Shalya Parva - Chapter Topics
जनमेजयेन गान्धार्याश्वासनकारणप्रश्ने वैशम्पायनेन तत्कथनम् ॥ १ ॥
कृष्णेन गान्धारीधृतराष्ट्रौ समाश्वास्य पुनः पाण्डवसमीपागमनम् ॥ २ ॥

Mahabharata - Shalya Parva - Chapter Text

९-६४-० (६३७७५)
जनमेजय उवाच। ९-६४-०क्ष् (५२५३)
किमर्थं द्विजशार्दूल धर्मराजो युधिष्ठिरः ।
गान्धार्याः प्रेषयामास वासुदेवं परन्तपम् ॥ ९-६४-१ (६३७७६)
यदा पूर्वं गतः कृष्णः शमार्थं कौरवान्प्रति ।

न च तं लब्धवान्कामं ततो युद्धमभूदिदम् ॥ ९-६४-२ (६३७७७)
निहतेषु तु योधेषु हते दुर्योधने तदा ।
पृथिव्यां पाण्डवेयस्य निःसपत्ने कृते युधि ॥ ९-६४-३ (६३७७८)
विद्रुते शिबिरे शून्ये प्राप्ते यशसि चोत्तमे ।
किं तु तत्कारणं ब्रह्मन्येन कृष्णो गतः पुनः ॥ ९-६४-४ (६३७७९)
न चैतत्कारणं ब्रह्मन्नल्पं विप्रतिभाति मे ।
यत्रागमदमेयात्मा स्वयमेव जनार्दनः ॥ ९-६४-५ (६३७८०)
तत्त्वतो वै समाचक्ष्व सर्वमध्वर्युसत्तम ।
यच्चात्र कारणं ब्रह्मन्कार्यस्यास्य विनिश्चये ॥ ९-६४-६ (६३७८१)
वैशम्पायन उवाच। ९-६४-७क्ष् (५२५४)
त्वद्युक्तोऽयमनुप्रश्नो यन्मां पृच्छसि पार्थिव ।
तत्तेऽहं संप्रवक्ष्यामि यथावद्भरतर्षभ ॥ ९-६४-७ (६३७८२)
हतं दुर्योधनं दृष्ट्वा भीमसेनेन संयुगे ।
व्युत्क्रम्य समयं राजन्धार्तराष्ट्रं महाबलम् ॥ ९-६४-८ (६३७८३)
अन्यायेन हतं दृष्ट्वा गदायुद्धेन भारत ।
युधिष्ठिरं महाराज महद्भयमथाविशत् ॥ ९-६४-९ (६३७८४)
सोऽचिन्तयन्महाभागां गान्धारीं तपसान्विताम् ।
घोरेण तपसा युक्तां त्रैलोक्यमपि सा दहेत् ॥ ९-६४-१० (६३७८५)
तस्य चिन्तयमानस्य बुद्धिः समभवत्तदा ।
गान्धार्याः क्रोधदीप्तायाः पूर्वं प्रशमनं भवेत् ॥ ९-६४-११ (६३७८६)
सा हि पुत्रवधं श्रुत्वा कृतमस्माभिरीदृशम् ।
मानसेनाग्निना क्रुद्धा भस्मसान्नः करिष्यति ॥ ९-६४-१२ (६३७८७)
कथं दुःखमिदं तीव्रं गान्धारी सम्प्रशक्ष्यति ।
श्रुत्वा विनिहतं पुत्रं छलेनाजिह्मयोधिनम् ॥ ९-६४-१३ (६३७८८)
एवं विचिन्त्य बहुधा भयशोकसमन्वितः ।
वासुदेवमिदं वाक्यं धर्मराजोऽभ्यभाषत ॥ ९-६४-१४ (६३७८९)
तव प्रसादाद्गोविन्द राज्यं निहतकण्टकम् ।
अप्राप्यं मनसाऽपीदं प्राप्तमस्माभिरच्युत ॥ ९-६४-१५ (६३७९०)
प्रत्यक्षं मे महाबाहो सङ्ग्रामे रोमहर्षणे ।
विमर्दः सुमहान्प्राप्तस्त्वया यादवनन्दन ॥ ९-६४-१६ (६३७९१)
त्वया देवासुरे युद्धे वधार्थममरद्विषाम् ।
यथा साह्यं पुरा दत्तं हताश्च विबुधद्विषः ॥ ९-६४-१७ (६३७९२)
साह्यं तथा महाबाहो दत्तमस्माकमच्युत ।
सारथ्येन च वार्ष्णेय भवता हि धृता वयम् ॥ ९-६४-१८ (६३७९३)
यदि न त्वं भवेन्नाथः फल्गुनस्य महारणे ।
कथं शक्यो रणे जेतुं भवेदेष बलार्णवः ॥ ९-६४-१९ (६३७९४)

गदाप्रहारा विपुलाः परिघैश्चापि ताडनम् ।
शक्तिभिर्भिण्डिपालैश्च तोमरैः सपरश्वथैः ॥ ९-६४-२० (६३७९५)
अस्मत्कृते त्वया कृष्ण वाचः सुपरुषाः श्रुताः ।
शस्त्राणां च निपाता वै वज्रस्पर्शोपमा रणे ॥ ९-६४-२१ (६३७९६)
ते च ते सफला जाता हते दुर्योधनेऽच्युत ।
तत्सर्वं न यथा नश्येत्पुनः कृष्ण तथा कुरु ॥ ९-६४-२२ (६३७९७)
सन्देहडोलां प्राप्तं नश्चेतः कृष्ण जये सति ।
गान्धार्या हि महाबाहो क्रोधं शमय माधव ॥ ९-६४-२३ (६३७९८)
सा हि नित्यं महाभागा तपसोग्रेण कर्शिता ।
पुत्रपौत्रवधं श्रुत्वा ध्रुवं नः सम्प्रधक्ष्यति ।
तस्या प्रसादनं वीर प्राप्तकालं मतं मम ॥ ९-६४-२४ (६३७९९)
कश्च तां क्रोधसन्दीप्तां पुत्रव्यसनकर्शिताम् ।
वीक्षितुं पुरुषः शक्तस्त्वामृते पुरुषोत्तम ॥ ९-६४-२५ (६३८००)
तत्र मे गमनं प्राप्तं रोचते तव माधव ।
गान्धार्याः क्रोधदीप्तायाः प्रशमार्थमरिन्दम ॥ ९-६४-२६ (६३८०१)
त्वं हि कर्ता विकर्ता च लोकानां प्रभवाव्ययः ।
हेतुकारणसंयुक्तैर्वाक्यैः कालसमीरितैः ॥ ९-६४-२७ (६३८०२)
क्षिप्रमेव महाबाहो गान्धारीं शमयिष्यसि ।
पितामहश्च भगवान्कृष्णस्तत्र भविष्यति ॥ ९-६४-२८ (६३८०३)
सर्वथा ते महाबाहो गान्धार्याः क्रोधनाशनम् ।
कर्तव्यं सात्वतां श्रेष्ठ पाण्डवानां हितार्थिना ॥ ९-६४-२९ (६३८०४)
धर्मराजस्य वचनं श्रुत्वा यदुकुलोद्वहः ।
आमन्त्र्य दारुकं प्राह रथः सज्जो विधीयताम् ॥ ९-६४-३० (६३८०५)
केशवस्य वचः श्रुत्वा त्वरमाणोऽथ दारुकः ।
न्यवेदयद्रथं सज्जं केशवाय महात्मने ॥ ९-६४-३१ (६३८०६)
तं रथं यादवश्रेष्ठः समारुह्य परन्तपः ।
जगाम हास्तिनपुरं त्वरितः केशवो विभुः ॥ ९-६४-३२ (६३८०७)
ततः प्रायान्महाराज माधवो भगवान्रथी ।
नागसाह्वयमासाद्य प्रविवेश च वीर्यवान् ॥ ९-६४-३३ (६३८०८)
प्रविश्य नगरं वीरो रथघोषेण नादयन् ।
विदितो धृतराष्ट्रस्य सोऽवतीर्य रथोत्तमात् ।
अभ्यगच्छददीनात्मा धृतराष्ट्रनिवेशनम् ॥ ९-६४-३४ (६३८०९)
पूर्वं चाभिगतं तत्र सोऽपश्यदृषिसत्तमम् ॥ ९-६४-३५ (६३८१०)
पादौ प्रपीड्य कृष्णस्य राज्ञश्चापि जनार्दनः ।
अभ्यवादयदव्यग्रो गान्धारीं चापि केशवः ॥ ९-६४-३६ (६३८११)
ततस्तु यादवश्रेष्ठो धृतराष्ट्रमधोक्षजः ।

पाणिमालम्ब्य राजेन्द्र सुस्वरं प्ररुरोद ह ॥९-६४-३७ (६३८१२)
स मुहूर्तादिवोत्सृज्य बाष्पं शोकसमुद्भवम् ।
प्रक्षाल्य वारिणा नेत्रे ह्याचम्य च यथाविधि ।
उवाच प्रश्रितं वाक्यं धृतराष्ट्रमरिन्दमः ॥ ९-६४-३८ (६३८१३)
न तेऽस्त्यविदितं किञ्चिद्भूतं भव्यं च भारत ।
कालस्य च यथावृत्तं तत्ते सुविदितं प्रभो ॥९-६४-३९ (६३८१४)
यदिदं पाण्डवैः सर्वैस्तव चित्तानुरोधिभिः ।
कथं कुलक्षयो न स्यात्तथा क्षत्रस्य भारत ॥९-६४-४० (६३८१५)
भ्रातृभिः समयं कृत्वा क्षान्तवान्धर्मवत्सलः ।
द्यूतच्छलजितैः शुद्धैर्वनवासो ह्युपागतः ॥९-६४-४१ (६३८१६)
अज्ञातवासचर्या च नानावेषसमावृतैः ।
अन्ये च बहवः क्लेशास्त्वशक्तैरिव सर्वदा ॥९-६४-४२ (६३८१७)
मया च स्वयमागम्य युद्धकाल उपस्थिते ।
सर्वलोकस्य सान्निध्येग्रामांस्त्वं पञ्चयाचितः ॥९-६४-४३ (६३८१८)
त्वया कालोपसृष्टेन लोभतो नापवर्जिताः ।
तवापराधान्नृपते सर्वं क्षत्रं क्षयं गतम् ॥९-६४-४४ (६३८१९)
भीष्मेण सोमदत्तेन बाह्लीकेन कृपेण च ।
द्रोणेन च सपुत्रेण विदुरेण च धीमता ।
याचितस्त्वं शमं नित्यं न च तत्कृतवानसि ॥ ९-६४-४५ (६३८२०)
कालोपहतचित्ता हि सर्वे मुह्यन्ति भारत ।
यथा मूढो भवान्पूर्वमस्मिन्नर्थे समुद्यते ॥९-६४-४६ (६३८२१)
किमन्यत्कालयोगाद्धि दिष्टमेव परायणम् ।
मा च दोषान्महाप्राज्ञ पाण्डवेषु निवेशय ॥९-६४-४७ (६३८२२)
अल्पोप्यतिक्रमो नास्ति पाण्डवानां महात्मनाम् ।
धर्मतो न्यायतश्चैव स्नेहतश्च परन्तप ॥९-६४-४८ (६३८२३)
एतत्सर्वं तु विज्ञाय ह्यात्मदोषकृतं फलम् ।
तन्मन्युं पाण्डुपुत्रेषु न भवान्कर्तुमर्हति ॥९-६४-४९ (६३८२४)
कुलं वंशश्च पिण्डाश्च यच्च पुत्रकृत फलम् ।
गान्धार्यास्तव वै नाथ पाण्डवेषु प्रतिष्ठितम् ॥९-६४-५० (६३८२५)
त्वं चैव कुरुशार्दूल गान्धारी च यशस्विनी ।
मा शुचो नरशार्दूल पाण्डवान्प्रतिकिल्बिम् ॥९-६४-५१ (६३८२६)
एतत्सर्वमनुध्याय आत्मनश्च व्यतिक्रमम् ।
शिवेन पाण्डवान्ध्याहि नमस्ते भरतर्षभ ॥९-६४-५२ (६३८२७)
जानासि च महाबाहो धर्मराजस्य या त्वयि ।
भक्तिर्भरतशार्दूल स्नेहश्चापि स्वभावतः ॥९-६४-५३ (६३८२८)
एतच्च कदनं कृत्वा शत्रूणामपकारिणाम् ।

दह्यते स दिवारात्रौ न च शर्माधिगच्छति ॥ ९-६४-५४ (६३८२९)
त्वां चैव नरशार्दूल गान्धारीं च यशस्विनीम् ।
स शोचन्नरशार्दूलः शान्तिं नैवाधिगच्छति ॥ ९-६४-५५ (६३८३०)
हिया च परयाऽविष्टो भवन्तं नाधिगच्छति ।
पुत्रशोकाभिसन्तप्तं बुद्धिव्याकुलितेन्द्रियम् ॥ ९-६४-५६ (६३८३१)
एवमुक्त्वा महाराज धृतराष्ट्रं यदूत्तमः ।
उवाच परमं वाक्यं गान्धारीं शोककर्शिताम् ॥ ९-६४-५७ (६३८३२)
सौबलेयि निबोध त्वं यत्त्वां वक्ष्यामि सुव्रते ।
त्वत्समा नास्ति लोकेऽस्मिन्नद्य सीमन्तिनी शुभे ॥ ९-६४-५८ (६३८३३)
जानासि च यथा राज्ञि सभायां मम सन्निधौ ।
धर्मार्थसहितं वाक्यमुभयोः पक्षयोर्हितम् ॥ ९-६४-५९ (६३८३४)
उक्तवत्यसि कल्याणि न च ते तनयैः कृतम् ।
दुर्योधनस्त्वया चोक्तो जयार्थी परुषं वचः ॥ ९-६४-६० (६३८३५)
शृणु मूढ वचो मह्यं यतो धर्मस्ततो जयः ।
तदिदं समनुप्राप्तं तव वाक्यं नृपात्मजे ॥ अ६-६४-६१ (६३८३६)
एवं विदित्वा कल्याणि मा स्म शोके मनः कृथाः ।
पाण्डवानां विनाशाय मा ते बुद्धिः कदाचन ॥ ९-६४-६२ (६३८३७)
शक्ता चासि महाभागे पृथिवीं सचराचराम् ।
चक्षुषा क्रोधदीप्तेन निर्दग्धुं तपसो बलात् ॥ ९-६४-६३ (६३८३८)
वासुदेववचः श्रुत्वा गान्धारी वाक्यमब्रवीत् ।
एवमेतन्महाबाहो यथा वदसि केशव ॥ ९-६४-६४ (६३८३९)
आधिभिर्दह्यमानाया मतिः सञ्चलिता मम ।
सा मे व्यवस्थिता श्रुत्वा तव वाक्यं जनार्दन ॥ ९-६४-६५ (६३८४०)
राज्ञस्त्वन्धस्य वृद्धस्य हतपुत्रस्य केशव ।
त्वं गतिः सहितैर्वीरैः पाण्डवैर्दिपदा वर ॥ ९-६४-६६ (६३८४१)
एतावदुक्त्वा वचनं मुखं प्रच्छाद्य वाससा ।
पुत्रशोकाभिसन्तप्ता गान्धारी प्ररुरोद ह ॥ ९-६४-६७ (६३८४२)
तत एनां महाबाहुः केश्वः शोककर्शिताम् ।
हेतुकारणसंयुक्तैर्वाक्यैराश्वासयत्प्रभुः ॥ ९-६४-६८ (६३८४३)
समाश्वास्य च गान्धारीं धृतराष्ट्रं च माधवः ।
द्रौणिसङ्कल्पितं भावमन्वबुध्यत केशवः ॥ ९-६४-६९ (६३८४४)
ततस्त्वरित उत्थाय पादौ मूर्ध्ना प्रणम्य च ।
द्वैपायनस्य राजेन्द्र ततः कौरवमब्रवीत् ॥ ९-६४-७० (६३८४५)
आपृच्छे त्वां कुरुश्रेष्ठ मा च शोके मनः कृथाः ।
द्रौणेः पापोस्त्यभिप्रायस्तेनास्मि सहसोत्थितः ॥ ९-६४-७१ (६३८४६)
पाण्डवानां वधे रात्रौ बुद्धिस्तेन प्रदर्शिता ॥ ९-६४-७२ (६३८४७)

एतच्छ्रुत्वा तु वचनं गान्धार्या सहितोऽब्रवीत् ।
धृतराष्ट्रो महाबाहुः केशवं केशिसूदनम् ॥ ९-६४-७३ (६३८४८)
शीघ्रं गच्छ महाबाहो पाण्डवान्परिपालय ।
भूयस्त्वया समेष्यामि क्षिप्रमेव जनार्दन ॥ ९-६४-७४ (६३८४९)
प्रायात्ततस्तु त्वरितो दारुकेण सहाच्युतः ॥ ९-६४-७५ (६३८५०)
वासुदेवे गते राजन्धृतराष्ट्रं जनेश्वरम् ।
आश्वासयदमेयात्मा व्यासो लोकनमस्कृतः ॥ ९-६४-७६ (६३८५१)
वासुदेवोऽपि धर्मात्मा कृतकृत्यो जगाम ह ।
शिबिरं हास्तिनपुराद्दिदृक्षुः पाण्डवान्नृप ॥ ९-६४-७७ (६३८५२)
आगम्य शिबिरं रात्रौ सोऽभ्यगच्छत पाण्डवान् ।
तच्च तेभ्यः समाख्याय सहितस्तैः समाहितः ॥ ॥ ९-६४-७८ (६३८५३)

इति श्रीमन्महाभारते शल्यपर्वणि गदायुद्धपर्वणि
चतुःषष्टितमोऽध्यायः ॥ ६४ ॥
Mahabharata - Shalya Parva - Chapter Footnotes

९-६४-२७ हेतुकारणसंयुक्तैः हेतवो दृष्टा अपराधाः । कारणानि
अदृष्टान्यवश्यंभावीनि तैर्युक्तानि तैर्युक्तानि तैः ॥
९-६४-३३ प्रायादगच्छत् ॥
९-६४-३४ विदितं धृताराष्ट्रस्येति झ पाठः ॥
९-६४-३६ कृष्णस्य व्यासस्य ॥
९-६४-४९ असूयां पाण्डुपुत्रोष्विति झ पाठः ॥
९-६४-६४ चतुःषष्टितमोऽध्यायः ॥

---

शल्यपर्व-अध्यय०६५
॥ श्रीः ॥
९.६५. अध्यायः ६५

Mahabharata - Shalya Parva - Chapter Topics
सञ्जयेन धृतराष्ट्रंप्रति दुर्योधनविलापप्रकारकथनम् ॥ १ ॥
वादिकैरश्वत्थाम्नि दुर्योधनपातननिवेदनम् ॥ २ ॥

Mahabharata - Shalya Parva - Chapter Text

९-६५-० (६३८५४)
धृतराष्ट्र उवाच । ९-६५-०क्ष (५२५५)

अधिष्ठितः पदा मूर्ध्नि भग्नसक्थो महीं गतः ।
शौटीर्यमानी पुत्रो मे किमभाषत सञ्जय ॥ ९-६५-१ (६३८५५)
अत्यर्थं कोपनो राजा जातवैरश्च पाण्डुषु ।
व्यसनं परमं प्राप्तः किमाह परमाहवे ॥ ९-६५-२ (६३८५६)
सञ्जय उवाच। ९-६५-३क्ष् (५२५६)
शृणु राजन्प्रवक्ष्यामि यथावृत्तं नराधिप ।
राज्ञा यदुक्तं मग्नेन तस्मिन्व्यसनसागरे ॥ ९-६५-३ (६३८५७)
भग्नसक्थो नृपो राजन्पांसुना सोऽवकुण्ठितः ।
यमयन्मूर्धजांस्तत्र वीक्ष्य चैव दिशो दश ॥ ९-६५-४ (६३८५८)
केशान्नियस्य यत्नेन निःश्वसन्नुरगो यथा ।
संरम्भाश्रुपरीताभ्यां नेत्राभ्यामभिवीक्ष्य माम् ॥ ९-६५-५ (६३८५९)
बाहू धरण्यां निष्पिष्य सुदुर्मत्त इव द्विपः ।
प्रकीर्णान्मूर्धजान्धुन्वन्दन्तैर्दन्तानुपस्पृशन् ।
गर्हयन्पाण्डवं ज्येष्ठं निःश्वस्येदमथाब्रवीत् ॥ ९-६५-६ (६३८६०)
भीष्मे शान्तनवे नाथे कर्णे शस्त्रभृतां वरे ।
गौतमे शकुनौ चापि द्रोणे चास्त्रभृतां वरे ॥ ९-६५-७ (६३८६१)
अश्वत्थाम्नि यथा शल्ये शूरे च कृतवर्मणि ।
अन्येष्वपि च शूरेषु न्यस्तभारो महात्मसु ।
इमामवस्थां प्राप्तोऽस्मि कालो हि दुरतिक्रमः ॥ ९-६५-८ (६३८६२)
एकादशचमूभर्ता सोऽहमेतां दशां गतः ।
कालं प्राप्य महाबाहो न कश्चिदतिवर्तते ॥ ९-६५-९ (६३८६३)
आख्यातव्यं मदीयानां येऽस्मिञ्जीवन्ति संयुगे ।
यथाऽहं भीमसेनेन व्युत्क्रम्य समयं हतः ॥ ९-६५-१० (६३८६४)
बहूनि सुनृशंसानि कृतानि खलु पाण्डवैः ।
भूरिश्रवसि कर्णे च भीष्मे द्रोणे च धीमति ॥ ९-६५-११ (६३८६५)
इदं च गर्हितं कर्म नृशंसैः पाण्डवैः कृतम् ।
येन ते वाच्यतां सत्सु गमिष्यन्तीति मे मतिः ॥ ९-६५-१२ (६३८६६)
का प्रीतिः सत्वयुक्तस्य कृत्वोपाधिकृतं जयम् ।
को वा समयभेत्तारं बुधः सम्मन्तुमर्हति ॥ ९-६५-१३ (६३८६७)
अधर्मेण जयं लब्ध्वा को नु हृष्येत पण्डितः ।
यथा संहृष्यते पापः पाण्डुपुत्रो वृकोदरः ॥ ९-६५-१४ (६३८६८)
किन्नु चित्रमितस्त्वद्य भग्नसक्थस्य यन्मम ।
क्रुद्धेन भीमसेनेन पादेन मृदितं शिरः ॥ ९-६५-१५ (६३८६९)
प्रतपन्तं श्रिया जुष्टं वर्तमानं च बन्धुषु ।
एवं कुर्यान्नरो यो हि स वै सञ्जय पूरुषः ॥ ९-६५-१६ (६३८७०)
अभिज्ञौ युद्धधर्मस्य मम माता पिता च यौ ।

तौ हि सञ्जय दुःखार्तौ विज्ञाप्यौ वचनाद्धि मे ॥ ९-६५-१७ (६३८७१)
इष्टं भृत्या भृताः सम्यग्भूः प्रशास्ता ससागरा ।
मूर्ध्नि स्थितममित्राणां जीवतामेव सञ्जय ॥ ९-६५-१८ (६३८७२)
दत्ता दाया यथाशक्ति मित्राणां च प्रियं कृतम् ।
अमित्रा बाधिताः सर्वे को नु स्वन्ततरो मया ॥ ९-६५-१९ (६३८७३)
मानिता बान्धवाः सर्वे मान्यः सम्पूजितो जनः ।
त्रितयं सेवितं सर्वं को नु स्वन्ततरो मया ॥ ९-६५-२० (६३८७४)
आज्ञप्तं नृपमुख्येषु मानः प्राप्तः सुदुर्लभः ।
आजानेयैस्तथा यातं को नु स्वन्ततरो मया ॥ ९-६५-२१ (६३८७५)
यातानि परराष्ट्राणि नृपा भुक्ताश्च दासवत् ।
प्रियेभ्यः प्रकृतं साधु को नु स्वन्ततरो मया ॥ ९-६५-२२ (६३८७६)
अधीतं विधिवद्दत्तं प्राप्तमायुर्निरामयम् ।
स्वधर्मेण जिता लोकाः को नु स्वन्ततरो मया ॥ ९-६५-२३ (६३८७७)
दिष्ट्या नाहं जितः सङ्ख्ये परान्प्रेष्यवदाश्रितः ।
दिष्ट्या मे विपुला लक्ष्मीर्मृते त्वन्यगता विभो ॥ ९-६५-२४ (६३८७८)
यदिष्टं क्षत्रबन्धूनां स्वधर्ममनुतिष्ठताम् ।
निधनं तन्मया प्राप्तं को नु स्वन्ततरो मया ॥ ९-६५-२५ (६३८७९)
दिष्ट्या नाहं परावृत्तो वैरात्प्राकृतवज्जितः ।
दिष्ट्या न विमतिं काञ्चिद्भजित्वा तु पराजितः ॥ ९-६५-२६ (६३८८०)
सुप्तं वाऽथ प्रमत्तं वा यथा हन्याद्विषेण वा ।
एवं व्युत्क्रान्तधर्मेण व्युत्क्रम्य समयं हतः ॥ ९-६५-२७ (६३८८१)
अश्वत्थामा महाभागः कृतवर्मा च सात्वतः ।
कृपः शारद्वतश्चैव वक्तव्या वचनान्मम ॥ ९-६५-२८ (६३८८२)
अधर्मेण प्रवृत्तानां पाण्डवानामनेकशः ।
विश्वासं समयघ्नानां न यूयं गन्तुमर्हथ ॥ ९-६५-२९ (६३८८३)
वार्तिकांश्चाब्रवीद्राजा पुत्रस्ते सत्यविक्रमः ।
अधर्माद्भीमसेनेन निहतोऽहं यथा रणे ॥ ९-६५-३० (६३८८४)
सोऽहं द्रोणं स्वर्गगतं कर्णशल्यावुभौ तथा ।
वृषसेनं महावीर्यं शकुनिं चापि सौबलम् ॥ ९-६५-३१ (६३८८५)
जलसन्धं महावीर्यं भगदत्तं च पार्थिवम् ।
सोमदत्तं महेष्वासं सैन्धवं च जयद्रथम् ॥ ९-६५-३२ (६३८८६)
दुःशासनपुरोगांश्च भ्रातॄनात्मसमांस्तथा ।
दौःशासनिं च विक्रान्तं लक्ष्मणं चात्मजावुभौ ॥ ९-६५-३३ (६३८८७)
एतांश्चान्यांश्च सुबहून्मदीयांश्च सहस्रशः ।
पृष्ठतोऽनुगमिष्यामि सार्थहीनो यथाऽध्वगः ॥ ९-६५-३४ (६३८८८)
कथं भ्रातॄन्हताञ्श्रुत्वा भर्तारं च स्वसा मम ।

रोरूयामाणा दुःखार्ता दुःशला सा भविष्यति ॥ ९-६५-३५ (६३८८९)
स्नुषाभिः प्रस्नुषाभिश्च वृद्धो राजा पिता मम ।
गान्धारीसहितश्चैव का गतिं प्रतिपत्स्यति ॥ ९-६५-३६ (६३८९०)
नूनं लक्ष्मणमाताऽपि हतपुत्रा हतेश्वरा ।
विनाशं यास्यति क्षिप्रं कल्याणी पृथुलोचना ॥ ९-६५-३७ (६३८९१)
यदि जानाति चार्वाकः परिव्राड्वाग्विशारदः ।
करिष्यति महाभागो ध्रुवं चापचितिं मम ॥ ९-६५-३८ (६३८९२)
समन्तपञ्चके पुण्ये त्रिषु लोकेषु विश्रुते ।
अहं निधनमासाद्य लोकान्प्राप्स्यामि शाश्वतान् ॥ ९-६५-३९ (६३८९३)
ततो जनसहस्राणि बाष्पपूर्णानि दिशो दश ॥
ससागरवना घोरा पृथिवी सचराचरा। ९-६५-४० (६३८९४)
चचालाथ सनिर्हादा दिशश्चैवाविलाऽभवन् ॥
ते द्रोणपुत्रमासाद्य यथावृत्तं न्यवेदयन्। ९-६५-४१ (६३८९५)
व्यवहारं गदायुद्धे पार्थिवस्य च पातनम् ॥
तदाख्याय ततः सर्वे द्रोणपुत्रस्य भारत। ९-६५-४२ (६३८९६)
ग्वादिका दुःखसन्तप्ताः शोकोपहतचेतसः'।
ध्यात्वा च सुचिरं कालं जग्मुरार्ता यथागतम् ॥ ॥ ९-६५-४३ (६३८९७)

इति श्रीमन्महाभारते शल्यपर्वणि गदायुद्धपर्वणि
पञ्चषष्टितमोऽध्यायः ॥ ६५ ॥
Mahabharata - Shalya Parva - Chapter Footnotes

९-६५-१ शौटीरः शूरः स एव शौटीर्यमात्मानं मन्यते शौटीर्यमानी ॥
९-६५-१६ स वै सञ्जयपूजित इति झ पाठः ॥
९-६५-२० मया मत्तः ॥
९-६५-३० वार्तिकान्वार्ताहारिणः ॥
९-६५-३८ चार्वाको ब्राह्मणवेषधारी राक्षसः । अपचितिं प्रतीकारम् ॥
९-६५-६५ पञ्चषष्टितमोऽध्यायः ॥

---

शल्यपर्व-अध्यय०६६
॥ श्रीः ॥
९.६६. अध्यायः ६६

Mahabharata - Shalya Parva - Chapter Topics
द्रौणिकृतकृतवर्मभिर्दुर्योधनस्य भूपतनदर्शनेन शोचनम् ॥ १ ॥
द्रौणिदुर्योधनयोः संलापः ॥ २ ॥

द्रौणिना रात्रौ पाण्डववधप्रतिज्ञानम् ॥ ३ ॥
दुर्योधनवचनात् कृपेण द्रौणेः सैनापत्येऽफिषेचनम् ॥ ४ ॥

Mahabharata - Shalya Parva - Chapter Text

९-६६-० (६३८९८)
सञ्जय उवाच। ९-६६-०क्ष् (५२५७)
वादिकानां सकाशात्तु श्रुत्वा दुर्योधनं हतम् ।
हतशिष्टास्तदा राजन्कौरवाणां महारथाः ॥ ९-६६-१ (६३८९९)
विनिर्भिन्नाः शितैर्बाणैर्गदातोमरशक्तिभिः ।
अश्वत्थामा कृपश्चैव कृतवर्मा च सात्वतः ।
त्वरिता जवनैरश्वैरायोधनमुपागमन् ॥ ९-६६-२ (६३९००)
तत्रापश्यन्महात्मानं धार्तराष्ट्रं निपातितम् ।
प्रभग्नं वायुवेगेन महासालं यथा वने ॥ ९-६६-३ (६३९०१)
भूमौ विवेष्टमानं तं रुधिरेण समुक्षितम् ।
महागजमिवारण्ये व्याधेन विनिपातितम् ॥ ९-६६-४ (६३९०२)
विवर्तमानं बहुशो रुधिरौघपरिप्लुतम् ।
यदृच्छया निपतितं चन्द्रमादित्यगोचरात् ॥ ९-६६-५ (६३९०३)
युगान्तमारुतेनेव शोषितं मकरालयम् ।
पूर्णचन्द्रमिव व्योम्नि तुषारावृतमण्डलम् ॥ ९-६६-६ (६३९०४)
रेणुध्वस्तं दीर्घभुजं मातङ्गमिव विक्रमे ।
वृतं भूतगणैर्घोरैः क्रव्यादैश्च समन्ततः ॥ ९-६६-७ (६३९०५)
यथा धनं लिप्समानैर्भृत्यैर्नृपतिसत्तमम् ।
भ्रुकुटीकृतवक्त्रान्तं क्रोधादुद्वृत्तचक्षुषम् ।
सामर्षं तं नरव्याघ्रं भीमं निपतितं तथा ॥ ९-६६-८ (६३९०६)
ते तं दृष्ट्वा महेष्वासं भूतले पतितं नृपम् ।
मोहमभ्यागमन्सर्वे कृपप्रभृतयो रथाः ॥ ९-६६-९ (६३९०७)
अवतीर्य रथेभ्यश्च प्राद्रवन्राजसन्निधौ ।
दुर्योधनं च सम्प्राप्य सर्वे भूमावुपाविशन् ॥ ९-६६-१० (६३९०८)
ततो द्रौणिर्महाराज बाष्पपूर्णेक्षणः श्वसन् ।
उवाच भरतश्रेष्ठं सर्वलोकेश्वरेश्वरम् ॥ ९-६६-११ (६३९०९)
न नूनं विद्यते पुण्यं मानुषे किञ्चिदेव हि ।
यत्र त्वं पुरुषव्याघ्र शेषे पांसुषु रूषितः ॥ ९-६६-१२ (६३९१०)
भूत्वा हि नृपतिः पूर्वं समाज्ञाप्य च मेदिनीम् ।
कथमेकोऽद्य राजेन्द्र तिष्ठसे निर्जने वने ॥ ९-६६-१३ (६३९११)
दुःशासनं न पश्यामि नापि कर्णं महारथम् ।

नापि तान्सुहृदः सर्वान्किमिदं भरतर्षभ ॥ ९-६६-१४ (६३९१२)
दुःखं नूनं कृतान्तस्य गतिं ज्ञातुं कथञ्चन ।
लोकनाथो भवान्यत्र शेषे पांसुषु रूषितः ॥ ९-६६-१५ (६३९१३)
एष मूर्धाभिषिक्तानामग्रे गत्वा परन्तपः ।
सतृणं ग्रसते पांसुं पश्य कालस्य पर्ययम् ॥ ९-६६-१६ (६३९१४)
क्व ते तदमलं छत्रं व्यजनं क्व च पार्थिव ।
सा च ते महती सेना क्व गता पार्थिवोत्तम ॥ ९-६६-१७ (६३९१५)
दुर्विज्ञेया गतिर्नूनं कार्याणां कारणान्तरे ।
यो वै लोकगुरुर्नाथो भवानेतां दशां गताः ॥ ९-६६-१८ (६३९१६)
अध्रुवा सर्वमर्त्येषु ध्रुवैव श्रीर्विचिन्त्यते ।
भवतो व्यसनं दृष्ट्वा शक्रविस्पर्धिनो भृशम् ॥ ९-६६-१९ (६३९१७)
तस्य तद्वचनं श्रुत्वा दुःखितस्य विशेषतः ।
उवाच राजन्पुत्रस्ते प्राप्तकालमिदं वचः ॥ ९-६६-२० (६३९१८)
विमृज्य नेत्रे पाणिभ्यां शोकजं बाष्पमुत्सृजन् ।
कृपादीन्स तदा वीरान्सर्वानेव नराधिपः ॥ ९-६६-२१ (६३९१९)
ईदृशो लोकधर्मोऽयं धात्रा निर्दिष्ट उच्यते ।
विनाशः सर्वभूतानां कालपर्यायकारितः ॥ ९-६६-२२ (६३९२०)
सोऽयं मां समनुप्राप्तः प्रत्यक्षो भवतां हि यः ।
पृथिवीं पालयित्वाऽहमेतां निष्ठामुपागतः ॥ ९-६६-२३ (६३९२१)
दिष्ट्या नाहं परावृत्तो युद्धे कस्यांचिदापदि ।
दिष्ट्याऽहं निहतः पापैश्चलेनैव विशेषतः ॥ ९-६६-२४ (६३९२२)
उत्साहश्च कृतो नित्यं मया दिष्ट्या युयुत्सता ।
दिष्ट्या चास्मिन्हतो युद्धे निहतज्ञातिबान्धवः ॥ ९-६६-२५ (६३९२३)
दिष्ट्या च वोऽहं पश्यामि मुक्तानस्माज्जनक्षयात् ।
स्वस्तियुक्तांश्च कल्याणांस्तन्मे प्रियमनुत्तमम् ॥ ९-६६-२६ (६३९२४)
मा भवन्तोऽत्र तप्यन्तां सौहृदान्निधनेन मे ।
यदि वेदाः प्रमाणं वो जिता लोका मयाऽक्षयाः ॥ ९-६६-२७ (६३९२५)
जानमानः प्रभावं च कृष्णस्यामिततेजसः ।
तेन न च्यावितश्चाहं क्षत्रधर्मात्स्वनुष्ठितात् ॥ ९-६६-२८ (६३९२६)
स मया समनुप्राप्तो नास्मि शोच्यः कथञ्चन ।
कृतं भवद्भिः सदृशमनुरूपमिवात्मनः ।
यतितं विजये शक्त्या दैवं तु दुरतिक्रमम् ॥ ९-६६-२९ (६३९२७)
एतावदुक्त्वा वचनं बाष्पव्याकुललोचनः ।
तूष्णीबभूव राजेन्द्र रुजाऽसौ विह्वलो भृशम् ॥ ९-६६-३० (६३९२८)
तथा दृष्ट्वा तु राजानं बाष्पशोकसमन्वितम् ।
द्रौणिः क्रोधेन जज्वाल यथा वह्निर्जगत्क्षये ॥ ९-६६-३१ (६३९२९)

स च क्रोधसमाविष्टः पाणौ पाणिं निपीड्य च ।
बाष्पविह्वलया वाचा राजानमिदमब्रवीत् ॥ ९-६६-३२ (६३९३०)
पिता मे निहतः क्षुद्रैः सुनृशंसेन कर्मणा ।
न तथा तेन तप्यामि तथा राजंस्त्वयाऽद्य वै ॥ ९-६६-३३ (६३९३१)
शृणु चेदं वचो मह्यं सत्येन वदतः प्रभो ।
इष्टापूर्तेन दानेन धर्मेण सुकृतेन च ॥ ९-६६-३४ (६३९३२)
अद्याहं सर्वपाञ्चालान्वासुदेवस्य पश्यतः ।
अद्य रात्रौ महाराज निहनिष्यामि पाण्डवान् ॥ ९-६६-३५ (६३९३३)
अनुज्ञां तु महाराज भवान्मे दातुमर्हति ॥ ९-६६-३६ (६३९३४)
तच्छ्रुत्वा वचनं द्रौणेर्धृतराष्ट्र तवात्मजः ।
मनसः प्रीतिजननं कृपं वचनमब्रवीत्। ९-६६-३७ (६३९३५)
दुर्योधन उवाच ।
आचार्य शीघ्रं कलशं जलपूर्णं समानय ॥ ९-६६-३७क्ष् (५२५८)
स तद्वचनमाज्ञाय राज्ञो ब्राह्मणसत्तमः ।
कलशं पूर्णमादाय राज्ञोऽन्तिकमुपागमत् ॥ ९-६६-३८ (६३९३६)
तमब्रवीन्महाराज पुत्रस्तव विशाम्पते ।
ममाज्ञया द्विजश्रेष्ठ द्रोणपुत्रोऽभिषिच्यताम् ।
सैनापत्येन भद्रं ते मम चेदिच्छसि प्रियम् ॥ ९-६६-३९ (६३९३७)
राज्ञो नियोगाद्योद्धव्यं ब्राह्मणेन विशेषतः ।
वर्तता क्षत्रधर्मेण ह्येवं धर्मविदो विदुः ॥ ९-६६-४० (६३९३८)
राज्ञस्तु वचनं श्रुत्वा कृपः शारद्वतस्ततः ।
द्रौणिं राज्ञो नियोगेन सैनापत्येऽभ्यषेचयत् ॥ ९-६६-४१ (६३९३९)
सोऽभिषिक्तो महाराज परिष्वज्य नृपोत्तमम् ।
प्रययौ सिंहनादेन दिशः सर्वा विनादयन् ॥ ९-६६-४२ (६३९४०)
दुर्योधनोऽपि राजेन्द्र शोणितेन परिप्लुतः ।
तां निशां प्रतिपेदेऽथ सर्वभूतभयावहाम् ॥ ९-६६-४३ (६३९४१)
अपक्रम्य तु ते तूर्णं तस्मादायोधनान्नृप ।
शोकसंविग्नमनसश्चिन्तामापेदिरे भृशम् ॥ ॥ ९-६६-४४ (६३९४२)

इति श्रीमन्महाभारते शतसाहस्त्रिकायां संहितायां वैयासिक्यां
शल्यपर्वणि गदायुद्धपर्वणि षट्षष्टितमोऽध्यायः ॥ ६६
॥ ॥ समाप्तं गदायुद्धपर्व शल्यपर्व च॥ ९ ॥

अतः परं सौप्तिकं पर्व भविष्यति ।तस्यायमाद्यः श्लोकः।
९-६६-१ (६३९४३) ९-६६-१क्ष् (५२५९) सञ्जय उवाच। ततस्ते सहिताः
सर्वे प्रयाता दक्षिणामुखाः। उपास्तमयवेलायां शिबिराभ्याशमागताः ॥

९-६६-५ आदित्यगोचरात्गगनात् । चक्रामादित्यगोचरमिति झ पाठः
तत्र चक्रमादित्यगोचरं सूर्यमण्डलमिवेति लुप्तोपमा ॥
९-६६-१८ कारणान्तरे अदृष्टरूपे सति । तेन दृष्टसामग्रीवैयर्थ्यं
जायत इति भावः ॥
९-६६-६६ षट्षष्टितमोऽध्यायः ॥

---

१०. सौप्तिकपर्व

सौप्तिक-अध्यय००१
॥ श्रीः ॥
१०.१. अध्यायः १

Mahabharata - Sauptika Parva - Chapter Topics
सञ्जयधृतराष्ट्रयोः संलापः ॥ १ ॥
द्रौणिकृपकृतवर्मभिर्वनमध्यमेत्य न्यग्रोधस्याधस्तादुपवेशनम्
॥ २ ॥
तत्र रात्रौ घूकेन बहुकाकावधदर्शिना द्रौणिना तद्वत्स्वेनापि
पाण्डववधनिर्धारणम् ॥ ३ ॥
ततः कृपकृतवर्माणौ समुद्बोध्य स्वकर्तव्यकथनप्रार्थना ॥ ४ ॥

Mahabharata - Sauptika Parva - Chapter Text

१०-१-० (६३९४४)
श्रीवेदव्यासाय नमः। १०-१-०क्ष् (५२६०)
नारायणं नमस्कृत्य नरं चैव नरोत्तमम् ।
देवीं सरस्वतीं व्यासं ततो जयमुदीरयेत् ॥ १०-१-१ (६३९४५)
सञ्जय उवाच। १०-१-१क्ष् (५२६१)
ततस्ते सहिताः सर्वे प्रयाता दक्षिणामुखाः ।
उपास्तमयवेलायां शिबिराभ्याशमागताः ॥ १०-१-१ (६३९४६)
विमुच्य वाहांस्त्वरिता भीताः समनुबोधनात् ।
गहनं देशमासाद्य प्रच्छन्ना न्यविशन्त ते ॥ १०-१-२ (६३९४७)
सेनानिवेशमभितो नातिदूरमवस्थिताः ।
श्ननिकृत्ता निशितैः शस्त्रैः समन्तात्क्षतविक्षताः ।
दीर्घमुष्णं च निःश्वस्य पाण्डवानन्वचिन्तयन् ॥ १०-१-३ (६३९४८)
श्रुत्वा च निनदं घोरं पाण्डवानां जयैषिणाम् ।
अनुसारभयाद्भीताः प्राङ्मुखाः प्राद्रवन्पुनः ॥ १०-१-४ (६३९४९)

ते मुहूर्तात्ततो गत्वा श्रान्तवाहा पिपासिताः ।
नामृष्यन्त महेष्वासाः क्रोधामर्षवशङ्गताः ॥ १०-१-५ (६३९५०)
राज्ञो वधेन सन्तप्ता मुहूर्तं समवस्थिताः ॥ १०-१-६ (६३९५१)
धृतराष्ट्र उवाच। १०-१-७क्ष् (५२६२)
अश्रद्धेयमिदं कर्म कृतं भीमेन सञ्जय ।
यत्स नागायुतप्राणः पुत्रो मम निपातितः ॥ १०-१-७ (६३९५२)
अवध्यः सर्वभूतानां वज्रसंहननो युवा ।
पाण्डवैः समरे पुत्रो निहतो मम निपातितः ॥ १०-१-८ (६३९५३)
न दिष्टमभ्यतिक्रान्तुं शक्यं गावल्गणे नरैः ।
यत्समेत्य रणे पार्थैः पुत्रो मम निपातितः ॥ १०-१-९ (६३९५४)
अद्रिसारमयं नूनं हृदयं मम सञ्जय ।
हतं पुत्रशतं श्रुत्वा यन्न दीर्णं सहस्रधा ॥ १०-१-१० (६३९५५)
कथं हि वृद्धमिथुनं हतपुत्रं भविष्यति ।
न ह्यहं पाण्डुपुत्रस्य विषये वस्तुमुत्सहे ॥ १०-१-११ (६३९५६)
कथं राज्ञः पिता भूत्वा स्वयं राजा च सञ्जय ।
प्रेष्यभूतः प्रवर्तेयं पाण्डवेयस्य शासनात् ॥ १०-१-१२ (६३९५७)
प्रभुज्य पृथिवीं सर्वां स्थिता मूर्धनि सञ्जय ।
कथमद्य भविष्यामि श्रोतुं शक्ष्यामि सञ्जय। १०-१-१३ (६३९५८)
येन पुत्रशतं पूर्णमेकेन निहतं मम ॥
कृतं सत्यं वचस्तस्य विदुरस्य महात्मनः। १०-१-१४ (६३९५९)
अकुर्वता वचस्तस्य मम पुत्रेण सञ्जय ॥
अधर्मेण हते तात पुत्रे दुर्योधने मम। १०-१-१५ (६३९६०)
कृतवर्मा कृपो द्रौणिः किमकुर्वत सञ्जय ॥ १०-१-१६ (६३९६१)
सञ्जय उवाच। १०-१-१७क्ष् (५२६३)
गत्वा तु तावका राजन्नातिदूरं मनस्विनः ।
अपश्यन्त वनं घोरं नानाद्रुमलतावृतम् ॥ १०-१-१७ (६३९६२)
ते मुहूर्तं तु विश्रम्य लब्धतोयैर्हयोत्तमैः ।
सूर्यास्तमयवेलायां कौरवेयस्य शासनात् ॥ १०-१-१८ (६३९६३)
नानामृगगणैर्जुष्टं नानापक्षिभिराकुलम् ।
नानाद्रुमलताच्छन्नं नानाव्यालनिषेवितम् ॥ १०-१-१९ (६३९६४)
नानातोयसमाकीर्णैस्तटाकैरुपशोभितम् ।
पद्मिनीशतसञ्छन्नं नीलोत्पलसमायुतम् ॥ १०-१-२० (६३९६५)
प्रविश्य तद्वनं घोरं वीक्षमाणाः समन्ततः ।
शाखासहस्रसञ्छन्नं न्यग्रोधं ददृशुस्ततः ॥ १०-१-२१ (६३९६६)
उपेत्य तु तदा राजन्न्यग्रोधं ते महारथाः ।
ददृशुर्द्विपदां श्रेष्ठाः श्रेष्ठं तं वै वनस्पतिम् ॥ १०-१-२२ (६३९६७)

तेऽवतीर्य रथेभ्यश्च विप्रमुच्य च वाजिनः ।
उपस्पृश्य यथान्यायं सन्ध्यामन्वासत प्रभो ॥ १०-१-२३ (६३९६८)
ततोऽस्तं पर्वतश्रेष्ठमनुप्राप्ते दिवाकरे ।
सर्वस्य जगतो धात्री शर्वरी प्रत्यपद्यत ॥ १०-१-२४ (६३९६९)
ग्रहनक्षत्रताराभिः प्रकीर्णाभिरलङ्कृतम् ।
नभोंऽशुकमिवाभाति प्रेक्षणीयं समन्ततः ॥ १०-१-२५ (६३९७०)
इच्छया ते प्रवल्गन्ति ये सत्वा रात्रिचारिणः ।
दिवाचराश्च ये सत्वास्ते निद्रावशमागताः ॥ १०-१-२६ (६३९७१)
रात्रिञ्चराणां सत्वानां निनादोऽभूत्सुदारुणः ।
क्रव्यादाश्च प्रमुदिता घोरा प्राप्ता च शर्वरी ॥ १०-१-२७ (६३९७२)
तस्मिन्रात्रिमुखे घोरे दुःखशोकसमन्विताः ।
कृतवर्मा कृपो द्रौणिरुपोपविविशुः समम् ॥ १०-१-२८ (६३९७३)
उपोपविष्टाः शोचन्तो न्यग्रोधस्य समीपतः ।
तमेवार्थमतिक्रान्तं कुरुपाण्डवयोः क्षयम् ॥ १०-१-२९ (६३९७४)
निद्रया च परीताङ्गा निषेदुर्धरणीतले ।
श्रमेण सुदृढं युक्ता विक्षता विविधैः शरैः ॥ १०-१-३० (६३९७५)
ततो निद्रावशं प्राप्तौ कृपभोजौ महाबालौ ।
सुखोचितावदुःखार्हौ निषण्णौ धरणीतले ॥ १०-१-३१ (६३९७६)
तौ तु सुप्तौ महाराज तस्मिन्देशे महारथौ ।
श्महार्हशयनोपेतौ भूमावेव ह्यनाथवत् ॥ऋ १०-१-३२ (६३९७७)
क्रोधामर्षवशं प्राप्तो द्रोणपुत्रस्तु भारत ।
न वै स्म स जगामाथ निद्रां सर्प इव श्वसन् ॥ १०-१-३३ (६३९७८)
न लेभे स तु निद्रां वै दह्यमानोऽतिमन्युना ।
वीक्षाञ्चक्रे महाबाहुस्तद्वनं घोरदर्शनम् ॥ १०-१-३४ (६३९७९)
वीक्षमाणो वनोद्देशं नानासत्वैर्निषेवितम् ।
अपश्यत महाबाहुर्न्यग्रोधं वायसावृतम् ॥ १०-१-३५ (६३९८०)
तत्र काकसहस्राणि तां निशां पर्यणामयन् ।
सुखं स्वपन्तः कौरव्य पृथक्पृथगुपाश्रयाः ॥ १०-१-३६ (६३९८१)
सुप्तेषु तेषु काकेषु विस्रब्धेषु समन्ततः ।
सोऽपश्यत्सहसा यान्तमुलूकं घोरदर्शनम् ॥ १०-१-३७ (६३९८२)
महास्वनं महाकायं हर्यक्षं बभ्रुपिङ्गलम् ।
सुतीक्ष्णघोणानखरं सुपर्णमिव वेगितम् ॥ १०-१-३८ (६३९८३)
सोऽथ शब्दं मृदुं कृत्वा लीयमान इवाण्डजः ।
न्यग्रोधस्य ततः साखां पातयामास भारत ॥ १०-१-३९ (६३९८४)
सन्निपत्य तु शाखायां न्यग्रोधस्य विहङ्गमः ।
सुप्ताञ्जघान विस्रब्धान्वायसान्वायसान्तकः ॥ १०-१-४० (६३९८५)

केषाञ्चिदच्छिनत्पक्षाञ्शिरांसि च चकर्त ह ।
चरणांश्चैव केषाञ्चिद्बभञ्ज चरणायुधः ॥ १०-१-४१ (६३९८६)
क्षणेनाघ्नत्स बलवान्येऽस्य दृष्टिपथे स्थिताः ॥ १०-१-४२ (६३९८७)
तेषां शरीरावयवैः शरीरैश्च विशाम्पते ।
न्यग्रोधमण्डलं सर्वं सञ्छन्नं पर्वतोपमम् ॥ १०-१-४३ (६३९८८)
तांस्तु हत्वा ततः काकान्कौशिको मुदितोऽभवत् ।
प्रतिकृत्य यथाकामं शत्रूणां शत्रुसूदनः ॥ १०-१-४४ (६३९८९)
तद्दृष्ट्वा तादृशं कर्म कौशिकेन कृतं निशि ।
तद्भावे कृतसङ्कल्पो द्रौणिरेकोऽन्वचिन्तयत् ॥ १०-१-४५ (६३९९०)
उपदेशः कृतोऽनेन पक्षिणा मम संयुगे ।
शत्रूणां क्षपणं युक्तं प्राप्तः कालश्च मे मतः ॥ १०-१-४६ (६३९९१)
नाद्य शक्यं मया हन्तुं पाण्डवा जितकाशिनः ।
बलवन्तः कृतोत्साहा लब्धलक्षाः प्रहारिणः ॥ १०-१-४७ (६३९९२)
राज्ञः सकाशे तेषां च प्रतिज्ञातो वधो मया ।
पतङ्गाग्निसमां वृत्तिमास्यायात्मविनाशिनीम् ॥ १०-१-४८ (६३९९३)
न्यायतो युध्यमानस्य प्राणत्यागो न संशयः ।
छद्मना तु भवेत्सिद्धिः शत्रूणां च क्षयो महान् ॥ १०-१-४९ (६३९९४)
तत्र सशयितादर्थाद्योऽर्थो निःसंशयो भवेत् ।
तं जना बहुमन्यन्ते येऽर्थशास्त्रविशारदाः ॥ १०-१-५० (६३९९५)
यच्चाप्यत्र भवेत्कार्यं गर्हितं लोकनिन्दितम् ।
कर्तव्यं तन्मनुष्येण क्षत्रधर्मेण वर्तता ॥ १०-१-५१ (६३९९६)
निन्दितानि च कर्माणि कुत्सितानि पदेपदे ।
सोपधानि कृतान्येव पाण्डवैरकृतात्मभिः ॥ १०-१-५२ (६३९९७)
अस्मिन्नर्थे पुरा गीताः श्रूयन्ते धर्मवित्तमैः ।
श्लोका न्यायमवेक्षद्भिस्तत्त्वार्थास्तत्त्वदर्शिभिः ॥ १०-१-५३ (६३९९८)
परिश्रान्ते विदीर्णे वा भुञ्जाने वाऽपि शत्रुभिः ।
प्रस्थाने वा प्रवेशे वा प्रहर्तव्यं रिपोर्बलम् ॥ १०-१-५४ (६३९९९)
निद्रार्तमर्धरात्रे च तथा नष्टप्रणायकम् ।
भिन्नयोधं बलं यच्च द्विधा युक्तं च यद्भवेत् ॥ १०-१-५५ (६४०००)
इत्येवं निश्चयं चक्रे सुप्तानां निशि मारणे ।
पाण्डूनां सह पाञ्चालैर्द्रोणपुत्रः प्रतापवान् ॥ १०-१-५६ (६४००१)
स क्रूरां मतिमास्थाय विनिश्चित्य मुहुर्मुहुः ।
सुप्तौ प्राबोधयत्तौ तु मातुलं भोजमेव च ॥ १०-१-५७ (६४००२)
तौ प्रबुद्धौ महात्मानौ कृपभोजौ महाबालौ ।
नोत्तरं प्रतिपद्येतां तत्र युक्तं ह्रिया वृतौ ॥ १०-१-५८ (६४००३)
स मुहूर्तमिव ध्यात्वा तावुभौ वाक्यमब्रवीत् ॥ १०-१-५९ (६४००४)

हतो दुर्योधनो राजा एकवीरो मबाहलः ।
यस्यार्थे वैरमस्माभिरासक्तं पाण्डवैः सह ॥ १०-१-६० (६४००५)
एकाकी बहुभिः क्षुद्रैराहवे शुद्धविक्रमः ।
पातितो भीमसेनेन एकादशचमूपतिः ॥ १०-१-६१ (६४००६)
वृकोदरेण क्षुद्रेण सुनृशंसमिदं कृतम् ।
मूर्धाभिषिक्तस्य शिरः पादेन परिमृद्नता ॥ १०-१-६२ (६४००७)
विनर्दन्ति च पाञ्चालाः क्ष्वेलन्ति च हसन्ति च ।
धमन्ति शङ्खाञ्शतशो हृष्टा घ्नन्ति च दुन्दुभीन् ॥ १०-१-६३ (६४००८)
वादित्रघोषस्तुमुलो विमिश्रः शङ्खनिःस्वनैः ।
अनिलेनेरितो घोरो दिशः पूरयतीव ह ॥ १०-१-६४ (६४००९)
अश्वानां हेषमाणानां गजानां चैव बृंहताम् ।
सिंहनादश्च शूराणां श्रूयते सुमहानयम् ॥ १०-१-६५ (६४०१०)
दिशं प्राचीं समाश्रित्य हृष्टानां गच्छतां भृशम् ।
रथनेमिस्वनाश्चैव श्रूयन्ते रोमहर्षणाः ॥ १०-१-६६ (६४०११)
पाण्डवैर्धार्तराष्ट्राणां यदिदं कदनं कृतम् ।
वयमेव त्रयः शिष्टा अस्मिन्महति वैशसे ॥ १०-१-६७ (६४०१२)
केचिन्नागशतप्राणाः केचित्सर्वास्त्रकोविदाः ।
निहताः पाण्डवैर्यस्मिन्मन्ये कालस्य पर्ययम् ॥ १०-१-६८ (६४०१३)
एवमेतेन भाव्यं हि नूनं कार्येण तत्त्वतः ।
यथा ह्यस्येदृशी निष्ठा कृते यत्नेऽपि दुष्करे ॥ १०-१-६९ (६४०१४)
भवतोस्तु यदि प्रज्ञा न मोहादपचीयते ।
व्यसनेऽस्मिन्महत्यर्थे यन्नः श्रेयस्तदुच्यताम् ॥ ॥ १०-१-७० (६४०१५)

इति श्रीमन्महाभारते सौप्तिकपर्वणि प्रथमोऽध्यायः ॥ १ ॥

Mahabharata - Sauptika Parva - Chapter Footnotes

१०-१-१ ततः दुर्योधनेन सैनापत्येऽश्वत्थाम्नोऽभिषेकानन्तरं
ते अश्वत्थामकृपाचार्यकृतवर्माणः ॥
१०-१-२ शिबिरनिकटस्थं देशं आसाद्य वाहान्विमुच्य न्यविशन्तेति योजना ॥
१०-१-४ अनुसारः पृष्ठगमनम् । प्राद्रवन्निति पुनर्वाहान्योजयित्वेति
गम्यते ॥
१०-१-६ राज्ञो दुर्योधनस्य ॥
१०-१-२० नानापुष्पोपशोभितमिति झ पाठः ॥
१०-१-२३ अन्वासत उपासितवन्तः ॥
१०-१-२५ अंशुकं वस्त्रम् ॥
१०-१-३२ शयनोपेतौ प्रागिति शेषः ॥

१०-१-३६ पर्यणामयन् परिणीतवन्त आसन् ॥
१०-१-३८ हर्यक्ष्यं हरिन्मणिनिभलोचनम् । षाणा नासा ॥
१०-१-१ प्रथमोऽध्यायः ॥

---

सौप्तिक-अध्यय००२
॥ श्रीः ॥
१०.२. अध्यायः २

Mahabharata - Sauptika Parva - Chapter Topics
कृपेण द्रौणिम्प्रति कर्तव्योपदेशः ॥ १ ॥

Mahabharata - Sauptika Parva - Chapter Text

१०-२-० (६४०१६)
कृप उवाच। १०-२-०क्ष् (५२६४)
श्रुतं ते वचनं सर्वं हेतुयुक्तं मया विभो ।
ममापि तु वचः किञ्चिच्छृणुष्वाद्य महाभुज ॥ १०-२-१ (६४०१७)
आबद्धा मानुषाः सर्वे निबद्धाः कर्मणोर्द्वयोः ।
दैवे पुरुषकारे च परं ताभ्यां न विद्यते ॥ १०-२-२ (६४०१८)
न हि दैवेन सिध्यन्ति कार्याण्येकेन सत्तम ।
न चापि कर्मणैकेन द्वाभ्यां सिद्धिस्तु योगतः ॥ १०-२-३ (६४०१९)
ताभ्यामुभाभ्यां सर्वार्था निबद्धा अधमोत्तमाः ।
प्रवृत्ताश्चैव दृश्यन्ते निवृत्ताश्चैव सर्वशः ॥ १०-२-४ (६४०२०)
पर्जन्यः पर्वते वर्षन्किन्नु साधयते फलम् ।
कृष्टे क्षेत्रे तथा वर्षन्किं न साधयते फलम् ॥ १०-२-५ (६४०२१)
उत्थानं चापि दैवस्य ह्यनुत्थानं च दैवतम् ।
व्यर्थं भवति सर्वत्र पूर्वस्तत्र विनिश्चयः ॥ १०-२-६ (६४०२२)
सुवृष्टे च यथा देवे सम्यक् क्षेत्रे च कर्षिते ।
बीजं महागुणं भूयात्तथा सिद्धिर्हि मानुषी ॥ १०-२-७ (६४०२३)
तयोर्दैवं तु दुश्चिन्त्यं स्ववशेनैव वर्तते ।
प्राज्ञाः पुरुषकारे तु वर्तन्ते देवमास्थिताः ॥ १०-२-८ (६४०२४)
ताभ्यां सर्वे हि कार्यार्था मनुष्याणां नरर्षभ ।
विचेष्टन्तः स्म दृश्यन्ते निवृत्तास्तु तथैव च ॥ १०-२-९ (६४०२५)
कृतः पुरुषकारश्च सोऽपि दैवेन सिध्यति ।
तथास्य कर्मणः कर्तुरभिनिर्वर्तते फलम् ॥ १०-२-१० (६४०२६)
उत्थानं च मनुष्याणां दक्षाणां दैववर्जितम् ।

अभलं दृश्यते लोके सम्यगप्युपपादितम् ॥ १०-२-११ (६४०२७)
तत्रालसा मनुष्याणां ये भवन्त्यमनस्विनः ।
उत्थानं ते विगर्हन्ति प्राज्ञानां तन्न रोचते ॥ १०-२-१२ (६४०२८)
प्रायशो हि कृतं कर्म नाफलं दृश्यते भुवि ।
अकृत्वा च पुनर्दुःखं कर्म पश्येन्महाफलम् ॥ १०-२-१३ (६४०२९)
चष्टामकुर्वंल्लभते यदि किञ्चिद्यदृच्छया ।
यो वा न लभते कृत्वा दुर्दर्शौ तावुभावपि ॥ १०-२-१४ (६४०३०)
शक्नोति जीवितुं दक्षो नालसः सुखमेधते ।
दृश्यन्ते जीवलोकेऽस्मिन्दक्षाः प्रायो हितैषिणः ॥ १०-२-१५ (६४०३१)
यदि दक्षः समारम्भात्कर्मणो नाश्नुते फलम् ।
नास्य वाच्यं भवेत्किञ्चिल्लब्धव्यं वाऽधिगच्छति ॥ १०-२-१६ (६४०३२)
नाकृत्वा कर्म लोके हि फलं विन्दति कर्हिचित् ।
स तु वक्तव्यतां याति द्वेष्यो भवति भूयशः ॥ १०-२-१७ (६४०३३)
एवमेतदनादृत्य वर्तते यस्त्वतोऽन्यथा ।
स करोत्यात्मनोऽनर्थानेष बुद्धिमतां नयः ॥ १०-२-१८ (६४०३४)
हीनं पुरुषकारेण यदि दैवेन वा पुनः ।
कारणाभ्यामथैताभ्यामुत्थानमफलं भवेत् ॥ १०-२-१९ (६४०३५)
हीनं पुरुषकारेण कर्म त्विह न सिध्यति ॥ १०-२-२० (६४०३६)
दैवतेभ्यो नमस्कृत्य यस्त्वर्थान्सम्यगीहते ।
दक्षो दाक्षिण्यसम्पन्नो न स मोघैर्विहन्यते ॥ १०-२-२१ (६४०३७)
सम्यगीहा पुनरियं या बृद्धानुपसेवते ।
आपृच्छति च यच्छ्रेयः करोति च हितं वचः ॥ १०-२-२२ (६४०३८)
उत्थायोत्थाय हि सदा प्रष्टव्या वृद्धसम्मताः ।
ते स्म योगे परं मूलं तन्मूला सिद्धिरुच्यते ॥ १०-२-२३ (६४०३९)
वृद्धानां वचनं श्रुत्वा योऽभ्युत्थानं प्रयोजयेत् ।
उत्थानस्य फलं सम्यक्तदा स लभतेऽचिरात् ॥ १०-२-२४ (६४०४०)
रागात्क्रोधाद्भयाल्लोभाद्योऽर्थानीहेत मानवः ।
अनीशश्चावमानी च स शीघ्रं भ्रश्यते श्रियः ॥ १०-२-२५ (६४०४१)
सोयं दुर्योधनेनार्थो लुब्धेनादीर्घदर्शिना ।
असमर्थः समारब्धो मूढत्वादविचिनन्तितः ॥ १०-२-२६ (६४०४२)
हितबुद्धीननादृत्य सम्मन्त्र्यासाधुभिः सह ।
वार्यमाणोऽकरोद्वैरं पाण्डवैर्गुणवत्तरैः ॥ १०-२-२७ (६४०४३)
पूर्वमप्यतिदुःशीलो न धैर्यं कर्तुमर्हति ।
तपत्यर्थे विपन्ने हि मित्राणां न कृतं वचः ॥ १०-२-२८ (६४०४४)
अनुवर्तामहे यत्तु तं वयं पापपूरुषम् ।
अस्मानप्यनयस्तस्मात्प्राप्तोऽयं दारुणो महान् ॥ १०-२-२९ (६४०४५)

अएन तु ममाद्यापि व्यसनेनोपतापिता ।
बुद्धिश्चिन्तयते किञ्चित्स्वं श्रेयो नावबुध्यते ॥ १०-२-३० (६४०४६)
मुह्यता तु मनुष्येण प्रष्टव्याः सुहृदो जनाः ।
तत्रास्य बुद्धिर्विनयस्तत्र श्रेयश्च पश्यति ॥ १०-२-३१ (६४०४७)
ततोऽस्य मूलं कार्याणां बुद्ध्या निश्चित्य वै बुधाः'।
तेऽत्र पृष्टा यथा ब्रूयुस्तत्कर्तव्यं तथा भवेत् ॥ १०-२-३२ (६४०४८)
ते वयं धृतराष्ट्रं च गान्धारीं च यशस्विनीम् ।
उपपृच्छामहे गत्वा विदुरं च महामतिम् ॥ १०-२-३३ (६४०४९)
ते पृष्टास्तु वदेयुर्यच्छ्रेयो नः समनन्तरम् ।
तदस्माभिः पुनः कार्यमिति मे नैष्ठिकी मतिः ॥ १०-२-३४ (६४०५०)
अनारम्भात्तु कार्याणां नार्थः सम्पद्यते क्वचित् ॥ १०-२-३५ (६४०५१)
कृते पुरुषकारे तु येषां कार्यं न सिध्यति ।
दैवेनोपहतास्ते तु नात्र कार्या विचारणा ॥ ॥ १०-२-३६ (६४०५२)

इति श्रीमन्महाभारते सौप्तिकपर्वणि द्वितीयोऽध्यायः ॥ २ ॥

Mahabharata - Sauptika Parva - Chapter Footnotes

१०-२-२ दैवे आसमन्तात् बद्धाः पुरुषकारे निहीनतया बद्धाः ।तेन दैवं प्रधानं पुरुषकार उपसर्जनमित्युक्तं भवति। आरम्भा मानुषाः सर्वे इति क पाठः ॥
१०-२-६ उत्थानमिति ।दैवस्य प्रधानस्योत्थानं पुरुषकारो व्यर्थं भवति तथाऽनुत्थानमुत्थानहीनं दैवमपि व्यर्थमिति पक्षद्वयं सर्वत्र व्यवस्यति तत्र पूर्वएव पक्षः श्रेयानित्यर्थः ॥
१०-२-९ विचेष्टन्तः प्रवृत्ता दृश्यन्ते लोकदृष्ट्येत्यर्थः ॥
१०-२-१३ कर्माकृत्वा दुःखं पश्येदित्यापि प्रायशोऽस्ति ॥
१०-२-१४ दुर्दर्शौ दुर्लभौ ॥
१०-२-१६ स्पर्शं चास्याधिगच्छतीति छ पाठः ।तत्र अस्य कर्मणः स्पर्शं लोकस्य सम्बन्धं चाधिगच्छति लोकप्रियः स्यादित्यर्थः ॥
१०-२-१७ अकृत्वा कर्म यो लोके फलं विन्दति धिष्ठित इति झ पाठः ।तत्र अदक्षस्तु परप्रयत्नार्जितेन जीवन्नपि भोक्तुमेवायं समर्थो नार्जयितुमिति निन्द्यत इति भावः ॥
१०-२-१८ एतत् दैवदाक्ष्ययोः साहित्यम् ।अन्यथा तयोरन्यतरालम्बनेन ॥
१०-२-२३ योगे अलब्धलाभे ॥
१०-२-२५ अनीशः अजितचित्तः ।अवमानी परमवजानन् ॥
१०-२-२ द्वितीयोऽध्यायः ॥

सौप्तिक-अध्यय००३
॥ श्रीः ॥
१०.३. अध्यायः ३

Mahabharata - Sauptika Parva - Chapter Topics
द्रौणिना कृपवचनमनादृत्य कृपकृतवर्मणोः पुरतः निशि प्रसुप्तपाण्डुपाञ्चालहननप्रतिज्ञानम् ॥ १ ॥

Mahabharata - Sauptika Parva - Chapter Text

१०-३-० (६४०५३)
सञ्जय उवाच। १०-३-०क्ष् (५२६५)
कृपस्य वचनं श्रुत्वा धर्मार्थसहितं शुभम् ।
अश्वत्थामा महाराज दुःखशोकसमन्वितः ॥ १०-३-१ (६४०५४)
दह्यमानस्तु शोकेन प्रदीप्तेनाग्निना यथा ।
क्रूरं मनस्ततः कृत्वा तावभौ प्रत्यभाषत ॥ १०-३-२ (६४०५५)
पुरुषेपुरुषे बुद्धिर्याया भवति शोभना ।
तुष्यन्ति च पृथक्सर्वे प्रज्ञया ते स्वयास्वया ॥ १०-३-३ (६४०५६)
सर्वो हि मन्यते लोक आत्मानं बुद्धिमत्तरम् ।
सर्वस्यात्मा बहुमतः सर्वोत्मानं प्रशंसति ॥ १०-३-४ (६४०५७)
सर्वस्य हि स्वका प्रज्ञा साधुवादे प्रतिष्ठिता ।
परबुद्धिं च निन्दन्ति स्वां प्रशंसन्ति चासकृत् ॥ १०-३-५ (६४०५८)
कारणान्तरयोगेन येषां संवदते मतिः ।
तेऽन्योन्येन च तुष्यन्ति बहुमन्यन्ति चासकृत् ॥ १०-३-६ (६४०५९)
तस्यैव तु मनुष्यस्य सासा बुद्धिस्तदातदा ।
कालयोगे विपर्यासं प्राप्यान्योन्यं विपद्यते ॥ १०-३-७ (६४०६०)
अनित्यत्वात्तु चित्तानां मनुष्याणां विशेषतः ।
चित्तवैक्लब्यमासाद्य सासा बुद्धिः प्रजायते ॥ १०-३-८ (६४०६१)
यथा हि वैद्यः कुशलो ज्ञात्वा व्याधिं यथाविधि ।
भैषज्यं कुरुते योगात्प्रशमार्थमिति प्रभो ॥ १०-३-९ (६४०६२)
एवं कार्यस्य योगात्प्रशमार्थमिति प्रभो ॥
प्रज्ञया च स्वया युक्त्या तां च गृह्णन्ति वै बुधाः ॥ १०-३-१० (६४०६३)
अन्यया यौवने बाल्ये बुद्ध्या भवति मोहितः ।
मध्येऽन्यया जरायां तु सोन्यां रोचयते मतिम् ॥ १०-३-११ (६४०६४)
व्यसन वा महाघोरं समृद्धिं चापि तादृशीम् ।

अवाप्य पुरुषो भोज कुरुते बुद्धिवैकृतम् ॥ १०-३-१२ (६४०६५)
एकस्मिन्नेव पुरुषे सासा बुद्धिस्तदातदा ।
भवत्यनित्या प्रज्ञा हि सा तस्यैव न रोचते ॥ १०-३-१३ (६४०६६)
निश्चित्य तु यथाप्रज्ञं यां मतिं साधु पश्यति ।
तया प्रकुरुते भावं सा तस्योद्योगकारिका ॥ १०-३-१४ (६४०६७)
सर्वो हि पुरुषो भोज साध्वेतदिति निश्चितः ।
कर्तुमारभते प्रीतिं मरणादिषु कर्मसु ॥ १०-३-१५ (६४०६८)
सर्वे हि युक्तां विज्ञाय प्रज्ञां वापि स्वकां नराः ।
चेष्टन्ते विविधां चेष्टां हितमित्येव जानते ॥ १०-३-१६ (६४०६९)
उपजाता व्यसनजा येयमद्य मतिर्मम ।
युवयोस्तां प्रवक्ष्यामि सर्वेषां शोकनाशिनीम् ॥ १०-३-१७ (६४०७०)
प्रजापतिः प्रजाः सृष्ट्वा कर्म तासु विधाय च ।
वर्णेवर्णे समाधत्त ह्येकैकं गुणवत्तरम् ॥ १०-३-१८ (६४०७१)
ब्राह्मणे वेदमग्र्यं तु क्षत्रिये तेज उत्तमम् ।
दाक्ष्यं वैश्ये च शूद्रे च सर्ववर्णानुकूलताम् ॥ १०-३-१९ (६४०७२)
अदान्तो ब्राह्मणोऽसाधुर्निस्तेजाः क्षत्रियो मृतः ।
अदक्षो निन्द्यते वैश्यः शूद्रश्च प्रतिकूलवान् ॥ १०-३-२० (६४०७३)
सोऽस्मि जातः कुले श्रेष्ठे ब्राह्मणैरभिपूजिते ।
मन्दभाग्यतयाऽस्म्येतं क्षत्रधर्ममनुष्ठितः ॥ १०-३-२१ (६४०७४)
क्षत्रधर्मं विदित्वाऽहं यदि ब्राह्मण्यमाश्रितः ।
प्रकरिष्ये महत्कर्म न मे तत्साधुसम्मतम् ॥ १०-३-२२ (६४०७५)
धारयित्वा धनुर्दिव्यं दिव्यान्यस्त्राणि चाहवे ।
पितरं निहतं दृष्ट्वा किन्नु वक्ष्यामि संसदि ॥ १०-३-२३ (६४०७६)
सोऽहमद्य यथाकामं क्षत्रधर्ममवाप्य च ।
गन्ताऽस्मि पदवीं राज्ञः पितुश्चापि महात्मनः ॥ १०-३-२४ (६४०७७)
अद्य स्वप्स्यन्ति पाञ्चाला विश्वस्ता जितकाशिनः ।
विमुक्तयुग्यकवचा हर्षेण च समन्विताः ।
वयं जिता मताश्चैषां श्रान्ता व्यायामकर्शिताः ॥ १०-३-२५ (६४०७८)
तेषां निशि प्रसुप्तानां सुस्थानां शिबिरे स्वके ।
अवस्कन्दं करिष्यामि शिबिरस्याद्य दुष्करम् ॥ १०-३-२६ (६४०७९)
तानवस्कन्द्य शिबिरे प्रेतभूतानचेतसः ।
सूदयिष्यामि विक्रम्य मघवानिव दानवान् ॥ १०-३-२७ (६४०८०)
अद्य तान्सहितान्सर्वान्धृष्टद्युम्नपुरोगमान् ।
सूदयिष्यामि विक्रम्य कक्षं दीप्त इवानलः ॥ १०-३-२८ (६४०८१)
निहत्य चैव पाञ्चालाञ्शान्तिं लब्धाऽस्मि सत्तम ॥ १०-३-२९ (६४०८२)
पाञ्चालेषु चरिष्यामि सूदयन्नद्य संयुगे ।

पिनाकपाणिः सङ्क्रुद्धः स्वयं रुद्रः पशुष्विव ॥१०-३-३० (६४०८३)
अद्याहं सर्वपाञ्चालान्निकृत्या च निकृष्य च ।
अर्दयिष्यामि संहृष्टो रणे पाण्डुसुतांस्तथा ।
ग्सूदयिष्यामि सङ्क्रुद्धः पशूनिव पिनाकधृत्'॥ १०-३-३१ (६४०८४)
अद्याहं सर्वपाञ्चालैः कृत्वा भूमिं शरीरिणीम् ।
प्रहृत्यैकेन शस्त्रेण भविष्याम्यनृणः पितुः ॥१०-३-३२ (६४०८५)
दुर्योधनस्य कर्णस्य भीष्मसैन्धवयोरपि ।
गमिष्यामि निशावेलां पदवीमद्य दुर्गमाम् ॥१०-३-३३ (६४०८६)
अद्य पाञ्चालराजस्य धृष्टद्युम्नस्य वै निशि ।
विरात्रे प्रमथिष्यामि पशोरिव शिरो बलात् ॥१०-३-३४ (६४०८७)
अद्य पाञ्चालपाण्डूनां शयितानां शिरो निशि ।
खड्गेन निशितेनाजौ प्रमथिष्यामि गौतम ॥१०-३-३५ (६४०८८)
अद्य पाञ्चालसेनां तां निहत्य निशि सौप्तिके ।
कृतकृत्यः सुखी चैव भविष्यामि महामते ॥ ॥१०-३-३६ (६४०८९)

इति श्रीमन्महाभारते सौप्तिकपर्वणि तृतीयोऽध्यायः ॥ ३ ॥
Mahabharata - Sauptika Parva - Chapter Footnotes

१०-३-४ सर्वोत्मानमित्यत्र सर्व आत्मानमिति च्छेदः ।सन्धिरार्षः ॥
१०-३-६ योगे येषां समा गतिरिति झ पाठः ।तत्र योगे समुदाये इत्यर्थः ॥
१०-३-१० तां च निन्दन्ति मानवा इति झ पाठः ॥
१०-३-१२ हे भोज हे कृतवर्मन् ।एकमेव सम्बोधयन् कृपस्य
वचसि अनादरं सूचयति ॥
१०-३-१३ भवत्यकृतवुद्धित्वादिति झ पाठः ।तत्र अकृतधर्मत्वात्
अवसरानुरोधात्।इदानीं मम शान्तिबुद्धिर्न रोचते इत्यर्थः ॥
१०-३-२० क्षत्रियोऽधम इति झ पाठः ॥
१०-३-२२ विदित्वा आश्रित्य ॥
१०-३-२४ गन्तास्मि गमिष्यामि ।पदवीं आनृण्यम् ॥
१०-३-३३ गमयिष्यामि पाञ्चालान्पदवीमद्य दुर्गमामिति झ पाठः ॥
१०-३-३ तृतीयोऽध्यायः ॥

---

सौप्तिक-अध्यय००४
॥ श्रीः ॥
१०.४. अध्यायः ४

Mahabharata - Sauptika Parva - Chapter Topics
द्रौणिकृपयोः संवादः ॥ १ ॥

Mahabharata - Sauptika Parva - Chapter Text

१०-४-० (६४०९०)
कृप उवाच। १०-४-०क्ष् (५२६६)
दिष्ट्या ते प्रतिकर्तव्ये मतिर्जातेयमच्युत ।
न त्वां वारयितुं शक्तो वज्रपाणिरपि स्वयम् ॥ १०-४-१ (६४०९१)
अनुयास्यावहे त्वां तु प्रभाते सहितावुभौ ।
अद्य रात्रौ विश्रमस्व विमुक्तकवचध्वजः ॥ १०-४-२ (६४०९२)
अहं त्वामनुयास्यामि कृतवर्मा च सात्वतः ।
परानभिमुखं यान्तं रथावास्थाय दंशितौ ॥ १०-४-३ (६४०९३)
आवाभ्यां सहितः शत्रूञ्श्वो निहन्ता समागमे ।
विक्रम्य रथिनां श्रेष्ठ पाञ्चालान्सपदानुगान् ॥ १०-४-४ (६४०९४)
शक्तस्त्वमसि विक्रम्य विश्रमस्व निशामिमाम् ।
चिरं ते जाग्रतस्तात स्वप तावन्निशामिमाम् ॥ १०-४-५ (६४०९५)
विश्रान्तश्च विनिद्रश्च स्वस्थचित्तश्च मानद ।
समेत्य समरे शत्रून्वधिष्यसि न संशयः ॥ १०-४-६ (६४०९६)
न हि त्वां रथिनां श्रेष्ठं प्रगृहीतवरायुधम् ।
जेतुमुत्सहते कश्चिदपि देवेषु पावकिः ॥ १०-४-७ (६४०९७)
कृपेण सहितं यान्तं गुप्तं च कृतवर्मणा ।
को द्रौणिं युधि संरब्धं योधयेदपि देवराट् ॥ १०-४-८ (६४०९८)
ते वयं निशि विश्रान्ता विनिद्रा विगतज्वराः ।
प्रभातायां रजन्यां वै निहनिष्याम शात्रवान् ॥ १०-४-९ (६४०९९)
तव ह्यस्त्राणि दिव्यानि मम चैव न संशयः ।
सात्वतोपि महेष्वासो नित्यं युद्धेषु कोविदः ॥ १०-४-१० (६४१००)
ते वयं सहितास्तात सर्वाञ्शत्रून्समागतान् ।
प्रसह्य समरे हत्वा प्रीतिं प्राप्स्याम पुष्कलाम् ॥ १०-४-११ (६४१०१)
विश्रमस्व त्वमव्यग्रः स्वप चेमां निशां सुखम् ।
अहं च कृतवर्मा च प्रभाते त्वां नरोत्तमम् ॥ १०-४-१२ (६४१०२)
अनुयास्याव सहितौ धन्विनौ परतापनौ ।
रथिनं त्वरया यान्तं रथमास्थाय दंशितौ ॥ १०-४-१३ (६४१०३)
स गत्वा शिबिरं तेषां नाम विश्राव्य चाहवे ।
ततः कर्ताऽसि शत्रूणां युध्यतां कदनं महत् ॥ १०-४-१४ (६४१०४)
कृत्वा च कदनं तेषां प्रभाते विमलेऽहनि ।

विहरस्व यथा शक्रः सूदयित्वा महासुरान् ॥१०-४-१५ (६४१०५)
त्वं हि शक्तो रणे जेतुं पाञ्चालानां वरूथिनीम् ।
दैत्यसेनामिव क्रुद्धः सर्वदानवसूदनः ॥१०-४-१६ (६४१०६)
मया त्वां सहितं सङ्ख्ये गुप्तं च कृतवर्मणा ।
न सहेत विभुः साक्षाद्वज्रपाणिरपि स्वयम् ॥१०-४-१७ (६४१०७)
न चाहं समरे तात कृतवर्मा न चैव हि ।
अनिर्जित्य रणे पाण्डूनपयास्यामि कर्हिचित् ॥१०-४-१८ (६४१०८)
हत्वा च समरे क्षुद्रान्पाञ्चालान्पाण्डुभिः सह ।
निवर्तिष्यामहे सर्वे हता वा स्वर्गगा वयम् ॥१०-४-१९ (६४१०९)
सर्वोपायैः सहायास्ते प्रभाते वयमाहवे ।
सत्यमेतन्महाबाहो प्रब्रवीमि तवानघ ॥१०-४-२० (६४११०)
एवमुक्तस्ततो द्रौणिर्मातुलेन हितं वचः ।
अब्रवीन्मातुलं राजन्क्रोधादुद्वृत्य लोचने ॥१०-४-२१ (६४१११)
आतुरस्य कुतो निद्रा नरस्यामर्षितस्य च ।
अर्थांश्चिन्तयतश्चापि कामयानस्य वा पुनः ॥१०-४-२२ (६४११२)
तदिदं समनुप्राप्तं पश्य मेऽद्य चतुष्टयम् ।
यस्य भागश्चतुर्थो मे स्वप्नमह्नाय नाशयेत् ॥१०-४-२३ (६४११३)
किं नाम दुःखं लोकेऽस्मिन्पितुर्वधमनुस्मरन् ।
हृदयं निर्दहन्मेऽद्य रात्र्यहानि न शाम्यति ॥१०-४-२४ (६४११४)
यथा च निहतः पापैः पिता मम विशेषतः ।
प्रत्यक्षमपि ते सर्वं तन्मे मर्माणि कृन्तति ॥१०-४-२५ (६४११५)
कथं हि मादृशो लोके मुहूर्तमपि जीवति ।
द्रोणहन्तेति यद्वाचः पाञ्चालानां शृणोम्यहम् ॥१०-४-२६ (६४११६)
धृष्टद्युम्नमहत्वा तु नाहं जीवितुमुत्सहे ।
स मे पितुर्वधाद्वध्यः पाञ्चाला ये च सङ्गताः ॥१०-४-२७ (६४११७)
विलापो भग्नसक्थस्य यस्तु राज्ञो मया श्रुतः ।
स पुनर्हृदयं कस्य क्रूरस्यापि न निर्दहेत् ॥१०-४-२८ (६४११८)
कस्य ह्यकरुणस्यापि नेत्राभ्यामश्रु नाव्रजेत् ।
नृपतेर्भग्नसक्थस्य श्रुत्वा तादृग्वचः पुनः ॥१०-४-२९ (६४११९)
यश्चायं मित्रपक्षो मे मयि जीवति निर्जितः ।
शोकं मे वर्धयत्येष वारिवेग इवार्णवम् ॥१०-४-३० (६४१२०)
एकाग्रमनसो मेऽद्य कुतो निद्रा कुतः सुखम् ॥ १०-४-३१ (६४१२१)
वासुदेवार्जुनाभ्यां च तानहं परिरक्षितान् ।
अविषह्यतमान्मन्ये महेन्द्रेणापि सत्तम ॥१०-४-३२ (६४१२२)
न चापि शक्तः संयन्तुमस्मात्कार्यात्कथञ्चन ।
तं न पश्यामि लोकेऽस्मिन्यो मां कोपान्निवर्तयेत् ॥१०-४-३३ (६४१२३)

इति मे निश्चिता बुद्धिरेषा साधुमता मम ॥ १०-४-३४ (६४१२४)
वादिकैः कथ्यमानस्तु मित्राणां मे पराभवः ।
पाण्डवानां च विजयटो हृदयं दहतीव मे ॥ १०-४-३५ (६४१२५)
अहं तु कदनं कृत्वा शत्रूणामद्य सौप्तिके ।
ततो विश्रमिता चैव स्वप्ता च विगतज्वरः ॥ ॥ १०-४-३६ (६४१२६)

इति श्रीमन्महाभारते सौप्तिकपर्वणि चतुर्थोऽध्यायः ॥ ४ ॥
Mahabharata - Sauptika Parva - Chapter Footnotes

१०-४-४ निहन्ता निहनिष्यसि ॥
१०-४-२३ चतुर्थ आतुरादीनां चतुर्णां मध्ये एको भागः अमर्षः । मे
मम स्वप्नं अह्वाय झटिति नाशयेत्। तस्मात् स्वपेत्युक्तं तन्न युज्यते ॥
२३ ॥
१०-४-२४ अनुस्मरन् अनुस्मरतः । न शाम्यति अमर्ष इत्यर्थः ॥
१०-४-३६ स्वप्ता स्वप्स्यामि ॥
१०-४-४ चतुर्थोऽध्यायः ॥

---

सौप्तिक-अध्यय००५
॥ श्रीः ॥
१०.५. अध्यायः ५

Mahabharata - Sauptika Parva - Chapter Topics
कृपेण प्रसुप्तमारणस्याधार्मिकत्वकथनेन प्रतिषेधनेऽपि
पितृवधामर्षिणा द्रौणिना जिघांसया रिपुशिविरद्वारगमनम् ॥ १ ॥
कृपकृतवर्मश्यामपि सौहार्दात्तदनुगमनम् ॥ २ ॥

Mahabharata - Sauptika Parva - Chapter Text

१०-५-० (६४१२७)
कृप उवाच। १०-५-०क्ष् (५२६७)
शुश्रूषुरपि दुर्मेधाः पुरुषोऽनियतेन्द्रियः ।
नालं वेदयितुं कृत्स्नौ धर्मार्थाविति मे मतिः ॥ १०-५-१ (६४१२८)
तथैव तावन्मेधावी विनयं यो न शिक्षते ।
न च किञ्चन जानाति सोऽपि धर्मार्थनिश्चयम् ॥ १०-५-२ (६४१२९)
श्चिरं ह्यपि जडः शूरः पण्डितं पर्युपास्य ह ।
न स धर्मान्विजानाति दर्वी सूपरसानिव ॥ १०-५-३ (६४१३०)

मुहूर्तमपि तं प्राज्ञः पण्डितं पर्युपास्य हि ।
क्षिप्रं धर्मान्विजानाति जिह्वा सूपरसानिव ॥ १०-५-४ (६४१३१)
शुश्रूषुस्त्वेव मेधावी पुरुषो नियतेन्द्रियः ।
जानीयादागमान्सर्वान्ग्राह्यं च न विरोधयेत् ॥ १०-५-५ (६४१३२)
अनयस्त्ववमानी यो दुरात्मा पापपूरुषः ।
दिष्टमुत्सृज्य कल्याणं करोति बहुपातकम् ॥ १०-५-६ (६४१३३)
नाथवन्तं तु सुहृदः प्रतिषेधन्ति पातकात् ।
निवर्तते तु लक्ष्मीवान्नालक्ष्मीवान्निवर्तते ॥ १०-५-७ (६४१३४)
यथा ह्युच्चावचैर्वाक्यैः क्षिप्तचित्तो नियम्यते ।
तथैव सुहृदा शक्यो नशक्यस्त्ववसीदति ॥ १०-५-८ (६४१३५)
तथैव सुहृदोऽप्राज्ञान्कुर्वाणान्कर्म पापकम् ।
प्राज्ञाः सम्प्रतिषेधन्ति यथाशक्ति पुनःपुनः ॥ १०-५-९ (६४१३६)
स कल्याणे मनः कृत्वा नियम्यात्मानमात्मना ।
कुरु मे वचनं तात येन पश्चान्न तप्स्यसे ॥ १०-५-१० (६४१३७)
न वधः पूज्यते लोके सुप्तानामिह धर्मतः ।
तथैव न्यस्तशस्त्राणां विमुक्तरथवाजिनाम् ॥ १०-५-११ (६४१३८)
ये व ब्रूयुस्तवास्मीति ये च स्युः शरणागताः ।
विमुक्तमूर्धजा ये च ये चापि हतवाहनाः ॥ १०-५-१२ (६४१३९)
अद्य स्वप्स्यन्ति पाञ्चाला विमुक्तकवचा विभो ।
विश्वस्ता रजनीं सर्वे प्रेता इव विचेतसः ॥ १०-५-१३ (६४१४०)
यस्तेषां तदवस्थानां द्रुह्येत पुरुषोऽनृजुः ।
व्यक्तं स नरके मज्जेदगाधे विपुलेऽप्लुवे ॥ १०-५-१४ (६४१४१)
सर्वास्त्रविदुषां लोके श्रेष्ठस्त्वमसि विश्रुतः ।
न च ते जातु लोकेऽस्मिन्सुसूक्ष्ममपि किल्बिषम् ॥ १०-५-१५ (६४१४२)
त्वं पुनः सूर्यसङ्काशः श्वोभूत उदिते रवौ ।
प्रकाशे सर्वभूतानां विजेता युधि शात्रवान् ॥ १०-५-१६ (६४१४३)
असम्भावितरूपं हि त्वयि कर्म विगर्हितम् ।
शुक्ले रक्तमिव न्यस्तं भवेदिति मतिर्मम ॥ १०-५-१७ (६४१४४)
अश्वत्थामोवाच। १०-५-१८क्ष् (५२६८)
एवमेव यथाऽऽत्थ त्वमनुशाससि मातुल ।
तैस्तु पूर्वमयं सेतुः समन्ताद्विदलीकृतः ॥ १०-५-१८ (६४१४५)
प्रत्यक्षं भूमिपालानां भवतां चापि सन्निधौ ।
न्यस्तशस्त्रो मम पिता धृष्टद्युम्नेन पातितः ॥ १०-५-१९ (६४१४६)
कर्णश्च पतिते चक्रे उत्थास्यन्नथिनां वरः ।
उत्तमे व्यसने मग्नो हतो गाण्डीवधन्वना ॥ १०-५-२० (६४१४७)
तथा शान्तनवो भीष्मो न्यस्तशस्त्रो निरायुधः ।

शिखण्डिनं पुरस्कृत्य हतो गाण्डीवधन्वना ॥ १०-५-२१ (६४१४८)
भूरिश्रवा महेष्वासस्तथा प्रायगतो रणे ।
क्रोशतां बूमिपालानां युयुधानेन पातितः ॥ १०-५-२२ (६४१४९)
दुर्योधनश्च भीमेन समेत्य गदया मृधे ।
पश्यतां भूमिपालानामधर्मेण निपातितः ॥ १०-५-२३ (६४१५०)
एकाकी बहुभिस्तत्र परिवार्य महारथैः ।
अधर्मेण नरव्याघ्रो भीमसेनेन पातितः ॥ १०-५-२४ (६४१५१)
विलापो भग्नसक्थस्य यो मे राज्ञः परिश्रुतः ।
वादिकानां कथयतां स मे मर्माणि कृन्तति ॥ १०-५-२५ (६४१५२)
एवं चाधार्मिकाः पापाः पाञ्चाला भिन्नसतवः ।
तानेवं भिन्नमर्यादान्किं भवान्न विगर्हति ॥ १०-५-२६ (६४१५३)
पितृहन्तॄनहं हत्वा पाञ्चालान्निशि सौप्तिके ।
कामं कीटः पतङ्गो वा जन्म प्राप्य भवामि वै ॥ १०-५-२७ (६४१५४)
त्वरे चाहमनेनाद्य यदिदं मे चिकीर्षितम् ।
तस्य मे त्वरमाणस्य कुतो निद्रा कुतः सुखम् ॥ १०-५-२८ (६४१५५)
न स जातः पुमाँल्लोके कश्चिन्न स भविष्यति ।
यो मे व्यावर्तयेदेतां वधे तेषां कृतां मतिम् ॥ १०-५-२९ (६४१५६)
सञ्जय उवाच। १०-५-३०क्ष् (५२६९)
एवमुक्त्वा महाराज द्रोणपुत्रः प्रतापवान् ।
एकान्ते योजयित्वाऽश्वान्प्रायादभिमुखः परान् ॥ १०-५-३० (६४१५७)
तमब्रूतां महात्मानौ भोजशारद्वतावुभौ ।
किमयं स्यन्दनो युक्तः किं च कार्यं चिकीर्षितम् ॥ १०-५-३१ (६४१५८)
एकसामर्थप्रयातौ स्वस्त्वया सह नरर्षभ ।
समदुःखसुखौ चापि तस्माच्छंसितुमर्हसि ॥ १०-५-३२ (६४१५९)
अश्वत्थामा तुं सङ्क्रुद्धः पितुर्वधमनुस्मरन् ।
ताभ्यां तथ्यं तथाऽऽचख्यौ यदस्यात्मचिकीर्षितम् ॥ १०-५-३३ (६४१६०)
हत्वा शतसहस्राणि योधानां निशितैः शरैः ।
न्यस्तशस्त्रो मम पिता धृष्टद्युम्नेन पातितः ॥ १०-५-३४ (६४१६१)
तं तथैव वधिष्यामि न्यस्तवर्माणमद्य वै ।
पुत्रं पाञ्चालराजस्य पापं पापेन कर्मणा ॥ १०-५-३५ (६४१६२)
तथा विनिहतः पापः पाञ्चाल्यः पशुवन्मया ।
शस्त्रेण विजिताँल्लोकान्नाप्नुयादिति मे मतिः ॥ १०-५-३६ (६४१६३)
क्षिप्रं सन्नद्धकवचौ सखड्गावात्तकार्मुकौ ।
मामेवाद्य प्रतीक्षेतां रथवर्यौ परन्तपौ ॥ १०-५-३७ (६४१६४)
इत्युक्त्वा रथमास्थाय प्रायादभिमुखः परान् ।
तमन्वगात्कृपो राजन्कृतवर्मा च सात्वतः ॥ १०-५-३८ (६४१६५)

ते प्रयाता व्यरोचन्त परानभिमुखास्त्रयः ।
हूयमाना यथा यज्ञे समिद्धा हव्यवाहनाः ॥ १०-५-३९ (६४१६६)
ययुश्च शिबिरं तेषां सम्प्रसुप्तजनं विभो ।
द्वारदेशमनुप्राप्य द्रौणिस्तस्थौ महारथः ॥ ॥ १०-५-४० (६४१६७)

इति श्रीमन्महाभारते सौप्तिकपर्वणि पञ्चमोऽध्यायः ॥ ५ ॥
Mahabharata - Sauptika Parva - Chapter Footnotes

१०-५-१ अशुश्रूषुः सुदुर्मेधा इति ङ पाठः । दुर्मेधाः
मूढः । अनियतेतिच्छेदः ॥
१०-५-६ अनेय इति झ पाठः । तत्र अनेयः सन्मार्गं
नेतुमशक्यः । दिष्टमुपदिष्टम् ॥
१०-५-८ उच्चावचैः सर्गैरिति क छ पाठः ॥
१०-५-१४ अप्लवे इति च्छेदः ॥
१०-५-२३ अधर्मेण नाभेरधस्तात्प्रहारेण ॥
१०-५-३२ नावां शङ्कितुमर्हसीति झ पाठः ॥
१०-५-३६ शस्त्राग्निवर्जिताँल्लोकान्प्राप्नुयादिति मे मतिः इति ङ पाठः ॥
१०-५-५ पञ्चमोऽध्यायः ॥

---

सौप्तिक-अध्यय००६
॥ श्रीः ॥
१०.६. अध्यायः ६

Mahabharata - Sauptika Parva - Chapter Topics
अश्वत्थाम्नः शिबिरद्वारस्थमहाभूतदर्शनम् ॥ १ ॥
भूतजिगीषया द्रौणिविसृष्टानामस्त्रशस्त्राणां भूतेन ग्रसनम् ॥ २ ॥
ततश्चिंतातान्तश्च द्रौणेर्महादेवोपासनाध्यवसायः ॥ ३ ॥

Mahabharata - Sauptika Parva - Chapter Text

१०-६-० (६४१६८)
धृतराष्ट्र उवाच । १०-६-०क्ष् (५२७०)
द्वारदेशे ततो द्रौणिमवस्थितमवेक्ष्य तौ ।
अकुर्वतां भोजकृपौ किं सञ्जय वदस्व मे ॥ १०-६-१ (६४१६९)
सञ्जय उवाच । १०-६-२क्ष् (५२७१)
कृतवर्माणमामन्त्र्य कृपं च स महारथः ।

द्रौणिर्मन्युपरीतात्मा शिबिरद्वारमासदत् ॥ १०-६-२ (६४१७०)
तत्र भूतं महाकायं चन्द्रार्कसदृशद्युतिम् ।
सोऽपश्यद्द्वारमावृत्य तिष्ठन्तं रोमहर्षणम् ॥ १०-६-३ (६४१७१)
वसानं चर्म वैयाघ्रं वसारुधिरविस्रवम् ।
कृष्णाजिनोत्तरासङ्गं नागयज्ञोपवीतिनम् ॥ १०-६-४ (६४१७२)
बाहुभिः स्वायतैर्भीमैर्नानाप्रहरणोद्यतैः ।
बद्धाङ्गदमहासर्पं ज्वालामालाकुलाननम् ॥ १०-६-५ (६४१७३)
दंष्ट्राकरालवदनं व्यादितास्यं भयानकम् ।
नयनानां सहस्रैश्च विचित्रैरभिभूषितम् ॥ १०-६-६ (६४१७४)
नैव तस्य वपुः शक्यं प्रवक्तुं वेष एव च ।
सर्वथा तु तदालक्ष्य स्फुटेयुरपि पर्वताः ॥ १०-६-७ (६४१७५)
तस्यास्यनासिकाभ्यां च श्रवणाभ्यां च सर्वशः ।
तेभ्यश्चाक्षिसहस्रेभ्यः प्रादुरासन्महार्चिषः ॥ १०-६-८ (६४१७६)
तथा तेजोमरीचिभ्यः शङ्खचक्रगदाधराः ।
प्रादुरासन्हृषीकेशाः शतशोऽथ सहस्रशः ॥ १०-६-९ (६४१७७)
तदत्यद्भुतमालोक्य भूतं लोकभयङ्करम् ।
द्रौणिरव्यथितो दिव्यैरस्त्रवर्षैरवाकिरत् ॥ १०-६-१० (६४१७८)
द्रौणिमुक्ताञ्छरांस्तांस्तु तद्भूतं महदग्रसत् ।
उदधेरिव वार्योघान्पावको बडबामुखः ॥ १०-६-११ (६४१७९)
अश्वत्थामा तु सम्प्रेक्ष्य शरौघांस्तान्निरर्थकान् ।
रथशक्तिं मुमोचास्मै दीप्तामग्निशिखामिव ॥ १०-६-१२ (६४१८०)
सा तमाहत्य दीप्ताग्रा रथशक्तिरदीर्यत ।
युगान्ते सूर्यमाहत्य महोल्केव दिवश्च्युता ॥ १०-६-१३ (६४१८१)
अथ हेमत्सरुं दिव्यं खड्गमाकाशवर्चसम् ॥
कोशात्समुद्बबर्हाशु बिलाद्दीप्तमिवोरगम् ॥ १०-६-१४ (६४१८२)
ततः खड्गवरं धीमान्भूताय प्राहिणोत्तदा ।
स तदासाद्य भूतं वै विलयं तूलवद्ययौ ॥ १०-६-१५ (६४१८३)
ततः स कुपितो द्रौणिरिन्द्रकेतुनिभां गदाम् ।
ज्वलन्तीं प्राहिणोत्तस्मै भूतं तामपि चाग्रसत् ॥ १०-६-१६ (६४१८४)
ततः सर्वायुधाभावे वीक्षमाणस्ततस्ततः ।
अपश्यत्कृतमाकाशमनाकाशं जनार्दनैः ॥ १०-६-१७ (६४१८५)
तदद्भुततमं दृष्ट्वा द्रोणपुत्रो निरायुधः ।
अचिन्तयत्सुसन्त्रस्तः कृपभोजवचः स्मरन् ॥ १०-६-१८ (६४१८६)
ब्रुवतामप्रियं पथ्यं सुहृदां न शृणोति यः ।
स शोचत्यापदं प्राप्य थाऽहमवमत्य तौ ॥ १०-६-१९ (६४१८७)
शास्त्रदृष्टानविद्वान्यः समतीत्य जिघांसति ।

स पथः प्रच्युतो धर्म्यात्कुपथे प्रतिहन्यते ॥ १०-६-२० (६४१८८)
गोब्राह्मणनृपस्त्रीषु सख्युर्मातुर्गुरोस्तथा ।
वृद्धबालजडान्धेषु सुप्तभीतोत्थितेषु च ॥ १०-६-२१ (६४१८९)
मत्तोन्मत्तप्रमत्तेषु न शस्त्राणि च मातयेत् ।
इत्येवं गुरुभिः पूर्वमुपदिष्टं नृणां सदा ॥ १०-६-२२ (६४१९०)
सोऽहमुत्क्रम्य पन्थानं शास्त्रदृष्टं सनातनम् ।
अमार्गेणैवमारभ्य घोरामापदमागतः ॥ १०-६-२३ (६४१९१)
तां चापदं घोरतरां प्रवदन्ति मनीषिणः ।
यदुद्यम्य महत्कृत्यं भयादपि निवर्तते ॥ १०-६-२४ (६४१९२)
अशक्यं चैव कः कर्तुं शक्तः शक्तिबलादिह ।
न हि दैवाद्गरीयो वै मानुष्यं किञ्चिदिष्यते ॥ १०-६-२५ (६४१९३)
मानुष्यं कुर्वतः कर्म यदि दैवान्न सिध्यति ।
स पथः प्रच्युतो धर्म्याद्विपदं प्रतिपद्यते ॥ १०-६-२६ (६४१९४)
प्रतिज्ञानं ह्यविज्ञानं प्रवदन्ति मनीषिणः ।
यदारभ्य क्रियां काञ्चिद्भयादिह निवर्तते ॥ १०-६-२७ (६४१९५)
तदिदं दुष्प्रणीतेन भयं मा समुपस्थितम् ।
न हि द्रोणसुतः सङ्ख्ये निवर्तेत कथञ्चन ॥ १०-६-२८ (६४१९६)
इदं च सुमहद्भूतं दैवदण्डमिवोद्यतम् ।
न चैतदभिजानामि चिन्तयन्नपि सर्वथा ॥ १०-६-२९ (६४१९७)
ध्रुवं येयमधर्मेण प्रहिता कलुषा मतिः ।
तस्याः फलमिदं घोरं प्रतिघाताय कल्पते ॥ १०-६-३० (६४१९८)
तदिदं दैवविहितं मम सङ्ख्ये निवर्तनम् ।
नान्यत्र दैवादुद्यन्तुमिह शक्यं कथञ्चन ॥ १०-६-३१ (६४१९९)
सोऽहमद्य महादेवं प्रपद्ये शरणं विभुम् ।
दैवदण्डमिमं घोरं स हि मे नाशयिष्यति ॥ १०-६-३२ (६४२००)
कपर्दिनं प्रपद्येऽहं देवदेवमुमापतिम् ।
कपालमालिनं रुद्रं भगनेत्रहरं हरम् ॥ १०-६-३३ (६४२०१)
स हि देवोऽत्यगाद्देवांस्तपसा विक्रमेण च ।
तस्माच्छरणमभ्येष्ये गिरिशं शूलपाणिनम् ॥ ॥ १०-६-३४ (६४२०२)

इति श्रीमन्महाभारते सौप्तिकपर्वणि षष्ठोऽध्यायः ॥ ६ ॥

Mahabharata - Sauptika Parva - Chapter Footnotes

१०-६-१२ रथशक्तिं चक्रम् ॥
१०-६-१३ युग्मान्ते सूर्यमिति झ पाठः तत्र युग्मान्ते मिथुनराशेरन्ते अतिदीप्तं इत्यर्थः ॥

१०-६-१५ विलं नकुलवद्ययौ इति झ पाठः ॥
१०-६-१७ अनाकाशं निरवकाशम् ॥
१०-६-६ षष्ठोऽध्यायः ॥

---

सौप्तिक-अध्यय००७
॥ श्रीः ॥
१०.७. अध्यायः ७

Mahabharata - Sauptika Parva - Chapter Topics
द्रौणिना शिवस्तुतिः ॥ १ ॥
द्रौणेः पुरतः काञ्चनवेद्यामग्न्युद्भवः ॥ २ ॥
द्रौणेः समीपे नानाविधभीषणभूतगणानामागमनम् ॥ ३ ॥
शिवेन आत्मनो हविष्ट्वकल्पनपूर्वकमग्नौ प्रविष्टाय द्रौणये
खङ्गदानपूर्वकं तच्छरीरप्रवेशः ॥ ४ ॥
पुनरश्वत्थाम्नः शिबिरगमनम् ॥ ५ ॥

Mahabharata - Sauptika Parva - Chapter Text

१०-७-० (६४२०३)
सञ्जय उवाच। १०-७-०क्ष् (५२७२)
एवं सञ्चिन्तयित्वा तु द्रोणपुत्रो विशाम्पते ।
अवतीर्य रथोपस्थाद्दध्यौ स प्रयतः स्थितः ॥ १०-७-१ (६४२०४)
द्रौणिरुवाच। १०-७-२क्ष् (५२७३)
उग्रं स्थाणुं शिवं रुद्रं शर्वमीशानमीश्वरम् ।
गिरिशं वरदं देवं भवभावनमव्ययम् ॥ १०-७-२ (६४२०५)
शितिकण्ठमजं रुद्रं दक्षक्रतुहरं हरम् ।
विश्वरूपं विरूपाक्षं बहुरूपमुमापतिम् ॥ १०-७-३ (६४२०६)
श्मशानवासिनं दृप्तं महागणपतिं विभुम् ।
खट्वाङ्गधारिणं मुण्डं जटिलं ब्रह्मचारिणम् ॥ १०-७-४ (६४२०७)
मनसा ह्यनुचिन्त्यैनं दुष्करेणाल्पचेतसा ।
अद्य भूतोपहारेण यक्ष्ये त्रिपुराघातिनम् ॥ १०-७-५ (६४२०८)
क्ष्क्ष्तुतं स्तुत्यं स्तूयमानममोघं कृत्तिवाससम् ।
विलोहितं नीलकण्ठमसह्यं दुर्निवारणम् ॥ १०-७-६ (६४२०९)
शुक्रं विश्वसृजं ब्रह्म ब्रह्मचारिणमेव च ।
व्रतवन्तं तपोनिष्ठमनन्तं तपतां गतिम् ॥ १०-७-७ (६४२१०)
बहुरूपं गणाध्यक्षं त्र्यक्षं पारिषदप्रियम् ।

धनाध्यक्षप्रियसखं गौरीहृदयवल्लभम् ॥ १०-७-८ (६४२११)
कुमारपितरं पिङ्गं गोवृषोत्तमवाहनम् ।
कृत्तिवाससमत्युग्रमातोषणतत्परम् ॥ १०-७-९ (६४२१२)
परं परेभ्यः परमं परं यस्मान्न विद्यते ।
इष्वस्त्रोत्तमभर्तारं दिगन्तं देशरक्षिणम् ॥ १०-७-१० (६४२१३)
हिरण्यकवचं देवं चन्द्रमौलिविभूषणम् ।
प्रपद्ये शरणं देवं परमेण समाधिना ॥ १०-७-११ (६४२१४)
इमां चेदापदं घोरां तराम्यद्य सुदुस्तराम् ।
सर्वभूतोपहारेण यक्ष्येऽहं शुचिना शुचिम् ॥ १०-७-१२ (६४२१५)
इति तस्य व्यवसितं ज्ञात्वा योगात्सुकर्मणः ।
पुरस्तात्काञ्चनी वेदी प्रादुरासीन्महात्मनः ॥ १०-७-१३ (६४२१६)
तस्यां वेद्यां तदा राजंश्चित्रभानुरजायत ।
स दिशो विदिशः खं च ज्वालाभिरिव पूरयन् ॥ १०-७-१४ (६४२१७)
दीप्तास्यनयनाश्चात्र नैकपादशिरोधराः ।
रत्नचित्राङ्गदधराः समुद्यतकरास्तथा ॥ १०-७-१५ (६४२१८)
द्विपाः शैलप्रतीकाशाः प्रादुरासन्महागणाः ।
श्ववराहोष्ट्ररूपाश्च हयगोमायुगोमुखाः ॥ १०-७-१६ (६४२१९)
ऋक्षमार्जारवदना व्याघ्रद्वीपिमुखास्तथा ।
काकवक्त्राः प्लुवमुखाः शुकवक्त्रास्तथैव च ॥ १०-७-१७ (६४२२०)
महाजगरवक्त्राश्च हंसवक्त्राः शितप्रभाः ।
दार्वाघाटमुखाश्चापि चाषवक्त्राश्च भारत ॥ १०-७-१८ (६४२२१)
कूर्मनक्रमुखाश्चैव शिंशुमारमुखास्तथा ।
महामकरवक्त्राश्च तिमिवक्त्रास्तथैव च ॥ १०-७-१९ (६४२२२)
हरिवक्त्राः क्रौञ्चमुखाः कपोताभमुखास्तथा ।
पारावतमुखाश्चैव मद्गुवक्त्रास्तथैव च ॥ १०-७-२० (६४२२३)
पाणिकर्णाः सहस्राक्षास्तथैव च महोदराः ।
निर्मांसाः काकवक्त्राश्च श्येनवक्त्राश्च भारत ॥ १०-७-२१ (६४२२४)
तथैवाशिरसो राजन्नृक्षवक्त्राश्च भीषणाः ।
प्रदीप्तनेत्रजिह्वाश्च ज्वालावर्णास्तथैव च ॥ १०-७-२२ (६४२२५)
ज्वालाकेशाश्च राजेन्द्र ज्वलद्रोमचतुर्भुजाः ।
मेषवक्त्रास्तथैवान्ये तथा छागमुखा नृप ॥ १०-७-२३ (६४२२६)
शङ्खाभाः शङ्खवक्त्राश्च शङ्खवर्णास्तथैव च ।
शङ्खमालापरिकराः शङ्खध्वनिसमस्वनाः ॥ १०-७-२४ (६४२२७)
जटाधराः पञ्चशिखास्तथा मुण्डाः कृशोदराः ।
चतुर्दंष्ट्राश्चतुर्जिह्वाः शङ्कुकर्णाः किरीटिनः ॥ १०-७-२५ (६४२२८)
मौञ्जीधराश्च राजेन्द्र तथा कुञ्चितमूर्धजाः ।

उष्णीषिणः कुण्डलिनश्चारुवक्त्राः स्वलङ्कृताः ॥ १०-७-२६ (६४२२९)
पद्मोत्पलापीडधरास्तथा मुकुटधारिणः ।
महात्म्येन च संयुक्ताः शतशोऽथ सहस्रशः ॥ १०-७-२७ (६४२३०)
शतघ्नीचक्रहस्ताश्च तथा मुसलपाणयः ।
भुशुण्डीपाशहस्ताश्च दण्डहस्ताश्च भारत ॥ १०-७-२८ (६४२३१)
पृष्ठेषु बद्धेषुधयश्चित्रबाणोत्कटास्तथा ।
सध्वजाः सपताकाश्च सघण्टाः सपरश्वथाः ॥ १०-७-२९ (६४२३२)
महापाशोद्यतकरास्तथा लगुडपाणयः ।
स्थूणाहस्ताः खङ्गहस्ताः सर्पोच्छ्रितकिरीटिनः ॥ १०-७-३० (६४२३३)
महासर्पाङ्गदधराश्चित्राभरणधारिणः ।
रजोध्वजाः पङ्कदिग्धाः सर्वे चित्राम्बरस्रजः ।
नीलाङ्गाः पिङ्गलाङ्गाश्च मुण्डवक्तास्तथैव च ॥ १०-७-३१ (६४२३४)
भेरीशङ्खमृदङ्गांश्च झर्झरानकगोमुखान् ।
अवादयन्पारिषदाः प्रहृष्टाः कनकप्रभाः ॥ १०-७-३२ (६४२३५)
गायमानास्तथैवान्ये संहृष्टाः पुरुषर्षभाः ।
लङ्घयन्तः प्लुवन्तश्च वल्गन्तश्च महारथाः ॥ १०-७-३३ (६४२३६)
धावन्तो जवनाश्चण्डाः पावकोद्धूतमूर्धजाः ।
मत्ता इव महानागा विनदन्तो मुहुर्मुहुः ॥ १०-७-३४ (६४२३७)
सुभीमा घोररूपाश्च शूलपट्टसपाणयः ।
नानाविरागवसनाश्चित्रमाल्यानुलेपनाः ॥ १०-७-३५ (६४२३८)
रत्नचित्राङ्गदधराः समुद्यतकरास्तथा ।
हन्तारो द्विषतां शूराः प्रसह्यासह्यविक्रमाः ॥ १०-७-३६ (६४२३९)
पातारोऽसृग्वसाज्यानां मांसान्त्रकृतभोजनाः ।
चूडालाः कर्णिकाराश्च प्रहृष्टाः पिठरोदराः ॥ १०-७-३७ (६४२४०)
अतिहस्वातिदीर्घाश्च प्रलम्बाश्चातिभैरवाः ।
विकटाः काललंबोष्ठा बृहच्छेफाण्डपिण्डिकाः ॥ १०-७-३८ (६४२४१)
महार्हनानाविकटा मुण्डाश्च जटिलाः परे ।
सार्केन्दुग्रहनक्षत्रां द्यां कुर्युस्ते महीतले ॥ १०-७-३९ (६४२४२)
उत्सहेरंश्च ये हन्तुं भूतग्रामं चतुर्विधम् ।
ये च वीतभया नित्यं हरस्य भ्रुकुटीसहाः ॥ १०-७-४० (६४२४३)
कामकारकरा नित्यं त्रैलोक्यस्येश्वरेश्वराः ।
नित्यानन्दप्रमुदिता वागीशा वीतमत्सराः ॥ १०-७-४१ (६४२४४)
प्राप्याष्टगुणमैश्वर्यं ये न यास्यन्ति वै स्मयम् ।
येषां विस्मयते नित्यं भगवान्कर्मभिर्हरः ॥ १०-७-४२ (६४२४५)
मनोवाक्कर्मभिर्युक्तैर्नित्यमाराधितश्च यैः ।
मनोवाक्कर्मभिर्भक्तान्पाति पुत्रानिवौरसान् ॥ १०-७-४३ (६४२४६)

पिबन्तोऽसृग्वसास्त्वान्ये क्रुद्धा ब्रह्मद्विषां सदा ।
चतुर्विधात्मकं सोमं ये पिबन्ति च सर्वदा ॥ १०-७-४४ (६४२४७)
श्रुतेन ब्रह्मचर्येण तपसा च दमेन च ।
ये समाराध्य शूलाङ्कं भवसायुज्यमागताः ॥ १०-७-४५ (६४२४८)
यैरात्मभूतैर्भगवान्पार्वत्या च महेश्वरः ।
महाभूतगणैर्भुङ्क्ते भूतभव्यभवत्प्रभुः ॥ १०-७-४६ (६४२४९)
नानावादित्रहसितक्ष्वेडितोत्कृष्टगर्जितैः ।
सन्त्रासयन्तस्ते विश्वमश्वत्थामानमभ्ययुः ॥ १०-७-४७ (६४२५०)
संस्तुवन्तो महादेवं भाः कुर्वाणाः सुवर्चसः ।
विवर्धयिषवो द्रौणेर्महिमानं महात्मनः ॥ १०-७-४८ (६४२५१)
जिज्ञासमानास्तत्तेजः सौप्तिकं च दिदृक्षवः ।
भीमोग्रपरिघालातशूलपट्टसपाणयः ।
घोररूपाः समाजग्मुर्भूतसङ्घाः सहस्रशः ॥ १०-७-४९ (६४२५२)
जनयेयुर्भयं ये स्म त्रैलोक्यस्यापि दर्शनात् ।
न च तान्प्रेक्षमाणोऽपि व्यथामुपजगाम ह ॥ १०-७-५० (६४२५३)
अथ द्रौणिर्धनुष्पाणिर्बद्धगोधाङ्गुलित्रवान् ।
स्वयमेवात्मनात्मानमुपहारमुपाहरत् ॥ १०-७-५१ (६४२५४)
धनूंषि समिधस्तत्र पवित्राणि सिताः शराः ।
हविरात्मवतश्चात्मा तस्मिन्भारत कर्मणि ॥ १०-७-५२ (६४२५५)
ततः सौम्येन मन्त्रेण द्रोणपुत्रः प्रतापवान् ।
उपहारं महामन्युरथात्मानमुपाहरत् ॥ १०-७-५३ (६४२५६)
तं रुद्रं रौद्रकर्माणं रौद्रैः कर्मभिरच्युतम् ।
अभिष्टुत्य महात्मानमित्युवाच कृताञ्जलिः ॥ १०-७-५४ (६४२५७)
द्रौणिरुवाच। १०-७-५५क्ष् (५२७४)
इममात्मानमद्याहं जातमाङ्गिरसे कुले ।
स्वग्नौ जुहोमि भगवन्प्रतिगृह्णीष्व मां बलिम् ॥ १०-७-५५ (६४२५८)
भवद्भक्त्या महादेव परमेण समाधिना ।
अस्यामापदि विश्वात्मन्नुपाकुर्मी तवाग्रतः ॥ १०-७-५६ (६४२५९)
त्वयि सर्वाणि भूतानि सर्वभूतेषु चासि वै ।
गुणानां हि प्रधानानां कैवल्यं त्वयि तिष्ठति ॥ १०-७-५७ (६४२६०)
सर्वभूताश्रय विभो हविर्भूतमवस्थितम् ।
प्रतिगृहाण मां देव यद्यशक्याः परे मया ॥ १०-७-५८ (६४२६१)
इत्युक्त्वा द्रौणिरास्थाय तां देवीं दीप्तपावकाम् ।
सन्त्यज्यात्मानमारुह्य कृष्णवर्त्मन्युपाविशत् ॥ १०-७-५९ (६४२६२)
तमूर्ध्वबाहुं निश्चेष्टं दृष्ट्वा हविरुपस्थितम् ।
अब्रवीद्भगवान्साक्षान्महादेवो हसन्निव ॥ १०-७-६० (६४२६३)

सत्यशौचार्जवत्यागैस्तपसा नियमेन च ।
क्षान्त्या भक्त्या च धृत्या च कर्मणा मनसा गिरा ॥ १०-७-६१ (६४२६४)
यथावदहमाराद्धः कृष्णेनाक्लिष्टकर्मणा ।
तस्मादिष्टतमः कृष्णादन्यो मम न विद्यते ॥ १०-७-६२ (६४२६५)
कुर्वता तात सम्मानं त्वां च जिज्ञासता मया ।
पाञ्चालाः सर्वदा गुप्ता मायाश्च बहुशः कृताः ॥ १०-७-६३ (६४२६६)
कृतस्तस्यैव सम्मानं पाञ्चालान्रक्षता मया ।
अभिभूतास्तु कालेन नैषामद्यास्ति जीवितम् ॥ १०-७-६४ (६४२६७)
एवमुक्त्वा महात्मानं भगवानात्मनस्तनुम् ।
आविवेश ददौ चास्मै विमलं खड्गमुत्तमम् ॥ १०-७-६५ (६४२६८)
अथाविष्टो भगवता भूयो जज्वाल तेजसा ।
वेगवांश्चाभवद्युद्धे देवसृष्टेन तेजसा ॥ १०-७-६६ (६४२६९)
तं दृष्ट्वा तानि भूतानि रक्षांसि च समाद्रवन् ।
अभितः शिबिरं यान्तं द्रोणपुत्रं महारथम् ।
देवदेवं हरं स्थाउं यान्तं साक्षादिवेश्वरम् ॥ ॥ १०-७-६७ (६४२७०)

इति श्रीमन्महाभारते सौप्तिकपर्वणि सप्तमोऽध्यायः ॥ ७ ॥
Mahabharata - Sauptika Parva - Chapter Footnotes

१०-७-१ रथोपस्थाद्दध्यौ स प्रयतः स्थितः इति क पाठः ॥
१०-७-५ सोऽहमात्मोपहारेणेति झ पाठः ॥
१०-७-९ उमाभूषणतत्परमिति झ पाठः ॥
१०-७-११ हिरण्यदण्डकवचं चारुमौलिविभूषणमिति क पाठः ॥
१०-७-१७ प्लुवमुखाः मण्डूकवक्ताः ॥
१०-७-१८ दार्वाघाटः पक्षिविशेषः । महागजसवकाश्चेति क पाठः ॥
१०-७-३८ पिण्डिका जानुनोरधः---पश्चाद्भागः ॥
१०-७-५३ सौम्येन सोमदैवत्येन मन्त्रेण ॥
१०-७-७ सप्तमोऽध्यायः ॥

---

सौप्तिक-अध्यय००८
॥ श्रीः ॥
१०.८. अध्यायः ८

Mahabharata - Sauptika Parva - Chapter Topics
शिबिरद्वारे कृपकृतवर्माणौ संस्थाप्यान्तः प्रविष्टेन द्रौणिना
धृष्टद्युम्नादिपाञ्चालानां द्रौपदेयादीनां च वधः ॥ १ ॥

भयाद्बहिर्निष्क्रान्तानां कृपकृतवर्मक्ष्यां वधः ॥ २ ॥

Mahabharata - Sauptika Parva - Chapter Text

१०-८-० (६४२७१)
धृतराष्ट्र उवाच। १०-८-०क्ष् (५२७५)
तथा प्रयाते शिबिरं द्रोणपुत्रे महारथे ।
कच्चित्कृपश्च भोजश्च भयार्तौ न व्यवर्तताम् ॥ १०-८-१ (६४२७२)
कच्चिन्न वारितौ क्षुद्रौ रक्षिभिर्नोपलक्षितौ ।
असह्यमिति मन्वानौ न निवृत्तौ महारथौ ॥ १०-८-२ (६४२७३)
कच्चिदुन्मथ्य शिबिरं हत्वा सोमकपाण्डवान् ।
ग्कृता प्रतिज्ञा सफला कच्चित्सञ्जय सा निशि'॥ १०-८-३ (६४२७४)
दुर्योधनस्य पदवीं कच्चित्परमिकां रणे ।
ग्गत्वातिष्ठदसौ द्रौणिः कृत्वा कर्म सुदुष्करम् ॥ १०-८-४ (६४२७५)
धृष्टद्युम्नशिखण्डिभ्यां द्रौपद्याश्च सुतैः किल ।
सञ्छन्ना मेदिनी सुप्तैर्निहतैः पाण्डुसैनिकैः ॥ १०-८-५ (६४२७६)
पाञ्चालैर्वा विनिहतैः शयानै रुधिरोक्षितैः ।
कच्चिन्महीतलं छन्नं तन्ममाचक्ष्व सञ्जय'॥ १०-८-६ (६४२७७)
श्पाञ्चालैर्निहतौ वीरौ कच्चित्तु स्वपतां क्षितौ ।
कच्चित्ताभ्यां कृतं कर्म तन्ममाचक्ष्व सञ्जय ॥ॅ १०-८-७ (६४२७८)
सञ्जय उवाच। १०-८-८क्ष् (५२७६)
तस्मिन्प्रयाते शिबिरं द्रोणपुत्रे महात्मनि ।
कृपश्च कृतवर्मा च द्रौणिमेवाभ्यवर्तताम् ॥ १०-८-८ (६४२७९)
अश्वत्थामा तु तौ दृष्ट्वा यत्नवन्तौ महारथौ ।
प्रहृष्टः शनकै राजन्निदं वचनमब्रवीत् ॥ १०-८-९ (६४२८०)
यत्तौ भवन्तौ पर्याप्तौ सर्वक्षत्रस्य नाशने ।
किम्पुनर्योधशेषस्य प्रसुप्तस्य विशेषतः ॥ १०-८-१० (६४२८१)
अहं प्रवेक्ष्ये शिबिरं चरिष्यामि च कालवत् ।
यथा न कश्चिदपि वां जीवन्मुच्येत मानवः ।
तथा भवद्भ्यां कार्यं स्यादिति मे निश्चिता मतिः ॥ १०-८-११ (६४२८२)
इत्युक्त्वा प्राविशद्द्रौणिः पार्थानां शिबिरं महत् ।
अद्वारेणाभ्यवस्कन्द्य विहाय भयमात्मनः ॥ १०-८-१२ (६४२८३)
स प्रविश्य महाबाहुरुद्देशज्ञश्च तस्य ह ।
ग्द्रौणिः परमसङ्क्रुद्धस्तेजसा प्रज्वलन्निव ।
ततः पर्यचरत्सर्वं सम्प्रसुप्तं जनं निशि'॥ १०-८-१३ (६४२८४)
धृष्टद्युम्नस्य निलयं शनकैरभ्युपागमत् ॥ १०-८-१४ (६४२८५)

ते तु कृत्वा महत्कर्म श्रान्ताश्च बलवद्रणे ।
प्रसुप्ता वै सुविश्वस्ताः स्वसैन्यपरिवारिताः ॥ १०-८-१५ (६४२८६)
अथ प्रविश्य तद्वेश्म धृष्टद्युम्नस्य भारत ।
पाञ्चाल्यं शयने द्रौणिरपश्यत्सुप्तमन्तिकात् ॥ १०-८-१६ (६४२८७)
क्षौमावदाते महति स्पर्द्ध्यास्तरणसंवृते ।
माल्यप्रवरसंयुक्ते धूपैश्चूर्णैश्च वासिते ॥ १०-८-१७ (६४२८८)
तं शयानं महात्मानं विस्रब्धमकुतोभयम् ।
अपोथयत पादेन शयनस्थं महीपते ॥ १०-८-१८ (६४२८९)
सम्बुध्य चरणस्पर्शादुत्थाय रणदुर्मदः ।
अभ्यजानादमेयात्मा द्रोणपुत्रं महारथम् ॥ १०-८-१९ (६४२९०)
तमुत्पतन्तं शयनादश्वत्थामा महाबलः ।
केशेष्वालभ्य पाणिभ्यां निष्पिपेष महीतले ॥ १०-८-२० (६४२९१)
स बलात्तेन निष्पिष्टः साध्वसेन च भारत ।
अभ्याक्रान्तश्च निद्रान्धो नाशकच्चेष्टितुं तदा ॥ १०-८-२१ (६४२९२)
ग्निष्पिष्य तु ततो भूमौ पाञ्चाल्यं द्रौणिरञ्जसा ।
धनुषो ज्यां विमुच्याशु क्रूरबुद्धिरमर्षणः ॥ १०-८-२२ (६४२९३)
तस्य कण्ठेऽथ बद्ध्वा तां त्वरितः क्रोधमूर्च्छितः ।'
द्रौणिः क्रूरं मनः कृत्वा पाञ्चाल्यमवधीत्तदा ॥ १०-८-२३ (६४२९४)
तमाक्रम्य पदा राजन्कण्ठे चोरसि पादयोः ।
तदन्तं विस्फुरन्तं च पशुमारममारयत् ॥ १०-८-२४ (६४२९५)
ग्स वार्यमाणस्तरसा बलाद्बलवता बली'।
तुदन्नखैस्तु स द्रौणिं नातिव्यक्तमुदाहरत् ॥ १०-८-२५ (६४२९६)
आचार्यपुत्र शस्त्रेण जहि मां मा चिरं कृथाः ।
त्वत्कृते सुकृतां लोकान्गच्छेयं द्विपदांवर ॥ १०-८-२६ (६४२९७)
एवमुक्त्वा तु वचनं विरराम परन्तपः ।
सुतः पाञ्चालराजस्य आक्रान्तो बलिना भृशम् ॥ १०-८-२७ (६४२९८)
तस्याव्यक्तां तु तां वचं संश्रुत्य द्रौणिरब्रवीत् ।
आचार्यघातिनां लोका न सन्ति कुलपांसन ।
तस्माच्छस्त्रेण निधनं न त्वमर्हसि दुर्मते ॥ १०-८-२८ (६४२९९)
ग्नृशंसेनातिवृत्तेन त्वया मे निहतः पिता ।
तस्मात्त्वमपि वध्यश्च नृशंसेन नृशंसकृत् ॥' १०-८-२९ (६४३००)
एवं ब्रुवाणस्तं वीरं सिंहो मत्तमिव द्विपम् ।
मर्मस्वभ्यवधीत्क्रुद्धः पादघातैः सुदारुणैः ॥ १०-८-३० (६४३०१)
तस्य वीरस्य शब्देन मार्यमाणस्य वेश्मनि ।
अबुध्यन्त महाराज स्त्रियो ये चास्य रक्षिणः ॥ १०-८-३१ (६४३०२)
ते दृष्ट्वा धर्षयन्तं तमतिमानुषविक्रमम् ।

भूतमित्यध्यवस्यन्तो न स्म प्रव्याहरन्भयात् ॥१०-८-३२ (६४३०३)
तं तु तेनाभ्युपायेन गमयित्वा यमक्षयम् ।
अध्यतिष्ठत तेजस्वी रथं प्राप्य सुदर्शनम् ॥१०-८-३३ (६४३०४)
स तस्य भवनाद्राजन्निष्क्रम्यानादयन्दिशः ।
रथेन शिबिरं प्रायाज्जिघांसुर्द्विषतो बली ॥१०-८-३४ (६४३०५)
अपक्रान्ते ततस्तस्मिन्द्रोणपुत्रे महारथे ।
सहितैः रक्षिभिः सर्वैः प्राणेदुर्योषितस्तदा ॥१०-८-३५ (६४३०६)
राजानं निहतं दृष्ट्वा भृशं शोकपरायणाः ।
व्याक्रोशन्क्षत्रियाः सर्वे धृष्टद्युम्नस्य भारत ॥१०-८-३६ (६४३०७)
तासां तु तेन शब्देन समीपे क्षत्रियर्षभाः ।
सम्भ्रान्ताः समनह्यन्त किमेतदिति चाब्रुवन् ॥१०-८-३७ (६४३०८)
स्त्रियस्तु राजन्वित्रस्ता भारद्वाजं निरीक्ष्य ताः ।
अब्रुन्दीनकण्ठेन क्षिप्रमाद्रवतेति वै ॥१०-८-३८ (६४३०९)
राक्षसो वा मनुष्यो वा नैनं जानीम कोन्वयम् ।
हत्वा पाञ्चालराजानं रथमारुह्य तिष्ठति ॥१०-८-३९ (६४३१०)
ततस्ते योधमुख्यास्तं सहसा पर्यवारयन् ।
स तानापततः सर्वान्रुद्रास्त्रेण व्यपोथयत् ॥१०-८-४० (६४३११)
धृष्टद्युम्नं च हत्वा स तांश्चैवास्य पदानुगान् ।
अपश्यच्छयने सुप्तमुत्तमौजसमन्तिके ॥१०-८-४१ (६४३१२)
तमप्याक्रम्य पादेन कण्ठे चोरसि तेजसा ।
तथैव मारयामास विनर्दन्तमरिन्दमम् ॥१०-८-४२ (६४३१३)
युधामन्युश्च विक्रान्तो मत्वा तं राक्षसं स्म सः ।
गदामुद्यम्य वेगेन हृदि द्रौणिमताडयत् ॥१०-८-४३ (६४३१४)
ग्गदाप्रहाराभिहतो नाचलद्द्रौणिराहवे'।
तमभिद्रुत्य वेगेन क्षितौ चैनमपातयत् ॥१०-८-४४ (६४३१५)
विस्फुरन्तं च पशुवत्तथैवैनममारयत् ।
तथा स वीरो हत्वा तं ततोऽन्यान्समुपाद्रवत् ॥१०-८-४५ (६४३१६)
संसुप्तानेव राजेन्द्र तत्र तत्र महारथान् ।
पाञ्चालवीरानाक्रम्य क्रुद्धो न्यहनदन्तिके ।
स्फुरतो वेपमानांश्च शमितेव पशून्मखे ॥ १०-८-४६ (६४३१७)
ततो निस्त्रिंशमादाय जघानान्यान्पृथक्पृथक् ।
भागशो विचरन्मार्गानसियुद्धविशारदः ॥१०-८-४७ (६४३१८)
तथैव गुल्मे सम्प्रेक्ष्य शयानान्मध्यगौल्मिकान् ।
श्रान्तान्व्यस्तायुधान्सर्वानसिनैव व्यपोथयत् ॥१०-८-४८ (६४३१९)
योधानश्वान्द्विपांश्चैव प्राच्छिनत्स वरासिना ।
रुधिरोक्षितसर्वाङ्गः कालसृष्ट इवान्तकः ॥१०-८-४९ (६४३२०)

विस्फुरद्भिश्च तैर्द्रौणिर्निस्त्रिंशस्योद्यमेन च ।
अवक्षेपेण चैवासेस्त्रिधा रक्तोक्षितोऽभवत् ॥ १०-८-५० (६४३२१)
तस्य लोहितरक्तस्य दीप्तखड्गस्य युध्यतः ।
अमानुष इवाकारो बभौ परमभीषणः ॥ १०-८-५१ (६४३२२)
ये त्वजाग्रन्त कौरव्य तेऽपि शब्देन मोहिताः ।
वीक्षमाणास्तु ते तत्र द्रौणिं दृष्ट्वा प्रविव्यथुः ॥ १०-८-५२ (६४३२३)
तद्रूपं तस्य ते दृष्ट्वा क्षत्रियाः शत्रुकर्शनम् ।
राक्षसं मन्यमानास्तं नयनानि न्यमीलयन् ॥ १०-८-५३ (६४३२४)
स घोररूपो व्यचरत्कालवच्छिबिरे तदा ।
अपश्यद्द्रौपदीपुत्रानवशिष्टांश्च सोमकान् ॥ १०-८-५४ (६४३२५)
तेन शब्देन वित्रस्ता धनुर्हस्ता महारथाः ।
धृष्टद्युम्नं हतं श्रुत्वा द्रौपदेया विशाम्पते ।
अवाकिरञ्शरव्रातैर्भारद्वाजमभीतवत् ॥ १०-८-५५ (६४३२६)
ततस्तेन निनादेन सम्प्रबुद्धाः प्रभद्रकाः ।
शिलीमुखैः शिखण्डी च द्रोणपुत्रं समार्दयन् ॥ १०-८-५६ (६४३२७)
भारद्वाजः स तान्दृष्ट्वा शरवर्षाणि वर्षतः ।
ननाद बलवन्नादं जिघांसुस्तान्महारथान् ॥ १०-८-५७ (६४३२८)
ततः परमसङ्क्रुद्धः पितुर्वधमनुस्मरन् ।
अवरुह्य रथोपस्थात्त्वरमाणोऽभिदुद्रुवे ॥ १०-८-५८ (६४३२९)
सहस्रचन्द्रविमलं गृहीत्वा चर्म संयुगे ।
खड्गं च विमलं दिव्यं जातरूपपरिष्कृतम् ।
द्रौपदेयानभिद्रुत्य खड्गेन व्यधमद्बली ॥ १०-८-५९ (६४३३०)
ततः स नरशार्दूलः प्रतिविन्ध्यं महाहवे ।
कुक्षिदेशेऽवधीद्राजन्स हतो न्यपतद्भुवि ॥ १०-८-६० (६४३३१)
प्रासेन विद्ध्वा द्रौणिं तु सुतसोमः प्रतापवान् ।
पुनश्चासिं समुद्यम्य द्रोणपुत्रमुपाद्रवत् ॥ १०-८-६१ (६४३३२)
सुतसोमस्य सासिं तं बाहुं छित्त्वा नरर्षभ ।
पुनरप्याहनत्पार्श्वे स भिन्नहृदयोऽपतत् ॥ १०-८-६२ (६४३३३)
नाकुलिस्तु शतानीको रथचक्रेण वीर्यवान् ।
दोर्भ्यामुत्क्षिप्य वेगेन वक्षस्येनमताडयत् ॥ १०-८-६३ (६४३३४)
अताडयच्छतानीकं मुक्तचक्रं द्विजस्तु सः ।
स विह्वलो ययौ भूमिं ततोऽस्यापाहरच्छिरः ॥ १०-८-६४ (६४३३५)
श्रुतकर्मा तु परिघं घोरं गृह्य दुरासदम् ।
अताडयत्समुद्यम्य वेगेन द्रौणिमुत्स्मयन् ॥ १०-८-६५ (६४३३६)
स तु तं श्रुतकर्माणमास्ये जघ्ने वरासिना ।
स हतो न्यपतद्भूमौ विमूर्धा विकृताननः ॥ १०-८-६६ (६४३३७)

तेन शब्देन वीरस्तु श्रुतकीर्तिरबुध्यत ।
अश्वत्थामानमासाद्य शरवर्षैरवाकिरत् ॥ १०-८-६७ (६४३३८)
ग्शरैराच्छादितस्तेन द्रोणपुत्रो महारथः ।
अदृश्यत महाराज श्वाविच्छललतो यथा ॥' १०-८-६८ (६४३३९)
तस्यापि शरवर्षाणि चर्मणा प्रतिवार्य सः ।
सकुण्डलं शिरः कायाद्भ्राजमानमपाहरत् ॥ १०-८-६९ (६४३४०)
ततो भीष्मनिहन्तारं सह सर्वैः प्रभद्रकैः ।
आहनत्सर्वतो वीरं नानाप्रहरणैर्बलात् ॥ १०-८-७० (६४३४१)
शिलीमुखेन चाप्येनं भ्रुवोर्मध्ये समार्पयत् ॥ १०-८-७१ (६४३४२)
स तु क्रोधसमाविष्टो द्रोणपुत्रो महाबलः ।
शिखण्डिनं समासाद्य द्विधा चिच्छेद सोसिना ॥ १०-८-७२ (६४३४३)
शिखण्डिनं ततो हत्वा क्रोधाविष्टः परन्तपः ।
प्रभद्रकगणान्सर्वानभिदुद्राव वेगवान् ॥ १०-८-७३ (६४३४४)
यच्च शिष्टं विराटस्य बलं तु भृशमाद्रवत् ।
द्रुपदस्य च पुत्राणां पौत्राणां सुहृदामपि ।
चकार कदनं घोरं दृष्ट्वा तत्र महाबलः ॥ १०-८-७४ (६४३४५)
अन्यानन्यांश्च पुरुषानभिसृत्याभिसृत्य च ।
न्यकृन्तदसिना द्रौणिरसिमार्गविशारदः ॥ १०-८-७५ (६४३४६)
कालीं रक्तास्यनयनां रक्तमाल्यानुलेपनाम् ।
रक्ताम्बरधरां घोरां पाशहस्तां कुटुम्बिनीम् ॥ १०-८-७६ (६४३४७)
ददृशुः कालरात्रिं ते स्मयमानामिव स्थिताम् ।
नराश्वकुञ्जरान्पाशैर्बद्ध्वा घोरैः प्रतस्थुषीम् ॥ १०-८-७७ (६४३४८)
वहन्तीं विविधान्प्रेतान्पाशबद्धान्विमूर्धजान् ।
तथैव च सदा राजन्न्यस्तशस्त्रान्महारथान् ॥ १०-८-७८ (६४३४९)
स्वप्ने सुप्तान्नयन्तीं तां रात्रिष्वन्यासु मारिष ।
ददृशुर्योधमुख्यास्ते घ्नन्तं द्रौणिं च नित्यदा ॥ १०-८-७९ (६४३५०)
यतः प्रभृति सङ्ग्रामः कुरुपाण्डवसेनयोः ।
ततः प्रभृति तां कन्यामपश्यन्द्रौणिमेव च ॥ १०-८-८० (६४३५१)
तांस्तु दैवहतान्पूर्वं पश्चाद्द्रौणिर्व्यपातयत् ।
त्रासयन्सर्वभूतानि विनदन्भैरवान्रवान् ॥ १०-८-८१ (६४३५२)
तदनुस्मृत्य ते वीरा दर्शनं पूर्वकालिकम् ।
इदं तदित्यमन्यन्त दैवेनोपनिपीडिताः ॥ १०-८-८२ (६४३५३)
ततस्तेन निनादेन प्रत्यबुध्यन्त धन्विनः ।
शिबिरे पाण्डवेयानां शतशोऽथ सहस्रशः ॥ १०-८-८३ (६४३५४)
सोऽच्छिनत्कस्यचित्पदौ जघनं चैव कस्यचित् ।
कांश्चिद्बिभेदपार्श्वेषु कालसृष्ट इवान्तकः ॥ १०-८-८४ (६४३५५)

अत्युग्रप्रतिपिष्टैश्च नदद्भिश्च भृशोत्कटैः ।
गजाश्वमथितैश्चान्यैर्मही कीर्णाऽभवत्प्रभो ॥ १०-८-८५ (६४३५६)
क्रोशतां किमिदं कोऽयं कः शब्दः किन्नु किं कृतम् ।
पाञ्चालानां तथा द्रौणिरन्तकः समपद्यत ॥ १०-८-८६ (६४३५७)
अपेतशस्त्रसन्नाहान्सन्नद्धान्पाण्डुसृञ्जयान् ।
प्राहिणोन्मृत्युलोकाय द्रौणिः प्रहरतां वरः ॥ १०-८-८७ (६४३५८)
ततस्तच्छस्त्रवित्रस्ता भयादभ्यपतन्नराः ।
निद्रान्धा नष्टसंज्ञाश्च तत्रतत्र निपेतिरे ॥ १०-८-८८ (६४३५९)
ऊरुस्तम्भगृहीताश्च कश्मलाभिहतौजसः ।
विनदन्तो भृशं त्रस्ता निरैक्षन्त परस्परम् ॥ १०-८-८९ (६४३६०)
ततो रथं पुनर्द्रौणिरास्थितो भीमदर्शनः ।
धनुष्पाणिः शरैरन्यान्प्रैषयद्वै यमक्षयम् ॥ १०-८-९० (६४३६१)
पुनरुत्पततश्चापि दूरादपि नरोत्तमान् ।
शूरान्सम्पततश्चान्यान्कालरात्र्यै न्यवेदयत् ॥ १०-८-९१ (६४३६२)
तथैव स्यन्दनाग्रेण प्रमथन्स व्यरोचत ।
शरवर्षैश्च विविधैरवर्षच्छात्रवांस्ततः ॥ १०-८-९२ (६४३६३)
पुनश्च सुविचित्रेण शतचन्द्रेण चर्मणा ।
तेन चाकाशवर्णेन तथाचरत सोऽसिना ॥ १०-८-९३ (६४३६४)
तथा स शिबिरं तेषां द्रौणिराहवदुर्मदः ।
व्यक्षोभयत राजेन्द्र महाह्रदमिव द्विपः ॥ १०-८-९४ (६४३६५)
उत्पेतुस्तेन शब्देन योधा राजन्विचेतसः ।
निद्रार्ताश्च भयार्ताश्च व्यधावन्त ततस्ततः ॥ १०-८-९५ (६४३६६)
विस्वरं चुक्रुशुश्चान्ये बह्वबद्धं तथाऽवदन् ।
न च स्म प्रत्यपद्यन्त शस्त्राणि वसनानि च ॥ १०-८-९६ (६४३६७)
विमुक्तकेशाश्चाप्यन्ये नाभ्यजानन्परस्परम् ।
उत्पतन्तोऽपतञ्श्रान्ताः केचित्तत्राभ्रमंस्तदा ।
पुरीषमसृजन्केचित्केचिन्मूत्रं प्रसुस्रुवुः ॥ १०-८-९७ (६४३६८)
बन्धनानि च राजेन्द्र सञ्छिद्य तुरगा द्विपाः ।
समं पर्यपतंश्चान्ये कुर्वन्तो महदाकुलम् ॥ १०-८-९८ (६४३६९)
तत्र केचिन्नरा भीता व्यलीयन्त महीतले ।
तथैव तान्निपतितानपिंषन्गजवाजिनः ॥ १०-८-९९ (६४३७०)
तस्मिंस्तथा वर्तमाने रक्षांसि पुरुषर्षभ ।
हृष्टानि व्यनदन्नुच्चैर्मुदा युक्तानि सत्तम ॥ १०-८-१०० (६४३७१)
स शब्दः प्रेरितो राजन्भूतसङ्घैर्मुदा युतैः ।
अपूरयद्दिशः सर्वा दिवं चातिमहान्स्वनः ॥ १०-८-१०१ (६४३७२)
तेषामार्तरवं श्रुत्वा वित्रस्ता गजवाजिनः ।

मुक्ताः पर्यपतन्राजन्मृद्गन्तः शिबिरे जनम् ॥ १०-८-१०२ (६४३७३)
तैस्तत्र परिधावद्भिश्चरणोदीरितं रजः ।
अकरोच्छिबिरे तेषां रजन्यां द्विगुणं तमः ॥ १०-८-१०३ (६४३७४)
तस्मिंस्तमसि सञ्जाते प्रमूढाः सर्वतो जनाः ।
नाजानन्पितरः पुत्रान्भ्रातॄन्भ्रातर एव च ॥ १०-८-१०४ (६४३७५)
गजो राजानतिक्रम्य निर्मनुष्या हया हयान् ।
अताडयंस्तथाऽभञ्जंस्तथाऽमृद्गंश्च भारत ॥ १०-८-१०५ (६४३७६)
ते भग्नाः प्रपतन्ति स्म मृद्नन्तश्च परस्परम् ।
न्यपातयंस्तथा चान्यान्पातयित्वा तदाऽपिषन् ॥ १०-८-१०६ (६४३७७)
विचेतसः सनिद्राश्च तमसा चावृता नराः ।
जघ्नुः स्वानेव तत्राथ कालेनैव प्रचोदिताः ॥ १०-८-१०७ (६४३७८)
त्यक्त्वाद्वाराणि च द्वास्थास्तथागुल्मानिगौल्मिकाः ।
प्राद्रवन्त यथाशक्ति कांदिशीका विचेतसः ॥ १०-८-१०८ (६४३७९)
विप्रनष्टाश्च तेऽन्योन्यं नाजानन्तस्तथा विभो ।
क्रोशन्तस्तात पुत्रेति दैवोपहतचेतसः ॥ १०-८-१०९ (६४३८०)
पलायतां दिशस्तेषां स्वानप्युत्सृज्य बान्धवान् ।
गोत्रनामभिरन्योन्यमाक्रन्दन्त ततो जनाः ॥ १०-८-११० (६४३८१)
हाहाकारं च कुर्वाणाः पृथिव्यां शेरते परे ।
तान्बुद्ध्वा रणमध्येऽसौ द्रोणपुत्रो व्यपोथयत् ॥ १०-८-१११ (६४३८२)
तत्रापरे वध्यमाना मुहुर्मुहुरचेतसः ।
शिबिरान्निष्पतन्ति स्म क्षत्रिया भयपीडिताः ॥ १०-८-११२ (६४३८३)
तांस्तु निष्पतितांस्त्रस्ताञ्शिबिराज्जीवितैषिणः ।
कृतवर्मा कृपश्चैव द्वारदेशे निजघ्नतुः ॥ १०-८-११३ (६४३८४)
विसस्तयन्त्रकवचान्मुक्तकेशान्कृताञ्जलीन् ।
वेपमानान्क्षितौ भीतान्नैव कांश्चिदमुच्यताम् ॥ १०-८-११४ (६४३८५)
नामुच्यत तयोः कश्चिन्निष्क्रान्तः शिबिराद्बहिः ॥
कृपश्चैव महाराज हार्दिक्यश्चैव दुर्मतिः। १०-८-११५ (६४३८६)
भूयश्चैव चिकीर्षन्तौ द्रौणपुत्रस्य तौ प्रियम् ।
त्रिषु देशेषु ददतुः शिबिरस्य हुताशनम् ॥ १०-८-११६ (६४३८७)
ततः प्रकाशे शिबिरे खड्गेन पितृनन्दनः ।
अश्वत्थामा महाराज व्यचरत्कृतहस्तवत् ॥ १०-८-११७ (६४३८८)
कांश्चिदापततो वीरानपरांश्चैव धावतः ।
व्ययोजयत खड्गेन प्राणैर्द्विजवरोत्तमः ॥ १०-८-११८ (६४३८९)
कांश्चिद्योधान्स खड्गेन मध्ये सञ्छिद्य वीर्यवान् ।
अशातयद्द्रोणपुत्रः संरब्धस्तिलकाण्डवत् ॥ १०-८-११९ (६४३९०)
निनदद्भिर्भृशायस्तैर्नराश्वद्विरदोत्तमैः ।

पतितैरभवत्कीर्णा मेदिनी भरतर्षभ ॥ १०-८-१२० (६४३९१)
मानुषाणां सहस्रेषु हतेषु पतितेषु च ।
उदतिष्ठन्कबन्धानि बहून्युत्थाय चापतन् ॥ १०-८-१२१ (६४३९२)
सायुधान्साङ्गदान्बाहून्विचकर्त शिरांसि च ।
हस्तिहस्तोपमानूरून्हस्तान्पादांश्च भारत ॥ १०-८-१२२ (६४३९३)
पृष्ठच्छिन्नान्पार्श्वच्छिन्नाञ्शिरश्छिन्नांस्तथापरान् ।
स महात्माकरोद्द्रौणिः कांश्चिच्चापि पराङ्मुखान् ॥ १०-८-१२३ (६४३९४)
मध्यदेशे नरानन्यांश्चिच्छेदान्यांश्च कर्णतः ।
अंसदेशे निहत्यान्यान्काये प्रावेशयच्छिरः ॥ १०-८-१२४ (६४३९५)
एवं हि बहुभिः शस्त्रैर्घ्नतोऽपि बलवत्तरान् ।
तमसा रजनी घोरा बभौ दारुणदर्शना ॥ १०-८-१२५ (६४३९६)
किञ्चित्प्राणैश्च पुरुषैर्हतैश्चान्यैः सहस्रशः ।
बहुना च गजाश्वेन भूतभूर्ञ्मीमदर्शना ॥ १०-८-१२६ (६४३९७)
यक्षरक्षःसमाकीर्णे रथाश्वद्विपदारुणे ।
क्रुद्धेन द्रोणपुत्रेण सञ्छिन्नाः प्रापतन्भुवि ।
भ्रातॄनन्ये पितॄनन्ये पुत्रानन्ये विचुक्रुशुः ॥ १०-८-१२७ (६४३९८)
केचिदूचुर्न तत्क्रुद्धैर्धार्तराष्ट्रैः कृतं रणे ।
यत्कृतं नः प्रसुप्तानां रक्षोभिः क्रूरकर्मभिः ।
असान्निध्याद्धि पार्थानामिदं वः कदनं कृतम् ॥ १०-८-१२८ (६४३९९)
न चासुरैर्न गन्धर्वैर्न यक्षैर्न च राक्षसैः ।
शक्यो विजेतुं कौन्तेयो नेता यस्य जनार्दनः ।
ब्रह्मण्यः मत्यवाग्दान्तः सर्वभूतानुकम्पकः ॥ १०-८-१२९ (६४४००)
न च सुप्तं प्रमत्तं वा न्यस्तशस्त्रं कृताञ्जलिम् ।
धावन्तं मुक्तकेशं वा हन्ति पार्थो धनञ्जयः ॥ १०-८-१३० (६४४०१)
तदिदं नः कृतं घोरं रक्षोभिः क्रूरकर्मभिः ।
इति लालप्यमानाः स्म शेरते बहवो जनाः ॥ १०-८-१३१ (६४४०२)
स्तनतां च मनुष्याणामपरेषां च कूजताम् ।
ततो मुहूर्तात्प्राशाम्यत्स शब्दस्तुमुलो महान् ॥ १०-८-१३२ (६४४०३)
शोणितव्यतिषिक्तायां वसुधायां च भूमिप ।
तद्रजस्तुमुलं घोरं क्षणेनान्तरधीयत ॥ १०-८-१३३ (६४४०४)
स चेष्टमानानुद्विग्नान्निरुत्साहान्सहस्रशः ।
न्यपातयन्नरान्क्रुद्धः पशून्पशुपतिर्यथा ॥ १०-८-१३४ (६४४०५)
अन्योन्यं सम्परिष्वज्य शयानाञ्जीवतोऽपरान् ।
संलीनान्युध्यमानांश्च सर्वान्द्रौणिरपोथयत् ॥ १०-८-१३५ (६४४०६)
ब्रह्ममाना हुताशेन वध्यमानाश्च तेन ते ।
परस्परं तदा योधाननयद्यमसादनम् ॥ १०-८-१३६ (६४४०७)

तस्या रजन्यास्त्वर्धेन पाण्डवानां महद्बलम् ।
गमयामास राजेन्द्र द्रौणिर्यमनिवेशनम् ॥ १०-८-१३७ (६४४०८)
निशाचराणां सत्वानां रात्रिः सा हर्षवर्धिनी ।
आसीन्नरगजाश्वानां रौद्री क्षयकरी भृशम् ॥ १०-८-१३८ (६४४०९)
तत्रादृश्यन्त रक्षांसि पिशाचाश्च पृथग्विधाः ।
खादन्तो नरमांसानि पिबन्तः शोणितानि च ॥ १०-८-१३९ (६४४१०)
करालाः पिङ्गला रौद्राः शैलदन्ता रजस्वलाः ।
जटिला भीमवक्त्राश्च पञ्चपादा महोदराः ॥ १०-८-१४० (६४४११)
पञ्चादङ्गुलयो रूक्षा विरूपा भैरवस्वनाः ।
गजाननाश्च ह्रस्वाश्च नीलवर्णा बिभीषणाः ॥ १०-८-१४१ (६४४१२)
सपुत्रदाराः सुक्रूराः सुदुर्दर्शाः सुनिर्घृणाः ।
विविधानि च रूपाणि तत्रादृश्यन्त रक्षसाम् ॥ १०-८-१४२ (६४४१३)
पीत्वा च शोणितं हृष्टाः प्रानृत्यन्गणशोऽपरे ।
इदं परमिदं मेध्यमिदं स्वाद्विति चाब्रुवन् ॥ १०-८-१४३ (६४४१४)
मेदोमज्जास्थिरक्तानां मांसानां च भृशाशिताः ।
परे मांसानि खादन्तः क्रव्यादा मांसजीविनः ॥ १०-८-१४४ (६४४१५)
वसाश्चैवापरे पीत्वा पर्यधावन्विकुक्षिकाः ।
नानावक्त्रास्तथा रौद्राः क्रव्यादाः पिशिताशनाः ॥ १०-८-१४५ (६४४१६)
अयुतानि च तत्रासन्प्रयुतान्यर्बुदानि च ।
रक्षसां घोररूपाणां महतां क्रुरकर्मणाम् ॥ १०-८-१४६ (६४४१७)
मुदितानां वितृप्तानां तस्मिन्महति वैशसे ।
समेतानि बहून्यासन्भूतानि च जनाधिप। १०-८-१४७ (६४४१८)
एवंविधा हि सा रात्रिः सोमकानां जनक्षये ।
प्रसुप्तानां प्रमत्तानामासीत्सुभृशदारुणा ॥ १०-८-१४८ (६४४१९)
असंशयं हि कालस्य पर्यायो दुरतिक्रमः ।
तादृशा निहता यत्र कृत्वाऽस्माकं जनक्षयम् ॥ १०-८-१४९ (६४४२०)
धृतराष्ट्र उवाच। १०-८-१५०क्ष् (५२७७)
प्रागेव सुमहत्कर्म द्रौणिरेतन्महारथः ।
नाकरोदीदृशं कस्मान्मत्पुत्रविजये धृतः ॥ १०-८-१५० (६४४२१)
अथ कस्माद्धते क्षत्रे कर्मेदं कृतवानसौ ।
द्रोणपुत्रो महात्मा स तन्मे शंसितुमर्हसि ॥ १०-८-१५१ (६४४२२)
सञ्जय उवाच। १०-८-१५२क्ष् (५२७८)
तेषां नूनं भयान्नासौ कृतवान्कुरुनन्दन ।
असान्निध्याद्धि पार्थानां केशवस्य च धीमतः ।
सात्यकेश्चापि कर्मेदं द्रोमपुत्रेण साधितम् ॥ १०-८-१५२ (६४४२३)
को हि तेषां समक्षं तान्हन्यादपि मरुत्पतिः ।

एतदीदृशकं वृत्तं राजन्सुप्तजने विभो ॥ १०-८-१५३ (६४४२४)
ततो जनक्षयं कृत्वा पाण्डवानां महात्ययम् ।
प्रत्यूषकाले शिबिरात्प्रतिगन्तुमियेष सः ॥ १०-८-१५४ (६४४२५)
नृशोणितावसिक्तस्य द्रौणेरासीदसित्सरुः ।
पाणिना सह संश्लिष्ट एकीभूत इव प्रभो ॥ १०-८-१५५ (६४४२६)
स निःशेषानरीन्कृत्वा विरराम निशाक्षये ।
युगान्ते सर्वभूतानि भस्म कृत्वेव पावकः ॥ १०-८-१५६ (६४४२७)
यथाप्रतिज्ञं तत्कर्म कृत्वा द्रौणायनिः प्रभो ।
दुर्गमां पदवीं गच्छन्पितुरासीद्गतज्वरः ॥ १०-८-१५७ (६४४२८)
यथैव संसुप्तजने शिबिरे प्राविशन्निशि ।
तथैव हत्वा निःशब्दो निश्चक्राम नरर्षभः ॥ १०-८-१५८ (६४४२९)
निष्क्रम्य शिबिरात्तस्मात्ताभ्यां सङ्गम्य वीर्यवान् ।
आचख्यौ कर्म तत्सर्वं हृष्टः संहर्षयन्विभो ॥ १०-८-१५९ (६४४३०)
तावथाचख्यतुस्तस्मै प्रियं प्रियकरौ तदा ।
पाञ्चालान्सृञ्जयांश्चैव विनिकृत्तान्सहस्रशः ॥ १०-८-१६० (६४४३१)
प्रीत्या चोच्चैरुदक्रोशंस्तथैवास्फोटयंस्तलान् ।
दिष्ट्यादिष्ट्येति चान्योन्यं समेत्योचुर्महारथाः ॥ १०-८-१६१ (६४४३२)
पर्यष्वजत्ततो द्रौणिस्ताभ्यां सम्प्रतिनन्दितः ।
इदं हर्षात्तु सुमहदाददे वाक्यमुत्तमम् ॥ १०-८-१६२ (६४४३३)
पाञ्चाला निहताः सर्वे द्रौपदेयाश्च सर्वशः ।
सोमका मत्स्यशेषाश्च सर्वे विनिहता मया ॥ १०-८-१६३ (६४४३४)
इदानीं कृतकृत्याः स्म याम तत्रैव मा चिरम् ।
यदि जीवति नो राजा तस्मै शंसामहे प्रियम् ॥ ॥ १०-८-१६४ (६४४३५)

इति श्रीमन्महाभारते सौप्तिकपर्वणि अष्टमोऽध्यायः ॥ ८ ॥

Mahabharata - Sauptika Parva - Chapter Footnotes

१०-८-७ पाञ्चालैः पूर्वं निहतौ सन्तौ स्वपतां कच्चित् कोपात्
स्वपतां पाञ्चालानां कर्म वधाख्यं ताभ्यां कच्चित्कृतमिति
सम्बन्धः ॥
१०-८-८ शिबिरद्वार्यतिष्ठतामिति झ पाठः ॥
१०-८-११ वां युवां प्राप्येति शेषः ॥
१०-८-१३ उद्देशज्ञः धृष्टद्युम्नस्थलज्ञः ॥
१०-८-३० पादाष्ठीलैरिति झ पाठः । तत्र पादाष्ठीलैः
पादग्रन्थिभिः। पार्ष्णिघातैरित्यर्थः ॥
१०-८-५० तैश्छिन्नगात्रैर्विस्फुरद्भिस्तेषां शरीरादुच्चलद्भी

रक्तबिन्दुभिरित्यर्थः ॥
१०-८-८७ पाण्डुसृञ्जयान् पाण्डवसम्बन्धिनः सृञ्जयान्
। पाण्डोर्गोत्रापत्यानि सृञ्जयाश्च तान्वा ॥
१०-८-१०५ अभञ्जन् गात्राण्यनमयन् । अमृद्रन् परस्परं मर्दितवन्तः ॥
१०-८-१०६ अपिषन् अपिंषन् ॥
१०-८-१४४ भृशाशिताः भृशं संन्तर्पिताः ॥
१०-८-१४५ विकुक्षिकाः विपुलकुक्षयः ॥
१०-८-८ अष्टमोऽध्यायः ॥

---

सौप्तिक-अध्यय००९
॥ श्रीः ॥
१०.९. अध्यायः ९

Mahabharata - Sauptika Parva - Chapter Topics
द्रौणिकृपकृतवर्मभिर्दुर्योधनमेत्य शोचनम् ॥ १ ॥
दुर्योधनम्प्रति द्रौणिना सुप्तजवधकथनम् ॥ २ ॥
दुर्योधनेन प्राणत्यागः ॥ ३ ॥
द्रौण्यादीनां नगरगमनम् ॥ ४ ॥
सञ्जयस्य व्यासानुग्रहप्राप्तदिव्यज्ञाननाशः ॥ ५ ॥

Mahabharata - Sauptika Parva - Chapter Text

१०-९-० (६४४३६)
सञ्जय उवाच। १०-९-०क्ष् (५२७९)
ते हत्वा सर्वपाञ्चालान्द्रौपदेयांश्च सर्वशः ।
आगच्छन्सहितास्तत्र यत्र दुर्योधनो हतः ॥ १०-९-१ (६४४३७)
गत्वा चैनमपश्यन्त किञ्चित्प्राणं जनाधिपम् ।
ततो रथेभ्यः प्रस्कन्द्य परिवव्रुस्तवात्मजम् ॥ १०-९-२ (६४४३८)
तं भग्नसक्थं राजेन्द्र कृच्छ्रप्राणमचेतसम् ।
वमन्तं रुधिरं वक्त्रादपश्यन्वसुधातले ॥ १०-९-३ (६४४३९)
वृतं समन्ताद्बहुभिः श्वापदैर्घोरदर्शनैः ।
सालावृकगणैश्चैव भक्षयिष्यद्भिरन्तिकात् ॥ १०-९-४ (६४४४०)
निरायन्तं कृच्छ्रात्ताञ्श्वापदांश्च चिखादिषून् ।
विवेष्टमानमुरुभ्यां सुभृशं गाढवेदनम् ॥ १०-९-५ (६४४४१)
तं शयानं तथा दृष्ट्वा भूमौ सुरुधिरोक्षितम् ।
हतशिष्टास्त्रयो वीराः शोकार्ताः पर्यदेवयन् ।

अश्वत्थामा कृपश्चैव कृतवर्मा च सात्वतः ॥ १०-९-६ (६४४४२)
तैस्त्रिभिः शोणितादिग्धैर्निः श्वसद्भिर्महारथैः ।
शुशुभे स वृतो राजा वेदी त्रिभिरिवाग्निभिः ॥१०-९-७ (६४४४३)
ते तं शयानं सम्प्रेक्ष्य राजानमतथोचितम् ।
अविषह्येन दुःखेन ततस्ते रुरुदुस्त्रयः ॥१०-९-८ (६४४४४)
ततस्तु रुधिरं हस्तैर्मुखान्निर्मृज्य तस्य हि ।
रणे राज्ञः शयानस्य कृपः सम्पर्यदेवयत् ॥१०-९-९ (६४४४५)
कृप उवाच।१०-९-१०क्ष् (५२८०)
न दैवस्यातिभारोऽस्ति यदयं रुधिरोक्षितः ।
एकादशचमूभर्ता शेते दुर्योधनो हतः ॥१०-९-१० (६४४४६)
पश्य चामीकराभस्य चामीकरविभूषिताम् ।
गदां गदाप्रियस्येमां समीपे पतितां भुवि ॥१०-९-११ (६४४४७)
इयमेनं गदा शूरं न जहाति रणेरणे ।
स्वर्गायापि व्रजन्तं हि न जहाति यशस्विनम् ॥१०-९-१२ (६४४४८)
पश्येमां सह वीरेण जाम्बूनदविभूषिताम् ।
शयानां शयने हर्म्ये भार्यां प्रीतिमतीमिव ॥१०-९-१३ (६४४४९)
योऽयं मूर्धाभिषिक्तानामग्रे याति परन्तपः ।
स हतो ग्रसते पांसून्पश्य कालसय पर्ययम् ॥१०-९-१४ (६४४५०)
येनाजौ निहता भूमौ शेरते क्षत्रियर्षभाः ।
स भूमौ निहतः शेते कुरुराजः परैरयम् ॥१०-९-१५ (६४४५१)
भयान्नमन्ति राजानो यस्य स्म शतसङ्घशः ।
स वीरशयने शेते क्रव्याद्भिः परिवारितः ॥१०-९-१६ (६४४५२)
यमुपासन्नृपाः पूर्वमर्थहेतोर्महीपतिम् ।
उपात्पते च तं ह्यद्य क्रव्यादा मांसगृद्धिनः ॥१०-९-१७ (६४४५३)
सञ्जय उवाच।१०-९-१८क्ष् (५२८१)
तं शयानं कुरुश्रेष्ठं ततो भरतसत्तमम् ।
अश्वत्थामा समालिङ्ग्य करुणं पर्यदेवयत् ॥१०-९-१८ (६४४५४)
आहुस्त्वां राजशार्दूल मुख्यं सर्वधनुष्मताम् ।
धनाध्यक्षोपमं युद्धे शिष्यं सङ्कर्षणस्य च ॥१०-९-१९ (६४४५५)
कथं विवरमद्राक्षीद्भीमसेनस्तवानघ ।
बलिनं कृतिनो नित्यं सूदः पापात्मवान्नृप ॥१०-९-२० (६४४५६)
कालो नूनं महाराज लोकेऽस्मिन्बलवत्तरः ।
पश्यामो निहतं त्वां च भीमसेनेन संयुगे ॥१०-९-२१ (६४४५७)
कथं त्वां सर्वधर्मज्ञं क्षुद्रः पापो वृकोदरः ।
निकृत्या हतवान्मन्दो नून कालो दुरत्ययः ॥१०-९-२२ (६४४५८)
द्वन्द्वयुद्धे ह्यधर्मेण समाहूयौजसा मृधे ।

गदया भीमसेनेन निर्भग्ने सक्थिनी तव ॥ १०-९-२३ (६४४५९)
अधर्मेण हतस्याजौ मृद्यमानं पदा शिरः ।
य उपेक्षितवान्क्षुद्रं धिक्तमस्तु--युधिष्ठिरम् ॥ १०-९-२४ (६४४६०)
युद्धेष्वपवदिष्यन्ति योधा नूनं वृकोदरम् ।
यावत्स्थास्यन्ति भूतानि निकृत्या ह्यसि पातितः ॥ १०-९-२५ (६४४६१)
ननु रामोऽब्रवीद्राजंस्त्वां सदा यदुनन्दनः ।
दुर्योधनसमो नास्ति गदायामिति वीर्यवान् ॥ १०-९-२६ (६४४६२)
श्लाघते त्वां हि वार्ष्णेयो राजन्संसत्सु भारत ।
स शिष्यो मम कौरव्यो गदायुद्ध इति प्रभो ॥ १०-९-२७ (६४४६३)
यां गतिं क्षत्रियस्याहुः प्रशस्तां परमर्षयः ।
हतस्याभिमुखस्याजौ प्राप्तस्त्वमसि तां गतिम् ॥ १०-९-२८ (६४४६४)
दुर्योधन न शोचामि त्वामहं पुरुषर्षभ ।
हतपुत्रौ तु शोचामि गान्धारीं पिरं च ते ॥ १०-९-२९ (६४४६५)
द्वावनाथौ कृतौ वीर त्वया नाथेन वर्धितौ ।
भिक्षुकौ विचरिष्येते शोचन्तौ पृथिवीमिमाम् ॥ १०-९-३० (६४४६६)
घिगस्तु कृष्णं वार्ष्णेयमर्जुनं चापि दुर्मतिम् ।
धर्मज्ञमानिमौ यौ त्वां वध्यमानमुपेक्षताम् ॥ १०-९-३१ (६४४६७)
पाण्डवाश्चापि ते सर्वे किं वक्ष्यन्ति नराधिप ।
कथं दुर्योधनोऽस्माभिर्हत इत्यनपत्रपाः ॥ १०-९-३२ (६४४६८)
धन्यस्त्वमसि गान्धारे यस्त्वमायोधने हतः ।
प्रयातोऽभिमुखः शत्रून्धर्मेण पुरुषर्षभ ॥ १०-९-३३ (६४४६९)
हतपुत्रा हि गान्धारी निहतज्ञातिबान्धवा ।
प्रज्ञाचक्षुश्च दुर्धर्षः कां दशां प्रतिपत्स्यते ॥ १०-९-३४ (६४४७०)
धिगस्तु कृतवर्माणं मां कृपं च महारथम् ।
ये वयं न गताः स्वर्गं त्वां पुरस्कृत्य पार्थिवम् ॥ १०-९-३५ (६४४७१)
दातारं सर्वकामानां रक्षितारं प्रजाहितम् ।
यद्वयं नानुगच्छाम त्वां धिगस्मान्नराधमान् ॥ १०-९-३६ (६४४७२)
कृपस्य तव वीर्येण मम चैव पितुश्च मे ।
सभृत्यानां नरव्याघ्र रत्नवन्ति गृहाणि च ॥ १०-९-३७ (६४४७३)
तव प्रसादादस्माभिः समित्रैः सह बान्धवैः ।
अवाप्ताः क्रतवो मुख्या बहवो भूरिदक्षिणाः ॥ १०-९-३८ (६४४७४)
कुतश्चापीदृशं पापाः प्रवर्तिष्यामहे वयम् ।
यादृशेन पुरस्कृत्य त्वं गतः सर्वपार्थिवान् ॥ १०-९-३९ (६४४७५)
वयमेव त्रयो राजन्गच्छन्तं परमां गतिम् ।
यद्वै त्वां नानुगच्छाभस्तेन तप्स्यामहे वयम्। १०-९-४० (६४४७६)
तत्स्वर्गहीना हीनार्थाः स्मरन्तः सुकृतस्य ते ।

किं नाम तद्भवेत्कर्म येन त्वां न व्रजाम वै ॥ १०-९-४१ (६४४७७)
दुःखं नून कुरुश्रेष्ठ चरिष्याम महीमिमाम् ।
हीनानां नस्त्वया राजन्कुतः शान्तिः कुतः सुखं ॥ १०-९-४२ (६४४७८)
गत्वैव तु महाराज समेत्य च महारथान् ।
यथाज्येष्ठं यथाश्रेष्ठं पूजयेर्वचनान्मम ॥ १०-९-४३ (६४४७९)
आचार्यं पूजयित्वा च केतुं सर्वधनुष्मताम् ।
हतं मयाऽद्य शंशेथा दृष्टद्युम्नं नराधिप ॥ १०-९-४४ (६४४८०)
परिष्वजेथा राजानं बाह्लिकं सुमहारथम् ।
सैन्धवं सोमदत्तं च भूरिश्रवसमेव च ॥ १०-९-४५ (६४४८१)
तथा पूर्वगतानन्यान्स्वर्गे पार्थिवसत्मान् ।
अस्मद्वाक्यात्परिष्वज्य सम्पृच्छेस्त्वमनामयम् ॥ १०-९-४६ (६४४८२)
सञ्जय उवाच। १०-९-४७क्ष् (५२८२)
इत्येवमुक्त्वा राजानं भग्नसक्थमचेतसम् ।
अश्वत्थामा लघुप्राणं पुनर्वचनमब्रवीत् ॥ १०-९-४७ (६४४८३)
दुर्योधन जीवसि चेद्वाक्यं श्रोत्रमुखं शृणु ।
सप् पाण्डवतः शिष्टा धार्तराष्ट्रास्त्रयो वयम् ॥ १०-९-४८ (६४४८४)
ते चैव भ्रातरः पञ्च वासुदेवोऽथ सात्यकिः ।
अहं च कृतवर्मा च कृपः शारद्वतस्तथा ॥ १०-९-४९ (६४४८५)
द्रौपदेया हताः सर्वे धृष्टद्युम्नस्य चात्मजाः ।
पञ्चाला निहताः सर्वे मत्स्यशेषं च भारत ॥ १०-९-५० (६४४८६)
कृते प्रतिकृतं पश्य हतपुत्रा हि पाण्डवाः ।
सौप्तिके शिबिरं तेषां हतं सनरवाहनम् ॥ १०-९-५१ (६४४८७)
मया च पापकर्माऽसौ धृष्टद्युम्नो महीपते ।
प्रविश्य शिबिरं रात्रौ पशुमारेण मारितः ॥ १०-९-५२ (६४४८८)
दुर्योधनस्तु तां वाचं निशम्य मनसः प्रियाम् ।
प्रतिलभ्य पुनश्चेत इदं वचनमब्रवीत् ॥ १०-९-५३ (६४४८९)
न मेऽकरोत्तद्गाङ्गेयो न कर्णो न च ते पिता ।
यत्त्वया कृपभोजाभ्यां सहितेनाद्य मे कृतम् ॥ १०-९-५४ (६४४९०)
स च सेनापतिः क्षुद्रो हतः सार्धं शिखण्डिना ।
तेन मन्ये मघवता सममात्मानमद्य वै ॥ १०-९-५५ (६४४९१)
स्वस्ति प्राप्नुत भद्रं वः स्वर्गे नः सङ्गमः पुनः ।
इत्येवमुक्त्वा पुत्रस्ते कुरुराजो महामनाः ॥ १०-९-५६ (६४४९२)
प्राणानुपासृजद्वीरः सुहृदां दुःखमादधत् ।
अपाक्रामद्दिवं पुण्यां शरीरं क्षितिमाविशत् ॥ १०-९-५७ (६४४९३)
एवं ते निधनं यातः पुत्रो दुर्योधनो नृप ।
अग्रे यात्वा रणे शूरः पश्चाद्विनिहतः परैः ॥ १०-९-५८ (६४४९४)

तथैव ते परिष्वक्ताः परिष्वज्य च ते नृपम् ।
पुनः पुनः प्रेक्षमाणाः स्वकानारुरुहू रथान् ॥ १०-९-५९ (६४४९५)
इत्येवं द्रोणपुत्रस्य निशम्य करुणां गिरम् ।
प्रत्यूषकाले शोकार्ताः प्राद्रवन्नगरं प्रति ॥ १०-९-६० (६४४९६)
एवमेष क्षयो वृत्तः कुरुपाण्डवसेनयोः ।
घोरो विशसनो रौद्रो राजन्दुर्मन्त्रिते तव ॥ १०-९-६१ (६४४९७)
तव पुत्रे गते स्वर्गं शोकार्स्य ममानघ ।
ऋषिदत्तं प्रनष्टं तद्दिव्यदर्शित्वमद्य वै ॥ १०-९-६२ (६४४९८)
वैशम्पायन उवाच। १०-९-६३क्ष् (५२८३)
इति श्रुत्वा स नृपतिर्ज्ञातिपुत्रवधं तदा ।
निःश्वस्य दीर्घमुष्णं च ततश्चिन्तापरोऽभवत् ॥ ॥ १०-९-६३ (६४४९९)

इति श्रीमन्महाभारते सौप्तिकपर्वणि नवमोऽध्यायः ॥ ९ ॥
Mahabharata - Sauptika Parva - Chapter Footnotes

१०-९-१७ उपासत द्विजाः पूर्वमर्थहेतोर्यमीश्वरमिति झ पाठः ॥
१०-९-२३ धर्मयुद्धे ह्यधर्मेणेति झ पाठः ॥
१०-९-९ नवमोऽध्यायः ॥

---

सौप्तिक-अध्यय०१०
॥ श्रीः ॥
१०.१०. अध्यायः १०

Mahabharata - Sauptika Parva - Chapter Topics
दैवादुर्वरितेन दृष्टद्युम्नसारथिना युधिष्ठिराय रात्रौ
वृत्तशिबिरवृत्तान्तविनेदनम् ॥ १ ॥
तच्छ्रवणेन द्रौपद्यानयनाय नकुलभादिश्य शिबिरभुवमुपागतवता
युधिष्ठिरेण गृतनिजजनावलोकनेन परिदेवनम् ॥ २ ॥

Mahabharata - Sauptika Parva - Chapter Text

१०-१०-० (६४५००)
वैशम्पायन उवाच। १०-१०-०क्ष् (५२८४)
तस्यां रात्र्यां व्यतीतायां धृष्टद्युम्नस्य सारथिः ।
गत्वा शशंस पाण्डुभ्यः सौप्तिके कदनं कृतम् ॥ १०-१०-१ (६४५०१)
सूत उवाच। १०-१०-२क्ष् (५२८५)

द्रौपदेया हता राजन्द्रुपदस्वात्मजैः सह ।
प्रमत्ता निशि विश्वस्ताः स्वपन्तः शिबिरे स्वके ॥ १०-१०-२ (६४५०२)
गौतमेन नृशंसेन भोजेन कृतवर्मणा ।
अश्वत्थाम्ना च पापेन हतं वः शिबिरं निशि ॥ १०-१०-३ (६४५०३)
एतैर्नरगजाश्वानां प्रासशक्तिपरश्वयैः ।
सहस्राणि निकृन्तद्भिर्निःशेषं शिबिरं कृतम् ॥ १०-१०-४ (६४५०४)
ग्xxxxxx विहगफलभारनतस्य ह।'
xxxxxxx महतो वनस्येव परश्वथैः ।
xxxxxxxx सुमहाञ्शब्दो बलस्य तव भारत ॥ १०-१०-५ (६४५०५)
महमेकोऽवशिष्टस्तु तस्मात्सैन्यामहीपते ।
मुक्तः कथञ्चिद्धर्मात्मन्व्यग्राच्च कृतवर्मणः ॥ १०-१०-६ (६४५०६)
तच्छ्रुत्वा वाक्यमशिवं कुन्तीपुत्रो युधिष्ठिरः ।
पपात मह्यां धर्मात्मा पुत्रशोकसमन्वितः ॥ १०-१०-७ (६४५०७)
पतन्तं तमतिक्रम्य परिजग्राह सात्यकिः ।
भीमसेनोऽर्जुनश्चैव माद्रीपुत्रौ च पाण्डवौ ॥ १०-१०-८ (६४५०८)
लब्धचेतास्तु कौन्तेयः शोकविह्वलया गिरा ।
जित्वा शत्रूञ्जितः पश्चात्पर्यदेवयदार्तवत् ॥ १०-१०-९ (६४५०९)
ग्अगम्या गतिरर्थानां कर्मणामीश्वरस्य च'।
दुर्विदा गतिरर्थानामपि ये दिव्यचक्षुषः ।
जीयमाना जयन्त्यन्ये जयमाना वयं जिताः ॥ १०-१०-१० (६४५१०)
हत्वा भ्रातॄन्वयस्यांश्च पितॄन्पुत्रान्सुहृद्गणान् ।
बन्धूनमात्यान्पौत्रांश्च जित्वा सर्वाञ्जिता वयम् ॥ १०-१०-११ (६४५११)
अनर्थो ह्यर्थसङ्काशस्तथाऽनर्थोऽर्थदर्शनः ।
जयोऽयमजयाकारो जयस्तस्मात्पराजयः ॥ १०-१०-१२ (६४५१२)
यज्जित्वा तप्यते पश्चादापन्न इव दुर्मतिः ।
कथं मन्येत विजयं ततो जिततरः परैः ॥ १०-१०-१३ (६४५१३)
येषामर्थाय पापं स्याद्विजयस्य सुहृद्वधैः ।
निर्जितैरप्रमत्तैर्हि विजिता जितकाशिनः ॥ १०-१०-१४ (६४५१४)
कर्णिनालीकदंष्ट्रस्य स्वङ्गजिह्वस्य संयुगे ।
चापव्यात्तास्यरौद्रस्य ज्यातलस्वननादिनः ॥ १०-१०-१५ (६४५१५)
क्रुद्धस्य नरसिंहस्य सङ्ग्रामेष्वपलायिनः ।
ये व्यमुञ्चन्त कर्णस्य प्रमादात्त इमे हताः ॥ १०-१०-१६ (६४५१६)
रथह्रदं शरवर्षोर्मिमन्तं
रत्नाचितं वाहनयोधबृन्दम् ।
शक्त्यृष्टिमीनध्वजनागनक्रं
शरासनावर्तमहेषुफेनम् ॥ १०-१०-१७ (६४५१७)

सङ्ग्रामचन्द्रोदयवेगवेलं
द्रोणार्णवं ज्यातलनेमिघोषम् ।
ये तेरुरुच्चावचशस्त्रनौभि--
स्ते राजपुत्रा निहताः प्रमादात् ॥ १०-१०-१८ (६४५१८)
न हि प्रमादात्परमस्ति कश्च--
द्वधो नराणामिह जीवलोके ।
प्रमत्तमर्था हि नरं समन्ता--
त्त्यजन्त्यनर्थाश्च समाविशन्ति ॥ १०-१०-१९ (६४५१९)
ध्वजोत्तमाग्रोच्छ्रितधूमकेतुं
शरार्चिषं दीप्तमहापताकम् ।
महाधनुर्ज्यातलनेमिघोषं
तनुत्रनानाविधशस्त्रहोमम् ॥ १०-१०-२० (६४५२०)
महाचमूकक्षदवाभिपन्नं
महाहवे भीष्ममहादवाग्निम् ।
ये तेरुरुच्चावचशस्त्रवेगै--
स्ते राजपुत्रा निहताः प्रमादात् ॥ १०-१०-२१ (६४५२१)
न हि प्रमत्तेन नरेण शक्य--
माप्तुं वसु श्रीर्विपुलं यशो वा ।
पश्याप्रमादेन निहत्य शत्रू--
न्सर्वान्महेन्द्रं सुखमेधमानम् ॥ १०-१०-२२ (६४५२२)
इन्द्रोपमान्पार्थिवपुत्रपौत्रा--
न्पश्याविशेषेण हतान्प्रमादात् ।
तीर्त्वा समुद्रं जणिजः समृद्धा ।
मग्नाः कुनद्यामिव सीदमानाः ॥ १०-१०-२३ (६४५२३)
अमर्षितैर्ये निहता नरेन्द्रा
निःसंशयं ते त्रिदिवं प्रपन्नाः ।
कृष्णां तु शोचामि कथं नु साध्वी
शोकार्णवं सा विषहिष्यतीति ॥ १०-१०-२४ (६४५२४)
भ्रातृंश्च पुत्रांश्च हतान्निशम्य
पाञ्चालसराजं पितरं च वृद्धम् ।
ध्रुवं विसञ्ज्ञा पतिता पृथिव्यां
सा शोष्यते शोककृशाङ्गयष्टिः ॥ १०-१०-२५ (६४५२५)
तच्छोकजं दुःखमपारयन्ती
कथं भविष्यत्युचिता सुखानाम् ।
रोरूयते ज्ञातिवधाभितप्ता
प्रदह्यमानेव हुताशनेन ॥ १०-१०-२६ (६४५२६)

इत्येवमार्तः परिदेवयन्स
राजाज कुरूणां नकुलं बभाषे ।
गच्छान्यैनामिह मन्दभाग्यां
समातृपक्षामिति राजपुत्रीम् ॥ १०-१०-२७ (६४५२७)
माद्रीसुतस्तत्परिगृह्य वाक्यं
धर्मेण धर्मप्रथमस्य राज्ञः ।
ययौ रथेनालयमाशुदेव्याः
पाञ्चालराजस्य च यत्र दाराः ॥ १०-१०-२८ (६४५२८)
प्रस्थाप्य माद्रीसुतमाजमीढः
शोकार्दितस्तैः सहितः सुहृद्भिः ।
रोरूयमाणः प्रययौ सुताना--
मायोधनं भूतगणानुकीर्णम् ॥ १०-१०-२९ (६४५२९)
स तत्प्रविश्याशिवमुग्ररूपं
ददर्श पुत्रान्सुहृदः सखींश्च ।
भूमौ शयानान्रुधिरार्द्रगात्रा--
न्विभिन्नदेहान्प्रहृतोत्तमाङ्गान् ॥ १०-१०-३० (६४५३०)
स तांस्तु दृष्ट्वा भृशमार्तरूपो
युधिष्ठिरो धर्मभृतां वरिष्ठः ।
उच्चैः प्रचुक्रोश च कौरवाग्र्यः
पपात चोर्व्यां सगणो विसंज्ञः ॥ ॥ १०-१०-३१ (६४५३१)

इति श्रीमन्महाभारते सौप्तिकपर्वणि ऐषीकपर्वणि दशमोऽध्यायः ॥१० ॥
Mahabharata - Sauptika Parva - Chapter Footnotes

१०-१०-८ xxxxxxxx त्यक्त्वा पतन्तम् ॥
१०-१०-१० अन्ये शत्रवः । जयमानाः जयन्तः। जितानां जयो जयतां पराजयः फलतोऽभूदिति महदाश्चर्यमित्यर्थः ॥
१०-१०-१३ पश्चात्स पाप इव दुर्मतिरिति क पाठः ॥
१०-१०-१६ व्यमुञ्चन्त मुक्ताः । कर्णस्य कर्णात्। प्रमादादस्मत्कृतादसान्निध्यात् ॥
१०-१०-१७ वाहनवाजियुक्तमिति झ पाठः ॥
१०-१०-२० तनुत्राणि नानाषिधानि शस्कराणि च तेषां होमः प्रक्षेपो यत्र तं तनुत्रनानाविधशस्त्रहोमम् ॥
१०-१०-२१ भीष्ममयं भीष्मप्रधानं अग्निदाहम् । भीष्मरूपेण अग्निना दाहमित्यर्थः ॥
१०-१०-२४ निहताः शयाना इति झ पाठः ॥

१०-१०-१० दशमोऽध्यायः ॥

---

सौप्तिक-अध्यय०११
॥ श्रीः ॥
१०.११. अध्यायः ११

Mahabharata - Sauptika Parva - Chapter Topics
मकुलेन युधिष्ठिरसमोषं प्रति द्रौपथानयनम् ॥ १ ॥
द्रौपद्या द्रौणिमस्तकमणिहरणचोदितेन भीमेन नकुलसारथिना
रथेन द्रौणिवध्राय प्रस्थानम् ॥ २ ॥

Mahabharata - Sauptika Parva - Chapter Text

१०-११-० (६४५३२)
वैशम्पायन उवाच। १०-११-०क्ष् (५२८६)
स दृष्ट्वा निहतान्सङ्ख्ये पुत्रान्पात्रौन्सखींस्तथा ।
महादुःखपरीतात्मा बभूव जनमेजय ॥ १०-११-१ (६४५३३)
ततस्तस्य महाञ्शोकः प्रादुरासीन्महात्मनः ।
स्मरतः पुत्रपौत्रांस्तान्भ्रातॄन्सुहृद एव च ॥ १०-११-२ (६४५३४)
तमश्रुपरिपूर्णाक्षं वेपमानमचेतसम् ।
सुहृदो भृशसंविग्नाः सांत्वयाञ्चक्रिरे तदा ॥ १०-११-३ (६४५३५)
ग्कृत्वा तु विधिवत्तेषां पुत्राणाममितौजसाम् ।
प्रेतकार्याणि सर्वेषां बभूव भृशदुःखितः'॥ १०-११-४ (६४५३६)
तस्मिन्मुहूर्ते जवनैर्वाजिभिर्हेममालिभिः ।
नकुलः कृष्णया सार्धमुपायात्परमार्तया ॥ १०-११-५ (६४५३७)
उपप्लाव्यं गता सा तु श्रुत्वा सुमहदप्रियम् ।
तदा विनाशं सर्वेषां पुत्राणां व्यथितेन्द्रिया ॥ १०-११-६ (६४५३८)
कम्पमानेव कदली वातेनाभिसमीरिता ।
कृष्णा राजानमासाद्य शोकार्ता न्यपतद्भुवि ॥ १०-११-७ (६४५३९)
न बभौ वदनं तस्या रुदन्त्याः शोककर्शितम् ।
फुल्लपद्मपलाशाक्ष्या मेघावृत इवोडुराट् ॥ १०-११-८ (६४५४०)
ततस्तां पतितां दृष्ट्वा संरम्भी सत्यविक्रमः ।
वाहुभ्यां परिजग्राह समुत्पत्य वृकोदरः ॥ १०-११-९ (६४५४१)
सा समाश्वासिता तेन भीमसेनेन भामिनी ।
रुदती पाण्डवज्येष्ठमिदं वचनमब्रवीत् ॥ १०-११-१० (६४५४२)
दिष्ट्या राजन्नवाप्येमामखिलां भोक्ष्यसे महीम् ।

आत्मजान्क्षत्रधर्मेण सम्प्रदाय यमाय वै ॥ १०-११-११ (६४५४३)
दिष्ट्या सर्वास्त्रकुशलं मत्तमातङ्गगामिनम् ।
अवाप्य पृथिवीं कृत्स्नां सौभद्रं न स्मरिष्यसि ॥ १०-११-१२ (६४५४४)
आत्मजान्क्षत्रधर्मेण श्रुत्वा शूरान्निपातितान् ।
स्थितो राज्ये मया सार्धं विहरन्न स्मरिष्यसि ॥ १०-११-१३ (६४५४५)
प्रसुप्तानां वधं श्रुत्वा द्रौणिना पापकर्मणा ।
शोको मां दहते गाढो हुताशन इवाश्रयम् ॥ १०-११-१४ (६४५४६)
तस्य पापकृतो द्रौणेर्न चेदद्य दुरात्मनः ।
ह्रियते सानुबन्धस्य युधि विक्रम्य जीवितम् ॥ १०-११-१५ (६४५४७)
इहैव प्रायमासिष्ये तन्निबोधत पाण्डवाः ।
न चेत्फलमवाप्नोति द्रौणिः पापस्य कर्मणः ॥ १०-११-१६ (६४५४८)
एवमक्त्वा ततः कृष्णा पाण्डवं प्रत्युपाविशत् ।
युधिष्ठिरं याज्ञसेनी धर्मराजं यशस्विनी ॥ १०-११-१७ (६४५४९)
दृष्ट्वोपविष्टां राजा तु पाण्डवो महिषीं प्रियाम् ।
प्रत्युवाच स धर्मात्मा द्रौपदीं चारुदर्शनाम् ॥ १०-११-१८ (६४५५०)
क्षत्रधर्मेण धर्मज्ञे प्राप्तास्ते निधनं शुभे ।
पुत्रास्ते भ्रातरश्चैव तान्न शोचितुमर्हसि ॥ १०-११-१९ (६४५५१)
स कल्याणि वनं दुर्गं दूरं द्रौणिरितो गतः ।
तस्य त्वं पातनं सङ्ख्ये कथं ज्ञास्यसि शोभने ॥ १०-११-२० (६४५५२)
द्रौपद्युवाच। १०-११-२१क्ष् (५२८७)
द्रोणपुत्रस्य सहजो मणिः शिरसि मे श्रुतः ।
निहत्य सङ्ख्ये तं पापं पश्येयं मणिमाहृतम् ।
द्रौणेः शिरस उत्कृत्य जीवेयमिति मे मतिः ॥ १०-११-२१ (६४५५३)
इत्युक्त्वा पाण्डवं कृष्णा राजानं चारुदर्शना ।
भीमसेनकरे स्पृष्ट्वा कुपिता वाक्यमब्रवीत् ॥ १०-११-२२ (६४५५४)
त्रातुमर्हसि मां भीम क्षत्रधर्ममनुस्मरन् ।
जहि तं पापकर्माणं शम्बरं मघवानिव ॥ १०-११-२३ (६४५५५)
न हि ते विक्रमे तुल्यः पुमानस्तीह कश्चन ।
श्रुतं तत्सर्वलोकेषु परमव्यसने तथा ॥ १०-११-२४ (६४५५६)
द्वीपोऽभूस्त्वं हि पार्थानां नगरे वारणावते ।
हिडिम्बदर्शने चैव तथा त्वमभवो गतिः ॥ १०-११-२५ (६४५५७)
तथा विराटनगरे कीचकेन भृशार्दिताम् ।
मामप्युद्धृतवान्कृच्छ्रात्पौलोमीं मघवानिव ॥ १०-११-२६ (६४५५८)
यथैतान्यकृथाः पार्थ महाकर्माणि वै पुरा ।
तथा द्रौणिममित्रघ्न विनिहत्य सुखी भव ॥ १०-११-२७ (६४५५९)
वैशम्पायन उवाच। १०-११-२८क्ष् (५२८८)

तस्या बहुविधं दुःखं निशम्य परिदेवितम् ।
न चामर्षत कौन्तेयो भीमसेनो महाबलः ॥ १०-११-२८ (६४५६०)
स काञ्चनविचित्राङ्गमारुरोह महारथम् ।
आदाय रुचिरं चित्रं समार्गणगुणं धनुः ॥ १०-११-२९ (६४५६१)
नकुलं सारथिं कृत्वा द्रोणपुत्रवधे धृतः ।
विस्फार्य सशरं चापं तूर्णमश्वानचोदयत् ॥ १०-११-३० (६४५६२)
ते हयाः पुरुषव्याघ्र दीप्यमानाः स्वतेजसा ।
वहन्तः सहसा जग्मुर्हरयः शीघ्रगामिनः ॥ १०-११-३१ (६४५६३)
शिबिरात्स्वाद्गृहीत्वा स रथस्य पदमच्युतः ।
ग्द्रोणपुत्रगतेनाशु ययौ मार्गेण भारत'॥ ॥ १०-११-३२ (६४५६४)

इति श्रीमन्महाभारते सौप्तिकपर्वणि ऐषीकपर्वणि एकादशोऽध्यायः ॥ ११ ॥
Mahabharata - Sauptika Parva - Chapter Footnotes

१०-११-११ दिष्ट्येति । पुत्रनाशापेक्षया राज्यप्राप्तिसुखं तव
महदित्यधिक्षेपः ॥
१०-११-११ एकादशोऽध्यायः ॥

---

सौप्तिक-अध्यय०१२
॥ श्रीः ॥
१०.१२. अध्यायः १२

Mahabharata - Sauptika Parva - Chapter Topics
द्रौणिजिघांसया भीमे प्रतिगते कृष्णेन युधिष्ठिरम्प्रति
द्रौणिदौश्शील्यादिकथनपूर्वकं भीमस्य ततो रक्षणीयत्वकथनम्
॥ १ ॥

Mahabharata - Sauptika Parva - Chapter Text

१०-१२-० (६४५६५)
वैशम्पायन उवाच। १०-१२-०क्ष् (५२८९)
तस्मिन्प्रयाते दुर्धर्षे यदूनामृषभस्ततः ।
अब्रवीत्पुण्डरीकाक्षः कुन्तीपुत्रं युधिष्ठिरम् ॥ १०-१२-१ (६४५६६)
एष पाण्डवे ते भ्राता पुत्रशोकपरायणः ।
जिघांसुर्द्रौणिमाक्रन्दे एक एवाभिधावति ॥ १०-१२-२ (६४५६७)
भीमः प्रियस्ते सर्वेभ्यो भ्रातृभ्यो भरतर्षभ ।

तं कृच्छ्रगतमद्य त्वं कस्मान्नाभ्युपपद्यसे ॥ १०-१२-३ (६४५६८)
यत्तदाचष्ट पुत्राय द्रोणः परपुरञ्जयः ।
अस्त्रं ब्रह्मशिरो नाम दहेत पृथिवीमपि ॥ १०-१२-४ (६४५६९)
तन्महात्मा महाभागः केतुः सर्वधनुष्मताम् ।
प्रत्यपादयदाचार्यः प्रीयमाणो धनञ्जयम् ॥ १०-१२-५ (६४५७०)
तं पुत्रोऽप्येक एवैनमन्वयाचदमर्षणः ।
ततः प्रोवाच पुत्राय नातिहृष्टमना इव ॥ १०-१२-६ (६४५७१)
विदितं चापलं ह्यासीदात्मजस्य दुरात्मनः ।
सर्वधर्मविदाचार्यः सोऽन्वशासत्सुतं ततः ॥ १०-१२-७ (६४५७२)
परमापद्गतेनापि न स्म तात त्वया रणे ।
इदमस्त्रं प्रयोक्तव्यं मानुषेषु विशेषतः ॥ १०-१२-८ (६४५७३)
इत्युक्त्वान्गुरुः पुत्रं द्रोणः पश्चाथोक्तवान् ।
न त्वं जातु सतां मार्गे स्थातेति पुरुषर्षभ ॥ १०-१२-९ (६४५७४)
स तदाज्ञाय दुष्टात्मा पितुर्वचनमप्रियम् ।
निराशः सर्वकल्याणैः शोकात्पर्यचरन्महीम् ॥ १०-१२-१० (६४५७५)
ततस्तदा कुरुश्रेष्ठ वनस्थे त्वयि भारत ।
अवसद्द्वारकामेत्य वृष्णिभिः परमार्चितः ॥ १०-१२-११ (६४५७६)
स कदाचित्समुद्रान्ते वसन्द्वारवतीमनु ।
एक एकं समागम्य मामुवाच हसन्निव ॥ १०-१२-१२ (६४५७७)
यत्तदुग्रं तपः कृष्ण चरन्नमितविक्रमः ।
अगस्त्याद्भारताचार्यः प्रत्यपद्यत मे पिता ॥ १०-१२-१३ (६४५७८)
अस्त्रं ब्रह्मशिरो नाम देवगन्धर्वपूजितम् ।
तदद्य मयि दाशार्ह यथा पितरि मे तथा ॥ १०-१२-१४ (६४५७९)
अस्मत्तस्तदुपादाय दिव्यमस्त्रं यदूत्तम ।
ममाप्यस्त्रं प्रयच्छ त्वं चक्रं रिपुहणं रणे ॥ १०-१२-१५ (६४५८०)
स राजन्प्रीयमाणेन मयाप्युक्तः कृताञ्जलिः ।
याचमानः प्रयत्नेन मत्तोऽस्त्रं भरतर्षभ ॥ १०-१२-१६ (६४५८१)
देवदानवगन्धर्वमनुष्यपतगोरगाः ।
न समा मम वीर्यस्य शतांशेनापि पिण्डिताः ॥ १०-१२-१७ (६४५८२)
इदं धनुरियं शक्तिरिदं चक्रमियं गदा ।
यद्यदिच्छसि चेदस्त्रं मत्तस्तत्तद्ददामि ते ॥ १०-१२-१८ (६४५८३)
यच्छक्नोषि समुद्यन्तुं प्रयोक्तुमपि वा रणे ।
तद्गृहाण विनाऽस्त्रेण यन्मे दातुमभीप्ससि ॥ १०-१२-१९ (६४५८४)
स सुनाभं सहस्रारं वज्रनाभमयस्मयम् ।
वव्रे चक्रं महाभागो मत्तः स्पर्धन्मया सह ॥ १०-१२-२० (६४५८५)
गृहाण चक्रमित्युक्तो मया तु तदनन्तरम् ।

जग्राहोत्पत्य सहसा चक्रं सव्येन पाणिना ॥ १०-१२-२१ (६४५८६)
न चैनमशकत्स्थानात्सञ्चालयितुमप्युत ।
अथैनं दक्षिणेनापि ग्रहीतुमुपचक्रमे ॥ १०-१२-२२ (६४५८७)
सर्वयत्नेन तेनापि गृह्य नैनमकम्पयत् ॥ १०-१२-२३ (६४५८८)
ततः सर्वबलेनापि यदैनं न शशाक ह ।
उद्यन्तुं वा चालयितुं द्रौणिः परमदुर्मनाः ।
कृत्वा यत्नं परिश्रान्तः स न्यवर्तत भारत ॥ १०-१२-२४ (६४५८९)
निवृत्मनसं तस्मादभिप्रायाद्विचेतसम् ।
अहमामन्त्र्य संविग्नमश्वत्थामानमब्रुवम् ॥ १०-१२-२५ (६४५९०)
यः स दैवमनुष्येषु प्रमाणं परमं गतः ।
गाण्डीवधन्वा श्वेताश्वः कपिप्रवरकेतनः ॥ १०-१२-२६ (६४५९१)
यः साक्षाद्देवदेवेशं शितिकण्ठमुमापतिम् ।
द्वन्द्वयुद्धे पुरा जिष्णुस्तोषयामास शङ्करम् ॥ १०-१२-२७ (६४५९२)
यस्मात्प्रियतरो नास्ति ममान्यः पुरुषो भुवि ।
नादेयं यस्य मे किञ्चिदपि प्राणान्महात्मनः ॥ १०-१२-२८ (६४५९३)
तेनापि सुहृदा ब्रह्मन्पार्थेनाक्लिष्टकर्मणा ।
नोक्पूर्वमिदं वाक्यं यस्त्वं मामभिभाषसे ॥ १०-१२-२९ (६४५९४)
ब्रह्मचर्यं महद्घोरं तीर्वा द्वादशवार्षिकम् ।
हिमवत्पार्श्वमास्थाय यो मया तपसाऽऽर्जितः ॥ १०-१२-३० (६४५९५)
समानव्रतचारिण्यां रुक्मिण्यां योऽन्वजायत ।
सनत्कुमारस्तेजस्वी प्रद्युम्नो नाम मे सुतः ॥ १०-१२-३१ (६४५९६)
तेनाप्येतन्महद्दिव्यं चक्रमप्रतिमं रणे ।
न प्रार्थितमभून्मूढ तदितं प्रार्थितं त्वया ॥ १०-१२-३२ (६४५९७)
रामेणातिबलेनैतन्नोक्तपूर्वं कदाचन ।
न गदेन साम्बेन यदिदं प्रार्थितं त्वया ॥ १०-१२-३३ (६४५९८)
द्वारकावासिभिश्चान्यैर्वृष्ण्यन्धकमहारथैः ।
नोक्तपूर्वमिदं क्षुद्रं तदिदं प्रार्थितं त्वया ॥ १०-१२-३४ (६४५९९)
भारताचार्यपुत्रस्त्वं मानितः सर्वयादवैः ।
चक्रेण रथिनां श्रेष्ठ कं नु तात युयुत्ससे ॥ १०-१२-३५ (६४६००)
एवमुक्तो मया द्रौणिर्मामिदं प्रत्युवाच ह ।
प्रयुज्य भवते पूजां योत्स्ये कृष्ण त्वया सह ॥ १०-१२-३६ (६४६०१)
प्रार्थितं ते मया चक्रं देवदानवपूजितम् ।
अजेयः स्यामिति विभो सत्यमेद्ब्रवीमि ते ॥ १०-१२-३७ (६४६०२)
सोऽहं तद्दुर्लभं चक्रमनवाप्यैव केशव ।
प्रतियास्यामि गोविन्द शिवेनाभिवदस्व माम् ॥ १०-१२-३८ (६४६०३)
एतत्सुनाभं भोजानामृषभेण त्वया धृतम् ।

चक्रमप्रतिचक्रेण भुवि नान्योऽभिपद्यते ॥ १०-१२-३९ (६४६०४)
एतावदुक्त्वा द्रौणिर्मां युग्यानश्वान्धनानि च ।
आदायोपययौ काले रत्नानि वविधानि च ॥ १०-१२-४० (६४६०५)
स संरम्भी दुरात्मा च चपलः क्रूर एव च ।
वेद चास्त्रं ब्रह्मशिरस्तस्माद्रक्ष्यो वृकोदरः ॥ ॥ १०-१२-४१ (६४६०६)

इति श्रीमन्महाभारते सौप्तिकपर्वणि ऐषीकपर्वणि द्वाशोऽध्यायः ॥ १२ ॥
Mahabharata - Sauptika Parva - Chapter Footnotes

१०-१२-११ मे मह्यं दातुमिच्छसि तेन विनापि गृहाण । त्वदीयेऽस्त्रे ममेच्छा नास्तीति भावः ॥
१०-१२-१२ द्वादशोऽध्यायः ॥

---

सौप्तिक-अध्यय०१३
॥ श्रीः ॥
१०.१३. अध्यायः १३

Mahabharata - Sauptika Parva - Chapter Topics
कृष्णादिभिर्भागीरथीतीरे व्याससमीपसमासीनद्रौणिदर्शनम् ॥ १ ॥
तद्दर्शिना द्रौणिना अपाण्डवहेतोर्ब्रह्मशिरोस्त्रप्रयोगः ॥ २ ॥

Mahabharata - Sauptika Parva - Chapter Text

१०-१३-० (६४६०७)
वैशम्पायन उवाच । १०-१३-०क्ष् (५२९०)
एवमुक्त्वा कुरुश्रेष्ठं सर्वयादवनन्दनः ।
सर्वायुधवरोपेतमारुरोह रथोत्तमम् ॥ १०-१३-१ (६४६०८)
युक्तं परमकाम्भोजैस्तुरगैर्हेममालिभिः ।
उदितादित्यसङ्काशं सर्वरत्नविभूषितम् ॥ १०-१३-२ (६४६०९)
दक्षिणे ह्यावहच्छैब्यः सुग्रीवः सव्यतो धुरम् ।
णर्ष्णिवाहौ तु तस्यास्तां मेघपुष्पबलाहकौ ॥ १०-१३-३ (६४६१०)
विश्वकर्मकृता दिव्या रत्नधातुविभूषिता ।
उच्छ्रिता च रथे तस्मिन्ध्वजयष्टिरदृश्यत ॥ १०-१३-४ (६४६११)
वैनतेयः स्थितस्तस्यां प्रभामण्डलरश्मिवान् ॥
तस्य सत्यवतः केतुर्भुजगारिरदृश्यत ॥ १०-१३-५ (६४६१२)
अथारोहद्धृषीकेशः केतुः सर्वधनुष्मताम् ।

अर्जुनः स च धर्मात्मा कुरुराजो युधिष्ठिरः ॥१०-१३-६ (६४६१३)
अशोभेतां महात्मानौ दाशार्हमभितः स्थितौ ।
रथस्थं शार्ङ्गधन्वानमश्विनाविव वासवम् ॥१०-१३-७ (६४६१४)
उभावारोप्य दाशार्हः स्यन्दनं लोकपूजितम् ।
प्रतोदेन जवोपेतान्परमाश्वानचोदयत् ॥१०-१३-८ (६४६१५)
ते हयाः सहसोत्पेतुर्गृहीत्वा स्यन्दनोत्तमम् ।
आस्थितं पाण्डवेयाभ्यां यदूनामृषभेण च ॥१०-१३-९ (६४६१६)
वहतां शार्ङ्गधन्वानमश्वानां शीघ्रगामिनाम् ।
प्रादुरासीन्महाञ्शब्दः पक्षिणां पततामिव ॥१०-१३-१० (६४६१७)
ते समर्था महाबाहुं क्षणेन भरतर्षभ ।
भीमसेनं महेष्वासमनुसस्रुः सुवेगिताः ॥१०-१३-११ (६४६१८)
क्रोधदीप्तं तु कौन्तेयं द्विषदर्थे समुद्यतम् ।
नाशक्नुवन्वारयितुं समेत्यापि महारथाः ॥१०-१३-१२ (६४६१९)
स तेषामग्रतः शूरः श्रीमतां दृढधन्विनाम् ।
ययौ भागीरथीतीरं हरिभिर्भृशवेगितैः ।
यत्र स श्रूयते द्रौणिः पुत्रहन्ता दुरात्मवान् ॥ १०-१३-१३ (६४६२०)
स ददर्श महात्मानमुदकान्ते यशस्विनम् ।
कृष्णद्वैपायनं व्यासमासीनमृषिभिः सह ॥१०-१३-१४ (६४६२१)
तं चैव क्रूरकर्माणं घृताक्तं कुशचीरिणम् ।
रजसा ध्वस्तमासीनं ददर्श द्रौणिमन्तिके ॥१०-१३-१५ (६४६२२)
तमभ्यधावत्कौन्तेयः प्रगृह्य सशरं धनुः ।
भीमसेनो महाबाहुस्तिष्ठतिष्ठेति चाब्रवीत् ॥१०-१३-१६ (६४६२३)
तं दृष्ट्वा भीमकर्माणं प्रगृहीतशरासनम् ।
भ्रातरौ पृष्ठतश्चास्य जनार्दनरथे स्थितौ ।
व्यथितात्माऽभवद्द्रौणिः प्राप्तं चेदममन्यत ॥ १०-१३-१७ (६४६२४)
स तद्दिव्यमदीनात्मा परमास्त्रमचिन्तयत् ।
जग्राह च शरैषीकां द्रौणिः सव्येन पाणिना ॥१०-१३-१८ (६४६२५)
स तामापदमासाद्य दिव्यमस्त्रमुदैरयत् ।
अमृष्यमाणस्ताञ्छूरान्दिव्यायुधधरान्स्थितान् ।
अपाण्डवायेति रुषा वाचमुत्सृज्य दारुणम् ॥ १०-१३-१९ (६४६२६)
इत्युक्त्वा राजशार्दूल द्रोणपुत्रः प्रतापवान् ।
सर्वलोकप्रमोहार्थं तदस्त्रं प्रमुमोच ह ॥१०-१३-२० (६४६२७)
ततस्तस्यामिषीकायां पावकः समजायत ।
प्रधक्ष्यन्निव लोकांस्त्रीन्कालान्कयमोपमः ॥ ॥१०-१३-२१ (६४६२८)

इति श्रीमन्महाभारते सौप्तिकपर्वणि ऐषीकपर्वणि त्रयोधशोऽध्यायः

॥ १३ ॥
Mahabharata - Sauptika Parva - Chapter Footnotes

१०-१३-१९ अपाण्डवाय पाण्डवानामभावाय ॥
१०-१३-१३ त्रयोदशोऽध्यायः ॥

---

सौप्तिक-अध्यय०१४
॥ श्रीः ॥
१०.१४. अध्यायः १४

Mahabharata - Sauptika Parva - Chapter Topics
अर्जुनेन कृष्णाज्ञया द्रौण्यस्त्रप्रत्यस्त्रप्रयोगः ॥ १ ॥

Mahabharata - Sauptika Parva - Chapter Text

१०-१४-० (६४६२९)
वैशम्पायन उवाच। १०-१४-०क्ष् (५२९१)
इङ्गितेनैव दाशार्हस्तस्याभिप्रायमादितः ।
द्रौणेर्बुद्ध्वा महाबाहुरर्जुनं प्रत्यभाषत ॥ १०-१४-१ (६४६३०)
अर्जुनार्जुन यद्दिव्यमस्त्रं ते हृदि वर्तते ।
द्रोणोपदिष्टं तस्यायं कालः सम्प्रति पाण्डव ॥ १०-१४-२ (६४६३१)
भ्रातॄणामात्मनश्चैव परित्राणाय भारत ।
विसृजैतत्त्वमप्याजावस्त्रमस्त्रनिवारणम् ॥ १०-१४-३ (६४६३२)
केशवेनैवमुक्तोऽथ पाण्डवः परवीरहा ।
अवातरद्रथात्तूर्णं प्रगृह्य सशरं धनुः ॥ १०-१४-४ (६४६३३)
पूर्वमाचार्यपुत्राय ततोऽनन्तरमात्मने ।
भ्रातृभ्यश्चैव सर्वेभ्यः स्वस्तीत्युक्त्वा परन्तपः ॥ १०-१४-५ (६४६३४)
देवताभ्यो नमस्कृत्य गुरुभ्यश्चैव सर्वशः ।
उत्ससर्ज शिवं ध्यायन्नस्त्रमस्त्रेण शाम्यताम् ॥ १०-१४-६ (६४६३५)
ततस्तदस्त्रं सहसा सृष्टं गाण्डीवधन्वना ।
प्रजज्वाल महार्चिष्मद्युगान्तानलसन्निभम् ॥ १०-१४-७ (६४६३६)
तथैव द्रोणपुत्रस्य तदस्त्रं तिग्मतेजसः ।
प्रजज्वाल महाज्वालं तेजोमण्डलसंवृतम् ॥ १०-१४-८ (६४६३७)
निर्घाता बहवश्चासन्पेतुरुल्काः सहस्रशः ।
महद्भयं च भूतानां सर्वेषां समजायत ॥ १०-१४-९ (६४६३८)
सशब्दमभवद्व्योम ज्वालामालाकुलं भृशम् ।

चचाल च मही कृत्स्ना सपर्वतवनद्रुमा ॥ १०-१४-१० (६४६३९)
तावस्त्रतेजसा लोकांस्त्रासयन्तौ ततः स्थितौ ।
महर्षी सहितौ तत्र दर्शयामासतुस्तदा ॥ १०-१४-११ (६४६४०)
नारदः सर्वधर्मात्मा भरतानां पितामहः ।
उभौ शमयितुं वीरौ भारद्वाजधनञ्जयौ ॥ १०-१४-१२ (६४६४१)
तौ मुनी सर्वधर्मज्ञौ सर्वभूतहितैपिणौ ।
दीप्तयोरस्त्रयोर्मध्ये स्थितौ परमतेजसौ ॥ १०-१४-१३ (६४६४२)
तदन्तरमनाधृष्यावुपगम्य यशस्विनौ ।
आस्तामृषिवरौ तत्र ज्वलिताविव पावकौ ॥ १०-१४-१४ (६४६४३)
प्राणभृद्भिरनाधृष्यौ देवदानवसम्मतौ ।
अस्त्रतेजः शमयितुं लोकानां हितकाम्यया ॥ १०-१४-१५ (६४६४४)
ऋषी ऊचतुः। १०-१४-१६क्ष् (५२९२)
महास्त्रविदुषः पूर्वे येऽप्यतीता महारथाः ।
नैतदस्त्रं मनुष्येषु तैः प्रयुक्तं कथञ्चन ।
किमिदं साहसं वीरौ कृतवन्तौ महात्ययम् ॥ ॥ १०-१४-१६ (६४६४५)

इति श्रीमन्महाभारते सौप्तिकपर्वणि ऐषीकपर्वमि चतुर्दशोऽध्यायः
॥ १४ ॥

---

सौप्तिक-अध्यय०१५
॥ श्रीः ॥
१०.१५. अध्यायः १५

Mahabharata - Sauptika Parva - Chapter Topics
अर्जुनेन व्यासनारदभावानुरोधेन स्वप्रयुक्तब्रह्मशिरोस्त्रप्रतिसंहारः
॥ १ ॥
कृष्णेनाश्वत्थामानं प्रति उत्तरागर्भे ऐषीकास्त्रपातेऽपि
मृतशिशोः स्वेन समुज्जीवनप्रतिज्ञा ॥ २ ॥
ब्रह्मचर्याभावादस्त्रप्रतिसंहारासमर्थेन द्रौणिना
व्यासकृष्णावनादृस्य पाण्वगर्भेष्वैषीकास्त्रोत्सर्जनम् ॥ ३ ॥

Mahabharata - Sauptika Parva - Chapter Text

१०-१५-० (६४६४६)
वैशम्पायन उवाच। १०-१५-०क्ष् (५२९३)
दृष्टैव मुनिशार्दूलौ तावग्निसमतेजसौ ।

ग्गाण्डीवधन्वा सञ्चिन्त्य प्राप्तकालं महारथः।
सञ्जहार शरं दिव्यं त्वरमाणो धनञ्जयः ॥ १०-१५-१ (६४६४७)
उवाच वचनं श्रेष्ठस्तावृषी प्राञ्जलिस्तदा ।
प्रमुक्तमस्त्रमस्त्रेण शाम्यतामिति वै मया ॥ १०-१५-२ (६४६४८)
संहृते परमास्त्रेऽस्मिन्सर्वानस्मानशेषतः ।
पापकर्मा ध्रुवं द्रौणिः प्रधक्ष्यत्यस्त्रतेजसा ॥ १०-१५-३ (६४६४९)
यदत्र हितमस्माकं लोकानां चैव सर्वथा ।
भवन्तौ देवसङ्काशौ तथा सम्मन्तुमर्हतः ॥ १०-१५-४ (६४६५०)
इत्युक्त्वा सञ्जहारास्त्रं पुनरेव धनञ्जयः ।
संहारो दुष्करस्त्स्य देवैरपि हि संयुगे ॥ १०-१५-५ (६४६५१)
विसृष्टस्य रणे तस्य परमास्त्रस्य सङ्ग्रहे ।
अशक्तः पाण्डवादन्यः साक्षादपि शतक्रतुः ॥ १०-१५-६ (६४६५२)
ब्रह्मतेजोद्भवं तद्धि विसृष्टमकृतात्मना ।
न शक्यमावर्तयितुं ब्रह्मचर्यव्रतादृते ॥ १०-१५-७ (६४६५३)
अचीर्णब्रह्मचर्यो यः सृष्ट्वाऽऽवर्यते पुनः ।
तदस्त्रं सानुबन्धस्य मूर्धानं तस्य कृन्तति ॥ १०-१५-८ (६४६५४)
ब्रह्मचारी व्रती चापि दुरवापमवाप्य तत् ।
परमव्यसनार्तोऽपि नार्जुनोऽस्त्रं व्यमुञ्चत ॥ १०-१५-९ (६४६५५)
सत्यव्रतधरः शूरो ब्रह्मचारी च पाण्डवः ।
गुरुवर्ती च तेनास्त्रं सञ्जहारार्जुनः पुनः ॥ १०-१५-१० (६४६५६)
द्रौणिरप्यथ सम्प्रेक्ष्य सोऽन्तरा तावृषी स्थितौ ।
न शशाक पुनर्घोरमस्त्रं संहर्तुमोजसा ॥ १०-१५-११ (६४६५७)
अशक्तः प्रतिसंहारे परमास्त्रस्य संयुगे ।
द्रौणिर्दीनमना राजन्द्वैपायनमभाषत ॥ १०-१५-१२ (६४६५८)
उत्तमव्यसनार्तेन प्राणत्राणमभीप्सुना ।
मयैतदस्त्रमुत्सृष्टं भीमसेनभयान्मुने ॥ १०-१५-१३ (६४६५९)
अधर्मश्च कृतोऽनेन धार्तराष्ट्रं जिघांसता ।
मिथ्याचारेण भगवन्भीमसेनेन संयुगे ॥ १०-१५-१४ (६४६६०)
अतः सृष्टमिदं ब्रह्मन्मयाऽस्त्रमकृतात्मना ।
तस्य भूयोऽपि संहारं कर्तुं नाहमिहोत्सहे ॥ १०-१५-१५ (६४६६१)
निसृष्टं हि मया दिव्यमेतदस्त्रं दुरासदम् ।
अपाण्डवायेति मुने वह्नितेजोऽनुमन्त्र्य वै ॥ १०-१५-१६ (६४६६२)
तदिदं पाण्डवेयानामन्तायैवाभिसंहितम् ।
अद्य पाण्डुसुतान्सर्वाञ्जीविताद्भ्रंशयिष्यति ॥ १०-१५-१७ (६४६६३)
कृतं पापमिदं ब्रह्मन्रोषाविष्टेन चेतसा ।
वधमाशास्य पार्थानां मयास्त्रं सृजता रणे ॥ १०-१५-१८ (६४६६४)

व्यास उवाच। १०-१५-१९ (६४६६५)
अस्त्रं ब्रह्मशिरस्तात विद्वान्पार्थो धनञ्जयः ।
उत्सृष्टवानहिंसार्थं न रोषेण तवाहवे ॥ १०-१५-१९ (६४६६६)
अस्त्रमस्त्रेण तु रमे तव संशमयिष्यता ।
विसृष्टमर्जुनेनेदं पुनश्च प्रतिसंहृतम् ॥ १०-१५-२० (६४६६७)
ब्रह्मास्त्रमप्यवाप्यैतदुपदेशात्पितुस्तव ।
क्षत्रधर्मान्महाबाहुर्नाकम्पत धनञ्जयः ॥ १०-१५-२१ (६४६६८)
एवं धृतिमतः साधोः सर्वास्त्रविदुषः सतः ।
सभ्रातृबन्धोः कस्मात्त्वं वधमस्य चिकीर्षसि ॥ १०-१५-२२ (६४६६९)
अस्त्रं ब्रह्मशिरो यत्र परमास्त्रेण वध्यते ।
समा द्वादश पर्जन्यस्तद्राष्ट्रं नाभिवर्षति ॥ १०-१५-२३ (६४६७०)
एतदर्थं महाबाहुः शक्तिमानपि पाण्डवः ।
न विहन्यात्तदस्त्रं तु प्रजाहितचिकीर्षया ॥ १०-१५-२४ (६४६७१)
पाण्डवास्त्वं च राष्ट्रं च सदा संरक्ष्यमेव नः ।
तस्मात्संहर दिव्यं त्वमस्त्रमेन्महाभुज ॥ १०-१५-२५ (६४६७२)
अरोषस्तव चैवास्तु पार्थाः सन्तु निरामयाः ।
न ह्यधर्मेण राजर्षिः पाण्डवो जेतुमिच्छति। १०-१५-२६ (६४६७३)
मणिं चैव प्रयच्छाद्य यस्ते शिरसि तिष्ठति ।
एतदादाय ते प्रामान्प्रतिदास्यन्ति पाण्डवाः ॥ १०-१५-२७ (६४६७४)
द्रौणिरुवाच। १०-१५-२८क्ष् (५२९४)
पाण्डवैर्यानि रत्नानि यच्चान्यत्कौरवैर्धनम् ।
अवाप्तमिह तेभ्योऽयं मणिर्मम विशिष्यते ॥ १०-१५-२८ (६४६७५)
यमाबध्य भयं नास्ति शस्त्रव्याधिक्षुधाश्रयम् ।
देवेभ्यो दानवेभ्यो वा नागेभ्यो वा कथञ्चन ॥ १०-१५-२९ (६४६७६)
न च रक्षोगणभयं न तस्करभयं तथा ।
एवंवीर्यो मणिरयं न मे त्याज्यः कथञ्चन ॥ १०-१५-३० (६४६७७)
यत्तु मे भगवानाह तन्मे कार्यमनन्तरम् ।
अयं मणिरयं चाहमिषीका तु पतिष्यति ।
गर्भेषु पाण्डुपुत्राणामुत्रायास्तथोदरे ॥ १०-१५-३१ (६४६७८)
वैशम्पायन उवाच। १०-१५-३२क्ष् (५२९५)
प्राह द्रोणसुतं तत्र व्यासः परमदुर्मनाः ॥ १०-१५-३२ (६४६७९)
एवं कुरु न चान्यत्र बुद्धिः कार्या कथञ्चन ।
गर्भेषु पाण्डवेयानां विसृज्यैतदुपारम ॥ १०-१५-३३ (६४६८०)
ग्तमुवाच हृषीकेशः पाण्डवानां हिते मतः ।
भविष्यमेकमुत्सृज्य गर्भेष्वस्त्रं निपात्यताम् ॥ १०-१५-३४ (६४६८१)
अहमेनं ददाम्येषां पिण्डदं कीर्तिवर्धनम् ।

राजर्षिं पुण्यकर्माणमनेकक्रतुयाजिनम् ॥ १०-१५-३५ (६४६८२)
एवं कुरु न चान्या ते बुद्धिः कार्या कथञ्चन ।
आगर्भात्पाण्डवेयानां कृत्वा पातं विनङ्क्ष्यति'॥ १०-१५-३६ (६४६८३)
एवं ब्रुवाणं गोविन्दं वृषभं सर्वसात्वताम् ।
द्रौणिः परमसङ्क्रुद्धः प्रत्युवाचेदमुत्तरम् ॥ १०-१५-३७ (६४६८४)
नैतदेवं यदात्थ त्वं पक्षपातेन केशव ।
वचनात्पुण्डरीकाक्ष तव मद्वाक्यमन्यथा ॥ १०-१५-३८ (६४६८५)
पतिष्यत्येतदस्त्रं वै गर्भे तस्या मयोद्यतम् ।
विराटदुहितुः कृष्ण यं त्वं रक्षितुमर्हसि ॥ १०-१५-३९ (६४६८६)
वासुदेव उवाच। १०-१५-४०क्ष् (५२९६)
अमोघः परमास्त्रस्य पातस्त्वद्य भविष्यति ।
ग्अभिमन्योः सृजैषीकां गर्भस्थः शाम्यतां शिशुः ॥ १०-१५-४० (६४६८७)
अहमेनं मृतं जातं जीवयिष्यामि बालकम्'।
स तु गर्भो मृतो जातो दीर्घमायुरवाप्स्यति ॥ १०-१५-४१ (६४६८८)
ग्इत्युक्तः प्रत्युवाचैनं द्रोणपुत्रः स्मयन्निव ।
यद्यस्त्रदग्धं गोविन्द जीवयस्येवमस्त्विति'॥ १०-१५-४२ (६४६८९)
ततः परममस्त्रं तु द्रौणिरुद्यतमाहवे ।
द्वैपायनमनादृत्य गर्भेषु प्रमुमोच ह ॥ ॥ १०-१५-४३ (६४६९०)

इति श्रीमन्महाभारते सौप्तिकपर्वणि ऐषीकपर्वणि
पञ्चदशोऽध्यायः ॥ १५ ॥
Mahabharata - Sauptika Parva - Chapter Footnotes

१०-१५-८ आवर्तयते उपसंहरति ॥
१०-१५-२७ एवं जीवितमादाय तव यास्यन्ति पाण्डवाः । इति क पाठः ॥
१०-१५-२९ मम वध्यमयं नास्तीति क पाठः ॥
१०-१५-१५ पञ्चदशोऽध्यायः ॥

---

सौप्तिक-अध्यय०१६
॥ श्रीः ॥
१०.१६. अध्यायः १६

Mahabharata - Sauptika Parva - Chapter Topics
कृष्णेन स्ववचनोल्लङ्घनेनास्त्रप्रयोक्तुरश्वत्थाम्नः शापदानां
व्यासेन तदनुमोदनं च ॥ १ ॥
भीमेन द्रौणिमस्तकमणिदा नेन द्रौपदीसमाश्वासनम् ॥ २ ॥

युधिष्ठिरेण द्रौपदीवचनात्स्वमस्तके तन्मणिधारणम् ॥ ३ ॥

Mahabharata - Sauptika Parva - Chapter Text

१०-१६-० (६४६९१)
वैशम्पायन उवाच। १०-१६-०क्ष् (५२९७)
तदाज्ञाय हृषीकेशो विकृष्टं पापकर्मणा ।
हृष्यमाण इदं वाक्यं द्रौणिं प्रत्यब्रवीत्तदा ॥ १०-१६-१ (६४६९२)
विराटस्य सुतां पूर्वं स्नुषां गाण्डीवधन्वनः ।
उपप्लाव्यगतां दृष्ट्वा ऋतवाग्ब्रह्मणोऽब्रवीत् ॥ १०-१६-२ (६४६९३)
परिक्षीणेषु कुरुषु पुत्रस्तव भविष्यति ।
एतदस्य परिक्षित्त्वं गर्भस्थस्य भविष्यति ॥ १०-१६-३ (६४६९४)
तस्य तद्वचनं साधोः सत्यमेव्भविष्यति ।
परिक्षिद्भविता ह्येषां पुनर्वंशकरः सुतः ॥ १०-१६-४ (६४६९५)
त्वां तु कापुरुषं पापं विंदुः सर्वे मनीषिणः ।
असकृत्पापकर्माणं बालजीवितघातकम् ॥ १०-१६-५ (६४६९६)
तस्मात्त्वमस्य पापस्य कर्मणः फलमाप्नुहि ।
त्रीणि वर्षसहस्राणि चरिष्यसि महीमिमाम् ॥ १०-१६-६ (६४६९७)
अप्राप्नुवन्क्वचित्काञ्चित्संविदं जातु केनचित् ।
निर्जनानसहायस्त्वं देशान्प्रविचरिष्यसि ॥ १०-१६-७ (६४६९८)
भवित्री न हि ते क्षुद्र जनमध्येषु संस्थितिः ।
पूयशोणितगन्धी च दुर्गकान्तारसंश्रयः। १०-१६-८ (६४६९९)
विचरिष्यसि पापात्मंश्चिरमेको वसुन्धराम् ॥
वयः प्राप्य परिक्षित्तु देवव्रतमवाप्य च। १०-१६-९ (६४७००)
कृपाच्छारद्वताच्छूरः सर्वास्त्राण्युपपत्स्यते ॥
विदित्वा परमास्त्राणि क्षत्रधर्मव्रते स्थितः। १०-१६-१० (६४७०१)
षष्टिं वर्षामि धर्मात्मा वसुधां पालयिष्यति ॥
इतश्चोर्ध्वं महाबाहुः कुरुराजो भविष्यति। १०-१६-११ (६४७०२)
परिक्षिन्नाम नृपतिर्मिषतस्ते सुदुर्मते ॥
श्अहं तं जीवयिष्यामि दग्धं शस्त्राग्नितेजसाघ। १०-१६-१२ (६४७०३)
पश्य मे तपसो वीर्यं सत्यस्य च नराधम ॥ १०-१६-१३ (६४७०४)
व्यास उवाच ।
यस्मादनादृत्य कृतं त्वयाऽस्मान्कर्म दारुणम् ।
ब्राह्मणस्य सतश्चेदं वृत्तमन्यायवर्तिनः ॥ १०-१६-१३क्ष् (५२९८)
तस्माद्यद्देवकीपुत्र उक्वानुत्तमं वचः ।
आलोकात्तव तद्भावि क्षुद्रकर्मन्व्रजेति ह ॥ १०-१६-१४ (६४७०५)

अश्वत्थामोवाच। १०-१६-१५क्ष् (५२९९)
सहैव भवता ब्रह्मन्स्थास्यामि पुरुषेष्विह ।
सत्यवागस्तु भगवानयं च पुरुषोत्तमः ॥ १०-१६-१५ (६४७०६)
वैशम्पायन उवाच। १०-१६-१६क्ष् (५३००)
प्रदायाथ मणिं द्रौणिः पाण्डवानां महात्मनाम् ।
जगाम विमनास्तेषां सर्वेषां पश्यतां वनम् ॥ १०-१६-१६ (६४७०७)
पाण्डवाश्च सदाशार्हास्तानृषीनभिवाद्य च ।
कृष्णद्वैपायनं चैव नारदं चैव पर्वतम् ॥ १०-१६-१७ (६४७०८)
द्रोणपुत्रस्य सहजं मणिमादाय सत्वराः ।
द्रौपदीमभ्यधावन्त प्रायोपेतां मनस्विनीम् ॥ १०-१६-१८ (६४७०९)
वैशम्पयन उवाच। १०-१६-१९क्ष् (५३०१)
ततस्ते पुरुषव्याघ्राः सदश्वैरनिलोपमैः ।
अभ्ययुः सहदाशार्हाः शिबिरं पुनरेव हि ॥ १०-१६-१९ (६४७१०)
अवतीर्य रथेभ्यस्तु त्वरमाणा महारथाः ।
ददृशुर्द्रौपदीं हृष्टामार्तामार्ततराः स्वयम् ॥ १०-१६-२० (६४७११)
तामुपेत्य निरानन्दां दुःखशोकसमन्विताम् ।
परिवार्य व्यतिष्ठन्त पाण्डवाः सहकेशवाः ॥ १०-१६-२१ (६४७१२)
ततो राज्ञाऽभ्यनुज्ञातो भीमसेनो महाबलः ।
प्रददौ तं मणिं दिव्यं वचनं चेदमब्रवीत् ॥ १०-१६-२२ (६४७१३)
अयं भद्रे तव मणिः पुत्रहन्ता जितश्च ते ।
उत्तिष्ठ शोकमुत्सृज्य क्षात्रधर्ममनुस्मर ॥ १०-१६-२३ (६४७१४)
प्रयाणे वासुदेवस्य शमार्थवसितेक्षणे ।
यान्युक्तानि त्वया भीरु वाक्यानि मधुघातिनि ॥ १०-१६-२४ (६४७१५)
नैव मे पतयः सन्ति न पुत्रा भ्रातरो न च ।
न वै त्वमिति गोविन्द शममिच्छति राजनि ॥ १०-१६-२५ (६४७१६)
उक्तवत्यसि तीव्राणि वाक्यानि पुरुषोत्तमम् ।
क्षत्रधर्मानुरूपाणि तानि संस्मर्तुमर्हसि ॥ १०-१६-२६ (६४७१७)
हतो दुर्योधनः पापो राज्यस्य परिपन्थिकः ।
दुःशासनस्य रुधिरं पीतं विस्फुरतो मया ॥ १०-१६-२७ (६४७१८)
वैरस्य गतमानृण्यं न स्म वाच्या विवक्षताम् ।
जित्वा मुक्तो द्रोणपुत्रो ब्राह्मण्याद्गौरवेण च ॥ १०-१६-२८ (६४७१९)
यशोऽस्य पतितं देवि शरीरं त्ववशेषितम् ।
वियोजितश्च मणिना भ्रंशितश्चायुधं भुवि ॥ १०-१६-२९ (६४७२०)
द्रौपद्युवाच। १०-१६-३०क्ष् (५३०२)
केवलानृण्यमाप्ताऽस्मि गुरुपुत्रो गुरुर्मम ।
शिरस्येतं मणिं राजा ग्रहीतुमनघोऽर्हति ॥ १०-१६-३० (६४७२१)

तं गृहीत्वा ततो राजा शिरस्येवाकरोत्तदा ।
गुरोरुच्छेषमित्येव द्रौपद्या वचनादपि ॥ १०-१६-३१ (६४७२२)
ततो दिव्यं मणिवरं शिरसा धारयन्प्रभुः ।
शुशुभे स तदा राजा सचन्द्र इव पर्वतः ॥ १०-१६-३२ (६४७२३)
उत्तस्थौ पुत्रशोकार्ता ततः कृष्णा मनस्विनी ।
कृष्णं चापि महाबाहुः परिपप्रच्छ धर्मराट् ॥ ॥ १०-१६-३३ (६४७२४)

इति श्रीमन्महाभारते सौप्तिकपर्वणि ऐषीकपर्वणि षोडशोऽध्यायः ॥ १६ ॥
Mahabharata - Sauptika Parva - Chapter Footnotes

१०-१६-७ संविदं संलापम् ॥
१०-१६-१८ प्रायोपेतां मरणार्थं यो नियमस्तेनोपेताम् ॥
१०-१६-२० हृष्टामश्वत्थाम्नः पराभवेन । आर्ता पुत्रादेः शोकेन ॥
१०-१६-२४ मधुघातिनि मधुदैत्यहन्तरी ॥
१०-१६-२८ विवक्षतां वक्तुमिच्छतां वाच्याः निन्द्याः नैव स्म ॥
१०-१६-१६ षोडशोऽध्यायः ॥

---

सौप्तिक-अध्यय०१७
॥ श्रीः ॥
१०.१७. अध्यायः १७

Mahabharata - Sauptika Parva - Chapter Topics
युधिष्ठिरेण द्रौणेरेकस्य बहुमारणशक्तिप्रश्ने कृष्णेन
रुद्रप्रसादादित्युक्त्वा रुद्रमहिमकथनम् ॥ १ ॥

Mahabharata - Sauptika Parva - Chapter Text

१०-१७-० (६४७२५)
वैशम्पायन उवाच। १०-१७-०क्ष् (५३०३)
हतेषु सर्वसैन्येषु सौप्तिकै तै रथैस्त्रिभिः ।
शोचन्युधिष्ठिरो राजा दाशार्हमिदमब्रवीत् ॥ १०-१७-१ (६४७२६)
कथं नु कृष्ण पापेन क्षुद्रेण शठबुद्धिना ।
द्रौणिना निहताः सर्वे मम पुत्रा महारथाः ॥ १०-१७-२ (६४७२७)
तथा कृतास्त्रविक्रान्ताः सङ्ग्रामेष्वपलायिनः ।
द्रुपदस्यात्मजाश्चैव द्रोणपुत्रेण पातिताः ॥ १०-१७-३ (६४७२८)
यस्य द्रोणो महेष्वासो न प्रादादाहवे मुखम् ।

निजघ्ने रथिनां श्रेष्ठं धृष्टद्युम्नं कथं नु सः ॥ १०-१७-४ (६४७२९)
किन्नु तेन कृतं कर्म तथायुक्तं नरर्षभ ।
यदेकः समरे सर्वानवधीन्नो गुरोः सुतः ॥ १०-१७-५ (६४७३०)
श्रीभगवानुवाच। १०-१७-६क्ष् (५३०४)
नूनं स देवदेवानामीश्वरेश्वरमव्ययम् ।
जगाम शरणं द्रौणिरेकस्तेनावधीद्बहून् ॥ १०-१७-६ (६४७३१)
प्रसन्नो हि महादेवो दद्यादमरतामपि ।
वीर्यं च गिरिशो दद्याद्येनेन्द्रमपि शातयेत् ॥ १०-१७-७ (६४७३२)
वेदाहं हि महादेवं तत्त्वेन भरतर्षभ ।
यानि चास्यपुराणानि कर्माणि विविधानि च ॥ १०-१७-८ (६४७३३)
आदिरेष हि भूतानां मध्यमन्तश्च भारत ।
विचेष्टते जगच्चेदं सर्वमस्यैव कर्मणा ॥ १०-१७-९ (६४७३४)
एवं सिसृक्षुर्भूतानि ददर्श प्रथमं विभुः ।
पितामहोऽब्रवीच्चैनं भूतानि सृज माचिरम् ॥ १०-१७-१० (६४७३५)
हरिकेशस्तथेत्युक्त्वा दीर्घदर्शी तदा प्रभुः ।
दीर्घकालं तपस्तेपे मग्नोऽम्भसि महातपाः ॥ १०-१७-११ (६४७३६)
सुमहान्तं ततः कालं प्रतीक्ष्यैनं पितामहः ।
स्रष्टारं सर्वभूतानां ससर्ज मनसाऽपरम् ॥ १०-१७-१२ (६४७३७)
सोऽब्रवीद्धातरं दृष्ट्वा गिरिशं सुप्तमम्भसि ।
यदि मे नाग्रजोऽस्त्यन्यस्ततः स्रक्ष्याम्यहं प्रजाः ॥ १०-१७-१३ (६४७३८)
तमब्रवीत्पिता नास्ति त्वदन्यः पुरुषोऽग्रजः ।
स्थाणुरेष जले मग्नो विस्रब्धः कुरु वै प्रजाः ॥ १०-१७-१४ (६४७३९)
भूतान्यन्वसृजत्सप्त दक्षः क्षिप्रं प्रजापतिः ।
यैरिमं व्यकरोत्सर्वं भूतग्रामं चतुर्विधम् ॥ १०-१७-१५ (६४७४०)
ताः सृष्टमात्राः क्षुधिताः प्रजाः सर्वाः प्रजापतिम् ।
बिभक्षयिवो राजन्सहसा प्राद्रवंस्तदा ॥ १०-१७-१६ (६४७४१)
स भक्ष्यमाणस्त्राणार्थी पितामहमुपाद्रवत् ।
आभ्यो मां भगवांस्त्रातु वृत्तिरासां विधीयताम् ॥ १०-१७-१७ (६४७४२)
ततस्ताभ्यो ददावन्नमोषधीः स्थावराणि च ।
जङ्गमानि च भूतानि दुर्बलानि बलीयसाम् ॥ १०-१७-१८ (६४७४३)
विहितान्नाः प्रजास्तास्तु जग्मुस्तुष्टा यथागतम् ।
ततो ववृधिरे राजन्प्रीतिमत्यः स्वयोनिषु ॥ १०-१७-१९ (६४७४४)
भूतग्रामे विवृद्धे तु सृष्टे देवासुरे तदा ।
उदतिष्ठज्जलाज्ज्येष्ठः प्रजाश्चेमा ददर्श सः ॥ १०-१७-२० (६४७४५)
बहुरूपाः प्रजाः सृष्टा विवृद्धाश्च स्वतेजसा ।
चुक्रोध बलवद्दृष्ट्वा लिङ्गं स्वं चाप्यविध्यत ॥ १०-१७-२१ (६४७४६)

तत्प्रविद्धं तथा भूमौ तथैव प्रत्यतिष्ठत ।
तमुवाचाव्ययो ब्रह्मा वचोभिः शमयन्निव ॥ १०-१७-२२ (६४७४७)
किं कृतं सलिले शर्व चिरकालस्थितेन ते ।
किमर्थं चेदमुत्पाद्य लिङ्गं भूमौ प्रवेशितम् ॥ १०-१७-२३ (६४७४८)
सोऽब्रवीज्जातसंरम्भस्तथा लोकगुरुर्गुरुम् ।
प्रजाः सृष्टाः परेणेमाः किं करिष्याम्यनेन वै ॥ १०-१७-२४ (६४७४९)
प्रजाः सृष्टाः परेणेमाः प्रजार्थं मे पितामह ।
ओषध्यः परिवर्तेरन्यथैवं सततं प्रजाः ॥ १०-१७-२५ (६४७५०)
एवमुक्त्वा स सक्रोधो जगाम विमना भवः ।
गिरेर्मुञ्जवतः पादं तपस्तप्तुं महातपाः ॥ ॥ १०-१७-२६ (६४७५१)

इति श्रीमन्महाभारते सौप्तिकपर्वणि ऐषीकपर्वणि सप्तदशोऽध्यायः
॥ १७ ॥

---

सौप्तिक-अध्यय०१८
॥ श्रीः ॥
१०.१८. अध्यायः १८

Mahabharata - Sauptika Parva - Chapter Topics
कृष्णेन युधिष्ठिरम्प्रति रुद्रस्य कोपप्रसादाक्ष्यां देवानां
यज्ञनाशतत्प्रवृत्तिकथनपूर्वकं तत एवाश्वत्थामद्वारा
पुत्रादिवध सम्भवकथनम् ॥ १ ॥

Mahabharata - Sauptika Parva - Chapter Text

१०-१८-० (६४७५२)
कश्रीभगवानुवाच। १०-१८-०क्ष् (५३०५)
ततो देवयुगेऽतीते देवा वै समकल्पयन् ।
यज्ञवेदप्रमाणेन विधिवद्यष्टुमीप्सवः ॥ १०-१८-१ (६४७५३)
कल्पयामासुरथ ते साधनानि हवींषि च ।
भागार्हा देवताश्चैव यज्ञियं द्रव्यमेव च ॥ १०-१८-२ (६४७५४)
ता वै रुद्रमजानन्त्यो याथातथ्येन देवताः ।
नाकल्पयन्त देवस्य स्थाणोर्भागं नराधिप ॥ १०-१८-३ (६४७५५)
सोऽकल्प्यमाने भागे तु कृत्तिवासा मखेऽमरैः ।
तपसा यज्ञमन्विच्छन्धनुरादौ ससर्ज ह ॥ १०-१८-४ (६४७५६)
लोकयज्ञः क्रियायज्ञो गृहयज्ञः सनातनः ।

पञ्चभूतनृयज्ञश्च जज्ञे सर्वमिदं जगत् ॥१०-१८-५ (६४७५७)
लोकयज्ञैर्नृयज्ञैश्च कपर्दी विदधे धनुः ।
धनुः सृष्टमभूत्तस्य षष्टिकिष्कुप्रमाणतः ॥१०-१८-६ (६४७५८)
वषड्कारोऽभवज्ज्या तु धनुषस्तस्य भारत ।
यज्ञाङ्गानि च चत्वारि तस्य सन्नहनेऽभवन् ॥१०-१८-७ (६४७५९)
ततः क्रुद्धो महादेवस्दुपादाय कार्मुकम् ।
आजगामाथ तत्रैव यत्र देवाः समीजिरे ॥१०-१८-८ (६४७६०)
तमात्कार्मुकं दृष्ट्वा ब्रह्मचारिणमव्ययम् ।
विव्यथे पृथिवी देवी पर्वताश्च चकम्पिरे ॥१०-१८-९ (६४७६१)
न ववौ पवनश्चैव नाग्निर्जज्वाल वैधितः ।
व्यभ्रमच्चापि संविग्नं दिवि नक्षत्रमण्डलम् ॥१०-१८-१० (६४७६२)
न बभौ भास्करश्चापि सोमः श्रीमुक्तमण्डलः ।
तिमिरेणाकुलं सर्वमाकाशं चाभवृद्वतम् ॥१०-१८-११ (६४७६३)
अभिभूतास्ततो देवा विषयान्न प्रजज्ञिरे ।
न प्रत्यभाच्च यज्ञः स देवतास्त्रेसिरे तथा ॥१०-१८-१२ (६४७६४)
ततः स यज्ञं विव्याध रौद्रेण हृदि पत्रिणा ।
अपक्रान्स्ततो यज्ञो मृगो भूत्वा सपावकः ॥१०-१८-१३ (६४७६५)
स तु तेनैव रूपेण दिविस्थो वै व्यराजत ।
अन्वीयमानो रुद्रेण युधिष्ठिर नभस्तले ॥१०-१८-१४ (६४७६६)
अपक्रान्ते ततो यज्ञे संज्ञा न प्रत्यभात्सुरान् ।
नष्टसंज्ञेषु देवेषु न प्राज्ञायत किञ्चन ॥१०-१८-१५ (६४७६७)
त्र्यम्बकः सवितुर्बाहू भगस्य नयने तथा ।
पूष्णश्च दशनान्क्रुद्धो धनुष्कोट्या व्यशातयत् ॥१०-१८-१६ (६४७६८)
प्राद्रवन् ततो देवा यज्ञाङ्गानि च सर्वशः ।
केचित्तत्रैव घूर्णन्तो गतासव इवाभवन् ॥१०-१८-१७ (६४७६९)
स तु विद्राव्य तत्सर्वं शितिकम्ठोऽवहस्य च ।
अवष्टभ्य धनुष्कोटिं रुरोध विबुधांस्ततः ॥१०-१८-१८ (६४७७०)
ततो वागमरैरुक्ता ज्यां तस्य धनुषोऽच्छिनत् ।
अथ तत्सहसा राजंश्छिन्नज्यं विस्फुरद्धनुः ॥१०-१८-१९ (६४७७१)
ततो विधनुषं देवा देवश्रेष्ठमुपागमन् ।
शरणं सह यज्ञेन प्रसादं चाकरोत्प्रभुः ॥१०-१८-२० (६४७७२)
ततः प्रसन्नो भगवान्प्रास्यत्कोपं जलाशये ।
स जलं पावको भूत्वा शोषयत्यनिशं प्रभो ॥१०-१८-२१ (६४७७३)
भगस्य नयने चैव बाहू च सवितुस्तथा ।
प्रादात्पूष्णश्च दशनान्पुनर्यज्ञांश्च पाण्डव ॥१०-१८-२२ (६४७७४)
ततः सुस्थमिदं सर्वं बभूव पुनरेव हि ।

सर्वाणि च हवींष्यस्य देवा भागमकल्पयन् ॥ १०-१८-२३ (६४७७५)
तस्मिन्क्रुद्धेऽभवत्सर्वमसुस्थं भुवनं प्रभो ।
प्रसन्ने च पुनः सुस्थं जगद्भवति भारत ॥ १०-१८-२४ (६४७७६)
ततस्ते निहताः सर्वे तव पुत्रा महारथाः ।
अन्ये च बहवः शूराः पाञ्चालस्य पदानुगाः ॥ १०-१८-२५ (६४७७७)
न तन्मनसि कर्व्यं न च तद्द्रौणिना कृतम् ।
महादेवप्रसादः स कुरुकार्यमनन्तरम् ॥ ॥ १०-१८-२६ (६४७७८)

इति श्रीमन्महाभारते शतसाहस्रिकायां संहितायां वैयासिक्यां सौप्तिकपर्वणि ऐषीकपर्वणि अष्टादशोऽध्यायः ॥ १८ ॥ समाप्तं ऐषीकपर्व ॥ २ ॥ सौप्तिकपर्व च समाप्तम्॥ १० ॥
अस्यानन्त्रं स्त्रीपर्व भविष्यति
तस्यायमाद्यः श्लोकः। १०-१८-१ (६४७७९)
१०-१८-१क्ष् (५३०६)
जनमेजय उवाच ।
हते दुर्योधने चैव हते सैन्ये च सर्वशः ।
धृतराष्ट्रो महाराज श्रुत्वा किमकरोन्मुने ॥
Mahabharata - Sauptika Parva - Chapter Footnotes

१०-१८-५ लोकयज्ञो लोकेषणा सर्वो मां साधुमेव जानात्विति वासनारूपः । क्रियायज्ञः गर्भाधानादिसंस्काररूपः। गृहयज्ञः पत्नीसाध्याग्निहोत्रादिः। पञ्चभूतनृयज्ञः पञ्चभूतानां गुणैः शब्दादिभिर्या नृणां प्रीतिस्तद्रूपः। विषयजं सुखमित्यर्थः। एतैरेव चतुर्भिर्यज्ञैः सर्वं जगत्सृष्टम् ॥
१०-१८-६ तत्र मध्यमयोः शास्त्रोक्तयोर्यज्ञयोर्नाशार्थं प्रथमचरमयज्ञाभ्यामीश्वरो धनुः कृतवान् किष्कुर्हस्तः ॥
१०-१८-१८ अष्टादशोऽध्यायः ॥

---

# .. strIparva 11 Kumbhaghonam Edition ..

## ॥ ११ स्त्रीपर्व ॥

११. स्त्रीपर्व

स्त्रीपर्व-अध्यय००१
॥ श्रीः ॥
११.१. अध्यायः १

Mahabharata - Strii Parva - Chapter Topics
सञ्जयेन पुत्रादीन्प्रति शोचतो धृतराष्ट्रस्य समाश्वासनम् ॥ १ ॥

Mahabharata - Strii Parva - Chapter Text

११-१-० (६४७८०)
श्रीवेदव्यासाय नमः। ११-१-०क्ष् (५३०७)
नारायणं नमस्कृत्य नरं चैव नरोत्तमम् ।
देवीं सरस्वतीं व्यासं ततो जयमुदीरयेत् ॥ ११-१-१ (६४७८१)
जनमेजय उवाच। ११-१-१क्ष् (५३०८)
हते दुर्योधने चैव हते सैन्ये च सर्वशः ।
धृतराष्ट्रो महाराज श्रुत्वा किमकरोन्मुने ॥ ११-१-१ (६४७८२)
तथैव कौरवो राजा धर्मपुत्रो महामनाः ।
कृपप्रभृतयश्चैव किमकुर्वत ते त्रयः ॥ ११-१-२ (६४७८३)
अश्वत्थाम्नः कृतं कर्म शापश्चान्योन्यकारितः ।
वृत्तान्मुत्रं ब्रूहि यदभाषत सञ्जयः ॥ ११-१-३ (६४७८४)
वैशम्पायन उवाच। ११-१-४क्ष् (५३०९)
हते पुत्रशते दीनं छिन्नशाखमिव द्रुमम् ।
पुत्रशोकाभिसन्प्तं धृतराष्ट्रं महीपतिम् ॥ ११-१-४ (६४७८५)
ध्यानमूकत्वमापन्नं चिन्तया समभिप्लुतम् ।
सञ्जयो जयतां श्रेष्ठ राजानं वाक्यमब्रवीत् ॥ ११-१-५ (६४७८६)
किं शोचसि महाराज नास्ति शोके सहायता ।
अक्षौहिण्यो हताश्चाष्टौ दश चैव विशाम्पते ।
निर्जितेयं वसुमती शून्या स्थास्यति केवलम् ॥ ११-१-६ (६४७८७)

नानादिग्भ्यः समागम्य नानाजात्या नराधिपाः ।
सहितास्व पुत्रेण सर्वे वै निधनं गताः ॥ ११-१-७ (६४७८८)
पितॄणां पुत्रपौत्राणां ज्ञातीनां सुहृदां तथा ।
गुरूणां चानुपूर्व्येण ये चान्येऽनुचरा हताः ।
प्रेतकार्याणि सर्वाणि कारयस्व नराधिप ॥ ११-१-८ (६४७८९)
वैशम्पायन उवाच। ११-१-९क्ष् (५३१०)
तच्छ्रुत्वा करुणं पुत्रपौत्रवधार्दितः ।
पपात भुवि दुर्धर्षो वाताहत इव द्रुमः ॥ ११-१-९ (६४७९०)
धृतराष्ट्र उवाच। ११-१-१०क्ष् (५३११)
हतपुत्रो हतामात्यो हतसर्वसुहृज्जनः ।
दुःखं नूनं गमिष्यामि विचरन्पृथिवीमिमाम् ॥ ११-१-१० (६४७९१)
किन्नु बन्धुविहीनस्य जीवितेन ममाद्य वै ।
लूनपक्षस्य इव मे वैनतेयस्य सञ्जय ॥ ११-१-११ (६४७९२)
हृतराज्यो हतसुहृद्धतपुत्रश्च वै तथा ।
न भ्राजिष्ये महाप्राज्ञ क्षीणरश्मिरिवांशुमान् ॥ ११-१-१२ (६४७९३)
न कृतं सुहृदां वाक्यं जामदग्न्यस्य च ॥
सभामध्ये तु कृष्णेन यच्छ्रेयोऽभिहितं मम। ११-१-१३ (६४७९४)
अलं वैरेण ते राजन्पुत्रः संगृह्यतामिति ।
तच्च वाक्यमकृत्वाऽहं भृशं तप्यामि दुर्मतिः ॥ ११-१-१४ (६४७९५)
न हि श्रोताऽस्मि भीष्मस्य शर्मयुक्तं प्रभाषितम् ॥ ११-१-१५ (६४७९६)
दुर्योधनस्य च तथा वृषभस्येव नर्दतः ।
दुःशासनवधं श्रुत्वा कर्णस्य च विपर्ययम् ।
द्रोणसूर्योपरागं च हृदयं मे विदीर्यते ॥ ११-१-१६ (६४७९७)
न स्मराम्यात्मनः किञ्चित्पुरा सञ्जय दुष्कृतम् ।
यस्येदं फलमद्येह मया मूढेन भुज्यते ॥ ११-१-१७ (६४७९८)
नूनं व्यपकृतं किञ्चिन्मया पूर्वेषु जन्मसु ।
येन मां दुःखभागेषु धाता कर्मसु युक्तवान् ॥ ११-१-१८ (६४७९९)
परिणामश्च वयसः सर्वबन्धुक्षयश्च मे ।
सुहृन्मित्रविनाशश्च दैवयोगादुपागतः ॥ ११-१-१९ (६४८००)
कोन्वस्ति दुःखिततरो मत्तोऽन्यो हि पुमान्भुवि ॥ ११-१-२० (६४८०१)
तन्मामद्यैव पश्यन्तु पाण्डवाः संशितव्रताः ।
विवृतं ब्रह्मलोकस्य दीर्घमध्वानमास्थितम् ॥ ११-१-२१ (६४८०२)
वैशम्पायन उवाच। ११-१-२२क्ष् (५३१२)
तस्य लालप्यमानस्य बहु शोकं विचिन्वतः ।
शोकापहं नरेन्द्रस्य सञ्जयो वाक्यमब्रवीत् ॥ ११-१-२२ (६४८०३)
शोकं राजन्व्यपनुद श्रुतास्ते वेदनिश्चयाः ।

शास्त्रागमाश्च विविधा वृद्धेभ्यो नृपसत्तम ॥ ११-१-२३ (६४८०४)
सृञ्जये पुत्रशोकार्ते यदूचुर्मुनयः पुरा ।
यथा यौवनजं दर्पमास्थिते ते सुते नृप ॥ ११-१-२४ (६४८०५)
न त्वया सुहृदां वाक्यं ब्रुवतामवधारितम् ।
स्वार्थश्च न कृतः कश्चिल्लुब्धेन फलगृद्धिना ॥ ११-१-२५ (६४८०६)
असिनैवैकधारेण स्वबुद्ध्या तु विचेष्टितम् ।
प्रायशोऽवृत्तसम्पन्नाः सततं पर्युपासिताः ॥ ११-१-२६ (६४८०७)
यस्य दुःशासनो मन्त्री राधेयश्च दुरात्मवान् ।
शकुनिश्चैव दुष्टात्मा चित्रसेनश्च दुर्मतिः ॥ ११-१-२७ (६४८०८)
अनल्पं येन वै सर्वं शल्यभूतं कृतं जगत् ।
कुरुवृद्धस्य भीष्मस्य गान्धार्या विदुरस्य च ॥ ११-१-२८ (६४८०९)
द्रोणस्य च महाराज कृपस्य च शरद्वतः ।
कृष्णस्य च महाबाहो नारदस्य च धीमतः ॥ ११-१-२९ (६४८१०)
ऋषीणां च तथाऽन्येषां व्यासस्यामिततेजसः ।
न कृतं तेन वचनं तव पुत्रेण भारत ।
क्षपिताः क्षत्रियाः सर्वे शत्रूणां वर्धितं यशः ॥ ११-१-३० (६४८११)
अधर्मसंयुतं किञ्चिन्नित्यं युद्धमिति ब्रुवन् ।
मध्यस्थो हि त्वमप्यासीर्न क्षमं किञ्चिदुक्तवान् ॥ ११-१-३१ (६४८१२)
धूर्धरेण त्वया भारस्तुलया न समं धृतः ॥ ११-१-३२ (६४८१३)
आदावेव मनुष्येण वर्तितव्यं यथाक्रमम् ।
यथा नातीतमर्थं वै पश्चात्तापेन युज्यते ॥ ११-१-३३ (६४८१४)
पुत्रगृद्ध्या त्वया राजन्प्रियं तस्य चिकीर्षितम् ।
पश्चात्तापमिमं प्राप्तो न त्वं शोचितुमर्हसि ॥ ११-१-३४ (६४८१५)
मधु यः केवलं दृष्ट्वा प्रपातं नानुपश्यति ।
स भ्रष्टोमधुलोभेन शोचत्येव यथा भवान् ॥ ११-१-३५ (६४८१६)
अर्थान्न शोचन्प्राप्नोति न शोचन्विन्दते सुखम् ।
न शोचञ्श्रियमाप्नोति न शोचन्विन्दते जयम् ॥ ११-१-३६ (६४८१७)
स्वयमुत्पादयित्वाऽग्निं परीतस्तेन योऽग्निना ।
दह्यमानः पुनस्तापं भजते न स पण्डितः ॥ ११-१-३७ (६४८१८)
त्वयैव ससुतेनायं वाक्यवायुसमीरितः ।
लोभाज्येन च संसिक्तो ज्वलितः पार्थपावकः ॥ ११-१-३८ (६४८१९)
तस्मिन्समिद्धे पतिताः शलभा इव ते सुताः ।
तान्केशवाग्निनिर्दग्धान्न त्वं शोचितुमर्हसि ॥ ११-१-३९ (६४८२०)
यच्चाश्रुपातकलिलं वदनं वहसे नृप ।
अशास्त्रदृष्टमेतद्धि न प्रशंसन्ति पण्डिताः ॥ ११-१-४० (६४८२१)
विस्फुलिङ्गा इव ह्येतान्दहन्ति किल मानवान् ।

जहीहि मन्युं बुद्ध्या वै धास्यात्मानमात्मना ॥ ४१ ॥ ११-१-४१ (६४८२२)
वैशम्पायन उवाच। ११-१-४२क्ष् (५३१३)
एवमाश्वासितं तेन सञ्जयेन महात्मना ।
विदुरो भूय एवाह बुद्धिपूर्वं परन्तप ॥ ॥ ११-१-४२ (६४८२३)

इति श्रीमन्महाभारते स्त्रीपर्वणि जलप्रदानिकपर्वणि प्रथमोऽध्यायः
॥ १ ॥
Mahabharata - Strii Parva - Chapter Footnotes

११-१-३ अश्वत्थाम्नः श्रुतं कर्म शापश्चान्योन्यकारित इति क पाठः
। अश्वत्थान्नः श्रुतं कर्म शापादन्योन्यकरितादिति झ पाठः। तत्र
अन्योन्यं कारितात्पाण्डवानां गर्भे ब्रह्मशिरोस्त्रं पतत्वित्यश्वत्थान्ना
शापो दत्तः। सहस्रवर्षाणि गलत्कुष्ठो भविष्यसीत्यश्वत्थाम्नः
कृष्णेन शापो दत्त इत्यर्थः ॥
११-१-६ शून्या राजभिर्हीना ॥
११-१-८ गुरूणां चानुपूर्व्येण प्रेतकार्याणि कारयेति झ पाठः । तत्र
आनुपूर्व्येणेति। आदौ हतानामादावेव पश्चाद्धतानां पश्चादेवेति
पौर्वापर्येण प्रेतानां परेतानां कार्याणि पारलौकिकानि कर्माणीत्यर्थः ॥
११-१-१५ श्रोतास्मि श्रुतवानस्मि ॥
११-१-१६ विपर्ययं विनाशम् ॥
११-१-२१ तन्मामिति । अद्यैव प्राणत्यागं करिष्यामीत्यर्थः ॥
११-१-२२ शोकं वितन्वत इति झ पाठः । तत्र वितन्वतः विरचयत
इत्यर्थः ॥
११-१-२३ अवृत्तेति च्छेदः ॥
११-१-२८ शल्यश्च येन वै सर्वं इति झ पाठः । तत्र शल्यश्च
मन्त्रीति पूर्वेणान्वयः ॥
११-१-३१ न धर्मः स कृतः कश्चिन्नित्यं युद्धमभीप्सता
। अल्पबुद्धिरहकारी नित्यं युद्धमिति ब्रुवन्। क्रूरो दुर्मर्षणो
नित्यमसन्तुष्टश्च वीर्यवान्। श्रुतवानसि मेधावी सत्यवांश्चैव
नित्यदा। न मुह्यान्तीदृशाः सन्तो बुद्धिमन्तो भवादृशाः। न धर्मः
सत्कृतः कश्चित्तव पुत्रेण मारिष। इति झ पाठः। अत्र ब्रुवन्
दुर्योधनं आसीदिति शेषः ॥
११-१-३२ दुर्धरेणेति झ ट पाठः ॥
११-१-३५ प्रपातं पर्वताग्राद्भ्रंशम् ॥
११-१-४१ जहि मन्यं स्वबुद्ध्या वै इति क छ ट पाठः । दहन्ति शोका
इत्यर्थात्। मन्युं दैन्यम्। मन्युर्दैन्ये क्रतौ क्रुधि इत्यमरः। आत्मानं

चित्तं आत्मना धैर्येण धारय। प्राणान्मात्याक्षीरित्यर्थः ॥
११-१-१ प्रथमोऽध्यायः ॥

---

स्त्रीपर्व-अध्यय००२
॥ श्रीः ॥
११.२. अध्यायः २

Mahabharata - Strii Parva - Chapter Topics
विदुरेण शास्त्रार्थकथनेन धृतराष्ट्रस्य शोकापनोदनम् ॥ १ ॥

Mahabharata - Strii Parva - Chapter Text

११-२-० (६४८२४)
वैशम्पायन उवाच। ११-२-०क्ष् (५३१४)
ततोऽमृतरसैर्वाक्यैर्ह्लादयन्पुरुषर्षभम् ।
वैचित्रवीर्यं विदुरो यदुवाच निबोध तत् ॥ ११-२-१ (६४८२५)
विदुर उवाच। ११-२-२क्ष् (५३१५)
उत्तिष्ठ राजन्किं शेषे धारयात्मानमात्मना ।
एषा वै सर्वसत्वानां लोकेश्वर परा गतिः ॥ ११-२-२ (६४८२६)
सर्वे क्षयान्ता निचयाः पतनान्ताः समुच्छ्रयाः ।
संयोगा विप्रयोगान्ता मरणान्तं च जीवितम् ॥ ११-२-३ (६४८२७)
यदा शूरं च भीरुं च यमः कर्षति भारत ।
तत्किं न योत्स्यन्ति हि ते क्षत्रियाः क्षत्रियर्षभ ॥ ११-२-४ (६४८२८)
अयुध्यमानो म्रियते युध्यमानश्च जीवति ।
कालं प्राप्य महाराज न कश्चिदतिवर्तते ॥ ११-२-५ (६४८२९)
अभावादीनि भूतानि भावमध्यानि भारत ।
अभावनिधनान्येव तत्र का परिदेवना ॥ ११-२-६ (६४८३०)
न शोचन्मृतमन्वेति न शोचन्म्रियते नरः ।
एवं सांसिद्धिके लोके किमर्थमनुशोचसि ॥ ११-२-७ (६४८३१)
कालः कर्षति भूतानि सर्वाणि विविधान्युत ।
न कालस्य प्रियः कश्चिन्न द्वेष्यः कुरुसत्तम ॥ ११-२-८ (६४८३२)
यथा वायुस्तृणाग्राणि संवर्तयति सर्वशः ।
तथा कालवशं यान्ति भूतानि भरतर्षभ ॥ ११-२-९ (६४८३३)
एकसार्थप्रयातानां सर्वेषां तत्र गामिनाम् ।
यस्य कालः स यात्यग्रे तत्र का परिदेवना ॥ ११-२-१० (६४८३४)
न चाप्येतान्हतान्युद्धे राजञ्शोचितुमर्हसि ।

प्रमाणं यदि शास्त्राणि गतास्ते परमां गतिम् ॥ ११-२-११ (६४८३५)
सर्वे स्वाध्यायवन्तो हि सर्वे च चरितव्रताः ।
सर्वे चाभिमुखाः क्षीणास्तत्र का परिदेवना ॥ ११-२-१२ (६४८३६)
अदर्शनादापतिताः पुनश्चादर्शनं गताः ।
नैते तव न तेषां त्वं तत्र का परिदेवना ॥ ११-२-१३ (६४८३७)
हतो हि लभते स्वर्गं जित्वा च लभते यशः ।
उभयं नो बहुगुणं नास्ति निष्फलता रणे ॥ ११-२-१४ (६४८३८)
तेषां कामदुघाँल्लोकानिन्द्रः सङ्कल्पयिष्यति ।
इन्द्रस्यातिथयो ह्येते भवन्ति भरतर्षभ ॥ ११-२-१५ (६४८३९)
न यज्ञैर्दक्षिणावद्भिर्न तपोभिर्न विद्यया ।
स्वर्गं यान्ति तथा मर्त्या यथा शूरा रणे हताः ॥ ११-२-१६ (६४८४०)
शरीराग्निषु शूराणां जुहुवुस्ते शराहुतीः ।
हूयमानाञ्शरांश्चैव सेहुस्तेजस्विनो मिथः ॥ ११-२-१७ (६४८४१)
एवं राजंस्तवाचक्षे स्वर्ग्यं पन्थानमुत्तमम् ।
न युद्धादधिकं किञ्चित्क्षत्रियस्येह विद्यते ॥ ११-२-१८ (६४८४२)
क्षत्रियास्ते महात्मानः शूराः समितिशोभनाः ।
आशिषः परमाः प्राप्ता न शोच्याः सर्व एव हि ॥ ११-२-१९ (६४८४३)
आत्मानमात्मनाऽऽश्वास्य मा शुचः पुरुषर्षभ ।
नाद्य शोकाभिभूतस्त्वं कायमुत्स्रष्टुमर्हसि ॥ ११-२-२० (६४८४४)
मातापितृसहस्राणि पुत्रदारशतानि च ।
संसारेष्वनुभूतानि कस्य ते कस्य वा वयम् ॥ ११-२-२१ (६४८४५)
शोकस्थानसहस्राणि भयस्थानशतानि च ।
दिवसेदिवसे मूढमाविशन्ति न पण्डितम् ॥ ११-२-२२ (६४८४६)
न कालस्य प्रियः कश्चिन्न द्वेष्यः कुरुसत्तम ।
न मध्यस्थः क्वचित्कालः सर्वं कालः प्रकर्षति ॥ ११-२-२३ (६४८४७)
कालः पचति भूतानि कालः संहरते प्रजाः ।
कालः सुप्तेषु जागर्ति कालो हि दुरतिक्रमः ॥ ११-२-२४ (६४८४८)
अनित्यं यौवनं रूपं जीवितं द्रव्यसञ्चयः ।
आरोग्यं प्रियसंवासो गृद्ध्येदेषु न पण्डितः ॥ ११-२-२५ (६४८४९)
न जानपदिकं दुःखमेकः शोचितुमर्हसि ।
अप्यभावेन युज्येत तच्चास्य न निवर्तते ॥ ११-२-२६ (६४८५०)
अशोचन्प्रतिकुर्वीत यदि पश्येत्पराक्रमम् ।
भैषज्यमेतद्दुःखस्य यदेतन्नानुचिन्तयेत् ॥ ११-२-२७ (६४८५१)
चिन्त्यमानं हि न व्येति भूयश्चापि प्रवर्धते ॥
अनिष्टसम्प्रयोगाच्च विप्रयोगात्प्रियस्य च। ११-२-२८ (६४८५२)
मानुषा मानसैर्दुःखैर्युज्यन्ते येऽल्पबुद्धयः ॥

नार्थो न धर्मो न सुखं यदेतदनुशोचति। ११-२-२९ (६४८५३)
तच्च नाप्नोति कार्यार्थं त्रिवर्गाच्चैव भ्रश्यते ॥
अन्योन्यबाधनावस्थां प्राप्य वैषयिकीं नराः। ११-२-३० (६४८५४)
असन्तुष्टाः प्रमुह्यन्ति सन्तोषं यान्ति पण्डिताः ॥
प्रज्ञया मानसं दुःखं हन्याच्छारीरमौषधैः। ११-२-३१ (६४८५५)
एतद्विज्ञानसामर्थ्यं न बालैः समतामियात् ॥
शयानं चानुशेते हि तिष्ठन्तं चानुतिष्ठति। ११-२-३२ (६४८५६)
अनुधावति धावन्तं कर्म पूर्वकृतं नरम् ॥
यस्यांयस्यामवस्थायां यत्करोति शुभाशुभम्। ११-२-३३ (६४८५७)
तस्यांतस्यामवस्थायां तत्तत्फलमवाप्नुते ॥
श्येनयेन शरीरेण यद्यत्कर्म करोति यः। ११-२-३४ (६४८५८)
तेनतेन शरीरेण तत्फलं समुपाश्नुते ॥
आत्मैव ह्यात्मनः साक्षी कृतस्यापकृतस्य च ॥ ११-२-३५ (६४८५९)
शुभेन कर्मणा सौख्यं दुःखं पापेन कर्मणा ।
कृतं भवति सर्वत्र नाकृतं विद्यते क्वचित् ॥ ११-२-३६ (६४८६०)
न हि ज्ञानविरुद्धेषु बह्वपायेषु कर्मसु ।
मूलघातिषु सज्जन्ते बुद्धिमन्तो भवद्विधाः ।F ॥ ११-२-३७ (६४८६१)

इति श्रीमन्महाभारते स्त्रीपर्वणि जलप्रदानिकपर्वणि द्वितीयोऽध्यायः ॥ २ ॥
Mahabharata - Strii Parva - Chapter Footnotes

११-२-२ एषा मरणान्ता ।अत उत्तिष्ठ शोकं त्यज ॥
११-२-६ अभावादीनि दुःखानि दुःखमध्यानि भारतेति छ पाठः ॥
११-२-८ सांसिद्धिके स्वभावसिद्धे ॥
११-२-९ संवर्तयति स्ववशं नयति ॥
११-२-१० तत्र गामिनां परत्र गमनशीलानां यस्य काल उपस्थितः
सोऽग्रे प्रयाति ॥
११-२-१३ अदर्शनादज्ञानात् ॥
११-२-१४ नोऽस्माकं क्षत्रियाणाम् ॥
११-२-१८ आचक्षे कथयामि ॥
११-२-२६ अतपदिकं सर्वसाधारणम् ।अभावेन मरणेन। तच्च दुःखं च ॥
११-२-३० नच नापैति कार्यार्थात्त्रिवर्गाच्चैव हीयते इति झ पाठः
।तत्र कार्यार्थान्नापैतीतिनापित्वपैत्येवेत्यर्थः ॥
११-२-३१ अन्यामन्यां पनावस्थां प्राप्य वैशेषिकीं नराः ।इति झ पाठः ॥
११-२-३४ अवस्थायां यौवनादिरूपायाम् ॥
११-२-३५ येनेति ।स्थूलेन देहेन कृते तत्तेनैव

भुज्यते। मनःकृत्तं चेत्तेनैव भुज्यते स्वप्नादौ ॥
११-२-२ द्वितीयोऽध्यायः ॥

---

स्त्रीपर्व-अध्यय००३
॥ श्रीः ॥
११.३. अध्यायः ३

Mahabharata - Strii Parva - Chapter Topics
विदुरेण धृतराष्ट्रकापनोदनाय शास्त्रार्थकथनम् ॥ १ ॥

Mahabharata - Strii Parva - Chapter Text

११-३-० (६४८६२)
वृतराष्ट्र उवाच। ११-३-०क्ष् (५३१६)
सुमाषितं महाप्राज्ञ शोकोऽयं विगतो मम ।
भूय एव तु वाक्यानि श्रोतुमिच्छामि तत्त्वतः ॥ ११-३-१ (६४८६३)
अनिष्टानां च संसर्गादिष्टानां च निवर्तनात् ।
कथं हि मानसं दुःखं विप्रयुज्यन्ति पण्डिताः ॥ ११-३-२ (६४८६४)
विदुर उवाच। ११-३-३क्ष् (५३१७)
वतोयतो मनो दुःखात्सुखाद्र विप्रमुच्यते ।
तवत्तसः शगं लब्ध्वा सुगतिं विन्दते बुधः ॥ ११-३-३ (६४८६५)
अशाधतमिदं सर्वं चिन्त्यमानं नरर्षभ ।
कदलीसन्निभो लोकः सारो ह्यस्य न विद्यते ॥ ११-३-४ (६४८६६)
श्यदा प्राज्ञाश्च मूढाश्च धनवन्तोऽथ निर्धनाः ।
सर्वे पितृवनं प्राप्य स्वपन्ति विगतज्वराः ॥ ११-३-५ (६४८६७)
निर्मांसैरस्थिभूयिष्ठैर्गात्रैः स्नायुनिबन्धिभिः ।
किं विशेषं प्रपश्यन्ति तत्र तेषां परे जनाः ॥ ११-३-६ (६४८६८)
येन प्रत्यवगच्छेयुः कुलरूपविशेषणम् ।
कस्मादन्योन्यमिच्छन्ति विप्रलब्धधियो नराः ॥ ११-३-७ (६४८६९)
गृहाण्येव हि मर्त्यानामाहुर्देहानि पण्डिताः ।
कालेन विनियुज्यन्ते सत्वमेकं तु शोभनम् ॥ ११-३-८ (६४८७०)
यथा जीर्णमजीर्णं वा वस्त्रं त्यक्त्वा तु पूरुषः ।
अन्यद्रोचयते वस्त्रमेवं देहाः शरीरिणाम् ॥ ११-३-९ (६४८७१)
वैचित्रवीर्य सत्यं हि दुःखं वा यदि वा सुखम् ।
प्राप्नुवन्तीह भूतानि स्वकृतेनैव कर्मणा ॥ ११-३-१० (६४८७२)
कर्मणा प्राप्यते स्वर्गः सुखं दुःखं च भारत ।

ततो वहति तं भारमवशः स्ववशोऽपि वा ॥ ११-३-११ (६४८७३)
यथा च मृन्मयं भाण्डं चक्रारूढं विपद्यते ।
किञ्चित्प्रक्रियमाणं वा कृतमात्रमथापि वा ॥ ११-३-१२ (६४८७४)
हीनं वाऽप्यवरोप्यं वा अवतीर्णमथापि वा ।
आर्द्रं वाऽप्यथवा शुष्कं पच्यमानमथापि वा ॥ ११-३-१३ (६४८७५)
अवतार्यन्तमापाङ्कादुद्धृतं चापि भारत ।
अथवा परिभुज्जन्तमेवं देहाः शरीरिणाम् ॥ ११-३-१४ (६४८७६)
गर्भस्थो वा प्रसूतो वाऽप्यथवा दशरात्रिकः ।
अर्धमासगतो वाऽपि मासमात्रगतोऽपि वा ॥ ११-३-१५ (६४८७७)
संवत्सरगतो वापि द्विसंवत्सर एव वा ।
यौवनस्थोऽथ मध्यस्थो वृद्धो वापि विपद्यते ॥ ११-३-१६ (६४८७८)
प्राक्कर्मभिस्तु भूतानि भवन्ति नभवन्ति च ।
एवं संबर्धिते लोके किमर्थमनुतप्यसे ॥ ११-३-१७ (६४८७९)
यथा तु सलिलं राजन्क्रीडार्थमनुसञ्चरन् ।
उन्मज्जेच्च निमज्जेच्च चेष्टते च नराधिप ॥ ११-३-१८ (६४८८०)
एवं संसारगहने उन्मज्जननिमज्जने ।
कर्मयोगेन बध्यन्ते क्लिश्यन्ते चाल्पबुद्धयः ॥ ११-३-१९ (६४८८१)
ये तु प्राज्ञाः स्थिता मध्ये संसारान्तगतैषिणः ।
समागमज्ञा भूतानां ते यान्ति परमां गतिम् ॥ ॥ ११-३-२० (६४८८२)

इति श्रीमन्महाभारते स्त्रीपर्वणि जलप्रदानिकपर्वणि तृतीयोऽध्यायः
॥ ३ ॥

Mahabharata - Strii Parva - Chapter Footnotes

११-३-१ सुभाषितैरिति झ पाठः ॥
११-३-५ पितृवनं मृत्युम् ॥
११-३-८ सत्वमेकं तु शास्वतमिति झ पाठः । तत्र सत्वं
लिङ्गशरीरम्। शाश्वतं मोक्षपर्यन्तं स्थायित्वात् इत्यर्थः ॥
११-३-१३ अवरोप्यन्तमितिपाठे अवरोप्यमाणम् ॥
११-३-१४ आपाकात् कुलालकृतात् पात्रपाककूटात् । अथवा परिभृज्जन्तमिति
झ पाठः ॥
११-३-१९ एवं संसारगहनादुन्मज्जननिमज्जनात् इति क छ ट पाठः ॥
११-३-३ तृतीयोऽध्यायः ॥

---

स्त्रीपर्व-अध्यय००४
॥ श्रीः ॥

## ११.४. अध्यायः ४

Mahabharata - Strii Parva - Chapter Topics

विदुरेण धृतराष्ट्रंप्रति जीवस्य गर्भवासप्रकारकथनम् ॥ १ ॥

Mahabharata - Strii Parva - Chapter Text

११-४-० (६४८८३)
धृतराष्ट्र उवाच। ११-४-०क्ष् (५३१८)
कथं संसारगहनं विज्ञेयं वदतां वर ।
एतदिच्छाम्यहं श्रोतुं तत्त्वमाख्याहि पृच्छतः ॥ ११-४-१ (६४८८४)
विदुर उवाच। ११-४-२क्ष् (५३१९)
जन्मप्रभृति भूतानां क्रियाः सर्वास्तु लक्षयन् ।
पूर्वमेवेह कलिले वसते किञ्चिदन्तरम् ॥ ११-४-२ (६४८८५)
ततः स पञ्चमेऽतीते मासे मांसमकल्पयत् ।
ततः सर्वाङ्गसम्पूर्णो गर्भो मासे तु जायते ॥ ११-४-३ (६४८८६)
अमेध्यमध्ये वसति मांसशोणितलेपने ।
ततस्तु वायुवेगेन ऊर्ध्वपादो ह्यधोमुखः ॥ ११-४-४ (६४८८७)
योनिद्वारमुपागम्य बहून्क्लेशान्समृच्छति ।
योनिसंपीडनाच्चैव पूर्वकर्मभिरन्वितः ॥ ११-४-५ (६४८८८)
तस्मान्मुक्तः स संसारादन्यान्पश्यत्युपद्रवान् ।
ग्रहास्तमनुच्छन्ति सारमेया इवामिषम् ॥ ११-४-६ (६४८८९)
ततः कालान्तरे प्राप्ते व्याधयश्चापि तं तथा ।
उपसर्पन्ति जीवन्तं बध्यमानं स्वकर्मभिः ॥ ११-४-७ (६४८९०)
बद्धमिन्द्रियपाशैस्तं सङ्गकामुकमातुरम् ।
व्यसनान्यनुवर्तन्ते विविधानि नराधिप ॥ ११-४-८ (६४८९१)
बाध्यमानश्च तैर्भूयो नैव तृप्तिमुपैति सः ।
श्तदा नावैति चैवायं प्रकुर्वन्साध्वसाधु वा ॥ ११-४-९ (६४८९२)
तत्रैनं परिपश्यन्ति ये ध्यानपरिनिष्ठिताः ।
अयं न बुध्यते तावद्यमलोकादिहागमे ॥ ११-४-१० (६४८९३)
यमदूतैर्विकृष्यंश्च मृत्युं कालेन गच्छति ।
वाग्घीनस्य च या मात्रा इष्टानिष्टकृताऽस्य वै ।
भूय एवात्मनाऽऽत्मानं बध्यमानमुपैति सः ॥ ११-४-११ (६४८९४)
अहो विनिकृतो लोको लोभेन च वशीकृतः ।
लोभक्रोधमदोन्मत्तो नात्मानमवबुध्यते ॥ ११-४-१२ (६४८९५)
कुलीनत्वे च रमते दुष्कुलीनान्विकुत्सयन् ।

धनदर्पेण दृप्तश्च दरिद्रान्परिकुत्सयन् ॥ ११-४-१३ (६४८९६)
मूर्खानिति परानाह नात्मानं समवेक्षते ।
दोषान्क्षिपति चान्येषां नात्मानं शास्तुमिच्छति ॥ ११-४-१४ (६४८९७)
यदा प्राज्ञाश्च मूर्खाश्च धनवन्तश्च निर्धनाः ।
कुलीनाश्चाकुलीनाश्च मानिनोऽथाप्यमानिनः ॥ ११-४-१५ (६४८९८)
सर्वे पितृवनं प्राप्ताः स्वपन्ति विगतत्वचः ।
निर्मांसैरस्थिभूयिष्ठैर्गात्रैः स्नायुनिबन्धनैः ॥ ११-४-१६ (६४८९९)
किं विशेषं प्रपश्यन्ति तत्र तेषां परे जनाः ।
येन प्रत्यवगच्छेयुः कुलरूपविशेषणम् ॥ ११-४-१७ (६४९००)
यदा सर्वे समं न्यस्ताः स्वपन्ति धरणीतले ।
कस्मादन्योन्यमिच्छन्ति विप्रलब्धुमिहाबुधाः ॥ ११-४-१८ (६४९०१)
प्रत्यक्षं च परोक्षं च यो निशम्य श्रुतिं त्विमाम् ।
श्अध्रुवे जीवलोकेऽस्मिन्यो धर्ममनुपालयन् ॥
जन्मप्रभृति वर्तेत प्राप्नुयात्परमां गतिम् ॥ ११-४-१९ (६४९०२)
एवं सर्वं विदित्वा वै यस्तत्त्वमनुवर्तते ।
स प्रमोक्षयते चैव पन्थानं मनुजेश्वर ॥ ॥ ११-४-२० (६४९०३)

इति श्रीमन्महाभारते स्त्रीपर्वणि जलप्रदानिकपर्वणि चतुर्थोऽध्यायः
॥ ४ ॥

Mahabharata - Strii Parva - Chapter Footnotes

११-४-२ कलिलं शुकशोणितसंयोगः ।एकरात्रोषितं कलिलं भवति
पञ्चरात्राद्बुद्बुद इत्यादिशास्त्राद्गम्यते। तत्र कलिले वसते जीव
इति शेषः। किञ्चिदन्तरं पूर्वदिनापेक्षया वृद्ध्यवस्थाभेदेन
अल्पेन परिमाणान्तरेण ॥
११-४-५ पूर्वकर्मापदानत इति क पाठः ॥
११-४-६ मृगयन्पर्यटन्नित्यं सारमेया इति ट पाठः ॥
११-४-४ चतुर्थोऽध्यायः ॥

---

स्त्रीपर्व-अध्यय००५
॥ श्रीः ॥
११.५. अध्यायः ५

Mahabharata - Strii Parva - Chapter Topics

विदुरेण धृतराष्ट्रं प्रति उत्तराध्याये वक्ष्यमाणसंसारादीनां
कान्तारादित्वेन रूपणम् ॥ १ ॥

११-५-० (६४९०४)
धृतराष्ट्र उवाच। ११-५-०क्ष् (५३२०)
यदिदं धर्मगहनं बुद्ध्या समनुबुध्यते ।
एतद्विस्तरतः सर्वं बुद्धिमार्गं प्रशंस मे ॥ ११-५-१ (६४९०५)
विदुर उवाच। ११-५-२क्ष् (५३२१)
अत्र ते सर्वयिष्यामि नमस्कृत्वा स्वयम्भुवे ।
यथा संसारगहनं वदन्ति परमर्षयः ॥ ११-५-२ (६४९०६)
कश्चिन्महति कान्तारे वर्तमानो द्विजः किल ॥
महद्दुर्गमनुप्राप्तो वनं क्रव्यादसङ्कुलम् ॥ ११-५-३ (६४९०७)
सिंहव्याघ्रगजर्क्षौघैरतिघोरमहास्वनैः ।
पिशितादैरतिभयैर्महोग्राकृतिभिस्तथा ॥ ११-५-४ (६४९०८)
समन्तात्सम्परिक्षिप्तं यस्माद्द्रष्टुर्महद्भयम् ।
तदस्य दृष्ट्वा हृदयमुद्वेगमगमत्परम् ॥ ११-५-५ (६४९०९)
अभ्युच्छ्रयन्ति रमाणि विक्रियाश्च परन्तप ।
स तद्वनं व्यनुसरन्सम्प्रधावन्नितस्ततः ॥ ११-५-६ (६४९१०)
वीक्षमाणो दिशः सर्वाः शरणं क्व भवेदिति ।
स तेषां नाशमन्विच्छन्प्रद्रुतो भयपीडितः ।
न च निर्याति वै दूरं न वा तैर्विप्रयुज्यते ॥ ११-५-७ (६४९११)
अथापश्यद्वनं गूढं समन्ताद्वागुरावृतम् ।
बाहुभ्यां सम्परिष्वक्तः स्त्रिया परमघोरया ॥ ११-५-८ (६४९१२)
पञ्चशीर्षधरैर्नागैः शैलैरिव समुन्नतैः ।
नभःस्पृशैर्महावृक्षैः परिक्षिप्तं महावनम् ॥ ११-५-९ (६४९१३)
वनमध्ये च तत्राभूदुदपानः समावृतः ।
वल्लीभिस्तृणनद्धाभिर्गूढाभिरभिसंवृतः ॥ ११-५-१० (६४९१४)
पपात स द्विजस्तत्र निगूढे सलिलाशये ।
विलग्नश्चाभवत्तस्मिँल्लतासन्तानसङ्कुले ॥ ११-५-११ (६४९१५)
पनसस्य यथा जातं वृन्तबद्धं महाफलम् ।
स तथा लम्बते तत्र ह्यूर्ध्वपादो ह्यधः शिराः ॥ ११-५-१२ (६४९१६)
अथ तत्रापि चान्योऽस्य भूयो जात उपद्रवः ।
कूपमध्ये महानागमपश्यत महाबलम् ॥ ११-५-१३ (६४९१७)
कूपवीनाहवेलायामपश्यत् महागजम् ॥ ११-५-१४ (६४९१८)
षड्वक्त्रं कृष्णशबलं द्विषट्कपदचारिणम् ।
क्रमेण परिसर्पन्तं वल्लीवृक्षसमावृतम् ॥ ११-५-१५ (६४९१९)

तस्य शाखाप्रशाखासु वृक्षशाखावलम्बिनः ।
नानारूपा मधुकरा घोररूपा भयावहाः ॥ ११-५-१६ (६४९२०)
आसते मधु संवृत्य पूर्वमेव निकेतजाः ।
भूयोभूयः समीहन्ते मधूनि भरतर्षभ ॥ ११-५-१७ (६४९२१)
स्वादनीयानि भूतानां यैर्बालो न वितृप्यते ।
तेषां मधूनां बहुधा धारा प्रस्रवते तदा ॥ ११-५-१८ (६४९२२)
आलम्बमानः स पुमान्धारां पिबति सर्वदा ।
न चास्य तृष्णा विरता पिबमानस्य सङ्कटे ॥ ११-५-१९ (६४९२३)
अभीप्सति च तां नित्यमतृप्तः स पुनः पुनः ।
न चास्य जीविते राजन्निर्वेदः समजायत ॥ ११-५-२० (६४९२४)
तत्रैव च मनुष्यस्य जीविताशा प्रतिष्ठिता ।
कृष्णाः श्वेताश्च तं वृक्षं निकृन्तन्ति स्म मूषिकाः ॥ ११-५-२१
(६४९२५)
व्यालैश्च तद्वनं दुर्गं स्त्रिया च परमोग्रया ।
कूपाधस्ताच्च नागेन पीनाहे कुञ्जरेण च ॥ ११-५-२२ (६४९२६)
वृक्षप्रपाताच्च भयं मूषिकेभ्यश्च पञ्चमम् ।
मधुलोभान्मधुकरैः षष्ठमाहुर्महद्भयम् ॥ ११-५-२३ (६४९२७)
एवं स वसते तत्र क्षिप्तः संसारसागरे ।
न चैव जीविताशायां निर्वेदमुपगच्छति ॥ ॥ ११-५-२४ (६४९२८)

इति श्रीमन्महाभारते स्त्रीपर्वणि जलप्रदानिकपर्वणि पञ्चमोऽध्यायः
॥ ५ ॥

---

स्त्रीपर्व-अध्यय००६
॥ श्रीः ॥
११.६. अध्यायः ६

Mahabharata - Strii Parva - Chapter Topics
पूर्वाध्याये कान्तारादित्वेन रूपितानां संसारादीनां स्वस्वशब्दैः
प्रतिपादनम् ॥ १ ॥

Mahabharata - Strii Parva - Chapter Text

११-६-० (६४९२९)
धृतराष्ट्र उवाच । ११-६-०क्ष् (५३२२)
अहो खलु महद्दुःखं कृच्छ्रवासं वसत्यसौ ।

कथं तस्य रतिस्तत्र तुष्टिर्वा वदतां वर ॥ ११-६-१ (६४९३०)
स देशः क्वनु यत्रासौ वसते धर्मसङ्कटे ।
कथं वा स विमुच्येत नरस्तस्मान्महाभयात् ॥ ११-६-२ (६४९३१)
एतन्मे सर्वमाचक्ष्व साधु चेष्टामहे तदा ।
कृपा मे महती जाता तस्याभ्युद्धरणेन हि ॥ ११-६-३ (६४९३२)
विदुर उवाच। ११-६-४क्ष् (५३२३)
उपाख्यानमिदं राजन्मोक्षविद्भिरुदाहृतम् ।
सुगतिं विन्दते येन परलोकेषु मानवः ॥ ११-६-४ (६४९३३)
उच्यते यत्तु कान्तारं महासंसार एव सः ।
वनं दुर्गं हि यच्चैतत्संसारगहनं हि तत् ॥ ११-६-५ (६४९३४)
ये च ते कथिता व्याला व्याधयस्ते प्रकीर्तिताः ॥ ११-६-६ (६४९३५)
या सा नारी बृहत्काया अध्यतिष्ठत तत्र वै ।
तामाहुस्तु जरां प्राज्ञा रूपवर्णविनाशिनीम् ॥ ११-६-७ (६४९३६)
स यस्तु कूपो नृपते स तु देहः शरीरिणाम् ।
यस्तत्र वसतेऽधस्तान्महाहिः काल एव सः ।
अन्तकः सर्वभूतानां देहिनां प्राणहार्यसौ ॥ ११-६-८ (६४९३७)
कूपमध्ये च या जाता वल्ली यत्र स मानवः ।
प्रोतो ययाऽभवल्लग्नो जीविताशा शरीरिणाम् ॥ ११-६-९ (६४९३८)
स यस्तु कूपपीनाहे तं वृक्षं परिसर्पति ।
षड्वक्त्रः कुञ्जरो राजन्स तु संवत्सरः स्मृतः ॥ ११-६-१० (६४९३९)
मुखानि ऋतवो मासाः पादा द्वादशा कीर्तिताः ।
ये तु वृंक्षं निकृन्तन्ति मूषिकाः पन्नगास्तथा ॥ ११-६-११ (६४९४०)
रात्र्यहानि तु तान्याहुर्भूतानां परिचिन्तकाः ।
ये ते मधुकरास्तत्र कामास्ते परिकीर्तिताः ॥ ११-६-१२ (६४९४१)
यास्तु ता बहुशो धाराः स्रवन्ति मधुनिस्रवम् ।
तांस्तु कामरसान्विन्द्याद्यत्र सज्जन्ति मानवाः ॥ ११-६-१३ (६४९४२)
एवं संसारचक्रस्य परिवृत्तिं विदुर्बुधाः ।
येन संसारचक्रस्य पाशांश्छिन्दन्ति सर्वथा ॥ ॥ ११-६-१४ (६४९४३)

इति श्रीमन्महाभारते स्त्रीपर्वणि जलप्रदानिकपर्वणि पञ्चमोऽध्यायः
॥ ५ ॥

Mahabharata - Strii Parva - Chapter Footnotes

११-६-४ उपमानमिदं राजन्निति झ पाठः ॥
११-६-६ षष्ठोऽध्यायः ॥

स्त्रीपर्व-अध्यय००७
॥ श्रीः ॥
११.७. अध्यायः ७

Mahabharata - Strii Parva - Chapter Topics
विदुरेण धृतराष्ट्रम्प्रति तत्त्वकथनम् ॥ १ ॥

Mahabharata - Strii Parva - Chapter Text

११-७-० (६४९४४)
धृतराष्ट्र उवाच। ११-७-०क्ष् (५३२४)
अहोऽभिहितमाख्यान भवता तत्त्वदर्शिना ।
भूय एव तु मे हर्षः श्रोतुं वागमृतं तव ॥ ११-७-१ (६४९४५)
विदुर उवाच। ११-७-२क्ष् (५३२५)
शृणु भूयः प्रवक्ष्यामि मार्गस्यैतस्य विस्तरम् ।
यच्छ्रुत्वा विप्रमुच्यन्ते संसाराद्धि विचक्षणाः ॥ ११-७-२ (६४९४६)
यथा तु पुरुषो राजन्दीर्घमध्वानमास्थितः ।
क्वचित्क्वचिच्छ्रमस्थानं कुरुते वासमेव वा ॥ ११-७-३ (६४९४७)
एवं संसारपर्यायि गर्भवासेषु भारत ।
कुर्वन्ति दुर्बुधा वासं मुच्यन्ते तत्र पण्डिताः ॥ ११-७-४ (६४९४८)
तस्मादध्वानमेवैतमाहुः शास्त्रविदो जनाः ।
यत्तत्संसारगहनं वनमाहुर्मनीषिणः ॥ ११-७-५ (६४९४९)
सोयं लोकसमावर्तो मर्त्यानां भरतर्षभ ।
चराणां स्थावराणां च न गृध्येत्तत्र पाण्डितः ॥ ११-७-६ (६४९५०)
शारीरा मानसाश्चैव मर्त्यानां व्याधयश्च ये ।
प्रत्यक्षाश्च परोक्षाश्च ते व्यालाः कथिता बुधैः ॥ ११-७-७ (६४९५१)
क्लिश्यमानाश्च तैर्नित्यं मार्यमाणाश्च भारत ।
स्वकर्मभिर्महाव्यालैर्नोद्विजन्त्यल्पबुद्धयः ॥ ११-७-८ (६४९५२)
अथापि तैर्विमुच्येत व्याधिभिः पुरुषो नृप ।
आवृणोत्येव तं पश्चाज्जरा रूपविनाशिनी ॥ ११-७-९ (६४९५३)
शब्दरूपरसस्पर्शगन्धैश्च विविधैरपि ।
मज्जमानं महापङ्के निरालम्बे समन्ततः ॥ ११-७-१० (६४९५४)
संवत्सरर्तवो मासाः पक्षाहोरात्रसन्धयः ।
क्रमेणास्य प्रवृज्जन्ति रूपमायुस्तथैव च ॥ ११-७-११ (६४९५५)
एते कालस्य विधयो नैताञ्जानान्ति दुर्बुधाः ।
धात्राऽभिलिखितान्याहुः सर्वभूतानि कर्मणा ॥ ११-७-१२ (६४९५६)

रथः शरीरं भूतानां सत्वमाहुस्तु सारथिम् ।
इन्द्रियाणि हयानाहुः कर्मबुद्धिस्तु रश्मयः ॥ ११-७-१३ (६४९५७)
तेषां हयानां यो वेगं धावतामनु धावति ।
सतु संसारचक्रेऽस्मिंश्चक्रवत्परिवर्तते ॥ ११-७-१४ (६४९५८)
यस्तान्संयमते बुद्ध्या संयतो न निवर्तते ।
यस्तु संसारचक्रेऽस्मिंश्चक्रवत्परिवर्तते ॥ ११-७-१५ (६४९५९)
श्भ्रममाणा न मुह्यन्ति संसारे न भ्रमन्ति ते ।
संसारे भ्रमतां राजन्दुःखमेतद्धि जायते ॥ ११-७-१६ (६४९६०)
तस्पादस्य निवृत्त्यर्थं यत्नमेवाचरेद्बुधः ।
उपेक्षा नात्र कर्तव्या शतशाखः प्रवर्धते ॥ ११-७-१७ (६४९६१)
यतेन्द्रियो नरो राजन्क्रोधलोभनिराकृतः ।
सन्तुष्टः सत्यवादी यः स शान्तिमधिगच्छति ॥c ११-७-१८ (६४९६२)
याम्यमाहू रथं ह्येनं मुह्यन्ते येन दुर्बुधाः ।
स चैतत्प्राप्नुयाद्राजन्यत्त्वं प्राप्तो नराधिप ॥ ११-७-१९ (६४९६३)
अनुतर्षुलमेवैतद्दुःखं भवति मारिष ।
राज्यनाशः सुहृन्नाशः सुतनाशश्च भारत ।
साधुः परमदुःखानां दुःखभैषज्यमारभेत् ॥ ११-७-२० (६४९६४)
ज्ञानौषधमवाप्येह दूरपारं महौषधम् ।
छिन्द्याद्दुःखमहाव्याधिं नरः संयतमानसः ॥ ११-७-२१ (६४९६५)
न विक्रमो न चाप्यर्थो न मित्रं न सुहृज्जनः ।
तस्मान्मोचयते दुःखाद्यथात्मा स्थिरनिश्चयः ॥ ११-७-२२ (६४९६६)
तस्मान्मैत्रं समास्थाय शीलमापदि भारत ।
दमस्त्यागोऽप्रमादश्च ते त्रयो ब्रह्मणो हयाः ॥ ११-७-२३ (६४९६७)
शीलरश्मिसमायुक्ते स्थितो यो मानसे रथे ।
त्यक्त्वा मृत्युभयं राजन्ब्रह्मलोकं स गच्छति ॥ ११-७-२४ (६४९६८)
अभयं सर्वभूतेभ्यो यो ददाति महीपते ।
स गच्छति परं स्थानं विष्णोः पदमनामयम् ॥ ११-७-२५ (६४९६९)
न तत्क्रतुसहस्रेण नोपवासैश्च नित्यशः ।
अभयस्य च दानेन यत्फलं प्राप्नुयान्नरः ॥ ११-७-२६ (६४९७०)
न ह्यात्मनः प्रियतरं किञ्चिद्भूतेषु निश्चितम् ।
अनिष्टं सर्वभूतानां मरणं नाम भारत ॥ ११-७-२७ (६४९७१)
तस्मात्सर्वेषु भूतेषु दया कार्या विपश्चिता ॥ ११-७-२८ (६४९७२)
नानायोगसमायुक्ता बुद्धिजालेन संवृताः ।
असूक्ष्मदृष्टयो मन्दा भ्राम्यन्ते तत्रतत्र ह ।
सुसूक्ष्मदृष्टयो राजन्व्रजन्ति ब्रह्मसाम्यताम् ॥ ११-७-२९ (६४९७३)
एवं ज्ञात्वा महाप्राज्ञ स तेषामौर्ध्वदैहिकम् ।

कर्तुमर्हति तेनैव फल प्राप्स्यति वै भवान् ॥ ॥ ११-७-३० (६४९७४)

इति श्रीमन्महाभारते स्त्रीपर्वणि जलप्रदानिकपर्वणि सप्तमोऽध्यायः ॥ ७ ॥

Mahabharata - Strii Parva - Chapter Footnotes

११-७-३ श्रमाच्छ्रान्त इति झ पाठः ॥
११-७-८ वार्यमाणाश्च भारतेति झ पाठः ॥
११-७-९ अथापि तैर्न मुच्येतेति क पाठः ॥
११-७-१० मज्जमांसमहापङ्के इति झ पाठः ॥
११-७-१७ ये तु संसारचक्रेऽस्मिन्निति झ पाठः ॥
११-७-१५ शतशास्वः संसारवृक्षः ॥
११-७-१७ क्रोधलोभौ निराकृतौ येन सः ॥
११-७-१८ याम्यं योमलोकप्रापकं संसारगहनम् ॥
११-७-१९ अनुतर्षुलं तृष्णाशीलं लक्षीकृत्य
। अनुकर्षणमेनैतद्दुःखं न भवति भारतेति क छ पाठः ॥
११-७-२० दूरपारं ब्रह्मज्ञानम् ॥
११-७-२३ ब्रह्मणः ब्रह्मलोकस्य प्रापका इति शेषः ॥
११-७-७ सप्तमोऽध्यायः ॥

---

स्त्रीपर्व-अध्यय००८

॥ श्रीः ॥

११.८. अध्यायः ८

Mahabharata - Strii Parva - Chapter Topics

व्यासेन धृतराष्ट्रस्य शोकापनोदनम् ॥ १ ॥

Mahabharata - Strii Parva - Chapter Text

११-८-० (६४९७५)
वैशम्पायन उवाच। ११-८-०क्ष् (५३२६)
विदुरस्य तु तद्वाक्यं निशम्य कुरुसत्तमः ।
पुत्रशोकाभिसन्तप्तः पपात भुवि मूर्च्छितः ॥ ११-८-१ (६४९७६)
तं तथा पतितं भूमौ निःसंज्ञं प्रेक्ष्य बान्धवाः ।
कृष्णद्वैपायनश्चैव क्षत्ता च विदुरस्तथा ॥ ११-८-२ (६४९७७)
सञ्जयः सुहृदश्चान्ये द्वास्था ये चास्य सम्मताः ।
जलेन सुखशीतेन तालवृन्तैश्च भारत ॥ ११-८-३ (६४९७८)

पस्पर्शुश्च करैर्गात्रं वीजमानाश्च यत्नतः ।
अन्वासत चिरं कालं धृतराष्ट्रं तथाविधम् ॥ ११-८-४ (६४९७९)
अथ दीर्घस्य कालस्य लब्धसञ्ज्ञो महीपतिः ।
विललाप चिरं कालं पुत्राधिभिरभिप्लुतः ॥ ११-८-५ (६४९८०)
धिगस्तु खलु मानुष्यं मानुष्ये च परिग्रहम् ।
यतोमूलानि दुःखानि सम्भवन्ति पुनःपुनः ॥ ११-८-६ (६४९८१)
मित्रनाशेऽर्थनाशे च ज्ञातिसम्बन्धिनामपि ।
प्राप्यते सुमहद्दुःखं विषाग्निप्रतिमं विभो ॥ ११-८-७ (६४९८२)
येन दह्यन्ति गात्राणि येन प्रज्ञा विनश्यति ।
येनाभिभूतः पुरुषो मरणं प्रतिपद्यते ॥ ११-८-८ (६४९८३)
तदिदं मरणं प्राप्तं मया भाग्यविपर्ययात् ।
श्तस्यान्तं नाधिगच्छामि ऋते प्राणविमोक्षणात्घ ११-८-९ (६४९८४)
तच्चैवाहं करिष्यामि अद्यैव द्विजसत्तम ।
इत्युक्त्वा तु महात्मानं पितरं ब्रह्मवित्तमम् ॥ ११-८-१० (६४९८५)
धृतराष्ट्रोऽभवन्मूढः स शोकं परमं गतः ।
अभूच्च तूष्णीं राजाऽसौ ध्यायमानो महीपतिः ॥ ११-८-११ (६४९८६)
तस्य तद्वचनं श्रुत्वा कृष्णद्वैपायनः प्रभुः ।
पुत्रशोकाभिसन्तप्तं पुत्रं वचनमब्रवीत् ॥ ११-८-१२ (६४९८७)
व्यास उवाच। ११-८-१३क्ष् (५३२७)
धृतराष्ट्र महाबाहो शृणु वक्ष्यामि पुत्रक ।
श्रुतवानसि मेधावी धर्मार्थकुशलः प्रभो ॥ ११-८-१३ (६४९८८)
न तेऽस्त्यविदितं किञ्चिद्वेदितव्यं परन्तप ।
अनित्यतां हि भूतानां विजानासि न संशयः ॥ ११-८-१४ (६४९८९)
अध्रुवे जीवलोके च स्थाने वा शाश्वते सति ।
जीविते मरणान्ते च कस्माच्छोचसि पुत्रक ॥ ११-८-१५ (६४९९०)
प्रत्यक्षं तव राजेन्द्र वैरस्यास्य समुद्भवः ।
पुत्रं ते कारणं कृत्वा कालयोगेन निर्मितः ॥ ११-८-१६ (६४९९१)
अवश्यं भवितव्ये च कुरूणां सङ्क्षये नृप ।
कस्माच्छोचसि ताञ्शूरान्गतान्परमिकां गतिम् ॥ ११-८-१७ (६४९९२)
जानता च महाबाहो विदुरेण महात्मना ।
यतितं सर्वयत्नेन शमं प्रति जनेश्वर ॥ ११-८-१८ (६४९९३)
न च दैवकृतो मार्गः शक्यो भूतेन केनचित् ।
घटताऽपि चिरं कालं नियन्तुमिति मे मतिः ॥ ११-८-१९ (६४९९४)
देवतानां हि यत्कार्यं मया प्रत्यक्षतः श्रुतम् ।
तत्तेऽहं सम्प्रवक्ष्यामि यथा स्थैर्यं भवेत्तव ॥ ११-८-२० (६४९९५)
पुराऽहं परितो यातः सभामैन्द्रीं जितक्लमः ।

अपश्यं तत्र च सदा समवेतान्दिवौकसः ॥११-८-२१ (६४९९६)
नारदप्रमुखांश्चापि सर्वान्देवर्षिसत्तमान् ।
तत्र चापि मया दृष्टा पृथिवी पृथिवीपते ॥११-८-२२ (६४९९७)
कार्यार्थमुपसम्पन्ना देवतानां समीपतः ।
उपगम्य तदा धात्री देवानाह समागतान् ॥११-८-२३ (६४९९८)
यत्कार्यं मम युष्माभिर्ब्रह्मणः सदने तदा ।
प्रतिज्ञातं महाभागास्तच्छीघ्रं संविधीयताम् ॥११-८-२४ (६४९९९)
तस्यास्तद्वचनं श्रुत्वा विष्णुर्लोकनमस्कृतः ।
उवाच वाक्यं प्रहसन्प्रभुस्तां देवसंसदि ॥११-८-२५ (६५०००)
धृतराष्ट्रस्य पुत्राणां यस्तु ज्येष्ठः शतस्य वै ।
दुर्योधन इति ख्यातः स ते कार्यं करिष्यति ॥११-८-२६ (६५००१)
तं च प्राप्य महीपालं कृतकृत्या भविष्यसि ।
तस्यार्थे पृथिवीपालाः कुरुक्षेत्रं समागताः ॥११-८-२७ (६५००२)
अन्योन्यं घातयिष्यन्ति दृढैः शस्त्रैः प्रहारिणः ।
ततस्ते भविता देवि भारस्य युधि नाशनम् ॥११-८-२८ (६५००३)
गच्छ शीघ्रं स्वकं स्थानं लोकान्धारय शोभने ।
स एष ते सुतो राजँल्लोकसंहारकारणात् ॥११-८-२९ (६५००४)
कलेरंशः समुत्पन्नो गान्धार्या जठरे नृप ।
अमर्षी बलवाञ्शूरः क्रोधनो दुष्प्रसाधनः ॥११-८-३० (६५००५)
दैवयोगात्समुत्पन्ना भ्रातरस्तस्य तादृशाः ।
शकुनिर्मातुलश्चैव कर्णश्च परमः सखा ॥११-८-३१ (६५००६)
समुत्पन्ना विनाशार्थं पृथिव्यां सहिता नृपाः ।
श्यादृशो जायते राजा तादृशोऽस्य जनो भवेत् ॥११-८-३२ (६५००७)
अधर्मो धर्मतां याति स्वामी चेद्धार्मिको भवेत् ।
स्वामिनो गुणदोषाभ्यां भृत्याः स्युर्नात्र संशयः ॥११-८-३३ (६५००८)
दुष्टं राजानमासाद्य गतास्ते तनया नृप ॥
एतमर्थं महाबाहो नारदो वेद तत्त्ववित् ॥ ११-८-३४ (६५००९)
आत्मापराधात्पुत्रास्ते विनष्टाः पृथिवीपते ।
मा ताञ्शोचस्व राजेन्द्र न हि शोकेऽस्ति कारणम् ॥११-८-३५ (६५०१०)
न हि ते पाण्डवाः स्वल्पमपराध्यन्ति भारत ।
पुत्रास्तव दुरात्मानो यैरियं घातिता मही ॥११-८-३६ (६५०११)
नारदेन च भद्रं ते पूर्वमेव न संशयः ।
युधिष्ठिरस्य समितौ राजसूये निवेदितम् ॥११-८-३७ (६५०१२)
पाण्डवाः कौरवाः सर्वे समासाद्य परस्परम् ।
नभविष्यन्ति कौन्तेय यत्ते कृत्यं तदाचर ॥११-८-३८ (६५०१३)
नारदस्य वचः श्रुत्वा तथाऽकुर्वत पाण्डवाः ।

एतत्ते सर्वमाख्यातं देवगुह्यं सनातनम् ॥ ११-८-३९ (६५०१४)
कथं ते शोकनाशः स्यात्प्राणेषु च दया प्रभो ।
स्नेहश्च पाण्डुपुत्रेषु ज्ञात्वा दैवकृतं विधिम् ॥ ११-८-४० (६५०१५)
एष चार्थो महाबाहो पूर्वमेव मया श्रुतः ।
कथितो धर्मराजस्य राजसूये कुरूत्तम ॥ ११-८-४१ (६५०१६)
यतितं धर्मपुत्रेण मया गुह्ये निवेदिते ।
अविग्रहे कौरवाणां दैवं तु बलवत्तरम् ॥ ११-८-४२ (६५०१७)
अनतिक्रमणीयो हि विधी राजन्कथञ्चन ।
कृतान्तस्य तु भूतेन स्थावरेण चरेण च ॥ ११-८-४३ (६५०१८)
भवान्धर्मपरो यत्र बुद्धिश्रेष्ठश्च भारत ।
मुह्यते प्राणिनां ज्ञात्वा गतिं चागतिमेव च ॥ ११-८-४४ (६५०१९)
त्वां तु शोकेन सन्तप्तं मुह्यमानं मुहुर्मुहुः ।
ज्ञात्वा युधिष्ठिरो राजा प्राणानपि परित्यजेत् ॥ ११-८-४५ (६५०२०)
कृपालुर्नित्यशो वीरस्तिर्यग्योनिगतेष्वपि ।
स कथं त्वयि राजेन्द्र कृपां नैव करिष्यति ॥ ११-८-४६ (६५०२१)
मम चैव नियोगेन विधेश्चाप्यनिवर्तनाम् ।
पाण्डवानां च कारुण्यात्प्राणान्धारय भारत ॥ ११-८-४७ (६५०२२)
एवं ते वर्तमानस्य लोके कीर्तिर्भविष्यति ।
धर्मार्थः सुमहांस्तात तप्तं स्याच्च तपश्चिरात् ॥ ११-८-४८ (६५०२३)
पुत्रशोकं समुत्पन्नं हुताशं ज्वलितं यथा ।
प्रज्ञाम्भसा महाराज निर्वापय सदा सता ॥ ११-८-४९ (६५०२४)
वैशम्पायन उवाच। ११-८-५०क्ष् (५३२८)
तच्छ्रुत्वा तस्य वचनं व्यासस्यामिततेजसः ।
मुहूर्तं समनुध्यायन्धृतराष्ट्रोऽभ्यभाषत ॥ ११-८-५० (६५०२५)
महता शोकजालेन प्रणुन्नोऽस्मि द्विजोत्तम ।
नात्मानमवबुध्यामि मुह्यमानो मुहुर्मुहुः ॥ ११-८-५१ (६५०२६)
इदं तु वचनं श्रुत्वा तव देवनियोगजम् ।
धारयिष्याम्यहं प्राणान्यतिष्ये च न शोचितुं ॥ ११-८-५२ (६५०२७)
एतच्छ्रुत्वा तु वचनं व्यासः सत्यवतीसुतः ।
धृतराष्ट्रस्य राजेन्द्र तत्रैवान्तरधीयत ॥ ॥ ११-८-५३ (६५०२८)

इति श्रीमन्महाभारते स्त्रीपर्वणि जलप्रदानिकपर्वणि अष्टमोऽध्यायः
॥ ८ ॥

Mahabharata - Strii Parva - Chapter Text

११-८-० (६५०२९)

श्जनमेजय उवाच। ११-८-०क्ष् (५३२९)
गते भगवति व्यासे धृतराष्ट्रो महीपतिः ।
किमचेष्टत विप्रर्षे तन्मे व्याख्यातुमर्हसि ॥ ११-८-१ (६५०३०)
तथैव कौरवो राजा धर्मपुत्रो महामनाः ।
कृपप्रभृतयश्चैव किमकुर्वत ते त्रयः ॥ ११-८-२ (६५०३१)
अश्वत्थाम्नः श्रुतं कर्म शापश्चान्योन्यकारितः ।
वृत्तान्तमुत्तरं ब्रूहि यदभाषत सञ्जयः ॥ ११-८-३ (६५०३२)
वैशम्पायन उवाच। ११-८-४क्ष् (५३३०)
हते दुर्योधने चैव हते सैन्ये च सर्वशः ।
सञ्जयो विगतप्रज्ञो धृतराष्ट्रमुपस्थितः ॥ ११-८-४ (६५०३३)
सञ्जय उवाच। ११-८-५क्ष् (५३३१)
आगम्य नानादेशेभ्यो नानाजनपदेश्वराः ।
पितृलोकं गता राजन्सर्वे तव सुतैः सह ॥ ११-८-५ (६५०३४)
याच्यमानेन सततं तव पुत्रेण भारत ।
घातिता पृथिवी सर्वा वैरस्यान्तं विधित्सता ॥ ११-८-६ (६५०३५)
पुत्राणामथ पौत्राणां पितॄणां च महीपते ।
आनुपूर्व्येण सर्वेषां प्रेतकार्याणि कारय ॥ ११-८-७ (६५०३६)
वैशम्पायन उवाच। ११-८-८क्ष् (५३३२)
तच्छ्रुत्वा वचनं घोरं सञ्जयस्य महीपतिः ।
गतासुरिव निश्चेष्टो न्यपतत्पृथिवीतले ॥ ११-८-८ (६५०३७)
तं शयानमुपागम्य पृथिव्यां पृथिवीपतिम् ।
विदुरः सर्वधर्मज्ञ इदं वचनमब्रवीत् ॥ ११-८-९ (६५०३८)
उत्तिष्ठ राजन्किं शेषे मा शुचो भरतर्षभ ।
एषा वै सर्वसत्वानां लोकेश्वर परा गतिः ॥ ११-८-१० (६५०३९)
अभावादीनि भूतानि भावमध्यानि भारत ।
अभावनिधनान्येव तत्र का परिदेवना ॥ ११-८-११ (६५०४०)
न शोचन्मृतमन्वेति न शोचन्म्रियते नरः ।
एवं सांसिद्धिके लोके किमर्थमनुशोचसि ॥ ११-८-१२ (६५०४१)
अयुध्यमानो म्रियते युध्यमानस्तु जीवति ।
कालं प्राप्य महाराज न कश्चिदतिवर्तते ॥ ११-८-१३ (६५०४२)
कालः कर्षति भूतानि सर्वाणि विविधानि च ।
न कालस्य प्रियः कश्चिन्न द्वेष्यः कुरुसत्तम ॥ ११-८-१४ (६५०४३)
यथा वायुस्तृणाग्राणि संवर्तपति सर्वतः ।
तथा कालवशं यान्ति भूतानि भरतर्षभ ॥ ११-८-१५ (६५०४४)
एकसार्थप्रयातानां सर्वेषां तत्र गामिनाम् ।
यस्य कालः प्रयात्यग्रे तत्र का परिदेवना ॥ ११-८-१६ (६५०४५)

यांश्चापि निहतान्युद्धे राजंस्त्वमनुशोचसि ।
न शोच्या हि माहत्मानः सर्वे ते त्रिदिवं गताः ॥ ११-८-१७ (६५०४६)
न यज्ञैर्दक्षिणावद्भिर्न तपोभिर्न विद्यया ।
तथा स्वर्गमुपायान्ति यथा शूरास्तनुत्यजः ॥ ११-८-१८ (६५०४७)
सर्वे वेदविदः शूराः सर्वे सुचरितव्रताः ।
सर्वे चाभिमुखाः क्षीणास्तत्र का परिदेवना ॥ ११-८-१९ (६५०४८)
शरीराग्निषु शूराणां जुहुवुस्ते शराहुतीः ।
हूयमानाञ्शरांश्चैव सेहुरुत्तमपूरषाः ॥ ११-८-२० (६५०४९)
एवं राजंस्तवाचक्षे स्वर्ग्यं पन्थानमुत्तमम् ।
न युद्धादधिकं किञ्चित्क्षत्रियस्येह विद्यते ॥ ११-८-२१ (६५०५०)
क्षत्रियास्ते महात्मानः शूराः समितिशोभनाः ।
आशिषं परमां प्राप्ता न शोच्याः सर्व एव हि ॥ ११-८-२२ (६५०५१)
आत्मनाऽऽत्मानमाश्वास्य मा शुचः पुरुषर्षभ ।
नाद्य शोकाभिभूतस्त्वं कार्यमुत्स्नष्टुमर्हसि ॥ ॥ ११-८-२३ (६५०५२)

इति श्रीमन्महाभारते स्त्रीपर्वणि जलप्रदानिकपर्वणि अध्यायः ॥
Mahabharata - Strii Parva - Chapter Footnotes

११-८-२९ कालः संहारकारणादिति क छ ट पाठः ॥
११-८-३७ नारदेन समाख्यातमिति क छ ट पाठः ॥
११-८-३९ तदाऽशोचन्त पाण्डवा इति झ पाठः ॥
११-८-४८ धर्मश्च सुमहास्तात तप्तस्य तपसश्चिरादिति
क छ ट पाठः ॥
११-८-८ अष्टमोऽध्यायः ॥

---

स्त्रीपर्व-अध्यय००९
॥ श्रीः ॥
११.९. अध्यायः ९

Mahabharata - Strii Parva - Chapter Topics
धृतराष्ट्रेण गान्धरीप्रभृतिभिः स्त्रीभिः सह मृतजनावलोकनाय
रणाङ्कणम्प्रति प्रयाणम् ॥ १ ॥

Mahabharata - Strii Parva - Chapter Text

११-९-० (६५०५३)

ग्जनमेजय उवाच। ११-९-०क्ष् (५३३३)
गते व्यासे तु धर्मात्मा धृतराष्ट्रो महीपतिः ।
किमचेष्टत विप्रर्षे तन्मे व्याख्यातुमर्हसि ॥ ११-९-१ (६५०५४)
वैशम्पायन उवाच। ११-९-२क्ष् (५३३४)
एतच्छ्रुत्वा नरश्रेष्ठश्चिरं ध्यात्वा त्वचेतनः ।
सञ्जयं योजयेत्युक्त्वा विदुरं प्रत्यभाषत ॥ ११-९-२ (६५०५५)
क्षिप्रमानय गान्धारीं सर्वाश्च भरतस्त्रियः ।
कुन्तीं चैव तथा क्षत्तः समानय ममाऽन्तिकम्'॥ ११-९-३ (६५०५६)
एवमुक्त्वा स धर्मात्मा विदुरं धर्मवित्तमम् ।
शोकविप्रहतज्ञानो यानमेवान्वरोहत ॥ ११-९-४ (६५०५७)
गान्धारी पुत्रशोकार्ता भर्तुर्वचननोदिता ।
सह कुन्त्या यतो राजा सह स्त्रीभिरुपाद्रवत् ॥ ११-९-५ (६५०५८)
ताः समासाद्य राजानं भृशं शोकसमन्विताः ।
आमन्त्र्यान्योन्यमायस्ता भृशमुच्चुक्रुशुस्ततः ॥ ११-९-६ (६५०५९)
ताः समाश्वासयत्क्षत्ता ताभ्यश्चार्ततरः स्वयम् ।
अश्रुकण्ठीः समारोप्य ततोऽसौ निर्ययौ पुरात् ॥ ११-९-७ (६५०६०)
ततः प्रणादः सञ्जज्ञे सर्वेषु कुरुवेश्मसु ।
आकुमारं पुरं सर्वमभवच्छोककर्शितम् ॥ ११-९-८ (६५०६१)
अदृष्टपूर्वा या नार्यः पुरा देवगणैरपि ।
पृथग्जनेन दृश्यन्ते तास्तदा निहतेश्वराः ॥ ११-९-९ (६५०६२)
प्रकीर्य केशान्सुशुभान्भूषणान्यवमुच्य च ।
एकवस्त्रधरा नार्यः परिपेतुरनाथवत् ॥ ११-९-१० (६५०६३)
श्वेतपर्वतरूपेभ्यो गृहेभ्यस्ता निराक्रमन् ।
गुहाभ्य इव शैलानां पृषत्यो हतयूथपाः ॥ ११-९-११ (६५०६४)
तान्युदीर्णानि नारीणां तदा वृन्दान्यनेकशः ।
शोकार्तान्यद्रवन्राजन्किशोरीणामिवाङ्गणे ॥ ११-९-१२ (६५०६५)
प्रगृह्य बाहून्क्रोशन्त्यः पुत्रान्भ्रातॄन्पितॄनपि ।
दर्शयन्ति हता हि स्म युगान्ते लोकसङ्क्षयम् ॥ ११-९-१३ (६५०६६)
विलपन्त्यो रुदन्त्यश्च धावमानास्ततस्ततः ।
शोकेनोपहतज्ञाताः कर्तव्यं न प्रजज्ञिरे ॥ ११-९-१४ (६५०६७)
व्रीडां जग्मुः पुरा याः स्म सखीनामपि योषितः ।
ता एकवस्त्रा निर्लज्जाः श्वश्रूणां पुरतोऽभवन् ॥ ११-९-१५ (६५०६८)
परस्परं सुसूक्ष्मेषु शोकेष्वाश्वासयन्ति याः ।
ताः शोकविह्वला राजन्नवैक्षन्त परस्परम् ॥ ११-९-१६ (६५०६९)
ताभिः परिवृतो राजा रुदतीभिः सहस्रशः ।
निर्ययौ नगराद्दीनस्तूर्णमायोधनं प्रति ॥ ११-९-१७ (६५०७०)

शिल्पिनो वणिजो वैश्याः सर्वे कर्मोपजीविनः ।
ते पार्थिवं पुरस्कृत्य निर्ययुर्नगराद्बहिः ॥ ११-९-१८ (६५०७१)
तेषां विक्रोशमानानामार्तानां कुरुसङ्क्षये ।
प्रादुरासीन्महाञ्शब्दो व्यथयन्भुवनान्युत ॥ ११-९-१९ (६५०७२)
युगान्तकाले सम्प्राप्ते भूतानां दह्यतामिव ।
अभावस्योदयः प्राप्त इति भूतानि मेनिरे ॥ ११-९-२० (६५०७३)
भृशमुद्विग्नमनसस्ते पौराः कुरुसङ्क्षये ।
प्राक्रोशन्त महाराज स्वनुरक्तास्तदा भृशम् ॥ ॥ ११-९-२१ (६५०७४)

इति श्रीमन्महाभारते स्त्रीपर्वणि जलप्रदानिकपर्वणि नवमोऽध्यायः ॥ ९ ॥
Mahabharata - Strii Parva - Chapter Text

११-९-० (६५०७५)
वैशम्पायन उवाच। ११-९-०क्ष् (५३३५)
विदुरस्य तु तद्वाक्यं श्रुत्वा तु पुरुषर्षभः ।
युज्यतां यानमित्युक्त्वा पुनर्वचनमब्रवीत् ॥ ११-९-१ (६५०७६)
धृतराष्ट्र उवाच। ११-९-२क्ष् (५३३६)
११-९-२ (६५०७७)
शीघ्रमानय गान्धारीं सर्वाश्च भरतस्त्रियः ।
वधूं कुन्तीमुपादाय याश्चान्यास्तत्र योषितः ॥
Mahabharata - Strii Parva - Chapter Footnotes

११-९-४ विगता प्रज्ञा व्यासदत्तं दिव्यज्ञानं यस्य स विगतप्रज्ञः ॥
११-९-७ समारोप्य वाहनेष्विति शेषः ॥
११-९-११ शोकस्यातिगाढत्वात्पुनर्विदुरेणोक्तं अभावदीनीत्यादि ॥
११-९-१५ संवर्तयति वर्तुलयति कम्पयति वा ॥
११-९-२१ आचक्षे कथयामि ॥
११-९-२३ कार्यं अवश्यकर्तव्यमुदकदानादि ॥
११-९-११ पृषत्यश्चित्रहरिण्यः ॥
११-९-१२ अङ्गमे नृत्यशिक्षाभूमौ ॥
११-९-९ नवमोऽध्यायः ॥

---

स्त्रीपर्व-अध्यय०१०
॥ श्रीः ॥
११.१०. अध्यायः १०

Mahabharata - Strii Parva - Chapter Topics
मृतबन्धुदिदृक्षया समरभूमिं गच्छतो धृतराष्ट्रस्य
मध्येमार्गं कृपकृतवर्मद्रौणिभिः समागमः ॥ १ ॥
तेषां त्रयाणां धृतराष्ट्राश्वासनपूर्वकंस्वाभिमतदेशगमनम् ॥ २ ॥

Mahabharata - Strii Parva - Chapter Text

११-१०-० (६५०७८)
वैशम्पायन उवाच। ११-१०-०क्ष् (५३३७)
क्रोशमात्रं ततो गत्वा ददृशुस्तान्महारथान् ।
शारद्वतं कृपं द्रौणिं कृतवर्माणमेव च ॥ ११-१०-१ (६५०७९)
ते तु दृष्ट्वैव राजानं प्रज्ञाचक्षुषमीश्वरम् ।
अश्रुकण्ठा विनिःश्वस्य रुदन्तमिदमब्रुवन् ॥ ११-१०-२ (६५०८०)
पुत्रस्तव महाराज कृत्वा कर्म सुदुष्करम् ।
गतः सानुचरो राजञ्शक्रलोकं महीपते ॥ ११-१०-३ (६५०८१)
दुर्योधनबलान्मुक्ता वयमेव त्रयो रथाः ।
सर्वमन्यत्परिक्षीणं सैन्यं ते भरतर्षभ ॥ ११-१०-४ (६५०८२)
इत्येवमुक्त्वा राजानं कृपः शारद्वतस्ततः ।
गान्धारीं पुत्रशोकार्तामिदं वचनमब्रवीत् ॥ ११-१०-५ (६५०८३)
अभीता युध्यमानास्ते घ्नन्तः शत्रुगणान्बहून् ।
वीरकर्माणि कुर्वाणाः पुत्रास्ते निधनं गताः ॥ ११-१०-६ (६५०८४)
ध्रुवं सम्प्राप्य लोकांस्ते निर्मलाञ्शस्त्रनिर्जितान् ।
भास्वरं देहमास्थाय विहरन्त्यमरा इव ॥ ११-१०-७ (६५०८५)
सर्वे ह्यभिमुखा राज्ञि युध्यमाना हता युधि ।
न हि कश्चिद्धि शूराणां युध्यमानः पराङ्मुखः ।
शस्त्रेण निधनं प्राप्तो न च कश्चित्कृताञ्जलिः ॥ ११-१०-८ (६५०८६)
एतां तां क्षत्रियस्याहुः पुराणाः परमां गतिम् ।
शस्त्रेण निधनं सङ्ख्ये तान्न शोचितुमर्हसि ॥ ११-१०-९ (६५०८७)
न चापि शत्रवस्तेषां मुच्यन्ते राज्ञि पाण्डवाः ।
शृणु यत्कृतमस्माभिरश्वत्थामपुरोगमैः ॥ ११-१०-१० (६५०८८)
अधर्मेण हतं श्रुत्वा भीमसेनेन ते सुतम् ।
सुप्तं शिबिरमासाद्य पाण्डूनां कदनं कृतम् ॥ ११-१०-११ (६५०८९)
पाञ्चाला निहताः सर्वे धृष्टद्युम्नपुरोगमाः ।
द्रुपदस्यात्मजाश्चैव द्रौपदेयाश्च पातिताः ॥ ११-१०-१२ (६५०९०)
तथा विशसनं कृत्वा पुत्रशत्रुगणस्य ते ।
प्राद्रवाम रणे स्थातुं न हि शक्ष्यामहे त्रयः ॥ ११-१०-१३ (६५०९१)

ते हि शूरा महेष्वासाः क्षिप्रमेष्यन्ति पाण्डवाः ।
अमर्षवशमापन्ना वैरं प्रतिजिहीर्षवः ॥ ११-१०-१४ (६५०९२)
ते हतानात्मजाञ्श्रुत्वा प्रमत्ताः पुरुषर्षभाः ।
अन्विष्यन्तः पदं शूराः क्षिप्रमेष्यन्ति पाण्डवाः ॥ ११-१०-१५ (६५०९३)
तेषां तु किल्बिषं कृत्वा संस्थातुं नोत्सहामहे ।
अनुजानीहि नो राज्ञि मा च शोके मनः कृथाः ॥ ११-१०-१६ (६५०९४)
राजंस्त्वमनुजानीहि धैर्यमातिष्ठ चोत्तमम् ।
दिष्टान्तं पश्य चापि त्वं क्षात्रं धर्मं च केवलम् ॥ ११-१०-१७ (६५०९५)
इत्येवमुक्त्वा राजानं कृत्वा चाभिप्रदक्षिणम् ।
कृपश्च कृतवर्मा च द्रोमपुत्रश्च भारत ॥ ११-१०-१८ (६५०९६)
अवेक्षमाणा राजानं धृतराष्ट्रं मनीषिणम् ।
गङ्गामनु महाराज तूर्णमश्वानचोदयन् ॥ ११-१०-१९ (६५०९७)
अपक्रम्य तु ते राजन्सर्व एव महारथाः ।
आमन्त्र्यान्योन्यमुद्विग्नास्त्रिधा ते प्रययुस्तदा ॥ ११-१०-२० (६५०९८)
जगाम हास्तिनपुरं कृपः शारद्वतस्तदा ।
स्वमेव राष्ट्रं हार्दिक्यो द्रौणिर्व्यासाश्रमं ययौ ॥ ११-१०-२१ (६५०९९)
एवं ते प्रययुर्वीरा वीक्षमाणाः परस्परम् ।
भयार्ताः पाण्डुपुत्राणामागस्कृत्वा महात्मनाम् ॥ ११-१०-२२ (६५१००)
समेत्य वीरा राजानं तदा त्वनुदिते रषौ ।
विप्रजग्मुर्महात्मानो यथेष्टकमरिन्दमाः ॥ ११-१०-२३ (६५१०१)
श्समासाद्याथ वै द्रौणिं पाण्डुपुत्रा महारथाः ।
व्यजयंस्ते रणे राजन्विक्रम्य तदनन्तरम् ॥ज ॥ ११-१०-२४ (६५१०२)

इति श्रीमन्महाभारते स्त्रीपर्वणि जलप्रदानिकपर्वणि दशमोऽध्यायः
॥ १० ॥
Mahabharata - Strii Parva - Chapter Footnotes

११-१०-१४ वैरं प्रतिचिकीर्षव इति क पाठः ॥
११-१०-१७ दिष्टान्तं मरणम् ॥
११-१०-२४ तदनन्तरं कृपाचार्यकृतवर्मभ्यां वियोगानन्तरम् ॥
११-१०-१० दशमोऽध्यायः ॥

---

स्त्रीपर्व-अध्याय०११
॥ श्रीः ॥
११.११. अध्यायः ११

Mahabharata - Strii Parva - Chapter Topics
युधिष्ठिरेण कृष्णादिभिः सह धृतराष्ट्रसमीपमेत्याभिवादनम् ॥ १ ॥
धृतराष्ट्रेण युधिष्ठिरं मृदुलमालिङ्ग्य पश्चाद्भावज्ञेन
कृष्णेन पुरतः स्थापितलोहभीमस्य दृढालिङ्गनेन भञ्जनम्
॥ २ ॥

Mahabharata - Strii Parva - Chapter Text

११-११-० (६५१०३)
वैशम्पायन उवाच। ११-११-०क्ष् (५३३८)
हतेषु सर्वसैन्येषु धर्मराजो युधिष्ठिरः ।
शुश्रुवे पितरं वृद्धं निर्यान्तं गजसाह्वयात् ॥ ११-११-१ (६५१०४)
सोऽभ्ययात्पुत्रशोकार्तं पुत्रशोकपरिप्लुतः ।
शोचमानो महाराज भ्रातृभिः सहितस्तदा ॥ ११-११-२ (६५१०५)
अन्वीयमानो वीरेण दाशार्हेण महात्मना ।
युयुधानेन च तथा तथैव च युयुत्सुना ॥ ११-११-३ (६५१०६)
तमन्वगात्सुदुःखार्ता द्रौपदीशोककर्शिता ।
सह पाञ्चालयोषिद्भिर्यास्तत्रासन्समागताः ॥ ११-११-४ (६५१०७)
सङ्ग्राममनु बृन्दानि स्त्रीणां भरतसत्तम् ।
कुररीणामिवार्तानां क्रोशन्तीनां ददर्श ह ॥ ११-११-५ (६५१०८)
ताभिः परिवृतो राजा क्रोशन्तीभिः सहस्रशः ।
ऊर्ध्वबाहुभिरार्ताभी रुदतीभिः प्रियाप्रियैः ॥ ११-११-६ (६५१०९)
क नु धर्मज्ञता राज्ञः क्व नु साद्यानृशंसता ।
यच्चावधीत्पितॄन्भ्रातॄन्गुरुपुत्रान्सखीनपि ॥ ११-११-७ (६५११०)
घातयित्वा कथं द्रोणं भीष्मं चापि पितामहम् ।
मनस्तेऽभून्महाबाहो हत्वा चापि जयद्रथम् ॥ ११-११-८ (६५१११)
किं नु राज्येन ते कार्यं पितॄन्भ्रातॄनपश्यतः ।
अभिमन्युं च दुर्धर्षं द्रौपदेयांश्च भारत ॥ ११-११-९ (६५११२)
वैशम्पायन उवाच। ११-११-१०क्ष् (५३३९)
अतीत्य ता महाबाहुः क्रोशन्तीः कुररीरिव ।
ववन्दे पितरं ज्येष्ठं धर्मराजो युधिष्ठिरः ॥ ११-११-१० (६५११३)
ततोऽभिवाद्य पितरं क्रमेणामित्रकर्शनाः ।
न्यवेदयन्त नामानि पाण्डवास्तेऽपि सर्वशः ॥ ११-११-११ (६५११४)
तमात्मजान्तकरणं पिता पुत्रवधार्दितः ।
अप्रीयमाणः शोकार्तः पाण्डवं परिषस्वजे ॥ ११-११-१२ (६५११५)
धर्मराजं परिष्वज्य सान्त्वयित्वा च भारत ।

दुष्टात्मा भीममन्वैच्छद्दिधक्षुरिव पावकः ॥ ११-११-१३ (६५११६)
स कोपपावकस्तस्य शोकवायुसमीरितः ।
भीमसेनमयं दावं दिधक्षुरिव दृश्यते ॥ ११-११-१४ (६५११७)
तस्य संकल्पमाज्ञाय भीमं प्रत्यशुभं हरिः ।
भीममाक्षिप्य पाणिभ्यां प्रददौ भीममायसम् ॥ ११-११-१५ (६५११८)
प्रागेव तु महाबुद्धिर्बुद्ध्वा तस्येङ्गितं हरिः ।
संविधानं महाप्राज्ञस्तत्र चक्रे जनार्दनः ॥ ११-११-१६ (६५११९)
उपगुह्यैव पाणिभ्यां भीमसेनमयस्मयम् ।
बभञ्ज बलवान्राजा मन्यमानो वृकोदरम् ॥ ११-११-१७ (६५१२०)
नागायुतसमप्राणः स राजा भीममायसम् ।
भङ्क्तत्वा विमथितोरस्कः सुस्राव रुधिरं मुखात् ॥ ११-११-१८ (६५१२१)
ततः पपात मेदिन्यां तथैव रुधिरोक्षितः ।
प्रपुष्पिताग्रशिखरः पारिजात इव द्रुमः ॥ ११-११-१९ (६५१२२)
प्रत्यगृह्णाच्च तं विद्वान्सूतो गावल्गणिस्तदा ।
मैवमित्यब्रवीच्चैनं शमयन्सान्त्वयन्निव ॥ ११-११-२० (६५१२३)
हतो भीम इति ज्ञात्वा गतमन्युर्महामनाः ।
हाहाभीमेति चुक्रोश नृपः शोकसमन्वितः ॥ ११-११-२१ (६५१२४)
तं विदित्वा गतक्रोधं भीमसेनवधार्दितम् ।
वासुदेवो वरः पुंसामिदं वचनमब्रवीत् ॥ ११-११-२२ (६५१२५)
मा शुचो धृतराष्ट्र त्वं नैव भीमस्त्वया हतः ।
आयसी प्रतिमा ह्येषा त्वया निष्पातिता विभो ॥ ११-११-२३ (६५१२६)
त्वां क्रोधवशमापन्नं विदित्वा भरतर्षभ ।
मयाऽपकृष्टः कौन्तेयो मृत्योर्दंष्ट्रान्तरं गतः ॥ ११-११-२४ (६५१२७)
न हि ते राजशार्दूल बले तुल्योऽस्ति कश्चन ।
कः सहेत महाबाहो बाह्वोर्विग्रहणं नरः ॥ ११-११-२५ (६५१२८)
यथान्तकमनुप्राप्य जीवन्कश्चिन्न मुच्यते ।
एवं बाह्वन्तरं प्राप्य तव जीवेन्न कश्चन ॥ ११-११-२६ (६५१२९)
तस्मात्पुत्रेण या तेऽसौ प्रतिमा कारिताऽऽयसी ।
भीमस्य सेयं कौरव्य तवैवोपहृता मया ॥ ११-११-२७ (६५१३०)
पुत्रशोकाभिसन्तप्तं धर्मादपकृतं मनः ।
तव राजेन्द्र तेन त्वं भीमसेनं जिघांससि ॥ ११-११-२८ (६५१३१)
न त्वेतत्ते क्षमं राजन्हन्यास्त्वं यद्वृकोदरम् ।
न हि पुत्रा महाराज जीवेयुस्ते कथञ्चन ॥ ११-११-२९ (६५१३२)
तस्माद्यत्कृतमस्माभिर्मन्यमानैः शमं प्रति ।
अनुमन्यस्व तत्सर्वं मा च शोके मनः कृथाः ॥ ॥ ११-११-३० (६५१३३)

इति श्रीमन्महाभारते स्त्रीपर्वणि जलप्रदानिकपर्वणि एकादशोऽध्यायः
॥ ११ ॥
Mahabharata - Strii Parva - Chapter Footnotes

११-११-५ स गङ्गामन्विति झ पाठः ॥
११-११-६ प्रियाप्रियैः पाण्डवानां प्रियाः अभिमन्युप्रभृतयः अप्रियाः दुर्योधनादयः तैर्हेतुभिः क्रोशन्तीभिरिति सम्बन्धः ॥
११-११-१५ आक्षिप्य निवार्य ।आयसं लोहमयम् ॥
११-११-२१ स तु कोपं समुत्सृज्येति झ पाठः ॥
११-११-२८ पुत्रेति धर्मादपकृतमालिङ्गनच्छलेन भीमवधः कर्तव्य इत्याशया ॥
११-११-११ एकादशोऽध्यायः ॥

---

स्त्रीपर्व-अध्यय०१२
॥ श्रीः ॥
११.१२. अध्यायः १२

Mahabharata - Strii Parva - Chapter Topics
कृष्णवाक्याद्गतमन्युना धृतराष्ट्रेण भीमादीनामालिङ्गनम् ॥ १ ॥

Mahabharata - Strii Parva - Chapter Text

११-१२-० (६५१३४)
वैशम्पायन उवाच। ११-१२-०क्ष् (५३४०)
तत एनमुपातिष्ठञ्शौचार्थं परिचारकाः ।
कृतशौचं पुनश्चैनं ओवाच मधुसूदनः ॥ ११-१२-१ (६५१३५)
राजन्नधीता वेदास्ते शास्त्राणि विविधानि च ।
श्रुतानि च पुराणानि राजधर्माश्च केवलाः ॥ ११-१२-२ (६५१३६)
एवं विद्वान्महाप्राज्ञः समर्थः सन्बलाबले ।
आत्मापराधात्कस्मात्त्वं कुरुषे कोपमीदृशम् ॥ ११-१२-३ (६५१३७)
उक्तवांस्त्वां तदैवाहं भीष्मद्रोणौ च भारत ।
विदुरः सञ्जयश्चैव वाक्यं राजन्न तत्कृथाः ॥ ११-१२-४ (६५१३८)
स वार्यमाणो नास्माकमकार्षीर्वचनं तदा ।
पाण्डवानधिकाञ्चानन्बले शौर्ये च कौरव ॥ ११-१२-५ (६५१३९)
राजा हि यः स्थिरप्रज्ञः स्वयं दोषानवेक्षते ।
देशकालविभागं च परं श्रेयः स विन्दति ॥ ११-१२-६ (६५१४०)

उच्यमानस्तु यः श्रेयो गृह्णीते नो हिताहिते ।
आपदः समनुप्राप्य सोऽभ्येति विलयं किल ॥ ११-१२-७ (६५१४१)
ततोऽन्यवृत्तमात्मानं समवेक्षस्व भारत ।
राजंस्त्वं ह्यविधेयात्मा दुर्योधनवशे स्थितः ॥ ११-१२-८ (६५१४२)
आत्मापराधादापन्नस्तत्किं भीमं जिघांससि ।
तस्मात्संयच्छ कोपं त्वं स्वमनुस्मृत्य दुष्कृतम् ॥ ११-१२-९ (६५१४३)
यस्तु तां स्पर्धया क्षुद्रः पाञ्चालीमानयत्समाम् ।
स हतो भीमसेनेन वैरं प्रतिजिहीर्षता ॥ ११-१२-१० (६५१४४)
आत्मनोऽतिक्रमं पश्य पुंत्रस्य च दुरात्मनः ।
यदनागसि पाण्डूनां परित्यागस्त्वया कृतः ॥ ११-१२-११ (६५१४५)
वैशम्पायन उवाच। ११-१२-१२क्ष् (५३४१)
एवमुक्तः स कृष्णेन सर्वं सत्यं जनाधिप ।
उवाच देवकीपुत्रं धृतराष्ट्रो महीपतिः ॥ ११-१२-१२ (६५१४६)
एवमेतन्महाबाहो यथा वदसि माधव ।
पुत्रस्नेहस्तु बलवान्धर्मान्मां समचालयत् ॥ ११-१२-१३ (६५१४७)
दिष्ट्या तु पुरुषव्याघ्रो बलवान्सत्यक्त्रिमः ।
त्वद्गुप्तो नागमत्कृष्ण भीमो बाह्वन्तरं मम ॥ ११-१२-१४ (६५१४८)
इदानीं त्वहमव्यग्रो गतमन्युर्गतज्वरः ।
मध्यमं पाण्डवं वीरं स्पष्टुमिच्छामि माधव ॥ ११-१२-१५ (६५१४९)
हतेषु पारथिवेन्द्रेषु पुत्रेषु निहतेषु च ।
पाण्डुपुत्रेषु मे धर्मः प्रीतिश्चाप्यवतिष्ठते ॥ ११-१२-१६ (६५१५०)
ततः स भीमं च धनञ्जयं च
माद्र्याश्च पुत्रौ पुरुषप्रवीरौ ।
पस्पर्श गात्रैः प्ररुदन्सुगात्रा--
नाश्वास्य कल्याणमुवाच चैनान् ॥ ॥ ११-१२-१७ (६५१५१)

इति श्रीमन्महाभारते स्त्रीपर्वणि जलप्रदानिकपर्वणि द्वादशोऽध्यायः
॥ १२ ॥

Mahabharata - Strii Parva - Chapter Footnotes

११-१२-४ न तत्कृथाः ततन्न कृतवानरी । अडभाव आर्षः ॥
११-१२-७ श्रेयो हिताहिते उच्यमानो न गृहीत इत्यन्वयः ॥
११-१२-१० वैरं प्रतिचिकीर्षतेति क पाठः ॥
११-१२-११ अनागसि अपराधाभावे । परित्यागो राज्याप्रदानेन तिरस्कारः ॥
११-१२-१२ द्वादशोऽध्यायः ॥

स्त्रीपर्व-अध्यय०१३
॥ श्रीः ॥
११.१३. अध्यायः १३

Mahabharata - Strii Parva - Chapter Topics
कृष्णयुधिष्ठिरादिभिर्गान्धारीसमीपगमनम् ॥ १ ॥
गान्धारीं युधिष्ठिरंशप्तुकामां विज्ञाय पूर्वमेवागतेन व्यासेन
गान्धार्याः कोपापनोदनम् ॥ २ ॥

Mahabharata - Strii Parva - Chapter Text

११-१३-० (६५१५२)
वैशम्पायन उवाच। ११-१३-०क्ष् (५३४२)
धृतराष्ट्राभ्यनुज्ञातास्ततस्ते कुरुपुङ्गवाः ।
अभ्ययुर्भ्रातरः सर्वे गान्धारीं सहकेशवाः ॥ ११-१३-१ (६५१५३)
ततो ज्ञात्वा हतामित्रं धर्मराजं युधिष्ठिरम् ।
गान्धारी पुत्रशोकार्ता शप्तुमैच्छदनिन्दिता ॥ ११-१३-२ (६५१५४)
तस्याः पापमभिप्रायं विदित्वा पाण्डवान्प्रति ।
ऋषिर्गन्धवतीपुत्रः प्रागेव समबुध्यत ॥ ११-१३-३ (६५१५५)
स गङ्गायामुपस्पृश्य ब्रह्मर्षिः प्रयतः शुचिः ।
तं देशमुपसंपेदे पाराशर्यो मनोजवः ॥ ११-१३-४ (६५१५६)
दिव्येन चक्षुषा ज्ञात्वा मनसाऽनुद्धतेन च ।
सर्वप्राणभृतां भावं सततं स तु बृध्यति ॥ ११-१३-५ (६५१५७)
स स्नुषामब्रवीत्काले कल्याणानि महातपाः ।
शापकालमवाक्षिप्य शमकालमुदीरयन् ॥ ११-१३-६ (६५१५८)
न कोपः पाण्डवे कार्यो गान्धारि शममाप्नुहि ।
रजो निगृह्यतां चैव शृणु चेदं वचो मम ॥ ११-१३-७ (६५१५९)
पुरोक्ता युद्धकाले त्वं पुत्रेण जयमिच्छता ।
जयमाशास्व मे मातर्युध्यमानस्य शत्रुभिः ॥ ११-१३-८ (६५१६०)
सा तथा याच्यमाना त्वं युद्धकाले जयैषिणा ।
उक्तवत्यसि कल्याणि यतो धर्मस्ततो जयः ॥ ११-१३-९ (६५१६१)
वाचाऽप्यतीते मा क्रोधे मनः कुरु यशस्विनि ।
स्मरामि भाषमाणां हि त्वामहं सत्यवादिनीम् ॥ ११-१३-१० (६५१६२)
विग्रहे तुमुले राज्ञां गत्वा परमसंशयम् ।
जितं पाण्डुसुतैर्युद्धे नूनं धर्मस्ततोऽधिकः ॥ ११-१३-११ (६५१६३)
क्षमाशीला पुरा भूत्वा साऽद्य न क्षमसे कथम् ।

अधर्मे जहि धर्मज्ञे यतो धर्मस्ततो जयः ॥ ११-१३-१२ (६५१६४)
सा त्वं धर्मं परिस्मृत्य वाचं चोक्तां मनस्विनी ।
कोपं संयच्छ गान्धारि पाण्डवेषु सुतेषु ते ॥ ११-१३-१३ (६५१६५)
गान्धार्युवाच। ११-१३-१४क्ष् (५३४३)
भगवन्नाभ्यसूयामि नैतानिच्छामि नश्यतः ।
पुत्रशोकेन तु बलान्मनो विह्वलतीव मे ॥ ११-१३-१४ (६५१६६)
यथैव कुन्त्या कौन्तेया रक्षितव्यास्तथा मया ।
तथैव धृतराष्ट्रेण रक्षितव्या यथा त्वया ॥ ११-१३-१५ (६५१६७)
दुःशासनापराधेन शकुनेः सौबलस्य च ।
कर्णदुर्योधनाभ्यां च कृतोऽयं कुरुसंक्षयः ॥ ११-१३-१६ (६५१६८)
नापराध्यति बीभत्सुर्न च पार्थो वृकोदरः ।
नकुलः सदेवश्च नैव राजा युधिष्ठिरः ॥ ११-१३-१७ (६५१६९)
युध्यमाना हि कौरव्याः कृतमामाः परस्परम् ।
निहताः सहिताश्चान्यैस्तत्र नास्त्यप्रियं मम ॥ ११-१३-१८ (६५१७०)
किं तु कर्माकरोद्भीमो वासुदेवस्य पश्यतः ।
दुर्योधनं समाहूय गदायुद्धे महामनाः ॥ ११-१३-१९ (६५१७१)
शिक्षयाऽभ्यधिकं ज्ञात्वा चरन्तं बहुधा रणे ।
अधो नाभ्याः प्रहृतवांस्तन्मे कोपमवर्धयत् ॥ ११-१३-२० (६५१७२)
कथं नु धर्मं धर्मज्ञाः समुद्दिष्टं महात्मभिः ।
त्यजेयुराहवे शूराः प्राणहेतोः कथञ्चनः ॥ ॥ ११-१३-२१ (६५१७३)

इति श्रीमन्महाभारते स्त्रीपर्वणि जलप्रदानिकपर्वणि
त्रयोदशोऽध्यायः ॥ १३ ॥

Mahabharata - Strii Parva - Chapter Footnotes

११-१३-१० न चाप्यतीतां गान्धारि वाचं ते वितथामहम्
। स्मरामितोषमाणायास्तथा प्रणिहिता ह्यसि इति झ पाठे अस्य एनं
दुर्योधनं तोषमाणाया आशीर्वचनेन तोषयन्त्यास्ते तव तां तां वाचं
वितथां न स्मरामीत्यन्वयः ॥
११-१३-१३ सा त्वं धर्मं परित्यज्य वाचा चोक्त्वा मनस्विनि । इचि
छ ट पाठः ॥
११-१३-१८ कृतमानाः कृताहकाराः ॥
११-१३-१३ त्रयोदशोऽध्यायः ॥

---

स्त्रीपर्व-अध्यय०१४
॥ श्रीः ॥

## ११.१४. अध्यायः १४

Mahabharata - Strii Parva - Chapter Topics
भीमगान्धारीसंवादः ॥ १ ॥

Mahabharata - Strii Parva - Chapter Text

११-१४-० (६५१७४)
वैशम्पायन उवाच। ११-१४-०क्ष् (५३४४)
तच्छ्रुत्वा वचनं तस्या भीमसेनोऽथ भीतवत् ।
गान्धारीं प्रत्युवाचेदं वचः सानुनयं तदा ॥ ११-१४-१ (६५१७५)
अधर्मो यदि वा धर्मस्त्रासात्तत्र मया कृतः ।
आत्मानं त्रातुकामेन तन्मे त्वं क्षन्तुमर्हसि ॥ ११-१४-२ (६५१७६)
न हि युद्धेन पुत्रस्ते धर्मेण स महाबलः ।
दुःशक्यः केनचिद्धर्तुमतो विषममाचरम् ॥ ११-१४-३ (६५१७७)
अधर्मेण जितः पूर्वं तेन चापि युधिष्ठिरः ।
निकृताश्च सदैव स्म तो विषममाचरम् ॥ ११-१४-४ (६५१७८)
सैन्यस्यैकोऽवशिष्टोऽयं गदायुद्धे च वीर्यवान् ।
न त्यक्ष्यति हृतं राज्यमिति वै तत्कृतं मया ॥ ११-१४-५ (६५१७९)
एकपत्नीं च पाञ्चालीमेकवस्त्रां रजस्वलाम् ।
भवत्या विदितं सर्वमुक्तवान्यत्सुतस्तव ॥ ११-१४-६ (६५१८०)
सुयोधनं त्वसंहृत्य न शक्या भूः ससागरा ।
केवला भोक्तुमस्माभिरतश्चैतत्कृतं मया ॥ ११-१४-७ (६५१८१)
तच्चाप्यप्रियमस्माकं पुत्रस्ते समुपाचरत् ।
द्रौपद्या यत्सभामध्ये सव्यमूरुमदर्शयत् ॥ ११-१४-८ (६५१८२)
तत्रैव वध्यः सोऽस्माकं दुराचारोऽम्ब ते सुतः ।
धर्मराजाज्ञया चैव स्थिताः स्म समये पुरा ॥ ११-१४-९ (६५१८३)
वैरमुद्दीपितं राज्ञि पुत्रेण तव यन्महत् ।
क्लेशिताश्च वने नित्यं तत एतत्कृतं मया ॥ ११-१४-१० (६५१८४)
वैरस्यास्य गताः पारं हत्वा दुर्योधनं रणे ।
राज्यं युधिष्ठिरे प्राप्ते वयं च गतमन्यवः ॥ ११-१४-११ (६५१८५)
गान्धार्युवाच। ११-१४-१२क्ष् (५३४५)
न तस्यैवं वधस्तात यं प्रशंससि मे सुतम् ।
कृतवांश्चापि तत्सर्वं यदिदं भाषसे मयि ॥ ११-१४-१२ (६५१८६)
हताश्वे नकुले यत्तु वृषसेनेन भारत ।
अपिबः शोणितं सङ्ख्ये दुःशासनशरीरजम् ॥ ११-१४-१३ (६५१८७)

सद्भिर्विगर्हितं घोरमनार्यजनसेवितम् ।
क्रूरं कर्माकृथास्तस्मात्तदयुक्तं वृकोदर ॥ ११-१४-१४ (६५१८८)
भीम उवाच। ११-१४-१५क्ष् (५३४६)
हताश्वं नकुलं दृष्ट्वा वृषसेनेन संयुगे ।
शत्रूणां तु प्रहृष्टानां त्रासः सञ्जनितो मया ॥ ११-१४-१५ (६५१८९)
ग्स प्रतिज्ञामकरवं पिबाम्यसृगरेरिति'।
रुधिरं नातिचक्राम दन्तोष्ठादम्ब मा शुचः ॥ ११-१४-१६ (६५१९०)
श्अन्यस्यापि न पातव्यं रुधिरं किंपुनः स्वकम् ।
यथैवात्मा तथा भ्राता विशेषो नास्ति कश्चन ॥ ११-१४-१७ (६५१९१)
वैवस्तितो हि तद्वेद यथावत्कुलनन्दिनि ।
मा कृथा हृदि तन्मातर्न तत्पीतं मयाऽनघे ॥ ११-१४-१८ (६५१९२)
केशपक्षपरामर्शे द्रौपद्या द्यूतकारिते ।
क्रोधाद्यदब्रवं चाहं तच्च मे हृदि वर्तते ॥ ११-१४-१९ (६५१९३)
क्षत्रधर्माच्च्युतो राज्ञि भवेयं शाश्वतीः समाः ।
प्रतिज्ञां तामनिस्तीर्य ततस्तत्कृतवानहम् ॥ ११-१४-२० (६५१९४)
अनिगृह्य पुरा पुत्रानस्मस्वनपकारिषु ।
न ममार्हसि कल्याणि दोषेण परिशङ्कितुम् ॥ ११-१४-२१ (६५१९५)
गान्धार्युवाच। ११-१४-२२क्ष् (५३४७)
वृद्धस्यास्य शतं पुत्रान्निघ्नंस्त्वमपराजितः ।
कस्मान्नाशेषयः कञ्चिद्येनाल्पमपराधितम् ॥ ११-१४-२२ (६५१९६)
सन्तानमावयोस्तात वृद्धयोर्हृतराज्ययोः ।
नाशेषयः कथं यष्टिमेकां वृद्धयुगस्य वै ॥ ११-१४-२३ (६५१९७)
शेषे ह्यवस्थिते तात पुत्राणामल्पकेऽपि च ।
मन्ददुःखं भवेदद्य यदि त्वं धर्ममाचरेः ॥ ॥ ११-१४-२४ (६५१९८)

इति श्रीमन्महाभारते स्त्रीपर्वणि जलप्रदानिकपर्वणि
चतुर्दशोऽध्यायः ॥ १४ ॥
Mahabharata - Strii Parva - Chapter Footnotes

११-१४-६ उक्तवान् नहि ते पतयः सन्तीत्यादि । राजपुत्रीं च
पाञ्चलीमिति झ पाठः ॥
११-१४-१४ चतुर्दशोऽध्यायः ॥

---

स्त्रीपर्व-अध्यय०१५
॥ श्रीः ॥
११.१५. अध्यायः १५

Mahabharata - Strii Parva - Chapter Topics
युधिष्ठिरादिभिर्गान्धारीकुन्त्योरभिवादनम् ॥ १ ॥
सकुन्त्या गान्धार्या द्रौपदीसमाश्वासनम् ॥ २ ॥

Mahabharata - Strii Parva - Chapter Text

११-१५-० (६५१९९)
वैशम्पायन उवाच। ११-१५-०क्ष् (५३४८)
तमेवमुक्त्वा गान्धारी युधिष्ठिरमपृच्छत ।
क्व स राजेति सक्रोधा पुत्रपौत्रवधार्दिता ॥ ११-१५-१ (६५२००)
तामभ्यगच्छत्कौन्तेयो वेपमानः कृताञ्जलिः ।
युधिष्ठिरस्तु गान्धारीं मधुरं वाक्यमब्रवीत् ॥ ११-१५-२ (६५२०१)
पुत्रहन्ता नृशंसोऽहं तव देवि युधिष्ठिरः ।
शापार्हः पृथिवीनाशे हेतुभूतः शपस्व माम् ॥ ११-१५-३ (६५२०२)
नहि मे जीवितेनार्थो न राज्येन सुखेन वा ।
तादृशान्सुहृदो हत्वा प्रमूढस्य सुहृद्द्रुहः ॥ ११-१५-४ (६५२०३)
तमेवंवादिनं भीतं सन्निकर्षागतं तदा ।
नोवाच किञ्चिद्गान्धारी निःश्वासपरमा नृप ॥ ११-१५-५ (६५२०४)
तस्मावनतदेहस्य पादयोर्निपतिष्यतः ।
युधिष्ठिरस्य नृपतेर्धर्मज्ञा दीर्घदर्शिनी ॥ ११-१५-६ (६५२०५)
अङ्गुल्यग्राणि ददृशे देवी पट्टान्तरेण सा ।
ततः स कुनखीभूतो दर्शनीयनखो नृपः ॥ ११-१५-७ (६५२०६)
तं दृष्ट्वा चार्जुनोऽगच्छद्वासुदेवस्य पृष्ठतः ॥ ११-१५-८ (६५२०७)
एवं सञ्चेष्टमानांस्तानितश्चेतश्च भारत ।
गान्धारी विगतक्रोधा सांत्वयामास मातृवत् ॥ ११-१५-९ (६५२०८)
ते पाण्डवा अनुज्ञाता मातरं वीतमत्सराः ।
अभ्यगच्छन्त सहिताः पृथां पृथुवलक्षसः ॥ ११-१५-१० (६५२०९)
चिरस्य दृष्ट्वा पुत्रान्सा पुत्राधिभिरभिप्लुता ।
बाष्पमाहारयद्देवी वस्त्रेणावृत्य वै मुखम् ॥ ११-१५-११ (६५२१०)
ततो बाष्पं समुत्सृज्य सह पुत्रैस्तदा पृथा ।
अपश्यदेनाञ्शस्त्रौघैर्बहुधा परिविक्षतान् ॥ ११-१५-१२ (६५२११)
सा तानेकैकशः पुत्रान्संस्पृशन्ती पुनःपुनः ।
अन्वशोचत दुःखार्ता द्रौपदीं निहतात्मजाम् ।
रुदन्तीमथ पाञ्चालीं ददर्श पतितां भुवि ॥ ११-१५-१३ (६५२१२)
द्रौपद्युवाच। ११-१५-१४क्ष् (५३४९)

आर्ये पौत्रास्तु ते सर्वे सौभद्रसहिता गताः ।
न त्वां तेऽद्याभिगच्छन्ति चिरं दृष्ट्वा अनिन्दिते ।
किन्नु राज्येन मे कार्यं विहीनायाः सुतैर्वरैः ॥ ११-१५-१४ (६५२१३)
तां समाश्वासयामास पृथा पृथललोचना ।
उत्थाप्याङ्केन सुदतीं रुदतीं शोककर्शिताम् ॥११-१५-१५ (६५२१४)
तयैव सहिता चापि पुत्रैरनुगता पृथा ।
अभ्यगच्छत गान्धारीमार्तामार्ततरा स्वयम् ॥११-१५-१६ (६५२१५)
वैशम्पायन उवाच।११-१५-१७क्ष् (५३५०)
तामुवाचाथ गान्धारी सह कुन्त्या यशस्विनीम् ।
मैवं पुत्रीति शोकार्ता पश्य मामपि दुःखितां ॥११-१५-१७ (६५२१६)
मन्ये लोकविनाशोऽयं कालपर्यायनोदितः ।
अवश्यभावी सम्प्राप्तः स्वभावाद्रोमहर्षणः ॥११-१५-१८ (६५२१७)
इदं तत्समनुप्राप्तं विदुरस्य वचो महत् ।
असिद्धानुनये कृष्णे यदुवाच महामतिः ॥११-१५-१९ (६५२१८)
तस्मिन्नपरिहार्येऽर्थे व्यतीते च विशेषतः ।
मा शुचो न हि शोच्यास्ते सङ्ग्रामे निधनं गताः ॥११-१५-२० (६५२१९)
यथैवाहं तथैव त्वं को वामाश्वासयिष्यति ।
ममैव ह्यपराधेन कुलमग्र्यं विनाशितम् ॥ ॥११-१५-२१ (६५२२०)

इति श्रीमन्महाभारते स्त्रीपर्वणि जलप्रदानिकपर्वणि
पञ्चदशोऽध्यायः ॥१५ ॥
Mahabharata - Strii Parva - Chapter Footnotes

११-१५-७ कुनखीभूतो हस्तदेश इति शेषः ॥
११-१५-१४ आर्ये पौत्रा हताः सर्वे इति क छ पाठः ॥
११-१५-२१ वां आवाम् ॥
११-१५-१५ पञ्चदशोऽध्यायः ॥

---

स्त्रीपर्व-अध्यय०१६
॥ श्रीः ॥
११.१६. अध्यायः १६

Mahabharata - Strii Parva - Chapter Topics
गान्धार्या व्यासप्रसादलब्धदिव्यचक्षुषा रणाङ्कणदर्शनम् ॥१ ॥
धृतराष्ट्रयुधिष्ठिरादीनां स्त्रीभिः सह रणभूमिप्रवेशः ॥२ ॥
स्त्रीणां विलापः ॥३ ॥

गान्धार्या कृष्णाय विलपत्स्नुषादिप्रदर्शनम् ॥ ४ ॥

Mahabharata - Strii Parva - Chapter Text

११-१६-० (६५२२१)
वैशम्पायन उवाच। ११-१६-०क्ष् (५३५१)
एवमुक्त्वा तु गान्धारी कुरूणामवकर्तनम् ।
अपश्यत्तत्र तिष्ठन्ती सर्वं तत्र यथास्थितम् ॥ ११-१६-१ (६५२२२)
पतिव्रता महाभागा समानव्रतचारिणी ।
उग्रेण तपसा युक्ता सततं सत्यवादिनी ॥ ११-१६-२ (६५२२३)
वरदानेन कृष्णस्य महर्षेः पुण्यकर्मणः ।
दिव्यज्ञानबलोपेता विविधं पर्यदेवयत् ॥ ११-१६-३ (६५२२४)
ददर्श सा बुद्धिमती दूरादपि यथाऽन्तिके ।
रणाजिरं तद्वीराणामद्भुतं रोमहर्षणम् ॥ ११-१६-४ (६५२२५)
अस्थिकेशवसाकीर्णं शोणितौघपरिप्लुतम् ।
शरीरैर्बहुसाहस्रैर्विनिकीर्णं समन्ततः ॥ ११-१६-५ (६५२२६)
गजाश्वरथयोधानामावृतं रुधिराविलैः ।
शरीरैरशिरस्कैश्च विदेहैश्च शिरोगणैः ॥ ११-१६-६ (६५२२७)
गजाश्वनरवीराणां निःसत्वैरभिसंवृतम् ।
सृगालवलगोमायुकङ्ककाकनिषेवितम् ॥ ११-१६-७ (६५२२८)
रक्षसां पुरुषादाना मोदनं कुरराकुलम् ।
अशिवाभिः शिवाभिश्च नादितं गृध्रसेवितम् ॥ ११-१६-८ (६५२२९)
ततो व्यासाभ्यनुज्ञातो धृतराष्ट्रो महीपतिः ।
पाण्डुपुत्राश्च ते सर्वे युधिष्ठिरपुरोगमाः ॥ ११-१६-९ (६५२३०)
वासुदेवं पुरस्कृत्य हतबन्धुं च पार्थिवम् ।
कुरुस्त्रियः समादाय जग्मुरायोधनं प्रति ॥ ११-१६-१० (६५२३१)
समासाद्य कुरुक्षेत्रं ताः स्त्रियो निहतेश्वराः ।
अपश्यन्त हतांस्तत्र पुत्रान्भ्रातॄन्पितॄन्पतीन् ॥ ११-१६-११ (६५२३२)
क्रव्यादैर्भक्ष्यमाणांश्च गोमायुवलवायसैः ।
भूतैः पिशाचै रक्षोभिर्विविधैश्च निशाचरैः ॥ ११-१६-१२ (६५२३३)
रुद्राक्रीडनिभं दृष्ट्वा तदा विशसनं स्त्रियः ।
कुरर्य इव शोकार्ता विक्रोशन्त्यो निपेतिरे ॥ ११-१६-१३ (६५२३४)
अदृष्टपूर्वं पशन्त्यो दुःखार्ता भरतस्त्रियः ।
शरीरेषु स्खलन्त्यश्च न्यपतंश्च परासुवत् ॥ ११-१६-१४ (६५२३५)
श्रान्तानां चाप्यनाथानां क्रन्दन्तीनां भृशं तदा ।
पाञ्चालकुरुयोषाणां कृपणं तदभून्महत् ॥ ११-१६-१५ (६५२३६)

दुःखोपहतचित्ताभिः समन्तादनुनादितम् ।
दृष्ट्वाऽऽयोधनमत्युग्रं धर्मज्ञा सुबलात्मजा ॥ ११-१६-१६ (६५२३७)
ततः सा पुण्डरीकाक्षमामन्त्र्य पुरुषोत्तमम् ।
कुरूणां वैशमं दृष्ट्वा इदं वचनमब्रवीत् ॥ ११-१६-१७ (६५२३८)
पश्यैताः पुण्डरीकाक्ष स्नुषा मे निहतेश्वराः ।
प्रकीर्णकेशाः क्रोशन्तीः कुररीरिव माधव ॥ ११-१६-१८ (६५२३९)
अमूस्त्वभिसमागम्य स्मरन्त्यो भरतर्षभान् ।
पृथगेवानुपद्यन्ते पुत्रान्भ्रातॄन्पितॄन्पतीन् ॥ ११-१६-१९ (६५२४०)
वीरसूभिर्महाबाहो हतपुत्राभिरावृतम् ।
क्वचिच्च वीरपत्नीभिर्हतवीराभिरावृतम् ॥ ११-१६-२० (६५२४१)
शोभितं पुरुषव्याघ्रैः कर्णभीष्माभिमन्युभिः ।
द्रोणद्रुपदशल्यैश्च ज्वलद्भिरिव पावकैः ॥ ११-१६-२१ (६५२४२)
काञ्चनैः कवचैर्निष्कैर्मणिभिश्च महाधनैः ।
अङ्गदैर्हस्तकेयूरैः स्रग्भिश्च समलंकृतम् ॥ ११-१६-२२ (६५२४३)
वीरबाहुविसृष्टाभिः शक्तिभिः परिघैरपि ।
खड्गैश्च विविधैस्तीक्ष्णैः सशरैश्च शरासनैः ॥ ११-१६-२३ (६५२४४)
क्रव्यादसङ्घैर्मुदितैस्तिष्ठद्भिः सहितैः क्वचित् ।
क्वचिदाक्रीडमानैश्च शयानैश्चापरैः क्वचित् ॥ ११-१६-२४ (६५२४५)
एतदेवंविधं वीर सम्पश्यायोधनं विभो ।
ग्त्वया तु श्रावितं कर्म पुष्कराक्ष महाद्युते'।
पश्यमाना हि दह्यामि शोकेनाहं जनार्दन ॥ ११-१६-२५ (६५२४६)
पाञ्चालानां कुरूणां च विनाशं मधुसूदन ।
पञ्चानामपि भूतानामहं वधमचिन्तयम् ॥ ११-१६-२६ (६५२४७)
तान्सुपर्णाश्च गृध्राश्च कर्षयन्त्यसृगुक्षितान् ।
विगृह्य चरणैर्गृध्रा भक्षयन्ति सहस्रशः ॥ ११-१६-२७ (६५२४८)
जयद्रथस्य कर्णस्य तथैव द्रोमभीष्मयोः ।
अभिमन्योर्विनाशं च कश्चिन्तयितुमर्हति ॥ ११-१६-२८ (६५२४९)
अवध्यकल्पान्निहतान्गतसत्वानचेतसः ।
गृध्रकङ्कवलश्येनश्वसृगालसमावृतान् ॥ ११-१६-२९ (६५२५०)
अमर्षवशमापन्नान्दुर्योधनवशे स्थितान् ।
पश्येमान्पुरुषव्याघ्रान्संशान्तान्पावकानिव ॥ ११-१६-३० (६५२५१)
शयनान्युचिताः सर्वे मृदूनि विमलानि च ।
विपन्नास्तेऽद्य वसुधां विवृतामधिशेरते ॥ ११-१६-३१ (६५२५२)
बन्दिभिः सततं काले स्तुवद्भिरभिनन्दिताः ।
शिवानामशिवा घोराः शृण्वन्ति विविधा गिरः ॥ ११-१६-३२ (६५२५३)
ये पुरा शेरते वीराः शयनेषु यशस्विनः ।

चन्दनागुरुदिग्धाङ्गास्तेऽद्य पांसुषु शेरते ॥ ११-१६-३३ (६५२५४)
तेषामाभरणान्येते गृध्रगोमायुवायसाः ।
आक्षिपन्ति शिवा घोरा विनदन्त्यः पुनः पुनः ॥ ११-१६-३४ (६५२५५)
बाणान्वनिनिशितान्पीतान्निस्त्रिंशान्विमला गदाः ।
युद्धाभिमानिनः सर्वे जीवन्त इव बिभ्रति ॥ ११-१६-३५ (६५२५६)
सुरूपवर्णा बहवः क्रव्यादैरवघट्टिताः ।
ऋषभप्रतिरूपाक्षाः शेरते च सहस्रशः ॥ ११-१६-३६ (६५२५७)
अपरे पुनरालिङ्ग्य गदाः परिघबाहवः ।
शेरतेऽभिमुखाः शूरा दयिता इव योषितः ॥ ११-१६-३७ (६५२५८)
बिभ्रतः कवचान्यन्ये विमलान्यायुधानि च ।
न धर्षयन्ति क्रव्यादा जीवन्तीति जनार्दन ॥ ११-१६-३८ (६५२५९)
क्रव्यादैः कृष्यमाणानामपरेषां महात्मनाम् ।
शातकौम्भ्यः स्रजश्चित्रा विप्रकीर्णाः समन्ततः ॥ ११-१६-३९ (६५२६०)
एते गोमायवो भीमा निहतानां यशस्विनाम् ।
कण्ठान्तरगतान्हारानाक्षिपन्ति सहस्रशः ॥ ११-१६-४० (६५२६१)
सर्वेष्वपररात्रेषु यानवन्दन्त बन्दिनः ।
स्तुतिभिश्च परार्ध्याभिरुपचारैश्च शिक्षिताः ॥ ११-१६-४१ (६५२६२)
तानद्य परिदेवन्ति दुःखार्ता परमाङ्गनाः ।
कृपणा वृष्णिशार्दूल दुःखशोकार्दिता भृशम् ॥ ११-१६-४२ (६५२६३)
रक्तोत्पलवनानीव विभान्ति रुचिराणि च ।
मुखानि परमस्त्रीणां परिशुष्काणि केशव ॥ ११-१६-४३ (६५२६४)
रुदित्वा विरता ह्येता ध्यायन्त्यः सपरिक्लमाः ।
कुरुस्त्रियोऽभिगच्छन्ति तेन तेनैव दुःखिताः ॥ ११-१६-४४ (६५२६५)
एतान्यादित्यवर्णानि तपमीयनिभानि च ।
पश्य रोदनताम्राणि वक्त्राणि कुरुयोषिताम् ॥ ११-१६-४५ (६५२६६)
श्यामानां वरवर्णानां गौरीणामेकवाससाम् ।
दुर्योधनवरस्त्रीणां पश्य वृन्दानि केशव ॥ ११-१६-४६ (६५२६७)
आसामपरिपूर्णार्थं निशम्य परिदेवितम् ।
इतरेरसङ्क्रन्दान्न विजानन्ति योषितः ॥ ११-१६-४७ (६५२६८)
एता दीर्घमिवोच्छ्वस्य विक्रुश्य च विलप्य च ।
विस्पन्दमाना दुःखेन वीरा जहति जीवितम् ॥ ११-१६-४८ (६५२६९)
बह्व्यो दृष्ट्व शरीराणि क्रोशन्ति विलपन्ति च ।
पाणिभिश्चापरा घ्नन्ति शिरांसि मृदुपाणयः ॥ ११-१६-४९ (६५२७०)
शिरोभिः पतितैर्हस्तैः सर्वाङ्गैः खण्डशः कृतैः ।
इतरेतसम्पृक्तैराकीर्णा भाति मेदिनी ॥ ११-१६-५० (६५२७१)
विशिरस्कानथो कायान्दृष्ट्वा ह्येताननिन्दितान् ।

मुह्यन्त्यनुचिता नार्यो विदेहानि शिरांसि च ॥ ११-१६-५१ (६५२७२)
शिरः कायेन सन्धाय प्रेक्षमाणा विचेतसः ।
अपश्यन्त्योऽपरं तत्र नेदमस्येऽति दुःखिताः ॥ ११-१६-५२ (६५२७३)
बाहूरुचरणानन्यान्विशिखोन्मथितान्पृथक् ।
सन्दधत्योऽसुखाविष्टा मूर्छन्त्येताः पुनःपुनः ॥ ११-१६-५३ (६५२७४)
उत्कृत्तशिरसश्चान्यान्विजग्धान्मृगपक्षिभिः ।
दृष्ट्वा काश्चिन्न जानन्ति भर्तॄन्भरतयोषितः ॥ ११-१६-५४ (६५२७५)
पाणिभिश्चापरा घ्नन्ति शिरांसि मधुसूदन ।
प्रेक्ष्य भ्रातॄन्पितॄन्पुत्रान्पतींश्च निहतान्परैः ॥ ११-१६-५५ (६५२७६)
बाहुभिश्च सखड्गैश्च शिरोभिश्च सकुण्डलैः ।
अगम्यकल्पा पृथिवी मांसशोणितकर्दमा ।
बभूव भरतश्रेष्ठ प्राणिभिर्गतजीवितैः ॥ ११-१६-५६ (६५२७७)
न दुःखेषूचिताः पूर्वं दुःखं गाहन्त्यनिन्दिताः ।
भ्रातृभिः पतिभिः पुत्रैरुपाकीर्णां वसुन्धराम् ॥ ११-१६-५७ (६५२७८)
यूथानीव किशोरीणां सुकेशीनां जनार्दन ।
स्नुषाणां धृतराष्ट्रस्य पश्य वृन्दान्यनेकशः ॥ ११-१६-५८ (६५२७९)
इतो दुःखतरं किन्नु केशव प्रतिभाति मे ।
यदिमाः कुर्वते सर्वा रवमुच्चावचं स्त्रियः ॥ ११-१६-५९ (६५२८०)
नूनमाचरितं पापं मया पूर्वेषु जन्मसु ।
या पश्यामि हतान्पुत्रान्पौत्रान्भ्रातृंश्च माधव ॥ ११-१६-६० (६५२८१)
एवमार्ता विलपती समाभाष्य जनार्दनम् ।
गान्धारी पुत्रशोकार्ता ददर्श निहतं सुतम् ॥ ॥ ११-१६-६१ (६५२८२)

इति श्रीमन्महाभारते स्त्रीपर्वणि स्त्रीविलापपर्वणि षोडशोऽध्यायः ॥ १६ ॥
Mahabharata - Strii Parva - Chapter Footnotes

११-१६-१ अवकर्तनं युद्धस्थानम् । सर्वं दिव्येन चक्षुषेति झ पाठः ॥
११-१६-२६ पञ्चानां भूतानां पृथिव्यादीनाम्
। कुरुपाञ्चालवधात्कृत्स्नं पाञ्चभौतिकं जगन्नष्टमिति भावः ॥
११-१६-३१ xxxxxx येति शेषः ॥
११-१६-४८ एताः शोचन्तीरभिलक्ष्येति शेषः ॥
११-१६-५४ विजग्धान्भक्षितान् ॥
११-१६-१६ षोडशोऽध्यायः ॥

---

स्त्रीपर्व-अध्यय०१७
॥ श्रीः ॥

११.१७. अध्यायः १७

Mahabharata - Strii Parva - Chapter Topics
गान्धार्या दुर्योधनमालिङ्ग्य परिदेवनम् ॥ १ ॥

Mahabharata - Strii Parva - Chapter Text

११-१७-० (६५२८३)
वैशम्पायन उवाच। ११-१७-०क्ष् (५३५२)
दुर्योधनं हतं दृष्ट्वा गान्धारी शोककर्शिता ।
सहसा न्यपतद्भूमौ छिन्नेव कदली वने ॥ ११-१७-१ (६५२८४)
सा तु लब्ध्वा पुनः संज्ञां विक्रुश्य च विलप्य च ।
दुर्योधनमभिप्रेक्ष्य शयानं रुधिरोक्षितम् ॥ ११-१७-२ (६५२८५)
परिष्वज्याथ गान्धारी कृपणं पर्यदेवयत् ।
हाहापुत्रेति शोकार्ता विललापाकुलेन्द्रिया ॥ ११-१७-३ (६५२८६)
सुगूढजत्रु विपुलं हारनिष्कविभूषितम् ।
वारिणा नेत्रजेनोरः सिञ्चन्ती शोकतापिता ॥ ११-१७-४ (६५२८७)
समीपस्थं हृषीकेशमिद वचनमब्रवीत् ।
उपस्थितेऽस्मिन्सङ्ग्रामे ज्ञातीनां संक्षये विभो ॥ ११-१७-५ (६५२८८)
मामयं प्राह वार्ष्णेय प्राञ्चलिर्नृपसत्तमः ।
अस्मिञ्ज्ञातिसमुद्धर्षे जयमम्बा ब्रवीतु मे ॥ ११-१७-६ (६५२८९)
इत्युक्ते जानती सर्वमहं स्वव्यसनागमम् ।
अब्रुवं पुरुषव्याघ्र यतो धर्मस्ततो जयः ॥ ११-१७-७ (६५२९०)
तथा तु युव्यमानस्त्वं सम्प्रगृह्य सुपुत्रक ।
ध्रुवं शस्त्रजिताँल्लोकान्प्राप्स्यस्यमरवत्प्रभो ॥ ११-१७-८ (६५२९१)
इत्येवxxx पूर्वं नैवं शोचामि वै प्रभो ।
धृतराष्ट्रं तु शोचामि कृपणं हतबान्धवम् ॥ ११-१७-९ (६५२९२)
अमर्वणं युधां श्रेष्ठं कृतास्त्रं युद्धदुर्मदम् ।
शयानं वीरशयने पश्य माधव मे सुतम् ॥ ११-१७-१० (६५२९३)
बोऽयं मूर्धावसिक्तानाये याति परन्तपः ।
सोऽवं पांसुषु शेतेऽद्य पञ्च कालस्य पर्ययम् ॥ ११-१७-११ (६५२९४)
दुवं दुर्योधनो वीरो गतिं न सुलभां गतः ।
तथा ह्यभिxxxx शेते शयने वीरसेविते ॥ ११-१७-१२ (६५२९५)
यं पुरा पर्युपासीना समयन्ति वरस्त्रियः ।
सं वीरशयने सुप्तं रमयन्त्यशिवाः शिवाः ॥ ११-१७-१३ (६५२९६)
यं पुरा पर्युपासीना रमयन्ति महीक्षितः ।

महीतलस्थं निहतं गृध्रास्तं पर्युपासते ॥ ११-१७-१४ (६५२९७)
यं पुरा व्यजनैरम्यैरुपवीजन्ति योषितः ।
तमद्य पक्षव्यजनै रुपवीजन्ति पक्षिणः ॥ ११-१७-१५ (६५२९८)
एष शेते महाबाहुर्बलवान्सत्यविक्रमः ।
सिंहेनेव द्विपः सङ्ख्ये भीमसेनेन पातितः ॥ ११-१७-१६ (६५२९९)
पश्य दुर्योधनं कृष्ण शयानं रुधिरोक्षितम् ।
निहतं भीमसेनेन गदां सम्मृज्य भारत ॥ ११-१७-१७ (६५३००)
अक्षौहिणीर्महाबाहुर्दश चैकां च केशव ।
आनयद्यः पुरा सङ्ख्ये सोऽनयान्निधनं गतः ॥ ११-१७-१८ (६५३०१)
एष दुर्योधनः शेते महेष्वासो महाबलः ।
शार्दूल इव सिंहेन भीमसेनेन पातितः ॥ ११-१७-१९ (६५३०२)
विदुरं ह्यवमत्यैष पितरं चैव मन्दभाक् ।
बालो वृद्धावमानेन मन्दो मृत्युवशं गतः ॥ ११-१७-२० (६५३०३)
निःसपत्ना मही यस्य त्रयोदशसमाः स्थिता ।
स शेते निहतो भूमौ पुत्रो मे पृथिवीपतिः ॥ ११-१७-२१ (६५३०४)
अपश्यं कृष्ण पृथिवीं धार्तराष्ट्रानुशासिताम् ।
पूर्णां हस्तिगवाश्वैश्च वार्ष्णेय न तु तच्चिरम् ॥ ११-१७-२२ (६५३०५)
तामेवाद्य महाबाहो पश्याम्यन्यानुशासिताम् ।
हीनां हस्तिगवाश्वेन किन्नु जीवामि माधव ॥ ११-१७-२३ (६५३०६)
इदं कष्टतरं पश्य पुत्रस्यापि वधान्मम ।
या इमाः पर्युपासन्ते हताञ्शूरान्रणे स्त्रियः ॥ ११-१७-२४ (६५३०७)
प्रकीर्णकेशां सुश्रोणीं दुर्योधनभूजाङ्कगाम् ।
रुक्मवेदिनिभां पश्य कृष्ण लक्ष्मणमातरम् ॥ ११-१७-२५ (६५३०८)
नूनमेषा पुरा बाला जीवमाने महाभुजे ।
भुजावाश्रित्य रमते सुभुजस्य मनस्विनी ॥ ११-१७-२६ (६५३०९)
कथं तु शतधा नेदं हृदयं मम दीर्यते ।
पश्यन्त्या निहतं पुत्रं पौत्रेण सहितं रणे ॥ ११-१७-२७ (६५३१०)
पुत्रं रुधिरसंसिक्तमुपजिघ्रत्यनिन्दिता ।
दुर्योधनं तु वामोरूः पाणिना परिमार्जती ॥ ११-१७-२८ (६५३११)
किन्नु शोचति भर्तारं हतपुत्रं मनस्विनी ।
तथा ह्यवस्थिता भाति पुत्रं चाप्यभिवीक्ष्य सा ॥ ११-१७-२९ (६५३१२)
स्वशिरः पञ्चशाखाभ्यामभिहत्यायतेक्षणा ।
पतत्युरसि वीरस्य कुरुराजस्य माधव ॥ ११-१७-३० (६५३१३)
पुण्डरीकनिभा भाति पुण्डरीकान्तरप्रभा ।
मुखं प्रमृज्य पुत्रस्य भर्तुश्चैव तपस्विनी ॥ ११-१७-३१ (६५३१४)
यदि सत्यागमाः सन्ति यदि वै श्रुतयस्तथा ।

ध्रुवं लोकानवाप्तोऽयं नृपो बाहुबलार्जितान् ॥ ॥ ११-१७-३२ (६५३१५)

इति श्रीमन्महाभारते स्त्रीपर्वणि स्त्रीविलापपर्वणि सप्तदशोऽध्यायः
॥ १७ ॥
Mahabharata - Strii Parva - Chapter Footnotes

११-१७-२७ पुत्रेण सहितं रणे इति झ पाठः ॥
११-१७-३० पञ्चशाखाभ्यां पञ्चाङ्गुलिभ्यां पाणिभ्याम् ॥
११-१७-१७ सप्तदशोऽध्यायः ॥

---

स्त्रीपर्व-अध्यय०१८
॥ श्रीः ॥
११.१८. अध्यायः १८

Mahabharata - Strii Parva - Chapter Topics
कृष्णम्प्रति गान्धारीवचनम् ॥ १ ॥

Mahabharata - Strii Parva - Chapter Text

११-१८-० (६५३१६)
गान्धार्युवाच। ११-१८-०क्ष् (५३५३)
पश्य माधव पुत्रान्मे शतसङ्ख्याञ्जितक्लमान् ।
गदया भीमसेनेन भूयिष्ठं निहतान्रणे ॥ ११-१८-१ (६५३१७)
इदं दुःखतरं मेऽद्य यदिमा मुक्तमूर्धजाः ।
हतपुत्रा रणे बालाः परिधावन्ति मे स्नुषाः ॥ ११-१८-२ (६५३१८)
प्रासादतलचारिण्यश्चरमैर्भूषणान्वितैः ।
कायेनाद्य स्पृशन्तीमां रुधिरार्द्रां वसुन्धराम् ॥ ११-१८-३ (६५३१९)
कृच्छ्रादुत्सारयन्ति स्म गृध्रगोमायुवायसान् ।
दुःखेनार्ता विघूर्णन्त्यो मत्ता इव चरन्त्युत ॥ ११-१८-४ (६५३२०)
एषाऽन्या त्वनवद्याङ्गी करसम्मितमध्यमा ।
घोरमायोधनं दृष्ट्वा निपतत्यतिदुःखिता ॥ ११-१८-५ (६५३२१)
दृष्ट्वा मे पार्थिवसुतामेतां लक्ष्मणमातरम् ।
राजपुत्रीं महाबाहो मनो न ह्युपशाम्यति ॥ ११-१८-६ (६५३२२)
भ्रातॄंश्चान्याः पितॄंश्चान्याः पुत्रांश्च निहतान्भुवि ।
दृष्ट्वा परिपतन्त्येषाः प्रगृह्य सुमहाभुजान् ॥ ११-१८-७ (६५३२३)
मध्यमानां तु नारीणां वृद्धानां चापराजित ।

आक्रन्दं हतबन्धूना दारुणे वैशसे शृणु ॥ ११-१८-८ (६५३२४)
रथनीडानि देहांश्च हतानां गजवाजिनाम् ।
आश्रित्य श्रममोहार्ताः स्थिताः पश्य महाभुज ॥ ११-१८-९ (६५३२५)
अन्या चापहृतं कायाच्चारुकुण्डलमुन्नसम् ।
स्वस्य बन्धोः शिरः कृष्ण गृहीत्वा पश्य तिष्ठति ॥ ११-१८-१० (६५३२६)
पूर्वजातिकृतं पापं मन्ये नाल्पमिवानघ ।
एताभिर्निरवद्याभिर्मया चैवाल्पपुण्यया ।
यदिदं धर्मराजेन घातितं नो जनार्दन ॥ ११-१८-११ (६५३२७)
न हि नाशोऽस्ति वार्ष्णेय कर्मणोः शुभपापयोः ॥ ११-१८-१२ (६५३२८)
प्रत्यग्रवयसः पश्य दर्शनीयकुचाननाः ।
कुलेषु जाता ह्रीमत्यः कृष्णपक्ष्माक्षिमूर्धजाः ॥ ११-१८-१३ (६५३२९)
हंसगद्गदभाषिण्यो दुःखशोकप्रमोहिताः ।
सारस्य इव वाशन्त्यः पतिताः पश्य माधव ॥ ११-१८-१४ (६५३३०)
फुल्लपद्मप्रकाशानि पुण्डरीकाक्ष योषिताम् ।
अनवद्यानि वक्त्राणि तापयत्येष रश्मिवान् ॥ ११-१८-१५ (६५३३१)
सेर्ष्याणां मम पुत्राणां वासुदेवावरोधनम् ।
मत्तमातङ्गदर्पाणां पश्यन्त्यद्य पृथग्जनाः ॥ ११-१८-१६ (६५३३२)
शतचन्द्राणि चर्माणि ध्वजांश्चादित्यवर्चसः ।
रौक्माणि चैव वर्माणि निष्कानपि च काञ्चनान् ॥ ११-१८-१७ (६५३३३)
शिरस्त्राणानि चैतानि पुत्राणां मे महीतले ।
पश्य दीप्तानि गोविन्द पावकान्सुहुतानिव ॥ ११-१८-१८ (६५३३४)
एष दुःशासनः शेते शूरेणामित्रघातिना ।
पीतशोणिक्क्ष् सर्वाङ्गो युधि भीमेन पातितः ॥ ११-१८-१९ (६५३३५)
गदया भीमसेनेन पश्य माधव मे सुतम् ।
द्यूतक्लेशाननुस्मृत्य द्रौपदीचोदितेन च ॥ ११-१८-२० (६५३३६)
उक्ता ह्यनेन पाञ्चाली सभायां द्यूतनिर्जिता ।
प्रियं चिकीर्षता भ्रातुः कर्णस्य च जनार्दन ॥ ११-१८-२१ (६५३३७)
सहैव सहदेवेन नकुलेनार्जुनेन च ।
दासीभूताऽसि पाञ्चालि क्षिप्रं प्रविश नो गृहान् ॥ ११-१८-२२ (६५३३८)
ततोऽहमब्रुवं कृष्ण तदा दुर्योधनं नृपम् ।
मृत्युपाशपरिक्षिप्तां द्रौपदीं पुत्र वर्जय ॥ ११-१८-२३ (६५३३९)
निबोधैनं सुदुर्बुद्धिं मातुलं कलहप्रियम् ।
क्षिप्रमेनं परित्यज्य पुत्र संशाम्य पाण्डवैः ॥ ११-१८-२४ (६५३४०)
न बुद्ध्यसे त्वं दुर्बुद्धे भीमसेनममर्षणम् ।
वाङ्नराचैस्तुदंस्तीक्ष्णैरुल्काभिरिव कुञ्जरम् ॥ ११-१८-२५ (६५३४१)
तानेवं रहसि क्रुद्धो वाक्षल्यानवधारयन् ।

उत्ससर्ज विषं तेषु सर्पो गोवृषभेष्विव ॥ ११-१८-२६ (६५३४२)
एष दुःशासनः शेते विक्षिप्य विपुलौ भुजौ ।
निहतो भीमसेनेन सिहेनेव महागजः ॥ ११-१८-२७ (६५३४३)
अत्यर्थमकरोद्रौद्रं भीमसेनोऽत्यमर्षणः ।
दुःशासनस्य यत्क्रुद्धोऽपिबच्छोणितमाहवे ॥ ॥ ११-१८-२८ (६५३४४)

इति श्रीमन्महाभारते स्त्रीपर्वणि स्त्रीविलापपर्वणि अष्टादशोऽध्यायः
॥ १८ ॥
Mahabharata - Strii Parva - Chapter Footnotes

११-१८-५ करसम्मितमध्यमा मुष्टिप्रमितमध्या ॥
११-१८-२३ क्षिप्तं शकुनिं पुत्र वजेयेति झ पाठः ॥
११-१८-१८ अष्टादशोऽध्यायः ॥

---

स्त्रीपर्व-अध्यय०१९
॥ श्रीः ॥
११.१९. अध्यायः १९

Mahabharata - Strii Parva - Chapter Topics
कृष्णम्प्रति गान्धारीवचनम् ॥ १ ॥

Mahabharata - Strii Parva - Chapter Text

११-१९-० (६५३४५)
गान्धार्युवाच। ११-१९-०क्ष् (५३५४)
एष माधव पुत्रो मे विकर्णः पाज्ञसम्मतः ।
भूमौ विनिहतः शेते भीमेन शतधा कृतः ॥ ११-१९-१ (६५३४६)
गजमध्ये हतः शेते विकर्णो मधुसूदन ।
नीलमेघपरिक्षिप्तः शरदीव निशाकरः ॥ ११-१९-२ (६५३४७)
अस्य चापग्रहेणैव पाणिः कृतकिणो महान् ।
कथञ्चिच्छिद्यते गृध्रैरत्तुकामैस्तलत्रवान् ॥ ११-१९-३ (६५३४८)
अस्य भार्याऽऽमिषप्रेप्सून्गृध्रकाकांस्तपस्विनी ।
वारयत्यनिशं बाला न च शक्नोति माधव ॥ ११-१९-४ (६५३४९)
युवा वृन्दारकसमो विकर्णः पुरुषर्षभ ।
सुखोषितः सुखार्हश्च शेते पांसुषु माधव ॥ ११-१९-५ (६५३५०)
कर्णिनालीकनाराचैर्भिन्नमर्माणमाहवे ।

अद्यापि न जहात्येनं लक्ष्मीर्भरतसत्तमम् ॥ ११-१९-६ (६५३५१)
एष सङ्ग्रामशूरणे प्रतिज्ञां पालयिष्यता ।
दुर्मुखोऽभिमुखः शेते हतोऽरिगणहा रणे ॥ ११-१९-७ (६५३५२)
तस्यैतद्वदनं कृष्ण श्वापदैरर्धभक्षितम् ।
विभात्यभ्यधिकं तात सप्तम्यामिव चन्द्रमाः ॥ ११-१९-८ (६५३५३)
शूरस्य हि रणे कृष्ण पश्याननमथेदृशम् ।
स कथं निहतोऽमित्रैः पांसून्ग्रसति मे सुतः ॥ ११-१९-९ (६५३५४)
यस्याहवमुखे सौम्य स्थाता नैवोपपद्यते ।
स कथं दुर्मुखोऽमित्रैर्हतो विबुधलोकजित् ॥ ११-१९-१० (६५३५५)
चित्रसेनं हतं भूमौ शयानं मधुसूदन ।
धार्तराष्ट्रमिमं पश्य प्रतिमानं धनुष्मताम् ॥ ११-१९-११ (६५३५६)
तं चित्रमाल्याभरणं युवत्यः शोककर्शिताः ।
क्रव्यादसङ्घैः सहिता रुदन्त्यः पर्युपासते ॥ ११-१९-१२ (६५३५७)
स्त्रीणां रुदितनिर्घोषः श्वापदानां च गर्जितम् ।
चित्ररूपमिदं कृष्ण विमृश्य प्रतिभाति मे ॥ ११-१९-१३ (६५३५८)
युवा वृन्दारको नित्यं प्रवरस्त्रीनिषेवितः ।
विविंशतिरसौ शेते ध्वस्तः पांसुषु माधव ॥ ११-१९-१४ (६५३५९)
शरसङ्कृत्तवर्माणं वीरं विशसने हतम् ।
परिवार्यासते गृध्राः परिविंशं विविंशतिम् ॥ ११-१९-१५ (६५३६०)
प्रविश्य समरे शूरः पाण्डवानामनीकिनीम् ।
स वीरशयने शेते परः सत्पुरुषोचिते ॥ ११-१९-१६ (६५३६१)
स्मितोपपन्नं सुनसं सुभ्रु ताराधिपोपमम् ।
अतीव सौम्यवदनं कृष्ण पश्य विविंशतेः ॥ ११-१९-१७ (६५३६२)
यं स्म तं पर्युपासन्ते बहुधा वरयोषितः ।
क्रीडन्तमिव गन्धर्वं देवकन्याः सहस्रशः ॥ ११-१९-१८ (६५३६३)
हन्तारं परसैन्यानां शूरं समितिशोभनम् ।
निबर्हणममित्राणां दुःसहं विषहेत कः ॥ ११-१९-१९ (६५३६४)
दुःसहस्यैतदाभाति शरीरं संवृतं शरैः ।
गिरिरात्मरुहैः फुल्लैः कर्णिकारैरिवाचितः ॥ ११-१९-२० (६५३६५)
शातकौम्भ्या स्रजा भाति कवचेन च भास्वता ।
अग्निनेव गिरिः श्वेतो गतासुरपि दुःसहः ॥ ॥ ११-१९-२१ (६५३६६)

इति श्रीमन्महाभारते स्त्रीपर्वणि स्त्रीविलापपर्वणि एकोनविंशोऽध्यायः ॥ १९ ॥

---

स्त्रीपर्व-अध्यय०२०

॥ श्रीः ॥
११.२०. अध्यायः २०

Mahabharata - Strii Parva - Chapter Topics
कृष्णंप्रति गान्धार्या रुदन्तीनां स्त्रीणां प्रदर्शनम् ॥ १ ॥

Mahabharata - Strii Parva - Chapter Text

११-२०-० (६५३६७)
गान्धार्युवाच। ११-२०-०क्ष् (५३५५)
अध्यर्धगुणमाहुर्यं बले शौर्ये च केशव ।
पित्रा त्वया च दाशार्ह दृप्तं सिंहमिवोत्कटम् ॥ ११-२०-१ (६५३६८)
यो बिभेद चमूमेको मम पुत्रस्य दुर्भिदाम् ।
स भूत्वा मृत्युरन्येषां स्वयं मृत्युवशं गतः ॥ ११-२०-२ (६५३६९)
तस्योपलक्षये कृष्ण कार्ष्णेरमिततेजसः ।
अभिमन्योर्हतस्यापि प्रभा नैवोपशाम्यति ॥ ११-२०-३ (६५३७०)
एषा विराटदुहिता स्नुषा गाण्डीवधन्वनः ।
हतं बाला पतिं वीरं दृष्ट्वा शोचत्यनिन्दिता ॥ ११-२०-४ (६५३७१)
तमेषा हि समागम्य भार्या भर्तारमन्तिके ।
विराटदुहिता कृष्ण पाणिना परिमार्जति ॥ ११-२०-५ (६५३७२)
तस्य वक्त्रमुपाघ्राय सौभद्रस्य मनस्विनी ।
विबुद्धकमलाकारं कम्बुवृत्तशिरोधरम् ॥ ११-२०-६ (६५३७३)
कामरूपवती चैषा परिष्वजति भामिनी ।
लज्जमाना पुरा चैनं माध्वीकमदमूर्च्छिता ॥ ११-२०-७ (६५३७४)
तस्य क्षतजसन्दिग्धं जातरूपपरिष्कृतम् ।
विमुच्य कवचं कृष्ण शरीरमभिवीक्षते ॥ ११-२०-८ (६५३७५)
अवेक्षमाणा तं बाला कृष्ण त्वामभिभाषते ।
अयं ते पुण्डरीकाक्ष कसदृशाक्षो निपातितः ॥ ११-२०-९ (६५३७६)
बले वीर्ये च सदृशस्तेजसा चैव तेऽनघ ।
रूपेण च तथाऽत्यर्थं शेते भुवि निपातितः ॥ ११-२०-१० (६५३७७)
अत्यन्तं सुकुमारस्य राङ्कवाजिनशायिनः ।
कच्चिदद्य शरीरं ते भूमौ न परितप्यते ॥ ११-२०-११ (६५३७८)
मातङ्गभुजवर्ष्माणौ ज्याक्षेपकठिनत्वचौ ।
काञ्चनाङ्गदिनौ शेते निक्षिप्य विपुलौ भुजौ ।
व्यायम्य बहुधा नूनं सुखसुप्तः श्रमादिव ॥ ११-२०-१२ (६५३७९)
एवं विलपतीमार्तां किं मां न प्रतिभाषसे ।

न स्मराम्यपराधं ते किं मां न प्रतिभाषसे ॥ ११-२०-१३ (६५३८०)
ननु मां त्वं पुरा दूरादभिवीक्ष्याभिभाषसे ।
न स्मराम्यपराधं मे किं मां न प्रतिभाषसे ॥ ११-२०-१४ (६५३८१)
आर्यामार्य सुभद्रां तवमिमां श्व त्रिदशोपमान् ।
पितॄन्मां चैव दुःखार्तां विहाय क्व गमिष्यसि ॥ ११-२०-१५ (६५३८२)
तस्य शोणितदिग्धान्वै केशानुन्नम्य पाणिना ।
उत्सङ्गे वक्तमाधाय जीवन्तमिव पृच्छति ॥ ११-२०-१६ (६५३८३)
स्वस्रीयं वासुदेवस्य पुत्रं गाण्डीवधन्वनः ।
कथं त्वां रणमध्यस्थं जघ्नुरेते महारथाः ॥ ११-२०-१७ (६५३८४)
धिगस्तु क्रूरकर्तॄंस्तान्कृपकर्णजयद्रथान् ।
द्रोणद्रौणायतनी चोभौ यैरहं विधवा कृता ॥ ११-२०-१८ (६५३८५)
रथर्षभाणां सर्वेषां कथमासीत्तदा मनः ।
बालं त्वां परिवार्यैकमनेकेषां च जघ्नताम् ॥ ११-२०-१९ (६५३८६)
कथं नु पाण्डवानां च पाञ्चालानां तु पश्यताम् ।
त्वं वीर निधनं प्राप्तो नाथवान्सन्ननाथवत् ॥ ११-२०-२० (६५३८७)
दृष्ट्वा बहुभिराक्रन्दे निहतं त्वां पिता तव ।
वीरः पुरुषशार्दूलः कथं जीवति पाण्डवः ॥ ११-२०-२१ (६५३८८)
न राज्यलाभो विपुलः शत्रूणां च पराभवः ।
प्रीतिं धास्यति पार्थानां त्वामृते पुष्करेक्षण ॥ ११-२०-२२ (६५३८९)
तव शस्त्रजिताँल्लोकान्धर्मेण च दमेन च ।
क्षिप्रमन्वागमिष्यामि तत्र मां प्रतिपालय ॥ ११-२०-२३ (६५३९०)
दुर्मरं पुनरप्राप्ते काले भवति केनचित् ।
यदहं त्वां रणे दृष्ट्वा हतं जीवामि दुर्भगा ॥ ११-२०-२४ (६५३९१)
कामिदानीं नरव्याघ्र श्लक्ष्णया स्मितया गिरा ।
पितृलोके समेत्यान्यां मामिवामन्त्रयिष्यसि ॥ ११-२०-२५ (६५३९२)
नूनमप्सरसां स्वर्गे मनांसि प्रमथिष्यसि ।
परमेण च रूपेण गिरा च स्मितपूर्वया ॥ ११-२०-२६ (६५३९३)
प्राप्य पुण्यकृताँल्लोकानप्सरोभिः समेयिवान् ।
सौभद्र विहन्काले स्मरेथाः सुकृतानि मे ॥ ११-२०-२७ (६५३९४)
एतावानिह संवासो विहितस्ते मया सह ।
षण्मासान्सप्तमे मासि त्वं वीर निधनं गतः ॥ ११-२०-२८ (६५३९५)
इत्युक्तवचनामेनामपकर्षन्ति दुःखिताम् ।
उत्तरां मोघसङ्कल्पां मत्स्यराजकुलस्त्रियः ॥ ११-२०-२९ (६५३९६)
उत्तरामपकृष्यैनामार्तामार्ततराः स्वयम् ।
विराटं निहतं दृष्ट्वा क्रोशन्ति विलपन्ति च ॥ ११-२०-३० (६५३९७)
द्रोणास्त्रशरसङ्कृत्तं शयानं रुधिरोक्षितम् ।

विराटं वितुदन्त्येते गृध्रगोमायुवायसाः ॥ ११-२०-३१ (६५३९८)
वितुद्यमानं विहगैर्विराटमसितेक्षणाः ।
न शक्नुवन्ति विहगान्निवारयितुमातुराः ॥ ११-२०-३२ (६५३९९)
आसामातपतप्तानामायासेन च योषिताम् ।
श्रमेण च विवर्णानां वक्त्राणां विप्लुतं वपुः ॥ ११-२०-३३ (६५४००)
उत्तरं चाभिमन्युं च काम्भोजं च सुदक्षिणम् ।
कार्ष्णिनाऽभिहतं पश्य लक्ष्मणं प्रियदर्शनम्। ११-२०-३४ (६५४०१)
आयोधनशिरोमध्ये शयानं पश्य माधव ॥ ॥ ११-२०-३५ (६५४०२)

इति श्रीमन्महाभारते कर्णपर्वणि
Mahabharata - Strii Parva - Chapter Footnotes

११-२०-१ अध्यर्धगुणं सार्धगुणम् ॥
१ ॥
११-२०-२४ दुष्करं पुनरप्राप्तं काले भवति केनचित् इति क पाठः
। दुष्करं प्रति न प्राप्तमित्यादि छ ट। पाठः ॥
११-२०-३३ वपुः शस्ताकृतिः । वपुः क्लीबं तनौ शस्ताकृतावपीति मेदिनी ॥
११-२०-२० विंशतितमोऽध्यायः ॥

---

स्त्रीपर्व-अध्यय०२१
॥ श्रीः ॥
११.२१. अध्यायः २१

Mahabharata - Strii Parva - Chapter Topics
गान्धार्या कृष्णंप्रति बाह्लिकादीनां तथा तत्स्त्रीणां च प्रदर्शनम् ॥ १ ॥

Mahabharata - Strii Parva - Chapter Text

११-२१-० (६५४०३)
गान्धार्युवाच। ११-२१-०क्ष् (५३५६)
आवन्त्यं भीमसेनेन भक्षयन्ति निपातितम् ।
गृध्रगोमायवः शूरं दूरबन्धुमबन्धुवत् ॥ ११-२१-१ (६५४०४)
तं पश्य कदनं कृत्वा शूरणां मधुसूदन ।
शयानं वीरशयने रुधिरेण समुक्षितम् ॥ ११-२१-२ (६५४०५)
तं सृगालाश्च कङ्काश्च क्रव्यादाश्च पृथग्विधाः ।
तेनतेन विकर्षन्ति पश्य कालस्य पर्ययम् ॥ ११-२१-३ (६५४०६)

शयानं वीरशयने शूरमाक्रन्दकारिणम् ।
आवन्त्यमभितो नार्यो रुदत्यः पर्युपासते ॥ ११-२१-४ (६५४०७)
प्रातिपेयं महेष्वासं हत भीमेन बाह्लिकम् ।
प्रसुप्तमिव शार्दूलं पश्य कृष्णमनस्विनम् ॥ ११-२१-५ (६५४०८)
अतीव मुखवर्णोऽस्य निहतस्यापि शोभते ।
सोमस्यवाभिपूर्णस्य पौर्णमास्यां समुद्यतः ॥ ११-२१-६ (६५४०९)
पुत्रशोकाभितप्तेन प्रतिज्ञां चाभिरक्षता ।
पाकशासनिना सङ्ख्ये वार्धक्षत्रिर्निपातितः ॥ ११-२१-७ (६५४१०)
एकादशचमूर्भित्त्वा रक्ष्यमाणं महात्मभिः ।
सत्यं चिकीर्षता पश्य हतमेनं जयद्रथम् ॥ ११-२१-८ (६५४११)
सिन्धुसौवीरभर्तारं दर्पपूर्णं मनस्विनम् ।
भक्षयन्ति शिवा गृध्रा जनार्दन जयद्रथम् ॥ ११-२१-९ (६५४१२)
संरक्ष्यमाणं भार्याभिरनुरक्ताभिरच्युत ।
भीषयन्त्यो विकर्षन्ति गहनं निम्नमन्तिकात् ॥ ११-२१-१० (६५४१३)
तमेताः पर्युपासन्ते वीक्षमाणा महाभुजम् ।
सिन्धुसौवीरकाम्भोजगान्धारयवनस्त्रियः ॥ ११-२१-११ (६५४१४)
यदा कृष्णामुपादाय प्राद्रवत्केकयैः सह ।
तदैव वध्यः पाण्डूनां जनार्दन जयद्रथः ॥ ११-२१-१२ (६५४१५)
दुःशलां मानयद्भिस्तु तदा मुक्तो जयद्रथः ।
कथमद्य न तां कृष्ण मानयन्ति स्म ते पुनः ॥ ११-२१-१३ (६५४१६)
सैन्धवं मे सुता बाला प्रस्खलन्तीव दुःखिता ।
प्रमापयन्ती चात्मानमाक्रोशन्तीव पाण्डवान् ॥ ११-२१-१४ (६५४१७)
किन्नु दुःखतरं कृष्ण परं मम भविष्यति ।
यत्सुता विधवा बाला स्नुषाश्च निहतेश्वराः ॥ ११-२१-१५ (६५४१८)
हाहा धिग्धुःशलां पश्य वीतशोकभयामिव ।
भर्तुः शिर अपश्यन्तीं धावमानामितस्ततः ॥ ११-२१-१६ (६५४१९)
वारयामास यः सर्वान्पाण्डवान्पुत्रगृद्धिनः ।
स हत्वा विपुलाः सेनाः स्वयं मृत्युवशं गतः ॥ ११-२१-१७ (६५४२०)
तं मत्तमिव मातङ्गं वीरं परमदुर्जयम् ।
परिवार्य रुदन्त्येताः स्त्रियश्चन्द्रोपमाननाः ॥ ॥ ११-२१-१८ (६५४२१)

इति श्रीमन्महाभारते स्त्रीपर्वणि स्त्रीविलापपर्वमि द्वाविंशोऽध्यायः ॥ २२ ॥

Mahabharata - Strii Parva - Chapter Footnotes

११-२१-१३ कलावशेषो हि इति क । पाठः ॥
११-२१-१४ रोरूयते दुःखचयाभितप्ता इति क ट पाठः ॥

११-२१-२१ एकविंशतितमोऽध्यायः ॥

---

स्त्रीपर्व-अध्यय०२२
॥ श्रीः ॥
११.२२. अध्यायः २२

Mahabharata - Strii Parva - Chapter Topics
गान्धार्या कृष्णम्प्रति बाह्लिकादीनां तथा तत्स्त्रीणां च प्रदर्शनम् ॥ १ ॥

Mahabharata - Strii Parva - Chapter Text

११-२२-० (६५४२२)
गान्धार्युवाच। ११-२२-०क्ष् (५३५७)
आवनत्यं भीमसेनेन भक्षयन्ति निपातितम् ।
गृध्रगोमायवः शूरं दूरबन्धुमबन्धुवत् ॥ ११-२२-१ (६५४२३)
तं पश्य कदनं कृत्वा शूराणां मधुसूदन ।
शयानं वीरशयने रुधिरेण समुक्षितम् ॥ ११-२२-२ (६५४२४)
तं सृगालाश्च कङ्काश्च क्रव्यादाश्च पृथग्विधाः ।
तेनतेन विकर्षन्ति पश्य कालस्य पर्ययम् ॥ ११-२२-३ (६५४२५)
शयानं वीरशयने शूरमाक्रन्दकारिणम् ।
आवन्त्यमभितो नार्यो रुदत्यः पर्युपासते ॥ ११-२२-४ (६५४२६)
प्रातिपेयं महेष्वासं हतं भीमेन बाह्लिकम् ।
प्रसुप्तमिव शार्दुलं पश्य कृष्णमनस्विनम् ॥ ११-२२-५ (६५४२७)
अतीव मुखवर्णोऽस्य निहतस्यापि शोभते ।
सोमस्यवाभिपूर्णस्य पौर्णमास्यां समुद्यतः ॥ ११-२२-६ (६५४२८)
पुत्रशोकाभितप्तेन प्रतिज्ञां चाभिरक्षता ।
पाकशासनिना सङ्ख्ये वार्धक्षत्रिर्निपातितः ॥ ११-२२-७ (६५४२९)
एकादशचमूर्भित्त्वा रक्ष्यमाणं महात्मभिः ।
सत्यं चिकीर्षता पश्य हतमेनं जयद्रथम् ॥ ११-२२-८ (६५४३०)
सिन्धुसौवीरभर्तारं दर्पपूर्णं मनस्विनम् ।
भक्षयन्ति शिवा गृध्रा जनार्दन जयद्रथम् ॥ ११-२२-९ (६५४३१)
संरक्ष्यमाणं भार्याभिरनुरक्ताभिरच्युत ।
भीषयन्त्यो विकर्षन्ति गहनं निम्नमन्तिकात् ॥ ११-२२-१० (६५४३२)
तमेताः पर्यपासन्ते वीक्षमाणा महाभुजम् ।
सिन्धुसौवीरकाम्भोजगान्धारयवनस्त्रियः ॥ ११-२२-११ (६५४३३)
यदा कृष्णामुपादाय प्राद्रवत्केकयैः सह ।

तदैव वध्यः पाण्डूनां जनार्दन जयद्रथः ॥ ११-२२-१२ (६५४३४)
दुःशलां मानयद्भिस्तु तदा मुक्तो जयद्रथः ।
कथमद्य न तां कृष्ण मानयन्ति स्म ते पुनः ॥ ११-२२-१३ (६५४३५)
सैन्धवं मे सुता बाला प्रस्स्वलन्तीव दुःखिता ।
प्रमापयन्ती चात्मानमाक्रोशन्तीव पाण्डवान् ॥ ११-२२-१४ (६५४३६)
किन्नु दुःखतरं कृष्ण परं मम भविष्यति ।
यत्सुता विधवा बाला स्नुषाश्च निहतेश्वराः ॥ ११-२२-१५ (६५४३७)
हाहा धिग्धुःशलां पश्य वीतशोकभयामिव ।
भर्तुः शिर अपश्यन्तीं धावमानामितस्ततः ॥ ११-२२-१६ (६५४३८)
वारयामास यः सर्वान्पाण्डवान्पुत्रगृद्धिनः ।
स हत्वा विपुलाः सेनाः सर्वयं मृत्युवशं गतः ॥ ११-२२-१७ (६५४३९)
तं मत्तमिव मातङ्गं वीरं परमदुर्जयम् ।
परिवार्य रुदन्त्येताः स्त्रियश्चन्द्रोपमाननाः ॥ ॥ ११-२२-१८ (६५४४०)

इति श्रीमन्महाभारते स्त्रीपर्वणि स्त्रीविलापपर्वणि द्वाविंशोऽध्यायः ॥ २२ ॥
Mahabharata - Strii Parva - Chapter Footnotes

११-२२-७ बार्धक्षत्रिर्जयद्रथः ॥
११-२२-२२ द्वाविंशोऽध्यायः ॥

---

स्त्रीपर्व-अध्यय०२३
॥ श्रीः ॥
११.२३. अध्यायः २३

Mahabharata - Strii Parva - Chapter Topics
कृष्णप्रति गान्धार्या भीष्मद्रोणादिगुणानुवर्णनपूर्वकं
तत्तच्छरीराणां विलपन्तीनां तत्स्त्रीणां च प्रदर्शनम् ॥ १ ॥

Mahabharata - Strii Parva - Chapter Text

११-२३-० (६५४४१)
गान्धार्युवाच। ११-२३-०क्ष् (५३५८)
एष शल्यो हतः शेते साक्षान्नकुलमातुलः ।
धर्मज्ञेन हतस्तात धर्मराजेन संयुगे ॥ ११-२३-१ (६५४४२)
यस्त्वया स्पर्धते नित्यं सर्वत्र पुरुषर्षभ ।
स एष निहतः शेते मद्रराजो महाबलः ॥ ११-२३-२ (६५४४३)

ग्जयद्रथे यदि ब्रूयुरुपरोधं कथञ्चन ।
मद्रपुत्रे कथं ब्रूयुरुपरोधं विवक्षवः ॥' ११-२३-३ (६५४४४)
येन सङ्गृह्णता तात रथमाधिरथेर्युधि ।
जयार्थं पाण्डुपुत्राणां तदा तेजोवधः कृतः ॥ ११-२३-४ (६५४४५)
अहो धिक्पश्य शल्यस्य पूर्णचन्द्रसुदर्शनम् ।
मुखं पद्मपलाशाक्षं काकैरादष्टमव्रणम् ॥ ११-२३-५ (६५४४६)
एषा चामीकराभस्य तप्तकाञ्चनसप्रभा ।
आस्याद्विनिः सृता जिह्वा भक्ष्यते कृष्ण पक्षिभिः ॥ ११-२३-६ (६५४४७)
युधिष्ठिरेण निहतं शल्यं समितिशोभनम् ।
रुदन्त्यः पर्युपासन्ते मद्रराजं कुलाङ्गनाः ॥ ११-२३-७ (६५४४८)
एताः सुसूक्ष्मवसना मद्रराजं नरर्षभम् ।
क्रोशन्त्योऽथ समासाद्य क्षत्रियाः क्षत्रियर्षभम् ॥ ११-२३-८ (६५४४९)
शल्यं निपतितं नार्यः परिवार्याभितः स्थिताः ।
वासिता गृष्टयः पङ्के परिमग्नमिवर्षभम् ॥ ११-२३-९ (६५४५०)
शल्यं शरणदं शूरं पश्येमं वृष्णिनन्दन ।
शयानं वीरशयने शरैर्विशकलीकृतम् ॥ ११-२३-१० (६५४५१)
एष शैलालयो राजा भगदत्तः प्रतापवान् ।
गजाङ्कुशधरः श्रीमाञ्शेते भुवि निपातितः ॥ ११-२३-११ (६५४५२)
यस्य रुक्ममयी माला शिरस्येषा विराजते ।
श्वापदैर्भक्ष्यमाणस्य शोभयन्तीव मूर्धजान् ॥ ११-२३-१२ (६५४५३)
एतेन किल पार्थस्य युद्धमासीत्सुदारुणम् ।
रोमहर्षणमत्युग्रं शक्रस्य त्वहिना यथा ॥ ११-२३-१३ (६५४५४)
योधयित्वा माहाबाहुरेष पार्थं धनञ्जयम् ।
संशयं गमयित्वा च कुन्तीपुत्रेण पातितः ॥ ११-२३-१४ (६५४५५)
यस्य नास्ति समो लोके शौर्ये वीर्ये च कश्चन् ।
स एष निहतः शेते भीष्मो भीष्मकृदाहवे ॥ ११-२३-१५ (६५४५६)
पश्य शान्तनवं कृष्ण शयानं सूर्यवर्चसम् ।
युगान्त इव कालेन पातितं सूर्यमम्बरात् ॥ ११-२३-१६ (६५४५७)
एष तप्त्वा रणे शत्रूञ्शस्त्रतापेन वीर्यवान् ।
नरसूर्योऽस्तमभ्येति सूर्योऽस्तमिव केशव ॥ ११-२३-१७ (६५४५८)
शरतल्पगतं भीष्ममूर्ध्वरेतसमच्युतम् ।
शयानं वीरशयने पश्य शूरनिषेविते ॥ ११-२३-१८ (६५४५९)
कर्णिनालीकनाराचैरास्तीर्य शयनोत्तमम् ।
आविश्य शेते भगवान्स्कन्दः शरवणं यथा ॥ ११-२३-१९ (६५४६०)
अतूलपूर्णं गाङ्गेयस्त्रिभिर्बाणैः समन्वितम् ।
उपधायोपधानाग्र्यं दत्तं गाण्डीवधन्वना ॥ ११-२३-२० (६५४६१)

पालयानः पितुः शास्त्रमूर्ध्वरेता महायशाः ।
एष शान्तनवः शेते माधवाप्रतिमो युधि ॥ ११-२३-२१ (६५४६२)
धर्मात्मा तात सर्वज्ञः पारावर्येण निर्णये ।
अमर्त्य इव मर्त्यः सन्नेष प्राणानधारयत् ॥ ११-२३-२२ (६५४६३)
नास्ति युद्धे कृती कश्चिन्न विद्वान्न पराक्रमी ।
यत्र शान्तनवो भीष्मः शेतेऽद्य निहतः परैः ॥ ११-२३-२३ (६५४६४)
स्वयमेतेन शूरेण पृच्छ्यमानेन पाण्डवैः ।
धर्मज्ञेनाहवे मृत्युरादिष्टः सत्यवादिना ॥ ११-२३-२४ (६५४६५)
प्रनष्टः कुरुवंशश्च पुनर्येन समुद्धृतः ।
स गतः कुरुभिः सार्धं महाबुद्धिः पराभवम् ॥ ११-२३-२५ (६५४६६)
धर्मेण कुरवः केन परिप्रक्ष्यन्ति माधव ।
हते देवव्रते भीष्मे देवकल्पे नरर्षभे ॥ ११-२३-२६ (६५४६७)
अर्जुनस्य विनेतारमाचार्यं सात्यकेस्तथा ।
तं पश्य पतितं द्रोणं कुरूणां गुरुमुत्तमम् ॥ ११-२३-२७ (६५४६८)
अस्त्रं चतुर्विधं वेद यथैव त्रिदशेश्वरः ।
भार्गवो वा महावीर्यस्तथा द्रोणोऽपि माधव ॥ ११-२३-२८ (६५४६९)
यस्य प्रसादाद्बीभत्सुः पाण्डवः कर्म दुष्करम् ।
चकार स हतः शेते नैनमस्त्राण्यपालयन् ॥ ११-२३-२९ (६५४७०)
यं पुरोधाय कुरव आह्वयन्ति स्म पाण्डवान् ।
सोऽयं शस्त्रभृतां श्रेष्ठो द्रोणः शस्त्रपृथक्कृतः
॥ ११-२३-३० (६५४७१)
यस्य निर्दहतः सेनां गतिरग्नरिवाभवत् ।
स भूमौ निहतः शेते शान्तार्चिरिव पावकः ॥ ११-२३-३१ (६५४७२)
धनुर्मुष्टिरशीर्णश्च हस्तावापश्च माधव ।
द्रोणस्य निहतस्यापि दृश्यते जीवतो यथा ॥ ११-२३-३२ (६५४७३)
वेदा यस्माच्च चत्वारः सर्वाण्यस्त्राणि केशव ।
अनपेतानि वै शूराद्यथैवादौ प्रजापतेः ॥ ११-२३-३३ (६५४७४)
चन्दनार्हाविमौ तस्य बन्दिभिर्वन्दितौ शुभौ ।
गोमायवो विकर्षन्ति पादौ शिष्यशतार्चितौ ॥ ११-२३-३४ (६५४७५)
द्रोणं द्रुपदपुत्रेण निहतं मधुसूदन ।
कृपी कृपणमन्वास्ते दुःखोपहतचेतना ॥ ११-२३-३५ (६५४७६)
तां पश्य रुदतीमार्तां मुक्तकेशीमधोमुखीम् ।
हतं पतिमुपासन्तीं द्रोणं शस्त्रभृतां वरम् ॥ ११-२३-३६ (६५४७७)
बाणैर्भिन्नतनुत्राणं धृष्टद्युम्नेन केशव ।
उपास्ते वै मृधे द्रोणं जटिला ब्रह्मचारिणी ॥ ११-२३-३७ (६५४७८)
प्रेतकृत्ये च यतते कृपी कृपणमातुरा ।

हतस्य समरे भर्तुः सुकुमारी यशस्विनी ॥ ११-२३-३८ (६५४७९)
अग्नीनाधाय विविधवच्चितां प्रज्वाल्य सर्वतः ।
द्रोणमाधाय गायन्ति त्रीणि सामानि सामगाः ॥ ११-२३-३९ (६५४८०)
कुर्वन्ति च चितामेते जटिला ब्रह्मचारिणः ।
धनुर्भिः शक्तिभिश्चैव रथनीडैश्च माधव ॥ ११-२३-४० (६५४८१)
शरैश्च विविधैरन्यैर्धक्ष्यन्ते भूरितेजसम् ।
त एते द्रोणमादाय गायन्ति च रुदन्ति च ॥ ११-२३-४१ (६५४८२)
सामभिस्त्रिभिरन्तस्थैरनुशंसन्ति चापरे ।
अग्नावग्निं समाधाय द्रोणं हुत्वा हुताशने ॥ ११-२३-४२ (६५४८३)
गच्छन्त्यभिमुखा गङ्गां द्रोणशिष्या द्विजातयः ।
अपसव्यां चितिं कृत्वा पुरस्कृत्य कृपीं तथा ॥ ॥ ११-२३-४३ (६५४८४)

इति श्रीमन्महाभारते स्त्रीपर्वणि स्त्रीविलापपर्वणि त्रयोविंशोऽध्यायः
॥ २३ ॥
Mahabharata - Strii Parva - Chapter Footnotes

११-२३-९ परिमग्निमिव द्विपमिति झ पाठः ॥
११-२३-१३ अहिना वृत्रासुरेण ॥
११-२३-१५ भीष्मकृत् भयङ्करकर्मकृत् ॥
११-२३-२१ शास्त्रं आज्ञाम् ॥
११-२३-२२ निर्णिये पारावर्येण । परावरौ परलोकेहलोकौ तद्विषयेण ज्ञानेन। तत्त्वज्ञानबलेन प्राणानधारयदित्यर्थः। पारपर्येऽथ निर्णय इति छ पाठः। पाराशर्यस्य निर्णये इति क ट पाठः ॥
११-२३-२६ धर्मेषु कुरवः कं नु परिप्रक्ष्यन्ति माधव । गते देवव्रते स्वर्गं देवकल्पे नरर्षभे इति झ पाठः ॥
११-२३-३४ शिष्यशरार्चिताविति क पाठः ॥
११-२३-२३ त्रोयविंशोऽध्यायः ॥

---

स्त्रीपर्व-अध्यय०२४
॥ श्रीः ॥
११.२४. अध्यायः २४

Mahabharata - Strii Parva - Chapter Topics
कृष्णम्प्रति गान्धार्य भूरिश्रवः प्रभृतिशरीराणां तत्तस्त्रीणां च प्रदर्शनम् ॥ १ ॥

११-२४-० (६५४८५)
गान्धार्युवाच। ११-२४-०क्ष् (५३५९)
सोमदत्तसुतं पश्य युयुधानेन पातितम् ।
वितुद्यमानं विहगैर्बहुभिर्माधवान्तिके ॥ ११-२४-१ (६५४८६)
पुत्रशोकाभिसन्तप्तः शोमदत्तो जनार्दन ।
युयुधानं महेष्वासं गर्हयन्निव दृश्यते ॥ ११-२४-२ (६५४८७)
असौ हि भूरिश्वसो माता शोकपरिप्लुता ।
आश्वासयति भर्तारं सोमदत्तमनिन्दिता ॥ ११-२४-३ (६५४८८)
दिष्ट्या नैनं महाराज दारुणं भरतक्षयम् ।
कुरुसङ्क्रन्दनं घोरं युगान्तमनुपश्यसि ॥ ११-२४-४ (६५४८९)
दिष्ट्या यूपध्वजं पुत्रं वीरं भूरिसहस्रदम् ।
अनेकक्रतुयज्वानं निहतं नानुपश्यसि ॥ ११-२४-५ (६५४९०)
दिष्ट्या स्नुषाणामाक्रन्दे घोरं विलपितं बहु ।
न शृणोषि महाराज सारसीनामिवार्णवे ॥ ११-२४-६ (६५४९१)
एकवस्त्रास्तु पञ्चैताः प्रकीर्णासितमूर्धजाः ।
स्नुषास्ते परिधावन्ति हतापत्या हतेश्वराः ॥ ११-२४-७ (६५४९२)
श्वापदैर्भक्ष्यमाणं त्वमहो दिष्ट्या न पश्यसि ।
छिन्नबाहुं नरव्याघ्रमर्जुनेन निपातितम् ॥ ११-२४-८ (६५४९३)
शलं विनिहतं सङ्ख्ये भूरिश्रवसमेव च ।
स्नुषाश्च विविधाः सर्वा दिष्ट्या नाद्येह पश्यसि ॥ ११-२४-९ (६५४९४)
दिष्ट्या तत्काञ्चनं छत्रं यूपकेतोर्महात्मनः ।
विनीकीर्णं रथोपस्थे सौमदत्तेर्न पश्यसि ॥ ११-२४-१० (६५४९५)
अमूस्तु भूरिश्रवसो भार्याः सात्यकिना हतम् ।
परिवार्यानुशोचन्ति भर्तारमसितेक्षणाः ॥ ११-२४-११ (६५४९६)
एता विलप्य करुणं भर्तृशोकेन कर्शिताः ।
पतन्त्यभिमुखा भूमौ कृपणं बत केशव ॥ ११-२४-१२ (६५४९७)
बीभत्सुरतिबीभत्सं कर्मेदमकरोत्कथम् ।
प्रमत्तस्य यदच्छैत्सीद्बाहुं शूरस्य यज्वनः ॥ ११-२४-१३ (६५४९८)
ततः पापतरं कर्म कृतवानपि सात्यकिः ।
यस्मात्प्रायोपविष्टस्य प्राहार्षीत्संशितात्मनः ॥ ११-२४-१४ (६५४९९)
एको द्वाभ्यां हतः शेते क्षत्रधर्मेण धार्मिकः ।
किन्नु वक्ष्यति वै सत्सु गोष्ठीषु च सभासु च ॥ ११-२४-१५ (६५५००)
अपुण्यमयशस्यं च कर्मेदं सात्यकिः स्वयम् ।
इति यूपध्वजस्यैताः स्त्रियः क्रोशन्ति माधव ॥ ११-२४-१६ (६५५०१)

भार्या यूपध्वजस्यैषा करसम्मितमध्यमा ।
कृत्वोत्सङ्गे भुजं भर्तुः कृपणं परिदेवति ॥ ११-२४-१७ (६५५०२)
अयं स हन्ता शूराणां मित्राणामभयप्रदः ।
प्रदाता गोसहस्राणां क्षत्रियान्तकरः करः ॥ ११-२४-१८ (६५५०३)
अयं स रशनोत्कर्षी पीनस्तनविमर्दनः ।
नाभ्यूरुजघनस्पर्शी नीवीविस्रंसनः करः ॥ ११-२४-१९ (६५५०४)
वासुदेवस्य सान्निध्ये पार्थेनाक्लिष्टकर्मणा ।
युध्यतः समरेऽन्येन प्रमत्तस्य निपातितः ॥ ११-२४-२० (६५५०५)
किन्नु वक्ष्यसि संसत्सु कथासु च जनार्दन ।
अर्जुनस्य महत्कर्म स्वयं वा स किरीटभृत् ॥ ११-२४-२१ (६५५०६)
इत्येवं गर्हयित्वैषा तूष्णीमास्ते वराङ्गना ।
तामेतामनुशोचन्ति सपत्न्यः स्वामिव स्नुषाम् ॥ ११-२४-२२ (६५५०७)
गान्धारराजः शकुनिर्बलवान्सत्यविक्रमः ।
निहतः सहदेवेन भागिनेमेन मातुलः ॥ ११-२४-२३ (६५५०८)
यः पुरा हेमदण्डाभ्यां व्यजनाभ्यां स्म वीज्यते ।
स एष पक्षिभिः पक्षैः शयान उपवीज्यते ॥ ११-२४-२४ (६५५०९)
यः स्वरूपाणि कुरुते शतशोऽथ सहस्रशः ।
तस्य मायाविनो माया दग्धाः पाण्डवतेजसा ॥ ११-२४-२५ (६५५१०)
मायया निकृतिप्रज्ञो जितवान्यो युधिष्ठिरम् ।
सभायां विपुलं राज्यं स जहौ जीवितं कथम् ॥ ११-२४-२६ (६५५११)
शकुन्ताः शकुनिं कृष्ण समन्तात्पर्युपासते ।
कितवं मम पुत्राणां विनाशायोपशिक्षितम् ॥ ११-२४-२७ (६५५१२)
एतेनैतन्महद्वैरं प्रसक्तं पाण्डवैः सह ।
वधाय मम पुत्राणामात्मनः सगणस्य च ॥ ११-२४-२८ (६५५१३)
यथैव मम पुत्राणां लोकाः शस्त्रजिताः प्रभो ।
एवमस्यापि दुर्बुद्धेर्लोकाः शस्त्रेण वै जिताः ॥ ११-२४-२९ (६५५१४)
कथं च नायं तत्रापि पुत्रान्मे भ्रातृभिः सह ।
विरोधयेदृजुप्रज्ञाननृजुर्मधुसूदन ॥ ॥ ११-२४-३० (६५५१५)

इति श्रीमन्महाभारते स्त्रीपर्वणि स्त्रीविलापपर्वणि चतुर्विंशोऽध्यायः
॥ २४ ॥

Mahabharata - Strii Parva - Chapter Footnotes

११-२४-१३ बीभत्सुरतिनिर्मलकर्मा । अतिबीभत्सं अतिगर्हितम् ॥
११-२४-१५ अको द्वाभ्यां हतः शेषे त्वमधर्मेण धार्मिक इति झ पाठः ॥
११-२४-२६ स पुनर्जीवितं जित इति झ पाठः ॥

११-२४-२४ चतुर्विंशोऽध्यायः ॥

---

स्त्रीपर्व-अध्यय०२५
॥ श्रीः ॥
११.२५. अध्यायः २५

Mahabharata - Strii Parva - Chapter Topics
कृष्णम्प्रति गान्धार्या कुरुपाण्डवसंक्षयस्य
कृष्णोपेक्षणहेतुकत्वकथनपूर्वकं सर्वबन्धुसंक्षयाय शापदानम्
॥ १ ॥

Mahabharata - Strii Parva - Chapter Text

११-२५-० (६५५१६)
गान्धार्युवाच। ११-२५-०क्ष् (५३६०)
काम्भोजं पश्य दुर्धर्षं काम्भोजास्तरणोचितम् ।
शयानमृषभस्कन्धं हतं पांसुषु माधव ॥ ११-२५-१ (६५५१७)
अस्य क्षतजसन्दिग्धौ बाहू चन्दनरूषितौ ।
अवेक्ष्य कृपणं भार्या विलपत्यतिदुःखिता ॥ ११-२५-२ (६५५१८)
इमौ तौ परिघप्रख्यौ बाहू चन्दनरूषितौ ।
ययोर्विवरमापन्नां न रतिर्मां पुराऽजहात् ॥ ११-२५-३ (६५५१९)
कां गतिं तु गमिष्यामि त्वया हीना जनेश्वर ।
दूरबन्धुरनाथा च वेपन्ती मधुरस्वरा ॥ ११-२५-४ (६५५२०)
आतपे क्लाम्यमानानां विविधानामिव स्रुजाम् ।
क्लान्तानामपि नारीणां जहाति श्रीर्न वै तनूः ॥ ११-२५-५ (६५५२१)
शयानमभितः शूरं कालिङ्गं मधुसूदन ।
पश्य दीप्ताङ्गदयुतं प्रतिमानं धनुष्मताम् ॥ ११-२५-६ (६५५२२)
मागधानामधिपतिं जयत्सेनं जनार्दन ।
परिवार्य प्ररुदिता मागध्यः पश्य योषितः ॥ ११-२५-७ (६५५२३)
हरिणायतनेत्राणां सुस्वराणां जनार्दन ।
मनः श्रुतिहरो नादो मनो मोहयतीव मे ॥ ११-२५-८ (६५५२४)
प्रकीर्णवस्त्राभरणा रुदत्यः शोककर्शिताः ।
स्वास्तीर्णशयनोपेता मागध्यः शेरते भुवि ॥ ११-२५-९ (६५५२५)
कोसलानामधिपतिं राजपुत्रं बृहद्बलम् ।
भर्तारं परिवार्यैताः पृथक्प्ररुदिताः स्त्रियः ॥ ११-२५-१० (६५५२६)
अस्य गात्रगतान्बाणान्कार्ष्णिबाहुबलेरितान् ।

उद्धरन्त्यसुखाविष्टा मूर्च्छमानाः पुनः पुनः ॥ ११-२५-११ (६५५२७)
आसां सर्वानवद्यानामातपेन परिश्रमात् ।
प्रम्लाननलिनाभानि भान्ति वक्त्राणि माधव ॥ ११-२५-१२ (६५५२८)
द्रोणेन निहताः शूरा शेरते रुचिराङ्गदाः ।
धृष्टद्युम्नसुताः सर्वे शिशवो हेममालिनः ॥ ११-२५-१३ (६५५२९)
रथाग्न्यगारं चापार्चिं शरशक्तिगदेन्धनम् ।
द्रोणमासाद्य निर्दग्धाः शलभा इव पावकम् ॥ ११-२५-१४ (६५५३०)
तथैव निहताः शूराः शेरते रुचिराङ्गदाः ।
द्रोणेनाभिमुखाः सङ्ख्ये भ्रातरः पञ्च केकयाः ॥ ११-२५-१५ (६५५३१)
तप्तकाञ्चनवर्माणस्तालध्वजस्थव्रजाः ।
भासयन्ति महीं भासा ज्वलिता इव पावकाः ॥ ११-२५-१६ (६५५३२)
द्रोणेन द्रुपदं सङ्ख्ये पश्य माधव पातितम् ।
महाद्विपमिवारण्ये सिंहेन महता हतम् ॥ ११-२५-१७ (६५५३३)
पाञ्चालराज्ञो विमलं पुण्डरीकाक्ष पाण्डुरम् ।
आतपत्रं समाभाति शरदीव निशाकरः ॥ ११-२५-१८ (६५५३४)
एतास्तु द्रुपदं वृद्धं स्नुषा भार्याश्च दुःखिताः ।
दग्ध्वा गच्छन्ति पाञ्चालराजानमपसव्यतः ॥ ११-२५-१९ (६५५३५)
धृष्टकेतुं महात्मानं चेदिपुङ्गवमङ्गनाः ।
द्रोणेन निहतं शूरं हरन्ति हृतचेतसः ॥ ११-२५-२० (६५५३६)
द्रोणास्त्रमभिहत्यैष विमर्दे मधुसूदन ।
महेष्वासो हतः शेते वज्राहत इव द्रुमः ॥ ११-२५-२१ (६५५३७)
एष चेदिपतिः शूरो धृष्टकेतुर्महारथः ।
शेते विनिहतः सङ्ख्ये हत्वा शत्रून्सहस्रशः ॥ ११-२५-२२ (६५५३८)
वितुद्यमानं विहगैस्तं भार्याः पर्युपाश्रिताः ।
चेदिराजं हृषीकेश हतं सबलबान्धवम् ॥ ११-२५-२३ (६५५३९)
दाशार्हपुत्रजं वीरं शयानं सत्यविक्रमम् ।
आरोप्याङ्के रुदन्त्येताश्चेदिराज वराङ्गनाः ॥ ११-२५-२४ (६५५४०)
अस्य पुत्रं हृषीकेश सुवक्त्रं चारुकुण्डलम् ।
द्रोणेन समरे पश्य निकृत्तं बहुधा शरैः ॥ ११-२५-२५ (६५५४१)
पितरं नूनमाजिस्थं युध्यमानं परैः सह ।
नाजहात्पितरं वीरमद्यापि मधुसूदन ॥ ११-२५-२६ (६५५४२)
एवं ममापि पुत्रस्य पुत्रः पितरमन्वगात् ।
दुर्योधनं महाबाहो लक्ष्मणः परवीरहा ॥ ११-२५-२७ (६५५४३)
विन्दानुविन्दावावन्त्यौ पतितौ पश्य माधव ।
हिमान्ते पुष्पितौ शालौ मरुता गलिताविव ॥ ११-२५-२८ (६५५४४)
काञ्चनाङ्गदवर्माणौ बाणखड्गधनुर्धरौ ।

ऋषभप्रतिरूपाक्षौ शयानौ विमलस्रजौ ॥ ११-२५-२९ (६५५४५)
अवध्याः पाण्डवाः कृष्ण सर्व एव त्वया सह ।
ये मुक्ता द्रोणभीष्माभ्यां कर्णाद्वैकर्तनात्कृपात् ॥ ११-२५-३० (६५५४६)
दुर्योधनाद्द्रोणसुतात्सैन्धवाच्च जयद्रथात् ।
सोमदत्ताद्विकर्णाच्च शूराच्च कृतवर्मणः ॥ ११-२५-३१ (६५५४७)
ये हन्युः शस्त्रवेगेन देवानपि नरर्षभाः ।
त इमे निहताः सङ्ख्ये पश्य कालस्य पर्ययम् ॥ ११-२५-३२ (६५५४८)
नातिभारोऽस्ति दैवस्य ध्रुवं माधव कश्चन ।
यदिमे निहताः शूराः क्षत्रियैः क्षत्रियर्षभाः ।
ग्शूराश्च कृतविद्याश्च मम पुत्रा मनस्विनः'॥ ११-२५-३३ (६५५४९)
तदैव निहताः कृष्ण मम पुत्रास्तरस्विनः ।
यदैवाकृतकामस्त्वमुपप्लाव्यं गतः पुनः ॥ ११-२५-३४ (६५५५०)
शन्तनोश्चैव पुत्रेण प्राज्ञेन विदुरेण च ।
तदैवोक्तास्मि मा स्नेहं कुरुष्वात्मसुतेष्विति ॥ ११-२५-३५ (६५५५१)
तयोर्हि दर्शनं नैतन्मिथ्या भवितुमर्हति ।
अचिरेणैव मे पुत्रा भस्मीभूता जनार्दन ॥ ११-२५-३६ (६५५५२)
वैशम्पायन उवाच। ११-२५-३७क्ष् (५३६१)
इत्युक्त्वा न्यपतद्भूमौ गान्धारी शोकमूर्च्छिता ।
दुःखोपहतविज्ञाना धैर्यमुत्सृज्य भारत ॥ ११-२५-३७ (६५५५३)
ततः कोपपरीताङ्गी पुत्रशोकपरिप्लुता ।
जगाद शौरिं दोषेण गान्धारी व्यथितेन्द्रिया ॥ ११-२५-३८ (६५५५४)
गान्धार्युवाच। ११-२५-३९क्ष् (५३६२)
पाण्डवाः धार्तराष्ट्राश्च क्रुद्धाः कृष्ण परस्परम् ।
उपेक्षिता विनश्यन्तस्त्वया कस्माज्जनार्दन ॥ ११-२५-३९ (६५५५५)
शक्तेन बहुभृत्येन विपुले तिष्ठता बले ।
उभयत्र समर्थेन श्रुतवाक्येन चैव ह ॥ ११-२५-४० (६५५५६)
इच्छतोपेक्षितो नाशः कुरूणां मधुसूदन ।
यस्मात्त्वया महाबाहो फलं तस्मादवाप्नुहि ॥ ११-२५-४१ (६५५५७)
पतिशुश्रूषया यन्मे तपः किञ्चिदुपार्जितम् ।
तेन त्वां दुरवापेन शपे चक्रगदाधरम् ॥ ११-२५-४२ (६५५५८)
यस्मात्परस्परं घ्नन्तो ज्ञातयः कुरुपाण्डवाः ।
उपेक्षितास्ते गोविन्द तस्माज्ज्ञातीन्वधिष्यसि ॥ ११-२५-४३ (६५५५९)
त्वमप्युपस्थिते वर्षे षट्त्रिंशे मधुसूदन ।
हतज्ञातिर्हतामात्यो हतपुत्रो वनेचरः ॥ ११-२५-४४ (६५५६०)
अनाथवदविज्ञातो लोकेष्वनभिलक्षितः ।
कुत्सितेनाभ्युपायेन निधनं समवाप्स्यसि ॥ ११-२५-४५ (६५५६१)

तवाप्येवं हतसुता निहतज्ञातिबान्धवाः ।
स्त्रियः परिपतिष्यन्ति यथैता भरतस्त्रियः ॥ ११-२५-४६ (६५५६२)
वैशम्पयन उवाच। ११-२५-४७क्ष् (५३६३)
तच्छ्रुत्वा वचनं घोरं वासुदेवो महामनाः ।
उवाच देवीं गान्धारीमीषदभ्युत्स्मयन्निव ॥ ११-२५-४७ (६५५६३)
जानेऽहमेतदप्येवं चीर्णं चरसि क्षत्रिये ।
दैवादेव विनश्यन्ति वृष्णयो नात्र संशयः ॥ ११-२५-४८ (६५५६४)
संहर्ता वृष्णिचक्रस्य नान्यो मद्विद्यते शुभे ।
अवध्यास्ते नरैरन्यैरपि वा देवदानवैः ॥ ११-२५-४९ (६५५६५)
परस्परकृतं नाशं यतः प्राप्स्यन्ति यादवाः ।
इत्युक्तवति दाशार्हे पाण्डवास्त्रस्तचेतसः ।
बभूवुर्भृशसंविग्ना निराशाश्चापि जीविते ॥ ॥ ११-२५-५० (६५५६६)

इति श्रीमन्महाभारते स्त्रीपर्वणि स्त्रीविलापपर्वणि
पञ्चविंशोऽध्यायः ॥ २५ ॥
Mahabharata - Strii Parva - Chapter Footnotes

११-२५-१ काम्भोजास्तरणं कम्बलविशेषः ॥
११-२५-३ बाहू शुभतलाङ्गुली इति झ पाठः ॥
११-२५-६ दीप्ताङ्गदयुगप्रतिनद्धमहाभुजमिति झ पाठः ॥
११-२५-२४ दाशार्हपुत्रजमित्यत्र पुत्र्यामपि पुत्रशब्दः ॥
११-२५-२६ पितरमिति पितृपदस्यावृत्तिः शोकाकुलत्वान्न दोषाय ॥
११-२५-३६ तयोर्भीष्मविदुरयोः दर्शनं अनागतावेक्षणम् ॥
११-२५-३८ जगादशौरिं रोषणेति ट पाठः ॥
११-२५-४७ अभ्युत्स्मयन्नीषद्धवंसयन् ॥
११-२५-४८ चीर्णं चरसि मदनुष्टितमेवानुतिष्ठसि
। स्वतपोनाशार्थमिति भावः ॥
११-२५-२५ पञ्चविंशोऽध्यायः ॥

---

स्त्रीपर्व-अध्यय०२६
॥ श्रीः ॥
११.२६. अध्यायः २६

Mahabharata - Strii Parva - Chapter Topics
शोकाद्भुवि पतिताया गान्धार्याः कृष्णेनाश्वासनम् ॥ १ ॥
युधिष्ठिराज्ञया विदुरसञ्जयादिभिर्मृतानां दाहक्रियाकरणम् ॥ २ ॥

११-२६-० (६५५६७)
श्रीभगवानुवाच। ११-२६-०क्ष् (५३६४)
उत्तिष्ठोत्तिष्ठ गान्धारि मा च शोके मनः कृथाः ।
तवैव ह्यपराधेन कुरवो निधनं गताः ॥ ११-२६-१ (६५५६८)
यत्त्वं पुत्रं दुरात्मानमीर्षुमत्यन्तमानिनम् ।
दुर्योधनं पुरस्कृत्य दुष्कृतं साधु मन्यसे ॥ ११-२६-२ (६५५६९)
निष्ठुरं वैरपुरुषं वृद्धानां शासनातिगम् ।
कथमात्मकृतं दोषं मय्याधातुमिहेच्छसि ॥ ११-२६-३ (६५५७०)
मृतं वा यदि वा नष्टं योऽतीतमनुशोचति ।
दुःखेन लभते दुःखं द्वावनर्थौ प्रपद्यते ॥ ११-२६-४ (६५५७१)
तपोर्थीयं ब्राह्मणी धत्त गर्भं
गौर्वोढारं धावितारं तुरङ्गी ।
शूद्रा दासं पशुपालं च वैश्या
वधार्थीयं त्वद्विधा राजपुत्री ॥ ११-२६-५ (६५५७२)
वैशंपायन उवाच। ११-२६-६क्ष् (५३६५)
तच्छ्रुत्वा वासुदेवस्य पुनरुक्तं वचोऽप्रियम् ।
तूष्णीं बभूव गान्धारी शोकव्याकुललोचना ॥ ११-२६-६ (६५५७३)
धृतराष्ट्रस्तु राजर्षिर्निगृह्याबुद्धिजं तमः ।
पर्यपृच्छत धर्मज्ञो धर्मराजं युधिष्ठिरम् ॥ ११-२६-७ (६५५७४)
जीवतां परिमाणज्ञः सैन्यानामसि पाण्डव ।
हतानां यदि जानीषे परिमाणं वदस्वं मे ॥ ११-२६-८ (६५५७५)
युधिष्ठिर उवाच। ११-२६-९क्ष् (५३६६)
दशायुतसहस्राणि सहस्राणि च विंशतिः ।
कोट्यः षष्टिश्च षट् चैव ह्यस्मिन्राजन्मृधे हताः ॥ ११-२६-९ (६५५७६)
आलक्षाणां च वीराणां सहस्राणि चतुर्दश ।
दश चान्यानि राजेन्द्र शतं षष्टिश्च भारत ॥ ११-२६-१० (६५५७७)
धृतराष्ट्र उवाच। ११-२६-११क्ष् (५३६७)
युधिष्ठिरगतिं कां ते गताः पुरुषसत्तम ।
आचक्ष्व मे महाबाहो सर्वज्ञो ह्यसि मे मतः ॥ ११-२६-११ (६५५७८)
युधिष्ठिर उवाच। ११-२६-१२क्ष् (५३६८)
यैर्हुतानि शरीराणि हृष्टैः परमसंयुगे ।
देवराजसमाँल्लोकान्गतास्ते सत्यविक्रमाः ॥ ११-२६-१२ (६५५७९)
ये त्वहृष्टेन मनसा मर्तव्यमिति भारत ।

युध्यमाना हताः सङ्ख्ये गन्धर्वैः सह सङ्गताः ॥ ११-२६-१३ (६५५८०)
ये च सङ्ग्रामभूमिष्ठा याचमानाः पराङ्मुखाः ।
शस्त्रेण निधनं प्राप्ता गतास्ते गुह्यकान्प्रति ॥ ११-२६-१४ (६५५८१)
पात्यमानाः परैर्ये तु हीयमाना निरायुधाः ।
हीनिषेवा महात्मानः परानभिमुखा रणे ॥ ११-२६-१५ (६५५८२)
छिद्यमानाः शितैः शस्त्रैः क्षत्रधर्मपरायणाः ।
हतास्ते ब्रह्मसदनं गता वीराः सुवर्चसः ॥ ११-२६-१६ (६५५८३)
ये त्वत्र निहता राजन्नन्तरायोधनं प्रति ।
यथाकथञ्चित्पुरुषास्ते गता ह्युत्तरां गतिम् ॥ ११-२६-१७ (६५५८४)
धृतराष्ट्र उवाच। ११-२६-१८क्ष् (५३६९)
केन ज्ञानबलेनैव पुत्र पश्यसि सिद्धवत् ।
तन्मे वद महाबाहो श्रोतव्यं यदि वै मया ॥ ११-२६-१८ (६५५८५)
युधिष्ठिर उवाच। ११-२६-१९क्ष् (५३७०)
निदेशाद्भवतः पूर्वं वने विचरता मया ।
तीर्थयात्राप्रसङ्गेन सम्प्राप्तोऽयमनुग्रहः ॥ ११-२६-१९ (६५५८६)
देवर्षिर्लोमशो दृष्टस्ततः प्राप्तोऽस्म्यनुस्मृतिम् ।
दिव्यं चक्षुरपि प्राप्तं ज्ञानयोगेन वै पुरा ॥ ११-२६-२० (६५५८७)
धृतराष्ट्र उवाच। ११-२६-२१क्ष् (५३७१)
ये त्वनाथा जनास्तात नाथवन्तश्च पाण्डव ।
कच्चित्तेषां शरीराणि धक्ष्यन्ति विधिपूर्वकम् ॥ ११-२६-२१ (६५५८८)
युधिष्ठिर उवाच। ११-२६-२२क्ष् (५३७२)
न येषां शान्तिकर्तारो न च येऽत्राहिताग्नयः ।
वयं च तेषां कुर्यामो बहुत्वात्तात कर्मणाम् ॥ ११-२६-२२ (६५५८९)
यान्सुपर्णाश्च गृध्राश्च विकर्षन्ति ततस्ततः ।
तेषां सङ्कर्षणा लोका भविष्यन्ति न संशयः ॥ ११-२६-२३ (६५५९०)
वैशम्पायन उवाच। ११-२६-२४क्ष् (५३७३)
एवमुक्त्वा महाराज कुन्तीपुत्रो युधिष्ठिरः ।
आदिदेश सुधर्माणं धौम्यं सूतं च सञ्जयम् ॥ ११-२६-२४ (६५५९१)
विदुरं च महाबुद्धिं युयुत्सुं चैव कौरवम् ।
इन्द्रसेनमुखान्भृत्यान्सूतांश्चैव सहस्रशः ॥ ११-२६-२५ (६५५९२)
भवन्तः कारयन्त्वेषां प्रेतकार्याण्यशेषतः ।
यथा नाथवतां किञ्चिच्छरीरं न विनश्यति ॥ ११-२६-२६ (६५५९३)
शासनाद्धर्मराजस्य क्षत्ता सूतश्च सञ्जयः ।
सुधर्मा धौम्यसहित इन्द्रसेनादयस्तथा ॥ ११-२६-२७ (६५५९४)
चन्दनागुरुकाष्ठानि तथा कालीयकान्युत ।
घृतं तैलं च गन्धांश्च क्षौमाणि वसनानि च ॥ ११-२६-२८ (६५५९५)

समाहृत्य महार्हाणि दारुणां चैव सञ्चयान् ।
रथांश्च मृदितास्तत्र नानाप्रहरणानि च ॥ ११-२६-२९ (६५५९६)
चिताः कृत्वा प्रयत्नेन यथामुख्यान्नराधिपान् ।
दाहयामासुरव्यग्राः शास्त्रदृष्टेन कर्मणा ॥ ११-२६-३० (६५५९७)
दुर्योधनं च राजानं भ्रातॄंश्चास्य कर्मणा ॥
शल्यं शलं च राजानं भूरिश्रवसमेव च ॥ ११-२६-३१ (६५५९८)
जयद्रथं च राजानमभिमन्युं च भारत ।
दौःशासनिं लक्ष्मणं च धृष्टकेतुं च पार्थिवम् ॥ ११-२६-३२ (६५५९९)
बृहद्बलं सोमदत्तं सृञ्जयं च महारथम् ।
राजानं क्षेमधन्वानं विराटद्रुपदौ तथा ॥ ११-२६-३३ (६५६००)
शिखण्डिनं च पाञ्चाल्यं धृष्टद्युम्नं च पार्षतम् ।
युधामन्युं च विक्रान्तमुत्तमौजसमेव च ॥ ११-२६-३४ (६५६०१)
कौसल्यं द्रौपदेयांश्च शकुनिं चापि सौबलम् ।
अचलं वृषकं चैव भगदत्तं च पार्थिवम् ॥ ११-२६-३५ (६५६०२)
कर्णं वैकर्तनं चैव सहपुत्रममर्षणम् ।
केकयांश्च महेष्वासांस्त्रिगर्तांश्च महारथान् ॥ ११-२६-३६ (६५६०३)
घटोत्कचं राक्षसेन्द्रं बकभ्रातरमेव च ।
अलम्बुसं राक्षसेन्द्रं जलसन्धं च पार्थिवम् ॥ ११-२६-३७ (६५६०४)
एतांश्चान्यांस्च सुबहून्पार्थिवांश्च सहस्रशः ।
धृतधाराहुतैर्दीप्तैः पावकैः समदाहयन्। ११-२६-३८ (६५६०५)
पितृमेधाश्च केषाञ्चित्प्रावर्तन्त महात्मनाम् ।
सामभिश्चाप्यगायन्त तेऽन्वशासत चापरैः ॥ ११-२६-३९ (६५६०६)
साम्नामृचां च नादेन स्त्रीणां च रुदितस्वनैः ।
कश्मलं सर्वभूतानां निशायां समपद्यत ॥ ११-२६-४० (६५६०७)
हुताश्च तत्प्रदीप्ताश्च दीप्यमानाश्च पावकाः ।
नभसीवान्वदृश्यन्त ग्रहास्तन्वभ्रसंवृताः ॥ ११-२६-४१ (६५६०८)
ये चाप्यनाथास्तत्रासन्नानादेशसमागताः ।
तांश्च सर्वान्समानीय राशीकृत्वा सहस्रशः ॥ ११-२६-४२ (६५६०९)
चित्वा दारुभिरव्यग्रैः प्रभूतैः स्नेहपाचितैः ।
दाहयामास तान्सर्वान्विदुरो राजशासनात् ॥ ११-२६-४३ (६५६१०)
कारयित्वा क्रियास्तेषां कुरुराजो युधिष्ठिरः ।
धृतराष्ट्रं पुरस्कृत्य गङ्गामभिमुखोऽगमत् ॥ ॥ ११-२६-४४ (६५६११)

इति श्रीमन्महाभारते स्त्रीपर्वणि श्राद्धपर्वणि षड्विंशोऽध्यायः ॥ २६ ॥

११-२६-२ दुष्कृतं दुराचरितं स्वकीयम् ॥
११-२६-३ वैरप्रियं पुरुषं xxxx षम् ॥
११-२६४- द्वौ पूर्वापरदुःखद्वयरूपौ ॥
११-२६-५ तपोरूपायार्थाय उत्पन्नं तपोर्थीयम् । त्वद्विधा वधार्थीयमेव गर्भं धत्ते। अन्या तु जयार्थीयं कीर्त्याद्यर्थीयमपीति भावः। तपोर्थिनं, वधार्थिनं इति क पाठः ॥
११-२६-१७ ते गतास्तूत्तरान्कुरूनिति छ पाठः । ते गतास्तूत्तमां गतिमिति ट पाठः। ते गता ह्यधमां गतिमिति क पाठः ॥
११-२६-२४ सुधर्माणं दुर्योधनपुरोहितम् ॥
११-२६-४३ स्नेहपाचितैः स्नेहसंयुक्तैः ॥
११-२६-२६ षड्विंशोऽध्यायः ॥

---

स्त्रीपर्व-अध्यय०२७
॥ श्रीः ॥
११.२७. अध्यायः २७

Mahabharata - Strii Parva - Chapter Topics
मृतानामुदकदानाय धृतराष्ट्रयुधिष्ठिरादिभिर्गङ्गातीरगमनम् ॥ १ ॥
उदकदानारम्भे कुन्त्या युधिष्ठिरम्प्रति कर्णस्य स्वपुत्रत्वकथनपूर्वकं तस्या उदकदानचोदना ॥ २ ॥
धृतराष्ट्रयुधिष्ठिरादिभिर्बन्धुभ्यो जलदानम् ॥ ३ ॥

Mahabharata - Strii Parva - Chapter Text

११-२७-० (६५६१२)
वैशम्पायन उवाच। ११-२७-०क्ष् (५३७४)
ते समासाद्य गङ्गां तु शिवां पुण्यजलान्विताम् ।
ह्लादिनीं च प्रसन्नां च महारूपां महावनाम् ॥ ११-२७-१ (६५६१३)
भूषणान्युत्तरीयाणि वेष्टनान्यवमुच्य च ।
ग्कवचानि विचित्राणि गङ्गामवजगाहिरे'॥ ११-२७-२ (६५६१४)
ततः पितॄणां भ्रातॄणां पौत्राणां स्वजनस्य च ।
पुत्राणामार्यकाणां च पतीनां च कुरुस्त्रियः ॥ ११-२७-३ (६५६१५)
उदकं चक्रिरे सर्वा रुदन्त्यो भृशदुःखिताः ।
सुहृदां चापि धर्मज्ञाः प्रचक्रुः सलिलक्रियाम् ॥ ११-२७-४ (६५६१६)
उदके क्रियमाणे तु वीराणां विरपत्निभिः ।
सूपतीर्थाऽभवद्गङ्गा भूयो विप्रससार च ॥ ११-२७-५ (६५६१७)

तन्महोदधिसङ्काशं निरानन्दमनुत्सवम् ।
वीरपत्नीभिराकीर्णं गङ्गातीरमशोभत ॥ ११-२७-६ (६५६१८)
ततः कुन्ती महाराज रुदन्ती शोककर्शिता ।
व्रीडया मन्दया वाचा पुत्रान्वचनमब्रवीत् ॥ ११-२७-७ (६५६१९)
यः स वीरो महेष्वासो रथयूथपयूथपः ।
अर्जुनेन हतः सङ्ख्ये वीरलक्षणलक्षितः ॥ ११-२७-८ (६५६२०)
यं सूतपुत्रं मन्यध्वं राधेयमिति पाण्डवाः ।
यो व्यराजच्चमूमध्ये दिवाकर इव प्रभुः ॥ ११-२७-९ (६५६२१)
प्रत्ययुध्यत वः सर्वान्पुरा यः सपदानुगान् ।
दुर्योधनबलं सर्वं यः प्रकर्षन्व्यरोचत ॥ ११-२७-१० (६५६२२)
यस्य नास्ति समो वीर्ये पृथिव्यामपि कश्चन ।
यो वृणीत यशः शूरः प्राणैरपि सदा भुवि ॥ ११-२७-११ (६५६२३)
कर्णस्य सत्यसन्धस्य सङ्ग्रामेष्वपलायिनः ।
कुरुध्वमुदकं तस्य भ्रातुरक्लिष्टकर्मणः ॥ ११-२७-१२ (६५६२४)
स हि वः पूर्वजो भ्राता भास्करान्मय्यजायत ।
कुण्डली कवची शूरो दिवाकरसमप्रभः ॥ ११-२७-१३ (६५६२५)
श्रुत्वा तु पाण्डवाः सर्वे मातुर्वचनमप्रियम् ।
कर्णमेवानुशोचन्तो भूयश्चात्यातुरा भवन् ॥ ११-२७-१४ (६५६२६)
ततः स पुरुषव्याघ्रः रुन्तीपुत्रो युधिष्ठिरः ।
उवाच मातरं वीरो निःश्वसन्निव पन्नगः ॥ ११-२७-१५ (६५६२७)
यः शरोर्मिर्ध्वजावर्तो महाभुजमहाग्रहः ।
तलशब्दप्रणुदितो महारथमहाग्रहः ॥ ११-२७-१६ (६५६२८)
यस्येषुपातमासाद्य कोऽन्यस्तिष्ठेद्धनञ्जयात् ।
कथं पुत्रो भवत्याः स देवगर्भः पुराऽभवत् ।
ग्कुण्डली कवची शूरो दिवाकरसमप्रभः ॥  ११-२७-१७ (६५६२९)
यस्य बाहुप्रतापेन तापिताः सर्वतो वयम् ।
तमग्निमिव वस्त्रेण कथं छादितवत्यसि ॥ ११-२७-१८ (६५६३०)
यस्य बाहुप्रभावेन वैरमस्मास्वरोचयत् ।
सुयोधनस्तु तं ज्येष्ठं कथं नोदितवत्यसि ॥ ११-२७-१९ (६५६३१)
तथा कर्णं महेष्वासं धार्तराष्ट्रैरुपासितम् ।
उपासितं यथाऽस्माभिर्बलं गाण्डीवधन्वनः ॥ ११-२७-२० (६५६३२)
भूमिपानां च सर्वेषां बलं बलवतां वरः ।
नान्यः कुन्तीसुतात्कर्णादगृह्णाद्रथिनो रथी ॥ ११-२७-२१ (६५६३३)
स नः प्रथमजो भ्राता सर्वशस्त्रभृतां वरः ।
असूत तं भवत्यग्रे कथमद्भुतविक्रमम् ॥ ११-२७-२२ (६५६३४)
अहो भवत्या मन्त्रस्य गूहनेन वयं हताः ।

निधनेन हि कर्णस्य पीडितास्तु सबान्धवाः ॥ ११-२७-२३ (६५६३५)
अभिमन्योर्विनाशेन द्रौपदेयवधेन च ।
पाञ्चालानां विनाशेन, कुरूणां घातनादपि ॥ ११-२७-२४ (६५६३६)
ततः शतगुणं दुःखमिदमापतितं महत् ।
कर्णमेवानुशोचापि दह्याम्यग्नाविवाहितः ॥ ११-२७-२५ (६५६३७)
नेह स्म किञ्चिदप्राप्य भवेदपि दिवि स्थितम् ।
न चेदं वैशसं घोरकं कौरवान्तकरं भवेत् ॥ ११-२७-२६ (६५६३८)
एवं विलप्य बहुलं धर्मराजो युधिष्ठिरः ।
व्यरुदच्छनकैः राजंश्चकारास्योदकं प्रभुः ॥ ११-२७-२७ (६५६३९)
ततो विनेदुः सहसा स्त्रियस्ताः खलु सर्वशः ।
अभितो याः स्थितास्तत्र तस्मिन्नुदककर्मणि ॥ ११-२७-२८ (६५६४०)
तत आनाययामास कर्णस्य सपरिच्छदाः ।
स्त्रियः कुरुपतिर्धीमान्भ्रातुः प्रेम्णा युधिष्ठिरः ॥ ११-२७-२९ (६५६४१)
स ताभिः सह धर्मात्मा प्रेतकृत्यमनन्तरम् ।
ग्सर्वं चकार कर्णस्य विधिवद्भूरिदक्षिणम् ॥ ११-२७-३० (६५६४२)
स राजा धृतराष्ट्रश्च कृत्वा जलमतन्द्रितः ।
समुत्ततार गङ्गाया भार्यया सह भारत ॥' ११-२७-३१ (६५६४३)
श्पापेनासौ मया श्रेष्ठो भ्राता ज्ञातिर्निपातितः ।
अतो मनसि यद्गुह्यं स्त्रीणां तन्न भविष्यति ॥ ११-२७-३२ (६५६४४)
इत्युक्त्वा स तु गङ्गाया उत्तताराकुलेन्द्रियः ।
भ्रातृभिः सहितः सर्वैर्गङ्गातीरमुपेयिवान् ॥ॾ ॥ ११-२७-३३ (६५६४५)

इति श्रीमन्महाभारते शतसाहस्रिकायां संहितायां वैयासिक्यां
स्त्रीपर्वणि श्राद्धपर्वणि सप्तविंशोऽध्यायः ॥ २७ ॥
अतः परंशान्तिपर्व भविष्यति तस्यायमाद्यः श्लोकः। ११-२७-१ (६५६४६)
११-२७-१क्ष् (५३७५)
वैशम्पायन उवाच ।
कृत्वोदकं ते सुहृदां सर्वेषां पाण्डुनन्दनाः ।
विदुरे धृतराष्ट्रश्च सर्वाश्च भरतस्त्रियः ॥
Mahabharata - Strii Parva - Chapter Footnotes

११-२७-२ वेष्टनानि उष्णीषकटिबन्धनादीनि ॥
११-२७-५ जलावतरणमार्गा ॥
११-२७-१४ भवन् अभवन् । अडभाव आर्षः ॥
११-२७-२५ दग्धामग्नाविवाहुतिमिति क पाठः ॥
११-२७-२६ कर्णे भ्रातृत्वेन ज्ञाते सति तदनुसारिणामस्माकमपि

दुर्लभं नाभविष्यन्नपि कौरवाणां क्षयोऽभविष्यदित्यर्थः । न
च मे किञ्चिदप्राप्यमिति क पाठः ॥
११-२७-२७ सप्तविंशोऽध्यायः ॥

---

# ॥ १२ शातिपर्व ॥

१२. शान्तिपर्व

शन्तिपर्व-अध्यय००१
॥ श्रीः ॥
१२.१. अध्यायः १

Mahabharata - Shanti Parva - Chapter Topics
गङ्गातीरे बन्धूनां कृतोदकं युधिष्ठिरंप्रति
व्यासनारदादिमहर्षीणां समागमनम् ॥ १.। युधिष्ठिरेण तत्र
नारदंप्रति कर्णवृत्तान्तकथनप्रार्थना ॥ २.।
Mahabharata - Shanti Parva - Chapter Text

॥ श्रीवेदव्यासाय नमः ।
नारायणं नमस्कृत्य नरं चैव नरोत्तमम् ।
देवीं सरस्वतीं व्यासं ततो जयमुदीरयेत् ॥ १२-१-१ (८०८६२)
वैशंपायन उवाच ।
कृत्वोदकं ते सुहृदां सर्वेषां पाण्डुनन्दनाः ।
विदुरो धृतराष्ट्रश्च सर्वाश्च भरतस्त्रियः ॥ १२-१-१क्ष् (६७०३)
तत्र ते सुमहात्मानो न्यवसन्कुरुनन्दनाः ।
शौचं निर्वर्तयिष्यन्तो मासच्चात्रं बहिः पुरात् ॥ १२-१-२ (८०८६३)
कृतोदकं तु राजानं धर्मात्मानं युधिष्ठिरम् ।
अभिजग्मुर्महात्मानः सिद्धा ब्रह्मर्षिसत्तमाः ॥ १२-१-३ (८०८६४)
द्वैपायनो नारदश्च देवलश्च महानृषिः ।
देवस्थानश्च कण्वश्च तेषां शिष्याश्च सत्तमाः ॥ १२-१-४ (८०८६५)
अन्ये च वेदविद्वांसः कृतप्रज्ञा द्विजातयः ।
गृहस्थाः स्नातकाः सन्तो ददृशुः कुरुसत्तमम् ॥ १२-१-५ (८०८६६)
तेऽभिगम्य महात्मानं पूजिताश्च यथाविधि ।
आसनेषु महार्हेषु विविशुः परमर्षयः ॥ १२-१-६ (८०८६७)
प्रतिगृह्य ततः पूजां तत्कालसदृशीं तदा ।
पर्युपासन्यथान्यायं परिवार्य युधिष्ठिरम् ॥ १२-१-७ (८०८६८)
पुण्ये भागीरथीतीरे शोकव्याकुलचेतसम् ।

आश्वासयन्तो राजेन्द्रं विप्राः शतसहस्रशः ॥ १२-१-८ (८०८६९)
नारदस्त्वब्रवीत्काले धर्मपुत्रं युधिष्ठिरम् ।
संभाष्य मुनिभिः सार्धं कृष्णद्वैपायनादिभिः ॥ १२-१-९ (८०८७०)
नारद उवाच। १२-१-१०क्ष् (६७०४)
पार्थस्य बाहुवीर्येण प्रसादान्माधवस्य च ।
जिता सेयं मही कृत्स्ना धर्मेण च युधिष्ठिर ॥ १२-१-१० (८०८७१)
दिष्ट्या मुक्ताः स्थ संग्रामादस्माल्लोकभयंकरात् ।
क्षत्रधर्मरतश्चासि कच्चिन्मोदसि पाण्डव ॥ १२-१-११ (८०८७२)
कच्चिच्च निहतामित्रः प्रीणासि सुहृदो नृप ।
कच्चिच्छ्रियमिमां प्राप्य न त्वां शोकः प्रबाधते ॥ १२-१-१२ (८०८७३)
युधिष्ठिर उवाच। १२-१-१३क्ष् (६७०५)
विजितेयं मही कृत्स्ना कृष्णबाहुबलाश्रयात् ।
ब्राह्मणानां प्रसादेन भीमार्जुनबलेन च ॥ १२-१-१३ (८०८७४)
इदं तु मे महद्दुःखं वर्तते हृदि नित्यदा ।
कृत्वा ज्ञातिक्षयमिमं महान्तं घोरदर्शनम् ॥ १२-१-१४ (८०८७५)
सौभद्रं द्रौपदेयांश्च घातयित्वा सुतान्प्रियान् ।
जयोऽयमजयाकारो भगवन्प्रतिभाति मे ॥ १२-१-१५ (८०८७६)
किंनु वक्ष्यति वार्ष्णेयी वधूर्मे मधुसूदनम् ।
द्वारकावासिनी कृष्णमितः प्रतिगतं हरिम् ॥ १२-१-१६ (८०८७७)
द्रौपदी हतपुत्रेयं कृपणा हतबान्धवा ।
अस्मत्प्रियहिते युक्ता भूयः पीडयतीव माम् ॥ १२-१-१७ (८०८७८)
इदमन्यच्च भगवन्यत्त्वां वक्ष्यामि नारद ।
मन्त्रसंवरणेनास्मि कुन्त्या दुःखेन योजितः ॥ १२-१-१८ (८०८७९)
यः स नागायुतप्राणो लोकेऽप्रतिरथो रणे ।
सिंहविक्रान्तगामी च जितकाशी यतव्रतः ॥ १२-१-१९ (८०८८०)
आश्रयो धार्तराष्ट्राणां मानी तीक्ष्णपराक्रमः ।
अमर्षी नित्यसंरम्भी क्षेप्ताऽस्माकं रणेरणे ॥ १२-१-२० (८०८८१)
शीघ्रास्त्रश्चित्रयोधी च कृती चाद्भुतविक्रमः ।
गूढोत्पन्नः सुतः कुन्त्या भ्राताऽस्माकमसौ किल १२-१-२१ (८०८८२)
तोयकर्मणि तं कुन्ती कथयामास मे तदा ।
पुत्रं सर्वगुणोयेतं कर्णं त्यक्तं जले पुरा ॥ १२-१-२२ (८०८८३)
मञ्जूषायां समाधाय गङ्गास्रोतस्यमज्जयत् ।
यं सूतपुत्रं लोकोऽयं राधेयं चाभ्यमन्यत ॥ १२-१-२३ (८०८८४)
स सूर्यपुत्रः कुन्त्या यै भ्राताऽस्माकं च मातृतः ।
अजानता मया सङ्ख्ये राज्यलुब्धेन घातितः ।
तन्मे दहति गात्राणि तूलराशिमिवानलः ॥ १२-१-२४ (८०८८५)

न हि तं वेद पार्थोऽपि भ्रातरं श्वेतवाहनः ।
नाहं न भीमो न यमौ स त्वस्मान्वेद तत्वतः ॥ १२-१-२५ (८०८८६)
गता किल पृथा तस्य सकाशमिति नः श्रुतम् ।
अस्माकं शमकामा वै त्वं च पुत्रो ममेत्यथ ॥ १२-१-२६ (८०८८७)
पृथाया न कृतः कामस्तेन चापि महात्मना ।
अतीवानुचितं मातरवोच इति सोऽब्रवीत् ॥ १२-१-२७ (८०८८८)
न हि शक्ष्यामि संत्यक्तुमहं दुर्योधनं रणे ।
अनार्यत्वं नृशंसत्वं कृतघ्नत्वं च मे भवेत् ॥ १२-१-२८ (८०८८९)
युधिष्ठिरेण सन्धिं हि यदि कुर्यां मते तव ।
भीतो रणे श्वेतवाहादिति मां मंस्यते जनः ॥ १२-१-२९ (८०८९०)
सोऽहं निर्जित्य समरे विजयं सहकेशवम् ।
संधास्ये धर्मपुत्रेण पश्चादिति च सोऽब्रवीत् ॥ १२-१-३० (८०८९१)
तमवोचत्किल पृथा पुनः पृथुलवक्षसम् ।
चतुर्णामभयं देहि कामं युध्यस्व फल्गुनम् ॥ १२-१-३१ (८०८९२)
सोऽब्रवीन्मातरं धीमान्वेपमानां कृताञ्जलिः ।
प्राप्तान्विषह्यांश्चतुरो न हनिष्यामि ते सुतान् ॥ १२-१-३२ (८०८९३)
पञ्चैव हि सुता देवि भविष्यन्ति तव ध्रुवाः ।
सार्जुना वा हते कर्णे सकर्णा वा हतेऽर्जुने ॥ १२-१-३३ (८०८९४)
तं पुत्रगृद्धिनी भूयो माता पुत्रमथाब्रवीत् ।
भ्रातॄणां स्वस्ति कुर्वीथा येषां स्वस्ति चिकीर्षसि ॥ १२-१-३४ (८०८९५)
एवमुक्त्वा किल पृथा विसृज्योपययौ गृहान् ।
सोऽर्जुनेन हतो वीरो भ्रात्रा भ्राता सहोदरः ॥ १२-१-३५ (८०८९६)
न चैव निःसृतो मन्त्रः पृथायास्तस्य वा मुने ।
अथ शूरो महेष्वासः पार्थेनाजौ निपातितः ॥ १२-१-३६ (८०८९७)
अहं त्वज्ञासिषं पश्चात्स्वसोदर्यं द्विजोत्तम ।
पूर्वजं भ्रातरं कर्णं पृथाया वचनात्प्रभो ॥ १२-१-३७ (८०८९८)
तेन मे दूयते तीव्रं हृदयं भ्रातृघातिनः ।
कर्णार्जुनसहायोऽहं जयेयमपि वासवम् ॥ १२-१-३८ (८०८९९)
सभायां क्लिश्यमानस्य धार्तराष्ट्रैर्दुरात्मभिः ।
सहसोत्पतितः क्रोधः कर्णं दृष्ट्वा प्रशाम्यति ॥ १२-१-३९ (८०९००)
यदा ह्यस्य गिरो रूक्षाः श्रृणोमि कटुकोदयाः ।
सभायां गदतो द्यूते दुर्योधनहितैषिणः ॥ १२-१-४० (८०९०१)
तदा नश्यति मे रोषः पादौ तस्य निरीक्ष्य ह ।
कुन्त्या हि सदृशौ पादौ कर्णस्येति मतिर्मम ॥ १२-१-४१ (८०९०२)
सादृश्यहेतुमन्विच्छन्पृथायास्तस्य चैव ह ।
कारणं नाधिगच्छामि कथंचिदपि चिन्तयन् ॥ १२-१-४२ (८०९०३)

कथं नु तस्य संग्रामे पृथिवी चक्रमग्रसत् ।
कथं नु शप्तो भ्राता मे तत्त्वं वक्तुमिहार्हसि ॥ १२-१-४३ (८०९०४)
श्रोतुमिच्छामि भगवंस्त्वत्तः सर्वं यथातथम् ।
भवान्हि सर्वविद्विद्वाँल्लोके वेद कृताकृतम् ॥ ॥ १२-१-४४ (८०९०५)

इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि प्रथमोऽध्यायः ॥ १.।
Mahabharata - Shanti Parva - Chapter Footnotes

१२-१-१ कृतोदकास्ते इति झ ।पाठः ॥
१२-१-२ तत्र गङ्गातीरे ॥
१२-१-८ आश्वासयन्तः हेतौ शतृप्रत्ययः ।आश्वासनार्थं
पर्युपासन्नित्यर्थः ॥
१२-१-१६ वधूः कनिष्ठभ्रातृभार्यात्वात्स्नुषाभूता ।वार्ष्णेयी सुभद्रा ॥
१२-१-१८ मन्त्रसंवरणेन गूढोत्पन्नस्यास्मज्ज्ञातुः कर्णस्याप्रकाशेन ॥
१२-१-२० अमर्षी परोत्कर्षासहिष्णुः ।नित्यसंरम्भी सदा क्रोधवान् ॥
१२-१-२४ मातृतः मातृसंबन्धेन ॥
१२-१-२६ पाण्डववत् त्वं च पुत्रो मभेत्यब्रवीदिति शेषः ॥
१२-१-२७ कामोऽभिलषितम् ॥
१२-१-३२ वध्यान्विषबह्यानिति थ ।पाठःओ। विषह्यान्वशगान् ॥
१२-१-३५ विसृज्य कर्णमिति शेषः ॥
१२-१-४३ चक्रं रथचक्रम् ॥
१२-१-४४ कृतं कार्यम् ।अकृतं कारणम् ॥

---

शन्तिपर्व-अध्यय००२
॥ श्रीः ॥
१२.२. अध्यायः २

Mahabharata - Shanti Parva - Chapter Topics
ब्रह्मास्त्रलाभाय द्रोणमुपगतेन कर्णेन तेन त्रैवर्णिकान्यत्वकथनेन
प्रत्याख्याने परशुराममेत्य स्वस्य ब्राह्मण्यकथनपूर्वकमस्त्रार्थं
तदन्तेवासित्वपरिग्रहः ॥ १.। तत्र प्रमादेन विप्रगोवत्सघातिनः
कर्णस्य विप्राच्छापप्राप्तिः ॥ २.।
Mahabharata - Shanti Parva - Chapter Text

१२-२-० (८०९३५)
वैशंपायन उवाच। १२-२-०क्ष् (६७०७)
स एवमुक्तस्तु तदा नारदो वदतांवरः ।

कथयामास तत्सर्वं यथा शप्तः स सूतजः ॥ १२-२-१ (८०९३६)
नारद उवाच। १२-२-२क्ष् (६७०८)
एवमेतन्महाबाहो यथा वदसि भारत ।
न कर्णार्जुनयोः किंचिदविषह्यं भवेद्रणे ॥ १२-२-२ (८०९३७)
गुह्यमेतत्तु देवानां कथयिष्यामि ते नृप ।
तन्निबोध महाबाहो यथावृत्तमिदं पुरा ॥ १२-२-३ (८०९३८)
क्षत्रं स्वर्गं कथं गच्छेच्छस्त्रपूतमिति प्रभो ।
संघर्षजननस्तस्मात्कन्यागर्भो विसर्जितः ॥ १२-२-४ (८०९३९)
स बालस्तेजसा युक्तः सूतपुत्रत्वमागतः ।
चकाराङ्गिरसां श्रेष्ठे धनुर्वेदं गुरौ तव ॥ १२-२-५ (८०९४०)
स बलं भीमसेनस्य फल्गुनस्यास्त्रलाघवम् ।
बुद्धिं च तव राजेन्द्र यमयोर्विनयं तथा ॥ १२-२-६ (८०९४१)
सख्यं च वासुदेवेन बाल्ये गाण्डीवधन्वनः ।
राजानामनुरागं च चिन्तयानो व्यदह्यत ॥ १२-२-७ (८०९४२)
स सख्यमगमद्बाल्ये राज्ञा दुर्योधनेन च ।
युष्माभिर्नित्यसंघृष्टो दैवाच्चापि स्वभावतः ॥ १२-२-८ (८०९४३)
विद्याधिकमथालक्ष्य धनुर्वेदे धनञ्जयम् ।
द्रोणं रहस्युपागम्य कर्णो वचनमब्रवीत् ॥ १२-२-९ (८०९४४)
ब्रह्मास्त्रं वेत्तुमिच्छामि सरहस्यनिवर्तनम् ।
अर्जुनेन समो युद्धे भवेयमिति मे मतिः ॥ १२-२-१० (८०९४५)
समः पुत्रेषु च स्नेहः शिष्येषु च तव ध्रुवम् ।
त्वत्प्रसादान्न मा ब्रूयुरकृतास्त्रं विचक्षणाः ॥ १२-२-११ (८०९४६)
द्रोणस्तथोक्तः कर्णेन सापेक्षः फल्गुनं प्रति ।
दौरात्म्यं चैव कर्णस्य विदित्वा तमुवाच ह ॥ १२-२-१२ (८०९४७)
ब्रह्मास्त्रं ब्राह्मणो विद्याद्यथावच्चरितव्रतः ।
क्षत्रियो वा तपस्वी यो नान्यो विद्यात्कथंचन ॥ १२-२-१३ (८०९४८)
इत्युक्तोऽङ्गिरसां श्रेष्ठमामन्त्र्य प्रतिपूज्य च ।
जगाम सहसा राजन्महेन्द्रं पर्वतं प्रति ॥ १२-२-१४ (८०९४९)
स तु राममुपागम्य शिरसाऽभिप्रणम्य च ।
ब्राह्मणो भार्गवोऽस्मीति गौरवेणाभ्यवन्दत ॥ १२-२-१५ (८०९५०)
रामस्तं प्रतिजग्राह पृष्ट्वा गोत्रादि सर्वशः ।
उष्यतां स्वागतं चेति प्रीतिमांश्चाभवद्भृशम् ॥ १२-२-१६ (८०९५१)
तत्र कर्णस्य वसतो महेन्द्रे स्वर्गसंमिते ।
गन्धर्वै राक्षसैर्यक्षैर्देवैश्चासीत्समागमः ॥ १२-२-१७ (८०९५२)
स तत्रेष्वस्त्रमकरोद्भृगुश्रेष्ठाद्यथाविधि ।
प्रियश्चाभवदत्यर्थं देवदानवरक्षसाम् ॥ १२-२-१८ (८०९५३)

स कदाचित्समुद्रान्ते विचरन्नाश्रमान्तिके ।
एकः खड्गधनुष्पाणिः परिचक्राम सूतजः ॥ १२-२-१९ (८०९५४)
सोऽग्निहोत्रप्रसक्तस्य कस्यचिद्ब्रह्मवादिनः ।
जघानाज्ञानतः पार्थ होमधेनुं यदृच्छया ॥ १२-२-२० (८०९५५)
तदज्ञानकृतं मत्वा ब्राह्मणाय न्यवेदयत् ।
कर्णः प्रसादयंश्चैनमिदमित्यब्रवीद्वचः ॥ १२-२-२१ (८०९५६)
अबुद्धिपूर्वं भगवन्धेनुरेषा हता तव ।
मया तत्र प्रसादं मे कुरुष्वेति पुनः पुनः ॥ १२-२-२२ (८०९५७)
तं स विप्रोऽब्रवीत्क्रुद्धो वाचा निर्भर्त्सयन्निव ।
दुराचार वधार्हस्त्वं फलं प्राप्स्यसि दुर्मते ॥ १२-२-२३ (८०९५८)
येन विस्पर्धसे नित्यं यदर्थं घटसेऽनिशम् ।
युध्यतस्तेन ते पाप भूमिश्चक्रं ग्रसिष्यति ॥ १२-२-२४ (८०९५९)
ततश्चक्रे महीग्रस्ते मूर्धानं ते विचेष्टतः ।
पातयिष्यति विक्रम्य शत्रुर्गच्छ नराधम ॥ १२-२-२५ (८०९६०)
यथेयं गौर्हता मूढ प्रमत्तस्य त्वया मम ।
प्रमत्तस्यैव मे वाचा शिरस्ते पातयिष्यति ॥ १२-२-२६ (८०९६१)
शप्तः प्रसादयामास कर्णस्तं द्विजसत्तमम् ।
गोभिर्धनैश्च रत्नैश्च स चैनं पुनरब्रवीत् ॥ १२-२-२७ (८०९६२)
नेदमव्याहृतं कुर्याद्ब्रह्मलोकेऽपि केवलम् ।
गच्छ वा तिष्ठ वा यद्वा कार्यं यत्तत्समाचर ॥ १२-२-२८ (८०९६३)
इत्युक्तो ब्राह्मणेनाथ कर्णो दैन्यादधोमुखः ।
राममभ्यागमद्भीतस्तदेव मनसा स्मरन् ॥ ॥ १२-२-२९ (८०९६४)

इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि द्वितीयोऽध्यायः ॥ २ ॥

Mahabharata - Shanti Parva - Chapter Footnotes

१२-२-४ संघर्षजननो वैराग्न्युद्दीपकः । संचिन्त्य जनितस्तस्मादिति टङ। पाठः। कन्यागर्भो विनिर्मित इति झ। पाठः। तत्र कन्यागर्भो देवैः क्षत्रस्य स्वर्गमनाय निर्मित इत्यर्थः ॥
१२-२-५ चकाराऽधीतवान् । अङ्गिरसां श्रेष्ठे द्रोणे ॥
१२-२-८ दैवाद्देवानां संकल्पात् ॥
१२-२-१० रहस्यं तत्प्रसादनविधिर्निवर्तनमुपसंहारस्ताभ्यां सहितं सरहस्यनिवर्तनम् ॥
१२-२-१५ गुरुरेव पितेत्यभिसंधिः १२-२-१९ समुद्रान्ते दक्षिणसमुद्रसमीपे ॥
१२-२-२० होमधेनुं कर्णपर्वोक्तदिशा वत्सवध एवात्र धेनुवधो ज्ञेयः ॥

१२-२-२६ प्रमत्तेन त्वया मम ।प्रमत्तस्य तथाऽरातिरिति झ। पाठ ॥
१२-२-२८ नेदं मद्वचनं कुर्याद्‌ब्रह्मलोकेऽपि चान्यथा इति ट ।पाठः ॥

---

शन्तिपर्व-अध्यय००३
॥ श्रीः ॥
१२.३. अध्यायः ३

Mahabharata - Shanti Parva - Chapter Topics
कदाचन रामे कर्णोत्सङ्गे शिरो निधाय निद्राणे केनचित्क्रिमिणा कर्णस्योरुभेदनम् ॥ १. । तदूरोः प्रस्रुतरुधिरक्लेदात्प्रबुद्धेन रामेण कर्णस्य शापदानम् ॥ २. । रामाज्ञया कर्णस्य स्वदेशगमनम् ॥ ३. ।
Mahabharata - Shanti Parva - Chapter Text

१२-३-० (८०९६५)
नारद उवाच। १२-३-०क्ष् (६७०९)
कर्णस्य बाहुवीर्येण प्रश्रयेण दमेन च ।
तुतोष भृगुशार्दूलो गुरुशुश्रूषया तथा ॥ १२-३-१ (८०९६६)
ततस्तस्मै महातेजा ब्रह्मास्त्रं सनिवर्तनम् ।
प्रोवाच सुमहाप्रज्ञः स तपस्वी तपस्विने ॥ १२-३-२ (८०९६७)
विदितास्त्रस्ततः कर्णो रममाणोऽऽश्रमे भृगोः ।
चकार वै धनुर्वेदे यत्नमद्भुतविक्रमः ॥ १२-३-३ (८०९६८)
ततः कदाचिद्रामस्तु चरन्नाश्रममन्तिकात् ।
कर्णेन सहितो धीमानुपवासेन कर्शितः ॥ १२-३-४ (८०९६९)
सुष्वाप जामदग्न्यस्तु विस्रम्भोत्पन्नसौहृदः ।
तस्योत्सङ्गे समाधाय शिरः क्लान्तमना गुरुः ॥ १२-३-५ (८०९७०)
अथ क्रिमिः श्लेष्ममयो मांसशोणितभोजनः ।
दारुणो दारुणाकारः कर्णस्याभ्याशमागतः ॥ १२-३-६ (८०९७१)
स तस्योरुमथासाद्य बिभेद रुधिराशनः ।
न चैनमशकत्क्षेप्तुं वक्तुं वाऽपि गुरोर्भयात् ॥ १२-३-७ (८०९७२)
स दश्यमानोऽपि तथा कृमिणा तेन भारत ।
गुरोः प्रबोधनाकाङ्क्षी तमुपैक्षत सूर्यजः ॥ १२-३-८ (८०९७३)
कर्णस्तु वेदनां धैर्यादसह्यां विनिगृह्य ताम् ।
अकम्पयन्नव्यथयन्धारयामास भार्गवम् ॥ १२-३-९ (८०९७४)
यदा स रुधिरेणाङ्गे परिस्पृष्टोऽभवद्गुरुः ।
तदाऽबुध्यत तेजस्वी संरब्धश्चैनमब्रवीत् ॥ १२-३-१० (८०९७५)
अहोऽस्म्यशुचितां प्राप्तः किमिदं च कृतं त्वया ।

कथयस्व भयं त्यक्त्वा याथातथ्यमिदं मम ॥ १२-३-११ (८०९७६)
तस्य कर्णस्तदाचष्ट कृमिणा परिभक्षणम् ।
ददर्श रामस्तं चापि कृमिं सूकरसंस्थितम् ॥ १२-३-१२ (८०९७७)
अष्टपादं तीक्ष्णदंष्ट्रं सूचीभिः परिसंवृतम् ।
रोमभिः सन्निरुद्धाङ्गमलर्कं नाम नामतः ॥ १२-३-१३ (८०९७८)
स दृष्टमात्रो रामेण किमिः प्राणानवासृजत् ।
तस्मिन्नेवासृजि क्लिन्नस्तदद्भुतमिवाभवत् ॥ १२-३-१४ (८०९७९)
ततोऽन्तरिक्षे ददृशे विश्वरूपः करालवान् ।
राक्षसो लोहितग्रीवः कृष्णाङ्गो मेघवाहनः ॥ १२-३-१५ (८०९८०)
स रामं प्राञ्जलिर्भूत्वा बभाषे पूर्णमानसः ।
स्वस्ति ते भृगुशार्दूल गमिष्येऽहं यथागतम् ॥ १२-३-१६ (८०९८१)
मोक्षितो नरकादस्माद्भवता मुनिसत्तम ।
भद्रं च तेऽस्तु सिद्धिश्च प्रियं मे भवता कृतम्  १२-३-१७ (८०९८२)
तमुवाच महाबाहुर्जामदग्न्यः प्रतापवान् ।
कस्त्वं कस्माच्च नरकं प्रतिपन्नो ब्रवीहि तत् ॥ १२-३-१८ (८०९८३)
सोऽब्रवीदहमासं प्राग्दंशो नाम महासुरः ।
पुरा देवयुगे तात भृगोस्तु सवया इव ॥ १२-३-१९ (८०९८४)
सोऽहं भृगोः सुदयितां भार्यामपहरं बलात् ।
महर्षेरभिशापेन क्रिमिभूतोऽपतं भुवि ॥ १२-३-२० (८०९८५)
अब्रवीद्धि स मां क्रुद्धस्तव पूर्वपितामहः ।
मूत्र श्लेष्माशनः पाय निरयं प्रतिपत्स्यसे ॥ १२-३-२१ (८०९८६)
शापस्यान्तो भवेद्ब्रह्मन्नित्येवं तमथाब्रवम् ।
भविता भार्गवाद्रामादिति मामब्रवीद्भृगुः ॥ १२-३-२२ (८०९८७)
सोऽहमेनां गतिं प्राप्तो यथा नकुशलस्तथा ।
त्वया साधो समागम्य विमुक्तः पापयोनितः ॥ १२-३-२३ (८०९८८)
एवमुक्त्वा नमस्कृत्य ययौ रामं महासुरः ।
रामः कर्णं तु सक्रोधमिदं वचनमब्रवीत् ॥ १२-३-२४ (८०९८९)
अतिदुःखमिदं मूढ न जातु ब्राह्मणः सहेत् ।
क्षत्रियस्येव ते धैर्यं कामया सत्यमुच्यताम् ॥ १२-३-२५ (८०९९०)
तमुवाच ततः कर्णः शापाद्भीतः प्रसादयन् ।
ब्रह्मक्षत्रान्तरे जातं सूतं मां विद्धि भार्गव ॥ १२-३-२६ (८०९९१)
राधेयः कर्ण इति मां प्रवदन्ति जना भुवि ।
प्रसादं कुरु मे ब्रह्मन्नस्त्रलुब्धस्य भार्गव ॥ १२-३-२७ (८०९९२)
पिता गुरुर्न संदेहो वेदविद्याप्रदः प्रभुः ।
अतो भार्गव इत्युक्तं मया गोत्रं तवान्तिके ॥ १२-३-२८ (८०९९३)
तमुवाच भृगुश्रेष्ठः सरोपः प्रदहन्निव ।

भूमौ निपतितं दीनं वेपमानं कृताञ्जलिम् ॥१२-३-२९ (८०९९४)
यस्मान्मिथ्याविचीर्णोऽहमस्त्रलोभादिह त्वया ।
तस्मादेतन्न ते मूढ ब्रह्मास्त्रं प्रतिभास्यति ॥१२-३-३० (८०९९५)
अन्यत्र वधकालात्ते सदृशे न समीयुपः ।
अब्राह्मणे न हि ब्रह्म चिरं तिष्ठेत्कदाचन ॥१२-३-३१ (८०९९६)
गच्छेदानीं न ते स्थानमनृतस्येह विद्यते ।
न त्वया सदृशो युद्धे भविता क्षत्रियो भुवि ॥१२-३-३२ (८०९९७)
एवमुक्तः स रामेण न्यायेनोपजगामह ।
दुर्योधनमुपागम्य कृतास्त्रोऽस्मीति चाब्रवीत् ॥ ॥१२-३-३३ (८०९९८)

इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि तृतीयोऽध्यायः ॥ ३.।
Mahabharata - Shanti Parva - Chapter Footnotes

१२-३-१ दभेनेन्द्रियजयेन ॥
१२-३-५ विस्रम्भो विश्वासः ॥
१२-३-६ श्लेष्ममेदोमांसेति झ ।पाठः ॥
१२-३-७ क्षेप्तुं दूरीकर्तुम् ।भयान्निद्राभङ्गभयात् ॥
१२-३-८ प्रबोधनाशङ्कीति झ ।पाठः।१२-३-१२ सूकरस्येव
संस्थितं संस्थानं पस्य तम्।सूकरसन्निभमिति झ।पाठः। ।
१२-३-१३ सूचीभिरिव तीक्ष्णै रोमभिः संवृतम् ।सन्निरुद्धाङ्गं
त्रासेन संकुचिताङ्गं नाम प्रसिद्धम्।नामतो नाम्ना ॥
१२-३-१४ असृजि शोणिते ॥
१२-३-१९ यास्को नामेति ड ।पाठः।प्रस्तो नामेति थ।पाठः।देवयुगे
सत्ययुगे ॥
१२-३-२३ नकुशलः अभद्रः ॥
१२-३-२५ कामया स्वरसेन ।कामये सत्यमुच्यतामिति टङ।पाठः ॥
१२-३-२६ ब्रह्मक्षत्रयोरन्तरे अन्यत्र जातम् ॥
१२-३-२९ प्रहसन्निवेति थ ।पाठः ॥
१२-३-३० तस्मादिति ।हेमूढ ते तव वधकालादन्यत्र ब्रह्मास्त्रं न
प्रतिभास्यतीति न किंतु वधकालएव न प्रतिभास्यति।कालान्तरे तु
प्रतिभास्यत्येवेत्यर्थ इत्युत्तरेण संबन्धः ॥
१२-३-३१ सदृशेऽर्जुनादौ शूरे ते पुरतः स्थिते
समीयुषः युध्यमानस्य ।समित्याजिसमिद्युध इति संपूर्वस्य इणो
युद्धार्थत्वदर्शनात्।चिरं मरणावधि न तिष्ठेद्ब्रह्म ब्रह्मास्त्रम्
॥
१२-३-३३ न्यायेनाभिवन्दनादिपूर्वकं उपजगाम ।इष्टं देशमिति शेषः ॥

शन्तिपर्व-अध्यय००४

॥ श्रीः ॥

१२.४. अध्यायः ४

Mahabharata - Shanti Parva - Chapter Topics

दुर्योधनेन स्वयंवरमण्टपे कलिङ्गराजकन्याहरणम् ॥ १.। कर्णेन तमनुद्भुतवतो राज्ञां पराजयः ॥ २.।

Mahabharata - Shanti Parva - Chapter Text

१२-४-० (८०९९९)
नारद उवाच। १२-४-०क्ष् (६७१०)
कर्णस्तु समवाप्यैवमस्त्रं भार्गवनन्दनात् ।
दुर्योधनेन सहितो मुमुदे भरतर्षभ ॥ १२-४-१ (८१०००)
ततः कदाचिदाजातः समाजग्मुः स्वयंवरे ।
कलिङ्गविषये राजन्राज्ञश्चित्राङ्गदस्य च ॥ १२-४-२ (८१००१)
श्रीमद्राजपुरं नाम नगरं तत्र भारत ।
राजानः शतशस्तत्र कन्यार्थे समुपागमन् ॥ १२-४-३ (८१००२)
श्रुत्वा दुर्योधनस्तत्र समेतान्सर्वपार्थिवान् ।
रथेन काञ्चनाङ्गेन कर्णेन सहितो ययौ ॥ १२-४-४ (८१००३)
ततः स्वयंवरे तस्मिन्नानादेश्या महारथाः ।
समाजग्मुर्नृपतयः कन्यार्थे नृपसत्तम ॥ १२-४-५ (८१००४)
शिशुपालो जरासन्धो भीष्मको वक्र एव च ।
कपोतरोमा नीलश्च रुक्मी च दृढविक्रमः ॥ १२-४-६ (८१००५)
सृगालश्च महाराजः स्त्रीराज्याधिपतिश्च यः ।
विशोकः शतधन्वा च भोजो वीरश्च नामतः ॥ १२-४-७ (८१००६)
एते चान्ये च बहवो दक्षिणां दिशमाश्रिताः ।
म्लेच्छाश्चार्याश्च राजानः प्राच्योदीच्यास्तथैव च ॥ १२-४-८ (८१००७)
काञ्चनाङ्गदिनः सर्वे शुद्धजाम्बूनदप्रभाः ।
सर्वे भास्वरदेहाश्च व्याघ्रा इव बलोत्कटाः ॥ १२-४-९ (८१००८)
ततः समुपविष्टेषु तेषु राजसु भारत ।
विवेश रङ्गं सा कन्या धात्रीवर्षवरान्विता ॥ १२-४-१० (८१००९)
ततः संश्राव्यमाणेषु राज्ञां नामसु भारत ।
अत्यक्रामद्धार्तराष्ट्रं सा कन्या वरवर्णिनी ॥ १२-४-११ (८१०१०)
दुर्योधनस्तु कौरव्यो नामर्षयत लङ्घनम् ।
प्रत्यपेधच्च तां कन्यामसत्कृत्य नराधिपान् ॥ १२-४-१२ (८१०११)
स वीर्यमदमत्तत्वाद्भीष्मद्रोणावुपाश्रितः ।

रथमारोप्य तां कन्यामाजुहाव नराधिपान् ॥ १२-४-१३ (८१०१२)
तमन्वगाद्रथी खड्गी बद्धगोधाङ्गुलित्रवान् ।
कर्णः शस्त्रभृतां श्रेष्ठः पृष्ठतः पुरुषर्षभ ॥ १२-४-१४
(८१०१३)
ततो विमर्दः सुमहान्राज्ञामासीद्युयुत्सताम् ।
सन्नह्यतां तनुत्राणि रथान्योजयतामपि। १२-४-१५ (८१०१४)
तेऽभ्यधावन्त संक्रुद्धाः कर्णदुर्योधनावुभौ ।
शरवर्षाणि मुञ्चन्तो मेघाः पर्वतयोरिव ॥ १२-४-१६ (८१०१५)
कर्णस्तेषामापततामेकैकेन शरेण ह ।
धनूंषि च शरव्रातान्पातयामास भूतले ॥ १२-४-१७ (८१०१६)
ततो विधनुषः कांश्चित्कांश्चिदुद्यतकार्मुकान् ।
कांश्चिदुत्सृजतो बाणान्रथशक्तिगदास्तथा ॥ १२-४-१८ (८१०१७)
लाघवाव्द्याकुलीकृत्य कर्णः प्रहरतां वरः ।
हतसूतांश्च भूयिष्ठान्स विजिग्ये नराधिपान् ॥ १२-४-१९ (८१०१८)
ते स्वयं वाहयन्तोऽश्वान्याहि याहीति वादिनः ।
व्यपेयुस्ते रणं हित्वा राजानो भग्नमानसाः ॥ १२-४-२० (८१०१९)
दुर्योधनस्तु कर्णेन पाल्यमानोऽभ्ययात्तदा ।
हृष्टः कन्यामुपादाय नगरं नागसाह्वयम् ॥ ॥ १२-४-२१ (८१०२०)

इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि चतुर्थोऽध्यायः
॥ ४.।
Mahabharata - Shanti Parva - Chapter Footnotes

१२-४-२ विषये देशे ॥
१२-४-६ भीष्मको बक एव चेति थ ।पाठः ॥
१२-४-७ त्रैलोक्याधिपतिश्च य इति ट ।ड।पाठः।त्रैराज्येति थ।पाठ ॥
१२-४-१० वर्षवरः षण्ढः ॥
१२-४-१७ शिरांसि सशरांश्चापानिति ट ।ड।थ।पाठः ॥
१२-४-२० व्यपेयुः व्यपगताः ॥

---

शन्तिपर्व-अध्यय००५
॥ श्रीः ॥
१२.५. अध्यायः ५

Mahabharata - Shanti Parva - Chapter Topics
कर्णपराक्रमवर्णनम् ॥ १.।
Mahabharata - Shanti Parva - Chapter Text

१२-५-० (८१०२१)
नारद उवाच। १२-५-०क्ष् (६७११)
आदित्कृतबलं कर्णं दृष्ट्वा राजा स मागधः ।
आह्वयद्द्वैरथेनाजौ जरासन्धो महीपतिः ॥ १२-५-१ (८१०२२)
तयोः समभवद्युद्धं दिव्यास्त्रविदुषोर्द्वयोः ।
युधि नानाप्रहरणैरन्योन्यमभिवर्षतोः ॥ १२-५-२ (८१०२३)
क्षीणबाणौ विधनुषौ भग्नखड्गौ महीं गतौ ।
बाहुभिः समसज्जेतामुभावतिबलान्वितौ ॥ १२-५-३ (८१०२४)
श्बाहुकण्टकयुद्धेन तस्य कर्णोऽथ युध्यतः ।
विभेदं संधिं देहस्य जरया श्लेषितस्य हि ॥ १२-५-४ (८१०२५)
स विकारं शरीरस्य दृष्ट्वा नृपतिरात्मनः ।
प्रीतोऽस्मीत्यब्रवीत्कर्णं वैरमुत्सृज्य दूरतः ॥ १२-५-५ (८१०२६)
प्रीत्या ददौ स कर्णाय मालिनीं नगरीमनु ।
अङ्गेषु नरशार्दूल स राजाऽऽसीत्सपत्नजित् ॥ १२-५-६ (८१०२७)
पालयामास वर्णांस्तु कर्णः परबलार्दनः ।
दुर्योधनस्यानुमते तवापि विदितं तथा ॥ १२-५-७ (८१०२८)
एवं शस्त्रप्रतापेन प्रथितः सोऽभवत्क्षितौ ।
त्वद्धितार्थं सुरेन्द्रेण भिक्षितो वर्मकुण्डले ॥ १२-५-८ (८१०२९)
स दिव्ये सहजे प्रादात्कुण्डले परमार्चिते ।
सहजं कवचं चापि मोहितो देवमायया ॥ १२-५-९ (८१०३०)
विमुक्तः कुण्डलाभ्यां च सहजेन च वर्मणा ।
निहतो विजयेनाजौ वासुदेवस्य पश्यतः ॥ १२-५-१० (८१०३१)
ब्राह्मणस्यापि शापेन रामस्य च महात्मनः ।
कुन्त्याश्च वरदानेन मायया च शतक्रतोः ॥ १२-५-११ (८१०३२)
भीष्मावमानात्सङ्ख्यायां रथानामर्धकीर्तनात् ।
शल्यतेजोवधाच्चापि वासुदेवनयेन च। १२-५-१२ (८१०३३)
रुद्रस्य देवराजस्य यमस्य वरुणस्य च ।
कुबेरद्रोणयोश्चैव कृपस्य च महात्मनः ॥ १२-५-१३ (८१०३४)
अस्त्राणि दिव्यान्यादाय युधि गाण्डीवधन्वना ।
हतो वैकर्तनः कर्णो दिवाकरसमद्युतिः ॥ १२-५-१४ (८१०३५)
एवं शप्तस्तव भ्राता बहुभिश्चापि वञ्चितः ।
न शोच्यः पुरुषव्याघ्र युद्धे हि निधनं गतः ॥ ॥ १२-५-१५ (८१०३६)

इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि पञ्चमोऽध्यायः ॥ ५.।

१२-५-४ बाहुकण्टकयुद्धेन बाहुकण्टकं केतकपत्रं तद्वद्यत्र बलिना दुर्बलस्य शरीरं पात्यते तद्बाहुकण्टकं नाम युद्धम् ॥
१२-५-५ विकारं पाटनरूपम् ॥
१२-५-७ पालयामास चम्पां चेति झ ।पाठः ॥

---

शन्तिपर्व-अध्यय००६
॥ श्रीः ॥
१२.६. अध्यायः ६

Mahabharata - Shanti Parva - Chapter Topics
कुन्त्या कर्णवधानुशोचिनो युधिष्ठिरस्याश्वासनम् ॥ १.। युधिष्ठिरेण कुन्तींप्रति स्त्रीणां मन्त्रगोपनं माभूदिति शापदानम् ॥ २.।
Mahabharata - Shanti Parva - Chapter Text

१२-६-० (८१०३७)
वैशंपायन उवाच। १२-६-०क्ष् (६७१२)
एतावदुक्त्वा देवर्षिर्विरराम स नारदः ।
युधिष्ठिरस्तु राजर्षिर्दध्यौ शोकपरिप्लुतः ॥ १२-६-१ (८१०३८)
तं दीनमनसं वीरमधोवदनमातुरम् ।
निःश्वसन्तं यथा नागं पर्यश्रुनयनं तथा ॥ १२-६-२ (८१०३९)
कुन्ती शोकपरीताङ्गी दुःखोपहतचेतना ।
अब्रवीन्मधुराभाषा काले वचनमर्थवत् ॥ १२-६-३ (८१०४०)
युधिष्ठिर महाबाहो नैनं शोचितुमर्हसि ।
जहि शोकं महाप्राज्ञ श्रृणु चेदं वचो मम ॥ १२-६-४ (८१०४१)
याचितः स मया पूर्वं भ्राता ज्ञापयितुं तव ।
भास्करेण च देवेन पित्रा धर्मभृतां वरः ॥ १२-६-५ (८१०४२)
यद्वाच्यं हितकामेन सुहृदां भूतिमिच्छता ।
तथा दिवाकरेणोक्तः स्वप्नान्ते मम चाग्रतः ॥ १२-६-६ (८१०४३)
न चैनमशकद्भानुरहं वा स्नेहकारणैः ।
पुरा प्रत्यनुनेतुं वा नेतुं वाऽप्येकतां त्वया ॥ १२-६-७ (८१०४४)
ततः कालपरीतः स वैरस्योद्धरणे रतः ।
प्रतीपकारी युष्माकमिति चोपेक्षितो मया ॥ १२-६-८ (८१०४५)
इत्युक्तो धर्मराजस्तु मात्रा बाष्पाकुलेक्षणः ।
उवाच वाक्यं धर्मात्मा शोकव्याकुललोचनः ॥ १२-६-९ (८१०४६)
भवत्या गूढमन्त्रत्वाद्वञ्चिताः स्म तदा भृशम् ॥ १२-६-१० (८१०४७)

शशाप च महातेजाः सर्वलोकेषु योषितः ।
न गुह्यं धारयिष्यन्तीत्येवं दुःखसमन्वितः ॥ १२-६-११ (८१०४८)
स राजा पुत्रपौत्राणां संबन्धिसुहृदां तदा ।
स्मरन्नुद्विग्नहृदयो बभूवोद्विग्नचेतनः ॥ १२-६-१२ (८१०४९)
ततः शोकपरीतात्मा सधूम इव पावकः ।
निर्वेदमगमद्धीमान्राज्ये संतापपीडितः ॥ ॥ १२-६-१३ (८१०५०)

इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि षष्ठोऽध्यायः ॥ ६.।
Mahabharata - Shanti Parva - Chapter Footnotes

१२-६-१ दध्यौ भ्रातृवधजं दोषं चिन्तितवान् ॥
१२-६-५ यातितः स मया पूर्वं भ्रात्र्यमिति झ ।पाठः। तत्र
यातितः प्रवर्तितस्तवतुभ्यं भ्रात्र्यं भ्रातुः कर्म कनिष्ठानां
परिपालनं ज्ञःपयितुं त्वया सौभ्रात्रं युधिष्ठिरादिभ्यः
प्रदर्शनीयमित्यभ्यर्थित इत्यर्थः ॥
१२-६-७ प्रत्यनुनेतुं शययितुम् ॥
१२-६-८ कालपरीतो मृत्युग्रस्तः ।उद्धरणे शत्रूणां
निःशेषनाशेनोन्मूलने ॥
१२-६-१२ कर्मणिषष्ठ्यौ ॥
१२-६-१३ निर्वेदं राज्यादौ वैराग्यम् ॥

---

शन्तिपर्व-अध्यय००७
॥ श्रीः ॥
१२.७. अध्यायः ७

Mahabharata - Shanti Parva - Chapter Topics
युधिष्ठिरस्य परिशोचनम् ॥ १.।
Mahabharata - Shanti Parva - Chapter Text

१२-७-० (८१०५१)
वैशंपायन उवाच। १२-७-०क्ष् (६७१३)
युधिष्ठिरस्तु धर्मात्मा शोकव्याकुलचेतनः ।
शुशोच दुःखसंतप्तः स्मृत्वा कर्णं महारथम् ॥ १२-७-१ (८१०५२)
आविष्टो दुःखशोकाभ्यां निःश्वसंश्च पुनः पुनः ।
दृष्ट्वार्जुनमुवाचेदं वचनं शोककर्शितः ॥ १२-७-२ (८१०५३)
युधिष्ठिर उवाच। १२-७-३क्ष् (६७१४)
यद्भैक्ष्यमाचरिष्याम वृष्ण्यन्धकपुरे वयम् ।

ज्ञातीन्निष्पुरुषान्कृत्वा नेमां प्राप्स्याम दुर्गतिम् ॥ १२-७-३ (८१०५४)
अमित्रा नः समृद्धार्था वृत्तार्थाः कुरवः किल ।
आत्मानमात्मना हत्वा किं धर्मफलमाप्नुमः ॥ १२-७-४ (८१०५५)
धिगस्तु क्षात्रमाचारं धिगस्तु बलमौरसम् ।
धिगस्तु चार्थं येनेमामापदं गमिता वयम् ॥ १२-७-५ (८१०५६)
साधु क्षमा दमः शौचमविरोधो विमत्सरः ।
अहिंसा सत्यवचनं नित्यानि वनचारिणाम् ॥ १२-७-६ (८१०५७)
वयं तु लोभान्मोहाच्च दम्भं मानं च संश्रिताः ।
इमामवस्थां संप्राप्ता राज्यक्लेशबुभुक्षया ॥ १२-७-७ (८१०५८)
त्रैलोक्यस्यापि राज्येन नास्मान्कश्चित्प्रहर्षयेत् ।
बान्धवान्निहतान्दृष्ट्वा पृथिव्यामामिषैषिणः ॥ १२-७-८ (८१०५९)
ते वयं पृथिवीहेतोरवध्यान्पृथिवीतले ।
संपरित्यज्य जीवामो हीनार्था हतबान्धवाः ॥ १२-७-९ (८१०६०)
आमिषे गृध्यमानानामशुभं वै शुनामिव ।
आमिषं चैव नो नष्टमामिषस्य च भोजिनाम् ॥ १२-७-१० (८१०६१)
न पृथिव्या सकलया न सुवर्णस्य राशिभिः ।
न गजाश्वेन सर्वेण ते त्याज्या य इमे हताः ॥ १२-७-११ (८१०६२)
काममन्युपरीतास्ते क्रोधामर्षसमन्विताः ।
मृत्युयानं समारुह्य गता वैवस्वतक्षयम् ॥ १२-७-१२ (८१०६३)
बहुकल्याणमिच्छन्त ईहन्ते पितरः सुतान् ।
तपसा ब्रह्मचर्येण वन्दनेन तितिक्षया ॥ १२-७-१३ (८१०६४)
उपवासैस्तथेज्याभिर्व्रतकौतुकमङ्गलैः ।
लभन्ते मातरो गर्भांस्तान्मासान्दश बिभ्रति ॥ १२-७-१४ (८१०६५)
यदि स्वस्ति प्रजायन्ते जाता जीवन्ति वा यदि ।
संभाविता जातबला विदध्युर्यदि नः सुखम् ।
इह चामुत्र चैवेति कृपणाः फलहेतवः ॥ १२-७-१५ (८१०६६)
तासामयं समुद्योगो निर्वृत्तः केवलोऽफलः ।
यदासां निहताः पुत्रा युवानो मृष्टकुण्डलाः ॥ १२-७-१६ (८१०६७)
अभुक्त्वा पार्थिवान्भोगानृणान्यनपहाय च ।
पितृभ्यो देवताभ्यश्च गता वैयस्वतक्षयम् ॥ १२-७-१७ (८१०६८)
यदैषामम्ब पितरौ जातकर्मकराविह ।
संजातबालरूपेषु तदैव निहता नृषाः ॥ १२-७-१८ (८१०६९)
संयुक्ताः काममन्युभ्यां क्रोधामर्षसमन्विताः ।
न ते जयफलं किंचिद्भोक्तारो जातु कर्हिचित् ॥ १२-७-१९ (८१०७०)
पाञ्चालानां कुरूणां च हता एव हि ये हताः ।
न सकामा वयं ते च न चास्माभिर्न तैर्जितम् ॥ १२-७-२० (८१०७१)

न तैर्भुक्तेयमवनिर्न नार्यो गीतवादितम् ।
नामात्यसुहृदां वाक्यं न च श्रुतवतां श्रुतम् ।
न रत्नानि परार्ध्यानि न भूर्न द्रविणागमः ॥ १२-७-२१ (८१०७२)
न च धर्म्यानिमाँल्लोकान्प्रपद्याम स्वकर्मभिः ।
वयमेवास्य लोकस्य विनाशे कारणं स्मृताः ।
धृतराष्ट्रस्य पुत्रेण निकृतिप्रीतिसंयुताः ॥ १२-७-२२ (८१०७३)
सदैव निकृतिप्रज्ञो द्वेष्टा विद्वेषजीवनः ।
मिथ्यावृत्तश्च सततमस्मास्वनपराधिषु ॥१२-७-२३ (८१०७४)
ऋद्धिमस्मासु तां दृष्ट्वा विवर्णो हरिणः कृशः ।
धृतराष्ट्रश्च नृपतिः सौबलेन निवेदितः ॥१२-७-२४ (८१०७५)
तं पिता पुत्रगृध्नुत्वादनुमेनेऽनये स्थितम् ।
अनपेक्ष्यैव पितरं गाङ्गेयं विदुरं तथा ॥१२-७-२५ (८१०७६)
असंशयं त्वयं राजा यथैवाहं तथा गतः ।
अनियम्याशुचिं लुब्धं पुत्रं कामवशानुगम् ॥१२-७-२६ (८१०७७)
यशसः पतितो दीप्ताद्धातयित्वा सहोदरान् ।
इमौ हि वृद्धौ शोकाग्नौ प्रक्षिप्य स सुयोधनः ।
अस्मत्प्रद्वेषसंतप्तः पापबुद्धिः सदैव ह ॥ १२-७-२७ (८१०७८)
को हि बन्धुः कुलीनः संस्तथा ब्रूयात्सुहृज्जने ।
यथाऽसाववदद्वाक्यं युयुत्सुः कृष्णसन्निधौ ॥१२-७-२८ (८१०७९)
आत्मनो हि वयं दोषाद्विनष्टाः शाश्वतीः समाः ।
प्रदहन्तो दिशः सर्वा भास्वरा इव तेजसा ॥१२-७-२९ (८१०८०)
सोऽस्माकं वैरपुरुषो दुर्मतिः प्रग्रहं गतः ।
दुर्योधनकृते ह्येतत्कुलं नो विनिपातितम् ॥१२-७-३० (८१०८१)
अवध्यानां वधं कृत्वा लोके प्राप्ताः स्म वाच्यतां ॥ १२-७-३१ (८१०८२)
कुलस्यास्यान्तकरणं दुर्मतिं पापपूरुषम् ।
राजा राष्ट्रेश्वरं कृत्वा धृतराष्ट्रोऽद्य शोचति ॥१२-७-३२ (८१०८३)
हताः शूराः कृतं पापं विषयोऽसौ विनाशितः ।
हत्वा नो विगतो मन्युः शोको मां दारयत्ययम् ॥१२-७-३३ (८१०८४)
धनञ्जय कृतं पापं कल्याणेनोपहन्यते ।
श्ख्यापनेनानुतापेन दानेन तपसाऽपि वा ।
निवृत्त्या तीर्थगमनाच्छ्रुतिस्मृतिजपेन वा ॥ १२-७-३४ (८१०८५)
त्यागवांश्च पुनः पापं नालं कर्तुमिति श्रुतिः ।
त्यागवाञ्जन्ममरणे नाप्नोतीति श्रुतिर्यतः ।
प्राप्तवर्त्मा कृतमतिर्ब्रह्म संपद्यते तदा ॥ १२-७-३५ (८१०८६)
स धनञ्जय निर्द्वन्द्वो मुनिर्ज्ञानसमन्वितः ।
वनमामन्त्र्य वः सर्वान्गमिष्यामि परंतप ॥१२-७-३६ (८१०८७)

न हि कृत्स्नतमो धर्मः शक्यः प्राप्तुमिति श्रुतिः ।
परिग्रहवता तन्मे प्रत्यक्षमरिसूदन ॥१२-७-३७ (८१०८८)
मया निसृष्टं पापं हि परिग्रहमभीप्सता ।
जन्मक्षयनिमित्तं च प्राप्तुं शक्यमिति श्रुतिः ॥१२-७-३८ (८१०८९)
स परिग्रहमुत्सृज्य कृत्स्नं राज्यं सुखानि च ।
गमिष्यामि विनिर्मुक्तो विशोको निर्ममः क्वचित् ।
प्रशासध्वमिमामुर्वी क्षेमां निहतकण्टकाम् ।
न ममार्थोऽस्ति राज्येन भोगैर्वा कुरुनन्दन ॥ १२-७-३९ (८१०९०)
एतावदुक्त्वा वचनं कुरुराजो युधिष्ठिरः ।
उपारमत्ततः पार्थः कनीयान्प्रत्यभाषत ॥ ॥१२-७-४० (८१०९१)

इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि सप्तमोऽध्यायः ॥ ७.।
Mahabharata - Shanti Parva - Chapter Footnotes

१२-७-२ दुःखं देहेन्द्रियादीनां तापः ।शोकस्तत्कृतं वैकल्यम् ॥
१२-७-३ यद्यदि भैक्ष्यमाचीर्णं स्यात्तर्हि ज्ञातिवधाज्जाता दुर्गतिर्न प्राप्ता स्यादित्यर्थः ।लिङ्गिमित्ते लृङ्क्रियातिपत्तौ ॥
१२-७-८ पृथिव्यां विजयैषिण इति झ ।पाठः ॥
१२-७-१० अमिषे गृध्यमानानामशुभं वै शुनामिव ।आमिषं चैव नोहीष्टमामिषस्य विवर्जनमिति झ। पाठः। तत्र आमिषे राज्यनिमित्ते। अशुभं ज्ञातिद्रोहाख्यम्। शुनामिवेतरेषां भवति नो ह्यस्माकं त्वामिषं चाऽऽमिषस्य विवर्जनं चेति द्वयमपीष्टमित्यर्थः ॥
१२-७-११ बन्धूनामर्थे सर्वं त्याज्यमित्यर्थः ॥
१२-७-१४ व्रतानि गौरीव्रतादीनि ।कौतुकानि दुर्गोत्सवादीनि। मङ्गलानि लक्ष्मीनारायणशिलादीनि तैः ॥
१२-७-१६ यदा संनिहिताः पुत्रा इति थ ।द। पाठः ॥
१२-७-१७ अनपहाय अपरिहृत्य ।अनवदायेति पाठे अपरिशोध्य। पितृभ्य इति षष्ठ्यर्थे चतुर्थी ॥
१२-७-१८ अर्जुनेन सह वदन्नपि सन्निहितां मातरं सम्बोधयति हे अम्बेति ।पितरौ मातापितरौ गान्धारीधृतराष्ट्रौ यदैव जातकर्मकरौ तदैव ते नृपा दुर्योधनप्रभृतयो हताः ॥
१२-७-१९ न ते जन्मफलं किंचिदिति द ।पाठः ॥
१२-७-२१ श्रुतवतां पण्डितानाम् ।रत्नानीत्यादौ भुक्तानीत्यादिर्यथालिङ्गं शेषः। नामात्यसमितौ कथ्यं इति ट। ड। थ। पाठः ॥

१२-७-२४ हरिणः पाण्डुरः ।धृतराष्ट्रस्य नृपतेरिति
ड थ।द।पाठः ॥
१२-७-२७ पापबुद्धिः सुहृज्जनैरिति ट ।ड।थ।पाठः ॥
१२-७-२९ भास्करस्येव तेजसेति ट ।ड।थ।पाठः ॥
१२-७-३० प्रग्रहं दृढबन्धनम् ।गतः प्राप्तः।नोऽत्माभिः ॥
१२-७-३३ विषयः आपिषम् ।नोऽस्माकम्।तान्हत्वा विगतः ॥
१२-७-३४ कल्याणेनोपकारेण ।निवृत्त्या त्यागेन ॥
१२-७-३५ श्रुतिस्त्यागेनैके अमृतत्वमानशुरिति ।प्राप्तवर्त्मा
लब्धयोगमार्गः।त्यागे यदा कृतमतिरिति ट।ड।द।पाठः ॥
१२-७-३७ नहि कश्चिद्गृहे धर्म इति ड ।द।पाठः।परिग्रहवता
गृहस्थेन नहि प्राप्तुं शक्यः ॥

---

शन्तिपर्व-अध्यय००८
॥ श्रीः ॥
१२.८. अध्यायः ८

Mahabharata - Shanti Parva - Chapter Topics
युधिष्ठिरंप्रत्यर्जुनवचनम् ॥१.।
Mahabharata - Shanti Parva - Chapter Text

१२-८-० (८१०९२)
वैशंपायन उवाच।१२-८-०क्ष् (६७१५)
अथार्जुन उवाचेदमधिक्षिप्त इवाक्षमी ।
अभिनीततरं वाक्यं दृढवादपराक्रमः ॥१२-८-१ (८१०९३)
दर्शयन्नैन्द्रिरात्मानमुग्रमुग्रपराक्रमः ।
स्मयमानो महातेजाः सृक्किणी परिसंलिहन् ॥१२-८-२ (८१०९४)
अर्जुन उवाच।१२-८-३क्ष् (६७१६)
अहो दुःखमहो कृच्छ्रमहो वैक्लव्यमुत्तमम् ।
यत्कृत्वाऽमानुषं कर्म त्यजेथाः श्रियमुत्तमाम् ॥१२-८-३ (८१०९५)
शत्रून्हत्वा महीं लब्ध्वा स्वधर्मेणोपपादिताम् ।
हतामित्रः कथं स त्वं त्यजेथा बुद्धिलाघवात् ॥१२-८-४ (८१०९६)
क्लीबस्य हि कुतो राज्यं दीर्घसूत्रस्य वा पुनः ।
किमर्थं च महीपालानवधीः क्रोधमूर्च्छितः ॥१२-८-५ (८१०९७)
यो ह्याजिजीविषेद्भैक्षं कर्मणा नैव कस्य चित् ।
समारम्भान्बुभूषेत हतस्वस्तिरकिञ्चनः ।
सर्वलोकेषु विख्यातो न पुत्रपशुसंहितः ॥ १२-८-६ (८१०९८)

कापालीं नृप पापिष्ठां वृत्तिमासाद्य जीवतः ।
संत्यज्य राज्यमृद्धं ते लोकोऽयं किं वदिष्यति ॥ १२-८-७ (८१०९९)
सर्वारम्भान्समुत्सृज्य हतस्वस्तिरकिञ्चनः ।
कस्मादाशंससे भैक्षं चर्तुं प्राकृतवत्प्रभो ॥ १२-८-८ (८११००)
कस्माद्राजकुले जातो जित्वा कृत्स्नां वसुंधराम् ।
धर्मार्थावखिलौ हित्वा वनं मौढ्यात्प्रतिष्ठसे ॥ १२-८-९ (८११०१)
यदीमानि हवींषीह विमथिष्यन्त्यसाधवः ।
भवता विप्रहीणत्वात्प्राप्तं त्वामेव किल्विषम् ॥ १२-८-१० (८११०२)
आकिञ्चन्यं मुनीनां च इति वै नहुषोऽब्रवीत् ।
कृत्वा नृशंसं ह्यधने धिगस्त्वधनतामिह ॥ १२-८-११ (८११०३)
आश्वस्तन्यमृषीणां हि विद्यते वेद तद्भवान् ।
यं त्विमं धर्ममित्याहुर्धनादेष प्रवर्तते ॥ १२-८-१२ (८११०४)
धर्मं स हरते तस्य धनं हरति यस्य यः ।
ह्रियमाणे धने राजन्वयं कस्य क्षमेमहि ॥ १२-८-१३ (८११०५)
अभिशस्तं प्रपश्यन्ति दरिद्रं पार्श्वतः स्थितम् ।
दारिद्र्यं पातकं लोके कस्तच्छंसितुमर्हति ॥ १२-८-१४ (८११०६)
पतितः शोच्यते राजन्निर्धनश्चापि शोच्यते ।
विशेषं नाधिगच्छामि पतितस्याधनस्य च ॥ १२-८-१५ (८११०७)
अर्थेभ्यो हि विवृद्धेभ्यः संभृतेभ्यस्ततस्ततः ।
क्रियाः सर्वाः प्रवर्तन्ते पर्वतेभ्य इवापगाः ॥ १२-८-१६ (८११०८)
अर्थाद्धर्मश्च कामश्च स्वर्गश्चैव नराधिप ।
प्राणयात्राऽपि लोकस्य विना ह्यर्थं न सिध्यति ॥ १२-८-१७ (८११०९)
अर्थेन हि विहीनस्य पुरुषस्याल्पमेधसः ।
विच्छिद्यन्ते क्रियाः सर्वा ग्रीष्मे कुसरितो यथा ॥ १२-८-१८ (८१११०)
यस्यार्थास्तस्य मित्राणि यस्यार्थास्तस्य बान्धवाः ।
यस्यार्थाः स पुमाँल्लोके यस्यार्थाः स च पण्डितः ॥ १२-८-१९ (८११११)
अधनेनार्थकामेन नार्थः शक्यो विधित्सितुम् ।
अर्थैरर्था निबध्यन्ते गजैरिव महागजाः ॥ १२-८-२० (८१११२)
धर्मः कामश्च स्वर्गश्च हर्षः क्रोधः श्रुतं दमः ।
अर्थादेतानि सर्वाणि प्रवर्तन्ते नराधिप ॥ १२-८-२१ (८१११३)
धनात्कुलं प्रभवति धनाद्धर्मः प्रवर्धते ।
नाधनस्यास्त्ययं लोको न परः पुरुषोत्तम ॥ १२-८-२२ (८१११४)
नाधनो धर्मकृत्यानि यथावदनुतिष्ठति ।
धनाद्धि धर्मः स्रवति शैलादभिनदी यथा ॥ १२-८-२३ (८१११५)
यः कृशार्थः कृशगवः कृशभृत्यः कृशातिथिः ।
स वै राजन्कृशो नाम न शरीरकृशः कृशः ॥ १२-८-२४ (८१११६)

अवेक्षस्व यथान्यायं पश्य देवासुरं यथा ।
राजन्किमन्यज्ज्ञातीनां वधाद्गृध्यन्ति देवताः ॥ १२-८-२५ (८१११७)
न चेद्धर्तव्यमन्यस्य कथं तद्धर्ममारभेत् ।
एतावानेव वेदेषु निश्चयः कविभिः कृतः ॥ १२-८-२६ (८१११८)
अध्येतव्या त्रयी नित्यं भवितव्यं विपश्चिता ।
सर्वथा धनमाहार्यं यष्टव्यं चापि यत्नतः ॥ १२-८-२७ (८१११९)
द्रोहाद्देवैरवाप्तानि दिवि स्थानानि सर्वशः ।
द्रोहात्किमन्यज्ज्ञातीनां गृध्यन्ते येन देवताः ॥ १२-८-२८ (८११२०)
इति देवा व्यवसिता वेदवादाश्च शाश्वताः ।
अधीयन्तेऽध्यापयन्ते यजन्ते याजयन्ति च ॥ १२-८-२९ (८११२१)
कृत्स्नं तदेव तच्छ्रेयो यदप्याददतेऽन्यतः ।
न पश्यामोऽनपकृतं धनं किंचित्क्वचिद्वयम् ॥ १२-८-३० (८११२२)
एवमेव हि राजानो यजन्ति पृथिवीमिमाम् ।
जित्वा ममेयं ब्रुवते पुत्रा इव पितुर्धनम् ॥ १२-८-३१ (८११२३)
राजर्षयोऽपि ते स्वर्ग्या धर्मो ह्येषां निरुच्यते ॥ १२-८-३२ (८११२४)
यथैव पूर्णादुदधेः स्यन्दन्त्यापो दिशो दश ।
एवं राजकुलाद्वित्तं पृथिवीं प्रतितिष्ठति ॥ १२-८-३३ (८११२५)
आसीदियं दिलीपस्य नृगस्य नहुषस्य च ।
अंबरीपस्य मान्धातुः पृथिवी सा त्वयि स्थिता ॥ १२-८-३४ (८११२६)
स त्वां द्रव्यमयो यज्ञः संप्राप्तः सर्वदक्षिणः ।
तं चेन्न यजसे राजन्प्राप्तस्त्वं राज्यकिल्बिषम् ॥ १२-८-३५ (८११२७)
येषां राजाऽश्वमेधेन यजते दक्षिणावता ।
उपेत्य तस्यावभृथे पूताः सर्वे भवन्ति ते ॥ १२-८-३६ (८११२८)
विश्वरूपो महादेवः सर्वमेधे महामखे ।
जुहाव सर्वभूतानि तथैवात्मानमात्मना ॥ १२-८-३७ (८११२९)
शाश्वतोऽयं भूतिपथो नास्त्यन्तमनुशुश्रुम ।
महाजनपथं गन्ता मा राजन्कुपथं गमः ॥ ॥ १२-८-३८ (८११३०)

इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि अष्टमोऽध्यायः ॥ ८.।

Mahabharata - Shanti Parva - Chapter Footnotes

१२-८-१ दृढौ युक्तिशक्त्युपेतौ वादपराक्रमावुक्तिविक्रमौ यस्य स तथा ॥
१२-८-२ दर्शयन्नैन्द्रमात्मनिमिति ड थ द । पाठः ॥
१२-८-५ क्लीबस्य स्वीयवधे कातरस्य । दीर्घसूत्रस्य परवधे अलसस्य ॥
१२-८-६ यः पुमान्हतस्वस्तिर्नष्टकल्याणः । अकिञ्चनो
दरिद्रः। अतएव कमात्सर्वलोकेषु न विख्यातः। पुत्रपशुसंहितः

पुत्रादिभिराश्लिष्टश्च न भवति। स भैक्षं
आजिजीविषेदुपजीवितुमिच्छेत्। स कर्मणा पौरुषेण कस्यचिदपि
परस्य। समारभ्यन्त इति समारम्भा अर्थास्तान्नैव बुभूषेत
नैव प्राप्तुमिच्छेत्। त्वं तु प्राप्तकल्याणः संपन्नः ख्यातः
पुत्राद्याश्लिष्टश्च पौरुषेणार्थांल्लब्ध्वा नाजिजीविषेद्भैक्षं
कर्मणा येन केनचित्। समारम्भाद्बुभूषेत हतस्वस्तिरकिञ्चनः। इति
ट। ड। पाठः। यो ह्याजिजीविषेद्भैक्षं कर्मणा नैव केनचित्। इति
थ। पाठः। सर्वलोकेन विख्यातो न पुत्रपशुसंहितः। कापालीं नृप
पापिष्ठां वृत्तिमास्थाय जीवतीति ट। ड। थ। द। पाठः ॥
१२-८-७ कापालीं भिक्षापात्रवतीम् । संत्यज्यराज्यमृद्धिं त्वां
लोकोऽयं प्रवदिष्यतीति ट। ड। पाठः ॥
१२-८-८ सर्वारम्भान्सर्वार्थान्धर्मादीन् प्राकृतवन्मूढवत् ॥
१२-८-११ आकिञ्चन्यं मुनीनां च राज्यादप्यधिकं मतमिति यद्वाक्यं
तदुद्दिश्य नहुषो राजा अधनतामिह धिगस्त्वित्यब्रवीत् । अधने
धनाभावे निमित्ते सति पुरुषो नृशंसं कर्म कृत्वा जीवतीति
दारिद्र्यं पापहेतुत्वान्निन्दितवानित्यर्थः। आकिञ्चन्यमहीनस्य मृत्यवे
इति ट। ड। थ। पाठः ॥
१२-८-२५ यत्तूक्तं ज्ञातीनां परस्परं युद्धे हतानां हन्तॄणां च
श्रेयो नास्तीति तच्छिष्टाचारदर्शनेन दूषयति । अवेक्षस्वेत्यादिना ॥
१२-८-२६ अन्यस्य परस्य धनं चेन्न हर्तव्यं तत्तर्हि राजा कथं
धर्ममाचरेत् । तस्य वृत्त्यन्तराभावान्न कथंचिदित्यर्थः ॥
१२-८-३२ निरुच्यते उत्कृष्टत्वेन कीर्त्यते ॥
१२-८-३३ स्यन्दन्ति प्रस्रवन्ति ॥

---

शन्तिपर्व-अध्यय००९
॥ श्रीः ॥
१२.९. अध्यायः ९

Mahabharata - Shanti Parva - Chapter Topics
युधिष्ठिरस्य निर्वेदवचनम् ॥ १.।
Mahabharata - Shanti Parva - Chapter Text

१२-९-० (८११३१)
युधिष्ठिर उवाच। १२-९-०क्ष् (६७१७)
मुहूर्तं तावदेकाग्रो मनः श्रोत्रेऽन्तरात्मनि ।
धारयन्नपि ते श्रुत्वा रोचते वचनं मम ॥ १२-९-१ (८११३२)
सार्थगम्यमहं मार्गं न जातु त्वत्कृते पुनः ।

गच्छेयं तं गमिष्यामि हित्वा ग्राम्यसुखान्युत ॥ १२-९-२ (८११३३)
क्षेम्यश्चैकाकिना गम्यः पन्था कोस्तीति पृच्छ माम् ।
अथवा नेच्छसि प्रष्टुमपृच्छन्नपि मे शृणु ॥ १२-९-३ (८११३४)
हित्वा ग्राम्यसुखाचारं तप्यमानो महत्तपः ।
अरण्ये फलमूलाशी चरिष्यामि मृगैः सह ॥ १२-९-४ (८११३५)
जुह्वानोऽग्निं यथाकालमुभौ कालावुपस्पृशन् ।
कृशः परिमिताहारश्चर्मचीरजटाधरः ॥ १२-९-५ (८११३६)
शीतवातातपसहः क्षुत्पिपासाश्रमक्षमः ।
तपसा विधिदृष्टेन शरीरमुपशोषयन् ॥ १२-९-६ (८११३७)
मनःकर्णसुखा नित्यं श्रृण्वन्नुच्चावचा गिरः ।
मुदितानामरण्येषु नदतां मृगपक्षिणाम्। १२-९-७ (८११३८)
आजिघ्रन्पेशलान्गन्धान्फुल्लानां वृक्षवीरुधाम् ॥
नानारूपान्वने पश्यन्रमणीयान्वनौकसः ॥ १२-९-८ (८११३९)
वानप्रस्थजनस्यापि दर्शनं कूलवासिनः ।
नाप्रियाण्याचरिष्यामि किंपुनर्ग्रामवासिनाम् ॥ १२-९-९ (८११४०)
एकान्तशीली विमृशन्पक्वापक्वेन वर्तयन् ।
पितॄन्देवांश्च वन्येन वाग्भिरद्भिश्च तर्पयन् ॥ १२-९-१० (८११४१)
एवमारण्यशास्त्राणामुग्रमुग्रतरं विधिम् ।
सेवमानः प्रतीक्षिष्ये देहस्यास्य समापनम् ॥ १२-९-११ (८११४२)
अथवैकोऽहमेकाहमेकैकस्मिन्वनस्पतौ ।
चरन्भैक्षं मुनिर्मुण्डः क्षपयिष्ये कलेवरम् ॥ १२-९-१२ (८११४३)
पांसुभिः समभिच्छन्नः शून्यागारप्रतिश्रयः ।
वृक्षमूलनिकेतो वा त्यक्तसर्वप्रियाप्रियः ॥ १२-९-१३ (८११४४)
न शोचन्न प्रहृष्यंश्च तुल्यनिन्दात्मसंस्तुतिः ।
निराशीर्निर्ममो भूत्वा निर्द्वन्द्वो निष्परिग्रहः ॥ १२-९-१४ (८११४५)
आत्मारामः प्रसन्नात्मा जडान्धबधिराकृतिः ।
अकुर्वाणः परैः कांचित्संविदं जातु कैरपि ॥ १२-९-१५ (८११४६)
जङ्गमाजङ्गमान्सर्वानविहिंसंश्चतुर्विधान् ।
प्रजाः सर्वाः स्वधर्मस्थाः समः प्राणभृतः प्रति ॥ १२-९-१६ (८११४७)
न चाप्यवहसन्कंचिन्न कुर्वन्भ्रुकुटीः क्वचित् ।
प्रसन्नवदनो नित्यं सर्वेन्द्रियसुसंयतः ॥ १२-९-१७ (८११४८)
अपृच्छन्कस्यचिन्मार्गं प्रव्रजन्नेव केनचित् ।
न देशं न दिशं कांचिद्गन्तुमिच्छन्विशेषतः ॥ १२-९-१८ (८११४९)
गमने निरपेक्षश्च पश्चादनवलोकयन् ।
ऋजुः प्रणिहितो गच्छन्स्त्रीसंस्थापरिवर्जकः ॥ १२-९-१९ (८११५०)
स्वभावस्तु प्रयात्यग्रे प्रभवन्त्यशनान्यपि ।

द्वन्द्वानि च विरुद्धानि तानि सर्वाण्यचिन्तयन् ॥१२-९-२० (८११५१)
अल्पं वा स्वादु वा भोज्यं पूर्वालाभेन जातुचित् ।
अन्येष्वपि चरँल्लाभमलाभे सप्त पूरयन् ॥१२-९-२१ (८११५२)
विधूमे न्यस्तमुसले व्यङ्गारे भुक्तवज्जने ।
अतीतपात्रसंचारे काले विगतभिक्षुके ॥१२-९-२२ (८११५३)
एककालं चरन्भैक्षं त्रीनथ द्वे च पञ्च वा ।
स्नेहपाशं विमुच्याहं चरिष्यामि महीमिमाम् ॥१२-९-२३ (८११५४)
अलाभे सति वा लाभे समदर्शी महातपाः ।
न जिजीविषुवत्किंचिन्न मुमूर्षुवदाचरन् ॥१२-९-२४ (८११५५)
जीवितं मरणं चैव नाभिनन्दन्न च द्विपन् ।
वास्यैकं तक्षतो बाहुं चन्दनेनैकपुक्षतः ।
नाकल्याणं न कल्याणं चिन्तयन्नुभयोस्तयोः ॥ १२-९-२५ (८११५६)
याः काश्चिज्जीवता शक्याः कर्तुमभ्युदयक्रियाः ।
सर्वास्ताः समभित्यज्य निमेषादिव्यवस्थितः ॥१२-९-२६ (८११५७)
तेषु नित्यमसक्तश्च त्यक्तसर्वेन्द्रियक्रियः ।
अपरित्यक्तसंकल्पः सुनिर्णिक्तात्मकल्मपः ॥१२-९-२७ (८११५८)
विमुक्तः सर्वसङ्गेभ्यो व्यतीतः सर्ववागुराः ।
न वशे कस्यचित्तिष्ठन्सधर्मा मातरिश्वनः ॥१२-९-२८ (८११५९)
वीतरागश्चरन्नेवं तुष्टिं प्राप्स्यामि मानसीम् ।
तृष्णया हि महत्पापमज्ञानादस्मि कारितः ॥१२-९-२९ (८११६०)
कुशलाकुशलान्येके कृत्वा कर्माणि मानवाः ।
कार्यकारणसंश्लिष्टं स्वजनं नाम ब्रिभ्रति ॥१२-९-३० (८११६१)
आयुपोऽन्ते प्रहायेदं क्षीणप्राणं कलेवरम् ।
प्रतिगृह्णाति तत्पापं कर्तुः कर्मफलं हि तत् ॥१२-९-३१ (८११६२)
एवं संसारचक्रेऽस्मिन्व्याविद्धे रथचक्रवत् ।
समेति भूतग्रामोऽयं भूतग्रामेण कार्यवान् ॥१२-९-३२ (८११६३)
जन्ममृत्युजराव्याधिवेदनाभिरभिद्रुतम् ।
अपारमिव चास्वस्थं संसारं त्यजतः सुखम् ॥१२-९-३३ (८११६४)
दिवः पतत्सु देवेषु स्थानेभ्यश्च महर्षिषु ।
को हि नाम भवेनार्थी भवेत्कारणतत्त्ववित् ॥१२-९-३४ (८११६५)
कृत्वा हि विविधं कर्म तत्तद्विविधलक्षणम् ।
पार्थिवैर्नृपतिः स्वल्पैः कारणैरेव बध्यते ॥१२-९-३५ (८११६६)
तस्मात्प्रज्ञामुतमिदं चिरान्मां प्रत्युपस्थितम् ।
तत्प्राप्य प्रार्थये स्थानमव्ययं शाश्वतं ध्रुवम् ॥१२-९-३६ (८११६७)
एतया संततं धृत्या चरन्नेवंप्रकारया ।
जन्ममृत्युजराव्याधिवेदनाभिरभिद्रुतम् ।

देहं संस्थापयिष्यामि निर्भयं मार्गमास्थितः ॥ ॥ १२-९-३७ (८११६८)

इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि नवमोऽध्यायः ॥ ९.।

Mahabharata - Shanti Parva - Chapter Footnotes

१२-९-१ मुहूर्तं तावदेकाग्रो मनः श्रोत्रेऽन्तरात्मनि ।धारयन्नपि तच्छ्रुत्वा रोचेत वचनं ममेति झ।पाठः।१२-९-८ पेशलान्नभ्यान्। ।
१२-९-१५ आत्मारामः योगेनात्मन्येव रममाणः ।प्रसन्नात्मा शुद्धसत्वः।केनचिन्निमित्तेन संविदं संवादमकुर्वाणः कृत्याभावात् ॥
१२-९-१६ चतुर्विधान् जंगमस्य जरायुजाण्डजस्वेदजभेदेन त्रैविध्यात् ।स्वधर्मस्थाः प्राणभृत इन्द्रियपोषकाश्च प्रजाः प्रति सम इत्यन्वयः ॥
१२-९-१८ केनचिन्मार्गेण ॥
१२-९-१९ प्रणिहितोऽन्तर्मुखः ॥
१२-९-२१ पूर्वालाभेन पूर्वस्मिन् गृहेऽलाभेः हेतुना जातु कदाचित् ।अन्येष्वपि गृहेषु लाभं लब्धमन्नं चरन्भक्षयन् ॥
१२-९-२२ भैक्षकालमाह विधूमे इति ।गृहे इति शेषः ॥
१२-९-२३ त्रीन्गृहान् ॥
१२-९-२४ जिजीविषुवद्धनादिसंग्रहम् ।मुमूर्षुवदन्नादित्यागम् ॥
१२-९-२५ वासी तक्षायुधं तया ॥
१२-९-२६ निमेषोन्मेषाशनपानादिशारीरनिर्वाहमात्रकर्मस्ववस्थित इतर्थः ॥
१२-९-२७ तेष्वपि कर्मसु असक्तः ।अपरित्यक्तो नित्यं वशीकृतः संकल्पो मनः क्रियायेन।दृढमना इत्यर्थः।सुनिर्णिक्तात्मकल्मषः सम्यग्दूरीकृतधीमलः ॥
१२-९-२८ वागुराः स्नेहपाशान् ॥
१२-९-३० एके मूढाः कार्यकारणसंश्लिष्टं स्वसुखेन निमित्तभूतेन संलग्नं स्त्र्यादिकं बिभ्रत्यात्मोपकारकत्वेन पुष्णन्ति ।कुशलाकुशलान्येवं कृत्वा कर्गाणि मानवः।कार्यकारणसंश्लियः स्वजनं नाभिनन्दति इति ङ।पाठः ॥
१२-९-३२ व्याविद्धे भ्राम्यमाणे ।समेति संयोगमेति ॥
१२-९-३५ विविधं सामाद्युपायवत् विविधलक्षणं नानाविधकपटादिरूपं कर्म कृत्वा स्वल्पैः पार्थिवैः क्षुद्रराजभिर्नृपतिर्महाराजो बध्यते ।कारणैः स्वापमानादिभिर्हेतुभिः बहवो मिलित्वा एकं महान्तं

घ्नन्तीत्यर्थः ॥
१२-९-३६ यस्माद्दुःखमयं क्षयिष्णु च ऐश्वर्यं तस्मात् । स्थानं मोक्षम्। अव्ययमपक्षयशून्यम्। शाश्वतमनादि। ध्रुवं सदैकरूपम् ॥
१२-९-३७ संस्थापयिष्यामि समापयिष्यामि ॥

---

शन्तिपर्व-अध्यय०१०
॥ श्रीः ॥
१२.१०. अध्यायः १०

Mahabharata - Shanti Parva - Chapter Topics
युधिष्ठिरंप्रति भीमसेनवचनम् ॥ १.।
Mahabharata - Shanti Parva - Chapter Text

१२-१०-० (८०९०६)
भीम उवाच। १२-१०-०क्ष् (६७०६)
श्रोत्रियस्येव ते राजन्मन्दकस्याविपश्चितः ।
अनुवाकहता बुद्धिर्नैषा तत्त्वार्थदर्शिनी ॥ १२-१०-१ (८०९०७)
आलस्ये कृतचित्तस्य राजधर्मानसूयतः ।
विनाशे धार्तराष्ट्राणां किं फलं भरतर्षभ ॥ १२-१०-२ (८०९०८)
क्षमाऽनुकम्पा कारुण्यमानृशंस्यं न विद्यते ।
क्षात्रमाचरतो मार्गमपि बन्धोस्त्वदन्तरे ॥ १२-१०-३ (८०९०९)
यदीमां भवतो बुद्धिं विद्याम वयमीदृशीम् ।
शस्त्रं नैव ग्रहीष्यामो न वधिष्याम कंचन ॥ १२-१०-४ (८०९१०)
भैक्षमेवाचरिष्याम शरीरस्याविमोक्षणात् ।
न चेदं दारुणं युद्धमभविष्यन्महीक्षिताम् ॥ १२-१०-५ (८०९११)
प्राणस्यान्नमिदं सर्वमिति वै कवयो विदुः ।
स्थावरं जङ्गमं चैव सर्वं प्राणस्य भोजनम् ॥ १२-१०-६ (८०९१२)
आददानस्य चेद्राज्यं ये केचित्परिपन्थिनः ।
हन्तव्यास्त इति प्राज्ञाः क्षत्रधर्मविदो विदुः ॥ १२-१०-७ (८०९१३)
ते सदोषा हताऽस्माभिरन्नस्य परिपन्थिनः ।
तान्हत्वा भुङ्क्ष्व धर्मेण युधिष्ठिर महीमिमाम् ॥ १२-१०-८ (८०९१४)
यथा हि पुरुषः खात्वा कूपमप्राप्य चोदकम् ।
पङ्कदिग्धो निवर्तेत् कर्मेदं नस्तथोपमम् ॥ १२-१०-९ (८०९१५)
यथाऽऽरुह्य महावृक्षमपहृत्य ततो मधु ।
अप्राश्य निधनं गच्छेत्कर्मेदं नस्तथोपमम् ॥ १२-१०-१० (८०९१६)
यथा महान्तमध्वानमाशया पुरुषः पतन् ।
स निराशो निवर्तेत कर्मैतन्नस्तथोपमम् ॥ १२-१०-११ (८०९१७)

यथा शत्रून्घातयित्वा पुरुषः कुरुनन्दन ।
आत्मानं घातयेत्पश्चात्कर्मेदं नस्तथोपमम् ॥ १२-१०-१२ (८०९१८)
यथान्नं क्षुधितो लब्ध्वा न भुञ्जीयाद्यदृच्छया ।
कामी च कामिनीं लब्ध्वा कर्मेदं नस्तथोपमम् ॥ १२-१०-१३ (८०९१९)
वयमेवात्र गर्ह्या हि यद्वयं मन्दचेतसम् ।
त्वां राजन्ननुगच्छामो ज्येष्ठोऽयमिति भारत ॥ १२-१०-१४ (८०९२०)
वयं हि बाहुबलिनः कृतविद्या मनस्विनः ।
क्लीबस्य वाक्ये तिष्ठामो यथैवाशक्तयस्तथा ॥ १२-१०-१५ (८०९२१)
अगतीकगतीनस्मान्नष्टार्थनर्थसिद्धये ।
कथं वै नानुपश्येयुर्जनाः पश्यत यादृशम् ॥ १२-१०-१६ (८०९२२)
आपत्काले हि संन्यासः कर्तव्य इति शिष्यते ।
जरयाऽभिपरीतेन शत्रुभिर्व्यंसितेन वा ॥ १२-१०-१७ (८०९२३)
तस्मादिह कृतप्रज्ञास्त्यागं न परिचक्षते ।
धर्मव्यतिक्रमं चैव मन्यन्ते सूक्ष्मदर्शिनः ॥ १२-१०-१८ (८०९२४)
कथं तस्मात्समुत्पन्नास्तन्निष्ठास्तदुपाश्रयाः ।
तदेव निन्दां भाषेयुर्धाता तत्र न गर्ह्यते ॥ १२-१०-१९ (८०९२५)
श्रिया विहीनैरधनैर्नास्तिकैः संप्रवर्तितम् ।
वेदवादस्य विज्ञानं सत्याभासमिवानृत् ॥ १२-१०-२० (८०९२६)
शक्यं तु मौनमास्थाय बिभ्रताऽऽत्मानमात्मना ।
धर्मच्छद्म समास्थाय च्यवितुं न तु जीवितुम्। १२-१०-२१ (८०९२७)
शक्यं पुनररण्येषु सुखमेकेन जीवितुम् ।
अबिभ्रता पुत्रपौत्रान्देवर्षीनतिथीन्पितॄन् ॥ १२-१०-२२ (८०९२८)
नेमे मृगाः स्वर्गजितो न वराहा न पक्षिणः ।
अथान्येन प्रकारेण पुण्यमाहुर्न ते जनाः ॥ १२-१०-२३ (८०९२९)
यदि संन्यासतः सिद्धिं राजा कश्चिदवाप्नुयात् ।
पर्वताश्च द्रुमाश्चैव क्षिप्तं सिद्धिमवाप्नुयुः ॥ १२-१०-२४ (८०९३०)
एते हि नित्यसंन्यासा दृश्यन्ते निरुपद्रवाः ।
अपरिग्रहवन्तश्च सततं ब्रह्मचारिणः ॥ १२-१०-२५ (८०९३१)
अथ चेदात्मभाग्येषु नान्येषां सिद्धिमश्नुते ।
तस्मात्कर्मैव कर्तव्यं नास्ति सिद्धिरकर्मणः ॥ १२-१०-२६ (८०९३२)
औदकाः सृष्टयश्चैव जन्तवः सिद्धिमाप्नुयुः ।
तेषामात्मैव भर्तव्यो नान्यः कश्चन विद्यते ॥ १२-१०-२७ (८०९३३)
अवेक्षस्व यथा स्वैः कर्मभिर्व्यापृतं जगत् ।
तस्मात्कर्मैव कर्तव्यं न्प्रस्ति सिद्धिरकर्मणः ॥ ॥ १२-१०-२८ (८०९३४)

इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि दशमोऽध्यायः ॥ १०.।

१२-१०-१ श्रोत्रियस्य वेदपाठकस्य मन्दत्वादेवाविपश्चितोऽर्थज्ञाशून्यस्य । अनुवाकेन नित्यपाठेन हता नष्टा ॥
१२-१०-३ त्वदन्तरे त्वत्तोऽन्यत्र ॥
१२-१०-६ प्राणस्य प्राणवतो बलिष्ठस्येदं सर्वमन्नमिवान्नं भोग्यम् । भोजनं भुज्यते पाल्यते इति व्युत्पत्त्या पालनीयम् ॥
१२-१०-८ हतास्माभिरिति संधिरार्षः । हत्वा निघ्नन् त्वं। हन्तेरन्येभ्योऽपि दृश्यत इति क्वनिप् अनुनासिकलोपो ह्रस्वस्येति तुक्। राज्यस्य परिपन्थिन इति झ। पाठः ॥
१२-१०-९ तथा तेन प्रकारेणोपमीयत इति तथोपमम् ॥
१२-१०-११ पतन् गच्छन् १२-१०-१५ अशक्तयः शक्तिहीनाः ॥
१२-१०-१६ अगतीकगतीननाथरक्षकान् । दैर्ध्यमार्षम्। एतत् यादृशं मम वचनं तादृशं पश्यत युक्तमयुक्तं वेति परीक्षयतेत्यर्थः ॥
१२-१०-१७ व्यंसितेन दुर्गतिंप्रापितेन ॥
१२-१०-१८ त्यागं संन्यासम् । क्षत्रियस्य मौण्ड्यादिकं निषिद्धं तस्याचरणे धर्मव्यतिक्रमोऽस्त्येवेति भावः ॥
१२-१०-१९ हिंसार्थमुत्पन्ना हिंस्नयोनौ जाताः । हिंसैकजीवनास्तदेव तस्यैव हिंस्नधर्मस्य निन्दां कथं भाषेयुः। कथं वा तत्र धाता तस्य धर्मस्य स्नष्टा न गर्ह्यते न निन्द्यते। धातृविहितत्वात्सहजत्वाच्च नासौ धर्मो निन्द्य इत्यर्थः। तएव भूषयेयुर्ये ते श्रद्धाह्यत्र गर्ह्यते इति द। पाठः ॥
१२-१०-२० श्रिया विहीनैरनयैर्नास्तिकैः संप्रकीर्तितम् । वेदाभासमिवाज्ञानमिति थ। पाठः। श्रिया त्रय्या विद्यया विहीनैः। अधनैर्लक्ष्म्या च हीनैः। इदमनृतं संप्रवर्तितम्। वेदयतीति वेदो विधिस्तस्य वादोऽर्थवादस्तत्संबन्धि विज्ञानं संन्यासविधिस्तुत्यर्थं भरतादिकीर्तनं प्रजापतिवपोत्खननवदर्थवादो नतु तावता मौण्ड्ये क्षत्रियस्याधिकारः सिध्यतीति भावः ॥
१२-१०-२१ आत्मानं देहमात्मना स्वेनैव बिभ्रता निश्चलं स्थापयता धर्मच्छद्म कपटयोगं आस्थाय च्यवितुं मर्तुमेव शक्यं न जीवितुम् । केवलं प्रणिधानेन शरीरनाशो भवेदित्यर्थः ॥
१२-१०-२६ आत्मभाग्येषु स्वसंपत्सु अन्येषां सिद्धिं परकर्मार्जितं फलम् ॥

शन्तिपर्व-अध्यय०११
॥ श्रीः ॥
१२.११. अध्यायः ११

Mahabharata - Shanti Parva - Chapter Topics
अर्जुनेन युधिष्ठिरंप्रति गार्हस्थ्यस्य श्रैष्ठ्योपपादनम् ॥ १. ।
Mahabharata - Shanti Parva - Chapter Text

१२-११-० (६९०५३)
अर्जुन उवाच। १२-११-०क्ष् (५६२८)
अत्रैवोदाहरन्तीममितिहासं पुरातनम् ।
तापसैः सह संवादं शक्रस्य भरतर्षभ ॥ १२-११-१ (६९०५४)
ग्शक्यं पुनररण्येषु सुखमेतेन जीवितुम्।'
केचिद्गृहान्परित्यज्य वनमभ्यागमन्द्विजाः ।
अजातश्मश्रवो मन्दाः कुले जाताः प्रवव्रजुः ॥ १२-११-२ (६९०५५)
धर्मोऽयमिति मन्वानाः समृद्धा धर्मचारिणः ।
त्यक्त्वा भ्रातॄन्पितॄंश्चैव तानिन्द्रोऽन्वकृपायत ॥ १२-११-३ (६९०५६)
स तान्बभाषे मघवान्पक्षीभूत्वा हिरण्मयः ।
सुदुष्करं मनुष्यैस्तु यत्कृतं विघसाशिभिः ॥ १२-११-४ (६९०५७)
पुण्यं भवति कर्मैषां प्रशस्तं चैव जीवितम् ।
सिद्धार्थास्ते गतिं मुख्यां प्राप्ताः कर्मपरायणाः ॥ १२-११-५ (६९०५८)
ऋषय ऊचुः। १२-११-६क्ष् (५६२९)
अहो बतायं शकुनिर्विघसाशान्प्रशंसति ।
अस्मान्नूनमयं शास्ति वयं च विघसाशिनः ॥ १२-११-६ (६९०५९)
शकुनिरुवाच। १२-११-७क्ष् (५६३०)
नाहं युष्मान्प्रशंसामि पङ्कदिग्धान्रजस्वलान् ।
उच्छिष्टभोजिनो मन्दानन्ये वै विघसाशिनः ॥ १२-११-७ (६९०६०)
ऋषय ऊचुः। १२-११-८क्ष् (५६३१)
इदं श्रेयः परमिति वयमेवममंस्महि ।
शकुने ब्रूहि यच्छ्रेयो वयं ते श्रद्दधामहे ॥ १२-११-८ (६९०६१)
शकुनिरुवाच। १२-११-९क्ष् (५६३२)
यदि मां नाभिशङ्कध्वं विभज्यात्मानमात्मना ।
ततोऽहं वः प्रवक्ष्यामि याथातथ्यं हितं वचः ॥ १२-११-९ (६९०६२)
ऋषय ऊचुः। १२-११-१०क्ष् (५६३३)
शृणुमस्ते वचस्तात पन्थानो विदितास्तव ।
नियोगे चैव धर्मात्मन्स्थातुमिच्छाम शाधि नः ॥ १२-११-१० (६९०६३)

शकुनिरुवाच। १२-११-११क्ष् (५६३४)
चतुष्पदां गौः प्रवरा लोहानां काञ्चनं वरम् ।
शब्दानां प्रवरो मन्त्रो ब्राह्मणो द्विपदां वरः ॥ १२-११-११ (६९०६४)
मन्त्रोऽयं जातकर्मादिर्ब्राह्मणस्य विधीयते ।
जीवतोऽपि यथाकालं श्मशाननिधनान्तकः ॥ १२-११-१२ (६९०६५)
कर्माणि वैदिकान्यस्य स्वर्ग्यः पन्थास्त्वनुत्तमः ।
अथ सर्वाणि कर्माणि मन्त्रसिद्धानि चक्षते ।
आम्नायदृढवादीनि तथा सिद्धिरिहेष्यते ॥ १२-११-१३ (६९०६६)
मासार्धमासा ऋतव आदित्यशशितारकम् ।
ग्रसन्ते कर्म भूतानि तदिदं कर्मशंसिनाम् ॥ १२-११-१४ (६९०६७)
सिद्धिक्षेत्रमिदं पुण्यमयमेवाश्रमो महान् ॥ १२-११-१५ (६९०६८)
अथ ये कर्म निन्दन्तो मनुष्याः कापथं गताः ।
मूढानामर्थहीनानां तेषामेनस्तु विद्यते ॥ १२-११-१६ (६९०६९)
देववंशान्पितृवंशान्ब्रह्मवंशांश्च शाश्वतान् ।
संत्यज्य मूढा वर्तन्ते ततो यान्त्यशुचीन्पथः ॥ १२-११-१७ (६९०७०)
एतद्वोऽस्तु तपोयुक्तं ददामीत्यृषिचोदितम् ।
तस्मात्तदध्यावसतस्तपस्वित्वमिहोच्यते ॥ १२-११-१८ (६९०७१)
देववंशान्ब्रह्मवंशान्पितृवंशांश्च शाश्वतान् ।
संविभज्य गुरोश्चर्यां तद्वै दुष्करमुच्यते ॥ १२-११-१९ (६९०७२)
देवा वै दुष्करं कृत्वा विभूतिं परमां गताः ।
तस्माद्गार्हस्थ्यमुद्वोढुं दुष्करं प्रब्रवीमि वः ॥ १२-११-२० (६९०७३)
तपः श्रेष्ठं प्रजानां हि मूलमेतन्न संशयः ।
कुटुम्वविधिनाऽनेन यस्मिन्सर्वं प्रतिष्ठितम् ॥ १२-११-२१ (६९०७४)
एतद्विदुस्तपो विप्रा द्वन्द्वातीता विमत्सराः ।
एतस्माद्वनमध्ये तु लोकेषु तप उच्यते ॥ १२-११-२२ (६९०७५)
दुराधर्षं पदं चैव गच्छन्ति विघसाशिनः ।
सायंप्रातर्विभज्यान्नं स्वकुटुम्बे यथाविधि ॥ १२-११-२३ (६९०७६)
दत्त्वाऽतिथिभ्यो देवेभ्यः पितृभ्यः स्वजनाय च ।
अवशिष्टानि येऽश्नन्ति तानाहुर्विघसाशिनः ॥ १२-११-२४ (६९०७७)
तस्मात्स्वधर्ममास्थाय सुव्रताः सत्यवादिनः ।
लोकस्य गुरवो भूत्वा ते भवन्त्यनुपस्कृताः ॥ १२-११-२५ (६९०७८)
त्रिदिवं प्राप्य शक्रस्य स्वर्गलोके विमत्सराः ।
वसन्ति शाश्वतान्वर्षाञ्जना दुष्करकारिणः ॥ १२-११-२६ (६९०७९)
अर्जुन उवाच। १२-११-२७क्ष् (५६३५)
ततस्ते तद्वचः श्रुत्वा धर्मार्थसहितं हितम् ।
उत्सृज्य नास्तिकमतिं गार्हस्थ्यं धर्ममाश्रिताः ॥ १२-११-२७ (६९०८०)

तस्मात्त्वमपि सर्वज्ञ धैर्यमालम्ब्य शाश्वतम् ।
प्रशाधि पृथिवीं कृत्स्नां हतामित्रां नरोत्तम ॥ ॥१२-११-२८ (६९०८१)

इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि एकादशोऽध्यायः
॥ ११.।
Mahabharata - Shanti Parva - Chapter Footnotes

१२-११-४ विघसाशिभिः महायज्ञावशिष्टभोजिभिः ॥
१२-११-६ शास्ति ज्ञापयति ।विघसं शीर्णतृणपर्णफलादिकं
तददनशीलास्तु वयमेवातो विघसाशिनिः श्रेयांसः स्म इति मेनिरे
इत्यर्थः ॥
१२-११-७ पङ्क्तिदिग्धान्नरजस्वलानित्यागन्तुकस्वाभाविकदोषयुक्तत्वमुक्तं
क्रमेण ।उच्छिष्टभोजिन इति। प्रायेण शीर्णतृणमर्णफलानि
मृगकीटपक्ष्युच्छिष्टानि भवन्ति तद्भोजिनः ॥
१२-११-८ ते तव वच इति शेषः ॥
१२-११-१० पन्थानः श्रेयोमार्गाः ॥
१२-११-१२ मन्त्रो मन्त्रोक्तसंस्कारः ॥
१२-११-१५ ईहन्ते सर्वभूतानि तदिदं कर्मसंज्ञितमिति झ ।पाठः ॥
१२-११-२२ एतस्मात् गार्हस्थ्यात् अनन्तरं वनमध्ये तप उच्यत इत्यन्वयः ॥
१२-११-२५ अनुपस्कृताः निःसंशयाः ॥

---

शन्तिपर्व-अध्यय०१२
॥ श्रीः ॥
१२.१२. अध्यायः १२

Mahabharata - Shanti Parva - Chapter Topics
युधिष्ठिरंप्रति नकुलवाक्यम् ॥ १.।
Mahabharata - Shanti Parva - Chapter Text

१२-१२-० (६९४१९)
वैशंपायन उवाच। १२-१२-०क्ष् (५६६२)
अर्जुनस्य वचः श्रुत्वा नकुलो वाक्यमब्रवीत् ।
राजानमभिसंप्रेक्ष्य सर्वधर्मभृतां वरम् ॥ १२-१२-१ (६९४२०)
अनुरुध्य महाप्राज्ञो भ्रातुश्चित्तमरिंदम ।
व्यूढोरस्को महाबाहुस्ताम्रास्यो मितभाषिता ॥ १२-१२-२ (६९४२१)
नकुल उवाच। १२-१२-३क्ष् (५६६३)
विशाखयूपे देवानां सर्वेषामग्नयश्चिताः ।

तस्माद्विद्धि महाराज देवाः कर्मफले स्थिताः ॥१२-१२-३ (६९४२२)
अनास्तिकानां भूतानां प्राणदाः पितरश्च ये ।
तेऽपि कर्मैव कुर्वन्ति विधिं पश्यस्व पार्थिव ॥१२-१२-४ (६९४२३)
वेदवादापविद्धास्तु तान्विद्धि भृशनास्तिकान् ।
न हि वेदोक्तमुत्सृज्य विप्रः सर्वेषु कर्मसु ॥१२-१२-५ (६९४२४)
देवयानेन नाकस्य पृष्ठमाप्नोति भारत ।
अत्याश्रमानयं सर्वानित्याहुर्वेदमिश्रयाः ॥१२-१२-६ (६९४२५)
ब्राह्मणाः श्रुतिसंपन्नास्तान्निबोध नराधिप ।
वित्तानि धर्मलब्धानि क्रतुमुख्येष्ववासृजन् ॥१२-१२-७ (६९४२६)
कृतात्मा स महाराज स वै त्यागी स्मृतो नरः ॥ १२-१२-८ (६९४२७)
अनवेक्ष्य सुखादानं तथैवोर्ध्वं प्रतिष्ठितः ।
आत्मत्यागी महाराज स त्यागी तापसो मतः ॥१२-१२-९ (६९४२८)
अनिकेतः परिपतन्वृक्षमूलाश्रयो मुनिः ।
अयाचकः सदायोगी स त्यागी पार्थ भिक्षुकः ॥१२-१२-१० (६९४२९)
क्रोधहर्षावनादृत्य पैशुन्यं च विशेषतः ।
विप्रो वेदानधीते यः स त्यागी गुरुपूजकः ॥१२-१२-११ (६९४३०)
आश्रमांस्तुलया सर्वान्धृतानाहुर्मनीषिणः ।
एकतश्च त्रयो राजन्गृहस्थाश्रम एकतः ॥१२-१२-१३असमीक्ष्य
तुलया पार्थ कामं स्वर्गं च भारत ।
अयं पन्था महर्षीणाप्रियं लोकविदां गतिः ॥ १२-१२-१२ (६९४३१)
इति यः कुरुते भावं स त्यागी भरतर्षभ ।
नरः परित्यज्य गृहान्वनमेति विमूढवत् ॥१२-१२-१४ (६९४३२)
यदा कामान्समीक्षेत धर्मवैतंसिको नरः ।
अथैनं मृत्युपाशेन कण्ठे बध्नाति सृत्युराट् ॥१२-१२-१५ (६९४३३)
अभिमानकृतं कर्म नैतत्फलवदुच्यते ।
त्यागयुक्तं महाराज सर्वमेव महाफलम् ॥१२-१२-१६ (६९४३४)
शमो दमस्तथा धैर्यं सत्यं शौचमथार्जवम् ।
यज्ञो धृतिश्च धर्मश्च नित्यमार्षो विधिः स्मृतः ॥१२-१२-१७
(६९४३५)
पितृदेवातिथिकृते समारम्भोऽत्र शस्यते ।
अत्रैव हि महाराज त्रिवर्गः केवलं फलम् ॥१२-१२-१८ (६९४३६)
एतस्मिन्वर्तमानस्य विधौ विप्रनिषेविते ।
त्यागिनः प्रसृतस्येह नोच्छित्तिर्विद्यते क्वचित् ॥१२-१२-१९ (६९४३७)
असृजद्धि प्रजा राजन्प्रजापतिरकल्मषः ।
मां यक्ष्यन्तीति धर्मात्मा यज्ञैर्विविधदक्षिणैः ॥१२-१२-२० (६९४३८)
वीरुधश्चैव वृक्षांश्च यज्ञार्थं वै तथौषधीः ।

पशूंश्चैव तथा मेध्यान्यज्ञार्थानि हवींषि च ॥१२-१२-२१ (६९४३९)
गृहस्थाश्रमिणस्तच्च यज्ञकर्माविरोधितम् ।
तस्माद्गार्हस्थ्यमेवेह दुष्करं दुर्लभं तथा ॥१२-१२-२२ (६९४४०)
तत्संप्राप्य गृहस्था ये पशुधान्यधनान्विताः ।
न यजन्ते महाराज शाश्वतं तेषु किल्विषम् ॥१२-१२-२३ (६९४४१)
स्वाध्याययज्ञा ऋषयो ज्ञानयज्ञास्तथा परे ।
अथापरे महायज्ञान्मनस्येव वितन्वते ॥१२-१२-२४ (६९४४२)
ग्इदमन्यन्महाराज विद्वद्भिः कथितं मम ।
भूमिरग्निश्च वायुश्च न चापो न दिवाकरः ॥१२-१२-२५ (६९४४३)
नक्षत्राणि न चन्द्रश्च न दिशः काल एव च ।
शब्दः स्पर्शश्च रूपं च न गन्धो न रसः क्वचित् ॥१२-१२-२६ (६९४४४)
न च सन्ति प्रमाणानि यैः प्रमेयं प्रसाध्यते ।
प्रत्यक्षमनुमानं न नोपमानमथागमः ॥१२-१२-२७ (६९४४५)
नार्थापत्तिर्न चैतिह्यं न दृष्टान्तो न संशयः ।
न क्वचिन्निर्णयो राजन्न धर्माधर्म एव च ॥१२-१२-२८ (६९४४६)
तिर्यक्व स्थावरं चैव न देवा न च मानुषाः ।
वर्णाश्रमविभागाश्च न च कर्ता न कामकृत् ।
न चार्थश्च विभूतिश्च न चार्थस्य विचेष्टितम् ॥ १२-१२-२९ (६९४४७)
तमोभूतमिदं सर्वमनालोकं जगन्नृप ।
न चात्मा विद्यमानोपि मनसा योगमिच्छति ॥१२-१२-३० (६९४४८)
अचेतनं मनस्त्वासीदात्मा एव सचेतनः ।
ईश्वरश्चेतनस्त्वेकस्तेनेदं गहनीकृतम् ।
मन्त्राश्च चेतना राजन्न च देहेन योजिताः ॥ १२-१२-३१ (६९४४९)
तेन विश्वसृजो नाम ऋषयो मन्त्रदेवताः ।
चैतन्यमीश्वरात्प्राप्य ब्रह्माण्डं तैर्विनिर्मितम् ॥१२-१२-३२ (६९४५०)
इष्ट्वा विश्वसृजं यज्ञं निर्मितः प्रपितामहः ।
सृष्टिस्तेन समारब्धा प्रसादादीश्वरस्य च ॥१२-१२-३३ (६९४५१)
चैतन्यमीश्वरस्येदं सचेतनमिदं जगत् ।
योगेन च समाविष्टं जगत्कृत्स्नं च शंभुना ॥१२-१२-३४ (६९४५२)
धर्मश्चार्थश्च कामश्च उक्तो मोक्षश्च संक्षये ।
ब्रह्मणः परमेशस्य ईश्वरेण यदृच्छया ॥१२-१२-३५ (६९४५३)
अज्ञो जन्तुरनीशश्च भाजनं सुखदुःखयोः ।
ईश्वरप्रेरितो गच्छेत्स्वर्गं वा श्वभ्रमेव वा ॥१२-१२-३६ (६९४५४)
प्रधानं पुरुषः चैव आत्मानं सर्वदेहिनाम् ।
मनसा विषयैश्चैव चेतनेन प्रचोदिताः ।
सुखदुःखेन युज्यन्ते कर्मभिश्च प्रचोदिताः ॥ १२-१२-३७ (६९४५५)

वर्णाश्रमविभागाश्च ईश्वरेण प्रवर्तिताः ।
सदेवासुरगन्धर्वं येनेदं निर्मितं जगत् ॥ १२-१२-३८ (६९४५६)
त्वं चान्ये च महाराज ईश्वरस्य वशे स्थिताः ।
जीवन्ते च म्रियन्ते च न स्वतन्त्राः कथंचन ॥ १२-१२-३९ (६९४५७)
हित्वाहित्वा च भूतानि हत्वा सर्वमिदं जगत् ।
यजन्ते कर्मणा देवा न स पापेन लिप्यते ॥ १२-१२-४० (६९४५८)
हिंसात्मकानि कर्माणि सर्वेषां गृहमेधिनाम् ।
देवतानामृषीणां च ते च यान्ति परां गतिम् ॥ १२-१२-४१ (६९४५९)
पातिताः शत्रवः पूर्व सर्वत्र वसुधाधिपैः ।
प्रजानां हितकामैश्च आत्मनश्च हितैषिभिः। १२-१२-४२ (६९४६०)
यदि तत्र भवेत्पापं कथं ते स्वर्गमास्थिताः ।
न प्राप्ता नरकं राजन्वेष्टिताः पापकर्मभिः ॥' १२-१२-४३ (६९४६१)
एवं मनःसमाधानं मार्गमातिष्ठतो नृप ।
द्विजातेर्ब्रह्मभूतस्य स्पृहयन्ति दिवौकसः ॥ १२-१२-४४ (६९४६२)
स रत्नानि विचित्राणि संहृतानि ततस्ततः ।
मखेष्वनभिसन्त्यज्य नास्तिक्यमभिजल्पसि ॥ १२-१२-४५ (६९४६३)
कुटुम्बमास्थिते त्यागं न पश्यामि नराधिप ।
राजसूयाश्वमेधेषु सर्वमेधेषु वा पुनः ॥ १२-१२-४६ (६९४६४)
ये चान्ये क्रतवस्तात ब्राह्मणैरभिपूजिताः ।
तैर्यजस्व महीपाल शक्रो देवपतिर्यथा। १२-१२-४७ (६९४६५)
राज्ञः प्रमाददोषेण दस्युभिः परिमुष्यताम् ।
अशरण्यः प्रजानां यः स राजा कलिरुच्यते ॥ १२-१२-४८ (६९४६६)
अश्वान्गाश्चैव दासीश्च करेणूश्च स्वलंकृताः ।
ग्रामाञ्जनपदांश्चैव क्षेत्राणि च गृहाणि च ॥ १२-१२-४९ (६९४६७)
अप्रदाय द्विजातिभ्यो मात्सर्याविष्टचेतसः ।
वयं ते राजकलयो भविष्याम विशांपते ॥ १२-१२-५० (६९४६८)
अदातारोऽशरण्याश्च राजकिल्विषभागिनः ।
दुःखानामेव भोक्तारो न सुखानां कदाचन ॥ १२-१२-५१ (६९४६९)
अनिष्ट्वा च महायज्ञैरकृत्वा च पितृस्वधाम् ।
तीर्थेष्वनभिसंप्लुत्य प्रव्रजिष्यसि चेत्प्रभो ॥ १२-१२-५२ (६९४७०)
छिन्नाभ्रमिव गन्तासि विलयं मारुतेरितम् ।
लोकयोरुभयोर्भ्रष्टो ह्यन्तराले व्यवस्थितः ॥ १२-१२-५३ (६९४७१)
अन्तर्बहिश्च यत्किंचिन्मनोव्यासङ्गकारकम् ।
परित्यज्य भवेत्त्यागी न हित्वा प्रतितिष्ठति ॥ १२-१२-५४ (६९४७२)
एतस्मिन्वर्तमानस्य विधौ विप्रनिषेविते ।
ब्राह्मणस्य महाराज नोच्छित्तिर्विद्यते क्वचित् ॥ १२-१२-५५ (६९४७३)

निहत्य शत्रूंस्तरसा समृद्धाञ्शक्रो यथा दैत्यबलानि सङ्ख्ये ।
कः पार्थ शोचेन्निरतः स्वधर्मे पूर्वैः स्मृते पार्थिवशिष्टजुष्टे
॥ १२-१२-५६ (६९४७४)
क्षात्रेण धर्मेण पराक्रमेण जित्वा महीं मन्त्रविद्भ्यः प्रदाय ।
नाकस्य पृष्ठेऽसि नरेन्द्र गन्ता न शोचितव्यं भवताऽद्य पार्थ
॥ ॥ १२-१२-५७ (६९४७५)

इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि द्वादशोऽध्यायः
॥ १२.।
Mahabharata - Shanti Parva - Chapter Footnotes

१२-१२-२ तम्रास्यो दुःखेन विवर्णमुस्त्रः ॥
१२-१२-३ विशाखयूपे क्षेत्रविशेषे ।देवानां
देवैः।अग्नयोऽग्निस्थापनार्थानि स्थण्डिलानि।चिता इष्टकाभी रचिता
अद्यापि दृश्यन्ते।तेन देवत्वमपि कर्मफलमेवेत्यर्थः।विशालयूप
इति थ।पाठः ॥
१२-१२-४ अनास्तिकानामास्तिक्यशून्यानामपि प्राणदा वृष्टिद्वारा
अन्नप्रदाः ।विधिं अग्निं वा अकामयतेत्यादि अग्न्यादिभावस्य
कर्मसाध्यत्वज्ञापकम्।अनास्तिकनास्तिकानां प्राणदा इति थ।ड।पाठः ॥
१२-१२-५ वेदवादः अपविद्धस्त्यक्तो यैस्तान् ॥
१२-१२-६ देवयानेन मार्गण ।पृष्ठमुपरिभागं
ब्रह्मलोकमित्यर्थः।अयं गृहाश्रमः सर्वानाश्रमान् अति
अतिक्रान्तः।तेभ्यः श्रेष्ठ इत्यर्थः ॥
१२-१२-७ तान्ब्राह्मणान् गत्वा निबोध बुध्यस्व ।अवासृजन् समार्पयन् ॥
१२-१२-८ कृतात्मा जितचित्तः ॥
१२-१२-९ सुखादानं गार्हथ्यसुखभोगम् ।ऊर्ध्वं वनादौ प्रतिष्ठितो
निष्ठावान् सन्यः आत्मत्यागी देहत्यागी ॥
१२-१२-१० परिपतन् भिक्षार्थं पर्यटन् ॥
१२-१२-१३ आश्रमान्तरे स्वर्गएवास्ति न कामः ।गार्हस्थ्ये तूभयमस्तीति
अयमेव मार्गो गतिश्चेत्यर्थः ॥
१२-१२-१५ धर्मवैतंसिको धर्मध्वजी ॥
१२-१२-१६ त्यागयुक्तं अभिमानत्यागोपेतम् ॥
१२-१२-१७ आर्षः ऋषीणां हितः ॥
१२-१२-१८ अत्र गार्हस्थ्ये ॥
१२-१२-१९ इह विधौ ।प्रसृतस्य निष्ठावतः ॥
१२-१२-४८ प्रमादो राज्याकरणम् ।परिमुष्यतां लुप्यमानानाम् ॥

शन्तिपर्व-अध्यय०१३
॥ श्रीः ॥
१२.१३. अध्यायः १३

Mahabharata - Shanti Parva - Chapter Topics
युधिष्ठिरंप्रति सहदेववचनम् ॥ १.।
Mahabharata - Shanti Parva - Chapter Text

१२-१३-० (६९८८६)
सहदेव उवाच।१२-१३-०क्ष् (५७०८)
न बाह्यं द्रव्यमुत्सृज्य सिद्धिर्भवति भारत ।
शारीरं द्रव्यमुत्सृज्य सिद्धिर्भवति वा न वा ॥ १२-१३-१ (६९८८७)
बाह्यद्रव्यविमुक्तस्य शारीरेष्वनुगृध्यतः ।
यो धर्मो यत्सुखं वा स्यादिद्वषतां तत्तथाऽस्तु नः ॥ १२-१३-२ (६९८८८)
शारीरंद्रव्यमुत्सृज्य पृथिवीमनुशासतः ।
यो धर्मो यत्सुखं वा स्यात्सुहृदां तत्तथाऽस्तु नः ॥ १२-१३-३ (६९८८९)
द्व्यक्षरस्तु भवेन्मृत्युरुयक्षरं ब्रह्म शाश्वतम् ।
ममेति द्व्यक्षरो मृत्युर्न ममेति च शाश्वतम् ॥ १२-१३-४ (६९८९०)
ब्रह्ममृत्यू ततो राजन्नात्मन्येव समाश्रितौ ।
अदृश्यमानौ भूतानि योजयेतामसंशयम् ॥ १२-१३-५ (६९८९१)
अविनाशोऽस्य सत्वस्य नियतो यदि भारत ।
हित्वा शरीरं भूतानां न हिंसा प्रतिपत्स्यते ॥ १२-१३-६ (६९८९२)
अथापि च सहोत्पत्तिः सत्वस्य प्रलयस्तथा ।
नष्टे शरीरे नष्टः स्याद्वृथा च स्यात्क्रियापथः ॥ १२-१३-७ (६९८९३)
तस्मादेकान्तमुत्सृज्य पूर्वैः पूर्वतरैश्च यः ।
पन्था निषेवितः सद्भिः स निषेव्यो विजानता ॥ १२-१३-८ (६९८९४)
ग्स्वायंभुवेन मनुना तथाऽन्यैश्तक्रवर्तिभिः ।
यद्ययं ह्यधमः पन्थाः कस्मात्तैस्तैर्निषेवितः ॥ १२-१३-९ (६९८९५)
कृतत्रेतादियुक्तानि गुणवन्ति च भारत ।
युगानि बहुशस्तैश्च भुक्तेयमवनी नृप ॥' १२-१३-१० (६९८९६)
लब्ध्वाऽपि पृथिवीं कृत्स्नां सहस्थावरजङ्गमाम् ।
न भुङ्क्ते यो नृपः सम्यक्किंफलं तस्य जीविते ॥ १२-१३-११ (६९८९७)
अथवा वसतो राजन्वने वन्येन जीवतः ।
द्रव्येषु यस्य ममता मृत्योरास्ये स वर्तते ॥ १२-१३-१२ (६९८९८)
बाह्यान्तराणां भूतानां स्वभावं पश्य भारत ।

ये तु पश्यन्ति तद्भूतं मुच्यन्ते ते महाभयात् ॥१२-१३-१३ (६९८९९)
भवान्पिता भवान्माता भवान्भ्राता भवान्गुरुः ।
दुःखप्रलापानार्तस्य तन्मे त्वं क्षन्तुमर्हसि ॥१२-१३-१४ (६९९००)
तथ्यं वा यदि वाऽतथ्यं यन्मयैतत्प्रभाषितम् ।
तद्विद्धि पृथिवीपाल भक्त्या भरतसत्तम ॥ ॥१२-१३-१५ (६९९०१)

इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि त्रयोदशोऽध्यायः
॥ १३.।
Mahabharata - Shanti Parva - Chapter Footnotes

१२-१३-२ सुहृदां तत्तथास्तु न इति ड थ ।पाठः ॥
१२-१३-४ ममेति स्वीकारः नममेति परित्यागश्च एतौ मृत्युशाश्वतौ संसारमोक्षयोर्मूले इत्यर्थः ॥
१२-१३-७ सत्वस्य कर्तृत्वधर्मवत्या बुद्धेः ॥

---

शन्तिपर्व-अध्यय०१४
॥ श्रीः ॥
१२.१४. अध्यायः १४

Mahabharata - Shanti Parva - Chapter Topics
युधिष्ठिरंप्रति द्रौपदीवचनम् ॥१.।
Mahabharata - Shanti Parva - Chapter Text

१२-१४-० (७०४३१)
वैशंपायन उवाच।१२-१४-०क्ष् (५७४२)
अव्याहरति कौन्तेये धर्मराजे युधिष्ठिरे ।
भ्रातृणां ब्रुवतां तांस्तान्विविधान्वेदनिश्चयान् ॥१२-१४-१ (७०४३२)
महाभिजनसंपन्ना श्रीमत्यायतलोचना ।
अभ्यभाषत राजानं द्रौपदी योषितां वरा ॥१२-१४-२ (७०४३३)
आसीनमृषभं राज्ञां भ्रातृभिः परिवारितम् ।
सिंहशार्दूलसदृशैर्वारणैरिव यूथपम् ॥१२-१४-३ (७०४३४)
अभिमानवती नित्यं विशेषेण युधिष्ठिरे ।
लालिता सततं राज्ञा धर्माधर्मनिदर्शिनी ॥१२-१४-४ (७०४३५)
आमन्त्रयित्वा सुश्रोणी साम्ना परमवल्गुना ।
भर्तारमभिसंप्रेक्ष्य ततो वचनमब्रवीत् ॥१२-१४-५ (७०४३६)
द्रौपद्युवाच।१२-१४-६क्ष् (५७४३)
इमे ते भ्रातरः पार्थ शुष्यन्ते स्तोकका इव ।

वावाश्यमानास्तिष्ठन्ति न चैनानभिनन्दसे ॥ १२-१४-६ (७०४३७)
नन्दयैतान्महाराज मत्तानिव महाद्विपान् ।
उपपन्नेन वाक्येन सततं दुःखभागिनः ॥ १२-१४-७ (७०४३८)
कथं द्वैतवने राजन्पूर्वमुक्त्वा तथा वचः ।
भ्रातॄनेतान्स्म सहिताञ्शीतवातातपार्दितान् ॥ १२-१४-८ (७०४३९)
वयं दुर्योधनं हत्वा मृधे भोक्ष्याम मेदिनीम् ।
संपूर्णा सर्वकामानामाहवे विजयैषिणः ॥ १२-१४-९ (७०४४०)
नृवीरांश्च रथान्हत्वा निहत्य च महागजान् ।
संस्तीर्य च रथैर्भूमिं ससादिभिररिंदमाः ॥ १२-१४-१० (७०४४१)
यजेभ विविधैर्यज्ञैः समृद्धैराप्तदक्षिणैः ।
वनवासकृतं दुःखं भविष्यति सुखाय नः ॥ १२-१४-११ (७०४४२)
इत्येतानेवमुक्त्वा त्वं स्वयं धर्मभृतां वर ।
कथमद्य पुनर्वीर विनिहंसि मनांसि नः ॥ १२-१४-१२ (७०४४३)
न क्लीबो वसुधां भुङ्क्ते न क्लीबो धनमश्नुते ।
न क्लीबस्य गृहे पुत्रा मत्स्याः पङ्क इवासते ॥ १२-१४-१३ (७०४४४)
नादण्डः क्षत्रियो भाति नादण्डो भूमिमश्नुते ।
नादण्डस्य प्रजा राज्ञः सुखं विन्दन्ति भारत ॥ १२-१४-१४ (७०४४५)
ग्सदेवासुरगन्धर्वैरप्सरोभिर्विभूषितम् ।
रक्षोभिर्गुह्यकैर्नागैर्मनुष्यैश्च विभूषितम् ॥ १२-१४-१५ (७०४४६)
त्रिवर्गेण च संपूर्णं त्रिवर्गस्यागमेन च ।
दण्डेनाभ्याहृतं सर्वं जगद्भोगाय कल्पते ॥ १२-१४-१६ (७०४४७)
स्वायंभुवं महीपाल आगमं शृणु शाश्वतम् ।
विप्राणां विदितश्चायं तव चैव विशांपते ॥ १२-१४-१७ (७०४४८)
अराजके हि लोकेऽस्मिन्सर्वतो विद्रुते भयात् ।
रक्षार्थमस्य लोकस्य राजानमसृजत्प्रभुः ।
महाकायं महावीर्यं पालने जगतः क्षमम् ॥ १२-१४-१८ (७०४४९)
अनिलाग्नियमार्काणामिन्द्रस्य वरुणस्य च ।
चन्द्रवित्तेशयोश्चैव मात्रा निर्हृत्य शाश्वतीः ॥ १२-१४-१९ (७०४५०)
यस्मादेषां सुरेन्द्राणां संभवत्यंशतो नृपः ।
तस्मादभिभवत्येष सर्वभूतानि तेजसा ॥ १२-१४-२० (७०४५१)
तपत्यादित्यवच्चैव चक्षूंषि च मनांसि च ।
च चैनं भुवि शक्नोति कश्चिदप्यभिवीक्षितुम् ॥ १२-१४-२१ (७०४५२)
सोऽग्निर्भवति वायुश्च सोऽर्कः सोमश्च धर्मराट् ।
स कुबेरः स वरुणः स महेन्द्रः प्रतापवान् ॥ १२-१४-२२ (७०४५३)
पितामहस्य देवस्य विष्णोः शर्वस्य चैव हि ।
ऋषीणां चैव सर्वेषां तस्मिंस्तेजः प्रतिष्ठितम् ॥ १२-१४-२३ (७०४५४)

बालोऽपि नावमन्तव्यो मनुष्य इति भूमिपः ।
महती देवता ह्येषा नररूपेण तिष्ठति ॥ १२-१४-२४ (७०४५५)
एकमेव दहत्यग्निर्नरं दुरुपसर्पिणम् ।
कुलं दहति राजाग्निः सपशुद्रव्यसंचयम् ॥ १२-१४-२५ (७०४५६)
धृतराष्ट्रकुलं दग्धं क्रोधोद्भूतेन वह्निना ।
प्रत्यक्षमेतल्लोकस्य संशयो हि न विद्यते ॥ १२-१४-२६ (७०४५७)
कुलजो वृत्तसंपन्नो धार्मिकश्च महीपतिः ।
प्रजानां पालने युक्तः पूज्यते दैवतैरपि ॥ १२-१४-२७ (७०४५८)
कार्यं योऽवेक्ष्य शक्तिं च देशकालौ च तत्वतः ।
कुरुते धर्मसिद्ध्यर्थं वैश्वरूप्यं पुनः पुनः ॥ १२-१४-२८ (७०४५९)
तस्य प्रसादे पद्मा श्रीर्विजयश्च पराक्रमे ।
मृत्युश्च वसति क्रोधे सर्वतेजोमयो हि सः ॥ १२-१४-२९ (७०४६०)
तं यस्तु द्वेष्टि संमोहात्स विनश्यति मानवः ।
तस्य ह्याशुविनाशाय राजाऽपि कुरुते मनः ॥ १२-१४-३० (७०४६१)
तस्माद्धर्मं यदिष्टेषु स व्यवस्यति पार्थिवः ।
अनिष्टं चाप्यनिष्टेषु तद्धर्मं न विचालयेत् ॥ १२-१४-३१ (७०४६२)
तस्यार्थे सर्वभूतानां गोप्तारं धर्ममात्मजम् ॥
ब्रह्मतेजोमयं दण्डमसृजत्पूर्वमीश्वरः ॥ १२-१४-३२ (७०४६३)
तस्य सर्वाणि भूतानि स्थावराणि चराणि च ।
भयाद्भोगाय कल्पन्ते धर्मान्न विचलन्ति च ॥ १२-१४-३३ (७०४६४)
देशकालौ च शक्तिं च कार्यं चावेक्ष्य तत्वतः ।
यथार्हतः संप्रणयेन्नरेष्वन्यायवर्तिषु ॥ १२-१४-३४ (७०४६५)
स राजा पुरुषो दण्डः स नेता शासिता च सः ।
वर्णानामाश्रमाणां च धर्मप्रभुरथाव्ययः ॥ १२-१४-३५ (७०४६६)
दण्डः शास्ति प्रजाः सर्वा दण्ड एवाभिरक्षति ।
दण्डः सुप्तेषु जागर्ति दण्डं धर्मं विदुर्बुधाः ॥ १२-१४-३६ (७०४६७)
सुसमीक्ष्य धृतो दण्डः सर्वा रञ्जयति प्रजाः ।
असमीक्ष्य प्रणीतस्तु विनाशयति सर्वशः ॥ १२-१४-३७ (७०४६८)
यदि न प्रणयेद्राजा दण्डं दण्ड्येष्वतन्द्रितः ।
जले मत्स्यानिवाभक्ष्यन्दुर्बलान्बलवत्तराः ॥ १२-१४-३८ (७०४६९)
काकोऽद्याच्च पुरोडाशं श्वा चैवावलिहेद्धविः ।
स्वामित्वं न क्वचिच्च स्यात्प्रपद्येताधरोत्तरम् ॥ १२-१४-३९ (७०४७०)
सर्वो दण्डजितो लोको दुर्लभस्तु शुचिर्नरः ।
दण्डस्य हि भयात्सर्वं जगद्भोगाय कल्पते ॥ १२-१४-४० (७०४७१)
देवदानवगन्धर्वा रक्षांसि पतगोरगाः ।
तेऽपि भोगाय कल्पन्ते दण्डेनैवाभिपीडिताः ॥ १२-१४-४१ (७०४७२)

दूष्येयुः सर्ववर्णाश्च भिद्येरन्सर्वसेतवः ।
सर्वलोकप्रकोपश्च भवेद्दण्डस्य विभ्रमात् ॥१२-१४-४२ (७०४७३)
यत्र श्यामो लोहिताक्षो दण्डश्चरति पापहा ।
प्रजास्तत्र न मुह्यन्ति नेता चेत्साधु पश्यति ॥१२-१४-४३ (७०४७४)
आहुस्तस्य प्रणेतारं राजानं सत्यवादिनम् ।
समीक्ष्यकारिणं प्राज्ञं धर्मकामार्थकोविदम् ॥१२-१४-४४ (७०४७५)
तं राजा प्रणयन्सम्यक्स्वर्गायाभिप्रवर्तते ।
कामात्मविषयी क्षुद्रो दण्डेनैव निहन्यते ॥१२-१४-४५ (७०४७६)
दण्डो हि सुमहातेजा दुर्धरश्चाकृतात्मभिः ।
धर्माद्विचलितं हन्ति नृपमेव सबान्धवम् ॥१२-१४-४६ (७०४७७)
ततो दुर्गं च राष्ट्रं च लोकं च सचराचरम् ।
अन्तरिक्षगतांश्चैव मुनीन्देवांश्च हिंसति ॥१२-१४-४७ (७०४७८)
सोऽसहायेन मूढेन लुब्धेनाकृतबुद्धिना ।
अशक्यो न्यायतो नेतुं विषयांश्चैव सेवता ॥१२-१४-४८ (७०४७९)
शुचिना सत्यसन्धेन नीतिशास्त्रानुसारिणा ।
दण्डः प्रणेतुं शक्यो हि सुसहायेन धीमता ॥१२-१४-४९ (७०४८०)
स्वराष्ट्रे न्यायवर्ती स्याद्भृशदण्डश्च शत्रुषु ।
सुहृत्स्वजिह्मः स्निग्धेषु ब्राह्मणेषु क्षमान्वितः ॥१२-१४-५० (७०४८१)
एवंवृत्तस्य राज्ञस्तु शिलोञ्छेनापि जीवतः ।
विस्तीर्येत यशो लोके तैलबिन्दुरिवाम्भसि ॥१२-१४-५१ (७०४८२)
अतस्तु विपरीतस्य नृपतेरकृतात्मनः ।
संक्षिप्येन यशो लोके घृतबिन्दुरिवाम्भसि ॥१२-१४-५२ (७०४८३)
देवदेवेन रुद्रेण ब्रह्मणा च महीपते ।
विष्णुना चैव देवेन शक्रेण च महात्मना ॥१२-१४-५३ (७०४८४)
लोकपालैश्च भूतैश्च पाण्डवैश्च महात्मभिः ।
धर्माद्विचलिता राजन्धार्तराष्ट्रा निपातिताः ।
अधार्मिका दुराचाराः ससैन्या विनिपातिताः ॥ १२-१४-५४ (७०४८५)
तान्निहत्य न दोषस्ते स्वल्पोऽपि जगतीपते ।
छलेन मायया वाऽथ क्षत्रधर्मेण वा नृप ॥' १२-१४-५५ (७०४८६)
मित्रता सर्वभूतेषु दानमध्ययनं तपः ।
ब्राह्मणस्यैव धर्मः स्यान्न राज्ञो राजसत्तम ॥१२-१४-५६ (७०४८७)
असतां प्रतिषेधश्च सतां च परिपालनम् ।
एष राज्ञां परो धर्मः समरे चापलायनम् ॥१२-१४-५७ (७०४८८)
यस्मिन्क्षमा च क्रोधश्च दानादाने भयाभये ।
निग्रहानुग्रहौ चोभौ स वै धर्मविदुच्यते ॥१२-१४-५८ (७०४८९)
न श्रुतेन न दानेन न सांत्वेन न चेज्यया ।

त्वयेयं पृथिवी लब्धा न संकोचेन चाप्युत ॥१२-१४-५९ (७०४९०)
यत्तद्बलममित्राणां तथा वीरसमुद्यतम् ।
हस्त्यश्वरथसंपन्नं त्रिभिरङ्गैरनुत्तमम् ॥१२-१४-६० (७०४९१)
रक्षितं द्रोणकर्णाभ्यामश्वत्थाम्ना कृपेण च ।
तत्त्वया निहतं वीर तस्माद्भुङ्क्ष्व वसुंधराम् ॥१२-१४-६१ (७०४९२)
जम्बूद्वीपो महाराज नानाजनपदैर्युतः ।
त्वया पुरुषशार्दूल दण्डेन मृदितः प्रभो ॥१२-१४-६२ (७०४९३)
जम्बूद्वीपेन सदृशः क्रौञ्चद्वीपो नराधिप ।
अपरेण महामेरोर्दण्डेन मृदितस्त्वया ॥१२-१४-६३ (७०४९४)
क्रौञ्चद्वीपेन सदृशः शाकद्वीपो नराधिप ।
पूर्वेण तु महामेरोर्दण्डेन मृदितस्त्वया ॥१२-१४-६४ (७०४९५)
उत्तरेण महामेरोः शाकद्वीपेन संमितः ।
भद्राश्वः पुरुषव्याघ्र दण्डेन मृदितस्त्वया ॥१२-१४-६५ (७०४९६)
द्वीपाश्च सान्तरद्वीपा नानाजनपदाश्रयाः ।
विगाह्य सागरं वीर दण्डेन मृदितास्त्वया ॥१२-१४-६६ (७०४९७)
एतान्यप्रतिमेयानि कृत्वा कर्माणि भारत ।
न प्रीयसे महाराज पूज्यमानो द्विजातिभिः ॥१२-१४-६७ (७०४९८)
स त्वं भ्रातॄनिमान्दृष्ट्वा प्रतिनन्दस्व भारत ।
ऋषभानिव संमत्तान्गजेन्द्रान्गर्जितानिव ॥१२-१४-६८ (७०४९९)
अमरप्रतिमाः सर्वे शत्रुसाहाः परंतपाः ।
एकैकोऽपि सुखायैषां मम स्यादिति मे मतिः ॥१२-१४-६९ (७०५००)
किं पुनः पुरुषव्याघ्राः पतयो मे नरर्षभाः ।
समस्तानीन्द्रियाणीव शरीरस्य विचेष्टने ॥१२-१४-७० (७०५०१)
अनृतं नाब्रवीच्छ्वश्रूः सर्वज्ञा सर्वदर्शिनी ।
युधिष्ठिरस्त्वां पाञ्चालि सुखे धास्यत्यनुत्तमे ॥१२-१४-७१ (७०५०२)
इत्वा राजसहस्राणि बहून्याशुपराक्रमः ।
तद्व्यर्थं संप्रपश्यामि मोहात्तव जनाधिप ॥१२-१४-७२ (७०५०३)
येषामुन्मत्तको ज्येष्ठः सर्वे तेऽप्यनुसारिणः ।
तवोन्मादान्महाराजसोन्मादाः सर्वपाण्डवाः ॥१२-१४-७३ (७०५०४)
यदि हि स्युरनुन्मत्ता भ्रातरस्ते नराधिप ।
बद्ध्वा त्वां नास्तिकैः सार्धं प्रशासेयुर्वसुंधराम् ॥१२-१४-७४ (७०५०५)
कुरुते मूढ एवं हि यः श्रेयो नाधिगच्छति ।
धूपैरञ्जनयोगैश्च नस्यकर्मभिरेव च ॥१२-१४-७५ (७०५०६)
ग्उन्मत्तिरपनेतव्या तव राजन्यदृच्छया।'
भेषजैः स चिकित्स्यः स्याद्य उन्मार्गेण गच्छति ॥ १२-१४-७६ (७०५०७)
साहं सर्वाधमा लोके स्त्रीणां भरतसत्तम ।

तथा विनिकृता पुत्रैर्याऽहमिच्छामि जीवितुम् ॥ १२-१४-७७ (७०५०८)
धृतराष्ट्रसुता राजन्नित्यमुत्पथगामिनः ।
तादृशानां वधे दोषं नाहं पश्यामि कर्हिचित् ॥ १२-१४-७८ (७०५०९)
इमांश्चोशनसा गीताञ्श्लोकाञ्श्रृणु नराधिप ॥ १२-१४-७९ (७०५१०)
आत्महन्ताऽर्थहन्ता च बन्धुहन्ता विषप्रदः ।
अकारणेन हन्ता च यश्च भार्यां परामृशेत् ॥ १२-१४-८० (७०५११)
निर्दोषं वधमेतेषां षण्णामप्याततायिनाम् ।
ब्रह्मा प्रोवाच भगवान्भार्गवाय महात्मने ॥ १२-१४-८१ (७०५१२)
ब्रह्मक्षत्रविशां राजन्सत्पथे वर्तिनामपि ।
प्रसह्यागारमागम्य हन्तारं गरदं तथा ॥ १२-१४-८२ (७०५१३)
अभक्ष्यापेयदातारमग्निदं च निशातयेत् ।
मार्ग एष महीपानां गोब्राह्मणवधेषु च ॥ १२-१४-८३ (७०५१४)
केशग्रहे च नारीणामपि युध्येत्पितामहम् ।
ब्रह्माणं देवदेवेशं किं पुनः पापकारिणम् ॥ १२-१४-८४ (७०५१५)
गोब्राह्मणार्थे व्यसने च राज्ञां राष्ट्रोपमर्दे स्वशरीरहेतोः ।
स्त्रीणां च विक्रुष्टरुतानि श्रुत्वा विप्रोऽपि युध्येत महाप्रभावः
॥ १२-१४-८५ (७०५१६)
धर्माद्विचलितं विप्रं निहन्यादाततायिनम् ।
तस्यान्यत्र वधं विद्वान्मनसाऽपि न चिन्तयेत् ॥ १२-१४-८६ (७०५१७)
गोब्राह्मणवधे वृत्तं मन्त्रत्राणार्थमेव च ।
निहन्यात्क्षत्रियो विप्रं स्वकुटुम्बस्य चाप्तये ॥ १२-१४-८७ (७०५१८)
तस्करेण नृशंसेन धर्मात्प्रचलितेन च ।
क्षत्रबन्धुः परं शक्त्या युध्येद्विप्रेण संयुगे ॥ १२-१४-८८ (७०५१९)
आततायिनमायान्तमपि वेदान्तपारगम् ।
जिघांसन्तं जिघांसीयान्न तेन भ्रूणहा भवेत् ॥ १२-१४-८९ (७०५२०)
ब्राह्मणः क्षत्रियो वैश्यः शूद्रो वाऽप्यन्त्यजोपि वा ।
न हन्याद्ब्राह्मणं शान्तं तृणेनापि कदाचन ॥ १२-१४-९० (७०५२१)
ब्राह्मणायावगुर्याद्यः स्पृष्ट्वा गुरुतरं महत् ।
वर्षाणां त्रिशतं पापः प्रतिष्ठां नाधिगच्छति ॥ १२-१४-९१ (७०५२२)
सहस्राणि च वर्षाणि निहत्य नरके पतेत् ।
तस्मान्नैवावगुर्याद्धि नैव शस्त्रं निपातयेत् ॥ १२-१४-९२ (७०५२३)
शोणितं यावतः पांसून्गृह्णातीति हि धारणा ।
तावतीः स समाः पापो नरके परिवर्तते ॥ १२-१४-९३ (७०५२४)
त्वगस्थिभेदं विप्रस्य यः कुर्यात्कारयेत वा ।
ब्रह्महा स तु विज्ञेयः प्रायश्चित्ती नराधमः ॥ १२-१४-९४ (७०५२५)
श्रोत्रियं ब्राह्मणं हत्वा तथाऽऽत्रेयीं च ब्राह्मणीम् ।

चतुर्विंशतिवर्षाणि चरेद्ब्रह्महणो व्रतम् ॥१२-१४-९५ (७०५२६)
द्विगुणां ब्रह्महत्येयं सर्वैः प्रोक्ता महर्षिभिः ।
प्रायश्चित्तमकुर्वाणं कृताङ्कं विप्रवासयेत् ॥१२-१४-९६ (७०५२७)
ब्राह्मणं क्षत्रियं वैश्यं शूद्रं वा घातयेन्नृपः ।
ब्रह्मघ्नं तस्करं चैव माभूदेवं चरिष्यति ॥१२-१४-९७ (७०५२८)
छित्त्वा हस्तौ च पादौ च नासिकोष्ठौ च भूपतिः ।
ब्रह्मघ्नं चोत्तमं पापं नेत्रोद्धारेण योजयेत् ॥१२-१४-९८ (७०५२९)
शूद्रस्यैव स्मृतो दण्डस्तद्वद्राजन्यवैश्ययोः ।
प्रायश्चित्तमकुर्वाणं ब्राह्मणं तु प्रवासयेत् ॥१२-१४-९९ (७०५३०)
क्षत्रियं वैश्यशूद्रौ च शस्त्रेणैव च घातयेत् ।
ब्रह्मघ्नान्ब्राह्मणात्राजा कृताङ्कान्विप्रवासयेत् ॥१२-१४-१०० (७०५३१)
विकलेन्द्रियांस्त्रिवर्णांश्च चण्डालैः सह वासयेत् ।
तैश्च यः संपिबेत्कश्चित्स पिबन्ब्रह्महा भवेत् ॥१२-१४-१०१ (७०५३२)
प्रेतानां न च देयानि पिण्डदानानि केनचित् ॥ १२-१४-१०२ (७०५३३)
कृष्णवर्णा विरूपा च निर्णीता लम्बमूर्धजा ।
दुनोत्यदृष्ट्वा कर्तारं ब्रह्महत्येति तां विदुः ॥१२-१४-१०३ (७०५३४)
ब्रह्मघ्नेन पिबन्तश्च विप्रा देशाः पुराणि च ।
अचिरादेव पीड्यन्ते दुर्भिक्षव्याधितस्करैः ॥१२-१४-१०४ (७०५३५)
ब्राह्मणं पापकर्माणं विप्राणामाततायिनम् ।
क्षत्रियं वैश्यशूद्रौ च नेत्रोद्धारेण योजयेत् ॥१२-१४-१०५ (७०५३६)
दुर्बलानां बलं राजा बलिनो ये च साधवः ।
बलिनां दुर्बलानां च पापानां मृत्त्युरिष्यते ॥१२-१४-१०६ (७०५३७)
सदोषमपि यो हन्यादश्राव्य जगतीपते ।
दुर्बलं बलवन्तं वा स पराजयमर्हति ॥१२-१४-१०७ (७०५३८)
राजाज्ञां प्राड्विवाकं च नेच्छेद्यच्चापि निष्पतेत् ।
साक्षिणं साधुवाक्यं च जितं तमपि निर्दिशेत् ॥१२-१४-१०८ (७०५३९)
बन्धनान्निष्पतेद्यच्च प्रतिभूर्न ददाति च ।
कुलजश्च धनाढ्यश्च स पराजयमर्हति ॥१२-१४-१०९ (७०५४०)
राजाज्ञया समाहूतो यो न गच्छेत्सभां नरः ।
बलवन्तमुपाश्रित्य सायुधः स पराजितः ॥१२-१४-११० (७०५४१)
तं दण्डेन विनिर्जित्य महासाहसिकं नरम् ।
वियुक्तदेहसर्वस्वं परलोकं विसर्जयेत् ॥१२-१४-१११ (७०५४२)
मृतस्यापि न देयानि पिण्डदानानि केनचित् ।
दत्त्वा दण्डं प्रयच्छेत मध्यमं पूर्वसाहयम् ॥१२-१४-११२ (७०५४३)
कुलस्त्रीव्यभिचारं च राष्ट्रस्य च विमर्दनम् ।
ब्रह्महत्यां च चौर्यं च राजद्रोहं च पञ्चमम् ॥१२-१४-११३ (७०५४४)

युद्धादन्यत्र हिंसायां सुरापस्य च कीर्तने ।
महान्तं गुरुतल्पे च मित्रद्रोहे च पातकम् ॥ १२-१४-११४ (७०५४५)
न कथंचिदुपेक्षेत महासाहसिकं नरम् ।
सर्वस्वमपहृत्याशु ततः प्राणैर्वियोजयेत् ॥ १२-१४-११५ (७०५४६)
त्रिषु वर्णेषु यो दण्डः प्रणीतो ब्रह्मणा पुरा ।
महासाहसिकं विप्रं कृताङ्कं विप्रवासयेत् ॥ १२-१४-११६ (७०५४७)
साहस्रो वा भवेद्दण्डः काञ्चनो देहनिष्क्रिया ।
चतुर्णामपि वर्णानामेवमाहोशना कविः ॥ १२-१४-११७ (७०५४८)
नारीणां बालवृद्धानां गोपतेश्च महामतिः ।
पापानां दुर्विनीतानां प्राणान्तं च बृहस्पतिः ।
दण्डमाह महाभाग सर्वेषामाततायिनाम् ॥ १२-१४-११८ (७०५४९)
सर्वेषां पापबुद्धीनां पापकर्मैव क्वुर्वताम् ।
धृतराष्ट्रस्य पुत्राणां दण्डो निर्दोष इष्यते ।
सौबलस्य च दुर्बुद्धेः कर्णस्य च दुरात्मनः ॥ १२-१४-११९ (७०५५०)
पश्यतां चैव शूराणां याऽहं द्यूते सभां तदा ।
रजस्वला समानीता भवतां पश्यतां नृप ।
वाससैकेन संवीता तव दोषेण भूपते ॥ १२-१४-१२० (७०५५१)
माभूद्धर्मविलोपस्ते धृतराष्ट्रकुलक्षयात् ।
क्रोधाग्निना तु दग्धं च सपशुद्रव्यसंचयम् ॥ १२-१४-१२१ (७०५५२)
साऽहमेवंविधं दुःखं संप्राप्ता तव हेतुना ।
आदित्यस्य प्रसादेन न च प्राणैर्वियोजिता ॥ १२-१४-१२२ (७०५५३)
रक्षिता देवदेवेन जगतः कालहेतुना ।
दिवाकरेण देवेन विवस्त्रा न कृता तदा'॥ १२-१४-१२३ (७०५५४)
एतेषां यतमानानां न मेऽद्य वचनं मृषा ।
त्वं तु सर्वां महीं त्यक्त्वा कुरुषे स्वयमापदम् ॥ १२-१४-१२४ (७०५५५)
यथाऽऽस्तां संमतौ राज्ञां पृथिव्यां राजसत्तम् ।
मांधाता चाम्बरीषश्च तथा राजन्विराजसे ॥ १२-१४-१२५ (७०५५६)
प्रशाधि पृथिवीं देवीं प्रजा धर्मेण पालयन् ।
सपर्वतवनद्वीपां मा राजन्विमना भव ॥ १२-१४-१२६ (७०५५७)
यजस्व विविधैर्यज्ञैर्युध्यस्वारीन्प्रयच्छ च ।
धनानि भोगान्वासांसि द्विजातिभ्यो नृपोत्तम ॥ ॥ १२-१४-१२७ (७०५५८)

इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि
चतुर्दशोऽध्यायः ॥ १४.।

Mahabharata - Shanti Parva - Chapter Footnotes

१२-१४-६ स्तोककाश्चातका वावाश्यमानाः पुनः पुनः क्रन्दन्तः ॥
१२-१४-७ उपपन्नेन युक्तियुक्तेन ॥
१२-१४-९ सर्वकामानां सर्वैरर्थैः ॥
१२-१४-१३ क्लीबोऽधीरः । अविपाला इवासत इति । ट । ड । पाठः । वत्सपाला इवासत इति थ । पाठः ॥
१२-१४-५७ प्रतिषेधो दण्डो राज्यान्निर्वासनं वा ॥
१२-१४-५८ दानं आदानं च ते ॥
१२-१४-५९ संकोचेन याञ्चया ॥
१२-१४-६३ अपरेण पश्चिमतः १२-१४-६४ क्रौञ्चद्वीपादिवशीकरणं सिद्धद्वारा राजसूये ॥
१२-१४-७३ सर्वे तेप्यवमानिता इति ट । ड । द । पठः ॥
१२-१४-७५ नस्यकर्म नासाद्वारा भेषजग्रहणम् ॥

---

शन्तिपर्व-अध्यय०१५
॥ श्रीः ॥
१२.१५. अध्यायः १५

Mahabharata - Shanti Parva - Chapter Topics
युधिष्ठिरंप्रत्यर्जुनवाक्यम् ॥ १. ।
Mahabharata - Shanti Parva - Chapter Text

१२-१५-० (७०९३३)
वैशंपायन उवाच । १२-१५-०क्ष् (५७९१)
याज्ञसेन्या वचः श्रुत्वा पुनरेवार्जुनोऽब्रवीत् ।
अनुमान्य महाबाहुं ज्येष्ठं भ्रातरमीश्वरम् ॥ १२-१५-१ (७०९३४)
अर्जुन उवाच । १२-१५-२क्ष् (५७९२)
दण्डः शास्ति प्रजाः सर्वा दण्ड एवाभिरक्षति ।
दण्डः सुप्तेषु जागर्ति दण्डं धर्मं विदुर्बुधाः ॥ १२-१५-२ (७०९३५)
दण्डः संरक्षते धर्मं तथैवार्यं जनाधिप ।
कामं संरक्षते दण्डस्त्रिवर्गो दण्ड उच्यते ॥ १२-१५-३ (७०९३६)
दण्डेन रक्ष्यते धान्यं धनं दण्डेन रक्ष्यते ।
एतद्विद्वानुपादाय स्वभावं पश्य लौकिकम् ॥ १२-१५-४ (७०९३७)
राजदण्डभयादेके नराः पापं न कुर्वते ।
यमदण्डभयादेके परलोकभयादपि ॥ १२-१५-५ (७०९३८)
परस्परभयादेके पापाः पापं न कुर्वते ।
एवं सांसिद्धिके लोके सर्वं दण्डे प्रतिष्ठितम् ॥ १२-१५-६ (७०९३९)

दण्डस्यैव भयादेके न खादन्ति परस्परम् ।
अन्धेतमसि मज्जेयुर्यदि दण्डो न पालयेत् ॥ १२-१५-७ (७०९४०)
यस्माददान्तान्दमयत्यशिष्टान्दण्डयत्यपि ।
दमनाद्दण्डनाच्चैव तस्माद्दण्डं विदुर्बुधाः ॥ १२-१५-८ (७०९४१)
वाचि दण्डो ब्राह्मणानां क्षत्रियाणां भुजार्पणम् ।
धनदण्डाः स्मृता वैश्या निर्दण्डः शूद्र उच्यते ॥ १२-१५-९ (७०९४२)
असंमोहाय मर्त्यानामर्थसंरक्षणाय च ।
मर्यादा स्थापिता लोके दण्डसंज्ञा विशांपते ॥ १२-१५-१० (७०९४३)
यत्र श्यामो लोहिताक्षो दण्डश्चरति सूद्यतः ।
प्रजास्तत्र न मुह्यन्ति नेता चेत्साधु पश्यति ॥ १२-१५-११ (७०९४४)
ब्रह्मचारी गृहस्थश्च वानप्रस्थस्च भिक्षुकः ।
दण्डस्यैव भयादेते मनुष्या वर्त्मनि स्थिताः ॥ १२-१५-१२ (७०९४५)
नाभीतो यजते राजन्नाभीतो दातुमिच्छति ।
नाभीतः पुरुषः कश्चित्समये स्थातुमिच्छति ॥ १२-१५-१३ (७०९४६)
नाच्छित्त्वा परमर्माणि नाकृत्वा कर्म दुष्करम् ।
नाहत्वा मत्स्यघातीव प्राप्नोति महतीं श्रियम् ॥ १२-१५-१४ (७०९४७)
नाघ्नतः कीर्तिरस्तीह न वित्तं न पुनः प्रजाः ।
इन्द्रो वृत्रवधेनैव महेन्द्रः समपद्यत ।
ग्माहेन्द्रं च गृहं लेभे लोकानां चेश्वरोऽभवत् ॥' १२-१५-१५ (७०९४८)
य एव देवा हन्तारस्ताँल्लोकोऽर्चयते भृशम् ।
हन्तारुद्रस्तथास्कन्दः शक्रोऽग्निर्वरुणो यमः ॥ १२-१५-१६ (७०९४९)
हन्ता कालस्तथा वायुर्मृत्युर्वैश्रवणो रविः ।
वसवो मरुतः साध्या विश्वेदेवाश्च भारत ॥ १२-१५-१७ (७०९५०)
एतान्देवान्नमस्यन्ति प्रतापप्रणता जनाः ।
न ब्रह्माणं न धातारं न पूषाणं कथंचन ॥ १२-१५-१८ (७०९५१)
मध्यस्थान्सर्वभूतेषु दान्ताञ्शमपरायणान् ।
यजन्ते मानवाः केचित्प्रशान्तान्सर्वकर्मसु ॥ १२-१५-१९ (७०९५२)
न हि पश्यामि जीवन्तं लोके कंचिदहिंसया ।
सत्वैः सत्वा हि जीवन्ति दुर्बलैर्बलवत्तराः ॥ १२-१५-२० (७०९५३)
नकुलो मूषिकानत्ति बिडालो नकुलं तथा ।
बिडालमत्ति श्वा राजञ्श्वानं व्यालमृगस्तथा ॥ १२-१५-२१ (७०९५४)
तानत्ति पुरुषः सर्वान्पश्य धर्मो यथा गतः ।
प्राणस्यान्नमिदं सर्वं जङ्गमं स्थावरं च यत् ॥ १२-१५-२२ (७०९५५)
विधानं दैवविहितं तत्र विद्वान्न मुह्यति ।
यथा सृष्टोऽसि राजेन्द्र तथा भवितुमर्हसि ॥ १२-१५-२३ (७०९५६)
विनीतक्रोधहर्षा हि मन्दा वनमुपाश्रिताः ।

विना वधं न कुर्वन्ति तापसाः प्राणयापनम् ॥ १२-१५-२४ (७०९५७)
उदके बहवः प्राणाः पृथिव्यां च फलेषु च ।
न च कश्चिन्न तान्हन्ति किमन्यत्प्राणयापनम् ॥ १२-१५-२५ (७०९५८)
सूक्ष्मयोनीनि भूतानि तर्कगम्यानि कानिचित् ।
पक्ष्मणोऽपि निपातेन येषां स्यात्स्कन्धपर्ययः ॥ १२-१५-२६ (७०९५९)
ग्रामान्निष्क्रम्य मुनयो विगतक्रोधमत्सराः ।
वने कुटुम्बधर्माणो दृश्यन्ते परिमोहिताः ॥ १२-१५-२७ (७०९६०)
भूमिं भित्त्वौषधीश्छित्त्वा वृक्षादीनण्डजान्पशून् ।
मनुष्यास्तन्वये यज्ञांस्ते स्वर्गं प्राप्नुवन्ति च ॥ १२-१५-२८ (७०९६१)
दण्डनीत्यां प्रणीतायां सर्वे सिध्यन्त्युपक्रमाः ।
कौन्तेय सर्वभूतानां तत्र मे नास्ति संशयः ॥ १२-१५-२९ (७०९६२)
दण्डश्चेन्न भवेल्लोके विनश्येयुरिमाः प्रजाः ।
जले मत्स्यानिवाभक्ष्यन्दुर्बलान्बलवत्तराः ॥ १२-१५-३० (७०९६३)
सत्यं बतेदं ब्रह्मणा पूर्वमुक्तं दण्डः प्रजा रक्षति साधुनीतः ।
पश्याग्नयः पूतिमांसस्य भीताः सन्तर्जिता दण्डभयाज्ज्वलन्ति
॥ १२-१५-३१ (७०९६४)
अन्धंतम इवेदं स्यान्न प्रज्ञायेत किंचन ।
दण्डश्चेन्न भवेल्लोके विभजन्साध्वसाधुनी ॥ १२-१५-३२ (७०९६५)
येऽपि संभिन्नमर्यादा नास्तिका वेदनिन्दकाः ।
तेऽपि भोगाय कल्पन्ते दण्डेनाशु निपीडिताः ॥ १२-१५-३३ (७०९६६)
सर्वो दण्डजितो लोको दुर्लभो हि शुचिर्जनः ।
दण्डस्य हि भयाद्भीतो भोगायैव प्रकल्पते ॥ १२-१५-३४ (७०९६७)
चातुर्वर्ण्यप्रमोदाय सुनीतिकरणाय च ।
दण्डो विधात्रा विहितो धर्मार्थौ भुवि रक्षितुम् ॥ १२-१५-३५ (७०९६८)
यदि दण्डान्न बिभ्येयुर्वयांसि श्वापदानि च ।
अद्युः पशून्मनुष्यांश्च यज्ञार्थानि हवींषि च ॥ १२-१५-३६ (७०९६९)
न ब्रह्मचार्यधीयीत न काल्यं दुहते च गौः ।
न कन्योद्वहनं गच्छेद्यदि दण्डो न पालयेत् ॥ १२-१५-३७ (७०९७०)
विष्वग्लोपः प्रवर्तेत भिद्येरन्सर्वसेतवः ।
ममत्वं न प्रजानीयुर्यदि दण्डो न पालयेत् ॥ १२-१५-३८ (७०९७१)
न संवत्सरसत्राणि तिष्ठेयुरकुतोभयाः ।
विधिवद्दक्षिणावन्ति यदि दण्डो न पालयेत् ॥ १२-१५-३९ (७०९७२)
चरेयुर्नाश्रमे धर्मं यथोक्तं विधिमाश्रिताः ।
न विद्यां प्राप्नुयात्कश्चिद्यदि दण्डो न पालयेत् ॥ १२-१५-४० (७०९७३)
न चोष्ट्रा न बलीवर्दा नाश्वाश्वतरगर्दभाः ।
न विद्यां प्राप्नुर्यानानि यदि दण्डो न पालयेत् ॥ १२-१५-४१ (७०९७४)

न प्रेष्या वचनं कुर्युर्न बालो जातु कर्हिचित् ।
तिष्ठेत्पितुर्मते धर्मे यदि दण्डो न पालयेत् ॥ १२-१५-४२ (७०९७५)
दण्डे स्थिताः प्रजाः सर्वा भयं दण्डे विदुर्बुधाः ।
दण्डे स्वर्गो मनुष्याणां लोकोऽयं च प्रतिष्ठितः ॥ १२-१५-४३ (७०९७६)
न तत्र कूटं पापं वा वञ्चना वाऽपि दृश्यते ।
यत्र दण्डः सुविहितश्चरत्यरिविनाशनः ॥ १२-१५-४४ (७०९७७)
हविः श्वा प्रलिहेद्दृष्ट्वा दण्डश्चेन्नोद्यतो भवेत् ।
हरेत्काकः पुरोडाशं यदि दण्डो न पालयेत् ॥ १२-१५-४५ (७०९७८)
यदीदं धर्मतो राज्यं विहितं यद्यधर्मतः ।
कार्यस्तत्र न शोको वै भुङ्क्ष्व भोगान्यजस्व च ॥ १२-१५-४६ (७०९७९)
सुखेन धर्मं श्रीमन्तश्चरन्ति शुचिवाससः ।
संवसन्तः प्रियैर्दारैर्भुञ्जानाश्चान्नमुत्तमम् ॥ १२-१५-४७ (७०९८०)
अर्थे सर्वे समारम्भाः समायत्ता न संशयः ।
स च दण्डे समायत्तः पश्य दण्डस्य गौरवम् ॥ १२-१५-४८ (७०९८१)
लोकयात्रार्थमेवेह धर्मप्रवचनं कृतम् ।
अहिंसाऽसाधुहिंसेति श्रेयान्धर्मपरिग्रहः ॥ १२-१५-४९ (७०९८२)
नात्यन्तं गुणवत्किंचिन्न चाप्यत्यन्तनिर्गुणम् ।
उभयं सर्वकार्येषु दृश्यते साध्वसाधु च ॥ १२-१५-५० (७०९८३)
पशूनां वृषणं छित्त्वा ततो भिन्दन्ति नस्सु तान् ।
वहन्ति बहवो भारान्बध्नन्ति दमयन्ति च ॥ १२-१५-५१ (७०९८४)
एवं पर्याकुले लोके वितथैर्जर्झरीकृते ।
तैस्तैर्न्यायैर्महाराज पुराणं धर्ममाचर ॥ १२-१५-५२ (७०९८५)
यज देहि प्रजा रक्ष धर्मं समनुपालय ।
अमित्राञ्जहि कौन्तेय मित्राणि परिपालय ॥ १२-१५-५३ (७०९८६)
मा च ते निघ्नतः शत्रून्मन्युर्भवतु पार्थिव ।
न तत्र किल्विषं किंचिद्धन्तुर्भवति भारत ॥ १२-१५-५४ (७०९८७)
आततायी हि यो हन्यादाततायिनमागतम् ।
न तेन भ्रूणहा स स्यान्मन्युस्तं मन्युमार्च्छति ॥ १२-१५-५५ (७०९८८)
अवध्यः सर्वभूतानामन्तरात्मा न संशयः ।
अवध्ये चात्मनि कथं वध्यो भवति कस्यचित् ॥ १२-१५-५६ (७०९८९)
यथा हि पुरुषः शालां पुनः संप्रविशेन्नवाम् ।
एव जीवः शरीराणि तानितानि प्रपद्यते ॥ १२-१५-५७ (७०९९०)
देहान्पुराणानुत्सृज्य नवान्संप्रतिपद्यते ।
एवं मृत्युमुखं प्राहुर्जना ये तत्त्वदर्शिनः ॥ ॥ १२-१५-५८ (७०९९१)

इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि

१२-१५-६ संसिद्धिके पशुवत् दण्डार्हस्वभावे ॥
१२-१५-८ दमयति ताडनादिना । दण्डयति वित्तमपहरति ॥
१२-१५-९ भुज्यत इति भुजं भक्तं तन्मात्रार्पणं वेतनप्रदानमित्यर्थः ॥
१२-१५-११ श्यामः दृढाभिघातेन दण्ड्यस्यान्ध्यजनकत्वात् । लोहिताक्षो दण्डयितुः क्रोधातिशयात्। सूद्यतः सुतरामुद्यतः। साधु यथापराधम् ॥
१२-१५-२० सत्वैः सत्वानीति ट । ड। थ। पाठः ॥
१२-१५-२१ व्यालमृगश्चित्रव्याघ्रः ॥
१२-१५-२२ पश्य कालो यथा गत इति झ । पाठः। पश्य धर्मं यथागतमिति ड। त। पाठः ॥
१२-१५-२३ यथासृष्टः शौर्यं तेजो धृतिर्दाक्ष्यमित्याद्युक्तस्वभावः क्षत्रियः सृष्टोऽसि धात्रा ॥
१२-१५-२४ विनीतावपनीतौ क्रोधहर्षौ यैस्ते । मन्दाः क्षत्रियाः। वधं कन्दमूलादिवधम् ॥
१२-१५-२६ स्कन्धपर्ययो देहस्य नाशः ॥
१२-१५-२९ दण्डयुक्ता नीतिर्दण्डनीतिस्तस्यां प्रणीतायां प्रवर्तितायाम् ॥
१२-१५-३० अभक्ष्यन् भक्षयेयुः ॥
१२-१५-३१ पश्याग्नयश्च प्रतिशाम्येति झ।पाठः । संतर्जिताः फूत्कारेण ॥
१२-१५-३३ भोगाय पालनाय । मर्यादाया इति शेषः ॥
१२-१५-३६ हन्युः पशूनिति ट । ड। पाठः ॥
१२-१५-३७ न कल्याणीं दुहेत गामिति झ । पाठः। तत्र कल्याणीमपत्यवतीं न दुहेत लोक इत्यर्थः। उद्वहनं न गच्छेत् किंतु व्यभिचरेदेव ॥
१२-१५-३८ विश्वलोप इति ट । थ। पाठः। सेतवो मर्यादाः। ममत्वं परिच्छिन्नं न जानीयुः। सर्वः सर्वत्र ममत्वं कुर्यादित्यर्थरः ॥
१२-१५-३९ तिष्ठेयुरनुतिष्ठेयुः ॥
१२-१५-४२ न तिष्ठेद्युवतीधर्म इति झ । पाठः ॥
१२-१५-४६ यदि दण्डवतो राज्यं विहितं यद्यधर्मतः । कार्यं तत्र न कार्यं च इति ड। थ। पाठः ॥
१२-१५-४७ संवर्षन्तः फलैर्दीनैरिति झ । पाठः ॥
१२-१५-५१ नस्सु नासिकासु । भिन्दन्ति मस्तकमिति पाठे मस्तकं भिन्दन्ति शृङ्गवृद्धिर्माभूदितीत्यर्थः ॥
१२-१५-५२ जर्झरीकृते दण्डेन । तदभावे भारवहनादिकार्यं न स्यादतः पुराणमेव धर्ममाचर। नत्वत्र प्रवाहायातं

हिंसादिदोषमवेक्षस्वेति भावः ॥
१२-१५-५४ मन्युर्दैन्यम् ॥
१२-१५-५५ आततायी शस्त्रपाणिः । मन्युः क्रोधः। मन्युं क्रोधमार्च्छति। आ सर्वत ऋच्छति प्राप्नोति। मन्युः कर्ता नाहं कर्तेति श्रुतेस्तत्र न भ्रूणहा भवतीत्यर्थः ॥

---

शन्तिपर्व-अध्यय०१६
॥ श्रीः ॥
१२.१६. अध्यायः १६

Mahabharata - Shanti Parva - Chapter Topics
युधिष्ठिरंप्रति भीमवचनम् ॥ १.।
Mahabharata - Shanti Parva - Chapter Text

१२-१६-० (७१३६०)
वैशंपायन उवाच। १२-१६-०क्ष् (५८३५)
अर्जुनस्य वचः श्रुत्वा भीमसेनोऽत्यमर्षणः ।
धैर्यमास्थाय तं ज्येष्ठं भ्राता भ्रातरमब्रवीत् ॥ १२-१६-१ (७१३६१)
राजन्विदितधर्मोऽसि न तेऽस्त्यविदितं भुवि ।
उपशिक्षाम ते वृत्तं सदैव न च शक्नुमः ॥ १२-१६-२ (७१३६२)
न वक्ष्यामि न वक्ष्यामीत्येवं मे मनसि स्थितम् ।
अतिदुःखात्तु वक्ष्यामि तन्निबोध जनाधिप ॥ १२-१६-३ (७१३६३)
भवतः संप्रमोहेन सर्वं संशयितं कृतम् ।
विक्लबत्वं च नः प्राप्तमबलत्वं तथैव च ॥ १२-१६-४ (७१३६४)
कथं हि राजा लोकस्य सर्वशास्त्रविशारदः ।
मोहमापद्यसे दैन्याद्यथा कापुरुषस्तथा ॥ १२-१६-५ (७१३६५)
आगतिश्च गतिश्चैव लोकस्य विदिता तव ।
आयत्यां च तदात्वे च न तेऽस्त्यविदितं प्रभो ॥ १२-१६-६ (७१३६६)
एवं गते महाराज राज्यं प्रति जनाधिप ।
हेतुमात्रं तु वक्ष्यामि तमिहैकमनाः श्रृणु ॥ १२-१६-७ (७१३६७)
द्विविधो जायते व्याधिः शारीरो मानसस्तथा ।
परस्परं तयोर्जन्म निर्द्वन्द्वं नोपलभ्यते ॥ १२-१६-८ (७१३६८)
शारीराज्जायते व्याधिर्मानसो नात्र संशयः ।
मानसाज्जायते व्याधिः शारीर इति निश्चयः ॥ १२-१६-९ (७१३६९)
शारीरमानसे दुःखे योऽतीते त्वनुशोचति ।
दुःखेन लभते दुःखं द्वावनर्थौ च विन्दति ॥ १२-१६-१० (७१३७०)

शीतोष्णे चैव वायुश्च त्रयः शारीरजा गुणाः ।
तेषां गुणानां साम्यं यत्तदाहुः स्वस्थलक्षणम् ॥ १२-१६-११ (७१३७१)
तेषामन्यतमोद्रेके विधानमुपदिश्यते ।
उष्णेन बाध्यते शीतं शीतेनोष्णं प्रबाध्यते ।
ग्उभाभ्यां बाध्यते वायुर्विधानमिदमुच्यते ॥' १२-१६-१२ (७१३७२)
सत्वं रजस्तय इति मानसाः स्युस्त्रयो गुणाः ।
तेषां गुणानां साम्यं यत्तदाहुः स्वस्थलक्षणम् ॥ १२-१६-१३ (७१३७३)
तेषामन्यतमोद्रेके विधानमुपदिश्यते ।
हर्षेण बाध्यते शोको हर्षः शोकेन बाध्यते ।
ग्उभाभ्यां बाध्यते मोहो विधानमिदमुच्यते ॥' १२-१६-१४ (७१३७४)
कश्चित्सुखे वर्तमानो दुःखस्य स्मर्तुमिच्छति ।
कश्चिद्दुःखे वर्तमानः सुखस्य स्मर्तुमिच्छति ॥ १२-१६-१५ (७१३७५)
स त्वं न दुःखी दुःखस्य न सुखी च सुखस्य च ।
नादुःखी दुःखभागस्य नासुखी च सुखस्य च ।
स्मर्तुमर्हसि कौरव्य दिष्टं हि बलवत्तरम् ॥ १२-१६-१६ (७१३७६)
अथवा ते स्वभावोऽयं येन पार्थिव तुष्यसे ।
दृष्ट्वा सभागतां कृष्णामेकवस्त्रां रजस्वलाम् ।
मिषतां पाण्डुपुत्राणां न तस्य स्मर्तुमर्हसि ॥ १२-१६-१७ (७१३७७)
प्रव्राजनं च नगरादजिनैश्च विवासनम् ।
महारण्यनिवासश्च न तस्य स्मर्तुमर्हसि ॥ १२-१६-१८ (७१३७८)
जटासुरात्परिक्लेशं चित्रसेनेन चाहवम् ।
सैन्धवाच्च परिक्लेशं कथं विस्मृतवानसि ॥ १२-१६-१९ (७१३७९)
पुनरज्ञातचर्यायां कीचकेन पदा वधम् ।
द्रौपद्या राजपुत्र्यांश्च कथं विस्मृतवानसि ॥ १२-१६-२० (७१३८०)
यच्च ते द्रोणभीष्माभ्यां युद्धमासीदरिंदम् ।
मनसैकेन योद्धव्यं तत्ते युद्धमुपस्थितम् ॥ १२-१६-२१ (७१३८१)
यत्र नास्ति शरैः कार्यं न मित्रैर्न च बन्धुभिः ।
आत्मनैकेन योद्धव्यं तत्ते युद्धमुपस्थितम् ॥ १२-१६-२२ (७१३८२)
तस्मिन्ननिर्जिते युद्धे प्राणान्यदि विमोक्ष्यसे ।
अन्यं देहं समास्थाय ततस्तैरिह योत्स्यसे ॥ १२-१६-२३ (७१३८३)
ग्यो ह्यनाढ्यः स पतितस्तदुच्छिष्टं तदल्पकम् ।
बह्वपथ्यं बलवतो न किंचित्रायते बलम् ॥' १२-१६-२४ (७१३८४)
तस्मादद्यैव गन्तव्यं युध्यस्व भरतर्षभ ।
परमव्यक्तरूपस्य व्यक्तं त्यक्त्वा स्वकर्मभिः ॥ १२-१६-२५ (७१३८५)
तस्मिन्ननिर्जिते युद्धे कामवस्थां गमिष्यसि ।
एतज्जित्वा महाराज कृतकृत्यो भविष्यसि ॥ १२-१६-२६ (७१३८६)

एतां बुद्धिं विनिश्चित्य भूतानामागतिं गतिम् ।
पितृपैतामहे वृत्ते शाधि राज्यं यथोचितम् ॥ १२-१६-२७ (७१३८७)
दिष्ट्या दुर्योधनः पापो निहतः सानुगो युधि ।
द्रौपद्याः केशपक्षस्य दिष्ट्या ते पदवीं गताः ॥ १२-१६-२८ (७१३८८)
यजस्व वाजिमेधेन विधिवद्दक्षिणावता ।
वयं ते किंकराः पार्थ वासुदेवश्च वीर्यवान् ॥ ॥ १२-१६-२९ (७१३८९)

इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि षोडशोऽध्यायः
॥ १६.।
Mahabharata - Shanti Parva - Chapter Footnotes

१२-१६-२ नच शक्नुमः ।कर्तुमिति शेषः ॥
१२-१६-६ अगतिश्च गतिश्चैवेति झ ।पाठः।तत्र
आयत्यामुत्तरकाले।तदात्वे वर्तमानकाले अगतिर्दुर्मार्गः।गतिः सन्मार्ग
इत्यर्थः ॥
१२-१६-८ निर्द्वन्द्वं शरीरं विना व्याधिर्नास्ति मनोविना आधिर्नास्तीत्यर्थः ॥
१२-१६-११ शीतोष्णे कफपित्ते ।वायुर्वातः ॥
१२-१६-१२ विधानं चिकित्सा ।उष्णेन द्रव्येण ॥
१२-१६-१६ न दुःखी सुखजातस्य न सुखी दुःखजस्य वा इति झ ।पाठः ॥
१२-१६-१७ येन पार्थिव क्लिश्यसे इति झ ।पाठः ॥
१२-१६-१८ न तस्य स्मर्तुमर्हसीत्यत्र कथमिति वक्ष्यमाणं
पदमपकृष्य योजना ॥
१२-१६-२२ यत्र नाभिसरैरिति द ।पाठः।तत्र न अभिसरैरिति छेदः ॥
१२-१६-२३ तस्मिन्मनसि ॥
१२-१६-२५ युध्यस्व ।मनोजयार्थं सन्नद्धो भवेत्यर्थः ॥
१२-१६-२६ तस्मिन्मनसि कामवस्थाम् ।अवाच्यामित्यर्थः।एतन्मनः ॥
१२-१६-२८ दिष्ट्या त्वं पदवीं गत इति झ ।पाठः ॥

---

शन्तिपर्व-अध्यय०१७
॥ श्रीः ॥
१२.१७. अध्यायः १७

Mahabharata - Shanti Parva - Chapter Topics
भीमप्रति युधिष्ठिरवचनम् ॥ १.।
Mahabharata - Shanti Parva - Chapter Text

१२-१७-० (७१७७९)

युधिष्ठिर उवाच। १२-१७-०क्ष् (५८६२)
असंतोषः प्रमादश्च मदो रागोऽप्रशान्तता ।
बलं मोहोऽभिमानश्चाप्युद्वेगश्चैव सर्वशः ॥ १२-१७-१ (७१७८०)
एभिः पाप्मभिराविष्टो राज्यं त्वमभिकाङ्क्षसे ।
निरामिषो विनिर्मुक्तः प्रशान्तः सुसुखी भव ॥ १२-१७-२ (७१७८१)
य इमामखिलां भूमिं शिष्यादेको महीपतिः ।
तस्याप्युदरमेकं वै किमिदं त्वं प्रशंससि ॥ १२-१७-३ (७१७८२)
नाह्ना पूरयितुं शक्यां न मासैर्भरतर्षभ ।
अपूर्यां पूरयन्निच्छामायुषाऽपि न शक्नुयात् ॥ १२-१७-४ (७१७८३)
यथेद्धः प्रज्वलत्यग्निरसमिद्धः प्रशाम्यति ।
अल्पाहारतयाग्निं त्वं शमयौदर्यमुत्थितम् ॥ १२-१७-५ (७१७८४)
आत्मोदरकृतेऽप्राज्ञः करोति विशसं बहु ।
जयोदरं पृथिव्या ते श्रेयो निर्जितया जितम् ॥ १२-१७-६ (७१७८५)
मानुषान्कामभोगांस्त्वमैश्वर्यं च प्रशंससि ।
अभोगिनोऽबलाश्चैव यान्ति स्थानमनुत्तमम् ॥ १२-१७-७ (७१७८६)
योगः क्षेमश्च राष्ट्रस्य धर्माधर्मौ त्वयि स्थितौ ।
मुच्यस्व महतो भारात्त्यागमेवाभिसंश्रय ॥ १२-१७-८ (७१७८७)
एकोदरकृते व्याघ्रः करोति विशसं बहु ।
तमन्येऽप्युपजीवन्ति मन्दवेगतरा मृगाः ॥ १२-१७-९ (७१७८८)
विषयान्प्रतिसंगृह्य संन्यासे कुरुते मतिम् ।
न च तुष्यन्ति राजानः पश्य बुद्ध्यन्तरं यथा ॥ १२-१७-१० (७१७८९)
पत्राहारैरश्मकुट्टैर्दन्तोलूखलिकैस्तथा ।
अब्भक्षैर्वायुभक्षैश्च तेरयं नरको जितः ॥ १२-१७-११ (७१७९०)
यस्त्विमां वसुधां कृत्स्नां प्रशासेदखिलां नृपः ।
तुल्याश्मकाञ्चनो यश्च स कृतार्थो न पार्थिवः ॥ १२-१७-१२ (७१७९१)
संकल्पेषु निरारम्भो निराशीर्निर्ममो भव ।
अशोकं स्थानमातिष्ठ इह चामुत्र चाव्ययम् ॥ १२-१७-१३ (७१७९२)
निरामिषा न शोचन्ति शोचन्ति त्वामिषैषिणः ।
परित्यज्यामिषं सर्वं मृषावादात्प्रमोक्ष्यसे ॥ १२-१७-१४ (७१७९३)
पन्थानौ पितृयानश्च देवयानश्च विश्रुतौ ।
ईजानाः पितृयानेन देवयानेन मोक्षिणः ॥ १२-१७-१५ (७१७९४)
तपसा ब्रह्मर्येण स्वाध्यायेन महर्षयः ।
विमुच्य देहांस्ते यान्ति मृत्योरविषयं गताः ॥ १२-१७-१६ (७१७९५)
आमिषं बन्धनं लोके कर्मेहोक्तं तथाऽऽमिषम् ।
ताभ्यां विमुक्तः पापाभ्यां पदमाप्नोति तत्परम् ॥ १२-१७-१७ (७१७९६)
अपि गाथां पुरा गीतां जनकेन वदन्त्युत ।

निर्द्वन्द्वेन विमुक्तेन मोक्षं समनुपश्यता ॥ १२-१७-१८ (७१७९७)
अनन्तं बत मे वित्तं यस्य मे नास्ति किंचन ।
मिथिलायां प्रदीप्तायां न मे किंचित्प्रदह्यते ॥ १२-१७-१९ (७१७९८)
प्रज्ञाप्रासादमारुह्य न शोचेच्छोचतो जनान् ।
जगतीस्थोऽथवाऽद्रिस्थो मन्दबुद्धिर्नचेक्षते ॥ १२-१७-२० (७१७९९)
दृश्यं पश्यति यः पश्यन्स चक्षुष्मान्स बुद्धिमान् ।
अज्ञातानां च विज्ञानात्संबोधाद्बुद्धिरुच्यते ॥ १२-१७-२१ (७१८००)
यस्तु मानं विजानाति बहुमानमियात्स वै ।
ब्रह्मभावप्रभूतानां वैद्यानां भावितात्मनाम् ॥ १२-१७-२२ (७१८०१)
यदा भूतपृथग्भावमेकस्थमनुपश्यति ।
तत एव च विस्तारं ब्रह्म संपद्यते तदा ॥ १२-१७-२३ (७१८०२)
ते जनास्तां गतिं यान्ति नाविद्वांसोऽल्पचेतसः ।
नाबुद्धयो नातपसः सर्वं बुद्धौ प्रतिष्ठितम् ॥ ॥ १२-१७-२४ (७१८०३)

इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि सप्तदशोऽध्यायः
॥ १७.।
Mahabharata - Shanti Parva - Chapter Footnotes

१२-१७-५ इद्धः प्रदीप्तः ॥
१२-१७-६ विशसं विशसनम् ॥
१२-१७-७ अबलास्तपःकृशाः ॥
१२-१७-८ अलब्धलाभो योगः ।लब्धसंरक्षणं क्षेमः ॥
१२-१७-२१ दृश्यं द्रष्टुं योग्यं कर्तव्यमकर्तव्यं च ॥
१२-१७-२२ यस्तु वाचं विजानातीति झ ।पाठः ॥
१२-१७-२४ ते बुद्धिमन्तः ॥

---

शन्तिपर्व-अध्यय०१८
॥ श्रीः ॥
१२.१८. अध्यायः १८

Mahabharata - Shanti Parva - Chapter Topics
अर्जुनेन युधिष्ठिरंप्रति जनकतद्भार्यासंवादकथनपूर्वकं
कर्तव्योपदेशः ॥ १.।
Mahabharata - Shanti Parva - Chapter Text

१२-१८-० (७२२०८)
वैशंपायन उवाच। १२-१८-०क्ष् (५९०९)

तूष्णींभूतं तु राजानं पुनरेवार्जुनोऽब्रवीत् ।
संतप्तः शोकदुःखाभ्यां राजवाक्षल्यपीडितः ॥ १२-१८-१ (७२२०९)
अर्जुन उवाच। १२-१८-२क्ष् (५९१०)
कथयन्ति पुरावृत्तमितिहासमिमं जनाः ।
विदेहराज्ञः संवादं भार्यया सह भारत ॥ १२-१८-२ (७२२१०)
उत्सृज्य राज्यं भिक्षार्थं कृतबुद्धिं नरेश्वरम् ।
विदेहराजमहीषी दुःखिता प्रत्यभाषत ॥ १२-१८-३ (७२२११)
धनान्यपत्यं मित्राणि रत्नानि विविधानि च ।
पन्थानं पावनं हित्वा जनको मौढ्यमास्थितः ॥ १२-१८-४ (७२२१२)
तं ददर्श प्रिया भार्या भैक्षवृत्तिमकिंचनम् ।
धानामुष्टिमुपासीनं निरीहं गतमत्सरम् ॥ १२-१८-५ (७२२१३)
तमुवाच समामत्य भर्तारमकुतोभयम् ।
क्रुद्धा मनस्विनी भार्या विविक्ते हेतुमद्वचः ॥ १२-१८-६ (७२२१४)
कथमुत्सृज्य राज्यं स्वं धनधान्यसमन्वितम् ।
कापालीं वृत्तिमास्थाय धान्यमुष्टिमुपाससे ॥ १२-१८-७ (७२२१५)
प्रतिज्ञा तेऽन्यथा राजन्विचेष्टा चान्यथा तव ।
यद्राज्यं महदुत्सृज्य स्वल्पे लुभ्यसि पार्थिव ॥ १२-१८-८ (७२२१६)
नैतेनातिथयो राजन्देवर्षिपितरस्तथा ।
अद्य शक्यास्त्वया भर्तुं मोघस्तेऽयं परिश्रमः ॥ १२-१८-९ (७२२१७)
देवतातिथिभिश्चैव पितृभिश्चैव पार्थिव ।
सर्वैरेतैः परित्यक्तः परिव्रजसि निष्क्रियः ॥ १२-१८-१० (७२२१८)
यस्त्वं त्रैविद्यवृद्धानां ब्राह्मणानां सहस्रशः ।
भर्ता भूत्वा च लोकस्य सोऽद्यान्यैर्भूतिमिच्छसि ॥ १२-१८-११ (७२२१९)
श्रियं हित्वा प्रदीप्तां त्वं श्ववत्संप्रति वीक्ष्यसे ।
अपुत्रा जननी तेऽद्य कौसल्या चापतिस्त्वया ॥ १२-१८-१२ (७२२२०)
आश्रिता धर्मकामास्त्वां क्षत्रियाः पर्युपासते ।
त्वदाशामभिकाङ्क्षन्तः कृपणाः फलहेतुकाः ॥ १२-१८-१३ (७२२२१)
तांश्च त्वं विफलान्कृत्वा कं नु लोकं गमिष्यसि ।
राजन्संशयिते मोक्षे परतन्त्रेषु देहिषु ॥ १२-१८-१४ (७२२२२)
नैव तेऽस्ति परो लोको नापरः पापकर्मणः ।
धर्म्यान्दारान्परित्यज्य यस्त्वमिच्छसि जीवितुम् ॥ १२-१८-१५ (७२२२३)
स्रजो गन्धानलंकारान्वासांसि विविधानि च ।
किमर्थमभिसंत्यज्य परिव्रजसि निष्क्रियः ॥ १२-१८-१६ (७२२२४)
निपानं सर्वभूतानां भूत्वा त्वं पावनं महत ।
आढ्यो वनस्पतिर्भूत्वा सोन्यांस्त्वं पर्युपाससे ॥ १२-१८-१७ (७२२२५)
खादन्ति हस्तिनं न्यासे क्रव्यादा बहवोऽप्युत ।

बहवः कृमयश्चैव किं पुनस्त्वामनर्थकम् ॥१२-१८-१८ (७२२२६)
य इमां कुण्डिकां भिन्द्यान्त्रिविष्टब्धं च यो हरेत् ।
वासश्चापि हरेत्तस्मिन्कथं ते मानसं भवेत् ॥१२-१८-१९ (७२२२७)
यस्त्वं सर्वं समुत्सृज्य धानामुष्टिमनुग्रहः ।
यदनेन कृतं सर्वं किमिदं मम दीयते ॥१२-१८-२० (७२२२८)
धानामुष्टेरिहार्थश्चेत्प्रतिज्ञा ते विनश्यति ।
का वाऽहं तव को मे त्वं कश्च ते मय्यनुग्रहः ॥१२-१८-२१ (७२२२९)
प्रशाधि पृथिवीं राजन्यत्र तेऽनुग्रहो भवेत् ।
प्रासादे शयनं यानं वासांस्याभरणानि च ॥१२-१८-२२ (७२२३०)
श्रियां निराशैरधनैस्त्यक्तमित्रैरकिंचनैः ।
सौखिकैः संभृतो योऽर्थः स संत्यजति किंनु तं ॥१२-१८-२३ (७२२३१)
योऽत्यन्तं प्रतिगृह्णीयाद्यश्च दद्यात्सदैव हि ।
तयोस्त्वमन्तरं विद्धि श्रेयांस्ताभ्यां क उच्यते ॥१२-१८-२४ (७२२३२)
सदैव याचमानेषु तथा दम्भान्वितेषु च ।
एतेषु दक्षिणा दत्ता दावाग्नाविव दुर्हुतम् ॥१२-१८-२५ (७२२३३)
जातवेदा यथा राजन्नादग्ध्वैवोपशाम्यति ।
सदैव याचमानो वै तथा शाम्यति न द्विजः ॥१२-१८-२६ (७२२३४)
सतां वै ददतोऽन्नं च लोकेऽस्मिन्प्रकृतिर्ध्रुवा ।
न चेद्राजा भवेद्दाता कुतः स्युर्मोक्षकाङ्क्षिणः ॥१२-१८-२७ (७२२३५)
अन्नाद्गृहस्था लोकेऽस्मिन्भिक्षवस्तत एव च ।
अन्नात्प्राणः प्रभवति अन्नदः प्राणदो भवेत् ॥१२-१८-२८ (७२२३६)
गृहस्थेभ्योऽपि निर्मुक्ता गृहस्थानेव संश्रिताः ।
प्रभवं च प्रतिष्ठां च दान्ता विन्दन्त आसते ॥१२-१८-२९ (७२२३७)
त्यागान्न भिक्षुकं विन्द्यान्न मौढ्यान्न च याचनात् ।
ऋजुस्तु योऽर्थं त्यजति तं मुक्तं विद्धि भिक्षुकम् ॥१२-१८-३० (७२२३८)
असक्तः शक्तवद्गच्छन्निः सङ्गो मुक्तबन्धनः ।
समः शत्रौ च मित्रे च स वै मुक्तो महीपते ॥१२-१८-३१ (७२२३९)
परिव्रजन्ति दानार्थं मुण्डाः काषायवाससः ।
सिता बहुविधैः पाशैः संचिन्वन्तो वृथामिषम् ॥१२-१८-३२ (७२२४०)
त्रयीं च नामवार्तां च त्यक्त्वा पुत्रान्व्रजन्ति ये ।
त्रिविष्टब्धं च वासश्च प्रतिगृह्णन्त्यबुद्धयः ॥१२-१८-३३ (७२२४१)
अनिष्कषाये काषायमीहार्थमिति विद्धि तम् ।
धर्मध्वजानां मुण्डानां वृत्त्यर्थमिति मे मतिः ॥१२-१८-३४ (७२२४२)
काषायैरजिनैश्चीरैर्नग्नान्मुण्डाञ्जटाधरान् ।
बिभ्रत्साधून्महाराज जय लोकाञ्जितेन्द्रियः ॥१२-१८-३५ (७२२४३)
अग्न्याधेयानि गुर्वर्थं क्रतूनपि सुदक्षिणान् ।

ददात्यहरहः पूर्वं को नु धर्मरतस्ततः ॥ १२-१८-३६ (७२२४४)
अर्जुन उवाच। १२-१८-३७क्ष् (५९११)
तत्त्वज्ञो जनको राजा लोकेऽस्मिन्निति गीयते ।
सोऽप्यासीन्मोहसंपन्नो मा मोहवशमन्वगाः ॥ १२-१८-३७ (७२२४५)
एवं धर्ममनुक्रान्ता सदा दानतपः पराः ।
आनृशंस्यगुणोपेताः कामक्रोधविवर्जिताः ॥ १२-१८-३८ (७२२४६)
प्रजानां पालने युक्ता दममुत्तममास्थिताः ।
इष्ट्वा लोकानवाप्स्यामो गुरुवृद्धोपचायिनः ॥ १२-१८-३९ (७२२४७)
देवतातिथिभूतानां निर्वपन्तो यथाविधि ।
स्थानमिष्टमवाप्स्यामो ब्रह्मण्याः सत्यवादिनः ॥ ॥ १२-१८-४० (७२२४८)

इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि अष्टादशोऽध्यायः ॥ १८.।

Mahabharata - Shanti Parva - Chapter Footnotes

१२-१८-५ धाना भृष्टयवाः ।निरीहं वितृष्णम् ॥
१२-१८-८ स्वल्पे मुह्यसीति द।थ ।पाठः। प्रतिज्ञाते ते वृथेति ड। पाठः ॥
१२-१८-९ एतेन धानामुष्टिना ॥
१२-१८-१२ कौसल्या पातिता त्वयेति ट ।ड।थ।पाठः ॥
१२-१८-१३ फलहेतुकाः फलार्थिनः ॥
१२-१८-१७ निपीयतेऽस्मिन्स्वेच्छया गोभिर्जलमिति निपानं आहावः । कूपोपान्तस्थक्षुद्रजलाशय इतियावत्। तथा आढ्यः फलवान् ॥
१२-१८-१८ हस्तिनमपि न्यासे कृते सति क्रव्यादा मांसादाः खादन्ति । अनर्थकं सर्वपुरुषार्थहीनम् ॥
१२-१८-१९ त्रिविष्टब्धं त्रिदण्डम् ॥
१२-१८-२० अनुग्रहः अन्वग्रहीः ।यदानेन समं सर्वं किमिदं ह्यवसीयते इति झ। पाठः। तत्र अवसीयसे अध्यवस्यति। अनेन धानामुष्टिना सर्वं राज्यादिकं समम्। सङ्गित्वाविशेषात् इत्यर्थः ॥
१२-१८-२३ सौखिकैः संभृतानर्थान्यः संत्यजति किंनु तत् इति झ ।पाठः। तत्र सौखिकैः परममुखार्थिभिः संन्यासिभिः। संभृतानर्थान् कुण्डिकादीन् वीक्ष्य यः स्वयमपि तथा करोति स किंनु तद्राज्यादिकं त्यजति। अपितु नैव त्यजति। किंतूचितं परिग्रहं त्यक्त्वा दैवोपहतत्वादनुचितं परिग्रहान्तरमेव करोतीत्यसङ्गत्वमस्य दुर्लभमित्यर्थः ॥
१२-१८-२५ सदैव वाचमानः परिव्राट् ।सदैव याचमानेषु सत्सु

(दण्ड)डम्भविवर्जिषु इति टङ। थ। द। पाठः ॥
१२-१८-२६ सदैव याचमानो हि तथा शाम्यति वै द्विजः । इति झ। पाठः ॥
१२-१८-२७ सतां संन्यासिनां प्रकृतिर्जीवनम् । सतां च वेदा
अन्नं च लोकेऽस्मिन्प्रकृतिर्ध्रुवा। अन्नदाता भवेद्दाता कुशास्त्रं
मोक्षकाङ्क्षिणः। इति टङ थ द्द। पाठः ॥
१२-१८-३२ परिव्रजन्ति येऽनर्था इति ट । ड। पाठः ॥
१२-१८-३४ अनिष्कषाये रागादिदोषवर्जनाभावे । अनिष्कषायाः
काषायमिति ड। थ। द। पाठः ॥

---

शन्तिपर्व-अध्यय०१९
॥ श्रीः ॥
१२.१९. अध्यायः १९

Mahabharata - Shanti Parva - Chapter Topics
अर्जुनंप्रति युधिष्ठिरवचनम् ॥ १.।
Mahabharata - Shanti Parva - Chapter Text

१२-१९-० (७२४९२)
युधिष्ठिर उवाच। १२-१९-०क्ष् (५९५४)
वेदाहं तात शास्त्राणि अपराणि पराणि च ।
उभयं वेदवचनं कुरु कर्म त्यजेति च ॥ १२-१९-१ (७२४९३)
आकुलानि च शास्त्राणि हेतुभिश्चिन्तितानि च ।
निश्चयश्चैव यो मन्त्रे वेदाहं तं यथाविधि ॥ १२-१९-२ (७२४९४)
त्वं तु केवलशास्त्रज्ञो वीरव्रतसमन्वितः ।
शास्त्रार्थं तत्त्वतो गन्तुं न समर्थः कथंचन ॥ १२-१९-३ (७२४९५)
शास्त्रार्थतत्त्वदर्शी यो धर्मनिश्चयकोविदः ।
तेनाप्येवं न वाच्योऽयं यदि धर्मं प्रपश्यसि ॥ १२-१९-४ (७२४९६)
भ्रातृसौहृदमास्थाय यदुक्तं वचनं त्वया ।
न्याय्यं युक्तं च कौन्तेय प्रीतोऽहं तेन तेऽर्जुन ॥ १२-१९-५ (७२४९७)
ग्महेश्वरसमं सत्वं ब्रह्मणा चैव यत्समम् ।
वासुदेवसमं चैव न भूतं न भविष्यति ॥ १२-१९-६ (७२४९८)
तथा त्वं योधमुख्येषु सत्वं परममिष्यते ॥ १२-१९-७ (७२४९९)
बलमिन्द्रे च वायौ च बलं यच्च जनार्दने ।
तद्बलं भीमसेने च त्वयि चार्जुना विद्यते ॥ १२-१९-८ (७२५००)
त्वत्समश्चित्रयोधी च दूरपाती च पाण्डव ।
दिव्यास्त्रबलसंपन्नः को वाऽन्यस्त्वत्समो नरः ॥ १२-१९-९ (७२५०१)
युद्धधर्मेषु सर्वेषु क्रियाणां नैपुणेषु च ।

न त्वया सदृशः कश्चिन्त्रिषु लोकेषु विद्यते ॥१२-१९-१० (७२५०२)
धार्मिकं धर्मयुक्तं च निःशेषं ज्ञायते मया ।
धर्मसूक्ष्मं तु यद्वाच्यं तत्र दुष्प्रतरं त्वया ।
धनञ्जय न मे बुद्धिमतिशङ्कितुमर्हसि ॥ १२-१९-११ (७२५०३)
युद्धशास्त्रविदेव त्वं न वृद्धाः सेवितास्त्वया ।
समासविस्तरविदां न तेषां वेत्सि निश्चयम् ॥१२-१९-१२ (७२५०४)
तपस्त्यागो विधिरिति निश्चयस्तात धीमताम् ।
परस्परं ज्याय एषामिति नः श्रेयसी मतिः ॥१२-१९-१३ (७२५०५)
यत्त्वेतन्मन्यसे पार्थ न ज्यायोऽस्ति धनादिति ।
तत्र ते वर्तयिष्यामि यथा नैतत्प्रधानतः ॥१२-१९-१४ (७२५०६)
तपः स्वाध्यायशीला हि दृश्यन्ते धार्मिका जनाः ।
ऋषयस्तपसा युक्ता येषां लोकाः सनातनाः ॥१२-१९-१५ (७२५०७)
अजातश्मश्रवो धीरास्तथाऽन्ये वनवासिनः ।
अरुणाः केतवश्चैव स्वाध्यायेन दिवं गताः ॥१२-१९-१६ (७२५०८)
उत्तरेण तु पन्थानमार्या विषयनिग्रहात् ।
अबुद्धिजं तमस्त्यक्त्वा लोकांस्त्यागवतां गताः ॥१२-१९-१७ (७२५०९)
दक्षिणेन तु पन्थानं यं भास्वन्तं प्रचक्षते ।
एते क्रियावतां लोका ये श्मशानानि भेजिरे ॥१२-१९-१८ (७२५१०)
अनिर्देश्या गतिः सा तु यां प्रपश्यन्ति मोक्षिणः ।
तस्मात्त्यागः प्रधानेष्टः स तु दुःखं प्रवेदितुम् ॥१२-१९-१९ (७२५११)
अनुस्मृत्य तु शास्त्राणि कवयः समवस्थिताः ।
अपीह स्यादपीह स्यात्सारासारदिदृक्षया ॥१२-१९-२० (७२५१२)
वेदवादानतिक्रम्य शास्त्राण्यारण्यकानि च ।
विपाट्य कदलीस्तम्भं सारं ददृशिरे न ते ॥१२-१९-२१ (७२५१३)
अथैकान्तव्युदासेन शरीरे पाञ्चभौतिके ।
इच्छाद्वेषसमायुक्तमात्मानं प्राहुरिङ्गितैः ॥१२-१९-२२ (७२५१४)
अग्राह्यं चक्षुषा सत्वमनिर्देश्यं च तद्गिरा ।
कर्महेतुपुरस्कारं भूतेषु पस्विर्तते ॥१२-१९-२३ (७२५१५)
कल्याणगोचरं कृत्वा मानं तृष्णां निगृह्य च ।
कर्मसंततिमुत्सृज्य स्यान्निरालम्बनः सुखी ॥१२-१९-२४ (७२५१६)
अस्मिन्नेवं सूक्ष्मगम्ये मार्गे सद्भिर्निषेविते ।
कथमर्थमनर्थाढ्यमर्जुन त्वं प्रशंससि ॥१२-१९-२५ (७२५१७)
पूर्वशास्त्रविदोऽप्येवं जनाः पश्यन्ति भारत ।
क्रियासु निरता नित्यं दाने यज्ञे च कर्मणि ॥१२-१९-२६ (७२५१८)
भवन्ति सुदुरावर्ता हेतुमन्तोऽपि पण्डिताः ।
दृढपूर्वे स्मृता मूढा नैतदस्तीति वादिनः ॥१२-१९-२७ (७२५१९)

अनृतस्यावमन्तारो वक्तारो जनसंसदि ।
चरन्ति वसुधां कृत्स्नां वावदूका बहुश्रुताः ॥ १२-१९-२८ (७२५२०)
पार्थ यन्न विजानीमः कस्ताञ्ज्ञातुमिहार्हति ।
एवं प्राज्ञाः श्रुताश्चापि महान्तः शास्त्रवित्तमाः ॥ १२-१९-२९ (७२५२१)
तपसा महदाप्नोति बुद्ध्या वै विन्दते महत् ।
त्यागेन सुखमाप्नोति सदा कौन्तेय धर्मवित् ॥ ॥ १२-१९-३० (७२५२२)

इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि
एकोनविंशोऽध्यायः ॥ १९.।
Mahabharata - Shanti Parva - Chapter Footnotes

१२-१९-१ अपराणि धर्मशास्त्राणि । पराणि ब्रह्मशास्त्राणि ॥
१२-१९-२ अमूलानि च शास्त्राणि हेतुभिश्चित्रितानि च
। निश्चयश्चैष यन्मन्त्र इति ट। ड। पाठः ॥
१२-१९-३ त्वं तु केवलमस्त्रज्ञ इति झ।पाठः ॥
१२-१९-११ तत्र विषये दुष्प्रतरं दुरवगाहम् ॥
१२-१९-१६ अरुणाः केतवः ऋषिप्रभेदाः । अरण्ये बहवश्चैवेति
झ।पाठः ॥
१२-१९-२१ आरण्यकानि वेदान्तान् ॥
१२-१९-२४ मनस्तृणां निगृह्य चेति झ ।पाठः ॥
१२-१९-२६ पूर्वशास्त्रविदः कर्मकाण्डविदोऽपि एवमर्थमनर्थत्वेन
पश्यन्ति किमुत ज्ञानिनः ॥
१२-१९-२७ दुरावर्ताः दुःखेनापि सिद्धान्तं ग्राहयितुमशक्याः । दृढः
पूर्वः प्राग्भवीयः संस्कारो येषां ते दृढपूर्वे। बहुव्रीहावप्यार्षी
सर्वनामता ॥
१२-१९-२९ हे पार्थ यत् यान् लौकिकानप्यर्थान्न वयं विजानीमस्तान् इतरः
को ज्ञातुमर्हति । न कोपि यथा। एवं प्राज्ञा अपि अस्माकमन्येषां च
दुर्ज्ञेया इत्यर्थः ॥
१२-१९-३० महद्वैराग्यम् । महत्परंब्रह्म ॥

---

शन्तिपर्व-अध्यय०२०
॥ श्रीः ॥
१२.२०. अध्यायः २०

Mahabharata - Shanti Parva - Chapter Topics
युधिष्ठिरंप्रति देवस्थानस्य वचनम् ॥ १.।

१२-२०-० (७२९४४)
वैशंपायन उवाच। १२-२०-०क्ष् (६०४४)
अस्मिन्वाक्यान्तरे वक्ता देवस्थानो महातपाः ।
अभिनीततरं वाक्यमित्युवाच युधिष्ठिरम् ॥ १२-२०-१ (७२९४५)
देवस्थान उवाच। १२-२०-२क्ष् (६०४५)
यद्वचः फल्गुनेनोक्तं न ज्यायोऽस्ति धनादिति ।
अत्र ते वर्तयिष्यामि तदेकान्तमनाः शृणु ॥ १२-२०-२ (७२९४६)
अजातशत्रो धर्मेण कृत्स्ना ते वसुधा जिता ।
तां जित्वा च वृथा राजन्न परित्यक्तुमर्हसि ॥ १२-२०-३ (७२९४७)
चतुष्पदी हि निःश्रेणी ब्रह्मण्येषा प्रतिष्ठिता ।
तां क्रमेण महाबाहो यथावज्जय पार्थिव ।
तस्मात्पार्थ महायज्ञैर्यजस्व बहुदक्षिणैः ॥ १२-२०-४ (७२९४८)
स्वाध्याययज्ञा ऋषयो ज्ञानयज्ञास्तथाऽपरे ।
कर्मनिष्ठाश्च बुद्ध्यर्थास्तपोनिष्ठाश्च पार्थिव ॥ १२-२०-५ (७२९४९)
वैखानसानां कौन्तेय वचनं श्रूयते यथा ॥ १२-२०-६ (७२९५०)
ईहेत धनहेतोर्यस्तस्यानीहा गरीयसी ।
भूयान्दोषो हि वर्धेत यस्तत्कर्म समाश्रयेत् ॥ १२-२०-७ (७२९५१)
कृत्स्नं च धनसंहारं कुर्वन्ति विधिकारणात् ।
आत्मना तृपितो बुद्ध्या भ्रूणहत्यां न बुध्यते ॥ १२-२०-८ (७२९५२)
अनर्हते यद्ददाति न ददाति यदर्हते ।
अर्हानर्हापरिज्ञानाद्दानधर्मोऽपि दुष्करः ॥ १२-२०-९ (७२९५३)
यज्ञाय सृष्टानि धनानि धात्रा
यज्ञादिष्टः पुरुषो रक्षिता च ।
तस्मात्सर्वं यज्ञ एवोपयोज्यं
धनं ततोऽनन्तर एव कामः ॥ १२-२०-१० (७२९५४)
यज्ञैरिन्द्रो विविधै रत्नवद्भि
र्देवान्सर्वानभ्ययाद्भूरितेजाः ।
तेनेन्द्रत्वं प्राप्य विभ्राजतेऽसौ
तस्माद्यज्ञे सर्वमेवोपयोज्यम् ॥ १२-२०-११ (७२९५५)
महादेवः सर्वयज्ञे महात्मा
हुत्वाऽऽत्मानं देवदेवो बभूव ।
विश्वाँल्लोकान्व्याप्य विष्टभ्य कीर्त्या
विराजते द्युतिमान्कृत्तिवासाः ॥ १२-२०-१२ (७२९५६)
आविक्षितः पार्थिवोऽसौ मरुत्तो

वृद्ध्या शक्रं योऽजयद्देवराजम् ।
यज्ञे यस्य श्रीः स्वयं सन्निविष्टा
यस्मिन्भाण्डं काञ्चनं सर्वमासीत् ॥ १२-२०-१३ (७२९५७)
हरिश्चन्द्रः पार्थिवेन्द्रः श्रुतस्ते
यज्ञैरिष्ट्वा पुण्यभाग्वीतशोकः ।
ऋद्ध्या शक्रं योऽजयन्मानुषः सं
स्तस्माद्यज्ञे सर्वमेवोपयोज्यम् ॥ ॥ १२-२०-१४ (७२९५८)

इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि विंशोऽध्यायः ॥ २०.।
Mahabharata - Shanti Parva - Chapter Footnotes

१२-२०-१ वाक्यान्तरे वाक्यावसरे ।अभिनीततरं युक्तिमत्तरम् ॥
१२-२०-४ चतुष्पदी चतुराश्रमी ॥
१२-२०-५ क्रमाद्ब्रह्मचारियतिगृहस्थवानप्रस्था इत्यर्थः ॥
१२-२०-७ धनं हेतुः कारणं यस्य तस्य यज्ञादेर्यज्ञाद्यर्थम् ईहेत
धनं तस्यानीहैव गरीयसी ।प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं
वरमिति न्यायात्तमिमं परधर्मं यः क्षत्रिय उपाश्रयेत स
दूष्येतेत्याह भूयानिति ॥
१२-२०-१० यज्ञार्थमेव आज्ञाप्तो वेदेन ॥
१२-२०-१३ भाण्डमुपकरणं पात्रादि ॥

---

शन्तिपर्व-अध्यय०२१
॥ श्रीः ॥
१२.२१. अध्यायः २१

Mahabharata - Shanti Parva - Chapter Topics
युधिष्ठिरंप्रति देवस्थानस्य वचनम् ॥ १.।
Mahabharata - Shanti Parva - Chapter Text

१२-२१-० (७३४१४)
देवस्थान उवाच। १२-२१-०क्ष् (६०७४)
अत्रैवोदाहरन्तीममितिहासं पुरातनम् ।
इन्द्रेण समये पृष्टो यदुवाच बृहस्पतिः ॥ १२-२१-१ (७३४१५)
संतोषो वै स्वर्गसमः संतोषः परमं सुखम् ।
तुष्टेर्न किंचित्परतः सा सम्यक्प्रतितिष्ठति ॥ १२-२१-२ (७३४१६)
यदा संहरते कामान्कूर्मोऽङ्गानीव सर्वशः ।
तदाऽऽत्मज्योतिरचिरात्स्वात्मन्येव प्रसीदति ॥ १२-२१-३ (७३४१७)

न विभेति यदा चायं यदा चास्मान्न बिभ्यति ।
कामद्वेषौ च जयति तदाऽऽत्मानं च पश्यति ॥ १२-२१-४ (७३४१८)
यदाऽसौ सर्वभूतानां न द्रुह्यति न काङ्क्षति ।
कर्मणा मनसा वाचा ब्रह्म संपद्यते तदा ॥ १२-२१-५ (७३४१९)
एवं कौन्तेय भूतानि तंतं धर्मं तथातथा ।
तदाऽऽत्मना प्रपश्यन्ति तस्माद्बुध्यस्व भारत ॥ १२-२१-६ (७३४२०)
अन्ये साम प्रशंसन्ति व्यायाममपरे जनाः ।
नैकं न चापरं केचिदुभयं च तथाऽपरे ॥ १२-२१-७ (७३४२१)
यज्ञमेके प्रशंसन्ति संन्यासमपरे जनाः ।
ग्नैकं न चापरं केचिदुभयं च तथाऽपरे ॥' १२-२१-८ (७३४२२)
दानमेके प्रशंसन्ति केचिच्चैव प्रतिग्रहम् ।
केचित्सर्वं परित्यज्य तूष्णीं ध्यायन्त आसते ॥ १२-२१-९ (७३४२३)
राज्यमेके प्रशंसन्ति प्रजानां परिपालनम् ।
हत्वा छित्त्वा च भित्त्वा च केचिदेकान्तशीलिनः ॥ १२-२१-१० (७३४२४)
एतत्सर्वं समालोक्य बुधानामेव निश्चयः ।
अद्रोहेणैव भूतानां यो धर्मः स सतां मतः ॥ १२-२१-११ (७३४२५)
अद्रोहः सत्यवचनं संविभागो दया दमः ।
प्रजनं स्वेषु दारेषु मार्दवं ह्रीरचापलम् ॥ १२-२१-१२ (७३४२६)
एवं धर्मं प्रधानेष्टं मनुः स्वायंभुवोऽब्रवीत् ।
तस्मादेतत्प्रयत्नेन कौन्तेय प्रतिपालय ॥ १२-२१-१३ (७३४२७)
यो हि राज्ये स्थितः शश्वद्वशी तुल्यप्रियाप्रियः ।
क्षत्रियो यज्ञशिष्टाशी राजा शास्त्रार्थतत्त्ववित् ॥ १२-२१-१४ (७३४२८)
असाधुनिग्रहरतः साधूनां प्रग्रहे रतः ।
धर्मवर्त्मनि संस्थाप्य प्रजा वर्तेत धर्मतः ॥ १२-२१-१५ (७३४२९)
पुत्रसंक्रामितश्रीश्च वने वन्येन वर्तयेत् ।
विधानमाश्रमाणां वै कुर्यात्कर्माण्यतन्द्रितः ॥ १२-२१-१६ (७३४३०)
य एवं वर्तते राजन्स राजा धर्मनिश्चितः ।
तस्यायं च परश्चैव लोकः स्यात्संफलोदयः ॥ १२-२१-१७ (७३४३१)
निर्वाणं हि सुदुष्प्राप्यं बहुविघ्नं च मे मतम् ॥ १२-२१-१८ (७३४३२)
एवं धर्ममनुक्रान्ताः सत्यदानतपः पराः ।
आनृशंस्यगुणैर्युक्ताः कामक्रोधविवर्जिताः ॥ १२-२१-१९ (७३४३३)
प्रजानां पालने युक्ता धर्ममुत्तममास्थिताः ।
गोब्राह्मणार्थे युध्यन्तः प्राप्ता गतिमनुत्तमाम् ॥ १२-२१-२० (७३४३४)
एवं रुद्राः सवसवस्तथाऽऽदित्याः परंतप ।
साध्या राजर्षिसङ्घाश्च धर्ममेतं समाश्रिताः ।
अप्रमत्तास्ततः स्वर्गं प्राप्ताः पुण्यैः स्वकर्मभिः ॥ ॥ १२-२१-२१ (७३४३५)

इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि एकविंशोऽध्यायः
॥ २१.।
Mahabharata - Shanti Parva - Chapter Footnotes

१२-२१-३ यदा प्रसीदति तदा तुष्टिः प्रतितिष्ठतीति पूर्वेण संबन्धः ॥
१२-२१-७ साम प्रीतिम् ।व्यायामं यत्नम् ॥
१२-२१-१२ प्रजने पुत्रोत्पादनम् ॥
१२-२१-१५ प्रग्रहे संग्रहे ॥

---

शन्तिपर्व-अध्यय०२२
॥ श्रीः ॥
१२.२२. अध्यायः २२

Mahabharata - Shanti Parva - Chapter Topics
युधिष्ठिरंप्रत्यर्जुनवचनम् ॥१.।
Mahabharata - Shanti Parva - Chapter Text

१२-२२-० (७३९०५)
वैशंपायन उवाच।१२-२२-०क्ष् (६०९७)
अस्मिन्नेवान्तरे वाक्यं पुनरेवार्जुनोऽब्रवीत् ।
निर्विण्णमनसं ज्येष्ठमिदं भ्रातरमच्युतम् ॥१२-२२-१ (७३९०६)
क्षत्रधर्मेण धर्मज्ञ प्राप्य राज्यं सुदुर्लभम् ।
जित्वा चारीन्नरश्रेष्ठ तप्यते किं भृशं भवान् ॥१२-२२-२ (७३९०७)
क्षत्रियाणां महाराज संग्रामे निधनं मतम् ।
विशिष्टं बहुभिर्यज्ञैः क्षत्रधर्ममनुस्मर ॥१२-२२-३ (७३९०८)
ब्राह्मणानां तपस्त्यागः प्रेत्य धर्मविधिः स्मृतः ।
क्षत्रियाणां च निधनं संग्रामे विहितं प्रभो ॥१२-२२-४ (७३९०९)
क्षात्रधर्मो महारौद्रः शस्त्रनित्य इति स्मृतः ।
वधश्च भरतश्रेष्ठ काले शस्त्रेण संयुगे ॥१२-२२-५ (७३९१०)
ब्राह्मणस्यापि चेद्राजन्क्षत्रधर्मेण वर्ततः ।
प्रशस्तं जीवितं लोके क्षत्रं हि ब्रह्मसंभवम् ॥१२-२२-६ (७३९११)
न त्यागो न पुनर्यज्ञो न तपो मनुजेश्वर ।
क्षत्रियस्य विधीयन्ते न परस्वोपजीवनम् ॥१२-२२-७ (७३९१२)
स भवान्सर्वधर्मज्ञो धर्मात्मा भरतर्षभ ।
राजा मनीषी निपुणो लोके दृष्टपरावरः ॥१२-२२-८ (७३९१३)

त्यक्त्वा संतापजं शोकं दंशितो भव कर्मणि ।
क्षत्रियस्य विशेषेण हृदयं वज्रसन्निभम् ॥ १२-२२-९ (७३९१४)
जित्वाऽरीन्क्षत्रधर्मेण प्राप्य राज्यमकण्टकम् ।
विजितात्मा मनुष्येन्द्र यज्ञदानपरो भव ॥ १२-२२-१० (७३९१५)
इन्द्रो वै ब्रह्मणः पुत्रः क्षत्रियः कर्मणाऽभवत् ।
ज्ञातीनां पापवृत्तीनां जघान नवतीर्नव ॥ १२-२२-११ (७३९१६)
तच्चास्य कर्म पूज्यं च प्रशस्यं च विशांपते ।
तेनेन्द्रत्वं समापेदे देवानामिति नः श्रुतम् ॥ १२-२२-१२ (७३९१७)
स त्वं यज्ञैर्महाराज यजस्व बहुदक्षिणैः ।
यथैवेन्द्रो मनुष्येन्द्र चिराय विगतज्वरः ॥ १२-२२-१३ (७३९१८)
मा त्वमेवं गते किंचिच्छोचेथाः क्षत्रियर्षभ ।
गतास्ते क्षत्रधर्मेण शस्त्रपूताः परां गतिम् ॥ १२-२२-१४ (७३९१९)
भवितव्यं तथा तच्च यद्वृत्तं भरतर्षभ ।
दिष्टं हि राजशार्दूल न शक्यमतिवर्तितुम् ॥ ॥ १२-२२-१५ (७३९२०)

इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि द्वाविंशोऽध्यायः
॥ २२.।
Mahabharata - Shanti Parva - Chapter Footnotes

१२-२२-१ अच्युतं धर्मात् ॥
१२-२२-४ त्यागः संन्यासः ॥
१२-२२-७ यज्ञ आत्ययज्ञः ।समाधिरिति याव्नत् ॥
१२-२२-९ दंशितः सन्नद्धः ॥
१२-२२-११ ब्रह्मणः कश्यपस्य ।नवतीर्नव दशाधिक शताष्टकम् ॥
१२-२२-१२ इन्द्रत्वमैश्वर्यम् ॥

---

शन्तिपर्व-अध्यय०२३
॥ श्रीः ॥
१२.२३. अध्यायः २३

Mahabharata - Shanti Parva - Chapter Topics
व्यासेन युधिष्ठिरंप्रति शङ्खलिखितोपाख्यानकथनपूर्वकं
क्षात्रधर्मस्वीकरणचोदना ॥ १.।
Mahabharata - Shanti Parva - Chapter Text

१२-२३-० (७४४१३)

वैशंपायन उवाच। १२-२३-०क्ष् (६१५६)
एवमुक्तस्तु कौन्तेयो गुडाकेशेन भारत ।
नोवाच किंचित्कौरव्यस्ततो द्वैपायनोऽब्रवीत् ॥ १२-२३-१ (७४४१४)
व्यास उवाच। १२-२३-२क्ष् (६१५७)
बीभत्सोर्वचनं सौम्य सत्यमेतद्युधिष्ठिर ।
शास्त्रदृष्टः परो धर्मः स्मृतो गार्हस्थ्य आश्रमः ॥ १२-२३-२ (७४४१५)
स्वधर्मं चर धर्मज्ञ यथाशास्त्रं यथाविधि ।
न हि गार्हस्थ्यमुत्सृज्य तवारण्यं विधीयते ॥ १२-२३-३ (७४४१६)
गृहस्थं हि सदा देवाः पितरोऽतिथयस्तथा ।
भृत्याश्चैवोपजीवन्ति तान्भरस्व महीपते ॥ १२-२३-४ (७४४१७)
वयांसि पशवश्चैव भूतानि च जनाधिप ।
गृहस्थैरेव धार्यन्ते तस्माच्छ्रेष्ठो गृहाश्रमी ॥ १२-२३-५ (७४४१८)
सोऽयं चतुर्णामेतेषामाश्रमाणां दुराचरः ।
तं चराद्य विधिं पार्थ दुश्चरं दुर्बलेन्द्रियैः ॥ १२-२३-६ (७४४१९)
वेदज्ञानं च ते कृत्स्नं तपश्चाचरितं महत् ।
पितृपैतामहं राज्यं धुर्यवद्वोढुमर्हसि ॥ १२-२३-७ (७४४२०)
तपो यज्ञस्तथा विद्या भैक्ष्यमिन्द्रियसंयमः ।
ध्यानं विद्या समुत्थानं संतोषश्च श्रियं प्रति ।
तथा ह्येकान्तशीलत्वं तुष्टिर्दानं च शक्तितः ॥ १२-२३-८ (७४४२१)
ब्राह्मणानां महाराज चेष्टा संसिद्धिकारिका ।
क्षत्रियाणां तु वक्ष्यामि तवापि विदितं पुनः ॥ १२-२३-९ (७४४२२)
यज्ञो विद्या समुत्थानमसंतोषः श्रियं प्रति ।
दण्डधारणमुग्रत्वं प्रजानां परिपालनम् ॥ १२-२३-१० (७४४२३)
वेदज्ञानं तथा कृत्स्नं तपः सुचरितं तथा ।
द्रविणोपार्जनं भूरि पात्रे च प्रतिपादनम् ॥ १२-२३-११ (७४४२४)
एतानि राज्ञां कर्माणि सुकृतानि विशांपते ।
इमं लोकममुं चैव साधयन्तीति नः श्रुतम् ॥ १२-२३-१२ (७४४२५)
एषां ज्यायस्तु कौन्तेय दण्डधारणमुच्यते ।
बलं हि क्षत्रिये नित्यं बले दण्डः समाहितः ॥ १२-२३-१३ (७४४२६)
एताश्चेष्टाः क्षत्रियाणां राजन्संसिद्धिकारिकाः ।
अपि गाथामिमां चापि बृहस्पतिरगायत ॥ १२-२३-१४ (७४४२७)
भूमिरेतौ निगिरति सर्पो बिलशयानिव ।
राजानं चाविरोद्धारं ब्राह्मणं चाप्रवासिनम् ॥ १२-२३-१५ (७४४२८)
सुद्युम्नश्चापि राजर्षिः श्रूयते दण्डधारणात् ।
प्राप्तवान्परमां सिद्धिं दक्षः प्राचेतसो यथा ॥ १२-२३-१६ (७४४२९)
युधिष्ठिर उवाच। १२-२३-१७क्ष् (६१५८)

भगवन्कर्मणा केन सुद्युम्नो वसुधाधिपः ।
संसिद्धिं परमां प्राप्तः श्रोतुमिच्छामि तं नृपम् ॥ १२-२३-१७ (७४४३०)
व्यास उवाच। १२-२३-१८क्ष् (६१५९)
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
शङ्खश्च लिखितश्चास्तां भ्रातरौ संशितव्रतौ ॥ १२-२३-१८ (७४४३१)
तयोरावसथावास्तां रमणीयौ पृथक्पृथक् ।
नित्यपुष्पफलैर्वृक्षैरुपेतौ बाहुदामनु ॥ १२-२३-१९ (७४४३२)
ततः कदाचिल्लिखितः शङ्खस्याश्रममागतः ।
यदृच्छयाऽथ शङ्खोपि निष्क्रान्तोऽभवदाश्रमात् ॥ १२-२३-२० (७४४३३)
सोऽभिगम्याश्रमं भ्रातुश्चंक्रमँल्लिखितस्तदा ।
फलानि शातयामास सम्यक्परिणतान्युत ॥ १२-२३-२१ (७४४३४)
तान्युपादाय विस्रब्धो भक्षयामास स द्विजः ।
तस्मिंश्च भक्षयत्येव शङ्खोऽप्याश्रममागतः ॥ १२-२३-२२ (७४४३५)
भक्षयन्तं तु तं दृष्ट्वा शङ्खो भ्रातरमब्रवीत् ।
कुतः फलान्यवाप्तानि हेतुना केन खादसि ॥ १२-२३-२३ (७४४३६)
सोऽब्रवीद्भ्रातरं ज्येष्ठमुपसृत्याभिवाद्य च ।
इत एव गृहीतानि मयेति प्रहसन्निव ॥ १२-२३-२४ (७४४३७)
तमब्रवीत्तथा शङ्खस्तीव्ररोषसमन्वितः ।
स्तेयं त्वया कृतमिदं फलान्याददता स्वयम् ॥ १२-२३-२५ (७४४३८)
गच्छ राजानमासाद्य स्वकर्म कथयस्व वै ।
अदत्तादानमेवं हि कृतं पार्थिवसत्तम ॥ १२-२३-२६ (७४४३९)
स्तेनं मां त्वं विदित्वा च स्वधर्ममनुपालय ।
शीघ्रं धारय चोरस्य मम दण्डं नराधिप ॥ १२-२३-२७ (७४४४०)
इत्युक्तस्तस्य वचनात्सुद्युम्न स नराधिपम् ।
अभ्यगच्छन्महाबाहो लिखितः संशितव्रतः ॥ १२-२३-२८ (७४४४१)
सुद्युम्नस्त्वन्तपालेभ्यः श्रुत्वा लिखितमागतम् ।
अभ्यगच्छत्सहामात्यः पद्भ्यामेव जनेश्वरः ॥ १२-२३-२९ (७४४४२)
तमब्रवीत्समागम्य स राजा धर्मवित्तमम् ।
किमागमनमाचक्ष्व भगवन्कृतमेव तत् ॥ १२-२३-३० (७४४४३)
एवमुक्तः स विप्रर्षिः सुद्युम्नमिदमब्रवीत् ।
प्रतिश्रुत्य करिष्येति श्रुत्वा तत्कर्तुमर्हसि ॥ १२-२३-३१ (७४४४४)
अनिसृष्टानि गुरुणा फलानि मनुजर्षभ ।
भक्षितानि महाराज तत्र मां शाधि माचिरम् ॥ १२-२३-३२ (७४४४५)
सुद्युम्न उवाच। १२-२३-३३क्ष् (६१६०)
प्रमाणं चेन्मतो राजा भवतो दण्डधारणे ।
अनुज्ञायामपि तथा हेतुः स्याद्ब्राह्मणर्षभ ॥ १२-२३-३३ (७४४४६)

स भवानभ्यनुज्ञातः शुचिकर्मा महाव्रतः ।
ब्रूहि कामानतोऽन्यांस्त्वं करिष्यामि हि ते वचः ॥ १२-२३-३४ (७४४४७)
व्यास उवाच। १२-२३-३५क्ष् (६१६१)
संछन्द्यमानो ब्रह्मर्षिः पार्थिवेन महात्मना ।
नान्यं स वरयामास तस्माद्दण्डादृते वरम् ॥ १२-२३-३५ (७४४४८)
ततः स पृथिवीपालो लिखितस्य महात्मनः ।
करौ प्रच्छेदयामास धृतदण्डो जगाम सः ॥ १२-२३-३६ (७४४४९)
स गत्वा भ्रातरं शङ्खमार्तरूपोऽब्रवीदिदम् ।
धृतदण्डस्य दुर्बुद्धेर्भवांस्तत्क्षन्तुमर्हति ॥ १२-२३-३७ (७४४५०)
शङ्ख उवाच। १२-२३-३८क्ष् (६१६२)
न कुप्ये तव धर्मज्ञ न त्वं दूषयसे मम ।
ग्सुनिर्मलं कुलं ब्रह्मन्नस्मिञ्जगति विश्रुतम्।'
धर्मस्तु ते व्यतिक्रान्तस्ततस्ते निष्कृतिः कृता ॥ १२-२३-३८ (७४४५१)
त्वं गत्वा बाहुदां शीघ्रं तर्पयस्व यथाविधि ।
देवानृषीन्पितृंश्चैव मा चाधर्मे मनः कृथाः ॥ १२-२३-३९ (७४४५२)
ग्ब्रह्महत्यां सुरापानं स्तेयं गुर्वङ्गनागमम्।'
महान्ति पातकान्याहुः संयोगं चैव तैः सह ॥ १२-२३-४० (७४४५३)
न स्तेयसदृशं ब्रह्मन्महापातकमस्ति हि ।
जगत्यस्मिन्महाभाग ब्रह्महत्यासमं हि तत् ॥ १२-२३-४१ (७४४५४)
सर्वपातकिनां ब्रह्मन्दण्डः शारीर उच्यते ।
तस्करस्य विशेषेण नान्यो दण्डो विधीयते ॥ १२-२३-४२ (७४४५५)
ब्राह्मणः क्षत्रियो वाऽपि वैश्यः शूद्रोऽथवा द्विज ।
सर्वे कामकृते पापे हन्तव्या न विचारणा ॥ १२-२३-४३ (७४४५६)
राजभिर्धृतदण्डा वै कृत्वा पापानि मानवाः ।
निर्मलाः स्वर्गमायान्ति सन्तः सुकृतिनो यथा ॥ १२-२३-४४ (७४४५७)
उद्धृतं नः कुलं ब्रह्मन्नाज्ञादण्डे धृते त्वयि ॥' १२-२३-४५ (७४४५८)
तस्य तद्वचनं श्रुत्वा शङ्खस्य लिखितस्तदा ।
अवगाह्यापगां पुण्यामुदकार्थं प्रचक्रमे ॥ १२-२३-४६ (७४४५९)
प्रादुरास्तां ततस्तस्य करौ जलजसन्निभौ ।
ततः स विस्मितो भ्रातुर्दर्शयामास तौ करौ ॥ १२-२३-४७ (७४४६०)
ततस्तमब्रवीच्छङ्खस्तपसेदं कृतं मया ।
मा च तेऽव विशङ्का भूद्दैवमत्र विधीयते ॥ १२-२३-४८ (७४४६१)
लिखित उवाच। १२-२३-४९क्ष् (६१६३)
किंतु नाहं त्वया पूतः पूर्वमेव महाद्युते ।
यस्य ते तपसो वीर्यमीदृशं द्विजसत्तम ॥ १२-२३-४९ (७४४६२)
शङ्ख उवाच। १२-२३-५०क्ष् (६१६४)

एवमेतन्मया कार्यं नाहं दण्डधरस्तव ।
स च पूतो नरपतिस्त्वं चापि पितृभिः सह ॥ १२-२३-५० (७४४६३)
व्यास उवाच। १२-२३-५१क्ष् (६१६५)
स राजा पाण्डवश्रेष्ठ श्रेयान्वै तेन कर्मणा ।
प्राप्तवान्परमां सिद्धिं दक्षः प्राचेतसो यथा ॥ १२-२३-५१ (७४४६४)
एष धर्मः क्षत्रियाणां प्रजानां परिपालनम् ।
उत्पथेभ्यो महाराज मा स्म शोके मनः कृथाः ॥ १२-२३-५२ (७४४६५)
भ्रातुरस्य हितं वाक्यं शृणु धर्मज्ञसत्तम ।
दण्ड एव हि राजेन्द्र क्षत्रधर्मो न मुण्डनम् ॥ ॥ १२-२३-५३ (७४४६६)

इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि त्रयोविंशोऽध्यायः ॥
Mahabharata - Shanti Parva - Chapter Footnotes

१२-२३-२ गार्हस्थ्यः गृहस्थस्यायं गार्हस्थ्यः ॥
१२-२३-१५ बिलशयान्मूषिकान् । अप्रवासिनं गृहादिसङ्गिनम्। सर्पो बिलशयाविवेति ङ. थ. पाठः ॥
१२-२३-१९ बाहुदां नदीमनु तत्समीपे ॥
१२-२३-२१ शङ्खस्य लिखितस्तदेति झ । पाठः ॥
१२-२३-२४ उपस्पृश्याभिवाद्य चेति ङ. थ । पाठः ॥
१२-२३-२६ हे पार्थिवसत्तम मया अदत्तादानं कृतमित्यस्मै राज्ञे कथयस्वेति संबन्धः ॥
१२-२३-२९ अन्तपालेभ्यो द्वारपालेभ्यः ॥
१२-२३-३१ करिष्येतीति संधिरार्षः ॥
१२-२३-३२ अनिसृष्टान्यदत्तानि । गुरुणा ज्येष्ठभ्रात्रा ॥
१२-२३-३३ यथा दण्डधारणे राजा प्रमाणं तथाऽनुज्ञायां हेतुः प्रमाणम् ॥
१२-२३-३४ शुचिकर्मा मदनुज्ञयैव शोधितदोषः ॥
१२-२३-३८ मम माम् निष्कृतिः प्रायश्चित्तम् ॥
१२-२३-४६ उदकस्यार्थं प्रयोजनं आचमनादि कर्तुमिति शेषः ॥

---

शन्तिपर्व-अध्यय०२४
॥ श्रीः ॥
१२.२४. अध्यायः २४

Mahabharata - Shanti Parva - Chapter Topics
व्यासेन युधिष्ठिरंप्रति राजधर्मकथनपर्वकं राज्यपालनचोदना ॥ १.।
Mahabharata - Shanti Parva - Chapter Text

१२-२४-० (७५११७)
वैशंपायन उवाच। १२-२४-०क्ष् (६२३०)
पुनरेव महर्षिस्तं कृष्णद्वैपायनोऽर्थवत् ।
अजातशत्रुं कौन्तेयमिदं वचनमब्रवीत् ॥ १२-२४-१ (७५११८)
अरण्ये वसतां तात भ्रातॄणां ते मनस्विनाम् ।
मनोरथा महाराज ये तत्रासन्युधिष्ठिर ॥ १२-२४-२ (७५११९)
तानि मे भरतश्रेष्ठ प्राप्नुवन्तु महारथाः ।
प्रशाधि पृथिवीं पार्थ ययातिरिव नाहुषः ॥ १२-२४-३ (७५१२०)
अरण्ये दुःखवसतिरनुभूता तपस्विभिः ।
दुःखस्यान्ते नरव्याघ्र सुखान्यनुभवन्तु वै ॥ १२-२४-४ (७५१२१)
धर्ममर्थं च कामं च भ्रातृभिः सह भारत ।
अनुभूय ततः पश्चात्प्रस्थाताऽसि विशांपते ॥ १२-२४-५ (७५१२२)
अर्थिनां च पितृणां च देवतानां च भारत ।
आनृण्यं गच्छ कौन्तेय ततः स्वर्गं गमिष्यसि ॥ १२-२४-६ (७५१२३)
सर्वमेधाश्वमेधाभ्यां यजस्व कुरुनन्दन ।
ततः पश्चान्महाराज गमिष्यसि परां गतिम् ॥ १२-२४-७ (७५१२४)
भ्रातृंश्च सर्वान्क्रतुभिः संयोज्य बहुदक्षिणैः ।
संप्राप्तः कीर्तिमतुलां पाण्डवेय गमिष्यसि ॥ १२-२४-८ (७५१२५)
विद्मस्ते पुरुषव्याघ्र वचनं कुरुसत्तम ।
शृणुष्वैवं यथा कुर्वन्न धर्माच्च्यवसे नृप ॥ १२-२४-९ (७५१२६)
आददानस्य विजयं विग्रहं च युधिष्ठिर ।
समानधर्मकुशलाः स्थापयन्ति नरेश्वर ॥ १२-२४-१० (७५१२७)
ग्प्रत्यक्षमनुमानं च उपमानं तथाऽऽगमः ।
अर्थापत्तिस्तथैतिह्यं संशयो निर्णयस्तथा ॥ १२-२४-११ (७५१२८)
आकार इङ्गितं चैव गतिश्चेष्टा च भारत ।
प्रतिज्ञा चैव हेतुश्च दृष्टान्तोपनयस्तथा ॥ १२-२४-१२ (७५१२९)
उक्तिर्निगमनं तेषां प्रमेयं च प्रयोजनम् ।
एतानि साधनान्याहुर्बहुवर्गप्रसिद्धये ॥ १२-२४-१३ (७५१३०)
प्रत्यक्षमनुमानं च सर्वेषां योनिरुच्यते ।
प्रमाणज्ञो हि शक्नोति दण्डयोनौ विचक्षणः ।
अप्रमाणवता नीतो दण्डो हन्यान्महीपतिम् ॥ १२-२४-१४ (७५१३१)
देशकालप्रतीक्षी यो दस्यून्मर्षयते नृपः ।
शास्त्रजां बुद्धिमास्थाय युज्यते नैनसा हि सः ॥ १२-२४-१५ (७५१३२)
आदाय बलिषड्भागं यो राष्ट्रं नाभिरक्षति ।
प्रतिगृह्णाति तत्पापं चतुर्थांशेन भूमिपः ॥ १२-२४-१६ (७५१३३)
निबोध च यथाऽऽतिष्ठन्धर्मान्न च्यवते नृपः ।

निग्रहाद्धर्मशास्त्राणामनुरुद्ध्यन्नपेतभीः ।
कामक्रोधावनादृत्य पितेव समदर्शनः ॥ १२-२४-१७ (७५१३४)
दैवेनाभ्याहतो राजा कर्मकाले महाद्युते ।
न साधयति यत्कर्म न तत्राहुरतिक्रमम् ॥१२-२४-१८ (७५१३५)
तरसा बुद्धिपूर्वं वा निग्राह्या एव शत्रवः ।
पापैः सह न संदध्याद्राज्यं पुण्यं च कारयेत् ॥१२-२४-१९ (७५१३६)
शूराश्चार्याश्च सत्कार्या विद्वांसश्च युधिष्ठिर ।
गोमिनो धनिनश्चैव परिपाल्या विशेषतः ॥१२-२४-२० (७५१३७)
व्यवाहरेषु धर्मेषु योक्तव्याश्च बहुश्रुताः ।
ग्प्रमाणज्ञा महीपाल न्यायशास्त्रावलम्बिनः ॥१२-२४-२१ (७५१३८)
वेदार्थतत्त्वविद्राजंस्तर्कशास्त्रबहुश्रुताः ।
मन्त्रे च व्यवहारे च नियोक्तव्या विजानता ॥१२-२४-२२ (७५१३९)
तर्कशास्त्रकृता बुद्धिर्धर्मशास्त्रकृता च या ।
दण्डनीतिकृता चैव त्रैलोक्यमपि साधयेत् ॥१२-२४-२३ (७५१४०)
नियोज्या वेदतत्त्वज्ञा यज्ञकर्मसु पार्तिव ।
वेदज्ञा ये च शास्त्रज्ञास्ते च राजन्सुबुद्धयः ॥१२-२४-२४ (७५१४१)
आन्वीक्षकीत्रयीवार्तादण्डनीतिषु पारगाः ।
ते तु सर्वत्र योक्तव्यास्ते च बुद्धेः परं गताः ॥' १२-२४-२५ (७५१४२)
गुणयुक्तेऽपि नैकस्मिन्विश्वसेत विचक्षणः ॥ १२-२४-२६ (७५१४३)
अरक्षिता दुर्विनीतो मानी स्तब्धोऽभ्यसूयकः ।
एनसा युज्यते राजा दुर्दान्त इति चोच्यते ॥१२-२४-२७ (७५१४४)
ये रक्ष्यमाणा हीयन्ते दैवेनृभ्याहता नृप ।
तस्करैश्चापि हीयन्ते सर्वं तद्राजकिल्विषम् ॥१२-२४-२८ (७५१४५)
सुमन्त्रिते सुनीते च सर्वतश्चोपपादिते ।
पौरुषे कर्मणि कृते नास्त्यधर्मो युधिष्ठिर ॥१२-२४-२९ (७५१४६)
विच्छिद्यन्ते समारब्धाः सिद्ध्यन्ते चापि दैवतः ।
कृते पुरुषकारे तु नैनः स्पृशति पार्थिवम् ॥१२-२४-३० (७५१४७)
अत्र ते राजशार्दूल वर्तयिष्ये कथामिमाम् ।
यद्वृत्तं पूर्वराजर्षेर्हयग्रीवस्य पाण्डव ॥१२-२४-३१ (७५१४८)
शत्रून्हत्वा हतस्याजौ शूरस्याक्लिष्टकर्मणः ।
असहायस्य संग्रामे निर्जितस्य युधिष्ठिर ॥१२-२४-३२ (७५१४९)
यत्कर्म वै निग्रहे शात्रवाणां
योगश्चाग्र्यः पालने मानवानाम् ।
कृत्वा कर्म प्राप्य कीर्तिं स युद्धा
द्वाजिग्रीवो मोदते स्वर्गलोके ॥ १२-२४-३३ (७५१५०)
संत्यक्तात्मा समरेष्वाततायी

शस्त्रैश्छिन्नो दस्युभिर्वध्यमानः ।
अश्वग्रीवः कर्मशीलो महात्मा
संसिद्धार्थो मोदते स्वर्गलोके ॥ १२-२४-३४ (७५१५१)
धनुर्यूपो रशना ज्या शरः स्रु
क्स्रुवः खड्गो रुधिरं यत्र चाज्यम् ।
रथो वेदी कामजो युद्धमग्नि
श्चातुर्होत्रं चतुरो वाजिमुख्याः ॥ १२-२४-३५ (७५१५२)
हुत्वा तस्मिन्यज्ञवह्नावथारी
न्पापान्मुक्तो राजसिंहस्तरस्वी ।
प्राणान्हुत्वा चावभृथे रणे स
वाजिग्रीवो मोदते देवलोके ॥ १२-२४-३६ (७५१५३)
राष्ट्रं रक्षन्बुद्धिपूर्वं नयेन
संत्यक्तात्मा यज्ञशीलो महात्मा ।
सर्वांल्लोकान्व्याप्य कीर्त्या मनस्वी
वाजिग्रीवो मोदते देवलोके ॥ १२-२४-३७ (७५१५४)
दैवीं सिद्धिं मानुषीं दण्डनीतिं
योगन्यासैः पालयित्वा महीं च ।
तस्माद्राजा धर्मशीलो महात्मा
वाजिग्रीवो मोदते देवलोके ॥ १२-२४-३८ (७५१५५)
विद्वांस्त्यागी श्रद्दधानः कृतज्ञ
स्त्यक्त्वा लोकं मानुषं कर्म कृत्वा ।
मेधाविनां विदुषां संमतानां
तनुत्यजां लोकमाक्रम्य राजा ॥ १२-२४-३९ (७५१५६)
सम्यग्वेदान्प्राप्य शास्त्राण्यधीत्य
सम्यग्राज्यं पालयित्वा महात्मा ।
चातुर्वर्ण्यं स्थापयित्वा स्वधर्मे
वाजिग्रीवो मोदते देवलोके ॥ १२-२४-४० (७५१५७)
जित्वा संग्रामान्पालयित्वा प्रजाश्च
सोमं पीत्वा तर्पयित्वा द्विजाग्र्यान् ।
युक्त्या दण्डं धारयित्वा प्रजानां
युद्धे क्षीणे मोदते देवलोके ॥ १२-२४-४१ (७५१५८)
वृत्तं यस्य श्लाघनीयं मनुष्याः
सन्तो विद्वांसोऽर्हयन्त्यर्हणीयम् ।
स्वर्गं जित्वा वीरलोकानवाप्य
सिद्धिं प्राप्तः पुण्यकीर्तिर्महात्मा ॥ ॥ १२-२४-४२ (७५१५९)

इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि
चतुर्विंशोऽध्यायः ॥ २४.।
Mahabharata - Shanti Parva - Chapter Footnotes

१२-२४-१ वचनं हिंसाप्रधानः क्षत्रधर्मो मे मास्त्वित्येवंरूपम् ॥
१२-२४-१० आददानस्य परस्वापहर्तुः ।समानधर्मः अविषमो
धर्मस्तत्र कुशलाः स्थापयन्ति अवश्यकर्तव्यतया व्यवस्थापयन्ति ॥
१२-२४-१५ मर्षयते दस्यूनपि न हन्ति ।एनसा तज्जेन पापेन ॥
१२-२४-१७ धर्मशास्त्राणां
निग्रहादतिलङ्घनाज्जातादधर्माद्धितोऽश्यवते ।तानि
अनुरुध्यन्नपेतभीश्च भवति ॥
१२-२४-१९ राष्ट्रपण्यं न कारयेति ड ।थ।पाठः ॥
१२-२४-२० गोमिनो गोमन्तः ॥
१२-२४-२७ स्तब्धो मान्यानमानयन् ।अभ्यसूयको गुणेषु दोषदृष्टिः ॥
१२-२४-२८ दैवेन अवर्षणादिना ॥
१२-२४-३३ यत्कर्म कर्तव्यं तत्कर्म कृत्वेति संबन्धः ॥
१२-२४-३५ कामजः क्रोधो युद्धमूलभूतोऽग्निः ।चातुर्होत्रं ब्रह्माद्याः
ऋत्विजः चतुरश्चत्वारः ॥
१२-२४-३७ संत्यक्तात्मा त्यक्ताहकारः ॥
१२-२४-३८ योगः क्रियायामुत्साहो न्यासा अभिमानत्यागास्तैर्युक्तां दैवी
सिद्धिं यज्ञादिक्रियामन्यदीयां मानुषीं च सिद्धिं दण्डनीतिं महीं
च पालयित्वेति योजना ।स्वयं च यज्ञशीलः ॥
१२-२४-३९ मानुषं लोकमिति संबन्धः ।तनुत्यजां प्रयागादौ ॥

---

शन्तिपर्व-अध्यय०२५
॥ श्रीः ॥
१२.२५. अध्यायः २५

Mahabharata - Shanti Parva - Chapter Topics
व्यासेन युधिष्ठिरं प्रति सेनजिद्वचनानुवादपूर्वकं
राजधर्मकथनम् ॥ १.।
Mahabharata - Shanti Parva - Chapter Text

१२-२५-० (६५६४७)
वैशंपायन उवाच।१२-२५-०क्ष् (५३७६)
द्वैपायनवचः श्रुत्वा कुपिते च धनञ्जये ।
व्यासमामन्त्र्य कौन्तेयः प्रत्युवाच युधिष्ठिरः ॥ १२-२५-१ (६५६४८)

युधिष्ठिर उवाच। १२-२५-२क्ष् (५३७७)
न पार्थिवमिदं राज्यं न भोगाश्च पृथग्विधाः ।
प्रीणयन्ति मनो मेऽद्य शोको मां दारयत्ययम् ॥ १२-२५-२ (६५६४९)
श्रुत्वा वीरविहीनानामपुत्राणां च योषिताम् ।
परिदेवयमानानां न शान्तिं मनसा लभे ॥ १२-२५-३ (६५६५०)
इत्युक्तः प्रत्युवाचेदं व्यासो योगविदांवरः ।
युधिष्ठिरं महाप्राज्ञो धर्मज्ञो वेदपारगः ॥ १२-२५-४ (६५६५१)
व्यास उवाच। १२-२५-५क्ष् (५३७८)
न कर्मणा लभ्यते चेज्यया वा
नाप्यस्ति दाता पुरुषस्य कश्चित् ।
पर्याययोगाद्विहितं विधात्रा
कालेन सर्वं लभते मनुष्यः ॥ १२-२५-५ (६५६५२)
न बुद्धिशक्त्याऽऽध्ययनेन शक्यं
प्राप्तुं विशेषं मनुजैरकाले ।
मूर्खोऽपि चाप्नोति कदाचिदर्था
न्कालो हि सर्वं पुरुषस्य दाता ॥ १२-२५-६ (६५६५३)
न भूरकालेषु फलं ददाति
शिल्पानि मन्त्राश्च तथौषधानि ।
तान्येव कालेन समाहितानि
सिद्ध्यन्ति वर्धन्ति च भूतिकाले ॥ १२-२५-७ (६५६५४)
कालेन शीघ्राः प्रवहन्ति वाताः
कालेन वृष्टिर्जलदानुपैति ।
कालेन पद्मोत्पलवज्जलं च
कालेन पुष्यन्ति वनेषु वृक्षाः ॥ १२-२५-८ (६५६५५)
कालेन कृष्णाश्च सिताश्च रात्र्यः
कालेन चन्द्रः परिपूर्णबिम्बः ।
नाकालतः पुष्पफलं द्रुमाणां
नाकालवेगाः सरितो वहन्ति ॥ १२-२५-९ (६५६५६)
नाकालमत्ताः खगपन्नगाश्च
मृगद्विपाः शैलमृगाश्च लोके ।
नाकालतः स्त्रीषु भवन्ति गर्भा
नायन्त्यकाले शिशिरोष्णवर्षाः ॥ १२-२५-१० (६५६५७)
नाकालतो म्रियते जायते वा
नाकालतो व्याहरते च बालः ।
नाकालतो यौवनमभ्युपैति
नाकालतो रोहति बीजमुप्तम् ॥ १२-२५-११ (६५६५८)

नाकालतो भानुरुपैति योगं
नाकालतोऽस्तं गिरिमभ्युपैति ।
नाकालतो वर्धते हीयते च
चन्द्रः समुद्रोऽपि महोर्मिमाली ॥ १२-२५-१२ (६५६५९)
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
गीतं राज्ञा सेनजिता दुःखार्तेन युधिष्ठिर ॥१२-२५-१३ (६५६६०)
सर्वानेवैष पर्यायो मर्त्यान्स्पृशति दुःसहः ।
कालेन परिपक्वा हि म्रियन्ते सर्वपार्थिवाः ॥१२-२५-१४ (६५६६१)
घ्नन्ति चान्यान्नरान्राजंस्तानप्यन्ये तथा नराः ।
संज्ञैषा लौकिकी राजन्न हिनस्ति न हन्यते ॥१२-२५-१५ (६५६६२)
हन्तीति मन्यते कश्चिन्न हन्तीत्यपि चापरः ।
स्वभावतस्तु नियतौ भूतानां प्रभवाप्ययौ ॥१२-२५-१६ (६५६६३)
नष्टे धने वा दारे वा पुत्रे पितरि वा मृते ।
अहो दुःखमिति ध्यायन्दुःखस्यापचितिं चरेत् ॥१२-२५-१७ (६५६६४)
स किं शोचसि मूढः सञ्शोच्यान्किमनुशोचसि ।
पश्य दुःखेषु दुःखानि भयेषु च भयान्यपि ॥१२-२५-१८ (६५६६५)
आत्माऽपि चायं न मम सर्वाऽपि पथिवी मम ।
यथा मम तथाऽन्येषामिति पश्यन्न मुह्यति ॥१२-२५-१९ (६५६६६)
शोकस्थानसहस्राणि हर्षस्थानशतानि च ।
दिवसेदिवसे मूढमाविशन्ति न पण्डितम् ॥१२-२५-२० (६५६६७)
एवमेतानि कालेन प्रियद्वेष्याणि भागशः ।
जीवेषु परिवर्तन्ते दुःखानि च सुखानि च ॥१२-२५-२१ (६५६६८)
दुःखमेवास्ति न सुखं तस्मात्तदुपलभ्यते ।
तृष्णार्तिप्रभवं दुःखं दुःखार्तिप्रभवं सुखम् ॥१२-२५-२२ (६५६६९)
सुखस्यानन्तरं दुःखं दुःखस्यानन्तरं सुखम् ।
न नित्यं लभते दुःखं न नित्यं लभते सुखम् ॥१२-२५-२३ (६५६७०)
सुखमेव हि दुःखान्तं कदाचिद्दुःखतः सुखम् ।
तस्मादेतद्द्वयं जह्याद्य इच्छेच्छाश्वतं सुखम् ॥१२-२५-२४ (६५६७१)
सुखान्तप्रभवं दुःखं दुःखान्तप्रभवं सुखम् ।
यन्निमित्तो भवेच्छोकस्तापो वा दुःखमूर्च्छितः ।
आयासो वाऽपि यन्मूलस्तदेकाङ्गमपि त्यजेत् ॥ १२-२५-२५ (६५६७२)
सुखं वा यदि वा दुःखं प्रियं वा यदि वाऽप्रियम् ।
प्राप्तं प्राप्तमुपासीत हृदयेनापराजितः ॥१२-२५-२६ (६५६७३)
ईषदप्यङ्ग दाराणां पुत्राणामाचरन्प्रियम् ।
ततो ज्ञास्यसि कः कस्य केन वा कथमेव च ॥१२-२५-२७ (६५६७४)
ये च मूढतमा लोके ये च बुद्धेः परं गताः ।

त एव सुखमेधन्ते मध्यमः क्लिश्यते जनः ॥१२-२५-२८ (६५६७५)
इत्यब्रवीन्महाप्राज्ञो युधिष्ठिर स सेनजित् ।
परावरज्ञो लोकस्य धर्मवित्सुखदुःखवित् ॥१२-२५-२९ (६५६७६)
परदुःखेन दुःखी यो न स जातु सुखी भवेत् ।
दुःखानां हि क्षयो नास्ति जायते ह्यपरात्परम् ॥१२-२५-३० (६५६७७)
सुखं च दुःखं च भवाभवौ च
लाभालाभौ मरणं जीवितं च ।
पर्यायतः सर्वमवाप्तुवन्ति
तस्मान्न मुह्येन्न च संप्रहृष्येत् ॥ १२-२५-३१ (६५६७८)
दीक्षां राज्ञां संयुगे धर्ममाहु
र्योगं राज्ये दण्डनीतिं च सम्यक् ।
वित्तत्यागं दक्षिणां चैव यज्ञे
सम्यग्दानं पावनानीति विद्यात् ॥ १२-२५-३२ (६५६७९)
रक्षन्राज्यं बुद्धिपूर्वं नयेन
संत्यक्तात्मा यज्ञशीलो महात्मा ।
सर्वाल्लोकान्धर्मदृष्ट्यावलोक
न्नूर्ध्वं देहान्मोदते देवलोके ॥ १२-२५-३३ (६५६८०)
जित्वा संग्रामान्पालयित्वा च राष्ट्रं
सोमं पीत्वा वर्धयित्वा प्रजाश्च ।
युक्त्या दण्डं धारयित्वा प्रजानां
पश्चात्क्षीणायुर्मोदते देवलोके ॥ १२-२५-३४ (६५६८१)
ग्यजन्ति यज्ञान्विजयन्ति राज्यं
रक्षन्ति राष्ट्राणि प्रियाणि चैषाम् ।'
सम्यग्वेदान्प्राप्य शास्त्राण्यधीत्य
सम्यग्राज्यं पालयित्वा च राजा ।
चातुर्वर्ण्यं स्थापयित्वा स्वधर्मे
पूतात्मा वै मोदते देवलोके ॥ १२-२५-३५ (६५६८२)
यस्य वृत्तं नमस्यन्ति स्वर्गस्थस्यापि मानवाः ।
पौरजानपदामात्याः स राजा राजसत्तमः ॥ ॥१२-२५-३६ (६५६८३)

इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि
पञ्चविंशोऽध्यायः (क़)॥ २५.।
Mahabharata - Shanti Parva - Chapter Footnotes

१२-२५-१ कुपिते राज्यकारणात् ॥
१२-२५-३ वीरविहीनानां पतिहीनानाम् ॥

१२-२५-५ नलभ्यते वीरो हतवीराभिर्वीरपत्नीभिरित्यर्थः । नापि ताभ्यः कश्चित्पतिं दातुं समर्थोऽस्तीत्यर्थः ॥
१२-२५-७ नाभूतिकालेष्विति झ पाठः ॥
१२-२५-८ पुष्प्यन्तीति ड । पाठः ॥
१२-२५-१४ पर्यायः कालगतिः ॥
१२-२५-१७ अपचितिं प्रतीकारम् ॥
१२-२५-१८ दुःखेषु शोकजेषु मनस्तापेषु । दुःखानि शिरस्ताडनादीनि। दुःखादेर्द्विगुणीकरणं मूढकार्यमित्यर्थः ॥
१२-२५-२१ यानि प्रियाणि तान्येव काले दुःखानि भवन्ति । यानि द्वेष्याणि तान्येव सुखानि ॥
१२-२५-२२ तृष्णया याऽऽर्तिरनवस्थितचित्तता तज्जं दुःखम् । दुःखस्यार्तिर्विनाशस्तज्जं सुखम् ॥
१२-२५-२५ दुःखमूर्च्छितः दुःखेन वर्धितः । एकाङ्गमपि सर्पदष्टाङ्गुष्ठवत् त्यजेत् ॥
१२-२५-२७ केन हेतुना कथं केन प्रकारेण कस्य संबन्धीति ज्ञास्यति ॥
१२-२५-३१ भवाभवौ ऐश्वर्यानैश्वर्ये ॥
१२-२५-३३ संत्यक्तात्मा निरहंकारः ॥

Mahabharata - Shanti Parva - Chapter Text

क्व एतदनन्तरं एकोऽध्यायः ध । पाठेऽधिको दृश्यते। १२-२५अ-१क्ष् श्वैशंपायन उवाच। १२-२५अ-१अ अस्मिन्नेव प्रकरणे धनञ्जयमुदारधीः। १२-२५अ-१ब् अभिनीततरं वाक्यमित्युवाच युधिष्ठिरः ॥ १२-२५अ-२अ यदेतन्मन्यसे पार्थ न ज्यायोऽस्ति धनादिति। १२-२५अ-२ब् न स्वर्गो न सुखं नार्थो निर्धनस्येति तन्मृषा॥ १२-२५अ-३अ स्वाध्याययज्ञसंसिद्धा दृश्यन्ते वहवो जनाः। १२-२५अ-३ब् तपोरताश्च मुनयो येषां लोकाः सनातनाः॥ १२-२५अ-४अ ऋषीणां समयं शश्वद्ये रक्षन्ति धनञ्जय। १२-२५अ-४ब् आश्रिताः सर्वधर्मज्ञा देवास्तान्ब्राह्मणान्विदुः॥ १२-२५अ-५अ स्वाध्यायनिष्ठान्हि ऋषीञ्ज्ञाननिष्ठांस्तथाऽपरान्। १२-२५अ-५ब् बुद्ध्येथाः संततं चापि धर्मनिष्ठान्धनञ्जय॥ १२-२५अ-६अ ज्ञाननिष्ठेषु कार्याणि प्रतिष्ठाप्यानि पाण्डव। १२-२५अ-६ब् वैखानसानां वचनं यथा नो विदितं प्रभो॥ १२-२५अ-७अ अजाश्च पृश्नयश्चैव सिकताश्चैव भारत। १२-२५अ-७ब् अरुणाः केतवश्चैव स्वाध्यायेन दिवं गताः॥ १२-२५अ-८अ अवाप्यैतानि कर्माणि वेदोक्तानि धनञ्जय। १२-२५अ-८ब् दानमध्ययनं यज्ञो निग्रहश्चैव

दुर्ग्रहः॥ १२-२५अ-९अ दक्षिणेन च पन्थानमर्यम्णो ये दिवं गताः। १२-२५अ-९ब् एतान्क्रियावतां लोकानुक्तवान्पूर्वमप्यहम्॥ १२-२५अ-१०अ उत्तरेण तु पन्थानं नियमाद्यं प्रपश्यसि। १२-२५अ-१०ब् एते यागवतां लोका भान्ति पार्थ सनातनाः॥ १२-२५अ-११अ तत्रोत्तरां गतिं पार्थ प्रशंसन्ति पुराविदः। १२-२५अ-११ब् संतोषो वै स्वर्गतमः संतोषः परमं सुखम्॥ १२-२५अ-१२अ तुष्टेर्न किंचित्परमं सा सम्यक् प्रतितिष्ठति। १२-२५अ-१२ब् विनीतक्रोधहर्षस्य, सततं सिद्धिरुत्तमा॥ १२-२५अ-१३अ अत्राप्युदाहरन्तीमां गाथां गीतां ययातिना। १२-२५अ-१३ब् योऽभिप्रेत्याहरेत्कामान्कूर्मोऽङ्गानीव सर्वशः॥ १२-२५अ-१४अ यदा चायं न बिभेति यदा चास्मान्न बिभ्यति। १२-२५अ-१४ब् यदा नेच्छति न द्वेष्टि ब्रह्म संपद्यते तदा॥ १२-२५अ-१५अ यदा न भावं कुरुते सर्वभूतेषु पापकम्। १२-२५अ-१५ब् कर्मणा मनसा वाचा ब्रह्म संपद्यते तदा॥ १२-२५अ-१६अ विनीतमानमोहश्च बहुसङ्गविवर्जितः। १२-२५अ-१६ब् तदात्मज्योतिषः साधो निर्वाणमुपपद्यते॥ १२-२५अ-१७अ इदं तु शृणु मे पार्थ ब्रुवतः संयतेन्द्रियः। १२-२५अ-१७ब् धर्ममन्ये वृत्तमन्ये धनमीहन्ति चापरे॥ १२-२५अ-१८अ धनहेतोर्य ईहेत तस्यानीहा गरीयसी। १२-२५अ-१८ब् भूयान्दोषो हि वित्तस्य यश्च धर्मस्तदाश्रयः॥ १२-२५अ-१९अ प्रत्यक्षमनुपश्यामि त्वमपि द्रष्टुमर्हसि। १२-२५अ-१९ब् वर्जनं वर्जनीयानामीहामनेन दुष्करम्॥ १२-२५अ-२०अ ये वित्तमभिपद्यन्ते सम्यक्त्वं तेषु दुर्लभम्। १२-२५अ-२०ब् द्रुह्यतः प्रैति तत्प्राहुः प्रतिकूलं यथातथम्॥ १२-२५अ-२१अ यस्तु संभिन्नवृत्तः स्याद्वीतशोकभयो नरः। १२-२५अ-२१ब् अल्पेन तृषितो द्रुह्यन् भ्रूणहत्यां न बुध्यते॥ १२-२५अ-२२अ दुष्यन्त्याददतो भृत्या नित्यं दस्युभयादिव। १२-२५अ-२२ब् दुर्लभं च धनं प्राप्य भृशं दत्वाऽनुतप्यते॥ १२-२५अ-२३अ अधनः कस्य किं वाच्यो विमुक्तः सर्वशः सुखी। १२-२५अ-२३ब् देवस्वमुपगृह्यैव धनेन न सुखी भवेत्॥ १२-२५अ-२४अ तत्र गाथां यज्ञगीतां कीर्तयन्ति पुराविदः। १२-२५अ-२४ब् त्रयीमुपाश्रितां लोके यज्ञसंस्तरकारिकाम्॥ १२-२५अ-२५अ यज्ञाय सृष्टानि धनानि धात्रा १२-२५अ-२५ब् यज्ञाय सृष्टः पुरुषो रक्षिता च। १२-२५अ-२५च् तस्मात्सर्वं यज्ञ एवोपयोज्यं १२-२५अ-२५द् धनं न कामाय हितं प्रशस्तम्॥ १२-२५अ-२६अ एतत्स्वार्थे च कौन्तेय धनं धनवतां वर। १२-२५अ-२६ब् धाता ददाति मर्त्येभ्यो यज्ञार्थमिति विद्धि तत्॥ १२-२५अ-२७अ तस्माद्बुद्ध्यन्ति पुरुषा

न हि तत्कस्यचिद्भवम्।१२-२५अ-२७ब् श्रद्दधानस्ततो लोको
दद्याच्चैव यजेत च॥१२-२५अ-२८अ लब्धस्य त्यागमित्याहुर्न
भोगं न च संक्षयम्।१२-२५अ-२८ब् तस्य किं संचयेनार्थः
कार्ये ज्यायसि तिष्ठति॥१२-२५अ-२९अ ये स्वधर्मादपेतेभ्यः
प्रयच्छन्त्यल्पबुद्धयः।१२-२५अ-२९ब् शतं वर्षाणि ते प्रेत्य
पुरीषं भुञ्जते जनाः॥१२-२५अ-३०अ अनर्हते यद्ददाति न
ददाति यदर्हते।१२-२५अ-३०ब् अर्हानर्हापरिज्ञानाद्दानधर्मोऽपि
दुष्करः॥१२-२५अ-३१अ लब्धानामपि वित्तानां बोद्धव्यौ
द्वावतिक्रमौ।१२-२५अ-३१ब् अपात्रे प्रतिपत्तिश्च पात्रे
चाप्रतिपादनम्॥ऽ

Mahabharata - Shanti Parva - Chapter Footnotes

१२-२५अ-४ समयं अध्ययनसंप्रदायस्याविच्छेदं आश्रिता आश्रमिणः
।ब्रह्मचारिण इत्यर्थः ॥
१२-२५अ-६ कार्याणि राजकार्याणि ।प्रतिष्ठाप्यानि
तद्वचसानुष्ठेयानीत्यर्थः।वैखानसानां वानप्रस्थानाम् ॥
१२-२५अ-७ अजादयो वालखिल्यवदृषीणां गणविशेषाः ॥
१२-२५अ-९ एतान् द्युरूपान् ।क्रियावतां कर्मिणाम् ॥
१२-२५अ-१० उत्तरेण उत्तरतः स्थितम् ॥
१२-२५अ-१२ सा तुष्टिः परमवैराग्याभिधा उत्तमा सिद्धिः
।विनीतक्रोधहर्षस्य क्रोधादिजयिनः सम्यक् प्रतितिष्ठति इतरस्य
तु नेत्यर्थः ॥
१२-२५अ-१६ आत्मज्योतिषः आत्मज्ञस्य ।निर्वाणं मोक्षः ॥
१२-२५अ-१७ वृत्तं शीलम् ।ईहन्ति ईहन्ते ॥
१२-२५अ-१८ धनहेतोः धर्माय वित्तस्यार्जने इति शेषः ।तदाश्रयो
धर्मो यज्ञादिस्तस्मिन्नपि भूयान्दोषोऽस्ति ॥
१२-२५अ-१९ ईहमानेन धनार्थिना ॥
१२-२५अ-२० सम्यक्त्वं साधुकर्म द्रुह्यतः ।द्रोहयुक्तानेव
तद्धनं प्रेति न त्वद्रोहानिति प्राहुः।हिंसां विना
धनप्राप्तिर्नास्तीत्यर्थः।प्राप्तमपि यथायथं सर्वथा प्रतिकूलं
नानाभयहेतुत्वात् ॥
१२-२५अ-२१ अल्पार्थेऽपि ब्रह्महत्यामर्जयतीत्यर्थः ॥
१२-२५अ-२२ दुर्लभं धनं प्राप्यानुकूलेभ्योऽपि भृत्येभ्यो
दत्त्वा दस्युभयादिव भृशमनुतप्यत इति संबन्धः ।वित्तव्यये
महद्दुःखं भवतीत्यर्थः ॥
१२-२५अ-२३ देवस्वं तथा त्रैवार्षिकाधिकान्नो यः सहि सोमं पिबेद्द्विजः

।प्राक्सौमिकीः क्रियाः कुर्याद्यस्यान्नं वार्षिकं भवेदिति स्मृतेरल्पमपि संचितं धनं देवस्वमेव।तदप्युपसंगृह्य देवेभ्योऽदत्त्वैव न तेन तावतापि सुखी भवेत्किं तु लाभाल्लोभः प्रवर्तत इतिन्यायेन तृष्णाधिक्याद्दुःखमेवानुभवतीत्यर्थः ॥
१२-२५अ-२४ गाथां वैदिकजने यज्ञप्रतिष्ठाकरीम् ॥
१२-२५अ-२६ चाद्यज्ञार्थेऽपि ॥
१२-२५अ-२८ इत्याहुः प्रशस्तमाहुरित्यर्थः ।कार्ये त्यागरूपे ॥

---

शन्तिपर्व-अध्यय०२६
॥ श्रीः ॥
१२.२६. अध्यायः २६

Mahabharata - Shanti Parva - Chapter Topics
युधिष्ठिरेण व्यासंप्रति निर्वेदवचनम् ॥१.।व्यासेन युधिष्ठिरंप्रति राज्यपालनविधानम् ॥२.।
Mahabharata - Shanti Parva - Chapter Text

१२-२६-० (७५७१५)
युधिष्ठिर उवाच।१२-२६-०क्ष् (६२६६)
अभिमन्यौ हते बाले द्रौपद्यास्तनयेषु च ।
धृष्टद्युम्ने विराटे च द्रुपदे च महीपतौ ॥१२-२६-१ (७५७१६)
वृषसेने च धर्मज्ञे धृष्टकेतौ तु पार्थिवे ।
तथाऽन्येषु नरेन्द्रेषु नानादेश्येषु संयुगे ॥१२-२६-२ (७५७१७)
न च मुञ्चति मां शोको ज्ञातिघातिनमातुरम् ।
राज्यकामुकमत्युग्रं स्ववंशोच्छेदकारिणम् ॥१२-२६-३ (७५७१८)
यस्याङ्के क्रीडमानेन मया विपरिवर्तितम् ।
स मया राज्यलुब्धेन गाङ्गेयो युधि पातितः ॥१२-२६-४ (७५७१९)
यदा ह्येनं विघूर्णन्तं मदर्थं पार्थसायकैः ।
तक्ष्यमाणं यथा वज्रैः प्रेक्षमाणं शिखण्डिनम् ॥१२-२६-५ (७५७२०)
जीर्णसिंहमिव प्राज्ञं नरसिंहं पितामहम् ।
कीर्यमाणं शरैर्दीप्तैर्दृष्ट्वा मे व्यथितं मनः ॥१२-२६-६ (७५७२१)
प्राङ्मुखं सीदमानं च रथात्पररथारुजम् ।
घूर्णमानं यथा शैलं तदा मे कश्मलोऽभवत् ॥१२-२६-७ (७५७२२)
यः सबाणधनुष्पाणिर्योधयामास भार्गवम् ।
बहून्यहानि कौरव्यः कुरुक्षेत्रे महामृधे ॥१२-२६-८ (७५७२३)
समेतं पार्थिवं क्षत्रं वाराणस्यां नदीसुतः ।

कन्यार्थमाह्वयद्वीरो रथेनैकेन संयुगे ॥१२-२६-९ (७५७२४)
येन चोग्रायुधो राजा चक्रवर्ती दुरासदः ।
दग्धश्चास्त्रप्रतापेन स मया युधि पातितः ॥१२-२६-१० (७५७२५)
स्वयं मृत्युं रक्षमाणः पाञ्चाल्यं यः शिखण्डिनम् ।
न बाणैः पातयामास सोऽर्जुनेन निपातितः ॥१२-२६-११ (७५७२६)
यदैनं पतितं भूमावपश्यं रुधिरोक्षितम् ।
तदैवाविशदन्युग्रो ज्वरो मां मुनिसत्तम ॥१२-२६-१२ (७५७२७)
येन संवर्धिता बाला येन स्म परिरक्षिताः ।
स मया राज्यलुब्धेन पापेन गुरुधातिना ।
अल्पकालस्य राज्यस्य कृते मूढेन पातितः ॥ १२-२६-१३ (७५७२८)
आचार्यश्च महेष्वासः सर्वपार्थिवपूजितः ।
अभिगम्य रणे मिथ्या पापेनोक्तः सुतं प्रति ॥१२-२६-१४ (७५७२९)
तन्मे दहति गात्राणि यन्मां गुरुरभाषत ।
सत्यमाख्याहि राजंस्त्वं यदि जीवति मे सुतः ॥१२-२६-१५ (७५७३०)
सत्यमामर्शयन्विप्रो मयि तत्परिपृष्टवान् ।
कुञ्जरं चान्तरं कृत्वा मिथ्योपचरितो मया ॥१२-२६-१६ (७५७३१)
सुभृशं राज्यलुब्धेन पापेन गुरुघातिना ।
सत्यकञ्चुकमुन्मुच्य मया स गुरुराहवे ॥१२-२६-१७ (७५७३२)
अश्वत्थामा हत इति निरुक्तः कुञ्जरे हते ।
काँल्लोकांस्तु गमिष्यामि कृत्वा कर्म सुदुष्करम् ॥१२-२६-१८ (७५७३३)
अघातयं च यत्कर्णं समरेष्वपलायिनम् ।
ज्येष्ठभ्रातरमत्युग्रः को मत्तः पापकृत्तमः ॥१२-२६-१९ (७५७३४)
अभिमन्युं च यद्बालं जातं सिंहमिवाद्रिषु ।
प्रावेशयमहं लुब्धो वाहिनीं द्रोणपालिताम् ॥१२-२६-२० (७५७३५)
तदाप्रभृति बीभत्सुं न शक्नोमि निरीक्षितुम् ।
कृष्णं च पुण्डरीकाक्षं किल्विषी भ्रूणहा यथा ॥१२-२६-२१ (७५७३६)
द्रौपदीं चाप्यदुःखार्हां पञ्चपुत्रैर्विनाकृताम् ।
शोचामि पृथिवीं हीनां पञ्चभिः पर्वतैरिव ॥१२-२६-२२ (७५७३७)
सोऽहमागस्करः पापः पृथिवीनाशकारकः ।
आसीन एवमेवेदं शोषयिष्ये कलेवरम् ॥१२-२६-२३ (७५७३८)
प्रायोपविष्टं जानीध्वमथ मां गुरुघातिनम् ।
जातिष्वन्यास्वपि यथा न भवेयं कुलान्तकृत् ॥१२-२६-२४ (७५७३९)
न भोक्ष्ये न च पानीयमुपयोक्ष्ये कथंचन ।
शोषयिष्ये प्रियान्प्राणानिहस्थोऽहं तपोधनाः ॥१२-२६-२५ (७५७४०)
यथेष्टं गम्यतां काममनुजाने प्रसाद्य वः ।
सर्वे मामनुजानीत त्यक्ष्यामीदं कलेवरम् ॥१२-२६-२६ (७५७४१)

वैशंपायन उवचा। १२-२६-२७क्ष् (६२६७)
तमेवंवादिनं पार्थं बन्धुशोकेन विह्वलम् ।
मैवमित्यब्रवीद्व्यासो निगृह्य मुनिसत्तमः ॥ १२-२६-२७ (७५७४२)
व्यास उवाच। १२-२६-२८क्ष् (६२६८)
अतिवेलं महाराज न शोकं कर्तुमर्हसि ।
पुनरुक्तं तु वक्ष्यामि दिष्टमेतदिति प्रभो ॥ १२-२६-२८ (७५७४३)
संयोगा विप्रयोगाश्च जातानां प्राणिनां ध्रुवम् ।
बुद्बुदा इव तोयेषु भवन्ति न भवन्ति च ॥ १२-२६-२९ (७५७४४)
सर्वे क्षयान्ता निचयाः पतनान्ताः समुच्छ्रयाः ।
संयोगा विप्रयोगान्ता मरणान्तं हि जीवितम् ॥ १२-२६-३० (७५७४५)
सुखं दुःखान्तमालस्यं दाक्ष्यं दुःखं सुखोदयम् ।
भूतिः श्रीर्ह्रीर्धृतिः कीर्तिर्दक्षे वसति नालसे ॥ १२-२६-३१ (७५७४६)
नालं सुखाय सुहृदो नाले दुःखाय शत्रवः ।
न च प्रज्ञालमर्थेभ्यो न सुखेभ्योऽप्यलं धनम् ॥ १२-२६-३२ (७५७४७)
यथा सृष्टोऽसि कौन्तेय धात्रा कर्मसु तत्करु ।
अत एव हि सिद्धिस्ते नेशस्त्वं ह्यात्मनो नृप ॥ ॥ १२-२६-३३ (७५७४८)

इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि षड्विशोऽध्यायः
॥ २६.।

Mahabharata - Shanti Parva - Chapter Footnotes

१२-२६-२ वृषसेने कर्णे ॥
१२-२६-७ पररथारुजं पररथानां पीडकम् ॥
१२-२६-१६ आमर्शयन्निश्चिन्वन् ॥
१२-२६-२८ अतिवेलमत्यर्थम् ॥
१२-२६-३१ आलस्यं तत्काले सुखमपि दुःखान्तम् । दाक्ष्यं तत्काले दुःखमपि सुखोदयम्। भूतिः अणिमादिः ॥

---

शन्तिपर्व-अध्यय०२७
॥ श्रीः ॥
१२.२७. अध्यायः २७

Mahabharata - Shanti Parva - Chapter Topics
व्यासेन युधिष्ठिरंप्रत्यश्मजनकसंवादानुवादपूर्वकं क्षात्रधर्मविधानम् ॥ १.।
Mahabharata - Shanti Parva - Chapter Text

१२-२७-० (६५६८४)
वैशंपायन उवाच। १२-२७-०क्ष् (५३७९)
ज्ञातिशोकाभितप्तस्य प्राणानिष्टांस्त्यजिष्यतः ।
ज्येष्ठस्य पाण्डुपुत्रस्य व्यासः शोकमपानुदत् ॥ १२-२७-१ (६५६८५)
व्यास उवाच। १२-२७-२क्ष् (५३८०)
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
अश्मगीतं नरव्याघ्र तन्निबोध युधिष्ठिर ॥ १२-२७-२ (६५६८६)
अश्मानं ब्राह्मणं प्राज्ञं वैदेहो जनको नृपः ।
संशयं परिपप्रच्छ दुःखशोकसमन्वितः ॥ १२-२७-३ (६५६८७)
जनक उवाच। १२-२७-४क्ष् (५३८१)
आगमे यदि वाऽपाये ज्ञातीनां द्रविणस्य च ।
नरेण प्रतिपत्तव्यं कल्याणं कथमिच्छता ॥ १२-२७-४ (६५६८८)
अश्मोवाच। १२-२७-५क्ष् (५३८२)
उत्पन्नमिममात्मानं नरस्यानन्तरं ततः ।
तानितान्यनुवर्तन्ते दुःखानि च सुखानि च ॥ १२-२७-५ (६५६८९)
तेषामन्यतरापत्तौ यद्यदेवोपसेवते ।
तदस्य चेतनामाशु हरत्यभ्रमिवानिलः ॥ १२-२७-६ (६५६९०)
अभिजातोऽस्मि सिद्धोऽस्मि नास्मि केवलमानुषः ।
इत्येभिर्हेतुभिस्तस्य त्रिभिश्चित्तं प्रसिच्यते ॥ १२-२७-७ (६५६९१)
संप्रसक्तमना भोगान्विसृज्य पितृसंचितान् ।
परिक्षीणः परस्वानामादानं साधु मन्यते ॥ १२-२७-८ (६५६९२)
तमतिक्रान्तमर्यादमाददानमसांप्रतम् ।
प्रतिषेधन्ति राजानो लुब्धा मृगमिवेषुभिः ॥ १२-२७-९ (६५६९३)
ये च विंशतिवर्षा वा त्रिंशद्वर्षाश्च मानवाः ।
परेण ते वर्षशतान्न भविष्यन्ति पार्थिव ॥ १२-२७-१० (६५६९४)
तेषां परमदुःखानां बुद्ध्या भैषज्यमाचरेत् ।
सर्वप्राणभृतां वृत्तं प्रेक्षमाणस्ततस्ततः ॥ १२-२७-११ (६५६९५)
मानसानां पुनर्योनिर्दुःखानां चित्तविभ्रमः ।
अनिष्टोपनिपातो वा तृतीयं नोपपद्यते ॥ १२-२७-१२ (६५६९६)
एवमेतानि दुःखानि तानि तानीह मानवम् ।
विविधान्युपवर्तन्ते तथा संस्पर्शजान्यपि ॥ १२-२७-१३ (६५६९७)
जरामृत्यू हि भूतानां खादितारौ वृकाविव ।
बलिनां दुर्बलानां च ह्रस्वानां महतामपि ॥ १२-२७-१४ (६५६९८)
न कश्चिज्जात्वतिक्रामेज्जरामृत्यू हि मानवः ।
अपि सागरपर्यन्तां विजित्येमां वसुंधराम् ॥ १२-२७-१५ (६५६९९)
सुखं वा यदि वा दुःखं भूतानां पर्युपस्थितम् ।

प्राप्तव्यमवशैः सर्वं परिहारो न विद्यते ॥१२-२७-१६ (६५७००)
पूर्वे वयसि मध्ये वाऽप्युत्तरे वा नराधिप ।
अवर्जनीयास्तेऽर्था वै काङ्क्षिता ये ततोऽन्यथा ॥१२-२७-१७ (६५७०१)
अप्रियैः सह संयोगो विप्रयोगश्च सुप्रियैः ।
अर्थानर्थौ सुखं दुःखं विधानमनुवर्तते ॥१२-२७-१८ (६५७०२)
प्रादुर्भावश्च भूतानां देहत्यागस्तथैव च ।
प्राप्तिव्यायामयोगश्च सर्वमेतत्प्रतिष्ठितम् ॥१२-२७-१९ (६५७०३)
गन्धवर्णरसस्पर्शा निवर्तन्ते स्वभावतः ।
तथैव सुखदुःखानि विधानमनुवर्तते ॥१२-२७-२० (६५७०४)
आसनं शयनं यानमुत्थानं पानभोजनम् ।
नियतं सर्वभूतानां कालेनैव भवत्युत ॥१२-२७-२१ (६५७०५)
वैद्याश्चाप्यातुराः सन्ति बलवन्तश्च दुर्बलाः ।
स्त्रीमन्तश्चापरे षण्ढा विचित्रः कालपर्ययः ॥१२-२७-२२ (६५७०६)
कुले जन्म तथा वीर्यमारोग्यं रूपमेव च ।
सौभाग्यमुपभोगश्च भवितव्येन लभ्यते ॥१२-२७-२३ (६५७०७)
सन्ति पुत्राः सुबहवो दरिद्राणामनिच्छताम् ।
नास्ति पुत्रः समृद्धानां विचित्रं विधिचेष्टितम् ॥१२-२७-२४ (६५७०८)
व्याधिरग्निर्जलं शस्त्रं बुभुक्षाश्वापदो विषम ।
ज्वरश्च मरणं जन्तोरुच्चाच्च पतनं तथा ॥१२-२७-२५ (६५७०९)
निर्याणे यस्य यद्दिष्टं तेन गच्छति सेतुना ।
दृश्यते नाप्यतिक्रामन्न निष्कान्तोऽथवा पुनः ।
दृश्यते चाप्यतिक्रामन्न निग्राह्योऽथवा पुनः ॥ १२-२७-२६ (६५७१०)
दृश्यते हि युवैवेह विनश्यन्वसुमान्नरः ।
दरिद्रश्च परिक्लिष्टः शतवर्षो जरान्वितः ॥१२-२७-२७ (६५७११)
अकिञ्चनाश्च दृश्यन्ते पुरुषाश्चिरजीविनः ।
समृद्धे च कुले जाता विनश्यन्ति पतङ्गवत् ॥१२-२७-२८ (६५७१२)
प्रायेण श्रीमतां लोके भोक्तुं शक्तिर्न विद्यते ।
दरिद्राणां तु भूयिष्ठं काष्ठमश्मा हि जीर्यते ॥१२-२७-२९ (६५७१३)
अहमेतत्करोमीति मन्यते कालनोदितः ।
यद्यदिष्टमसंतोषाद्दुरात्मा पापमाचरेत् ॥१२-२७-३० (६५७१४)
मृगयाक्षाः स्त्रियः पानं प्रसङ्गा निन्दिता बुधैः ।
दृश्यन्ते पुरुषाश्चात्र संप्रयुक्ता बहुश्रुताः ॥१२-२७-३१ (६५७१५)
इति कालेन सर्वार्थानीप्सितानीप्सितानिह ।
स्पृशन्ति सर्वभूतानि निमित्तं नोपलभ्यते ॥१२-२७-३२ (६५७१६)
वायुमाकाशमग्निं च चन्द्रादित्यावहः क्षपे ।
ज्योतींषि सरितः शैलान्कः करोति बिभर्ति च ॥१२-२७-३३ (६५७१७)

शीतमुष्णं तथा वर्षं कालेन परिवर्तते ।
एवमेव मनुष्याणां सुखदुःखे नरर्षभ ॥१२-२७-३४ (६५७१८)
नौषधानि न शस्त्राणि न होमा न पुनर्जपाः ।
त्रायन्ते मृत्युनोपेतं जरया चापि मानवम् ॥१२-२७-३५ (६५७१९)
यथा काष्ठं च काष्ठं च समेयातां महोदधौ ।
समेत्य च व्यपेयातां तद्वद्भूतसमागमः ॥१२-२७-३६ (६५७२०)
ये च निष्परुषैरुक्तगीतवाद्यैरुपस्थिताः ।
ये चानाथाः परान्नादाः कालस्तेषु समक्रियः ॥१२-२७-३७ (६५७२१)
मातापितृसहस्राणि पुत्रदारशतानि च ।
संसारेष्वनुभूतानि कस्य ते कस्य वा वयम् ॥१२-२७-३८ (६५७२२)
नैवास्य कश्चिद्भविता नायं भवति कस्यचित् ।
पथि संगतमेवेदं दारबन्धुसुहृज्जनैः ॥१२-२७-३९ (६५७२३)
क्वासे क्व च गमिष्यामि कोऽन्वहं किमिहास्थितः ।
कस्मात्किमनुशोचेयमित्येवं स्थापयेन्मनः ॥१२-२७-४० (६५७२४)
अनित्ये प्रियसंवासे संसारे चक्रवद्गतौ ।
पथि संगतमेवैतद्भ्राता माता पिता सखा ॥१२-२७-४१ (६५७२५)
न दृष्टपूर्वं प्रत्यक्षं परलोकं विदुर्बुधाः ।
आगमांस्त्वनतिक्रम्य श्रद्धातव्यं बुभूषता ॥१२-२७-४२ (६५७२६)
कुर्वीत पितृदैवत्यं धर्म्याणि च समाचरेत् ।
यजेच्च विद्वान्विधिवत्त्रिवर्गं चाप्युपाचरेत् ॥१२-२७-४३ (६५७२७)
सन्निमज्जेज्जगदिदं गम्भीरे कालसागरे ।
जरामृत्युमहाग्राहे न कश्चिदवबुध्यते ॥१२-२७-४४ (६५७२८)
आयुर्वेदमधीयानाः केवलं सपरिग्रहाः ।
दृश्यन्ते बहवो वैद्या व्याधिभिः समभिप्लुताः ॥१२-२७-४५ (६५७२९)
ते पिबन्तः कषायांश्च सर्पींषि विविधानि च ।
न मृत्युमतिवर्तन्ते वेलामिव महोदधिः ॥१२-२७-४६ (६५७३०)
रसायनविदश्चैव सुप्रयुक्तरसायनाः ।
दृश्यन्ते जरया भग्ना नागा नागैरिवोत्तमैः ॥१२-२७-४७ (६५७३१)
तथैव तपसोपेताः स्वाध्यायाध्ययने रताः ।
दातारो यज्ञशीलाश्च न तरन्ति जरान्तकौ ॥१२-२७-४८ (६५७३२)
न ह्यहानि निवर्तन्ते न मासा न पुनः समाः ।
जातानां सर्वभूतानां न पुनर्वै समागमः ॥१२-२७-४९ (६५७३३)
सोऽयं विपुलमध्वानं कालेन ध्रुवमध्रुवः ।
स्रोतसैव समभ्येति सर्वभूतनिषेवितम् ॥१२-२७-५० (६५७३४)
देहो वा जीविताद्धेति देही वाऽप्येति देहतः ।
पथि संगतमेवेदं दारैरन्यैश्च बन्धुभिः ॥१२-२७-५१ (६५७३५)

नायमत्यन्तसंवासो लभ्यते जातु केनचित् ।
अपि स्वेन शरीरेण किमुतान्येन केनचित् ॥१२-२७-५२ (६५७३६)
क्वनु तेऽद्य पिता राजन्क्वनु तेऽद्य पितामहाः ।
न त्वं पश्यसि तानद्य न त्वां पश्यन्ति तेऽनघ ॥१२-२७-५३ (६५७३७)
न चैव पुरुषो द्रष्टा स्वर्गस्य नरकस्य च ।
आगमस्तु सतां चक्षुर्नृपते तमिहाचर ॥१२-२७-५४ (६५७३८)
चरितब्रह्मचर्यो हि प्रजायेत यजेत च ।
पितृदेवमनुष्याणामानृण्यादनसूयकः ॥१२-२७-५५ (६५७३९)
स यज्ञशीलः प्रजने निविष्टः
प्राग्ब्रह्मचारी प्रविभक्तभैक्षः ।
आराधयेत्स्वर्गमिमं च लोकं
परं च मुक्त्वा हृदयव्यलीकम् ॥ १२-२७-५६ (६५७४०)
सम्यक्स्वधर्मं चरतो नृपस्य
द्रव्याणि चाभ्याहरतो यथावत् ।
प्रवृद्धचक्रस्य यशोऽभिवर्धते
सर्वेषु लोकेषु चराचरेषु ॥ १२-२७-५७ (६५७४१)
इत्येवमाकर्ण्य विदेहराजो
वाक्यं समग्रं परिपूर्णहेतु ।
अश्मानमामन्त्र्य विशुद्धबुद्धि
र्ययौ गृहं स्वं प्रति शान्तशोकः ॥ १२-२७-५८ (६५७४२)
तथा त्वमप्यद्य विमुच्य शोक
मुत्तिष्ठ शक्रोपम हर्षमेहि ।
क्षात्रेण धर्मेण मही जिता ते
तां भुङ्क्ष्व कुन्तीसुत मावमंस्थाः ॥ ॥ १२-२७-५९ (६५७४३)

इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि सप्तविंशोऽध्यायः ॥

Mahabharata - Shanti Parva - Chapter Footnotes

१२-२७-१ प्राणानभ्युत्सिसृक्षत इति झ ।पाठः।तत्र
अभ्युत्सिसृक्षतः त्यक्तुमिच्छत इत्यर्थः ॥
१२-२७-५ आत्मानं देहम् ।उत्पन्नमनु अनन्तरं अव्यवधानेनैव ॥
१२-२७-७ प्रसिच्यते क्लिन्नं श्लथं भवतीत्यर्थः ॥
१२-२७-८ भोगान् भोग्यार्थान् धनादीन् विसृज्य आदाचौर्यं साधु हितम् ॥
१२-२७-९ असांप्रतमयुक्तम् ।लुब्धा व्याधा ॥
१२-२७-१० वर्षशतात् परेण ऊर्ध्वम् ॥
१२-२७-११ तेषां दारिद्र्योत्थानभैषज्यं प्रतीकारम् ॥

१२-२७-१३ संस्पर्शजानि विषयसङ्गजानि ॥
१२-२७-१७ तेऽर्था जरादयः पदार्थाः । ततोऽन्यथाऽजरत्वादिरूपेण ये मनुष्यस्य काङ्क्षिता इष्टाः ॥
१२-२७-१८ विधानमदृष्टम् ॥
१२-२७-१९ प्राप्तिर्लाभो व्यायामः श्रमः । अलाभ इतियावत्। तयोर्योगः प्रतिष्ठितं विधानमित्यनुषज्यते ॥
१२-२७-२० फलस्था गन्धादयो निवर्तन्ते पूर्वेपूर्वे उत्तरेउत्तरे उपयान्ति तथैव सुखादीनि अप्रत्याख्येयानि अनुसृत्य वर्तते विद्वान् ॥
१२-२७-२५ बुभुक्षाः क्षुत्प्रभृतयः ॥
१२-२७-३१ प्रसङ्गा युद्धविवादादयः । क्षत्र मृगयादौ ॥
१२-२७-३७ उपस्थिताः सेविताः । कालो मृत्युः। ये चैव पुरुषाः स्त्रीभिर्गीतवाद्यैरुपस्थिता इति झ। पाठः ॥
१२-२७-३८ संसारेषु व्यतीतेषु तानि तेषु तदा तदेति ड । थ। पाठः ॥
१२-२७-४० स्थापयेद्विचारे इति शेषः ॥
१२-२७-४७ नागा गजाः । उत्तमैर्वलिष्ठैः ॥
१२-२७-५२ संवासः सहावस्थानम् ॥
१२-२७-५५ प्रजायेत पुत्रादीनुत्पादयेत् । आनृण्याद्धेतोः ॥
१२-२७-५६ प्रजने प्रजोत्पादने । हृदयव्यलीकं हृत्स्थमप्रियम् ॥

---

शन्तिपर्व-अध्यय०२८
॥ श्रीः ॥
१२.२८. अध्यायः २८

Mahabharata - Shanti Parva - Chapter Topics
कृष्णेन युधिष्ठिरंप्रति सृञ्जयाय नारदोक्तषोडशराजोपाख्यानकथनम् ॥ १.।
Mahabharata - Shanti Parva - Chapter Text

१२-२८-० (६५७४४)
वैशंपायन उवाच। १२-२८-०क्ष् (५३८३)
अव्याहरति राजेन्द्रे धर्मपुत्रे युधिष्ठिरे ।
गुडाकेशो हृषीकेशमभ्यभाषत पाण्डवः ॥ १२-२८-१ (६५७४५)
अर्जुन उवाच। १२-२८-२क्ष् (५३८४)
ज्ञातिशोकाभिसंतप्तो धर्मपुत्रः परंतपः ।
एष शोकार्णवे मग्नस्तमाश्वासय माधव ॥ १२-२८-२ (६५७४६)
सर्वे स्म ते संशयिताः पुनरेव जनार्दन ।

अस्य शोकं महाप्राज्ञ प्रणाशयितुमर्हसि ॥ १२-२८-३ (६५७४७)
वैशंपायन उवाच। १२-२८-४क्ष् (५३८५)
एवमुक्तस्तु गोविन्दो विजयेन महात्मना ।
पर्यवर्तत राजानं पुण्डरीकेक्षणोऽच्युतः ॥ १२-२८-४ (६५७४८)
अनतिक्रमणीयो हि धर्मराजस्य केशवः ।
बाल्यात्प्रभृति गोविंदः प्रीत्या चाभ्यधिकोर्जुनात् ॥ १२-२८-५ (६५७४९)
संप्रगृह्य महाबाहुर्भुजं चन्दनभूषितम् ।
शैलस्तम्भोपमं शौरिरुवाचाभिविनोदयन् ॥ १२-२८-६ (६५७५०)
शुशुभे वदनं तस्य सुदंष्ट्रं चारुलोचनम् ।
व्याकोचमिव विस्पष्टं पद्मं सूर्यविबोधितम् ॥ १२-२८-७ (६५७५१)
वासुदेव उवाच। १२-२८-८क्ष् (५३८६)
मा कृथाः पुरुषव्याघ्र शोकं त्वं गात्रशोषणम् ।
न हि ते सुलभा भूयो ये हताऽस्मिन्रणाजिरे ॥ १२-२८-८ (६५७५२)
स्वप्नलब्धा यथा लाभा वितथाः प्रतिबोधने ।
तथा ते क्षत्रिया राजन्ये व्यतीता महारणे ॥ १२-२८-९ (६५७५३)
सर्वे ह्यभिमुखाः शूरा निहता रणशोभिनः ।
नैषां कश्चित्पृष्ठतो वा पलायन्वा निपातितः ॥ १२-२८-१० (६५७५४)
सर्वे त्यक्त्वाऽऽत्मनः प्राणान्युद्ध्वा वीरा महामृधे ।
शस्त्रपूता दिवं प्राप्ता न ताञ्छोचितुमर्हसि ॥ १२-२८-११ (६५७५५)
क्षत्रधर्मरताः शूरा वेदवेदाङ्गपारगाः ।
प्राप्ता वीरगतिं पुण्यां तान्न शोचितुमर्हसि ।
मृतान्महानुभावांस्त्वं श्रुत्वैव पृथिवीपतीन् ॥ १२-२८-१२ (६५७५६)
अत्रैवोदाहरन्तीममितिहासं पुरातनम् ।
सृञ्जयं पुत्रशोकार्तं यथाऽयं नारदोऽब्रवीत् ॥ १२-२८-१३ (६५७५७)
नारद उवाच। १२-२८-१४क्ष् (५३८७)
सुखदुःखैरहं त्वं च प्रजाः सर्वाश्च सृञ्जय ।
अविमुक्ता मरिष्यामस्तत्र का परिदेवना ॥ १२-२८-१४ (६५७५८)
महाभाग्यं पुरा राज्ञां कीर्त्यमानं मया शृणु ।
गच्छावधानं नृपते ततो दुःखं प्रहास्यसि ॥ १२-२८-१५ (६५७५९)
मृतान्महानुभावांस्त्वं श्रुत्वैव पृथिवीपतीन् ।
शममानय संतापं शृणु विस्तरशश्च मे ।
क्रूरग्रहाभिशमनमायुर्वर्धनमुत्तमम् ॥ १२-२८-१६ (६५७६०)
अग्रिमाणां क्षितिभुजामुदारं च मनोहरम् ।
आविक्षितं मरुत्तं च मृतं सृञ्जय शुश्रुम ॥ १२-२८-१७ (६५७६१)
यस्य सेन्द्राः सवरुणा बृहस्पतिपुरोगमाः ।
देवा विश्वसृजो राज्ञो यज्ञमीयुर्महात्मनः ॥ १२-२८-१८ (६५७६२)

यः स्पर्धामानयच्छक्रं देवराजं पुरंदरम् ।
शक्रप्रियैषी यं विद्वान्प्रत्याचष्ट बृहस्पतिः ॥ १२-२८-१९ (६५७६३)
संवर्तो याजयामास यं पीडार्थं बृहस्पतेः ॥ १२-२८-२० (६५७६४)
यस्मिन्प्रशासति महीं नृपतौ राजसत्तम ।
अकृष्टपच्या पृथिवी विबभौ सस्यमालिनी ॥ १२-२८-२१ (६५७६५)
आविक्षितस्य वै सत्रे विश्वेदेवाः सभासदः ।
मरुतः परिवेष्टारः साध्याश्चासन्महात्मनः ॥ १२-२८-२२ (६५७६६)
मरुद्गण मरुत्तस्य यत्सोममपिबंस्ततः ।
देवान्मनुष्यान्गान्धर्वानत्यरिच्यन्त दक्षिणाः ॥ १२-२८-२३ (६५७६७)
स चेन्ममार सृञ्जय चतुर्भद्रतरस्त्वया ।
पुत्रात्पुण्यतरश्चैव मा पुत्रमनुतप्यथाः ॥ १२-२८-२४ (६५७६८)
सुहोत्रं च द्वतिथिनं मृतं सृञ्जय शुश्रुम ।
यस्मे हिरण्यं ववृषे मघवा परिवत्सरम् ॥ १२-२८-२५ (६५७६९)
सत्यनामा वसुमती यं प्राप्यासीञ्जनाधिपम् ।
हिरण्यमवहन्नद्यस्तस्मिञ्जनपदेश्वरे ॥ १२-२८-२६ (६५७७०)
मत्स्यान्कर्कटकान्नक्रान्मकराञ्छिंशुकानपि ।
नदीष्ववासृजद्राजन्मघवा लोकपूजितः ॥ १२-२८-२७ (६५७७१)
हैरण्यान्पातितान्दृष्ट्वा मत्स्यान्मकरकच्छपान् ।
सहस्रशोऽथ शतशस्ततोऽस्मयत वैतिथिः ॥ १२-२८-२८ (६५७७२)
तद्धिरण्यमपर्यन्तमावृतं कुरुजाङ्गले ।
ईजानो वितते यज्ञे ब्राह्मणेभ्यः समार्पयत् ॥ १२-२८-२९ (६५७७३)
स चेन्ममार सृञ्जय चतुर्भद्रतरस्त्वया ।
पुत्रात्पुण्यतरश्चैव मा पुत्रमनुतप्यथाः ।
अदक्षिणमयज्वानं श्वैत्य संशाम्य माशुचः ॥ १२-२८-३० (६५७७४)
अङ्गं बृहद्रथं चैव मृतं सृञ्जय शुश्रुम ।
यः सहस्रं सहस्राणां श्वेतानश्वानवासृजात् ॥ १२-२८-३१ (६५७७५)
सहस्रं च सहस्राणां कन्या हमपरिष्कृताः ।
ईजानो वितते यज्ञे दक्षिणामत्यकालयत् ॥ १२-२८-३२ (६५७७६)
यः सहस्रं सहस्राणां गजानां पद्ममालिनाम् ।
ईजानो वितते यज्ञे दक्षिणामत्यकालयत् ॥ १२-२८-३३ (६५७७७)
शतं शतसहस्राणि वृषाणां हेममालिनाम् ।
गवां सहस्रानुचरं दक्षिणामत्यकालयत् ॥ १२-२८-३४ (६५७७८)
अङ्गस्य यजमानस्य तदा विष्णुपदे गिरौ ।
अमाद्यदिन्द्रः सोमेन दक्षिणाभिर्द्विजातयः ॥ १२-२८-३५ (६५७७९)
यस्य यज्ञेषु राजेन्द्र शतसङ्ख्येषु वै पुरा ।
देवान्मनुष्यान्गान्धर्वानत्यरिच्यन्त दक्षिणाः ॥ १२-२८-३६ (६५७८०)

न जातो जनिता नान्यः पुमान्यः संप्रदास्यति ।
यदङ्गः प्रददौ वित्तं सोमसंस्थासु सप्तसु ॥ १२-२८-३७ (६५७८१)
स चेन्ममार सृञ्जय चतुर्भद्रतरस्त्वया ।
पुत्रात्पुण्यतरश्चैव मा पुत्रमनुतप्यथाः ॥ १२-२८-३८ (६५७८२)
शिबिमौर्शीनरं चैव मृतं सृञ्जय शुश्रुम ।
य इमां पृथिवीं सर्वां चर्मवत्समवेष्टयत् ॥ १२-२८-३९ (६५७८३)
महता रथघोषेण पृथिवीमनुनादयन् ।
एकच्छत्रां महीं चक्रे जैत्रेणैकरथेन यः ॥ १२-२८-४० (६५७८४)
यावदस्य गवाश्वं स्यादारण्यैः पशुभिः सह ।
तावतीः प्रददौ गाः स शिबिरौशीनरोऽध्वरे ॥ १२-२८-४१ (६५७८५)
न वोढारं धुरं तस्य कंचिन्मेने प्रजापतिः ।
न भूतं न भविष्यं च सर्वराजसु सृञ्जय ।
अन्यत्रौशीनराच्छैब्याद्राजर्षेरिन्द्रविक्रमात् ॥ १२-२८-४२ (६५७८६)
स चेन्ममार सृञ्जय चतुर्भद्रतरस्त्वया ।
पुत्रात्पुण्यतरश्चैव मा पुत्रमनुतप्यथाः ॥ १२-२८-४३ (६५७८७)
अदक्षिणमयज्वानं पुत्रं संस्मृत्य मा शुचः ॥ १२-२८-४४ (६५७८८)
भरतं चैव दौष्यन्तिं मृतं सृञ्जय शुश्रुम ।
शाकुन्तलं महात्मानं भूरिद्रविणतेजसम् ॥ १२-२८-४५ (६५७८९)
योऽबध्नात्त्रिशतं चाश्वान्देवेभ्यो यमुनामनु ।
सरस्वतीं विंशतिं च गङ्गामनु चतुर्दश ॥ १२-२८-४६ (६५७९०)
अश्वमेधसहस्रेण राजसूयशतेन च ।
इष्टवान्स महातेजा दौष्यन्तिर्भरतः पुरा ॥ १२-२८-४७ (६५७९१)
भरतस्य महत्कर्म सवराजसु पार्थिवाः ।
स्वं मर्त्या इव बाहुभ्यां नानुगन्तुमशक्नुवन् ॥ १२-२८-४८ (६५७९२)
परं सहस्राद्योऽबध्नाद्धयान्वेदीर्वितत्य च ।
सहस्रं यत्र पद्मानां कण्वाय भरतो ददौ ॥ १२-२८-४९ (६५७९३)
स चेन्ममार सृञ्जय चतुर्भद्रतरस्त्वया ।
पुत्रात्पुण्यतरश्चैव मा पुत्रमनुतप्यथाः ॥ १२-२८-५० (६५७९४)
रामं दाशरथिं चैव मृतं सृञ्जय शुश्रुम ।
योऽन्वकम्पत वै नित्यं प्रजाः पुत्रानिवौरसान् ॥ १२-२८-५१ (६५७९५)
नाधनो यस्य विषये नानर्थः कस्यचिद्भवेत् ।
सर्वस्यासीत्पितृसमो रामो राज्यं यदन्वशात् ॥ १२-२८-५२ (६५७९६)
कालवर्षी च पर्जन्यः सस्यानि समपादयत् ।
नित्यं सुभिक्षमेवासीद्रामे राज्यं प्रशासति ॥ १२-२८-५३ (६५७९७)
प्राणिनो नाप्सु मज्जन्ति नानर्थे पावकोऽदहत् ।
न व्यालतो भयं चासीद्रामे राज्यं प्रशासति ॥ १२-२८-५४ (६५७९८)

आसन्वर्षसहस्रिण्यस्तथा वर्षसहस्रकाः ।
अरोगाः सर्वसिद्धार्था रामे राज्यं प्रशासति ॥१२-२८-५५ (६५७९९)
नान्योन्येन विवादोऽभूत्स्त्रीणामपि कुतो नृणाम् ।
धर्मनित्याः प्रजाश्चासन्रामे राज्यं प्रशासति ॥१२-२८-५६ (६५८००)
संतुष्टाः सर्वसिद्धार्था निर्भयाः स्वैरचारिणः ।
नराः सत्यव्रताश्चासन्रामे राज्यं प्रशासति ॥१२-२८-५७ (६५८०१)
नित्यपुष्पफलाश्चैव पादपा निरुपद्रवाः ।
सर्वा द्रोणदुघा गावो रामे राज्यं प्रशासति ॥१२-२८-५८ (६५८०२)
स चतुर्दश वर्षाणि वने प्रोष्य महातपाः ।
दशाश्वमेधाञ्जारूथ्यानाजहार निरर्गलान् ॥१२-२८-५९ (६५८०३)
युवा श्यामो लोहिताक्षो मातङ्ग इव यूथपः ।
आजानुबाहुः सुमुखः सिंहस्कन्धो महाभुजः ॥१२-२८-६० (६५८०४)
दशवर्षसहस्राणि दशवर्षशतानि च ।
अयोध्याधिपतिर्भूत्वा रामो राज्यमकारयत् ॥१२-२८-६१ (६५८०५)
स चेन्ममार सृञ्जय चतुर्भद्रतरस्त्वया ।
पुत्रात्पुण्यतरश्चैव मा पुत्रमनुतप्यथाः ।
अयज्वानमदक्षिण्यं मा पुत्रमनुतप्यथाः ॥ १२-२८-६२ (६५८०६)
भगीरथं च राजानं मृतं सृञ्जय शुश्रुम् ।
यस्येन्द्रो वितते यज्ञे सोमं पीत्वा मदोत्कटः ॥१२-२८-६३ (६५८०७)
असुराणां सहस्राणि बहूनि सुरसत्तमः ।
अजयद्बाहुवीर्येण भगवान्पाकशासनः ॥१२-२८-६४ (६५८०८)
यः सहस्रं सहस्राणां कन्या हेमविभूषिताः ।
ईजानो वितते यज्ञे दक्षिणामत्यकालयत् ॥१२-२८-६५ (६५८०९)
सर्वा रथगताः कन्या रथाः सर्वे चतुर्युजः ।
शतंशतं रथे नागाः पद्मिनो हेममालिनः ॥१२-२८-६६ (६५८१०)
सहस्रमश्वा एकैकं हस्तिनं पृष्ठतोऽन्वयुः ।
गवां सहस्रमश्वेऽश्वे सहस्रं गव्यजाविकम् ॥१२-२८-६७ (६५८११)
उपह्वरे निवसतो यस्याङ्के निषसाद ह ।
गङ्गा भागीरथी तस्मादुर्वशी चाभवत्पुरा ॥१२-२८-६८ (६५८१२)
भूरिदक्षिणमिक्ष्वाकुं यजमानं भगीरथम् ।
त्रिलोकपथगा गङ्गा दुहितृत्वमुपेयुषी ॥१२-२८-६९ (६५८१३)
स चेन्ममार सृञ्जय चतुर्भद्रतरस्त्वया ।
पुत्रात्पुण्यतरश्चैव मा पुत्रमनुतप्यथाः ॥१२-२८-७० (६५८१४)
दिलीपं च महात्मानं मृतं सृञ्जय शुश्रुम ।
प्रस्य कर्माणि भूरीणि कथयन्ति द्विजातयः ॥१२-२८-७१ (६५८१५)
य इमां वसुसंपूर्णां वसुधां वसुधाधिपः ।

ददौ तस्मिन्महायज्ञे ब्राह्मणेभ्यः समाहितः ॥ १२-२८-७२ (६५८१६)
यस्येह यजमानस्य यज्ञेयज्ञे पुरोहितः ।
सहस्रं वारणान्हैमान्दक्षिणामत्यकालयत् ॥ १२-२८-७३ (६५८१७)
यस्य यज्ञे महानासीद्यूपः श्रीमान्हिरण्मयः ।
ते देवां कर्म कुर्वाणाः शक्रज्येष्ठा उपासत ॥ १२-२८-७४ (६५८१८)
चषाले यस्य सौवर्णे तस्मिन्यूपे हिरण्मये ।
ननृतुर्देवगन्धर्वाः षट्सहस्राणि सप्तधा ॥ १२-२८-७५ (६५८१९)
अवादयत्तत्र वीणां मध्ये विश्वावसुः स्वयम् ।
सर्वभूतान्यमन्यन्त मम वादयतीत्ययम् ॥ १२-२८-७६ (६५८२०)
एतद्राज्ञो दिलीपस्य राजानो नानुचक्रिरे ।
यस्येभा हेमसंछन्नाः पथि मत्ताः स्म शेरते ॥ १२-२८-७७ (६५८२१)
राजानं शतधन्वानं दिलीपं सत्यवादिनम् ।
येऽपश्यन्सुमहात्मानं तेऽपि स्वर्गजितो नराः ॥ १२-२८-७८ (६५८२२)
त्रयः शब्दा न जीर्यन्ते दिलीपस्य निवेशने ।
स्वाध्यायशब्दः ज्याशब्दः शब्दो वै दीयतामिति ॥ १२-२८-७९ (६५८२३)
स चेन्ममार सृञ्जय चतुर्भद्रतरस्त्वया ।
पुत्रात्पुण्यतरश्चैव मा पुत्रमनुतप्यथाः ॥ १२-२८-८० (६५८२४)
मान्धातारं यौवनाश्वं मृतं सृञ्जय शुश्रुम ।
यं देवा मरुतो गर्भं पितुः पार्श्वादपाहरन् ॥ १२-२८-८१ (६५८२५)
समृद्धो युवनाश्वस्य जठरे यो महात्मनः ।
पृषदाज्योद्भवः श्रीमांस्त्रिलोकविजयी नृपः ॥ १२-२८-८२ (६५८२६)
यं दृष्ट्वा पितुरुत्सङ्गे शयानं देवरूपिणम् ।
अन्योन्यमब्रुवन्देवाः कमयं धास्यतीति वै ॥ १२-२८-८३ (६५८२७)
मामेव धास्यतीत्येवमिन्द्रोऽथाभ्युपपद्यत ।
मांधातेति ततस्तस्य नाम चक्रे शतक्रतुः ॥ १२-२८-८४ (६५८२८)
ततस्तु पयसो धारां पुष्टिहेतोर्महात्मनः ।
तस्यास्ये यौवनाश्वस्य पाणिरिन्द्रस्य चास्रवत् ॥ १२-२८-८५ (६५८२९)
तं पिवन्पाणिमिन्द्रस्य शतमह्ना व्यवर्धत ।
स आसीद्द्वादशसमो द्वादशाहेन पार्थिवः ॥ १२-२८-८६ (६५८३०)
तमिमं पृथिवी सर्वा एकाह्ना समपद्यत ।
धर्मात्मानं महात्मानं शूरमिन्द्रसमं युधि ॥ १२-२८-८७ (६५८३१)
यश्चाङ्गारं तु नृपतिं मरुत्तमसितं गयम् ।
अङ्गं बृहद्रथं चैव मान्धाता समरेऽजयत् ॥ १२-२८-८८ (६५८३२)
यौवनाश्वो यदाङ्गारं समरे प्रत्ययुध्यत ।
विस्फारैर्धनुषो देवा द्यौरभेदीति मेनिरे ॥ १२-२८-८९ (६५८३३)
यत्र सूर्य उदेति स्म यत्र च प्रतितिष्ठति ।

सर्वं तद्यौवनाश्वस्य मान्धातुः क्षेत्रमुच्यते ॥ १२-२८-९० (६५८३४)
अश्वमेधशतेनेष्ट्वा राजसूयशतेन च ।
अददद्रोहितान्मत्स्यान्ब्राह्मणेभ्यो विशांपते ॥ १२-२८-९१ (६५८३५)
हैरण्यान्यो जनोत्सेधानायतान्दशयोजनम् ।
अतिरिक्तान्द्विजातिभ्यो व्यभजंस्त्वितरे जनाः ॥ १२-२८-९२ (६५८३६)
स चेन्ममार सृञ्जय चतुर्भद्रतरस्त्वया ।
पुत्रात्पुण्यतरश्चैव मा पुत्रमनुतप्यथाः ॥ १२-२८-९३ (६५८३७)
ययातिं नाहुषं चैव मृतं सृञ्जय शुश्रुम ।
य इमां पृथिवीं कृत्स्नां विजित्य सहसागराम् ॥ १२-२८-९४ (६५८३८)
शम्यापातेनाभ्यतीयाद्वेदीभिश्चित्रयन्महीम् ।
ईजानः क्रतुभिर्मुख्यैः पर्यगच्छद्वसुन्धराम् ॥ १२-२८-९५ (६५८३९)
इष्ट्वा क्रतुसहस्रेण वाजपेयशतेन च ।
तर्पयामास विप्रेन्द्रांस्त्रिभिः काञ्चनपर्वतैः ॥ १२-२८-९६ (६५८४०)
व्यूढेनासुरयुद्धेन हत्वा दैतेयदानवान् ।
व्यभजत्पृथिवीं कृत्स्नां ययातिर्नहुषात्मजः ॥ १२-२८-९७ (६५८४१)
अन्त्येषु पुत्रान्निक्षिप्य यदुद्रुह्युपुरोगमान् ।
पुरुं राज्येऽभिषिच्याथ सदारः प्राविशद्वनम् ॥ १२-२८-९८ (६५८४२)
स चेन्ममार सृञ्जय चतुर्भद्रतरस्त्वया ।
पुत्रात्पुण्यतरश्चैव मा पुत्रमनुतप्यथाः ॥ १२-२८-९९ (६५८४३)
अम्बरीषं च नाभागं मृतं सृञ्जय शुश्रुम ।
यं प्रजा वव्रिरे पुण्यं गोप्तारं नृपसत्तमम् ॥ १२-२८-१०० (६५८४४)
यः सहस्रं सहस्राणां राज्ञामयुतयाजिनाम् ।
ईजानो वितते यज्ञे ब्राह्मणेभ्यस्त्वमन्यत ॥ १२-२८-१०१ (६५८४५)
नैतत्पूर्वे जनाश्चक्रुर्न करिष्यन्ति चापरे ।
इत्यम्बरीषं नाभागिमन्वमोदन्त दक्षिणाः ॥ १२-२८-१०२ (६५८४६)
शतं राजसहस्राणि शतं राजशतानि च ।
सर्वेऽश्वमेधैरीजानास्तेऽन्वयुर्दक्षिणायनम् ॥ १२-२८-१०३ (६५८४७)
स चेन्ममार सृञ्जय चतुर्भद्रतरस्त्वया ।
पुत्रात्पुण्यतरश्चैव मा पुत्रमनुतप्यथाः ॥ १२-२८-१०४ (६५८४८)
शशबिन्दुं चैत्ररथं मृतं शुश्रुम सृञ्जय ।
यस्य भार्यासहस्राणां शतमासीन्महात्मनः ॥ १२-२८-१०५ (६५८४९)
सहस्रं तु सहस्राणां यस्यासञ्शाशबिन्दवाः ।
हिरण्यकवचाः सर्वे सर्वे चोत्तमधन्विनः ॥ १२-२८-१०६ (६५८५०)
शतं कन्या राजपुत्रमेकैकं पृथगन्वयुः ।
कन्यांकन्यां शतं नागा नागंनागं शतं रथाः ॥ १२-२८-१०७ (६५८५१)
रथेरथे शतं चाश्वा देशजा हेममालिनः ।

अश्वेअश्वे शतं गावो गांगां तद्वदजाविकम् ॥ १२-२८-१०८ (६५८५२)
एतद्धनमपर्यन्तमश्वमेधे महामखे ।
शशबिन्दुर्महाराज ब्राह्मणेभ्यो ह्यमन्यत ॥ १२-२८-१०९ (६५८५३)
स चेन्ममार सृञ्जय चतुर्भद्रतरस्त्वया ।
पुत्रात्पुण्यतरश्चैव मा पुत्रमनुतप्यथाः ॥ १२-२८-११० (६५८५४)
गयं चाधूर्तरजसं मृतं शुश्रुम सृञ्जय ।
यः स वर्षशतं राजा हुतशिष्टाशनोऽभवत् ॥ १२-२८-१११ (६५८५५)
यस्मै वह्निर्वरान्प्रादात्ततो वव्रे वरान्गयः ।
ददतो मे क्षयो मा भूद्धर्मे श्रद्धा च वर्धताम् ॥ १२-२८-११२ (६५८५६)
मनो मे रमतां सत्ये त्वत्प्रसादाद्धुताशन ।
लेभे च कामांस्तान्सर्वान्पावकादिति नः श्रुतम् ॥ १२-२८-११३ (६५८५७)
दर्शेन पूर्णमासेन चातुर्मास्यैः पुनः पुनः ।
अयजद्धयमेधेन सहस्रं परिवत्सरान् ॥ १२-२८-११४ (६५८५८)
शतं गवां सहस्राणि शतमश्वशतानि च ।
उत्थायोत्थाय वै प्रादात्सहस्रं परिवत्सरान् ॥ १२-२८-११५ (६५८५९)
तर्पयामास सोमेन देवान्वित्तैर्द्विजानपि ।
पितॄन्स्वधाभिः कामैश्च स्त्रियः स्वाः पुरुषर्षभ ॥ १२-२८-११६ (६५८६०)
सौवर्णां पृथिवीं कृत्वा दशव्यामां द्विरायताम् ।
दक्षिणामददद्राजा वाजिमेधे महाक्रतौ ॥ १२-२८-११७ (६५८६१)
यावत्यः सिकता राजन्गङ्गायां पुरुषर्षभ ।
तावतीरेव गाः प्रादादाधूर्तरजसो गयः ॥ १२-२८-११८ (६५८६२)
स चेन्ममार सृञ्जय चतुर्भद्रतरस्त्वया ।
पुत्रात्पुण्यतरश्चैव मा पुत्रमनुतप्यथाः ॥ १२-२८-११९ (६५८६३)
रन्तिदेवं च सांकृत्यं मृतं सृञ्जय शुश्रुम ।
सम्यगाराध्य यः शक्राद्वरं लेभे महातपाः ॥ १२-२८-१२० (६५८६४)
अन्नं च नो बहु भवेदतिथींश्च लभेमहि ।
श्रद्धा च नो मा व्यगमन्मा च याचिष्म कंचन ॥ १२-२८-१२१ (६५८६५)
उपातिष्ठन्त पशवः स्वयं तं संशितव्रतम् ।
ग्राम्यारण्या महात्मानं रन्तिदेवं यशस्विनम् ॥ १२-२८-१२२ (६५८६६)
महानदी चर्मराशेरुत्क्लेदात्ससृजे यतः ।
ततश्चर्मण्वतीत्येवं विख्याता सा महानदी ॥ १२-२८-१२३ (६५८६७)
ब्राह्मणेभ्यो ददौ निष्कान्सदसि प्रतते नृपः ।
तुभ्यंतुभ्यं निष्कमिति यदा क्रोशन्ति वै द्विजाः ॥ १२-२८-१२४ (६५८६८)
सहस्रं तुभ्यमित्युक्त्वा ब्राह्मणान्संप्रपद्य ते ॥ १२-२८-१२५ (६५८६९)
अन्वाहार्योपकरणं द्रव्योपकरणं च यत् ।
घटाः पात्र्यः कटाहानि स्थाल्यश्च पिठराणि च ।

नासीत्किंचिदसौवर्णं रन्तिदेवस्य धीमतः ॥ १२-२८-१२६ (६५८७०)
सांकृते रन्तिदेवस्य यां रात्रिमवसन्गृहे ।
आलभ्यन्त शतं गावः सहस्राणि च विंशतिः ॥१२-२८-१२७ (६५८७१)
तत्र स्म सूदाः क्रोशन्ति सुमृष्टमणिकुण्डलाः ।
सूपं भूयिष्ठमश्नीध्वं नाद्य मांसं यथा पुरा ॥१२-२८-१२८ (६५८७२)
स चेन्ममार सृञ्जय चतुर्भद्रतरस्त्वया ।
पुत्रात्पुण्यतरश्चैव मा पुत्रमनुतप्यथाः ॥१२-२८-१२९ (६५८७३)
सगरं च महात्मानं मृतं शुश्रुम सृञ्जय ।
ऐक्ष्वाकं पुरुषव्याघ्रमतिमानुषविक्रमम् ॥१२-२८-१३० (६५८७४)
षष्टिः पुत्रसहस्राणि यं यान्तमनुजग्मिरे ।
नक्षत्रराजं वर्षान्ते व्यभ्रे ज्योतिर्गणा इव ॥१२-२८-१३१ (६५८७५)
एकच्छत्रा मही यस्य प्रतापादभवत्पुरा ।
योऽश्वमेधसहस्रेण तर्पयामास देवताः ॥१२-२८-१३२ (६५८७६)
यः प्रादात्कनकस्तम्भं प्रासादं सर्वकाञ्चनम् ।
पूर्णं पद्मदलाक्षीणां स्त्रीणां शयनसंकुलम् ॥१२-२८-१३३ (६५८७७)
द्विजातिभ्योऽनुरूपेभ्यः कामांश्च विविधान्बहून् ।
यस्यादेशेन तद्वित्तं व्यभजन्त द्विजातयः ॥१२-२८-१३४ (६५८७८)
खानयामास यः कोपात्पृथिवीं सागराङ्किताम् ।
यस्य नाम्ना समुद्रश्च सागरत्वमुपागतः ॥१२-२८-१३५ (६५८७९)
स चेन्ममार सृञ्जय चतुर्भद्रतरस्त्वया ।
पुत्रात्पुण्यतरश्चैव मा पुत्रमनुतप्यथाः ॥१२-२८-१३६ (६५८८०)
राजानं च पृथुं वैन्यं मृतं शुश्रुम सृञ्जय ।
यमभ्यषिञ्चन्संभूयः महारण्ये महर्षयः ॥१२-२८-१३७ (६५८८१)
प्रथयिष्यति वै लोकान्पृथुरित्येव शब्दितः ।
क्षताद्यो वै त्रायतीति स तस्मात्क्षत्रियः स्मृतः ॥१२-२८-१३८ (६५८८२)
पृथुं वैन्यं प्रजा दृष्ट्वा रक्तास्मेति यदब्रुवन् ।
ततो राजेति नामास्य अनुरागादजायत ॥१२-२८-१३९ (६५८८३)
अकृष्टपच्या पृथिवी पुटकेपुटके मधु ।
सर्वा द्रोणदुघा गावो वैन्यस्यासन्प्रशासतः ॥१२-२८-१४० (६५८८४)
अरोगाः सर्वसिद्धार्था मनुष्या अकुतोभयाः ।
यथाऽभिकाममवसन्क्षेत्रेषु च गृहेषु च ॥१२-२८-१४१ (६५८८५)
आपस्तस्तम्भिरे चास्य समुद्रमभियास्यतः ।
शैलाश्चापाद्यदीर्यन्त ध्वजभङ्गश्च नाभवत् ॥१२-२८-१४२ (६५८८६)
हैरण्यांस्त्रिनरोत्सेधान्पर्वतानेकविंशतिम् ।
ब्राह्मणेभ्यो ददौ राजा योश्वमेधे महामखे ॥१२-२८-१४३ (६५८८७)
स चेन्ममार सृञ्जय चतुर्भद्रतरस्त्वया ।

पुत्रात्पुण्यतरश्चैव मा पुत्रमनुतप्यथाः ॥१२-२८-१४४ (६५८८८)
किं वा तूर्ष्णीं ध्यायसे सृञ्जय त्वं
न मे राजन्वाचिममां शृणोपि ।
न चेन्मोघं विप्रलप्तं ममेदं
पथ्यं मुमूर्षोरिव सुप्रयुक्तम् ॥ १२-२८-१४५ (६५८८९)
सृञ्जय उवाच। १२-२८-१४६क्ष् (५३८८)
शृणोमि ते नारद वाचमेनां
विचित्रार्थां स्रजमिव पुण्यगन्धाम् ।
राजर्षीणां पुण्यकृतां महात्मनां
कीर्त्या युक्तानां शोकनिर्नाशनार्थाम् ॥ १२-२८-१४६ (६५८९०)
न ते मोघं विप्रलप्तं महर्षे
दृष्ट्वैवाहं नारद त्वां विशोकः ।
शुश्रूषे ते वचनं ब्रह्मवादि
न्न ते तृप्याम्यमृतस्येव पानात् ॥ १२-२८-१४७ (६५८९१)
अमोघदर्शिन्मम चेत्प्रसादं
संतापदग्धस्य विभो प्रकुर्याः ।
सुतस्य संजीवनमद्य मे स्या
त्तव प्रसादात्सुतसङ्गमाप्नुयाम् ॥ १२-२८-१४८ (६५८९२)
नारद उवाच। १२-२८-१४९क्ष् (५३८९)
यस्ते पुत्रः शयितोयं विजातः
स्वर्णष्ठीवी यमदात्पर्वतस्ते। १२-२८-१४९ (६५८९३)
पुनस्तं ते पुत्रमहं ददामि
हिरण्यनाभं वर्षसहस्रिणं च ॥ ॥ १२-२८-१४९ (६५८९४)

इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि
अष्टाविंशोऽध्यायः ॥ २८.।

Mahabharata - Shanti Parva - Chapter Footnotes

१२-२८-३ ते वयम् ॥
१२-२८-४ पर्यवर्तत अभिमुखोऽभूत् ॥
१२-२८-६ भुजं राज्ञः ।अभिविनादयन् इति ट।ड।थ।पाठः ॥
१२-२८-७ व्याकोचं विकसितम् ॥
१२-२८-८ हताः अस्मिन्संधिरार्षः ॥
१२-२८-९ लाभाः अर्थाः ॥
१२-२८-१५ महाभाग्यं माहात्म्यम् ॥
१२-२८-१६ श्वैत्यमानय संतापमिति ट ।ड।पाठः ॥

१२-२८-१९ यागं माकुर्विति प्रत्याचष्ट प्रत्याख्यातवान् ॥
१२-२८-२४ चतुर्भद्रतरः चत्वारि धर्मज्ञानवैराग्यैश्वर्यीख्यानि भद्राणि यस्मिन्स चतुर्भद्रः । त्वया अवधिभूतेन त्वत्तोऽतिशयेन चतुर्भद्र इत्यर्थः ॥
१२-२८-३१ अवासृजत् यज्ञार्थमुत्सृष्टवान् ॥
१२-२८-३२ अत्यकालयत् दत्तवान् ॥
१२-२८-५५ वर्षसदृस्त्रिण्यः स्त्रियः । वर्षसहस्रकाः पुरुषाः ॥
१२-२८-५८ द्रोणदुधाः द्रोणपरिमितं क्षीरं दुहन्ति ताः ॥
१२-२८-५९ जारूथ्यान् स्तुत्यान्
। त्रिगुणदक्षिणानित्यन्ये। निरर्गलानवारितद्वारान् ॥
१२-२८-६६ चतुर्युजश्चतुरश्वाः ॥
१२-२८-६८ उपह्वरे समीपे । अङ्के ऊरौ निषसाद आसांचक्रे। तस्माद्योगात्सा उर्वशी ऊरौ वासो यस्याः सा इति योगात्। ऊर्वसीत्यपेक्षिते ह्रस्वत्वं वर्णविपर्ययश्च पृषोदरादित्वात् ज्ञेयः ॥
१२-२८-७५ सप्तधा सप्तस्वरानुसारेणावादयदिति संबन्धः ॥
१२-२८-७६ मम पुरत इति शेषः । मां लक्षीकृत्येत्यर्थः ॥
१२-२८-७८ शतधन्वानं शतं अनन्तान् सहते धनुर्यस्य तं शतधन्वानम् । मध्यमपदलोपी समासः ॥
१२-२८-८२ पृषदाज्यं दधिमिश्रमाज्यं कस्यचिदर्थे पुत्रोत्पादनाय निर्मितं तद्युवनाश्वेन पीतं तत् रेतोरुधिरयोगं वेनापि तदुदरे गर्भोऽभवत् । स पितुः पार्श्वं भित्त्वा निःसारितो देवैरित्याख्यायिकार्योऽत्र सूचितः ॥
१२-२८-८६ अह्ना एकेन शतं पलानि व्यवर्धत । द्वादशवर्षतुल्यः ॥
१२-२८-८९ अभेदि भिन्ना ॥
१२-२८-९१ मत्स्यान् हैरण्यानिति संबन्धः ॥
१२-२८-९५ शम्या स्थूलबुध्नः काष्ठदण्डः स बलवता क्षिप्तो यावद्दूरं पतेत्तावान्देशः शम्यापातः । तावतान्तरेण पुरः पुरो यज्ञवेदीं कुर्वाणो वसुंधरां पर्यगच्छत्। परित्यज्य समुद्रतीरं प्राप्त इत्यर्थः ॥
१२-२८-९७ व्यभजत्पुत्रेभ्यो दत्तवान् ॥
१२-२८-१०१ नृपान्दात्ये योजितवानित्यर्थः ॥
१२-२८-१०२ दक्षिणाः दाक्ष्ययुक्ताः ॥
१२-२८-१०३ सर्वे राजानोऽम्बरीषयज्ञेषु विप्रद्वास्यं कुर्वाणा अश्वमेधफलभागित्वात्तद्याजिनः सन्तः अम्बरीषमाहात्म्याद्दक्षिणायनं अनुपश्चात् अयुर्गताः । उत्तरायणमार्गेण हिरण्यगर्भलोक प्राप्ता

इत्यर्थः ॥
१२-२८-१०६ शाशबिन्दवाः शशबिन्दोः पुत्राः ॥
१२-२८-१११ गयं चामूर्तरयसमिति झ । पाठः ॥
१२-२८-११५ शतमश्वतराणि चेति झ । पाठः ॥
१२-२८-११७ दशव्यामां पञ्चाशद्धस्तविस्तारां द्विरायतां
शतहस्तदीर्घाम् ॥
१२-२८-१२२ उपातिष्ठन्त पितृकार्ये मां नियोजयेति ॥
१२-२८-१२३ तेषां मारितानां पशूनां चर्मराशेः । उत्क्लेदात् सारद्रवात् ॥
१२-२८-१२६ पिठराणि विततमुखानि पात्राणि ॥
१२-२८-१२८ नाद्य मांसं पशुमात्रोपयोगस्य प्रागुक्तत्वात् ॥
१२-२८-१३० ऐक्ष्वाकं इक्ष्वाकुवंशजम् ॥
१२-२८-१३४ आदेशेन आज्ञया तद्वित्तं स्वर्णप्रासादरूपम् ॥
१२-२८-१३७ वैन्यं वेनपुत्रम् । महारण्ये दण्डकारण्ये ॥
१२-२८-१४० पुटकेपुटके पत्रेपत्रे इति प्राञ्चः ॥
१२-२८-१४५ विप्रलप्तं विप्रलपितम् ॥
१२-२८-१४७ विशोको जात इति शेषः ॥

---

शन्तिपर्व-अध्यय०२९
॥ श्रीः ॥
१२.२९. अध्यायः २९

Mahabharata - Shanti Parva - Chapter Topics
कृष्णेन युधिष्ठिरंप्रति नारदपर्वतोपाख्यानकथनम् ॥ १. ।
Mahabharata - Shanti Parva - Chapter Text

१२-२९-० (६५८९५)
युधिष्ठिर उवाच। १२-२९-०क्ष् (५३९०)
स कथं काञ्चनष्ठीवी सृञ्जयस्य सुतोऽभवत् ।
पर्वतेन किमथे वा दत्तस्तेन ममार च ॥ १२-२९-१ (६५८९६)
यदा वर्षसहस्रायुस्तदा भवति मानवः ।
कथमप्राप्तकौमारः सृञ्जयस्य सुतो मृतः ॥ १२-२९-२ (६५८९७)
उताहो नाममात्रं वै सुवर्णष्ठीविनोऽभवत् ।
कथं वा काञ्चनष्ठीवीत्येतदिच्छामि वेदितुम् ॥ १२-२९-३ (६५८९८)
श्रीकृष्ण उवाच। १२-२९-४क्ष् (५३९१)
अत्र ते वर्णयिष्यामि यथावृत्तं जनेश्वर ।
नारदः पर्वतश्चैव द्वावृवी लोकसत्तमौ ॥ १२-२९-४ (६५८९९)
मातुलो भागिनेयश्च देवलोकादिहागतौ ।

विहर्तुकामौ संप्रीत्या मानुषेषु पुरा विभो ॥ १२-२९-५ (६५९००)
हविःपवित्रभोज्येन देवभोज्येन चैव हि ।
नारदो मातुलस्तत्र भागिनेयश्च पर्वतः ॥ १२-२९-६ (६५९०१)
तावुभौ तपसोपेताववनीतलचारिणौ ।
भुञ्जानौ मानुषान्भोगान्यथावत्पर्यधावताम् ॥ १२-२९-७ (६५९०२)
प्रीतिमन्तौ मुदा युक्तौ समयं चैव चक्रतुः ।
यो भवेद्धृदि संकल्पः शुभो वा यदि वाऽशुभः ॥ १२-२९-८ (६५९०३)
अन्योन्यस्य च आख्येयो मृषा शापोऽन्यथा भवेत् ।
तौ तथेति प्रतिज्ञाय महर्षी लोकपूजितौ ॥ १२-२९-९ (६५९०४)
सृञ्जयं श्वैत्यमभ्येत्य राजानमिदमूचतुः ।
आवां भवति वत्स्यावः कंचित्कालं हिताय ते ॥ १२-२९-१० (६५९०५)
यथावत्पृथिवीपाल आवयोः प्रगुणीभव ।
तथेति कृत्वा राजा तौ सत्कृत्योपचचार ह ॥ १२-२९-११ (६५९०६)
ततः कदाचित्तौ राजा महात्मानौ तपोधनौ ।
अब्रवीत्परमप्रीतः सुतेयं देवरूपिणी ॥ १२-२९-१२ (६५९०७)
एकैव मम कन्यैषा युवां परिचरिष्यति ।
दर्शनीयानवद्याङ्गी शीलवृत्तसमाहिता ।
सुकुमारी कुमारी च पद्मकिञ्जल्कसुप्रभा ॥ १२-२९-१३ (६५९०८)
परमं सौम्यमित्युक्तं ताभ्यां राजा शशास ताम् ।
कन्ये विप्रावुपचर देववत्पितृवच्च ह ॥ १२-२९-१४ (६५९०९)
सा तु कन्या तथेत्युक्त्वा पितरं धर्मचारिणी ।
यथानिदेशं राज्ञस्तौ सत्कृत्योपचचार ह ॥ १२-२९-१५ (६५९१०)
तस्यास्तेनोपचारेण रूपेणाप्रतिमेन च ।
नारदं हृच्छयस्तूर्णं सहसैवाभ्यपद्यत ॥ १२-२९-१६ (६५९११)
ववृधे हि ततस्तस्य हृदि कामो महात्मनः ।
यथा शुक्लस्य पक्षस्य प्रवृत्तौ चन्द्रमाः शनैः ॥ १२-२९-१७ (६५९१२)
न च तं भागिनेयाय पर्वताय महात्मने ।
शशंस मन्मथं तीव्रं व्रीडमानः स धर्मवित् ॥ १२-२९-१८ (६५९१३)
तपसा चेङ्गितैश्चैव पर्वतोऽथ बुबोध तम् ।
कामार्तं नारदं क्रुद्धः शशापैनं ततो भृशम् ॥ १२-२९-१९ (६५९१४)
कृत्वा समयमव्यग्रो भवान्वै सहितो मया ।
यो भवेद्धृदि संकल्पः शुभो वा यदि वाऽशुभः ॥ १२-२९-२० (६५९१५)
अन्योन्यस्य स आख्येय इति तद्वै मृषा कृतम् ।
भवता वचनं ब्रह्मंस्तस्मादेष शपाम्यहम् ॥ १२-२९-२१ (६५९१६)
न हि कामं प्रवर्तन्तं भवानाचष्ट मे पुरा ।
सुकुमार्यां कुमार्यां ते तस्मान्नैष क्षमाम्यहम् ॥ १२-२९-२२ (६५९१७)

ब्रह्मचारी गुरुर्यस्मात्तपस्वी ब्राह्मणश्च सन् ।
अकार्षीः समयभ्रंशमावाभ्यां यः कृतो मिथः ॥१२-२९-२३ (६५९१८)
शप्स्ये तस्मात्सुसंक्रुद्धो भवन्तं तं निबोध मे ॥ १२-२९-२४ (६५९१९)
सुकुमारी च ते भार्या भविष्यति न संशयः ।
वानरत्वं च ते कन्या विवाहात्प्रभृति प्रभो ।
संद्रक्ष्यन्ति नराश्चान्ये स्वरूपेण विनाकृतम् ॥ १२-२९-२५ (६५९२०)
स तद्वाक्यं तु विज्ञाय नारदः पर्वतं तथा ।
अशपत्तमपि क्रोधाद्भागिनेयं स मातुलः ॥१२-२९-२६ (६५९२१)
तपसा ब्रह्मचर्येण सत्येन च दमेन च ।
युक्तोऽपि नित्यधर्मश्च न वै स्वर्गमवाप्स्यसि ॥१२-२९-२७ (६५९२२)
तौ तु शावा भृशं क्रुद्धौ परस्परममर्षणौ ।
प्रतिजग्मतुह्र्न्योन्यं क्रुद्धाविव गजोत्तमौ ॥१२-२९-२८ (६५९२३)
पर्वतः पृथिवीं कृत्स्नां विचचार महामतिः ।
पूज्यमानो यथान्यांयं तेजसा स्वेन भारत ॥१२-२९-२९ (६५९२४)
अथ तामलभत्कन्यां नारदः सृञ्जयात्मजाम् ।
धर्मेण विप्रप्रवरः सुकुमारीमनिन्दिताम् ॥१२-२९-३० (६५९२५)
सा तु कन्या यथाशापं नारदं तं ददर्श ह ।
पाणिग्रहणमन्त्राणां नियोगादेव नारदम् ॥१२-२९-३१ (६५९२६)
सुकुमारी च देवर्षिं वानरप्रतिमाननम् ।
नैवावमन्यत तदा प्रीतिमत्येव चाभवत् ॥१२-२९-३२ (६५९२७)
उपतस्थे च भर्तारं न चान्यं मनसाऽप्यगात् ।
देवं मुनीं वा यक्षं वा पतित्वे पतिवत्सला ॥१२-२९-३३ (६५९२८)
ततः कदाचिद्भगवान्पर्वतोऽनुचचार ह ।
वनं विरहितं किंचित्तत्रापश्यत्स नारदम् ॥१२-२९-३४ (६५९२९)
ततोऽभिवाद्य प्रोवाच नारदं पर्वतस्तदा ।
भवान्प्रसादं कुरुतात्स्वर्गादेशाय ये प्रभो ॥१२-२९-३५ (६५९३०)
तमुवाच ततो दृष्ट्वा पर्वतं नारदस्तथा ।
कृताञ्जलिमुपासीनं दीनं दीनतरः स्वयम् ॥१२-२९-३६ (६५९३१)
त्वयाऽहं प्रथमं शप्तो वानरस्त्वं भविष्यसि ।
इत्युक्तेन मया पश्चाच्छप्तस्तवमपि मत्सरात् ॥१२-२९-३७ (६५९३२)
अद्यप्रभृति वै वासं स्वर्गे नावाप्स्यसीति ह ।
तव नैतद्धिसदृशं पुत्रस्थाने हि मे भवान् ॥१२-२९-३८ (६५९३३)
निवर्तयेतां तौ शापावन्योन्येन तदा मुनी ॥ १२-२९-३९ (६५९३४)
श्रीसमृद्धं तदा दृष्ट्वा नारदं देवरूपिणम् ।
सुकुमारी प्रदुद्राव परपुंसविशङ्कया ॥१२-२९-४० (६५९३५)
तां पर्वतस्ततो दृष्ट्वा प्रद्रवन्तीमनिन्दिताम् ।

अब्रवीत्तव भर्तैष नात्र कार्या विचारणा ॥१२-२९-४१ (६५९३६)
ऋषिः परमधर्मात्मा नारदो भगवान्प्रभुः ।
तवैवाभेद्यहृदयो मा ते भूदत्र संशयः ॥१२-२९-४२ (६५९३७)
सानुनीता बहुविधं पर्वतेन महात्मना ।
शापदोषं च तं भर्तुः श्रुत्वा प्रकृतिमागता ।
पर्वतोऽथ ययौ स्वर्गं नारदोऽभ्यगमद्गृहान् ॥ १२-२९-४३ (६५९३८)
वासुदेव उवाच।१२-२९-४४क्ष् (५३९२)
प्रत्यक्षकर्ता सर्वस्य नारदो भगवानृषिः ।
एष वक्ष्यति ते पृष्टो यथावृत्तं नरोत्तम ॥ ॥१२-२९-४४ (६५९३९)

इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि
एकोनत्रिंशोऽध्यायः ॥ २९.।
Mahabharata - Shanti Parva - Chapter Footnotes

१२-२९-६ हविः पवित्रभोज्येन शाल्यन्नेन देवभोज्येन घृतेन
ताभ्यां विहर्तुकामाविति पूर्वेण संबन्धः ॥
१२-२९-११ प्रगुणीभवानुकूलो भव ॥
१२-२९-१३ सुकुमारी नाम्ना ॥
१२-२९-१४ सौम्यमुत्तमम् ॥
१२-२९-२० समयं कृत्वा भवानवसदिति शेषः ॥
१२-२९-२२ प्रवर्तन्तं प्रवर्तमानम् ।ते त्वाम् ॥

---

शन्तिपर्व-अध्यय०३०
॥ श्रीः ॥
१२.३०. अध्यायः ३०

Mahabharata - Shanti Parva - Chapter Topics
नारदेन युधिष्ठिरंप्रति सुवर्णष्ठीविचरितवर्णनम् ॥१.।
Mahabharata - Shanti Parva - Chapter Text

१२-३०-० (६५९४०)
वैशंपायन उवाच।१२-३०-०क्ष् (५३९३)
ततो राजा पाण्डुसुतो नारदं प्रत्यभाषत ।
भगवञ्छ्रोतुमिच्छामि सुवर्णष्ठीविसंभवम् ॥१२-३०-१ (६५९४१)
एवमुक्तस्तु स मुनिर्धर्मराजेन नारदः ।
आचचक्षे यथावृत्तं सुवर्णष्ठीविनं प्रति ॥१२-३०-२ (६५९४२)
नारद उवाच।१२-३०-३क्ष् (५३९४)

एवमेतन्महाबाहो यथाऽयं केशवोऽब्रवीत् ।
कार्यस्यास्य तु यच्छेषं तत्ते वक्ष्यामि पृच्छतः ॥१२-३०-३ (६५९४३)
अहं च पर्वतश्चैव स्वस्रीयो मे महाप्मुनिः ।
वस्तुकामावभिगतौ सृञ्जयं जयतां वरम् ॥१२-३०-४ (६५९४४)
तत्रावां पूजितौ तेन विधिदृष्टेन कर्मणा ।
सर्वकामैः सुविहितौ निवसावोऽस्य वेश्मनि ॥१२-३०-५ (६५९४५)
व्यतिक्रान्तासु वर्षासु समये गमनस्य च ।
पर्वतो मामुवाचेदं काले वचनमर्थवत् ॥१२-३०-६ (६५९४६)
आवामस्य नरेन्द्रस्य गृहे परमपूजितौ ।
उषितौ समये ब्रह्मंस्तद्विचिन्तय सांप्रतम् ॥१२-३०-७ (६५९४७)
ततोऽहमब्रुवं राजन्पर्वतं सुभदर्शनम् ।
सर्वमेतत्त्वयि विभो भागिनेयोपपद्यते ॥१२-३०-८ (६५९४८)
वरेण च्छन्द्यतां राजा लभतां यद्यदिच्छति ।
आवयोस्तपसा सिद्धिं प्राप्नोतु यदि मन्यसे ॥१२-३०-९ (६५९४९)
तत आहूय राजानं सृञ्जयं जयतां वरम् ।
पर्वतोऽनुमतो वाक्यमुवाच कुरुपुङ्गव ॥१२-३०-१० (६५९५०)
प्रीतौ स्वो नृप सत्कारैर्भवदार्जवसंभृतैः ।
आवाभ्यामभ्यनुज्ञातो वरं नृवर चिन्तय ॥१२-३०-११ (६५९५१)
देवानामविहिंसायां न भवेन्मानुषे क्षमम् ।
तद्गृहाण महाराज पूजार्हो नौ मतो भवान् ॥१२-३०-१२ (६५९५२)
सृञ्जय उवाच।१२-३०-१३क्ष् (५३९५)
प्रीतौ भवन्तौ यदि मे कृतमेतावता मम ।
एष एव परो लाभो निर्वृत्तो मे महाफलः ॥१२-३०-१३ (६५९५३)
तमेवंवादिनं भूयः पर्वतः प्रत्यभाषत ।
शृणु राजन्सुसंकल्पं यत्ते हृदि चिरं स्थितम् ॥१२-३०-१४ (६५९५४)
अभीप्ससि सुतं वीरं वीर्यवन्तं दृढव्रतम् ।
आयुष्मतं महाभागं देवराजसमद्युतिम् ॥१२-३०-१५ (६५९५५)
भविष्यत्येष ते कामो न त्वायुष्मान्भविष्यति ।
देवराजाभिभूत्यर्थं संकल्पो ह्येष ते हृदि ॥१२-३०-१६ (६५९५६)
सुवर्णष्ठीवनाच्चैव स्वर्णष्ठीवी भविष्यति ।
रक्ष्यश्च देवराजात्स देवराजसमद्युतिः ॥१२-३०-१७ (६५९५७)
तच्छ्रुत्वा सृञ्जयो वाक्यं पर्वतस्य महात्मनः ।
प्रसादयामास तदा नैतदेवं भवेदिति ॥१२-३०-१८ (६५९५८)
आयुष्मान्मे भवेत्पुत्रो भवतोस्तपस मुन ।
न च तं पर्वतः किंचिदुवाचेन्द्रव्यपेक्षया ॥१२-३०-१९ (६५९५९)
तमहं नृपतिं दीनमब्रवं पुनरेव च ।

स्मर्तव्योऽस्मि महाराज दर्शयिष्यामि ते सुतम् ॥१२-३०-२० (६५९६०)
अहं ते दयितं पुत्रं प्रेतराजवशं गतम् ।
पुनर्दास्यामि तद्रूपं मा शुचः पृथिवीपते ॥१२-३०-२१ (६५९६१)
एवमुक्त्वा तु नृपतिं प्रयातौ स्वो यथेप्सितम् ।
सृञ्जयश्च यथाकामं प्रविवेश स्वमन्दिरम् ॥१२-३०-२२ (६५९६२)
सृञ्जयस्याथ राजर्षेः कस्मिंश्चित्कालपर्यये ।
जज्ञे पुत्रो महावीर्यस्तेजसा प्रज्वलन्निव ॥१२-३०-२३ (६५९६३)
ववृधे स यथाकालं सरसीव महोत्पलम् ।
बभूव काञ्चनष्ठीवी यथार्थं नाम तस्य तत् ॥१२-३०-२४ (६५९६४)
तदद्भुततमं लोके पप्रथे कुरुसत्तम ।
बुबुधे तच्च देवेन्द्रो वरदानं मनीषिणोः ॥१२-३०-२५ (६५९६५)
ततः स्वाभिभवाद्भीतो बृहस्पतिमते स्थितः ।
कुमारस्यान्तरप्रेक्षी नित्यमेवाभ्यवर्तत ॥१२-३०-२६ (६५९६६)
चोदयामास तद्वज्रं दिव्यास्त्रं मूर्तिमत्स्थितम् ।
व्याघ्रो भूत्वा जहीमं त्वं राजपुत्रमिति प्रभो ॥१२-३०-२७ (६५९६७)
प्रवृद्धः किल वीर्येण मामेषोऽभिभविष्यति ।
सृञ्जयस्य सुतो वज्र यथैनं पर्वतोऽब्रवीत् ॥१२-३०-२८ (६५९६८)
एवमुक्तस्तु शक्रेण वज्रः परपुरंजयः ।
कुमारमन्तरप्रेक्षी नित्यमेवान्वपद्यत ॥१२-३०-२९ (६५९६९)
सृञ्जयोऽपि सुतं प्राप्य देवराजसमद्युतिम् ।
हृष्टः सान्तः पुरो राजा वननित्यो बभूव ह ॥१२-३०-३० (६५९७०)
ततो भागीरथीतीरे कदाचिन्निर्जने वने ।
धात्रीद्वितीयो बालः स क्रीडार्थं पर्यधावत ॥१२-३०-३१ (६५९७१)
पञ्चवर्षकदेशीयो बालो नागेन्द्रविक्रमः ।
सहसोत्पतितं व्याघ्रमाससाद महाबलम् ॥१२-३०-३२ (६५९७२)
स बालस्तेन निष्पिष्टो वेपमानो नृपात्मजः ।
व्यसुः पपात मेदिन्यां ततो धात्री विचुक्रुशे ॥१२-३०-३३ (६५९७३)
हत्वा तु राजपुत्रं स तत्रैवान्तरधीयत ।
शार्दूलो देवराजस्य माययान्तर्हितस्तदा ॥१२-३०-३४ (६५९७४)
धात्र्यास्तु निनदं श्रुत्वा रुदत्याः परमार्तवत् ।
अभ्यधावत तं देशं स्वयमेव महीपतिः ॥१२-३०-३५ (६५९७५)
स ददर्श शयानं तं गतासुं पीतशोणितम् ।
कुमारं विगतानन्दं निशाकरमिव च्युतम् ॥१२-३०-३६ (६५९७६)
स तमुत्सङ्गमारोप्य परिपीडितवक्षसम् ।
पुत्रं रुधिरसंसिक्तं पर्यदेवयदातुरः ॥१२-३०-३७ (६५९७७)
ततस्ता मातरस्तस्य रुदत्यः शोककर्शिताः ।

अभ्यधावन्त तं देशं यत्र राजा स सृञ्जयः ॥१२-३०-३८ (६५९७८)
ततः स राजा सस्मार मामेव गतमानसः ।
तदाऽहं चिन्तनं ज्ञात्वा गतवांस्तस्य दर्शनम् ॥१२-३०-३९ (६५९७९)
मयैतानि च वाक्यानि श्रावितः शोकलालसः ।
यानि ते यदुवीरेण कथितानि महीपते ॥१२-३०-४० (६५९८०)
संजीवितश्चापि पुनर्वासवानुमते तदा ।
भवितव्यं तथा तच्च न तच्छक्यमतोऽन्यथा ॥१२-३०-४१ (६५९८१)
तत ऊर्ध्वं कुमारस्तु स्वर्णष्ठीवी महायशाः ।
चित्तं प्रसादयामास पितृर्मातुश्च वीर्यवान् ॥१२-३०-४२ (६५९८२)
कारयामास राज्यं च पितरि स्वर्गते नृप ।
वर्षाणां शतमेकं च सहस्रं भीमविक्रमः ॥१२-३०-४३ (६५९८३)
तत ईजे महायज्ञैर्बहुभिर्भूरिदक्षिणैः ।
तर्पयामास देवांश्च पितॄंश्चैव महाद्युतिः ॥१२-३०-४४ (६५९८४)
उत्पाद्य च बहून्पुत्रान्कुलसतानकारिणः ।
कालेन महता राजन्कालधर्ममुपेयिवान् ॥१२-३०-४५ (६५९८५)
स त्वं राजेन्द्र संजातं शोकमेकं निवर्तय ।
यथा त्वं केशवः प्राह व्यामश्च सुमहातपाः ॥१२-३०-४६ (६५९८६)
पितृपैतामहं राज्यमास्थाय धुरमुद्वह ।
इष्ट्वा पुण्यैर्महायज्ञैरिष्टं लोकमवाप्स्यसि ॥ ॥१२-३०-४७ (६५९८७)

इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि त्रिंशोऽध्यायः
॥ ३०. ॠ
Mahabharata - Shanti Parva - Chapter Footnotes

क द्रोणपर्वणि स्वर्णष्ठीविचरितमन्यादृशमत्र
पर्वणित्वन्यादृशम्। १२-३०-७ सांप्रतं कल्याणम्। ।
१२-३०-१२ न भवेन्मानुषक्षयमिति झ । पाठः। तत्र येन देवपीडा
मनुष्यक्षयश्च न भवति तत्तादृशं वरं गृहाणेति भावः ॥
१२-३०-१६ देवराजविभूत्यर्थमिति ड । पाठः ॥

---

शन्तिपर्व-अध्यय०३१
॥ श्रीः ॥
१२.३१. अध्यायः ३१

Mahabharata - Shanti Parva - Chapter Topics
व्यासयुधिष्ठिरसंवादः ॥१.।
Mahabharata - Shanti Parva - Chapter Text

१२-३१-० (६५९८८)
वैशंपायन उवाच। १२-३१-०क्ष् (५३९६)
तूष्णींभूतं तु राजानं शोचमानं युधिष्ठिरम् ।
तपस्वी धर्मतत्त्वज्ञः कृष्णद्वैपायनोऽब्रवीत् ॥ १२-३१-१ (६५९८९)
व्यास उवाच। १२-३१-२क्ष् (५३९७)
प्रजानां पालनं धर्मो राज्ञां राजीवलोचन ।
धर्मः प्रमाणं लोकस्य नित्यं धर्मोऽनुवर्त्यताम् ॥ १२-३१-२ (६५९९०)
अनुतिष्ठस्व तद्राजन्पितृपैतामहं पदम् ।
ब्राह्मणेषु तु यो धर्मः स नित्यो वेदनिश्चितः ॥ १२-३१-३ (६५९९१)
तत्प्रमाणं प्रमाणानां शाश्वतं भरतर्षभ ।
तस्य धर्मस्य कृत्स्नस्य क्षत्रियः परिरक्षिता ॥ १२-३१-४ (६५९९२)
तथा यः प्रतिहन्त्यस्य शासनं विषये नरः ।
स बाहुभ्यां विनिग्राह्यो लोकयात्राविघातकः ॥ १२-३१-५ (६५९९३)
प्रमाणमप्रमाणं यः कुर्यान्मोहवशं गतः ।
भृत्यो वा यदि वा पुत्रस्तपस्वी वाऽथ कश्चन ॥ १२-३१-६ (६५९९४)
पापान्सर्वैरुपायैस्तान्नियच्छेच्छातयीत वा ।
अतोऽन्यथा वर्तमानो राजा प्राप्नोति किल्विषम् ॥ १२-३१-७ (६५९९५)
धर्मं विनश्यमानं हि यो न रक्षेत्स धर्महा ।
ते त्वया धर्महन्तारो निहताः सपदानुगाः ॥ १२-३१-८ (६५९९६)
स्वधर्मे वर्तमानस्त्वं किंनु शोचसि पाण्डव ।
राजा हि हन्याद्दद्याच्च प्रजा रक्षेच्च धर्मतः ॥ १२-३१-९ (६५९९७)
युधिष्ठिर उवाच। १२-३१-१०क्ष् (५३९८)
न तेऽतिशङ्के वचनं यद्ब्रवीषि तपोधन ।
अपरोक्षो हि ते धर्मः सर्वधर्मविदां वर ॥ १२-३१-१० (६५९९८)
मया त्ववध्या बहवो घातिता राज्यकारणात् ।
तानि कर्माणि मे ब्रह्मन्दहन्ति च पचन्ति च ॥ १२-३१-११ (६५९९९)
व्यास उवाच। १२-३१-१२क्ष् (५३९९)
ईश्वरो वा भवेत्कर्ता पुरुषो वाऽपि भारत ।
हठो वा वर्तते लोके कर्मजं वा फलं स्मृतम् ॥ १२-३१-१२ (६६०००)
ईश्वरेण नियुक्तो हि साध्वसाधु च भारत ।
कुरुते पुरुषः कर्म फलमीश्वरगामि तत् ॥ १२-३१-१३ (६६००१)
यथाहि पुरुषश्छिन्द्याद्वृक्षं परशुना वने ।
छेत्तुरेव भवेत्पापं परशोर्न कथंचन ॥ १२-३१-१४ (६६००२)
अथवा तदुपादानात्प्राप्नुयात्कर्मणः फलम् ।
दण्डशस्त्रकृतं पापं पुरुषे तन्न विद्यते ॥ १२-३१-१५ (६६००३)

न चैतदिष्टं कौन्तेय यदन्येन कृतं फलम् ।
प्राप्नुयादिति तस्माच्च ईश्वरे तन्निवेशय ॥ १२-३१-१६ (६६००४)
अथापि पुरुषः कर्ता कर्मणोः शुभपापयोः ।
न परो विद्यते तस्मादेवमप्यशुभं कुतः ॥ १२-३१-१७ (६६००५)
न हि कश्चित्क्वचिद्राजन्दिष्टं प्रतिनिवर्तते ।
दण्डशस्त्रकृतं पापं पुरुषे तन्न विद्यते ॥ १२-३१-१८ (६६००६)
यदि वा मन्यसे राजन्हतमेकं प्रतिष्ठितम् ।
एवमप्यशुभं कर्म न भूतं न भविष्यति ॥ १२-३१-१९ (६६००७)
अथाभिपत्तिर्लोकस्य कर्तव्या पुण्यपापयोः ।
अभिपन्नमिदं लोके राज्ञामुद्यतदण्डनम् ॥ १२-३१-२० (६६००८)
तथापि लोके कर्माणि समावर्तन्ति भारत ।
शुभाशुभफलं चैते प्राप्नुवन्तीति मे मतिः ॥ १२-३१-२१ (६६००९)
एवं पश्य शुभादेशं कर्मणस्तत्फलं ध्रुवम् ।
त्यज त्वं राजशार्दूल मैवं शोके मनः कृथा ॥ १२-३१-२२ (६६०१०)
स्वधर्मे वर्तमानस्य सापवादेऽपि भारत ।
एवमात्मपरित्यागस्तव राजन्न शोभनः ॥ १२-३१-२३ (६६०११)
विहितानि हि कौन्तेय प्रायश्चित्तानि कर्मणाम् ।
शरीरवांस्तानि कुर्यादशरीरः पराभवेत् ॥ १२-३१-२४ (६६०१२)
तद्राजञ्जीवमानस्त्वं प्रायश्चित्तं करिष्यसि ।
प्रायश्चित्तमकृत्वा तु प्रेत्य तप्ताऽसि भारत ॥ १२-३१-२५ (६६०१३)
युधिष्ठिर उवाच। १२-३१-२६क्ष् (५४००)
हताः पुत्राश्च पौत्राश्च भ्रातरः पितरस्तथा ।
श्वशुरा गुरवश्चैव मातुलाश्च पितामहाः ॥ १२-३१-२६ (६६०१४)
क्षत्रियाश्च महात्मानः संबन्धिसुहृदस्तथा ।
वयस्या भागिनेयाश्च ज्ञातयश्च पितामह ॥ १२-३१-२७ (६६०१५)
बहवश्च मनुष्येन्द्रा नानादेशसमागताः ।
घातिता राज्यलुब्धेन मयैकेन पितामह ॥ १२-३१-२८ (६६०१६)
तांस्तादृशानहं हत्वा धर्मनित्यान्महीक्षितः ।
असकृत्सोमपान्वीरान्किं प्राप्स्यामि तपोधन ॥ १२-३१-२९ (६६०१७)
दह्याम्यनिशमद्यापि चिन्तयानः पुन पुनः ।
हीनां पार्थिवसिंहैस्तैः श्रीमद्भिः पृथिवीमिमाम् ॥ १२-३१-३० (६६०१८)
दृष्ट्वा ज्ञातिवधं घोरं हतांश्च शतशः परान् ।
कोटिशश्च नरानन्यान्परितप्ये पितामह ॥ १२-३१-३१ (६६०१९)
का नु तासां वरस्त्रीणामवस्थाऽद्य भविष्यति ।
विहीनानां तु तनयैः पतिभिर्भ्रातृभिस्तथा ॥ १२-३१-३२ (६६०२०)
अस्मानन्तकरान्घोरान्पाण्डवान्वृष्णिसंहतान् ।

आक्रोशन्त्यः कृशा दीनाः प्रपतिष्यन्ति भूतले ॥१२-३१-३३ (६६०२१)
अपश्यन्त्यः पितॄन्भ्रातॄन्पतीन्पुत्रांश्च योषितः ।
त्यक्त्वा प्राणान्स्त्रियः सर्वागमिष्यन्ति यमक्षयम् ॥१२-३१-३४ (६६०२२)
वत्सलत्वाद्द्विजश्रेष्ठ तत्र ये नास्ति संसयः ।
व्यक्तं सौक्ष्म्याच्च धर्मस्य प्राप्स्यामः स्त्रीवधं वयम् ॥१२-३१-३५
(६६०२३)
ते वयं सुहृदो हत्वा कृत्वा पापमनन्तकम् ।
नकरे निपतिष्यामो ह्यधः शिरस एव ह ॥१२-३१-३६ (६६०२४)
शरीराणि विमोक्ष्यामस्तपसोग्रेण सत्तम ।
आश्रमाणां विशेषं त्वमथाचक्ष्व पितामह ॥ ॥१२-३१-३७ (६६०२५)

इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि एकत्रिंशोऽध्यायः
॥ ३१.।
Mahabharata - Shanti Parva - Chapter Footnotes

१२-३१-७ शातयीत मारेयत् ॥
१२-३१-११ मे माम् ॥
१२-३१-१२ नापरो वर्तते लोके कर्मजं वा फलं नृषु ।इति
ड थ। पाठः ॥
१२-३१-१५ प्राप्नुयात् परशोरुपादाता ।एवं तर्हि विन परशोर्दण्डः
शस्त्रं परशुश्च कृतस्तमेव पापं कर्तृ प्राप्नुयात्तस्य
प्रथमप्रयोज्यत्वात्। पुरुषे उपादातरि तन्न विद्यते तस्य जघन्यत्वात्
॥
१२-३१-१६ यदि चैतन्नेष्टं एतत्किं यदन्येन प्रहर्त्रा कृतं पापं
तस्य फलं शस्त्रकर्ता आप्नुयादिति ।तर्हि जघन्यप्रयोज्ये त्वय्यपि
पापाभावादीश्वरे एव तन्निवेशय ॥
१२-३१-१८ यतः कश्चिदपि दिष्टं प्रत्यदृष्टस्य प्रतिकूलो
भूत्वावश्यंभाविनः कर्मणः सकाशान्न निवर्तते ।दैवस्य
दुर्लङ्घ्यत्वादिति भावः ॥
१२-३१-२० पुण्यपापयोः सुख दुःखयोः अभिपत्तिरुपपत्तिः कर्तव्या
साच धर्माधर्मावन्तरेण न घटते तौच शास्त्रैकगम्याविति
चेद्राज्ञामुद्यतदण्डनमुद्धतदमनं लोके शास्त्रे
चोपपन्नतरमित्यर्थः ॥
१२-३१-२३ सापवादे निन्द्येऽपि ॥

---

शन्तिपर्व-अध्यय०३२
॥ श्रीः ॥

## १२.३२. अध्यायः ३२

Mahabharata - Shanti Parva - Chapter Topics

युद्धे राज्ञां हननेन पापशङ्कया विषीदन्तं युधिष्ठिरंप्रति व्यासेन तत्त्वकथनपूर्वकं क्षात्रधर्मविधानम् ॥ १.।

Mahabharata - Shanti Parva - Chapter Text

१२-३२-० (६६०२६)
वैशंपायन उवाच। १२-३२-०क्ष् (५४०१)
युधिष्ठिरस्य तद्वाक्यं श्रुत्वा द्वैपायनस्तदा ।
परीक्ष्य निपुणं बुद्ध्या ऋषिः प्रोवाच पाण्डवम् ॥ १२-३२-१ (६६०२७)
व्यास उवाच। १२-३२-२क्ष् (५४०२)
मा विषादं कृथा राजन्क्षत्रधर्ममनुस्मरन् ।
स्वधर्मेण हता ह्येते क्षत्रियाः क्षत्रियर्षभ ॥ १२-३२-२ (६६०२८)
काङ्क्षमाणाः श्रियं कृत्स्नां पृथिव्यां च मबद्यशः ।
कृतान्तविधिसंयुक्ताः कालेन निधनं गताः ॥ १२-३२-३ (६६०२९)
नृ त्वं हन्ता न भीमोऽयं नार्जुनो न यमावपि ।
कालः पर्यायधर्मेण प्राणानादत्त देहिनाम् ॥ १२-३२-४ (६६०३०)
न तस्य मातापितरौ नानुग्राह्यो हि कश्चन ।
कर्मसाक्षी प्रजानां यस्तेन कालेन संहृताः ॥ १२-३२-५ (६६०३१)
हेतुमात्रमिदं तस्य विहितं भरतर्षभ ।
यद्धन्ति भूतैर्भूतानि तदस्मै रूपमैश्वरम् ॥ १२-३२-६ (६६०३२)
कर्म मूर्त्यात्मकं विद्धि साक्षिणं शुभपापयोः ।
सुखदुःखगुणोदर्कं कालं कालफलप्रदम् ॥ १२-३२-७ (६६०३३)
तेषामपि महाबाहो कर्माणि परिचिन्तय ।
विनाशहेतुकानि त्वं यैस्तै कालवशं गताः ॥ १२-३२-८ (६६०३४)
आत्मनश्च विजानीहि नियतव्रतशीलताम् ।
यदा त्वमीदृशं कर्म विधिनाऽऽक्रम्य कारितः ॥ १२-३२-९ (६६०३५)
त्वष्ट्रेव विहितं यन्त्रं यथा चेष्टयितुर्वशे ।
कर्मणा कालयुक्तेन तथेदं भ्राम्यते जगत् ॥ १२-३२-१० (६६०३६)
पुरुषस्य हि दृष्ट्वेमामुत्पत्तिमनिमित्ततः ।
यदृच्छया विनाशं च शोकहर्षावनर्थकौ ॥ १२-३२-११ (६६०३७)
व्यलीकमपि यत्त्वत्र चित्तवैतंसिकं तव ।
तदर्थमिष्यते राजन्प्रायश्चित्तं तदाचर ॥ १२-३२-१२ (६६०३८)
इदं तु श्रूयते पार्थ युद्धे देवासुरे पुरा ।
असुरा भ्रातरो ज्येष्ठा देवाश्चापि यवीयसः ॥ १२-३२-१३ (६६०३९)

तेषामपि श्रीनिमित्तं महानासीत्समुच्छ्रयः ।
युद्धं वर्षसहस्राणि द्वात्रिंशदभवत्किल ॥ १२-३२-१४ (६६०४०)
एकार्णवां महीं कृत्वा रुधिरेण परिप्लुताम् ।
जघ्नुर्दैत्यांस्तथा देवास्त्रिदिवं चाभिलेभिरे ॥ १२-३२-१५ (६६०४१)
तथैव पृथिवीं लब्ध्वा ब्राह्मणा वेदपारगाः ।
संश्रिता दानवानां वै साह्यार्थं दर्पमोहिताः ॥ १२-३२-१६ (६६०४२)
शालावृका इति ख्यातास्त्रिषु लोकेषु भारत ।
अष्टाशीतिसहस्राणि ते चापि विबुधैर्हताः ॥ १२-३२-१७ (६६०४३)
धर्मव्युच्छित्तिमिच्छतो येऽधर्मस्य प्रवर्तकाः ।
हन्तव्यास्ते दुरात्मानो देवैर्दैत्या इवोल्वणाः ॥ १२-३२-१८ (६६०४४)
एकं हत्वा यदि कुले शिष्टानां स्यादनामयम् ।
कुलं हत्वा च राष्ट्रं च न तद्वृत्तोपघातकम् ॥ १२-३२-१९ (६६०४५)
अधर्मरूपो धर्मो हि कश्चिदस्ति नराधिप ।
धर्मरूपो ह्यधर्मश्च तच्च ज्ञेयं विपश्चिता ॥ १२-३२-२० (६६०४६)
तस्मात्संस्तम्भयात्मानं श्रुतवानसि पाण्डव ।
देवैः पूर्वगतं मार्गमनुयातोऽसि भारत ॥ १२-३२-२१ (६६०४७)
न हीदृशा गमिष्यन्ति नरकं पाण्डवर्षभ ।
भ्रातॄनाश्वासयैतांस्त्वं सुहृदश्च परंतप ॥ १२-३२-२२ (६६०४८)
यो हि पापसमारम्भे कार्ये तद्भावभावितः ।
कुर्वन्नपि तथैव स्यात्कृत्वा च निरपत्रपः ॥ १२-३२-२३ (६६०४९)
तस्मिंस्तत्कलुषं सर्वं समस्तमिति शब्दितम् ।
प्रायश्चित्तं न तस्यास्ति ह्रासो वा पापकर्मणः ॥ १२-३२-२४ (६६०५०)
त्वं तु शुक्लाभिजातीयः परदोषेण कारितः ।
अनिच्छमानः कर्मेदं कृत्वा च परितप्यसे ॥ १२-३२-२५ (६६०५१)
अश्वमेधो महायज्ञः प्रायश्चित्तमुदाहृतम् ।
तमाहर महाराज विपाप्मैवं भविष्यसि ॥ १२-३२-२६ (६६०५२)
मरुद्भिः सह जित्वाऽरीन्भगवान्पाकशासनः ।
एकैकं क्रतुमाहृत्य शतकृत्वः शतक्रतुः ॥ १२-३२-२७ (६६०५३)
धूतपाप्मा जितस्वर्गो लोकान्प्राप्य सुखोदयान् ।
मरुद्गणैर्वृतः शक्रः शुशुभे भासयन्दिशः ॥ १२-३२-२८ (६६०५४)
स्वर्गे लोके महीयन्तमप्सरोभिः शचीपतिम् ।
ऋषयः पर्युपासन्ते देवाश्च विबुधेश्वरम् ॥ १२-३२-२९ (६६०५५)
सेयं त्वामनुसंप्राप्ता विक्रमेण वसुंधरा ।
निर्जिताश्च महीपाला विक्रमेण त्वयाऽनघ ॥ १२-३२-३० (६६०५६)
तेषां पुराणि राष्ट्राणि गत्वा राजन्सुहृद्वृतः ।
भ्रातॄन्पुत्रांश्च पौत्रांश्च स्वेस्वे राज्येऽभिषेचय ॥ १२-३२-३१

(६६०५७)
बालानपि च गर्भस्थान्सांत्वेन समुदाचरन् ।
रञ्जयन्प्रकृतीः सर्वाः परिपाहि वसुंधराम् ॥१२-३२-३२ (६६०५८)
कुमारो नास्ति येषां च कन्यास्तत्राभिषेचय ।
कामाशयो हि स्त्रीवर्गः शोकमेवं प्रहास्यसि ॥१२-३२-३३ (६६०५९)
एवमाश्वासनं कृत्वा सर्वराष्ट्रेषु भारत ।
यजस्व वाजिमेधेन यथेन्द्रो विजयी पुरा ॥१२-३२-३४ (६६०६०)
अशोच्यास्ते महात्मानः क्षत्रियाः क्षत्रियर्षभ ।
स्वकर्मभिर्गता नाशं कृतान्तबलमोहिताः ॥१२-३२-३५ (६६०६१)
अवाप्तः क्षत्रधर्मस्ते राज्यं प्राप्तमकण्टकम् ।
रक्ष स्वधर्मं कौन्तेय श्रेयान्यः प्रेत्यभाविकः ॥ ॥१२-३२-३६ (६६०६२)

इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि द्वात्रिंशोऽध्यायः ॥ ३२.।

Mahabharata - Shanti Parva - Chapter Footnotes

१२-३२-३ कृतान्तविधिः परप्राजहरणं तेन संयुक्ताः ।स्वापराधेनैव हता इत्यर्थः ॥
१२-३२-६ इदं युक्षम् ।अस्मै अस्य ऐश्वरं नियन्तृत्वम् ॥
१२-३२-११ उत्पत्तिवद्विनाशोऽपि यादृच्छिक एवेति भावः ॥
१२-३२-१२ चित्तवैतंसिकं चित्तबन्धनं तदर्थं तन्निवृत्त्यर्थम् ॥
१२-३२-१३ यवीयसः यवीयांसः ॥
१२-३२-१४ समुच्छ्रयो विरोधः ॥
१२-३२-१६ संश्रिताः सन्नद्धाः ।साह्यार्थं साहाय्यार्थम् ॥
१२-३२-१९ तत् एकस्य कुलस्य वा हननं वृत्तोपघातकम् धर्मनाशकं न भवति ॥
१२-३२-२३ तद्भावभावितः पापभावनां गतः ।कुर्वन्पापमिति वर्तते ॥
१२-३२-२४ तस्य अपश्चात्तापिनो निर्लज्जस्य प्रायश्चित्तं वा तेन पापह्रासो वा नास्तीत्यर्थः ॥
१२-३२-२५ परदोषेण दुर्योधनदोषेण ॥
१२-३२-२९ महीयन्तं महीयमानम् ॥
१२-३२-३३ कामाः आशेरतेऽस्मिन्कामाशयः ।पूर्णकाम इत्यर्थः ॥

---

शन्तिपर्व-अध्यय०३३
॥ श्रीः ॥
१२.३३. अध्यायः ३३

Mahabharata - Shanti Parva - Chapter Topics
व्यासेन युधिष्ठिरंप्रति प्रायश्चित्तप्रयोजकपापकर्मणां प्रायश्चित्तानां च कथनम् ॥१.।
Mahabharata - Shanti Parva - Chapter Text

१२-३३-० (६६०६३)
युधिष्ठिर उवाच। १२-३३-०क्ष् (५४०३)
कानि कृत्वेह कर्माणि प्रायश्चित्तीयते नरः ।
किं कृत्वा मुच्यते तत्र तन्मे ब्रूहि पितामह ॥ १२-३३-१ (६६०६४)
व्यास उवाच। १२-३३-२क्ष् (५४०४)
अकुर्वन्विहितं कर्म प्रतिषिद्धानि चाचरन् ।
प्रायश्चित्तीयते ह्येवं नरो मिथ्याऽनुवर्तयन् ॥ १२-३३-२ (६६०६५)
सूर्येणाभ्युदितो यश्च ब्रह्मचारी भवत्युत ।
तथा सूर्याभिनिर्मुक्तः कुनखी श्यावदन्नपि ॥ १२-३३-३ (६६०६६)
परिवित्तिः परिवेत्ता ब्रह्मोज्यायाश्च दूषकः ।
दिधिषूपतिस्तथा यः स्यादग्रेदिधिषुरेव च ॥ १२-३३-४ (६६०६७)
अवकीर्णी भवेद्यश्च द्विजातिवधकस्तथा ।
अतीर्थे ब्राह्मणस्त्यागी तीर्थे चाप्रतिपादकः ॥ १२-३३-५ (६६०६८)
ग्रामयाजी च कौन्तेय मांसस्य परिविक्रयी ।
यश्चाग्नीनपविध्येत तथैव ब्रह्मविक्रयी ॥ १२-३३-६ (६६०६९)
शूद्रस्त्रीवधको यश्च पूर्वः पूर्वस्तु गर्हितः ।
वृथा पशुसमालम्भी वनदाहस्य कारकः ॥ १२-३३-७ (६६०७०)
अनृतेनोपवर्ती च प्रतिषेद्धा गुरोस्तथा ।
ग्स्वदत्तस्यापहर्ता च परदत्तनिरोधकः ॥ १२-३३-८ (६६०७१)
वाग्दत्तं च मनोदत्तं धारादत्तं च यो हरेत् ।
पाकभेदेन भोक्ता च भुञ्जानस्याप्यनादरः ॥ १२-३३-९ (६६०७२)
स्वजनैः कलहं चैव आश्रितानामरक्षणम्। '
एतान्येनांसि सर्वाणि व्युत्क्रान्तसमयश्च यः ॥ १२-३३-१० (६६०७३)
अकार्याणि तु वक्ष्यामि यानि तानि निबोध मे ।
लोकवेदविरुद्धानि तान्येकाग्रमनाः शृणु ॥ १२-३३-११ (६६०७४)
स्वधर्मस्य परित्यागः परधर्मस्य च क्रिया ।
अयाज्ययाजनं चैव तथाऽभक्ष्यस्य भक्षणम् ॥ १२-३३-१२ (६६०७५)
शरणागतसंत्यागो भृत्यस्याभरणं तथा ।
रसानां विक्रयश्चापि तिर्यग्योनिवधस्तथा ॥ १२-३३-१३ (६६०७६)
आधानादीनि कर्माणि शक्तिमान्न करोति यः ।
अप्रयच्छंश्च सर्वाणि नित्यदेयानि भारत ॥ १२-३३-१४ (६६०७७)

दक्षिणानामदानं च ब्राह्मणस्वाभिमर्शनम् ।
सर्वाण्येतान्यकार्याणि प्राहुर्धर्मविदो जनाः ॥१२-३३-१५ (६६०७८)
पित्रा विवदते पुत्रो यश्च स्याद्गुरुतल्पगः ।
अप्रजायन्नरव्याघ्र भवत्यधार्मिको नरः ॥१२-३३-१६ (६६०७९)
उक्तान्येतानि कर्माणि विस्तरेणेतरेण च ॥ १२-३३-१७ (६६०८०)
यानि कुर्वन्निकुर्वंश्च प्रायश्चित्तीयते नरः ।
एतान्येव तु कर्माणि क्रियमाणानि मानवैः ।
येषुयेषु निमित्तेषु न लिप्यन्तेऽथ ताञ्शृणु ॥ १२-३३-१८ (६६०८१)
प्रगृह्य शस्त्रमायान्तमपि वेदान्तगं रणे ।
जिघांसन्तं जिघांसीयान्न तेन ब्रह्महा भवेत् ॥१२-३३-१९ (६६०८२)
इति चाप्यत्र कौन्तेय मन्त्रो वेदेषु पठ्यते ।
वेदप्रमाणविहितं धर्मं च प्रब्रवीमि ते ॥१२-३३-२० (६६०८३)
अपेतं ब्राह्मणं वृत्ताद्यो हन्यादाततायिनम् ।
न तेन ब्रह्महा स स्यान्मन्युस्तन्मन्युमृच्छति ॥१२-३३-२१ (६६०८४)
प्राणात्यये तथा ज्ञानादाचरन्मदिरामपि ।
आदेशितो धर्मपरैः पुनः संस्कारमर्हति ॥१२-३३-२२ (६६०८५)
एतत्ते सर्वमाख्यातं कौन्तेयाभक्ष्यभक्षणम् ।
प्रायश्चित्तविधानेन सर्वमेतेन शुद्ध्यति ॥१२-३३-२३ (६६०८६)
गुरुतल्पं हि गुर्वर्थे न दूषयति मानवम् ।
उद्दालकः श्वेतकेतुं जनयामास शिष्यतः ॥१२-३३-२४ (६६०८७)
स्तेयं कुर्वंश्च गुर्वर्थमापत्सु न निषिध्यते ।
बहुशः कामकारेण न चेद्यः संप्रवर्तते ॥१२-३३-२५ (६६०८८)
अन्यत्र ब्राह्मणस्वेभ्य आददानो न दुष्यति ।
स्वयमप्राशिता यश्च न स पापेन लिप्यते ॥१२-३३-२६ (६६०८९)
प्राणत्राणेऽनृतं वाच्यमात्मनो वा परस्य च ।
गुर्वर्थे स्त्रीषु चैव स्याद्विवाहकरणेषु च ॥१२-३३-२७ (६६०९०)
नावर्तते व्रतं स्वप्ने शुक्रमोक्षे कथंचन ।
आज्यहोमः समिद्धेऽग्नौ प्रायश्चित्तं विधीयते ॥१२-३३-२८ (६६०९१)
पारिवित्त्यं तु पतिते नास्ति प्रव्रजिते तथा ।
भिक्षिते पारदार्यं च तद्धर्मस्य न दूषकम् ॥१२-३३-२९ (६६०९२)
वृथा पशुसमालम्भं नैव कुर्यान्न कारयेत् ।
भ्ननुग्रहः पशूनां हि संस्कारो विधिनोदितः ॥१२-३३-३० (६६०९३)
अनर्हे ब्राह्मणे दत्तमज्ञानात्तन्न दूषकम् ।
सत्काराणां तथा तीर्थे नित्यं वा प्रतिपादनम् ॥१२-३३-३१ (६६०९४)
स्त्रियास्तथापचारिण्या निष्कृतिः स्याददूषिका ।
अपि सा पूयते तेन न तु भर्ता प्रदुष्यति ॥१२-३३-३२ (६६०९५)

तत्त्वं ज्ञात्वा तु सोमस्य विक्रयः स्याददोषवान् ।
असमर्थस्य भृत्यस्य विसर्गः स्याददोषवान् ॥१२-३३-३३ (६६०९६)
वनदाहो गवामर्थे क्रियमाणो न दूषकः ।
उक्तान्येतानि कर्माणि यानि कुर्वन्न दुष्यति ॥१२-३३-३४ (६६०९७)
प्रायश्चित्तानि वक्ष्यामि विस्तरेणैव भारत ।
ग्यानि कृत्वा नरः पूतो भविष्यति नराधिप ॥' ॥ १२-३३-३५ (६६०९८)

इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि
त्रयस्त्रिंशोऽध्यायः ॥ ३३.।
Mahabharata - Shanti Parva - Chapter Footnotes

१२-३३-१ प्रायश्चित्तीयते प्रायश्चित्तेऽधिक्रियते ॥
१२-३३-२ मिथ्यानुवर्तयन्कापथ्यं चरन् ॥
१२-३३-४ अनूढे ज्येष्ठे ऊढवान् कनिष्ठः
परिवेत्ता ।परिवित्तिः पूर्वजः। ज्येष्ठायामनूढायां
कनिष्ठामूढवानग्रेदिधिषुः। दिधिषूपतिस्तु कनिष्ठाविवाहोत्तरं
ज्येष्ठामूढवान् ॥
१२-३३-५ अबकीर्णा नष्टव्रतः ।अतीर्थे अपात्रे त्यागी दाता ॥
१२-३३-६ अपविध्येत त्यजेत् ।ब्रह्मविक्रयी भृतकाध्यापकः ॥
१२-३३-१४ नित्यदेयानि गोग्रासादीनि ॥
१२-३३-१६ अप्रजायन् धर्मपत्न्यां काले मैथुनमकुर्वन् ॥
१२-३३-१७ इतरेण संक्षेपेण ॥
१२-३३-१९ जिघांसी हन्तुमिच्छावान् ।इयात् गच्छेत् ॥
१२-३३-२० मन्त्रो मन्युरकार्षीन्नमोनम् इत्यादिर्मन्यवे स्वाहेत्यन्तः ॥
१२-३३-२१ मन्युः क्रोधः तन्मन्युं शत्रोः क्रोधं प्रति ऋच्छति
गच्छति ।क्रोध एव तं प्रतीपीभूय परशरीरद्वारा हन्तीत्यर्थः ॥
१२-३३-२२ आदेशित उपदिष्टः ॥
१२-३३-२४ गुर्वर्थं गुर्वाज्ञया ॥
१२-३३-२६ स्वय प्रकाशितो यश्च इति ट ।ड।थ।पाठः ॥
१२-३३-२८ व्रतं नावर्तते पुनरुपनयनं न कर्तव्यमित्यर्थः
।आज्यहोमः पुनर्मामैत्विन्द्रियमिति मन्त्रेण ॥
१२-३३-२९ वतिप्ते ज्येष्ठभ्रातरि ।भिक्षिते धर्मार्थमपि रेतः
सिञ्चेति स्त्रिया प्रार्थिते सति ॥
१२-३३-३० पशूनामनुग्रहः अहिंसनं संस्कारः पावित्र्यमित्यन्वयः ॥

शन्तिपर्व-अध्यय०३४

॥ श्रीः ॥
१२.३४. अध्यायः ३४

Mahabharata - Shanti Parva - Chapter Topics
व्यासेन युधिष्ठिरंप्रति पापानां प्रायश्चित्तादिकथनम् ॥ १.।
Mahabharata - Shanti Parva - Chapter Text

१२-३४-० (६६०९९)
व्यास उवाच। १२-३४-०क्ष् (५४०५)
तपसा कर्मणा चैव प्रदानेन च भारत ।
पुनाति पापं पुरुषः पूतश्चेन्न प्रवर्तते ॥ १२-३४-१ (६६१००)
एककालं तु भुञ्जानश्चरन्भैक्षं स्वकर्मकृत् ।
कपालपाणिः खट्वाङ्गी ब्रह्मचारी सदोत्थितः ॥ १२-३४-२ (६६१०१)
अनसूयुरधः शायी कर्म लोके प्रकाशयन् ।
पूर्णैर्द्वादशभिर्वर्षैर्ब्रह्महा विप्रमुच्यते ॥ १२-३४-३ (६६१०२)
लक्ष्यः शस्त्रभृतां वा स्याद्विदुषामिच्छयाऽऽत्मनः ।
प्रास्येदात्मानमग्नौ वा समिद्धे त्रिरवाक्शिराः ॥ १२-३४-४ (६६१०३)
जपन्वाऽन्यतमं वेदं योजनानां शतं व्रजेत् ।
सर्वस्वं वा वेदविदे ब्राह्मणायोपपादयेत् ॥ १२-३४-५ (६६१०४)
धनं वा जीवनायालं गृहं वा सपरिच्छदम् ।
मुच्यते ब्रह्महत्याया गोप्ता गोब्राह्मणस्य च ॥ १२-३४-६ (६६१०५)
षड्भिर्वर्षैः कृच्छ्रभोजी ब्रह्महा पूयते नरः ।
मासेमासे समश्नंस्तु त्रिभिर्वर्षैः प्रमुच्यते ॥ १२-३४-७ (६६१०६)
संवत्सरेण मासाशी पूयते नात्र संशयः ।
तथैवोपवसन्राजन्स्वल्पेनापि प्रपूयते ॥ १२-३४-८ (६६१०७)
क्रतुना चाश्वमेधेन पूयते नात्र संशयः ।
ये चाप्यवभृथस्नाताः केचिदेवंविधा नराः ।
ते सर्वे धूतपाप्मानो भवन्तीति परा श्रुतिः ॥ १२-३४-९ (६६१०८)
ब्राह्मणार्थे हतो युद्धे मुच्यते ब्रह्महत्यया ॥ १२-३४-१० (६६१०९)
गवां शतसहस्रं तु पात्रेभ्यः प्रतिपादयेत् ।
ब्रह्महा विप्रमुच्येत सर्वपापेभ्य एव च ॥ १२-३४-११ (६६११०)
कपिलानां सहस्राणि यो दद्यात्पञ्चविंशतिम् ।
दोग्ध्रीणां स च पापेभ्यः सर्वेभ्यो विप्रमुच्यते ॥ १२-३४-१२ (६६१११)
गोसहस्रं सवत्सानां दोग्ध्रीणां प्राणसंशये ।
साधुभ्यो वै दरिद्रेभ्यो दत्त्वा मुच्येत किल्विषात् ॥ १२-३४-१३ (६६११२)
शतं वै यस्तु काम्भोजान्ब्राह्मणेभ्यः प्रयच्छति ।

नियतेभ्यो महीपाल स च पापात्प्रमुच्यते ॥१२-३४-१४ (६६११३)
मनोरथं तु यो दद्यादेकस्मा अपि भारत ।
न कीर्तयेत दत्त्वा यः स च पापात्प्रमुच्यते ॥१२-३४-१५ (६६११४)
सुरापानं सकृत्कृत्वा योऽग्निवर्णां सुरां पिबेत् ।
स पावयत्यथात्मानमिह लोके परत्र च ॥१२-३४-१६ (६६११५)
मरुप्रपातं प्रपतञ्ज्वलनं वा समाविशन् ।
महाप्रस्थानमातिष्ठन्मुच्यते सर्वकिल्बिषैः ॥१२-३४-१७ (६६११६)
बृहस्पतिसवेनेष्ट्वा सुरापो ब्राह्मणः पुनः ।
समितिं ब्राह्मणो गच्छेदिति वै ब्रह्मणः श्रुतिः ॥१२-३४-१८ (६६११७)
भूमिप्रदानं कुर्याद्यः सुरां पीत्वा विमत्सरः ।
पुनर्न च पिबेद्राजन्संस्कृतः स च शुध्यति ॥१२-३४-१९ (६६११८)
गुरुतल्पी शिलां तप्तामायसीमभिसंविशेत् ।
अवकृत्यात्मनः शेफं प्रव्रजेदूर्ध्वदर्शनः ॥१२-३४-२० (६६११९)
शरीरस्य विमोक्षेण मुच्यते कर्मणोऽशुभात् ।
कर्मभ्यो विप्रमुच्यन्ते यताः संवत्सरं स्त्रियः ॥१२-३४-२१ (६६१२०)
महाव्रतं चरेद्यस्तु दद्यात्सर्वस्वमेव तु ।
गुर्वर्थे वा हतो युद्धे स मुच्येत्कर्मणोऽशुभात् ॥१२-३४-२२ (६६१२१)
अनृतेनोपवर्ती चेत्प्रतिरोद्धा गुरोस्तथा ।
उपाहृत्य प्रियं तस्मै तस्मात्पापात्प्रमुच्यते ॥१२-३४-२३ (६६१२२)
अवकीर्णनिमित्तं तु ब्रह्महत्याव्रतं चरेत् ।
गोचर्मवासाः षण्मासांस्तथा मुच्येत किल्बिषात् ॥१२-३४-२४ (६६१२३)
परदारोपसेवी तु परस्यापहरन्वसु ।
संवत्सरं व्रती भूत्वा तथा मुच्येत किल्बिषात् ॥१२-३४-२५ (६६१२४)
धनं तु यस्यापहरेत्तस्मै दद्यात्समं वसु ।
विविधेनाभ्युपायेन तदा मुच्येत किल्बिषात् ॥१२-३४-२६ (६६१२५)
कृच्छ्राद्द्वादशरात्रेण संयतात्मा व्रते स्थितः ।
परिवेत्ता भवेत्पूतः परिवित्तिस्तथैव च ॥१२-३४-२७ (६६१२६)
निवेश्यं तु पुनस्तेन भवेत्तारयता पितॄन् ।
न तु स्त्रिया भवेद्दोषो न तु सा तेन लिप्यते ॥१२-३४-२८ (६६१२७)
भोजनं ह्यन्तराशुद्धं चातुर्मास्ये विधीयते ।
स्त्रियस्तेन प्रशुध्यन्ति इति धर्मविदो विदुः ॥१२-३४-२९ (६६१२८)
स्त्रियस्त्वाशङ्किताः पापे नोपगम्या विजानता ।
रजसा ता विशुध्यन्ते भस्मना भाजनं यथा ॥१२-३४-३० (६६१२९)
पादजोच्छिष्टकांस्यं यद्गवा घ्रातमथापि वा ।
गण्डूषोच्छिष्टमपि वा विशुध्येद्दशभिस्तु तत् ॥१२-३४-३१ (६६१३०)
चतुष्पात्सकलो धर्मो ब्राह्मणस्य विधीयते ।

पादोन इष्टो राजन्ये तथा धर्मो विधीयते ॥१२-३४-३२ (६६१३१)
तथा वैश्ये च शूद्रे च पादः पादो विधीयते ।
विद्यादेवंविधनैषां गुरुलाघवनिश्चयम् ॥१२-३४-३३ (६६१३२)
तिर्यग्योनिवधं कृत्वा द्रुमांश्छित्वोत्तरान्बहून् ।
त्रिरात्रं वायुभक्षः स्यात्कर्म च प्रथयन्नरः ॥१२-३४-३४ (६६१३३)
अगम्यागमने राजन्प्रायश्चित्तं विधीयते ।
आर्द्रवस्त्रेण षण्मासान्विभाव्यं भस्मशायिना ॥१२-३४-३५ (६६१३४)
एवमेव तु सर्वेषामकार्याणां विधिर्भवेत् ।
ब्रह्मणोक्तेन विधिना दृष्टान्तागमहेतुभिः ॥१२-३४-३६ (६६१३५)
सावित्रीमप्यधीयानः शुचौ देशे मिताशनः ।
अहिंसो मन्दकं जल्पान्मुच्यते सर्वकिल्बिषात् ॥१२-३४-३७ (६६१३६)
अहः सु सततं तिष्ठेदभ्याकाशं निशाः स्वपन् ।
त्रिरह्नि त्रिर्निशायां च सवासा जलमाविशेत् ॥१२-३४-३८ (६६१३७)
स्त्रीशूद्रपतितांश्चापि नाभिभाषेद्व्रतान्वितः ।
पापान्यज्ञानतः कृत्वा मुच्येदेवंव्रतो द्विजः ॥१२-३४-३९ (६६१३८)
शुभाशुभफलं प्रेत्य लभते भूतसाक्षिकम् ।
अतिरिच्येत्तयोर्यस्तु तत्कर्ता लभते फलम् ॥१२-३४-४० (६६१३९)
तस्माद्दानेन तपसा कर्मणा च फलं शुभम् ।
वर्धयेदशुभं कृत्वा यथा स्यादतिरेकवान् ॥१२-३४-४१ (६६१४०)
कुर्याच्छुभानि कर्माणि निमित्ते पापकर्मणाम् ।
दद्यान्नित्यं च वित्तानि तथा मुच्येत किल्बिषात् ॥१२-३४-४२ (६६१४१)
अनुरूपं हि पापस्य प्रायश्चित्तमुदाहृतम् ।
महापातकवर्जं तु प्रायश्चित्तं विधीयते ॥१२-३४-४३ (६६१४२)
भक्ष्याभक्ष्येषु चान्येषु वाच्यावाच्ये तथैव च ।
अज्ञानज्ञानयो राजन्विहितान्यनुजानतः ॥१२-३४-४४ (६६१४३)
जानता तु कृतं पापं गुरु सर्वं भवत्युत ।
अज्ञानात्स्खलिते दोषे प्रायश्चित्तं विधीयते ॥१२-३४-४५ (६६१४४)
शक्यते विधिना पापं यथोक्तेन व्यपोहितुम् ।
आस्तिके श्रद्दधाने च विधिरेष विधीयते ॥१२-३४-४६ (६६१४५)
नास्तिकाश्रद्दधानेषु पुरुषेषु कदाचन ।
दम्भद्वेषप्रधानेषु विधिरेष न शिष्यते ॥१२-३४-४७ (६६१४६)
शिष्टाचारश्च दिष्टश्च धर्मो धर्मभृतां वर ।
सेवितव्यो नरव्याघ्र प्रेत्येह च हितेप्सुना ॥१२-३४-४८ (६६१४७)
स राजन्मोक्ष्यते पापात्तेन पूर्णेन हेतुना ।
त्राणार्थं वा वधे तेषामथवा नृपकर्मणा ॥१२-३४-४९ (६६१४८)
अथवा ते घृणा काचित्प्रायश्चित्तं चरिष्यसि ।

मा चैवानार्यजुष्टेन मृत्युना निधनं गमः ॥१२-३४-५० (६६१४९)
वैशंपायन उवाच। १२-३४-५१क्ष् (५४०६)
एवमुक्तो भगवता धर्मराजो युधिष्ठिरः ।
चिन्तयित्वा मुहूर्तेन प्रत्युवाच तपोधनम् ॥ ॥१२-३४-५१ (६६१५०)

इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि
चतुस्त्रिंशोऽध्यायः ॥ ३४.।
Mahabharata - Shanti Parva - Chapter Footnotes

१२-३४-१ तपसा कच्छ्रचान्द्रायणादिना । कर्मणा यज्ञादिना
पुनारिशोधयति ॥
१२-३४-३ कर्म ब्रह्महत्याम् ॥
१२-३४-५ अवाकूशिराः यं कंचिद्वेदं जपन् योजनानां शतं त्रिर्व्रजेत्
शतत्रययोजनं पदचारेण तीर्थयात्रायां वेदं जपन्मुच्यत
इत्यर्थः ॥
१२-३४-७ कच्छ्रभोजी कृच्छ्ररीत्या भुञ्जानः ॥
१२-३४-१७ मरुप्रपातं निर्जलदेशे पर्वताग्रात्पतनम् । महाप्रस्थानं
केदारे हिमवदाहोरणम् ॥
१२-३४-१८ निष्पापः सन् ब्राह्मणसभामारोढुं योग्यो भवतीत्यर्थः ॥
१२-३४-१९ उदपानं शिवं कुर्यात्सुरामिति ड । थ। पाठः ॥
१२-३४-२१ यताः त्यक्ताहारविहाराः ॥
१२-३४-२२ महाव्रतं मासमात्रं जलस्यापि त्यागः ॥
१२-३४-२४ खरचर्मवासाः षण्मासानिति ड।थ।पाठः ॥
१२-३४-२८ तेन कनिष्ठेन निवेश्यं विवाहान्तरं कर्तव्यम् ॥
१२-३४-२९ अन्तराभोजनं धारणापारणव्रतेन मासचतुष्टयकृतेन
शुध्यन्ति महापापयोगे । भाजनं त्वृतुनाशुद्धं चातुर्मास्यं
विधीयते इति थ। पाठः। भाजनं पूतिना शुद्धमिति ड। पाठः ॥
१२-३४-३१ शूद्रस्य उच्छिष्टं कांस्यं पात्रम् । दशभिः शोधनैः
शुद्ध्यति। तानि च पञ्चगव्येन मृत्तोयैर्भस्मनाम्लेन वह्निनेति ॥
१२-३४-३३ विधीयते पादः पादोऽपकृष्ट इत्यर्थः । वैश्यस्य
द्विपादः। शूद्रस्य पादमात्रः। धर्मः शौचादिः ॥
१२-३४-३६ दृष्टान्तभूतो य आगमस्तत्रोक्तैर्हेतुभिर्यावदेन इत्याद्यैः ॥
१२-३४-३८ तिष्ठेदित्युपवेशनादेर्व्यावृत्तिः । अभ्याकाशं निरावरणे
स्थण्डिलादौ। अनुरूपं हि पापस्य अभ्याकाशमिति ट। पाठः ॥
१२-३४-४० यत्र पुण्ये पापे वातिरिच्येत् योऽधिको भवति स
इतरेणेतरदभिभूयातिरिक्तस्य फलं भुङ्क्त इत्यर्थः । अतिरिच्येत

योो यत्र इति झ। पाठः ॥

---

शन्तिपर्व-अध्यय०३५
॥ श्रीः ॥
१२.३५. अध्यायः ३५

Mahabharata - Shanti Parva - Chapter Topics
व्यासेन युधिष्ठिरंप्रति भक्ष्याभक्ष्यपात्रापात्रविवेचनम् ॥ १.।
Mahabharata - Shanti Parva - Chapter Text

१२-३५-० (६६१५१)
युधिष्ठिर उवाच। १२-३५-०क्ष् (५४०७)
किं भक्ष्यं चाप्यभक्ष्यं च किंच देयं प्रशस्यते ।
किंच पात्रमपात्रं वा तन्मे ब्रूहि पितामह ॥ १२-३५-१ (६६१५२)
व्यास उवाच। १२-३५-२क्ष् (५४०८)
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
सिद्धानां चैव संवादं मनोश्चैव प्रजापतेः ॥ १२-३५-२ (६६१५३)
ऋषयस्तु व्रतपराः समागम्य पुरा विभुम् ।
धर्मं पप्रच्छुरासीनमादिकाले प्रजापतिम् ॥ १२-३५-३ (६६१५४)
कथमन्त्रं कथं दानं गम्यागम्याः कथं स्त्रियः ।
कार्याकार्यं च यत्सर्वं शंस वै त्वं प्रजापते ॥ १२-३५-४ (६६१५५)
तैरेवमुक्तो भगवान्मनुः स्वायंभुवोऽब्रवीत् ।
शुश्रूषध्वं यथावृत्तं धर्मं व्याससमासतः ॥ १२-३५-५ (६६१५६)
अनादेशे जपो होम उपवासस्तथैव च ।
आत्मज्ञानं पुण्यनद्यो यत्र प्रायश्च तत्पराः ॥ १२-३५-६ (६६१५७)
अनादिष्टं तथैतानि पुण्यानि धरणीभृतः ।
सुवर्णप्राशनमपि रत्नादिस्नानमेव च ॥ १२-३५-७ (६६१५८)
देवस्थानाभिगमनमाज्यप्राशनमेव च ।
एतानि मेध्यं पुरुषं कुर्वन्त्याशु न संशयः ॥ १२-३५-८ (६६१५९)
न गर्वेण भवेत्प्राज्ञः कदाचिदपि मानवः ।
दीर्घमायुरथेच्छन्हि त्रिरात्रं चोष्णपो भवेत् ॥ १२-३५-९ (६६१६०)
अदत्तस्यानुपादानं दानमध्ययनं तपः ।
अहिंसा सत्यमक्रोधं क्षमा धर्मस्य लक्षणम् ॥ १२-३५-१० (६६१६१)
स एव धर्मः सोऽधर्मो देशकाले प्रतिष्ठितः ।
आदानमनृतं हिंसा धर्मो ह्यात्यन्तिकः स्मृतः ॥ १२-३५-११ (६६१६२)
द्विविधौ चाप्युभावेतौ धर्माधर्मौ विजानताम् ।
अप्रवृत्तिः प्रवृत्तिश्च द्वैविध्यं लोकवेदयोः ॥ १२-३५-१२ (६६१६३)

अप्रवृत्तेरमर्त्यत्वं मर्त्यत्वं कर्मणः फलम् ।
अशुभस्याशुभं विद्याच्छुभस्य शुभमेव च ।
एतयोश्चोभयोः स्यातां शुभाशुभतया तथा ॥ १२-३५-१३ (६६१६४)
दैवं च दैवसंयुक्तं प्राणश्च प्रलयस्तथा ।
अप्रेक्षापूर्वकरणादशुभानां शुभं फलम् ॥१२-३५-१४ (६६१६५)
ऊर्ध्वं भवति संदेहादिहादिष्टार्थमेव च ।
अप्रेक्षापूर्वकरणात्प्रायश्चित्तं विधीयते ॥१२-३५-१५ (६६१६६)
क्रोधमोहकृते चैव दृष्टान्तागमहेतुभिः ।
शरीराणामुपक्लेशो मनसश्च प्रियाप्रिये ।
तदौषधैश्च मन्त्रैश्च प्रायश्चित्तैश्च शाम्यति ॥ १२-३५-१६
(६६१६७)
उपवासेनैकरात्रं दण्डोत्सर्गे नराधिपः ।
विशुद्ध्येदात्मशुद्ध्यर्थं त्रिरात्रं तु पुरोहितः ॥१२-३५-१७ (६६१६८)
क्षयं शोकं प्रकुर्वाणो न म्रियेत यदा नरः ।
शस्त्रादिभिरुपाविष्टस्त्रिरात्रं तत्र निर्दिशेत् ॥१२-३५-१८ (६६१६९)
जातिश्रेण्यधिवासानां कुलधर्मांश्च शाश्वतान् ।
वर्जयन्ति च ये धर्मं तेषां धर्मो न विद्यते ॥१२-३५-१९ (६६१७०)
दश वा वेदशास्त्रज्ञास्त्रयो वा धर्मपाठकाः ।
यद्ब्रूयुः कार्य उत्पन्ने स धर्मो धर्मसंशये ॥१२-३५-२० (६६१७१)
अनुष्णा मृत्तिका चैव तथा क्षुद्रपिपीलिकाः ।
श्लेष्मातकस्तथा विप्रैरभक्ष्यं विषमेव च ॥१२-३५-२१ (६६१७२)
अभक्ष्या ब्राह्मणैर्मत्स्याः शकलैर्ये विवर्जिताः ।
चतुष्पात्कच्छपादन्यो मण्डूका जलजाश्च ये ॥१२-३५-२२ (६६१७३)
भासा हंसाः सुपर्णाश्च चक्रवाकाः प्लवा बकाः ।
काको मद्गुश्च गृध्रश्च श्येनोलूकस्तथैव च ॥१२-३५-२३ (६६१७४)
क्रव्यादा दंष्ट्रिणः सर्वे चतुष्पात्पक्षिणश्च ये ।
येषां चोभयतो दन्ताश्चतुर्दंष्ट्राश्च सर्वशः ॥१२-३५-२४ (६६१७५)
एडकाश्च मृगोष्ट्राणां सूकराणां गवामपि ।
मानुषीणां खरीणां च न पिबेद्ब्राह्मणः पयः ॥१२-३५-२५ (६६१७६)
प्रेतान्नं सूतकान्नं च यच्च किंचिदनिर्दशम् ।
अभोज्यं चाप्यपेयं च धेनोर्दुग्धमनिर्दशम् ॥१२-३५-२६ (६६१७७)
राजान्नं तेज आदत्ते शूद्रान्नं ब्रह्मवर्चसम् ।
आयुः सुवर्णकारान्नमवीरायाश्च योषितः ॥१२-३५-२७ (६६१७८)
विष्ठा वार्धुषिकस्यान्नं गणिकान्नमथेन्द्रियम् ।
मृष्यन्ति ये चोपपतिं स्त्रीजितान्नं च सर्वशः ॥१२-३५-२८ (६६१७९)
दीक्षितस्य कदर्यस्य क्रतुविक्रयिकस्य च ।

तक्ष्णश्चर्मावकर्तुश्च पुंश्चल्या रजकस्य च ॥ १२-३५-२९ (६६१८०)
चिकित्सकस्य यच्चान्नमभोज्यं रक्षिणस्तथा ।
गणग्रामाभिशस्तानां रङ्गस्त्रीजीविनां तथा ॥ १२-३५-३० (६६१८१)
परिवित्तीनामपुंसां च बन्दिद्यूतविदां तथा ।
वामहस्ताहृतं चान्नं शुष्कं पर्युषितं च यत् ॥ १२-३५-३१ (६६१८२)
सुरानुगतमुच्छिष्टमभोज्यं शेषितं च यत् ।
पिष्टमांसेक्षुशाकानामाविकाजापयस्तथा ।
सक्तु धाना करम्भाश्च नोपभोग्याश्चिरस्थिताः ॥ १२-३५-३२ (६६१८३)
पायसं कृसरं मांसमपूपाश्च वृथा कृताः ।
अपेयाश्चाप्यभक्ष्याश्च ब्राह्मणैर्गृहमेधिभिः ॥ १२-३५-३३ (६६१८४)
देवानृषीन्मनुष्यांश्च पितॄन्गृह्याश्च देवताः ।
पूजयित्वा ततः पश्चाद्गृहस्थो भोक्तुमर्हति ॥ १२-३५-३४ (६६१८५)
यथा प्रव्रजितो भिक्षुस्तथैव स्वे गृहे वसेत् ।
एवंवृत्तः प्रियैर्दारैः संबसन्धर्ममाप्नुयात् ॥ १२-३५-३५ (६६१८६)
न दद्याद्यशसे दानं न भयान्नोपकारिणे ।
न नृत्यगीतशीलेषु हासकेषु च धार्मिकः ॥ १२-३५-३६ (६६१८७)
न मत्ते चैव नोन्मत्ते न स्तेने न च कुत्सके ।
न वाग्घीने विवर्णे वा नाङ्गहीने न वामने ॥ १२-३५-३७ (६६१८८)
न दुर्जने दौष्कुले वा व्रतैर्यो वा न संस्कृतः ।
न श्रोत्रियमृते दानं ब्राह्मणे ब्रह्मवर्जिते ॥ १२-३५-३८ (६६१८९)
असम्यच्चैव यद्दत्तमसम्यक् च प्रतिग्रहः ।
उभयं स्यादनर्थाय दातुरादातुरेव च ॥ १२-३५-३९ (६६१९०)
यथा खदिरमालम्ब्य शिलां वाप्यर्णवं तरन् ।
मज्जेत मज्जतस्तद्वद्दाता यश्च प्रतिग्रही ॥ १२-३५-४० (६६१९१)
काष्ठैरार्द्रैर्यथा वह्निरुपस्तीर्णो न दीप्यते ।
तपःस्वाध्यायचारित्रैरेवं हीनः प्रतिग्रही ॥ १२-३५-४१ (६६१९२)
कपाले यद्वदापः स्युः श्वदृतौ च यथा पयः ।
आश्रयस्थानदोषेण वृत्तहीने तथा श्रुतम् ॥ १२-३५-४२ (६६१९३)
निर्मन्त्रो निर्वृतो यः स्यादशास्त्रज्ञोऽनसूयकः ।
अनुक्रोशात्प्रदातव्यं हीनेष्वव्रतिकेषु च ॥ १२-३५-४३ (६६१९४)
न वै देयमनुक्रोशाद्दीनायापगुणाय तु ।
आप्ताचरित इत्येव धर्म इत्येव वा पुनः ॥ १२-३५-४४ (६६१९५)
निष्कारणं स्मृतं दत्तं ब्राह्मणे ब्रह्मवर्जिते ।
न फलेत्पात्रदोषेण न चात्रास्ति विचारणा ॥ १२-३५-४५ (६६१९६)
यथा दारुमयो हस्ती यथा चर्ममयो मृगः ।
ब्राह्मणश्चानधीयानस्त्रयस्ते नामधारकाः ॥ १२-३५-४६ (६६१९७)

यथा षण्ढोऽफलः स्त्रीषु यथा गौर्गवि चाफला ।
शकुनिर्वाप्यपक्षः स्यान्निर्मन्त्रो ब्राह्मणस्तथा ॥ १२-३५-४७ (६६१९८)
ग्रामस्थानं यथा शून्यं यथा कूपश्च निर्जलः ।
यथा हुतमनग्नौ च तथैव स्यान्निराकृतौ ॥ १२-३५-४८ (६६१९९)
देवतानां पितॄणां च हव्यकव्यविनाशकः ।
सर्वथाऽर्थहरो मूर्खो न लोकान्प्राप्तुमर्हति ॥ १२-३५-४९ (६६२००)
एतत्ते कथितं सर्वं यथावृत्तं युधिष्ठिर ।
समासेन महद्ध्येतच्छ्रोतव्यं नरतर्षभ ॥ ॥ १२-३५-५० (६६२०१)

इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि
पञ्चत्रिंशोऽध्यायः ॥ ३५.।

Mahabharata - Shanti Parva - Chapter Footnotes

१२-३५-३ प्रजापतिं मनुम् ॥
१२-३५-४ कथं पात्रं दानमध्ययनं तप इति झ ।पाठः। तत्र
कथं केन प्रकारेण। अन्नमदनीयं किंद्रव्यक कर्तव्यमित्यर्थः ॥
१२-३५-५ व्यारो विस्तरः ॥
१२-३५-६ अनादेशे विशेषतोऽनुक्ते दोषे ।यत्र देशे तत्पराः
जपादिपराः प्रायः बहुशः सन्ति सोऽपि गङ्गादिवत्पावन इत्यर्थः ॥
१२-३५-७ तथा जपादिवत् ।पुण्यान्येतानि वक्ष्यमाणानि। धरणीभृतः
पर्वता ब्रह्मगिरिप्रभृतयः। आदिपदात्सुवर्णस्नानादि। अनादिष्टं
प्रायश्चित्तं सामान्यमित्यर्थः ॥
१२-३५-९ गर्वेण युक्तो न भवेत् पूजां नावगणयेत् ।अवगणने
तु त्रिरात्रमुष्णपो भवेदिति तप्तकृच्छ्रं धर्मशास्त्रोक्तं
कुर्यादित्यर्थः ॥
१२-३५-१० तप उपवासादि ॥
१२-३५-११ आदानं स्तेयम् ।प्राणात्ययादावधर्मस्यापि
स्तेयादेर्धर्मत्वमित्यर्थः ॥
१२-३५-१२ वैदिक्यौ प्रवृत्त्यप्रवृत्ती मर्त्यात्वामृतत्वप्रदे
।लौकिक्यौ तु ते शुभे चेच्छुभफले अशुभे चेदशुभफले इत्याह
द्वाभ्यां द्विविधाविति ॥
१२-३५-१३ एतयोर्लौकिक्योः ।फले अपि कारणानुरूपे इत्यर्थः ॥
१२-३५-१४ दैवयुक्तं शास्त्रीयं कर्म ।प्राणो जीवनम्। एतेषां
चतुर्णामप्रेक्षापूर्वं यत्किंचित्क्रियते तर्ह्यशुभानो नीचानामपि
पुंसां तस्य फलं शुभं भवति ॥
१२-३५-१५ सत्यपि संदेहे यल्लोकविगानपरिहारार्थं कृतं नित्यादि

यच्च केवलं दृष्टार्थं कृतं श्येनादि तत्रोभयत्रापि ॥
१२-३५-१६ क्रोधादिना यन्मनसः प्रियमप्रियं कृतं
तत्र दृष्टान्तागमहेतुभिः पूर्वोक्तैर्यावदेन इत्याद्यैः
प्रमाणैर्देहस्य शोषणमुपवासादिकं प्रायश्चित्तं
कर्तव्यम् । औषधैर्हविष्याशनैः। मन्त्रैश्च
पवित्रजपैः। चादन्यदपि। तीर्थाटनश्रमादिभिस्तत्पापं शाम्यतीति
सार्धम् ॥
१२-३५-१८ क्षयं पुत्रादिमरणनिमित्तमात्मवधार्थं प्रवृत्तो न
म्रियेत चेत् त्रिरात्रमुपवासं चरेत् ॥
१२-३५-१९ जातिर्ब्राह्मणत्वादिः । श्रेणी गृहस्थादीनां पङ्क्तिः। अधिवासो
जन्भभूमिः। जात्यादिधर्मांश्च ये वर्जयन्ति तेषां धर्मः
प्रायश्चित्तादि स्वरूपो न विद्यते ॥
१२-३५-२० पाठकाः शोधकाः । कार्ये प्रायश्चित्तनिमित्ते दोषे ॥
१२-३५-२५ एडका मेषी ॥
१२-३५-२६ अभोज्यं पायसाद्यन्तर्गतम् ॥
१२-३५-२७ अवीरायाः पतिपुत्रहीनायाः ॥
१२-३५-२८ इन्द्रियं शुक्रम् । गणिकादित्रयाणामन्नम् ॥
१२-३५-२९ दीक्षितस्य अग्नीषोमीयवपाहोमात्प्राङ् न भोक्तव्यम् । कदर्यो
धनव्ययभयाद्भोगत्यागहीनः ॥
१२-३५-३० रक्षिणो ग्रामपालकस्य सीमादिरक्षिणो वा ॥
१२-३५-३१ वाद्यमानाहृतं चान्नमिति टङ्थ । पाठः ॥
१२-३५-३२ शेषितं कुटुम्बायाऽदत्त्वात्मार्थं रक्षितम् । धाना
भृष्टयवाः। करम्भा दधिसक्तवः ॥
१२-३५-३३ कृसरं तिलमिश्र ओदनः । वृथाकृताः देवताद्युद्देशं
विना कृताः ॥
१२-३५-३६ हासकेषु परिहासपरेषु भाण्डेषु ॥
१२-३५-३७ वाग्धीने मूके मूर्खे वा ॥
१२-३५-४२ श्वदृतौ शुनकचर्ममये कोशे ॥
१२-३५-४३ अनुक्रोशाद्दयया ॥
१२-३५-४४ आप्तचरित इष्टकारीति बुद्ध्या धर्मबुद्ध्या वा निर्मन्त्रे
न देयमित्याह नवा इति ॥
१२-३५-४५ निष्कारणं निष्फलम् ॥
१२-३५-४८ निराकृतौ मूर्खे ॥

---

शन्तिपर्व-अध्यय०३६
॥ श्रीः ॥
१२.३६. अध्यायः ३६

व्यासेन भीष्ममुखाराजधर्मादिश्रवणे आदिष्टस्य युधिष्ठिरस्य कृष्णाद्याज्ञया धृतराष्ट्रादिभिः सह कुरुनगरप्रवेशः ॥ १.।


१२-३६-० (६६२०२)
युधिष्ठिर उवाच। १२-३६-०क्ष् (५४०९)
श्रोतुमिच्छामि भगवन्विस्तरेण महामुने ।
राजधर्मान्द्विजश्रेष्ठ चातुर्वर्ण्यस्य चाखिलान् ॥ १२-३६-१ (६६२०३)
आपत्सु च यथा नीतिः प्रणेतव्या द्विजोत्तम ।
धर्म्यमालम्ब्य पन्थानं विजयेयं कथं महीम् ॥ १२-३६-२ (६६२०४)
प्रायश्चित्तकथा ह्येषा भक्ष्याभक्ष्यसमन्विता ।
कौतूहलानुप्रवणा हर्षं जनयतीव मे ॥ १२-३६-३ (६६२०५)
धर्मचर्या च राज्यं च नित्यमेव विरुध्यते ।
एवं मुह्यति मे चेतश्चिन्तयानस्य नित्यशः ॥ १२-३६-४ (६६२०६)
वैशंपायन उवाच। १२-३६-५क्ष् (५४१०)
तमुवाच महाराज व्यासो वेदविदां वरः ।
नारदं समभिप्रेक्ष्य सर्वं जानन्पुरातनम् ॥ १२-३६-५ (६६२०७)
श्रोतुमिच्छसि चेद्धर्मं निखिलेन नराधिप ।
प्रेहि भीष्मं महाबाहो वृद्धं कुरुपितामहम् ॥ १२-३६-६ (६६२०८)
स ते धर्मरहस्येषु संशयान्मनसि स्थितान् ।
छेत्ता भागीरथीपुत्रः सर्वज्ञः सर्वधर्मवित् ॥ १२-३६-७ (६६२०९)
जनयामास यं देवी दिव्या त्रिपथगा नदी ।
साक्षाद्ददर्श यो देवान्सर्वानिन्द्रपुरोगमान् ॥ १२-३६-८ (६६२१०)
बृहस्पतिपुरोगांस्तु देवर्षीनसकृत्प्रभुः ।
तोषयित्वोपचारेण राजनीतिमधीतवान् ॥ १२-३६-९ (६६२११)
उशना वेद यच्छास्त्रं देवासुरगुरुर्द्विजः ।
स च धर्मं सवैयाख्यं प्राप्तवान्कुरुसत्तमः ॥ १२-३६-१० (६६२१२)
भार्गवाच्च्यवनाच्चापि वेदानङ्गोपबृंहितान् ।
प्रतिपेदे महाबुद्धिर्वसिष्ठाच्चरितव्रतः ॥ १२-३६-११ (६६२१३)
पितामहसुतं ज्येष्ठं कुमारं दीप्ततेजसम् ।
अध्यात्मगतितत्त्वज्ञमुपाशिक्षत यः पुरा ॥ १२-३६-१२ (६६२१४)
मार्कण्डेयमुखात्कृत्स्नं यतिधर्ममवाप्तवान् ।
रामादस्त्राणि शक्राच्च प्राप्तवान्पुरुपर्षभः ॥ १२-३६-१३ (६६२१५)
मृत्युरात्मेच्छया यस्य जातस्य मनुजेष्वपि ।

तथाऽनपत्यस्य सतः पुण्यलोकादिविश्रुताः ॥ १२-३६-१४ (६६२१६)
यस्य ब्रह्मर्षयः पुण्या नित्यमासन्स भसादः ।
यस्य नाविदितं किंचिज्ज्ञानं ज्ञेयेषु दृश्यते ॥ १२-३६-१५ (६६२१७)
स ते वक्ष्यति धर्मज्ञः सूक्ष्मधर्मार्थतत्त्ववित् ।
तमभ्येहि पुरा प्राणान्स विमुञ्चति धर्मवित् ॥ १२-३६-१६ (६६२१८)
एवमुक्तस्तु कौन्तेयो दीर्घप्रज्ञो महामतिः ।
उवाच वदतां श्रेष्ठं व्यासं सत्यवतीसुतम् ॥ १२-३६-१७ (६६२१९)
युधिष्ठिर उवाच। १२-३६-१८क्ष् (५४११)
वैशसं सुमहत्कृत्वा ज्ञातीनां रोमहर्षणम् ।
आगस्कृत्सर्वलोकस्य पृथिवीनाशकारकः ॥ १२-३६-१८ (६६२२०)
घातयित्वा तमेवाजौ छलेनाजिह्मयोधिनम् ।
उपसंप्रष्टुमर्हामि तमहं केन हेतुना ॥ १२-३६-१९ (६६२२१)
वैशंपायन उवाच। १२-३६-२०क्ष् (५४१२)
ततस्तं नृपतिश्रेष्ठं चातुर्वर्ण्यहितेप्सया ।
पुनरेव महाबाहुर्यदुश्रेष्ठोऽब्रवीद्वचः ॥ १२-३६-२० (६६२२२)
वासुदेव उवाच। १२-३६-२१क्ष् (५४१३)
नेदानीमतिनिर्बन्धं शोके त्वं कर्तुमर्हसि ।
यदाह भगवान्व्यासस्तत्कुरुष्व नृपोत्तम ॥ १२-३६-२१ (६६२२३)
ब्राह्मणास्त्वां महाबाहो भ्रातरश्च महौजसः ।
पर्जन्यमिव घर्मान्ते नाथमाना उपासते ॥ १२-३६-२२ (६६२२४)
हतशिष्टाश्च राजानः कृत्स्नं चैव समागतम् ।
चातुर्वर्ण्यं महाराज राष्ट्रं ते कुरुजाङ्गलम् ॥ १२-३६-२३ (६६२२५)
प्रियार्थमपि चैतेषां ब्राह्मणानां महात्मनाम् ।
नियोगादस्य च गुरोर्व्यासस्यामिततेजसः ॥ १२-३६-२४ (६६२२६)
सुहृदामस्मदादीनां द्रौपद्यांश्च परंतप ।
कुरु प्रियममित्रघ्न लोकस्य च हितं कुरु ॥ १२-३६-२५ (६६२२७)
वैशंपायन उवाच। १२-३६-२६क्ष् (५४१४)
एवमुक्तः स कृष्णेन राजा राजीवलोचनः ।
हितार्थं सर्वलोकस्य समुत्तस्थौ महामनाः ॥ १२-३६-२६ (६६२२८)
सोऽनुनीतो नरव्याघ्र विष्टरश्रवसा स्वयम् ।
द्वैपायनेन च तथा देवस्थानेन जिष्णुना ॥ १२-३६-२७ (६६२२९)
एतैश्चान्यैश्च बहुभिरनुनीतो युधिष्ठिरः ।
व्यजहान्मानसं दुःखं संतापं च महायशाः ॥ १२-३६-२८ (६६२३०)
श्रुतवाक्यः श्रुतनिधिः श्रुतश्राव्यविशारदः ।
व्यवस्य मनसा शान्तिमगच्छत्पाण्डुनन्दनः ॥ १२-३६-२९ (६६२३१)
स तैः परिवृतो राजा नक्षत्रैरिव चन्द्रमाः ।

धृतराष्ट्रं पुरस्कृत्य स्वपुरं प्रविवेश ह ॥ १२-३६-३० (६६२३२)
प्रविविक्षुः स धर्मज्ञः कुन्तीपुत्रो युधिष्ठिरः ।
अर्चयामास देवांश्च ब्राह्मणांश्च सहस्रशः ॥ १२-३६-३१ (६६२३३)
ततो नवं रथं शुभ्रं कम्बलाजिनसंवृतम् ।
युक्तं षोडशभिस्त्वश्वैः पाण्डुरैः शुभलक्षणैः ॥ १२-३६-३२ (६६२३४)
मन्त्रैरभ्यर्चितं पण्यैः स्तूयमानश्च बन्दिभिः ।
आरुरोह यथा देवः सोमोऽम्रतमयं यथम् ॥ १२-३६-३३ (६६२३५)
जग्राह रश्मीन्कौन्तेयो भीमो भीमपराक्रमः ।
अर्जुनः पाण्डुरं छत्रं धारयामास भानुमत् ॥ १२-३६-३४ (६६२३६)
ध्रियमाणं च तच्छत्रं पाण्डुरं राजमूर्धनि ।
शुशुभे तारकाराजः सिताभ्र इव चाम्बरे ॥ १२-३६-३५ (६६२३७)
चामरव्यजने त्वस्य वीरौ जगृहतुस्तदा ।
चन्द्ररश्मिप्रये शुभ्रे माद्रीपुत्रावलंकृते ॥ १२-३६-३६ (६६२३८)
ते पञ्च रथमास्थाय भ्रातरः समलंकृताः ।
भूतानीव समस्तानि राजन्ददृशिरे तदा ॥ १२-३६-३७ (६६२३९)
आस्थाय तु रथं शुभ्रं युक्तमश्वैर्मनोजवैः ।
अन्वयात्पृष्ठतो राजन्युयुत्सुः पाण्डवाग्रजम् ॥ १२-३६-३८ (६६२४०)
रथं हेममयं शुभ्रं शैव्यसुग्रीवयाजितम् ।
सह सात्यकिना कृष्णः समास्थायान्वयात्कुरून् ॥ १२-३६-३९ (६६२४१)
नरयानेन तु ज्येष्ठः पिता पार्थस्य भारत ।
अग्रतो धर्मराजस्य गान्धारीसहितो ययौ ॥ १२-३६-४० (६६२४२)
कुरुस्त्रियश्च ताः सर्वाः कुन्ती कृष्णा च माधवी ।
यानैरुच्चावचैर्जग्मुर्विदुरेण पुरस्कृताः ॥ १२-३६-४१ (६६२४३)
ततो रथाश्च बहुला नागाश्वसमलंकृताः ।
पादाताश्च हयाश्चैव पृष्ठतः समनुव्रजन् ॥ १२-३६-४२ (६६२४४)
ततो वैतालिकैः सूतैर्मागधैश्च सुभाषितैः ।
स्तूयमानो ययौ राजा नगरं नागसाह्वयम् ॥ १२-३६-४३ (६६२४५)
तत्प्रयाणं माहबाहोर्बभूवाप्रतिमं भुवि ।
आकुलाकुलमुत्क्रुष्टं हृष्टपुष्टजनाकुलम् ॥ १२-३६-४४ (६६२४६)
अभियाने तु पार्थस्य नरैर्नगरवासिभिः ।
नगरं राजमार्गाश्च यथावत्समलंकृताः ॥ १२-३६-४५ (६६२४७)
पाण्डुरेण च माल्येन पताकाभिश्च मेदिनी ।
संस्कृतो राजमार्गोऽभूद्धूपनैश्च प्रधूपितः ॥ १२-३६-४६ (६६२४८)
अथ चूर्णैश्च गन्धानां नानापुष्पप्रियङ्गुभिः ।
माल्यदामभिरासक्तै राजवेश्माभिसंवृतम् ॥ १२-३६-४७ (६६२४९)
कुम्भाश्च नगरद्वारि वारिपूर्णा नवा दृढाः ।

सिताः सुमनसो गौराः स्थापितास्तत्र तत्र ह ॥१२-३६-४८ (६६२५०)
तथा स्वलंकृतं द्वारं नगरं पाण्डुनन्दनः ।
स्तूयमानः शुभैर्वाक्यैः प्रविवेश सुहृद्वृतः ॥ ॥१२-३६-४९ (६६२५१)

इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि
षट्त्रिंशोऽध्यायः ॥ ३६.।
Mahabharata - Shanti Parva - Chapter Footnotes

१२-३६-३ कौतूहलेन प्रसङ्गेनाऽनुप्रवणा अभिमुखा ॥
१२-३६-६ प्रेहि प्रयाहि ॥
१२-३६-१० यच्च देवगुरुर्द्विज इति झ ।पाठः।सवैयाख्यं
व्याख्यासहितम् ॥
१२-३६-१६ विमुञ्चति विमोक्ष्यति ततः पुरा ॥
१२-३६-१८ वैशसं विनाशम् ॥
१२-३६-२२ नाथमानाः याचमानाः ।उपासत इत्युत्तरत्रापि योज्यम् ॥
१२-३६-२७ विष्टरश्रवसा विष्णुना ॥
१२-३६-२८ संतापं शारीरं तापम् ॥
१२-३६-२९ वाक्यानि वेदावयवाः ।निधिस्तदर्थविचारग्रन्थो
मीमांसा।श्रुतं श्राव्यं नीतिशास्त्रादि।व्यवस्य कर्तव्यमर्थं
निश्चित्य ॥
१२-३६-३३ अमृतमयं देवतामयम् ॥
१२-३६-३८ युयुत्सुर्धृतराष्ट्रपुत्रः ॥
१२-३६-४६ मेदिनी समलंकृतेत्यनुषज्यते ।धूपनैः
अगरुप्रभृतिभिर्धूपद्रव्यैः ॥

---

शन्तिपर्व-अध्यय०३७
॥ श्रीः ॥
१२.३७. अध्यायः ३७

Mahabharata - Shanti Parva - Chapter Topics
राजमार्गे नागरैः स्तूयमानस्य युधिष्ठिरस्य राजगृहमेत्य
सभाप्रवेशः ॥१.।तत्र युधिष्ठिरं निन्दतश्चार्वाकराक्षसस्य
ब्राह्मणैर्हुंकारेण भस्मीकरणम् ॥ २.।
Mahabharata - Shanti Parva - Chapter Text

१२-३७-० (६६२५२)

वैशंपायन उवाच। १२-३७-०क्ष् (५४१५)
प्रवेशने तु पार्थानां जनानां पुरवासिनाम् ।
दिदृक्षूणां सहस्राणि समाजग्मुः सहस्रशः ॥ १२-३७-१ (६६२५३)
स राजमार्गः शुशुभे समलंकृतचत्वरः ।
यथा चन्द्रोदये राजन्वर्धमानो महोदधिः ॥ १२-३७-२ (६६२५४)
गृहाणि राजमार्गेषु रत्नवन्ति महान्ति च ।
प्राकम्पन्तीव भारेण स्त्रीणां पूर्णानि भारत ॥ १२-३७-३ (६६२५५)
ताः शनैरिव सव्रीडं प्रशशंसुर्युधिष्ठिरम् ।
भीमसेनार्जुनौ चैव माद्रीपुत्रौ च पाण्डवौ ॥ १२-३७-४ (६६२५६)
धन्या त्वमसि पाञ्चालि या त्वं पुरुषसत्तमान् ।
उपतिष्ठसि कल्याणि महर्षिमिव गौतमी ॥ १२-३७-५ (६६२५७)
तव कर्माण्यमोघानि व्रतचर्या च भामिनि ।
इति कृष्णां महाराज प्रशशंसुस्तदा स्त्रियः ॥ १२-३७-६ (६६२५८)
प्रशंसावचनैस्तासां मिथः शब्दैश्च भारत ।
प्रीतिजैश्च तदा शब्दैः पुरमासीत्समाकुलम् ॥ १२-३७-७ (६६२५९)
तमतीत्य यथायुक्तं राजमार्गं युधिष्ठिरः ।
अलंकृतं शोभमानमुपापाद्राजवेश्म ह ॥ १२-३७-८ (६६२६०)
ततः प्रकृतयः सर्वाः पौरा जानपदास्तदा ।
ऊचुः कर्णसुखा वाचः समुपेत्य ततस्ततः ॥ १२-३७-९ (६६२६१)
दिष्ट्या जयसि राजेन्द्र शत्रूञ्छत्रुनिषूदन ।
दिष्ट्या राज्यं पुनः प्राप्तं धर्मेण च बलेन च ॥ १२-३७-१० (६६२६२)
भव नस्त्वं महाराज राजेह शरदां शतम् ।
प्रजाः पालय धर्मेण यथेन्द्रस्त्रिदिवं तथा ॥ १२-३७-११ (६६२६३)
एवं राजकुलद्वारि मङ्गलैरभिपूजितः ।
आशीर्वादान्द्विजैरुक्तान्प्रतिगृह्य समन्ततः ॥ १२-३७-१२ (६६२६४)
प्रविश्य भवनं राजा देवराजगृहोपमम् ।
श्रुत्वा विजयसंयुक्तं रथात्पश्चादवातरत् ॥ १२-३७-१३ (६६२६५)
प्रविश्याभ्यन्तरं श्रीमान्दैवतान्यभिगम्य च ।
पूजयामास रत्नैश्च गन्धमाल्यैश्च सर्वशः ॥ १२-३७-१४ (६६२६६)
निश्चक्राम ततः श्रीमान्पुनरेव महायशाः ।
ददर्श ब्राह्मणांश्चैव सोऽभिरूपानवस्थितान् ॥ १२-३७-१५ (६६२६७)
स संवृतस्तदा विप्रैराशीर्वादविवक्षुभिः ।
शुशुभे विमलश्चन्द्रस्तारागणवृतो यथा ॥ १२-३७-१६ (६६२६८)
तांस्तु वै पूजयामास कौन्तेयो विधिवद्द्विजान् ।
सुमनोमोदकै रत्नैर्हिरण्येन च भूरिणा ।
गोभिर्वस्त्रैश्च राजेन्द्र विविधैश्च किमिच्छकैः ॥ १२-३७-१७ (६६२६९)

धौम्यं गुरुं पुरस्कृत्य ज्येष्ठं पितरमेव च ।
गप्रविवेश सभां राजा सुधर्मां वासवो यथा ॥' १२-३७-१८ (६६२७०)
ततः पुण्याहघोषोऽभूद्दिवं स्तब्ध्वेव भारत ।
सुहृदां प्रीतिजननः पुण्यः श्रुतिसुखावहः ॥ १२-३७-१९ (६६२७१)
हंसवन्नेदुषां राजन्द्विजानां तत्र भारती ।
शुश्रुवे वेदविदुषां पुष्कलार्थपदाक्षरा ॥ १२-३७-२० (६६२७२)
ततो दुन्दुभिनिर्घोषः शङ्खानां च मनोरमः ।
जयं प्रवदतां तत्र स्वनः प्रादुरभून्नृप ॥ १२-३७-२१ (६६२७३)
निःशब्दे च स्थिते तत्र ततो विप्रजने पुनः ।
राजानं ब्राह्मणच्छद्मा चार्वाको राक्षसोऽब्रवीत् ॥ १२-३७-२२ (६६२७४)
तत्र दुर्योधनसखा भिक्षुरूपेण संवृतः ।
साङ्ख्यः शिखी त्रिदण्डी च धृष्टो विगतसाध्वसः ॥ १२-३७-२३ (६६२७५)
वृतः सर्वैस्तथा विप्रैराशीर्वादविवक्षुभिः ।
परस्सहस्रै राजेन्द्र तपोनियमसंस्थितैः ॥ १२-३७-२४ (६६२७६)
सुदुष्टः पापमाशंसुः पाण्डवानां महात्मनाम् ।
अनामन्त्र्यैव तान्विप्रांस्तमुवाच महीपतिम् ॥ १२-३७-२५ (६६२७७)
चार्वाक उवाच। १२-३७-२६क्ष् (५४१६)
इमे प्राहुर्द्विजाः सर्वे समारोप्य वचो मयि ।
धिग्भवन्तं कुनृपतिं ज्ञातिघातिनमस्तु वै ॥ १२-३७-२६ (६६२७८)
किं ते राज्येन कौन्तेय कृत्वेमं ज्ञातिसंक्षयम् ।
घातयित्वा गुरूंश्चैव मृतं श्रेयो न जीवितम् ॥ १२-३७-२७ (६६२७९)
इति ते वै द्विजाः श्रुत्वा तस्य दुष्टस्य रक्षसः ।
विव्यथुश्चुक्रुशुश्चैव तस्य वाक्यप्रधर्षिताः ॥ १२-३७-२८ (६६२८०)
ततस्ते ब्राह्मणाः सर्वे स च राजा युधिष्ठिरः ।
व्रीडिताः परमोद्विग्नास्तूष्णीमासन्विशांपते ॥ १२-३७-२९ (६६२८१)
युधिष्ठिर उवाच। १२-३७-३०क्ष् (५४१७)
प्रसीदन्तु भवन्तो मे प्रणतस्याभियाचतः ।
प्रत्यासन्नव्यसनिनं न मां धिक्कर्तुमर्हथ ॥ १२-३७-३० (६६२८२)
वैशंपायन उवाच। १२-३७-३१क्ष् (५४१८)
ततो राजन्ब्राह्माणास्ते सर्व एव विशांपते ।
ऊचुर्नैष द्विजोऽस्माकमन्यस्तु तव पार्थिव ॥ १२-३७-३१ (६६२८३)
जज्ञुश्चैनं महात्मानस्ततस्तं ज्ञानचक्षुषा ।
ब्राह्मणा वेदविद्वांसस्तपोभिर्विमलीकृताः ॥ १२-३७-३२ (६६२८४)
ब्राह्मणा ऊचुः। १२-३७-३३क्ष् (५४१९)
एष दुर्योधनसखा विश्रुतो ब्रह्मराक्षसः ।
परिव्राजकरूपेण हितं तस्य चिकीर्षति ॥ १२-३७-३३ (६६२८५)

न वयं ब्रूम धर्मात्मन्व्येतु ते भयमीदृशम् ।
उपतिष्ठतु कल्याणं भवन्तं भ्रातृभिः सह ॥ १२-३७-३४ (६६२८६)
वैशंपायन उवाच। १२-३७-३५क्ष् (५४२०)
ततस्ते ब्राह्मणाः सर्वे हुंकारैः क्रोधमूर्च्छिताः ।
निर्भर्त्सयन्तः शुचयो निजघ्नुः पापराक्षसम् ॥ १२-३७-३५ (६६२८७)
स पपात विनिर्दग्धस्तेजसा ब्रह्मवादिनाम् ।
महेन्द्राशनिनिर्दग्धः पादपोऽङ्कुरवानिव ॥ १२-३७-३६ (६६२८८)
पूजिताश्च ययुर्विप्रा राजानमभिनन्द्य तम् ।
राजा च हर्षमापेदे पाण्डवः ससुहृज्जनः ॥ ॥ १२-३७-३७ (६६२८९)

इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि
सप्तत्रिंशोऽध्यायः ॥ ३७.।
Mahabharata - Shanti Parva - Chapter Footnotes

१२-३७-३ स्त्रीणां स्त्रीभिः ॥
१२-३७-१५ अभिरूपान्मङ्गलद्रव्यपाणीन् ॥
१२-३७-१७ किमिच्छसि किमिच्छसीति
पृच्छद्भिर्भृत्यैर्विविधैर्गोवस्त्रादिद्रव्यैर्निमन्त्रयद्भिरित्यर्थः
॥
१२-३७-१९ स्तब्ध्वा व्याप्य ॥
१२-३७-२३ साक्षः शिखीति झ पाठः ॥
१२-३७-३० प्रत्यासन्नाः समीपस्थाः व्यसनिनश्चिरदुःखिनो भ्रात्रादयो
यस्य तम् । भ्रात्रादिदुःखपरिहारार्थं ममेदं राज्यकरणं नतु
स्वसुखार्थमित्यर्थः ॥
१२-३७-३२ जज्ञुर्ज्ञातवन्तः ॥
१२-३७-३३ चार्वाको नाम राक्षसः इति झ । पाठः ॥

---

शन्तिपर्व-अध्यय०३८
॥ श्रीः ॥
१२.३८. अध्यायः ३८

Mahabharata - Shanti Parva - Chapter Topics
कृष्णेन युधिष्ठिरंप्रति चार्वाकराक्षसस्य पूर्ववृत्तकथनम् ॥ १.।
Mahabharata - Shanti Parva - Chapter Text

१२-३८-० (६६२९०)
वैशंपायन उवाच। १२-३८-०क्ष् (५४२१)

ततस्तत्र तु राजानं तिष्ठन्ते भ्रातृभिः सह ।
उवाच देवकीपुत्रः सर्वदर्शी जनार्दनः ॥ १२-३८-१ (६६२९१)
वासुदेव उवाच। १२-३८-२क्ष् (५४२२)
ब्राह्मणास्तात लोकेऽस्मिन्नर्चनीयाः सदा मम ।
एते भूमिचरा देवा वाग्विषाः सुप्रसादकाः ॥ १२-३८-२ (६६२९२)
पुरा कृतयुगे राजंश्चार्वाको नाम राक्षसः ।
तपस्तेपे महाबाहो बदर्यां बहुवार्षिकम् ॥ १२-३८-३ (६६२९३)
वरेण च्छन्द्यमानश्च ब्रह्मणा च पुनः पुनः ।
अभयं सर्वभूतेभ्यो वरयामास भारत ॥ १२-३८-४ (६६२९४)
द्विजावमानादन्यत्र प्रादाद्वरमनुत्तमम् ।
अभयं सर्वभूतेभ्यो ददौ तस्मै जगत्पतिः ॥ १२-३८-५ (६६२९५)
स तु लब्धवरः पापो देवानमितविक्रमः ।
राक्षसस्तापयामास तीव्रकर्मा महाबलः ॥ १२-३८-६ (६६२९६)
ततो देवाः समेताश्च ब्रह्माणमिदमब्रुवन् ।
वधाय रक्षसस्तस्य बलविप्रकृतास्तदा ॥ १२-३८-७ (६६२९७)
तानुवाच ततो देवो विहितं तत्र वै मया ।
यथाऽस्य भविता मृत्युरचिरणेति भारत ॥ १२-३८-८ (६६२९८)
राजा दुर्योधनो नाम सखाऽस्य भविता नृषु ।
तस्य स्नेहावबद्धोऽसौ ब्राह्मणानवमंस्यते ॥ १२-३८-९ (६६२९९)
तत्रैनं रुषिता विप्रा विप्रकारप्रधर्षिताः ।
धक्ष्यन्ति वाग्बलाः पापं ततो नाशं गमिष्यति ॥ १२-३८-१० (६६३००)
स एष निहतः शेते ब्रह्मदण्डेन राक्षसः ।
चार्वाको नृपतिश्रेष्ठ मा शुचो भरतर्षभ ॥ १२-३८-११ (६६३०१)
हतास्ते क्षत्रधर्मेण ज्ञातयस्तव पार्थिव ।
स्वर्गताश्च महात्मानो वीराः क्षत्रियपुङ्गवाः ॥ १२-३८-१२ (६६३०२)
स त्वमातिष्ठ कार्याणि मा ते भूद्बुद्धिरन्यथा ।
शत्रूञ्जहि प्रजा रक्ष द्विजांश्च परिपूजय ॥ ॥ १२-३८-१३ (६६३०३)

इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि
अष्टत्रिंशोऽध्यायः ॥ ३८.।

---

शन्तिपर्व-अध्यय०३९
॥ श्रीः ॥
१२.३९. अध्यायः ३९

Mahabharata - Shanti Parva - Chapter Topics
कृष्णादिभिर्युधिष्ठिरस्य राज्येऽभिषेचनम् ॥ १.।

१२-३९-० (६६३०४)
वैशंपायन उवाच। १२-३९-०क्ष् (५४२३)
ततः कुन्तीसुतो राजा गतमन्युर्गतज्वरः ।
काञ्चने प्राङ्मुखो हृष्टो न्यषीदत्परमासने ॥ १२-३९-१ (६६३०५)
तमेवाभिमुखौ पीठे प्रदीप्ते काञ्चने शुभे ।
सात्यकिर्वासुदेवश्च निषीदतुररिंदमौ ॥ १२-३९-२ (६६३०६)
मध्ये कृत्वा तु राजानं भीमसेनार्जुनावुभौ ।
निषीदतुर्महात्मानौ श्लक्ष्णयोर्मणिपीठयोः ॥ १२-३९-३ (६६३०७)
दान्ते शय्यासने शुभ्रे जाम्बूनदविभूषिते ।
पृथाऽपि सहदेवेन सहास्ते नकुलेन च ॥ १२-३९-४ (६६३०८)
सुधर्मा विदुरो धौम्यो धृतराष्ट्रश्च कौरवः ।
निषेदुर्ज्वलनाकारेष्वासनेषु पृथक्पृथक् ॥ १२-३९-५ (६६३०९)
युयुत्सुः सञ्जयश्चैव गान्धारी च यशस्विनी ।
धृतराष्ट्रो यतो राजा ततः सर्वे समाविशन् ॥ १२-३९-६ (६६३१०)
तत्रोपविष्टो धर्मात्मा श्वेताः सुमनसोऽस्पृशत् ।
स्वस्तिकानक्षतान्भूमिं सुवर्णं रजतं मणीन् ॥ १२-३९-७ (६६३११)
ततः प्रकृतयः सर्वाः पुरस्कृत्य पुरोहितम् ।
ददृशुर्धर्मराजानमादाय बहुमङ्गलम् ॥ १२-३९-८ (६६३१२)
पृथिवीं च सुवर्णं च रत्नानि विविधानि च ।
आभिषेचनिकं भाण्डं सर्वसंभारसंभृतम् ॥ १२-३९-९ (६६३१३)
काञ्चनौदुम्बरास्तत्र राजताः पृथिवीमयाः ।
पूर्णकुम्भाः सुमनसो लाजा बर्हीषि गोरसाः ॥ १२-३९-१० (६६३१४)
शमीपिप्पलपालाशसमिधो मधुसर्पिषी ।
स्रुव औदुम्बरः शङ्खस्तथा हेमविभूषितः ॥ १२-३९-११ (६६३१५)
दाशार्हेणाभ्यनुज्ञातस्तत्र धौम्यः पुरोहितः ।
प्रागुदक्प्रवणे वेदीं लक्षणेनोपलिख्य च ॥ १२-३९-१२ (६६३१६)
व्याघ्रचर्मोत्तरे शुक्ले सर्वतोभद्र आसने ।
दृढपादप्रतिष्ठाने हुताशनसमत्विपि ॥ १२-३९-१३ (६६३१७)
उपवेश्य महात्मानं कृष्णां च द्रुपदात्मजाम् ।
जुहाव पावकं धीमान्विधिमन्त्रपुरस्कृतम् ॥ १२-३९-१४ (६६३१८)
तत उत्थाय दाशार्हः शङ्खमादाय पूरितम् ।
अभ्यषिञ्चत्पतिं पृथ्व्याः कुन्तीपुत्रं युधिष्ठिरम् ।
धृतराष्ट्रश्च राजर्षिः सर्वाः प्रकृतयस्तथा ॥ १२-३९-१५ (६६३१९)
अनुज्ञातोऽथ कृष्णेन भ्रातृभिः सह पाण्डवः ।

पाञ्चजन्याभिषिक्तश्च राजाऽमृतमुखोऽभवत् ॥ १२-३९-१६ (६६३२०)
ततोऽनुवादयामासुः पणवानकदुन्दुभीन् ॥ १२-३९-१७ (६६३२१)
धर्मराजोऽपि तत्सर्वं प्रतिजग्राह धर्मतः ।
पूजयामास तांश्चापि विधिवद्भूरिदक्षिणः ॥ १२-३९-१८ (६६३२२)
ततो निष्कसहस्रेण ब्राह्मणान्स्वस्त्यवाचयन् ।
वेदाध्ययनसंपन्नान्धृतिशीलसमन्वितान् ॥ १२-३९-१९ (६६३२३)
ते प्रीता ब्राह्मणा राजन्स्वस्त्यूचुर्जयमेव च ।
हंसा इव च नर्दन्तः प्रशशंसुर्युधिष्ठिरम् ॥ १२-३९-२० (६६३२४)
युधिष्ठिर महाबाहो दिष्ट्या जयसि पाण्डव ।
दिष्ट्या स्वधर्मं प्राप्तोऽसि विक्रमेण महाद्युते ॥ १२-३९-२१ (६६३२५)
दिष्ट्या गाण्डीवधन्वा च भीमसेनश्च पाण्डवः ।
त्वं चापि कुशली राजन्माद्रीपुत्रौ च पाण्डवौ ॥ १२-३९-२२ (६६३२६)
मुक्ता वीरक्षयात्तस्मात्संग्रामाद्विजितद्विषः ।
क्षिप्रमुत्तरकार्याणि कुरु सर्वाणि भारत ॥ १२-३९-२३ (६६३२७)
ततः प्रीत्याऽर्चितः सद्भिर्धर्मराजो युधिष्ठिरः ।
प्रतिपेदे महद्राज्यं सुहृद्भिः सह भारत ॥ ॥ १२-३९-२४ (६६३२८)

इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि
एकोनचत्वारिंशोऽध्यायः ॥ ३९.।
Mahabharata - Shanti Parva - Chapter Footnotes

१२-३९-१ गतमन्युर्वीतदैन्यः । गतज्वरो वीतशोकः ॥
१२-३९-२ निषीदतुरिति निषेदतुरित्यर्थे आर्षम् ॥
१२-३९-४ दान्ते गजदन्तमये ॥
१२-३९-५ सुधर्मा दुर्योधनपुरोहितः ॥
१२-३९-७ स्वस्तिकान्सर्वतोभद्राद्यङ्कितानि देवतापीठानि ॥
१२-३९-९ भाण्डं उपकरणम् ॥
१२-३९-१० औदुम्बरास्ताम्रमयाः ॥
१२-३९-११ उदुम्बरकाष्टमयः स्रुवः ॥
१२-३९-१६ अमृतमुखः अत्यन्तं दर्शनीयः ॥

---

शन्तिपर्व-अध्यय०४०
॥ श्रीः ॥
१२.४०. अध्यायः ४०

Mahabharata - Shanti Parva - Chapter Topics
युधिष्ठिरेण भीमार्जुनादीनां तत्तद्योग्ययौवराज्याद्यधिकारेषु

१२-४०-० (६६३२९)
वैशंपायन उवाच।१२-४०-०क्ष् (५४२४)
प्रकृतीनां च तद्वाक्यं देशकालोपबृंहितम् ।
श्रुत्वा युधिष्ठिरो राजाऽथोत्तरं प्रत्यभाषत ॥१२-४०-१ (६६३३०)
धन्याः पाण्डुसुता नूनं येषां ब्राह्मणपुङ्गवाः ।
तथ्यान्वाप्यथवाऽतथ्यान्गुणानाहुः समागताः ॥१२-४०-२ (६६३३१)
अनुग्राह्या वयं नूनं भवतामिति मे मतिः ।
यदेवं गुणसंपन्नानस्मान्ब्रूथ विमत्सराः ॥१२-४०-३ (६६३३२)
धृतराष्ट्रो महाराजः पिता नो दैवतं परम् ।
शासनेऽस्य प्रिये चैव स्थेयं मत्प्रियकाङ्क्षिभिः ॥१२-४०-४ (६६३३३)
एतदर्थं हि जीवामि कृत्वा ज्ञातिवधं महत् ।
अस्य शुश्रूषणं कार्यं मया नित्यमतन्द्रिणा ॥१२-४०-५ (६६३३४)
यदि चाहमनुग्राह्यो भवतां सुहृदां तथा ।
धृतरा यथापूर्वं वृत्तिं वर्तितुमर्हथ ॥१२-४०-६ (६६३३५)
एष नाथो हि जगतो भवतां च मया सह ।
अस्य प्रसादे पृथिवी पाण्डवाः सर्व एव च ॥१२-४०-७ (६६३३६)
एतन्मनसि कर्तव्यं भवद्भिर्वचनं मम ।
अनुज्ञाप्याथ तान्राजा यथेष्टं गम्यतामिति ॥१२-४०-८ (६६३३७)
पौरजानपदान्सर्वान्विसृज्य कुरुनन्दनः ।
यौवराज्येन कौन्तेयं भीमसेनमयोजयत् ॥१२-४०-९ (६६३३८)
मन्त्रे च निश्चये चैव षाड्गुण्यस्य च चिन्तने ।
विदुरं बुद्धिसंपन्नं प्रीतिमान्स समादिशत् ॥१२-४०-१० (६६३३९)
कृताकृतपरिज्ञाने तथाऽऽयव्ययचिन्तने ।
संजयं योजयामास वृद्धं सर्वगुणैर्युतम् ॥१२-४०-११ (६६३४०)
बलस्य परिमाणे च भक्तवेतनयोस्तथा ।
नकुलं व्यादिशद्राजा कर्मणां चान्ववेक्षणे ॥१२-४०-१२ (६६३४१)
परचक्रोपरोधे च दृप्तानां चावमर्दने ।
युधिष्ठिरो महाराज फल्गुनं व्यादिदेश ह ॥१२-४०-१३ (६६३४२)
द्विजानां देवकार्येषु कार्येष्वन्येषु चैव ह ।
धौम्यं पुरोधसां श्रेष्ठं नित्यमेव समादिशत् ॥१२-४०-१४ (६६३४३)
सहदेवं समीपस्थं नित्यमेव समादिशत् ।
तने गोप्यो हि नृपतिः सर्वावस्थो विशांपते ॥१२-४०-१५ (६६३४४)
यान्यानमन्यद्योग्यांश्च येषु येष्विह कर्मसु ।

तांस्तांस्तेष्वेव युयुजे प्रीयमाणो महीपतिः ॥१२-४०-१६ (६६३४५)
विदुरं संजयं चैव युयुत्सुं च महामतिम् ।
अब्रवीत्परवीरघ्नो धर्मात्मा धर्मवत्सलः ॥१२-४०-१७ (६६३४६)
उत्थायोत्थाय तत्कार्यमस्य राज्ञः पितुर्मम ।
सर्वं भवद्भिः कर्तव्यमप्रमत्तैर्यथा मम ॥१२-४०-१८ (६६३४७)
पौरजानपदानां च यानि कार्याणि नित्यशः ।
राजानं समनुज्ञाप्य तानि कार्याणि धर्मतः ॥ ॥१२-४०-१९ (६६३४८)

इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि
चत्वारिंशोऽध्यायः ॥ ४०.।

Mahabharata - Shanti Parva - Chapter Footnotes

१२-४०-१८ यत् अस्य कार्यं तच्च भवद्भिः कर्तव्यमित्यर्थः
।अप्रमत्तैस्तथामयेति ट।द।पाठः ॥
१२-४०-१९ तानि कार्याणि कर्तव्यानीत्यर्थः ॥

---

शन्तिपर्व-अध्यय०४१
॥ श्रीः ॥
१२.४१. अध्यायः ४१

Mahabharata - Shanti Parva - Chapter Topics
युधिष्ठिरेण ज्ञातिप्रभृतीनामौर्ध्वदैहिककरणपूर्वकं तदीयादीनां
परिपालनम् ॥१.।

Mahabharata - Shanti Parva - Chapter Text

१२-४१-० (६६३४९)
वैशंपायन उवाच।१२-४१-०क्ष् (५४२५)
ततो युधिष्ठिरो राजा ज्ञातीनां ये हता युधि ।
श्राद्धानि कारयामास तेषां पृथगुदारधीः ॥१२-४१-१ (६६३५०)
धृतराष्ट्रो ददौ राजा पुत्राणामौर्ध्वदेहिकम् ।
सर्वकामगुणोपेतमन्नं गाश्च धनानि च ।
रत्नानि च विचित्राणि महार्हाणि महायशाः ॥ १२-४१-२ (६६३५१)
युधिष्ठिरस्तु द्रोणस्य कर्णस्य च महात्मनः ।
धृष्टद्युम्नाभिमन्युभ्यां हेडिम्बस्य च रक्षसः ॥१२-४१-३ (६६३५२)
विराटप्रभृतीनां च सुहृदामुपकारिणाम् ।
द्रुपदद्रौपदेयानां द्रौपद्या सहितो ददौ ॥१२-४१-४ (६६३५३)
ब्राह्मणानां सहस्राणि पृथगेकैकमुद्दिशन् ।

धनै रत्नैश्च गोभिश्च वस्त्रैश्च समतर्पयत् ॥ १२-४१-५ (६६३५४)
ये चान्ये पृथिवीपाला येषां नास्ति सुहृज्जनः ।
उद्दिश्योद्दिश्य तेषां च चक्रे राजौर्ध्वदेहिकम् ॥ १२-४१-६ (६६३५५)
सभाः प्रपाश्च विविधास्तटाकानि च पाण्डवः ।
सुहृदां कारयामास सर्वेषामौर्ध्वदेहिकम् ॥ १२-४१-७ (६६३५६)
स तेषामनृणो भूत्वा गत्वा लोकेष्ववाच्यताम् ।
कृतकृत्योऽभवद्राजा प्रजा धर्मेण पालयन् ॥ १२-४१-८ (६६३५७)
धृतराष्ट्रं यथापूर्वं गान्धारीं विदुरं तथा ।
सर्वांश्च कौरवान्मान्यान्भृत्यांश्च समपूजयत् ॥ १२-४१-९ (६६३५८)
याश्च तत्र स्त्रियः काश्चिद्धतवीरा हतात्मजाः ॥
सर्वास्ताः कौरवो राजा संपूज्यापालयद्घृणी ॥ १२-४१-१० (६६३५९)
दीनान्धकृपणानां च गृहाच्छादनभोजनैः ।
आनृशंस्यपरो राजा चकारानुग्रहं प्रभुः ॥ १२-४१-११ (६६३६०)
स विजित्य महीं कृत्स्नामानृण्यं प्राप्य वैरिषु ।
निःसपत्नः सुखी राजा विजहार युधिष्ठिरः ॥ ॥ १२-४१-१२ (६६३६१)

इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि
एकचत्वारिंशोऽध्यायः ॥ ४१.।
Mahabharata - Shanti Parva - Chapter Footnotes

१२-४१-१० संपूज्यापालयत्प्रजा इति ड थ । पाठः ॥

---

शन्तिपर्व-अध्यय०४२
॥ श्रीः ॥
१२.४२. अध्यायः ४२

Mahabharata - Shanti Parva - Chapter Topics
युधिष्ठिरेण नामशतकेन श्रीकृष्णस्तवनम् ॥ १.।
Mahabharata - Shanti Parva - Chapter Text

१२-४२-० (६६३६२)
वैशंपायन उवाच। १२-४२-०क्ष् (५४२६)
अभिषिक्तो महाप्राज्ञो राज्यं प्राप्य युधिष्ठिरः ।
दाशार्हं पुण्डरीकाक्षमुवाच प्राञ्जलिः शुचिः ॥ १२-४२-१ (६६३६३)
तव कृष्ण प्रसादेन नयेन न बलेन च ।
बुद्ध्या च यदुशार्दूल तथा विक्रमणेन च ॥ १२-४२-२ (६६३६४)
पुनः प्राप्तमिदं राज्यं पितृपैतामहं मया ।

नमस्ते पुण्डरीकाक्ष पुनः पुनररिंदम ॥१२-४२-३ (६६३६५)
त्वामेकमाहुः पुरुषं त्वामाहुः सात्वतां पतिम् ।
नामभिस्त्वां बहुविधैः स्तुवन्ति प्रयता द्विजाः ॥१२-४२-४ (६६३६६)
विश्वकर्मन्नमस्तेऽस्तु विश्वात्मन्विश्वसंभव ।
विष्णो जिष्णो हरे कृष्ण वैकुण्ठ पुरुषोत्तम ॥१२-४२-५ (६६३६७)
अदित्याः सप्तधा त्वं तु पुराणो गर्भतां गतः ।
पृश्निगर्भस्त्वमेवैकस्त्रियुगं त्वां वदन्त्यपि ॥१२-४२-६ (६६३६८)
शुचिश्रवा हृषीकेशो घृतार्चिर्हंस उच्यते ।
त्रिचक्षुः शंभुरेकस्त्वं विभुर्दामोदरोऽपि च ॥१२-४२-७ (६६३६९)
वराहोऽग्निर्बृहद्भानुर्वृषभस्तार्क्ष्यलक्षणः ।
अनीकसाहः पुरुषः शिपिविष्ट उरुक्रमः ॥१२-४२-८ (६६३७०)
वरिष्ठ उग्रसेनानीः सत्यो वाजसनिर्गुहः ।
अच्युतश्च्यावनोऽरीणां संस्कृतो विकृतिर्वृषः ॥१२-४२-९ (६६३७१)
कृष्णधर्मस्त्वमेवादिर्वृषदर्भो वृषाकपिः ।
सिन्धुर्विधूर्मिस्त्रिककुप् त्रिधामा त्रिवृदच्युतः ॥१२-४२-१० (६६३७२)
सम्राड् विराट् स्वराट् चैव स्वराड्भूतमयो भवः ।
विभूर्भूरतिभूः कृष्णः कृष्णवर्त्मा त्वमेव च ॥१२-४२-११ (६६३७३)
स्विष्टकृद्भिषजावर्तः कपिलस्त्वं च वामनः ।
यज्ञो ध्रुवः पतङ्गश्च जयत्सेनस्त्वमुच्यसे ॥१२-४२-१२ (६६३७४)
शिखण्डी नहुषो बभ्रुर्दिविस्पृक् त्वं पुनर्वसुः ।
सुबभ्रू रुक्मयज्ञश्च सुषेणो दुन्दुभिस्तथा ॥१२-४२-१३ (६६३७५)
गभस्तिनेमिः श्रीपद्मः पुष्करः शुष्मधारणः ।
ऋभुर्विभुः सर्वसूक्ष्मस्त्व धरित्री च पठ्यसे ॥१२-४२-१४ (६६३७६)
अम्भोनिधिस्त्वं ब्रह्मा त्वं पवित्रं धाम धामवित् ।
हिरण्यगर्भः पुरुषः स्वधा स्वाहा च केशवः ॥१२-४२-१५ (६६३७७)
योनिस्त्वमस्य प्रलयश्च कृष्ण
त्वमेवेदं सृजसि विश्वमग्रे ।
विश्वं चेदं त्वद्वशे विश्वयोने
नमोस्तु ते शार्ङ्गचक्रासिपाणे ॥ १२-४२-१६ (६६३७८)
वैशंपायन उवाच।१२-४२-१७क्ष् (५४२७)
एवं स्तुतो धर्मराजेन कृष्णः
सभामध्ये प्रीतिमान्पुष्कराक्षः ।
तमभ्यनन्दद्भारतं पुष्कलाभि
र्वाग्भिर्ज्येष्ठं पाण्डवं यादवाग्र्यः ॥ १२-४२-१७ (६६३७९)
गएतन्नामशतं विष्णोर्धर्मराजेन कीर्तितम् ।
यः पठेच्छ्रुणुयाद्वापि सर्वपापैः प्रमुच्यते ॥' ॥ १२-४२-१८ (६६३८०)

इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि
द्विचत्वारिंशोऽध्यायः ॥ ४२.।
Mahabharata - Shanti Parva - Chapter Footnotes

१२-४२-६ सप्तधा विष्वाख्य आदित्यो वामनश्चेति द्वेधा अदित्यामेव जन्म ।ततोऽदिते रूपान्तरेषु पृश्निप्रभृतिषु क्रमात्पृश्निगर्भः परशुरामः दाशरथीरामः यादवौ रामकृष्णौ चेति। सर्वेषु गर्भेषु एकएव त्वम्। त्रिषु कृतादिषु युगेषु भवं त्रियुगम्। आदित्याः सप्तरात्रं त्वा पुराणे धर्मतो गतः। इति थ। पाठः ॥
१२-४२-७ नृचक्षुः शंभुरिति थ ।द। पाठः ॥
१२-४२-८ वरुणोऽग्निर्वृहिद्गानुर्वृषण इति थ द ।पाठः ॥
१२-४२-९ वाचिष्ठ उग्रसेनानीरिति ड ।थ। द। पाठः। संकृतिः प्रकृतिर्विभुरिति ड। थ। पाठः ॥
१२-४२-१० त्रिककुप् ऊर्ध्ववर्त्मा त्वमेवेति थ ।द। पाठः ॥

---

शन्तिपर्व-अध्यय०४३
॥ श्रीः ॥
१२.४३. अध्यायः ४३

Mahabharata - Shanti Parva - Chapter Topics
युधिष्ठिराज्ञया भीमादिभिश्चतुर्भिर्दुर्योधनादिगृहपरिग्रहः ॥ १.।
Mahabharata - Shanti Parva - Chapter Text

१२-४३-० (६६३८१)
वैशंपायन उवाच। १२-४३-०क्ष् (५४२८)
ततो विसर्जयामास सर्वास्ताः प्रकृतीर्नृपः ।
विविशुश्चाभ्यनुज्ञाता यथास्वानि गृहाणि ते ॥ १२-४३-१ (६६३८२)
ततो युधिष्ठिरो राजा भीमं भीमपराक्रमम् ।
सान्त्वयन्नब्रवीच्छ्रीमानर्जुनं यमजौ तथा ॥ १२-४३-२ (६६३८३)
शत्रुभिर्विविधैः शस्त्रैः क्षतदेहा महारणे ।
श्रान्ता भवन्तः सुभृशं तापिताः शोकमन्युभिः ॥ १२-४३-३ (६६३८४)
अरण्ये दुःखवसतिर्मत्कृते भरतर्षभाः ।
भवद्भिरनुभूता हि यथा कापुरुषैस्तथा ॥ १२-४३-४ (६६३८५)
यथासुखं यथाजोषं जयोऽयमनुभूयताम् ।
विश्रान्ताँल्लब्धविश्वासाञ्श्वः समेताऽस्मि वः पुनः ॥ १२-४३-५ (६६३८६)

ततो दुर्योधनगृहं प्रासादैरुपशोभितम् ।
बहुरत्नसमाकीर्णं दासीदाससमाकुलम् ॥ १२-४३-६ (६६३८७)
धृतराष्ट्राभ्यनुज्ञातं भ्रात्रा दत्तं वृकोदरः ।
प्रतिपेदे महाबाहुर्मन्दिरं मघवानिव ॥ १२-४३-७ (६६३८८)
यथा दुर्योधनगृहं तथा दुःशासनस्य तु ।
प्रासादभालासंयुक्तं हेमतोरणभूषितम् ॥ १२-४३-८ (६६३८९)
दासीदाससुसंपूर्णं प्रभूतधनधान्यवत् ।
प्रतिपेदे महाबाहुरर्जुनो राजशासनात् ॥ १२-४३-९ (६६३९०)
दुर्मर्षणस्य भवनं दुःशासनगृहाद्वरम् ।
कुबेरभवनप्रख्यं मणिहेमविभूषितम् ॥ १२-४३-१० (६६३९१)
नकुलाय वरार्हाय कर्शिताय महावने ।
ददौ प्रीतो महाराज धर्मपुत्रो युधिष्ठिरः ॥ १२-४३-११ (६६३९२)
दुर्मुखस्य च वेश्माग्र्यं श्रीमत्कनकभूषणम् ।
पूर्णपद्मदलाक्षीणां स्त्रीणां शयनसंकुलम् ॥ १२-४३-१२ (६६३९३)
प्रददौ सहदेवाय संततं प्रियकारिणे ।
मुमुदे तच्च लब्ध्वाऽसौ कैलासं धनदो यथा ॥ १२-४३-१३ (६६३९४)
युयुत्सुर्विदुरश्चैव सञ्जयश्च विशांपते ।
सुधर्मा चैव धौम्यश्च यथा स्वाञ्जग्मुरालयान् ॥ १२-४३-१४ (६६३९५)
सह सात्यकिना शौरिरर्जुनस्य निवेशनम् ।
विवेश पुरुषव्याघ्रो व्याघ्रो गिरिगुहामिव ॥ १२-४३-१५ (६६३९६)
तत्र भक्ष्यान्नपानैस्ते मुदिताः सुसुखोषिताः ।
सुखप्रबद्धा राजानमुपतस्थुर्युधिष्ठिरम् ॥ ॥ १२-४३-१६ (६६३९७)

इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि
त्रिचत्वारिंशोऽध्यायः ॥ ४३.।

---

शन्तिपर्व-अध्यय०४४
॥ श्रीः ॥
१२.४४. अध्यायः ४४

Mahabharata - Shanti Parva - Chapter Topics
युधिष्ठिरेण कृष्णमेत्य सुखशयनादिप्रश्नपूर्वकं तत्स्तुतिः ॥ १.।
Mahabharata - Shanti Parva - Chapter Text

१२-४४-० (६६३९८)
जनमेजय उवाच। १२-४४-०क्ष् (५४२९)
प्राप्य राज्यं महाबाहुर्धर्मपुत्रो युधिष्ठिरः ।

यदन्यदकरोद्विप्र तन्मे वक्तुमिहार्हसि ॥ १२-४४-१ (६६३९९)
भगवान्वा हृषीकेशस्त्रैलोक्यस्य परो गुरुः ।
ऋषे यदकरोद्वीरस्तच्च व्याख्यातुमर्हसि ॥ १२-४४-२ (६६४००)
वैशंपायन उवाच। १२-४४-३क्ष् (५४३०)
शृणु तत्त्वेन राजेन्द्र कीर्त्यमानं मयाऽनघ ।
वासुदेवं पुरस्कृत्य यदकुर्वत पाण्डवाः ॥ १२-४४-३ (६६४०१)
प्राप्य राज्यं महाराज कुन्तीपुत्रो युधिष्ठिरः ।
वर्णान्संस्थापयामास नयेन विनयेन च ॥ १२-४४-४ (६६४०२)
ब्राह्मणानां सहस्रं च स्नातकानां महात्मनाम् ।
सहस्रनिष्कैरेकैकं तर्पयामास पाण्डवः ॥ १२-४४-५ (६६४०३)
तथाऽनुजीविनो भृत्यान्संश्रितानतिथीनपि ।
कामैः संतर्पयामास कृपणांस्तार्किकानपि ॥ १२-४४-६ (६६४०४)
पुरोहिताय धौम्याय प्रादादयुतशः स गाः ।
धनं सुवर्णं रजतं वासांसि विविधान्यपि ॥ १२-४४-७ (६६४०५)
कृपाय च महाराज पितृवत्तमतर्पयत् ।
विदुराय च राजाऽसौ पूजां चक्रे यतव्रतः ॥ १२-४४-८ (६६४०६)
भक्ष्यान्नपानैर्विविधैर्वासोभिः शयनासनैः ।
सर्वान्संतोपयामास संश्रितान्ददतां वरः ॥ १२-४४-९ (६६४०७)
लब्धप्रशमनं कृत्वा स राजा राजसत्तम ।
युयुत्सोर्धार्तराष्ट्रस्य पूजां चक्रे महायेशाः ॥ १२-४४-१० (६६४०८)
धृतराष्ट्राय तद्राज्यं गान्धार्यै विदुराय च ।
निवेद्य सुस्थवद्राजा सुखमास्ते युधिष्ठिरः ॥ १२-४४-११ (६६४०९)
तथा सर्वं स नगरं प्रसाद्य भरतर्षभ ।
वासुदेवं महात्मानमभ्यगच्छत्कृताञ्जलिः ॥ १२-४४-१२ (६६४१०)
ततो महति पर्यङ्के मणिकाञ्चनभूषिते ।
ददर्श कृष्णमासीनं नीलं मेराविवाम्बुदम् ॥ १२-४४-१३ (६६४११)
जाज्वल्यमानं वपुषा दिव्याभरणभूषितम् ।
पीतकौशेयवसनं हेम्नेवोपगत मणिम् ॥ १२-४४-१४ (६६४१२)
कौस्तुभेनोरसिस्थेन मणिनाऽभिविराजितम् ।
उद्यतेवोदयं शैलं सूर्येणाभिविराजितम् ॥ १२-४४-१५ (६६४१३)
नौपम्यं विद्यते तस्य त्रिषु लोकेषु किंचन ॥ १२-४४-१६ (६६४१४)
सोऽभिगम्य महात्मानं विष्णुं पुरुषसत्तमम् ।
उवाच मधुरं राजा स्मितपूर्वमिदं तदा ॥ १२-४४-१७ (६६४१५)
सुखेन ते निशा कच्चिद्व्युष्टा बुद्धिमतां वर ।
कच्चिज्ज्ञानानि सर्वाणि प्रसन्नानि तवाच्युत ॥ १२-४४-१८ (६६४१६)
तथैवोपश्रिता देवी बुद्धिर्बुद्धिमतां वर ।

वयं राज्यमनुप्राप्ताः पृथिवी च वशे स्थिता ॥१२-४४-१९ (६६४१७)
तव प्रसादाद्भगवंस्त्रिलोकगतिविक्रम ।
जयं प्राप्ता यशश्चाग्र्यं न च धर्मच्युता वयम् ॥१२-४४-२० (६६४१८)
तं तथा भाषमाणं तु धर्मराजमरिंदमम् ।
नोवाच भगवान्किंचिद्ध्यानमेवान्वपद्यत ॥ ॥१२-४४-२१ (६६४१९)

इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि
चतुश्चत्वारिंशोऽध्यायः ॥ ४४.।
Mahabharata - Shanti Parva - Chapter Footnotes

१२-४४-१० लब्धप्रशमनं लब्धस्य धनादेः यथोचितमंशतः
पात्रे समर्पणेन शान्तिकम् ॥

---

शन्तिपर्व-अध्यय०४५
॥ श्रीः ॥
१२.४५. अध्यायः ४५

Mahabharata - Shanti Parva - Chapter Topics
कृष्णेन युधिष्ठिरंप्रति धर्मश्रवणाय भीष्मसमीपगमनचोदना
॥ १.। तथा युधिष्ठिरप्रार्थनया स्वस्यापि तत्र गमनायदारुकेण
रथसंयोजनम् ॥ २.।
Mahabharata - Shanti Parva - Chapter Text

१२-४५-० (६६४२०)
युधिष्ठिर उवाच।१२-४५-०क्ष् (५४३१)
किमिदं परमाश्चर्यं ध्यायस्यमितविक्रम ।
कच्चिल्लोकत्रयस्यास्य स्वस्ति लोकपरायण ॥१२-४५-१ (६६४२१)
ग्इन्द्रियाणि मनश्चैव बुद्धौ संवेशितानि ते'।
चतुर्थं ध्यानमार्गं त्वमालम्ब्य पुरुषर्षभ ।
अपक्रान्तो यतो जीवस्तेन मे विस्मितं मनः ॥ १२-४५-२ (६६४२२)
निगृहीतो हि वायुस्ते पञ्चकर्मा शरीरगः ।
इन्द्रियाणि च सर्वाणि मनसि स्थापितानि ते ॥१२-४५-३ (६६४२३)
वाक्च सत्वं च गोविन्द बुद्धौ संवेशितानि ते ।
सर्वे चैव गुणा देवाः क्षेत्रज्ञे ते निवेशिताः ॥१२-४५-४ (६६४२४)
नेङ्गन्ति तव रोमाणि स्थिरा बुद्धिस्तथा मनः ।
काष्ठकुड्यशिलाभूतो निरीहश्चासि माधव ॥१२-४५-५ (६६४२५)
यथा दीपो निवातस्थो निरिङ्गो ज्वलतेऽच्युत ।

तथाऽसि भगवन्देन निश्चलो योगनिश्चयात् ॥१२-४५-६ (६६४२६)
यदि श्रोतुमिहार्हामि न रहस्यं च ते यदि ।
छिन्धि मे संशयं देव प्रपन्नायाभियाचते ॥१२-४५-७ (६६४२७)
त्वं हि कर्ता विकर्ता च त्वं क्षरश्चाक्षरश्च ह ।
अनादिनिधनो ह्याद्यस्त्वमेकः पुरुषोत्तम ॥१२-४५-८ (६६४२८)
त्वं प्रपन्नाय भक्ताय शिरसा प्रणताय च ।
ध्यानस्यास्य यथातत्त्वं ब्रूहि धर्मभृतां वर ॥१२-४५-९ (६६४२९)
ततः स्वगोचरे न्यस्य मनोबुद्धीन्द्रियाणि च ।
स्मितपूर्वमुवाचेदं भगवान्वासवानुजः ॥१२-४५-१० (६६४३०)
वासुदेव उवाच।१२-४५-११क्ष् (५४३२)
शरतल्पगतो भीष्मः शाम्यन्निव हुताशनः ।
मां ध्याति पुरुषव्याघ्रस्ततो मे तद्गतं मनः ॥१२-४५-११ (६६४३१)
यस्य ज्यातलनिर्घोषं विस्फूर्जितमिवाशनेः ।
न सहेद्देवराजोऽपि तमस्मि मनसा गतः ॥१२-४५-१२ (६६४३२)
येनाभिजित्य तरसा समस्तं राजमण्डलम् ।
ऊढास्तिस्रः पुरा कन्यास्तमस्मि मनसा गतः ॥१२-४५-१३ (६६४३३)
त्रयोविंशतिरात्रं यो योधयामास भार्गवम् ।
न च रामेण निस्तीर्णस्तमस्मि मनसा गतः ॥१२-४५-१४ (६६४३४)
यं गङ्गा गर्भविधिना धारयामास भारतम् ।
वसिष्ठशिष्यं तं तात गतोऽस्मि मनसा नृप ॥१२-४५-१५ (६६४३५)
दिव्यास्त्राणि महातेजा यो धारयति बुद्धिमान् ।
साङ्गांश्च चतुरो वेदांस्तमस्मि मनसा गतः ॥१२-४५-१६ (६६४३६)
रामस्य दयितं शिष्यं जामदग्न्यस्य पाण्डव ।
आधारं सर्व्रविद्यानां तमस्मि मनसा गतः ॥१२-४५-१७ (६६४३७)
गएकीकृत्येन्द्रियग्रामं मनः संयम्य मेधया ।
शरणं मामुपागच्छत्ततो मे तद्गतं मनः ॥' १२-४५-१८ (६६४३८)
स हि भूतं भविष्यच्च भवच्च भरतर्षभ ।
वेत्ति धर्मविदां श्रेष्ठस्तमस्मि मनसा गतः ॥१२-४५-१९ (६६४३९)
तस्मिन्हि पुरुषव्याघ्रे शान्ते भीष्मे महात्मनि ।
भविष्यति मही पार्थ नष्टचन्द्रेव शर्वरी ॥१२-४५-२० (६६४४०)
तद्युधिष्ठिर गाङ्गेयं भीष्मं भीमपराक्रमम् ।
अभिगम्योपसंगृह्य पृच्छ यत्ते मनोगतम् ॥१२-४५-२१ (६६४४१)
चातुर्विद्यं चातुर्होत्रं चातुराश्रम्यमेव च ।
राजधर्मांश्चि निखिलान्पृच्छैनं पृथिवीपते ॥१२-४५-२२ (६६४४२)
तस्मिन्नस्तमिते भीष्मे कौरवाणां धुंरधरे ।
ज्ञानान्यल्पीभविष्यन्ति तस्मात्त्वां चोदयाम्यहम् ॥१२-४५-२३ (६६४४३)

तच्छ्रुत्वा वासुदेवस्य तथ्यं वचनमुत्तमम् ।
साश्रुकण्ठः स धर्मज्ञो जनार्दनमुवाच ह ॥१२-४५-२४ (६६४४४)
यद्भवानाह भीष्मस्य प्रभावं प्रति माधव ।
तथा तन्नात्र संदेहो विद्यते मम माधव ॥१२-४५-२५ (६६४४५)
महाभाग्यं च भीष्मस्य प्रभावश्च महाद्युते ।
श्रुतं मया कथयतां ब्राह्मणानां महात्मनाम् ॥१२-४५-२६ (६६४४६)
भवांश्च कर्ता लोकानां यद्ब्रवीत्यरिसूदन ।
तथा तद्नभिध्येयं वाक्यं यादवनन्दन ॥१२-४५-२७ (६६४४७)
यदि त्वनुग्रहवती बुद्धिस्ते मयि माधव ।
त्वामग्रतः पुरस्कृत्य भीष्मं यास्यामहे वयम् ॥१२-४५-२८ (६६४४८)
आवृत्ते भगवत्यर्के स हि लोकान्गमिष्यति ।
त्वद्दर्शनं महाबाहो तस्मादर्हति कौरवः ॥१२-४५-२९ (६६४४९)
तव ह्याद्यस्य देवस्य क्षरस्यैवाक्षरस्य च ।
दर्शनं त्वस्य लाभः स्यात्त्वं हि ब्रह्ममयो निधिः ॥१२-४५-३० (६६४५०)
वैशंपायन उवाच।१२-४५-३१क्ष् (५४३३)
श्रुत्वैवं धर्मराजस्य वचनं मधुसूदनः ।
पार्श्वस्थं सात्यकिं प्राह रथो मे युज्यतामिति ॥१२-४५-३१ (६६४५१)
सात्यकिस्त्वाशु निष्क्रम्य केशवस्य समीपतः ।
दारुकं प्राह कृष्णस्य युज्यतां रथ इत्युत ॥१२-४५-३२ (६६४५२)
स सात्यकेराशु वचो निशम्य
रथोत्तमं काञ्चनभूषिताङ्गम् ।
मसारगल्वर्कमयैर्विभङ्गै
र्विभूषितं हेमनिबद्धचक्रम् ॥ १२-४५-३३ (६६४५३)
दिवाकरांशुप्रभमाशुगामिनं
विचित्रनानामणिभूषितान्तरम् ।
नवोदितं सूर्यमिव प्रतापिनं
विचित्रताक्ष्र्यध्वजिनं पताकिनम् ॥ १२-४५-३४ (६६४५४)
सुग्रीवशैब्यप्रप्नुखैर्वराश्वै
र्मनोजवैः काञ्चनभूषिताङ्गैः ।
संयुक्तमावेदयदच्युताय
कृताञ्जलिर्दारुको राजसिंह ॥ ॥ १२-४५-३५ (६६४५५)

इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि
प्रञ्चचत्वारिंशोऽध्यायः ॥ ४५.।

Mahabharata - Shanti Parva - Chapter Footnotes

१२-४५-२ चतुर्थं जाग्रत्स्वप्नसुषुप्तिभ्यः परम् ।अपक्रान्तो यतो देव इति झ।पाठः ॥
१२-४५-३ पञ्चकर्मा प्राणनादिकारी ॥
१२-४५-४ सत्वं मनः ।वागुपलक्षितानीन्द्रियाणि च बुद्धौ महत्तत्त्वे।गुणाः शब्दादिगुणभाजो देवाः श्रोत्रादीनि इन्द्रियाणि ॥
१२-४५-५ नेङ्गन्ति न कम्पन्ते ।निरीहो निश्चेष्टः ॥
१२-४५-६ निरिङ्गः अचलः ॥
१२-४५-१० गोचरे स्वस्वस्थाने ॥
१२-४५-११ ध्याति ध्यायति ॥
१२-४५-२२ चतस्रो विद्याः धर्मार्थकाममोक्षविद्याः सर्ववर्णसाधारणाः चातुर्होत्रं त्रैवर्णिकानां विशेषधर्मो यज्ञादिः ॥
१२-४५-२७ अनभिध्येयं अविचारणीयम् ॥
१२-४५-३३ मसारगल्वर्कमयैर्विभङ्गैः मसारो मरकतमणिः गलुश्चन्द्रकान्तः अर्कः सूर्यकान्तः तन्मयैः विभङ्गैः विस्तरैः ॥

---

शन्तिपर्व-अध्यय०४६
॥ श्रीः ॥
१२.४६. अध्यायः ४६

Mahabharata - Shanti Parva - Chapter Topics
वैशंपायनेन जनमेजयंप्रति भीष्मकृतकृष्णस्तेवराजानुवादपूर्वकं भीष्मस्य शरीरत्यागप्रकारकथनम् ॥ १.।
Mahabharata - Shanti Parva - Chapter Text

१२-४६-० (६६४५६)
जनमेजय उवाच।१२-४६-०क्ष् (५४३४)
शरतल्पे शयानस्तु भरतानां पितामहः ।
कथमुत्सृष्टवान्देहं कं च योगमधारयत् ॥१२-४६-१ (६६४५७)
वैशंपायन उवाच।१२-४६-२क्ष् (५४३५)
शृणुष्वावहितो राजञ्शुचिर्भूत्वा समाहितः ।
भीष्मस्य कुरुशार्दूल देहोत्सर्गं महात्मनः ॥१२-४६-२ (६६४५८)
प्रवृत्तमात्रे त्वयनमुत्तरेण दिवाकरे ।
ग्शुक्लपक्षस्य चाष्टम्यां माघमासस्य पार्थिव ॥१२-४६-३ (६६४५९)
प्राजापत्ये च नक्षत्रे मध्यं प्राप्ते दिवाकरे।'
समावेशयदात्मानमात्मत्येव समाहितः ॥ १२-४६-४ (६६४६०)

विकीर्णांशुरिवादित्यो भीष्मः शरशतैश्चितः ।
शुशुभे परया लक्ष्म्या वृतो ब्राह्मणसत्तमैः ॥ १२-४६-५ (६६४६१)
व्यासेन देवश्रवसा नारदेन सुरर्षिणा ।
देवस्थानेन वात्स्येन तथाऽश्मकसुमन्तुना ॥ १२-४६-६ (६६४६२)
तथा जैमिनिना चैव पैलेन च महात्मना ।
शाण्डिल्यदेवलाभ्यां च मैत्रेयेण च धीमता ॥ १२-४६-७ (६६४६३)
असितेन वसिष्ठेन कौशिकेन महात्मना ।
हारितलोमशाभ्यां च तथाऽऽत्रेयेण धीमता ॥ १२-४६-८ (६६४६४)
श्बृहस्पतिश्च शुक्रश्च च्यवनश्च महामुनिः ।
सनत्कुमारः कपिलो वाल्मीकिस्तुम्बुरुः कुरुः ॥ १२-४६-९ (६६४६५)
मौद्गल्यो भार्गवो रामस्तृणबिन्दुर्महामुनिः ।
पिप्पलादोऽथ वायुश्च सवर्तः पुलहः कचः ॥ १२-४६-१० (६६४६६)
काश्यपश्च पुलस्त्यश्च क्रतुर्दक्षः पराशरः ।
मरीचिरङ्गिराः काश्यो गौतमो गालवो मुनिः ॥ १२-४६-११ (६६४६७)
धौम्यो विभाण्डो माण्डव्योधौम्रः कृष्णानुभौतिकः ।
उलूकः परमो विप्रो मार्कण्डेयो महामुनिः ।
भास्करिः पूरणः कृष्णः सूतः परमधार्मिकः ॥ १२-४६-१२ (६६४६८)
एतैश्चान्यैर्मुनिगणैर्महाभागैर्महात्मभिः ।
श्रद्धादमशमोपेतैर्वृतश्चन्द्र इव ग्रहैः ॥ १२-४६-१३ (६६४६९)
भीष्मस्तु पुरुषव्याघ्रः कर्मणा मनसा गिरा ।
शरतल्पगतः कृष्णं प्रदध्यौ प्राञ्जलिः शुचिः ॥ १२-४६-१४ (६६४७०)
स्वरेण हृष्टपुष्टेन तुष्टाव मधुसूदनम् ।
योगेश्वरं पद्मनाभं विष्णुं जिष्णुं जगत्पतिम् ।
ग्अनादिनिधनं विष्णुमात्मयोनिं सनातनम् ॥' १२-४६-१५ (६६४७१)
कृताञ्जलिपुटो भूत्वा वाग्विदां प्रवरः प्रभुः ॥
भीष्मः परमधर्मात्मा वासुदेवमथास्तुवत् ॥ १२-४६-१६ (६६४७२)
भीष्म उवाच। १२-४६-१७क्ष् (५४३६)
आरिराधयिषुः कृष्णं वाचं जिगदिषामि याम् ।
तया व्याससमासिन्या प्रीयतां पुरुषोत्तमः ॥ १२-४६-१७ (६६४७३)
शुचिं शुचिपदं हंसं तत्परं परमेष्ठिनम् ।
युक्त्वा सर्वात्मनाऽऽत्मानं तं प्रपद्ये प्रजापतिम् ॥ १२-४६-१८ (६६४७४)
अनाद्यन्तं परं ब्रह्म न देवा नर्षयो विदुः ।
एकोऽयं वेद भगवान्धाता नारायणो हरिः ॥ १२-४६-१९ (६६४७५)
नारायणादृषिगणास्तथा सिद्धमहोरगाः ।
देवा देवर्षयश्चैव यं विदुर्दुःखभेषजम् ॥ १२-४६-२० (६६४७६)
देवदानवगन्धर्वा यक्षराक्षसपन्नगाः ।

यं न जानन्ति को ह्येष कुतो वा भगवानिति ॥१२-४६-२१ (६६४७७)
ग्यमाहुर्जगतः कोशं यस्मिंश्च निहिताः प्रजाः ।
यस्मिँल्लोकाः स्फुरन्त्येते जाले शकुनयो यथा ॥' १२-४६-२२ (६६४७८)
यस्मिन्विश्वानि भूतानि तिष्ठन्ति च विशन्ति च ।
गुणभूतानि भूतेशे सूत्रे मणिगणा इव ॥१२-४६-२३ (६६४७९)
ग्यं च विश्वस्य कर्तारं जगतस्तस्थुषां पतिम्
वदन्ति जगतोऽध्यक्षमध्यात्मपरिचिन्तकाः ॥ ' १२-४६-२४ (६६४८०)
यस्मिन्नित्ये तते तन्तौ दृढे स्रगिव तिष्ठति ।
सदसद्ग्रथितं विश्वं विश्वाङ्गे विश्वकर्मणि ॥१२-४६-२५ (६६४८१)
हरिं सहस्रशिरसं सहस्रचरणेक्षणम् ।
सहस्रबाहुमकुटं सहस्रवदनोज्ज्वलम् ॥१२-४६-२६ (६६४८२)
प्राहुर्नारायणं देवं यं विश्वस्य परायणम् ।
अणीयसामणीयांसं स्थविष्ठं च स्थवीयसाम् ।
गरीयसां गरिष्ठं च श्रेष्ठं च श्रेयसामपि ॥ १२-४६-२७ (६६४८३)
चं वाकेष्वनुवाकेषु निषत्सूपनिषत्सु च ।
गृणन्ति सत्यकर्माणं सत्यं सत्येषु सामसु ॥१२-४६-२८ (६६४८४)
चतुर्भिश्चतुरात्मानं सत्वस्थं सात्वतां पतिम् ।
यं दिव्यैर्देवमर्चन्ति गुह्यैः परमनामभिः ॥१२-४६-२९ (६६४८५)
श्यस्मिन्नित्यं तपस्तप्तं यदङ्गेष्वनुतिष्ठति ।
सर्वात्मा सर्ववित्सर्वः सर्वज्ञः सर्वभावनः ॥ष १२-४६-३० (६६४८६)
यं देवं देवकी देवी वसुदेवादजीजनत् ।
भौमस्य ब्रह्मणो गुप्त्यै दीप्तमग्निमिवारणिः ॥१२-४६-३१ (६६४८७)
यमनन्यो व्यपेताशीरात्मानं वीतकल्मषम् ।
इष्ट्वानन्त्याय गोविन्दं पश्यत्यात्मानमात्मनि ॥१२-४६-३२ (६६४८८)
गअप्रतर्क्यमविज्ञेयं हरिं नारायणं विभुम्।'
अतिवाय्विन्द्रकर्माणमतिसूर्याग्नितेजसम् ।
अतिबुद्धीन्द्रियात्मानं तं प्रपद्ये प्रजापतिम् ॥ १२-४६-३३ (६६४८९)
पुराणे पुरुषं प्रोक्तं ब्रह्मप्रोक्तं युगादिषु ।
क्षये संकर्षणं प्रोक्तं तमुपास्यमुपास्महे ॥१२-४६-३४ (६६४९०)
यमेकं बहुधात्मानं प्रादुर्भूतमधोक्षजम् ।
नान्यभक्ताः क्रियावन्तो यजन्ते सर्वकामदम् ॥१२-४६-३५ (६६४९१)
ऋतमेकाक्षरं ब्रह्म यत्तत्सदसतः परम् ।
अनादिमध्यपर्यन्तं न देवा नर्षयो विदुः ॥१२-४६-३६ (६६४९२)
यं सुरासुरगन्धर्वाः सिद्धा ऋषिमहोरगाः ।
प्रयता नित्यमर्चन्ति परमं सुखभेषजम् ॥१२-४६-३७ (६६४९३)
अनादिनिधनं देवमात्मयोनिं सनातनम् ।

अप्रेक्ष्यमनभिज्ञेयं हरिं नारायणं प्रभुम् ॥ १२-४६-३८ (६६४९४)
अथ भीष्मस्तवराजः ॥ १२-४६-३९क्ष् (५४३७)
हिरण्यवर्णं यं गर्भमदितिर्दैत्यनाशनम् ।
एकं द्वादशधा जज्ञे तस्मै सूर्यात्मने नमः ॥ १२-४६-३९ (६६४९५)
शुक्ले देवान्पितॄन्कृष्णे तर्पयत्यमृतेन यः ।
यश्च राजा द्विजातीनां तस्मै सोमात्मने नमः ॥ १२-४६-४० (६६४९६)
ग्हुताशनमुखैर्देवैर्धार्यते सकलं जगत् ।
हविः प्रथमभोक्ता यस्तस्मै होत्रात्मने नमः ॥ ' १२-४६-४१ (६६४९७)
महतस्तमसः पारे पुरुषं ह्यतितेजसम् ।
यं ज्ञात्वा मृत्युमत्येति तस्मै ज्ञेयात्मने नमः ॥ १२-४६-४२ (६६४९८)
यं बृहन्तं बृहत्युक्थे यमग्नौ यं महाध्वरे ।
यं विप्रसङ्घा गायन्ति तस्मै वेदात्मने नमः ॥ १२-४६-४३ (६६४९९)
पादाङ्गं संधिपर्वाणं स्वरव्यञ्जनभूषितम् ।
यमाहुरक्षरं विप्रास्तस्मै वागात्मने नमः ॥ १२-४६-४४ (६६५००)
श्यज्ञाङ्गो यो वराहो वै भूत्वा गामुज्जहारह ।
लोकत्रयहितार्थाय तस्मै वीर्यात्मने नमः ॥ৃ १२-४६-४५ (६६५०१)
ऋग्यजुःसामधामानं दशार्धहविराकृतिम् ।
यं सप्ततन्तुं तन्वन्ति तस्मै यज्ञात्मने नमः ॥ १२-४६-४६ (६६५०२)
श्चतुर्भिश्च चतुर्भिश्च द्वाभ्यां पञ्चभिरेव च ।
हूयते च पुनर्द्वाभ्यां तस्मै होमात्मने नमः ॥ৃ १२-४६-४७ (६६५०३)
यः सुपर्णो यजुर्नाम च्छन्दोगात्रस्त्रिवृच्छिराः ।
रथन्तरबृहत्पक्षस्तस्मै स्तोत्रात्मने नमः ॥ १२-४६-४८ (६६५०४)
यः सहस्रसवे सत्रे जज्ञे विश्वसृजामृषिः ।
हिरण्यपक्षः शकुनिस्तस्मै तार्क्ष्यात्मने नमः ॥ १२-४६-४९ (६६५०५)
यश्चिनोति सतां सेतुमृतेनामृतयोनिना ।
धर्मार्थव्यवहाराङ्गैस्तस्मै सत्यात्मने नमः ॥ १२-४६-५० (६६५०६)
यं पृथग्धर्मचरणाः पृथग्धर्मफलैषिणः ।
पृथग्धर्मैः समर्चन्ति तस्मै धर्मात्मने नमः ॥ १२-४६-५१ (६६५०७)
श्यतः सर्वे प्रसूयन्ते ह्यनङ्गात्माङ्गदेहिनः ।
उन्मादः सर्वभूतानां तस्मै कामात्मने नमः ॥ৃ १२-४६-५२ (६६५०८)
यं तं व्यक्तस्थमव्यक्तं विचिन्वन्ति महर्षयः ।
क्षेत्रे क्षेत्रज्ञमासीनं तस्मै क्षेत्रात्मने नमः ॥ १२-४६-५३ (६६५०९)
यं दृगात्मानमात्मस्थं वृतं षोडशभिर्गुणैः ।
प्राहुः सप्तदशंसाङ्ख्यास्तस्मै साङ्ख्यात्मने नमः ॥ १२-४६-५४ (६६५१०)
यं विनिद्रा जितश्वासाः संतुष्टाः संयतेन्द्रियाः ।
ज्योतिः पश्यन्ति युञ्जानास्तस्मै योगात्मेन नमः ॥ १२-४६-५५ (६६५११)

अपुण्यपुण्योपरमे यं पुनर्भवनिर्भयाः ।
शान्ताः संन्यासिनो यान्ति तस्मै मोक्षात्मने नमः ॥१२-४६-५६ (६६५१२)
यस्याग्निरास्यं द्यौर्मूर्धा खं नाभिश्चरणौ क्षितिः ।
सूर्यश्चक्षुर्दिशः श्रोत्रं तस्मै लोकात्मने नमः ॥१२-४६-५७ (६६५१३)
युगेष्वावर्तते योऽशैर्मासर्त्वयनहायनैः ।
सर्गप्रलययोः कर्ता तस्मै कालात्मने नमः ॥१२-४६-५८ (६६५१४)
योऽसौ युगसहस्रान्ते प्रदीप्तार्चिर्विभावसुः ।
संभक्षयति भूतानि तस्मै घोरात्मने नमः ॥१२-४६-५९ (६६५१५)
संभक्ष्य सर्वभूतानि कृत्वा चैकार्णवं जगत् ।
बालः स्वपिति यश्चैकस्तस्मै मायात्मने नमः ॥१२-४६-६० (६६५१६)
सहस्रशिरसे तस्मै पुरुषायामितात्मने ।
चतुःसमुद्रपयसि योगनिद्रात्मने नमः ॥१२-४६-६१ (६६५१७)
अजस्य नाभावध्येकं यस्मिन्विश्वं प्रतिष्ठितम् ।
पुष्करं पुष्कराक्षस्य तस्मै पद्मात्मने नमः ॥१२-४६-६२ (६६५१८)
यस्य केशेषु जीमूता नद्यः सर्वाङ्गसंधिषु ।
कुक्षौ समुद्राश्चत्वारस्तस्मै तोयात्मने नमः ॥१२-४६-६३ (६६५१९)
यस्मात्सर्गाः प्रवर्तन्ते सर्गप्रलयविक्रियाः ।
यस्मिंश्चैव प्रलीयन्ते तस्मै हेत्वात्मने नमः ॥१२-४६-६४ (६६५२०)
श्यो निषण्णो भवेद्रात्रौ दिवा भवति विष्ठितः ।
इष्टानिष्टस्य च द्रष्टा तस्मै द्रष्ट्रात्मने नमः ॥ह १२-४६-६५ (६६५२१)
अकार्यः सर्वकार्येषु धर्मकार्यार्थमुद्यतः ।
वैकुण्ठस्य हि तद्रूपं तस्मै कार्यात्मने नमः ॥१२-४६-६६ (६६५२२)
ब्रह्म वक्त्रं भुजौ क्षत्रं कृत्स्नमूरूदरं विशः ।
पादौ यस्याश्रिताः शूद्रास्तस्मैवर्णात्मने नमः ॥१२-४६-६७ (६६५२३)
अन्नपानेन्धनमयो रसप्राणविवर्धनः ।
यो धारयति भूतानि तस्मै प्राणात्मने नमः ॥१२-४६-६८ (६६५२४)
श्प्राणानां धारणार्थाय योऽन्नं भुङ्क्ते चतुर्विधम् ।
अन्तर्भूतः पचत्यग्निस्तस्मै पाकात्मने नमः ॥ ह १२-४६-६९ (६६५२५)
विषये वर्तमानानां यं तं वैषयिकैर्गुणैः ।
प्राहुर्विषयगोप्तारं तस्मै गोप्त्रात्मने नमः ॥१२-४६-७० (६६५२६)
अप्रमेयशरीराय सर्वतो बुद्धिचक्षुषे ।
अपारपरिमाणाय तस्मै दिव्यात्मने नमः ॥१२-४६-७१ (६६५२७)
परः कालात्परो यज्ञात्परः सदसतश्च यः ।
अनादिरादिर्विश्वस्य तस्मै विश्वात्मने नमः ॥१२-४६-७२ (६६५२८)
वैद्युतो जाठरश्चैव पावकः शुचिरेव च ।
दहनः सर्वभक्षाणां तस्मै वह्न्यात्मने नमः ॥१२-४६-७३ (६६५२९)

रसातलगतः श्रीमार्ननन्तो भगवान्प्रभुः ।
जगद्धारयते योऽसौ तस्मै शेषात्मने नमः ॥ १२-४६-७४ (६६५३०)
ज्वलनार्केन्दुताराणां ज्योतिषां दिव्यमूर्तिनाम् ।
यस्तेजयति तेजांसि तस्मै तेजात्मने नमः ॥ १२-४६-७५ (६६५३१)
आत्मज्ञानमिदं ज्ञानं ज्ञात्वा पञ्चस्ववस्थितम् ।
यं ज्ञानेनाधिगच्छन्ति तस्मै ज्ञानात्मने नमः ॥ १२-४६-७६ (६६५३२)
साङ्ख्यैर्योगैर्विनिश्चित्य साध्यैश्च परमर्षिभिः ।
यस्य तु ज्ञायते तत्वं तस्मै गुह्यात्मने नमः ॥ १२-४६-७७ (६६५३३)
जटिने दण्डिने नित्यं लम्बोदरशरीरिणे ।
कमण्डलुनिषङ्गाय तस्मै ब्रह्मात्मने नमः ॥ १२-४६-७८ (६६५३४)
श्शूलिने त्रिदशेशाय त्र्यम्बकाय महात्मने ।
भस्मदिग्धोर्ध्वलिङ्गाय तस्मा रुद्रात्मने नमः ॥ १२-४६-७९ (६६५३५)
चन्द्रार्धकृतशीर्षाय व्यालयज्ञोपवीतिने ।
पिनाकशूलहस्ताय तस्मै उग्रात्मने नमः ॥८ १२-४६-८० (६६५३६)
यो जातो वसुदेवेन देवक्यां यदुनन्दनः ।
शङ्खचक्रगदापाणिर्वासुदेवात्मने नमः ॥ १२-४६-८१ (६६५३७)
शिरःकपालमालाय व्याघ्रचर्मनिवासिने ।
भस्मदिग्धशरीराय तस्मै रुद्रात्मने नमः ॥ १२-४६-८२ (६६५३८)
यो मोहयति भूतानि सर्वपाशानुबन्धनैः ।
सर्वस्य रक्षणार्थाय तस्मै मोहात्मने नमः ॥ १२-४६-८३ (६६५३९)
चैतन्यं सर्वतो नित्यं सर्वप्राणिहृदि स्थितम् ।
सर्वातीततरं सूक्ष्मं तस्मै सूक्ष्मात्मने नमः ॥ १२-४६-८४ (६६५४०)
पञ्चभूतात्मभूताय भूतादिनिधनाय च ।
अक्रोधद्रोहमोहाय तस्मै शान्तात्मने नमः ॥ १२-४६-८५ (६६५४१)
यस्मिन्सर्वं यतः सर्वं यः सर्वं सर्वतश्च यः ।
यश्च सर्वमयो देवस्तस्मै सर्वात्मने नमः ॥ १२-४६-८६ (६६५४२)
यः शेते क्षीरपर्यङ्के दिव्यनागविभूषिते ।
फणासहस्ररचिते तस्मै निद्रात्मने नमः ॥ १२-४६-८७ (६६५४३)
विश्वे च मरुतश्चैव रुद्रादित्याश्विनावपि ।
वसवः सिद्धसाध्याश्च तस्मै देवात्मने नमः ॥ १२-४६-८८ (६६५४४)
अव्यक्तं बुद्ध्यहंकारो मनोबुद्धीन्द्रियाणि च ।
तन्मात्राणि विशेषाश्च तस्मै तत्वात्मने नमः ॥ १२-४६-८९ (६६५४५)
भूतं भव्यं भविष्यच्च भूतादिप्रभवाव्ययः ।
योऽग्रजः सर्वभूतानां तस्मै भूतात्मने नमः ॥ १२-४६-९० (६६५४६)
यं हि सूक्ष्मं विचिन्वन्ति परं सूक्ष्मविदो जनाः ।
सूक्ष्मात्सूक्ष्मं च यद्ब्रह्म तस्मै सूक्ष्मात्मने नमः ॥ १२-४६-९१ (६६५४७)

मत्स्यो भूत्वा विरिञ्चाय येन वेदाः समाहृताः ।
रसातलगतः शीघ्रं तस्मै मत्स्यात्मने नमः ॥१२-४६-९२ (६६५४८)
मन्दराद्रिर्धृतो येन प्राप्ते ह्यमृतमन्थने ।
अतिकर्कशदेहाय तस्मै कूर्मात्मने नमः ॥१२-४६-९३ (६६५४९)
वाराहं रूपमास्थाय महीं सवनपर्वताम् ।
उद्धरत्येकदंष्ट्रेण तस्मै क्रोडात्मने नमः ॥१२-४६-९४ (६६५५०)
नारसिंहवपुः कृत्वा सर्वलोकभयंकरम् ।
हिरण्यकशिपुं जघ्ने तस्मै सिंहात्मने नमः ॥१२-४६-९५ (६६५५१)
पिङ्गेक्षणसटं यस्य रूपं दंष्ट्रानखैर्युतम् ।
दानवेन्द्रान्तकरणं तस्मै दृप्तात्मने नमः ॥१२-४६-९६ (६६५५२)
यं न देवा न गन्धर्वा न दैत्या न च दानवाः ।
तत्वतो हि विजानन्ति तस्मै सूक्ष्मात्मने नमः ॥ҩ
वामनं रूपमास्थाय बलिं संयम्य मायया ।
त्रैलोक्यं क्रान्तवान्यस्तु तस्मै क्रान्तात्मने नमः ॥ १२-४६-९७ (६६५५३)
जमदग्निसुतो भूत्वा रामः शस्त्रभृतां वरः ।
महीं निःक्षत्रियां चक्रे तस्मै रामात्मने नमः ॥१२-४६-९८ (६६५५४)
त्रिःसप्तकृत्वो यश्चैको धर्मे व्युत्क्रान्तिगौरवात् ।
जघान क्षत्रियान्सङ्ख्ये तस्मै क्रोधात्मने नमः ॥१२-४६-९९ (६६५५५)
शविभज्य पञ्चधाऽऽत्मानं वायुर्भूत्वा शरीरगः ।
यश्चेष्टयति भूतानि तस्मै वाय्वात्मने नमः ॥ҩ १२-४६-१०० (६६५५६)
रामो दशिरथिर्भूत्वा पुलस्त्यकुलनन्दनम् ।
जघान रावणं सङ्ख्ये तस्मै क्षत्रात्मने नमः ॥१२-४६-१०१ (६६५५७)
यो हली मुसली श्रीमान्नीलाम्बरधरः स्थितः ।
रामाय रौहिणेयाय तस्मै भोगात्मने नमः ॥१२-४६-१०२ (६६५५८)
शङ्खिने चक्रिणे नित्यं शार्ङ्गिणे पीतवाससे ।
वनमालाधरायैव तस्मै कृष्णात्मने नमः ॥१२-४६-१०३ (६६५५९)
वसुदेवसुतः श्रीमान्क्रीडितो नन्दगोकुले ।
कंसस्य निधनार्थाय तस्मै क्रीडात्मने नमः ॥१२-४६-१०४ (६६५६०)
वासुदेवत्वमागम्य यदोर्वंशसमुद्भवः ।
भूभारहरणं चक्रे तस्मै कृष्णात्मने नमः ॥१२-४६-१०५ (६६५६१)
सारथ्यमर्जुनस्याजौ कुर्वन्गीतामृतं ददौ ।
लोकत्रयोपकाराय तस्मै ब्रह्मात्मने नमः ॥१२-४६-१०६ (६६५६२)
दानवांस्तु वशे कृत्वा पुनर्बुद्धत्वमागतः ।
सर्गस्य रक्षणार्थाय तस्मै बुद्धात्मने नमः ॥१२-४६-१०७ (६६५६३)
हनिष्यति कलौ प्राप्ते म्लेच्छांस्तुरगवाहनः ।
धर्मसंस्थापको यस्तु तस्मै कल्क्यात्मने नमः ॥१२-४६-१०८ (६६५६४)

तारान्वये कालनेमिं हत्वा दानवपुङ्गवम् ।
ददौ राज्यं महेन्द्राय तस्मै साङ्ख्यात्मने नमः ॥१२-४६-१०९ (६६५६५)
यः सर्वप्राणिनां देहे साक्षिभूतो ह्यवस्थितः ।
अक्षरः क्षरमाणानां तस्मै साक्ष्यात्मने नमः ॥१२-४६-११० (६६५६६)
नमोस्तु ते महादेव नमस्ते भक्तवत्सल ।
सुब्रह्मण्य नमस्तेऽस्तु प्रसीद परमेश्वर ॥१२-४६-१११ (६६५६७)
अव्यक्तव्यक्तरूपेण व्याप्तं सर्वं त्वया विभो ।
नारायणं सहस्राक्षं सर्वलोकमहेश्वरम् ॥१२-४६-११२ (६६५६८)
हिरण्यनाभ यज्ञाङ्गममृतं विश्वतोमुखम् ।
सर्वदा सर्वकार्येषु नास्ति तेषाममङ्गलम् ॥१२-४६-११३ (६६५६९)
येषां हृदिस्थो देवेशो मङ्गलायतनं हरिः ।
मङ्गल भगवान्विष्णुर्मङ्गलं मधुसूदनः ॥१२-४६-११४ (६६५७०)
मङ्गलं पुण्डरीकाक्षो मङ्गलं गरुडध्वजः ।
विश्वकर्मन्नमस्तेऽस्तु विश्वात्मन्विश्वसंभव ॥१२-४६-११५ (६६५७१)
अपवर्गस्थभूतानां पञ्चानां परमास्थित ।
नमस्ते त्रिषु लोकेषु वमस्ते परतस्त्रिषु ॥१२-४६-११६ (६६५७२)
नमस्ते दिक्षु सर्वासु त्वं हि सर्वपरायणम् ।
नमस्ते भगवन्विष्णो त्येकानां प्रभवाव्यय ॥१२-४६-११७ (६६५७३)
त्वं हि कर्ता हृषीकेशः संहर्ता चापराजितः ।
तेन पश्यामि ते दिव्यान्भावान्हि त्रिषुवर्त्मसु ॥१२-४६-११८ (६६५७४)
तच्च पश्यामि तत्वेन यत्ते रूपं सनातनम् ।
दिवं ते शिरसा व्याप्तं पद्भ्यां देवी वसुंधरा ।
विक्रमेण त्रयो लोकाः पुरुषोऽसि सनातनः ॥ १२-४६-११९ (६६५७५)
शदिशो भुजा रविश्चक्षुर्वीर्ये शुक्रः प्रतिष्ठितः ।
सप्तमार्गा निरुद्धास्ते वायोरमिततेजसः ॥ᐱ १२-४६-१२० (६६५७६)
व्यक्ताव्यक्तस्वरूपेण व्याप्तं सर्वं त्वया विभो ।
अव्यक्तं ब्राह्मणं रूपं व्यक्तमेतच्चराचरम् ॥१२-४६-१२१ (६६५७७)
अतसीपुष्पसंकाशं पीतवाससमच्युतम् ।
ये नमस्यन्ति गोविन्दं न तेषां विद्यते भयम् ॥१२-४६-१२२ (६६५७८)
शएकोऽपि कृष्णस्य कृतः प्रणामो
दशाश्वमेधावभृथेन तुल्यः ।
दशाश्वमेधी पुनरेति जन्म
कृष्णप्रणामी न पुनर्भवाय ॥ १२-४६-१२३ (६६५७९)
कृष्णव्रताः कृष्णमनुस्मरन्तो
रात्रौ च कृष्णं पुनरुत्थिता ये ।
ते कृष्णदेहाः प्रविशन्ति कृष्ण

माज्यं यथा मन्त्रहुतं हुताशे ॥ १२-४६-१२४ (६६५८०)
नमो नरकसंत्रासरक्षामण्डलकारिणे ।
संसारनिम्नगावर्ततरिकाष्ठाय विष्णवे ॥ १२-४६-१२५ (६६५८१)
नमो ब्रह्मण्यदेवाय गोब्राह्मणहिताय च ।
जगद्धिताय कृष्णाय गोविन्दाय नमोनमः ॥ १२-४६-१२६ (६६५८२)
प्राणकान्तारपाथेयं संसारोच्छेदभेषजम् ।
दुःखशोकपरित्राणं हरिरित्यक्षरद्वयम् ॥ १२-४६-१२७ (६६५८३)
नारायणपरं ब्रह्म नारायणपरं तपः ।
नारायणपरं सत्यं नारायणपरं परम् ॥ १२-४६-१२८ (६६५८४)
यथा विष्णुमयं सत्यं यथा विष्णुमयं हविः ।
तथा विष्णुमयं सर्वं पाप्मा ने नश्यतां तथा ॥ १२-४६-१२९ (६६५८५)
तस्य यज्ञवराहस्य विष्णोरमिततेजसः ।
प्रणामं येऽपि कुर्वन्ति तेषामपि नमोनमः ॥ १२-४६-१३० (६६५८६)
त्वां प्रपन्नाय भक्ताय गतिमिष्टां जिगीषवे ।
यच्छ्रेयः पुण्डरीकाक्ष तद्ध्यायस्व सुरोत्तम ॥ १२-४६-१३१ (६६५८७)
इति विद्यातपोयोनिरयोनिर्विष्णुरीडितः ।
वाग्यज्ञेनार्चितो देवः प्रीयतां मे जनार्दनः ॥ १२-४६-१३२ (६६५८८)
वैशंपायन उवाच। १२-४६-१३३क्ष् (५४३८)
एतावदुक्त्वा वचनं भीष्मस्तद्गतमानसः ।
नम इत्येव कृष्णाय प्रणाममकरोत्तदा ॥ १२-४६-१३३ (६६५८९)
तस्मिन्नुपरते वाक्ये ततस्ते ब्रह्मवादिनः ।
भीष्मं वाग्भिर्बाष्पगलास्तमानर्चुर्महाद्युतिम् ॥ १२-४६-१३४ (६६५९०)
तेऽस्तुवन्तश्च विप्रेन्द्राः केशवं पुरुषोत्तमम् ।
भीष्मं च शनकैः सर्वे प्रशशंसुः पुनः पुनः ॥ १२-४६-१३५ (६६५९१)
अधिगम्य तु योगेन भक्तिं भीष्मस्य माधवः ।
त्रैलोक्यदर्शनं ज्ञानं दिव्यं दत्त्वा ययौ हरिः ॥ १२-४६-१३६ (६६५९२)
विदित्वा भक्तियोगं तं भीष्मस्य पुरुषोत्तमः ।
सहसोत्थाय तं हृष्टो यानमेवान्वपद्यत ॥ १२-४६-१३७ (६६५९३)
केशवः सात्यकिश्चैव रथेनकेन जग्मतुः ।
अपरेण महात्मानौ युधिष्ठिरधनञ्जयौ ॥ १२-४६-१३८ (६६५९४)
भीमसेनो यमौ चोभौ रथमेकं समास्थिताः ।
कृपो युयुत्सुः सूतश्च सञ्जयश्चापरं रथम् ॥ १२-४६-१३९ (६६५९५)
ते रथैर्नगराकारैः प्रयाताः पुरुषर्षभाः ।
नेमिघोषेण महता कम्पयन्ते वसुंधराम् ॥ १२-४६-१४० (६६५९६)
ततो गिरः पुरुषवरस्तवेरितां
द्विजेरिताः पथिषु मनाक् स शुश्रुवे ।

कृताञ्जलिं प्रणतमथापरं जनं
स केशिहा मुदितमनास्थनन्दत ॥ १२-४६-१४१ (६६५९७)
इति स्मरन्पठति च शार्ङ्गधन्वनः
शृणोतु वा यदुकुलनन्दनस्तवम् ।
स चक्रभृत्प्रतिहतसर्वकिल्बिषो
जनार्दनं प्रविशति देहसंक्षये ॥ १२-४६-१४२ (६६५९८)
यं योगिनः प्राणवियोगकाले
यत्नेन चित्ते विनिवेशयन्ति ।
स तं पुरस्ताद्धरिमीक्षमाणः
प्राणाञ्जहौ प्राप्तफलो हि भीष्मः ॥ १२-४६-१४३ (६६५९९)
स्ववराजः समाप्तोऽयं विष्णोरद्भुतकर्मणः ।
गाङ्गेयेन पुरा गीतो महापातकनाशनः ॥ १२-४६-१४४ (६६६००)
इमं नरः स्तवराजं मुमुक्षुः
पठञ्शुचिः कलुषितकल्मषापहम् ।
अतीत्य लोकान्मलिनः समामता
न्पदं स गच्छत्यमृतं महात्मनः ॥ ॥ १२-४६-१४५ (६६६०१)

इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि
षट्चत्वारिंशोऽध्यायः ॥
Mahabharata - Shanti Parva - Chapter Footnotes

१२-४६-१७ जिगदिषामि वक्तुमिच्छामि ।व्याससमासिन्या विस्तरसंक्षेपवत्या ॥
१२-४६-२५ सदसत्कार्यं कारणं च विश्वं कर्म यस्मात् ॥
१२-४६-२८ वाकेषु मन्त्रेषु सामान्यतः कर्मप्रकाशकेषु
।अनुवाकेषु मन्त्रार्थविवरणभूतेषु ब्राह्मणवाक्येषु।निषत्सु
कर्माङ्गाद्यवबद्धदेवतादिज्ञानवाक्येषु।उपनिषत्सु
केवलात्मज्ञापकवाक्येषु गृणन्ति
ध्यायन्ति।सत्यमबाधितम्।सत्येष्वबाधितार्थेषु।सामसु
ज्येष्ठसामादिषु ॥
१२-४६-२९ चतुर्भिर्नामभिर्वासुदेवसकर्षणप्रद्युम्नानिरुद्धरूपैः ॥
१२-४६-३० नित्यं तपः स्वधर्मस्तद्यस्मिन् ।यत्प्रीत्यर्थं तप्तं
सद्यद्यस्मादङ्गेषु चित्तेष्वनुतिष्ठति उपतिष्ठति यश्च
सर्वात्मा तं प्रपद्ये इति सर्वेषां यच्छब्दसंबद्धानां
प्रथमेनान्वयः।ईश्वलरार्थमनुष्ठितो धर्मः
स्वचित्तशुद्धिद्वारास्वार्थएव भवतीति भावः ॥
१२-४६-३१ भौमं ब्रह्म वेदा ब्राह्मणा यज्ञाश्च ॥

१२-४६-३२ आत्मानं सर्वेश्वरमात्मनि हार्दाकाशे इष्ट्वा योगेन पश्यति ।आनन्त्याय मोक्षाय ॥
१२-४६-३४ पुराणे अतीतकल्पादिविषये ।पुरुषं पूर्णं सर्वमस्मिन्नतीतमस्त्येवेति योगात्पुरुष इति नाम।युगादिषु युगारम्भेषु।बृंहकत्वात्सृष्टेरेनं ब्रह्मेत्याहुः।क्षये सर्वस्य सम्यक्कर्षणादयं संकर्षण इत्युक्तः ॥
१२-४६-३५ नान्यभक्ता अनन्यभक्ताः ॥
१२-४६-३९ हिरण्यगर्भमिति ड ।थ।पाठः।जज्ञे जनयामास ॥
१२-४६-४३ उक्थे बह्वृचाः ।अग्नौ चयनेऽध्वर्यवः ॥
१२-४६-४७ चतुर्भिरिति ।आश्रावयेति चतुरक्षरं अस्तु श्रौषिडिति चतुरक्षरं यजेति द्व्यक्षरं ये यजामहे इति पञ्चाक्षरं द्व्यक्षरो वषट्कार इति सप्तदशभिरक्षरैर्यो हूयते तस्मै होमात्मने नमः ॥
१२-४६-४९ यः सहस्रसमे सत्र इति झ ।पाठः।तत्र सहस्रसमे सहस्रसं वत्सरे सत्रे इत्यर्थः ॥
१२-४६-५४ यं त्रिधात्मानमिति झ।पाठः ॥

---

शन्तिपर्व-अध्यय०४७
॥ श्रीः ॥
१२.४७. अध्यायः ४७

Mahabharata - Shanti Parva - Chapter Topics
कृष्णंयुधिष्ठिरादीनां कुरुक्षेत्रंप्रति गमनम्
॥ १.।युधिष्ठिरेण कृष्णंप्रति परशुरामचरित्रकथनप्रार्थना
॥ २.।
Mahabharata - Shanti Parva - Chapter Text

१२-४७-० (६६६०२)
वैशंपायन उवाच।१२-४७-०क्ष् (५४३९)
ततः स च हृषीकेशः स च राजा युधिष्ठिरः ।
कृपादयश्च ते सर्वे चत्वारः पाण्डवाश्च ते ॥१२-४७-१ (६६६०३)
रथैस्तैर्नगरप्रख्यैः पताकाध्वजशोभितैः ।
ययुराशु कुरुक्षेत्रं वाजिभिः शीघ्रगामिभिः ॥१२-४७-२ (६६६०४)
तेऽवतीर्य कुरुक्षेत्रे केशमज्जास्थिसंकुले ।
देहन्यासः कृतो यत्र क्षत्रियैस्तैर्महारथैः ॥१२-४७-३ (६६६०५)
गजाश्वदेहास्थिचयैः पर्वतैरिव संचितम् ।
नरशीर्षकपालैश्च हंसैरिव च सर्वशः ॥१२-४७-४ (६६६०६)

चितासहस्रैर्निचितं वर्मशस्त्रसमाकुलम् ।
आपानभूमिं कालस्य तदा भुक्तोज्झितामिव ॥१२-४७-५ (६६६०७)
भूतसङ्घानुचरितं रक्षोगणनिषेवितम् ।
पश्यन्तस्ते कुरुक्षेत्रं ययुराशु महारथाः ॥१२-४७-६ (६६६०८)
गच्छन्नेव महाबाहुः सर्वं यादवनन्दनः ।
युधिष्ठिराय प्रोवाच जामदग्न्यस्य विक्रमम् ॥१२-४७-७ (६६६०९)
अमी रामह्रदाः पञ्च दृश्यन्ते पार्थ दूरतः ।
येषु संतर्पयामास पितॄन्क्षत्रियशोणितैः ॥१२-४७-८ (६६६१०)
त्रिःसप्तकृत्वो वसुधां कृत्वा निःक्षत्रियां प्रभुः ।
इहेदानीं ततो रामः कर्मणो विरराम ह ॥१२-४७-९ (६६६११)
युधिष्ठिर उवाच।१२-४७-१०क्ष् (५४४०)
त्रिःसप्तकृत्वः पृथिवी कृता निःक्षत्रिया पुरा ।
रामेणेति यदात्थ त्वमत्र मे संशयो महान् ॥१२-४७-१० (६६६१२)
क्षत्रबीजं यथा दग्धं रामेण यदुपुङ्गव ।
कथं भूयः समुत्पत्तिः क्षत्रस्यामितविक्रम ॥१२-४७-११ (६६६१३)
महात्मना भगवता रामेण यदुपुङ्गव ।
कथमुत्सादित्तं क्षत्रं कथमृद्धिगतं पुनः ॥१२-४७-१२ (६६६१४)
महता रथयुद्धेन कोटिशः क्षत्रिया हताः ।
तथाऽभूच्च मही कीर्णा क्षत्रियैर्वदतां वर ॥१२-४७-१३ (६६६१५)
किमर्थं भार्गवेणेदं क्षत्रमुत्सादितं पुरा ।
रामेण यदुशार्दूल कुरुक्षेत्रे महात्मना ॥१२-४७-१४ (६६६१६)
एतन्मे छिन्धि वार्ष्णेय संशयं तार्क्ष्यकेतन ।
आगमो हि परः कृष्ण त्वत्तो नो वासवानुज ॥१२-४७-१५ (६६६१७)
वैशंपायन उवाच।१२-४७-१६क्ष् (५४४१)
ततो व्रजन्नेव गदाग्रजः प्रभुः
शशंस तस्मै निखिलेन तत्त्वतः ।
युधिष्ठिरायाप्रतिमौजसे तदा
यथाऽभवत्क्षत्रियसंकुला मही ॥ ॥ १२-४७-१६ (६६६१८)

इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि
सप्तचत्वारिंशोऽध्यायः ॥ ४७.।

Mahabharata - Shanti Parva - Chapter Footnotes

१२-४७-१५ आगमो वेदः ।त्वत्तः त्वद्वचनान्नो परः नाधिकः ॥

---

शन्तिपर्व-अध्यय०४८
॥ श्रीः ॥

१२.४८. अध्यायः ४८

Mahabharata - Shanti Parva - Chapter Topics
कृष्णेन युधिष्ठिरंप्रति परशुरामचरितकथनम् ॥ १.।
Mahabharata - Shanti Parva - Chapter Text

१२-४८-० (६६६१९)
वासुदेव उवाच। १२-४८-०क्ष् (५४४२)
शृणु कौन्तेय रामस्य प्रभावो यो मया श्रुतः ।
महर्षीणां कथयतां कारणं तस्य जन्म च ॥ १२-४८-१ (६६६२०)
यथा च जामदग्न्येन कोटिशः क्षत्रिया हताः ।
उद्भूता राजवंशेषु ये भूयो भारते हताः ॥ १२-४८-२ (६६६२१)
जह्नोरजस्तु तनयो बलाकाश्वस्तु तत्सुतः ।
कुशिको नाम धर्मज्ञस्तस्य पुत्रो महीपते ॥ १२-४८-३ (६६६२२)
अग्र्यं तपः समातिष्ठत्सहस्राक्षसमो भुवि ।
पुत्रं लभेयमजितं त्रिलोकेश्वरमित्युत ॥ १२-४८-४ (६६६२३)
तमुग्रतपसं दृष्ट्वा सहस्राक्षः पुरंदरः ।
समर्थं पुत्रजनने स्वयमेवैत्य भारत ॥ १२-४८-५ (६६६२४)
पुत्रत्वमगमद्राजंस्तस्य लोकेश्वरेश्वरः ।
गाधिर्नामाभवत्पुत्रः कौशिकः पाकशासनः ॥ १२-४८-६ (६६६२५)
तस्य कन्याऽभवद्राजन्नाम्ना सत्यवती प्रभो ।
तां गाधिर्भृगुपुत्राय ऋचीकाय ददौ प्रभुः ॥ १२-४८-७ (६६६२६)
ततस्तया हि कौन्तेय भार्गवः कुरुनदनः ।
पुत्रार्थं श्रपयामास चरुं गाधेस्तथैव च ॥ १२-४८-८ (६६६२७)
आहूय चाह तां भार्यामृचीको भार्गवस्तदा ।
उपयोज्यश्चरुरयं त्वया मात्राऽप्ययं तव ॥ १२-४८-९ (६६६२८)
तस्या जनिष्यते पुत्रो दीप्तिमान्क्षत्रियर्षभः ।
अजय्यः क्षत्रियैर्लोके क्षत्रियर्षभसूदनः ॥ १२-४८-१० (६६६२९)
तवापि पुत्रं कल्याणि धृतिमन्तं शमात्मकम् ।
तपोन्वितं द्विजश्रेष्ठं चरुरेष विधास्यति ॥ १२-४८-११ (६६६३०)
इत्येवमुक्त्वा तां भार्यां सर्चीको भृगुनन्दनः ।
तपस्यभिरतः श्रीमाञ्जगामारण्यमेव हि ॥ १२-४८-१२ (६६६३१)
एतस्मिन्नेव काले तु तीर्थयात्रापरो नृपः ।
गाधिः सदारः संप्राप्त ऋचीकस्याश्रमं प्रति ॥ १२-४८-१३ (६६६३२)
चरुद्वयं गृहीत्वा तु राजन्सत्यवती तदा ।
भर्त्रा दत्तं प्रसन्नेन मात्रे हृष्टा न्यवेदयत् ॥ १२-४८-१४ (६६६३३)

माता तु तस्याः कौन्तेय दुहित्रे स्वं चरुं ददौ ।
तस्याश्चरुमथाज्ञातमात्मसंस्थं चकार ह ॥१२-४८-१५ (६६६३४)
अथ सत्यवती गर्भं क्षत्रियान्तकरं तदा ।
धारयामास दीप्तेन वपुषा घोरदर्शनम् ॥१२-४८-१६ (६६६३५)
तामृचीकस्तदा दृष्ट्वा ध्यानयोगेन भारत ।
अब्रवीद्भृगुशार्दूलः स्वां भार्यां देवरूपिणीम् ॥१२-४८-१७ (६६६३६)
मात्राऽसि व्यंसिता भद्रे चरुव्यत्यासहेतुना ।
तस्माज्जनिष्यते पुत्रः क्रूरकर्माऽत्यमर्षणः ।
ग्जनयिष्यति माता ते ब्रह्मभूतं तपोधनम् ॥' १२-४८-१८ (६६६३७)
विश्वं हि ब्रह्म सुमहच्चरौ तव समाहितम् ।
क्षत्रवीर्यं च सकलं तव मात्रे समर्पितम् ॥१२-४८-१९ (६६६३८)
विपर्ययेण ते भद्रे नैतदेवं भविष्यति ।
मातुस्ते ब्राह्मणो भूयात्तव च क्षत्रियः सुतः ॥१२-४८-२० (६६६३९)
सैवमुक्ता महाभागा भर्त्रा सत्यवती तदा ।
पपात शिरसा तस्मै वेपन्ती चाब्रवीदिदम् ॥१२-४८-२१ (६६६४०)
नार्होऽसि भगवन्नद्य वक्तुमेवंविधं वचः ।
ब्राह्मणापशदं पुत्रं प्राप्स्यसीति हि मां प्रभो ॥१२-४८-२२ (६६६४१)
ऋचीक उवाच। १२-४८-२३क्ष् (५४४३)
नैष संकल्पितः कामो मया भद्रे तथा त्वयि ।
उग्रकर्मा भवेत्पुत्रश्चरुव्यत्यासहेतुना ॥१२-४८-२३ (६६६४२)
सत्यवत्युवाच। १२-४८-२४क्ष् (५४४४)
इच्छँल्लोकानपि मुने सृजेथाः किं पुनः सुतम् ।
शमात्मकमृजुं पुत्रं दातुमर्हसि मे प्रभो ॥१२-४८-२४ (६६६४३)
ऋचीक उवाच। १२-४८-२५क्ष् (५४४५)
नोक्तपूर्वं मया भद्रे स्वैरेष्वप्यनृतं वचः ।
किमुताग्निं समाधाय मन्त्रवच्चरुसाधने ॥१२-४८-२५ (६६६४४)
श्दृष्टमेतत्पुरा भद्रे ज्ञातं च तपसा मया ।
ब्रह्मभूतं हि सकलं पितुस्तव कुलं भवेत् ॥ॆ १२-४८-२६ (६६६४५)
सत्यवत्युवाच। १२-४८-२७क्ष् (५४४६)
काममेवं भवेत्पौत्रो मामैवं तनयः प्रभो ।
शमात्मकमृजुं पुत्रं लभेयं जपतां वर ॥१२-४८-२७ (६६६४६)
ऋचीक उवाच। १२-४८-२८क्ष् (५४४७)
पुत्रे नास्ति विशेषो मे पौत्रे च वरवर्णिनि ।
यथा त्वयोक्तं वचनं तथा भद्रे भविष्यति ॥१२-४८-२८ (६६६४७)
वासुदेव उवाच। १२-४८-२९क्ष् (५४४८)
ततः सत्यवती पुत्रं जनयामास भार्गवम् ।

तपस्यभिरतं शान्तं जमदग्निं यतव्रतम् ॥१२-४८-२९ (६६६४८)
विश्वामित्रं च दायादं गाधिः कुशिकनन्दनः ।
प्राप ब्रह्मर्षिसमितं विश्वेन ब्रह्मणा युतम् ॥१२-४८-३० (६६६४९)
ऋचीको जनयामास जमदग्निं तपोनिधिम् ।
सोऽपि पुत्रं ह्यजनयज्जमदग्निः सुदारुणम् ॥१२-४८-३१ (६६६५०)
सर्वविद्यान्तगं श्रेष्ठं धनुर्वेदस्य पारगम् ।
रामं क्षत्रियहन्तारं प्रदीप्तमिव पावकम् ॥१२-४८-३२ (६६६५१)
श्तेषयित्वा महादेवं पर्वते गन्धमादने ।
अस्त्राणि वरयामास परशुं चातितेजसम् ॥१२-४८-३३ (६६६५२)
स तेनाकुण्ठधारेण ज्वलितानलवर्चसा ।
कुठारेणाप्रमेयेण लोकेष्वप्रतिमोऽभवत् ।॥ १२-४८-३४ (६६६५३)
एतस्मिन्नेव काले तु कृतवीर्यात्मजो बली ।
अर्जुनो नाम तेजस्वी क्षत्रियो हैहयाधिपः ॥१२-४८-३५ (६६६५४)
दत्तात्रेयप्रसादेन राजा बाहुसहस्रवान् ।
चक्रवर्ती महातेजा विप्राणामाश्वमेधिके ॥१२-४८-३६ (६६६५५)
ददौ स पृथिवीं सर्वां सप्तद्वीपां सपर्वताम् ।
सबाह्वस्त्रबलेनाजौ जित्वा परमधर्मवित् ॥१२-४८-३७ (६६६५६)
तृषितेन च कौन्तेय भिक्षितश्चित्रभानुना ।
सहस्त्रबाहुर्विक्रान्तः प्रादाद्भिक्षामथाग्नये ॥१२-४८-३८ (६६६५७)
ग्रामान्पुराणि राष्ट्राणि घोषांश्चैव तु वीर्यवान् ।
जज्वाल तस्य वाणेद्धचित्रभानुर्दिधक्षया ॥१२-४८-३९ (६६६५८)
स तस्य पुरुषेन्द्रस्य प्रभावेण महौजसः ।
ददाह कार्तवीर्यस्य शैलानपि धरामपि ॥१२-४८-४० (६६६५९)
स शून्यमाश्रमारण्यमापवस्य महात्मनः ।
ददाह पवनेनेद्धश्चित्रभानुः सहैहयः ॥१२-४८-४१ (६६६६०)
आपवस्तं ततो रोषाच्छशापार्जुनमच्युत ।
दग्धे श्रमे महाबाहो कार्तवीर्येण वीर्यवान् ॥१२-४८-४२ (६६६६१)
त्वया न वर्जितं यस्मान्ममेदं हि महद्वनम् ।
दग्धं तस्माद्रणे रामो बाहूंस्ते च्छेत्स्यतेऽर्जुन ॥१२-४८-४३ (६६६६२)
अर्जुनस्तु महातेजा बली नित्यं शमात्मकः ।
ब्रह्मण्यश्च शरण्यश्च दाता शूरश्च भारत ।
नाचिन्तयत्तदा शापं तेन दत्तं महात्मना ॥ १२-४८-४४ (६६६६३)
तस्य पुत्राः सुबलिनः शापेनासन्पितुर्वधे ।
निमित्तमवलिप्ता वै नृशंसाश्चैव नित्यदा ॥१२-४८-४५ (६६६६४)
जमदग्नेस्तु धेन्वास्ते वत्समानिन्युरच्युत ।
अज्ञातं कार्तवीर्यस्य हैहयेन्द्रस्य धीमतः ॥१२-४८-४६ (६६६६५)

तन्निमित्तमभूद्युद्धं जामदग्नेर्महात्मनः ।
ततोऽर्जुनस्य बाहून्स चिच्छेद रुषितोऽनघ ॥१२-४८-४७ (६६६६६)
तं भ्रमन्तं ततो वत्सं जामदग्न्यः स्वमाश्रमम् ।
प्रत्यानयत राजेन्द्र तेषामन्तः पुरात्प्रभुः ॥१२-४८-४८ (६६६६७)
अर्जुनस्य सुतास्ते तु संभूयाबुद्धयस्तदा ।
गत्वाऽऽश्रममसंबुद्धा जमदग्नेर्महात्मनः ।
अपातयन्त भल्लाग्रैः शिरः कायान्नराधिप ॥ १२-४८-४९ (६६६६८)
समित्कुशार्थं रामस्य निर्यातस्य यशस्विनः ।
ग्प्रत्यक्षं राममातुश्च तथैवाश्रमवासिनाम् ॥१२-४८-५० (६६६६९)
श्रुत्वा रामस्तमर्थं च क्रुद्धः कालानलोपमः ।
धनुर्वेदेऽद्वितीयो हि दिव्यास्त्रैः समलंकृतः ॥१२-४८-५१ (६६६७०)
चन्द्रबिम्बार्धसंकाशं परशुं गृह्य भार्गवः।'
ततः पितृवधामर्षाद्रामः परममन्युमान् ।
निःक्षत्रियां प्रतिश्रुत्य महीं शस्त्रमगृह्णत ॥ १२-४८-५२ (६६६७१)
ततः स भृगुशार्दूलः कार्तवीर्यस्य वीर्यवान् ।
विक्रम्य निजघानाशु पुत्रान्पौत्रांश्च सर्वशः ॥१२-४८-५३ (६६६७२)
स हैहयसहस्राणि हत्वा परममन्युमान् ।
महीं सागरपर्यन्तां चकार रुधिरोक्षिताम् ॥१२-४८-५४ (६६६७३)
स तथा सुमहातेजाः कृत्वा निःक्षत्रियां महीम् ।
कृपया परयाऽऽविष्टो वनमेव जगाम ह ॥१२-४८-५५ (६६६७४)
ततो वर्षसहस्रेषु समतीतेषु केषुचित् ।
कोपं संप्राप्तवांस्तत्र प्रकृत्या कोपनः प्रभुः ॥१२-४८-५६ (६६६७५)
विश्वामित्रस्य पौत्रस्तु रैभ्यपुत्रो महातपाः ।
परावसुर्महाराज क्षिप्त्वाऽऽह जनसंसदि ॥१२-४८-५७ (६६६७६)
ये ते ययातिपतने यज्ञे सन्तः समागताः ।
प्रतर्दनप्रभृतयो राम किं क्षत्रिया न ते ॥१२-४८-५८ (६६६७७)
मिथ्याप्रतिज्ञो राम त्वं कत्थसे जनसंसदि ।
भयात्क्षत्रियवीराणां पर्वतं समुपाश्रितः ॥१२-४८-५९ (६६६७८)
सा पुनः क्षत्रियशतैः पृथिवी सर्वतः स्तृता ।
परावसोर्वचः श्रुत्वा शस्त्रं जग्राह भार्गवः ॥१२-४८-६० (६६६७९)
ततो ये क्षत्रिया राजञ्शतशस्तेन वर्जिताः ।
ते विवृद्धा महावीर्याः पृथिवीपतयोऽभवन् ॥१२-४८-६१ (६६६८०)
स पुनस्ताञ्जघानाशु बालानपि नराधिप ।
गर्भस्थैस्तु मही व्याप्ता पुनरेवाभवत्तदा ॥१२-४८-६२ (६६६८१)
जातंजातं स गर्भं तु पुनरेव जघान ह ।
अरक्षंश्च सुतान्कांश्चित्तदा क्षत्रिययोषितः ॥१२-४८-६३ (६६६८२)

त्रिःसप्तकृत्वः पृथिवीं कृत्वा निःक्षत्रियां प्रभुः ।
दक्षिणामश्वमेधान्ते कश्यपायाददत्ततः ॥ १२-४८-६४ (६६६८३)
स क्षत्रियाणां शेषार्थं करेणोद्दिश्य कश्यपः ।
स्रुक्प्रग्रहवता राजंस्ततो वाक्यमथाब्रवीत् ॥ १२-४८-६५ (६६६८४)
गच्छ पारं समुद्रस्य दक्षिणस्य महामुने ।
न ते मद्विषये राम वस्तव्यमिह कर्हिचित् ॥ १२-४८-६६ (६६६८५)
ग्पृथिवी दक्षिणा दत्ता वाजिमेधे मम त्वया ।
पुनरस्याः पृथिव्या हि दत्त्वा दातुमनीश्वरः ॥' १२-४८-६७ (६६६८६)
ततः शूर्पाकरं देशं सागरस्तस्य निर्ममे ।
संत्रासाज्जामदग्न्यस्य सोऽपरान्तमहीतलम् ॥ १२-४८-६८ (६६६८७)
कश्यपस्तां महाराज प्रतिगृह्य वसुंधराम् ।
कृत्वा ब्राह्मणसंस्थां वै प्रविष्टः सुमहद्वनम् ॥ १२-४८-६९ (६६६८८)
ततः शूद्राश्च वैश्याश्च यथा स्वैरप्रचारिणः ।
अवर्तन्त द्विजाग्र्याणां दारेषु भरतर्षभ ॥ १२-४८-७० (६६६८९)
अराजके जीवलोके दुर्बला बलवत्तरैः ।
वध्यन्ते न हि वित्तेषु प्रभुत्वं कस्यचित्तदा ॥ १२-४८-७१ (६६६९०)
ग्ब्राह्मणाः क्षत्रिया वैश्याः शूद्राश्चोत्पथगामिनः ।
परस्परं समाश्रित्य घातयन्त्यपथस्थिताः ॥ १२-४८-७२ (६६६९१)
स्वधर्मं ब्राह्मणास्त्यक्त्वा पाषण्डत्वं समाश्रिताः ।
चौरिकानृतमायाश्च सर्वे चैव प्रकुर्वते ॥ १२-४८-७३ (६६६९२)
स्वधर्मस्थान्द्विजान्हत्वा तथाऽऽश्रमनिवासिनः ।
वैश्याः सत्पथसंस्थाश्च शूद्रा ये चैव धार्मिकाः ॥ १२-४८-७४ (६६६९३)
तान्सर्वान्घातयन्ति स्म दुराचाराः सुनिर्भयाः ।
यज्ञाध्ययनशीलांश्च आश्रमस्थांस्तपस्विनिः ॥ १२-४८-७५ (६६६९४)
गोबालवृद्धनारीणां नाशं कुर्वन्ति चापरे ।
आन्वीक्षकी त्रयी वार्ता न च नीतिः प्रवर्तते ॥ १२-४८-७६ (६६६९५)
व्रात्यतां समनुप्राप्ता बहवो हि द्विजातयः ।
अधरोत्तरापचारेण म्लेच्छभूताश्च सर्वशः ॥ ' १२-४८-७७ (६६६९६)
ततः कालेन पृथिवी पीड्यमाना दुरात्मभिः ।
विपर्ययेण तेनाशु प्रविवेश पसातलम् ।
अरक्ष्यमाणा विधिवत्क्षत्रियैर्धर्मरक्षिभिः ॥ १२-४८-७८ (६६६९७)
तां दृष्ट्वा द्रवतीं तत्र संत्रासात्स महामनाः ।
ऊरुणा धारयामास कश्यपः पृथिवीं ततः ।
निमज्जन्तीं ततो राजंस्तेनोर्वीति मही स्मृता ॥ १२-४८-७९ (६६६९८)
रक्षणार्थं समुद्दिश्य ययाचे पृथिवी तदा ।
प्रसाद्य कश्यपं देवी क्षत्रियान्बाहुशालिनः ॥ १२-४८-८० (६६६९९)

पृथिव्युवाच। १२-४८-८१क्ष् (५४४९)
सन्ति ब्रह्मन्मया गुप्ताः स्त्रीषु क्षत्रियपुङ्गवाः ।
हैहयानां कुले जातास्ते संरक्षन्तु मां मुने ॥ १२-४८-८१ (६६७००)
अस्ति पौरवदायादो विदूरथसुतः प्रभो ।
ऋक्षैः संवर्धितो विप्र ऋक्षवत्यथ पर्वते ॥ १२-४८-८२ (६६७०१)
तथाऽनुकम्पमानेन यज्वनाथामितौजसा ।
पराशरेण दायादः सौदासस्याभिरक्षितः ॥ १२-४८-८३ (६६७०२)
सर्वकर्माणि कुरुते शूद्रवत्तस्य स द्विजः ।
सर्वकर्मेत्यभिख्यातः स मां रक्षतु पार्थिवः ॥ १२-४८-८४ (६६७०३)
शिबिपुत्रो महातेजा गोपतिर्नाम नामतः ।
वने संवर्धितो गोभिः सोऽभिरक्षतु मां मुने ॥ १२-४८-८५ (६६७०४)
प्रतर्दनस्य पुत्रस्तु वत्सो नाम महाबलः ।
वत्सैः संवर्धितो गोष्ठे स मां रक्षतु पार्थिवः ॥ १२-४८-८६ (६६७०५)
दधिवाहनपुत्रस्तु पौत्रो दिविरथस्य च ।
अङ्गः स गौतमेनासीद्गङ्गाकूलेऽभिरक्षितः ॥ १२-४८-८७ (६६७०६)
बृहद्रथो महातेजा भूरिभूतिपरिष्कृतः ।
गोलाङ्गूलैर्महाभागो गृध्रकूटेऽभिरक्षितः ॥ १२-४८-८८ (६६७०७)
मरुत्तस्यान्ववाये च रक्षिताः क्षत्रियात्मजाः ।
मरुत्पतिसमा वीर्ये समुद्रेणाभिरक्षिताः ॥ १२-४८-८९ (६६७०८)
एते क्षत्रियदायादास्तत्रतत्र परिश्रुताः ।
व्योकारहेमकारादिजातिं नित्यं समाश्रिताः ॥ १२-४८-९० (६६७०९)
यदि मामभिरक्षन्ति ततः स्थास्यामि निश्चला ।
एतेषां पितरश्चैव तथैव च पितामहाः ॥ १२-४८-९१ (६६७१०)
मदर्थं निहता युद्धे रामेणाक्लिष्टकर्मणा ।
तेषामपचितिश्चैव मया कार्या महामुने ॥ १२-४८-९२ (६६७११)
न ह्यहं कामये नित्यमतिक्रान्तेन रक्षणम् ।
वर्तमानेन वर्तेयं तत्क्षिप्रं संविधीयताम् ॥ १२-४८-९३ (६६७१२)
वासुदेव उवाच। १२-४८-९४क्ष् (५४५०)
ततः पृथिव्या निर्दिष्टांस्तान्समानीय कश्यपः ।
अभ्यषिञ्चन्महीपालान्क्षत्रियान्वीर्यसंमतान् ॥ १२-४८-९४ (६६७१३)
तेषां पुत्राश्च पौत्राश्च येषां वंशाः प्रतिष्ठिताः ।
एवमेतत्पुरावृत्तं यन्मां पृच्छसि पाण्डव ॥ १२-४८-९५ (६६७१४)
वैशंपायन उवाच। १२-४८-९६क्ष् (५४५१)
एवं ब्रुवंस्तं च यदुप्रवीरो
युधिष्ठिरं धर्मभृतां वरिष्ठम् ।
रथेन तेनाशु ययौ यथाऽर्को

विशन्प्रभाभिर्भगवांस्त्रिलोकीम् ॥ ॥ १२-४८-९६ (६६७१५)

इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि
अष्टचत्वारिंशोऽध्यायः ॥ ४८.।
Mahabharata - Shanti Parva - Chapter Footnotes

१२-४८-२ भारते भारतसंग्रामे ॥
१२-४८-५ स्वयमेवान्वपद्यतेति झ ।पाठः ॥
१२-४८-८ गाधेः पुत्रार्थं तस्याश्च पुत्रार्थं चरुं चरुद्वयम् ॥
१२-४८-९ उपयोज्यः भोज्यः भोक्तव्यः ॥
१२-४८-१८ व्यंसिता वञ्चिता ॥
१२-४८-३८ चित्रभानुना अग्निना ॥
१२-४८-४१ आपवस्य वसिष्ठस्य ॥
१२-४८-४२ श्रमे आश्रमे ॥
१२-४८-४५ पितुर्वधे वधनिमित्तमासन् ॥
१२-४८-४६ निमित्तादिति पाठे शापादेव हेतोः ॥
१२-४८-६० स्तृता व्याप्ता ।शास्त्रं जग्राह तत्कार्यं क्षत्रियाणामन्तं
कृतवान् ॥
१२-४८-६१ वर्जिताः अहृताः ॥
१२-४८-६८ शूर्पारकमिति झ ।पाठः ॥।
१२-४८-७९ धृता तेनोरुणा येन तेनोर्वीति झ ।पाठः ॥
१२-४८-८४ द्विजः क्षत्रियोऽपि ॥
१२-४८-९२ अपचितिः आनृण्यार्थं पूजा ॥
१२-४८-९३ नित्यमतिक्रान्तेन धर्मातिक्रमिणा ॥

---

शन्तिपर्व-अध्यय०४९
॥ श्रीः ॥
१२.४९. अध्यायः ४९

Mahabharata - Shanti Parva - Chapter Topics
कृष्णेन भीष्मप्रशंसनपूर्वकं तंप्रति युधिष्ठिराय
धर्मोपदेशचोदना ॥ १.।
Mahabharata - Shanti Parva - Chapter Text

१२-४९-० (६६७१६)
वैशंपायन उवाच। १२-४९-०क्ष् (५४५२)
ततो रामस्य तत्कर्म श्रुत्वा राजा युधिष्ठिरः ।

विस्मयं परमं गत्वा प्रत्युवाच जनार्दनम् ॥१२-४९-१ (६६७१७)
अहो रामस्य वार्ष्णेय शक्रस्येव महात्मनः ।
विक्रमो वसुधा येन क्रोधान्निःक्षत्रिया कृता ॥१२-४९-२ (६६७१८)
गोभिः समुद्रेण तथा गोलाङ्गूलर्क्षवानरैः ।
गुप्ता रामभयोद्विग्नाः क्षत्रियाणां कुलोद्वहाः ॥१२-४९-३ (६६७१९)
अहो धन्यो नृलोकोऽयं समाग्याश्च नरा भुवि ।
यत्र कर्मेदृशं धर्म्यं द्विजाग्र्यैः कृतमच्युत ॥१२-४९-४ (६६७२०)
कथयन्तौ कथां तात तावच्युतयुधिष्ठिरौ ।
जग्मतुर्यत्र गाङ्गेयः शरतल्पगतः प्रभुः ॥१२-४९-५ (६६७२१)
ततस्ते ददृशुर्भीष्मं शरप्रस्तरशायिनम् ।
स्वरश्मिमालासंवीतं सायंसूर्यसमप्रभम् ॥१२-४९-६ (६६७२२)
उपास्यमानं मुनिभिर्देवैरिव शतक्रतुम् ।
देशे परमधर्मिष्ठे नदीमोघवतीमनु ॥१२-४९-७ (६६७२३)
दूरादेव तमालोक्य कृष्णो राजा च धर्मजः ।
चत्वारः पाण्डवाश्चैव ते च शारद्वतादयः ॥१२-४९-८ (६६७२४)
अवस्कन्द्याथ वाहेभ्यः संयम्य प्रचलं मनः ।
एकीकृत्येन्द्रियग्राममुपतस्थुर्महामुनीन् ॥१२-४९-९ (६६७२५)
अभिवाद्य तु गोविन्दः सात्यकिस्ते च पार्थिवाः ।
व्यासादीस्तानृपीन्पश्चाद्गाङ्गेयमुपतस्थिरे ॥१२-४९-१० (६६७२६)
तपोवृद्धिं ततः पृष्ट्वा गाङ्गेयं यदुपुङ्गवः ।
परिवार्य ततः सर्वे निपेदुः पुरुषर्षभाः ॥१२-४९-११ (६६७२७)
ततो निशाम्य गाङ्गेयं शाम्यमानमिवानलम् ।
किंचिद्दीनमना भीष्ममितिहोवाच केशवः ॥१२-४९-१२ (६६७२८)
कच्चिज्ज्ञानानि सर्वाणि प्रसन्नानि यथापुरम् ।
कच्चिन्न व्याकुला चैव बुद्धिस्ते वदतां वर ॥१२-४९-१३ (६६७२९)
शराभिघातदुःखार्तं कच्चिद्गात्रं न दूयते ।
मानसादपि दुःखाद्धि शारीरं बलवत्तरम् ॥१२-४९-१४ (६६७३०)
वरदानात्पितुः कामं छन्दमृत्युरसि प्रभो ।
शन्तनोर्धर्मनित्यस्य न त्वेतदिह कारणम् ॥१२-४९-१५ (६६७३१)
सुमूक्ष्मोऽपि तु देहे वै शल्यो जनयते रुजम् ।
किंपुनः शरसंघातैश्चितस्य तव पार्थिव ॥१२-४९-१६ (६६७३२)
कामं नैतत्तवाख्येयं प्राणिनां प्रभवाप्ययौ ।
भवानुपदिशेच्छ्रेयो देवानामपि भारत ॥१२-४९-१७ (६६७३३)
यच्च भूतं भविष्यं च भवच्च पुरुषर्षभ ।
सर्वं तज्ज्ञानवृद्धस्य तव पाणाविवाहितम् ॥१२-४९-१८ (६६७३४)
संसारस्येह भूतानां धर्मस्य च फलोदयः ।

विदितस्ते महाप्राज्ञ त्वं हि धर्ममयो निधिः ॥१२-४९-१९ (६६७३५)
त्व, हि राज्ये स्थितं स्फीते समग्राङ्गमरोगिणम् ।
स्त्रीसहस्रैः परिवृतं पश्यामीवोर्ध्वरेतसम् ॥१२-४९-२० (६६७३६)
ऋते शान्तनवाद्भीष्मात्त्रिषु लोकेषु पार्थिवम् ।
सत्यधर्मान्महावीर्याच्छूराद्धर्मैकतत्परात् ॥१२-४९-२१ (६६७३७)
मृत्युमावार्य तपसा शरसंस्तरशायिनः ।
त्रिवर्गप्रभवं कंचिन्न च तातानुशुश्रुम ॥१२-४९-२२ (६६७३८)
सत्ये तपसि दाने च यज्ञाधिकरणे तथा ।
धनुर्वेदे च वेदे च नित्यं चैवान्ववेक्षणे ॥१२-४९-२३ (६६७३९)
अनृशंसं शुचिं दान्तं सर्वभूतहिते रतम् ।
महारथं त्वत्सदृशं न कंचिदनुशुश्रुम ॥१२-४९-२४ (६६७४०)
त्वं हि देवान्सगन्धर्वानसुरान्यक्षराक्षसान् ।
शक्तस्त्वेकरथेनैव विजेतुं नात्र संशयः ॥१२-४९-२५ (६६७४१)
स त्वं भीष्म महाबाहो वसूनां वासवोपमः ।
नित्यं विप्रैः समाख्यातो नवमोऽनवमो गुणैः ॥१२-४९-२६ (६६७४२)
अहं च त्वाऽभिजानामि स्वयं पुरुषसत्तम ।
त्रिदशेष्वपि विख्यातस्त्वं शक्त्या पुरुषोत्तमः ॥१२-४९-२७ (६६७४३)
मनुष्येषु मनुष्येन्द्र न दृष्टो न च मे श्रुतः ।
भवतो हि गुणैस्तुल्यः पृथिव्यां पुरुषः क्वचित् ॥१२-४९-२८ (६६७४४)
त्वं हि सर्वगुणै राजन्देवानप्यतिरिच्यसे ॥ १२-४९-२९ (६६७४५)
तपसा हि भवाञ्शक्तः स्रष्टुं लोकांश्चराचरान् ।
किंपुनश्चात्मनो लोकानुत्तमानुत्तमैर्गुणैः ॥१२-४९-३० (६६७४६)
तदस्य तप्यमानस्य ज्ञातीनां संक्षयेन वै ।
ज्येष्ठस्य पाण्डुपुत्रस्य शोकं भीष्म व्यपानुद ॥१२-४९-३१ (६६७४७)
ये हि धर्माः समाख्याताश्चातुर्वर्ण्यस्य भारत ।
चातुराश्रम्यसंयुक्ताः सर्वे ते विदितास्तव ॥१२-४९-३२ (६६७४८)
चातुर्विद्ये च ये प्रोक्ताश्चातुर्होत्रे च भारत ।
योगे साङ्ख्ये च नियता ये च धर्माः सनातनाः ॥१२-४९-३३ (६६७४९)
चातुर्वर्ण्यस्य यश्चोक्तो धर्मो न स्म विरुध्यते ।
सेव्यमानः सवैयाख्यो गाङ्गेय विदितस्तव ॥१२-४९-३४ (६६७५०)
प्रतिलोमप्रसूतानां म्लेच्छानां चैव यः स्मृतः ।
देशजातिकुलानां च जानीषे धर्मलक्षणम्। १२-४९-३५ (६६७५१)
वेदोक्तो यश्च शिष्टोक्तः सदैव विदितस्तव ।
ग्प्रवृत्तश्च निवृत्तश्च स चापि विदितस्तव ॥' १२-४९-३६ (६६७५२)
इतिहासपुराणार्थाः कात्स्न्र्येन विदितास्तव ।
धर्मशास्त्रं च सकलं नित्यं मनसि ते स्थितम् ॥१२-४९-३७ (६६७५३)

ये च केचन लोकेऽस्मिन्नर्थाः संशयकारकाः ।
तेषां छेत्ता नास्ति लोके त्वदन्यः पुरुषर्षभः ॥१२-४९-३८ (६६७५४)
स पाण्डवेयस्य मनःसमुत्थितं
नरेन्द्र शोकं व्यपकर्ष मेधया ।
भवद्विधा ह्युत्तमबुद्धिविस्तरा
विमुह्यमानस्य जनस्य शान्तये ॥ ॥ १२-४९-३९ (६६७५५)

इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि
एकोनपञ्चाशोऽध्यायः ॥ ४९.।
Mahabharata - Shanti Parva - Chapter Footnotes

१२-४९-१ अवस्कन्द्यावरुह्य वाहेभ्यः ॥
१२-४९-११ यदुपुंगवो निपसादेति शेषः ।ततो वृद्धं तथा दृष्ट्वा
गाङ्गेयं यदुकौरवाः इति झ। पाठः ॥
१२-४९-१२ निशाम्य आलोच्य ॥
१२-४९-१५ छन्दमृत्युः इच्छामरणः ।नत्वेतदिह कारणमिति
ट। ड। थ। पाठः ॥
१२-४९-२० नहि राज्ये स्थितमिति टड़ ।पाठः ॥
१२-४९-२१ भीष्मादृते मृत्युमावार्य स्थितं कमपि न शुश्रुमेति
द्वयोः संबन्धः ॥
१२-४९-२६ वसूनामष्टानामंशेर्घटितो नवमः गुणैरनवमश्च ॥

---

शन्तिपर्व-अध्यय०५०
॥ श्रीः ॥
१२.५०. अध्यायः ५०

Mahabharata - Shanti Parva - Chapter Topics
भीष्मेण कृष्णंप्रति स्तुतिपूर्वकं श्रेयःप्रार्थना ॥१.। कृष्णेन
भीष्माय श्रेयः प्रदानपूर्वकं तंप्रति धर्मकथनचोदना ॥ २.।
Mahabharata - Shanti Parva - Chapter Text

१२-५०-० (६६७५६)
वैशंपायन उवाच। १२-५०-०क्ष् (५४५३)
श्रुत्वा तु वचनं भीष्मो वासुदेवस्य धीमतः ।
किंचिदुन्नाम्य वदनं प्राञ्जलिर्वाक्यमब्रवीत् ॥१२-५०-१ (६६७५७)
भीष्म उवाच। १२-५०-२क्ष् (५४५४)
नमस्ते भगवन्कृष्ण लोकानां प्रभवाप्यय ।

त्वं हि कर्ता हृषीकेश संहर्ता चापराजितः ॥१२-५०-२ (६६७५८)
विश्वकर्मन्नमस्तेऽस्तु विश्वात्मन्विश्वसंभव ।
अपवर्गस्थ भूतानां पञ्चानां परतः स्थित ॥१२-५०-३ (६६७५९)
नमस्ते त्रिषु लोकेषु नमस्ते परतस्त्रिषु ।
योगेश्वर नमस्तेऽस्तु त्वं हि सर्वपरायणः ॥१२-५०-४ (६६७६०)
मत्संश्रितं यदात्थ त्वं वचः पुरुषसत्तम ।
तेन पश्यामि ते दिव्यान्भावांस्त्रिषु च वर्त्मसु ॥१२-५०-५ (६६७६१)
तच्च पश्यामि तत्वेन यत्ते रूपं सनातनम् ।
सप्त मार्गा निरुद्धास्ते वायोरमिततेजसः ॥१२-५०-६ (६६७६२)
दिवं ते शिरसा व्याप्तं पभ्द्यां देवी वसुंधरा ।
दिशो भुजा रविश्चक्षुर्वीर्ये शुक्रः प्रतिष्ठितः ॥१२-५०-७ (६६७६३)
अतसीपुष्पसंकाशं पीतवाससमच्युतम् ।
वपुर्ह्यनुमिमीमस्ते मेघस्येव सविद्युतः ॥१२-५०-८ (६६७६४)
त्वां प्रपन्नाय भक्ताय गतिमिष्टां जिगीषवे ।
यच्छ्रेयः पुण्डरीकाक्ष तद्ध्यायस्व सुरोत्तम ॥१२-५०-९ (६६७६५)
वासुदेव उवाच।१२-५०-१०क्ष् (५४५५)
यतः खलु परा भक्तिर्मयि ते पुरुषर्षभ ।
ततो मया वपुर्दिव्यं तव राजन्प्रदर्शितम् ॥१२-५०-१० (६६७६६)
न ह्यभक्ताय राजेन्द्र भक्तायानृजवे न च ।
दर्शयाम्यहमात्मानं न चादान्ताय भारत ॥१२-५०-११ (६६७६७)
भवांस्तु मम भक्तश्च नित्यं चार्जवमास्थितः ।
दमे तपसि सत्ये च दाने च निरतः शुचिः ॥१२-५०-१२ (६६७६८)
अर्हस्त्वं भीष्म मां द्रष्टुं तपसा स्वेन पार्थिव ।
तव ह्युपस्थिता लोका येभ्यो नावर्तते पुनः ॥१२-५०-१३ (६६७६९)
पञ्चाशतं षट् च कुरुप्रवीर
शेषं दिनानां तव जीवितस्य ।
ततः शुभैः कर्मफलोदयैस्त्वं
समेष्यसे भीष्म विमुच्य देहम् ॥ १२-५०-१४ (६६७७०)
एते हि देवा वसवो विमाना
न्यास्थाय सर्वे ज्वलिताग्निकल्पाः ।
अन्तर्हितास्त्वां प्रतिपालयन्ति
काष्ठां प्रपद्यन्तमुदक्पतङ्गाम् ॥ १२-५०-१५ (६६७७१)
व्यावृत्तमात्रे भगवत्युदीचीं
सूर्ये जगत्कालवशं प्रपन्ने ।
गन्तासि लोकान्पुरुषप्रवीर
नावर्तते यानुपलभ्य विद्वान् ॥ १२-५०-१६ (६६७७२)

अमुं च लोकं त्वयि भीष्म याते
ज्ञानानि सर्वाणि पराभविष्यन् ।
अतस्तु सर्वे तव सन्निकर्षं
समागता धर्मविवेचनाय ॥ १२-५०-१७ (६६७७३)
तज्ज्ञातिशोकोपहतश्रुताय
सत्याभिसन्धाय युधिष्ठिराय ।
प्रब्रूषि धर्मार्थसमाधियुक्तं
सत्यं वचोऽस्यापनुदेच्छुचं यत् ॥ ॥ १२-५०-१८ (६६७७४)

इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि पञ्चाशोऽध्यायः
॥ ५०.।
Mahabharata - Shanti Parva - Chapter Footnotes

१२-५०-४ योगीश्वरेति झ ।पाठः ॥
१२-५०-१४ पञ्चाशतं षट्चेति ।तव जीवितसंबन्धिनां दिनानां
शेषं पञ्चषट् च पञ्चवारमावर्तिताः षडिति रीत्या त्रिँशदिति
ज्ञेयम्। तावदेव आशतं शतावधि। यद्दिनानां शतेन शक्यं
तत्रिंशतापि कर्तुं शक्यमित्यर्थः। अष्टपञ्चाशतं रात्र्यः
शयानस्याद्य मे गता इति भीष्मो वक्ष्यति। तत्र त्रिशदतः
परं शिष्टा अष्टाविंशतिरितः पूर्वं व्यतीताः। तथाहि
भीष्मस्य शरतल्पशयनानन्तरमष्टौ दिनानि युद्धम्। ततो
दुर्योधनाशौचं युयुत्सोः षोडशदिनानि। तेन सह पुरं
प्रविशतां पाण्डवानामपि तावन्ति दिनानि गतानि। पञ्चविंशे
सर्वेषां श्राद्धदानम्। षड्विंशे पुरप्रवेशः। सप्तविंशे
राज्याभिषेकः। अष्टाविंशे प्रकृतिसांत्वनमाभ्युदयिकं दानं
च। ऊनत्रिंशे भीष्मंप्रत्यागमनं तद्दिनमारभ्य त्रिंशद्दिनानि
शिष्टानीति ज्ञेयम् ॥
१२-५०-१५ पतंगः सूर्यः १२-५०-१६ कालवशं जगत् ।प्रपन्ने प्राप्ते
क्षेप्तुमिति शेषः ॥

---

शन्तिपर्व-अध्यय०५१
॥ श्रीः ॥
१२.५१. अध्यायः ५१

Mahabharata - Shanti Parva - Chapter Topics
भीष्मेण कृष्णंप्रति स्वस्य शस्त्रसंछिन्नशरीरतया
धर्मकथनापाटवप्रकटनम् ॥१.। कृष्णेन भीष्माय

शरीरदार्ढ्यादिप्रदानम् ॥ २.। ततः सायं सर्वेषां स्वस्वस्थानगमनम् ॥ ३.।

Mahabharata - Shanti Parva - Chapter Text

१२-५१-० (६६७७५)
वैशंपायन उवाच। १२-५१-०क्ष् (५४५६)
ततः कृष्णस्य तद्वाक्यं धर्मार्थसहितं हितम् ।
श्रुत्वा शान्तनवः कृष्णं प्रत्युवाच कृताञ्जलिः ॥ १२-५१-१ (६६७७६)
लोकनाथ महाबाहो शिव नारायणाच्युत ।
तव वाक्यमुपश्रुत्य हर्षेणास्मि परिप्लुतः ॥ १२-५१-२ (६६७७७)
किंचाहमभिधास्यामि वाक्पते तव सन्निधौ ।
यदा वाचोगतं सर्वं तव वाचि समाहितम् ॥ १२-५१-३ (६६७७८)
यच्च किंचित्कृतं लोके कर्तव्यं क्रियते च यत् ।
त्वत्तस्तन्निः सृतं देव लोके बुद्धिमतो हिते ॥ १२-५१-४ (६६७७९)
कथयेद्देवलोकं यो देवराजसमीपतः ।
धर्मकामार्थमोक्षाणां सोऽर्थं ब्रूयात्तवाग्रतः ॥ १२-५१-५ (६६७८०)
शराभितापाद्व्यथितं मनो मे मधुसूदन ।
गात्राणि चावसीदन्ति न च बुद्धिः प्रसीदति ॥ १२-५१-६ (६६७८१)
न च मे प्रतिभा काचिदस्ति किंचित्प्रभाषितुम् ।
पीड्यमानस्य गोविन्द विपानलसमैः शरैः ॥ १२-५१-७ (६६७८२)
बलं मे प्रजहातीव प्राणाः सत्वरयन्ति च ।
मर्माणि परितप्यन्ति भ्रान्तचित्तस्तथा ह्यहम् ॥ १२-५१-८ (६६७८३)
दौर्बल्यात्सज्जते वाङ्मे स कथं वक्तुमुत्सहे ।
साधु मे त्वं प्रसीदस्व दाशार्हकुलवर्धन ॥ १२-५१-९ (६६७८४)
तत्क्षमस्व महाबाहो न ब्रूयां किंचिदच्युत ॥
त्वत्सन्निधौ च सीदेद्धि वाचस्पतिरपि ब्रुवन् ॥ १२-५१-१० (६६७८५)
न दिशः संप्रजानामि नाकाशं न च मेदिनीम् ।
केवलं तव वीर्येण तिष्ठामि मधुसूदन ॥ १२-५१-११ (६६७८६)
स्वयमेव भवांस्तस्माद्धर्मराजस्य यद्धितम् ।
तद्ब्रवीत्वाशु सर्वेषामागमानां त्वमागमः ॥ १२-५१-१२ (६६७८७)
कथं त्वयि स्थिते कृष्णे शाश्वते लोककर्तरि ।
प्रब्रूयान्मद्विधः कश्चिद्गुरौ शिष्य इव स्थिते ॥ १२-५१-१३ (६६७८८)
वासुदेव उवाच। १२-५१-१४क्ष् (५४५७)
उपपन्नमिदं वाक्यं कौरवाणां धुरन्धरे ।
महावीर्ये महासत्वे स्थिरे सर्वार्थदर्शिनि ॥ १२-५१-१४ (६६७८९)
यच्च मामात्थ गाङ्गेय बाणघातरुजं प्रति ।

गृहाणात्र वरं भीष्म मत्प्रसादकृतं प्रभो ॥ १२-५१-१५ (६६७९०)
न ते ग्लानिर्न ते मूर्च्छा न तापो न च ते रुजा ।
प्रभविष्यन्ति गाङ्गेय क्षुत्पिपासे न चाप्युत ॥ १२-५१-१६ (६६७९१)
ज्ञानानि च समग्राणि प्रतिभास्यन्ति तेऽनघ ।
न च ते क्वचिदासक्तिर्बुद्धेः प्रादुर्भविष्यति ॥ १२-५१-१७ (६६७९२)
सत्वस्थं च मनो नित्यं तव भीष्म भविष्यति ।
रजस्तमोभ्यां निर्मुक्तं घनैर्मुक्त इवोडुराट् ॥ १२-५१-१८ (६६७९३)
यद्यच्च धर्मसंयुक्तमर्थयुक्तमथापि च ।
चिन्तयिष्यसि तत्राग्र्या बुद्धिस्तव भविष्यति ॥ १२-५१-१९ (६६७९४)
इमं च राजशार्दूल भूतग्रामं चतुर्विधम् ।
चक्षुर्दिव्यं समाश्रित्य द्रक्ष्यस्यमितविक्रम ॥ १२-५१-२० (६६७९५)
चतुर्विधं प्रजाजालं संयुक्तो ज्ञानचक्षुषा ।
भीष्म द्रक्ष्यसि तत्त्वेन जले मीन इवामले ॥ १२-५१-२१ (६६७९६)
वैशंपायन उवाच। १२-५१-२२क्ष् (५४५८)
ततस्ते व्याससहिताः सर्व एव महर्षयः ।
ऋग्यजुःसामसहितैर्वचोभिः कृष्णमार्चयन् ॥ १२-५१-२२ (६६७९७)
ततः सर्वार्तवं दिव्यं पुष्पवर्षं न भस्तलात् ।
पपात यत्र वार्ष्णेयः सगाङ्गेयः सपाण्डवः ॥ १२-५१-२३ (६६७९८)
वादित्राणि च सर्वाणि जगुश्चाप्सरसां गणाः ।
न चाहितमनिष्टं च किंचित्तत्र व्यदृश्यत ॥ १२-५१-२४ (६६७९९)
ववौ शिवः सुखो वायुः सर्वगन्धवहः शुचिः ।
शान्तायां दिशिशन्ताश्च प्रावदन्मृगपक्षिणः ॥ १२-५१-२५ (६६८००)
ततो मुहूर्ताद्भगवान्सहस्रांशुर्दिवाकरः ।
दहन्वनमिवैकान्ते प्रतीच्यां प्रत्यदृश्यत ॥ १२-५१-२६ (६६८०१)
ततो महर्षयः सर्वे समुत्थाय जनार्दनम् ।
भीष्ममामन्त्रयांचक्रू राजानं च युधिष्ठिरम् ॥ १२-५१-२७ (६६८०२)
ततः प्रणाममकरोत्केशवः सहपाण्डवः ।
सात्यकिः सञ्जयश्चैव स च शारद्वतः कृपः ॥ १२-५१-२८ (६६८०३)
ततस्ते धर्मनिरताः सम्यक् तैरभिपूजिताः ।
श्वः समेष्याम इत्युक्त्वा यथेष्टं त्वरिता ययुः ॥ १२-५१-२९ (६६८०४)
तथैवामन्त्र्य गाङ्गेयं केशवः पाण्डवास्तथा ।
प्रदक्षिणमुपावृत्य रथानारुरुहुः शुभान् ॥ १२-५१-३० (६६८०५)
ततो रथैः काञ्चनचित्रकूबरै
र्महीधराभैः समदैश्च दन्तिभिः ।
हयैः सुपर्णैरिव चाशुगामिभिः
पदातिभिश्चात्तशरासनादिभिः ॥ १२-५१-३१ (६६८०६)

ययौ रथानां पुरतो हि सा चमू
स्तथैव पश्चादतिमात्रसारिणी ।
पुरश्च पश्चाच्च यथा महानदी
तमृक्षवन्तं गिरिमेत्य नर्मदा ॥ १२-५१-३२ (६६८०७)
ततः पुरस्ताद्भगवान्निशाकरः ।
समुत्थितस्तामभिहर्षयंश्चमूम् ।
दिवाकरापीतरसा महौषधीः
पुनः स्वकेनैव गुणेन योजयन् ॥ १२-५१-३३ (६६८०८)
ततः पुरं सुरपुरसंमितद्युति
प्रविश्य ते यदुवृषपाण्डवास्तदा ।
यथोचितान्भवनवरान्समाविशन्
श्रमान्विता मृगपतयो गुहा इव ॥ ॥ १२-५१-३४ (६६८०९)

इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि
एकपञ्चाशोऽध्यायः ॥ ५१.।
Mahabharata - Shanti Parva - Chapter Footnotes

१२-५१-३ वाचोगतं वाचां विषयः सर्वोऽपि तव वाचि वेदे ॥
१२-५१-४ हिते प्रिये ।लोके देवलोके इह परत्र च। तत्सर्वं
त्रैकालिकम्। त्वत्तो निःसृतमिति उक्तेर्थे हेतुरुक्तः ॥
१२-५१-१२ आगमानां समागममिति ट ।ड। पाठः ॥
१२-५१-१७ आसत्तिरवसन्नता ॥

---

शन्तिपर्व-अध्यय०५२
॥ श्रीः ॥
१२.५२. अध्यायः ५२

Mahabharata - Shanti Parva - Chapter Topics
प्रेद्युः प्रभाते कृष्णयुधिष्ठिरादिभिर्धर्मश्रवणाय
भीष्मसमीपगमनम् ॥ १.।
Mahabharata - Shanti Parva - Chapter Text

१२-५२-० (६६८१०)
वैशंपायन उवाच। १२-५२-०क्ष् (५४५९)
ततः प्रविश्य भवनं प्रविश्ये मधुसूदनः ।
याममात्रावशेषायां यामिन्यां प्रत्यबुध्यत ॥ १२-५२-१ (६६८११)
स ध्यानपथमाविश्य सर्वज्ञानानि माधवः ।

अवलोक्य ततः पश्चाद्दध्यौ ब्रह्म सनातनम् ॥१२-५२-२ (६६८१२)
सूताः स्तुतिपुराणज्ञा रक्तकण्ठाः सुशिक्षिताः ।
अस्तुवन्विश्वकर्माणं वासुदेवं प्रजापतिम् ॥१२-५२-३ (६६८१३)
पठन्ति पाणिस्वनिकास्तथा गायन्ति गायनाः ।
शङ्खानथ मृदङ्गांश्च प्रवाद्यन्ति सहस्रशः ॥१२-५२-४ (६६८१४)
वीणापणववेणूनां स्वनश्चातिमनोरमः ।
सहास इव विस्तीर्णः शुश्रुवे तस्य वेश्मनि ॥१२-५२-५ (६६८१५)
ततो युधिष्ठिरस्यापि राज्ञो मङ्गलसंहिताः ।
उच्चेरुर्मधुरा वाचो गीतवादित्रबृंहिताः ॥१२-५२-६ (६६८१६)
तत उत्थाय दाशार्हः स्नातः प्राञ्जलिरच्युतः ।
जप्त्वा गुह्यं महाबाहुरग्नीनाश्रित्य तस्थिवान् ॥१२-५२-७ (६६८१७)
ततः सहस्रं विप्राणां चतुर्वेदविदां तथा ।
गवां सहस्रेणैकैकं वाचयामास माधवः ॥१२-५२-८ (६६८१८)
मङ्गलालम्भनं कृत्वा आत्मानमवलोक्य च ।
आदर्शे विमले कृष्णस्ततः सात्यकिमब्रवीत् ॥१२-५२-९ (६६८१९)
गच्छ शैनेय जानीहि गत्वा राजनिवेशनम् ।
अपि सज्जो महातेजा भीष्मं द्रष्टुं युधिष्ठिरः ॥१२-५२-१० (६६८२०)
ततः कृष्णस्य वचनात्सात्यंकिस्त्वरितो ययौ ।
उपगम्य च राजानं युधिष्ठिरमभाषत ॥१२-५२-११ (६६८२१)
युक्तो रथवरो राजन्वासुदेवस्य धीमतः ।
समीपमापगेयस्य प्रयास्यति जनार्दनः ॥१२-५२-१२ (६६८२२)
भवत्प्रतीक्षः कृष्णोऽसौ धर्मराज महाद्युते ।
यदत्रानन्तरं कृत्यं तद्भवान्कर्तुमर्हति ॥१२-५२-१३ (६६८२३)
एवमुक्तः प्रत्युवाच धर्मपुत्रो युधिष्ठिरः ।
युज्यतां मे रथवरः फल्गुनाप्रतिमद्युते ॥१२-५२-१४ (६६८२४)
न सैनिकैश्च यातव्यं यास्यामो वयमेव हि ।
न च पीडयितव्यो मे भीष्मो धर्मभृतां वरः ॥१२-५२-१५ (६६८२५)
अतः पुरःसराश्चापि निवर्तन्तु धनञ्जय ।
अद्यप्रभृति गाङ्गेयः परं गुह्यं प्रवक्ष्यति ।
अतो नेच्छामि कौन्तेय पृथग्जनसमागमम् ॥ १२-५२-१६ (६६८२६)
वैशंपायन उवाच।१२-५२-१७क्ष् (५४६०)
स तद्वाक्यमथाज्ञाय कुन्तीपुत्रो धनञ्जयः ।
युक्तं रथवरं तस्मा आचचक्षे नरर्षभः ॥१२-५२-१७ (६६८२७)
ततो युधिष्ठिरो राजा यमौ भीमार्जुनावपि ।
भूतानीव समस्तानि ययुः कृष्णनिवेशनम् ॥१२-५२-१८ (६६८२८)
आगच्छत्स्वथ कृष्णोऽपि पाण्डवेषु महात्मसु ।

शैनेयसहितो धीमान्रथमेवान्वपद्यत ॥ १२-५२-१९ (६६८२९)
रथस्थाः संविदं कृत्वा सुखां पृष्ट्वा च शर्वरीम् ।
मेघघोषै रथवरैः प्रययुस्ते नरर्षभाः ॥ १२-५२-२० (६६८३०)
बलाहकं मेघपुष्पं शैब्यं सुग्रीवमेवच ।
दारुकश्चोदयामास वासुदेवस्य वाजिनः ॥ १२-५२-२१ (६६८३१)
ते हया वासुदेवस्य दारुकेण प्रचोदिताः ।
गां खुराग्रैस्तथा राजँल्लिखन्तः प्रययुस्तदा ॥ १२-५२-२२ (६६८३२)
ते ग्रसन्त इवाकाशं वेगवन्तो महाबलाः ।
क्षेत्रं धर्मस्य कृत्स्नस्य कुरुक्षेत्रमवातरन् ॥ १२-५२-२३ (६६८३३)
ततो ययुर्यत्र भीष्मः शरतल्पगतः प्रभुः ।
आस्ते महर्षिभिः सार्धं ब्रह्मा देवगणैर्यथा ॥ १२-५२-२४ (६६८३४)
ततोऽवतीर्य गोविन्दो रथात्स च युधिष्ठिरः ।
भीमो गाण्डीवधन्वा च यमौ सात्यकिरेव च ।
ऋषीनभ्यर्चयामासुः करानुद्यम्य दक्षिणान् ॥ १२-५२-२५ (६६८३५)
स तैः परिवृतो राजा नक्षत्रैरिव चन्द्रमाः ।
अभ्याजगाम गाङ्गेयं ब्रह्माणमिव वासवः ॥ १२-५२-२६ (६६८३६)
शरतल्पे शयानं तमादित्यं पतितं यथा ।
स ददर्श महाबाहुं भयाच्चागतसाध्वसः ॥ ॥ १२-५२-२७ (६६८३७)

इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि
द्विपञ्चाशोऽध्यायः ॥ ५२.।
Mahabharata - Shanti Parva - Chapter Footnotes

१२-५२-९ मङ्गलानां गवादीनामालम्भनं स्पर्शम् ॥
१२-५२-२७ आगतसाध्वसः भयजन्यकम्पादिमान् ॥

---

शन्तिपर्व-अध्यय०५३
॥ श्रीः ॥
१२.५३. अध्यायः ५३

Mahabharata - Shanti Parva - Chapter Topics
कृष्णेन भीष्मंप्रति धर्मकथनचोदना ॥ १.।
Mahabharata - Shanti Parva - Chapter Text

१२-५३-० (६६८३८)
जनमेजय उवाच। १२-५३-०क्ष् (५४६१)
धर्मात्मनि महावीर्ये सत्यसन्धे जितात्मनि ।

देवव्रते महाभागे शरतल्पगतेऽच्युते ॥ १२-५३-१ (६६८३९)
शयाने वीरशयने भीष्मे शन्तनुनन्दने ।
गाङ्गेये पुरुषव्याघ्रे पाण्डवैः पर्युपासिते ॥ १२-५३-२ (६६८४०)
काः कथाः समवर्तन्त तस्मिन्वीरसमागमे ।
हतेषु सर्वसैन्येषु तन्मे शंस महामुने ॥ १२-५३-३ (६६८४१)
वैशंपायन उवाच। १२-५३-४क्ष् (५४६२)
शरतल्पगते भीष्मे कौरवाणां पितामहे ।
आजग्मुर्ऋषयः सिद्धा नारदप्रमुखा नृप ॥ १२-५३-४ (६६८४२)
हतशिष्टाश्च राजानो युधिष्ठिरपुरोगमाः ।
धृतराष्ट्रश्च कृष्णश्च भीमार्जुनयमास्तथा ॥ १२-५३-५ (६६८४३)
तेऽभिगम्य महात्मानो भरतानां पितामहम् ।
अन्वशोचन्त गाङ्गेयमादित्यं पतितं यथा ॥ १२-५३-६ (६६८४४)
मुहूर्तमिव च ध्यात्वा नारदो देवदर्शनः ।
उवाच पाण्डवान्सर्वान्हतशिष्टांश्च पार्थिवान् ॥ १२-५३-७ (६६८४५)
प्राप्तकालं समाचक्षे भीष्मोऽयमनुयुज्यताम् ।
अस्तमेति हि गाङ्गेयो भानुमानिव भारत ॥ १२-५३-८ (६६८४६)
अयं प्राणानुत्सिसृक्षुस्तं सर्वेऽभ्यनुपृच्छत ।
कृत्स्नान्हि विविधान्धर्मांश्चातुर्वर्ण्यस्य वेत्त्ययम् ॥ १२-५३-९ (६६८४७)
एष वृद्धः पराँल्लोकान्संप्राप्नोति तनुं त्यजन् ।
तं शीघ्रमनुयुञ्जीध्वं संशयान्मनसि स्थितान् ॥ १२-५३-१० (६६८४८)
वैशंपायन उवाच। १२-५३-११क्ष् (५४६३)
एवमुक्ते नारदेन भीष्ममीयुर्नराधिपाः ।
प्रष्टुं चाशक्नुवन्तस्ते वीक्षांचक्रुः परस्परम् ॥ १२-५३-११ (६६८४९)
अथोवाच हृषीकेशं पाण्डुपुत्रो युधिष्ठिरः ।
नान्यस्त्वद्देवकीपुत्र शक्तः प्रष्टुं पितामहम् ॥ १२-५३-१२ (६६८५०)
प्रव्याहर यदुश्रेष्ठ त्वमग्रे मधुसूदन ।
त्वं हि नस्तात सर्वेषां सर्वधर्मविदुत्तमः ॥ १२-५३-१३ (६६८५१)
एवमुक्तः पाण्डवेन भगवान्केशवस्तदा ।
अभिगम्य दुराधर्षं प्रव्याहारयदच्युतः ॥ १२-५३-१४ (६६८५२)
कच्चित्सुखेन रजनी व्युष्टा ते राजसत्तम ।
विस्पष्टलक्षणा बुद्धिः कच्चिच्चोपस्थिता तव ॥ १२-५३-१५ (६६८५३)
कच्चिज्ज्ञानानि सर्वाणि प्रतिभान्ति च तेऽनघ ।
न ग्लायते च हृदयं न च ते व्याकुलं मनः ॥ १२-५३-१६ (६६८५४)
भीष्म उवाच। १२-५३-१७क्ष् (५४६४)
दाहो मोहः श्रमश्चैव क्लमो ग्लानिस्तथा रुजा ।
तव प्रसादाद्वार्ष्णेय सद्यो व्यपगतानि मे ॥ १२-५३-१७ (६६८५५)

यच्च भूतं भविष्यच्च भवच्च परमद्युते ।
तत्सर्वमनुपश्यामि पाणौ फलमिवाहितम् ॥१२-५३-१८ (६६८५६)
वेदोक्ताश्चैव ये धर्मा वेदान्ताधिगताश्च ये ।
तान्सर्वान्संप्रपश्यामि वरदानात्तवाच्युत ॥१२-५३-१९ (६६८५७)
शिष्टैश्च धर्मो यः प्रोक्तः स च मे हृदि वर्तते ।
देशजातिकुलानां च धर्मज्ञोऽस्मि जनार्दन ॥१२-५३-२० (६६८५८)
चतुर्ष्वाश्रमधर्मेषु योऽर्थः स च हृदि स्थितः ।
राजधर्मांश्च सकलानवगच्छामि केशव ॥१२-५३-२१ (६६८५९)
यच्च यत्र च वक्तव्यं तद्वक्ष्यामि जनार्दन ।
तव प्रसादाद्धि शुभा मनो मे बुद्धिराविशत् ॥१२-५३-२२ (६६८६०)
युवेवास्मि समावृत्तस्त्वदनुध्यानबृंहितः ।
वक्तुं श्रेयः समर्थोऽस्मि त्वत्प्रसादाज्जनार्दन ॥१२-५३-२३ (६६८६१)
स्वयं किमर्थं तु भवाञ्श्रेयो न प्राह पाण्डवम् ।
किं ते विवक्षितं चात्र तदाशु वद माधव ॥१२-५३-२४ (६६८६२)
वासुदेव उवाच।१२-५३-२५क्ष् (५४६५)
यशसः श्रेयसश्चैव मूल मां विद्धि कौरव ।
मत्तः सर्वेऽभिनिर्वृत्ता भावाः सदसदात्मकाः ॥१२-५३-२५ (६६८६३)
शीतांशुश्चन्द्र इत्युक्ते लोके को विस्मयिष्यति ।
तथैव यशसा पूर्णे मयि को विस्मयिष्यति ॥१२-५३-२६ (६६८६४)
आधेयं तु मया भूयो यशस्तव महाद्युते ।
ततो मे विपुला बुद्धिस्त्वयि भीष्म समाहिता ॥१२-५३-२७ (६६८६५)
यावद्धि पृथिवीपाल पृथ्वीयं स्थास्यति ध्रुवा ।
तावत्तवाक्षया कीर्तिर्लोकाननुचरिष्यति ॥१२-५३-२८ (६६८६६)
यच्च त्वं वक्ष्यसे भीष्म पाण्डवायानुपृच्छते ।
वेदप्रवाद इव ते स्थास्यते वसुधातले ॥१२-५३-२९ (६६८६७)
यश्चैतेन प्रमाणेन योक्ष्यत्यात्मानमात्मना ।
स फलं सर्वपुण्यानां प्रेत्य चानुभविष्यति ॥१२-५३-३० (६६८६८)
एतस्मात्कारणाद्भीष्म मतिर्दिव्या मया हि ते ।
दत्ता यशो विप्रथयेत्कथं भूयस्तवेति ह ॥१२-५३-३१ (६६८६९)
यावद्धि प्रथते लोके पुरुषस्य यशो भुवि ।
तावत्तस्याक्षया कीर्तिर्भवतीति विनिश्चिता ॥१२-५३-३२ (६६८७०)
राजानो हतशिष्टास्त्वां राजन्नभित आसते ।
धर्माननुयुयुक्षन्तस्तेभ्यः प्रब्रूहि भारत ॥१२-५३-३३ (६६८७१)
भवान्हि वयसा वृद्धः श्रुताचारसमन्वितः ।
कुशलो राजधर्माणां सर्वेषामपराश्च ये ॥१२-५३-३४ (६६८७२)
जन्मप्रभृति ते किंचिद्वृजिनं न ददर्श ह ।

ज्ञातारं सर्वधर्माणां त्वां विदुः सर्वपार्थिवाः ॥ १२-५३-३५ (६६८७३)
तेभ्यः पितेव पुत्रेभ्यो राजन्ब्रूहि परं नयम् ।
ऋषयश्चैव देवाश्च त्वया नित्यमुपासिताः ॥ १२-५३-३६ (६६८७४)
तस्माद्वक्तव्यमेवेदं त्वयाऽवश्यमशेषतः ।
धर्मं शुश्रूषमाणेभ्यः पृष्टेन न सता पुनः ॥ १२-५३-३७ (६६८७५)
वक्तव्यं विदुषा चेति धर्ममाहुर्मनीषिणः ।
अप्रतिब्रुवतः कष्टो दोषो हि भविता प्रभो ॥ १२-५३-३८ (६६८७६)
तस्मात्पुत्रैश्च पौत्रैश्च धर्मान्पृष्टान्सनातनान् ।
विद्वञ्जिज्ञासमानेभ्यः प्रब्रूहि भरतर्षभ ॥ ॥ १२-५३-३९ (६६८७७)

इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि
त्रिपञ्चाशोऽध्यायः ॥ ५३.।
Mahabharata - Shanti Parva - Chapter Footnotes

१२-५३-८ अनुयुज्यतां पृच्छ्यताम् ॥
१२-५३-३२ यशः परचित्तचमात्कृतिजनको गुणौधः । कीर्तिः
साधुतयाऽन्यैः कथनम् ॥
१२-५३-३३ अनुयुयुक्षन्तः प्रष्टुमिच्छन्तः ॥

---

शन्तिपर्व-अध्यय०५४
॥ श्रीः ॥
१२.५४. अध्यायः ५४

Mahabharata - Shanti Parva - Chapter Topics
कृष्णेन भीष्मंप्रति युधिष्ठिरस्य तदनुपसर्पणकारणाभिधानम्
॥ १.। भीष्मेण स्वाज्ञयोपसृत्याभिवादयन्तं युधिष्ठिरंप्रति
धर्मप्रश्नानुज्ञानम् ॥ २.।
Mahabharata - Shanti Parva - Chapter Text

१२-५४-० (६६८७८)
वैशंपायन उवाच। १२-५४-०क्ष् (५४६६)
अथाब्रवीन्महातेजा वाक्यं कौरवनन्दनः ।
हन्त धर्मान्प्रवक्ष्यामि दृढे वाङ्मनसी मम ॥ १२-५४-१ (६६८७९)
तव प्रसादाद्गोविन्द भूतात्मा ह्यसि शाश्वतः ।
युधिष्ठिरस्तु धर्मात्मा मां धर्माननुपृच्छतु ।
एवं प्रीतो भविष्यामि धर्मान्वक्ष्यामि चाखिलान् ॥ १२-५४-२ (६६८८०)
यस्मिन्राजर्षभे जाते धर्मात्मनि महात्मनि ।

अहृष्यन्नृषयः सर्वे स मां पृच्छतु पाण्डवः ॥ १२-५४-३ (६६८८१)
सर्वेषां दीप्तयशसां कुरूणां धर्मचारिणाम् ।
यस्य नास्ति समः कश्चित्स मां पृच्छतु पाण्डवः ॥ १२-५४-४ (६६८८२)
धृतिर्दमो ब्रह्मचर्यं क्षमा धर्मश्च नित्यदा ।
यस्मिन्नोजश्च तेजश्च स मां पृच्छतु पाण्डवः ॥ १२-५४-५ (६६८८३)
संबन्धिनोऽतिथीन्भृत्यान्संश्रितांश्चैव यो भृशम् ।
संमानयति सत्कृत्य स मां पृच्छतु पाण्डवः ॥ १२-५४-६ (६६८८४)
सत्यं दानं तपः शौर्यं शान्तिर्दाक्ष्यमसंभ्रमः ।
यस्मिन्नेतानि सर्वाणि स मां पृच्छतु पाण्डवः ॥ १२-५४-७ (६६८८५)
यो न कामान्न संरम्भान्न भयान्नार्थकारणात् ।
कुर्यादधर्मं धर्मात्मा स मां पृच्छतु पाण्डवः ॥ १२-५४-८ (६६८८६)
सत्यनित्यः क्षमानित्यो ज्ञाननित्योऽतिथिप्रियः ।
यो ददाति सतां नित्यं स मां पृच्छतु पाण्डवः ॥ १२-५४-९ (६६८८७)
इज्याध्ययननित्यश्च धर्मे च निरतः सदा ।
क्षान्तः श्रुतरहस्यश्च स मां पृच्छतु पाण्डवः ॥ १२-५४-१० (६६८८८)
वासुदेव उवाच। १२-५४-११क्ष् (५४६७)
लज्जया परयोपेतो धर्मराजो युधिष्ठिरः ।
अभिशापभयाद्भीतो भवन्तं नोपसर्पति ॥ १२-५४-११ (६६८८९)
लोकस्य कदनं कृत्वा लोकनाथो विशांपते ।
अभिशापभयाद्भीतो भवन्तं नोपसर्पति ॥ १२-५४-१२ (६६८९०)
पूज्यान्मान्यांश्च भक्तांश्च गुरून्संबन्धिबान्धवान् ।
अर्घ्यार्हानिषुभिर्भित्त्वा भवन्तं नोपसर्पति ॥ १२-५४-१३ (६६८९१)
भीष्म उवाच। १२-५४-१४क्ष् (५४६८)
ब्राह्मणानां यथा धर्मो दानमध्ययनं तपः ।
क्षत्रियाणां तथा कृष्ण समरे देहपातनम् ॥ १२-५४-१४ (६६८९२)
पितॄन्पितामहान्भ्रातॄन्गुरून्संबन्धिबान्धवान् ।
मिथ्याप्रवृत्तान्यः सङ्ख्ये निहन्याद्धर्म एव सः ॥ १२-५४-१५ (६६८९३)
समयत्यागिनो लुब्धान्गुरूनपि च केशव ।
निहन्ति समरे पापान्क्षत्रियो यः स धर्मवित् ॥ १२-५४-१६ (६६८९४)
यो लोभान्न समीक्षेत धर्मसेतुं सनातनम् ।
निहन्ति यस्तं समरे क्षत्रियो वै स धर्मवित् ॥ १२-५४-१७ (६६८९५)
लोहितोदां केशतृणां गजशैलां ध्वजद्रुमाम् ।
महीं करोति युद्धेषु क्षत्रियो यः स धर्मवित् ॥ १२-५४-१८ (६६८९६)
आहूतेन रणे नित्यं योद्धव्यं क्षत्रबन्धुना ।
धर्म्यं स्वर्ग्यं च लोक्यं च युद्धं हि मनुरब्रवीत् ॥ १२-५४-१९ (६६८९७)
वैशंपायन उवाच। १२-५४-२०क्ष् (५४६९)

एवमुक्तस्तु भीष्मेण धर्मपुत्रो युधिष्ठिरः ।
विनीतवदुपागम्य तस्थौ संदर्शनेऽग्रतः ॥ १२-५४-२० (६६८९८)
अथास्य पादौ जग्राह भीष्मश्चापि ननन्द तम् ।
मूर्ध्नि चैनमुपाघ्राय निषीदेत्यब्रवीत्तदा ॥ १२-५४-२१ (६६८९९)
तमुवाचाथ गाङ्गेयो वृषभः सर्वधन्विनाम् ।
मां पृच्छ तात विस्रब्धं मा भैस्त्वं कुरुसत्तम ॥ ॥ १२-५४-२२ (६६९००)

इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि
चतुःपञ्चाशोऽध्यायः ॥ ५४.।
Mahabharata - Shanti Parva - Chapter Footnotes

१२-५४-२ भूतात्मा प्राणिनामन्तरात्मासि ।तेन ममाभिप्रायं वेत्सीति भावः ॥
१२-५४-११ अभिशापो लोकगर्ह्यता ॥

---

शन्तिपर्व-अध्यय०५५
॥ श्रीः ॥
१२.५५. अध्यायः ५५

Mahabharata - Shanti Parva - Chapter Topics
भीष्मेण युधिष्ठिराय राजधर्मकथनम् ॥ १.।
Mahabharata - Shanti Parva - Chapter Text

१२-५५-० (६६९०१)
वैशंपायन उवाच। १२-५५-०क्ष् (५४७०)
प्रणिपत्य हृषीकेशमभिवाद्य पितामहम् ।
अनुमान्य गुरून्सर्वान्पर्यपृच्छद्युधिष्ठिरः ॥ १२-५५-१ (६६९०२)
राज्ञां वै परमो धर्म इति धर्मविदो विदुः ।
महान्तमेतं भारं च मन्ये तद्ब्रूहि पार्थिव ॥ १२-५५-२ (६६९०३)
राजधर्मान्विशेषेण कथयस्य पितामह ।
सर्वस्य जीवलोकस्य राजधर्मः परायणम् ॥ १२-५५-३ (६६९०४)
त्रिवर्गो हि समासक्तो राजधर्मेषु कौरव ।
मोक्षधर्मश्च विस्पष्टः सकलोऽत्र समाहितः ॥ १२-५५-४ (६६९०५)
यथा हि रश्मयोऽश्वस्य द्विरदस्याङ्कुशो यथा ।
नरेन्द्रधर्मो लोकस्य तथा प्रग्रहणं स्मृतम् ॥ १२-५५-५ (६६९०६)
अत्र वै संप्रमूढे तु धर्मे राजर्षिसेविते ।
लोकस्य संस्था न भवेत्सर्वं च व्याकुलीभवेत् ॥ १२-५५-६ (६६९०७)

उदयन्हि यथा सूर्यो नाशयत्यशुभं तमः ।
राजधर्मस्तथा लोक्यामाक्षिपत्यशुभां गतिम् ॥१२-५५-७ (६६९०८)
तदग्रे राजधर्मान्हि मदर्थे त्वं पितामह ।
प्रब्रूहि भरतश्रेष्ठ त्वं हि धर्मभूतां वरः ॥१२-५५-८ (६६९०९)
आगमश्च परस्त्वत्तः सर्वेषां नः परन्तप ।
भवन्तं हि परं बुद्धौ वासुदेवोऽभिमन्यते ॥१२-५५-९ (६६९१०)
भीष्म उवाच।१२-५५-१०क्ष् (५४७१)
नमो धर्माय महते नमः कृष्णाय वेधसे ।
ब्राह्मणेभ्यो नमस्कृत्य धर्मान्वक्ष्यामि शाश्वतान् ॥१२-५५-१० (६६९११)
शृणु कार्त्स्न्येन मत्तस्त्वं राजधर्मान्युधिष्ठिर ।
निरुच्यमानान्नियतो यच्चान्यदपि वाञ्छसि ॥१२-५५-११ (६६९१२)
आदावेव कुरुश्रेष्ठ राज्ञा रञ्जनमिच्छता ।
देवतानां द्विजानां च वर्तितव्यं यथाविधि ॥१२-५५-१२ (६६९१३)
दैवतान्यर्चयित्वा हि ब्राह्मणांश्च कुरूद्वह ।
आनृण्यं याति धर्मस्य लोकेन च समर्च्यते ॥१२-५५-१३ (६६९१४)
उत्थानेन सदा पुत्र प्रयतेथा युधिष्ठिर ।
न ह्युत्थानमृते दैवं राज्ञामर्थं प्रसाधयेत् ॥१२-५५-१४ (६६९१५)
साधारणं द्वयं ह्येतद्दैवमुत्थानमेव च ।
पौरुषं हि परं मन्ये दैवं निश्चित्य मुह्यते ॥१२-५५-१५ (६६९१६)
विपन्ने च समारम्भे सन्तापं मा स्म वै कृथाः ।
घटेतैवं सदाऽऽत्मानं राज्ञामेष परो नयः ॥१२-५५-१६ (६६९१७)
न हि सत्यादृते किंचिद्राज्ञां वै सिद्धिकारकम् ।
सत्ये हि राजा निरतः प्रेत्य चेह च नन्दति ॥१२-५५-१७ (६६९१८)
ऋषीणामपि राजेन्द्र सत्यमेव परं धनम् ।
तथा राज्ञां परं सत्यान्नान्यद्विश्वासकारणम् ॥१२-५५-१८ (६६९१९)
गुणवाञ्शीलवान्दान्तो मृदुदण्डो जितेन्द्रियः ।
सुदर्शः स्थूललक्ष्यश्च न भ्रश्येत सदा श्रियः ॥१२-५५-१९ (६६९२०)
आर्जवं सर्वकार्येषु श्रयेथाः कुरुनन्दन ।
पुनर्नयविचारेण त्रयीसंवरणेन च ।
ग्आर्जवेन समायुक्ता मोदन्ते ऋषयो दिवि ॥' १२-५५-२० (६६९२१)
मृदुर्हि राजा सततं लङ्घ्यो भवति सर्वशः ।
तीक्ष्णाच्चोद्विजते लोकस्तस्मादुभयमाचरेत् ॥१२-५५-२१ (६६९२२)
अदण्ड्याश्चैव ते पुत्र विप्राः स्युर्ददतां वर ।
भूतमेतत्परं लोके ब्राह्मणा नाम पाण्डव ॥१२-५५-२२ (६६९२३)
मनुना चात्र राजेन्द्र गीतौ श्लोकौ महात्मना ।
धर्मेषु स्वेषु कौरव्य हृदि तौ कर्तुमर्हसि ॥१२-५५-२३ (६६९२४)

अम्ब्योऽग्निर्ब्रह्मतः क्षत्रमश्मनो लोहमुत्थितम् ।
तेषां सर्वत्रगं तेजः स्वासु योनिषु शाम्यति ॥१२-५५-२४ (६६९२५)
अयो हन्ति यदाऽश्मानमग्निरापो निहन्ति च ।
ब्रह्म च क्षत्रियो द्वेष्टि तदा सीदन्ति ते त्रयः ॥१२-५५-२५ (६६९२६)
एवं कृत्वा महाराज नमस्या एव ते द्विजाः ।
भौमं ब्रह्म द्विजश्रेष्ठा धारयन्ति शमान्विताः ॥१२-५५-२६ (६६९२७)
एवं चैव नरव्याघ्र लोकयात्राविघातकाः ।
निग्राह्या एव बाहुभ्यां ब्राह्मणास्ते नरेश्वर ॥१२-५५-२७ (६६९२८)
श्लोकौ चोशनसा गीतौ पुरा तात महर्षिणा ।
तौ निवोध महाराज त्वमेकाग्रमना नृप ॥१२-५५-२८ (६६९२९)
उद्यम्य शस्त्रमायान्तमपि वेदान्तगं रणे ।
निगृह्णीयात्स्वधर्मेण धर्मापेक्षी नराधिपः ॥१२-५५-२९ (६६९३०)
विनश्यमानं धर्मं हि योऽभिरक्षेत्स धर्मवित् ।
न तेन धर्महा स स्यान्मन्युस्तन्मन्युमृच्छति ॥१२-५५-३० (६६९३१)
एवं चैव नरश्रेष्ठ रक्ष्या एव द्विजातयः ।
सापराधानपि हि तान्विषयान्ते समुत्सृजेत् ॥१२-५५-३१ (६६९३२)
अभिशस्तमपि ह्येषां पीडयेन्न विशांपते ।
ब्रह्मघ्ने गुरुतल्पे च भ्रूणहत्ये तथैव च ॥१२-५५-३२ (६६९३३)
राजद्विष्टे च विप्रस्य विषयान्ते विवासनम् ।
विधीयते न शारीरं भयमेषां कदाचन ॥१२-५५-३३ (६६९३४)
दयिताश्च नरास्ते स्युर्भक्तिमन्तो द्विजेषु ये ।
न शोकः परमा तुष्टी राज्ञां भवति संचयात् ॥१२-५५-३४ (६६९३५)
दुर्गेषु च महाराज षट्सु ये शास्त्रनिश्चिताः ।
सर्वदुर्गेषु मन्यन्ते नरदुर्गं सुदुर्गमम् ॥१२-५५-३५ (६६९३६)
तस्मान्नित्यं दया कार्या चातुर्वर्ण्ये विपश्चिता ।
धर्मात्मा सत्यवाक्चैव राजा रञ्जयति प्रजाः ॥१२-५५-३६ (६६९३७)
न च क्षान्तेन ते नित्यं भाव्यं पुरुषसत्तम ।
अधर्मो हि मृदु राजा क्षमावानिव कुञ्जरः ॥१२-५५-३७ (६६९३८)
वार्हस्पत्ये च शास्त्रे च श्लोकोऽयं नियतः प्रभो ।
अस्मिन्नर्थे निगदितस्तन्मे निगदतः शृणु ॥१२-५५-३८ (६६९३९)
क्षममाणं नृपं नित्यं नीचः परिभवेज्जनः ।
हस्तियन्ता गजस्येव शिर एवारुरुक्षति ॥१२-५५-३९ (६६९४०)
तस्मान्नैव मृदुर्नित्यं तीक्ष्णो वाऽपि भवेन्नृपः ।
वसन्तेऽर्क इव श्रीमान्न शीतो न च घर्मदः ॥१२-५५-४० (६६९४१)
प्रत्यक्षेणानुमानेन तथौपम्यागमैरपि ।
परीक्ष्यास्ते महाराज स्वे परे चैव नित्यशः ॥१२-५५-४१ (६६९४२)

व्यसनानि च सर्वाणि त्यजेथा भूरिदक्षिण ।
नचैतानि प्रयुञ्जीथाः सङ्गं तु परिवर्जय ॥ १२-५५-४२ (६६९४३)
व्यसनी यस्तु लोकेऽस्मिन्परिभूतो भवत्युत ।
उद्वेजयति लोकं च योऽतिद्वेषी महीपतिः ॥ १२-५५-४३ (६६९४४)
भवितव्यं सदा राज्ञा गर्भिणीसहधर्मिणा ।
कारणं च महाराज शृणु येनेदमुच्यते ॥ १२-५५-४४ (६६९४५)
यथा हि गर्भिणी हित्वा स्वं प्रियं मनसोऽनुगम् ।
गर्भस्य हितमाधत्ते तथा राज्ञाऽप्यसंशयम् ॥ १२-५५-४५ (६६९४६)
वर्तितव्यं कुरुश्रेष्ठ सदा धर्मानुवर्तिना ।
स्वं प्रियं तु परित्यज्य यद्यल्लोकहितं भवेत् ॥ १२-५५-४६ (६६९४७)
न सन्त्याज्यं च ते धैर्यं कदाचिदपि पाण्डव ।
धीरस्य स्पष्टदण्डस्य न ह्याज्ञा प्रतिहन्यते ॥ १२-५५-४७ (६६९४८)
परिहासश्च भृत्यैस्ते नात्यर्थं वदतां वर ।
कर्तव्यो राजशार्दूल दोषमत्र हि मे शृणु ॥ १२-५५-४८ (६६९४९)
अवमन्यन्ति भर्तारं सहर्षमुपजीविनः ।
स्वे स्थाने न च तिष्ठन्ति लङ्घयन्ति च तद्वचः ॥ १२-५५-४९ (६६९५०)
प्रेष्यमाणा विकल्पन्ते गुह्यं चाप्यनुयुञ्जते ।
अयाच्यं चैव याचन्ते भोज्यान्याहारयन्ति च ॥ १२-५५-५० (६६९५१)
क्रुध्यन्ति परिदीप्तन्ति भूमिपायाधितिष्ठते ।
उत्कोचैर्वञ्चनाभिश्च कार्याणि घ्नन्ति चास्य ते ॥ १२-५५-५१ (६६९५२)
जर्झरं चास्य विषयं कुर्वन्ति प्रतिरूपकैः ।
स्त्रीरक्षिभिश्च सज्जन्ते तुल्यवेषा भवन्ति च ॥ १२-५५-५२ (६६९५३)
वान्तं निष्ठीवनं चैव कुर्वते चास्य सन्निधौ ।
निर्लज्जा राजशार्दूल व्याहरन्ति च तद्वचः ॥ १२-५५-५३ (६६९५४)
हयं वा दन्तिनं वाऽपि रथं वा नृपसंमतम् ।
अधिरोहन्त्यवज्ञाय सहर्षाः पार्थिवे मृदौ ॥ १२-५५-५४ (६६९५५)
इदं ते दुष्करं राजन्निदं ते दुर्विचेष्टितम् ।
इत्येवं सुहृदो नाम ब्रुवते परिपद्गताः ॥ १२-५५-५५ (६६९५६)
क्रुद्धे चास्मिन्हसन्त्येव न च हृष्यन्ति पूजिताः ।
सङ्घर्षशीलाश्च तदा भवन्त्यन्योन्यकारणात् ॥ १२-५५-५६ (६६९५७)
विस्रंसयन्ति मन्त्रं च विवृण्वन्ति च दुष्कृतम् ।
लीलया चैव कुर्वन्ति सावज्ञास्तस्य शासनम् ॥ १२-५५-५७ (६६९५८)
अलङ्काराणि भोज्यं च तथा स्नानानुलेपने ।
हेलयाना नरव्याघ्र स्वस्थास्तस्योपभुञ्जये ॥ १२-५५-५८ (६६९५९)
निन्दन्ते स्वानधीकारान्सन्त्यजन्ते च भारत ।
न वृत्त्या परितृष्यन्ति राजदेयं हरन्ति च ॥ १२-५५-५९ (६६९६०)

क्रीडितुं तेन चेच्छन्ति ससूत्रेणेव पक्षिणा ।
अस्मत्प्रणेयो राजेति लोकांश्चैव वदन्त्युत ॥ १२-५५-६० (६६९६१)
एते चैवापरे चैव दोषाः प्रादुर्भवन्त्युत ।
नृपतौ मार्दवोपेते हर्षुले च युधिष्ठिर ॥ ॥ १२-५५-६१ (६६९६२)

इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि
पञ्चपञ्चाशोऽध्यायः ॥ ५५.।
Mahabharata - Shanti Parva - Chapter Footnotes

१२-५५-२ धर्मः प्रजापालनात्मकः परमः सर्वधर्मश्रेष्ठः । एतं
धर्मं भारं दुर्वहं मन्ये ॥
१२-५५-५ प्रग्रहणं नियन्त्रणम् ॥
१२-५५-६ संस्था मर्यादाव्यवस्था ॥
१२-५५-८ अग्रे इतरेभ्यो धर्मेभ्यः पूर्वम् ॥
१२-५५-९ परः आगमः परं रहस्यम् । नः अस्माकं त्वत्तएव विहितमस्तु ॥
१२-५५-१८ सत्यान्नान्यदाश्वासकारमिति ड । थ। पाठः ॥
१२-५५-१९ स्थूललक्ष्यः बहुप्रदः ॥
१२-५५-२६ भौमं ब्रह्म वेदान् यज्ञांश्च ॥
१२-५५-२९ स्वधर्मेण शस्त्रोद्यमनेन निगृह्णीयादेव नतु हन्यात् ॥
१२-५५-३० विनश्यमानमाततायिदोषात् । तेन जातताथिनिग्रहेण ॥
१२-५५-३२ अभिशस्तं सताऽसता वा दोषेण युक्तं तथाख्यापितम् ॥
१२-५५-३३ शारीरं कशाघातादिजम् ॥
१२-५५-३५ षट्सु मरुजलपृथ्वीवनपर्वतनस्मवेषु ॥
१२-५५-३७ अधर्मो धर्मविरोधी ॥
१२-५५-३९ गजस्य क्षममाणस्य ॥
१२-५५-४२ व्यसनानि मृगयादीनि ॥
१२-५५-४६ प्रियमिष्टम् ॥
१२-५५-४७ न भयं विद्यते क्वचित् । इति झ। पाठः। ते त्वया ॥
१२-५५-५२ प्रतिरूपकैः कृत्रिमैः शासनपत्रैः । विषयं
देशम्। जर्झरं निःसारम्। स्त्रीरक्षिभिः सज्जन्ते प्रीतिं कुर्वन्ति
अन्तःपुरे प्रवेशमिच्छन्तः ॥
१२-५५-५४ नादृत्य हर्षुले इति झ । पाठः। तत्र हर्षुले
परिहासशीले इत्यर्थः ॥
१२-५५-५७ विस्रंसयन्ति भेदयन्ति ॥
१२-५५-५८ स्वस्थाः निर्भयाः ॥
१२-५५-५९ राजदेयं राजभागम् ॥

शन्तिपर्व-अध्यय०५६
॥ श्रीः ॥
१२.५६. अध्यायः ५६

Mahabharata - Shanti Parva - Chapter Topics
भीष्मेण युधिष्ठिराय राजधर्मकथनम् ॥१.।
Mahabharata - Shanti Parva - Chapter Text

१२-५६-० (६६९६३)
भीष्म उवाच।१२-५६-०क्ष् (५४७२)
नित्योद्युक्तेन वै राज्ञा भवितव्यं युधिष्ठिर ।
प्रशस्यते न राजा हि नारीवोद्यमवर्जितः ॥१२-५६-१ (६६९६४)
भगवानुशना चाह श्लोकमत्र विशांपते ।
तदिहैकमना राजन्गादतस्तं निबोध मे ॥१२-५६-२ (६६९६५)
द्वाविमौ ग्रसते भूमिः सर्पो बिलशयानिव ।
राजानं चाविरोद्धारं ब्राह्मणं चाप्रवासिनम् ॥१२-५६-३ (६६९६६)
तदेतन्नरशार्दूल हृदि त्वं कर्तुमर्हसि ।
सन्धेयानभिसन्धत्स्व विरोध्यांश्च विरोधय ॥१२-५६-४ (६६९६७)
सप्ताङ्गस्य च राज्यस्य विपरीतं य आचरेत् ।
गुरुर्वा यदि वा मित्रं प्रतिहन्तव्य एव सः ॥१२-५६-५ (६६९६८)
मरुत्तेन हि राज्ञा वै गीतः श्लोकः पुरातनः ।
राज्याधिकारे राजेन्द्र बृहस्पतिमतः पुरा ॥१२-५६-६ (६६९६९)
गुरोरप्यवलिप्तस्य कार्याकार्यमजानतः ।
उत्पथं प्रतिपन्नस्य परित्यागो विधीयते ॥१२-५६-७ (६६९७०)
बाहोः पुत्रेण राज्ञा च सगरेण च धीमता ।
असमञ्जः सुतो ज्येष्ठस्त्यक्तः पौरहितैषिणा ॥१२-५६-८ (६६९७१)
असमञ्जः सरय्वां स पौराणां बालकान्नृप ।
न्यमज्जयदतः पित्रा निर्भर्त्स्यं स विवासितः ॥१२-५६-९ (६६९७२)
ऋषिणोद्दालकेनापि श्वेतकेतुर्महातपाः ।
मिथ्या विप्रानुपचरन्सन्त्यक्तो दयितः सुतः ॥१२-५६-१० (६६९७३)
लोकरञ्जनमेवात्र राज्ञां धर्मः सनातनः ।
सत्यस्य रक्षणं चैव व्यवहारस्य चार्जवम् ॥१२-५६-११ (६६९७४)
न हिंस्यात्परवित्तानि देयं काले च दापयेत् ।
विक्रान्तः सत्यवाक्क्षान्तो नृपो न चलते पथः ॥१२-५६-१२ (६६९७५)
गुप्तमन्त्रो जितक्रोधः शास्त्रार्थकृतनिश्चयः ।
धर्मे चार्थे च कामे च मोक्षे च सततं रतः ॥१२-५६-१३ (६६९७६)

त्रय्या संवृतमन्त्रश्च राजा भवितुमर्हति ।
वृजिनं च नरेन्द्राणां नान्यच्चारक्षणात्परम् ॥१२-५६-१४ (६६९७७)
चातुर्वर्ण्यस्य धर्माश्च रक्षितव्या महीक्षिता ।
धर्मसंकररक्षा च राज्ञां धर्मः सनातनः ॥१२-५६-१५ (६६९७८)
न विश्वसेच्च नृपतिर्न चात्यर्थं च विश्वसेत् ।
षाड्गुण्यगुणदोषांश्च नित्यं बुद्ध्याऽवलोकयेत् ॥१२-५६-१६ (६६९७९)
अच्छिद्रदर्शी नृपतिर्नित्यमेव प्रशस्यते ।
त्रिवर्गे विदितार्थश्च युक्ताचारपथश्च यः ॥१२-५६-१७ (६६९८०)
कोशस्योपार्जनरतिर्यमवैश्रवणोपमः ।
वेत्ता च दशवर्गस्य स्थानवृद्धिक्षयात्मनः ॥१२-५६-१८ (६६९८१)
अभृतानां भवेद्भर्ता भृतानामन्ववेक्षकः ।
नृपतिः सुमुखश्च स्यात्स्मितपूर्वाभिभाषिता ॥१२-५६-१९ (६६९८२)
उपासिता ---- जिततन्द्रिरलोलुपः ।
सतां वृत्ते स्थितमतिः सतां ह्याचारदर्शनः ॥१२-५६-२० (६६९८३)
न चाददीत वित्तानि सतां हस्तात्कदाचन ।
असभ्द्यश्च समादाय सभ्द्यस्तु प्रतिपादयेत् ॥१२-५६-२१ (६६९८४)
स्वयं प्रहर्ता दाता च वश्यात्मा वश्यसाधनः ।
काले दाता च भोक्ता च शुद्धाचारस्तथैव च ॥१२-५६-२२ (६६९८५)
शूरान्भक्तानसंहार्यान्कुले जातानरोगिणः ।
शिष्टाञ्शिष्टाभिसंबन्धान्मानिनोऽनवमानिनः ॥१२-५६-२३ (६६९८६)
विद्याविदो लोकविदः परलोकान्ववेक्षकान् ।
धर्मे च निरतान्साधूनचलानचलानिव। १२-५६-२४ (६६९८७)
सहायान्सततं कुर्याद्राजा भूतिपरिष्कृतान् ।
तैश्च तुल्यो भवेद्भोगैश्छत्रमात्राज्ञयाऽधिकः ॥१२-५६-२५ (६६९८८)
प्रत्यक्षा च परोक्षा च वृत्तिश्चास्य भवेत्समा ।
एवं कुर्वन्नरेन्द्रो हि न खेदमिह विन्दति ॥१२-५६-२६ (६६९८९)
सर्वाभिशङ्की नृपतिर्यश्च सर्वहरो भवेत् ।
स क्षिप्रमनृजुर्लुब्धः स्वजनेनैव बाध्यते ॥१२-५६-२७ (६६९९०)
शुचिस्तु पृथिवीपालो लोकस्यानुग्रहे रतः ।
न पतत्यरिभिर्ग्रस्तः पतितश्चाधितिष्ठति ॥१२-५६-२८ (६६९९१)
अक्रोधनो ह्यव्यसनी मृदुदण्डो जितेन्द्रियः ।
राजा भवति भूतानां विश्वास्यो हिमवानिव ॥१२-५६-२९ (६६९९२)
प्राज्ञो न्यायगुणोपेतः पररन्ध्रेषु लालसः ।
सुदर्शः सर्ववर्णानां नयापनयवित्तथा ॥१२-५६-३० (६६९९३)
क्षिप्रकारी जितक्रोधः सुप्रसादो महामनाः ।
अरोगप्रकृतिर्युक्तः क्रियावानविकत्थनः ॥१२-५६-३१ (६६९९४)

आरब्धान्येव कार्याणि न पर्यवसितान्यपि ।
यस्य राज्ञः प्रदृश्यन्ते स राजा राजसत्तमः ॥ १२-५६-३२ (६६९९५)
पुत्रा इव पितुर्गेहे विषये यस्य मानवाः ।
निर्भया विचरिष्यन्ति स राजा राजसत्तमः ॥ १२-५६-३३ (६६९९६)
अगूढविभवा यस्य पौरा राष्ट्रनिवासिनः ।
नयापनयवेत्तारः स राजा राजसत्तमः ॥ १२-५६-३४ (६६९९७)
स्वधर्मनिरता यस्य जना विषयवासिनः ।
असङ्घातरता दान्ताः पाल्यमाना यथाविधि ॥ १२-५६-३५ (६६९९८)
वश्या यत्ता विनीताश्च न च सङ्घर्षशीलिनः ।
विषये दानरुचयो नरा यस्य स पार्थिवः ॥ १२-५६-३६ (६६९९९)
न यस्य कूटं कपटं न माया न च मत्सरः ।
विषये भूमिपालस्य तस्य धर्मः सनातनः ॥ १२-५६-३७ (६७०००)
यः सत्करोति ज्ञानानि श्रेयान्परहिते रतः ।
सतां वर्त्मानुगस्त्यागी स राजा स्वर्गमर्हति ॥ १२-५६-३८ (६७००१)
यस्य चाराश्च मन्त्राश्च नित्यं चैव कृताकृताः ।
न ज्ञायन्ते हि रिपुभिः स राजा राज्यमर्हति ॥ १२-५६-३९ (६७००२)
श्लोकद्वयं पुरा गीतं भार्गवेण महात्मना ।
आख्याते राजचरिते नृपतिं प्रति भारत ॥ १२-५६-४० (६७००३)
राजानं प्रथमं विन्देत्ततो भार्यां ततो धनम् ।
राजन्यसति लोकेऽस्मिन्कुतो भार्या कुतो धनं ॥ १२-५६-४१ (६७००४)
तद्राज्ये राज्यकामानां नान्यो धर्मः सनातनः ।
ऋते रक्षां तु विस्पष्टां रक्षा लोकस्य धारिणी ॥ १२-५६-४२ (६७००५)
प्राचेतसेन मनुना श्लोकौ चेमावुदाहृतौ ।
राजधर्मेषु राजेन्द्र ताविहैकमनाः शृणु ॥ १२-५६-४३ (६७००६)
षडेतान्पुरुषो जह्याद्भिन्नां नावमिवार्णवे ।
अप्रवक्तारमाचार्यमनधीयानमृत्विजम् ॥ १२-५६-४४ (६७००७)
अरक्षितारं राजानं भार्यां चाप्रियवादिनीम् ।
ग्रामकामं च गोपालं वनकामं च नापितम् ॥ ॥ १२-५६-४५ (६७००८)

इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि
षट्पञ्चाशोऽध्यायः ॥ ५६.।

Mahabharata - Shanti Parva - Chapter Footnotes

१२-५६-३ अप्रवासिनं वेदाध्ययनार्थम् ॥
१२-५६-५ सप्त स्वाम्यमात्यसुहृत्कोशराष्ट्रदुर्गबलानि अङ्गानि यस्य
तस्य सप्ताङ्गस्य ॥

१२-५६-१२ न हिंं स्यात् करार्थं धान्यानि रुद्धा वृष्ट्यादिना न नाशयत्
। देय---नम् ॥
१२-५६-१४ वृजिनं संकटं अरक्षणात् मन्त्रस्यागोपनादन्यन्नास्ति ॥
१२-५६-१५ धर्माणां संकरोव्यत्ययस्तस्मात्प्रजानां रक्षा
धर्मसंकररक्षा ॥
१२-५६-१६ न विश्वसेत् । चात् विश्वसेदप्याप्तेषु। तेष्वपि अत्यर्थं
न विश्वसेत् ॥
१२-५६-२३ शूरान्सहायान् कुर्यादिति तृतीयेनान्वयः
। असंहार्यान्परैरप्रतार्यान्। शिष्टाभिसंबन्धान्
शिष्टपरिवारान्। अनवमानिनः अवमानं परस्याकुर्वतः ॥
१२-५६-२४ अचलान् स्थिरान् अचलानिवपर्वतानिव ॥
१२-५६-२५ छत्रमात्रेण सहिता या आज्ञा इदमित्थं कुरुइदं नेति
तयाधिकः ।अन्यत्सर्वं शूरैः समानं भुञ्जीत ॥
१२-५६-३२ सुपर्यवसितानि च इति झ ।पाठः ॥
१२-५६-३५ असंघातरताः संघाते शरीरे प्रीतिमन्तो न भवन्ति किंतु
तत्साध्ये धर्मे एवेत्यर्थः ॥
१२-५६-३६ संघर्षः पराभिभवस्तच्छीलिनो न ॥
१२-५६-३७ कूटं दम्भः ।कपटमनृतम्। मत्सरः परोत्कर्षासहिष्णुत्वम् ॥
१२-५६-३८ ज्ञेये परहिते इति झ ।पाठः। ज्ञेयः पौरहिते इति
थ। द। पाठः। राज्यमर्हतीति झ। पाठः। ज्ञानानि ज्ञानयुक्तान्पण्डितान्
॥
१२-५६-३९ कृता अप्यकृता इवेति कृताकृताः ॥
१२-५६-४१ प्रथमं श्रेष्टं असत्यशुभे ॥

---

शन्तिपर्व-अध्यय०५७
॥ श्रीः ॥
१२.५७. अध्यायः ५७

Mahabharata - Shanti Parva - Chapter Topics
भीष्मेण युधिष्ठिराय प्रथमदिने राजधर्मकथनम् ॥ १.। ततः
सायं कृष्णादीनां स्वस्वावासगमनम् ॥ २.।
Mahabharata - Shanti Parva - Chapter Text

१२-५७-० (६७००९)
भीष्म उवाच। १२-५७-०क्ष् (५४७३)
एतत्ते राजधर्माणां नवनीतं युधिष्ठिर ।
बृहस्पतिर्हि भगवान्नान्यं धर्मं प्रशंसति ॥ १२-५७-१ (६७०१०)

विशालाक्षश्च भगवान्काव्यश्चैव महातपाः ।
सहस्राक्षो महेन्द्रश्च तथा प्राचेतसो मनुः ॥ १२-५७-२ (६७०११)
भरद्वाजश्च भगवांस्तथा गौरशिरा मुनिः ।
राजशास्त्रप्रणेतारो ब्राह्मणा ब्रह्मवादिनः ॥ १२-५७-३ (६७०१२)
रक्षामेव प्रशंसन्ति धर्मं धर्मभृतां वर ।
राज्ञां राजीवताम्राक्ष साधनं चात्र मे शृणु ॥ १२-५७-४ (६७०१३)
चारश्च प्रणिधिश्चैव काले दानममत्सरः ।
युक्त्या दानं न चादानमयोगेन युधिष्ठिर ॥ १२-५७-५ (६७०१४)
सतां संग्रहणं शौर्यं दाक्ष्यं सत्यं प्रजाहितम् ।
अनार्जवैरार्जवैश्च शत्रुपक्षाविवर्धनम् ॥ १२-५७-६ (६७०१५)
केतनानां च जीर्णानामवेक्षा चैव सीदताम् ।
द्विविधस्य च दण्डस्य प्रयोगः कालचोदितः ॥ १२-५७-७ (६७०१६)
साधूनामपरित्यागः कुलीनानां च धारणम् ।
निचयश्च निचेयानां सेवा बुद्धिमतामपि ॥ १२-५७-८ (६७०१७)
बलानां हर्षणं नित्यं प्रजानामन्ववेक्षणम् ।
कार्येष्वखेदः कोशस्य तथैव च विवर्धनम् ॥ १२-५७-९ (६७०१८)
पुरगुप्तिरविश्वासः पौरसंघातभेदनम् ।
अरिमध्यस्थमित्राणां यथावच्चान्ववेक्षणम् ॥ १२-५७-१० (६७०१९)
उपजापश्च भृत्यानामात्मनः पुरदर्शनम् ।
अविश्वासः स्वयं चैव परस्याश्वासनं तथा ॥ १२-५७-११ (६७०२०)
नीतिवर्त्मानुसारेण नित्यमुत्थानमेव च ।
रिपूणामनवज्ञानं नित्यं चानार्यवर्जनम् ॥ १२-५७-१२ (६७०२१)
उत्थानं हि नरेन्द्राणां बृहस्पतिरभाषत ।
राजधर्मस्य यन्मूलं श्लोकांश्चात्र निबोध मे ॥ १२-५७-१३ (६७०२२)
उत्थानेनामृतं लब्धमुत्थानेनासुरा हताः ।
उत्थानेन महेन्द्रेण श्रैष्ठ्यं प्राप्तं दिवीह च ॥ १२-५७-१४ (६७०२३)
उत्थानधीरः पुरुषो वाग्धीरानधितिष्ठति ।
उत्थानवीरान्वाग्वीरा रमयन्त उपासते ॥ १२-५७-१५ (६७०२४)
उत्थानहीनो राजा हि बुद्धिमानपि नित्यशः ।
प्रधर्षणीयः शत्रूणां भुजङ्ग इव निर्विषः ॥ १२-५७-१६ (६७०२५)
न च शत्रुरवज्ञेयो दुर्बलोऽपि बलीयसा ।
अल्पोऽपि हि दहत्यग्निर्विषमल्पं हिनस्ति च ॥ १२-५७-१७ (६७०२६)
एकाङ्गेनापि संभूतः शत्रुर्दुर्गमुपाश्रितः ।
सर्वं तापयते देशमपि राज्ञः समृद्धिनः ॥ १२-५७-१८ (६७०२७)
राज्ञो रहस्यं यद्वाक्यं जयार्थे लोकसंग्रहः ।
हृदि यच्चास्य जिह्मं स्यात्कारणार्थं च यद्भवेत् ॥ १२-५७-१९ (६७०२८)

यच्चास्य कार्यं वृजिनं मार्दवेनैव धार्यते ।
रञ्जनार्थं च लोकस्य धर्मिष्ठामाचरेत्क्रियाम् ॥ १२-५७-२० (६७०२९)
राज्यं हि सुमहत्तत्र दुर्धार्यमकृतात्मभिः ।
न शक्यं मृदुना वोदुमाघातस्थानमुल्वणम् ॥ १२-५७-२१ (६७०३०)
राज्यं सर्वामिषं नित्यमार्जवेनैव धार्यते ।
तस्मान्मिश्रेण सततं वर्तितव्यं युधिष्ठिर ॥ १२-५७-२२ (६७०३१)
यद्यप्यस्य विपक्तिः स्याद्रक्षमाणस्य वै प्रजाः ।
सोप्यस्य विपुलो धर्म एवं वृत्ता हि भूमिपाः ॥ १२-५७-२३ (६७०३२)
एष ते राजधर्माणां लेशः समनुवर्णितः ।
भूयस्ते यत्र संदेहस्तद्ब्रूहि कुरुसत्तम ॥ १२-५७-२४ (६७०३३)
वैशंपायन उवाच। १२-५७-२५क्ष् (५४७४)
ततो व्यासश्च भगवान्देवस्थानोऽश्म एव च ।
वासुदेवः कृपश्चैव सात्यकिः सञ्जयस्तथा ॥ १२-५७-२५ (६७०३४)
साधुसाध्विति संहृष्टा घुष्यमाणैरिवाननैः ।
अस्तुवंश्च नरव्याघ्रं भीष्मं धर्मभृतां वरम् ॥ १२-५७-२६ (६७०३५)
ततो दीनमना भीष्ममुवाच कुरुनन्दनः ।
नेत्राभ्यामश्रुपूर्णाभ्यां पादौ तस्य शनैः स्पृशन् ॥ १२-५७-२७ (६७०३६)
श्व इदानीं स्वसंदेहं प्रवक्ष्यामि पितामह ।
उपैति सविता ह्यस्तं रसमापीय पार्थिवम् ॥ १२-५७-२८ (६७०३७)
ततो द्विजातीनभिवाद्य केशवः ।
कृपश्च ते चैव युधिष्ठिरादयः ।
प्रदक्षिणीकृत्य महानदीसुतं
ततो रथानारुरुहुर्मुदान्विताः ॥ १२-५७-२९ (६७०३८)
दृषद्वतीं चाप्यवगाह्य सुव्रताः ।
कृतोदकार्थाः कृतजप्यमङ्गलाः ।
उपास्य संध्यां विधिवत्परंतपा
स्ततः पुरं ते विविशुर्गजाह्वयम् ॥ ॥ १२-५७-३० (६७०३९)

इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि
सप्तपञ्चाशोऽध्यायः ॥ ५७.।

Mahabharata - Shanti Parva - Chapter Footnotes

१२-५७-१ एतद्रक्षणं नवनीतं नवनीतवत्सर्वधर्मसारम् । न्याय्यं
धर्मं प्रशंसतीति झ। पाठः ॥
१२-५७-५ चारो गुप्तस्पशः । प्रणिधिः प्रकटस्पशः। दानं
भक्तवेतनयोः युक्तेरादानम्। अयोगेनानुपायेन आदानं करग्रहणं नच ॥

१२-५७-७ केतनानां गृहादीनाम् । द्विविधस्य
शारीरदण्डोऽर्थदण्डश्चेति भेदात् ॥
१२-५७-८ निचेयानां संग्राह्याणां धान्यादीनां निचयः संग्रहः ॥
१२-५७-१० अविश्वासो यामिकादीनामपि ॥
१२-५७-११ अविश्वासो भृत्यानामेव ॥
१२-५७-१२ उत्थानमुद्योगः । अनार्यं हीनकर्म कदर्यत्वादि तद्वर्जनम् ॥
१२-५७-१५ वाग्वीरान् पण्डितान् । उत्थानमेव महत्पाण्डित्यमित्यर्थः ॥
१२-५७-१८ एकाङ्गेन हस्त्यश्वरथपादातानामन्यतमेनापि संभूतः
संपन्नः । समृद्धिनः समृद्धिमतः ॥
१२-५७-२१ अकृतात्मभिः क्रूरैः ॥
१२-५७-२२ मिश्रेण क्रौर्यमार्दवाभ्याम् ॥
१२-५७-२८ प्रक्ष्यामि त्वां पितामह इति झ । पाठः ॥

---

शन्तिपर्व-अध्यय०५८
॥ श्रीः ॥
१२.५८. अध्यायः ५८

Mahabharata - Shanti Parva - Chapter Topics
भीष्मेण युधिष्ठिरंप्रति
राजोत्पत्तेर्ब्रह्मकृतदण्डनीतिग्रन्थप्रतिपाद्यार्थानां
पृथुराजचरितादीनां च कथनम् ॥ १. ।
Mahabharata - Shanti Parva - Chapter Text

१२-५८-० (६७०४०)
वैशंपायन उवाच। १२-५८-०क्ष् (५४७५)
ततः कल्यं समुत्थाय कृतपूर्वाह्णिकक्रियाः ।
ययुस्ते नगराकारैः रथैः पाण्डवयादवाः ॥ १२-५८-१ (६७०४१)
प्रतिपद्य कुरुक्षेत्रं भीष्ममासाद्य चानघम् ।
सुखां च रजनीं पृष्ट्वा गाङ्गेयं रथिनां वरम् ॥ १२-५८-२ (६७०४२)
व्यासादीनभिवाद्यर्षीन्सर्वैस्तैश्चाभिनन्दिताः ।
निषेदुरभितो भीष्मं परिवार्य समन्ततः ॥ १२-५८-३ (६७०४३)
ततो राजा महातेजा धर्मपुत्रो युधिष्ठिरः ।
अब्रवीत्प्राञ्जलिर्भीष्मं प्रतिपूज्य यथाविधि ॥ १२-५८-४ (६७०४४)
युधिष्ठिर उवाच। १२-५८-५क्ष् (५४७६)
य एष राजन्राजेति शब्दश्चरति भारत ।
कथमेष समुत्पन्नस्तन्मे ब्रूहि पितामह ॥ १२-५८-५ (६७०४५)

तुल्यपाणिभुजग्रीवस्तुल्यबुद्धीन्द्रियात्मकः ।
तुल्यदुःखसुखात्मा च तुल्यपृष्ठमुखोदरः ॥ १२-५८-६ (६७०४६)
तुल्यशुक्रास्थिमज्जा च तुल्यमांसासृगेव च ।
नेःश्वासोच्छ्वासतुल्यश्च तुल्यप्राणशरीरवान् ॥ १२-५८-७ (६७०४७)
समानजन्ममरणः समः सर्वैर्गुणैर्नृणाम् ।
विशिष्टबुद्धीञ्शूरांश्च कथमेकोऽधितिष्ठति ॥ १२-५८-८ (६७०४८)
कथमेको महीं कृत्स्नां शूरवीरार्यसंकुलम् ।
रक्षत्यपि च लोकस्य प्रसादमभिवाञ्छति ॥ १२-५८-९ (६७०४९)
एकस्य तु प्रसादेन कृत्स्नो लोकः प्रसीदति ।
व्याकुले चाकुलः सर्वो भवतीति विनिश्चयः ॥ १२-५८-१० (६७०५०)
एतदिच्छाम्यहं श्रोतुं त्वत्तो हि भरतर्षभ ।
कृत्स्नं तन्मे यथातत्त्वं प्रब्रूहि वदतां वर ॥ १२-५८-११ (६७०५१)
नैतत्कारणमत्यल्पं भविष्यति विशांपते ।
यदेकस्मिञ्जगत्सर्वं देववद्याति सन्नतिम् ॥ १२-५८-१२ (६७०५२)
भीष्म उवाच। १२-५८-१३क्ष् (५४७७)
नियतस्त्वं नरव्याघ्र शृणु सर्वमशेषतः ।
यथा राज्यं समुत्पन्नमादौ कृतयुगेऽभवत् ॥ १२-५८-१३ (६७०५३)
नैव राज्यं न राजाऽऽसीन्न च दण्डो न दाण्डिकः ।
धर्मेणैव प्रजाः सर्वा रक्षन्ति स्म परस्परम् ॥ १२-५८-१४ (६७०५४)
पाल्यमानास्तथाऽन्योन्यं नरा धर्मेण भारत ।
दैन्यं परमुपाजग्मुस्ततस्तान्मोह आविशत् ॥ १२-५८-१५ (६७०५५)
ते मोहवशमापन्ना मनुजा मनुजर्षभ ।
प्रतिपत्तिविमोहाच्च धर्मस्तेषामनीनशत् ॥ १२-५८-१६ (६७०५६)
नष्टायां प्रतिपत्तौ च मोहवश्या नरास्तदा ।
लोभस्य वशमापन्नाः सर्वे भरतसत्तम ॥ १२-५८-१७ (६७०५७)
अप्राप्तस्याभिमर्शं तु कुर्वन्तो मनुजास्ततः ।
कामो नामापरस्तत्र प्रत्यपद्यत वै प्रभो ॥ १२-५८-१८ (६७०५८)
तांस्तु कामवशं प्राप्तान्रागो नामाभिसंस्पृशत् ।
रक्ताश्च नाभ्यजानन्त कार्याकार्ये युधिष्ठिर ॥ १२-५८-१९ (६७०५९)
अगम्यागमनं चैव वाच्यावाच्यं तथैव च ।
भक्ष्याभक्ष्यं चराजेन्द्र दोषादोषं च नात्यजन् ॥ १२-५८-२० (६७०६०)
विप्लुते नरलोकेऽस्मिंस्ततो ब्रह्म ननाश ह ।
नाशाच्च ब्रह्मणो राजन्धर्मो नाशमथागमत् ॥ १२-५८-२१ (६७०६१)
नष्टे ब्रह्मणि धर्मे च देवास्त्रासमथागमन् ।
ते त्रस्ता नरशार्दूल ब्रह्माणं शरणं ययुः ॥ १२-५८-२२ (६७०६२)
प्रपद्य भगवन्तं ते देवं लोकपितामहम् ।

ऊचुः प्राञ्जलयः सर्वे दुःखवेगसमाहताः ॥ १२-५८-२३ (६७०६३)
भगवन्नरलोकस्थं ग्रस्तं ब्रह्म सनातनम् ।
लोभमोहादिभिर्भावैस्ततो नो भयमाविशत् ॥ १२-५८-२४ (६७०६४)
ब्रह्मणश्च प्रणाशेन धर्मो व्यनशदीश्वर ।
ततस्तु समतां याता मर्त्यैस्त्रिभुवनेश्वराः ॥ १२-५८-२५ (६७०६५)
अधोर्भिवर्षास्तु वयं भौमास्तूर्ध्वप्रवर्षिणः ।
क्रियाव्युपरमात्तेषां ततोऽगच्छाम संशयम् ॥ १२-५८-२६ (६७०६६)
अत्र निःश्रेयसं यन्नस्तद्ध्यायस्व पितामह ।
त्वत्प्रसादात्समुत्थोसौ प्रभावो नो भवत्वयम् ॥ १२-५८-२७ (६७०६७)
तानुवाच सुरान्सर्वान्स्वयंभूर्भगवांस्ततः ।
श्रेयोऽहं चिन्तयिष्यामिव्येतु वो भीः सुरोत्तमाः ॥ १२-५८-२८ (६७०६८)
ततोऽध्यायसहस्राणां शतं चक्रे स्वबुद्धिजम् ।
यत्र धर्मस्तथैवार्थः कामश्चैवानुवर्णितः ॥ १२-५८-२९ (६७०६९)
त्रिवर्ग इति विख्यातो गण एव स्वयंभुवा ।
चतुर्थो मोक्ष इत्येव पृथगर्थः पृथग्गुणः ॥ १२-५८-३० (६७०७०)
मोक्षस्यास्ति त्रिवर्गोऽन्यः प्रोक्तः सत्वं रजस्तमः ।
स्थानं वृद्धिः क्षयश्चैव त्रिवर्गश्चैव दण्डजः ॥ १२-५८-३१ (६७०७१)
आत्मादेशश्च कालश्चाप्युपायाः कृत्यमेव च ।
सहायाः कारणं चैव षड्वर्गो नीतिजः स्मृतः ॥ १२-५८-३२ (६७०७२)
त्रयी चान्वीक्षिकी चैव वार्ता च भरतर्षभ ।
दण्डनीतिश्च विपुला विद्यास्तत्र निदर्शिताः ॥ १२-५८-३३ (६७०७३)
अमात्यलिप्सा प्रणिधी राजपुत्रस्य लक्षणम् ।
चारश्च विविधोपायः प्रणिधिश्च पृथग्विधः ॥ १२-५८-३४ (६७०७४)
सामभेदः प्रदानं च ततो दण्डश्च पार्थिव ।
उपेक्षा पञ्चमी चात्र कार्त्स्न्येन समुदाहृता ॥ १२-५८-३५ (६७०७५)
मन्त्रश्च वर्णितः कृत्स्नो मन्त्रभेदार्थ एव च ।
विभ्रमश्चैव मन्त्रस्य सिद्ध्यसिद्ध्योश्च यत्फलम् ॥ १२-५८-३६ (६७०७६)
संधिश्च त्रिविधाभिख्यो हीनो मध्यस्तथोत्तमः ।
भयसत्कारवित्ताख्यं कार्त्स्न्येन परिवर्णितम् ॥ १२-५८-३७ (६७०७७)
यात्राकालाश्च चत्वारस्त्रिवर्गस्य च विस्तरः ।
विजयो धर्मयुक्तश्च तथार्थविजयश्च ह ॥ १२-५८-३८ (६७०७८)
आसुरश्चैव विजयः कार्त्स्न्येन परिवर्णितः ।
लक्षणं पञ्चवर्गस्य त्रिविधं चात्र वर्णितम् ॥ १२-५८-३९ (६७०७९)
प्रकाशश्चाप्रकाशश्च दण्डोऽथ परिशब्दितः ।
प्रकाशोऽष्टविधस्तत्र गुह्यश्च बहुविस्तरः ॥ १२-५८-४० (६७०८०)
रथा नागा हयाश्चैव पादाताश्चैव पाण्डव ।

विष्टिर्नावश्चराश्चैव देशिका इति चाष्टमः ।
अङ्गान्येतानि कौरव्य प्रकाशानि बलस्य तु ॥ १२-५८-४१ (६७०८१)
जङ्गमाजङ्गमाश्चोक्ताश्चूर्णयोगा विषादयः ।
स्पर्शे चाभ्यवहार्ये चाप्युपांशुर्विविधः स्मृतः ॥१२-५८-४२ (६७०८२)
ग्क्रीडापूर्वे रणे द्यूते विस्रम्भणसमन्वितम् ।
उक्तं कैतव्यमित्येतदुपायो नवमो बुधैः ॥१२-५८-४३ (६७०८३)
उपेक्षा सर्वकार्येषु कर्मणां करणेषु च ।
अनिष्टानां समुत्थाने त्रिवर्गो नश्यते यया ॥१२-५८-४४ (६७०८४)
इन्द्रजालादिका माया वाजीवनकुशीलवैः ।
सुनिमित्तैर्दुर्निमित्तैरुत्पातैश्च समन्वितम् ॥१२-५८-४५ (६७०८५)
डम्भो लिङ्गं समाश्रित्य शत्रुवर्गे प्रयुज्यते ।
शाठ्यं निश्चेष्टता प्रोक्ता चित्तदोषप्रदूषिका ॥' १२-५८-४६ (६७०८६)
अरिर्मित्र उदासीन इत्येतेऽप्यनुवर्णिताः ।
कृत्स्ना मार्गगुणाश्चैव तथा भूमिगुणाश्च ह ।
आत्मरक्षणमाश्वासः स्पर्शानां चान्ववेक्षणम् ॥ १२-५८-४७ (६७०८७)
कल्पना विविधाश्चापि नृनागरथवाजिनाम् ।
व्यूहाश्च विविधाभिख्या विचित्रं युद्धकौशलम् ॥१२-५८-४८ (६७०८८)
उत्पाताश्च निपाताश्च सुयुद्धं सुपलायितम् ।
शस्त्राणां पालनं ज्ञानं तथैव भरतर्षभ ॥१२-५८-४९ (६७०८९)
बलव्यसनयुक्तं च तथैव बलहर्षणम् ।
पीडा चापदकालश्च भयकालश्च पाण्डव ॥१२-५८-५० (६७०९०)
तथाख्यातविधानं च योगः संचार एव च ।
चोरैराटविकैश्चोग्रैः परराष्ट्रस्य पीडनम् ॥१२-५८-५१ (६७०९१)
अग्निदैर्गरदैश्चैव प्रतिरूपककारकैः ।
श्रेणिमुख्योपजापेन वीरुधश्छेदनेन च ॥१२-५८-५२ (६७०९२)
दूषणेन च नागानामातङ्कजननेन च ।
आराधनेन भक्तस्य पत्युश्चोपग्रहेण च ॥१२-५८-५३ (६७०९३)
सप्ताङ्गस्य च राज्यस्य ह्रासवृद्धिसमीक्षणम् ।
दूतसामर्थ्ययोगश्च राष्ट्रस्य च विवर्धनम् ॥१२-५८-५४ (६७०९४)
अरिमध्यस्थमित्राणां सम्यक्चोक्तं प्रपञ्चनम् ।
अवमर्दः प्रतीघातस्तथैव च बलीयसाम् ॥१२-५८-५५ (६७०९५)
व्यवहारः सुसूक्ष्मश्च तथा कण्टकशोधनम् ।
श्रमो व्यायामयोगश्च योगद्रव्यस्य सञ्चयः ॥१२-५८-५६ (६७०९६)
अभृतानां च भरणं भृतानां चान्ववेक्षणम् ।
अन्तकाले प्रदानं च व्यसने चाप्रसङ्गिता ॥१२-५८-५७ (६७०९७)
तथा राजगुणाश्चैव सेनापतिगुणाश्च ह ।

करणस्य च कर्तुश्च गुणदोषास्तथैव च ॥ १२-५८-५८ (६७०९८)
दुष्टेङ्गितं च विविधं वृत्तिश्चैवानुवर्तिनाम् ।
शङ्कितत्वं च सर्वस्य प्रमादस्य च वर्जनम् ॥ १२-५८-५९ (६७०९९)
अलब्धलिप्सा लब्धस्य तथैव च विवर्धनम् ।
प्रदानं च विवृद्धस्य पात्रेभ्यो विधिवत्तथा ॥ १२-५८-६० (६७१००)
विसर्गोऽर्थस्य धर्मार्थमर्थार्थं कामहेतुकम् ।
चतुर्थं व्यसनाघाते तथैवात्रानुवर्णितम् ॥ १२-५८-६१ (६७१०१)
क्रोधजानि ततोग्राणि कामजानि तथैव च ।
दशोक्तानि कुरुश्रेष्ठ व्यसनान्यत्र चैव ह ॥ १२-५८-६२ (६७१०२)
मृगयाक्षास्तथा पानं स्त्रियश्च भरतर्षभ ।
कामजान्याहुराचार्याः प्रोक्तानीह स्वयंभुवा ॥ १२-५८-६३ (६७१०३)
वाक्पारुष्यं तथोग्रत्व दण्डपारुष्यमेव च ।
आत्मनो निग्रहस्त्यागो ह्यर्थदूषणमेव च ॥ १२-५८-६४ (६७१०४)
यन्त्राणि विविधान्येव क्रियास्तेषां च वर्णिताः ।
अवमर्दः प्रतीघातः केतनानां च भञ्जनम् ॥ १२-५८-६५ (६७१०५)
चैत्यद्रुमावमर्दश्च रोधः कर्मान्तनाशनम् ।
अपस्करोऽथ वमनं तथोपास्या च वर्णिता ॥ १२-५८-६६ (६७१०६)
पणवानकशङ्खानां भेरीणां च युधिष्ठिर ।
उपार्जनं च द्रव्याणां परमर्म च तानि षट् ॥ १२-५८-६७ (६७१०७)
लब्धस्य च प्रशमनं सतां चैवाभिपूजनम् ।
विद्वद्भिरेकीभावश्च जपहोमविधिज्ञता ॥ १२-५८-६८ (६७१०८)
मङ्गलालम्भनं चैव शरीरस्य प्रतिक्रिया ।
आहारयोजनं चैव नित्यमास्तिक्यमेव च ॥ १२-५८-६९ (६७१०९)
एकेन च यथोत्थेयं सत्यत्वं मधुरा गिरः ।
उत्तमानां समाजानां क्रियाः केतनजास्तथा ॥ १२-५८-७० (६७११०)
प्रत्यक्षाश्च परोक्षाश्च सर्वाधिकरणेष्वथ ।
वृत्तेर्भरतशार्दूल नित्यं चैवान्ववेक्षणम् ॥ १२-५८-७१ (६७१११)
अदण्ड्यत्वं च विप्राणां युक्त्या दण्डनिपातनम् ।
अनुजीवि स्वजातिभ्यो गुणेभ्यश्च समुद्भवः ॥ १२-५८-७२ (६७११२)
रक्षणं चैव पौराणां राष्ट्रस्य च विवर्धनम् ।
मण्डलस्था च या चिन्ता राजन्द्वादशराजिका ॥ १२-५८-७३ (६७११३)
द्विसप्ततिमतिश्चैव प्रोक्ता या च स्वयंभुवा ।
देशजातिकुलानां च धर्माः समनुवर्णिताः ॥ १२-५८-७४ (६७११४)
धर्मश्चार्थश्च कामश्च मोक्षश्चात्रानुवर्णिताः ।
उपायाश्चार्थलिप्सा च विविधा भूरिदक्षिणः ॥ १२-५८-७५ (६७११५)
मूलकर्मक्रिया चात्र मायायोगश्च वर्णितः ।

दूषणं स्रोतसां चैव वर्णितं च स्थिराम्भसाम् ॥१२-५८-७६ (६७११६)
यैर्यैरुपायैर्लोकस्तु न चलेदार्यवर्त्मनः ।
तत्सर्वं राजशार्दूल नीतिशास्त्रेऽभिवर्णितम् ॥१२-५८-७७ (६७११७)
एतत्कृत्वा सुभं शास्त्रं ततः स भगवान्प्रभुः ।
देवानुवाच संहृष्टः सर्वाञ्छक्रपुरोगमान् ॥१२-५८-७८ (६७११८)
उपकाराय लोकस्य त्रिवर्गस्थापनाय च ।
नवनीतं सरस्वत्या बुद्धिरेषा प्रभाषिता ॥१२-५८-७९ (६७११९)
दण्डेन सहिता ह्येषा लोकरक्षणकारिका ।
निग्रहानुग्रहरता लोकाननुचरिष्यति ॥१२-५८-८० (६७१२०)
दण्डेन नीयते चेदं दण्डं नयति वा पुनः ।
दण्डनीतिरितिख्याता त्रींल्लोकानवपत्स्यते ॥१२-५८-८१ (६७१२१)
षाड्गुण्यगुणसारैषा स्थास्यत्यग्रे महात्मसु ।
धर्मार्थकाममोक्षाश्च सकला ह्यत्र शब्दिताः ॥१२-५८-८२ (६७१२२)
भीष्म उवाच।१२-५८-८३क्ष् (५४७८)
ततस्तां भगवान्नीतिं पूर्वं जग्राह शंकरः ।
बहुरूपो विशालाक्षः शिवः स्थाणुरुमापतिः ॥१२-५८-८३ (६७१२३)
अनादिनिधनो देवश्चैतन्यादिसमन्वितः ।
ज्ञानानि च वशे यस्य तारकादीन्यशेषतः ॥१२-५८-८४ (६७१२४)
अणिमादिगुणोपेतमैश्वर्यं न च कृत्रिमम् ।
तुष्ट्यर्थं ब्रह्मणः पुत्रो ललाटादुत्थितः प्रभुः ॥१२-५८-८५ (६७१२५)
अरुदत्सस्वनं घोरं जगतः प्रभुरव्ययः ।
जायमानः पिता पुत्रे पुत्रः पितरि चैव हि ॥१२-५८-८६ (६७१२६)
बुद्धिं विश्वसृजे दत्त्वा ब्रह्माण्डं येन निर्मितम् ।
यस्मिन्हिरण्मयो हंसः शकुनिः समपद्यत ॥१२-५८-८७ (६७१२७)
कर्ता सर्वस्य लोकस्य ब्रह्मा लोकपितामहः ।
स देवः सर्वभूतानां महादेवः सनातनः ।
असंख्यातसहस्राणां रुद्राणां स्थानमव्ययम् ॥ १२-५८-८८ (६७१२८)
युगानामायुषो ह्रासं विज्ञाय भगवाञ्शिवः ।
संचिक्षेप ततः शास्त्रं महास्त्रं ब्रह्मणा कृतम् ॥१२-५८-८९ (६७१२९)
वैशालाक्षमिति प्रोक्तं तदिन्द्रः प्रत्यपद्यत ।
दशाध्यायसहस्राणि सुब्रह्मण्यो महातपाः ॥१२-५८-९० (६७१३०)
मघवानपि तच्छास्त्रं देवात्प्राप्य महेश्वरात् ।
प्रजानां हितमन्विच्छन्संचिक्षेप पुरंदरः ॥१२-५८-९१ (६७१३१)
सहस्त्रैः पञ्चभिस्तात यदुक्तं बाहुदन्तकम् ।
अध्यायानां सहस्त्रैस्तु त्रिभिरेव बृहस्पतिः ।
संचिक्षेपेश्वरो बुद्ध्या बार्हस्पत्यं यदुच्यते ॥ १२-५८-९२ (६७१३२)

अध्यायानां सहस्रेण काव्यः संक्षेपमब्रवीत् ।
तच्छास्त्रममितप्रज्ञो योगाचार्यो महायशाः ॥ १२-५८-९३ (६७१३३)
एवं लोकानुरोधेन शास्त्रमेतन्महर्षिभिः ।
संक्षिप्तमायुर्विज्ञाय लोकानां ह्रासि पाण्डव ॥ १२-५८-९४ (६७१३४)
अथ देवाः समागम्य विष्णुमूचुः प्रजापतिम् ।
एको योऽर्हति मर्त्येभ्यः श्रैष्ठ्य वै तं समादिश ॥ १२-५८-९५ (६७१३५)
ततः संचिन्त्य भगवान्देवो नारायणः प्रभुः ।
तैजसं वै विरजसं सोऽसृजन्मानसं सुतम् ॥ १२-५८-९६ (६७१३६)
विरजास्तु महाभागः प्रभुत्वं भुवि नैच्छत ।
न्यासायैवाभवद्बुद्धिः प्रणीता तस्य पाण्डव ॥ १२-५८-९७ (६७१३७)
कीर्तिमांस्तस्य पुत्रोऽभूत्सोऽपि मर्त्याधिकोऽभवत् ।
कर्दमस्तस्य तु सुतः सोऽप्यतप्यन्महत्तपः ॥ १२-५८-९८ (६७१३८)
प्रजापतेः कर्दमस्य त्वनङ्गो नाम वीर्यवान् ।
प्रजा रक्षयिता साधुर्दण्डनीतिविशारदः ॥ १२-५८-९९ (६७१३९)
अनङ्गपुत्रोऽतिबलो नीतिमानभिगम्य वै ।
प्रतिपेदे महाराज्यमथेन्द्रियवशोऽभवत् ॥ १२-५८-१०० (६७१४०)
ग्प्राप्य नारीं महाभागां रूपिणीं काममोहितः ।
सौभाग्येन च संपन्नां गुणैश्चानुत्तमां सतीम्'॥ १२-५८-१०१ (६७१४१)
मृत्योस्तु दुहिता राजन्सुनीथा नाम नामतः ।
प्रख्याता त्रिषु लोकेषु या सा वेनमजीजनत् ॥ १२-५८-१०२ (६७१४२)
तं प्रजासु विधर्माणं रागद्वेषवशानुगम् ।
मन्त्रपूतैः कुशैर्जघ्नुर्ऋषयो ब्रह्मवादिनः ॥ १२-५८-१०३ (६७१४३)
ममन्थुर्दक्षिणं चोरुमृषयस्तस्य भारत ।
ततोऽस्य विकृतो जज्ञे ह्रस्वकः पुरुषोऽशुचिः ॥ १२-५८-१०४ (६७१४४)
दग्धस्थूणाप्रतीकाशो रक्ताक्षः कृष्णमूर्धजः ।
निषीदेत्येवमूचुस्तमृषयो ब्रह्मवादिनः ॥ १२-५८-१०५ (६७१४५)
तस्मान्निषादाः संभूताः क्रूराः शैलवनाश्रयाः ।
ये चान्ये विन्ध्यनिलया म्लेच्छाः शतसहस्रशः ॥ १२-५८-१०६ (६७१४६)
भूयोऽस्य दक्षिणं पाणिं ममन्थुस्ते महर्षयः ।
ततः पुरुष उत्पन्नो रुपेणेन्द्र इवापरः ॥ १२-५८-१०७ (६७१४७)
कवची बद्धनिस्त्रिंशः सशरः सशरासनः ।
वेदवेदाङ्गविच्चैव धनुर्वेदे च पारगः ॥ १२-५८-१०८ (६७१४८)
तं दण्डनीतिः सकला श्रिता राजन्नरोत्तमम् ।
ततस्तु प्राञ्जलिर्वैन्यो महर्षीस्तानुवाच ह ॥ १२-५८-१०९ (६७१४९)
सुसूक्ष्मा मे समुत्पन्ना बुद्धिर्धरर्मार्थदर्शिनी ।
अनया किं मया कार्यं तन्मे तत्त्वेन शंसत ॥ १२-५८-११० (६७१५०)

यन्मां भवन्तो वक्ष्यन्ति कार्यमर्थसमन्वितम् ।
तदहं वः करिष्यामि नात्र कार्या विचारणा ॥ १२-५८-१११ (६७१५१)
तमूचुस्तत्र देवास्ते ते चैव परमर्षयः ।
नियतो यत्र धर्मो वै तमशङ्कः समाचर ॥ १२-५८-११२ (६७१५२)
प्रियाप्रिये परित्यज्य समः सर्वेषु जन्तुषु ।
कामं क्रोधं च लोभं च मानं चोत्सृज्य दूरतः ॥ १२-५८-११३ (६७१५३)
यश्च धर्मात्प्रविचलेल्लोके कश्चन मानवः ।
निग्राह्यस्ते स्वबाहुभ्यां शश्वद्धर्ममवेक्षता ॥ १२-५८-११४ (६७१५४)
प्रतिज्ञां चाधिरोहस्व मनसा कर्मणा गिरा ।
पालयिष्याम्यहं भौमं ब्रह्म इत्येव चासकृत् ॥ १२-५८-११५ (६७१५५)
यश्चात्र धर्म इत्युक्तो दण्डनीतिव्यपाश्रयः ।
तमशङ्कः करिष्यामि स्ववशो न कदाचन ॥ १२-५८-११६ (६७१५६)
अदण्ड्या मे द्विजाश्चेति प्रतिजानीष्व चाभिभो ।
लोकं च संकरात्कृत्स्नं त्राताऽस्मीति परंतप ॥ १२-५८-११७ (६७१५७)
वैन्यस्ततस्तानुवाच देवानृषिपुरोगमान् ।
ब्राह्मणा मे सहायाश्चेदेवमस्तु सुरर्षभाः ॥ १२-५८-११८ (६७१५८)
एवमस्त्विति वैन्यस्तु तैरुक्तो ब्रह्मवादिभिः ।
पुरोधाश्चाभवत्तस्य शुक्रो ब्रह्ममयो निधिः ॥ १२-५८-११९ (६७१५९)
मन्त्रिणो वालखिल्याश्च सारस्वत्यो गणस्तथा ।
महर्षिर्भगवान्गार्गस्तस्य सांवत्सरोऽभवत् ॥ १२-५८-१२० (६७१६०)
आत्मनाऽष्टम इत्येव श्रुतिरेषां परा नृषु ।
उत्पन्नौ बन्दिनौ चास्य तत्पूर्वौ सूतमागधौ ॥ १२-५८-१२१ (६७१६१)
तयो प्रीतो ददौ राजा पृथुर्वैन्यः प्रतापवान् ।
अनूपदेशं सूताय मगधं मागधाय च ॥ १२-५८-१२२ (६७१६२)
समतां वसुधायाश्च स सम्यगुदपादयत् ।
वैषम्यं हि परं भूमेरिति नः परमा श्रुतिः ॥ १२-५८-१२३ (६७१६३)
मन्वन्तरेषु सर्वेषु विषमा जायते मही ।
उज्जहार ततो वैन्यः शिलाजालान्समन्ततः ॥ १२-५८-१२४ (६७१६४)
धनुष्कोट्या महाराज तेन शैला विमर्दिताः ।
स विष्णुना च देवेन शक्रेण विबुधैः सह ।
ऋषिभिश्च प्रजापाल्ये ब्रह्मणा चाभिषेचितः ॥ १२-५८-१२५ (६७१६५)
तं साक्षात्पृथिवी भेजे रत्नान्यादाय पाण्डव ।
सागरः सरितां भर्ता हिमवांश्चाचलोत्तमः ॥ १२-५८-१२६ (६७१६६)
शक्रश्च धनमक्षय्यं प्रादात्तस्मै युधिष्ठिर ।
रुक्मं चापि महामेरुः स्वयं कनकपर्वतः ॥ १२-५८-१२७ (६७१६७)
यक्षराक्षसभर्ता च भगवान्नरवाहनः ।

धर्मे चार्थे च कामे च समर्थं प्रददौ धनम् ॥१२-५८-१२८ (६७१६८)
हया रथाश्च नागाश्च कोटिशः पुरुषास्तथा ।
प्रादुर्बभूवुर्वैन्यस्य चिन्तयानस्य पाण्डव ॥१२-५८-१२९ (६७१६९)
न जरा न च दुर्भिक्षं नाधयो व्याधयः कुतः ।
सरीसृपेभ्यः स्तेनेभ्यो न चान्येभ्यः कदाचन ।
भयमासीत्ततस्तस्य पृथिवी सस्यमालिनी ॥ १२-५८-१३० (६७१७०)
आपस्तस्तम्भिरे चास्य समुद्रमभियास्यतः ।
पर्वताश्च ददुर्मार्गं ध्वजभङ्गश्च नाभवत् ॥१२-५८-१३१ (६७१७१)
तेनेयं पृथिवी दुग्धा सस्यानि दश सप्त च ।
यक्षराक्षसनागानामीप्सितं यस्य यस्य यत् ॥१२-५८-१३२ (६७१७२)
तेन धर्मोत्तरश्चायं कृतो लोको महात्मना ।
रञ्जिताश्च प्रजाः सर्वास्तेन राजेति शब्द्यते ॥१२-५८-१३३ (६७१७३)
ब्राह्मणानां क्षतत्राणात्ततः क्षत्रिय उच्यते ।
प्रथिता धर्मतश्चेयं पृथिवी साधुभिः स्मृता ॥१२-५८-१३४ (६७१७४)
स्थापनं चाकरोद्विष्णुः स्वयमेव सनातनः ।
नातिवर्तिष्यते कश्चिद्राजंस्त्वामिति भारत ॥१२-५८-१३५ (६७१७५)
ततः स भगवान्विष्णुराविवेश च पार्थिवम् ।
देववन्नरदेवानां नमतीदं जगत्ततः ॥१२-५८-१३६ (६७१७६)
दण्डनीत्या च सततं रक्षितारं नरेश्वरम् ।
नाधर्षयेत्तथा कश्चिच्चारनिष्पन्ददर्शनात् ॥१२-५८-१३७ (६७१७७)
शुभं हि कर्म राजेन्द्र शुभत्वायोपकल्पते ।
आत्मना करणैश्चैव समस्येह महीक्षितः ॥१२-५८-१३८ (६७१७८)
को हेतुर्यद्वशे तिष्ठेल्लोको दैवादृते गुणात् ॥ १२-५८-१३९ (६७१७९)
विष्णोर्ललाटात्कमलं सौवर्णमभवत्तदा ।
श्रियः सकाशादर्थश्च जातो धर्मस्य पाण्डव ।
अथ धर्मस्तथैवार्थः श्रीश्च राज्ये प्रतिष्ठिता ॥१२-५८-१४१ (६७१८१)
सुकृतस्य क्षयाच्चैव स्वर्लोकादेत्य मेदिनीम् ।
पार्थिवो जायते तात दण्डनीतिविशारदः ॥१२-५८-१४२ (६७१८२)
माहात्म्येन च संयुक्तो वैष्णवेन नरो भुवि ।
बुद्ध्या भवति संयुक्तो माहात्म्यं चाधिगच्छति ॥१२-५८-१४३ (६७१८३)
स्थापितं च ततो देवैर्न कश्चिदतिवर्तते ।
तिष्ठत्येकस्य च वशे तं चैवानुविधीयते ॥१२-५८-१४४ (६७१८४)
शुभं हि कर्म राजेन्द्र शुभत्वायोपकल्पते ।
तुल्यस्यैकस्य येनायं लोको वचसि तिष्ठति ॥१२-५८-१४५ (६७१८५)
योऽस्य वै मुखमद्राक्षीत्सोऽस्य सर्वो वशानुगः ।
सुभगं चार्थवन्तं च रूपवन्तं च पश्यति ॥१२-५८-१४६ (६७१८६)

महत्त्वात्तस्य दण्डस्य नीतिर्विस्पष्टलक्षणा ।
नयश्चारश्च विपुलो येन सर्वमिदं ततम् ॥ १२-५८-१४७ (६७१८७)
आगमश्च पुराणानां महर्षीणां च संभवः ।
तीर्थवंशश्च वंशश्च क्षत्रियाणां युधिष्ठिर ॥ १२-५८-१४८ (६७१८८)
सकलं चातुराश्रम्यं चातुर्होत्रं तथैव च ।
चातुर्वर्ण्यं तथैवात्र चातुर्विद्यं च कीर्तिम् ॥ १२-५८-१४९ (६७१८९)
इतिहासोपवेदाश्च न्यायः कृत्स्नश्च वर्णितः ।
तपो ज्ञानमहिंसा च सत्यं दानममत्सरः ॥ १२-५८-१५० (६७१९०)
वृद्धोपसेवा दानं च शौचमुत्थानमेव च ।
सर्वभूतानुकम्पा च सर्वमत्रोपवर्णितम् ॥ १२-५८-१५१ (६७१९१)
भुवि वाचोगतं यच्च तच्च सर्वं समर्पितम् ।
तस्मिन्पैतामहे शास्त्रे पाण्डवेय न संशयः ॥ १२-५८-१५२ (६७१९२)
ततो जगति राजेन्द्र सततं शब्दितं बुधैः ।
देवाश्च नरदेवाश्च तुल्या इति विशांपते ॥ १२-५८-१५३ (६७१९३)
एतत्ते सर्वमाख्यातं महत्त्वं प्रति राजसु ।
कार्त्स्न्येन भरतश्रेष्ठ किमन्यदिह वर्तते ॥ ॥ १२-५८-१५४ (६७१९४)

इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि
अष्टपञ्चाशोऽध्यायः ॥ ५८.।
Mahabharata - Shanti Parva - Chapter Footnotes

१२-५८-१ कल्यं प्रातः ॥
१२-५८-५ आनुषत्वे समानेऽपि किंनिमित्तेयं
एकस्मिन्निग्राहनुग्रहशक्तिरिति पृच्छति य इत्यादिना ॥
१२-५८-१४ दण्डः दमनम् ।दाण्डिको दण्डप्रणेता ॥
१२-५८-१५ मोहो वैचित्यम् ॥
१२-५८-१६ प्रतिपत्तिविमोहात् ज्ञानलोपात् ॥
१२-५८-२० नात्यजन्दुष्टमदुष्टं च सर्वं स्वीचक्रुरित्यर्थः ॥
१२-५८-२१ ब्रह्म वेदः ।धर्मो यज्ञः ॥
१२-५८-२५ मर्त्यैः समतां याताः स्म ।स्वाहाद्यभावेन क्षीणाः स्म इत्यर्थः ॥
१२-५८-२६ हविर्धाराभिरूर्ध्वप्रवर्षिणः ।ततश्चान्नाभावान्नश्याम
इत्यर्थः ॥
१२-५८-३० पृथगर्थः त्रिवर्गफलापेक्षया विपरीतफलः
।पृथग्गुणः त्रिवर्गसाधनापेक्षया विपरीतसाधनः ॥
१२-५८-३१ मोक्षस्य त्रिवर्गो धर्मादिरन्यो निष्कामः
।धर्मादिर्भेदश्च सत्वादिगुणप्राधान्यनिमित्त इत्यर्थः।दण्डात्स्थानं

साम्यं वणिजां वृद्धिस्तपस्विनां क्षयश्चोराणां च भवतीत्याहार्धेन स्थानमिति ॥
१२-५८-३२ नीतिजान्षड्गुणानाह आत्मेति । आत्माचित्तम्। नीतिबलात्प्रजानां चित्तं दुःस्थितमपि सुस्थितं भवति। कुदेशोऽपि सुदेशो भवति। कलिरपि कृतं भवति। उपायाः साधनानि। कृत्यं कृतिनिर्वर्त्यं प्रयोजनम्। सहायाः सुहृदादयः ॥
१२-५८-३३ त्रयी कर्मकाण्डः । आन्वीक्षिकी ज्ञानकाण्डः। वार्ता कृषिवाणिज्यादिजीविकाकाण्डः। दण्डनीतिः पालनविद्या। एते धर्मादयस्तत्र ब्रह्मकृतशतसहस्राध्याये दर्शिताः ॥
१२-५८-३४ प्रणिधिर्गुप्तश्चारः । सच चारो विविधोपायः। ब्रह्मचार्यादिवेषधारी। एकैकस्मिन्स्थाने पृथक्पृथग्वेषः ॥
१२-५८-३५ सामादिचतुष्टयमुपेक्षा च पञ्चमीत्युपायाः ॥
१२-५८-३६ विभ्रमो भेदार्थे ॥
१२-५८-३७ भयेन संधिर्हीनः । सत्कारेण मध्यमः। वित्तग्रहणेनोत्तमः। तन्त्रयं संधिकारणं वर्णितम् ॥
१२-५८-३८ चत्वारो मित्रवृद्धिः कोशसंचयश्च स्वस्य मित्रनाशः कोशहानिश्च परस्येति ॥
१२-५८-३९ आसुरो विजयः सौप्तिके गतः । पञ्चवर्गोऽमात्यराष्ट्रदुर्गाणि बलं कोशश्च पञ्चमः। त्रिविधमुत्तममध्यमाधमभेदेन ॥
१२-५८-४० दण्डः सेना ॥
१२-५८-४१ विष्टिर्विष्टिगृहीता भारवाहाः । चराश्चाराः। देशिका उपदेष्टारो गुरवः ॥
१२-५८-४२ जंगमा महावृश्चिकादिजाः । अजंगमाः रक्तशृङ्गिकादयः। स्पर्शे वस्त्रादौ। अभ्यवहार्येऽन्नादौ। उपांशरभिचारादिरिति विविधो विषयोगरूपो दण्डः ॥
१२-५८-४७ मार्गगुणाः ग्रहनक्षत्रादिमार्गगुणाः । भूमिगुणाश्चतुरशीतिभूवलानि यामलोक्तानि। आत्मरक्षणं मन्त्रयन्त्रादिना। सर्गाणां चान्ववेक्षणम् इति झ। पाठः ॥
१२-५८-४८ कल्पनाः बलपुष्टिकरा योगाः । विविधाभिख्याश्चक्रव्यूहक्रौञ्चव्यूहादिनानानामानः ॥
१२-५८-४९ उत्पाता- ग्रहयुद्धादयो धूमकेत्वादयश्च । निपाताः उल्कापातभूमिकम्पादयः। शास्त्राणां पालनं तीक्ष्णीकरणम्। शास्त्राणां पालनं इति ट। ड। पाठः ॥

१२-५८-५० आपदां समूह आपदं तस्य काल आपदकालः ॥
१२-५८-५१ आख्यातमभिमन्त्रितदुन्दुभिष्वनिना प्रयाणादिकथनम्
। योगः पताकादिमन्त्रणादि। तयोः संचारः श्रवणदर्शनाभ्यां
परमोहनम्। एतत्सर्वं तत्र उक्तमिति सर्वत्र योज्यम् ॥
१२-५८-५२ गरदैः विषदैः प्रतिरूपकं प्रतिमा तत्कारकैस्तद्द्वारा
कार्मणकारिभिः कौलिकैः । श्रेणिमुख्याः बलाध्यक्षादयस्तेषामुपजापो
भेदनं तेन। वीरुधश्छेदनेन धान्याद्युच्छेदेन ॥
१२-५८-५३ नागानां दूषणं मन्त्रतन्त्रौषधादिना तेन परराष्ट्रस्य
पीडनमुक्तमिति प्रपूर्वेण संबन्धः ॥
१२-५८-५६ कण्टकशोधनं खलानामुन्मूलनम् । श्रमो
मल्लक्रीडा। व्यायामयोगः आयुधप्रयोगाभ्यासः ॥
१२-५८-५७ अर्थस्य काले दाने च इति झ । पाठः। अप्रसङ्गिता असंबन्धः ॥
१२-५८-५८ राजगुणाः उत्थानादयः ॥
१२-५८-६० पात्रेभ्यः प्रदानं प्रथमम् ॥
१२-५८-६१ विसर्गो दानं धर्मार्थं यज्ञार्थं द्वितीयम् । काम्यं
तृतीयम्। व्यसनाधाते चतुर्थम् ॥
१२-५८-६५ अवमर्दः परचक्रेण देशादेः पीडनम् ॥
१२-५८-६७ तानि द्रव्याणि षट् मणयः पशवः पृथ्वी वासो दास्यादि
काञ्चनमिति ॥
१२-५८-६९ मङ्गलं स्वर्णादिकं तस्यालम्भनं स्पर्शः । प्रतिक्रिया
अलंकरणम् ॥
१२-५८-७० एकस्याप्युत्थानप्रकारः । केतनजाः गृहजाः। क्रियाः
ध्वजारोहणाद्याः ॥
१२-५८-७१ अधिकरणेषु जनोपवेशनस्थानेषु चत्वरादिषु ॥
१२-५८-७२ जातितो गुणतश्च समुद्भवो मान्यत्वम् ॥
१२-५८-७३ द्वादशानां राज्ञां समूहो द्वादशराजिका । मध्यस्थस्य
विजिगीषोश्चतुर्दिक्षु चत्वारोऽरयस्तेभ्योऽपरे चत्वारो मित्राणि
तेभ्यः परे चत्वार उदासीना इति ॥
१२-५८-७५ हे भूरिदक्षिण ॥
१२-५८-७६ मूलकर्माणि कोशवृद्धिकराणि कृष्यादीनि तेषां क्रिया
करणप्रकारः ॥
१२-५८-८१ नीयते पुरुषार्थफलाय इदं जगत् दण्डं नयति प्रणयति
अनया या चेति वा ॥
१२-५८-८९ प्रजानामायुषः इति झ । पाठः। संचिक्षेप संक्षिप्तं
कृतवान् ॥
१२-५८-९० वैशालाक्षं बाहुदन्तकं

बार्हस्पत्यमित्युत्तरोत्तरसंक्षिप्तदण्डनीतिग्रन्थनामानि ॥
१२-५८-९८ पञ्चादिगोऽभवदिति झ ।पाठः।तत्र पञ्चातिगः
विषयातिगः मुक्त इत्यर्थः ॥
१२-५८-९९ अनङ्गइत्यङ्गस्यैव नामान्तरम् ॥
१२-५८-१२० सांवत्सरो ज्यौतिषिकः ॥
१२-५८-१२१ आत्मना स्वशरीरेण सहाष्टमः पृथुर्विष्णोः
सकाशादित्यर्थः ।तथाहि- विष्णुः प्रथमः।विरजा
द्वितीयः।कीर्तिमांस्तृतीयः।कदमश्चतुर्थः।अनङ्गः
पञ्चमः।अतिबलः षष्ठः।वेनः सप्तमः।पृथुरष्टम इति ॥
१२-५८-१३४ प्रथितावनता चेति विग्रहे वर्णलोपविकाराभ्यां पृथिवी ॥
१२-५८-१३५ स्थापनं मर्यादाम् ॥
१२-५८-१३६ तपसा भगवान्विष्णुराविवेश च भूमिपम् ।इति झ।पाठः ॥
१२-५८-१३८ चाराणां निष्पन्दः संचारस्तद्द्वारा यद्दर्शनं
लोकवृत्तान्तस्य महीक्षितः कर्मेति संबन्धः ॥
१२-५८-१३९ विष्णुर्भूमिपमाविवेशेत्युक्तं तत्रोपपत्तिः क इत्यर्धेन ॥
१२-५८-१४४ स्थापनामथ चेद्देवीं न कश्चिदतिवर्तत इति ट
।ड।थ।पाठः ॥
१२-५८-१४५ तुल्यस्य स्ताद्यवयवैः समस्य ॥
१२-५८-१४७ दण्डसामर्थ्यादिव लोके नीत्यादिकं दृश्यत इत्यर्थः ॥
१२-५८-१४८ आगमादिकं चात्र ग्रन्थे कीर्तितम् ॥

---

शन्तिपर्व-अध्यय०५९
॥ श्रीः ॥
१२.५९. अध्यायः ५९

Mahabharata - Shanti Parva - Chapter Topics
भीष्मेण युधिष्ठिरंप्रति चातुर्वर्ण्यधर्मकथनम् ॥ १.।
Mahabharata - Shanti Parva - Chapter Text

१२-५९-० (६७१९५)
वैशंपायन उवाच।१२-५९-०क्ष् (५४७९)
ततः पुनः स गाङ्गेयमभिवाद्य पितामहम् ।
प्राञ्जलिर्नियतो भूत्वा पर्यपृच्छद्युधिष्ठिरः ॥१२-५९-१ (६७१९६)
के धर्माः सर्ववर्णानां चातुर्वर्ण्यस्य के पृथक् ।
चातुर्वर्ण्याश्रमाणां च राजधर्माश्च के मताः ॥१२-५९-२ (६७१९७)
केन वै वर्धते राष्ट्रं राजा केन विवर्धते ।
केन पौराश्च भृत्याश्च वर्धन्ते भरतर्षभ ॥१२-५९-३ (६७१९८)

कोशं दण्डं च दुर्गं च सहायान्मन्त्रिणस्तथा ।
ऋत्विक्पुरोहिताचार्यान्कीदृशान्वर्जयेन्नृपः ॥१२-५९-४ (६७१९९)
केषु विश्वसितव्यं स्याद्राज्ञा कस्यांचिदापदि ।
कुतो वाऽऽत्मा दृढं रक्ष्यस्तन्मे ब्रूहि पितामह ॥१२-५९-५ (६७२००)
ग्द्वैधीभावे च भृत्यानां शपथः कीदृशो भवेत् ।
अधर्मस्य फलं यच्च शपथस्य विलङ्घने ॥१२-५९-६ (६७२०१)
सर्वमेतद्यथातत्वं व्यवहारं च तादृशम् ।
समासव्यासयोगेन कथयस्व पितामह ॥' १२-५९-७ (६७२०२)
भीष्म उवाच।१२-५९-८क्ष् (५४८०)
नमो धर्माय महते नमः कृष्णाय वेधसे ।
ब्राह्मणेभ्यो नमस्कृत्य धर्मान्वक्ष्यामि शाश्वतान् ॥१२-५९-८ (६७२०३)
अक्रोधः सत्यवचनं संविभागश्च सर्वशः ।
प्रजनं स्वेषु दारेषु शौचमद्रोह एव च ॥१२-५९-९ (६७२०४)
आर्जवं भृत्यभरणं त एते सार्ववर्णिकाः ।
ब्राह्मणस्य तु यो धर्मस्तं ते वक्ष्यामि केवलम् ॥१२-५९-१० (६७२०५)
दममेव महाराज धर्ममाहुः पुरातनम् ।
स्वाध्यायोऽध्यापनं चैव तत्र कर्म समाप्यते ॥१२-५९-११ (६७२०६)
तं चेद्द्विजमुपागच्छेद्वर्तमानं स्वकर्मणि ।
अकुर्वाणं विकर्माणि शान्तं प्रज्ञानतर्पितम् ॥१२-५९-१२ (६७२०७)
कुर्वीतापत्यसंतानमथो दद्याद्यजेत च ।
संविभज्य च भोक्तव्यं धनं सद्भिरितीष्यते ॥१२-५९-१३ (६७२०८)
परिनिष्ठितकार्यस्तु स्वाध्यायेनैव वै द्विजः ।
कुर्यादन्यन्न वा कुर्यान्मैत्रो ब्राह्मण उच्यते ॥१२-५९-१४ (६७२०९)
क्षत्रियस्यापि यो धर्मस्तं ते वक्ष्यामि भारत ।
दद्याद्राजा न याचेत यजेत न च याजयेत् ॥१२-५९-१५ (६७२१०)
नाध्यापयेदधीयीत प्रजाश्च परिपालयेत् ।
नित्योद्युक्तो दस्युवदे रणे कुर्यात्पराक्रमम् ॥१२-५९-१६ (६७२११)
ये तु क्रतुभिरीजानाः श्रुतवन्तश्च भूमिपाः ।
य एवाहवजेतारस्त एषां लोकजित्तमाः ॥१२-५९-१७ (६७२१२)
अविक्षतेन देहेन समराद्यो निवर्तते ।
क्षत्रियो नास्य तत्कर्म प्रशंसन्ति पुराविदः ॥१२-५९-१८ (६७२१३)
एवं हि क्षत्रबन्धूनां धर्ममाहुः प्रधानतः ।
नास्य कृत्यतमं किंचिदन्यद्दस्युनिबर्हणात् ॥१२-५९-१९ (६७२१४)
दानमध्ययनं यज्ञो राज्ञां क्षेमो विधीयते ।
तस्माद्राज्ञा विशेषेण योद्धव्यं धर्ममीप्सता ॥१२-५९-२० (६७२१५)
स्वेषु धर्मेष्ववस्थाप्यः प्रजाः सर्वा महीपतिः ।

धर्मेण सर्वकृत्यानि शमनिष्ठानि कारयेत् ॥१२-५९-२१ (६७२१६)
परिनिष्ठितकार्यस्तु नृपतिः परिपालनात् ।
कुर्यादन्यन्न वा कुर्यादैन्द्रो राजन्य उच्यते ॥१२-५९-२२ (६७२१७)
वैश्यस्यापि हि यो धर्मस्तं ते वक्ष्यामि शाश्वतम् ।
दानमध्ययनं यज्ञः शौचेन धनसंचयः ॥१२-५९-२३ (६७२१८)
पितृवत्पालयेद्वैश्यो युक्तः सर्वान्पशूनिह ।
विकर्म तद्भवेदन्यत्कर्म यत्स समाचरेत् ॥१२-५९-२४ (६७२१९)
रक्षया स हि तेषां वै महत्सुखमवाप्नुयात् ।
प्रजापतिर्हि वैश्याय सृष्ट्वा परिददौ पशून् ॥१२-५९-२५ (६७२२०)
ब्राह्मणाय च राज्ञे च सर्वाः परिददे प्रजाः ।
तस्य वृत्तिं प्रवक्ष्यामि यच्च तस्योपजीवनम् ॥१२-५९-२६ (६७२२१)
पण्णामेकां पिबेद्धेनुं शताच्च मिथुनं हरेत् ।
लये च सप्तमो भागस्तथा शृङ्गे कला खुरे ॥१२-५९-२७ (६७२२२)
सस्यानां सर्वबीजानामेषा सांवत्सरी भृतिः ॥ १२-५९-२८ (६७२२३)
न च वैश्यस्य कामः स्यान्न रक्षेयं पशूनिति ।
वैश्ये चेच्छति नान्येन रक्षितव्याः कथंचन ॥१२-५९-२९ (६७२२४)
शूद्रस्यापि हि यो धर्मस्तं ते वक्ष्यामि भारत ।
प्रजापतिर्हि वर्णानां दासं शूद्रमकल्पयत् ॥१२-५९-३० (६७२२५)
तस्माच्छूद्रस्य वर्णानां परिचर्या विधीयते ।
तेषां शुश्रूषणाच्चैव महत्सुखमवाप्नुयात् ॥१२-५९-३१ (६७२२६)
शूद्र एतान्परिचरेत्त्रीन्वर्णाननसूयकः ।
संचयांश्च न कुर्वीत जातु शूद्रः कथंचन ॥१२-५९-३२ (६७२२७)
पापीयान्हि धनं लब्ध्वा वशे कुर्याद्गरीयसः ।
राज्ञा वा समनुज्ञातः कामं कुर्वीत धार्मिकः ॥१२-५९-३३ (६७२२८)
तस्य वृत्तिं प्रवक्ष्यामि यच्च तस्योपजीवनम् ।
अवश्यं भरणीयो हि वर्णानां शूद्र उच्यते ॥१२-५९-३४ (६७२२९)
छत्रं वेष्टनमौशीरमुपानद्व्यजनानि च ।
यातयामानि देयानि शूद्राय परिचारिणे ॥१२-५९-३५ (६७२३०)
अधार्याणि विशीर्णानि वसनानि द्विजातिभिः ।
शूद्रायैव प्रदेयानि तस्य धर्मधनं हि तत् ॥१२-५९-३६ (६७२३१)
यंच कश्चिद्द्विजातीनां शूद्रः शुश्रूषुराव्रजेत् ।
कल्प्यां तेन तु तस्याहुर्वृत्तिं धर्मविदो जनाः ॥१२-५९-३७ (६७२३२)
देयः पिण्डोऽनपत्याय भर्तव्यौ वृद्धदुर्बलौ ।
शूद्रेण तु न हातव्यो भर्ता कस्यांचिदापदि ॥१२-५९-३८ (६७२३३)
अतिरेकेण भर्तव्यो भर्ता द्रव्यपरिक्षये ।
न हि स्वमस्ति शूद्रस्य भर्तृहार्यधनो हि सः ॥१२-५९-३९ (६७२३४)

उक्तस्त्रयाणां वर्णानां यज्ञस्त्रय्येव भारत ।
स्वाहाकारवषट्कारौ मन्त्रः शूद्रे न विद्यते ॥ १२-५९-४० (६७२३५)
तस्माच्छूद्रः पाकयज्ञैयजेताव्रतवान्स्वयम् ।
पूर्णपात्रमयीमाहुः पाकयज्ञस्य दक्षिणाम् ॥ १२-५९-४१ (६७२३६)
शूद्रः पैजवनो नाम सहस्राणां शतं ददौ ।
ऐन्द्राग्नेन विधानेन दक्षिणामिति नः श्रुतम् ॥ १२-५९-४२ (६७२३७)
यतो हि सर्ववर्णानां यज्ञस्तस्यैव भारत ॥ १२-५९-४३ (६७२३८)
अग्रे सर्वेषु यज्ञेषु श्रद्धायज्ञो विधीयते ।
दैवतं हि महच्छ्रद्धा पवित्रं यजतां च यत् ।
दैवतं हि परं विप्राः स्वेनस्वेन परस्परम् ॥ १२-५९-४४ (६७२३९)
अयजन्निह सत्रैस्ते तैस्तैः कामैः समाहिताः ।
संसृष्टा ब्राह्मणैरेव त्रिषु वर्णेषु सृष्टयः ॥ १२-५९-४५ (६७२४०)
देवानामपि ये देवा यद्ब्रूयुस्ते परं हितम् ।
तस्माद्वर्णैः सर्वयज्ञाः संसृज्यन्ते न काम्यया ॥ १२-५९-४६ (६७२४१)
ऋग्यजुः सामवित्पूज्यो नित्यं स्याद्देववद्द्विजः ।
अनृग्यजुरसामा च प्राजापत्य उपद्रवः ।
यज्ञो मनीषया तात सर्ववर्णेषु भारत ॥ १२-५९-४७ (६७२४२)
नास्य यज्ञकृतो देवा ईहन्ते नेतरे जनाः ।
ततः सर्वेषु वर्णेषु श्रद्धायज्ञो विधीयते ॥ १२-५९-४८ (६७२४३)
स्वं दैवतं ब्राह्मणः स्वेन नित्यं
परान्वर्णानयजन्नैवमासीत् ।
अधरो वितानस्त्वथ तत्र सृष्टो
न ब्राह्मणस्त्रिषु वर्णेषु राजन् ॥ १२-५९-४९ (६७२४४)
तस्माद्वर्णा ऋजवो ज्ञातिवर्णाः
संसृज्यन्ते तस्य विकार एव ।
एकं साम यजुरेकमृगेका
विप्रश्चैको निश्चये तेषु सृष्टः ॥ १२-५९-५० (६७२४५)
अत्र गाथा यज्ञगीताः कीर्तयन्ति पुराविदः ।
वैखानसानां राजेन्द्र मुनीनां यष्टुमिच्छताम् ॥ १२-५९-५१ (६७२४६)
उदितेऽनुदिते वाऽपि श्रद्दधानो जितेन्द्रियः ।
वह्निं जुहोति धर्मेण श्रद्धा वै कारणं महत् ॥ १२-५९-५२ (६७२४७)
यत्स्कन्नमस्य तत्पूर्वं यदस्कन्नं तदुत्तरम् ।
बहूनि यज्ञरूपाणि नानाकर्मफलानि च ॥ १२-५९-५३ (६७२४८)
तानि यः संप्रजानाति ज्ञाननिश्चयनिश्चितः ।
द्विजातिः श्रद्धयोपेतः स यष्टुं पुरुषोऽर्हति ॥ १२-५९-५४ (६७२४९)
स्तेनो वा यदि वा पापो यदि वा पापकृत्तमः ।

यष्टुमिच्छति यज्ञं यः साधुमेव वदन्ति तम् ॥१२-५९-५५ (६७२५०)
ऋषयस्तं प्रशंसन्ति साधु चैतदसंशयम् ।
सर्वथा सर्वदा वर्णैर्यष्टव्यमिति निर्णयः ॥१२-५९-५६ (६७२५१)
न हि यज्ञसमं किंचित्त्रिषु लोकेषु विद्यते ।
तस्माद्यष्टव्यमित्याहुः पुरुषेणानसूयता ।
श्रद्धापवित्रमाश्रित्य यथाशक्ति यथेच्छया ॥ ॥ १२-५९-५७ (६७२५२)

इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि
एकोनषष्टितमोऽध्यायः ॥५९.।
Mahabharata - Shanti Parva - Chapter Footnotes

१२-५९-२ सर्ववर्णानां अनुलोमविलोमजादीनाम् ।चातुर्वर्ण्यस्य ये आश्रमाः ब्राह्मणस्य चत्वार आश्रमाः क्षत्रियस्य त्रयो वैश्यस्य द्वौ शूद्रस्यैक इति तेषाम् ॥
१२-५९-११ तत्राध्ययने ।तावतैव नैष्ठिकः कृतार्थो भवतीत्यर्थः ॥
१२-५९-१२ स्वयमुपागते वित्ते दारक्रियापूर्वकं अपत्यसंतानमिच्छेत्स इत्याह द्वाभ्यां तं चेदिति ॥
१२-५९-२७ षण्णां धेनूनां रक्षको वैश्य एकस्याः क्षीरं स्ववेतनं हरेत् ।शतस्य रक्षको वर्षे एकं गोवृषभमिथुनं वेतनं हरेत्।लब्धाच्च सप्तमं भागमिति झ।पाठः।तत्र वाणिज्ये तु लब्धात्सप्तमं भागं धनिकाद्धरेत्।गवयादिशृङ्गवाणिज्ये लाभात्सप्तममेव।खुरे पशुविशेषखुरे महामूल्ये कला षोडशो भाग इत्यर्थः ॥
१२-५९-२८ एवं सस्यानामपि सप्तममेवांशं हरेत् ॥
१२-५९-३३ कुर्वीत संचयानित्यपकृष्यते ॥
१२-५९-३५ यातयामानि भुक्तभोगानि जीर्णानीतियावत् ॥
१२-५९-३७ द्विजातीनां मध्ये यं कंचित्प्रति ।तेन द्विजातिना ॥
१२-५९-३९ अतिरेकेण स्वकुटुम्बपोषणादाधिक्येन ।भर्ता पोष्टा ॥
१२-५९-४१ पाकयज्ञैः क्षुद्रयज्ञैः ।अव्रतवान् श्रौतव्रतोपायहीनः ॥
१२-५९-४२ सहस्राणां शतं लक्षं पूर्णपात्राणि ।शूद्रः पैलवनो नामेति ड।द।पाठः ॥
१२-५९-४३ सर्ववर्णानां त्रैवर्णिकानां यो यज्ञः स तस्यैव शूद्रस्यैव भवति तस्य तत्सेवकत्वात् ॥
१२-५९-४५ सृष्टयः संतानानि तेन सर्वेषां वर्णानां ब्राह्मणजत्वादस्त्येव शूद्रस्यापि यज्ञेऽधिकार इत्यर्थः ॥
१२-५९-४६ यद्ब्रूयुस्ते तत्ते तव परं हितम् ।वर्णैः

सशूद्रैः। सर्वयज्ञाः श्रौताः स्मार्ताश्च न काम्यया स्वभावात्संसृज्यन्त इति पूर्वस्योपसंहारः ॥
१२-५९-४७ द्विजस्त्रैवर्णिकः पूज्यः । शूद्रेण उपद्रवतीति तत्समीपगामित्वादुपद्रवो दासः शूद्रः स वेदहीनोऽपि प्राजापत्यः प्रजापतिदेवताकः। यथाग्नेयो ब्राह्मण ऐन्द्रः क्षत्रियस्तद्वत्। तथाच मानसे देवतोद्देशेन द्रव्यत्यागात्मके यज्ञे सर्वे वर्णा अधिक्रियन्त इत्यर्थः ॥
१२-५९-४८ अस्य मानसयज्ञकर्तुर्देवा इतरे जनाश्च न ईहन्ते इति न अपितु श्रद्धापूतत्वात्सर्वेप्यस्य यज्ञे भागं कामयन्त इत्यर्थः ॥
१२-५९-४९ ब्राह्मणस्त्रयाणामपि वर्णानां स्वमसाधारणं दैवतमतः कारणात्ते यागं कृतवन्तएव ॥
१२-५९-५० सर्वेऽपि वर्णा ऋजवः साधवएव यज्ञसंयोगात् । एवं धर्मसाम्येऽपि ज्ञातिसाम्यं नास्तीत्याशंक्याह। ज्ञातिवर्मा अपि क्षत्रियवैश्यशूद्रास्तस्य ब्राह्मणस्यैव विकारे क्षत्रियादिकन्यासूत्पन्ने मूर्धाभिषिक्तादौ संसृज्यन्तएव। तेन धर्मतो जन्मतश्च सर्वे वर्णा ब्राह्मणसंसृष्टा इति स्थितम्। तत्र हेतुमाह एक इति। तेषु तत्त्वनिश्चये क्रियमाणे एको विप्रो ब्रह्मैव प्रथमो ब्राह्मणः सृष्टो जातः। ब्राह्मणसंततित्वात्सर्वेऽप्येते ब्राह्मणा एवेत्यर्थः। तत्र दृष्टान्तः। एकं सामेति। अकारो वै सर्वा वाक्सैषा स्पर्शोष्मभिर्व्यज्यमाना बह्वी नानारूपा भवतीति श्रुतेरेकमकाररूपमेवाक्षरं यथा सामादिरूपं तथा ब्रह्मैव ब्राह्मणादिरूपमित्यर्थः। तस्माद्वर्णाद्बहवो राजधर्माः संसृज्यन्ते तस्य विपाक एषः। एकं साम यजुरेकमृगेका विप्रश्चैको निश्चयस्तेषु दृष्टः इति थ। पाठः ॥
१२-५९-५१ यज्ञगीता विष्णुगीताः ॥
१२-५९-५३ बह्वचब्राह्मणे षोडशकमग्निहोत्रमुक्तम् । तत्र मारुतं विष्यन्दमानमिति स्कन्नमपि मरुद्दैवत्यं भवतीति तत्पूर्वमाद्यमग्निहोत्रं यदस्कन्नं यथाविधिहुतमुत्तर सर्वोत्कृष्टम् ॥
बहूनीति रौद्रादीनि ॥
१२-५९-५४ तानि षोडशाऽग्निहोत्ररूपाणि ॥
१२-५९-५५ यज्ञं विष्णुम् । यष्टुं यज्ञदानादिना आराधितुम् ॥
१२-५९-५७ श्रद्धापवित्रं यथा स्यात्तथा यष्टव्यमिति संबन्धः । आश्रित्य शास्त्रमिति शेषः ॥

---

शन्तिपर्व-अध्यय०६०
॥ श्रीः ॥

१२.६०. अध्यायः ६०

Mahabharata - Shanti Parva - Chapter Topics
भीष्मेण युधिष्ठिरंप्रति आश्रमचतुष्टयधर्मकथनम् ॥ १.।
Mahabharata - Shanti Parva - Chapter Text

१२-६०-० (८०७५३)
भीष्म उवाच। १२-६०-०क्ष् (६६८४)
आश्रमाणां महाबाहो शृणु सत्यपराक्रम ।
चतुर्णामपि नामानि कर्माणि च युधिष्ठिर ॥ १२-६०-१ (८०७५४)
वानप्रस्थं भैक्षचर्यं गार्हस्थ्यं च महाश्रमम् ।
ब्रह्मचर्याश्रमं प्राहुश्चतुर्थं ब्रह्मणेरितम् ॥ १२-६०-२ (८०७५५)
चूडाकरणसंस्कारं द्विजातित्वमवाप्य च ।
आधानादीनि कर्माणि प्राप्य वेदानधीत्य च ॥ १२-६०-३ (८०७५६)
सदारो वाऽप्यदारो वा विनीतः संयतेन्द्रियः ।
वानप्रस्थाश्रमं गच्छेत्कृतकृत्यो गृहाश्रमात् ॥ १२-६०-४ (८०७५७)
तत्रारण्यकशास्त्राणि समधीत्य स धर्मवित् ।
ऊर्ध्वरेताः प्रजा हित्वा गच्छत्यक्षरसात्मताम् ॥ १२-६०-५ (८०७५८)
एतान्येव निमित्तानि मुनीनामूर्ध्वरेतसाम् ।
कर्तव्यानीह विप्रेण राजन्नादौ विपश्चिता ॥ १२-६०-६ (८०७५९)
चरितब्रह्मचर्यस्य ब्राह्मणस्य विशांपते ।
भैक्षचर्यास्वधीकारः प्रशस्तो देहमोक्षणे ॥ १२-६०-७ (८०७६०)
यत्रास्तमितशायी स्यान्निरग्निरनिकेतनः ।
यथोपलब्धजीवी स्यान्मुनिर्दान्तो जितेन्द्रियः ॥ १२-६०-८ (८०७६१)
निराशीर्निर्नमस्कारो निर्भोगो निर्विकारवान् ।
विप्रः क्षेमाश्रमं प्राप्तो गच्छत्यक्षरसात्मताम् ॥ १२-६०-९ (८०७६२)
अधीत्य वेदान्कृतसर्वकृत्यः
संतानमुत्पाद्य सुखानि भुक्त्वा ।
समाहितः प्रचरेद्दुश्चरं तं
गार्हस्थ्यधर्मं मुनिधर्मजुष्टम् ॥ १२-६०-१० (८०७६३)
स्वदारतुष्टस्त्वृतुकालगामी
नियोगसेवी न शठो न जिह्मः ।
मिताशनो देवरतः कृतज्ञः
सत्यो मृदुश्चानृशंसः क्षमावान् ॥ १२-६०-११ (८०७६४)
दान्तो विधेयो हव्यकव्याप्रमत्तो
ह्यन्नस्य दाता सततं द्विजेभ्यः ।

अमत्सरी सर्वलिङ्गप्रदाता
वैताननित्यश्च गृहाश्रमी स्यात् ॥ १२-६०-१२ (८०७६५)
अथात्र नारायणगीतमाहु
र्महर्षयस्तात महानुभावाः ।
महार्थमत्यन्ततपः प्रयुक्तं
तदुच्यमानं हि मया निबोध ॥ १२-६०-१३ (८०७६६)
सत्यार्जवं चातिथिपूजनं च
धर्मस्तथार्थश्च रतिः स्वदारैः ।
निषेवितव्यानि सुखानि लोके
ह्यस्मिन्परे चैव मतं ममैतत् ॥ १२-६०-१४ (८०७६७)
भरणं पुत्रदाराणां वेदानां चानुपालनम् ।
सेवतामाश्रमं श्रेष्ठं वदन्ति परमर्षयः ॥ १२-६०-१५ (८०७६८)
एवं हि यो ब्राह्मणो यज्ञशीलो
गार्हस्थ्यमध्यावसते यथावत् ।
गृहस्थवृत्तिं प्रतिगाह्य सम्य
क्स्वर्गे विशुद्धं फलमश्नुते सः ॥ १२-६०-१६ (८०७६९)
तस्य देहं परित्यज्य इष्टकामाक्षया मताः ।
आनन्त्यायोपकल्पन्ते सर्वतोक्षिशिरोमुखाः ॥ १२-६०-१७ (८०७७०)
वसन्नेको जपन्नेकः सर्वान्वेदान्युधिष्ठिर ।
एकस्मिन्नेव चाचार्ये शुश्रूषुर्मलपङ्कवान् ॥ १२-६०-१८ (८०७७१)
ब्रह्मचारी व्रती नित्यं नित्यं दीक्षापरो वशी ।
ग्गुरुच्छायानुगो नित्यमधीयानः सुयन्त्रितः।'
अविचाल्यव्रतोपेतं कृत्यं कुर्वन्वसेत्सदा ॥ १२-६०-१९ (८०७७२)
शुश्रूषां सततं कुर्वन्गुरोः संप्रणमेत च ।
षट्कर्मस्वनिवृत्तश्च न प्रवृत्तश्च सर्वशः ॥ १२-६०-२० (८०७७३)
नाचरत्यधिकारेण सेवेत द्विषतो न च ।
एषोऽऽश्रमपदस्तात ब्रह्मचारिण इष्यते ॥ ॥ १२-६०-२१ (८०७७४)

इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि
षष्टितमोऽध्यायः ॥ ६०.।

Mahabharata - Shanti Parva - Chapter Footnotes

१२-६०-२ क्रमो न विवक्षितः । चतुर्थं ब्राह्मणैर्वृतमिति झ। पाठः ॥
१२-६०-५ अक्षरसाम्यतमिति ट । द। पाठः ॥
१२-६०-६ एतानि द्विजत्वावाप्त्यादीनि ॥
१२-६०-७ मध्यममाश्रमद्वयमनित्यमित्याह चरितेति ॥

१२-६०-११ शठो धूर्तः । जिह्मः कुटिलः ॥
१२-६०-१२ विधेयः गुरुशास्त्राज्ञापालकः । अप्रमत्तः अवहितः। सर्वेभ्यो लिङ्गयुक्तेभ्य आश्रमेभ्यः प्रदाताऽन्नादेः। लिङ्गप्रदातेति मध्यमपदलोपी समासः। वैतानं श्रौतकर्म तत्र नित्यः ॥
१२-६०-१७ कामाः अक्षया इति च्छेदः । संधिरार्षः। सर्वतोक्षिशिरोमुखा इत्यनेन यत्रय देशे काले वा योग्यं संकल्पयति तत्सर्वं सद्य उपतिष्ठतीत्यर्थः ॥

---

शन्तिपर्व-अध्यय०६१
॥ श्रीः ॥
१२.६१. अध्यायः ६१

Mahabharata - Shanti Parva - Chapter Topics
युधिष्ठिरंप्रति भीष्मेण ब्राह्मणधर्मकथनम् ॥ १.।
Mahabharata - Shanti Parva - Chapter Text

१२-६१-० (८०७७५)
युधिष्ठिर उवाच। १२-६१-०क्ष् (६६८५)
पुनः शिवान्महोदर्कानहिंस्रांल्लोकसंमतान् ।
ब्रूहि धर्मान्सुखोपायान्मद्विधानां सुखावहान् ॥ १२-६१-१ (८०७७६)
भीष्म उवाच। १२-६१-२क्ष् (६६८६)
ब्राह्मणस्य तु चत्वारस्त्वाश्रमा विहिताः प्रभो ।
वर्णास्तान्नानुवर्तन्ते त्रयो भारतसत्तम ॥ १२-६१-२ (८०७७७)
उक्तानि कर्माणि बहूनि राज
न्स्वर्ग्याणि राजन्यपरायणानि ।
शास्त्रस्य सर्वस्य विधौ स्मृतानि
क्षात्रे हि सर्वं विहितं यथावत् ॥ १२-६१-३ (८०७७८)
क्षात्राणि वैश्यानि च सेवमानः
शौद्राणि कर्माणि च ब्राह्मणः सत् ।
अस्मिँल्लोके निन्दितो मन्दचेताः ।
परे च लोके निरयं प्रयाति ॥ १२-६१-४ (८०७७९)
या संज्ञा विहिता लोके दासे शुनि वृके पशौ ।
विकर्मणि स्थिते विप्रे तां संज्ञां कुरु पाण्डव ॥ १२-६१-५ (८०७८०)
षट्कर्मसंप्रवृत्तस्य आश्रमेषु चतुर्ष्वपि ।
सर्वधर्मोपपन्नस्य तद्भूतस्य कृतात्मनः ॥ १२-६१-६ (८०७८१)
ब्राह्मणस्य विशुद्धस्य तपस्यभिरतस्य च ।

निराशिषो वदान्यस्य लोका ह्यक्षरसंज्ञिताः ॥ १२-६१-७ (८०७८२)
यो यस्मिन्कुरुते कर्म यादृशं येन यत्र च ।
तादृशं तादृशेनैव सगुणं प्रतिपद्यते ॥ १२-६१-८ (८०७८३)
वृद्ध्या कृषिवणिक्त्वेन जीवसंजीवनेन च ।
वेत्तुमर्हसि राजेन्द्र स्वाध्यात्मगुणितेन च ॥ १२-६१-९ (८०७८४)
कालसंचोदितः काले कालपर्यायनिश्चितः ।
उत्तमाधममध्यानि कर्माणि कुरुतेऽवशः ॥ १२-६१-१० (८०७८५)
अन्तवन्ति प्रदानानि परं श्रेयस्कराणि च ।
स्वकर्मविहितो लोको ह्यक्षरः सर्वतोमुखः ॥ ॥ १२-६१-११ (८०७८६)

इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि
एकषष्टितमोऽध्यायः ॥ ६१.।
Mahabharata - Shanti Parva - Chapter Footnotes

१२-६१-६ षड्कर्माणि प्राणायामः प्रत्याहारो ध्यानं धारणा तर्क
समाधिरिति ।इज्यादीनामाश्रमान्तरेष्वयोगात्।सर्वधर्मोऽहिंसा ॥
१२-६१-७ तपसि विचारे ।अक्षरसंज्ञिताः अक्षयाः ॥
१२-६१-८ यः पुमान्यस्मिन्नवस्थाविशेषे यत्र देशे काले वा
येन फलेन निमित्तेन यत्कर्म करोति साध्वसाधु वा तत्सकलं
लोभाच्चिराभ्यासाच्च सगुणमेवेति प्रतिपद्यते नत्विदं निन्द्यमिति
ततो विरज्यत इत्यर्थः ॥
१२-६१-९ जीवै संजीवनं मृगयाजीवित्वं तेन ।वृभ्द्यादिभिः
समानमिति हेत्तुमर्हसि उक्तहेतोरित्यर्थः ॥
१२-६१-१० कालेन पर्येत्याविर्भवतीति कालपर्यायः प्राग्भवीयो
वासनासमूहस्तेन निश्चितः ॥

---

शन्तिपर्व-अध्यय०६२
॥ श्रीः ॥
१२.६२. अध्यायः ६२

Mahabharata - Shanti Parva - Chapter Topics
भीष्मेण युधिष्ठिरंप्रति ब्राह्मणैस्त्याज्यधर्मकथनम् ॥ १.। तथा
क्षत्रियादिधर्मकथनपूर्वकं राजधर्मप्रशंसनम् ॥ २.।
Mahabharata - Shanti Parva - Chapter Text

१२-६२-० (६७२५३)

भीष्म उवाच। १२-६२-०क्ष् (५४८१)
ज्याकर्षणं शत्रुनिवर्हणं च
कृपिर्वणिज्या पशुपालनं च ।
शुश्रूषणं चापि तथाऽर्थहेतो
रकार्यमेतत्परमं द्विजस्य ॥ १२-६२-१ (६७२५४)
सेव्यं तु ब्रह्म षट्कर्म गृहस्थेन मनीषिणा ।
कृतकृत्यस्य चारण्ये वासो विप्रस्य शस्यते ॥१२-६२-२ (६७२५५)
राजप्रेष्यं कृषिधनं जीवनं च वणिज्यया ।
कौटिल्यं कौलटेयं च ब्राह्मणस्य विगर्हितम् ॥१२-६२-३ (६७२५६)
शूद्रो राजन्भवति ब्रह्मबन्धु
र्दुश्चारित्रो यश्च धर्मादपेतः ।
वृपलीपतिः पिशुनो नर्तनश्च ।
ग्रामप्रेष्यो यश्च भवेद्विकर्मा ॥ १२-६२-४ (६७२५७)
गएवंविधो ब्राह्मणः कौरवेन्द्र
वृत्तापेतो यो भवेन्मन्दचेताः। '
जपन्वेदानजपंश्चापि राजन्
समः शूद्रैर्दासवच्चापि भोज्यः ।
एते सर्वे शूद्रसमा भवन्ति
राजन्नेतान्वर्जयेद्देवकृत्ये ॥ १२-६२-५ (६७२५८)
निर्मर्यादे वाक्छठे क्रूरवृत्तौ ।
हिंसाकामे त्यक्तवृत्तस्वधर्मो ।
हव्यं कव्यं यानि चान्यानि राजन्
देयान्यदेयानि भवन्ति तस्मिन् ॥ १२-६२-६ (६७२५९)
तस्माद्धर्मो विहितो ब्राह्मणस्य
दमः शौचं चार्जवं चापि राजन् ।
तथा विप्रस्याश्रमाः सर्व एव
पुरा राजन्ब्रह्मणा संनिसृष्टाः ॥ १२-६२-७ (६७२६०)
यः स्याद्दान्तः सोमपाश्चार्यशीलः
सानुक्रोशः सर्वसहो निराशीः ।
ऋजुर्मृदुरनृशंसः क्षमावान्
स वै विप्रो नेतरः पापकर्मा ॥ १२-६२-८ (६७२६१)
विप्रं वैश्यं राजपुत्रं च राजन्
लोकाः सर्वे संश्रिता धर्मकामाः ।
तस्माद्वर्णाञ्जातिधर्मेषु सक्ता
ञ्जेतुं विष्णुर्नेच्छति पाण्डुपुत्र ॥ १२-६२-९ (६७२६२)
लोकश्चायं सर्वलोकस्य न स्या

च्चातुर्वर्ण्यं वेदवादाश्च न स्युः ।
सर्वाश्चेज्याः सर्वलोकक्रियाश्च
सद्यः सर्वे चाश्रमाश्चैव न स्युः ॥ १२-६२-१० (६७२६३)
यच्च त्रयाणां वर्णानामिच्छेदाश्रमसेवनम् ।
कर्तुमाश्रमदृष्टांश्च धर्मास्ताञ्शृणु पाण्डव ॥१२-६२-११ (६७२६४)
शुश्रूषोः कृतकार्यस्य कृतसंतानकर्मणः ।
अभ्यनुज्ञाप्य राजानं शूद्रस्य जगतीपते ॥१२-६२-१२ (६७२६५)
अल्पान्तरगतस्यापि देशधर्मगतस्य वा ।
आश्रमा विहिताः सर्वे वर्जयित्वा निराशिषम् ॥१२-६२-१३ (६७२६६)
भैक्षचर्यां नचैवाहुस्तस्य तद्धर्मवादिनः ।
तथा वैश्यस्य राजेन्द्र राजपुत्रस्य चैव हि ॥१२-६२-१४ (६७२६७)
कृतकृत्यो वयोतीतो राज्ञः कृतपरिश्रमः ।
वैश्यो गच्छेदनुज्ञातो नृपेणाश्रमसंश्रयम् ॥१२-६२-१५ (६७२६८)
वेदानधीत्य धर्मेण राजशास्त्राणि चानघ ।
संतानादीनि कर्माणि कृत्वा सोमं निषेव्य च ॥१२-६२-१६ (६७२६९)
पालयित्वा प्रजाः सर्वा धर्मेण वदतांवर ।
राजसूयाश्वमेधादीन्मखानन्यांस्तथैव च ॥१२-६२-१७ (६७२७०)
आनयित्वा यथान्यायं विप्रेभ्यो दत्तदक्षिणः ।
संग्रामे विजयं प्राप्य तथाऽल्पं यदि वा बहु ॥१२-६२-१८ (६७२७१)
स्थापयित्वा प्रजापालं पुत्रं राज्ये च पाण्डव ।
अन्यगोत्रं प्रशस्तं वा क्षत्रियं क्षत्रियर्षभ ॥१२-६२-१९ (६७२७२)
अर्चयित्वा पितॄञ्श्राद्धैः पितृयज्ञैर्यथाविधि ।
देवान्यज्ञैर्ऋषीन्वेदैरर्चयित्वा तु यत्नतः ॥१२-६२-२० (६७२७३)
अन्तकाले च संप्राप्ते य इच्छेदाश्रमान्तरम् ।
सोनुपूर्व्याश्रमान्राजन्गत्वा सिद्धिमवाप्नुयात् ॥१२-६२-२१ (६७२७४)
राजर्षित्वेन राजेन्द्र भैक्ष्यचर्याद्यसेवया ।
अपेतगृहधर्मापि चरेज्जीवितकाम्यया ॥१२-६२-२२ (६७२७५)
न चैतन्नैष्ठिकं कर्म त्रयाणां भूरिदक्षिण ।
चतुर्णां राजशार्दूल प्राहुराश्रमवासिनाम् ॥१२-६२-२३ (६७२७६)
बाह्वायत्तं क्षत्रियैर्मानवानां
लोकश्रेष्ठं धर्ममासेवमानैः ।
सर्वे धर्माः सोपधर्मास्त्रयाणां
राज्ञो धर्मं नीतिशास्त्रे शृणोमि ॥ १२-६२-२४ (६७२७७)
यथा राजन्हस्तिपदे पदानि
संलीयन्ते सर्वसत्वोद्भवानि ।
एवं धर्मान्राजधर्मेषु सर्वान्

सर्वावस्थान्संप्रलीनान्निबोध ॥ १२-६२-२५ (६७२७८)
अल्पाश्रयानल्पफलान्वदन्ति
धर्मानन्यान्धर्मविदो मनुष्याः ।
महाश्रयं बहुकल्याणरूपं
क्षात्रं धर्मं नेतरं प्राहुरार्याः ॥ १२-६२-२६ (६७२७९)
सर्वे धर्मा राजधर्मप्रधानाः
सर्वे वर्णाः पाल्यमाना भवन्ति ।
सर्वस्त्यागो राजधर्मेषु राजं
स्त्यागं धर्मं चाहुरग्र्यं पुराणम् ॥ १२-६२-२७ (६७२८०)
मज्जेत्रयी दण्डनीतौ हतायां
सर्वे धर्माः प्रक्षयेयुर्विरुद्धाः ।
सर्वे धर्माश्चाश्रमाणां हताः स्युः
क्षात्रे नष्टे राजधर्मे पुराणे ॥ १२-६२-२८ (६७२८१)
सर्वे भोगा राजधर्मेषु दृष्टाः
सर्वा दीक्षा राजधर्मेषु चोक्ताः ।
सर्वा विद्या राजधर्मेषु युक्ताः
सर्वे लोका राजधर्मे प्रविष्टाः ॥ १२-६२-२९ (६७२८२)
ग्सर्वे धर्मा राजधर्मेषु दृष्टाः
सर्वे भोगा राजधर्मेषु राजन्।'
सर्वे योगा राजधर्मेषु चोक्ताः
सर्वे धर्मा राजधर्मे प्रविष्टाः ।
तस्माद्धर्मो राजधर्माद्विशिष्टो
नान्यो लोके विद्यतेऽजातशत्रो ॥ १२-६२-३० (६७२८३)
सर्वाण्येतानि कर्माणि क्षात्रे भरतसत्तम ।
भवन्ति जीवलोकाश्च क्षत्रधर्मे प्रतिष्ठिताः ॥१२-६२-३१ (६७२८४)
यथा जीवाः प्राकृतैर्वध्यमाना
धर्मश्रुतीनामुपपीडनाय ।
एवं धर्मा राजधर्मैर्वियुक्ताः
संचिन्वन्तो नाद्रियन्ते स्वधर्मम् ॥ ॥ १२-६२-३२ (६७२८५)

इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि
द्विषष्टितमोऽध्यायः ॥ ६२.।

Mahabharata - Shanti Parva - Chapter Footnotes

१२-६२-३ कौटिल्यमनार्जवम् ।कौलटेयं कुलटाप्रधानं
जारकर्म। कुसीदं च विवर्जयेत् इति झ। पाठः। तत्र कुसीदं

वृद्धिजीविकामित्यर्थः ॥
१२-६२-५ राजप्रेष्यादिर्वेदान् जपन्नजपन्वा शूद्रइव
पङ्क्तेर्वहिर्भोजनीय एवेति भावः ॥
१२-६२-११ यो राजा त्रयाणां ब्राह्मणवैश्यशूद्राणां स्वराज्ये
आश्रमधर्मसेवनं यथोक्तं इच्छेत् तेनावश्यज्ञातव्यान्धर्मांञ्शृणु
॥
१२-६२-१२ शुश्रूषोर्वेदान्तेष्वनधिकारात्पुराणद्वारा आत्मानं
श्रोतुमिच्छोः । कृतकार्यस्य यावच्छरीरसामर्थ्यं
सेवितत्रैवर्ण्यस्य ॥
१२-६२-१३ अल्पान्तरगतस्य आचारनिष्ठया त्रैवर्णिकसमस्य आश्रमाः
सर्वे विहिताः । शूद्रोऽपि नैष्ठिकं ब्रह्मचर्यं वानप्रस्थं वा
सकलविक्षेपककर्मत्यागरूपं संन्यासं वाऽनुतिष्ठेदेव। निराशिषं
शान्तिदान्त्यादिकल्याणगुणरहितम् ॥
१२-६२-२२ अपेतगृहधर्मोऽपीति ख । पाठः ॥

---

शन्तिपर्व-अध्यय०६३
॥ श्रीः ॥
१२.६३. अध्यायः ६३

Mahabharata - Shanti Parva - Chapter Topics
भीष्मेण युधिष्ठिरंप्रति
राजधर्मप्रशंसकेन्द्रमांधातृसंवादानुवादः ॥ १. ।
Mahabharata - Shanti Parva - Chapter Text

१२-६३-० (८०७८७)
भीष्म उवाच। १२-६३-०क्ष् (६६८७)
चातुराश्रम्यधर्माश्च यतिधर्माश्च पाण्डव ।
लोकवेदोत्तराश्चैव क्षात्रधर्मे समाहिताः ॥ १२-६३-१ (८०७८८)
सर्वाण्येतानि कर्माणि क्षात्रे भरतसत्तम ।
निराशिषो जीवलोकाः क्षत्रधर्मे व्यवस्थिते ॥ १२-६३-२ (८०७८९)
अप्रत्यक्षं बहुफलं धर्ममाश्रमवासिनाम् ।
प्ररूपयन्ति तद्भावमागमैरेव शाश्वतम् ॥ १२-६३-३ (८०७९०)
अपरे वचनैः पुण्यैर्वादिनो लोकनिश्चये ।
अनिश्चयज्ञा धर्माणामदृष्टान्ते परे रताः ॥ १२-६३-४ (८०७९१)
प्रत्यक्षं फलभूयिष्ठमात्मसाक्षिकमच्छलम् ।
सर्वलोकहितं धर्मं क्षत्रियेषु प्रतिष्ठितम् ॥ १२-६३-५ (८०७९२)

धर्माश्रमेऽध्यवसिनां ब्राह्मणानां युधिष्ठिर ।
यथा त्रयाणां वर्णानां संख्यातोपश्रुतिः पुरा ।
राजधर्मेष्वनुमता लोकाः सुचरितैः सह ॥ १२-६३-६ (८०७९३)
उदाहृतं ते राजेन्द्र यथा विष्णुं महौजसम् ।
सर्वभूतेश्वरं देवं ब्राह्मं नारायणं पुरा ।
जग्मुः सुबहुशः शूरा राजानो दण्डनीतये ॥ १२-६३-७ (८०७९४)
एकैकमात्मनः कर्म तुलयित्वाश्रमं पुरा ।
जानः पर्युपासन्त दृष्टान्तवचने स्थिताः ॥ १२-६३-८ (८०७९५)
साध्या देवा वसवश्चाश्विनौ च
रुद्राश्च विश्वे मरुतां गणाश्च ।
सृष्टाः पुरा ह्यादिदेवेन देवाः
क्षात्रे धर्मे वर्तयन्ते च सिद्धाः ॥ १२-६३-९ (८०७९६)
अत्र ते वर्तयिष्यामि धर्ममर्थविनिश्चये ।
निर्मर्यादे वर्तमाने दानवैकार्णवे पुरा ॥ १२-६३-१० (८०७९७)
बभूव राजा राजेन्द्र मान्धाता नाम वीर्यवान् ।
पुरा वसुमतीपालो यज्ञं चक्रे दिदृक्षया ॥ १२-६३-११ (८०७९८)
अनादिमध्यनिधनं देवं नारायणं प्रभुम् ।
स राजा राजशार्दूल मान्धाता परमेश्वरम् ॥ १२-६३-१२ (८०७९९)
जगाम शिरसा पादौ यज्ञे विष्णोर्महात्मनः ।
दर्शयामास तं विष्णू रूपमास्थाय वासवम् ॥ १२-६३-१३ (८०८००)
स पार्थिवैर्वृतः सद्भिरर्चयामास तं प्रभुम् ।
तस्य पार्थिवसङ्घस्य तस्य चैव महात्मनः ।
संवादोऽयं महानासीद्विष्णुं प्रति महाद्युतिम् ॥ १२-६३-१४ (८०८०१)
इन्द्र उवाच। १२-६३-१५क्ष् (६६८८)
किमिष्यसे धर्मभृतां वरिष्ठ
यं द्रष्टुकामोऽसि तमप्रमेयम् ।
अनन्तमायामितमन्त्रवीर्यं
नारायणं ह्यादिदेवं पुराणम् ॥ १२-६३-१५ (८०८०२)
नासौ देवो विश्वरूपो मयाऽपि
शक्यो द्रष्टुं ब्रह्मणा वाऽपि साक्षात्
येऽन्ये कामास्तव राजन्हृदिस्था
दास्ये चैतांस्त्वं हि मर्त्येषु राजा ॥ १२-६३-१६ (८०८०३)
सत्ये स्थितो धर्मपरो जितेन्द्रियः
शूरो दृढप्रीतिरतः सुराणाम् ।
बुद्ध्या भक्त्या चोत्तमः श्रद्धया च
ततस्तेऽहं दद्मि वरान्यथेष्टम् ॥ १२-६३-१७ (८०८०४)

मान्धातोवाच। १२-६३-१८क्ष् (६६८९)
असंशयं भगवन्नादिदेवं
वक्ष्यामि त्वाऽहं शिरसा संप्रसाद्य ।
त्यक्त्वा कामान्धर्मकामो ह्यरण्य
मिच्छे गन्तुं सत्पथं साधुजुष्टम् ॥ १२-६३-१८ (८०८०५)
क्षात्राद्धर्माद्विपुलादप्रमेया
श्लोकाः प्राप्ताः स्थापितं स्वं यशश्च ।
धर्मो योऽसावादिदेवात्प्रवृत्तो
लोकश्रेष्ठं तं न जानामि कर्तुम् ॥ १२-६३-१९ (८०८०६)
इन्द्र उवाच। १२-६३-२०क्ष् (६६९०)
असैनिका धर्मपराश्च धर्मे
परां गतिं न नयन्ते ह्ययुक्तम् ।
क्षात्रो धर्मो ह्यादिदेवात्प्रवृत्तः
पश्चादन्ये शेषभूताश्च धर्माः ॥ १२-६३-२० (८०८०७)
शेषाः सृष्टा ह्यन्तवन्तो ह्यनन्ताः
सप्रस्थानाः क्षात्रधर्मा विशिष्टाः ।
अस्मिन्धर्मे सर्वधर्माः प्रविष्टाः
क्षात्रं धर्मं श्रेष्ठतमं वदन्ति ॥ १२-६३-२१ (८०८०८)
कर्मणा वै पुरा देवा ऋषयश्चामितौजसः ।
त्राताः सर्वे प्रसह्यारीन्क्षत्रधर्मेण विष्णुना ॥१२-६३-२२ (८०८०९)
यदि ह्यसौ भगवन्नाहनिष्य
द्रिपू सर्वानसुरानप्रमेयः ।
न च ब्रह्मा नैव लोकादिकर्ता
सन्तो धर्माश्चादिधर्माश्च न स्युः ॥ १२-६३-२३ (८०८१०)
इमामुर्वी नाजयद्विक्रमेण
देवश्रेष्ठः सासुरामादिदेवः ।
चातुर्वर्ण्यं चातुराश्रम्यधर्माः
सर्वे न स्युर्ब्राह्मणानां विनाशात् ॥ १२-६३-२४ (८०८११)
नष्टा धर्माः शतधा शाश्वतास्ते
क्षात्रेण धर्मेण पुनः प्रवृद्धाः ।
युगेयुगे ह्यादिधर्माः प्रवृत्ता
लोकज्येष्ठं क्षात्रधर्मं वदन्ति ॥ १२-६३-२५ (८०८१२)
आत्मत्यागः सर्वभूतानुकम्पा
लोकज्ञानं पालनं मोक्षणं च ।
विषण्णानां मोक्षणं पीडितानां
क्षात्रे धर्मे विद्यते पार्थिवानाम् ॥ १२-६३-२६ (८०८१३)

निर्मर्यादाः काममन्युप्रवृत्ता
भीता राज्ञो नाधिगच्छन्ति पापम् ।
शिष्टाश्चान्ये सर्वधर्मोपपन्नाः
साध्वाचाराः साधुधर्मं वदन्ति ॥ १२-६३-२७ (८०८१४)
पुत्रवत्पाल्यमानानि धर्मलिङ्गानि पार्थिवैः ।
लोके भूतानि सर्वाणि चरन्ते नात्र संशयः ॥ १२-६३-२८ (८०८१५)
सर्वधर्मपरं क्षात्रं लोकश्रेष्ठं सनातनम् ।
शश्वदक्षरपर्यन्तमक्षरं सर्वतोमुखम् ॥ ॥ १२-६३-२९ (८०८१६)

इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि
त्रिषष्टितमोऽध्यायः ॥ ६३.।
Mahabharata - Shanti Parva - Chapter Footnotes

१२-६३-१ राजधर्माश्च पाण्डव ।लोकालोकोत्तराश्चैव धर्माः क्षात्रे
समर्पिता इति ट। ड ह्द। पाठः ॥
१२-६३-३ बहुद्वारमिति झ ।पाठः ॥
१२-६३-४ अदृष्टान्ते न दृष्टोऽन्तो यस्य तस्मिन् ॥
१२-६३-५ सुखभूयिष्ठमिति झ ।पाठः ॥
१२-६३-६ धर्माश्रमे गार्हस्थ्ये वर्णानां धर्माणां उपश्रुतिरन्तर्भावः
संख्या प्रकटा ।तथा राजधर्मेषु धर्मैः सह लोका
अन्तर्भूताः।अनुलोमा राजधर्मो लोके सुचरितैरिहेति थ। द। पाठः ॥
१२-६३-८ आश्रमं आश्रमविहितं तुलयित्वा किं दण्डनीतिजो धर्मो महान्
उत आश्रमधर्म इति संदिह्य दृष्टान्तवचने सिद्धान्तं श्रोतुम् ॥
१२-६३-१३ वासयं ऐन्द्रं रूपम् ॥
१२-६३-२० न सन्ति सैनिका येषां ते असैनिकाः अराजानः युक्तं
अभिनिवेशशून्यं यथा स्यात्तथा हेलयैव न नयन्ते इत्यर्थः
।शेषभूताः अङ्गभूताः ॥
१२-६३-२६ आत्मत्यागो युद्धे मरणम् १२-६३-२९ अक्षरपर्यन्तं मोक्षावसानम् ॥

---

शन्तिपर्व-अध्यय०६४
॥ श्रीः ॥
१२.६४. अध्यायः ६४

Mahabharata - Shanti Parva - Chapter Topics
भीष्मेण युधिष्ठिरंप्रति इन्द्ररूपिहरिणा मांधातारं
प्रत्युक्तराजधर्मादिकथनम् ॥ १.।
Mahabharata - Shanti Parva - Chapter Text

१२-६४-० (६७२८६)
इन्द्र उवाच। १२-६४-०क्ष् (५४८२)
एवंवीर्यः सर्वधर्मोपपन्नः
क्षात्रः श्रेष्ठः सर्वधर्मेषु धर्मः ।
पाल्यो युष्माभिर्लोकपालैरुदारै
र्विपर्यये स्यादभवः प्रजानाम्। १२-६४-१ (६७२८७)
भूसस्कारं धर्मसंस्कारयोग्यं
दीक्षाचर्या पालनं च प्रजानाम् ।
विद्याद्राज्ञः सर्वभूतानुकम्पा
देहत्यागं चाहवे धर्ममग्र्यम् ॥ १२-६४-२ (६७२८८)
त्यागं श्रेष्ठं मुनयो वै वदन्ति
सर्वश्रेष्ठं यच्छरीरं त्यजन्ति ।
नित्यं व्यक्तं राजधर्मेषु सर्वे
प्रत्यक्षं ते भूमिपाला यथैते ॥ १२-६४-३ (६७२८९)
बहुश्रुत्या गुरुशुश्रूषया वा
परस्पराः संहननाद्वदन्ति ।
नित्यं धर्मं क्षत्रियो ब्रह्मचारी ।
चरेदेको ह्याश्रमं धर्मकामः ॥ १२-६४-४ (६७२९०)
सामान्यार्थे व्यवहारे प्रवृत्ते
प्रियाप्रिये वर्जयन्नैव यत्नात् ।
चातुर्वर्ण्यं स्थापनात्पालनाच्च
तैस्तैर्योगैर्नियमैरौषधैश्च ॥ १२-६४-५ (६७२९१)
सर्वोद्योगैराश्रमं धर्ममाहुः
क्षात्रं श्रेष्ठं सर्वधर्मोपपन्नम् ।
वंस्वं धर्मं येन चरन्ति वर्णा
स्तांस्तान्धर्मानन्यथार्थान्वदन्ति ॥ १२-६४-६ (६७२९२)
नेर्मर्यादान्नित्यमर्थे निविष्टा
नाहुस्तान्वै पशुभूतान्मनुष्यान् ।
यथा नीतिं गमयत्यर्थयोगा
च्छ्रेयस्तस्मादाश्रमात्क्षत्रधर्मः ॥ १२-६४-७ (६७२९३)
त्रैविद्यानां या गतिर्ब्राह्मणानां
ये चैवोक्ताः स्वाश्रमा ब्राह्मणानाम् ।
एतत्कर्म क्षत्रियस्याहुरग्र्य
मन्यत्कुर्वञ्छूद्रवच्छस्त्रवध्यः ॥ १२-६४-८ (६७२९४)
चातुराश्रम्यधर्माश्च वेदवादाश्च पार्थिव ।

ब्राह्मणेनानुगन्तव्या नान्यो विद्यात्कदाचन ॥ १२-६४-९ (६७२९५)
अन्यथा वर्तमानस्य न सा वृत्तिः प्रकल्प्यते ।
कर्मणा वर्धते धर्मो यथा धर्मस्तथैव सः ॥ १२-६४-१० (६७२९६)
यो विकर्मस्थितो विप्रो न स सन्मानमर्हति ।
कर्म स्वमप्रयुञ्जानमविश्वास्यं हि तं विदुः ॥ १२-६४-११ (६७२९७)
एते वर्णाः सर्वधर्मैश्च हीना
उत्क्रष्टव्याः क्षत्रियैरेव धर्माः ।
तस्माच्छ्रेष्ठा राजधर्मा न चान्ये
वीर्यश्रेष्ठा राजधर्मा मता मे ॥ १२-६४-१२ (६७२९८)
मान्धातोवाच। १२-६४-१३क्ष् (५४८३)
यवनाः किराता गान्धाराश्चीनाः शबरबर्बराः ।
शकास्तुषाराः कङ्काश्च पल्लवाश्चान्ध्रमद्रकाः ॥ १२-६४-१३ (६७२९९)
उष्ट्राः पुलिन्दा आरट्टाः काचा म्लेच्छाश्च सर्वशः ।
ब्रह्मक्षत्रप्रसूताश्च वैश्याः शूद्राश्च मानवाः ॥ १२-६४-१४ (६७३००)
कथं धर्मांश्चरिष्यन्ति सर्वे विषयवासिनः ।
मद्विधैश्च कथं स्थाप्याः सर्वे वै दस्युजीविनः ॥ १२-६४-१५ (६७३०१)
एतदिच्छाम्यहं श्रोतुं मघवंस्तद्ब्रवीहि मे ।
त्वं बन्धुभूतो ह्यस्माकं क्षत्रियाणां सुरेश्वर ॥ १२-६४-१६ (६७३०२)
इन्द्र उवाच। १२-६४-१७क्ष् (५४८४)
मातापित्रोर्हि शुश्रूषा कर्तव्या सर्वदस्युभिः ।
आचार्यगुरुशुश्रूषा तथैवाश्रमवासिनाम् ॥ १२-६४-१७ (६७३०३)
भूमिपानां च शुश्रूषा कर्तव्या सर्वदस्युभिः ।
देशधर्मक्रियाश्चैव तेषां धर्मो विधीयते ॥ १२-६४-१८ (६७३०४)
पितृयज्ञास्तथा कूपाः प्रपाश्च शयनानि च ।
दानानि च यथाकालं दातव्यानि द्विजातिषु ॥ १२-६४-१९ (६७३०५)
अहिंसा सत्यमक्रोधो वृत्तिदायानुपालनम् ।
भरणं पुत्रदाराणां शौचमद्रोह एव च ॥ १२-६४-२० (६७३०६)
दक्षिणा सर्वयज्ञानां दातव्या धर्ममिच्छता ।
पाकयज्ञा महार्थाश्च दातव्याः सर्वदस्युभिः ॥ १२-६४-२१ (६७३०७)
एतान्येवंप्रकाराणि विहितानि पुराऽनघ ।
सर्वलोकस्य कर्माणि कर्तव्यानीह पार्थिव ॥ १२-६४-२२ (६७३०८)
मान्धातोवाच। १२-६४-२३क्ष् (५४८५)
दृश्यन्ते मानुषे लोके सर्ववर्णेषु दस्यवः ।
लिङ्गान्तरे वर्तमाना आश्रमेषु तथैव च ॥ १२-६४-२३ (६७३०९)
इन्द्र उवाच। १२-६४-२४क्ष् (५४८६)
विनष्टायां दण्डनीत्यां राजधर्मे विनाकृते ।

संप्रमुह्यन्ति भूतानि राजदौरात्म्यतोऽनघ ॥ १२-६४-२४ (६७३१०)
असङ्ख्याता भविष्यन्ति भिक्षवो लिङ्गिनस्तथा ।
आश्रमाणां विकल्पाश्च वृत्तेऽस्मिन्वैकृते युगे ॥ १२-६४-२५ (६७३११)
अशृण्वानाः पुराणानां धर्माणां शतशो नराः ।
उत्पथं प्रतिपत्स्यन्ते काममन्युसमीरिताः ॥ १२-६४-२६ (६७३१२)
यदा निवर्त्यते पापो दण्डनीत्या महात्मभिः ।
तदा धर्मो न चलते संभूतः शाश्वतः पुरा ॥ १२-६४-२७ (६७३१३)
सर्वलोकगुरुं चैव राजानं योऽवमन्यते ।
न तस्य दत्तं न कृतं न श्रुतं फलति क्वचित् ॥ १२-६४-२८ (६७३१४)
मानुषाणामधिपतिं देवभूतं महाद्युतिम् ।
देवाश्च बहुमन्यन्ते धर्मकामं नरेश्वरम् ॥ १२-६४-२९ (६७३१५)
प्रजापतिर्हि भगवान्यः सर्वमसृजज्जगत् ।
स प्रवृत्तिनिवृत्त्यर्थं धर्माणां क्षत्रमिच्छति ॥ १२-६४-३० (६७३१६)
प्रवृत्तस्य हि धर्मस्य बुद्ध्या यः स्मरते गतिम् ।
स मे मान्यश्च पूज्यश्च स च क्षत्रे प्रतिष्ठितः ॥ १२-६४-३१ (६७३१७)
भीष्म उवाच। १२-६४-३२क्ष् (५४८७)
एवमुक्त्वा स भगवान्मरुद्गणवृतः प्रभुः ।
जगाम भवनं विष्णुरक्षरं शाश्वतं परम् ॥ १२-६४-३२ (६७३१८)
एवं प्रवर्तिते धर्मे पुरा सुचरितेऽनघ ।
कः क्षत्रमतिवर्तेत चेतनावान्बहुश्रुतः ॥ १२-६४-३३ (६७३१९)
अन्यायेन प्रवृत्तानि निवृत्तानि तथैव च ।
अन्तरा विलयं यान्ति यथा पथि विचक्षुषः ॥ १२-६४-३४ (६७३२०)
आदौ प्रवर्तिते चक्रे तथैवादिपरायणे ।
वर्तस्व पुरुषव्याघ्र संविजानामि तेऽनघ ॥ ॥ १२-६४-३५ (६७३२१)

इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि
चतुःषष्टितमोऽध्यायः ॥ ६४.।

Mahabharata - Shanti Parva - Chapter Footnotes

१२-६४-२ भूसंस्कारं भुवः संपन्नसस्यत्वम् । राजसंस्कारयोगमिति
झ। पाठः। तत्र राजसंस्कारो तजसूयादिरर्थः ॥
१२-६४-५ नियमैरौरसैश्चेति झ पाठः । तत्र औरसैः पौरुषैः
इत्यर्थः ॥
१२-६४-६ येन क्षात्रधर्मेण । अन्यथार्थान्निष्प्रयोजनान् वदन्ति ॥
१२-६४-७ निर्मर्यादे नित्यमर्थे विनष्टे न र्मचिन्ता पशुभूते मनुष्ये
। इति ट। ड। थ। पाठः ॥

१२-६४-८ या गतिर्यज्ञादिः आश्रमधर्मश्च एतद्द्वयम् ॥
१२-६४-१० कर्मणा त्यज्यते धर्मो यथैव स्यात्तथैव सः इति ट ।ड।थ।पाठः ॥
१२-६४-१२ उत्क्रष्टव्या उत्कर्षं प्रापणीया ॥
१२-६४-१५ दस्युजीविनो दस्युवृत्तिजीविनः ॥
१२-६४-२६ परमा गतीः इति झ ।पाठः ॥
१२-६४-३१ गतिं फलम् ॥
१२-६४-३५ आदिपरायणे पूर्वेषां शरणभूते वर्तस्व ।ते त्वाम् ॥

---

शन्तिपर्व-अध्यय०६५
॥ श्रीः ॥
१२.६५. अध्यायः ६५

Mahabharata - Shanti Parva - Chapter Topics
भीष्मेण युधिष्ठिरंप्रति वर्णाश्रमधर्मकथनम् ॥ १.।
Mahabharata - Shanti Parva - Chapter Text

१२-६५-० (६७३२२)
युधिष्ठिर उवाच। १२-६५-०क्ष् (५४८८)
श्रुता मे कथिताः पूर्वं चत्वारो मानवाश्रमाः ।
व्याख्यानमेषामाचक्ष्व पृच्छतो मे पितामह ॥ १२-६५-१ (६७३२३)
भीष्म उवाच। १२-६५-२क्ष् (५४८९)
विदिताः सर्व एवेह धर्मास्तव युधिष्ठिर ।
यथा मम महाबाहो विदिताः साधुसंमताः ॥ १२-६५-२ (६७३२४)
यत्तु लिङ्गान्तरगतं पृच्छसे मां युधिष्ठिर ।
धर्मं धर्मभृतां श्रेष्ठ तन्निबोध नराधिप। १२-६५-३ (६७३२५)
सर्वाण्येतानि कौन्तेय विद्यन्ते भरतर्षभ ।
साध्वाचारप्रवृत्तानां चातुराश्रम्यकर्मणाम् ॥ १२-६५-४ (६७३२६)
अकामद्वेषसंयुक्तो दण्डनीत्या युधिष्ठिर ।
समदर्शी च भूतेषु भैक्ष्याश्रमपदं भवेत् ॥ १२-६५-५ (६७३२७)
वेत्ति दानं विसर्गं च विग्रहानुग्रहौ तथा ।
यथोक्तवृत्तो धीरश्च क्षमाश्रमपदं भवेत् ॥ १२-६५-६ (६७३२८)
अर्हान्पूजयतो नित्यं संविभागेन पाण्डव ।
सर्वतस्तस्य कौन्तेय भैक्ष्याश्रमपदं भवेत् ॥ १२-६५-७ (६७३२९)
ज्ञातिसंबन्धिमित्राणि व्यापन्नानि युधिष्ठिर ।
समभ्युद्धरमाणस्य दीक्षाश्रमपदं भवेत् ॥ १२-६५-८ (६७३३०)
लोकमुख्येषु सत्कारं लिङ्गिमुख्येषु चासकृत् ।

कुर्वतस्तस्य कौन्तेय वन्याश्रमपदं भवेत् ॥ १२-६५-९ (६७३३१)
आह्निकं पितृयज्ञांश्च भूतयज्ञान्समानुषान् ।
कुर्वतः पार्थ विपुलान्वन्याश्रमपदं भवेत् ॥ १२-६५-१० (६७३३२)
संविभागेन भूतानामतिथीनां तथाऽर्चनात् ।
देवयज्ञैश्च राजेन्द्र वन्याश्रमपदं भवेत् ॥ १२-६५-११ (६७३३३)
मर्दनं परराष्ट्राणां शिष्टार्थं सत्यविक्रम ।
कुर्वतः पुरुषव्याघ्र वन्याश्रमपदं भवेत् ॥ १२-६५-१२ (६७३३४)
पालनात्सर्वभूतानां स्वराष्ट्रपरिपालनात् ।
दीक्षा बहुविधा राजन्सत्याश्रमपदं भवेत् ॥ १२-६५-१३ (६७३३५)
वेदाध्ययननित्यत्वं क्षमाऽथाचार्यपूजनम् ।
तथोपाध्यायशुश्रूषा ब्रह्माश्रमपदं भवेत् ॥ १२-६५-१४ (६७३३६)
आह्निकाञ्जपमानस्य देवान्पूजयतः सदा ।
धर्मेण पुरुषव्याघ्र धर्माश्रमपदं भवेत् ॥ १२-६५-१५ (६७३३७)
मृत्युर्वा रक्षणं वेति यस्य राज्ञो विनिश्चयः ।
प्राणद्यूते व्यवस्थाप्य ब्रह्माश्रमपदं भवेत् ॥ १२-६५-१६ (६७३३८)
अजिह्ममशठं मार्गं वर्तमानस्य भारत ।
सर्वदा सर्वभूतेषु ब्रह्माश्रमपदं भवेत् ॥ १२-६५-१७ (६७३३९)
वानप्रस्थेषु विप्रेषु त्रैविद्येषु च भारत ।
प्रयच्छतोऽर्थान्विपुलान्वन्याश्रमपदं भवेत् ॥ १२-६५-१८ (६७३४०)
सर्वभूतेष्वनुक्रोशं कुर्वतस्तव भारत ।
आनृशंस्ये प्रवृत्तस्य नियतः पुण्यसंचयः ॥ १२-६५-१९ (६७३४१)
बालवृद्धेषु कौन्तेय सर्वावस्थं युधिष्ठिर ।
अनुक्रोशक्रिया पार्थ धर्म एष सनातनः ॥ १२-६५-२० (६७३४२)
बलात्कृतेषु भूतेषु परित्राणं कुरूद्वह ।
शरणागतेषु कौरव्य परं कारुण्यमाचर ॥ १२-६५-२१ (६७३४३)
चराचराणां भूतानां रक्षणं चापि सर्वशः ।
यथार्हपूजां च तथा कुर्वन्गार्हस्थ्यमावसेत् ॥ १२-६५-२२ (६७३४४)
ज्येष्ठानुज्येष्ठपत्नीनां भ्रातॄणां पुत्रनप्तृणाम् ।
निग्रहानुग्रहौ पार्थ गार्हस्थ्यममितं तपः ॥ १२-६५-२३ (६७३४५)
साधूनामर्चनीयानां पूजासु विदितात्मनाम् ।
पालनं पुरुषव्याघ्र गृहाश्रमपदं भवेत् ॥ १२-६५-२४ (६७३४६)
आश्रमस्थानि भूतानि यस्य वेश्मनि भारत ।
भुञ्जते विपुलं भोज्यं तद्गार्हस्थ्यं युधिष्ठिर ॥ १२-६५-२५ (६७३४७)
यः स्थितः पुरुषो धर्मे धात्रा सृष्टे यथार्थवत् ।
आश्रमाणां हि सर्वेषां फलं प्राप्नोत्यनामयम् ॥ १२-६५-२६ (६७३४८)
यस्मिन्न नश्यन्ति गुणाः कौन्तेय पुरुषे सदा ।

आश्रमस्थं तमप्याहुर्नरश्रेष्ठं युधिष्ठिर ॥ १२-६५-२७ (६७३४९)
स्थानमानं कुलेमानं वयोमानं तथैव च ।
कुर्वन्वसति सर्वेषु ह्याश्रमेषु युधिष्ठिर ॥ १२-६५-२८ (६७३५०)
देशधर्मांश्च कौन्तेय कुलधर्मास्तथैव च ।
पालयन्पुरुषव्याघ्र राजा सर्वाश्रमी भवेत् ॥ १२-६५-२९ (६७३५१)
काले विभूतिं भूतानामुपहारांस्तथैव च ।
अर्हयन्पुरुषव्याघ्र साधूनामाश्रमे वसेत् ॥ १२-६५-३० (६७३५२)
देशधर्मगतश्चापि यो धर्मं प्रत्यवेक्षते ।
सर्वलोकस्य कौन्तेय राजा भवति सोश्रमी ॥ १२-६५-३१ (६७३५३)
ये धर्मकुशला लोके धर्मं कुर्वन्ति भारत ।
पालिता यस्य विषये पादांशस्तस्य भूपतेः ॥ १२-६५-३२ (६७३५४)
धर्मारामान्धर्मपरान्ये न रक्षन्ति मानवान् ।
पार्थिवाः पुरुषव्याघ्र तेषां पापं हरन्ति ते ॥ १२-६५-३३ (६७३५५)
ये च रक्षासहायाः स्युः पार्थिवानां युधिष्ठिर ।
ते चैवांशहराः सर्वे धर्मे परकृतेऽनघ ॥ १२-६५-३४ (६७३५६)
सर्वाश्रमपदेऽप्याहुर्गार्हस्थ्यं दीप्तनिर्णयम् ।
पावनं पुरुषव्याघ्र यद्वयं पर्युपास्महे ॥ १२-६५-३५ (६७३५७)
आत्मोपमस्तु भूतेषु यो वै भवति मानवः ।
न्यस्तदण्डो जितक्रोधः प्रेत्येह लभते सुखम् ॥ १२-६५-३६ (६७३५८)
धर्मोच्छ्रिता सत्यजला शीलयष्टिर्दमध्वजा ।
त्यागवाताध्वगा शीघ्रा नौस्तया सन्तरिष्यति ॥ १२-६५-३७ (६७३५९)
यदा सर्वत्र निर्मुक्तः कामो नास्य हृदि स्थितः ।
यदा सत्यान्वितो वृत्तैस्तदा ब्रह्म सम श्नुते ॥ १२-६५-३८ (६७३६०)
सुप्रसन्नस्तु भावेन योगेन च नराधिप ।
धर्मं पुरुषशार्दूल प्राप्स्यसे पालने रतः ॥ १२-६५-३९ (६७३६१)
वेदाध्ययनशीलानां विप्राणां साधुकर्मणाम् ।
पालने यत्नमातिष्ठ सर्वलोकस्य चानघ ॥ १२-६५-४० (६७३६२)
वने चरन्ति ये धर्ममाश्रमेषु च भारत ।
रक्षणात्तच्छतगुणं धर्मं प्राप्नोति पार्थिवः ॥ १२-६५-४१ (६७३६३)
एष ते विविधो धर्मः पाण्डवश्रेष्ठ कीर्तितः ।
युधिष्ठिर त्वमेनं वै पूर्वं दृष्टं सनातनम् ॥ १२-६५-४२ (६७३६४)
चातुराश्रम्यमैकाग्र्यं चातुर्वर्ण्यं च पाण्डवं ।
धर्मं पुरुषशार्दूल प्राप्स्यसे पालने रतः ॥ ॥ १२-६५-४३ (६७३६५)

इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि
पञ्चषष्टितमोऽध्यायः ॥ ६५.।

१२-६५-४ एतानि चातुराश्रम्यकारिणां लिङ्गानि सतां राज्ञां राजधर्मेष्वेव वर्तन्ते इत्यर्थः ॥
१२-६५-५ भैक्ष्याश्रमः ब्रह्मचर्यम् ॥
१२-६५-६ क्षमाश्रमो गार्हस्थ्यम् ॥
१२-६५-७ भैक्ष्याश्रमः संन्यासः ॥
१२-६५-८ दीक्षाश्रमो वैखानसः ॥
१२-६५-१२ शिष्टार्थं शिष्टसंरक्षणार्थम् ॥
१२-६५-१३ सत्याश्रमः क्षात्राश्रमः ॥
१२-६५-१५ धर्माश्रमः यत्याश्रमः ॥
१२-६५-१९ सर्वावस्थं पदं भवेत् इति झ । पाठः ॥
१२-६५-३१ सोश्रमी सः आश्रमी सर्वाश्रमफलभागित्यर्थः ॥
१२-६५-३७ धर्मे स्थिता सत्ववीर्या धर्मसेतुवटारका । त्यागवाताध्वगाशीघ्रा नौस्तं सन्तारयिष्यति । इति झ । पाठः । तत्र धर्मसेतुः सास्त्रं सैव वटारका बन्धनरज्जुर्यत्रेत्यर्थः ॥

---

शन्तिपर्व-अध्यय०६६
॥ श्रीः ॥
१२.६६. अध्यायः ६६

Mahabharata - Shanti Parva - Chapter Topics
भीष्मेण युधिष्ठिरंप्रति लोकस्य सराजकत्वाराजकत्वाभ्यां गुणदोषनिरूपणम् ॥ १.।
Mahabharata - Shanti Parva - Chapter Text

१२-६६-० (६७३६६)
युधिष्ठिर उवाच। १२-६६-०क्ष् (५४९०)
चातुराश्रम्यमुक्तं ते चातुर्वण्यं तथैव च ।
राष्ट्रस्य यत्कृत्यतमं तन्मे ब्रूहि पितामह ॥ १२-६६-१ (६७३६७)
भीष्म उवाच। १२-६६-२क्ष् (५४९१)
राष्ट्रस्य यत्कृत्यतमं राज्ञ एवाभिषेचनम् ।
अनिन्द्रमबलं राष्ट्रं दस्यवोऽभिभवन्त्युत ॥ १२-६६-२ (६७३६८)
अराजकेषु राष्ट्रेषु धर्मो न व्यवतिष्ठते ।
परस्परं च खादन्ति सर्वथा धिगराजकम् ॥ १२-६६-३ (६७३६९)
इन्द्रमेव प्रणमते यद्राजानमिति श्रुतिः ।
यथैवेन्द्रस्तथा राजा संपूज्यो भूतिमिच्छता ॥ १२-६६-४ (६७३७०)

नाराजकेषु राष्ट्रेषु वस्तव्यमिति वैदिकम् ।
नाराजकेषु राष्ट्रेषु हव्यं वहति पावकः ॥ १२-६६-५ (६७३७१)
अथ चेदधिवेर्तेत राज्यार्थी बलवत्तरः ।
अराजकाणि राष्ट्राणि हतवीराणि वा पुनः ॥ १२-६६-६ (६७३७२)
प्रत्युद्गम्याभिपूज्यः स्यादेतदत्र सुमन्त्रितम् ।
न हि राज्यात्पापतरमस्ति किंचिदराजकात् ॥ १२-६६-७ (६७३७३)
स चेत्समनुपश्येत समग्रं कुशलं भवेत् ।
बलवान्हि प्रकुपितः कुर्यान्निः शेषतामपि ॥ १२-६६-८ (६७३७४)
भूयांसं लभते क्लेशं या गौर्भवति दुर्दुहा ।
अथ या सुदुहा राजन्नैव तां वितुदन्त्यपि ॥ १२-६६-९ (६७३७५)
यदतप्तं प्रणमते न तत्संतापयन्त्युत ।
यत्स्वयं नमते दारु न तत्संनामयन्त्यपि ॥ १२-६६-१० (६७३७६)
एतयोपमया धीरः सन्नमेत बलीयसे ।
इन्द्राय स प्रणमते नमते यो बलीयसे ॥ १२-६६-११ (६७३७७)
तस्माद्राजैव कर्तव्यः सततं भूतिमिच्छता ।
न धनार्थो न दारार्थस्तेषां येषामराजकम् ॥ १२-६६-१२ (६७३७८)
प्रीयते हि हरन्पापः परवित्तमराजके ।
यदाऽस्य तद्धरन्त्यन्ये तदा राजानमिच्छति ॥ १२-६६-१३ (६७३७९)
पापा ह्यपि तदा क्षेमं न लभन्ते कदाचन ।
एकस्य हि द्वौ हरतो द्वयोश्च बहवोऽपरे ॥ १२-६६-१४ (६७३८०)
अदासः क्रियते दासो ह्रियन्ते च बलात्स्त्रियः ।
एतस्मात्कारणाद्देवाः प्रजापालान्प्रचक्रिरे ॥ १२-६६-१५ (६७३८१)
राजा चेन्न भवेल्लोके पृथिव्या दण्डधारकः ।
जले मत्स्यानिवाभक्ष्यन्दुर्बलं बलवत्तराः ॥ १२-६६-१६ (६७३८२)
अराजकाः प्रजाः पूर्वं विनेशुरिति नः श्रुतम् ।
परस्परं भक्षयन्तो मत्स्या इव जले कृशान् ॥ १२-६६-१७ (६७३८३)
समेत्य तास्ततश्चक्रुः समयानिति नः श्रुतम् ।
वाक्शूरो दण्डपरुषो यश्च स्यात्पारदारिकः ॥ १२-६६-१८ (६७३८४)
यश्च नः समयं भिन्द्यात्त्याज्या नस्तादृशा इति ।
विश्वासार्थं च सर्वेषां वर्णानामविशेषतः ।
तास्तथा समयं कृत्वा समयेनावतस्थिरे ॥ १२-६६-१९ (६७३८५)
सहितास्तास्तदा जग्मुरसुखार्ताः पितामहम् ।
अनीश्वरा विनश्यामो भगवन्नीश्वरं दिश ॥ १२-६६-२० (६७३८६)
यं पूजयेम संभूय यश्च नः प्रतिपालयेत् ।
ताभ्यो मनुं व्यादिदेश मनुर्नाभिननन्द ताः ॥ १२-६६-२१ (६७३८७)
मनुरुवाच। १२-६६-२२क्ष् (५४९२)

बिभेमि कर्मणः पापाद्राज्यं हि भृशदुष्करम् ।
विशेषतो मनुष्येषु मिथ्यावृत्तेषु नित्यदा ॥ १२-६६-२२ (६७३८८)
भीष्म उवाच। १२-६६-२३क्ष् (५४९३)
तमब्रुवन्प्रजा मा भैर्विधास्यामो धनं तव ।
पशूनामथ पञ्चांशं धरण्यस्य तथैव च ॥ १२-६६-२३ (६७३८९)
धान्यस्य दशमं भागं दास्यामः कोशवर्धनम् ।
कन्यां शुल्के चारुरूपां विवाहेषूद्यतासु च ॥ १२-६६-२४ (६७३९०)
मुख्येन शस्त्रपत्रेण ये मनुष्याः प्रधानतः ।
भवन्तं तेऽनुयास्यन्ति महेन्द्रमिव देवताः ॥ १२-६६-२५ (६७३९१)
स त्वं जातबलो राजन्दुष्प्रधर्षः प्रतापवान् ।
सुखे धास्यसि नः सर्वान्कुबेर इव नैर्ऋतान् ॥ १२-६६-२६ (६७३९२)
यं च धर्मं चरिष्यन्ति प्रजा राज्ञा सुरक्षिताः ।
चतुर्थं तस्य धर्मस्य त्वत्संस्थं नो भविष्यति ॥ १२-६६-२७ (६७३९३)
तेन धर्मेण महता सुखं लब्धेन भावितः ।
पाह्यस्मान्सर्वतो राजन्देवानिव शतक्रतुः ॥ १२-६६-२८ (६७३९४)
विजयाय हि निर्याहि प्रतपन्रश्मिवानिव ।
मानं विधम शत्रूणां धर्मं जनय नः सदा ॥ १२-६६-२९ (६७३९५)
स निर्ययौ महातेजा बलेन महता वृतः ।
महाभिजनसंपन्नस्तेजसा प्रज्वलन्निव ॥ १२-६६-३० (६७३९६)
तस्य दृष्ट्वा महत्वं ते महेन्द्रस्येव देवताः ।
अपतत्रसिरे सर्वे स्वधर्मे च ददुर्मनः ।
ग्वर्णिनश्चाश्रमाश्चैव म्लेच्छाः सर्वे च दस्यवः ॥' १२-६६-३१ (६७३९७)
ततो महीं परिययौ पर्जन्य इव वृष्टिमान् ।
शमयन्सर्वतः पापान्स्वकर्मसु च योजयन् ॥ १२-६६-३२ (६७३९८)
एवं ये भूतिमिच्छेयुः पृथिव्यां मानवाः क्वचित् ।
कुर्यू राजानमेवाग्रे प्रजानुग्रहकारणात् ॥ १२-६६-३३ (६७३९९)
नमस्येरंश्च तं भक्त्या शिष्या इव गुरुं सदा ।
देवा इव च देवेन्द्रं नरा राजानमन्तिकात् ॥ १२-६६-३४ (६७४००)
सत्कृतं स्वजनेनेह परोऽपि बहुमन्यते ।
स्वजनेन त्ववज्ञातं परे परिभवन्त्युत ॥ १२-६६-३५ (६७४०१)
राज्ञः परैः परिभवः सर्वेषामसुखावहः ।
तस्माच्छत्रं च पत्रं च वासांस्याभरणानि च ॥ १२-६६-३६ (६७४०२)
भोजनान्यथ पानानि राज्ञे दद्युर्गृहाणि च ।
आसनानि च शय्याश्च सर्वोपकरणानि च ॥ १२-६६-३७ (६७४०३)
गोप्ता चास्य दुराधर्षः स्मितपूर्वाभिभाषिता ।
आभाषितश्च मधुरं प्रत्याभाषेत मानवान् ॥ १२-६६-३८ (६७४०४)

कृतज्ञो दृढभक्तिः स्यात्संविभागी जितेन्द्रियः ।
ईक्षितः प्रतिवीक्षेत मृदु वल्गु च चर्जु च ॥ ॥१२-६६-३९ (६७४०५)

इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि
षट्षष्टिमोऽध्यायः ॥६६.।
Mahabharata - Shanti Parva - Chapter Footnotes

१२-६६-४ इन्द्रमेव प्रवृणुते इति झ ।पाठः ॥
१२-६६-१२ धनादेरर्थ उपभोगः ॥
१२-६६-१८ वाक्क्रूरो निष्ठुरभाषी ।दण्डपरुष उग्रदण्डः ॥
१२-६६-२३ कर्तॄनेनो गमिष्यति इति झ ।पाठः ॥
१२-६६-२४ विवाहेसूद्यतासु कन्यासु शुल्के मौल्यप्रसंगे सति सुरूपां कन्यां तुभ्यं दास्याम इत्यर्थः ॥
१२-६६-२५ शस्त्रपत्रेण शस्त्रेण वाहनेन च ।प्रधानतः श्रेष्टाः।प्रथमार्थे तसिः ॥
१२-६६-२९ मानं दर्पम् ।विधम नाशय ॥
१२-६६-३१ अपतत्रसिरे त्रासं प्राप्ताः ॥

---

शन्तिपर्व-अध्यय०६७
॥श्रीः ॥
१२.६७. अध्यायः ६७

Mahabharata - Shanti Parva - Chapter Topics
भीष्मेण युधिष्ठिरंप्रति वसुमनसे बृहस्पत्युक्तराजगुणानुवर्णनम्
॥१.।
Mahabharata - Shanti Parva - Chapter Text

१२-६७-० (६७४०६)
युधिष्ठिर उवाच।१२-६७-०क्ष् (५४९४)
किमाहुर्दैवतं विप्रा राजानं भरतर्षभ ।
मनुष्याणामधिपतिं तन्मे ब्रूहि पितामह ॥१२-६७-१ (६७४०७)
भीष्म उवाच।१२-६७-२क्ष् (५४९५)
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
बृहस्पतिं वसुमना यथा पप्रच्छ भारत ॥१२-६७-२ (६७४०८)
राजा वसुमना नाम कौसल्यो धीमतां वरः ।
महर्षिं किल पप्रच्छ कृतप्रज्ञं बृहस्पतिम् ॥१२-६७-३ (६७४०९)
सर्वं वैनयिकं कृत्वा विनयज्ञो बृहस्पतिम् ।

दक्षिणानन्तरो भूत्वा प्रणम्य विधिपूर्वकम् ॥१२-६७-४ (६७४१०)
विधिं पप्रच्छ राजस्य सर्वलोकहिते रतः ।
प्रजानां सुखमन्विच्छन्धर्मशीलं बृहस्पतिम् ॥१२-६७-५ (६७४११)
केन भूतानि वर्धन्ते क्षयं गच्छन्ति केन वा ।
कमर्चन्तो महाप्राज्ञ सुखमव्ययमाप्नुयुः ॥
ग्एतन्मे शंस देवर्षे धर्मकामार्थसंशयम्'॥ १२-६७-६ (६७४१२)
एवं पृष्टो महाप्राज्ञः कौसल्येनामितौजसा ।
राजसत्कारमव्यग्रो राज्यस्य च विवर्धनम् ।
दण्डनीतिं समाश्रित्य शशंसास्मै बृहस्पतिः ॥ १२-६७-७ (६७४१३)
राजमूलो महाप्राज्ञ धर्मो लोकस्य लक्ष्यते ।
प्रजा राजभयादेव न खादन्ति परस्परम् ॥१२-६७-८ (६७४१४)
राजा ह्येवाखिलं लोकं समुदीर्णं समुत्सुकम् ।
प्रसादयति धर्मेण प्रसाद्य च विराजते ॥१२-६७-९ (६७४१५)
यथा ह्यनुदये राजन्भूतानि शशिसूर्ययोः ।
अन्धे तमसि मज्जेयुरपश्यन्तः परस्परम् ॥१२-६७-१० (६७४१६)
यथा ह्यनुदके मत्स्या निराक्रन्दे विहङ्गमाः ।
विहरेयुर्यथाकामं विहिंसन्तः पुनः पुनः ॥१२-६७-११ (६७४१७)
विमथ्यातिक्रमेरंश्च विषह्यापि परस्परम् ।
अभावमचिरेणैव गच्छेयुर्नात्र संशयः ॥१२-६७-१२ (६७४१८)
एवमेव विना राज्ञा विनश्येयुरिमाः प्रजाः ।
अन्धे तमसि मज्जेयुरगोपाः पशवो यथा ॥१२-६७-१३ (६७४१९)
हरेयुर्बलवन्तोऽपि दुर्बलानां परिग्रहान् ।
हन्युर्व्यायच्छमानांश्च यदि राजा न पालयेत् ॥१२-६७-१४ (६७४२०)
ममेदमिति लोकेऽस्मिन्न भवेत्स्वपरिग्रहः ।
न दारा न च पुत्रः स्यान्न धनं न परिग्रहः ।
विष्वग्लोपः प्रवर्तेत यदि राजा न पालयेत् ॥ १२-६७-१५ (६७४२१)
यानं वस्त्रमलङ्कारान्रत्नानि विविधानि च ।
हरेयुः सहसा पापा यदि राजा न पालयेत् ॥१२-६७-१६ (६७४२२)
पतेद्बहुविधं शस्त्रं बहुधा धर्मचारिषु ।
अधर्मः प्रगृहीतः स्याद्यदि राजा न पालयेत् ॥१२-६७-१७ (६७४२३)
मातरं पितरं वृद्धमाचार्यमतिथिं गुरुम् ।
क्लिश्नीयुरपि हिंस्युर्वा यदि राजा न पालयेत् ॥१२-६७-१८ (६७४२४)
ग्अन्यांश्च क्रोशतो हिंस्युर्लोकोऽयं दस्युवद्भवेत्।'
वधबन्धपरिक्लेशो नित्यमर्थवतां भवेत् ।
ममत्वं च न विन्देयुर्यदि राजा न पालयेत् ॥ १२-६७-१९ (६७४२५)
अन्ताश्चाकाल एव स्युर्लोकोऽयं दस्युसाद्भवेत् ।

पतेद्बहुविधं राज्यं यदि राजा न पालयेत् ॥१२-६७-२० (६७४२६)
न योनिदोषो वर्तेत न कृषिर्न वणिक्पथः ।
मज्जेद्धर्मस्त्रयी न स्याद्यदि राजा न पालयेत् ॥१२-६७-२१ (६७४२७)
न यज्ञाः संप्रवर्तेयुर्विधिवत्स्वाप्तदक्षिणाः ।
न विवाहाः समाजो वा यदि राजा न पालयेत् ॥१२-६७-२२ (६७४२८)
न वृषाः संप्रवर्तेरन्न मथ्येरंश्च गर्गराः ।
घोषाः प्रणाशं गच्छेयुर्यदि राजा न पालयेत् ॥१२-६७-२३ (६७४२९)
त्रस्तमुद्विग्नहृदयं हाहाभूतमचेतनम् ।
क्षणेन विनशेत्सर्वं यदि राजा न पालयेत् ॥१२-६७-२४ (६७४३०)
न संवत्सरसत्राणि तिष्ठेयुरकुतोभयाः ।
विधिवद्दक्षिणावन्ति यदि राजा न पालयेत् ॥१२-६७-२५ (६७४३१)
ब्राह्मणाश्चतुरो वेदान्नाधीयीरंस्तपस्विनः ।
विद्यास्नाता व्रतस्नाता यदि राजा न पालयेत् ॥१२-६७-२६ (६७४३२)
न भवेद्धर्मसंसेवी मोहविप्रहतो जनः ।
हर्ता स्वच्छेन्द्रियो गच्छेद्यदि राजा न पालयेत् ॥१२-६७-२७ (६७४३३)
हस्ताद्धस्तं परिमुषेद्भिद्येरन्सर्वसेतवः ।
भयार्तं विद्रवेत्सर्वं यदि राजा न पालयेत् ॥१२-६७-२८ (६७४३४)
अनयाः संप्रवपर्तेरन्भवेद्वै वर्णसङ्करः ।
दुर्भिक्षमाविशेद्राष्ट्रं यदि राजा न पालयेत् ॥१२-६७-२९ (६७४३५)
विवृत्य हि यथाकामं गृहद्वाराणि शेरते ।
मनुष्या रक्षिता राज्ञा समन्तादकुतोभयाः ॥१२-६७-३० (६७४३६)
नाक्रुष्टं सहते कश्चित्कुतो वा हस्तलाघवम् ।
यदि राजा न सम्यग्गां रक्षयत्यपि धार्मिकः ॥१२-६७-३१ (६७४३७)
स्त्रियश्चापुरुषा मार्गं सर्वालङ्कारभूषिताः ।
निर्भयाः प्रतिपद्यन्ते यदि रक्षति भूमिपः ॥१२-६७-३२ (६७४३८)
धर्ममेव प्रपद्यन्ते न हिंसन्ति परस्परम् ।
अनुगृह्णन्ति चान्योन्यं यदा रक्षति भूमिपः ॥१२-६७-३३ (६७४३९)
यजन्ते च महायज्ञैस्त्रयो वर्णाः पृथग्विधैः ।
युक्ताश्चाधीयते विद्यां यदा रक्षति भूमिपः ॥१२-६७-३४ (६७४४०)
वार्तामूलो ह्ययं लोकस्तया वै धार्यते सदा ।
तत्सर्वं वर्तते सम्यग्यदा रक्षति भूमिपः ॥१२-६७-३५ (६७४४१)
यदा राजा धुरं श्रेष्ठामादाय वहति प्रजाः ।
महता बलयोगेन तदा लोकः प्रसीदयि ॥१२-६७-३६ (६७४४२)
यस्याभावेन भूतानामभावः स्यात्समन्ततः ।
भावे च भावो नित्यं स्यात्कस्तं न प्रतिपूजयेत् ॥१२-६७-३७ (६७४४३)
तस्य यो वहते भारं सर्वलोकसुखावहम् ।

तिष्ठन्प्रियहिते राज्ञ उभौ लोकाविमौ जयेत् ॥१२-६७-३८ (६७४४४)
यस्तस्य पुरुषः पापं मनसाऽप्यनुचिन्तयेत् ।
असंशयमिह क्लिष्टः प्रेत्यापि नरकं व्रजेत् ॥१२-६७-३९ (६७४४५)
न हि जात्ववमन्तव्यो मनुष्य इति भूमिपः ।
महती देवता ह्येषा नररूपेण तिष्ठति ॥१२-६७-४० (६७४४६)
कुरुते पञ्चरूपाणि कालयुक्तानि यः सदा ।
भवत्यग्निस्तथाऽऽदित्यो मृत्युर्वैश्रवणो यमः ॥१२-६७-४१ (६७४४७)
यदा ह्यासीदतः पापान्दहत्युग्रेण तेजसा ।
मिथ्योपचरितो राजा तदा भवति पावकः ॥१२-६७-४२ (६७४४८)
यदा पश्यति चारेण सर्वभूतानि भूमिपः ।
क्षेमं च कृत्वा व्रजति तदा भवति भास्करः ॥१२-६७-४३ (६७४४९)
अशुचींश्च यदा क्रुद्धः क्षिणोति शतशो नरान् ।
सपुत्रपौत्रान्सामात्यांस्तदा भवति सोन्तकः ॥१२-६७-४४ (६७४५०)
यदा त्वधार्मिकान्सर्वांस्तीक्ष्णैर्दण्डैर्नियच्छति ।
धार्मिकांश्चानुगृह्णाति भवत्यथ यमस्तदा ॥१२-६७-४५ (६७४५१)
यदा तु धनधाराभिस्तर्पयत्युपकारिणः ।
आच्छिनत्ति च रत्नानि विविधान्यपकारिणां ॥१२-६७-४६ (६७४५२)
श्रियं ददाति कस्मैचित्कस्माच्चिदपकर्षति ।
तदा वैश्रवणो राजा लोके भवति भूमिपः ॥१२-६७-४७ (६७४५३)
नास्यापवादे स्थातव्यं दक्षेणाक्लिष्टकर्मणा ।
धर्ममाकाङ्क्षता लोके ईश्वरस्यानसूयता ॥१२-६७-४८ (६७४५४)
न हि राज्ञः प्रतीपानि कुर्वन्सुखमवाप्नुयात् ।
पुत्रो भ्राता वयस्यो वा यद्यप्यात्मसमो भवेत् ॥१२-६७-४९ (६७४५५)
कुर्यात्कृष्णगतिः शेषं ज्वलितोऽनिलसारथिः ।
न तु राज्ञाऽभिपन्नस्य शेषं क्वचन विद्यते ॥१२-६७-५० (६७४५६)
तस्य सर्वाणि रक्ष्याणि दूरतः परिवर्जयेत् ।
मृत्योरिव जुगुप्सेत राजस्वहरणान्नरः ॥१२-६७-५१ (६७४५७)
वध्येतभिमृशन्सद्यो मृगः कूटमिव स्पृशन् ।
आत्मस्वमिव संरक्षेद्राजस्वमिह बुद्धिमान् ॥१२-६७-५२ (६७४५८)
महान्तं नरकं घोरमप्रतिष्ठमचेतसः ।
पतन्ति चिररात्राय राजवित्तापहारिणः ॥१२-६७-५३ (६७४५९)
राजा भोजो विराट् सम्राट् क्षत्रियो भूपतिर्नृपः ।
य एभिः स्तूयते शब्दैः कस्तं नार्चितुमर्हति ॥१२-६७-५४ (६७४६०)
तस्माद्बुभूषुर्नियतो जितात्मा संयतेन्द्रियः ।
मेधावी धृतिमान्दक्षः संश्रयेत् महीपतिम् ॥१२-६७-५५ (६७४६१)
कृतज्ञं प्राज्ञमक्षुद्रं दृढभक्तिं जितेन्द्रियम् ।

धर्मनित्यं स्थितं स्थाने मन्त्रिणं पूजयेन्नृपः ॥१२-६७-५६ (६७४६२)
दृढभक्तिं कृतप्रज्ञं धर्मज्ञं संयतेन्द्रियम् ।
शूरमक्षुद्रकर्माणं प्रसिद्धं जनमाश्रयेत् ॥१२-६७-५७ (६७४६३)
राजा प्रगल्भं पुरुषं करोति
राजा भृशं बृंहयते मनुष्यम् ।
राजाभिपन्नस्य कुतः सुखानि
राजाऽभ्युपेतं सुखिनं करोति ॥ १२-६७-५८ (६७४६४)
1राजा प्रजानां प्रथमं शरीरं
प्रजाश्च राज्ञोऽप्रतिमं शरीरम् ।
राज्ञा विहीना न भवन्ति देशा
देशैर्विहीना न नृपा भवन्ति ॥' १२-६७-५९ (६७४६५)
राजा प्रजानां हृदयं गरीयो
गतिः प्रतिष्ठा सुखमुत्तमं च ।
समाश्रिता लोकमिमं परं च
जयन्ति सम्यक्पुरुषा नरेन्द्र ॥ १२-६७-६० (६७४६६)
नराधिपश्चाप्यनुशिष्य मेदिनीं
दमेन सत्येन च सौहृदेन ।
महद्भिरिष्ट्वा क्रतुभिर्महायशा
स्त्रिविष्टपे स्थानमुपैति शाश्वतम् ॥ १२-६७-६१ (६७४६७)
भीष्म उवाच।१२-६७-६२क्ष् (५४९६)
स एवमुक्तोऽङ्गिरसा कौसल्यो राजसत्तमः ।
प्रयत्नात्कृतवान्वीरः प्रजापालनमुत्तमम् ॥ ॥१२-६७-६२ (६७४६८)

इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि
सप्तषष्टितमोऽध्यायः ॥ ६७.।
Mahabharata - Shanti Parva - Chapter Footnotes

१२-६७-४ वैनयिकं अभ्युत्थानाभिवादनादिकम् ।दक्षिणा
दक्षिणातोऽनन्तरः।समीपे भूत्वाप्रदक्षिणीकृत्येत्यर्थः ॥
१२-६७-११ अनुदके अल्पोदके ।निराक्रन्दे हिंस्रभयरहिते ॥
१२-६७-१४ व्यायच्छमानान्स्वंस्वमर्थं अदातॄन् ॥
१२-६७-१५ विष्वक्सर्वतः लोपः अर्थानां लुम्पनम् ॥
१२-६७-१८ अन्धाश्च क्रोशत इति द पाठः ॥
१२-६७-२१ योनिदोषः व्यभिचारे विगानम् ॥
१२-६७-२३ न संप्रवर्तेरन् न रेतः सिञ्चेरन् ।गर्गराः
दधिमन्थनपात्राणि ॥

१२-६७-२८ हस्ताद्धस्तं हस्तस्थमपि चोरा हरेयुः ॥
१२-६७-३० विवृत्य उद्धात्य ॥
१२-६७-३१ हस्तलाघवं तत्साध्यं ताडनम् । अक्रुष्टं गालनं वा कुतो न सहते। अपितु अनायकत्वात्सहत एव। गां पृथ्वीम् ॥
१२-६७-३२ अपुरुषाः अरक्षिता अपि ॥
१२-६७-३५ त्रय्या वै इति झ । पाठः। तत्र वार्ता जीविका तन्मूलः। त्रय्या च वृष्ट्या दिहेतुतया त्रायते रक्षते सर्वं त्रयी वार्तादिरित्यर्थः ॥
१२-६७-४२ आसीदतः समीपस्थान् । मिथ्योपचरितो वञ्चितः ॥
१२-६७-४८ तस्योपदेशे स्थातव्यमिति टङ्थ । पाठः ॥
१२-६७-५० अभिपन्नस्य तिरस्कृतस्य ॥
१२-६७-५२ कूटं मारणयन्त्रम् ॥
१२-६७-५४ भोजः सुखानां भोजयिता ॥
१२-६७-५५ बुभूषुर्भवितुमिच्छुः ॥
१२-६७-५८ निषिद्धजनमाश्रयेदिति झ । पाठः। तत्र निषिद्धा जना येन तम्। अहमेकं एवेदं कार्यं करिष्यामि किमेतैरिति वादिनमित्यर्थः ॥
१२-६७-६० समाश्रिता राजानमिति शेषः ॥

---

शन्तिपर्व-अध्यय०६८
॥ श्रीः ॥
१२.६८. अध्यायः ६८

Mahabharata - Shanti Parva - Chapter Topics
युधिष्ठिरंप्रति भीष्मेण राजनीतिकथनम् ॥ १.।
Mahabharata - Shanti Parva - Chapter Text

१२-६८-० (६७४६९)
युधिष्ठिर उवाच। १२-६८-०क्ष् (५४९७)
पार्थिवेन विशेषेण किं कार्यमवशिष्यते ।
कथं रक्ष्यो जनपदः कथं वध्याश्च शत्रवः ॥ १२-६८-१ (६७४७०)
कथं चारान्प्रयुञ्जीत वर्णान्विश्वासयेत्कथम् ।
कथं भृत्यान्कथं दारान्कथं पुत्रांश्च भारत ॥ १२-६८-२ (६७४७१)
भीष्म उवाच। १२-६८-२क्ष् (५४९८)
राजवृत्तं महाराज शृणुष्वावहितोऽखिलम् ।
यत्कार्यं पार्थिवेनादौ पार्थिवप्रकृतेन वा ॥ १२-६८-३ (६७४७२)
आत्मा जेयः सदा राज्ञा ततो जेयाश्च शत्रवः ।

अजितात्मा नरपतिर्विजयेत कथं रिपून् ॥ १२-६८-४ (६७४७३)
एतावानात्मविजयः पञ्चवर्गविनिग्रहः ।
जितेन्द्रियो नरपतिर्बाधितुं शक्नुयाद्रिपुन् ॥ १२-६८-५ (६७४७४)
न्यसेत गुल्मान्दुर्गेषु सन्धौ च कुरुनन्दन ।
नगरोपवने चैव पुरोद्याने तथैव च ॥ १२-६८-६ (६७४७५)
संस्थानेषु च सर्वेषु पुटेषु नगरस्य च ।
मध्ये च नरशार्दूल तथा राजनिवेशने ॥ १२-६८-७ (६७४७६)
प्रणिर्धीश्च ततः कुर्याज्जडान्धबधिराकृतीन् ।
पुंसः परीक्षितान्प्राज्ञान्क्षुत्पिपासाश्रमक्षमान् ॥ १२-६८-८ (६७४७७)
अमात्येषु च सर्वेषु मित्रेषु त्रिविधेषु च ।
पुत्रेषु च महाराज प्रणिदध्यात्समाहितः ॥ १२-६८-९ (६७४७८)
पुरे जनपदे चैव तथा सामन्तराजसु ।
यथा न विद्युरन्योन्यं प्रणिधेयास्तथा हि ते ॥ १२-६८-१० (६७४७९)
चारांश्च विद्यात्प्रहितान्परेण भरतर्षभ ।
आपणेषु विहारेषु समवायेषु वीथिषु ॥ १२-६८-११ (६७४८०)
आरामेषु तथोद्याने पण्डितानां समागमे ।
वेशेषु चत्वरे चैव सभास्वावसथेषु च ॥ १२-६८-१२ (६७४८१)
एवं विहन्याच्चारेण परचारं विचक्षणः ।
चारे च विहते सर्वं हतं भवति भारत ॥ १२-६८-१३ (६७४८२)
यदा तु हीनं नृपतिर्विद्यादात्मानमात्मना ।
अमात्यैः सह संमन्त्र्य कुर्यात्सन्धिं बलीयसा ॥ १२-६८-१४ (६७४८३)
गविद्वांसः क्षत्रिया वैश्या ब्राह्मणाश्च बहुश्रुताः ।
दण्डनीतौ तु निष्पन्ना मन्त्रिणः पृथिवीपते ॥ १२-६८-१५ (६७४८४)
प्रष्टव्यो ब्राह्मणः पूर्वं नीतिशास्त्रस्य तत्ववित् ।
पश्चात्पृच्छेत भूपालः क्षत्रियं नीतिकोविदम् ।
वैश्यशूद्रौ तथा भूयः शास्त्रज्ञौ हितकारिणौ ॥ ' १२-६८-१६ (६७४८५)
अज्ञायमाने हीनत्वे सन्धिं कुर्यात्परेण वै ।
लिप्सुर्वा कंचिदेवार्थं त्वरमाणो विचक्षणः ॥ १२-६८-१७ (६७४८६)
गुणवन्तो महोत्साहा धर्मज्ञाः साधवश्च ये ।
सन्दधीत नृपस्तैश्च राष्ट्रं धर्मेण पालयन् ॥ १२-६८-१८ (६७४८७)
उच्छिद्यमानमात्मानं ज्ञात्वा राजा महामतिः ।
पूर्वापकारिणो हन्याल्लोकद्विष्टांश्च सर्वशः ॥ १२-६८-१९ (६७४८८)
यो नोपकर्तुं शक्नोति नापकर्तुं महीपतिः ।
न शक्यरूपश्चोद्धर्तुमुपेक्ष्यस्तादृशो भवेत् ॥ १२-६८-२० (६७४८९)
यात्रां यायादविज्ञातमनाक्रन्दमनन्तरम् ।
व्यासक्तं च प्रमत्तं च दुर्बलं च विचक्षणः ॥ १२-६८-२१ (६७४९०)

यात्रामाज्ञापयेद्वीरः कल्यः पुष्टबलः सुखी ।
पूर्वं कृत्वा विधानं च यात्रायां नगरे तथा ॥ १२-६८-२२ (६७४९१)
न च पश्यो भवेदस्य नृपो यश्चातिवीर्यवान् ।
हीनश्च बलवीर्याभ्यां कर्षयंस्तत्परो वसेत् ॥ १२-६८-२३ (६७४९२)
राष्ट्रं च पीडयेत्तस्य शस्त्राग्निविषमूर्च्छनैः ।
अमात्यवल्लभानां च विवादांस्तस्य कारयेत् ॥ १२-६८-२४ (६७४९३)
वर्जनीयं सदा युद्धं राज्यकामेन धीमता ।
उपायैस्त्रिभिरादानमर्थस्याह बृहस्पतिः ॥ १२-६८-२५ (६७४९४)
सान्त्वेन तु प्रदानेन भेदेन च नराधिप ।
यमर्थं शक्नुयात्प्राप्तुं तेन तुष्येत पण्डितः ॥ १२-६८-२६ (६७४९५)
आददीत बलिं चापि प्रजाभ्यः कुरुनन्दन ।
षड्भागममितप्रज्ञस्तासामेवाभिगुप्तये ॥ १२-६८-२७ (६७४९६)
दशाधर्मगतेभ्यो यद्वसु बह्वल्पमेव वा ।
तन्नाददीत सहसा पौराणां रक्षणाय वै ॥ १२-६८-२८ (६७४९७)
यथा पुत्रास्तथा पौरा द्रष्टव्यास्ते न संशयः ।
भक्तिश्चैषु न कर्तव्या व्यवहारप्रदर्शने ॥ १२-६८-२९ (६७४९८)
श्रोतुं चैव न्यसेद्राजा प्राज्ञान्सर्वार्थदर्शिनः ।
व्यवहारेषु सततं तत्र राज्यं प्रतिष्ठितम् ॥ १२-६८-३० (६७४९९)
आकरे लवणे शुल्के तरे नागबले तथा ।
न्यसेदमात्यान्नृपतिः स्वाप्तान्वा पुरुषान्हितान् ॥ १२-६८-३१ (६७५००)
सम्यग्दण्डधरो नित्यं राजा धर्ममवाप्नुयात् ।
नृपस्य सततं दण्डः सम्यग्धर्मः प्रशस्यते ॥ १२-६८-३२ (६७५०१)
वेदवेदाङ्गवित्प्राज्ञः सुतपस्वी नृपो भवेत् ।
दानशीलश्च सततं यज्ञशीलश्च भारत ॥ १२-६८-३३ (६७५०२)
एते गुणाः समस्ताः स्युर्नृपस्य सततं स्थिराः ।
व्यवहारस्य लोपेन कुतः स्वर्गः कुतो यशः ॥ १२-६८-३४ (६७५०३)
यदा तु पीडितो राजा भवेद्राज्ञा बलीयसा ।
शतदाभिसंश्रयेद्दुर्गं बुद्धिमान्पृथिवीपतिः ॥ १२-६८-३५ (६७५०४)
विधावाक्रम्य मित्राणि विधानमुपकल्पयेत् ।
सामभेदान्विरोधार्थं विधानमुपकल्पयेत् ॥c १२-६८-३६ (६७५०५)
गत्रिधा तु कृत्वा मित्राणि विधानमुपकल्पयेत्।'
घोषान्न्यसेत मार्गेषु ग्रामानुत्थापयेदपि ।
प्रवेशयेच्च तान्सर्वाञ्शाखानगरकेष्वपि ॥ १२-६८-३७ (६७५०६)
ये गुप्ताश्चैव दुर्गाश्च देशास्तेषु प्रवेशयेत् ।
धनिनो बलमुख्यांश्च सान्त्वयित्वा पुनः पुनः ॥ १२-६८-३८ (६७५०७)
सस्याभिहारं कुर्वीत स्वयमेव नराधिपः ।

असंभवे प्रवेशस्य दाहयेदग्निना भृशम् ॥१२-६८-३९ (६७५०८)
क्षेत्रस्थेषु च सस्येषु शत्रोरुपजपेन्नरान् ।
विनाशयेद्वा तत्सर्वं बलेनाथ स्वकेन वै ॥१२-६८-४० (६७५०९)
नदीमार्गेषु च तथा संक्रमानवसादयेत् ।
जलं विस्रावयेत्सर्वमविस्राव्यं च दूषयेत् ॥१२-६८-४१ (६७५१०)
तदात्वेनायतीभिश्च निवसेद्भूम्यनन्तरम् ।
प्रतिघातं परस्याजौ युद्धकालेऽप्युपस्थिते ॥१२-६८-४२ (६७५११)
दुर्गाणां चाभितो राजा मूलच्छेदं प्रकारयेत् ।
सर्वेषां क्षुद्रवृक्षाणां चैत्यवृक्षान्विवर्जयेत् ॥१२-६८-४३ (६७५१२)
प्रवृद्धानां च वृक्षाणां शाखां प्रच्छेदयेत्तथा ।
चैत्यानां सर्वथा त्याज्यमपि पत्रस्य पातनम् ॥१२-६८-४४ (६७५१३)
ग्देवानामाश्रयाश्चैत्या यक्षराक्षसभोगिनाम् ।
पिशाचपन्नगानां च गन्धर्वाप्सरसामपि ।
रौद्राणां चैव भूतानां तस्मात्तान्परिवर्जयेत् ॥ १२-६८-४५ (६७५१४)
श्रूयते हि निकुम्भेन सौदासस्य बलं हतम् ।
महेश्वरगणेशेन वाराणस्यां नराधिप ॥' १२-६८-४६ (६७५१५)
प्रगण्डीः कारयेत्सम्यगाकाशजननीस्तदा ।
आपूरयेच्च परिखां स्थाणुनक्रझषाकुलाम् ॥१२-६८-४७ (६७५१६)
सङ्कटद्वारकाणि स्युरुच्छ्वासार्थं पुरस्य च ।
तेषां च द्वारवद्गुप्तिः कार्या सर्वात्मना भवेत् ॥१२-६८-४८ (६७५१७)
द्वारेषु च गुरूण्येव यन्त्राणि स्थापयेत्सदा ।
आरापयेच्छतघ्नीश्च स्वाधीनानि च कारयेत् ॥१२-६८-४९ (६७५१८)
काष्ठानि चाभिहार्याणि तथा कूपांश्च खानयेत् ।
संशोधयेत्तथा कूपान्कृतान्पूर्वपयोर्थिभिः ॥१२-६८-५० (६७५१९)
तृणच्छन्नानि वेश्मानि पङ्केनाथ प्रलेपयेत् ।
निर्हरेच्च तृणं मासि चैत्रे वह्निभयात्पुरा ॥१२-६८-५१ (६७५२०)
नक्तमेव च भक्तानि पाचयेत नराधिपः ।
न दिवा ज्वालयेदग्निं वर्जयित्वाऽऽग्निहोत्रिकम् ॥१२-६८-५२ (६७५२१)
ग्यथासंभवशैलानि चैष्टकानि च कारयेत् ।
मृण्मयानि च कुर्वीत ज्ञात्वा देशं बलाबलम् ॥' १२-६८-५३ (६७५२२)
कर्मारारिष्टशालासु ज्वलेदग्निः सुरक्षितः ।
गृहाणि च प्रवेश्यान्तर्विधेयः स्याद्धुताशनः ॥१२-६८-५४ (६७५२३)
महादण्डश्च तस्य स्याद्यस्याग्निर्वै दिवा भवेत् ।
प्रघोषयेदथैवं च रक्षणार्थं पुरस्य च ॥१२-६८-५५ (६७५२४)
भिक्षुकांश्चाक्रिकांश्चैव क्लीबोन्मत्तान्कुशीलवान् ।
बाह्यान्कुर्यान्नरश्रेष्ठ दोषाय स्युर्हि ते शठाः ॥१२-६८-५६ (६७५२५)

चत्वरेष्वथ तीर्थेषु सभास्वावसथेषु च ।
यथार्थवर्णं प्रणिधिं कुर्यात्सर्वत्र पार्थिवः ॥ १२-६८-५७ (६७५२६)
विशालान्राजमार्गांश्च कारयेत नराधिपः ।
प्रपाश्च विपणीश्चैव यथोद्देशं समादिशेत् ॥ १२-६८-५८ (६७५२७)
भाण्डागारायुधागारान्धान्यागारांश्च सर्वशः ।
अश्वागारान्गजागारान्बलाधिकरणानि च ॥ १२-६८-५९ (६७५२८)
परिखाश्चैव कौरव्य प्रतोलीसङ्कटानि च ।
न जातु कश्चित्पश्येत गुह्यमेतद्युधिष्ठिर ॥ १२-६८-६० (६७५२९)
अर्थसंनिचयं कुर्याद्राजा परबलार्दितः ।
तैलं मधु घृतं सस्यमौषधानि च सर्वशः ॥ १२-६८-६१ (६७५३०)
अङ्गारकुशमुञ्जानां पलाशशरवर्णिनाम् ।
यवसेन्धनदिग्धानां कारयेत च संचयान् ॥ १२-६८-६२ (६७५३१)
आयुधानां च सर्वेषां शक्त्यृष्टिप्रासचर्मणाम् ।
संचयानेवमादीनां कारयेत नराधिपः ॥ १२-६८-६३ (६७५३२)
औषधानि च सर्वाणि मूलानि च फलानि च ।
चतुर्विधांश्च वैद्यान्वै संगृह्णीयाद्विशेषठः ॥ १२-६८-६४ (६७५३३)
नटांश्च नर्तकांश्चैव मल्लान्मायाविनस्तथा ।
शोभयेयुः पुरवरं मोदयेयुश्च सर्वशः ॥ १२-६८-६५ (६७५३४)
यतः शङ्का भवेच्चापि भृत्यतोऽथापि मन्त्रितः ।
पौरेभ्यो नृपतेर्वापि स्वाधीनान्कारयेत तान् ॥ १२-६८-६६ (६७५३५)
कृते कर्माणि राजा तान्पूजयेद्धनसंचयैः ।
माननेन यथार्हेण सान्त्वेन विविधेन च ॥ १२-६८-६७ (६७५३६)
निर्वेदयित्वा तु परं हत्वा वा कुरुनन्दन ।
गतानृण्यो भवेद्राजा यथा शास्त्रे निदर्शितम् ॥ १२-६८-६८ (६७५३७)
राज्ञा सप्तैव रक्ष्याणि तानि चैव निबोध मे ।
आत्माऽमात्याश्च कोशाश्च दण्डो मित्राणि चैव हि ॥ १२-६८-६९ (६७५३८)
तथा जनपदाश्चैव पुरं च कुरुनन्दन ।
एतत्सप्तात्मकं राज्यं परिपाल्यं प्रयत्नतः ॥ १२-६८-७० (६७५३९)
षाड्गुण्यं च त्रिवर्गं च त्रिवर्गपरमं तथा ।
यो वेत्ति पुरुषव्याघ्र स भुङ्क्ते पृथिवीमिमाम् ॥ १२-६८-७१ (६७५४०)
षाड्गुण्यमिति यत्प्रोक्तं तन्निबोध युधिष्ठिर ।
सन्धायासनमित्येव यात्रासन्धानमेव च ॥ १२-६८-७२ (६७५४१)
विगृह्यासनमित्येव यात्रां संपरिगृह्य च ।
द्वैधीभावस्तथाऽन्येषां संश्रयोऽथ परस्य च ॥ १२-६८-७३ (६७५४२)
त्रिवर्गश्चापि यः प्रोक्तस्तमिहैकमनाः शृणु ।
क्षयः स्थानं च वृद्धिश्च त्रिवर्गः परमस्तथा ॥ १२-६८-७४ (६७५४३)

ग्धर्मश्चार्थश्च कामश्च त्रिवर्गो वै सनातनः ।
मन्त्रश्चैव प्रभावश्च उत्साहश्चैव तान्त्रिकः ।
शक्तित्रयं समाख्यातं त्रिवर्गस्य च तत्परम् ॥ १२-६८-७५ (६७५४४)
कार्यं च कारणं चैव कर्ता च परिकीर्तितः ।
एतत्परतरं विद्यान्त्रिवर्गादपि भारत ।
सर्वेपां च क्षये राजन्यस्त्रिवर्गः सनातनः ॥ १२-६८-७६ (६७५४५)
सत्वं रजस्तमश्चैव त्रिवर्गकरणं स्मृतम् ।
तेनात्यन्तविमुक्तश्च मुक्तः पुरुष उच्यते ॥१२-६८-७७ (६७५४६)
कार्यस्य सर्वथा नाशो मोक्ष इत्यभिधीयते ।
तेन मोक्षपरश्चैव देवदेवः पितामहः ।
तुष्ट्यर्थस्य त्रिवर्गस्य रक्षामाह पितामहः ॥ १२-६८-७८ (६७५४७)
जगतो लौकिकी यात्रा यत्र नित्यं प्रतिष्ठिता।'
धर्मोऽर्थश्चैव कामश्च सेवितव्याः स्वकालतः ॥ १२-६८-७९ (६७५४८)
ग्सेवा धर्मस्य कर्तव्या सततं भूरिवत्सरैः ।
पुरुषैर्नरशार्दूल तन्मूलाः सर्वथा क्रियाः ॥' १२-६८-८० (६७५४९)
धर्मेण च महीपालश्चिरं रक्षति मेदिनीम् ।
ग्यः कश्चिद्धार्मिको राजा स विपन्नोऽपि भूपतिः ।
अर्थकामविहीनोऽपि चिरं पालयते महीम् ॥' १२-६८-८१ (६७५५०)
अस्मिन्नर्थे हि द्वौ श्लोकौ गीतावङ्गिरसा स्वयम् ।
यादवीपुत्र भद्रं ते श्रोतुमर्हसि तावपि ॥१२-६८-८२ (६७५५१)
कृत्वा कार्याणि धर्मेण सम्यक्संपाल्य मेदिनीम् ।
पालयित्वा तथा पौरान्परत्र सुखमेधते ॥१२-६८-८३ (६७५५२)
किं तस्य तपसा राज्ञः किंच तस्याध्वरैः कृतैः ।
सुपालिताः प्रजा यस्य सर्वधर्मकृदेव सः ॥१२-६८-८४ (६७५५३)
श्लोकाश्चोशनसा गीतास्तान्निबोध युधिष्ठिर ।
दण्डनीतेश्च यन्मूलं त्रिवर्गस्य च भूपते ॥१२-६८-८५ (६७५५४)
भार्गवाङ्गिरसं कर्म षोडशाङ्गं च यद्बलम् ।
विषं माया च दैवं च पौरुषं चात्मसिद्धये ॥१२-६८-८६ (६७५५५)
प्रागुदक्प्रवणं दुर्गं समासाद्य महीपतिः ।
त्रिवर्गत्रयसंपूर्णमुपादाय तमुद्वहेत् ॥१२-६८-८७ (६७५५६)
षट्पञ्च च विनिर्जित्य दश चाष्टौ च भूपतिः ।
त्रिवर्गैर्दशभिर्युक्तः सुरैरपि न जीर्यते ॥१२-६८-८८ (६७५५७)
न बुद्धिं परिगृह्णीत स्त्रीणां मूर्खजनस्य च ।
दैवोपहतबुद्धीनां ये च वेदैर्विवर्जिताः ।
न तेषां शृणुयाद्राजा बुद्धिस्तेषां पराङ्मुखी ॥ १२-६८-८९ (६७५५८)
स्त्रीप्रधानानि राज्यानि विद्वद्भिर्वर्जितानि च ।

मूर्खामात्याग्नितप्तानि शुष्यन्ते जलबिन्दुवत् ॥ १२-६८-९० (६७५५९)
विद्वांसः प्रथिता ये च ये चाप्ताः सर्वकर्मसु ।
बुद्धेषु दृष्टकर्माणि तेषां च शृणुयान्नृपः ॥ १२-६८-९१ (६७५६०)
दैवं पुरुषकारं च त्रिवर्गं च समाश्रितः ।
दैवतानि च विप्रांश्च प्रणम्य विजयी भवेत् ॥' ॥ १२-६८-९२ (६७५६१)

इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि
अष्टषष्टिमोऽध्यायः ॥ ६८.।

Mahabharata - Shanti Parva - Chapter Footnotes

१२-६८-३ पार्थिवेन पृथुवंश्येन राज्ञा । पार्थिवप्रकृतेन वा
विजातीयेनापि तत्कार्यकारिणा ॥
१२-६८-४ आत्मा चित्तम् ॥
१२-६८-५ पञ्चवर्गः श्रोत्रादिः ॥
१२-६८-६ गुल्मान् रक्षिणः पत्तीन् । संधौ सीमान्ते ॥
१२-६८-७ संस्थानेषु कोष्ठपालाद्युपवेशनस्थानेषु । मध्येऽन्तः पुरे ॥
१२-६८-८ प्रणिधीन् चारान् ॥
१२-६८-११ विहारेषु यूनां मल्लक्रीडास्थानेषु ॥
१२-६८-१२ सभासु राजसंसत्सु । आवसथेषु तत्र तत्र महतां गृहेषु ॥
१२-६८-१३ एवं विचिनुयाद्राजा परचारं विचक्षणः । चारे हि विदिते
पूर्वं हितं भवति पाण्डव। इति झ। पाठः। तत्र विचिनुयात् अन्विष्यात्
इत्यर्थः ॥
१२-६८-१८ तैर्द्वारभूतैः तान्द्वारीकृत्यबलवद्भिर्नृपैः सह
संधिं कुर्यात् ॥
१२-६८-१९ पूर्वापकारिणः पूर्वं दुष्टा इति अपकृताः
पश्चाद्द्वयानुगृहीताः ॥
१२-६८-२१ अविज्ञातं क्रियाविशेषणमिदम् । अनाकन्दं
मित्रहीनम्। अनन्तरं बन्धुजनहीनम्। व्यासक्तं अन्येन युद्धं
कुर्वाणम्। प्रमत्तं अनवहितम्। यात्रायां यदि विज्ञातमिति
झ। पाठः। तत्र यात्रायां यदि इच्छास्यात्तर्हि दुर्बलत्वादिना विज्ञातं
शत्रुं प्रति यात्रामाज्ञापयेदित्युत्तरेण संबन्धः ॥
१२-६८-२२ विधानं रक्षणादिसामग्रीसंपादनम् ॥
१२-६८-२३ कर्षयन् वीर्यवन्तं । तत्परः कर्षणपरः ॥
१२-६८-२८ दशधर्मगतेभ्य इति । तदाददीत सहसेति च
झ। पाठः। तत्र दशधर्मगताः मत्तोन्मत्तादय इत्यर्थः ॥
१२-६८-२९ भक्तिः स्वीयत्वेन स्नेहः ॥

१२-६८-३० सूतं च विन्यसेद्राजा प्राज्ञं सर्वार्थदर्शिनम् ।इति
टड़ थ द।पाठः ॥
१२-६८-३१ आकरे स्वर्णाद्युत्पत्तिस्थाने ।लवणे तदुत्पत्तिस्थाने।शुल्के
धान्यादिविक्रयस्थाने।तरे नदीसंतरणे।नागबले हस्तियूथे ॥
१२-६८-३७ घोषान् वनस्थान्मार्गेषु राजपथेषु न्यसेत् ॥
१२-६८-४० उपजपेत् भेदयित्वा तद्द्वारा दाहयेत् ॥
१२-६८-४१ संक्रमान् अवतरणार्थान्सेतन् ।जलं तटाकादिस्थं
विस्रावयेत्।तदयोग्यं वापीकूपादिस्थं दूषयेत् विषादिना नाशयेत् ॥
१२-६८-४२ तदात्वेन वर्तमानकाले आयतीभिः उत्तरकालेषु च ।अपवर्गे
तृतीया।सर्वदा आजौ परस्य शत्रोः प्रतिघातं हन्तारं भूम्यनन्तरं
निकटदेशवासिनं तच्छत्रुमाश्रित्यनिवसेत् ॥
१२-६८-४७ प्रगण्डीर्दुर्गप्राकारभित्तौ शूराणामुपवेशनस्थानानि
।आकाशजननीस्तत्रैवैकपक्षायां भित्तौ तत्रत्यानां रक्षणभूतायां
बाह्यार्थदर्शनार्थानि क्षुद्रच्छिद्राणि यद्द्वारा आग्नेयास्त्रगुलिकाः
प्रक्षिप्यन्ते।स्थाणवः सशूलाः।प्रकुण्ठीः कारयेत् इति ड थ।पाठः
॥
१२-६८-४८ संकटद्वारकाणि सूक्ष्मद्वाराणि ।तेषां च द्वारवत् गुप्तिः
कार्या।कुलिकद्वारकाणि स्युः इति ट।ड।थ।पाठः ॥
१२-६८-५४ कर्मारो लोहकारादिः ।अन्तर्विधेयः आच्छादितः कर्तव्यः ॥
१२-६८-५५ महादण्डो वधः ॥
१२-६८-५६ चाक्रिकान् शाकटिकान् ।कुशीलवान् फाललेखान् ॥
१२-६८-६२ वर्णिनां लेखकानाम् ।यवसं धासः।दिग्धानां विषाक्तवाणानाम् ॥
१२-६८-६४ चतुर्विधान् विषशल्यरोगकृत्याहरान् ॥
१२-६८-७२ सन्धायासनं सन्धिं कृत्वाऽवस्थितिः ।यात्रासन्धानं यानम् ॥
१२-६८-७३ यात्रां संपरिगृह्याऽऽसनं शत्रोर्भयप्रदर्शनार्थं
यानं प्रदर्श्य स्वस्थानेऽवस्थानम् ।द्वैधीभाव उभयत्र
संधिकरणम् ॥

---

शन्तिपर्व-अध्यय०६९
॥ श्रीः ॥
१२.६९. अध्यायः ६९

Mahabharata - Shanti Parva - Chapter Topics
भीष्मेण युधिष्ठिरंप्रति कृतादियुगचतुष्टयगुणनिरूपणम् ॥१.।
Mahabharata - Shanti Parva - Chapter Text

१२-६९-० (६७५६२)

युधिष्ठिर उवाच। १२-६९-०क्ष् (५४९९)
दण्डनीतिश्च राजा च समस्तौ तावुभावपि ।
तत्र किं कुर्वतः सिद्धिस्तन्मे ब्रूहि पितामह ॥ १२-६९-१ (६७५६३)
भीष्म उवाच। १२-६९-२क्ष् (५५००)
माहात्म्यं दण्डनीत्यास्तु साध्यं शब्दैः सहेतुकैः ।
शृणु मे शंसतो राजन्यथावदिह भारत ॥ १२-६९-२ (६७५६४)
दण्डनीतिः स्वधर्मेषु चातुर्वर्ण्यं नियच्छति ।
प्रयुक्ता स्वामिना सम्यगधर्मेभ्यो नियच्छति ॥ १२-६९-३ (६७५६५)
चातुर्वर्ण्ये स्वधर्मस्थे मर्यादानामसंकरे ।
दण्डनीतिकृते क्षेमे प्रजानामकुतोभये ॥ १२-६९-४ (६७५६६)
सोमे प्रयत्नं कुर्वन्ति वयो वर्णा यथाविधि ।
तस्मादेव मनुष्याणां सुखं विद्धि समाहितम् ॥ १२-६९-५ (६७५६७)
कालो वा कारणं राज्ञो राजा वा कालकारणम् ।
इति ते संशयो माभूद्राजा कालस्य कारणम् ॥ १२-६९-६ (६७५६८)
दण्डनीत्यां यदा राजा सम्यक्कात्स्न्र्येन वर्तते ।
तदा कृतयुगं नाम कालः श्रेष्ठः प्रवर्तते ॥ १२-६९-७ (६७५६९)
भवेत्कृतयुगे धर्मो नाधर्मो विद्यते क्वचित् ।
सर्वेषामेव वर्णानां नाधर्मे रमते मनः ॥ १२-६९-८ (६७५७०)
योगक्षेमाः प्रवर्तन्ते प्रजानां नात्र संशयः ।
वैदिकानि च कर्माणि भवन्त्यपि गुणान्युत ॥ १२-६९-९ (६७५७१)
ऋतवश्च सुखाः सर्वे भवन्त्युत निरामयाः ।
प्रसीदन्ति नराणां च स्वरवर्णमनांसि च ॥ १२-६९-१० (६७५७२)
व्याधयो न भवन्त्यत्र नाल्पायुर्दृश्यते नरः ।
विधवा न भवन्त्यत्र नृशंसो नात्र जायते ॥ १२-६९-११ (६७५७३)
अकृष्टपच्या पृथिवी भवन्त्योषधयस्तथा ।
त्वक्पत्रफलमूलानि वीर्यवन्ति भवन्ति च ॥ १२-६९-१२ (६७५७४)
नाधर्मो विद्यते तत्र धर्म एव तु केवलम् ।
इति कार्तयुगानेतान्गुणान्विद्धि युधिष्ठिर ॥ १२-६९-१३ (६७५७५)
दण्डनीत्या यदा राजा त्रीनंशाननुवर्तते ।
चतुर्थमंशमुत्सृज्य तदा त्रेता प्रवर्तते ॥ १२-६९-१४ (६७५७६)
अधर्मस्य चतुर्थांशस्त्रीनंशाननुवर्तते ।
कृष्टपच्यैव पृथिवी भवन्त्योषधयस्तथा ॥ १२-६९-१५ (६७५७७)
अर्धं त्यक्त्वा यदा राजा नीत्यर्धमनुवर्तते ।
ततस्तु द्वापरं नाम स कालः संप्रवर्तते ॥ १२-६९-१६ (६७५७८)
अशुभस्य यदा त्वर्धं द्वावंशावनुवर्तते ।
कृष्टपच्यैव पृथिवी भवत्यर्धफला तथा ॥ १२-६९-१७ (६७५७९)

दण्डनीतिं परित्यज्य यदा कार्त्स्न्येन भूमिपः ।
प्रजाः क्लिश्नात्ययोगेन प्रवर्तेत तदा कलिः ॥ १२-६९-१८ (६७५८०)
कलावधर्मो भूयिष्ठो धर्मो भवति न क्वचित् ।
सर्वेषामेव वर्णानां स्वधर्माच्च्यवते मनः ॥ १२-६९-१९ (६७५८१)
शूद्रा भैक्षेण जीवन्ति ब्राह्मणाः परिचर्यया ।
योगक्षेमस्य नाशश्च वर्तते वर्णसंकरः ॥ १२-६९-२० (६७५८२)
वैदिकानि च कर्माणि भवन्ति विगुणान्युत ।
ऋतवो न सुखाः सर्वे भवन्त्यामयिनस्तथा ॥ १२-६९-२१ (६७५८३)
ह्रसन्त च मनुष्याणां स्वरवर्णमनांस्युत ।
व्याधयश्च भवन्त्यत्र म्रियन्ते चाशतायुषः ॥ १२-६९-२२ (६७५८४)
विधवाश्च भवन्त्यत्र नृशंसा जायते प्रजा ।
क्वचिद्वर्षति पर्जन्यः क्वचित्सस्यं प्ररोहति ॥ १२-६९-२३ (६७५८५)
रसाः सर्वे क्षयं यान्ति यदा नेच्छति भूमिपः ।
प्रजाः संरक्षितुं सम्यग्दण्डनीतिसमाहितः ॥ १२-६९-२४ (६७५८६)
राजा कृतयुगस्रष्टा त्रेताया द्वापरस्य च ।
युगस्य च चतुर्थस्य राजा भवति कारणम् ॥ १२-६९-२५ (६७५८७)
कृतस्य करणाद्राजा स्वर्गमत्यन्तमश्नुते ।
त्रेतायाः करणाद्राजा स्वर्गं नात्यन्तमश्नुते ॥ १२-६९-२६ (६७५८८)
प्रवर्तनाद्द्वापरस्य यथाभागमुपाश्नुते ।
कलेः प्रवर्तनाद्राजा पापमत्यन्तमश्नुते ॥ १२-६९-२७ (६७५८९)
ततो वसति दुष्कर्मा नरके शाश्वतीः समाः ।
प्रजानां कल्मषे मग्नोऽकीर्तिं पापं च विन्दति ॥ १२-६९-२८ (६७५९०)
दण्डनीतिं पुरस्कृत्य क्षत्रियेण विजानता ।
लिप्सितव्यमलभ्यं च लब्धं रक्ष्यं च भारत ।
ग्योगक्षेमाः प्रवर्तन्ते प्रजानां नात्र संशयः ॥' १२-६९-२९ (६७५९१)
लोकस्य सीमन्तकरी मर्यादा लोकपावनी ।
सम्यङ्नीता दण्डनीतिर्यथा माता यथा पिता ॥ १२-६९-३० (६७५९२)
यस्यां भवन्ति भूतानि तद्विद्धि भरतर्षभ ।
एष एव परो धर्मो यद्राजा दण्डनीतिमान् ॥ १२-६९-३१ (६७५९३)
तस्मात्कौरव्य धर्मेण प्रजाः पालय नीतिमान् ।
एवं वृत्तः प्रजा रक्षन्स्वर्गं जेतासि दुर्जयम् ॥ ॥ १२-६९-३२ (६७५९४)

इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि
एकोनसप्ततितमोऽध्यायः ॥ ६९.।

Mahabharata - Shanti Parva - Chapter Footnotes

१२-६९-३ अधर्मेभ्य इति पञ्चमी ॥
३.।
१२-६९-११ कपणो न त्विति झ ।पाठः ॥
१२-६९-१८ अयोगेन अनुप्रायेन ॥
१२-६९-२० योगक्षेमस्य नाशाच्चेति ट ।ड।थ।पाठः ॥
१२-६९-३० सीमन्तकरी व्यवस्यापिका ॥

---

शन्तिपर्व-अध्यय०७०
॥ श्रीः ॥
१२.७०. अध्यायः ७०

Mahabharata - Shanti Parva - Chapter Topics
भीष्मेण युधिष्ठिरंप्रति राजनप्रानुवर्णनम् ॥१.।
Mahabharata - Shanti Parva - Chapter Text

१२-७०-० (६७५९५)
युधिष्ठिर उवाच।१२-७०-०क्ष् (५५०१)
क्तेन वृत्तेन वृत्तक्ष वर्तमानो महीपतिः ।
सुखेनार्यान्तुसुखोदर्कानिह च प्रेत्य चाश्नुते ॥१२-७०-१ (६७५९६)
भीष्म उवाच।१२-७०-२क्ष् (५५०२)
इत्थं गुणानां षट्त्रिंशी षट्त्रिंशद्गुणसंयुता ।
यान्गुणांस्तु गुणोपेतः कुर्वन्गुणमवाप्नुयात् ॥१२-७०-२ (६७५९७)
चरेद्धर्मानकटुको मुञ्चेत्स्नेहं न चास्तिकः ।
अनृशंसश्चरेदर्थं चरेत्काममनुद्धतः ॥१२-७०-३ (६७५९८)
प्रियं ब्रूयादकृपणः शूरः स्यादविकत्थनः ।
दाता नापात्रवर्षी स्यात्प्रगल्भः स्यादनिष्ठुरः ॥१२-७०-४ (६७५९९)
संदधीत न चानार्यैर्विगृह्णीयाच्च शत्रुभिः ।
नानाप्तैश्चारयेच्चारं कुर्यात्कार्यमपीडया ॥१२-७०-५ (६७६००)
अर्थं ब्रूयान्न चासत्सु गुणान्ब्रूयान्न चात्मनः ।
आदद्यान्न च साधुभ्यो नासत्पुरुषमाश्रयेत् ॥१२-७०-६ (६७६०१)
नापरीक्ष्य नयेद्दण्डं न च मन्त्रं प्रकाशयेत् ।
विसृजेन्न च लुब्धेभ्यो विश्वसेन्नापकारिषु ॥१२-७०-७ (६७६०२)
अनीर्षुर्गुप्तदारः स्याच्चोक्षः स्यादघृणी नृपः ।
स्त्रियः सेवेत नात्यर्थं मृष्टं भुञ्जीत नाहितम् ॥१२-७०-८ (६७६०३)
अस्तब्धः पूजयन्मान्यान्गुरून्सेवेदमायया ।
अर्चेद्देवानदम्भेन श्रियमिच्छेदकृत्सिताम् ॥१२-७०-९ (६७६०४)
सेवेत प्रणयं हित्वा दक्षः स्यान्न त्वकालवित् ।

सान्त्वयेन्न च मोक्षाय अनुगृह्णन्न चाक्षिपेत् ॥ १२-७०-१० (६७६०५)
प्रहरेन्न त्वविज्ञाय हत्वा शत्रून्न शोचयेत् ।
क्रोधं कुर्यान्न चाकस्मान्मृदुः स्यान्नापकारिषु ॥ १२-७०-११ (६७६०६)
एवं चरस्व राज्यस्थो यदि श्रेय इहेच्छसि ।
अतोऽन्यथा नरपतिर्भयमृच्छत्यनुत्तमम् ॥ १२-७०-१२ (६७६०७)
इति सर्वान्गुणानेतान्यथोक्तान्योऽनुवर्तते ।
अनुभूयेह भद्राणि प्रेत्य स्वर्गे महीयते ॥ १२-७०-१३ (६७६०८)
वैशंपायन उवाच। १२-७०-१४क्ष् (५५०३)
१२-७०-१४ (६७६०९)
इदं वचः शान्तनवस्य शुश्रुवा
न्युधिष्ठिरः पार्थिवमुख्यसंवृतः ।
तदा ववन्दे च पितामहं नृपो
यथोक्तमेतच्च चकार बुद्धिमान् ॥
Mahabharata - Shanti Parva - Chapter Footnotes

१२-७०-२ षट्त्रिंशी षट्त्रिंशत्संख्याका ॥
१२-७०-५ विगृह्णीयान्न बन्धुभिः । नाभक्तं चारयेच्चारं इति
झ। पाठः। तत्र अभक्तं अल्पान्नं इत्यर्थः ॥
१२-७०-८ चोक्षः शुद्धः ॥
१२-७०-११ न शोचयेत् शत्रुबन्धूनां शोकं अपनुदेत् ॥
१२-७०-१२ अनुत्तमं महत्तरम् ॥

---

शन्तिपर्व-अध्यय०७१
॥ श्रीः ॥
१२.७१. अध्यायः ७१

Mahabharata - Shanti Parva - Chapter Topics
भीष्मेण युधिष्ठिरंप्रति राजधर्मकथनम् ॥ १.।
Mahabharata - Shanti Parva - Chapter Text

१२-७१-० (६७६१०)
युधिष्ठिर उवाच। १२-७१-०क्ष् (५५०४)
कथं राजा प्रजा रक्षन्नाधिबन्धेन युज्यते ।
धर्मे च नापराध्नोति तन्मे ब्रूहि पितामह ॥ १२-७१-१ (६७६११)
भीष्म उवाच। १२-७१-२क्ष् (५५०५)
समासेनैव ते राजन्धर्मान्वक्ष्यामि शाश्वतान् ।

विस्तरेणैव धर्माणां न जात्वन्तमवाप्नुयात् ॥ १२-७१-२ (६७६१२)
धर्मनिष्ठाञ्श्रुतवतो देवव्रतसमाहितान् ।
अर्चितान्वासयेथास्त्वं गृहे गुणवतो द्विजान् ॥ १२-७१-३ (६७६१३)
प्रत्युत्थायोपसंगृह्य चरणावभिवाद्य च ।
अथ सर्वाणि कुर्वीथाः कार्याणि सपुरोहितः ॥ १२-७१-४ (६७६१४)
धर्मकार्याणि निर्वर्त्य मङ्गलानि प्रयुज्य च ।
ब्राह्मणान्वाचयेथास्त्वमर्थसिद्धिजयाशिषः ॥ १२-७१-५ (६७६१५)
आर्जवेन च संपन्नो धृत्या बुद्ध्या च भारत ।
धर्मार्थौ प्रतिगृह्णीयात्कामक्रोधौ च वर्जयेत् ॥ १२-७१-६ (६७६१६)
कामक्रोधौ पुरस्कृत्य योऽर्थं राजाऽनुतिष्ठति ।
न स धर्मं न चाप्यर्थं प्रतिगृह्णाति बालिशः ॥ १२-७१-७ (६७६१७)
मा स्म लुब्धांश्च मूर्खांश्च कामार्थे च प्रयूयुजः ।
अलुब्धान्बुद्धिसंपन्नान्सर्वकर्मसु योजयेत् ॥ १२-७१-८ (६७६१८)
मूर्खो ह्यधिकृतोऽर्थेषु कार्याणामविशारदः ।
प्रजाः क्लिश्नात्ययोगेन कामक्रोधसमन्वितः ॥ १२-७१-९ (६७६१९)
बलिषष्ठेन शुल्केन दण्डेनाथापराधिनाम् ।
शास्त्रानीतेन लिप्सेथा वेतनेन धनागमम् ॥ १२-७१-१० (६७६२०)
दापयित्वा करं धर्म्यं राष्ट्रं नीत्या यथाविधि ।
तथैतं कल्पयेद्राजा योगक्षेममतन्द्रितः ॥ १२-७१-११ (६७६२१)
गोपायितारं दातारं धर्मनित्यमतन्द्रितम् ।
अकामद्वेषसंयुक्तमनुरज्यन्ति मानवाः ॥ १२-७१-१२ (६७६२२)
तस्माद्धर्मेण लाभेन लिप्सेथास्त्वं धनागमम् ।
धर्मार्थावध्रुवौ तस्य यो न शास्त्रपरो भवेत् ॥ १२-७१-१३ (६७६२३)
अपशास्त्रधनो राजा संचयं नाधिगच्छति ।
अस्थाने चास्य तद्वित्तं सर्वमेव विनश्यति ॥ १२-७१-१४ (६७६२४)
अर्थमूलोऽपि हिंसां च कुरुते स्वयमात्मनः ।
करैरशास्त्रदृष्टैर्हि मोहात्संपीडयन्प्रजाः ॥ १२-७१-१५ (६७६२५)
ऊधश्छिन्द्यात्तु यो धेन्वाः क्षीरार्थी न लभेत्पयः ।
एवं राष्ट्रमयोगेन पीडितं न विवर्धते ॥ १२-७१-१६ (६७६२६)
ग्यवसोदकमादाय सान्त्वेन विनयेन च।'
यो हि दोग्ध्रीमुपास्ते च स नित्यं विन्दते पयः ।
एवं राष्ट्रमुपायेन भुञ्जानो लभते फलम् ॥ १२-७१-१७ (६७६२७)
अथ राष्ट्रमुपायेन भुज्यमानं सुरक्षितम् ।
जनयत्यतुलां नित्यं कोशवृद्धिं युधिष्ठिर ॥ १२-७१-१८ (६७६२८)
दोग्ध्री धान्यं हिरण्यं च मही राजा सुरक्षिता ।
नित्यं स्वेभ्यः परेभ्यश्च तृप्ता माता यथा पयः ॥ १२-७१-१९ (६७६२९)

मालाकारोपमो राजन्भव माऽऽङ्गारिकोपमः ।
तथायुक्तश्चिरं राज्यं भोक्तुं शक्ष्यसि पालयन् ॥ १२-७१-२० (६७६३०)
परचक्राभियानेन यदि ते स्याद्धनक्षयः ।
अथ साम्नैव लिप्सेथा धनमब्राह्मणेषु यत् ॥ १२-७१-२१ (६७६३१)
मा स्म ते ब्राह्मणं दृष्ट्वा धनस्थं प्रचलेन्मनः ।
अन्त्यायामप्यवस्थायां किमु स्फीतस्य भारत ॥ १२-७१-२२ (६७६३२)
धनानि तेभ्यो दद्यास्त्वं यथाशक्ति यथार्हतः ।
सान्त्वयन्परिरक्षंश्च स्वर्गमाप्स्यसि दुर्जयम् ॥ १२-७१-२३ (६७६३३)
एवं धर्म्येण वृत्तेन प्रजास्त्वं परिपालय ।
स्वर्ग्यं पुण्यं यशो नित्यं प्राप्स्यसे कुरुनन्दन ॥ १२-७१-२४ (६७६३४)
धर्मेण व्यवहारेण प्रजाः पालय पाण्डव ।
युधिष्ठिर यथायुक्तो नाधिबन्धेन योक्ष्यसे ॥ १२-७१-२५ (६७६३५)
एष एव परो धर्मो यद्राजा रक्षति प्रजाः ।
भूतानां हि यदा धर्मो रक्षणं परमा दया ॥ १२-७१-२६ (६७६३६)
तस्मादेवं परं धर्मं मन्यन्ते धर्मकोविदाः ।
यो राजा रक्षणे युक्तो भूतेषु कुरुते दयाम् ॥ १२-७१-२७ (६७६३७)
यदह्ना कुरुते पापमरक्षन्भयतः प्रजाः ।
राजा वर्षसहस्रेण तस्यान्तमधिगच्छति ॥ १२-७१-२८ (६७६३८)
यदह्ना कुरुते धर्मं प्रजा धर्मेण पालयन् ।
दशवर्षसहस्राणि तस्य भुङ्क्ते फलं दिवि ॥ १२-७१-२९ (६७६३९)
स्विष्टिः स्वधीतिः सुतपा लोकाञ्जयति यावतः ।
क्षणेन तानवाप्नोति प्रजा धर्मेण पालयन् ॥ १२-७१-३० (६७६४०)
एवं धर्मं प्रयत्नेन कौन्तेय परिपालय ।
ततः पुण्यफलं लब्ध्वा नानुबन्धेन योक्ष्यसे ॥ १२-७१-३१ (६७६४१)
स्वर्गलोके सुमहतीं श्रियं प्राप्स्यसि पाण्डव ।
असंभवश्च धर्माणामीदृशानामराजसु ॥ १२-७१-३२ (६७६४२)
तस्माद्राजैव नान्योऽस्ति यो धर्मफलमाप्नुयात् ।
स राज्यं धृतिमान्प्राप्य धर्मेण परिपालय ।
इन्द्रं तर्पय सोमेन कामैश्च सुहृदो जनान् ॥ ॥ १२-७१-३३ (६७६४३)

इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि
एकसप्ततितमोऽध्यायः ॥ ७१.।

Mahabharata - Shanti Parva - Chapter Footnotes

१२-७१-१ बह्वीनां प्रजानां परिपालन कथं स्यादिति चिन्ता आधिः स एव बन्धस्तेन न युज्यते ॥

१२-७१-९ अयोगेन योग इष्टप्राप्ति स्तदभावेन ॥
१२-७१-१० बली राजदेयं तदेव सस्यादेः षष्ठंशस्तेन बलिषष्ठेन
। वेतनेन पथिरक्षितैर्वणिग्भिर्यद्दत्तं तद्राज्ञो वेतनं
सेवाधनम् ॥
१२-७१-११ धान्यादेः षष्ठांशे हृते शेषेण प्रजानां यदि वार्षिको
ग्रासो न भवेत्तदा राजैव तासां योगक्षेमं कल्पयेदित्याह दापयित्वेति
॥
१२-७१-१९ दोग्ध्री पूरयित्री ॥
१२-७१-२० आङ्गारिक इङ्गालकर्ता ॥
१२-७१-२५ यथायुक्त उक्तेन प्रकारेणाऽवहितः ॥
१२-७१-२७ यो दयां कुरुते तं धर्मं मन्यन्ते इति योजना ॥
१२-७१-२८ अन्तं यातनाभोगनिष्कृतिम् ॥
१२-७१-३० स्विष्टिः स्वधीतिः सुतपा इति क्रमेण
गृहस्थब्रह्मचारिवानप्रस्थधर्मान्सम्यगनुतिष्ठन् ॥

---

शन्तिपर्व-अध्यय०७२
॥ श्रीः ॥
१२.७२. अध्यायः ७२

Mahabharata - Shanti Parva - Chapter Topics
युधिष्ठिरंप्रति भीष्मेण ब्राह्मणस्य श्रैष्ठयोपपादनपूर्वकं
चातुर्वर्ण्यधर्मकथनम् ॥ १.।
Mahabharata - Shanti Parva - Chapter Text

१२-७२-० (६७६४४)
युधिष्ठिर उवाच। १२-७२-०क्ष् (५५०६)
ग्कीदृशो ब्राह्मणो राजा कार्याकार्यविचारणे ।
क्षमः कर्तुं समर्थो वा तन्मे ब्रूहि पितामह ॥' १२-७२-१ (६७६४५)
भीष्म उवाच। १२-७२-२क्ष् (५५०७)
य एव तु सतो रक्षेदसतश्च निवर्तयेत् ।
स एव राज्ञा कर्तव्यो राजन्राजपुरोहितः ॥ १२-७२-२ (६७६४६)
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
पुरूरवस ऐलस्य संवादं मातरिश्वना ॥ १२-७२-३ (६७६४७)
पुरूरवा उवाच। १२-७२-४क्ष् (५५०८)
कुतः स्विद्ब्राह्मणो जातो वर्णाश्चापि कुतस्त्रयः ।
कस्माच्च भवति श्रेयांस्तन्मे व्याख्यातुमर्हसि ॥ १२-७२-४ (६७६४८)

मातरिश्वोवाच।१२-७२-५क्ष् (५५०९)
ब्राह्मणो मुखतः सृष्टो ब्रह्मणो राजसत्तम ।
बाहुभ्यां क्षत्रियः सृष्ट ऊरुभ्यां वैश्य एव च ॥१२-७२-५ (६७६४९)
वर्णानां परिचर्यार्थं त्रयाणां भरतर्षभ ।
वर्णश्चतुर्थः पश्चात्तु पद्भ्यां शूद्रो विनिर्मितः ॥१२-७२-६ (६७६५०)
ब्राह्मणो जायमानो हि पृथिव्यामनुजायते ।
ईश्वरः सर्वभूतानां धर्मकोशस्य गुप्तये ॥१२-७२-७ (६७६५१)
ग्सर्वस्वं ब्राह्मणस्येदं यत्किंचिदिह दृश्यते ।
धर्मयुक्तं प्रशस्तं च जगत्यस्मिन्नृपात्मज ॥' १२-७२-८ (६७६५२)
ततः पृथिव्या यन्तारं क्षत्रियं दण्डधारणे ।
द्वितीयं वर्णमकरोत्प्रजानामनुगुप्तये ॥१२-७२-९ (६७६५३)
वैश्यस्तु धनधान्येन त्रीन्वर्णान्बिभृयादिमान् ।
शूद्रो ह्येतान्परिचरेदिति ब्रह्मानुशासनम् ॥१२-७२-१० (६७६५४)
ऐल उवाच।१२-७२-११क्ष् (५५१०)
द्विजस्य क्षत्रबन्धोर्वा कस्येयं पृथिवी भवेत् ।
धर्मतः सह वित्तेन सम्यग्वायो प्रचक्ष्व मे ॥१२-७२-११ (६७६५५)
वायुरुवाच।१२-७२-१२क्ष् (५५११)
विप्रस्य सर्वमेवैतद्यत्किंचिज्जगतीगतम् ।
ग्धनं धान्यं हिरण्यं च स्त्रियो रत्नानि वाहनम् ॥१२-७२-१२ (६७६५६)
मङ्गलं च प्रशस्तं च यच्चान्यदपि विद्यते।'
ज्येष्ठेनाभिजनेनेह तद्धर्मकुशला विदुः ॥ १२-७२-१३ (६७६५७)
स्वमेव ब्राह्मणो भुङ्क्ते स्वं वस्ते स्वं ददाति च ।
गुरुर्हि सर्ववर्णानां ज्येष्ठः श्रेष्ठश्च वै द्विजः ॥१२-७२-१४ (६७६५८)
पत्यभावे यथैव स्त्री देवरं कुरुते पतिम् ।
ग्आनन्तर्यात्तथा क्षत्रं पृथिवी कुरुते पतिम्।'
एष ते प्रथमः कल्प आपद्यन्यो भवेदतः ॥ १२-७२-१५ (६७६५९)
यदि स्वर्गे परं स्थानं धर्मतः परिमार्गसि ।
यत्किंचिज्जयसे भूमिं ब्राह्मणाय निवेदय ॥१२-७२-१६ (६७६६०)
श्रुतवृत्तोपपन्नाय धर्मज्ञाय तपस्विने ।
स्वधर्मपरितृप्ताय यो न वित्तपरो भवेत् ॥१२-७२-१७ (६७६६१)
यो राजानं नयेद्बुद्ध्या सर्वतः परिपूर्णया ।
ब्राह्मणो हि कुले जातः कृतप्रज्ञो विनीतवान् ॥१२-७२-१८ (६७६६२)
श्रेयो नयति राजानं ब्रुवंश्चित्रां सरस्वतीम् ।
राजा चरति यं धर्मं ब्राह्मणेन निदर्शितम् ॥१२-७२-१९ (६७६६३)
शुश्रूषुरनहंवादी क्षत्रधर्मव्रते स्थितः ।
तावता सत्कृतः प्राज्ञश्चिरं यशसि तिष्ठति ॥१२-७२-२० (६७६६४)

तस्य धर्मस्य सर्वस्य भागी राजपुरोहितः ।
एवमेव प्रजाः सर्वा राजानमभिसंश्रिताः ॥१२-७२-२१ (६७६६५)
ग्ब्राह्मणं च सविद्वांसं राजशास्त्रविपश्चितम् ।'
सम्यग्वृत्ताः स्वधर्मस्था न कुतश्चिद्भयान्विताः ॥ १२-७२-२२ (६७६६६)
राष्ट्रे चरन्ति यं धर्मं राज्ञा साध्वभिरक्षिताः ।
चतुर्थं तस्य धर्मस्य राजा भागं तु विन्दति ॥१२-७२-२३ (६७६६७)
देवा मनुष्याः पितरो गन्धर्वोरगराक्षसाः ।
यज्ञमेवोपजीवन्ति नास्ति यष्टा ह्यराजके ॥१२-७२-२४ (६७६६८)
इतो दत्तेन जीवन्ति देवताः पितरस्तथा ।
राजन्येवास्य धर्मस्य योगक्षेमः प्रतिष्ठितः ॥१२-७२-२५ (६७६६९)
छायायामप्सु वायौ च सुखमुष्णेऽधिगच्छति ।
अग्नौ वाससि सूर्ये च सुखं शीतेऽधिगच्छति ।
शब्दे स्पर्शे रसे रूपे गन्धे च रमते मनः ॥ १२-७२-२६ (६७६७०)
तेषु भोगेषु सर्वेषु न भीतो लभते सुखम् ।
अभयस्य हि यो दाता तस्यैव सुमहत्फलम् ॥१२-७२-२७ (६७६७१)
न हि प्राणसमं दानं त्रिषु लोकेषु विद्यते ।
इन्द्रो राजा यमो राजा धर्मो राजा तथैव च ।
राजा बिभर्ति भूतानि राज्ञा सर्वमिदं धृतम् ॥ ॥ १२-७२-२८ (६७६७२)

इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि
द्विसप्ततितमोऽध्यायः ॥७२.।
Mahabharata - Shanti Parva - Chapter Footnotes

१२-७२-२ निवर्तयेद्राज्याद्दूरीकारयेत् ॥

---

शन्तिपर्व-अध्यय०७३
॥श्रीः ॥
१२.७३. अध्यायः ७३

Mahabharata - Shanti Parva - Chapter Topics
भीष्मेण युधिष्ठिरंप्रति पुरोहितलक्षणादिवर्णनम्
।ऐलकश्यपसंवादानुवादश्च ॥१.।
Mahabharata - Shanti Parva - Chapter Text

१२-७३-० (६७६७३)
ग युधिष्ठिर उवाच।१२-७३-०क्ष् (५५१२)

राज्ञा पुरोहितः कार्यः कीदृशो वर्णतो भवेत् ।
पुरोधा यादृशः कार्यः कथयस्व पितामह ॥ १२-७३-१ (६७६७४)
भीष्म उवाच। १२-७३-२क्ष् (५५१३)
गौरो वा लोहितो वाऽपि श्यामो वा नीरुजः सुखी ।
अक्रोधनो ह्यचपलः सर्वतश्च जितेन्द्रियः ॥' १२-७३-२ (६७६७५)
राज्ञा पुरोहितः कार्यो भवेद्विद्वान्बहुश्रुतः ।
उभौ समीक्ष्य धर्मार्थावप्रमेयावनन्तरम् ॥ १२-७३-३ (६७६७६)
धर्मात्मा मन्त्रविद्येषां राज्ञां राजन्पुरोहितः ।
ग्तेषामर्थश्च कामश्च धर्मश्चेति विनिश्चयः ॥ १२-७३-४ (६७६७७)
श्लोकाश्चोशनसा गीतास्तान्निबोध युधिष्ठिर ।
उच्छिष्टः स भवेद्राजा यस्य नास्ति पुरोहितः ॥ १२-७३-५ (६७६७८)
रक्षसामसुराणां च पिशाचोरगपक्षिणाम् ।
शत्रूणां च भवेद्वध्यो यस्य नास्ति पुरोहितः ॥ १२-७३-६ (६७६७९)
ब्रह्मत्वं सर्वयज्ञेषु कुर्वीताथर्वणो द्विजः ।
राज्ञश्चाथर्ववेदेन सर्वकर्माणि कारयेत् ॥ १२-७३-७ (६७६८०)
ब्रूयाद्गर्ह्याणि सततं महोत्पातान्यघानि च ।
इष्टमङ्गलयुक्तानि तथाऽन्तः पुरिकाणि च ॥ १२-७३-८ (६७६८१)
गीतनृत्ताधिकारेषु संमतेषु महीपतेः ।
कर्तव्यं करणीयं वै वैश्वदेवबलिस्तथा ॥ १२-७३-९ (६७६८२)
पक्षसंधिषु कुर्वीत महाशान्तिं पुरोहितः ।
रौद्रहोमसहस्रं च स्वस्य राज्ञः प्रियं हितम् ॥ १२-७३-१० (६७६८३)
राज्ञः पापमलाः सप्त यानृच्छति पुरोहितः ।
अमात्याश्च कुकर्माणो मन्त्रिणश्चाप्युपेक्षकाः ॥ १२-७३-११ (६७६८४)
चौर्यमव्यवहारश्च व्यवहारोपसेविनाम् ।
अदण्ड्यदण्डनं चैव दण्ड्यानां चाप्यदण्डनम् ॥ १२-७३-१२ (६७६८५)
हिंसा चान्यत्र संग्रामाद्राज्ञश्च मल उच्यते ।
कुभृत्यैस्तु प्रजानाशः सप्तमस्तु महामलः ॥ १२-७३-१३ (६७६८६)
रौद्रैर्होमैर्महाशान्त्या घृतकम्बलकर्मणा ।
भृग्वङ्गिरोविधिज्ञो वै पुरोधा निर्णुदे मलात् ॥ १२-७३-१४ (६७६८७)
एतान्हित्वा दिवं याति राजा सप्त महामलान् ।
सामात्यः सपुरोधाश्च प्रजानां पालने रतः ॥ १२-७३-१५ (६७६८८)
एतस्मिन्नेव कौरव्य पौरोहित्ये महामते ।
श्लोकानाह महेन्द्रस्य गुरुर्देवो बृहस्पतिः ॥ १२-७३-१६ (६७६८९)
तान्निबोध महीपाल महाभाग हिताञ्शुभान् ।
ऋग्वेदे सामवेदे च यजुर्वेदे च वाजिनाम् ॥ १२-७३-१७ (६७६९०)
न निर्दिष्टानि कर्माणि त्रिषु स्थानेषु भूभृताम् ।

शान्तिकं पौष्टिकं चैव अरिष्टानां च शातनम् ॥१२-७३-१८ (६७६९१)
शप्तास्ते याज्ञवल्क्येन यज्ञानां हितमीहता ।
ब्रह्मिष्ठानां वरिष्ठेन ब्रह्मणः संमते विभोः ॥१२-७३-१९ (६७६९२)
बह्वृचं सामगं चैव वाजिनं च विवर्जयेत् ।
बह्वृचो राष्ट्रनाशाय राजनाशाय सामगः ।
अध्वर्युर्बलनाशाय प्रोक्तो वाजसनेयकः ॥ १२-७३-२० (६७६९३)
अब्राह्मणेषु वर्णेषु मन्त्रान्वाजसनेयकान् ।
शान्तिके पौष्टिके चैव नित्यं कर्मणि वर्जयेत् ॥१२-७३-२१ (६७६९४)
ब्राह्मणस्य महीपस्य सर्वथा न विरोधिनः ।
वेदाश्चत्वार इत्येते ब्राह्मणा ये च तद्विदुः ॥१२-७३-२२ (६७६९५)
पौरोहित्ये प्रमाणं तु ब्राह्मणश्च महीपतेः ।
जात्या न क्षत्रियः प्रोक्तः क्षतत्राणं करोति यः ॥१२-७३-२३ (६७६९६)
चातुर्वर्ण्यबहिष्ठोऽपि स एव क्षत्रियः स्मृतः ।
भार्गवाङ्गिरसैर्मन्त्रैस्तेषां कर्म विधीयते ॥१२-७३-२४ (६७६९७)
वैतानं कर्म यच्चैव गृह्यकर्म च यत्स्मृतम् ।
द्विजातीनां त्रयाणां तु सर्वकर्म विधीयते ॥१२-७३-२५ (६७६९८)
राजधर्मप्रवृत्तानां हितार्थं त्रीमि कारयेत् ।
शान्तिकं पौष्टिकं चैव तथाऽभिचरणं च यत् ॥१२-७३-२६ (६७६९९)
अग्निष्टोममुखैर्यज्ञैर्दूषिता भूपकर्मभिः ।
न सम्यक्फलमृच्छन्ति ये यजन्ति द्विजातयः ॥१२-७३-२७ (६७७००)
पौरोहित्यं तु कुर्वाणा नाशं यास्यन्ति भूभृताम् ।
यज्ञकर्माणि कुर्वाणा ऋत्विजस्तु विरोधिनः ॥१२-७३-२८ (६७७०१)
ब्रह्मक्षत्रविशः सर्वे पौरोहित्ये विवर्जिताः ।
तदभावे च पारक्यं निर्दिष्टं राजकर्मसु ॥१२-७३-२९ (६७७०२)
ऋषिणा याज्ञवल्क्येन तत्तथा न तदन्यथा ।
भार्गवाङ्गिरसां वेदे कृतविद्यः षडङ्गवित् ॥१२-७३-३० (६७७०३)
यज्ञकर्मविधिज्ञस्तु विधिज्ञः पौष्टिकेषु च ।
अष्टादशविकल्पानां विधिज्ञः शान्तिकर्मणाम् ॥१२-७३-३१ (६७७०४)
सर्वरोगविहीनश्च संयतः संयतेन्द्रियः ।
श्वित्रकुष्ठक्षयक्षीणैर्ग्रहापस्मारदूषितैः ॥१२-७३-३२ (६७७०५)
अशस्तैर्वातदुष्टैश्च दूरस्थैः संवदेन्नृपः ।
रोगिणं ऋत्विजं चैव वर्जयेच्च पुरोहितम् ॥१२-७३-३३ (६७७०६)
नचान्यस्य कृतं येन पौरोहित्यं कदाचन ।
यस्य याज्यो मृतश्चैव भ्रष्टः प्रव्रजितो यथा ॥१२-७३-३४ (६७७०७)
युद्धे पराजितश्चैव सर्वांस्तान्वर्जयेन्नृपः ।
नक्षत्रस्यानुकूल्येन यः संजातो नरेश्वरः ॥१२-७३-३५ (६७७०८)

राजशास्त्रविनीतश्च श्रेयान्राज्ञः पुरोहितः ।
अधन्यानां निमित्तानामुत्पातानामथार्थवित् ॥१२-७३-३६ (६७७०९)
शत्रुपक्षक्षयज्ञश्च श्रेयान्राज्ञः पुरोहितः ।
वाजिनं तदभावे च चरकाध्वर्यवानपि ॥१२-७३-३७ (६७७१०)
बह्वृचं सामगं चैव नीतिशास्त्रकृतश्रमान् ।
कृतिनोऽथर्वणो वेदे स्थापयेत्तु पुरोहितान् ॥१२-७३-३८ (६७७११)
हिंसालिङ्गा हि निर्दिष्टा मन्त्रा वैतानिकैर्द्विजैः ।
न तानुच्चारयेत्प्राज्ञः क्षात्रधर्मविरोधिनः ॥१२-७३-३९ (६७७१२)
प्रजागुणाः पुरोधाश्च पुरोहितगुणाः प्रजाः।'
राजा वै सगुणो येषां कुशलं तेषु सर्वशः ॥ १२-७३-४० (६७७१३)
उभौ प्रजा वर्धयतो देवान्पूर्वापरान्पितॄन् ।
यौ भवेतां स्थितौ धर्मे श्रद्धेयौ सुतपस्विनौ ॥१२-७३-४१ (६७७१४)
परस्परस्य सुहृदौ विहितौ समचेतसौ ।
ब्रह्मक्षत्रस्य समानात्प्रजा सुखमवाप्नुयात् ॥१२-७३-४२ (६७७१५)
विमाननात्तयोरेव प्रजा नश्येयुरेव हि ।
ब्रह्मक्षत्रं हि सर्वासां प्रजानां मूलमुच्यते ॥१२-७३-४३ (६७७१६)
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
ऐलकश्यपसंवादं तं निबोध युधिष्ठिर ॥१२-७३-४४ (६७७१७)
ऐल उवाच।१२-७३-४५क्ष् (५५१४)
यदा हि ब्रह्म प्रजहाति क्षत्रं
क्षत्रं यदा वा प्रजहाति ब्रह्म ।
अन्वग्बलं कतमेऽस्मिन्भजन्ते
तथा बलं कतमेऽस्मिन्म्रियन्ते ॥ १२-७३-४५ (६७७१८)
कश्यप उवाच।१२-७३-४६क्ष् (५५१५)
द्विधा हि राष्ट्रं भवति क्षत्रियस्य
ब्रह्म क्षत्रं यत्र विरुध्यतीह ।
अन्वग्बलं दस्यवस्तद्भजन्ते
तथा वर्णं तत्र विदन्ति सन्तः ॥ १२-७३-४६ (६७७१९)
नैषां ब्रह्म च वर्धते नोत पुत्रा
न गर्गरो मथ्यते नो जयन्ते ।
नैषां पुत्रा देवमधीयते च
यदा ब्रह्म क्षत्रियाः संत्यजन्ति ॥ १२-७३-४७ (६७७२०)
नैषामर्थो वर्धते जातु गेहे
नाधीयते तत्प्रजा नो यजन्ते ।
अपध्वस्ता दस्युभूता भवन्ति
ये ब्राह्मणान्क्षत्रियाः संत्यजन्ति ॥ १२-७३-४८ (६७७२१)

एतौ हि नित्यं संयुक्ताावितरेतरधारणे ।
क्षत्रं वै ब्रह्मणो योनिर्योनिः क्षत्रस्य वै द्विजः ॥१२-७३-४९ (६७७२२)
उभावेतौ नित्यमभिप्रपन्नौ
संप्रापतुर्महतीं संप्रतिष्ठाम् ।
तयोः सन्धिर्भिद्यते चेत्पुराण
स्ततः सर्वं भवति हि संप्रमूढम् ॥ १२-७३-५० (६७७२३)
नात्र पारं लभते पारगामी
महोदधौ नौरिव संप्रभिन्ना ।
चातुर्वर्ण्यं भवति हि संप्रमूढं
प्रजास्ततः क्षयसंस्था भवन्ति ॥ १२-७३-५१ (६७७२४)
ब्रह्मवृक्षो रक्ष्यमाणो मधु हेम च वर्षति ।
अरक्ष्यमाणः सततमश्रु पापं च वर्षति ॥१२-७३-५२ (६७७२५)
अब्रह्मचारी चरणादपेतो
यदा ब्रह्म ब्रह्मणि त्राणमिच्छेत् ।
आश्चर्यतो वर्षति तत्र देव
स्तत्राभीक्ष्णं दुष्प्रभाश्चाविशन्ति ॥ १२-७३-५३ (६७७२६)
स्त्रियं हत्वा ब्राह्मणं वाऽपि पापः
सभायां यत्र लभते साधुवादम् ।
राज्ञः सकाशे न विभेति चापि
ततो भयं विद्यते क्षत्रियस्य ॥ १२-७३-५४ (६७७२७)
पापैः पापे क्रियमाणेऽतिवेलं
ततो रुद्रो जायते देव एषः ।
पापैः पापाः संजनयन्ति रुद्रं
ततः सर्वान्साध्वसाधून्हिनस्ति ॥ १२-७३-५५ (६७७२८)
ऐल उवाच। १२-७३-५६क्ष् (५५१६)
कुतो रुद्रः कीदृशो वाऽपि रुद्रः
सत्वैः सत्वं दृश्यते वध्यमानम् ।
एतत्सर्वं कश्यप मे प्रचक्ष्व
यतो रुद्रो जायते देव एषः ॥ १२-७३-५६ (६७७२९)
कश्यप उवाच। १२-७३-५७क्ष् (५५१७)
आत्मा रुद्रो हृदये मानवानां
स्वं स्वं देहं परदेहं च हन्ति ।
वातोत्पातैः सदृशं रुद्रमाहु
र्देवं जीमूतैः सदृशं रूपमस्य ॥ १२-७३-५७ (६७७३०)
ऐल उवाच। १२-७३-५८क्ष् (५५१८)
न वै वातः परिवृणोति कश्चि

न्न जीमूतो वर्षति तत्र देवः ।
तथा युक्तो दृश्यते मानुषेषु
कामद्वेषाद्बध्यते मुह्यते च ॥ १२-७३-५८ (६७७३१)
कश्यप उवाच। १२-७३-५९क्ष् (५५१९)
यथैकगेहाज्जातवेदाः प्रदीप्तः
कृत्स्नं ग्रामं दहते च त्वरावान् ।
विमोहनं कुरुते देव एप
ततः सर्वं स्पृश्यते पुण्यपापैः ॥ १२-७३-५९ (६७७३२)
ऐल उवाच। १२-७३-६०क्ष् (५५२०)
यदि दण्डः स्पृशतेऽपुण्यपापं
पापं पापे क्रियमाणे विशेषात् ।
कस्य हेतोः सुकृतं नाम कुर्या
द्दुष्कृतं वा कस्य हेतोर्न कुर्यात् ॥ १२-७३-६० (६७७३३)
कश्यप उवाच। १२-७३-६१क्ष् (५५२१)
असंत्यागात्पापकृतामपापां
स्तुल्यो दण्डः स्पृशते मिश्रभावात् ।
शुष्केणार्द्रं दह्यते मिश्रभावा
न्न मिश्रः स्यात्पापकृद्भिः कथंचित् ॥ १२-७३-६१ (६७७३४)
ऐल उवाच। १२-७३-६२क्ष् (५५२२)
साध्वसाधून्धारयतीह भूमिः
साध्वसाधूंस्तापयतीह सूर्यः ।
साध्वसाधूंश्चापि वातीह वायु
रापस्तथा साध्वसाधून्वहन्ति ॥ १२-७३-६२ (६७७३५)
कश्यप उवाच। १२-७३-६३क्ष् (५५२३)
एवमस्मिन्वर्तते लोक एष
नामुत्रैवं वर्तते राजपुत्र ।
प्रेत्यैतयोरन्तरावान्विशेषो
यो वै पुण्यं चरते यश्च पापम् ॥ १२-७३-६३ (६७७३६)
पुण्यस्य लोको मधुमान्घृतार्चि
र्हिरण्यज्योतिरमृतस्य नाभिः ।
तत्र प्रेत्य मोदते ब्रह्मचारी
न तत्र मृत्युर्न जरा नोत दुःखम् ॥ १२-७३-६४ (६७७३७)
पापस्य लोको निरयोऽप्रकाशो
नित्यं दुःखं शोकभूयिष्ठमेव ।
तत्रात्मानं शोचति पापकर्मा
वह्वीः समाः प्रतपन्नप्रतिष्ठः ॥ १२-७३-६५ (६७७३८)

मिथोभेदाद्ब्राह्मणक्षत्रियाणां
प्रजा दुःखं दुःसहं चाविशन्ति ।
एवं ज्ञात्वा कार्य एवेह विद्वान्
पुरोहितो नैकविद्यो नृपेण ॥ १२-७३-६६ (६७७३९)
तं चैव लब्ध्वाभिषिञ्चेत्तथा धर्मो विधीयते ।
अग्रं हि ब्राह्मणः प्रोक्तं सर्वस्यैवेह धर्मतः ॥१२-७३-६७ (६७७४०)
पूर्वं हि ब्रह्मणः सृष्टिरिति ब्रह्मविदो विदुः ।
ज्येष्ठेनाभिजनेनास्य प्राप्तं पूर्वं यदुत्तमम् ॥१२-७३-६८ (६७७४१)
तस्मान्मान्यश्च पूज्यश्च ब्राह्मणः प्रसृताग्रभुक् ।
सर्वं श्रेष्ठं विशिष्टं च निवेद्यं तस्य धीमतः ॥१२-७३-६९ (६७७४२)
अवश्यमेतत्कर्तव्यं राज्ञा बलवताऽपि हि ।
ब्रह्म वर्धयति क्षत्रं क्षत्रतो ब्रह्म वर्धते ।
राज्ञः सर्वस्य चान्यस्य स्वामी राज्ञः पुरोहितः ॥ ॥ १२-७३-७० (६७७४३)

इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि
त्रिसप्ततितमोऽध्यायः ॥ ७३.।

Mahabharata - Shanti Parva - Chapter Footnotes

१२-७३-१४ निर्णुदे मोचयेत् ।राजानमिति शेषः ॥
१२-७३-४६ क्षत्र कर्तृ ।तत्र क्षत्रे सन्तः
वर्णं विन्दन्ति।ब्राह्मणानामवमन्ता म्लेच्छजातीयोऽयं
राजेत्यनुमानाज्जानन्ति।यथोक्तंभोगेन ज्ञायते कर्म कर्मणा ज्ञायते
जनिरिति।तथा बलं तद्धियन्ते च सन्त इति ट।ड।थ।पाठः ॥
१२-७३-५० अभिप्रपन्नौ अन्योन्यशरणौ ।क्षत्रशरणं ब्रह्म
तपस्यति ब्रह्मशरणं क्षत्रं जयतीति भावः ॥
१२-७३-५२ मधु सुखम् ।अश्रु दुःखम्।पापं नरकम् ॥
१२-७३-५३ ब्रह्म ब्राह्मणजातिः ।ब्रह्मचरणादपेतत्वादब्रह्मचारी
वेदाध्ययनशून्यः सन् त्राणं रक्षणं इच्छेत्तदा देवस्तत्र
आश्चर्यतो वर्षति।तत्र वर्षः अत्यन्तं दुर्लभमित्यर्थः ॥
१२-७३-५५ रुद्रो हिंस्रः ।देवो राजा।रुद्रं कलिम् ॥
१२-७३-५७ मानवानां हृदये य आत्मा जीवोऽस्ति स एव रुद्रः संहर्ता
भवति ।ननु कुतः शान्तस्यात्मनो रुद्रत्वमत आह वातेति।यथा
उत्पातवात आकाशोत्थ आकाशोत्थां मेघदेवतामितस्ततो नयति गर्जयति
विद्युदशनिवारीणि च तत आविर्भावयत्येवमात्मोत्थिताः काम्नक्रोधादयः
सर्वं हिंस्रं कारयन्तीत्यर्थः ॥
१२-७३-५८ यथा आकाशेन युक्तास्ततः पृथग्भूताः वातो मेघाश्च

मेघप्रवर्तकदेवता च प्रत्यक्षेण शास्त्रज्ञानेन च दृश्यन्ते
नैवं जीवो वा तदभिभावकः कामादिर्वा पृथक् दृश्यते
किंत्वात्मन्येव वह्यौष्ण्यवत्कामद्वेषौ वर्तेते तौ चैतस्य
संबन्धकौ मोहकौ च भवत इत्यर्थः ॥
१२-७३-५९ यथाऽल्पोऽपि वह्निरधिकमधिकं काष्ठभारमुपारुह्य
कृत्स्नं ग्रामं दहति तत्र न केवलं काष्ठानां दाहकत्वं नापि
काष्ठान्यनुपारूढस्याग्नेः किंतु तदुभयसंघातस्यैव ।तत्रापि विवेके
क्रियमाणे वह्नेरेवोपाध्यावेशाद्दाहकत्वम्। एवमात्मानमारुह्याहंकारवह्निः
कामक्रोधादिवातैरुद्दीपितो रुद्रत्वं प्रतिपद्यते ॥
१२-७३-६० अपुण्यपापमप्यात्मानं यदि विशेषात् क्रियमाणे पापे
निमित्तभूते सति दण्डः पापं दण्डात्मकं पापं गालनताडनादि दुःखं
कर्तृ स्पृशते मोहादिति ब्रवीषि तर्हि पुण्यकरणं पापवर्जनं
च शास्त्रचोदितं वृथैव स्यात् ॥
१२-७३-६७ तं पुरोहितं लब्ध्वा आत्मानं राज्येऽभिषिञ्चेत् ॥
१२-७३-७० एवं राज्ञा विशेषेण पूज्या वै ब्राह्मणाः सदा इति झ ।पाठः ॥

---

शन्तिपर्व-अध्यय०७४
॥ श्रीः ॥
१२.७४. अध्यायः ७४

Mahabharata - Shanti Parva - Chapter Topics
भीष्मेण युधिष्ठिरंप्रति मुचुकुन्दचरितदृष्टान्तीकरणेन
क्षत्रस्य ब्रह्माधीनत्वसमर्थनम् ॥ १.।
Mahabharata - Shanti Parva - Chapter Text

१२-७४-० (६७७४४)
ग्युधिष्ठिर उवाच। १२-७४-०क्ष् (५५२४)
ब्रह्मक्षत्रस्य सामर्थ्यं कथितं ते पितामह ।
पुरोहितप्रभावश्च लक्षणं च पुरोधसः ॥ १२-७४-१ (६७७४५)
इदानीं श्रोतुमिच्छामि ब्रह्मक्षत्रविनिर्णयम् ।
ब्रह्मक्षत्रं हि सर्वस्य कारणं जगतः परम् ।
योगक्षेमो हि राष्ट्रस्य ताभ्यामायत्त एव च ॥' १२-७४-२ (६७७४६)
भीष्म उवाच। १२-७४-३क्ष् (५५२५)
योगक्षेमो हि राष्ट्रस्य राजन्यायत्त उच्यते ।
योगक्षेमो हि राज्ञो हि समायत्तः पुरोहिते ॥ १२-७४-३ (६७७४७)
यत्रादृष्टं भयं ब्रह्म प्रजानां शमयत्युत ।

दृष्टं च राजा बाहुभ्यां तद्राज्यं सुखमेधते ॥ १२-७४-४ (६७७४८)
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
मुचुकुन्दस्य संवादं राज्ञो वैश्रवणस्य च ॥ १२-७४-५ (६७७४९)
मुचुकुन्दो विजित्येमां पृथिवीं पृथिवीपतिः ।
जिज्ञासमानः स बलमभ्ययादलकाधिपम् ॥ १२-७४-६ (६७७५०)
ततो वैश्रवणो राजा राक्षसानसृजत्तदा ।
ते बलान्यवमृद्नन्त मुचुकुन्दस्य नैर्ऋताः ॥ १२-७४-७ (६७७५१)
स हन्यमाने सैन्ये स्वे मुचुकुन्दो नराधिपः ।
गर्हयामास विद्वांसं पुरोहितमरिन्दमः ॥ १२-७४-८ (६७७५२)
तत उग्रं तपस्तप्त्वा वसिष्ठो धर्मवित्तमः ।
रक्षांस्युपावधीत्तत्र पन्थानं चाप्यविन्दत ॥ १२-७४-९ (६७७५३)
ततो वैश्रवणो राजा मुचुकुन्दमगर्हयत् ।
वध्यमानेषु सैन्येषु वचनं चेदमब्रवीत् ॥ १२-७४-१० (६७७५४)
धनद उवाच। १२-७४-११क्ष् (५५२६)
बलवन्तस्त्वया पूर्वे राजानः सपुरोहिताः ।
न चैवं समवर्तन्त यथा त्वमिव वर्तसे ॥ १२-७४-११ (६७७५५)
ते खल्वपि कृतास्त्राश्च बलवन्तश्च भूमिपाः ।
आगम्य पर्युपासन्ते मामीशं सुखदुःखयोः ॥ १२-७४-१२ (६७७५६)
यद्यस्ति बाहुवीर्यं ते तद्दर्शयितुमर्हसि ।
किं ब्राह्मणबलेन त्वमतिमात्रं प्रवर्तसे ॥ १२-७४-१३ (६७७५७)
मुचुकुन्दस्ततः क्रुद्धः प्रत्युवाच धनेश्वरम् ।
न्यायपूर्वमसंलब्धमसंभ्रान्तमिदं वचः ॥ १२-७४-१४ (६७७५८)
ब्रह्मक्षत्रमिदं सृष्टमेकयोनि स्वयंभुवा ।
पृथग्बलविधानं च तल्लोकं परिपालयेत् ॥ १२-७४-१५ (६७७५९)
तपोमन्त्रबलं नित्यं ब्राह्मणेषु प्रतिष्ठितम् ।
अस्त्रबाहुबलं नित्यं क्षत्रियेषु प्रतिष्ठितम् ॥ १२-७४-१६ (६७७६०)
ताभ्यां संभूय कर्तव्यं प्रजानां परिपालनम् ।
तथा च मां प्रवर्तन्तं किं गर्हस्यलकाधिप ॥ १२-७४-१७ (६७७६१)
ततोऽब्रवीद्वैश्रवणो राजानं सपुरोहितम् ।
नाहं राज्यमनिर्दिष्टं कस्मैचिद्विदधाम्युत ॥ १२-७४-१८ (६७७६२)
नाच्छिन्दे वाऽप्यनिर्दिष्टमिति जानीहि पार्थिव ।
प्रशाधि पृथिवीं कृत्स्नां मद्दत्तामखिलामिमाम् ।
श्एवमुक्तः प्रत्युवाच मुचुकुन्दो महीपतिः ॥ृ १२-७४-१९ (६७७६३)
नाहं राज्यं भवद्दत्तं भोक्तुमिच्छामि पार्थिव ।
बाहुवीर्यार्जितं राज्यमश्नीयामिति कामये ॥ १२-७४-२० (६७७६४)
भीष्म उवाच। १२-७४-२१क्ष् (५५२७)

ततो वैश्रवणो राजा विस्मयं परमं ययौ ।
क्षत्रधर्मे स्थितं दृष्ट्वा मुचुकुन्दमरिन्दमम् ॥१२-७४-२१ (६७७६५)
ततो राजा मुचुकुन्दः सोन्वशासद्वसुंधराम् ।
बाहुवीर्यार्जितां सम्यक्क्षत्रधर्ममनुव्रतः ॥१२-७४-२२ (६७७६६)
एवं यो ब्रह्मविद्राजा ब्रह्मपूर्वं प्रवर्तते ।
स भुङ्क्ते विजितामुर्वीं यशश्च महदश्नुते ॥१२-७४-२३ (६७७६७)
नित्योदकी ब्राह्मणः स्यान्नित्यशस्त्रश्च क्षत्रियः ।
तयोर्हि सर्वमायत्तं यत्किंचिज्जगतीगतम् ॥१२-७४-२४ (६७७६८)
यशश्च तेजश्च महीं च कृत्स्नां
प्राप्नोति राजन्विपुलां च कीर्तिम् ।
प्रधानधर्मं नृपते नियच्छ
तथा च धर्मस्य चतुर्थमंशम् ॥ ॥ १२-७४-२५ (६७७६९)

इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि
चतुःसप्ततितमोऽध्यायः ॥७४.।
Mahabharata - Shanti Parva - Chapter Footnotes

१२-७४-७ असृजदतिसृष्टवान् ।आज्ञापितवानिति यावत् ॥
१२-७४-११ त्वया त्वत्तः ॥
१२-७४-२५ नियच्छ गृहाणेत्यर्थः ।

---

शन्तिपर्व-अध्यय०७५
॥श्रीः ॥
१२.७५. अध्यायः ७५

Mahabharata - Shanti Parva - Chapter Topics
राज्यस्वीकारे अधर्माशङ्किनं युधिष्ठिरं प्रति भीष्मेण तस्य
धार्मिकत्वसमर्थनेन तद्विधानम् ॥१.।
Mahabharata - Shanti Parva - Chapter Text

१२-७५-० (६७७७०)
युधिष्ठिर उवाच।१२-७५-०क्ष् (५५२८)
यया वृत्त्या महीपालो विवर्धयति मानवान् ।
पुण्यांश्च लोकाञ्जयति तन्मे ब्रूहि पितामह ॥१२-७५-१ (६७७७१)
भीष्म उवाच।१२-७५-२क्ष् (५५२९)
दानशीलो भवेद्राजा यज्ञशीलश्च भारत ।

उपवासतपः शीलः प्रजानां पालने रतः ॥ १२-७५-२ (६७७७२)
सर्वाश्चैव प्रजा नित्यं राजा धर्मेण पालयन् ।
उत्थानेन प्रदानेन पूजयेच्चापि धार्मिकान् ॥ १२-७५-३ (६७७७३)
राज्ञा हि पूजितो धर्मस्ततः सर्वत्र पूज्यते ।
यद्यदाचरते राजा तत्प्रजानां स्म रोचते ॥ १२-७५-४ (६७७७४)
नित्यमुद्यतदण्डश्च भवेन्मृत्युरिवारिषु ।
निहन्यात्सर्वतो दस्यून्न राज्ञो दस्युषु क्षमा ॥ १२-७५-५ (६७७७५)
यं हि धर्मं चरन्तीह प्रजा राज्ञा सुरक्षिताः ।
चतुर्थं तस्य धर्मस्य राजा भागं च विन्दति ॥ १२-७५-६ (६७७७६)
यदधीते यद्ददाति यज्जुहोति यदर्चति ।
राजा चतुर्थभाक्तस्य प्रजा धर्मेण पालयन् ॥ १२-७५-७ (६७७७७)
यद्राष्ट्रोऽकुशलं किंचिद्राज्ञो रक्षयतः प्रजाः ।
चतुर्थं तस्य पापस्य राजा भारत विन्दति ॥ १२-७५-८ (६७७७८)
अप्याहुः सर्वमेवेति भूयोऽर्धमिति निश्चयः ।
कर्मणा पृथिवीपाल नृशंसोऽनृतवागपि ॥ १२-७५-९ (६७७७९)
तादृशात्किल्बिपाद्राजा शृणु येन प्रमुच्यते ।
प्रत्याहर्तुमशक्यं स्याद्धनं चोरैर्हृतं यदि ।
तत्स्वकोशात्प्रदेयं स्यादशक्तेनोपजीवतः ॥ १२-७५-१० (६७७८०)
सर्ववर्णैः सदा रक्ष्यं ब्रह्मस्वं ब्राह्मणा यथा ।
न स्थेयं विषये तेन योऽपकुर्याद्द्विजातिषु ॥ १२-७५-११ (६७७८१)
ब्रह्मस्वे रक्ष्यमाणे तु सर्वं भवति रक्षितम् ।
तेषां प्रसादे निर्वृत्ते कृतकृत्यो भवेन्नृपः ॥ १२-७५-१२ (६७७८२)
पर्जन्यमिव भूतानि महाद्रुममिव द्विजाः ।
नरास्तमुपजीवन्ति नृपं सर्वार्थसाधकम् ॥ १२-७५-१३ (६७७८३)
न हि कामात्मना राज्ञा सततं शठबुद्धिना ।
नृशंनेनातिलुब्धेन शक्यं पालयितुं प्रजाः ॥ १२-७५-१४ (६७७८४)
युधिष्ठिर उवाच। १२-७५-१५क्ष् (५५३०)
नाहं राज्यसुखान्वेषी राज्यमिच्छाम्यपि क्षणम् ।
धर्मार्थं रोचये राज्यं धर्मश्चात्र न विद्यते ॥ १२-७५-१५ (६७७८५)
तदल मम राज्येन यत्र धर्मो न विद्यते ।
वनमेव गमिष्यामि तस्माद्धर्मचिकीर्षया ॥ १२-७५-१६ (६७७८६)
तत्र मेध्येष्वरण्येषु न्यस्तदण्डो जितेन्द्रियः ।
धर्ममाराधयिष्यामि मुनिर्मूलफलाशनः ॥ १२-७५-१७ (६७७८७)
भीष्म उवाच। १२-७५-१८क्ष् (५५३१)
वेदाहं तव या बुद्धिरानृशंस्येऽगुणैव सा ।
न च नित्यानृशंसेन शक्यं राज्यमुपासितुम् ॥ १२-७५-१८ (६७७८८)

सदैव त्वां मृदुप्रज्ञमत्यार्यमतिधार्मिकम् ।
क्लीबं धर्मघृणायुक्तं न लोको बहुमन्यते ॥१२-७५-१९ (६७७८९)
राजधर्ममवेक्षस्व पितृपैतामहोचितम् ।
नैतद्राज्ञामथो वृत्तं यथा त्वं स्थातुमिच्छसि ॥१२-७५-२० (६७७९०)
न हि वैक्लव्यसंसृष्टमानृशंस्यमिहास्थितः ।
प्रजापालनसंभूतं प्राप्तो धर्मफलं ह्यसि ॥१२-७५-२१ (६७७९१)
न ह्येतामाशिषं पाण्डुर्न च कुन्त्यभ्यभाषत ।
गविचित्रवीर्यो धर्मात्मा चित्रवीर्यो नराधिपः ॥१२-७५-२२ (६७७९२)
शन्तनुश्च महीपालः सर्वक्षत्रस्य पूजितः।'
तवैतां प्राज्ञतां तात यथा चरसि मेधया ॥ १२-७५-२३ (६७७९३)
शौर्यं बलं च सत्यं च पिता तव सदाऽब्रवीत् ।
महत्त्वं बलमौदार्यं भवतः कुन्त्ययाचत ॥१२-७५-२४ (६७७९४)
नित्यं स्वाहा स्वधा नित्यं चोभे मानुषदैवते ।
पुत्रेष्वाशासते नित्यं पितरो दैवतानि च ॥१२-७५-२५ (६७७९५)
दानमध्ययनं यज्ञं प्रजानां परिपालनम् ।
धर्म्यमेतदधर्म्यं वा जन्मनैवाभ्यजायथाः ॥१२-७५-२६ (६७७९६)
कुले धुरि च युक्तानां वहतां भारमीदृशम् ।
सीदतामपि कौन्तेय कीर्तिर्न परिहीयते ॥१२-७५-२७ (६७७९७)
समन्ततो विनीतो यो वहत्यस्खलितो हि सः ।
निर्दोषकर्मवचनात्सिद्धिः कर्मण एव सा ॥१२-७५-२८ (६७७९८)
नैकान्ते विनिपातेऽपि विहरेदिह कश्चन ।
धर्मी गृही वा राजा वा ब्रह्मचार्यथवा द्विजः ॥१२-७५-२९ (६७७९९)
अल्पं हि सारभूयिष्ठं यत्कर्मोदारमेव तत् ।
कृतमेवाकृताच्छ्रेयो न पापीयोऽस्य कर्मणः ॥१२-७५-३० (६७८००)
यदा कुलीनो धर्मज्ञः प्राप्नोत्यैश्वर्यमुत्तमम् ।
योगक्षेमस्तदा राज्ञः कुशलायैव कल्पते ॥१२-७५-३१ (६७८०१)
दानेनान्यं बलेनान्यमन्यं सूनृतया गिरा ।
सर्वतः प्रतिगृह्णीयाद्राज्यं प्राप्येह धार्मिकः ॥१२-७५-३२ (६७८०२)
यं हि वैद्याः कुले जाता ह्यवृत्तिभयपीडिताः ।
प्राप्य तृप्ताः प्रतिष्ठन्ति धर्मः कोऽभ्यधिकस्ततः ॥१२-७५-३३ (६७८०३)
युधिष्ठिर उवाच।१२-७५-३४क्ष् (५५३२)
किं न्वतः परमं स्वर्ग्यं का ततः प्रीतिरुत्तमा ।
किं ततः परमैश्वर्यं ब्रूहि मे यदि पश्यसि ॥१२-७५-३४ (६७८०४)
भीष्म उवाच।१२-७५-३५क्ष् (५५३३)
यस्मिन्भयार्दिताः सन्तः क्षेमं विन्दन्त्यपि क्षणम् ।
स स्वर्गजित्तमोऽस्माकं सत्यमेतद्ब्रवीमि ते ॥१२-७५-३५ (६७८०५)

त्वमेव प्रीतिमांस्तस्मात्कुरूणां कुरुसत्तम ।
भव राजा जय स्वर्गं सतो रक्षाऽसतो जहि ॥ १२-७५-३६ (६७८०६)
अनु त्वां तात जीवन्तु सुहृदः साधुभिः सह ।
पर्जन्यमिव भूतानि स्वादुद्रुममिव द्विजाः ॥ १२-७५-३७ (६७८०७)
धृष्टं शूरं प्रहर्तारमनृशंसं जितेन्द्रियम् ।
वत्सलं संविभक्तारमुपजीवन्तु बान्धवाः ॥ ॥ १२-७५-३८ (६७८०८)

इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि
पञ्चसप्ततितमोऽध्यायः ॥ ७५.।
Mahabharata - Shanti Parva - Chapter Footnotes

१२-७५-५ न कामात्कस्यचित्क्षमेदिति झ पाठः ॥
१२-७५-७ यदधीते ब्राह्मणादिः ॥
१२-७५-१० अशक्तेन राज्ञा उपजीवतः धनोपजीविनो वणिजादेः ॥
१२-७५-३२ प्रतिगृह्णीयाद्वशीकुर्यात् ॥

---

शन्तिपर्व-अध्यय०७६
॥ श्रीः ॥
१२.७६. अध्यायः ७६

Mahabharata - Shanti Parva - Chapter Topics
भीष्मेण युधिष्ठिरंप्रति ब्राह्मणानां निषिद्धकर्मकथनम्
राजधर्मकथनं च ॥
Mahabharata - Shanti Parva - Chapter Text

१२-७६-० (६७८०९)
युधिष्ठिर उवाच। १२-७६-०क्ष् (५५३४)
स्वकर्मण्यपरे युक्तास्तथैवान्ये विकर्मणि ।
तेषां विशेषमाचक्ष्व ब्राह्मणानां पितामह ॥ १२-७६-१ (६७८१०)
भीष्म उवाच। १२-७६-२क्ष् (५५३५)
विद्यालक्षणसंपन्नाः सर्वत्राम्नायदर्शिनः ।
एते ब्रह्मसमा राजन्ब्राह्मणाः परिकीर्तिताः ॥ १२-७६-२ (६७८११)
ऋत्विगाचार्यसंपन्नाः स्वेषु कर्मस्ववस्थिताः ।
एते देवसमा राजन्ब्राह्मणानां भवन्त्युत ॥ १२-७६-३ (६७८१२)
ग्गोऽजाविमहिषाणां च बडवानां च पोषकाः ।
वृत्त्यर्थं प्रतिपद्यन्ते तान्वैश्यान्संप्रचक्षते ॥ १२-७६-४ (६७८१३)

ऐश्वर्यकामा ये चापि सामिपा वाऽपि भारत ।
निग्रहानुग्रहरतांस्तान्द्विजान्क्षत्रियान्विदुः ॥ १२-७६-५ (६७८१४)
अश्वारोहा गजारोहा रथिनोऽथ पदातयः ।
एते वैश्यसमा राजन्ब्राह्मणानां भवन्त्युत ॥ १२-७६-६ (६७८१५)
जन्मकर्मविहीना ये कदर्या ब्रह्मबन्धवः ।
एते शूद्रसमा राजन्ब्राह्मणानां भवन्त्युत ॥ १२-७६-७ (६७८१६)
अश्रोत्रियाः सर्वे एते सर्वे चानाहिताग्नयः ।
तान्सर्वान्धार्मिको राजा बलिं विष्टिं च कारयेत् ॥ १२-७६-८ (६७८१७)
आह्वायका देवलका नाक्षत्रा ग्रामयाजकाः ।
एते ब्राह्मणचाण्डाला महापथिकपञ्चमाः ॥ १२-७६-९ (६७८१८)
ऋत्विक्पुरोहितो मन्त्री दूतो वार्तानुकर्षकः ।
एते क्षत्रसमा राजन्ब्राह्मणानां भवन्त्युत ॥ १२-७६-१० (६७८१९)
म्लेच्छदेशाश्च ये केचित्पापैरध्युषिता नरैः ।
गत्वा तु ब्राह्मणस्तांश्च चण्डालः प्रेत्य चेह च ॥ १२-७६-११ (६७८२०)
व्रात्यान्म्लेच्छांश्च शूद्रांश्च याजयित्वा द्विजाधमः ।
अकीर्तिमिह संप्राप्य नरकं प्रतिपद्यते ॥ १२-७६-१२ (६७८२१)
महावृन्दसमुद्राभ्यां पर्यायेणैकविंशतिम् ।
ब्राह्मणो ऋग्यजुः साम्नां मूढः कृत्वा तु विप्लवम् ॥ १२-७६-१३ (६७८२२)
कल्पमेकं कृमिस्थोऽथ नानाविष्ठासु जायते ।
व्रात्ये म्लेच्छे तथा शूद्रे तस्करे पत्तितेऽशुचौ ॥ १२-७६-१४ (६७८२३)
कुदेशे च सुरापे च ब्रह्मघ्ने वृषलीपतौ ।
अनधीतेषु सर्वत्र भुञ्जाने यत्र तत्र वा ॥ १२-७६-१५ (६७८२४)
वालस्त्रीवृद्धहन्तुश्च मातापित्रोर्गुरोस्तथा ।
मित्रद्रुहि कृतघ्ने च गोघ्ने चैव कथंचन ॥ १२-७६-१६ (६७८२५)
पुत्रघातिनि शत्रौ च न मन्त्राद्याजयेद्द्विजः ।
स तेषां विप्लवः प्रोक्तो मन्त्रविद्भिः सनातनैः ॥ १२-७६-१७ (६७८२६)
यदि विप्रो विदेशस्थस्तीर्थयात्रां गतोऽपि वा ।
यदि भीतः प्रपन्नो वा कुदेशं शौचवर्जितम् ॥ १२-७६-१८ (६७८२७)
सुसयतः शुचिर्भुत्वा मन्त्रानुच्चारयेद्द्विजः ।
आर्तश्चोच्चारयेन्मन्त्रमार्तत्राणपरोऽथवा ।
हीनेष्वपि प्रयुञ्जानो नासौ विप्लावकः स्मृतः ॥ १२-७६-१९ (६७८२८)
क्रूरकर्मा विकर्मा वा कर्मभिर्वञ्चितोऽथवा ।
तत्त्ववित्तरते पापं शीलवान्सयतेन्द्रियः ॥ ' १२-७६-२० (६७८२९)
एतेभ्यो बलिमादद्याद्धीनकोशो महीपतिः ।
ऋते ब्रह्मसमेभ्यश्च देवकल्पेभ्य एव च ॥ १२-७६-२१ (६७८३०)
अब्राह्मणानां वित्तस्य स्वामी राजेति नः श्रुतिः ।

ब्राह्मणानां च येकेचिद्विकर्मस्था इति श्रुतिः ।
ग्प्रागुक्तांश्चाप्यनुक्तांश्च सर्वास्तान्दापयेत्करान्' १२-७६-२२ (६७८३१)
विकर्मस्थाश्च नोपेक्ष्या विप्रा राज्ञा कथंचन ।
नियम्याः संविभज्याश्च धर्मानुग्रहकाम्यया ॥ १२-७६-२३ (६७८३२)
यस्य स्म विषये राज्ञः स्तेनो भवति वै द्विजः ।
राज्ञ एवापराधं तं मन्यन्ते तद्विदो जनाः ॥ १२-७६-२४ (६७८३३)
अवृत्त्या यो भवेत्स्तेनो वेदवित्स्नातकस्तथा ।
राजन्स राज्ञा भर्तव्य इति वेदविदो विदुः ॥ १२-७६-२५ (६७८३४)
स चेन्नापि निवर्तेत कृतवृत्तिः परन्तप ।
ततो निर्वासनीयः स्यात्तस्माद्देशात्सबान्धवः ॥ १२-७६-२६ (६७८३५)
ग्यज्ञः श्रुतमपैशुन्यमहिंसाऽतिथिपूजनम् ।
दमः सत्यं तपो दानमेतद्ब्राह्मणलक्षणम् ॥' ॥ १२-७६-२७ (६७८३६)

इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि
षट्सप्ततितमोऽध्यायः ॥ ७६.।
Mahabharata - Shanti Parva - Chapter Footnotes

१२-७६-३ ऋग्यजुःसामसंपन्नाः इति झ । पाठः ॥
१२-७६-७ जन्मकर्मजन्मोचितकर्म तेन विहीनाः ॥
१२-७६-८ बलिं करवानम् । विष्टिंविना वेतनं राजसेवाम् ॥
१२-७६-९ आह्वायका धर्माधिकारिणः । देवलका वेतनेन
देवपूजाकर्तारः। महापथिकः समुद्रे नौयानेन गच्छन्। यद्वा महापथि
शुल्कग्राहकः ॥

---

शन्तिपर्व-अध्यय०७७
॥ श्रीः ॥
१२.७७. अध्यायः ७७

Mahabharata - Shanti Parva - Chapter Topics
भीष्मेण युधिष्ठिरंप्रति केकयराजोपाख्यानकथनम् ॥ १.।
Mahabharata - Shanti Parva - Chapter Text

१२-७७-० (६७८३७)
युधिष्ठिर उवाच। १२-७७-०क्ष् (५५३६)
केषां प्रभवते राजा वित्तस्य भरतर्षभ ।
कया च वृत्त्या वर्तेत तन्मे ब्रूहि पितामह ॥ १२-७७-१ (६७८३८)

भीष्म उवाच। १२-७७-२क्ष् (५५३७)
अब्राह्मणानां वित्तस्य स्वामी राजेति वैदिकम् ।
ब्राह्मणानां च ये केचिद्विकर्मस्था भवन्त्युत ॥ १२-७७-२ (६७८३९)
विकर्मस्थाश्च नोपेक्ष्या विप्रा राज्ञा कथंचन ।
इति राज्ञां पुरावृत्तमभिजल्पन्ति साधवः ॥ १२-७७-३ (६७८४०)
यस्य स्म विषये राज्ञः स्तेनो भवति वै द्विजः ।
राज्ञ एवापराधं तं मन्यन्ते किल्बिषं नृप ॥ १२-७७-४ (६७८४१)
अभिशस्तमिवात्मानं मन्यन्ते तेन कर्मणा ।
तस्माद्राजर्षयः सर्वे ब्राह्मणानन्वपालयन् ॥ १२-७७-५ (६७८४२)
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
गीतं केकयराजेन ह्रियमाणेन रक्षसा ॥ १२-७७-६ (६७८४३)
केकयानामधिपतिं रक्षो जग्राह दारुणम् ।
स्वाध्यायेनान्वितं राजन्नरण्ये संशितव्रतम् ॥ १२-७७-७ (६७८४४)
राजोवाच। १२-७७-८क्ष् (५५३८)
न मे स्तेनो जनपदे न कदर्यो न मद्यपः ।
नानाहिताग्निर्नायज्वा मा ममान्तरमाविशः ॥ १२-७७-८ (६७८४५)
न च मे ब्राह्मणोऽविद्वान्नाव्रती नाप्यसोमपः ।
द्विजातिर्विषये मह्यं मा ममान्तरमाविशः ॥ १२-७७-९ (६७८४६)
नानाप्तदक्षिणैर्यज्ञैर्यजन्ते विषये मम ।
नाधीते चाव्रती कश्चिन्मा ममान्तरमाविशः ॥ १२-७७-१० (६७८४७)
अध्यापयन्त्यधीयन्ते यजन्ते याजयन्ति च ।
ददति प्रतिगृह्णन्ति षट्सु कर्मस्ववस्थिताः ॥ १२-७७-११ (६७८४८)
पूजिताः संविभक्ताश्च मृदवः सत्यवादिनः ।
ब्राह्मणा मे स्वकर्मस्था मा ममान्तरमाविशः ॥ १२-७७-१२ (६७८४९)
न याचन्ते प्रयच्छन्ति सत्यधर्मविशारदाः ।
नाध्यापयन्त्यधीयन्ते यजन्ते याजयन्ति न ॥ १२-७७-१३ (६७८५०)
ब्राह्मणान्परिरक्षन्ति सङ्ग्रामेष्वपलायिनः ।
क्षत्रिया मे स्वकर्मस्था मा ममान्तरमाविशः ॥ १२-७७-१४ (६७८५१)
कृषिगोरक्षवाणिज्यमुपजीवन्त्यमायया ।
अप्रमत्ताः क्रियावन्तः सुवृत्ताः सत्यवादिनः ॥ १२-७७-१५ (६७८५२)
संविभागं दमं शौचं सौहृदं च व्यपाश्रिताः ।
मम वैश्याः स्वकर्मस्था मा ममान्तरमाविशः ॥ १२-७७-१६ (६७८५३)
त्रीन्वर्णानुपतिष्ठन्ते यथावदनसूयकाः ।
मम शूद्राः स्वकर्मस्था मा ममान्तरमाविशः ॥ १२-७७-१७ (६७८५४)
कृपणानाथवृद्धानां दुर्बलातुरयोषिताम् ।
संविभक्ताऽस्मि सर्वेषां मा ममान्तरमाविशः ॥ १२-७७-१८ (६७८५५)

कुलानुरूपधर्माणां प्रस्थितानां यथाविधि ।
अव्युच्छेत्ताऽस्मि सर्वेषां मा ममान्तरमाविशः ॥१२-७७-१९ (६७८५६)
तपस्विनो मे विषये पूजिताः परिपालिताः ।
संविभक्ताश्च सत्कृत्य मा ममान्तरमाविशः ॥१२-७७-२० (६७८५७)
नासंविभज्य भोक्ताऽस्मि न विशामि परस्त्रियम् ।
स्वतन्त्रो जातु न क्रीडे मा ममान्तरमाविशः ॥१२-७७-२१ (६७८५८)
नाब्रह्मचारी भिक्षावान्भिक्षुर्वा ब्रह्मचर्यवान् ।
अनृत्विजा हुतं नास्ति मा ममान्तरमाविशः ॥१२-७७-२२ (६७८५९)
ग्कृतं राज्यं मया सर्वं राज्यस्थेनापि कार्यवत् ।
नाहं व्युत्क्रामितः सत्यान्मा ममान्तरमाविशः ॥' १२-७७-२३ (६७८६०)
नावजानाम्यहं वैद्यान्न वृद्धान्न तपस्विनः ।
राष्ट्रे स्वपति जागर्मि मा ममान्तरमाविशः ॥१२-७७-२४ (६७८६१)
ग्शुक्लकर्मास्मि सर्वत्र न दुर्गतिभयं मम ।
धर्मचारी गृहस्थश्च मा ममान्तरमाविशः ॥' १२-७७-२५ (६७८६२)
वेदाध्ययनसंपन्नस्तपस्वी सत्यधर्मवित् ।
स्वामी सर्वस्य राष्ट्रस्य धीमान्मम पुरोहितः ॥१२-७७-२६ (६७८६३)
दानेन दिव्यानभिवाञ्छामि लोकान्
सत्येनाथ ब्राह्मणानां च गुप्त्या ।
शुश्रूषया चापि गुरूनुपैमि
न मे भयं विद्यते राक्षसेभ्यः ॥ १२-७७-२७ (६७८६४)
न मे राष्ट्रे विधवा ब्रह्मबन्धु
र्न ब्राह्मणः कितवो नोत चोरः ।
नायाज्ययाजी न च पापकर्मा
न मे भयं विद्यते राक्षसेभ्यः ॥ १२-७७-२८ (६७८६५)
न मे शस्त्रैरनिर्भिन्नं गात्रे व्यङ्गुलमन्तरम् ।
धर्मार्थं युध्यमानस्य मा ममान्तरमाविशः ॥१२-७७-२९ (६७८६६)
गोब्राह्मणेभ्यो यज्ञेभ्यो नित्यं स्वस्त्ययनं मम ।
आशासते जना राष्ट्रे मा ममान्तरमाविशः ॥१२-७७-३० (६७८६७)
राक्षस उवाच।१२-७७-३१क्ष् (५५३९)
ग्नारीणां व्यभिचाराच्च अन्यायाच्च महीक्षिताम् ।
विप्राणां कर्मदोषाच्च प्रजानां जायते भयम् ॥१२-७७-३१ (६७८६८)
अवृष्टिर्मारको दोषः सततं क्षुद्भयानि च ।
विग्रहश्च सदा तस्मिन्देशे भवति दारुणः ॥१२-७७-३२ (६७८६९)
यक्षरक्षःपिशाचेभ्यो नासुरेभ्यः कथंचन ।
भयमुत्पद्यते तत्र यत्र विप्राः सुसंयताः ॥१२-७७-३३ (६७८७०)
गन्धर्वाप्सरसः सिद्धाः पन्नगाश्च सरीसृपाः ।

मानवान्न जिघांसन्ति यत्र नार्यः पतिव्रताः ॥१२-७७-३४ (६७८७१)
ब्राह्मणः क्षत्रिया वैश्या यत्र शूद्राश्च धार्मिकाः ।
नाऽनावृष्टिभयं तत्र न दुर्भिक्षं न विभ्रमः ॥१२-७७-३५ (६७८७२)
धार्मिको यत्र भूपालो न तत्रास्ति पराभवः ।
उत्पाता न च दृश्यन्ते न दिव्या न च मानुषाः ॥१२-७७-३६ (६७८७३)
यस्मात्सर्वास्ववस्थासु धर्ममेवान्ववेक्षसे ।
तस्मात्प्राप्नुहि कैकेय गृहं स्वस्ति व्रजाम्यहम् ॥१२-७७-३७ (६७८७४)
येषां गोब्राह्मणा रक्ष्याः प्रजा रक्ष्याश्च केकय ।
न रक्षोऽभ्यो भयं तेषां कुत एव तु पातकम् ॥१२-७७-३८ (६७८७५)
येषां पुरोगमा विप्रा येषां ब्रह्म परं बलम् ।
सुरक्षितास्तथा विप्रास्ते वै स्वर्गजितो नृपाः ॥१२-७७-३९ (६७८७६)
भीष्म उवाच।१२-७७-४०क्ष् (५५४०)
तस्माद्द्विजातीन्रक्षेत ते हि रक्षन्ति रक्षिताः ।
आशीरेषां भवेद्राजन्राज्ञां सम्यक्प्रवर्तताम् ॥१२-७७-४० (६७८७७)
तस्माद्राज्ञा विशेषेण विकर्मस्था द्विजातयः ।
नियम्याः संविभज्याश्च प्रजानुग्रहकारणात् ॥१२-७७-४१ (६७८७८)
एवं यो वर्तते राजा पौरजानपदेष्विह ।
अनुभूयेह भद्राणि प्राप्नोतीन्द्रसलोकताम् ॥ ॥१२-७७-४२ (६७८७९)

इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि
सप्तसप्तातितमोऽध्यायः ॥७७.।
Mahabharata - Shanti Parva - Chapter Footnotes

१२-७७-८ मामकान्तरमाविभः इति ट ।ड थ। पाठः। मामकान्तरमाविशः
इति झ। पाठः ॥
१२-७७-२७ न पापकारी न च पापवक्ता इति टड थ द ।पाठः ॥

---

शन्तिपर्व-अध्यय०७८
॥ श्रीः ॥
१२.७८. अध्यायः ७८

Mahabharata - Shanti Parva - Chapter Topics
भीष्मेण युधिष्ठिरंप्रति ब्राह्मणादीनामापद्धर्मकथनम् ॥१.।
Mahabharata - Shanti Parva - Chapter Text

१२-७८-० (८०८१७)

युधिष्ठिर उवाच। १२-७८-०क्ष् (६६९१)
व्याख्याता राजधर्मेण वृत्तिरापत्सु भारत ।
कथंचिद्वैश्यधर्मेण जीवेद्वा ब्राह्मणो न वा ॥ १२-७८-१ (८०८१८)
भीष्म उवाच। १२-७८-२क्ष् (६६९२)
अशक्तः क्षत्रधर्मेण वैश्यधर्मेण वर्तयेत् ।
कृषिं गोरक्ष्यमास्थाय व्यसने वृत्तिसंक्षये ॥ १२-७८-२ (८०८१९)
युधिष्ठिर उवाच। १२-७८-३क्ष् (६६९३)
कानि पण्यानि विक्रीणन्स्वर्गलोकान्न हीयते ।
ब्राह्मणो वैश्यधर्मेण वर्तयन्भरतर्षभ ॥ १२-७८-३ (८०८२०)
भीष्म उवाच। १२-७८-४क्ष् (६६९४)
सुरालवणमित्येतत्तिलान्केसरिणः पशून् ।
वृषभान्मधु मांसं च कृतान्नं च युधिष्ठिर ॥ १२-७८-४ (८०८२१)
सर्वास्ववस्थास्वेतानि ब्राह्मणः परिवर्जयेत् ।
एतेषां विक्रयात्तात ब्राह्मणो नरके पतेत् ॥ १२-७८-५ (८०८२२)
अजोऽग्निर्वरुणो मेषः सूर्योऽश्वः पृथिवी विराट् ।
धेनुर्यज्ञश्च सोमश्च न विक्रेयाः कथंचन ॥ १२-७८-६ (८०८२३)
पक्वेनामस्य निमयं न प्रशंसन्ति साधवः ।
निमयेत्पक्वमामेन भोजनार्थाय भारत ॥ १२-७८-७ (८०८२४)
वयं सिद्धमशिष्यामो भवान्साधयतामिदम् ।
एवं संवीक्ष्य समयं नाधर्मोऽस्ति कथंचन ॥ १२-७८-८ (८०८२५)
अत्र ते वर्तयिष्यामि यथा कर्मः सनातनः ।
व्यवहारप्रवृत्तानां तन्निबोध युधिष्ठिर ॥ १२-७८-९ (८०८२६)
भवतेऽहं ददानीदं भवानेतत्प्रयच्छतु ।
उचितो वर्तते धर्मो न बलात्संप्रवर्तते ॥ १२-७८-१० (८०८२७)
इत्येवं संप्रवर्तन्ते व्यवहाराः पुरातनः ।
ऋषीणामितरेषां च साधु चैतदसंशयम् ॥ १२-७८-११ (८०८२८)
युधिष्ठिर उवाच। १२-७८-१२क्ष् (६६९५)
अथ तात यदा सर्वाः शस्त्रमाददते प्रजाः ।
व्युत्क्रमन्ते स्वधर्मेभ्यः क्षत्रस्य क्षीयते बलम् ॥ १२-७८-१२ (८०८२९)
तदा त्राता तु को नु स्यात्को धर्मः किं परायणम् ।
एतं मे संशयं ब्रूहि विस्तरेण पितामह ॥ १२-७८-१३ (८०८३०)
भीष्म उवाच। १२-७८-१४क्ष् (६६९६)
दानेन तपसा यज्ञैरद्रोहेण दमेन च ।
ब्राह्मणप्रमुखा वर्णाः क्षेममिच्छेयुरात्मनः ॥ १२-७८-१४ (८०८३१)
तेषां ये वेदबलिनस्त उत्थाय समन्ततः ।
राज्ञो बलं वर्धयेयुर्महेन्द्रस्येव देवताः ॥ १२-७८-१५ (८०८३२)

राज्ञो हि क्षीयमाणस्य ब्रह्मैवाहुः परायणम् ।
तस्माद्ब्राह्मबलेनैव समुत्थेयं विजानता ॥ १२-७८-१६ (८०८३३)
यदा तु विजयी राजा क्षेमं राष्ट्रेऽभिसन्दधेत् ।
तदा वर्णा यथाधर्मं निविशेयुः स्वकर्मसु ॥ १२-७८-१७ (८०८३४)
उन्मर्यादे प्रवृत्ते तु दस्युभिः संकरे कृते ।
सर्वे वर्णा न दुष्येयुः शस्त्रवन्तो युधिष्ठिर ॥ १२-७८-१८ (८०८३५)
युधिष्ठिर उवाच। १२-७८-१९क्ष् (६६९७)
अथ चेत्सर्वतः क्षत्रं प्रदुष्येद्ब्राह्मणं प्रति ।
कस्तत्र ब्राह्मणांस्त्राता को धर्मः किं परायणम् ॥ १२-७८-१९ (८०८३६)
भीष्म उवाच। १२-७८-२०क्ष् (६६९८)
तपसा ब्रह्मचर्येण शस्त्रेण च बलेन च ।
अमायया मायया च नियन्तव्यं तदा भवेत् ॥ १२-७८-२० (८०८३७)
क्षत्रियस्यातिवृत्तस्य ब्राह्मणेषु विशेषतः ।
ब्रह्मैव संनियन्तृ स्यात्क्षत्रं हि ब्रह्मसंभवम् ॥ १२-७८-२१ (८०८३८)
अभ्द्योऽग्निर्ब्रह्मतः क्षत्रमश्मनो लोहमुत्थितम् ।
तेषां सर्वत्रगं तेजः स्वस्वयोनिषु शाम्यति ॥ १२-७८-२२ (८०८३९)
यदा छिनत्त्ययोऽश्मानमग्निश्चापोऽभिहन्ति च ।
क्षत्रं च ब्राह्मणं द्वेष्टि तदा शाम्यन्ति ते त्रयः ॥ १२-७८-२३ (८०८४०)
तस्माद्ब्रह्मणि शाम्यन्ति क्षत्रियाणां युधिष्ठिर ।
समुदीर्णान्यजेयानि तेजांसि च बलानि च ॥ १२-७८-२४ (८०८४१)
युधिष्ठिर उवाच। १२-७८-२५क्ष् (६६९९)
ब्रह्मवीर्ये मृदूभूते क्षत्रवीर्ये च दुर्बले ।
दुष्टेषु सर्ववर्णेषु ब्राह्मणान्प्रति भारत ॥ १२-७८-२५ (८०८४२)
ये तत्र युद्धं कुर्वन्ति त्यक्त्वा जीवितमात्मनः ।
ग्ब्राह्मणान्परिरक्षन्ति तेषां लोका भवन्ति के ॥ १२-७८-२६ (८०८४३)
भीष्म उवाच। १२-७८-२७क्ष् (६७००)
ब्राह्मणान्परिरक्षन्तो धर्ममात्मानमेव च ।
मनस्विनो मन्युमन्तः पुण्याँल्लोकान्व्रजन्त्यमी ।
ब्राह्मणार्थं हि सर्वेषां शस्त्रग्रहणमिष्यते ॥ १२-७८-२७ (८०८४४)
अतिस्विष्टमधीतानां लोकानतितपस्विनाम् ।
अनाशकाग्न्याहितानां शूरा यान्ति परां गतिम् ॥ १२-७८-२८ (८०८४५)
ब्राह्मणस्त्रिषु वर्णेषु शस्त्रं गृह्णन्न दुष्यति ।
एष एवात्मनस्त्यागो नान्यं धर्मं विदुर्जना ॥ १२-७८-२९ (८०८४६)
तेभ्यो नमश्च भद्रं च ये शरीराणि जुह्वति ।
ब्रह्मद्विपो जिघांसन्तस्तेषां नोऽस्तु सलोकता ॥ १२-७८-३० (८०८४७)
ब्रह्मलोकजितः स्वर्ग्यान्वीरांस्तान्मनुरब्रवीत् ।

यथाऽश्वमेधावभृथे स्नाताः पूता भवन्त्युत ।
दुष्कृतः सुकृतश्चैव तथा शस्त्रहता रणे ॥ १२-७८-३१ (८०८४८)
भवत्यधर्मो धर्मो हि धर्मोऽधर्मो भवत्युत ।
कारणाद्देशकालस्य देशः कालः स तादृशः ॥१२-७८-३२ (८०८४९)
मैत्राः क्रूराणि कुर्वन्तो जयन्ति स्वर्गमुत्तमम् ।
धर्म्याः पापानि कुर्वाणा गच्छन्ति परमां गतिम् ॥१२-७८-३३ (८०८५०)
ब्राह्मणस्त्रिषु कालेषु शस्त्रं गृह्णन्न दुष्यति ।
आत्मत्राणे दस्युदोषे सर्वस्वहरणे तथा ॥१२-७८-३४ (८०८५१)
युधिष्ठिर उवाच।१२-७८-३५क्ष् (६७०१)
अभ्युत्थिते दस्युबले क्षत्रार्थे वर्णसङ्करे ।
संप्रमूढेषु वर्णेषु यदन्योऽभिभवेद्बली ॥१२-७८-३५ (८०८५२)
ब्राह्मणो यदि वा वैश्यः शूद्रो वा राजसत्तम ।
दस्युभ्यो यः प्रजा रक्षेद्दण्डं धर्मेण धारयेत् ॥१२-७८-३६ (८०८५३)
भीष्म उवाच।१२-७८-३७क्ष् (६७०२)
कार्यं कुर्यान्न वा कुर्यात्स वार्यो वा भवेन्न वा ।
न स्म शस्त्रं गृहीतव्यमन्यत्र क्षत्रबन्धुतः ॥१२-७८-३७ (८०८५४)
अपारे यो भवेत्पारमप्लवेः यः प्लवो भवेत् ।
शूद्रो वा यदि वाऽप्यन्यः सर्वथा मानमर्हति ॥१२-७८-३८ (८०८५५)
यमाश्रित्य नरा राजन्वर्तयेयुर्यथासुखम् ।
अनाथास्तप्यमानाश्च दस्युभिः परिपीडिताः ॥१२-७८-३९ (८०८५६)
तमेव पूजयेयुस्ते प्रीत्या स्वमिव बान्धवम् ।
यद्दद्भ्यभीष्टं कौरव्य कर्ता सन्मानमर्हति ॥१२-७८-४० (८०८५७)
किमनडुहा यो न वहेत्किं धेन्वा वाऽप्यदुग्धया ।
बन्ध्यया भार्यया कोऽर्थः कोऽर्थो राज्ञाऽप्यरक्षता ॥१२-७८-४१ (८०८५८)
यथा दारुमयो हस्ती यथा चर्ममयो मृगः ।
यथा ह्यदक्षः पुरुषः पथि क्षेत्रं यथोपरम् ॥१२-७८-४२ (८०८५९)
यथा विप्रोऽनधीयानो राजा यश्च न रक्षिता ।
मेघो न वर्षते यश्च सर्व एव निरर्थकाः ॥१२-७८-४३ (८०८६०)
नित्यं यस्तु सतो रक्षेदसतश्च निवर्तयेत् ।
स एव राजा कर्तव्यस्तेन सर्वमिदं धृतम् ॥ ॥१२-७८-४४ (८०८६१)

इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि
अष्टसप्ततितमोऽध्यायः ॥७८.।
Mahabharata - Shanti Parva - Chapter Footnotes

१२-७८-४ केसरिणः अश्वान् ।पशून्गोजाविमहिषादीन्।कृतान्नं पक्वमन्नम् ॥

१२-७८-६ विराट् अन्नम् ॥
१२-७८-७ पक्वेनामस्य विनिमये पक्वदो दुष्यति नत्वामद इत्यर्थः ॥
१२-७८-८ इदमप्यपवदति वयमिति । निमयम् इति झ। पाठः ॥
१२-७८-१९ कस्तस्य ब्राह्मणस्त्रातेति झ । पाठः ॥
१२-७८-२९ एवमेवात्मनस्त्यागान्नान्यं इति झ । पाठः ॥
१२-७८-३० नोऽस्माकम् ॥
१२-७८-३३ मैत्रा उत्तङ्कपराशरादयः । क्रूराणि सर्पराक्षससत्रादीनि। धर्म्या धर्मादनपेताः क्षत्रियाः। पापानि परराष्ट्रावमर्दादीनि। अधर्मस्य धर्मत्वेन उदाहरणद्वयमुक्तम्। इदमेवाऽर्हिंसाख्यधर्माश्रयेऽधर्मरूपमपि भवतीति ज्ञेयम् ॥
१२-७८-४१ किं तैर्येऽनडुहो नोह्याः इति झ । पाठः ॥
१२-७८-४२ यदाह्यनर्थः षण्ढो वा पार्थ क्षेत्रं इति झ । पाठः ॥

---

शन्तिपर्व-अध्यय०७९
॥ श्रीः ॥
१२.७९. अध्यायः ७९

Mahabharata - Shanti Parva - Chapter Topics
भीष्मेण युधिष्ठिरंप्रति ऋत्विग्लक्षणादिकथनम् ॥ १.।
Mahabharata - Shanti Parva - Chapter Text

१२-७९-० (६७८८०)
युधिष्ठिर उवाच। १२-७९-०क्ष् (५५४१)
क्व समर्थाः कथंशीला ऋत्विजः स्युः पितामह ।
कथंविधाश्च राजेन्द्र तद्ब्रूहि वदतां वर ॥ १२-७९-१ (६७८८१)
भीष्म उवाच। १२-७९-२क्ष् (५५४२)
प्रतिकर्मपरा राजन्वृत्तिरस्य विधीयते ।
छन्दः सामादि विज्ञाय द्विजानां श्रुतमेवच ॥ १२-७९-२ (६७८८२)
ये त्वेकरतयो नित्यं धीराश्च प्रियवादिनः ।
परस्परस्य सुहृदः समन्तात्समदर्शिनः ॥ १२-७९-३ (६७८८३)
आनृशंस्यं सत्यवाक्यमहिंसा दम आर्जवम् ।
अद्रोहोऽनभिमानश्च ह्रीस्तितिक्षा दमः शमः ॥ १२-७९-४ (६७८८४)
ग्यस्मिन्नेतानि दृश्यन्ते स पुरोहित उच्यते।'
धीमान्सत्यधृतिर्दान्तो भूतानामविहिंसकः ।
अकामद्वेषसंयुक्तस्त्रिभिः शुक्लैः समन्वितः ॥ १२-७९-५ (६७८८५)

अहिंसको ज्ञानतृप्तः स ब्रह्मासनमर्हति ।
एते महर्त्विजस्तात सर्वे मान्या यथार्हतः ॥ १२-७९-६ (६७८८६)
युधिष्ठिर उवाच। १२-७९-७क्ष् (५५४३)
यदिदं वेदवचनं दक्षिणासु विधीयते ।
इदं देयमिदं देयं न क्वचिव्द्यवतिष्ठते ॥ १२-७९-७ (६७८८७)
देयं प्रतिधनं शास्त्रमापद्धर्मा न शास्त्रतः ।
आज्ञा शास्त्रस्य घोरे यं न शक्तिं समवेक्षते ॥ १२-७९-८ (६७८८८)
श्रद्धामालम्ब्य यष्टव्यमित्येषा वैदिकी श्रुतिः ।
मिथ्योपेतस्य यज्ञस्य किमु श्रद्धा करिष्यति ॥ १२-७९-९ (६७८८९)
भीष्म उवाच। १२-७९-१०क्ष् (५५४४)
न वेदानां परिभवान्न शाठ्येन न मायया ।
कश्चिन्महदवाप्नोति मा ते भूद्बुद्धिरीदृशी ॥ १२-७९-१० (६७८९०)
यज्ञाङ्गं दक्षिणा तात मन्त्राणां परिबृंहणम् ।
न मन्त्रा दक्षिणाहीनास्तारयन्ति कथंचन ॥ १२-७९-११ (६७८९१)
शक्तिस्तु पूर्णपात्रेण संमिता नावमा भवेत् ।
अवश्यं तात यष्टव्यं त्रिभिर्वर्णैर्यथाबलम् ॥ १२-७९-१२ (६७८९२)
सोमो राजा ब्राह्मणानामित्येषा वैदिकी श्रुतिः ।
तं च विक्रेतुमिच्छन्ति न तथा वृत्तिरिष्यते ॥ १२-७९-१३ (६७८९३)
तेन क्रीतेन धर्मेण ततो यज्ञः प्रतायते ।
इत्येवं धर्ममाख्यातमृषिभिर्धर्मकोविदैः ॥ १२-७९-१४ (६७८९४)
पुमान्यज्ञश्च सोमश्च न्यायवृत्तो यदा भवेत् ।
अन्यायवृत्तः पुरुषो न परस्य न चात्मनः ॥ १२-७९-१५ (६७८९५)
शरीरं यज्ञपात्राणि इत्येषा श्रूयते श्रुतिः ।
तानि सम्यक्प्रणीतानि ब्राह्मणानां महात्मनाम् ॥ १२-७९-१६ (६७८९६)
तपो यज्ञादपि श्रेष्ठमित्येषा परमा श्रुतिः ।
तत्ते तपः प्रवक्ष्यामि विद्वंस्तदपि मे शृणु ॥ १२-७९-१७ (६७८९७)
अहिंसा सत्यवचनमानृशंस्यं दमो घृणा ।
एतत्तपो विदुर्धीरा न शरीरस्य शोषणम् ॥ १२-७९-१८ (६७८९८)
अप्रामाण्यं च वेदानां शास्त्राणां चातिलङ्घनम् ।
अव्यवस्था च सर्वत्र तद्वै नाशनमात्मनः ॥ १२-७९-१९ (६७८९९)
निबोध दशहोतॄणां विधानं पार्थ यादृशम् ।
चित्तिः स्रुक् चित्तमाज्यं च पवित्रं ज्ञानमुत्तमम् ।
ग्न शाठ्यं न च जिह्मत्वं कालो देशश्च ते दश ॥' १२-७९-२० (६७९००)
सर्वं दिह्मं मृत्युपदमार्जवं ब्रह्मणः पदम् ।
एतावाञ्ज्ञानविषयः किं प्रलापः करिष्यति ॥ ॥ १२-७९-२१ (६७९०१)

इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि
एकोनाशीतितमोऽध्यायः ॥ ७९.।
Mahabharata - Shanti Parva - Chapter Footnotes

१२-७९-२ राज्ञां शान्तिकपौष्टिकादिकर्मप्रयोगशुद्ध्याख्यं प्रतिकर्म
ऋत्विग्भिः कर्तव्यमित्यर्थः ॥
१२-७९-५ त्रिभिः श्रुतवृत्तवशैः । शुक्लैर्निर्दोषैः ॥
१२-७९-७ इदं देयमिदं देयमिति यदिदं वेदवचनमिति
इति शब्दाध्याहारेण योज्यम् । व्यवतिष्ठते
व्यवस्थां प्राप्नोति। अल्पेऽप्यपच्छेदनिमित्ते
सर्वस्वदक्षिणाबिधानादुत्तरक्रतुकलापलोपप्राप्तेः ॥
१२-७९-९ गोःस्थाने चरुमात्रदानरूपोऽनुकल्पोमिथ्याचारस्तदुपेतो
यज्ञः श्रद्धयापिनि संपूर्यत इत्यर्थः ॥
१२-७९-२१ जिह्मं शाठ्यम् । आर्जवं अवक्रत्वम् ॥

---

शन्तिपर्व-अध्यय०८०
॥ श्रीः ॥
१२.८०. अध्यायः ८०

Mahabharata - Shanti Parva - Chapter Topics
युधिष्ठिरंप्रति भीष्मेण मित्रामित्रलक्षणकथनम् ॥ १.।
Mahabharata - Shanti Parva - Chapter Text

१२-८०-० (६७९०२)
युधिष्ठिर उवाच। १२-८०-०क्ष् (५५४५)
यदप्यल्पतरं कर्म तदप्येकेन दुष्करम् ।
पुरुषेणासहायेन किमु राज्यं पितामह ॥ १२-८०-१ (६७९०३)
किंशीलः किंसमाचारो राज्ञो यः सचिवो भवेत् ।
कीदृशे विश्वसेद्राजा कीदृशे न च विश्वसेत् ॥ १२-८०-२ (६७९०४)
भीष्म उवाच। १२-८०-३क्ष् (५५४६)
चतुर्विधानि मित्राणि राज्ञां राजन्भवन्त्युत ।
सहार्थो भजः निश्च सहजः कृत्रिमस्तथा ॥ १२-८०-३ (६७९०५)
धर्मात्मा पञ्चमं मित्रं स तु नैकस्य न द्वयोः ।
यतो धर्मस्ततो वा स्यान्मध्यस्थो वा ततो भवेत् ॥ १२-८०-४ (६७९०६)
यो यस्यार्थो न रोचेत न तं तस्य प्रकाशयेत ।
गमित्राणां प्रकृतिर्नास्ति त्वमित्राणां च भारत ।

उपकाराद्भवेन्मित्रमपकाराद्भवेदरिः ॥ १२-८०-५ (६७९०७)
यस्यैव हि मनुष्यस्य नरो मरणमृच्छति ।
तस्य पर्यागते काले पुनर्जीवितुमिच्छति ॥१२-८०-६ (६७९०८)
धर्माधर्मेण राजानश्चरन्ति विजिगीषवः ।
चतुर्णां मध्यमौ श्रेष्ठौ नित्यं शङ्क्यौ तथाऽपरौ ।
सर्वे नित्यं शङ्कितव्याः प्रत्यक्षं कार्यमात्मनः ॥ १२-८०-७ (६७९०९)
न हि राज्ञा प्रमादो वै कर्तव्यो मित्ररक्षणे ।
प्रमादिनं हि राजानं लोकाः परिभवन्त्युत ॥१२-८०-८ (६७९१०)
असाधुः साधुतामेति साधुर्भवति दारुणः ।
अरिश्च मित्रं भवति मित्रं चापि प्रदुष्यति ॥१२-८०-९ (६७९११)
अनित्यचित्तः पुरुषस्तस्मिन्को जातु विश्वसेत् ।
तस्मात्प्रधानं यत्कार्यं प्रत्यक्षं तत्समाचरेत् ॥१२-८०-१० (६७९१२)
एकान्तेन हि विश्वासः कृत्स्नो कर्मार्थनाशकः ।
अविश्वासश्च सर्वत्र मृत्युर्नापि विशिष्यते ॥१२-८०-११ (६७९१३)
अकालमृत्युर्विश्वासोऽविश्वसन्हि विपद्यते ।
यस्मिन्करोति विश्वासमिच्छतस्तस्य जीवति ॥१२-८०-१२ (६७९१४)
तस्माद्विश्वसितव्यं च शङ्कितव्यं च केषुचित् ।
एषा नीतिगतिस्तात लक्ष्मीश्चैषा सनातनी ॥१२-८०-१३ (६७९१५)
यं मन्येत ममाभावादिममर्थागमः स्पृशेत् ।
नित्यं तस्माच्छङ्कितव्यममित्रं तं विदुर्बुधाः ॥१२-८०-१४ (६७९१६)
यस्य क्षेत्रादप्युदकं क्षेत्रमन्यस्य गच्छति ।
न तत्रानिच्छतस्तस्य भिद्येरन्सर्वसेतवः ॥१२-८०-१५ (६७९१७)
तथैवात्युदकाद्भीतस्तस्य भेदनमिच्छति ।
यमेवंलक्षणं विद्यात्तममित्रं विदुर्बुधाः ॥१२-८०-१६ (६७९१८)
यस्तु वृद्ध्या न तप्येत क्षये दीनतरो भवेत् ।
एतदुत्तममित्रस्य निमित्तमभिचक्षते ॥१२-८०-१७ (६७९१९)
यन्मन्येत ममाभावादस्याभावो भवेदिति ।
तस्मिन्कुर्वीत विश्वासं यथा पितरी वै तथा ॥१२-८०-१८ (६७९२०)
तं शक्त्या वर्तमानं च सर्वतः परिबृंहयेत् ।
नित्यं क्षताद्वारयति यो धर्मेष्वपि कर्मसु ॥१२-८०-१९ (६७९२१)
क्षताद्भीतं विजानीयादुत्तमं मित्रलक्षणम् ।
ये यस्य क्षयमिच्छन्ति ते तस्य रिपवः स्मृताः ॥१२-८०-२० (६७९२२)
व्यसनान्नित्यभीतो यः समृद्ध्या यो न दुष्यति ।
यत्स्यादेवंविधं मित्रं तदात्मसममुच्यते ॥१२-८०-२१ (६७९२३)
रूपवर्णस्वरोपेतस्तितिक्षुरनसूयकः ।
कुलीनः शीलसंपन्नः स ते स्यात्प्रत्यनन्तरः ॥१२-८०-२२ (६७९२४)

मेधावी स्मृतिमान्दक्षः प्रकृत्या चानृशंस्यवान् ।
यो मानितोऽमानितो वा न सन्तुष्येत्कथंचन ॥ १२-८०-२३ (६७९२५)
ऋत्विग्वा यदि वाऽऽचार्यः सखा वाऽत्यंतसत्कृतः ।
गृहे वसेदमात्यस्ते स स्यात्परमपूजितः ॥ १२-८०-२४ (६७९२६)
संविद्याः परमं मित्रं प्रकृतिं चार्थधर्मयोः ।
विश्वासस्ते भवेत्तत्र यथा पितरि वै तथा ॥ १२-८०-२५ (६७९२७)
नैव द्वौ न त्रयः कार्या न मृष्येरन्परस्परम् ।
एकार्थे हेतुभूतानां भेदो भवति सर्वदा ॥ १२-८०-२६ (६७९२८)
कीर्तिप्रधानो यस्त स्याद्यश्च स्यात्समये स्थितः ।
समर्थान्यश्च न द्वेष्टि नानर्थान्कुरुते च यः ॥ १२-८०-२७ (६७९२९)
यो न कामाद्भयाल्लोभात्क्रोधाद्वा धर्ममुत्सृजेत् ।
दक्षः पर्याप्तवचनः स ते स्यात्प्रत्यनन्तरः ॥ १२-८०-२८ (६७९३०)
कुलीनः शीलसंपन्नस्तितिक्षुरविकत्थनः ।
शूरश्चार्यश्च विद्वांश्च प्रतिपत्तिविशारदः ॥ १२-८०-२९ (६७९३१)
एते ह्यमात्याः कर्तव्याः सर्वकर्मस्ववस्थिताः ।
पूजिताः संबिभक्ताश्च सुसहायाः स्वनुष्ठिताः ॥ १२-८०-३० (६७९३२)
कृत्स्नप्रेते विनिक्षिप्ताः प्रतिरूपेषु कर्मसु ।
युक्ता महत्सु कार्येषु श्रेयांस्युत्पादयन्त्युत ॥ १२-८०-३१ (६७९३३)
एते कर्माणि कुर्वन्ति स्पर्धमाना मिथः सदा ।
अनुतिष्ठन्ति चैवार्थमाचक्षाणाः परस्परम् ॥ १२-८०-३२ (६७९३४)
ज्ञातिभ्यो बिभियाश्चैव मृत्योरिव यतस्तदा ।
उपराजेव राजर्धि ज्ञातिर्न सहते सदा ॥ १२-८०-३३ (६७९३५)
ऋजोर्मृदोर्वदान्यस्य ह्रीमतः सत्यवादिनः ।
नान्यो ज्ञातेर्महाबाहो विनाशमभिनन्दति ॥ १२-८०-३४ (६७९३६)
अज्ञातयोऽप्यसुखदा ज्ञातयोऽपि सुखावहाः ।
अज्ञातिमन्तं पुरुषं परे चाभिभवन्त्युत ॥ १२-८०-३५ (६७९३७)
निकृतस्य नरैरन्यैर्ज्ञातिरेव परायणम् ।
नान्यो निकारं सहते ज्ञातिर्ज्ञातेः कदाचन ॥ १२-८०-३६ (६७९३८)
आत्मानमेव जानाति निकृतं बान्धवैपरि ।
तेषु सन्ति गुणाश्चैव नैर्गुण्यं चैव लक्ष्यते ॥ १२-८०-३७ (६७९३९)
नाज्ञातिरनुगृह्णाति नाज्ञातिर्वृद्धिमश्नुते ।
उभयं ज्ञातिवर्गेषु दृश्यते साध्वसाधु च ॥ १२-८०-३८ (६७९४०)
संमानयेत्पूजयेच्च वाचा नित्यं च कर्मणा ।
कुर्याच्च प्रियमेतेभ्यो नाप्रियं किंचिद चरेत् ॥ १२-८०-३९ (६७९४१)
विश्वस्तवदविश्वस्तस्तेषु वर्तेत सर्वदा
न हि दोषो गुणो वेति निरूप्यस्तेषु दृश्यते ॥ १२-८०-४० (६७९४२)

अस्यैवं वर्तमानस्य पुरुषस्याप्रमादिनः ।
अमित्राः संप्रसीदन्ति ततो मित्रं भवन्त्यपि ॥१२-८०-४१ (६७९४३)
य एवं वर्तते नित्यं ज्ञातिसंबन्धिमण्डले ।
मित्रेष्वमित्रे मध्यस्थे चिरं यशसि तिष्ठति ॥ ॥१२-८०-४२ (६७९४४)

इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि अशीतितमोऽध्यायः
॥ ८०.।
Mahabharata - Shanti Parva - Chapter Footnotes

१२-८०-३ सहार्थः अयं शत्रुरुभाभ्यामुन्मूलनीयः अस्य राज्यं
उभाभ्यां विभज्य ग्राह्यमितिं पणपूर्वं कृतः ।भजमानः
पितृपैतामहक्रमागतः सहजः मातृष्वस्त्रीयादिः कृत्रिमो धनादिना
आवर्जितः ॥
१२-८०-७ सर्वे पञ्चापि प्रत्यक्षं कार्यमुद्दिश्य मन्त्रितमपि
दुष्टामात्यनिग्रहादिकं कार्यं पञ्चानामपि समक्षं न कुर्यादित्यर्थः
॥
१२-८०-१४ ममाभावात् मयि मृते अर्थागमः इमं स्पृशेत् इति यं
मन्येत तस्माच्छङ्कितव्यमिति संबन्धः ॥
१२-८०-१८ यत् मित्रं कर्तृ ॥
१२-८०-२८ प्रत्यनन्तरः प्रतिनिधिः प्रधान हतियावत् ॥
१२-८०-३० स्यनुष्ठिताः सुप्तुभक्तिं कर्तव्यं येषां ते ॥
१२-८०-३१ कृत्स्नमप्रतिकञ्चुकं यथा रक्षत्तथा
विनिक्षिप्ता अधिकृताः ।प्रतिरूपेष्वनुरूपेषु
कर्मस्वायव्ययसकलनादिषु।कार्येषु परामिभवादिषु ॥
१२-८०-३३ उपराजा समीभवर्ती सामन्तः ॥
१२-८०-३६ निकृतस्य लङ्घितस्य लङ्घितस्य ॥
१२-८०-३७ बान्धवैः संबन्धिभिर्निकृते कस्मिंश्चित्पुरुषे तज्ज्ञातिः
आत्मानमेव निकृतं जानाति ।तेषु ज्ञातिषु ॥
१२-८०-४१ तथा मित्रीभवन्त्यपीति झ ।पाठः ॥

---

शन्तिपर्व-अध्यय०८१
॥ श्रीः ॥
१२.८१. अध्यायः ८१

Mahabharata - Shanti Parva - Chapter Topics
भीष्मेण युधिष्ठिरंप्रति कृष्णनारदसंवादानुवादः ॥१.।
Mahabharata - Shanti Parva - Chapter Text

१२-८१-० (६७९४५)
युधिष्ठिर उवाच। १२-८१-०क्ष् (५५४७)
एवमग्राह्यके तस्मिञ्ज्ञातिसंबन्धिमण्डले ।
मित्रेष्वमित्रेष्वपि च कथं भावो विभाव्यते ॥ १२-८१-१ (६७९४६)
भीष्म उवाच। १२-८१-२क्ष् (५५४८)
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
संवादं वासुदेवस्य महर्षेर्नारदस्य च ॥ १२-८१-२ (६७९४७)
वासुदेव उवाच। १२-८१-३क्ष् (५५४९)
नासुहृत्परमं मन्त्रं नारदार्हति वेदितुम् ।
अपण्डितो वाऽपि सुहृत्पण्डितो वाप्यनात्मवान् ॥ १२-८१-३ (६७९४८)
स ते सौहृदमास्थाय किंचिद्वक्ष्यामि नारद ।
कृत्स्नां बुद्धिं च ते प्रेक्ष्य संपृच्छे त्रिदिवङ्गम ॥ १२-८१-४
(६७९४९)
दास्यमैश्वर्यवादेन ज्ञातीनां वै करोम्यहम् ।
अर्धभोक्ताऽस्मि भोगानां वाग्दुरुक्तानि च क्षमे ॥ १२-८१-५ (६७९५०)
अरणीमग्निकामो वा मथ्नाति दहृयं मम ।
वाचा दुरुक्तं देवर्षे तन्मां दहति नित्यदा ॥ १२-८१-६ (६७९५१)
बलं सङ्कर्षणे नित्यं सौकुमार्यं पुनर्गदे ।
रूपेण मत्तः प्रद्युम्नः सोऽसहायोऽस्मि नारद ॥ १२-८१-७ (६७९५२)
अन्ये हि सुमहाभागा बलवन्तो दुरासदाः ।
नित्योत्थानेन संपन्ना नारदान्धकवृष्णयः ॥ १२-८१-८ (६७९५३)
यस्य न स्युर्न वै स स्याद्यस्य स्युः कृत्स्नमेव तत् ।
द्वयोरेनं प्रचरतोर्वृणोम्येकतरं न च ॥ १२-८१-९ (६७९५४)
स्यातां यस्याहुकाक्रूरौ किं नु दुःखतरं ततः ।
यस्य चापि न तौ स्यातां किं नु दुःखतरं ततः ॥ १२-८१-१० (६७९५५)
सोऽहं कित्नवमातेव द्वयोरपि महामुने ।
नैकस्य जयमाशंसे द्वितीयस्य पराजयम् ॥ १२-८१-११ (६७९५६)
ममैवं क्लिश्यमानस्य नारदोभयदर्शनात् ।
वक्तुमर्हसि यच्छ्रेयो ज्ञातीनामात्मनस्तथा ॥ १२-८१-१२ (६७९५७)
नारद उवाच। १२-८१-१३क्ष् (५५५०)
आपदो द्विविधाः कृष्ण बाह्याश्चाभ्यन्तराश्च ह ।
प्रादुर्भवन्ति वार्ष्णेय स्वकृता यदि वाऽन्यतः ॥ १२-८१-१३ (६७९५८)
सेयमाभ्यन्तरा तुभ्यमापत्कृच्छ्रा स्वकर्मजा ।
अक्रूरभोजप्रभवा सर्वे ह्येते तदन्वयः ॥ १२-८१-१४ (६७९५९)
अर्थहेतोर्हि कामाद्वा वीरबीभत्सयाऽपि वा ।

आत्मना प्राप्तमैश्वर्यमन्यत्र प्रतिपादितम् ॥ १२-८१-१५ (६७९६०)
कृतमूलमिदानीं तद्राजशब्दसहायवत् ।
न शक्यं पुनरादातुं वान्तमन्नमिव स्वयम् ॥ १२-८१-१६ (६७९६१)
बभ्रूग्रसेनतो राज्यं नाप्तुं शक्यं कथंचन ।
ज्ञातिभेदभयात्कृष्ण त्वया चापि विशेषतः ॥ १२-८१-१७ (६७९६२)
तच्च सिध्येत्प्रयत्नेन कृत्वा कर्म सुदुष्करम् ।
महाक्षयं व्ययो वा स्याद्विनाशो वा पुनर्भवेत् ॥ १२-८१-१८ (६७९६३)
अनायसेन शस्त्रेण मृदुना हृदयच्छिदा ।
जिह्वामुद्धर सर्वेषां परिमृदज्यानुमृज्य च ॥ १२-८१-१९ (६७९६४)
वासुदेव उवाच। १२-८१-२०क्ष् (५५५१)
अनायसं मुने शस्त्रं मृदु विद्यामहं कथम् ।
येनैषामुद्धरे जिह्वां परिमृज्यानुमृज्य च ॥ १२-८१-२० (६७९६५)
नारद उवाच। १२-८१-२१क्ष् (५५५२)
शक्त्याऽन्नदानं सततं तितिक्षाऽऽर्जवमार्दवम् ।
यथार्हप्रतिपूजा च शस्त्रमेतदनायसम् ॥ १२-८१-२१ (६७९६६)
ज्ञातीनां वक्तुकामानां कटुकानि लघूनि च ।
गिरा त्वं हृदयं वाचं शमयस्य मनांसि च ॥ १२-८१-२२ (६७९६७)
नामहापुरुषः कश्चिन्नानात्मा नासहायवान् ।
महतीं धुरमादाय समुद्यम्योरसा वहेत् ॥ १२-८१-२३ (६७९६८)
सर्व एव गुरुं भारमनड्वान्वहते समे ।
दुर्गे प्रतीतः सुगवो भारं वहति दुर्वहम् ॥ १२-८१-२४ (६७९६९)
भेदाद्विनाशः सङ्घानां सङ्घमुख्योऽसि केशव ।
यथा त्वां प्राप्य नोत्सीदेदयं सङ्घस्तथा कुरु ॥ १२-८१-२५ (६७९७०)
नान्यत्र बुद्धिक्षान्तिभ्यां नान्यत्रेन्द्रियनिग्रहात् ।
नान्यत्र धनसन्त्यागाद्गुणः प्राज्ञेऽवतिष्ठते ॥ १२-८१-२६ (६७९७१)
धन्यं यशस्यमायुष्वं स्वपक्षोद्भावनं सदा ।
ज्ञातीनामविनाशः स्याद्यथा कृष्ण तथा कुरु ॥ १२-८१-२७ (६७९७२)
आयत्यां च तदात्वे च न तेऽस्त्यविदितं प्रभो ।
षाड्गुण्यस्य विधानेन यात्रा यानविधौ तथा ॥ १२-८१-२८ (६७९७३)
यादवाः कुकुरा भोजाः सर्वे चान्धकवृष्णयः ।
त्वय्यायत्ता महाबाहो लोका लोकेश्वराश्च ये ॥ १२-८१-२९ (६७९७४)
उपासन्ते हि त्वद्बुद्धिमृषयश्चापि माधव ।
त्वं गुरुः सर्वभूतानां जानीषे त्वं परां गतिम् ॥ १२-८१-३० (६७९७५)
त्वामासाद्य यदुश्रेष्ठमेधन्ते वादवाः सुखम् ॥ ॥ १२-८१-३१ (६७९७६)

इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि

एकाशीतितमोऽध्यायः ॥ ८१. ।
Mahabharata - Shanti Parva - Chapter Footnotes

१२-८१-१ अग्राह्यके वशीकर्तुमशक्ये ॥
१२-८१-६ वाशब्द इवार्थः ॥
१२-८१-९ ते यस्य पक्षे न स्युः स नस्यान्नश्येदेव । यस्य पक्षे ते स्युस्तत् तस्मात् कृत्स्नं फलं प्राप्नोतीति शेषः ॥
१२-८१-११ कितवमातेव कितवयोर्द्यूतकारिणोरेका मातेव ॥
१२-८१-१३ अन्यतः बाह्याः आपदः स्वकृताः ज्ञातिकृताः अन्तरा आपदः ॥
१२-८१-१४ एते संकर्षणादयः । तदन्वथा अक्रूरान्वयाः ॥
१२-८१-१५ तत्र हेतुरर्थेति । तत्स्नेहप्रभवा इयं तव आपदिति सार्धः। स्वकर्मजेत्युक्तं तद्विवृणोति आत्मनेति सार्धेन। अन्यत्र आहुके ॥
१२-८१-१६ ज्ञातिशब्दं सहायवन् इति झ । पाठः। तत्र तत् ऐश्वर्यं कृतमूलं यतो ज्ञातिशब्दं ज्ञातित्वादनुच्छेदनीयमित्यर्थः ॥
१२-८१-१८ तच्च राज्यस्य पुनरादानं च ॥

---

शन्तिपर्व-अध्यय०८२
॥ श्रीः ॥
१२.८२. अध्यायः ८२

Mahabharata - Shanti Parva - Chapter Topics
भीष्मेण युधिष्ठिरंप्रत्यमात्यपरीक्षार्थं कालकवृक्षीयोपाख्यांनकथनम् ॥ १. ।
Mahabharata - Shanti Parva - Chapter Text

१२-८२-० (६७९७७)
भीष्म उवाच। १२-८२-०क्ष् (५५५३)
एषा प्रथमतो वृत्तिर्द्वितीयां शृणु भारत ।
यः कश्चिद्वर्धयेदर्थं राज्ञा रक्ष्यः स मानवः ॥ १२-८२-१ (६७९७८)
ह्रियमाणममात्येन भृत्यो वा यदि वा भृतः ।
यो राजकोशं नश्यन्तमाचक्षीत युधिष्ठिर ॥ १२-८२-२ (६७९७९)
श्रोतव्यमस्य च रहो रक्ष्यश्चामात्यतो भवेत् ।
अमात्या ह्यपहर्तारो भूयिष्ठं घ्नन्ति भारत ॥ १२-८२-३ (६७९८०)
राजकोशस्य गोप्तारं राजकोशविलोपकाः ।
समेत्य सर्वे बाधन्ते स विनश्यत्यरक्षितः ॥ १२-८२-४ (६७९८१)
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।

मुनिः कालकवृक्षीयः कौसल्यं यदुवाच ह ॥ १२-८२-५ (६७९८२)
कोसलानामाधिपत्यं संप्राप्तं क्षेमदर्शिनम् ।
मुनिः कालकवृक्षीय आजगोमेति नः श्रुतम् ॥ १२-८२-६ (६७९८३)
स काकं पञ्जरे बद्ध्वा विषयं क्षेमदर्शिनः ।
सर्वं पर्यचरद्युक्तः प्रवृत्त्यर्थी पुनः पुनः ॥ १२-८२-७ (६७९८४)
अधीये वायसीं विद्यां शंसन्ति मम वायसाः ।
अनागतमतीतं च यच्च संप्रति वर्तते ॥ १२-८२-८ (६७९८५)
इति राष्ट्रे परिपतन्बहुभिः पुरुषैः सह ।
सर्वेषां राजयुक्तानां दुष्कृतं परिदृष्टवान् ॥ १२-८२-९ (६७९८६)
स बुद्ध्वा तस्य राष्ट्रस्य व्यवसायं हि सर्वशः ।
राजयुक्तापचारांश्च सर्वान्बुद्ध्वा ततस्ततः ॥ १२-८२-१० (६७९८७)
ततः स काकमादाय राजानं द्रष्टुमागमत् ।
सर्वज्ञोऽस्मीति वचनं ब्रुवाणः संशितव्रतः ॥ १२-८२-११ (६७९८८)
स स्म कौसल्यमागम्य राजामात्यमलंकृतम् ।
प्राह काकस्य वचनादमुत्रेदं त्वया कृतम् ॥ १२-८२-१२ (६७९८९)
असौ चासौ च जानीते राजकेशस्त्वया हृतः ।
एवमाख्याति काकोऽयं तच्छीघ्रमनुगम्यताम् ॥ १२-८२-१३ (६७९९०)
तथाऽन्यानपि स प्राह राजकोशहरांस्तदा ।
न चास्य वचनं किंचिदनृतं श्रूयते क्वचित् ॥ १२-८२-१४ (६७९९१)
तेन विप्रकृताः सर्वे राजयुक्ताः कुरूद्वह ।
तमतिक्रम्य सुप्तं तु निशि काकमपोथयन् ॥ १२-८२-१५ (६७९९२)
वायसं तु विनिर्भिन्नं दृष्ट्वा वाणेन पञ्जरे ।
पूर्वाह्णे ब्राह्मणो वाक्यं क्षेमदर्शिनमब्रवीत् ॥ १२-८२-१६ (६७९९३)
राजंस्त्वामभयं याचे प्रभुं प्राणधनेश्वरम् ।
अनुज्ञातस्त्वया ब्रूयां वचनं भवतो हितम् ॥ १२-८२-१७ (६७९९४)
मित्रार्थमभिसंतप्तो भक्त्या सर्वात्मनाऽऽगतः ।
ह्रियन्ते हि महार्थाश्च पुरुषे विक्रमत्यपि ॥ १२-८२-१८ (६७९९५)
संबुबोधयिषुर्मित्रं सदश्वमिव सारथिः ।
अतिमन्युप्रसक्तो हि प्रसह्य हितकारणात् ॥ १२-८२-१९ (६७९९६)
तथाविधस्य सुहृदा क्षन्तव्यं संविजानता ।
ऐश्वर्यमिच्छता नित्यं पुरुषेण बुभूषता ॥ १२-८२-२० (६७९९७)
तं राजा प्रत्युवाचेदं यत्किंचिन्मां भवान्वदेत् ।
कस्मादहं न क्षमेयमाकाङ्क्षन्नात्मनो हितम् ॥ १२-८२-२१ (६७९९८)
ब्राह्मण प्रतिजाने ते प्रब्रूहि यदिहेच्छसि ।
करिष्यामि हि ते वाक्यं यन्मां विप्र प्रवक्ष्यसि ॥ १२-८२-२२ (६७९९९)
मुनिरुवाच। १२-८२-२३क्ष् (५५५४)

विद्वान्नयानपायांश्च भयाख्यातॄन्भयानि च ।
भक्त्या वृत्तिं समाख्यातुं भवतोऽन्तिकमागतः ॥ १२-८२-२३ (६८०००)
प्रागेवोक्तं तु दोषोऽयमाचार्यैर्नृपसेवनम् ।
अगतेः कुगतिर्ह्येषा या राज्ञा सहजीविका ॥ १२-८२-२४ (६८००१)
आशीविषैश्च तस्याहुः संगमं यस्य राजभिः ।
बहुमित्रांश्च राजानो बह्वमित्रास्तथैव च ॥ १२-८२-२५ (६८००२)
तेभ्यः सर्वेभ्य एवाहुर्भयं राजोपजीविनाम् ।
तथाऽस्य राजतो राजन्मुहुर्तादागतं भयम् ॥ १२-८२-२६ (६८००३)
नैकान्तेनाप्रमादो हि शक्यः कर्तुं महीपतौ ।
न तु प्रमादः कर्तव्यः कथंचिद्भूतिमिच्छता ॥ १२-८२-२७ (६८००४)
प्रमादात्स्खलते बुद्धिः स्खलतो नास्ति जीवितम् ।
अग्निं दीप्तमिवासीदेद्राजानप्नुपशिक्षितः ॥ १२-८२-२८ (६८००५)
आशीविषमिव क्रुद्धं प्रभुं प्राणधनेश्वरम् ।
यत्नेनोपचरेन्नित्यं नाहमस्मीति मानवः ॥ १२-८२-२९ (६८००६)
दुर्व्याहृताच्छङ्कमानो दुःस्थिताद्दुरनुष्ठितात् ।
दुरासदाद्दुर्वृजिनादिङ्गिताद्धयायितादपि ॥ १२-८२-३० (६८००७)
देवतेव हि सर्वार्थान्कुर्याद्राजा प्रसादितः ।
वैश्वानर इव क्रुद्धः समूलमपि निर्दहेत् ॥ १२-८२-३१ (६८००८)
इति राजन्यमः प्राह वर्तते च तथैव तत् ।
अथ भूयांसमेवार्थं करिष्यामि पुनः पुनः ॥ १२-८२-३२ (६८००९)
ददात्यत्मद्विधोऽऽमात्यो बुद्धिसाहाय्यमापदि ।
वायसस्त्वेष मे राजन्नन्तकायाभिसंहितः ॥ १२-८२-३३ (६८०१०)
न च मेऽत्र भवान्गर्ह्यो न च येषां भवान्प्रियः ।
हिताहितांस्तु बुद्धयेथा मापरोक्षमतिर्भव ॥ १२-८२-३४ (६८०११)
ये त्वादानपरा एव वसन्ति भवतो गृहे ।
अभूतिकामा भूतानां तादृशैर्मेऽभिसंहितम् ॥ १२-८२-३५ (६८०१२)
यो वा भवद्विनाशेन राज्यमिच्छत्यनन्तरम् ।
आन्तरैराभेसंधाय राजन्सिद्धयति नान्यथा ॥ १२-८२-३६ (६८०१३)
तेषामहं भयाद्राजन्गमिष्याम्यन्यमाश्रमम् ।
तैर्हि मे संधितो बाणः काके निपतितः प्रभो ॥ १२-८२-३७ (६८०१४)
छद्मना मम काकश्च गमितो यमसादनम् ।
दृष्टं ह्येतन्मया राजंस्तपोदीर्घेन चक्षुषा ॥ १२-८२-३८ (६८०१५)
बहुनक्रझषग्राहां तिमिंगिलगणैर्युताम् ।
काकेन वालिशेनेमामतार्षमहमापगाम् ॥ १२-८२-३९ (६८०१६)
स्थाण्वश्मकण्टकवतीं सिंह व्याघ्रसमाकुलाम् ।
दुरासदां दुष्प्रसहां गुहां हैमवतीमिव। १२-८२-४० (६८०१७)

अग्निना तामसं दुर्गं नौभिराप्यं च गम्यते ।
राजदुर्गावतरणे नोपायं पण्डिता विदुः ॥१२-८२-४१ (६८०१८)
गहनं भवतो राज्यमन्धकारं तमोन्वितम् ।
नेह विश्वसितुं शक्यं भवताऽपि कुतो मया ॥१२-८२-४२ (६८०१९)
अतो नायं शुभो वासस्तुल्ये सदसती इह ।
वधो ह्येवात्र सुकृते दुष्कृते न च संशयः ॥१२-८२-४३ (६८०२०)
न्यायतो दुष्कृते घातः सुकृते न कथनम् ।
नेह युक्तं स्थिरं स्थातुं जवेनैवाव्रजेद्बुधः ॥१२-८२-४४ (६८०२१)
सीता नाम नदी राजन्प्लवो यस्यां निमज्जति ।
तयोपमामिमां मन्ये वागुरां सर्वधातिनीम् ॥१२-८२-४५ (६८०२२)
मधुप्रपातो हि भवान्भोजनं विषसंयुतम् ।
असतामिव ते भावो वर्तते न सतामिव ॥१२-८२-४६ (६८०२३)
आशीविषैः परिवृतः कूपस्त्वमसि पार्थिव ॥ १२-८२-४७ (६८०२४)
दुर्गतीर्था बृहत्कूला कावेरी चोरसंयुता ।
नदी मधुरपानीया यथा राजंस्तथा भवान् ।
श्वगृध्रगोमायुयुतो राजहंससमो ह्यसि ॥ १२-८२-४८ (६८०२५)
यथाऽऽश्रित्य महावृक्षं कक्षः संवर्धते महान् ।
ततस्तं संवृणोत्येव तमतीत्य च वर्धते ॥१२-८२-४९ (६८०२६)
तेनैवोग्रेन्धनेनैनं दावो दहति दारुणः ।
तथोपमा ह्यमात्यास्ते राजंस्तान्परिशोधय ॥१२-८२-५० (६८०२७)
त्वया चैव कृता राजन्भवता परिपालिताः ।
भवन्तं पर्यवज्ञाय जिघांसन्ति भवत्प्रियम् ॥१२-८२-५१ (६८०२८)
उषितं शङ्कमानेन प्रमादं परिरक्षता ।
अन्तः सर्प इवागारे वीरपत्न्या इवालये ।
शीलं जिज्ञासमानेन राज्ञः साहसजीविनः ॥ १२-८२-५२ (६८०२९)
कच्चिज्जितेन्द्रियो राजा कच्चिदस्यान्तरा जिताः ।
कच्चिदेषां प्रियो राजा कच्चिद्राज्ञः प्रियाः प्रजाः ॥१२-८२-५३ (६८०३०)
विजिज्ञासुरिह प्राप्तस्तवाहं राजसत्तम ।
तस्य मे रोचते राजन्क्षुधितस्येव भोजनम् ॥१२-८२-५४ (६८०३१)
अमात्या मे न रोचन्ते वितृष्णस्य यथोदकम् ।
भवतोऽर्थकृदित्येवं मयि ते दोषमादधन् ।
विद्यते कारणं नान्यदिति मे नात्र संशयः ॥ १२-८२-५५ (६८०३२)
न हि तेषामहं द्रोग्धा तत्तेषां द्रोहवद्गतम् ।
अरेर्हि दुर्हृदाज्ञेयं भग्नपृष्ठादिवोरगात् ॥१२-८२-५६ (६८०३३)
राजोवाच।१२-८२-५७क्ष् (५५५५)
भूयसा परिहारेण सत्कारेण च भूयसा ।

पूजितो ब्राह्मणश्रेष्ठ भूयो वस गृहे मम ॥१२-८२-५७ (६८०३४)
ये त्वां ब्राह्मण नेच्छन्ति ते न वत्स्यन्ति मे गृहे ।
भवतैव हि तज्ज्ञेयं यत्तदेषामनन्तरम् ॥१२-८२-५८ (६८०३५)
यथा स्यात्सुधृतो दण्डो यथा च सुकृतं कृतम् ।
तथा समीक्ष्य भगवञ्श्रेयसे विनियुङ्क्ष्व माम् ॥१२-८२-५९ (६८०३६)
मुनिरुवाच।१२-८२-६०क्ष् (५५५६)
अदर्शयन्निमं दोषमेकैकं दुर्बलं कुरु ।
ततः कारणमाज्ञाय पुरुषंपुरुषं जहि ।
एकदोषा हि बहवो मृद्नीयुरपि कण्टकान् ॥ १२-८२-६० (६८०३७)
ग्अर्थे सर्वं जगद्बद्धमर्थैनैव निबध्यते ।
अर्थे दर्पो मनुष्याणां तस्मादर्थं विरोचय ॥१२-८२-६१ (६८०३८)
एकेनैकस्य दोषेण तद्विरुद्धं प्रचोदय ।
स तस्य दोषानुज्ञाव्य तस्यार्थं ग्राहयिष्यति ॥१२-८२-६२ (६८०३९)
सामपूर्वं च केषांचिद्भेदेन च परस्परम् ।
वैरं कारय भूपाल पश्चाद्दण्डं प्रचोदय ॥१२-८२-६३ (६८०४०)
बिल्वेन च यथा बिल्वमाकारं छाद्य बुद्धिमान् ।
अशुद्धं सचिवं राजन्नशुद्धेनैव नाशय ॥' १२-८२-६४ (६८०४१)
मन्त्रभेदभयाद्राजंस्तस्मादेतद्ब्रवीमि ते ॥ १२-८२-६५ (६८०४२)
वयं तु ब्राह्मणा नाम मृदुदण्डाः कृपालवः ।
स्वस्ति चेच्छाम भवतः परेषां च यथाऽऽत्मनः ॥१२-८२-६६ (६८०४३)
राजन्नात्मानमाचक्षे संबन्धी भवतो ह्यहम् ।
मुनिः कालकवृक्षीय इत्येवमभिसंज्ञितः ।
पितुः सखा च भवतः संमतः सत्यसंगरः ॥ १२-८२-६७ (६८०४४)
व्यापन्ने भवतो राज्ये राजन्पितरि संस्थिते ।
सर्वकामान्परित्यज्य तपस्तप्तं तदा मया ॥१२-८२-६८ (६८०४५)
स्नेहात्त्वां तु ब्रवीम्येतन्मा भूयो विभ्रो दिति ॥ १२-८२-६९ (६८०४६)
उभे दृष्ट्वा दुःखसुखे राज्यं प्राप्य यदृच्छया ।
राज्येनामात्यसंस्थेन कथं राजन्प्रमाद्यसि ॥१२-८२-७० (६८०४७)
भीष्म उवाच।१२-८२-७१क्ष् (५५५७)
ततो राजकुले नान्दी संजज्ञे भूयसा पुनः ।
पुरोहितकुले चैव संप्राप्ते ब्राह्मणर्षभे ॥१२-८२-७१ (६८०४८)
एकच्छत्रां महीं कृत्वा कौसल्याय यशस्विने ।
मुनिः कालकवृक्षीय ईजे क्रतुभिरुत्तमैः ॥१२-८२-७२ (६८०४९)
हितं तद्वचनं श्रुत्वा कौसल्योऽप्यजयन्महीम् ।
तथा च कृतवान्राजा यथोक्तं तेन भारत ॥ ॥१२-८२-७३ (६८०५०)

इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि
द्व्यशीतितमोऽध्यायः ॥ ८२.।

Mahabharata - Shanti Parva - Chapter Footnotes

१२-८२-७ प्रवृत्त्यर्थी अमात्यदोषदर्शने राजानं प्रवर्तयितुकामः ॥
१२-८२-९ परिपतन्परितो भ्रमन् । राजयुक्तानां राज्ञा तेषु तेषु
कार्येषु नियुक्तानाम्। दुष्कृतं स्वामिद्रव्यापहाररूपं वापम् ॥
१२-८२-१२ राजानमागम्य तत्समक्षमेवामात्यं प्राह । अमुत्रस्थाने
त्वया इदं धनचौर्यं कृतमिति ॥
१२-८२-१३ अनुगम्यतां आलोच्यताम् ॥
१२-८२-१८,१९ ह्रियन्त इति मित्रं त्वां संबुबोधयिपुरागत इति
श्लोकद्वयभेकान्वयम् ॥
१२-८२-२३ ज्ञात्वा पापानपापाभृत्यतस्ते भयानि चेति झ । पाठः ॥
१२-८२-२९ नाहमस्मीति मत्वा जीवनाशं त्यक्त्वेत्यर्थः ॥
१२-८२-३५ आदानपराः कोशलोप्तारः । मे
मयि। तादृशैरभिसंहितमभिसंधिर्वैरं
कृतम्। मदीयकाकहननादिति भावः ॥
१२-८२-३६ आन्तरैः सूदादिभिः अभिसंधायाऽन्नदौ विषं
प्रक्षेप्तव्यमिति स्नेहं कृत्वा । तेषामभीप्सितो भवद्विनाशः सिध्यति
चाऽन्यथा न सिध्यति व। आयुःशेषे सतीति भावः ॥
१२-८२-३७ तेषां त्वद्वैरिणाम् ॥
१२-८२-३९ इमां राजनीतिनदीम्
। नक्रादितुल्यैरधिकारिपुरुषैर्व्याप्ताम्। बालिशेन स्वमृत्युं
संपादयता विरुद्धलक्षणया तन्मरणान्मृतोऽस्मीति भावः ॥
१२-८२-४१ अग्निना दीपेन आप्यं जलरूपम् ॥
१२-८२-४२ गहनं कपटम् । अन्धकारमिव तमोन्वितं
धर्माधर्मदर्शनशून्यम् ॥
१२-८२-५२ उषितं मयेति शेषः ॥
१२-८२-५३ जिज्ञासामेवाह कच्चिदिति ॥
१२-८२-५४ रोचते भवानिति शेषः ॥
१२-८२-५६ भेयं भेतव्यम् । भग्नपृष्ठात् पृष्ठभङ्गेन कोपितात् ॥
१२-८२-६० तेषामकस्मात् युगपच्च वधे दोषमाह एकेति । संहताः
कण्टकानपि मृद्नीयुः किमुत मादृशान्मृदूनित्यर्थः ॥
१२-८२-६८ पितरि त्वदीये संस्थिते मृते ॥
१२-८२-६९ विभ्रमेत् अनाप्तेष्वाप्तबुद्धिं भवान्माकार्षीत् ॥
१२-८२-७१ नान्दी मङ्गलपाठः । ततस्तस्मिन्मन्त्रिणि वृते सति ॥

शन्तिपर्व-अध्यय०८३
॥ श्रीः ॥
१२.८३. अध्यायः ८३

Mahabharata - Shanti Parva - Chapter Topics
भीष्मेण युधिष्ठिरंप्रति मन्त्र्यादिलक्षणकथनम् ॥ १.।
Mahabharata - Shanti Parva - Chapter Text

१२-८३-० (६८०५१)
युधिष्ठिर उवाच। १२-८३-०क्ष् (५५५८)
सभासदः सहायाश्च सुहृदश्च विशांपते ।
परिच्छदास्तथाऽमात्याः कीदृशाः स्युः पितामह ॥ १२-८३-१ (६८०५२)
भीष्म उवाच। १२-८३-२क्ष् (५५५९)
ह्रीनिषेवास्तथा दान्ताः सत्यार्जवसमन्विताः ।
शक्ताः कथयितुं सम्यक्ते तव स्युः सभासदः ॥ १२-८३-२ (६८०५३)
अमात्याश्चातिशूराश्च ब्रह्मण्याश्च बहुश्रुताः ।
सुसंतृष्टाश्च कौन्तेय महोत्साहाश्च कर्मसु ॥ १२-८३-३ (६८०५४)
एतान्सहायाँल्लिप्सेथाः सर्वास्वापत्सु भारत ॥ १२-८३-४ (६८०५५)
कुलीनः पूजितो नित्यं न हि शक्तिं निगूहति ।
प्रसन्नमप्रसन्नं वा पीडितं हतमेव वा ।
आवर्तयति भूयिष्ठं तदेव ह्यनुपालितम् ॥ १२-८३-५ (६८०५६)
कुलीना देशजाः प्राज्ञा रूपवन्तो बहुश्रुताः ।
प्रगल्भाश्चानुरक्ताश्च ते तव स्युः परिच्छदाः ॥ १२-८३-६ (६८०५७)
दौष्कुलेयाश्च लुब्धाश्च नृशंसा निरपत्रपाः ।
ते त्वां तात निषेवेयुर्यावदार्द्रकपाणयः ॥ १२-८३-७ (६८०५८)
कुलीनाञ्शीलसंपन्नानिङ्गितज्ञाननिष्ठुरान् ।
देशकालविधानज्ञान्भर्तृकार्यहितैपिणः ।
नित्यमर्थेषु सर्वेषु राजा कुर्वीत मन्त्रिणः ॥ १२-८३-८ (६८०५९)
अर्थमानार्घसत्कारैर्भोगैरुच्चावचैः प्रियैः ।
यानर्थभाजो मन्येथास्तेते स्युः सुखभागिनः ॥ १२-८३-९ (६८०६०)
अभिन्नवृत्ता विद्वांसः सद्वृत्ताश्चरितव्रताः ।
नत्वां नित्यार्थिनो जह्युरक्षुद्राः सत्यवादिनः ॥ १२-८३-१० (६८०६१)
अनार्या ये न जानन्ति समयं मन्दचेतसः ।
तेभ्यः परिजुगुप्सेथा ये चापि समयच्युताः ॥ १२-८३-११ (६८०६२)
नैकमिच्छेद्गणं हित्वा स्याच्चेदन्यतरग्रहः ।

यस्त्वेको बहुभिः श्रेयान्कामं तेन गणं त्यजेत् ॥ १२-८३-१२ (६८०६३)
श्रेयसो लक्षणं चैतद्विक्रमो यस्य दृश्यते ।
कीर्तिप्रधानो यश्च स्यात्समये यश्च तिष्ठति ॥ १२-८३-१३ (६८०६४)
समर्थान्पूजयेद्यश्च नास्पर्ध्यैः स्पर्धते च यः ।
न च कामाद्भयात्क्रोधाल्लोभाद्वा धर्ममुत्सृजेत् ॥ १२-८३-१४ (६८०६५)
अमानी अत्यवाक्षक्तो जितात्मा मानसंयुतः ।
स ते मन्त्रसहायः स्यात्सर्वावस्थापरीक्षितः ॥ १२-८३-१५ (६८०६६)
कुलीनः कुलसंपन्नस्तितिक्षुर्दश आत्मवान् ।
शूरः कृतज्ञः सत्यश्च श्रेयसः पार्थ लक्षणम् ॥ १२-८३-१६ (६८०६७)
तस्यैवं वर्तमानस्य पुरुषस्य विजानतः ।
अमित्राः संप्रसीदन्ति तथा मित्रीभवन्त्यपि ॥ १२-८३-१७ (६८०६८)
अत ऊर्ध्वममात्यानां परीक्षेत गुणागुणम् ।
संयतात्मा कृतप्रज्ञो भूतिकामश्च भूमिपः ॥ १२-८३-१८ (६८०६९)
संबन्धिपुरुषैराप्तैरभिजातैः स्वदेशजैः ।
अहार्यैरव्यभीचारैः सर्वशः सुपरीक्षितैः ॥ १२-८३-१९ (६८०७०)
यौनाः श्रौतास्तथा मौलास्तथैवाप्यनहंकृताः ।
कर्तव्या भूतिकामेन पुरुषेण बुभूपता ॥ १२-८३-२० (६८०७१)
एषां वैनयिकी बुद्धिः प्रकृतिश्चैव शोभना ।
तेजो धैर्यं क्षमा शौचमनुरागः स्थितिर्धृतिः ॥ १२-८३-२१ (६८०७२)
परीक्ष्य च गुणान्नित्यं प्रौढभावान्धुरंधरान् ।
पञ्चोपधाव्यतीतांश्च कुर्याद्राजाऽर्थकारिणः ॥ १२-८३-२२ (६८०७३)
पर्याप्तवचनान्वीरान्प्रतिपत्तिविशारदान् ।
कुलीनान्सत्वसंपन्नानिङ्गितज्ञाननिष्ठुरान् ॥ १२-८३-२३ (६८०७४)
देशकालविधानज्ञान्भर्तृकार्यहितैषिणः ।
नित्यमर्थेषु सर्वेषु राजन्कुर्वीत मन्त्रिणः ॥ १२-८३-२४ (६८०७५)
हीनतेजोभिसंसृष्टो नैव जातु व्यवस्यति ।
अवश्यं जनयत्येव सर्वकर्मसु संशयम् ॥ १२-८३-२५ (६८०७६)
एवमल्पश्रुतो मन्त्री कल्याणाभिजनोऽप्युत ।
धर्मार्थकामसंयुक्तो नालं मन्त्रं परीक्षितुम् ॥ १२-८३-२६ (६८०७७)
तथैवानभिजातोऽपि काममस्तु बहुश्रुतः ।
अनायक इवाचक्षुर्मुह्यत्यूह्येषु कर्मसु ॥ १२-८३-२७ (६८०७८)
यो वाऽप्यस्थिरसंकल्पो बुद्धिमानागतागमः । १२-८३-२८बुपायज्ञोऽपि
नालं स कर्म प्रापयितुं चिरम् ॥ १२-८३-२८ (६८०७९)
केवलात्पुनरादानात्कर्मणो नोपपद्यते ।
परामर्शो विशेषणामश्रुतस्येह दुर्मतेः ॥ १२-८३-२९ (६८०८०)
मन्त्रिण्यननुरक्ते तु विश्वासो नोपपद्यते ।

तस्मादननुरक्ताय नैव मन्त्रं प्रकाशयेत् ॥ १२-८३-३० (६८०८१)
व्यथयेद्धि स राजानं मन्त्रिभिः सहितोऽनृजुः ।
मारुतोपहितच्छिद्रैः प्रविश्याग्निरिव द्रुमम् ॥ १२-८३-३१ (६८०८२)
संक्रुद्धश्चैकदा स्वामी स्थानाच्चैवापकर्षति ।
वाचा क्षिपति संरब्धः पुनः पश्चात्प्रसीदति ॥ १२-८३-३२ (६८०८३)
तानितान्यनुरक्तेन शक्यानि हि तितिक्षितुम् ।
मन्त्रिणां च भवेत्क्रोधो विस्फूर्जितमिवाशनेः ॥ १२-८३-३३ (६८०८४)
यस्तु संहरते तानि भर्तुः प्रियचिकीर्षया ।
समानसुखदुःखं तं पृच्छेदर्थेषु मानवम् ॥ १२-८३-३४ (६८०८५)
अनृजुस्त्वनुरक्तोऽपि संपन्नश्चेतरैर्गुणैः ।
राज्ञः प्रज्ञानयुक्तोऽपि न मन्त्रं श्रोतुमर्हति ॥ १२-८३-३५ (६८०८६)
योऽमित्रैः सह संबद्धो न परान्बहुमन्यते ।
असुहृत्तादृशो ज्ञेयो न मन्त्रं श्रोतुमर्हति ॥ १२-८३-३६ (६८०८७)
अविद्वानशुचिः स्तब्धः शत्रुसेवी विकत्थनः ।
असुहृत्क्रोधनो लुब्धो न मन्त्रं श्रोतुमर्हति ॥ १२-८३-३७ (६८०८८)
आगन्तुश्चानुरक्तोऽपि काममस्तु बहुश्रुतः ।
सत्कृतः संविभक्तो वा न मन्त्रं श्रोतुमर्हति ॥ १२-८३-३८ (६८०८९)
विधर्मतो विप्रकृतः पिता यस्याभवत्पुरा ।
सत्कृतः स्थापितः सोऽपि न मन्त्रं श्रोतुमर्हति ॥ १२-८३-३९ (६८०९०)
यः स्वल्पेनापि कार्येण सुहृदाक्षारितो भवेत् ।
पुनरन्यैर्गुणैर्युक्तो न मन्त्रं श्रोतुमर्हति ॥ १२-८३-४० (६८०९१)
कृतप्रज्ञश्च मेधावी बुधो जानपदः शुचिः ।
सर्वकर्मसु यः शुद्धः स मन्त्रं श्रोतुमर्हति ॥ १२-८३-४१ (६८०९२)
ज्ञानविज्ञानसंपन्नः प्रकृतिज्ञः परात्मनोः ।
सुहृदात्मसमो राज्ञः स मन्त्रं श्रोतुमर्हति ॥ १२-८३-४२ (६८०९३)
सत्यवाक्शीलसंपन्नो गम्भीरः सत्रपो मृदुः ।
पितृपैतामहो यः स्यात्स मन्त्रं श्रोतुमर्हति ॥ १२-८३-४३ (६८०९४)
संतुष्टः संमतः सद्भिः शौटीरो द्वेष्यपापकः ।
मन्त्रवित्कालविच्छूरः स मन्त्रं श्रोतुमर्हति ॥ १२-८३-४४ (६८०९५)
सर्वलोकमिमं शक्तः सान्त्वेन कुरुते वशम् ।
तस्मै मन्त्रः प्रयोक्तव्यो दण्डमाधित्सता नृप ॥ १२-८३-४५ (६८०९६)
पौरजानपदा यस्मिन्विश्वासं धर्मतो गताः ।
योद्धा नयविपश्चिच्च स मन्त्रं श्रोतुमर्हति ॥ १२-८३-४६ (६८०९७)
तस्मात्सर्वैर्गुणैरेतैरुपपन्नाः सुपूजिताः ।
मन्त्रिणः प्रकृतिज्ञाः स्युख्यवरा महदीप्सवः ॥ १२-८३-४७ (६८०९८)
स्वासु प्रकृतिषु च्छिद्रं लक्षयेरन्परस्य च ।

मन्त्रिणां मन्त्रमूलं हि राज्ञो राष्ट्रं विवर्धते ॥ १२-८३-४८ (६८०९९)
नास्य च्छिद्रं परः पश्येच्छिद्रेषु परमन्वियात् ।
गूहेत्कूर्म इवाङ्गानि रक्षेद्विवरमात्मनः ॥ १२-८३-४९ (६८१००)
मन्त्रग्राहा हि राजस्य मन्त्रिणो ये मनीषिणः ।
मन्त्रसंहननो राजा मन्त्राङ्गानीतरे जनाः ॥ १२-८३-५० (६८१०१)
राज्यं प्रणिधिमूलं हि मन्त्रसारं प्रचक्षते ।
स्वामिनं त्वनुवर्न्तते वृत्त्यर्थमिह मन्त्रिणः ॥ १२-८३-५१ (६८१०२)
संविनीयमदक्रोधौ मानमीर्ष्यां च निर्वृताः ।
नित्यं पञ्चोपधातीतैर्मन्त्रयेत्सह मन्त्रिभिः ॥ १२-८३-५२ (६८१०३)
तेषां त्रयाणां त्रिविधं विमर्शं
विबुध्य चित्तं विनिवेश्य तत्र ।
स्वनिश्चयं तं परनिश्चयं च
निदर्शयेदुत्तरमन्त्रकाले ॥ १२-८३-५३ (६८१०४)
धर्मार्थकामज्ञमुपेत्य पृच्छे
द्युक्तो गुरुं ब्राह्मणमुत्तरार्थम् ।
निष्ठा कृता तेन यदा सहः स्या
त्तं मन्त्रमार्गं प्रणयेदसक्तः ॥ १२-८३-५४ (६८१०५)
एवं सदा मन्त्रयितत्र्यमाहु
र्ये मन्त्रतत्त्वार्थविनिश्चयज्ञाः ।
तस्मात्तमेवं प्रणयेत्सदैव
मन्त्रं प्रजासंग्रहणे समर्थम् ॥ १२-८३-५५ (६८१०६)
न वामनाः कुब्जकृशा न खञ्जा
नान्धा जडाः स्त्री च नपुंसकाश्च ।
न चात्र तिर्यक्च पुरो न पश्चा
न्नोर्ध्वं न चाधः प्रपरेत्कथंचित् ॥ १२-८३-५६ (६८१०७)
आरुह्य वा वेश्म तथैव शून्यं
स्थलं प्रकाशं कुशकाशहीनम् ।
वागङ्गदोषान्परिहृत्य सर्वा
न्संमन्त्रयेत्कार्यमहीनकालम् ॥ ॥ १२-८३-५७ (६८१०८)

इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि
त्र्यशीतितमोऽध्यायः ॥ ८३.।

Mahabharata - Shanti Parva - Chapter Footnotes

१२-८३-१ सभासदः व्यवहारनिर्णायका ।सहायाः
युद्धादावुपयोगिनः। सुहृदो हितकर्तारः। परिच्छदाः सेनान्यादयः ॥

१२-८३-२ क्रमेणैषां लक्षणान्याह हीति ।कथयितुं न्यायान्यायौ वक्तुम्
हीनिषेधास्तथा दान्ताः सत्यलज्जासमन्विताः इति थ। पाठः ॥
१२-८३-५ सुळमाह सार्धेन कुलीन इति ॥
१२-८३-७ यावदार्द्रकपाणयः ।शुष्कहस्तास्तु सद्यो विक्रियन्ते
इत्यर्थः।ते त्वां जातु न सेवेयुर्यावते स्वङ्गपाणयः।इति
ङ।थ।पाठः ॥
१२-८३-९ अर्थो धनम् ।मानः सन्मानः।अर्घो वस्रादिदानम्।सत्कार
आदरः।यान्प्रियान्मन्येथात्तेऽर्थभाजः सुखभागिनश्च स्युः ॥
१२-८३-११ समयं धर्माधर्ममयदाम् ।जुगुप्सेथाः रक्षस्व ॥
१२-८३-१२ अन्यतरग्रहः गणैकयोरेक्तरस्य ग्राणप्रसङ्ग
।एकश्चेद्गुणी तदा गणं त्यक्त्वा स एव ग्राह ॥
१२-८३-१३ श्रेयसः साधोः ॥
१२-८३-१४ सत्यः सत्यवान् ॥
१२-८३-१८ भूमिपः परीक्षेतेति योजना ॥
१२-८३-१९ अभिजातैः कुलीनैः ।अहार्यैः धनादिना
वशीकर्तुमशक्यैः।संबन्धिपुरुषैर्येषां संबन्धोऽस्ति तादृशैः
॥
१२-८३-२० यौना उत्तमयोनयः ।मौलाः परंपरागताः कर्तव्याः।मन्त्रिण
इति शेषः ॥
१२-८३-२१ प्रकृतिः पूर्वकर्मजः संस्कारः ।तेजः
पराभिभवसामर्थ्यम्।स्थितिरव्यभिचारिता।धृतिर्धारणसमार्थ्यम्
॥
१२-८३-२२ पञ्च मन्त्रिण इति तृतीयेनान्वयः ।उपधा च्छलं
तद्व्यतीतान् ॥
१२-८३-२३ पर्याप्तं कृत्स्नस्य विवित्सितस्यार्थस्य निर्वाहकं वचनं
येषां तान् ॥
१२-८३-२५ हीनतेजसा मित्रेणाभिसंसृष्टः संबद्धः ।न व्यवस्यति
न कर्तव्याकर्तव्ये निश्चिनोति ॥
१२-८३-२८ प्रापयितुं समापयितुम् ॥
१२-८३-२९ आरम्भशूरोऽपि मूर्खः कर्मणः फलविशेषान् ज्ञातुं न
शक्नोतीत्यर्थः ॥
१२-८३-३२ अनुरक्तलक्षणमाह शिभिः संक्रुद्ध इत्यादिभिः ॥
१२-८३-३८ आगन्तुर्नूतनः ।सोऽप्य विश्वास्य इत्यर्थः ॥
१२-८३-३९ विधर्मतोऽन्यायेन ॥
१२-८३-४० आक्षारितो धनग्रहणेन रिक्तः कृतः ॥
१२-८३-४१ जानपदः स्वदेशजः ॥

१२-८३-४२ परस्य शत्रोः आत्मनश्च प्रकृतीः स्वाम्यमात्यादिका जानातीति प्रकृतिज्ञः ॥
१२-८३-४३ गम्भीरो मन्त्रगोपनसमर्थः ॥
१२-८३-४४ शौटीरः प्रगल्भः ।द्वेष्यवद्धेयं पापं यस्य स द्वेष्यपापकः ॥
१२-८३-४५ आधित्सता आधातुच्छिता ॥
१२-८३-४७ पञ्चानामभावे त्रयो वा कार्या इत्यर्थः ॥
१२-८३-४९ विवरं छिद्रम् ॥
१२-८३-५० मन्त्रसंहननो मन्त्रकवचः ॥
१२-८३-५२ उपवाश्छलानि ।तानि पञ्च ॥
१२-८३-५६ अत्र मन्त्रस्थाने ॥

---

शन्तिपर्व-अध्यय०८४
॥ श्रीः ॥
१२.८४. अध्यायः ८४

Mahabharata - Shanti Parva - Chapter Topics
भीष्मेण युधिष्ठिरंप्रति इन्द्रबृहस्पतिसंवादानुवादः ॥ १.।
Mahabharata - Shanti Parva - Chapter Text

१२-८४-० (६८१०९)
भीष्म उवाच। १२-८४-०क्ष् (५५६०)
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
बृहस्पतेश्च संवादं शक्रस्य च युधिष्ठिर ॥ १२-८४-१ (६८११०)
शक्र उवाच। १२-८४-२क्ष् (५५६१)
किंस्विदेकपढं ब्रह्मन्पुरुषः सम्यगाचरन् ।
प्रमाणं सर्वभूतानां यशश्चैवाप्नुयान्महत् ॥ १२-८४-२ (६८१११)
बृहस्पति उवाच। १२-८४-३क्ष् (५५६२)
सान्त्वमेकपदं शक्र पुरुषः सम्यगाचरन् ।
प्रमाणं सर्वभूतानां यशश्चैवाप्नुयान्महत् ॥ १२-८४-३ (६८११२)
एतदेकपदं शक्र सर्वलोकसुखावहम् ।
आचरन्सर्वभूतेषु प्रियो भवति सर्वदा ॥ १२-८४-४ (६८११३)
यो हि नाभाषते किंचित्सर्वदा भुकुटीमुखः ।
द्वेष्यो भवति भूतानां स सान्त्वमिह नाचरन् ॥ १२-८४-५ (६८११४)
यस्तु सर्वमभिप्रेक्ष्य पूर्वमेवाभिभाषते ।
स्मितपूर्वाभिभाषी च तस्य लोकः प्रसीदति ॥ १२-८४-६ (६८११५)
दानमेव हि सर्वत्र सान्त्वेनानभिजल्पितम् ।

न प्रीणयति भूतानि निर्व्यञ्जनमिवाशनम् ॥१२-८४-७ (६८११६)
आददन्नपि भूतानां मधुरामीरयन्गिरम् ।
सर्वलोकमिमं शक्र सान्त्वेव कुरुते वशे ॥१२-८४-८ (६८११७)
तस्मात्सान्त्वं प्रयोक्तव्यं दण्डमाधित्सताऽपि हि ।
प्रीतिं च जनयत्येवं न चास्योद्विजते जनः ॥१२-८४-९ (६८११८)
सुकृतस्य हि सान्त्वस्य श्लक्ष्णस्य मधुरस्य च ।
सम्यगासेव्यमानस्य तुल्यं जातु न विद्यते ॥१२-८४-१० (६८११९)
भीष्म उवाच।१२-८४-११क्ष् (५५६३)
इत्युक्तः कृतवान्सर्वं यथा शक्रः पुरोधसा ।
तथा त्वमपि कौन्तेय सम्यगेतत्समाचर ॥ ॥१२-८४-११ (६८१२०)

इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि
चतुरशीतितमोऽध्यायः ॥८४.।
Mahabharata - Shanti Parva - Chapter Footnotes

१२-८४-१ अत्र मन्त्रमूलभूते प्रजासंग्रहणे विषये ॥
१२-८४-२ एकपदं यत्र सर्वे गुणाः अन्तर्भवन्ति तदेव कर्तव्यं
वस्तु ।प्रमाणं संमतम् ॥
१२-८४-३ सान्त्वं निष्कपटं प्रियवचनम् ॥
१२-८४-५ नाभाषते तूष्णीमास्ते ।नाचरन् अनाचरन् ॥

---

शन्तिपर्व-अध्यय०८५
॥ श्रीः ॥
१२.८५. अध्यायः ८५

Mahabharata - Shanti Parva - Chapter Topics
भीष्मेण युधिष्ठिरंप्रति अमात्यलक्षणादिकथनम् ॥१.।
Mahabharata - Shanti Parva - Chapter Text

१२-८५-० (६८१२१)
युधिष्ठिर उवाच।१२-८५-०क्ष् (५५६४)
कथंस्विदिह राजेन्द्र पालयन्पार्थिवः प्रजाः ।
प्रैति धर्मं विशेषेण कीर्तिमाप्नोति शाश्वतीम् ॥१२-८५-१ (६८१२२)
भीष्म उवाच।१२-८५-२क्ष् (५५६५)
व्यवहारेण शुद्धेन प्रजापालनतत्परः ।
प्राप्य धर्मं च कीर्तिं च लोकानाप्नोत्यसौ शुचिः ॥१२-८५-२ (६८१२३)
युधिष्ठिर उवाच।१२-८५-३क्ष् (५५६६)

कीदृशव्यवहारं तु कैश्च व्यवहरेन्नृपः ।
एतत्पृष्टो महाप्राज्ञ यथावद्वक्तुमर्हसि ॥१२-८५-३ (६८१२४)
ये चैव पूर्वकथिता गुणास्ते पुरुषं प्रति ।
नैकस्मिन्पुरुषे ह्येते विद्यन्त इति मे मतिः ॥१२-८५-४ (६८१२५)
भीष्म उवाच।१२-८५-५क्ष् (५५६७)
एवमेतन्महाप्राज्ञ यथा वदसि बुद्धिमन् ।
दुर्लभः पुरुषः कश्चिदेभिर्युक्तो गुणैः शुभैः ॥१२-८५-५ (६८१२६)
किंतु संक्षेपतः शीलं प्रयत्नेनेह दुर्लभम् ।
वक्ष्यामि तु यथाऽमात्यान्यादृशांश्च करिष्यसि ॥१२-८५-६ (६८१२७)
चतुरो ब्राह्मणान्वैद्यान्प्रगल्भान्स्नातकाञ्शुचीन् ।
क्षत्रियान्दश चाष्टौ च बलिनः शस्त्रपाणिनः ॥१२-८५-७ (६८१२८)
वैश्यान्वित्तेन संपन्नानेकविंशतिसङ्ख्यया ।
त्रींश्च शूद्रान्विनीतांश्च शुचीन्कर्मणि पूर्वके ॥१२-८५-८ (६८१२९)
अष्टाभिश्च गुणैर्युक्तं सूतं पौराणिकं तथा ।
पञ्चाशद्वर्षवयसं प्रगल्भमनसूयकम् ॥१२-८५-९ (६८१३०)
श्रुतिस्मृतिसमायुक्तं विनीतं समदर्शिनम् ।
कार्ये विवदमानानां शक्तमर्थेष्वलोलुपम् ॥१२-८५-१० (६८१३१)
वर्जितं चैव व्यसनैः सुघोरैः सप्तभिर्भृशम् ।
अष्टानां मन्त्रिणां मध्ये मन्त्रं राजोपधारयेत् ॥१२-८५-११ (६८१३२)
ततः संप्रेषयेद्राष्ट्रे राष्ट्रीयाय च दर्शयेत् ।
अनेन व्यवहारेण द्रष्टव्यास्ते प्रजाः सदा ॥१२-८५-१२ (६८१३३)
न चापि गूढं द्रव्यं ते ग्राह्यं कार्योपघातकम् ।
कार्ये खलु विपन्ने त्वां यो धर्मस्तं च पीडयेत् ॥१२-८५-१३ (६८१३४)
विद्रवेच्चैव राष्ट्रं ते श्येनात्पक्षिगणा इव ।
परिस्रवेच्च सततं नौर्विशीर्णेव सागरे ॥१२-८५-१४ (६८१३५)
प्रजाः पालयतोऽसम्यगधर्मेणेह भूपतेः ।
हार्दं भयं संभवति स्वर्गश्चास्य विरुध्यते ॥१२-८५-१५ (६८१३६)
अथ यो धर्मतः पाति राजाऽमात्योऽथवाऽऽत्मजः ।
धर्मासने सन्नियुक्तो धर्ममूले नरर्षभ ॥१२-८५-१६ (६८१३७)
ग्स्वर्गं याति महीपालो नियुक्तैः सचिवैः सह।'
कार्येष्वधिकृताः सम्यगकुर्वन्तो नृपानुगाः ।
आत्मानं पुरतः कृत्वा यान्त्यधः सह पार्थिवाः ॥ १२-८५-१७ (६८१३८)
बलात्कृतानां बलिभिः कृपणं बहुजल्पताम् ।
नाथो वै भूमिपो नित्यमनाथानां नृणां भवेत् ॥१२-८५-१८ (६८१३९)
ततः साक्षिबलं साधु द्वैधवादकृतं भवेत् ।
असाक्षिकमनाथं वा परीक्ष्यं तद्विशेषतः ॥१२-८५-१९ (६८१४०)

अपराधानुरूपं च दण्डं पापेषु धारयेत् ।
वियोजयेद्धनैर्ऋद्धानधनानथ बन्धनैः ॥ १२-८५-२० (६८१४१)
विनयेच्चापि दुर्वृत्तान्प्रहारैरपि पार्थिवः ।
सान्त्वेनोपप्रदानेन शिष्टांश्च परिपालयेत् ॥ १२-८५-२१ (६८१४२)
राज्ञो वधं चिकीर्षेद्यस्तस्य चित्रो वधो भवेत् ।
आदीपकस्य स्तेनस्य वर्णसंकरिकस्य च ॥ १२-८५-२२ (६८१४३)
सम्यक्प्रणयतो दण्डं भूमिपस्य विशांपते ।
युक्तस्य वा नास्त्यधर्मो धर्म एव हि शाश्वतः ॥ १२-८५-२३ (६८१४४)
कामकारेण दण्डं तु यः कुर्यादविचक्षणः ।
स इहाकीर्तिसंयुक्तो मृतो नरकमृच्छति ॥ १२-८५-२४ (६८१४५)
न परस्य प्रवादेन परेषां दण्डमर्पयेत् ।
आगमानुगमं कृत्वा बध्नीयान्मोक्षयीत वा ॥ १२-८५-२५ (६८१४६)
न तु हन्यान्नृपो जातु दूतं कस्यांचिदापदि ।
दूतस्य हन्ता निरयमाविशेत्सचिवैः सह ॥ १२-८५-२६ (६८१४७)
यथोक्तवादिनं दूतं क्षत्रधर्मरतो नृपः ।
यो हन्यात्पितरस्तस्य भ्रूणहत्यामवाप्नुयुः ॥ १२-८५-२७ (६८१४८)
कुलीनः शीलसंपन्नो वाग्मी दक्षः प्रियंवदः ।
यथोक्तवादीस्मृतिमान्दूतः स्यात्सप्तभिर्गुणैः ॥ १२-८५-२८ (६८१४९)
एतैरेव गुणैर्युक्तः प्रतीहारोऽस्य रक्षिता ।
शिरोरक्षश्च भवति गुणैरेतैः समन्वितः ॥ १२-८५-२९ (६८१५०)
धर्मशास्त्रार्थतत्त्वज्ञः सांधिविग्रहिको भवेत् ।
मतिमान्धृतिमान्ह्रीमान्रहस्यविनिगूहिता ॥ १२-८५-३० (६८१५१)
कुलीनः सत्वसंपन्नः शुक्लोऽमात्यः प्रशस्यते ।
एतैरेव गुणैर्युक्तस्तथा सेनापतिर्भवेत् ॥ १२-८५-३१ (६८१५२)
व्यूहयन्त्रायुधानां च तत्त्वज्ञो विक्रमान्वितः ।
वर्षशीतोष्णवातानां सहिष्णुः पररन्ध्रवित् ॥ १२-८५-३२ (६८१५३)
विश्वासयेत्परांश्चैव विश्वसेच्च न कस्यचित् ।
पुत्रेष्वपि हि राजेन्द्र विश्वासो न प्रशस्यते ॥ १२-८५-३३ (६८१५४)
एतच्छास्त्रार्थतत्त्वं तु मयाऽऽख्यातं तवानघ ।
अविश्वासो नरेन्द्राणां गुह्यं परममुच्यते ॥ ॥ १२-८५-३४ (६८१५५)

इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि
पञ्चाशीतितमोऽध्यायः ॥ ८५.।
Mahabharata - Shanti Parva - Chapter Footnotes

१२-८५-२ शुद्धेन पक्षपातहीनेन ॥

१२-८५-३ व्यवहरेत् निर्णयं कुर्यात् ॥
१२-८५-८ पूर्वके नित्ये ॥
१२-८५-९ अष्टाभिर्गुणैः शुश्रूषा श्रवणं ग्रहणं
धारणमूहनमपोहनं विज्ञानं तत्त्वज्ञानं चेति तैः ॥
१२-८५-११ मृगयाक्षाः स्त्रियः पानमिति चतुर्भिः कासजैः
। दण्डपातनं वाक्यारुष्यं अर्थदूषणमिति त्रिभिः क्रोधजैरिति
सप्तभिः। अष्टानां ब्राह्मणचतुष्टयं शूद्रत्रयं सूतश्चेति
तेषाम् ॥
१२-८५-१२ ते त्वया द्रष्टव्याः ॥
१२-८५-१३ गूढं न्यासापहारादिकं ते त्वया न ग्राह्यम् ॥
१२-८५-१४ परिस्रवेत् मन्दं मन्दमन्यत्र गच्छेत् ॥
१२-८५-१६ धर्ममूले राज्ये ॥
१२-८५-१० विशेषतस्तप्तपरशुग्रहणादिनां तत्परीक्ष्यमिति ॥
१२-८५-२० वियोजद्धवैर्लुब्धान्दरिद्रान्वधबन्धनैरिति ड । थ। पाठः ॥
१२-८५-२२ चित्रोऽनेकधा । आदीपकस्य गृहादिदाहकत्य ॥
१२-८५-२३ युक्तस्य यथाशास्त्रमवहितस्य ॥
१२-८५-२९ प्रतील्पि द्वारपालः । शिरोरक्षः शिरांसीव शिरांसि
दुर्गनगरादीनि प्रधानस्थानानि तद्रक्षणकर्ता ॥
१२-८५-३१ एतैर्धर्मेत्यादिभिरमात्यगुणैः ॥
१२-८५-३२ व्यूहः सेनाया निवेशनप्रकारविशेषः । यन्त्राणि धनुरादीनि ॥

---

शन्तिपर्व-अध्यय०८६
॥ श्रीः ॥
१२.८६. अध्यायः ८६

Mahabharata - Shanti Parva - Chapter Topics
भीष्मेण युधिष्ठिरंप्रति पुरलक्षणादिकथनम् ॥ १.।
Mahabharata - Shanti Parva - Chapter Text

१२-८६-० (६८१५६)
युधिष्ठिर उवाच। १२-८६-०क्ष् (५५६८)
कथंविधं पुरं राजा स्वयमावस्तुमर्हति ।
कृतं वा कारयित्वा वा तन्मे ब्रूहि पितामह ॥ १२-८६-१ (६८१५७)
भीष्म उवाच। १२-८६-२क्ष् (५५६९)
वस्तव्यं यत्र कौन्तेय सपुत्रज्ञातिबन्धुना ।
न्याय्यं च परिप्रष्टुं वृत्तिं गुप्तिं च भारत ॥ १२-८६-२ (६८१५८)

तस्मात्ते र्तयिष्यामि दुर्गकर्म विशेषतः ।
श्रुत्वा तथा विधातव्यमनुष्ठेयं च यत्नतः ॥ १२-८६-३ (६८१५९)
षड्विधं दुर्गमास्थाय पुराण्यथ निवेशयेत् ।
सर्वसंपत्प्रधानं च बाहुल्यं चापि संभवेत् ॥ १२-८६-४ (६८१६०)
धन्वदुर्गं महीदुर्गं गिरिदुर्गं तथैव च ।
मनुष्यदुर्गं मृद्दुर्गं वनदुर्गं च तानि षट् ॥ १२-८६-५ (६८१६१)
यत्पुरं दुर्गसंपन्नं धान्यायुधसमन्वितम् ।
दृढप्राकारपरिखं हस्त्यश्वरथसंकुलम् ॥ १२-८६-६ (६८१६२)
विद्वांसः शिल्पिनो यत्र निचयाश्च सुसंचिताः ।
धार्मिकश्च जनो यत्र दाक्ष्यमुत्तममास्थितः ॥ १२-८६-७ (६८१६३)
ऊर्जस्विनरनागाश्वं चत्वरापणशोभितम् ।
प्रसिद्धव्यवहारं च प्रशान्तमकुतोभयम् ॥ १२-८६-८ (६८१६४)
सुप्रभं सानुनादं च सुप्रशस्तनिवेशनम् ।
शूराढ्यं प्राज्ञसंपूर्णं ब्रह्मघोषानुनादितम् ॥ १२-८६-९ (६८१६५)
समाजोत्सवसंपन्नं सदापूजितदैवतम् ।
वश्यामात्यबलो राजा तत्पुरं स्वयमाविशेत् ॥ १२-८६-१० (६८१६६)
तत्र कोशं बलं मित्रं व्यवहारं च वर्धयेत् ।
पुरे जनपदे चैव सर्वदोषान्निवर्तयेत् ॥ १२-८६-११ (६८१६७)
भाण्डागारायुधागारं प्रयत्नेनाभिवर्धयेत् ।
निचयान्वर्धयेत्सर्वांस्तथा यन्त्रकटंकटान् ॥ १२-८६-१२ (६८१६८)
काष्ठलोहतुषाङ्गारदारुशृङ्गास्थिवैणवान् ।
मज्जास्नेहवसाक्षौद्रमौषधग्राममेव च ॥ १२-८६-१३ (६८१६९)
शणं सर्जरसं धान्यमायुधानि शरांस्तथा ।
चर्म स्नायुं तथा वेत्रं मुञ्जवल्वजदंध्वनान् ॥ १२-८६-१४ (६८१७०)
आशयाश्चोदपानाश्च प्रभूतसलिलाकराः ।
निरोद्धव्याः सदा राज्ञा क्षीरिणश्च महीरुहाः ॥ १२-८६-१५ (६८१७१)
सत्कृताश्च प्रयत्नेन आचार्यर्त्विक्पुरोहिताः ।
महेष्वासाः स्थपतयः सांवत्सरचिकित्सकाः ॥ १२-८६-१६ (६८१७२)
प्राज्ञा मेधाविनो दान्ता दक्षाः शूरा बहुश्रुताः ।
कुलीनाः सत्वसंपन्ना युक्ताः सर्वेषु कर्मसु ॥ १२-८६-१७ (६८१७३)
पूजयेद्धार्मिकान्राजा निगृह्णीयादधार्मिकान् ।
नियुञ्ज्याच्च प्रयत्नेन सर्ववर्णान्स्वकर्मसु ॥ १२-८६-१८ (६८१७४)
बाह्यमाभ्यन्तरं चैव पौरजानपदं तथा ।
चारैः सुविदितं कृत्वा ततः कर्म प्रयोजयेत् ॥ १२-८६-१९ (६८१७५)
चरान्मन्त्रं च कोशं च दण्डं चैव विशेषतः ।
अनुतिष्ठेत्स्वयं राजा सर्वं ह्यत्र प्रतिष्ठितम् ॥ १२-८६-२० (६८१७६)

उदासीनारिमित्राणां सर्वमेव चिकीर्षितम् ।
पुरे जनपदे चैव ज्ञातव्यं चारचक्षुषा ॥ १२-८६-२१ (६८१७७)
ततस्तेषां विधातव्यं सर्वमेवाप्रमादतः ।
भक्तान्पूजयता नित्यं द्विषतश्च निगृह्णता ॥ १२-८६-२२ (६८१७८)
यष्टव्यं क्रतुभिर्नित्यं दातव्यं चाप्यपीडया ।
प्रजानां रक्षणं कार्यं न कार्यं धर्मबाधकम् ॥ १२-८६-२३ (६८१७९)
कृपणानाथवृद्धानां विधवानां च योषिताम् ।
योगक्षेमं च वृत्तिं च नित्यमेव प्रकल्पयेत् ॥ १२-८६-२४ (६८१८०)
आश्रमेषु यथाकालं चैलभाजनभोजनम् ।
सदैवोपहरेद्राजा सत्कृयाभ्यर्च्य मान्य च ॥ १२-८६-२५ (६८१८१)
आत्मानं सर्वकार्याणि तापसे राष्ट्रमेव च ।
निवेदयेत्प्रयत्नेन तिष्ठेत्प्रह्वश्च सर्वदा ॥ १२-८६-२६ (६८१८२)
ग ते कस्यांचिदवस्थायां शरणं शरणार्थिने ।
राज्ञे दद्युर्यथाकामं तापसाः शंसितव्रताः ॥' १२-८६-२७ (६८१८३)
सर्वार्थत्यागिनं राजा कुले जातं बहुश्रुतम् ।
पूजयेत्तादृशं दृष्ट्वा शयनासनभोजनैः ॥ १२-८६-२८ (६८१८४)
तस्मिन्कुर्वीत विश्वासं राजा कस्यांचिदापदि ।
तापसेषु हि विश्वासमपि कुर्वन्ति दस्यवः ॥ १२-८६-२९ (६८१८५)
तस्मिन्निधीनादधीत पुनः प्रत्याददीत च ।
न चाप्यभीक्ष्णं सेवेत भृशं वा प्रतिपूजयेत् ॥ १२-८६-३० (६८१८६)
अन्यः कार्यः स्वराष्ट्रेषु परराष्ट्रेषु चापरः ।
अटवीषु परः कार्यः सामन्तनगरेष्वपि ॥ १२-८६-३१ (६८१८७)
तेषु सत्कारमानाभ्यां संविभागांश्च कारयेत् ।
परराष्ट्राटवीस्थेषु यथा स्वविषये तथा ॥ १२-८६-३२ (६८१८८)
ते कस्यांचिदवस्थायां शरणं शरणार्थिने ।
राज्ञे दद्युर्थथाकामं तापसाः संशितव्रताः ॥ १२-८६-३३ (६८१८९)
एष ते लक्षणोद्देशः संक्षेपेण प्रकीर्तितः ।
यादृशे नगरे राजा स्वयमावस्तुमर्हति ॥ ॥ १२-८६-३४ (६८१९०)

इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि
षडशीतिममोऽध्यायः ॥ ८६. ।

Mahabharata - Shanti Parva - Chapter Footnotes

१२-८६-५ धन्वा निर्जलदेशस्तदेव परितश्च दुर्गं धन्वदुर्गम्
। महीदुर्गं कोटः ॥
१२-८६-९ सानुनादं मीतवादित्रध्वनिमत् ॥

१२-८६-१२ निचयान् धान्यादिसंग्रहान् । तथा यन्त्रालयायुधान्। इति
झ। पाठः ॥
१२-८६-१४ दंध्वनान् ध्वनिमतो निःसाणादीन् । बन्धनानिति पाठान्तरे
स्पष्टोऽर्थः ॥
१२-८६-१५ आशयाः निपानानि । उदपानाः कूपाः। निरोद्धव्या रक्षणीयाः ॥
१२-८६-१७ प्रज्ञा ग्रन्थार्थग्रहणसामर्थ्यम् । मेधा ऊहापोहकौशलम् ॥
१२-८६-२० अतुतिष्ठेदालोचयेत् ॥
१२-८६-२२ विधातव्यं प्रतिकर्तव्यम् ॥
१२-८६-२६ तापसे तपस्विजने ॥
१२-८६-२९ विश्वासं नाधिकुर्वन्ति दस्यव इति ङ.थ । पाठः ॥।
१२-८६-३० निधीन् धनभाण्डानि । अभीक्ष्णं न सेवेत्। दस्यूनां तत्सूचने
तपस्विनाशापत्तेः न प्रतिपूजयेच्च ॥
१२-८६-३१ अन्यस्तापसः कार्यः सखित्वेन संपादनीयः ॥
१२-८६-३२ तेषु तत्तत्स्थानस्थेषु तापसेषु ॥

---

शन्तिपर्व-अध्यय०८७
॥ श्रीः ॥
१२.८७. अध्यायः ८७

Mahabharata - Shanti Parva - Chapter Topics
भीष्मेण युधिष्ठिरंप्रति राष्ट्रगुप्तिप्रकारादिकथनम् ॥ १.।
Mahabharata - Shanti Parva - Chapter Text

१२-८७-० (६८१९१)
युधिष्ठिर उवाच। १२-८७-०क्ष् (५५७०)
राष्ट्रगुप्तिं च मे राजन्राष्ट्रस्यैव तु संग्रहम् ।
सम्यग्जिज्ञासमानाय प्रब्रूहि भरतर्षभ ॥ १२-८७-१ (६८१९२)
भीष्म उवाच। १२-८७-२क्ष् (५५७१)
राष्ट्रगुप्तिं च ते सम्यग्राष्ट्रस्यैव तु संग्रहम् ।
हन्त सर्वं प्रवक्ष्यामि तत्त्वमेकमनाः शृणु ॥ १२-८७-२ (६८१९३)
ग्रामस्याधिपतिः कार्यो दशग्रामपतिस्तथा ।
विंशतित्रिंशतीशं च सहस्रस्य च कारयेत् ॥ १२-८७-३ (६८१९४)
ग्रामेयान्ग्रामदोषांश्च ग्रामिकः प्रतिभावेयेत् ।
तानाचक्षीत दशिने दशिको विंशिने पुनः ॥ १२-८७-४ (६८१९५)
विंशाधिपस्तु तत्सर्वं वृत्तं जानपदे जने ।
ग्रामाणां शतपालाय सर्वमेव निवेदयेत् ॥ १२-८७-५ (६८१९६)
यानि ग्राम्याणि भोज्यानि ग्रामिकस्तान्युपाश्निया ।

दशपस्तेन भर्तव्यस्तेनापि द्विगुणाधिपः ॥ १२-८७-६ (६८१९७)
ग्रामं ग्रामशताध्यक्षो भोक्तुमर्हति सत्कुरः ।
महान्तं भरतश्रेष्ठ सुस्फीतं जनसंकुलम् ।
तत्र ह्यनेकपायत्तं राज्ञो भवति भारत ॥ १२-८७-७ (६८१९८)
शाखानगरमर्हस्तु सहस्रपतिरुत्तमः ।
धान्यहैरण्यभोगेन भोक्तुं राष्ट्रीयसंगतः ॥ १२-८७-८ (६८१९९)
तेषां संग्रामकृत्यं स्याद्ग्रामकृत्यं च तेषु यत् ।
धर्मज्ञः सचिवः कश्चित्तत्तत्पश्येदतन्द्रितः ॥ १२-८७-९ (६८२००)
नगरेनगरे वा स्यादेकः सर्वार्थचिन्तकः ।
उच्चैः स्थाने घोररूपो नक्षत्राणामिव ग्रहः ॥ १२-८७-१० (६८२०१)
भवेत्स तान्परिक्रामेत्सर्वानेव सभासदः ।
तेषां वृत्तिं परिणयेत्कश्चिद्राष्ट्रेषु तच्चरः ॥ १२-८७-११ (६८२०२)
जिघांसवः पापकामाः परस्वादायिनः शठाः ।
रक्षाभ्यधिकृता नाम तेभ्यो रक्षेदिमाः प्रजाः ॥ १२-८७-१२ (६८२०३)
विक्रयं क्रयमध्वानं भक्तं च सपरिव्ययम् ।
योगक्षेमं च संप्रेक्ष्य वणिजां कारयेत्करान् ॥ १२-८७-१३ (६८२०४)
उत्पत्तिं दानवृत्तिं च शिल्पं संप्रेक्ष्य चासकृत् ।
शिल्पं प्रति करानेवं शिल्पिनः प्रति कारयेत् ॥ १२-८७-१४ (६८२०५)
उच्चावचकरन्यायाः पूर्वराज्ञां युधिष्ठिर ।
यथायथा न सीदेरंस्तथा कुर्यान्महीपतिः ॥ १२-८७-१५ (६८२०६)
फलं कर्म च संप्रेक्ष्य ततः सर्वं प्रकल्पयेत् ।
फलं कर्म च निर्हेतु न कश्चित्संप्रवर्तते ॥ १२-८७-१६ (६८२०७)
यथा राजा च कर्ता च स्यातां कर्मणि भागिनौ ।
संवेक्ष्य तु तथा राज्ञा प्रणेयाः सततं कराः ॥ १२-८७-१७ (६८२०८)
नोच्छिद्याद्यात्मनो मूलं परेषां चापि तृष्णया ।
ईहाद्वाराणि संरुध्य राजा संवृतदर्शनः ॥ १२-८७-१८ (६८२०९)
प्रद्विषन्ति परिख्यातं राजानमतिखादिनम् ।
प्रद्विष्टस्य कुतः श्रेयो संवृतो लभते श्रियम् ॥ १२-८७-१९ (६८२१०)
वत्सौपम्येन दोग्धव्यं राष्ट्रमक्षीणबुद्धिना ।
भृतो वत्सो जातबलः षीडां सहति भारत ॥ १२-८७-२० (६८२११)
न कर्म कुरुते वत्सो भृशं दुग्धो युधिष्ठिर ।
राष्ट्रमप्यातिदुग्धं हि न कर्म कुरुते महत् ॥ १२-८७-२१ (६८२१२)
यो राष्ट्रमनुगृह्णाति परिरक्षन्स्वयं नृपः ।
संजातमुपजीवन्स लभते सुमहत्फलम् ॥ १२-८७-२२ (६८२१३)
आपदर्थं च निचयात्राजानो हि चिचिन्वते ।
राष्ट्रं च कोशभूतं स्यात्कोशो वेश्मगतस्तथा ॥ १२-८७-२३ (६८२१४)

पौरजानपदान्सर्वान्संश्रितोषाश्रितांस्तथा ।
यथाशक्त्यनुकम्पेत सर्वान्स्वल्पधनानपि ॥१२-८७-२४ (६८२१५)
बाह्यं जनं भेदयित्वा भोक्तव्यो मध्यमः सुखम् ।
एवं नास्य प्रकुप्यन्ति जनाः सुखितदुः खिताः ॥१२-८७-२५ (६८२१६)
प्रामेव तु धनादानमनुभाष्य ततः पुनः ।
सन्निपत्य स्वविषये भयं राष्ट्रे प्रदर्शयेत् ॥१२-८७-२६ (६८२१७)
इयमापत्समुत्पन्ना परचक्रभयं महत् ।
अपि चान्ताय कल्पन्ते वेणोरिव फलागमाः ॥१२-८७-२७ (६८२१८)
अरयो मे समुत्थाय बहुभिर्दस्युभिः सह ।
इदमात्मवधायैव राष्ट्रमिच्छन्ति बाधितुम्। १२-८७-२८ (६८२१९)
अस्यामापदि घोरायां संप्राप्ते दारुणे भये ।
परित्राणाय भवतः प्रार्थयिष्ये धनानि वः ॥१२-८७-२९ (६८२२०)
प्रतिदास्ये च भवतां सर्वं चाहं भयक्षये ।
नारयः प्रतिदास्यन्ति यद्धरेयुर्बलादितः ॥१२-८७-३० (६८२२१)
कलत्रमादितः कृत्वा सर्वं वो विनशेदिति ।
शरीरपुत्रदारार्थमर्थसंचय इष्यते ॥१२-८७-३१ (६८२२२)
नन्दामि वः प्रभावेण पुत्राणामिव चोदये ।
यखाशक्त्युपगृह्णामि राष्ट्रस्यापीडया च वः ॥१२-८७-३२ (६८२२३)
आपत्स्वेव निवोढव्यं भवद्भिः संगतैरिह ।
न वः प्रियतरं कार्यं धनं कस्यांचिदापदि ॥१२-८७-३३ (६८२२४)
इति वाचा मधुरया श्लक्ष्णया सोपचारया ।
स्वरश्मीनभ्यवसृजेद्योगमाधाय कालवित् ॥१२-८७-३४ (६८२२५)
प्रचारं भृत्यभरणं व्ययं संग्रामतो भयम् ।
योगक्षेणं च संप्रेक्ष्य गोमिनः कारयेत्करम् ॥१२-८७-३५ (६८२२६)
उपेक्षिता हि नश्येयुर्गोमिनोऽरण्यवासिनः ।
तस्मात्तेषु विशेषेण मृदुपूर्वं समाचरेत् ॥१२-८७-३६ (६८२२७)
सान्त्वनं रक्षणं दानमवस्था चाप्यभीक्ष्णशः ।
गोमिनां पार्थ कर्तव्यः संविभागः प्रियाणि च ॥१२-८७-३७ (६८२२८)
अजस्रमुपयोक्तव्यं फलं गोमिषु भारत ।
प्रभावयन्ति राष्ट्रं च व्यवहारं कृषिं तथा ॥१२-८७-३८ (६८२२९)
तस्माद्गोमिषु यत्नेन प्रीतिं कुर्याद्विचक्षणः ।
दयावानप्रमत्तश्च करान्संप्रणयन्मृदून् ॥१२-८७-३९ (६८२३०)
सर्वत्र क्षेमचरणं सुलभं नाम गोमिषु ।
न ह्यतः सदृशं किंचिद्धनमस्ति युधिष्ठिर ॥ ॥१२-८७-४० (६८२३१)

इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि

सप्ताशीतितमोऽध्यायः ॥ ८७.।
Mahabharata - Shanti Parva - Chapter Footnotes

१२-८७-३ दशग्राम्यास्तथा परः ।द्विगुणायाः शतस्यैवमिति झ। पाठः ॥
१२-८७-१३ कारयेत् दापयेत् ॥
१२-८७-१६ फलं धान्यधनवृद्ध्यादि ।वृद्ध्यनुरूपः करः कल्प्य
इत्यर्थः ॥
१२-८७-१८ आत्मनो मूलं राष्ट्रम् ।परेषां मूलं कृष्यादि।ईहा लोभः ॥
१२-८७-१९ अतिखादिनं बहुभक्षम् ॥
१२-८७-२४ संश्रिताः साक्षादाश्रिताः ।उपाश्रिताः व्यवहिताः ॥
१२-८७-२५ आटवीको दस्युसङ्घो बाह्यजनस्तं ययमुपतिष्ठध्वमिति
भेदयित्वा मध्यमो ग्रामीणजनो भोक्तव्यस्ततो बहुलं
धनमादद्यादित्यर्थः ॥
१२-८७-२६ तत्र प्रकारमाह प्रागिति ।चोरनिग्रहार्थं कटकबन्धः
कर्तव्यस्तदर्थं धनमपेक्षितमिति पूर्वमेव आभाष्य सूचनां
कृत्वा ततः सन्निपत्य तेषु तेषु ग्रामेषु गत्वा भयं दर्शयेत् ॥
१२-८७-३३ आपत्स्वेव च वोढव्यं भवद्भिः पुङ्गवैरिवेति झ ।पाठः ॥
१२-८७-३४ स्वरश्मीन्स्वस्य रश्मिभूतान् अधिकारिणः प्रजासु
धनमुद्ग्रहीतुं अभ्यवसृजेत्प्रेरयेत् ।योगं धनग्रहणोपायम् ॥
१२-८७-३५ गोमिनः वैश्यान् ।संप्रेक्ष्य संदर्शयित्वा ॥

---

शन्तिपर्व-अध्यय०८८
॥ श्रीः ॥
१२.८८. अध्यायः ८८

Mahabharata - Shanti Parva - Chapter Topics
भीष्मेण युधिष्ठिरंप्रति प्रजाश्यः करग्रहणादिप्रकारकथनम् ॥ १.।
Mahabharata - Shanti Parva - Chapter Text

१२-८८-० (६८२३२)
युधिष्ठिर उवाच।१२-८८-०क्ष् (५५७२)
यदा राजा समर्थोऽपि कोशार्थी स्यान्महामते ।
कथं प्रवर्तेत करस्तन्मे ब्रूहि पितामह ॥१२-८८-१ (६८२३३)
भीष्म उवाच।१२-८८-२क्ष् (५५७३)
यथादेशं यथाकालं यथाबुद्धि यथाबलम् ।
अनुशिष्यात्प्रजा राजा धर्मार्थी तद्धिते रतः ॥१२-८८-२ (६८२३४)
यथा तासां च मन्येत श्रेय आत्मन एव च ।

तथा धर्माणि सर्वाणि राजा राष्ट्रेषु वर्तयेत् ॥१२-८८-३ (६८२३५)
मधुदोहं दुहेद्राष्ट्रं भ्रमरान्न प्रपातयेत् ।
वत्सापेक्षी दुहेच्चैव स्तनांश्च न विकुट्टयेत् ॥१२-८८-४ (६८२३६)
जलौकावत्पिबेद्राष्ट्रं मृदुनैव नराधिपः ।
व्याघ्रीव च हरेत्पुत्रान्संदशेन्न च पीडयेत् ॥१२-८८-५ (६८२३७)
यथा शल्यकवानाखुः पदं धूनयते सदा ।
अतीक्ष्णेनाभ्युपायेन तथा राष्ट्रं समापिबेत् ॥१२-८८-६ (६८२३८)
अल्पेनाल्पेन देयेन वर्धमानं प्रदापयेत् ।
ततो भूयस्ततो भूयः क्रमवृद्धिं समाचरेत् ॥१२-८८-७ (६८२३९)
दमयन्निव दम्यानि शश्वद्भारं विवर्धयेत् ।
मृदुपूर्वं प्रयत्नेन पाशानभ्यवहारयेत् ॥१२-८८-८ (६८२४०)
सकृत्पाशावकीर्णास्ते न भविष्यन्ति दुर्दमाः ।
उचितेनैव भोक्तव्यास्ते भविष्यन्त्ययत्नतः ॥१२-८८-९ (६८२४१)
तस्मात्सर्वसमारम्भो दुर्लभः पुरुषं प्रति ।
यथा मुख्यान्सान्त्वयित्वा भोक्तव्या इतरे जनाः ॥१२-८८-१० (६८२४२)
ततस्तान्भेदयित्वा तु परस्परविवक्षितान् ।
भुञ्जीत सान्त्वयंश्चैव यथासुखमयत्नतः ॥१२-८८-११ (६८२४३)
न चास्थाने न चाकाले करांस्तेभ्यो निपातयेत् ।
आनुपूर्व्येण सान्त्वेन यथाकालं यथाविधि ॥१२-८८-१२ (६८२४४)
उपायान्प्रब्रवीम्येतान्न मे माया विवक्षिता ।
अनुपायेन दमयन्प्रकोपयति वाजिनः ॥१२-८८-१३ (६८२४५)
पानागारनिवेशाश्च वेश्याः प्रापणिकास्तथा ।
कुशीलवाः सकितवा ये चान्ये केचिदीदृशाः ॥१२-८८-१४ (६८२४६)
नियम्याः सर्व एवैते ये राष्ट्रस्योपघातकाः ।
एते राष्ट्रेऽभितिष्ठन्तो बाधन्ते भद्रिकाः प्रजाः ॥१२-८८-१५ (६८२४७)
न केनचिद्याचितव्यः कश्चित्किंचिदनापदि ।
इति व्यवस्था भूतानां पुरस्तान्मनुना कृता ॥१२-८८-१६ (६८२४८)
सर्वे तथाऽनुजीवेयुर्न कुर्युः कर्म चेदिह ।
सर्व एव इमे लोका न भवेयुरसंशयम् ॥१२-८८-१७ (६८२४९)
प्रभुर्नियमने राजा य एतान्न नियच्छति ।
भुङ्क्ते स तस्य पापस्य चतुर्भागमिति श्रुतिः ॥१२-८८-१८ (६८२५०)
भोक्ता तस्य तु पापस्य सुकृतस्य यथातथा ।
नियन्तव्याः सदा राज्ञा पापा ये स्युर्नराधिप ॥१२-८८-१९ (६८२५१)
कृतपापस्त्वसौ राजा य एतान्न नियच्छति ।
तथा कृतस्य धर्मस्य चतुर्भागमुपाश्नुते। १२-८८-२० (६८२५२)
स्थानान्येतानि संयम्य प्रसङ्गो भूतिनाशनः ।

कामे प्रसक्तः पुरुषः किमकार्यं विवर्जयेत् ॥१२-८८-२१ (६८२५३)
मद्यमांसपरस्वानि तथा दारधनानि च ।
आहरेद्रागवशगस्तथा शास्त्रं प्रदर्शयेत् ॥१२-८८-२२ (६८२५४)
आपद्येव तु याचन्ते येषां नास्ति परिग्रहः ।
दातव्यं धर्मतस्तेभ्यस्त्वनुक्रोशाद्भयान्न तु ॥१२-८८-२३ (६८२५५)
मा ते राष्ट्रे याचनका भवेयुर्मा च दस्यवः ।
उपादातार एवैते नैते भूतस्य भावकाः ॥१२-८८-२४ (६८२५६)
ये भूतान्यनुगृह्णन्ति वर्धयन्ति च ये प्रजाः ।
तेते राष्ट्रेषु वर्तन्तां मा भूतानां प्रबाधकाः ॥१२-८८-२५ (६८२५७)
दण्ड्यास्ते च महाराज धनादानप्रयोजकाः ।
प्रयोगं कारयेथास्ते यथा दद्युः करांस्तथा ॥१२-८८-२६ (६८२५८)
कृषिगोरक्ष्यवाणिज्यं यच्चान्यत्किंचिदीदृशम् ।
पुरुषैः कारयेत्कर्म बहुभिः कर्मभेदतः ॥१२-८८-२७ (६८२५९)
नरश्चेत्कृषिगोरक्ष्यं वाणिज्यं चाप्यनुष्ठितः ।
संशयं लभते किंचित्तेन राजा विगर्ह्यते ॥१२-८८-२८ (६८२६०)
धनिनः पूजयेन्नित्यं पानाच्छादनभोजनैः ।
वक्तव्याश्चानुगृह्णीध्वं प्रजाः सह मयेति वै ॥१२-८८-२९ (६८२६१)
अङ्गमेतन्महद्राज्ये धनिनो नाम भारत ।
ककुदं सर्वभूतानां धनस्थो नात्र संशयः ॥१२-८८-३० (६८२६२)
प्राज्ञः शूरो धनस्थश्च स्वामी धार्मिक एव च ।
तपस्वी सत्यवादी च बुद्धिमांश्चापि रक्षति ॥१२-८८-३१ (६८२६३)
तस्मात्सर्वेषु भूतेषु प्रीतिमान्भव पार्थिव ।
सत्यमार्जवमक्रोधमानृशंस्यं च पालय ॥१२-८८-३२ (६८२६४)
एवं दण्डं च कोशं च मित्रं भूमिं च लप्स्यसि ।
सत्यार्जवपरो राजन्मित्रकोशबलान्वितः ॥ ॥१२-८८-३३ (६८२६५)

इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि
अष्टाशीतितमोऽध्यायः ॥ ८८.।

Mahabharata - Shanti Parva - Chapter Footnotes

१२-८८-४ भ्रमरा इव पादपमिति झ ।पाठः ॥
१२-८८-६ शल्यकवांस्तीक्ष्णतुण्ड आखुविशेषः ।सहि निद्रितस्य
मनुष्यस्य पादतलस्थं मांसमतीक्ष्णेनैवोपायेन भक्षयति।यथा
विलेखकः कर्णमाखुः पादत्वचं यथेति ङ।थ।पाठः ॥
१२-८८-८ दम्यानि वत्सतरकुलानि यथा क्रमेण दमयेतद्वत्प्रजा अपीत्याह
दमयन्निवेति ।अभ्यव हारयेद्वाहयेत् ॥

१२-८८-९ सकृत्सद्यः पाशावकीर्णाः सन्तो नभविष्यन्ति मरिष्यन्ति । यतो दुर्दमा अथ उचितेन क्रमेण ते भोक्तव्या दम्याः प्रजाश्च। असत्पाशावकीर्णास्ते भविष्यन्तीह दुर्मदाः। इति ड थ। पाठः ॥
१२-८८-१० पुरुषं प्रतीत्यस्य प्रतिपुरुषमित्यर्थः ॥
१२-८८-११ ततो मुख्यद्वारा तानितरान् विवक्षितान्वोदुमिष्टान् । ततस्तान्भोजयित्वात परस्परविवर्जितान्। इति थ द। पाठः ॥
१२-८८-१४ मद्यशालाः संदेशहराः कुट्टन्यः । कुत्सितेन शीलेन वान्ति गच्छन्ति धर्मं हिंसन्ति वा कुशील वा विटाः। कितमा द्यूतकाराश्च नि ग्राह्या इत्याह पानेति ॥
१२-८८-१५ भद्रिकाः कल्याणः ॥
१२-८८-१६ याचितव्यः दत्तमृणं करं वेति शेषः ॥
१२-८८-१७ अनुजावेयुरनुसरेयुः । अन्यथा दोषमाह नेति ॥
१२-८८-२० तथा तथाभूतः नियच्छन्नित्यर्थः ॥
१२-८८-२१ स्थानानि मद्यादीनाम् ॥
१२-८८-२२ शास्त्रमाज्ञां प्रदर्शयेत्प्रवर्तयेत् ॥
१२-८८-२८ संशयं चोरेभ्यो राजकीयेभ्यो वा भयात् ॥

---

शन्तिपर्व-अध्यय०८९
॥ श्रीः ॥
१२.८९. अध्यायः ८९

Mahabharata - Shanti Parva - Chapter Topics
युधिष्ठिरंप्रति राजनीतिकथनम् ॥ १.।
Mahabharata - Shanti Parva - Chapter Text

१२-८९-० (६८२६६)
भीष्म उवाच। १२-८९-०क्ष् (५५७४)
वनस्पतीभक्ष्यफलान्न च्छिन्द्युर्विषये तव ।
ब्राह्मणानां मूलफलं धर्ममाहुर्मनीषिणः ॥ १२-८९-१ (६८२६७)
ब्राह्मणेभ्योऽतिरिक्तं च भुञ्जीरन्नितरे जनाः ।
न ब्राह्मणोपरोधेन हरेदन्यः कथंचन ॥ १२-८९-२ (६८२६८)
विप्रश्चेत्त्यागमातिष्ठेदाख्याया वृत्तिकर्शितः ।
परिकल्प्यास्य वृत्तिः स्यात्सदारस्य नराधिप ॥ १२-८९-३ (६८२६९)
स चेन्नोपनिवर्तेत वाच्यो ब्राह्मणसंसदि ।
कस्मिन्निदानीं मर्यादामयं लोकः करिष्यति ॥ १२-८९-४ (६८२७०)
असंशयं निवर्तेत न चेत्यक्ष्यत्यतः परम् ।

पूर्वं परोक्षं वक्तव्यमेतत्कौन्तेय शाश्वतम् ॥ १२-८९-५ (६८२७१)
आहुरेतज्जना ब्रह्मन्न चैतच्छ्रद्दधाम्यहम् ।
निमन्त्र्यश्च भवेद्भोगैरवृत्त्या च तदा चरेत् ॥ १२-८९-६ (६८२७२)
कृषिगोरक्ष्यवाणिज्यं लोकानामिह जीवनम् ।
ऊर्ध्वं चैव त्रयी विद्या सा भूतान्भावयत्युत ॥ १२-८९-७ (६८२७३)
तस्यां प्रपतमानायां ये स्युस्तत्परिपन्थिनः ।
दस्यवस्तद्वधायेह ब्रह्मा क्षत्रमथासृजत् ॥ १२-८९-८ (६८२७४)
शत्रूञ्जय प्रजा रक्ष यजस्व क्रतुभिर्नृप ।
युध्यस्व समरे वीरो भूत्वा कौरवनन्दन ॥ १२-८९-९ (६८२७५)
संरक्ष्यान्रक्षते राजा स राजा राजसत्तमः ।
ये केचित्तान्न रक्षन्ति तैरर्थो नास्ति कश्चन ॥ १२-८९-१० (६८२७६)
सदैव राज्ञा योद्धव्यं सर्वलोकाद्युधिष्ठिर ।
तस्याद्धेतोर्हि भुञ्जीत मनुष्यानेव मानवः ॥ १२-८९-११ (६८२७७)
आन्तरेभ्यः परान्रक्षन्परेभ्यः पुनरान्तरान् ।
परान्परेभ्यः स्वान्स्वेभ्यः सर्वान्पालय नित्यदा ॥ १२-८९-१२ (६८२७८)
आत्मानं सर्वतो रक्षन्राजन्रक्षस्व मेदिनीम् ।
आत्ममूलमिदं सर्वमाहुर्वै विदुषो जनाः ॥ १२-८९-१३ (६८२७९)
किं छिद्रं कोनु सङ्गो मे किंवाऽस्त्यविनिपातितम् ।
कुतो मामाश्रयेद्दोष इति नित्यं विचिन्तयेत् ॥ १२-८९-१४ (६८२८०)
अतीतदिवसे वृत्तं प्रशंसन्ति न वा पुनः ।
गुप्तैश्चारैरनुमतैः पृथिवीमनुसारयेत् ॥ १२-८९-१५ (६८२८१)
जानीत यदि मे वृत्तं प्रशंसन्ति न वा पुनः ।
कच्चिद्रोचेज्जनपदे कच्चिद्राष्ट्रे च मे वशः ॥ १२-८९-१६ (६८२८२)
धर्मज्ञानां धृतिमतां संग्रामेष्वपलायिनाम् ।
राष्ट्रे तु येऽनुजीवन्ति ये तु राज्ञोऽनुजीविनः ॥ १२-८९-१७ (६८२८३)
अमात्यानां च सर्वेषां मध्यस्थानां च सर्वशः ।
ये च त्वाऽभिप्रशंसेयुर्निन्देयुरथवा पुनः ॥ १२-८९-१८ (६८२८४)
सर्वान्सुपरिणीतांस्तान्कारयेथा युधिष्ठिर ।
एकान्तेन हि सर्वेषां न शक्यं तात रोचितुम् ।
मित्रामित्रमथो मध्यं सर्वभूतेषु भारत ॥ १२-८९-१९ (६८२८५)
युधिष्ठिर उवाच। १२-८९-२०क्ष् (५५७५)
तुल्यबाहुबलानां च तुल्यानां च गुणैरपि ।
कथं स्यादधिकः कश्चित्स च भुञ्जीत मानवान् ॥ १२-८९-२० (६८२८६)
भीष्म उवाच। १२-८९-२१क्ष् (५५७६)
यच्चरा ह्यचरानद्युरदंष्ट्रान्दंष्ट्रिणस्तथा ।
आशीविषा इव क्रुद्धा भुजङ्गान्भुजगा इव ॥ १२-८९-२१ (६८२८७)

एतेभ्यश्चाप्रमत्तः स्यात्सदा शत्रोर्युधिष्ठिर ।
भारुण्डसदृशा ह्येते निपतन्ति प्रमादतः ॥ १२-८९-२२ (६८२८८)
कच्चित्ते वणिजो राष्ट्रे नोद्विजन्ति करार्दिताः ।
क्रीणन्तो बहुनाऽल्पेन कान्तारकृतविश्रमाः ॥ १२-८९-२३ (६८२८९)
कच्चित्कृषिकरा राष्ट्रं न जहत्यतिपीडिताः ।
ये वहन्ति धुरं राज्ञां ते भरन्तीतरानपि ॥ १२-८९-२४ (६८२९०)
ग्आलस्येन हृतः पादः पादः पाषण्डमाश्रितः ।
राजानं सेवते पादः पादः कृषिमुपाश्रितः ॥ १२-८९-२५ (६८२९१)
एकपादं त्रयः पादा भक्षयन्ति दिनेदिने ।
तस्मात्सर्वप्रयत्नेन पादं रक्ष युधिष्ठिर ॥ ' १२-८९-२६ (६८२९२)
इतो दत्तेन जीवन्ति देवाः पितृगणास्तथा ।
मानुषोरगरक्षांसि वयांसि पशवस्तथा ॥ १२-८९-२७ (६८२९३)
एषा ते राष्ट्रवृत्तिश्च राज्ञां गुप्तिश्च भारत ।
प्रोक्तोद्दिश्यैतमेवार्थं भूयो वक्ष्यामि पा--व ॥ ॥ १२-८९-२८ (६८२९४)

इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि
एकोननवतितमोऽध्यायः ॥ ८९.।
Mahabharata - Shanti Parva - Chapter Footnotes

१२-८९-१ मूलफलं ब्राह्मणानां स्वमिति धर्ममाहुरतो न च्छिन्द्युः ॥
१२-८९-३ त्यागं राष्ट्रस्य ॥
१२-८९-६ भोगार्थी चेद्राष्ट्रं त्यजति तदा भोगैरपि निमन्त्र्यः
। अवृत्त्या चेतदावृत्त्यापि निमन्त्र्य इत्याह आहुरिति ॥
१२-८९-७ ऊर्ध्वं स्वर्गम् ॥
१२-८९-११ लोकात् लोकहितार्थं योद्धव्यम् । भयुध्यांखारानिति चार्थः ॥
१२-८९-१३ विदुषो विद्वांसः ॥
१२-८९-१४ राज्ञो व्यसगीत्येति शेषः ॥
१२-८९-१९ सुपरिणीतान् सत्कृतान् १२-८९-२१ अलवानेप दुर्बलं भुञ्जीत
तुल्यात्तु आत्मानं रक्षेच्छलेन च तं भुञ्जीतेत्युत्तरमाह यदि
आदिना ॥
१२-८९-२२ भारुण्डः गृध्रः ॥

---

शन्तिपर्व-अध्यय०९०
॥ श्रीः ॥
१२.९०. अध्यायः ९०

Mahabharata - Shanti Parva - Chapter Topics

१२-९०-० (६८२९५)
भीष्म उवाच।१२-९०-०क्ष् (५५७७)
आनङ्गिराः क्षत्रधर्मानुचथ्यो ब्रह्मवित्तमः ।
मान्धात्रे यौवनाश्वाय प्रीतिमानभ्यभाषत ॥१२-९०-१ (६८२९६)
स यथाऽनुशशासैजमुचथ्यो ब्रह्मवित्तमः ।
तत्तेऽहं संप्रवक्ष्यामि निखिलेन युधिष्ठिर ॥१२-९०-२ (६८२९७)
उचथ्य उवाच।१२-९०-३क्ष् (५५७८)
धर्माम राजा भवति न कामकरणाय तु ।
मान्यातरभिजानीहि राजा लोकस्य रक्षिता ॥१२-९०-३ (६८२९८)
राजा चरति चेद्धर्मं देवत्वायैव कल्पते ।
स चेदधर्मं चरति नरकायैव गच्छति ॥१२-९०-४ (६८२९९)
धर्मे तिष्ठन्ति भूतानि धर्मो राजनि तिष्ठाति ।
तं राजा साधु यः शास्ति स राजा श्रियमश्नुते ॥१२-९०-५ (६८३००)
राजापराधान्मान्धातर्लक्ष्मीवान्पाप उच्यते ।
देवाश्च गर्हां गच्छन्ति धर्मो नास्तीति चोच्यते ॥१२-९०-६ (६८३०१)
अधर्मे वर्तमानानामर्थसिद्धिः प्रदृश्यते ।
तदेव मङ्गलं लोकः सर्वः समनुवर्तते ॥१२-९०-७ (६८३०२)
उच्छिद्यते धर्मवृत्तमधर्मो वर्तते महान् ।
भयमाहुर्दिवारात्रं यदा पापा न वार्यते ॥१२-९०-८ (६८३०३)
इदं मम इदं नेति साधूनां तात धर्मतः ।
न वै व्यवस्था भवति यदा पापो न वार्यते ॥१२-९०-९ (६८३०४)
नैव भार्या न पशवो न क्षेत्रं न निवेशनम् ।
संदृश्येत मनुष्याणां यदा पापबलं भवेत् ॥१२-९०-१० (६८३०५)
देवाः पूजां न जानन्ति न स्वधां पितरस्तदा ।
न पूज्यन्ते ह्यतिथयो यदा पापो न वार्यते ॥१२-९०-११ (६८३०६)
न वेदानधिगच्छन्ति व्रतवन्तो द्विजातयः ।
न यज्ञांस्तन्वते विप्रा यदा पापो न वार्यते ॥१२-९०-१२ (६८३०७)
वध्यानामिव सत्वानां मनो भवति विह्वलम् ।
मनुष्याणां महाराज यदा पापो न वार्यते ॥१२-९०-१३ (६८३०८)
उभौ लोकावभिप्रेक्ष्य राजानमसृजंस्तथा ।
मुनयोऽथ महद्भूतमयं धर्मो भविष्यति ॥१२-९०-१४ (६८३०९)
यस्मिन्धर्मो विराजेत तं राजानं प्रचक्षते ।
यस्मिन्विलीयते धर्मस्तं देवा वृषलं विदुः ॥१२-९०-१५ (६८३१०)

वृषो हि भगवान्धर्मो यस्तस्य कुरुते लयम् ।
वृषलं तं वीवदुर्देवास्तस्माद्धर्मं न लोपयेत् ॥ १२-९०-१६ (६८३११)
धर्मे वर्धति वर्धन्ति सर्वभूतानि सर्वदा ।
तस्मिन्ह्रसति हीयन्ते तस्माद्धर्मं विवर्धयेत् ॥ १२-९०-१७ (६८३१२)
धनानि स्पौति धर्मो हि धारणाद्वेति निश्चयः ।
मानवान मनुष्येन्द्र स सीमान्तकरः स्मृतः ॥ १२-९०-१८ (६८३१३)
प्रभवार्थमहि भूतानां धर्मः सृष्टः स्वयंभुवा ।
तस्मात्प्रवर्धयेद्धर्मं प्रजानुग्रहकारणात् ॥ १२-९०-१९ (६८३१४)
तस्माद्धि राजशार्दूल धर्मः श्रेष्ठतरः स्मृतः ।
स राजायः प्रजाः शास्ति साधुकृत्पुरुषर्षभ ॥ १२-९०-२० (६८३१५)
कामक्रोधावनादृत्य धर्ममेवानुपालयेत् ।
धर्मः श्रेयस्करतमो राज्ञां भरतसत्तम ॥ १२-९०-२१ (६८३१६)
धर्मस्य ब्राह्मणे योनिस्तस्मात्तान्पूजयेत्सदा ।
ब्राह्मणानां च मान्धातः कुर्यात्कामानमत्सरी ॥ १२-९०-२२ (६८३१७)
तेषां ह्यकामकरणाद्राज्ञः संजायते भयम् ।
मित्राणि न च वर्धन्ते तथाऽमित्रीभवन्त्यपि ॥ १२-९०-२३ (६८३१८)
ब्राह्मणानां सदासूयन्बाल्याद्वैरोचनिर्बलिः ।
अथास्माच्छ्रीरपाक्रामद्याऽस्मिन्नासीत्प्रतापिनी ॥ १२-९०-२४ (६८३१९)
ततस्तस्मादपाक्रम्य साऽगच्छत्पाकशासनम् ।
अथ सोऽन्वतपत्पश्चाच्छ्रियं दृष्ट्वा पुरंदरे ॥ १२-९०-२५ (६८३२०)
एतत्फलमसूयाया अभिमानस्य चाभिभो ।
तस्माद्बुध्यस्व मान्धातर्मा त्वां जह्यात्प्रतापिनी ॥ १२-९०-२६ (६८३२१)
दर्पोनाम श्रियः पुत्रो जज्ञेऽधर्मादिति श्रुतिः ।
तेन देवासुरा राजन्नीताः सुबहवोऽव्ययम् ॥ १२-९०-२७ (६८३२२)
राजर्षयश्च बहवस्तथा बुध्यस्व पार्थिव ।
राजा भवति तं जित्वा दासस्तेन पराजितः ॥ १२-९०-२८ (६८३२३)
स यथा दर्पसहितमधर्मं नानुसेवते ।
तथा वर्तस्व मान्धातश्चिरं चेत्स्थातुमिच्छसि ॥ १२-९०-२९ (६८३२४)
मत्तात्प्रमत्तात्पौगण्डादुन्मत्ताच्च विशेषतः ।
निन्दिताच्चासदाचाराद्दुर्हृदां चापि सेवनात् ॥ १२-९०-३० (६८३२५)
निगृहीतादमात्याच्च स्त्रीभ्यश्चैव विशेषतः ।
पर्वताद्विषमाद्दुर्गाद्धस्तिनोऽश्वात्सरीसृपात् ॥ १२-९०-३१ (६८३२६)
एतेभ्योऽनित्ययुक्तः स्यान्नक्तं चर्यां च वर्जयेत् ।
अत्याशां चाभिमानं च दम्भं क्रोधं च वर्जयेत् ॥ १२-९०-३२ (६८३२७)
अविज्ञातासु च स्त्रीषु क्लीबासु स्वैरिणीषु च ।
परभार्यासु कन्यासु नाचरेन्मैथुनं नृप ॥ १२-९०-३३ (६८३२८)

कुलेषु पापरक्षांसि जायन्ते वर्णसंकरात् ।
अपुमांसोऽङ्गहीनाश्च स्थूलजिह्वा विचेतसः ॥ १२-९०-३४ (६८३२९)
एते चान्ये च जायन्ते यदा राजा प्रमाद्यति ।
तस्माद्राज्ञा विशेषेणं वर्तितव्यं प्रजाहिते ॥ १२-९०-३५ (६८३३०)
क्षत्रियस्य प्रमत्तस्य दोषः संजायते महान् ।
अधर्माः संप्रवर्धन्ते प्रजासंकरकारकाः ॥ १२-९०-३६ (६८३३१)
अशीते विद्यते शीतं शीते शीतं न विद्यते ।
अवृष्टिरतिवृष्टिश्च व्याधिश्चाप्याविशेत्प्रजाः ॥ १२-९०-३७ (६८३३२)
नक्षत्राण्युपतिष्ठन्ति ग्रहा घोरास्तथागते ।
उत्पाताश्चात्र दृश्यन्ते बहवो राजनाशनाः ॥ १२-९०-३८ (६८३३३)
अरक्षितात्मा यो राजा प्रजाश्चापि न रक्षति ।
प्रजाश्च तस्य क्षीयन्ते ततः सोऽनु विनश्यति ॥ १२-९०-३९ (६८३३४)
द्वावाददाते ह्येकस्य द्वयोः सुबहवोऽपरे ।
कुमार्यः संप्रलुप्यन्ते तदाहुर्नृपदूषणम् ॥ १२-९०-४० (६८३३५)
ममैतदिति नैतच्च मनुष्येष्ववतिष्ठति ।
त्यक्त्वा धर्मं यदा राजा प्रमादमनुतिष्ठित ॥ ॥ १२-९०-४१ (६८३३६)

इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि नवतितमोऽध्यायः ॥ ९०. ।

Mahabharata - Shanti Parva - Chapter Footnotes

१२-९०-१ अङ्गिराः आङ्गिरसाः ॥
१२-९०-१२ न भार्यामधिगच्छन्तीति झ ।पाठः ॥
१२-९०-१५ धर्मो धर्मपालः ॥
१२-९०-१६ कुरुते ह्यलमिति झ ।पाठः।तत्र अलं वारणमित्यर्थः।तेन वृषं लुनाति च्छिनत्तीति वृषल इति योगो दर्शितः ॥
१२-९०-१८ धर्मपदस्य द्वेधा व्युत्पत्तिमाह धनानीति ।धारणाद्वा धर्मः।सीमान्तकरः यावत्पापं तावद्यातनाकर इत्यर्थः ॥
१२-९०-२८ तं दर्पम् ॥
१२-९०-३० पौगण्डाद्बालकादज्ञादित्यर्थः ।कदम्याशादुदावर्ताद्दुर्हृदां चापीति ट।पाठः ॥
१२-९०-३२ अनित्ययुक्तः स्यात् नित्यमयुक्तः स्यादित्यर्थः ।एकचर्यां च वर्जयेदिति द।पाठः ॥
१२-९०-३४ अपुमांसः क्लीबाः ।स्थूलजिह्वा मूकाः ॥
१२-९०-३८ नक्षत्राणि धूमकेत्वादयः ॥

शन्तिपर्व-अध्यय०९१
॥ श्रीः ॥
१२.९१. अध्यायः ९१

Mahabharata - Shanti Parva - Chapter Topics
भीष्मेण युधिष्ठिरंप्रति उचथ्यमान्धातृसंवादानुवादः ॥ १.।
Mahabharata - Shanti Parva - Chapter Text

१२-९१-० (६८३३७)
उचथ्य उवाच। १२-९१-०क्ष् (५५७९)
कालवर्षी च पर्जन्यो धर्मचारी च पार्थिवः ।
संपद्यदेषा भवति सा बिभर्ति सुखं प्रजाः ॥ १२-९१-१ (६८३३८)
यो न जानाति निर्हर्तुं वस्त्राणां रजको मलम् ।
रत्नानि वा शोधयितुं यथा नास्ति तथैव सः ॥ १२-९१-२ (६८३३९)
एवमेतद्द्विजेन्द्राणां क्षत्रियाणां विशां तथा ।
शूद्रश्चतुर्थो वर्णानां नानाकर्मस्ववस्थितः ॥ १२-९१-३ (६८३४०)
कर्म शूद्रे कृषिर्वैश्ये दण्डनीतिश्च राजनि ।
ब्रह्मचर्यं तपो मन्त्राः सत्यं चापि द्विजातिषु ॥ १२-९१-४ (६८३४१)
तेषां यः क्षत्रियो वेद पात्राणामिव शोधनम् ।
शीलदोषान्विनिर्हर्तुं स पिता स प्रजापतिः ॥ १२-९१-५ (६८३४२)
कृतं त्रेता द्वापरश्च कलिश्च भरतर्षभ ।
राजवृत्तानि सर्वाणि राजैव युगमुच्यते ॥ १२-९१-६ (६८३४३)
चातुर्वर्ण्यं तथा वेदाश्चातुराश्रम्यमेव च ।
सर्वमेतत्प्रमुह्येत यदा राजा प्रमाद्यति ॥ १२-९१-७ (६८३४४)
अग्नित्रेता त्रयी विद्या यज्ञाश्च सहदक्षिणाः ।
सर्व एव प्रमुह्यन्ते यदा राजा प्रमाद्यति ॥ १२-९१-८ (६८३४५)
राजैव कर्ता भूतानां राजैव च विनाशकः ।
धर्मात्मा यः स कर्ता स्यादधर्मात्मा विनाशकः ॥ १२-९१-९ (६८३४६)
राज्ञो भार्याश्च पुत्राश्च बान्धवाः सुहृदस्तथा ।
समेत्य सर्वे शोचन्ति यदा राजा प्रमाद्यति ॥ १२-९१-१० (६८३४७)
हस्तिनोऽश्वाश्च गावश्चाप्युष्ट्राश्वतरगर्दभाः ।
अधर्मवृत्ते नृपतौ सर्वे सीदन्ति जन्तवः ॥ १२-९१-११ (६८३४८)
श्दुर्बलार्थं बलं सृष्टं धात्रा मान्धातरुच्यते ।
अबलं तु महद्भूतं यस्मिन्सर्वं प्रतिष्ठितम् ॥ १२-९१-१२ (६८३४९)

यश्च भूतं संभजते ये च भूतास्तदन्वयाः ।
अधर्मस्थे हि नृपतौ सर्वे शोचन्ति पार्थिव ॥ १२-९१-१३ (६८३५०)
दुर्बलस्य च यच्चक्षुर्मुनेराशीविषस्य च ।
अविषह्यतमं मन्ये मा स्म दुर्बलमासदः ॥ १२-९१-१४ (६८३५१)
दुर्बलांस्तात मन्येथा नित्यमेवाविमानि तान् ।
मा त्वां दुर्बलचक्षूंषि प्रदहेयुः सबान्धवम् ॥ १२-९१-१५ (६८३५२)
न हि दुर्बलदग्धस्य कुले किंचित्प्ररोहति ।
आमूलं निर्दहन्त्येव मा स्म दुर्बलमासद ॥ १२-९१-१६ (६८३५३)
अबलं वै बलाच्छ्रेयो यच्चातिबलवद्बलम् ।
बलस्याबलदग्धस्य न किंचितवशिष्यते ॥ १२-९१-१७ (६८३५४)
विमानितो हतः क्लिष्टस्त्रातारं चेन्न विन्दन्ते ।
अमानुषकृतस्तत्र दण्डो हन्ति नराधिपम् ॥ १२-९१-१८ (६८३५५)
मा स्म तात बलस्थस्त्वं भुञ्जीथा दुर्बलं जनम् ।
मा त्वां दुर्बलचक्षूंषि दहन्त्वग्निरिवाशयम् ॥ १२-९१-१९ (६८३५६)
यानि मिथ्याभिशस्तानां पतन्त्यश्रूणि रोदताम् ।
तानि पुत्रान्पशून्घ्नन्ति तेषां मिथ्याभिशंसिनां ॥ १२-९१-२० (६८३५७)
यदि नात्मनि पुत्रेषु न चेत्पौत्रेषु नप्तृषु ।
न हि पापं कृतं कर्म सद्यः फलति गौरिब ॥ १२-९१-२१ (६८३५८)
यत्राबलो वध्यमानस्त्रातारं नाधिगच्छति ।
महान्दैवकृतस्तत्र दण्डः पतति दारुणः ॥ १२-९१-२२ (६८३५९)
युक्ता यदा जानपदा भिक्षन्ते ब्राह्मणा इव ।
अभीक्ष्णं भिक्षुरूपेण राजानं घ्नन्ति तादृशाः ॥ १२-९१-२३ (६८३६०)
राज्ञो यदा जनपदे बहवो राजपूरुषाः ।
अनयेनोपवर्तन्ते तद्राज्ञः किल्बिषं महत् ॥ १२-९१-२४ (६८३६१)
यदा युक्त्या नयेदर्थान्कामादर्थवशेन वा ।
कृपणं याचमानानां तद्राज्ञो वैशसं महत् ॥ १२-९१-२५ (६८३६२)
महान्वृक्षो जायते वर्धते च
तं चैव भूतानि समाश्रयन्ति ।
यदा वृक्षश्छिद्यते दह्यते च
तदाश्रया अनिकेता भवन्ति ॥ १२-९१-२६ (६८३६३)
यदा राष्ट्रे धर्ममग्र्यं चरन्ति
संस्कारं का राजगुणं ब्रुवाणाः ।
तैश्चाधर्मश्चरितो धर्ममोहा
त्तूप जह्यात्सुकृतं दुष्कृतं च ॥ १२-९१-२७ (६८३६४)
यत्र पापा ज्ञायमानाश्चरन्ति
सभां कलिर्विन्दते तत्र राज्ञः ।

यत्र राजा शास्ति नरान्न शक्त्या
न तद्राज्यं वर्धते भूमिपस्य ॥ १२-९१-२८ (६८३६५)
यश्चामात्यान्मानयित्वा यथा हि
मन्त्रे च युद्धे च नृपोऽनुयुञ्ज्यात् ।
बिबर्धते तस्य राष्ट्रं नृपस्य
भुङ्क्ते महीं चाप्यखिलां चिराय ॥ १२-९१-२९ (६८३६६)
अत्रापि सुकृतं कर्म वाचं चैव सुभाषिताम् ।
समीक्ष्य पूजयन्राजा धर्मं प्राप्नोत्यनुत्तमम् ॥१२-९१-३० (६८३६७)
संविभज्य यदा भुङ्क्ते नचान्यानवमन्यते ।
निहन्ति बलिनं दृप्तं स राज्ञो धर्म उच्यते ॥१२-९१-३१ (६८३६८)
त्रायते हि यदा सर्वं वाचा कायेन कर्मणा ।
पुत्रस्यापि न मृष्येच्च स राज्ञो धर्म उच्यते ॥१२-९१-३२ (६८३६९)
संविभज्य यदा भुङ्क्ते नृपतिर्दुर्बलान्नरान् ।
तदा भवन्ति बलिनः स राज्ञो धर्म उच्यते ॥१२-९१-३३ (६८३७०)
यदा रक्षति राष्ट्राणि यदा दस्यूनपोहति ।
यदा जयति संग्रामे स राज्ञो धर्म उच्यते ॥१२-९१-३४ (६८३७१)
पापमाचरतो यत्र कर्मणा व्याहृतेन वा ।
प्रियस्यापि न मृष्येत स राज्ञो धर्म उच्यते ॥१२-९१-३५ (६८३७२)
यदा सारणिकान्राजा पुत्रवत्परिरक्षति ।
भिनत्ति न च मर्यादां स राज्ञो धर्म उच्यते ॥१२-९१-३६ (६८३७३)
यदाप्तदक्षिणैर्यज्ञैर्यजते श्रद्धयाऽन्वितः ।
कामद्वेषावनादृत्य स राज्ञो धर्म उच्यते ॥१२-९१-३७ (६८३७४)
कृपणानाथवृद्धानां यदाऽश्रु परिमार्जति ।
हर्षं संजनयन्नृणां स राज्ञो धर्म उच्यते ॥१२-९१-३८ (६८३७५)
विवर्धयति मित्राणि तथाऽरींश्चापि कर्षति ।
संपूजयति साधूंश्च स राज्ञो धर्म उच्यते ॥१२-९१-३९ (६८३७६)
सत्यं पालयति प्रीत्या नित्यं भूमिं प्रयच्छति ।
पूजयेदतिथीन्भृत्यान्स राज्ञो धर्म उच्यते ॥१२-९१-४० (६८३७७)
निग्रहानुग्रहौ चोभौ यत्र स्यातां प्रतिष्ठितौ ।
अस्मिँल्लोके परे चैव राजा स प्राप्नुते फलम् ॥१२-९१-४१ (६८३७८)
यमो राजा धार्मिकाणां मान्धातः परमेश्वरः ।
संयच्छन्यमवत्प्राणानसंयच्छंस्तु पावकः ॥१२-९१-४२ (६८३७९)
ऋत्विक्पुरोहिताचार्यान्सत्कृत्यानवमत्य च ।
यदा सम्यक्प्रगृह्णाति स राज्ञो धर्म उच्यते ॥१२-९१-४३ (६८३८०)
यमो यच्छति भूतानि सर्वाण्येवाविशेषतः ।
तथा राज्ञाऽनुकर्तव्यं यन्तव्या विधिवत्प्रजाः ॥१२-९१-४४ (६८३८१)

सहस्राक्षेण राजा हि सर्वथैवोपमीयते ।
स पश्यति च यं धर्मं स धर्मः पुरुषर्षभ ॥ १२-९१-४५ (६८३८२)
अप्रमादेन शिक्षेथाः क्षमां बुद्धिं धृतिं मतिम् ।
भूतानां तत्त्वजिज्ञासा साध्वसाधु च सर्वदा ॥ १२-९१-४६ (६८३८३)
संग्रहः सर्वभूतानां दानं च मधुरा च वाक् ।
पौरजानपदाश्चैव गोप्तव्याः स्वप्रजा यथा ॥ १२-९१-४७ (६८३८४)
न जात्वदक्षो नृपतिः प्रजाः शक्नोति रक्षितुम् ।
भारो हि सुमहांस्तात राज्यं नाम सुदुर्वहम् ॥ १२-९१-४८ (६८३८५)
तद्दण्डविन्नृपः प्राज्ञः शूरः शक्नोति रक्षितुम् ।
न हि शक्यमदण्डेन क्लीबेनाबुद्धिनाऽपि वा ॥ १२-९१-४९ (६८३८६)
अभिरूपैः कुले जातैर्दक्षैर्भक्तैर्बहुश्रुतैः ।
सर्वं बुद्ध्या परीक्षेथास्तापसाश्रमिणामपि ॥ १२-९१-५० (६८३८७)
अतस्त्वं सर्वभूतानां धर्मं वेत्स्यसि वै परम् ।
स्वदेशे परदेशे वा न ते धर्मो विनङ्क्ष्यति ॥ १२-९१-५१ (६८३८८)
धर्मेचार्थे च कामे च धर्म एवोत्तरो भवेत् ।
अस्मिंल्लोके परे चैव धर्मात्मा सुखमेधते ॥ १२-९१-५२ (६८३८९)
त्यजन्ति दारान्पुत्रांश्च मनुष्याः परिपूजिताः ।
संग्रहश्चैव भूतानां दानं च मधुरा च वाक् ॥ १२-९१-५३ (६८३९०)
अप्रमादश्च शौचं च राज्ञो भूतिकरं महत् ।
एतेभ्यश्चैव मान्धातः सततं मा प्रमादिथाः ॥ १२-९१-५४ (६८३९१)
अप्रमत्तो भवेद्राजा छिद्रदर्शी परात्मनोः ।
नास्य च्छिद्रं परः पश्येच्छिद्रेषु परमन्वियात् ॥ १२-९१-५५ (६८३९२)
एतद्वृत्तं वासवस्य यमस्य वरुणस्य च ।
राजर्षीणां च सर्वेषां तत्त्वमप्यनुपालय ॥ १२-९१-५६ (६८३९३)
तत्कुरुष्व महाराज वृत्तं राजर्षिसेवितम् ।
आतिष्ठ दिव्यं पन्थानमह्नाय पुरुषर्षभ ॥ १२-९१-५७ (६८३९४)
धर्मवृत्तं हि राजानं प्रेत्य चेह च भारत ।
देवर्षिपितृगन्धर्वाः कीर्तयन्ति महौजसः ॥ १२-९१-५८ (६८३९५)
भीष्म उवाच। १२-९१-५९क्ष् (५५८०)
स एवमुक्तो मान्धाता तेनोचथ्येन भारत ।
कृतवानविशङ्कश्च एकः प्राप च मेदिनीम् ॥ १२-९१-५९ (६८३९६)
भवानपि तथा सम्यङ्भान्धातेव महीपते ।
धर्मं कृत्वा महीं रक्ष स्वर्गे स्थानमवाप्स्यसि ॥ ॥ १२-९१-६० (६८३९७)

इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि
एकनवतितमोऽध्यायः ॥ ९१.।

१२-९१-३ द्विजादीनां मध्ये यः कश्चिन्छूद्रो वा नानाकर्मस्ववस्थितः स्वकर्मच्युतो मूढः एवं रजकतुल्य इत्यर्थः ॥
१२-९१-८ अग्नित्रेता वह्नित्रयम् ॥
१२-९१-१२ अबलस्य पालनान्महत्पुण्यमपालनाच्च महत्पापमित्यर्थः ।१२-९१-१३ भूतं दुर्बलं संभजतेऽन्नादिना सेवते। तदन्वयाः दातृसंबन्धिनः ॥
१२-९१-२१ यदि आत्मनि फलं पाप न फलति तर्हि पुत्रादिषु फलति नतु सद्यः फलतीत्यर्थः ॥
१२-९१-२२ मोहाद्दैवकृत इति ड ।थ। पाठः ॥
१२-९१-२५ नयेत् अपहरेत् ॥
१२-९१-२७ महानिति दृष्टान्तमुक्त्वा दार्ष्टान्तिकमाह यदेति ।यदा धर्मं चरति तदा राजा वर्धत इति भावः। दुष्कृतं चापयातीत्यर्थः। राजपुत्रं ब्रुवाणा इति ट। ड। थ। पाठः ॥
१२-९१-२८ यदा राज्ञा शास्ति नरानशिष्टांस्तदा राज्यं वर्धते भूमिपस्येति झ ।पाठः ॥
१२-९१-३१ नामात्यानवमन्यत इति झ ।पाठः ॥
१२-९१-३३ संविभज्य यदा भुङ्क्ते नृपतिर्यदि पार्थिव ।दुर्बलानां बलं चैवेति ट। ड।छ। पाठः ॥
१२-९१-३६ सारणिकान् प्रसारिणीप्रधानान्वणिजः ॥
१२-९१-४२ धार्मिकाणं परमेश्वरोऽनुग्राहकः ।प्राणान् इन्द्रियाणि संयच्छन्भवेत्। अनियच्छंस्तु पावकः स्वाश्रयदाही भवतीत्यर्थः ॥
१२-९१-५० अमिरूपैरमात्यैः सहेति शेषः ॥
१२-९१-५४ प्रमादिथाः प्रमाद्येषाः ॥

---

शन्तिपर्व-अध्यय०९२
॥ श्रीः ॥
१२.९२. अध्यायः ९२

Mahabharata - Shanti Parva - Chapter Topics
भीष्मेण युधिष्ठिरंप्रति वामदेवसुमनस्संवादानुवादः ॥१.।
Mahabharata - Shanti Parva - Chapter Text

१२-९२-० (६८३९८)
युधिष्ठिर उवाच। १२-९२-०क्ष् (५५८१)
कथं धर्मे स्थातुमिच्छन्राजा वर्तेत भारत ।

पृच्छामि त्वां कुरुश्रेष्ठ तन्मे ब्रूहि पितामह ॥ १२-९२-१ (६८३९९)
भीष्म उवाच। १२-९२-२क्ष् (५५८२)
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
गीतं दृष्टार्थतत्त्वेन वामदेवेन धीमता ॥ १२-९२-२ (६८४००)
राजा वसुमना नाम कौसल्यो बलवाञ्शुचिः ।
महर्षिं परिपप्रच्छ वामदेवं तपस्विनम् ॥ १२-९२-३ (६८४०१)
धर्मार्थसहितैर्वाक्यैर्भगवन्ननुशाधि माम् ।
येन वृत्तेन वै तिष्ठन्न च्यवेयं स्वधर्मतः ॥ १२-९२-४ (६८४०२)
तमब्रवीद्वामदेवस्तेजस्वी तपतां वरः ।
हेमवर्णं सुखासीनं ययातिमिव नाहुषम् ॥ १२-९२-५ (६८४०३)
वामदेव उवाच। १२-९२-६क्ष् (५५८३)
धर्ममेवानुवर्तस्व न धर्माद्विद्यते परम् ।
धर्मे स्थिता हि राजानो जयन्ति पृथिवीमिनाम् ॥ १२-९२-६ (६८४०४)
अर्थसिद्धेः परं धर्मं मन्यते यो महीपतिः ।
वृद्ध्यां च कुरुते बृद्धिं स धर्मेण विराजते ॥ १२-९२-७ (६८४०५)
अधर्मदर्शी यो राजा बलादेव प्रवर्तते ।
क्षिप्रमेवापयातोऽस्मादुभौ प्रथममध्यमौ ॥ १२-९२-८ (६८४०६)
असत्पापिष्ठसचिवो वध्यो लोकस्य धर्महा ।
सहैव परिवारेण क्षिप्रमेवावसीदति ॥ १२-९२-९ (६८४०७)
अर्थानामननुष्ठाता कामचारी विकत्थनः ।
अपि सर्वां महीं लब्ध्वा क्षिप्रमेव विनश्यति ॥ १२-९२-१० (६८४०८)
अथाददानः कल्याणमनसूयुर्जितेन्द्रियः ।
वर्धते मतिमान्राजा स्रोतोभिरिव सागरः ॥ १२-९२-११ (६८४०९)
न पूर्णोऽस्मीति मन्येत धर्मतः कामतोऽर्थतः ।
बुद्धितो मन्त्रतश्चापि सततं वसुधाधिप ॥ १२-९२-१२ (६८४१०)
एतेष्वेव हि सर्वेषु लोकयात्रा प्रतिष्ठिता ।
एतानि शृण्वँल्लभते यशः कीर्तिं श्रियं प्रजाः ॥ १२-९२-१३ (६८४११)
एवं यो धर्मसंरम्भी धर्मार्थपरिचिन्तकः ।
अर्थान्परीक्ष्यारभते स ध्रुवं महदश्नुते ॥ १२-९२-१४ (६८४१२)
अदाता ह्यनभिस्नेहो दण्डेनावर्तयन्प्रजाः ।
साहसप्रकृती राजा क्षिप्रमेव विनश्यति ॥ १२-९२-१५ (६८४१३)
अथ पापं कृतं बुद्ध्या न च पश्यत्यबुद्धिमान् ।
अकीर्त्याऽभिसमायुक्तो भूयो नरकमश्नुते ॥ १२-९२-१६ (६८४१४)
ततो न याचितुर्दातुः शुक्लस्य रसवेदिनः ।
व्यसनं स्वमिवोत्पन्नं विजिघांसन्ति मानवाः ॥ १२-९२-१७ (६८४१५)
यस्य नास्ति गुरुर्धर्मे न चान्यानपि पृच्छति ।

सुखतन्त्रोऽर्थलाभेषु न चिरं सुखमश्नुते ॥ १२-९२-१८ (६८४१६)
गुरुप्रधानो धर्मेषु स्वयमर्थानवेक्षिता ।
धर्मप्रधानो लाभेषु स चिरं सुखमश्नुते ॥ ॥ १२-९२-१९ (६८४१७)

इति श्रीमन्महाभारते शान्तिपर्वमि राजधर्मपर्वणि
द्विनवतितमोऽध्यायः ॥ ९२.।
Mahabharata - Shanti Parva - Chapter Footnotes

१२-९२-८ उभौ धर्मार्थौ ॥
१२-९२-९ असन्तो दुष्टाः ॥
१२-९२-१३ एतेषु धर्मादिषु ॥

---

शन्तिपर्व-अध्यय०९३
॥ श्रीः ॥
१२.९३. अध्यायः ९३

Mahabharata - Shanti Parva - Chapter Topics
भीष्मेण युधिष्ठिरंप्रति वामदेवसुमनस्संवादानुवादः ॥ १.।
Mahabharata - Shanti Parva - Chapter Text

१२-९३-० (६८४१८)
वामदेव उवाच। १२-९३-०क्ष् (५५८४)
यत्राधर्मं प्रणयते दुर्बले बलवत्तरः ।
तां वृत्तिमुपजीवन्ति ये भवन्ति तदन्वयाः ॥ १२-९३-१ (६८४१९)
राजानमनुवर्तन्ते तं पापाभिप्रवर्तकम् ।
अविनीतमनुष्यं तत्क्षिप्रं राष्ट्रं विनश्यति ॥ १२-९३-२ (६८४२०)
यद्वृत्तमुपजीवन्ति प्रकृतिस्थस्य मानवाः ।
तदेव विषमस्थस्य स्वजनोऽपि न मृष्यते ॥ १२-९३-३ (६८४२१)
साहसप्रवृत्ते यत्र किंचिदुल्वणमाचरेत् ।
अशास्त्रलक्षणो राजा क्षिप्रमेव विनश्यति ॥ १२-९३-४ (६८४२२)
सद्वृत्ताचरितां वृत्तिं क्षत्रियो नानुवर्तते ।
जितानामजितानां च क्षत्रधर्मादपैति सः ॥ १२-९३-५ (६८४२३)
द्विषन्तं कृतकल्याणं गृहीत्वा नृपतिं रणे ।
यो न नयते द्वेषात्क्षत्रधर्मादपैति सः ॥ १२-९३-६ (६८४२४)
शक्तः आत्सुसुखो राजा कुर्यात्तारणमापदि ।
प्रियो अति भूतानां न च विभ्रश्यते श्रियः ॥ १२-९३-७ (६८४२५)
अप्रियं यस्य कुर्वीत भूयस्तस्य प्रियं चरेत् ।

अचिरेण प्रियः स स्याद्योऽप्रिये प्रियमाचरेत् ॥१२-९३-८ (६८४२६)
मृषावादं परिहरेत्कुर्यात्प्रियमयाचितः ।
न कामान्न च संरम्भान्न द्वेषाद्धर्ममुत्सृजेत् ॥१२-९३-९ (६८४२७)
ग्अमाययैव वर्तेत न च सत्यं त्यजेद्बुधः ।
दमं धर्मं च शीलं च क्षत्रधर्मं प्रजाहितम् ॥' १२-९३-१० (६८४२८)
नापत्रपेत प्रश्नेषु नाभिभाविगिरं सृजेत् ।
न त्वरेत न चासूयेत्तथा संगृह्यते परः ॥१२-९३-११ (६८४२९)
प्रिये नातिभृशं हृष्येदप्रिये न च संज्वरेत् ।
न तप्येदर्थकृच्छ्रेषु प्रजाहितमनुस्मरन् ॥१२-९३-१२ (६८४३०)
यः प्रियं कुरुते नित्यं गुणतो वसुधाधिपः ।
तस्य कर्माणि सिद्ध्यन्ति न च संत्यज्यते श्रिया ॥१२-९३-१३ (६८४३१)
निवृत्तं प्रतिकूलेभ्यो वर्तमानमनुप्रिये ।
भक्तं भजेत नृपतिस्तद्धि वृत्तं सतामिह ॥१२-९३-१४ (६८४३२)
अप्रकीर्णेन्द्रियग्राममत्यन्तानुगतं शुचिम् ।
शक्तं चैवानुरक्तं च युञ्ज्यान्महति कर्मणि ॥१२-९३-१५ (६८४३३)
ग्श्रेयसो लक्षणं चैतद्विक्रमो यत्र दृश्यते ।
कीर्तिप्रधानो यश्च स्यात्समये यश्च तिष्ठति ।
समर्थान्पूजयेद्यश्च न च स्पर्धेत यश्चतैः ॥ १२-९३-१६ (६८४३४)
एवमेतैर्गुणैर्युक्तो योऽनुरज्यति भूमिपम् ।
भर्तुरर्थेष्वप्रमत्तं नियुञ्ज्यादर्थकर्मणि ॥१२-९३-१७ (६८४३५)
मूढमैन्द्रियकं लुब्धमनार्यचरितं शठम् ।
अनतीतोपधं हिंस्रं दुर्बुद्धिमबहुश्रुतम् ॥१२-९३-१८ (६८४३६)
त्यक्तोपात्तं मद्यरतं द्यूतस्त्रीमृगयापरम् ।
कार्ये महति युञ्जानो हीयते नृपतिः श्रिया ॥१२-९३-१९ (६८४३७)
रक्षितात्मा च यो राजा रक्ष्यान्यश्चानुरक्षति ।
प्रजाश्च तस्य वर्धन्ते सुखं च महदश्नुते ॥१२-९३-२० (६८४३८)
ये केचिद्भूमिपतयः सर्वांस्तानन्ववेक्षयेत् ।
सुहृद्भिरनभिख्यातैस्तेन राजा न रिष्यते ॥१२-९३-२१ (६८४३९)
अपकृत्य बलस्थस्व दूरस्थोऽस्मीति नाश्वसेत् ।
श्येनाभिपतनैरेते निपतन्ति प्रमाद्यतः ॥१२-९३-२२ (६८४४०)
दृढमूलस्त्वदुष्टात्मा विदित्वा बलमात्मनः ।
अबलानभियुञ्जीत न तु ये बलवत्तराः ॥१२-९३-२३ (६८४४१)
विक्रमेण महीं लब्ध्वा प्रजा धर्मेण पालयेत् ।
आहवे निधनं कुर्याद्राजा धर्मपरायणः ॥१२-९३-२४ (६८४४२)
मरणान्तमिदं सर्वं नेह किंचिदनामयम् ।
तस्माद्धर्मे स्थितो राजा प्रजा धर्मेम पालयेत् ॥१२-९३-२५ (६८४४३)

रक्षाधिकरणं युद्धं तथा धर्मानुशासनम् ।
मन्त्रचिन्ता सुखं काले पञ्चभिर्वर्धते मही ॥ १२-९३-२६ (६८४४४)
एतानि यस्य गुप्तानि स राजा राजसत्तम ।
सततं वर्तमानोऽत्र राजा भुङ्क्ते महीमिमाम् ॥ १२-९३-२७ (६८४४५)
नैतान्येकेन शक्यानि सातत्येनानुवीक्षितुम् ।
एतेष्वाप्तान्प्रतिष्ठाप्य राजा भुङ्क्ते चिरं महीम् ॥ १२-९३-२८ (६८४४६)
दातारं संविभक्तारं मार्दवोपगतं शुचिम् ।
असंत्यक्तमनुष्यं च तं जनाः कुर्वते नृपम् ॥ १२-९३-२९ (६८४४७)
यस्तु नैःश्रेयसं श्रुत्वा ज्ञानं तत्प्रतिपद्यते ।
आत्मनो मतमुत्सृज्य तं लोकोऽनुविधीयते ॥ १२-९३-३० (६८४४८)
योऽर्थकामस्य वचनं प्रातिकूल्यान्न मृष्यते ।
शृणोति प्रतिकूलानि सर्वदा विमना इव ॥ १२-९३-३१ (६८४४९)
अग्राम्यचरितां वृत्तिं यो न सेवेत नित्यदा ।
जितानामजितानां च क्षत्रधर्मादपैति सः ॥ १२-९३-३२ (६८४५०)
शनिगृहीतादमात्याच्च स्त्रीभ्यश्चैव विशेषतः ।
पर्वताद्विषमाद्दुर्गाद्धस्तिनोऽश्वात्सरीसृपात् ।
एतेभ्यो नित्ययुक्तः सन्रक्षेदात्मानमेव तु ॥ १२-९३-३३ (६८४५१)
मुख्यानमात्यान्यो हित्वा निहीनान्कुरुते प्रियान् ।
स वै व्यसनमासाद्य साधुमार्गं न विन्दति ॥ १२-९३-३४ (६८४५२)
यः कल्याणगुणाञ्ज्ञातीन्प्रद्वेषान्नो बुभूषति ।
अदृढात्मा दृढक्रोधः नास्यार्थो वसतेऽन्तिके ॥ १२-९३-३५ (६८४५३)
अथ यो गुणसंपन्नान्हृदयस्य प्रियानपि ।
प्रियेण कुरुते वश्यांश्चिरं यशसि तिष्ठति ॥ १२-९३-३६ (६८४५४)
नाकाले प्रणयेदर्थान्नाप्रिये जातु संज्वरेत् ।
प्रिये नातिभृशं तुष्येद्युञ्जीतारोग्यकर्मणि ॥ १२-९३-३७ (६८४५५)
के वाऽनुरक्ता राजानः के भयात्समुपाश्रिताः ।
मध्यस्थदोषाः के चैषामिति नित्यं विचिन्तयेत् ॥ १२-९३-३८ (६८४५६)
न जातु बलवान्भूत्वा दुर्बले विश्वसेत्क्वचित् ।
भारुण्डसदृशा ह्येते निपतन्ति प्रमाद्यतः ॥ १२-९३-३९ (६८४५७)
अपि सर्वगुणैर्युक्तं भर्तारं प्रियवादिन ।
अभिद्रुह्यति पापात्मा न तस्माद्विश्वसेज्जनान् ॥ १२-९३-४० (६८४५८)
एतद्राजोपनिषदं ययातिः स्माह नाहुषः ।
मनुष्यविषये युक्तो हन्ति शत्रून्सवासवान् ॥ ॥ १२-९३-४१ (६८४५९)

इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि
त्रिनवतितमोऽध्यायः ॥ ९३ ॥

१२-९३-१ यत्र राष्ट्रे । प्रणयते आरोपयति ॥
१२-९३-२ अनुवर्तन्तेऽन्ये ॥
१२-९३-३ प्रकृतिः स्वधर्मः । विषमः कुमार्गः ॥
१२-९३-५ जित्तानामापन्नानाम् । अजितानां स्वस्थानाम् ॥
१२-९३-६ कृतकल्याणं प्रागुपकारं कृतवन्तम् ॥
१२-९३-१२ प्रियं भृत्यादीनाम् ॥
१२-९३-१७ अनुरज्यत्यनुरञ्जयति । एवमेव गुणैर्युक्तो यो न रक्षति भूमिपम्। भर्तुरर्थेष्वसूयन्तं न तं युञ्जीत कर्मणि इति ड थ पाठः ॥
१२-९३-२१ सुहृद्भिश्चारैः । अनभिख्यातैः स्वेषां परेषां चाविदितैः ॥
१२-९३-२६ रक्षाधिकरणं दुर्गादि । सुखं सुखप्रदानम् ॥
१२-९३-२७ गुप्तानि मुरक्षितानि ॥
१२-९३-३२ अग्राम्यैर्बुद्धिमद्भिः । वृत्तिं लाभोपायम् ॥
१२-९३-४१ राजोपनिषदं राज्ञां रहस्यविद्याम् ॥

---

शन्तिपर्व-अध्यय०९४
॥ श्रीः ॥
१२.९४. अध्यायः ९४

Mahabharata - Shanti Parva - Chapter Topics
भीष्मेण युधिष्ठिरंप्रति वसुमनसे वामदेवोक्तराजधर्मकथनम् ॥ १.।
Mahabharata - Shanti Parva - Chapter Text

१२-९४-० (६८४६०)
वामदेव उवाच। १२-९४-०क्ष् (५५८५)
अयुद्धेनैव विजयं वर्धयेद्वसुधाधिपः ।
जघन्यमाहुर्विजयं युद्धेन च नराधिप ॥ १२-९४-१ (६८४६१)
न चाप्यलब्धं लिप्सेत मूले नातिदृढे सति ।
न हि दुर्बलमूलस्य राज्ञो लाभो विवर्धते ॥ १२-९४-२ (६८४६२)
यस्य स्फीतो जनपदः संपन्नप्रियराजकः ।
संतुष्टः पुष्टसचिवो दृढमूलः स पार्थिवः ॥ १२-९४-३ (६८४६३)
यस्य योधाः सुसंतुष्टाः स्वनुरक्ताः सुपूजिताः ।
अल्पेनापि स दण्डेन महीं जयति पार्थिवः ॥ १२-९४-४ (६८४६४)
ग्दण्डो हि बलवान्यत्र तत्र साम प्रयुज्यते ।

प्रदानं सामपूर्वं च भेदमूलं प्रशस्यते ॥१२-९४-५ (६८४६५)
त्रयाणां विफलं कर्म यदा पश्येत भूमिपः ।
रन्ध्रं ज्ञात्वा ततो दण्डं प्रयुञ्जीताविचारयन् ॥१२-९४-६ (६८४६६)
अभिभूतो यदा शत्रुः शत्रुभिर्बलवत्तरैः ।
उपेक्षा तत्र कर्तव्या वध्यता बलिनां बलम् ॥१२-९४-७ (६८४६७)
दुर्बलो हि महीपालो यदा भवति भारत ।
उपेक्षा तत्र कर्तव्या चतुर्णामविरोधीनि ।
उपायः पञ्चमः सोऽपि सर्वेषां बलवत्तरः ॥ १२-९४-८ (६८४६८)
भार्गवेण च गीतानां श्लोकानां कोसलाधिप ।
विज्ञाय तत्वं तत्वज्ञ तत्वतस्तत्करिष्यति ॥१२-९४-९ (६८४६९)
यदि रक्षःपिशाचेन हन्यते यत्रकुत्रचित् ।
उपेक्षा तत्र कर्तव्या वाच्यतां बलिनां बलम् ॥१२-९४-१० (६८४७०)
दुर्बलोऽपि महीपाल शत्रूणां शत्रुमुद्धरेत् ।
पादलग्नं करस्थेन कण्टकेनैव कण्टकम् ॥१२-९४-११ (६८४७१)
शठानां उचिवानां च म्लेच्छानां च महीपते ।
एष उक्त उपायानामुपेक्षा बलवत्तम ॥१२-९४-१२ (६८४७२)
अश्मना नाशयेल्लोहं लोहेनाश्मानमेव तु ।
बिल्वानि वा परैर्बिल्वैर्म्लेच्छैर्म्लेच्छान्प्रसादयेत् ॥१२-९४-१३ (६८४७३)
दासानां च प्रदृप्तानामेतदेव हि कारयेत् ।
चण्डालम्लेच्छजातीनां दण्डेनैव निवारणम् ।
शठानां दुर्विनीतैश्च पूर्वमुक्तं समाचरेत् ॥ १२-९४-१४ (६८४७४)
अन्त्याः शठाश्च सचिवास्तथा कुब्राह्मणादयः ।
उपायैः पञ्चभिः साध्याश्चतुर्वर्गविरोधिनः ॥१२-९४-१५ (६८४७५)
पौरजानपदा यस्य स्वनुरक्ता अपीडिताः ।
राष्ट्रकर्मकरा ह्येते राष्ट्रस्य च विरोधिनः ॥१२-९४-१६ (६८४७६)
दुर्विनीता विनीताश्च सर्वे साध्याः प्रयत्नतः ।
चण्डालम्लेच्छजात्याश्च पाषण्डाश्च विकर्मिणः ।
बलिनश्चाश्रमाश्चैव तथा गायकनर्तकाः ॥' १२-९४-१७ (६८४७७)
पौरजानपदा यस्य भूतेषु च दयालवः ।
सधना धान्यवन्तश्च दृढमूलः स पार्थिवः ॥१२-९४-१८ (६८४७८)
प्रतापकालमधिकं यदा मन्येत चात्मनः ।
तदा लिप्सेत मेधावी परभूमिधनान्युत ॥१२-९४-१९ (६८४७९)
भोगेषूदयमानस्य भूतेषु च दयावतः ।
वर्धते त्वरमाणस्य विषयो रक्षितात्मनः ॥१२-९४-२० (६८४८०)
तक्षेदात्मानमेवं स वनं परशुना यथा ।
यः सम्यग्वर्तमानेषु स्वेषु मिथ्या प्रवर्तते ॥१२-९४-२१ (६८४८१)

नैव द्विषन्तो हीयन्ते राज्ञो नित्यमनिघ्नतः ।
क्रोधं निहन्तुं यो वेद तस्य द्वेष्टा न विद्यते ॥१२-९४-२२ (६८४८२)
यदार्यजनविद्विष्टं कर्म तन्नाचरेद्बुधः ।
यत्कल्याणमभिध्यायेत्तत्रात्मानं नियोजयेत् ॥१२-९४-२३ (६८४८३)
नैवमन्येऽवजानन्ति नात्मना परितप्यते ।
कृत्यशेषेण यो राजा सुखान्यनुबुभूषति ॥१२-९४-२४ (६८४८४)
इदं वृत्तं मनुष्येषु वर्तते यो महीपतिः ।
उभौ लोकौ विनिर्जित्य विजये संप्रतिष्ठते ॥१२-९४-२५ (६८४८५)
भीष्म उवाच।१२-९४-२६क्ष् (५५८६)
इत्युक्तो वामदेवेन सर्वं तत्कृतवान्नृपः ।
तथा कुर्वंस्त्वमप्येतौ लोकौजेता न संशयः ॥ ॥१२-९४-२६ (६८४८६)

इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि
चतुर्नवतितमोऽध्यायः ॥९४.।
Mahabharata - Shanti Parva - Chapter Footnotes

१२-९४-२ नातिदृढे अनतिदृढे ॥
१२-९४-४ दण्डेन सैन्येन ॥
१२-९४-२४ कृत्यशेषेण परकृत्यं कास्त्न्र्येन न समापयेत् ।समापिते
तु परोऽवमृन्यते स्वस्य च तापो भवतीत्यर्थः ॥
१२-९४-२६ नृपो वसुमनाः ॥

---

शन्तिपर्व-अध्यय०९५
॥श्रीः ॥
१२.९५. अध्यायः ९५

Mahabharata - Shanti Parva - Chapter Topics
भीष्मेण युधिष्ठिरंप्रति युद्धधर्मकथनम् ॥१.।
Mahabharata - Shanti Parva - Chapter Text

१२-९५-० (६८४८७)
युधिष्ठिर उवाच।१२-९५-०क्ष् (५५८७)
अथ यो विजिगीषेत क्षत्रियः क्षत्रियं युधि ।
कस्तस्य विजये धर्मो ह्येतं पृष्टो ब्रवीहि मे ॥१२-९५-१ (६८४८८)
भीष्म उवाच।१२-९५-२क्ष् (५५८८)
ससहायोऽसहायो वा राष्ट्रमागम्य भूमिपः ।
ब्रूयादहं यो राजेति रक्षिष्यामि च वः सदा ॥१२-९५-२ (६८४८९)

मम धर्मबलिं दत्त किंवा मां प्रतिपत्स्यथ ।
ते चोक्तमागतं तत्र घृणीयुः कुशलं भवेत् ॥ १२-९५-३ (६८४९०)
ते चेदक्षत्रियाः सन्तो विरुध्येरन्कथंचन ।
सर्वोपायैर्नियन्तव्या विकर्मस्था नराधिप ॥ १२-९५-४ (६८४९१)
अशस्त्रं क्षत्रियं मत्वा शस्त्रं गृह्णात्यथापरः ।
त्राणायाप्यसमर्थं तं मन्यमानमतीव च ॥ १२-९५-५ (६८४९२)
युधिष्ठिर उवाच। १२-९५-६क्ष् (५५८९)
अथः यः क्षत्रियो राजा क्षत्रियं प्रत्युपाव्रजेत् ।
कथं संप्रतियोद्धव्यस्तन्मे ब्रूहि पितामह ॥ १२-९५-६ (६८४९३)
भीष्म उवाच। १२-९५-७क्ष् (५५९०)
नासन्नह्यो नाकवचो योद्धव्यः क्षत्रियो रणे ।
एक एकेन भाव्यश्च विसृजेति क्षिपामि च ॥ १२-९५-७ (६८४९४)
स चेत्सन्नद्ध आगच्छेत्सन्नद्धव्यं ततो भवेत् ।
स चेत्ससैन्य आगच्छेत्ससैन्यस्तमथाह्वयेत् ॥ १२-९५-८ (६८४९५)
स चेन्निकृत्या युध्येत निकृत्या प्रतियोधयेत् ।
अथ चेद्धर्मतो युध्येद्धर्मेणैव निवारयेत् ॥ १२-९५-९ (६८४९६)
नाश्वेन रथिनं यायादुदियाद्रथिनं रथी ।
व्यसने न प्रहर्तव्यं न भीताय जिताय च ॥ १२-९५-१० (६८४९७)
नेषुर्लिप्तो न कर्णी स्यादसतामेतदायुधम् ।
यथार्थमेव योद्धव्यं न क्रुद्ध्येत जिघांसतः ॥ १२-९५-११ (६८४९८)
ग्नास्त्येकस्य गजो युद्धे गजश्चेकस्य विद्यते ।
न पदातिर्गजं युध्येन्न गतेन पदातिनम् ॥ १२-९५-१२ (६८४९९)
हस्तिना योधयेन्नागं कदाचिच्छिक्षितो हयः ।
दिव्यास्त्रबलसंपन्नः कामं युध्येत सर्वदा ।
नागे भूमौ समे चैव रथेनाश्वेन वा पुनः ॥ १२-९५-१३ (६८५००)
रामरावणयोर्युद्धे हरयो वै पदातयः ।
लक्ष्मणश्च महाभागस्तथा राजन्विभीषणः ॥ १२-९५-१४ (६८५०१)
रावणस्यान्तकाले च रथेनैन्द्रेण राधवः ।
निजघान दुराचारं रावणं पापकारिणम् ॥ १२-९५-१५ (६८५०२)
दिव्यास्त्रबलसंपन्ने सर्वमेतद्विधीयते ।
देवासुरेषु सर्वेषु दृष्टमेतत्पुरातनैः ॥' १२-९५-१६ (६८५०३)
श्साधूनां तु यदा भेदात्साधुश्चेद्व्यसनी भवेत् ॥
निष्प्राणो नाभिहन्तव्यो नानपत्यः कथंचन ।
भग्नशस्त्रो विपन्नश्च कृत्तज्यो हतवाहनः। १२-९५-१७ (६८५०४)
चिकित्स्यः स्यात्स्वविषये प्राप्यो वा स्वगृहे भवेत् ।
निर्व्रणश्च स भोक्तव्य एष धर्मः सनातनः ॥ १२-९५-१८ (६८५०५)

तस्माद्धर्मेण योद्धव्यमिति स्वायंभुवोऽब्रवात् ।
सत्सु नित्यः सतां धर्मस्तमास्थाय न नाशयेत् ॥ १२-९५-१९ (६८५०६)
यो वै जयत्यधर्मेण क्षत्रियो धर्मसंगरः ।
आत्मानमात्मना हन्ति पापो निकृतिजीवनः ॥ १२-९५-२० (६८५०७)
कर्म चैतदसाधूनां साधून्योऽसाधुना जयेत् ।
धर्मेण निधनं श्रेयो न जयः पापकर्मणा ॥ १२-९५-२१ (६८५०८)
नाधर्मश्चरितो राजन्सद्यः फलति गौरिव ।
मूलानि च प्रशाखाश्च दहन्समधिगच्छते ॥ १२-९५-२२ (६८५०९)
पापेन कर्मणा वित्तं लब्ध्वा पापः प्रहृष्यति ।
स वर्धमानस्तेनैव पापः पापे प्रसज्जति ॥ १२-९५-२३ (६८५१०)
न धर्मोऽस्तीति मन्वानः शुचीनवहसन्निव ।
अश्रद्दधानश्च भवेद्विनाशमुपगच्छति
स बद्धो वारुणैः पाशैरमर्त्यैरवमन्यते। १२-९५-२४ (६८५११)
महादृतिरिवाध्मातः स्वकृतेनैव वर्धते ।
ततः समूलो ह्रियते नदीकूलादिव द्रुमा ॥ १२-९५-२५ (६८५१२)
अथैनमभिनिन्दन्ति भिन्नं कुम्भमिवाश्यानि ।
तस्माद्धर्मेण विजयं कोशं लिप्सेत भूमिपः ॥ ॥ १२-९५-२६ (६८५१३)

इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि
पञ्चनवतितमोऽध्यायः ॥ ९५.।
Mahabharata - Shanti Parva - Chapter Footnotes

१२-९५-२ राष्ट्रं परकीयम् ॥
१२-९५-५ त्राणायाप्यसमर्थं परं चातीव मन्यमानं क्षत्रियमशस्त्रं
ज्ञात्वाऽपरो हीनोऽपि शस्त्रं गृह्णाति ॥
१२-९५-११ लिप्तो विवदिग्धः ।कर्णी ऋजुः प्रतीपकण्टकः ॥
१२-९५-२५ महादृतिर्महांश्चर्मकोशः ।आध्मातो वायुना पूरितः ॥

---

शन्तिपर्व-अध्यय०९६
॥ श्रीः ॥
१२.९६. अध्यायः ९६

Mahabharata - Shanti Parva - Chapter Topics
भीष्मेण युधिष्ठिरंप्रति राजधर्मकथनम् ॥ १.।
Mahabharata - Shanti Parva - Chapter Text

१२-९६-० (६८५१४)
भीष्म उवाच। १२-९६-०क्ष् (५५९१)
नाधर्मेण महीं जेतुं लिप्सेत जगतीपतिः ।
अधर्मविजयं लब्ध्वा को नु मन्येत भूमिपः ॥ १२-९६-१ (६८५१५)
अधर्मयुक्तो विजयो ह्यध्रुवोऽस्वर्ग्य एव च ।
पातयत्येव राजानं महीं च भरतर्षभ ॥ १२-९६-२ (६८५१६)
विशीर्णकवचं चैव तवास्मीति च वादिनम् ।
कृताञ्जलिं न्यस्तशस्त्रं गृहीत्वा न विहिंसयेत् ॥ १२-९६-३ (६८५१७)
बलेन विजितो यश्च न तं युध्येत भूमिपः ।
संवत्सरं विप्रणयेत्तस्माज्जातः पुनर्भवेत् ॥ १२-९६-४ (६८५१८)
नार्वाक्संवत्सरात्कन्या प्रष्टव्या विक्रमाहृता ।
एवमेव धनं सर्वं यच्चान्यत्सहसा हृतम् ॥ १२-९६-५ (६८५१९)
न तु वध्ये धनं तिष्ठेत्पिबेयुर्ब्राह्मणाः पयः ।
युञ्जीरन्नप्यनडुहः क्षन्तव्यं वा पुनर्भवेत् ॥ १२-९६-६ (६८५२०)
राज्ञा राजैव योद्धव्यस्तथा धर्मो विधीयते ।
नान्यो राजानमभ्यस्येदराजन्यः कथंचन ॥ १२-९६-७ (६८५२१)
अनीकयोः संहतयोर्यदीयाद्ब्राह्मणोऽन्तरा ।
शान्तिमिच्छन्नुभयतो न योद्धव्यं तदा भवेत् ॥ १२-९६-८ (६८५२२)
मर्यादां शाश्वतीं भिन्द्याद्ब्राह्मणं योऽभिलङ्घयेत् ।
अथ चेल्लङ्घयेदेव मर्यादां क्षत्रियब्रुवः ।
असङ्ख्येयपतदूर्ध्वं स्यादनादेयश्च संसदि ॥ १२-९६-९ (६८५२३)
यस्तु धर्मविलोपेन मर्यादाभेदनेन च ।
तां वृत्तिं नानुवर्तेत विजिगीषुर्महीपतिः ॥ १२-९६-१० (६८५२४)
धर्मलब्धाद्धि विजयाल्लाभः कोऽभ्यधिको भवेत् ॥ १२-९६-११ (६८५२५)
सहसा न्याय्यभूतानि क्षिप्रमेव प्रसादयेत् ।
सान्त्वेन भोगदानेन स राज्ञां परमो नयः ॥ १२-९६-१२ (६८५२६)
भुज्यमाना ह्यभोगेन स्वराष्ट्रादभितापिताः ।
अमित्रान्पर्युपासीरन्व्यसनौघप्रतीक्षिणः ॥ १२-९६-१३ (६८५२७)
अमित्रोपग्रहं चास्य ते कुर्युः क्षिप्रमापदि ।
संतुष्टाः सर्वतो राजन्राजव्यसनकाङ्क्षिणः ॥ १२-९६-१४ (६८५२८)
नामित्रो विनिकर्तव्यो नातिच्छेद्यः कथंचन ।
जीवितं ह्यप्यतिच्छिन्नः संत्यजेदेकदा नरः ॥ १२-९६-१५ (६८५२९)
अल्पेनापि च संयुक्तस्तुष्यते नापराधितः ।
शुद्धं जीवितमेवापि तादृशो बहुमन्यते ॥ १२-९६-१६ (६८५३०)
यस्य स्फीतो जनपदः संपन्नः प्रियराजकः ।
संतुष्टभृत्यसचिवो दृढमूलः स पार्थिवः ॥ १२-९६-१७ (६८५३१)

ऋत्विक्पुरोहिताचार्या ये चान्ये श्रुतसत्तमाः ।
पूजार्हाः पूजिता यस्य स वै लोकविदुच्यते ॥ १२-९६-१८ (६८५३२)
एतेनैव च वृत्तेन महीं प्राप सुरोत्तमः ।
अन्येऽपि चैव विजयं विजिगीषन्ति पार्थिवाः ॥ १२-९६-१९ (६८५३३)
भूमिवर्जं धनं राजा जित्वा राजन्महाहवे ।
अपि चान्नोषधीः शश्वदाजहार प्रतर्दनः ॥ १२-९६-२० (६८५३४)
अग्निहोत्राग्निशेषं च हविर्भोजनमेव च ।
आजहार दिवोदासस्ततो विप्रकृतोऽभवत् ॥ १२-९६-२१ (६८५३५)
सराजकानि राष्ट्राणि नाभागो दक्षिणां ददौ ।
अन्यत्र श्रोत्रियस्वाच्च तापसार्थाच्च भारत ॥ १२-९६-२२ (६८५३६)
उच्चावचानि वित्तानि धर्मज्ञानां युधिष्ठिर ।
आसन्राज्ञां पुराणानां सर्वं तन्मम रोचते ॥ १२-९६-२३ (६८५३७)
सर्वविद्यातिरेकेण जयमिच्छेन्महीपतिः ।
न मायया न दम्भेन य इच्छेद्भूतिमात्मनः ॥ ॥ १२-९६-२४ (६८५३८)

इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि
षण्णवतितमोऽध्यायः ॥ ९६.।
Mahabharata - Shanti Parva - Chapter Footnotes

१२-९६-४ --णयेद्दासोऽस्मीति वदेति तं शिक्षयेत् । ततः
संवत्सरादूध्वरा एवाऽब्रुवन्नपि ततो जातो जेतुः पुत्रएव
भवेत्। ततश्च मोक्तव्य इत्यर्थः ॥
१२-९६-५ नश्च संवत्सरं कन्याः स्प्रष्टव्याः सहसाहृताः इति ङ
। पाठः ॥
१२-९६-७ अभ्यस्येदभिमुखं शस्त्रं क्षिपेत् ॥
१२-९६-९ क्षत्रियब्रुवः क्षत्रियाधमः ॥
१२-९६-१० असंख्येयः क्षत्रियेषु न गणनीयः ॥
१२-९६-१४ अमित्रोपग्रहं तद्वैरिणामानुकूल्यम् । ते बलाद्भुज्यमानाः ॥
१२-९६-१५ विनिकर्तव्यो निकृत्य वञ्चयितव्यः ॥
१२-९६-२१ अग्निशेषं यज्ञाङ्गभूतं हविः । भोजनं
सिद्धान्नम्। एतन्न हर्तव्यमित्यर्थः। विप्रकृतो वञ्चितः ॥
१२-९६-२३ राज्ञा सर्वं हर्तव्यमित्यर्थः ॥

---

शन्तिपर्व-अध्यय०९७
॥ श्रीः ॥
१२.९७. अध्यायः ९७

Mahabharata - Shanti Parva - Chapter Topics
भीष्मेण युधिष्ठिरंप्रति सयुक्तिकं युद्धस्य धर्म्यत्वसमर्थनम् ॥ १.।
Mahabharata - Shanti Parva - Chapter Text

१२-९७-० (६८५३९)
युधिष्ठिर उवाच। १२-९७-०क्ष् (५५९२)
क्षत्रधर्माद्धि पापीयान्न धर्मोऽस्ति नराधिप ।
अपयाने च युद्धे च राजा हन्ति महाजनम् ॥ १२-९७-१ (६८५४०)
अथ स्म कर्मणा केन लोकाञ्जयति पार्थिवः ।
विद्वञ्जिज्ञासमानाय प्रब्रूहि भरतर्षभ ॥ १२-९७-२ (६८५४१)
भीष्म उवाच। १२-९७-३क्ष् (५५९३)
निग्रहेण च पापानां साधूनां संग्रहेण च ।
यज्ञैर्दानैश्च राजानो भवन्ति शुचयोऽमलाः ॥ १२-९७-३ (६८५४२)
उपरुन्धन्ति राजानो भूतानि विजयार्थिनः ।
त एव विजयं प्राप्य वर्धयन्ति पुनः प्रजाः ॥ १२-९७-४ (६८५४३)
अपविध्यन्ति पापानि दानयज्ञतपोबलैः ।
अनुग्रहेण भूतानां पुण्यमेषां विवर्धते ॥ १२-९७-५ (६८५४४)
यथैव क्षेत्रनिर्याता निर्यातं क्षेत्रमेव च ।
हिनस्ति धान्यकक्षं च न च धान्यं विनश्यति ॥ १२-९७-६ (६८५४५)
एवं शस्त्राणि मुञ्चन्तो घ्नन्ति वध्याननेकधा ।
तस्यैषा निष्कृतिर्दृष्टा भूतानां भावनं पुनः ॥ १२-९७-७ (६८५४६)
यो भूतानि सदाऽनर्थाद्वधात्क्लेशाच्च रक्षति ।
दस्युभ्यः प्राणदानात्स धनदः सुखदो विराट् ॥ १२-९७-८ (६८५४७)
स सर्वयज्ञारीजानो राजाऽथाभयदक्षिणैः ।
अनुभूयेह भद्राणि प्राप्नोतीन्द्रसलोकताम् ॥ १२-९७-९ (६८५४८)
ब्राह्मणार्थे समुत्पन्ने योऽभिनिष्पत्य युध्यति ।
आत्मानं यूपमुत्सृज्य स यज्ञोऽनन्तदक्षिणः ॥ १२-९७-१० (६८५४९)
अभीतो विकिरञ्शत्रून्प्रतिगृह्य शरांस्तथा ।
न तस्मान्त्रिदशाः श्रेयो भुवि पश्यन्ति किंचन ॥ १२-९७-११ (६८५५०)
तस्य शस्त्राणि यावन्ति त्वचं भिन्दन्ति संयुगे ।
तावतः सोऽश्नुते लोकान्सर्वकामदुहोऽक्षयान् ॥ १२-९७-१२ (६८५५१)
यदस्य रुधिरं गात्रादाहवे संप्रवर्तते ।
सह तेनैव स्रावेण सर्वपापैः प्रमुच्यते ॥ १२-९७-१३ (६८५५२)
यानि दुःखानि सहते प्राणानामतिपातने ।
न तपोऽस्ति ततो भूय इति धर्मविदो विदुः ॥ १२-९७-१४ (६८५५३)

पृष्ठतो भीरवः सङ्ख्ये वर्तन्ते धर्मपूरुषाः ।
शूराच्छरणमिच्छन्तः पर्जन्यादिव जीवनम् ॥१२-९७-१५ (६८५५४)
यदि शूरं तथा क्षेमे प्रतीक्षेरन्यथा भये ।
प्रतिरूपं जनाः कुर्युर्न च तद्वर्तते तथा ॥१२-९७-१६ (६८५५५)
यदि ते कृतमाज्ञाय नमस्कुर्युः सदैव तम् ।
युक्तं न्याय्यं च कुर्युस्ते न च तद्वर्तते तथा ॥१२-९७-१७ (६८५५६)
पुरुषाणां समानानां दृश्यते महदन्तरम् ।
संग्रामेऽनीकवेलायामुत्कृष्टेषु पतत्सु च ॥१२-९७-१८ (६८५५७)
पतत्यभिमुखं शूरः परान्भीरुः पलायते ।
आस्थाय स्वर्ग्यमध्वानं सहायान्विषमे त्यजन् ॥१२-९७-१९ (६८५५८)
मा स्म तांस्तादृशांस्तात जनिष्टाऽधर्मपूरुषान् ॥ १२-९७-२० (६८५५९)
ये सहायान्रणे हित्वा स्वस्तिमन्तो गृहान्ययुः ।
अस्वस्ति तेभ्यः कुर्वन्ति देवा इन्द्रपुरोगमाः ॥१२-९७-२१ (६८५६०)
त्यागेन यः सहायानां स्वान्प्राणांस्त्रातुमिच्छति ।
तं हन्युः काष्ठलोहैर्वा दहेयुर्वा कटाग्निना ।
पशुवन्मारयेयुर्वा क्षत्रिया ये स्युरीदृशाः ॥ १२-९७-२२ (६८५६१)
अधर्मः क्षत्रियस्यैष यच्छय्यामरणं भवेत् ।
विसृजञ्श्लेष्मपित्तानि कृपणं परिदेवयन् ॥१२-९७-२३ (६८५६२)
अविक्षतेन देहेन प्रलयं योऽधिगच्छति ।
क्षत्रियो नास्य तत्कर्म प्रशंसन्ति पुराविदः ॥१२-९७-२४ (६८५६३)
न गृहे मरणं तात क्षत्रियाणां प्रशस्यते ।
शौण्डीराणामशौण्डीर्यमधर्मं कृपणं च तत् ॥१२-९७-२५ (६८५६४)
इदं कृच्छ्रमहो दुःखं पापीय इति निष्टनन् ।
प्रतिध्वस्तमुखः पूतिरमात्याननुशोचयन् ॥१२-९७-२६ (६८५६५)
अरोगाणां स्पृहयते मुहुर्मृत्युमपीच्छति ।
वीरो दृप्तो मनस्वी च नेदृशं मृत्युमर्हति ॥१२-९७-२७ (६८५६६)
रणेषु कदनं कृत्वा सुहृद्भिः प्रतिपूजित ।
तीक्ष्णैः शस्त्रैरभिक्लिष्टः क्षत्रियो मुत्युमर्हति ॥१२-९७-२८ (६८५६७)
शूरो हि सत्वमन्युभ्यामाविष्टो युध्यते मशम् ।
कृत्यमानानि गात्राणि परैर्नैवावबुध्यते ॥१२-९७-२९ (६८५६८)
स सङ्ख्ये निधनं प्राप्य प्रशस्तं लोकपूजितम् ।
स्वधर्मं विपुलं प्राप्य शक्रस्यैति सलोकताम् ॥१२-९७-३० (६८५६९)
सर्वोपायै रणमुखमातिष्ठंस्त्यक्तजीवितः ।
प्राप्नोतीन्द्रस्य सालोक्यं शूरः पृष्ठमदर्शयन् ॥१२-९७-३१ (६८५७०)
यत्रयत्र हतः शूरः शत्रुभिः परिवारितः ।
अक्षयांल्लभते लोकान्यदि दैन्यं न सेवते ॥ ॥१२-९७-३२ (६८५७१)

इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि
सप्तनवतितमोऽध्यायः ॥ ९७.।
Mahabharata - Shanti Parva - Chapter Footnotes

१२-९७-१ महाजनं कटकाश्रितं वैश्यादिजनम् ॥
१२-९७-२ केन तद्वधप्रायश्चित्तं कृत्वा पुण्यफलमाप्नोतीत्यर्थः ॥
१२-९७-४ उपरुन्धन्ति पीडयन्ति ॥
१२-९७-५ अपविध्यन्ति दूरीकुर्वन्ति ॥
१२-९७-६ निर्याता तृणाद्यपनयेन शोधकः ।कक्षं
तृणं। क्षेत्रनिर्वाहो निर्दहेत्क्षेत्रमेकदा इति द। पाठः ॥
१२-९७-७ भावनं वर्धनम् ।पावनं महदिति द। पाठः ॥
१२-९७-१० आत्मानं देहयूपं यज्ञस्तम्भं उत्सृज्य उच्छ्रित्य ।यज्ञो
युद्धयज्ञः ॥
१२-९७-१८ अनीकवेलायां अनीकानां संघट्टकाले ॥
१२-९७-१९ विषमे प्राणसंकटे त्यजन् भीरुरिति संबन्धः ॥
१२-९७-२२ ते तृणमये कटे बद्ध्वा दहनं कटाग्निना दाहः ॥
१२-९७-२५ शौण्डीराणां शूरत्वाभिमानवताम् ॥
१२-९७-२६ निष्टनञ्शब्दं कुर्वन् ।पूतिः दुर्गन्धिः। अमात्यान्पुत्रान् ॥

---

शन्तिपर्व-अध्यय०९८
॥ श्रीः ॥
१२.९८. अध्यायः ९८

Mahabharata - Shanti Parva - Chapter Topics
भीष्मेण युधिष्ठिरंप्रति सुदेवस्य युद्धेन
देवलोकप्राप्तिप्रतिपादकेन्द्राम्बरीषसंवादानुवादः ॥ १.।
Mahabharata - Shanti Parva - Chapter Text

१२-९८-० (६८५७२)
युधिष्ठिर उवाच। १२-९८-०क्ष् (५५९४)
के लोका युध्यमानानां शूराणामनिवर्तिनाम् ।
भवन्ति निधनं प्राप्य तन्मे ब्रूहि पितामह ॥ १२-९८-१ (६८५७३)
भीष्म उवाच। १२-९८-२क्ष् (५५९५)
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
अम्बरीपस्य संवादमिन्द्रस्य च युधिष्ठिर ॥ १२-९८-२ (६८५७४)
अम्बरीषो हि नाभागः स्वर्गं गत्वा सुदुर्लभम् ।

ददर्श सुर--कस्थं शक्रेण सचिवैः सह ॥१२-९८-३ (६८५७५)
सर्वतेजोमयं दिव्यं विमानवरमास्थितम् ।
उ---गच्छन्तं स्थानं सेनापतिं शुभम् ॥१२-९८-४ (६८५७६)
स दष्ट्वापरि गच्छन्तं सेनापतिमुदारधीः ।
ग्शूरस्थानमनुप्राप्तं सुदेवं नाम नामतः।'
ऋद्धिं दृष्ट्वा सुदेवस्य विस्मितः प्राह वासवम् ॥ १२-९८-५ (६८५७७)
अम्बरीप उवाच।१२-९८-६क्ष् (५५९६)
सागरान्तां महीं कृत्स्नामनुशास्य यथाविधि ।
चातुर्वर्ण्ये यथाशास्त्रं प्रवृत्तो धर्मकाम्यया ॥१२-९८-६ (६८५७८)
ब्रह्मचर्येण घोरेण गुर्वाचारेण सेवया ।
वेदानधीत्य धर्मेण राजशास्त्रं च केवलम् ॥१२-९८-७ (६८५७९)
अतिथीनन्नपानेन पितृंश्च स्वधया तथा ।
ऋषीन्स्वाध्यायदीक्षाभिर्देवान्यज्ञैरनुत्तमैः ॥१२-९८-८ (६८५८०)
क्षत्रध--स्थितो भूत्वा यथाशास्त्रं यथाविधि ।
उदीक्षमाणः पृतनां जयामि युधि वासव ॥१२-९८-९ (६८५८१)
दे--ज सुदेवोऽयं मम सेनापतिः पुरा ।
आसाद्योधः प्रशान्तात्मा सोऽयं कस्मादतीव माम् ।
विमानं सूर्यसङ्काशमास्थितो मोदते दिवि ॥ १२-९८-१० (६८५८२)
अनेन ऋतुभिर्मुख्यैर्नेष्टं नापि द्विजातयः ।
तर्पिता विधिवच्छक्र सोऽयं कस्मादतीत्य माम् ॥१२-९८-११ (६८५८३)
ऐश्वर्यमीदृशं प्राप्तः सर्वदेवैः सुदुर्लभम्। १२-९८-१२ (६८५८४)
इन्द्र उवाच ।
ग्यदनेन कृतं कर्म प्रत्यक्षं ते महीपते ।
पुरा पालयतः सम्यक्पृथिवीं धर्मतो नृप ॥ १२-९८-१२क्ष् (५५९७)
शत्रवो निर्जिताः सर्वे ये तवाहितकारिणः ।
संयमो वियमश्चैव सुयमश्च नहाबलः ॥१२-९८-१३ (६८५८५)
राक्षसा दुर्जया लोके त्रयस्ते युद्धदुर्मदाः ।
पुत्रास्ते शतशृङ्गस्य राक्षसस्य महीपतेः ॥१२-९८-१४ (६८५८६)
तथा तस्मिञ्शुभे काले तव यज्ञं वितन्वतः ।
अश्वमेधं महायागं देवानां हितकाम्यया ॥१२-९८-१५ (६८५८७)
तस्य ते खलु विघ्नार्थमागता राक्षसास्त्रयः ।
कोटीशतपरीवारां राक्षसानां महाचमूम् ।
परिगृह्य ततः सर्वाः प्रजा वन्दीकृतास्तव ॥ १२-९८-१६ (६८५८८)
विह्वलाश्च प्रजाः सर्वाः सर्वे च तव सैनिकाः ।
निराकृतस्तु यच्चासीत्सुदेवः सैन्यनायकः ॥१२-९८-१७ (६८५८९)
तत्रामात्यवचः श्रुत्वा निरस्तः सर्वकर्मसु ।

श्रुत्वा तेषां वचो भूयः सोपधं वसुधाधिपः ॥१२-९८-१८ (६८५९०)
सर्वसैन्यसमायुक्तः सुदेवः प्रेरितस्त्वया ।
साक्षसानां वधार्थाय दुर्जयानां नराधिप ॥१२-९८-१९ (६८५९१)
नाजित्वा राक्षसीं सेनां पुनरागमनं तव ।
बन्दीमोक्षमकृत्वा च न चागमनमिष्यते ॥१२-९८-२० (६८५९२)
सुदेवस्तद्वचः श्रुत्वा प्रस्थानमकरोन्नृप ।
संप्राप्तश्च स तं देशं यत्र बन्दीकृताः प्रजाः ॥१२-९८-२१ (६८५९३)
पश्यति स्म महाघोरां राक्षसानां महाचमूम् ।
दृष्ट्वा सुचिन्तयामास सुदेवो वाहिनीपतिः ॥१२-९८-२२ (६८५९४)
नेयं शक्या चमूर्जेतुमपि सेन्द्रैः सुरासुरैः ।
नाम्बरीषः कलामेकामेषां क्षपयितुं क्षमः ।
दिव्यास्त्रबलभूयिष्ठः किमहं पुनरीदृशः ॥ १२-९८-२३ (६८५९५)
ततः सेनां पुनः सर्वां प्रेषयामास पार्थिव ।
यत्र त्वं सचिवैः सर्वैर्मन्त्रिभिः सोपधैर्नृप ॥१२-९८-२४ (६८५९६)
ततो रुद्रं महादेवं प्रपन्नो जगतः पतिम् ।
श्मशाननिलयं देवं तुष्टाव वृषभध्वजम् ॥१२-९८-२५ (६८५९७)
स्तुत्वा शस्त्रं समादाय स्वशिरश्छेत्तुमुद्यतः ॥ १२-९८-२६ (६८५९८)
कारुण्याद्देवदेवेन गृहीतस्तस्य दक्षिणः ।
स पाणिः सह शस्त्रेण दृष्ट्वा चेदमुवाच ह ॥१२-९८-२७ (६८५९९)
किमिदं साहसं पुत्र कुर्तकामो वदस्व मे ।
स उवाच महादेवं शिरसा त्ववनीं गतः ॥१२-९८-२८ (६८६००)
भगवन्वाहिनीमेनां राक्षसानां सुरेश्वर ।
अशक्तोऽहं रणे जेतुं तस्मात्त्यक्ष्यामि जीवितम् ।
गतिर्भव महादेव ममार्तस्य जगत्पते ॥ १२-९८-२९ (६८६०१)
नागन्तव्यमजित्वा च मामाह जगतीपतिः ।
अम्बरीषो महादेव क्षारितः सचिवैः सह ॥१२-९८-३० (६८६०२)
तमुवाच महादेवः सुदेवं पतितं क्षितौ ।
अधोमुखं महात्मानं सत्वानां हितकाम्यया ॥१२-९८-३१ (६८६०३)
धनुर्वेदं समाहूय सगणं सहविग्रहम् ।
रथनागाश्वकलिलं दिव्यास्त्रसमलंकृतम् ॥१२-९८-३२ (६८६०४)
रथं च सुमहाभागं येन तन्त्रिपुरं हतम् ।
धनुः पिनाकं खड्गं च रौद्रमस्त्रं च शंकरः ।
निजघानासुरान्सर्वान्येन देवस्त्रियम्बकः ॥ १२-९८-३३ (६८६०५)
उवाच च महादेवः सुदेवं वाहिनीपतिम् ।
रथादस्मात्सुदेव त्वं दुर्जयः स सुरासुरैः ॥१२-९८-३४ (६८६०६)
मायया मोहितो भूमौ न पदं कर्तुमर्हसि ।

रथस्थस्त्रिदशान्सर्वाञ्जेष्यसि त्वं सदानवान् ॥१२-९८-३५ (६८६०७)
राक्षसाश्च पिशाचाश्च न शक्ता द्रष्टुमीदृशम् ।
रथं सूर्यसहस्राभं किमु योद्धुं त्वया सह ॥१२-९८-३६ (६८६०८)
स जित्वा राक्षसान्सर्वान्कृत्वा बन्दीविमोक्षणम् ।
घातयित्वा च तान्सर्वान्बाहुयुद्धे त्वयं हतः ।
वियमं प्राप्य भूपाल वियमश्च निपातितः ॥' १२-९८-३७ (६८६०९)
तस्य विक्रमतस्तात सुदेवस्य बभूव ह ।
संग्रामयज्ञः सुमहान्यश्चान्यो युध्यते नरः ॥१२-९८-३८ (६८६१०)
सन्नद्धो दीक्षितः सर्वो योधः प्राप्य चमूमुखम् ।
युद्धयज्ञाधिकारस्थो भवतीति विनिश्चयः ॥१२-९८-३९ (६८६११)
अम्बरीष उवाच।१२-९८-४०क्ष् (५५९८)
कानि यज्ञे हवींष्यस्मिन्किमाज्यं का च दक्षिणा ।
ऋत्विजश्चात्र के प्रोक्तास्तन्मे ब्रूहि शतक्रतो ॥१२-९८-४० (६८६१२)
इन्द्र उवाच।१२-९८-४१क्ष् (५५९९)
ऋत्विजः कुञ्जरास्तत्र वाजिनोऽध्वर्यवस्तथा ।
हवींषि परमांसानि रुधिरं त्वाज्यमुच्यते ॥१२-९८-४१ (६८६१३)
शृगालगृध्रकाकोलाः सदस्यास्तत्र पन्त्रिणः ।
आज्यशेषं पिबन्त्येते हविः प्राश्नन्ति चाध्वरे ॥१२-९८-४२ (६८६१४)
प्रासतोमरसंघाताः खड्गशक्तिपरश्वथाः ।
ज्वलन्तो निशिताः पीताः स्रुचस्तस्याथ सत्रिणः ॥१२-९८-४३ (६८६१५)
चापवेगायतस्तीक्ष्णः परकायावभेदनः ।
ऋजुः सुनिशितः पीतः सायकश्च स्रुवो म--॥१२-९८-४४ (६८६१६)
द्वीपिचर्मावनद्धश्च नागदन्तकृतत्सरुः ।
हस्तिहस्तहरः खड्गः स्फयो भवेत्तस्य संयुगे ॥१२-९८-४५ (६८६१७)
ज्वलितैर्निशितैः प्रासशक्त्यृष्टिसपरश्वथैः ।
शैक्यायसमयैस्तीक्ष्णैरभिघातो भवेद्वसु ॥१२-९८-४६ (६८६१८)
श्सङ्ख्यासमयविस्तीर्णमभिजातोद्भवं बहु ॥
आवेधाद्यच्च रुधिरं संग्रामे स्रवते भुवि ।
साऽस्य पूर्णाहुतिर्होत्रैः समृद्धा सर्वकामधुक् ॥ १२-९८-४७ (६८६१९)
छिन्धि भिन्धीति यः शब्दः श्रूयते वाहिनीमुखे ।
सामानि सामगास्तस्य गायन्ति यमसादने ॥१२-९८-४८ (६८६२०)
हविर्धानं तु तस्याहुः परेषां वाहिनीमुखम् ॥ १२-९८-४९ (६८६२१)
कुञ्जराणां हयानां च वर्मिणां च समुच्चय ।
अग्निः श्येनचितो नाम यज्ञे तस्य विधीयते ॥१२-९८-५० (६८६२२)
उत्तिष्ठते कबन्धोऽत्र सहस्रे पतिते तु यः ।
स यूपस्तस्य शूरस्य खादिरोऽष्टाश्रिरुच्यते ॥१२-९८-५१ (६८६२३)

इडोपहूताः क्रोशन्ति कुञ्जरास्त्वङ्कुशेरिताः ।
ज्याघुष्टतलतालेन वषट्कारेण पार्थिव ॥१२-९८-५२ (६८६२४)
उद्गाता तत्र संग्रामे त्रिसामा दुन्दुभिर्नृप ।
ब्रह्मस्वे ह्रियमाणे तु त्यक्त्वा युद्धे प्रियां तनुम् ।
आत्मानं यूपमुच्छ्रित्य स यज्ञोऽनन्तदक्षिणः ॥ १२-९८-५३ (६८६२५)
भर्तुरर्थे च यः शूरो निष्क्रामेद्वाहिनीमुखात् ।
न भयाद्विनिवर्तेत तस्य लोका यथा मम ॥१२-९८-५४ (६८६२६)
द्वीपिचर्मावृतैः खड्गैर्बाहुभिः परिघोपमैः ।
यस्य वेदिरुपस्तीर्णा तस्य लोका यथा मम ॥१२-९८-५५ (६८६२७)
यस्तु नापेक्षते कंचित्सहायं विषमे स्थितः ।
विगाह्य वाहिनीमध्यं तस्य लोका यथा मम ॥१२-९८-५६ (६८६२८)
यस्य शोणितसंघट्टा भेरीमण्डूककच्छपा ।
वीरास्थिशर्करा दुर्गा मांसशोणितकर्दमा ॥१२-९८-५७ (६८६२९)
असिचर्मप्लवा घोरा केशशैवलशाद्वला ।
अश्वनागरथैश्चैव संछिन्नैः कृतसंक्रमा ॥१२-९८-५८ (६८६३०)
पताकाध्वजवानीरा हतवाहनवारणा ।
शोणितोदकसंपूर्णा दुस्तरा पारगैर्नरैः ॥१२-९८-५९ (६८६३१)
रहतनागमहानक्रा परलोकवहाऽशिवा ।
ऋष्टिखड्गमहामीना गृध्रकङ्कबलप्लवा ॥१२-९८-६० (६८६३२)
पुरुषादानुचरिता भीरूणां कश्मलावहा ।
नदी योधस्य संग्रामे तदस्यावभृथं नृप ॥१२-९८-६१ (६८६३३)
वेदिर्यस्य त्वमित्राणां शिरोभिर्व्यवकीर्यते ।
अश्वस्कन्धैर्गजस्कन्धैस्तस्य लोका यथा मम ॥१२-९८-६२ (६८६३४)
पत्नी शालाकृता यस्य परेषां वाहिनीमुखम् ।
हविर्धानं स्ववाहिन्यास्तदस्याहुर्मनीषिणः ॥१२-९८-६३ (६८६३५)
सदस्या दक्षिणा योधा आग्नीध्रश्चोत्तरां दिशम् ।
शत्रुसेना अलत्रस्य सर्वलोकानदूरतः ॥१२-९८-६४ (६८६३६)
यस्य भयतो व्यूहे भवत्याकाशमग्रतः ।
सास्य वेदिस्तदा यज्ञैर्नित्यं व्यूहास्त्रयोऽग्नयः ॥१२-९८-६५ (६८६३७)
यस्तु योधः परावृत्तः संत्रस्तो हन्यते परैः ।
अप्रतिष्ठः स नरकं याति नास्त्यत्र संशयः ॥१२-९८-६६ (६८६३८)
यस्य शोणितवेगेण वेदिः स्यात्संपरिप्लुता ।
केशमांसास्थिसंपूर्णा स गच्छेत्परमां गतिम् ॥१२-९८-६७ (६८६३९)
यस्तु सेनापतिं हत्वा तद्यानमधिरोहति ।
स विष्णुविक्रमक्रामी बृहस्पतिसमः प्रभुः ॥१२-९८-६८ (६८६४०)
नायकं तत्कुमारं वा यो वा स्यात्तत्र पूजितः ।

जीवग्राहं प्रगृह्णाति तस्य लोका यथा मम ॥१२-९८-६९ (६८६४१)
आहवे तु हतं शूरं न शोचेत कथंचन ।
अशोच्यो हि हतः शूरः स्वर्गलोके महीयते ॥१२-९८-७० (६८६४२)
न ह्यन्नं नोदकं तस्य न स्नानं नाप्यशौचकम् ।
हतस्य कर्तुमिच्छन्ति तस्य लोकाञ्शृणुष्व मे ॥१२-९८-७१ (६८६४३)
वराप्सरः सहस्राणि शूरमत्योधने हतम् ।
त्वरमाणानि धावन्ति मम भर्ता भवेदिति ॥१२-९८-७२ (६८६४४)
एतत्तपश्च पुण्यं च धर्मश्चैव सनातनः ।
चत्वारश्चाश्रमास्तस्य यो युद्धे न पलायते ॥१२-९८-७३ (६८६४५)
वृद्धबालौ न हन्तव्यौ न च स्त्री नैव पृष्ठतः ।
तृणपूर्णमुखश्चैव तवास्मीति च यो वदेत् ॥१२-९८-७४ (६८६४६)
अहं वृत्रं बलं पाकं महाकायं विरोचनम् ।
दुरावारं च नमुचिं शतमायं च शम्बरम् ॥१२-९८-७५ (६८६४७)
विप्रचित्तिं च दैतेयं दनोः पुत्रांश्च सर्वशः ।
प्रह्लादं च निहत्याजौ ततो देवाधिपोऽभवम् ॥१२-९८-७६ (६८६४८)
इत्येतच्छक्रवचनं निशम्य प्रतिपूज्य च ।
योधानामात्मनः सिद्धिमम्बरीषोऽभिपन्नवान् ॥ ॥१२-९८-७७ (६८६४९)

इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि
अष्टनवतितमोऽध्यायः ॥९८.।
Mahabharata - Shanti Parva - Chapter Footnotes

१२-९८-३ नाभागिः नाभागपुत्रः ॥
१२-९८-३८ यश्चान्योऽक्षत्रियोऽपि युध्यते नरस्तस्याप्ययं च
यज्ञोऽस्ति ॥
१२-९८-४३ पीताः क्षारपानीयेन संभाविताः ॥
१२-९८-४५ स्फ्यः यागीयोपकरणविशेषः ॥
१२-९८-४६ शैक्यायसमयैः सर्वलोहमयैः ।वसु यत्किंचिद्यज्ञियं
द्रव्यम् ॥
१२-९८-४९ हविधानं हविषः स्थाप नस्थलम् ॥
१२-९८-६४ सदस्योत्तरयोधाग्निराग्नीध्रस्योत्तराथ दिक् ।इति द।पाठः ॥
१२-९८-६८ बृहस्पतिसवः क्रतुः इति ङ द्द ।पाठः ॥
१२-९८-६९ नायकं वा प्रमाणं वेति ङ द्द।पाठः ॥

---

शन्तिपर्व-अध्यय०९९
॥ श्रीः ॥
१२.९९. अध्यायः ९९

Mahabharata - Shanti Parva - Chapter Topics

भीष्मेण युधिष्ठिरंप्रति जनकराजेन स्वयोधानां स्वर्गनरकप्रदर्शनेय युद्धे प्रोत्साहनकथनम् ॥ १. ।

Mahabharata - Shanti Parva - Chapter Text

१२-९९-० (६८६५०)
भीष्म उवाच। १२-९९-०क्ष् (५६००)
अत्राप्युदाहरन्तीम-तिहासं पुरातनम् ।
प्रतर्दनो मैथिलश्च संग्रामं यत्र चक्रतुः ॥ १२-९९-१ (६८६५१)
यज्ञोपवीती संग्रामे जनको मिथिलाधिपः ।
योधानुद्धर्षयामास तन्निबोध युधिष्ठिर ॥ १२-९९-२ (६८६५२)
जनको मैथिलो राजा महात्मा सर्वतत्त्ववित् ।
योधानां दर्शयामास स्वर्गं नरकमेव च ॥ १२-९९-३ (६८६५३)
अभीरूणामिमे लोका भास्वन्तो हन्त पश्यत ।
पूर्णा गन्धर्वकन्याभिः सर्वकामदुहोऽक्षयाः ॥ १२-९९-४ (६८६५४)
इमे पलायमानानां नरकाः प्रत्युपस्थिताः ।
अकीर्तिः शाश्वती चैव यतितव्यमनन्तरम् ॥ १२-९९-५ (६८६५५)
तान्दृष्ट्वाऽरीन्विजयत भूत्वा संत्यागबुद्धयः ।
नरकस्याप्रतिष्ठस्य मा भूत वशवर्तिनः ॥ १२-९९-६ (६८६५६)
त्यागमूलं हि शूराणां स्वर्गद्वारमनुत्तमम् ।
इत्युक्तास्ते नृपतिना योधाः परपुरंजय ॥ १२-९९-७ (६८६५७)
अजयन्त रणे शत्रून्हर्षयन्तो नरेश्वरम् ।
तस्मात्त्यक्तात्मना नित्यं स्थातव्यं रणमूर्धनि ॥ १२-९९-८ (६८६५८)
गजानां रथिनो मध्ये रथानामनुसादिनः ।
सादिनामन्तरे स्थाप्यं पादातमपि दंशितम् ॥ १२-९९-९ (६८६५९)
य एवं व्यूहते राजा स नित्यं जयते रिपून् ।
तस्मदितद्विधातव्यं नित्यमेव युधिष्ठिर ॥ १२-९९-१० (६८६६०)
स्वर्गे सुकृतमिच्छन्तः सुयुद्धेनातिमन्यवः ।
क्षोभयेयुरनीकानि सागरं मकरा यथा ॥ १२-९९-११ (६८६६१)
हर्षयेयुर्विषण्णांश्च व्यवस्थाप्य परस्परम् ।
तेषां च भूमिं रक्षेयुर्भग्नान्नात्यनुसारयेत् ॥ १२-९९-१२ (६८६६२)
पुनरावर्तमानानां निराशानां च जीविते ।
वेगः सुदुःसहो राजंस्तस्मान्नात्यनुसारयेत् ॥ १२-९९-१३ (६८६६३)
न हि प्रहर्तुमिच्छन्ति शूराः प्रद्रवतो भयात् ।
तस्मात्पलायमानानां कुर्यान्नात्यनुसारणम् ॥ १२-९९-१४ (६८६६४)

चराणामचरा ह्यन्नमदंष्ट्रा दंष्ट्रिणामपि ।
अपाणयः पाणिमतामन्नं शूरस्य कातराः ॥१२-९९-१५ (६८६६५)
समानपृष्ठोदरपाणिपादाः
पश्चाच्छूरं भीरवोऽनुव्रजन्ति ।
अतो भयार्ताः प्रणिपत्य भूयः
कृत्वाञ्जलीनुपतिष्ठन्ति शूरान् ॥ १२-९९-१६ (६८६६६)
शूरबाहुषु लोकोऽयं लम्बते पुत्रवत्सद ।
तस्मात्सर्वेषु लोकेषु शूरः संमानमर्हति ॥१२-९९-१७ (६८६६७)
न हि शौर्यात्परं किंचिन्त्रिषु लोकेषु विद्यते ।
शूरः सर्वं पालयति सर्वं शूरे प्रतिष्ठितम् ॥ ॥१२-९९-१८ (६८६६८)

इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि
एकोनशततमोऽध्यायः ॥९९.।
Mahabharata - Shanti Parva - Chapter Footnotes

१२-९९-१ अत्र शूरप्रोत्साहने विषये ॥
१२-९९-३ दर्शयामास योगबलेन ॥
१२-९९-५ पतितव्यमनन्तरमिति ड ।द। पाठः ॥
१२-९९-९ गजानां मध्ये रथिनः स्थाप्याः ॥
१२-९९-१२ नात्यनुसारेयातिद्रावयेत् परावृत्तिभयात् ॥
१२-९९-१३ तदेवाह पुनरिति ॥

---

शन्तिपर्व-अध्यय१००
॥ श्रीः ॥
१२.१००. अध्यायः १००

Mahabharata - Shanti Parva - Chapter Topics
भीष्मेण युधिष्ठिरंप्रति युद्धकरणप्रकारादिकथनम् ॥१.।
Mahabharata - Shanti Parva - Chapter Text

१२-१००-० (६८६६९)
युधिष्ठिर उवाच।१२-१००-०क्ष् (५६०१)
यथा जयार्थिनः सेनां नयन्ति भरतर्षभ ।
ईषद्धर्मं प्रपीड्यापि तन्मे ब्रूहि पितामह ॥१२-१००-१ (६८६७०)
भीष्म उवाच।१२-१००-२क्ष् (५६०२)
सन्त्येव हि स्थिता धर्मे उपपत्त्या तथा परे ।

साध्वाचारतया केचित्तथैवौपयिकादपि ॥१२-१००-२ (६८६७१)
उपायधर्मान्वक्ष्यामि संसिद्धानर्थसिद्धये ।
निर्मर्यादा दस्यवस्तु भवन्ति परिपन्थिनः ॥१२-१००-३ (६८६७२)
तेषां प्रतिविघातार्थं प्रवक्ष्याम्यथ नैगमम् ।
कार्याणां संप्रसिद्ध्यर्थं तानुपायान्निबोध मे ॥१२-१००-४ (६८६७३)
उभे प्रज्ञे वेदितव्ये ऋज्वी वक्रा च भारत ।
जानन्वक्रां न सेवेत प्रतिबाधेत चागताम् ॥१२-१००-५ (६८६७४)
अमित्रा एव राजानं भेदेनोपचरन्त्युत ।
तां राजा विकृतिं जानन्यथाऽमित्रान्प्रबाधते ॥१२-१००-६ (६८६७५)
गजानां पार्थ वर्माणि गोवृषाजगराणि च ।
शल्यकण्टकलोहानि तनुत्राणि मतानि च ॥१२-१००-७ (६८६७६)
शातपीतानि शस्त्राणि सन्नाहाः पीतलोहकाः ।
नानारञ्जनरक्ताः स्युः पताकाः केतवश्च ह ॥१२-१००-८ (६८६७७)
ऋष्टयस्तोमराः खड्गा निशिताश्च परश्वथाः ।
फलकान्यथ चर्माणि प्रतिकल्प्यान्यनेकशः ॥१२-१००-९ (६८६७८)
अभिनीतानि शस्त्राणि योधाश्च कृतनिश्चयाः ।
चैत्रे वा मार्गशीर्षे वा सेनायोगः प्रशस्यते ॥१२-१००-१० (६८६७९)
पक्वसस्या हि पृथिवी भवत्यम्बुमती तदा ।
नैवातिशीतो नात्युष्णः कालो भवति भारत ॥१२-१००-११ (६८६८०)
तस्मात्तदा योजयेत परेषां व्यसनेऽथवा ।
एते हि योगाः सेनायाः प्रशस्ताः परबाधने ॥१२-१००-१२ (६८६८१)
जलवांस्तृणवान्मार्गः समो गम्यः प्रशस्यते ।
चारैः सुविदिताभ्यासः कुशलैर्वनगोचरैः ॥१२-१००-१३ (६८६८२)
न ह्यरण्यानि शक्यन्ते गन्तुं मृगगणैरिव ।
तस्मात्सेनासु तानेव योजयन्ति जयार्थिनः ॥१२-१००-१४ (६८६८३)
श्अग्रतः पुरुषानीकं शक्तं चापि कुलोद्भवम् ॑
आवासस्तोयवान्मार्गः पर्याकाशः प्रशस्यते ॥ १२-१००-१५ (६८६८४)
पोषामपसर्पाणां प्रतिघातस्तथा भवेत् ।
आकाशं हि वनाभ्याशे मन्यन्ते गुणवत्तरम् ॥१२-१००-१६ (६८६८५)
बहुभिर्गुणजातैश्च ये युद्धकुशला जनाः ।
श्उपन्यासो भवेत्तत्र बलानां नातिदूरतः ।॑ १२-१००-१७ (६८६८६)
उपन्यासोऽपसर्पाणां पदातीनां च गूहनम् ।
हतशत्रुप्रतीघातमापदर्थं परायणम् ॥१२-१००-१८ (६८६८७)
सप्तर्षीन्पृष्ठतः कृत्वा युध्येयुरचला इव ।
अनेन विधिना शत्रूञ्जिगीषेतापि दुर्जयान् ॥१२-१००-१९ (६८६८८)
यतो वायुर्यतः सूर्यो यतः सोमस्ततो जयः ।

पूर्वंपूर्वं ज्याय एषां सन्निपाते युधिष्ठिर ॥१२-१००-२० (६८६८९)
अकर्द -मनुदकाममर्यादामलोष्टकाम् ।
अश्वभूमिं प्रशंसन्ति ये युद्धकुशला जनाः ॥१२-१००-२१ (६८६९०)
समा निरुदकाकाशा रथभूमिः प्रशस्यते ।
नीचद्रुमा महाकक्षा सोदका हस्तियोधिनाम् ॥१२-१००-२२ (६८६९१)
बहुदुर्गा महाकक्षा वेणुवेत्रतिरस्कृता ।
पदातीनां क्षमा भूमिः पर्वतोपवनानि च ॥१२-१००-२३ (६८६९२)
पदातिबहुला सेना दृढा भवति भारत ।
रथाश्वबहुला सेना सुदिनेषु प्रशस्यते ॥१२-१००-२४ (६८६९३)
पदातिनागबहुला प्रावृट्काले प्रशस्यते ।
गुणानेतान्प्रसंख्याय देशकालौ प्रयोजयेत् ॥१२-१००-२५ (६८६९४)
एवं संचिन्त्य यो याति तिथिनक्षत्रपूजितः ।
विजयं लभते नित्यं सेनां सम्यक्प्रयोजयन् ॥१२-१००-२६ (६८६९५)
प्रसुप्तांस्तृषिताञ्श्रान्तान्प्रकीर्णान्नाभिघातयेत् ।
मोक्षे प्रयाणे चलने पानभोजनकालयोः ।
अतिक्षिप्तान्व्यतिक्षिप्तान्निहतान्प्रतनूकृतान् ॥ १२-१००-२७ (६८६९६)
अविस्रब्धान्कृतारम्भानुपन्यासात्प्रतापितान् ।
बहिश्चरानुपन्यासान्कृतवेश्मानुसारिणः ॥१२-१००-२८ (६८६९७)
पारम्पर्यागते द्वारे ये केचिदनुवर्तिनः ।
परिचर्यापरोद्धारो ये च केचन वल्गिनः ॥१२-१००-२९ (६८६९८)
अनीकं ये विभिदन्ति भिन्नं संस्थापयन्ति च ।
समानाशनपानास्ते कार्या द्विगुणवेतनाः ॥१२-१००-३० (६८६९९)
ग्जातिगोत्रं च विज्ञाय कर्म चानुत्तमं शुभम् ।
समानदेहरक्षार्थे कार्या द्विगुणवेतनाः ।
त्रिगुणं चतुर्गुणं चैव वेतनं तेषु कारयेत् ॥' १२-१००-३१ (६८७००)
दशाधिपतयः कार्याः शताधिपतयस्तथा ।
ततः सहस्राधिपतिं कुर्याच्छूरमतन्द्रितम् ॥१२-१००-३२ (६८७०१)
यथा मुख्यान्सन्निपात्य वक्तव्याः संशयामहे ।
यथा जयार्थं संग्रामे न जह्याम परस्परम् ॥१२-१००-३३ (६८७०२)
इहैव ते निवर्तन्तां ये च केचन भीरवः ।
न घातयेयुः प्रदरं कुर्वाणास्तुमुले सति ॥१२-१००-३४ (६८७०३)
श्न सन्निपाते प्रदरं वधं वा कुर्युरीदृशाः ॥ꣳ
आत्मानं च स्वपक्षं च पालयन्हन्ति संयुगे ॥ १२-१००-३५ (६८७०४)
अर्थनाशो वधोऽकीर्तिरयशश्च पलायने ।
अमनोज्ञाऽसुखा वाचः पुरुषस्य पलायतः ॥१२-१००-३६ (६८७०५)
प्रतिध्वस्तोष्ठदन्तस्य न्यस्तसर्वायुधस्य च ।

गृहित्वा पलायमानस्य सहायान्प्राणसंशये ।'
अमित्रैरवरुद्धस्य द्विषतामस्तु नः सदा ॥ १२-१००-३७ (६८७०६)
मनुष्यापसदा ह्येते ये भवन्ति पराङ्मुखाः ।
राशिवर्धनमात्रास्ते नैव ते प्रेत्य नो इह ॥ १२-१००-३८ (६८७०७)
अमित्रा हृष्टमनसः प्रत्युद्यान्ति पलायिनम् ।
जयिनस्तु नरास्तात मङ्गलैर्वन्दनेन च ॥ १२-१००-३९ (६८७०८)
यस्य स्म व्यसने राजन्ननुमोदन्ति शत्रवः ।
तदसह्यतरं दुःखं मन्यन्ते मरणादपि ॥ १२-१००-४० (६८७०९)
श्रियं जानीत धर्मस्य मूलं सर्वसुखस्य च ।
या भीरूणां पराख्यातिः शूरस्तामधिगच्छति ॥ १२-१००-४१ (६८७१०)
ते वयं स्वर्गमिच्छन्तः संग्रामे त्यक्तजीविताः ।
जयन्तो वध्यमाना वा प्राप्नुयाम च सद्गतिम् ॥ १२-१००-४२ (६८७११)
एवं संशप्तशपथाः समभित्यक्तजीविताः ।
अमित्रवाहिनीं वीराः प्रतिगाहन्त्यभीरवः ॥ १२-१००-४३ (६८७१२)
अग्रतः पुरुषाऽनीकमसिचर्मवतां भवेत् ।
पृष्ठतः शकटानीकं कलत्रं मध्यतस्तथा ॥ १२-१००-४४ (६८७१३)
परेषां प्रतिघातार्थं पदातीनां च गूहनम् ।
अपि तस्मिन्पुरे वृद्धा भवेयुर्ये पुरोगमाः ॥ १२-१००-४५ (६८७१४)
ये पुरस्तादभिमताः सत्ववन्तो मनस्विनः ।
ते पूर्वमभिवर्तेरंश्चैतानेवेतरे जनाः ॥ १२-१००-४६ (६८७१५)
अपि चोद्धर्षणं कार्यं भीरूणामपि यत्नतः ।
स्कन्धदर्शनमात्रात्तु तिष्ठेयुर्वा समीपतः ॥ १२-१००-४७ (६८७१६)
संहतान्योधयेदल्पान्कामं विस्तारयेद्बहून् ।
सूचीमुखमनीकं स्यादल्पानां बहुभिः सह ॥ १२-१००-४८ (६८७१७)
संप्रयुक्ते निकृष्टे वा सत्यं वा यदि वाऽनृतम् ।
प्रगृह्य बाहून्क्रोशेत हन्त भग्नाः परे इति ॥ १२-१००-४९ (६८७१८)
आगतं मे मित्रबलं प्रहरध्वमभीतवत् ।
सत्ववन्तो निधावेयुः कुर्वन्तो भैरवान्रवान् ॥ १२-१००-५० (६८७१९)
क्ष्वेडाः किलकिलाशब्दाः क्रकचा गोविषाणिकाः ।
भेरीमृदङ्गपणवान्नादयेयुश्च जर्झरान् ॥ ॥ १२-१००-५१ (६८७२०)

इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि शततमोऽध्यायः ॥ १००. ।

Mahabharata - Shanti Parva - Chapter Footnotes

१२-१००-४ नैगमं वेदोक्तमुपायम् ॥

१२-१००-५ वक्रां वक्रयैव नाशयेत् ॥
१२-१००-६ अमित्रानिव तां निकृतिं प्रबाधते बाधेत ॥
१२-१००-७ गजानां वर्माणि वाणघातत्राणानि । गवादीनां शल्यादीनि ॥
१२-१००-२१ अमर्यादां सेतुप्राकारादिहीनाम् ॥
१२-१००-२४ सुदिनेषु वृष्टिवर्जितदिनेषु ॥
१२-१००-२५ प्रसंख्याय सम्यग्विचार्य ॥
१२-१००-२६ तिथौ नक्षत्रे च पूजित आशीर्भिर्योजितः ॥
१२-१००-२८ उपन्यासात्सुरुङ्गादिगुप्तोपायात् । बहिस्तृणाद्यर्थं चरतो बहिश्चरानल्पान्। उपन्यासान् तृणाद्याहर्तॄन् ॥
१२-१००-२९ तान्नाभिघातयेदिति प्रपूर्वेण संबन्धः ॥
१२-१००-३० अनीकं परकीयम् ॥
१२-१००-३३ सन्निपात्यैकीकृत्य ॥
१२-१००-३५ प्रदरं भङ्गम् । वधं वा स्वीयानाम् ॥
१२-१००-३७ नोऽस्मत्संबन्धिनां द्विषतां पुरुषस्य द्रव्यनाशादिकमस्त्विति पूर्वेण सह द्वयोः संबन्धः ॥
१२-१००-३८ राशिर्योधसंख्याशरीरं वा तस्य वर्धनाः । वृथाजन्मान इत्यर्थः ॥
१२-१००-३९ पलायिनं जयिनः प्रत्युद्यान्ति यत्तदसह्यतरमित्यपकृष्यते ॥
१२-१००-४४ पुरुषा पुरुषाणाम् । विभक्तिलोप आर्षः ॥
१२-१००-४७ स्कन्धः समूहः । समूहमात्रार्थं वा तिष्ठेयुः ॥
१२-१००-४८ संहतानन्योन्यं श्लिष्टान् स्वान्परैः सह योधयेत्सेनापतिः ॥

---

शन्तिपर्व-अध्यय१०१
॥ श्रीः ॥
१२.१०१. अध्यायः १०१

Mahabharata - Shanti Parva - Chapter Topics
भीष्मेण युधिष्ठिरंप्रति योधलक्षणादिकथनम् ॥ १.।
Mahabharata - Shanti Parva - Chapter Text

१२-१०१-० (६८७२१)
युधिष्ठिर उवाच। १२-१०१-०क्ष् (५६०३)
किंशीलाः किंसमुत्थानाः कथंरूपाश्च भारत ।
किंसन्नाहाः कथंशस्त्रा जनाः स्युः संयुगे नृपाः ॥ १२-१०१-१ (६८७२२)
भीष्म उवाच। १२-१०१-२क्ष् (५६०४)
यथाचरितमेवात्र शस्त्रं पत्रं विधीयते ।

आचाराद्धीह पुरुषस्तथा कर्मसु वर्तते ॥ १२-१०१-२ (६८७२३)
गान्धाराः सिन्धुसौवीरा नखरप्रासयोधिनः ।
अभीरवः सुबलिनस्तद्बलं सर्वपारगम् ॥ १२-१०१-३ (६८७२४)
सर्वशस्त्रेषु कुशलाः सत्ववन्तो ह्युशीनराः ।
प्राच्या मातङ्गयुद्धेषु कुशलाः कूटयोधिनः ॥ १२-१०१-४ (६८७२५)
तथा यवनकाम्भोजा मधुरामभितश्च ये ।
एतेऽश्वयुद्धकुशला दाक्षिणात्याऽसिचर्मिणः ।
सर्वत्र शूरा जायन्ते महासत्वा महाबलाः ॥ १२-१०१-५ (६८७२६)
आवन्तिका महाशूराश्चतुरङ्गे च मालवाः ।
एकोऽपि हि सहस्रस्य तिष्ठत्यभिमुखो रणे ॥ १२-१०१-६ (६८७२७)
प्रायो देशाः समुद्दिष्टा लक्षणानि तु मे शृणु ॥ १२-१०१-७ (६८७२८)
सिंहशार्दूलवाङ्नेत्राः सिंहशार्दूलगामिनः ।
पारावतकुलिङ्गाक्षाः सर्वे शूराः प्रमाथिनः। १२-१०१-८ (६८७२९)
मृगस्वरा द्वीपिनेत्रा ऋषभाक्षास्तथा परे ।
प्रमाथिनश्च मन्द्राश्च क्रोधनाः किङ्किणीस्वनाः ॥ १२-१०१-९ (६८७३०)
मेघस्वनाः क्रूरमुखाः केचिच्च कलनिस्वनाः ।
जिह्मनासाग्रजिह्वाश्च दूरगा दूरपातिनः ॥ १२-१०१-१० (६८७३१)
बिडालकुब्जाः स्तब्धाक्षास्तनुकेशास्तनुत्वचः ।
शीघ्राश्चपलचित्ताश्च ते भवन्ति दुरासदाः ॥ १२-१०१-११ (६८७३२)
गौरा निमीलिताः केचिन्मृदुप्रकृतयस्तथा ।
तुरङ्गगतिनिर्घोषास्ते नराः पारयिष्णवः ॥ १२-१०१-१२ (६८७३३)
सुसंहताः प्रतनवो व्यूढोरस्काः सुसंस्थिताः ।
प्रवादितेषु कुप्यन्ति हृष्यन्ति कलहेषु च ॥ १२-१०१-१३ (६८७३४)
गम्भीराक्षा निसृष्टाक्षाः पिङ्गाक्षा भ्रुकुटीमुखाः ।
नकुलाक्षास्तथा चैव सर्वे शूरास्तनुत्यजः ॥ १२-१०१-१४ (६८७३५)
जिह्माक्षाः प्रललाटाश्च निर्मांसहनवोऽव्यथाः ।
वक्रबाह्वङ्गुलीसक्थाः कृशा धमनिसंतताः ॥ १२-१०१-१५ (६८७३६)
प्रविशन्ति च वेगेन सांपराये ह्युपस्थिते ।
वारणा इव संमत्तास्ते भवन्ति दुरासदाः ॥ १२-१०१-१६ (६८७३७)
दीप्तस्फुटितकेशान्ताः स्थूलपार्श्वहनूमुखाः ।
उन्नतांसाः पृथुग्रीवा विकटाः स्थूलपिण्डिकाः ॥ १२-१०१-१७ (६८७३८)
उद्वन्धा इव सुग्रीवा विनताविहगा इव ।
पिण्डशीर्षातिवक्त्राश्च पृषदंशमुखास्तथा ॥ १२-१०१-१८ (६८७३९)
अग्रस्वरा मन्युमन्तो युद्धेष्वारावसारिणः ।
अधर्मज्ञाऽवलिप्ताश्च घोरा रौद्रप्रदर्शनाः ॥ १२-१०१-१९ (६८७४०)
त्यक्तात्मानः सर्व एते उदग्रा ह्यनिवर्तिनः ।

पुरस्कार्याः सदा सैन्ये हन्यन्ते घ्नन्ति चापि ते ॥ १२-१०१-२० (६८७४१)
अधार्मिका भिन्नवृत्ताः सान्त्वेनैषां पराभवः ।
एवमेव प्रदूष्यन्ते राज्ञोऽप्येते ह्यभीक्ष्णशः ॥ ॥ १२-१०१-२१ (६८७४२)

इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि
एकाधिकशततमोऽध्यायः ॥ १०१.।
Mahabharata - Shanti Parva - Chapter Footnotes

१२-१०१-२ आचरितं कुलदेशाचारागतम् । पत्रं वाहनम् ॥
१२-१०१-५ दाक्षिणात्या असिचर्मिण इति च्छेदः ॥
१२-१०१-८ कुलिङ्गाक्षाः कुलिङ्गः सर्पः ॥
१२-१०१-१० जिह्मनाः सानुजङ्घाश्चेति थ । पाठः ॥
१२-१०१-१५ प्रललाटाः उन्नतकपालाः ॥
१२-१०१-१७ दीप्तः पिङ्गलः । पिण्डिकाः जानुनोरधः पश्चाद्भागाः ॥
१२-१०१-१८ सुग्रीवा वासुदेवाश्वाः । विनताविहगाः गण्डाः। पिण्डशीर्षाः
वृत्तशिरसः। अतिवक्राः विस्तीर्णमुखाः। संधिरार्षः समासो वा ॥
१२-१०१-२१ एवमेव प्रकुष्यन्ति इति झ । पाठः ॥

---

शन्तिपर्व-अध्यय१०२
॥ श्रीः ॥
१२.१०२. अध्यायः १०२

Mahabharata - Shanti Parva - Chapter Topics
भीष्मेण युधिष्ठिरंप्रति सेनाया जयचिह्नानां राजनीतेश्च कथनम् ॥ १.।
Mahabharata - Shanti Parva - Chapter Text

१२-१०२-० (६८७४३)
युधिष्ठिर उवाच। १२-१०२-०क्ष् (५६०५)
जयिन्याः कानि रूपाणि भवन्ति भरतर्षभ ।
पृतनायाः प्रशस्तानि तानि चेच्छामि वेदितुम् ॥ १२-१०२-१ (६८७४४)
भीष्म उवाच। १२-१०२-२क्ष् (५६०६)
जयिन्या यानि रूपाणि भवन्ति भरतर्षभ ।
पृतनायाः प्रशस्तानि तानि वक्ष्यामि सर्वशः ॥ १२-१०२-२ (६८७४५)
दैवे पूर्वं प्रकुपिते मानुषे कालचोदिते ।
तद्विद्व अऽनुपस्यन्ति ज्ञानदीर्घेण चक्षुषा ॥ १२-१०२-३ (६८७४६)
प्रायश्चित्तविधिं चात्र जपहोमांश्च तद्विदः ।
मङ्गल नि च कुर्वन्ति शमयन्त्यहितानि च ॥ १२-१०२-४ (६८७४७)

उदीर्णानसो योधा वाहनानि च भारत ।
यस्यां भवन्ति सेनायां ध्रुवं तस्या जयो भवेत् ॥१२-१०२-५ (६८७४८)
अन्वेव वायवो यान्ति तथैवेन्द्रधनूंषि च ।
अनुप्लवन्ते मेघाश्च तथाऽऽदित्यस्य रश्मयः ॥१२-१०२-६ (६८७४९)
गोमायवश्चानुलोमबला गृध्राश्च सर्वशः ।
अर्हयेयुर्यदा सेनां तदा सिद्धिरनुत्तमा ॥१२-१०२-७ (६८७५०)
प्रसन्नभाः पावकश्चोर्ध्वरश्मिः
प्रदक्षिणावर्तशिखो विधूमः ।
पुण्या गन्धाश्चाहुतीनां भवन्ति
जयस्यैतद्भाविनो रूपमाहुः ॥ १२-१०२-८ (६८७५१)
गम्भीरशब्दाश्च महास्वनाश्च
शङ्खाश्च भेर्यश्च नदन्ति यत्र ।
युयुत्सवश्चाप्रतीपा भवन्ति
जयस्यैतद्भाविनो रूपमाहुः ॥ १२-१०२-९ (६८७५२)
इष्टा मृगाः पृष्ठतो वामतश्च
संप्रस्थितानां च गमिष्यतां च ।
जिघांसतां दक्षिणाः सिद्धिमाहु
र्ये त्वग्रतस्ते प्रतिषेधयन्ति ॥ १२-१०२-१० (६८७५३)
माङ्गल्यशब्दाञ्शकुना वदन्ति
हंसाः क्रौञ्चाः शतपत्राश्च चाषाः ।
हृष्टा योधाः सत्ववन्तो भवन्ति
जयस्यैतद्भाविनो रूपमाहुः ॥ १२-१०२-११ (६८७५४)
शस्त्रैर्यन्त्रैः कवचैः केतुभिश्च
सुभानुभिर्मुखवर्णैश्च यूनाम् ।
भ्राजिष्मती दुष्प्रतिवीक्षणीया
येषां चमूस्तेऽभिभवन्ति शत्रून् ॥ १२-१०२-१२ (६८७५५)
शुश्रूषवश्चानभिमानिनश्च
परस्परं सौहृदमास्थिताश्च ।
येषां योधाः शौर्यमनुष्ठिताश्च
जयस्यैतद्भाविनो रुपमाहुः ॥ १२-१०२-१३ (६८७५६)
शब्दाः स्पर्शास्तथा गन्धा विचरन्ति मनः प्रियाः ।
धैर्यं चाविशते योधान्विजयस्य मुखं च तत् ॥१२-१०२-१४ (६८७५७)
शब्दो वामः प्रस्थितस्य दक्षिणः प्रविविक्षतः ।
पश्चात्संसाधयत्यर्थं पुरस्ताच्च निषेधति ॥१२-१०२-१५ (६८७५८)
संहत्य महतीं सेनां चतुरङ्गां युधिष्ठिर ।
साम्नैव वर्तयेः पूर्वं प्रसतेथास्ततो युधि ॥१२-१०२-१६ (६८७५९)

जघन्य एष विजयो यद्युद्धे सामभाषणम् ।
यादृच्छिको युधि जयो दैवेनेति विचारणम् ॥ १२-१०२-१७ (६८७६०)
आपगेव महावेगा त्रस्ता इव महामृगाः ।
दुर्निवार्यतमा चैव प्रभग्ना महती चमूः ॥ १२-१०२-१८ (६८७६१)
भग्ना इत्येव भज्यन्ते विद्वांसोऽपि न कारणम् ।
उदारसारा महती रुरुसंघोपमा चमूः ॥ १२-१०२-१९ (६८७६२)
परस्परज्ञाः संहृष्टास्त्यक्तप्राणाः सुनिश्चिताः ।
अपि पञ्चत्रतै शूरा निघ्नन्ति परवाहिनीम् ॥ १२-१०२-२० (६८७६३)
अपि वा पञ्चषट्सप्तसंहिताः कृतनिश्चयाः ।
क्ललीनाः पूजिताः सम्यग्विजयन्तीह शात्रवान् ॥ १२-१०२-२१ (६८७६४)
सन्निपातो न मन्तव्यः शक्ये सति कथंचन ।
सान्त्वभेदप्रदानानां युद्धमुत्तरमुच्यते ॥ १२-१०२-२२ (६८७६५)
संसर्पेण हि सेनाया भयं भीरून्प्रबाधते ।
वज्रादिय प्रज्वलितादियं स्वित्क्षपयिष्यति ॥ १२-१०२-२३ (६८७६६)
अमिप्रयातां समितिं ज्ञात्वा ये प्रतियान्त्यथ ।
तेषां सन्दन्ति गात्राणि योधानां विवयस्य च ॥ १२-१०२-२४ (६८७६७)
विषयो व्यथते राजन्सर्वः सस्थाणुजङ्गमः ।
अस्त्रप्रतापतप्तानां मज्जाः सीदन्ति देहिनाम् ॥ १२-१०२-२५ (६८७६८)
तेषां सान्त्वं क्रूरमिश्रं प्रणेतव्यं पुनः पुनः ।
संपीड्यमाना हि परैर्योगमायान्ति सर्वतः ॥ १२-१०२-२६ (६८७६९)
आन्तराणां च भेदार्थं चरानभ्यवचारयेत् ।
यश्च तस्मात्परो राजा तेन संधिः प्रशस्यते ॥ १२-१०२-२७ (६८७७०)
न हि तस्यान्यथा पीडा शक्या कर्तुं तथाविधा ।
यथा सार्धममित्रेण सर्वतः प्रतिबाधनम् ॥ १२-१०२-२८ (६८७७१)
क्षमा वै साधुमायाति न ह्यसाधून्क्षमा सदा ।
क्षमायाश्चाक्षमायाश्च पार्थ विद्धि प्रयोजनम् ॥ १२-१०२-२९ (६८७७२)
विजित्य क्षममाणस्य यशो राज्ञो विवर्धते ।
महापराधे ह्यप्यस्मिन्विश्वसन्त्यपि शत्रवः ॥ १२-१०२-३० (६८७७३)
मन्यन्ते कर्षयित्वा तु क्षमा साध्वीति शाम्बराः ।
असंतप्तं तु यद्दारु प्रत्येति प्रकृतिं पुनः ॥ १२-१०२-३१ (६८७७४)
नैतत्प्रशंसन्त्याचार्या न चैतत्साधु दर्शनम् ।
अक्रोधेनाविनाशेन नियन्तव्याः स्वपुत्रवत् ॥ १२-१०२-३२ (६८७७५)
द्वेष्यो भवति भूतानामुग्रो राजा युधिष्ठिर ।
मृदुमप्यवमन्यन्ते तस्मादुभयभाग्भवेत् ॥ १२-१०२-३३ (६८७७६)
प्रहरिष्यन्प्रियं ब्रूयात्प्रहरन्नपि भारत ।
प्रहृत्य च प्रियं ब्रूयाच्छोचन्निव रुदन्निव ॥ १२-१०२-३४ (६८७७७)

न मे प्रिया ये स्म हताः संप्रहृष्टाः परेऽपि च ।
न च कत्थनमेवाग्यमुच्यमानं पुनः पुनः ॥१२-१०२-३५ (६८७७८)
अहो जीवितमाकाङ्क्षेन्नेदृशो वधमर्हति ।
सुदुर्लभाः सुपुरुषाः संग्रामेष्वपलायिनः ॥१२-१०२-३६ (६८७७९)
कृतं ममाप्रियं तेन येनायं निहतो मृधे ।
इति वाचा वदन्हन्तृन्पूजयेत रहोगतः ॥१२-१०२-३७ (६८७८०)
हन्तॄणां च हतानां च पूजां कुर्याद्यथार्थतः ।
क्रोशेद्बाहुं प्रगृह्यापि चिकीर्षञ्जनसंग्रहम् ॥१२-१०२-३८ (६८७८१)
एवं सर्वास्ववस्थासु सान्त्वपूर्वं समाचरेत् ।
प्रियो भवति भूतानां धर्मज्ञो वीतभीर्नृपः ॥१२-१०२-३९ (६८७८२)
विश्वासं चात्र गच्छन्ति सर्वभूतानि भारत ।
विश्वस्तः शक्यते भोक्तुं यथाकालं समुत्थितः ॥१२-१०२-४० (६८७८३)
तस्माद्विश्वासयेद्राजा सर्वभूतान्यमायया ।
सर्वतः परिरक्षेच्च यो महीं भोक्तुमिच्छति ॥ ॥१२-१०२-४१ (६८७८४)

इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि
द्व्यधिकशततमोऽध्यायः ॥१०२.।
Mahabharata - Shanti Parva - Chapter Footnotes

१२-१०२-१५ शब्दः काकस्येति शेषः ॥
१२-१०२-२२ सन्निपातो युद्धम् ॥
१२-१०२-२४ सन्निति युद्धम् ।स्यन्दन्ति स्तिद्यन्ति ॥
१२-१०२-२५ विधयो देशः ॥
१२-१०२-२६ योगं सम्विम् ॥
१२-१०२-२७ आन्तराणां शत्रोः सद्धीनाम् ।तस्माच्छत्रोः परः
श्रेष्ठस्तेन सन्धिं च कुर्यात् ॥
१२-१०२-२९ क्षमा वै साध्वमायानां नहि साधु सदा क्षमा इति ड
।थ।पाठः ॥
१२-१०२-३० अस्मिन्क्षमावति ॥
१२-१०२-३१ असंताप्य ऋजूकृतं वंशादि पुनर्वक्रीभवत्यर्थः
शत्रुं संताप्य क्षमां कुर्यादिति शम्बरस्य दैत्यस्य मतम् ॥
१२-१०२-३२ स्वमतमाह नैतदिति ॥
१२-१०२-४० विस्वस्तो जनः ॥

---

शन्तिपर्व-अध्यय१०३
॥ श्रीः ॥
१२.१०३. अध्यायः १०३

Mahabharata - Shanti Parva - Chapter Topics
भीष्मेण युधिष्ठिरंप्रति
शत्रुजयोपायादिप्रतिपादकेन्द्रबृहस्पतिसंवादानुवादः ॥ १. ।
Mahabharata - Shanti Parva - Chapter Text

१२-१०३-० (६८७८५)
युधिष्ठिर उवाच। १२-१०३-०क्ष् (५६०७)
कथं मृदौ कथं तीक्ष्णे महापक्षे च भारत ।
अरौ वर्तेत नृपतिस्तन्मे ब्रूहि पितामह ॥ १२-१०३-१ (६८७८६)
भीष्म उवाच। १२-१०३-२क्ष् (५६०८)
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
बृहस्पतेश्च संवादमिन्द्रस्य च युधिष्ठिर ॥ १२-१०३-२ (६८७८७)
बृहस्पतिं देवपतिरभिवाद्य कृताञ्जलिः ।
उपसंगम्य पप्रच्छ वासवः परवीरहा ॥ १२-१०३-३ (६८७८८)
अहितेषु कथं ब्रह्मन्प्रवर्तेयमतन्द्रितः ।
असमुच्छिद्य चैवैतान्नियच्छेयमुपायतः ॥ १२-१०३-४ (६८७८९)
सेनयोर्व्यतिषङ्गे च जयः साधारणो भवेत् ।
किं कुर्वाणं न मां जह्याज्ज्वलिता श्रीः प्रतापिनी ॥ १२-१०३-५ (६८७९०)
ततो मर्थिकामानां कुशलः प्रतिभानवान् ।
राजधर्मविधानज्ञः प्रत्युवाच पुरंदरम् ॥ १२-१०३-६ (६८७९१)
न जा कलहेनेच्छेन्नियन्तुमपकारिणः ।
बालैर सवितं ह्येतद्यदमर्षो यदक्षमा ॥ १२-१०३-७ (६८७९२)
न शत्रुर्विवृतः कार्यो वधमस्याभिकाङ्क्षता ॥ १२-१०३-८ (६८७९३)
क्रोधं भयं च हर्षं च नियम्य स्वयमात्मनि ।
अमित्र पसेवेत विश्वस्तवदविश्वसन् ॥ १२-१०३-९ (६८७९४)
प्रियमेव वदेन्नित्यं नाप्रियं किंचिदाचरेत् ।
विरमेच्छुष्कवैरेभ्यः कर्णजापं च वर्जयेत् ॥ १२-१०३-१० (६८७९५)
यथा वैतंसिको युक्तो द्विजानां सदृशस्वरः ।
तान्द्विजान्कुरुते वश्यांस्तथायुक्तो महीपतिः ।
वशं चोपनयेच्छत्रून्निहन्याच्च पुंरदर ॥ १२-१०३-११ (६८७९६)
न नित्यं परिभूयारीन्सुखं स्वपिति वासव ।
जागर्त्येव हि दुष्टात्मा संकरेऽग्निरिवोत्थितः ॥ १२-१०३-१२ (६८७९७)
न सन्निपातः कर्तव्यः सामान्ये विजये सति ।
विश्वास्यैवोपसंनम्यो वशे कृत्वा रिपुः प्रभो ॥ १२-१०३-१३ (६८७९८)
संप्रधार्य सहामात्यैर्मन्त्रविद्भिर्महात्मभिः ।

उपेक्ष्यमाणो विज्ञातो हृदयेनापराजितः ।
अथास्य प्रहरेत्काले विधेर्विचलितो यदा ॥ १२-१०३-१४ (६८७९९)
दण्डं च दूषयेदस्य पुरुषैराप्तकारिभिः ॥ १२-१०३-१५ (६८८००)
आदिमध्यावसानज्ञान्प्रच्छन्नं च विचारयेत् ।
बलानि दूषयेदस्य जानन्नेव प्रमाणतः ॥ १२-१०३-१६ (६८८०१)
भेदेनोपप्रदानेन संसृजेदौषधैस्तथा ।
न त्वेव खलु संसर्गं रोचयेदरिभिः सह ॥ १२-१०३-१७ (६८८०२)
दीर्घकालमपीक्षेत्त निग्राह्या एव शत्रवः ।
कालकाङ्क्षी च युक्तः सन्नुपासीत शचीपते ॥ १२-१०३-१८ (६८८०३)
तथा प्रियं च वक्तव्यं यथा विस्रम्भमाप्नुयात् ।
न सद्योऽरीन्विहन्याच्च द्रष्टव्यो विजयो ध्रुवः ।
भूयः शल्यं घटयति नवं च कुरुते व्रणम् ॥ १२-१०३-१९ (६८८०४)
प्राप्ते च प्रहरेत्काले न च संवर्तते पुनः ।
हन्तुकामस्य देवेन्द्र पुरुषस्य रिपून्प्रति ॥ १२-१०३-२० (६८८०५)
यं हि कालो व्यतिक्रामेत्पुरुषं कालकाङ्क्षिणम् ।
दुर्लभः स पुनस्तेन कालः कर्म चिकीर्षता ॥ १२-१०३-२१ (६८८०६)
औजस्यं जनयेदेव संगृह्णन्साधुसंमतम् ।
कालेन साधयेत्कृत्यमप्राप्तो न हि पीडयेत् ॥ १२-१०३-२२ (६८८०७)
विहाय कामं क्रोधं च तथाऽहंकारमेव च ।
युक्तो विवरमन्विच्छेदहितानां सदा नृपः ॥ १२-१०३-२३ (६८८०८)
मार्दवं दण्ड आलस्यं प्रमादश्च सुरोत्तम ।
मायाः सुविहिताः शक्र शातयन्त्यविचक्षणम् ॥ १२-१०३-२४ (६८८०९)
निहत्यैतानि चत्वारि मायां प्रतिविधाय च ।
ततः शक्नोति शत्रूणां प्रहर्तुमविचारयन् ॥ १२-१०३-२५ (६८८१०)
यदेवैतेन शक्येत गुह्यं कर्तुं तदाऽऽचरेत् ।
यच्छन्ति सतिवा गुह्यं मिथो विश्रावयन्त्यपि ॥ १२-१०३-२६ (६८८११)
अशक्यमिति कृत्वा वा ततोऽन्यैः संविदं चरेत् ।
ब्रह्मदण्डमदृष्टेषु दृष्टेषु चतुरङ्गिणीम् ॥ १२-१०३-२७ (६८८१२)
भेदं च प्रथमं विद्यात्तूर्ष्णीं दण्डं तथैव च ।
काले प्रयोजयेद्राजा तस्मिंस्तस्मिंस्तदातदा ॥ १२-१०३-२८ (६८८१३)
प्रणिपातं च गच्छेत काले शत्रोर्बलीयसः ।
युक्तोऽस्य वधमन्विच्छेदप्रमत्तः प्रमाद्यतः ॥ १२-१०३-२९ (६८८१४)
प्रणिपातेन दानेन वाचा मधुरया ब्रुवन् ।
अमित्रमुपसेवेत न च जातु विशङ्कयेत् ॥ १२-१०३-३० (६८८१५)
स्थानानि शङ्कितानां च नित्यमेव विवर्जयेत् ।
न च तेष्वाश्वसेद्राजा जाग्रतीह निराकृताः ॥ १२-१०३-३१ (६८८१६)

न ह्यतो दुष्करं कर्म किंचिदस्ति सुरोत्तम ।
यथा विविधवृत्तानामैश्वर्यममराधिप ॥१२-१०३-३२ (६८८१७)
तथा विविधशीलानामपि संभव उच्यते ।
प्रयतेद्योगमास्थाय मित्रामित्रानधारयन् ॥१२-१०३-३३ (६८८१८)
मृदुमप्यवमन्यन्ते तीक्ष्णादुद्विजते जनः ।
मातीक्ष्णो मा मृदुर्भूस्त्वं तीक्ष्णो भव मृदुर्भव ॥१२-१०३-३४ (६८८१९)
यथा वप्रे वेगवति सर्वतः संप्लतोदके ।
नित्यं विचरणाद्बाधस्तथा राज्यं प्रमाद्यतः ॥१२-१०३-३५ (६८८२०)
न बहूनुपरुध्येत यौगपद्येन शात्रवान् ।
साम्ना दानेन भेदेन दण्डेन च पुरंदर ॥१२-१०३-३६ (६८८२१)
एकैकमेषां निष्पिष्य शिष्टेषु निपुणं चरेत् ।
न तु शक्तोऽपि मेधावी सर्वानेवाचरेद्बुधः ॥१२-१०३-३७ (६८८२२)
यदा स्यान्महती सेना हयनागरथाकुला ।
पदातियन्त्रबहुला अनुरक्ता षडङ्गिनी ॥१२-१०३-३८ (६८८२३)
यदा बहुविधां वृद्धिं मन्येत प्रतियोगतः ।
तदा विवृत्य प्रहरेद्दस्यूनामविचारयन् ॥१२-१०३-३९ (६८८२४)
न साम दण्डोपनिषत्प्रशस्यते
न मार्दवं शत्रुषु यात्रिकं सदा ।
न सस्यघातो न च संकरक्रिया
न चापि भूयः प्रकृतेर्विचारणा ॥ १२-१०३-४० (६८८२५)
मायाविभेदानुपसर्जनानि
वाचं तथैव प्रथमं प्रयोगात् ।
आप्तैर्मनुष्यैरुपचारयेत
पुरेषु राष्ट्रेषु च संप्रयुक्तान् ॥ १२-१०३-४१ (६८८२६)
पुराऽपि चैताननुसृत्य भूमिपाः
पुरेषु भोगानखिलाञ्जयन्ति
पुरेषु नीतिं विहितां यथाविधि
प्रयोजयन्तो बलवृत्रसूदन ॥ १२-१०३-४२ (६८८२७)
प्रदाय गूढानि वसूनि नाम
प्रच्छिद्य भोगानपहाय च स्वान् ।
दुष्टाः स्वदोषैरिति कीर्तयित्वा
पुरेषु राष्ट्रेषु च योजयन्ति ॥ १२-१०३-४३ (६८८२८)
तथैव चान्यैरपि शास्त्रवेदिभिः
स्वलंकृतैः शास्त्रविधानलिङ्गितैः ।
सुशिक्षितैर्भाष्यकथाविशारदैः
परेषु कृत्यामुपधारयेच्च ॥ १२-१०३-४४ (६८८२९)

इन्द्र उवाच। १२-१०३-४५क्ष् (५६०९)
कानि लिङ्गानि दुष्टस्य भवन्ति द्विजसत्तम ।
कथं दुष्टं विजानीयादेतत्पुष्टो ब्रवीहि मे ॥ १२-१०३-४५ (६८८३०)
बृहस्पतिरुवाच। १२-१०३-४६क्ष् (५६१०)
परोक्षमगुणानाह सद्गुणानभ्यसूयति ।
परैर्वा कीर्त्यमानेषु तूष्णीमास्ते पराङ्मुखः ॥ १२-१०३-४६ (६८८३१)
तूष्णींभावेऽपि विज्ञेयं न चेद्भवति कारणम् ।
विश्वासं चोष्ठसंदंशं शिरसश्च प्रकम्पनम् ॥ १२-१०३-४७ (६८८३२)
करोत्यभीक्ष्णं संसृष्टमसंसृष्टश्च भाषते ।
अदृष्टवद्विकुरुते दृष्ट्वा वा नाभिभाषते ॥ १२-१०३-४८ (६८८३३)
पृथगेत्य समश्नाति नेदमद्य यथाविधि ।
आसने शयने याने भावा लक्ष्या विशेषतः ॥ १२-१०३-४९ (६८८३४)
आर्तिरार्ते प्रिये प्रीतिरेतावन्मित्रलक्षणम् ।
विपरीतं तु बोद्धव्यमरिलक्षणमेव तत् ॥ १२-१०३-५० (६८८३५)
एतान्येव यथोक्तानि बुध्येथास्त्रिदशाधिप ।
पुरुषाणां प्रदुष्टानां स्वभावो बलवत्तरः ॥ १२-१०३-५१ (६८८३६)
इति दुष्टस्य विज्ञानमुक्तं ते सुतसत्तम ।
निशाम्य शास्त्रतत्त्वार्थं यथावदमरेश्वरः ॥ १२-१०३-५२ (६८८३७)
भीष्म उवाच १२-१०३-५३क्ष् (५६११)
स तद्वचः शत्रुनिबर्हणे रत
स्तथा चकारावितथं बृहस्पतेः ।
चचार काले विजयाय चारिहा
वशं च शत्रूननयत्पुरंदरः ॥ ॥ १२-१०३-५३ (६८८३८)

इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि
त्र्यधिकशततमोऽध्यायः ॥ १०३.।

Mahabharata - Shanti Parva - Chapter Footnotes

१२-१०३-५ व्यतिषङ्गे मिश्रणे युद्धे इत्यर्थः ।साधारणोऽनियतः ॥
१२-१०३-६ प्रत्युवाच गुरुः ॥
१२-१०३-७ विवृतः सावधानः ॥
१२-१०३-११ वितसः पक्षिबन्धनोपायस्तदुपजीवी वैतंसिकः ॥
१२-१०३-१२ स्वपिति महीपतिरित्यनुकर्षः ॥
१२-१०३-१३ सामान्ये अनिश्चिते ॥
१२-१०३-१४ प्रहरेत्काले किंचिद्विचलिते पदे इति झ ।पाठः ॥
१२-१०३-१५ किंचास्य दण्डं सेनां च भेदेन दूषयेत्सः ॥

१२-१०३-१७ औषधैर्विषादिभिः ॥
१२-१०३-२० रिपून्प्रति हन्तुकामस्य ॥
१२-१०३-२५ चत्वारि मार्दवादीनि ॥
१२-१०३-२६ यच्छन्ति निगृह्णन्ति ॥
१२-१०३-२७ अदृष्टेषु दूरस्थेषु ब्रह्मदण्डं पुरोहितद्वारमभिचारं प्रयुञ्जयात् ।दृष्टे प्रत्यक्षशत्रौ चतुरङ्गिणीमपि प्रयुञ्ज्यात् ॥
१२-१०३-३२ विविधवृत्तानां अस्थिराणाम् ॥
१२-१०३-३५ वेगवति पूरे सति वप्रे तटे विचरणाद्विदारणाद्बाध इति योजना ॥
१२-१०३-३८ षडङ्गिनी रथतुरगमातङ्गपदातिकोशवणिक्पथवती ॥
१२-१०३-३९ विवृत्य प्रकटीभूय ।दस्यूनां दस्यून् ॥
१२-१०३-४० बलवति शत्रौ साम न प्रशस्यते किं तर्हि दण्डोपनिषत् रहस्यदण्डः ।अत एव शत्रुषु मार्दवं पार्यन्तिकं न कार्यम्। नापि यात्रिकं सदा कार्यम्। जयस्यानि यतत्वात्। यात्रायां हि सस्यानां घातः। संकरक्रिया विषादिना जलादीनां नाशनम्। भूयः पुनः पुनः प्रकृते सप्तविधायाः विचारणा तस्मात्कपटपूर्वको दण्डएव श्रेयानित्यर्थः ॥
१२-१०३-४१ मायाविभेदान्नानाविधा मायाः प्रयुञ्जीत ।तत उपसर्जनानि परस्परमितरेषां शत्रूणामुत्थापनादीनि ॥
१२-१०३-४२ एतान् शत्रून्पुरेषु तत्तत्स्थानेषु अनुसृत्य भोगांस्तदीयान् जयन्ति ।नीतिं पुरेषु स्वीयतेषु ॥
१२-१०३-४३ अनुसरणभेवाह प्रदायेति ।एते न ममामात्याः दुष्टाः मां त्यक्त्वा राजान्तारं प्रतिगता इति लोकमुखात्कीर्तयित्वा परेषां पुरेषु राष्ट्रेषु च तान्यो जयन्ति ॥
१२-१०३-४४ कृत्यामिव कृत्यां मृत्युकारिणीं देवताम ॥
१२-१०३-४७ तच्चेद्भवति कारणमिति थ द्द ।पाठः ॥
१२-१०३-४८ संसृष्टं संसर्गम् ।असंसृष्टश्च परइव भाषते ॥

---

शन्तिपर्व-अध्यय१०४
॥ श्रीः ॥
१२.१०४. अध्यायः १०४

Mahabharata - Shanti Parva - Chapter Topics
भीष्मेण युधिष्ठिरंप्रति कौसल्यकालकवृक्षीयसंवादानुवादः ॥१.।
Mahabharata - Shanti Parva - Chapter Text

१२-१०४-० (६८८३९)
युधिष्ठिर उवाच।१२-१०४-०क्ष् (५६१२)

धार्मिकोऽर्थानसंप्राप्य राजामात्यैः प्रबाधितः ।
च्युतः कोशाच्च दण्डाच्च सुखमिच्छन्कथं चरेत् ॥ १२-१०४-१ (६८८४०)
भीष्म उवाच। १२-१०४-२क्ष् (५६१३)
अत्रायं क्षेमदर्शीय इतिहासोऽनुगीयते ।
तत्तेऽहं संप्रवक्ष्यामि तन्निबोध युधिष्ठिर ॥ १२-१०४-२ (६८८४१)
क्षेमदर्शी नृपसुतो यत्र क्षीणबलः पुरा ।
मुनिं कालकवृक्षीयमाजमामेति नः श्रुतम् ।
तं पप्रच्छानुसंगृह्य कृच्छ्रामापदमास्थितः ॥ १२-१०४-३ (६८८४२)
अर्थेषु मार्गी पुरुष ईहमानः पुनः पुनः ।
अलब्ध्वा मद्विधो राज्यं ब्रह्मन्किं कर्तुमर्हति ॥ १२-१०४-४ (६८८४३)
अन्यत्र मरणाद्दैन्यादन्यत्र परसंश्रयात् ।
क्षुद्रादन्यत्र चाचारात्तन्ममाचक्ष्व सत्तम ॥ १२-१०४-५ (६८८४४)
व्याधिनां चाभिपन्नस्य मानसेनेतरेण वा ।
बहुश्रुतः कृतप्रज्ञस्त्वद्विधः शरणं भवेत् ॥ १२-१०४-६ (६८८४५)
निर्विद्य हि नरः कामान्नियम्य सुखमेधते ।
त्यक्त्वा प्रीतिं च शोकं च लब्ध्वा बुद्धिमयं वसु ॥ १२-१०४-७ (६८८४६)
सुखमर्थाश्रयं येषामनुशोचामि तानहम् ।
मम ह्यर्थाः सुबहवो नष्टाः स्वप्नगता इव ॥ १२-१०४-८ (६८८४७)
दुष्करं बत कुर्वन्ति महतोऽर्थांस्त्यजन्ति ये ।
वयं त्वेतान्परित्यक्तुमसतोऽपि न शक्नुमः ॥ १२-१०४-९ (६८८४८)
इमामवस्थां संप्राप्तं दीनमार्तं श्रिया च्युतम् ।
यदन्यत्सुखमस्तीह तद्ब्रह्मन्ननुशाधि माम् ॥ १२-१०४-१० (६८८४९)
कौसल्येनैवमुक्तस्तु राजपुत्रेण धीमता ।
मुनिः कालकवृक्षीयः प्रत्युवाच महाद्युतिः ॥ १२-१०४-११ (६८८५०)
पुरस्तादेव ते बुद्धिरियं कार्या विजानतः ।
अनित्यं सर्वमेवैतदहं च मम चास्ति यत् ॥ १२-१०४-१२ (६८८५१)
यत्किंचिन्मन्यसेऽस्तीति सर्वं नास्तीति विद्धि तत् ।
एवं न व्यथते प्राज्ञः कृच्छ्रामप्यापदं गतः ॥ १२-१०४-१३ (६८८५२)
यद्धि भूतं भविष्यच्च ध्रुवं तन्न भविष्यति ।
एवं विदितवेद्यस्त्वमनर्थेभ्यः प्रमोक्ष्यसे ॥ १२-१०४-१४ (६८८५३)
ये च पूर्वसमारम्भा ये च पूर्वतरे परे ।
सर्वं नास्तीति ते चैव तज्ज्ञात्वा को नु संज्वरेत् ॥ १२-१०४-१५ (६८८५४)
भूत्वा च न भवत्येतदभूत्वा च भविष्यति ।
शोके न ह्यस्ति सामर्थ्यं शोचेत स कथं नरः ॥ १२-१०४-१६ (६८८५५)
क्वनु तेऽद्य पिता राजन्क्वनु तेऽद्य पितामहः ।
न त्वं पश्यसि तानद्य न त्वां पश्यन्ति तेऽपि वा ॥ १२-१०४-१७ (६८८५६)

आत्मनोऽध्रुवतां पश्यंस्तांस्त्वं किमनुशोचसि ।
बुद्ध्या चैवानुबुद्ध्यस्व ध्रुवं हि न च विद्यते ॥ १२-१०४-१८ (६८८५७)
अहं च त्वं च नृपते सुहृदः शत्रवश्च ते ।
अवश्यं न भविष्यामः सर्वं च न भविष्यति ॥ १२-१०४-१९ (६८८५८)
ये तु विंशतिवर्षा वै त्रिंशद्वर्षाश्च मानवाः ।
अर्वागेव हि ते सर्वे मरिष्यन्ति शरच्छतात् ॥ १२-१०४-२० (६८८५९)
अपि चेन्महतो वित्तान्न प्रमुच्यते पूरुषः ।
नैतन्ममेति तन्मत्वा कुर्वीत प्रियमात्मनः ॥ १२-१०४-२१ (६८८६०)
अनागतं यन्न ममेति विद्या
दतिक्रान्तं यन्न ममेति विद्यात् ।
दिष्टं बलीय इति मन्यमाना
स्ते पण्डितास्तत्सतां वृत्तिमाहुः ॥ १२-१०४-२२ (६८८६१)
अनाढ्याश्चापि जीवन्ति राज्यं चाप्यनुशासते ।
बुद्धिपौरुषसंपन्नास्त्वया तुल्याधिका जनाः ॥ १२-१०४-२३ (६८८६२)
न च त्वमिव शोचन्ति तस्मात्त्वमपि मा शुचः ।
किं न त्वं तैर्नरैः श्रेयांस्तुल्यो वा बुद्धिपौरुषैः ॥ १२-१०४-२४ (६८८६३)
राजोवाच। १२-१०४-२५क्ष् (५६१४)
यादृच्छिकं सर्वमासीत्तद्राज्यमिति चिन्तये ।
ह्रियते सर्वमेवेदं कालेन महता द्विज ॥ १२-१०४-२५ (६८८६४)
तस्यैव ह्रियमाणस्य स्रोतसेव तपोधन ।
फलमेतत्प्रपश्यामि यथालब्धेन वर्तयन् ॥ १२-१०४-२६ (६८८६५)
मुनिरुवाच। १२-१०४-२७क्ष् (५६१५)
अनागतमतीतं च याथातथ्यविनिश्चयात् ।
नानुशोचेत कौसल्य सर्वार्थेषु तथा भव ॥ १२-१०४-२७ (६८८६६)
अवाप्यान्कामयन्नर्थान्नानवाप्यान्कदाचन ।
प्रत्युत्पन्नाननुभवन्मा शुचस्त्वमनागतान् ॥ १२-१०४-२८ (६८८६७)
यथालब्धोपपन्नार्थैस्तथा कौसल्य रंस्यसे ।
कच्चिच्छुद्धस्वभावेन श्रिया हीनो न शोचसि ॥ १२-१०४-२९ (६८८६८)
पुरस्ताद्भूतपूर्वत्वाद्धीनभोग्यो हि दुर्मतिः ।
धातारं गर्हते नित्यं लब्धार्थश्च न मृष्यते ॥ १२-१०४-३० (६८८६९)
अनर्हानपि चैवान्यान्मन्यते श्रीमतो जनान् ।
एतस्मात्कारणादेतद्दुःखं भूयोऽनुवर्तते ॥ १२-१०४-३१ (६८८७०)
ईर्ष्याभिमानसंपन्ना राजन्पुरुषमानिनः ।
कच्चित्त्वं न तथा प्राज्ञ मत्सरी कोसलाधिप ॥ १२-१०४-३२ (६८८७१)
सहस्व श्रियमन्येषां यद्यपि त्वयि नास्ति सा ।
अन्यत्रापि सतीं लक्ष्मीं कुशला भुञ्जते नराः ।

अभिनिष्यन्दते देही श्रीभूतश्च द्विषज्जनात् ॥ १२-१०४-३३ (६८८७२)
श्रियं च पुत्रपौत्रं च मनुष्या धर्मचारिणः ।
त्यागधर्मविदो धीराः स्वयमेव त्यजन्त्युत ॥१२-१०४-३४ (६८८७३)
ग्त्यक्तं स्वायंभुवे वंशे शुभेन भरतेन च ।
नानारत्नसमाकीर्णं राज्यं स्फीतमिति श्रुतम् ॥१२-१०४-३५ (६८८७४)
तथाऽन्यैर्भूमिपालैश्च त्यक्तं राज्यं महोदयम् ।
त्यक्त्वा राज्यानि ते सर्वे वने वन्यफलाशिनः ।
गताश्च तपसः पारं दुःखस्यान्तं च भूमिपा ॥ १२-१०४-३६ (६८८७५)
बहुसंकुसुकं दृष्ट्वा विधित्सासाधनेन च ।
तथान्ये संत्यजन्त्येव मत्वा परमदुर्लभम् ॥१२-१०४-३७ (६८८७६)
त्वं पुनः प्राज्ञरूपः सन्कृपणं परितप्यसे ।
अकाम्यान्कामयानोऽर्थान्पराधीनानुपद्रवान् ॥१२-१०४-३८ (६८८७७)
तां बुद्धिमनुविज्ञाय त्वमेवैनान्परित्यज ।
अनर्थाश्चार्थरूपेण ह्यर्थाश्चानर्थरूपिणः ॥१२-१०४-३९ (६८८७८)
अर्थायैव हि केषांचिद्धननाशा भवन्त्युत ।
अनित्यं तत्सुखं मत्वा श्रियमन्ये न लिप्सते ॥१२-१०४-४० (६८८७९)
रममाणः श्रिया कश्चिन्नान्यच्छ्रेयोऽभिमन्यते ।
तथा तस्येहमानस्य संरम्भोऽपि विनश्यति ॥१२-१०४-४१ (६८८८०)
कृच्छ्राल्लब्धमभिप्रेतं यथा कौसल्य नश्यति ।
तदा निर्विद्यते सोऽर्थात्परिभग्नक्रमो नरः ॥१२-१०४-४२ (६८८८१)
ग्अनित्यां तां श्रियं मत्वा श्रियं वा कः परीप्सति ॥' १२-१०४-४३ (६८८८२)
धर्ममेकेऽभिपद्यन्ते कल्याणाभिजना नराः ।
परत्र सुखमिच्छन्तो निर्विद्येयुश्च लौकिकात् ॥१२-१०४-४४ (६८८८३)
जीवितं संत्यजन्त्येके धनलोभपरा नराः ।
न जीवितार्थं मन्यन्ते पुरुषा हि धनादृते ॥१२-१०४-४५ (६८८८४)
पश्य चैषां कृपणतां पश्य चैषामबुद्धिताम् ।
अध्रुवे जीविते मोहादर्थतृष्णामुपाश्रिताः ॥१२-१०४-४६ (६८८८५)
संचये च विनाशान्ते मरणान्ते च जीविते ।
संयोगे च वियोगान्ते कोनु विप्रणयेन्मनः ॥१२-१०४-४७ (६८८८६)
धनं वा पुरुषो राजन्पुरुषं वा पुनर्धनम् ।
अवश्यं प्रजहात्येव तद्विद्वान्कोनु संज्वरेत् ॥१२-१०४-४८ (६८८८७)
अन्यत्रोपनता ह्यापत्पुरुषं तोषयत्युत ।
तेन शान्तिं न लभते नाहमेवेति कारणात् ॥' १२-१०४-४९ (६८८८८)
अन्येषामपि नश्यन्ति सुहृदश्च धनानि च ।
पश्य बुद्ध्या मनुष्याणां तुल्यामापदमात्मनः ।
नियच्छ यच्छ संयच्छ इन्द्रियाणि मनस्तथा ॥ १२-१०४-५० (६८८८९)

प्रतिषेद्धा न चाप्येषु दुर्बलेष्वहितेषु च ॥ १२-१०४-५१ (६८८९०)
प्राप्तिसृष्टेषु भावेषु व्यपकृष्टेष्वसंभवे ।
प्रज्ञानतृप्तो विक्रान्तस्त्वद्विधो नानुशोचति ॥ १२-१०४-५२ (६८८९१)
अल्पमिच्छन्नचपलो मृदुर्दान्तः सुसंस्थितः ।
ब्रह्मचर्योपपन्नश्च त्वद्विधो नैव मुह्यति ॥ १२-१०४-५३ (६८८९२)
न त्वेव जाल्मीं कापालीं वृत्तिमेषितुमर्हसि ।
नृशंसवृत्तिं पापिष्ठां दुःखां कापुरुषोचिताम् ॥ १२-१०४-५४ (६८८९३)
अपि मूलफलाहारो रमस्वैको महावने ।
वाग्यतः संगृहीतात्मा सर्वभूतदयान्वितः ॥ १२-१०४-५५ (६८८९४)
सदृशं पण्डितस्यैतदीषादन्तेन हस्तिना ।
यदेको रमतेऽरण्ये यच्चाप्यल्पेन तुष्यति ॥ १२-१०४-५६ (६८८९५)
महाह्रदः संक्षुभित आत्मनैव प्रसीदति ।
ग्एवं नरः स्वत्मानैव कृतप्रज्ञः प्रसीदति ॥' १२-१०४-५७ (६८८९६)
एतदेवं गतस्याहं सुखं पश्यामि केवलम् ।
असंभवे श्रियो राजन्हीनस्य सचिवादिभिः ।
दैवे प्रतिनिविष्टे च किं श्रेयो मन्यते भवान् ॥ ॥ १२-१०४-५८ (६८८९७)

इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि
चतुरधिकशततमोऽध्यायः ॥ १०४.।
Mahabharata - Shanti Parva - Chapter Footnotes

१२-१०४-४ भागी भागार्हः । ईहमानो यतमानः ॥
१२-१०४-६ इतरेण शारीरेण ॥
१२-१०४-७ निर्विद्य विरज्य । कामाद्विषयभोगात् । बुद्धिमयं वसु
ज्ञानरूपं धनम् ॥
१२-१०४-१२ इयं निर्विद्यतीति श्लोकेन त्वया प्रोक्ता । अहं च यच्च
ममाऽस्त्येतत्सर्वमनित्यमिति जानतस्ते त्वया ॥
१२-१०४-१३ नास्ति तुच्छत्वात् ॥
१२-१०४-२२ तन्निर्ममत्वम् ॥
१२-१०४-२५ यादृच्छिकमयत्नादागतम् ॥
१२-१०४-२६ एतच्छोकाख्यं फलं यथालब्धेन वर्तयन् जीवन्नपि
पश्यामि । यादृच्छिकस्य नाशेन जीवनालोपेऽपि शोको न
नश्यतीत्यर्थः ॥
१२-१०४-३० न मृष्यते तैर्न संतुष्यति ॥
१२-१०४-३३ अन्यत्र शत्रौ । कुशला निर्मत्सराः । अभिनिष्यदन्ते प्रस्रवति ॥
१२-१०४-३७ विधित्सा क्रियाणामनुपरमस्तेन साधनेन च संकुसुकमस्थिरम् ॥

१२-१०४-३८ उपद्रवानस्थिरान् ॥
१२-१०४-३९ अर्थरूपेण भासमानाः ॥
१२-१०४-४० आद्यस्योदाहरणं अर्थायेति ॥
१२-१०४-४१ द्वितीयस्योदाहरण रममाण इति ॥
१२-१०४-४२ परिभग्नकमो नष्टारम्भः ॥
१२-१०४-४७ विप्रणयेद्द्यात् ॥
१२-१०४-५० नियम्य सर्वं सङ्गं च इति ट । ड। पाठः ॥
१२-१०४-५२ प्रतिकृष्टेषु भाग्येषु व्यपकृष्टेषु संभवे इति
ट थ । पाठः ॥

---

शन्तिपर्व-अध्यय१०५
॥ श्रीः ॥
१२.१०५. अध्यायः १०५

Mahabharata - Shanti Parva - Chapter Topics
भीष्मेण युधिष्ठिरंप्रति राज्ञां
शत्रुजयोपायप्रतिपादककौसल्यकालकवृक्षीयसंवादानुवादः ॥ १.।
Mahabharata - Shanti Parva - Chapter Text

१२-१०५-० (६८८९८)
मुनिरुवाच। १२-१०५-०क्ष् (५६१६)
अथ चेत्पौरुषं किंचित्क्षत्रियात्मनि पश्यसि ।
ब्रवीम्यहं तु ते नीतिं राज्यस्य प्रतिपत्तये ॥ १२-१०५-१ (६८८९९)
तां चच्छक्ष्यस्यनुष्ठातुं कर्म चैव करिष्यसि ।
शृणु सर्वमशेषेण यत्ते वक्ष्यामि तत्त्वतः ॥ १२-१०५-२ (६८९००)
आचरिष्यसि चेत्कर्म महतोऽर्थानवाप्स्यसि ।
राज्यं वा राज्यमन्त्रं वा महतीं वा पुनः श्रियम् ।
यद्येतद्रोचते राजन्पुनर्ब्रूहि ब्रवीमि ते ॥ १२-१०५-३ (६८९०१)
राजोवाच। १२-१०५-४क्ष् (५६१७)
ब्रवीतु भगवान्नीतिमभिपन्नोऽस्म्यधीहि भो ।
अमोघ एव मेऽद्यास्तु त्वया सह समागमः ॥ १२-१०५-४ (६८९०२)
मुनिरुवाच। १२-१०५-५क्ष् (५६१८)
हित्वा मानं च दम्भं च क्रोधं हर्षं भयं तथा ।
प्रत्यमित्राणि सेवस्व प्रणिपत्य कृताञ्जलिः ।
तमुत्तमेन शौचेन कर्मणा चावधारय ॥ १२-१०५-५ (६८९०३)
दातुमर्हति ते वित्तं वैदेहः सत्यविक्रमः ।
प्रमाणं सर्वभूतेषु प्रग्रहं च गमिष्यसि ॥ १२-१०५-६ (६८९०४)

ततः सहायान्सोत्साहाँल्लप्स्यसेऽव्यसनाञ्शुचीन् ।
वर्तमानः स्वशास्त्रे वै संयतात्मा जितेन्द्रियः ।
अभ्युद्धरति चात्मानं प्रसादयति च प्रजाः ॥ १२-१०५-७ (६८९०५)
तेनैव त्वं धृतिमता श्रीमता चापि सत्कृतः ।
प्रमाणं सर्वभूतेषु गत्वा च ग्रहणं महत् ॥१२-१०५-८ (६८९०६)
ततः सुहृद्बलं लब्ध्वा मन्त्रयित्वा सुमन्त्रितम् ।
सान्त्वेन भेदयित्वाऽरीन्बिल्वं बिल्वेन शातय ।
परैर्वा संविदं कृत्वा बलमप्यस्य घातय ॥ १२-१०५-९ (६८९०७)
अलभ्या ये शुभा भावाः स्त्रियश्चाच्छादनानि च ।
शय्यासनानि यानानि महार्हाणि गृहाणि च ॥१२-१०५-१० (६८९०८)
पक्षिणो मृगजातानि रसगन्धाः फलानि च ।
तेष्वेव सज्जयेथास्त्वं यथा नश्येत्स्वयं परः ॥१२-१०५-११ (६८९०९)
यद्येवं प्रतिषेद्धव्यो यद्युपेक्षणमर्हति ।
ग्सदैव राजशार्दूल विदुषा हितमिच्छता।'
न जातु विवृतः कार्यः शत्रुः सुनयमिच्छता ॥ १२-१०५-१२ (६८९१०)
वसस्व पुरमामित्रं विषये मित्रसंमतः ।
भजस्व श्वेतकाकीयैर्मित्रधर्ममनर्थकैः ॥१२-१०५-१३ (६८९११)
आरम्भांश्चास्य महतो दुष्करान्संप्रयोजय ।
नदीबन्धविभेदांश्च बलवद्भिर्विरुध्यताम् ॥१२-१०५-१४ (६८९१२)
उद्यानानि महार्हाणि शयनान्यासनानि च ।
प्रीतिभोगमुखेनैव कोशमस्य विरोचय ॥१२-१०५-१५ (६८९१३)
यज्ञदाने प्रशंसास्मै ब्राह्मणाननुवर्तय ।
ते त्वा प्रियं करिष्यन्ति तच्छेत्स्यन्ति वृका इव ॥१२-१०५-१६ (६८९१४)
असंशयं पुण्यशीलाः प्राप्नोति परमां गतिम् ।
त्रिविष्टपे पुण्यतमं स्थानं प्राप्नोति शाश्वतम् ॥१२-१०५-१७ (६८९१५)
कोशक्षये त्वमित्राणां वशं कौसल्य गच्छति ।
उभयत्र प्रयुक्तस्य धर्मे चाधर्म एव च ॥१२-१०५-१८ (६८९१६)
फलार्थमूलमुच्छिद्यात्तेन नन्दन्ति शत्रवः ।
न चास्मै मानुषं कर्म दैवप्रस्योपवर्णय ॥१२-१०५-१९ (६८९१७)
असंशयं दैवपरः क्षिप्रमेव विनश्यति ।
याजयैनं विश्वजिता सर्वस्वेन वियुज्यताम् ॥१२-१०५-२० (६८९१८)
ततो गच्छत्यसिद्धार्थः पीडयानो महाजनम् ।
त्यागधर्मविदं पुण्यं कंचिदस्योपवर्णय ॥१२-१०५-२१ (६८९१९)
अपि त्यागं बुभूषेत कच्चिद्गच्छेदनामयम् ।
सिद्धेनौषधियोगेन सर्वशत्रुविनाशिना ।
गजानश्वान्मनुष्यांश्च कृतकैरुपघातय ॥ १२-१०५-२२ (६८९२०)

एते चान्ये च बहवो दम्भयोगाः सुचिन्तिताः ।
शक्या विपहता कर्तुं न क्लीबेन नृपात्मज ॥ ॥ १२-१०५-२३ (६८९२१)

इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि
पञ्चाधिकशततमोऽध्यायः ॥ १०५.।
Mahabharata - Shanti Parva - Chapter Footnotes

१२-१०५-४ अभिपन्नोऽस्मि पौरुषेणेति शेषः ॥
१२-१०५-६ प्रमाणं विश्वासम् ॥
१२-१०५-७ स्वशास्त्रे नीतिशास्त्रे ॥
१२-१०५-८ ग्रहणं आदरम् ॥
१२-१०५-१३ श्वेतकाकीयैः श्वा च एतश्च काकश्च तेषामिति धर्माः
। क्रमेण नित्यं जागरूकत्वभयचकितत्वपरेङ्गितज्ञत्वानि तैः
उपायैः मित्रधर्मं भजस्व। श्वेत इत्यत्रोमाङोश्चेति पररूपम्। एतो
मृगः ॥
१२-१०५-१४ नदीवच्च विरोधांश्चेति झ । पाठः। तत्र
आरम्भान्विरोधांश्च महानदीवद्दुस्तरानित्यर्थः ॥
१२-१०५-१८ धर्माधर्माभ्यां कोशक्षये सति ॥
१२-१०५-१९ फलस्य स्वर्गादेः अर्थस्य जयादेः मूलकारणं कोशः ॥

---

शन्तिपर्व-अध्यय१०६
॥ श्रीः ॥
१२.१०६. अध्यायः १०६

Mahabharata - Shanti Parva - Chapter Topics
भीष्मेण युधिष्ठिरंप्रति कालकवृक्षीयनिदेशेन कौसल्यस्य पुना
राज्यप्राप्त्यादिकथनम् ॥ १.।
Mahabharata - Shanti Parva - Chapter Text

१२-१०६-० (६८९२२)
राजोवाच। १२-१०६-०क्ष् (५६१९)
न निकृत्या न दम्भेन ब्रह्मन्निच्छामि जीवितुम् ।
नाधर्मयुक्तानिच्छेयमर्थान्सुमहतोऽप्यहम् ॥ १२-१०६-१ (६८९२३)
पुरस्तादेव भगवन्मयैतदपवर्जितम् ।
येन पापं न शङ्केत यद्वा कृत्स्नं हितं भवेत् ॥ १२-१०६-२ (६८९२४)
आनृशंस्येन धर्मेण लोके ह्यस्मिञ्जिजीविषुः ।
नाहमेतदलं कर्तुं नैतन्मय्युपपद्यते ॥ १२-१०६-३ (६८९२५)

मुनिरुवाच। १२-१०६-४क्ष् (५६२०)
उपपन्नस्त्वमेतेन यथा क्षत्रिय भाषसे ।
प्रकृत्या ह्युपपन्नोऽसि बुद्ध्या चाद्भुतदर्शनः ॥ १२-१०६-४ (६८९२६)
उभयोरेव साह्यार्थे यतिष्ये तव तस्य च ।
संश्लेषं वा करिष्यामि शाश्वतं ह्यनपायिनम् ॥ १२-१०६-५ (६८९२७)
त्वादृशं हि कुले जातभनृशंसं बहुश्रुतम् ।
अमात्यं को न कुर्वीत राज्यप्रणयकोविदम् ॥ १२-१०६-६ (६८९२८)
यस्त्वं प्रव्राजितो राज्याद्व्यसनं चोत्तमं गतः ।
आनृशंस्येन वृत्तेन क्षत्रियेच्छसि जीवितुम् ॥ १२-१०६-७ (६८९२९)
आगन्ता मद्गृहं तात वैदेहः सत्यसंगरः ।
अथाहं तं नियोक्ष्यामि तत्करिष्यत्यसंशयम् ॥ १२-१०६-८ (६८९३०)
भीष्म उवाच। १२-१०६-९क्ष् (५६२१)
तत आहूय वैदेहं मुनिर्वचनमब्रवीत् ।
अयं राजकुले जातो विदिताभ्यन्तरो मम ॥ १२-१०६-९ (६८९३१)
आदर्श इव शुद्धात्मा शारदश्चन्द्रमा यथा ।
नास्मिन्पश्यामि वृजिनं सर्वतो मे परीक्षितः ॥ १२-१०६-१० (६८९३२)
तेन ते संधिरेवास्तु विश्वसास्मिन्यथा मयि ।
न राज्यमनमात्येन शक्यं शास्तुममित्रहन् ॥ १२-१०६-११ (६८९३३)
अमात्य शुद्ध एव स्याद्बुद्धिसंपन्न एव वा ।
तस्माच्चैव भयं राज्ञः पश्य राज्यस्य योजनम् ॥ १२-१०६-१२ (६८९३४)
धर्मात्मनां क्वचिल्लोके नान्यास्ति गतिरीदृशी ।
तदा राजपुत्रोऽयं सतां मार्गमनुष्ठितः ।
असंगृहीतस्त्वेवैष त्वया धर्मपुरोगमः ॥ १२-१०६-१३ (६८९३५)
संसेव्यमानः शत्रूंस्ते गृह्णीयान्महतो गणान् ॥ १२-१०६-१४ (६८९३६)
यद्ययं प्रतियुद्ध्येत स्वकर्म क्षत्रियस्य तत् ।
जिगीषमाणस्त्वां युद्धे पितृपैतामहे पदे ॥ १२-१०६-१५ (६८९३७)
त्वं अपि प्रतियुद्ध्येथा विजिगीषुर्व्रते स्थितः ।
अयुद्ध्वैव नियोगान्मे वशे कुरु हिते स्थितः ॥ १२-१०६-१६ (६८९३८)
स त्वं धर्ममवेक्षस्व हित्वा लोभमसांप्रतम् ।
न च कामान्न च द्रोहात्स्वधर्मं हातुमर्हसि ॥ १२-१०६-१७ (६८९३९)
नैव नित्यं जयस्तात नैव नित्यं पराजयः ।
तस्माज्जयश्च भोक्तव्यो भोक्तव्यश्च पराजयः ॥ १२-१०६-१८ (६८९४०)
आत्मन्यपि च संदृश्यावुभौ जयपराजयौ ।
निःशेषकारिणां तात निःशेषकरणाद्भयम् ॥ १२-१०६-१९ (६८९४१)
इत्युक्तः प्रत्युवाचेदं वचनं ब्राह्मणर्षभम् ।
प्रतिपूज्याभिसत्कृत्य पूजार्हमनुमान्य च ॥ १२-१०६-२० (६८९४२)

यथा ब्रूयान्महाप्राज्ञो यथा ब्रूयान्महाश्रुतः ।
श्रेयस्कामो यथा ब्रूयादुभयोरेव तत्क्षमम् ॥ १२-१०६-२१ (६८९४३)
यद्यद्वचनमुक्तोऽस्मि करिष्यामि च तत्तथा ।
एतद्धि परमं श्रेयो न मेऽत्रास्ति विचारणा ॥ १२-१०६-२२ (६८९४४)
ततः कौसल्यमाहूय मैथिलो वाक्यमब्रवीत् ।
धर्मतो बुद्धितश्चैव बलेन च जितं मया ॥ १२-१०६-२३ (६८९४५)
अहं त्वया चात्मगुणैर्जितः पार्थिवसत्तम ।
आत्मानमनवज्ञाय जितवद्वर्ततां भवान् ॥ १२-१०६-२४ (६८९४६)
नावमन्यामि ते बुद्धिं नावमन्ये च पौरुषम् ।
नावमन्ये जयामीति जितवद्वर्ततां भवान् ॥ १२-१०६-२५ (६८९४७)
यथावत्पूजितो राजन्गृहं गन्तासि मे गृहात् ।
ततः संपूज्य तौ विप्रं विश्वस्तौ जग्मतुर्गृहान् ॥ १२-१०६-२६ (६८९४८)
वैदेहस्त्वथ कौसल्यं प्रवेश्य गृहमञ्जसा ।
प्राद्यार्घ्यमधुपर्कैस्तं पूजार्हं प्रत्यपूजयत् ॥ १२-१०६-२७ (६८९४९)
ददौ दुहितरं चास्मै रत्नानि विविधानि च ।
एष राज्ञां परो धर्मः समौ जयपराजयौ ॥ ॥ १२-१०६-२८ (६८९५०)

इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि
षडधिकशततमोऽध्यायः ॥ १०६.।
Mahabharata - Shanti Parva - Chapter Footnotes

१२-१०६-५ तस्य विदेहस्य ॥
१२-१०६-६ त्वादृशा राजानं लब्ध्वा अमात्यकर्म को न कुर्वीताऽपितु
सर्वोऽपि मादृशः कुर्वीतैवेत्यर्थः ॥
१२-१०६-७ उत्तमं महत् ॥
१२-१०६-१४ गणाञ्शत्रुसङ्घान् ॥
१२-१०६-१७ असांप्रतमनुचितम् ॥
१२-१०६-२४ जितवत्प्राप्तजयइव ॥

---

शन्तिपर्व-अध्यय१०७
॥ श्रीः ॥
१२.१०७. अध्यायः १०७

Mahabharata - Shanti Parva - Chapter Topics
भीष्मेण युधिष्ठिरंप्रति गणवृद्धिप्रकारादिकथनम् ॥ १.।
Mahabharata - Shanti Parva - Chapter Text

१२-१०७-० (६८९५१)
युधिष्ठिर उवाच। १२-१०७-०क्ष् (५६२२)
ब्राह्मणक्षत्रियविशां शूद्राणां च परंतप ।
धर्मवृत्तं च वित्तं च वृत्त्युपायाः फलानि च ॥ १२-१०७-१ (६८९५२)
राज्ञां वृत्तं च कोशं च कोशसंचयनं जयः ।
अमात्यगुणवृत्तिश्च प्रकृतीनां च वर्धनम् ॥ १२-१०७-२ (६८९५३)
षाड्गुण्यगुणकल्पश्च सेनानीतिस्तथैव च ।
दुष्टस्य च परिज्ञानमदुष्टस्य च लक्षणम् ॥ १२-१०७-३ (६८९५४)
समहीनाधिकानां च यथावल्लक्षणं च यत् ।
मध्यमस्य च तुष्ट्यर्थं यथा स्थेयं विवर्धता ॥ १२-१०७-४ (६८९५५)
क्षीणग्रहणवृत्तिश्च यथा धर्मं प्रकीर्तितम् ।
लघुनाऽदेशरूपेण ग्रन्थयोगेन भारत ॥ १२-१०७-५ (६८९५६)
विजिगीषोस्तथा वृत्तमुक्तं चैव तथैव ते ।
गणानां वृत्तिमिच्छामि श्रोतुं मतिमतां वर ॥ १२-१०७-६ (६८९५७)
यथा गणाः प्रवर्धन्ते न भिद्यन्ते च भारत ।
अरींश्च विजिगीषन्ते सुहृदः प्राप्नुवन्ति च ॥ १२-१०७-७ (६८९५८)
भेदमूलो विनाशो हि गणानामुपलक्षये ।
मन्त्रसंवरणं दुःखं बहूनामिति मे मतिः ॥ १२-१०७-८ (६८९५९)
एतदिच्छाम्यहं श्रोतुं निखिलेन परंतप ।
यथा च ते न भिद्येरंस्तच्च मे वद भारत ॥ १२-१०७-९ (६८९६०)
भीष्म उवाच। १२-१०७-१०क्ष् (५६२३)
गणानां च कुलानां च राज्ञां भरतसत्तम ।
वैरसंदीपनावेतौ लोभामर्षौ नराधिप ॥ १२-१०७-१० (६८९६१)
लोभमेको हि वृणुते ततोऽमर्षमनन्तरम् ।
ततो ह्यमर्षसंयुक्तावन्योन्यजनिताशयौ ॥ १२-१०७-११ (६८९६२)
चारमन्त्रबलादानैः सामदानविभेदनैः ।
क्षयव्ययभयोपायैः प्रकर्षन्तीतरेतरम् ॥ १२-१०७-१२ (६८९६३)
तत्रादानेन भिद्यन्ते गणाः संघातवृत्तयः ।
भिन्ना विमनसः सर्वे गच्छन्त्यरिवशं भयात् ॥ १२-१०७-१३ (६८९६४)
भेदे गणा विनश्युर्हि भिन्नास्तु सुजयाः परैः ।
तस्मात्संघातयोगेन प्रयतेरन्गणाः सदा ॥ १२-१०७-१४ (६८९६५)
अर्थाश्चैवाधिगम्यन्ते संघातबलपौरुषैः ।
ब्राह्माश्च मैत्रीं कुर्वन्ति तेषु संघातवृत्तिषु ॥ १२-१०७-१५ (६८९६६)
ज्ञानवृद्धाः प्रशंसन्ति शुश्रूषन्तः परस्परम् ।
विनिवृत्ताभिसंधानाः सुखमेधन्ति सर्वशः ॥ १२-१०७-१६ (६८९६७)
धर्मिष्ठान्व्यवहारांश्च स्थापयन्तश्च शास्त्रतः ।

यथावत्प्रतिपश्यन्तो विवर्धन्ते गणोत्तमाः ॥१२-१०७-१७ (६८९६८)
पुत्रान्भ्रातॄन्निगृह्णन्तो विनयन्तश्च तान्सदा ।
विनीतांश्च प्रगृह्णन्तो विवर्धन्ते गणोत्तमाः ॥१२-१०७-१८ (६८९६९)
चारमन्त्रविधानेषु कोशसंनिचयेषु च ।
नित्ययुक्ता महाबाहो वर्धन्ते सर्वतो गणाः ॥१२-१०७-१९ (६८९७०)
प्राज्ञांश्चारान्महोत्साहान्कर्मसु स्थिरपौरुषान् ।
मानयन्तः सदा युक्ता विवर्धन्ते गणा नृप ॥१२-१०७-२० (६८९७१)
द्रव्यवन्तश्च शूराश्च शस्त्रज्ञाः शास्त्रपारगाः ।
कृच्छ्रास्वापत्सु संमूढान्गणाः संतारयन्ति ते ॥१२-१०७-२१ (६८९७२)
क्रोधो भेदो भयं दण्डः कर्षणं निग्रहो वधः ।
नयत्यरिवशं सद्यो गणान्भरतसत्तम ॥१२-१०७-२२ (६८९७३)
तस्मान्मानयितव्यास्ते गणमुख्याः प्रधानतः ।
लोकयात्रा समायत्ता भूयसी तेषु पार्थिव ॥१२-१०७-२३ (६८९७४)
मन्त्रगुप्तिः प्रधानेषु चारश्चामित्रकर्शण ।
न गणाः कृत्स्नशो मन्त्रं श्रोतुमर्हन्ति भारत ॥१२-१०७-२४ (६८९७५)
गणमुख्यैस्तु संभूय कार्यं गणहितं मिथः ॥ १२-१०७-२५ (६८९७६)
पृथग्गणस्य भिन्नस्य विततस्य ततोऽन्यथा ।
अर्थाः प्रत्यवसीदन्ति तथाऽनर्था भवन्ति व ॥१२-१०७-२६ (६८९७७)
तेषामन्योन्यभिन्नानां स्वशक्तिमनुतिष्ठताम् ।
निग्रहः पण्डितैः कार्यः क्षिप्रमेव प्रधानतः ॥१२-१०७-२७ (६८९७८)
कुलेषु कलहा जाताः कुलवृद्धैरुपेक्षिताः ।
गोत्रस्य नाशं कुर्वन्ति गणभेदस्य कारकम् ॥१२-१०७-२८ (६८९७९)
आभ्यन्तरं भयं रक्ष्यमसारं बाह्यतो भयम् ।
आभ्यन्तरं भयं राजन्सद्यो मूलानि कृन्तति ॥१२-१०७-२९ (६८९८०)
अकस्मात्क्रोधमोहाभ्यां लोभाद्वाऽपि स्वभावजात् ।
अन्योन्यं नाभिभाषन्ते तत्पराभवलक्षणम् ॥१२-१०७-३० (६८९८१)
जात्या च सदृशाः सर्वे कुलेन सदृशास्तथ ।
न चोद्योगेन बुद्ध्या वा रूपद्रव्येण वा पुनः ॥१२-१०७-३१ (६८९८२)
भेदाच्चैव प्रदानाच्च नाम्यन्ते रिपुभिर्गणाः ।
तस्मात्संघातमेवाहुर्गणानां शरणं महत् ॥ ॥१२-१०७-३२ (६८९८३)

इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि
सप्ताधिकसततमोऽध्यायः ॥१०७.।

Mahabharata - Shanti Parva - Chapter Footnotes

१२-१०७-५ क्षीणस्य ग्रहणं वृत्तिर्जीविका च ।लधुना

सुगमेन। आदेशरूपेणोपदेशात्मकेन ॥
१२-१०७-६ गणानां शूरजनस्तेमानाम् ॥
१२-१०७-११ एको राजा लोभं वृणुते । गणस्तदाऽस्मभ्यं न ददाती
त्यमर्षं वृणुते ॥
१२-१०७-१२ इतरेतरं गणा राजानश्च प्रकर्षन्ति ॥
१२-१०७-१४ संघातयोगेनैकमत्यप्रयोगेण ॥

---

शन्तिपर्व-अध्यय१०८
॥ श्रीः ॥
१२.१०८. अध्यायः १०८

Mahabharata - Shanti Parva - Chapter Topics
भीष्मेण युधिष्ठिरंप्रति मातृपितृगुरुमहिमानुवर्णनम् ॥१.।
Mahabharata - Shanti Parva - Chapter Text

१२-१०८-० (६८९८४)
युधिष्ठिर उवाच १२-१०८-०क्ष् (५६२४)
महानयं धर्मपथो बहुशाखश्च भारत ।
किंस्विदेवेह धर्माणामनुष्ठेयतमं मतम् ॥१२-१०८-१ (६८९८५)
किं कार्यं सर्वभूतानां गरीयो भवतो मतम् ।
यथाऽहं परमं धर्ममिह च प्रेत्य चाप्नुयाम् ॥१२-१०८-२ (६८९८६)
भीष्म उवाच। १२-१०८-३क्ष् (५६२५)
मातापित्रोर्गुरूणां च पूजा बहुमता मम ।
अत्र वर्तन्नरो लोकान्यशश्च महदश्नुते ॥१२-१०८-३ (६८९८७)
यदेते ह्यनुजानीयुः कर्म तात सुपूजिताः ।
धर्मं धर्मविरुद्धं वा तत्कर्तव्यं युधिष्ठिर ॥१२-१०८-४ (६८९८८)
न तैरभ्यननुज्ञातो धर्ममन्यं समाचरेत् ।
यं मे तेऽभ्यनुजानीयुः स धर्म इति निश्चयः ॥१२-१०८-५ (६८९८९)
एत एव त्रयो लोका एत एवाश्रमास्त्रयः ।
एत एव त्रयो वेदा एत एव त्रयोऽग्नयः ॥१२-१०८-६ (६८९९०)
पितावै गार्हपत्योऽग्निर्माताऽग्निर्दक्षणः स्मृतः ।
गुरु वनीयस्तु साऽग्नित्रेता गरीयसी ॥१२-१०८-७ (६८९९१)
त्रिष्वप्रमाद्यन्नेतेषु त्रींल्लोँकानपि जेष्यसि ।
पितृवृत्त्या त्विमं लोकं मातृवृत्त्या तथा परम् ॥१२-१०८-८ (६८९९२)
ब्रह्मलोकं गुरोर्वृत्त्या नियमेन तरिष्यसि ।
स--गेतेषु वर्तस्व त्रिषु लोकेषु भारत ॥१२-१०८-९ (६८९९३)
यशः प्राप्स्यसि भद्रं ते धर्मं च सुमहाफलम् ।

नैतानतिशयीथास्त्वं नात्यश्नीथा न दूषयेः ॥१२-१०८-१० (६८९९४)
ह्रियं परिचरेश्चैव तद्धि सुकृतमुत्तमम् ।
कीर्तिं पुण्यं यशो लोकान्प्राप्स्यसे त्वं जनाधिप ॥१२-१०८-११ (६८९९५)
सर्वे तस्यादृता लोका यस्यैते त्रय आदृताः ।
अनादृतास्तु यस्यैते सर्वास्तस्याफलाः क्रियाः ॥१२-१०८-१२ (६८९९६)
न चायं न परो लोको न यशस्तस्य भारत ।
अमानिता नित्यमेव यस्यैते गुरवस्त्रयः ॥१२-१०८-१३ (६८९९७)
न चास्मिन्न परे लोके यशस्तस्य प्रकाशते ।
यच्चान्यदपि कल्याणं पारत्रं समुदाहृतम् ॥१२-१०८-१४ (६८९९८)
तेभ्य एव हि यत्सर्वं कृत्यं यन्निसृजाम्यहम् ।
तदासीन्मे शतगुणं सहस्रगुणमेव च ।
तस्मान्मे संप्रकाशन्ते त्रयो लोका युधिष्ठिर ॥ १२-१०८-१५ (६८९९९)
दशैव तु सदाऽऽचार्यः श्रोत्रियानधितिष्ठति ।
दशाचार्यानुपाध्याय उपाध्यायान्पिता दश ॥१२-१०८-१६ (६९०००)
पितॄन्दश तु मातैका सर्वां वा पृथिवीमपि ।
गुरुत्वेनाभिभवति नास्ति मातृसमो गुरुः ॥१२-१०८-१७ (६९००१)
गुरुर्गरीयान्पितृतो मातृतश्चेति मे मतिः ।
उभौ हि मातापितरौ जन्मन्येवोपयुज्यतः ॥१२-१०८-१८ (६९००२)
शरीरमेतौ सृजतः पिता माता च भारत ।
आचार्यशिष्टा या जातिः सासम्यगजरामरा ॥१२-१०८-१९ (६९००३)
अवध्या हि सदा माता पिता चाप्युपचारिणौ ॥ १२-१०८-२० (६९००४)
न स दुष्यति तत्कृत्वा न च ते दूषयन्ति तम् ।
धर्माय यतमानानां विदुर्देवाः सहर्षिभिः ॥१२-१०८-२१ (६९००५)
य आवृणोत्यवितथेन कर्मणा
ऋतं ब्रुवन्नमृतं संप्रयच्छन् ।
तं मन्येथाः पितरं मातरं च
तस्मै न द्रुह्येत्कृतमस्य जानन् ॥ १२-१०८-२२ (६९००६)
विद्यां श्रुत्वा ये गुरुं नाद्रियन्ते
प्रत्युत्पन्ना मनसा कर्मणा वा ।
तेषां पापं भ्रूणहत्याविशिष्टं
नान्यस्तेभ्यः पापकृदस्ति लोके ।
यथैव ते गुरुभिर्भावनीया
स्तथैव तेषां गुरवोऽभ्यर्चनीयाः ॥ १२-१०८-२३ (६९००७)
तस्मात्पूजयितव्याश्च संविभज्याश्च यत्नतः ।
गुरवोऽर्चयितव्याश्च पुराणं धर्ममिच्छता ॥१२-१०८-२४ (६९००८)
येन प्रीणन्ति पितरस्तेन प्रीतः प्रजापतिः ।

प्रीणाति जननीयेन पृथिवी तेन पूजिता ॥१२-१०८-२५ (६९००९)
येन प्रीणात्युपाध्यायस्तेन स्याद्ब्रह्म पूजितम् ।
मातृतः पितृतश्चैव तस्मात्पूज्यतमो गुरुः ॥१२-१०८-२६ (६९०१०)
ऋषयश्च हि देवाश्च प्रीयन्ते पितृभिः सह ।
पूज्यमानेषु गुरुषु तस्मात्पूज्यतमो गुरुः ॥१२-१०८-२७ (६९०११)
केनचिन्न च वृत्तेन ह्यवज्ञेयो गुरुर्भवेत् ।
न च माता न च पितो तादृशो यादृशो गुरुः ॥१२-१०८-२८ (६९०१२)
न तेऽवमानमर्हन्ति न तेषां दूषयेत्कृतम् ।
गुरूणामेव सत्कारं विदुर्देवाः सहर्षिभिः ॥१२-१०८-२९ (६९०१३)
उपाध्यायं पितरं मातरं च
ये विद्रुह्यन्ते मनसा कर्मणा वा ।
तेषां पापं भ्रूणहत्याविशिष्टं
तस्मान्नान्यः पापकृदस्ति लोके ॥ १२-१०८-३० (६९०१४)
भृतो भर्तारं यो न विभिर्ति पुत्रः
स्वयोनिजः पितरं मातरं च ।
तस्य पापं भ्रूणहत्याविषिष्टं
तस्मान्नान्यः पापकृदस्ति लोके ॥ १२-१०८-३१ (६९०१५)
मित्रद्रुहः कृतघ्नस्य स्त्रीघ्नस्य पिशुनस्य च ।
चतुर्णामपि चैतेषां निष्कृतिं नानुशुश्रुम् ॥१२-१०८-३२ (६९०१६)
एतत्सर्वं मनुनिर्देशदृष्टं
यत्कर्तव्यं पुरुषेणेह किंचित् ।
एतच्छ्रेयो नान्यदस्माद्विशिष्टं
सर्वान्धर्माननुसृत्यैतदुक्तम् ॥ ॥ १२-१०८-३३ (६९०१७)

इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि
अष्टाधिकशततमोऽध्यायः ॥१०८.।

Mahabharata - Shanti Parva - Chapter Footnotes

१२-१०८-८ वृत्त्या पूज्या ॥
१२-१०८-२१ तत् वध्यानामपि तेषां अवधं कृत्वा ।ते आराधिनोऽपि पितृमातृगुरवः अवधेन नैनं दूषयन्ति। राज्य हि वध्यानामवधे दुष्यति तद्वन्नात्रेत्यर्थः। धर्माय दुष्टानामपि पित्रादीनां पालनाय यतमानानां यतमानान्देवा अप्यनुग्राह्यत्वेन विदुः ॥
१२-१०८-२२ आवृणोति अनुगृह्णाति ।कर्मणा प्रवचनेन। ऋतं वेदम् ॥
१२-१०८-३२ स्त्रीघ्नस्य गुरुधातिनः इति झ ।पाठः ॥
१२-१०८-३३ अनुसृत्यैकीकृत्य ।एतत्सारभूतम् ॥

॥ श्रीः ॥
१२.१०९. अध्यायः १०९

Mahabharata - Shanti Parva - Chapter Topics
भीष्मेण युधिष्ठिरंप्रति सत्यानृतविवेचनम् ॥ १.।
Mahabharata - Shanti Parva - Chapter Text

१२-१०९-० (६९०१८)
युधिष्ठिर उवाच। १२-१०९-०क्ष् (५६२६)
कथं धर्मे स्थातुमिच्छन्नरो वर्तेत भारत ।
तत्त्वं जिज्ञासमानाय प्रब्रूहि भरतर्षभ ॥ १२-१०९-१ (६९०१९)
सत्यं चैवानृतं चोभे लोकानावृत्य तिष्ठतः ।
तयोः किमाचरेद्राजन्पुरुषो धर्मनिश्चितः ॥ १२-१०९-२ (६९०२०)
किंस्वित्सत्यं किमनृतं किंस्विद्धर्म्यं सनातनम् ।
कस्मिन्काले वदेत्सत्यं कस्मिन्वाऽप्यनृतं वदेत् ॥ १२-१०९-३ (६९०२१)
भीष्म उवाच। १२-१०९-४क्ष् (५६२७)
सत्यस्य वचनं साधु न सत्याद्विद्यते परम् ।
यत्तु लोके सुदुर्ज्ञेयं तत्ते वक्ष्यामि भारत ॥ १२-१०९-४ (६९०२२)
भवेत्सत्यं न वक्तव्यं वक्तव्यमनृतं भवेत् ।
यत्रानृतं भवेत्सत्यं सत्यं वाऽप्यनृतं भवेत् ॥ १२-१०९-५ (६९०२३)
तादृशो वर्धते पापो यत्र सत्यमनिश्चितम् ।
सत्यानृते विनिश्चित्य ततो भवति धर्मवि ॥ १२-१०९-६ (६९०२४)
अप्यनार्योऽकृतप्रज्ञः पुरुषोऽप्यतिदारुणः ।
सुमहत्प्राप्नुयात्पुण्यं बलाकोऽन्धवधादिव ॥ १२-१०९-७ (६९०२५)
किमाश्चर्यं च यन्मूढो धर्मकामोऽप्यधर्मवित् ।
सुमहत्प्राप्नुयात्पुण्यं गङ्गायामिव कौशिकः ॥ १२-१०९-८ (६९०२६)
तादृशोऽयमनुप्रश्नो यत्र धर्मः सुदुर्विदः ।
दुष्कारं चापि संख्यातुं तर्केणात्र व्यवस्यति ॥ १२-१०९-९ (६९०२७)
प्रभवार्थाय भूतानां धर्मप्रवचनं कृतम् ।
यः स्यात्प्रभवसंयुक्तः स धर्म इति निश्चयः ॥ १२-१०९-१० (६९०२८)
ग्अहिंसा सत्यमक्रोधस्तपो दानं दमो मतिः ।
अनसूयाऽप्यसामर्थ्यमनीर्ष्या शीलमेव च ॥ १२-१०९-११ (६९०२९)
एष धर्मः कुरुश्रेष्ठ कथितं परमेष्ठिना ।
ब्रह्मणा देवदेवेन अयं चैव सनातनः ॥ १२-१०९-१२ (६९०३०)
अस्मिन्धर्मे स्थितो राजन्नरो भद्राणि पश्यति ।

श्रौतो वधात्मको धर्म अहिंसापरमार्थिकः ॥' १२-१०९-१३ (६९०३१)
धारणाद्धर्ममित्याहुर्धर्मेण विधृताः प्रजाः ।
यः स्याद्धारणसंयुक्तः स धर्म इति निश्चः ॥१२-१०९-१४ (६९०३२)
अहिंसार्थाय भूतानां धर्मप्रवचनं कृतम् ।
यः स्यादहिंसासंयुक्तः स धर्म इति निश्चयः ॥१२-१०९-१५ (६९०३३)
श्रुतिं धर्मं वदन्त्यन्ये मानान्याहुः परे जनाः ।
न च तं स्वभ्यसूयामो न हि सर्वं विधीयते ॥१२-१०९-१६ (६९०३४)
येऽन्यायेन जिहीर्षन्तो धनमिच्छन्ति कर्हिचित् ।
तेभ्यस्तु न तदाख्येयं स धर्म इति निश्चयः ॥१२-१०९-१७ (६९०३५)
अकूजनेन चेन्मोक्षो नावकूजेत्कथंचन ।
अवश्यं कूजितव्यं वा शङ्केरन्वाऽप्यकूजनात् ॥१२-१०९-१८ (६९०३६)
ग्येऽन्ये वाऽप्यनृतं कुर्युः कुर्यादेव विचारणम् ।
श्रेयस्तत्रानृतं वक्तुं सत्यादिति विचारितम् ॥१२-१०९-१९ (६९०३७)
अक्षयाद्यो वधं राजन्कुर्यादेवाविचारयन् ।
अबुध्वाऽनुशये दोषं श्रेयस्तच्चानृतं भवेत् ॥१२-१०९-२० (६९०३८)
न स्तेनः सह संबन्धान्मुच्यते शपथादपि।'
श्रेयस्तत्रानृतं वक्तुं सत्यादिति हि धारणा ॥ १२-१०९-२१ (६९०३९)
यः पापैः सह संबन्धान्मुच्यते शपथादपि ।
न च तेभ्यो धनं दद्याच्छक्ये सति कथंचन ।
पापेभ्यो हि धनं दत्तं दातारमपि पीडयेत् ॥ १२-१०९-२२ (६९०४०)
स्वशरीरोपरोधेन धनमादातुमिच्छतः ।
सत्यसंप्रतिपत्त्यर्थं यद्ब्रूयुः साक्षिणः क्वचित् ।
अनुक्त्वा तत्र तद्वाच्यं सर्वे तेऽनृतवादिनः ॥ १२-१०९-२३ (६९०४१)
प्राणात्यये विवाहे च वक्तव्यमनृतं भवेत् ।
अर्थस्य रक्षणार्थाय परेषां धर्मकारणात् ॥१२-१०९-२४ (६९०४२)
परेषां सिद्धिमाकाङ्क्षन्न च स्याद्धर्मभिक्षुकः ।
प्रतिश्रुत्य न दातव्यं श्वः कार्यस्तु बलात्कृतः ॥१२-१०९-२५ (६९०४३)
यः कश्चिद्धर्मसमयात्प्रच्युतो धर्मजीवनः ।
दण्डेनैव स हन्तव्यस्तं पन्थानं समाश्रितः ॥१२-१०९-२६ (६९०४४)
च्युतः सदैव धर्मेभ्यो धनवान्धर्ममाश्रितः ।
कथं स्वधर्ममुत्सृज्य तमिच्छेदुपजीवितुम् ॥१२-१०९-२७ (६९०४५)
सर्वोपायैर्नियन्तव्यः पापो निकृतिजीवनः ।
धनमित्येव पापानां सर्वेषामिह निश्चयः ॥१२-१०९-२८ (६९०४६)
अविवाह्या ह्यसंभोज्या निकृत्या निरयं गताः ।
च्युता देवमनुष्येभ्यो यथा प्रेतास्तथैव ते ।
शनिर्यज्ञास्तपसा हीना मा स्म तैः सह संगमः ॥ৈ १२-१०९-२९ (६९०४७)

धनादानाद्दुःखतरं जीविता धिक्प्रयोजनम् ।
इदं ते रोचतां धर्म इति वाच्यं प्रयत्नतः ॥ १२-१०९-३० (६९०४८)
न कश्चिदस्ति पापानां धर्म इत्येष निश्चयः ।
तथाविधं च यो हन्यान्न स पापेन लिप्यते ॥ १२-१०९-३१ (६९०४९)
स्वकर्मणा हतं हन्ति हत एव स हन्यते ।
तेषु यः समयं कश्चित्कुर्वीत हतबुद्धिषु ॥ १२-१०९-३२ (६९०५०)
यथा काकास्तथैव श्वा तथैवोपधिजीवनः ।
ऊर्ध्वं देहविमोक्षान्ते भवन्त्येतासु योनिषु ॥ १२-१०९-३३ (६९०५१)
यस्मिन्यथा वर्तति यो मनुष्य
स्तस्मिंस्तथा वर्तितव्यं स धर्मः ।
मायाचारो मायया बाधितव्यः
साध्वाचारः साधुनैवाभ्युपेयः ॥ ॥ १२-१०९-३४ (६९०५२)

इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि
नवाधिकशततमोऽध्यायः ॥ १०९.।
Mahabharata - Shanti Parva - Chapter Footnotes

१२-१०९-६ तादृशः सत्यानृतयोस्तत्त्वमजानन् ।तादृशो बध्यते
बाल इति झ। पाठः ॥
१२-१०९-७ अन्धस्य घ्नाणचक्षुषः सर्वप्राणिवधायोद्यतस्य
वधादूलाको व्याधो हिंस्रस्वभावोऽपि स्वर्गं जगामेति
कर्णपर्वकथानुसंधेया ॥
१२-१०९-८ मूढः कर्णपर्वोक्तः सत्यवादीचोरेभ्यः
सत्यवचनाभिमानित्वान्मार्गमुपदिश्य कार्पटिकान्घातितवान् ।असौ
धर्मविन्नेत्यर्थः। कौशिक उलूको गङ्गातीरे सहस्रशः सर्पिण्या
स्थापितान्यण्डानि भित्त्वा महत्पुण्यं प्राप। तदभेदने तु तीक्ष्णविवाणां
सर्पाणां वृभ्द्या सद्यो लोकनाशसंभवेत्। सुमहत्प्राप्नुयात्पापं इति
ङ। थ। द। पाठः ॥
१२-१०९-९ अत्र धगलक्षणे ।व्यवस्यति निश्चिनोति ॥
१२-१०९-१० प्रभवेऽभ्युदयः ॥
१२-१०९-१६ श्रुत्युक्तोऽर्थः सर्वो धर्म इत्यपि न
।श्येनादेर्धर्मत्वाभावात् सर्वंश्येनाद्यति नहि विधीयते धर्मत्वेन
न चोद्यते ॥
१२-१०९-१७ धनमिच्छन्ति कस्यचि ति झ ।पाठः ॥
१२-१०९-२१ वोरेषु धनिकं पृच्छत्सु न वदेत् ।वदतो मोक्षाभावे
न वेझीति शपथपूर्वकमपि वदेत्। तादृशस्थलेऽनृते दोषो

नास्तीत्यर्थः ॥
१२-१०९-२२ तेभ्यः स्तेनेभ्यः ॥
१२-१०९-२९ मा संगमः सङ्गं मा कार्षीः ॥
१२-१०९-३२ समयं एतान्हनिध्यामीति व्रतं यश्चिकीर्षेत् स कुर्वीत्
। तादृशानां वधे पुण्यमस्तीति भावः ॥

---

शन्तिपर्व-अध्यय११०
॥ श्रीः ॥
१२.११०. अध्यायः ११०

Mahabharata - Shanti Parva - Chapter Topics
भीष्मेण युधिष्ठिरंप्रति दुर्गातितरणोपायकथनम् ॥ १.।
Mahabharata - Shanti Parva - Chapter Text

१२-११०-० (६९०८२)
युधिष्ठिर उवाच। १२-११०-०क्ष् (५६३६)
क्लिश्यमानेषु भूतेषु तैस्तैर्भावैः पृथक्पृथक् ।
दुर्गाण्यतितरेद्येन तन्मे ब्रूहि पितामह ॥ १२-११०-१ (६९०८३)
भीष्म उवाच। १२-११०-२क्ष् (५६३७)
आश्रमेषु यथोक्तेषु यथोक्तं ये द्विजातयः ।
वर्तन्ते संयतात्मानो दुर्गाण्यतितरन्ति ते ॥ १२-११०-२ (६९०८४)
ये दम्भान्नाचरन्ति स्म येषां वृत्तिश्च संयता ।
विषयांश्च निगृह्णन्ति दुर्गाण्यतितरन्ति ते ॥ १२-११०-३ (६९०८५)
प्रत्याहुर्नोच्यमाना ये न हिंसन्ति च हिंसिताः ।
प्रयच्छन्ति न याचन्ते दुर्गाण्यतितरन्ति ते ॥ १२-११०-४ (६९०८६)
वासयन्त्यतिथीन्नित्यं नित्यं ये चानसूयकाः ।
नित्यं स्वाध्यायशीलाश्च दुर्गाण्यतितरन्ति ते ॥ १२-११०-५ (६९०८७)
मातापित्रोश्च ये वृत्तिं वर्तन्ते धर्मकोविदाः ।
वर्जयन्ति दिवास्वप्नं दुर्गाण्यतितरन्ति ते ॥ १२-११०-६ (६९०८८)
ये वा पापं न कुर्वन्ति कर्मणा मनसा गिरा ।
निक्षिप्तदण्डा भूतेषु दुर्गाण्यतितरन्ति ते ॥ १२-११०-७ (६९०८९)
ये न लोभान्नयन्त्यर्थान्राजानो रजसाऽन्विताः ।
विषयान्परिरक्षन्ति दुर्गाण्यतितरन्ति ते ॥ १२-११०-८ (६९०९०)
स्वेषु दारेषु वर्तन्ते न्यायलब्धेष्वृतावृतौ ।
अग्निहोत्रपराः सन्तो दुर्गाण्यतितरन्ति ते ॥ १२-११०-९ (६९०९१)
आहवेषु च ये शूरास्त्यक्त्वा मृत्युकृतं भयम् ।
धर्मेण जयमिच्छन्ति दुर्गाण्यतितरन्ति ते ॥ १२-११०-१० (६९०९२)

ये वदन्तीह सत्यानि प्राणत्यागेऽप्युपस्थिते ।
प्रमाणभूता भूतानां दुर्गाण्यतितरन्ति ते ॥ १२-११०-११ (६९०९३)
कर्माण्यकुत्सनार्थानि येषां वाचश्च सूनृताः ।
येषामर्थाश्च साध्वर्था दुर्गाण्यतितरन्ति ते। १२-११०-१२ (६९०९४)
अनध्यायेषु ये विप्राः स्वाध्यायं नैव कुर्वते ।
तपोनिष्ठाः सुतपसो दुर्गाण्यतितरन्ति ते ॥ १२-११०-१३ (६९०९५)
ये तपश्च तपस्यन्ति कौमारब्रह्मचारिणः ।
विद्या वेदव्रतस्नाता दुर्गाण्यतितरन्ति ते ॥ १२-११०-१४ (६९०९६)
ये च संशान्तरजसः संशान्ततमसश्च ये ।
सत्वे स्थिता महाभागा दुर्गाण्यतितरन्ति ते ॥ १२-११०-१५ (६९०९७)
येषां न कश्चित्रसति न त्रसन्ति हि कस्यचित् ।
येषामात्मसमो लोको दुर्गाण्यतितरन्ति ते ॥ १२-११०-१६ (६९०९८)
परश्रिया न तप्यन्ति ये सन्तः पुरुषर्षभाः ।
ग्राम्यादन्नान्निवृत्ताश्च दुर्गाण्यतितरन्ति ते ॥ १२-११०-१७ (६९०९९)
सर्वान्देवान्नमस्यन्ति सर्वधर्मांश्च शृण्वते ।
ये श्रद्दधानाः शान्ताश्च दुर्गाण्यतितरन्ति ते ॥ १२-११०-१८ (६९१००)
ये न मानित्वमिच्छन्ति मानयन्ति च ये परान् ।
मान्यमानान्नमस्यन्ति दुर्गाण्यतितरन्ति ते ॥ १२-११०-१९ (६९१०१)
ये च श्राद्धानि कुर्वन्ति तिथ्यांतिथ्यां प्रजार्थिनः ।
सुविशुद्धेन मनसा दुर्गाण्यतितरन्ति ते ॥ १२-११०-२० (६९१०२)
ये क्रोधं संनियच्छन्ति क्रुद्धान्संशमयन्ति च ।
न च रुष्यन्ति भृत्यानां दुर्गाण्यतितरन्ति ते ॥ १२-११०-२१ (६९१०३)
मधु मांसं स्त्रियो नित्यं वर्जयन्तीह मानवाः ।
जन्मप्रभृति मद्यं च दुर्गाण्यतितरन्ति ते ॥ १२-११०-२२ (६९१०४)
यात्रार्थं भोजनं येषां संतानार्थं च मैथुनम् ।
वाक् सत्यवचनार्थं च दुर्गाण्यतितरन्ति ते ॥ १२-११०-२३ (६९१०५)
ईश्वरं सर्वभूतानां जगतः प्रभवाप्ययम् ।
भक्ता नारायणं देवं दुर्गाण्यतितरन्ति ते ॥ १२-११०-२४ (६९१०६)
य एष पद्मरक्ताक्षः पीतवासा महाभुजः ।
सुहृद्भ्राता च मित्रं च संबन्धी च तवाच्युत ॥ १२-११०-२५ (६९१०७)
य इमान्सकलाँल्लोकांश्चर्मवत्परिवेष्टयेत् ।
इच्छन्प्रभुरचिन्त्यात्मा गोविन्दः पुरुषोत्तमः ॥ १२-११०-२६ (६९१०८)
स्थितः प्रियहिते नित्यं स एष पुरुषोत्तमः ।
राजंस्तव यदुश्रेष्ठो वैकुण्ठः पुरुषर्षभः ॥ १२-११०-२७ (६९१०९)
य एनं संश्रयन्तीह भक्त्या नारायणं हरिम् ।
ते तरन्तीह दुर्गाणि न चात्रास्ति विचारणा ॥ १२-११०-२८ (६९११०)

ग अस्मिन्नर्पितकर्माणः सर्वभावेन भारत ।
कृष्णे कमलपत्राक्षे दुर्गाण्यतितरन्ति ते। १२-११०-२९ (६९१११)
लोकरक्षार्थमुत्पन्नमदित्यां कश्यपात्मजम् ।
देवमिन्द्रं नमस्यन्ति दुर्गाण्यतितरन्ति ते ॥ १२-११०-३० (६९११२)
ब्रह्माणं लोककर्तारं ये नमस्यन्ति सत्पतिम् ।
यष्टव्यं क्रतुभिर्देवं दुर्गाण्यतितरन्ति ते ॥ १२-११०-३१ (६९११३)
यं विष्णुरिन्द्रः शंभुश्च ब्रह्मा लोकपितामहः ।
स्तुवन्ति विविधैः स्तोत्रैर्देवदेवं महेश्वरम् ।
समर्चयन्ति ये शश्वद्दुर्गाण्यतितरन्ति ते ॥' १२-११०-३२ (६९११४)
दुर्गातितरणं ये च पठन्ति श्रावयन्ति च ।
कथयन्ति च विप्रेभ्यो दुर्गाण्यतितरन्ति ते ॥ १२-११०-३३ (६९११५)
इति कृत्यसमुद्देशः कीर्तितस्ते मयाऽनघ ।
तरते येन दुर्गाणि परत्रेह च मानवः ॥ ॥ १२-११०-३४ (६९११६)

इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि
दशाधिकशततमोऽध्यायः ॥ ११०.।
Mahabharata - Shanti Parva - Chapter Footnotes

१२-११०-१ भूतेषु ---। दुर्गाणि दुस्तराणि ॥
१२-११०-३ विषयान्विषयार्थानि --॥
१२-११०-४ उच्यमानाः निन्द्यमानाः ॥
१२-११०-८ रजसान्विताः सन्तोऽर्थान्न नयन्ति न हरस्ति ॥
१२-११०-२३ यात्रार्थं जीवनार्थम् ॥
१२-११०-३४ कृत्यसमुद्देशः कर्तव्यलेशः ॥

---

शन्तिपर्व-अध्यय१११
॥ श्रीः ॥
१२.१११. अध्यायः १११

Mahabharata - Shanti Parva - Chapter Topics
भीष्मेण युधिष्ठिरंप्रति परीक्षायाः
सौम्यासौम्यत्वनिर्धारणसाधनताप्रतिपादकव्याघ्रगोमायुचरितकथनम्
॥ १.।
Mahabharata - Shanti Parva - Chapter Text

१२-१११-० (६९११७)
युधिष्ठिर उवाच। १२-१११-०क्ष् (५६३८)

असौम्याः सौम्यरूपेण सौम्याश्चासौम्यरूपिणः ।
तादृशान्पुरुषांस्तात कथं विद्यामहे वयम् ॥ १२-१११-१ (६९११८)
भीष्म उवाच। १२-१११-२क्ष् (५६३९)
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
व्याघ्रगोमायुसंवादं तं निबोध युधिष्ठिर ॥ १२-१११-२ (६९११९)
पुरिकायां पुरि पुरा श्रीमत्यां पौरिको नृपः ।
पररिंसापरः क्रूरो बभूव पुरुषाधमः ॥ १२-१११-३ (६९१२०)
स त्वायुषि परिक्षीणे जगामानीप्सितां गतिम् ।
गोमायुत्वं च संप्राप्तो दूषितः पूर्वकर्मणा ॥ १२-१११-४ (६९१२१)
संस्मृत्य पूर्वजातिं स्वां निर्वेदं परमं गतः ।
न भक्षयन्ति मांसानि परैरुपहृतान्यपि ॥ १२-१११-५ (६९१२२)
अहिंसा सर्वभूतेषु सत्यवाक् सुदृढव्रतः ।
चकार च यथाकालमाहारं पतितैः फलैः ॥ १२-१११-६ (६९१२३)
ग्पर्णहारः कदाचिच्च नियमव्रतवानपि ।
कदा चदुदकेनापि वर्तयन्न तु यन्त्रितः ॥' १२-१११-७ (६९१२४)
श्मशाने तस्य चावासो गोमायोः संमतोऽभवत् ।
जन्मभूम्यनुरोधाच्च नान्यं वा समरोचयत् ॥ १२-१११-८ (६९१२५)
तस्य शौचममृष्यन्तस्ते सर्वे सहजातयः ।
चालयन्ति स्म तां बुद्धिं वचनैः प्रश्रयोत्तरैः ॥ १२-१११-९ (६९१२६)
वसन्पितृवने रौद्रे शौचं लम्भितुमिच्छसि ।
इयं विप्रतिपत्तिस्ते यदा त्वं पिशिताशनः ॥ १२-१११-१० (६९१२७)
तत्समानो भवात्समाभिर्भक्ष्यं दास्यामहे वयम् ।
भुङ्क्ष्व शौचं परित्यज्य यद्धि भुक्तं तदस्ति ते ॥ १२-१११-११ (६९१२८)
इति तेषां वचः श्रुत्वा प्रत्युवाच समाहितः ।
मधुरैः प्रश्रितैर्वाक्यैर्हेतुमद्भिरनिष्ठुरैः ॥ १२-१११-१२ (६९१२९)
अप्रमाणा प्रसूतिर्मे शीलतः क्रियते कुलम् ।
प्रार्थयामि च तत्कर्म येन विस्तीर्यते यशः ॥ १२-१११-१३ (६९१३०)
श्मशाने यदि मे वासः समाधिर्मे निशाम्यताम् ।
आत्मा फलति कर्माणि नाश्रमो धर्मलक्षणम् ॥ १२-१११-१४ (६९१३१)
आश्रमे यो द्विजं हन्याद्दानं दद्यादनाश्रमे ।
किंतु तत्पातकं न स्यात्तद्वा दानं वृथा भवेत् ॥ १२-१११-१५ (६९१३२)
भवन्तः स्वार्थलोभेन केवलं भक्षणे रताः ।
अनुबन्धेषु ये दोषास्तान्न पश्यन्ति मोहिताः ॥ १२-१११-१६ (६९१३३)
अप्रत्ययकृतां गर्ह्यामर्थापनयदूषिताम् ।
इह चामुत्र चानिष्टां तस्माद्वृत्तिं न रोचये ॥ १२-१११-१७ (६९१३४)
तं शुचिं पण्डितं मत्वा शार्दूलः ख्यातविक्रमः ।

कृत्वाऽऽत्मसदृशीं पूजां साचिव्येऽवरयत्स्वयम् ॥ १२-१११-१८ (६९१३५)
शार्दूल उवाच। १२-१११-१९क्ष् (५६४०)
सौम्य विज्ञातरूपस्त्वं गच्छ यात्रां मया सह ।
व्रियन्तामीप्सिता भोगाः परिहार्याश्च पुष्कलाः ॥ १२-१११-१९ (६९१३६)
तीक्ष्णा इति वयं ख्याता भवन्तं ज्ञापयामहे ।
मृदुपूर्वं प्रशाधि त्वं श्रेयश्चाधिगमिष्यसि ॥ १२-१११-२० (६९१३७)
भीष्म उवाच। १२-१११-२१क्ष् (५६४१)
अथ संपूज्य तद्वाक्यं मृगेन्द्रस्य महात्मनः ।
गोमायुः प्रश्रितं वाक्यं बभाषे किंचिदानतः ॥ १२-१११-२१ (६९१३८)
सदृशं मृगराजैतत्तव वाक्यं मदन्तरे ।
यत्सहायान्मृगयसे धर्मार्थकुशलाञ्शुचीन् ॥ १२-१११-२२ (६९१३९)
न शक्यं ह्यनमात्येन महत्त्वमनुशासितुम् ।
दुष्टामात्येन वा वीर शरीरपरिपन्थिना ॥ १२-१११-२३ (६९१४०)
सहायाननुरक्तांश्च नयज्ञानुपसंहितान् ।
परस्परमसंतुष्टान्विजिगीषूनलोलुपात् ॥ १२-१११-२४ (६९१४१)
अनतीतोपदान्प्राज्ञान्हिते युक्तान्मनस्विनः ।
पूजयेथा महाभाग यथा भ्रातॄन्यथा पितॄन् ॥ १२-१११-२५ (६९१४२)
न त्वेव मम संतोषाद्रोचतेऽन्यन्मृगाधिप ।
न कामये सुखान्भोगानैश्वर्यं वा त्वदाश्रयम् ॥ १२-१११-२६ (६९१४३)
न योक्ष्यति हि मे शीलं तव भृत्यैः पुरातनैः ।
ते त्वां विभेदयिष्यन्ति दुःखशीला मदन्तरे ॥ १२-१११-२७ (६९१४४)
संश्रयः श्लाघनीयस्त्वमन्येषामपि भास्वताम् ।
कृतात्मा सुमहाभागः पापकेष्वप्यदारुणः ॥ १२-१११-२८ (६९१४५)
दीर्घदर्शी महोत्साहः स्थूललक्षो महाबलः ।
कृते चामोघकर्ताऽसि भाग्यैश्च समलंकृतः ॥ १२-१११-२९ (६९१४६)
किंतु स्वेनास्मि संतुष्टो दुःखा वृत्तिरनुष्ठिता ।
सेवायां चापि नाभिज्ञः स्वच्छन्देन वनेचरः ॥ १२-१११-३० (६९१४७)
प्राज्ञोपक्रोशदोषाश्च सर्वे संश्रयवासिनाम् ।
वनचर्या तु निःसङ्गा निर्भया विरवग्रहा ॥ १२-१११-३१ (६९१४८)
नृपेण ह्रियमाणस्य यत्तिष्ठति भयं हृदि ।
न तत्तिष्ठति तुष्टानां वने मूलफलाशिनाम् ॥ १२-१११-३२ (६९१४९)
पानीयं वा निरायासं स्वाद्वन्नं वा गुणोत्तरम् ।
विचार्य खलु पश्यामि तत्सुखं यत्र निर्वृत्तिः ॥ १२-१११-३३ (६९१५०)
अपराधैर्न तावन्तो भृत्याः शिष्टा नराधिपैः ।
अपजातैर्यथा भृत्या दूषिताः निधनं गताः ॥ १२-१११-३४ (६९१५१)
यदि वा तन्ममा कार्यं मृगेन्द्र यदि मन्यसे ।

समयं कृतमिच्छामि वर्तितव्यं यथाविधि ॥१२-१११-३५ (६९१५२)
मदीया माननीयास्ते श्रोतव्यं च हितं वचः ।
कल्पिता या च मे वृत्तिः सा भवेत्त्वयि सुस्थिरा ॥१२-१११-३६ (६९१५३)
न ------- सचिवैः सह कर्हिचित् ।
तीतिमन्तः परीप्सन्तो वृथा ब्रूयुः परे मयि ॥१२-१११-३७ (६९१५४)
एक एकेन संगम्य रहो ब्रूयां हितं वचः ।
नच ते ज्ञातिकार्येषु प्रष्टव्योऽस्मि हिताहिते ॥१२-१११-३८ (६९१५५)
--- --- पश्चाच्च न हिंस्याः सचिवास्त्वया ।
मदीयानां च कुपितो मा त्वं दण्डं निपातयेः ॥१२-१११-३९ (६९१५६)
भीष्म उवाच।१२-१११-४०क्ष् (५६४२)
एवमस्त्विति तेनासौ मृगेन्द्रेणाभिपूजितः ।
प्राप्तवान्मतिसाचिव्यं गोमायुर्व्याघ्रचोदितः ॥१२-१११-४० (६९१५७)
तं तथा सत्कृतं दृष्ट्वा युज्यमानं च कर्मसु ।
प्राद्विषन्कृतसंघाताः पूर्वभृत्या मुहुर्मुहुः ॥१२-१११-४१ (६९१५८)
मित्रबुद्ध्या च गोमायुं सान्त्वयित्वा प्रवेश्य च ।
दोषेषु समयान्नेतुमिच्छन्त्यशुभबुद्धयः ॥१२-१११-४२ (६९१५९)
अन्यथा ह्युषिताः पूर्वं परद्रव्यापहारिणः ।
अशक्ताः किंचिदाहर्तुं द्रव्यं गोमायुयन्त्रिताः ॥१२-१११-४३ (६९१६०)
व्युत्थानं चात्र काङ्क्षद्भिः कथाभिः प्रतिलोभ्यते ।
धनेन महता चैव बुद्धिरस्य विलोभ्यते ॥१२-१११-४४ (६९१६१)
न चापि स महाप्राज्ञस्तस्माद्धैर्याच्चचाल ह ।
अथास्य समयं कृत्वा विनाशाय स्थिताः परे ॥१२-१११-४५ (६९१६२)
ईप्सितं तु मृगेन्द्रस्य मांसं यत्तत्र संस्कृतम् ।
अपनीय स्वयं तद्धि तैर्न्यस्तं तस्य वेश्मनि ॥१२-१११-४६ (६९१६३)
यदर्थं चाप्यपहृतं येन तच्चैव मन्त्रितम् ।
तस्य तद्विदितं सर्वं कारणार्थं च मर्षितम् ॥१२-१११-४७ (६९१६४)
समयोऽयं कृतस्तेन साचिव्यमुपगच्छता ।
नोपघातस्त्वया कार्यो राजन्मैत्रीमिहेच्छता
ग्इति तस्य च मन्त्रस्य स्थित्यर्थं तदुपेक्षितम् ॥ १२-१११-४८ (६९१६५)
श्क्षुधितस्य मृगेन्द्रस्य भोक्तुमभ्युत्थितस्य चघ
भोजने चोपहर्तव्ये तन्मांसं नह्यदृश्यत ।
मृगराजेन चाज्ञप्तं मृग्यतां चोर इत्युत ॥ १२-१११-४९ (६९१६६)
कृतकैश्चापि तन्मांसं मृगेन्द्राय निवेदितम् ।
सचिवेनापनीतं ते विदुषा प्राज्ञमानिना ॥१२-१११-५० (६९१६७)
सरोषस्त्वथ शार्दूलः श्रुत्वा गोमायुचापलम् ।
बभूवामर्षितो राजा वधं चास्य व्यरोचयत् ॥१२-१११-५१ (६९१६८)

छिद्रं तु तस्य तदृष्ट्वा प्रोचुस्ते पूर्वमन्त्रिणः ।
सर्वेषामेव सोऽस्माकं वृत्तिभङ्गे प्रवर्तते ।
निश्चित्यैवं पुनस्तस्य ते तत्कर्मण्यवर्तयन् ॥ १२-१११-५२ (६९१६९)
इदं तस्येदृशं कर्म किं तेन न कृतं भवेत् ।
श्रुतश्च स्वामिना पूर्वं यादृशो नैव तादृशः ॥१२-१११-५३ (६९१७०)
वाङ्भात्रेणैव धर्मिष्ठः स्वभावेन तु दारुणः ।
धर्मच्छझा ह्ययं पापो वृथाचारपरिग्रहः ॥१२-१११-५४ (६९१७१)
कार्यार्थं भोजनाद्येषु व्रतेषु कृतवाञ्श्रमम् ।
यदि विप्रत्ययो ह्येष तदिदं दर्शयाम् ते ॥१२-१११-५५ (६९१७२)
तन्मांसं तैश्च गोमायोस्तत्क्षणादाशु ढौकितम् ॥ १२-१११-५६ (६९१७३)
मांसापनयनं श्रुत्वा व्याघ्रस्तेषां च तद्वचः ।
आज्ञापयामास तदा गोमायुर्वध्यतामिति ॥१२-१११-५७ (६९१७४)
गोमायोर्व्यसनं श्रुत्वा शार्दूलजननी ततः ।
मृगराजं हितैर्वाक्यैः संबोधयितुमागमत् ॥१२-१११-५८ (६९१७५)
पुत्र नैतत्त्वया ग्राह्यं कपटारम्भसंयुतम् ।
कर्म संघर्षजैर्दोषैर्दुष्येताशुचिभिः सुचिः ॥१२-१११-५९ (६९१७६)
नोच्छ्रितं सहते कश्चित्प्रक्रिया वैरकारिका ।
शुचेरपि हि युक्तस्य दोष एव निपात्यते ॥१२-१११-६० (६९१७७)
श्मुनेरपि वनस्थस्य स्वानि कर्माणि कुर्वतः
उत्पाद्यन्ते त्रयः पक्षा मित्रोदासीनशत्रवः ॥8 १२-१११-६१ (६९१७८)
लुब्धानां शुचयो द्वेष्याः कातराणां तरस्विनः ।
मूर्खाणां पण्डिता द्वेष्या दरिद्राणां महाधनाः ।
अधार्मिकाणां धर्मिष्ठा विरूपाणां सुरूपिणः ॥ १२-१११-६२ (६९१७९)
बह पण्डिता मूर्खा लुब्धा मायोपजीविनः ।
आहुंर्दोषमदोषस्य बृहस्पतिमतेरपि ॥१२-१११-६३ (६९१८०)
सुन्यूस्तं ते गृहे मांसं यदद्यापहृतं तव ।
नेचते दीयमानं च साधु तावद्विधीयताम् ॥१२-१११-६४ (६९१८१)
असयाः सत्यसंकाशाः सत्याश्चासत्यदर्शनाः ।
दृश्यन्ते विविधा भावास्तेषु युक्तं परीक्षणम् ॥१२-१११-६५ (६९१८२)
तलवद्दृश्यते व्योम खद्योतो हव्यवाडिव ।
न चैवास्ति तलं व्योम्नि खद्योते न हुताशनः ॥१२-१११-६६ (६९१८३)
तस्मात्प्रत्यक्षदृष्टोऽपि युक्तो ह्यर्थः परीक्षितुम् ।
परीक्ष्य ज्ञापयन्नर्थान्न पश्चात्परितप्यते ॥१२-१११-६७ (६९१८४)
न दुष्करमिदं पुत्रं यत्प्रभुर्घातयेत्परम् ।
श्लाघनीया यशस्या च लोके प्रभवतां क्षमा ॥१२-१११-६८ (६९१८५)
स्थापितोऽयं त्वया पुत्र सामन्तेष्वपि विश्रुतः ।

दुःखेनासाद्यते पात्रं धार्यतामेष ते सुहृत् ॥ १२-१११-६९ (६९१८६)
दूषितं परदोषैर्हि गृह्णीते योऽन्यथा शुचिम् ।
स्वयं संदूषितामात्यः क्षिप्रमेव विनश्यति ॥ १२-१११-७० (६९१८७)
एतस्मादरिसंघाताद्गोमायोः कश्चिदागतः ।
धर्मात्मा तेन चाख्यातं यथैतत्कपटं कृतम् ॥ १२-१११-७१ (६९१८८)
ततो विज्ञातचारित्रः सत्कृत्य स विमोक्षितः ।
परिष्वक्तश्च सस्नेहं मृगेन्द्रेण पुनः पुनः ॥ १२-१११-७२ (६९१८९)
अनुज्ञाय मृगेन्द्रं तु गोमायुर्नीतिशास्त्रवित् ।
तेनामर्षेण संतप्तः प्रायमासितुमैच्छत ॥ १२-१११-७३ (६९१९०)
गोमायुं तु स शार्दूलः स्नेहात्प्रसृतलोचनः ।
न्यवारयत्स धर्मिष्ठं पूजया प्रतिपूजयन् ॥ १२-१११-७४ (६९१९१)
तं स गोमायुरालोक्य स्नेहादागतसंभ्रमः ।
बभाषे प्रणतो वाक्यं बाष्पगद्गदया गिरा ॥ १२-१११-७५ (६९१९२)
पूजितोऽहं त्वया पूर्वं पश्चाच्चैव विमानितः ।
परेषामास्पदं नीतो वस्तुं नार्हाम्यहं त्वयि ॥ १२-१११-७६ (६९१९३)
असंतुष्टाश्च्युताः स्थानान्मानात्प्रत्यवरोपिताः ।
स्वयं चोपद्रुता भृत्या ये चाप्युपहिताः परैः ॥ १२-१११-७७ (६९१९४)
परिक्षीणाश्च लुब्धाश्च क्रुद्धा भीताः प्रतारिताः ।
हृतस्वा मानिनो ये च त्यक्तोपात्ता महेप्सवः ॥ १२-१११-७८ (६९१९५)
संलालिताश्च ये केचिद्व्यसनौघप्रतीक्षिणः ।
अन्तर्हिताः सोहपृतास्ते सर्वेऽपरसाधनाः ॥ १२-१११-७९ (६९१९६)
अवमानेन युक्तस्य स्थापितस्य च मे पुनः ।
कथं यास्यसि विश्वासमहमेष्वामि वा कथम् ॥ १२-१११-८० (६९१९७)
समर्थ इति संगृह्य स्थापयित्वा परीक्षितः ।
कृतं च समयं भित्त्वा त्वयाऽहमवमानितः ॥ १२-१११-८१ (६९१९८)
प्रथमं यः समाख्यातः शीलवानिति संसदि ।
न वाच्यं तस्य वैगुण्यं प्रतिज्ञां परिरक्षता ॥ १२-१११-८२ (६९१९९)
एवं चावमतस्येह विश्वासं मे न यास्यसि ।
त्वयि चापेतविश्वासे ममोद्वेगो भविष्यति ॥ १२-१११-८३ (६९२००)
शङ्कितस्त्वमहं भीतः परे च्छिद्रानुसारिणः ।
अस्निग्धाश्चैव दुस्तोषाः कर्म चैतद्बहुच्छलम् ॥ १२-१११-८४ (६९२०१)
दुःखेन श्लिष्यते भिन्नं श्लिष्टं दुःखेन भिद्यते ।
भिन्नश्लिष्टे तु या प्रीतिर्न सा स्नेहेन वर्धते ॥ १२-१११-८५ (६९२०२)
कश्चित्तव हिते भर्तुर्दृश्यते न परात्मनः ।
कार्यापेक्षा हि वर्न्तते भावस्निग्धाः सुदुर्लभाः ॥ १२-१११-८६ (६९२०३)
सुदुःखं पुरुषज्ञानं चित्तं ह्येषां चलाचलम् ।

समर्थो वाप्यशङ्को वा शतेष्वेकोऽधिगम्यते ॥१२-१११-८७ (६९२०४)
अकस्मात्प्रक्रिया नृणामकस्माच्चापकर्षणम् ।
शुभाशुभे महत्त्वं च प्रहर्तुं बुद्धिलाघवम् ॥१२-१११-८८ (६९२०५)
भीष्म उवाच।१२-१११-८९क्ष् (५६४३)
एवंविधं सान्त्वमुक्त्वा धर्मकामार्थहेतुमत् ।
प्रसादयित्वा राजानं गोमायुर्वनमभ्यगात् ॥१२-१११-८९ (६९२०६)
अगृह्यानुनयं तस्य मृगेन्द्रस्य च बुद्धिमान् ।
गोमायुः प्रायमासीनस्त्यक्त्वा देहं दिवं ययौ ॥ ॥१२-१११-९० (६९२०७)

इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि
एकादशाधिकशततमोऽध्यायः ॥१११.।
Mahabharata - Shanti Parva - Chapter Footnotes

१२-१११-१० विप्रतिपत्तिर्विपरीता बुद्धिः ॥
१२-१११-१६ अनुबन्धेषु परिणामेषु ॥
१२-१११-१७ अप्रत्ययोऽसंतोषस्तेन कृताम् ।अर्थापनयो धर्महानिः ॥
१२-१११-१९ यात्रां राजकार्यं गच्छ प्राप्नुहि ।परिहार्याश्चानीप्सिताः ॥
१२-१११-२० ज्ञापयामहे सूचयामहे ॥
१२-१११-२२ मदन्तरे मन्निमित्तम् ॥
१२-१११-२३ न शक्यम् ।राज्ञेति शेषः ॥
१२-१११-२६ -- ----- -- सन्तोशदिति ट ।ड।थ।द।पाठः ॥
१२-१११-२७ योक्ष्यति योगं प्राप्स्यति ।दुःखशीला भविष्यन्ति ॥
१२-१११-२९ स्थूललक्षो बहुप्रदः ॥
१२-१११-३१ उपक्रोधो निन्दा तज्जा दोषा उपक्रोशदोषाः सन्ति ॥
१२-१११-३३ यत्र निर्वृतिः सुखं तत्खलु सुखं स्वर्गं पश्यामि
।निर्वृतिः सुस्थितिरिति वा ॥
१२-१११-३४ शिष्टाः कृतदण्डः ॥
१२-१११-४६ तस्य गोमायोर्वेश्मनि ॥
१२-१११-४७ तस्य गोमायोः ।कारणार्थं स्वस्य बन्धविच्छेदो भवत्विति
हेतोरित्यर्थः ॥
१२-१११-५१ परोक्षस्त्वथ इति ट ।द।पाठः ॥
१२-१११-५५ विप्रत्ययोऽविश्वासः ॥
१२-१११-५६ गोमायोर्गृहे ढौकीतं प्रवेशितं मांसं
प्रदर्शयामासुरित्यर्थः ।तत्क्षणादेव दर्शितं इति द।पाठः ॥
१२-१११-५८ शार्दूलस्य वचः श्रुत्वा इति झ ।पाठः ॥
१२-१११-५९ संघर्षजैः स्पर्धोत्थैः ॥

१२-१११-६० प्रक्रिया प्रकृष्टं कर्म ॥
१२-१११-६६ तलवत् अवाङ्भुस्वकटाहगर्भवत् ॥
१२-१११-६८ प्रभवतां प्रभूणाम् ॥
१२-१११-७१ गोमायोश्चारः ॥
१२-१११-७३ प्रायं मरणार्थमुपवेशनं आसितुं आचरितुम् ॥
१२-१११-७६ वक्तुं नार्होस्म्यहं त्वया इति ट । ड। द। पाठः ॥
१२-१११-७९ अपरसाश्च अधनाश्चेति अपरसाधनाः । प्रीतिशून्या निर्धनाश्चेत्यर्थः ॥
१२-१११-८४ छिद्रानुदर्शिनः इति झ । पाठः ॥
१२-१११-८७ पुरुषज्ञानं सुदुःखं दुर्लभं यत एषां नृपाणां चित्तं चलाचलमस्थिरं गम्यते ज्ञायते सुपुरुषज्ञानं दुर्घटमित्यर्थः ॥
१२-१११-८८ प्रक्रिया महीकरणं बुद्धेर्लाघवं तुच्छत्वमेव हेतुः ॥
१२-१११-८९ प्रसादयित्वा प्रसाद्य ॥
१२-१११-९० अगृह्य अगृहीत्वा ॥

---

शन्तिपर्व-अध्यय११२
॥ श्रीः ॥
१२.११२. अध्यायः ११२

Mahabharata - Shanti Parva - Chapter Topics
भीष्मेण युधिष्ठिरंप्रति अलसताया अनर्थहेतुताख्यापकोट्रचरिताभिधानम् ॥ १.।
Mahabharata - Shanti Parva - Chapter Text

१२-११२-० (६९२०८)
युधिष्ठिर उवाच। १२-११२-०क्ष् (५६४४)
किं पार्थिवेन कर्तव्यं किंच कृत्वा सुखी भवेत् ।
तन्ममाचक्ष्व तत्त्वेन सर्वधर्मभृतां वर ॥ १२-११२-१ (६९२०९)
भीष्म उवाच। १२-११२-२क्ष् (५६४५)
हन्त तेऽहं प्रवक्ष्यामि शृणु कार्यैकनिश्चयम् ।
यथा राज्ञेह कर्तव्यं यच्च कृत्वा सुखी भवेत् ॥ १२-११२-२ (६९२१०)
नचैवं वर्तितव्यं स्म यथेदमनुशुश्रुम् ।
उष्ट्रस्य तु महद्वृत्तं तन्निबोध युधिष्ठिर ॥ १२-११२-३ (६९२११)
जातिस्मरो महानुष्ट्रः प्रजापतिकुलोद्भवः ।
तपः सुमहदातिष्ठदरण्ये संशितव्रतः ॥ १२-११२-४ (६९२१२)

तपसस्तस्य चान्तेऽथ प्रीतिमानभवद्विभुः ।
वरेण च्छन्दयामास ततश्चैनं पितामहः ॥ १२-११२-५ (६९२१३)
उष्ट्र उवाच। १२-११२-६क्ष् (५६४६)
भगवंस्त्वत्प्रसादान्मे दीर्घा ग्रीवा भवेदियम् ।
योजनानां शतं साग्रमिच्छेयं चारितुं विभो ॥ १२-११२-६ (६९२१४)
एवमस्त्विति चोक्तः स वरदेन महात्मना ।
प्रतिलभ्य वरं श्रेष्ठं ययावुष्ट्रः स्वकं वनम् ॥ १२-११२-७ (६९२१५)
स चकार तदाऽऽलस्यं वरदानात्सुदुर्मतिः ।
न चैच्छच्चिरतुं गन्तुं दुरात्मा कालमोहितः ॥ १२-११२-८ (६९२१६)
स कदाचित्प्रसार्यैव तां ग्रीवां शतयोजनाम् ।
चचार श्रान्तहृदयो वातश्चागात्ततो महान् ॥ १२-११२-९ (६९२१७)
स गुहायां शिरोग्रीवां निधाय पशुरात्मनः ।
आस्ते वर्षमथाभ्यागात्सुमहत्प्लावयज्जगत् ॥ १२-११२-१० (६९२१८)
अथ शीतपरीताङ्गो जम्बुकः क्षुच्छ्रमान्वितः ।
सदारस्तां गुहामाशु प्रविवेश जलार्दितः ॥ १२-११२-११ (६९२१९)
स दृष्ट्वा मांसजीवी तु सुभृशं क्षुच्छ्रमान्वितः ॥
अभक्षयत्ततो ग्रीवामुष्ट्रस्य भरतर्षभ ॥ १२-११२-१२ (६९२२०)
यदा त्वबुध्यतात्मानं भक्ष्यमाणं स वै पशु ।
तदा संकोचने यत्नमकरोद्भृशदुःखितः ॥ १२-११२-१३ (६९२२१)
यावदूर्ध्वमधश्चैव ग्रीवां संक्षिपते पशुः ।
तावत्तेन सदारेण जम्बुकेन स भक्षितः ॥ १२-११२-१४ (६९२२२)
स हत्वा भक्षयित्वा च तमुष्ट्रं जम्बुकस्तदा ।
विगते वातवर्षे तु निश्चक्राम गुहोदरात् ॥ १२-११२-१५ (६९२२३)
एवं दुर्बुद्धिना प्राप्तमुष्ट्रेण निधनं तदा ।
आलस्यस्य क्रमात्पश्य महान्तं दोषमागतम् ॥ १२-११२-१६ (६९२२४)
त्वमप्येवंविधं हित्वा योगेन नियतेन्द्रियः ।
वर्तस्व बुद्धिमूलं तु विजयं मनुरब्रवीत् ॥ १२-११२-१७ (६९२२५)
बुद्धिश्रेष्ठानि कर्माणि बाहुमध्यानि भारत ।
तानि जङ्घाजघन्यानि भारप्रत्यवराणि च ॥ १२-११२-१८ (६९२२६)
राज्यं तिष्ठति दक्षस्य संगृहीतेन्द्रियस्य च ।
श्आर्तस्य बुद्धिमूलं हि विजयं मनुरब्रवीत्॥
गुप्तं मन्त्रं श्रुतवतः सुसहायस्य चानघ ॥ १२-११२-१९ (६९२२७)
ग्असहायवतो ह्यर्था न तिष्ठन्ति कदाचन।'
परीक्षितसहायस्य तिष्ठन्तीह युधिष्ठिर ।
सहाययुक्तेन मही कृत्स्ना शक्या प्रशासितुम् ॥ १२-११२-२० (६९२२८)
इदं हि सद्भिः कथितं विधिज्ञैः

पुरा महेन्द्रप्रतिमप्रभावः ।
मयाऽपि चोक्तं तव शास्त्रदृष्ट्या
त्वमप्रमत्तः प्रचरस्व राजन् ॥ ॥ १२-११२-२१ (६९२२९)

इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि
द्वादशाधिकशततमोऽध्यायः ॥ ११२.।
Mahabharata - Shanti Parva - Chapter Footnotes

१२-११२-८ चरितुं भक्षितुम् ॥
१२-११२-१७ योगेनोपायेन ।एवंविधमालस्यम् ॥
१२-११२-१८ बाहूपलक्षितं शैर्यम् ।जङ्घोपलक्षितं
पादविहरणम्।भारो भारवहनम् ॥

---

शन्तिपर्व-अध्यय११३
॥ श्रीः ॥
१२.११३. अध्यायः ११३

Mahabharata - Shanti Parva - Chapter Topics
भीष्मेण युधिष्ठिरंप्रति बलवच्छत्रुवशीकरणे विनयस्योपायतायां
दृष्टान्ततया सरित्सागरसंवादानुवादः ॥ १.।
Mahabharata - Shanti Parva - Chapter Text

१२-११३-० (६९२३०)
युधिष्ठिर उवाच।१२-११३-०क्ष् (५६४७)
राजा राज्यमनुप्राप्य दुर्बलो भरतर्षभ ।
अमित्रस्यातिवृद्धस्य कथं तिष्ठेदसाधनः ॥१२-११३-१ (६९२३१)
भीष्म उवाच।१२-११३-२क्ष् (५६४८)
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
सरितां चैव संवादं सागरस्य च भारत ॥१२-११३-२ (६९२३२)
सुरारिनिलयः शश्वत्सागरः सरितां पतिः ।
पप्रच्छ सरितः सर्वाः संशयं जातमात्मनः ॥१२-११३-३ (६९२३३)
सागर उवाच।१२-११३-४क्ष् (५६४९)
समूलशाखान्पश्यामि निहतान्क्वापि नो द्रुमान् ।
युष्माभिरिह पूर्णाभिरन्यांस्तत्र न वेतसान् ॥१२-११३-४ (६९२३४)
अ-पकायश्चाल्पसारो वेतसः कूलजश्च यः ।
अज्ञया वा नानीतः किं च वा तेन वः कृतम् ॥१२-११३-५ (६९२३५)

तदहं श्रोतुमिच्छामि सर्वासामेव वो मतम् ।
यथा चेमानि कूलानि हित्वा नायाति वेतसः ॥ १२-११३-६ (६९२३६)
तत्र प्राह नदी गङ्गा वाक्यमुत्तरमर्थवत् ।
हेतुमद्ग्राहकं चैव सागरं सरितां पतिम् ॥ १२-११३-७ (६९२३७)
गङ्गोवाच। १२-११३-८क्ष् (५६५०)
तिष्ठन्त्येते यथास्थानं नगा ह्येकनिकेतनाः ।
ततस्त्यजन्ति तत्स्थानं प्रातिलोम्यान्न वेतसः ॥ १२-११३-८ (६९२३८)
वेतसो वेगमायान्तं दृष्ट्वा नमति नापरे ।
स च वेगे ह्यतिक्रान्ते स्थानमापद्यते पुनः ॥ १२-११३-९ (६९२३९)
कालज्ञः समयज्ञश्च सदावश्यश्च नो द्रुमः ।
अनुलोमवृत्तितस्तब्धस्तेन त्वां नैति वेतसः ॥ १२-११३-१० (६९२४०)
मारुतोदकवेगेन ये नमन्त्युन्नमन्ति च ।
ओषध्यः पादपा गुल्मा न ते यान्ति पराभवम् ॥ १२-११३-११ (६९२४१)
भीष्म उवाच। १२-११३-१२क्ष् (५६५१)
यो हि शत्रोर्विवृद्धस्य प्रभोर्बन्धविनाशने ।
पूर्वं न सहते वेगं क्षिप्रमेव विनश्यति ॥ १२-११३-१२ (६९२४२)
सारासारं बलं वीर्यमात्मनो द्विषतश्च यः ।
जानन्विचरति प्राज्ञो न स याति पराभवम् ॥ १२-११३-१३ (६९२४३)
एवमेव यदा विद्वान्मन्यते विपुलं बलम् ।
संश्रयेद्वैतसीं वृत्तिमेतत्प्रज्ञानलक्षणम् ॥ ॥ १२-११३-१४ (६९२४४)

इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि
त्रयोदशाधिकशततमोऽध्यायः ॥ ११३.।
Mahabharata - Shanti Parva - Chapter Footnotes

१२-११३-४ निहतानुन्मूलितान् । कायिन इति पाठे
महाशरीरान्। अन्यानल्पशरीरान्वेतसान् न हतान्पश्यामि ॥
१२-११३-५ अवज्ञाय न शक्यो वा इति द । पाठः ॥
१२-११३-८ एकनिकेतनाः स्तब्धा इत्यर्थः । प्रातिलोम्यादस्माकं प्रातिकूल्यात् ॥
१२-११३-१४ वैतसीं वृत्तिमस्तब्धत्वम् ॥

---

शन्तिपर्व-अध्यय११४
॥ श्रीः ॥
१२.११४. अध्यायः ११४

Mahabharata - Shanti Parva - Chapter Topics
भीष्मेण युधिष्ठिरंप्रति सभायां दुष्टदुर्भाषणे तत्तितिक्षाया

१२-११४-० (६९२४५)
युधिष्ठिर उवाच। १२-११४-०क्ष् (५६५२)
विद्वान्मूढप्रगल्भेन मृदुस्तीक्ष्णेन भारत ।
आक्रुश्यमानः सदसि कथं कुर्यादरिंदम् ॥ १२-११४-१ (६९२४६)
भीष्म उवाच। १२-११४-२क्ष् (५६५३)
श्रूयतां पृथिवीपाल यथैऽषोर्थोऽवगम्यते ।
सदा सचेताः सहते नरस्येहाल्पचेतसः ॥ १२-११४-२ (६९२४७)
आक्रुश्य दूष्यमाणश्च सुकृतं तस्य विन्दति ।
दुष्कृतं चात्मनो मर्षी तस्मिन्नेव प्रमार्जति ॥ १२-११४-३ (६९२४८)
गर्हितं तमुपेक्षेत वाश्यमानमिवातुरम् ।
लोके विद्वेषमापन्नो निष्फलं प्रतिपद्यते ॥ १२-११४-४ (६९२४९)
इति संश्लाघते नित्यं तेन पापेन कर्मणा ।
इदमुक्तो मया कश्चित्सर्वतो जनसंसदि ।
स तत्र व्रीडितः शुष्को मृतकल्पोऽवतिष्ठते ॥ १२-११४-५ (६९२५०)
श्लाघन्नश्लाघनीयेन कर्मणा निरपत्रपः ।
उपेक्षितव्यो दान्तेन तादृशः पुरुषाधमः ॥ १२-११४-६ (६९२५१)
यद्यद्ब्रूयादल्पमतिस्तत्तदस्य सहेत्तदा ॥ १२-११४-७ (६९२५२)
प्रकृत्या हि प्रशंसन्वा निन्दन्वा किं करिष्यति ।
वने काक इवाबुद्धिर्वाश्यमानो निरर्थकम् ॥ १२-११४-८ (६९२५३)
यदि वाग्भिः प्रयोगः स्यात्प्रयोज्यः पापकर्मणा ।
वागेवार्थो भवेत्तस्य न ह्येवार्थो जिघांसतः ॥ १२-११४-९ (६९२५४)
निषेकं वै परस्यासावाचष्टे वृत्तचेष्टया ।
मयूर इव कौपीनं नृत्यं संदर्शयन्निव ॥ १२-११४-१० (६९२५५)
यस्यावाच्यं न लोकेऽस्मिन्नाकार्यं चापि किंचन ।
वाचं तेन न संदध्याच्छुचिः संश्लिष्टकर्मणा ॥ १२-११४-११ (६९२५६)
प्रत्यक्षं गुणवादी यः परोक्षं तु विनिन्दकः ।
स मानवः श्ववल्लोके नष्टलोकपरायणः ॥ १२-११४-१२ (६९२५७)
तादृग्दिनशतं चापि यद्ददाति जुहोति च ।
परोक्षेणापवादेन तं नाशयति तत्क्षणात् ॥ १२-११४-१३ (६९२५८)
तस्मात्प्राज्ञो नरः सद्यस्तादृशं पापचेतसम् ।
वर्जयेन्मतिमान्वर्ज्यं सारमेयामिषं यथा ॥ १२-११४-१४ (६९२५९)
परिवादं ब्रुवाणो हि दुरात्मा वै महाजने ।
प्रकाशयति दोषान्स्वान्सर्पः फणमिवोन्नतम् ॥ १२-११४-१५ (६९२६०)

तं स्वकर्मणि कुर्वाणं प्रतिकर्तुं य इच्छति ।
भस्मकूट इवाबुद्धिः खरो रजसि मज्जति ॥१२-११४-१६ (६९२६१)
मनुष्यसालावृकमप्रशान्तं
जनापवादे सततं निविष्टम् ।
मातङ्गमुन्मत्तमिवोन्नदन्तं
त्यजेत तं श्वानमिवातिरौद्रम् ॥ १२-११४-१७ (६९२६२)
अनार्यजुष्टे पथि वर्तमानं
दमादपेतं विनयाच्च पापम् ।
अरिव्रतं नित्यमभूतिकामं
धिगस्तु तं पापमतिं मनुष्यम् ॥ १२-११४-१८ (६९२६३)
प्रत्युच्यमानस्त्वथ भूय एव
निशाम्य माभूस्त्वमथार्तरूपः ।
उच्चस्य नीचेन हि संप्रयोगं
विगर्हयन्ति स्थिरबुद्धयो ये ॥ १२-११४-१९ (६९२६४)
क्रुद्धो दशेद्वाऽपि च ताडयेद्वा
स पांसुभिर्वा विकिरेत्तुषैर्वा ।
विवृत्य दन्तांश्च विभीषयेद्वा
सिद्धं हि मूढे कुपिते नृशंसे ॥ १२-११४-२० (६९२६५)
विगर्हणां नाऽपि दुरात्मना कृतां
सहेत यः संसदि दुर्जनानाम् ।
पठेदिदं चापि निदर्शनं सदा
न वाङ्भयं स लभति किंचिदप्रियम् ॥ ॥ १२-११४-२१ (६९२६६)

इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि
चतुर्दशाधिकशततमोऽध्यायः ॥११४.।
Mahabharata - Shanti Parva - Chapter Footnotes

१२-११४-१ मूढश्चासौ प्रगल्भश्च तेन ॥
१२-११४-२ सहते दुरुक्तम् ॥
१२-११४-३ मर्षी तितिक्षुः ॥
१२-११४-४ वाश्यमानं रटन्तम् ॥
१२-११४-९ यथा वाचा हतो न हन्यते एवं वाचा दूषितो न दुष्यतीत्यर्थः ॥
१२-११४-१० स एवं वदन्वृत्तेन क्रियया चेष्टया वागादिव्यापारेण
च लिङ्गेन निषेकं स्वमातरि रेतः सेकं परस्य परेण पितुरन्येन
कृतमित्याचष्टे व्यक्तं कथयति ।कौपीनं गुह्यप्रदेशं
संदर्शयन्निव नृत्यं कुर्वन्मयूरो यथा श्लाघते सम्यङ्नृत्यामीति

मन्यते नतु मम गुह्यं लोकाः पश्यन्तीति त्रपते एवं स्वलोपि मया स महानमुकसभायां दुरुक्तमुक्त इति श्लाघते नत्वनेन मम मातुर्दोषः स्पष्टीक्रियते मयैवेति न त्रपते इत्यर्थः ॥
१२-११४-११ मयूर इव कालीनं इति थ । द। पाठः। संश्लिष्टजन्मना इति ट थ। द। पाठः ॥
१२-११४-१३ तादृक्पुमान् ॥
१२-११४-१४ सारमेयामिषं शुनोमांसम् ॥
१२-११४-१५ दोषान् जारजत्वादीन् ॥
१२-११४-१६ भस्मकूटे भस्मराशौ स्वर इवाबुद्धिः रजसि दुःखे निमज्जति ॥
१२-११४-१७ सालावृकं श्वानमेव मनुष्यत्वेन लोके गृहीतमित्यर्थः ॥
१२-११४-२० क्रुद्धो दशार्धेन हि ताडयेद्वा इति झ । पाठः। तत्र दशार्धेन संवृताङ्गुलिपञ्चकेन पाणिनेत्यर्थः। इदं सर्वं कुपितमूढे सिद्धमेव ॥

---

शन्तिपर्व-अध्यय११५
॥ श्रीः ॥
१२.११५. अध्यायः ११५

Mahabharata - Shanti Parva - Chapter Topics
भीष्मेण युधिष्ठिरंप्रति राज्ञां सहायसंपादनस्यावश्यकतादिप्रतिपादनम् ॥ १.।
Mahabharata - Shanti Parva - Chapter Text

१२-११५-० (६९२६७)
युधिष्ठिर उवाच। १२-११५-०क्ष् (५६५४)
पितामह महाप्राज्ञ संशयो मे महानयम् ।
संछेत्तव्यस्त्वया राजन्भवान्कुलकरो हि नः ॥ १२-११५-१ (६९२६८)
पुरुषाणामयं तात दुर्वृत्तानां दुरात्मनाम् ।
कथितो वाक्यसंचारस्ततो विज्ञापयामि ते ॥ १२-११५-२ (६९२६९)
यद्धितं राज्यतन्त्रस्य कुलस्य च सुखोदयम् ।
अयत्यां च तदात्वे च क्षेमवृद्धिकरं च तत् ॥ १२-११५-३ (६९२७०)
पुत्रपौत्राभिरामं च राष्ट्रवृद्धिकरं च यत् ।
अन्नपाने शरीरे च हितं यत्तद्ब्रवीहि मे ॥ १२-११५-४ (६९२७१)
अभिषिक्तो हि यो राजा राज्यस्थो मित्रसंवृत ।
समुहृत्समुपेतो वा स कथं रञ्जयेत्प्रजाः ॥ १२-११५-५ (६९२७२)
यो ह्यसत्प्रग्रहरतिः स्नेहरागबलात्कृतः ।
इन्द्रियाणामनीशत्वादसज्जनबुभूषकः ॥ १२-११५-६ (६९२७३)

तस्य भृत्या विमुखतां यान्ति सर्वे कुलोद्गताः ।
न च भृत्यबलैरर्थैः स राजा संप्रयुज्यते ॥ १२-११५-७ (६९२७४)
एतन्मे चिन्तयानस्य राजधर्मान्दिवानिशम् ।
बृहस्पतिसमो बुद्ध्या भवाञ्शंसितुमर्हति ॥ १२-११५-८ (६९२७५)
शासता पुरुषव्याघ्र त्वं नः कुलहिते रतः ।
क्षत्ता चैको महाप्राज्ञो यो नः शंसति सर्वदा ॥ १२-११५-९ (६९२७६)
त्वत्तः कुलहितं वाक्यं श्रुत्वा राज्यहितोदयम् ।
अमृतस्याव्ययस्येव तृप्तः स्वप्स्याम्यहं सुखम् ॥ १२-११५-१० (६९२७७)
कीदृशाः सन्निकर्षस्था भृत्याः सर्वगुणान्विताः ।
कीदृशैः किं कुलीनैर्वा सह यात्रा विधीयते ॥ १२-११५-११ (६९२७८)
न ह्येको भृत्यरहितो राजा भवति रक्षिता ।
राज्यं चेदं जनः सर्वस्तत्कुलीनः प्रशासति ॥ १२-११५-१२ (६९२७९)
भीष्म उवाच। १२-११५-१३क्ष् (५६५५)
न च प्रशास्तुं राज्यं हि शक्यमेकेन भारत ॥ १२-११५-१३ (६९२८०)
असहायवता तात नैवार्थाः केचिदप्युत ।
लब्धुं लब्ध्वा ह्यपि सदा रक्षितुं भरतर्षभ ॥ १२-११५-१४ (६९२८१)
यस्य भृत्यजनः सर्वो ज्ञानविज्ञानकोविदः ।
हितैषी कुलजः स्निग्धः स राज्यफलमश्नुते ॥ १२-११५-१५ (६९२८२)
मन्त्रिणो यस्य कुलजा असंहार्याः सहोषिताः ।
नृपतेर्मतिमाप्सन्ते सत्पथज्ञानकोविदाः ॥ १२-११५-१६ (६९२८३)
अनागतविधातारः कालज्ञानविशारदाः ।
अतिक्रान्तमशोचन्तः स राज्यफलमश्नुते ॥ १२-११५-१७ (६९२८४)
समदुःखसुखा यस्य सहायाः प्रियकारिणः ।
अर्थचिन्तापराः सभ्याः स राज्यफलमश्नुते ॥ १२-११५-१८ (६९२८५)
यस्य नार्तो जनपदः सन्निकर्षगतः सदा ।
अक्षुद्रः सत्पथालम्बी स राजा राज्यभाग्भवेत् ॥ १२-११५-१९ (६९२८६)
कोशोऽक्षपटलं यस्य कोशवृद्धिकरैर्नरैः ।
आप्तैस्तुष्टैश्च पृष्टैश्च धार्यते स नृपोत्तमः ॥ १२-११५-२०
(६९२८७)
कोष्ठागारमसंहार्यैराप्तैः संचयतत्परैः ।
पात्रभूतैरलुब्धैश्च पाल्यमानं गुणी भवेत् ॥ १२-११५-२१ (६९२८८)
व्यवहारश्च नगरे यस्य धर्मफलोदयः ।
दृश्यते शङ्खलिखितः स धर्मफलभाङ् नृपः ॥ १२-११५-२२ (६९२८९)
संगृहीतमनुष्यश्च यो राजा राजधर्मवित् ।
षड्भागं परिगृह्णाति स धर्मफलमश्नुते ॥ ॥ १२-११५-२३ (६९२९०)

इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि
पञ्चदशाधिकशततमोऽध्यायः ॥ ११५.।
Mahabharata - Shanti Parva - Chapter Footnotes

१२-११५-२ अयं निन्दारूपः ॥
१२-११५-३ हिनं अनिन्द्यम् ।आयत्यां उत्तरकाले।तदात्वे वर्तमानाकले ॥
१२-११५-५ मित्रसुहृदौ प्रत्युपकारमपेक्ष्यानपेक्ष्य चोपकर्तारौ
तद्वान् ।समुपेतः शौर्यादिनेति शेषः ॥
१२-११५-७ भृत्यबलप्राप्यैरर्थैर्धनादिभिः ॥
१२-११५-१४ लब्धुं लब्धाश्च रक्षितुं शक्या इतिं शेषः ॥
१२-११५-१६ असंहार्याः उत्कोचादिना अभेद्याः ॥
१२-११५-२१ कोष्ठागारं धान्यादिसामग्रीगृहम् ।गुणीभवेत्
बहुगुणिभावं गच्छेत् ॥
१२-११५-२२ व्यवहारः अर्थिप्रत्यर्थिनोर्विवादे निर्णयः ।शङ्खलिखित
इति।यथा फलमात्रस्तेने शङ्खेन लिखितस्य हस्तच्छेदो राजानं
प्रतिषेधयित्वा कारितस्तद्वदित्यर्थः ॥

---

शन्तिपर्व-अध्यय११६
॥ श्रीः ॥
१२.११६. अध्यायः ११६

Mahabharata - Shanti Parva - Chapter Topics
केनचिन्मुनिवरेण द्वीपिभये सति द्वीपित्वं प्रापितस्य
स्वीयशुनःपुनर्व्याघ्नाड्भये सति व्याघ्रीकरणम् ॥ १.।
Mahabharata - Shanti Parva - Chapter Text

१२-११६-० (६९२९१)
ग्युधिष्ठिर उवाच।१२-११६-०क्ष् (५६५६)
न सन्ति कुलजा यत्र सहायाः पार्थिवस्य तु ।
अकुलीनाश्च कर्तव्या न वा भरतसत्तम् ॥' १२-११६-१ (६९२९२)
भीष्म उवाच।१२-११६-२क्ष् (५६५७)
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
निदर्शनं परं लोके सज्जनाचरितं सदा ॥१२-११६-२ (६९२९३)
अस्यैवार्थस्य सदृशं यच्छ्रुतं मे तपोवने ।
जामदग्न्यस्य रामस्य यदुक्तमृषिसत्तमैः ॥१२-११६-३ (६९२९४)
वने महति कस्मिंश्चिदमनुष्यनिषेविते ।
ऋषिर्मूलफलाहारो नियतो नियतेन्द्रियः ॥१२-११६-४ (६९२९५)

दीक्षादमपरिश्रान्तः स्वाध्यायपरमः शुचिः ।
उपवासविशुद्धात्मा सततं सत्पथे स्थितः ॥ १२-११६-५ (६९२९६)
तस्य संदृश्य सद्भावमुपविष्टस्य धीमतः ।
सर्वे सत्वाः समीपस्था भवन्ति वनचारिणः ॥ १२-११६-६ (६९२९७)
सिंहा व्याघ्राः सशरभा मत्ताश्चैव महागजाः ।
द्वीपिनः खड्गभल्लूका ये चान्ये भीमदर्शनाः ॥ १२-११६-७ (६९२९८)
ते सुखप्रश्नदाः सर्वे भवन्ति क्षतजाशनाः ।
तस्यर्षेः शिष्यवच्चैव चित्तज्ञाः प्रियकारिणः ॥ १२-११६-८ (६९२९९)
उक्त्वा च ते सुखप्रश्नं सर्वे यान्ति यथासुखम् ।
ग्राम्यस्त्वेकः पशुस्तत्र नाजहात्स महामुनिम् ॥ १२-११६-९ (६९३००)
भक्तोऽनुरक्तः सततमुपवासकृशोऽबलः ।
फलमूलोत्तराहारः शान्तः शिष्टाकृतिर्यथा ॥ १२-११६-१० (६९३०१)
तस्यर्षेरुपविष्टस्य पादमूले महामतेः ।
मनुष्यवद्गतो भावं स्नेहबद्धोऽभवद्भृशम् ॥ १२-११६-११ (६९३०२)
ततोऽभ्ययान्महारौद्रो द्वीपी क्षतजभोजनः ।
श्वार्थमत्यर्थमुद्धुष्टः क्रूरः कालइवान्तकः ॥ १२-११६-१२ (६९३०३)
लेलिह्यमानस्तृषितः पुच्छास्फोटनतत्परः ।
व्यादितास्यः क्षुधाः भुग्नः प्रार्थयानस्तदामिषम् ॥ १२-११६-१३ (६९३०४)
दृष्ट्वा तं क्रूरमायान्तं जीवितार्थी नराधिप ।
प्रोवाच श्वा मुनिं तत्र तच्छृणुष्व विशांपते ॥ १२-११६-१४ (६९३०५)
श्वशत्रुर्भगवन्नेष द्वीपी मां हन्तुमिच्छति ।
त्वत्प्रसादाद्भयं न स्यादस्मान्मम महामुने ।
श्तथा कुरु महाबाहो सर्वज्ञस्त्वं न संशयः ॥ १२-११६-१५ (६९३०६)
स मुनिस्तस्य विज्ञाय भावज्ञो भयकारणम् ।
रुतज्ञः सर्वसत्वानां तमैश्वर्यसमन्वितः ॥ͱ १२-११६-१६ (६९३०७)
मुनिरुवाच। १२-११६-१७क्ष् (५६५८)
न भयं द्वीपिनः कार्यं मृत्युतस्ते कथंचन ।
एष श्वरूपरहितो द्वीपी भवसि पुत्रक ॥ १२-११६-१७ (६९३०८)
ततः श्वा द्वीपितां नीतो जाम्बूनदनिभाकृति ।
चित्राङ्गो विस्फुरद्दंष्ट्रो वने वसति निर्भयः ॥ १२-११६-१८ (६९३०९)
तं दृष्ट्वा संमुखे द्वीपी आत्मनः सदृशं पशुम् ।
अविरुद्धस्ततस्तस्य क्षणेन समपद्यत ॥ १२-११६-१९ (६९३१०)
ततोऽभ्ययान्महारौद्रो व्यादितास्यः क्षुधान्विः ।
द्वीपिनं लेलिहन्वक्रं व्याघ्रो रुधिरलालसः ॥ १२-११६-२० (६९३११)
व्याघ्रं दृष्ट्वा क्षुधा भुग्नं दंष्ट्रिणं वनचारिणम् ।
द्वीपि जीवितरक्षार्थमृषिं शरणमेयिवान् ॥ १२-११६-२१ (६९३१२)

ततः संवासजं स्नेहमृषिणा कुर्वता तदा ।
स द्वीपी व्याघ्रतां नीतो रिपुभ्यो बलवत्तरः ॥ १२-११६-२२ (६९३१३)
ततोऽदृष्ट्वा स शार्दूलो नाभ्यघ्नत्तं विशांपते ।
स तु श्वा व्याघ्रतां प्राप्य बलवान्पिशिताशनः ॥ १२-११६-२३ (६९३१४)
न मूलफलभोगेषु स्पृहामप्यकरोत्तदा ।
यथा मृगपतिर्नित्यं प्रकाङ्क्षति वनौकसः ।
तथैव स महाराज व्याघ्रः समभवत्तदा ॥ ॥ १२-११६-२४ (६९३१५)

इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि
षोडशाधिकशततमोऽध्यायः ॥ ११६.।
Mahabharata - Shanti Parva - Chapter Footnotes

१२-११६-२ अत्र उत्तमाधममध्यमस्थानेषु क्रमात् तएव योज्या नतु
उच्चस्थाने नीचो नियोज्य इत्यस्मिन्नर्थे ॥
१२-११६-३ अस्यैव वक्ष्यमाणस्य ॥
१२-११६-६ सत्वाः प्राणिनः ॥
१२-११६-८ सुखप्रश्नदाः सुखिनः स्थ इति प्रश्नस्योत्तरं सुखिनः
स्मः इति तत्प्रदा इत्यर्थः ॥
१२-११६-११ भावं चित्तम् ॥
१२-११६-१३ सुधामत्तः इति ड।थ ।पाठः ॥
१२-११६-१७ द्वीपिनो द्वीपिरूपान्मृत्युतः ॥
१२-११६-२१ क्षुधाभुग्नं पीडितम् ॥

---

शन्तिपर्व-अध्यय११७
॥ श्रीः ॥
१२.११७. अध्यायः ११७

Mahabharata - Shanti Parva - Chapter Topics
मुपिवरेण व्याघ्रीकृतस्य स्वीयशुनो गजाद्भये सति गजत्वप्रापणम्
॥ १.। पुनः सिंहाद्भये सिंहीकृतस्य तस्यैव शरभाद्भये
शरभीकरणम् ॥ २.। दुष्टभावेनात्मजिघांसोस्तस्य पुनः
श्वभावप्रापणम् ॥ ३.।
Mahabharata - Shanti Parva - Chapter Text

१२-११७-० (६९३१६)
भीष्म उवाच। १२-११७-०क्ष् (५६५९)
व्याघ्रश्चोटजमूलस्थस्तृप्तः सुप्तो हतैर्मृगैः ।

नागभागात्तमुद्देशं मत्तो मेघ इवोत्थितः ॥ १२-११७-१ (६९३१७)
प्र--करटः प्रांशुः पद्मी विततकुम्भकः ।
सु--णो महाकायो मेघगम्भीरनिः स्वनः ॥ १२-११७-२ (६९३१८)
तं दृष्ट्वा कुञ्जरं मत्तमायान्तं बलगर्वितम् ।
व्या हस्तिभयान्त्रस्तस्तमृषिं शरणं ययौ ॥ १२-११७-३ (६९३१९)
ततोऽनयत्कुञ्जरत्वं व्याघ्रं तमृषिसत्तमः ।
महमेघोपमं दृष्ट्वा स भीतो ह्यभवद्गजः ॥ १२-११७-४ (६९३२०)
ततः कमलषण्डानि सल्लकीगहनानि च ।
व्य--रत्स मुदायुक्तः पद्मरेणुविभूषितः ॥ १२-११७-५ (६९३२१)
कदचिद्रममाणस्य हस्तिनः संमुखं तदा ।
ऋषेस्तस्योटस्थस्य कालोऽगच्छद्दिवानिशम् ॥ १२-११७-६ (६९३२२)
अथाजगाम तं देशं केसरी केसरारुणः ।
गिन्विन्दरजो भीमः सिंहो नागकुलान्तकः ॥ १२-११७-७ (६९३२३)
तं--- सिंहमायान्तं नागः सिंहभयार्दितः ।
ऋषिं शरणमापेदे वेपमानो भयातुरः ॥ १२-११७-८ (६९३२४)
स त-ः सिंहतां नीतो गजेन्द्रो मुनिना तदा ।
तं च नागणयत्सिंहं तुल्यजातिसमन्वयात् ॥ १२-११७-९ (६९३२५)
दृष्ट्वा च सोऽभवत्सिंहो वन्यो हिंसन्नवाग्बलः ।
स चाश्रपेऽवसत्सिंहस्तस्मिन्नेव सुखी वने ॥ १२-११७-१० (६९३२६)
न चान्ये क्षुद्रपशवस्तपोवनसमीपतः ।
व्यदृश्यन्त तदा त्रस्ता जीविताकाङ्क्षिणस्तथा ॥ १२-११७-११ (६९३२७)
कदाचित्कालयोगेन सर्वप्राणिविहिंसकः ।
बलवान्क्षतजाहारो नानासत्वभयंकरः ॥ १२-११७-१२ (६९३२८)
अष्टपादर्ध्वनयनः शरभो वनगोचरः ।
तं सिंहं हन्तुमागच्छन्मुनेस्तस्य निवेशने ॥ १२-११७-१३ (६९३२९)
ग्तं दृष्ट्वा शरभं यान्तं सिंहः परभयान्वितः ।
ऋषिं शरणमापेदे वेपमानः कृताञ्जलिः ॥' १२-११७-१४ (६९३३०)
सं मुनिः शरभं चक्रे बलोत्कटमरिंदम ।
ततः स शरभो वन्यो मुनेः शरभमग्रतः ।
दृष्ट्वा बलिनमत्युग्रं द्रुतं संप्राद्रवद्वनम् ॥ १२-११७-१५ (६९३३१)
स एवं शरभस्थाने न्यस्तो वै मुनिना तदा ।
मुनेः पार्श्वगतो नित्यं शरभः सुखमाप्तवान् ॥ १२-११७-१६ (६९३३२)
ततः शरभसंत्रस्ताः सर्वे मृगगणा वनात् ।
दिशः संप्राद्रवन्राजन्भयाज्जीवितकाङ्क्षिणः ॥ १२-११७-१७ (६९३३३)
शरभोऽप्यतिसंहृष्टो नित्यं प्राणिवधे रतः ।
फलमूलाशनं कर्तुं नैच्छत्स पिशिताशनः ॥ १२-११७-१८ (६९३३४)

ततः क्षुद्रसमाचारो बलेन च समन्वितः ।
इयेष तं मुनिं हन्तुमकृतज्ञः कृतान्वयः ॥१२-११७-१९ (६९३३५)
ग्चिन्तयामास च तदा शरभः श्वानपूर्वकः ॥ १२-११७-२० (६९३३६)
अस्य प्रभावात्संप्राप्तो वाङ्भात्रेणैव केवलम् ।
शरभत्वं सुदुष्प्रापं सर्वभूतभयंकरम् ॥१२-११७-२१ (६९३३७)
अन्येऽप्यत्र भयत्रस्ताः सन्ति सत्वा भयार्दिताः ।
मुनिमाश्रित्य जीवन्तो मृगाः पक्षिगणास्तथा ॥१२-११७-२२ (६९३३८)
तेषामपि कदाचिच्च शरभत्वं प्रयच्छति ।
सर्वसत्वोत्तमं लोके बलं यत्र प्रतिष्ठितम् ॥१२-११७-२३ (६९३३९)
पक्षिणामप्ययं दद्यात्कदाचिद्गारुडं बलम् ॥ १२-११७-२४ (६९३४०)
यावदन्यस्य संप्रीतः कारुण्यं तु समाश्रितः ।
न ददाति बलं तुष्टः सत्वस्यान्यस्य कस्यचित् ॥१२-११७-२५ (६९३४१)
तावदेनमहं विप्रं वधिष्यामि च शीघ्रतः ।
स्थातुं मया शक्यमिह मुनिघातान्न संशयः ॥' १२-११७-२६ (६९३४२)
ततस्तेन तपःशक्त्या विदितो ज्ञानचक्षुषा ।
विज्ञाय च मुनिः प्राज्ञस्ततः शापं प्रयुक्तवान् ॥१२-११७-२७ (६९३४३)
ग्अहमग्निप्रभो नाम मुनिर्भृगुकुलान्वयः ।
मनसा निर्दहेयं च जगत्संधारयामि च ॥१२-११७-२८ (६९३४४)
मम वश्यं जगत्सर्वं देवा यच्च चराचरम् ।
सन्ति देवाश्च ये भीताः स्वधर्मं न त्यजन्ति ये ।
स्वधर्माच्चलितान्सर्वान्वाङ्भात्रेणापि निर्दहे ॥ १२-११७-२९ (६९३४५)
किमङ्ग त्वं मया नीतः शरभत्वमनामयम् ।
क्रूरः स सर्वभूतेषु हीनश्चाशुचिरेव च ॥' १२-११७-३० (६९३४६)
श्वा त्वं द्वीपित्वमापन्नो द्वीपी व्याघ्रत्वमागतः ।
व्याघ्रान्नागो मदपटुर्नागः सिंहत्वमागतः ॥१२-११७-३१ (६९३४७)
सिंहस्त्वं बलमापन्नो भूयः शरभतां गतः ।
मया स्नेहपरीतेन विसृष्टो न कुलान्वयः ॥१२-११७-३२ (६९३४८)
यस्मादेवमपापं मां पाप हिंसितुमिच्छसि ।
तस्मात्स्वयोनिमापन्नः पुनः श्वानो भविष्यसि ॥१२-११७-३३ (६९३४९)
ततो मुनिजनद्वेष्टा दुष्टात्मा प्राकृतोऽबुधः ।
ऋषिणा शरभः शप्तस्तद्रूपं पुनराप्तवान् ॥ ॥१२-११७-३४ (६९३५०)

इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि
सप्तदशाधिकशततमोऽध्यायः ॥११७.।

Mahabharata - Shanti Parva - Chapter Footnotes

१२-११७-१ मृगैस्तृप्तः ॥
१२-११७-९ समन्वयात्संबन्धात् ॥
१२-११७-१९ ततो रुधिरतर्षेण बलिना शरभोऽन्वितः इति झ । पाठः ॥
१२-११७-३१ मदपटुः प्रवहन्मदः ॥
१२-११७-३२ विसृष्टो विविधेन रूपेण त्वं सृष्टः । न
तु त्वं कुलान्वयः। तेन तेन कुलेनान्वयः संबन्धो यस्य स
कुलान्वयस्तादृशस्त्वं न भवसि ॥
१२-११७-३३ श्वैव त्वं हि भविष्यसीति झ । पाठः ॥

---

शन्तिपर्व-अध्यय११८
॥ श्रीः ॥
१२.११८. अध्यायः ११८

Mahabharata - Shanti Parva - Chapter Topics
भीष्मेण युधिष्ठिरंप्रति सचिवादिगुणवर्णनम् ॥ १.।
Mahabharata - Shanti Parva - Chapter Text

१२-११८-० (६९३५१)
भीष्म उवाच। १२-११८-०क्ष् (५६६०)
स श्वा प्रकृतिमापन्नः परं दैन्यमुपागमत् ।
ऋषिणा हुंकृतः पापस्तपोवनबहिष्कृतः ॥ १२-११८-१ (६९३५२)
एवं राज्ञा मतिमता विदित्वा शीलशौचताम् ।
आर्जवं प्रकृतिं सत्वं श्रुतं वृत्तं कुलं दमम् ॥ १२-११८-२ (६९३५३)
अनुक्रोशं बलं वीर्यं प्रभावं प्रशमं क्षमाम् ।
भृत्यायेमन्त्रिणो योग्यास्तत्र स्थाप्याः सुरक्षिताः ॥ १२-११८-३ (६९३५४)
नाषरीक्ष्य महीपालः प्रकर्तुं भृत्यमर्हति ।
अकुलीननराकीर्णो न राजा सुखमेधते ॥ १२-११८-४ (६९३५५)
कुलजः प्राकृतो राजंस्तत्कुलीनतया सदा ।
न पापे कुरुते बुद्धिं निन्द्यमानोऽप्यनागसि ॥ १२-११८-५ (६९३५६)
अकुलीनस्तु पुरुषः प्राकृतः साधुसंक्षयात् ।
दुर्लभैश्वर्यतां प्राप्तो निन्दितः शत्रुतां व्रजेत् ॥ १२-११८-६ (६९३५७)
ग्काकः श्वानोऽकुलीनश्च बिडालः सर्प एव च ।
अकुलीना च या नारी तुल्यास्ते परिकीर्तिताः ॥ १२-११८-७ (६९३५८)
लोकपालाः सदोद्विग्नाः पश्यन्त्यकुलजान्यथा ।
नारीं वा पुरुषं वाऽथ शीलं तत्रापि कारणम् ॥ १२-११८-८ (६९३५९)
दुष्कुलीना च या स्त्री स्याद्दुष्कुलीनश्च यः पुम ।

अहिंसाशीलसंयोगाद्धर्मश्चाऽऽकुलतां व्रजेत् ॥ १२-११८-९ (६९३६०)
धर्मं प्रति महाराज श्लोकानाह बृहस्पतिः ।
शृणु सर्वान्महीपाल हृदि तांश्च करिष्यसि ॥ १२-११८-१० (६९३६१)
असितं सितकर्माणं यथा दान्तं तपस्विनम् ।
वृत्तस्थमपि चण्डालं तं देवा ब्राह्मणं विदुः ॥ १२-११८-११ (६९३६२)
यदि घातयते कश्चित्पापसत्वं प्रजाहितः ।
सर्वसत्वहितार्थाय न तेनासौ विहिंसकः ॥ १२-११८-१२ (६९३६३)
द्वीपिनं शरभं सिंहं व्याघ्रं कुञ्जरमेव च ।
महिषं च वराहं च सूकरं श्वानपन्नगान् ॥ १२-११८-१३ (६९३६४)
गोब्राह्मणहितार्थाय बालस्त्रीरक्षणाय च ।
वृद्धातुरपरित्राणे यो हिनस्ति स धर्मवित् ॥ १२-११८-१४ (६९३६५)
ब्राह्मणः पापकर्मा च म्लेच्छो वा धार्मिकः शु वः ।
श्रेयांस्तत्र भवेन्म्लेच्छो ब्राह्मणः पापकृत्तमः ॥ १२-११८-१५ (६९३६६)
दुष्कुलीनः कुलीनो वा यः कश्चिच्छीलवान्नरः ।
प्रकृतिं तस्य विज्ञाय स्थिरां वा यदि वाऽस्थिराम् ॥ १२-११८-१६ (६९३६७)
शीलं वाऽनुत्तमं कर्म कुर्याद्राजा समाहितः ।
नियुञ्जीत महीपालो दुर्वृत्तं पापकर्मसु ॥' १२-११८-१७ (६९३६८)
कुलीनं शिक्षितं प्राज्ञं ज्ञानविज्ञानकोविदम् ।
सर्वशास्त्रार्थतत्त्वज्ञं सहिष्णुं देशजं तथा ॥ १२-११८-१८ (६९३६९)
कृतज्ञं बलवन्तं च क्षान्तं दान्तं जितेन्द्रियम् ।
अलुब्धं लब्धसंतुष्टं स्वामिमित्रबुभूषकम् ॥ १२-११८-१९ (६९३७०)
सचिवं देशकालज्ञं सर्वसंग्रहणे रतम् ।
संस्कृतं युक्तवचनं हितैषिणमतन्द्रितम् ॥ १२-११८-२० (६९३७१)
युक्ताचारं स्वविषये संधिविग्रहकोविदम् ।
शस्तं त्रिवर्गवेत्तारं पौरजानपदप्रियम् ॥ १२-११८-२१ (६९३७२)
सेनाव्यूहनतत्त्वज्ञं बलहर्षणकोविदम् ।
इङ्गिताकरातत्त्वज्ञं यात्रासेनाविशारदम् ॥ १२-११८-२२ (६९३७३)
हस्तिशिक्षाश्वतत्त्वज्ञमहंकारविवर्जितम् ।
प्रगल्भं दक्षिणं दान्तं बलिनं युक्तमन्त्रिणम् ॥ १२-११८-२३ (६९३७४)
चौक्षं चौक्षजनाकीर्णं सुवेषं सुखदर्शनम् ।
नायकं नीतिकुशलं गुणैः षड्भिः समन्वितम् ॥ १२-११८-२४ (६९३७५)
अस्तब्धं प्रश्रितं श्लक्ष्णं मृदुवादिनमेव च ।
धीरं महर्द्धिं च देशकालोपपादकम् ॥ १२-११८-२५ (६९३७६)
सचि यः प्रकुरुते न चैनमवमन्यते ।
तस्य विस्तीर्यते राज्यं ज्योत्स्ना ग्रहपतेरिव ॥ १२-११८-२६ (६९३७७)
एतैरेव गुणैर्युक्तो राजा शास्त्रविशारदः ।

एष्टव्यो धर्मपरमः प्रजापालनतत्परः ॥ १२-११८-२७ (६९३७८)
धीरो मर्षी शुचिः शीघ्रः काले पुरुषकारवित् ।
शुश्रूषुः श्रुतवाञ्श्रोता ऊहापोहविशारदः ॥ १२-११८-२८ (६९३७९)
मेधावी धारणायुक्तो यथान्यायोपपादकः ।
दान्तः सदा प्रियाभाषी क्षमावांश्च विपर्यये ॥ १२-११८-२९ (६९३८०)
नातिच्छेत्ता स्वयंकारी श्रद्धालुः सुखदर्शनः ।
आर्तहस्तप्रदो नित्यमाप्तामात्यो नये रतः ॥ १२-११८-३० (६९३८१)
नाहंवादी ननिर्द्वन्द्वो नयत्किंचनकारकः ।
कृते कर्मण्यमोघानां कर्ता भृत्यजनप्रियः ॥ १२-११८-३१ (६९३८२)
संगृहीतजनोऽस्तब्धः प्रसन्नवदनः सदा ।
त्राता भृत्यजनापेक्षी न क्रोधी सुमहामनाः ॥ १२-११८-३२ (६९३८३)
युक्तदण्डो न निर्दण्डो धर्मकार्यानुशासनः ।
चारनेत्रः प्रजावेक्षी धर्मार्थकुशलः सदा ॥ १२-११८-३३ (६९३८४)
राजा गुणशताकीर्ण एष्टव्यस्तादृशो भवेत् ।
योधाश्चैव मनुष्येन्द्र सर्वैर्गुणगणैर्वृताः ॥ १२-११८-३४ (६९३८५)
अन्वेष्टव्याः सुपुरुषाः सहाया राज्यधारणे ।
न विमानयितव्यास्ते राज्ञा वृद्धिमभीप्सता ॥ १२-११८-३५ (६९३८६)
योधाः समरशौण्डीराः कृतज्ञाः शास्त्रकोविदाः ।
धर्मशास्त्रसमायुक्ताः पदातिजनसंवृताः ॥ १२-११८-३६ (६९३८७)
अर्थमानविवृद्धाश्च रथचर्याविशारदाः ।
इष्वस्त्रकुशला यस्य तस्येयं नृपतेर्मही ॥ १२-११८-३७ (६९३८८)
ग्ज्ञातीनामनवज्ञानं भृत्येष्वशठता तथा ।
नैपुणं चार्थचर्यासु यस्यैते तस्य सा मही ॥ १२-११८-३८ (६९३८९)
आलस्यं चैव निद्रा च व्यसनान्यतिहास्यता ।
यस्तैतानि न विद्यन्ते तस्यैव सुचिरं मही ॥ १२-११८-३९ (६९३९०)
वृद्धसेवी महोत्साहो वर्णानां चैव रक्षिता ।
धर्मचर्याः सदा यस्य तस्येयं सुचिरं मही ॥ १२-११८-४० (६९३९१)
नीतिवर्त्मानुसरणं नित्यमुत्थानमेव च ।
रिपूणामनवज्ञानं तस्येयं सुचिरं मही ॥ १२-११८-४१ (६९३९२)
उत्थानं चैव दैवं च तयोर्नानात्वमेव च ॥
मनुना वर्णितं पूर्वं वक्ष्ये शृणु तदेव हि ॥ १२-११८-४२ (६९३९३)
उत्थानं हि नरेन्द्राणां बृहस्पतिरभाषत ।
नयानयविधानज्ञः सदा भव कुरूद्वह ॥ १२-११८-४३ (६९३९४)
दुर्हृदां छिद्रदर्शी यः सुहृदामुपकारवान् ।
विशेषविच्च भृत्यानां स राज्यफलमश्नुते ॥ ' १२-११८-४४ (६९३९५)
सर्वसंग्रहणे युक्तो नृपो भवति यः सदा ।

उत्थानशीलो मन्त्राढ्यः स राजा राजसत्तमः ॥ १२-११८-४५ (६९३९६)
शक्या चाश्वसहस्रेण वीरारोहेण भारत ।
संगृहीतमनुष्येण कृत्स्ना जेतुं वसुंधरा ॥ ॥ १२-११८-४६ (६९३९७)

इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि
अष्टादशाधिकशततमोऽध्यायः ॥ ११८.।
Mahabharata - Shanti Parva - Chapter Footnotes

१२-११८-६ अकुलीनस्तु निन्दामात्रेण शत्रुतां व्रजेत्
। साधुसंश्रयस्वादिति झ। पाठः ॥
१२-११८-१९ स्वामिनो मित्राणां बुभूषकं ऐश्वर्यलिप्सुम् ॥
१२-११८-२० सर्वसंग्रहणे प्राणिमात्ररञ्जने ॥
१२-११८-२४ चौक्षं शुद्धम् ॥
१२-११८-२८ मर्षी क्षमी ॥
१२-११८-२९ विपर्ययेऽक्षमावति अपकारिणि क्षमावान् ॥
१२-११८-३१ ननिर्द्वन्द्वो ननिष्परिग्रहः ॥
१२-११८-३३ चारनेत्रः परापेक्षी इति ट । ड। थ। पाठः ॥
१२-११८-३७ अभया गजपृष्ठस्थाः इति झ । पाठः ॥

---

शन्तिपर्व-अध्यय११९
॥ श्रीः ॥
१२.११९. अध्यायः ११९

Mahabharata - Shanti Parva - Chapter Topics
भीष्मेण युधिष्ठिरंप्रति भृत्यानां स्वस्वयोग्यतानुसारेणाधिकारे
स्थापनादेर्भृत्यलक्षणादीनां च कथनम् ॥ १.।
Mahabharata - Shanti Parva - Chapter Text

१२-११९-० (६९३९८)
भीष्म उवाच। १२-११९-०क्ष् (५६६१)
एवं गुणयुतान्भृत्यान्स्वेस्वे स्थाने नराधिपः ।
नियोजयति कृत्येषु स राज्यफलमश्नुते ॥ १२-११९-१ (६९३९९)
न वा स्वस्थानमुत्क्रम्य प्रमाणमपि सत्कृतम् ।
आरोप्य चापि स्वस्थानमुत्क्रम्यान्यत्प्रपद्यते ॥ १२-११९-२ (६९४००)
स्वजातिगुणसंपन्नाः स्वेषु धर्मेष्ववस्थिताः ।
प्रकर्तव्या ह्यमात्यास्तु नास्थाने प्रक्रिया क्षमा ॥ १२-११९-३ (६९४०१)
अनुरूपाणि कर्माणि भृत्येभ्यो यः प्रयच्छति ।

स भृत्यगुणसंपन्नं राजा फलमुपाश्नुते ॥ १२-११९-४ (६९४०२)
शरभः शरभस्थाने सिंहः सिंह इवोत्थितः ।
व्याघ्रो व्याघ्र इव स्थाप्यो द्वीपी द्वीपी यथा तथा ॥ १२-११९-५ (६९४०३)
कर्मस्विहानुरूपेषु न्यस्या भृत्या यथाविधि ।
प्रतिलोमं न भृत्यास्ते स्थाप्याः कर्मफलैषिणा ॥ १२-११९-६ (६९४०४)
यः प्रमाणमतिक्रम्य प्रतिलोमं नराधिपः ।
भृत्यान्स्थापयतेऽबुद्धिर्न स रञ्जयते प्रजाः ॥ १२-११९-७ (६९४०५)
न बालिशा न च क्षुद्रा नाप्राज्ञा नाजितेन्द्रियाः ।
नाकुलीना जनाः पार्श्वे स्थाप्या राज्ञा गुणैषिणा ॥ १२-११९-८ (६९४०६)
साधवः कुलजाः शूरा ज्ञानवन्तोऽनसूयकाः ।
अक्षुद्राः शुचयो दक्षाः स्युर्नराः पारिपार्श्वकाः ॥ १२-११९-९ (६९४०७)
उद्गतास्तत्पराः शान्ताश्चौक्षाः प्रकृतिजाः शुभाः ।
स्वेस्वे स्थानेऽनुपाकृष्टास्ते स्यू राज्ञो बहिश्चराः ॥ १२-११९-१० (६९४०८)
सिंहस्य सततं पार्श्वे सिंह एव जनो भवेत् ।
असिंहः सिंहसहितः सिंहवल्लभते फलम् ॥ १२-११९-११ (६९४०९)
यस्तु सिंहः श्वभिः कीर्णः सिंहकर्मफले रतः ।
न स सिंहफलं भोक्तुं शक्तः श्वभिरुपासितः ॥ १२-११९-१२ (६९४१०)
एव मेतैर्मनुष्येन्द्र शूरैः प्राज्ञैर्बहुश्रुतैः ।
कुलीनैः सह शक्येत कृत्स्ना जेतुं वसुंधरा ॥ १२-११९-१३ (६९४११)
नावैद्यो नानृजुः पार्श्वे नाप्राज्ञो ना महायशाः ।
संग्राह्यो वसुधापालैर्भृत्यो भृत्यवतां वर ॥ १२-११९-१४ (६९४१२)
वाणवद्विसृता यान्ति स्वामिकार्यपरा नराः ।
ये भृत्याः पार्थिवहितास्तेषु सान्त्वं सदा चरेत् ॥ १२-११९-१५ (६९४१३)
कोशश्च सततं रक्ष्यो यत्नमास्थाय राजभिः ।
कोशमूला हि राजानः कोशवृद्धिकरो भवेत् ॥ १२-११९-१६ (६९४१४)
कोष्ठागारं च ते नित्यं स्फीतं धान्यैः सुसंचितैः ।
सदा त्वं सत्सु संन्यस्तधनधान्यपको भव। १२-११९-१७ (६९४१५)
नित्ययुक्ताश्च ते भृत्या भवन्तु रणकोविदाः ।
वाजिनां च प्रयोगेषु वैशारद्यमिहेष्यते ॥ १२-११९-१८ (६९४१६)
ज्ञातिबन्धुजनावेक्षी मित्रसंबन्धिसत्कृतः ।
पौरकार्यहितान्वेक्षई भव कौरवनन्दन ॥ १२-११९-१९ (६९४१७)
एषा ते नैष्ठिकी बुद्धिः प्रज्ञा चाभिहिता मषा ।
श्वाते निदर्शनं तात किं भूयः श्रोतुमिच्छसि ॥ ॥ १२-११९-२० (६९४१८)

इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि
एकोनविंशत्यधिकशततमोऽध्यायः ॥ ११९.।

१२-११९-१ एवं नीचाननीचे नैव योजयेत् ॥
१२-११९-७ अबुद्धिरिति च्छेदः ॥
१२-११९-१० बहिश्चराः प्राणा इवेति शेषः ॥
१२-११९-१५ विसृताः अपरावर्तिनः ॥

---

शन्तिपर्व-अध्यय१२०
॥ श्रीः ॥
१२.१२०. अध्यायः १२०

Mahabharata - Shanti Parva - Chapter Topics
भीष्मेण युधिष्ठिरंप्रति प्रजापालनप्रकारादिकथनम् ॥ १.।
Mahabharata - Shanti Parva - Chapter Text

१२-१२०-० (६९४७६)
युधिष्ठिर उवाच। १२-१२०-०क्ष् (५६६४)
राजवृत्तान्यनेकानि त्वया प्रोक्तानि भारत ।
पूर्वैः पूर्वनियुक्तानि राजधर्मार्थवेदिभिः ॥ १२-१२०-१ (६९४७७)
तदेव विस्तरेणोक्तं पूर्ववृत्तं सतां मतम् ।
प्रणेयं राजधर्माणां प्रब्रूहि भरतर्षभ ॥ १२-१२०-२ (६९४७८)
भीष्म उवाच। १२-१२०-३क्ष् (५६६५)
रक्षणं सर्वभूतानामिति क्षात्रं परं मतम् ।
तद्यथा रक्षणं कुर्यात्तथा शृणु महीपते ॥ १२-१२०-३ (६९४७९)
यथा बर्हाणि चित्राणि बिभर्ति भुजगाशनः ।
तथा बहुविधं राजा रूपं कुर्वीत् धर्मवित् ॥ १२-१२०-४ (६९४८०)
तैक्ष्ण्यं जिह्मत्वमादानं सत्यमार्जवमेव च ।
मध्यस्थाः सत्वमातिष्ठंस्तथा वै सुखमृच्छति ॥ १२-१२०-५ (६९४८१)
यस्मिन्नर्थे यथैव स्यात्तद्वर्णं रूपमादिशेत् ।
बहुरूपस्य राज्ञो हि सूक्ष्मोऽप्यर्थो न सीदति ॥ १२-१२०-६ (६९४८२)
नित्यं रक्षितमन्त्रः स्याद्यथा मूकः शरच्छिखी ।
श्लक्ष्णाक्षरगतः श्रीमान्भवेच्छास्त्रविशारदः ॥ १२-१२०-७ (६९४८३)
आयव्ययेषु युक्तः स्याज्जलस्रवणेष्विव ।
शैलाद्वर्षोदकानीव द्विजान्सिद्धान्समाश्रयेत् ।
आत्मार्थं हि सदा राजा कुर्याद्धर्मध्वजोत्तमम् ॥ १२-१२०-८ (६९४८४)
नित्यमुद्यतदण्डः स्यादाचारे चाप्रमादवान् ।
लोके चायव्ययौ दृष्ट्वा वृक्षाद्वृक्षमिवाव्रजेत् ॥ १२-१२०-९ (६९४८५)

आज्ञावान्स्यात्स्वयूथ्येषु भौमानि चरणैः किरन् ।
जतिपक्षः परिस्पन्देत्प्रेक्षेद्वैकल्यमात्मनः ॥ १२-१२०-१० (६९४८६)
दोषान्विवृणुयाच्छत्रोः परपक्षांश्च सूदयेत् ।
क ननेष्विव पुष्पाणि बहिरर्थान्समाचरेत् ॥ १२-१२०-११ (६९४८७)
उच्छ्रितानाश्रयेत्स्फूतान्नरेन्द्रानचलोपमान् ।
श्रयेच्छायामिव ज्ञातिं गुप्तं शरणमाश्रयेत् ॥ १२-१२०-१२ (६९४८८)
प्रावृषीवासितग्रीवो माद्येत निशि निर्जने ।
मायूरेण गुणेनैव स्त्रीभिरारक्षितश्चरेत् ॥ १२-१२०-१३ (६९४८९)
न जह्याच्च तनुत्राणं रक्षेदात्मानमात्मना ।
चारभूमिष्विव ततान्पाशांश्च परिवर्जयेत् ॥ १२-१२०-१४ (६९४९०)
प्रणयेद्वाऽपि तां भूमिं प्रणश्येद्ग्रहणे पुनः ।
ग्एवं मयूरधर्मेण वर्तयन्सततं नरः।'
हन्यात्क्रुद्धानतिविषांस्ताञ्जिह्मगतयोऽहिताः ॥ १२-१२०-१५ (६९४९१)
नासूयेच्चावगर्ह्याणि सन्निवासान्निवासयेत् ।
सदा बर्हिसमं कामं प्रशस्तं कृतमाचरेत् ।
सर्वतश्चाददेत्प्रज्ञां पतङ्गं गहनेष्विव ॥ १२-१२०-१६ (६९४९२)
एवं मयूरवद्राजा स्वराज्यं परिपालयेत् ।
आत्मबुद्धिकरीं नीतिं विदधीत विचक्षणः ॥ १२-१२०-१७ (६९४९३)
आत्मसंयमनं बुद्ध्या परबुद्ध्या विचारणाम् ।
बुद्ध्या चात्मगुणप्राप्तिरेतच्छास्त्रनिदर्शनम् ॥ १२-१२०-१८ (६९४९४)
परं विश्वासयेत्साम्ना स्वशक्तिं चोपलक्षयेत् ।
आत्मनः परिमर्शेन बुद्धिं बुद्ध्या विचारयेत् ॥ १२-१२०-१९ (६९४९५)
सान्त्वयोगमतिः प्राज्ञः कार्याकार्यप्रयोजनकः ।
निगूढबुद्धेर्धीरस्य वक्तव्ये वक्ष्यते तथा ॥ १२-१२०-२० (६९४९६)
संनिकृष्टां कथां प्राज्ञो यदि बुद्ध्या बृहस्पतिः ।
स्वभावमेष्यते तप्तं कृष्णायसमिवोदके ॥ १२-१२०-२१ (६९४९७)
अनुयुञ्जीत सत्यानि सर्वाण्येव महीपतिः ।
आगमैरुपदिष्टानि स्वस्य चैव परस्य च ॥ १२-१२०-२२ (६९४९८)
मृदुं क्रूरं तथा प्राज्ञं शूरं चार्थविधानवित् ।
स्वकर्मणि नियुञ्जीत ये चान्ये वचनाधिकाः ॥ १२-१२०-२३ (६९४९९)
अप्यदृष्टानि युक्तानि स्वानुरूपेषु कर्मसु ।
सर्वांस्ताननुवर्तेत स्वरांस्तन्त्रीरिवायताः ॥ १२-१२०-२४ (६९५००)
धर्माणामविरोधेन सर्वेषां प्रियमाचरेत् ।
ममायमिति राजा यः सपर्वत इवाचलः ॥ १२-१२०-२५ (६९५०१)
व्यवहारं समाधाय सूर्यो रश्मीनिवायतान् ।
धर्ममेवाभिरक्षेत कृत्वा तुल्ये प्रियाप्रिये ॥ १२-१२०-२६ (६९५०२)

कुलप्रकृतिदेशानां धर्मज्ञान्मृदुभाषिणः ।
मध्ये वयसि निर्दोषान्हिते युक्ताञ्जितक्लमान् ॥ १२-१२०-२७ (६९५०३)
अलुब्धाञ्शिक्षितान्दान्तान्धर्मेषु परिनिष्ठितान् ।
स्थापयेत्सर्वकार्येषु राजा सर्वार्थरक्षिणः ॥ १२-१२०-२८ (६९५०४)
एतेन च प्रकारेण कृत्यानामागतिं गतिम् ।
युक्त्या समनुतिष्ठेन तुष्टश्चारैः पुरस्कृतः ॥ १२-१२०-२९ (६९५०५)
अमोघक्रोधहर्शस्य स्वयं कृत्याऽनुदर्शिनाः ।
आत्मप्रत्ययकोशस्य वसुदैव वसुंधरा ॥ १२-१२०-३० (६९५०६)
व्यक्तश्चानुग्रहो यस्य यथोक्तश्चापि निग्रहः ।
गुप्तात्मा गुप्तराष्ट्रस्य स राजा राजधर्मवित् ॥ १२-१२०-३१ (६९५०७)
नित्यं राष्ट्रमवेक्षेत गोभिः सूर्य इवातपन् ।
चारांश्चानुचरान्विद्यात्तथा बुद्ध्या स्वयं चरेत् ॥ १२-१२०-३२ (६९५०८)
कालप्राप्तमुपादद्यान्नार्थं राजा प्रसूचयेत् ।
अहन्यहनि संदुह्यान्महीं गामिव बुद्धिमान् ॥ १२-१२०-३३ (६९५०९)
यथाक्रमेण पुष्पेभ्यश्चिनोति मधु षट्पदः ।
तथा द्रव्यमुपादाय राजा कुर्वीत संचयम् ॥ १२-१२०-३४ (६९५१०)
यद्धि गुप्तावशिष्टं स्यात्तद्वित्तं धर्मकामयोः ।
संचयान्न विसर्गी स्याद्राजा शास्त्रविदात्मवान् ॥ १२-१२०-३५ (६९५११)
नार्थमल्पं परिभवेन्नावमन्येत शात्रवान् ।
बुद्ध्याऽनुबुद्ध्या चात्मानं न चाबुद्धेषु विश्वसेत् ॥ १२-१२०-३६ (६९५१२)
धृतिर्दाक्ष्यं संयमो बुद्धिरात्मा
धैर्यं शौर्यं देशकालाप्रमादः ।
अल्पस्य वा महतो वा विवृद्धौ
धनस्यैतान्यष्ट समिंधनानि ॥ १२-१२०-३७ (६९५१३)
अग्निस्तोको वर्धतेऽप्याज्यसिक्तो
बीजं चैकं बहुसहस्रमेति ।
क्षयोदयौ विपुलौ सन्नियम्यौ
तस्मादल्पं नावमन्येत वित्तम् ॥ १२-१२०-३८ (६९५१४)
बालोऽप्यबालः स्थविरो रिपुर्यः ।
सदा प्रमत्तं पुरुषं निहन्यात् ।
कालेनान्यस्तस्य मूलं हरेत्
कालज्ञानं पार्थिवाना वरिष्ठम् ॥ १२-१२०-३९ (६९५१५)
हरेत्कीर्तिं धर्ममस्योपरुन्ध्या
दर्थे विघ्नं वीर्यमस्योपहन्यात् ।
रिपुर्द्वेष्टा दुर्बलो वा बली वा
तस्माच्छत्रोर्नैव बिभ्येद्यथात्मा ॥ १२-१२०-४० (६९५१६)

क्षयं शत्रोः संचयं पालनं वा
उभावर्थौ सहितौ धर्मकामौ ।
ततश्चान्यन्मतिमान्संदधीत
तस्माद्राजा बुद्धिमन्तं श्रयेत ॥ १२-१२०-४१ (६९५१७)
बुद्धिर्दीप्ता बलवन्तं हिनस्ति
बलं बुद्ध्या पाल्यते वर्धमानम् ।
शत्रुर्बुद्ध्या सीदते पीड्यमानो
बुद्धिपूर्वं कर्म यत्तत्प्रशस्तम् ॥ १२-१२०-४२ (६९५१८)
सर्वान्कामान्कामयानो हि धीरः
सत्वेनाल्पेनाप्नुते हीनदोषः ।
यश्चात्मानं प्रार्थयतेऽर्थ्यमानैः
श्रेयः पात्रं पूरयते च नाल्पम् ॥ १२-१२०-४३ (६९५१९)
तस्माद्राजा प्रगृहीतः प्रजासु
मूलं लक्ष्म्याः सर्वशो ह्याददीत ।
दीर्घं कालं ह्यपि संपीड्यमानो
व्युष्यात्संपद्व्यवसायेन शक्त्या ॥ १२-१२०-४४ (६९५२०)
विद्या तपो वा विपुलं धनं वा
सर्वं ह्येतद्व्यवसायेन शक्यम् ।
ब्रह्मायत्तं निवसति देहवत्सु
तस्माद्विद्याद्व्यवसायं प्रभूतम् ॥ १२-१२०-४५ (६९५२१)
यत्रासते मतिमन्तो मनस्विनः
शक्रो विष्णुर्यत्र सरस्वती च ।
वसन्ति भूतानि च यत्र नित्यं
तस्माद्विद्वान्नावमन्येत देहम् ॥ १२-१२०-४६ (६९५२२)
लुब्धं हन्यात्संप्रदानाद्धि नित्यं
लुब्धस्तृप्तिं परवित्तस्य नैति ।
सर्वो लुब्धः सर्वगुणोपभोगो
योऽर्थैर्हीनो धर्मकामौ जहाति ॥ १२-१२०-४७ (६९५२३)
धनं भोगं पुत्रदारं समृद्धिं
सर्वं लुब्धः प्रार्थयते परेषाम् ।
लुब्धे दोषाः संभवन्तीह सर्वे
तस्माद्राजा न प्रगृह्णीत् लुब्धम् ॥ १२-१२०-४८ (६९५२४)
संदर्शनेन पुरुषं जघन्यमपि चोदयेत् ।
आरम्भान्द्विषतां प्राज्ञः सर्वार्थांश्च प्रसूदयेत् ॥१२-१२०-४९ (६९५२५)
धर्मान्वितेषु विज्ञाता मन्त्रगुप्तिंश्च पाण्डव ।
आप्तो राजन्कुलीनश्च पर्याप्तो राष्ट्रसंग्रहे ॥ १२-१२०-५० (६९५२६)

विविप्रयुक्तान्नरदेवधर्मा
नुक्तान्समासेन निबोध बुद्ध्या ।
इमान्विदध्यादनुसृत्य यो वै
राजा महीं पालयितुं स शक्तः ॥ १२-१२०-५१ (६९५२७)
सुनीतिजं यस्य विधानजं सुखं
धर्मप्रणीतं विधिवत्प्रसिद्ध्यति ।
न निन्द्यते तस्य गतिर्महीपते
स विन्दते राज्यसुखं ह्यनुत्तमम् ॥ १२-१२०-५२ (६९५२८)
धनैर्विशिष्टान्मतिशीलपूजिता
न्गुणोपपन्नान्युधि दृष्टविक्रमान् ।
गुणेषु युक्तानचिरादिवात्मवां
स्ततोऽभिसंधाय निहन्ति शात्रवान् ॥ १२-१२०-५३ (६९५२९)
पश्येदुपायान्विविधेषु कर्मसु
न चानुपायेन मतिं निवेशयेत् ।
श्रियं विशिष्टां विपुलं यशो धनं
न दोषदर्शी पुरुषः समश्नुते ॥ १२-१२०-५४ (६९५३०)
प्रीतिप्रवृत्तिं विनिवर्तनं च
सुहृत्सु विज्ञाय विचार्य चोभयोः ।
यदेव मित्रं गुरुभारमावहे
त्तदेव सुस्निग्धमुदाहरेद्बुधः ॥ १२-१२०-५५ (६९५३१)
एतान्मयोक्तांश्चर राजधर्मा
न्नृणां च गुप्तौ मतिमादधत्स्व ।
अवाप्स्यसे पुण्यफलं सुखेन
सर्वो हि लोको नृप धर्ममूलः ॥ ॥ १२-१२०-५६ (६९५३२)

इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि
विंशत्यधिकशततमोऽध्यायः ॥१२०॥

Mahabharata - Shanti Parva - Chapter Footnotes

१२-१२०-२ राजधर्माणां राजधर्मविदां मतं यद्विस्तरेणोक्तं तदेव प्रणेयं प्रकर्षेण नेतुं वोढुं शक्यं संक्षिप्तमित्यर्थः ।प्रणयं राजधर्माणामिति थ।द।पाठः ॥
१२-१२०-४ बर्हाणि पक्षान् ।भुजगाशनो मयूरः ॥
१२-१२०-५ तैक्ष्ण्यं क्रूरत्वम् ।जिह्मत्वं कोटिल्यम् ॥
१२-१२०-६ यस्मिंन्नर्थे दण्डेऽनुग्रहे वा ।रूपमादिशेद्दर्शयेत् ॥
१२-१२०-७ शरच्छिखी शरत्कालमयूरः ॥

१२-१२०-८ युक्तोऽवहितः स्यात् ।वर्षोदकानि वृष्ट्या जनितानि महानदीजलानि। अर्थकामः शिखां राजा कुर्याद्धर्मध्वजोपमाम् इति झ। पाठः। तत्र शिखां योग्यलिङ्गं क्रूरत्वादिकं कुर्यात् प्रकाशयेदित्यर्थः ॥
१२-१२०-९ लोके चायव्ययौ दृष्ट्वा वृहद्वृक्षमिवास्रवदिति झ ।पाठः। तत्र बृहन्तो वृक्षा यत्र तद्बृहद्वृक्षं तालवनम्। आस्रवत् रसं प्रस्रवत्। यथा रसग्राही प्रदेशविशेषे एव प्रहृत्य रसं गृह्णीति नतु कृत्स्नवृक्षच्छेदेनेक्षुकाण्डादिवत्ततो रसं जिघृक्षति। एवं प्रजानामायव्ययौ ज्ञात्वा ता जीवयंस्ताभ्यो धनरसमादद्यादित्यर्थः ॥
१२-१२०-१० भौमानि परेषां सस्यानि चरणैरश्वादिगमनैः किरन् नाशयन्नित्यर्थः ॥
१२-१२०-१३ असितग्रीवो मयूरः ॥
१२-१२०-१४ चारैर्दर्शितासु भूमिषु धात्रीसौविदल्लसूपकारादिषु परैर्भेदितेषु ततान्विषादीन्पाशान् ॥
१२-१२०-१५ पाशज्ञाने सति तां कपटभूमिं प्रतिपद्यात्मानं प्रणयेत्प्रापयेत्तदानश्येदेव ।वाशब्द एवार्थे ॥
१२-१२०-१६ सन्निवासान्दृढमूलान्पक्षा नमात्यादीन् शूरांश्च वासयेत्स्थापयेत् ।बर्हिसमं मयूरतुल्यं कामं यथेष्टं प्रशस्तं कृतं प्रशस्तां क्रियां पक्षाणां विस्फारणमाचरेत्। पतङ्गं शलभसमूहो यथा गहनेषु पतति गहनं च निष्पन्नं करोति एवं संभूय शत्रूराष्ट्रे पतितव्यमित्यर्थः ॥
१२-१२०-१८ बुद्धया आत्मनः संयमनं इत्थमेव कर्तुं युक्तं नियमं कुर्यात् ।परबुद्ध्या च तत्रैवार्थे संवादितया तस्यार्थस्य विचारणं दृढतरो निश्चयः कार्यः। बुद्ध्या शास्त्रोत्थधिया आत्मगुणस्य पूर्वोक्तनिश्चयहेतोः प्राप्तिर्भवति। एतदेव शास्त्रस्य निदर्शनं प्रयोजनं यत्कार्यक्षोदक्षमता बुद्धेरित्यर्थः ॥
१२-१२०-१९ आत्मनः स्वस्य परिमर्शेन सर्वतोऽतीतानागतविचारेण बुद्धिं कार्यनिश्चयं बुद्ध्या ऊहापोहकौशलरूपया मेधया विचारयेत्साधकबाधकभूमौ संचारयेत् ॥
१२-१२०-२१ प्राज्ञो बुद्ध्या बृहस्पतिसमोऽपि सन् यदि निकृष्टां कथां निर्बुद्धित्ववादं प्राप्नुयात्तर्हि सद्यएव युक्त्या स्वभावं स्वास्थ्यं एष्यते ।उदके प्रक्षिप्तं तप्तायसं शैत्यमिव ॥
१२-१२०-३३ न अर्थं प्रसूचयेत् अर्थवृत्तां न ज्ञापयेत् ॥
१२-१२०-३५ संचयान्न विसर्गी स्यात् ।कोशाद्धनं न दद्यादपितूपर्याहृतमेवेत्यर्थः ॥

१२-१२०-३७ आत्मा देहः । देशे काले वाऽप्रमाद इत्येकम् ॥
१२-१२०-३९ अबालः अहीनः । अन्यः संपन्नः ॥
१२-१२०-४१ धर्मकामौ बुद्ध्या संदधीत संधिं वा कुर्यात् । अन्यत् विग्रहादिकं कुर्यात् ॥
१२-१२०-४२ वर्धमानं क्षीयमाणम् ॥
१२-१२०-४३ अल्पेनापि सत्वेन बलेन । अर्थ्यमानैर्युक्तम्। आत्मानं प्रार्थयते। लुब्धो दृप्तश्च भवतीत्यर्थः। श्रेयः पात्रं न पूरयते ततः श्रेयोऽपसर्पतीत्यर्थः ॥
१२-१२०-४४ प्रगृहीतः स्निग्धः । लक्ष्म्याः मूलं अर्थं सर्वशः सर्वाभ्यः संपीड्यमानः संपीड्यन् ॥
१२-१२०-४५ व्यवस येन उद्योगेन विद्यात् लभेत् ॥
१२-१२०-४६ अनुद्योगेन जन्म न नाशयेदित्याह यत्रेति ॥
१२-१२०-४७ समृद्धिं च प्राप्यापीति शेषः । धनं उत्कोचरूपम् ॥
१२-१२०-५२ विधानजं दैवप्राप्तम् ॥
१२-१२०-५३ गुणोपपन्नाञ्शौर्यादियुक्तान् । गुणेषु संधिविग्रहादिषु आत्मवानप्रमत्तः ॥
१२-१२०-५४ दोषदर्शी निर्दोषष्वेपीति शेषः ॥
१२-१२०-५५ उदाहरेत्प्रशंसेत् ॥
१२-१२०-५६ चरानुतिष्ठ । आदधत्स्व आधत्स्वा। दध धारणे इत्यस्य रूपम् ॥

---

शन्तिपर्व-अध्यय१२१
॥ श्रीः ॥
१२.१२१. अध्यायः १२१

Mahabharata - Shanti Parva - Chapter Topics
भीष्मेण युधिष्ठिरंप्रति दण्डस्वरूपादिकथनम् ॥ १.।
Mahabharata - Shanti Parva - Chapter Text

१२-१२१-० (६९५३३)
युधिष्ठिर उवाच। १२-१२१-०क्ष् (५६६६)
अयं पितामहेनोक्तो राजधर्मः सनातनः ।
कीदृशश्च महादण्डो दण्डे सर्वं प्रतिष्ठितम् ॥ १२-१२१-१ (६९५३४)
देवतानामृषीणां च पितॄणां च महात्मनाम् ।
यक्षरक्षः पिशाचानां मर्त्यानां च विशेषतः ॥ १२-१२१-२ (६९५३५)
सर्वेषां प्राणिनां लोके तिर्यक्ष्वपि निवासिनाम् ।
सर्वस्यापि महातेजा दण्डः श्रेयानिति प्रभो ॥ १२-१२१-३ (६९५३६)
इत्येतदुक्तं भवता दण्डे वै सचराचरम् ।

पश्यतां लोक आयत्तं ससुरासुरमानुषम् ।
एतदिच्छाम्यहं श्रोतुं तत्त्वेन भरतर्षभ ॥ १२-१२१-४ (६९५३७)
को दण्डः कीदृशो दण्डः किंरूपः किंपरायणः ।
किमात्मकः कथंभूतः कतिमूर्तिः कथं प्रभुः ॥१२-१२१-५ (६९५३८)
जागर्ति च कथं दण्डः प्रजासु विहितात्मकः ।
कश्च पूर्वापरमिदं जागर्ति प्रतिपालयन् ॥१२-१२१-६ (६९५३९)
कश्च विज्ञायते पूर्वः को वरो दण्डसंज्ञितः ।
किंसंस्थश्चाभवद्दण्डः का चास्य गतिरिष्यते ॥१२-१२१-७ (६९५४०)
भीष्म उवाच।१२-१२१-८क्ष् (५६६७)
शृणु कौरव्य यो दण्डो व्यवहारो यथा च सः ।
यस्मिन्हि सर्वमायत्तं स धर्म इति केवलः ॥१२-१२१-८ (६९५४१)
धर्मस्यार्थे महाराज व्यवहार इतीष्यते ।
तस्य लोपः कथं न स्याल्लोकेष्विह महात्मनः ॥१२-१२१-९ (६९५४२)
इत्यर्थं व्यवाहरस्य व्यवहारत्वमिष्यते ।
अपि चैतत्पुरा राजन्मनुना प्रोक्तमादितः ॥१२-१२१-१० (६९५४३)
सुप्रणीतेन दण्डेन प्रियाप्रियसमात्मना ।
प्रजा रक्षति यः सम्यग्धर्म एव स केवलः ॥१२-१२१-११ (६९५४४)
यथोक्तमेतद्वचनं प्रागेव मनुना पुरा ।
यन्मयोक्तं वसिष्ठेन ब्रह्मणो वचनं महत् ॥१२-१२१-१२ (६९५४५)
प्रागिदं वचनं प्रोक्तमतः प्राग्वचनं विदुः ।
व्यवहारस्य चाख्यानाद्व्यवहार इहोच्यते ॥१२-१२१-१३ (६९५४६)
दण्डान्त्रिवर्गः सततं सुप्रणीतात्प्रवर्तते ।
दैवं हि परमो दण्डो रूपतोऽग्निरिवोत्थितः ॥१२-१२१-१४ (६९५४७)
नीलोत्पलदलश्यामश्चतुर्दंष्ट्रश्चतुर्भुजः ।
अष्टपान्नैकनयनः शङ्कुकर्णोर्ध्वरोमवान् ॥१२-१२१-१५ (६९५४८)
जटी द्विजिह्वस्ताम्रास्यो मृगराजतनुच्छदः ।
एतद्रूपं बिभर्त्युग्रं दण्डो नित्यं दुरासदः ॥१२-१२१-१६ (६९५४९)
असिर्धनुर्गदा शक्तिस्त्रिशूलं मुद्गरः शरः ।
मुसलं परशुश्चक्रं प्रासदण्डर्ष्टितोमराः ॥१२-१२१-१७ (६९५५०)
सर्वप्रहरणीयानि यानि यानीह कानिचित् ।
दण्ड एव स सर्वात्मा लोके चरति मूर्तिमान् ॥१२-१२१-१८ (६९५५१)
भिन्दंश्छिन्दन्रुजन्कृन्तन्दारयन्पाटयंस्तथा ।
घातयन्नभिधावंश्च दण्ड एव चरत्युत ॥१२-१२१-१९ (६९५५२)
असिर्विशसनो धर्मस्तीक्ष्णवर्मा दुरासदः ।
श्रीगर्भो विजयः शास्ता व्यवहारः प्रजागरः ॥१२-१२१-२० (६९५५३)
शास्त्रं ब्राह्मणमन्त्राश्च शास्ता प्रवचनं परम् ।

धर्मपालोऽक्षरो गोपः सत्यगो नित्यगो गृहः ॥१२-१२१-२१ (६९५५४)
असङ्गो रुद्रतनयो मनुर्ज्येष्ठः शिवंकरः ।
नामान्येतानि दण्डस्य कीर्तितानि युधिष्ठिर ॥१२-१२१-२२ (६९५५५)
दण्डो हि भगवान्विष्णुर्यज्ञो नारायणः प्रभुः ।
शश्वद्रूपं महद्बिभ्रन्महात्पुरुष उच्यते ॥१२-१२१-२३ (६९५५६)
तथोक्ता ब्रह्मकन्येति लक्ष्मीर्नीतिः सरस्वती ।
दण्डनीतिर्जगद्धात्री दण्डो हि बहुविग्रहः ॥१२-१२१-२४ (६९५५७)
अर्थानर्थौ सुखं दुःखं धर्माधर्मौ बलाबले ।
दौर्भाग्यं भागधेयं च पुण्यापुण्ये गुणागुणौ ॥१२-१२१-२५ (६९५५८)
कामाकामावृतुर्मासः शर्वरी दिवसः क्षणः ।
अप्रमादः प्रमादश्च हर्षशोकौ शमो दमः ॥१२-१२१-२६ (६९५५९)
दैवं पुरुषकारश्च मोक्षामोक्षौ भयाभये ।
हिंसाहिंसे तपो यज्ञः संयमोऽथ विषामृते ॥१२-१२१-२७ (६९५६०)
अन्तश्चादिश्च मध्यं च कृतानां च प्रपञ्चनम् ।
मदः प्रमोदो दर्पश्च दम्भो धैर्यं नयानयौ ॥१२-१२१-२८ (६९५६१)
अशक्तिः शक्तिरित्येवं मानस्तम्भौ व्ययाव्ययौ ।
विनयश्च विसर्गश्च कालाकालौ च कौरव ॥१२-१२१-२९ (६९५६२)
अनृतं चाज्ञता सत्यं श्रद्धाश्रद्धे तथैव च ।
क्लीबता व्यवसायश्च लाभालाभौ जयाजयौ ॥१२-१२१-३० (६९५६३)
तीक्ष्णता मृदुतात्युग्रमागमानागमौ तथा ।
विरोधश्चाविरोधश्च कार्याकार्ये बलाबले ॥१२-१२१-३१ (६९५६४)
असूया चानसूया च धर्माधर्मौ तथैव च ।
अपत्रपानपत्रपे ह्रीश्च संपद्विपच्च ह ॥१२-१२१-३२ (६९५६५)
तेजः कर्माणि पाण्डित्यं वाक्शक्तिर्बुद्धितत्वता ।
एवं दण्डस्य लोकेऽस्मिञ्जागर्ति बहुरूपता ॥१२-१२१-३३ (६९५६६)
न स्याद्यदीह दण्डो वै प्रमथेयुः परस्परम् ।
भयाद्दण्डस्य नान्योन्यं घ्नन्ति चैव युधिष्ठिर ॥१२-१२१-३४ (६९५६७)
दण्डेन रक्ष्यमाणा हि राजन्नहरहः प्रजाः ।
राजानं वर्धयन्तीह तस्माद्दण्डः परायणम् ॥१२-१२१-३५ (६९५६८)
व्यवस्थापयते नित्यमिमं लोकं नरेश्वर ।
सत्ये व्यवस्थितो धर्मो ब्राह्मणेष्ववतिष्ठते ॥१२-१२१-३६ (६९५६९)
धर्मयुक्ता द्विजश्रेष्ठा देवयुक्ता भवन्ति च ।
बभूव यज्ञो देवेभ्यो यज्ञः प्रीणाति देवताः ॥१२-१२१-३७ (६९५७०)
प्रीताश्च देवता लोकमिन्द्रे प्रतिददत्युत ।
अन्नं ददाति शक्रश्चाप्यनुगृह्णन्निमाः प्रजाः ॥१२-१२१-३८ (६९५७१)
प्राणाश्च सर्वभूतानां नित्यमन्ने प्रतिष्ठिताः ।

तस्मात्प्रजाः प्रतिष्ठन्ते दण्डो जागर्ति तासु च ॥ १२-१२१-३९ (६९५७२)
एवंप्नयोजनश्चैव दण्डः क्षत्रियतां गतः ।
रक्षप्रजाः स जागर्ति नित्यं स्ववहितोक्षरः ॥ १२-१२१-४० (६९५७३)
ईश्वरः पुरुषः प्राणः सत्वं वृत्तं प्रजापतिः ।
भूतात्मा जीव इत्येवं नामभिः प्रोच्यतेऽष्टभिः ॥ १२-१२१-४१ (६९५७४)
अददद्दण्डमेवास्मै धृतमैश्वर्यमेव च ।
बले नयश्च संयुक्तः सदा पञ्चविधात्मकः ॥ १२-१२१-४२ (६९५७५)
कुलं बहुधनामात्याः प्रज्ञा प्रोक्ता बलानि तु ।
आहार्यमष्टकैर्द्रव्यैर्बलमन्यद्युधिष्ठिर ॥ १२-१२१-४३ (६९५७६)
हस्तिनोऽश्वा रथाः पत्तिर्नावो विष्टिस्तथैव च ।
देशिकाश्चादिकाश्चैव तदष्टाङ्गं बलं स्मृतम् ॥ १२-१२१-४४ (६९५७७)
अथ चाङ्गस्य युक्तस्य रथिनो हस्तियायिनः ।
अश्वारोहाः पदाताश्च मन्त्रिणो रसदाश्च ये ॥ १२-१२१-४५ (६९५७८)
भिक्षुकाः प्राड्विवाकाश्च मौहूर्ता दैवचिन्तकाः ।
कोशो मित्राणि धान्यं च सर्वोपकरणानि च ॥ १२-१२१-४६ (६९५७९)
सप्तप्रकृति चाष्टाङ्गं शरीरमिह तं विदुः ।
राज्यस्य दण्डमेवाङ्गं दण्डः प्रभव एव च ॥ १२-१२१-४७ (६९५८०)
ईश्वरेण प्रसन्नेन कारणात्क्षत्रियस्य च ।
दण्डो दत्तः सदा गोप्ता दण्डो हीदं सनातनम् ॥ १२-१२१-४८ (६९५८१)
राजा पूज्यतमो नान्यो यथा धर्मः प्रदर्शितः ।
ब्रह्मणा लोकरक्षार्थं स्वधर्मस्थापनाय च ॥ १२-१२१-४९ (६९५८२)
भर्तृप्रत्यय उत्पन्नो व्यवहारस्तथाविधः ।
तस्याद्य सहितो दृष्टो भर्तृप्रत्ययलक्षणः ॥ १२-१२१-५० (६९५८३)
व्यवहारस्तु वेदात्मा वेदप्रत्यय उच्यते ।
मौलश्च नरशार्दूल शास्त्रोक्तश्च तथाऽपरः ॥ १२-१२१-५१ (६९५८४)
उक्तो यश्चापि दण्डोऽसौ भर्तृप्रत्ययलक्षणः ।
ज्ञेयो नः स नरेन्द्रस्थो दण्डः प्रत्यय एव च ॥ १२-१२१-५२ (६९५८५)
दण्डप्रत्ययदृष्टोऽपि व्यवहारात्मकः स्मृतः ।
व्यवहारः स्मृतो यश्च स वेदविषयात्मकः ॥ १२-१२१-५३ (६९५८६)
यश्च वेदप्रसूतात्मा स धर्मो गुणदर्शनः ।
धर्मप्रत्यय उद्दिष्टो यश्च धर्मः कृतात्मभिः ॥ १२-१२१-५४ (६९५८७)
व्यवहारः प्रजागोप्ता ब्रह्मदृष्टो युधिष्ठिर ।
त्रीन्धारयति लोकान्वै सत्यात्मा भूतिवर्धनः ॥ १२-१२१-५५ (६९५८८)
यश्च दण्डः स दृष्टो नो व्यवहारः सनातनः ।
व्यवहारश्च दृष्टो यः स वेद इति नः श्रुतिः ॥ १२-१२१-५६ (६९५८९)
यश्च वेदः स वै धर्मो यश्च धर्मः स सत्पथः ।

ब्रह्मा पितामहः पूर्वं भगवांश्च प्रजापतिः ॥१२-१२१-५७ (६९५९०)
लोकानां स हि सर्वेषां ससुरासुररक्षसाम् ।
स मनुष्योरगवतां कर्ता चैव स भूतकृत् ॥१२-१२१-५८ (६९५९१)
ततो नो व्यवहारोऽयं भर्तृप्रत्ययलक्षणः ।
तस्मादिदमवोचाम व्यवहारनिदर्शनम् ॥१२-१२१-५९ (६९५९२)
माता पिता च भ्राता च भार्या चैव पुरोहितः ।
नादण्ड्यो विद्यते राज्ञो यः स्वधर्मेण तिष्ठति ॥ ॥१२-१२१-६० (६९५९३)

इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि
एकविंशत्यधिकशततमोऽध्यायः ॥१२१.।



१२-१२१-११ प्रजारक्षकत्वाद्व्यवहार एव धर्मपदवाच्योऽपीत्याह
सुप्रणीतेनेति ॥
१२-१२१-१२ ब्रह्मणएव वचनं मनुमुखाच्छ्रुतमित्यर्थः ॥
१२-१२१-१३ दण्डएव उक्तवचनाद्धर्मशब्देन व्यवहारशब्देन
चोच्यत इत्यर्थः ।प्राग्वचनं धर्मवचनम् ॥
१२-१२१-१६ एवं व्यवहाररूपिणो दण्डस्य रूपमुक्त्वा
धर्माख्यदण्डरूपमाह ।ताम्रास्यो मृगराजतनुच्छद
इति।ताम्रो वह्निरेवाहनवनीयादिरास्यं यस्य स तथा।मृगराजः
कृष्णमृगस्तत्संबन्धिचर्म तनुच्छदः शरीराच्छादकं
प्रावरणमस्य।एतेन दीक्षाप्रधानो यज्ञ उक्तः।एतच्च सर्वेषां
दानोपवासहोमादीनामुपलक्षणम् ॥
१२-१२१-२३ मुख्यं दण्डस्य रूपमाह दण्डो हीति ॥
१२-१२१-२४ तत्पत्न्या रूपमाह तथेति ।दण्डेन सहिता नीतिर्दण्डनीतिः ॥
१२-१२१-२५ किंपरायणमित्यस्योत्तरं अर्थानर्थावित्यादि ॥
१२-१२१-३६ किमात्मकः कथंभूतः
कथंमूर्तिरितिप्रश्नत्रयस्योत्तरमाह व्यवस्थापयतइति
।लोकपालनात्मकः सत्यपक्षपाती ब्राह्मणमूर्तिस्वरूप इत्यर्थः ॥
१२-१२१-३७ दण्डस्य ब्राह्मणभूर्तित्वं विवृण्वन् कथं जागर्ति
इत्यस्योत्तरमाह धर्मयुक्ता इत्यादिना ।ब्राह्मणमूर्तिर्दण्डो
यज्ञादिद्वारान्नसृष्टिहेतुतया भूतानि पालयन् जागर्तीति
श्लोकत्रयार्थः ॥
१२-१२१-४२ अददीश्वर इति शेषः ।अस्मै राज्ञे।दण्डं
दण्डनीतिम्।अतएवायं बलेन संयुक्तः पञ्चविध आत्मा यस्य स
तथा।धर्मव्यवहारदण्डेश्वरजीवरूपेण पञ्चप्रकारात्मको

राजा। बलं नथैश्च संयुक्तं सदा पञ्चविधात्मकमिति
थ। द। पाठः ॥
१२-१२१-४३ बहुधनसहिता अमात्या
बहुधनामात्याः । बलानि तु तेजओजः सह आख्यानि
देहेन्द्रियबुद्धिसमार्थ्यानि। अष्टकैरष्टसंख्याकैरनन्तरश्लोके
वक्ष्यमाणैर्हस्त्यादिभिराहार्यमार्जनीयम्। अन्यद्बलं कोशवृद्धिरूपम्
॥
१२-१२१-४५ अङ्गस्य सैन्यस्य युक्तस्य सन्नद्धस्य रथादिकं शरीरं
विदुरिति तृतीयेनान्वयः । रसदाः वैद्याः। १२-१२१-४६ प्राड्विववाकाः
विवदमानयोर्द्वयोः प्रवृत्तिनिमित्तवेत्तारः। ।
१२-१२१-४७ दण्डं सैन्यम् । दण्डः प्रसिद्धः ॥
१२-१२१-४८ दण्डो दण्डादीनम् ॥
१२-१२१-५० भर्तृप्रत्ययः भर्तारौ द्वौ विवदमानौ
प्रत्ययः कारणं यस्य स तथा वादिप्रतिवादिभ्यां प्रवर्तितो
व्यवहारः । तयोरन्यतरस्य प्रत्ययोऽभ्युपगमो लक्षणं यस्य स
भर्तृप्रत्ययलक्षणः। अन्यतरपराजयादित्यर्थः। सहितो हितमिष्टं
तेन युक्तः सहितः। अन्यतरजयावह इत्यर्थः ॥
१२-१२१-५१ वेदात्मा वेदोक्तो दोषः पारदार्यादिस्तन्निवृत्त्यर्थं
परिषदं प्रतिगतश्चेत्तत्र प्रायश्चित्तात्मको वेदहेतुक एव
दण्डः । मौलः कुलाचारप्रयुक्तो यो व्यवहारस्तत्रापि शास्त्रोक्तो
दण्डः। तथाच शास्त्रविदामनुक्रमणं धर्मज्ञानां समयः प्रमाणं
वेदाश्चेति ॥
१२-१२१-५२ तेषां त्रयाणां दण्डानां मध्ये आद्यः क्षत्रियाधीन इत्याह
। उक्त इति। नः अस्माभिः क्षत्रियैर्दण्डोऽपि ज्ञेयः तत्र प्रत्ययोऽपि
ज्ञेयः ॥
१२-१२१-५३ अस्यापि वेदमूलत्वमाह दण्ड इति । विविधोऽवहारः
अन्योन्यं परपक्षक्षेपेण स्वपक्षसाधनं व्यवहारस्तदात्मको
न्यायः स यद्यपि दण्डः प्रत्ययदृष्टस्तथापि स व्यवहारपदार्थो
मन्वादिभिः स्मृतोऽस्ति। अतः सोऽपि वैदिकप्रणीतत्वाद्वेदविषयात्मको
वेदार्थगोचरोऽस्तीत्यर्थः ॥
१२-१२१-५४ उद्दिष्टो मम पारदार्यजेनाधर्मेण धर्मलोपो माभूदिति
पश्चात्तापवत्युद्दिष्टः प्रायश्चित्तरूपो दण्डो धर्म एवेत्यर्थः ॥
१२-१२१-६० यो राजा स्वधर्मेण तिष्ठति तस्य राज्ञ इति संबन्धः ॥

---

शन्तिपर्व-अध्यय१२२
॥ श्रीः ॥

१२.१२२. अध्यायः १२२

Mahabharata - Shanti Parva - Chapter Topics
भीष्मेण युधिष्ठिरंप्रति वसुहोममान्धातृसंवादानुवादपूर्वकं दण्डोत्पत्त्यादिकथनम् ॥ १.।
Mahabharata - Shanti Parva - Chapter Text

१२-१२२-० (६९५९४)
भीष्म उवाच। १२-१२२-०क्ष् (५६६८)
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
अङ्गेषु राजा द्युतिमान्वसुहोम इति श्रुतः ॥ १२-१२२-१ (६९५९५)
स राजा धर्मविन्नित्यं सह पत्न्या महातपाः ।
मुञ्जपृष्ठं जगामाथ देवर्षिगणसेवितम्। १२-१२२-२ (६९५९६)
तत्र शृङ्गे हिमवतो वसतिं समुपागमत् ।
यत्र मुञ्जवटे रामो जटाहरणमादिशत् ॥ १२-१२२-३ (६९५९७)
तदादि च महाप्राज्ञः ऋषिभिः संशितव्रतैः ।
मुञ्जपृष्ठ इति प्रोक्तः स देशो रुद्रसेवितः ॥ १२-१२२-४ (६९५९८)
स तत्र बहुभिर्युक्तस्तदा श्रुतिमयैर्गुणैः ।
ब्राह्मणानामनुमतो देवर्षिसदृशोऽभवत् ॥ १२-१२२-५ (६९५९९)
तं कदाचिददीनात्मा सखा शक्रस्य मानितः ।
अभ्यगच्छन्महीपालो मान्धाता शत्रुकर्शनः ॥ १२-१२२-६ (६९६००)
सोपसृत्य तु मान्धाता वसुहोमं नराधिपम् ।
दृष्ट्वा प्रकृष्टतपसं विनयेनोपतिष्ठते ॥ १२-१२२-७ (६९६०१)
वसुहोमोऽपि राज्ञो वै गामर्घ्यं च न्यवेदयत् ।
सप्ताङ्गस्य तु राज्यस्य पप्रच्छ कुशलाव्ययौ ॥ १२-१२२-८ (६९६०२)
सद्भिराचरितं पूर्वं यथावदनुयायिनम् ।
अब्रवीद्वसुहोमस्तं राजन्किं करवाणि ते ॥ १२-१२२-९ (६९६०३)
सोऽब्रवीत्परमप्रीतो मान्धाता राजसत्तमः ।
वसुहोमं महाप्राज्ञमासीनं कुरुनन्दन ॥ १२-१२२-१० (६९६०४)
बृहस्पतेर्मतं राजन्नधीतं सकलं त्वया ।
तथैवौशनसं शास्त्रं विज्ञातं ते नरोत्तम ॥ १२-१२२-११ (६९६०५)
तदहं श्रोतुमिच्छामि दण्ड उत्पद्यते कथम् ।
किं वाऽस्य पूर्वं जागर्ति किं वा परममुच्यते ॥ १२-१२२-१२ (६९६०६)
कथं क्षत्रियसंस्थश्च दण्डः संप्रत्यवस्थितः ।
ब्रूहि मे तद्यथातत्वं ददाम्याचार्यवेतनम् ॥ १२-१२२-१३ (६९६०७)
वसुहोम उवाच। १२-१२२-१४क्ष् (५६६९)

शृणु राजन्यथा दण्डः संभूतो लोकसंग्रहः ।
प्रजाविनयरक्षार्थं धर्मस्यात्मा सनातनः ॥ १२-१२२-१४ (६९६०८)
ब्रह्मा यियक्षुर्भगवान्सर्वलोकपितामहः ।
ऋत्विजं नात्मनस्तुल्यं ददर्शेति हि नः श्रुतम् ॥ १२-१२२-१५ (६९६०९)
स गर्भं भगवान्देवो बहुवर्षाण्यधारयत् ।
अथ पूर्णे सहस्रे तु स गर्भः क्षुवतोऽपतत् ॥ १२-१२२-१६ (६९६१०)
स क्षुपो नाम संभूतः प्रजापतिररिंदम् ।
ऋत्विगासीन्महाराज यज्ञे तस्य महात्मनः ॥ १२-१२२-१७ (६९६११)
तस्मिन्प्रवृत्ते सत्रे तु ब्रह्मणः पार्थिवर्षभ ।
इष्टरूपप्रचारत्वाद्दण्डः सोऽन्तर्हितोऽभवत् ॥ १२-१२२-१८ (६९६१२)
तस्मिन्नन्तर्हिते चापि प्रजानां संकरोऽभवत् ।
नैव कार्यं न वा कार्यं भोज्याभोज्यं न विद्यते ॥ १२-१२२-१९ (६९६१३)
पेयापेये कुतः सिद्धिर्हिंसन्ति च परस्परम् ।
गम्यागम्यं तदा नासीत्स्वं परस्वं च वै समम् ॥ १२-१२२-२० (६९६१४)
परस्परं विलुम्पन्ति सारमेया यथाऽऽमिषम् ।
अबलान्बलिनो जघ्नुर्निर्मर्यादं प्रवर्तते ॥ १२-१२२-२१ (६९६१५)
ततः पितामहो विष्णुं भगवन्तं सनातनम् ।
संपूज्य वरदं देवं महादेवमथाब्रवीत् ॥ १२-१२२-२२ (६९६१६)
अत्र त्वमनुकम्पां वै कर्तुमर्हसि शङ्कर ।
अयं विष्णुः सखा तुभ्यं धर्मस्य परिरक्षणे ॥ १२-१२२-२३ (६९६१७)
ग्त्वं हि सर्वविधानज्ञः सत्वानां त्वं गतिः परा।'
संकरो न भवेदत्र यथा तद्वै विधीयताम् ॥ १२-१२२-२४ (६९६१८)
ततः स भगवान्ध्यात्वा तदा शूलवरायुधः ।
ग देवदेवो महादेवः कारणं जगतः परम् ॥ १२-१२२-२५ (६९६१९)
ब्रह्मविष्ण्विन्द्रसहितः सर्वैश्च ससुरासुरैः ।
लोकसन्धारणार्थं च लोकसंकरनाशनम्।'
आत्मानमात्माना दण्डं ससृजे देवसत्तमः ॥ १२-१२२-२६ (६९६२०)
तस्माच्च धर्मचरणान्नीतिं देवीं सरस्वतीम् ।
असृजद्दण्डनीतिं वै त्रिषु लोकेषु विश्रुताम् ॥ १२-१२२-२७ (६९६२१)
गयथाऽसौ नीयते दण्डः सततं पापकारिषु ।
दण्डस्य नयनात्सा हि दण्डनीतिरिहोच्यते ॥' १२-१२२-२८ (६९६२२)
भूयः स भगवान्ध्यात्वा चिरं शूलधरः प्रभुः ।
गअसृजत्सर्वशास्त्राणि महादेवो महेश्वरः ॥ १२-१२२-२९ (६९६२३)
दण्डनीतेः प्रयोगार्थं प्रमाणानि च सर्वशः ।
विद्याश्चतस्रः कूटस्थास्तासां भेदविकल्पनाः ॥ १२-१२२-३० (६९६२४)
अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः ।

पुराणं धर्मशास्त्रं च विद्या ह्येताश्चतुर्दश ॥ १२-१२२-३१ (६९६२५)
आयुर्वेदो धनुर्वेदो गान्धर्वश्चेति ते त्रयः ।
अर्थशास्त्रं चतुर्थं तु विद्या ह्यष्टादशैव तु ॥ १२-१२२-३२ (६९६२६)
दश चाष्टौ च विख्याता एता धर्मस्य संहिताः ।
एतासामेव विद्यानां व्यासमाह महेश्वरः ॥ १२-१२२-३३ (६९६२७)
शतानि त्रीणि शास्त्राणां महातन्त्राणि सप्ततिम् ।
व्यास एव तु विद्यानां महादेवेन कीर्तितः ॥ १२-१२२-३४ (६९६२८)
तन्त्रं पाशुपतं नाम पञ्चरात्रं च विश्रुतम् ।
योगशास्त्रं च साङ्ख्यं च तन्त्रं लोकायतं तथा ॥ १२-१२२-३५ (६९६२९)
तन्त्रं ब्रह्मतुला नाम तर्कविद्या दिवौकसाम् ।
सुखदुःखार्थजिज्ञासा कारणं चेति विश्रुतम् ॥ १२-१२२-३६ (६९६३०)
तर्कविद्यास्तथा चाष्टौ स चोक्तो न्यायविस्तरः ।
दश चाष्टौ च विज्ञेयाः पौराणा यज्ञसंहिताः ॥ १२-१२२-३७ (६९६३१)
पुराणाश्च प्रणीताश्च तावदेवेह संहिताः ।
धर्मशास्त्राणि तद्वच्च एकार्थानि च नान्यथा ॥ १२-१२२-३८ (६९६३२)
एकार्थानि पुराणानि वेदाश्चैकार्यसंहिताः ।
नानार्थानि च सर्वाणि ततः शास्त्राणि शंकरः ॥ १२-१२२-३९ (६९६३३)
प्रोवाच भगवान्देवः कालज्ञानानि यानि च ।
चतुःषष्टिप्रमाणानि आयुर्वेदं च सोत्तरम् ॥ १२-१२२-४० (६९६३४)
अष्टादशविकल्पां तां दण्डनीतिं च शाश्वतीम् ।
गान्धर्वमितिहासं च नानाविस्तरमुक्तवान् ॥ १२-१२२-४१ (६९६३५)
इत्येताः शंकरप्रोक्ता विद्याः शब्दार्थसंहिताः ।
पुनर्भेदसहस्रं तु तासामेव तु विस्तरः ॥ १२-१२२-४२ (६९६३६)
ऋषिभिर्देवगन्धर्वैः सविकल्पः सविस्तरः ।
शश्वदभ्यस्यते लोके वेद एव तु सर्वशः ॥ १२-१२२-४३ (६९६३७)
वेदाश्चतस्रः संक्षिप्ता वेदवादाश्च ते स्मृताः ।
एतासां पारगो यश्च स चोक्तो वेदपारगः ॥ १२-१२२-४४ (६९६३८)
वेदानां पारगो रुद्रो विष्णुरिन्द्रो बृहस्पतिः ।
शक्रः स्वायंभुवश्चैव मनुः परमधर्मवित् ॥ १२-१२२-४५ (६९६३९)
ब्रह्मा च परमो देवः सदा सर्वैः सुरासुरैः ।
सर्वस्यानुग्रहाच्चैव व्यासो वै वेदपारगः ॥ १२-१२२-४६ (६९६४०)
भीष्म उवाच। १२-१२२-४७क्ष् (५६७०)
अहं शान्तनवो भीष्मः प्रसादान्माधवस्य च ।
शंकरस्य प्रसादाच्च ब्रह्मणश्च कुरूद्वह ।
वेदपारग इत्युक्तो याज्ञवल्क्यश्च सर्वशः ॥ १२-१२२-४७ (६९६४१)
कल्पेकल्पे महाभागैर्ऋषिभिस्तत्त्वदर्शिभिः ।

ऋषिपुत्रैर्ऋषिगणैर्भिद्यन्ते मिश्रकैरपि ॥१२-१२२-४८ (६९६४२)
शिवेन ब्रह्मणा चैव विष्णुना च विकल्पिताः ।
आदिकल्पे पुनश्चैव भिद्यन्ते साधुभिः पुनः ॥१२-१२२-४९ (६९६४३)
इदानीमपि विद्वद्भिर्भिद्यन्ते च विकल्पकैः ।
पूर्वजन्मानुसारेण बहुधेयं सरस्वती ॥१२-१२२-५० (६९६४४)
भूयः स भगवान्ध्यात्वा चिरं शूलवरायुधः।'
तस्यतस्य निकायस्य चकारैकैकमीश्वरम् ॥ १२-१२२-५१ (६९६४५)
देवानामीश्वरं चक्रे दैवं दशशतेक्षणम् ।
यमं वैवस्वतं चापि पितॄणामकरोत्पतिम् ॥१२-१२२-५२ (६९६४६)
अपां राज्ये सुराणां च विदधे वरुणं प्रभुम् ।
धनानां राक्षसानां च कुवेरमपि चेश्वरम् ॥१२-१२२-५३ (६९६४७)
पर्वतानां पतिं मेरुं सरितां च महोदधिम् ।
मृत्युं प्राणेश्वरमथो तेजसां च हुताशनम् ॥१२-१२२-५४ (६९६४८)
रुद्राणामपि चेशानं गोप्तारं विदधे प्रभुः ।
महात्मानं महादेवं विशालाक्षं सनातनम् ॥१२-१२२-५५ (६९६४९)
ग्दश चैकश्च ये रुद्रास्तस्यैते मूर्तिसंभवाः ।
नानारूपधरो देवः स एव भगवाञ्शिवः ॥' १२-१२२-५६ (६९६५०)
वसिष्ठमीशं विप्राणां वसूनां जातवेदसम् ।
तेजसां भास्करं चक्रे नक्षत्राणां निशाकरम् ॥१२-१२२-५७ (६९६५१)
वीरुधां वसुमन्तं च भूतानां च प्रभुं वरम् ।
कुमारं द्वादशभुजं स्कन्दं राजानमादिशत् ॥१२-१२२-५८ (६९६५२)
कालं सर्वेशमकरोत्संहारविनयात्मकम् ।
मृत्योश्चतुर्विभागस्य दुःखस्य च सुखस्य च ॥१२-१२२-५९ (६९६५३)
ईश्वरो देवदेवस्तु राजराजो नराधिपः ।
सर्वेषामेव रुद्राणां शूलपाणिरिति श्रुतिः ॥१२-१२२-६० (६९६५४)
ग्ईश्वरश्चेतनः कर्ता पुरुषः कारणं शिवः ।
विष्णुर्ब्रह्मा शशी सूर्यः शक्रो देवाश्च सान्वयाः ॥१२-१२२-६१ (६९६५५)
सृजते ग्रसते चैतत्तमोभूतमिदं यथा ।
अप्रज्ञातं जगत्सर्वं यदा ह्येको महेश्वरः ॥ ' १२-१२२-६२ (६९६५६)
तमेनं ब्रह्मणः पुत्रमनुजातं क्षुपं ददौ ।
प्रजानामधिपं श्रेष्ठं सर्वधर्मभृतामपि ॥१२-१२२-६३ (६९६५७)
महादेवस्ततस्तस्मिन्वृत्ते यज्ञे समाहितः ।
दण्डं धर्मस्य गोप्तारं विष्णवे सत्कृतं ददौ ॥१२-१२२-६४ (६९६५८)
विष्णुरङ्गिरसे प्रादादङ्गिरा मुनिसत्तमः ।
प्रादादिन्द्रमरीचिभ्या मरीचिर्भृगवे ददौ ॥१२-१२२-६५ (६९६५९)
भृगुर्ददावृषिभ्यस्तु दण्डं धर्मसमाहितम् ।

ऋषयो लोकपालेभ्यो लोकपालाः क्षुपाय च ॥१२-१२२-६६ (६९६६०)
क्षुपस्तु मनवे प्रादादादित्यतनयाय च ।
पुत्रेभ्यः श्राद्धदेवस्तु सूक्ष्मधर्मार्थकारणात् ॥१२-१२२-६७ (६९६६१)
विभज्य दण्डः कर्तव्यो दण्डे तु नयमिच्छता ।
दुर्वाचा निग्रहो दण्डो हिरण्यं बाह्यतः क्रिया ॥१२-१२२-६८ (६९६६२)
व्यङ्गत्वं च शरीरस्य वधो वाऽनल्पकारणात् ।
शरीरपीडा कार्या तु स्वदेशाच्च विवासनम् ॥१२-१२२-६९ (६९६६३)
तं ददौ सूर्यपुत्राय मनवे रक्षणात्मकम् ।
आनुपूर्व्याच्च दण्डोऽयं प्रजा जागर्ति पालयन् ॥१२-१२२-७० (६९६६४)
इन्द्रो जागर्ति भगवानिन्द्रादग्निर्विभावसुः ।
अग्नेर्जागर्ति वरुणो वरुणाच्च प्रजापतिः ॥१२-१२२-७१ (६९६६५)
प्रजापतेस्ततो धर्मो जागर्ति विनयात्मकः ।
धर्माच्च ब्रह्मणः पुत्रो व्यवसायः सनातनः ॥१२-१२२-७२ (६९६६६)
व्यवसायात्ततस्तेजो जागर्ति परिपालयत् ।
ओषध्यस्तेजसस्तस्मादोषधीभ्यश्च पर्वताः ॥१२-१२२-७३ (६९६६७)
पर्वतेभ्यश्च जागर्ति रसो रसगुणात्तथा ।
जागर्ति निर्ऋतिर्देवी ज्योतींषि निर्ऋतीमनु ॥१२-१२२-७४ (६९६६८)
वेदाः प्रतिष्ठा ज्योतिर्भ्यस्ततो हयशिराः प्रभुः ।
ब्रह्मा पितामहस्तस्माज्जागर्ति प्रभुरव्ययः ॥१२-१२२-७५ (६९६६९)
पितामहान्महादेवो जागर्ति भगवाञ्शिवः ।
विश्वेदेवाः शिवाच्चापि विश्वेभ्य ऋषयस्तथा ॥१२-१२२-७६ (६९६७०)
ऋषिभ्यो भगवान्सोमः सोमाद्देवाः सनातनाः ।
देवेभ्यो ब्राह्मणा लोके जाग्रतीत्युपधारय ॥१२-१२२-७७ (६९६७१)
ब्राह्मणेभ्यश्च राजन्या लोकान्रक्षन्ति धर्मतः ।
स्थावरं जङ्गमं चैव क्षत्रियेभ्यः सनातनम् ॥१२-१२२-७८ (६९६७२)
प्रजा जाग्रति लोकेऽस्मिन्दण्डो जागर्ति तासु च ।
सर्वसंक्षेपको दण्डः पितामहसुतः प्रभुः ॥१२-१२२-७९ (६९६७३)
जागर्ति कालः पूर्वं च मध्ये चान्ते च भारत ।
ईशः सर्वस्य कालो हि महादेवः प्रजापतिः ॥१२-१२२-८० (६९६७४)
देवदेवः शिवः सर्वो जागर्ति सततं प्रभुः ।
कपर्दी शंकरो रुद्रो भवः स्थाणुरुमापतिः ॥१२-१२२-८१ (६९६७५)
इत्येष दण्डो व्याख्यातस्तथौषध्यस्तथापरे ।
भूमिपालो यथान्यायं वर्तेतानेन धर्मवित् ॥१२-१२२-८२ (६९६७६)
भीष्म उवाच।१२-१२२-८३क्ष् (५६७१)
इतीदं वसुहोमस्य योऽऽत्मवाञ्शृणुयान्मतम् ।
श्रुत्वा सम्यक्प्रवर्तेत स लोकानाप्नुयान्नृपः ॥१२-१२२-८३ (६९६७७)

इति ते सर्वमाख्यातं यो दण्डो मनुजर्षभ ।
नियन्ता सर्वलोकस्य धर्माक्रान्तस्य भारत ॥१२-१२२-८४ (६९६७८)
ग्वसुहोमाच्छ्रुतं राज्ञा मान्धात्रा भूभृता पुरा ।
मयापि कथितं राजन्नाख्यानं प्रथितं मया ॥' ॥ १२-१२२-८५ (६९६७९)

इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि
द्वाविंशत्यधिकशततमोऽध्यायः ॥१२२.।
Mahabharata - Shanti Parva - Chapter Footnotes

१२-१२२-१ अत्र दण्डोत्पत्तौ विषये ॥
१२-१२२-१३ आचार्यवेतनं गुरुदक्षिणाम् ॥
१२-१२२-१५ यियक्षुर्यष्टुमिच्छुः ॥
१२-१२२-१६ सगर्भं शिरसा देवः इति झ ।पाठः।क्षुवतः क्षुतवतः ॥
१२-१२२-१८ अष्टं रूपं दीक्षापरिग्रहः प्रजानियन्ता दीक्षां प्रविष्ट
इति नियमनरूपो दण्डोऽन्तर्हितोऽभवदित्यर्थः ॥
१२-१२२-५९ कर्तुमर्हसि केशव इति झ ।पाठः।विनयो
विवृद्धिः।चत्वारो विभागा यस्य तस्य शस्त्रं शत्रुर्यमः कर्म
च।रोगोऽपथ्याशनप्रयोजको रागो यमः कर्म चेति वा ॥
१२-१२२-६८ विभज्य न्यायं न्यायाभासं च विविच्य ।दुष्टनिग्रह एव
दण्डस्य मुख्यं प्रयोजनम्।हिरण्यादिग्रहणं तु लोकानां बिभीषिकार्थं
नतु कोश वृद्ध्यर्थमित्यर्थः ॥
१२-१२२-६९ विवासनं स्वदेशाद्दूरीकरणाम् ॥
१२-१२२-७३ ओषधीभ्यश्च पादपाः इति ट ।पाठः ॥
१२-१२२-७४ पादपेभ्यश्च जागर्ति इति ट ।पाठः ॥

---

शन्तिपर्व-अध्यय१२३
॥ श्रीः ॥
१२.१२३. अध्यायः १२३

Mahabharata - Shanti Parva - Chapter Topics
भीष्मेण युधिष्ठिरंप्रति धर्मादिनिरूपणपूर्वकं
कामन्दारिष्टसंवादानुवादेन धर्मत्यागिनः प्रायश्चित्तप्रकारादिकथनम्
॥१.।
Mahabharata - Shanti Parva - Chapter Text

१२-१२३-० (६९६८०)
युधिष्ठिर उवाच।१२-१२३-०क्ष् (५६७२)

तात धर्मार्थकामानां श्रोतुमिच्छामि निश्चयम् ।
लोकयात्रा हि कात्स्न्येन त्रिष्वेतेषु प्रतिष्ठिता ॥ १२-१२३-१ (६९६८१)
धर्मार्थकामाः किंमूलाः प्रभवः प्रलयश्च कः ।
अन्योन्यं चानुषज्जन्ते वर्तन्ते च पृथक्पृथक् ॥ १२-१२३-२ (६९६८२)
भीष्म उवाच। १२-१२३-३क्ष् (५६७३)
य एते स्युः सुमनसो लोकसंस्थार्थनिश्चये ।
कामप्रभवसंस्थासु सज्जन्ते च त्रयस्तदा ॥ १२-१२३-३ (६९६८३)
धर्ममूलोऽर्थ इत्युक्तः कामोऽर्थफलमुच्यते ।
संकल्पमूलास्ते सर्वे संकल्पो विषयात्मकः ॥ १२-१२३-४ (६९६८४)
विषयाश्चैव कात्स्न्येन सर्व आहारसिद्धये ।
मूलमेतन्त्रिवर्गस्य निवृत्तिर्मोक्ष उच्यते ॥ १२-१२३-५ (६९६८५)
धर्मः शरीरसंगुप्तिर्धर्मार्थश्चार्थ इष्यते ।
कामो रतिफलश्चात्र सर्वे रतिफलाः स्मृताः ॥ १२-१२३-६ (६९६८६)
सन्निकृष्टांश्चरेदेतान्न चैतान्मनसा त्यजेत् ।
विमुक्तस्तपसा सर्वान्धर्मादीन्कामनैष्ठिकान् ॥ १२-१२३-७ (६९६८७)
श्रेष्ठबुद्धिस्त्रिवर्गस्य उदयं प्राप्नुयात्क्षणात् ।
श्कर्मणा बुद्धिपूर्वेण भवत्यर्थो न वा पुनः ॥ऽ १२-१२३-८ (६९६८८)
अर्थार्थमन्यद्भवति विपरीतमथापरम् ।
अनर्थार्थमवाप्यार्थमन्यत्राद्योपकारकम् ऽ
बुद्ध्या बुद्ध इहार्थेन तदह्वा तु निकृष्टया ॥ १२-१२३-९ (६९६८९)
अपध्यानमलो धर्मो मलोऽर्थस्य निगूहनम् ।
संप्रमोहमलः कामो भूयस्तद्गुणवर्धितः ॥ १२-१२३-१० (६९६९०)
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
अरिष्टस्य च संवादं कामन्दस्य च भारत ॥ १२-१२३-११ (६९६९१)
कामन्दमृषिमासीनमभिवाद्य नराधिपः ।
आङ्गोरिष्ठोऽथ पप्रच्छ कृत्वा समयमव्ययम् ॥ १२-१२३-१२ (६९६९२)
यः पापं कुरुते राजा काममोहबलात्कृतः ।
प्रत्यासन्नस्य तस्यर्षे किं स्यात्पापप्रणाशनम् ॥ १२-१२३-१३ (६९६९३)
अधर्मं धर्म इति च यो मोहादाचरेन्नरः ।
तं चापि प्रथितं लोके कथं राजा निवर्तयेत् ॥ १२-१२३-१४ (६९६९४)
कामन्द उवाच। १२-१२३-१५क्ष् (५६७४)
यो धर्मार्थौ परित्यज्य काममेवानुवर्तते ।
स धर्मार्थपरित्यागात्प्रज्ञानाशमिहार्च्छति ॥ १२-१२३-१५ (६९६९५)
प्रज्ञानाशात्मको मोहस्तथा धर्मार्थनाशकः ।
तस्मान्नास्तिकता चैव दुराचारश्च जायते ॥ १२-१२३-१६ (६९६९६)
दुराचारान्यदा राजा प्रदुष्टान्न नियच्छति ।

तस्मादुद्विजते लोकः सर्पाद्वेश्मगतादिव ॥ १२-१२३-१७ (६९६९७)
तं प्रजा नानुरज्यन्ते न विप्रा न च साधवः ।
ततः संक्षयमाप्नोति तथा वध्यत्वमेव च ॥ १२-१२३-१८ (६९६९८)
अपध्वस्तस्त्ववमतो दुःखं जीवति जीवितम् ।
जीवते यदपध्वस्तः शुद्धं मरणमेव तत् ॥ १२-१२३-१९ (६९६९९)
अत्रैतदाहुराचार्याः पापस्य परिवर्तनम् ।
सेवितव्या त्रयी विद्या सत्कारो ब्राह्मणेषु च ॥ १२-१२३-२० (६९७००)
महामना भवेद्धर्मे विवहेच्च महाकुले ।
ब्राह्मणांश्चापि सेवेत क्षमायुक्तान्मनस्विनः ॥ १२-१२३-२१ (६९७०१)
जपेदुदकशीलः स्यात्सुमुखो न च नास्तिकः ।
धर्मान्वितान्संप्रविशेद्बहिः प्लुत्यैव दुष्कृतम् ॥ १२-१२३-२२ (६९७०२)
प्रसादयेन्मधुरया वाचा वाऽप्यथ कर्मणा ।
इत्यस्तीति वदेन्नित्यं परेषां कीर्तयन्गुणान् ॥ १२-१२३-२३ (६९७०३)
अपापो ह्येवमाचारः क्षिप्रं बहुमतो भवेत् ।
पापान्यपि हि कृच्छ्राणि शमयेन्नात्र संशयः ॥ १२-१२३-२४ (६९७०४)
गुरवो हि परं धर्मं यं ब्रूयुस्तं तथा कुरु ।
गुरूणां हि प्रसादाद्धि श्रेयः परमवाप्स्यसि ॥ ॥ १२-१२३-२५ (६९७०५)

इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि
त्रयोविंशत्यधिकशततमोऽध्यायः ॥ १२३.।

Mahabharata - Shanti Parva - Chapter Footnotes

१२-१२३-२ किंमूलाः किमुद्दिश्य क्रियन्त इत्यर्थः । प्रभवत्यस्मादिति प्रभवः। किमेषामुत्पत्तिस्थानम्। तेषां साहित्यं कथं पृथक्पृथकवच कथमिति चत्वारः प्रश्नाः ॥
१२-१२३-३ सूचीकटाहन्यायेन धर्मार्थकामानां साहित्यमाह य इति । ते धर्मार्थकामास्त्रयोऽपि सज्जन्ते युगपदुत्पद्यन्ते ॥
१२-१२३-७ स्वर्गादिकं बाह्यं फलं विप्रकृष्टं तदर्था एते विप्रकृष्टाः । आत्मज्ञानरूपं फलं तु सन्निकृष्टं तदर्था एते सन्निकृष्टास्तांश्चरेत् सेवेत। धर्मश्चित्तशुद्ध्यर्थोऽर्थो निष्कामकर्मार्थः कामो देहधारणमात्रार्थः इत्येवमेते सेव्या इत्यर्थः। धर्मादीन्कामनैष्ठिकान्कामान्तान्धर्मार्थकामान्सर्वानपि मनसापि न त्यजेत्किमुत स्वरूपेण न त्यजेदित्यर्थः। कथं तर्ह्येतांस्त्यजेदित्याह तपसा विमुक्त इति। विचारेणैव तेभ्यो विमुक्तो भवेत्। सङ्गफलत्यागपूर्वकं धर्मादीननुतिष्ठेदिति भावः ॥
१२-१२३-८ अस्मात्कर्मण इदं फलं प्राप्स्ये इति बुद्धिपूर्वं कृतेनापि

कर्मणार्थः कदाचिद्भवति कदाचिन्नेति व्यभिचारः ॥
१२-१२३-९ अर्थार्थं धर्मादपि अन्यत् सेवाकृष्यादिकं भवतीति न धर्मैकलभ्योऽर्थं इत्यर्थार्थं धर्मो न कार्यः । प्रत्युत विपरीतमपि अपरं मतमस्ति केचिद्धठेनैवार्थो भवति स्वभावेन वा दैवेन वेति मन्यत इति तदर्थमलं धर्मेणेत्यर्थः। एवं धर्मस्यार्थहेतुत्वं दूरीकृत्यार्थस्यापि धर्महेतुत्वं दूषयति। अर्थमवाप्याऽपि जगदनर्थार्थमपायार्थं भवति। तथाहि धनमत्तः सर्वं पापं करोतीति नार्थेन धर्मोत्पत्तिर्नित्यास्ति। अर्थं विनापि धर्मोत्पत्तिरस्तीत्याहान्यत्राद्योपकारकम्। स्वार्थे त्रल्। अन्यत्रान्यदेवोपवासव्रतादिकं आद्यस्य धर्मस्योपकारकं वर्धकं भवति ॥
१२-१२३-१० अपध्यानं फलाभिसन्धिः । निगूहनं दानभोगयोरप्रतिपादनम् ॥
१२-१२३-१३ प्रत्यासन्नस्य पश्चात्तप्तस्य ॥
१२-१२३-२० एवं निन्दितस्य कर्तव्यमाह अत्रेति ॥
१२-१२३-२३ तवास्मीति वदेन्नित्यं इति झ । पाठः ॥

---

शन्तिपर्व-अध्यय१२४
॥ श्रीः ॥
१२.१२४. अध्यायः १२४

Mahabharata - Shanti Parva - Chapter Topics
भीष्मेण युधिष्ठिरंप्रति दुर्योधनाय धृतराष्ट्रप्रोक्तेन्द्रप्रह्लादकथानुवादपूर्वकं शीलस्य धर्मादिकारणत्वप्रतिपादनम् ॥ १.।
Mahabharata - Shanti Parva - Chapter Text

१२-१२४-० (६९७०६)
युधिष्ठिर उवाच। १२-१२४-०क्ष् (५६७५)
इमे जना मनुष्येन्द्र प्रशंसन्ति सदा भुवि ।
धर्मस्य शीलमेवादौ ततो मे संशयो महान् ॥ १२-१२४-१ (६९७०७)
यदि तच्छक्यमस्माभिर्ज्ञातुं धर्मभृतां वर ।
श्रोतुमिच्छामि तत्सर्वं यथैतदुपलभ्यते ॥ १२-१२४-२ (६९७०८)
कथं तत्प्राप्यते शीलं श्रोतुमिच्छामि भारत ।
किंलक्षणं च तत्प्रोक्तं ब्रूहि मे वदतां वर ॥ १२-१२४-३ (६९७०९)
भीष्म उवाच। १२-१२४-४क्ष् (५६७६)
पुरा दुर्योधनेनेह धृतराष्ट्राय मानद ।
आख्यातं तप्यमानेन श्रियं दृष्ट्वा तवागताम् ॥ १२-१२४-४ (६९७१०)

इन्द्रप्रस्थे महाराज तव सभ्रातृकस्य ह ।
सभायां चापहसनं तत्सर्वं शृणु भारत ॥१२-१२४-५ (६९७११)
भवतस्तां सभां दृष्ट्वा समृद्धिं चाप्यनुत्तमाम् ।
दुर्योधनस्तदा दीनः सर्वं पित्रे न्यवेदयत् ॥१२-१२४-६ (६९७१२)
श्रुत्वा हि धृतराष्ट्रश्च दुर्योधनवचस्तदा ।
अब्रवीत्कर्णसहितं दुर्योधनमिदं वचः ॥१२-१२४-७ (६९७१३)
धृतराष्ट्र उवाच।१२-१२४-८क्ष् (५६७७)
किमर्थं तप्यसे पुत्र श्रोतुमिच्छामि तत्त्वतः ।
श्रुत्वा त्वामनुनेष्यामि यदि सम्यग्भविष्यति ॥१२-१२४-८ (६९७१४)
यदा त्वां महदैश्वर्यं प्राप्तं परपुरंजय ।
किंकरा भ्रातरः सर्वे मित्रसंबन्धिबान्धवाः ॥१२-१२४-९ (६९७१५)
आच्छादयसि प्रावारानश्नासि पिशितौदनम् ।
आजानेया वहन्ति त्वां कस्माच्छोचसि पुत्रक ॥१२-१२४-१० (६९७१६)
दुर्योधन उवाच।१२-१२४-११क्ष् (५६७८)
दश तात सहस्राणि स्नातकानां महात्मनाम् ।
भुञ्जते रुक्मपात्रीभिर्युधिष्ठिरनिवेशने ॥१२-१२४-११ (६९७१७)
दृष्ट्वा च तां सभां दिव्यपुष्पफलान्विताम् ।
अश्वांस्तित्तिरकल्माषान्रत्नानि विविधानि च ॥१२-१२४-१२ (६९७१८)
दृष्ट्वा तां पाण्डवेयानामृद्धिमिन्द्रोपमां शुभाम् ।
अमित्राणां सुमहतीमनुशोचामि मानद ॥१२-१२४-१३ (६९७१९)
धृतराष्ट्र उवाच।१२-१२४-१४क्ष् (५६७९)
यदीच्छसि श्रियं तात यादृशी सा युधिष्ठिरे ।
विशिष्टां वा नरश्रेष्ठ शीलवान्भव पुत्रक ॥१२-१२४-१४ (६९७२०)
शीलेन हि त्रयो लोकाः शक्या जेतुं न संशयः ।
न हि किंचिदसाध्यंवै लोके शीलवतां सताम् ॥१२-१२४-१५ (६९७२१)
एकरात्रेण मान्धाता त्र्यहेण जनमेजयः ।
सप्तरात्रेण नाभागः पृथिवीं प्रतिपेदिवान् ॥१२-१२४-१६ (६९७२२)
एते हि पार्थिवाः सर्वे शीलवन्तो यशोन्विताः ।
ततस्तेषां गुणक्रीता वसुधा स्वयमागता ॥१२-१२४-१७ (६९७२३)
दुर्योधन उवाच।१२-१२४-१८क्ष् (५६८०)
कथं तत्प्राप्यते शीलं श्रोतुमिच्छामि भारत ।
येन शीलेन संप्राप्ताः क्षिप्रमेव वसुंधराम् ॥१२-१२४-१८ (६९७२४)
धृतराष्ट्र उवाच।१२-१२४-१९क्ष् (५६८१)
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
नारदेन पुरा वृत्तं शीलमाश्रित्य भारत ॥१२-१२४-१९ (६९७२५)
प्रा--देन हृतं राज्यं महेन्द्रस्य महात्मनः ।

श---माश्रित्य दैत्येन त्रैलोक्यं च वशे कृतम् ॥ १२-१२४-२० (६९७२६)
त--बृहस्पतिं शक्रः प्राञ्जलिः समुपस्थितः ।
तमुवाच महाप्राज्ञः श्रेय इच्छामि वेदितुम् ॥ १२-१२४-२१ (६९७२७)
ततो बृहस्पतिस्तस्मै ज्ञानं नैश्रेयसं परम् ।
कथयामास भगवान्देवेन्द्राय कुरूद्वह ॥ १२-१२४-२२ (६९७२८)
एतावच्छ्रेय इत्येव बृहस्पतिरभाषत ।
इन्द्रस्तु भूयः पप्रच्छ को विशेषो भवेदिति ॥ १२-१२४-२३ (६९७२९)
बृहस्पतिरुवाच। १२-१२४-२४क्ष् (५६८२)
विशेषोऽस्ति महांस्तात भार्गवस्य महात्मनः ।
तत्रागमय भद्रं ते भूय एव सुरोत्तम ॥ १२-१२४-२४ (६९७३०)
आत्मनस्तु ततः श्रेयो भार्गवः सुमहायशाः ।
ज्ञानमागमयत्प्रीत्या पुनः स परमद्युतिः ॥ १२-१२४-२५ (६९७३१)
तेनापि समनुज्ञातो भार्गवेण महात्मना ।
श्रेयोऽस्तीति परं भूयः शुक्रमाह शतक्रतुः ॥ १२-१२४-२६ (६९७३२)
भार्गवस्त्वाह सर्वज्ञः प्रह्लादस्य महात्मनः ।
ज्ञानमस्ति विशेषेणेत्युक्तो हृष्टश्च सोऽभवत् ॥ १२-१२४-२७ (६९७३३)
स तत्र ब्राह्मणो भूत्वा प्रह्लादं पाकशासनः ।
स्तुत्वा प्रोवाच मेधावी श्रेय इच्छामि वेदितुम् ॥ १२-१२४-२८ (६९७३४)
प्रह्लादस्त्वब्रवीद्विप्रं क्षणो नास्ति द्विजोत्तम ।
त्रैलोक्यराज्यसक्तस्य ततो नोपदिशामि ते ॥ १२-१२४-२९ (६९७३५)
ब्राह्मणस्त्वब्रवीद्राजन्यस्मिन्काले क्षणो भवेत् ।
तदोपादेष्टुमिच्छामि यदि कार्यान्तरं भवेत् ॥ १२-१२४-३० (६९७३६)
ततः प्रीतोऽभवद्राजा प्रह्लादो ब्रह्मवादिनः ।
तथेत्युक्त्वा ददौ काले ज्ञानतत्त्वं द्विजे तदा ॥ १२-१२४-३१ (६९७३७)
ब्राह्मणोऽपि यथान्यायं गुरुवृत्तिमनुत्तमाम् ।
चकार सर्वभावेन यद्यच्च मनसेच्छति ॥ १२-१२४-३२ (६९७३८)
पृष्टश्च तेन बहुशः प्राप्तं कथमरिंदम् ।
त्रैलोक्यराज्यं धर्मज्ञ कारणं तद्ब्रवीहि मे ।
श्प्रह्लादोऽपि महाराज ब्राह्मणं वाक्यमब्रवीत् ॥ѐ १२-१२४-३३ (६९७३९)
प्रह्लाद उवाच। १२-१२४-३४क्ष् (५६८३)
नासूयामि द्विजान्विप्र राजास्मीति कथंचन ।
काम्यानि वदतां तेषां संयच्छामि वहामि च ॥ १२-१२४-३४ (६९७४०)
ते विस्रब्धाः प्रभाषन्ते संयच्छन्ति च मां सदा ।
तेषां कार्यपथे युक्तं शुश्रूषुमनहंकृतम् ॥ १२-१२४-३५ (६९७४१)
धर्मात्मानं जितक्रोधं नियतं संयतेन्द्रियम् ।
समासिञ्चन्ति शास्त्रज्ञाः क्षौद्रं मध्विव मक्षिकाः ॥ १२-१२४-३६ (६९७४२)

सोऽहं वागग्रविद्यानां रसानामवलेहिता ।
स्वजात्यानधितिष्ठामि नक्षत्राणीव चन्द्रमाः ॥ १२-१२४-३७ (६९७४३)
एतत्पृथिव्याममृतमेतच्चक्षुरनुत्तमम् ।
यद्ब्राह्मणमुखे हव्यमेतच्छ्रुत्वा प्रवर्तते ॥ १२-१२४-३८ (६९७४४)
एतावच्छ्रेय इत्याह प्रह्लादो ब्रह्मवादिनम् ।
शुश्रूषितस्तेन तदा दैत्येन्द्रो वाक्यमब्रवीत् ॥ १२-१२४-३९ (६९७४५)
यथावद्गुरुवृत्त्या ते प्रीतोऽस्मि द्विजसत्तम ।
वरं वृणीष्व भद्रं ते प्रदाताऽस्मि न संशयः ॥ १२-१२४-४० (६९७४६)
कृतमित्येव दैत्येन्द्रमुवाच द्विजसत्तमः ।
प्रह्लादस्त्वब्रवीत्प्रीतो गृह्यतां वर इत्युत ॥ १२-१२४-४१ (६९७४७)
ब्राह्मण उवाच। १२-१२४-४२क्ष् (५६८४)
यदि राजन्प्रसन्नस्त्वं मम चेदिच्छसि प्रियम् ।
भवतः शीलमिच्छामि प्राप्नुमेष वरो मम ॥ १२-१२४-४२ (६९७४८)
ततः प्रीतस्तु दैत्येन्द्रो भयमस्याभवन्महत् ।
वरे प्रदिष्टे विप्रेण नाल्पचेतायमित्युत ॥ १२-१२४-४३ (६९७४९)
एवमस्त्विति स प्राह प्रह्लादो विस्मितस्तदा ।
उपाकृत्य तु विप्राय वरं दुःखान्वितोऽभवत् ॥ १२-१२४-४४ (६९७५०)
दत्ते वरे गते विप्रे चिन्ताऽसीन्महती तदा ।
प्रह्लादस्य महाराज निश्चयं न च जग्मिवान् ॥ १२-१२४-४५ (६९७५१)
तस्य चिन्तयतस्तावच्छायाभूतं महाद्युतेः ।
तेजोविग्रहवत्तात शरीरमजहात्तदा ॥ १२-१२४-४६ (६९७५२)
तमपृच्छन्महाराजः प्रह्लादः को भवानिति ।
प्रत्याह तं तु शीलोस्मि त्यक्तो गच्छाम्यहं त्वया ॥ १२-१२४-४७ (६९७५३)
तस्मिन्द्विजोत्तमे राजन्वत्स्याम्यहमरिंदम ।
योऽसौ शिष्यत्वमागम्य त्वयि नित्यं समाहितः ।
इत्युक्त्वाऽन्तर्हितं तद्वै शक्रं चान्वाविशत्प्रभो ॥ १२-१२४-४८ (६९७५४)
तस्मिंस्तेजसि याते तु तादृग्रूपस्ततोपरः ।
शरीरान्निःसृतस्तस्य को भवानिति सोब्रवीत् ॥ १२-१२४-४९ (६९७५५)
धर्मं प्रह्लाद मां विद्धि यत्रासौ द्विजसत्तमः ।
तत्र यास्यामि दैत्येन्द्र यतः शीलं ततो ह्यहम् ॥ १२-१२४-५० (६९७५६)
ततोऽपरो महाराज प्रज्वलन्निव तेजसा ।
शरीरान्निःसृतस्तस्य प्रह्लादस्य महात्मनः ॥ १२-१२४-५१ (६९७५७)
को भवानिति पृष्टश्च तमाह स महाद्युतिः ।
सत्यं विद्ध्यसुरेन्द्राद्य प्रयास्ये धर्ममन्वहम् ॥ १२-१२४-५२ (६९७५८)
तस्मिन्ननुगते धर्मं पुरुषे पुरुषोऽपरः ।
निश्चक्राम ततस्तस्मात्पृष्टश्चाह महातपाः ॥ १२-१२४-५३ (६९७५९)

वृत्तं प्रह्लाद मां विद्धि यतः सत्यं ततो ह्यहम् ।
तस्मिन्गते महाश्वेता शरीरात्तस्य निर्ययौ ॥१२-१२४-५४ (६९७६०)
पृष्टश्चाह बलं विद्धि यतो वृत्तमहं ततः ।
इत्युक्त्वा प्रययौ तत्र यतो वृत्तं नराधिप ॥१२-१२४-५५ (६९७६१)
ततः प्रभामयी देवी शरीरात्तस्य निर्ययौ ।
तामपृच्छत्स दैत्येन्द्रः सा श्रीरित्येनमब्रवीत् ॥१२-१२४-५६ (६९७६२)
उषिताऽस्मि सुखं नित्यं त्वयि सत्यपराक्रम ।
त्वया युक्ता गमिष्यामि बलं ह्यनुगता ह्यहम् ॥१२-१२४-५७ (६९७६३)
ततो भयं प्रादुरासीत्प्रह्लादस्य महात्मनः ।
अपृच्छत च तां भूयः क्व यासि कमलालये ॥१२-१२४-५८ (६९७६४)
त्वं हि सत्यव्रता देवी लोकस्य परमेश्वरी ।
कश्चासौ ब्राह्मणश्रेष्ठस्तत्त्वमिच्छामि वेदितुम् ॥१२-१२४-५९ (६९७६५)
श्रीरुवाच।१२-१२४-६०क्ष् (५६८५)
स शक्तो ब्रह्मचारी यस्त्वत्तश्चैवोपशिक्षितः ।
त्रैलोक्ये ते यदश्वर्यं तत्तेनापहृतं प्रभो ॥१२-१२४-६० (६९७६६)
शीलेन हि त्रयो लोकास्त्वया धर्मज्ञ निर्जिताः ।
तद्विज्ञाय सुरेन्द्रेण तव शीलं हृतं प्रभो ॥१२-१२४-६१ (६९७६७)
धर्मः सत्यं तथा वृत्तं बलं चैव तथाऽप्यहम् ।
शीलमूला महाप्राज्ञ सदा नास्त्यत्र संशयः ॥१२-१२४-६२ (६९७६८)
भीष्म उवाच।१२-१२४-६३क्ष् (५६८६)
एवमुक्त्वा गता श्रीस्तु ते च सर्वे युधिष्ठिर ।
दुर्योधनस्तु पितरं भूय एवाब्रवीत्तदा ॥१२-१२४-६३ (६९७६९)
शीलस्य तत्त्वमिच्छामि वेत्तुं कौरवनन्दन ।
प्राप्यते च यथा शीलं तं चोपायं ब्रवीहि मे ॥१२-१२४-६४ (६९७७०)
धृतराष्ट्र उवाच।१२-१२४-६५क्ष् (५६८७)
सोपायं पूर्वमुद्दिष्टं प्रह्लादेन महात्मना ।
संक्षेपतस्तु शीलस्य शृणु प्राप्तिं नरेश्वर ॥१२-१२४-६५ (६९७७१)
अद्रोहः सर्वभूतेषु कर्मणा मनसा गिरा ।
अनुग्रहश्च दानं च शीलमेतत्प्रशस्यते ॥१२-१२४-६६ (६९७७२)
यदन्येषां हितं न स्यादात्मनः कर्म पौरुषम् ।
अपत्रपेत वा येन न तत्कुर्यात्कथंचन ॥१२-१२४-६७ (६९७७३)
तत्तु कर्म तथा कुर्याद्येन श्लाघ्येत संसदि ।
शीलं समासेनैतत्ते कथितं कुरुसत्तम ॥१२-१२४-६८ (६९७७४)
यद्यप्यशीला नृपते प्राप्नुवन्ति श्रियं क्वचित् ।
न भुञ्जते चिरं तात समूलाश्च पतन्ति ते ॥१२-१२४-६९ (६९७७५)
धृतराष्ट्र उवाच।१२-१२४-७०क्ष् (५६८८)

एतद्विदित्वा तत्त्वेन शीलवान्भव पुत्रक ।
यदीच्छसि श्रियं तात सुविशिष्टां युधिष्ठिरात् ।
ग्अधिकां चापि राजेन्द्र ततस्त्वं शीलवान्भवा ॥' १२-१२४-७० (६९७७६)
भीष्म उवाच। १२-१२४-७१क्ष् (५६८९)
एतत्कथितवान्पुत्रे धृतराष्ट्रो महीपतिः ।
एतत्कुरुष्व कौन्तेय ततः प्राप्स्यसि तत्फलम् ॥ ॥ १२-१२४-७१ (६९७७७)

इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि
चतुर्विंशत्यधिकशततमोऽध्यायः ॥ १२४. ।
Mahabharata - Shanti Parva - Chapter Footnotes

१२-१२४-१ धर्मस्य कारणमिति शेषः ॥
१२-१२४-८ यदि सम्यग्भविष्यसाति द । पाठः ॥
१२-१२४-१३ ऋद्धिं वैश्रवणीमिति झ । पाठः ॥
१२-१२४-२२ नैश्रेयचसं मोक्षोपयोगि ॥
१२-१२४-२३ को विशेषः । नैश्रेयसादपि किंश्रेय इत्यर्थः ॥
१२-१२४-३७ क्षुद्राभिर्मधुमक्षिकाभिर्निर्मितं क्षौद्रं मधु । तत्र मक्षिकामध्विव मां ते शास्त्रेण सिञ्चन्ति। वागग्रविद्यानां वागग्रे एवं नतु पुस्तके विद्या येषां तेषाम्। सोऽहं वागन्त्यपुष्टानां मधूनां परिलेहितेति ङ। पाठः ॥
१२-१२४-४३ विप्रेण विप्राय । चेतायमिति संधिरार्षः ॥
१२-१२४-४६ तेजोविग्रहवत् तेजोमयशरीरं शीलम् ॥
१२-१२४-६४ शीलं समधिगच्छामीति थ । पाठः ॥

---

शन्तिपर्व-अध्यय१२५
॥ श्रीः ॥
१२.१२५. अध्यायः १२५

Mahabharata - Shanti Parva - Chapter Topics
आशानिरूपणं प्रार्थितेन भीष्मेण तदुपोद्घाततया ऋषभसुमित्रचरित्रकीर्तनारम्भः ॥ १. । मृगयासक्तेन सुमित्रेण निजशरानुवेधे शरेण सह वनं प्रविष्टं मृगं प्रत्यनुधावनम् ॥ २. ।
Mahabharata - Shanti Parva - Chapter Text

१२-१२५-० (६९७७८)
युधिष्ठिर उवाच। १२-१२५-०क्ष् (५६९०)

शीलं प्रधानं पुरुषे कथितं ते पितामह ।
कथमाशा समुत्पन्ना का च सा तद्वदस्व मे ॥ १२-१२५-१ (६९७७९)
संशयो मे महानेष समुत्पन्नः पितामह ।
छेत्ता च तस्य नान्योऽस्ति त्वत्तः परपुरंजय ॥ १२-१२५-२ (६९७८०)
पितामहाशा महती ममासीद्धि सुयोधने ।
प्राप्ते युद्धे तु तद्युक्तं तत्कर्ताऽयमिति प्रभो ॥ १२-१२५-३ (६९७८१)
सर्वस्याशा सुमहती पुरुषस्योपजायते ।
स्यां विहन्यमानायां दुःखो मृत्युर्न संशयः ॥ १२-१२५-४ (६९७८२)
ऽहं हताशो दुर्बुद्धिः कृतस्तेन दुरात्मना ।
र्तराष्ट्रेण राजेन्द्र पश्य मन्दात्मतां मम ॥ १२-१२५-५ (६९७८३)
आशां बृहत्तरीं मन्ये पर्वतादपि सद्रुमात् ।
आकाशादपि वा राजन्नप्रमेयाऽथवा पुनः ॥ १२-१२५-६ (६९७८४)
एषा चैव कुरुश्रेष्ठ दुर्विचिन्त्या सुदुर्लभा ।
दुर्लभत्वाच्च पश्यामि किमन्यद्दुर्लभं ततः ॥ १२-१२५-७ (६९७८५)
भीष्म उवाच। १२-१२५-८क्ष् (५६९१)
अत्र ते वर्तयिष्यामि युधिष्ठिर निबोध मे ।
इतिहासं सुमित्रस्य निर्वृत्तमृषभस्य च ॥ १२-१२५-८ (६९७८६)
सुमित्रो नाम राजर्षिर्हैहयो मृगयां गतः ।
ससार च मृगं विद्धवा बाणेनानतपर्वणा ॥ १२-१२५-९ (६९७८७)
स मृगो बाणमादाय ययावतिपराक्रमः ।
स च राजा बली तूर्णं ससार मृगमन्तिकात् ॥ १२-१२५-१० (६९७८८)
ततो निम्नं स्थलं चैव समृगोऽद्रवदाशुगः ।
मुहूर्तमिव राजेन्द्र समेन स पथाऽगमत् ॥ १२-१२५-११ (६९७८९)
ततः स राजा तारुण्यादौरसन बलेन च ।
चचार बाणासनभृत्सखङ्गो हंसवत्तदा ॥ १२-१२५-१२ (६९७९०)
ततो नदान्नदीश्चैव पल्वलानि वनानि च ।
अतिक्रम्याभ्यतिक्रम्य ससारैको वनेचरः ॥ १२-१२५-१३ (६९७९१)
स तु तावन्मृगो राजन्नासाद्यासाद्य पार्थिवम् ।
पुनरभ्येति जवनो जवेन महता ततः ॥ १२-१२५-१४ (६९७९२)
स तस्य बाणैर्बहुभिः समभ्यस्तो वनेचरः ।
प्रक्रीडन्निव राजेन्द्र पुनरभ्येति चान्तिकम् ॥ १२-१२५-१५ (६९७९३)
पुनश्च जवमास्थाय जवनो मृगयूथपः ।
श्अतीत्यातीत्य राजेन्द्र पुनरभ्येति चान्तिकम् ।ा १२-१२५-१६ (६९७९४)
तस्य मर्मच्छिदं घोरं सुमित्रोऽमित्रकर्शनः ।
समादाय शरं श्रेष्ठं कार्मुकान्निरवासयत् ॥ १२-१२५-१७ (६९७९५)
श्ततो गव्यूतिमात्रेण मृगयूथपयूथपः ।ा

तस्य बाणपथं मुक्त्वा तस्थिवान्प्रहसन्निव ॥ १२-१२५-१८ (६९७९६)
तस्मिन्निपतिते बाणे भूमौ ज्वलिततेजसि ।
प्रविवेश मृगोऽरण्यं मृगं राजाऽप्यभिद्रवत् ॥ ॥ १२-१२५-१९ (६९७९७)

इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि
पञ्चविंशत्यधिकशततमोऽध्यायः ॥ १२५.।
Mahabharata - Shanti Parva - Chapter Footnotes

१२-१२५-३ युक्तं युद्धं विनैव राज्यार्धदानम् । कर्ता करिष्यति ॥
१२-१२५-७ दुर्लभा दुर्जया ॥
१२-१२५-१२ बाणासनभृद्धनुर्धरः ॥
१२-१२५-१५ समभ्यस्तो बिद्धः ॥

---

शन्तिपर्व-अध्यय१२६
॥ श्रीः ॥
१२.१२६. अध्यायः १२६

Mahabharata - Shanti Parva - Chapter Topics
तापसैः स्वाश्रममुपागतस्य सुमित्रस्य पूजनम् ॥ १.। ततः सुमित्रेण
तापसान्प्रति आशान्तरिक्षयोर्ज्यायस्तरं किमिति प्रश्नः ॥ २.।
Mahabharata - Shanti Parva - Chapter Text

१२-१२६-० (६९७९८)
भीष्म उवाच। १२-१२६-०क्ष् (५६९२)
प्रविश्य च महारण्यं तापसानामथाश्रमम् ।
आससाद ततो राजा श्रान्तश्चोपाविशत्तदा ॥ १२-१२६-१ (६९७९९)
तं कार्मुकधरं दृष्ट्वा श्रमार्तं क्षुधितं तदा ।
समेत्य ऋषयस्तस्मै पूजां चक्रुर्यथाविधि ॥ १२-१२६-२ (६९८००)
स पूजामृषिभिर्दत्तां प्रतिगृह्य नराधिपः ।
अपृच्छत्तापसान्सर्वांस्तपोवृद्धिमनुत्तमाम् ॥ १२-१२६-३ (६९८०१)
ते तस्य राज्ञो वचनं प्रतिगृह्य तपोधनाः ।
ऋषयो राजशार्दूलमपृच्छंस्तत्प्रयोजनम् ॥ १२-१२६-४ (६९८०२)
केन भद्रमुखार्थेन तपोवनमुपागतः ।
पदातिर्बद्धनिस्त्रिंशो धन्वी बाणी नरेश्वर ॥ १२-१२६-५ (६९८०३)
एतदिच्छामहे श्रोतुं कुतः प्राप्तोऽसि मानद ।
कस्मिन्कुले तु जातस्त्वं किंनामा चासि ब्रूहि नः ॥ १२-१२६-६ (६९८०४)
ततः स राजा सर्वेभ्यो द्विजेभ्यः पुरुषर्षभ ।

आचख्यौ तद्यथावृत्तं परिचर्यां च भारत ॥ १२-१२६-७ (६९८०५)
हैहयानां कुले जातः सुमित्रोऽमित्रकर्शनः ।
चरामि मृगयूथानि निघ्नन्बाणैः सहस्रशः ॥ १२-१२६-८ (६९८०६)
बलेन महता ब्रह्मन्सामात्यः सावरोधकः ।
मृगस्तु विद्धो बाणेन मया सरति शल्यवान् ॥ १२-१२६-९ (६९८०७)
तं द्रवन्तमनुप्राप्तो वनमेतद्यदृच्छया ।
भवत्सकाशं नष्टश्रीर्हताशः श्रमकर्शितः ॥ १२-१२६-१० (६९८०८)
किंनु दुःखमतोऽन्यद्वै यदहं श्रमकर्शितः ।
भवतामाश्रमं प्राप्तो हताशो भ्रष्टलक्षणः ॥ १२-१२६-११ (६९८०९)
न राजलक्षणत्यागः पुनरस्य तपोधनाः ।
दुःखं करोति मे तीव्रं यथाऽऽशा विहता मम ॥ १२-१२६-१२ (६९८१०)
हिमवान्वा महाशैलः समुद्रो वा महोदधिः ।
महत्त्वान्नान्वपद्येतां रोदस्योरन्तरं यथा ॥ १२-१२६-१३ (६९८११)
आशायास्तपसि श्रेष्ठास्तथा नान्तमहं गतः ।
भवतां विदितं सर्वं सर्वज्ञा हि तपोधनाः ॥ १२-१२६-१४ (६९८१२)
भवन्तः सुमहाभागास्तस्मात्पृच्छामि संशयम् ।
आशावान्पुरुषो यः स्यादन्तरिक्षमथापि वा ॥ १२-१२६-१५ (६९८१३)
किंनु ज्यायस्तरं लोके महत्त्वे प्रतिभाति वः ।
एतदिच्छामि तत्त्वेन श्रोतुं किमिह दुर्लभम् ॥ १२-१२६-१६ (६९८१४)
यदि गुह्यं न वो नित्यं तदा प्रब्रूत मा चिरम् ।
न हि गुह्यतमं श्रोतुमिच्छामि द्विजपुङ्गवाः ॥ १२-१२६-१७ (६९८१५)
भवत्तपोविघातो वा येन स्याद्विरमे ततः ।
यदि वाऽस्ति कथायोगो योऽयं प्रश्नो मयेरितः ॥ १२-१२६-१८ (६९८१६)
एतत्कारणसामर्थ्यं श्रोतुमिच्छामि तत्त्वतः ।
भवन्तोऽपि तपोनित्या ब्रूयुरेतत्समाहिताः ॥ ॥ १२-१२६-१९ (६९८१७)

इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि
षड्विंशत्यधिकशततमोऽध्यायः ॥ १२६.।
Mahabharata - Shanti Parva - Chapter Footnotes

१२-१२६-५ हे भद्रमुख ॥
१२-१२६-१२ आशा मृगाशा ॥
१२-१२६-१३ हिमवानुच्चत्वेन महोदधिर्विततत्वेन च गगनान्तं
नान्वपद्येताम् ।तस्य ततोऽप्युच्चत्वाद्विततत्वाच्च ॥
१२-१२६-१५ आशावान् आशाया महत्त्वेन तद्वतोऽपि महत्त्वमन्तरिक्षवत् ॥
१२-१२६-१७ यद्यगुह्यं तपोनित्यं मम ब्रूतेह माचिरमिति थ द पाठः ॥

॥ श्रीः ॥
१२.१२७. अध्यायः १२७

Mahabharata - Shanti Parva - Chapter Topics
वदरिकाश्रमं गतस्य ऋषभस्य तनुनामकेन महर्षिणा सह संवादः
॥ १.। वने नष्टपुत्रान्वेषणवशात्तत्रोपागतेन वा द्युम्नेन राज्ञा
तनुंप्रति आशाया ज्यायः किमिति प्रश्नः ॥ २.।
Mahabharata - Shanti Parva - Chapter Text

१२-१२७-० (६९८१८)
भीष्म उवाच। १२-१२७-०क्ष् (५६९३)
ततस्तेषां समेतानामृषीणामृषिसत्तमः ।
ऋषभो नाम विप्रर्षिर्विस्मयन्निदमब्रवीत् ॥ १२-१२७-१ (६९८१९)
पुराऽहं राजशार्दूल तीर्थान्यनुचरन्प्रभो ।
समासादितवान्दिव्यं नरनारायणाश्रमम् ॥ १२-१२७-२ (६९८२०)
यत्र सा बदरी रम्या सरो वैहायसं तथा ।
यत्र चाश्वशिरा राजन्वेदान्पठति शाश्वतान् ॥ १२-१२७-३ (६९८२१)
तस्मिन्सरसि कृत्वाऽहं विधिवत्तर्पणं पुरा ।
पितृणां देवतानां च ततोश्रममियां तदा ॥ १२-१२७-४ (६९८२२)
रमाते यत्र तौ नित्यं नरनारायणावृषी ।
अदूरादाश्रमात्किंचिद्वासार्थमगमं तदा ॥ १२-१२७-५ (६९८२३)
अत्र चीराजिनधरं कृशमुच्चमतीव च ।
अद्राक्षमृषिमायान्तं तनुं नाम तपोनिधिम् ॥ १२-१२७-६ (६९८२४)
अन्यैर्नरैर्महाबाहो वपुषाऽप्रतिमं तदा ।
कृशता चापि राजर्षे न दृष्टा तादृशी मया ॥ १२-१२७-७ (६९८२५)
शरीरमपि राजेन्द्र तनु कानिष्ठिकासमम् ।
ग्रीवा बाहू तथा पादौ केशाश्चाद्भुतदर्शनाः ॥ १२-१२७-८ (६९८२६)
शिरः कायानुरूपं च कर्णौ नेत्रे तथैव च ।
तस्य वाक्चैव चेष्टा च सामान्ये राजसत्तम ॥ १२-१२७-९ (६९८२७)
दृष्ट्वाऽहं तं कृशं विप्रं भीतः परमदुर्मनाः ।
पादौ तस्याभिवाद्याथ स्थितः प्राञ्जलिरग्रतः ॥ १२-१२७-१० (६९८२८)
निवेद्य नामगोत्रे च तथा कार्यं नरर्षभ ।
प्रदिष्टे चासने तेन शनैरहमुपाविशम् ॥ १२-१२७-११ (६९८२९)
ततः स कथयामास धर्मार्थसहिताः कथाः ।

ऋषिमध्ये महाराज तत्र धर्मभृतां वरः ॥ १२-१२७-१२ (६९८३०)
त--स्तु कथयत्येव राजा राजीवलोचनः ।
उपयाज्जवनैरश्वैः सबलः सावरोधनः ॥ १२-१२७-१३ (६९८३१)
स्मरम्पुत्रमरण्ये वै नष्टं परमदुर्मनाः ।
भूविद्युम्नपिता श्रीमान्वीरद्युम्नो महायशाः ॥ १२-१२७-१४ (६९८३२)
इह द्रक्ष्यामि तं पुत्रं द्रक्ष्यामीहेति भारत ।
एवमाशाकृशो राजा चरन्वनमिदं पुरा ॥ १२-१२७-१५ (६९८३३)
दुर्लभः स मया द्रष्टुं भूय एव च धार्मिक ।
एकः पुत्रो महारण्ये नष्ट इत्यसकृत्तदा ॥ १२-१२७-१६ (६९८३४)
न स शक्यो मया द्रष्टुमाशा च महती मम ।
तया परीतगात्रोऽहं मुमूर्षुर्नात्र संशयः ॥ १२-१२७-१७ (६९८३५)
एतच्छ्रुत्वा तु भगवांस्तनुर्मुनिवरोत्तमः ।
अवाक्शिरा ध्यानपरो मुहूर्तमिव तस्थिवान् ॥ १२-१२७-१८ (६९८३६)
तमनुध्यान्तमालक्ष्य राजा परमदुर्मनाः ।
उवाच वाक्यं दीनात्मा मन्दमन्दमिवासकृत् ॥ १२-१२७-१९ (६९८३७)
दुर्लभं किंनु देवर्षे आशायाश्चैव किं महत् ।
ब्रवीतु भगवानेतद्यदि गुह्यं न चेत्तदा ॥ १२-१२७-२० (६९८३८)
तनुरुवाच। १२-१२७-२१क्ष् (५६९४)
महर्षिर्भगवांस्तेन पूर्वमासीद्विमानितः ।
बालिशां बुद्धिमास्थाय मन्दभाग्यतयाऽऽत्मनः ।
अर्थयन्कुशलं राजन्काञ्चनं वल्कलानि च ॥ १२-१२७-२१ (६९८३९)
श्अवज्ञापूर्वकेनापि न संपादितवांस्ततः ॡ
निर्विण्णः स तु विप्रर्षिर्निराशः समपद्यत ॥ १२-१२७-२२ (६९८४०)
एवमुक्तोऽभिवाद्याथ तमृषिं लोकपूजितम् ।
श्रान्तोऽवसीदद्धर्मात्मा यथा त्वं नरसत्तम ॥ १२-१२७-२३ (६९८४१)
अर्घ्यं ततः समानीय पाद्यं चैव महायशाः ।
आरण्येनैव विधिना राज्ञे सर्वं न्यवेदयत् ॥ १२-१२७-२४ (६९८४२)
ततस्तमृषयः सर्वे परिवार्य नरर्षभम् ।
उपाविशन्पुरस्कृत्य सप्तर्षय इव ध्रुवम् ॥ १२-१२७-२५ (६९८४३)
अपृच्छंश्चैव तत्रैनं राजानमपराजितम् ।
प्रयोजनमिदं सर्वमाश्रमस्य प्रवेशने ॥ ॥ १२-१२७-२६ (६९८४४)

इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि
सप्तविंशत्यधिकशततमोऽध्यायः ॥ १२७.।
Mahabharata - Shanti Parva - Chapter Footnotes

१२-१२७-३ वैहायसं विहायसा गच्छन्त्या मन्दाकिन्या वैहायस्या इदं वैहायसम् ॥
१२-१२७-४ ततोश्रमं तत आश्रमं मण्डपं इयां गतवामह ॥
१२-१२७-५ रेमाते रजसा यत्रेति थ ।द। पाठः ॥
१२-१२७-७ वपुयाऽष्टगुणान्वितमिति झ ।पाठः ॥
१२-१२७-२१ तेन तव पुत्रेण भूरिद्युम्नेन ॥
१२-१२७-२३ एवं मुनिना उक्तः वीरद्युम्नः अवसीदत् नष्टप्रायोऽभूदित्यर्थः ॥
१२-१२७-२६ एवं मुनिना राजपूजानन्तरं आगताः किमर्थं आश्रमे त्वं प्रविष्ट ओऽसीत्य पृच्छन् ॥

---

शन्तिपर्व-अध्यय१२८
॥ श्रीः ॥
१२.१२८. अध्यायः १२८

Mahabharata - Shanti Parva - Chapter Topics
कृशेन मुनिना वीरद्युम्ननृपंप्रति दुर्लभवस्तुनः
कृशतराशायाश्च प्रतिपादनम् ॥१.।
Mahabharata - Shanti Parva - Chapter Text

१२-१२८-० (६९८४५)
राजोवचा।१२-१२८-०क्ष् (५६९५)
वीरद्युम्न इति ख्यातो राजाऽहं दिक्षु विश्रुतः ।
भूरिद्युम्नं सुतं नष्टमन्वेष्टुं वनमागतः ॥१२-१२८-१ (६९८४६)
एकः पुत्रः स विप्राग्र्य बाल एव च सोऽनघः ।
न दृश्यते वने चास्मिंस्तमन्वेष्टुं चराम्यहम् ॥१२-१२८-२ (६९८४७)
ऋषभ उवाच।१२-१२८-३क्ष् (५६९६)
इत्युक्ते तेन वचने राज्ञा मुनिरधोमुखः ।
तूष्णीमेवाभवत्तत्र न च प्रत्युक्तवान्नृपम् ॥१२-१२८-३ (६९८४८)
स हि तेन पुरा विप्रो राज्ञा नात्यर्थमानितः ।
आशाकृतश्च राजेन्द्र तपो दीर्घं समाश्रितः ॥१२-१२८-४ (६९८४९)
प्रतिग्रहमहं राज्ञां न करिष्ये कथंचन ।
अन्येषां चैव वर्णानामिति कृत्वा धियं तदा ॥१२-१२८-५ (६९८५०)
आशा हि पुरुषं बालमालापयति तस्थूषी ।
तामहं व्यपनेष्यामि इति कृत्वा व्यवस्थितः ।
श्वीरद्युम्नस्तु तं भूयः पप्रच्छ मुनिसत्तमम् ॥६ १२-१२८-६ (६९८५१)
राजोवाच।१२-१२८-७क्ष् (५६९७)
आशायाः किंच वृत्तं वै किंचेह भुवि दुर्लभम् ।

ब्रवीतु भगवानेतत्त्वं हि धर्मार्थदर्शिवान् ॥ १२-१२८-७ (६९८५२)
ऋषभ उवाच। १२-१२८-८क्ष् (५६९८)
ततः संस्मृत्य तत्सर्वं स्मारयिष्यन्निवाब्रवीत् ।
राजानं भगवान्विप्रस्ततः कृशतनुस्तदा ॥ १२-१२८-८ (६९८५३)
ऋषिरुवाच। १२-१२८-९क्ष् (५६९९)
कृशत्वेन समं राजन्नाशाया विद्यते नृप ।
तस्या वै दुर्लभत्वाच्च प्रार्थितः पार्थिवो मया ॥ १२-१२८-९ (६९८५४)
राजोवाच। १२-१२८-१०क्ष् (५७००)
कृशाकृशे मया ब्रह्मन्गृहीते वचनात्तव ।
दुर्लभत्वं च तस्यैव वेदवाक्यमिवाद्विजे ॥ १२-१२८-१० (६९८५५)
संशयस्तु महाप्राज्ञ संजातो हृदये मम ।
तन्मुने मम तत्त्वेन वक्तुमर्हसि पृच्छतः ॥ १२-१२८-११ (६९८५६)
त्वत्तः कृशतरं किंनु ब्रवीतु भगवानिदम् ।
यदि गुह्यं न ते विप्र लोके किंचिह दुर्लभम् ॥ १२-१२८-१२ (६९८५७)
कृश उवाच। १२-१२८-१३क्ष् (५७०१)
दुर्लभोऽप्यथवा नास्ति योऽर्थी धृतिमवाप्नुयात् ।
स दुर्लभतरस्तात योऽर्थिनं नावमन्यते ॥ १२-१२८-१३ (६९८५८)
सत्कृत्य नोपक्रियते परं शक्त्या यथार्थतः ।
या सक्ता सर्वभूतेषु साऽऽशा कृशतरी मया ॥ १२-१२८-१४ (६९८५९)
कृतघ्नेषु च या सक्ता नृशंसेष्वलसेषु च ।
अपकारिषु चासक्ता साऽऽशा कृशतरी मया ॥ १२-१२८-१५ (६९८६०)
एकपुत्रः पिता पुत्रे नष्टे वा प्रोषितेऽपि वा ।
प्रवृत्तिं यो न जानाति साऽऽशा कृशतरी मता ॥ १२-१२८-१६ (६९८६१)
प्रसवे चैव नारीणां वृद्धानां पुत्रकारिता ।
तथा नरेन्द्र धनिनां साऽशा कृशतरी मता ॥ १२-१२८-१७ (६९८६२)
प्रदानकाङ्क्षिणीनां च कन्यानां वयसि स्थिते ।
श्रुत्वा कथास्तथायुक्ताः साऽऽशा कृशतरी मता ॥ १२-१२८-१८ (६९८६३)
एतच्छ्रुत्वा ततो राजन्स राजा सावरोधनः ।
संस्पृश्य पादौ शिरसा निपपात द्विजर्षभे ॥ १२-१२८-१९ (६९८६४)
राजोवाच। १२-१२८-२०क्ष् (५७०२)
प्रसादये त्वां भगवन्पुत्रेणेच्छामि संगमम् ।
यदेतदुक्तं भवता संप्रति द्विजसत्तम ।
वृणीष्व च वरान्विप्र यानिच्छसि यथाविधि ।
अब्रवीच्चैव तद्वाक्यं राजा राजीवलोचनः ॥ १२-१२८-२० (६९८६५)
सत्यमेतत्त्वया विप्र यथोक्तं नान्यथा मृषा ॥ १२-१२८-२१ (६९८६६)
ततः प्रहस्य भगवांस्तनुर्धर्मभृतां वरः ।

पुत्रमस्यानयत्क्षिप्रं तपसा च श्रुतेन च ॥१२-१२८-२२ (६९८६७)
स समानीय तत्पुत्रं तमुपालभ्य पार्थिवम् ।
आत्मानं दर्शयामास धर्मं धर्मभृतांवरः ॥१२-१२८-२३ (६९८६८)
स दर्शयित्वा चात्मानं दिव्यमद्भुतदर्शनम् ।
विपाप्मा विगतक्रोधश्चचार वनमन्तिकात् ॥१२-१२८-२४ (६९८६९)
एतद्दृष्टं मया राजंस्त्वत्तश्च वचनं श्रुतम् ।
आशामपनय त्वाशु ततः कृषतरीमिमाम् ॥१२-१२८-२५ (६९८७०)
भीष्म उवाच।१२-१२८-२६क्ष् (५७०३)
स तथोक्तस्तदा राजन्नृषभेण महात्मना ।
सुमित्रोऽपानयत्क्षिप्रमाशां कृशतरीं ततः ॥१२-१२८-२६ (६९८७१)
एवं त्वमपि कौन्तेय श्रुत्वा वाणीमिमां मम ।
स्थिरो भव महाराज हिमवानिव निश्चलः ॥१२-१२८-२७ (६९८७२)
त्वं हि श्रुत्वा च पृष्ट्वा च कृच्छ्रेष्वर्थेषु तेष्विह ।
श्रुत्वा मम महाराज न संतप्तुमिहार्हसि ॥ ॥१२-१२८-२८ (६९८७३)

इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि
अष्टाविंशत्यधिकशततमोऽध्यायः ॥१२८.।
Mahabharata - Shanti Parva - Chapter Footnotes

१२-१२८-४ आशया कृतः हतः ।कृ हिंसायामित्यस्य रूपम् ॥
१२-१२८-९ आशायाः आशावतः समं अन्यत् कृशत्वेन समं किमपि नास्ति
तस्याः तद्गृहीतार्थस्य ॥
१२-१२८-१० कृशाकृशे य आशाजितः स कृशः ।येनाशा जिता स
पुष्ट इत्यर्थः।तस्यैव आशाविषयस्यैव ॥
१२-१२८-१४ आदरेणाशां प्रदर्श्य योऽर्थिनं नोपकुरुते तत्र या आशा
सा अतिकृशा ।मया मत्तः।दीनत्वसंपादकत्व ॥
१२-१२८-१८ तथायुक्ताः प्रदानं स्थितमिति शब्दयुक्ताः ॥
१२-१२८-२३ उपालभ्य तत्रापराधं स्थापयित्वा ॥
१२-१२८-२८ मम मत्तः ॥

---

शन्तिपर्व-अध्यय१२९
॥ श्रीः ॥
१२.१२९. अध्यायः १२९

Mahabharata - Shanti Parva - Chapter Topics
यमेन गौतमंप्रति मातापित्रोः
परिचर्यायास्तदृणापनोदनोपायत्वकथनम् ॥१.।

१२-१२९-० (६९८७४)
युधिष्ठिर उवाच। १२-१२९-०क्ष् (५७०४)
नामृतस्येव पर्याप्तिर्ममास्ति ब्रुवति त्वयि ।
शयथाहि स्वात्मवृत्तिस्थस्तथा तृप्तोऽस्मि भारत ॥ १२-१२९-१ (६९८७५)
तस्मात्कथय भूयोऽपि त्वं ममेह पितामह ।
शन हि तृप्तिमहं यामि पिबन्धर्मामृतं हि ते ॥ १२-१२९-२ (६९८७६)
भीष्म उवाच। १२-१२९-२क्ष् (५७०५)
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
गौतमस्य च संवादं यमस्य च महात्मनः ॥ १२-१२९-३ (६९८७७)
पारियात्रं गिरिं प्राप्य गौतमस्याश्रमो महान् ।
वसते गौतमो यत्र तपसा दग्धकिल्विषः ॥ १२-१२९-४ (६९८७८)
पृष्टिं वर्षसहस्राणि सोऽतप्यद्गौतमस्तपः ।
तमुग्रतपसा युक्तं भावितं सुमहामुनिम् ॥ १२-१२९-५ (६९८७९)
उपयातो नरव्याघ्र लोकपालो यमस्तदा ।
तमपश्यत्सुतपसमृषिं वै गौतमं तदा ॥ १२-१२९-६ (६९८८०)
स तं विदित्वा ब्रह्मर्षियेममागतमोजसा ।
प्राञ्जलिः प्रणतो भूत्वा उपसृप्तस्तपोधनः ॥ १२-१२९-७ (६९८८१)
तं धर्मराजो दृष्ट्वैव नमस्कृत्य द्विजोत्तमम् ।
न्यमन्त्रयत धर्मेण क्रियतां किमिति ब्रुवन् ॥ १२-१२९-८ (६९८८२)
गौतम उवाच। १२-१२९-९क्ष् (५७०६)
मातापितृभ्यामानृण्यं किं कृत्वा समवाप्नुयात् ।
कथं च लोकानाप्नोति पुरुषो दुर्लभाञ्शुभान् ॥ १२-१२९-९ (६९८८३)
यम उवाच। १२-१२९-१०क्ष् (५७०७)
तपः शौचवता नित्यं सत्यधर्मरतेन च ।
मातापित्रोरहरहः पूजनं कार्यमञ्जसा ॥ १२-१२९-१० (६९८८४)
अश्वमेधैश्च यष्टव्यं बहुभिः स्वाप्तदक्षिणैः ।
तेन लोकानवाप्नोति पुरुषोऽद्भुतदर्शनान् ॥ ॥ १२-१२९-११ (६९८८५)

इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि
एकोनत्रिंशदधिकशततमोऽध्यायः ॥ १२९.।



१२-१२९-१ पर्याप्तिरलंभावस्तृप्तिरिति यावत् ॥
१२-१२९-८ न्यमन्त्रयत तं सुमुखीकृतवान् ॥

शन्तिपर्व-अध्यय१३०
॥ श्रीः ॥
१२.१३०. अध्यायः १३०

Mahabharata - Shanti Parva - Chapter Topics
भीष्मेण युधिष्ठिंप्रति राज्ञा ब्रह्मस्ववर्जं आपदि प्रजापीडनेनापि कोशवृद्धेरवश्यं कर्तव्यत्वोक्तिः ॥ १.।
Mahabharata - Shanti Parva - Chapter Text

१२-१३०-० (६९९०२)
युधिष्ठिर उवाच। १२-१३०-०क्ष् (५७०९)
त्रैः प्रहीयमाणस्य बह्वमित्रस्य का गतिः ।
-- संक्षीणकोशस्य बलहीनस्य भारत ॥ १२-१३०-१ (६९९०३)
--मात्यसहायस्य श्रुतमन्त्रस्य सर्वतः ।
ज्यात्प्रच्यवमानस्य गतिमन्यामपश्यतः ॥ १२-१३०-२ (६९९०४)
परचक्राभियातस्य परराष्ट्राणि मृद्नतः ।
विग्रहे वर्तमानस्य दुर्बलस्य बलीयसा ॥ १२-१३०-३ (६९९०५)
असंविहितराष्ट्रस्य देशकालावजानतः ।
अप्राप्यं च भवेत्सान्त्वं भेदो वाऽप्यतिपीडनात्। १२-१३०-४ (६९९०६)
जीवितं त्वर्थहेतोर्वा तत्र किं सुकृतं भवेत् ॥ १२-१३०-५ (६९९०७)
भीष्म उवाच ।
गुह्यां मा धर्ममप्राक्षीरतीव भरतर्षभ। १२-१३०-६क्ष् (५७१०)
प्रवक्तुं नोत्सहे पृष्टो धर्ममेतं युधिष्ठिर ॥
धर्मो ह्यणीयान्वचनाद्बुद्धेश्च भरतर्षभ ।
श्रुत्वौपम्यं सदाचारैः साधुर्भवति स क्वचित् ॥ १२-१३०-६ (६९९०८)
कर्मणा बुद्धिपूर्वेण भवत्याढ्यो न वा पुनः ।
तादृशोऽयमनुप्रश्नस्तद्ध्यायस्व स्वया धिया ॥ १२-१३०-७ (६९९०९)
उपायं धर्मबहुलं यात्रार्थं शृणु भारत ।
नाहमेतादृशे धर्मे बुभूषे धर्मकारणात् ॥ १२-१३०-८ (६९९१०)
दुःखादान इह ह्येष स्यात्तु पश्चात्क्षमो मम ।
अभिगम्य मतीनां हि सर्वासामेव निश्चयम् ॥ १२-१३०-९ (६९९११)
यथायथा हि पुरुषो नित्यं शास्त्रमवेक्षते ।
तथातथा विजानाति विज्ञानं चास्य रोचते ॥ १२-१३०-१० (६९९१२)
अविज्ञानादयोगो हि पुरुषस्योपजायते ।
विज्ञानादपि योगश्च योगो भूतिकरः परः ॥ १२-१३०-११ (६९९१३)

अशङ्कमानो वचनमनसूयुरिदं शृणु ।
राज्ञः कोशक्षयादेव जायते बलसंक्षयः ॥ १२-१३०-१२ (६९९१४)
कोशं संजनयेद्राजा नित्यमेभ्यो यथाबलम् ।
कालं प्राप्यानुगृह्णीयादेष धर्मोऽत्र सांप्रतम् ॥ १२-१३०-१३ (६९९१५)
उपायधर्मं प्राप्यैनं पूर्वैराचरितं जनैः ।
अन्यो धर्मः समर्थानामापत्स्वल्पश्च भारत ॥ १२-१३०-१४ (६९९१६)
प्रकार्यं प्रोच्यते धर्मो वृत्तिर्धर्मे गरीयसी ।
धर्मं प्राप्य यथान्यायं न बलीयान्निषीदति ॥ १२-१३०-१५ (६९९१७)
यस्माद्धर्मस्योपचितिरेकान्तेन न विद्यते ।
तस्मादापद्यधर्मोऽपि श्रूयते धर्मलक्षणः ॥ १२-१३०-१६ (६९९१८)
अधर्मो जायते तस्मिन्निति वै कवयो विदुः ।
अनन्तरं क्षत्रियस्य तत्र किं विचिकित्स्यते ॥ १२-१३०-१७ (६९९१९)
यथास्य धर्मो न ग्लायेन्नेयाच्छत्रुवशं यथा ।
तत्कर्तव्यमिहेत्याहुर्नात्मानमवसादयेत् ॥ १२-१३०-१८ (६९९२०)
सर्वात्मनैव धर्मस्य न परस्य न चात्मनः ।
सर्वोपायैरुज्जिहीर्षेदात्मानमिति निश्चयः ॥ १२-१३०-१९ (६९९२१)
तत्र धर्मविदस्तात निश्चयो धर्मनैपुणैः ।
उद्यमं जीवनं क्षात्रे बाहुवीर्यादिति श्रुतिः ॥ १२-१३०-२० (६९९२२)
क्षत्रियो वृत्तिसंरोधे कस्य नादातुमर्हति ।
अन्यत्र तापसस्वाच्च श्रोत्रियस्वाच्च भारत ॥ १२-१३०-२१ (६९९२३)
यथा वै ब्राह्मणः सीदन्नयाज्यमपि याजयेत् ।
अभोज्यमपि चाश्नीयात्तत्रेदं नात्र संशयः ॥ १२-१३०-२२ (६९९२४)
पीडितस्य किमद्वारमुत्पथेनार्दितस्य च ।
अद्वारतः प्रद्रवति यथा भवति पीडितः ॥ १२-१३०-२३ (६९९२५)
तस्य कोशबलग्लान्यां सर्वलोकपराभवः ।
भैक्षचर्या न विहिता न च विट्शूद्रजीविका ॥ १२-१३०-२४ (६९९२६)
स्वधर्मानन्तरावृत्तिर्याऽन्यामनुपजीवतः ।
जहतः प्रथमं कल्पमनुकल्पेन जीवनम् ॥ १२-१३०-२५ (६९९२७)
आपद्गतेन धर्माणामन्यायेनोपजीवनम् ।
अपि ह्येतद्ब्राह्मणेषु दृष्टं वृत्तिपरिक्षये ॥ १२-१३०-२६ (६९९२८)
क्षत्रिये संशयः कस्मादित्येत्निश्चितं सदा ।
आददीत विशिष्टेभ्यो नावसीदेत्कथंचन ॥ १२-१३०-२७ (६९९२९)
आर्तानां रक्षितारं च प्रजानां क्षत्रियं विदुः ।
तस्मात्संरक्षता कार्यमादानं क्षत्रबन्धुना ॥ १२-१३०-२८ (६९९३०)
अन्यत्रापि विहिंसाया वृत्तिर्नेहास्ति कस्यचित् ।
अप्यरण्यसमुत्थस्य एकस्य चरतो मुनेः ॥ १२-१३०-२९ (६९९३१)

न शङ्खलिखितां वृत्तिं शक्यमास्थाय जीवितुम् ।
विशेषतः कुरुश्रेष्ठ प्रजापालनमीप्सता ॥१२-१३०-३० (६९१३२)
परस्पराभिहरणं राज्ञा राष्ट्रेण चापदि ।
नित्यमेव हि कर्तव्यमेष धर्मः सनातनः ॥१२-१३०-३१ (६९१३३)
राजा राष्ट्रं यथापत्सु द्रव्यौघैः परिरक्षति ।
राष्ट्रेण राजा व्यसने परिरक्ष्यस्तथा भवेत् ॥१२-१३०-३२ (६९१३४)
कोशं दण्डं बलं मित्रं यदन्यदपि संचितम् ।
न कुर्वीतान्तरं राष्ट्रे राजा परिगतः क्षुधा ॥१२-१३०-३३ (६९१३५)
बीजं भक्तेन संपाद्यमिति धर्मविदो विदुः ।
अत्रैतच्छम्बरस्याहुर्महामायस्य दर्शनम् ॥१२-१३०-३४ (६९१३६)
धिक्तस्य जीवितं राज्ञो राष्ट्रं यस्यावसीदति ।
अवृत्त्यान्यमनुष्योऽपि यो वैदेशिक इत्यपि ॥१२-१३०-३५ (६९१३७)
राज्ञः कोशबलं मूलं कोशमूलं पुनर्बलम् ।
तन्मूलं सर्वधर्माणां धर्ममूलाः पुनः प्रजाः ॥१२-१३०-३६ (६९१३८)
नान्यानपीडयित्वेह कोशः शक्यः कुतो बलम् ।
तदर्थं पीडयित्वा च न दोषं प्राप्नुमर्हति ॥१२-१३०-३७ (६९१३९)
अकार्यमपि कार्यार्थं क्रियते यज्ञकर्मसु ।
एतस्मिन्कारणे राजा न दोषं प्राप्नुमर्हति ॥१२-१३०-३८ (६९१४०)
अर्थार्थमन्यद्भवति विपरीतमथापरम् ।
अनर्थार्थमथाप्यन्यत्तत्सर्वं ह्यर्थकारणम् ।
एवं बुद्ध्या संप्रपश्येन्मेधावी कार्यनिश्चयम् ॥ १२-१३०-३९ (६९१४१)
यज्ञार्थमन्यद्भवति यज्ञोऽन्यार्थस्तथाः परः ।
यज्ञस्वार्थार्थमेवान्यत्तत्सर्वं यज्ञसाधकम् ॥१२-१३०-४० (६९१४२)
उपमामत्र वक्ष्यामि धर्मतत्त्वप्रकाशिनीम् ॥ १२-१३०-४१ (६९१४३)
यूपं छिन्दन्ति यज्ञार्थं तत्र ये परिपन्थिः ।
द्रुमाः केचन सामन्ता ध्रुवं छिन्दन्ति तानपि ॥१२-१३०-४२ (६९१४४)
ते चापि निपतन्तोऽन्यान्निघ्नन्त्यपि वनस्पतीन् ।
एवं कोशस्य महतो ये नराः परिपन्थिनः ।
तानहत्वा न पश्यामि सिद्धिमत्र परंतप ॥ १२-१३०-४३ (६९१४५)
धनेन जयते लोकमिमं चामुं च भारत ।
सत्यं च धर्मवचनं यथा नास्त्यधनस्तथा ॥१२-१३०-४४ (६९१४६)
सर्वोपायैराददीत धनं यज्ञप्रयोजनम् ।
न तुल्यदोषः स्यादेवं कार्याकार्येषु भारत ॥१२-१३०-४५ (६९१४७)
नोभौ सभवतो राजन्कथंचिदपि भारत ।
न ह्यरण्येषु पश्यामि धनवृद्धानहं क्वचित् ॥१२-१३०-४६ (६९१४८)
यदिदं दृश्यते वित्तं पृथिव्यामिह किंचन ।

ममेदं स्यान्ममेदं स्यादित्येवं मन्यते जनः ॥१२-१३०-४७ (६९९४९)
न च राज्ञः समो धर्मः कश्चिदस्ति कथंचन ।
धर्मः संशब्दितो राज्ञामापदर्थस्ततोऽन्यथा ॥१२-१३०-४८ (६९९५०)
ज्ञानेन कर्मणा चान्ये तपन्त्यन्ये तपस्विनः ।
बुद्ध्या दाक्ष्येण चैवान्ये चिन्वन्ति धनसंचयान् ॥१२-१३०-४९ (६९९५१)
अधनं दुर्बलं प्राहुर्धनेन बलवान्भवेत् ।
सर्वं बलवतः प्राप्यं सर्वं तरति कोशवान् ॥१२-१३०-५० (६९९५२)
कोशो धर्मश्च कामश्च परलोकस्तथा ह्ययम् ।
तं धर्मेण विलिप्सेत नाधर्मेण कदाचन ॥ ॥१२-१३०-५१ (६९९५३)

इति श्रीमन्महाभारते शतसाहस्त्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि राजधर्मपर्वणि त्रिंशदधिकशततमोऽध्यायः
॥१३०.। समाप्तं च राजधर्मपर्व ॥१.।
Mahabharata - Shanti Parva - Chapter Footnotes

१२-१३०-२ सर्वतः सर्वैः ॥
१२-१३०-३ परस्य चक्रं राष्ट्रं प्रत्यभियातस्य ।बलीयसा सार्धम् ॥
१२-१३०-४ असंविहितमसम्यग्रक्षितं राष्ट्रं येन तस्य ।अतिपीडनात्
परकीयामात्यादीनां भेदोऽप्यप्राप्यः ॥
१२-१३०-५ मा मामप्राक्षीः पृष्टवानसि ।गुह्यं धर्मज मा
प्राक्षीरतीव भरतर्षभ।अपृष्टो नोत्संहे वक्तुं धर्ममेतं
युधिष्ठिरेति झ।पाठः ॥
१२-१३०-६ वचनाच्छास्त्रात् ॥
१२-१३०-८ यात्रार्थं राज्ञां व्यवहारनिर्वाहार्थम् ।बुभूषे
प्राप्तुमिच्छामि ॥
१२-१३०-९ एष उपायो दुःखादानः अजानां दुःखेनाऽऽदीयतेङ्गीक्रियते ॥
१२-१३०-११ अयोग उपायाभावः ॥
१२-१३०-१३ अनुगृह्णीयात् प्राक्कर्षिताः प्रजा इति शेषः ॥
१२-१३०-१४ उपायधर्ममुपधर्मम् ।अमुख्यधर्ममितियावत् ॥
१२-१३०-१७ अनन्तरं आपन्निवृत्त्युत्तरं तत्र पूर्वोक्ताधर्मे
किं विचिकित्स्यते प्रायश्चित्तादिकं कराग्रहणादिकं च विधीयते
दोषपरिहारार्थमित्यर्थः ॥
१२-१३०-१९ धर्मस्येति कर्मणिषष्ठी ।परस्य धर्मं
नोज्जिहीर्षेत्राप्यात्मनो धर्ममुज्जिहीर्षेदपि तु आत्मान मेव
उज्जिहीर्षेत्।स्वपरधर्मलोपेऽप्यात्मानमेवोद्धर्तुमिच्छेदित्यर्थः ॥
१२-१३०-३० शङ्केललाटास्थ्नि छिखितां वृत्तिम् ।दिष्टमात्रालम्बिना

राज्ञ जीवितं न शक्यम् ॥
१२-१३०-३३ अन्तरं दूरतः ॥
१२-१३०-३४ बीजभक्तेन संपादितं चेदग्रे भक्तदौर्वल्यं यथाभवति एवमत्यधे राजा प्रजाभिर्न रक्षितो नश्यति । नष्टे च तस्मिन्सर्वाः प्रजा अपि नश्यन्तीत्यर्थः। एतत्पूर्वार्धोक्तं दर्शनं शास्त्रम् ॥
१२-१३०-३५ अवृत्त्या जीविकाया अभावेन यस्य राष्ट्रं अवसीदति यो वा अमनुष्यः यो वा वैदेशिको देशान्तरोपजीवी तस्य राज्ञो जीवीतं धिक् ॥
१२-१३०-३६ राज्ञो मूलं कोशो बलं च । कोशो बलस्य मूल तद्बलं धर्माणां मूलम्। अतः सर्वस्य मूलभूतं कोशं वर्धयेत् ॥
१२-१३०-३९ अन्यत् आपदि प्रजापीडनमप्यर्थार्थं भवति । अ अपीडनं विपरीतं अनर्थार्थं भवति। यदप्यन्यत् अनर्थार्थं अर्थाभावार्थं कुञ्जरपालादि भवति तदेवेहार्थस्य कारणं उत्पादकं भवति ॥
१२-१३०-४० यथा पश्वादिकं यज्ञार्थं यज्ञश्च चित्तसंस्कारार्थः । पश्वादिकं यज्ञः संस्कारश्चेति त्रयं अर्थार्थं मोक्षार्थं भवति। एवं दण्डः कोशार्थं कोशो बलार्थं बलं शत्रुपराभवार्थम्। कोशो बलं जयश्चेति त्रयं राष्ट्रपुष्ट्यर्थमिति भावः ॥
१२-१३०-४२ सामन्ताः प्रतिपक्षभूताः ॥
१२-१३०-४४ यथा नास्त्यधनस्तथेति जीवन्मृतत्वमधनस्योक्तम् ॥
१२-१३०-४५ कार्याकार्येषु विहितनिषिद्धेषु आपदि प्रजापीडनं विहितं तदेवानापदि निषिद्धं । तथाभूतेष्वर्थेषु तुल्यदोषो न स्याद्देशकालानुसारेण कार्यमप्यकार्यं भवत्यकार्यमपि कार्यं भवति तत्र विपरीतं न प्रतिपद्येतेति भावः ॥
१२-१३०-४६ उभौ धनसंग्रहत्यागावेकस्मिन्पुरुषे न संभवतः ॥
१२-१३०-४७ अन्येषु त्यागार्थसंभवमाह यदिदमिति ॥
१२-१३०-४८ न च राज्यसमो धर्म इति झ । पाठः। अनापद्येव राज्ञो बहुकरादानं पापमूलमापदि तु न तत्तथा भवतीत्यर्थः ॥

---

शन्तिपर्व-अध्यय१३१
॥ श्रीः ॥
१२.१३१. अध्यायः १३१

Mahabharata - Shanti Parva - Chapter Topics
भीष्मेण युधिष्ठिरंप्रति आपदि राज्ञा सर्वस्वत्यागेनाप्यात्मनो रक्षणीयत्वकथनम् ॥ १.।
Mahabharata - Shanti Parva - Chapter Text

१२-१३१-० (६९९५४)
युधिष्ठिर उवाच। १२-१३१-०क्ष् (५७११)
क्षीणस्य दीर्घसूत्रस्य सानुक्रोशस्य बन्धुषु ।
परिशङ्कितमुख्यस्य दुष्टमन्त्रस्य भारत ॥ १२-१३१-१ (६९९५५)
विरक्तराज्यपौरस्य निर्द्रव्यनिचयस्य च ।
असंभावितमित्रस्य भिन्नामात्यस्य सर्वतः ॥ १२-१३१-२ (६९९५६)
परचक्राभियातस्य दुर्बलस्य बलीयसा ।
आपन्नचेतसो ब्रूहि किं कार्यमवशिष्यते ॥ १२-१३१-३ (६९९५७)
भीष्म उवाच। १२-१३१-४क्ष् (५७१२)
बाह्यश्चेद्विजिगीषुः स्याद्धर्मार्थकुशलः शुचिः ।
जवेन सन्धिं कुर्वीत पूर्वं पूर्वं विमोक्षयेत् ॥ १२-१३१-४ (६९९५८)
श्योऽधर्मविजिगीषुः स्याद्बलवान्पापनिश्चयः ꣸
आत्मनः सन्निरोधेन सन्धिं तेनापि रोचयेत् ॥ १२-१३१-५ (६९९५९)
अपास्य राजधानीं वा तरेदन्येन वाऽऽपदम् ।
तद्भावभावो द्रव्याणि जीवन्पुनरुपार्जयेत् ॥ १२-१३१-६ (६९९६०)
यास्तु कोशबलत्यागाच्छक्यास्तरितुमापदः ।
कस्तत्राधिकमात्मानं संत्यजेदर्थधर्मवित् ॥ १२-१३१-७ (६९९६१)
अपराधाज्जुगुप्सेत का सपत्नधने दया ।
न त्वेवात्मा प्रदातव्यः शक्ये सति कथंचन ॥ १२-१३१-८ (६९९६२)
युधिष्ठिर उवाच। १२-१३१-९क्ष् (५७१३)
आभ्यन्तरे च कुपिते बाह्ये चोपनिपीडिते ।
क्षीणे कोशे श्रुते मन्त्रे किं कार्यमवशिष्यते ॥ १२-१३१-९ (६९९६३)
भीष्म उवाच। १२-१३१-१०क्ष् (५७१४)
क्षिप्रं वा सन्धिकामः स्यात्क्षिप्रं वा तीक्ष्णविक्रम ।
यदाऽपनयनं क्षिप्रमेतद्धै सांपरायिकम् ॥ १२-१३१-१० (६९९६४)
अनुरक्तेन पुष्टेन हृष्टेन जगतीपतिः ।
अल्पेनापि स्वसैन्येन भूमिं जयति भूमिपः ॥ १२-१३१-११ (६९९६५)
हतो वा दिवमारोहेद्धत्वा च सुखमावहेत् ।
युद्धे हि संत्यजन्प्राणाञ्शक्रस्यैति सलोकताम् ॥ १२-१३१-१२ (६९९६६)
सर्वलोकागसं कृत्वा मृदुत्वं गन्तुमेव च ।
विश्वासाद्विनयं कुर्यात्संजह्याद्वाऽप्युपानहौ ॥ १२-१३१-१३ (६९९६७)
अपचिक्रमिषुः क्षिप्रं सेनां स्वां परिसान्त्वयन् ।
विलङ्घयित्वा सत्रेण ततः स्वयमुपक्रमेत् ॥ ॥ १२-१३१-१४ (६९९६८)

इति श्रीमन्महाभारते शान्तिपर्वणि आपद्धर्मपर्वणि

एकत्रिंशदधिकशततमोऽध्यायः ॥ १३१.।
Mahabharata - Shanti Parva - Chapter Footnotes

१२-१३१-१ सानुक्रोशस्य बन्धुक्षयभयात् योद्धुमनिच्छतः
। परिशङ्कितमुख्यस्य अमात्येषु शङ्कावतः ॥
१२-१३१-२ द्रव्याभावादेव न संभावितानि आवर्जितानि मित्राणि येन तस्य
भिन्नाः शत्रुभिर्दंदी कृता अमात्या यस्य ॥
१२-१३१-३ बलीयसा शत्रुणा आपन्नं वाकु लीकृतं चेतो यस्य ॥
१२-१३१-४ मोक्षयेत् साम्नैवेत्यर्थः ॥
१२-१३१-५ अधर्मप्रधानो विजिगीषुरधर्मविजिगीषुः ॥
१२-१३१-७ दुष्टतमे तु राज्यधनं त्यक्त्वा आत्मानं रक्षेदित्याह
यास्त्विति । यास्तु स्युः केवलत्यागादिति ड। थ। पाठः ॥
१२-१३१-९ आभ्यन्तरेऽमात्यादौ बाह्योदुर्गराष्ट्रादौ ॥
१२-१३१-१० धर्मिष्ठे बाह्ये क्षिप्रं संधिः । अधर्मि तु ---
कर्तव्यः। यदा त्वेवं तदा अपनयनं शत्रो----। अथवा सांपरायिकं
धर्मयुद्धेन मरणे पर-- कहितं भवति ॥
१२-१३१-१३ विश्वासात् विश्वासं प्रापय्य विक्यं कुर्यात् मृदुर्भवेत्
। नतु युद्धमेव हठेन श्रयेत् ॥

---

शन्तिपर्व-अध्यय१३२
॥ श्रीः ॥
१२.१३२. अध्यायः १३२

Mahabharata - Shanti Parva - Chapter Topics
भीष्मेण युधिष्ठिरंप्रति ब्राह्मणानामापदि राज्ञा
असाधुजनधनापहारेणापि तद्रक्षणस्य करणीयत्वोक्तिः ॥ १.।
Mahabharata - Shanti Parva - Chapter Text

१२-१३२-० (६९९६९)
युधिष्ठिर उवाच। १२-१३२-०क्ष् (५७१५)
हीने परमके धर्मे सर्वलोकातिलङ्घने ।
सर्वस्मिन्दस्युसाद्भूते पृथिव्यामुपजीवने ॥ १२-१३२-१ (६९९७०)
केन स्विद्ब्राह्मणो जीवेज्जघन्ये काल आगते ।
असंत्यजन्पुत्रपौत्राननुक्रोशात्पितामह ॥ १२-१३२-२ (६९९७१)
भीष्म उवाच। १२-१३२-३क्ष् (५७१६)
विज्ञानबलमास्थाय जीवितव्यं तथा गते ।

सर्वं साध्वर्थमेवेदमसाध्वर्थं न किंचन ॥ १२-१३२-३ (६९९७२)
असाधुभ्योऽर्थमादाय साधुभ्यो यः प्रयच्छति ।
आत्मानं संक्रमं कृत्वा कृच्छ्रधर्मकृदेव सः ॥ १२-१३२-४ (६९९७३)
अरोषेणात्मनो राजन्राज्ये स्थितिमकोपयन् ।
अदत्तमप्याददीत् भ्रातुर्वित्तं ममेति वा ॥ १२-१३२-५ (६९९७४)
विज्ञानबलपूतो यो वर्तते निन्दितेष्वपि ।
वृत्तिविज्ञानवान्धीरः कस्तं वक्तुमिहार्हति ॥ १२-१३२-६ (६९९७५)
येषां बहुकृता बुद्धिस्तेषामन्या न रोचते ।
यजसा ते प्रवर्तन्ते बलवन्तो युधिष्ठिर ॥ १२-१३२-७ (६९९७६)
यदैव प्रकृतं शास्त्रं जनस्तदनुवर्तते ।
यदैवमध्यासेवन्ते मेधावी वाऽप्यथोत्तरम् ॥ १२-१३२-८ (६९९७७)
ऋत्विक्पुरोहिताचार्यान्सत्कृतानभिसत्कृतान् ।
न ब्राह्मणान्घातयीत दोषान्प्राप्नोति घातयन् ॥ १२-१३२-९ (६९९७८)
एतत्प्रमाणं लोकस्य चक्षुरेतत्सातनम् ।
तत्प्रमाणोऽवगाहेत तेन तत्साध्वसाधु वा ॥ १२-१३२-१० (६९९७९)
हवो ग्रामवास्तव्या दोषान्ब्रूयुः परस्परम् ।
न तेषां वचनाद्राजा सत्कुर्याद्घातयीत वा ॥ १२-१३२-११ (६९९८०)
न वाच्यः परिवादो वै न श्रोतव्यः कथंचन ।
कर्णौ तत्र पिधातव्यौ गन्तव्यं वा ततोऽन्यतः ॥ १२-१३२-१२ (६९९८१)
न सतां शीलमेतद्वै परिवादो न पैशुनम् ।
गुणानामेव वक्तारः सन्तो नित्यं युधिष्ठिर ॥ १२-१३२-१३ (६९९८२)
यथा समधुरौ दम्यौ सुदान्तौ साधुवाहिनौ ।
धुरमुद्यम्य वहतस्तथा वर्तेत वै नृपः ॥ १२-१३२-१४ (६९९८३)
यथायथाऽस्य बहवः सहायाः स्युस्तथा चरेत् ।
आचारमेव मन्यन्ते गरीयो धर्मलक्षणम् ॥ १२-१३२-१५ (६९९८४)
अपरे नैवमिच्छन्ति ये शङ्खलिखितप्रियाः ।
अर्थे क्षीणेऽथवा लुब्धास्ते ब्रूयुर्वाक्यमीदृशम् ॥ १२-१३२-१६ (६९९८५)
आर्षमप्यत्र पश्यन्ति विकर्मस्थस्य पातनम् ।
न चार्षात्सदृशं किंचित्प्रमाणं दृश्यते क्वचित् ॥ १२-१३२-१७ (६९९८६)
देवा ह्यपि विकर्मस्थं घातयन्ति नराधमम् ।
व्याजेन विन्दन्वित्तं हि धर्मतः परिहीयते ॥ १२-१३२-१८ (६९९८७)
सर्वतः सत्कृतः सद्भिर्भूतिप्रवरकारणैः ।
हृदयेनाभ्यनुज्ञातो यो धर्मस्तं व्यवस्यति ॥ १२-१३२-१९ (६९९८८)
यश्चतुर्गुणसंपन्नं धर्मं वेद स धर्मवित् ।
अहेरिव हि धर्मस्य पदं दुःखं गवेषितुम् ॥ १२-१३२-२० (६९९८९)
यथा मृगस्य विद्धस्य मृगव्याधः पदं नयेत् ।

लक्षेद्रुधिरपातेन तथा धर्मपदं नयेत् ॥१२-१३२-२१ (६९९९०)
यथा सम्यग्वितेन पथा गन्तव्यमप्युत ।
राजर्षीणां वृत्तमेतदेवं गच्छ युधिष्ठिर ॥ ॥१२-१३२-२२ (६९९९१)

इति श्रीमन्महाभारते शान्तिपर्वणि आपद्धर्मपर्वणि
द्वात्रिंशदधिकशततमोऽध्यायः ॥१३२.।
Mahabharata - Shanti Parva - Chapter Footnotes

१२-१३२-१ हीने धर्मे राज्ञामिति शेषः ।परमके सर्वोपायेन ब्राह्मणा
रक्ष्या इत्यस्मि ॥
१२-१३२-२ जघन्ये आपद्बहूले ब्राह्मणः केन जीदत्यस्य ब्राह्मणं कथं
रक्षेदित्यर्थः ॥
१२-१३२-३ साध्वर्थं सतानम् ॥
१२-१३२-४ संक्रममागमनमार्गम् ॥
१२-१३२-५ स्थितिं पालनधर्मम् ।स्यष्टस्य राज्ञो ब्राह्मणपालनार्थं
सर्वस्वहरणेऽपि दोषो नास्तीत्यर्थः ॥
१२-१३२-६ वक्तुं निन्दितुम् ॥
१२-१३२-९ अन्त्यापद्यपि ऋत्विधनवतोऽपि न घातयीत
धनहरणेन हिंस्यादित्यर्थः ।पुरोहिताचार्यै- सत्कृतैरपि
सत्कृतः।नाऽब्राह्मणान्यादोषान्प्राप्नोति याजयन्निति ट।थ।द।पाठः
॥
१२-१३२-११ स्तव्या ग्रामवासिनः ॥
१२-१३२-१६ एवं त्विगादीनामदड- लिखितस्य भ्रातुरपि हस्तच्छेदः
कृतस्तादृशधर्मपरा ॥
१२-१३२-१९ सद्भिर्मन्वादिभिः सत्कृतः
।भूतिप्रवरकारणैः भूतिप्रवरा ईश्वराः कारणानि
पारम्पर्यागतानि कुलदेशग्रामादिपरिगृहीतानि तैरपि
निमित्तैः सत्कृतः।मन्वादिभिरनुक्तोऽपि शिष्टैरादृत
इत्यर्थः।हृदयेनाभ्यनुज्ञातः हेतुद्वयाभावेऽपि स्वयं च यो
धर्मत्वेन निश्चितः ॥
१२-१३२-२० चत्वारो गुणाः आन्वीक्षिकी त्रयी वार्ता दण्डनीतिश्चेति ।य
एषामविरुद्धश्चतुर्गुणसंपन्नः ॥
१२-१३२-२१ पदं स्थानं लक्षेल्लक्षयेत् ।नयेत् अन्यान्प्रापयेत्।युक्त्येति
शेषः ॥

---

शन्तिपर्व-अध्यय१३३
॥श्रीः ॥

१२.१३३. अध्यायः १३३

Mahabharata - Shanti Parva - Chapter Topics
भीष्मेण युधिष्ठिरंप्रति राज्ञा यथाकथंचित्कोशवृद्धेः कर्तव्यत्वोक्तिः ॥ १.। तथा दस्युभिरापद्यपि सावशेषं परस्वापहा धर्म्यत्वोक्तिः ॥ २.।
Mahabharata - Shanti Parva - Chapter Text

१२-१३३-० (६९९९२)
भीष्म उवाच। १२-१३३-०क्ष् (५७१७)
स्वराष्ट्रात्परराष्ट्राच्च कोशं संजनयेन्नृपः ।
कोशाद्धि धर्मः कौन्तेय राज्यमूलं प्रवर्तते ॥ १२-१३३-१ (६९९९३)
तस्मात्संजनयेत्कोशं सत्कृत्य परिपालयेत् ।
परिपाल्यानुगृह्णीयादेव धर्मः सनातनः ॥ १२-१३३-२ (६९९९४)
स कोशः शुद्धभावेन न नृशंसेन जायते ।
मध्यमं पदमास्थाय कोशसंग्रहणं चरेत् ॥ १२-१३३-३ (६९९९५)
अबलस्य कुतः कोशो ह्यकोशस्य कुतो बलम् ।
अबलस्य कुतो राज्यमराज्ये श्रीर्भवेत्कुतः ॥ १२-१३३-४ (६९९९६)
उच्चैर्वृत्तेः श्रियो हानिर्यथैव मरणं तथा ।
तस्मात्कोशं बलं मित्रमथ राजा विवर्धयेत् ॥ १२-१३३-५ (६९९९७)
हीनकोशं हि राजानमवमन्यन्ति शत्रवः ।
न चास्याल्पे तुष्यन्ति कर्मणाऽप्युत्सहन्ति च ॥ १२-१३३-६ (६९९९८)
श्रियो हि कारणाद्राजा सत्क्रियां लभते पराम् ।
साऽस्य गूहति पापानि वासो गुह्यमिव स्त्रियाः ॥ १२-१३३-७ (६९९९९)
ऋद्धिमस्यानुतप्यन्ते पुरा विप्रकृता नराः ।
सालावृका इवाजस्नं जिघांसूनेव विन्दति ।
ईदृशस्य कुतो राज्यं सुखं भरतसत्तम ॥ १२-१३३-८ (७००००)
उद्यच्छेदेव न ग्लायेदुद्यमो ह्येव पौरुषम् ।
अप्यपर्वणि भज्येत न नमेतेह कस्यचित् ॥ १२-१३३-९ (७०००१)
अप्यरण्यं समाश्रित्य चरेन्मृगगणैः सह ।
न त्वेवोद्रिक्तमर्यादैर्दस्युभिः सहितश्चरेत् ॥ १२-१३३-१० (७०००२)
दस्यूनां सुलभा सेना रौद्रकर्मसु भारत ।
एकान्ततो ह्यमर्यादात्सर्वोऽप्युद्विजते जनः ॥ १२-१३३-११ (७०००३)
दस्यवोऽप्यभिशङ्कन्ते निरनुक्रोशकारिणः ॥ १२-१३३-१२ (७०००४)
स्थापयेदेव मर्यादां जनचित्तप्रसादिनीम् ।
अल्पाप्यर्थेषु मर्यादा लोके भवति पूजिता ॥ १२-१३३-१३ (७०००५)

नायं लोकोऽस्ति न पर इति व्यवसितो जनः ।
नालं गन्तुमिहाश्वासं नास्तिक्यभयशङ्कितैः ॥ १२-१३३-१४ (७०००६)
यथा सद्भिः परादानमहिंसा दस्युभिस्तथा ।
अनुरज्यन्ति भूतानि समर्यादेषु दस्युषु ॥ १२-१३३-१५ (७०००७)
अयुध्यमानस्यादानं दारामर्शः कृतघ्नता ।
ब्रह्मवित्तस्य चादानं निःशेषकरणं तथा ॥ १२-१३३-१६ (७०००८)
स्त्रिया मोषः पथिस्थानं साधुष्वेव विगर्हितम् ।
सदोष एव भवति दस्युरेतानि वर्जयेत् ॥ १२-१३३-१७ (७०००९)
अभिसंदधते ये च विनाशायास्य भारत ।
सशेषमेवोपलभ्य कुर्वन्तीति विनिश्चयः ॥ १२-१३३-१८ (७००१०)
तस्मात्सशेषं कर्तव्यं स्वाधीनमपि दस्युभिः ।
न बलस्थोऽहमस्मीति नृशंसानि समाचरेत् ॥ १२-१३३-१९ (७००११)
सशेषकारिणस्तत्र शेषं पश्यन्ति सर्वशः ।
निःशेषकारिणो नित्यं निःशेषकरणाद्भयम् ॥ ॥ १२-१३३-२० (७००१२)

इति श्रीमन्महाभारते शान्तिपर्वणि आपद्धर्मपर्वणि
त्रयस्त्रिंशदधिकशततमोऽध्यायः ॥ १३३.।

Mahabharata - Shanti Parva - Chapter Footnotes

१२-१३३-५ उच्चैर्वृत्तेः महतः ॥
१२-१३३-७ वासः पापमिव स्त्रिय इति ट ।ड।थ।पाठः ॥
१२-१३३-८ विप्रकृताः सालावृकवत् जिघांसूनेव विन्दन्ति आश्रयन्ति
कपटेन हन्तुम् ।आर्षो वचनव्यत्ययः ॥
१२-१३३-१० दस्युभिः दस्युप्रायैरमात्यैः ॥
१२-१३३-११ अत्यन्तापन्नस्य वनस्था दस्यवोऽपि कार्यकरा इत्याह
दस्यूनामिति ।दस्यूनां सुलभां सेनां रौद्रकर्मसु कारयेदिति
ध।पाठः।तेष्वपि सत्येन मार्दवेन च स्थेयमित्याह एकान्तत इति ॥
१२-१३३-१४ जनः प्राकृतः ।अलं पर्याप्तं युक्तमित्यर्थः ॥
१२-१३३-१५ सद्भिर्दस्युभिः परादानं परस्वहरणमपि कृत अहिंसा
भवति तथा वक्ष्ये इत शेषः ॥
१२-१३३-१६ निःशेषकरणं सर्वहरणम् ॥
१२-१३३-१७ स्त्रिया कन्यायाः मोषश्चौर्यम् ॥
१२-१३३-१९ यस्मादेवं तस्मात् सशेषभेपरलुम्पनं कर्तव्यम् ॥
१२-१३३-२० यो यथा करोति तथैव प्रजा कुर्वन्तीत्याह सशेषेति ॥

---

शन्तिपर्व-अध्यय१३४

॥ श्रीः ॥
१२.१३४. अध्यायः १३४

Mahabharata - Shanti Parva - Chapter Topics
भीष्मेण युधिष्ठिरंप्रति बलप्रशंसनम् ॥ १.। तथा पापकारिणां तत्परिहारोपायकथनम् ॥ २.।
Mahabharata - Shanti Parva - Chapter Text

१२-१३४-० (७००१३)
भीष्म उवाच। १२-१३४-०क्ष् (५७१८)
ग्अत्राप्युदाहरन्तीममितिहासं पुरातनम्।'
अत्र कामन्दवचनं कीर्तयन्ति पुराविदः ।
प्रत्यक्षावेव धर्मार्थौ क्षत्रियस्य विजानतः ॥ १२-१३४-१ (७००१४)
तौ तु न व्यवधातव्यौ परोक्षा धर्मयातना ।
अधर्मो धर्म इत्येतद्यथा वृक्षफलं तथा ॥ १२-१३४-२ (७००१५)
धर्माधर्मफले जातु ददर्शेह न कश्चन ।
वुभूषेद्बलमेवैतत्सर्वं बलवतो वशे ॥ १२-१३४-३ (७००१६)
श्रियं बलममात्यांश्च बलवानिह विन्दति ।
यो ह्यनाढ्यः स पतितस्तदुच्छिष्टं यदल्पकम् ॥ १२-१३४-४ (७००१७)
बह्वपथ्ये बलवति न किंचित्क्रियते भयात् ।
उभौ सत्याधिकारौ तौ त्रायेते महतो भयात् ॥ १२-१३४-५ (७००१८)
अति धर्माद्बलं मन्ये बलाद्धर्मः प्रवर्तते ।
बले प्रतिष्ठितो धर्मो धरण्यामिव जंगमः ॥ १२-१३४-६ (७००१९)
धूमो वायोरिव वशे बलं धर्मोऽनुवर्तते ।
अनीश्वरो बलं धर्मो द्रुमं वल्लीव संश्रिता ॥ १२-१३४-७ (७००२०)
वशे बलवतां धर्मः सुखं भोगवतामिव ।
नास्त्यसाध्यं बलवतां सर्वं बलवता जितम् ॥ १२-१३४-८ (७००२१)
दुराचारः क्षीणबलः परिमाणं न गच्छति ।
अथ तस्मादुद्विजते सर्वो लोको वृकादिव ॥ १२-१३४-९ (७००२२)
अपध्वस्तो ह्यवमतो दुःखं जीवति जीवितम् ।
जीवितं यदधिक्षिप्तं यथैव मरणं तथा ॥ १२-१३४-१० (७००२३)
यदेवमाहुः पापेन चारित्रेण विवक्षितम् ।
सुभृशं तप्यते तेन वाक्षल्येन परिक्षतः ॥ १२-१३४-११ (७००२४)
अत्रैतदाहुराचार्याः पापस्य परिमोक्षणे ।
त्रयीं विद्यामुपासीत तथोपासीत वै द्विजान् ॥ १२-१३४-१२ (७००२५)
प्रसादयेन्मधुरया वाचा चाप्यथ कर्मणा ।

महामनाश्चैव भवेद्विवहेच्च महाकुले ॥ १२-१३४-१३ (७००२६)
इत्यस्तीति वदेदेव परेषां कीर्तयेद्गुणान् ।
जपेदुदकशीलः स्यात्पेशलो नातिजल्पकः ॥ १२-१३४-१४ (७००२७)
ब्रह्म क्षत्रं संप्रविशेद्बहु कृत्वा सुदुष्करम् ।
उच्यमानो हि लोकेन बहु तत्तदचिन्तयन् ॥ १२-१३४-१५ (७००२८)
उपप्राप्यैवमाचारं क्षिप्रं बहुमतो भवेत् ।
सुखं च वित्तं भुञ्जीत वृत्तेनैकेन गोपयेत् ॥ १२-१३४-१६ (७००२९)
ग्अपि तेभ्यो मृगान्हत्वा नयेच्च सततं वने ।
यस्मिन्न प्रतिगृह्णन्ति दस्युभोजनशङ्कया।'
लोके च लभते पूजां परत्रेह महत्फलम् ॥ ॥ १२-१३४-१७ (७००३०)

इति श्रीमन्महाभारते शान्तिपर्वणि आपद्धर्मपर्वणि
चतुस्त्रिंशदधिशततमोऽध्यायः ॥ १३४.।
Mahabharata - Shanti Parva - Chapter Footnotes

१२-१३४-२ यथा वृकपदंस्थेति झ ।द। पाठः ॥
१२-१३४-६ अति अतिशयितम् ॥
१२-१३४-१० अपध्वस्तः ऐश्वर्याच्च्युतः ॥
१२-१३४-१२ अत्राधर्मेण धनार्जने कृते सति ॥

---

शन्तिपर्व-अध्यय१३५
॥ श्रीः ॥
१२.१३५. अध्यायः १३५

Mahabharata - Shanti Parva - Chapter Topics
भीष्मेण युधिष्ठिरंप्रति दस्युभावेऽपि शास्त्रमर्यादानुसारिणः
परलोकप्राप्तौ दृष्टान्ततया कापच्यचरितोपन्यासः ॥ १.।
Mahabharata - Shanti Parva - Chapter Text

१२-१३५-० (७००३१)
भीष्म उवाच। १२-१३५-०क्ष् (५७१९)
अत्राप्युदाहन्तीममितिहासं पुरातनम् ।
यथा दस्युः समर्यादो दस्युत्वात्सिद्धिमाप्तवान् ॥ १२-१३५-१ (७००३२)
प्रहर्ता मतिमाञ्शूरः श्रुतवान्सुनृशंसवान् ।
अक्षन्नाश्रमिणां धर्मं ब्रह्मण्यो गुरुपूजकः ॥ १२-१३५-२ (७००३३)
अनिषाद्यां क्षत्रियाज्जातः क्षत्रधर्मानुपालकः ।
कापच्यो नाम नैषादिर्दस्युत्वात्सिद्धिमाप्तवान् ॥ १२-१३५-३ (७००३४)

अरण्ये सायं पूर्वाह्णे मृगयूथप्रकोपिता ।
वेधिज्ञो मृगजातीनां नैषादानां च कोविदः ॥ १२-१३५-४ (७००३५)
सर्वकाननदेशज्ञः पारियात्रचरः सदा ।
धर्मज्ञः सर्ववर्णानाममोघेषुर्दृढायुधः ॥ १२-१३५-५ (७००३६)
अप्यनेकशतां सेनामेक एव जिगाय सः ।
स वृद्धावम्बपितरौ महारण्येऽभ्यपूजयत् ॥ १२-१३५-६ (७००३७)
मधुमांसैर्मूलफलैरन्नैरुच्चावचैरपि ।
सत्कृत्य भोजयामास सम्यक्परिचचार ह ॥ १२-१३५-७ (७००३८)
आरण्यकान्प्रव्रजितान्ब्राह्मणान्परिपालयन् ।
अपि तेभ्यो मृगान्हत्वा निनाय सततं वने ॥ १२-१३५-८ (७००३९)
येऽस्मान्न प्रतिगृह्णन्ति दस्युभोजनशङ्कया ।
तेषामासज्य गेहेषु कल्य एव स गच्छति ॥ १२-१३५-९ (७००४०)
तं बहूनि सहस्राणि ग्रामणीत्वेऽभिवव्रिरे ।
निर्मर्यादानि दस्यूनां निरनुक्रोशवर्तिनाम् ॥ १२-१३५-१० (७००४१)
दस्यव ऊचुः। १२-१३५-११क्ष् (५७२०)
मुहूर्तदेशकालज्ञः प्राज्ञः शूरो दृढव्रतः ।
ग्रामणीर्भव नो मुख्यः सर्वेषामेव संमतः ॥ १२-१३५-११ (७००४२)
यथायथा वक्ष्यसि नः करिष्यामस्तथातथा ।
पालयास्मान्यथान्यायं यथा माता यथा पिता ॥ १२-१३५-१२ (७००४३)
कापच्य उवाच। १२-१३५-१३क्ष् (५७२१)
मा वधीस्त्वं स्त्रियं भीरुं मा शिशुं मा तपस्विनम् ।
नायुध्यमानो हन्तव्यो न च ग्राह्या बलात्स्त्रियः ॥ १२-१३५-१३ (७००४४)
सर्वथा स्त्री न हन्तव्या सर्वसत्वेषु बुध्यत ।
नित्यं गोब्राह्मणे स्वस्ति योद्धव्यं च तदर्थतः ॥ १२-१३५-१४ (७००४५)
सत्यं च नापि हर्तव्यं सारविघ्नं च मा कृथाः ।
पूज्यन्ते यत्र देवाश्च पितरोऽतिथयश्च ह ॥ १२-१३५-१५ (७००४६)
सर्वभूतेष्वपि वरो ब्राह्मणो मोक्षमर्हति ।
कार्या चापचितिस्तेषां सर्वस्वेनापि भावयेत् ॥ १२-१३५-१६ (७००४७)
यस्य त्वेते संप्रदुष्टास्तस्य विद्यात्पराभवम् ।
न तस्य त्रिषु लोकेषु त्राता भवति कस्चन ॥ १२-१३५-१७ (७००४८)
यो ब्राह्मणान्परिभवेद्विनाशं चापि रोचयेत् ।
सूर्योदय इव ध्वान्ते ध्रुवं तस्य पराभवः ॥ १२-१३५-१८ (७००४९)
इहैव फलमासीनः प्रत्याकाङ्क्षेत सर्वशः ।
येये नो न प्रदास्यन्ति तांस्तांस्तेनाभियास्यसि ॥ १२-१३५-१९ (७००५०)
शिष्ट्यर्थं विहितो दण्डो न वधार्थं विधीयते ।
ये च शिष्टान्प्रबाधन्ते धर्मस्तेषां वधः स्मृतः ॥ १२-१३५-२० (७००५१)

ये च राष्ट्रोपरोधेन वृद्धिं कुर्वन्ति केचन ।
तानेवानुम्रियेरंस्ते कुणपं कृमयो यथा ॥ १२-१३५-२१ (७००५२)
ये पुनर्धर्मशास्त्रेण वर्तेरन्निह दस्यवः ।
अपि ते दस्यवो भूत्वा क्षिप्रं सिद्धिमवाप्नुयुः। १२-१३५-२२ (७००५३)
भीष्म उवाच। १२-१३५-२३क्ष् (५७२२)
ते सर्वमेवानुचक्रुः कापच्यस्यानुशासनम् ।
वृद्धिं च लेभिरे सर्वे पापेभ्यश्चाप्युपारमन् ॥ १२-१३५-२३ (७००५४)
कापच्यः कर्मणा तेन महतीं सिद्धिमाप्तवान् ।
साधूनामाचरन्क्षेमं दस्यून्पापान्निवर्तयन् ॥ १२-१३५-२४ (७००५५)
इदं कापच्यचरितं यो नित्यमनुचिन्तयेत् ।
नारण्येभ्योऽपि भूतेभ्यो भयमृच्छेत्कथंचन ॥ १२-१३५-२५ (७००५६)
न भयं तस्य मर्त्येभ्यो नामर्त्येभ्यः कथंचन ।
न सतो नासतो राजन्स ह्यरण्येषु गोपतिः ॥ ॥ १२-१३५-२६ (७००५७)

इति श्रीमन्महाभारते शान्तिपर्वणि आपद्धर्मपर्वणि
पञ्चत्रिंशदधिकशततमोऽध्यायः ॥ १३५.।

Mahabharata - Shanti Parva - Chapter Footnotes

१२-१३५-३ कायव्यो नामेति झ । पाठः। कापव्यो नामेति
ट। पाठः। काश्यपो नामेति ध। पाठः ॥
१२-१३५-४ निपातानां च कोविद इति ड । थ। ध। पाठः ॥
१२-१३५-५ पारियात्रः पर्वतविशेषः ॥
१२-१३५-९ आसज्य क्वचिन्निधाय । कल्ये प्रातः ॥
१२-१३५-१३ मावधीस्त्वमित्येकवचनं गणाभिप्रायेण ॥
१२-१३५-१४ स्वस्ति कल्याणं चिन्तनीयम् ॥
१२-१३५-१५ सारो विवाहादिकार्यं तत्र विघ्नं मा कृथाः । सस्यं च
नोपहन्तव्यं सीरविघ्नं च मा कृथाः इति ट। ड। थ। पाठः ॥
१२-१३५-१६ अपचितिः पूजा ॥
१२-१३५-१८ ध्वान्ते ध्वान्तस्य ॥
१२-१३५-१९ ये ये वणिजः । नः अस्मभ्यम् ॥
१२-१३५-२० शिष्ट्यर्थं दुष्टानां शासनार्थम् ॥

---

शन्तिपर्व-अध्यय१३६
॥ श्रीः ॥
१२.१३६. अध्यायः १३६

Mahabharata - Shanti Parva - Chapter Topics

भीष्मेण युधिष्ठिरंप्रति
कोशवृद्ध्यर्थमपहार्यानपहार्यधनविवेचनम् ॥ १.।
Mahabharata - Shanti Parva - Chapter Text

१२-१३६-० (७००५८)
भीष्म उवाच। १२-१३६-०क्ष् (५७२३)
अत्र गाथा ब्रह्मगीताः कीर्तयन्ति पुराविदः ।
येन मार्गेण राजानः कोशं संजनयन्त्युत ॥ १२-१३६-१ (७००५९)
न धनं यज्ञशीलानां हार्यं देवस्वमेव च ।
दस्यूनां निष्क्रियाणां च क्षत्रियो हर्तुमर्हति ॥ १२-१३६-२ (७००६०)
इमाः प्रजाः क्षत्रियाणां रक्ष्या हन्याश्च भारत ।
थनं हि क्षत्रियस्येह द्वितीयस्य न विद्यते ॥ १२-१३६-३ (७००६१)
तदस्य स्याद्बलार्थं वा धनं यज्ञार्थमेव वा ।
अभोज्याश्चौषधीश्छित्त्वा भोज्या एव पचन्त्युत ॥ १२-१३६-४ (७००६२)
यो वै न देवान्न पितृन्न मर्त्यान्हविषाऽर्चति ।
अनर्थकं धनं तत्र प्राहुर्धर्मविदो जनाः ॥ १२-१३६-५ (७००६३)
हरेत्तद्द्रविणं राजन्धार्मिकः पृथिवीतिः ।
न हि न प्रीणयेल्लोकान्न लोके गर्हते नृपम् ॥ १२-१३६-६ (७००६४)
असाधुभ्योऽर्थमादाय साधुभ्यो यः प्रयच्छति ।
आत्मानं संक्रमं कृत्वा मन्ये धर्मविदेव सः ॥ १२-१३६-७ (७००६५)
श्तथातथा जयेल्लोकाञ्शक्त्या चैव यथायथा ॎ
औद्भिदा जन्तवो यद्वच्छुत्वा वाजो यथातथा ॥ १२-१३६-८ (७००६६)
अनिमित्तात्संभवन्ति तथा यज्ञः प्रजायते ।
यथैव दंशमशकं यथा कीटपिपीलिकम् ॥ १२-१३६-९ (७००६७)
सैव वृत्तिर्हि यज्ञेषु यथा धर्मो विधीयते ॥ १२-१३६-१० (७००६८)
यथा ह्यकस्माद्भवति भूमौ पांसुस्तृणोलपम् ।
तथैवेह भवेद्धर्मः सूक्ष्मः सूक्ष्मतरः स्मृतः ॥ ॥ १२-१३६-११
(७००६९)

इति श्रीमन्महाभारते शान्तिपर्वणि आपद्धर्मपर्वणि
षट्त्रिंशदधिकशततमोऽध्यायः ॥ १३६.।
Mahabharata - Shanti Parva - Chapter Footnotes

१२-१३६-४ औषधीश्छित्त्वा ताभिरिन्धनीकृताभिर्भोज्या व्रीह्याद्याः
। दुष्टान् हिंसित्वा साधून्पालयेदिति भावः ॥

॥ श्रीः ॥
१२.१३७. अध्यायः १३७

Mahabharata - Shanti Parva - Chapter Topics
भीष्मेण युधिष्ठिरंप्रति अनागतापत्प्रतिविधाने दृष्टान्ततया मत्स्योपाख्यानकथनम् ॥ १.।
Mahabharata - Shanti Parva - Chapter Text

१२-१३७-० (७००७०)
भीष्म उवाच। १२-१३७-०क्ष् (५७२४)
अनागतविधाता च प्रत्युत्पन्नमतिश्च यः ।
द्वावेतौ सुखमेधेते दीर्घसूत्री विनश्यति ॥ १२-१३७-१ (७००७१)
अत्रैव चेदमव्यग्रं शृण्वाख्यानमनुत्तमम् ।
द्रीर्घसूत्रमुपाश्रित्य कार्याकार्यविनिश्चये ॥ १२-१३७-२ (७००७२)
नातिगाधे जलस्थाने सुहृदः कुशलास्त्रयः ।
प्रभूतमत्स्ये कौन्तेय बभूवुः सहचारिणः ॥ १२-१३७-३ (७००७३)
तत्रैकः प्राप्तकालज्ञो दीर्घदर्शी तथाऽपरः ।
दीर्घसूत्रश्च तत्रैकस्त्रयाणां जलचारिणाम् ॥ १२-१३७-४ (७००७४)
कदाचित्तज्जलस्थानं मत्स्यबन्धाः समन्ततः ।
स्रावयामासुरथो निम्नेषु विविधैर्मुखैः ॥ १२-१३७-५ (७००७५)
क्षीयमाणं तद्बुद्ध्वा जलस्थानं भयागमे ।
अब्रवीद्दीर्घदर्शी तु तावुभौ सुहृदौ तदा ॥ १२-१३७-६ (७००७६)
ज्ञयमापत्समुत्पन्ना सर्वेषां सलिलौकसाम् ।
शीघ्रमन्यत्र गच्छामः पन्था यावन्न शुष्यति ॥ १२-१३७-७ (७००७७)
अनागतमनर्थं हि सुनयैर्यः प्रबाधते ।
स न संशयमाप्नोति तथाऽन्यत्र व्रजामहे ॥ १२-१३७-८ (७००७८)
शीर्घसूत्रस्तु यस्तत्र सोऽब्रवीत्सम्यगुष्यताम् ।
न तु कार्या त्वरा तावदिति मे निश्चिता मतिः ॥ १२-१३७-९ (७००७९)
अथ संप्रतिपत्तिज्ञस्त्वब्रवीद्दीर्घदर्शिनम् ।
प्राप्ते काले न मे किंचिन्न्यायतः परिहास्यते ॥ १२-१३७-१० (७००८०)
एवप्नुक्तो निराक्रामद्दीर्घदर्शी महामतिः ।
अगाम स्रोतसैकेन गम्भीरं सलिलाशयम् ॥ १२-१३७-११ (७००८१)
ततः प्रसृततोयं तं प्रसमीक्ष्य जलाशयम् ।
बबन्धुर्विविधैर्योगैर्मत्स्यान्मत्स्योपजीविनः ॥ १२-१३७-१२ (७००८२)
विलोड्यमाने तस्मिंस्तु स्रुततोये जलाशये ।

अगच्छद्‍ग्रहणं तत्र दीर्घसूत्रः सहापरै----॥ १२-१३७-१३ (७००८३)
उद्दानं क्रियमाणं तु मत्स्यानां ------।
प्रविश्यान्तरमन्येषामग्रसत्प्रति-------॥ १२-१३७-१४ (७००८४)
ग्रस्तमेव तदुद्दानं गृहीत्वा----सः ।
सर्वानेव च तांस्तत्र ते वि--- इति ॥ १२-१३७-१५ (७००८५)
ततः प्रक्षाल्यमानेषु मत्स्येषु विपुले जले ।
त्वक्त्वा रज्जुं प्रमुक्तोसौ शीघ्रं संप्रतिपत्तिमान् ॥ १२-१३७-१६ (७००८६)
दीर्घसूत्रस्तु मन्दात्मा हीनेयुद्धिरचेतनः ।
मरणं प्राप्तवान्मूढो यथैवोपहतेन्द्रियः ॥ १२-१३७-१७ (७००८७)
एवं प्राप्ततमं कालं यो मोहान्नावबुध्यते ।
स विनश्यति वै क्षिप्रं दीर्घसूत्रो यथा झषः ॥ १२-१३७-१८ (७००८८)
आदौ न कुरुते श्रेयः कुशलोऽस्मीति यः पुमान् ।
स हि संशयमाप्नोति यथा संप्रतिपत्तिमान् ॥ १२-१३७-१९ (७००८९)
अनागतविधाता च प्रत्युत्पन्नमतिश्च यः ।
द्वावेतौ सुखमेधेते दीर्घसूत्री विनश्यति ॥ १२-१३७-२० (७००९०)
काष्ठा कला मुहूर्ताश्च दिनरात्र्यः क्षणा लवाः ।
मासाः पक्षाः षड्तवः कालः संवत्सराणि च ॥ १२-१३७-२१ (७००९१)
पृथिवी देश इत्युक्तः स च कालो न दृश्यते ।
अभिप्रेतार्थसिद्ध्यर्थं दूरतो न्यायतस्तथा ॥ १२-१३७-२२ (७००९२)
एतौ धर्मार्थशास्त्रेषु मोक्षशास्त्रेषु चर्षिभिः ।
प्रधानाविति निर्दिष्टौ कामे चाभिमतौ नृणाम् ॥ १२-१३७-२३ (७००९३)
परीक्ष्यकारी युक्तश्च स सम्यगुपपादयेत् ।
देशकालावभिप्रेतौ तोभ्यां फलमवाप्नुयात् ॥ ॥ १२-१३७-२४ (७००९४)

इति श्रीमन्महाभारते शान्तिपर्वणि आपद्धर्मपर्वणि
सप्तत्रिंशदधिकशततमोऽध्यायः ॥ १३७.।

Mahabharata - Shanti Parva - Chapter Footnotes

१२-१३७-४ तत्रैको दीर्घकालज्ञ उत्पन्नप्रतिभोऽपरः इति झ ।पाठः ॥
१२-१३७-५ विविधैर्मुखैर्जलनिर्गमनमार्गैः ॥
१२-१३७-११ सलिलाशयं जलाशयान्तरम् ॥
१२-१३७-१४ उद्दानं ग्रथनं अग्रसत् ग्रथनसूत्रं मुखेन जग्राहेत्यर्थः ॥
१२-१३७-१५ सच मत्स्यः तथैव गृहीतवदेव तत्रास्ते इति शेषः ॥
१२-१३७-२१ कालस्य देशस्य च सूक्ष्मतां अवहितो जानीयादिति
श्लोकद्वयार्थः ॥
१२-१३७-२३ एतौ देशकालौ ॥

॥ श्रीः ॥
१२.१३८. अध्यायः १३८

Mahabharata - Shanti Parva - Chapter Topics
भीष्मेण युधिष्ठिरंप्रति आपदि शत्रुणापि संधिकरणविषये
दृष्टान्ततया मार्जारमूषिकचरितकथनम् ॥ १.।
Mahabharata - Shanti Parva - Chapter Text

१२-१३८-० (७००९५)
युधिष्ठिर उवाच। १२-१३८-०क्ष् (५७२५)
सर्वत्र बुद्धिः कथिता श्रेष्ठा ते भरतर्षभ ।
अनागता तथोत्पन्ना दीर्घसूत्रा विनाशिनी ॥ १२-१३८-१ (७००९६)
तदिच्छामि परां बुद्धिं श्रोतुं ते भरतर्षभ ।
यथा राजा न मुह्येत शत्रुभिः परिपीडितः ॥ १२-१३८-२ (७००९७)
------याज्ञं सर्वशास्त्रविशारदम् ।
पृच्छ------- तन्मे व्याख्यातुमर्हसि ॥ १२-१३८-३ (७००९८)
शत्रुभिबहु------था मुच्येत पार्थिवः ।
एतदिच्छाम्य------र्वमेव यथाविधि ॥ १२-१३८-४ (७००९९)
विषमस्थं हि राजा----त्रवः परिपन्थिनः ।
बहवोऽप्येकमुद्धर्तुं यतन्ते पूर्वतापिताः ॥ १२-१३८-५ (७०१००)
सर्वतः प्रार्थ्यमानेन दर्बलेन महाबलैः ।
एकेनैवासहायेन शक्यं स्थातुं भवेत्कथम् ॥ १२-१३८-६ (७०१०१)
कथं मित्रमरिं चापि विन्देत भरतर्षभ ।
चेष्टितव्यं कथं चात्र शत्रोर्मित्रस्य चान्तरे ॥ १२-१३८-७ (७०१०२)
अजातलक्षणे राजन्नमित्रे मित्रतां गते ।
कथं नु पुरुषः कुर्यात्कृत्वा किं वा सुखी भवेत् ॥ १२-१३८-८ (७०१०३)
विग्रहं केन वा कुर्यात्संधिं वा केन योजयेत् ।
कथं वा शत्रुमध्यस्थो वर्तेत बलवानपि ॥ १२-१३८-९ (७०१०४)
एतद्वै सर्वकृत्यानां परं कृत्यं नराधिप ।
नैतस्य कश्चिद्वक्ताऽस्ति श्रोता वाऽपि सुदुर्लभः ॥ १२-१३८-१० (७०१०५)
ऋते पितामहाद्भीष्मात्सत्यसंधाज्जितेन्द्रियात् ।
तदन्वीक्ष्य महाभाग सर्वमेतद्ब्रवीहि मे ॥ १२-१३८-११ (७०१०६)
भीष्म उवाच। १२-१३८-१२क्ष् (५७२६)
त्वद्युक्तोऽयमनुप्रश्नो युधिष्ठिर गुणोदयः ।
शृणु मे पुत्र कार्त्स्न्येन गुह्यमापत्सु भारत ॥ १२-१३८-१२ (७०१०७)

अमित्रो मित्रतां याति मित्रं चापि प्रदुष्यति ।
सामर्थ्ययोगात्कार्याणामनित्या हि सदा गतिः ॥ १२-१३८-१३ (७०१०८)
तस्माद्विश्वसितव्यं च विग्रहं च समाचरेत् ।
देशं कालं च विज्ञाय कार्याकार्यविनिश्चये ॥ १२-१३८-१४ (७०१०९)
संधातव्यं बुधैर्नित्यं व्यवस्य च हितार्थिभिः ।
अमित्रैरपि संधेयं प्राणा रक्ष्या हि भारत ॥ १२-१३८-१५ (७०११०)
यो ह्यमित्रैर्नरैर्नित्यं न संदध्यादपण्डितः ।
न सोर्थं प्राप्नुयात्किंचित्फलान्यपि च भारत ॥ १२-१३८-१६ (७०१११)
यस्त्वमित्रेण संधत्ते मित्रेण च विरुध्यते ।
अर्थयुक्तिं समालोक्य सुमहद्विन्दते फलम् ॥ १२-१३८-१७ (७०११२)
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
मार्जारस्य च संवादं न्यग्रोधे मूषिकस्य च ॥ १२-१३८-१८ (७०११३)
वने महति कस्मिंश्चिन्न्यग्रोधः सुमहानभूत् ।
लताजालपरिच्छन्नो नानाद्विजगणायुतः ॥ १२-१३८-१९ (७०११४)
स्कन्धवान्मेघसंकाशः शीतच्छायो मनोरमः ।
अरण्यमभितो जातस्तरुर्व्यालमृगायुतः ॥ १२-१३८-२० (७०११५)
तस्य मूलमुपाश्रित्य कृत्वा शतमुखं बिलम् ।
वसति स्म महाप्राज्ञः पलितो नाम मूषिकः ॥ १२-१३८-२१ (७०११६)
शाखां तस्य समाश्रित्य वसति स्म सुखं तदा ।
लोमशो नाम मार्जारः सर्वसत्वावसादकः ॥ १२-१३८-२२ (७०११७)
तत्र त्वागत्य चण्डालो ह्यरण्यकृतकेतनः ।
युयोज यन्त्रमुन्माथं नित्यमस्तंगते रवौ ॥ १२-१३८-२३ (७०११८)
तत्र स्नायुमयान्पाशान्यथावत्संविधाय सः ।
गृहं गत्वा सुखं शेते प्रभातामेति शर्वरीम् ॥ १२-१३८-२४ (७०११९)
तत्र स्म नित्यं बध्यन्ते नक्तं बहुविधा मृगाः ।
कदाचिदत्र मार्जारः संप्रवृत्तो व्यबध्यत ॥ १२-१३८-२५ (७०१२०)
तस्मिन्बद्धे महाप्राणे शत्रौ नित्याततायिनि ।
तं कालं पलितो ज्ञात्वा प्रचचार सुनिर्भयः ॥ १२-१३८-२६ (७०१२१)
तेनानुचरता तस्मिन्वते विश्वस्तचारिणा ।
भक्ष्यं मृगयमाणे नचिराद्दृष्टमामिषम् ॥ १२-१३८-२७ (७०१२२)
स तमुन्माथमारुह्य तदामिषमभक्षयत् ।
तस्योपरि सपत्नस्य बद्धस्य मनसा हसन् ॥ १२-१३८-२८ (७०१२३)
आमिषे तु प्रसक्तः स कदाचितवलोकयन् ।
अपश्यदपरं घोरमात्मनो रिपुमागतम् ॥ १२-१३८-२९ (७०१२४)
शरप्रसूनसंकाशं महीविवरशायिनम् ।
सकुलं हरिकं नाम चपलं ताम्रलोचनम् ॥ १२-१३८-३० (७०१२५)

तन मूषिकगन्धेन त्वरमाण उपागतम् ।
सक्ष्यार्थं लेलिहन्वक्रं भूमावूर्ध्वमुखः स्थितः ॥ १२-१३८-३१ (७०१२६)
--आखागतमरिं चान्यमपश्यत्कोटरालयम् ।
सूलकं चन्द्रकं नाम वक्रतुण्डं दुरासदम् ॥ १२-१३८-३२ (७०१२७)
पतस्य विषयं तस्य नकुलोलूकयोस्तथा ।
यथास्यासीदियं चिन्ता तत्प्राप्तस्य महद्भयम् ॥ १२-१३८-३३ (७०१२८)
पपद्यस्यां सुकष्टायां मरणे समुपस्थिते ।
मन्ताद्भय उत्पन्ने कथं कार्यं मनीषिणा ॥ १२-१३८-३४ (७०१२९)
तथा सर्वतो रुद्धः सर्वत्र भयकर्शितः ।
भवद्भयसंत्रस्तश्चक्रे च परमां मतिम् ॥ १२-१३८-३५ (७०१३०)
आपद्विनाशभूयिष्ठं शङ्कनीयं हि जीवितम् ।
मन्तात्संशयः सोऽयं तस्मादापदुपस्थिता ॥ १२-१३८-३६ (७०१३१)
गतं हि सहसा भूमिं नकुलो मामवाप्नुयात् ।
उलूकश्चेह तिष्ठन्तं मार्जारः पाशसंक्षयात् ॥ १२-१३८-३७ (७०१३२)
न त्वेवास्मद्विधः प्राज्ञः संमोहं गन्तुमर्हति ।
रिष्ये जीविते यत्नं यावदुच्छ्वासनिग्रहात् ॥ १२-१३८-३८ (७०१३३)
न हि बुद्ध्याऽन्वितः प्राज्ञो नीतिशास्त्रविशारदः ।
निमज्जत्यापदं प्राप्य महतोऽर्थानवाप्य ह ॥ १२-१३८-३९ (७०१३४)
न त्वन्यामिह मार्जाराद्गतिं पश्यामि सांप्रतम् ।
विषमस्थो ह्ययं शत्रुः कृत्यं चास्य महन्मया ॥ १२-१३८-४० (७०१३५)
जीवितार्थी कथं त्वद्य शत्रुभिः प्रार्थितस्त्रिभिः ।
प्राणहेतोरिमं मित्रं मार्जारं संश्रयामि वै ॥ १२-१३८-४१ (७०१३६)
नीतिशास्त्रं समाश्रित्य हितमस्योपवर्णये ।
येनेमं शत्रुसंघातं मतिपूर्वेण वञ्चये ॥ १२-१३८-४२ (७०१३७)
अयमत्यन्तशत्रुर्मे वैषम्यं परमं गतः ।
मूढो ग्राहयितुं स्वार्थं संगत्या यदि शक्यते ॥ १२-१३८-४३ (७०१३८)
कदाजिद्व्यसनं प्राप्य संधिं कुर्यान्मया सह ॥ १२-१३८-४४ (७०१३९)
बलिना सन्निकृष्टस्य शत्रोरपि परिग्रहः ।
कार्य इत्याहुराचार्या विषमे जीवितार्थिना ॥ १२-१३८-४५ (७०१४०)
श्रेष्ठो हि पण्डितः शत्रुर्न च मित्रमपण्डितः ।
अमित्रे खलु मार्जारे जीवितं संप्रतिष्ठितम् ॥ १२-१३८-४६ (७०१४१)
ततोऽस्मै संप्रवक्ष्यामि हेतुमात्माभिरक्षणे ।
अपीजानीमयं शत्रुः संगत्या पण्डितो भवेत् ॥ १२-१३८-४७ (७०१४२)
एवं विचिन्तयामास मूषिकः शत्रुचेष्टितम् ॥ १२-१३८-४८ (७०१४३)
ततोऽर्थगतितत्त्वज्ञः संधिविग्रहकालवित् ।
सान्त्वपूर्वमिदं वाक्यं मार्जारं मूषिकोऽब्रवीत् ॥ १२-१३८-४९ (७०१४४)

सौहृदेनाभिभाषे त्वां कच्चिन्मार्जार जीवसे ।
जीवितं हि तवेच्छामि श्रेयः साधारणं हि नौ ॥ १२-१३८-५० (७०१४५)
न ते सौम्य भयं कार्यं जीविष्यसि यथा पुरा ।
अहं त्वामुद्धरिष्यामि प्राणाञ्जह्यां हि ते कृते ॥ १२-१३८-५१ (७०१४६)
अस्ति कश्चिदुपायोऽत्र पुष्कल प्रतिभाति मे ।
येन शक्यस्त्वया मोक्षः प्राप्तुं श्रेयस्तथा मया ॥ १२-१३८-५२ (७०१४७)
मयाऽप्युपायो दृष्टोऽयं विचार्य मतिमात्मनः ।
आत्मार्थं च त्वदर्थं च श्रेयः साधारणां हि नौ ॥ १२-१३८-५३ (७०१४८)
इदं हि नकुलोलूकं पापबुद्ध्या हि संस्थितम् ।
न धर्षयति मार्जार तेन ते स्वस्ति सांप्रतम् ॥ १२-१३८-५४ (७०१४९)
कूजंश्चपलनेत्रोऽयं कौशिको मां निरीक्षते ।
नगशाखाग्रगः पापस्तस्याहं भृशमुद्विजे ॥ १२-१३८-५५ (७०१५०)
सतां साप्तपदं मैत्रं स सखा मेऽसि पण्डितः ।
साहाय्यकं करिष्यामि नास्ति ते प्राणतो भयम् ॥ १२-१३८-५६ (७०१५१)
न हि शक्तोऽसि मार्जार पाशं छेत्तुं मया विना ।
अहं छेत्स्यामि पाशांस्ते यदि मां त्वं न हिंससि ॥ १२-१३८-५७ (७०१५२)
त्वमाश्रितो द्रुमस्याग्रं मूलं त्वहमुपाश्रितः ।
चिरोषितावुभावावां वृक्षेऽस्मिन्विदितं च ते ॥ १२-१३८-५८ (७०१५३)
यस्मिन्नाश्वासते कश्चिद्यश्च नाश्वसिति क्वचित् ।
न तौ धीराः प्रशंसन्ति नित्यमुद्विग्रमानसौ ॥ १२-१३८-५९ (७०१५४)
तस्माद्विवर्धतां प्रीतिर्नित्यं संगतमस्तु नौ ।
कालातीतमिहार्थं हि न प्रशंसन्ति पण्डिताः ॥ १२-१३८-६० (७०१५५)
अर्थयुक्तिमिमां तत्र यथाभूतां निशामय ।
तव जीवितमिच्छामि त्वं ममेच्छसि जीवितम् ॥ १२-१३८-६१ (७०१५६)
कश्चित्तरति काष्ठेन सुगम्भीरां महानदीम् ।
स तारयति तत्काष्ठं स च काष्ठेन तार्यते ॥ १२-१३८-६२ (७०१५७)
ईदृशो नौ क्रियायोगो भविष्यति सुविस्तरः ।
अहं त्वां तारयिष्यामि मां च त्वं तारयिष्यसि ॥ १२-१३८-६३ (७०१५८)
एवमुक्त्वा तु पलितस्तमर्थमुभयोर्हितम् ।
हेतुमद्ग्रहणीयं च कालापेक्षी व्यतिष्ठत ॥ १२-१३८-६४ (७०१५९)
अथ सुव्याहृतं श्रुत्वा तस्य शत्रोर्विचक्षणः ।
हेतुमद्ग्रहणीयार्थं मार्जारो वाक्यमब्रवीत् ॥ १२-१३८-६५ (७०१६०)
बुद्धिमान्वाक्यसंपन्नस्तद्वाक्यमनुवर्तयन् ।
स्वामवस्थां प्रतीक्ष्यैनं साम्नैव प्रत्यपूजयत् ॥ १२-१३८-६६ (७०१६१)
ततस्तीक्ष्णाग्रदशनो मणिवैदूर्यलोचनः ।
मूषिकं मन्दमुद्वीक्ष्य मार्जारो लोमशोऽब्रबीत् ॥ १२-१३८-६७ (७०१६२)

नन्दामि सौम्य भद्रं ते यो मां जीवितुमिच्छसि ।
श्रेयश्च यदि जानीषे क्रियतां मा विचारय ॥ १२-१३८-६८ (७०१६३)
अहं हि भृशमापन्नस्त्वमापन्नतरो मया ।
द्वयोरापन्नयोः सन्धिः क्रियतां मा चिराय च ॥ १२-१३८-६९ (७०१६४)
विधत्स्व प्राप्तकालं यत्कार्थं सिध्यतु चावयोः ।
मयि कृच्छ्राद्विनिर्मुक्ते न विनङ्क्ष्यति ते कृतम् ॥ १२-१३८-७० (७०१६५)
न्यस्तमानोस्मि भक्तोस्मि शिष्यस्त्वद्धितकृत्तथा ।
तथा निदेशवर्ती च भवन्तं शरणं गतः ॥ १२-१३८-७१ (७०१६६)
इत्येवमुक्तः पलितो मार्जारं वशमागतम् ।
वाक्यं हितमुवाचेदमभिजातार्थमर्थवित् ॥ १२-१३८-७२ (७०१६७)
उदारं यद्भवानाह नैतच्चित्रं भवद्विधे ।
विहितो यस्तु मार्गो मे हितार्थं शृणु तं मम ॥ १२-१३८-७३ (७०१६८)
अहं त्वाऽनुप्रवेक्ष्यामि नकुलान्मे महद्भयम् ।
त्रायस्व मां मा वधीश्च शक्तोऽस्मि तव रक्षणे ॥ १२-१३८-७४ (७०१६९)
उलूकाच्चैव मां रक्ष क्षुद्रः प्रार्थयते हि माम् ।
अहं छेत्स्यामि ते पाशान्सखे सत्येने ते शपे ॥ १२-१३८-७५ (७०१७०)
तद्वचः संगतं श्रुत्वा लोमशो युक्तमर्थवत् ।
हर्षादुद्वीक्ष्य पलितं स्वागतेनाभ्यपूजयत् ॥ १२-१३८-७६ (७०१७१)
तं संपूज्याथ पलितं मार्जारः सौहृदे स्थितम् ।
स विचिन्त्याब्रवीद्धीरः प्रीतस्त्वरित एव च ॥ १२-१३८-७७ (७०१७२)
क्षिप्रमागच्छ भद्रं ते त्वं मे प्राणसमः सखा ।
तव प्राज्ञप्रसादाद्धि प्रियं प्राप्स्यामि जीवितम् ॥ १२-१३८-७८ (७०१७३)
यद्यदेवंगतेनाद्य शक्यं कर्तुं मया तव ।
तदाज्ञापस्य कर्तास्मि सिद्धिरेवास्तु नौ सखे ॥ १२-१३८-७९ (७०१७४)
अस्मात्ते संशयान्मुक्तः समित्रगणबान्धवः ।
सर्वकार्याणि कर्ताऽहं प्रियाणि च हितानि च ॥ १२-१३८-८० (७०१७५)
मुक्तश्च व्यसनादस्मात्सौम्याहमपि नाम ते ।
प्रीतिमुत्पादयेयं न प्रतिकर्तुं च शक्नुयाम् ॥ १२-१३८-८१ (७०१७६)
प्रत्युपकुर्वन्बह्वपि न भाति पूर्वोपकारिणा तुल्यः ।
एकः करोति हि कृते निष्कारणमेव कुरुतेऽन्यः ॥ १२-१३८-८२ (७०१७७)
भीष्म उवाच। १२-१३८-८३क्ष् (५७२७)
एवमाश्वासितो विद्वान्मार्जारेण स मूषिकः ।
प्रविवेश सुविस्रब्धः सम्यगङ्गीचकार ह ॥ १२-१३८-८३ (७०१७८)
ग्राहयित्वा तु तं स्वार्थं मार्जारं मूषिकस्तथा ।
मार्जारोरसि विस्रब्धः सुष्वाप पितृमातृवत् ॥ १२-१३८-८४ (७०१७९)
निलीनं तस्य गात्रेषु मार्जारस्याथ मूषिकम् ।

दृष्ट्वा तौ नकुलोलूकौ निराशौ प्रत्यपद्यताम् ॥ १२-१३८-८५ (७०१८०)
तथैव तौ सुसंत्रस्तौ दृढमागततन्द्रितौ ।
दृष्ट्वा तयोः परां प्रीतिं विस्मयं परमं गतौ ॥ १२-१३८-८६ (७०१८१)
बलिनौ मतिमन्तौ च सुवृत्तौ चाप्युपासितौ ।
अशक्तौ तु नयात्तस्मात्संप्रधर्षयितुं बलात् ॥ १२-१३८-८७ (७०१८२)
कार्यार्थे कृतसंधी तौ दृष्ट्वा मार्जारमूषिकौ ।
उलूकनकुलौ तूर्णं जग्मतुस्तौ स्वमालयम् ॥ १२-१३८-८८ (७०१८३)
लीनः स तस्य गात्रेषु पलितो देशकालवित् ।
चिच्छेद पाशान्नृपते कालाकाङ्क्षी शनैः शनैः ॥ १२-१३८-८९ (७०१८४)
अथ बन्धपरिक्लिष्टो मार्जारो वीक्ष्य मूषिकम् ।
छिन्दन्तं वै तदा पाशानत्वरन्तं त्वरान्वितः ॥ १२-१३८-९० (७०१८५)
तमत्वरन्तं पलितं पाशानां छेदने तदा ।
संचोदयितुमारेभे मार्जारो मूषिकं ततः ॥ १२-१३८-९१ (७०१८६)
किं सौम्य नातित्वरसे किं कृतार्थोऽवमन्यसे ।
छिन्धि पाशानमित्रघ्न पुरा श्वपच एति सः ॥ १२-१३८-९२ (७०१८७)
इत्युक्तस्त्वरताऽनेन मतिमान्पलितोऽब्रवीत् ।
मार्जारमकृतप्रज्ञं तथ्यमात्महितं वचः ॥ १२-१३८-९३ (७०१८८)
तूष्णीं भव न ते सौम्य त्वरा कार्या न संभ्रमः ।
वयमेवात्र कालज्ञा न कालः परिहास्यते ॥ १२-१३८-९४ (७०१८९)
अकाले कृत्यमारब्धं कर्तुर्नार्थाय कल्पते ।
तदेव काल आरब्धं महतेऽर्थाय कल्पते ॥ १२-१३८-९५ (७०१९०)
अकाले विप्रमुक्तान्मे त्वत्त एव भयं भवेत् ।
तस्मात्कालं प्रतीक्षस्व किमिति त्वरसे सखे ॥ १२-१३८-९६ (७०१९१)
यावत्पश्यामि चण्डालमायान्तं शस्त्रपाणिनम् ।
ततश्छेत्स्यामि ते पाशान्प्राप्ते साधारणे भये ॥ १२-१३८-९७ (७०१९२)
तस्मिन्काले प्रमुक्तस्त्वं तरुमेवाधिरोक्ष्यसे ।
न हि ते जीवितादन्यत्किंचित्कृत्यं भविष्यति ॥ १२-१३८-९८ (७०१९३)
तस्मिन्कालेऽपि च तता दिवाकीर्तिभयार्दितः ।
मम न ग्रहणे शक्तः पलायनपरायणः ॥' १२-१३८-९९ (७०१९४)
ततो भवत्यपक्रान्ते त्रस्ते भीते च लुब्धकात् ।
अहं बिलं प्रवेक्ष्यामि भवाञ्शाखां गमिष्यति ॥ १२-१३८-१०० (७०१९५)
एवमुक्तस्तु मार्जारो मूषिकेणात्मनो हितम् ।
वचनं वाक्यतत्त्वज्ञो जीवितार्थी महामतिः ॥ १२-१३८-१०१ (७०१९६)
अथात्मकृत्ये त्वरितः सम्यक्प्रार्थितमाचरन् ।
उवाच लोमशो वाक्यं मूषिकं चिरकारिणाम् ॥ १२-१३८-१०२ (७०१९७)
नह्येवं मित्रकार्याणि प्रीत्या कुर्वन्ति साधवः ॥ १२-१३८-१०३ (७०१९८)

यथा त्वं मोक्षितः कृच्छ्रात्त्वरमाणेन वै मया ।
तथा हि त्वरमाणेन त्वया कार्यमिदं मम ।
यत्नं कुरु महाप्राज्ञ यथा स्वस्त्यावयोर्भवेत् ॥ १२-१३८-१०४ (७०१९९)
अथवा पूर्ववैरं त्वं स्मरन्कालं जिहीर्षसि ।
पश्य दुष्कृतकर्मस्त्वं व्यक्तमायुःक्षयो मम ॥ १२-१३८-१०५ (७०२००)
यदि किंचिन्मयाऽज्ञानात्पुरस्ताद्दुष्कृतं कृतम् ।
न तन्मनसि कर्तव्यं क्षामये त्वां प्रसीद मे ॥ १२-१३८-१०६ (७०२०१)
तमेवंवादिनं प्राज्ञं शास्त्रविद्बुद्धिसत्तमः ।
उवाचेदं वचः श्रेष्ठं मार्जारं मूषिकस्तदा ॥ १२-१३८-१०७ (७०२०२)
श्रुतं मे तव मार्जार स्वमर्थं परिगृह्णतः ।
ममापि त्वं विजानासि स्वमर्थं परिगृह्णतः ॥ १२-१३८-१०८ (७०२०३)
यन्मित्रं भीतवत्साध्यं यस्मिन्मित्रे भयं हितम् ।
आरक्षितं ततः कार्यं पाणिः सर्पमुखादिव ॥ १२-१३८-१०९ (७०२०४)
कृत्वा बलवता संधिमात्मानं यो न रक्षति ।
अपथ्यमिव तद्भुक्तं तस्यार्थाय कल्पते ॥ १२-१३८-११० (७०२०५)
कश्चित्कस्यचिन्मित्रं न कश्चित्कस्यचिद्रिपुः ।
अर्थतस्तु निबध्यन्ते मित्राणि रिपवस्तथा ॥ १२-१३८-१११ (७०२०६)
अर्थैरर्था निबध्यन्ते गजैरिव महागजाः ।
न च कश्चित्कृते कार्ये कर्तारं समवेक्षते ।
तस्मात्सर्वाणि कार्याणि सावशेषाणि कारयेत् ॥ १२-१३८-११२ (७०२०७)
तस्मिन्कालेऽपि च भवान्दिवाकीर्तिभयार्दितः ।
मम न ग्रहणे शक्तः पलायपरायणः ॥ १२-१३८-११३ (७०२०८)
छिन्नं तु तन्तुबाहुल्यं तन्तुरेकोऽवशेषितः ।
छेत्स्याम्यहं तमप्याशु निर्वृतो भव लोमश ॥ १२-१३८-११४ (७०२०९)
तयोः संवदतोरेवं तथैवापन्नयोर्द्वयोः ।
क्षयं जगाम सा रात्रिर्लोमशं त्वागमद्भयम् ॥ १२-१३८-११५ (७०२१०)
ततः प्रभातसमये विकटः कृष्णपिङ्गलः ।
स्थूलस्फिग्विकृतो रूक्षः श्वयूथपरिवारितः ॥ १२-१३८-११६ (७०२११)
शङ्कुकर्णो महावक्त्रः खनित्री घोरदर्शनः ।
परिघो नाम चण्डालः शस्त्रपाणिरदृश्यत ॥ १२-१३८-११७ (७०२१२)
तं दृष्ट्वा यमदूताभं मार्जारस्त्रस्तचेतनः ।
उवाच पलितं भीतः किमिदानीं करिष्यसि ॥ १२-१३८-११८ (७०२१३)
तथैव च सुसंत्रस्तौ तं दृष्ट्वा घोरसंकुलम् ।
क्षणेन नकुलोलूकौ नैराश्यमुपजग्मतुः ॥ १२-१३८-११९ (७०२१४)
बलिनौ मतिमन्तौ च संघातं चाप्युपागतौ ।
अशक्तौ सुनयात्तस्मात्संप्रधर्षयितुं बलात् ॥ १२-१३८-१२० (७०२१५)

कार्यार्थे कृतसंधी तौ दृष्ट्वा मार्जारमूषिकौ ।
उलूकनकुलौ तूर्णं जग्मतुः स्वंस्वमालयम् ॥ १२-१३८-१२१ (७०२१६)
ततश्चिच्छेद तं तन्तुं मार्जारस्य स मूषिकः ।
विप्रमुक्तोऽथ मार्जारस्तमेवाभ्यपतद्द्रुमम् ॥ १२-१३८-१२२ (७०२१७)
स तस्मात्संभ्रमान्मुक्तो मुक्तो घोरेण सत्रुणा ।
बिलं विवेश पलितः शाखां लेभे स लोमशः ॥ १२-१३८-१२३ (७०२१८)
उन्माथमप्युपादाय चण्डालो वीक्ष्य सर्वशः ।
विहताशः क्षणेनैव तस्माद्देशादपाक्रमत् ।
जगाम स स्वभवनं चण्डालो भरतर्षभ ॥ १२-१३८-१२४ (७०२१९)
ततस्तस्माद्भयान्मुक्तो दुर्लभं प्राप्य जीवितम् ।
बिलस्थं पादपाग्रस्थः पलितं लोमशोऽब्रवीत् ॥ १२-१३८-१२५ (७०२२०)
अकृत्वा संविदं कांचित्सहसा त्वमपस्रुतः ।
कृतज्ञः कृतकल्याणः कच्चिन्मां नाभिशङ्कसे ॥ १२-१३८-१२६ (७०२२१)
गत्वा च मम विश्वासं दत्त्वा च मम जीवितम् ।
मित्रोपभोगसमये किं हि मां नोपसर्पसि ॥ १२-१३८-१२७ (७०२२२)
कृत्वा हि पूर्वं मित्राणि यः पश्चान्नानुतिष्ठति ।
न स मित्राणि लभते कृच्छ्रात्स्वापत्सु दुर्मतिः ॥ १२-१३८-१२८ (७०२२३)
सत्कृतोऽहं त्वया मित्र सामर्थ्यादात्मानः सखे ।
स मां मित्रत्वमापन्नमुपभोक्तुं त्वमर्हसि ॥ १२-१३८-१२९ (७०२२४)
यानि मे सन्ति मित्राणि ये च मे सन्ति बान्धवाः ।
सर्वे त्वां पूजयिष्यन्ति शिष्या गुरुमिव प्रियम् ॥ १२-१३८-१३० (७०२२५)
अहं च पूजयिष्ये त्वां समित्रगणबान्धवम् ।
जीवितस्य प्रदातारं कृतज्ञः को न पूजयेत् ॥ १२-१३८-१३१ (७०२२६)
ईश्वरो मे भवानस्तु शरीरस्य गृहस्य च ।
अर्थानां चैव सर्वेषामनुशास्ता च मे भव ॥ १२-१३८-१३२ (७०२२७)
अमात्यो मे भव प्राज्ञ पितेवेह प्रशाधि माम् ।
न तेऽस्ति भयमस्मत्तो जीवितेनात्मनः शपे ॥ १२-१३८-१३३ (७०२२८)
बुद्ध्या त्वमुशना साक्षाद्बलेनाधिकृता वयम् ।
त्वं मन्त्रबलयुक्तो हि दद्या विजयमेव मे ॥ १२-१३८-१३४ (७०२२९)
एवमुक्तः परं सान्त्वं मार्जारेण स मूषिकः ।
उवाच परमार्थज्ञः श्लक्ष्णमात्महितं वचः ॥ १२-१३८-१३५ (७०२३०)
यद्भवानाह तत्सर्वं मया ते लोमश श्रुतम् ।
ममापि तावद्ब्रुवतः शृणु यत्प्रतिभाति मे ॥ १२-१३८-१३६ (७०२३१)
वेदितव्यानि मित्राणि बोद्धव्याश्चापि शत्रवः ।
एतत्सुसूक्ष्मं लोकेऽस्मिन्दृश्यते प्राज्ञसंमतैः ॥ १२-१३८-१३७ (७०२३२)
शत्रुरूपा हि सुहृदो मित्ररूपाश्च शत्रवः ।

सान्त्वितास्ते न बुध्यन्ते रागलोभवशं गताः ॥१२-१३८-१३८ (७०२३३)
येषां सौम्यानि मित्राणि क्रोधनाश्चैव शत्रवः ।
सान्त्वितास्ते न बुध्यन्ते रागलोभवशंगताः ॥१२-१३८-१३९ (७०२३४)
नास्ति जात्या रिपुर्नाम मित्रं नाम न विद्यते ।
सामर्थ्ययोगाज्जायन्ते मित्राणि रिपवस्तथा ॥१२-१३८-१४० (७०२३५)
यो यस्मिञ्जीवति स्वार्थे पश्येत्पीडां न जीवति ।
स तस्य मित्रं तावत्स्यःद्यावन्न स्याद्विपर्ययः ॥१२-१३८-१४१ (७०२३६)
नास्ति मैत्री स्थिरा नाम न च ध्रुवमसौहृदम् ।
अर्थयुक्त्याऽनुजायन्ते मित्राणि रिपवस्तथा ॥१२-१३८-१४२ (७०२३७)
मित्रं च शत्रुतामेति कस्मिंश्चित्कालपर्यये ।
शत्रुश्च मित्रतामेति स्वार्थो हि बलवत्तरः ॥१२-१३८-१४३ (७०२३८)
यो विश्वसिति मित्रेषु न विश्वसिति शत्रुषु ।
अर्थयुक्तिमविज्ञाय चलितं तस्य जीवितम् ॥१२-१३८-१४४ (७०२३९)
मित्रे वा यदि वा शत्रौ तस्यापि चलिता मतिः ।
न विश्वसेदविश्वस्ते विश्वस्ते नातिविश्वसेत् ।
विश्वासाद्भयमुत्पन्नमपि मूलानि कृन्तति ॥ १२-१३८-१४५ (७०२४०)
अर्थयुक्त्या हि जायन्ते पिता माता सुतस्तथा ।
मातुला भागिनेयाश्च तथा संबन्धिबान्धवाः ॥१२-१३८-१४६ (७०२४१)
पुत्रं हि मातापितरौ त्यजतः पतितं प्रियम् ।
लोको रक्षति चात्मानं पश्य स्वार्थस्य सारताम् ॥१२-१३८-१४७ (७०२४२)
सामान्या निष्कृतिः प्राज्ञ यो मोक्षात्समन्तरम् ।
कृत्यं मृगयते कर्तुं सुखोपायमसंशयम् ॥१२-१३८-१४८ (७०२४३)
अस्मिन्निलय एवं त्वं न्यग्रोधादवतारितः ।
पूर्वं निविष्टमुन्माथं चपलन्वान्न बुद्धवान् ॥१२-१३८-१४९ (७०२४४)
आत्मनश्चपलो नास्ति कुतोऽन्येषां भविष्यति ।
तस्मात्सर्वाणि कार्याणि चपलो हन्त्यसंशयम् ॥१२-१३८-१५० (७०२४५)
ब्रवीषि मधुरं यच्च प्रियो मेऽद्य भवानिति ।
तन्मिथ्याकारणं सर्वं विस्तरेणापि मे शृणु ॥१२-१३८-१५१ (७०२४६)
कारणात्प्रियतामेति द्वेष्यो भवति कारणात् ।
अर्थार्थी जीवलोकोऽयं न कश्चित्कस्यचित्प्रियः ॥१२-१३८-१५२ (७०२४७)
सख्यं सोदर्ययोर्भ्रात्रोदर्पत्योर्वा परस्परम् ।
कस्यचिन्नाभिजानामि प्रीतिं निष्कारणामिह ॥१२-१३८-१५३ (७०२४८)
यद्यपि भ्रातरः क्रुद्धा भार्या वा कारणान्तरे ।
स्वभावतस्ते प्रीयन्ते नेतरः प्राकृतो जनः ॥१२-१३८-१५४ (७०२४९)
प्रियो भवति दानेन प्रियवादेन चापरः ।
मन्त्रहोमजपैरन्यः कार्यार्थे प्रीयते जनः ॥१२-१३८-१५५ (७०२५०)

उत्पन्ना कारणात्प्रीतिरासीन्नौ कारणान्तरे ।
प्रध्वस्ते कारणस्थाने सा प्रीतिर्नाभिवर्तते ॥१२-१३८-१५६ (७०२५१)
किंनु तत्कारणं मन्ये येनाहं भवतः प्रियः ।
अन्यत्राभ्यवहारार्थात्तत्रापि च बुधा वयम् ॥१२-१३८-१५७ (७०२५२)
कालो हेतुं विकुरुते स्वार्थस्तमनुवर्तते ।
स्वार्थं प्राज्ञोऽभिजानाति प्राज्ञं लोकोऽनुवर्तते ।
न त्वीदृशं त्वया वाच्यं विद्यते स्वार्थपण्डितः ॥ १२-१३८-१५८ (७०२५३)
न कालो हि समर्थस्य स्नेहहेतुरयं तव ।
तस्मान्नाहं चले स्वार्थात्सुस्थितः संधिविग्रहे ॥१२-१३८-१५९ (७०२५४)
अभ्राणामिव रुपाणि विकुर्वन्ति पदेपदे ।
अद्यैव हि रिपुर्भूत्वा पुनरद्यैव मे सुहृत् ।
पुनश्च रिपुरद्यैव युक्तीनां पश्य चापलम् ॥ १२-१३८-१६० (७०२५५)
आसीन्मैत्री तु तावन्नौ यावद्धेतुरभूत्पुरा ।
सागता सह तेनैव कालयुक्तेन हेतुना ॥१२-१३८-१६१ (७०२५६)
त्वं हि मेऽत्यन्ततः शत्रुः सामर्थ्यान्मित्रतां गतः ।
तत्कृत्यमभिनिर्वर्त्य प्रकृतिः शत्रुतां गता ॥१२-१३८-१६२ (७०२५७)
सोऽहमेवं प्रणीतानि ज्ञात्वा शास्त्राणि तत्त्वतः ।
प्राविशेयं कथं पाशं त्वत्कृते तद्ब्रवीहि मे ॥१२-१३८-१६३ (७०२५८)
त्वद्वीर्येण विमुक्तोऽहं मद्वीर्येण तथा भवान् ।
अन्योन्यानुग्रहे वृत्ते नास्ति भूयः समागमः ॥१२-१३८-१६४ (७०२५९)
त्वं हि सौम्य कृतार्थोऽद्य निवृत्तार्थास्तथा वयम् ।
न तेऽस्त्यद्य मया कृत्यं किंचिदन्यत्र भक्षणात् ॥१२-१३८-१६५ (७०२६०)
अहमन्नं भवान्भोक्ता दुर्बलोऽहं भवान्बली ।
नावयोर्विद्यते संधिर्वियुक्ते विषमे बले ॥१२-१३८-१६६ (७०२६१)
स मन्येऽहं तव प्रज्ञां यन्मोक्षात्प्रत्यनन्तरम् ।
भक्ष्यं मृगयते नूनं सुखोपायमसंशयम् ॥१२-१३८-१६७ (७०२६२)
--र्थी ह्येव सुव्यक्तो विमुक्तः प्रसृतः क्षुधा ।
शास्त्रजां मतिमास्थाय प्रातराशमिहेच्छसि ॥१२-१३८-१६८ (७०२६३)
जानामि क्षुधितं च त्वामाहारसमयश्च ते ।
स त्वं मामभिसंधाय भक्ष्यं मृगयसे पुनः ॥१२-१३८-१६९ (७०२६४)
किंचात्र पुत्रदारार्थं यद्वाणीं सृजसे मयि ।
शुश्रूषां यतसे कर्तुं सखे मम तत्क्षमम् ॥१२-१३८-१७० (७०२६५)
त्वया मां सहितं दृष्ट्वा प्रिया भार्या सुताश्च ये ।
कस्मात्ते मां न खादेयुः स्पृष्टवा प्रणयिनि त्वयि ॥१२-१३८-१७१ (७०२६६)
नाहं त्वया समेष्यामि वृत्ते हेतुसमागमे ।
शिवं ध्यायस्व मेऽत्रस्थः सुकृतं स्मरसे यदि ॥१२-१३८-१७२ (७०२६७)

शत्रोरन्नाद्यभूतः सन्क्लिष्टस्य क्षुधितस्य च ।
भक्ष्यं मृगयमाणस्य कः प्राज्ञो विषयं व्रजेत् ॥ १२-१३८-१७३ (७०२६८)
स्वस्ति तेऽस्तु गमिष्यामि दूरादपि तवोद्विजे ।
शविश्वस्तं वा प्रमत्तं वा एतदेव कृतं भवेत् ॥ १२-१३८-१७४ (७०२६९)
नाहं त्वया समेष्यामि निवृत्तो भव लोमश ।
बलवत्सन्निकर्षो हि न कदाचित्प्रशस्यते ॥ १२-१३८-१७५ (७०२७०)
यदि त्वं सुकृतं वेत्सि तत्सख्यमनुसारय ।
प्रशान्तादपि हि प्राज्ञाद्भेतव्यं बलिनः सदा ॥ १२-१३८-१७६ (७०२७१)
यदि त्वर्थेन ते कार्यं ब्रूहि किं करवाणि ते ।
कामं सर्वं प्रदास्यामि न त्वात्मानं कथंचन ॥ १२-१३८-१७७ (७०२७२)
आत्मार्थे संततिस्त्याज्या राज्यं रत्नं धनानि च ।
अपि सर्वस्वमुत्सृज्य रक्षेदात्मानमात्मवान् ॥ १२-१३८-१७८ (७०२७३)
ऐश्वर्यधनरत्नानां प्रत्यमित्रेऽपि वर्तताम् ।
दृष्टा हि पुनरावृत्तिर्जीवतामिति नः श्रुतम् ॥ १२-१३८-१७९ (७०२७४)
न त्वात्मनः संप्रदानं धनरत्नवदिष्यते ।
आत्मा हि सर्वदा रक्ष्यो दारैरपि धनैरपि ॥ १२-१३८-१८० (७०२७५)
आत्मरक्षणतन्त्राणां सुपरीक्षितकारिणाम् ।
आपदो नोपपद्यन्ते पुरुषाणां स्वदोषजाः ॥ १२-१३८-१८१ (७०२७६)
शत्रुं सम्यगविज्ञातो विप्रियो ह्यबलीयसा ।
ग्शङ्कनीयः स सर्वत्र प्रियमप्याचरन्सदा ॥ १२-१३८-१८२ (७०२७७)
कुलजानां सुमित्राणां धार्मिकाणां महात्मनाम् ।
न तेषां चाल्यते बुद्धिः शास्त्रार्थकृतिश्चया ॥ १२-१३८-१८३ (७०२७८)
इत्यभिव्यक्तमेवासौ पलितेनापहासितः ।
मार्जारो व्रीडितो भूत्वा मूषिकं वाक्यमब्रवीत् ॥ १२-१३८-१८४ (७०२७९)
सत्यं शपे त्वयाऽहं वै मित्रद्रोहो विगर्हितः ।
संमन्येऽहं तव प्रज्ञां यस्त्वं मम हिते रतः ॥ १२-१३८-१८५ (७०२८०)
उक्तवानर्थतत्त्वेन मया संभिन्नदर्शनः ।
न तु मामन्यथा साधो त्वं ग्रहीतुमिहार्हसि ॥ १२-१३८-१८६ (७०२८१)
प्राणप्रदानजं त्वत्तो मयि सौहृदमागतम् ।
धर्मज्ञोऽस्मि गुणज्ञोऽस्मि कृतज्ञोस्मि विशेषतः ॥ १२-१३८-१८७ (७०२८२)
मित्रेषु वत्सलश्चास्मि त्वद्भक्तश्च विशेषतः ।
त्वं मामेवंगते साधो न वाचयितुमर्हसि ॥ १२-१३८-१८८ (७०२८३)
त्वया हि वाच्यमानोऽहं जह्यां प्राणान्सबान्धवः ।
धिक्षब्दो हि बुधैर्दृष्टो मद्विधेषु मनस्विषु ।
पतनं धर्मतत्त्वज्ञ न मे शङ्कितुमर्हसि ॥ १२-१३८-१८९ (७०२८४)
इति संस्तूयमानोऽपि मार्जारेण स मूषिकः ।

मनसा भावगम्भीरं मार्जारमिदमब्रवीत् ॥ १२-१३८-१९० (७०२८५)
साधुर्भवान्कृतार्थोऽस्मि प्रिये च न च विश्वसे ।
संस्तवैर्वा धनौघैर्वा नाहं शक्यः पुनस्त्वया ॥ १२-१३८-१९१ (७०२८६)
न ह्यमित्रवशं यान्ति प्राज्ञा निष्कारणं सखे ।
अस्मिन्नर्थे च गाथे द्वे निबोधोशनसा कृते ॥ १२-१३८-१९२ (७०२८७)
शत्रुसाधारणे कृत्ये कृत्वा सन्धिं बलीयसा ।
समाहितश्चरेद्बुद्ध्या कृतार्थश्च न विश्वसेत् ॥ १२-१३८-१९३ (७०२८८)
न विश्वसेदवश्वस्ते विश्वस्ते नातिविश्वसेत् ।
नित्यं विश्वासयेदन्यान्परेषां तु न विश्वसेत् ॥ १२-१३८-१९४ (७०२८९)
तस्मात्सर्वास्ववस्थासु रक्षेज्जीवितमात्मनः ।
द्रव्याणि संततिश्चैव सर्वं भवति जीवताम् ॥ १२-१३८-१९५ (७०२९०)
संक्षेपो नीतिशास्त्राणामविश्वासः परो मतः ।
नृषु तस्मादविश्वासः पुष्कलं हितमात्मनः ॥ १२-१३८-१९६ (७०२९१)
वध्यन्ते न ह्यविश्वस्ताः शत्रुभिर्दुर्बला अपि ।
विश्वस्तास्तेषु वध्यन्ते बलवन्तोऽपि शत्रुभिः ॥ १२-१३८-१९७ (७०२९२)
त्वद्विधेभ्यो मया ह्यात्मा रक्ष्यो मार्जार सर्वदा ।
रक्ष त्वमपि चात्मानं चण्डालाज्जातिकिल्बिषात् ॥ १२-१३८-१९८ (७०२९३)
स तस्य ब्रुवतस्त्वेवं संत्रासाज्जातसाध्वसः ।
कथां हित्वा जवेनाशु मार्जारः प्रययौ ततः ॥ १२-१३८-१९९ (७०२९४)
ततः शास्त्रार्थतत्त्वज्ञो बुद्धिसामर्थ्यमात्मनः ।
विश्राव्य पलितः प्राज्ञो बिलमन्यज्जगाम ह ॥ १२-१३८-२०० (७०२९५)
एवं प्रज्ञावता बुद्ध्या दुर्बलेन महाबलाः ।
एकेन बहवोऽमित्राः पलितेनाभिसंधिताः ॥ १२-१३८-२०१ (७०२९६)
अरिणापि समर्थेन सन्धिं कुर्वीत पण्डितः ।
मूषिकश्च बिडालश्च मुक्तावन्योन्यसंश्रयात् ॥ १२-१३८-२०२ (७०२९७)
इत्येवं क्षत्रधर्मस्य मया मार्गो निदर्शितः ।
विस्तरेण महाराज संक्षेपमपि मे शृणु ॥ १२-१३८-२०३ (७०२९८)
अन्योन्यं कृतवैरौ तु चक्रतुः प्रीतिमुत्तमाम् ।
अन्योन्यमभिसंधातुं संबभूव तयोर्मतिः ॥ १२-१३८-२०४ (७०२९९)
तत्र प्राज्ञोऽभिसंधत्ते सम्यग्बुद्धिबलाश्रयात् ।
अभिसंधीयते प्राज्ञः प्रमादादपि वा बुधैः ॥ १२-१३८-२०५ (७०३००)
तस्मादभीतवद्भीतो विश्वस्तवदविश्वसेत् ।
न ह्यप्रमत्तश्चलति चलितोऽवा न नश्यति ॥ १२-१३८-२०६ (७०३०१)
काले हि रिपुणा संधिः काले मित्रेण विग्रहः ।
कार्य इत्येव तत्वज्ञाः प्राहुर्नित्यं नराधिप ॥ १२-१३८-२०७ (७०३०२)
एतज्ज्ञात्वा महाराज शास्त्रार्थमभिगम्य च ।

अभियुक्तोऽप्रमत्तश्च प्राग्भयाद्भीतवच्चरेत् ॥ १२-१३८-२०८ (७०३०३)
भीतवत्संहितः कार्यः प्रतिसंधिस्तथैव च ।
भयादुत्पद्यते बुद्धिरप्रमत्ताभियोगजा ॥ १२-१३८-२०९ (७०३०४)
न भयं जायते राजन्भीतस्यानागते भये ।
अभीतस्य च विस्रम्भात्सुमहज्जायते भयम् ॥ १२-१३८-२१० (७०३०५)
न भीरुरिति चात्यन्तं मन्त्रो देयः कथंचन ।
अविज्ञानाद्धि विज्ञाने गच्छेदास्पददर्शनाम् ॥ १२-१३८-२११ (७०३०६)
तस्मादभीतवद्भीतो विश्वस्तवदविश्वसन् ।
कार्याणां गुरुतां ज्ञात्वा नादृतं किंचिदाचरेत् ॥ १२-१३८-२१२ (७०३०७)
एवमेतन्मया प्रोक्तमितिहासं युधिष्ठिर ।
श्रुत्वा त्वं सुहृदां मध्ये यथावत्समुदाचर ॥ १२-१३८-२१३ (७०३०८)
उपलभ्य मतिं चाग्र्यामरिमित्रान्तरं तथा ।
संधिविग्रहकालौ च मोक्षोपायं तथाऽऽपदि ॥ १२-१३८-२१४ (७०३०९)
शत्रुसाधारणे कृत्ये कृत्वा सन्धिं बलीयसा ।
समागतश्चरेद्बुद्ध्या कृतार्थो न च विश्वसेत् ॥ १२-१३८-२१५ (७०३१०)
अविरुद्धां त्रिवर्गेण नीतिमेतां महीपते ।
अभ्युत्तिष्ठ श्रुतात्तस्माद्भूयः संरञ्जयन्प्रजाः ॥ १२-१३८-२१६ (७०३११)
ब्राह्मणैश्चापि ते सार्धं यात्रा भवतु पाण्डव ।
ब्राह्मणाद्धि परं श्रेयो दिवि चेह च भारत ॥ १२-१३८-२१७ (७०३१२)
एते धर्मस्य वेत्तारः कृतज्ञाः सततं प्रभो ।
पूजिताः शुभकर्तारः पूजयैनाञ्जाधिप ॥ १२-१३८-२१८ (७०३१३)
राज्यं श्रेयः परं राजन्यशश्च महदाप्स्यसे ।
कुलस्य संततिं चैव यथान्यायं यथाक्रमम् ॥ १२-१३८-२१९ (७०३१४)
श्रुतं च ते भारत संधिविग्रहं
विभावितं बुद्धिविशेषकारितम् ।
तथा त्ववेक्ष्य क्षितिपेन सर्वदा
निषेवितव्यं नृप शत्रुमण्डलम् ॥ ॥ १२-१३८-२२० (७०३१५)

इति श्रीमन्महाभारते शान्तिपर्वणि आपद्धर्मपर्वणि
अष्टत्रिंशदधिकशततमोऽध्यायः ॥ १३८.।

Mahabharata - Shanti Parva - Chapter Footnotes

१२-१३८-५ उद्धर्तुमुन्मूलयितुम् ॥
१२-१३८-६ सर्वतः सर्वदिक्स्थैः प्रार्थ्यमानेन प्रसितुमिति शेषः ॥
१२-१३८-९ प्राकृतकृत्रिममित्रयोर्मध्ये केन सन्धिः कर्तव्यः केन
वा वैरम् ॥

१२-१३८-१८ व्यवस्य निश्चित्य अत्र पूर्वश्लोकोक्तेऽर्थे ॥
१२-१३८-२० वैराज्यमभिते जात इति ट ।ङ।थ।द।पाठः ॥
१२-१३८-२३ उन्माथं कूटयन्त्रं पशुमृगपक्षिबन्धनम् ॥
१२-१३८-२६ पलितो मूषिकः ॥
१२-१३८-२८ तदामिषं तस्य उन्माथे धृतमामिषम् ।सपत्नस्य सपत्नं बद्धं अनादृत्य ॥
१२-१३८-३० शरस्तृणविशेष स्तत्प्रसूनं पुष्पम् ॥
१२-१३८-५१ यदि मां न जिघांससि इति झ ।द।पाठः ॥
१२-१३८-१०५ स्मरन्कालं चिकीर्षसीति थ ।द।पाठः ॥
१२-१३८-१६० पुनरद्यैव सौहृदमिति थ ।द।ध।पाठः ॥

---

शन्तिपर्व-अध्यय१३९
॥ श्रीः ॥
१२.१३९. अध्यायः १३९

Mahabharata - Shanti Parva - Chapter Topics
भीष्मेण युधिष्ठिरंप्रति पूजनीब्रह्मदत्तसंवादानुवादः ॥१.।
Mahabharata - Shanti Parva - Chapter Text

१२-१३९-० (७०३१६)
युधिष्ठिर उवाच।१२-१३९-०क्ष् (५७२८)
उक्तो मन्त्रो महाबाहो विश्वासो नास्ति शत्रुषु ।
कथं हि राजा वर्तेत यदि सर्वत्र नाश्वसेत् ॥१२-१३९-१ (७०३१७)
विश्वासाद्धि परं राजन्राज्ञामुत्पद्यते भयम् ।
कथं हि नाश्वसन्राजा शत्रूञ्जयति पार्थिवः ॥१२-१३९-२ (७०३१८)
एतन्मे संशयं छिन्धि मनो मे संप्रमुह्यति ।
अविश्वासे कथामेतामुपाश्रित्य पितामह ॥१२-१३९-३ (७०३१९)
भीष्म उवाच।१२-१३९-४क्ष् (५७२९)
शृणुष्व राजन्यो वृत्तो ब्रह्मदत्तनिवेशने ।
पूजन्या सह संवादो ब्रह्मदत्तस्य भूपतेः ॥१२-१३९-४ (७०३२०)
काम्पिल्ये ब्रह्मदत्तस्य त्वन्तः पुरनिवासिनी ।
पूजी नाम शकुनिर्दीर्घकालं सहोपिता। १२-१३९-५ (७०३२१)
रुदज्ञा सर्वभूतानां यथा वै जीवजीवकः ।
सर्वज्ञा सर्वतत्त्वज्ञा तिर्यग्योनिं गताऽपि स ॥१२-१३९-६ (७०३२२)
अभिप्रजाता सा तत्र पुत्रमेकं सुवर्चसम् ।
समकालं च राज्ञोऽपि देव्यां पुत्रो व्यजायत ॥१२-१३९-७ (७०३२३)

तयोरर्थे कृतज्ञा तु खेचरी पूजनी सदा ।
समद्रतीरं सा गत्वा आजहार फलद्वयम् ॥ १२-१३९-८ (७०३२४)
अष्यर्थं च स्वपुत्रस्य राजपुत्रस्य चैव ह ।
लमेकं सुतायादाद्राजपुत्राय चापरम् ॥ १२-१३९-९ (७०३२५)
---मृतास्यादसदृशं बलतेजोभिवर्धनम् ।
श्आदायादाय सैवाशु तयोः प्रादात्पुनः पुनः ॥ १२-१३९-१० (७०३२६)
ततोऽगच्छत्परां वृद्धिं राजपुत्रः फलाशनात् ।
ततः स धात्र्या कक्षेण उह्यमानो नृपात्मजः ॥ १२-१३९-११ (७०३२७)
ददर्श तं पक्षिसुतं बाल्यादागत्य बालकः ।
ततो बाल्याच्च यत्नेन तेनाक्रीडत पक्षिणा ॥ १२-१३९-१२ (७०३२८)
शून्ये च तमुपादाय पक्षिणं समजातकम् ।
हत्वा ततः स राजेन्द्र धात्र्या हस्तमुपागतः ॥ १२-१३९-१३ (७०३२९)
अथ सा पूजनी राजन्नागमत्फलहारिणी ।
अपश्यन्निहतं पुत्रं तेन बालेन भूतले ॥ १२-१३९-१४ (७०३३०)
बाष्पपूर्णमुखी दीना दृष्ट्वा तं पतितं सुतम् ।
पूजनी दुःखसंतप्ता रुदन्ती वाक्यमब्रवीत् ॥ १२-१३९-१५ (७०३३१)
क्षत्रिये संगतं नास्ति न प्रीतिर्न च सौहृदम् ।
कारणे सान्त्वयन्त्येते कृतार्थाः संत्यजन्ति च ॥ १२-१३९-१६ (७०३३२)
क्षत्रियेषु न विश्वासः कार्यः सर्वापकारिषु ।
अपकृत्यापि सततं सान्त्वयन्ति निरर्थकम् ॥ १२-१३९-१७ (७०३३३)
इयमस्य करोम्यद्य सदृशीं वैरयातनाम् ।
कृतघ्नस्य नृशंसस्य भृशं विश्वासघातिनः ॥ १२-१३९-१८ (७०३३४)
सहसंजातवृद्धस्य तथैव सहभोजिनः ।
शरण्यस्य वधश्चैव त्रिविधं तस्य किल्विषम् ॥ १२-१३९-१९ (७०३३५)
इत्युक्त्वा चरणाभ्यां तु नेत्रे नृपसुतस्य सा ।
हृत्वा स्वस्था तत इदं पूजनी वाक्यमब्रवीत् ॥ १२-१३९-२० (७०३३६)
इच्छयेह कृतं पापं सद्य एवोपसर्पति ।
कृतं प्रतिकृतं येषां न नश्यति शुभाशुभम् ॥ १२-१३९-२१ (७०३३७)
पापं कर्म कृतं किंचिद्यदि तस्मिन्न दृश्यते ।
निपात्यतेऽस्य पुत्रेषु पौत्रेष्वपि च नप्तृषु ॥ १२-१३९-२२ (७०३३८)
ब्रह्मदत्तः सुतं दृष्ट्वा पूजन्या हृतलोचनम् ।
कृतप्रतिकृतं मत्वा पूजनीमिदमब्रवीत् ॥ १२-१३९-२३ (७०३३९)
अस्ति वै कृतमस्माभिरस्ति प्रतिकृतं त्वया ।
उभयं तत्समीभूतं वस पूजनि मा गमः ॥ १२-१३९-२४ (७०३४०)
पूजन्युवाच। १२-१३९-२५क्ष् (५७३०)
सकृत्कृतापराधस्य तत्रैव परिलम्बतः ।

न तद्बुधाः प्रशंसन्ति श्रेयस्तत्रापसर्पणम् ॥ १२-१३९-२५ (७०३४१)
सान्त्वे प्रयुक्ते विवृते वैरे चैव न विश्वसेत् ।
क्षिप्रं स हन्यते मूढो न हि वैरं प्रशाम्यति ॥ १२-१३९-२६ (७०३४२)
अन्योन्यकृतवैराणां पुत्रपौत्रं नियच्छति ।
पुत्रपौत्रविनाशे च परलोकं नियच्छति ॥ १२-१३९-२७ (७०३४३)
सर्वेषां कृतवैराणामविश्वासः सुखावहः ।
एकान्ततो न विश्वासः कार्यो विश्वासघातके ॥ १२-१३९-२८ (७०३४४)
न विश्वसेदविश्वस्ते विश्वस्ते नातिविश्वसेत् ।
विश्वासाद्भयमुत्पन्नमपि मूलं निकृन्तति ।
कामं विश्वासयेदन्यान्परेषां च न विश्वसेत् ॥ १२-१३९-२९ (७०३४५)
माता पिता बान्धवानां वरिष्ठौ
भार्या क्षेत्रं बीजमात्रं तु पुत्रः ।
भ्राता शत्रुः क्लिन्नपाणिर्वयस्य
आत्मा ह्येकः सुखदुःखस्य भोक्ता ॥ १२-१३९-३० (७०३४६)
अन्योन्यकृतवैराणां न संधिरुपपद्यते ।
स च हेतुरतिक्रान्तो यदर्थमहमावसम् ॥ १२-१३९-३१ (७०३४७)
पूजितस्यार्थमानाभ्यां सान्त्वं पूर्वापकारिणः ।
हृदयं भवत्यविश्वस्तं कर्म त्रासयते बलात् ॥ १२-१३९-३२ (७०३४८)
पूर्वं संमानना यत्र पश्चाच्चैव विमानना ।
जह्यात्स सत्ववान्वासं संमानितविमानितः ॥ १२-१३९-३३ (७०३४९)
उषिताऽस्मि तवागारे दीर्घकालमहिंसिता ।
तदिदं वैरमुत्पन्नं सुखमास्व व्रजाम्यहम् ॥ १२-१३९-३४ (७०३५०)
ब्रह्मदत्त उवाच। १२-१३९-३५क्ष् (५७३१)
यः कृते प्रतिकुर्याद्वि न स तत्रापराध्नुयात् ।
अनृणस्तेन भवति वस पूजनि मागमः ॥ १२-१३९-३५ (७०३५१)
पूजन्युवाच। १२-१३९-३६क्ष् (५७३२)
न कृतस्य तु कर्तुश्च सख्यं संधीयते पुनः ।
हृदयं तत्र जानाति कर्तुश्चैव कृतस्य च ॥ १२-१३९-३६ (७०३५२)
ब्रह्मदत्त उवाच। १२-१३९-३७क्ष् (५७३३)
कृतस्य चैव कर्तुश्च सख्यं संधीयते पुनः ।
वैरस्योपशमो दृष्टः पापं नोपाश्नुते पुनः ॥ १२-१३९-३७ (७०३५३)
पूजन्युवाच। १२-१३९-३८क्ष् (५७३४)
नास्ति वैरमतिक्रान्तं सान्त्वितोऽस्मीति नाश्वसेत् ।
विश्वासाद्बध्यते लोकस्तस्माच्छ्रेयोप्यदर्शनम् ॥ १२-१३९-३८ (७०३५४)
तरसा ये न शक्यन्ते शस्त्रैः सुनिसितैरपि ।
साम्ना तेऽपि निगृह्यते गजा इव करेणुभिः ॥ १२-१३९-३९ (७०३५५)

ब्रह्मदत्त उवाच। १२-१३९-४०क्ष् (५७३५)
संवासाज्जायते स्नेहो जीवितान्तकरेष्वपि ।
अन्योन्यस्य हि विश्वासः श्वानश्वपचयोरिव ॥ १२-१३९-४० (७०३५६)
अन्योन्यकृतवैराणां संवासान्मृदुतां गतम् ।
नैव तिष्ठति तद्वैरं पुष्करस्थमिवोदकम् ॥ १२-१३९-४१ (७०३५७)
पूजन्युवाच। १२-१३९-४२क्ष् (५७३६)
वैरं पञ्चसमुत्थानं तच्च बुध्यन्ति पण्डिताः ।
स्त्रीकृतं वास्तुजं वाग्जं स्वसपत्नापराधजम् ॥ १२-१३९-४२ (७०३५८)
तत्र दाता न हन्तव्यः क्षत्रियेण विशेषतः ।
प्रकाशं वाऽप्रकाशं वा बुद्ध्वा दोषबलाबलम् ॥ १२-१३९-४३ (७०३५९)
कृतवैरे न विश्वासः कार्यस्त्विह सुहृद्यपि ।
प्रच्छन्नं तिष्ठते वैरं गूढोऽग्निरिव दारुषु ॥ १२-१३९-४४ (७०३६०)
न वित्तेन न पारुष्यैर्न च सान्त्वेन च श्रुतैः ।
वैराग्निः शाम्यते राजन्निमग्नोऽग्निरिवार्णवे ॥ १२-१३९-४५ (७०३६१)
न हि वैराग्निरुद्धूतः कर्म चाप्यपराधजम् ।
शाम्यत्यदग्ध्वा नृपते विना ह्येकतरक्षयात् ॥ १२-१३९-४६ (७०३६२)
सत्कृतस्यार्थमानाभ्यां तत्र पूर्वापकारिणः ।
नैव शान्तिर्न विश्वासः कर्मणा जायते बलात् ॥ १२-१३९-४७ (७०३६३)
नैवापकारे कस्मिंश्चिदहं त्वयि तथा भवान् ।
उषितावाऽपि चक्रितं नेदानीं विश्वसाम्यहम् ॥ १२-१३९-४८ (७०३६४)
ब्रह्मदत्त उवाच। १२-१३९-४९क्ष् (५७३७)
कालेन क्रियते कार्यं तथैव विविधाः क्रियाः
कालेनैव प्रवर्तन्ते कः कस्येत्यपराध्यति ॥ १२-१३९-४९ (७०३६५)
तुल्यं चोभे प्रवर्तेते मरणं जन्म चैव हि ।
कार्यते चैव कालेन तन्निमित्तं न जीवति ॥ १२-१३९-५० (७०३६६)
बध्यन्ते युगपत्केचिदेकैकं चापरे तथा ।
कालो दहति भूतानि संप्राप्तोऽग्निरिवेन्धनम् ॥ १२-१३९-५१ (७०३६७)
नाहं प्रमाणं नैव त्वभन्योन्यं कारणं शुभे ।
कालो नित्यमुपादत्ते सुखं दुःखं च देहिनाम् ॥ १२-१३९-५२ (७०३६८)
एवं वसेह सन्नेहा यथाकाममहिंसिता ।
यत्कृतं तत्तु मे क्षान्तं त्वं च वै क्षम पूजनि ॥ १२-१३९-५३ (७०३६९)
पूजन्युवाच। १२-१३९-५४क्ष् (५७३८)
यदि कालः प्रमाणं ते न वैरं कस्यचिद्भवेत् ।
कस्मादपचितिं यान्ति बान्धवा बान्धवे हते ॥ १२-१३९-५४ (७०३७०)
कस्माद्देवासुराः सर्वे अन्योन्यमभिजघ्निरे ।
यदि कालेन निर्याणं सुखदुःखे भवाभवौ ॥ १२-१३९-५५ (७०३७१)

भिषजो भैषजं कर्तुं कस्मादिच्छन्ति रोगिणः ।
यदि कालेन पच्यन्ते भेषजैः किं प्रयोजनम् ॥१२-१३९-५६ (७०३७२)
प्रलापः सुमहान्कस्मात्क्रियते शोकमूर्च्छितैः ।
यदि कालः प्रमाणं ते कस्माद्धर्मोऽस्ति कर्तृषु ॥१२-१३९-५७ (७०३७३)
तव पुत्रो ममापत्यं हतवान्हिंसितो मया ।
अनन्तरं त्वयाहं च बाधितव्या महीपते ॥१२-१३९-५८ (७०३७४)
अहं हि पुत्रशोकेन कृतपापा तवात्मजे ।
तथा त्वया प्रहर्तव्यं मयि तत्त्वं च मे शृणु ॥१२-१३९-५९ (७०३७५)
भक्षार्थं क्रीडनार्थं च नरा वाञ्छन्ति पक्षिणः ।
तृतीयो नास्ति संयोगो वधबन्धादृते क्षमः ॥१२-१३९-६० (७०३७६)
वधबन्धभयादेके मोक्षतन्त्रमुपाश्रिताः ।
जनीमरणजं दुःखं प्राहुर्वेदविदो जनाः ॥१२-१३९-६१ (७०३७७)
सर्वस्य दयिताः प्राणाः सर्वस्य दयिताः सुताः ।
दुःखादुद्विजते सर्वं सर्वस्य सुखमीप्सितम् ॥१२-१३९-६२ (७०३७८)
दुःखं जरा ब्रह्मदत्त दुःखमर्थविपर्ययः ।
दुःखं चानिष्टसंवासो दुःखमिष्टवियोजनम् ॥१२-१३९-६३ (७०३७९)
वैरबन्धकृतं दुःखं स्त्रीकृतं सह तथा ।
दुःखं दुःखेन सततं विवर्धति---- धिप ॥१२-१३९-६४ (७०३८०)
न दुःखं परदुःखे वै केचिदाहुर----यः ।
यो दुःखं नाभिजानाति स जल्पति माहाजने ॥१२-१३९-६५ (७०३८१)
यस्तु शोचति दुःखार्तः स कथं वक्तमुत्सहेत ।
रसज्ञः सर्वदुःखस्य यथाऽऽत्मनि तथा परे ॥१२-१३९-६६ (७०३८२)
ग्भिन्ना श्लिष्टा न सज्यन्ते शस्त्रैः सुनिशितैरपि।
साम्ना तेऽपि निगृह्यन्ते गजा इव करेणुभिः ॥ १२-१३९-६७ (७०३८३)
यत्कृतं ते मया राजंस्त्वया च मम यत्कृतम् ।
न तद्वर्षशतैः शक्यं व्यपोहितुमरिंदम् ॥१२-१३९-६८ (७०३८४)
आवयोः कृतमन्योन्यं तस्य संधिर्न विद्यते ।
स्मृत्वास्मृत्वा हि ते पुत्रं नवं वैरं भविष्यति ॥१२-१३९-६९ (७०३८५)
वैरमन्तिकमासाद्य यः प्रीतिं कर्तुमिच्छति ।
मृण्मयस्येव भग्नस्य तस्य संधिर्न विद्यते ॥१२-१३९-७० (७०३८६)
निश्चयः स्वार्थशास्त्रेषु न विश्वासः सुखोदयः ।
उशना चैव गाथे द्वे प्रह्लादायाब्रवीत्पुरा ॥१२-१३९-७१ (७०३८७)
ये वैरिणः श्रद्दधते सत्ये सत्येतरेऽपि वा ।
वध्यन्ते श्रद्दधाना हि मधु शुष्कतृणैरिव ॥१२-१३९-७२ (७०३८८)
न हि वैराणि शाम्यन्ति कुलेष्वादशमाद्युगात् ।
आख्यातारश्च विद्यन्ते कुले चेज्जायते पुमान् ॥१२-१३९-७३ (७०३८९)

उपगृह्य तु वैराणि सान्त्वयन्ति नराधिपाः ।
अथैनं प्रतिहिंसन्ति पूर्णं घटमिवाश्मनि ॥ १२-१३९-७४ (७०३९०)
सदा न विश्वसेद्राजन्पापं कृत्वेह कस्यचित् ।
अपकृत्य परेषां हि विश्वासाद्दुःखमश्नुते ॥ १२-१३९-७५ (७०३९१)
ब्रह्मदत्त उवाच। १२-१३९-७६क्ष् (५७३९)
नाविश्वासाच्चिनोत्यर्थमीहते चापि किंचन ।
भयात्त्वेकतरं मित्रं कृतकृत्या भवत्विह ॥ १२-१३९-७६ (७०३९२)
पूजन्युवाच। १२-१३९-७७क्ष् (५७४०)
यस्येह व्रणिनौ पादौ पद्भ्यां च परिधावतः ।
क्षिण्येते तस्य तौ पादौ सुगुप्तमपि धावतः ॥ १२-१३९-७७ (७०३९३)
नेत्राभ्यां सरुजाभ्यां यः प्रतिवातमुदीक्षते ।
तस्य वायुरुजाऽत्यर्थं नेत्रयोर्भवति ध्रुवम् ॥ १२-१३९-७८ (७०३९४)
दुष्टं पन्थानमासाद्य यो मोहादभिपद्यते ।
आत्मनो बलमज्ञात्वा तदन्तं तस्य जीवितम् ॥ १२-१३९-७९ (७०३९५)
यस्तु वर्षमविज्ञाय क्षेत्रं कर्षति कर्षकः ।
हीनः पुरुषकारेण तस्य वै नाप्नुते फलम् ॥ १२-१३९-८० (७०३९६)
यस्तु तिक्तं कषायं वा स्वादु वा मधुरं हितम् ।
आहारं कुरुते नित्यं सोऽमृतत्वाय कल्पते ॥ १२-१३९-८१ (७०३९७)
पथ्यं मुक्त्वा तु यो मोहाद्दुष्टमश्नाति भोजनम् ।
परिणाममविज्ञाय तदन्तं तस्य जीवितम् ॥ १२-१३९-८२ (७०३९८)
दैवं पुरुषकारश्च स्थितावन्योन्यसंश्रयात् ।
उदात्तं कर्म वै तत्र दैवं क्लीबा उपासते ॥ १२-१३९-८३ (७०३९९)
कर्म चात्महितं कार्यं तीक्ष्णं वा यदि वा मृदु ।
ग्रस्यतेऽकर्मशीलस्तु सदाऽनर्थैरकिंचनः ॥ १२-१३९-८४ (७०४००)
तस्मात्संशयितव्येऽर्थे कार्य एव पराक्रमः ।
सर्वस्वमपि संत्यज्य कार्यमात्महितं नरैः ॥ १२-१३९-८५ (७०४०१)
विद्या शौचं च दाक्ष्यं च बलं शौर्यं च पञ्चमम् ।
मित्राणि सहजान्याहुर्वर्तयन्तीह यैर्बुधाः ॥ १२-१३९-८६ (७०४०२)
निवेशनं च कुप्यं च क्षेत्रं भार्या सुहृज्जनम् ।
एतान्युपचितान्याहुः सर्वत्र लभते पुमान् ॥ १२-१३९-८७ (७०४०३)
सर्वत्र रमते प्राज्ञः सर्वत्र च विरोचते ।
न विभीषयते किंचिद्भीषितो न बिभेति च ॥ १२-१३९-८८ (७०४०४)
नित्यं बुद्धिमतोऽप्यर्थः स्वल्पकोऽपि विवर्धते ।
दाक्ष्येण कुर्वतां कर्म संयमात्प्रतितिष्ठति ॥ १२-१३९-८९ (७०४०५)
गृहस्नेहावबद्धानां नराणामल्पमेधसाम् ।
कुस्त्री खादति मांसानि माघमां सेगवा इव ॥ १२-१३९-९० (७०४०६)

गृहं क्षेत्राणि मित्राणि स्वदेश इति चापरे ।
इत्येवमवसीदन्ति नरा बुद्धिविपर्यये ॥ १२-१३९-९१ (७०४०७)
उत्पथाच्च विमानाच्च देशाद्दुर्भिक्षपीडितात् ।
अन्यत्र वसतिं गच्छेद्वसेद्वा नित्यमानितः ॥ १२-१३९-९२ (७०४०८)
तस्मादन्यत्र यास्यामि वस्तुं नाहमिहोत्सहे ।
कृतमेतदनाहार्यं तव पुत्रे च पार्थिव ॥ १२-१३९-९३ (७०४०९)
कुभार्यां च कुपुत्रं च कुराजानं कुसौहृदम् ।
कुसंबन्धं कुदेशं च दूरतः परिवर्जयेत् ॥ १२-१३९-९४ (७०४१०)
कुमित्रे नास्ति विश्वासः कुभार्यायां कुतो रतिः ।
कुराज्ये निर्वृतिर्नास्ति कुदेशे नास्ति जीविका ॥ १२-१३९-९५ (७०४११)
कुपुत्रे सौहृदं नास्ति नित्यमस्थिरसौहृदम् ।
अवमानः कुंसबन्धे भवत्यर्थविपर्यये ॥ १२-१३९-९६ (७०४१२)
सा भार्या या प्रियं ब्रूते स पुत्रो यत्र निर्वृतिः ।
तन्मित्रं यत्र विश्वासः स देशो यत्र जीवति ॥ १२-१३९-९७ (७०४१३)
यत्र नास्ति बलात्कारः स राजा तीव्रशासनः ।
स च यौनाभिसंबन्धो यः सतोऽपि बुभूषति ॥ १२-१३९-९८ (७०४१४)
भार्या देशोऽथ मित्राणि पुत्रसंबन्धिबान्धवाः ।
एते सर्वे गुणवति धर्मनेत्रे महीपतौ ॥ १२-१३९-९९ (७०४१५)
अधर्मज्ञस्य विषये प्रजा नश्यन्ति निग्रहात् ।
राजा मूलं त्रिवर्गस्य अप्रमत्तोऽनुपालयन् ॥ १२-१३९-१०० (७०४१६)
बलिषड्भागमुद्धृत्य फलं समुपयोजयेत् ।
न रक्षति प्रजाः सम्यग्यः स पार्थिवतस्करः ॥ १२-१३९-१०१ (७०४१७)
दत्वाऽभयं यः स्वयमेव राजा
न तत्प्रमाणं कुरुतेऽर्थलोभात् ।
स सर्वलोकादुपलभ्य पाप
मधर्मबुद्धिर्निरयं प्रयाति ॥ १२-१३९-१०२ (७०४१८)
दत्त्वाऽभयं स्वयं राजा प्रमाणं कुरुते यदि ।
स सर्वं सुखमाप्नोति प्रजा धर्मेण पालयन् ॥ १२-१३९-१०३ (७०४१९)
पिता भ्राता गुरुः शास्ता वह्निर्वैश्रवणो यमः ।
सप्त राज्ञो गुणानेतान्मनुराह प्रजापतिः ॥ १२-१३९-१०४ (७०४२०)
पिता हि राजा लोकस्य प्रजानां योऽनुकम्पिता ।
तस्मिन्मिथ्यापनीते हि तिर्यग्भवति मानवः ॥ १२-१३९-१०५ (७०४२१)
संभावयति मातेव दीनमप्युपपद्यते ।
दहत्यग्निरिवानिष्टान्यमयत्यहितांस्तदा ॥ १२-१३९-१०६ (७०४२२)
इष्टेषु विसृजन्नर्थान्कुबेर इव कामदः ।
गुरुर्धर्मोपदे--- गोप्ता च परिपालनात् ॥ १२-१३९-१०७ (७०४२३)

यस्तु रञ्जयते ---- पौरजानपदान्गुणैः ।
न तस्य भ्रश्यते---ज्यं गुणधर्मानुपालनात् ॥ १२-१३९-१०८ (७०४२४)
यः सम्यक्प्रति---ह्णाति पौरजानपदार्चनम् ।
स सुखं प्रेक्षते राजा इह लोके परत्र च ॥ १२-१३९-१०९ (७०४२५)
नित्योद्विग्नाः प्रजा यस्य करभारप्रपीडिताः ।
अनर्थैर्विप्रलुप्यन्ते स गच्छति पराभवम् ॥ १२-१३९-११० (७०४२६)
प्रजा यस्य विवर्धन्ते सरसीव महोत्पलम् ।
स राजा सर्वसुखदः स्वर्गलोके महीयते ॥ १२-१३९-१११ (७०४२७)
बलिना विग्रहो राजन्न कदाचित्प्रशस्यते ।
बलिना विग्रही तस्य कुतो राज्यं कुतः सुखम् ॥ १२-१३९-११२ (७०४२८)
भीष्म उवाच। १२-१३९-११३क्ष् (५७४१)
सैवमुक्त्वा शकुनिका ब्रह्मदत्तं नराधिपम् ।
राजानं समनुज्ञाप्य जगामाभीप्सितां दिशम् ॥ १२-१३९-११३ (७०४२९)
एतत्ते ब्रह्मदत्तस्य पूजन्या सह भाषितम् ।
मयोक्तं भरतश्रेष्ठ किमन्यच्छ्रोतुमिच्छसि ॥ ॥ १२-१३९-११४ (७०४३०)

इति श्रीमन्महाभारते शान्तिपर्वणि आपद्धर्मपर्वणि
एकोनचत्वारिंशदधिकशततमोऽध्यायः ॥ १३९.।
Mahabharata - Shanti Parva - Chapter Footnotes

१२-१३९-६ जीवजीवकः शाकुनिकः ।जीवजीवक इति पक्षिविशेष इत्यन्ये ॥
१२-१३९-७ अभिप्रजाता प्रसूतवती ।देव्यां राजभार्यायाम् ॥
१२-१३९-१३ समजातकं समानवयसम् ॥
१२-१३९-२१ इच्छया बुद्धिपूर्वकम् ।उपसर्पति फलरूपेण कर्तारम् ॥
१२-१३९-२२ पापमपराधकृतमेनः ॥
१२-१३९-२४ मागमः मास्मगमः ॥
१२-१३९-२५ परिलम्बतः विश्वासं कुर्वतः ॥
१२-१३९-२७ नियच्छति मृत्युर्नाशयति ।ततो
नष्टसंततित्वात्परलोकं च नियच्छति ॥
१२-१३९-३० भार्या जरेति झ ।पाठः।जरा वीर्यहरत्वात्।बीजमात्रं
प्रसवरूपत्वात्।शत्रुः रिक्यहरत्वात्।क्लिन्नपाणिः
उपक्रियमाणः।धनादिना पूज्यमानमेव मित्रं नान्यदित्यर्थः ॥
१२-१३९-३१ हेतुः पुत्ररक्षा स्नेहो वा ॥
१२-१३९-३२ कर्म स्वकृतम् ॥
१२-१३९-३६ अन्योन्यस्यापकारमुभावपि नित्यं स्मरत इत्यर्थः ॥
१२-१३९-३९ न शक्यन्ते जेतुमिति शेषः ॥

१२-१३९-४० श्वपचश्चण्डालः । श्वमांसाहारोऽपि शुना सह सख्यमेति ॥
१२-१३९-४२ वैरं स्त्रीकृतं कृष्णशिशुपालयोः वास्तु गृहादिकं स्थानं तज्जं कौरवपाण्डवानाम् । वाग्जं द्रोणद्रुपदयोः। सापन्नं जातिवैरं मूषकमार्जारयोः। अपराधजं आवयोः ॥
१२-१३९-४३ कृतवैरोऽपि दाताऽर्थादिना मानयिता अर्थाशावत राज्ञा न हन्तव्यः ॥
१२-१३९-४६ वैराग्निः अदग्ध्वा न शाम्यत्यपराधजं कर्म एकतरक्षयाद्विना न शाम्यतीति योजना ॥
१२-१३९-५० कार्यते जायते । तन्निमित्तं कालनिमित्तम्। न जीवति म्रियते ॥
१२-१३९-५३ क्षम क्षमस्व ॥
१२-१३९-५७ कस्माद्धर्मोऽस्ति कर्तृषु । तदा विधिनिषेधकथा व्यर्था स्यादिति भावः ॥
१२-१३९-६७ भिन्नकमा न सज्यन्त इति ध । पाठः ॥
१२-१३९-७२ वैरिणो वाक्ये इति शेषः । शत्रुणा दर्शितं पुरःस्थितं मधु श्रद्दधानाः शुष्कतृणैश्छन्ने प्रपाते यथा पतन्ति तद्वदेते इत्यर्थः ॥
१२-१३९-७६ सर्वथाऽनाश्वासे नृणां जीवनमेव न स्यादित्याह नेति ॥
१२-१३९-८२ परिमाणमविज्ञाय इति ड । थ। पाटः ॥
१२-१३९-८५ तस्मात्सर्वं व्यपोह्यार्थमिति झ । पाठः ॥
१२-१३९-८७ कुप्यं ताम्रादि । चादकुप्यं स्वर्णरत्नादि। उपहितान्याहुरिति झ। पाठः। तत्र उपहितानि उपधिमित्राणीत्यर्थः ॥
१२-१३९-८८ किंचित्तमिति शेषः ॥
१२-१३९-९० खादति । स्वापराधैस्त्वं संतापयति शुष्कं करोति। माघमां कर्कटीम्। सेगवास्तदपत्यानि। कर्कट्या नाशहेतुर्गर्भ एवेति प्रसिद्धम् ॥
१२-१३९-९२ उत्पतेत्सहजाद्देशाद्व्याधिदुर्भिक्षपीडितादिति झ । पाठः ॥
१२-१३९-९३ मे मया । अनाहार्यं अपरिहार्यमित्यर्थः ॥
१२-१३९-९८ भीरेव नास्ति संबन्धो दरिद्रं यो बुभूषति इति झ । पाठः तत्र यत्र देशे बलात्कारो नास्ति तत्र भीरे वनास्ति। यो राजा दरिद्रं जनं बुभूषति पालयितुमिच्छति स एव तेन सह पाल्यपालकभावलक्षणः संबन्ध इति योज्यम्। यं जनोऽपि बुभूषति इति ड। थ। पाठः ॥
१२-१३९-९९ धर्मनेत्रो धर्मनेता ॥
१२-१३९-१०१ समुपयोजयेत् भक्षयेत् ॥
१२-१३९-१०२ अभयमिति च्छेदः ॥
१२-१३९-१०६ संभावयति इष्टं चिन्तयति । उपपद्यते पालयति ॥

॥ श्रीः ॥
१२.१४०. अध्यायः १४०

Mahabharata - Shanti Parva - Chapter Topics
भीष्मेण युधिष्ठिरंप्रति शत्रुंतपाय भारद्वाजोक्तापद्धर्मानुवादः ॥ १.।
Mahabharata - Shanti Parva - Chapter Text

१२-१४०-० (७०५५९)
युधिष्ठिर उवाच। १२-१४०-०क्ष् (५७४४)
युगक्षयात्परिक्षीणे धर्मे लोके च भारत ।
दस्युभिः पीड्यमाने च कथं स्थेयं पितामह ॥ १२-१४०-१ (७०५६०)
भीष्म उवाच। १२-१४०-२क्ष् (५७४५)
हन्त ते वर्तयिष्यामि नीतिमापत्सु भारत ।
उत्सृज्यापि घृणां काले यथा वर्तेत भूमिपः ॥ १२-१४०-२ (७०५६१)
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
भारद्वाजस्य संवादं राज्ञः शत्रुंतपस्य च ॥ १२-१४०-३ (७०५६२)
राजात्शत्रुंतपो नाम सौवीरेषु महारथः ।
भारद्वाजमुपागम्य पप्रच्छार्थविनिश्चयम् ॥ १२-१४०-४ (७०५६३)
अलब्धस्य कथं लिप्सा लब्धं केन विवर्धते ।
वधितं पाल्यते केन पालितं प्रणयेत्कथम् ॥ १२-१४०-५ (७०५६४)
तस्मै विनिश्चितार्थाय परिपृष्टोऽर्थिश्चयम् ।
उवाच मतिमान्वाक्यमिदं हेतुमदुत्तमम् ॥ १२-१४०-६ (७०५६५)
नित्यमुद्यतदण्डः स्यान्नित्यं विवृतपौरुषः ।
अच्छिद्रश्छिद्रदर्शी च परेषां विवरानुगः ॥ १२-१४०-७ (७०५६६)
नित्यमुद्यतदण्डस्य भृशमुद्विजते नरः ।
तस्मात्सर्वाणि भूतानि दण्डेनैव प्रसाधयेत् ॥ १२-१४०-८ (७०५६७)
एवमेव प्रशंसन्ति बुधा ये तत्त्वदर्शिनः ।
तस्माच्चतुष्टये तस्मिन्प्रधानो दण्ड उच्यते ॥ १२-१४०-९ (७०५६८)
छिन्नमूले त्वधिष्ठाने सर्वे तज्जीविनो हताः ।
कथं हि शाखास्तिष्ठेयुश्छिन्नमूले वनस्पतौ ॥ १२-१४०-१० (७०५६९)
मूलमेवादितश्छिन्द्यादरिपक्षस्य पण्डितः ।
ततः सहायान्पक्षं च सर्वमेवानुशातयेत् ॥ १२-१४०-११ (७०५७०)
सुमन्त्रितं सुविक्रान्तं सुयुद्धं सुपलायितम् ।
आपदागमकाले तु कुर्वीत न विचारयेत् ॥ १२-१४०-१२ (७०५७१)
वाङ्भात्रेण विनीतः स्याद्धृदयेन यथा क्षुरः ।

श्लक्ष्णपूर्वाभिभाषी च कामक्रोधौ विवर्जयेत् ॥ १२-१४०-१३ (७०५७२)
सपत्नसहितो राज्ये कृत्वा सन्धिं न विश्वसेत् ।
उपक्रामेत्ततः शीघ्रं कृतकार्यो विचक्षणः ॥ १२-१४०-१४ (७०५७३)
शत्रुं च मित्रं पूर्वेण सान्त्वेनैवानुसान्त्वयेत् ।
नित्यशश्चोद्विजेत्तस्मात्सपद्विश्मगतादिव ॥ १२-१४०-१५ (७०५७४)
यस्य बुद्धिं परिभवेत्तमतीतेन सान्त्वयेत् ।
अनागतेन दुष्प्रज्ञं प्रत्युत्पन्नेन पण्डितम् ॥ १२-१४०-१६ (७०५७५)
अञ्जलिं शपथं सान्त्वं शिरसा पादवन्दनम् ।
अश्रुप्रपातनं चैव कर्तव्यं भूतिमिच्छता ॥ १२-१४०-१७ (७०५७६)
वहेदमित्रं स्कन्धेन यावदर्थस्य लम्भनम् ।
अथैनमागते काले भिन्द्याद्घटमिवाश्मनि ॥ १२-१४०-१८ (७०५७७)
मुहूर्तमपि राजेन्द्र तिन्दुकालातवज्ज्वलेत् ।
मा तुषाग्निरिवानर्चिर्धूमायेत चिरं नरः ॥ १२-१४०-१९ (७०५७८)
नानार्थिकोऽर्थसंबन्धं कृतघ्ने न समाचरेत् ।
अर्थी तु शक्यते भोक्तुं कृतकार्योऽवमन्यते ।
तस्मात्सर्वाणि कार्याणि सावशेषाणि कारयेत् ॥ १२-१४०-२० (७०५७९)
कोकिलस्य वराहस्य मेरोः शून्यस्य वेस्मनः ।
व्यालस्य भक्तचित्तस्य यच्छ्रेयस्तत्समाचरेत् ॥ १२-१४०-२१ (७०५८०)
उत्थायोत्थाय गच्छेच्च नित्ययुक्तो रिपोर्गृहम् ।
कुशलं चास्य पृच्छेत यद्यप्यकुशलं भवेत् ॥ १२-१४०-२२ (७०५८१)
नालसाः प्राप्नुवन्त्यर्थान्न क्लीबा नातिमानिनः ।
न च लोकरवाद्भीता न वै शश्वत्प्रतीक्षिणः ॥ १२-१४०-२३ (७०५८२)
नास्य च्छिद्रं परो विद्याद्विद्याच्छिद्रं परस्य तु ।
गूहेत्कूर्म इवाङ्गानि रक्षेद्विवरमात्मनः ॥ १२-१४०-२४ (७०५८३)
बकवच्चिन्तयेदर्थान्सिंहवच्च पराक्रमेत् ।
वृकवच्चावलुम्पेत शरवच्च विनिष्पतेत् ॥ १२-१४०-२५ (७०५८४)
पानमक्षास्तथा नार्यो मृगया गीतवादितम् ।
एतानि युक्त्या सेवेत प्रसङ्गो ह्यत्र दोषवान् ॥ १२-१४०-२६ (७०५८५)
कुर्यात्तृणमयं चापं शयीत मृगशायिकाम् ।
अन्धः स्यादन्धवेलायां बाधिर्यमपि संश्रयेत् ॥ १२-१४०-२७ (७०५८६)
देशकालं समासाद्य विक्रमेत विचक्षणः ।
देशकालव्यतीतो हि विक्रमो निष्फलो भवेत् ॥ १२-१४०-२८ (७०५८७)
कालाकालौ संप्रधार्य बलाबलमथात्मनः ।
परस्य च बलं ज्ञात्वा तथाऽऽत्मानं नियोजयेत् ॥ १२-१४०-२९ (७०५८८)
दण्डेनोपनतं शत्रुं यो राजा न नियच्छति ।
स मृत्युमुपगूहेत् गर्भमश्वतरी यथा ॥ १२-१४०-३० (७०५८९)

सुपुष्पितः स्यादफलः फलवान्स्याद्दुरारुहः ।
आमः स्यात्पक्वसंकाशो न च शीर्येत कस्यचित् ॥ १२-१४०-३१ (७०५९०)
आशां कालवतीं कुर्यात्तां च विघ्नेन योजयेत् ।
विघ्नं निमित्ततो ब्रूयान्निमित्तं चापि हेतुमत् ॥ १२-१४०-३२ (७०५९१)
भीतवत्संविधातव्यं यावद्भयमनागतम् ।
आगतं तु भयं दृष्ट्वा प्रहर्तव्यमभीतवत् ॥ १२-१४०-३३ (७०५९२)
न साहसमनारुह्य नरो भद्राणि पश्यति ।
संशयं पुनरारुह्य यदि जीवति पश्यति ॥ १२-१४०-३४ (७०५९३)
अनागतं विजानीयात्त्यजेद्भयमुपस्थितम् ।
पुनर्बुद्धिक्षयात्किंचिदनिवृत्तिं निशामयेत् ॥ १२-१४०-३५ (७०५९४)
प्रत्युपस्थितकालस्य सुखस्य परिवर्जनम् ।
अनागतसुखाशा च नैव बुद्धिमतां नयः ॥ १२-१४०-३६ (७०५९५)
योऽरिणा सह संधाय विश्वस्तः स्वपते सुखम् ।
स वृक्षाग्रे प्रसुप्तो वा पतितः प्रतिबुध्यते ॥ १२-१४०-३७ (७०५९६)
कर्मणा येन केनेह मृदुना दारुणेन वा ।
उद्धरेद्दीनमात्मानं समर्थो धर्ममाचरेत् ॥ १२-१४०-३८ (७०५९७)
ये सपत्नाः सपत्नानां सर्वांस्ताननुवर्तयेत् ।
आत्मनश्चापि बोद्धव्याश्चाराः सुमहिताः परैः ॥ १२-१४०-३९ (७०५९८)
चारः सुविहितः कार्य आत्मनोऽथ परस्य च ।
पाषण्डांस्तापसादींश्च परराष्ट्रे प्रवेशयेत् ॥ १२-१४०-४० (७०५९९)
उद्यानेषु विहारेषु प्रपास्वावसथेषु च ।
पानागारे प्रवेशेषु तीर्थेषु च सभासु च ॥ १२-१४०-४१ (७०६००)
धर्माभिचारिणः पापाश्चौरा लोकस्य कण्टकाः ।
समागच्छन्ति तान्बुद्ध्वा नियच्छेच्छमयीत च ॥ १२-१४०-४२ (७०६०१)
न विश्वसेदविश्वस्ते विश्वस्ते नातिविश्वसेत् ।
विश्वासाद्भयमभ्येति नापरीक्ष्य च विश्वसेत् ॥ १२-१४०-४३ (७०६०२)
विश्वासयित्वा तु परं तत्त्वभूतेन हेतुना ।
अथास्य प्रहरेत्काले किंचिद्विचलिते पदे ॥ १२-१४०-४४ (७०६०३)
अशङ्क्यमपि शङ्केत नित्यं शङ्केत शङ्कितान ।
भयं ह्यशङ्किताज्जातं समूलमपि कृन्तति ॥ १२-१४०-४५ (७०६०४)
अवधानेन मौनेन काषायेण जटाजिनैः ।
विश्वासयित्वा द्वेष्टारमवलुम्पेद्यथा वृकः ॥ १२-१४०-४६ (७०६०५)
पुत्रो वा यदि वा भ्राता पिता वा यदि वा सुहृद ।
अर्थस्य विघ्नं कुर्वाणा हन्तव्या भूतिमिच्छता ॥ १२-१४०-४७ (७०६०६)
गुरोरप्यवलिप्तस्य कार्याकार्यमजानतः ।
उत्पथं प्रतिपन्नस्य कार्यं भवति शासनम् ॥ १२-१४०-४८ (७०६०७)

प्रत्युत्थानाभिवादाभ्यां संप्रदानेन केनचित् ।
प्रपूजयन्निघाती स्यात्तीक्ष्णतुण्ड इव द्विजः। १२-१४०-४९ (७०६०८)
नाच्छित्त्वा परमर्माणि नाकृत्वा कर्म दारुणम् ।
नाहत्वा मत्स्यघातीव प्राप्नोति परमां श्रियम् ॥ १२-१४०-५० (७०६०९)
नास्ति जात्या रिपुर्नाम मित्रं वाऽपि न विद्यते ।
सामर्थ्ययोगाज्जायन्ते मित्राणि रिपवस्तथा ॥ १२-१४०-५१ (७०६१०)
न प्रमुञ्चेत दायादं वदन्तं करुणं बहु ।
दुःखं तत्र न कर्तव्यं हन्यात्पूर्वापकारिणम् ॥ १२-१४०-५२ (७०६११)
संग्रहानुग्रहे यत्नः सदा कार्योऽनसूयता ।
निग्रहश्चापि यत्नेन कर्तव्यो हितमिच्छता ॥ १२-१४०-५३ (७०६१२)
प्रहरिष्यन्प्रियं ब्रूयात्प्रहृत्यापि प्रियोत्तरम् ।
असिनाऽपि शिरश्छित्त्वा शोचेत च रुदेत च ॥ १२-१४०-५४ (७०६१३)
निमन्त्रयीत सान्त्वेन संमानेन तितिक्षया ।
आशाकरणमित्येतत्कर्तव्यं भूतिमिच्छता ॥ १२-१४०-५५ (७०६१४)
न शुष्कवैरं कुर्वीत बाहुभ्यां न नदीं तरेत् ।
अनर्थकमनायुष्यं गोविषाणस्य भक्षणम् ।
दन्ताश्च परिमृद्यन्ते रसश्चापि न लभ्यते ॥ १२-१४०-५६ (७०६१५)
त्रिवर्गे त्रिविधा पीडा अनुबन्धस्तथैव च ।
अनुबन्धं तथा ज्ञात्वा पीडां च परिवर्जयेत् ॥ १२-१४०-५७ (७०६१६)
ऋणशेषं चाग्निशेषं शत्रुशेषं तथैव च ।
पुनः पुनः प्रवर्धन्ते तस्माच्छेषं न कारयेत् ॥ १२-१४०-५८ (७०६१७)
ऋणशेषां विवर्धन्ते परिभूताश्च शत्रवः ।
आवहन्त्यनयं तीव्रं व्याधयश्चाप्युपेक्षिताः ॥ १२-१४०-५९ (७०६१८)
नाम---क्कृत्यकारी स्यादप्रमत्तः सदा भवेत् ।
कष्यकोपि हि दुश्छिन्नो विकारं कुरुते चिरम् ॥ १२-१४०-६० (७०६१९)
वधेम च मनुष्याणां मार्गाणां दूषणेन च ।
आकाराणां विनाशैश्च परराष्ट्रं विनाशयेत् ॥ १२-१४०-६१ (७०६२०)
गृध्रदृष्टिर्बकालीनः श्वचेष्टः सिंहविक्रमः ।
अनुद्विग्नः काकशङ्की भुजङ्गचरितं चरेत् ॥ १२-१४०-६२ (७०६२१)
शूरमञ्जलिपातेन भीरुं भेदेन भेदयेत् ।
लुब्धमर्थप्रदानेन समं तुल्येन विग्रहः ॥ १२-१४०-६३ (७०६२२)
श्रेणीमुख्योपजापेषु वल्लभानुनयेषु च ।
अमात्यान्परिरक्षेत भेदसंघातयोरपि ॥ १२-१४०-६४ (७०६२३)
मृदुरित्यवजानन्ति तीक्ष्ण इत्युद्विजन्ति च ।
तीक्ष्णकाले भवेत्तीक्ष्णो मृदुकाले मृदुर्भवेत् ॥ १२-१४०-६५ (७०६२४)
मृदुनैव मृदुं हन्ति मृदुना हन्ति दारुणम् ।

नासाध्यं मृदुना किंचित्तस्मात्तीक्ष्णतरो मृदुः ॥१२-१४०-६६ (७०६२५)
काले मृदुर्यो भवति काले भवति दारुणः ।
स साधयति कृत्यानि शत्रुं चाप्यधितिष्ठति ॥१२-१४०-६७ (७०६२६)
पण्डितेन विरुद्धस्तु दूरस्थोऽस्मीति नाश्वसेत् ।
दीर्घौ बुद्धिमतो बाहू याभ्यां हिंसति हिंसितः ॥१२-१४०-६८ (७०६२७)
न तत्तरेद्यस्य न पारमुत्तरे
न्न तद्धरेद्यत्पुनराहरेत्परः ।
न तत्खनेद्यस्य न मूलमुद्धरे
न्न तं हन्याद्यस्य शिरो न पातयेत् ॥ १२-१४०-६९ (७०६२८)
इतीदमुक्तं वृजिनाभिसंहितं
न चैतदेवं पुरुषः समाचरेत् ।
परप्रयुक्तस्तु कथं विभावये
दतो मयोक्तं भवतो हितार्थिना ॥ १२-१४०-७० (७०६२९)
भीष्म उवाच।१२-१४०-७१क्ष् (५७४६)
यथावदुक्तं वचनं हितार्थिना
निशम्य विप्रेण सुवीरराष्ट्रपः ।
तथाऽकरोद्वाक्यमदीनचेतनः
श्रियं च दीप्तां बुभुजे सबान्धवः ॥ ॥ १२-१४०-७१ (७०६३०)

इति श्रीमन्महाभारते शान्तिपर्वणि आपद्धर्मपर्वणि
चत्वारिंशदधिकशततमोऽध्यायः ॥१४०.।
Mahabharata - Shanti Parva - Chapter Footnotes

१२-१४०-२ घृणां दयाम् ।तथा वर्तेत भूमिपः इति
ट।ड।थ।द।पाठः ॥
१२-१४०-३ शत्रुंजयस्य च इति झ ।पाठः ॥
१२-१४०-२० नानार्थिकः बहुप्रयोजनवान् ।कृतघ्ने पुरुषे
अर्थसंबन्धं न समाचरेत् ॥
१२-१४०-२१ वराहस्य श्रेयोमूलोत्खननम् ।तच्च राजा शूत्रूणां
कुर्यात्।मेरोरचञ्चलत्वमनुल्लङ्घनीयत्वं च शून्यस्य वेश्मनः
संपदागम इष्टस्तमिच्छेत्।व्यालस्य सर्पवदन्ध्यकोपत्वमिष्टं
तमङ्गीकुर्यात्।नटस्य भक्तिमित्रस्य इति झ।पाठः।तत्र
नटस्य जानारूपत्वमिष्टम्।एवं राजा स्त्रिग्धप्रसन्नादीन् गुणान्
बिभृयात्।भक्तिमित्रस्य स्वाराध्योदय इष्ट एवं स्वप्रतिपाल्यानां
प्रजानामुदयो राज्ञा नित्यमेष्टव्य इत्यर्थः ॥
१२-१४०-२५ बकातीनामेकाग्रत्वं निर्भयत्वं

शीघ्रकारित्वमपरावृत्तित्वं च गुणास्तान् परार्थादाने राजाश्रयेदित्यर्थः ॥
१२-१४०-३० अश्वतरी गर्दभजाऽश्व उदरभेदेनैव प्रसूत इति प्रसिद्धम् ॥
१२-१४०-३४ न संशयमनारुह्य इति झ । पाठः ॥
१२-१४०-४० पाषण्डाद्यैरविज्ञातैर्विदित्वारिंवशं नयेत् । इति ट। ड। थ। पाठः ॥
१२-१४०-४७ कर्तव्या भृतिमिच्छता इति ट । पाठः। त्यक्तव्या भूतिमिच्छता इति ध। पाठः ॥
१२-१४०-५६ शुष्कं लाभशून्यम् ॥
१२-१४०-५७ त्रिवर्गः धर्मार्थकामाः तत्र त्रिविधा पीडा । धर्मेणार्थस्य पीडा अर्थेन धर्मस्य कामेन तयोरिति। अनुबन्धाः फलानि। धर्मस्यार्थः अर्थस्य कामः कामस्येन्द्रियप्रीतिरिति क्षुद्राः। धर्मस्य चित्तशुद्धिरर्थस्य यज्ञः कामस्य जीवनमात्रमिति प्राज्ञाः। तत्र बलाबलं ज्ञात्वाऽनुबन्धाँल्लिप्सेत पीडां तु पारवर्जयेदेवेत्यर्थः। पीडां विद्वान्वशं नयेदिति ड। थ। पाठः ॥
१२-१४०-६२ गृध्रदृष्टिगृध्रवत् दूरदर्शी । बकवदालीनो निश्चलः। श्वचेष्टः शुनकवज्जागरूकश्चोरसूचकश्च। काकवत् शङ्की परेङ्गितज्ञः। भुजङ्गचरितं अकस्मात्परकृते दुर्गादौ प्रवेशनम् ॥
१२-१४०-६४ श्रेणीमुख्यः नानाजातियाः सन्त एककार्ये निविष्टाः श्रेणयस्तासां मुख्यस्य उपजापो भेदः वल्लभानां मित्राणामनुनयेषु अन्यैः कियमाणेषु अमात्यान्परिरक्षेत । भेदात्संघातात्संभूयकार्यकारित्वाच्च। संहता ह्यामात्याः सद्यो राजानमराजानं कुर्युर्विपरीतं वा कुर्युरित्यर्थ-॥
१२-१४०-७० वृजिनाभिसंहितं आपत्कालाभिप्रायेणैवैतदुक्तं नत्वेतदेवं पुरुषः समाचरेत् । परेणाभियोगे कृते सति। इदं मदुक्तं कथं न भावयेत् अपितु भावयेदेव। आपदि एतदनुष्ठानादधर्मो नास्तीति भावः ॥

---

शन्तिपर्व-अध्यय१४१
॥ श्रीः ॥
१२.१४१. अध्यायः १४१

Mahabharata - Shanti Parva - Chapter Topics
भीष्मेण युधिष्ठिरंप्रति आपदि अभक्ष्यभक्षणेनाप्यात्मरक्षणकरणे दृष्टान्ततया विश्वामित्रश्वपचसंवादानुवादः ॥ १.।

१२-१४१-० (७०६३१)
युधिष्ठिर उवाच। १२-१४१-०क्ष् (५७४७)
हीने परमके धर्मे सर्वलोकविलङ्घिते ।
अधर्मे धर्मतां नीते धर्मे चाधर्मतां गते ॥ १२-१४१-१ (७०६३२)
मर्यादासु प्रभिन्नासु क्षुभिते लोकिस्श्चये ।
राजभिः पीडिते लोके चोरैर्वाऽपि विशांपते ॥ १२-१४१-२ (७०६३३)
सर्वाश्रमेषु मूढेषु कर्मसूपहतेषु च ।
कामाल्लोभाच्च मोहाच्च भयं पश्यत्सु भारत ॥ १२-१४१-३ (७०६३४)
अविश्वस्तेषु सर्वेषु नित्यं भीतेषु भारत ।
नित्यं च हन्यमानेषु वञ्चयत्सु परस्परम् ॥ १२-१४१-४ (७०६३५)
प्रदीप्तेषु च देशेषु ब्राह्मण्ये चातिपीडिते ।
अवर्षति च पर्जन्ये मिथो भेदे समुत्थिते ॥ १२-१४१-५ (७०६३६)
सर्वस्मिन्दस्युसाद्भूते पृथिव्यामुपजीवने ।
केनस्विद्ब्राह्मणो जीवेज्जघन्ये काल आगते ॥ १२-१४१-६ (७०६३७)
अतितिक्षुः पुत्रपौत्राननुक्रोशान्नराधिप ।
कतमापदि वर्तेत तन्मे ब्रूहि पितामह ॥ १२-१४१-७ (७०६३८)
कथं च राजा वर्तेत लोके कलुषतां गते ।
कथमर्थाच्च धर्माच्च न हीयेत परंतप ॥ १२-१४१-८ (७०६३९)
भीष्म उवाच। १२-१४१-९क्ष् (५७४८)
राजमूला महाबाहो योगक्षेमसुवृष्टयः ।
प्रजासु व्याधयश्चैव मरणं च भयानि च ॥ १२-१४१-९ (७०६४०)
कृतं त्रेता द्वापरं च कलिश्च भरतर्षभ ।
राजमूला इति मतिर्मम नास्त्यत्र संशयः ॥ १२-१४१-१० (७०६४१)
तस्मिंस्त्वभ्यागते काले प्रजानां दोषकारके ।
विज्ञानबलमास्थाय जीवितव्यं भवेत्तदा ॥ १२-१४१-११ (७०६४२)
अधाप्युदाहरन्तीममितिहासं पुरातनम् ।
विश्वामित्रस्य संवादं चण्डालस्य च पक्कणे ॥ १२-१४१-१२ (७०६४३)
त्रेताद्वापरयोः संधौ पुरा दैवव्यतिक्रमात् ।
अनावृष्टिरभूद्घोरा लोके द्वादशवार्षिकी ॥ १२-१४१-१३ (७०६४४)
प्रजानामतिवृद्धानां युगान्ते समुपस्थिते ।
त्रेतायां मोक्षसमये द्वापरप्रतिपादने ॥ १२-१४१-१४ (७०६४५)
न ववर्ष सहस्राक्षः प्रतिलोमोऽभवद्गुरुः ।
जगाम दक्षिणं मार्गं सोमो व्यावृत्तमण्डलः ॥ १२-१४१-१५ (७०६४६)
नावश्यायोऽपि रात्र्यन्ते कुत एवाभ्रराजयः ।

नद्यः संक्षिप्ततोयौघाः किंचिदन्तर्गताऽभवन् ॥ १२-१४१-१६ (७०६४७)
सरांसि सरितश्चैव कूपाः प्रस्रवणानि च ।
हतत्विषो न लक्ष्यन्ते निसर्गात्पूर्वकारितात् ॥ १२-१४१-१७ (७०६४८)
भूमिः शुष्कजलस्थाना विनिवृत्तसभाप्रपा ।
निवृत्तयज्ञस्वाध्याया निर्वषट्कारमङ्गला ॥ १२-१४१-१८ (७०६४९)
उत्सन्नकृषिगोरक्षा निवृत्तविपणापणा ।
निवृत्तपूर्वसमया संप्रनष्टमहोत्सवा ॥ १२-१४१-१९ (७०६५०)
अस्थिकङ्कालसंकीर्णा हाहाभूतनराकुला ।
शून्यभूयिष्ठनगरा दग्धग्रामनिवेशना ॥ १२-१४१-२० (७०६५१)
क्वचिच्चोरैः क्वचिच्छस्त्रैः क्वचिद्राजभिरातुरैः ।
परस्परभयाच्चैव शून्यभूयिष्ठनिर्जना ॥ १२-१४१-२१ (७०६५२)
गतदैवतसंस्थाना वृद्धबालविनाकृता ।
गोजाविमहिषीहीना परस्परपराहता ॥ १२-१४१-२२ (७०६५३)
हतविप्रा हतारक्षा प्रनष्टोत्सवसंचया ।
शवभूतनरप्राया बभूव वसुधा तदा ॥ १२-१४१-२३ (७०६५४)
तस्मिन्प्रतिभये काले क्षीणधर्मे युधिष्ठिर ।
बभूवुः क्षुधिता मर्त्याः खादमानाः परस्परम् ॥ १२-१४१-२४ (७०६५५)
ऋषयो नियमांस्त्यक्त्वा परित्यक्ताग्निदेवताः ।
आश्रमान्संपरित्यज्य पर्यधावन्नितस्ततः ॥ १२-१४१-२५ (७०६५६)
विश्वामित्रोऽथ भगवान्महर्षिरनिकेतनः ।
क्षुधा परिगतो धीमान्समन्तात्पर्यधावत् ॥ १२-१४१-२६ (७०६५७)
त्यक्त्वा दारांश्च पुत्रांश्च कस्मिंश्च जनसंसदि ।
भक्ष्याभक्ष्यसमो भूत्वा निरग्निरनिकेतनः ॥ १२-१४१-२७ (७०६५८)
स कदाचित्परिपतञ्श्वपचानां निकेतनम् ।
हिंस्राणां प्राणिघातानामाससाद वने क्वचित् ॥ १२-१४१-२८ (७०६५९)
विभिन्नकलशाकीर्णं श्वमांसेन च भूषितम् ।
वराहखरभग्नास्थिकपालघटसंकुलम् ॥ १२-१४१-२९ (७०६६०)
मृतचेलपरिस्तीर्णं निर्माल्यकृतभूषणम् ।
सर्पनिर्मोकमालाभिः कृतचिह्नकुटीमुखम् ॥ १२-१४१-३० (७०६६१)
कुक्कुटाराबहुलं गर्दभध्वनिनादितम् ।
उद्घोषद्भिः खरैर्वाक्यैः कलहद्भिः परस्परम् ॥ १२-१४१-३१ (७०६६२)
उलूकपक्षिध्वनिभिर्देवतायतनैर्वृतम् ।
लोहघण्टापरिष्कारं श्वयूथपरिवारितम् ॥ १२-१४१-३२ (७०६६३)
तत्प्रविश्य क्षुधाविष्टो गाधिपुत्रो महानृपिः ।
आहारान्वेषणे युक्तः परं यत्नं समास्थितः ॥ १२-१४१-३३ (७०६६४)
न च क्वचिदविन्दत्स भिक्षमाणोऽपि कौशिकः ।

मांसमन्नं फलं मूलमन्यद्वा तत्र किंचन ॥ १२-१४१-३४ (७०६६५)
अहो कृच्छ्रं मया प्राप्तमिति निश्चित्य कौशिकः ।
पपात भूमौ दौर्बल्यात्तस्मिंश्चण्डालपक्कणे ॥ १२-१४१-३५ (७०६६६)
स चिन्तयामास मुनिः किंनु मे सुकृतं भवेत् ।
कथं वृथा न मृत्युः स्यादिति पार्थिवसत्तम ॥ १२-१४१-३६ (७०६६७)
स ददर्श श्वमांसस्य कुतन्त्रीं पतितां मुनिः ।
चण्डालस्य गृहे राजन्सद्यः शस्त्रहतस्य वै ॥ १२-१४१-३७ (७०६६८)
स चिन्तयामास तदा स्तेयं कार्यमितो मया ।
न--दानीमुपायो मे विद्यते प्राणधारणे ॥ १२-१४१-३८ (७०६६९)
---सु विहितं स्तेयं विशिष्टसमहीनतः ।
परस्परं भवेत्पूर्वमास्थेयमिति निश्चयः। १२-१४१-३९ (७०६७०)
हीनादादेयमादौ स्यात्समानात्तदनन्तरम् ।
असंभवे त्वाददीत विशिष्टादपि धार्मिकात् ॥ १२-१४१-४० (७०६७१)
सोऽहमन्तावसायीनां हराम्येनां प्रतिग्रहात् ।
न स्तेयदोषं पश्यामि हरिष्याम्येतदामिषम् ॥ १२-१४१-४१ (७०६७२)
एतां बुद्धिं समास्थाय विश्वामित्रो महामुनिः ।
तस्मिन्देशे सुसुष्वाप पतितो यत्र भारत ॥ १२-१४१-४२ (७०६७३)
स विगाढां निशां दृष्ट्वा सुप्ते चण्डालपक्कणे ।
शनैरुत्थाय भगवान्प्रविवेश कुटीमुखम् ॥ १२-१४१-४३ (७०६७४)
स सुप्त एव चण्डालः श्लेष्मापिहितलोचनः ।
परिभिन्नस्वरो रूक्षः प्रोवाचाप्रियदर्शनः ॥ १२-१४१-४४ (७०६७५)
कः कुतन्त्रीं घट्टयति सुप्ते चण्डालपक्कणे ।
जागर्मि नैव सुप्तोऽस्मि हतोऽसीति च दारुणः ॥ १२-१४१-४५ (७०६७६)
विश्वामित्रोऽहमित्येव सहसा तमुवाच ह ।
सहसाऽभ्यागतं भूयः सोद्विगस्तेन कर्मणा ॥ १२-१४१-४६ (७०६७७)
विश्वामित्रोऽहमायुष्मन्नागतोऽहं बुभुक्षितः ।
मा वधीर्मम सद्बुद्धे यदि सम्यक्प्रपश्यसि ॥ १२-१४१-४७ (७०६७८)
चण्डालस्तद्वचः श्रुत्वा महर्षेर्भावितात्मनः ।
शयनादुपसंभ्रान्त उद्ययौ प्रति तं ततः ॥ १२-१४१-४८ (७०६७९)
स विसृज्याश्रु नेत्राभ्यां बहुमानात्कृताञ्जलिः ।
उवाच कौशिकं रात्रौ ब्रह्मन्किं ते चिकीर्षितम् ॥ १२-१४१-४९ (७०६८०)
विश्वामित्रस्तु मातङ्गमुवाच परिसान्त्वयन् ।
क्षुधितोऽन्तर्गतप्राणो हरिष्यामि श्वजाघनीम् ॥ १२-१४१-५० (७०६८१)
क्षुधितः कलुषं यातो नास्ति ह्रीरशनार्थिनः ।
क्षुच्च मां दूषयत्यत्र हरिष्यामि श्वजाघनीम् ॥ १२-१४१-५१ (७०६८२)
अवसीदन्ति मे प्राणाः स्मृतिर्मे नश्यति क्षुधा ।

दुर्बलो नष्टसंज्ञश्च भक्ष्याभक्ष्यविवर्जितः ।
सोधर्मं बुध्यमानोऽपि हरिष्यामि श्वजाघनीम् ॥ १२-१४१-५२ (७०६८३)
यदा भैक्षं न विन्दामि युष्माकमहमालये ।
तदा बुद्धिः कृता पापे हरिष्यामि श्वजाघनीम् ॥१२-१४१-५३ (७०६८४)
अग्निर्मुखं पुरोधाश्च देवानां शुचिषाङ्विभुः ।
यथा च सर्वभुग्ब्रह्मा तथा मां विद्धि धर्मतः ॥१२-१४१-५४ (७०६८५)
तमुवाच स चण्डालो महर्षे शृणु मे वचः ।
श्रुत्वा तथा तमातिष्ठ यथा धर्मो न हीयते ॥१२-१४१-५५ (७०६८६)
धर्मं तवापि विप्रर्षे शृणु यत्ते ब्रवीम्यहम् ॥ १२-१४१-५६ (७०६८७)
मृगाणामधमं श्वानं प्रवदन्ति मनीषिणः ।
तस्याप्यधम उद्देशः शरीरस्य तु जाघी ॥१२-१४१-५७ (७०६८८)
नेदं सम्यग्व्यवसितं महर्षे कर्म गर्हितम् ।
चण्डालस्वस्य हरणमभक्ष्यस्य विशेषतः ॥१२-१४१-५८ (७०६८९)
साध्वन्यमनुपश्य त्वमुपायं प्राणधारणे ।
श्वमांसलोभात्तपसो नाशस्ते स्यान्महामुने ॥१२-१४१-५९ (७०६९०)
जानता विहितो मार्गो न कार्यो धर्मसंकरः ।
मा स्म धर्मं परित्याक्षीस्त्वं हि धर्मविदुत्तमः ॥१२-१४१-६० (७०६९१)
विश्वामित्रस्ततो राजन्नित्युक्तो भरतर्षभ ।
क्षुधार्तः प्रत्युवाचेदं पुनरेव महामुनिः ॥१२-१४१-६१ (७०६९२)
निराहारस्य सुमहान्मम कालोऽभिधावतः ।
न विद्यतेऽप्युपायश्च कश्चिन्मे प्राणधारणे ॥१२-१४१-६२ (७०६९३)
येनकेन विशेषेण कर्मणा येनकेनचित् ।
उज्जिहीर्षे सीदमानः समर्थो धर्ममाचरेत् ॥१२-१४१-६३ (७०६९४)
ऐन्द्रो धर्मः क्षत्रियाणां ब्राह्मणानामथाग्निकः ।
ब्रह्मवह्निर्मम बलं भोक्ष्यामि शमयन्क्षुधाम् ॥१२-१४१-६४ (७०६९५)
यथायथैव जीवेद्धि तत्कर्तव्यमहेलया ।
जीवितं मरणाच्छ्रेयो जीवन्धर्ममवाप्नुयात् ॥१२-१४१-६५ (७०६९६)
सोऽहं जीवितमाकाङ्क्षन्नभक्ष्यस्यापि भक्षणम् ।
व्यवस्ये बुद्धिपूर्वं वै तद्भवाननुमन्यताम् ॥१२-१४१-६६ (७०६९७)
जीवन्धर्मं चरिष्यामि प्रणोत्स्याम्यशुभानि तु ।
तपोभिर्विद्यया चैव ज्योतींषीव महत्तमः ॥१२-१४१-६७ (७०६९८)
श्वपच उवाच।१२-१४१-६८क्ष् (५७४९)
नैतत्खादन्प्राप्स्यसे प्राणमद्य
नायुर्दीर्घं नामृतस्येव तृप्तिम् ।
भिक्षामन्यां भिक्ष मा ते मनोस्तु
श्वभक्षणे श्वा ह्यभक्ष्यो द्विजानाम् ॥ १२-१४१-६८ (७०६९९)

विश्वामित्र उवाच। १२-१४१-६९क्ष् (५७५०)
न दुर्भिक्षे सुलभं मांसमन्य
च्छ्वपाकमन्ये न च मेऽस्ति वित्तम ।
क्षुधार्तश्चाहमगतिर्निराशः
श्वजाघनीं षड्सात्साधु मन्ये ॥ १२-१४१-६९ (७०७००)
श्वपच उवाच। १२-१४१-७०क्ष् (५७५१)
पञ्च पञ्चनखा भक्ष्या ब्रह्मक्षत्रस्य वै विशः ।
ग्शल्यकः श्वाविधो गोधा शशः कूर्मश्च पञ्चमः।'
यदि शास्त्रं प्रमाणं ते माऽभक्ष्ये वै मनः कृथाः ॥ १२-१४१-७०
(७०७०१)
विश्वामित्र उवाच। १२-१४१-७१क्ष् (५७५२)
अगस्त्येनासुरो जग्धो वातापिः क्षुधितेन वै ।
अहमापद्गतः क्षुब्धो भक्षयिष्ये श्वजाघनीम् ॥ १२-१४१-७१ (७०७०२)
श्वपच उवाच। १२-१४१-७२क्ष् (५७५३)
भिक्षामन्यामाहरेति न च कर्तुमिहार्हसि ।
न नूनं कार्यमेतद्वै हर कामं श्वजाघनीम् ॥ १२-१४१-७२ (७०७०३)
विश्वामित्र उवाच। १२-१४१-७३क्ष् (५७५४)
शिष्टा वै कारणं धर्मे तद्वृत्तमनुवर्तये ।
परां मेध्याशनादेनां भक्ष्यां मन्ये श्वजाघनीम् ॥ १२-१४१-७३ (७०७०४)
श्वपच उवाच। १२-१४१-७४क्ष् (५७५५)
असद्भिर्यः समाचीर्णो न स धर्मः सनातनः ।
अकार्यमिह कार्यं वा मा छलेनाशुभं कृथाः ॥ १२-१४१-७४ (७०७०५)
विश्वामित्र उवाच। १२-१४१-७५क्ष् (५७५६)
न पातकं नावमतमृषिः सन्कर्तुमर्हति ।
समौ च श्वमृगौ मन्ये तस्माद्भोक्ष्ये श्वजाघनीम् ॥ १२-१४१-७५ (७०७०६)
श्वपच उवाच। १२-१४१-७६क्ष् (५७५७)
यद्ब्राह्मणार्थे कृतमर्थिनेन
तेनर्षिणा तदभक्ष्यं न कामात् ।
स वै धर्मो यत्र न पापमस्ति
सर्वैरुपायैर्गुरवो हि रक्ष्याः ॥ १२-१४१-७६ (७०७०७)
विश्वामित्र उवाच। १२-१४१-७७क्ष् (५७५८)
मित्रं च मे ब्राह्मणस्यायमात्मा
प्रियश्च मे पूज्यतमश्च लोके ।
तद्भोक्तुकामोऽहमिमां जिहीर्षे
नृशंसानामीदृशानां न बिभ्ये ॥ १२-१४१-७७ (७०७०८)
श्वपच उवाच। १२-१४१-७८क्ष् (५७५९)

कामं नरा जीवितं संत्यजन्ति
न चाभक्ष्ये क्वचित्कुर्वन्ति बुद्धिम् ।
सर्वांश्च कामान्प्राप्नुवन्तीति विद्धि
स्वर्गे निवासात्सहते क्षुधां वै ॥ १२-१४१-७८ (७०७०९)
विश्वामित्र उवाच। १२-१४१-७९क्ष् (५७६०)
स्थाने भवेत्स यशः प्रेत्यभावे
निःसंशयः कर्मणां वै विनाशः ।
अहं पुनर्व्रतनित्यः शमात्मा
मूलं रक्ष्यं भक्षयिष्याम्यभक्ष्यम् ॥ १२-१४१-७९ (७०७१०)
बुद्ध्यात्मके व्यक्तमस्तीति सृष्टो
मोक्षात्मके त्वं यथा शिष्टचक्षुः ।
यद्यप्येतत्संशयाच्च त्रपामि
नाहं भविष्यामि यथा न माया ॥ १२-१४१-८० (७०७११)
श्वपच उवाच। १२-१४१-८१क्ष् (५७६१)
गोपनीयमिदं दुःखमिति मे निश्चिता मतिः ।
दुष्कृतं ब्राह्मणं सन्तं यस्त्वामहमुपालभे ॥ १२-१४१-८१ (७०७१२)
विश्वामित्र उवाच। १२-१४१-८२क्ष् (५७६२)
पिबन्त्येवोदकं गावो मण्डूकेषु रुवत्स्वपि ।
न तेऽधिकारो धर्मेऽस्ति वा भूरात्मप्रशंसकः ॥ १२-१४१-८२ (७०७१३)
श्वपच उवाच। १२-१४१-८३क्ष् (५७६३)
सुहृद्भूत्वाऽनुशोचे त्वां कृपा हि त्वयि मे द्विज ।
तदिदं श्रेय आधत्स्व मा लोभे चेत आदधाः ॥ १२-१४१-८३ (७०७१४)
विश्वामित्र उवाच। १२-१४१-८४क्ष् (५७६४)
सुहृन्मे त्वं सुखेप्सुश्चेदापदो मां समुद्धर ।
जामऽहं धर्मतोऽऽत्मानमुत्सृजेमां श्वजाघनीम् ॥ १२-१४१-८४ (७०७१५)
श्वपच उवाच। १२-१४१-८५क्ष् (५७६५)
नैवोत्सहे भवतो दातुमेतां
नोपेक्षितुं ह्रियमाणं स्वमन्नम् ।
उभौ स्यावः श्वमलेनानुलिप्तौ
दाता चाहं ब्राह्मणस्त्वं प्रतीच्छम् ॥ १२-१४१-८५ (७०७१६)
विश्वामित्र उवाच। १२-१४१-८६क्ष् (५७६६)
अद्याहमेतद्वृजिनं कर्म कृत्वा
जीवंश्चरिष्यामि महापवित्रम् ।
संपूतात्मा धर्ममेवाभिपत्स्ये
यदेतयोर्गुरु तद्वै ब्रवीहि ॥ १२-१४१-८६ (७०७१७)
श्वपच उवाच। १२-१४१-८७क्ष् (५७६७)

आत्मैव साक्षी किल धर्मकृत्ये
त्वमेव जानासि यदत्र दुष्कृतम् ।
यो ह्याद्रियाद्भक्ष्यमिति श्वमांसं
मन्ये न तस्यास्ति विवर्जनीयम् ॥ १२-१४१-८७ (७०७१८)
विश्वामित्र उवाच। १२-१४१-८८क्ष् (५७६८)
उपधानैः साधते नापि दोषः
कार्ये सिद्धे मित्र नात्रापवादः ।
अस्मिन्नहिंसा नानृते वाक्यलेशो
भक्ष्यक्रिया यत्र न तद्गरीयः ॥ १२-१४१-८८ (७०७१९)
श्वपच उवाच। १२-१४१-८९क्ष् (५७६९)
यद्येष हेतुस्तव खादने स्या
न्न ते वेदः कारणं नार्यधर्मः ।
तस्माद्भक्ष्ये भक्षणे वा द्विजेन्द्र
दोषं न पश्यामि यथेदमत्र ॥ १२-१४१-८९ (७०७२०)
विश्वामित्र उवाच। १२-१४१-९०क्ष् (५७७०)
न पातकं भक्षमाणस्य दृष्टं
सुरां तु पीत्वा पततीति शब्दः ।
अन्योन्यकार्याणि यथा तथैव
न लेपमात्रेण कृतं हिनस्ति ॥ १२-१४१-९० (७०७२१)
श्वपच उवाच। १२-१४१-९१क्ष् (५७७१)
ग्पादौ मूलं समभवद्वृन्ताकं शिर उच्यते ।
शेफात्तु गृञ्जरं जातं पलाण्डुस्त्वण्डसंभवः ॥ १२-१४१-९१ (७०७२२)
श्वरोमजः शैव्यशाको लशुनं द्विजसंभवम् ।
चुक्किनामा पर्णशाकः कर्णादजनि भूसुर ॥' १२-१४१-९२ (७०७२३)
अस्थानतो हीनतः कुत्सिताद्वा
तद्विद्वांसं बाधते साधु वृत्तम् ।
स्थानं पुनर्यो लभतेऽभिषङ्गा
त्तेनापि दण्डः सहितव्य एव ॥ १२-१४१-९३ (७०७२४)
भीष्म उवाच। १२-१४१-९४क्ष् (५७७२)
एवमुक्त्वा निववृते मातङ्गः कौशिकं तदा ।
विश्वामित्रो जहारैव कृतबुद्धिः श्वजाघनीम् ॥ १२-१४१-९४ (७०७२५)
ततो जग्राह स श्वाङ्गं जीवितार्थी महामुनिः ।
सदारस्तामुपाहृत्य वने भोक्तुमियेप सः ॥ १२-१४१-९५ (७०७२६)
अथास्य बुद्धिरभवद्विधिनाऽहं श्वजाघनीम् ।
भक्षयामि यथाकालं पूर्वं संतर्प्य देवताः ॥ १२-१४१-९६ (७०७२७)
ततोऽग्निमुपसंहृत्य ब्राह्मेण विधिना मुनिः ।

ऐन्द्राग्नेयेन विधिना चरुं श्रपयत स्वयम् ॥१२-१४१-९७ (७०७२८)
ततः समारभत्कर्म दैवं पित्र्यं च भारत ।
आहूय देवानिन्द्रादीन्भागंभागं विधिक्रमात् ॥१२-१४१-९८ (७०७२९)
एतस्मिन्नेव काले तु प्रववर्ष स वासवः ।
संजीवयन्प्रजाः सर्वा जनयामास चौषधीः ॥१२-१४१-९९ (७०७३०)
विश्वामित्रोऽपि भगवांस्तपसा दग्धकिल्विषः ।
कालेन महता सिद्धिमवाप परमाद्भुताम् ॥१२-१४१-१०० (७०७३१)
स संहृत्य च तत्कर्म अनास्वाद्य च तद्धविः ।
तोषयामास देवांश्च पितॄंश्च द्विजसत्तमः ॥१२-१४१-१०१ (७०७३२)
एवं विद्वानदीनात्मा व्यसनस्थो जिजीविषुः ।
सर्वोपायैरुपायज्ञो दीनमात्मानमुद्धरेत् ॥१२-१४१-१०२ (७०७३३)
एतां बुद्धिं समास्थाय जीवितव्यं सदा भवेत् ।
जीवन्पुण्यमवाप्नोति पुरुषो भद्रमश्नुते ॥१२-१४१-१०३ (७०७३४)
तस्मात्कौन्तेय विदुषा धर्माधर्मविनिश्चये ।
बुद्धिमास्थाय लोकेऽस्मिन्वर्तितव्यं कृतात्मना ॥ ॥१२-१४१-१०४ (७०७३५)

इति श्रीमन्महाभारते शान्तिपर्वणि आपद्धर्मपर्वणि
एकचत्वारिंशदधिकशततमोऽध्यायः ॥१४१.।
Mahabharata - Shanti Parva - Chapter Footnotes

१२-१४१-७ अतितिक्षुः युक्तुमनिच्छुः ।अनुक्रोशात् दयातः ॥
१२-१४१-९ अप्राप्तप्रापणं योगः ।प्राप्तसंरक्षणं क्षेमः ॥
१२-१४१-१२ पक्कणे चण्डालागारे ॥
१२-१४१-१५ प्रतिलोमो वक्रः ।व्यावृत्तं अन्यथाभूतं मण्डलं यस्य ॥
१२-१४१-१६ अवश्यायो धूमिका ॥
१२-१४१-१९ विषणो विक्रयादिः ।आपणो हट्टः ॥
१२-१४१-२३ हता आरक्षा रक्षाकर्तारो यस्यां सा ॥
१२-१४१-३६ वृथा अन्नं विना ॥
१२-१४१-३७ कुतन्त्रीं दण्डिकाम् ॥
१२-१४१-३९ विप्रेण प्राणरक्षार्थं कर्तव्यमिति निश्चयः इति झ ।पाठः ॥
१२-१४१-४१ प्रतिग्रहात्तज्जदोषात् स्तैन्यदोषमधिकं न पश्यामीत्यर्थः ॥
१२-१४१-४५ घट्टयति चालयति ॥
१२-१४१-४७ मम माम् ॥
१२-१४१-५१ कलुषं यातः पापं कर्मानुसृतः ॥
१२-१४१-५४ अग्निर्देवानां मुखं च पुरोधाश्च सः ।शुचिषाट्
शुचि मेध्यमेव सहते नामेध्यम् तथाहं ब्रह्मा ब्राह्मणोऽपि

तत्तुल्यत्वात्सर्वभुग्भविष्यामीत्यर्थः ॥
१२-१४१-६४ ऐन्द्रः पालात्मकः । आग्निकः सर्वभुक्त्वरूपः। ब्रह्म वेदः स एव वह्निः ॥
१२-१४१-७२ इति कर्तुं नार्हसीति योजना ॥
१२-१४१-७३ शिष्टाः अगस्त्यादयः ॥
१२-१४१-७५ समौ पशुत्वादिति भावः नृशंसमपि भक्षित्वा तेन वातापिना भक्ष्यमाणा ब्राह्मणा रक्षिता इति धर्म एवेत्यर्थः ॥
१२-१४१-७७ तर्हि अयमात्मा देहो मम मित्रं एतस्य रक्षणार्थं मयाप्येतद्भक्तं चेन्न कश्चिद्दोषोऽस्तीत्याह मित्रं चेति ॥
१२-१४१-७९ स कामः प्रेत्यभावे मरणे सति यशः यशस्करो भवेदिति स्थाने युक्तम् । अनशनेन मरणं श्रेय इति सत्यमित्यर्थः। जीवतस्त्वनश्नतो धर्मलोपः प्रत्यक्षः। मूलं धर्मस्य शरीरं रक्ष्यं तस्य वैकल्येन धर्मविरोधो भवतीत्यर्थः ॥
१२-१४१-८० बुद्ध्यात्मके व्यक्तमस्तीति पुण्यं मोहात्मके यत्र यथा श्वभक्ष्ये । यद्यप्येत त्संशयात्मा चरामि नाहं भविष्यामि यथा त्वमेवेति झ। पाठः। तत्र बुद्ध्यात्मके प्रमातरि विचारिते श्वजाघनीभक्षणेऽपि पुण्यमस्तीति जाने। ज्ञानोत्पत्तियोग्यं शरीरमपथेनापि रक्ष्यमेवेति भावः। तथापि श्वभक्षणमात्रेण स्वादृशः श्वपचोऽहं न भविष्यामि। तपसा दोषं दूरीकर्तुं शक्तोऽस्मीति भावः ॥
१२-१४१-८१ इदं श्वजाघनीभक्षणजं दुःखं पापं गोपनीयं गूहनीयं त्वया क्रियमाणं निरसनीयमिति मे बुद्धिर्निश्चितास्ति ॥
१२-१४१-८२ धर्मे धर्मानुशासने ॥
१२-१४१-८५ प्रतीच्छन् प्रतिगृह्णन् ॥
१२-१४१-८९ हेतुः प्राणपोषणेच्छास्ति । कारणं प्रमाणम्। भक्ष्ये भक्षणे। अभक्षणे इति च्छेदः ॥
१२-१४१-९० पततीति शब्दः शब्दशास्त्रस्याज्ञामात्रम् । परंतु पापहेतुर्मुख्यो हिंसाख्योऽत्र न दृश्यत इति भवः। अन्योन्यकार्याणि मैथुनानि। लेपमात्रेण कृतं पुण्यं हिनस्ति नाशयति। तेन ईषत्पापोत्पत्तिरस्तु नतु ब्राह्मण्यादि धर्महानिरस्तीति भावः ॥
१२-१४१-९३ अस्थानतश्चाण्डालगृहात्
। हीनतश्चौर्यतः। कुत्सितादददित्सतः
कदर्यात्। अभिषङ्गादत्याग्रहात्। श्वानं लभते तेनापि तेनैव दण्डः सहितव्यः सोढव्यएव। ननु दातुर्मम दोषोऽस्तीति भावः। अस्थानतो हीनतः कुत्सिताद्वा यो वै द्विजं बाधते साधुवृत्तम्। स्थानं पुनर्यो

लभतेतिभङ्गात्तेनापि दण्डः प्रहितः स एवेति ध। पाठः ॥
१२-१४१-९६ यथाकाममिति झ । पाठः ॥
१२-१४१-१०० सिद्धिमियेषेति ट । ड। द। पाठः ॥

---

शन्तिपर्व-अध्यय१४२
॥ श्रीः ॥
१२.१४२. अध्यायः १४२

Mahabharata - Shanti Parva - Chapter Topics
भीष्मेण युधिष्ठिरंप्रति राज्ञा ब्राह्मणवर्जं दण्डेन
प्रजापालनकरणे शुक्रमतानुवादः ॥ १.।
Mahabharata - Shanti Parva - Chapter Text

१२-१४२-० (७०७३६)
युधिष्ठिर उवाच। १२-१४२-०क्ष् (५७७३)
यदिदं घोरमुद्दिष्टमश्रद्धेयमिवानृतम् ।
अस्तिस्विद्दस्युमर्यादा यामयं परिवर्जयेत् ॥ १२-१४२-१ (७०७३७)
संमुह्यामि विपीदामि धर्मो मे शिथिलीकृतः ।
उद्यमं नाधिगच्छामि कुतश्चित्परिचिन्तयन् ॥ १२-१४२-२ (७०७३८)
भीष्म उवाच। १२-१४२-२क्ष् (५७७४)
नैतच्छ्रुत्वागमादेव तव धर्मानुशासनम् ।
प्रज्ञासमभिहारोऽयं कविभिः संभृतं मधु ॥ १२-१४२-३ (७०७३९)
बाह्याः प्रतिविधातव्याः प्रज्ञा राज्ञा ततस्ततः ।
बहुशाखेन धर्मेण यत्रैषा संप्रसिध्यते ॥ १२-१४२-४ (७०७४०)
बुद्धिं संजनयेद्राज्ञां धर्ममाचरतां सदा ।
जयो भवति कौरव्य सदा तद्बुद्धिरेव च ॥ १२-१४२-५ (७०७४१)
बुद्धिश्रेष्ठा हि राजानो जयन्ति विजयैषिणः ।
धर्मः प्रतिविधातव्यो बुद्ध्या राज्ञा ततस्ततः ॥ १२-१४२-६ (७०७४२)
नैकशाखेन धर्मेण राज्ञो धर्मो विधीयते ।
दुर्बलस्य कुतः प्रज्ञा पुरस्तादनुदाहृता ॥ १२-१४२-७ (७०७४३)
अद्वैधज्ञः प्रतिद्वैधे संशयं प्राप्नुमर्हति ।
बुद्धिद्वैधं विधातव्यं पुरस्तादेव भारत ॥ १२-१४२-८ (७०७४४)
पार्श्वतः कारणं राज्ञो विषूच्यस्त्वापगा इव ।
जनास्तूच्चरितं धर्मं विजान्त्यन्यथाऽन्यथा ॥ १२-१४२-९ (७०७४५)
सम्यग्विज्ञानिनः केचिन्मिथ्याविज्ञानिनः परे ।
तद्वै यथायथं बुद्ध्वा ज्ञानमाददते सताम् ॥ १२-१४२-१० (७०७४६)
परिमुष्णन्ति शास्त्राणि धर्मस्य परिपन्थिनः ।

वैषम्यमर्थविद्यानां निरर्थाः ख्यापयन्ति ते ॥१२-१४२-११ (७०७४७)
आजिजीविषवो विद्यां यशः कामौ समन्ततः ।
ते सर्वे नृप पापिष्ठा धर्मस्य परिपन्थिनः ॥१२-१४२-१२ (७०७४८)
अपक्वमतयो मन्दा न जानन्ति यथातथम् ।
तथा ह्यशास्त्रकुशलाः सर्वत्रायुक्तिनिष्ठिताः ॥१२-१४२-१३ (७०७४९)
परिमुष्णन्ति शास्त्राणि शास्त्रदोषानुदर्शिनः ।
विज्ञानमथ विद्यानां न सम्यगिति मे मतिः ॥१२-१४२-१४ (७०७५०)
निन्दया परविद्यानां स्वविद्यां ख्यापयन्ति च ।
वागास्तिक्यानुनीताश्च दुग्धविद्याफला इव ॥१२-१४२-१५ (७०७५१)
तान्विद्यावणिजो विद्धि राक्षसानिव भारत ।
व्याजेन कृत्स्नो विहितो धर्मस्ते परिहास्यते ॥१२-१४२-१६ (७०७५२)
न धर्मवचनं वाचा नैव बुद्ध्येति नः श्रुतम् ।
इति बार्हस्पत्यविज्ञानं प्रोवाच मघवा स्वयम् ॥१२-१४२-१७ (७०७५३)
न त्यव वचनं किंचिदनिमित्तादिहोच्यते ।
स्वविनीतेन शास्त्रेण ह्यविद्यः स्यादथापरः ॥१२-१४२-१८ (७०७५४)
लोकयात्रामिहैके तु धर्मं प्राहुर्मनीषिणः ।
समुद्दिष्टं सतां धर्मं स्वयमूहेत् पण्डितः ॥१२-१४२-१९ (७०७५५)
अमर्षाच्छास्त्रसंमोहादनिमित्तादिहोच्यते ।
शास्त्रं प्राज्ञस्य वदतः समूहे यात्यदर्शनम् ॥१२-१४२-२० (७०७५६)
आगमागतया बुद्ध्या वचनेन प्रशस्यते ।
अज्ञानाज्ज्ञानहेतुत्वाद्वचनं साधु मन्यते ॥१२-१४२-२१ (७०७५७)
अनुपागतमेवेदं शास्त्रमेवमपार्थकम् ।
दैतेयानुशना प्राह संशयच्छेदनं पुरा ॥१२-१४२-२२ (७०७५८)
ज्ञानमप्यपदिश्यं हि यथा नास्ति तथैव तत् ।
तेन संच्छिन्नमूलेन कस्तोषयितुमिच्छति ॥१२-१४२-२३ (७०७५९)
पुनर्व्यवसितं यो वा नेदं वाक्यमुपाश्नुते ।
उग्रायैव हि सृष्टोऽसि कर्मणे तत्त्वमीक्षसे ॥१२-१४२-२४ (७०७६०)
अग्रे मामन्ववेक्षस्व राजन्योऽयं बुभूषते ।
यथा प्रमुच्यते त्वन्यो यदर्थं न प्रमोदते ॥१२-१४२-२५ (७०७६१)
अजोऽश्वः क्षत्रमित्येतत्सदृशं ब्रह्मणा कृतम् ।
तस्मान्नतैक्ष्ण्याद्भूतानां यात्रा काचित्प्रसिद्ध्यति ॥१२-१४२-२६ (७०७६२)
यस्त्ववध्यवधे दोषः स वध्यस्यावधे स्मृतः ।
एषा ह्येव तु मर्यादा यामयं परिवर्जयेत् ॥१२-१४२-२७ (७०७६३)
तस्मात्तीक्ष्णः प्रजा राजा स्वधर्मे स्थापयत्युत ।
अन्योन्यं भक्षयन्तो हि प्रचरेयुर्वृका इव ॥१२-१४२-२८ (७०७६४)
यस्य दस्युगणा राष्ट्रे ध्वाङ्क्षा मत्स्याञ्जलादिव ।

विहरन्ति परस्वानि स वै क्षत्रियपांसनः ॥१२-१४२-२९ (७०७६५)
कुलीनान्सचिवान्कृत्वा वेदविद्यासमन्वितान् ।
प्रशाधि पृथिवीं राजन्प्रजा धर्मेण पालयन् ॥१२-१४२-३० (७०७६६)
विहीनजन्मकर्माणि यः प्रगृह्णाति भूमिपः ।
उभयस्याविशेषज्ञस्तद्वै क्षत्रं नपुंसकम् ॥१२-१४२-३१ (७०७६७)
नैवोग्रं नैव चानुग्रं धर्मेणेह प्रशस्यते ।
उभयं न व्यतिक्रामेदुग्रो भूत्वा मृदुर्भव ॥१२-१४२-३२ (७०७६८)
कष्टः क्षत्रियधर्मोऽयं सौहृदं त्वयि मे स्थितम् ।
उग्रकर्मणि सृष्टोऽसि तस्माद्राज्यं प्रशाधि वै ॥१२-१४२-३३ (७०७६९)
ग्अरुष्टः कस्यचिद्राजन्नेवमेव समाचर।'
अशिष्टनिग्रहो नित्यं शिष्टस्य परिपालनम् ।
एवं शुक्रोऽब्रवीद्धीमानापत्सु भरतर्षभ ॥ १२-१४२-३४ (७०७७०)
युधिष्ठिर उवाच।१२-१४२-३५क्ष् (५७७५)
अस्ति चेदिह मर्यादा यामन्यो नातिलङ्घयेत् ।
पृच्छामि त्वां सतां श्रेष्ठ तन्मे ब्रूहि पितामह ॥१२-१४२-३५ (७०७७१)
भीष्म उवाच।१२-१४२-३६क्ष् (५७७६)
ब्राह्मणानेव सेवेत विद्याबृद्धांस्तपस्विनः ।
श्रुतचारित्रवृत्ताढ्यान्पवित्रं ह्येतदुत्तमम् ॥१२-१४२-३६ (७०७७२)
शुश्रूषा तु महाराज सान्त्वं विप्रेषु नित्यदा ।
क्रुद्धैर्हि विप्रैः कर्माणि कृतानि बहुधा नृप ॥१२-१४२-३७ (७०७७३)
तेषां प्रीत्या यशो मुख्यमप्रीत्या परमं भयम् ।
प्रीत्या ह्यमृतवद्विप्राः क्रुद्धाश्चैव यथोरगाः ॥ ॥१२-१४२-३८ (७०७७४)

इति श्रीमन्महाभारते शान्तिपर्वणि राजधर्मपर्वणि
द्विचत्वारिंशदधिकशततमोऽध्यायः ॥१४२.।
Mahabharata - Shanti Parva - Chapter Footnotes

१२-१४२-१ अस्तिस्विदस्य मर्यादा इति ध ।पाठः ॥
१२-१४२-३ एतदागमादेव श्रुत्वा तव धर्मानुशासनं मया कृतमिति नास्ति किंतु प्रज्ञायाः समभिहारो निष्ठा कल्पितेयमित्यर्थः ।एतदग्निहोत्रादिवद्विधेयं न अपितु कविभिरकरणे महान्तं दोषं पश्यद्भिः कल्पितमिति भावः।नैतद्बुध्वाऽऽगमादेवेति ध।पाठः ॥
१२-१४२-४ ततस्ततः कोकिलवराहवृकसिंहादिभ्यः शिक्षित्वा प्रज्ञाः प्रतिविधातव्याः ॥
१२-१४२-६ प्रतिविधातव्यश्चिकित्सनीयः ॥
१२-१४२-७ द्वैधमेकस्यैव कर्मणः क्वचित्काले धर्मत्वं

क्वचिदधर्मत्वमिति द्विप्रकारत्वम् ।तस्मिन्प्राप्ते तदनभिज्ञः संशयं संकटं प्राप्नोति।अहिंसाया धर्मत्वेऽपि चोररक्षया पापं भवति तद्वदिहं ज्ञेयम् ॥
१२-१४२-८ सतां मतमिति शेषः ॥
१२-१४२-११ मुष्णन्ति धर्मशास्त्रविरुद्धमर्थशास्त्रां नादर्तव्यमिति वदन्ति ।वैषम्यमप्रामाण्यमधर्मत्वं वा ॥
१२-१४२-१२ शास्त्रचोरनिन्दाप्रसङ्गात्तदुपजीविनोऽपि निन्दति ।आजिजीविषव इति सार्धैस्चतुर्भिः ॥
१२-१४२-१४ न सम्यगिति वर्तत इति ट ।ड।द।पाठः ॥
१२-१४२-१५ निवर्तनैरविद्यानामिति थ ।पाठः।वागस्त्रा वाक्छरीभूता इति झ।ट।पाठः ॥
१२-१४२-१७ वाचा केवलया बुद्ध्या वा केवलेन धर्मवचनं धर्मिश्चयो नास्त्यपितु समुच्चिताभ्यामुभाभ्यां धर्मनिर्णय इत्यर्थः ॥
१२-१४२-१८ अध्यवस्यन्ति चापर इति ट ।ड।द।पाठः ॥
१२-१४२-१९ इहलोके तु एके आचार्याः लोकयात्रां तन्निर्वाहमेव धर्मं प्राहुः ।साच चोरादीनां वधमन्तरेण न संभवतीत्यवश्यं हिंसापि कर्तव्येति तेषामाशयः।एवंसत्यपि मतभेदे युक्त्यैव धर्मं ऊहेतेत्याह समिति ॥
१२-१४२-२० तस्मादमर्षादींस्त्यक्त्वा समूहे सभायां शास्त्रं वदेदित्याशयेनाह अमर्षादिति ।समूहे यत्प्रदर्शनमिति ध।पाठः ॥
१२-१४२-२१ आगमागतया बुद्ध्या श्रुत्युपगृहीतेन तर्केण सहितं यद्वचनं तेन प्रशस्यते शास्त्रं नान्यतरेण ।अन्यस्तु ज्ञानहेतुत्वात् अज्ञातज्ञापकतया वचनं तर्केण हीनं शब्दमेव साधु मन्यते।कुतः अज्ञानात् ॥
१२-१४२-२२ अन्यः पुनः युक्त्या इदं शास्त्रं दूषितं इति हेतोरपार्थकं व्यर्थमिति मन्यते तदप्यज्ञानादेव ।तस्मात्तर्केण शास्त्रस्य शास्त्रेण तर्कस्य वा बाधमकृत्वा यदुभयसंमतं तदेवानुष्ठेयमित्युशनसो मतं पूर्वोक्तेन बार्हस्पत्येन ज्ञानेनैक्यं गतमिति दर्शितम् ॥
१२-१४२-२३ अपदिश्यं दिशोर्मध्ये स्थितं कोटिद्वयस्पर्शि ज्ञानं संशयरूपं तद्यथा नास्ति तथैव व्यर्थमित्यर्थः ॥
१२-१४२-२६ अज इति ।यथाऽजो यज्ञार्थं नीयते तद्धिताय एवं अश्वक्षत्रियावपि संग्रामार्थं नीयेते तद्धितायैव ॥
१२-१४२-३५ वृत्तिश्चैषा महाबाहो इति ट ।ड।थ।पाठः ॥
१२-१४२-३६ ब्राह्मणादर्वागेव दण्डस्य मर्यादा ब्राह्मणस्तु नैव दण्ड्योऽपि तु पूज्य एवेत्याह ब्राह्मणानेवेति ॥

शन्तिपर्व-अध्यय१४३
॥ श्रीः ॥
१२.१४३. अध्यायः १४३

Mahabharata - Shanti Parva - Chapter Topics
भीष्मेण युधिष्ठिरंप्रति शरणागतरक्षणे मुचुकुन्दंप्रति भार्गवोक्तव्याधकपोतोपाख्यानानुवादारम्भः ॥ १.। वनमध्ये महावृष्टिनिपीडितेन वेदनचिह्वाधेन वर्षपीडयाऽधः पतितां काञ्चन कपोतीं पञ्जरे निरुद्धय वृष्ट्युपरमे कस्यचिन्महावृक्षस्याधोदेशे शयनम् ॥ २.।
Mahabharata - Shanti Parva - Chapter Text

१२-१४३-० (७०७७५)
युधिष्ठिर उवाच। १२-१४३-०क्ष् (५७७७)
पितामह महाप्राज्ञ सर्वशास्त्रविशारद ।
शरणागतं पालयतो यो धर्मस्तं ब्रवीहि मे ॥ १२-१४३-१ (७०७७६)
भीष्म उवाच। १२-१४३-२क्ष् (५७७८)
महान्धर्मो महाराज शरणागतपालने ।
अर्हः प्रष्टुं भवांश्चैनं प्रश्नं भरतसत्तम ॥ १२-१४३-२ (७०७७७)
शिबिप्रभृतयो राजन्राजानः शरणं गतान् ।
परिपाल्य महात्मानः संसिद्धिं परमां गताः ॥ १२-१४३-३ (७०७७८)
श्रूयते च कपोतेन शत्रुः शरणमागतः ।
पूजितश्च यथान्यायं स्वैश्च मांसैर्निमन्त्रितः ॥ १२-१४३-४ (७०७७९)
युधिष्ठिर उवाच। १२-१४३-५क्ष् (५७७९)
कथं कपोतेन पुरा शत्रुः शरणमागतः ।
स्वमांसं भोजितः कां च गतिं लेभे स भारत ॥ १२-१४३-५ (७०७८०)
भीष्म उवाच। १२-१४३-६क्ष् (५७८०)
शृणु राजन्कथां दिव्यां सर्वपापप्रणाशिनीम् ।
नृपतेर्मुचुकुन्दस्य कथितां भार्गवेण वै ॥ १२-१४३-६ (७०७८१)
इममर्थं पुरा पार्थ मुचुकुन्दो नराधिपः ।
भार्गवं परिपप्रच्छ प्रणतः पुरुषर्षभ ॥ १२-१४३-७ (७०७८२)
तस्मै शुश्रूषमाणाय भार्गवोऽकथयत्कथाम् ।
इमां यथा कपोतेन सिद्धिः प्राप्ता नराधिप ॥ १२-१४३-८ (७०७८३)
उशनोवाच। १२-१४३-९क्ष् (५७८१)
धर्मिश्चयसंयुक्तां कामार्थसहितां कथाम् ।

शृणुष्वावहितो राजन्गदतो मे महाभुजः ॥ १२-१४३-९ (७०७८४)
कश्चित्क्षुद्रसमाचारः पृथिव्यां कालसंमितः ।
चचार पृथिवीपाल घोरः शकुनिलुब्धकः ॥ १२-१४३-१० (७०७८५)
काकोल इव कृष्णाङ्गो रूक्षः पापसमाहितः ।
यवमध्यः कृशग्रीवो ह्रस्वपादो महाहनुः ॥ १२-१४३-११ (७०७८६)
नैव तस्य सुहृत्कश्चिन्न संबन्धी न बान्धवाः ।
बान्धवैः संपरित्यक्तस्तेन रौद्रेण कर्मणा ॥ १२-१४३-१२ (७०७८७)
नरः पापसमाचारस्त्यक्तव्यो दूरतो बुधैः ।
आत्मानं यो न संधत्ते सोन्यस्य स्यात्कथं हितः ॥ १२-१४३-१३ (७०७८८)
ये नृशंसा दुरात्मानः प्राणिप्राणहरा नराः ।
उद्वेजनीया भूतानां व्याला इव भवन्ति ते ॥ १२-१४३-१४ (७०७८९)
स वै क्षारकमादाय वने हत्वा च पक्षिणः ।
चकार विक्रयं तेषां पतङ्गानां जनाधिपः ॥ १२-१४३-१५ (७०७९०)
एवं तु वर्तमानस्य तस्य वृत्तिं दुरात्मनः ।
अगमत्सुमहान्कालो न चाधर्ममबुध्यत ॥ १२-१४३-१६ (७०७९१)
तस्य भार्यासहायस्य रममाणस्य शाश्वतम् ।
दैवयोगविमूढस्य नान्या वृत्तिररोचत ॥ १२-१४३-१७ (७०७९२)
ततः कदाचित्तस्याथ वनस्थस्य समन्ततः ।
पातयन्निव वृक्षांस्तान्सुमहान्वातसंभ्रमः ॥ १२-१४३-१८ (७०७९३)
मेघसंकुलमाकाशं विद्युन्मण्डलमण्डितम् ।
संछन्नस्तु मुहूर्तेन नौसार्थैरिव सागरः ॥ १२-१४३-१९ (७०७९४)
वारिधारासमूहेन संप्रहृष्टः शतक्रतुः ।
क्षणेन पूरयामास सलिलेन वसुंधराम् ॥ १२-१४३-२० (७०७९५)
ततो धाराकुले लोके संभ्रमन्नष्टचेतनः ।
शीतार्तस्तद्वनं सर्वमाकुलेनान्तरात्मना ॥ १२-१४३-२१ (७०७९६)
नैव निम्नं स्थलं वाऽपि सोऽविन्दत विहंगहा ।
पूरितो हि जलौघेनन तस्य मार्गो वनस्य तु ॥ १२-१४३-२२ (७०७९७)
पक्षिणं वर्षवेगेन हता लीनास्तु पादपात् ।
मृगसिहवराहाश्च ये चान्ये तत्र पक्षिणः ॥ १२-१४३-२३ (७०७९८)
महता वातवर्षेण त्रासितास्ते वनौकसः ।
भयार्ताश्च क्षुधार्ताश्च बभ्रमुः सहिता वने ॥ १२-१४३-२४ (७०७९९)
स तु शीतहतैर्गात्रैर्जगामैव न तस्थिवान् ।
ददर्श पतितां भूमौ कपोतीं शीतविह्वलाम् ॥ १२-१४३-२५ (७०८००)
दृष्टवाऽऽर्तोपि हि पापात्मा स तां पञ्जरकेऽक्षिपत् ।
स्वयं दुःखाभिभूतोऽपि दुःखमेवाकरोत्परे ॥ १२-१४३-२६ (७०८०१)
पापात्मा पापकारित्वत्पापमेव चकार सः ।

सोऽपश्यत्तरुषण्डेषु मेघनीलं वनस्पतिम् ॥ १२-१४३-२७ (७०८०२)
सेव्यमानं विहंगौघैश्छायावासफलार्थिभिः ।
धात्रा परोपकाराय स साधुरिव निर्मितः ॥ १२-१४३-२८ (७०८०३)
अथाभवत्क्षणेनैव वियद्विमलतारकम् ।
महत्सर इवोत्फुल्लं कुमुदच्छुरितोदकम् ।
कुसुमाकारताराढ्यमाकाशं निर्मलं बहु ॥ १२-१४३-२९ (७०८०४)
घनैर्मुक्तं नभो दृष्ट्वा लुब्धकः शीतविह्वलः ।
दिशो विलोकयामास वेलां च सुदुरात्मवान् ॥ १२-१४३-३० (७०८०५)
दूरे ग्रामनिवेशश्च तस्मात्स्थानादिति प्रभो ।
कृतबुद्धिर्द्रुमे तस्मिन्वस्तुं तां रजनीं ततः ॥ १२-१४३-३१ (७०८०६)
साञ्जलिः प्रणतिं कृत्वा वाक्यमाह वनस्पतिम् ।
शरणं यामि यान्यस्मिन्दैवतानीति भारत ॥ १२-१४३-३२ (७०८०७)
स शिलायां शिरः कृत्वा पर्णान्यास्तीर्य भूतले ।
दुःखेन महताऽऽविष्टस्ततः सुष्वाप पक्षिहा ॥ ॥ १२-१४३-३३ (७०८०८)

इति श्रीमन्महाभारते शान्तिपर्वणि आपद्धर्मपर्वणि
त्रिचत्वारिंशदधिकशततमोऽध्यायः ॥ १४३.।
Mahabharata - Shanti Parva - Chapter Footnotes

१२-१४३-११ काकोलः काकविशेषः ॥
१२-१४३-१५ क्षारकं जालम् ॥
१२-१४३-२३ येचान्ये तत्र वर्तिन इति ट ।द। पाठः ॥

---

शन्तिपर्व-अध्यय१४४
॥ श्रीः ॥
१२.१४४. अध्यायः १४४

Mahabharata - Shanti Parva - Chapter Topics
महावृक्षनिवासिना कपोतेनाहारार्थं गतायां निजपत्न्यां
रात्रावनागतायां तद्गुणानुवर्णनपूर्वकं तांप्रति शोचनम्
॥ १.। भर्तृविलापं श्रुतवत्या व्याधपञ्जरस्थया कपोत्या
धर्मोपन्यासपूर्वकं पतिंप्रति व्याधसत्कारचोदना ॥ २.।
Mahabharata - Shanti Parva - Chapter Text

१२-१४४-० (७०८०९)
भीष्म उवाच। १२-१४४-०क्ष् (५७८२)
अथ वृक्षस्य शाखायां विहंगः ससुहृज्जनः ।

दीर्घकालोषितो राजंस्तत्र चित्रतनूरुहः ॥१२-१४४-१ (७०८१०)
तस्य कल्यगता भार्या चरितुं नाभ्यवर्तत ।
प्राप्तां च रजनीं दृष्ट्वा स पक्षी पर्यतप्यत ॥१२-१४४-२ (७०८११)
वातवर्षं महच्चासीन्न चागच्छति मे प्रिया ।
किंनु तत्कारणं येन साऽद्यापि न निवर्तते ॥१२-१४४-३ (७०८१२)
अपि स्वस्ति भवेत्तस्याः प्रियाया मम कानने ॥
तया विरहितं हीदं शून्यमद्य गृहं मम। १२-१४४-४ (७०८१३)
पुत्रपौत्रवधूभृत्यैराकीर्णमपि सर्वतः ।
भार्याहीनं गृहस्थस्य शून्यमेव गृहं भवेत् ॥१२-१४४-५ (७०८१४)
न गृहं गृहमित्याहुर्गृहिणी गृहमुच्यते ।
गृहं तु गृहिणीहीनमरण्यसदृशं मतम् ॥१२-१४४-६ (७०८१५)
यदि सा रक्तनेत्रान्ता चित्राङ्गी मधुरस्वरा ।
अद्य नाभ्येति मे कान्ता न कार्यं जीवितेन मे ॥१२-१४४-७ (७०८१६)
न भुङ्क्ते मय्यभुक्ते या नास्नाते स्नाति सुव्रता ।
नातिष्ठत्युपतिष्ठेन शेते च शयिते मयि ॥१२-१४४-८ (७०८१७)
हृष्टे भवति सा हृष्टा दुःखिते मयि दुःखिता ।
प्रोपिते दीनवदना क्रुद्धे च प्रियवादिनी ॥१२-१४४-९ (७०८१८)
पतिधर्मव्रता साध्वी प्राणेभ्योऽपि गरीयसी ।
यस्य स्यात्तादृशी भार्या धन्यः स पुरुषो भुवि ॥१२-१४४-१० (७०८१९)
सा हि श्रान्तं क्षुधार्तं च जानीते मां तपस्विनी ।
अनुरक्ता स्थिरा चैव भक्ता स्निग्धा यशस्विनी ॥१२-१४४-११ (७०८२०)
वृक्षमूलेऽपि दयिता यस्य तिष्ठति तद्गृहम् ।
प्रासादोपि तया हीनः कान्तार इति निश्चितम् ॥१२-१४४-१२ (७०८२१)
धर्मार्थकामकालेषु भार्या पुंसः सहायिनी ।
विदेशगमने चास्य सैव विश्वासकारिका ॥१२-१४४-१३ (७०८२२)
भार्या हि परमो ह्यर्थः पुरुषस्येह पठ्यते ।
असहायस्य लोकेऽस्मिँल्लोकयात्रासहायिनी ॥१२-१४४-१४ (७०८२३)
तथा रोगाभिभूतस्य नित्यं कृच्छ्रगतस्य च ।
नास्ति भार्यासमं मित्रं नरस्यार्तस्य भेषजम् ॥१२-१४४-१५ (७०८२४)
नास्ति भार्यासमो बन्धुर्नास्ति भार्यासमा गतिः ।
नास्ति भार्यासमो लोके सहायो धर्मसंग्रहे ॥१२-१४४-१६ (७०८२५)
यस्य भार्या गृहे नास्ति साध्वी च प्रियवादिनी ।
अरण्यं तेन गन्तव्यं यथाऽरण्यं तथा गृहम् ॥१२-१४४-१७ (७०८२६)
भीष्म उवाच।१२-१४४-१८क्ष् (५७८३)
एवं विलपतस्तस्य द्विजस्यार्तस्य वै तदा ।
गृहीता शकुनिघ्नेन भार्या शुश्राव भारतीम् ॥१२-१४४-१८ (७०८२७)

कपोत्युवाच। १२-१४४-१९क्ष् (५७८४)
अहोऽतीव सुभाग्याऽहं यस्या मे दयितः पतिः ।
असतो वा सतो वाऽपि गुणानेवं प्रभाषते ॥ १२-१४४-१९ (७०८२८)
सा हि स्त्रीत्यवगन्तव्या यस्य भर्ता तु तुष्यति ।
तुष्टे भर्तरि नारीणां तुष्टाः स्युः सर्वदेवताः ।
अग्निसाक्षिकमप्येतद्भर्ता हि शरणं परम् ॥ १२-१४४-२० (७०८२९)
दावाग्निनेव निर्दग्धा सपुष्पस्तबका लता ।
भस्मीभवति सा नारी यस्या भर्ता न तुष्यति ॥ १२-१४४-२१ (७०८३०)
इति संचिन्त्य दुःखार्ता भर्तारं दुःखितं तदा ।
कपोती लुब्धकेनापि गृहीता वाक्यमब्रवीत् ॥ १२-१४४-२२ (७०८३१)
हन्त वक्ष्यामि ते श्रेयः श्रुत्वा तु कुरु तत्तथा ।
शरणागतसंत्राता भव कान्त विशेषतः ॥ १२-१४४-२३ (७०८३२)
एष शाकुनिकः शेते तव वासं समाश्रितः ।
शीतार्तश्च क्षुधार्तश्च पूजामस्मै समाचर ॥ १२-१४४-२४ (७०८३३)
यो हि कश्चिद्द्विजं हन्याद्गां वा लोकस्य मातरम् ।
शरणागतं च यो हन्यात्तुल्यं तेषां च पातकम् ॥ १२-१४४-२५ (७०८३४)
अस्माकं विहिता वृत्तिः कापोती जातिधर्मतः ।
सा न्याय्याऽऽत्मवता नित्यं त्वद्विधेनानुवर्तितुं ॥ १२-१४४-२६ (७०८३५)
यस्तु धर्मं यथाशक्ति गृहस्थो ह्यनुवर्तते ।
स प्रेत्य लभते लोकानक्षयानिति शुश्रुम् ॥ १२-१४४-२७ (७०८३६)
स त्वं संतानवानद्य पुत्रवानपि च द्विज ।
त्वं स्वदेहे दयां त्यक्त्वा धर्मार्थौ परिगृह्य य ।
पूजामस्मै प्रयुङ्क्ष्व त्वं प्रीयेतास्य मनो यथा ॥ १२-१४४-२८ (७०८३७)
शरीरे मा च संतापं कुर्वीथास्त्वं विहगंम ।
शरीरयात्रावृत्त्यर्थमन्यान्दारानुपैष्यसि ॥ १२-१४४-२९ (७०८३८)
इति सा शकुनी वाक्यं पञ्जरस्था तपस्विनी ।
अतिदुःखान्विता प्रोक्त्वा भर्तारं समुदैक्षत ॥ ॥ १२-१४४-३० (७०८३९)

इति श्रीमन्महाभारते शान्तिपर्वणि आपद्धर्मपर्वणि
चतुश्चत्वारिंशदधिशततमोऽध्यायः ॥ १४४.।
Mahabharata - Shanti Parva - Chapter Footnotes

१२-१४४-१० पतिव्रता पतिगतिः पतिप्रियहिते रता हि झ ।पाठः ॥
१२-१४४-१४ भार्या हि परमो नाथ इति ड ।थ।पाठः ॥
१२-१४४-२१ न सा स्त्रीत्यवगन्तव्या यस्यां भर्ता न तुष्यतीति झ ।पाठः ॥

---

शन्तिपर्व-अध्यय१४५

॥ श्रीः ॥
१२.१४५. अध्यायः १४५

Mahabharata - Shanti Parva - Chapter Topics
पत्नीचोदितेन कपोतेन शुष्कपर्णैः पावकसंदीपनेन व्याधस्य शैत्यापनोदनपूर्वकं पुनः स्वेन तदभीष्टकरणप्रतिज्ञा ॥ १.। तेन तस्य क्षुन्निवृत्तिप्रार्थने फलादिकं किमप्यलभमानेन कपोतेन स्वमांसेन तदीयक्षुत्परिजिहीर्षयाऽग्नौ प्रवेशनम् ॥ २.।
Mahabharata - Shanti Parva - Chapter Text

१२-१४५-० (७०८४०)
भीष्म उवाच। १२-१४५-०क्ष् (५७८५)
सपत्न्या वचनं श्रुत्वा धर्मयुक्तिसमन्वितम् ।
हर्षेण महता युक्तो वाक्यं व्याकुललोचनः ॥ १२-१४५-१ (७०८४१)
तं वै शाकुनिकं दृष्ट्वा विधिदृष्टेन कर्मणा ।
स पक्षी पूजयामास यत्नात्तं पक्षिजीविनम् ॥ १२-१४५-२ (७०८४२)
उवाच स्वागतं तेऽद्य ब्रूहि किं करवाणि ते ।
सतांपश्च न कर्तव्यः स्वगृहे वर्तते भवान् ॥ १२-१४५-३ (७०८४३)
तद्ब्रवीतु भवान्क्षिप्रं किं करोमि किमिच्छसि ।
प्रणयेन ब्रवीमि त्वां त्वं हि नः शरणागतः ॥ १२-१४५-४ (७०८४४)
अरावप्युचितं कार्यमातिथ्यं गृहमागते ।
छेत्तुमप्यागते छायां नोपसंहरते द्रुमः ॥ १२-१४५-५ (७०८४५)
शरणागतस्य कर्तव्यमातिथ्यं हि प्रयत्नतः ।
पञ्चयज्ञप्रवृत्तेन गृहस्थेन विशेषतः ॥ १२-१४५-६ (७०८४६)
पञ्चयज्ञांस्तु यो मोहान्न करोति गृहाश्रमी ।
तस्य नायं न च परो लोको भवति धर्मतः ॥ १२-१४५-७ (७०८४७)
तद्ब्रूहि मां सुविस्रब्धो यत्त्वं वाचा वदिष्यसि ।
तत्करिष्याम्यहं सर्वं मा त्वं शोके मनः कृथाः ॥ १२-१४५-८ (७०८४८)
तस्य तद्वचनं श्रुत्वा शकुनेर्लुब्धकोऽब्रवीत् ।
बाधते खलु मां शीतं संत्राणं हि विधीयताम् ॥ १२-१४५-९ (७०८४९)
एवमुक्तस्तनः पक्षी पर्णान्यास्तीर्य भूतले ।
यथा शुष्काणि यत्नेन ज्वलनार्थं द्रुतं ययौ ॥ १२-१४५-१० (७०८५०)
स---वाऽङ्गारकर्मान्तं गृहीत्वाऽग्निमथागमत् ।
तथा शुष्केषु पर्णेषु पावकं सोऽप्यदीपयत् ॥ १२-१४५-११ (७०८५१)
स--प्तं महत्कृत्वा तमाह शरणागतम् ।
----- सुविस्रब्धः स्वगात्राण्यकुतोभयः ॥ १२-१४५-१२ (७०८५२)

-- तथोक्तस्तथेत्युक्त्वा लुब्धो गात्राण्यतापयत् ।
अग्निप्रत्यागतप्राणस्ततः प्राह विहंगमम् ॥ १२-१४५-१३ (७०८५३)
हर्षेण महताऽऽविष्टो वाक्यं व्याकुललोचनः ।
तथेमं शकुनिं दृष्ट्वा विधिदृष्टेन कर्मणा ॥ १२-१४५-१४ (७०८५४)
दत्तमाहारमिच्छामि त्वया क्षुद्बाधते हि माम् ।
स तद्वचः प्रतिश्रुत्य वाक्यमाह विहंगमः ॥ १२-१४५-१५ (७०८५५)
न मेऽस्ति विभवो येन नाशयेयं क्षुधां तव ।
उत्पन्नेन हि जीवामो वयं नित्यं वनौकसः ॥ १२-१४५-१६ (७०८५६)
संचयो नास्ति चास्माकं मुनीनामिव कानने ।
इत्युक्त्वा तं तदा तत्र विवर्णवदनोऽभवत् ॥ १२-१४५-१७ (७०८५७)
कथं नु खलु कर्तव्यमिति चिन्तापरस्तदा ।
बभूव भरतश्रेष्ठ गर्हयन्वृत्तिमात्मनः ॥ १२-१४५-१८ (७०८५८)
मुहूर्ताल्लब्धसंज्ञस्तु स पक्षी पक्षिघातिनम् ।
उवाच तर्पयिष्ये त्वां मुहूर्तं प्रतिपालय ॥ १२-१४५-१९ (७०८५९)
इत्युक्त्वा शुष्कपर्णैस्तु समुज्ज्वाल्य हुताशनम् ।
हर्षेण महताऽऽविष्टः कपोतः पुनरब्रवीत् ॥ १२-१४५-२० (७०८६०)
ऋषीणां देवतानां च पितृणां च महात्मनाम् ।
युतः पूर्वं मया धर्मो महानतिथिपूजने ॥ १२-१४५-२१ (७०८६१)
कुरुष्वानुग्रहं सौम्य सत्यमेतद्ब्रवीमि ते ।
निश्चिता खलु मे बुद्धिरतिथिप्रतिपूजने ॥ १२-१४५-२२ (७०८६२)
ततः कृतप्रतिज्ञो वै स पक्षी प्रहसन्निव ।
तमग्निं त्रिः परिक्रम्य प्रविवेश महामतिः ॥ १२-१४५-२३ (७०८६३)
अग्निमध्ये प्रविष्टं तु लुब्धो दृष्ट्वा च पक्षिणम् ।
चिन्तयामास मनसा किमिदं वै मया कृतम् ॥ १२-१४५-२४ (७०८६४)
अहो मम नृशंसस्य गर्हितस्य स्वकर्मणा ।
अधर्मः सुमहान्घोरो भविष्यति न संशयः ॥ १२-१४५-२५ (७०८६५)
एवं बहुविधं भूरि विललाप स लुब्धकः ।
गर्हयन्स्वानि कर्माणि द्विजं दृष्ट्वा तथाऽऽगतम् ॥ ॥ १२-१४५-२६ (७०८६६)

इति श्रीमन्महाभारते शान्तिपर्वणि आपद्धर्मपर्वणि
पञ्चचत्वारिंशदधिकशततमोऽध्यायः ॥ १४५.।
Mahabharata - Shanti Parva - Chapter Footnotes

१२-१४५-३ संकोचश्च न कर्तव्य इति थ । पाठः ॥
१२-१४५-११ अङ्गारकर्मान्तं कर्मारगृहसमीपम् ॥

शन्तिपर्व-अध्यय१४६
॥ श्रीः ॥
१२.१४६. अध्यायः १४६

Mahabharata - Shanti Parva - Chapter Topics
कपोतस्य वह्निप्रवेशदर्शिना व्याधेन आत्मोपालम्भपूर्वकं स्वप्राणविमोक्षणायानशनादिना शरीरशोषणाध्यवसायः ॥ १.।
Mahabharata - Shanti Parva - Chapter Text

१२-१४६-० (७०८६७)
भीष्म उवाच। १२-१४६-०क्ष् (५७८६)
ततः स लुब्धकः पश्यन्क्षुधयाऽपि परिप्लुतः ।
कपोतमग्निपतितं वाक्यं पुनरुवाच ह ॥ १२-१४६-१ (७०८६८)
किमीदृशं नृशंसेन मया कृतमबुद्धिना ।
भविष्यति हि मे नित्यं पातकं भुवि जीवतः ।
स विनिन्दंस्तथाऽऽत्मानं पुनः पुनरुवाच ह ॥ १२-१४६-२ (७०८६९)
धिङ्भामस्तु सुदुर्बुद्धिं सदा निकृतिनिश्चयम् ।
शुभं कर्म परित्यज्य सोऽहं शकुनिलुब्धकः ॥ १२-१४६-३ (७०८७०)
नृशंसस्य ममाद्यायं प्रत्यादेशो न संशयः ।
दत्तः स्वमांसं दहता कपोतेन महात्मना ॥ १२-१४६-४ (७०८७१)
सोहं त्यक्ष्ये प्रियान्प्राणान्पुत्रान्दारान्विसृज्य च ।
उपदिष्टो हि मे धर्मः कपोतेनात्र धर्मिणा ॥ १२-१४६-५ (७०८७२)
अद्यप्रभुति देहं स्वं सर्वभोगैर्विवर्जितम् ।
यथा स्वल्पं सरो ग्रीष्मे शोषयिष्याम्महं तथा ॥ १२-१४६-६ (७०८७३)
क्षुत्पिपासातपसहः कृशो ध्रमनिसन्ततः ।
उपवासैर्बहुविधैश्चरिष्ये पारलौकिकम् ॥ १२-१४६-७ (७०८७४)
अहो देहप्रदानेन दर्शिताऽतिथिपूजना ।
तस्माद्धर्मं चरिष्यामि धर्मो हि परमा गतिः ॥ १२-१४६-८ (७०८७५)
दृष्टो धर्मो हि धर्मिष्ठे यादृशो विहगोत्तमे ।
एवमुक्त्वा विनिश्चित्य रौद्रकर्मा स लुब्धकः ॥ १२-१४६-९ (७०८७६)
महाप्रस्थानमाश्रित्य प्रययौ संशितव्रतः ॥ १२-१४६-१० (७०८७७)
ततो यष्टिं शलाकां च धारकं पञ्जरं तथा ।
तां च बद्धां कपोतीं स प्रमुच्य विससर्ज ह ॥ ॥ १२-१४६-११ (७०८७८)

इति श्रीमन्महाभारते शान्तिपर्वणि आपद्धर्मपर्वणि षट्चत्वारिंशदधिकशततमोऽध्यायः ॥ १४६.।

Mahabharata - Shanti Parva - Chapter Footnotes

१२-१४६-४ प्रत्यादेशः धिक्कारपूर्वक उपदेशः ॥

---

शन्तिपर्व-अध्यय१४७
॥ श्रीः ॥
१२.१४७. अध्यायः १४७

Mahabharata - Shanti Parva - Chapter Topics
भर्तृशोकतप्तथा कपोत्या सकरुणं विलप्याग्नौ प्रवेशः ॥ १.। ततो विमानारोहणेन स्वर्गतयोः कपोतयोस्तत्र सुखेन चिरविहारः ॥ २.।
Mahabharata - Shanti Parva - Chapter Text

१२-१४७-० (७०८७९)
भीष्म उवाच। १२-१४७-०क्ष् (५७८७)
ततो गतो शाकुनिके कपोती प्राह दुःखिता ।
संस्मृत्य सा च भर्तारं रुदती शोककर्शिता ॥ १२-१४७-१ (७०८८०)
नाहं ते विप्रियं कान्त कदाचिदपि संस्मरे ।
सर्वाऽपि विधवा नारी बहुपुत्राऽपि शोचते ॥ १२-१४७-२ (७०८८१)
शोच्या भवति बन्धूनां पतिहीना तपस्विनी ।
लालिताऽहं त्वया नित्यं बहुमानाच्च पूजिता ॥ १२-१४७-३ (७०८८२)
वचनैर्मधुरैः स्निग्धैरसंक्लिष्टमनोहरैः ।
कन्दरेषु च शैलानां नदीनां निर्झरेषु च ॥ १२-१४७-४ (७०८८३)
द्रुमाग्रेषु च रम्येषु रमिताऽहं त्वया सह ।
आकाशगमने चैव विहृताऽहं त्वया सुखम् ।
रमामि स्म पुरा कान्त तन्मे नास्त्यद्य मे प्रिय ॥ १२-१४७-५ (७०८८४)
मितं ददाति हि पिता मितं भ्राता मितं सुतः ।
अमितस्य हि दातारं भर्तारं का न पूजयेत् ॥ १२-१४७-६ (७०८८५)
नास्ति भर्तृसमो नाथो नास्ति भर्तृसमं सुखम् ।
विसृज्य धनसर्वस्वं भर्ता वै शरणं स्त्रियाः ॥ १२-१४७-७ (७०८८६)
न कार्यमिह मे नाथ जीवितेन त्वया विना ।
पतिहीना तु का नारी सती जीवितुमुत्सहेत् ॥ १२-१४७-८ (७०८८७)
एवं विलप्य बहुधा करुणं सा सुदुःखिता ।
पतिव्रता संप्रदीप्तं प्रविवेश हुताशनम् ॥ १२-१४७-९ (७०८८८)
ततश्चित्राङ्गदधरं भर्तारं साऽन्वपद्यत ।
विमानस्थं सुकृतिभिः पूज्यमानं महात्मभिः ॥ १२-१४७-१० (७०८८९)
चित्रमाल्याम्बरधरं सर्वाभरणभूषितम् ॥

विमानशतकोटीभिरावृतं पुण्यकर्मभिः ॥ १२-१४७-११ (७०८९०)
ततः स्वर्गं गतः पक्षी विमानवरमास्थितः ।
कर्मणा पूजितस्तत्र रेमे स सह भार्यया ॥ ॥ १२-१४७-१२ (७०८९१)

इति श्रीमन्महाभारते शान्तिपर्वणि आपद्धर्मपर्वणि
सप्तचत्वारिंशदधिकशततमोऽध्यायः ॥ १४७.।

---

शन्तिपर्व-अध्यय१४८
॥ श्रीः ॥
१२.१४८. अध्यायः १४८

Mahabharata - Shanti Parva - Chapter Topics
व्याधेन विमानस्थयोर्दर्शनम् ॥ १.। ततो व्याधेन दावाग्नौ
शरीरत्यागेन स्वर्धगमनम् ॥ २.।
Mahabharata - Shanti Parva - Chapter Text

१२-१४८-० (७०८९२)
भीष्म उवाच। १२-१४८-०क्ष् (५७८८)
वमानस्थौ तु तौ राजंल्लुब्धकः ग्वे ददर्श ह ।
दृष्ट्वा तौ दंपती राजन्व्यचिन्तयत तां गतिम् ॥ १२-१४८-१ (७०८९३)
कीदृशेनेह तपसा गच्छेयं परमां गतिम् ।
इति बुद्ध्या विनिश्चित्य गमनायोपचक्रमे ॥ १२-१४८-२ (७०८९४)
महाप्रस्थानमाश्रित्य लुब्धकः पक्षिजीवकः ।
निश्चष्टो मरुदाहारो निर्ममः स्वर्गकाङ्क्षया ॥ १२-१४८-३ (७०८९५)
ततोऽपश्यत्सुविस्तीर्णं हृद्यं पद्माभिभूषितम् ।
नानापक्षिगणाकीर्णं सरः शीतजलं शिवम् ॥ १२-१४८-४ (७०८९६)
पिपांसार्तोऽपि तदृष्ट्वा तृप्तः स्यान्नात्र संशयः ॥ १२-१४८-५ (७०८९७)
उपवासकृशोऽत्यर्थं स तु पार्थिव लुब्धकः ।
उपसृत्य तु तद्धृष्टः श्वापदाध्युपितं वनम् ॥ १२-१४८-६ (७०८९८)
महान्तं निश्चयं कृत्वा लुब्धकः प्रविवेश ह ।
प्रविशन्नेव स वनं निगृहीतः स कण्टकैः ॥ १२-१४८-७ (७०८९९)
स कण्टकैर्विभिन्नाङ्गो लोहितार्द्रीकृतच्छविः ।
वभ्राम तस्मिन्विजने नानामृगसमाकुले ॥ १२-१४८-८ (७०९००)
ततो द्रुमाणां महतां पवनेन वने तदा ।
उदतिष्ठत संघर्षान्सुमहान्हव्यवाहनः ॥ १२-१४८-९ (७०९०१)
तद्वनं वृक्षसंकीर्णं लताविटपसंकुलम् ।
ददाह पावकः क्रुद्धो युगान्ताग्निसमप्रभः ॥ १२-१४८-१० (७०९०२)

स ज्वलैः पवनोद्भूतैर्विस्फुलिङ्गैः समन्ततः ।
ददाह तद्वनं घोरं मृगपक्षिसमाकुलम् ॥ १२-१४८-११ (७०९०३)
ततः स देहमोक्षार्थं संप्रहृष्टेन चेतसा ।
अभ्यधावत वर्धन्तं पावकं लुब्धकस्तदा ॥ १२-१४८-१२ (७०९०४)
ततस्तेनाग्निना दग्धो लुब्धको नष्टकल्मषः ।
जगाम परमां सिद्धिं ततो भरतसत्तम ॥ १२-१४८-१३ (७०९०५)
ततः स्वर्गस्थमात्मानमपश्यद्विगतज्वरः ।
यक्षगन्धर्वसिद्धानां मध्ये भ्राजन्तमिन्द्रवत् ॥ १२-१४८-१४ (७०९०६)
एवं खलु कपोतश्च कपोती च पतिव्रता ।
लुब्धकेन सह स्वर्गं गताः पुण्येन कर्मणा ॥ १२-१४८-१५ (७०९०७)
याऽन्या चैवंविधा नारी भर्तारमनुवर्तते ।
विराजते हि सा क्षिप्रं कपोतीव दिवि स्थिता ॥ १२-१४८-१६ (७०९०८)
एवमेतत्पुरावृत्तं लुब्धकस्य महात्मनः ।
कपोतस्य च धर्मिष्ठा गतिः पुण्येन कर्मणा ॥ १२-१४८-१७ (७०९०९)
यश्चेदं शृणुयान्नित्यं यश्चेदं परिकीर्तयेत् ।
नाशुभं विद्यते तस्य मनसाऽपि प्रमादतः ॥ १२-१४८-१८ (७०९१०)
युधिष्ठिर महानेष धर्मो धर्मभृतां वर ।
गोघ्नेष्वपि भवेदस्मिन्निष्कृतिः पापकर्मणः ॥ १२-१४८-१९ (७०९११)
न निष्कृतिर्भवेत्तस्य यो हन्याच्छरणागतम् ।
इतिहासमिमं श्रुत्वा पुण्यं पापप्रणाशनम् ।
न दुर्गतिप्रवाप्नोति स्वर्गलोकं च गच्छति ॥ ॥ १२-१४८-२० (७०९१२)

इति श्रीमन्महाभारते शान्तिपर्वणि आपद्धर्मपर्वणि
अष्टचत्वारिंशदधिकशततमोऽध्यायः ॥ १४८.।

---

शन्तिपर्व-अध्यय१४९
॥ श्रीः ॥
१२.१४९. अध्यायः १४९

Mahabharata - Shanti Parva - Chapter Topics
युधिष्ठिरेण भीष्मंप्रति
अबुद्धिपूर्वकब्रह्महत्याप्रायश्चित्तप्रश्नः ॥ १.। भीष्मेण
जनमेजयस्याबुद्धिपूर्वकब्रह्महत्याप्राप्तिकथनपूर्वकं
तत्कथाकथनारम्भः ॥ २.। शौनकेन स्वपादयोः प्रणमतो
जनमेजयस्य गर्हणम् ॥ ३.।
Mahabharata - Shanti Parva - Chapter Text

१२-१४९-० (७०९१३)
युधिष्ठिर उवाच। १२-१४९-०क्ष् (५७८९)
अबुद्धिपूर्वं यत्पापं कुर्याद्भरतसत्तम ।
मुच्यते स कथं तस्मादेनसस्तद्ब्रवीहि मे ॥ १२-१४९-१ (७०९१४)
भीष्म उवाच। १२-१४९-२क्ष् (५७९०)
अत्र ते वर्तयिष्यामि पुराणमृषिसंस्तुतम् ।
इन्द्रोतः शौनको विप्रो यदाह जनमेजयम् ॥ १२-१४९-२ (७०९१५)
आसीद्राजा महावीर्यः पारिक्षिज्जनमेजयः ।
अबुद्धिजा ब्रह्महत्या तमागच्छन्महीपतिम् ॥ १२-१४९-३ (७०९१६)
ब्राह्मणाः सर्व एवैनं तत्यजुः सपुरोहिताः ।
स जगाम वनं राजा दह्यमानो दिवानिशम् ॥ १२-१४९-४ (७०९१७)
प्रजाभिः स परित्यक्तश्चकार कुशलं महत् ।
अतिवेलं तपस्तेपे दह्यमानः स मन्युना ॥ १२-१४९-५ (७०९१८)
ब्रह्महत्यापनोदार्थमपृच्छद्ब्राह्मणान्बहून् ।
पर्यटन्पृथिवीं कृत्स्नां देशेदेशे नराधिपः ॥ १२-१४९-६ (७०९१९)
तत्रेतिहासं वक्ष्यामि धर्मस्यास्योपवृंहणम् ।
दह्यमानः पापकृत्या जगाम जनमेजयः ॥ १२-१४९-७ (७०९२०)
चरिष्यमाण इन्द्रोतं शौनकं संशितव्रतम् ।
समासाद्योपजग्राह पादयोः परिपीडयन् ॥ १२-१४९-८ (७०९२१)
ततो भीतो महाप्राज्ञो जगर्हे सुभृशं तदा ।
कर्ता पापस्य महतो भ्रूणहा किमिहागतः ॥ १२-१४९-९ (७०९२२)
किं तवास्मासु कर्तव्यं मा मां द्राक्षीः कथंचन ।
गच्छगच्छ न ते स्थानं प्रीणात्यस्मानिति ब्रुवन् ॥ १२-१४९-१० (७०९२३)
रुधिरस्येव ते गन्धः शवस्येव च दर्शनम् ।
अशिवः शिवसंकाशो मृतो जीवन्निवाटसि ॥ १२-१४९-११ (७०९२४)
अन्तर्मृत्युरशुद्धात्मा पापमेवानुचिन्तयन् ।
प्रबुध्यसे प्रस्वपिपि वर्तसे परमे सुखे ॥ १२-१४९-१२ (७०९२५)
मोघं ते जीवितं राजन्परिक्लिष्टं च जीवसि ।
पापायैव हि सृष्टोऽसि कर्मणेह यवीयसे ॥ १२-१४९-१३ (७०९२६)
बहुकल्याणमिच्छन्त ईहन्ते पितरः सुतान् ।
तपसा दैवतेज्याभिर्वन्दनेन तितिक्षया ॥ १२-१४९-१४ (७०९२७)
पितृवंशमिमं पश्य त्वत्कृते निधनं गतम् ।
निरर्थाः सर्व एवैषामाशाबन्धास्त्वदाश्रयाः ॥ १२-१४९-१५ (७०९२८)
यान्पूजयन्तो विन्दन्ति स्वर्गमायुर्यशः प्रजाः ।
तेषु ते संततं द्वेषो ब्राह्मणेषु निरर्थकः ॥ १२-१४९-१६ (७०९२९)
इमं लोकं विमुच्य त्वमवाङ्मूर्धा पतिष्यसि ।

अशाश्वतीः शाश्वतीश्च समाः पापेन कर्मणा ॥ १२-१४९-१७ (७०९३०)
स्वाद्यमानो जन्तुशतैस्तीक्ष्णदंष्ट्रैरयोमुखैः ।
ततश्च पुनरावृत्तः पापयोनिं गमिष्यसि ॥ १२-१४९-१८ (७०९३१)
यदिदं मन्यसे राजन्नायमस्ति कुतः परः ।
प्रतिस्मारयितारस्त्वां यमदूता यमक्षये ॥ ॥ १२-१४९-१९ (७०९३२)

इति श्रीमन्महाभारते शान्तिपर्वणि आपद्धर्मपर्वणि
एकोनपञ्चाशदधिकशततमोऽध्यायः ॥ १४९.।
Mahabharata - Shanti Parva - Chapter Footnotes

१२-१४९-३ पारिक्षित् पारिक्षितः ॥
१२-१४९-७ पापकृत्या पापक्रियया ॥
१२-१४९-१० मा मां स्प्राक्षीः कथंचनेति झ । पाठः ॥
१२-१४९-१२ ब्रह्ममृत्युरशुद्धात्मेति झ । पाठः ॥
१२-१४९-१३ यवीयसे हीनाय ॥
१२-१४९-१५ त्वत्कृते नरकं गतमिति झ । पाठः ॥
१२-१४९-१७ अशाश्वतीः सर्वस्यापि कर्मणोऽन्तवत्त्वात् । शाश्वतीः बहुत्वात् ॥

---

शन्तिपर्व-अध्यय१५०
॥ श्रीः ॥
१२.१५०. अध्यायः १५०

Mahabharata - Shanti Parva - Chapter Topics
शौनकेन जनमेजयप्रार्थनया तदीयब्रह्महत्यापनोदनाङ्गीकरणम् ॥ १.।
Mahabharata - Shanti Parva - Chapter Text

१२-१५०-० (७०९९२)
भीष्म उवाच। १२-१५०-०क्ष् (५७९३)
एवमुक्तः प्रत्युवाच तं मुनिं जनमेजयः ।
गर्ह्यं भवान्गर्हयते निन्द्यं निन्दति मां पुनः ॥ १२-१५०-१ (७०९९३)
धिक्कार्यं मां धिक्कुरुते तस्मात्त्वाऽहं प्रसादये ।
सर्वं हीदं स्वकृतं मे ज्वलाम्यग्नाविवाहितम् ॥ १२-१५०-२ (७०९९४)
स्वकर्माण्यभिसंधाय नाभिनन्दति मे मनः ।
प्राप्तं घोरं भयं नूनं मया वैवस्वतादपि ॥ १२-१५०-३ (७०९९५)
तत्तु शल्यमनिर्हृत्य कथं शक्ष्यामि जीवितुम् ।
सर्वं मन्युं विनीय त्वमभि मां वद शौनक ॥ १२-१५०-४ (७०९९६)

श्महानासं ब्राह्मणानां भूयो वक्ष्यामि सांप्रतम् ॥
ग्गन्ता गतिं ब्राह्मणानां भविष्याम्यर्थवान्पुनः।'
अस्तु शेषं कुलस्यास्य मा पराभूदिदं कुलम् ॥ १२-१५०-५ (७०९९७)
न हि नो ब्रह्मशप्तानां शेषं भवितुमर्हति ।
स्तुतीरलभमानानां संविदं वेद निश्चयात् ॥ १२-१५०-६ (७०९९८)
निन्दमानः स्वमात्मानं भूयो वक्ष्यामि सांप्रतम् ।
भूयश्चैवाभिमज्जन्ति निर्धर्मा निर्जला इव ॥ १२-१५०-७ (७०९९९)
न ह्ययज्ञा अमुं लोकं प्राप्नुवन्ति कथंचन ।
अवाक्च प्रपतिष्यन्ति पुलिन्दशवरा इव ॥ १२-१५०-८ (७१०००)
अविज्ञायैव मे प्रज्ञां बालस्येव स पण्डितः ।
ब्रह्मन्पितेव पुत्रस्य प्रीतिमान्भव शौनक ॥ १२-१५०-९ (७१००१)
शौनक उवाच। १२-१५०-१०क्ष् (५७९४)
किमाश्चर्यं यतः प्राज्ञो बहुकुर्यादसांप्रतम् ।
इति वै पण्डितो भूत्वा भूतानां को नु तप्यते ॥ १२-१५०-१० (७१००२)
प्रज्ञाप्रासादमारुह्य अशोच्यः शोचते जनान् ।
जगतीस्थानिवाद्रिस्थः प्रज्ञया प्रतिपत्स्यति ॥ १२-१५०-११ (७१००३)
न चोपलभते कश्चिन्न चाश्चर्याणि पश्यति ।
निर्विण्णात्मा परोक्षो वा धिक्कृतः सर्वसाधुषु ॥ १२-१५०-१२ (७१००४)
विदित्वा भवतो वीर्यं माहात्म्यं चैव चागमे ।
कुरुष्वेह यथाशान्ति ब्रह्मा शरणमस्तु ते ॥ १२-१५०-१३ (७१००५)
तद्वै वारित्रकं तात ब्राह्मणानामकुप्यताम् ।
अथवा तप्यसे पापे धर्मं चेदनुपश्यसि ॥ १२-१५०-१४ (७१००६)
जनमेजय उवाच। १२-१५०-१५क्ष् (५७९५)
अनुतप्ये च पापेन न चाधर्मं चराम्यहम् ।
बुभूषेद्भजमानं च प्रीतिमान्भव शौनक ॥ १२-१५०-१५ (७१००७)
शौनक उवाच। १२-१५०-१६क्ष् (५७९६)
छित्त्वा दम्भं च मानं च प्रीतिमिच्छामि ते नृप ।
सर्वभूतहिते तिष्ठ धर्मं चैव प्रतिस्मरन् ॥ १२-१५०-१६ (७१००८)
न भयान्न च कार्पण्यान्न लोभात्त्वामुपाह्वये ।
तां मे दैवीं गिरं सत्यां शृणु त्वं ब्राह्मणैः सह ॥ १२-१५०-१७ (७१००९)
सोऽहं न केनचिच्चार्थी त्वां च धर्मादुपाह्वये ।
क्रोशतां सर्वभूतानां हाहाधिगिति जल्पताम् ॥ १२-१५०-१८ (७१०१०)
वक्ष्यन्ति मामधर्मज्ञं त्यक्ष्यन्ति सुहृदो जनाः ।
ता वाचः सुहृदः श्रुत्वा संज्वरिष्यन्ति मे भृशं ॥ १२-१५०-१९ (७१०११)
केचिदेव महाप्राज्ञाः प्रतिज्ञास्यन्ति कार्यताम् ।
जानीहि मत्कृतं तात ब्राह्मणान्प्रति भारत ॥ १२-१५०-२० (७१०१२)

यथा ते सत्कृताः क्षेमं लभेरंस्त्वं तथा कुरु ।
प्रतिजानीहि चाद्रोहं ब्राह्मणानां नराधिप ॥ १२-१५०-२१ (७१०१३)
जनमेजय उवाच। १२-१५०-२२क्ष् (५७९७)
नैव वाचा न मनसा पुनर्जातु न कर्मणा ।
द्रोग्धाऽस्मि ब्राह्मणान्विप्र चरणावेव ते स्पृशे ॥ ॥ १२-१५०-२२ (७१०१४)

इति श्रीमन्महाभारते शान्तिपर्वणि आपद्धर्मपर्वणि
पञ्चाशदधिकशततमोऽध्यायः ॥ १५०.।
Mahabharata - Shanti Parva - Chapter Footnotes

१२-१५०-२ त्वा त्वाम् ॥
१२-१५०-५ ब्राह्मणानां भक्त इति शेषः ॥
१२-१५०-८ पुलिन्दाः शबराः म्लेच्छभेदाः ॥
१२-१५०-९ ब्रह्मन्ब्राह्मण ॥
१२-१५०-१० साधुषु निर्विण्णात्मा विरक्तः परोक्षस्तद्दृष्टिपथादपेतः
तैश्च धेक्कृतः सः प्रज्ञानं चोपलभते । तत्सङ्गं विना
प्रज्ञा दुर्लभैवेत्यर्थः ॥
१२-१५०-१३ ब्रह्मा ब्राह्मणः शरणं रक्षिता । यथाशान्ति
शान्तिमनतिक्रम्य ॥
१२-१५०-१७ उपाह्वये शिष्यं करोमीत्यर्थः ॥
१२-१५०-१८ शैनकं पापिष्ठसंग्रहीतारं धिगिति जल्पतां
ताननादृत्य उपाह्वये इत्यर्थः ॥

---

शन्तिपर्व-अध्यय१५१
॥ श्रीः ॥
१२.१५१. अध्यायः १५१

Mahabharata - Shanti Parva - Chapter Topics
शौनके जनमेजयस्याश्वमेधयाजनेन तदीयब्रह्महत्यापनोदनपूर्वकं
राज्ये प्रतिष्ठापनम् ॥ १.।
Mahabharata - Shanti Parva - Chapter Text

१२-१५१-० (७१०१५)
शौनक उवाच। १२-१५१-०क्ष् (५७९८)
तस्मात्तेऽहं प्रवक्ष्यामि धर्ममावृतचेतसे ।
श्रीमन्महाबलस्तुष्टः स्वयं धर्ममवेक्षसे ॥ १२-१५१-१ (७१०१६)

पुरस्ताद्दारुणे भूत्वा सुचित्रतरमेव तत् ।
अनुगृह्णाति भूतानि स्वेन वृत्तेन पार्थिवः ॥ १२-१५१-२ (७१०१७)
कृत्स्ने नूनं सदसती इति लोको व्यवस्यति ।
यत्र त्वं तादृशो भूत्वा धर्ममेवानुपश्यसि। १२-१५१-३ (७१०१८)
दर्पं हित्वा पुनश्चापि भोगांश्च तप आस्थितः ।
इत्येतदभिभूतानामद्भुतं जनमेजय ॥ १२-१५१-४ (७१०१९)
योऽदुर्बलो भवेद्दाता कृपणो वा तपोधनः ।
अनाश्चर्यं तदित्याहुर्नातिदूरेण वर्तते ॥ १२-१५१-५ (७१०२०)
तप एव हि कार्पण्यं समग्रमसमीक्षितम् ।
तच्चेत्समीक्षयैव स्याद्भवेत्तस्मिंस्तपो गुणः ॥ १२-१५१-६ (७१०२१)
यज्ञो दानं दया वेदाः सत्यं च पृथिवीपते ।
पञ्चैतानि पवित्राणि षष्ठं सुचरितं तपः ॥ १२-१५१-७ (७१०२२)
तदेव राज्ञां परमं पवित्रं जनमेजय ।
तेन सम्यग्गृहीतेन श्रेयांसं धर्ममाप्स्यसि ॥ १२-१५१-८ (७१०२३)
पुण्यदेशाभिगमनं पवित्रं परमं स्मृतम् ।
अत्राप्युदाहरन्तीमां गाथां गीतां ययातिना ॥ १२-१५१-९ (७१०२४)
यो मर्त्यः प्रतिपद्येत आयुर्जीवेन वा पुनः ।
यज्ञमेकं ततः कृत्वा तत्संन्यस्य तपश्चरेत् ॥ १२-१५१-१० (७१०२५)
पुण्यमाहुः कुरुक्षेत्रं कुरुक्षेत्रात्सरस्वतीम् ।
सरस्वत्याश्च तीर्थानि तीर्थेभ्यश्च पृथूदकम् ॥ १२-१५१-११ (७१०२६)
यत्रावगाह्य स्थित्वा च नैनं श्वोमरणं तपेत् ।
महासरः पुष्कराणि प्रभासोत्तरमानसे ॥ १२-१५१-१२ (७१०२७)
कालोदकं च गन्तासि लब्धायुर्जीविते पुनः ।
सरस्वतीदृषद्वत्योः सेवमानोऽनुसंज्वरेत् ।
स्वाध्यायशील एतेषु सर्वेष्वेवमुपस्पृशेत् ॥ १२-१५१-१३ (७१०२८)
त्यागधर्मं पवित्राणां संन्यासं मनुरब्रवीत् ॥ १२-१५१-१४ (७१०२९)
अत्राप्युदाहरन्तीमाः गाथाः सत्यवता कृताः ।
यथा कुमारः सत्यो वै नैव पुण्यो न पापकृत ।
न ह्यस्ति सर्वभूतेषु दुःखमस्मिन्कुतः सुखम् ॥ १२-१५१-१५ (७१०३०)
एवं प्रकृतिभूतानां सर्वसंसर्गयायिनाम् ।
त्यजतां जीवितं प्रायो निवृत्ते पुण्यपापके। १२-१५१-१६ (७१०३१)
यत्त्वेव राज्ञो ज्यायिष्ठं कार्याणां तद्ब्रवीमि ते ॥ १२-१५१-१७ (७१०३२)
बलेन संविभागैश्च जय स्वर्गं पुनीष्व च ।
यस्यैव बलमोजश्च स धर्मस्य प्रभुर्नरः ॥ १२-१५१-१८ (७१०३३)
ब्राह्मणानां सुखार्थं त्वं पर्येहि पृथिवीमिमाम् ।
यथैवैतान्पुरा क्षेप्सीस्तथैवैतान्प्रसादय ॥ १२-१५१-१९ (७१०३४)

अपि धिक्क्रियमाणोऽपि तर्ज्यमानोऽप्यनेकधा ।
आत्मनो दर्शनं विद्वान्नाहर्ताऽस्मीति मा क्रुधः ।
घटमानः स्वकार्येषु कुरु निःश्रेयसं परम् ॥ १२-१५१-२० (७१०३५)
हिमाग्निघोरसदृशो राजा भवति कश्चन ।
लाङ्गलाशिकल्पो वा भवेदन्यः परंतपः ॥ १२-१५१-२१ (७१०३६)
न विशेषेण गन्तव्यमचिकित्सेन वा पुनः ।
न जातु नाहमस्मीति प्रसक्तव्यमसाधुषु ॥ १२-१५१-२२ (७१०३७)
विकर्मणा तप्यमानः पापात्पापः प्रमुच्यते ।
नैतत्कुर्या पुनरिति द्वितीयात्परिमुच्यते ॥ १२-१५१-२३ (७१०३८)
चरिष्ये धर्ममेवेति तृतीयात्परिमुच्यते ।
शुचिस्तीर्थान्यनुचरन्बहुत्वात्परिमुच्यते ॥ १२-१५१-२४ (७१०३९)
कल्याणमनुकर्तव्यं पुरुषेण बुभूषता ।
ये सुगन्धीनि सेवन्ते तथागन्धा भवन्ति ते ॥ १२-१५१-२५ (७१०४०)
ये दुर्गन्धीनि सेवन्ते तथागन्धा भवन्ति ये ।
तपश्चर्यापरः सत्यं पापाद्विपरिमुच्यते ॥ १२-१५१-२६ (७१०४१)
संवत्सरमुपास्याग्निमभिशस्तः प्रमुच्यते ।
त्रीणि वर्षाण्युपास्याग्निं भ्रूणहा विप्रमुच्यते ॥ १२-१५१-२७ (७१०४२)
महासरः पुष्कराणि प्रभासोत्तरमानसे ।
अभ्येत्य योजनशतं भ्रूणहा विप्रमुच्यते ॥ १२-१५१-२८ (७१०४३)
यावतः प्राणिनो हन्यात्तज्जातीयांस्तु तावतः ।
प्रमीयमाणानुन्मोच्य प्राणिहा विप्रमुच्यते ॥ १२-१५१-२९ (७१०४४)
अपि चाप्सु निमज्जेत जपंस्त्रिरघमर्षणम् ।
यथाऽश्वमेधावभृथस्तथा तन्मनुरब्रवीत् ॥ १२-१५१-३० (७१०४५)
क्षिप्रं प्रणुदते पापं सत्कारं लभते तथा ।
अपि चैनं प्रसीदन्ति भूतानि जडमूकवत् ॥ १२-१५१-३१ (७१०४६)
बृहस्पतिं देवगुरुं सुरासुराः
समेत्य सर्वे नृपते त्वयुज्जत ।
धर्मे फलं हेतुकृते महर्षे
तथेतरस्मिन्नरके पापलोक्ये ॥ १२-१५१-३२ (७१०४७)
उभे तु यस्य सुकृते भवेतां
किं तत्तयोस्तत्र जयोत्तरं स्यात् ।
आचक्ष्व तत्कर्मफलं महर्षे
कथं पापं नुदते धर्मशीलः ॥ १२-१५१-३३ (७१०४८)
बृहस्पतिरुवाच। १२-१५१-३४क्ष् (५७९९)
कृत्वा पापं पूर्वमबुद्धिपूर्वं
पुण्यानि चेत्कुरुते बुद्धिपूर्वम् ।

स तत्पापं नुदते कर्मशीलो
वासो यथा मलिनं क्षारयुक्त्या ॥ १२-१५१-३४ (७१०४९)
पापं कृत्वा हि मन्येत नाहमस्तीति पुरुषः ।
चिकीर्षेदेव कल्याणं श्रद्दधानोऽनसूयकः ॥ १२-१५१-३५ (७१०५०)
छिद्राणि वसनस्येव साधुना संवृणोति सः ।
यः पापं पुरुषः कृत्वा कल्याणमभिपद्यते ॥ १२-१५१-३६ (७१०५१)
आदित्यः पुनरुद्यन्वा तमः सर्वं व्यपोहति ।
कल्याणमाचरन्नेवं सर्वपापं व्यपोहति ॥ १२-१५१-३७ (७१०५२)
भीष्म उवाच। १२-१५१-३८क्ष् (५८००)
एवमुक्त्वा तु राजानमिन्द्रोतो जनमेजयम् ।
याजयामास विधिवद्वाजिमेधेन शौनकः ॥ १२-१५१-३८ (७१०५३)
ततः स राजा व्यपनीतकल्मषः
श्रिया युतः प्रज्वलितोऽनुरूपया ।
विवेश राज्यं स्वममित्रकर्शनो
यथा दिवं पूर्णवपुर्निशाकरः ॥ ॥ १२-१५१-३९ (७१०५४)

इति श्रीमन्महाभारते शान्तिपर्वणि आपद्धर्मपर्वणि
एकपञ्चाशदधिकशततमोऽध्यायः ॥ १५१.।
Mahabharata - Shanti Parva - Chapter Footnotes

१२-१५१-४ अभिभूतानामधर्मेणेति शेषः ॥
१२-१५१-१२ अत्रावगाह्य पीत्वा चेति झ । थ। पाठः ॥
१२-१५१-१४ पवित्राणां पावनानां मध्ये त्यागधर्मं दानात्मकं धर्मं
पवित्रतरं संन्यासं तु परं धर्मं ततोऽप्यधिकं मनुरब्रवीत् ॥
१२-१५१-१५ कुमारो बालः सत्यो रागद्वेषशून्यत्वात् । तथा तिष्ठेदित्यर्थः ॥
१२-१५१-१८ बलेन धैर्येण । संविभागैर्दानैः। ओज इन्द्रियपाटवम् ॥
१२-१५१-२१ हिमवच्छीतलः । अग्निवत्क्रूरः। घोरो
यमस्तद्वद्गुणदोषविचारकः। लाङ्गवद्दुष्टमूलोन्मूलनपरः।
अशनिवदाकस्मिकपातो दुष्टेषु हिमाग्निघोषसदृश इति द। पाठः ॥
१२-१५१-२३ सकृत्कृतात्पापात्पश्चात्तापमात्रेण मुच्यते
। द्विरावृत्तात्पुनर्न करिष्यामीति नियमग्रहणमात्रेण।
त्रिरावृत्ताद्यत्किंचिद्धर्मस्वीकारमात्रेण। बहुकृत्वेति तदभ्यस्तात्तु
तीर्थादिना मुच्यत इति श्लोकद्वयार्थः। पादात्पापस्य मुच्यत इति
ट। पाठः ॥
१२-१५१-३० अघमर्षणमृतं च सत्यं चेति ऋक्त्रयम् ॥
१२-१५१-३२ फलं दुःखम् ॥

१२-१५१-३३ यस्य योगिन उभे अपि सुखदुःखे ॥
१२-१५१-३५ कर्तृत्वाभिमानशून्यः पापं कुर्वन्नपि न करोत्येवेत्यर्धस्यार्थः ॥
१२-१५१-३६ संवृणोति विधत्ते ॥

---

शन्तिपर्व-अध्यय१५२
॥ श्रीः ॥
१२.१५२. अध्यायः १५२

Mahabharata - Shanti Parva - Chapter Topics
वैदिशनाम्नि नगरे केषुचिद्ब्राह्मणेषु मृतबालं श्मशानमुपनीय गृध्रजम्बुकवचनैर्ढौलायमानमानसतथा चिन्तयत्सु तत्र यदृच्छासमागतपरमेश्वरेण पार्वतीचोदनया मृतबालकोज्जीवनम्
॥ १. ।
Mahabharata - Shanti Parva - Chapter Text

१२-१५२-० (७१०५५)
युधिष्ठिर उवाच। १२-१५२-०क्ष् (५८०१)
कच्चित्पितामहेनासीच्छ्रुवं वा दृष्टमेव च ।
कच्चिन्मर्त्यो मृतो राजन्पुनरुज्जीवितोऽभवत् ॥ १२-१५२-१ (७१०५६)
भीष्म उवाच। १२-१५२-२क्ष् (५८०२)
शृणु पार्थ यथावृत्तमितिहासं पुरातनम् ।
गृध्रजम्बुकसंवादं यो वृत्तो वैदिशे पुरे ॥ १२-१५२-२ (७१०५७)
कस्यचिद्ब्राह्मणस्यासीद्दुःखलब्धः सुतो मृतः ।
बाल एव विशालाक्षो बालग्रहनिपीडितः ॥ १२-१५२-३ (७१०५८)
दुःखिताः केचिदादाय बालमप्राप्तयोवनम् ।
कुलसर्वस्वभूतं वै रुदन्तः शोककर्शिताः ॥ १२-१५२-४ (७१०५९)
बालं मृतं गृहीत्वाऽथ श्मशानाभिमुखाः स्थिताः ।
अङ्केनाङ्कं समाक्रस्य रुरुदुर्भृशदुःखिताः ॥ १२-१५२-५ (७१०६०)
शोचन्तस्तस्य पूर्वोक्तान्भाषितांश्चासकृत्पुनः ।
तं बालं भूतले क्षिप्य प्रतिगन्तुं न शक्नुयुः ॥ १२-१५२-६ (७१०६१)
तेषां रुदितशब्देन गृध्रोऽभ्येत्य वचोऽब्रवीत् ।
प्रेतात्मकमिमंकाले त्यक्त्वा गच्छत माचिरम् ॥ १२-१५२-७ (७१०६२)
इह पुंसां सहस्राणि स्त्रीसहस्राणि चैव ह ।
समानीतानि कालेन हित्वा वै यान्ति बान्धवाः ॥ १२-१५२-८ (७१०६३)
संपश्यत जगत्सर्वं सुखदुःखैरधिष्ठितम् ।
संयोगो विप्रयोगश्च पर्यायेणोपलभ्यते ॥ १२-१५२-९ (७१०६४)

गृहीत्वा ये च गच्छन्ति येऽनुयान्ति च तान्मृतान् ।
तेऽप्यायुषः प्रमाणेन स्वेन गच्छन्ति जन्तवः ॥ १२-१५२-१० (७१०६५)
अलं स्थित्वा श्मशानेऽस्मिन्गृध्रगोमायुसंकुले ।
कङ्कालबहुले घोरे सर्वप्राणिभयंकरे ॥ १२-१५२-११ (७१०६६)
न पुनर्जीवितः कश्चित्कालधर्ममुपागतः ।
प्रियो वा यदि वा द्वेष्यः प्राणिनां गतिरीदृशी ॥ १२-१५२-१२ (७१०६७)
सर्वेण खलु मर्तव्यं मर्त्यलोके प्रसूयता ।
कृतान्तविहिते मार्गे मृतं को जीवयिष्यति ॥ १२-१५२-१३ (७१०६८)
दिशान्तोपचितो यावदस्तं गच्छति भास्करः ।
गम्यतां स्वमधिष्ठानं सुतस्नेहं विसृज्य वै ॥ १२-१५२-१४ (७१०६९)
ततो गृध्रवचः श्रुत्वा विक्रोशन्तस्तदा नृप ।
बान्धवास्तेऽभ्यगच्छन्त पुत्रमुत्सृज्य भूतले ॥ १२-१५२-१५ (७१०७०)
विनिश्चित्याथ च तदा विक्रोशन्तस्ततस्ततः ।
श्मृत इत्येव गच्छन्तो निराशास्तस्य दर्शने ॥ १२-१५२-१६ (७१०७१)
निश्चितार्थाश्च ते सर्वे संत्यजन्तः स्वमात्मजम् ।
निराशा जीविते तस्य मार्गमावृत्य धिष्ठिताः ॥ १२-१५२-१७ (७१०७२)
ध्वाङ्क्षपक्षसवर्णस्तु बिलान्निःसृत्य जम्बुकः ।
गच्छमानान्स्म तानाह निर्घृणाः खलु मानुषाः ॥ १२-१५२-१८ (७१०७३)
आदित्योऽयं स्थितो मूढाः स्नेहं कुरुत मा भयम् ।
बहुरूपो मुहूर्ताच्च जीवेदपि च बालकः ॥ १२-१५२-१९ (७१०७४)
दर्भान्भूमौ विनिक्षिप्य पुत्रस्नेहविनाकृताः ।
श्मशाने सुतमुत्सृज्य कस्माद्गच्छत निर्घृणाः ॥ १२-१५२-२० (७१०७५)
न वोऽस्त्यस्मिन्सुते स्नेहो बाले मधुरभाषिणि ।
यस्य भाषितमात्रेण प्रसादमधिगच्छत ॥ १२-१५२-२१ (७१०७६)
न पश्यध्वं सुतस्नेहो यादृशः पशुपक्षिणाम् ।
न तेषां धारयित्वा तान्कश्चिदस्ति फलागमः ॥ १२-१५२-२२ (७१०७७)
चतुष्पात्पक्षिकीटानां प्राणिनां स्नेहसङ्गिनाम् ।
परलोकगतिस्थानां मुनियज्ञक्रियामिव ॥ १२-१५२-२३ (७१०७८)
तेषां पुत्राभिरामाणामिह लोके परत्र च ।
न गुणो दृश्यते कश्चित्प्रजाः संधारयन्ति च ॥ १२-१५२-२४ (७१०७९)
अपश्यतां प्रियान्पुत्रान्येषां शोको न तिष्ठति ।
न ते पोषणसंप्रीता मातापितर एव हि ॥ १२-१५२-२५ (७१०८०)
मानुषाणां कुतः स्नेहो येषां शोको न विद्यते ।
इमं कुलकरं पुत्रं त्यक्त्वा क्व नु गमिष्यथ ॥ १२-१५२-२६ (७१०८१)
चिरं मुञ्चत बाष्पं च चिरं स्नेहेनन पश्यत ।
एवंविधानि हीष्टानि दुस्त्यजानि विशेषतः ॥ १२-१५२-२७ (७१०८२)

क्षीणस्याथामिशस्तस्य श्मशानाभिमुखस्य च ।
बान्धवा यत्र तिष्ठति तत्रान्यो नाधितिष्ठति ॥ १२-१५२-२८ (७१०८३)
सर्वस्य दयिताः प्राणाः सर्वः स्नेहं च विन्दति ।
तिर्यग्योनिष्वपि संतां स्नेहं पश्यत यादृशम् ॥ १२-१५२-२९ (७१०८४)
त्यक्त्वा कथं गच्छथेमं पद्मलोलायतेक्षणम् ।
यथा नवोद्वाहकृतं स्नानमाल्यविभूषितम्। १२-१५२-३० (७१०८५)
जम्बुकस्य वचः श्रुत्वा कृपणं परिदेवतः ।
न्यवर्तन्त तदा सर्वे बालार्थं ते स्म मानुषाः ॥ १२-१५२-३१ (७१०८६)
गृध्र उवाच। १२-१५२-३२क्ष् (५८०३)
अहो बत नृशंसेन जम्बुकेनाल्पमेधसा ।
क्षुद्रेणोक्ता हीनसत्वा मानुषाः किं निवर्तथ ॥ १२-१५२-३२ (७१०८७)
पञ्चभूतपरित्यक्तं शुष्कं काष्ठत्वमागतम् ।
कस्माच्छोचथ निश्चेष्टमात्मानं किं न शोचथ ॥ १२-१५२-३३ (७१०८८)
तपः कुरुत वै तीव्रं मुच्यध्वं येन किल्बिषात् ।
तपसा लभ्यते सर्वं विलापः किं करिष्यति ॥ १२-१५२-३४ (७१०८९)
अनिष्टानि न भाग्यानि जानीत स्वंस्वमात्मना ।
येन गच्छति बालोऽयं दत्त्वा शोकमनन्तकम् ॥ १२-१५२-३५ (७१०९०)
धनं गावः सुवर्णं च मणिरत्नमथापि च ।
अपत्यं च तपोमूलं तपो योगाच्च लभ्यते ॥ १२-१५२-३६ (७१०९१)
यथा कृता च भूतेषु प्राप्यते सुखदुःखिता ।
गृहीत्वा जायते जन्तुर्दुःखानि च सुखानि च ॥ १२-१५२-३७ (७१०९२)
न कर्मणा पितुः पुत्रः पिता व्रा पुत्रकर्मणा ।
मार्गेणान्येन गच्छन्ति बद्धाः सुकृतदुष्कृतैः ॥ १२-१५२-३८ (७१०९३)
धर्मं चरत यत्नेन तथाऽधर्मान्निवर्तत ।
वर्तध्वं च यथाकालं दैवतेषु द्विजेषु च ॥ १२-१५२-३९ (७१०९४)
शोकं त्यजत दैन्यं च सुतस्नेहान्निवर्तत ।
त्यज्यतामयमाक्रोशस्ततः शीघ्रं निवर्तत ॥ १२-१५२-४० (७१०९५)
यत्करोति शुभं कर्म तथा कर्म सुदारुणम् ।
तत्कर्तैव समश्नाति बान्धवानां किमत्र ह ॥ १२-१५२-४१ (७१०९६)
इह त्यक्त्वा न तिष्ठन्ति बान्धवा बान्धवं प्रियम् ।
स्नेहमुत्सृज्य गच्छन्ति बाष्पपूर्णाविलेक्षणाः ॥ १२-१५२-४२ (७१०९७)
प्राज्ञो वा यदि वा मूर्खः सधनो निर्धनोऽपि वा ।
सर्वः कालवशं याति शुभाशुभसमन्वितः ॥ १२-१५२-४३ (७१०९८)
किं करिष्यथ शोचित्वा मृतं किमनुशोचथ ।
सर्वस्य हि प्रभुः कालो धर्मतः समदर्शनः ॥ १२-१५२-४४ (७१०९९)
यौवनस्थांश्च बालांश्च बृद्धान्गार्भगतानपि ।

सर्वानाविशते मृत्युरेवंभूतमिदं जगत् ॥ १२-१५२-४५ (७११००)
जम्बुक उवाच। १२-१५२-४६क्ष् (५८०४)
अहो मन्दीकृतः स्नेहो गृध्रेणेहाल्पबुद्धिना ।
पुत्रस्नेहाभिभूतानां युष्माकं शोचतां भृशम् ॥ १२-१५२-४६ (७११०१)
समैः सम्यक्प्रयुक्तैश्च वचनैर्हेतुदर्शनैः ।
ग्सर्वमेतत्प्रपद्याशु कुरुध्वं वा विचारणां।'
यद्गच्छथ जलस्थानं स्नेहमुत्सृज्य दुस्त्यजम् ॥ १२-१५२-४७ (७११०२)
अहो पुत्रवियोगेन मृतशून्योपसेवनात् ।
क्रोशतां वा भृशं दुःखं विवत्सानां गवामिव ॥ १२-१५२-४८ (७११०३)
अद्य शोकं विजानामि मानुषाणां महीतले ।
स्नेहं हि कारणं कृत्वा ममाप्यश्रूण्यथापतन् ॥ १२-१५२-४९ (७११०४)
यत्नो हि सततं कार्यस्ततो दैवेन सिद्ध्यति ।
दैवं पुरुषकारश्च कृतान्तेनोपपद्यते ॥ १२-१५२-५० (७११०५)
अनिर्वेदः सदा कार्यो निर्वेदाद्धि कुतः सुखम् ।
प्रयत्नात्प्राप्यते ह्यर्थः कस्माद्गच्छथ निर्दयम् ॥ १२-१५२-५१ (७११०६)
आत्ममांसोपवृत्तं च शरीरार्धमर्यीं तनुम् ।
पितॄणां वंशकर्तारं वने त्यक्त्वा क्व यास्यथ ॥ १२-१५२-५२ (७११०७)
अथवाऽस्तं गते सूर्ये संध्याकाल उपस्थिते ।
ततो नेष्यश्च वा पुत्रमिहस्था वा भविष्यथ ॥ १२-१५२-५३ (७११०८)
गृध्र उवाच। १२-१५२-५४क्ष् (५८०५)
अद्य वर्षसहस्रं मे साग्रं जातस्य मानुषाः ।
न च पश्यामि जीवन्तं मृतं स्त्रीपुंनपुंसकम् ॥ १२-१५२-५४ (७११०९)
मृता गर्भेषु जायन्ते जातमात्रा म्रियन्ति च ।
चंक्रमन्तो म्रियन्ते च यौवनस्थास्तथा परे ॥ १२-१५२-५५ (७१११०)
अनित्यानीह भाग्यानि चतुष्पात्पक्षिणामपि ।
जङ्गमाजङ्गमानां च ह्यायुरग्रेऽवतिष्ठते ॥ १२-१५२-५६ (७११११)
इष्टदारवियुक्ताश्च पुत्रशोकान्वितास्तथा ।
दह्यमानाः स्म शोकेन गृहं गच्छन्ति नित्यशः ॥ १२-१५२-५७ (७१११२)
अनिष्टानां सहस्राणि तथेष्टानां शतानि च ।
उत्सृज्येह प्रयाता वै बान्धवा भृशदुःखिताः ॥ १२-१५२-५८ (७१११३)
त्यज्यतामेष निस्तेजाः शून्यः काष्ठत्वमागतः ।
अन्यदेहविषक्तं हि शिशुं काष्ठमुपासथ ॥ १२-१५२-५९ (७१११४)
त्यक्तजीवस्य वै बाष्पं कस्माद्धित्वा न गच्छत ।
निरर्थको ह्ययं स्नेहो निष्फलश्च परिश्रमः ॥ १२-१५२-६० (७१११५)
न च क्षुभ्यां न कर्णाभ्यां च शृणोति स पश्यति ।
कस्मादेनं सप्नुत्सृज्य न गृहान्गाच्छताशु वै ॥ १२-१५२-६१ (७१११६)

मोक्षधर्माश्रितैर्वाक्यैर्हेतुमद्भिः सुनिष्ठुरैः ।
भयोक्ता गच्छत क्षिप्रं स्वं स्वमेव निवेशनम् ॥१२-१५२-६२ (७१११७)
प्रज्ञाविज्ञानयुक्तेन बुद्धिसंज्ञाप्रदायिना ।
वच्चं श्राविता नूनं मानुषाः संनिवर्तथ ॥१२-१५२-६३ (७१११८)
श्शोको द्विगुणतां याति दृष्ट्वा स्मृत्वा च चेष्टितम् ।
इत्येतद्वचनं श्रुत्वा सन्निवृत्तास्तु मानुषाः ।
अपश्यत्तं तदा सुप्तं द्रुतमागत्य जम्बुकः ॥ 12-152-64 (७१११९)
जम्बुक उवाच।१२-१५२-६५क्ष् (५८०६)
इमं कनकवर्णाभं भूषणैः समलंकृतम् ।
गृध्रवाक्यात्कथं पुत्रं त्यक्ष्यध्वं पितृपिण्डदम् ॥१२-१५२-६५ (७११२०)
न स्नेहस्य च विच्छेदो विलापरुदितस्य च ।
मृतस्यास्य परित्यागात्तापो वै भविता ध्रुवम् ॥१२-१५२-६६ (७११२१)
श्रूयते शम्बुके शूद्रे हते ब्राह्मणदारकः ।
जीवितो धर्ममासाद्य रामात्सत्यपराक्रमात् ॥१२-१५२-६७ (७११२२)
तथा श्वैत्यस्य राजर्षेर्बालो दिष्टान्तमागतः ।
मुनिना धर्मनिष्ठेन मृतः संजीवितः पुनः ॥१२-१५२-६८ (७११२३)
तथा कश्चिद्भवेत्सिद्धो मुनिर्वा देवतापि वा ।
कृपणानामनुक्रोशं कुर्याद्वो रुदतामिह ॥१२-१५२-६९ (७११२४)
इत्युक्तास्ते न्यवर्तन्त शोकार्ताः पुत्रवत्सलाः ।
अङ्के शिरः समाधाय रुरुदुर्बहुविस्तरम् ।
तेषां रुदितशब्देन गृध्रोऽभ्येत्य वचोऽब्रवीत् ॥ १२-१५२-७० (७११२५)
अश्रुपातपरिक्लिन्नः पाणिस्पर्शप्रपीडितः ।
धर्मराजप्रयोगाच्च दीर्घनिद्रां प्रवेशितः ॥१२-१५२-७१ (७११२६)
ग्तपसाऽपि हि संयुक्तो जनः कालेन हन्यते ।
सर्वस्नेहावसक्तानामिदं हि स्नेहवर्तनम् ॥' १२-१५२-७२ (७११२७)
बालवृद्धसहस्राणि सदा संत्यज्य बान्धवाः ।
दिनानि चैव रात्रीश्च दुःखं तिष्ठन्ति भूतले ॥१२-१५२-७३ (७११२८)
अलं निर्बन्धमागत्य शोकस्य परिवारणम् ।
अप्रत्ययं कुतो ह्यस्य पुनरद्येह जीवितम् ॥१२-१५२-७४ (७११२९)
ग्नैष जम्बुकवाक्येन पुनः प्राप्स्यति जीवितम्।'
मृतस्योत्सृष्टदेहस्य पुनर्देहो न विद्यते ॥ १२-१५२-७५ (७११३०)
नैव मूर्तिप्रदानेन जम्बुकस्य शतैरपि ।
न स जीवयितुं शक्यो बालो वर्षशतैरपि ॥१२-१५२-७६ (७११३१)
अथ रुद्रः कुमारो वा ब्रह्मा वा विष्णुरेव च ।
वरमस्मै प्रयच्छन्ति ततो जीवेदयं शिशुः ॥१२-१५२-७७ (७११३२)
नैव बाष्पविमोक्षेण न वा श्वासकृतेन च ।

न दीर्घरुदितेनायं पुनर्जीवं गमिष्यति ॥ १२-१५२-७८ (७१९३३)
अहं च क्रोष्टुकश्चैव यूयं ये चास्य बान्धवाः ।
धर्माधर्मौ गृहीत्वेह सर्वे वर्तामहेऽध्वनि ॥ १२-१५२-७९ (७११३४)
अप्रियं परुषं चापि परद्रोहं परस्त्रियम् ।
अधर्ममनृतं चैव दूरात्प्राज्ञो विवर्जयेत् ॥ १२-१५२-८० (७११३५)
धर्मं सत्यं श्रुतं न्याय्यं महतीं प्राणिनां दयाम् ।
अजिह्मत्वमशाठ्यं च यत्नतः परिमार्गत ॥ १२-१५२-८१ (७११३६)
मातरं पितरं वाऽपि बान्धवान्सुहृदस्तथा ।
जीवतो ये न पश्यति तेषां धर्मविपर्ययः ॥ १२-१५२-८२ (७११३७)
यो न पश्यति चक्षुर्भ्यां नेङ्गते च कथंचन ।
तस्य निष्ठावसानान्ते रुदन्ताः किं करिष्यथ ॥ १२-१५२-८३ (७११३८)
इत्युक्तास्ते सुतं त्यक्त्वा भूमौ शोकपरिप्लुताः ।
दह्यमानाः सुतस्नेहात्प्रययुर्बान्धवा गृहम् ॥ १२-१५२-८४ (७११३९)
जम्बुक उवाच। १२-१५२-८५क्ष् (५८०७)
दारुणो मर्त्यलोकोऽयं सर्वप्राणिविनाशनः ।
इष्टबन्धुवियोगश्च तथेहाल्पं च जीवितम् ॥ १२-१५२-८५ (७११४०)
बह्वलीकमसत्यं चाप्यतिवादाप्रियंवदम् ।
इमं प्रेक्ष्य पुनर्भावं दुःखशोकविवर्धनम् ।
न मे मानुषलोकोऽयं मुहूर्तमपि रोचते ॥ १२-१५२-८६ (७११४१)
अहो धिग्गृध्रवाक्येन यथैवाबुद्धयस्तथा ।
कथं गच्छथ निःस्नेहाः सुतस्नेहं विसृज्य च ॥ १२-१५२-८७ (७११४२)
प्रदीप्ताः पुत्रशोकेन सन्निवर्तथ मानुषाः ।
श्रुत्वा गृध्रस्य वचनं पापस्येहाकृतात्मनः ॥ १२-१५२-८८ (७११४३)
सुखस्यानन्तरं दुःखं दुःखस्यानन्तरं सुखम् ।
सुखदुःखावृते लोके नास्ति सौख्यमनन्तकम् ॥ १२-१५२-८९ (७११४४)
इमं क्षितितले त्यक्त्वा बालं रूपसमन्वितम् ।
कुलशोभाकरं मूढाः पुत्रं त्यक्त्वा क्व यास्यथ ॥ १२-१५२-९० (७११४५)
रूपयौवनसंपन्नं द्योतमानमिव श्रिया ।
जीवन्तमेव पश्यामि मनसा नात्र संशयः ॥ १२-१५२-९१ (७११४६)
विनाशेनास्य न हि वै सुखं प्राप्स्यथ मानुषाः ।
पुत्रशोकाभितप्तानां मृतमप्यद्य वः क्षमम् ॥ १२-१५२-९२ (७११४७)
दुःखसंभावनं कृत्वा धारयित्वा सुखं स्वयम् ।
त्यक्त्वा गमिष्यथ क्वाद्य समुत्सृज्याल्पबुद्धिवत् ॥ १२-१५२-९३ (७११४८)
भीष्म उवाच। १२-१५२-९४क्ष् (५८०८)
तथा धर्मविरोधेन प्रियमिथ्याभिधायिनाम् ।
श्मशानवासिना नित्यं रात्रिं मृगयता नृप ॥ १२-१५२-९४ (७११४९)

ततो मध्यस्थतां नीता वचनैरमृतोपमैः ।
जम्बुकेन स्वकार्यार्थं बान्धवास्तत्र वारिताः ॥ १२-१५२-९५ (७१११५०)
गृध्र उवाच। १२-१५२-९६क्ष् (५८०९)
अयं प्रेतसमाकीर्णो यक्षराक्षससेवितः ।
दारुणः काननोद्देशः कौशिकैरभिनादितः ॥ १२-१५२-९६ (७१११५१)
भीमः सुघोरश्च तथा नीलमेघसमप्रभः ।
अस्मिञ्शवं परित्यज्य प्रेतकार्याण्युपासत ॥ १२-१५२-९७ (७१११५२)
भानुर्यावन्न यात्यस्तं यावच्च विमला दिशः ।
तावदेनं परित्यज्य प्रेतकार्याण्युपासत ॥ १२-१५२-९८ (७१११५३)
नदन्ति परुषं श्येनाः शिवाः क्रोशन्ति दारुणम् ।
मृगेन्द्राः प्रतिनर्दन्ति रविरस्तं च गच्छति ॥ १२-१५२-९९ (७१११५४)
चिता धूमेन नीलेन संरज्यन्ते च पादपाः ।
श्मशाने च निराहाराः प्रतिनर्दन्ति देवताः ॥ १२-१५२-१०० (७१११५५)
सर्वे विकृतदेहाश्चाप्यस्मिन्देशे सुदारुणे ।
युष्मान्प्रधर्षयिष्यन्ति विकृता मांसभोजिनः ॥ १२-१५२-१०१ (७१११५६)
क्रूरश्चायं वनोद्देशो भयमद्य भविष्यति ।
त्यज्यतां काष्ठभूतोऽयं मुच्यतां जाम्बुकं वचः ॥ १२-१५२-१०२ (७१११५७)
यदि जम्बुकवाक्यानि निष्फलान्यनृतानि च ।
श्रोष्यथ भ्रष्टविज्ञानास्ततः सर्वे विनङ्क्ष्यथ ॥ १२-१५२-१०३ (७१११५८)
जम्बुक उवाच। १२-१५२-१०४क्ष् (५८१०)
स्थीयतां वो न भेतव्यं यावत्तपति भास्करः ।
तावदस्मिन्सुते स्नेहादनिर्वेदेन वर्तत ॥ १२-१५२-१०४ (७१११५९)
स्वैरं रुदन्तो विस्रब्धाश्चिरं स्नेहेन पश्यत ।
ग्दारुणेऽस्मिन्वनोद्देशे भयं वो न भविष्यति ॥ १२-१५२-१०५ (७१११६०)
अयं सौम्यो वनोद्देशः पितृणां निधनाकरः।'
स्थीयतां यावदादित्यः किंवः क्रव्यादभाषितैः ॥ १२-१५२-१०६ (७१११६१)
यदि गृध्रस्य वाक्यानि तीव्राणि रभसानि च ।
गृह्णीत मोहितात्मानः सुतो वो न भविष्यति ॥ १२-१५२-१०७ (७१११६२)
भीष्म उवाच। १२-१५२-१०८क्ष् (५८११)
गृध्रो नास्तमितेऽभ्येति तिष्ठेन्नक्तं च जम्बुकः ।
मृतस्य तं परिजनमूचतुस्तौ क्षुधान्वितौ ॥ १२-१५२-१०८ (७१११६३)
स्वकार्यबद्धकक्षौ तौ राजन्गृध्रोऽथ जम्बुकः ।
क्षुत्पिपासापरिश्रान्तौ शास्त्रमालम्ब्य जल्पतः ॥ १२-१५२-१०९ (७१११६४)
तयोर्विज्ञानविदुषोर्द्वयोर्मृगपतत्रिणोः ।
वाक्यैरमृतकल्पैस्तैः प्रतिष्ठन्ते व्रजन्ति च ॥ १२-१५२-११० (७१११६५)
शोकदैन्यसमाविष्टा रुदन्तस्तस्थिरे तदा ।

स्वकार्यकुशलाभ्यां ते संभ्राम्यन्ते ह नैपुणात् ॥ १२-१५२-१११ (७१११६६)
तथा तयोर्विवदतोर्विज्ञानविदुषोर्द्वयोः ।
बान्धवानां स्थितानां चाप्युपातिष्ठत शंकरः ॥ १२-१५२-११२ (७१११६७)
देव्या प्रणोदितो देवः कारुण्यार्द्रीकृतेक्षणः ।
ततस्तानाह मनुजान्वरदोऽस्मीति शंकरः ॥ १२-१५२-११३ (७१११६८)
ते प्रत्यूचुरिदं वाक्य दुःखिताः प्रणताः स्थिताः ।
एकपुत्रविहीनानां सर्वेष्नां जीवितार्थिनाम् ।
पुत्रस्य नो जीवदानाज्जीवितं दातुमर्हसि ॥ १२-१५२-११४ (७१११६९)
एवमुक्तः स भगवान्वारिपूर्णेन पाणिना ।
जीवं तस्मै कुमाराय प्रादाद्वर्षशतानि वै ॥ १२-१५२-११५ (७१११७०)
तथा गोमायुगृध्राभ्यां प्राददत्क्षुद्विनाशनम् ।
वरं पिनाकी भगवान्सर्वभूतहिते रतः ॥ १२-१५२-११६ (७१११७१)
ततः प्रणम्य ते देवं श्रेयोहर्षसमन्विताः ।
कृतकृत्याः सुसंहृष्टाः प्रातिष्ठन्त तदा विभो ॥ १२-१५२-११७ (७१११७२)
अनिर्वेदेन दीर्घेण निश्चयेन ध्रुवेण च ।
देवदेवप्रसादाच्च क्षिप्रं फलमवाप्यते ॥ १२-१५२-११८ (७१११७३)
पश्य दैवस्य संयोगं बान्धवाना च निश्चयम् ।
कृपणानां तु रुदतां कृतमश्रुप्रमार्जनम् ॥ १२-१५२-११९ (७१११७४)
पश्य चाल्पेन कालेन निश्चयाध्वेषणेन च ।
प्रसादं शंकरात्प्राप्य दुःखिताः सुखमाप्नुवन् ॥ १२-१५२-१२० (७१११७५)
ते विस्मिताः प्रहृष्टाश्च पुत्रसंजीवनात्पुनः ।
बभूवुर्भरतश्रेष्ठ प्रसादाच्छंकरस्य वै ॥ १२-१५२-१२१ (७१११७६)
ततस्ते त्वरिता राजंस्त्यक्त्वा शोकं शिशूद्भवम् ।
विविशुः पुत्रमादाय नगरं हृष्टमानसाः ॥ १२-१५२-१२२ (७१११७७)
एषा बुद्धिः समस्तानां चातुर्वर्ण्येन दर्शिता ॥ १२-१५२-१२३ (७१११७८)
धर्मार्थमोक्षसंयुक्तमितिहासं पुरातनम् ।
श्रुत्वा मनुष्यः सततमिहामुत्र प्रमोदते ॥ ॥ १२-१५२-१२४ (७१११७९)

इति श्रीमन्महाभारते शान्तिपर्वणि आपद्धर्मपर्वणि
द्विपञ्चाशदधिकशततमोऽध्यायः ॥ १५२.।

Mahabharata - Shanti Parva - Chapter Footnotes

१२-१५२-२ यो वृत्तो नैमिषे पुरेति झ । पाठः ॥
१२-१५२-५ अङ्केनाङ्कं समाक्रम्येति ड । थ । पाठः ॥
१२-१५२-७ एकात्मकमिदं लोके इति थ । ध । पाठः ॥
१२-१५२-८ किं तैर्वैयातबान्धवा इति थ । ध । पाठः ॥

१२-१५२-१२ न पुनर्जीवते कश्चिदिति ङ ।थ।द।पाठः ॥
१२-१५२-१३ जीवलोके प्रसूयतेति थ ।द।पाठः ॥
१२-१५२-१४ दिशान्तोपरते काले चास्तं गच्छति भास्कर इति ध ।पाठः ॥
१२-१५२-२२ न मे संधारयित्वा तु इति ध ।पाठः ॥
१२-१५२-४७ यद्रच्छति जनश्चायमिति झ ।पाठः ॥
१२-१५२-६९ कश्चिल्लभेत्सिद्ध इति झ ।पाठः ॥
१२-१५२-७२ तपसा पि हि संयुक्ता धनवन्तो महाधियः ।सर्वे मृत्युवशं यान्ति तदिदं प्रेतपत्तनमिति झ।पाठः ॥
१२-१५२-७७ वरमस्मै प्रयच्छेयुस्तत इति झ ।पाठः ॥
१२-१५२-९५ बान्धवास्तस्य धारिता इति थ ।पाठः ॥
१२-१५२-१०४ वः युष्माभिः ॥
१२-१५२-१०८ गृध्रोऽस्तमिस्याह गतो गतो नेचि च जम्बुकः इति झ ।पाठः ॥
१२-१५२-११९ बान्धवानां च सत्यतामिति द ।पाठः ॥

---

शन्तिपर्व-अध्यय१५३
॥ श्रीः ॥
१२.१५३. अध्यायः १५३

Mahabharata - Shanti Parva - Chapter Topics
भीष्मेण युधिष्ठिरंप्रति बलवति रिपौ मोहाद्वैरमुत्पादितवता कर्तव्यविषये निदर्शनतया शाल्मलिचरितकथनोपक्रमः ॥ १.। हिमवति पर्वते महाशाल्मलिं दृष्टवता नारदेन तद्वर्णनम् ॥ २.।
Mahabharata - Shanti Parva - Chapter Text

१२-१५३-० (७११८०)
युधिष्ठिर उवाच। १२-१५३-०क्ष् (५८१२)
बलिनः प्रत्यमित्रस्य नित्यमासन्नवर्तिनः ।
उण्कारापकाराभ्यां समर्थस्योद्यतस्य च ॥ १२-१५३-१ (७११८१)
मोहाद्विकत्थनामात्रैरसारोऽल्पबलो लघुः ।
वाग्भिरप्रतिरूपाभिरभिद्रुह्य पितामह ॥ १२-१५३-२ (७११८२)
आत्मनो बलमास्थाय कथं वर्तेत मानवः ।
आगच्छतोऽतिक्रुद्धस्य तस्योद्धरणकाम्यया ॥ १२-१५३-३ (७११८३)
भीष्म उवाच। १२-१५३-४क्ष् (५८१३)
अत्राप्युदाहन्तीममितिहासं पुरातनम् ।
संवादं भरतश्रेष्ठ शाल्मलेः पवनस्य च ॥ १२-१५३-४ (७११८४)

हिमवन्तं समासाद्य महानासीद्वनस्पतिः ।
वर्षपूगाभिसंवृद्धः शाखामूलपलाशवान् ॥ १२-१५३-५ (७११८५)
तत्र स्म मत्तमातङ्गा घर्मार्ताः श्रमकर्शिताः ।
विश्राम्यन्ति महाबाहो तथाऽन्या मृगजातयः ॥ १२-१५३-६ (७११८६)
नल्वमांत्रपरीणाहो घनच्छायो वनस्पतिः ।
शुकशारिकसंघुष्टः पुष्पवान्फलवानपि ॥ १२-१५३-७ (७११८७)
सार्थका वणिजश्चापि तापसाश्च वनौकसः ।
वसन्ति तत्र मार्गस्थाः सुरम्ये नगसत्तमे ॥ १२-१५३-८ (७११८८)
तस्य ता विपुलाः शाखा दृष्ट्वा स्कन्धं च सर्वशः ।
अभिगम्याब्रवीदेनं नारदो भरतर्षभ ॥ १२-१५३-९ (७११८९)
अहो नु रमणीयस्त्वमहो चासि मनोहरः ।
प्रीयामहे त्वया नित्यं तरुप्रवर शाल्मके ॥ १२-१५३-१० (७११९०)
सदैव शकुनास्तात मृगाश्चाथ तथा गजाः ।
वसन्ति तव संहृष्टा मनोहरतरास्तथा ॥ १२-१५३-११ (७११९१)
तव शाखा महाशाख स्कन्धांश्च विपुलांस्तथा ।
न वै प्रभग्नान्पश्यामि मारुतेन कथंचन ॥ १२-१५३-१२ (७११९२)
किंनु ते पवनस्तात प्रीतिमानथवा सुहृत् ।
त्वां रक्षति सदा येन वनेऽत्र पवनो ध्रुवम् ॥ १२-१५३-१३ (७११९३)
भगवान्पवनः स्थानाद्वृक्षानुच्चावचानपि ।
पर्वतानां च शिखराण्याचालयति वेगवान् ॥ १२-१५३-१४ (७११९४)
शोषयत्येव पातालं वहन्गन्धवहः शुचिः ।
सरांसि सरितश्चैव सागरांश्च तथैव च ॥ १२-१५३-१५ (७११९५)
संरक्षति त्वां पवनः सखित्वेन न संशयः ।
तस्मात्त्वं बहुशाखोऽपि पर्णवान्पुष्पवानपि ॥ १२-१५३-१६ (७११९६)
इदं च रमणीयं ते प्रतिभाति वनस्पते ।
य इमे विहगास्तात रमन्ते मुदितास्त्वयि ॥ १२-१५३-१७ (७११९७)
एषां पृथक्समस्तानां श्रूयते मधुरस्वरः ।
पुष्पसंमोदने काले वाशन्ते हरियूथपाः ॥ १२-१५३-१८ (७११९८)
तथेमे गर्जिता नागाः स्वयूथगणशोभिताः ।
घर्मार्तास्त्वां समासाद्य सुखं विन्दति शाल्मके। १२-१५३-१९ (७११९९)
तथैव मृगजातीभिरन्याभिरभिशोभसे ।
तथा सार्थाधिवासैश्च शोभसे मेरुवद्द्रुम् ॥ १२-१५३-२० (७१२००)
ब्राह्मणैश्च तपः सिद्धैस्तापसैः श्रमणैस्तथा ।
त्रिविष्टपसमं मन्ये तवायतनमेव हि ॥ ॥ १२-१५३-२१ (७१२०१)

इति श्रीमन्महाभारते शान्तिपर्वणि आपद्धर्मपर्वणि

त्रिपञ्चाशदधिकशततमोऽध्यायः ॥ १५३.।
Mahabharata - Shanti Parva - Chapter Footnotes

१२-१५३-७ शुककोकिलसंधुष्ट इति ध । पाठः। नल्वः हस्तानां शतचतुष्टयम्। परीणाहः स्थूलत्वं वैपुल्यमितियावत् ॥
१२-१५३-१४ प्रवाति च वनस्थानां वृक्षाणां च वनान्यपि । पर्वतानां च शिखराण्याका लयति वेगवान्। इति ट। ड। पाठः ॥

---

शन्तिपर्व-अध्यय१५४
॥ श्रीः ॥
१२.१५४. अध्यायः १५४

Mahabharata - Shanti Parva - Chapter Topics
नारदेन शाल्मलिप्रति पर्वतादिभञ्जकेनापि वायुना तदीयशाखाया अप्यभञ्जने कारणप्रश्ने तेन साधिक्षेपमात्मशाखाभञ्जने वायोरशक्तिकथनम् ॥ १.।
Mahabharata - Shanti Parva - Chapter Text

१२-१५४-० (७१२०२)
नारद उवाच। १२-१५४-०क्ष् (५८१४)
बन्धुत्वादथवा सख्याच्छाल्मले नात्र संशयः ।
कस्मात्त्वां रक्षते नित्यं भीमः सर्वत्रगोऽनिलः ॥ १२-१५४-१ (७१२०३)
तद्भावं परमं वायोः शाल्मके त्वमुपागतः ।
तवाहमस्मीति सदा येन रक्षति मारुतः ॥ १२-१५४-२ (७१२०४)
न तं पश्याम्यहं वृक्षं पर्वतं वेश्म चेदृशम् ।
यं न वायुबलाद्भग्नं पृथिव्यामिति मे मतिः ॥ १२-१५४-३ (७१२०५)
त्वं पुनः कारणैर्नूनं रक्ष्यसे शाल्मले यथा ।
वायुना सपरीवारस्तेन तिष्ठस्यसंशयम् ॥ १२-१५४-४ (७१२०६)
शाल्मलिरुवाच। १२-१५४-५क्ष् (५८१५)
न मे वायुः सखा ब्रह्मन्न बन्धुर्मम नारद ।
चिरं मे प्रीयते नैव येन मां रक्षतेऽनिलः ॥ १२-१५४-५ (७१२०७)
मम तेजोबलं भीमं वायोरपि हि नारद ।
कलामष्टादशीं प्राणैर्न मे प्राप्नोति मारुतः ॥ १२-१५४-६ (७१२०८)
आगच्छन्परुषो वायुर्मया विष्टम्भितो बलात् ।
भञ्जन्द्रुमान्पर्वतांश्च यच्चान्यत्स्थाणुजङ्गमम् ॥ १२-१५४-७ (७१२०९)
स मया बहुशो भग्नः प्रभञ्जन्वै प्रभञ्जनः ।
तस्मान्न बिभ्ये देवर्षे क्रुद्धादपि समीरणात् ॥ १२-१५४-८ (७१२१०)

नारद उवाच। १२-१५४-९क्ष् (५८१६)
शाल्मले विपरीतं ते दर्शनं नात्र संशयः ।
न हि वायोर्बले नास्ति भूतं तुल्यबलं क्वचित् ॥ १२-१५४-९ (७१२११)
इन्द्रो यमो वैश्रवणो वरुणश्च जलेश्वरः ।
नैतेऽपि तुल्या मरुतः किं पुनस्त्वं वनस्पते ॥ १२-१५४-१० (७१२१२)
यश्च कश्चिदपि प्राणी चेष्टते शाल्मले भुवि ।
सर्वत्र भगवान्वायुश्चेष्टाप्राणकरः प्रभुः ॥ १२-१५४-११ (७१२१३)
एष चेष्टयते सम्यक्प्राणिनः सम्यगायतः ।
असम्यगायतो भूयश्चेष्टते विकृतं नृषु ॥ १२-१५४-१२ (७१२१४)
स त्वमेवंविधं वायुं सर्वसत्वभृतां वरम् ।
न पूजयसि पूज्यन्तं किमन्यद्बुद्धिलाघवात् ॥ १२-१५४-१३ (७१२१५)
असारश्चापि दुर्मेधाः केवलं बहु भाषसे ।
क्रोधादिभिरवच्छन्नो मिथ्या वदसि शाल्मले ॥ १२-१५४-१४ (७१२१६)
मम रोषः समुत्पन्नस्त्वय्येवं संप्रभाषति ।
ब्रवीम्येष स्वयं वायोस्तव दुर्भाषितं बहु ॥ १२-१५४-१५ (७१२१७)
चन्दनैः स्यन्दनैः शालैः सरलैर्देवदारुभिः ।
वेतसैर्धन्वनैश्चापि ये चान्ये बलवत्तराः ।
तैश्चापि नैवं दुर्बुद्धे क्षिप्तो वायुः कृतात्मभिः ॥ १२-१५४-१६ (७१२१८)
तेऽपि जानन्ति वायोश्च बलमात्मन एव च ।
तस्मात्ते नावमन्यन्ते श्वसनं तरुसत्तमाः ॥ १२-१५४-१७ (७१२१९)
त्वं तु मोहान्न जानीपे वायोर्बलमनन्तकम् ।
एवं तस्माद्गमिष्यामि सकाशं मातरिश्वनः ॥ ॥ १२-१५४-१८ (७१२२०)

इति श्रीमन्महाभारते शान्तिपर्वणि आपद्धर्मपर्वणि
चतुःपञ्चाशदधिकशततमोऽध्यायः ॥ १५४.।
Mahabharata - Shanti Parva - Chapter Footnotes

१२-१५४-२ न्यग्भावं परमं वायोरिति झ ।पाठः ॥
१२-१५४-५ परमेष्ठी तथा नैव येन रक्षति वानिल इति झ ।पाठः ॥

---

शन्तिपर्व-अध्यय१५५
॥ श्रीः ॥
१२.१५५. अध्यायः १५५

Mahabharata - Shanti Parva - Chapter Topics
नारदसूचितेन वायुना शाल्मलिमेत्य परेद्युस्तद्भञ्जनप्रतिज्ञानम्
॥ १.। वायुबलज्ञेन शाल्मलिना तदागमनात्प्रागेव स्वेनैव

स्वीयशाखावशातनपूर्वकमवस्थानम् ॥ २.। परेद्युरागतेन वायुना तंप्रति तत्कृतशाखावशातनस्यापि स्वबलप्रयोज्यत्वोक्तिः ॥ ३.।
Mahabharata - Shanti Parva - Chapter Text

१२-१५५-० (७१२२१)
भीष्म उवाच। १२-१५५-०क्ष् (५८१७)
एवमुक्त्वा तु राजेन्द्र शाल्मलिं ब्रह्मवित्तमः ।
नारदः पवने सर्वं शाल्मलेर्वाक्यमब्रवीत् ॥ १२-१५५-१ (७१२२२)
नारद उवाच। १२-१५५-२क्ष् (५८१८)
हिमवत्पृष्ठजः कश्चिच्छाल्मलिः परिवारवान् ।
बृहन्मूलो बृहच्छायः स त्वां वायोऽवमन्यते ॥ १२-१५५-२ (७१२२३)
बहुव्याक्षेपयुक्तानि त्वामाह वचनानि सः ।
न युक्तानि मया वायो तानि वक्तुं तवाग्रतः ॥ १२-१५५-३ (७१२२४)
जानामि त्वामहं वायो सर्वप्राणभृतां वरम् ।
वरिष्ठं च गरिष्ठं च सर्वलोकेश्वरं प्रभुम् ॥ १२-१५५-४ (७१२२५)
भीष्म उवाच। १२-१५५-५क्ष् (५८१९)
एतत्तु वचनं श्रुत्वा नारदस्य समीरणः ।
शाल्मलिं तमुपागम्य क्रुद्धो वचनमब्रवीत् ॥ १२-१५५-५ (७१२२६)
वायुरुवाच। १२-१५५-६क्ष् (५८२०)
शाल्मले नारदो गच्छंस्त्वयोक्तो मद्विगर्हणम् ।
अहं वायुः प्रभावं ते दर्शयाम्यात्मनो बलम् ॥ १२-१५५-६ (७१२२७)
नाहं त्वां नाभिजानामि विदितश्चासि मे द्रुम् ।
पितामहः प्रजासर्गे त्वयि विश्रान्तवान्प्रभुः ॥ १२-१५५-७ (७१२२८)
तस्य विश्रमणादेव प्रसादौ मत्कृतस्तव ।
अभूत्तस्य प्रसादात्त्वां न भज्यामि द्रुमाधम् ॥ १२-१५५-८ (७१२२९)
यन्मां त्वमवजानीषे यथाऽन्यं प्राकृतं तथा ।
दर्शयाम्येष चात्मानं यथा मां नावमन्यसे ॥ १२-१५५-९ (७१२३०)
भीष्म उवाच। १२-१५५-१०क्ष् (५८२१)
एवमुक्तस्ततः प्राह शाल्मलिः प्रहसन्निव ।
पवन त्वं वने क्रुद्धो दर्शयात्मानमात्मना ॥ १२-१५५-१० (७१२३१)
मयि वै मुच्यतां क्रोधः किं मे क्रुद्धः करिष्यसि ।
न ते बिभेमि पवन यद्यपि त्वं स्वयं प्रभुः ।
बलाधिकोऽहं त्वत्तश्च न भीः कार्या मया तव ॥  १२-१५५-११ (७१२३२)
ये तु बुद्ध्या हि बलिनस्ते भवन्ति बलीयसः ।
प्राणमात्रबला ये वै नैव ते बलिनो मताः ॥ १२-१५५-१२ (७१२३३)
इत्येवमुक्तः पवनः श्व इत्येवाब्रवीद्वचः ।

दर्शयिष्यामि ते तेजस्ततो रात्रिरुपागमत् ॥ १२-१५५-१३ (७१२३४)
अथ निश्चित्य मनसा शाल्मलिर्वैरधारणम् ।
पश्यमानस्तदात्मानमसमं मातरिश्वना ॥ १२-१५५-१४ (७१२३५)
नारदे यन्मया प्रोक्तं वचनं प्रति तन्मृषा ।
असमर्थो ह्यहं वायोर्बलेन बलवान्हि सः ॥ १२-१५५-१५ (७१२३६)
मारुतो बल्यान्नित्यं यथा वै नारदोऽब्रवीत् ।
अहं तु दुर्बलोऽन्येभ्यो वृक्षेभ्यो नात्र संशयः ॥ १२-१५५-१६ (७१२३७)
किं तु बुद्ध्या समो नास्ति मम कश्चिद्वनस्पतिः ।
तदहं बुद्धिमास्थाय भयं त्यक्ष्ये समीरणात् ॥ १२-१५५-१७ (७१२३८)
यदि तां बुद्धिमास्थाय तिष्ठेयुः पर्णिनो वने ।
अरिष्टाः स्युः सदा क्रुद्धात्पवनान्नात्र संशयः ॥ १२-१५५-१८ (७१२३९)
ते तु बाला न जानन्ति यथा नैतान्समीरणः ।
समीरयेत संक्रुद्धो यथा जानाम्यहं तथा ॥ १२-१५५-१९ (७१२४०)
भीष्म उवाच। १२-१५५-२०क्ष् (५८२२)
ततो निश्चित्य मनसा शाल्मलिः क्षुभितस्तदा ।
शाखाः स्कन्धान्प्रशाखाश्च स्वयमेव व्यशातयत् ॥ १२-१५५-२० (७१२४१)
स परित्यज्य शाखाश्च पत्राणि कुसुमानि च ।
प्रभाते वायुमायान्तं प्रेक्षते स्म वनस्पतिः ॥ १२-१५५-२१ (७१२४२)
ततः क्रुद्धः श्वसन्वायुः पातयन्वै महाद्रुमान् ।
आजगामाथ तं देशमास्ते यत्र स शाल्मलिः ॥ १२-१५५-२२ (७१२४३)
तं हीनपर्णं पतिताग्रशाखं
निशीर्णपुष्पं प्रसमीक्ष्य वायुः ।
उवाच वाक्यं स्ययमान एवं
मुदायुतः शाल्मलिं रुग्णशाखम् ॥ १२-१५५-२३ (७१२४४)
वायुरुवाच। १२-१५५-२४क्ष् (५८२३)
अहमप्येवमेव त्वां कुर्यां वै शाल्मले रुपा ।
आत्मना यत्कृतं कृच्छ्रं शाखानामपकर्पणम् ॥ १२-१५५-२४ (७१२४५)
हीनपुष्पाग्रशाखस्त्वं शीर्णाङ्कुरपलाशकः ।
आत्मदुर्मन्त्रितेनेह मद्वीर्यवशगः कृतः ॥ १२-१५५-२५ (७१२४६)
भीष्म उवाच। १२-१५५-२६क्ष् (५८२४)
एतच्छ्रुत्वा वचो वायोः शाल्मलिर्व्रीडितस्तदा ।
अतप्यत वचः स्मृत्वा नारदो यत्तदाऽब्रवीत् ॥ १२-१५५-२६ (७१२४७)
एवं हि राजशार्दूल दुर्बलः सन्वलीयसा ।
वैरमासज्जते बालस्तप्यते शाल्मलिर्यथा ॥ १२-१५५-२७ (७१२४८)
तस्माद्वैरं न कुर्वीत दुर्बलो बलवत्तरैः ।
शोचेद्धि वैरं कुर्वाणो यथा वै शाल्मलिस्तथा ॥ १२-१५५-२८ (७१२४९)

न हि वैरं महात्मानो विवृण्वन्त्यपकारिषु ।
शनैः शनैर्महाराज दर्शयन्ति स्म ते बलम् ॥ १२-१५५-२९ (७१२५०)
वैरं न कुर्वीत नरो दुर्बुद्धिर्बुद्धिजीविना ।
बुद्धिर्बुद्धिमतो याति तूलष्विव हुताशनः ॥ १२-१५५-३० (७१२५१)
न हि बुद्ध्या समं किंचिद्विद्यते पुरुषे नृप ।
तथा बलेन राजेन्द्र न समोऽस्तीह कश्चन ॥ १२-१५५-३१ (७१२५२)
तस्मात्क्षमेत बालाय जडान्धवधिराय च ।
बलाधिकाय राजेन्द्र तद्दृष्टं त्वयि शत्रुहन् ॥ १२-१५५-३२ (७१२५३)
अक्षौहिण्यो दशैका च सप्त चैव महाद्युते ।
बलेन न समा राजन्नर्जुनस्य महात्मनः ॥ १२-१५५-३३ (७१२५४)
निहताश्चैव भग्नाश्च पाण्डवेन यशस्विना ।
चरता बलमास्थाय पाकशासनिना मृधे ॥ १२-१५५-३४ (७१२५५)
उक्ताश्च ते राजधर्मा आपद्धर्माश्च भारत ।
विस्तरेण महाराज किं भूयः प्रब्रवीमि ते ॥ ॥ १२-१५५-३५ (७१२५६)

इति श्रीमन्महाभारते शान्तिपर्वणि आपद्धर्मपर्वणि
पञ्चषच्चाशदधिकशततमोऽध्यायः ॥ १५५.।
Mahabharata - Shanti Parva - Chapter Footnotes

१२-१५५-८ रक्ष्यसे तेन दुर्बुद्धे नात्मवीर्याद्द्रुमाधमेति झ ।पाठः ॥
१२-१५५-२७ वैरमारभते इति झ ।पाठः ॥
१२-१५५-३० तृणेष्विव हुताशनः इति झ ।पाठः ॥

---

शन्तिपर्व-अध्यय१५६
॥ श्रीः ॥
१२.१५६. अध्यायः १५६

Mahabharata - Shanti Parva - Chapter Topics
भीष्मेण युधिष्ठिरंप्रति लोभादीनामनर्थहेतुत्वकथपूर्वकं
तद्वतां गर्हणम् ॥ १.। तथा सत्सङ्गस्य लोभादिजयीपायत्वसूचनाय
सतां प्रशंसनपूर्वकं तत्पूजाविधानम् ॥ २.।
Mahabharata - Shanti Parva - Chapter Text

१२-१५६-० (७१२५७)
युधिष्ठिर उवाच। १२-१५६-०क्ष् (५८२५)
पापस्य यदधिष्ठानं यतः पापं प्रवर्तते ।

एतदिच्छाम्यहं श्रोतुं तत्त्वेन भरतर्षभ ॥ १२-१५६-१ (७१२५८)
भीष्म उवाच। १२-१५६-२क्ष् (५८२६)
पापस्य यदधिष्ठानं तच्छृणुष्व नराधिप ।
एको लोभो महाग्राहो लोभात्पापं प्रवर्तते ॥ १२-१५६-२ (७१२५९)
अतः पापमधर्मश्च तथा दुःखमनुत्तमम् ।
निकृत्या मूलमेतद्धि येन पापकृतो जनाः ॥ १२-१५६-३ (७१२६०)
लोभात्क्रोधः प्रभवति लोभात्कामः प्रवर्तते ।
लोभान्मोहश्च माया च मानस्तम्भः परासुता ॥ १२-१५६-४ (७१२६१)
अक्षमा ह्रीपरित्यागः श्रीनाशो धर्मसंक्षयः ।
अभिध्याऽप्रख्यता चैव सर्वं लोभात्प्रवर्तते ॥ १२-१५६-५ (७१२६२)
अत्यागश्च कुतर्कश्च विकर्मसु च याः क्रियः ।
कुलविद्यामदश्चैव रूपैश्वर्यमदस्तथा ॥ १२-१५६-६ (७१२६३)
सर्वभूतेष्वभिद्रोहः सर्वभूतेष्वसत्कृतिः ।
सर्वभूतेष्वविश्वासः सर्वभूतेष्वनार्जवम् ॥ १२-१५६-७ (७१२६४)
हरणं परवित्तानां परदाराभिमर्शनम् ।
वाग्वेगो मनसो वेगो निन्दावेगस्तथैव च ॥ १२-१५६-८ (७१२६५)
उपस्थोदरयोर्वेगो मृत्युवेगश्च दारुणः ।
ईर्ष्यावेगश्च बलवान्मिथ्यावेगश्च दुर्जयः ॥ १२-१५६-९ (७१२६६)
रसवेगश्च दुर्वार्यः श्रोत्रवेगश्च दुःसह ।
कुत्सा विकत्था मात्सर्यं पापं दुष्कर्मकारिता ।
साहसानां च सर्वेषामकार्याणां क्रियास्तथा ॥ १२-१५६-१० (७१२६७)
आतौ बाल्ये च कौमारे यौवने चापि मानवाः ।
न त्यजन्त्यात्मकर्मैकं यन्न जीर्यति जीर्यतः ॥ १२-१५६-११ (७१२६८)
यो न पूरयितुं शक्यो लोभः प्रीत्या कथंचन ।
नित्यं गम्भीरतोयाभिरापगाभिरिवोदधिः ॥ १२-१५६-१२ (७१२६९)
न प्रहृष्यति यो लोभैः कामैर्यश्च न तृप्यति ।
यो न देवैर्न गन्धर्वैर्नासुरैर्न महोरगैः ॥ १२-१५६-१३ (७१२७०)
ज्ञायते नृप तत्त्वेन सर्वैर्भूतगणैस्तथा ।
स लोभः सह मोहेन विजेतव्यो जितात्मना ॥ १२-१५६-१४ (७१२७१)
दम्भो द्रोहश्च निन्दा च पैशून्यं मत्सरस्तथा ।
भवन्त्येतानि कौरव्य लुब्धानामकृतात्मनाम् ॥ १२-१५६-१५ (७१२७२)
सुमहान्त्यपि शास्त्राणि धारयन्तो बहुश्रुताः ।
छेत्तारः संशयानां च क्लिश्यन्तीहाल्पबुद्धयः ॥ १२-१५६-१६ (७१२७३)
द्वेपक्रोधप्रसक्ताश्च शिष्टाचारबहिष्कृताः ।
अन्तःक्षुरा वाङ्मधुराः कृपाश्छन्नास्तृणैरिव ॥ १२-१५६-१७ (७१२७४)
धर्मवैतंसिकाः क्षुद्रा मुष्णन्ति ध्वजिनो जगत् ।

कुर्वते च बहून्मार्गांस्तान्हेतुबलमाश्रिताः ।
सर्वमार्गान्विलुम्पन्ति लोभज्ञानेष्ववस्थिताः ॥ १२-१५६-१८ (७१२७५)
धर्मस्य ह्रियमाणस्य लोभग्रस्तैर्दुरात्मभिः ।
याया विक्रियते संस्था ततः साऽपि प्रपद्यते ॥ १२-१५६-१९ (७१२७६)
दर्पः बोधो मदः स्वप्नो हर्षः शोकोऽभिमानिता ।
एत हि कौरव्य दृश्यन्ते लुब्धबुद्धिषु ॥ १२-१५६-२० (७१२७७)
एताना टान्बुद्धस्व नित्यं लोभसमन्वितान् ।
शिष्टांस्तु परिपृच्छेथा यान्वक्ष्यामि शुचिव्रतान् ॥ १२-१५६-२१ (७१२७८)
येष्वावृत्तिभयं नास्ति परलोकभयं न च ।
नामिपेषु प्रसङ्गोऽस्ति न प्रियेष्वप्रियेषु च ॥ १२-१५६-२२ (७१२७९)
शिष्टाचारः प्रियो येषु दमो येषु प्रतिष्ठितः ।
सुखं दुःखं समं येषां सत्यं येषां परायणम् ॥ १२-१५६-२३ (७१२८०)
दातारो न ग्रहीतारो दयावन्तस्नथैव च ।
पितृदेवातिथेयाश्च नित्योद्युक्तास्तथैव च ॥ १२-१५६-२४ (७१२८१)
सर्वोपकारिणो वीराः सर्वधर्मानुपालकाः ।
सर्वभूतहिताश्चैव सर्वदेयाश्च भारत ॥ १२-१५६-२५ (७१२८२)
न ते चालयितुं शक्या धर्मव्याहारकारिणः ।
न तेषां भिद्यते वृत्तं यत्पुरा साधुभिः कृतम् ॥ १२-१५६-२६ (७१२८३)
न त्रासिनो न चपला न रौद्राः सत्पथे स्थिताः ।
ते सेव्याः साधुभिर्नित्यमसाधूंश्च विवर्जयेत् ॥ १२-१५६-२७ (७१२८४)
कामक्रोधव्यपेता ये निर्ममा निरहंकृताः ।
सुव्रताः स्थिरमर्यादास्तानुपास्व च पृच्छ च ॥ १२-१५६-२८ (७१२८५)
न वागर्थं यशोर्थं वा धर्मस्तेपां युधिष्ठिर ॥
अवश्यं कार्य इत्येव शरीरस्य क्रियास्तथा ॥ १२-१५६-२९ (७१२८६)
त भयं क्रोधचापल्ये न शोकस्तेषु विद्यते ।
न धर्मध्वजिनश्चैव न गुह्यं किंचिदास्थिताः ॥ १२-१५६-३० (७१२८७)
येष्वलोभस्तथाऽमोहो ये च सत्यार्जवे स्थिताः ।
तेषु कौन्तेय रज्येथा येषां न भ्रश्यते पुनः ॥ १२-१५६-३१ (७१२८८)
ये न हृष्यन्ति लाभेषु नालाभेषु व्यथन्ति च ।
निर्ममा निरहंकाराः सत्वस्थाः समदर्शिनः ॥ १२-१५६-३२ (७१२८९)
लाभालाभौ सुखदुःखे च तात
प्रियाप्रिये मरणं जीवितं च ।
समानि येषां स्थिरविक्रमाणां
बुभुत्सतां सत्यपथे स्थितानाम् ॥ १२-१५६-३३ (७१२९०)
धर्मप्रियांस्तान्सुमहानुभावान्
दान्तोऽप्रमत्तश्च समर्चयेथाः ।

दैवात्सर्वे गुणवन्तो भवन्ति
शुभाशुभे वाक्प्रलापास्तथाऽन्ये ॥ ॥ १२-१५६-३४ (७१२९१)

इति श्रीमन्महाभारते शान्तिपर्वणि आपद्धर्मपर्वणि
षट्पञ्चाशदधिकशततमोऽध्यायः ॥१५६.।
Mahabharata - Shanti Parva - Chapter Footnotes

१२-१५६-२ ग्राह इव ग्राहो ग्रासकर्ता ॥
१२-१५६-३ येन लोभेन जनाः पापकृतो भवन्ति ॥
१२-१५६-४ परासुता पराधीनप्राणत्वम् ॥
१२-१५६-५ अभिध्या चिन्ता ।अप्रख्यता अप्रकीर्तिः। अभिध्याऽप्रावृता
चैवेति ड। थ। पाठः ॥
१२-१५६-६ अत्यागादयोऽकार्यक्रियान्ताः सर्वे दोषाः लोभात् प्रवर्तन्त
इति पूर्वोणान्वयः ॥
१२-१५६-११ जातौ जन्मनि ॥
१२-१५६-१२ यो न पूरयितुं शक्य इत्यादीनां स लोभो जेतव्य इति
तृतीयेनान्वयः ॥
१२-१५६-१६ अल्पेऽपि धनादौ बुद्धिर्येषां पवुद्धयो लुब्धा इत्यर्थः ॥
१२-१५६-१८ धर्मवैतंसिकाः धर्मव्याजेने एन् हिंसन्तः ।ध्वजिनो
धर्मख्यापकाः। हेतुबलमिति अन्यं संतोपहेतुतया पारदार्यादिरपि
धर्मत्वं वर्णयन्तीति भावः ॥
१२-१५६-१९ संस्था स्थितिः ।विक्रियतेऽन्यथा भवति ॥
१२-१५६-२५ सर्वं प्राणपर्यन्तमपि देयं परार्थे दातुं योग्यं येषां ते ॥
१२-१५६-२८ पृच्छ च धर्ममिति शेषः ॥
१२-१५६-२९ क्रिया आहारादयः ।न धनार्थमिति झ। पाठः ॥
१२-१५६-३० गुह्यं गोपनीयम् ॥
१२-१५६-३१ अमोह इति च्छेदः ।येषां वृत्तमिति शेषः ॥
१२-१५६-३४ हे शुभ हे भद्र, सर्वे वाक्प्रलापा गुणवन्तो भवन्ति
।अन्ये तु मूढानां वाक्प्रलापा अशुभेऽशुभार्थमेव भवन्तीति
शेषः ॥

---

शन्तिपर्व-अध्यय१५७
॥ श्रीः ॥
१२.१५७. अध्यायः १५७

Mahabharata - Shanti Parva - Chapter Topics
भीष्मेण युधिष्ठिरंप्रत्यज्ञानलक्षणादिप्रतिपादनम् ॥१.।

१२-१५७-० (७१२९२)
युधिष्ठिर उवाच। १२-१५७-०क्ष् (५८२७)
अनर्थानामधिष्ठानमुक्तो लोभः पितामह ।
अज्ञानमपि कौरव्य श्रोतुमिच्छामि तत्त्वतः ॥ १२-१५७-१ (७१२९३)
भीष्म उवाच। १२-१५७-२क्ष् (५८२८)
करोति पापं योऽज्ञानान्नात्मनो वेत्ति च क्षमम् ।
द्विषते साधुवृत्तांश्च स लोकस्यैति वाच्यताम् ॥ १२-१५७-२ (७१२९४)
अज्ञानान्निरयं याति तथा ज्ञानेन दुर्गतिम् ।
अज्ञानात्क्लेशमाप्नोति तथाऽऽपत्सु निमज्जति ॥ १२-१५७-३ (७१२९५)
युधिष्ठिर उवाच। १२-१५७-४क्ष् (५८२९)
प्रजानामप्रवृत्तिं च ज्ञानवृद्धिक्षयोदयान् ।
मूलं स्थानं गतिं कालं कारणं हेतुमेव च ॥ १२-१५७-४ (७१२९६)
श्रोतुमिच्छामि तत्त्वेन यथावदिह पार्थिव ।
अज्ञानप्रसवं हीदं यद्दुःखमुपलभ्यते ॥ १२-१५७-५ (७१२९७)
भीष्म उवाच। १२-१५७-६क्ष् (५८३०)
रागो द्वेषस्तथा मोहो हर्षः शोकोऽभिमानिता ।
कामः क्रोधश्च दर्पश्च तन्द्री चालस्यमेव च ॥ १२-१५७-६ (७१२९८)
इच्छा द्वेषस्तथा तापः परवृद्ध्युपतापिता ।
अज्ञानमेन्निर्दिष्टं पापानां चैव याः क्रियाः ॥ १२-१५७-७ (७१२९९)
एतस्य वा प्रवृत्तेश्च वृद्ध्यादीन्यांश्च पृच्छसि ।
विस्तरेण महाराज शृणु तच्च विशेषतः ॥ १२-१५७-८ (७१३००)
उभावेतौ समफलौ समदोषौ च भारत ।
अज्ञानं चातिलोभश्चाप्येवं जानीहि पार्थिव ॥ १२-१५७-९ (७१३०१)
लोभप्रभवमज्ञानं वृद्धं भूयः प्रवर्धते ।
स्थाने स्थानं क्षयेत्क्षीणमुपैति विविधां गतिम् ॥ १२-१५७-१० (७१३०२)
मूलं लोभस्य मोहो वै कालात्मगतिरेव च ।
श्छिन्ने भिन्ने तथा लोभे कारणं काल एव च ॥ १२-१५७-११ (७१३०३)
तस्याज्ञानाद्धि लोभो हि कामात्मा गतिरेव च ।
सर्वे दोषास्तथा लोभात्तस्माल्लोभं विवर्जयेत् ॥ १२-१५७-१२ (७१३०४)
जनको युवनाश्वश्च पृषदश्वः प्रसेनजित् ।
लोभक्षयाद्दिवं प्राप्तास्तथैवान्ये नराधिपाः ।
गच्छिन्ने छिन्ने तथा लोभे दिवं प्राप्ता जनाधिपाः ॥' १२-१५७-१३ (७१३०५)
प्रत्यक्षं तु कुरुश्रेष्ठ त्यज लोभमिहात्मना ।
त्यक्त्वा लोभं सुखी लोके प्रेत्य चेह च मोदते ॥ ॥ १२-१५७-१४ (७१३०६)

इति श्रीमन्महाभारते शान्तिपर्वणि आपद्धर्मपर्वणि
सप्तपञ्चाशदधिकशततमोऽध्यायः ॥ १५७. ।
Mahabharata - Shanti Parva - Chapter Footnotes

१२-१५७-२ वाच्यतां निन्द्यताम् ॥
१२-१५७-४ अज्ञानस्य प्रवृत्तिं चेति झ । पाठः ॥
१२-१५७-७ कार्ये कारणोपचाराद्रागादय एवाज्ञानम् । पापाना क्रियाः हिंसादयः ॥
१२-१५७-१० लोभप्रभवं लोभात्तस्य प्रवृत्तिः । लोभवृद्धौ
वृद्धिर्लोभस्य स्थाने साम्ये स्थानं समता। लोभभये क्षीणं
भवति। उपैति उदेति। लोभभोस्यो उदेतीत्यर्थः। विविधां गतिं
दुःखसंतापमोहा रूपां प्रापयितुमिति शेषः ॥
१२-१५७-११ मूलं लोभस्य महतः करणं लोभ एव च । इति द। पाठः ॥
१२-१५७-१४ त्यक्त्वा लोभ । लोके प्रेत्य चानुचरिष्यसि इति झ। पाठः ॥

---

शन्तिपर्व-अध्यय१५८
॥ श्रीः ॥
१२.१५८. अध्यायः १५८

Mahabharata - Shanti Parva - Chapter Topics
भीष्मेण दमप्रशंसनम् ॥ १. ।
Mahabharata - Shanti Parva - Chapter Text

१२-१५८-० (७१३०७)
युधिष्ठिर उवाच। १२-१५८-०क्ष् (५८३१)
स्वाध्यायकृतयत्नस्य ब्राह्मणस्य विशेषतः ।
धर्मकामस्य धर्मात्मन्किंनु श्रेय इहोच्यते ॥ १२-१५८-१ (७१३०८)
बहुधा दर्शने लोके श्रेयो यदिह मन्यसे ।
अस्मिँल्लोके परे चैव तन्मे ब्रूहि पितामह ॥ १२-१५८-२ (७१३०९)
महानयं धर्मपथो बहुशाखश्च भारत ।
किंस्विदेवेह धर्माणामनुष्ठेयतमं मतम् ॥ १२-१५८-३ (७१३१०)
धर्मस्य महतो राजन्बहुशाखस्य तत्त्वतः ।
यन्मूलं परमं तात तत्सर्वं ब्रूह्यतन्द्रितः ॥ १२-१५८-४ (७१३११)
भीष्म उवाच। १२-१५८-५क्ष् (५८३२)
हन्त ते कथयिष्यामि येन श्रेयो ह्यवाप्स्यसि ।
पीत्वाऽमृतमिव प्राज्ञो येन तृप्तो भविष्यसि ॥ १२-१५८-५ (७१३१२)
धर्मस्य विधयो नैके तेते प्रोक्ता महर्षिभिः ।

स्वंस्वं विज्ञानमाश्रित्य दमस्तेषां परायणम् ॥१२-१५८-६ (७१३१३)
दमं निःश्रेयसं प्राहुर्वृद्धा निश्चितदर्शिनः ।
ब्राह्मणस्य विशेषेण दमो धर्मः सनातनः ॥१२-१५८-७ (७१३१४)
नादान्तस्य क्रियासिद्धिर्यथावदुपलभ्यते ।
दमो दानं तथा यज्ञानधीतं चातिवर्तते ॥१२-१५८-८ (७१३१५)
दमस्तेजो वर्धयति पवित्रं च दमः परम् ।
विपाप्मा तेजसा युक्तः पुरुषो विन्दते महत् ॥१२-१५८-९ (७१३१६)
दमेन सदृशं धर्मं नान्यं लोकेषु शुश्रुम् ।
दमो हि परमो लोके प्रशस्तः सर्वधर्मिणाम् ॥१२-१५८-१० (७१३१७)
प्रेत्य चात्र मनुष्येन्द्र परमं विन्दते सुखम् ।
दमेन हि सदा युक्तो महान्तं धर्ममश्नुते ॥१२-१५८-११ (७१३१८)
सुखं दान्तः प्रस्वपिति सुखं च प्रतिबुध्यते ।
सुखं पर्येति लोकांश्च मनश्चास्य प्रसीदति ॥१२-१५८-१२ (७१३१९)
अदान्तः पुरुषः क्लेशमभीक्ष्णं प्रतिपद्यते ।
अनर्थांश्च बहूनन्यान्प्रसृजत्यात्मदोषजान् ॥१२-१५८-१३ (७१३२०)
आश्रमेषु चतुर्ष्वाहुर्दममेवोत्तमं व्रतम् ।
दमलिङ्गानि वक्ष्यामि येषां समुदयो दमः ॥१२-१५८-१४ (७१३२१)
क्षमा धृतिरहिंसा च समता सत्यमार्जवम् ।
इन्द्रियाभिजयो दाक्ष्यं मार्दवं ह्रीरचापलम् ॥१२-१५८-१५ (७१३२२)
अकार्पण्यमसंरम्भः संतोषः प्रियवादिता ।
अविहसाऽनसूया चाप्येषां समुदयो दमः ॥१२-१५८-१६ (७१३२३)
गुरुपूजा च कौरव्य दया भूतेष्वपैशुनम् ।
जनवादमृषावादस्तुतिनिन्दाविसर्जनम् ॥१२-१५८-१७ (७१३२४)
कामं क्राधं च लोभं च दर्पं स्तम्भं विकत्थनम् ।
रोषमीर्ष्यावमानं च नैव दान्तो निषेवते ॥१२-१५८-१८ (७१३२५)
अनिन्दितो ह्यकामात्मा नाल्पेष्वर्थ्यनसूयकः ।
समुद्रकल्पः स नरो न कथंचन पूर्यते ॥१२-१५८-१९ (७१३२६)
अहं त्वयि मम त्वं च मयि ते तेषु चाप्यहम् ।
पूर्वसंबन्धिसंयोगं नैतद्दान्तो निषेवते ॥१२-१५८-२० (७१३२७)
सर्वा ग्राम्यास्तथाऽऽरण्या याश्च लोके प्रवृत्तयः ।
निन्दां चैव प्रशंसां च यो नाश्रयति मुच्यते ॥१२-१५८-२१ (७१३२८)
मैत्रोऽथ शीलसंपन्नः प्रसन्नात्मात्मविच्च यः ।
मुक्तस्य विविधैः सङ्गैस्तस्य प्रेत्य फलं महत् ॥१२-१५८-२२ (७१३२९)
सुवृत्तः शीलसंपन्नः प्रसन्नात्माऽऽत्मविद्बुधः ।
प्राप्येह लोके सत्कारं सुगतिं प्रतिपद्यते ॥१२-१५८-२३ (७१३३०)
कर्म यच्छुभमेवेह सद्भिराचरितं च यत् ।

तदेव ज्ञानयुक्तस्य मुनेर्वर्त्म न हीयते ॥ १२-१५८-२४ (७१३३१)
निष्क्रम्य वनमास्थाय ज्ञानयुक्तो जितेन्द्रियः ।
कालाकाङ्क्षी चरन्नेवं ब्रह्मभूयाय कल्पते ॥ १२-१५८-२५ (७१३३२)
अभयं यस्य भूतेभ्यो भूतानामभयं यतः ।
तस्य देहाद्विमुक्तस्य भयं नास्ति कुतश्चन ॥ १२-१५८-२६ (७१३३३)
अवाचिनोति कर्माणि न च संप्रचिनोति ह ।
समः सर्वेषु भूतेषु मैत्रायणगतिं चरेत् ॥ १२-१५८-२७ (७१३३४)
शकुनीनामिवाकाशे मत्स्यानामिव चोदके ।
यथा गतिर्न दृश्येत तथा तस्य स संशयः ॥ १२-१५८-२८ (७१३३५)
गृहानुत्सृज्य यो राज्मोक्षमेवाभिपद्यते ।
लोकास्तेजोमयास्तस्य कल्पन्ते शाश्वतीः समाः ॥ १२-१५८-२९ (७१३३६)
संन्यस्य सर्वकर्माणि संन्यस्य विधिवत्तपः ।
संन्यस्य विविधा विद्याः सर्वं संन्यस्य चैव ह ॥ १२-१५८-३० (७१३३७)
कामे शुचिरनावृत्तः प्रसन्नात्माऽऽत्मविच्छुचिः ।
प्राप्येह लोके सत्कारं स्वर्गं समभिपद्यते ॥ १२-१५८-३१ (७१३३८)
यच्च पैतामहं स्थानं ब्रह्मराशिसमुद्भवम् ।
गुहायां निहितं नित्यं तद्दमेनाभिगम्यते ॥ १२-१५८-३२ (७१३३९)
ज्ञानारामस्य बुद्धस्य सर्वभूतानुरोधिनः ।
नावृत्तिभयमस्तीह परलोकभयं कुतः ॥ १२-१५८-३३ (७१३४०)
एक एव दमे दोषो द्वितीयो नोपपद्यते ।
यदेनं दमसंयुक्तमशक्तं मन्यते जनः ॥ १२-१५८-३४ (७१३४१)
एकोऽस्य सुमहाप्राज्ञ दोषः स्यात्सुमहान्गुणः ।
क्षमया विपुला लोका दुर्लभा हि सहिष्णुता ॥ १२-१५८-३५ (७१३४२)
दान्तस्य किमरण्येन तथाऽदान्तस्य भारत ।
यत्रैव निवसेद्दान्तस्तदरण्यं स चाश्रमः ॥ १२-१५८-३६ (७१३४३)
वैशंपायन उवाच। १२-१५८-३७क्ष् (५८३३)
एतद्भीष्मस्य वचनं श्रुत्वा राजा युधिष्ठिरः ।
अमृतेनेव संतृप्तः प्रहृष्टः समपद्यत ॥ १२-१५८-३७ (७१३४४)
पुनश्च परिपप्रच्छ भीष्मं धर्मभृतां वरम् ।
ततः प्रीतः स चोवाच तस्मै सर्वं कुरूद्वहः ॥ ॥ १२-१५८-३८ (७१३४५)

इति श्रीमन्महाभारते शान्तिपर्वणि आपद्धर्मपर्वणि
अष्टपञ्चाशदधिकशततमोऽध्यायः ॥ १५८.।

Mahabharata - Shanti Parva - Chapter Footnotes

१२-१५८-६ परायणं पराकाष्ठा ।अत्रैव सर्वे धर्मा अन्तर्भूता इत्यर्थः ॥

१२-१५८-१८ दर्पं गर्वं ।स्तम्भं अविनम् ॥
१२-१५८-१९ अल्पेषु अनित्यसुखेषु ।कथंचन ब्रह्मलोकलाभेऽपि न पूर्यते न तृप्तो भवति ॥
१२-१५८-२५ निष्कम्य गृहादिति शेषः ॥
१२-१५८-२७ अवाचिनोति भोगेन व्ययीकरोति ।नच संचिनोति संगृह्णाति तत्त्वज्ञस्य कर्मास्लोषस्मरणात्।मैत्रायणं सर्वभूतेभ्योऽभयदानम् ॥
१२-१५८-३१ कामे शुचिः सत्यकामइत्यर्थः ।अनावृतः सर्वत्र कामचारभाक्।तस्य सर्वेषु लोकेषु कामचारो भवतीति श्रुतेः ॥
१२-१५८-३२ गुहायां हृत्पुण्डरीके ।पैतामहं ब्रह्मलोकाख्यम् ॥

---

शन्तिपर्व-अध्यय१५९
॥ श्रीः ॥
१२.१५९. अध्यायः १५९

Mahabharata - Shanti Parva - Chapter Topics
भीष्मेण तपोनिरूपणम् ॥ १.।
Mahabharata - Shanti Parva - Chapter Text

१२-१५९-० (७१३४६)
भीष्म उवाच।१२-१५९-०क्ष् (५८३४)
सर्वमेतत्तपोमूलं कवयः परिचक्षते ।
न ह्यतप्ततपा मूढः क्रियाफलमवाप्नुते ॥१२-१५९-१ (७१३४७)
प्रजापतिरिदं सर्वं तपसैवासृजत्प्रभुः ।
तथैव वेदानृपयस्तपसा प्रतिपेदिरे ॥१२-१५९-२ (७१३४८)
तपसैव ससर्जान्नं फलमूलानि यानि च ।
त्रींल्लोकांस्तपसा सिद्धाः पश्यन्ति सुसमाहिताः ॥१२-१५९-३ (७१३४९)
औषधान्यगदादीनि तिस्त्रो विद्याश्च संस्कृताः ।
तषसैव हि सिद्ध्यन्ति तपोमूलं हि साधनम् ॥१२-१५९-४ (७१३५०)
यद्दुरापं दुराराध्यं दुराधर्षं दुरुत्सहम् ।
तत्सर्वं तपसा शक्यं तपो हि दुरतिक्रमम् ।
ऐश्वर्यमृषयः प्राप्तास्तपसैव न संशयः ॥ १२-१५९-५ (७१३५१)
सुरापोऽसंमतादायी भ्रूणहा गुरुतल्पगः ।
तपसैव सुतप्तेन नरः पापात्प्रमुच्यते ॥१२-१५९-६ (७१३५२)
तपसो बहुरूपस्य तैस्तैर्द्वारैः प्रवर्ततः ।
निवृत्त्या वर्तमानस्य तपो नानशनात्परम् ॥१२-१५९-७ (७१३५३)

अहिंसा सत्यवचनं दानमिन्द्रियनिग्रहः ।
एतेभ्यो हि महाराज तपो नानशनात्परम् ॥ १२-१५९-८ (७१३५४)
न दुष्करतरं दानान्नाति मातरमाश्रमः ।
त्रैविद्येभ्यः परं नास्ति संन्यासान्नापरं तपः ॥ १२-१५९-९ (७१३५५)
इन्द्रियाणीह रक्षन्ति विप्रर्षिपितृदेवताः ।
तस्मादर्थे च धर्मे च तपो नानशनात्परम् ॥ १२-१५९-१० (७१३५६)
ऋषयः पितरो देवा मनुष्या मृगपक्षिणः ।
यानि चान्यानि भूतानि स्यावराणि चराणि च ॥ १२-१५९-११ (७१३५७)
तपः परायणाः सर्वे सिध्यन्ति तपसा च ते ।
इत्येवं तपसा देवा महत्त्वं प्रतिपेदिरे ॥ १२-१५९-१२ (७१३५८)
इमानीष्टविभागानि फलानि तपसः सदा ।
तपसा शक्यते प्राप्नुं देवत्वमपि निश्चयः ॥ ॥ १२-१५९-१३ (७१३५९)

इति श्रीमन्महाभारते शान्तिपर्वणि आपद्धर्मपर्वणि
एकोनषष्ट्यधिकशततमोऽध्यायः ॥ १५९. ।
Mahabharata - Shanti Parva - Chapter Footnotes

१२-१५९-३ तपसो ह्यानुपूर्व्येण फलमूलानिलाशिनः । इति द। ध। पाठः ॥
१२-१५९-९ मातरमतिक्रम्याश्रमो न । सर्वेष्वप्याश्रमेषु माता
पालनीयैव। तत्त्यागस्य संन्यासिनोऽप्ययोगात् ॥
१२-१५९-१३ इमानिं नक्षत्रादीनि । सुकृतां वा एतानि ज्योतीषि
यन्नक्षत्राणीश्रुतेः ॥

---

शन्तिपर्व-अध्यय१६०
॥ श्रीः ॥
१२.१६०. अध्यायः १६०

Mahabharata - Shanti Parva - Chapter Topics
भीष्मेण सत्यप्रशंसनम् ॥ १. ।
Mahabharata - Shanti Parva - Chapter Text

१२-१६०-० (७१३९०)
युधिष्ठिर उवाच। १२-१६०-०क्ष् (५८३६)
सत्यं धर्मं प्रशंसन्ति विप्रर्षिपितृदेवताः ।
सत्यमिच्छाम्यहं ज्ञातुं तन्मे ब्रूहि पितामह ॥ १२-१६०-१ (७१३९१)
सत्यं किंलक्षणं राजन्कथं वा तदवाप्यते ।
सत्यं प्राप्य भवेत्किंच कथं चैव तदुच्यताम् ॥ १२-१६०-२ (७१३९२)

भीष्म उवाच। १२-१६०-३क्ष् (५८३७)
चातुर्वर्ण्यस्य धर्माणां संकरो न प्रशस्यते ।
धर्मः साधारणः सत्यं सर्ववर्णेषु भारत ॥ १२-१६०-३ (७१३९३)
सत्यं सत्सु सदा धर्मः सत्यं धर्मः सनातनः ।
सत्यमेव नमस्येत सत्यं हि परमा गतिः ॥ १२-१६०-४ (७१३९४)
सत्यं धर्मस्तपोयोगः सत्यं ब्रह्म सनातनम् ।
सत्यं यज्ञः परः प्रोक्तः सर्वं सत्ये प्रतिष्ठितम् ॥ १२-१६०-५ (७१३९५)
रूपं यदिह सत्यस्य यथावदनुपूर्वशः ।
लक्षणं च प्रवक्ष्यामि सत्यस्येह पराक्रमम् ॥ १२-१६०-६ (७१३९६)
प्राप्यते च यथा सत्यं तच्च वेत्तुमिहार्हसि ।
सत्यं त्रयोदशावधं सर्वलोकेषु भारत ॥ १२-१६०-७ (७१३९७)
सत्यं च समता चैव दमश्चैव न संशयः ।
अमात्सर्यं क्षमा चैव ह्रीस्तितिक्षाऽनसूयता ॥ १२-१६०-८ (७१३९८)
त्यागो ध्यानमथार्यत्वं धृतिश्च सततं दया ।
अहिंसा चैव राजेन्द्र सत्याकारास्त्रयोदश ॥ १२-१६०-९ (७१३९९)
सत्यं नामाव्ययं नित्यमविकारि तथैव च ।
सर्वधर्माविरुद्धं च योगेनैतदवाप्यते ॥ १२-१६०-१० (७१४००)
आत्मनीष्टे तथाऽनिष्टे रिपौ च समता तथा ।
इच्छाद्वेषं क्षयं प्राप्य कामक्रोधक्षयं तथा ॥ १२-१६०-११ (७१४०१)
दमी नान्यस्पृहा नित्यं गाम्भीर्यं धैर्यमेव च ।
अशाठ्यं क्रोधदमनं ज्ञानेनैतदवाप्यते ॥ १२-१६०-१२ (७१४०२)
अमात्सर्यं बुधाः प्राहुर्दाने धर्मे च संयमः ।
अवस्थितेन नित्यं च सत्येनामत्सरी भवेत् ॥ १२-१६०-१३ (७१४०३)
अक्षमायाः क्षमायाश्च प्रियाणीहाप्रियाणि च ।
क्षमते स तः साधुस्ततः प्राप्नोति सत्यताम् ॥ १२-१६०-१४ (७१४०४)
कल्याणं रुते बाढं धीमान्न ग्लायते क्वचित् ।
प्रशान्तवाङ्मना नित्यं ह्रीस्तु धर्मादवाप्यते ॥ १२-१६०-१५ (७१४०५)
धर्मार्थहेतोः क्षमते तितिक्षा धर्म उत्तमः ।
लोकसंग्रहणार्थं वै सा तु धैर्येण लभ्यते ॥ १२-१६०-१६ (७१४०६)
ग्अनसूया तु गाम्भीर्यं दानेनैतदवाप्यते।'
त्यक्तस्नेहस्य यस्त्यागो विषयाणां तथैव च ।
रागद्वेषप्रहीणस्य त्यागो भवति नान्यथा ॥ १२-१६०-१७ (७१४०७)
ग्ध्यानं च शाठ्यमित्युक्तं मौनेनैतदवाप्यते।'
आर्यता नाम भूतानां यः करोति प्रयत्नतः ।
शुभं कर्म निराकारो वीतरागस्तथैव च ॥ १२-१६०-१८ (७१४०८)
धृतिर्नाम सुखे दुःखे यया नाप्नोति विक्रियाम् ॥

तां भजेत सदा प्राज्ञो य इच्छेद्भूतिमात्मनः ॥ १२-१६०-१९ (७१४०९)
सर्वथा क्षमिणा भाव्यं तथा सत्यपरेण च ।
वीतहर्षभयक्रोधो धृतिमाप्नोति पण्डितः ॥ १२-१६०-२० (७१४१०)
अद्रोहः सर्वभूतेषु कर्मणा मनसा गिरा ।
अनुग्रहश्च दानं च सतां धर्मः सनातनः ॥ १२-१६०-२१ (७१४११)
एते त्रयोदशाकाराः पृथक्सत्यैकलक्षणाः ।
भजन्ते सत्यमेवेह बृंहयन्ते च भारत ॥ १२-१६०-२२ (७१४१२)
नान्तः शक्यो गुणानां च वक्तुं सत्यस्य पार्थिव ।
अतः सत्यं प्रशंसन्ति विप्राः सपितृदेवताः ॥ १२-१६०-२३ (७१४१३)
नास्ति सत्यात्परो धर्मो नानृतात्पातकं परम् ।
स्थितिर्हि सत्यं धर्मस्य तस्मात्सत्यं न लोपयेत् ॥ १२-१६०-२४ (७१४१४)
उपैति सत्याद्दानं हि तथा यज्ञाः सदक्षिणाः ।
त्रेताग्निहोत्रं वेदाश्च ये चान्ये धर्मनिश्चयाः ॥ १२-१६०-२५ (७१४१५)
अश्वमेधसहस्त्रं च सत्यं च तुलया धृतम् ।
अश्वमेधसहस्राद्धि सत्यमेव विशिष्यते ॥ ॥ १२-१६०-२६ (७१४१६)

इति श्रीमन्महाभारते शान्तिपर्वणि आपद्धर्मपर्वणि
षष्ट्यधिकशततमोऽध्यायः ॥ १६०. ।
Mahabharata - Shanti Parva - Chapter Footnotes

१२-१६०-१४ अक्षमाया विषये तथा क्षमाया इति दृष्टान्तार्थम् ॥

---

शन्तिपर्व-अध्यय१६१
॥ श्रीः ॥
१२.१६१. अध्यायः १६१

Mahabharata - Shanti Parva - Chapter Topics
भीष्मेण युधिष्ठिरंप्रति लोभादिनिरूपणम् ॥ १. ।
Mahabharata - Shanti Parva - Chapter Text

१२-१६१-० (७१४१७)
युधिष्ठिर उवाच। १२-१६१-०क्ष् (५८३८)
यतः प्रभवति क्रोधः कामो वा भरतर्षभ ।
शोकमोहौ विधित्सा च परासुत्वं तथा मदः ॥ १२-१६१-१ (७१४१८)
लोभो मात्सर्यमीर्ष्या च कुत्साऽसूया कृपा भयम् ।
एतत्सर्वं महाप्राज्ञ याथातथ्येन मे वद ॥ १२-१६१-२ (७१४१९)
भीष्म उवाच। १२-१६१-३क्ष् (५८३९)

त्रयोदशैतेऽतिबलाः शत्रवः प्राणिनां स्मृताः ।
उपासते महाराज समन्तात्पुरुषानिह ॥ १२-१६१-३ (७१४२०)
एते प्रमत्तं पुरुषमप्रमत्तास्तुदन्ति च ।
वृका इव विलुम्पन्ति दृष्ट्वेव पुरुषेतरान् ॥ १२-१६१-४ (७१४२१)
एभ्यः प्रवर्तते दुःखमेभ्यः पापं प्रवर्तते ।
इति मर्त्यो विजानीयात्सततं पुरुषर्षभ ॥ १२-१६१-५ (७१४२२)
एतेषामुदयं स्थानं क्षयं च पृथिवीपते ।
हन्त ते कथयिष्यामि क्रोधस्योत्पत्तिमादितः ।
यथातत्त्वं क्षितिपते तन्मे निगदतः शृणु ॥ १२-१६१-६ (७१४२३)
लोभात्क्रोधः प्रभवति परदोषैरुदीर्यते ।
क्षमया तिष्ठते राजन्क्षमया विनिवर्तते ॥ १२-१६१-७ (७१४२४)
संकल्पाज्जायते कामः सेव्यमानो विवर्धते ।
यदा प्राज्ञो विरमते तदा सद्यः प्रणश्यति ॥ १२-१६१-८ (७१४२५)
श्परामूया क्रोधलोभावन्तरा प्रतिमुच्यते ।
दयया सर्वभूतानां निर्वेदाद्विनिवर्तते ॥
अवद्यदर्शनादेति तत्त्वज्ञानाच्च नश्यति ॥ १२-१६१-९ (७१४२६)
अज्ञानप्रभवो मोहः पापाभ्यासात्प्रवर्तते ।
यदा प्राज्ञेषु रमते तदा सद्यः प्रणश्यति ॥ १२-१६१-१० (७१४२७)
विरुद्धानीह शास्त्राणि ये पश्यन्ति कुरूद्वह ।
विधित्सा जायते तेषां तत्त्वज्ञानान्निवर्तते ॥ १२-१६१-११ (७१४२८)
प्रीतेः शोकः प्रभवति वियोगात्तस्य देहिनः ।
यदा निरर्थकं वेत्ति तदा सद्यः प्रणश्यति ॥ १२-१६१-१२ (७१४२९)
परासुता क्रोधलोभादभ्यासाच्च प्रवर्तते ।
दयया सर्वभूतानां निर्वेदात्सा निवर्तते ॥ १२-१६१-१३ (७१४३०)
सत्यत्यागात्तु मात्सर्यमहितानां च सेवया ।
एतत्तु क्षीयते तात साधूनामुपसेवनात् ॥ १२-१६१-१४ (७१४३१)
कुलाज्ज्ञानात्तथैश्वर्यान्मदो भवति देहिनाम् ।
एभिरेव तु विज्ञातैर्मदः सद्यः प्रणश्यति ॥ १२-१६१-१५ (७१४३२)
ईर्ष्या कामात्प्रभवति संहर्षाच्चैव जायते ।
इतरेषां तु सत्वानां प्रज्ञया सा प्रणश्यति ॥ १२-१६१-१६ (७१४३३)
विभ्रमाल्लोकबाह्यानां द्वेष्यैर्वाक्यैरसंमतैः ।
कुत्सा संजायते राजँल्लोकान्प्रेक्ष्याभिशाम्यति ॥ १२-१६१-१७ (७१४३४)
प्रतिकर्तुं न शक्ता ये बलस्थायापकारिणे ।
असूया जायते तीव्रा कारुण्याद्विनिवर्तते ॥ १२-१६१-१८ (७१४३५)
कृपणान्सततं दृष्ट्वा ततः संजायते कृपा ।
धर्मनिष्ठां यदा वेत्ति तदा शाम्यति सा कृपा ॥ १२-१६१-१९ (७१४३६)

अज्ञानप्रभवो लोभो भूतानां दृश्यते सदा ।
अस्थिरत्वं च भोगानां दृष्ट्वा ज्ञात्वा निवर्तते ॥ १२-१६१-२० (७१४३७)
एतान्येव जितान्याहुः प्रशान्तेन त्रयोदश ।
एते हि धार्तराष्ट्राणां सर्वे दोषास्त्रयोदश ।
त्वया सत्यार्थिना नित्यं विजिता जेष्यता चते ॥ ॥ १२-१६१-२१ (७१४३८)

इति श्रीमन्महाभारते शान्तिपर्वणि आपद्धर्मपर्वणि
एकषष्ट्यधिकशततमोऽध्यायः ॥ १६१.।
Mahabharata - Shanti Parva - Chapter Footnotes

१२-१६१-४ दृष्ट्वेव पुरुषं बलादिति झ । पाठः ॥
१२-१६१-७ लोभात् केनचिन्निमित्तेनोपहतात् क्रोधो भवति । स च
परदोषैर्दृष्टैरुदीयते उद्दीप्तो भवति। स क्षमया तिष्ठते
निरुध्यते विनिवर्तते चेति। एवं सर्वत्र द्रष्टव्यम् ॥

---

शन्तिपर्व-अध्यय१६२
॥ श्रीः ॥
१२.१६२. अध्यायः १६२

Mahabharata - Shanti Parva - Chapter Topics
भीष्मेण युधिष्ठिरंप्रति नृशंसलक्षणादिकथनम् ॥ १.।
Mahabharata - Shanti Parva - Chapter Text

१२-१६२-० (७१४३९)
युधिष्ठिर उवाच। १२-१६२-०क्ष् (५८४०)
आनृशंस्यं विजानामि दर्शनेन सतां सदा ।
नृशंसान्न विजानामि तेषां कर्म च भारत ॥ १२-१६२-१ (७१४४०)
कण्टकान्कूपमग्निं च वर्जयन्ति यथा नराः ।
तथा नृशंसकर्माणं वर्जयन्ति नरा नरम् ॥ १२-१६२-२ (७१४४१)
नृशंसो दह्यते व्यक्तं प्रेत्य चेह च भारत ।
तस्मात्त्वं ब्रूहि कौरव्य तस्य धर्मविनिश्चयम् ॥ १२-१६२-३ (७१४४२)
भीष्म उवाच। १२-१६२-४क्ष् (५८४१)
स्पृहाऽस्यान्तर्गता चैव विदितार्था च कर्मणाम्
आक्रोष्टा क्रुश्यते चैव बन्धिता बध्यते स च ॥ १२-१६२-४ (७१४४३)
दत्तानुकीर्तिर्विषमः क्षुद्रो नैकृतिकः शठः ।
असंभोगी च मानी च तथा सङ्गी विकत्थनः ॥ १२-१६२-५ (७१४४४)

सर्वातिशङ्की पुरुषो बलीशः कृपणोऽथवा ।
वर्गप्रशंसीं सततमाश्रमद्वेपसंकरी ॥ १२-१६२-६ (७१४४५)
हिंसाविकारी सततमविशेषगुणागुणः ।
बह्वलीको मनस्वी च लुब्धोऽत्यर्थं नृशंसकृत् ॥ १२-१६२-७ (७१४४६)
धर्मशीलं गुणोपेतं पाप इत्यवगच्छति ।
आत्मशीलोपमानेन न विश्वसिति कस्यचित् ॥ १२-१६२-८ (७१४४७)
परेषां यत्र दोपः स्यात्तद्गुह्यं संप्रकाशयेत् ।
समानेष्वेव दोपेषु वृत्त्यर्थमुपघातयेत् ॥ १२-१६२-९ (७१४४८)
तथोपकारिणं चैव मन्यते वञ्चितं परम् ।
दत्त्वाऽपि च धनं काले संतपत्युपकारिणे ॥ १२-१६२-१० (७१४४९)
भक्ष्यं पेयमथालेह्यं यच्चान्यत्साधु भोजनम् ।
प्रेक्षमाणेषु योऽश्नीयान्नृशंसमिति तं वदेत् ॥ १२-१६२-११ (७१४५०)
ब्राह्मणेभ्यः प्रदायाग्रं यः सुहृद्भिः सहाश्नुते ।
स प्रेत्य लभते स्वर्गमिह चानन्त्यमश्नुते ॥ १२-१६२-१२ (७१४५१)
एष ते भरतश्रेष्ठ नृशंसः परिकीर्तितः ।
सदा विवर्जनीयो हि पुरुषेण बुभूषता ॥ ॥ १२-१६२-१३ (७१४५२)

इति श्रीमन्महाभारते शान्तिपर्वणि आपद्धर्मपर्वणि
द्विषष्ट्यधिकशततमोऽध्यायः ॥ १६२.।
Mahabharata - Shanti Parva - Chapter Footnotes

१२-१६२-५ दत्तमनुकीर्तयतीति दत्तानुकीर्तिः स्वस्य वदान्यत्वप्रकाशकः
। विषमः विद्वेषकर्ता। क्षुद्रो नीचकर्मकारी। नैकृतिकः स्नेहं
प्रदर्श्य वञ्चकः। शठः सत्यपि सामर्थ्ये दारिद्र्यव्यञ्जकः ॥
१२-१६२-६ बलीशः काकइव वञ्चकदृष्टिः ।आश्रमद्वेषः
संकरश्चास्यास्तीति आश्रमद्वेषसंकरी ॥
१२-१६२-८ आत्मशीलानुमानेनेति थ ।पाठः ॥

---

शन्तिपर्व-अध्यय१६३
॥ श्रीः ॥
१२.१६३. अध्यायः १६३

Mahabharata - Shanti Parva - Chapter Topics
भीष्मेण युधिष्ठिरंप्रति यज्ञाद्यर्थं संपादीयद्रव्यविवेकथनम्
॥ १.। तथा पापविशेषाणां प्रायश्चित्तविशेषकथनम् ॥ २.।
Mahabharata - Shanti Parva - Chapter Text

१२-१६३-० (७१४५३)
भीष्म उवाच। १२-१६३-०क्ष् (५८४२)
कृतार्थो यक्ष्यमाणश्च सर्ववेदान्तगश्च यः ।
आचार्यपितृकायार्थं स्वाध्यायार्थमथापि च ॥ १२-१६३-१ (७१४५४)
एते वै साधवो दृष्टा ब्राह्मणाः धर्मभिक्षवः ।
निःस्वेभ्यो देयमेतेभ्यो दानं विद्या च भारत ॥ १२-१६३-२ (७१४५५)
अन्यत्र दक्षिणादानं देयं भरतसत्तम ।
अन्येभ्योऽपि वहिर्वेदि न कृतान्नं विधीयते ॥ १२-१६३-३ (७१४५६)
सर्वरत्नानि राजा हि यथार्हं प्रतिपादयेत् ।
ब्राह्मणायैव यज्ञाश्च सहान्नाः सहदक्षिणाः ॥ १२-१६३-४ (७१४५७)
अन्येभ्यो विमलाचारा यजन्ते गुणतः सदा ।
यस्य त्रैवार्षिकं भक्तं पर्याप्तं भृत्यवृत्तये ।
अधिकं चापि विद्येत स सोमं पातुमर्हति ॥ १२-१६३-५ (७१४५८)
यज्ञश्चेत्प्रतिरुद्धः स्यादंशेनैकेन यज्वनः ।
ब्राह्मणस्य विशेषेण धार्मिके सति राजनि ॥ १२-१६३-६ (७१४५९)
यो वैश्यः स्याद्बहुपशुर्हीनक्रतुरसोमपः ।
कुटुम्बात्तस्य तद्वित्तं यज्ञार्थं पार्थिवो हरेत् ॥ १२-१६३-७ (७१४६०)
आहरेद्द्रह्यतः किंचित्कामं शूद्रस्य वेश्मनि ।
न हि वेश्मनि शूद्रस्य किंचिदस्ति परिग्रहः ॥ १२-१६३-८ (७१४६१)
योऽनाहिताग्निः शतगुरयज्वा त्त सहस्रगुः ।
तयोरपि कुटुम्बाभ्यामाहरेदविचारयन् ॥ १२-१६३-९ (७१४६२)
अदातृभ्यो हरेद्वित्तं विख्याप्य नृपतिः सदा ।
तथैवाचरतो धर्मो नृपतेः स्यादथाखिलः ॥ १२-१६३-१० (७१४६३)
तथैव सप्तमे भक्ते भक्तानि षडनश्नतः ।
अश्वस्तनविभागेन हर्तव्यं हीनकर्मणः ॥ १२-१६३-११ (७१४६४)
खलात्क्षेत्रात्तथागाराद्यतो वाऽप्युपपद्यते ।
आख्यातव्यं नृपस्यैतत्पृच्छतोऽपृच्छतोपि वा ।
न तस्मै धारयेद्दण्डं राजा धर्मेण धर्मवित् ॥ १२-१६३-१२ (७१४६५)
क्षत्रियस्य तु बालिश्याद्ब्राह्मणः क्लिश्यते क्षुधा ।
श्रुतशीले समाज्ञाय वृत्तिमस्य प्रकल्पयेत् ॥ १२-१६३-१३ (७१४६६)
अथैनं परिरक्षेत पिता पुत्रमिवौरसम्। १२-१६३-१४ (७१४६७)
इष्टिं वैश्वानरीं नित्यं निर्वपेदब्दपर्यये ।
अविकल्पः पुरा धर्मो धर्मवादैस्तु केवलः ॥ १२-१६३-१५ (७१४६८)
विश्वैर्देवैश्च साध्यैश्च ब्राह्मणैश्च महर्षिभिः ।
आपत्सु गरणाद्भीतैर्लिङ्गैः प्रतिनिधीकृतः ॥ १२-१६३-१६ (७१४६९)
प्रभुः प्रथमकल्पस्य योऽनुकल्पेन वर्तते ।

स नाप्नोति फलं तस्य प्रेत्य चेह च दुर्मतिः ॥ १२-१६३-१७ (७१४७०)
न ब्राह्मणो वेदयीत किंचिद्राजनि धर्मवित् ।
अविद्यावेदनाद्विद्यात्स्ववीर्यं वीर्यवत्तरम् ।
तस्माद्राज्ञः सदा तेजो दुःसहं ब्रह्मवादिनाम् ॥ १२-१६३-१८ (७१४७१)
मन्ता शास्ता विधाता च ब्राह्मणो देव उच्यते ।
तस्मिन्नाकुशलं ब्रूयान्न शुष्कामीरयेद्गिरम् ॥ १२-१६३-१९ (७१४७२)
क्षत्रियो बाहुवीर्येण तरेदापदमात्मनः ।
धनैर्वैश्यश्च शुद्रश्च मन्त्रैर्होमैश्च वै द्विजः
॥ १२-१६३-२० (७१४७३)
नैव कन्या न युवतिर्नामन्त्रज्ञो न बालिशः ।
परिवेष्टाऽग्निहोत्रस्य भवेन्नासंस्कृतस्तथा ॥ १२-१६३-२१ (७१४७४)
नरके निपतन्त्येते जुह्वानाः सवनस्य तत् ।
तस्माद्वैतानकुशलो होता स्याद्वेदपारगः ॥ १२-१६३-२२ (७१४७५)
प्राजापत्यमदत्त्वा च अग्न्याधेयस्य दक्षिणाम् ।
अनाहिताग्निरिति सं प्रोच्यते धर्मदर्शिभिः ॥ १२-१६३-२३ (७१४७६)
पुण्यान्यन्यानि कुर्वीत श्रद्दधानो जितेन्द्रियः ।
अनाप्तदक्षिणैर्यज्ञैर्न यजेत कथंचन ॥ १२-१६३-२४ (७१४७७)
प्रजाः पंशूश्च स्वर्गं च हन्ति यज्ञो ह्यदक्षिणः ।
इन्द्रियाणि यशः कीर्तिभायुश्चाप्यवकृन्तति ॥ १२-१६३-२५ (७१४७८)
उदक्यामासते ये च द्विजाः केचिदनग्नयः ।
कुलं चाश्रोत्रियं येषां सर्वे ते शूद्रकर्मिणः ॥ १२-१६३-२६ (७१४७९)
उदपानोदके ग्रामे ब्राह्मणो वृपलीयतिः ।
अपित्वा द्वादश समाः शूद्रकर्मैव गच्छति ॥ १२-१६३-२७ (७१४८०)
अभार्यी शयने विभ्रच्छूद्रं वृद्धं च वै द्विजः ।
अब्राह्मणं भन्यमानस्तृणेष्वासीत पृष्ठतः ।
तथा संशुध्यते राजञ्शृणु चात्र वचो मम ॥ १२-१६३-२८ (७१४८१)
यदेकरात्रेण करोति पापं
कृष्णं वर्णं ब्राह्मणः सेवमानः ।
स्थानासनाभ्यां विहरन्वती स
त्रिभिर्वर्षैः शमयेदात्मपापम् ॥ १२-१६३-२९ (७१४८२)
न नर्मयुक्तमतृतं हिनस्ति
न स्त्रीषु राजन्न विवाहकाले ।
प्राणात्यये सर्वधनापहारे
पञ्चानृतान्याहुरपातकानि ॥ १२-१६३-३० (७१४८३)
श्रद्दधानः शुभां विद्यां हीनादपि समाप्नुयात् ।
सुवर्णमपि चामेध्यादाददीताविचारयन् ॥ १२-१६३-३१ (७१४८४)

स्त्रीरत्नं दुष्कुलाच्चापि विषादप्यमृतं पिबेत् ।
अदूष्या हि स्त्रियो रत्नमाप इत्येव धर्मतः ॥१२-१६३-३२ (७१४८५)
गोब्राह्मणहितार्थं च वर्णानां संकरेषु च ।
वैश्यो गृह्णीत शस्त्राणि परित्राणार्थमात्मनः ॥१२-१६३-३३ (७१४८६)
सुरापो ब्रह्महा चैव गुरुतल्पगतस्तथा ।
अचिरेण महाराज पतितो वै भवत्युत ॥१२-१६३-३४ (७१४८७)
सुवर्णहरणं स्तैन्यं विप्रस्वं चेति पातकम् ।
विहारो मद्यपानं च अगम्यागमनं तथा ॥१२-१६३-३५ (७१४८८)
पतितैः संप्रयोगश्च ब्राह्मणीयोनितस्तथा ।
अनिर्देश्यानि मन्यन्ते प्राणान्तानीति धारणा ॥१२-१६३-३६ (७१४८९)
संवत्सरेण पतति पतितेन सहाचरन् ।
याजनाध्यापनाद्दानान्न तु यानासनाशनात् ॥१२-१६३-३७ (७१४९०)
एतानि हित्वातोऽन्यानि निर्देश्यानीति धारणा ।
निर्देश्यकेन विधिना कालेनाव्यसनी भवेत् ॥१२-१६३-३८ (७१४९१)
अनुत्तीर्य न होतव्यं प्रेतकर्मण्युपाश्रिते ।
त्रिषु त्वेतेषु पूर्वेषु न कुर्वीत विचारणम् ॥१२-१६३-३९ (७१४९२)
अमात्यान्वा गुरूून्वापि जह्याद्धर्मेण धार्मिकः ।
प्रायश्चित्तान्यकुर्वाणा नैते कुर्वन्ति संविदम् ॥१२-१६३-४० (७१४९३)
अधर्मकारी धर्मेण तपसा हन्ति किल्विषम् ।
ब्राह्मणायावगुर्येत स्पृष्टे गुरुतरं भवेत् ॥१२-१६३-४१ (७१४९४)
अस्तेनं स्तेन इत्युक्त्वा द्विगुणं पापमाप्नुयात् ।
त्रिभागं ब्रह्महत्यायाः कन्यां प्राप्नोति दुष्यति ।
यस्तु दूषयिता तस्याः शेषं प्राप्नोति पाप्मनः ॥ १२-१६३-४२ (७१४९५)
ब्राह्मणानवगर्ह्येह स्पृष्ट्वा गुरुतरं भवेत् ।
वर्षाणां हि शतं पापः प्रतिष्ठां नाधिगच्छति ॥१२-१६३-४३ (७१४९६)
सहस्रं चैव वर्षाणां निपत्य नरकं वसेत् ।
तस्मान्नैवावगुर्याद्धि नैव जातु निपातयेत् ॥१२-१६३-४४ (७१४९७)
शोणितं यावतः पांसून्संगृह्णीयाद्द्विजक्षतात् ।
तावतीः स समा राजन्नरके प्रतिपद्यते ॥१२-१६३-४५ (७१४९८)
भ्रूणहाऽऽहवमध्ये तु शुध्यते शस्त्रपाततः ।
आत्मानं जुहुयादग्नौ समिद्धे तेन शुध्यते ॥१२-१६३-४६ (७१४९९)
सुरापो वारुणीमुष्णां पीत्वा पापाद्विमुच्यते ॥ १२-१६३-४७ (७१५००)
तया स काये निर्दग्धे मृत्युं वा प्राप्य शुध्यति ।
लोकांश्च लभते विप्रो नान्यथा लभते हि सः ॥१२-१६३-४८ (७१५०१)
गुरुतल्पमधिष्ठाय दुरात्मा पापचेतनः ।
शिलां ज्वलन्तीमासाद्य मृत्युना सोभिशुध्यति ॥१२-१६३-४९ (७१५०२)

अधवा शिश्नवृषणावादायाञ्जलिना स्वयम् ।
नैर्ऋतीं दिशमास्थाय निपतेत्सत्वजिह्मगः ॥ १२-१६३-५० (७१५०३)
ब्राह्मणार्थेऽपि वा प्राणान्संत्यजंस्तेन शुध्यति ॥ १२-१६३-५१ (७१५०४)
अश्वमेधेन वाऽपीष्ट्वा अथवा गोसवेन वा ।
मरुत्सोमेन वा सम्यगिह प्रेत्य च पूज्यते ॥ १२-१६३-५२ (७१५०५)
तथैव द्वादशसमाः कापोतं धर्ममाचरेत् ।
एककालं चरेद्भैक्षं स्वकर्मोदाहरञ्जने ॥ १२-१६३-५३ (७१५०६)
एवं वा तपसा युक्तो ब्रह्महा सवनी भवेत् ।
एवं गर्भमविज्ञातमात्रेयीं वा निपातयेत् ॥ १२-१६३-५४ (७१५०७)
द्विगुणा ब्रह्महत्या वै आत्रेयीहिंसने भवेत् ।
सुरापी नियताहारो ब्रह्मचारी क्षपाचरः ॥ १२-१६३-५५ (७१५०८)
ऊर्ध्वं त्रिभ्योऽपि वर्षेभ्यो यजेताग्निष्टुता परम् ।
ऋषभैकसहस्रं वा गा दत्त्वा शौचमाप्नुयात् ॥ १२-१६३-५६ (७१५०९)
वैश्यं दत्त्वा तु वर्षे द्वे ऋषभैकशतं च गाः ।
शूद्रं हत्वाऽब्दमेवैकमृषभं च शतं च गाः ॥ १२-१६३-५७ (७१५१०)
श्ववराहखरान्हत्वा शौद्रमेव व्रतं चरेत् ।
मार्जारचाषमण्डूकान्काकं व्यालं च मूषिकम् ॥ १२-१६३-५८ (७१५११)
उक्तः पशुवधे दोषो राजन्प्राणिनिपातनात् ।
'अनस्थिकेषु गोमूत्रं पानमेकं प्रचक्षते।'
प्रायश्चित्तान्यथान्यानि प्रवक्ष्याम्यनुपूर्वशः ॥ १२-१६३-५९ (७१५१२)
तल्पे वाऽन्यस्य चौर्ये च पृथक् संवत्सरं चरेत् ।
त्रीणि श्रोत्रियभार्यायां परदारे च द्वे स्मृते ॥ १२-१६३-६० (७१५१३)
काले चतुर्थे भुञ्जानो ब्रह्मचारी व्रती भवेत् ।
स्थानासनाभ्यां विहरेत्रिरह्नाऽभ्युपयन्नपः ॥ १२-१६३-६१ (७१५१४)
'एवमेव चरन्राजंस्तस्मात्पापात्प्रमुच्यते।'
एवमेव निराकर्ता यश्चाग्नीनपविध्यति ॥ १२-१६३-६२ (७१५१५)
त्यजत्यकारणे यश्च पितरं मातरं गुरुम् ।
पतितः स्यात्स कौरव्य यथा धर्मेषु निश्चयः ॥ १२-१६३-६३ (७१५१६)
ग्रासाच्छादनयानं च शयनं ह्यासनं तथा ।
'ब्रह्मचारी द्विजेभ्यश्च दत्त्वा पापात्प्रमुच्यते ॥' १२-१६३-६४ (७१५१७)
भार्यायां व्यभिचारिण्यां निरुद्धायां विशेषतः ।
यत्पुंसः परदारेषु तदेनां चारयेद्व्रतम्। १२-१६३-६५ (७१५१८)
श्रेयांसं शयने हित्वा पापीयांसं समृच्छति ।
श्वभिस्तमर्दयेद्राजा संस्थाने बहुविस्तरे ॥ १२-१६३-६६ (७१५१९)
पुमांसं बन्धयेत्पाशैः शयने तप्त आयसे ।
अप्यादधीत दारूणि तत्र दह्येत पापकृत ॥ १२-१६३-६७ (७१५२०)

एव दण्डो महाराज स्त्रीणां भर्तृव्यतिक्रमे ।
संवत्सारोऽभिशस्तस्य दुष्टस्य द्विगुणो भवेत् ॥ १२-१६३-६८ (७१५२१)
द्वे तस्य त्रीणि वर्षाणि चत्वारि सहसेविनः ।
कुमारः पञ्चवर्षाणि चरेद्भैक्षं मुनिव्रतः ॥ १२-१६३-६९ (७१५२२)
परिवित्तिः परिवेत्ता या चैव परिविद्यते ।
पाणिग्राहस्त्वधर्मेण सर्वे ते पतिताः स्मृताः ॥ १२-१६३-७० (७१५२३)
चरेयुः सर्व एवैते वीरहा यद्व्रतं चरेत् ।
चान्द्रायणं चरेन्मासं कृच्छ्रं वा पापशुद्धये ॥ १२-१६३-७१ (७१५२४)
परिवेत्ता प्रयच्छेता तां स्नुषां परिवित्तये ।
ज्येष्ठेन त्वभ्यनुज्ञातो यवीयाप्यनन्तरम् ।
एनसो मोक्षमाप्नोति तौ च सा चैव धर्मतः ॥ १२-१६३-७२ (७१५२५)
अमानुषीषु गोवर्जमनादिष्टं न दुष्यति ।
अधिष्ठातारमत्तारं पशूनां पुरुषं विदुः ॥ १२-१६३-७३ (७१५२६)
परिधायोर्ध्ववालं तु पात्रमादाय मृन्मयम् ।
चरेत्सप्तगृहान्भैक्षं स्वकर्म परिकीर्तयन् ॥ १२-१६३-७४ (७१५२७)
तथैव लब्धभोजी स्याद्द्वादशाहात्स शुध्यति ।
चरेत्संवत्सरं चापि तद्व्रतं येन कृन्तति ॥ १२-१६३-७५ (७१५२८)
भवेत्तु मानुषेष्वेवं प्रायश्चित्तमनुत्तमम् ।
दानं वा दानशक्तेषु सर्वेमतत्प्रकल्पयेत् ॥ १२-१६३-७६ (७१५२९)
अनास्तिकेषु गोमात्रं दानमेकं प्रचक्षते ।
श्ववराहमनुष्याणां कुक्कुटस्य खरस्य च ॥ १२-१६३-७७ (७१५३०)
मांसं मूत्रं पुरीषं च प्राश्य संस्कारमर्हति ।
ब्राह्मणस्तु सुरापस्य गन्धमादाय सोमपाः ॥ १२-१६३-७८ (७१५३१)
अपख्यहं पिबेदुष्णाः संयतात्मा जितेन्द्रियः ।
अपः पीत्वा तु स पुनर्वायुभक्षो भवेन्त्र्यहम् ॥ १२-१६३-७९ (७१५३२)
एवमेतत्समुद्दिष्टं प्रायश्चित्तिषेवणम् ।
ब्राह्मणस्य विशेषेण यदज्ञानेन जायते ॥ ॥ १२-१६३-८० (७१५३३)

इति श्रीमन्महाभारते शान्तिपर्वणि आपद्धर्मपर्वणि
त्रिषष्ट्यधिकशततमोऽधायायः ॥ १६३.।

Mahabharata - Shanti Parva - Chapter Footnotes

१२-१६३-२ निःश्वो निर्धनः ॥
१२-१६३-३ अन्यत्र उक्तेभ्योऽन्यत्रापि ब्राह्मणेषु अन्येभ्योऽब्राह्मणेभ्यः कृतान्न पक्वान्नं न विधीयते ।तेभ्योऽप्यकृतान्नं देयमिति भावः ॥

१२-१६३-६ ब्राह्मणस्य यज्ञः एकेनांशेन स्त्र्याद्यङ्गनासेन प्रतिरुद्धः
स्यात्तर्हितस्य वैश्यस्य तद्धनं एवर्थिवो यज्ञार्थं हरेदिति
द्वितीयेन संबन्धः ।दोषेणैकेन यज्वन इति ध।पाठः ॥
१२-१६३-११ भक्तानि षडनश्नतः ध्यहमुपोषितस्य ॥
१२-१६३-१३ बालिश्यादित्यनेन क्षत्रियस्यैव स दोष इत्युक्तम् ॥
१२-१६३-२१ परिवेष्टा आहुतिप्रक्षेप्ता ।कन्यायुवत्योः
स्मार्ताग्निहोमे स्वयं पत्न्यणि क पुत्रः कुमार्थन्तवासी
वेत्याश्वलायनवचनादधिकृतयोरप्रति प्रसक्तेर्निषेध उक्तः ॥
१२-१६३-२६ आसते मिथुनीभवन्ति ॥
१२-१६३-२७ उदपानः कूपस्तदेकोदके एककूपोपजीव्येत्यर्थः ॥
१२-१६३-२८ अभार्यामपरिणीतां शयने बिभ्रद्ब्राह्मणस्तथा शूद्रं
वृद्धं महामिति गन्यमानस्तश्राऽब्राह्मणं क्षत्रियं वैश्यं वा
वृद्धं मन्यमानस्तृणेषु यद्यासीतोपविष्टः स यथा संशुध्येत
तथा तथा शृण्विशि सार्धार्थः ॥
१२-१६३-२९ विहरन् करोतीति संबन्धः ॥
१२-१६३-३६ अनिर्देश्यानि बुद्धिपूर्वकानि चेदत्र प्रायश्चित्तं
नास्तीत्यर्थः ।किं तर्हि मरणान्तमेव प्रायश्चित्तमिति
धारणानिश्चयः।ब्राह्मणीयोनितः।अब्राह्मणस्य ब्राह्मणीगमनादित्यर्थः
॥
१२-१६३-३७ याजनादित्रयेण सद्यः पतति नतु यानादिना ।तेन तु वर्षेण
पततीत्यर्थः ॥
१२-१६३-३८ एतानि पञ्चमहापापानि ।अन्यानि तु निर्देश्यानि
सप्रायश्चित्तानि।अव्यसनी पुनः पापरुचिर्न स्यात् ॥
१२-१६३-३९ पूर्वेषु त्रिषु सुरापब्रह्मघ्नगुरुतल्पगेषु तेषु मृतेषु
सपिण्डानामाशौचाभावात्तेषां प्रेतकर्मनिषेधाच्चेति भावः ॥
१२-१६३-४३ अवगर्ह्य विनिन्द्य
।स्पृष्ट्वाऽर्थचन्द्रादिनापनोद्य।गुरुतरं शेषादयधिकं पातकं
तस्य पलम् ॥
१२-१६३-४६ आहवमध्ये गोब्राह्मणरक्षार्थं संग्रामे शस्त्रेण
हतश्चेद्ब्राह्महा शुध्यते ॥
१२-१६३-५४ सवनीत्रिषवणस्नायी ।आत्रेयीं प्राप्तगर्भां स्रियम् ॥
१२-१६३-६० पृथक् एकैकस्योपपातकस्य प्रायश्चित्तं संवत्सरं चरेत् ॥
१२-१६३-६८ अभिशस्तस्य प्रायश्चित्तं सद्योऽकुर्वतः ॥
१२-१६३-६९ तस्य पतितस्य सहसेविनः संसर्गिणिः ॥
१२-१६३-७२ परिवेत्ता कनिष्ठः परिवित्तये ज्येष्ठाय भार्यां
स्नुषात्वेन प्रयच्छेत् ।एतां स्वेनाभुक्तां तवैवेयं स्नुषेति

मानपूर्वकं समर्पयेत्। तदा ज्येष्ठानुज्ञातो यवीयानन्तरं तां स्वीकुर्यात्। पाणिग्राहेण स्वदोषे क्षमापिते त्रयोऽपि पापान्मुच्यन्त इति सार्धश्लोयार्थः ॥
१२-१६३-७३ अमानुषीषु पशुजातिषु ॥
१२-१६३-७४ ऊर्ध्ववालं चमरीपुच्छं परिधाय रङ्गेऽव्रतरन् ब्राह्मण एवैतत्प्रायश्चित्तं कुर्यात् ॥
१२-१६३-७५ येन परिधानेन हेतुभूतेन ऊर्ध्ववालं यः कृन्तति छिनत्ति स उक्तं व्रतं संवत्सरं चरेत् ॥
१२-१६३-७७ अनास्तिकेषु आस्तिकेषु ॥

---

शन्तिपर्व-अध्यय१६४
॥ श्रीः ॥
१२.१६४. अध्यायः १६४

Mahabharata - Shanti Parva - Chapter Topics
भीष्मेण नकुलप्रश्नात्स्वङ्गोत्पत्तिकथनम् ॥ १.।
Mahabharata - Shanti Parva - Chapter Text

१२-१६४-० (७१५३४)
वैशंपायन उवाच। १२-१६४-०क्ष् (५८४३)
कथान्तरमथासाद्य स्वङ्गयुद्धविशारदः ।
नकुलः शरतल्पस्थमिदमाह पितामहाम् ॥ १२-१६४-१ (७१५३५)
नकुल उवाच। १२-१६४-२क्ष् (५८४४)
धनुः प्रहरणं श्रेष्ठमितिवादः पितामह ।
मतस्तु मम धर्मज्ञः खङ्ग एव सुसंशितः ॥ १२-१६४-२ (७१५३६)
छिन्ने च कार्मुके राजन्प्रक्षीणेषु शरेषु च ।
खङ्गेन शक्यते योद्धुमात्मानं परिरक्षितुम् ॥ १२-१६४-३ (७१५३७)
शरासनधरांश्चैव गदाशक्तिधरांस्तदा ।
एकः खङ्गधरो वीरः समर्थः प्रतिबाधितुम् ॥ १२-१६४-४ (७१५३८)
अत्र मे संशयश्चैव कौतूहलमतीव च ।
किंस्वित्प्रहरणं श्रेष्ठं सर्वयुद्धेषु पार्थिव ॥ १२-१६४-५ (७१५३९)
कथं चोत्पादितः खङ्गः कस्मै चार्थाय केन वा ।
पूर्वाचार्यं च खङ्गस्य प्रब्रवीहि पितामह ॥ १२-१६४-६ (७१५४०)
वैशंपायन उवाच। १२-१६४-७क्ष् (५८४५)
तस्य तद्वचनं श्रुत्वा माद्रीपुत्रस्य धीमतः ।
स्वरकौशलसंयुक्तं सूक्ष्मचित्रार्थवत्सुखम् ॥ १२-१६४-७ (७१५४१)
ततस्तस्योत्तरं वाक्यं स्वरवर्णोपपादितम् ।

शिक्षया चोपपन्नाय द्रोणशिष्याय पृच्छते ॥ १२-१६४-८ (७१५४२)
उवाच सर्वधर्मज्ञो धनुर्वेदस्य पारगः ।
शरतल्पगतो भीष्मो नकुलाय महात्मने ॥ १२-१६४-९ (७१५४३)
भीष्म उवाच। १२-१६४-१०क्ष् (५८४६)
तत्त्वं शृणुष्व माद्रेय यथैतत्परिपृच्छसि ।
प्रबोधितोऽस्मि भवता सानुमानिव पर्वतः ॥ १२-१६४-१० (७१५४४)
सलिलैकार्णवं तात पुरा सर्वमभूदिदम् ।
अप्रज्ञातमनाकाशमनिर्देश्यमहीतलम् ॥ १२-१६४-११ (७१५४५)
तमस्संवृतमस्पर्शमतिगम्भीरदर्शनम् ।
निःशब्दं चाप्रमेयं च तत्र जज्ञे पितामहः ॥ १२-१६४-१२ (७१५४६)
सोऽसृजद्वायुमग्निं च भास्करं चापि वीर्यवान् ।
आकाशममृजच्चोर्ध्वमधो भूमिं च नैर्ऋतिम् ॥ १२-१६४-१३ (७१५४७)
ततः सचन्द्रतारं च नक्षत्राणि ग्रहांस्तथा ।
संवत्सरानहोरात्रानृतूनथ लवान्क्षणान्। १२-१६४-१४ (७१५४८)
ततः शरीरं लोकस्थं स्थापयित्वा पितामहः ।
जनयामास भगवान्पुत्रानुत्तमतेजसः। १२-१६४-१५ (७१५४९)
मरीचिं भृगुमत्रिं च पुलस्त्यं पुलहं क्रतुम् ।
वसिष्ठाङ्गिरसौ चोभौ भरद्वाजं तथैव च ॥ १२-१६४-१६ (७१५५०)
प्रजापतिस्तथा दक्षः कन्याः षष्टिमजीजनात् ।
ताश्च ब्रह्मर्षीन्सर्वान्प्रजार्थं प्रतिपेदिरे ॥ १२-१६४-१७ (७१५५१)
ताभ्यो विश्वानि भूतानि देवाः पितृगणास्तथा ।
गन्धर्वाप्सरसश्चैव रक्षासि विविधानि च ॥ १२-१६४-१८ (७१५५२)
पतत्रिमृगमीनाश्च गावश्चैव महोरगाः ।
नानाकृतिबलाश्चान्ये जलक्षितिविचारिणः ॥ १२-१६४-१९ (७१५५३)
उद्भिज्जाः स्वेदजाश्चैव साण्डजाश्च जरायुजाः ।
अज्ञे तात जगत्सर्वं तथा स्थावरजङ्गमम् ॥ १२-१६४-२० (७१५५४)
अतः सर्गमिमं कृत्वा सर्वलोकपितामहः ।
अश्वतं वेदपठितं धर्मं च जुजुपे पुनः ॥ १२-१६४-२१ (७१५५५)
स्मन्धर्मे स्थिता देवाः सहाचार्यपुरोहिताः ।
---त्या वसवो रुद्राः ससाध्या मरुदश्विनः। १२-१६४-२२ (७१५५६)
भृ---त्र्यङ्गिरसः सिद्धाः कश्यपश्च तपोधनाः ।
वष्ठगौतमागस्त्यास्तथा नारदपर्वतौ ॥ १२-१६४-२३ (७१५५७)
ऋयो बालखिल्याश्च प्रभासाः सिकतास्तथा ।
घृगाच्या सोमवायव्या वैश्वानरमरीचिपाः ॥ १२-१६४-२४ (७१५५८)
करूपाश्चैव हंसाश्च ऋषयो वाऽग्नियोनयः ।
---पप्रस्थाः पृश्नयश्च स्थिता ब्रह्मानुशासने ॥ १२-१६४-२५ (७१५५९)

दानवेन्द्रास्त्वतिक्रम्य तत्पितामहशासनम् ।
धर्मस्यापनयं चक्रुः क्रोधलोभसमन्विताः ॥ १२-१६४-२६ (७१५६०)
हिरण्यकशिपुश्चैव हिरण्याक्षो विरोचनः ।
शम्बरो विप्रचित्तिश्च प्रह्लादो नमुचिर्बलिः ॥ १२-१६४-२७ (७१५६१)
एते चान्ये च बहवः सगणा दैत्यदानवाः ।
धर्मसेतुमतिक्रम्य रेमिरेऽधर्मनिश्चयाः ॥ १२-१६४-२८ (७१५६२)
सर्वे तुल्याभिजातीया यथा देवास्तथा वयम् ।
इत्येवं हेतुमास्थाय स्पर्धमानाः सुरर्षिभिः ॥ १२-१६४-२९ (७१५६३)
न प्रियं नाप्यनुक्रोशं चक्रुर्भूतेषु भारत ।
त्रीनुपायानतिक्रम्य दण्डेन रुरुधुः प्रजाः ॥ १२-१६४-३० (७१५६४)
न जग्मुः संविदं तैश्च दर्पादसुरसत्तमाः ।
अथ वै भगवान्ब्रह्मा सर्वलोकनमस्कृतः ॥ १२-१६४-३१ (७१५६५)
तदा हिमवतः पृष्ठे सुरम्ये पद्मतारके ।
शतयोजनविस्तारे मणिमुक्ताचयाचिते ॥ १२-१६४-३२ (७१५६६)
तस्मिन्गिरिवरे पुत्र पुष्पितद्रुमकानने ।
तस्थौ स विबुधश्रेष्ठो ब्रह्मा लोकार्थसिद्धये ॥ १२-१६४-३३ (७१५६७)
ततो वर्षसहस्रान्ते वितानमकरोत्प्रभुः ।
विधिना कल्पदृष्टेन यथोक्तेनोपपादितम् ॥ १२-१६४-३४ (७१५६८)
ऋषिभिर्यज्ञपटुभिर्यथावत्कर्मकर्तृभिः ।
मरुद्भिः परिसंकीर्णं दीप्यमानैश्च पावकैः ॥ १२-१६४-३५ (७१५६९)
काञ्चनैर्यज्ञभाण्डैश्च भ्राजिष्णुभिरलंकृतम् ।
वृतं देवगणैश्चैव प्रबभौ यज्ञमण्डलम् ॥ १२-१६४-३६ (७१५७०)
तथा ब्रह्मर्षिभिश्चैव सदस्यैरुपशोभितम् ।
अत्र घोरतमं वृत्तमृषीणां मे परिश्रुतम् ॥ १२-१६४-३७ (७१५७१)
चन्द्रमा विमलं व्योम यथाऽभ्युदिततारकम् ।
विदार्याग्निं तथा भूतमुत्थितं श्रूयते तदा ॥ १२-१६४-३८ (७१५७२)
लोनीत्पलसवर्णाभं तीक्ष्णदंष्ट्रं कृशोदरम् ।
प्रांशुमुद्धर्षणं चापि तथैव ह्यमितौजसम् ॥ १२-१६४-३९ (७१५७३)
अस्मिन्नुत्पद्यमाने च प्रचचास वसुंधरा ।
महोर्मिकलिलावर्तश्चुक्षुभे स महोदधिः ॥ १२-१६४-४० (७१५७४)
पेतुश्चोत्का महोत्पाताः शाखाश्च मुमुचुर्द्रुमाः ।
अप्रसन्ना दिशः सर्वाः पवनश्चाशिवो ववौ ।
मुहुर्मुहुश्च भूतानि प्राव्यथन्त भयात्तथा ॥ १२-१६४-४१ (७१५७५)
ततः स तुमुलं दृष्ट्वा तद्भूतं समुपस्थितम् ।
महर्षिसुरगन्धर्वानुवाचेदं पितामहः ॥ १२-१६४-४२ (७१५७६)
मयैवं चिन्तितं भूतमसिर्नामैष वीर्यवान् ।

रक्षणार्थाय लोकस्य वधाय च सुरद्विषाम् ॥१२-१६४-४३ (७१५७७)
ततस्तद्रूपमुत्सृज्य बभौ निस्त्रिंश एव सः ।
विमलस्तीक्ष्णधारश्च कालान्तक इवोद्यतः ॥१२-१६४-४४ (७१५७८)
ततस्तं नीलकण्ठाय रुद्रायर्षभकेतवे ।
ब्रह्मा ददावसिं तीक्ष्णमधर्मप्रतिवारणम् ॥१२-१६४-४५ (७१५७९)
ततः स भगवान्रुद्रो ब्रह्मर्षिगणपूजितः ।
प्रगृह्यासिममेयात्मा रूपमन्यच्चकार ह ॥१२-१६४-४६ (७१५८०)
चतुर्बाहुः स्पृशन्मूर्ध्ना भूमिष्ठोऽपि दिशो दश ।
ऊर्ध्वदृष्टिर्महाबाहुर्मुखाज्ज्वालाः समुत्सृजन् ॥१२-१६४-४७ (७१५८१)
विकुर्वन्बहुधा वर्णान्नीलपाण्डुरलोहितान् ।
बिभ्रत्कृष्णाजिनं वासो हेमप्रवरतारकम् ॥१२-१६४-४८ (७१५८२)
नेत्रं चैकं ललाटस्थं भास्करप्रतिमं महत् ।
शुशुभाते सुविमले द्वे नेत्रे कृष्णपिङ्गले ॥१२-१६४-४९ (७१५८३)
ततो देवो महादेवः शूलपाणिर्भगाक्षिहा ।
संप्रगृह्य तु निस्त्रिंशं कालाग्निसमवर्चसम् ॥१२-१६४-५० (७१५८४)
त्रिकूटं चर्म चोद्यम्य सविद्युतमिवाम्बुदम् ।
चचार विविधान्मार्गान्दानवान्तचिकीर्षया ।
विधुन्वन्नसिमाकाशे तथा युद्धचिकीर्षया ॥ १२-१६४-५१ (७१५८५)
तस्य नादं विनदतो महाहासं च मुञ्चतः ।
बभौ प्रतिभयं रूपं तदा रुद्रस्य भारत ॥१२-१६४-५२ (७१५८६)
तद्रूपधारिणं रुद्रं रौद्रकर्मचिकीर्षया ।
निशाम्य दानवाः सर्वे हृष्टाः समभिदुद्रुवुः ॥१२-१६४-५३ (७१५८७)
अश्मभिश्चाप्यवर्षन्त प्रदीप्तैश्च तथोल्मुकैः ।
घोरैः प्रहरणैश्चान्यैः क्षुरधारैरयस्मयैः ॥१२-१६४-५४ (७१५८८)
ततस्तु दानवानीकं संप्रणेतृकमच्युत ।
खड्गं दृष्ट्वा बलाधूतं प्रमुमोह चचाल च ॥१२-१६४-५५ (७१५८९)
चित्रं शीघ्रपदत्वाच्च चरन्तमसिपाणिनम् ।
तमेकमसुराः सर्वे सहस्रमिति मेनिरे ॥१२-१६४-५६ (७१५९०)
छिन्दन्भिन्दन्रुजन्कृन्तन्दारयन्प्रथमन्नपि ।
अचरद्वैरिसङ्घेषु दावाग्निरिव कक्षगः ॥१२-१६४-५७ (७१५९१)
असिवेगप्रभग्नास्ते छिन्नबाहूरुवक्षसः ।
उत्तमाङ्गप्रकृत्ताश्च पेतुरुर्व्यां महाबलाः ॥१२-१६४-५८ (७१५९२)
अपरे दानवा भग्नाः खड्गधारावपीडिताः ।
अन्योन्यमभिनर्दन्तो दिशः संप्रतिपेदिरे ॥१२-१६४-५९ (७१५९३)
भूमिं केचित्प्रविविशुः पर्वतानपरे तथा ।
अपरे जग्मुराकासमपरेऽम्भः समाविशन् ॥१२-१६४-६० (७१५९४)

तस्मिन्महति संवृत्ते समरे भृशदारुणे ।
बभूव भूः प्रतिभया मांसशोणितकर्दमा ॥ १२-१६४-६१ (७१५९५)
दानवानां शरीरैश्च पतितैः शोणितोक्षितैः ।
समाकीर्णा महाबाहो शैलैरिव सकिंशुकैः ॥ १२-१६४-६२ (७१५९६)
ग्रुधिरेण परिक्लिन्ना प्रबभौ वसुधा तदा ।
रक्तार्द्रवसना श्यामा नारीव मदविह्वला ॥' १२-१६४-६३ (७१५९७)
स रुद्रो दानवान्हत्वा कृत्वा धर्मोत्तरं जगत् ।
रौद्रं रुपमथाक्षिप्य चक्रे रूपं शिवं शिवः ॥ १२-१६४-६४ (७१५९८)
ततो महर्षयः सर्वे सर्वे देवगणास्तथा ।
जयेनाद्भुतकल्पेन देवदेवमथास्तुवन् ॥ १२-१६४-६५ (७१५९९)
ततः स भगवान्रुद्रो दानवक्षतजोक्षितम् ।
असिं धर्मस्य गोप्तारं ददौ सत्कृत्य विष्णवे ॥ १२-१६४-६६ (७१६००)
विष्णुर्मरीचये प्रादान्मरीचिर्भार्गवाय तम् ।
महर्षिभ्यो ददौ खङ्गमृषयो वासवाय च ॥ १२-१६४-६७ (७१६०१)
महेन्द्रो लोकपालेभ्यो लोकपाला तु पुत्रक ।
मनवे सूर्यपुत्राय ददुः खङ्गं सुविस्तरम् ॥ १२-१६४-६८ (७१६०२)
ऊचुश्चैनं तथा वाक्यं मानुषाणां त्वमीश्वरः ।
असिना धर्मगर्भेण पालयस्व प्रजा इति ॥ १२-१६४-६९ (७१६०३)
धर्मसेतुमतिक्रान्ताः स्थूलसूक्ष्मार्थकारणात् ।
विभज्य दण्डं रक्ष्याः स्युर्धर्मतो न यदृच्छया ॥ १२-१६४-७० (७१६०४)
दुर्वाचा निग्रहो दण्डो हिरण्यबहुलस्तथा ।
व्यङ्गता च शरीरस्य वधो नाल्पस्य करणात् ॥ १२-१६४-७१ (७१६०५)
असेरेतानि रूपाणि दुर्वारादीनि नि दशेत् ।
असेरेवं प्रमाणानि परमाण्यभ्यतिक्रमात् ॥ १२-१६४-७२ (७१६०६)
अभिषिच्याथ पुत्रं स्वं प्रजानामधिपं ततः ।
मनुः प्रजानां रक्षार्थं क्षुपाय प्रददावसिम् ॥ १२-१६४-७३ (७१६०७)
क्षुपाज्जग्राह चेक्ष्वाकुरिक्ष्वाकोश्च पुरूरवाः ।
आयुश्च तस्माल्लोभे तं नहुषश्च ततो भुवि ॥ १२-१६४-७४ (७१६०८)
ययातिर्नहुषाच्चापि पूरुस्तस्माच्च लब्धवान् ।
आधूर्तश्च गयस्तस्मात्ततो भूमिशयो नृपः ॥ १२-१६४-७५ (७१६०९)
भरतश्चापि दौष्यन्तिर्लेभे भूमिशयादसिम् ।
तस्माल्लोभे च धर्मज्ञो राजन्नैलबिलस्तथा ॥ १२-१६४-७६ (७१६१०)
ततस्त्वैलबिलाल्लेभे धुन्धुमारो नरेश्वरः ।
धुन्धुमाराच्च काम्भोजो मुचुकुन्दस्ततोऽभजत् ॥ १२-१६४-७७ (७१६११)
मुचुकुन्दान्मरुत्तश्च मरुत्तादपि रैवतः ।
रैवताद्युवनाश्वश्च युवनाश्वात्ततो रघुः ॥ १२-१६४-७८ (७१६१२)

इक्ष्वाकुवंशजस्तस्माद्धरिणाश्वः प्रतापवान् ।
हरिणाश्वादसिं लेभे शुनकः शुनकादपि ॥ १२-१६४-७९ (७१६१३)
उशीनरो वै धर्मात्मा तस्माद्भोजाः सयादवाः ।
यदुभ्यश्च शिबिर्लेभे शिबेश्चापि प्रतर्दनः ॥ १२-१६४-८० (७१६१४)
प्रतर्दनादष्टकश्च रुशदश्वोऽष्टकादपि ।
रुशदश्वाद्भरद्वाजो द्रोणस्तस्मात्कृपस्ततः ।
ततस्त्वं भ्रातृभिः सार्धं परमासिमवाप्तवान् ॥ १२-१६४-८१ (७१६१५)
कृत्तिकास्तस्य नक्षत्रमसेरग्निश्च दैवतम् ।
रोहिण्यो गोत्रमस्याथ रुद्राश्च गुरुसत्तमाः ॥ १२-१६४-८२ (७१६१६)
असेरष्टौ हि नामानि रहस्यानि निबोध मे ।
पाण्डवेय सदा यानि कीर्तयँल्लभते जयम् ॥ १२-१६४-८३ (७१६१७)
असिर्विशसनः खड्गस्तीक्ष्णचर्मा दुरासदः ।
श्रीगर्भो विजयश्चैव धर्मपालस्तथैव च ॥ १२-१६४-८४ (७१६१८)
अग्र्यः प्रहरणानां च खड्गो भुवि परिश्रुतः ।
महेश्वरप्रणीतश्च पुराणे निश्चयं गतः ।
ग्एतानि चैव नामानि पुराणे निश्चितानि वै ॥' १२-१६४-८५ (७१६१९)
पृथुस्तूत्पादयामास धनुराद्यमरिंदमः ।
तेनेयं पृथिवी दुग्धा सस्यानि सुबहून्यपि ।
धर्मेण च यथापूर्वं वैन्येन परिरक्षिता ॥ १२-१६४-८६ (७१६२०)
तदेतदार्षं माद्रेय प्रमाणं कर्तुमर्हसि ।
असेश्च पूजा कर्तव्या सदा युद्धविशारदैः ॥ १२-१६४-८७ (७१६२१)
इत्येष प्रथमः कल्पो मया ते कथितः पुनः ।
एवमेवासिसर्गोऽयं यथावद्भरतर्षभ ॥ १२-१६४-८८ (७१६२२)
सर्वथा तमिह श्रुत्वा स्वङ्गस्यागममुत्तमम् ।
लभते पुरुषः कीर्तिं प्रेत्य चानन्त्यमश्नुते ॥ ॥ १२-१६४-८९ (७१६२३)

इति श्रीमन्महाभारते शान्तिपर्वणि आपद्धर्मपर्वणि
चतुःषष्ट्यधिकशततमोऽध्यायः ॥ १६४. ।
Mahabharata - Shanti Parva - Chapter Footnotes

१२-१६४-१ कथान्तरं आपद्धर्माणं साङ्गानां समाप्तत्वात् कथाया
अवसानं असाद्य प्राप्य ॥
१२-१६४-१० धातुमानिव पर्वत इति झ । पाठः। तत्र धातुमान्
गैरिकवान् रुधिरोक्षितत्वादित्यर्थः ॥
१२-१६४-१९ प्लवङ्ग श्च महोरगा इति झ । पाठः ॥
१२-१६४-२१ धर्मं प्रयुयुजे तत इति झ । पाठः ॥

१२-१६४-२५ वानप्रस्था इति झ ।पाठः ॥
१२-१६४-३२ पद्मानीव तारका यत्र लग्नास्तस्मिन् पद्मतारके ।अत्यन्तमुच्छ्रित इत्यर्थः ॥
१२-१६४-३५ समिद्भिः परिकीर्णमिति झ ।पाठः ॥
१२-१६४-३८ विकीर्याग्निमिति झ ।पाठः ॥
१२-१६४-५१ त्रिकूटं त्रीणि कूटानि कपटानि पार्श्वयोरग्ने च तीक्ष्णधाररूपाणि परविदारकाणि यस्मिंन् ॥
१२-१६४-७२ दुर्वागादीनि निर्दिशेदिति ट ।ड।पाठः ॥

---

शन्तिपर्व-अध्यय१६५
॥ श्रीः ॥
१२.१६५. अध्यायः १६५

Mahabharata - Shanti Parva - Chapter Topics
स्वस्वाभिमतार्थकथनाय चोदितैर्विदुरार्जुनभीमसेनैः क्रमेण धर्मार्थकामेषु अभिष्टुतेषु युधिष्ठिरेण मोक्षप्रशंसनम् ॥१.।
Mahabharata - Shanti Parva - Chapter Text

१२-१६५-० (७१६२४)
वैशंपायन उवाच।१२-१६५-०क्ष् (५८४७)
इत्युक्तवति भीष्मे तु तूष्णींभूते युधिष्ठिरः ।
पप्रच्छावसथं गत्वा भ्रातॄन्विदुरपञ्चमान् ॥१२-१६५-१ (७१६२५)
धर्मे चार्थे च कामे च लोकवृत्तिः समाहिता ।
तेषां गरीयान्कतमो मध्यमः को लघुश्च कः ॥१२-१६५-२ (७१६२६)
कस्मिंश्चात्मा नियन्तव्यस्त्रिवर्गविजयाय वै ।
संपृष्टा नैष्ठिकं वाक्यं यथाबद्वक्तुमर्हथ ॥१२-१६५-३ (७१६२७)
ततोऽर्थगतितत्त्वज्ञः प्रथमं प्रतिभानवान् ।
जगाद विदुरो वाक्यं धर्मशास्त्रमनुस्मरन् ॥१२-१६५-४ (७१६२८)
विदुर उवाच।१२-१६५-५क्ष् (५८४८)
बहुश्रुतं तपस्त्यागः श्रद्धा यज्ञक्रिया क्षमा ।
भावशुद्धिर्दया सत्यं संयमश्चात्मसंपदः ॥१२-१६५-५ (७१६२९)
एतदेवाभिपद्यस्व मा ते भूच्चलितं मनः ।
एतन्मूलौ हि धर्मार्थावेतदेकपदं हितम् ॥१२-१६५-६ (७१६३०)
धर्मेणैवर्षयस्तीर्णा धर्मे लोकाः प्रतिष्ठिताः ।
धर्मेण देवा दिवि च धर्मे चार्थः समाहितः ॥१२-१६५-७ (७१६३१)
धर्मो राजन्गुणः श्रेष्ठो मध्यमो ह्यर्थ उच्यते ।
कामो यवीयानिति च प्रवदन्ति मनीषिणः ॥१२-१६५-८ (७१६३२)

तस्माद्धर्मप्रधानेन भवितव्यं यतात्मना ।
तथा च सर्वभूतेषु वर्तितव्यं यतात्मना ॥ १२-१६५-९ (७१६३३)
वैशंपायन उवाच। १२-१६५-१०क्ष् (५८४९)
समाप्तवचने तस्मिन्भीमकर्मा धनञ्जयः ।
ततोऽर्थगतितत्त्वज्ञो जगौ वाक्यं प्रचोदितः ॥ १२-१६५-१० (७१६३४)
कर्मभूमिरियं राजन्निह वार्ता प्रशस्यते ।
कृषिर्वाणिज्यगोरक्षं शिल्पानि विविधानि च ॥ १२-१६५-११ (७१६३५)
अर्थ इत्येव सर्वेषां कर्मणामव्यतिक्रमः ।
निवृत्तेऽर्थे न वर्तेते धर्मकामाविति श्रुतिः ॥ १२-१६५-१२ (७१६३६)
विषहेतार्थवान्धर्ममाराधयितुमुत्तमम् ।
कामं च चरितुं शक्तो दुष्प्रापमकृतात्मभिः ॥ १२-१६५-१३ (७१६३७)
अर्थस्यावयवावेतौ धर्मकामाविति श्रुतिः ।
अर्थसिद्ध्या विनिर्वृत्तावुभावेतौ भविष्यतः ॥ १२-१६५-१४ (७१६३८)
तद्गतार्थं हि पुरुषं विशिष्टतरयोनयः ।
ब्रह्माणमिव भूतानि सततं पर्युपासते ॥ १२-१६५-१५ (७१६३९)
जटाजिनधरा दान्ताः पङ्कदिग्धा जितेन्द्रियाः ।
मुण्डा निस्तन्तवश्चापि वसन्त्यर्थार्थिनः पृथक् ॥ १२-१६५-१६ (७१६४०)
काषायवसनाश्चान्ये श्मश्रुला हि सुसंयताः ।
विद्वांसश्चैव शान्ताश्च मुक्ताः सर्वपरिग्रहैः ॥ १२-१६५-१७ (७१६४१)
ग्अर्थार्थिनः सन्ति नित्यं परितष्यन्ति कर्मभिः।'
अर्थार्थिनः सन्ति केचिदपरे स्वर्गकाङ्क्षिणः ।
कुलप्रत्यागमाश्चैके स्वंस्वं धर्ममनुष्ठिताः ॥ १२-१६५-१८ (७१६४२)
आस्तिका नास्तिकाश्चैव नियताः संयमे परे ।
अप्रज्ञानं तमोभूतं प्रज्ञानं तु प्रकाशिता ॥ १२-१६५-१९ (७१६४३)
भृत्यान्भोगैर्द्विषो दण्डैर्यो योजयति सोऽर्थवान् ।
एतन्मतिमतांश्रेष्ठ मतं मम यथातथम् ।
अनयोस्तु विबोध त्वं वचनं शक्रकण्वयोः ॥ १२-१६५-२० (७१६४४)
वैशंपायन उवाच। १२-१६५-२१क्ष् (५८५०)
तथा धर्मार्थकुशलौ माद्रीपुत्रावनन्तरम् ।
नकुलः सहदेवश्च वाक्यमूचतुरुत्तमम् ॥ १२-१६५-२१ (७१६४५)
आसीनश्च शयानश्च विचरन्नपि वा स्थितः ।
अर्थयोगं दृढं कुर्याद्योगैरुच्चावचैरपि ॥ १२-१६५-२२ (७१६४६)
अस्मिंस्तु वै विनिर्वृत्ते दुर्लभे परमप्रिये ।
इह कामानवाप्नोति प्रत्यक्षं नात्र संशयः ॥ १२-१६५-२३ (७१६४७)
योऽर्थो धर्मेण संयुक्तो धर्मो यश्चार्थसंयुतः ।
मध्विवामृतसंसृष्टं तस्मादेतौ मताविह ॥ १२-१६५-२४ (७१६४८)

अनर्थस्य न कामोस्ति तथाऽर्थोऽधर्मिणः कुतः ।
तस्मादुद्विजले लोको धर्मार्थाभ्यां बहिष्कृतात् ॥१२-१६५-२५ (७१६४९)
तस्माद्धर्मप्रधानेन साध्योऽर्थः संयतात्मना ।
विश्वस्तेषु हि भूतेषु कल्पते सर्वमेव हि ॥१२-१६५-२६ (७१६५०)
धर्मं समाचरेत्पूर्वं ततोऽर्थं धर्मसंयुतम् ।
ततः कामं चरेत्पश्चात्सिद्धार्थस्य हि तत्फलम् ॥१२-१६५-२७ (७१६५१)
वैशंपायन उवाच।१२-१६५-२८क्ष् (५८५१)
विरेमतुस्तु तद्वाक्यमुक्त्वा तावश्विनोः सुतौ ।
भीमसेनस्ततो वाक्यमिदं वक्तुं प्रचक्रमे ॥१२-१६५-२८ (७१६५२)
नाकामः कामयत्यर्थं नाकामो धर्ममिच्छति ।
नाकामः कामयानोऽस्ति तस्मात्कामो विशिष्यते ॥१२-१६५-२९ (७१६५३)
कामेन युक्ता ऋषयस्तपस्येव समाहिताः ।
पलाशाः शाकमूलाशा वायुभक्षाः सुसंयताः ॥१२-१६५-३० (७१६५४)
वेदोपवेदेष्वपरे युक्ताः स्वाध्यायपारगाः ।
श्राद्धे यज्ञक्रियायां च तथा दानप्रतिग्रहे ॥१२-१६५-३१ (७१६५५)
वणिजः कर्षका गोपाः कारवः शिल्पिनस्तथा ।
देशधर्मकृतश्चैव युक्ताः कामेन कर्मसु ॥१२-१६५-३२ (७१६५६)
समुद्रं वा विशन्त्यन्ये नराः कामेन संयुताः ।
कामो हि विविधाकारः सर्वं कामेन संततम् ॥१२-१६५-३३ (७१६५७)
नास्ति नासीन्न भविता भूतं काममृते परम् ।
एतत्सारं महाराज धर्मार्थावत्र संश्रितौ ॥१२-१६५-३४ (७१६५८)
नवनीतं यथा दध्नस्तथा कामोऽर्थधर्मतः ।
श्रेयस्तैलं न पिण्याको घृतं श्रेय उदश्वितः ॥१२-१६५-३५ (७१६५९)
श्रेयः पुष्पफलं काष्ठात्कामो धर्मार्थयोर्वरः ।
पुष्पतो मध्विव परं कामात्संजायते सुखम् ।
कामो धर्मार्थयोर्योनिः कामश्चाथ तदात्मकः ॥ १२-१६५-३६ (७१६६०)
श्नाकामतो ब्राह्मणाः स्वन्नमर्था
न्नाकामतो ददति ब्राह्मणेभ्यः ।
नाकामतो विविधा लोकचेष्टा
तस्मात्कामः प्राक् त्रिवर्गस्य दृष्टः ॥ ১২-१६५-३७ (७१६६१)
सुचारुवेषाभिरलंकृताभि
र्मदोत्कटाभिः प्रियवादिनीभिः ।
रमस्व योषिद्भिरुपेत्य कामं
कामो हि राजन्परमाभिरामः ॥ १२-१६५-३८ (७१६६२)
बुद्धिर्ममैषा परिखास्थितस्य
माभूद्विचारस्तव धर्मपुत्र ।

स्वात्संहितं सद्भिरफल्गुसार
मसस्तवाक्यं परमानृशंसम् ॥ १२-१६५-३९ (७१६६३)
वर्मार्थकामाः सममेव सेव्या
यो ह्येकभक्तः स नरो जघन्यः ।
द्वयोस्तु सक्तं प्रवदन्ति मध्यमं
स उत्तमो योऽभिरतस्त्रिवर्गे ॥ १२-१६५-४० (७१६६४)
प्राज्ञः सुहृच्चन्दनसारलिप्तो
विचित्रमाल्याभरणैरुपेतः ।
ततो वचः संग्रहविस्तरेण
प्रोक्त्वाऽथ वीरान्विरराम भीमः ॥ १२-१६५-४१ (७१६६५)
ततो मुहूर्तादथ धर्मराजो
वाक्यानि तेषामनुचिन्त्य सम्यक् ।
उवाच वाचाऽवितथं स्मयन्वै
बहुश्रुतो धर्मभृतां वरिष्ठः ॥ १२-१६५-४२ (७१६६६)
निःसंशयं निश्चितसर्वशास्त्राः
सर्वे भवन्तो विदितप्रमाणाः ।
विज्ञातुकामस्य ममेह वाक्य
मुक्तं यद्वो नैष्ठिकं तच्छ्रुतं मे ।
इहानुवंशं गदतो ममापि
वाक्यं निबोधध्वमनन्यभावाः ॥ १२-१६५-४३ (७१६६७)
यो वै न पापे निरतो न पुण्ये
नार्थे न धर्मे मनुजो न कामे ।
विमुक्तदोषः समफल्गुसारो
विमुच्यते दुःखसुखात्स सिद्धः ॥ १२-१६५-४४ (७१६६८)
भूतानि जातीमरणान्वितानि
जराविकारैश्च समन्वितानि ।
भूयश्च तैस्तैरुपसेवितानि
मोक्षं प्रशंसन्ति न तं च विद्मः ॥ १२-१६५-४५ (७१६६९)
स्नेहेन बद्धस्य न सन्ति तानि
चैवं स्वयंभूर्भगवानुवाच ।
बोधाय निर्वाणपरा भवन्ति
तस्मान्न कुर्यात्प्रियमप्रियं च ॥ १२-१६५-४६ (७१६७०)
एतच्च मुख्यं न तु कामकारो
यथा नियुक्तोऽस्मि तथा करोमि ।
भूतानि सर्वाणि विधिर्नियुङ्क्ते
विधिर्बलीयानिति वित्त सर्वे ॥ १२-१६५-४७ (७१६७१)

न कर्मणाऽप्नोत्यनवाप्यमर्थं
यद्भावि तद्वै भवतीति विद्धः ।
त्रिवर्गहीनोऽपि हि विन्दतेऽर्थं
तस्माददो लोकहिताय गुह्यम् ॥ १२-१६५-४८ (७१६७२)
वैशंपायन उवाच। १२-१६५-४९x (५८५२)
तदग्र्यबुद्धेर्वचनं मनोनुगं
समस्तमाज्ञाय तथाहि हेतुमत् ।
तदा प्रणेदुश्च जहर्षिरे च ते
कुरुप्रवीराय च चक्रिरेऽञ्जलिम् ॥ १२-१६५-४९ (७१६७३)
सुचारुवर्णाक्षरशब्दभूषितां
मनोनुगां निर्गतवाक्यकण्टकाम् ।
निशम्य तां पार्थिवभाषितां गिरं
पार्थस्य सर्वे प्रणता बभूवुः ॥ १२-१६५-५० (७१६७४)
तथैव राजा प्रशशंस् वीर्यवान्
पुनश्च पप्रच्छ सरिद्वरासुतम् ।
धर्मार्थकामेषु विनिश्चयज्ञं
ततः परं धर्ममहीनचेतसम् ॥ ॥ १२-१६५-५१ (७१६७५)

इति श्रीमन्महाभारते शान्तिपर्वणि आपद्धर्मपर्वणि
पञ्चषष्ट्यधिकशततमोऽध्यायः ॥१६५.।
Mahabharata - Shanti Parva - Chapter Footnotes

१२-१६५-३ त्रिवर्गविजयाय कामक्रोधलोभानां जयाय ॥
१२-१६५-१२ अव्यतिक्रमः मर्यादा ॥
१२-१६५-१६ निस्तन्तवः नैष्ठिकब्रह्मचारिणः ॥
१२-१६५-१७ श्मश्रुला हीनिषेविण इति झ ।पाठः ॥
१२-१६५-२० वचनं शुककण्वयोरिति ड द्व पाठः ॥
१२-१६५-२५ अनर्थस्य अर्थहीस्य ।अधर्मिणः धर्महीनस्य ॥
१२-१६५-२७ अत्र धर्मार्थयोः समत्वेऽपि धर्मस्य
पूर्वत्वाद्विदुरमतमेवैतदीषद्भेदेन दर्शितम् ॥
१२-१६५-३५ उदश्वितः तक्रात् ॥
१२-१६५-३७ अकामतः कामं विना ।केवलार्थात्स्वन्नं मृष्टान्नं नास्ति ॥
१२-१६५-३९ परिस्वास्थितस्य परितः खाता परिखा ।सर्वतो मूलशोध
इत्यर्थः। तत्र स्थितस्य अनृशंसमनिष्ठुरम् ॥
१२-१६५-४० तयोस्तु दाक्ष्यं प्रवदन्तीति झ ।पाठः ॥
१२-१६५-४३ नैष्ठिकं सिद्धान्तरूपम् ।एतेन पूर्वे सर्वे पूर्वपक्षा

एवेत्युक्तम् ॥
१२-१६५-४८ अर्थं मोक्षम् । लोकहितायं मोक्षाय। त्रिवर्गहीनोऽपि गुह्यमर्थं रहस्यं ज्ञानं विन्दते लभते पूर्वोक्तोऽधिकारी ॥

---

शन्तिपर्व-अध्यय१६६
॥ श्रीः ॥
१२.१६६. अध्यायः १६६

Mahabharata - Shanti Parva - Chapter Topics
भीष्मेण युधिष्ठिरंप्रति संधेयासंधेयपुरुषलक्षणकथनम् ॥ १.।
Mahabharata - Shanti Parva - Chapter Text

१२-१६६-० (७१६७६)
युधिष्ठिर उवाच। १२-१६६-०क्ष् (५८५३)
पितामह महाप्राज्ञ कुरूणां प्रीतिवर्धन ।
प्रश्नं कंचित्प्रवक्ष्यामि तन्मे व्याख्यातुमर्हसि ॥ १२-१६६-१ (७१६७७)
कीदृशा मानवाः सेव्याः कै प्रीति परमा भवेत् ।
आयत्यां च तदात्वे च के क्षमास्तान्वदस्व मे ॥ १२-१६६-२ (७१६७८)
न हि तत्र धनं स्फीतं न च संबन्धिबान्धवाः ।
तिष्ठन्ति यत्र सुहृदस्तिष्ठन्तीति मतिर्मम ॥ १२-१६६-३ (७१६७९)
दुर्लभो हि सुहृच्छ्रोता दुर्लभश्च हितः सुहृत् ।
एतद्धर्मभृतां श्रेष्ठ सर्वं व्याख्यातुमर्हसि ॥ १२-१६६-४ (७१६८०)
भीष्म उवाच। १२-१६६-५क्ष् (५८५४)
सन्धेयान्पुरुषान्राजन्नसन्धेयांश्च तत्त्वतः ।
वदतो मे निबोध त्वं निखिलेन युधिष्ठिर ॥ १२-१६६-५ (७१६८१)
लुब्धः क्रूरस्त्यक्तधर्मा निकृतिः शठ एव च ।
क्षुद्रः पापसमाचारः सर्वशङ्की तथाऽलसः ॥ १२-१६६-६ (७१६८२)
दीर्घसूत्रोऽनृजुः क्रुष्टो गुरुदारप्रधर्षकः ।
व्यसने यः परित्यागी दुरात्मा निरपत्रपः ॥ १२-१६६-७ (७१६८३)
सर्वतः पापदर्शी च नास्तिको वेदनिन्दकः ।
संप्रकीर्णेन्दियो लोके यः कालनिरतश्चरेत् ॥ १२-१६६-८ (७१६८४)
असभ्यो लोकविद्विष्टः समये चानवस्थितः ।
पिशुनोऽथाकृतप्रज्ञो मत्सरी पापनिश्चयः ॥ १२-१६६-९ (७१६८५)
दुःशीलोऽथाकृतात्मा च नृशंसः कितवस्तथा ।
मित्रैरपकृतिर्नित्यमटतेऽर्थं धनेप्सया ॥ १२-१६६-१० (७१६८६)
ददतश्च यथाशक्ति यो न तुष्यति मन्दधीः ।

अधैर्यमपि यो युङ्क्ते सदा मित्रं नराधमः ॥ १२-१६६-११ (७१६८७)
अस्थानक्रोधनो यश्च अकस्माच्च विरज्यते ।
सुहृदश्चैव कल्याणानाशु त्यजति किल्बिपी ॥ १२-१६६-१२ (७१६८८)
अल्पेऽप्यपकृते मूढे न संस्मरनि यत्कृतम् ।
कार्यसेवी च मित्रेषु मित्रद्वेषी नराधिप। १२-१६६-१३ (७१६८९)
शत्रुर्मित्रमुखो यश्च जिह्मप्रेक्षी विलोचनः ।
न तुष्यति च कल्याणे यम्त्यजेत्तादृशं नरम् ॥ १२-१६६-१४ (७१६९०)
पानपो द्वेषणः क्रोधी निर्घृणः परुपस्तथा ।
परोपतापी मित्रध्रुक् तथा प्राणिवधे रतः ॥ १२-१६६-१५ (७१६९१)
कृतघ्नश्चाधमो लोके न सन्धेयः कथंचन ।
मित्रेद्वेषी ह्यसंधेयः सन्धेयानपि मे शृणु ॥ १२-१६६-१६ (७१६९२)
कुलीना वाक्यसंपन्ना ज्ञानविज्ञानकोविदाः ।
रूपवन्तो गुणोपेतास्तथाऽलुब्धा जितश्रमाः ॥ १२-१६६-१७ (७१६९३)
सन्मित्राश्च कृतज्ञाश्च सर्वज्ञा लोभवर्जिताः ।
माधुर्यगुणसंपन्नाः सत्यसन्धा जितेन्द्रियाः ॥ १२-१६६-१८ (७१६९४)
व्यायामशीलाः सततं भृत्यपुत्राः कुलोद्वहाः ।
दोषैः प्रमुक्ताः प्रथितास्ते ग्राह्याः पार्थिवैर्नराः ॥ १२-१६६-१९ (७१६९५)
यथाशक्ति समाचाराः संप्रतुष्यन्ति हि प्रभो ।
नास्थाने क्रोधवन्तश्च न चाकस्माद्विरागिणः ॥ १२-१६६-२० (७१६९६)
विरक्ताश्च न दुष्यन्ति मनसाऽप्यर्थकोविदाः ।
आत्मानं पीडयित्वाऽपि सुहृत्कार्यपरायणाः ।
विरज्यन्ति न मित्रेभ्यो वासो रक्तमिवाविकम् ॥ १२-१६६-२१ (७१६९७)
दोषांश्च लोभमोहादीनर्थेषु युवतीपु च ।
न दर्शयन्ति सुहृदो विश्वस्ता बन्धुवत्सलाः ॥ १२-१६६-२२ (७१६९८)
लोष्टकाञ्चनतुल्यार्थाः सुहृत्सु दृढबुद्धयः ।
ये चरन्त्यनभीमाना निसृष्टार्थविभूषणाः ।
संगृह्णन्तः परिजनं स्वाम्यर्थपरमाः सदा ॥ १२-१६६-२३ (७१६९९)
ईदृशैः पुरुषश्रेष्ठैर्यः सन्धिं कुरुते नृपः ।
तस्य विस्तीर्यते राज्यं ज्योत्स्ना ग्रहपतेरिव ॥ १२-१६६-२४ (७१७००)
सत्ववन्तो जितक्रोधा बलवन्तो रणे सदा ।
जन्मशीलगुणोपेताः सन्धेयाः पुरुषोत्तमाः। १२-१६६-२५ (७१७०१)
ये च दोपसमायुक्ता नराः प्रोक्ता मयाऽन ।
तेषामप्यधमा राजन्कृतघ्ना मित्रघातकाः ।
त्यक्तव्यास्तु दुराचाराः सर्वेषामिति निश्चयः। ॥ १२-१६६-२६ (७१७०२)

इति श्रीमन्महाभारते शान्तिपर्वणि आपद्धर्मपर्वणि

षट्षष्ट्यधिकशततमोऽध्यायः ॥ १६६.।

Mahabharata - Shanti Parva - Chapter Footnotes

१२-१६६-३ मित्रस्यार्थादिभ्योऽन्तरङ्गत्वमाह नहीति ॥
१२-१६६-५ सन्धेयान नित्रीकर्तुं योग्यान् ॥
१२-१६६-७ क्रुष्टो लोकनिन्दितः ॥
१२-१६६-१० नित्यमिच्छतेऽर्थं परस्य य इति झ ।पाठः ॥
१२-१६६-१२ कार्यार्थमेव सेवते न तु धर्मार्धमिति कार्ययेती ॥
१२-१६६-१४ विमोचनः विपरीतदृष्टिः ॥
१२-१६६-१६ छिद्रान्वेपी ह्यसन्धेयं इति झ ।पाठः ॥
१२-१६६-२१ वासो रक्तमिवाधिकं मेपकम्वलः ॥
१२-१६६-२६ कृतं उपकारं घ्नन्ति वाचाऽपलापेन वाते कृतघ्नाः
त एव उपकर्तुर्नाशकरामिबहुहः ।

---

शन्तिपर्व-अध्यय१६७
॥ श्रीः ॥
१२.१६७. अध्यायः १६७

Mahabharata - Shanti Parva - Chapter Topics

भीष्मेण युधिष्ठिरंप्रति कृतघ्नमित्रद्रोहिलक्षणकथनाय
दृष्टान्ततया गौतमकथाकथनारम्भः
॥ १.। ब्राह्मणाधमेनकेनचिद्गौतमकुलजेन धनार्जनाय
दस्युग्रामप्रवेशः ॥ २.। तत्र केनचिद्दस्युवरेण
भर्तृविरहितनारीसमर्पणादिना सत्कृतेन गौतमेन
दस्युवृत्त्योपजीवनम् ॥ ३.।

Mahabharata - Shanti Parva - Chapter Text

१२-१६७-० (७१७०३)
युधिष्ठिर उवाच। १२-१६७-०क्ष् (५८५५)
विस्तरेणार्थसंबन्धं श्रोतुमिच्छामि तत्त्वतः ।
मित्रद्रोही कृतघ्नश्च यः प्रोक्तस्तं च मे वद ॥ १२-१६७-१ (७१७०४)
भीष्म उवाच। १२-१६७-२क्ष् (५८५६)
हन्त ते वर्तयिष्येऽहमितिहासं पुरातनम् ।
उदीच्यां दिशि यद्वृत्तं म्लेच्छेषु मनुजाधिप ॥ १२-१६७-२ (७१७०५)
ब्राह्मणो मध्यदेशीयः कृष्णाङ्गो ब्रह्मवर्जितः ।
ग्रामं दस्युगणाकीर्णं प्राविशद्धनतृष्णया ॥ १२-१६७-३ (७१७०६)

तत्र दस्युर्धनयुतः सर्ववर्णविशेषवित् ।
ब्रह्मण्यः सत्यसन्धश्च दाने च निरतोऽभवत् ॥ १२-१६७-४ (७१७०७)
तस्य क्षयमुपागम्य ततो भिक्षामयाचत ।
प्रतिश्रयं च वासार्थं भिक्षां चैवाथ वार्षिकीम् ॥ १२-१६७-५ (७१७०८)
प्रादात्तस्मै स विप्राय वस्त्रं च सदशं नवम् ।
नारीं चापि वयोपेतां भर्त्रा विरहितां तथा ॥ १२-१६७-६ (७१७०९)
एतत्संप्राप्य हृष्टात्मा गौतमोऽथ द्विजस्तथा ।
तस्मिन्गृहवरे राजंस्तया रेमे स गौतमः ॥ १२-१६७-७ (७१७१०)
कुटुम्बार्थं च दस्योश्च साहाय्यं चाप्यथाकरोत् ।
सोऽवसद्वर्षमेकं वै समृद्धे शबरालये ॥ १२-१६७-८ (७१७११)
बाणवेधे परं यत्नमकरोच्चैव गौतमः ।
चक्राङ्गान्स च नित्यं वै सर्वतो वनगोचरान् ।
जघान गौतमो राजन्यथा दस्युगणास्तथा ॥ १२-१६७-९ (७१७१२)
हिंसापटुर्घृणाहीनः सदा प्राणिवधे रतः ।
गौतमः सन्निकर्षेण दस्युभिः समतामियात् ॥ १२-१६७-१० (७१७१३)
तथा तु वसतस्तस्य दस्युग्रामे सुखं तदा ।
अगमन्बहवो मासा निघ्नतः पक्षिणो बहून् ॥ १२-१६७-११ (७१७१४)
ततः कदाचिदपरो द्विजस्तं देशमागतः ।
जटाचीराजिनधरः स्वाध्यायनिरतः शुचिः ॥ १२-१६७-१२ (७१७१५)
विनीतो वेदशास्त्रेषु वेदान्तानां च पारगः ।
अदृश्यत ततस्तत्र सखा तस्यैव तु द्विजः ।
तं दस्युग्राममगमद्यत्रासौ गौतमोऽभवत् ॥ १२-१६७-१३ (७१७१६)
स तु विप्रगृहान्वेषी शूद्रान्नपरिवर्जकः ।
ग्रामे दस्युसमाकीर्णे व्यचरत्सर्वतो द्विजः ॥ १२-१६७-१४ (७१७१७)
ततः स गौतमगृहं प्रविवेश द्विजोत्तमः ।
गौतमश्चापि संप्राप्तस्तावन्योन्येन संगतौ ॥ १२-१६७-१५ (७१७१८)
चक्राङ्गभारस्कन्धं तं धनुष्पाणिं धृतायुधम् ।
रुधिरेणावसिक्ताङ्गं गृहद्वारमुपागतम् ॥ १२-१६७-१६ (७१७१९)
तं दृष्ट्वा पुरुषादाभमपध्वस्तं क्षमागतम् ।
अभिज्ञाय द्विजो व्रीडन्निदं वाक्यमथाब्रवीत् ॥ १२-१६७-१७ (७१७२०)
किमिदं कुरुषे मोहाद्विप्रस्त्वं हि कुलोद्भवः ।
मध्यदेशपरिज्ञातो दस्युभावं गतः कथम् ॥ १२-१६७-१८ (७१७२१)
पूर्वान्स्मर द्विज ज्ञातीन्प्रख्यातान्वेदपारगान् ।
येषां वंशेऽभिजातस्त्वमीदृशः कुलपांसनः ॥ १२-१६७-१९ (७१७२२)
अवबुध्यात्मनाऽऽत्मानं सत्वं शीलं श्रुतं दमम् ।
अनुक्रोशं च संस्मृत्य त्यज वासमिमं द्विज ॥ १२-१६७-२० (७१७२३)

स एवमुक्तः सुहृदा तेन तत्र हितैषिणा ।
प्रत्युवाच ततो राजन्विनिश्वस्य तदाऽऽर्तबत् ॥ १२-१६७-२१ (७१७२४)
निर्धनोऽस्मि द्विजश्रेष्ठ नापि वेदविदप्यहम् ।
वित्तार्थमिह संप्राप्तं विद्धि मां द्विजसत्तम ॥ १२-१६७-२२ (७१७२५)
त्वद्दर्शनात्तु विप्रेन्द्र कृतार्थोऽस्म्यद्य वै द्विज ।
अध्वानं सह यास्यावः श्वो वसस्वाद्य शर्वरीम् ॥ १२-१६७-२३ (७१७२६)
स तत्र न्यवसद्विप्रो घृणी किंचिदसंस्पृशन् ।
क्षुधितश्छन्द्यमानोऽपि भोजनं नाभ्यनन्दत ॥ ॥ १२-१६७-२४ (७१७२७)

इति श्रीमन्महाभारते शान्तिपर्वनि आपद्धर्मपर्वणि
सप्तषष्ट्यधिकशततमोऽध्यायः ॥ १६७.।
Mahabharata - Shanti Parva - Chapter Footnotes

१२-१६७-३ ब्रह्म वेदस्तदुक्तं कर्म च तद्विवर्जितः ग्रामं
वृद्धियुतं वीक्ष्य प्राविशद्भैक्ष्यकाङ्क्ष्येति झ ।पाठः ॥
१२-१६७-५ क्षयं गृहम् ॥
१२-१६७-६ वयोपेतां युवतीम् ।सन्धिरार्षः ॥
१२-१६७-९ चक्राङ्गान् हंसान् ॥

---

शन्तिपर्व-अध्यय१६८
॥ श्रीः ॥
१२.१६८. अध्यायः १६८

Mahabharata - Shanti Parva - Chapter Topics
कदाचन धनार्जनाय प्रस्थितवता गौतमेन
समुद्रंप्रति गच्छता वणिक्सार्थेन सह गमनम्
॥ १.। वनगजोपद्रुतवणिक्सार्थपरिभ्रष्टेन गौतमेन
किंचिक्यग्रोधमूले विश्रान्त्यै प्रस्वापः ॥ २.। तत्र सायमागतेन
राजधर्मनाम्ना वकराजेन तस्य सत्कारः ॥ ३.।
Mahabharata - Shanti Parva - Chapter Text

१२-१६८-० (७१७२८)
भीष्म उवाच। १२-१६८-०क्ष् (५८५७)
तस्यां निशायां व्युष्टायां गते तस्मिन्द्विजोत्तमे ।
निष्क्रम्य गौतमोऽगच्छद्धनार्थी विचचार ह ॥ १२-१६८-१ (७१७२९)
सामुद्रिकान्सवणिजस्ततोऽपश्यत्स्थितान्पथि ।

स तेन सह सार्थेन प्रययौ सागरं प्रति ॥१२-१६८-२ (७१७३०)
स तु सार्थो महाराज कस्मिंश्चिद्गिरिगह्वरे ।
मत्तेन द्विरदेनाथ निहतः प्रायशोऽभवत् ॥१२-१६८-३ (७१७३१)
स कथंचिद्भयात्तस्माद्विमुक्तो प्रायशोऽभवत् ।
कांदिग्भूतो जीवितार्थी प्रदुद्रावोत्तरां दिशम् ॥१२-१६८-४ (७१७३२)
ततस्तु स परिभ्रष्टः सार्थाद्देशात्तथाऽर्थतः ।
एकाकी व्यभ्रमत्तत्र वने कापुरुषो यथा ॥१२-१६८-५ (७१७३३)
स पन्थानमथासाद्य समुद्राभिसरं तदा ।
आससाद वनं रम्यं महत्पुष्पितपादपम् ॥१२-१६८-६ (७१७३४)
सर्वर्तुकैराम्रवणैः पुष्पितैरुपशोभितम् ।
नन्दनोद्देशसदृशं यक्षकिन्नरसेवितम् ॥१२-१६८-७ (७१७३५)
सालतालघवाश्वत्थप्लक्षागुरुवनैस्तथा ।
चन्दनस्य च मुख्यस्य पादपैरुपशोभितम् ।
गिरिप्रस्थेषु रम्येषु सुखेषु सुखगन्धिषु ॥ १२-१६८-८ (७१७३६)
समन्ततो द्विजश्रेष्ठा वल्गु कूजन्ति तत्र वै ।
मनुष्यवदनाश्चान्ये भारुण्डा इति विश्रुताः ॥१२-१६८-९ (७१७३७)
स तान्यतिमनोज्ञानि विहगानां रुतानि वै ।
शृण्वन्सुरमणीयानि विप्रोऽगच्छत गौतमः ॥१२-१६८-१० (७१७३८)
ततोऽपश्यत्सुरम्येषु सुवर्णसिकताचिते ।
देशभागे समे चित्रे स्वर्गोद्देशसमप्रभे ।
श्रिया जुष्टं ददर्शाथ न्यग्रोधं च सुमण्डलम् ॥ १२-१६८-११ (७१७३९)
शाखाभिरनुरूपाभिः संवृतं छत्रसन्निभम् ।
तस्य मूलं च संसिक्तं वरचन्दनवारिणा ॥१२-१६८-१२ (७१७४०)
दिव्यपुष्पान्वितं श्रीमत्पितामहसदोपमम् ।
तं दृष्ट्वा गौतमः प्रीतो मनःकान्तमनुत्तमम् ॥१२-१६८-१३ (७१७४१)
मेध्यं सुरगृहप्रख्यं पुष्पितैः पादपैर्वृतम् ।
तमासाद्य मुदा युक्तस्तस्याधस्तादुपाविशत् ॥१२-१६८-१४ (७१७४२)
तत्रासीनस्य कौन्तेय गौतमस्य नराधिप ।
पुष्पाणि समुपस्पृश्य प्रववावनिलः शुभः ।
ह्लादयंस्तस्य गात्राणि गौतमस्य तदा नृप ॥ १२-१६८-१५ (७१७४३)
स तु विप्रः परिश्रान्तिः स्पृष्टः पुण्येन वायुना ।
सुखमासाद्य सुष्वाप भास्करश्चास्तमभ्ययात् ॥१२-१६८-१६ (७१७४४)
ततोऽस्तं भास्करे याते सन्ध्याकाल उपस्थिते ।
आजगाम स्वभवनं ब्रह्मलोकात्खगोत्तमः ॥१२-१६८-१७ (७१७४५)
नाडीजङ्घ इति ख्यातो दयितो ब्रह्मणः सखा ।
बकराजो महाप्राज्ञः काश्यपस्यात्मसंभवः ॥१२-१६८-१८ (७१७४६)

राजधर्मेति विख्यातो बभूवाप्रतिभो भुवि ।
देवकन्यासुतः श्रीमान्विद्वान्देवसमप्रभः ॥ १२-१६८-१९ (७१७४७)
मृष्टहाटकसंछन्नो भूषणैरर्कसन्निभैः ।
भूषितः सर्वगात्रेषु देवगर्भः श्रिया ज्वलन् ॥ १२-१६८-२० (७१७४८)
तमागतं खगं दृष्ट्वा गौतमो विस्मितोऽभवत् ।
क्षुत्पिपासापरीतात्मा हिंसार्थं चैनमैक्षत ॥ १२-१६८-२१ (७१७४९)
राजधर्मोवाच। १२-१६८-२२क्ष् (५८५८)
स्वागतं भवतो विप्र दिष्ट्या प्राप्तोऽसि मे गृहान् ।
अस्तं च सविता यातः संध्येयं समुपस्थिता ॥ १२-१६८-२२ (७१७५०)
मम त्वं निलयं प्राप्तः प्रियातिथिरनिन्दितः ।
पूजितो यास्यसि प्रातर्विधिदृष्टेन कर्मणा ॥ ॥ १२-१६८-२३ (७१७५१)

इति श्रीमन्महाभारते शान्तिपर्वणि आपद्धर्मपर्वणि
अष्टषष्ट्यधिकशततमोऽध्यायः ॥ १६८. ।
Mahabharata - Shanti Parva - Chapter Footnotes

१२-१६८-२ सामुद्रिकान् समुद्रोपान्ते गतान् ॥
१२-१६८-४ कां दिशं प्रयामीत्याकुलः कांदिग्भूतः ॥
१२-१६८-११ रम्येषु प्रदेशेषु मध्ये एकत्र ॥
१२-१६८-१३ सभोपममिति झ । पाठः ॥

---

शन्तिपर्व-अध्यय१६९
॥ श्रीः ॥
१२.१६९. अध्यायः १६९

Mahabharata - Shanti Parva - Chapter Topics
ककसत्कृतेन गौतमेन तच्चोदनया तत्सुहृदो विरूपाक्षनाम्नो
राक्षसस्य नगरं प्रति गमनम् ॥ १. ।
Mahabharata - Shanti Parva - Chapter Text

१२-१६९-० (७१७५२)
भीष्म उवाच। १२-१६९-०क्ष् (५८५९)
गिरं तां मधुरां श्रुत्वा गौतमो विस्मितस्तदा ।
कौतूहलान्वितो राजन्राजधर्माणमैक्षत ॥ १२-१६९-१ (७१७५३)
राजधर्मोवाच। १२-१६९-२क्ष् (५८६०)
भोः काश्यपस्य पुत्रोऽहं माता दाक्षायणी मम ।
सती त्वं च गुणोपेतः स्वागतं ते द्विजोत्तम ॥ १२-१६९-२ (७१७५४)

भीष्म उवाच। १२-१६९-३क्ष् (५८६१)
तस्मै दत्त्वा स सत्कारं विधिदृष्टेन कर्मणा ।
शालपुष्पमयीं दिव्यां बृसीं समुपकल्पयत् ॥ १२-१६९-३ (७१७५५)
भगीरथरथाक्रान्तदेशान्गङ्गानिषेवितान् ।
ये चरन्ति महामीनास्तांश्च तस्यान्वकल्पयत् ॥ १२-१६९-४ (७१७५६)
वह्निं चापि सुसंदीप्तं मीनांश्चापि सुपीवरान् ।
स गौतमायातिथये न्यवेदयत काश्यपिः ॥ १२-१६९-५ (७१७५७)
भुक्तवन्तं च तं विप्रं प्रीतात्मानं महामनाः ।
श्रमापनयनार्थं स पक्षाभ्यामभ्यवीजयत् ॥ १२-१६९-६ (७१७५८)
तनो विश्रान्तमासीनं गोत्रवृत्तमपृच्छत ।
सोऽब्रवीद्गौतमोऽस्मीति ब्राह्मणोस्मीत्युदाहरत् ॥ १२-१६९-७ (७१७५९)
तस्मै पर्णमयं दिव्यं दिव्यपुष्पाधिवासितम् ।
गन्धाढ्यं शयनं प्रादात्स शिश्ये तत्र वै सुखम् ॥ १२-१६९-८ (७१७६०)
अपोपविष्टं शयने गौतमं वाक्यवित्तमः ।
पप्रच्छ काश्यपिर्वाग्मी किमागमनमित्युत ॥ १२-१६९-९ (७१७६१)
ततोऽब्रवीद्गौतमस्तं दरिद्रोऽहं महामते ।
समुद्रगमनाकाङ्क्षी द्रव्यार्थमिति भारत ॥ १२-१६९-१० (७१७६२)
तं काश्यपोऽब्रवीत्प्रीत्या नोत्कण्ठां कर्तुमर्हसि ।
कृतकार्यो द्विजश्रेष्ठ सद्रव्यो यास्यसे गृहान् ॥ १२-१६९-११ (७१७६३)
चतुर्विधा ह्यर्थगतिर्बृहस्पतिमतं यथा ।
मित्रं विद्या हिरण्यं च बुद्धिश्चेति बुधेप्सिता ॥ १२-१६९-१२ (७१७६४)
प्रादुर्भूतोऽस्मि ते मित्रं सुहृत्त्वं च महत्तरम् ।
सोऽहं तथा यतिष्यामि भविष्यसि यथार्थवान् ॥ १२-१६९-१३ (७१७६५)
ततः प्रभातसमये सुखं पृष्ट्वाऽब्रवीदिदम् ।
गच्छ सौम्य पथाऽनेन कृतकृत्यो भविष्यसि ॥ १२-१६९-१४ (७१७६६)
इतस्त्रियोजनं गत्वा राक्षसाधिपतिर्महान् ।
विरूपाक्ष इति ख्यातः सखा मम महाबलः ॥ १२-१६९-१५ (७१७६७)
तं गच्छ द्विजमुख्य त्वं स मद्वाक्यप्रचोदितः ।
कामानभीप्सितांस्तुभ्यं दाता नास्त्यत्र संशयः ॥ १२-१६९-१६ (७१७६८)
इत्युक्तः प्रययौ राजन्गौतमो विगतक्लमः ।
फलान्यमृतकल्पानि भक्षयानो यथेष्टतः ॥ १२-१६९-१७ (७१७६९)
चन्दनागुरुमुख्यानि पत्रत्वचवनानि च ।
तस्मिन्पथि महाराज सेवमानो द्रुतं ययौ ॥ १२-१६९-१८ (७१७७०)
ततो मनुव्रजं नाम नगरं शैलतोरणम् ।
शैलप्राकारवप्रं च शैलयन्त्रार्गलं तथा ॥ १२-१६९-१९ (७१७७१)
विदितश्चाभवत्तस्य राक्षसेन्द्रस्य धीमतः ।

प्रहितः सुहृदा राजन्प्रीयमाणः प्रियातिथिः ॥ १२-१६९-२० (७१७७२)
ततः स राक्षसेन्द्रः स्वान्प्रेष्यानाह युधिष्ठिर ।
गौतमो नगरद्वाराच्छीघ्रमानीयतामिति ॥ १२-१६९-२१ (७१७७३)
तस्मात्पुरवरात्तूर्णं पुरुषाः श्वेतवेष्टनाः ।
गौतमेत्यभिभाषन्तः पुरद्वारमुपागमन् ॥ १२-१६९-२२ (७१७७४)
ते तमूचुर्महाराज राजप्रेष्यास्तदा द्विजम् ।
त्वरस्व तूर्णमागच्छ राजा त्वां द्रष्टुमिच्छति ॥ १२-१६९-२३ (७१७७५)
राक्षसाधिपतिर्वीरो विरूपाक्ष इति श्रुतः ।
स त्वां त्वरति वै द्रष्टुं तत्क्षिप्रं संविधीयताम् ॥ १२-१६९-२४ (७१७७६)
ततः स प्राद्रवद्विप्रो विस्मयाद्विगतक्लमः ।
गौतमः परमर्द्धिं तां पश्यन्परमविस्मितः ॥ १२-१६९-२५ (७१७७७)
तैरेव सहितो राज्ञो वेश्म तूर्णमुपाद्रवत् ।
दर्शनं राक्षसेन्द्रस्य काङ्क्षमाणो द्विजस्तदा ॥ ॥ १२-१६९-२६ (७१७७८)

इति श्रीमन्महाभारते शान्तिपर्वणि आपद्धर्मपर्वणि
एकोनसप्तत्यधिकशततमोऽध्यायः ॥ १६९.।
Mahabharata - Shanti Parva - Chapter Footnotes

१२-१६९-२ अतिथिस्त्वं गुणोपेत इति झ ।पाठः ॥
१२-१६९-१२ चतुर्विधाह्यर्थसिद्धिर्बृहस्पतिमतं यथा ।पारंपर्यं
तथा दैवं काम्यं मैत्रमिति प्रभो।इति झ।पाठः ॥
१२-१६९-१९ मरुव्रजं नामेति थ ।पाठः।मरुद्रजं नामेति
द।पाठः।मेरुव्रजं नामेति झ।पाठः ॥
१२-१६९-२४ राक्षसाधिपतिः श्रीमाव्राजधर्मेण प्रेषितः ।यदर्थमिह
मां द्रष्टुं इति ट।ड।थ।पाठः ॥

---

शन्तिपर्व-अध्यय१७०
॥ श्रीः ॥
१२.१७०. अध्यायः १७०

Mahabharata - Shanti Parva - Chapter Topics
गौतमेन स्वस्यानर्हत्वं जानतापि विरूपाक्षेण वकराजगौरवात्प्रदत्तं
धनभारमुदूह्य सायं पुनर्बकालयं प्रत्यागमनम् ॥ १.। तत्र
परेद्युः स्वभवनं जिगमिपुणा गोतमेन पार्थयार्थं रात्रौ
वकवधनिर्धारणम् ॥ २.।
Mahabharata - Shanti Parva - Chapter Text

१२-१७०-० (७१८०४)
भीष्म उवाच। १२-१७०-०क्ष् (५८६३)
ततः स विदितो राज्ञः प्रविश्य गृहमुत्तमम् ।
पूजितो राक्षसेन्द्रेण निषसादासनोत्तमे ॥ १२-१७०-१ (७१८०५)
पृष्टश्च गोत्रचरणं स्वाध्यायं ब्रह्मचारिकम् ।
पृष्टो राज्ञा स नाज्ञासीद्गोत्रमात्रमथाब्रवीत् ॥ १२-१७०-२ (७१८०६)
ब्रह्मवर्चसहीनस्य स्वाध्यायाद्विरतस्य च ।
गोत्रमात्रविदो राजा निवासं समपृच्छत ॥ १२-१७०-३ (७१८०७)
राक्षस उवाच। १२-१७०-४क्ष् (५८६४)
क्व ते निवासः कल्याण किंगोत्रा ब्राह्मणी च ते ।
तत्त्वं ब्रूहि न भीः कार्या विश्रमस्व यथासुखम् ॥ १२-१७०-४ (७१८०८)
गौतम उवाच। १२-१७०-५क्ष् (५८६५)
मध्यदेशप्रसूतोऽहं वासो मे शबरालये ।
शूद्री पुनर्भूर्भार्या मे सत्यमेतद्ब्रवीमि ते ॥ १२-१७०-५ (७१८०९)
भीष्म उवाच। १२-१७०-६क्ष् (५८६६)
ततो राजा विममृशे कथं कार्यमिदं भवेत् ।
कथं वा सुकृतं मे स्यादिति बुद्ध्याऽन्वचिन्तयन् ॥ १२-१७०-६ (७१८१०)
अयं वै जन्मना विप्रः सुहृत्तस्य महात्मनः ।
संप्रेषितश्च तेनायं काश्यपेन महात्मना ॥ १२-१७०-७ (७१८११)
तस्य प्रियं करिष्यामि स हि मामाश्रितः सदा ।
भ्राता मे बान्धवश्चासौ सखा चैव प्रियो मम ॥ १२-१७०-८ (७१८१२)
कार्तिक्यामद्य भोक्तारः सहस्रं मे द्विजोत्तमाः ।
तत्रायमपि भोक्ता तु देयमस्मै च मे धनम् ॥ १२-१७०-९ (७१८१३)
स चाद्य दिवसः पुण्यो ह्यतिथिश्चायमागतः ।
संकल्पितं चैव धनं किं विचार्यमतः परम् ॥ १२-१७०-१० (७१८१४)
ततः सहस्रं विप्राणां विदुषां समलंकृतम् ।
स्नातानामनुलिप्तानामहतक्षौमवाससाम् ॥ १२-१७०-११ (७१८१५)
तानागतान्द्विजश्रेष्ठान्विरूपाक्षो विशांपते ।
यथार्हं प्रतिजग्राह विधिदृष्टेन कर्मणा ॥ १२-१७०-१२ (७१८१६)
बृस्यस्तेषां तु संन्यस्ता राक्षसेन्द्रस्य शासनात् ।
भूमौ वरकुशाः स्तीर्णाः प्रेष्यैर्भरतसत्तम ॥ १२-१७०-१३ (७१८१७)
तासु ते पूजिता राज्ञा निषण्णा द्विजसत्तमाः ।
तिलदर्भोदकेनाथ अर्चिता विधिवद्द्विजाः ॥ १२-१७०-१४ (७१८१८)
विश्वेदेवाः सपितरः साग्नयश्चोपकल्पिताः ।
विलिप्ताः पुष्पवन्तश्च सुप्रचाराः सुपूजिताः ।

व्यराजन्त महाराज नक्षत्रपतयो यथा ॥ १२-१७०-१५ (७१८१९)
ततो जाम्बूनदीः पात्रीर्वज्राङ्का विमलाः शुभाः ।
वरान्नपूर्णा विप्रेभ्यः प्रादान्मधुघृतप्लुताः ॥ १२-१७०-१६ (७१८२०)
तस्य नित्यं मदापाढ्यां माध्यां च बहवो द्विजाः ।
ईप्सितं भोजनवरं लभन्ते सत्कृतं तथा ॥ १२-१७०-१७ (७१८२१)
विशेषतस्तु कार्तिक्यां द्विजेभ्यः संप्रयच्छति ।
शरद्व्यपाये रत्नानि पौर्णमास्यामिति श्रुतिः ॥ १२-१७०-१८ (७१८२२)
सुवर्णं रजतं चैव मणीनथ च मौक्तिकान् ।
वज्रान्महाधनांश्चैव वैदूर्याजिनराङ्कवान् ॥ १२-१७०-१९ (७१८२३)
रत्नवन्ति च पात्राणि दक्षिणार्थं स भारत ।
दत्त्वा प्राह द्विजश्रेष्ठान्विरूपाक्षो महायशाः ॥ १२-१७०-२० (७१८२४)
गृह्णीत रत्नान्येतानि यथोत्साहं यथेष्टतः ।
येषुयेषु च भाण्डेषु भुक्तवन्तो द्विजोत्तमाः ।
तान्येवादाय गच्छध्वं स्ववेश्मानीति भारत ॥ १२-१७०-२१ (७१८२५)
इत्युक्तवचने तस्मिन्राक्षसेन्द्रे महात्मनि ।
यथेष्टं तानि रत्नानि जगृहुर्ब्राह्मणवर्षभाः ॥ १२-१७०-२२ (७१८२६)
ततो महार्हैस्तैस्तेन रत्नैरभ्यर्चिताः शुभैः ।
ब्राह्मणा मृष्टवसनाः सुप्रीताः समुदोऽभवन् ॥ १२-१७०-२३ (७१८२७)
ततस्तान्राक्षसेन्द्रस्तु द्विजानाह पुनर्वचः ।
नाना देशागतान्राजा ब्राह्मणाननुमन्य वै ॥ १२-१७०-२४ (७१८२८)
अद्यैकं दिवसं विप्रा न वोऽस्तीह भयं क्वचित् ।
राक्षसेभ्यः प्रमोदध्वमिष्टतो यात माचिरम् ॥ १२-१७०-२५ (७१८२९)
ततः प्रदुद्रुवुः सर्वे विप्रसङ्घाः समन्ततः ।
गौतमोऽपि सुवर्णस्य भारमादाय सत्वरः ॥ १२-१७०-२६ (७१८३०)
कृच्छ्रात्समुद्वहन्भारं न्यग्रोधं समुपागमत् ।
न्यषीदच्च परिश्रान्तः क्लान्तश्च क्षुधितश्च सः ॥ १२-१७०-२७ (७१८३१)
ततस्तमभ्यगाद्राजन्राजधर्मा खगोत्तमः ।
स्वागतेनाभ्यनन्दच्च गौतमं मित्रवत्सलः ॥ १२-१७०-२८ (७१८३२)
तस्य पक्षाग्रविक्षेपैः क्लमं व्यपनयद्बकः ।
पूजां चाप्यकरोद्धीमान्भोजनं च यथाविधि ॥ १२-१७०-२९ (७१८३३)
ततस्तौ संविदं कृत्वा खगेन्द्रद्विजसत्तमौ ॥ १२-१७०-३० (७१८३४)
गौतमश्चिन्तयामास रात्रौ तस्य समीपतः ।
हाटकस्याभिरूपस्य भारोऽयं सुमहान्मया ॥ १२-१७०-३१ (७१८३५)
गृहीतो लोभमोहाभ्यां दूरं च गमनं मम ।
न चास्ति पथि भोक्तव्यं प्राणसंधारणं मम ।
किं कृत्वा सुकृतं हि स्यादिति चिन्तापरोऽभवत् ॥ १२-१७०-३२ (७१८३६)

ततः स पथि भोक्तव्यं प्रेक्षमाणो न किंचन ।
कृतघ्नः पुरुषव्याघ्र मनसेदमचिन्तयत् ॥ १२-१७०-३३ (७१८३७)
अयं बकपतिः पार्श्वे मांसराशिचितो महान् ।
इमं हत्वा गृहीत्वाऽस्य मांसं यास्य इति प्रभो ॥ ॥ १२-१७०-३४ (७१८३८)

इति श्रीमन्महाभारते शान्तिपर्वणि आपद्धर्मपर्वणि
सप्तत्यधिकशततमोऽध्यायः ॥ १७०.।
Mahabharata - Shanti Parva - Chapter Footnotes

१२-१७०-२ ब्रह्मधारणमिति ध । पाठः ॥
१२-१७०-१५ विलिप्ताश्चन्दनेन ॥
१२-१७०-२५ इष्टतः इष्ट देशम् ॥
१२-१७०-३० ततस्तौ संविदमित्यर्धं झ । पाठे नास्ति। तत्र
गौतमश्चिन्तयामासेत्यस्य स्थाने स भुक्तवान्सुविश्रान्तो
गौतमोऽचिन्तयत्तदा इत्यर्धं वर्तते ॥

---

शन्तिपर्व-अध्यय१७१
॥ श्रीः ॥
१२.१७१. अध्यायः १७१

Mahabharata - Shanti Parva - Chapter Topics
गौतमेनन रात्रौ सुप्तं बकं हत्वाऽग्नौ पक्वतन्मांसमुपगृह्य
स्वग्रामंप्रति प्रस्थानम् ॥ १.। परेद्युर्बकस्यानागमनेन तस्य
विपदाशङ्किना विरूपाक्षेण तद्वृत्तान्तजिज्ञासया स्वपुत्रस्य नियोजनम्
॥ २.। पितृनियोगात्सपरिवारेण विरूपाक्षसुतेन गौतमहननम् ॥ ३.।
Mahabharata - Shanti Parva - Chapter Text

१२-१७१-० (७१८३९)
भीष्म उवाच। १२-१७१-०क्ष् (५८६७)
अथ तत्र महार्चिष्माननलो वातसारथिः ।
तस्याविदूरे रक्षार्थं खगेन्द्रेण कृतोऽभवत् ॥ १२-१७१-१ (७१८४०)
स चापि पार्श्वे सुष्वाप विश्वस्तो बकराट् तदा ।
कृतघ्नस्तु स दुष्टात्मा तं जिघांसुरजागरीत् ॥ १२-१७१-२ (७१८४१)
ततोऽलातेन दीप्तेन स सुप्तं निजघान तम् ।
निहत्य च मुदा युक्तः सोऽनुबन्धं न दृष्टवान् ॥ १२-१७१-३ (७१८४२)
स तं विपक्षरोमाणं कृत्वाऽग्नावपचत्तदा ।
तं गृहीत्वा सुवर्णं च ययौ द्रुततरं द्विजः ॥ १२-१७१-४ (७१८४३)

ग्ततो दाक्षायणीपुत्रं नागतं तं तु भारत ।
विरूपाक्षश्चिन्तयन्वै हृदयेन विदूयता ॥' १२-१७१-५ (७१८४४)
ततोऽन्यस्मिन्गते चाह्नि विरूपाक्षोऽब्रवीत्सुतम् ।
न प्रेक्षे राजधर्माणमद्य पुत्र खगोत्तमम्। १२-१७१-६ (७१८४५)
स पूर्वसन्ध्यां ब्रह्माणं वन्दितुं याति सर्वदा ।
मां चादृष्ट्वा कदाचित्स न गच्छति गृहं खगः ॥१२-१७१-७ (७१८४६)
द्विरात्रमुभयोः सन्ध्योर्नाभ्यगच्छन्ममालयम् ।
तस्मान्न शुद्ध्यते भावो मम स ज्ञायतां सुहृत् ॥१२-१७१-८ (७१८४७)
स्वाध्यायेन वियुक्तो हि ब्रह्मवर्चसवर्जितः ।
स गतस्तत्र मे शङ्का हन्यात्तं स द्विजाधमः ॥१२-१७१-९ (७१८४८)
दुराचारः स दुर्बुद्धिरिङ्गितैर्लक्षितो मया ।
निष्कृपो दारुणाकारो दुष्टो दस्युरिवाधमः ।
गौतमः स गतस्तत्र तेनोद्विग्नं मनो मम ॥ १२-१७१-१० (७१८४९)
पुत्र शीघ्रमितो गत्वा राजधर्मनिवेशनम् ।
ज्ञायतां स विशुद्धात्मा यदि जीवति वा चिरम् ॥१२-१७१-११ (७१८५०)
स एवमुक्तस्त्वरितो रक्षोभिः सहितो ययौ ।
क्व न्यग्रोधे राजधर्माणमपश्यन्निहतं ततः ॥१२-१७१-१२ (७१८५१)
रुदित्वा बहुशस्तस्मै विलप्य च स राक्षसः ।
गतो रोषसमाविष्टो गौतमग्रहणाय वै ॥१२-१७१-१३ (७१८५२)
गृहीतो गौतमः पापो रक्षोभिः क्रोधमूर्च्छितैः ।
राजधर्मशरीरस्य कङ्कालश्चाप्यथो धृतः ॥१२-१७१-१४ (७१८५३)
मनुव्रजं तु नगरं यातुधानास्ततो गताः ।
क्रोधरक्तेक्षणा घोरा गौतमस्य वधे धृताः ॥१२-१७१-१५ (७१८५४)
पार्थिवस्याग्रतो न्यस्तः कङ्कालो राजधर्मणः ।
तं दृष्ट्वा विमना राजा सामात्यः सगणोऽभवत् ॥१२-१७१-१६ (७१८५५)
आर्तरावो महानासीद्गृहे तस्य महात्मनः ।
समुत्थितः स्त्रीसङ्घस्य निहते काश्यपात्मजे ॥१२-१७१-१७ (७१८५६)
राजा चैवाब्रवीत्पुत्रं पापोऽयं वध्यतामिति ॥ १२-१७१-१८ (७१८५७)
राक्षमा ऊचुः।१२-१७१-१९क्ष् (५८६८)
अस्य मांसं वयं सर्वे खादिष्यामः समागताः ।
पापकृत्पापकर्मा च पापात्मा पापमास्थितः ।
हन्तव्य एव पापात्मा कृतघ्नो नात्र संशयः ॥ १२-१७१-१९ (७१८५८)
विरूपाक्ष उवाच।१२-१७१-२०क्ष् (५८६९)
कृतघ्नं पापकर्माणां न भक्षयितुमुत्सहे ।
दासेभ्यो दीयतामेप मित्रध्रुक्पुरुपाधमः ॥१२-१७१-२० (७१८५९)
भीष्म उवाच।१२-१७१-२१क्ष् (५८७०)

दासाः सर्वे समाहूता यातुधानास्तथा परे ।
नेच्छन्ति स्म कृतघ्नं तं खादितुं पुरुषोत्तम ॥ १२-१७१-२१ (७१८६०)
शिरोभिश्चागता भूमिं महाराज ततो बलात् ।
मानार्थं जातु निर्बन्धं किल्विषं दातुमर्हसि ॥ १२-१७१-२२ (७१८६१)
यातुधाना नृपेणोक्ताः पापकर्मा विशस्यताम् ।
दह्यतां त्यज्यतां वाऽयं दर्शनादपनीयताम् ॥ १२-१७१-२३ (७१८६२)
ततस्ते रुपिता दासाः शूलपट्टसपाणयः ।
खण्डशो विकृतं हत्वा क्रव्याद्भयो ह्यददुस्तदा ॥ १२-१७१-२४ (७१८६३)
क्रव्यादास्त्वपि राजेन्द्र नेच्छन्ति पिशिताशनाः ।
मृतानपि हि क्रव्यादाः कृतघ्नान्नोपभुञ्जते ॥ १२-१७१-२५ (७१८६४)
ब्रह्मस्वहरणे चोरे ब्रह्मघ्ने गुरुतल्पगे ।
निष्कृतिर्विहिता सद्भिः कृतघ्ने नास्ति निष्कृतिः ॥ १२-१७१-२६ (७१८६५)
मित्रद्रुहं कृतघ्नं च नृशंसं च नराधमम् ।
क्रव्यादाः किमयश्चैव नोपभुञ्जन्ति वै सदा ॥ ॥ १२-१७१-२७ (७१८६६)

इति श्रीमन्महाभारते शान्तिपर्वणि आपद्धर्मपर्वणि
एकसप्तत्यधिकशततमोऽध्यायः ॥ १७१.।

Mahabharata - Shanti Parva - Chapter Footnotes

१२-१७१-३ अनुबन्ध पापदोषम् ॥
१२-१७१-८ तद्वत इति पाठे हिंस्रधर्म ॥
क्व इत आरभ्य आद्विसप्तत्यधिकशततमाध्यायसमाप्ति विद्यमानानां
श्लोकानां स्थाने अधोलिखितश्लोका झ ।पाठे वर्तन्ते।तेच

Mahabharata - Shanti Parva - Chapter Text

१२-१७१अ-१अ न्यग्रोधं तत्र चापश्यत्कङ्कालं
राजधर्मणः।१२-१७१अ-१ब् स रुदन्नगमत्पुत्रो राक्षसेन्द्रस्य
धीमतः।१२-१७१अ-१च् त्वरमाणः परं शक्त्या गौतमग्रहणाय वै
॥ १२-१७१अ-२अ ततो विदूरे जगृहुगौतमं राक्षसास्तदा॥ १२-१७१अ-३अ
राजधमर्शरीरं च पक्षास्थिचरणोज्झितम्।१२-१७१अ-३ब्
तमादायाथ रक्षांसि द्रुतं मेरुव्रजं ययुः॥ १२-१७१अ-४अ
राज्ञश्च दर्शयामासुः शरीरं राजधर्मणः।१२-१७१अ-४ब्
कृतघ्नं पुरुषं तं च गौतमं पापकारिणम्॥ १२-१७१अ-५अ
रुरोद राजा तं दृष्ट्वा सामात्यः सपुरोहितः।१२-१७१अ-५ब्
आर्तनादश्च सुमहानभूत्तस्य निवेशने।१२-१७१-५च् सस्त्रीकुमारं
च पुरं बभूवास्वस्थमानसम्॥ १२-१७१अ-६अ अथाब्रवीन्नृपः

पुत्रं पापोऽयं वध्यतामिति। १२-१७१अ-६ब् अस्य मांसैरिमे सर्वे
विहरन्तु यथेष्टतः॥ १२-१७१अ-७अ पापाचारः पापकर्मा पापात्मा
पापसाधनः। १२-१७१अ-७ब् हन्तव्योऽयं मम मतिर्भवद्भिरिति
राक्षसाः॥ १२-१७१अ-८अ इत्युक्ता राक्षसेन्द्रेण राक्षसा
घोरविक्रमाः। १२-१७१अ-८ब् नेच्छन्त तं भक्षयितुं
पापकर्माणमित्युत॥ १२-१७१अ-९अ दस्यूनां दीयतामेष
साध्वद्य पुरुषाधमः। १२-१७१अ-९ब् इत्यूचुस्ते गहाराज
राक्षसेन्द्रं निशाचराः॥ १२-१७१अ-१०अ शिरोभिः प्रणताः
सर्वे व्याहरन्राक्षसाधिपम्। १२-१७१अ-१०ब् न दातुमर्हसि त्वं
नो भक्षणायास्य किल्विषम्॥ १२-१७१अ-११अ एवमस्त्विति तानाह
राक्षसेन्द्रो निशाचरान्। १२-१७१अ-११ब् दस्यूनां दीयतामेष
कृतघ्नोऽद्यैव राक्षसाः॥ १२-१७१अ-१२अ इत्युक्ता राक्षसास्तेन
शूलपट्टसपाणयः। १२-१७१अ-१२ब् कृत्वा तं खण्डशः पापं
दस्युभ्यः प्रददुस्तदा॥ १२-१७१अ-१३अ दस्यवश्चापि नैच्छन्त
तमत्तुं पापकारिणम्। १२-१७१अ-१३ब् क्रव्यादा अपि राजेन्द्र कृतघ्नं
नोपभुञ्जते॥ १२-१७१अ-१४अ ब्रह्मघ्ने च सुरापे च चौरे
भग्नव्रते तथा। १२-१७१अ-१४ब् निष्कृतिर्विहिता राजन्कृतघ्ने नास्ति
निष्कृतिः॥ १२-१७१अ-१५अ मित्रदोही कृतघ्नश्च नृशंसश्च
नराधमः। १२-१७१अ-१५ब् क्रव्यादैः कृमिभिश्चैव न भुज्यन्ते हि
तादृशाः॥ १२-१७१-१६क्ष् भीष्म उवाच। १२-१७१अ-१६अ ततश्चितां
बकपतेः कारयामास राक्षसः। १२-१७१अ-१६ब् रत्नैर्गन्धैश्च
बहुभिर्वस्त्रैश्च समलंकृताम्॥ १२-१७१अ-१७अ ततः
प्रज्वाल्य नृपतिर्बकराजं प्रतापवान्। १२-१७१अ-१७ब्
प्रेतकार्याणि विधिवद्राक्षसेन्द्रश्चकार ह॥ १२-१७१अ-१८अ
तस्मिन्काले च सुरभिर्देवी दाक्षायणी शुभा। १२-१७१अ-१८ब्
उपरिष्टात्ततस्तस्य सा बभूव पयस्विनी॥ १२-१७१अ-१९अ तस्य
वक्राच्च्युतः फेनः क्षीरमिश्रस्तदाऽनघ। १२-१७१अ-१९ब्
सोऽपतद्वै ततस्तस्यां चितायां राजधर्मणः॥ १२-१७१अ-२०अ
ततः संजीवितस्तेन बकराजस्तदाऽनघ। १२-१७१अ-२०ब्
उत्पत्य च समीयाय विरूपाक्षं बकाधिपः॥ १२-१७१अ-२१अ
ततोऽभ्ययाद्देवराजो विरूपाक्षपुरं तदा। १२-१७१अ-२१ब् प्राह
चेदं विरूपाक्षं दिष्ट्या संजीवितस्त्वया॥ १२-१७१अ-२२अ
श्रावयामास चेन्द्रस्तं विरूपाक्षं पुरातनम्। १२-१७१अ-२२ब्
यथा शापः पुरा दत्तो ब्रह्मणा राजधर्मणः॥ १२-१७१अ-२३अ
यदा बकवती राजन्ब्रह्माणं नोपसर्पति। १२-१७१अ-२३ब्
ततो रोषादिदं प्राह स्वगेन्द्राय पितामहः॥ १२-१७१अ-२४अ

यस्मान्मूढो मम सभां नागतोऽसौ बकाधमः। १२-१७१अ-२४ब्
तस्माद्वधं स दुष्टात्मा न चिरात्समवाप्स्यति॥ १२-१७१अ-२५अ
तदयं तस्य वचनान्निहतो गौतमेन वै। १२-१७१अ-२५ब्
तेनैवामृतसिक्तश्च पुनः संजीवितो बकः॥ १२-१७१अ-२६अ
राजधर्मा बकः प्राह प्रणिपत्य पुरंदरम्। १२-१७१अ-२६ब्
यदि तेऽनुग्रहकृता मयि बुद्धिः सुरेश्वर। १२-१७१अ-२६च्
सखाऽयं मे सुदयितं गौतमं जीवयेत्युत॥ १२-१७१अ-२७अ
तस्य वाक्यं समादाय वासवः पुरुषर्षभ। १२-१७१अ-२७ब्
सिक्त्वाऽमृतेन तं विप्रं गौतमं जीवयत्तदा॥ १२-१७१अ-२८अ
सभाण्डोपस्कारं राजंस्तमासाद्य बकाधिपः। १२-१७१अ-२८ब्
संपरिष्वज्य सुहृदं प्रीत्या परमया युतः॥ १२-१७१अ-२९अ
अथ तं पापकर्माणं राजधर्मा बकाधिपः। १२-१७१अ-२९ब्
विसर्जयित्वा सधनं प्रविवेश स्वमालयम्॥ १२-१७१अ-३०अ
यथोचितं च स बको ययौ ब्रह्मसदस्तथा। १२-१७१अ-३०ब्
ब्रह्मा चैनं महात्मानमातिथ्येनाभ्यपूजयत्॥ १२-१७१अ-३१अ
गौतमश्चापि संप्राप्य पुनस्तं शबरालयम्। १२-१७१अ-३१ब्
शूद्रायां जनयामास पुत्रान्दुष्कृतकारिणः॥ १२-१७१अ-३२अ
शापश्च सुमहांस्तस्य दत्तः सुरगणैस्तदा। १२-१७१अ-३२ब्
कुक्षौ पुनर्भ्वाः पापोऽयं जनयित्वा चिरात्सुतान्। १२-१७१अ-३२च्
निरयं प्राप्स्यति महत्कृतघ्नोऽयमिति प्रभो॥ १२-१७१अ-३३अ
एतत्प्राह पुरा सर्वं नारदो मम भारत। १२-१७१अ-३३ब् संस्मृत्य
चापि सुमहदाख्यानं भरतर्षभ। १२-१७१अ-३३च् मयाऽपि भवते
सर्वं यथावदनुवर्णितम्॥ १२-१७१अ-३४अ कुतः कृतघ्नस्य यशः
कुतः स्थानं कुतः सुखम्। १२-१७१अ-३४ब् अश्रद्धेयः कृतघ्नो
हि कृतघ्ने नास्ति निष्कृतिः॥ १२-१७१अ-३५अ मित्रद्रोहो न
कर्तव्यः पुरुषेण विशेषतः। १२-१७१अ-३५ब् मित्रध्रुङ्नरकं
घोरमनन्तं प्रतिपद्यते॥ १२-१७१अ-३६अ कृतज्ञेन सदा भाव्यं
मित्रकामेन चैव ह। १२-१७१अ-३६ब् मित्राच्च लभते सर्वं
मित्रात्पूजां लभेत च॥ १२-१७१अ-३७अ मित्राद्भोगांश्च भुञ्जीत
मित्रेणापत्सु मुच्यते। १२-१७१अ-३७ब् सत्कारैरुत्तमैर्मित्रं पूजयेत
विचक्षणः॥ १२-१७१अ-३८अ परित्याज्यो बुधैः पापः कृतघ्नो
निरपत्रपः। १२-१७१अ-३८ब् मित्रद्रोही कुलाङ्गारः पापकर्मा
नराधमः॥ १२-१७१अ-३९अ एष धर्मभूतां श्रेष्ठ प्रोक्तः
पापो मया तव। १२-१७१अ-३९ब् मित्रद्रोही कृतघ्नो वै किं भूयः
श्रोतुमिच्छसि॥ १२-१७१अ-४०क्ष् वैशंपायन उवाच। १२-१७१अ-४०अ
एतच्छ्रुत्वा तदा वाक्यं भीष्मेणोक्तं महात्मना। १२-१७१अ-४०ब्

युधिष्ठिरः प्रीतमना बभूव जनमेजय। ।
Mahabharata - Shanti Parva - Chapter Footnotes

१२-१७१अ-१ कङ्कालमस्थि ॥

---

शन्तिपर्व-अध्यय१७२
॥ श्रीः ॥
१२.१७२. अध्यायः १७२

Mahabharata - Shanti Parva - Chapter Topics
विरूपाक्षभटैर्बकशरीरस्य चितारोपणम्
॥ १.। वाय्वानीतधेनुमुखस्रुतफेनपातेन चितास्थबकोज्जीवनम्
॥ २.। ततो बकप्रार्थनया इन्द्रेण पुनरुज्जीवितस्य गौतमस्य
स्वग्रामगमनम् ॥ ३.।
Mahabharata - Shanti Parva - Chapter Text

१२-१७२-० (७१८६७)
भीष्म उवाच। १२-१७२-०क्ष् (५८७१)
विद्वान्संस्कारयामास पार्थिवो राजधर्मणः ।
गन्धैर्बहुभिरव्यग्रो दाहयामास पूजितम् ॥ १२-१७२-१ (७१८६८)
तस्य देवस्य वचनादिन्द्रस्य बकराडिह ।
तेनैवामृतसिक्ताश्च पुनः संजीवितो बकः ॥ १२-१७२-२ (७१८६९)
राजधर्माऽपि तं प्राह सहस्राक्षमरिंदमम् ।
गौतमो ब्राह्मणः क्वाऽसौ मुच्यतां मत्प्रियः सखा ॥ १२-१७२-३ (७१८७०)
भीष्म उवाच। १२-१७२-४क्ष् (५८७२)
तस्य वाक्यं समाज्ञाय कौशिकः सुरसत्तमः ।
गौतमं ह्यभ्यनुज्ञाप्य प्रीतोऽथ गमनोत्सुकः ॥ १२-१७२-४ (७१८७१)
प्रतीतः स गतः सौम्यो राजधर्मा स्वमालयम् ।
नृशंसो गौतमो मुक्तो मित्रध्रुक्पुरुषाधमः ॥ १२-१७२-५ (७१८७२)
सभाण्डोपस्करो यातः स तदा शबरालयम् ।
तत्रासौ शबरी देहे प्रसूतो निरयोपमे ॥ १२-१७२-६ (७१८७३)
एष शापो महांस्तत्र मुक्तः सुरगणैस्तदा ॥ १२-१७२-७ (७१८७४)
दग्धे राक्षसराजेन खगराजे प्रतापिना ।
चितायाः पार्श्वतो दोग्ध्री सुरभिर्जीवयच्च तम् ॥ १२-१७२-८ (७१८७५)
तस्या वक्राच्च्युतः फेनो दुग्धमात्रस्तदाऽनघ ।
समीरणाहृतो यातश्चितां तां राजधर्मणः ॥ १२-१७२-९ (७१८७६)

देवराजस्ततः प्राप्तो विरूपाक्षपुरं तदा ।
विरूपाक्षोऽपि तं शक्रमयाचत पुनः पुनः ।
काश्यपश्य सुतो देव भ्राता मे जीवतामिति ॥ १२-१७२-१० (७१८७७)
विरूपाक्षमुवाचेदमीश्वरः पाकशासनः ।
ब्रह्मणा व्याहृतो रोषाद्राजधर्मा कदाचन ॥ १२-१७२-११ (७१८७८)
यस्मात्त्वं नागतो द्रष्टुं मम नित्यमिमां सभाम् ।
तस्माद्बको भवान्भावी धर्मशीलः परात्मवित् ॥ १२-१७२-१२ (७१८७९)
आगमिष्यति ते वासं कदाचित्पापकर्मकृत् ।
शबरावासगो विप्रः कृतघ्नो वृषलीपतिः ॥ १२-१७२-१३ (७१८८०)
यदा निहन्ता मोक्षस्ते तदा भावीत्युवाच तम् ।
तस्मादेष गतो लोकं ब्रह्मणः परमेष्ठिनः ॥ १२-१७२-१४ (७१८८१)
भीष्म उवाच। १२-१७२-१५क्ष् (५८७३)
स चापि निरयं प्राप्तो दुष्कृतिः कुलपांसनः ॥ १२-१७२-१५ (७१८८२)
एतच्छ्रुत्वा सभामध्ये तद्वाक्यं नारदेरितम् ।
मयाऽपि तव राजेन्द्र यथावदनुवर्णितम् ॥ १२-१७२-१६ (७१८८३)
ब्रह्मघ्ने च सुरापे च चोरे भ्रष्टव्रते तथा ।
निष्कृतिर्विहिता राजन्कृतघ्ने नास्ति निष्कृतिः ॥ १२-१७२-१७ (७१८८४)
कुतः कृतघ्नस्य यशः कुतः स्थानं कुतः सुखम् ।
अश्रद्धेयः कृतघ्नो हि कृतघ्ने नास्ति निष्कृतिः ॥ १२-१७२-१८ (७१८८५)
मित्रद्रोहो न कर्तव्यः पुरुषेण विशेषतः ।
मित्रध्रुङ्निरयं घोरं नरकं प्रतिपद्यते ॥ १२-१७२-१९ (७१८८६)
कृतज्ञमनसा भाव्यं मित्रभावेन चानघ ।
मित्रात्प्रभवते सर्वं मित्रं धन्यतरं स्मृतम् ॥ १२-१७२-२० (७१८८७)
अर्थाद्वा मित्रलाभाद्वा मित्रलाभो विशिष्यते ।
सुलभा मित्रतोऽर्थास्तु मित्रेण यतितुं क्षमम् ॥ १२-१७२-२१ (७१८८८)
मित्रं चाभिमतं स्निग्धं फलं चापि सतां फलम् ।
सत्कारैः स्वजनोपेतः पूजयेत विचक्षणः ॥ १२-१७२-२२ (७१८८९)
परित्याज्यो बुधैः पापः कदर्यः कुलपांसनः ।
मित्रद्रोही कुलाङ्गारः पापकर्मा कुलाधमः ॥ १२-१७२-२३ (७१८९०)
एषा सज्जनसांनिध्ये प्रज्ञा प्रोक्ता मयाऽनघ ।
मित्रदुहि कृतघ्ने च किं भूयः श्रोतुमिच्छसि ॥ १२-१७२-२४ (७१८९१)
वैशंपायन उवाच। १२-१७२-२५क्ष् (५८७४)
एतच्छ्रुत्वा ततो वाक्यं भीष्मेणोक्तं महात्मना ।
युधिष्ठिरः प्रीतमना बभूव जनमेजय ॥ ॥ १२-१७२-२५ (७१८९२)

इति श्रीमन्महाभारते शान्तिपर्वणि आपद्धर्मपर्वणि

शन्तिपर्व-अध्यय१७३
॥ श्रीः ॥
१२.१७३. अध्यायः १७३

Mahabharata - Shanti Parva - Chapter Topics
भीष्मेण युधिष्ठिरंप्रति विप्रसेनजित्संवादानुवादः ॥ १.। विप्रेण सेनजितंप्रति पिङ्गलोपाख्यानकथनम् ॥ २.।
Mahabharata - Shanti Parva - Chapter Text

१२-१७३-० (७१८९३)
युधिष्ठिर उवाच। १२-१७३-०क्ष् (५८७५)
धर्माः पितामहेनोक्ता राजधर्माश्रिताः शुभाः ।
धर्ममाश्रमिणां श्रेष्ठं वक्तुमर्हसि सत्तम ॥ १२-१७३-१ (७१८९४)
भीष्म उवाच। १२-१७३-२क्ष् (५८७६)
सर्वत्र विहितो धर्मः स्वर्ग्यः सत्यफलोदयः ।
बहुद्वारस्य धर्मस्य नेहास्ति विफला क्रिया ॥ १२-१७३-२ (७१८९५)
यस्मिन्यस्मिंस्तु विषये योयो याति विनिश्चयम् ।
स तमेवाभिजानाति नान्यं भरतसत्तम् ॥ १२-१७३-३ (७१८९६)
यथायथा च पर्येति लोकतन्त्रमसारवत् ।
तथातथा विरागोऽत्र जायते नात्र संशयः ॥ १२-१७३-४ (७१८९७)
एवं व्यवसिते लोके बहुदोषे युधिष्ठिर ।
आत्ममोक्षनिमित्तं वै यतेत मतिमान्नरः ॥ १२-१७३-५ (७१८९८)
युधिष्ठिर उवाच। १२-१७३-६क्ष् (५८७७)
नष्टे धने वा दारे वा पुत्रे पितरि वा मृते ।
यया बुद्ध्या नुदेच्छोक तन्मे ब्रूहि पितामह ॥ १२-१७३-६ (७१८९९)
भीष्म उवाच। १२-१७३-७क्ष् (५८७८)
नष्टे धने वा दारे वा पुत्रे पितरि वा मृते ।
अहोदुःखमिति ध्यायञ्शोकस्यापचितिं चरेत् ॥ १२-१७३-७ (७१९००)
अत्राप्युदाहरन्तीममिहासं पुरातनम् ।
यथा सेनजितं विप्रः कश्चिदेत्याब्रवीत्सुहृत् ॥ १२-१७३-८ (७१९०१)
पुत्रशोकाभिसंतप्तं राजानं शोकविह्वलम् ।
विषण्णमनसं दृष्ट्वा विप्रो वचनमब्रवीत् ॥ १२-१७३-९ (७१९०२)
किंनु मुह्यसि मूढस्त्वं शोच्यः किमनु शोचसि ।
यदा त्वामपि शोचंतः शोच्या यास्यन्ति तां गातिम् ॥ १२-१७३-१० (७१९०३)
त्वं चैवाहं च ये चान्ये त्वां राजन्पर्युपासते ।

सर्वे तत्र गमिष्यामो यत एवागता वयम् ॥ १२-१७३-११ (७११०४)
सेनजिदुवाच। १२-१७३-१२क्ष् (५८७९)
का बुद्धिः किं तपो विप्र कः समाधिस्तपोधन ।
किं ज्ञानं किं श्रुतं वा ते यत्प्राप्य न विषीदसि ॥ १२-१७३-१२ (७११०५)
ब्राह्मण उवाच। १२-१७३-१३क्ष् (५८८०)
हृष्यन्तमवसीदन्तं सुखदुःखविपर्यये ।
आत्मानमनुशोचामि यो ममैष हृदि स्थितः ॥ १२-१७३-१३ (७११०६)
पश्य भूतानि दुःखेन व्यतिषिक्तानि सर्वशः ।
उत्तमाधममध्यानि तेषु तेष्विह कर्मसु ॥ १२-१७३-१४ (७११०७)
आत्माऽपि चायं न मम सर्वा वा पृथिवी मम ।
यथा मम तथाऽन्येषामिति मत्वा न मे व्यथा ।
एतां बुद्धिमहं प्राप्य न प्रहृष्ये न च व्यथे ॥ १२-१७३-१५ (७११०८)
यथा काष्ठं च काष्ठं च समेयातां महोदधौ ।
समेत्य च व्यपेयातां तद्वद्भूतसमागमः ॥ १२-१७३-१६ (७११०९)
एवं पुत्राश्च पौत्राश्च ज्ञातयो बान्धवास्तथा ।
तेषु स्नेहो न कर्तव्यो विप्रयोगो ध्रुवो हि तैः ॥ १२-१७३-१७ (७१११०)
अदर्शनादापतितः पुनश्चादर्शनं गतः ।
न त्वाऽसौ वेद न त्वंतं कस्मात्त्वमनुशोचसि ॥ १२-१७३-१८ (७११११)
सुखान्तप्रभवं दुःखं दुःखान्तप्रभवं सुखम् ।
सुखात्संजायते दुःखं दुःखात्संजायते सुखम् ॥ १२-१७३-१९ (७१११२)
सुखस्यानन्तरं दुःखं दुःखस्यानन्तरं सुखम् ।
सुखदुःखे मनुष्याणां चक्रवत्परिवर्ततः ॥ १२-१७३-२० (७१११३)
सुखात्त्वं दुःखमापन्नः पुनरापत्स्यसे सुखम् ।
न नित्यं लभते दुःखं न नित्यं लभते सुखम् ॥ १२-१७३-२१ (७१११४)
शरीरमेवायतनं सुखस्य
दुःखस्य चाप्यायतनं शरीरम् ।
यद्यच्छरीरेण करोति कर्म
तेनैव देही समुपाश्नुते तत् ॥ १२-१७३-२२ (७१११५)
जीवितं च शरीरेण तेनैव सह जायते ।
उभे सह विवर्तेते उभे सह विनश्यतः ॥ १२-१७३-२३ (७१११६)
स्नेहपाशैर्बहुविधैराविष्टविषया जनाः ।
अकृतार्थाश्च सीदन्ते जलैः सैकतसेतवः ॥ १२-१७३-२४ (७१११७)
स्नेहेन तैलवत्सर्वं सर्गचक्रे निपीड्यते ।
तिलपीडैरिवाक्रम्य क्लेशैरज्ञानसंभवैः ॥ १२-१७३-२५ (७१११८)
संचिनोत्यशुभं कर्म कलत्रापेक्षया नरः ।
एकः क्लेशानवाप्नोति परत्रेह च मानवः ॥ १२-१७३-२६ (७१११९)

पुत्रदारकुटुम्बेषु प्रसक्ताः सर्वमानवाः ।
शोकपङ्कार्णवे मग्ना जीर्णा वनगजा इव ॥ १२-१७३-२७ (७१९२०)
पुत्रनाशे वित्तनाशे ज्ञातिसंबन्धिनामपि ।
प्राप्यते सुमहद्दुःखं दावाग्निप्रतिमं विभो ।
दैवायत्तमिदं सर्वं सुखदुःखे भवाभवौ ॥ १२-१७३-२८ (७१९२१)
असुहृत्ससुहृच्चापि सशत्रुर्मित्रवानपि ।
सप्रज्ञः प्रज्ञया हीनो दैवेन लभते सुखम् ॥ १२-१७३-२९ (७१९२२)
नालं सुखाय सुहृदो नालं दुःखाय दुर्हृदः ।
न च प्रज्ञाऽलमर्थानां न सुखानामलं धनम् ॥ १२-१७३-३० (७१९२३)
न बुद्धिर्धनलाभाय न मौढ्यमसमृद्धये ।
लोकपर्यायवृत्तान्तं प्राज्ञो जानाति नेतरः ॥ १२-१७३-३१ (७१९२४)
बुद्धिमन्तं च शूरं च मूढं भीरुं जडं कविम् ।
दुर्बलं बलवन्तं च भागिनं भजते सुखम् ॥ १२-१७३-३२ (७१९२५)
धेनुर्वत्सस्य गोपस्य स्वामिनस्तस्करस्य च ।
पयः पिबति यस्तस्या धेनुस्तस्येति निश्चयः ॥ १२-१७३-३३ (७१९२६)
ये च मूढतमा लोके ये च बुद्धेः परं गताः ।
ते नराः सुखमेधन्ते क्लिश्यत्यन्तरितो जनः ॥ १२-१७३-३४ (७१९२७)
अन्तेषु रेमिरे धीरा न ते मध्येषु रेमिरे ।
अन्तप्राप्तिं सुखं प्राहुर्दुःखमन्तरमन्तयोः ॥ १२-१७३-३५ (७१९२८)
सुखं स्वपिति दुर्मेधाः स्वानि कर्माण्यचिन्तयन् ।
अविज्ञानेन महता कम्बलेनेव संवृतः ॥ १२-१७३-३६ (७१९२९)
ये च बुद्धिं परां प्राप्ता द्वन्द्वातीता विमत्सराः ।
तान्नैवार्था न चानर्था व्यथयन्ति कदाचन ॥ १२-१७३-३७ (७१९३०)
अथ ये बुद्धिमप्राप्ता व्यतिक्रान्ताश्च मूढताम् ।
तेऽतिवेलं प्रहृष्यन्ति संतापमुपयान्ति च ॥ १२-१७३-३८ (७१९३१)
नित्यं प्रमुदिता मूढा दिवि देवगणा इव ।
अवलेपेन महता परितृप्ता विचेतसः ॥ १२-१७३-३९ (७१९३२)
सुखं दुःखान्तमालस्यं दुःखं दाक्ष्यं सुखोदयम् ।
भूतिश्चैव श्रिया सार्धं दक्षे वसति नालसे ॥ १२-१७३-४० (७१९३३)
सुखं वा यदि वा दुःखं प्रियं वा यदि वाऽप्रियम् ।
प्राप्तं प्राप्तमुपासीत हृदयेनापराजितः ॥ १२-१७३-४१ (७१९३४)
शोकस्थानसहस्राणि भयस्थानशतानि च ।
दिवसेदिवसे मूढमाविशन्ति न पण्डितम् ॥ १२-१७३-४२ (७१९३५)
बुद्धिमन्तं कृतप्रज्ञं शुश्रूषुमनहंकृतम् ।
शान्तं जितेन्द्रियं चापि शोको न स्पृशते नरम् ॥ १२-१७३-४३ (७१९३६)
एतां बुद्धिं समास्थाय शुद्धचित्तश्चरेद्बुधः ।

ग्शुक्लकृष्णगतिज्ञं तं देवासुरविनिर्गमम्।'
उदयास्तमयज्ञं हि न शोकः स्प्रष्टुमर्हति ॥ १२-१७३-४४ (७१९३७)
यन्निमित्तो भवेच्छोकस्त्रासो वा क्रोध एव वा ।
आयासो वा यतो मूलं तदेकाङ्गमपि त्यजेत् ॥१२-१७३-४५ (७१९३८)
यद्यत्त्यजति कामनां तत्सुखस्याभिपूर्यते ।
कामानुसारी पुरुषः कामाननुविनश्यति ॥१२-१७३-४६ (७१९३९)
यच्च कामसुखं लोके यच्च दिव्यं महत्सुखम् ।
तृष्णाक्षयसुखस्यैते नार्हतः षोडशीं कलाम् ॥१२-१७३-४७ (७१९४०)
पूर्वदेहकृतं कर्म शुभं वा यदि वाऽशुभम् ।
प्राज्ञं मूढं तथा शूरं भजते तादृशं नरम् ॥१२-१७३-४८ (७१९४१)
एवमव किलैतानि प्रियाण्येवाप्रियाणि च ।
जीवेषु परिवर्तन्ते दुःखानि च सुखानि च ॥१२-१७३-४९ (७१९४२)
एतां बुद्धिं समास्थाय नावसीदेद्गुणान्वितः ।
सर्वान्कामाञ्जुगुप्सेन कोपं कुर्वीत पृष्ठतः ॥१२-१७३-५० (७१९४३)
वृत्त एव हृदि प्रौढो मृत्युरेप मनोभवः ।
क्रोधो नाम शरीरस्थो देहिनां प्रोच्यते बुधैः ॥१२-१७३-५१ (७१९४४)
यदा संहरते कामान्कूर्मोऽङ्गानीव सर्वशः ।
तदात्मज्योतिरात्मश्रीरात्मन्येव प्रसीदति ॥१२-१७३-५२ (७१९४५)
किंचिदेव ममत्वेन यदा भवति कल्पितम् ।
तदेव परितापाय नाशे संपद्यते तदा ॥१२-१७३-५३ (७१९४६)
न बिभेति यदा चायं यदा चास्मान्न बिभ्यति ।
यदा नेच्छति न द्वेष्टि ब्रह्म संपद्यते तदा ॥१२-१७३-५४ (७१९४७)
उभे सत्यानृते त्यक्त्वा शोकानन्दौ भयाभये ।
प्रियाप्रिये परित्यज्य प्रशान्तात्मा भविष्यति ॥१२-१७३-५५ (७१९४८)
यदा न कुरुते धीरः सर्वभूतेषु पापकम् ।
कर्मणा मनसा वाचा ब्रह्म संपद्यते तदा ॥१२-१७३-५६ (७१९४९)
या दुस्त्यजा दुर्मतिभिर्या न जीर्यति जीर्यतः ।
योसौ प्राणान्तिको रोगस्तां तृष्णां त्यजतः सुखं ॥१२-१७३-५७ (७१९५०)
अत्र पिङ्गलया गीता गाथा शृणु नराधिप ।
यथा सा कृच्छ्रकालेऽपि लेभे शर्म सनातनम् ॥१२-१७३-५८ (७१९५१)
संकेते पिङ्गला वेश्या कान्तेनासीद्विनाकृता ।
अथ कृच्छ्रगता शान्तां बुद्धिमास्थापयत्तदा ॥१२-१७३-५९ (७१९५२)
पिङ्गलोवाच।१२-१७३-६०क्ष् (५८८१)
उन्मत्ताऽहमनुन्मत्तं कान्तमन्ववसं चिरम् ।
अन्तिके रमणं सन्तं नैनमध्यगमं पुरा ॥१२-१७३-६० (७१९५३)
एकस्थूणं नवद्वारमपिधास्याम्यगारकम् ।

का ह्यकान्तमिहायान्तं कान्त इत्यभिमंस्यते ॥ १२-१७३-६१ (७१९५४)
अकामाः कामरूपेण धूर्ताश्च नररूपिणः ।
न पुनर्वञ्चयिष्यन्ति प्रतिबुद्धाऽस्मि जागृमि ॥ १२-१७३-६२ (७१९५५)
अनर्थोऽपि भवत्यर्थो दैवात्पूर्वकृतेन वा ।
संबुद्धाऽहं निराकारा नाहमद्याजितेन्द्रिया ॥ १२-१७३-६३ (७१९५६)
सुखं निराशः स्वपिति नैराश्यं परमं सुखम् ।
आशामनाशां कृत्वा हि सुखं स्वपिति पिङ्गला ॥ १२-१७३-६४ (७१९५७)
भीष्म उवाच। १२-१७३-६५क्ष् (५८८२)
एतैश्चान्यैश्च विप्रस्य हेतुमद्भिः प्रभाषितैः ।
पर्यवस्थापितो राजा सेनजिन्मुमुदे सुखम् ॥ ॥ १२-१७३-६५ (७१९५८)

इति श्रीमन्महाभारते शान्तिपर्वणि आपद्धर्मपर्वणि
त्रिसप्तत्यधिकशततमोऽध्यायः ॥ १७३. ।

Mahabharata - Shanti Parva - Chapter Footnotes

१२-१७३-१ राजनियोगाद्धर्मप्रवृत्तेः राजधर्माश्रिताः । श्रेष्ठः
प्रशस्यतमोमोक्षधर्मस्ताम्। आश्रमिणामित्युक्तेर्गृहस्थादीनां
सर्वेषामप्यत्राधिकारो दर्शितः ॥
१२-१७३-२ मोक्षधर्मस्योत्तमत्वं वक्तुमितरधर्मस्य निकृष्टत्वमाह
। सर्वत्रेति। सर्वत्राश्रमेषु धर्मो विहितो वेदेनाऽग्निहोत्रं
जुहुयास्त्वर्गकाम इत्यादिना। स्वर्ग्यः स्वर्गफलसाधनम्। सत्यफलोदयः
अवश्यंभाविफलोदयः। बहुद्वारस्य यज्ञदानाद्यनेकोपायस्य। क्रिया
अनुष्ठानम् ॥
१२-१७३-३ यस्मिन्विषये स्वर्गादिफले विनिश्चयं याति इदं
फलं सद्यः प्राप्यमित्यभिसंधत्ते स तत्साधनमुपादत्ते न
फलान्तरसाधनमित्यर्थः ॥
१२-१७३-४ पर्येति जानाति लोकतन्त्रं अनोपकरणं धनदारादिकम् । अत्र
लोके असारं तृणादि तद्वत्तच्छम् ॥
१२-१७३-५ व्यवसिते निश्चिते । लोके
स्थावरादिसत्यलोकपर्यन्ते। बहुदोषे
ऐश्वर्यतारतम्यक्षयिष्णुत्वादिदोषबहुले। दोषदर्शननिश्चये
वैराग्ये सतीत्यर्थः ॥
१२-१७३-६ तन्मे तां मे ॥
१२-१७३-७ अपचितिं प्रतीकारम् ॥
१२-१७३-९ संतापोऽन्तर्बहिर्दाहः । विह्वलत्वं
बाह्येन्द्रियचलनशून्यत्वम्। विषण्णं मूढं मनो यस्य। विवर्णवदनं

दृष्ट्वेति ट। पाठः ॥
१२-१७३-१० मूढाः सर्वेऽपि शोच्याः शोकाक्रान्ताश्चेत्यतो निःशोकं पदमन्वेष्टव्यमित्यर्थः ॥
१२-१७३-१२ बुद्धिरुपपत्तिः । तपस्तदालोचनम्। समाधिर्बुद्धेरेकत्र पर्यवसानम्। ज्ञानं साक्षात्कारः। श्रुतमेवेष्वर्थेषु प्रमाणम् ॥
१२-१७३-१४ तत्र बुद्धिमाहं सार्धद्वयेन पश्येति । व्यतिषिक्तानि व्याप्तान्युत्तमाधममध्यानि देवतिर्थङ्भनुष्यादीनि। कर्मसु निमित्तभूतेषु ॥
१२-१७३-१५ एवं कर्मजं दुःखं देवादीनामप्यस्तीति दृश्यमानभूतदृष्टान्तेनोपपाद्य तन्निवृत्तावप्युपपत्तिमाह आत्मेति ॥
१२-१७३-१६ तप आह यथेत्यादिना । भूतैः समागमः आत्मनो देहयोग इत्यर्थः ॥
१२-१७३-१७ तपःफलमाह एवमिति ॥
१२-१७३-१८ कः सन् किमनुशोचसि इति झ । पाठः ॥
१२-१७३-२५ स्नेहेन निमित्तेन तिलपीडैस्तैलिकैः ॥
१२-१७३-२६ अशुभं चौर्यादि । कलत्रापेक्षया भार्यादिपोषणार्थं धनसुखभागिनः सर्वे पापफलभागी त्वेक एवायमित्यर्थः ॥
१२-१७३-२८ भवाभवौ ऐश्वर्यानैश्वर्ये ॥
१२-१७३-२९ सुहृत्प्रत्युपकारमनपेक्ष्योपकारकर्ता । मित्रं प्रत्युपकारमपेक्ष्यो पकारकर्तृ ॥
१२-१७३-३० सुखाय सुखं दातुं नालं न पर्याप्ताः ॥
१२-१७३-३१ असमृद्धये धनादिनाशाय । लोको भोग्यप्रपञ्चस्तस्य पर्यायो निर्माणं तत्र विषये वृत्तान्तं सिद्धान्तम्। प्राज्ञस्तत्त्ववित् ॥
१२-१७३-३२ मूढं निर्बुद्धिम् । जडमलसम्। कविं दीर्घदर्शिनम्। भागिनं सदैवम्। भजते स्वयमेवोपनमते। नतु तदर्थं यत्नोऽपेक्ष्य इत्यर्थः ॥
१२-१७३-३३ पयःपातुरेव धेनुरितरेषां तु तत्र ममता व्यर्था । तस्मादावश्यकादधिके स्पृहा न कार्येत्यर्थः ॥
१२-१७३-३५ धीराः पण्डिताः अन्तेषु अन्तयोः धर्ममोक्षयोः । व्यत्ययो बहुलमिति च व्यत्ययः। मध्येषु मध्ययोः अर्थकामयोः। अन्तप्राप्तिं धर्ममोक्षप्राप्तिं मोक्षस्य सुखरूपत्वाद्धर्मस्य सुखहेतुत्वात् सुखं प्राहुः। अन्तयोर्धर्ममोक्षयोरन्तरं मध्यं अर्थकामं दुःखं प्राहुरित्यर्थः ॥
१२-१७३-३७ द्वन्द्वातीताः सुखदुःखाद्यतीताः । मत्सरः

परोत्कर्षासहिष्णुत्वं तद्वर्जिताः। अर्थाः ख्यादयः। अनर्थास्तद्वियोगाः ॥
१२-१७३-३८ अतिवेलमत्यन्तम् ॥
१२-१७३-३९ परिवृद्धा विचेतस इति ध । पाठः ॥
१२-१७३-४० आलस्यं ज्ञानसाधनेष्वप्रवृत्तिः । दुःखं दुःखकरम्। भूतिरणिमाद्यैश्वर्यम्। श्रिया विद्यया। सुखं दुःखान्तमालक्ष्येति झ। पाठः ॥
१२-१७३-४१ सुखदुःखसाधने प्रियाप्रिये । हृदयेन हर्षशोकमयेनाऽपराजितोऽवशीकृतः ॥
१२-१७३-४२ शोकमूलानीष्टवियोगादीनि । भयमूलान्यनिष्टसंयोगादीनि। आविशन्ति स्वकार्योत्पादनेन व्याप्नुवन्ति ॥
१२-१७३-४३ बुद्धिर्ग्रन्थधारणसामर्थ्यं तद्वन्तम् । कृता स्वतःसिद्धा प्रज्ञा ऊहापोहकौशलं यस्य तम्। शुश्रूषुं शास्त्राभ्यासपरम्। शुश्रूषमनसूयकमिति झ। पाठः। तत्र अनसूयकं शास्त्रीयेऽर्थे दोषदृष्टिरसूया तद्रहितमित्यर्थः ॥
१२-१७३-४४ शुक्लं सत्वं कृष्णं तमस्ताभ्यां प्राप्ये गती प्रकाशावरणकार्ये मुक्तिसंसाराख्ये तज्ज्ञम् । देवा दानदयादिरूपाः सात्विक्यश्चेतोवृत्तयः। असुरा राजस्यस्तामस्यो लोभमोहाद्यास्ता एव तासामुभयीनामपि विशेषेण निर्गमो बहिर्भावो यस्यात्तं उदया स्तमयज्ञं देहिनां जन्मविनाशज्ञम् ॥
१२-१७३-४५ यत आयासस्तन्मूलं कारणमायासादेरेकाङ्गं शरीरैकदेशभूतमपि त्यजेत् किमुत धनदारादि ॥
१२-१७३-४६ कामानां विषयाणां मध्ये ॥
१२-१७३-४७ लोके मानुषे । दिव्यं स्वर्गभवम्। तृष्णाक्षयो वैराग्यम् ॥
१२-१७३-४८ कर्तारमजितं कर्म शुभं वा यदि वाऽशुभमिति ङ । पुस्तकपाठ ॥
१२-१७३-५६ पापकं हिंसनम् ॥
१२-१७३-५८ कृच्छ्रकाले दुःखकाले । लेभे धर्मं सनातनमिति घ। पाठः। ब्रह्म सनातनमिति ङ। पाठः ॥
१२-१७३-५९ आस्थापयत् व्यवस्थापितवती ॥
१२-१७३-६० अन्तिके हृदयकोशे रमणमानन्दप्रदम् ॥
१२-१७३-६१ एकस्थूणं एकात्माधारं अगारं शरीराख्यम् ॥
१२-१७३-६२ जागृमि जागर्मि ॥
१२-१७३-६५ पर्ववस्थापित आत्मतत्त्वे निष्ठां प्रापितः ॥

---

शन्तिपर्व-अध्यय१७४

॥ श्रीः ॥
१२.१७४. अध्यायः १७४

Mahabharata - Shanti Parva - Chapter Topics
भीष्मेण युधिष्ठिरंप्रति कालस्य द्रुततरपातितय सद्यः साधनस्य संपादनीयत्वे प्रमाणतया पितृपुत्रसंवादानुवादः ॥ १.।
Mahabharata - Shanti Parva - Chapter Text

१२-१७४-० (७१९५९)
युधिष्ठिर उवाच। १२-१७४-०क्ष् (५८८३)
अतिक्रामति कालेऽस्मिन्सर्वभूतक्षयावहे ।
किं श्रेयः प्रतिपद्येत तन्मे ब्रूहि पितामह ॥ १२-१७४-१ (७१९६०)
भीष्म उवाच। १२-१७४-२क्ष् (५८८४)
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
पितुः पुत्रेण संवादं तं निबोध युधिष्ठिर ॥ १२-१७४-२ (७१९६१)
द्विजातेः कस्यचित्पार्थ स्वाध्यायनिरतस्य वै ।
बभूव पुत्रो मेधावी मेधावीनाम नामतः ॥ १२-१७४-३ (७१९६२)
सोऽब्रवीत्पितरं पुत्रः स्वाध्यायकरणे रतम् ।
मोक्षधर्मार्थकुशलो लोकतन्त्रविचक्षणः ॥ १२-१७४-४ (७१९६३)
पुत्र उवाच। १२-१७४-५क्ष् (५८८५)
धीरः किंस्वित्तात कुर्यात्प्रजानन्
क्षिप्रं ह्यायुर्भ्रश्यते मानवानाम् ।
पितस्तदाचक्ष्व यथार्थयोगं
ममानुपूर्व्या येन धर्मं चरेयम् ॥ १२-१७४-५ (७१९६४)
पितोवाच। १२-१७४-६क्ष् (५८८६)
वेदानधीत्य ब्रह्मचर्येण पुत्र
पुत्रानिच्छेत्पावनार्थं पितृणाम् ।
अग्नीनाधाय विधिवच्चेष्टयज्ञो
वनं प्रविश्याथ मुनिर्बुभूषेत् ॥ १२-१७४-६ (७१९६५)
पुत्र उवाच। १२-१७४-७क्ष् (५८८७)
एवमभ्याहते लोके समन्तात्परिवारिते ।
अमोघासु पतन्तीषु किं धीर इव भाषसे ॥ १२-१७४-७ (७१९६६)
पितोवाच। १२-१७४-८क्ष् (५८८८)
कथमभ्याहतो लोकः केन वा परिवारितः ।
अमोघाः काः पतन्तीह किंनु भीषयसीव माम् ॥ १२-१७४-८ (७१९६७)
पुत्र उवाच। १२-१७४-९क्ष् (५८८९)

मृत्युनाभ्याहतो लोको जरया परिवारितः ।
अहोरात्राः पतन्त्येते ननु कस्मान्न बुध्यसे ।
अमोघा रात्रयश्चापि नित्यमायान्ति यान्ति च ॥ १२-१७४-९ (७११६८)
पितोवाच। १२-१७४-१०क्ष् (५८९०)
यथाऽहमेतज्जानामि न मृत्युस्तिष्ठतीति ह ।
सोऽहं कथं प्रतीक्षिष्ये जालेनेवावृतश्चरन् ॥ १२-१७४-१० (७११६९)
पुत्र उवाच। १२-१७४-११क्ष् (५८९१)
रात्र्यांरात्र्यां व्यतीतायामायुरल्पतरं यदा ।
तदैव बन्ध्यं दिवसमिति विन्द्याद्विचक्षणः ॥ १२-१७४-११ (७११७०)
गाधोदके मत्स्य इव सुखं विन्देत कस्तदा ।
अनवाप्तेषु कामेषु मृत्युरभ्योति मानवम् ॥ १२-१७४-१२ (७११७१)
पुष्पाणीव विचिन्वन्तमन्यत्र गतमानसम् ।
वृकीवोरणमासाद्य मृत्युरादाय गच्छति ॥ १२-१७४-१३ (७११७२)
अद्यैव कुरु यच्छ्रेयो मा त्वां कालोऽत्यगादयम् ।
अकृतेष्वेव कार्येषु मृत्युर्वै संप्रकर्षति ॥ १२-१७४-१४ (७११७३)
श्वः कार्यमद्य कुर्वीत पूर्वाह्णे चापराह्णिकम् ।
नहि प्रतीक्षते मृत्युः कृतमस्य न वा कृतम् ॥ १२-१७४-१५ (७११७४)
को हि जानाति कस्याद्य मृत्युकालो भविष्यति ।
युवैव धर्मशीलः स्यादनित्यं खलु जीवितम् ।
कृते धर्मे भवेत्कीर्तिरिह प्रेत्य च वै सुखम् ॥ १२-१७४-१६ (७११७५)
मोहेन हि समाविष्टः पुत्रदारार्थमुद्यतः ।
कृत्वा कार्यमकार्यं वा पुष्टिमेषां प्रयच्छति ॥ १२-१७४-१७ (७११७६)
तं पुत्रपशुसंपन्नं व्यासक्तमनसं नरम् ।
सुप्तं व्याघ्रो मृगमिव मृत्युरादाय गच्छति ॥ १२-१७४-१८ (७११७७)
संचिन्वानकमेवैनं कामानामवितृप्तकम् ।
व्याघ्रः पशुमिवादाय मृत्युरादाय गच्छति ॥ १२-१७४-१९ (७११७८)
इदं कृतमिदं कार्यमिदमन्यत्कृताकृतम् ।
एवमीहासुखासक्तं कृतान्तः कुरुते वशे ॥ १२-१७४-२० (७११७९)
कृतानां फलमप्राप्तं कर्मणां कर्मसंज्ञितम् ।
क्षेत्रापणगृहासक्तं मृत्युरादाय गच्छति ॥ १२-१७४-२१ (७११८०)
दुर्बलं बलवन्तं च शूरं भीरुं जडं कविम् ।
अप्राप्तं सर्वकामार्थान्मृत्युरादाय गच्छति ॥ १२-१७४-२२ (७११८१)
नृत्युर्जरा च व्याधिश्च दुःखं चानेककारणम् ।
अनुषक्तं यदा देहे किं स्वस्थ इव तिष्ठसि ॥ १२-१७४-२३ (७११८२)
जातमेवान्तकोऽन्ताय जरा चान्वेति देहिनम् ।
अनुषक्ता द्वयेनैते भावाः स्थावरजङ्गमाः ॥ १२-१७४-२४ (७११८३)

अत्योर्वा मुखमेतद्धि या ग्रामे वसतो रतिः ।
वानामेष वै गोष्ठो यदरण्यमिति श्रुतिः ॥१२-१७४-२५ (७११९८४)
तेबन्धनी रज्जुरेषा या ग्रामे वसतो रवि ।
छेत्त्वेता सुकृतो यान्ति नैनां छिन्दन्ति दुष्कृतः ॥१२-१७४-२६ (७११९८५)
हिंसयति यो जन्तून्मनोवाक्कायहेतुभिः ।
जीवितार्थापनयनैः प्राणिभिर्न स हिंस्यते ॥१२-१७४-२७ (७११९८६)
न मृत्युसेनामायान्तीं जातु कश्चित्प्रबाधते ।
ऋते सत्यमसत्त्याज्यं सत्ये ह्यमृतमाश्रितम् ॥१२-१७४-२८ (७११९८७)
तस्मात्सत्यव्रताचारः सत्ययोगपरायणः ।
सत्यागमः सदा दान्तः सत्येनैवान्तकं जयेत् ॥१२-१७४-२९ (७११९८८)
अमृतं चैव मृत्युश्च द्वयं देहे प्रतिष्ठितम् ।
मृत्युरापद्यते मोहात्सत्येनापद्यतेऽमृतम् ॥१२-१७४-३० (७११९८९)
सोऽहं ह्यहिंस्रः सत्यार्थी कामक्रोधबहिष्कृतः ।
समदुःखसुखः क्षेमी मृत्युंहास्याम्यमर्त्यवत् ॥१२-१७४-३१ (७११९९०)
शान्तियज्ञरतो दान्तो ब्रह्मयज्ञे स्थितो मुनिः ।
वाङ्भनः कर्मयज्ञश्च भविष्याम्युदगायने ॥१२-१७४-३२ (७११९९१)
पशुयज्ञैः कथं हिंस्रैर्मादृशो चष्टुमर्हति ।
अन्तवद्भिरिव प्राज्ञः क्षेत्रयज्ञैः पिशाचवत् ॥१२-१७४-३३ (७११९९२)
यस्य वाङ्भनसी स्यातां सम्यक्प्रणिहिते सदा ।
तपस्त्यागश्च सत्यं च स वै सर्वमवाप्नुयात् ॥१२-१७४-३४ (७११९९३)
नास्ति विद्यासमं चक्षुर्नास्ति सत्यसमं तपः ।
नास्ति रागसमंदुःखं नास्ति त्यागसमं सुखम् ॥१२-१७४-३५ (७११९९४)
आत्मन्येवात्मना जात आत्मनिष्ठोऽप्रजोपि वा ।
आत्मन्येव भविष्यामि न मां तारयति प्रजा ॥१२-१७४-३६ (७११९९५)
नैतादृशं ब्राह्मणस्यास्ति वित्तं
यथैकता समता सत्यता च ।
शीलं स्थितिर्दण्डनिधानमार्जवं
ततस्ततश्चोपरभः क्रियाभ्यः ॥ १२-१७४-३७ (७११९९६)
किं ते धनैर्बान्धवैर्वापि किं ते
किं ते दारैर्ब्राह्मण यो मरिष्यसि ।
आत्मानमन्विच्छ गुहां प्रविष्टं
पितामहास्ते क्व गताः पिता च ॥ १२-१७४-३८ (७११९९७)
भीष्म उवाच।१२-१७४-३९क्ष् (५८९२)
पुत्रस्यैतद्वचः श्रुत्वा यथाऽकार्षीत्पिता नृप ।
तथा त्वमपि वर्तस्व सत्यधर्मपरायणः ॥ ॥१२-१७४-३९ (७११९९८)

इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि
चतुःसप्तत्यधिकशततमोऽध्यायः ॥ १७४.।

Mahabharata - Shanti Parva - Chapter Footnotes

१२-१७४-४ मोक्षधर्माणामर्थेषु कुशलः ॥
१२-१७४-५ यथार्थयोगं फलसंबन्धमनतिक्रम्य तात
कुर्याच्छुभार्थी इति ड थ पाठः ।तात कुर्यात्प्रजासु इति ट। पाठः ॥
१२-१७४-७ अमोधास्वायुर्हरणेन सफलासु रात्रिषु ॥
१२-१७४-११ वन्ध्यं निष्फलम् ॥
१२-१७४-१२ यदा मृत्युरभ्येति तदा कः सुखं विन्देतेति संबन्धः ॥
१२-१७४-१३ पुष्पाणि काम्यकर्मफलानि मेषीणामार्तवानि वा ।आर्तवं विना
पशूनां स्त्रीसङ्गे प्रवृत्त्यदर्शनात्। विचिन्वन्तं शास्त्रदृष्ट्या
आघ्राणेन च। उरणं मेषम् ॥
१२-१७४-१७ एषां पुत्रादीनाम् ॥
१२-१७४-१९ संचिन्वानकं कुत्सितं संचिन्वानं संग्रहीतारम् ॥
१२-१७४-२० कार्यं कर्तुमिष्टम् ।कृताकृतमर्धकृतम् ॥
ईहा तृष्णा ॥
१२-१७४-२१ कर्मसंज्ञितं वणिगित्यादि कर्मानुरूपसंज्ञावन्तम् ॥
१२-१७४-२४ द्वयेनान्तकजराख्येन ॥
१२-१७४-२५ ग्रामे स्त्र्यादिसङ्गे रतिरासक्तिरेव मृत्योर्मुखं
न तु वासमात्रम् ।गोष्ठमिव गोष्ठं वासस्थानाम्। अरण्यं
विविक्तदेशः। गृहं त्यक्त्वैकान्ते ध्यानपरो भवेदित्यर्थः ॥
१२-१७४-२६ यान्ति मुक्तिमिति शेषः ॥
१२-१७४-२७ न हिंसयति हिंसां न कारयति न करोति चेत्यर्थः ।हेतुः
श्राद्धादिनिमित्तं तैः जीवितमर्थांश्चापनयन्ति तैर्हिंस्नस्तेनादिभिः
॥
१२-१७४-२८ मृत्युसेनां जराव्याधिरूपां सत्ये ब्रह्मज्ञाने अमृतं
कैवल्यम् ॥
१२-१७४-२९ सत्यव्रताचारः सत्यं ब्रह्मज्ञाने तदर्थं व्रतं
वेदान्तश्रवणादि तदाचारस्तदनुष्ठाता ।सत्ययोगपरायणः
ब्रह्मध्यानपरायणः। सत्यः प्रमाणभूत आगमो गुरुवे दवाक्यं यस्य
स सत्यागमः श्रद्धावान् ॥
१२-१७४-३२ शान्तियज्ञ इन्द्रियनिग्रहः ।ब्रह्मयज्ञो
नित्यमुपनिषदर्थचिन्तनम्। वाग्यज्ञः जपः। मनोयज्ञः
ध्यानं। कर्मयज्ञः स्नानशौचगुरुशुश्रूषाद्यावश्यक
धर्मानुष्ठानम्। उदगायने देवयानपथनिमित्तम्। दैर्घ्यमार्षम् ॥

१२-१७४-३३ अन्तवद्भिरनित्यफलैः ।क्षेत्रयज्ञैः शरीरनाशनैः ॥
१२-१७४-३६ आत्मनि परमात्मनि प्रलये स्थित इति शेषः ।आत्मना सृष्टिकाले जातः ॥
१२-१७४-३७ एकता एकप्रकारता शीलं श्लाघनीयं वृत्तम् ।दण्डनिधानं वाङ्भनः कायैर्हिंसात्यागः ॥

---

शन्तिपर्व-अध्यय१७५
॥ श्रीः ॥
१२.१७५. अध्यायः १७५

Mahabharata - Shanti Parva - Chapter Topics
भीष्मेण युधिष्ठिरंप्रति दारिद्र्यधनिकत्वयोः क्रमेणार्थानर्थसाधनत्वे प्रमाणतया शम्याकगीताया अनुवादः ॥१.।
Mahabharata - Shanti Parva - Chapter Text

१२-१७५-० (७१९९९)
युधिष्ठिर उवाच।१२-१७५-०क्ष् (५८९३)
धनिनश्चाधना ये च वर्तयन्ति स्वतन्त्रिणः ।
सुखदुःखागमस्तेषां कः कथं वा पितामह ॥१२-१७५-१ (७२०००)
भीष्म उवाच।१२-१७५-२क्ष् (५८९४)
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
शम्याकेन विमुक्तेन गीतं शान्तिगतेन च ॥१२-१७५-२ (७२००१)
अब्रवीन्मां पुरा कश्चिद्ब्राह्मणस्त्यागमाश्रितः ।
क्लिश्यमानः कुदारेण कुचेलेन बुभुक्षया ॥१२-१७५-३ (७२००२)
उत्पन्नमिह लोके वै जन्मप्रभृति मानवम् ।
विविधान्युपवर्तन्ते दुःखानि च सुखानि च ॥१२-१७५-४ (७२००३)
तयोरेकतरो मार्गो यदेनमुपसन्नयेत् ।
न सुखं प्राप्य संहृष्येन्नासुखं प्राप्य संज्वरेत् ॥१२-१७५-५ (७२००४)
न वै चरसि यच्छ्रेय आत्मनो वा न रंस्यसे ।
अकामात्माऽपि हि सदा धुरमुद्यम्य चैव ह ॥१२-१७५-६ (७२००५)
अकिञ्चनः परिपतन्सुखमास्वादयिष्यसि ।
अकिञ्चनः सुखं शेते समुत्तिष्ठति चैव ह ॥१२-१७५-७ (७२००६)
आकिञ्चन्यं सुखं लोके पथ्यं शिवमनामयम् ।
अनमित्रपथो ह्येष दुर्लभः सुलभः सताम् ॥१२-१७५-८ (७२००७)
अकिञ्चनस्य शुद्धस्य उपपन्नस्य सर्वतः ।
अवेक्षमाणस्त्रींल्लोँकान्न तुल्यमिह लक्षये ॥१२-१७५-९ (७२००८)

आकिञ्चन्यं च राज्यं च तुलया समतोलयम् ।
अत्यरिच्यत दारिद्र्यं राज्यादपि गुणाधिकम् ॥ १२-१७५-१० (७२००९)
आकिञ्चन्ये च राज्ये च विशेषः सुमहानयम् ।
नित्योद्विग्नो हि धनवान्मृत्योरास्यगतो यथा ॥ १२-१७५-११ (७२०१०)
नैवास्याग्निर्न चादित्यो न मृत्युर्न च दस्यवः ।
प्रभवन्ति धनं हर्तुमितरे स्युः कुतः पुनः ॥ १२-१७५-१२ (७२०११)
तं वै सदा कामचरमनुपस्तीर्णशायिनम् ।
बाहूपधानं शाम्यन्तं प्रशंसन्ति दिवौकसः ॥ १२-१७५-१३ (७२०१२)
धनवान्क्रोधलोभाभ्यामाविष्टो नष्टचेतनः ।
तिर्यग्दृष्टिः शुष्कमुखः पापको भ्रुकुटीमुखः ॥ १२-१७५-१४ (७२०१३)
निर्दशन्नधरोष्ठं च क्रुद्धो दारुणभाषिता ।
कस्तमिच्छेत्परिद्रष्टुं दातुमिच्छति चेन्महीम् ॥ १२-१७५-१५ (७२०१४)
श्रिया ह्यभीक्ष्णं संवासो मोहयत्यविचक्षणम् ।
सा तस्य चित्तं हरति शारदाभ्रमिवानिलः ॥ १२-१७५-१६ (७२०१५)
अथैनं रूपमानश्च धनपानश्च विन्दति ।
अभिजातोऽस्मि सिद्धोऽस्मि नास्मि केवलमानुषः ।
इत्येभिः कारणैस्तस्य त्रिभिश्चित्तं प्रमाद्यति ॥ १२-१७५-१७ (७२०१६)
संप्रसक्तमना भोगान्विसृज्य पितृसंचितान् ।
परिक्षीणः परस्वानामादानं साधु मन्यते ॥ १२-१७५-१८ (७२०१७)
तमतिक्रान्तमर्यादमाददानं ततस्ततः ।
प्रतिषेधन्ति राजानो लुब्धा मृगमिवेषुभिः ॥ १२-१७५-१९ (७२०१८)
एवमेतानि दुःखानि तानि तानीह मानवम् ।
विविधान्युपवर्तन्ते गात्रसंस्पर्शजान्यपि ॥ १२-१७५-२० (७२०१९)
तेषां परमदुःखानां बुद्ध्या भैषज्यमाचरेत् ।
लोकधर्मं समाज्ञाय ध्रुवाणामध्रुवैः सह ॥ १२-१७५-२१ (७२०२०)
नात्यक्त्वा सुखमाप्नोति नात्यक्त्वा विन्दते परम् ।
नात्यक्त्वा चाभयः शेते त्यक्त्वा सर्वं सुखी भवेत् ॥ १२-१७५-२२ (७२०२१)
इत्येतद्धास्तिनपुरे ब्राह्मणेनोपवर्णितम् ।
शम्याकेन पुरा मह्यं तस्मात्त्यागः परो मतः ॥ ॥ १२-१७५-२३ (७२०२२)

इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि
पञ्चसप्तत्यधिकशततमोऽध्यायः ॥ १७५.।

Mahabharata - Shanti Parva - Chapter Footnotes

१२-१७५-१ स्वतन्त्रिणः स्वशास्त्रानुसारिणः ॥
१२-१७५-२ तेन शम्याकेन यद्गीतं तन्मां प्रति कश्चिदब्रवीदिति

द्वयोः संबन्धः । शंपाकेनेह मुक्तेन इति झ। पाठः ॥
१२-१७५-३ कुचेलेन कुवस्त्रेण । निर्धनत्वादन्नाच्छादनहीन इत्यर्थः ॥
१२-१७५-५ उपसंनयेत् संप्राप्नुयात् । तयोरेकतरे मार्गे
यदेनमभिसंनयेदिति झ। पाठः। तत्र अभिसंनयेद्दैवं यदि
प्रापयेत्तर्हि न संहृष्येदित्यादिना संबन्धः ॥
१२-१७५-७ अकिञ्चनः दरिद्रः । परितः पतन्
गच्छन्। अनिकेतश्चरन्नित्यर्थः ॥
१२-१७५-८ पथ्यं मोक्षमार्गादनपेतम् । अनमित्रपथः शत्रुवर्जितः
पन्थाः। दुर्लभः कामिनाम् ॥
१२-१७५-९ उपपन्नस्य वैराग्यसंपन्नस्य ॥
१२-१७५-१२ नैवास्याग्निर्न चारिष्ट इति प्रभवन्ति धनत्यागाद्विमुक्तस्य
निराशिषः इति च झ । पाठः ॥
१२-१७५-१३ अनुपस्तीर्णे शय्याहीने भूतले शेते तम् । उपधानं
शीर्षोपधानम् ॥
१२-१७५-१७ अभिजात उत्तमवंश्यः त्रिभिर्धनरूपकुलैः ॥
१२-१७५-१८ भोगान् भोग्यधनादीन विसृज्य व्ययीकृत्य ॥
१२-१७५-१९ प्रतिषेधन्ति दण्डयन्ति । लुब्धा व्याधाः ॥
१२-१७५-२० संस्पर्शजानि दाहच्छेदादीनि ॥
१२-१७५-२१ भैषज्यं प्रतीकारमाचरेत् ॥
१२-१७५-२३ शम्याकेन पुरा गीतमित्यध्याहारेण योजना ॥

---

शन्तिपर्व-अध्यय१७६
॥ श्रीः ॥
१२.१७६. अध्यायः १७६

Mahabharata - Shanti Parva - Chapter Topics
भीष्मेण युधिष्ठिरंप्रति विरक्तेः सुस्वसाधनतायां प्रमाणतया
मङ्किगीताया बोध्यगीतायाश्चानुवादः ॥ १.।
Mahabharata - Shanti Parva - Chapter Text

१२-१७६-० (७२०२३)
युधिष्ठिर उवाच। १२-१७६-०क्ष् (५८९५)
ईहमानः समारम्भान्यदि नासादयेद्धनम् ।
धनतृष्णाभिभूतश्च किं कुर्वन्सुखमाप्नुयात् ॥ १२-१७६-१ (७२०२४)
भीष्म उवाच। १२-१७६-२क्ष् (५८९६)
सर्वसाम्यमनायासः सत्यवाक्यं च भारत ।

निर्वेदश्चाविधित्सा च यस्य स्यात्स सखी नरः ॥१२-१७६-२ (७२०२५)
एतान्येव पदान्याहुः पञ्च वृद्धाः प्रशान्तये ।
एष स्वर्गश्च धर्मश्च सुखं चानुत्तमं सताम् ॥१२-१७६-३ (७२०२६)
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
निर्वेदान्मङ्किना गीतं तन्निबोध युधिष्ठिर ॥१२-१७६-४ (७२०२७)
ईहमानो धनं मङ्किर्भग्नेहश्च पुनः पुनः ।
केनचिद्धनलेशेन क्रीतवान्दम्यगोयुगम् ॥१२-१७६-५ (७२०२८)
सुसंबद्धौ तु तौ दम्यौ दमनायाभिनिःसृतौ ।
आसीनमुष्ट्रं मध्येन सहसैवाभ्यधावताम् ॥१२-१७६-६ (७२०२९)
तयोः संप्राप्तयोरुष्ट्रः स्कन्धदेशममर्षणः ।
उत्थायोत्क्षिप्य तौ दम्यौ पससार महाजवः ॥१२-१७६-७ (७२०३०)
ह्रियमाणौ तु तौ दम्यौ तेनोष्ट्रेण प्रमाथिना ।
म्रियमाणौ च संप्रेक्ष्य मङ्किस्तत्राब्रवीदिदम् ॥१२-१७६-८ (७२०३१)
न जात्वविहितं शक्यं दक्षेणाषीहितुं धनम् ।
युक्तेन श्रद्धया सम्यगीहां समनुतिष्ठता ॥१२-१७६-९ (७२०३२)
पूर्वमर्थैर्विहीनस्य युक्तस्याप्युतिष्ठतः ।
इमं पश्यत संगत्या मम दैवमुपप्लवम् ॥१२-१७६-१० (७२०३३)
उद्यम्योद्यम्य मे दम्यौ विषमेणैव गच्छतः ।
उत्क्षिप्य काकतालीयमुन्माथेनेव जम्बुकः ॥१२-१७६-११ (७२०३४)
मणीवोष्ट्रस्य लम्वेते प्रियौ वत्सतरौ मम ।
शुद्धं हि दैवमेवेदं हठे नैवास्ति पौरुषम् ॥१२-१७६-१२ (७२०३५)
यदि वाऽप्युपपद्येत पौरुषं नाम कर्हिचित् ।
अन्विष्यमाणं तदपि दैवमेवावतिष्ठते ॥१२-१७६-१३ (७२०३६)
तस्मान्निर्वेद एवेह गन्तव्यः सुखमीप्सता ।
सुखं स्वपिति निर्विण्णो निराशश्चार्थसाधने ॥१२-१७६-१४ (७२०३७)
अहो सम्यक्षुकेनोक्तं सर्वतः परिमुच्यता ।
प्रतिष्ठता महारण्यं जनकस्य निवेशनात् ॥१२-१७६-१५ (७२०३८)
यः कामानाप्नुयात्सर्वान्यश्चैतान्केवलांस्त्यजेत् ।
प्रापणात्सर्वकामानां परित्यागो विशिष्यते ॥१२-१७६-१६ (७२०३९)
नान्तं सर्वविधित्सानां गतपूर्वोऽस्ति कश्चन ।
शरीरे जीविते चैव तृष्णा मर्त्यस्य वर्धते ॥१२-१७६-१७ (७२०४०)
निवर्तस्य विधित्साभ्यः शाम्य निर्विद्य कामुक ।
असकृच्चासि निकृतो न च निर्विद्यसे मनः ॥१२-१७६-१८ (७२०४१)
यदि नाहं विनाश्यस्ते यद्येवं रमसे मया ।
मा मां योजय लोभेन वृथाऽत्वं वित्तकामुक ॥१२-१७६-१९ (७२०४२)
संचितं संचितं द्रव्यं नष्टं तव पुनः पुनः ।

कदा तां मोक्ष्यसे मूढ धनेहां धनकामुक ॥१२-१७६-२० (७२०४३)
अहो नु मम बालिश्यं योऽहं क्रीडनकस्तव ।
ग्क्लेशैर्नानाविधैर्नित्यं संयोजयसि निर्घृणः।'
किं नैवं जातु पुरुषः परेषां प्रेष्यतामियात् ॥ १२-१७६-२१ (७२०४४)
न पूर्वे नापरे जातु कामानामन्तमाप्नुवन् ।
त्यक्त्वा सर्वसमारम्भान्प्रतिबुद्धोऽस्मि जागृमि ॥१२-१७६-२२ (७२०४५)
नूनं मे हृदयं कामं वज्रसारमयं दृढम् ।
यदनर्थशताविष्टं शतधा न विदीर्यते ॥१२-१७६-२३ (७२०४६)
त्यजामि काम त्वां चैव यच्च किंचित्प्रियं तव ।
तवाहं प्रियमन्विच्छन्नात्मन्युपलभे सुखम् ॥१२-१७६-२४ (७२०४७)
काम जानामि ते मूलं संकल्पात्किल जायसे ।
न त्वां संकल्पयिष्यामि समूलो नभविष्यसि ॥१२-१७६-२५ (७२०४८)
ईहा धनस्य न सुखा लुब्ध्वा चिन्ता च भूयसी ।
लब्धनाशो यथा मृत्युर्लब्धं भवति वा न वा ॥१२-१७६-२६ (७२०४९)
परित्यागे न लभते ततो दुःखतरं नु किम् ।
न च तुष्यति लब्धेन भूय एव च मार्गति ॥१२-१७६-२७ (७२०५०)
अनुतर्पुल एवार्थः स्वादु गाङ्गमिवोदकम् ।
मद्विलापनमेततु प्रतिबुद्धोऽस्मि संत्यज ॥१२-१७६-२८ (७२०५१)
य इमं मामकं देहं भूतग्रामः समाश्रितः ।
स यात्वितो यथाकामं वसतां वा यथासुखम् ॥१२-१७६-२९ (७२०५२)
न युष्मास्विह मे प्रीतिः कामलोभानुसारिषु ।
तस्मादुत्सृज्य वः सर्वान्सत्वमेवाश्रयाम्यहम् ॥१२-१७६-३० (७२०५३)
सर्व भूतान्यहं देहे पश्यन्मनसि चात्मनः ।
योगे बुद्धिं श्रुते सत्वं मनो ब्रह्मणि धारयन् ॥१२-१७६-३१ (७२०५४)
विहरिष्याम्यनासक्तः सुखी लोकान्निरामयः ।
यथा मां त्वं पुनर्नैवं दुःखेषु प्रणिधास्यसि ॥१२-१७६-३२ (७२०५५)
त्वया हि मे प्रणुन्नस्य गतिरन्या न विद्यते ।
तृष्णा शोकश्रमाणां हि त्वं काम प्रभवः सदा ॥१२-१७६-३३ (७२०५६)
धननाशेऽधिकं दुःखं मन्ये सर्वमहत्तरम् ।
ज्ञातयो ह्यवमन्यन्ते मित्राणि च धनाच्च्युतम् ॥१२-१७६-३४ (७२०५७)
अवज्ञानसहस्रैस्तु दोषाः कष्टतराऽधने ।
धने सुखकला या तु साऽपि दुःखैर्विधीयते ॥१२-१७६-३५ (७२०५८)
धनमस्येति पुरुषं पुरो निघ्नन्ति दस्यवः ।
क्लिश्यन्ति विविधैर्दण्डैर्नित्यमुद्वेजयन्ति च ॥१२-१७६-३६ (७२०५९)
धनलोलुपता दुःखमिति बुद्धं चिरान्मया ।
यद्यदालम्बसे कामं तत्तदेवानुरुध्यसे ॥१२-१७६-३७ (७२०६०)

अतत्त्वज्ञोऽसि बालश्च दुस्तोषोऽपूरणोऽनलः ।
नैव त्वं वेत्थ सुलभं नैव त्वं वेत्थ दुर्लभम् ॥१२-१७६-३८ (७२०६१)
पाताल इव दुष्पूरो मां दुःखैर्योक्तुमिच्छसि ।
नाहमद्य समावेष्टुं शक्यः काम पुनस्त्वया ॥१२-१७६-३९ (७२०६२)
निर्वेदमहमासाद्य द्रव्यनाशाद्यदृच्छया ।
निवृत्तिं परमां प्राप्य नाद्य कामान्विचिन्तये ॥१२-१७६-४० (७२०६३)
अतिक्लेशान्सहामीह नाहं बुद्ध्याम्यबुद्धिमान् ।
निकृतो धननाशेन शये सर्वाङ्गविज्वरः ॥१२-१७६-४१ (७२०६४)
परित्यजामि काम त्वां हित्वा सर्वं मनोगतम् ।
न त्वं मया पुनः काम नस्योतेनेव रंस्यसे ॥१२-१७६-४२ (७२०६५)
क्षमिष्ये क्षिपमाणानां न हिंसिष्ये विहिंसितः ।
द्वेष्यमुक्तः प्रियं वक्ष्याम्यनादृत्य तदप्रियम् ॥१२-१७६-४३ (७२०६६)
तृप्तः स्वस्थेन्द्रियो नित्यं यथालब्धेन वर्तयन् ।
न सकामं करिष्यामि त्वामहं शत्रुमात्मनः ॥१२-१७६-४४ (७२०६७)
निर्वेदं निर्वृतिं तृप्तिं शान्तिं सत्यं दमं क्षमाम् ।
सर्वभूतदयां चैव विद्धि मां शरणागतम् ॥१२-१७६-४५ (७२०६८)
तस्मात्कामश्च लोभश्च तृष्णा कार्पण्यमेव च ।
त्यजन्तु मां प्रतिष्ठन्तं सत्वस्थो ह्यस्मि सांप्रतम् ॥१२-१७६-४६ (७२०६९)
प्रहाय कामं लोभं च क्रोधं पारुष्यमेव च ।
नाद्य लोभवशं प्राप्तो दुःखं प्राप्स्याम्यनात्मवान् ॥१२-१७६-४७ (७२०७०)
यद्यस्त्यजति कामानां तत्सुखस्याभिपूर्यते ।
कामस्य वशगो नित्यं दुःखमेव प्रपद्यते ॥१२-१७६-४८ (७२०७१)
कामानुबन्धं नुदते यत्किंचित्पुरुषो रजः ।
कामक्रोधोद्भवं दुःखमह्रीररतिरेव च ॥१२-१७६-४९ (७२०७२)
एष ब्रह्मप्रतिष्ठोऽहं ग्रीष्मे शीतमिव ह्रदम् ।
शाम्यामि परिनिर्वामि सुखमासे च केवलम् ॥१२-१७६-५० (७२०७३)
यच्च कामसुखं लोके यच्च दिव्यं महत्सुखम् ।
तृष्णाक्षयसुखस्यैते नार्हतः षोडशीं कलाम् ॥१२-१७६-५१ (७२०७४)
आत्मना सप्तमं कामं हत्वा शत्रुमिवोत्तमम् ।
प्राप्यावध्यं ब्रह्मपुरं राजेव च वसाम्यहम् ॥१२-१७६-५२ (७२०७५)
एतां बुद्धिं समास्थाय मङ्किर्निर्वेदमागतः ।
सर्वान्कामान्परित्यज्य प्राप्य ब्रह्म महत्सुखम् ॥१२-१७६-५३ (७२०७६)
दम्यनाशकृते मङ्किरमृतत्वं किलागमत् ।
अच्छिनत्काममूलं स तेन प्राप परां गतिम् ॥१२-१७६-५४ (७२०७७)
अत्राप्युदाहरन्तीमं श्लोकं मोक्षोपसंहितम् ।
गीतं विदेहराजेन जनकेन प्रशाम्यता ॥१२-१७६-५५ (७२०७८)

अनन्तमिव मे वित्तं यस्य मे नास्ति किंचन ।
मिथिलायां प्रदीप्तायां न मे दह्यति किंचन ॥ १२-१७६-५६ (७२०७९)
अत्रैवोदाहरन्तीमं बोध्यस्य पदसंचयम् ।
निर्वेदं प्रति विन्यस्तं तं निबोध युधिष्ठिर ॥ १२-१७६-५७ (७२०८०)
बोध्यं शान्तमृषिं राजा नाहुषः पर्यपृच्छत ।
निर्वेदाच्छान्तिमापन्नं शास्त्रप्रज्ञानतर्पितम् ॥ १२-१७६-५८ (७२०८१)
उपदेशं महाप्राज्ञ शमस्योपदिशस्व मे ।
कां बुद्धिं समनुप्राप्य शान्तश्चरसि निर्वृतः ॥ १२-१७६-५९ (७२०८२)
बोध्य उवाच। १२-१७६-६०क्ष् (५८९७)
उपदेशेन वर्तामि नानुशास्मीह कंचन ।
लक्षणं तस्य वक्ष्येऽहं तत्स्वयं परिमृष्यताम् ॥ १२-१७६-६० (७२०८३)
पिङ्गला कुररः सर्पः सारङ्गान्वेषणं वने ।
इषुकारः कुमारी च षडेते गुरवो मम ॥ १२-१७६-६१ (७२०८४)
श्क़भीष्म उवाच। १२-१७६-६२क्ष् (५८९८)
आशा बलवती राजन्नैराश्यं परमं सुखम् ।
आशां निराशां कृत्वा तु सुखं स्वपिति पिङ्गला ॥ १२-१७६-६२ (७२०८५)
सामिषं कुररं दृष्ट्वा वध्यमानं निरामिषैः ।
आमिषस्य परित्यागात्कुररः सुखमेधते ॥ १२-१७६-६३ (७२०८६)
गृहारम्भो हि दुःखाय न सुखाय कदाचन ।
सर्पः परकृतं वेश्म प्रविश्य सुखमेधते ॥ १२-१७६-६४ (७२०८७)
सुखं जीवन्ति मुनयो भैक्ष्यवृत्तिं समाश्रिताः ।
अद्रोहणैव भूतानां सारङ्ग इव पक्षिणः ॥ १२-१७६-६५ (७२०८८)
ग्अल्पेभ्यश्च महद्भयश्च शास्त्रेभ्यो मतिमान्नरः ।
सर्वतः सारमादद्यात्पुष्पेभ्य इव षट्पदः ॥' १२-१७६-६६ (७२०८९)
इषुकारो नरः कश्चिदिपावासक्तमानसः ।
समीपेनापि गच्छन्तं राजानं नावबुद्धवान् ॥ १२-१७६-६७ (७२०९०)
बहूनां कलहो नित्यं द्वयोः संकथनं ध्रुवम् ।
एकाकी विचरिष्यानि कुमारीशङ्खको यथा ॥ꣳ ॥ १२-१७६-६८ (७२०९१)

इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि
षट्सप्तत्यधिकशततमोऽध्यायः ॥ १७६.।

Mahabharata - Shanti Parva - Chapter Footnotes

१२-१७६-३ पदानि पदनीयान्याश्रयणीयानि ।प्रशान्तये मोक्षाय। एष
इति विधेयापेक्षे लिङ्गैकत्वे ॥
१२-१७६-५ दम्यगोयुगं द्वौ वत्सतरौ ।द्वित्वे गोयुगजिति गोयुगच्प्रत्ययः ॥

१२-१७६-७ उत्क्षिप्य तुलाभाजनद्वयवदुपरिभूमेर्नीत्वा ॥
१२-१७६-९ अविहितं दैवेना नुपस्थापितं ईहितुमेष्टुम् ।श्रद्धया फलप्राप्तिनिश्चयेन।ईहां चेष्टां ॥
१२-१७६-१० युक्तस्यावहितचित्तस्य ।अनुतिष्ठतोऽर्थप्राप्त्युपायान्।संगत्या दम्योष्ट्रसंबन्धेन।दैवं देवेनेश्वरेण निर्मितम् ॥
१२-१७६-११ उद्यम्योद्यम्य मोक्षार्थमुद्यमं कृत्वा विषमेण कृच्छ्रेण दम्यौ गच्छतः ।काकतालीयं दैवकृतं संगमम्।उन्माथः कूटयन्त्रम्।उत्पथेनैव धावतः इति झ।पाठः ॥
१२-१७६-१२ वाशब्द इवार्थे ॥
१२-१७६-१३ उपपद्येत यदि लोकदृष्टान्तेन पौरुषास्तित्वं युज्येत तर्हि फलव्यभिचारात्तदपि दैवायत्तमेवोपपद्यते न स्वातन्त्र्येणेत्यर्थः ॥
१२-१७६-१७ विधित्सानां धनाद्यर्थं प्रवृत्तीनाम् ।गतपूर्वः पूर्वं गतः प्राप्तो गत पूर्वः ॥
१२-१७६-१८ कामुकका मादिधर्मवत् हे मनः निर्विद्य वैराग्यं प्राप्यशाम्य शमं गच्छ ।निकृतः वञ्चितः प्रवृत्तिनैष्फल्यात् ॥
१२-१७६-२० मोक्ष्यसे त्यक्ष्यसे ॥
१२-१७६-२१ क्रीडनकः क्रीडामृगः ।जातु कदाचित्।प्रेष्यतां दास्यम्।कामाभावे कोऽपि कस्यचिदपि न प्रेष्यः स्यादित्यर्थः ॥
१२-१७६-२२ अन्तं नाप्नुवन् अतो हेतोस्त्यक्त्वा ॥
१२-१७६-२३ नूनं ते हृदयं कामेति झ ।पाठः ॥
१२-१७६-२४ प्रियं जायादि ॥
१२-१७६-२५ नभविष्यसि विनशिष्यसि ॥
१२-१७६-२६ ईहा लिप्सा चेष्टा वा ।तदा धनस्य धनायेत्यर्थः।लब्ध्वा चिन्ता नाशभयात्।यथा मृत्युस्तथा दुःखकृत्।श्रमेऽपि फलं संदिग्धम् ॥
१२-१७६-२७ परित्यागे देहस्य परस्वत्वापादनेऽपि न लभते ।मार्गति मृगयते ॥
१२-१७६-२८ अनुतर्पुलस्तृष्णावृद्धिकृत् ।मद्विलापनं मन्नाशः।एतत् तृष्णावृद्ध्याख्यम्।प्रति बुद्धोऽस्मि अतो मां संत्यज।हे कामेति शेषः ॥
१२-१७६-२९ भूतग्रामो यातु स्वकारणं प्रति ।पञ्चत्वमस्त्वित्यर्थः ॥
१२-१७६-३१ योगे विषये बुद्धिं करष्यामीति निश्चयं कुर्वन् श्रुते श्रवणादौ सत्वमेकाग्नचित्तं धारयन् मनश्च ब्रह्मणि धारयन्

विहरिष्यामीत्यग्रिमेण संबन्धः ॥
१२-१७६-३५ कष्टतराऽधने इति संधिरार्षः ॥
१२-१७६-३६ धनमस्यास्तीति क्लिश्यन्ति क्लेशयन्ति ॥
१२-१७६-३८ अनलोऽग्निरिवेत्यर्थः ॥
१२-१७६-४१ सहामि इतःपूर्वं सोढवानस्मि ॥
१२-१७६-४३ क्षिपमाणानां धिक्कुर्वताम् ॥
१२-१७६-४४ सकामं लब्धमनोरथम् । हेकामेति शेषः ॥
१२-१७६-४५ निर्वृतिं सुखम् । तृप्तिं पूर्णकामताम् ॥
१२-१७६-४६ प्रतिष्ठन्तं मोक्षाय गन्तुम् ॥
१२-१७६-४७ प्रहाय स्थितोस्मीति शेषः ॥
१२-१७६-४९ रजः प्रवर्तको गुणः । तच्च कामेनानुवध्नातीति कामानुबन्धम्। दुःखादिकं च कामाद्युद्भवम्। अतः सर्वानर्थमूलं रजस्त्याज्यमित्यर्थः ॥
१२-१७६-५० शाम्यामि कर्मभ्य उपरतिं गच्छामि । परिनिर्वामि निर्दुःखो भवामि ॥
१२-१७६-५४ काममूलमविद्याम् ॥
१२-१७६-५५ अत्राप्युदाहरन्तीममितिहासं पुरातनं इति झ । पाठः ॥
१२-१७६-५७ पदसंधयं श्लोकम् । वैराग्यार्थमुपन्यस्तम् ॥
१२-१७६-६० तत् ज्ञाप्यम् ॥
१२-१७६-६१ सारङ्गो भ्रमरस्तस्याऽन्वेषणमनुगमनम् । इष गतौ दिवादिः ॥
१२-१७६-६८ काचित्कुमारी पित्रादिपरवशा गृहागतानतिथीन्प्रच्छन्नं भोजयितुमिच्छन्ती व्रीहिनवहन्तुं प्रचक्रमे । तस्याः प्रकोष्ठस्थाः शङ्खाश्चुक्रुशुः। सा परेषां सूचना माभूदिति शङ्खान्भङ्क्त्वा एकैकमवशेषितवतीति श्रीमद्भागवते दृष्टान्तोऽयं व्याख्यातः ॥

---

शन्तिपर्व-अध्यय१७७
॥ श्रीः ॥
१२.१७७. अध्यायः १७७

Mahabharata - Shanti Parva - Chapter Topics
भीष्मेण युधिष्ठिरंप्रति प्रपञ्चस्यानित्यत्वादिज्ञानपूर्वकविरक्तेः सुखहेतुतायां प्रमाणतया प्रह्लादाजगरमुनिसंवादानुवादः ॥ १.।
Mahabharata - Shanti Parva - Chapter Text

१२-१७७-० (७२०९२)
युधिष्ठिर उवाच। १२-१७७-०क्ष् (५८९९)
केन वृत्तेन वृत्तज्ञ वीतशोकश्चरेन्महीम् ।

किंच कुर्वन्नरो लोके प्राप्नोति गतिमुत्तमाम् ॥ १२-१७७-१ (७२०९३)
भीष्म उवाच। १२-१७७-२क्ष् (५९००)
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
प्रह्लादस्य च संवादं मुनेराजगरस्य च ॥ १२-१७७-२ (७२०९४)
चरन्तं ब्राह्मणं कंचित्कल्यचित्तमनामयम् ।
पप्रच्छ राजा प्रह्लादो बुद्धिमान्प्राज्ञसत्तमः ॥ १२-१७७-३ (७२०९५)
प्रह्लाद उवाच। १२-१७७-४क्ष् (५९०१)
स्वस्थः शक्तो मृदुर्दान्तो निर्विधित्सोऽनसूयकः ।
सुवाग्बहुमतो लोके प्राज्ञश्चरसि बालवत् ॥ १२-१७७-४ (७२०९६)
नैव प्रार्थयसे लाभं नालाभेष्वनुशोचसि ।
नित्यतृप्त इव ब्रह्मन्न किंचिदिव मन्यसे ॥ १२-१७७-५ (७२०९७)
स्रोतसा ह्रियमाणासु प्रजासु विमना इव ।
धर्मकामार्थकार्येषु कूटस्थ इव लक्ष्यसे ॥ १२-१७७-६ (७२०९८)
नानुतिष्ठसि धर्मार्थौ न कामे चापि वर्तसे ।
इन्द्रियार्थाननादृत्य मुक्तश्चरसि साक्षिवत् ॥ १२-१७७-७ (७२०९९)
का नु प्रज्ञा श्रुतं वा किं वृत्तिर्वा का नु ते मुने ।
क्षिप्रमाचक्ष्व मे ब्रह्मञ्श्रेयो यदिह मन्यसे ॥ १२-१७७-८ (७२१००)
भीष्म उवाच। १२-१७७-९क्ष् (५९०२)
अनुयुक्तः स मेधावी लोकधर्मविधानवित् ।
उवाच श्लक्ष्णया वाचा प्रह्लादमनपार्थया ॥ १२-१७७-९ (७२१०१)
पश्य प्रह्लाद भूतानामुत्पत्तिमनिमित्ततः ।
ह्रासं वृद्धिं विनाशं च न प्रहृष्ये न च व्यथे ॥ १२-१७७-१०
(७२१०२)
स्वभावादेव संदृश्या वर्तमानाः प्रवृत्तयः ।
स्वभावनिरताः सर्वाः प्रतिपाद्या न केनचित् ॥ १२-१७७-११ (७२१०३)
पश्य प्रह्लाद संयोगान्विप्रयोगपरायणान् ।
संचयांश्च विनाशान्तान्न क्वचिद्विदधे मनः ॥ १२-१७७-१२ (७२१०४)
अन्तवन्ति च भूतानि गुणयुक्तानि पश्यतः ।
उत्पत्तिनिधनज्ञस्य किं पर्यायेणोपलक्षये। १२-१७७-१३ (७२१०५)
जलजानामपि ह्यन्तं पर्यायेणोपलक्षये ।
महतामपि कायानां सूक्ष्माणां च महोदधौ ॥ १२-१७७-१४ (७२१०६)
जङ्गमस्थावराणां च भूतानामसुराधिप ।
पार्थिवानामपि व्यक्तं मृत्युं पश्यामि सर्वशः ॥ १२-१७७-१५ (७२१०७)
अन्तरिक्षचराणां च दानवोत्तमपक्षिणाम् ।
उत्तिष्ठते यथाकालं मृत्युर्बलवतामपि ॥ १२-१७७-१६ (७२१०८)
दिवि संचरमाणानि ह्रस्वानि च महान्ति च ।

ज्योतींष्यपि यथाकालं पतमानानि लक्षये ॥१२-१७७-१७ (७२१०९)
इति भूतानि संपश्यन्ननुषक्तानि मृत्युना ।
सर्वं सामान्यतो विद्वान्कृतकृत्यः सुखं स्वपे ॥१२-१७७-१८ (७२११०)
सुमहान्तमपि ग्रासं ग्रसे लब्धं यदृच्छया ।
शये पुनरभुञ्जानो दिवसानि बहून्यपि ॥१२-१७७-१९ (७२१११)
आशयन्त्यपि मामन्नं पुनर्बहुगुणं बहु ।
पुनरल्पं पुनस्तोकं पुनर्नैवोपपद्यते ॥१२-१७७-२० (७२११२)
कणं कदाचित्खादामि पिण्याकमपि च ग्रसे ।
भक्षये शालिमांसानि भक्षांश्चोच्चावचान्पुनः ॥१२-१७७-२१ (७२११३)
शये कदाचित्पर्यङ्के भूमावपि पुनः शये ।
प्रासादे चापि मे शय्या कदाचिदुपपद्यते ॥१२-१७७-२२ (७२११४)
धारयामि च चीराणि शाणक्षौमाजिनानि च ।
महार्हाणि च वासांसि धारयाम्यहमेकदा ॥१२-१७७-२३ (७२११५)
न सन्निपतितं धर्म्यमुपभोगं यदृच्छया ।
प्रत्याचक्षे न चाप्येनमनुरुध्ये सुदुर्लभम् ॥१२-१७७-२४ (७२११६)
अचलमनिधनं शिवं विशोकं
शुचिमतुलं विदुषां मते प्रविष्टम् ।
अनभिमतमसेवितं विमूढै
र्व्रतमिदमाजगरं शुचिश्चरामि ॥ १२-१७७-२५ (७२११७)
अचलितमतिरच्युतः स्वधर्मा
त्परिमितसंसरणः परावरज्ञः ।
विगतभयकषायलोभमोहो
व्रतमिदमाजगरं शुचिश्चरामि ॥ १२-१७७-२६ (७२११८)
अनियतफलभक्ष्यभोज्यपेयं
विधिपरिणामविभक्तदेशकालम् ।
हृदयसुखमसेवितं कदर्यै
र्व्रतमिदमाजगरं सुचिश्चरामि ॥ १२-१७७-२७ (७२११९)
इदमिदमिति तृष्णयाऽभिभूतं
जनमनवाप्तधनं विषीदमानम् ।
निपुणमनुनिशाम्य तत्त्वबुद्ध्या
व्रतमिदमाजगरं शुचिश्चरामि ॥ १२-१७७-२८ (७२१२०)
बहुविधमनुदृश्य चार्थहेतोः
कृपणमिहार्यमनार्यमाश्रयं तम् ।
उपशमरुचिरात्मवान्प्रशान्तो
व्रतमिदमाजगरं शुचिश्चरामि ॥ १२-१७७-२९ (७२१२१)
सुखमसुखमलाभमर्थलाभं

रतिमरतिं मरणं च जीवितं च ।
विधिनियतमवेक्ष्य तत्त्वतोऽहं
व्रतमिदमाजगरं शुचिश्चरामि ॥ १२-१७७-३० (७२१२२)
अपगतभयरागमोहदर्पो
धृतिमतिबुद्धिसमन्वितः प्रशान्तः ।
उपगतफलभोगिनो निशाम्य
व्रतमिदमाजगरं शुचिश्चरामि ॥ १२-१७७-३१ (७२१२३)
अनियतशयनासनः प्रकृत्या
दमनियमव्रतसत्यशौचयुक्तः ।
अपगतफलसंचयः प्रहृष्टो
व्रतमिदमाजगरं शुचिश्चरामि ॥ १२-१७७-३२ (७२१२४)
अपगतमसुखार्थमीहनार्थै
रुपगतबुद्धिरवेक्ष्य चात्मसंस्थम् ।
तृपितमनियतं मनो नियन्तुं
व्रतमिदमाजगरं शुचिश्चरामि ॥ १२-१७७-३३ (७२१२५)
न हृदयमनुरुध्यते मनो वा
प्रियसुखदुर्लभतामनित्यतां च ।
तदुभयमुपलक्षयन्निवाहं
व्रतमिदमाजगरं शुचिश्चरामि ॥ १२-१७७-३४ (७२१२६)
बहु कथितमिदं हि बुद्धिमद्भिः
कविभिरपि प्रथयद्भिरात्मकीर्तिम् ।
इदमिदमिति तत्रतत्र हन्त
स्वपरमतैर्गहनं प्रतर्कयद्भिः ॥ १२-१७७-३५ (७२१२७)
तदिदमनुनिशाम्य विप्रपातं
पृथगभिपन्नमिहाबुधैर्मनुष्यैः ।
अनवसितमनन्तदोषपारं
नृपु विहरामि विनीतदोषतृष्णः ॥ १२-१७७-३६ (७२१२८)
भीष्म उवाच। १२-१७७-३७क्ष् (५९०३)
अजगरचरितं व्रतं महात्मा
य इह नरोऽनुचरेद्विनीतरागः ।
अपगतभयलोभमोहमन्युः
स खलु सुखी विचरेदिमं विहारम् ॥ ॥ १२-१७७-३७ (७२१२९)

इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि
सप्तसप्तत्यधिकशततमोऽध्यायः ॥ १७७.।
Mahabharata - Shanti Parva - Chapter Footnotes

१२-१७७-२ आजगरस्याऽजगरवृत्त्या जीवतः ॥
१२-१७७-४ निर्विधित्सो निरारम्भः ॥
१२-१७७-६ स्रोतसा कामादिवेगेन । कूटस्थो निर्व्यापारः ॥
१२-१७७-७ इन्द्रियार्थान् गन्धरसादीननादृत्य चरसि तन्निर्वाहमात्रार्थी अश्नासि ॥
१२-१७७-८ प्रज्ञा तत्त्वदर्शनम् । श्रुतं तन्मूलभूतं शास्त्रम्। वृत्तिस्तदर्थानुष्ठानम्। श्रेयो ममेति शेषः ॥
१२-१७७-९ अनुयुक्तः पृष्टः । लोकस्य धर्मो जन्मजरादिस्तस्य विधानं कारणं तदभिज्ञः लोकधर्मविधानवित् ॥
१२-१७७-१० अनिमित्ततः कारणहीनाद्ब्रह्मणः । पश्य आलोचय ॥
१२-१७७-१२ तस्मादहं मनो न क्वचिद्विषये विदधे धारयामि तद्विनाशे शोकोत्पत्तिं जानन् ॥
१२-१७७-१५ पार्थिवानां पृथिवीस्थानाम् ॥
१२-१७७-१९ आजगरीं वृत्तिं प्रपञ्चयति सुमहान्तमित्यादिना ॥
१२-१७७-२० आशयन्ति भोजयन्ति ॥
१२-१७७-२६ कषायः रागद्वेषादिः ॥
१२-१७७-२८ धनप्राप्तौ कर्मैव कारणं न पौरुषमिति धिया निशाम्यालोच्य ॥
१२-१७७-२९ अर्थहेतोरनार्यं नीचम् । अर्यं स्वामिनगाश्रयति यः कृपणो दीनजनस्तमनुदृश्योपशमरुचिः। आत्मवान् जितचित्तः ॥
१२-१७७-३० विधिनियतं दैवाधीनम् ॥
१२-१७७-३१ मतिरालोचनम् । बुद्धिर्निश्चयः। उपगतं समीपागतं फलं प्रियं येषां तान् भोगिनः सर्पान् अजगरान् निशाम्य दृष्ट्वा। फलभोगिन इति मध्यमपदलोपः ॥
१२-१७७-३२ प्रकृत्या दमादियुक्तः अपगतफलसंचयस्त्यक्तयोगफलसमूहः ॥
१२-१७७-३३ एषणाविषयैः पुत्रवित्तादिभिर्हेतुभिः । असुखार्थं परिणामे दुःखार्थम्। अपगतमात्मनः पराङ्भुखं तृषितमनियतं च मनोऽवेक्ष्य। उपगतबुद्धिर्लब्धालोकः। आत्मसंस्थमात्मनि संस्था समाप्तिर्यस्य तत्तथा तुं व्रतं चरामि ॥

---

शन्तिपर्व-अध्यय१७८
॥ श्रीः ॥
१२.१७८. अध्यायः १७८

भीष्मेण युधिष्ठिरंप्रति इतरनिपेधपूर्वकं प्रज्ञायाः
सुखसाधनतायां प्रमाणतया सृगालकाश्यपसंवादानुवादः ॥ १.।
Mahabharata - Shanti Parva - Chapter Text

१२-१७८-० (७२१३०)
युधिष्ठिर उवाच। १२-१७८-०क्ष् (५९०४)
बान्धवाः कर्म वित्तं वा प्रज्ञा वेह पितामह ।
नरस्य का प्रतिष्ठा स्यादेतत्पृष्टो वदस्व मे ॥ १२-१७८-१ (७२१३१)
भीष्म उवाच। १२-१७८-२क्ष् (५९०५)
प्रज्ञा प्रतिष्ठा भूतानां प्रज्ञा लाभः परो मतः ।
प्रज्ञा निःश्रेयसी लोके प्रज्ञा स्वर्गो मतः सताम् ॥ १२-१७८-२ (७२१३२)
प्रज्ञया प्रापितार्थो हि बलिरैश्वर्यसंक्षये ।
प्रह्लादो नमुचिर्मङ्किस्तस्याः किं विद्यते परम् ॥ १२-१७८-३ (७२१३३)
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
इन्द्रकाश्यपसंवादं तन्निबोध युधिष्ठिर ॥ १२-१७८-४ (७२१३४)
वैश्यः कश्चिदृषिसुतं काश्यपं संशितव्रतम् ।
रथेन पातयामास श्रीमान्दृप्तस्तपस्विनम् ॥ १२-१७८-५ (७२१३५)
आर्तः स पतितः क्रुद्धस्त्यक्त्वाऽऽत्मानमथाब्रवीत् ।
मरिष्याम्यधनस्येह जीवितार्थो न विद्यते ॥ १२-१७८-६ (७२१३६)
तथा मुमूर्षमासीनमकूजन्तमचेतसम् ।
इन्द्रः सृगालरूपेण बभाषे क्षुब्धमानसम् ॥ १२-१७८-७ (७२१३७)
मनुष्ययोनिमिच्छन्ति सर्वभूतानि सर्वशः ।
मनुष्यत्वे च विप्रत्वं सर्व एवाभिनन्दति ॥ १२-१७८-८ (७२१३८)
मनुष्यो ब्राह्मणश्चासि श्रोत्रियश्चासि काश्यप ।
सुदुर्लभमवाप्यैतन्न दोषान्मर्तुमर्हसि ॥ १२-१७८-९ (७२१३९)
सर्वे लाभाः साभिमाना इति सत्यवती श्रुतिः ।
संतोषणीयरूपोऽसि लोभाद्यदभिमन्यसे ॥ १२-१७८-१० (७२१४०)
अहो सिद्धार्थता तेषां येषां सन्तीह पाणयः ।
श्अतीव स्पृहये तेषां येषां सन्तीह पाणयः ॥় १२-१७८-११ (७२१४१)
पाणिमद्भयः स्पृहाऽस्माकं यथा तव धनस्य वै ।
न पाणिलाभादधिको लाभः कश्चन विद्यते ॥ १२-१७८-१२ (७२१४२)
अपाणित्वाद्वयं ब्रह्मन्कण्टकं नोद्धरामहे ।
जन्तूनुच्चावचानङ्गे दशतो न कषाम वा ॥ १२-१७८-१३ (७२१४३)
अथ येषां पुनः पाणी देवदत्तौ दशाङ्गुली ।
उद्धरन्ति कृमीनङ्गाद्दशतो निकषन्ति च ॥ १२-१७८-१४ (७२१४४)
वर्षाहिमातपानां च परित्राणानि कुर्वते ।

चेलमन्नं सुखं शय्यां निवातं चोपभुञ्जते ॥१२-१७८-१५ (७२१४५)
अधिष्ठाय च गां लोके भुञ्जते वाहयन्ति च ।
उपायैर्बहुभिश्चैव वश्यानात्मनि कुर्वते ॥१२-१७८-१६ (७२१४६)
ये खल्वजिह्वाः कृपणा अल्पप्राणा अपाणयः ।
सहन्ते तानि दुःखानि दिष्ट्या त्वं न तथा मुने ॥१२-१७८-१७ (७२१४७)
दिष्ट्या त्वं न शृगालो वै न कृमिर्न च मूषकः ।
न सर्पो न च मण्डूको न चान्यः पापयोनिजः ॥१२-१७८-१८ (७२१४८)
एतावताऽपि लाभेन तोष्टुमर्हसि काश्यप ।
किं पुनर्योसि सत्वानां सर्वेषां ब्राह्मणोत्तमः ॥१२-१७८-१९ (७२१४९)
इमे मां कृमयोऽदन्ति येषामुद्धरणाय वै ।
नास्ति शक्तिरपाणित्वात्पश्यावस्थामिमां मम ॥१२-१७८-२० (७२१५०)
अकार्यमिति चैवेमं नात्मानं संत्यजाम्यहम् ।
नातः पापीयसीं योनिं पतेयमपरामिति ॥१२-१७८-२१ (७२१५१)
मध्ये वै पापयोनीनां सृगालीयामहं गतः ।
पापीयस्यो बहुतरा इतोऽन्याः पापयोनयः ॥१२-१७८-२२ (७२१५२)
जात्यैवैके सुखितराः सन्त्यन्ये भृशदुःखिताः ।
नैकान्तं सुखमेवेह क्वचित्पश्यामि कस्यचित् ॥१२-१७८-२३ (७२१५३)
मनुष्या ह्याढ्यतां प्राप्य राज्यमिच्छन्त्यनन्तरम् ।
राज्याद्देवत्वमिच्छन्ति देवत्वादिन्द्रतामपि ॥१२-१७८-२४ (७२१५४)
भवेस्त्वं यद्यपि त्वाढ्यो न राजा न च दैवतम् ।
देवत्वं प्राप्य चेन्द्रत्वं नैव तुष्येस्तथा सति ॥१२-१७८-२५ (७२१५५)
न तृप्तिः प्रियलाभेऽस्ति तृष्णा नाद्भिः प्रशाम्यति ।
संप्रज्वलति सा भूयः समिद्भिरिव पावकः ॥१२-१७८-२६ (७२१५६)
अस्त्येव त्वयि शोकोऽपि हर्षश्चापि तथा त्वयि ।
सुखदुःखे तथा चोभे तत्र का परिदेवना ॥१२-१७८-२७ (७२१५७)
परिच्छिद्यैव कामानां सर्वेषां चैव कर्मणाम् ।
मूलं बुद्धीन्द्रियग्रामं शकुन्तानिव पञ्जरे ॥१२-१७८-२८ (७२१५८)
न द्वितीयस्य शिरसश्छेदनं विद्यते क्वचित् ।
न च पाणेस्तृतीयस्य यन्नास्ति न ततो भयम् ॥१२-१७८-२९ (७२१५९)
न खल्वप्यरसज्ञस्य कामः क्वचन जायते ।
संस्पर्शाद्दर्शनाद्वापि श्रवणाद्वापि जायते ॥१२-१७८-३० (७२१६०)
न त्वं स्मरसि वारुण्या लट्वाकानां च पक्षिणाम् ।
ताभ्यां चाभ्यधिको भक्ष्यो न कश्चिद्विद्यते क्वचित् ॥१२-१७८-३१ (७२१६१)
यानि चान्यानि भूतेषु भक्ष्यभोज्यानि काश्यप ।
येषामभुक्तपूर्वाणि तेषामस्मृतिरेव ते ॥१२-१७८-३२ (७२१६२)
अप्राशनमसंस्पर्शमसंदर्शनमेव च ।

पुरुषस्यैष नियमो मन्ये श्रेयो न संशयः ॥ १२-१७८-३३ (७२१६३)
पाणिमन्तो बलवन्तो धनवन्तो न संशयः ।
मनुष्या मानुषैरेव दासत्वमुपपादिताः ॥ १२-१७८-३४ (७२१६४)
वधबन्धपरिक्लेशैः क्लिश्यन्ते च पुनः पुनः ।
ते खल्वपि रमन्ते च मोदन्ते च हसन्ति च ॥ १२-१७८-३५ (७२१६५)
अपरे बाहुबलिनः कृतविद्या मनस्विनः ।
जुगुप्सितां च कृपणां पापवृत्तिमुपासते ॥ १२-१७८-३६ (७२१६६)
उत्सहन्ते च ते वृत्तिमन्यामप्युपसेवितुम् ।
स्वकर्मणा तु नियतं भवितव्यं तु तत्तथा ॥ १२-१७८-३७ (७२१६७)
न पुल्कसो न चण्डाल आत्मानं त्यक्तुमिच्छति ।
तया तुष्टः स्वया योन्या मायां पश्यस्व यादृशीम् ॥ १२-१७८-३८ (७२१६८)
दृष्ट्वा कुणीन्पक्षहतान्मनुष्यानामयाविनः ।
सुसंपूर्णः स्वया योन्या लब्धलाभोसि काश्यप ॥ १२-१७८-३९ (७२१६९)
यदि ब्राह्मणदेहस्ते निरातङ्को निरामयः ।
अङ्गानि च समग्राणि न च लोकेषु धिक्कृतः ॥ १२-१७८-४० (७२१७०)
न केनचित्प्रवादेन सत्येनैवापहारिणा ।
धर्मायोत्तिष्ठ विप्रर्षे नात्मानं त्यक्तुमर्हसि ॥ १२-१७८-४१ (७२१७१)
यदि ब्रह्मञ्शृणोष्येतच्छ्रद्दधासि च मे वचः ।
वेदोक्तस्यैव धर्मस्य फलं मुख्यमवाप्स्यसि ॥ १२-१७८-४२ (७२१७२)
स्वाध्यायमग्निसंस्कारमप्रमत्तोऽनुपालय ।
सत्यं दमं च दानं च स्पर्धिष्ठा मा च केनचित् ॥ १२-१७८-४३ (७२१७३)
ये केचन स्वध्ययनाः प्राप्ता यजनयाजनम् ।
कथं ते चानुशोचेयुर्ध्यायेयुर्वाऽप्यशोभनम् ॥ १२-१७८-४४ (७२१७४)
इच्छन्तस्ते विहाराय सुखं महदवाप्नुयुः ।
येऽनुजाताः सुनक्षत्रे सुतिथौ सुमुहूर्तके ।
यज्ञदानप्रजेहायां यतन्ते शक्तिपूर्वकम् ॥ १२-१७८-४५ (७२१७५)
नक्षत्रेष्वासुरेष्वन्ये दुस्तिथौ दुर्मुहूर्तजाः ।
सम्पतन्त्यासुरीं योनिं यज्ञप्रसववर्जिताः ॥ १२-१७८-४६ (७२१७६)
अहमासं पण्डितको हैतुको वेदनिन्दकः ।
आन्वीक्षिकीं तर्कविद्यामनुरक्तो निरर्थिकाम् ॥ १२-१७८-४७ (७२१७७)
हेतुवादान्प्रवदिता वक्ता संसत्सु हेतुमत् ।
आक्रोष्टा चातिवक्ता च ब्रह्मवाक्येषु च द्विजान् ॥ १२-१७८-४८ (७२१७८)
नास्तिकः सर्वशङ्की च मूर्खः पण्डितमानिकः ।
तस्येयं फलनिर्वृत्तिः सृगालत्वं मम द्विज ॥ १२-१७८-४९ (७२१७९)
अपि जातु तथा तत्स्यादहोरात्रशतैरपि ।
यदहं मानुषीं योनिं सृगालः प्राप्नुयां पुनः ॥ १२-१७८-५० (७२१८०)

संतुष्टश्चाप्रमत्तश्च यज्ञदानतपोरतः ।
ज्ञेयं ज्ञाता भवेयं वै वर्ज्यं वर्जयिता तथा ॥ १२-१७८-५१ (७२१८१)
भीष्म उवाच। १२-१७८-५२क्ष् (५९०६)
ततः स मुनिरुत्थाय काश्यपस्तमुवाच ह ।
अहो बतामि कुशलो बुद्धिमांश्चेति विस्मितः ॥ १२-१७८-५२ (७२१८२)
समवैक्षत तं विप्रो ज्ञानदीर्घेण चक्षुषा ।
ददर्श चैनं देवानां देवमिन्द्रं शचीपतिम् ॥ १२-१७८-५३ (७२१८३)
ततः संपूजयामास काश्यपो हरिवाहनम् ।
अनुज्ञातस्तु तेनाथ प्रविवेश स्वमालयम् ॥ ॥ १२-१७८-५४ (७२१८४)

इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि
अष्टसप्तत्यधिकशततमोऽध्यायः ॥ १७८.।
Mahabharata - Shanti Parva - Chapter Footnotes

१२-१७८-५ रथेन रथघातेन ।वैश्यः कश्चिदृषिं दान्तं इति
ट। पाठः ॥
१२-१७८-६ आत्मानं धैर्यं त्यक्त्वा ॥
१२-१७८-७ अकूजन्तं मूर्च्छया निःशब्दम् ॥
१२-१७८-९ श्रोत्रियोऽधीतदेवः ।दोषात् मौढ्यात् ॥
१२-१७८-१० यत्संतोषणीयं रूपं त्वं स्वस्याऽभिमन्यसेऽवमन्यसे ॥
१२-१७८-१३ न कषाम न नाशयाम्। १२-१७८-१४ निकषन्ति कण्डूयनेन। ।
१२-१७८-१६ अधिष्ठायाध्यास्य ।गां पृथिवीम्। बलीवर्दादि वा। आत्मनि
आत्मभोगनिमित्तम् ॥
१२-१७८-१७ अल्पप्राणा अल्पबलाः ॥
१२-१७८-२० अदन्ति दशन्ति ॥
१२-१७८-२३ एके देवाद्याः ।अन्ये पश्वाद्याः ॥
१२-१७८-२५ यदि कदाचिद्भवेस्तथापि न तुष्येरिति योज्यम् ॥
१२-१७८-२८ कामादीनां मूलं बुद्धीन्द्रियग्रामं शकुन्तानिव
शरीरपञ्चरे परिच्छिद्य निरुध्य स्थितस्य भयं नास्तीत्युत्तरेण
संबन्धः ॥
१२-१७८-३१ वारुण्या मद्यस्य लट्वाख्यपक्षिमासस्य च ।कर्मणि
षष्ठ्यौ। त्वं न स्मरसि ब्राह्मणत्वेन तव तद्रसग्रहाभावात् ॥
१२-१७८-३२ येषां यान्यभुक्तपूर्वाणि ॥
१२-१७८-३८ असंतुष्टः स्वया वृत्त्या मायां प्रेक्षस्व यादृशीन् ।इति
टड़थ। पाठः ॥
१२-१७८-३९ पक्षहतानर्धाङ्गवातादिना नष्टान् ।आमयाविनोरोगाक्रान्तान् ॥

१२-१७८-४१ प्रवादेन कलङ्केन ।अपहारिणा जाविभ्रंशकरेण ॥
१२-१७८-४५ विहाराय यथोचितेन यज्ञादिना विहर्तुम् ॥
१२-१७८-४८ पण्डितकः कुत्सितः पण्डितः हेतुमदेव वक्ता न श्रुतिमत् ।आक्रोष्टापरुषवाक् ॥
१२-१७८-४९ सर्वशङ्की स्वर्गादृष्टादिसद्भावेऽपि शङ्कावान् ॥
१२-१७८-५४ हरिवाहनमिन्द्रम् ॥

---

शन्तिपर्व-अध्यय१७९
॥ श्रीः ॥
१२.१७९. अध्यायः १७९

Mahabharata - Shanti Parva - Chapter Topics
भीष्मेण युधिष्ठिरंप्रति तपोदानादिसत्कर्मणामपि परम्परया सुखसाधनताकथनम् ॥ १.।
Mahabharata - Shanti Parva - Chapter Text

१२-१७९-० (७२१८५)
युधिष्ठिर उवाच। १२-१७९-०क्ष् (५९०७)
यद्यस्ति दत्तमिष्टं वा तपस्तप्तं तथैव च ।
गुरूणां वाऽपि शुश्रूषा तन्मे ब्रूहि पितामह ॥ १२-१७९-१ (७२१८६)
भीष्म उवाच। १२-१७९-२क्ष् (५९०८)
ग्यथाऽस्मिंश्च तथा तत्र जानीयां नृपसत्तम ।
दुष्कर्तारो यथा लोके यत्कुर्वन्ति तथा शृणु ॥' १२-१७९-२ (७२१८७)
आत्मनाऽनर्थयुक्तेन पापे निविशते मनः ।
स्वकर्म कलुषं कृत्वा दुःखे महति धीयते ॥ १२-१७९-३ (७२१८८)
दुर्भिक्षादेव दुर्भिक्षं क्लेशात्क्लेशं भयाद्भयम् ।
मृतेभ्यः प्रमृता यान्ति दरिद्राः पापकारिणः ॥ १२-१७९-४ (७२१८९)
उत्सवादुत्सवं यान्ति स्वर्गात्स्वर्गं सुखात्सुखम् ।
श्रद्दधानाश्च दान्ताश्च सत्वस्थाः शुभकारिणाः ॥ १२-१७९-५ (७२१९०)
व्यालकुञ्जरदुर्गेषु सर्पचोरभयेषु च ।
हस्तावापेन गच्छन्ति नास्तिकाः किमतः परम् ॥ १२-१७९-६ (७२१९१)
प्रियदेवातिथेयाश्च वदान्याः प्रियसाधवः ।
क्षेम्यमात्मवतां मार्गमास्थिता हस्तदक्षिणम् ॥ १२-१७९-७ (७२१९२)
पुलाका इव धान्येषु पुत्तिका इव पक्षिषु ।
तद्विधास्ते मनुष्येषु येषां धर्मो न कारणम् ॥ १२-१७९-८ (७२१९३)
सुशीघ्रमपि धावन्तं विधानमनुधावति ।

शेते सह शयानेन येनयेन यथाकृतम् ॥ १२-१७९-९ (७२१९४)
उपतिष्ठति तिष्ठन्तं गच्छन्तमनुगच्छति ।
करोति कुर्वतः कर्म छायेवाऽनुविधीयते ॥ १२-१७९-१० (७२१९५)
येनयेन यथा यद्यत्पुरा कर्म समार्जितम् ।
तत्तदेव नरो भुङ्क्ते नित्यं विहितमात्मना ॥ १२-१७९-११ (७२१९६)
स्वकर्मफलनिक्षेपं विधानपरिरक्षितम् ।
भूतग्राममिमं कालः समन्तात्परिकर्षति ॥ १२-१७९-१२ (७२१९७)
अचोद्यमानानि यथा पुष्पाणि च फलानि च ।
स्वं कालं नातिवर्तन्ते तथा कर्म पुराकृतम् ॥ १२-१७९-१३ (७२१९८)
संमानश्चावमानश्च लाभालाभौ क्षयोदयौ ।
प्रवृत्तानि विवर्तन्ते विद्यानान्ते पुनःपुनः ॥ १२-१७९-१४ (७२१९९)
आत्मना विहितं दुःखमात्मना विहितं सुखम् ।
गर्भशय्यामुपादाय भुज्यते पौर्वदेहिकम् ॥ १२-१७९-१५ (७२२००)
बालो युवा च वृद्धश्च यत्करोति शुभाशुभम् ।
तस्यांतस्यामवस्थायां भुङ्क्ते जन्मनिजन्मनि ॥ १२-१७९-१६ (७२२०१)
यथा धेनुसहस्रेषु वत्सो विन्दति मातरम् ।
तथा पूर्वकृतं कर्म कर्तारमनुगच्छति ॥ १२-१७९-१७ (७२२०२)
संक्लिन्नमग्रतो वस्त्रं पश्चाच्छुध्यति वारिणा ।
ग्दुष्कर्मापि तथा पश्चात्पूयते पुण्यकर्मणा ॥ १२-१७९-१८ (७२२०३)
तपसा तप्यते देहस्तपसा विन्दते महत् ॥'
उपवासैः प्रतप्तानां दीर्घं सुखमनन्तरम् ॥ १२-१७९-१९ (७२२०४)
दीर्घकालेन तपसा सेवितेन तपोवने ।
धर्मनिर्धूतपापानां संसिद्ध्यन्ते मनोरथाः ॥ १२-१७९-२० (७२२०५)
शकुनीनामिवाकाशे मत्स्यानामिव चोदके ।
पदं यथा न दृश्येत तथा धर्मविदां गतिः ॥ १२-१७९-२१ (७२२०६)
अलमन्यैरुपालम्भैः कीर्तितैश्च व्यतिक्रमैः ।
पेशलं चानुरूपं च कर्तव्यं हितमात्मनः ॥ ॥ १२-१७९-२२ (७२२०७)

इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि
एकोनाशीत्यधिकशततमोऽध्यायः ॥ १७९.।

Mahabharata - Shanti Parva - Chapter Footnotes

१२-१७९-१ यद्यस्ति सफलमित्यध्याहारः । दत्तेष्टे गृहस्यस्य
धर्मः। तपो वानप्रस्थस्य। गुरुशुश्रूषा ब्रह्मचारिणः ॥
१२-१७९-३ नास्तिक्यमनर्थः तेन युक्तेनात्मना कुशास्त्रजिताध्यायसयेन
। कलुषं पापम् ॥

१२-१७९-४ मृतेभ्यः प्रमृतं यान्तीति झ ।पाठः। तत्र मृतेभ्यो मरणेभ्यः। प्रमृतं मरणान्तरम्। अविलम्बेन पुनःपुनर्म्रियन्त इत्यर्थः ॥
१२-१७९-५ धनाढ्याः शुभकारिण इति झ ।पाठः ॥
१२-१७९-६ हस्तावबाप्यते प्रवेश्यते यस्मिन्निति हस्तावापो हस्तनिगडस्तेन निगडिताः सन्तो नास्तिका राष्ट्राद्दूरीकृता व्यालादिमत्सु वनेषु गच्छन्तीत्यर्थः ॥
१२-१७९-७ आतिथेयमतिथिहितं मृष्टान्नदानादि ।आत्मवतां जितचित्तानाम्। हस्तदक्षिणं हस्तोपलक्षितेन तत्कर्तव्येन दानादिना कर्मणा दक्षिणमनुकूलम् ॥
१२-१७९-८ पुलाका गर्तोष्मणा भक्तसिक्थवन्नष्टवीजभावाः ।पुत्तिका मशकाः। कारणं सुखादिहेतुः ॥
१२-१७९-९ विधानं प्राक्कर्म धावन्तं यतमानमनुधावति फलप्रदानेनानुसरति ।येन येन यथा कृतं तं तं प्रति तथा प्राक्कर्म फलदमफलदं च भवति ॥
१२-१७९-१० कर्म प्राचीनं छायेवानुविधीयते पुरुषेण स्वस्यातुकूलं क्रियते ॥
१२-१७९-११ नित्यमपरिहार्यम् ॥
१२-१७९-१२ स्वकर्मणः फलं स्वर्गपश्वादि तदेव निक्षेपरूपं विधानेन कर्मजन्यादृष्टेन रक्षितं भूतग्रामं प्रति कालः समनुकर्षति ॥
१२-१७९-१८ संक्लिन्नं मलेनेति शेषः ॥
१२-१७९-२२ उपालम्भैराक्षेपवाक्यैः ।व्यतिक्रमैरपराधैः। अलमुक्तैः पर्याप्तम्। पेशकौशलयुक्तं यथास्यात्तथा ॥

---

शन्तिपर्व-अध्यय१८०
॥ श्रीः ॥
१२.१८०. अध्यायः १८०

Mahabharata - Shanti Parva - Chapter Topics
युधिष्ठिरेण जगत्सृष्टिप्रकारं पृष्टेन भीष्मेण भरद्वाजाय भृगूदितसृष्टिप्रकारकथनारम्भः ॥१.। भृगुणा भरद्वाजं प्रतिमहत्तत्त्वादिपद्मपर्यन्तसृष्टिप्रकारकथनम् ॥ २.। तथा पद्मकर्णिकाभूतमेरुस्थेन ब्रह्मणा लोकसृष्टिकथनम् ॥ ३.।
Mahabharata - Shanti Parva - Chapter Text

१२-१८०-० (७२२४९)

युधिष्ठिर उवाच। १२-१८०-०क्ष् (५९१२)
कुतः सृष्टमिदं सर्वं जगत्स्थावरजङ्गमम् ।
प्रलये च किमभ्येति तन्मे ब्रूहि पितामह ॥ १२-१८०-१ (७२२५०)
ससागरः सगगनः सशैलः सबलाहकः ।
सभूमिः साग्निपवनो लोकोऽयं केन निर्मितः ॥ १२-१८०-२ (७२२५१)
कथं सृष्टानि भूतानि कथं वर्णविभक्तयः ।
शोचाशौचं कथं तेषां धर्माधर्मावथो कथम् ॥ १२-१८०-३ (७२२५२)
कीदृशो जीवतां जीवः क्व वा गच्छन्ति ये मृताः ।
अस्माल्लोकादमुं लोकं सर्वं शंसतु नो भवान् ॥ १२-१८०-४ (७२२५३)
भीष्म उवाच। १२-१८०-५क्ष् (५९१३)
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
भृगुणाऽभिहितं श्रेष्ठं भरद्वाजाय पृच्छते ॥ १२-१८०-५ (७२२५४)
कैलासशिखरे दृष्ट्वा दीप्यमानमिवौजसा ।
भृगुं महर्षिमासीनं भरद्वाजोऽन्वपृच्छत ॥ १२-१८०-६ (७२२५५)
ससागरः सगगनः शशैलः सवलाहकः ।
सभूमिः साग्निपवनो लोकोऽयं केन निर्मितः ॥ १२-१८०-७ (७२२५६)
कथं सृष्टानि भूतानि कथं वर्णविभक्तयः ।
शौचाशौचं कथं तेषां धर्माधर्मावथो कथम्। १२-१८०-८ (७२२५७)
कीदृशो जीवतां जीवः क्व वा गच्छन्ति ये मृताः ।
परलोकमिमं चापि सर्वं शंसितृमर्हसि ॥ १२-१८०-९ (७२२५८)
एवं स भगवान्पृष्टो भरद्वाजेन संशयम् ।
ब्रह्मर्पिर्ब्रह्मसंकाशः सर्वं तस्मै ततोऽब्रवीत् ॥ १२-१८०-१० (७२२५९)
भृगुरुवाच। १२-१८०-११क्ष् (५९१४)
ग्नारायणो जगन्मूर्तिरन्तरात्मा सनातनः ।
कूटस्थोऽक्षर अव्यक्तो निर्लेपो व्यापकः प्रभुः ॥ १२-१८०-११ (७२२६०)
प्रकृतेः परतो नित्यमिन्द्रियैरप्यगोतरः ।
स सिसृक्षुः सहस्रांशादसृजत्पुरुषं प्रभुः ॥' १२-१८०-१२ (७२२६१)
मानसो नाम यः पूर्वो विश्रुतो वै महर्षिभिः ।
अनादिनिधनो देवस्तथाऽभेद्योऽदजरामरः ॥ १२-१८०-१३ (७२२६२)
अव्यक्त इति विख्यातः शाश्वतोऽथाक्षयोऽव्ययः ।
यतः सृष्टानि भूतानि तिष्ठन्ति च म्रियन्ति च ॥ १२-१८०-१४ (७२२६३)
सोऽसृजत्प्रथमं देवो महान्तं नाम नामतः ।
महान्ससर्जाहंकारं स चापि भगवानथ ।
आकाशमिति विख्यातं सर्वभूतधरः प्रभुः ॥ १२-१८०-१५ (७२२६४)
आकाशादभवद्वारि सलिलादग्निमारुतौ ।
अग्निमारुतसंयोगात्ततः समभवन्मही ॥ १२-१८०-१६ (७२२६५)

ततस्ते गेमयं दिव्यं पद्मं सृष्टं स्वयंभुवा ।
तस्मात्पद्मात्समभवद्ब्रह्मा वेदमयो निधिः ॥१२-१८०-१७ (७२२६६)
अहंकार इति ख्यातः सर्वभूतात्मभूतकृत् ।
ब्रह्मा वै स महातेजा य एते पञ्चधातवः ॥१२-१८०-१८ (७२२६७)
शैलास्तस्यास्थिसंज्ञास्तु मेदो मांसं च मेदिनी ।
समुद्रास्तस्य रुधिरमाकाशमुदरं तथा ॥१२-१८०-१९ (७२२६८)
पवनश्चैव निःश्वासस्तेजोऽग्निर्निम्नगाः सिराः ।
दिवाकरश्च सोमश्च नयने तस्य विश्रुते ॥१२-१८०-२० (७२२६९)
नभश्चोर्ध्वं शिरस्तस्य क्षितिः पादौ भुजौ दिशः ।
दुर्विज्ञेयो ह्यनन्तात्मा सिद्धैरपि न संशयः ॥१२-१८०-२१ (७२२७०)
स एष भगवान्विष्णुरनन्त इति विश्रुतः ।
सर्वभूतात्मभूतस्थो दुर्विज्ञेयोऽकृतात्माभः ॥१२-१८०-२२ (७२२७१)
अहंकारस्य यः स्रष्टा सर्वभूतोद्भवाय वै ।
यतः समभवद्विश्वं पृष्टोऽहं यदिह त्वया ॥१२-१८०-२३ (७२२७२)
भरद्वाज उवाच।१२-१८०-२४क्ष् (५९१५)
गगनस्य दिशां चैव भूतलस्यानिलस्य च ।
कान्यत्र परिमाणानि संशयं छिन्धि मेऽर्थितः ॥१२-१८०-२४ (७२२७३)
भृगुरुवाच।१२-१८०-२५क्ष् (५९१६)
अनन्तमेतदाकाशं सिद्धचारणसेवितम् ।
रम्यं नानाश्रयाकीर्णं यस्यान्तो नाधिगम्यते ॥१२-१८०-२५ (७२२७४)
ऊर्ध्वं गतेरधस्तात्तु चन्द्रादित्यौ न दृश्यतः ।
तत्र देवाः स्वयं दीप्ताः सूर्यभासोऽग्निवर्चसः ॥१२-१८०-२६ (७२२७५)
ते चाप्यन्तं न पश्यन्ति नभसः प्रथितौजसः ।
दुर्गमत्वादनन्तत्वादिति वै विद्धि मानद ॥१२-१८०-२७ (७२२७६)
उपर्युपरि तैर्देवैः प्रज्वलद्भिः स्वयंप्रभैः ।
निरुद्धमेतदाकाशमप्रमेयं सुरैरपि ॥१२-१८०-२८ (७२२७७)
पृथिव्यन्ते समुद्रास्तु समुद्रान्ते तमः स्मृतम् ।
तप्नसोऽन्ते जलं प्राहुर्जलस्यान्तेऽग्निरेव च ॥१२-१८०-२९ (७२२७८)
रसातलान्ते सलिलं जलान्ते पन्नगाधिपाः ।
तदन्ते पुनराकाशमाकाशान्ते पुनर्जलम् ॥१२-१८०-३० (७२२७९)
एवमन्तं हि नभसः प्रमाणं सलिलस्य च ।
अग्निमारुतयोश्चैव दुर्ज्ञेयं दैवतैरपि ॥१२-१८०-३१ (७२२८०)
अग्निमारुततोयानां वर्णाः क्षितितलस्य च ।
आकाशसदृशा ह्येते भिद्यन्तेऽतत्वदर्शनात् ॥१२-१८०-३२ (७२२८१)
पठन्ति चैव मुनयः शास्त्रेषु विविधेषु च ।
त्रैलोक्यसागरे चैव प्रमाणं विहितं यथा ॥१२-१८०-३३ (७२२८२)

अदृश्यत्वादगम्यत्वात्कः प्रमाणमुदाहरेत् ।
सिद्धानां देवतानां च यदा परिमिता गतिः ।
तदा गौणमनन्तस्य नामानन्तेति विश्रुतम् ॥ १२-१८०-३४ (७२२८३)
नामधेयानुरूपस्य मानसस्य महात्मनः ।
यदा तु दिव्यं यद्रूपं ह्रसते वर्धते पुनः ।
कोऽन्यस्तद्वेदितुं शक्तो योपि स्यात्तद्विधोऽपरः ॥ १२-१८०-३५ (७२२८४)
ततः पुष्करतः सृष्टः सर्वज्ञो मूर्तिमान्प्रभुः ।
ब्रह्मा धर्ममयः पूर्वः प्रजापतिरनुत्तमः ॥ १२-१८०-३६ (७२२८५)
भरद्वाज उवाच। १२-१८०-३७क्ष् (५९१७)
पुष्कराद्यदि संभूतो ज्येष्ठं भवति पुष्करम् ।
ब्रह्माणं पूर्वजं चाह भवान्संदेह एव मे ॥ १२-१८०-३७ (७२२८६)
भृगुरुवाच। १२-१८०-३८क्ष् (५९१८)
मानसस्येह या मूर्तिर्ब्रह्मत्वं समुपागता ।
तस्यासनविधानार्थं पृथिवी पद्ममुच्यते ॥ १२-१८०-३८ (७२२८७)
कर्णिकां तस्य पद्मस्य मेरुर्गगमुच्छ्रितः ।
तस्य मध्ये स्थितो लोकान्सृजते जगतः प्रभुः ।
मानसांश्च तथा देवान्भूतानि विविधानि च ॥ ॥ १२-१८०-३९ (७२२८८)

इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि
अशीत्यधिकशततमोऽध्यायः ॥ १८०. ।

Mahabharata - Shanti Parva - Chapter Footnotes

१२-१८०-३ कथमिति सृष्टिप्रकारप्रश्नः । विभक्तयो विभागाः ॥
१२-१८०-४ जीवतां प्राणिनाम् ॥
१२-१८०-२० अग्नीषोमौ तु चन्द्रार्कौ नयने इति झ । पाठः। तत्र
अग्नीषोमावेव चन्द्रार्कावित्यन्वयः ॥
१२-१८०-२३ भूतोद्भवाय भूतोत्पत्तये । स्रष्टाहंकारस्येति
संबन्धः। यतो विश्वं समभवद्यव त्वयाहं
पृष्टस्तत्तुभ्यमुक्तमिति शेषः ॥
१२-१८०-२४ छिन्धि तत्वत इति झ । पाठः ॥
१२-१८०-२५ आश्रयाश्चतुर्दशभुवनानि ॥
१२-१८०-२६ गतेः सूर्यरश्मिगतेरपि ऊर्ध्वमधस्ताच्च चन्द्रादित्यौ
न दृश्येते ॥
१२-१८०-२७ तेऽपि सूर्यादिगतेरूर्ध्वाधस्था अपि ॥
१२-१८०-३२ वर्णाः स्वरूपाणि आकाशसदृशाः आकाशवदनन्ताः
। अतत्वदर्शनात् पृथिव्यादीनां तत्वानवगमात्। भिद्यन्ते

परिच्छिन्नवदाभान्ति ॥
१२-१८०-३३ कथतर्हि पञ्चाशत्कोटियोजनविस्तारायामादिरूपं परिमाणं पठन्तीत्यत आह पठन्तीति ॥
१२-१८०-३४ अदृश्याय त्वगम्याय इति झ । पाठः ॥
१२-१८०-३६ ब्रह्मा चतुर्मुखः ॥

---

शन्तिपर्व-अध्यय१८१
॥ श्रीः ॥
१२.१८१. अध्यायः १८१

Mahabharata - Shanti Parva - Chapter Topics
भरद्वाजंप्रति भृगुणा मेरुस्थब्रह्मणा जलादिभूम्यन्तसृष्टिप्रकारकथनम् ॥ १.।
Mahabharata - Shanti Parva - Chapter Text

१२-१८१-० (७२२८९)
भरद्वाज उवाच। १२-१८१-०क्ष् (५९१९)
मेरुमध्ये स्थितो ब्रह्मा कथं स ससृजे प्रजाः ।
एतन्मे सर्वमाचक्ष्व याथातथ्येन पृच्छतः ॥ १२-१८१-१ (७२२९०)
भृगुरुवाच। १२-१८१-२क्ष् (५९२०)
प्रजाविसर्गं पूर्वं स मानसो मनसाऽसृजत् ।
संरक्षणार्थं भूतानां सृष्टं प्रथमतो जलम् ॥ १२-१८१-२ (७२२९१)
यत्प्राणः सर्वभूतानां वर्धन्ते येन च प्रजाः ।
परित्यक्ताश्च नश्यन्ति तेनेदं सर्वमावृतम् ॥ १२-१८१-३ (७२२९२)
पृथिवी पर्वता मेघा मूर्तिमन्तश्च ये परे ।
सर्वं तद्वारुणं ज्ञेयमापस्तस्तम्भिरे हि ताः ॥ १२-१८१-४ (७२२९३)
भरद्वाज उवाच। १२-१८१-५क्ष् (५९२१)
कथं सलिलमुत्पन्नं कथं चैवाग्निमारुतौ ।
कथं वा मेदिनी सृष्टेत्यत्र मे संशयो महान् ॥ १२-१८१-५ (७२२९४)
भृगुरुवाच। १२-१८१-६क्ष् (५९२२)
ब्रह्मकल्पे पुरा ब्रह्मन्ब्रह्मर्षीणां समागमे ।
लोकसंभवसन्देहः समुत्पन्नो महात्मनाम् ॥ १२-१८१-६ (७२२९५)
तेऽतिष्ठन्ध्यानमालम्ब्य मौनमास्थाय निश्चलाः ।
त्यक्ताहाराः पवनपा दिव्यं वर्षशतं द्विजाः ॥ १२-१८१-७ (७२२९६)
तेषां ब्रह्ममयी वाणी सर्वेषां श्रोत्रमागमत् ।
दिव्या सरस्वती तत्र संबभूव नभस्तलात् ॥ १२-१८१-८ (७२२९७)

पुराऽस्तमितनिःशब्दमाकाशमचलोपमम् ।
नष्टचन्द्रार्कपवनं प्रसुप्तमिव संबभौ ॥ १२-१८१-९ (७२२९८)
ततः सलिलमुत्पन्नं तमसीवापरं तमः ।
तस्माच्च सलिलोत्पीडात्समजायत मारुतः ॥ १२-१८१-१० (७२२९९)
यथा भाजनमच्छिद्रं निःशब्दमिह लक्ष्यते ।
तच्चाम्भसा पूर्यमाणं सशब्दं कुरुतेऽनिलः ॥ १२-१८१-११ (७२३००)
तथा सलिलसंरुद्धे नभसोन्ते निरन्तरे ।
भित्त्वाऽर्णवतलं वायुः समुत्पतति घोषवान् ॥ १२-१८१-१२ (७२३०१)
स एष चरते वायुरर्णवोत्पीडसंभवः ।
आकाशस्थानमासाद्य प्रशान्तिं नाधिगच्छति ॥ १२-१८१-१३ (७२३०२)
तस्मिन्वाय्वम्बुसंघर्षे दीप्ततेजा महाबलः ।
प्रादुर्बभूवोर्ध्वशिखः कृत्वा निस्तिमिरं नभः ॥ १२-१८१-१४ (७२३०३)
अग्निः पवनसंयुक्तः स्वात्समुत्क्षिपते जलम् ।
सोऽग्निमारुतसंयोगाद्धनत्वमुपपद्यते ॥ १२-१८१-१५ (७२३०४)
तस्याकाशान्निपतितः स्नेहस्तिष्ठति योऽपरः ।
स संघातत्वमापन्नो भूमित्वमनुगच्छति ॥ १२-१८१-१६ (७२३०५)
रसानां सर्वगन्धानां स्नेहानां प्राणिनां तथा ।
भूमिर्योनिरिह ज्ञेया यस्यां सर्वं प्रसूयते ॥ ॥ १२-१८१-१७ (७२३०६)

इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि
एकाशीत्यधिकशततमोऽध्यायः ॥ १८१.।
Mahabharata - Shanti Parva - Chapter Footnotes

१२-१८१-३ यत् जलम् । तेन जलेन ॥
१२-१८१-४ वारुणं वरुणदेवतासंबन्धादाप्यमित्यर्थः । मूर्तिमत्
मनुष्यपश्वादिविग्रहवत्। आप्यत्वे हेतुः। आपस्तस्तम्भिरे यत
आपस्तम्भं धनीभावं पृथिव्यादिरूपं प्राप्ताः ॥
१२-१८१-६ ब्रह्मकल्पे ब्रह्मप्रथमदिने । लोकानां संभव उत्पत्तिस्तत्र
विषये संदेहः ॥
१२-१८१-८ तेषां धर्ममयीति ट । ड। पाठः ॥
१२-१८१-९ सरस्वतीमेवाह पुरेति । स्तिमितमाकाशमनन्तमिति झ। पाठः ॥

---

शन्तिपर्व-अध्यय१८२
॥ श्रीः ॥
१२.१८२. अध्यायः १८२

Mahabharata - Shanti Parva - Chapter Topics
भरद्वाजंप्रति भृगुणा वृक्षादीनामपि भौतिकत्वचैतन्यादिसमर्थनम् ॥ १.।
Mahabharata - Shanti Parva - Chapter Text

१२-१८२-० (७२३०७)
भरद्वाज उवाच। १२-१८२-०क्ष् (५९२३)
त एते धातवः पञ्च ब्रह्मा यानसृजत्पुरा ।
आवृता यैरिमे लोका महाभूताभिसंज्ञिताः ॥ १२-१८२-१ (७२३०८)
यदाऽसृजत्सहस्राणि भूतानां स महामतिः ।
पञ्चानामेव भूतत्वं कथं समुपपद्यते ॥ १२-१८२-२ (७२३०९)
भृगुरुवाच। १२-१८२-३क्ष् (५९२४)
अमितानां महाशब्दो भूतानां याति संभवम् ।
ततस्तेषां महाभूतशब्दोऽयमुपपद्यते ॥ १२-१८२-३ (७२३१०)
चेष्टा वायुः खमाकाशमूष्माऽग्निः सलिलं द्रवः ।
पृथिवी चात्र संघातः शरीरं पाञ्चभौतिकम् ॥ १२-१८२-४ (७२३११)
इत्येतैः पञ्चभिर्भूतैर्युक्तं स्थावरजङ्गमम् ।
श्रोत्रं घ्राणं रसः स्पर्शो दृष्टिश्चेन्द्रियसंज्ञिताः ॥ १२-१८२-५ (७२३१२)
भरद्वाज उवाच। १२-१८२-६क्ष् (५९२५)
पञ्चभिर्यदि भूतैस्तु यक्ताः स्थावरजङ्गमाः ।
स्थावराणां न दृश्यन्ते शरीरे पञ्च धातवः ॥ १२-१८२-६ (७२३१३)
अनूष्मणामचेष्टानां घनानां चैव तत्त्वतः ।
वृक्षा नोपलभ्यन्ते शरीरे पञ्च धातवः ॥ १२-१८२-७ (७२३१४)
न शृणुन्ते न पश्यन्ति न गन्धरसवेदिनः ।
न चस्पर्शं विजानन्ति ते कथं पाञ्चभौतिकाः ॥ १२-१८२-८ (७२३१५)
अद्रवत्वादनग्नित्वादभूतित्वादवायुतः ।
आकाशस्याप्रमेयत्वाद्वृक्षाणां नास्ति भौतिकम् ॥ १२-१८२-९ (७२३१६)
भृगुरुवाच। १२-१८२-१०क्ष् (५९२६)
घनानामपि वृक्षाणामाकाशोऽस्ति न संशयः ।
तेषां पुष्पफलव्यक्तिर्नित्यं समुपपद्यते ॥ १२-१८२-१० (७२३१७)
ऊष्मतो म्लायते वर्णं त्वक्फलं पुष्पमेव च ।
म्लायते शीर्यते चापि स्पर्शस्तेनात्र विद्यते ॥ १२-१८२-११ (७२३१८)
वाय्वग्न्यशनिनिष्पेषैः फलं पुष्पं विशीर्यते ।
श्रोत्रेण गृह्यते शब्दस्तस्माच्छृण्वन्ति पादपाः ॥ १२-१८२-१२ (७२३१९)
वल्ली वेष्टयते वृक्षं सर्वतश्चैव गच्छति ।

न ह्यदृष्टेश्च मार्गोऽस्ति तस्मात्पश्यन्ति पादपाः ॥१२-१८२-१३ (७२३२०)
पुण्यापुण्यैस्तथा गन्धैर्धूपैश्च विविधैरपि ।
अरोगाः पुष्पिताः सन्ति तस्माज्जिघ्रन्ति पादपाः ॥१२-१८२-१४ (७२३२१)
पादैः सलिलपानाच्च व्याधीनां चापि दर्शनात् ।
व्याधिप्रतिक्रियत्वाच्च विद्यते रसनं द्रुमे ॥१२-१८२-१५ (७२३२२)
वक्त्रेणोत्पलनालेन यथोर्ध्वं जलमाददेत् ।
तथा पवनसंयुक्तः पादैः पिबति पादपः ॥१२-१८२-१६ (७२३२३)
सुखदुःखयोश्च ग्रहणाच्छिन्नस्य च विरोहणात् ।
जीवं पश्यामि वृक्षाणामचैतन्यं न विद्यते ॥१२-१८२-१७ (७२३२४)
तेन तज्जलमादत्तं जरयत्यग्निमारुतौ ।
आहारपरिणामाच्च स्नेहो वृद्धिश्च जायते ॥१२-१८२-१८ (७२३२५)
जङ्गमानां च सर्वेषां शरीरे पञ्च धातवः ।
प्रत्येकशः प्रभिद्यन्ते यैः शरीरं विचेष्टते ॥१२-१८२-१९ (७२३२६)
त्वक्च मांसं तथाऽस्थीनि मज्जा स्नायुश्च पञ्चमम् ।
इत्येतदिह संघातं शरीरे पृथिवीमयम् ॥१२-१८२-२० (७२३२७)
तेजो ह्यग्निस्तथा क्रोधश्चक्षुरूष्मा तथैव च ।
अग्निर्जरयते यच्च पञ्चाग्नेयाः शरीरिणः ॥१२-१८२-२१ (७२३२८)
श्रोत्रं घ्राणं तथाऽऽस्यं च हृदयं कोष्ठमेव च ।
आकाशात्प्राणिनामेते शरीरे पञ्च धातवः ॥१२-१८२-२२ (७२३२९)
श्लेष्मा पित्तमथ स्वेदो वसा शोणितमेव च ।
इत्यापः पञ्चधा देहे भवन्ति प्राणिनां सदा ॥१२-१८२-२३ (७२३३०)
प्राणात्प्राणयते प्राणी व्यानाद्व्यायच्छते तथा ।
गच्छत्यपाने वाक्चैव समानने समः स्थितः ॥१२-१८२-२४ (७२३३१)
उदानादुच्छ्वसिति च प्रतिभेदाच्च भाषते ।
इत्येते वायवः पञ्च चेष्टयन्तीह देहिनम् ॥१२-१८२-२५ (७२३३२)
भूमेर्गन्धगुणान्वेत्ति रसं चाद्भ्यः शरीरवान् ।
ज्योतेः पश्यति रूपाणि स्पर्शं वेत्ति च वायुतः ।
ग्शब्दं शृणोति च तदैवाकाशात्तु शरीरवान् ॥ १२-१८२-२६ (७२३३३)
गन्धः स्पर्शो रसो रूपं शब्दश्चात्र गुणाः स्मृताः ।
तस्य गन्धस्य वक्ष्यामि विस्तराभिहितान्गुणान् ॥१२-१८२-२७ (७२३३४)
इष्टश्चानिष्टगन्धश्च मधुरः कटुरेव च ।
निर्हारी संहतः स्निग्धो रूक्षो विशद एव च ।
एवं नवविधो ज्ञेयः पार्थिवो गन्धविस्तरः ॥ १२-१८२-२८ (७२३३५)
ज्योतिः पश्यति चक्षुर्भ्यां स्पर्शं वेत्ति च वायुना ।
शब्दः स्पर्शश्च रूपं च रसश्चापि गुणाः स्मृताः ॥१२-१८२-२९ (७२३३६)
रसज्ञानं तु वक्ष्यामि तन्मे निगदतः शृणु ।

रसो बहुविधः प्रोक्तः सूरिभिः प्रथितात्मभिः ॥ १२-१८२-३० (७२३३७)
मधुरो लवणस्तिक्तः कषायोऽम्लः कटुस्तथा ।
एवं षड्विधविस्तारो रसो वारिमयः स्मृतः ॥ १२-१८२-३१ (७२३३८)
शब्दः स्पर्शश्च रूपं च त्रिगुणं ज्योतिरुच्यते ।
ज्योतिः पश्यति रूपाणि रूपं च बहुधा स्मृतम् ।
ह्रस्वो दीर्घस्तथा स्थूलश्चतुरस्रोऽणुवृत्तवान् ॥ १२-१८२-३२ (७२३३९)
शुक्लः कृष्णस्तथा रक्तः पीतो नीलारुणस्तथा ।
कठिनश्चिक्कणः श्लक्ष्णः पिच्छिलो मृदुदारुणः ।
एवं द्वादशविस्तारो ज्योतीरूपगुणः स्मृतः ॥ १२-१८२-३३ (७२३४०)
शब्दस्पर्शौ च विज्ञेयौ द्विगुणो वायुरित्युत ।
वायव्यस्तु गुणः स्पर्शः स्पर्शश्च बहुधा स्मृतः ॥ १२-१८२-३४ (७२३४१)
उष्णः शीतः सुखो दुःखः स्निग्धो विशद एव च ।
तथा खरो मृदू रूक्षो लघुर्गुरुतरोऽपि च ।
एवं द्वादशधा स्पर्शो व्याव्यो गुण उच्यते ॥ १२-१८२-३५ (७२३४२)
तत्रैकगुणमाकाशं शब्द इत्येव तत्स्मृतम् ।
तस्य शब्दस्य वक्ष्यामि विस्तरं विविधात्मकम् ॥ १२-१८२-३६ (७२३४३)
षड्ज ऋषभगान्धारौ मध्यमो धैवतस्तथा ।
पञ्चमश्चापि विज्ञेयस्तथा चापि निषादवान् ॥ १२-१८२-३७ (७२३४४)
एष सप्तविधः प्रोक्तः शब्द आकाशसंभवः ।
त्र्यैस्वर्येण तु सर्वत्र स्थितोऽपि पटहादिषु ॥ १२-१८२-३८ (७२३४५)
श्मृदङ्गभेरीशङ्खानां स्तनयित्नो रथस्य च ।
यः कश्चिच्छ्रूयते शब्दः प्राणिनो प्राणिनोऽपि वा ।
एतेषामेव सर्वेषां विषये संप्रकीर्तितः ॥ १२-१८२-३९ (७२३४६)
एवं बहुविधाकारः शब्द आकाशसंभवः ।
आकाशजं शब्दमाहुरेभिर्वायुगुणैः सह ॥ॅ १२-१८२-४० (७२३४७)
अव्याहतैश्चेतयने न वेत्ति विषमस्थितैः ।
आप्याय्यन्ते च ते नित्यं धातवस्तैस्तु धातुभिः ॥ १२-१८२-४१ (७२३४८)
आपोऽग्निर्मारुतश्चैव नित्यं जाग्रति देहिषु ।
मूलमेते शरीरस्य व्याप्य प्राणानिह स्थिता ॥ ॥ १२-१८२-४२ (७२३४९)

इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि
द्व्यशीत्यधिकशततमोऽध्यायः ॥ १८२.।

Mahabharata - Shanti Parva - Chapter Footnotes

१२-१८२-१ पञ्चधातव आकाशादयः ये महाभूतसंज्ञाः यैश्च लोका
आवृता इति योजना ॥

१२-१८२-२ भूतानां प्राणिनाम् ॥
१२-१८२-४ खंसुषिरम् । अत्र शरीरे द्रवो लोहितादिसंघातः। कठिनं
मांसास्थ्यादि ॥
१२-१८२-५ श्रोत्रं खं घ्राणं पृथिवी रसो रसनेन्द्रियं जलं
स्पर्शः स्पर्शनेन्द्रियं त्वग्वायुः दृष्टिश्चक्षुरिन्द्रियं तेजः ॥
१२-१८२-९ अप्रमेयत्वादप्रतीयमानत्वात्। १२-१८२-१६ नालेन नलिकया। ।
१२-१८२-१८ तेन वृक्षेण । जरयति जरयतः ॥
१२-१८२-२१ शरीरिणोऽन्तर्गतोऽग्निस्तेजः क्रोधचक्षुरूष्मजाठररूप
इति पञ्चाग्नेयाः ॥
१२-१८२-२२ श्रोत्रमिन्द्रियम् । घ्राणं नासारन्ध्रे। कोष्ठमन्नादिस्थानम् ॥
१२-१८२-२४ व्यायच्छते बलसाध्यमुद्यमं करोति ॥
१२-१८२-२५ प्रतिभेदादुरःकण्ठशिरः स्थानभेदात् ॥
१२-१८२-२६ भूमेर्भूम्या घ्राणरूपया । अद्भ्य इति रसनेन ॥
१२-१८२-२८ पार्थिवः पृथिव्याश्रितो मुख्यो गुणः ॥
१२-१८२-२९ ज्योतिः पृथिव्यादिरूपम् । वायुना त्वगिन्द्रियेण। गुणा
अप्रधानभूताः एवं जलादावप्येकैको मुख्य इतरेऽप्रधाना इति
द्रष्टव्यम् ॥

---

शन्तिपर्व-अध्यय१८३
॥ श्रीः ॥
१२.१८३. अध्यायः १८३

Mahabharata - Shanti Parva - Chapter Topics
भरद्वाजंप्रति भृगुणा शरीरे प्राणापानादीनां कार्यविशेषरूपणम् ॥ १.।
Mahabharata - Shanti Parva - Chapter Text

१२-१८३-० (७२३५०)
भरद्वाज उवाच। १२-१८३-०क्ष् (५९२७)
पार्थिवं धातुमाश्रित्य शारीरोऽग्निः कथं भवेत् ।
अवकाशविशेषेण कथं वर्तयतेऽनिलः ॥ १२-१८३-१ (७२३५१)
भृगुरुवाच। १२-१८३-२क्ष् (५९२८)
वायोर्गतिमहं ब्रह्मन्कीर्तयिष्यामि तेऽनघ ।
प्राणिनामनिलो देहान्यथा चेष्टयते बली ॥ १२-१८३-२ (७२३५२)
श्रितो मूर्धानमग्निस्तु शरीरं परिपालयन् ।
प्राणो मूर्धनि चाग्नौ च वर्तमानो विचेष्टने ॥ १२-१८३-३ (७२३५३)
स जन्तुः सर्वभूतात्मा पुरुषः स सनातनः ।

मनो बुद्धिरहंकारो भूतानि विषयाश्च सः ॥ १२-१८३-४ (७२३५४)
एवं त्विह स सर्वत्र प्राणेन परिपाल्यते ।
कोष्ठतस्तु समानेन स्वां स्वां गतिमुपाश्रितः ॥ १२-१८३-५ (७२३५५)
वस्तिमूलं गुदं चैव पावकं समुपाश्रितः ।
वहन्मूत्रं पुरीषं चाप्यपानः परिवर्तते ॥ १२-१८३-६ (७२३५६)
प्रयत्ने कर्मणि बले य एकस्त्रिषु वर्तते ।
उदान इति तं प्राहुरध्यात्मकुशला जनाः ॥ १२-१८३-७ (७२३५७)
संधिष्वपि च सर्वेषु सन्निविष्टस्तथाऽनिलः ।
शरीरेषु मनुष्याणां व्यान इत्युपदिश्यते ॥ १२-१८३-८ (७२३५८)
धातुष्वग्निस्तु विततः समानोऽग्निः समीरितः ।
रसान्धातूंश्च दोषांश्च वर्तयन्नवतिष्ठते ॥ १२-१८३-९ (७२३५९)
अपानप्राणयोर्मध्ये प्राणापानसमाहितः ।
समन्वितस्त्वधिष्ठानं सम्यक्पचति पावकः ॥ १२-१८३-१० (७२३६०)
आस्यं हि पायुसंयुक्तमन्ते स्याद्गुदसंज्ञितम् ।
स्रोतस्तस्मात्प्रजायन्ते सर्वस्रोतांसि देहिनाम् ॥ १२-१८३-११ (७२३६१)
प्राणानां सन्निपाताच्च सन्निपातः प्रजायते ।
ऊष्मा सोग्निरिति ज्ञेयो योऽन्नं पचति देहिनाम् ॥ १२-१८३-१२ (७२३६२)
अग्निवेगवहः प्राणो गुदान्ते प्रतिहन्यते ।
स ऊर्ध्वमागम्य पुनः समुत्क्षिपति पावकम् ॥ १२-१८३-१३ (७२३६३)
पक्वाशयस्त्वधो नाभ्या ऊर्ध्वमामाशयः स्मृतः ।
नाभिमध्ये शरीरस्य सर्वे प्राणाः समाश्रिताः ॥ १२-१८३-१४ (७२३६४)
प्रसृता हृदयात्सर्वास्तिर्यगूर्ध्वमधस्तथा ।
वहन्त्यन्नरसान्नाड्यो दशप्राणप्रचोदिताः ॥ १२-१८३-१५ (७२३६५)
एष मार्गोऽथ योगानां येन गच्छन्ति तत्पदम् ।
जितक्लमासना धीरा मूर्धन्यात्मानमादधन् ॥ १२-१८३-१६ (७२३६६)
एवं सर्वेषु विहितः प्राणापानेषु देहिनाम् ।
तस्मिन्योऽवस्थितो नित्यमग्निः स्थाल्यामिवाहितः। ॥ १२-१८३-१७ (७२३६७)

इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि
त्र्यशीत्यधिकशततमोऽध्यायः ॥ १८३.।

Mahabharata - Shanti Parva - Chapter Footnotes

१२-१८३-५ पृष्ठतस्तु समानेनेति ट ।थ। पाठः ॥
१२-१८३-१० समन्वितः समानेनेति ट ।ड।थ। पाठः ॥
१२-१८३-११ पायुपर्यन्तमिति झ ।पाठः ॥
१२-१८३-१५ हृदयात्सर्वे इति झ ।ट। पाठः ॥

१२-१८३-१६ एष मार्गोऽथ युक्तानामिति ट ।पाठः ॥
१२-१८३-१७ तस्मिन्समिध्यते नित्यमिति घ ।झ।पाठः।यो व्यज्यत
इति ट।पाठः ॥

---

शन्तिपर्व-अध्यय१८४
॥ श्रीः ॥
१२.१८४. अध्यायः १८४

Mahabharata - Shanti Parva - Chapter Topics
भरद्वाजेन भृगुंप्रति सयुक्तिकं संघातान्यजीवपक्षाक्षेपः ॥१.।
Mahabharata - Shanti Parva - Chapter Text

१२-१८४-० (७२३६८)
भरद्वाज उवाच।१२-१८४-०क्ष् (५९२९)
यदि प्राणयते वायुर्वायुरेव विचेष्टते ।
श्वसित्याभाषते चैव तस्माज्जीवो निरर्थकः ॥१२-१८४-१ (७२३६९)
यदूष्मभाव आग्नेयो वह्निना पच्यते यदि ।
अग्निर्जरयते चैतत्तस्माज्जीवो निरर्थकः ॥१२-१८४-२ (७२३७०)
जन्तोः प्रमीयमाणस्य जीवो नैवोपलभ्यते ।
वायुरेव जहात्येनमूष्मभावश्च नश्यति ॥१२-१८४-३ (७२३७१)
यदि वायुमयो जीवः संश्लेषो यदि वायुना ।
वायुमण्डलवद्दृश्येद्गच्छन्सह मरुद्गणैः ॥१२-१८४-४ (७२३७२)
श्लेष्मं वा यदि वा जीवः सह तेन प्रणश्यति ।
महार्णववियुक्तत्वादन्यत्सलिलभाजनम् ॥१२-१८४-५ (७२३७३)
यत्क्षिपेत्सलिलं कूपे प्रदीपं वा हुताशने ।
तन्नश्यत्युभयं तद्वज्जीवो वातानलात्मकः ॥१२-१८४-६ (७२३७४)
पञ्च साधारणो ह्यस्मिञ्शरीरे जीवितं कुतः ।
तेषामन्यतरत्यागाच्चतुर्णां नास्ति संग्रहः ॥१२-१८४-७ (७२३७५)
नश्यन्त्यापो ह्यनाधाराद्वायुरुच्छ्वासनिग्रहात् ।
नश्यते कोष्ठभेदात्खमग्निर्नश्यत्यभोजनात् ॥१२-१८४-८ (७२३७६)
व्याधिप्राणपरिक्लेशैर्मेदिनी चैव शीर्यते ।
पीडितेऽन्यतमे ह्येषां संघातो याति पञ्चताम् ॥१२-१८४-९ (७२३७७)
तस्मिन्पञ्चत्वमापन्ने जीवः किमनुधावति ।
किं वेदयति वा जीवः किं शृणोति ब्रवीति च ॥१२-१८४-१० (७२३७८)
एषा गौः परलोकस्थं तारयिष्यति मामिति ।
यो दत्त्वा म्रियते जन्तुः सा गौः कं तारयिष्यति ॥१२-१८४-११ (७२३७९)
गौश्च प्रतिग्रहीता च दाता चैव समं यदा ।

इहैव विलयं यान्ति कुतस्तेषां समागमः ॥१२-१८४-१२ (७२३८०)
विहगैरुपभुक्तस्य शैलाग्नात्पतितस्य च ।
अग्निना चोपयुक्तस्य कुतः संजीवनं पुनः ॥१२-१८४-१३ (७२३८१)
छिन्नस्य यदि वृक्षस्य न मूलं प्रतिरोहति ।
बीजान्यस्य प्ररोहन्ति मृतः क्व पुनरेष्यति ॥१२-१८४-१४ (७२३८२)
बीजमात्रं पुरा सृष्टं यदेतत्परिवर्तते ।
मृतामृताः प्रणश्यन्ति बीजाद्बीजं प्रवर्तते ॥ ॥१२-१८४-१५ (७२३८३)

इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि
चतुरशीत्यधिकशततमोऽध्यायः ॥१८४.।
Mahabharata - Shanti Parva - Chapter Footnotes

१२-१८४-३ जन्तोर्देहेन्द्रियबुद्धिसंघातस्य ।प्रमीयमाणस्य
नश्यमानस्य।नैवोपलभ्यते पलालपृथक्करणे
बीजमिव।तस्माद्वायुवियोग एव मरणम्।जन्तोः प्रकीर्यमाणस्येति
थ।पाठः ॥
१२-१८४-४ वायुमयो वायुप्रधानो वायोरन्यः
।वायुमण्डलवद्वात्याचक्रवद्वायुना सह दृश्यः स्यादित्यर्थः।यदि
वातोपमो जीव इति ट।पाठः ॥
१२-१८४-५ संश्लेषो यदि वातेन यदि तस्मात्प्रणश्यतीतिझ
।पाठः।तत्र यदि वातेन जीवस्य संश्लेषोऽस्ति तस्माच्च
जीवादन्यो वातः पञ्चत्वदशायां यदि प्रणश्यति तर्हि यथा महार्णवे
क्षिप्तं जलभाजनं सलिलापगमे दृश्यते तद्वद्वायुसंश्लिष्टो जीवो
वायोरपगमे दृश्येतेत्यर्थः ॥
१२-१८४-६ क्षिप्रं प्रविश्य नश्येत यथा नश्यत्यसौ तथेति घ
।पाठः ॥
१२-१८४-७ पञ्चधारणके इति ।तेषामन्यतराभावाच्चतुर्णां नास्ति
संशयः।इति च।झ।पाठः ॥
१२-१८४-१४ मृतस्य पुनरागमनाभावोऽपि संसारप्रवाहस्याविच्छेदे
दृष्टान्तमाह छिन्नस्येति ॥
१२-१८४-१५ दार्ष्टान्तिकमाह बीजमात्रमिति ।शरीरमूलं तु बीजमात्रं
प्रत्यक्षदृष्टं रेतएव नत्वदृष्टमक्लृत्वात्।प्रवर्तते
देहरूपेण परिणमते।तथाच बीजरुहतरुवन्नष्टानां नाश
एवेतरेषामुद्भव इति।तस्मान्नित्यं समिध्यते इत्यनुपपन्नम् ॥

---

शन्तिपर्व-अध्यय१८५
॥ श्रीः ॥

## १२.१८५. अध्यायः १८५

Mahabharata - Shanti Parva - Chapter Topics

भृगुणा भरद्वाजंप्रति संघातातिरिक्तजीवसमर्थनपूर्वकं तन्निरूपणम् ॥ १.।

Mahabharata - Shanti Parva - Chapter Text

१२-१८५-० (७२३८४)
भृगुरुवाच। १२-१८५-०क्ष् (५९३०)
न प्रणाशोऽस्ति जीवानां दत्तस्य च कृतस्य च ।
याति देहान्तरं प्राणी शरीरं तु विशीर्यते ॥ १२-१८५-१ (७२३८५)
न शरीराश्रितो जीवस्तस्मिन्नष्टे प्रणश्यति ।
यथा समित्सु दग्धासु न प्रणश्यति पावकः ॥ १२-१८५-२ (७२३८६)
भरद्वाज उवाच। १२-१८५-३क्ष् (५९३१)
अग्नेर्यथा समिद्धस्य यदि नाशो न विद्यते ।
इन्धनस्योपयोगान्ते स चाग्निर्नोपलभ्यते ॥ १२-१८५-३ (७२३८७)
नश्यतीत्येव जानामि शान्तमग्निमनिन्धनम् ।
मतिर्यस्य प्रमाणं वा संस्थानं वा न दृश्यते ॥ १२-१८५-४ (७२३८८)
भृगुरुवाच। १२-१८५-५क्ष् (५९३२)
ग्जीवस्य चेन्धनाग्नेश्च सदा नाशो न विद्यते।'
समिधामुपयोगान्ते सन्नेवाग्निर्न दृश्यते ।
आकाशानुगतत्वाद्धि दुर्ग्रहः स निराश्रयः ॥ १२-१८५-५ (७२३८९)
तथा शरीरसंत्यागे जीवो ह्याकाशमाश्रितः ।
न गृह्यते तु सूक्ष्मत्वाद्यथा ज्योतिरनिन्धनम् ॥ १२-१८५-६ (७२३९०)
प्राणान्धारयते योऽग्निः स जीव उपधार्यताम् ।
वायुसंधारणो ह्यग्निर्नश्यत्युच्छ्वासनिग्रहात् ॥ १२-१८५-७ (७२३९१)
तस्मिन्नष्टे शरीराग्नौ शरीरं तदचेतनम् ।
पतितं याति भूमित्वमयनं तस्य हि क्षितिः ॥ १२-१८५-८ (७२३९२)
जङ्गमानां हि सर्वेषां स्थावराणां तथैव च ।
आकाशं पवनोऽन्वेति ज्योतिस्तमनुगच्छति ।
तेषां त्रयाणामेकत्वं द्वयं भूमौ प्रतिष्ठितम् ॥ १२-१८५-९ (७२३९३)
यत्र खं तत्र पवनस्तत्राग्निर्यत्र मारुतः ।
अमूर्तयस्ते विज्ञेया आपो मूर्तास्तथा क्षितिः ॥ १२-१८५-१० (७२३९४)
भरद्वाज उवाच। १२-१८५-११क्ष् (५९३३)
यद्यग्निमारुतौ भूमिः खमापश्च शरीरिषु ।
जीवः किंलक्षणस्तत्रेत्येतदाचक्ष्व मेऽनघ ॥ १२-१८५-११ (७२३९५)

पञ्चात्मके पञ्चरतौ पञ्चविज्ञानसंयुते ।
शरीरे प्राणिनां जीवं वेत्तुमिच्छामि यादृशम् ॥ १२-१८५-१२ (७२३९६)
मांसशोणितसंघाते मेदः स्नाय्वस्थिसंचये ।
भिद्यमाने शरीरे तु जीवो नैवोपलभ्यते ॥ १२-१८५-१३ (७२३९७)
यद्यजीवं शरीरं तु पञ्चभूतसमन्वितम् ।
शारीरे मानसे दुःखे कस्तां वेदयते रुजम् ॥ १२-१८५-१४ (७२३९८)
शृणोति कथितं जीवः कर्णाभ्यां न शृणोति तत् ।
महर्षे मनसि व्यग्रे तस्माज्जीवो निरर्थकः ॥ १२-१८५-१५ (७२३९९)
सर्वं पश्यति यद्दृश्यं मनोयुक्तेन चक्षुषा ।
मनसि व्याकुले तस्मिन्पश्यन्नपि न पश्यति ॥ १२-१८५-१६ (७२४००)
न पश्यति न चाघ्राति न शृणोति न भाषते ।
न च स्पर्शरसौ वेत्ति निद्रावशगतः पुनः ॥ १२-१८५-१७ (७२४०१)
हृष्यति क्रुध्यते कोऽत्र शोचत्युद्विजते च कः ।
इच्छति ध्यायति द्वेष्टि वाचमीरयते च कः ॥ १२-१८५-१८ (७२४०२)
भृगुरुवाच। १२-१८५-१९क्ष् (५९३४)
न पञ्चसाधारणमत्र किंचि
च्छरीरमेकी वहतेऽन्तरात्मा ।
स वेत्ति गन्धांश्च रसाञ्श्रुतीश्च
स्पर्शं च रूपं च गुणाश्च येऽन्ये ॥ १२-१८५-१९ (७२४०३)
पञ्चात्मके पञ्चगुणप्रदर्शी
स सर्वगात्रानुगतोऽन्तरात्मा ।
स वेत्ति दुःखानि सुखानि चात्र
तद्विप्रयोगात्तु न वेत्ति देही ॥ १२-१८५-२० (७२४०४)
यदा न रूपं न स्पर्शो नोष्मभावश्च पञ्चके ।
तदा शान्ते शरीराग्नौ देहं त्यक्त्वा न नश्यति ॥ १२-१८५-२१ (७२४०५)
अम्मयं सर्वमेवेदमापो मूर्तिः शरीरिणाम् ।
तत्रात्मा मानसो ब्रह्मा सर्व भूतेषु लोककृत् ॥ १२-१८५-२२ (७२४०६)
श्आत्मा क्षेत्रज्ञ इत्युक्तः संयुक्तः प्राकृतैर्गुणैः ।
तैरेव तु विनिर्मुक्तः परमात्मेत्युदाहृतः ॥ऽ १२-१८५-२३ (७२४०७)
आत्मानं तं विजानीहि सर्वलोकविपाचकम् ।
स तस्मिन्संश्रितो देहे ह्यब्बिन्दुरिव पुष्करे ॥ १२-१८५-२४ (७२४०८)
क्षेत्रज्ञं तं विजानीहि नित्यं लोकहितात्मकम् ।
तमो रजश्च सत्त्वं च विद्धि जीवगुणानिमान् ॥ १२-१८५-२५ (७२४०९)
सचेतनं जीवगुणं वदन्ति
स चेष्टते चेष्टयते च सर्वम् ।
ततः परं क्षेत्रविदो वदन्ति

प्रावर्तयद्यो भुवनानि सप्त ॥ १२-१८५-२६ (७२४१०)
न जीवनाशोऽस्ति हि देहभेदे
मिथ्यैतदाहुर्मृत इत्यबुद्धाः ।
जीवस्तु देहान्तरितः प्रयाति
दशार्धतैवास्य शरीरभेदः ॥ १२-१८५-२७ (७२४११)
एवं सर्वेषु भूतेषु गूढश्चरति संवृतः ।
दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया तत्त्वदर्शिभिः ॥१२-१८५-२८ (७२४१२)
तं पूर्वापररात्रेषु युञ्जानः सततं बुधः ।
लध्वाहारो विशुद्धात्मा पश्यत्यात्मानंमात्मनि ॥१२-१८५-२९ (७२४१३)
चित्तस्य हि प्रसादेन हित्वा कर्म शुभाशुभम् ।
प्रसन्नात्माऽत्मनि स्थित्वा सुखमव्ययमश्नुते ॥१२-१८५-३० (७२४१४)
मानसोऽग्निः शरीरेषु जीव इत्यभिधीयते ।
सृष्टिः प्रजापतेरेषा भूताध्यात्मविनिश्चया ॥ ॥१२-१८५-३१ (७२४१५)

इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि
पञ्चाशीत्यधिकशततमोऽध्यायः ॥१८५.।

Mahabharata - Shanti Parva - Chapter Footnotes

१२-१८५-१ एतद्दूषयति न प्रणाश इति ॥
१२-१८५-३ अनुपलब्धेरग्नेरपि नाश एवेत्यर्थः ॥
१२-१८५-५ दग्धेन्धनाग्निवत्सन्नेवात्मा देहनाशे सति
सौक्ष्म्यान्नोपलभ्यत इत्यर्थः ॥
१२-१८५-६ जीवो ह्याकाशवत्स्थित इति झड़ ।पाठः ॥
१२-१८५-१० अमूर्तयः अदृश्याः ।अतस्तेषामप्यभावावधारणं दुःशकं
किमुत सूक्ष्मस्य जीवस्येति भावः ॥
१२-१८५-११ शरीरिषु शरीराकारपरिणामवत्सु संघातेषु ॥
१२-१८५-१२ पञ्चभूतात्मके पञ्चविषयरतौ ।पञ्चविज्ञानानि
ज्ञानकारणानि ॥
१२-१८५-१५ मास्तु देहेन्द्रियसंघातश्चेतनो यस्मिन्व्यग्रे सति संघातः
सन्निकृष्टोऽपि शब्दादीन्न गृह्णाति तन्मन एव आत्मास्त्वित्याह
चतुर्भिः शृणोतीत्यादिभिः ॥
१२-१८५-१९ पञ्चसाधारणं पञ्चेन्द्रियाधारं किंचिन्मनो न श्रूयते
किंतु अन्तरात्मा जीव एव वहते धारयति ॥
१२-१८५-२० तद्विप्रयोगात् ते न मनसा वियोगे ॥
१२-१८५-२१ देहं त्यक्त्वा स गच्छति इति ट ।पाठः ॥
१२-१८५-२४ सर्वलोकविधायकमिति ध ।ड।थ।पाठः ॥

१२-१८५-२६ क्षेत्रविदं वदन्तीति ट ।पाठः ॥
१२-१८५-२७ दशार्धता पञ्चत्वम् ।शरीरनाश एव जीवस्य मरणमित्युच्यते ॥

---

शन्तिपर्व-अध्यय१८६
॥ श्रीः ॥
१२.१८६. अध्यायः १८६

Mahabharata - Shanti Parva - Chapter Topics
भृगुणा भरद्वाजंप्रति सर्वेषां ब्राह्मणत्वाविशेषेपि क्षत्रियादिवर्णविभागस्य तत्तत्स्वैराचारनिबन्धनत्वोक्तिः ॥१.।
Mahabharata - Shanti Parva - Chapter Text

१२-१८६-० (७२४१६)
भृगुरुवाच।१२-१८६-०क्ष् (५९३५)
असृजद्ब्राह्मणानेव पूर्वं ब्रह्मा प्रजापतीन् ।
आत्मतेजोभिनिर्वृत्तान्भास्कराग्निसमप्रभान् ॥१२-१८६-१ (७२४१७)
ततः सत्यं च धर्मं च तपो ब्रह्म च शाश्वतम् ।
आचारं चैव शौचं च सर्गादौ विदधे प्रभुः ॥१२-१८६-२ (७२४१८)
देवदानवगन्धर्वा दैत्यासुरमहोरगाः ।
यक्षराक्षसनागाश्च पिशाचा मनुजास्तथा ॥१२-१८६-३ (७२४१९)
ब्राह्मणाः क्षत्रिया वैश्याः शूद्राश्च द्विजसत्तम ।
ये चान्ये भूतसङ्घानां संघातास्तांश्च निर्ममे ॥१२-१८६-४ (७२४२०)
ब्राह्मणानां सितो वर्णः क्षत्रियाणां तु लोहितः ।
वैश्यानां पीतको वर्णः शूद्राणामसितस्तथा ॥१२-१८६-५ (७२४२१)
भरद्वाज उवाच।१२-१८६-६क्ष् (५९३६)
चातुर्वर्ण्यस्य वर्णेन यदि वर्णो विभज्यते ।
सर्वेषां खलु वर्णानां दृश्यते वर्णसंकरः ॥१२-१८६-६ (७२४२२)
कामः क्रोधो भयं लोभः शोकश्चिन्ता क्षुधा श्रमः ।
सर्वेषां नः प्रभवति कस्माद्वर्णो विभज्यते ॥१२-१८६-७ (७२४२३)
स्वेदमूत्रपुरीषाणि श्लेष्मा पित्तं सशोणितम् ।
तनुः क्षरति सर्वेषां कस्माद्वर्णो विभज्यते ॥१२-१८६-८ (७२४२४)
जङ्गमानामसङ्ख्येयाः स्थावराणां च जातयः ।
तेषां विविधवर्णानां कुतो वर्णविनिश्चयः ॥१२-१८६-९ (७२४२५)
भृगुरुवाच।१२-१८६-१०क्ष् (५९३७)
न विशेषोऽस्ति वर्णानां सर्वं ब्राह्ममिदं जगत् ।
ब्राह्मणाः पूर्वसृष्टा हि कर्मभिर्वर्णतां गताः ॥१२-१८६-१० (७२४२६)

कामभोगप्रियास्तीक्ष्णाः क्रोधनाः प्रियसाहसाः ।
त्यक्तस्वधर्मा रक्ताङ्गास्ते द्विजाः क्षत्रतां गताः ॥ १२-१८६-११ (७२४२७)
गोषु वृत्तिं समाधाय पीताः कृष्युपजीविनः ।
स्वधर्मान्नानुतिष्ठन्ति ते द्विजा वैश्यतां गताः ॥ १२-१८६-१२ (७२४२८)
हिंसानृतप्रिया लुब्धाः सर्वकर्मोपजीविनः ।
कृष्णाः शौचपरिभ्रष्टास्ते द्विजाः शूद्रता गताः ॥ १२-१८६-१३ (७२४२९)
इत्येतैः कर्मभिर्व्यस्ता द्विजा वर्णान्तरं गताः ।
धर्मो यज्ञक्रिया चैषां नित्यं न प्रतिषिध्यते ॥ १२-१८६-१४ (७२४३०)
इत्येते चतुरो वर्णा येषां ब्राह्मी सरस्वती ।
विहिता ब्रह्मणा पूर्वं लोभात्त्वज्ञानतां गताः ॥ १२-१८६-१५ (७२४३१)
ब्राह्मणा ब्रह्मतन्त्रस्थास्तपस्तेषां न नश्यति ।
ब्रह्म धारयतां नित्यं व्रतानि नियमांस्तथा ॥ १२-१८६-१६ (७२४३२)
ब्रह्म वैव परं सृष्टं ये तु जानन्ति ते द्विजाः ।
तेषां बहुविधास्त्वन्ये तत्रतत्र द्विजातयः ॥ १२-१८६-१७ (७२४३३)
पिशाचा राक्षसाः प्रेता विविधा म्लेच्छजातयः ।
प्रनष्टज्ञानविज्ञानाः स्वच्छन्दाचारचेष्टिताः ॥ १२-१८६-१८ (७२४३४)
प्रजा ब्राह्मणसंस्काराः स्वकर्मकृतनिश्चयाः ।
ऋषिभिः स्वेन तपसा सृज्यन्ते चापरे परैः ॥ १२-१८६-१९ (७२४३५)
आदिदेवसमुद्भूता ब्रह्ममूलाक्षयाव्यया ।
सा सृष्टिर्मानसी नाम धर्मतन्त्रपरायणा ॥ ॥ १२-१८६-२० (७२४३६)

इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि
षडशीत्यधिकशततमोऽध्यायः ॥ १८६. ।

Mahabharata - Shanti Parva - Chapter Footnotes

१२-१८६-२ स्वर्गाय विदधे इति ध । झ । पाठः ॥
१२-१८६-५ सितः स्वच्छः सत्वगुणः । लोहितो रजोगुणः । पीतकः रजस्तमोव्यामिश्रः । असितः कृष्णः ॥
१२-१८६-६ इदमाक्षिपति चातुर्वर्ण्यस्येति । वर्णेन जात्या वर्णः सात्विकत्वादिर्यदि विभज्यते तन्नेति शेषः । तत्र हेतुः सर्वेषामिति ॥
१२-१८६-७ नोऽस्माकं ब्राह्मणानामपि ॥
१२-१८६-९ जगंमानां पश्वादीनाम् ॥
१२-१८६-१० ब्राह्मं ब्राह्मणत्वजातिमत् । वर्णतां क्षत्रियादिभावम् ॥
१२-१८६-११ रक्ताङ्गा रजोगुणमयाः ॥
१२-१८६-१४ व्यस्ताः पृथक्कृताः ॥
१२-१८६-१५ चतुरश्चत्वारः । ब्राह्मी वेदमयी ॥

१२-१८६-१६ ब्रह्मतन्त्रं वेदोक्तानुष्ठानम् ॥
१२-१८६-१७ ये न जानन्ति तेऽद्विजाः इति ध । झ। ट। पाठः ॥
१२-१८६-१९ ब्रह्मणि वेदे विहितो ब्राह्मणः संस्कारो यासां ता वेदोक्तसंस्कारवत्यः । अपरेऽर्वाचीना ऋषयः परैः प्राचीनैः सृज्यन्ते ॥
१२-१८६-२० अक्षया नाशहीना । अव्यया अपचयहीना ॥

---

शन्तिपर्व-अध्यय१८७
॥ श्रीः ॥
१२.१८७. अध्यायः १८७

Mahabharata - Shanti Parva - Chapter Topics
भरद्वाजंप्रति भृगुणा ब्राह्मणादिवर्णलक्षणकथनम् । वैराग्यस्य मुक्तिसाधनताकथनं च ॥ १.।
Mahabharata - Shanti Parva - Chapter Text

१२-१८७-० (७२४३७)
भरद्वाज उवाच। १२-१८७-०क्ष् (५९३८)
ब्राह्मणः केन भवति क्षत्रियो वा द्विजोत्तम ।
वैश्यः शूद्रश्च विप्रर्षे तद्ब्रूहि वदतां वर ॥ १२-१८७-१ (७२४३८)
भृगुरुवाच। १२-१८७-२क्ष् (५९३९)
जातकर्मादिभिर्यस्तु संस्कारैः संस्कृतः शुचिः ।
वेदाध्ययनसंपन्नः षट्सु कर्मस्ववस्थितः ॥ १२-१८७-२ (७२४३९)
शौचाचारस्थितः सम्यग्विघसाशी गुरुप्रियः ।
नित्यव्रती सत्यपरः स वै ब्राह्मण उच्यते ॥ १२-१८७-३ (७२४४०)
सत्यं दानमथाद्रोह आनृशंस्यं क्षमा धृणा ।
तपश्च दृश्यते यत्र स ब्राह्मण इति स्मृतः ॥ १२-१८७-४ (७२४४१)
क्षत्रजं सेवते कर्म देवाध्ययनसंगतः ।
दानादानरतिर्यस्तु स वै क्षत्रिय उच्यते ॥ १२-१८७-५ (७२४४२)
कृपिगोरक्षवाणिज्यं यो विशत्यनिशं शुचिः ।
वेदाध्ययनसंपन्नः स वैश्य इति संज्ञितः ॥ १२-१८७-६ (७२४४३)
सर्वभक्षरतिर्नित्यं सर्वकर्मकरोऽशुचिः ।
त्यक्तवेदस्त्वनाचारः स वै शूद्र इति स्मृतः ॥ १२-१८७-७ (७२४४४)
शूद्रे चैतद्भवेल्लक्ष्यं द्विजे तच्च न विद्यते ।
न वै शूद्रो भवेच्छूद्रो ब्राह्मणो न च ब्राह्मणः ॥ १२-१८७-८ (७२४४५)
सर्वोपायैस्तु लोभस्य क्रोधस्य च विनिग्रहः ।

एतत्पवित्रं ज्ञातव्यं तथा चैवात्मसंयमः ॥ १२-१८७-९ (७२४४६)
वार्यौ सर्वात्मना तौ हि श्रेयोघातार्थमुच्छ्रितौ ॥ १२-१८७-१० (७२४४७)
नित्यं क्रोधाच्छ्रियं रक्षेत्तपो रक्षेच्च मत्सरात् ।
विद्यां मानापमानाभ्यामात्मानं तु प्रमादतः ॥ १२-१८७-११ (७२४४८)
यस्य सर्वे समारम्भा निराशाबन्धना द्विज ।
त्यागे यस्य हुतं सर्वं स त्यागी च स बुद्धिमान् ॥ १२-१८७-१२ (७२४४९)
अहिंस्रः सर्वभूतानां मैत्रायणगतिश्चरेत् ।
परिग्रहान्परित्यज्य भवेद्बुद्ध्या जितेन्द्रियः ।
अचलं स्थानमातिष्ठेदिह चामुत्र चोभयोः ॥ १२-१८७-१३ (७२४५०)
तपोनित्येन दान्तेन मुनिना संयतात्मना ।
अजितं जेतुकामेन भाव्यं सङ्गेष्वसङ्गिना ॥ १२-१८७-१४ (७२४५१)
इन्द्रियैर्गृह्यते यद्यत्तत्तद्व्यक्तमिति स्थितिः ।
अव्यक्तमिति विज्ञेयं लिङ्गग्राह्यमतीन्द्रियम् ॥ १२-१८७-१५ (७२४५२)
अविस्रम्भे न गन्तव्यं विस्रम्भे धारयेन्मनः ।
मनः प्राणे निगृह्णीयात्प्राणं ब्रह्मणि धारयेत् ॥ १२-१८७-१६ (७२४५३)
निर्वेदादेव निर्वायान्न च किंचिद्विचिन्तयेत् ।
सुखं वै ब्राह्मणो ब्रह्म स वै तेनाधिगच्छति ॥ १२-१८७-१७ (७२४५४)
शौचेन सततं युक्तः सदाचारसमन्वितः ।
सानुक्रोशश्च भूतेषु तद्द्विजातिषु लक्षणम् ॥ ॥ १२-१८७-१८ (७२४५५)

इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि
सप्ताशीत्यधिकशततमोऽध्यायः ॥ १८७.।

Mahabharata - Shanti Parva - Chapter Footnotes

१२-१८७-३ विघसं ब्राह्मणादिभुक्तशेषम् ॥
१२-१८७-५ क्षत्रं हिंसा तदर्थं जातं क्षत्रजं युद्धात्मकं कर्म
।आदानं प्रजाभ्यः ॥
१२-१८७-६ वाणिज्या पशुरक्षा च कृष्यादानरतिः शुचिः ।इति
झ।पाठः ॥
१२-१८७-८ एतत्सत्यादिसप्तकम् ।द्विजे त्रैवर्णिके।धर्म एव
वर्णविभागे कारणं न जातिरित्यर्थः ॥
१२-१८७-१० तौ क्रोधलोभौ ॥
१२-१८७-१२ आशैव बन्धनं तद्वर्जिता निराशाबन्धनाः
समारम्भाः सम्यगारभ्यन्त इति यज्ञादयः ।हुतमग्नौ ब्राह्मणे वा
दत्तमग्निहोत्रनित्यश्राद्धादि।त्यागे फलत्यागनिमित्तम्।निराशीर्बन्धना
द्विजेति घ।झ ट।पाठः ॥

१२-१८७-१३ मैत्रं मित्रभावस्तदेवायनं परं प्राप्यं स्थानं तत्र गतिर्यस्य सः । स्थानमात्मानमातिष्ठेत् आभिमुख्येन तिष्ठेत्। आत्मध्यानपरो भवेदित्यर्थः ॥
१२-१८७-१४ सङ्गेषु ममेदमिति सङ्गहेतुषु पुत्रदारादिषु ॥
१२-१८७-१७ निर्वेदादेव निर्वाणं न किंचिदपि इति घ झ । पाठः। निर्वाणादेव निर्वायात् इति ङ। पाठः ॥

---

शन्तिपर्व-अध्यय१८८
॥ श्रीः ॥
१२.१८८. अध्यायः १८८

Mahabharata - Shanti Parva - Chapter Topics
भृगुणा भरद्वाजंप्रति धर्माधर्मयोः सुखदुःखसाधनत्वे प्रतिपादिते ऋष्यादीनां स्वर्गानपेक्षणाद्व्यभिचारशङ्किना भरद्वाजेरतदाक्षेपः ॥ १.। भृगुणा मोक्षस्वरूपनिरूपणपूर्वकं निष्कामकर्मणस्तत्साधनत्वमक्षतमिति स्वाभिप्रायाविष्करणम् ॥ २.।
Mahabharata - Shanti Parva - Chapter Text

१२-१८८-० (७२४५६)
भृगुरुवाच। १२-१८८-०क्ष् (५९४०)
सत्यं ब्रह्म तपः सत्यं सत्यं सृजति च प्रजाः ।
सत्येन धार्यते लोकः स्वर्गं सत्येन गच्छति ॥ १२-१८८-१ (७२४५७)
अनृतं तमसो रूपं तमसा नीयते ह्यधः ।
तमोग्रस्ता न पश्यन्ति प्रकाशं तमसाऽऽवृतम् ॥ १२-१८८-२ (७२४५८)
स्वर्गः प्रकाश इत्याहुर्नरकं तम एव च ।
सत्यानृतात्तदुभयं प्राप्यते जगतीचरैः ॥ १२-१८८-३ (७२४५९)
तत्र त्वेवंविधा लोके वृत्तिः सत्यानृते भवेत् ।
धर्माधर्मौ प्रकाशश्च तमो दुःखं सुखं तथा ॥ १२-१८८-४ (७२४६०)
तत्र यत्सत्यं स धर्मो यो धर्मः स प्रकाशो यः प्रकाशस्तत्सुखमिति । तत्र यदनृतं सोऽधर्मो योऽधर्मस्तत्तमो यत्तमस्तद्दुःखमिति ॥
१२-१८८-५ (७२४६१)
अत्रोच्यते। १२-१८८-६क्ष् (५९४१)
शारीरैर्मानसैर्दुःखैः सुखैश्चाप्यसुखोदयैः ।
लोकसृष्टिं प्रपश्यन्तो न मुह्यन्ति विचक्षणाः ॥ १२-१८८-६ (७२४६२)
तत्र दुःखविमोक्षार्थं प्रयतेत विचक्षणः ।
सुखं ह्यनित्यं भूतानामिह लोके परत्र च ॥ १२-१८८-७ (७२४६३)
राहुग्रस्तस्य सोमस्य यथा ज्योत्स्ना न भासते ।

तथा तमोभिभूतानां भूतानां भ्रश्यते सुखम् ॥१२-१८८-८ (७२४६४)
तत्खलु द्विविधं सुखमुच्यते शारीरं मानसं च ।इह
खल्वमुष्मिंश्च लोके सर्वारम्भप्रवृत्तयः सुखार्थमभिधीयन्ते न
ह्यतः परं त्रिवर्गफलं विशिष्टतरमस्ति स एष काम्यो गुणविशेषो
धर्मार्थगुणारम्भस्तद्धेतुरस्योत्पत्तिः सुखप्रयोजनार्थ आरम्भः ॥
१२-१८८-९ (७२४६५)
भरद्वाज उवाच।१२-१८८-१०क्ष् (५९४२)
यदेतद्भवताऽभिहितं सुखानां परमार्थस्थितिरिति तन्न गृह्णीमो
न ह्येषामृषीणां तपसि स्थितानामप्राप्य एव काम्यो गुणविशेषो न
चैनमभिलषन्ति च तपसि श्रूयते त्रिलोककृद्ब्रह्मा प्रभुरेकाकी
तिष्ठति ।ब्रह्मचारी न कामसुखेष्वात्मानमवदधाति।अपिच
भगवान्विश्वेश्वर श्उमापतिःघ काममभिवर्तमानमनङ्गत्वेन
नाशमनयत्।तस्माद्ब्रूमो न तु महात्मभिः प्रतिगृहीतोऽयमर्थो
तत्वेष तावद्विशिष्टो गुणगण इति।नैतद्भगवान्प्रत्येति भगवतोक्तं
सुखानां परमार्थस्थितिरिति लोकप्रवादो हि द्विविधः फलोदयः
सुकृतात्सुखमवाप्यते दुष्कृताद्दुःखमिति ॥ १२-१८८-१० (७२४६६)
भृगुरुवाच।१२-१८८-११क्ष् (५९४३)
अत्रोच्यते ।अनृतात्खलु तमः प्रादुर्भूतं
ततस्तमोग्रस्ता अधर्ममेवानुवर्तन्ते न
धर्मम्।क्रोधलोभमोहमदादिभिरवच्छन्ना न खल्वस्मिँल्लोके
नामुत्र सुखमाप्नुवन्ति।विविधव्याधिव्रणरुजोपतापैरवकीर्यन्ते।
वधबन्धननिरोधपरिक्लेशादिभिश्च
क्षुत्पिपासाश्रमकृतैरुपतापैरुपतप्यन्ते।
चण्डवातात्युष्णातिशीतकृतैश्च प्रतिभयैः
शारीरैर्दुःखैरुपतप्यन्ते।बन्धुधनविननाशविप्रयोगकृतैश्च
मानसैः शोकैरभिभूयन्ते जरामृत्युकृतैश्चान्यैरिति ॥
१२-१८८-११ (७२४६७)
यदैतैः शारीरैर्मानसैर्दुःखैर्न स्पृश्यते तत्सुखं विद्यात् ।
न चैते दोषाः स्वर्गे प्रादुर्भवन्ति तत्र खलु भवन्ति ॥१२-१८८-१२
(७२४६८)
सुसुखः पवनः स्वर्गे गन्धश्च सुरभिस्तथा ।
क्षुत्पिपासाश्रमो नास्ति न जरा न च पातकम् ॥१२-१८८-१३ (७२४६९)
नित्यमेव सुखं स्वर्गे सुखं दुःखमिहोभयम् ।
नरके दुःखमेवाहुः सुखं तु परमं पदम् ॥१२-१८८-१४ (७२४७०)
पृथिवी सर्वभूतानां जनित्री तद्विधाः स्त्रियः ।
पुमान्प्रजापतिस्तत्र शुक्रं तेजोमयं विदुः ॥१२-१८८-१५ (७२४७१)

इत्येतल्लोकनिर्माणं ब्रह्मणा विहितं पुरा ।
प्रजा विपरिवर्न्तते स्वैः स्वैः कर्मभिरावृताः ॥ ॥१२-१८८-१६ (७२४७२)

इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि
अष्टाशीत्यधिकशततमोऽध्यायः ॥१८८.।
Mahabharata - Shanti Parva - Chapter Footnotes

१२-१८८-९ लोके वस्तुप्रवृत्तयः इति झ ।पाठः ॥
१२-१८८-१० अनङ्गत्वेन शममनयत् इति झ ।पाठः ॥
१२-१८८-११ क्रोधलोभहिंसानृतादिभिरिति चण्डवातात्युष्णेति च झ
।पाठः ॥
१२-१८८-१६ प्रजाः समनुवर्तन्ते इति झ ।पाठः ॥

---

शन्तिपर्व-अध्यय१८९
॥ श्रीः ॥
१२.१८९. अध्यायः १८९

Mahabharata - Shanti Parva - Chapter Topics
भृगुणा भरद्वाजंप्रति चतुराश्रमधर्मनिरूपणम् ॥१.।
Mahabharata - Shanti Parva - Chapter Text

१२-१८९-० (७२४७३)
भरद्वाज उवाच।१२-१८९-०क्ष् (५९४४)
दानस्य किं फलं प्रोक्तं धर्मस्य चरितस्य च ।
तपसश्च सुतप्तस्य स्वाध्यायस्य हुतस्य वा ॥१२-१८९-१ (७२४७४)
भृगुरुवाच।१२-१८९-२क्ष् (५९४५)
हुतेन शाम्यते पापं स्वाध्यायैः शान्तिरुत्तमा ।
दानेन भोग इत्याहुस्तपसा सर्वमाप्नुयात् ॥१२-१८९-२ (७२४७५)
दानं तु द्विविधं प्राहुः परत्रार्थमिहैव च ।
सद्भयो यद्दीयते किंचित्तत्परत्रोपतिष्ठते ॥१२-१८९-३ (७२४७६)
असद्भयो दीयते यत्तु तद्दानमिह भुज्यते ।
यादृशं दीयते दानं तादृशं फलमुच्यते ॥१२-१८९-४ (७२४७७)
भरद्वाज उवाच।१२-१८९-५क्ष् (५९४६)
किं कस्य धर्माचरणं किं वा धर्मस्य लक्षणम् ।
धर्मः कतिविधो वाऽपि तद्भवान्वक्तुमर्हति ॥१२-१८९-५ (७२४७८)
भृगुरुवाच।१२-१८९-६क्ष् (५९४७)
स्वधर्माचरणे युक्ता ये भवन्ति मनीषिणः ।

तेषां स्वर्गफलावाप्तिर्योऽन्यथा स विमुह्यते ॥१२-१८९-६ (७२४७९)
भरद्वाज उवाच।१२-१८९-७क्ष् (५९४८)
यदेतच्चातुराश्रम्यं ब्रह्मर्षिविहितं पुरा ।
तस्य स्वंस्वं समाचारं यथावद्वक्तुमर्हसि ॥१२-१८९-७ (७२४८०)
भृगुरुवाच।१२-१८९-८क्ष् (५९४९)
पूर्वमेव भगवता ब्रह्मणा लोकहितमनुतिष्ठता
धर्मसंरक्षणार्थमाश्रमाश्चत्वारोऽभिनिर्दिष्टाः ।तत्र
गुरुकुलवासमेव प्रथममाश्रममुदाहरन्ति।सम्यग्यत्र
शौचसंस्कारनियमव्रतविनियतात्मा उभेसन्ध्ये
भास्कराग्निदैवतान्युपस्थाय विहाय निद्रालस्ये
गुरोरभिवादनवेदाभ्यासश्रवणपवित्रीकृतान्तरात्मा
श्त्रिषवणमुपस्पृश्य
ब्रह्मचर्याग्निपरिचरणगुरुशुश्रूषानित्यभिक्ष्यादिसर्वनिवेदितान्तरात्माघ
गुरुवचनिर्देशानुष्ठानाप्रतिकूलो गुरुप्रसादलब्धस्वाध्यायतत्परः
स्यात् ॥ १२-१८९-८ (७२४८१)
भवति चात्र श्लोकः।१२-१८८-९क्ष् (५९५०)
गुरुं यस्तु समाराध्य द्विजो वेदमवाप्नुयात् ।
तस्य स्वर्गफलावाप्तिः शुध्यते चास्य मानसमिति ॥१२-१८९-९ (७२४८२)
गार्हस्थ्यं खलु द्वितीयमाश्रमं वदन्ति ।तस्य
समुदाचारलक्षणं सर्वमनुव्याख्यास्यामः।समावृत्तानां
सदाचाराणां सहधर्मचर्याफलार्थिनां गृहाश्रमो
विधीयते।धर्मार्थकामावाप्त्यर्थं त्रिवर्गसाधनमपेक्ष्यागर्हितेन
कर्मणा धनान्यादाय स्वाध्यायोपलब्धप्रकर्षेण वा ब्रह्मर्षिनिर्मितेन
वा।हव्यकव्यनियमाभ्यां दैवतपूजासमाधिप्रसादविध्युपलब्धेन
धनेन गृहस्थो गार्हस्थ्यं वर्तयेत्।तद्धि सर्वाश्रमाणां
मूलमुदाहरन्ति।गुरुकुलनिवासिनः परिव्राजका ये चान्ये
संकल्पितव्रतनियमधर्मानुष्ठायिनस्तेपामष्यत एव
भिक्षाबलिसंविभागाः प्रवर्तन्ते ॥ १२-१८९-१० (७२४८३)
वानप्रस्थानां च द्रव्योपस्कार इति प्रायशः खल्वेते साधवः
साधुपथ्याशिनः स्वाध्यायप्रसङ्गिनस्तीर्थाभिगमनदेशदर्शनार्थं
पृथिवीं पर्यटन्ति तेषां प्रत्युत्थानाभिगमनाभिवादनानसूय-
वाक्प्रदानसुखशक्त्यासनसुखशयनाभ्यवहारसत्क्रियाचेति
॥ १२-१८९-११ (७२४८४)
भवति चात्र श्लोकः।१२-१८९-१२क्ष् (५९५१)
अतिथिर्यस्य भग्नाशो गृहात्प्रतिनिवर्तते ।
स तस्य दुष्कृतं दत्त्वा पुण्यमादाय गच्छति ॥१२-१८९-१२ (७२४८५)

अपि चात्र यज्ञक्रियाभिर्देवताः प्रीयन्ते निवापेन पितरो
वेदविद्याभ्यासश्रवणधारणेन ऋषय अपत्योत्पादनेन प्रजापतिरिति ॥
१२-१८९-१३ (७२४८६)
श्लोकौ चात्र भवतः। १२-१८९-१४क्ष् (५९५२)
वत्सलाः सर्वभूतानां वाच्याः श्रोत्रसुखा गिरः ।
परिवादापवादौ च पारुष्यं चात्र गर्हितम् ॥ १२-१८९-१४ (७२४८७)
अवज्ञानमहंकारो दम्भश्चैव विगर्हितः ।
अहिंसा सत्यमक्रोधः सर्वाश्रमगतं तपः ॥ १२-१८९-१५ (७२४८८)
अपि चात्र
माल्याभरणवस्त्राभ्यङ्गनित्योपभोगनृत्तगीतवादित्रश्रुति-
सुखनयनाभिरामदर्शनानां
प्राप्तिर्भक्ष्यभोज्यलेह्यपेयचोष्याणामभ्यवहार्याणां
विविधानामुपभोगः स्वविहारसंतोषः कामसुखावाप्तिरिति ॥ १२-१८९-१६
(७२४८९)
श्लोकौ चात्र भवतः। १२-१८९-१७क्ष् (५९५३)
त्रिवर्गगुणनिर्वृत्तिर्यस्य नित्यं गृहाश्रमे ।
स सुखान्यनुभूयेह शिष्टानां गतिमाप्नुयात् ॥ १२-१८९-१७ (७२४९०)
उञ्छवृत्तिर्गृहस्थो यः स्वधर्माचरणे रतः ।
त्यक्तकामसुखारम्भः स्वर्गस्तस्य न दुर्लभः ॥ ॥ १२-१८९-१८ (७२४९१)

इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि
एकोननवत्यधिकशततमोऽध्यायः ॥ १८९.।
Mahabharata - Shanti Parva - Chapter Footnotes

१२-१८९-२ शान्तिरुपरतिः ॥
१२-१८९-७ चतुर्णामाश्रमाणां धर्मश्चातुराश्रम्यम् ॥
१२-१८९-९ सिध्यते चास्य मानसं इति झ । पाठः ॥
१२-१८९-१० समावृत्तानां समापितगुरुकुलवासानां स्नातकानाम् । सहोभौ
चरतां धर्ममिति दंपत्योः सहाधिकारिकं धर्मं तच्चर्याफलं
पुत्रजन्म ॥
१२-१८९-११ द्रव्योपस्कारो धनवर्जनम् । सुखशक्त्या सुखवत्या शक्त्या
न तु देहपीडया। सत्क्रिया च कर्तव्येति शेषः ॥
१२-१८९-१३ निवापने पितृतर्पणेन ॥
१२-१८९-१४ वात्सल्यात्सर्वभूतेभ्यः इति परितापोपतापश्चेति च
। झ। पाठः ॥
१२-१८९-१८ उञ्छः कणश आदानं तेन वृत्तिर्जीवनमस्य

शन्तिपर्व-अध्यय१९०
॥ श्रीः ॥
१२.१९०. अध्यायः १९०

Mahabharata - Shanti Parva - Chapter Topics
भृगुणा भरद्वाजंप्रति वानप्रस्थयत्याश्रमयोर्लक्षणकथनम्
॥ १. । तथा हिमवदुत्तरलोकस्य स्वर्गतुल्यत्वप्रतिपादनपूर्वकं
सुकृंतिप्राप्यत्वकथनं च ॥ २. ।
Mahabharata - Shanti Parva - Chapter Text

१२-१९०-० (७२५२३)
भृगुरुवाच। १२-१९०-०क्ष् (५९५५)
वानप्रस्थाः खल्वृषिधर्ममनुवर्तन्ते पुण्यानि
तीर्थानि नदीप्रस्रवणान्युचरन्ति सुविभक्तेष्यरण्येषु
मृगमहिषवराहशार्दूलसृमरगजाकीर्णेषु
तपस्यन्तोऽनुसंचरन्ति त्यक्तग्राम्यवस्त्राभ्यवहारोपभोगा
वन्यौषधिफलमूलपर्णपरिमितविचित्रनियताहाराः
स्थानासनिनो भूमिपाषाणसिकताशर्करावालुकाभस्मशायिनः
काशकुशचर्मवल्कलसंवृताङ्गाः केशश्मश्रुनखरोमधारिणो
नियतकालोपस्पर्शना अस्कन्नकालबहिहोमानुष्ठायिनः
समित्कुशकुसुमापहारार्चनसंमार्जनहोमान्तलब्धविश्रयाः
शीतोष्ण श्वर्षघ्पवनविनिष्टप्तविभिन्नसर्वत्वचो
विविधनियमयोगचर्यानुष्ठानहृत श्परिशुष्कघ
मांसशोणितत्वगस्थिभूता धृतिपराः सत्वयोगाच्छरीराण्युद्वहन्ति ॥
१२-१९०-१ (७२५२४)
भवति चात्र श्लोकः। १२-१९०-२क्ष् (५९५६)
यश्चैतां नियतश्चर्यां ब्रह्मर्षिविहितां चरेत् ।
स दहेदग्निवद्दोषाञ्जयेल्लोकांश्च दुर्जयान् ॥ १२-१९०-२ (७२५२५)
परिव्राजकानां पुनराचारः । तद्यथा विमुच्यधनकलत्रपरिबर्हणं
सङ्गेष्वात्मनः स्नेहपाशानवधूय परिव्रजन्ति
समलोष्टाश्मकाञ्चनास्त्रिवर्गप्रवृत्तेष्वारम्भेष्वसक्त-
बुद्धयोऽरिमित्रोदासीनानां
तुल्यदर्शनाः स्थावरजङ्गमानां जरायुजाण्डजस्वेदजोद्भिज्जानां
भूतानां वाङ्भनः कर्मभिरभिद्रोहिणोऽनिकेताः
पर्वतपुलिनवृक्षमूलदेवतायतनान्यननुचरन्तो

वासार्थमुपेयुर्नगरं ग्रामं वा नगरे पञ्चरात्रिका ग्रामे
चैकरात्रिकाः प्रविश्य च प्राणधारणार्थं द्विजातीनां
भवनान्यसंकीर्णकर्मणामुपतिष्ठेयुः पात्रपतिताऽयाचितभैक्ष्याः
कामक्रोधदर्पलोभमोहकार्पण्यदम्भपरिवादाभिमानहिंसानिवृत्ता इति ॥
१२-१९०-३ (७२५२६)
भवन्ति चात्र श्लोकाः।१२-१९०-४क्ष् (५९५७)
अभयं सर्वभूतेभ्यो दत्त्वा यश्चरते मुनिः ।
न तस्य सर्वभूतेभ्यो भयमुत्पद्यते क्वचित् ॥१२-१९०-४ (७२५२७)
कृत्वाऽग्निहोत्रं स्वशरीरसंस्थं
शारीरमग्निं स्वमुखे जुहोति ।
यो भैक्षचर्योपगतैर्हविर्भि
श्चिताग्निना प्राप्य स याति लोका ॥ १२-१९०-५ (७२५२८)
मोक्षाश्रमं यः कुरुते यथोक्तं
शुचिः सुसंकल्पितबुद्धियुक्तः ।
अनिन्धनं ज्योतिरिव प्रशान्तं
स ब्रह्मलोकं श्रयते द्विजातिः ॥ १२-१९०-६ (७२५२९)
भरद्वाज उवाच।१२-१९०-७क्ष् (५९५८)
अस्माल्लोकात्परो लोकः श्रूयते नोपलभ्यते ।
तमहं ज्ञातुमिच्छामि तद्भवान्वक्तुमर्हति ॥१२-१९०-७ (७२५३०)
भृगुरुवाच।१२-१९०-८क्ष् (५९५९)
उत्तरे हिमवत्पार्श्वे पुण्ये सर्वगुणान्विते ।
पुण्यः क्षेम्यश्च काम्यश्च स परो लोक उच्यते ॥१२-१९०-८ (७२५३१)
तत्र ह्यपापकर्माणः शुचयोऽत्यन्तनिर्मलाः ।
लोभमोहपरित्यक्ता मानवा निरुपद्रवाः ॥१२-१९०-९ (७२५३२)
स स्वर्गसदृशो लोकस्तत्र ह्युक्ताः शुभा गुणाः ।
नात्र मृत्युः प्रभवति स्पृशन्ति व्याधयो न च ॥१२-१९०-१० (७२५३३)
न लोभः परदारेषु स्वदारनिरतो जनः ।
न चान्योन्यवधस्तत्र द्रव्येषु च न विस्मयः ॥१२-१९०-११ (७२५३४)
परोक्षधर्मो नैवास्ति संदेहो नापि जायते ।
कृतस्य तु फलं व्यक्तं प्रत्यक्षमुपलभ्यते ॥१२-१९०-१२ (७२५३५)
यानासनाशनोपेताः प्रासादभवनाश्रयाः ।
सर्वकामैर्वृताः केचिद्धेमाभरणभूषिताः ॥१२-१९०-१३ (७२५३६)
प्राणधारणमात्रं तु केषांचिदुपलभ्यते ।
श्रमेण महता केचित्कुर्वन्ति प्राणधारणम् ॥१२-१९०-१४ (७२५३७)
इह धर्मपराः केचित्केचिन्नैकृतिका नराः ।
सुखिताः दुःखिताः केचिन्निर्धना धनिनोऽपरे ॥१२-१९०-१५ (७२५३८)

इह श्रमो भयं मोहः क्षुधा निद्रा च जायते ।
लोभश्चार्थकृतो नृणां येन मुह्यन्त्यपण्डिताः ॥ १२-१९०-१६ (७२५३९)
इह अर्ता बहुविधा धर्माधर्मस्य कर्मणः ।
यस्तद्वेदोभयं प्राज्ञः पाप्मना न स लिप्यते ॥ १२-१९०-१७ (७२५४०)
सोपधं कृतिः स्तेयं परिवादो ह्यसूयिता ।
परोपघातो हिंसा च पैशुन्यमनृतं तथा ॥ १२-१९०-१८ (७२५४१)
एतानि सेवते यस्तु तपस्तस्य मितायते ।
यस्त्वेतान्नाचरेद्विद्वांस्तपस्तस्य प्रवर्धते ॥ १२-१९०-१९ (७२५४२)
इह चिन्ता बहुविधा धर्माधर्मस्य कर्मणः ।
कर्मभूमिरियं लोके इह कृत्वा शुभाशुभम् ।
शुभैः शुभमवाप्नोति कर्ताऽशुभमथान्यथा ॥ १२-१९०-२० (७२५४३)
इह प्रजापतिः पूर्वं देवाः सर्षिगणास्तथा ।
इष्टेन तपसा पूता ब्रह्मलोकमुपाश्रिताः ॥ १२-१९०-२१ (७२५४४)
उत्तरः पृथिवीभागः सर्वपुण्यतमः शुभः ।
इहत्यास्तत्र जायन्ते ये वै पुण्यकृतो जनाः ॥ १२-१९०-२२ (७२५४५)
असत्कर्माणि कुर्वाणास्तिर्यग्योनिषु चापरे ।
क्षीणायुषस्तथा चान्ये नश्यन्ति पृथिवीतले ॥ १२-१९०-२३ (७२५४६)
अन्योन्यभक्षणासक्ता लोभमोहसमन्विताः ।
इहैव परिवर्न्तते न ते यान्त्युत्तरां दिशम् ॥ १२-१९०-२४ (७२५४७)
ये गुरून्पर्युपासन्ते नियता ब्रह्मचारिणः ।
पन्थानं सर्वलोकानां ते जानन्ति मनीषिणः ॥ १२-१९०-२५ (७२५४८)
इत्युक्तोऽयं मया धर्मः संक्षेपाद्ब्रह्मनिर्मितः ।
धर्माधर्मौ हि लोकस्य यो वै वेत्ति स बुद्धिमान् ॥ १२-१९०-२६ (७२५४९)
भीष्म उवाच। १२-१९०-२७क्ष् (५९६०)
इत्युक्तो भृगुणा राजन्भरद्वाजः प्रतापवान् ।
भृगुं परमधर्मात्मा विस्मितः प्रत्यपूजयत् ॥ १२-१९०-२७ (७२५५०)
एष ते प्रभवो राजञ्जगतः संप्रकीर्तितः ।
निखिलेन महाप्राज्ञ किं भूयः श्रोतुमिच्छसि ॥ ॥ १२-१९०-२८ (७२५५१)

इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि
नवत्यधिकशततमोऽध्यायः ॥ १९०.।

Mahabharata - Shanti Parva - Chapter Footnotes

१२-१९०-१ सुविविक्तेष्वरण्येषु इति झ ।ड।थ।पाठः ॥
१२-१९०-३ परिबर्हणं शय्यादिभोगसामग्री
।परिव्राजकानां पुनराचारं प्रवदामः इति

ड। थ।पाठः। सङ्गेष्वात्मानमवधूय स्नेहपाशान्परित्यजन्ति। इति
ट। पाठः। असङ्कीर्णस्थानान्युपतिष्ठेयुरिति ड।थ। पाठः ॥
१२-१९०-५ विप्रस्तु भैक्ष्योष्णातैर्हविर्भिश्चिताग्निनां स व्रजते
हि लोकमिति झ । पाठः ॥
१२-१९०-६ सुसङ्कल्पितमुक्तबुद्धिः इति झ । पाठः ॥
१२-१९०-१० स स्वर्गसदृशो देश इति झ । पाठः। काले मृत्युः
इति ध। झ।पाठः ॥
१२-१९०-१२ परोक्षधर्मः परोक्षफलो धर्मः । परो ह्यधर्मो
नेवास्तीति झ। पाठः। कृतस्य तु फलं तत्र इति ध। झ। पाठः ॥
१२-१९०-१६ क्षुधा तीव्रा च इति झ । पाठः ॥
१२-१९०-१७ वार्ताः कुशलाः ॥
१२-१९०-१८ सोपधं सदम्भम् ॥
१२-१९०-१९ तपो योगजधर्मः । तपस्तस्य प्रहीयते इति झ। पाठः ॥
१२-१९०-२० चिन्ता विचारः ॥
१२-१९०-२१ ब्रह्मलोकं हिमवत्पार्श्वम् ॥
१२-१९०-२३ यदि सत्कारमृच्छन्ति इति ध । झ। पाठः ॥
१२-१९०-२४ उत्तरां दिशं हिमवत्पार्श्वम् ॥

---

शन्तिपर्व-अध्यय१९१
॥ श्रीः ॥
१२.१९१. अध्यायः १९१

Mahabharata - Shanti Parva - Chapter Topics
भीष्मेण युधिष्ठिरंप्रति सदाचारनिरूपणम् ॥ १.।
Mahabharata - Shanti Parva - Chapter Text

१२-१९१-० (७२५५२)
युधिष्ठिर उवाच। १२-१९१-०क्ष् (५९६१)
आचारस्य विधिं तात प्रोच्यमानं त्वयाऽनघ ।
श्रोतुमिच्छामि धर्मज्ञ सर्वज्ञो ह्यसि मे मतः ॥ १२-१९१-१ (७२५५३)
भीष्म उवाच। १२-१९१-२क्ष् (५९६२)
दुराचारा दुर्विचेष्टा दुष्प्रज्ञाः प्रियसाहसाः ।
असन्तस्त्वभिविख्याताः सन्तश्चाचारलक्षणाः ॥ १२-१९१-२ (७२५५४)
पुरीषं यदि वा मूत्रं ये न कुवन्ति मानवाः ।
राजमार्गे गवां मध्ये धान्यमध्ये शिवालये ।
अग्न्यगारे तथा तीरे ये न कुर्वन्ति ते शुभाः ॥ १२-१९१-३ (७२५५५)

शौचमावश्यकं कृत्वा देवतानां च तर्पणम् ।
धर्ममाहुर्मनुष्याणामुपस्पृश्य नदीं तरेत् ॥ १२-१९१-४ (७२५५६)
सूर्यं सदोपतिष्ठेन न स्वपेद्भास्करोदये ।
सायंप्रातर्जपेत्सन्ध्यां तिष्ठन्पूर्वां तथेतराम् ॥ १२-१९१-५ (७२५५७)
पञ्चार्द्रो भोजनं भुञ्ज्यात्प्राङ्मुखो मौनमास्थितः ।
न निन्द्यादन्नभक्ष्यांश्च स्वादुस्वादु च भक्षयेत् ॥ १२-१९१-६ (७२५५८)
नार्द्रपाणिः समुत्तिष्ठेन्नार्द्रपादः स्वपेन्निशि ।
देवर्षिर्नारदः प्राह एतदाचारलक्षणम् ॥ १२-१९१-७ (७२५५९)
शोचिष्केशमनड्वाहं देवगोष्ठं चतुष्पथम् ।
ब्राह्मणं धार्मिकं चैव नित्यं कुर्यात्प्रदक्षिणम् ॥ १२-१९१-८ (७२५६०)
अतिथीनां च सर्वेषां प्रेष्याणां स्वजनस्य च ।
सामात्यं भोजनं भृत्यैः पुरुषस्य प्रशस्यते ॥ १२-१९१-९ (७२५६१)
सायंप्रातर्मनुष्याणामशनं वेदनिर्मितम् ।
नान्तरा भोजनं दृष्टमुपवासी तथा भवेत् ॥ १२-१९१-१० (७२५६२)
होमकाले तथ्ना जुह्वन्नृतुकाले तथा व्रजन् ।
अनन्यस्त्रीजनः प्राज्ञो ब्रह्मचारी तथा भवेत् ॥ १२-१९१-११ (७२५६३)
अमृतं ब्राह्मणोच्छिष्टं जनन्या हृदयं कृतम् ।
तज्जनाः पर्युपासन्ते सत्यं सन्तः समासते ॥ १२-१९१-१२ (७२५६४)
लोष्टमर्दी तृणच्छेदी नखखादी तु यो नरः ।
नित्योच्छिष्टः संकसुको नेहायुर्विन्दते महत् ॥ १२-१९१-१३ (७२५६५)
यजुषा संस्कृतं मांसं निवृत्तो मांसभक्षणात् ।
भक्षयेन्न वृथामांसं पृष्ठमांसं च वर्जयेत् ॥ १२-१९१-१४ (७२५६६)
स्वदेशे परदेशे वा अतिथिं नोपवासयेत् ।
काम्यकर्मफलं लब्ध्वा गुरूणामुपपादयेत् ॥ १२-१९१-१५ (७२५६७)
गुरूणामासनं देयं कर्तव्यं चाभिवादनम् ।
गुरूनभ्यर्च्य युज्येत आयुषा यशसा श्रिया ॥ १२-१९१-१६ (७२५६८)
नेक्षेतादित्यमुद्यन्तं न च नग्नां परस्त्रियम् ।
मैथुनं सततं धर्म्यं गुह्ये चैव समाचरेत् ॥ १२-१९१-१७ (७२५६९)
तीर्थानां हृदयं तीर्थं शुचीनां हृदयं शुचिः ।
सर्वमार्यकृतं धर्म्यं वालसंस्पर्शनानि च ॥ १२-१९१-१८ (७२५७०)
दर्शनेदर्शने नित्यं सुखप्रश्नमुदाहरेत् ।
सायं प्रातश्च विप्राणां प्रदिष्टमभिवादनम् ॥ १२-१९१-१९ (७२५७१)
देवगोष्ठे गवां मध्ये ब्राह्मणानां क्रियापथे ।
स्वाध्याये भोजने चैव दक्षिणं पाणिमुद्धरेत् ॥ १२-१९१-२० (७२५७२)
सायं प्रातश्च विप्राणां पूजनं च यथाविधि ।
पण्यानां शोभते पण्यं कृषीणामृद्ध्यतां कृषिः ।

बहुकारं च सस्यानां वाह्ये वाहो गवां तथा ॥ १२-१९१-२१ (७२५७३)
संपन्नं भोजने नित्यं पानीये तर्पणं तथा ।
सुशृतं पायसे ब्रूयाद्यवाग्वां कृसरे तथा ॥ १२-१९१-२२ (७२५७४)
श्मश्रुकर्मणि संप्राप्ते क्षुते स्नानेऽथ भोजने ।
व्याधितानां च सर्वेषामायुष्ममभिनन्दनम् ॥ १२-१९१-२३ (७२५७५)
प्रत्यादित्यं न मेहेत न पश्येदात्मनः शकृत् ।
सुतैः स्त्रिया च शयनं सह भोज्यं च वर्जयेत् ॥ १२-१९१-२४ (७२५७६)
त्वंकारं नामधेयं च ज्येष्ठानां परिवर्जयेत् ।
अवराणां समानानामुभयं नैव दुष्यति ॥ १२-१९१-२५ (७२५७७)
हृदयं पापवृत्तानां पापमाख्याति वैकृतम् ।
ज्ञानपूर्वं विनश्यन्ति गूहमाना महाजने ॥ १२-१९१-२६ (७२५७८)
ज्ञानपूर्वकृतं पापं छादयन्त्यबहुश्रुताः ।
नैनं मनुष्याः पश्यन्ति पश्यन्त्येव दिवौकसः ॥ १२-१९१-२७ (७२५७९)
पापेनापिहितं पापं पापमेवानुवर्तते ।
धर्मेणापिहितो धर्मो धर्ममेवानुवर्तते ।
धार्मिकेण कृतो धर्मो धर्ममेवानुवर्तते ॥ १२-१९१-२८ (७२५८०)
पापं कृतं न स्मरतीह मूढो
विवर्तमानस्य तदेति कर्तुः ।
राहुर्यथा चन्द्रमुपैति चापि
तथाऽबुधं पापमुपैति कर्म ॥ १२-१९१-२९ (७२५८१)
आशया संचितं द्रव्यं दुःखेनैवोपभुज्यते ।
तद्बुधा न प्रशंसन्ति मरणं न प्रतीक्षते ॥ १२-१९१-३० (७२५८२)
मानसं सर्वभूतानां धर्ममाहुर्मनीषिणः ।
तस्मात्सर्वेषु भूतेषु मनसा शिवमाचरेत् ॥ १२-१९१-३१ (७२५८३)
एक एव चरेद्धर्मं नास्ति धर्मे सहायता ।
केवलं विधिमासाद्य सहायः किं करिष्यति ॥ १२-१९१-३२ (७२५८४)
धर्मो योनिर्मनुष्याणां देवानाममृतं दिवि ।
प्रेत्यभावे सुखं धर्माच्छश्वत्तैरुपभुज्यते ॥ ॥ १२-१९१-३३ (७२५८५)

इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि
एकनवत्यधिकशततमोऽध्यायः ॥ १९१.।
Mahabharata - Shanti Parva - Chapter Footnotes

१२-१९१-२ आचारो लक्षणं ज्ञापकं येषाम् ॥
१२-१९१-४ शौचं कृत्वा उपस्पृश्य आचम्य नदीं तरेदवगाहेत्
। ततस्तर्पणमिति संबन्धः ॥

१२-१९१-५ जपेत्सावित्रीम् । सन्ध्यामुपलक्ष्य तिष्ठन्नुपतिष्ठेत ॥
१२-१९१-६ पादौ पाणी सुखं चेति पञ्च आर्द्राणि यस्य । भोजनमन्नम् ॥
१२-१९१-८ शुचिंदेशमनड्वाहं इति धार्मिकं चैत्यं इति च झ । पाठः ॥
१२-१९१-९ सामान्यं साधारणम् । पाकभेदं न कुर्यादित्यर्थः ॥
१२-१९१-१० तथा कुर्वन् यथाकालभोजी उपवासफलं लभेतेत्यर्थः ॥
१२-१९१-१२ ब्राह्मणभुक्तावशिष्टं मातुर्हृदयमिव हितकरं कृतं
धात्रा तद्ये उपासते ते सत्यं ब्रह्म समासते आसादयन्ति ॥
१२-१९१-१३ संकसुकः कामलोभादिवशः ॥
१२-१९१-१४ वृथामांसमसंस्कृतमांसम् ॥
१२-१९१-१७ धर्म्यं ऋतुकालिकम् । गुह्ये रहसि ॥
१२-१९१-१८ हृदयं रहस्यम् । तीर्थं गुरुः। शुचिरग्निः। आर्यकृतं
शिष्टाचरितम्। वालं गोपुच्छम्। सर्वमार्यकृतं चौक्ष्यमिति
झ। पाठः ॥
१२-१९१-१९ प्रदिष्टं कर्तव्यत्वेनोपदिष्टम् ॥
१२-१९१-२० दक्षिणं पाणिमुद्धरेत् यज्ञोपवीती भवेत् ॥
१२-१९१-२१ विप्राणां पूजनमेवोत्तमं पण्यमुत्तमा कृषिश्च
तद्वत् दृष्टफलमित्यर्थः । सस्यानां धान्यानां
बहुकारं बहुलीकरणं च तदेव गवामिन्द्रियाणां वाह्ये
प्राप्ये। वाहप्रापणम्। दिव्यस्त्र्यन्नपानादीष्टप्राप्तिरपि विप्राणां
पूजनमेव पण्यादिवदेष्टव्यमित्यर्थः ॥
१२-१९१-२२ पूजनप्रकारमाह संपन्नमिति । भोजने दीयमाने संपन्नमिति
ब्रूयाद्दाता। सुसंपन्नमिति प्रतिग्रहीता। एवमुत्तरत्र ॥
१२-१९१-२३ संप्राप्ते कृते सति । विप्राणामभिनन्दनं वन्दनादिना
संतोषणं कार्यमिति शेषः ॥
१२-१९१-२४ प्रत्यादित्यमादित्याभिमुखो न मेहेत न मूत्रमुत्सृजेत्
। शकृत्पुरीषम्। पुतरैस्त्रिया च सुहृदा सह भुक्तं च वर्जयेत्
इति ट। पाठः ॥
१२-१९१-२६ वैकृतं नेत्रादिविकारः । पापं हृदयमाख्याति गूहमानाः
पापम् ॥
१२-१९१-२८ पापं पापिम् । पापं प्रकाशनीयं धर्मस्तु गोपनीय इत्यर्थः ॥
१२-१९१-३० मरणं कर्तृ ॥
१२-१९१-३१ मानसं मनोनिर्वर्त्यम् ॥

---

शन्तिपर्व-अध्यय१९२
॥ श्रीः ॥
१२.१९२. अध्यायः १९२

Mahabharata - Shanti Parva - Chapter Topics
भीष्मेण युधिष्ठिरंप्रत्यध्यात्मनिरूपणम् ॥ १.।
Mahabharata - Shanti Parva - Chapter Text

१२-१९२-० (७२५८६)
युधिष्ठिर उवाच। १२-१९२-०क्ष् (५९६३)
अध्यात्मं नाम यदिदं पुरुषस्येह चिन्त्यते ।
यदध्यात्मं यथा चैतत्तन्मे ब्रूहि पितामह ॥ १२-१९२-१ (७२५८७)
कुतः सृष्टमिदं सर्वं ब्रह्मन्स्थावरजङ्गमम् ।
प्रलये च कमभ्येति तन्मे वक्तुमिहार्हसि ॥ १२-१९२-२ (७२५८८)
भीष्म उवाच। १२-१९२-३क्ष् (५९६४)
अध्यात्ममिति मां पार्थ यदेतदनुपृच्छसि ।
तद्व्याख्यास्यामि ते तात श्रेयस्करतमं शुभम् ॥ १२-१९२-३ (७२५८९)
श्सृष्टिप्रलयसंयुक्तमाचार्यैः परिदर्शितम् ह
यज्ज्ञात्वा पुरुषो लेके प्रीतिं सौख्यं च विन्दति ।
फललाभश्च तस्य स्यात्सर्वभूतहितं च तत् ॥ १२-१९२-४ (७२५९०)
ग्आत्मानममलं राजन्नावृत्यैवं व्यवस्थितम् ।
तस्मिन्प्रकाशते नित्यं तमः सोमो यथैव तत् ॥ १२-१९२-५ (७२५९१)
तद्विद्वान्नष्टयाप्मैष ब्रह्मभूयाय कल्पते ।
अण्डावरणभूतानां पर्यन्तं हि यथा तमः ॥' १२-१९२-६ (७२५९२)
पृथिवी वायुराकाशमापो ज्योतिश्च पञ्चमम् ।
महाभूतानि भूतानां सर्वेषां प्रभवाप्ययौ ॥ १२-१९२-७ (७२५९३)
यतः सृष्टानि तत्रैव तानि यान्ति पुनःपुनः ।
महाभूतानि भूतेभ्यः सागरस्योर्मयो यथा ॥ १२-१९२-८ (७२५९४)
प्रसार्य च यथाङ्गानि कूर्मः संहरते पुनः ।
तद्वद्भूतानि भूतात्मा सृष्ट्वा संहरते पुनः ॥ १२-१९२-९ (७२५९५)
ग्स तेषां गुणसंघातः शरीरे भरतर्षभ ।
सततं प्रविलीयन्ते गुणास्ते प्रभवन्ति च ॥ १२-१९२-१० (७२५९६)
यद्विना नैव शृणुते न पश्यति न दीप्यते ।
यदधीनं यतस्तस्मादध्यात्ममिति कथ्यते ॥ १२-१९२-११ (७२५९७)
ज्ञानं तदेकरूपाख्यं नानाप्रज्ञान्वितं तदा ।
न तेवाचाऽनुरूपं स्याद्यया रासविवर्जितम् ॥ १२-१९२-१२ (७२५९८)
आकाशात्खलु याज्येषु भवन्ति सुमहागुणाः ।
इति तन्मयमेवैतत्सर्वं स्थावरजङ्गमम्। १२-१९२-१३ (७२५९९)
प्रलये च तमभ्येति तस्मादुत्सृज्यते पुनः ।
महाभूतेषु भूतात्मा सृष्ट्वा संहरते पुनः ॥' १२-१९२-१४ (७२६००)

महाभूतानि पञ्चैव सर्वभूतेषु भूतकृत् ।
अकरोत्तेषु वैषम्य तत्तु जीवो न पश्यति ॥ १२-१९२-१५ (७२६०१)
शब्दः श्रोत्रं तथा खानि त्रयमाकाशसंभवम् ।
वायोः स्पर्शस्तथा चेष्टा त्वक्चैव त्रितयं स्मृतम् ॥ १२-१९२-१६ (७२६०२)
रूपं चक्षुस्तथा पाकस्त्रिविधं तेज उच्यते ।
रसः क्लेदश्च जिह्वा च त्रयो जलगुणाः स्मृताः ॥ १२-१९२-१७ (७२६०३)
घ्रेयं घ्राणं शरीरं च एते भूमिगुणास्त्रयः ।
महाभूतानि पञ्चैव षष्ठं च मन उच्यते ॥ १२-१९२-१८ (७२६०४)
इन्द्रियाणि मनश्चैव विज्ञानान्यस्य भारत ।
सप्तमी बुद्धिरित्याहुः क्षेत्रज्ञः पुनरष्टमः ॥ १२-१९२-१९ (७२६०५)
चक्षुरालोचनायैव संशयं कुरुते मनः ।
बुद्धिरध्यवसानाय क्षेत्रज्ञः साक्षिवत्स्थितः ॥ १२-१९२-२० (७२६०६)
गचिच्छक्त्याधिष्ठिता बुद्धिश्चेतनेत्यभिविश्रुता ।
चेतनानन्तरो जीवस्तदा वेत्ति च लक्ष्यते ॥ १२-१९२-२१ (७२६०७)
नोत्सृजन्विसृजंश्चैव शरीरं दृश्यते तमः ।
तस्मिंश्चेतोपलब्धिः स्यात्तमो वा सारयन्त्युत ॥ १२-१९२-२२ (७२६०८)
ऊर्ध्वं पादतलाभ्यां यदर्वाक्चोर्ध्वं च पश्यति ।
एतेन सर्वमेवेदं बिद्धयभिव्याप्तमन्तरम् ॥ १२-१९२-२३ (७२६०९)
पुरुषैरिन्द्रियाणीह विजेतव्यानि कृत्स्नशः ।
तमो रजश्च सत्वं च तेऽपि भावास्तदाश्रिताः ॥ १२-१९२-२४ (७२६१०)
एतां बुद्ध्वा नरो बुद्ध्या भूतानामागतिं गतिम् ।
समवेक्ष्य शनैश्चैव लभते शममुत्तमम् ॥ १२-१९२-२५ (७२६११)
गुणैर्नेनीयते बुद्धिर्बुद्धिरेवेन्द्रियाण्यपि ।
मनःषष्ठानि सर्वाणि बुद्ध्यभावे कुतो गुणाः ॥ १२-१९२-२६ (७२६१२)
इति तन्मयमेवैतत्सर्वं स्थावरजङ्गमम् ।
प्रलीयते चोद्भवति तस्मान्निर्दिश्यते तथा ॥ १२-१९२-२७ (७२६१३)
येन पश्यति तच्चक्षुः शृणोति श्रोत्रमुच्यते ।
जिघ्रति घ्राणमित्याहू रसं जानाति जिह्वया ॥ १२-१९२-२८ (७२६१४)
त्वचा स्पर्शयते स्पर्शं बुद्धिर्विक्रियतेऽसकृत् ।
येन संकल्पयत्यर्थं किंचिद्भवति तन्मनः ॥ १२-१९२-२९ (७२६१५)
अधिष्ठानानि बुद्धेर्हि पृथगर्थानि पञ्चधा ।
पञ्चेन्द्रियाणि यान्याहुस्तान्यदृश्योऽधितिष्ठति ॥ १२-१९२-३० (७२६१६)
पुरुषाधिष्ठिता बुद्धिस्त्रिषु भावेषु वर्तते ।
कदाचिल्लभते प्रीतिं कदाचिदनुशोचति ॥ १२-१९२-३१ (७२६१७)
न सुखेन न दुःखेन कदाचिदपि वर्तते ।
एवं नराणां मनसि त्रिषु भावेष्ववस्थिता ॥ १२-१९२-३२ (७२६१८)

सेयं भावात्मिका भावांस्त्रीनेतानतिवर्तते ।
सरितां सागरो भर्ता महावेलामिवोर्मिमान् ॥१२-१९२-३३ (७२६१९)
अविभागगता बुद्धिर्भावे मनसि वर्तते ।
प्रवर्तमानं तु रजस्तद्भावमनुवर्तते ॥१२-१९२-३४ (७२६२०)
इन्द्रियाणि हि सर्वाणि प्रवर्तयति सा तदा ।
ततः सत्वं तमो भावः प्रातियोगात्प्रवर्तते ॥१२-१९२-३५ (७२६२१)
प्रीतिः सत्वं रजः शोकस्तमो मोहस्तु ते त्रयः ।
येये च भावा लोकेऽस्मिन्सर्वेष्वेतेषु वै त्रिषु ॥१२-१९२-३६ (७२६२२)
इति बुद्धिगतिः सर्वा व्याख्याता तव भारत ।
इन्द्रियाणि च सर्वाणि विजेतव्यानि धीमता ॥१२-१९२-३७ (७२६२३)
सत्वं रजस्तमश्चैव प्राणिनां संश्रिताः सदा ।
त्रिविधा वेदना चैव सर्वसत्वेषु दृश्यते ॥१२-१९२-३८ (७२६२४)
सात्विकी राजसी चैव तामसी चेति भारत ।
सुखस्पर्शः सत्त्वगुणो दुःखस्पर्शो रजोगुणः ।
तमोगुणेन संयुक्तौ भवतो व्यावहारिकौ ॥ १२-१९२-३९ (७२६२५)
तत्र यत्प्रीतिसंयुक्तं काये मनसि वा भवेत् ।
वर्तते सात्विको भाव इत्युपेक्षेत तत्तथा ॥१२-१९२-४० (७२६२६)
अथ यद्दुःखसंयुक्तमप्रीतिकरमात्मनः ।
प्रवृत्तं रज इत्येव तन्न संरभ्य चिन्तयेत् ॥१२-१९२-४१ (७२६२७)
अथ यन्मोहसंयुक्तमव्यक्तविषयं भवेत् ।
अप्रतर्क्यमविज्ञेयं तमस्तदुपधारयेत्। १२-१९२-४२ (७२६२८)
प्रहर्षः प्रीतिरानन्दः सुखं संशान्तचित्तता ।
कथंचिदभिवर्तन्त इत्येते सात्विका गुणा ॥१२-१९२-४३ (७२६२९)
अतुष्टिः परितापश्च शोको लोभस्तथाऽक्षमा ।
लिङ्गानि रजसस्तानि दृश्यन्ते हेत्वहेतुभिः ॥१२-१९२-४४ (७२६३०)
अभिमानस्तथा मोहः प्रमादः स्वप्नतन्द्रिता ।
कथंचिदभिवर्तन्ते विविधास्तामसा गुणाः ॥१२-१९२-४५ (७२६३१)
दूरगं बहुधागामि प्रार्थनासंशयात्मकम् ।
मनः सुनियतं यस्य स सुखी प्रेत्य चेह च ॥१२-१९२-४६ (७२६३२)
सत्वक्षेत्रज्ञयोरेतदन्तरं पश्य सूक्ष्मयोः ।
सृजते तु गुणानेक एको न सृजते गुणान् ॥१२-१९२-४७ (७२६३३)
मशकोदुम्बरौ वाऽपि संप्रयुक्तौ यथा सदा ।
अन्योन्यमेतौ स्यातां च संप्रयोगस्तथा तयोः ॥१२-१९२-४८ (७२६३४)
पृथग्भूतौ प्रकृत्या तौ संप्रयुक्तौ च सर्वदा ।
यथा मत्स्यो जलं चैव संप्रयुक्तौ तथैव तौ ॥१२-१९२-४९ (७२६३५)
न गुणा विदुरात्मानं स गुणान्वेति सर्वशः ।

परिद्रष्टा गुणानां स संसृष्टान्मन्यते तथा ॥ १२-१९२-५० (७२६३६)
इन्द्रियैस्तु प्रदीपार्थं कुरुते बुद्धिसप्तमैः ।
निर्विचेष्टैरजानद्भिः परमात्मा प्रदीपवत् ॥ १२-१९२-५१ (७२६३७)
सृजते हि गुणान्सत्वं क्षेत्रज्ञः परिपश्यति ।
संप्रयोगस्तयोरेष सत्वक्षेत्रज्ञयोर्ध्रुवः ॥ १२-१९२-५२ (७२६३८)
आश्रयो नास्ति सत्वस्य क्षेत्रज्ञस्य च कश्चन ।
सत्वं मनः संसृजते न गुणान्वै कदाचन ॥ १२-१९२-५३ (७२६३९)
रश्मीस्तेषां स मनसा यदा सम्यङ्नियच्छति ।
तदा प्रकाशतेऽस्यात्मा घटे दीपो ज्वलन्निव ॥ १२-१९२-५४ (७२६४०)
त्यक्त्वा यः प्राकृतं कर्म नित्यमात्मरतिर्मुनिः ।
सर्वभूतात्मभूस्तस्मात्स गच्छेदुत्तमां गतिम् ॥ १२-१९२-५५ (७२६४१)
यथा वारिचरः पक्षी सलिलेन न लिप्यते ।
एवमेव कृतप्रज्ञो भूतेषु परिवर्तते ॥ १२-१९२-५६ (७२६४२)
एवं स्वभावमेवैतत्स्वबुद्ध्या विहरेन्नरः ।
अशोचन्नप्रहृष्यंश्च चरेद्विगतमत्सरः ॥ १२-१९२-५७ (७२६४३)
स्वभावसिद्ध्या युक्तस्तु स नित्यं सृजत गुणान् ।
ऊर्णनाभिर्यथा सूत्रं विज्ञेयास्तन्तुवद्गुणाः ॥ १२-१९२-५८ (७२६४४)
प्रध्वस्ता न निवर्न्तते निवृत्तिर्नोपलभ्यते ।
प्रत्यक्षेण परोक्षं तदनुमानेन सिध्यति ॥ १२-१९२-५९ (७२६४५)
एवमेकेऽध्यवस्यन्ति निवृत्तिरिति चापरे ।
उभयं संप्रधार्यैतद्व्यवस्येत यथामति ॥ १२-१९२-६० (७२६४६)
इतीमं हृदयग्रन्थिं बुद्धिभेदमयं दृढम् ।
विमुच्य सुखमासीत न शोचेच्छिन्नसंशयः ॥ १२-१९२-६१ (७२६४७)
मलिनाः प्राप्नुयुः शुद्धिं यथा पूर्णां नदीं नराः ।
अवगाह्य सुविद्वांसो विद्धि ज्ञानमिदं तथा ॥ १२-१९२-६२ (७२६४८)
महानद्या हि पारज्ञस्तप्यते न तदन्यथा ।
न तु तप्यति तत्त्वज्ञः फले ज्ञाते तरत्युत ॥ १२-१९२-६३ (७२६४९)
एवं ये विदुराध्यात्मं केवलं ज्ञानमुत्तमम् ॥ १२-१९२-६४ (७२६५०)
एतां बुद्धा नरः सर्वां भूतानामागतिं गतिम् ।
अवेक्ष्य च शनैर्बुद्ध्या लभते शममुत्तमम् ॥ १२-१९२-६५ (७२६५१)
त्रिवर्गो यस्य विदितः प्रेक्ष्य तं स विमुच्यते ।
अन्वीक्ष्य मनसा युक्तस्तत्त्वदर्शी निरुत्सुकः ॥ १२-१९२-६६ (७२६५२)
न चात्मा शक्यते द्रष्टुमिन्द्रियेषु विभागशः ।
तत्रतत्र विसृष्टेषु दुर्वार्येष्वकृतात्मभिः ॥ १२-१९२-६७ (७२६५३)
एतद्बुद्ध्वा भवेद्बुद्धः किमन्यद्बुद्धिलक्षणम् ।
प्रतिगृह्य च निह्नोति ह्यन्यथा च प्रदृश्यते ॥ १२-१९२-६८ (७२६५४)

न सर्पति च यं प्राहुः सर्वत्र प्रतिहन्यते ।
धूमेन चाप्रसन्नोऽग्निर्यथाऽर्कं न प्रवर्तयेत् ॥१२-१९२-६९ (७२६५५)
धिष्ण्याधिपे प्रसन्ने तु स्थितिमेतां निरीक्षते ।
अतिक्षूराच्च सूक्ष्मत्वात्प्रस्थानं न प्रकाशते ॥१२-१९२-७० (७२६५६)
प्रपद्य तच्छ्रुताह्नानि चिन्मयं स्वीकृतं विना ।
विज्ञाय तद्धि मन्यन्ते कृतकृत्या मनीषिणः ॥१२-१९२-७१ (७२६५७)
न भवति विदुषां ततो भयं
यदविदुषां सुमहद्भयं भवेत् ।
न हि गतिरधिकास्ति कस्यचि
त्सति हि गुणे प्रवदन्त्यतुल्यताम् ॥ १२-१९२-७२ (७२६५८)
यः करोत्यनभिसन्धिपूर्वकं
तच्च निर्णुदति यत्पुरा कृतम् ।
नाप्रियं तदुभयं कुतः प्रियं
तस्य तज्जनयतीह सर्वतः ॥ १२-१९२-७३ (७२६५९)
लोकमातुरमसूयते जन
स्तस्य तज्जनयतीह सर्वतः ।
लोक आतुरजनान्विराविण
स्तत्तदेव बहु पश्य शोचतः ।
तत्र पश्य कुशलानशोचतो १२-१९२-७४ (७२६६०)
१२-१९२-७४फ़्"
ये विदुस्तदुभयं पदं सताम् ॥ ॥

इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि
द्विनवत्यधिकशततमोऽध्यायः ॥१९२.।

Mahabharata - Shanti Parva - Chapter Footnotes

१२-१९२-४७ क्षेत्रक्षेत्रज्ञयोरेतदिति ध ।पाठः ॥
१२-१९२-६१ बुद्धिमोहमयं दृढमिति थ ।ध।पाठः ॥
१२-१९२-६३ पारज्ञस्तप्यते न चरन्यथेति ध
।पाठः।पारज्ञास्तरन्ते न तदन्यथेति ट थ।पाठः ॥

---

शन्तिपर्व-अध्यय१९३
॥ श्रीः ॥
१२.१९३. अध्यायः १९३

Mahabharata - Shanti Parva - Chapter Topics

१२-१९३-० (७२६६१)
भीष्म उवाच।१२-१९३-०क्ष् (५९६५)
हन्त वक्ष्यामि ते पार्थ ध्यानयोगं चतुर्विधम् ।
यं ज्ञात्वा शाश्वतीं सिद्धिं गच्छन्तीह महर्षयः ॥१२-१९३-१ (७२६६२)
यथा स्वनुष्ठितं ध्यानं तथा कुर्वन्ति योगिनः ।
महर्षयो ज्ञानतृप्ता निर्वाणगतमानसाः ॥१२-१९३-२ (७२६६३)
नावर्तन्ते पुनः पार्थ मुक्ताः संसारदोषतः ।
अन्मदोषपरिक्षीणाः स्वभावे पर्युपस्थिताः ॥१२-१९३-३ (७२६६४)
निर्द्वन्द्वा नित्यसत्वस्था विमुक्तिं नित्यमश्रिताः ।
असङ्गीन्यविवादीनि मनः शान्तिकराणि च ॥१२-१९३-४ (७२६६५)
तत्र ध्यानेन संश्लिष्टमेकाग्रे धारयेन्मनः ।
तत्र च ध्यानसंरोधादथ ज्ञानी भवत्युत ॥१२-१९३-५ (७२६६६)
चतुर्विधेषु भावेषु योऽर्थसक्तः सदैव हि ।
तज्ज्ञात्वा वास्तवं तेषामर्थेषु परिवर्तते ।
पिण्डीकृत्येन्द्रियग्राममासीनः काष्ठवन्मुनिः ॥ १२-१९३-६ (७२६६७)
शब्दं न विन्देच्छ्रोत्रेण त्वचा स्पर्शं न वेदयेत् ।
रूपं न चक्षुषा विद्याज्जिह्वया न रसांस्तथा ॥१२-१९३-७ (७२६६८)
घ्रेयाण्यपि च सर्वाणि जह्याद्घ्राणेन योगवित् ।
पञ्चवर्गप्रमाथीनि नेच्छेच्चैतानि वीर्यवान् ॥१२-१९३-८ (७२६६९)
ततो मनसि संसृज्य पञ्चवर्ग विचक्षणः ।
समादध्यान्मनो भ्रान्तमिन्द्रियैः सह पञ्चमिः ॥१२-१९३-९ (७२६७०)
विसंचारि निरालम्बं पञ्चद्वारं चलाचलम् ।
पूर्वं ध्यानपदे धीरः समादध्यान्मनो नरः ॥१२-१९३-१० (७२६७१)
इन्द्रियाणि मनश्चैव यदा पिण्डीकरोत्ययम् ।
एव ध्यानपथः पूर्वो मया समनुवर्णितः ॥१२-१९३-११ (७२६७२)
तस्य तत्पूर्वसंरुद्धमात्सषष्ठं मनोऽन्तरा ।
स्फुरिष्यति समुद्धान्तं विद्युदम्बुधरे यथा ॥१२-१९३-१२ (७२६७३)
जलबिन्दुर्यथा लोलः पर्णस्थः सर्वतश्चलः ।
एवमेवास्य तच्चित्तं भ्रमति ध्यानवर्त्मनि ॥१२-१९३-१३ (७२६७४)
समाहितं क्षणं किंचिद्ध्यानवर्त्मनि तिष्ठति ।
पुनर्वायुपथं प्राप्तं मनो भवति वायुवत् ॥१२-१९३-१४ (७२६७५)
अनिर्वेदो गतक्लेशो गततन्द्रीरमत्सरः ।
समादध्यात्पुनश्चेतो ध्यानेन ध्यानयोगवित् ॥१२-१९३-१५ (७२६७६)

विचारश्च विवेकश्च वितर्कश्चोपजायते ।
मुनेः समादधानस्य प्रथमं ध्यानमादितः ॥ १२-१९३-१६ (७२६७७)
मनसा क्लिश्यमानस्तु समाधानं च कारयेत् ।
न निर्वेदं मुनिर्गच्छेत्कुर्यादेवात्मनो हितम् ॥ १२-१९३-१७ (७२६७८)
पांसुभस्मकरीषाणां यथा वै राशयश्चिताः ।
सहसा वारिणा सिक्ता न यान्ति परिभावनम् ॥ १२-१९३-१८ (७२६७९)
किंचित्स्निग्धं यथा च स्याच्छुष्कचूर्णमभावितम् ।
क्रमशस्तु शनैर्गच्छेत्सर्वं तत्परिभावनम् ॥ १२-१९३-१९ (७२६८०)
एवमेवेन्द्रियग्रामं शनैः संपरिभावयेत् ।
संहरेत्क्रमशश्चैनं स सम्यक्प्रशमिष्यति ॥ १२-१९३-२० (७२६८१)
स्वयमेव मनश्चैवं पञ्चवर्गं च भारत ।
पूर्वं ध्यानपथे स्थाप्य नित्ययोगेन शाम्यति ॥ १२-१९३-२१ (७२६८२)
न तत्पुरुषकारेण न च दैवेन केनचित् ।
सुखमेष्यति तत्तस्य न भवन्ति विपत्तयः ॥ १२-१९३-२२ (७२६८३)
सुखेन तेन संयुक्तो रस्यते ध्यानकर्मणि ।
गच्छन्ति योगिनो ह्येवं निर्वाणं तन्निरामयम् ॥ ॥ १२-१९३-२३ (७२६८४)

इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि
त्रिनवत्यधिकशततमोऽध्यायः ॥ १९३.।
Mahabharata - Shanti Parva - Chapter Footnotes

१२-१९३-३ स्वगावे पर्यवस्थिता इति झ ।ध। पाठः ॥
१२-१९३-१० ध्यानपथे इति ड ।पाठः ॥
१२-१९३-१४ भ्रनति ज्ञानवर्त्मनीति ट ।ड। पाठः ॥

---

शन्तिपर्व-अध्यय१९४
॥ श्रीः ॥
१२.१९४. अध्यायः १९४

Mahabharata - Shanti Parva - Chapter Topics
भीष्मेण युधिष्ठिरंप्रति जपफलप्रकारादिकथनम् ॥ १.।
Mahabharata - Shanti Parva - Chapter Text

१२-१९४-० (७२६८५)
युधिष्ठिर उवाच। १२-१९४-०क्ष् (५९६६)
चातुराश्रम्यनुक्तं ते राजधर्मास्तथैव च ।

नानाश्रयाश्च भगवन्नितिहासाः पृथग्विधाः ॥ १२-१९४-१ (७२६८६)
श्रुतास्त्वत्तः कथाश्चैव धर्मयुक्ता महामते ।
संदेहोऽस्ति तु कश्चिन्मे तद्भवान्वक्तुमर्हति ॥ १२-१९४-२ (७२६८७)
जापकानां फलावाप्तिं श्रोतुमिच्छामि भारत ।
किं फलं जपतामुक्तं क्व वा तिष्ठन्ति जापकाः ॥ १२-१९४-३ (७२६८८)
जपस्य च विधिं कृत्स्नं वक्तुमर्हसि मेऽनघ ।
जापका इति किंचैतत्साङ्ख्ययोगक्रियाविधिः ॥ १२-१९४-४ (७२६८९)
किं यज्ञविधिरेवैष किमेतज्जप्यमुच्यते ।
एतन्मे सर्वमाचक्ष्व सर्वज्ञो ह्यसि मे मतः ॥ १२-१९४-५ (७२६९०)
भीष्म उवाच। १२-१९४-६क्ष् (५९६७)
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
यमस्य यत्पुरा वृत्तं कालस्य ब्राह्मणस्य च ॥ १२-१९४-६ (७२६९१)
ग्इक्ष्वाकोश्चैव मृत्योश्च विवादे धर्मकारणात्।'
संन्यास एव वेदान्ते वर्तते जपनं प्रति ।
वेदवादाङ्गनिर्वृत्ताः शान्ता ब्रह्मण्यवस्थिताः ॥ १२-१९४-७ (७२६९२)
साङ्ख्ययोगौ तु यावुक्तौ मुनिभिः समदर्शिभिः ।
मार्गौ तावप्युभावेतौ संश्रितौ न च संश्रितौ ॥ १२-१९४-८ (७२६९३)
यथा संश्रूयते राजन्कारणं चात्र वक्ष्यते ।
ग्क्रमेण चैव विहितो जपयज्ञविधिर्नृप ॥ १२-१९४-९ (७२६९४)
सालम्बनमिति ज्ञेयं जपयज्ञात्मकं शुभम्।'
मनः समाधिरेवात्र तथेन्द्रियजयः स्मृतः ॥ १२-१९४-१० (७२६९५)
सत्यमग्निपरीचारो विविक्तानां च सेवनम् ।
ध्यानं तपो दमः क्षान्तिरनसूया मिताशनम् ॥ १२-१९४-११ (७२६९६)
विषयप्रतिसंहारो मितजल्पस्तथा शमः ।
एष प्रर्वाको धर्मो निवर्तकमथो शृणु ॥ १२-१९४-१२ (७२६९७)
यथा निवर्तते धर्मो जपतो ब्रह्मचारिणः ।
ग्न जपो न च वै ध्यानं नेच्छा न द्वेषहर्षणौ ।
युज्यते नृपशार्दूल सुसंवेद्यं हि तत्किल ॥ १२-१९४-१३ (७२६९८)
जपमावर्तयन्नित्यं जपन्वै ब्रह्मचारिकम् ।
तदर्थबुद्ध्या संयाति मनसा जापकः परम् ॥ १२-१९४-१४ (७२६९९)
यथा संश्रूयते जापो येन वै जापको भवेत् ।
संहिताप्रणवेनैव सावित्री च परा मता ॥ १२-१९४-१५ (७२७००)
यदन्यदुचितं शुद्धं वेदस्मृत्युपपादितम्।'
एतत्सर्वमशेषेण यथोक्तं परिवर्तयेत् ॥ १२-१९४-१६ (७२७०१)
द्विविदं मार्गमासाद्य व्यक्ताव्यक्तमनामयम् ।
कुशोच्चयनिषण्णः सन्कुशहस्तः कुशैः शिख ।

कुशैः परिवृतस्तस्मिन्मध्ये छन्नः कुशैस्तथा ॥ १२-१९४-१७ (७२७०२)
विषयेभ्यो नमस्कुर्याद्विषयान्न च भावयेत् ।
साम्यमुत्पाद्य मनसा मनस्येव मनो दधत् ॥ १२-१९४-१८ (७२७०३)
तद्धिया ध्यायति ब्रह्म जपन्वै संहितां हिताम् ।
संन्यस्यत्यथवा तां वै समाधौ पर्यवस्थितः ॥ १२-१९४-१९ (७२७०४)
ध्यानमुत्पादयत्यत्र संहिताबलसंश्रयात् ।
ग्अथाभिमतमन्त्रेण प्रणवाद्यं जपेत्कृती ॥ १२-१९४-२० (७२७०५)
यस्मिन्नेवाभिपतितं मनस्तत्र निवेशयेत् ।
समाधौ स हि मन्त्रे तु संहितां वा यथाविधि।'
शुद्धात्मा तपसा दान्तो निवृत्तद्वेषकामवान् ॥ १२-१९४-२१ (७२७०६)
अरागमोहो निर्द्वन्द्वो न शोचति न सज्जते ।
न कर्ता करणीयानां नाकार्याणामिति स्थितिः ॥ १२-१९४-२२ (७२७०७)
न चाहंकारयोगेन मनः प्रस्थाप्येत्क्वचित् ।
न चार्थग्रहणे युक्तो नावमानी न चाक्रियः ॥ १२-१९४-२३ (७२७०८)
ध्यानक्रियापरो युक्तो ध्यानवान्ध्याननिश्चयः ।
ध्याने समाधिमुत्पाद्य तदपि त्यजति क्रमात् ॥ १२-१९४-२४ (७२७०९)
स वै तस्यामवस्थायां सर्वत्यागकृतः सुखी ।
निरिच्छस्त्यजति प्राणान्ब्राह्मीं संश्रयते तनुम् ॥ १२-१९४-२५ (७२७१०)
गनिरालम्बो भवेत्स्मृत्वा मरणाय समाधिमान् ।
सर्वाल्लोँकान्समाक्रम्य क्रमात्प्राप्नोति वै परम् ॥' १२-१९४-२६ (७२७११)
अथवा नेच्छते तत्र ब्रह्मकायनिषेवणम् ।
उत्क्रामति च मार्गस्थो नैव क्वचन जायते ॥ १२-१९४-२७ (७२७१२)
आत्मबुद्धिं समास्थाय शान्तीभूतो निरामयः ।
अमृतं विरजाः शुद्धमात्मानं प्रतिपद्यते ॥ ॥ १२-१९४-२८ (७२७१३)

इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि
चतुर्नवत्यधिकशततमोऽध्यायः ॥ १९४.।

Mahabharata - Shanti Parva - Chapter Footnotes

१२-१९४-२ ब्रह्मयुक्ता महामते इति ड ।थ। पाठः ॥
१२-१९४-७ शान्तिर्ब्रह्मण्यवस्थिता इति ट ।ड।थ। पाठः ॥
१२-१९४-१३ यथा निवर्तते कर्मेति झ ।ध। पाठः ॥
१२-१९४-१७ कुशहस्तः कुशस्थलीति ट ।ड।थ। पाठः ॥
१२-१९४-१८ विषयेभ्यो मनो रुन्ध्यादिति ट ।पाठः ॥
१२-१९४-१९ ब्रह्म च ध्यायते योगी जपन्वै वेदसंहितामिति ड
।थ। पाठः ॥

शन्तिपर्व-अध्यय१९५
॥ श्रीः ॥
१२.१९५. अध्यायः १९५

Mahabharata - Shanti Parva - Chapter Topics
भीष्मेण युधिष्ठिरंप्रति जापकोपाख्यानकथनम् ॥ १.।
Mahabharata - Shanti Parva - Chapter Text

१२-१९५-० (७२७१४)
युधिष्ठिर उवाच। १२-१९५-०क्ष् (५९६८)
गतीनामुत्तमा प्राप्तिः कथिता जापकेष्विह ।
एकैवैषा गतिस्तेषामुत यान्त्यपरामपि ॥ १२-१९५-१ (७२७१५)
भीष्म उवाच। १२-१९५-२क्ष् (५९६९)
शृणु वहितो राजञ्जापकानां गतिं विभो ।
यथा गच्छन्ति निरयमनेकं पुरुषर्षभ ॥ १२-१९५-२ (७२७१६)
यथोक्तमेतत्पूर्वं यो नानुतिष्ठति जापकः ॥
एकदेशक्रियश्चात्र निरयं स निगच्छति ॥ १२-१९५-३ (७२७१७)
अवमानेन कुरुते न तुष्यति न शोचति ।
ईदृशो जापको याति निरयं नात्र संशयः ॥ १२-१९५-४ (७२७१८)
अहंकारकृतश्चैव सर्वे निरयग्रामिनः ।
परावमानी पुरुषो भविता निरयोपगः ॥ १२-१९५-५ (७२७१९)
अभिध्यापूर्वकं जप्यं कुरुते यश्च मोहितः ।
यत्रास्य रागः पतति तत्रतत्रोपपद्यते ॥ १२-१९५-६ (७२७२०)
अथैश्वर्यप्रसक्तः सञ्जापको यत्र रज्यते ।
स एव निरयस्तस्य नासौ तस्मात्प्रमुच्यते ॥ १२-१९५-७ (७२७२१)
रागेण जापको जप्यं कुरुते यश्च मोहितः ।
यत्रास्य रागः पतति तत्र तत्रोपजायते ॥ १२-१९५-८ (७२७२२)
दुर्बुद्धिरकृतप्रज्ञश्चले मनसि तिष्ठति ।
फलस्यापचितिं याति निरयं चाधिगच्छति ॥ १२-१९५-९ (७२७२३)
अकृतव्रज्ञको बालो मोहं गच्छति जापकः ।
स मोहान्निरयं याति यत्र गत्वाऽनुशोचति ॥ १२-१९५-१० (७२७२४)
दृढग्राही करोमीति जाप्यं जपति जापकः ।
न संपूर्णो न वा युक्तो निरयं सोऽधिगच्छति ॥ १२-१९५-११ (७२७२५)
अनिमित्तं परं यत्तदव्यक्तं ब्रह्मणि स्थितम् ।
तद्भूतो जापकः कस्मात्सशरीरमिहाविशेत् ॥ १२-१९५-१२ (७२७२६)
दुष्प्रज्ञानेन निरया बहवः समुदाहृताः ।

प्रशस्तं जापकत्वं च दोषाश्चैते तदात्मकाः ॥ ॥ १२-१९५-१३ (७२७२७)

इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि
पञ्चनवत्यधिकशततमोऽध्यायः ॥ १९५.।
Mahabharata - Shanti Parva - Chapter Footnotes

१२-१९५-१ यतीनामिति ध । पाठः ॥
१२-१९५-२ एतत्सर्वं य इति ट । पाठः ॥
१२-१९५-३ अपूर्णाङ्गजपपर इत्यर्थः ॥
१२-१९५-४ अवमानेनाश्रद्धया । जपे प्रीत्यादिरहितः ॥
१२-१९५-५ अहंकारकृतो दर्पवन्तः । पुरुषो जापकः ॥
१२-१९५-६ अभिध्याफलाभिसन्धिः । यत्र फले रागः प्रीतिस्तत्र
तत्फलभोगनिमित्तमुपपद्यते योग्यं देहं प्राप्नोति ॥
१२-१९५-७ स एवतत्र रागएव ॥

---

शन्तिपर्व-अध्यय१९६
॥ श्रीः ॥
१२.१९६. अध्यायः १९६

Mahabharata - Shanti Parva - Chapter Topics
भीष्मेण युधिष्ठिरंप्रति जापकोपाख्यानम् ॥ १.।
Mahabharata - Shanti Parva - Chapter Text

१२-१९६-० (७२७२८)
युधिष्ठिर उवाच। १२-१९६-०क्ष् (५९७०)
कीदृशं निरयं याति जापको वर्णयस्व मे ।
कौतूहलं हि राजन्मे तद्भवान्वक्तुमर्हति ॥ १२-१९६-१ (७२७२९)
भीष्म उवाच। १२-१९६-२क्ष् (५९७१)
धर्मस्यांशप्रसूतोऽसि धर्मज्ञोऽसि स्वभावतः ।
धर्ममूलाश्रयं वाक्यं शृणुष्वावहितोऽनघ ॥ १२-१९६-२ (७२७३०)
अमूनि यानि स्थानानि देवानाममरात्मनाम् ।
नानासंस्थानवर्णानि नानारूपफलानि च ॥ १२-१९६-३ (७२७३१)
दिव्यानि कामचारीणि विमानानि सभास्तथा ।
आक्रीडा विविधा राजन्पद्मिन्यश्चामलोदकाः ॥ १२-१९६-४ (७२७३२)
चतुर्णां लोकपालानां शुक्रस्याथ बृहस्पतेः ।
मरुतां विश्वदेवानां साध्यानामश्विनोरपि ॥ १२-१९६-५ (७२७३३)
रुद्रादित्यवसूनां च तथाऽन्येषां दिवौकसाम् ।

एते वै निरयास्तात स्थानस्य परमात्मनः ॥ १२-१९६-६ (७२७३४)
अभयं चानिमित्तं च न च क्लेशभयावृतम् ।
द्वाभ्यां मुक्तं त्रिभिर्मुक्तमष्टाभिस्त्रिभिरेव च ॥ १२-१९६-७ (७२७३५)
चतुर्लक्षणवर्जं तु चतुष्कारणवर्जितम् ।
अप्रहर्षमनानन्दमशोकं विगतक्लमम् ॥ १२-१९६-८ (७२७३६)
कालः संपच्यते तत्र कालस्तत्र न वै प्रभुः ।
स कालस्य प्रभू राजन्सर्वस्यापि तथेश्वरः ॥ १२-१९६-९ (७२७३७)
ग्एतद्वै ब्रह्मणः स्थाने जापकस्य महात्मनः ।
तत्रस्थं परमात्मानं ध्यायन्वै सुसमाहितः ।
हिरण्यगर्भः सायुज्यं प्राप्नुयाद्वा नृपोत्तम ॥' १२-१९६-१० (७२७३८)
आत्मकेवलतां प्राप्तस्तत्र गत्वा न शोचति ।
ईदृशं परमं स्थानं निरयास्ते च तादृशाः ॥ १२-१९६-११ (७२७३९)
एते ते निरयाः प्रोक्ताः सर्व एव यथातथम् ।
तस्य स्थानवरस्येह सर्वे निरयसंज्ञिताः ॥ ॥ १२-१९६-१२ (७२७४०)

इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि
षण्णवत्यधिकशततमोऽध्यायः ॥ १९६.।
Mahabharata - Shanti Parva - Chapter Footnotes

१२-१९६-२ धर्ममूलं वेदः परमात्मा च तावाश्रयौ यस्य ॥
१२-१९६-३ अमूनि वक्ष्यमाणानि देवानां दिव्यदेहानाम्
। संस्थानान्याकृतयः। वर्णाः श्वेतपीताद्याः। नानारूपाण्यनेकविधानि ॥
१२-१९६-४ आक्रौडाः उद्यानानि ॥
१२-१९६-७ अभयं नाशभयशून्यम् । अनिमित्तं
स्वभावसिद्धम्। त्रिभिर्गुणैः द्वाभ्यां युक्तं त्रिभिर्युक्तमिति
ट। पाठः ॥
१२-१९६-८ अप्रतर्क्यमनाद्यनन्तमशोकमिति टङ थ । पाठः ॥
१२-१९६-९ कालं संवहते तत्रेति ध । पाठः ॥

---

शन्तिपर्व-अध्यय१९७
॥ श्रीः ॥
१२.१९७. अध्यायः १९७

Mahabharata - Shanti Parva - Chapter Topics
जापकोपाख्याने कालयमधर्मविप्रेक्ष्वाक्वादीनां संवादः ॥
Mahabharata - Shanti Parva - Chapter Text

१२-१९७-० (७२७४१)
युधिष्ठिर उवाच। १२-१९७-०क्ष् (५९७२)
कालमृत्युयमानां ते इक्ष्वाकोर्ब्राह्मणस्य च ।
विवादो व्याहृतः पूर्वं तद्भवान्वक्तुमर्हति ॥ १२-१९७-१ (७२७४२)
भीष्म उवाच। १२-१९७-२क्ष् (५९७३)
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
इक्ष्वाकोः सूर्यपुत्रस्य यद्वृत्तं ब्राह्मणस्य च ॥ १२-१९७-२ (७२७४३)
कालस्य मृत्योश्च तथा यद्वृत्तं तन्निबोध मे ।
यथा स तेषां संवादो यस्मिन्स्थानेऽपि चाभवत् ।
ग्येनैव कारणेनात्र धर्मवादसमन्वितः ॥' १२-१९७-३ (७२७४४)
ब्राह्मणो जापकः कश्चिद्धर्मवृत्तो महायशाः ।
षडङ्गविन्महाप्राज्ञः पैप्पलादिः स कौशिकः ॥ १२-१९७-४ (७२७४५)
तस्यापरोक्षं विज्ञानं षडङ्गेषु वभूव ह ।
वेदेषु चैव निष्णातो हिमवत्पादसंश्रयः ॥ १२-१९७-५ (७२७४६)
सोयं ब्राह्मं पस्तेपे संहितां संयतो जपन् ।
तस्य वर्षसहस्रं तु नियमेन तथा गतम् ॥ १२-१९७-६ (७२७४७)
स देव्या दर्शितः साक्षात्प्रीतास्मीति तदा किल ।
जप्यमावर्तयंस्तूष्णीं न स तां किंचिदब्रवीत् ॥ १२-१९७-७ (७२७४८)
तस्यानुकम्पया देवी प्रीता समभवत्तदा ।
वेदमाता ततस्तस्य तज्जप्यं समपूजयत् ॥ १२-१९७-८ (७२७४९)
ग्चतुर्भिरक्षरैर्युक्ता सोमपानेऽक्षराष्टका ।
जगद्बीजसमायुक्ता चनुर्विशाक्षरात्मिका ॥' १२-१९७-९ (७२७५०)
समाप्य जप्यं तूत्थाय शिरसा पादयोस्तदा ।
पपात देव्या धर्मात्मा वचनं चेदमब्रवीत् ॥ १२-१९७-१० (७२७५१)
दिष्ट्या देवि प्रसन्ना त्वं दर्शनं चागता मम ।
यदि चापि प्रसन्नासि जप्ये मे रमतां मनः ॥ १२-१९७-११ (७२७५२)
साविञ्युवाच। १२-१९७-१२क्ष् (५९७४)
किं प्रार्थयसि विप्रर्षे किं चेष्टं करवाणि ते ।
प्रब्रूहि जपतां श्रेष्ठ सर्वं तत्ते भविष्यति ॥ १२-१९७-१२ (७२७५३)
इत्युक्तः स तदा देव्या विप्रः प्रोवाच धर्मवित् ।
जप्यं प्रति ममेच्छेयं वर्धत्विति पुनः पुनः ॥ १२-१९७-१३ (७२७५४)
मनसश्च समाधिर्मे वर्धेताहरहः शुभे ।
तत्तथेति ततो देवी मधुरं प्रत्यभाषत ॥ १२-१९७-१४ (७२७५५)
इदं चैवापरं प्राह देवी तत्प्रियकाम्यया ।
निरयं नैव याता त्वं यत्र याता द्विजर्षभाः ॥ १२-१९७-१५ (७२७५६)

यास्यसि ब्रह्मणः स्थानमनिमित्तमतन्द्रितः ।
साधु ते भविता चैतद्यत्त्वयाऽहमिहार्थिता ॥ १२-१९७-१६ (७२७५७)
नियतो जप चैकाग्रो धर्मस्त्वां समुपैष्यति ।
कालो मृत्युर्यमश्चैव समायास्यन्ति तेऽन्तिकम् ।
भविता च विवादोऽत्र तव तेषां च धर्मतः ॥ १२-१९७-१७ (७२७५८)
भीष्म उवाच। १२-१९७-१८क्ष् (५९७५)
एवमुक्त्वा भगवती जगाम भवनं स्वकम् ॥ १२-१९७-१८ (७२७५९)
ब्राह्मणोऽपि जपन्नास्ते दिव्यं वर्षशतं तथा ।
सदा दान्तो जितक्रोधः सत्यसन्धोऽनसूयकः ॥ १२-१९७-१९ (७२७६०)
समाप्ते नियमे तस्मिन्नथ विप्रस्य धीमतः ।
साक्षात्प्रीतस्तदा धर्मो दर्शयामास तं द्विजम् ॥ १२-१९७-२० (७२७६१)
धर्म उवाच। १२-१९७-२१क्ष् (५९७६)
द्विजाते पश्य मां धर्ममहं त्वां द्रष्टुमागतः ।
जप्यस्यास्य फलं यत्तत्प्रंप्राप्तं तच्च मे शृणु ॥ १२-१९७-२१ (७२७६२)
जिता लोकास्त्वया सर्वे ये दिव्या ये च मानुषाः ।
देवानां निलयान्साधो सर्वानुत्क्रम्य यास्यसि ॥ १२-१९७-२२ (७२७६३)
प्राणत्यागं कुरु मुने गच्छ लोकान्यथेप्सितान् ।
त्यक्त्वाऽऽत्मनः शरीरं च ततो लोकानवाप्स्यसि ॥ १२-१९७-२३ (७२७६४)
ब्राह्मण उवाच। १२-१९७-२४क्ष् (५९७७)
कृतं लोकेन मे धर्म गच्छ त्वं च यथासुखम् ।
बहुदुःखमहं देहं नोत्सृजेयमहं विभो ॥ १२-१९७-२४ (७२७६५)
धर्म उवाच। १२-१९७-२५क्ष् (५९७८)
ग्अचलं ते मनः कृत्वा त्यज देहं महामते ।
अनेन किं ते संयोगः कथं मोहं गमिष्यसि ॥' १२-१९७-२५ (७२७६६)
अवश्यं भोः शरीरं ते त्यक्तव्यं मुनिपुङ्गव ।
स्वर्गमारोह भो विप्र किं वा वै रोचतेऽनघ ॥ १२-१९७-२६ (७२७६७)
ब्राह्मण उवाच। १२-१९७-२७क्ष् (५९७९)
किमुक्तं धर्म किं नेति कस्मान्मां प्रोक्तवानसि ।
त्यज देहं द्विजेति त्वं ससंबुध्यात्र मे यदि ॥ १२-१९७-२७ (७२७६८)
न रोचये स्वर्गवासं विना देहमहं विभो ।
गच्छ धर्म न मे श्रद्धा स्वर्गं गन्तुं विनाऽऽत्मना ॥ १२-१९७-२८ (७२७६९)
धर्म उवाच। १२-१९७-२९क्ष् (५९८०)
अलं देहे मनः कृत्वा त्यक्त्वा देहं सुखी भव ।
गच्छ लोकानरजसो यत्र गत्वा न शोचसि ॥ १२-१९७-२९ (७२७७०)
ब्राह्मण उवाच। १२-१९७-३०क्ष् (५९८१)

रमे जपन्महाभाग कृतं लोकैः सनातनैः ।
सशरीरेण गन्तव्यं मया स्वर्गं न चान्यथा ॥ १२-१९७-३० (७२७७१)
धर्म उवाच। १२-१९७-३१क्ष् (५९८२)
ग्एवं ते कायसंप्रातिर्वर्तते मुनिसत्तम।'
यदि त्वं नेच्छसि त्यक्तुं शरीरं पश्य वै द्विज ।
एष कालस्तथा मृत्युर्यमश्च त्वामुपागताः ॥ १२-१९७-३१ (७२७७२)
भीष्म उवाच। १२-१९७-३२क्ष् (५९८३)
अथ वैवस्वतः कालो मृत्युश्च त्रितयं विभो ।
ब्राह्मणं तं महाभागमुपगम्येदमब्रवन् ॥ १२-१९७-३२ (७२७७३)
यम उवाच। १२-१९७-३३क्ष् (५९८४)
तपसोऽस्य सुतप्तस्य तथा सुचरितस्य च ।
फलप्राप्तिस्तव श्रेष्ठा यमोऽहं त्वामुपब्रुवे ॥ १२-१९७-३३ (७२७७४)
काल उवाच। १२-१९७-३४क्ष् (५९८५)
यथा वदस्य जप्यस्य फलं प्राप्तस्त्वमुत्तमम् ।
कालस्ते स्वर्गमारोहुं कालोऽहं त्वामुपागतः ॥ १२-१९७-३४ (७२७७५)
मृत्युरुवाच। १२-१९७-३५क्ष् (५९८६)
मृत्युं मां विद्धि धर्मज्ञ रूपिणं स्वयमागतम् ।
कालेन चोदितो विप्र त्वामितो नेतुमद्य वै ॥ १२-१९७-३५ (७२७७६)
ब्राह्मण उवाच। १२-१९७-३६क्ष् (५९८७)
स्वागतं सूर्यपुत्राय कालाय च महात्मने ।
मृत्यवे चाथ धर्माय किं कार्यं करवाणि वः ॥ १२-१९७-३६ (७२७७७)
भीष्म उवाच। १२-१९७-३७क्ष् (५९८८)
अर्घ्यं पाद्यं च दत्त्वा स तेभ्यस्तत्र समागम ।
अब्रवीत्परमप्रीतः स्वशक्त्या किं करोमि वः ॥ १२-१९७-३७ (७२७७८)
ग्स्वकार्यनिर्भरा यूयं परोपद्रवहेतवः ।
भवन्तो लोकसामान्याः किमर्थं ब्रूत सत्तमाः ॥ १२-१९७-३८ (७२७७९)
यम उवाच। १२-१९७-३९क्ष् (५९८९)
वयमप्येवमत्युग्रा धातुराज्ञापुरः सराः ।
चोदिता धावमाना वै कर्मभावमनुव्रताः ॥ १२-१९७-३९ (७२७८०)
भीष्म उवाच।' १२-१९७-४०क्ष् (५९९०)
तस्मिन्नेवाथ काले तु तीर्थयात्रामुपागतः ।
इक्ष्वाकुरगमत्तत्र समेता यत्र ते विभो ॥ १२-१९७-४० (७२७८१)
सर्वानेव तु राजर्षिः संपूज्याथ प्रणम्य च ।
कुशलप्रश्नमकरोत्सर्वेषां राजसत्तमः ॥ १२-१९७-४१ (७२७८२)
तस्मै सोऽथासनं दत्त्वा पाद्यमर्घ्यं तथैव च ।
अब्रवीद्ब्राह्मणो वाक्यं कृत्वा कुशलसंविदम् ॥ १२-१९७-४२ (७२७८३)

स्वागतं ते महाराज ब्रूहि यद्यदिहेच्छसि ।
स्वशक्त्या किं करोमीह तद्भवान्प्रब्रवीतु माम ॥ १२-१९७-४३ (७२७८४)
राजोवाच। १२-१९७-४४क्ष् (५९९१)
राजाऽहं ब्राह्मणश्च त्वं यदा षट्कर्मसंस्थितः ।
ददानि वसु किंचित्ते प्रार्थितं तद्वदस्व मे ॥ १२-१९७-४४ (७२७८५)
ब्राह्मण उवाच। १२-१९७-४५क्ष् (५९९२)
द्विविधो ब्राह्मणो राजन्धर्मश्च द्विविधः स्मृतः ।
प्रवृत्तश्च निवृत्तश्च निवृत्तोऽह प्रतिग्रहात् ॥ १२-१९७-४५ (७२७८६)
तेभ्यः प्रयच्छ दानानि ये प्रवृत्ता नराधिप ।
अहं न प्रतिगृह्णामि किमिष्टं किं ददामि ते ।
ब्रूहि त्वं नृपतिश्रेष्ठ तपसा साधयामि किम् ॥ १२-१९७-४६ (७२७८७)
राजोवाच। १२-१९७-४७क्ष् (५९९३)
क्षत्रियोऽहं न जानामि देहीति वचनं क्वचित् ।
प्रयच्छ युद्धमित्येववादी चास्मि द्विजोत्तम ॥ १२-१९७-४७ (७२७८८)
ब्राह्मण उवाच। १२-१९७-४८क्ष् (५९९४)
तुष्यसि त्वं स्वधर्मेण तथा तुष्टा वयं नृप ।
अन्योन्यस्योत्तरं नास्ति यदिष्टं तत्समाचर ॥ १२-१९७-४८ (७२७८९)
राजोवाच। १२-१९७-४९क्ष् (५९९५)
स्वशक्त्याऽहं ददानीति त्वया पूर्वमुदाहृतम् ।
याचे त्वां दीयतां मह्यं जप्यस्यास्य फलं द्विज ॥ १२-१९७-४९ (७२७९०)
ब्राह्मण उवाच। १२-१९७-५०क्ष् (५९९६)
युद्धं मम सदा वाणी याचतीति विकत्थसे ।
न च युद्धं मया सार्धं किमर्थं याचसे पुनः ॥ १२-१९७-५० (७२७९१)
राजोवाच। १२-१९७-५१क्ष् (५९९७)
वाग्वज्राब्राह्मणाः प्रोक्ताः क्षत्रिया बाहुजीविनः ।
वाग्युद्धं तदिदं तीव्रं मम विप्र त्वया सह ॥ १२-१९७-५१ (७२७९२)
ब्राह्मण उवाच। १२-१९७-५२क्ष् (५९९८)
सेयमद्य प्रतिज्ञा मे स्वशक्त्या किं प्रदीयताम् ।
ब्रूहि दास्यामि राजेन्द्र विभवे सति माचिरम् ॥ १२-१९७-५२ (७२७९३)
राजोवाच। १२-१९७-५३क्ष् (५९९९)
यत्तद्वर्षशतं पूर्णं जप्यं वै जपता त्वया ।
फलं प्राप्तं तत्प्रयच्छ मम दित्सुर्भवान्यदि ॥ १२-१९७-५३ (७२७९४)
ब्राह्मण उवाच। १२-१९७-५४क्ष् (६०००)
परमं गृह्यतां तस्य फलं यज्जपितं मया ।
अर्धं त्वमविचारेण फलं तस्य ह्यवाप्नुहि ॥ १२-१९७-५४ (७२७९५)
अथवा सर्वमेवेह मामकं जापकं फलम् ।

राजन्प्राप्नुहि कामं त्वं यदि सर्वमिहेच्छसि ॥ १२-१९७-५५ (७२७९६)
राजोवाच। १२-१९७-५६क्ष् (६००१)
कृतं सर्वेण भद्रं ते जप्यं यद्याचितं मया ।
स्वस्ति तेऽस्तु गमिष्यामि किंच तस्य फलं वद ॥ १२-१९७-५६ (७२७९७)
ब्राह्मण उवाच। १२-१९७-५७क्ष् (६००२)
फलप्राप्तिं न जानामि दत्तं यज्जपितं मया ।
अयं धर्मश्च कालश्च यमो मृत्युश्च साक्षिणः ॥ १२-१९७-५७ (७२७९८)
राजोवाच। १२-१९७-५८क्ष् (६००३)
अज्ञातमस्य धर्मस्य फलं किं मे करिष्यति ।
फलं ब्रवीषि धर्मस्य न चेज्जप्यकृतस्य माम् ।
प्राप्नोतु तत्फलं विप्रो नाहमिच्छे ससंशयम् ॥ १२-१९७-५८ (७२७९९)
ब्राह्मण उवाच। १२-१९७-५९क्ष् (६००४)
नाददेऽपरदत्तं वै दत्तं वा चाफलं मया ।
वाक्यं प्रमाणं राजर्षे ममाद्य तव चैव हि ॥ १२-१९७-५९ (७२८००)
सकृदंशो निपतति सकृत्कन्या प्रदीतये ।
सकृदेव ददानीति त्रीण्येतानि सकृत्सकृत् ॥ १२-१९७-६० (७२८०१)
नाभिसंधिर्मया जप्ये कृतपूर्वः कदाचन ।
जप्यस्य राजशार्दूल कथं वेत्स्याम्यहं फलम् ॥ १२-१९७-६१ (७२८०२)
ददस्वेति त्वया चोक्तं दत्तं वाचा फलं मया ।
न वाचं दूषयिष्यामि सत्यं रक्ष स्थिरो भव ॥ १२-१९७-६२ (७२८०३)
अथैवं वदतो मेऽद्य वचनं न करिष्यसि ।
महानधर्मो भविता तव राजन्मृषा कृतः ॥ १२-१९७-६३ (७२८०४)
न युक्ता तु मृषावाणी त्वया वक्तुमरिंदम ।
तथा मयाऽप्यभिहितं मिथ्या कर्तुं न शक्यते ॥ १२-१९७-६४ (७२८०५)
संश्रुतं च मया पूर्वं ददानीत्यविचारितम् ।
तद्गृह्णीष्वाविचारेण यदि सत्ये स्थितो भवान् ॥ १२-१९७-६५ (७२८०६)
इहागम्य हि मां राजञ्जाप्यं फलमयाचथाः ।
तन्मे निसृष्टं गृह्णीष्व भव सत्येस्थितोपि च ॥ १२-१९७-६६ (७२८०७)
नायं लोकोऽस्ति न परो न च पूर्वान्स तारयेत् ।
कुत एवापरान्राजन्मृषावादपरायणः ॥ १२-१९७-६७ (७२८०८)
न यज्ञाध्ययने दानं नियमास्तारयन्ति हि ।
यथा सत्यं परे लोके तथेह पुरुषर्षभ ॥ १२-१९७-६८ (७२८०९)
तपांसि यानि चीर्णानि चरिष्यन्ति च यत्तपः ।
समाशतैः सहस्रैश्च तत्सत्यान्न विशिष्यते ॥ १२-१९७-६९ (७२८१०)
सत्यमेकं परं ब्रह्म सत्यमेकं परं तपः ।
सत्यमेकं परो यज्ञः सत्यमेकं परं श्रुतम् ॥ १२-१९७-७० (७२८११)

सत्यं वेदेषु जागर्ति फलं सत्ये परं स्मृतम् ।
तपो धर्मो दमश्चैव सर्वं सत्ये प्रतिष्ठितम् ॥ १२-१९७-७१ (७२८१२)
सत्यं वेदास्तथाङ्गानि सत्यं यज्ञास्तथा विधिः ।
व्रतचर्या तथा सत्यमोंकारः सत्यमेव च ॥ १२-१९७-७२ (७२८१३)
प्राणिनां जननं सत्यं सत्यं सन्ततिरेव च ।
सत्येन वायुरभ्येति सत्येन तपते रविः ॥ १२-१९७-७३ (७२८१४)
सत्येन चाग्निर्दहति स्वर्गः सत्ये प्रतिष्ठितः ।
सत्यं यज्ञस्तपो वेदाः स्तोभा मन्त्राः सरस्वती ॥ १२-१९७-७४ (७२८१५)
तुलामारोपितो धर्मः सत्यं चैवेति नः श्रुतम् ।
समां कक्षां धारयतो यः सत्यं ततोऽधिकम् ॥ १२-१९७-७५ (७२८१६)
यतो धर्मस्ततः सत्यं सर्वं सत्येन वर्धते ।
किमर्थमनृतं कर्म कर्तुं राजंस्त्वमिच्छसि ॥ १२-१९७-७६ (७२८१७)
सत्ये कुरु स्थिरं भावं मा राजन्ननृतं कृथाः ।
कस्मात्त्वमनृतं वाक्यं देहीति कुरुषेऽशुभम् ॥ १२-१९७-७७ (७२८१८)
यदि जप्यफलं दत्तं मया नेच्छसि वै नृप ।
स्वधर्मेभ्यः परिभ्रष्टो लोकाननुचरिष्यसि ॥ १२-१९७-७८ (७२८१९)
संश्रुत्य यो न दित्सेत याचित्वा यश्च नेच्छति ।
उभावानृतिकावेतो न मृपा कर्तुमर्हसि ॥ १२-१९७-७९ (७२८२०)
राजोवाच। १२-१९७-८०क्ष् (६००५)
योद्धव्यं रक्षितव्यं च क्षत्रधर्मः किल द्विज ।
दातारः क्षत्रियाः प्रोक्ता गृह्णीयां भवतः कथम् ॥ १२-१९७-८० (७२८२१)
ब्राह्मण उवाच। १२-१९७-८१क्ष् (६००६)
न च्छन्दयामि ते राजन्नापि ते गृहमाव्रजम् ।
इहागम्य तु याचित्वा न गृह्णीषे पुनः कथम् ॥ १२-१९७-८१ (७२८२२)
धर्म उवाच। १२-१९७-८२क्ष् (६००७)
अविवादोऽस्तु युवयोर्वित्तं मां धर्ममागतम् ।
द्विजो दानफलैर्युक्तो राजा सत्यफलेन च ॥ १२-१९७-८२ (७२८२३)
स्वर्ग उवाच। १२-१९७-८३क्ष् (६००८)
स्वर्गं मां विद्धि राजेन्द्र रूपिणं स्वयमागतम् ।
अविवादोऽस्तु युवयोरुभौ तुल्यफलौ युवाम् ॥ १२-१९७-८३ (७२८२४)
राजोवाच। १२-१९७-८४क्ष् (६००९)
कृतं स्वर्गेण मे कार्यं गच्छ स्वर्ग यथागतम् ।
विप्रो यदीच्छते दातुं चीर्णं गृह्णातु मे फलम् ॥ १२-१९७-८४ (७२८२५)
ब्राह्मण उवाच। १२-१९७-८५क्ष् (६०१०)
बाल्ये यदि स्मादज्ञानान्मया हस्तः प्रसारितः ।
निवृत्तलक्षणं धर्ममुपासे संहितां जपन् ॥ १२-१९७-८५ (७२८२६)

निवृत्तं मां चिराद्राजन्विप्रलोभयसे कथम् ।
स्वेन कार्यं करिष्यामि त्वत्तो नेच्छे फलं नृप ।
तपःस्वाध्यायशीलोऽहं निवृत्तश्च प्रतिग्रहात् ॥ १२-१९७-८६ (७२८२७)
राजोवाच। १२-१९७-८७क्ष् (६०११)
यदि विप्र विसृष्टं ते जप्यस्य फलमुत्तमम् ।
आवयोर्यत्फलं किंचित्सहितं नौ तदस्त्विह ॥ १२-१९७-८७ (७२८२८)
द्विजाः प्रतिग्रहे युक्ता दातारो राजवंशजाः ।
यदि धर्मः क्षुतो विप्र सहैव फलमस्तु नौ ॥ १२-१९७-८८ (७२८२९)
मा वा भूत्सह भोज्यं नौ मदीयं फलमाप्नुहि ।
प्रतीच्छ मत्कृतं धर्मं यदि ते मय्यनुग्रहः ॥ १२-१९७-८९ (७२८३०)
भीष्म उवाच। १२-१९७-९०क्ष् (६०१२)
ततो विकृतवैषौ द्वौ पुरुषौ समुपस्थितौ ।
गृहीत्वाऽन्योन्यमावेष्ठ्य कुचेलावूचतुर्वचः ॥ १२-१९७-९० (७२८३१)
न मे धारयसीत्येको धारयामीति चापरः ।
इहास्ति नौ विवादोऽयमयं राजाऽनुशासकः ॥ १२-१९७-९१ (७२८३२)
सत्यं ब्रवीम्यहमिदं न मे धारयते भवान् ।
अनृतं वदसीह त्वमृणं ते धारयाम्यहम्। १२-१९७-९२ (७२८३३)
तावुभौ सुभृशं तप्तौ राजानमिदमूचतुः ।
परीक्ष्यौ तु यथा स्याव नावामिह विगर्हितौ ॥ १२-१९७-९३ (७२८३४)
विरूप उवाच। १२-१९७-९४क्ष् (६०१३)
धारयामि नरव्याघ्र विकृतस्येह गोः फलम् ।
ददतश्च न गृह्णाति विकृतो मे महीपते ॥ १२-१९७-९४ (७२८३५)
विकृत उवाच। १२-१९७-९५क्ष् (६०१४)
न मे धारयते किंचिद्विरूपोऽयं नराधिप ।
मिथ्या ब्रवीत्ययं हि त्वां सत्याभासं नराधिप ॥ १२-१९७-९५ (७२८३६)
राजोवाच। १२-१९७-९६क्ष् (६०१५)
विरूप किं धारयते भवानस्य ब्रवीतु मे ।
श्रुत्वा तथा करिष्येऽहमिति मे धीयते मनः ॥ १२-१९७-९६ (७२८३७)
विरूप उवाच। १२-१९७-९७क्ष् (६०१६)
शृणुष्वावहितो राजन्यथैतद्धारयाम्यहम् ।
विकृतस्यास्य राजर्षे निखिलेन नराधिप ॥ १२-१९७-९७ (७२८३८)
अनेन धर्मप्राप्त्यर्थं शुभा दत्ता पुराऽनघ ।
धेनुर्विप्राय राजर्षे तपःस्वाध्यायशीलिने ॥ १२-१९७-९८ (७२८३९)
तस्याश्चायं मया राजन्फलमभ्येत्य याचितः ।
विकृतेन च मे दत्तं विशुद्धेनान्तरात्मना ॥ १२-१९७-९९ (७२८४०)
ततो मे सुकृतं कर्म कृतमात्मविशुद्धये ।

गावौ च कपिले क्रीत्वा वत्सले बहुदोहने ॥ १२-१९७-१०० (७२८४१)
ते चोञ्छवृत्तये राजन्मया समुपवर्जिते ।
यथाविधि यथाश्रद्धं तदस्याहं पुनः प्रभो ॥ १२-१९७-१०१ (७२८४२)
इहाद्यैव प्रयच्छामि गृहीत्वा द्विगुणां फलम् ।
एवं स्यात्पुरुषव्याघ्र कःशुद्धः कोऽत्र दोषवान् ॥ १२-१९७-१०२ (७२८४३)
एवं विवदमानौ स्वस्त्यामिहाभ्यागतौ नृप ।
कुरु धर्ममधर्मं वा विनये नौ समादध ॥ १२-१९७-१०३ (७२८४४)
यदि नेच्छति मे दानं यथा दत्तमनेन वै ।
भवानत्र स्थिरो भूत्वा मार्गे स्थापयिताऽद्य नौ ॥ १२-१९७-१०४ (७२८४५)
राजोवाच। १२-१९७-१०५क्ष् (६०१७)
दीयमानं न गृह्णासि ऋणं कस्मात्त्वमद्य वै ।
यथैव तेऽभ्यनुज्ञातं यथा गृह्णीष्व माचिरम् ॥ १२-१९७-१०५ (७२८४६)
विकृत उवाच। १२-१९७-१०६क्ष् (६०१८)
दीयतामित्यनेनोक्तं ददानीति तथा मया ।
नायं मे धारयत्यत्र गच्छतां यत्र वाञ्छति ॥ १२-१९७-१०६ (७२८४७)
राजोवाच। १२-१९७-१०७क्ष् (६०१९)
ददतोऽस्य न गृह्णासि विषमं प्रतिभाति मे ।
दण्ड्यो हि त्वं मम मतो नास्त्यत्र खलु संशयः ॥ १२-१९७-१०७ (७२८४८)
विकृत उवाच। १२-१९७-१०८क्ष् (६०२०)
मयाऽस्य दत्तं राजर्षे गृह्णीयां तत्कथं पुनः ।
को ममात्रापराधो मे दण्डमाज्ञापय प्रभो ॥ १२-१९७-१०८ (७२८४९)
विरूप उवाच। १२-१९७-१०९क्ष् (६०२१)
दीयमानं यदि मया न गृह्णासि कथंचन ।
नियच्छति त्वां नृपतिरयं धर्मानुशासकः ॥ १२-१९७-१०९ (७२८५०)
विकृत उवाच। १२-१९७-११०क्ष् (६०२२)
स्वयं मया याचितेन दत्तं कथमिहाद्य तत् ।
गृह्णीयां गच्छतु भवानभ्यनुज्ञां ददानि ते ॥ १२-१९७-११० (७२८५१)
ब्राह्मण उवाच। १२-१९७-१११क्ष् (६०२३)
श्रुतमेतत्त्वया राजन्ननयोः कथितं द्वयोः ।
प्रतिज्ञातं मया यत्ते तद्गृहाणाविचारितम् ॥ १२-१९७-१११ (७२८५२)
राजोवाच। १२-१९७-११२क्ष् (६०२४)
प्रस्तुतं सुमहत्कार्यमनयोर्गह्वरं यथा ।
जापकस्य दृढीकारः कथमेतद्भविष्यति ॥ १२-१९७-११२ (७२८५३)
यदि तावन्न गृह्णामि जापकेनापवर्जितम् ।
कथं न लिप्येयमहं पापेन महताऽद्य वै ॥ १२-१९७-११३ (७२८५४)
तौ चोवाच स राजर्षिः कृतकार्यौ गमिष्यथः ।

नेदानीं मामिहासाद्य राजधर्मो भवेन्मृषा ॥ १२-१९७-११४ (७२८५५)
स्वधर्मः परिपाल्यस्तु राज्ञामिति विनिश्चयः ।
विप्रधर्मश्च गहनो मामनात्मानमाविशत् ॥ १२-१९७-११५ (७२८५६)
ब्राह्मण उवाच। १२-१९७-११६क्ष् (६०२५)
गृहाण धारयेऽहं च याचितं संश्रुतं मया ।
न चेद्ग्रहीष्यसे राजञ्शपिष्ये त्वां न संशयः ॥ १२-१९७-११६ (७२८५७)
राजोवाच। १२-१९७-११७क्ष् (६०२६)
धिग्राजधर्मं यस्यायं कार्यस्येह विनिश्चयः ।
इत्यर्थं मे ग्रहीतव्यं कथं तुल्यं भवेदिति ॥ १२-१९७-११७ (७२८५८)
एष पाणिरपूर्वं मे निक्षेपार्थं प्रसारितः ।
यन्मे धारयसे विप्र तदिदानीं प्रदीयताम् ॥ १२-१९७-११८ (७२८५९)
ब्राह्मण उवाच। १२-१९७-११९क्ष् (६०२७)
संहितां जपता यावान्गुणः कश्चित्कृतो मया ।
तत्सर्वं प्रतिगृह्णीष्व यदि किंचिदिहास्ति मे ॥ १२-१९७-११९ (७२८६०)
राजोवाच। १२-१९७-१२०क्ष् (६०२८)
जलमेतन्निपतितं मम पाणौ द्विजोत्तम ।
सममस्तु सहैवास्तु प्रतिगृह्णातु वै भवान् ॥ १२-१९७-१२० (७२८६१)
विरूप उवाच। १२-१९७-१२१क्ष् (६०२९)
कामक्रोधौ विद्धि नौ त्वमावाभ्यां कारितो भवान् ।
ग्जिज्ञासमानौ युवयोर्मनोत्थं तु द्विजोत्तम ॥' १२-१९७-१२१ (७२८६२)
सहेति च यदुक्तं ते समा लोकास्तवास्य च ।
नायं धारयते किंचिज्जिज्ञासा त्वत्कृते कृता ॥ १२-१९७-१२२ (७२८६३)
कालो धर्मस्तथा मृत्युः कामक्रोधौ तथा युवाम् ।
सर्वमन्योन्यनिष्कर्षे निकृष्टं पश्यतस्तव ॥ १२-१९७-१२३ (७२८६४)
ग्सर्वेषामुपरिस्थानं ब्रह्मणो व्यक्तजन्मनः ।
युवयोः स्थानमूलं निर्द्वन्द्वममलात्मकम् ॥ १२-१९७-१२४ (७२८६५)
सर्वे गच्छाम यत्र स्वान्स्वाँल्लोकांश्च तथा वयम्।'
गच्छ लोकाञ्जितान्स्वेन कर्मणा यत्र वाञ्छसि ॥ १२-१९७-१२५ (७२८६६)
ग ततो धर्मयमाद्यास्ते वाक्यमूचुर्नपर्द्विजौ ।
अस्माकं यः स्मृतो मूर्धा ब्रह्मलोकमिति स्मृतं ॥ १२-१९७-१२६ (७२८६७)
तत्रस्थौ हि भवन्तौ हि युवाभ्यां निर्जिता वयम् ।
युवयोः काम आपन्नस्तत्काम्यमविशङ्कया ॥' १२-१९७-१२७ (७२८६८)
भीष्म उवाच। १२-१९७-१२८क्ष् (६०३०)
जापकानां फलावाप्तिर्मया ते संप्रदर्शिता ।
गतिः स्थानं च लोकाश्च जापकेन यथा जिताः ॥ १२-१९७-१२८ (७२८६९)
प्रयाति संहिताध्यायी ब्रह्माणं परमेष्ठिनम् ।

अथवाऽग्निं समायाति सूर्यमाविशतेऽपि वा ॥ १२-१९७-१२९ (७२८७०)
स तैजसेन भावेन यदि तत्र रमत्युत ।
गुणांस्तेषां समाधत्ते रागेण प्रतिमोहितः ॥ १२-१९७-१३० (७२८७१)
एवं सोमे तथा वायौ भूम्याकाशशरीरगः ।
सरागस्तत्र वसति गुणांस्तेषां समाचरन् ॥ १२-१९७-१३१ (७२८७२)
अथ तत्र विरागी स परं गच्छत्यसंशयम् ।
परमव्ययमिच्छन्स तमेवाविशते पुनः ॥ १२-१९७-१३२ (७२८७३)
अमृताच्चामृतं प्राप्तः शान्तीभूतो निरात्मवान् ।
ब्रह्मभूतः स निर्द्वन्द्वः सुखी शान्तो निरामयः ॥ १२-१९७-१३३ (७२८७४)
ब्रह्मस्थानमनावर्तमेकमक्षरसंज्ञकम् ।
अदुःखमजरं शान्तं स्थानं तत्प्रतिपद्यते ॥ १२-१९७-१३४ (७२८७५)
चतुर्भिर्लक्षणैर्हीनं तथा षड्भिः सषोडशैः ।
पुरुषं तमतिक्रम्य आकाशं प्रतिपद्यते ॥ १२-१९७-१३५ (७२८७६)
अथ नेच्छति रागात्मा सर्वं तदधितिष्ठति ।
यच्च प्रार्थयते तच्च मनसा प्रतिपद्यते ॥ १२-१९७-१३६ (७२८७७)
अथवा चेक्षते लोकान्सर्वान्निरयसंज्ञितान् ।
निस्पृहः सर्वतो मुक्तस्तत्र वै रमते सुखम् ॥ १२-१९७-१३७ (७२८७८)
एवमेषा महाराज जापकस्य गतिर्यथा ।
एतत्ते सर्वमाख्यातं किं भूयः श्रोतुमर्हसि ॥ ॥ १२-१९७-१३८ (७२८७९)

इति श्रीमन्महाभारते सान्तिपर्वणि मोक्षधर्मपर्वणि
सप्तनवत्यधिकशततमोऽध्यायः ॥ १९७.।
Mahabharata - Shanti Parva - Chapter Footnotes

१२-१९७-१ आयुःपरिच्छेदिका देवता कालः । प्राणवियोजिका
मृत्युः। पुण्यापुण्यफलदायिका यमः। तत् तम् ॥
१२-१९७-२ सूर्यपुत्रस्य यमस्य ॥
१२-१९७-४ जापको मन्त्राध्ययनपरः । पैप्पलाद इति ड। पाठः ॥
१२-१९७-७ देव्या सावित्र्या दर्शितो दर्शनदानेनानुगृहीतः ॥
१२-१९७-१४ समाधिर्नियमः ॥
१२-१९७-१५ निरयं स्वर्गं क्षयिणम् । याता यास्यसि। याता गताः ॥
१२-१९७-१६ अनिमित्तमजन्यम् । यज्जप्ये मे रमतां मन इति ॥
१२-१९७-२० दर्शयामास आत्मानं दर्शितवान् ॥
१२-१९७-२४ बहुदुःखसुखमिति झ।ध । पाठः ॥
१२-१९७-५६ कृतमलं सर्वेण जपफलेन ॥
१२-१९७-५७ यज्जपितं जप्यं तस्येति शेषः ॥

१२-१९७-६१ अभिसंधिः कामः । निष्कामस्य जपस्यानन्तं फलमिति भावः ॥
१२-१९७-६२ दूषयिष्यामि अन्यथाकरिष्यामि ॥
१२-१९७-६६ मे मया निसृष्टं दत्तम् ॥
१२-१९७-७७ देहीति उक्त्वेति शेषः ॥
१२-१९७-८१ न च्छन्दयामि प्रतिगृह्णीष्वेति न प्रार्थितवानस्मि ॥
१२-१९७-८४ तत्प्रतीच्छतु मे फलमिति ध । पाठः। बहु गृह्णातु
मे फलमिति ट। पाठः ॥
१२-१९७-९० द्वौ पुरुषौ कामक्रोधौ ॥
१२-१९७-९३ परीक्ष्य त्वं यथा स्यावो नावामिति झ । पाठः ॥
१२-१९७-९४ प्रार्थना हि राज्ञोऽननुरूपेति तस्य कामो विकृतसंज्ञः
। शान्तिस्वभावस्यापि जापकस्य याचित्वापि दीयमानं न गृह्णातीति
राजानं प्रति यः क्रोधः स विरूपसंज्ञः। गोः फलं वाचं
धेनुमुपासीतेति श्रुतेर्धेनुसरूप्रायाः वाचः। जपस्य फलमित्यर्थः ॥
१२-१९७-९८ धेनुर्वाक् । विप्राय परमेश्वराय ॥
१२-१९७-१०६ धारयामीति झ । ट। पाठः ॥
१२-१९७-११८ निक्षेपार्थं प्रतिगृह्य प्रदानार्थम् ॥
१२-१९७-१३१ तेषां सूर्यादिलोकपालानां गुणान् प्रकाशकत्वादीन् ॥

---

शन्तिपर्व-अध्यय१९८
॥ श्रीः ॥
१२.१९८. अध्यायः १९८

Mahabharata - Shanti Parva - Chapter Topics
भीष्मेण युधिष्ठिरंप्रति जपस्य फलकथनपूर्वकं
जापकोपाख्यानसमापनम् ॥१.।
Mahabharata - Shanti Parva - Chapter Text

१२-१९८-० (७२८८०)
युधिष्ठिर उवाच। १२-१९८-०क्ष् (६०३१)
किमुत्तरं तदा तौ स्म चक्रतुस्तस्य भाषिते ।
ब्राह्मणो वाऽथवा राजा तन्मे ब्रूहि पितामह ॥१२-१९८-१ (७२८८१)
अथवा तौ गतौ तत्र यदेतत्कीर्तितं त्वया ।
संवादो वा तयोः कोऽभूत्किं वा तौ तत्र चक्रतुः ॥१२-१९८-२ (७२८८२)
भीष्म उवाच। १२-१९८-३क्ष् (६०३२)
तथेत्येवं प्रतिश्रुत्य धर्मं संपूज्य जापकः ।
यमं कालं च मृत्युं च स्वर्गं संपूज्य चार्हतः ॥१२-१९८-३ (७२८८३)
पूर्वं ये चापरे तत्र समेता ब्राह्मणर्षभाः ।

सर्वान्संपूज्य शिरसा राजानं सोऽब्रवीद्द्विजः ॥ १२-१९८-४ (७२८८४)
फलेनानेन संयुक्तो राजर्षे गच्छ मुख्यताम् ।
भवता चाभ्यनुज्ञातो जपेयं भूय एव ह ॥ १२-१९८-५ (७२८८५)
वरश्च मम पूर्वं हि दत्तो देव्या महाबल ।
श्रद्धा ते जपतो नित्यं भवत्विति विशांपते ॥ १२-१९८-६ (७२८८६)
राजोवाच। १२-१९८-७क्ष् (६०३३)
यद्येवं सफला सिद्धिः श्रद्धा च जपितुं तव ।
गच्छ विप्र मया सार्धं जापकं फलमाप्नुहि ॥ १२-१९८-७ (७२८८७)
ब्राह्मण उवाच। १२-१९८-८क्ष् (६०३४)
कृतः प्रयत्नः सुमहान्सर्वेषां सन्निधाविह ।
सह तुल्यफलावावां गच्छावो यत्र नौ गतिः ॥ १२-१९८-८ (७२८८८)
भीष्म उवाच। १२-१९८-९क्ष् (६०३५)
व्यवसायं तयोस्तत्र विदित्वा त्रिदशेश्वरः ।
सह देवैरुपययौ लोकपालैस्तथैव च ॥ १२-१९८-९ (७२८८९)
साध्याश्च विश्वे मरुतो वाक्यानि सुमहान्ति च ।
नद्यः शैलाः समुद्राश्च तीर्थानि विविधानि च ॥ १२-१९८-१० (७२८९०)
तपांसि संयोगविधिर्वेदास्तोभाः सरस्वती ।
नारदः पर्वतश्चैव विश्वावसुर्हहाहुहूः ॥ १२-१९८-११ (७२८९१)
गन्धर्वश्चित्रसेनश्च परिवारगणैर्युतः ।
नागाः सिद्धाश्च मुनयो देवदेवः प्रजापतिः ॥ १२-१९८-१२ (७२८९२)
ग्आजगाम च देवेशो ब्रह्मा वेदमयोऽव्ययः।'
विष्णुः सहस्रशीर्षश्च देवोऽचिन्त्यः समागमत् ।
अवाद्यन्तान्तरिक्षे च भेर्यस्तूर्याणि वा विभो ॥ १२-१९८-१३ (७२८९३)
पुष्पवर्षाणि दिव्यानि तत्र तेषां महात्मनाम् ।
ननृतुश्चाप्सरः सङ्घास्तत्रतत्र समन्ततः ॥ १२-१९८-१४ (७२८९४)
अथ स्वर्गस्तथा रूपी ब्राह्मणं वाक्यमब्रवीत् ।
संसिद्धस्त्वं महाभाग त्वं च सिद्धस्तथा नृप ॥ १२-१९८-१५ (७२८९५)
भीष्म उवाच। १२-१९८-१६क्ष् (६०३६)
अथ तौ सहितौ राजन्नन्योन्यस्य विधानतः ।
विषयप्रतिसंहारमुभावेव प्रचक्रतुः ॥ १२-१९८-१६ (७२८९६)
प्राणापानौ तथोदानं समानं व्यानमेव च ।
एवं तौ मनसि स्थाप्य दधतुः प्राणयोर्मनः ॥ १२-१९८-१७ (७२८९७)
उपस्थितकृतौ तौ च नासिकाग्रमधो भ्रुवोः ।
भ्रुकुट्याक्ष्णोश्च मनसा शनैर्धारयतस्तदा ॥ १२-१९८-१८ (७२८९८)
निश्चेष्टाभ्यां शरीराभ्यां स्थिरदृष्टी समाहितौ ।
जितासनौ समाधाय मूर्धन्यात्मानमेव च ॥ १२-१९८-१९ (७२८९९)

तालुदेशमथोद्दाल्य ब्राह्मणस्य महात्मनः ।
ज्योतिर्ज्वाला सुमहती जगाम त्रिदिवं तदा ॥ १२-१९८-२० (७२९००)
हाहाकारस्तथा दिक्षु सर्वासु सुमहानभूत् ।
तज्ज्योतिः स्तूयमानं स्म ब्रह्माणं प्राविशत्तदा ॥ १२-१९८-२१ (७२९०१)
ततः स्वागतमित्याह तत्तेजः प्रपितामहः ।
प्रादेशमात्रं पुरुषं प्रत्युद्गम्य विशांपते ॥ १२-१९८-२२ (७२९०२)
भूयश्चैवापरं प्राह वचनं मधुरं स्मयन् ।
जापकैस्तुल्यफलता योगानां नात्र संशयः ॥ १२-१९८-२३ (७२९०३)
योगस्य तावदेतेभ्यः प्रत्यक्षं फलदर्शनम् ।
जापकानां विशिष्टं तु प्रत्युत्थानं समाहितम् ॥ १२-१९८-२४ (७२९०४)
उष्यतां मयि चेत्युक्त्वा व्याददे स ततो मुखम् ।
अथास्यं प्रविवेशास्य ब्राह्मणो विगतज्वरः ॥ १२-१९८-२५ (७२९०५)
राजाऽप्येतेन विधिना भगवन्तं पितामहम् ।
यथैव द्विजशार्दूलस्तथैव प्राविशत्तदा ॥ १२-१९८-२६ (७२९०६)
स्वयंभुवमथो देवा अभिवाद्य ततोऽब्रुवन् ॥ १२-१९८-२७ (७२९०७)
जापकार्थमयं यत्नो यदर्थं वयमागताः ।
कृतपूजाविमौ तुल्यौ त्वया तुल्यफलान्वितौ ॥ १२-१९८-२८ (७२९०८)
योगजापकयोस्तुल्यं फलं सुमहदद्य वै ।
सर्वांल्लोकानतिक्रम्य गच्छेतां यत्र वाञ्छितम् ॥ १२-१९८-२९ (७२९०९)
ब्रह्मोवाच। १२-१९८-३०क्ष् (६०३७)
महास्मृतिं पठेद्यस्तु तथैवानुस्मृतिं शुभाम् ।
तावप्येतेन विधिना गच्छेतां मत्सलोकताम् ॥ १२-१९८-३० (७२९१०)
यश्च योगे भवेद्भक्तः सोऽपि नास्त्यत्र संशयः ।
विधिनानेन देहान्ते मम लोकानवाप्नुयात् ।
साधये गम्यतां चैव यथा स्थानानि सिद्धये ॥ १२-१९८-३१ (७२९११)
भीष्म उवाच। १२-१९८-३२क्ष् (६०३८)
इत्युक्त्वा स तदा देवस्तत्रैवान्तरधीयत ।
आमन्त्र्य च ततो देवा ययुः स्वंस्वं निवेशनम् ॥ १२-१९८-३२ (७२९१२)
ते च सर्वे महात्मानो धर्मं सत्कृत्य तत्र वै ।
पृष्ठतोऽनुययू राजन्सर्वे सुप्रीतचेतसः ॥ १२-१९८-३३ (७२९१३)
एतत्फलं जापकानां गतिश्चैषा प्रकीर्तिता ।
यथाश्रुतं महाराज किं भूयः श्रोतुमिच्छसि ॥ ॥ १२-१९८-३४ (७२९१४)

इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि
अष्टनवत्यधिकशततमोऽध्यायः ॥ १९८.।

१२-१९८-१ तौ इक्ष्वाकुपैप्पलादी । तस्य विरूपस्य भाषिते वचने विषये ॥
१२-१९८-३ अर्हतः पूज्यान् ॥
१२-१९८-९ व्यवसायं निश्चयम् ॥
१२-१९८-११ स्तोभाः सामगीतिपूरणार्थनि अक्षराणि हायि हावु इत्यादीनि ॥
१२-१९८-१८ नेत्राग्रैश्चैव मनसेति ट । पाठः ॥
१२-१९८-२० तालुदेशं ब्रह्मरन्ध्रम् ॥
१२-१९८-२३ योगानां योगिनाम् ॥
१२-१९८-२४ एतेभ्य एतेषां सभ्यानाम् । समाहितं विहितम् ॥
१२-१९८-३० संहिताध्यायिनां फलमुक्त्वा षडङ्गाध्यायिनां
मन्वादिस्मृत्यध्यायिनां च फलमाह महास्मृतिमिति ॥

---

शन्तिपर्व-अध्यय१९९
॥ श्रीः ॥
१२.१९९. अध्यायः १९९

Mahabharata - Shanti Parva - Chapter Topics
ज्ञानयोगादेः फलं भगवद्वेदनप्रकारं च पृष्टेन भीष्मेण
युधिष्ठिरंप्रति तत्कथनाय मनुवृहस्पतिसंवादानुवादः ॥ १. ।
Mahabharata - Shanti Parva - Chapter Text

१२-१९९-० (७२९१५)
युधिष्ठिर उवाच। १२-१९९-०क्ष् (६०३९)
किं फलं ज्ञानयोगस्य वेदानां नियमस्य च ।
भूतात्मा च कथं ज्ञेयस्तन्मे ब्रूहि पितामह ॥ १२-१९९-१ (७२९१६)
भीष्म उवाच। १२-१९९-२क्ष् (६०४०)
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
मनोः प्रजापतेर्वादं महर्षेश्च बृहस्पतेः ॥ १२-१९९-२ (७२९१७)
प्रजापतिं श्रेष्ठतमं प्रजानां
देवर्षिसङ्घप्रवरो महर्षिः ।
बृहस्पतिः प्रश्नमिमं पुराणं
प्रपच्छ शिष्योऽथ गुरुं प्रणम्य ॥ १२-१९९-३ (७२९१८)
यत्कारणं मन्त्रविधिः प्रवृत्तो
ज्ञाने फलं यत्प्रवदन्ति विप्राः ।
यन्मन्त्रशब्दैरकृतप्रकाशं
तदुच्यतां मे भगवन्यथावत् ॥ १२-१९९-४ (७२९१९)

यत्स्तोत्रशास्त्रागममन्त्रिविद्भि
र्यज्ञैरनेकैरथ गोप्रदानैः ।
फलं महद्भिर्यदुपास्यते च
किं तत्कथं वा भविता क्व वा तत् ॥ १२-१९९-५ (७२९२०)
मही महीजाः पवनोऽन्तरिक्षं
जलौकसश्चैव जलं तथा द्यौः ।
दिवौकसश्चापि यतः प्रसूता
स्तदुच्यतां मे भगवन्पुराणम् ॥ १२-१९९-६ (७२९२१)
ज्ञानं यतः प्रार्थयते नरो वै
ततस्तदर्था भवति प्रवृत्तिः ।
न चाप्यहं वेद परं पुराणं
मिथ्याप्रवृत्तिं च कथं नु कुर्याम् ॥ १२-१९९-७ (७२९२२)
ऋक्सामसङ्घांश्च यजूंषि चाहं
छन्दांसि नक्षत्रगतिं निरुक्तम् ।
अधीत्य च व्याकरणं सकल्पं
शिक्षां च भूतप्रकृतिं न वेद्मि ॥ १२-१९९-८ (७२९२३)
स मे भवाञ्शंसतु सर्वमेत
त्सामान्यशब्दैश्च विशेषणैश्च ।
स मे भवाञ्शंसतु तावदेत
ज्ज्ञाने फलं कर्मणि वा यदस्ति ॥ १२-१९९-९ (७२९२४)
यथा च देहाच्च्यवते शरीरी
पुनः शरीरं च यथाऽभ्युपैति। १२-१९९-१० (७२९२५)
मनुरुवाच ।
यद्यत्प्रियं यस्य सुखं तदाहु
स्तदेव दुःखं प्रवदन्त्यनिष्टम् ॥ १२-१९९-१०क्ष् (६०४१)
इष्टं च मे स्यादितरच्च न स्या
देतत्कृते कर्मविधिः प्रवृत्तः ।
इष्टं त्वनिष्टं च न मां भजेते
त्येतत्कृते ज्ञानविधिः प्रवृत्तः ॥ १२-१९९-११ (७२९२६)
श्कामात्मकाश्छन्दसि कर्मयोगा
एभिर्विमुक्तः परमश्नुवीत् ।
नानाविधे कर्मपथे सुखार्थी
नरः प्रवृत्तो निरयं प्रयाति ॥ १२-१९९-१२ (७२९२७)
बृहस्पतिरुवाच ।इष्टं त्वनिष्टं च सुखासुखे च
साशीस्तपश्छन्दति कर्मभिश्च ॥ १२-१९९-१२क्ष् (६०४२)
मनुरुवाच।१२-१९९-१३क्ष् (६०४३)

एभिर्विमुक्तः परमाविवेश
एतत्कृते कर्मविधिः प्रवृत्तः ।
श्कामात्मकांश्छन्दति कर्मयोग
एभिर्विमुक्तः परमाददीत ॥ऽ १२-१९९-१३ (७२९२८)
आत्मादिभिः कर्मभिरिध्यमानो
धर्मे प्रवृत्तो द्युतिमान्सुखार्थी ।
परं हि तत्कर्मफलादपेतं
निराशिषो यत्पदमाप्नुवन्ति ॥ १२-१९९-१४ (७२९२९)
प्रजाः सृष्टा मनसा कर्मणा च
द्वावेवैतौ सत्पथौ लोकजुष्टौ ।
दृष्टं कर्माशाश्वतं चान्तवच्च
मनस्त्यागे कारणं नान्यदस्ति ॥ १२-१९९-१५ (७२९३०)
ग्कामात्मकौ छन्दसि कामभोगा
वेभिर्वियुक्तः परमश्नुवीत ।
नानाविधे कर्मफले सुखार्थी
नरः प्रमत्तो न परं प्रयाति ।
फलं हि तत्कर्मफलादपेतं
निराशिषो ब्रह्म परं ह्युपेतम् ॥' १२-१९९-१६ (७२९३१)
स्वेनात्मना चक्षुरिव प्रणेता
निशात्यये तमसा संवृतात्मा ।
ज्ञानं तु विज्ञानगुणेन युक्तं
कर्माशुभं पश्यति वर्जनीयम् ॥ १२-१९९-१७ (७२९३२)
सर्पान्कुशाग्राणि तथोदपानं
त्वा मनुष्याः परिवर्जयन्ति ।
अज्ञामतस्तत्र पतन्ति मूढा
ज्ञाने फलं पश्य यथा विशिष्टम् ॥ १२-१९९-१८ (७२९३३)
कृत्स्नस्तु मन्त्रो विधिवत्प्रयुक्तो
यज्ञा यथोक्तास्त्विह दक्षिणाश्च ।
अन्नप्रदानं मनसः समाधिः
पञ्चात्मकं कर्मफलं वदन्ति ॥ १२-१९९-१९ (७२९३४)
गुणात्मकं कर्म वदन्ति वेदा
स्तस्मान्मन्त्रो मन्नपूर्वं हि कर्म ।
विधिर्विधेयं मनसोपपत्तिः
फलस्य भोक्ता तु तथा शरीरी ॥ १२-१९९-२० (७२९३५)
शब्दाश्च रूपाणि रसाश्च पुण्याः ।
स्पर्शाश्च गन्धाश्च शुभास्तथैव ।

नरोऽत्र हि स्थानगतः प्रभुः स्या
देतत्फलं सिद्धयति कर्मणोऽस्य ॥ १२-१९९-२१ (७२९३६)
यद्यच्छरीरेण करोति कर्म
शरीरयुक्तः समुपाश्नुते तत् ।
शरीरमेवायतनं सुखस्य
दुःखस्य चाप्यायतनं शरीरम् ॥ १२-१९९-२२ (७२९३७)
वाचा तु यत्कर्म करोति किंचि
द्वाचैव सर्वं समुपाश्नुते तत् ।
मनस्तु यत्कर्म करोति किंचि
न्मनःस्थ एवायमुपाश्नुते तत् ॥ १२-१९९-२३ (७२९३८)
यथायथा कर्मगुणां फलार्थी
करोत्ययं कर्मफले निविष्टः ।
तथातथाऽयं गुणसंप्रयुक्तः
शुभाशुभं कर्मफलं भुनस्ति ॥ १२-१९९-२४ (७२९३९)
मत्स्यो यथा स्रोत इवाभिपाती
तथा कृतं पूर्वमुपैति कर्म ।
शुभे त्वसौ तुष्यति दुष्कृते तु
न तुष्यते वै परमः शरीरी ॥ १२-१९९-२५ (७२९४०)
यतो जगत्सर्वमिदं प्रसूतं
ज्ञात्वाऽऽत्मवन्तो ह्युपयान्ति शान्तिम् ।
यन्मन्त्रशब्देरकृतप्रकाशं
तदुच्यमानं शणु मे परं यत् ॥ १२-१९९-२६ (७२९४१)
रसैर्विमुक्तं विविधैश्च गन्धै
रशब्दमस्पर्शमरूपवच्च ।
अग्राह्यमव्यक्तमवर्णमेकं
पञ्चप्रकारान्ससृजे प्रजानाम् ॥ १२-१९९-२७ (७२९४२)
न स्त्री पुमान्नापि नपुंसकं च
न सन्न चासत्सदसच्च तन्न ।
पश्यन्ति तद्ब्रह्मविदो मनुष्या
स्तदक्षरं न क्षरतीति विद्धि ॥ ॥ १२-१९९-२८ (७२९४३)

इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि
एकोनद्विशततमोऽध्यायः ॥१९९.।

---

शन्तिपर्व-अध्यय२००
॥ श्रीः ॥
१२.२००. अध्यायः २००

Mahabharata - Shanti Parva - Chapter Topics
भीष्मेण युधिष्ठिरंप्रति मनुबृहस्पतिसंवादानुवादः ॥ १. ।
Mahabharata - Shanti Parva - Chapter Text

१२-२००-० (७२९५९)
मनुरुवाच। १२-२००-०क्ष् (६०४६)
अक्षरात्खं ततो वायुस्ततो ज्योतिस्ततो जलम् ।
जलात्प्रसूता जगती जगत्या जायते जगत् ॥ १२-२००-१ (७२९६०)
इमे शरीरैर्जलमेव गत्वा
जलाच्च तेजः पवनान्तरिक्षम् ।
खाद्वै निवर्तन्ति न भाविनस्ते
ये भाविनस्ते परमाप्नुवन्ति ॥ १२-२००-२ (७२९६१)
नोष्णं न शीतं मृदु नापि तीक्ष्णं
नाम्लं कषायं मधुरं न तिक्तम् ।
न शब्दवन्नापि च गन्धवत्त
न्न रूपवत्तत्परमस्वभावम् ॥ १२-२००-३ (७२९६२)
स्पर्शं तनुर्वेद रसं च जिह्वा
घ्राणं च गन्धाञ्श्रवणे च शब्दान् ।
रूपाणि चक्षुर्नच तत्परं य
द्गृह्णन्त्यनध्यात्मविदो मनुष्याः ॥ १२-२००-४ (७२९६३)
निवर्तयित्वा रसनां रसेभ्यो
घ्राणं च गन्धाच्छ्रवणे च शब्दात् ।
स्पर्शात्तनुं रूपगुणात्तु चक्षु
स्ततः परं पश्यति तत्स्वभावम् ॥ १२-२००-५ (७२९६४)
यतो गृहीत्वा हि करोति यच्च
यस्मिंश्च यामारभते प्रवृत्तिम् ।
यस्मै च यद्येन च यश्च कर्ता
यत्कारणं तं स्वमुपेयमाहुः ॥ १२-२००-६ (७२९६५)
यद्वाऽप्यभूद्व्यापकं साधकं च
यन्मन्त्रवत्स्थास्यति चापि लोके ।
यः सर्वहेतुः परमार्थकारी
तत्कारणं कार्यमतो यदन्यत् ॥ १२-२००-७ (७२९६६)
यथा हि कश्चित्सुकृतैर्मनुष्यः
शुभाशुभं प्राप्नुते चाविरोधात् ।
एवं शरीरेषु शुभाशुभेषु

स्वकर्मभिर्ज्ञानमिदं निवद्धम् ॥ १२-२००-८ (७२९६७)
यथा प्रदीप्तः पुरतः प्रदीपः ।
प्रकाशमन्यस्य करोति दीप्यन् ।
तथेह पञ्चेन्द्रियदीपवृक्षा
ज्ञानप्रदीप्ताः परवन्त एव ॥ १२-२००-९ (७२९६८)
यथा च राज्ञो बहवो ह्यमात्याः
पृथक् प्रमाणं प्रवदन्ति युक्ताः ।
तद्वच्छरीरेषु भवन्ति पञ्च
ज्ञानैकदेशाः परमः स तेभ्यः ॥ १२-२००-१० (७२९६९)
यथार्चिषोऽग्नेः पवनस्य वेगा
मरीचयोऽर्कस्य नदीषु चापः ।
गच्छन्ति चायान्ति च संयताश्च
तद्वच्छरीराणि शरीरिणां तु ॥ १२-२००-११ (७२९७०)
यथा च कश्चित्परशुं गृहीत्वा
धूमं न पश्येज्ज्वलनं च काष्ठे ।
तद्वच्छरीरोदरपाणिपादं
छित्त्वा न पश्यन्ति ततो यदन्य ॥ १२-२००-१२ (७२९७१)
तान्येव काष्ठानि यथा विमथ्य
धूमं च पश्येज्ज्वलनं च योगात् ।
तद्वत्सुबुद्धिः सममिन्द्रियार्थै
र्बुद्धः परं पश्यति तत्स्वभावम् ॥ १२-२००-१३ (७२९७२)
यथात्मनोऽङ्गं पतितं पृथिव्यां
स्वप्नान्तरे पश्यति चात्मनोऽन्यत् ।
श्रोत्रादियुक्तः सुमनाः सुबुद्धि
र्लिङ्गात्तथा गच्छति लिङ्गमन्यत् ॥ १२-२००-१४ (७२९७३)
उत्पत्तिवृद्धिक्षयमसन्निपातै
र्न युज्यतेऽसौ परमः शरीरी ।
अनेन लिङ्गेन तु लिङ्गमन्य
द्गच्छत्यदृष्टः प्रतिसन्धियोगात् ॥ १२-२००-१५ (७२९७४)
न चक्षुषा पश्यति रूपमात्मनो
न चापि संस्पर्शमुपैति किंचित् ।
न चापि तैः साधयते स्वकार्यं
ते तं न पश्यन्ति स पश्यते तान् ॥ १२-२००-१६ (७२९७५)
यथा समीपे ज्वलतोऽनलस्य
संतापजं रूपमुपैति कश्चित् ।
न चान्तरा रूपगुणं बिभर्ति

तथैव तद्दृश्यते रूपमस्य ॥ १२-२००-१७ (७२९७६)
तथा मनुष्यः परिमुच्य काय
मदृश्यमन्यद्विशते शरीरम् ।
विसृज्य भूतेषु महत्सु देहं
तदाश्रयं चैव बिभर्ति रूपम् ॥ १२-२००-१८ (७२९७७)
खं वायुमग्निं सलिलं तथोर्वी
समन्ततोऽभ्याविशते शरीरी ।
नान्याश्रयाः कर्मसु वर्तमानाः
श्रोत्रादयः पञ्चगुणाञ्श्रयन्ते ॥ १२-२००-१९ (७२९७८)
श्रोत्रं नभो घ्राणमथो पृथिव्या
स्तेजोमयं रूपमथो विपाकः ।
जलाश्रयं तेज उक्तं रसं च
वाय्वात्मकः स्पर्शकृतो गुणश्च ॥ १२-२००-२० (७२९७९)
महत्सु भूतेषु च सन्ति पञ्च
पञ्चेन्द्रियार्थेषु तथेन्द्रियाणि ।
सर्वाणि चैतानि मनोनुगानि
बुद्धिं मनोऽन्वेति मतिः स्वभावम् ॥ १२-२००-२१ (७२९८०)
शुभाशुभं कर्म कृतं यदस्य
तदेव प्रेत्याददतेऽन्यदेहे ।
मनोऽनुवर्तन्ति परावराणि
जलौकसः स्रोत इवानुकूलम् ॥ १२-२००-२२ (७२९८१)
चलं यथा दृष्टिपथं परैति
सूक्ष्मं महद्रूपमिवावभाति ।
तातप्यमानो न पतेच्च धीरः
परं तथा बुद्धिपथं परैति ॥ ॥ १२-२००-२३ (७२९८२)

इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि
द्विशततमोऽध्यायः ॥ २००.।

Mahabharata - Shanti Parva - Chapter Footnotes

१२-२००-१३ पृथक्परं पश्यति तत्स्वभावमिति ङ ।पाठः ॥
१२-२००-२० श्रोत्रं खत इति झ ।पाठः। जलाश्रयः स्वेद उक्तो रसश्चेति ध। पाठः। जलाश्रयं ज्ञानमुक्तमिति ट। ड। थ। पाठः ॥
१२-२००-२३ स्वरूपमालोचयते च रूपमिति झ ।पाठः ॥

---

शन्तिपर्व-अध्यय२०१

॥ श्रीः ॥
१२.२०१. अध्यायः २०१

Mahabharata - Shanti Parva - Chapter Topics
भीष्मेण युधिष्ठिरंप्रति मनुबृहस्पतिसंवादानुवादः ॥ १.।
Mahabharata - Shanti Parva - Chapter Text

१२-२०१-० (७२९८३)
मनुरुवाच। १२-२०१-०क्ष् (६०४७)
यदिन्द्रियैस्तूपगतैः पुरस्ता
त्प्राप्तान्गुणान्संस्मरते चिराय ।
तेष्विन्द्रियेषूपहतेषु पश्चा
त्स बुद्धिरूपः परमः स्वभावः ॥ १२-२०१-१ (७२९८४)
य इन्द्रियार्थान्युगपत्समन्ता
न्नावेक्षते कृत्स्नशस्तुल्यकालम् ।
यथाक्रमं संचरते स विद्वां
स्तस्मात्स एकः परमः शरीरी ॥ १२-२०१-२ (७२९८५)
रजस्तमः सत्वमथो तृतीयं
गच्छत्यसौ ज्ञानगुणान्विरूपान् ।
ग्न तैर्निबद्धः स तु बध्नाति विश्वं
न चानुयातीहागुणान्परात्मा।'
तथेन्द्रियाण्याविशते शरीरी
हुताशनं वायुरिवेन्धनस्थम् ॥ १२-२०१-३ (७२९८६)
न चक्षुषा पश्यति रूपमात्मनो
न पश्यति स्पर्शनमिन्द्रियेन्द्रियम् ।
न श्रोत्रलिङ्गं श्रवणेन दर्शनं
तथा कृतं पश्यति तद्विनश्यति ॥ १२-२०१-४ (७२९८७)
श्रोत्रादीनि न पश्यन्ति स्वंस्वमात्मानमात्मना ।
सर्वज्ञः सर्वदर्शी च क्षेत्रज्ञस्तानि पश्यति ॥ १२-२०१-५ (७२९८८)
यथा हिमवतः पार्श्वे पृष्ठं चन्द्रमसो यथा ।
न दृष्टपूर्वं मनुजैर्न च तन्नास्ति तावता ॥ १२-२०१-६ (७२९८९)
तद्वद्भूतेषु भूतात्मा सूक्ष्मो ज्ञानात्मवानसौ ।
अदृष्टपूर्वश्चक्षुर्म्यां न चासौ नास्ति तावता ॥ १२-२०१-७ (७२९९०)
पश्यन्नपि यथा लक्ष्म जनः सोमेन विन्दति ।
एवमस्ति न चोत्पन्नं न च तन्न परायणम् ॥ १२-२०१-८ (७२९९१)
रूपवन्तमरूपत्वादुदयास्तमने बुधाः ।

धिया समनुपश्यन्ति तद्गताः सवितुर्गतिम् ॥ १२-२०१-९ (७२९९२)
तथा बुद्धिप्रदीपेन दूरस्थं सुविपश्चितः ।
प्रत्यासन्नं निषीदन्ति ज्ञेयं ज्ञानाभिसंहितम् ॥ १२-२०१-१० (७२९९३)
न हि स्वल्वनुपायेन कश्चिदर्थोऽभिसिद्ध्यति ।
सूत्रजालैर्यथा मत्स्यान्बध्नन्ति जलजीविनः ॥ १२-२०१-११ (७२९९४)
मृगैर्मृगाणां ग्रहणं पक्षिणां पक्षिभिर्यथा ।
गजानां च गजैरेव ज्ञेयं ज्ञानेन गृह्यते ॥ १२-२०१-१२ (७२९९५)
अहिरेव ह्यहेः पादान्पश्यतीति निदर्शनम् ।
तद्वन्मूर्तिषु मूर्तिस्थं ज्ञेयं ज्ञानेन पश्यति ॥ १२-२०१-१३ (७२९९६)
नोत्सहन्ते यथा वेत्तुमिन्द्रियैरिन्द्रियाण्यपि ।
तथैवेह परा बुद्धिः परं बुद्ध्या न पश्यति ॥ १२-२०१-१४ (७२९९७)
यथा चन्द्रो ह्यमावास्यामलिङ्गत्वान्न दृश्यते ।
न च नाशोऽस्य भवति तथा विद्धि शरीरिणम् ॥ १२-२०१-१५ (७२९९८)
क्षीणकोशो ह्यमावास्यां चन्द्रमा न प्रकाशते ।
तद्वन्मूर्तिविमुक्तोऽसौ शरीरी नोपलभ्यते ॥ १२-२०१-१६ (७२९९९)
यथा कोशान्तरं प्राप्य चन्द्रमा भ्राजते पुनः ।
तद्वल्लिङ्गान्तरं प्राप्य शरीरी भ्राजते पुनः ॥ १२-२०१-१७ (७३०००)
जन्म बुद्धिः क्षयश्चास्य प्रत्यक्षेणोपलभ्यते ।
सा तु चन्द्रमसो व्यक्तिर्न तु तस्य शरीरिणः ॥ १२-२०१-१८ (७३००१)
उत्पत्तिवृद्धिव्ययतो यथा स इति गृह्यते ।
चन्द्र एव त्वमावास्यां तथा भवति मूर्तिमान् ॥ १२-२०१-१९ (७३००२)
नाभिसर्पद्विमुञ्चद्वा शशिनं दृश्यते तमः ।
विसृजंश्चोपसर्पंश्च तद्वत्पश्य शरीरिणम् ॥ १२-२०१-२० (७३००३)
यथा चन्द्रार्कसंयुक्तं तमस्तदुपलभ्यते ।
तद्वच्छरीरसंयुक्तं ज्ञानं तदुपलभ्यते ॥ १२-२०१-२१ (७३००४)
यथा चन्द्रार्कनिर्मुक्तः स राहुर्नोपलभ्यते ।
तद्वच्छरीरनिर्मुक्तः शरीरी नोपलभ्यते ॥ १२-२०१-२२ (७३००५)
यथा चन्द्रो ह्यमावास्यां नक्षत्रैर्युज्यते गतः ।
तद्वच्छरीरनिर्मुक्तः फलैर्युज्यति कर्मणः ॥ ॥ १२-२०१-२३ (७३००६)

इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि
एकाधिकद्विशततमोऽध्यायः ॥ २०१.।

Mahabharata - Shanti Parva - Chapter Footnotes

१२-२०१-४ स्पर्शनमिन्द्रियाणामिति ध । पाठः ॥
१२-२०१-८ एवमस्ति नवेत्यन्यो न वेत्ति न परायणम् इति ध । पाठः ॥

१२-२०१-१३ ज्ञानेन गृह्यते इति टङ थ पाठः ॥

---

शन्तिपर्व-अध्यय२०२
॥ श्रीः ॥
१२.२०२. अध्यायः २०२

Mahabharata - Shanti Parva - Chapter Topics
भीष्मेण युधिष्ठिरंप्रति भनुबृहस्पतिसंवादानुवादः ॥ १.
Mahabharata - Shanti Parva - Chapter Text

१२-२०२-० (७३००७)
मनुरुवाच। १२-२०२-०क्ष् (६०४८)
यथा व्यक्तमिदं शेते स्वप्ने चरति चेतनम् ।
ज्ञानमिन्द्रियसंयुक्तं तद्वत्प्रेत्य भवाभवौ ॥ १२-२०२-१ (७३००८)
यथाऽम्भसि प्रसन्ने तु रूपं पश्यति चक्षुषा ।
तद्वत्प्रसन्नेन्द्रियवाञ्ज्ञेयं ज्ञानेन पश्यति ॥ १२-२०२-२ (७३००९)
स एव लुलिते तस्मिन्यथा रूपं न पश्यति ।
तथेन्द्रियाकुलीभावे ज्ञेयं ज्ञाने न पश्यति ॥ १२-२०२-३ (७३०१०)
अबुद्धिरज्ञानकृता अबुद्ध्या दूष्यते मनः ।
दुष्टस्य मनसः पञ्च संप्रदुष्यन्ति मानसाः ॥ १२-२०२-४ (७३०११)
अज्ञानतृप्तो विषयेष्ववगाढो न पश्यति ।
स दृष्ट्वैव तु पूतात्मा विषयेभ्यो निवर्तते ॥ १२-२०२-५ (७३०१२)
तर्षच्छेदो न भवति पुरुषस्येह कल्मषात् ।
निवर्तते तदा तर्षः पापमन्तर्गतं यदा ॥ १२-२०२-६ (७३०१३)
ग्अन्तर्गतेन पापेन दह्यमानेन चेतसा ।
शुभाशुभविकारेण न स भूयोऽभिजायते ॥' १२-२०२-७ (७३०१४)
विषयेषु तु संसर्गाच्छाश्वतस्य तु संश्रयात् ।
मनसा चान्यथा काङ्क्षन्परं न प्रतिपद्यते ॥ १२-२०२-८ (७३०१५)
ज्ञानमुत्पद्यते पुंसां क्षयात्पापस्य कर्मणः ।
अथादर्शतलप्रख्ये पश्यत्यात्मानमात्मनि ॥ १२-२०२-९ (७३०१६)
प्रसृतैरिन्द्रियैर्दुःखी तैरेव नियतैः सुखी ।
तस्मादिन्द्रियचोरेभ्यो यच्छेदात्मानमात्मना ॥ १२-२०२-१० (७३०१७)
इन्द्रियेभ्यो मनः पूर्वं बुद्धिः परतरा ततः ।
बुद्धेः परतरं ज्ञानं ज्ञानात्परतरं परम् ॥ १२-२०२-११ (७३०१८)
अव्यक्तात्प्रसृतं ज्ञानं ततो बुद्धिस्ततो मनः ।
मनः श्रोत्रादिभिर्युक्तं शब्दादीन्साधु पश्यति ॥ १२-२०२-१२ (७३०१९)

यस्तांस्त्यजति शब्दादीन्सर्वाश्च व्यक्तयस्तथा ।
ग्प्रसृतानीन्द्रियाण्येव प्रतिसंहरति कूर्मवत्।'
विमुञ्चत्याकृतिग्रामांस्तान्मुक्त्वाऽमृतमश्नुते ॥ १२-२०२-१३ (७३०२०)
उद्यन्हि सविता यद्वत्सृजते रश्मिमण्डलम् ।
ग्दृश्यते मण्डलं तस्य न च दृश्येत मण्डली ।
तद्वद्देहस्तु संदृश्य आत्माऽदृश्यः परः सदा ॥ १२-२०२-१४ (७३०२१)
ग्रस्तं ह्युद्गिरते नित्यमुद्गीथं वेत्ति नित्यशः ।
बाल्ये रथाभ्यां योगेन तत्वज्ञानं तु संमतम् ॥' १२-२०२-१५ (७३०२२)
स एवास्तमुपागच्छंस्तदेवात्मनि यच्छति ।
ग्आदत्ते सर्वभूतानां रसभूतं विकासवान् ॥' १२-२०२-१६ (७३०२३)
अन्तरात्मा तथा देहमाविश्येन्द्रियरश्मिभिः ।
प्राप्येन्द्रि गुणान्पञ्च सोऽस्तमावृत्त्य गच्छति ।
ग्रश्मिमण्ड हीनस्तु न चासौ नास्ति तावता ॥' १२-२०२-१७ (७३०२४)
प्रणीतं कर्मणा मार्गं नीयमानः पुनः पुनः ।
प्राप्नोत्ययं कर्मफलं प्रवृत्तं धर्ममाप्तवान् ॥१२-२०२-१८ (७३०२५)
विषया विनिवर्तन्ते निराहारस्य देहिनः ।
रसवर्जं रसोऽप्यस्य परं दृष्ट्वा निवर्तते ॥१२-२०२-१९ (७३०२६)
बुद्धिः कर्मगुणैर्हीना यदा मनसि वर्तते ।
तदा संपद्यते ब्रह्म तत्रैव प्रलयं गतम् ॥१२-२०२-२० (७३०२७)
अस्पर्शनमशृण्वानमनास्वादमदर्शनम् ।
अघ्राणमवितर्कं च सत्वं प्रविशते परम् ॥१२-२०२-२१ (७३०२८)
ग्अव्यक्तात्प्रसृतं ज्ञानं ततो बुद्धिस्ततो मनः ।
आत्मनः प्रसृता बुद्धिरव्यक्तं ज्ञानमुच्यते ॥१२-२०२-२२ (७३०२९)
तस्माद्बुद्धिः स्मृता तज्ज्ञैर्मनस्तस्मात्ततः स्मृतम् ।
तस्मादाकृतयः पञ्च मनः परममुच्यते ॥१२-२०२-२३ (७३०३०)
तस्मात्परतरा बुद्धिर्ज्ञानं तस्मात्परं स्मृतम् ।
ततः सूक्ष्मस्ततो ह्यात्मा तस्मात्परतरं न च ।
इन्द्रियाणि निरीक्षन्ते मनसैतानि सर्वशः ॥' १२-२०२-२४ (७३०३१)
मनस्याकृतयो मग्ना मनस्त्वभिगतं मतिम् ।
मतिस्त्वभिगता ज्ञानं ज्ञानं चाभिगतं महत् ॥१२-२०२-२५ (७३०३२)
नेन्द्रियैर्मनसः सिद्धिर्न बुद्धिं बुध्यते मनः ।
न बुद्धिर्बुध्यतेऽव्यक्तं सूक्ष्मं त्वेतानि पश्यति ॥ ॥१२-२०२-२६ (७३०३३)

इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि
द्व्यधिकद्विशततमोऽध्यायः ॥ २०२.।

Mahabharata - Shanti Parva - Chapter Footnotes

१२-२०२-५ अज्ञानदुष्टो विषयेष्ववगाढो न दृश्यते इति ध । पाठः ॥
१२-२०२-२१ अघ्राणमवितर्षं चेति थ । पाठः ॥

---

शन्तिपर्व-अध्यय२०३
॥ श्रीः ॥
१२.२०३. अध्यायः २०३

Mahabharata - Shanti Parva - Chapter Topics
भीष्मेण युधिष्ठिरंप्रति मनुबृहस्पतिसंवादानुवादः ॥ १. ।
Mahabharata - Shanti Parva - Chapter Text

१२-२०३-० (७३०३४)
मनुरुवाच । १२-२०३-०क्ष् (६०४९)
दुःखोपघाते शारीरे मानसे चाप्युपस्थिते ।
यस्मिन्न शक्यते कर्तुं यत्नस्तं नानुचिन्तयेत् ॥ १२-२०३-१ (७३०३५)
भैषज्यमेतद्दुःखस्य यदेतन्नानुचिन्तयेत् ।
चिन्त्यमानं हि चाभ्येति भूयश्चापि प्रवर्तते ॥ १२-२०३-२ (७३०३६)
प्रज्ञया मानसं दुःखं हन्याच्छारीरमौषधैः ।
एतद्विज्ञानसामर्थ्यं न बालैः समतामियात् ॥ १२-२०३-३ (७३०३७)
अनित्यं यौवनं रूपं जीवितं द्रव्यसंचयः ।
आरोग्यं प्रियसंवासो गृध्येत्तत्र न पण्डितः ॥ १२-२०३-४ (७३०३८)
न जानपदिकं दुःखमेकः शोचितुमर्हति ।
अशोचन्प्रतिकुर्वीत यदि पश्येदुपक्रमम् ॥ १२-२०३-५ (७३०३९)
सुखाद्बहुतरं दुःखं जीविते नास्ति संशयः ।
स्निग्धस्य चेन्द्रियार्थेषु मोहान्मरणमप्रियम् ॥ १२-२०३-६ (७३०४०)
परित्यजति यो दुःखं सुखं वाऽप्युभयं नरः ।
अभ्येति ब्रह्म सोत्यन्तं न ते शोचन्ति पण्डिताः ॥ १२-२०३-७ (७३०४१)
दुःखमर्था हि युज्यन्ते पालने न च ते सुखम् ।
दुःखेन चाधिगम्यन्ते नाशमेषां न चिन्तयेत् ॥ १२-२०३-८ (७३०४२)
ज्ञानं ज्ञेयाभिर्निवृत्तं विद्धि ज्ञानगुणं मनः ।
प्रज्ञाकरणसंयुक्तं ततो बुद्धिः प्रवर्तते ॥ १२-२०३-९ (७३०४३)
यदा कर्मगुणोपेता बुद्धिर्मनसि वर्तते ।
तदा प्रज्ञायते ब्रह्म ध्यानयोगसमाधिना ॥ १२-२०३-१० (७३०४४)
सेयं गुणवती बुद्धिर्गुणेष्वेवाभिवर्तते ।
अपरादभिनिः स्रौति गिरेः शृङ्गादिवोदकम् ॥ १२-२०३-११ (७३०४५)
यदा निर्गुणमाप्नोति ध्यानं मनसि पूर्वजम् ।

तदा प्रज्ञायते ब्रह्म निकषं निकषे यथा ॥ १२-२०३-१२ (७३०४६)
मनस्त्वसंहृतं बुद्ध्या हीन्द्रियार्थनिदर्शकम् ।
न समर्थं गुणापेक्षि निर्गुणस्य निदर्शने ॥ १२-२०३-१३ (७३०४७)
सर्वाण्येतानि संवार्य द्वाराणि मनसि स्थितः ।
मनस्येकाग्रतां कृत्वा तत्परं प्रतिपद्यते ॥ १२-२०३-१४ (७३०४८)
यथा महान्ति भूतानि निवर्तन्ते गुणक्षये ।
तथेन्द्रियाण्युपादाय बुद्धिर्मनसि वर्तते ॥ १२-२०३-१५ (७३०४९)
यदा मनसि सा बुद्धिर्वर्ततेऽन्तरचारिणी ।
व्यवसायगुणोपेता तदा संपद्यते मनः ॥ १२-२०३-१६ (७३०५०)
गुणवद्भिर्गुणोपेतं यदा ध्यानगतं मनः ।
तदा सर्वान्गुणान्हित्वा निर्गुणं प्रतिपद्यते ॥ १२-२०३-१७ (७३०५१)
अव्यक्तस्येह विज्ञाने नास्ति तुल्यं निदर्शनम् ।
यत्र नास्ति पदन्यासः कस्तं विषयमाप्नुयात् ॥ १२-२०३-१८ (७३०५२)
तपसा चानुमानेन गुणैर्जात्या श्रुतेन च ।
निनीषेत्परमं ब्रह्म विशुद्धेनान्तरात्मना ॥ १२-२०३-१९ (७३०५३)
गुणहीनो हि तं मार्गं बहिः समनुवर्तते ।
गुणाभावात्प्रकृत्या वा निस्तर्क्यं ज्ञेयसंमितम् ॥ १२-२०३-२० (७३०५४)
नैर्गुण्याद्ब्रह्म चाप्नोति सगुणत्वान्निवर्तते ।
गुणप्रसारिणी बुद्धिर्हुताशन इवेन्धने ॥ १२-२०३-२१ (७३०५५)
यदा पञ्च वियुक्तानि इन्द्रियाणि स्वकर्मभिः ।
तदा तत्परमं ब्रह्म संमुक्तं प्रकृतेः परम् ॥ १२-२०३-२२ (७३०५६)
एवं प्रकृतितः सर्वे संभवन्ति शरीरिणः ।
निवर्तन्ते निवृत्तौ च स्वर्गे नैवोपयान्ति च ॥ १२-२०३-२३ (७३०५७)
पुरुषप्रकृतिर्बुद्धिर्विशेषाश्चेन्द्रियाणि च ।
अहंकारोऽभिमानश्च संभूतो भूतसंज्ञकः ॥ १२-२०३-२४ (७३०५८)
एतस्याद्या प्रवृत्तिस्तु प्रधानात्संप्रवर्तते ।
द्वितीया मिथुनव्यक्तिमविशेषान्नियच्छति ॥ १२-२०३-२५ (७३०५९)
धर्मादुत्कृष्यते श्रेयस्तथा धर्मोऽप्यधर्मतः ।
रागवान्प्रकृतिं ह्येति विरक्तो ज्ञानवान्भवम् ॥ ॥ १२-२०३-२६ (७३०६०)

इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि
त्र्यधिकद्विशततमोऽध्यायः ॥ २०३.।

Mahabharata - Shanti Parva - Chapter Footnotes

१२-२०३-५ उपक्रमं प्रतीकारोपायम् ॥
१२-२०३-६ मरणं भवति ॥

शन्तिपर्व-अध्यय२०४
॥ श्रीः ॥
१२.२०४. अध्यायः २०४

Mahabharata - Shanti Parva - Chapter Topics
भीष्मेण युधिष्ठिरंप्रति मनुबृहस्पतिसंवादानुवादसमापनम् ॥ १.।
Mahabharata - Shanti Parva - Chapter Text

१२-२०४-० (७३०६१)
मनुरुवाच। १२-२०४-०क्ष् (६०५०)
ग्तदेव सततं मन्ये न शक्यमनुवर्णितुम् ।
यथा निदर्शनं वस्तु न शक्यमनुबोधितुम् ॥ १२-२०४-१ (७३०६२)
यथाहि सारं जानाति न कथंचन संस्थितम् ।
परकायच्छविस्तद्वद्देहेऽयं चेतनस्तथा ॥ १२-२०४-२ (७३०६३)
विना कायं न सा च्छाया तां विना कायमस्त्युत ।
तद्वदेव विना नास्ति प्रकृतेरिह वर्तनम् ॥ १२-२०४-३ (७३०६४)
इदं वै नास्ति नेदमस्ति परं विना ।
जीवात्मना त्वसौ छिन्नस्त्वेष चैव परात्मना ॥ १२-२०४-४ (७३०६५)
तत्तवेति विदुः केचिदतथ्यमिति चापरे ।
उभयं मे मतं विद्वन्मुक्तिहेतौ समाहितम् ॥ १२-२०४-५ (७३०६६)
विमुक्तैश्च मृगः सोऽपि दृश्यते संयतेन्द्रियः ।
सर्वेषां न हि दृश्यो हि तटिद्वत्स्फुरति ह्यसौ ॥ १२-२०४-६ (७३०६७)
ब्राह्मणस्य समादृश्यो वर्तते सोऽपि किं पुनः ।
विद्यते परमः शुद्धः साक्षिभूतो विभावसुः ॥ १२-२०४-७ (७३०६८)
श्रुतिरेषा ततो नित्या तस्मादेकः परो मतः ।
न प्रयोजनमुद्दिश्य चेष्टा तस्य महात्मनः ॥ १२-२०४-८ (७३०६९)
तादृशोस्त्विति मन्तव्यस्तथा सत्यं महात्मना ।
नानासंस्थेन भेदेन सदा गतिविभेदवत् ।
तस्य भेदः समाख्यातो भेदो ह्यस्ति तथाविधः ॥ १२-२०४-९ (७३०७०)
एवं विद्वन्विजानीहि परमात्मानमव्ययम् ।
तत्तद्गुणविशेषेण संज्ञानामनुसंयुतम् ॥ १२-२०४-१० (७३०७१)
सर्वेश्वरः सर्वमयः स च सर्वप्रवर्तकः ।
सर्वात्मकः सर्वशक्तिः सर्वकारणकारणम् ॥ १२-२०४-११ (७३०७२)
सर्वसाधारणः सर्वैरुपास्यश्च महात्मभिः ।

वासुदेवेति विख्यातस्तं विदित्वाऽश्नुतेऽमृतम् ॥' १२-२०४-१२ (७३०७३)
यदा ते पञ्चभिः पञ्च युक्तानि मनसा सह ।
अथ तद्द्रक्ष्यते ब्रह्म मणौ सूत्रमिवार्पितम् ॥ १२-२०४-१३ (७३०७४)
तदेव च यथा सूत्रं सुवर्णे वर्तते पुनः ।
मुक्तास्वथ प्रवालेषु मृन्मये राजते तथा ॥ १२-२०४-१४ (७३०७५)
तद्वद्गोऽश्वमनुष्येषु तद्वद्धस्तिमृगादिषु ।
तद्वत्कीटपतङ्गेषु प्रसक्तात्मा स्वकर्मभिः ॥ १२-२०४-१५ (७३०७६)
येनयेन शरीरेण यद्यत्कर्म करोत्ययम् ।
तेनतेन शरीरेण तत्तत्फलमुपाश्नुते ॥ १२-२०४-१६ (७३०७७)
यथा ह्येकरसा भूमिरोषध्यर्थानुसारिणी ।
तथा कर्मानुगा बुद्धिरन्तरात्माऽनुदर्शिनी ॥ १२-२०४-१७ (७३०७८)
ज्ञानपूर्वोद्भवा लिप्सा लिप्सापूर्वाभिसन्धिता ।
अभिसन्धिपूर्वकं कर्म कर्ममूलं ततः फलम् ॥ १२-२०४-१८ (७३०७९)
फलं कर्मत्मकं विद्यात्कर्म ज्ञेयात्मकं तथा ।
ज्ञेयं ज्ञानात्मकं विद्याज्ज्ञानं सदसदात्मकम् ॥ १२-२०४-१९ (७३०८०)
ग्तदेवमिष्यते ब्रह्म संख्यानाद्विनिभिद्यते।'
ज्ञानानां च फलानां च ज्ञेयानां कर्मणां तथा ।
क्षयान्ते यत्फलं विद्याज्ज्ञानं ज्ञेयप्रतिष्ठितम् ॥ १२-२०४-२० (७३०८१)
महद्धि परमं भूतं युक्ताः पश्यन्ति योगिनः ।
अबुधास्तं न पश्यन्ति ह्यात्मस्थं गुणबुद्धयः ॥ १२-२०४-२१ (७३०८२)
पृथिवीरुपतो रूपमपामिह महत्तरम् ।
अद्भ्यो महत्तरं तेजस्तेजसः पवनो महान् ॥ १२-२०४-२२ (७३०८३)
पवनाच्च महद्व्योम तस्मात्परतरं मनः ।
मनसो महती बुद्धिर्बुद्धेः कालो महान्स्मृतः ॥ १२-२०४-२३ (७३०८४)
कालात्स भगवान्विष्णुर्यस्य सर्वमिदं जगत् ।
नादिर्न मध्यं नैवान्तस्तस्य देवस्य विद्यते ॥ १२-२०४-२४ (७३०८५)
अनादित्वादमध्यत्वादनन्तत्वाच्च सोऽव्ययः ।
अत्येति सर्वदुःखानि दुःखं ह्यन्तवदुच्यते ॥ १२-२०४-२५ (७३०८६)
तद्ब्रह्म परमं प्रोक्तं तद्धाम परमं पदम् ।
तद्गत्वा कालविषयाद्विमुक्ता मोक्षमाश्रिताः ॥ १२-२०४-२६ (७३०८७)
गुणेष्वेते प्रकाशन्ते निर्गुणत्वात्ततः परम् ।
निवृत्तिलक्षणो धर्मस्तथाऽऽनन्त्याय कल्पते ॥ १२-२०४-२७ (७३०८८)
ऋचो यजूंषि सामानि शरीराणि व्यपाश्रिताः ।
जिह्वाग्रेषु प्रवर्तन्ते यत्नसाध्याविनाशिनः ॥ १२-२०४-२८ (७३०८९)
न चैवमिष्यते ब्रह्म शरीराश्रयसंभवम् ।
न यत्नसाध्यं तद्ब्रह्म नादिमध्यं न चान्तवन् ॥ १२-२०४-२९ (७३०९०)

ऋचामादिस्तथा साम्नां यजुषामादिरुच्यते ।
अन्तश्चादिमतां दृष्टो न त्वादिर्ब्रह्मणः स्मृतः ॥१२-२०४-३० (७३०९१)
अनादित्वादनन्तत्वात्तदनन्तमथाव्ययम् ।
अव्ययत्वाच्च निर्दुःखं द्वन्द्वाभावस्ततः परम् ॥१२-२०४-३१ (७३०९२)
अदृष्टतोऽनुपायाच्च प्रतिसन्धेश्च कर्मणः ।
न तेन मर्त्याः पश्यन्ति येन गच्छान्त तत्पदम् ॥१२-२०४-३२ (७३०९३)
विषयेषु च संसर्गाच्छाश्वतस्य च संशयात् ।
मनसा चान्यदाकाङ्क्षन्परं न प्रतिपद्यते ॥१२-२०४-३३ (७३०९४)
गुणान्यदिह पश्यन्ति तदिच्छन्त्यपरे जनाः ।
परं नैवाभिकाङ्क्षन्ति निर्गुणत्वाद्गुणार्थिनः ॥१२-२०४-३४ (७३०९५)
गुणैर्यस्त्ववरैर्युक्तः कथं विद्याद्गुणानिमान् ।
अनुमानाद्धि गन्तव्यं गुणैरवयवैः परम् ॥१२-२०४-३५ (७३०९६)
सूक्ष्मेण मनसा विद्मो वाचा वक्तुं न शक्नुमः ।
मनो हि मनसा ग्राह्यं दर्शनेन च दर्शनम् ॥१२-२०४-३६ (७३०९७)
ज्ञानेन निर्मलीकृत्य बुद्धिं बुद्ध्या मनस्तथा ।
मनसा चेन्द्रियग्राममक्षरं प्रतिपद्यते ॥१२-२०४-३७ (७३०९८)
बुद्धिप्रहीणो मनसा समृद्ध
स्तथाऽनिराशीर्गुणतामुपैति ।
परं त्यजन्तीह विलोभ्यमाना
हुताशनं वायुरिवेन्धनस्थम् ॥ १२-२०४-३८ (७३०९९)
गुणादाने विप्रयोगे च तेषां
मनः सदा विद्धि परावराभ्याम् ।
अनेनैव विधिना संप्रवृत्तो
गुणादाने ब्रह्म शरीरमेति ॥ १२-२०४-३९ (७३१००)
अव्यक्तात्मा पुरुषोऽव्यक्तकर्मा
सोऽव्यक्तत्वं गच्छति ह्यन्तकाले ।
तैरेवायं चेन्द्रियैर्वर्धमानै
र्ग्लायद्भिर्वा वर्ततेऽकामरूपः ॥ १२-२०४-४० (७३१०१)
सर्वैरयं चेन्द्रियैः संप्रयुक्तो
देहं प्राप्तः यञ्चभूताश्रयः स्यात् ।
न सामर्थ्याद्गच्छति कर्मणेह
हीनस्तेन परमेणाव्ययेन ॥ १२-२०४-४१ (७३१०२)
पृथ्व्या नरः पश्यति नान्तमस्या
ह्यन्तश्चास्या भविता चेति विद्धि ।
परं न यातीह विलोभ्यमानो
यथा प्लवं वायुरिवार्णवस्थम् ॥ १२-२०४-४२ (७३१०३)

दिवाकरो गुणमुपलभ्य निर्गुणो
यथा भवेदपगतरश्मिमण्डलः ।
तथां ह्यसौ मुनिरिह निर्विशेषवान्
स निर्गुणं प्रविशति ब्रह्म चाव्ययम् ॥ १२-२०४-४३ (७३१०४)
अनागतं सुकृतवतां परां गतिं
स्वयंभुवं प्रभवनिधानमव्ययम् ।
सनातनं यदमृतमव्ययं ध्रुवं
निचाय्य तत्परममृतत्वमश्नुते ॥ ॥ १२-२०४-४४ (७३१०५)

इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि
चतुरधिकद्विशततमोऽध्यायः ॥ २०४.।
Mahabharata - Shanti Parva - Chapter Footnotes

१२-२०४-१६ येनयेन पित्र्येण दैवेन गान्धर्वेण प्राजापत्येन वा प्राप्येण
हेतुभूतेन यस्य यस्य देहस्य प्राप्त्यर्थमित्यर्थः । यद्यत्कर्म
यज्ञादिकम् ॥
१२-२०४-३३ शाश्वतस्य दर्शनात् इति झ । पाठः ॥
१२-२०४-४० यो व्यक्तत्वं गच्छति ब्रह्मभूयः । सुपुष्पितैः
कर्मभिरिद्ध्यमानः सायंदिवो वर्तते कर्मरूपः इति ध। पाठः ॥

---

शन्तिपर्व-अध्यय२०५
॥ श्रीः ॥
१२.२०५. अध्यायः २०५

Mahabharata - Shanti Parva - Chapter Topics
भीष्मेण युधिष्ठिरंप्रति निबन्धनेन स्वमातरंप्रति अरण्यत्वेन
रूपितस्य संसारचक्रस्य विवरणम् ॥ १.। तथा नारदसावित्रीसंवादः
॥ २.। नारदेन तपसा श्रीभगवदपरोक्षीकरणम् ॥ ३.।
Mahabharata - Shanti Parva - Chapter Text

१२-२०५-० (७३१०६)
क़ युधिष्ठिर उवाच। १२-२०५-०क्ष् (६०५१)
पितामह महाप्राज्ञ दुःखशोकसमाकुले ।
संसारचक्रे लोकानां निर्वेदो नास्ति किंन्विदम् ॥ १२-२०५-१ (७३१०७)
भीष्म उवाच। १२-२०५-२क्ष् (६०५२)
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
निबन्धनस्य संवादं भोगवत्या नृपोत्तम ॥ १२-२०५-२ (७३१०८)

मुनिं निबन्धनं शुष्कं धमनीयाकृतिं तथा ।
निरारम्भं निरालम्बमसज्जन्तं च कर्मणि ।
पुत्रं दृष्ट्वाऽप्युवाचार्तं माता भोगवती तदा ॥ १२-२०५-३ (७३१०९)
उत्तिष्ठ मूढ किं शेषे निरपेक्षः सुहृज्जनैः ।
निरालम्बो धनोपाये पैतृकं तव किं धनम् ॥१२-२०५-४ (७३११०)
निबन्धन उवाच।१२-२०५-५क्ष् (६०५३)
पैतृकं मे महन्मातः सर्वदुःखालयं त्विह ।
अस्त्येतत्तद्विधाताय यतिष्ये तत्र मा शुचः ॥१२-२०५-५ (७३१११)
इदं शरीरमत्युग्रं पित्रा दत्तमसंशयम् ।
तमेव पितरं गत्वा धनं तिष्ठति शाश्वतम् ॥१२-२०५-६ (७३११२)
कश्चिन्महति संसारे वर्तमान---।
वनदुगमभिप्राप्तो महत्क्रव्या-----॥१२-२०५-७ (७३११३)
सिंहव्याघ्रगजाकारैरतिघोरैर्महा-----।
समन्तात्सुपरिक्षिप्तं स दृष्ट्वा व्यथते पुमान् ॥१२-२०५-८ (७३११४)
स तद्वनं ह्यनुचरन्विप्रधावन्नितस्ततः ।
वीक्षमाणो दिशः सर्वाः शरणार्थं प्रधावति ॥१२-२०५-९ (७३११५)
अथापश्यद्वनं रूढं समन्ताद्वागुरावृतम् ।
वनमध्ये च तत्रासीदुदपानः समावृतः ॥१२-२०५-१० (७३११६)
वल्लिभिस्तृणसंछिन्नैर्गूढाभिरभिसंवृतः ।
स पपात द्विजस्तत्र विजने सलिलाशये ॥१२-२०५-११ (७३११७)
विलग्नश्चाभवत्तस्मिँल्लतासन्तानसङ्कुले ।
बाहुभ्यां संपरिष्वक्तस्तया परमसत्वया ॥१२-२०५-१२ (७३११८)
स तथा लम्बते तत्र ऊर्ध्वपादो ह्यधश्शिराः ।
अधस्तत्रैव जातश्च जम्बूवृक्षः सुदुस्तरः ॥१२-२०५-१३ (७३११९)
कूपस्य तस्य वेलाया अपश्यत्सुमहाफलम् ।
वृक्षं बहुविधं व्योमं वल्लीपुष्पसमाकुलम् ॥१२-२०५-१४ (७३१२०)
नानारूपा मधुकरास्तस्मिन्वृक्षऽभवन्किल ।
तेषां मधूनां बहुधा धारा प्रववृते तदा ॥१२-२०५-१५ (७३१२१)
विलम्बमानः स पुमान्धारां पिबति सर्वदा ।
न तस्य तृष्णा विरता पीयमानस्य संकटे ॥१२-२०५-१६ (७३१२२)
परीप्सति च तां नित्यमतृप्तः स पुनः पुनः ।
एवं स वसते तत्र दुःखिदुःखी पुनः पुनः ॥१२-२०५-१७ (७३१२३)
मया तु तद्धनं देयं तव दास्यामि चेच्छसि ।
तस्य च प्रार्थितः सोथ दत्वा मुक्तिमवाप सः ॥१२-२०५-१८ (७३१२४)
सा च त्यक्त्वाऽर्थसंकल्पं जगाम परमां गतिम् ॥ १२-२०५-१९ (७३१२५)
एवं संसारचक्रस्य स्वरूपज्ञा नृपोत्तम ।

परं वैराग्यमागम्य गच्छन्ति परमं पदम् ॥ १२-२०५-२० (७३१२६)
युधिष्ठिर उवाच। १२-२०५-२१क्ष् (६०५४)
एवं संसारचक्रस्य स्वरूपं विदितं न मे ।
पैतृकं तु धनं प्रोक्तं किं तद्विद्वन्महात्मना ॥ १२-२०५-२१ (७३१२७)
कान्तारमिति किं प्रोक्तं को हस्ती स तु कूपकः ।
किंसंज्ञिको महावृक्षो मधु वाऽपि पितामह ॥ १२-२०५-२२ (७३१२८)
एवं मे संशयं विद्धि धनशब्दं किमुच्यते ।
कथं लब्धं धनं तेन तथा च किमिदं त्विह ॥ १२-२०५-२३ (७३१२९)
भीष्म उवाच। १२-२०५-२४क्ष् (६०५५)
उपाख्यानमिदं सर्वं मोक्षविद्भिरुदाहृतम् ।
सुमतिं विन्दते येन बन्धनाशश्च भारत ॥ १२-२०५-२४ (७३१३०)
एतदुक्तं हि कान्तारं महान्संसार एव सः ।
ये ते प्रतिष्ठिता व्याला व्याधयस्ते प्रकीर्तिताः ॥ १२-२०५-२५ (७३१३१)
या सा नारी महाघोरा वर्णरूपविनाशिनी ।
तामाहुश्च जरां प्राज्ञाः परिष्वक्तं यया जगत् ॥ १२-२०५-२६ (७३१३२)
यस्तत्र कूपे वसते महाहिः काल एव सः ।
यो वृक्षः स च मृत्युर्हि स्वकृतं तस्य तत्फलम् ॥ १२-२०५-२७ (७३१३३)
ये तु कृष्णाः सिता राजन्मूषिका रात्र्यहानि वै ॥ १२-२०५-२८ (७३१३४)
द्विषड्कपदसंयुक्तो यो हस्ती षण्मुखाकृतिः ।
स च संवत्सरः प्रोक्तः पाशमासर्तवो मुखाः ॥ १२-२०५-२९ (७३१३५)
एतत्संसारचक्रस्य स्वरूपं व्याहृतं मया ।
एवं लब्धधनं राजंस्तत्स्वरूपं विनाशय ॥ १२-२०५-३० (७३१३६)
एतज्ज्ञात्वा तु सा राजन्परं वैराग्यमास्थिता ।
यथोक्तविधिना भूयः परं पदमवाप सः ॥ १२-२०५-३१ (७३१३७)
धत्ते धारयते चैव एतस्मात्कारणाद्धनम् ।
तद्गच्छ चामृतं शुद्धं हिरण्यममृतं तपः ॥ १२-२०५-३२ (७३१३८)
तत्स्वरूपो महादेवः कृष्णो देवकिनन्दनः ।
तस्य प्रसादाद्दुःखस्य नाशं प्राप्स्यसि मानद ॥ १२-२०५-३३ (७३१३९)
एकः कर्ता स कृष्णश्च ज्ञानिनां परमा गतिः ॥ १२-२०५-३४ (७३१४०)
इदमाश्रित्य देवेन्द्रो देवा रुद्रास्तथाऽश्विनौ ।
स्वेस्वे पदे विविशिरे भुक्तिमुक्तिविदो जनाः ॥ १२-२०५-३५ (७३१४१)
भूतानामन्तरात्माऽसौ स नित्यपदसंवृतः ।
श्रूयतामस्य सद्भावः सम्यग्ज्ञानं यथा तव ॥ १२-२०५-३६ (७३१४२)
भवेदेतन्निबोध त्वं नारदाय पुरा हरिः ।
दर्शयित्वाऽऽत्मनो रूपं यदवोचत्स्वयं विभुः ॥ १२-२०५-३७ (७३१४३)
पुरा देवऋषिः श्रीमान्नारदः परमार्थवान् ।

चचार पृथिवीं कृत्स्नां तीर्थान्यनुचरन्प्रभुः ॥१२-२०५-३८ (७३१४४)
हिमवत्पादमाश्रित्य विचार्य च पुनःपुनः ।
स ददर्श ह्रदं तत्र पद्मोत्पलसमाकुलम् ॥१२-२०५-३९ (७३१४५)
ददर्श कन्यां तत्तीरे सर्वाभरणभूषिताम् ।
शोभमानां श्रिया राजन्क्रीडन्तीमुत्पलैस्तथा ॥१२-२०५-४० (७३१४६)
सा महात्मानमालोक्य नारदेत्याह भामिनी ।
तस्याः समीपमासाद्य तस्थौ विस्मितमानसः ॥१२-२०५-४१ (७३१४७)
वीक्षमाणं तमाज्ञाय सा कन्या चारुवासिनी ।
विजजृम्भे महाभागा स्मयमाना पुनः पुनः ॥१२-२०५-४२ (७३१४८)
तस्मात्समभवद्वक्रात्पुरुषाकृतिसंयुतः ।
रत्नविन्दुचिताङ्गस्तु सर्वाभरणभूषितः ॥१२-२०५-४३ (७३१४९)
आदित्यसदृशाकारः शिरसा धारयन्मणिम् ।
पुनरेव तदाकारसदृशः समजायत ॥१२-२०५-४४ (७३१५०)
तृतीयस्तु महाराज विविधाभरणैर्युतः ।
प्रदक्षिणं तु तां कृत्वा विविधध्वनयस्तु ताम् ॥१२-२०५-४५ (७३१५१)
ततः सर्वेण विप्रर्षिः कन्यां पप्रच्छ तां शुभाम् ॥ १२-२०५-४६ (७३१५२)
का त्वं परमकल्याणि पद्मेन्दुसदृशानने ।
न जाने त्वां महादेवि ब्रूहि सत्यमनिन्दिते ॥१२-२०५-४७ (७३१५३)
कन्योवाच।१२-२०५-४८क्ष् (६०५६)
सावित्री नाम विप्रर्षे शृणु भद्रं तवास्तु वै ।
किं करिष्यामि तद्ब्रूहि तव यच्चेतसि स्थितम् ॥१२-२०५-४८ (७३१५४)
नारद उवाच।१२-२०५-४९क्ष् (६०५७)
अभिवादये त्वां सावित्रि कृतार्थोऽहमनिन्दिते ।
एतं मे संशयं देवि वक्तुमर्हसि शोभने ॥१२-२०५-४९ (७३१५५)
यस्तु वै प्रथमोत्पन्नः कोऽसौ स पुरुषाकृतिः ।
बिन्दवस्तु महादेवि मूर्ध्नि ज्योतिर्मयाकृतिः ॥१२-२०५-५० (७३१५६)
कन्योवाच।१२-२०५-५१क्ष् (६०५८)
अग्रजः प्रथमोत्पन्नो यजुर्वेदस्तथाऽपरः ।
तृतीयः सामवेदस्तु संशयो व्येतु ते मुने ॥१२-२०५-५१ (७३१५७)
वेदाश्च बिन्दुसंयुक्ता यज्ञस्य फलसंश्रिताः ।
यत्तद्दृष्टं महज्ज्योतिर्ज्योतिरित्युच्यते बुधैः ॥१२-२०५-५२ (७३१५८)
ऋषे ज्ञेयं मया चाऽपीत्युक्त्वा चान्तरधीयत ।
ततः स विस्मयाविष्टो नारदः पुरुषर्षभ ।
ध्यानयुक्तः स तु चिरं न बुबोध महामतिः ॥ १२-२०५-५३ (७३१५९)
ततः स्नात्वा महातेजा वाग्यतो नियतेन्द्रियः ।
तुष्टाव पुरुषव्याघ्रो जिज्ञासुश्च तदद्भुतम् ॥१२-२०५-५४ (७३१६०)

ततो वर्षशते पूर्णे भगवाँलोकभावनः ।
प्रादुश्चकार विश्वात्मा ऋषेः परमसौहृदात् ॥ १२-२०५-५५ (७३१६१)
तमागतं जगन्नाथं सर्वकारणकारणम् ।
अखिलामरमौल्यङ्गरुक्मारुणपदद्वयम् ॥ १२-२०५-५६ (७३१६२)
वैनतेयपदस्पर्शकिणशोभितजानुकम् ।
पीताम्बरलसत्काञ्चीदामबद्धकटीतटम् ॥ १२-२०५-५७ (७३१६३)
श्रीवत्सवक्षसं चारुमणिकौस्तुभकन्धरम् ।
मन्दस्मितमुखाम्भोजं चलदायतलोचनम् ॥ १२-२०५-५८ (७३१६४)
नम्रचापानुकरणनम्रभ्रूयुगशोभितम् ।
नानारत्नमणीवज्रस्फुरन्मकरकुण्डलम् ॥ १२-२०५-५९ (७३१६५)
इन्द्रनीलनिभासं तं केयूरमकुटोज्ज्वलम् ।
देवैरिन्द्रपुरोगैश्च ऋषिसङ्घैरभिष्टुतम् ॥ १२-२०५-६० (७३१६६)
नारदो जयशब्देन ववन्दे शिरसा हरिम् ॥ १२-२०५-६१ (७३१६७)
ततः स भगवाञ्श्रीमान्मेघगम्भीरया गिरा ।
प्राहेशः सर्वभूतानां नारदं पतितं क्षितौ ॥ १२-२०५-६२ (७३१६८)
भद्रमस्तु ऋषे तुभ्यं वरं वरय सुव्रत ।
यत्ते मनसि सुव्यक्तमस्ति च प्रददामि तन् ॥ १२-२०५-६३ (७३१६९)
स चेमं जयशब्देन प्रसीदेत्यातुरो मुनिः ।
प्रोवाच हृदि संरूढं शङ्खचक्रगदाधरम् ॥ १२-२०५-६४ (७३१७०)
विवक्षितं जगन्नाथ मया ज्ञातं त्वयाऽच्युत ।
तत्प्रसीद हृषीकेश श्रोतुमिच्छामि तद्धरे ॥ १२-२०५-६५ (७३१७१)
ततः स्मयन्महाविष्णुरभ्यभाषत नारदम् ।
यद्दृष्टं मम रूपं तु वेदानां शिरसि त्वया ॥ १२-२०५-६६ (७३१७२)
निर्द्वन्द्वा निरहंकाराः शुचयः शुद्धलोचनाः ।
तं मां पश्यन्ति सततं तान्पृच्छ यदिहेच्छसि ॥ १२-२०५-६७ (७३१७३)
ये योगिनो महाप्राज्ञा मदंशा ये व्यवस्थिताः ।
तेषां प्रसादं देवर्षे मत्प्रसादमवैहि तत् ॥ १२-२०५-६८ (७३१७४)
भीष्म उवाच। १२-२०५-६९क्ष् (६०५९)
इत्युक्त्वा स जगामाथ भगवान्भूतभावनः ।
तस्माद्व्रज हृषीकेशं कृष्णं देवकिनन्दनम् ॥ १२-२०५-६९ (७३१७५)
एतमाराध्य गोविन्दं गता मुक्तिं महर्षयः ।
एष कर्ता विकर्ता च सर्वकारणकारणम् ॥ १२-२०५-७० (७३१७६)
मयाऽप्येतच्छ्रुतं राजन्नारदात्तु निबोध तत् ।
स्वयमेव समाचष्ट नारदो भगवान्मुनिः ॥ १२-२०५-७१ (७३१७७)
समस्तसंसारविघातकारणं
भजन्ति ये विष्णुमनन्यमानसाः ।

ते यान्ति सायुज्यमतीव दुर्लभ
मितीव नित्यं हृदि वर्णयन्ति ॥' ॥ १२-२०५-७२ (७३१७८)

इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि
पञ्चाधिकद्विशततमोऽध्यायः ॥ २०५.।
Mahabharata - Shanti Parva - Chapter Footnotes

क अयमध्यायः ध । पुस्तक एव दृश्यते। १२-२०५-६५ मया विवक्षितं
त्वया ज्ञातमिति संबन्धः। ।
१२-२०५-६९ व्रज शरणमिति शेषः ॥

---

शन्तिपर्व-अध्यय२०६
॥ श्रीः ॥
१२.२०६. अध्यायः २०६

Mahabharata - Shanti Parva - Chapter Topics
भीष्मेण युधिष्ठिरंप्रति
भूतादिजगत्सृष्टिप्रकारनिरूपणम् ॥ १.। तथा
नारदोदितनृसिंहादिभगवत्प्रादुर्भावचरित्रनिरूपणपूर्वकं
श्रीकृष्णस्य सर्वोत्तमत्वप्रतिपादनेन तद्ध्यानविधानम् ॥ २.।
Mahabharata - Shanti Parva - Chapter Text

१२-२०६-० (७३१७९)
युधिष्ठिर उवाच। १२-२०६-०क्ष् (६०६०)
पितामह महाप्राज्ञ पुण्डरीकाक्षमच्युतम् ।
कर्तारमकृतं विष्णुं भूतानां प्रभवाप्ययम् ॥ १२-२०६-१ (७३१८०)
नारायणं हृषीकेशं गोविन्दमपराजितम् ।
तत्त्वेन भरतश्रेष्ठ श्रोतुमिच्छामि केशवम् ॥ १२-२०६-२ (७३१८१)
भीष्म उवाच। १२-२०६-३क्ष् (६०६१)
श्रुतोऽयमर्थो रामस्य जामदग्न्यस्य जल्पतः ।
नारदस्य च देवर्षेः कृष्णद्वैपायनस्य च ॥ १२-२०६-३ (७३१८२)
असितो देवलस्तात वाल्मीकिश्च महातपाः ।
मार्कण्डेयश्च गोविन्दे कथयन्त्यद्भुतं महत् ॥ १२-२०६-४ (७३१८३)
`केशवस्य मया राजन्न शक्या वर्णितुं गुणाः ।
ईदृशोऽसौ हृषीकेशो वासुदेवः परात्परः ॥' १२-२०६-५ (७३१८४)
केशवो भरतश्रेष्ठ भगवानीश्वरः प्रभुः ।
पुरुषः सर्वमित्येव श्रूयते बहुधा विभुः ॥ १२-२०६-६ (७३१८५)

किंतु यानि विदुर्लोके ब्राह्मणाः शार्ङ्गधन्वनि ।
महात्मनि महाबाहो शृणु तानि युधिष्ठिर ॥ १२-२०६-७ (७३१८६)
यानि चाहुर्मनुष्येन्द्र ये पुराणविदो जनाः ।
श्रुत्वा सर्वाणि गोविन्दो कीर्तयिष्यामि तान्यहम् ॥ १२-२०६-८ (७३१८७)
महाभूतानि भूतात्मा महात्मा पुरुषोत्तमः ।
वायुर्ज्योतिस्तथा चापः खं च गां चान्वकल्पयत् ॥ १२-२०६-९ (७३१८८)
स सृष्ट्वा पृथिवीं चैव सर्वभूतेश्वरः प्रभुः ।
अप्स्वेव शयनं चक्रे महात्मा पुरुषोत्तमः ॥ १२-२०६-१० (७३१८९)
सर्वतेजोमयस्तस्मिञ्शयानः शयने शुभे ।
सोऽग्रजं सर्वभूतानां संकर्षणमचिन्तयत् ॥ १२-२०६-११ (७३१९०)
आश्रयं सर्वभूतानां मनसेतीह शुश्रुम् ।
स धारयति भूतानि उभे भूतभविष्यती ॥ १२-२०६-१२ (७३१९१)
ग्प्रद्युम्नमसृजत्तस्मात्सर्वतेजः प्रकाशकम् ।
अनिरुद्धस्ततो जज्ञे सर्वशक्तिर्महाद्युतिः ॥ १२-२०६-१३ (७३१९२)
अप्सु व्योमगतः श्रीमान्योगनिद्रामुपेयिवान् ।
तस्मात्संजज्ञिरे देवा ब्रह्मविष्णुमहेश्वराः ।
लयस्थित्यन्तकर्माणस्त्रयस्ते सुमहौजसः ॥' १२-२०६-१४ (७३१९३)
ततस्तस्मिन्महाबाहौ प्रादुर्भूते महात्मनि ।
भास्करप्रतिमं दिव्यं नाभ्यां पद्ममजायत ॥ १२-२०६-१५ (७३१९४)
स तत्र भगवान्देवः पुष्करे भ्राजयन्दिशः ।
ब्रह्मा समभवत्तात सर्वभूतपितामहः ॥ १२-२०६-१६ (७३१९५)
तस्मिन्नपि महाबाहौ प्रादुर्भूते महात्मनि ।
तमसः पूर्वजो जज्ञे मधुर्नाम महासुरः ॥ १२-२०६-१७ (७३१९६)
तमुग्रमुग्रकर्माणमुग्रां बुद्धिं समास्थितम् ।
ब्रह्मणोपचितिं कुर्वञ्जघान पुरुषोत्तमः ॥ १२-२०६-१८ (७३१९७)
तस्य तात वधात्सर्वे देवदानवमानवाः ।
मधुसूदनमित्याहुर्ऋषभं सर्वसात्वताम् ॥ १२-२०६-१९ (७३१९८)
ब्रह्माऽनुससृजे पुत्रान्मानसान्दक्षसप्तमान् ।
मरीचिमत्र्यङ्गिरसौ पुलस्त्यं पुलहं क्रतुम् ॥ १२-२०६-२० (७३१९९)
मरीचिः कश्यपं तात पुत्रमग्रजमग्रजः ।
मानसं जनयामास तैजसं ब्रह्मवित्तमम् ॥ १२-२०६-२१ (७३२००)
अङ्गुष्ठात्ससृजे ब्रह्मा मरीचेरपि पूर्वजम् ।
सोऽभवद्भरतश्रेष्ठ दक्षो नाम प्रजापतिः ॥ १२-२०६-२२ (७३२०१)
तस्य पूर्वमजायन्त दश तिस्रश्च भारत ॥
प्रजापतेर्दुहितरस्तासां ज्येष्ठाऽभवद्दितिः ॥ १२-२०६-२३ (७३२०२)
सर्वधर्मविशेषज्ञः पुण्यकीर्तिर्महायशाः ।

मारीचः कश्यपस्तात सर्वासामभवत्पतिः ॥ १२-२०६-२४ (७३२०३)
उत्पाद्य तु महाभागस्तासामवरजा दश ।
ददौ धर्माय धर्मज्ञो दक्ष एव प्रजापतिः ॥ १२-२०६-२५ (७३२०४)
धर्मस्य वसवः पुत्रा रुद्राश्चामिततेजसः ।
विश्वेदेवाश्च साध्याश्च मरुत्वन्तश्च भारत ॥ १२-२०६-२६ (७३२०५)
अपराश्च यवीयस्यस्ताभ्योऽन्याः सप्तविंशतिः ।
सोमस्तासां महाभागः सर्वासामभवत्पतिः ॥ १२-२०६-२७ (७३२०६)
इतरास्तु व्यजायन्त गन्धर्वास्तुरगान्द्विजान् ।
गाश्च किंपुरुषान्मत्स्यानुद्भिज्जांश्च वनस्पतीन् ॥ १२-२०६-२८ (७३२०७)
आदित्यानदितिर्जज्ञे देवश्रेष्ठान्महाबलान् ।
तेषां विष्णुर्वामनोऽभूद्गोविन्दश्चाभवत्प्रभुः ॥ १२-२०६-२९ (७३२०८)
तस्य विक्रमणाच्चापि देवानां श्रीर्व्यवर्धत ।
दानवाश्च पराभूता दैतेयाश्चासुरी प्रजा ॥ १२-२०६-३० (७३२०९)
विप्रचित्तिप्रधानांश्च दानवानसृजद्दनुः ।
दितिस्तु सर्वानसुरान्महासत्वानजीजनत् ॥ १२-२०६-३१ (७३२१०)
ग्ततः ससर्ज भगवान्मृत्युं लोकभयंकरम् ।
हर्तारं सर्व भूतानां ससर्ज च जनार्दनः ॥ १२-२०६-३२ (७३२११)
अहोरात्रं च कालं च यथर्तु मधुसूदनः ।
पूर्वाह्णं चापराह्णं च सर्वमेवान्वकल्पयत् ॥ १२-२०६-३३ (७३२१२)
लब्ध्वापः सोऽसृजन्मेघांस्तथा स्थावरजङ्गमान् ।
पृथिवीं सोऽसृजद्विश्वां सहीतां भूरितेजसा ॥ १२-२०६-३४ (७३२१३)
ततः कृष्णो महाभागः पुनरेव युधिष्ठिर ।
ब्राह्मणानां शतं श्रेष्ठं मुखादेवासृजत्प्रभुः ॥ १२-२०६-३५ (७३२१४)
बाहुभ्यां क्षत्रियशतं वैश्यानामूरुतः शतम् ।
पद्भ्यां शूत्रशतं चैव कशेवो भरतर्षभ ॥ १२-२०६-३६ (७३२१५)
स एवं चतुरो वर्णान्समुत्पाद्य महातपाः ।
अध्यक्षं सर्व भूतानां धातारमकरोत्स्वयम् ॥ १२-२०६-३७ (७३२१६)
वेदविद्याविधातारं ब्रह्माणममिततद्युतिम् ।
भूतमातृगणाध्यक्षं विरूपाक्षं च सोऽसृजत् ॥ १२-२०६-३८ (७३२१७)
शासितारं च पापानां पितृणां समवर्तिनम् ।
असृजत्सर्वभूतात्मा निधिपं च धनेश्वरम् ॥ १२-२०६-३९ (७३२१८)
यादसामसृजन्नाथं वरुणं च जलेश्वरम् ।
वासवं सर्वदेवानामध्यक्षमकरोत्प्रभुः ॥ १२-२०६-४० (७३२१९)
यावद्यावदभूच्छ्रद्धा देहं धारयितुं नृणाम् ।
तावत्तावदजीवंस्ते नासीद्यमकृतं भयम् ॥ १२-२०६-४१ (७३२२०)
न चैषां मैथुनो धर्मो बभूव भरतर्षभ ।

संकल्पादेव चैतेषां गर्भः समुपपद्यते ॥ १२-२०६-४२ (७३२२१)
ततस्त्रेतायुगे काले संस्पर्शाज्जायते प्रजा ।
न ह्यभून्मैथुनो धर्मस्तेषामपि जनाधिप ॥ १२-२०६-४३ (७३२२२)
द्वापरे मैथुनो धर्मः प्रजानामभवन्नृप ।
तथा कलियुगे राजन्द्वन्द्वमापेदिरे जनाः ॥ १२-२०६-४४ (७३२२३)
एष भूतपतिस्तात स्वध्यक्षश्च तथोच्यते ।
निरपेक्षांश्च कौन्तेय कीर्तयिष्यामि तच्छृणु ॥ १२-२०६-४५ (७३२२४)
दक्षिणापथजन्मानः सर्वे करभृतस्तव ।
आन्ध्राः पुलिन्दाः शवराश्चूचुपा मद्रकैः सह ॥ १२-२०६-४६ (७३२२५)
उत्तरापथजन्मानः कीर्तयिष्यामि तानपि ।
ये तु काम्भोजगान्धाराः किराता बर्वरैः सह ॥ १२-२०६-४७ (७३२२६)
एते पापकृतस्तात चरन्ति पृथिवीमिमाम् ।
बकश्वपाकगृध्राणां सधर्माणो नराधिप ॥ १२-२०६-४८ (७३२२७)
नैते कृतयुगे तात चरन्ति पृथिवीमिमाम् ।
त्रेताप्रभुति वर्धन्ते ते जना भरतर्षभ ॥ १२-२०६-४९ (७३२२८)
ततस्तस्मिन्महाघोरे संन्ध्याकाले युगान्तिके ।
राजानः समसज्जन्त समासाद्येतरेतम् ॥ १२-२०६-५० (७३२२९)
गऐन्द्रं रूपं समास्थाय ह्यसुरेभ्यो चरन्महीम् ।
स एव भगवान्देवो वेदित्वं च गता मही ॥ १२-२०६-५१ (७३२३०)
एवंभूते सृष्टिर्नारसिंहादयः क्रमात् ।
प्रादुर्भावाः स्मृता विष्णोर्जगतीरक्षणाय वै ॥ १२-२०६-५२ (७३२३१)
एष कृष्णो महायोगी तत्तत्कार्यानुरूपणम् ।
हिरण्यकशिपुं दैत्यं हिरण्याक्षं तथैव च ॥ १२-२०६-५३ (७३२३२)
रावणं च महादैत्यं हत्वासौ पुरुषोत्तमः ।
भूमेर्दुःखोपनाशार्थं ब्रह्मशक्रादिभिः स्तुतः ॥ १२-२०६-५४ (७३२३३)
आत्मनोऽङ्गान्महातेजा उद्बबर्ह जनार्दनः ।
सितकृष्णौ महाराज केशौ हरिरुदारधीः ॥ १२-२०६-५५ (७३२३४)
वसुदेवस्य देवक्यामेष जात इहोत्तमः ।
देहवानिह विश्वात्मा संबन्धी ते जनार्दनः ॥ १२-२०६-५६ (७३२३५)
आविर्वभूव योगीन्द्रो मनोतीतो जगत्पतिः ।
अचिन्त्यः पुरुषव्याघ्र नैव केवलमानुषः ॥ १२-२०६-५७ (७३२३६)
अव्यक्तादिविशेषान्तं परिमाणार्थसंयुतम् ।
क्रीडा हरेरिदं सर्वं क्षरमित्येव धार्यताम् ॥ १२-२०६-५८ (७३२३७)
अक्षरं तत्परं नित्यं वैरूप्यं जगतो हरेः ।
तद्विद्धि रूपमतुलममृतत्वं भवज्जितम् ॥ १२-२०६-५९ (७३२३८)
तदेव कृष्णो दाशार्हः श्रीमाञ्श्रीवत्सलक्षणः ।

न भूतसृष्टिसंस्थानं देहोऽस्य परमात्मनः ॥१२-२०६-६० (७३२३९)
देहवानिह यो विष्णुरसौ मायामयो हरिः ।
आत्मनो लोकरक्षार्थं ध्याहि नित्यं सनातनम् ॥१२-२०६-६१ (७३२४०)
अङ्गानि चतुरे वेदा मीमांसा न्यायविस्तरः ।
इतिहासपुराणानि धर्माः स्वायंभुवादयः ॥१२-२०६-६२ (७३२४१)
य एनं प्रतिवर्तन्ते वेदान्तानि च सर्वशः ।
भक्तिहीना न तैर्यान्ति नित्यमेनं कथंचन ॥१२-२०६-६३ (७३२४२)
सर्वभूतेषु भूतात्मा तत्तद्बुद्धिं समास्थितः ।
तस्माद्बुद्धस्त्वमेवैनं ध्याहि नित्यमतन्द्रितः ॥' १२-२०६-६४ (७३२४३)
एवमेष कुरुश्रेष्ठ प्रादुर्भावो महात्मनः ।
एवं देवर्षिराचष्ट नारदः सर्वलोकदृक् ॥१२-२०६-६५ (७३२४४)
नारदोऽप्यथ कृष्णस्य परं मेने नराधिप ।
शाश्वतत्वं महाबाहो यथावद्भरतर्षभ ॥१२-२०६-६६ (७३२४५)
एवमेव महाबाहुः केशवः सत्यविक्रमः ।
अचिन्त्यः पुण्डरीकाक्षो नैष केवलमानुषः ॥१२-२०६-६७ (७३२४६)
гएवंविधोऽसौ पुरुषः को वैनं वेत्ति सर्वदा ।
एतत्ते कथितं राजन्भूयः श्रोतुं किमिच्छसि'॥ ॥१२-२०६-६८ (७३२४७)

इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि
षडधिकद्विशततमोऽध्यायः ॥ २०६.।
Mahabharata - Shanti Parva - Chapter Footnotes

१२-२०६-१ कर्तारममृतं विष्णुमिति ङ ।थ।पाठः ॥
१२-२०६-२५ ततस्त्वरजसो दशेति ङ ।थ।पाठः ॥
१२-२०६-२८ द्विरदांश्च वनस्पतीनिति ङ ।पाठः।विशदांश्च
वनस्पतीनिति ध।पाठः।इतराः कश्यपस्त्रियः।व्यजायन्त व्यजनयन्त
॥
१२-२०६-३५ शतमनन्तम् ॥
१२-२०६-३९ समवर्तिनं यमम् ॥

---

शन्तिपर्व-अध्यय२०७
॥ श्रीः ॥
१२.२०७. अध्यायः २०७

Mahabharata - Shanti Parva - Chapter Topics
भीष्मेण युधिष्ठिरंप्रति मरीच्यादिब्रह्मपुत्रवंशकथनपूर्वकं
प्राच्यादिदिग्गतमहर्षिनामनिर्देशः ॥१.

१२-२०७-० (७३२४८)
युधिष्ठिर उवाच। १२-२०७-०क्ष् (६०६२)
के पूर्वमासन्पतयः प्रजानां भरतर्षभ ।
के चर्षयो महाभागा दिक्षु प्रत्येकशः स्थिताः ॥ १२-२०७-१ (७३२४९)
भीष्म उवाच। १२-२०७-२क्ष् (६०६३)
श्रूयतां भरतश्रेष्ठ यन्मां त्वं परिपृच्छसि ।
प्रजानां पतयो ये च दिक्षु ये चर्षयः स्मृताः ॥ १२-२०७-२ (७३२५०)
एकः स्वयंभूर्भगवानाद्यो ब्रह्मा सनातनः ।
ब्रह्मणः सप्त वै पुत्रा महात्मानः स्वयंभुवः ॥ १२-२०७-३ (७३२५१)
मरीचिरत्र्यङ्गिरसौ पुलस्त्यः पुलहः क्रतुः ।
वसिष्ठश्च महाभागः सदृशो वै स्वयंभुवा ॥ १२-२०७-४ (७३२५२)
सप्त ब्रह्मण इत्येते पुराणे निश्चयं गताः ।
अत ऊर्ध्वं प्रवक्ष्यामि सर्वानेव प्रजापतीन् ॥ १२-२०७-५ (७३२५३)
अत्रिवंशतमुत्पन्नो ब्रह्मयोनिः सनातनः ।
प्राचनवर्हिर्भगवांस्तस्मात्प्राचेतसो दश ॥ १२-२०७-६ (७३२५४)
दशानां तनयस्त्वेको दक्षो नाम प्रजापतिः ।
तस्य द्वे नामनी लोके दक्षः क इति चोच्यते ॥ १२-२०७-७ (७३२५५)
मरीचेः कश्यपः पुत्रस्तस्य द्वे नामनी स्मृते ।
अरिष्टनेमिरित्येके कश्यपेत्यपरे विदुः ॥ १२-२०७-८ (७३२५६)
अत्रेश्चैवौरसः श्रीमान्राजा सोमश्च वीर्यवान् ।
सहस्रं यश्च दिव्यानां युगानां पर्युपासिता ॥ १२-२०७-९ (७३२५७)
अर्यमा चैव भगवान्ये चास्य तनया विभो ।
एते प्रदेशाः कथिता भुवनानां प्रभावनाः ॥ १२-२०७-१० (७३२५८)
शशबिन्दोश्च भार्याणां सहस्राणि दशाच्युत ।
एकैकस्यां सहस्रं तु तनयानामभूत्तदा ॥ १२-२०७-११ (७३२५९)
एवं शतसहस्राणि दश तस्य महात्मनः ।
पुत्राणां च न ते संचिदिच्छन्त्यन्यं प्रजापतिम् ॥ १२-२०७-१२ (७३२६०)
प्रजामाचक्षते विप्राः पुराणाः शाशबिन्दवीम् ।
स वृष्णिवंशप्रभवो महावंशः प्रजापतेः ॥ १२-२०७-१३ (७३२६१)
एते प्रजानां पतयः समुद्दिष्टा यशस्विनः ॥ १२-२०७-१४ (७३२६२)
ग्शशबिन्दुस्तु राजर्षिर्महायोगी महामनाः ।
अध्यात्मवित्सहस्राणां भार्याणां दशमध्यगः ॥ १२-२०७-१५ (७३२६३)
स योगी योगमापन्नस्ततः सायुच्यतां गतः।'
अतः परं प्रवक्ष्यामि देवांस्त्रिभुवनेश्वरान् ॥ १२-२०७-१६ (७३२६४)

भयोंऽशश्चार्यमा चैव मित्रोऽथ वरुणस्तथा ।
सविता चैव धाता च विवस्वांश्च महाबलः ॥१२-२०७-१७ (७३२६५)
त्वष्टा पूषा तथैवेन्द्रो द्वादशो विष्णुरुच्यते ।
इत्येते द्वादशादित्याः कश्यपस्यात्मसंभवाः ॥१२-२०७-१८ (७३२६६)
नासत्यश्चैव दस्रश्च स्मृतो द्वावश्विनावपि ।
मार्तण्डस्यात्मजावेतावात्मस्य प्रजापतेः ॥१२-२०७-१९ (७३२६७)
त्वष्टुश्चैवात्मजः श्रीमान्विश्वरूपो महायशाः ॥ १२-२०७-२० (७३२६८)
अजैकपादहिर्बुध्न्यो विरूपाक्षोऽथ रैवतः ।
हरश्च बहुरूपश्च त्र्यम्बकश्च सुरेश्वरः ॥१२-२०७-२१ (७३२६९)
सावित्रश्च जयन्तश्च पिनाकी चापराजितः ।
गएकादशैते कथिता रुद्रास्त्रिभुवनेश्वराः ॥' १२-२०७-२२ (७३२७०)
पूर्वमेव महाभागा वसवोऽष्टौ प्रकीर्तिताः ।
एत एवंविधा देवा मनोरेव प्रजापतेः ।
ते च पूर्वं सुराश्चेति द्विविधाः पितरः स्मृताः ॥ १२-२०७-२३ (७३२७१)
शीलयौवनयोस्त्वन्यस्तथाऽन्ये सिद्धसाध्ययोः ।
ऋभवो मरुतश्चैव देवानां चोदितो गणः ॥१२-२०७-२४ (७३२७२)
एवमेते समाम्नाता विश्वेदेवास्तथाऽश्विनौ ।
आदित्याः क्षत्रियास्तेषां विशश्च मरुतस्तथा ॥१२-२०७-२५ (७३२७३)
अश्विनौ तु स्मृतौ शूद्रौ तपस्युग्रे समास्थितौ ।
स्मृतास्त्वङ्गिरसो देवा ब्राह्मणा इति निश्चयः ।
इत्येतत्सर्वदेवानां चातुर्वर्ण्यं प्रकीर्तितम् ॥ १२-२०७-२६ (७३२७४)
एतान्वै प्रातरुत्थाय देवान्यस्तु प्रकीर्तयेत् ।
स्वजादन्यकृताच्चैव सर्वपापात्प्रमुच्यते ॥१२-२०७-२७ (७३२७५)
यवक्रीतोऽथ रैभ्यश्च अर्वावसुपरावसू ।
औशिजश्चैव कक्षीवान्बलश्चाङ्गिरसः स्मृतः ॥१२-२०७-२८ (७३२७६)
ऋषिर्मेधातिथेः पुत्रः कण्वो बर्हिषदस्तथा ।
त्रैलोक्यभावनास्तात प्राच्यां सप्तर्षयस्तथा ॥१२-२०७-२९ (७३२७७)
उन्मुचो विमुचश्चैव स्वस्त्यात्रेयश्च वीर्यवान् ।
प्रमुचश्चेध्मवाहश्च भगवांश्च दृढव्रतः ॥१२-२०७-३० (७३२७८)
मित्रावरुणयोः पुत्रस्तथाऽगस्त्यः प्रतापवान् ।
एते ब्रह्मर्षयो नित्यमास्थिता दक्षिणां दिशम् ॥१२-२०७-३१ (७३२७९)
उषङ्गुः कवषो धौम्यः परिव्याधश्च वीर्यवान् ।
एकतश्च द्वितश्चैव त्रितश्चैवं महर्षयः ॥१२-२०७-३२ (७३२८०)
अत्रेः पुत्रश्च दुर्वासास्तथा सारस्वतः प्रभुः ।
एते चैव महात्मानः पश्चिमामाश्रिता दिशम् ॥१२-२०७-३३ (७३२८१)
अत्रिश्चैव वसिष्ठश्च काश्यपश्च महानुषिः ।

गौतमोऽथ भरद्वाजो विश्वामित्रोऽथ कौशिकः ॥ १२-२०७-३४ (७३२८२)
तथैव पुत्रो भगवानृचीकस्य महात्मनः ।
जमदग्निश्च सप्तैते उदीचीमाश्रिता दिशम् ॥ १२-२०७-३५ (७३२८३)
एते प्रतिदिशं सर्वे कीर्तितास्तिग्मतेजसः ।
साक्षिभूता महात्मानो भुवनानां प्रभावनाः ॥ १२-२०७-३६ (७३२८४)
एवमेते महात्मानः स्थिताः प्रत्येकशो दिशम् ।
एतेषां कीर्तनं कृत्वा सर्वपापात्प्रमुच्यते ॥ १२-२०७-३७ (७३२८५)
यस्यांयस्यां दिशि ह्येते तां दिशं शरणं गतः ।
मुच्यते सर्वपापेभ्यः स्वस्तिमांश्च तथा भवेत् ॥ ॥ १२-२०७-३८ (७३२८६)

इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि
सप्ताधिकद्विशततमोऽध्यायः ॥ २०७.।
Mahabharata - Shanti Parva - Chapter Footnotes

१२-२०७-९ अङ्गश्च पौरवः श्रीमान्राजा भौमश्च वीर्तवान् इति ङ
।थ। पाठः। अंशश्चैवौरसः श्रीमान्राजा भौमश्च वीर्यवानिति
ध। पाठः ॥
१२-२०७-१० प्रदेशाः प्रदिशन्ति आज्ञापयन्तीति प्रेदशा ईशनशीला
इत्यर्थः ।प्रभावनाः प्रकर्षेण स्नष्टारश्च ॥
१२-२०७-२७ स्वजात् स्वयं कामतोऽकामतश्च कृतात् ।अन्यसंसर्गजात् ॥
१२-२०७-२८ नीलश्चाङ्गिरसः स्मृत इति ङ।ध ।पाठः ॥
१२-२०७-२९ त्रैलोक्यगायना इति ङ ।थ।पाठः ॥

---

शन्तिपर्व-अध्यय२०८
॥ श्रीः ॥
१२.२०८. अध्यायः २०८

Mahabharata - Shanti Parva - Chapter Topics
भीष्मेण युधिष्ठिरंप्रति हरेर्वराहावतारनिरूपणम् ॥ १.।
Mahabharata - Shanti Parva - Chapter Text

१२-२०८-० (७३२८७)
युधिष्ठिर उवाच। १२-२०८-०क्ष् (६०६४)
पितामह महाप्राज्ञ युधि सत्यपराक्रम ।
श्रोतुमिच्छामि कात्स्न्येन वृष्णमव्ययमीश्वरम् ॥ १२-२०८-१ (७३२८८)
यच्चास्य तेजः सुमहद्यच्च कर्म पुरा कृतम् ।
तन्मे सर्वं यथातत्त्वं ब्रूहि त्वं पुरुषर्षभ ॥ १२-२०८-२ (७३२८९)

तिर्यग्योनिगतो रूपं कथं धारितवान्प्रभुः ।
केन कार्यनिसर्गेण तमाख्याहि महाबल ॥ १२-२०८-३ (७३२९०)
भीष्म उवाच। १२-२०८-४क्ष् (६०६५)
पुराऽहं मृगयां यातो मार्कण्डेयाश्रमे स्थितः ।
तत्रापश्यं मुनिगणान्समासीनान्सहस्रशः ॥ १२-२०८-४ (७३२९१)
ततस्ते मधुपर्केण पूजां चक्रुरथो मयि ।
प्रतिगृह्य च तां पूजां चक्रुरथो मयि। १२-२०८-५ (७३२९२)
कथैषा कथिता तत्र कश्यपेन महर्षिणा ।
मनः प्रह्लादिनीं दिव्यां तामिहैकमनाः शृणु ॥ १२-२०८-६ (७३२९३)
पुरा दानवमुख्या हि क्रोधलोभसमन्विताः ।
बलेन मत्ताः शतशो नरकाद्या महासुराः ॥ १२-२०८-७ (७३२९४)
तथैव चान्ये बहवो दानवा युद्धदुर्मदाः ।
न सहन्ते स्म देवानां समृद्धिं तामनुत्तमाम् ॥ १२-२०८-८ (७३२९५)
ग्नराकाद्या महाघोरा हिरण्याक्षमुपाश्रिताः ।
उद्योगं परमं चक्रुर्देवानां निग्रहे तदा ॥ १२-२०८-९ (७३२९६)
नियुतं वत्सराणां तु वायुभक्षोऽभवत्तदा ।
हिरण्याक्षो महारौद्रो लेभे देवात्पितामहात् ।
वरानचिन्त्यानतुलाञ्शतशोऽथ सहस्रशः ॥' १२-२०८-१० (७३२९७)
दानवैरर्द्यमानास्तु देवा देवर्षयस्तथा ।
न शर्म लेभिरे राजन्क्लिश्यमानास्ततस्ततः ॥ १२-२०८-११ (७३२९८)
पृथिवीमार्तरूपां ते समपश्यन्दिवौकसः ।
दानवैरभिसंकीर्णां घोररूपैर्महाबलैः ।
भारार्तामप्रहृष्टां च दुःखितां संनिमज्जतीम् ॥ १२-२०८-१२ (७३२९९)
ग्गृहीत्वा पृथिवीं देवीं पाताले न्यवसत्तदा ।
ततस्त्रैलोक्यमखिलं निरोषधिगणान्वितम् ।
निःस्वाध्यायवषट्कारमभूत्सर्वं समन्ततः ॥' १२-२०८-१३ (७३३००)
अथादितेयाः संत्रस्ता ब्रह्माणमिदमब्रुवन् ।
कथं शक्ष्यामहे ब्रह्मन्दानवैरभिमर्दनम् ॥ १२-२०८-१४ (७३३०१)
ग्हिरण्याक्षेण भगवन्गृहीतेयं वसुन्धरा ।
न शक्ष्यामो वयं तत्र प्रवेष्टुं जलदुर्गमम् ॥ १२-२०८-१५ (७३३०२)
तानाह भगवान्ब्रह्मा मुनिरेव प्रसाद्यताम् ।
अगस्त्योऽसौ महातेजाः पातु तज्जलमञ्जसा ॥ १२-२०८-१६ (७३३०३)
तथेति चोक्त्वा ते देवा मुनिमूचुर्मुदान्विताः ।
त्रायस्व लोकान्विप्रर्षे जलमेतत्क्षयं नय ॥ १२-२०८-१७ (७३३०४)
तथेति चोक्त्वा भगवान्कालानलसमद्युतिः ।
ध्यायञ्जलादनिवहं स क्षणेन पपौ जलम् ॥ १२-२०८-१८ (७३३०५)

शोषिते तु समुद्रे च देवाः सर्षिपुरोगमाः ।
ब्रह्माणं प्रणिपत्योचुर्मुनिना शोषितं जलम् ।
इति भूयः समाचक्ष्व किं करिष्यामहे विभो ॥ १२-२०८-१९ (७३३०६)
स्वयंभूस्तानुवाचेदं निसृष्टोऽत्र विधिर्मया ॥ १२-२०८-२० (७३३०७)
ते वरेणाभिसंपन्ना बलेन च मदेन च ।
नावबुद्ध्यन्ति संमूढा विष्णुमव्यक्तदर्शनम् ।
वराहरूपिणं देवमधृष्यममरैरपि ॥ १२-२०८-२१ (७३३०८)
एष वेगेन गत्वा हि यत्र ते दानवाधमाः ।
अन्तर्भूमिगता घोरा निवसन्ति सहस्रशः ।
शमयिष्यति तच्छ्रुत्वा जहृषुः सुरसत्तमाः ॥ १२-२०८-२२ (७३३०९)
ततो विष्णुर्महातेजा वाराहं रूपमास्थितः ।
अन्तर्भूमिं संप्रविश्य जगाम दितिजान्प्रति ॥१२-२०८-२३ (७३३१०)
दृष्ट्वा च सहिताः सर्वे दैत्याः सत्वममानुषम् ।
प्रसह्य तरसा सर्वे संतस्थुः कालमोहिताः ॥१२-२०८-२४ (७३३११)
ततस्ते समभिद्रुत्य वराहं जगृहुः समम् ।
संक्रुद्धाश्च वराहं तं व्यकर्षन्त समन्ततः ॥१२-२०८-२५ (७३३१२)
दानवेन्द्रा महाकाया महावीर्यबलोच्छ्रिताः ।
नाशक्नुवंश्च किंचित्ते तस्य कर्तुं तदा विभो ॥१२-२०८-२६ (७३३१३)
ततोऽगच्छन्विस्मयं ते दानवेन्द्रा भयं तथा ।
संशयं गतमात्मानं मेनिरे च सहस्रशः ॥१२-२०८-२७ (७३३१४)
ततो देवाधिदेवः स योगात्मा योगसारथिः ।
योगमास्थाय भगवांस्तदा भरतसत्तम ॥१२-२०८-२८ (७३३१५)
विननाद महानादं क्षोभयन्दैत्यदानवान् ।
सन्नादिता येन लोकाः सर्वाश्चैव दिशो दश ॥१२-२०८-२९ (७३३१६)
तेन सन्नादशब्देन लोकानां क्षोभ आगमत् ।
संभ्रान्ताश्च दिशः सर्वा देवाः शक्रपुरोगमाः ॥१२-२०८-३० (७३३१७)
निर्विचेष्टं जगच्चापि बभूवातिभृशं तदा ।
स्थावरं जङ्गमं चैव तेन नादेन मोहितम् ॥१२-२०८-३१ (७३३१८)
ततस्ते दानवाः सर्वे तेन नादेन भीषिताः ।
पेतुर्गतासवश्चैव विष्णुतेजः प्रमोहिताः ॥१२-२०८-३२ (७३३१९)
ग्त्रस्तांश्च देवानालोक्य ब्रह्मा प्राह पितामहः ।
योगेश्वरोऽयं भगवान्वाराहं रूपमास्थितः ।
नर्दमानोऽत्र संयाति मा भैष्ट सुरसत्तमाः ॥ १२-२०८-३३ (७३३२०)
एवमुक्त्वा ततो ब्रह्मा नमश्चक्रे पितामहः ।
देवता मुनयश्चैव विष्णुं वै मुक्तिहेतवे ॥१२-२०८-३४ (७३३२१)
ततो हरिर्महातेजा ब्रह्माणमभिनन्द्य च।'

रसातलगतश्चापि वराहस्त्रिदशद्विषाम् ।
खुरैर्विदारयामास मांसमेदोस्थिसंचयान् ॥ १२-२०८-३५ (७३३२२)
नादेन तेन महता सनातन इति स्मृतः ।
पद्मनाभो महायोगी भूतात्मा भूतभावनः ॥१२-२०८-३६ (७३३२३)
ततो देवगणाः सर्वे पितामहमुपाद्रवन् ।
तत्र गत्वा महात्मानमूचुश्चैव जगत्पतिम् ॥१२-२०८-३७ (७३३२४)
नादोऽयं कीदृशो देव नेतं विद्म वयं प्रभो ।
कोसौ हि कस्य वा नादो येन विह्वलितं जगत् ।
देवाश्च दानवाश्चैव मोहितास्तस्य तेजसा ॥ १२-२०८-३८ (७३३२५)
एतस्मिन्नन्तरे विष्णुर्वाराहं रूपमास्थितः ।
उदतिष्ठन्महाबाहो स्तूयमानो महर्षिभिः ॥१२-२०८-३९ (७३३२६)
पितामह उवाच।१२-२०८-४०क्ष् (६०६६)
गदिव्यं------ युद्धमासीन्महात्मनोः ।
हिरण्याक्षस्य विष्णोश्च सर्वसंक्षोभकारणम् ॥१२-२०८-४० (७३३२७)
जघान च हिरण्याक्षमन्तर्भूमिगतं हरिः ।
तदाकर्ण्य महातेजा ब्रह्मा मधुरमब्रवीत् ॥' १२-२०८-४१ (७३३२८)
पीतामह उवाच।१२-२०८-४२क्ष् (६०६७)
निहत्य दानवपतीन्महावर्ष्मा महाबलः ।
एष देवो महायोगी भूतात्मा भूतभावनः ॥१२-२०८-४२ (७३३२९)
सर्वभूतेश्वरो योगी मुनिरात्मा तथाऽऽत्मनः ।
स्थिरीभवत कृष्णोऽयं सर्वविघ्नविनाशनः ॥१२-२०८-४३ (७३३३०)
कृत्वा कर्मातिसाध्वेतदशक्यममितप्रभः ।
समायातः स्वमात्मानं महाभागो महाद्युतिः ॥१२-२०८-४४ (७३३३१)
पद्मनाभो महायोगी पुराणपुरुषोत्तमः ।
न संतापो न भीः कार्या शोको वा सुरसत्तमैः ॥१२-२०८-४५ (७३३३२)
विधिरेष प्रभावश्च कालः संक्षयकारकः ।
लोकान्धारयता तेन नादो मुक्तो महात्मना ॥१२-२०८-४६ (७३३३३)
स एष हि महाबाहुः सर्वलोकनमस्कृतः ।
अच्युतः पुण्डरीकाक्षः सर्वभूतादिरीश्वरः ॥ ॥१२-२०८-४७ (७३३३४)

इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि
अष्टाधिकद्विशततमोऽध्यायः ॥ २०८.।

Mahabharata - Shanti Parva - Chapter Footnotes

१२-२०८-३६ भूताचार्यः स भूतराट् इति झ ।ड।थ।पाठः ॥

---

शन्तिपर्व-अध्यय२०९

॥ श्रीः ॥

१२.२०९. अध्यायः २०९

Mahabharata - Shanti Parva - Chapter Topics

भीष्मेण युधिष्ठिरंप्रति वासुदेवतत्वकथनम् ॥ १.।

Mahabharata - Shanti Parva - Chapter Text

१२-२०९-० (७३३३५)
ग्क़ युधिष्ठिर उवाच। १२-२०९-०क्ष् (६०६८)
पितामह महाप्राज्ञ केशवस्य महात्मनः ।
वक्तुमर्हसि तत्त्वेन माहात्म्यं पुनरेव तु ॥ १२-२०९-१ (७३३३६)
न तृप्याम्यहमप्येनं पश्यञ्शृण्वंश्च भारत ।
एवं कृष्णं महाबाहो तस्मादेतद्ब्रवीहि मे ॥ १२-२०९-२ (७३३३७)
भीष्म उवाच। १२-२०९-३क्ष् (६०६९)
शृणु राजन्कथामेतां वैष्णवीं पापनाशनीम् ।
नारदो मां पुरा प्राह यामहं ते वदामि ताम् ॥ १२-२०९-३ (७३३३८)
देवर्षिर्नारदः पूर्वं तत्वं वेत्स्यामि वै हरेः ।
इति संचिन्त्य मनसा दध्यौ ब्रह्म सनातनम् ॥ १२-२०९-४ (७३३३९)
हिमालये शुभे दिव्ये दिव्यं वर्षशतं किल ।
अनुच्छ्वसन्निराहारः संयतात्मा जितेन्द्रियः ॥ १२-२०९-५ (७३३४०)
ततोऽन्तरिक्षे वागासीत्तं मुनिप्रवरं प्रति ।
मेघगम्भीरनिर्घोषा दिव्या वाह्याऽशरीरिणी ॥ १२-२०९-६ (७३३४१)
किमर्थं त्वं समापन्नो ध्यानं मुनिवरोत्तम ।
अहं ददामि ते ज्ञानं धर्माद्यं वा वृणीष्व माम् ॥ १२-२०९-७ (७३३४२)
तच्छ्रुत्वा मुनिरालोच्य संभ्रमाविष्टमानसः ।
किंनु स्यादिति संचिन्त्य वाक्यमाहापरं प्रति ॥ १२-२०९-८ (७३३४३)
कस्त्वं भवानण्डं बिभेद मध्ये
समास्थितो वाक्यमुदीरयन्माम् ।
न रूपमन्यत्तव दृश्यते वै
ईदृग्विधस्त्वं समधिष्ठितोऽसि ॥ १२-२०९-९ (७३३४४)
पुनस्तमाह स मुनिमनन्तोऽहं बृहत्तरः ।
न मां मूढा विजानन्ति ज्ञानिनो मां विदन्त्युत ॥ १२-२०९-१० (७३३४५)
तं प्रत्याह मुनिः श्रीमान्प्रणतो विनयान्वितः ।
भवन्तं ज्ञातुमिच्छामि तव तत्वं ब्रवीहि मे ॥ १२-२०९-११ (७३३४६)
तस्य तद्वचनं श्रुत्वा नारदं प्राह लोकपः ।
ज्ञानेन मां विजानीहि नान्यथा शक्तिरस्ति ते ॥ १२-२०९-१२ (७३३४७)

नारद उवाच।१२-२०९-१३क्ष् (६०७०)
कीदृग्विधं तु तज्ज्ञानं येन जानामि ते तनुम् ।
अनन्त तन्मे ब्रूहि त्वं यद्यनुग्रहवानहम् ॥१२-२०९-१३ (७३३४८)
लोकपाल उवाच।१२-२०९-१४क्ष् (६०७१)
विकल्पहीनं विपुलं तस्य चूरं शिवं परम् ।
ज्ञानं तत्तेन जानासि साधनं प्रति ते मुने ॥१२-२०९-१४ (७३३४९)
अत्रावृत्य स्थितं ह्येतत्तच्छुद्धमितरन्मृषा ।
एतत्ते सर्वमाख्यातं संक्षेपान्मुनिसत्तम ॥१२-२०९-१५ (७३३५०)
नारद उवाच।१२-२०९-१६क्ष् (६०७२)
त्वमेव तव यत्तत्वं ब्रूहि लोकगुरो मम ।
भवन्तं ज्ञातुमिच्छामि कीदृग्भूतस्त्वमव्यय ॥१२-२०९-१६ (७३३५१)
ततः प्रहस्य भगवान्मेघगम्भीरया गिरा ।
प्राहेशः सर्वभूतानां न मे चास्यं श्रुतिर्न च ॥१२-२०९-१७ (७३३५२)
न घ्राणजिह्वे दृक्चैव त्वचा नास्ति तथा मुने ।
कथं वक्ष्यामि चात्मानमशरीरस्तथाप्यहम् ॥१२-२०९-१८ (७३३५३)
तज्ज्ञात्वा विस्मयाविष्टो मुनिराह प्रणम्य तम् ।
येन त्वं पूर्वमात्मानमनन्तोऽहं बृहत्तरः ।
शतोऽहमिति मां प्रीतः प्रोक्तवानसि तत्कथम् ॥ १२-२०९-१९ (७३३५४)
पुनस्तमाह भगवांस्तवाप्यक्षाणि सन्ति वै ।
त्वमेनं ब्रूहि चात्मानं यदि शक्नोषि नारद ॥१२-२०९-२० (७३३५५)
आत्मा यथा तव मुने विदितस्तु भविष्यति ।
मां च जानासि तेन त्वमेकं साधनमावयोः ।
इत्युक्त्वा भगवान्देवस्ततो नोवाच किंचन ॥ १२-२०९-२१ (७३३५६)
नारदोऽप्युत्स्मयन्खिन्नः क्व गतोऽसाविति प्रभुः ।
स्थित्वा स दीर्घकालं च मुनिर्व्यामूढमानसः ॥१२-२०९-२२ (७३३५७)
आह मां भगवान्देवस्त्वनन्तोऽहं बृहत्तरः ।
तेनाहमिति सर्वस्य को वानन्तो बृहत्तरः ॥१२-२०९-२३ (७३३५८)
केयमुर्वी ह्यनन्ताख्या बृहती नूनमेव सा ।
यस्यां जानन्ति भूतानि विलीनानि ततस्ततः ।
एनां पृच्छामि तरुणीं सैषा नूनमुवाच माम् ॥ १२-२०९-२४ (७३३५९)
इत्येवं स मुनिः श्रीमान्कृत्वा निश्चयमात्मनः ।
स भूतलं समाविश्य प्रणिपत्येदमब्रवीत् ॥१२-२०९-२५ (७३३६०)
आश्चर्यासि च धन्यासि वृहती त्वं वसुन्धरे ।
त्वामत्र वेत्तुमिच्छामि याग्दृभूताऽसि शोभने ॥१२-२०९-२६ (७३३६१)
तच्छ्रुत्वा धरणी देवी स्मयमानाऽब्रवीदिदम् ।
नाहं हि बृहती विप्र न चानन्ता च सत्तम ॥१२-२०९-२७ (७३३६२)

कारणं मम यो गन्धो गन्धात्मानं ब्रवीहि तम् ।
ततो मुनिस्तद्धि तत्वं प्रणिपत्येदमब्रवीत् ॥ १२-२०९-२८ (७३३६३)
कारणं मे जलं मत्तो बृहत्तरतमं हि तत् ॥ १२-२०९-२९ (७३३६४)
स समुद्रं मुनिर्गत्वा प्रणिपत्येदमब्रवीत् ।
आश्चर्योसि च धन्योसि ह्यनन्तोसि बृहत्तरः ॥ १२-२०९-३० (७३३६५)
भवन्तं वेत्तुमिच्छामि कीदृग्भूतस्त्यमव्यय ।
तच्छ्रुत्वा सरितानाथः समुद्रो मुनिमब्रवीत् ॥ १२-२०९-३१ (७३३६६)
कारणं मेऽत्र संपृच्छ रसात्मानं बृहत्तरम् ।
ततो बृहत्तरं विद्वंस्त्वं पृच्छ मुनिसत्तम ॥ १२-२०९-३२ (७३३६७)
ततो मुनिर्यथायोगं जलं तत्वमवेक्ष्य तत् ।
जलात्मानं प्रणम्याह जलतत्वस्थितो मुनिः ॥ १२-२०९-३३ (७३३६८)
आश्चर्योसि च धन्योसि ह्यनन्तोसि बृहत्तरः ।
भवन्तं श्रोतुमिच्छामिकीदृग्भूतस्त्वमव्यय ॥ १२-२०९-३४ (७३३६९)
ततो रसात्म--मुनिमाह पुनः पुनः ।
ममापि कारणं पृच्छ तेजोरूपं विभावसुम् ।
नाहं बृहत्तरो ब्रह्मन्नाप्यनन्तश्च सत्तम् ॥ १२-२०९-३५ (७३३७०)
ततोऽग्निं प्रणिपत्याह मुनिर्विस्मितमानसः ।
यज्ञात्मानं महावासं सर्वभूतनमस्कृतम् ॥ १२-२०९-३६ (७३३७१)
आश्चर्योसि च धन्योसि ह्यनन्तश्च बृहत्तरः ।
भवन्तं वेत्तुमिच्छामि कीदृग्भूतस्त्वमव्यय ॥ १२-२०९-३७ (७३३७२)
ततः प्रहस्य भगवान्मुनिं स्विष्टकृदब्रवीत् ।
नाहं बृहत्तरो ब्रह्मन्नाप्यनन्तश्च सत्तम ।
कारणं मम रूपं यत्तं पृच्छ मुनिसत्तम ॥ १२-२०९-३८ (७३३७३)
ततो योगक्रमेणैव प्रतीतं तं प्रविश्य सः ।
रूपात्मानं प्रणम्याह नारदो वदतांवरः ॥ १२-२०९-३९ (७३३७४)
आश्चर्योसि च धन्योसि ह्यनन्तोसि बृहत्तरः ।
भवन्तं वेत्तुमिच्छामि कीदृग्भूतस्त्वमव्यय ॥ १२-२०९-४० (७३३७५)
उत्स्मयित्वा तु रूपात्मा तं मुनिं प्रत्युवाच ह ।
वायुर्मे कारणं ब्रह्मंस्तं पृच्छ मुनिसत्तम ।
मत्तो बहुतरः श्रीमाननन्तश्च महाविलम् ॥ १२-२०९-४१ (७३३७६)
स मारुतं प्रणम्याह भगवान्मुनिसत्तमः ।
योगसिद्धो महायोगी ज्ञानविज्ञानपारगः ॥ १२-२०९-४२ (७३३७७)
आश्चर्योसि च धन्योसि ह्यनन्तोसि बृहत्तरः ।
भवन्तं वेत्तुमिच्छामि कीदृग्भूतस्त्वमव्यय ॥ १२-२०९-४३ (७३३७८)
ततो वायुर्हि संप्राह नारदं मुनिसत्तमम् ।
कारणं पृच्छ भगवन्स्पर्शात्मानं ममाद्य वै ॥ १२-२०९-४४ (७३३७९)

मत्तो बृहत्तरः श्रीमाननन्तश्च तथैव सः ।
ततोस्य वचनं श्रुत्वा स्पर्शात्मानमुवाच सः ॥ १२-२०९-४५ (७३३८०)
आश्चर्योसि च धन्योसि ह्यनन्तोसि बृहत्तरः ।
भवन्तं वेत्तुमिच्छामि कीदृग्भूतस्त्वमव्यय ॥ १२-२०९-४६ (७३३८१)
तस्य तद्वचनं श्रुत्वा स्पर्शात्मा मुनिमब्रवीत् ।
नाहं वृहत्तरो ब्रह्मन्नाप्यनन्तश्च सत्तम ॥ १२-२०९-४७ (७३३८२)
कारणं मम चैवेममाकाशं च बृहत्तरम् ।
तं पृच्छ मुनिशार्दूल सर्वव्यापिनमव्ययम् ॥ १२-२०९-४८ (७३३८३)
तच्छ्रुत्वा नारदः श्रीमान्वाक्यं वाक्यविशारदः ।
आकाशं समुपागम्य प्रणम्याह कृताञ्जलिः ॥ १२-२०९-४९ (७३३८४)
आश्चर्योसि न धन्योसि ह्यनन्तोसि बृहत्तरः ।
भवन्तं वेत्तुमिच्छामि कीदृग्भूतस्त्वमव्यय ॥ १२-२०९-५० (७३३८५)
आकाशस्तमुवाचेदं प्रहसन्मुनिसत्तमम् ।
नाहं बृहत्तरो ब्रह्मञ्शब्दो वै कारणं मम ।
तं पृच्छ मुनिशार्दूल स वै मत्तो बृहत्तरः ॥ १२-२०९-५१ (७३३८६)
ततो ह्याविश्य चाकाशं शब्दात्मानमुवाच ह ।
स्वरव्यञ्जनसंयुक्तं नानाहेतुविभूषितम् ।
वेदाख्यं परमं गुह्यं वेदकारणमच्युतम् ॥ १२-२०९-५२ (७३३८७)
आश्चर्योसि च धन्योसि ह्यनन्तोसि बृहत्तरः ।
भवन्तं श्रोतुमिच्छामि कीदृग्भूतस्त्वमव्यय ॥ १२-२०९-५३ (७३३८८)
वेदात्मा प्रत्युवाचेदं नारदं मुनिपुङ्गवम् ।
मया कारणभूतेन सर्ववेत्ता पितामहः ॥ १२-२०९-५४ (७३३८९)
ब्रह्मणो बुद्धिसंस्थानमास्थितोऽहं महामुने ।
तस्माद्बृहत्तरो मत्तः पद्मयोनिर्महामतिः ।
तं पृच्छ मुनिशार्दूल सर्वकारणकारणम् ॥ १२-२०९-५५ (७३३९०)
ब्रह्मलोकं ततो गत्वा नारदो मुनिपुङ्गवैः ।
सेव्यमानं महात्मानं लोकपालैर्मरुद्गणैः ॥ १२-२०९-५६ (७३३९१)
समुद्रैश्च सरिद्भिश्च भूततत्वैः सभूधरैः ।
गन्धर्वैरप्सरोभिश्च ज्योतिषां च गणैस्तथा ॥ १२-२०९-५७ (७३३९२)
स्तुतिस्तोमग्रहस्तोभैस्तथा वेदैर्मुनीश्वरैः ।
उपास्यमानं ब्रह्माणं लोकनाथं परात्परम् ॥ १२-२०९-५८ (७३३९३)
हिरण्यगर्भं विश्वेशं चतुर्वक्रेण भूषितम् ।
प्रणम्य प्राञ्जलिः प्रह्वस्तमाह मुनिपुङ्गवः ॥ १२-२०९-५९ (७३३९४)
आश्चर्योसि च धन्योसि ह्यनन्तोसि बृहत्तरः ।
भवन्तं वेत्तुमिच्छामि कीदृग्भूतस्त्वमव्यय ॥ १२-२०९-६० (७३३९५)
तच्छ्रुत्वा भगवान्ब्रह्मा सर्वलोकपितामहः ।

उत्स्मयन्मुनिमाहेदं कर्ममूलस्य लोपकम् ॥१२-२०९-६१ (७३३९६)
नाहं बृहत्तरो ब्रह्मन्नाप्यनन्तश्च सत्तम ।
लोकानां मम सर्वेषां नाथभूतो बृहत्तरः ॥१२-२०९-६२ (७३३९७)
नन्दगोपकुले गोपकुमारैः परिवारितः ।
समस्तजगतां गोप्ता गोपवेषेण संस्थितः ॥१२-२०९-६३ (७३३९८)
मद्रूपं च समास्थाय जगत्सृष्टिं करोति सः ।
ऐशानमास्थितः श्रीमान्हन्ति नित्यं हि पाति च ॥१२-२०९-६४ (७३३९९)
विष्णुः स्वरूपरूपोऽसौ कारणं स हरिर्मम ।
तं पृच्छ मुनिशार्दूल स चानन्तो बृहत्तरः ॥१२-२०९-६५ (७३४००)
ततोऽवतीर्य भगवान्ब्रह्मलोकान्महामुनिः ।
नन्दगोपकुले विष्णुमेनं कृष्णं जगत्पतिम् ॥१२-२०९-६६ (७३४०१)
बालक्रीडनकासक्तं वत्सजालविभूषितम् ।
पाययित्वाथ बध्नन्तं धूलिधूम्राननं परम् ॥१२-२०९-६७ (७३४०२)
गाहमानैर्हसद्भिश्च नृत्यद्भिश्च समन्ततः ।
पाणिवादनकैश्चैव संवृतं वेणुवादकैः ॥१२-२०९-६८ (७३४०३)
प्रणिपत्याब्रवीदेनं नारदो भगवान्मुनिः ।
आश्चर्योसि च धन्योसि ह्यनन्तश्च बृहत्तरः ।
वेत्ताऽसि चाव्ययश्चासि वेत्तुमिच्छामि यादृशम् ॥ १२-२०९-६९ (७३४०४)
ततः प्रहस्य भगवान्नारदं प्रत्युवाच ह ।
मत्तः परतरं नास्ति मत्तः सर्वं प्रतिष्ठितम् ॥१२-२०९-७० (७३४०५)
मतो बृहत्तरं नान्यदहमेव बृहत्तरः ।
आकाशे च स्थितः पूर्वमुक्तवानहमेव ते ॥१२-२०९-७१ (७३४०६)
न मां वेत्ति जनः कश्चिन्माया मम दुरत्यया ।
भक्त्या त्वनन्यया युक्ता मां विजानन्ति योगिनः ॥१२-२०९-७२ (७३४०७)
प्रियोसि मम भक्तोसि मम तत्वं विलोकय ।
ददामि तव तज्ज्ञानं येन तत्वं प्रपश्यसि ॥१२-२०९-७३ (७३४०८)
अन्येषां चैव भक्तानां मम योगरतात्मनाम् ।
ददामि दिव्यं ज्ञानं च येन तत्वं प्रपश्यसि ॥१२-२०९-७४ (७३४०९)
अन्येषां चैव भक्तानां मम योगरतात्मनाम् ।
ददामि दिव्यं ज्ञानं च तेन ते यान्ति मत्पदम् ॥१२-२०९-७५ (७३४१०)
एवमुक्त्वा ययौ कृष्णो नन्दगोपगृहं हरिः ॥ १२-२०९-७६ (७३४११)
भीष्म उवाच।१२-२०९-७७क्ष् (६०७३)
एतत्ते कथितं राजन्विष्णुतत्वमनुत्तमम् ।
भजस्वैनं विशालाक्षं जपन्कृष्णेति सत्तम ॥१२-२०९-७७ (७३४१२)
मोहयन्मां तथा त्वां च शृणोत्येष मयेरितान् ।
धर्मात्मा च महाबाहो भक्तान्रक्षति नान्यथा ॥ ॥१२-२०९-७८ (७३४१३)

इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि
नवाधिकद्विशततमोऽध्यायः ॥ २०९.।

---

शन्तिपर्व-अध्यय२१०
॥ श्रीः ॥
१२.२१०. अध्यायः २१०

Mahabharata - Shanti Parva - Chapter Topics
भीष्मेण युधिष्ठिरंप्रति नारदाय श्रीनारायणोक्तस्य प्रयाणकाले
श्रीभगवदनुस्मृतिप्रकारस्य कथनम् ॥ १.।
Mahabharata - Shanti Parva - Chapter Text

१२-२१०-० (७३४३६)
ग्युधिष्ठिर उवाच। १२-२१०-०क्ष् (६०७५)
पितामह महाप्राज्ञ सर्वशास्त्रविशारद ।
प्रयाणकाले किं जप्यं मोक्षिभिस्तत्त्वचिन्तकैः ॥ १२-२१०-१ (७३४३७)
किंनु स्मरन्कुरुश्रेष्ठ मरणे समुपस्थिते ।
प्राप्नुयात्परमां सिद्धिं श्रोतुमिच्छामि तत्वतः ॥ १२-२१०-२ (७३४३८)
भीष्म उवाच। १२-२१०-३क्ष् (६०७६)
त्वद्युक्तश्च हितः सूक्ष्म उक्तः प्रश्नस्त्वयाऽनघ ।
शृणुष्वावहितो राजन्नारदेन पुरा श्रुतम् ॥ १२-२१०-३ (७३४३९)
श्रीवत्साङ्कं जगद्बीजमनन्तं लोकसाक्षिणम् ।
पुरा नारायणं देवं नारदः पर्यपृच्छत ॥ १२-२१०-४ (७३४४०)
अक्षरं परमं ब्रह्म निर्गुणं तमसः परम् ।
आहुर्वैद्यं परं धाम ब्रह्मादिकमलोद्भवम् ॥ १२-२१०-५ (७३४४१)
भगवन्भूतभव्येश श्रद्दधानैर्जितेन्द्रियैः ।
कथं भक्तैर्विचिन्त्योसि योगिभिर्मोक्षकाङ्क्षिभिः ॥ १२-२१०-६ (७३४४२)
किंनु जप्यं जपेन्नित्यं काल्यमुत्थाय मानवः ।
स्मरेच्च म्रियमाणो वै विशेषेण महाद्युते ॥ १२-२१०-७ (७३४४३)
कथं युञ्जन्समाध्यायेद्ब्रूहि तत्वं सनातनम् ॥ १२-२१०-८ (७३४४४)
श्रुत्वा च नारदोक्तं तु देवानामीश्वरः स्वयम् ।
प्रोवाच भगवान्विष्णुर्नारदं वरदः प्रभुः ॥ १२-२१०-९ (७३४४५)
हन्त ते कथयिष्यामि इमां दिव्यामनुस्मृतिम् ।
यामधीत्य प्रयाणे तु मद्भावयोपपद्यते ॥ १२-२१०-१० (७३४४६)
ओंकारमग्रतः कृत्वा मां नमस्कृत्य नारद ।
एकाग्रः प्रयतो भूत्वा इमं मन्त्रमुदीरयेत् ॥ १२-२१०-११ (७३४४७)

ओं नमो भगवते वासुदेवायेति ॥ १२-२१०-१२ (७३४४८)
इत्युक्तो नारदः प्राह प्राञ्जलिः प्रणतः स्थितः ।
सर्वदेवेश्वरं विष्णुं सर्वात्मानं हरिं प्रभुम् ॥ १२-२१०-१३ (७३४४९)
नारद उवाच । १२-२१०-१४क्ष् (६०७७)
अव्ययं शाश्वतं देवं प्रभवं पुरुषोत्तमम् ।
प्रपद्ये प्राञ्जलिर्विष्णुमक्षरं परमं पदम् ॥ १२-२१०-१४ (७३४५०)
पुराणं प्रभवं विष्णुमक्षयं लोकसाक्षिणम् ।
प्रपद्ये पुण्डरीकाक्षमीशं भक्तानुकम्पिनम् ॥ १२-२१०-१५ (७३४५१)
लोकनाथं सहस्राक्षमद्भुतं परदं पदम् ।
भगवन्तं प्रपन्नोऽस्मि भूतभव्यभवत्प्रभुम् ॥ १२-२१०-१६ (७३४५२)
स्रष्टारं सर्वलोकानामनन्तं सर्वतोमुखम् ।
पद्मनाभं हृषीकेशं प्रपद्ये सत्यमच्युतम् ॥ १२-२१०-१७ (७३४५३)
हिरण्यगर्भममृतं भूगर्भं परतः परम् ।
प्रभोः प्रभुमनाद्यन्तं प्रपद्ये तं रविप्रभम् ॥ १२-२१०-१८ (७३४५४)
सहस्रशीर्षं पुरुषं महर्षिं तत्वभावनम् ।
प्रपद्ये सूक्ष्ममचलं वरेण्यमभयप्रदम् ॥ १२-२१०-१९ (७३४५५)
नारायणं पुराणर्षिं योगात्मानं सनातनम् ।
संस्थानं सर्वतत्वानां प्रपद्ये ध्रुवमीश्वरम् ॥ १२-२१०-२० (७३४५६)
यः प्रभुः सर्वभूतानां येन सर्वमिदं ततम् ।
परावरगुरुर्विष्णुः स मे देवः प्रसीदतु ॥ १२-२१०-२१ (७३४५७)
यस्मादुत्पद्यते ब्रह्मा पद्मयोनिः सनातनः ।
ब्रह्मयोनिर्हि विश्वात्मा स मे विष्णुः प्रसीदतु ॥ १२-२१०-२२ (७३४५८)
यः पुरा प्रलये प्राप्ते नष्टे स्थावरजङ्गमे ।
ब्रह्मादिषु प्रलीनेषु नष्टे लोकपरावरे ॥ १२-२१०-२३ (७३४५९)
आभूतसंप्लवे चैव प्रलीनेऽप्राकृतो महान् ।
एकस्तिष्ठति विश्वात्मा स मे विष्णुः प्रसीदतु ॥ १२-२१०-२४ (७३४६०)
चतुर्भिश्च चतुर्भिश्च द्वाभ्यां पञ्चभिरेव च ।
हुयते च पुनर्द्वाभ्यां स मे विष्णुः प्रसीदतु ॥ १२-२१०-२५ (७३४६१)
पर्जन्यः पृथिवी सस्यं कालो धर्मः क्रियाक्रिये ।
गुणाकरः स मे बभ्रुर्वासुदेवः प्रसीदतु ॥ १२-२१०-२६ (७३४६२)
अग्नीषोमार्कताराणां ब्रह्मरुद्रेन्द्रयोगिनाम् ।
यस्तेजयति तेजांसि स मे विष्णुः प्रसीदतु ॥ १२-२१०-२७ (७३४६३)
योगावास नमस्तुभ्यं सर्वावास वरप्रद ।
यज्ञगर्भ हिरण्याङ्गं पञ्चयज्ञ नमोस्तु ते ॥ १२-२१०-२८ (७३४६४)
चतुर्मूर्ते परं धाम लक्ष्म्यावास परार्चित ।
सर्वावास नमस्तेऽस्तु वासुदेव प्रधानकृत् ॥ १२-२१०-२९ (७३४६५)

अजस्त्वनामयः पन्था ह्यमूर्तिर्विश्वमूर्तिधृत् ।
विकर्तः पञ्चकाज्ञ नमस्ते ज्ञानसागर ॥ १२-२१०-३० (७३४६६)
अव्यक्ताद्व्यक्तमुत्पन्नमव्यक्ताद्यः परोऽक्षरः ।
यस्मात्परतरं नास्ति तमस्मि शरणं गतः ॥ १२-२१०-३१ (७३४६७)
न प्रधानो न च महान्पुरुषश्चेतनो ह्यजः ।
अनयोर्यः परतरस्तमस्मि शरणं गतः ॥ १२-२१०-३२ (७३४६८)
चिन्तयन्तो हि यं नित्यं ब्रह्मेशानादयः प्रभुम् ।
निश्चयं नाधिगच्छन्ति तमस्मि शरणं गतः ॥ १२-२१०-३३ (७३४६९)
जितेन्द्रिया महात्मानो ज्ञानध्यानपरायणाः ।
यं प्राप्य न निवर्तन्ते तमस्मि शरणं गतः ॥ १२-२१०-३४ (७३४७०)
एकांशेन जगत्सर्वमवष्टभ्य विभुः स्थितः ।
अग्राह्यं निर्गुणं नित्यं तमस्मि शरणं गतः ॥ १२-२१०-३५ (७३४७१)
सोमार्काग्निमयं तेजो या च तारमयी द्युतिः ।
दिवि संजायते योऽयं स महात्मा प्रसीदतु ॥ १२-२१०-३६ (७३४७२)
गुणादिर्निर्गुणश्चाद्यो लक्ष्मीवांश्चेतनो ह्यजः ।
सूक्ष्मः सर्वगतो योगी स महात्मा प्रसीदतु ॥ १२-२१०-३७ (७३४७३)
साङ्ख्ययोगाश्च ये चान्ये सिद्धाश्च परमर्षयः ।
यं विदित्वा विमुच्यन्ते स महात्मा प्रसीदतु ॥ १२-२१०-३८ (७३४७४)
अव्यक्तः समधिष्ठाता अचिन्त्यः सदसत्परः ।
अस्थितिः प्रकृतिश्रेष्ठः स महात्मा प्रसीदतु ॥ १२-२१०-३९ (७३४७५)
क्षेत्रज्ञः पञ्चधा भुङ्क्ते प्रकृतिं पञ्चभिर्मुखैः ।
महान्गुणांश्च यो भुङ्क्ते स महात्मा प्रसीदतु ॥ १२-२१०-४० (७३४७६)
सूर्यमध्ये स्थितः सोमस्तस्य मध्ये च या स्थिता ।
भूतबाह्या च या दीप्तिः स महात्मा प्रसीदतु ॥ १२-२१०-४१ (७३४७७)
नमस्ते सर्वतः सर्व सर्वतोक्षिशिरोमुख ।
निर्विकार नमस्तेऽस्तु साक्षी क्षेत्रध्रुवस्थितिः ॥ १२-२१०-४२ (७३४७८)
अतीन्द्रिय नमस्तुभ्यं लिङ्गैर्व्यक्तैर्न मीयसे ।
ये च त्वां नाभिजानन्ति संसारे संसरन्ति ते ॥ १२-२१०-४३ (७३४७९)
कामक्रोधविनिर्मुक्ता रागद्वेषविवर्जिताः ।
मान्यभक्ता विजानन्ति न पुनर्भवका द्विजाः ॥ १२-२१०-४४ (७३४८०)
एकान्तिनो हि निर्द्वन्द्वा निराशीःकर्मकारिणः ।
ज्ञानाग्निदग्धकर्माणस्त्वां विशन्ति विचिन्तकाः ॥ १२-२१०-४५ (७३४८१)
अशरीरं शरीरस्थं समं सर्वेषु देहिषु ।
पुण्यपापविनिर्मुक्ता भक्तास्त्वां प्राविशन्त्युत ॥ १२-२१०-४६ (७३४८२)
अव्यक्तं बुद्ध्यहङ्कारमनोभूतेन्द्रियाणि च ।
त्वयि तानि च तेषु त्वं न तेषु त्वं न ते त्वयि ॥ १२-२१०-४७ (७३४८३)

एकत्वान्यत्वनानात्वं ये विदुर्यान्ति ते परम् ।
समोसि सर्वभूतेषु न ते द्वेष्योस्ति न प्रियः ॥ १२-२१०-४८ (७३४८४)
समत्वमभिकाङ्क्षेऽहं भक्त्या वै नान्यचेतसा ।
चराचरमिदं सर्वं भूतग्रामं चतुर्विधम् ।
त्वया त्वय्येव तत्प्रोतं सूत्रे मणिगणा इव ॥ १२-२१०-४९ (७३४८५)
स्रष्टा भोक्तासि कूटस्थो ह्यतत्वं तत्वसंज्ञिकः ।
अकर्ता हेतुरचलः पृथगात्मन्यवस्थितः ॥ १२-२१०-५० (७३४८६)
न ते भूतेषु संयोगो भूततत्वगुणाधिकः ।
अहङ्कारेण बुद्ध्या वा न ते योगस्त्रिभिर्गुणैः ॥ १२-२१०-५१ (७३४८७)
न मोक्षधर्मो वा न त्वं नारम्भो जन्म वा पुनः ।
जरामरणमोक्षार्थं त्वां प्रपन्नोस्मि सर्वग ॥ १२-२१०-५२ (७३४८८)
ईश्वरोसि जगन्नाथ ततः परम उच्यसे ।
भक्तानां यद्धितं देव तद्ध्याहि त्रिदशेश्वर ॥ १२-२१०-५३ (७३४८९)
विषयैरिन्द्रियैर्वाऽपि न मे भूयः समागमः ।
पृथिवीं यातु गन्धो वै रसं यातु जलं तथा ॥ १२-२१०-५४ (७३४९०)
तेजो हुताशनं यातु स्पर्शो यातु च मारुतम् ।
श्रोत्रमाकाशमप्येतु मनो वैकारिकं पुनः ॥ १२-२१०-५५ (७३४९१)
इन्द्रियाण्यपि संयान्तु स्वासुस्वासु च योनिषु ।
पृथिवी यातु सलिलमापोग्निमनलोऽनिलम् ॥ १२-२१०-५६ (७३४९२)
वायुराकाशमप्येतु मनश्चाकाश एव च ।
अहंकारं मनो यातु मोहनं सर्वदेहिनाम् ॥ १२-२१०-५७ (७३४९३)
अहंकारस्ततो बुद्धिं बुद्धिरव्यक्तमच्युत ॥ १२-२१०-५८ (७३४९४)
प्रधाने प्रकृतिं याते गुणसाम्ये व्यवस्थिते ।
वियोगः सर्वकरणैर्गुणैर्भूतैश्च मे भवेत् ॥ १२-२१०-५९ (७३४९५)
निष्केवलं पदं तात काङ्क्षेऽहं परमं तव ।
एकीभावस्त्वया मेऽस्तु न मे जन्म भवेत्पुनः ॥ १२-२१०-६० (७३४९६)
त्वद्बुद्धिस्त्वद्गतप्राणस्त्वद्भक्तिस्त्वत्परायणः ।
त्वामेवाहं स्मरिष्यामि मरणे पर्युपस्थिते ॥ १२-२१०-६१ (७३४९७)
पूर्वदेहकृता ये तु व्याधयः प्रविशन्तु माम् ।
अर्दयन्तु च दुःखानि ऋणं मे प्रविमुञ्चतु ॥ १२-२१०-६२ (७३४९८)
अनुध्यातोऽसि देवेश न मे जन्म भवेत्पुनः ।
तस्माद्ब्रवीमि कर्माणि ऋणं मे न भवेदिति ॥ १२-२१०-६३ (७३४९९)
नोपतिष्ठन्तु मां सर्वे व्याधयः पूर्वसंचिताः ।
अनृणो गन्तुमिच्छामि तद्विष्णोः परमं पदम् ॥ १२-२१०-६४ (७३५००)
श्रीभगवानुवाच। १२-२१०-६५क्ष् (६०७८)
अहं भगवतस्तस्य मम चासौ सनातनः ।

तस्याहं न प्रणश्यासि स च मे न प्रणश्यति ॥१२-२१०-६५ (७३५०१)
कर्मेन्द्रियामि संयम्य पञ्च बुद्धीन्द्रियाणि च ।
दशेन्द्रियाणि मनसि अहंकारे तथा मनः ॥१२-२१०-६६ (७३५०२)
अहंकारं तथा बुद्धौ बुद्धिमात्मनि योजयेत् ।
यतबुद्धीन्द्रियः पश्येद्बुद्ध्या बुद्ध्येत्परात्पम् ॥१२-२१०-६७ (७३५०३)
ममायमिति यस्याहं येन सर्वमिदं तततम् ।
ततो बुद्धेः परं बुद्ध्वा लभते न पुनर्भवम् ॥१२-२१०-६८ (७३५०४)
मरणे समनुप्राप्ते यश्चैवं मामनुस्मरेत् ।
अपि पापसमाचारः स याति परमां गतिम् ॥१२-२१०-६९ (७३५०५)
ओं नमो भगवते तस्मै देहिनां परमात्मने ।
नारायणाय भक्तानामेकनिष्ठाय शाश्वते ॥१२-२१०-७० (७३५०६)
इमामनुस्मृतिं दिव्यां वैष्णवीं सुसमाहितः ।
स्वपन्विबुद्धश्च पठेद्यत्र तत्र समभ्यसेत् ॥१२-२१०-७१ (७३५०७)
पौर्णमास्याममावास्यां द्वादश्यां च विशेषतः ।
श्रावयेच्छ्रद्दधानांश्च मद्भक्तांश्च विशेषतः ॥१२-२१०-७२ (७३५०८)
यद्यहंकारमाश्रित्य यज्ञदानतपः क्रियाः ।
कुर्वंस्तत्फलमाप्नोति पुनरावर्तनं न तु ॥१२-२१०-७३ (७३५०९)
अभ्यर्चयन्पितॄन्देवान्पठञ्जुह्वन्यलिं ददत् ।
ज्वलन्नग्निं स्मरेद्यो मां स याति परमां गतिम् ॥१२-२१०-७४ (७३५१०)
यज्ञो दानं तपश्चैव पावनानि शरीरिणाम् ।
यज्ञं दानं तपस्तस्मात्कुर्यादाशीर्विवर्जितः ॥१२-२१०-७५ (७३५११)
नम इत्येव यो ब्रूयान्मद्भक्तः श्रद्धयान्वितः ।
तस्याक्षयो भवेल्लोकः श्वपाकस्यापि नारद ॥१२-२१०-७६ (७३५१२)
किं पुनर्ये यजन्ते मां साधका विधिपूर्वकम् ।
श्रद्धावन्तो यतात्मानस्ते मां यान्ति मदाश्रिताः ॥१२-२१०-७७ (७३५१३)
कर्माण्याद्यन्तवन्तीह मद्भक्तोऽमृतमश्नुते ।
मामेव तस्माद्देवर्षे ध्याहि नित्यमतन्द्रितः ।
अवाप्स्यसि ततः सिद्धिं द्रक्ष्यस्येव पदं मम ॥ १२-२१०-७८ (७३५१४)
अज्ञानिने च यो ज्ञानं दद्याद्धर्मोपदेशनम् ।
कृत्स्नां वा पृथिवीं दद्यात्तेन तुल्यं न तत्फलम् ॥१२-२१०-७९ (७३५१५)
तस्मात्प्रदेयं साधुभ्यो जन्मबन्धभयापहम् ।
एवं दत्त्वा नरश्रेष्ठ श्रेयो वीर्यं च विन्दति ॥१२-२१०-८० (७३५१६)
अश्वमेधसहस्राणां सहस्रं यः समाचरेत् ।
नासौ पदमवाप्नोति मद्भक्तैर्यदवाप्यते ॥१२-२१०-८१ (७३५१७)
भीष्म उवाच।१२-२१०-८२क्ष् (६०७९)
एवं पृष्टः पुरा तेन नारदेन सुरर्षिणा ।

यदुवाच तदाऽसौ भो तदुक्तं तव सुव्रत ॥१२-२१०-८२ (७३५१८)
त्वमप्येकमना भूत्वा ध्याहि ज्ञेयं गुणातिगम् ।
भजस्व सर्वभावेन परमात्मानमव्ययम् ॥१२-२१०-८३ (७३५१९)
श्रुत्वैतन्नारदो वाक्यं दिव्यं नारायणेरितम् ।
अत्यन्तभक्तिमान्देव एकान्तत्वमुपेयिवान् ॥१२-२१०-८४ (७३५२०)
नारायणमृषिं देवं दशवर्षाण्यनन्यभाक् ।
इदं जपन्वै प्राप्नोति तद्विष्णोः परमं पदम् ॥१२-२१०-८५ (७३५२१)
किं तस्य बहुभिर्मन्त्रैर्भक्तिर्यस्य जनार्दने ।
नमो नारायणायेति मन्त्रः सर्वार्थसाधकः ॥१२-२१०-८६ (७३५२२)
इमां रहस्यां परमामनुस्मृति
मधीत्य बुद्धिं लभते च नैष्ठिकीम् ।
विहाय दुःखान्यवमुच्य सङ्कटा
त्स वीतरागो विगतज्वरः सुखी ॥ ॥ १२-२१०-८७ (७३५२३)

इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि
दशाधिकद्विशततमोऽध्यायः ॥ २१०.।

Mahabharata - Shanti Parva - Chapter Footnotes

१२-२१०-१ श्रुत्वा तस्य तु देवर्षेर्वाक्यं वाचस्पतिः स्वयमिति थ
।पाठः ॥
१२-२१०-१४ अव्यक्तं शाश्वतं देवमि ट।थ ।पाठः ॥
१२-२१०-१५ पुराणं प्रभवं नित्यमिति ट ।थ।पाठः ॥
१२-२१०-३० त्रिकर्तः पञ्चकालज्ञेति ट।थ ।पाठः ॥
१२-२१०-४४ न पुनर्मारका द्विजा इति ट ।थ।पाठः ॥
१२-२१०-४६ त्वां विशन्ति विनिश्चिता इति ध ।पाठः ॥
१२-२१०-५२ न मे धर्मो ह्यधर्मो वेति ट ।थ।पाठः ॥
१२-२१०-५४ पृथिवीं यातु मे घ्राणं यातु मे रसनं जलम् ।रूपं
हुताशनं यातु इति ट।थ।पाठः ॥
१२-२१०-६० निष्केवलं वरं देवेति ध ।पाठः ॥
१२-२१०-७४ जपन्भिन्नं स्मरेदिति ध ।पाठः ॥
१२-२१०-७८ मद्भक्तो नान्तमश्नुत इति ट ।थ।पाठः ॥
१२-२१०-८२ यदुवाच तदा शंभुरिति ट ।थ।पाठः ॥
१२-२१०-८७ स वीतरागो विचरेदिमां महीम् ।इति ट।थ।पाठः ॥

---

शन्तिपर्व-अध्यय२११
॥ श्रीः ॥

१२.२११. अध्यायः २११

Mahabharata - Shanti Parva - Chapter Topics
भीष्मेण युधिष्ठिरंप्रति गरुडेनात्मानं
प्रत्युक्तश्रीभगवन्महिमानुवादः ॥ १.।
Mahabharata - Shanti Parva - Chapter Text

१२-२११-० (७३५२४)
क़ युधिष्ठिर उवाच। १२-२११-०क्ष् (६०८०)
देवानुरमनुष्येषु ऋषिमुख्येषु वा पुनः ।
विष्णोस्तत्वं यथाख्यातं को विद्वाननुवेत्ति तत् ॥ १२-२११-१ (७३५२५)
एतन्मे सर्वमाचक्ष्व न मे तृप्तिर्हि तत्वतः ।
वर्तते भरतश्रेष्ठ सर्वज्ञोऽसीति मे मतिः ॥ १२-२११-२ (७३५२६)
भीष्म उवाच। १२-२११-३क्ष् (६०८१)
कारितोऽहं त्वया राजन्यद्वृत्तं च पुरा मम ।
गरुडेन पुरा मह्यं संवादोऽभूभृतोत्तम् ॥ १२-२११-३ (७३५२७)
पुराहं तप आस्थाय वासुदेवपरायणः ।
ध्यायन्स्तुवन्नमस्यंश्च यजमानस्तमेवच ।
गङ्गद्वीपे समासीनो दशवर्षाणि भारत ॥ १२-२११-४ (७३५२८)
माता च मम ता देवी जननी लोकपावनी ।
समासीना समीपे मे रक्षणार्थं ममाच्युत ॥ १२-२११-५ (७३५२९)
तस्मिन्कालेऽद्भुतः श्रीमान्सर्ववेदमयः प्रभुः ।
सुपर्णः पततांश्रेष्ठो मेरुमन्दरसन्निभः ।
आजगाम विशुद्धात्मा गङ्गां द्रष्टुं महायशाः ॥ १२-२११-६ (७३५३०)
तमागतं महात्मानं प्रत्युद्गम्याहमर्थितः ।
प्रणिपत्य यथान्यायं कृताज्जलिरवस्थितः ॥ १२-२११-७ (७३५३१)
सोऽपि देवो महाभागामभिनन्द्य च जाह्नवीम् ।
तथा च पूजितः श्रीमानुणेपाविशदासने ॥ १२-२११-८ (७३५३२)
ततः कथान्तरे तं वै वचनं चेदमब्रवम् ।
वेदवेद महावीर्य वैनतेग महाबल ॥ १२-२११-९ (७३५३३)
नारायणं हृषीकेशं सहमानोऽनिशं हरिम् ।
जानासि तं यथा वक्तुं यादृग्भूतो जनार्दनः ।
ममापि तस्य सज्ञातं वक्तुमर्हसि सत्तम ॥ १२-२११-१० (७३५३४)
गरुड उवाच। १२-२११-११क्ष् (६०८२)
शृणु भीष्म यथान्यायं पुरा त्वमिह सत्तमाः ।
अनेके पुनयः सिद्धा मानसोत्तरवासिनः ॥

पगच्छुर्मा महाप्राज्ञा वासुदेवपरायणाः ॥ १२-२११-११ (७३५३५)
पक्षीन्द्र वासुदेवस्य तत्वं वेत्सि परं पदम् ।
स्वसा सयो न तस्यास्ति सन्निकृष्टप्रियोपि च ॥ १२-२११-१२ (७३५३६)
तेषामहं वचः श्रुत्वा प्रणिपत्य महाहरिम् ।
अब्रवं च यथावृत्तं मम नारायणस्य च ॥ १२-२११-१३ (७३५३७)
शृणुध्वं मुनिशार्दूला हृत्वा सोममहं पुरा ।
आकाशे पतमानस्तु वाक्यं तत्र शृणोमि वै ॥ १२-२११-१४ (७३५३८)
साधुसाधु महाबाहो प्रीतोस्मि तव दर्शनात् ।
वृणीष्व वचनं मत्तः पक्षीन्द्र गरुडाधुना ॥ १२-२११-१५ (७३५३९)
त्वामहं भक्तितत्वज्ञो ब्रवै वचनमुत्तमम् ।
इत्याह स्म ध्रुवं तत्र मामाह भगवान्पुनः ॥ १२-२११-१६ (७३५४०)
ऋषिरस्मि महावीर्य न मां जानाति वा मयि ।
असूयति च मां मूढ तच्छ्रुत्वा गर्वमास्थितः ॥ १२-२११-१७ (७३५४१)
अहं देवनिकायानां मध्ये वचनमब्रवम् ।
ऋषे पूर्वं वरं मत्तस्त्वं वृणीष्व ततो ह्यहम् ।
वृणे त्वत्तो वरं पश्चादित्येवं मुनिसत्तमाः ॥ १२-२११-१८ (७३५४२)
तस्मात्त्वां भगवान्देवः श्रीमाञ्श्रीवत्सलक्षणः ।
अद्य पश्यति पक्षीन्द्र वाहनं भव मे सदा ।
वृणेऽहं वरमेतद्धि त्वत्तोऽद्य पतगेश्वर ॥ १२-२११-१९ (७३५४३)
तथेति तं वीक्ष्य मातामनहंकारमास्थितम् ।
जेतुकामो ह्यहं विष्णुं मायया मायिनं हरिम् ॥ १२-२११-२० (७३५४४)
त्वत्तो ह्यहं वृणे त्वद्य वरं ऋषिवरोत्तम ।
तवोपरिष्टात्स्थास्यामि वरमेतत्प्रयच्छ मे ॥ १२-२११-२१ (७३५४५)
तथेति च हसन्प्राह हरिर्नारायणः प्रभुः ।
ध्वजं च मे भव सदा त्वमेव विहगेश्वर ।
उपरिष्टात्स्थितिस्तेऽस्तु मम पक्षीन्द्र सर्वदा ॥ १२-२११-२२ (७३५४६)
इत्युक्त्वा भगवान्देवः शङ्खचक्रगदाधरः ।
सहस्रचरणः श्रीमान्सहस्रादित्यसन्निभः ॥ १२-२११-२३ (७३५४७)
सहस्रशीर्षा पुरुषः सहस्रनयनो महान् ।
सहस्रमकुटोऽचिन्त्यः सहस्रवदनो विभुः ॥ १२-२११-२४ (७३५४८)
विद्युन्मालानिभैर्दिव्यैर्नानाभरणराजिभिः ।
क्वचित्संदृश्यमानस्तु चतुर्बाहुः क्वचिद्धरिः ॥ १२-२११-२५ (७३५४९)
क्वचिज्ज्योतिर्मयोचिन्त्यः क्वचित्स्कन्धे समाहितः ।
एवं मम जयन्देवस्तत्रैवान्तरधीयत ॥ १२-२११-२६ (७३५५०)
ततोऽहं विस्मयापन्नः कृत्वा कार्यमनुत्तमम् ।
अस्याविमुच्य जननीं मया सह मुनीश्वराः ॥ १२-२११-२७ (७३५५१)

अचिन्त्योऽयमहं भूयः कोऽसौ मामब्रवीत्पुरा ।
कीदृग्विधः स भगवानिति मत्वा तमास्थितः ॥ १२-२११-२८ (७३५५२)
अनन्तरं देवदेवं स्कन्धे मम समाश्रितम् ।
अद्राक्षं पुण्डरीकाक्षं वहमानोऽहमद्भुतम् ॥ १२-२११-२९ (७३५५३)
अवशस्तस्य भावेन यत्र यत्र स चेच्छति ।
विस्मयापन्नहृदयो ह्यहं किमिति चिन्तयन् ।
अन्तर्जलमहं सर्वं वहमानोऽगमं पुनः ॥ १२-२११-३० (७३५५४)
सेन्द्रैर्देवैर्महाभागैर्ब्रह्माद्यैः कल्पजीविभिः ।
स्तूयमानो ह्यहमपि तैस्तैरभ्यर्चितः पृथक् ॥ १२-२११-३१ (७३५५५)
क्षीरोदस्योत्तरे कूले दिव्ये मणिमये शुभे ।
वैकर्णनाम सदनं हरेस्तस्य महात्मनः ॥ १२-२११-३२ (७३५५६)
दिव्यं तेजोमयं श्रीमदचिन्त्यममरैरपि ।
तेजोनिलमयैः स्तम्भैर्नानासंस्थानसंस्थितैः ॥ १२-२११-३३ (७३५५७)
विभूषितं हिरण्येन भास्वरेण समन्ततः ।
दिव्यं ज्योतिः समायुक्तं गीतवादित्रशोभितम् ॥ १२-२११-३४ (७३५५८)
शृणोमि शब्दं तत्राहं न पश्यामि शरीरिणम् ।
न च स्थलं न चान्यच्च पादयोस्तं समन्ततः ।
वेपमानो ह्यहं तत्र विष्ठितोऽहं कृताञ्जलिः ॥ १२-२११-३५ (७३५५९)
ततो ब्रह्मादयो देवा लोकपालास्तथैव च ।
सनन्दनाद्या मुनयस्तथाऽन्ये परजीविनः ॥ १२-२११-३६ (७३५६०)
प्राप्तास्तत्र सभाद्वारि देवगन्धर्वसत्तमाः ।
ब्रह्माणं परतः कृत्वा कृताञ्जलिपुटास्तदा ॥ १२-२११-३७ (७३५६१)
ततस्तदन्तरे तस्मिन्क्षीरोदार्णवशीकरैः ।
बोध्यमानो महाविष्णुराविर्भूत इवाबभौ ॥ १२-२११-३८ (७३५६२)
फणासहस्रमालाढ्यं शेषमव्यक्तसंस्थितम् ।
पश्याम्यहं मुदाऽऽकाशे यस्योपरि जनार्दनम् ॥ १२-२११-३९ (७३५६३)
दीर्घवृत्तैः समैः पीनैः केयूरवलयोज्ज्वलैः ।
चर्तुभिर्बाहुभिर्युक्तं------------॥ १२-२११-४० (७३५६४)
पिताम्बरेण संवीतं कौस्तुभेन विराजितम् ।
वक्षस्थलेन संयुक्तं पद्मयाऽधिष्ठितेन च ॥ १२-२११-४१ (७३५६५)
ईषदुन्मीलिताक्षं तं सर्वकारणकारणम् ।
क्षीरोदस्योपरि बभौ नीलाभ्रं परमं यथा ॥ १२-२११-४२ (७३५६६)
न कश्चिद्वदते कश्चिन्न व्याहरति कश्चन ।
ब्रह्मादिस्तम्बपर्यन्तं माशब्दमिति रोषितम् ।
भ्रुकुटीकुटिलाक्षास्ते नानाभूतगणाः स्थिताः ॥ १२-२११-४३ (७३५६७)
कृत्वा च प्रस्थितं तत्र जगतां हितकाम्यया ।

गच्छध्वमिति मामुक्त्वा गरुडेत्याह मां ततः ॥१२-२११-४४ (७३५६८)
ततोऽहं प्रणिपत्याग्रे कृताञ्जलिरवस्थितः ।
आगच्छेति च मामुक्त्वा पूर्वोत्तरपथं गतः ॥१२-२११-४५ (७३५६९)
अतीव मृदुभावेन गच्छन्निव स दृश्यते ।
अयुतं नियुतं चाहं प्रयुतं चार्बुदं तथा ।
पतमानोऽहमनिशं योजनानि ततस्ततः ॥ १२-२११-४६ (७३५७०)
ननु तत्वमहं भक्तो विष्ठितोस्मि प्रशास्तु नः ।
आगच्छ गरुडेत्येवं पुनराह स माधवः ॥१२-२११-४७ (७३५७१)
ततो भूयो ह्यहं पातं पतमानो विहायसम् ।
आजगाम ततो घोरं शतकोटिसमावृतम् ॥१२-२११-४८ (७३५७२)
तामसानीव भूतानि पर्वताभानि तत्र ह ।
समानानीव पद्मानि ततोऽहं भीत आस्थितः ॥१२-२११-४९ (७३५७३)
ततो मां किंकरो घोरः शतयोजनमायतम् ।
निगृह्य पाणिना तस्माच्चिक्षेप च स लोष्टवत् ॥१२-२११-५० (७३५७४)
तत्तमोऽहमतिक्रम्य ह्यापं चैव विहायसम् ।
हुङ्कारघोषं तत्राहमशनीपातसन्निभान् ।
कर्णमूले ह्यशृण्वन्तस्ततो भूतैः समास्थितः ॥ १२-२११-५१ (७३५७५)
ततोऽहं देवदेवेश त्राहि मां पुष्करेक्षण ।
इत्यब्रवमहं तत्र ततो विष्णुरुवाच माम् ॥१२-२११-५२ (७३५७६)
सुषिरस्य मुखे कश्चिन्मां चिक्षेप भयङ्करः ।
अतीतोऽहं क्षणादग्निमपश्यं वायुमण्डलम् ॥१२-२११-५३ (७३५७७)
आकाशमिव संप्रेक्ष्य क्षेप्तुकाममुपागतः ।
तत्राहं दुःखितो भूतः क्रोशमानो ह्यवस्थितः ॥१२-२११-५४ (७३५७८)
क्षणान्तरेण घोरेण क्रुद्धो हि परमात्मना ।
स्वपक्षराजिना दृष्ट्वा मां चिक्षेप भयङ्करः ॥१२-२११-५५ (७३५७९)
-----गरुडकुलं सहस्रादित्यसन्निभम् ।
मां दृष्ट्वाऽप्यथ संस्थेऽथ ह्यल्पकालोऽतिदुर्बलः ॥१२-२११-५६ (७३५८०)
अहो विहङ्गमः प्राप्त इति विस्मयमानसाः ।
मां दृष्ट्वोचुरहं तत्र पश्यामि गरुडध्वजम् ॥१२-२११-५७ (७३५८१)
सहस्रयोजनायामं सहस्रादित्यवर्चसम् ।
सहस्रगरुडारूढं गरुडास्ते महाबलाः ॥१२-२११-५८ (७३५८२)
अत्याश्चर्यमिमं देव वपुषाऽस्मत्कुलोद्भवः ।
स्वल्पप्राणः स्वल्पकायः कोसौ पक्षी इहागतः ॥१२-२११-५९ (७३५८३)
तच्छ्रुत्वाऽहं नष्टगर्वो भीतो लज्जासमन्वितः ।
स्वयं बुद्धश्च संविग्नस्ततो ह्यशृणवं पुनः ॥१२-२११-६० (७३५८४)
आगच्छ गरुडेत्येव ततोऽहं यानमास्थितः ।

पराध्यं च ततो गत्वा योजनानां शतं पुनः ।
तत्रापश्यमहं यो वै ब्रह्माणं परमेष्ठिनम् ॥ १२-२११-६१ (७३५८५)
तत्रापि चापरं तत्र शतकोटिपितामहान् ।
पुनरेहीत्युवाचोच्चैर्भगवान्मधुसूदनः ॥ १२-२११-६२ (७३५८६)
महाकुलं ततोऽपश्यं प्रमाणानि तमव्ययम् ।
कपित्थफलसंकाशमन्धकारैः समाश्रितम् ॥ १२-२११-६३ (७३५८७)
तत्र स्थितो हरिः श्रीमानण्डमेकं बिभेद ह ।
महद्भूतं हि मां गृह्य दत्त्वा वै प्राक्षिपत्पुनः ॥ १२-२११-६४ (७३५८८)
तन्मध्ये सागरान्सप्त ब्रह्माणं च तथा सुरान् ।
पश्याम्यहं यथायोगं मातरं स्वकुलं तथा ॥ १२-२११-६५ (७३५८९)
एवं मयाऽनुभूतं हि तत्वान्वेषणकाङ्क्षिणा ।
शिबिकासदृशं मां वै पश्यध्वं मुनिसत्तमाः ॥ १२-२११-६६ (७३५९०)
इत्येवमब्रवं विप्रान्भीष्म यन्मे पुराऽभवत् ।
तत्ते सर्वं यथान्यायमुक्तवानस्मि सत्तम ॥ १२-२११-६७ (७३५९१)
योगिनस्तं प्रपश्यन्ति ज्ञानं दृष्ट्वा परं हरिम् ।
नान्यथा शक्यरूपोसौ ज्ञानगम्यः परः पुमान् ॥ १२-२११-६८ (७३५९२)
अनन्यया च भक्त्या च प्राप्तुं शक्यो महाहरिः ॥ १२-२११-६९ (७३५९३)
भीष्म उवाच। १२-२११-७०क्ष् (६०८३)
इत्येवमुक्त्वा भगवान्सुपर्णः पक्षिराट् प्रभुः ।
आमन्त्र्य जननीं मे वै तत्रैवान्तरधीयत ॥ १२-२११-७० (७३५९४)
तस्माद्राजेन्द्र सर्वात्मा वासुदेवः प्रधानकृत् ।
ज्ञानेन भक्त्या सुलभो नान्यथेति मतिर्मम ॥' ॥ १२-२११-७१ (७३५९५)

इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि
एकादशाधिकद्विशततमोऽध्यायः ॥ २११.।

Mahabharata - Shanti Parva - Chapter Footnotes

क क्षयमध्यायो ध ।पुस्क एव दृश्यते ।

---

शन्तिपर्व-अध्यय२१२
॥ श्रीः ॥
१२.२१२. अध्यायः २१२

Mahabharata - Shanti Parva - Chapter Topics
भीष्मेण युधिष्ठिरंप्रति शिष्याय गुरूक्तवार्ष्णेयाध्यात्मत्वानुवादः ॥ १.।
Mahabharata - Shanti Parva - Chapter Text

१२-२१२-० (७३५९६)
युधिष्ठिर उवाच। १२-२१२-०क्ष् (६०८४)
योगं मे परमं तात मोक्षस्य वदभारत ।
तमहं तत्त्वतो ज्ञातुमिच्छामि वदतांवर ॥ १२-२१२-१ (७३५९७)
ग्भूयोपि ज्ञानसद्भावे स्थित्यर्थं त्वां ब्रवीम्यहम् ।
अचिन्त्यं वासुदेवाख्यं तस्मात्प्रब्रूहि सत्तम ॥' १२-२१२-२ (७३५९८)
भीष्म उवाच। १२-२१२-३क्ष् (६०८५)
अत्राप्युदाह न्तीममितिहासं पुरातनम् ।
संवादं मोक्षसंयुक्तं शिष्यस्य गुरुणा सह ॥ १२-२१२-३ (७३५९९)
कश्चिद्ब्राह्मणमासीनमाचार्यमृषिसत्तमम् ।
तेजोराशिं महात्मानं सत्यसन्धं जितेन्द्रियम् ॥ १२-२१२-४ (७३६००)
शिष्यः परममेधावी श्रेयोर्थी सुसमाहितः ।
चरणावुपसंगृह्य स्थितः प्राञ्जलिरब्रवीत् ॥ १२-२१२-५ (७३६०१)
उपासनात्प्रसन्नोऽसि यदि वै भगवन्मम ।
संशयो मे महान्कश्चित्तं मे व्याख्यातुमर्हसि ।
कुतश्चाहं कुतश्च त्वं तत्सम्यग्ब्रूहि यत्परम् ॥ १२-२१२-६ (७३६०२)
कथं च सर्वभूतेषु समेषु द्विजसत्तम ।
सम्यग्वृत्ता निवर्तन्ते विपरीताः क्षयोदयाः ॥ १२-२१२-७ (७३६०३)
वेदेषु चापि यद्वाक्यं लौकिकं व्यापकं च यत् ।
एतद्विद्वन्यथातत्त्वं सर्वं व्याख्यातुमर्हसि ॥ १२-२१२-८ (७३६०४)
गुरुरुवाच। १२-२१२-९क्ष् (६०८६)
शृणु शिष्य महाप्राज्ञ ब्रह्मगुह्यमिदं परम् ।
अध्यात्मं सर्वभूतानामागमानां च यद्वसु ॥ १२-२१२-९ (७३६०५)
वासुदेवः सर्वमिदं विश्वस्य ब्रह्मणो सुखम् ।
सत्यं दानं तपो यज्ञस्तितिक्षा दम आर्जवम् ॥ १२-२१२-१० (७३६०६)
पुरुषं सनातनं विष्णुं यं तं वेदविदो विदुः ।
सर्गप्रलयकर्तारमव्यक्तं ब्रह्म शाश्वतम् ॥ १२-२१२-११ (७३६०७)
तदिदं ब्रह्म वार्ष्णेयमितिहासं शृणुष्व मे ।
ब्राह्मणो ब्राह्मणैः श्राव्यो राजन्यः क्षत्रियैस्तता ॥ १२-२१२-१२ (७३६०८)
श्वैश्यो वैश्यैस्तथा श्राव्यः शूद्रः शूद्रैर्महामनाः ꣸
माहात्म्यं देवदेवस्य विष्णोरमिततेजसः ॥ १२-२१२-१३ (७३६०९)
अर्हस्त्वमसि कल्याणं वार्ष्णेयाध्यात्ममुत्तमम् ॥ १२-२१२-१४ (७३६१०)
ग्यमच्युतं परं नित्यं लिङ्गहीनं च निर्मलम् ।
निर्वाणममृतं श्रीमत्तद्विष्णोः परमं पदम् ॥ १२-२१२-१५ (७३६११)
भवे च भेदवद्भिन्नं प्रदानं गुणकारकम् ।

तस्मिन्न सज्यते नित्यं स एष पुरुषोऽपरः ॥१२-२१२-१६ (७३६१२)
पुरुषाधिष्ठितं नित्यं प्रधानं ब्रह्म कारणम् ।
कालस्वरूपं रूपेण विष्णुना प्रभविष्णुना ॥१२-२१२-१७ (७३६१३)
क्षोभ्यमाणं सृजत्येव नानाभूतानि भागशः ।
तद्दृष्ट्वा पुरुषोतत्वं साक्षीभूत्वा प्रवर्तते ।
तत्प्रविश्य यथायोगमभिन्नो भिन्नलक्षणः ॥' १२-२१२-१८ (७३६१४)
कालचक्रमनाद्यन्तं भावाभावस्वलक्षणम् ।
त्रैलोक्ये सर्वभूतेषु चक्रवत्परिवर्तते ॥१२-२१२-१९ (७३६१५)
यत्तदक्षरमव्यक्तममृतं ब्रह्म शाश्वतम् ।
वदन्ति पुरुषव्याघ्र केशवं पुरुषर्षभम् ॥१२-२१२-२० (७३६१६)
ग्तदक्षरमचिन्त्यं वै भिन्नरूपेण दृश्यते ।
पश्य कालाख्यमनिशं न चोष्णं नातिशीतलम् ॥१२-२१२-२१ (७३६१७)
न सन्त्येते गुणास्तस्मिंतथा तस्मात्प्रवर्तते ।
शीतलोऽयमनुप्राप्तः कालो ग्रीष्मस्तथैव च ॥१२-२१२-२२ (७३६१८)
वक्ष्यन्ति सर्वभूतानि ह्येते सूर्योदयं प्रति ।
आगच्छन्ति निवर्तन्ति स कालो गुणराशयः ॥१२-२१२-२३ (७३६१९)
न चैव प्रकृतिस्थेन कालयुक्तेन नित्यशः ।
गुणैः संभोगमरतिस्तत्वविज्ञानकोविदम् ।
पुरुषाधिष्ठिता नित्यं प्रकृतिः सूयते परा ॥' १२-२१२-२४ (७३६२०)
पितॄन्देवानृषींश्चैव तथा वै यक्षराक्षसान् ।
नागासुरमनुष्यांश्च सृजते मनसाऽव्ययः ॥१२-२१२-२५ (७३६२१)
तथैव वेदशास्त्राणि लोकधर्मांश्च शाश्वतान् ।
प्रलये प्रकृतिं यातान्युगादौ सृजते पुनः ॥१२-२१२-२६ (७३६२२)
यथर्तुष्वृतुलिङ्गानि नानारूपाणि पर्यये ।
दृश्यन्ते तानि तान्येव तथा भावा युगादिषु ॥१२-२१२-२७ (७३६२३)
अथ यद्यद्यदा भावि कालयोगाद्युगादिषु ।
तत्तदुत्पद्यते ज्ञानं लोकयात्राविधानजम् ॥१२-२१२-२८ (७३६२४)
ग्श्रुतिरेषा समाख्याता तदर्थं कारणात्मना ।
अनाम्नायविधानाद्वि वेदा ह्यन्तर्हिता यथा ॥' १२-२१२-२९ (७३६२५)
युगान्ते ह्यस्तभूतानि शास्त्राणि विविधानि च ।
सर्वसत्वविना द्वि जीवात्मनित्यया स्मृताः ।
अन्यस्मिन्नण्डसद्भावे वर्तमानानि नित्यशः ॥ १२-२१२-३० (७३६२६)
युगान्तेऽन्तर्हितान्वेदान्सेतिहासान्महर्षयः ।
लेभिरे तपसा पूर्वमनुज्ञाताः स्वयंभुवा ॥१२-२१२-३१ (७३६२७)
ग्नियोगाद्ब्रह्मणो विप्रा लोकतन्त्रप्रवर्तकाः।'
वेदविद्भगवान्ब्रह्मा वेदाङ्गानि बृहस्पतिः ।

भार्गवो नीतिशास्त्रं तु जगाद जगतो हितम् ॥ १२-२१२-३२ (७३६२८)
गान्धर्वं नारदो वेद भरद्वाजो धनुर्ग्रहम् ।
देवर्षिचरितं गर्गो कृष्णात्रेयश्चिकित्सितम् ॥ १२-२१२-३३ (७३६२९)
ग्न्यायतन्त्रं हि कार्त्स्न्येन गौतमो वेद तत्वतः ।
वेदान्तकर्मायोगं च वेदविद्ब्रह्मविद्भिः ।
द्वैपायनो निजग्राह शिल्पशास्त्रं भृगुः पुनः ॥ १२-२१२-३४ (७३६३०)
न्यायतन्त्राण्यनेकानि तस्तैरुक्तानि वादिभिः ।
हेत्वागमसदाचारैर्यदुक्तं तदुपास्यते ॥ १२-२१२-३५ (७३६३१)
अनाद्यं तत्परं ब्रह्म न देवा नर्षयो विदुः ।
एकस्तद्वेद भगवान्धाता नारायणः प्रभुः ॥ १२-२१२-३६ (७३६३२)
नारायणादृषिगणास्तथा मुख्याः सुरासुराः ।
राजर्षयः पुराणाश्च परमं दुःखभेषडम् ।
ग्वक्ष्येऽहं तव यत्प्राप्तमृषेर्द्वैपोयनान्मया ॥' १२-२१२-३७ (७३६३३)
पुरुषाधिष्ठितान्भावान्प्रकृतिः सूयते यदा ।
हेतुयुक्तमतः पूर्वं जगत्संपरिवर्तते ॥ १२-२१२-३८ (७३६३४)
दीपादन्ये यथा दीपाः प्रवर्तन्ते सहस्रशः ।
प्रकृतिः सूयते सद्वदानन्त्यान्नापचीयते ॥ १२-२१२-३९ (७३६३५)
अव्यक्तकर्मजा बुद्धिरहंकारं प्रसूयते ।
आकाशं चाप्यहंकाराद्वायुराकाशसंभवः ॥ १२-२१२-४० (७३६३६)
वायोस्तेजस्ततश्चाप अद्भ्योऽथ वसुधोद्गता ।
मूलप्रकृतयो ह्यष्टौ जगदेतास्ववस्थितम् ॥ १२-२१२-४१ (७३६३७)
ज्ञानेन्द्रियाण्यतः पञ्च पञ्च कर्मेन्द्रियाण्यपि ।
विषयाः पञ्च चैकं च विकाराः षोडशं मनः ॥ १२-२१२-४२ (७३६३८)
श्रोत्रं त्वक्चक्षुषी जिह्वा घ्राणं ज्ञानेन्द्रियाण्यश्च ।
पादौ पायुरुपस्थश्च हस्तौ वाक्कर्मणी अपि ॥ १२-२१२-४३ (७३६३९)
शब्दः स्पर्शश्च रूपं च रसो गन्धस्तथैव च ।
विज्ञेयं व्यापकं चित्तं तेषु सर्वगतं मनः ॥ १२-२१२-४४ (७३६४०)
ग्बुद्धीन्द्रियार्था इत्युक्ता दशसंसर्गयोनयः ।
सदसद्भावयोगे च मन इत्यभिधीयते ॥ १२-२१२-४५ (७३६४१)
व्यवसायगुणा बुद्धिरहंकारोऽभिमानकः ।
न बीजं देहयोगे च कर्मबीजप्रवर्तनात् ॥' १२-२१२-४६ (७३६४२)
रसज्ञाने तु जिह्वेयं व्याहृते वाक्यथैव च ।
इन्द्रियैर्विविधैर्युक्तं सर्वैर्व्यतं मनस्तथा ॥ १२-२१२-४७ (७३६४३)
विद्यात्तु षोडशैतानि दैवतानि विभागशः ।
देहेषु ज्ञानकर्तारमुपासीनमुपासते ॥ १२-२१२-४८ (७३६४४)
तत्र सोमगुणा जिह्वा गन्धस्तु पृथिवीगुणः ।

श्रोत्रे शब्दगुणे चैव चक्षुरग्नेर्गुणस्तथा ।
स्पर्शं वायुगुणं विद्यात्सर्वभूतेषु सर्वदा ॥ १२-२१२-४९ (७३६४५)
मनः सत्वगुणं प्राहु सत्वमव्यक्तजं तथा ।
सर्वभूतात्मभूतस्थं तस्माद्बुद्ध्येत बुद्धिमान् ॥ १२-२१२-५० (७३६४६)
एते भावा जगत्सर्वं बहन्ति सचराचरम् ।
श्रिता विरजसं देवं यमाहुः परमं पदम् ॥ १२-२१२-५१ (७३६४७)
नवद्वारं पुरं पुण्यमेतैर्भावैः स्मन्वितम् ।
व्याप्य शेते महानात्मा तस्मात्पुरुष उच्यते ॥ १२-२१२-५२ (७३६४८)
अजरश्चामरश्चैव व्यक्ताव्यक्तोपदेशवान् ।
व्यापकः सगुणः सूक्ष्मः सर्वभूतगुणाश्रयः ॥ १२-२१२-५३ (७३६४९)
यथा दीपः प्रकाशात्मा ह्रस्वो वा यदि वा महान् ।
ज्ञानात्मानं तथा विद्यात्पुरुषं सर्वजन्तुषु ॥ १२-२१२-५४ (७३६५०)
श्रोत्रं वेदयते वेद्यं स शृणोति स पश्यति ।
कारणं तस्य देहोऽयं स कर्ता सर्वकर्मणाम् ॥ १२-२१२-५५ (७३६५१)
अग्निर्दारुगतो यद्वद्भिन्ने दारौ न दृश्यते ।
तथैवात्मा शरीरस्थ ऋते योगान्न दृश्यते ॥ १२-२१२-५६ (७३६५२)
अग्निर्यथा ह्युपायेन मथित्वा दारु दृश्यते ।
तथैवात्मा शरीरस्थो योगेनैवात्र दृश्यते ॥ १२-२१२-५७ (७३६५३)
नदीष्वापो यथा युक्ता यथा सूर्ये मरीचयः ।
संतन्वाना यथा यान्ति तथा देहाः शरीरिणाम् ॥ १२-२१२-५८ (७३६५४)
स्वप्नयोगे यथैवात्मा पञ्चेन्द्रियसमायुतः ।
देहमुत्सृज्य वै याति तथैवात्मोपलभ्यते ॥ १२-२१२-५९ (७३६५५)
कर्मणा व्याप्यते सर्वं कर्मणैवोपपद्यते ।
कर्मणा नीयतेऽन्यत्र स्वकृतेन बलीयसा ॥ १२-२१२-६० (७३६५६)
स तु देहाद्यथा देहं त्यक्त्वाऽन्यं प्रतिपद्यते ।
तथा तं संप्रवक्ष्यामि भूतग्रामं स्वकर्मजम् ॥ ॥ १२-२१२-६१ (७३६५७)

इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि
द्वादशाधिकद्विशततमोऽध्यायः ॥ २१२.।
Mahabharata - Shanti Parva - Chapter Footnotes

१२-२१२-७,८ भूतेषु पञ्चसूपादानकारणेषु समेषु सत्सु विपरीता
विषमाः कथं क्षयोदया निवर्तन्ते नितरां वर्तन्ते ।वेदेषु यद्वाक्यं
वर्णधर्मव्यवस्थापरं, लौकिकं स्मृतिवाक्यं तादृशं व्यापकं
सर्ववर्णा श्रमसाधारणं इदमपि कथम्। हेतुसाम्येऽपि कार्यवैषम्ये
किं बीजं तद्ब्रहीत्यर्थः। श्लोकद्वयमेकं वाक्यम् ॥

१२-२१२-९ ब्रह्म गुह्य वेदगोप्यम् । वसु धनं
तद्वद्रक्षणीयमुपकारकं वा ॥
१२-२१२-१० ब्रह्मणो मुखं वेदादिः प्रणवः
। उपायोपेययोरभेदात्प्रणवादीनां वासुदेवत्वम् ॥
१२-२१२-११ उपेयस्वरूपमाह पुरुषमिति ॥
१२-२१२-१२ एतदेवायं कृष्ण इत्याह तदिति । वार्ष्णेयं वृष्णिषु
कृतावतारम्। इतिहासं तत्स्वरूपप्रकाशनपरं ग्रन्थम्। राजन्यः
क्षत्रियस्तथेति ड। पाठः ॥
१२-२१२-२७ भावाभावौ सृष्टिप्रलयौ स्वलक्षणं
स्वरूपज्ञापकौ यस्य । प्रत्यब्दं यथा वसन्तादिष्वाम्रादयो
नियमेन पुष्पिता भवन्त्येवं ब्रह्महरविष्णुषु प्रतिकल्पं
सृष्टिप्रलयस्थितिकर्तृत्वं तदातद आविर्भवति। तथा
ब्रह्महरादिषु इति ट। पाठः। ब्रह्मापरादिष्विति
ड। पाठः। ब्रह्माक्षरादिष्विति ध। पाठः ॥
१२-२१२-३१ अनुज्ञाता उपदिष्टाः । स्वयंभुवा ब्रह्मणा ॥
१२-२१२-३३ दत्तात्रेयश्चिकित्सितमिति ट । ड। पाठः ॥
१२-२१२-३५ हेतुर्युक्तिः । आगमो वेदः। सदाचारः प्रत्यक्षम्। तैः प्रमाणैः ॥
१२-२१२-३६ अनाद्यं नास्ति आद्यं कारणं यस्य तत् ॥
१२-२१२-४२ शब्दादिविषयाः पञ्च विकाराः इति थ।पाठः ॥
१२-२१२-४३ वाक्कर्मणामपि इति थ । पाठः ॥
१२-२१२-४८ ज्ञानकर्तार उदासीनमुपासते इति ध । पाठः ॥
१२-२१२-४९ श्रोत्रं नभोगुणं चैव इति झ । पाठः ॥
१२-२१२-५० ईश्वरस्तत्स्थमुपाधित्वेन तत्र स्थितं सर्वान्तरङ्गं
सत्त्वं जानीयात् । सत्त्वविशिष्टस्य ज्ञेयत्वेऽपि विद्विवेके
परिशेषादचितः सत्वस्यैव ज्ञेयत्वमस्तीति सत्वमेव बुद्ध्येतेत्युक्तम्
॥
१२-२१२-५१ यमादुः प्रकृतेः परमिति झ । पाठः ॥
१२-२१२-५२ व्यापकः स गुणैः सूक्ष्मः इति थ । पाठः ॥
१२-२१२-५५ भेदेनैवात्र दृश्यते इति ट । थ। पाठः। शरीरस्थो
योगेनैवानुदृश्यते इति झ। पाठः ॥
१२-२१२-५७ संततत्वाद्यथा यान्ति इति झ । पाठः ॥
१२-२१२-५९ कर्मणा जायते पूर्वं इति ट । पाठः। कर्मणा बाध्यते
रूपं इति पाठः ॥

---

शन्तिपर्व-अध्यय२१३
॥ श्रीः ॥
१२.२१३. अध्यायः २१३

Mahabharata - Shanti Parva - Chapter Topics
भीष्मेम युधिष्ठिरंप्रति
शिष्यंप्रत्युक्तजगत्सृष्ट्यादिप्रतिपादकगुरुवाक्यानुवादः ॥ १.।
Mahabharata - Shanti Parva - Chapter Text

१२-२१३-० (७३६५८)
गुरुरुवाच। १२-२१३-०क्ष् (६०८७)
चतुर्विधानि भूतानि स्थावराणि चराणि च ।
अव्यक्तप्रभवान्याहुरव्यक्तनिधनानि च ।
अव्यक्तलक्षणं विद्यादव्यक्तात्मात्मकं मनः ॥ १२-२१३-१ (७३६५९)
यथाऽश्वत्थकणीकायामन्तर्भूतो महाद्रुमः ।
निष्पन्नो दृश्यते व्यक्तमव्यक्तात्संभवस्तथा ॥ १२-२१३-२ (७३६६०)
ग्आत्मानमनुसंयाति बुद्धिरव्यक्तजा तथा ।
तामन्वेति मनो यद्वल्लोहवर्मणि सन्निधौ ॥' १२-२१३-३ (७३६६१)
अभिद्रवत्ययस्कान्तमयोनिश्चेतनं यथा ।
स्वभावहेतुजा भावा यद्वदन्यदपीदृशम् ॥ १२-२१३-४ (७३६६२)
तद्वदव्यक्तजा भावाः कर्तुः कारणलक्षणाः ।
अचेतनाश्चेतयितुः कारणादभिसंगताः ॥ १२-२१३-५ (७३६६३)
न भूर्न खं द्यौर्भूतानि नर्षयो न सुरासुराः ।
नान्यदासीदृते जीवमासेदुर्न तु संहतिम् ॥ १२-२१३-६ (७३६६४)
सर्वं नित्यं सर्वगतं मनोहेतुत्वलक्षणम् ।
अज्ञानकर्म निर्दिष्टमेतत्कारणलक्षणम् ॥ १२-२१३-७ (७३६६५)
तत्कारणेन संयुक्तं कार्यसंग्रहकारकम् ।
येनैतद्वर्तते चक्रमनादिनिधनं महत् ॥ १२-२१३-८ (७३६६६)
ग्येन स्वभावसद्भावं हेतुभूता सकारणा ।
एवं प्राकृतविस्तारो ह्याश्रित्य पुरुषं परम् ॥' १२-२१३-९ (७३६६७)
अव्यक्तनाभं व्यक्तारं विकारपरिमण्डलम् ।
क्षेत्रज्ञाधिष्ठितं चक्रं स्निग्धाक्षं वर्तते ध्रुवम् ॥ १२-२१३-१०
(७३६६८)
स्निग्धत्वात्तिलवत्सर्वं चक्रेऽस्मिन्पीड्यते जगत् ।
तिलपीडैरिवाक्रम्य भोगैरज्ञानसंभवैः ॥ १२-२१३-११ (७३६६९)
ग्प्राणेनायं हि शान्ते तु विरोधात्प्रतिपालनम् ।
देहस्येषून्य आस्ते यः शुद्धोऽचिन्त्यः सनातनः ॥ १२-२१३-१२ (७३६७०)
भ्रामयन्नेषतो याति कालचक्रसमन्वितः ।
भूतानि मोहयन्नित्यं चक्रस्य च रयं गतः ॥ १२-२१३-१३ (७३६७१)

स्नेहद्रव्यसमायोगे क्षेत्रपाचं न वस्तुषु ।
तिलवत्पीडिते चक्रे ह्याधियन्त्रनिपीडिते ।
बहिश्चाधिष्ठिते यद्वज्ज्ञानिनां कर्मसंभवम्'॥ १२-२१३-१४ (७३६७२)
कर्म तत्कुरुते तर्षादहंकारपरिग्रहम् ।
कार्यकारणसंयोगे स हेतुरुपपादितः ॥ १२-२१३-१५ (७३६७३)
ग्यथाऽऽकर्ण्य च तच्छिष्यस्तत्वज्ञानमनुत्तमम् ।'
नात्येति कारणं कार्यं न कार्यं कारणं तथा ।
कार्याण्यमूनि करणे कालो भवति हेतुमान् ॥ १२-२१३-१६ (७३६७४)
हेतुयुक्ताः प्रकृतयो विकाराश्च परस्परम् ।
अन्योन्यमभिवर्तन्ते पुरुषाधिष्ठिताः सदा ॥ १२-२१३-१७ (७३६७५)
सत्वरजस्तामसैर्भावैश्च्युतो हेतुबलान्वितः ।
क्षेत्रज्ञमेवानयाति पांसुर्वातेरितो यथा ॥ १२-२१३-१८ (७३६७६)
न च तैः स्पृश्यते भावैर्न ते तेन महात्मना ।
सरजस्कोऽरजस्कश्च स वै वायुर्भवेद्यथा ॥ १२-२१३-१९ (७३६७७)
तथैतदन्तरं विद्यात्सत्वक्षेत्रज्ञयोर्बुधः ।
अभ्यासात्स तथा युक्तो न गच्छेत्प्रकृतिं पुनः ॥ १२-२१३-२० (७३६७८)
संदेहमेतमुत्पन्नमच्छिनद्भगवानृषिः ।
तथा वार्ता समीक्षेत कृतलक्षणसंविदम् ॥ १२-२१३-२१ (७३६७९)
बीजान्यग्न्युपदग्धानि नरो हन्ति यथा पुनः ।
ज्ञानदग्धैस्तथा क्लेशैर्नात्मा संपद्यते पुनः ॥ ॥ १२-२१३-२२ (७३६८०)

इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि
त्रयोदशाधिकद्विशततमोऽध्यायः ॥ २१३.।
Mahabharata - Shanti Parva - Chapter Footnotes

१२-२१३-९ विद्यादव्यक्तात्मकमेव च इति थ ।पाठः ॥
१२-२१३-१६ कार्यव्यक्तेन करणे इति झ ।पाठः ॥
१२-२१३-१८ राजसैस्तामसैर्भावैः इति झ ।पाठः ॥

---

शन्तिपर्व-अध्यय२१४
॥ श्रीः ॥
१२.२१४. अध्यायः २१४

Mahabharata - Shanti Parva - Chapter Topics
भीष्मेण युधिष्ठिरंप्रति शिष्याय गुरूक्तवार्ष्णेयाध्यात्मानुवादः ॥ १.।
Mahabharata - Shanti Parva - Chapter Text

१२-२१४-० (७३६८१)
गुरुरुवाच। १२-२१४-०क्ष् (६०८८)
प्रवृत्तिलक्षणो धर्मो यथा समुपलभ्यते ।
तेषां विज्ञाननिष्ठानामन्यत्तत्वं न रोचते ॥ १२-२१४-१ (७३६८२)
दुर्लभा वेदविद्वांसो वेदोक्तेषु व्यवस्थिताः ।
प्रयोजनं महत्त्वात्तु मार्गमिच्छन्ति संस्तुतम् ॥ १२-२१४-२ (७३६८३)
ग्वेदस्य न विदुर्भावं ज्ञानमार्गप्रतिष्ठितम्।'
सद्भिराचरितत्वात्तु वृत्तमेतदगर्हितम् ।
इयं सा बुद्धिरभ्येत्य यथा याति परां गतिम् ॥ १२-२१४-३ (७३६८४)
शरीरवानुपादत्ते मोहात्सर्वान्परिग्रहान् ।
कामक्रोधादिभिर्भावैर्युक्तो राजसतामसैः ॥ १२-२१४-४ (७३६८५)
नाशुद्धमाचरेत्तस्मादभीप्सन्देहयापनम् ।
कर्मणां विवरं कुर्वन्न लोकानाप्नुयाच्छुभान् ॥ १२-२१४-५ (७३६८६)
लोहयुक्तं तथा हेम विपक्वं न विराजते ।
तथाऽपक्वकषायाख्यं विज्ञानं न प्रकाशते ॥ १२-२१४-६ (७३६८७)
ग्केचिदात्मगुणं प्राप्तास्ते मुक्ताश्चक्रबन्धनात् ।
इतरे दुःखसन्द्वन्द्वास्तथा दुःखपरायणाः ॥ १२-२१४-७ (७३६८८)
शुकाकर्मानुरूपं ते जायमानाः पुनः पुनः ।
क्रोधलोभमदाविष्टा मूढान्तः करणाः सदा ॥ १२-२१४-८ (७३६८९)
यथा--- संछाया नास्ति नित्यतया परा ।
गुणानेव तथा चिन्त्या सन्त्येति च विदुर्बुधाः ॥' १२-२१४-९ (७३६९०)
यश्चाधर्मं चरेल्लोभात्कामक्रोधावनुप्लुवन् ।
धर्म्यं पन्थानमुत्क्रम्य सानुबन्धो विनश्यति ॥ १२-२१४-१० (७३६९१)
ग्अचलं ज्ञानमप्राप्य चलचित्तश्चलानियात्।'
शब्दादीन्विषयांस्तस्मान्न संरागादुपप्लवेत् ।
क्रोधो हर्षो विषादश्च जायन्ते हि परस्परात् ॥ १२-२१४-११ (७३६९२)
ग्गुणाः कार्याः क्रोधहर्षौ सुखदुःखे प्रियाप्रिये ।
द्वन्द्वान्यथैवमादीनि विजयेच्चैव सर्ववित् ॥' १२-२१४-१२ (७३६९३)
पञ्चभूतात्मके देहे सत्त्वराजसताभसे ।
कमभिष्टुवते चायं कं वा क्रोशति किं वदन् ॥ १२-२१४-१३ (७३६९४)
स्पर्शरूपरसाद्येषु सङ्गं गच्छन्ति बालिशाः ।
नावगच्छन्ति विज्ञानादात्मानं पार्थिवं गुणम् ॥ १२-२१४-१४ (७३६९५)
मृन्मयं शरणं यद्वन्मृदैव परिलिप्यते ।
पार्थिवोऽयं तथा देहो मृद्विकारान्न नश्यति ॥ १२-२१४-१५ (७३६९६)
मधु तैलं पयः सर्पिर्मांसानि लवणं गुडः ।
धान्यानि फलमूलानि मृद्विकाराः सहाम्भसा ॥ १२-२१४-१६ (७३६९७)

यद्वत्कान्तारमातिष्ठन्नौत्सुक्यं समनुव्रजेत् ।
ग्राम्यमाहारमादद्यादस्वाद्वपि हि यापनम् ॥१२-२१४-१७ (७३६९८)
तद्वत्संसारकान्तारमातिष्ठञ्श्रमतत्परः ।
यात्रार्थमद्यादाहारं व्याधितो भेषजं यथा ॥१२-२१४-१८ (७३६९९)
ग्भक्षणे श्वापदैर्मार्गादिति चारं करोति चेत् ।
एवं संसारमार्गेण यात्रार्थं विषयाणि च ॥१२-२१४-१९ (७३७००)
न गच्छेद्भोगविज्ञानादुन्मार्गे पद्यते तदा ।
तस्माददुःखतो मार्गमास्थितस्तमनुस्मरेत् ॥१२-२१४-२० (७३७०१)
नानापर्णफला वृक्षा बहवः सन्ति तत्र हि ।
भोक्तारो मुनयश्चैव तस्मात्परतरं वनम् ॥१२-२१४-२१ (७३७०२)
अनुमानैस्तथाशास्त्रैर्यशसा विक्रमेण च।'
सत्यशौचार्जवत्यागैर्वर्चसा विक्रमेण च ।
क्षान्त्या धृत्या च बुद्ध्या च मनसा तपसैव च ॥ १२-२१४-२२ (७३७०३)
भावान्सर्वान्यथावृत्तान्संवसेत यथाक्रमम् ।
शान्तिमिच्छन्नदीनात्मा संयच्छेदिन्द्रियाणि च ॥१२-२१४-२३ (७३७०४)
सत्त्वेन रजसा चैव तमसा चैव मोहिताः ।
चक्रवत्परिवर्तन्ते ह्यज्ञानाज्जन्तवो भृशम् ॥१२-२१४-२४ (७३७०५)
तस्मात्सम्यक्परीक्षेत दोषानज्ञानसंभवान् ।
अज्ञानप्रभवं नित्यमहंकारं परित्यजेत् ॥१२-२१४-२५ (७३७०६)
महाभूतानीन्द्रियाणि गुणाः सत्त्वं रजस्तमः ।
ग्देहमूलं विजानीहि नैतानि भगवानतः ॥१२-२१४-२६ (७३७०७)
उपायतः प्रवक्ष्यामि तं च मृत्युं दुरासदम् ।
त्रैलोक्यं सेश्वरं सर्वमहंकारे प्रतिष्ठितम् ॥१२-२१४-२७ (७३७०८)
यथेह नियतः कालो दर्शयत्यार्तवान्गुणान् ।
तद्वद्भतेष्वहंकारं विद्याद्भूतप्रवर्तकम् ॥१२-२१४-२८ (७३७०९)
संमोहकं तमो विद्यात्कृष्णमज्ञानसंभवम् ।
प्रकृतेर्गुणसंजातो महानहंक्रिया ततः ॥१२-२१४-२९ (७३७१०)
अहंकारात्पुनः पश्चाद्भूतग्राममुदाहृतम् ।
अव्यक्तस्य गुणेभ्यस्तु तद्गुणांश्च निबोध तान् ॥१२-२१४-३० (७३७११)
प्रीतिदुःखनिबद्धांश्च समस्तांस्त्रीनथो गुणान् ।
सत्त्वस्य रजसश्चैव तमसश्च निबोध तान् ॥१२-२१४-३१ (७३७१२)
प्रसादो हर्षजा प्रीतिरसंदेहो धृतिः स्मृतिः ।
एतान्सत्त्वगुणान्विद्यादिमान्राजसतामसान् ॥१२-२१४-३२ (७३७१३)
ग्असन्तोषोऽक्षमाऽधैर्यमतृप्तिर्विषयादिषु ।
राजसाश्च गुणा ह्येते तत्परं तामसाञ्शृणु ॥१२-२१४-३३ (७३७१४)
मोहस्तन्द्री तथा दुःखं निद्राऽऽलस्यं प्रमादता ।

विषादी दीर्घसूत्रश्च तत्तामसमुदाहृतम् ॥' १२-२१४-३४ (७३७१५)
कामक्रोधौ प्रमादश्च लोभमोहौ भयं क्लमः ।
विषादशोकावरतिर्मानदर्पावनार्यता ॥१२-२१४-३५ (७३७१६)
दोषाणामेवमादीनां परीक्ष्य गुरुलाघवम् ।
विमृशेदात्मसंस्थानमेकैकमनुसंततम् ॥१२-२१४-३६ (७३७१७)
ग्यस्मिन्प्रतिष्ठितं चेदं यस्मिन्सज्ज्ञाननिर्गतिः ।
सर्वभूताधिकं नित्यमहंकारं विलोकयेत् ॥१२-२१४-३७ (७३७१८)
विलोकमानः स तदा स्वबुद्ध्या सूक्ष्मया पुनः ।
तदेव भाति तद्रूपमात्मना यत्सुनिर्मलम् ॥' १२-२१४-३८ (७३७१९)
शिष्य उवाच।१२-२१४-३९क्ष् (६०८९)
के दोषा मनसा त्यक्ताः के बुद्ध्या शिथिलीकृताः
के पुनः पुनरायान्ति के मोहादचला इव ॥ १२-२१४-३९ (७३७२०)
केषां बलाबलं बुद्ध्या हेतुभिर्विमृशेद्बुधः ।
गएतन्मे सर्वमाचक्ष्व यथा विद्यामहं विभो ।
मह्यं शुश्रूषवे विद्वन्वक्ष्येतद्बुद्धिनिश्चितम् ॥ १२-२१४-४० (७३७२१)
शान्तत्वादपरान्ताच्च आरम्भादपि चैकतः ।
प्रोक्तो ह्यत्र यथा हेतुरेवमाहुर्मनीषिणः ॥१२-२१४-४१ (७३७२२)
गुरुरुवाच।' १२-२१४-४२क्ष् (६०९०)
दोषैर्मूलादवच्छिन्नैर्विशुद्धात्मा विमुच्यते ।
विनाशयति संभूतमयस्मयमयो यथा ।
तथा कृतात्मा सहजैर्दोषैर्नश्यति राजसैः ॥ १२-२१४-४२ (७३७२३)
ग्सहजैरविशुद्धात्मा दोषैर्नश्यति तामसैः।'
राजसं तामसं चैव शुद्धात्मा कालसंभवम् ॥ १२-२१४-४३ (७३७२४)
ग्शमयेत्सत्त्वमास्थाय बुद्ध्या केवलया द्विजः ।
त्यजेच्च मनसा चेतः शुद्धात्मा बुद्धिमास्थितः' १२-२१४-४४ (७३७२५)
तत्सर्वं देहिनां बीजं सत्त्वमात्मवतः समम् ।
तस्मादात्मवता वर्ज्यं रजश्च तम एव च ॥१२-२१४-४५ (७३७२६)
रजस्तमोभ्यां निर्मुक्तं सत्त्वं निर्मलतामियात् ।
गआहारान्वर्जयेन्नित्यं राजसांस्तामसानपि ॥१२-२१४-४६ (७३७२७)
ते ब्रह्म पुनरायान्ति न मोहादचला इव।'
अथवा मन्त्रवद्ब्रूयुर्मांसादीनां यजुष्कृतम् ॥ १२-२१४-४७ (७३७२८)
स वै हेतुरनादाने शुद्धधर्मानुपालने ।
रजसा कामयुक्तानि कार्याण्यपि समाप्नुते ॥१२-२१४-४८ (७३७२९)
अर्थयुक्तानि चात्यर्थं कामान्सर्वांश्च सेवते ।
तमसा लोभयुक्तानि क्रोधजानि च सेवते ।
हिंसाविहाराभिरतस्तन्द्रीनिद्रासमन्वितः ॥ १२-२१४-४९ (७३७३०)

सत्वस्थः सात्विकान्भावाञ्शुद्धान्पश्यति संश्रितः ।
स देही विमलः श्रीमाञ्श्रद्धाविद्यासमन्वितः ॥ ॥ १२-२१४-५० (७३७३१)

इति श्रीमन्महाभारते शान्तिप्रवणि मोक्षधर्मपर्वणि
चतुर्दशाधिकद्विशततमोऽध्यायः ॥ २१४.।
Mahabharata - Shanti Parva - Chapter Footnotes

१२-२१४-९ प्रयोजनमत्तत्त्वात्तु इति ट ।थ। पाठः ॥
१२-२१४-१५ मृद्विकारैर्विलिप्यते इति ध ।पाठः ॥
१२-२१४-२३ यथावृत्तान्समीक्ष्य विषयात्मकान् इति झ ।पाठः ॥
१२-२१४-४० वक्षि ब्रूहि ।वच परिभाषण इति धातोर्लोटि
मध्यमपुरुषैकवचनम् ॥

---

शन्तिपर्व-अध्यय२१५
॥ श्रीः ॥
१२.२१५. अध्यायः २१५

Mahabharata - Shanti Parva - Chapter Topics
भीष्मेण युधिष्ठिरंप्रति वार्ष्णेयाध्यात्मानुवादः ॥ १.।
Mahabharata - Shanti Parva - Chapter Text

१२-२१५-० (७३७३२)
गुरुरुवाच। १२-२१५-०क्ष् (६०९१)
रजसा साध्यते मोहस्तमश्च भरतर्षभ ।
क्रोधलोभौ भयं दर्प एतेषां सादनाच्छुचिः ॥ १२-२१५-१ (७३७३३)
परमं परमात्मानं देवमक्षयमव्ययम् ।
विष्णुमव्यक्तसंस्थानं विदुस्तं देवसत्तमम् ॥ १२-२१५-२ (७३७३४)
तस्य मायापिनद्धाङ्गा ज्ञान भ्रष्टा निराशिषः ।
मानवा ज्ञानसंमोहात्ततः कामं प्रयान्ति वै ॥ १२-२१५-३ (७३७३५)
कामात्क्रोधमवाप्याथ लोभमोहौ च मानवाः ।
मानदर्पावहंकारमहंकारात्ततः क्रियाः ॥ १२-२१५-४ (७३७३६)
क्रियाभिः स्नेहसंबन्धः स्नेहाच्छोकमनन्तरम् ।
अथ दुःखसमारम्भा जराजन्मकृतक्षणाः ॥ १२-२१५-५ (७३७३७)
जन्मतो गर्भवासं तु शुक्रशोणितसंभवम् ।
पुरीषमूत्रविक्लेदं शोणितप्रभवाविलम् ॥ १२-२१५-६ (७३७३८)
तृष्णाभिभूतस्तैर्वद्धस्तानेवाभिपरिप्लवन् ।
ग तथा नरकगर्तस्थस्तृष्णारज्जुभिराचितः ।

पुण्यपापप्रणुन्नाङ्गो जायते स यथा कृमिः ॥ १२-२१५-७ (७३७३९)
मशकैर्मत्कुणैर्दष्टस्तथा चित्रवधार्दितः ।
नानाव्याधिभिराकीर्णः कथंचिद्यौवनं गतः ॥ १२-२१५-८ (७३७४०)
कूर्मोत्सृजति भूयश्च रज्जुः स्वस्वमुखेप्सया ।
योषितं नरकं गृह्य जन्मकर्मवशानुगः ॥ १२-२१५-९ (७३७४१)
पुरक्षेत्रनिमित्तं यद्दुःखं वक्तुं न शक्यते ।
कस्तत्र निन्दकश्चैव नरके पच्यते भृशम् ॥ १२-२१५-१० (७३७४२)
वार्धक्यमनुलङ्घेत तत्र कर्मारभेत्पुनः ।
भगवान्संस्तुतः पश्चात्किं प्रवक्ष्यामि ते भृशम्' ॥ १२-२१५-११ (७३७४३)
संसारतन्त्रवाहिन्यस्तत्र बुद्ध्येत योषितः ।
प्रकृत्याः क्षेत्रभूतास्ता नराः क्षेत्रज्ञलक्षणाः ।
तस्मादेवाविशेषेण नरोऽतीयाद्विशेषतः ॥ १२-२१५-१२ (७३७४४)
कृत्या ह्येता घोररूपा मोहयन्त्यविचक्षणान् ।
रजस्यन्तर्हिता मूर्तिरिन्द्रियाणां सनातनी ॥ १२-२१५-१३ (७३७४५)
तस्मात्तर्षात्मकाद्रागाद्बीजाज्जायन्ति जन्तवः ।
स्वदेहजानस्वसंज्ञान्यद्वदङ्गात्कृमींस्त्यजेत् ।
स्वसंज्ञानस्वकांस्तद्वत्सुतसंज्ञान्कृमींस्त्यजेत् ॥ १२-२१५-१४ (७३७४६)
शुक्रतो रसतश्चैव देहाज्जायन्ति जन्तवः ।
स्वभावात्कर्मयोगाद्वा तानुपेक्षेत बुद्धिमान् ॥ १२-२१५-१५ (७३७४७)
रजस्तमसि पर्यस्तं सत्वं च रजसि स्थितम् ।
ज्ञानाधिष्ठानमज्ञानं बुद्ध्यहंकारलक्षणम् ॥ १२-२१५-१६ (७३७४८)
तद्बीजं देहिनामाहुस्तद्बीजं जीवसंज्ञितम् ।
कर्मणा कालयुक्तेन संसारपरिवर्तनम् ॥ १२-२१५-१७ (७३७४९)
रमत्ययं यथा स्वप्ने मनसा देहवानिव ।
कर्मगर्भैर्गुणैर्देही गर्भे तदुपलभ्यते ॥ १२-२१५-१८ (७३७५०)
कर्मणा बीजभूतेन चोद्यते यद्यदिन्द्रियम् ।
जायते तदहंकाराद्रागयुक्तेन चेतसा ॥ १२-२१५-१९ (७३७५१)
शब्दरागाच्छ्रोत्रमस्य जायते भावितात्मनः ।
रूपरागात्तथा चक्षुर्घ्राणं गन्धजिघृक्षया ॥ १२-२१५-२० (७३७५२)
संस्पर्शेभ्यस्तथा वायुः प्राणापानव्यपाश्रयः ।
व्यानोदानौ समानश्च पञ्चधा देहयापनम् ॥ १२-२१५-२१ (७३७५३)
संजातैर्जायते गात्रैः कर्मजैर्ब्रह्मणा वृतः ।
दुःखाद्यन्तैर्दुःखमध्यैर्नरः शारीरमानसैः ॥ १२-२१५-२२ (७३७५४)
दुःखं विद्यादुपादानादभिमानाच्च वर्धते ।
त्यागात्तेभ्यो निरोधः स्यान्निरोधज्ञो विमुच्यते ॥ १२-२१५-२३ (७३७५५)
इन्द्रियाणां रजस्येव प्रलयप्रभवावुभौ ।

परीक्ष्य संचरेद्विद्वान्यथावच्छास्त्रचक्षुषा ॥ १२-२१५-२४ (७३७५६)
ज्ञानेन्द्रियाणीन्द्रियार्थान्नोपसर्पन्त्यतर्षुलम् ।
ज्ञानैश्च करणैर्देही न देहं पुननर्हति ॥ ॥ १२-२१५-२५ (७३७५७)

इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि
पञ्चदशाधिकद्विशततमोऽध्यायः ॥ २१५.।
Mahabharata - Shanti Parva - Chapter Footnotes

१२-२१५-१२ तस्मादेव विशेषेण विनश्येयुर्विपश्चितः इति थ
। पाठः। तस्मादेता विशेषेण नरा नैयुर्विपश्चितः इति थ। पाठः ॥
१२-२१५-१३ शत्रुमारणार्थं मन्त्रमयी शक्तिः कृत्या सैव एताः ॥
१२-२१५-१४ स्नहोज्जायन्ति जन्तव इति थ । ध। पाठः ॥
१२-२१५-१७ तद्वीजं वीजसंज्ञितमिति ध । पाठः। तत्संस्थं
देहबन्धनमिति थ। पाठः। तज्ज्ञानं जीवसंस्थितमिति ट। पाठः ॥

---

शन्तिपर्व-अध्यय२१६
॥ श्रीः ॥
१२.२१६. अध्यायः २१६

Mahabharata - Shanti Parva - Chapter Topics
भीष्मेण युधिष्ठिरंप्रति
ब्रह्मचर्योपायादिप्रतिपादकवार्ष्णेयाध्यात्मानुवादः ॥ १.।
Mahabharata - Shanti Parva - Chapter Text

१२-२१६-० (७३७५८)
गुरुरुवाच। १२-२१६-०क्ष् (६०९२)
अत्रोपायं प्रवक्ष्यामि यथावच्छास्त्रचक्षुषा ।
तत्त्वज्ञानाच्चरन्राजन्प्राप्नुयात्परमां गतिम् ॥ १२-२१६-१ (७३७५९)
सर्वेषामेव भूतानां पुरुषः श्रेष्ठ उच्यते ।
पुरुषेभ्यो द्विजानाहुर्द्विजेभ्यो मन्त्रदर्शिनः ॥ १२-२१६-२ (७३७६०)
सर्वभूतात्मभूतास्ते सर्वज्ञाः सर्वदर्शिनः ।
ब्राह्मणा वेदशास्त्रज्ञास्तत्त्वार्थगतनिश्चयाः ॥ १२-२१६-३ (७३७६१)
नेत्रहीनो यथा ह्येकः कृच्छ्राणि लभतेऽध्वनि ।
ज्ञानहीनस्तथा लोके तस्माज्ज्ञानविदोऽधिकाः ॥ १२-२१६-४ (७३७६२)
तांस्तानुपासते धर्मान्धर्मकामा यथागमम् ।
न त्वेषामर्थसामान्यमन्तरेण गुणानिमान् ॥ १२-२१६-५ (७३७६३)

वाग्देहमनसां शौचं क्षमा सत्यं धृतिः स्मृतिः ।
सर्वधर्मेषु धर्मज्ञा ज्ञापयन्ति गुणाञ्छुभान् ॥ १२-२१६-६ (७३७६४)
यदिदं ब्रह्मणो रूपं ब्रह्मंचर्यमिति स्मृतम् ।
परं तत्सर्वधर्मेभ्यस्तेन यान्ति परां गतिम् ॥ १२-२१६-७ (७३७६५)
लिङ्गसंयोगहीनं यच्छब्दस्पर्शविवर्जितम् ।
श्रोत्रेण श्रवणं चैव चक्षुषा चैव दर्शनम् ॥ १२-२१६-८ (७३७६६)
वाक्संभाषाप्रवृत्तं यत्तन्मनः परिवर्जितम् ।
बुद्ध्या चाध्यवसीयीत ब्रह्मचर्यमकल्मषम् ॥ १२-२१६-९ (७३७६७)
सम्यग्वृत्तिर्ब्रह्मलोकं प्राप्नुयान्मध्यमः सुरान् ।
द्विजाग्र्यो जायते विद्वान्कन्यसीं वृत्तिमास्थितः ॥ १२-२१६-१० (७३७६८)
सुदुष्करं ब्रह्मचर्यमुपायं तत्र मे शृणु ।
संप्रदीप्तमुदीर्णं च निगृह्णीयाद्द्विजो मनः ॥ १२-२१६-११ (७३७६९)
योषितां न कथा श्राव्या न निरीक्ष्या निरम्बराः ।
कथंचिद्दर्शनादासां दुर्बलानां विशेद्रजः ॥ १२-२१६-१२ (७३७७०)
रागोत्पन्नश्चरेत्कृच्छ्रमह्नस्त्रिः प्रविशेदपः ।
मग्नस्त्वप्स्वेव मनसा त्रिर्जपेदघमर्षणम् ॥ १२-२१६-१३ (७३७७१)
पाप्मानं निर्दहेदेवमन्तर्भूतरजोमयम् ।
ज्ञानयुक्तेन मनसा संततेन विचक्षणः ॥ १२-२१६-१४ (७३७७२)
कुणपामेध्यसंयुक्तं यद्वदच्छिद्रबन्धनम् ।
तद्वद्देहगतं विद्यादात्मानं देहबन्धनम् ॥ १२-२१६-१५ (७३७७३)
ग्अमेध्यपूर्णं यद्भाण्डं श्लेष्मान्तकलिलावृतम् ।
नेच्छते वीक्षितुं भाण्डं कुतः स्प्रष्टुं प्रवर्तते ॥ १२-२१६-१६ (७३७७४)
देहभाण्डं मलैः पूर्णं बहिः स्वेदजलावृतम् ।
बीभत्सं नरनारीणां ज्ञानिनां नरकं मतम् ॥ १२-२१६-१७ (७३७७५)
छिद्रकुम्भो यथा स्रावं सृजते तद्गतं दृढम् ।
अन्तस्थं स्रंसते तद्वज्जलं देहेषु देहिनाम् ॥ १२-२१६-१८ (७३७७६)
श्लेष्माश्रुमूत्रकलिलं पुरीषं शुक्लमेव च ।
कफजालविनिर्यासः सरसश्चित्त मुञ्चय ॥' १२-२१६-१९ (७३७७७)
वातपित्तकफान्रक्तं त्वङ्मांसं स्नायुमस्थि च ।
मज्जां देहं सिराजालैस्तर्पयन्ति रसा नृणाम् ॥ १२-२१६-२० (७३७७८)
दश विद्याद्धमन्योऽत्र पञ्चेन्द्रियगुणावहाः ।
याभिः सूक्ष्माः प्रजायन्ते धमन्योऽन्याः सहस्रशः ॥ १२-२१६-२१ (७३७७९)
एवमेताः सिरा नद्यो रसोदा देहसागरम् ।
तर्पयन्ति यथाकालमापगा इव सागरम् ॥ १२-२१६-२२ (७३७८०)
मध्ये च हृदयस्यैका सिरा तत्र मनोवहा ।
शुक्रं संकल्पजं नृणां सर्वगात्रैर्विमुञ्चति ॥ १२-२१६-२३ (७३७८१)

सर्वगात्रप्रतायिन्यस्तस्या ह्यनुगताः सिराः ।
नेत्रयोः प्रतिपद्यन्ते वहन्त्यस्तैजसं गुणम् ॥ १२-२१६-२४ (७३७८२)
पयस्यन्तर्हितं सर्पिर्यद्वन्निर्मथ्यते खजैः ।
शुक्रं निर्मथ्यते तद्वद्देहसंकल्पजैः खजैः ॥ १२-२१६-२५ (७३७८३)
स्वप्नेऽप्येवं यथाऽभ्येति मनः संकल्पजं रजः ।
शुक्रमस्पर्शजं देहात्सृजन्त्यस्य मनोवहाः ॥ १२-२१६-२६ (७३७८४)
महर्षिर्भगवानत्रिर्वेद तच्छुक्रसंभवम् ।
नृबीजमिन्द्रदैवत्यं तस्मादिन्द्रियमुच्यते ॥ १२-२१६-२७ (७३७८५)
ये वै शुक्रगतिं विद्युर्भूतसंकरकारिकाम् ।
विरागा दग्धदोषास्ते नाप्नुयुर्देहसंभवम् ॥ १२-२१६-२८ (७३७८६)
गुणानां साम्यमागम्य मनसैव मनोवहम् ।
देहकर्म नुदन्प्राणानन्तकाले विमुच्यते ॥ १२-२१६-२९ (७३७८७)
भविता मनसो ज्ञानं मन एव प्रजायते ।
ज्योतिष्मद्विरजो नित्यं मन्त्रसिद्धं महात्मनाम् ॥ १२-२१६-३० (७३७८८)
तस्मात्तदभिघाताय कर्म कुर्यादकल्मषम् ।
देहबीजं समुत्पन्नमस्मित्कर्मणि विद्यते ॥ १२-२१६-३१ (७३७८९)
न स्मरेन्न प्रयुञ्जीत ज्ञानी तत्कर्म बुद्धिमान् ।
रजस्तमश्च हित्वेह न तिर्यग्गतिमाप्नुयात् ॥ १२-२१६-३२ (७३७९०)
तरुणाधिगतं ज्ञानं जरादुर्बलतां गतम् ।
विपक्वबुद्धिः कालेन आदत्ते मानसं बलम् ॥ १२-२१६-३३ (७३७९१)
गएव पुत्रकलत्रेषु ज्ञातिसंबन्धिबन्धुषु ।
आदत्ते हृदये कामं व्याध्यादिभिरभिप्लुतः ॥ १२-२१६-३४ (७३७९२)
यतस्ततः परिपतन्नविन्दन्सुखमण्वपि ।
बहुदुःखसमापन्नः पश्चान्निर्वेदमास्थितः ।
ज्ञानवृक्षं समाश्रित्य पश्चान्निर्वृतिमश्नुते ॥' १२-२१६-३५ (७३७९३)
सुदुर्गमिव पन्थानमतीत्य गुणबन्धनम् ।
यथा पश्येत्तथा दोषानतीत्यामृतमश्नुते ॥ ॥ १२-२१६-३६ (७३७९४)

इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि
षोडशाधिकद्विशततमोऽध्यायः ॥ २१६.।

Mahabharata - Shanti Parva - Chapter Footnotes

१२-२१६-१० कन्यसीं कनीयसीम् ॥
१२-२१६-११ निगृह्णीयाच्चलं मन इति ध ।पाठः ॥
१२-२१६-१२ रजो रागः ॥
१२-२१६-२० सिरानाड्यस्तासां जालैः ॥

१२-२१६-२१ धमन्यो नाड्यः । याभिः सूक्ष्माः प्रतायन्ते इति झ। पाठः ॥
१२-२१६-२४ सर्वगात्रप्रवाहिन्यः इति ध । पाठः ॥
१२-२१६-२५ स्वजैर्मन्थनदण्डैः । देहस्थात् संकल्पात् खेभ्य इन्द्रियेभ्यश्च जातैः संकल्पजैः स्वजैः स्त्रीदर्शनस्पर्शनादिभिः ॥
१२-२१६-२६ शुक्रं संकल्पजं देहात्सृजत्यस्य मनोवहा इति झ । पाठः ॥
१२-२१६-२७ त्रिबीजमिन्द्रदैवत्यं इति झ । पाठः ॥
१२-२१६-३१ तदभिघाताय मनोनाशाय । अकल्मषं निवृत्तिरूपम् ॥
१२-२१६-३२ यथेष्टां गतिमाप्नुयात् इति झ । पाठः। तत्र यथा येन प्रकारेण इष्टां गतिं मोक्षम् ॥
१२-२१६-३३ जरया दुर्बलता तां । तृतीया तत्कृतार्थेनेति समासः। मानसंबलं संकल्पमादत्ते संहरति। काले पूर्वभाग्येन नतु दृष्टयोग्यतया ॥
१२-२१६-३६ गुणा देहेन्द्रियादयस्तदेव बन्धनम् ॥

---

शन्तिपर्व-अध्यय२१७
॥ श्रीः ॥
१२.२१७. अध्यायः २१७

Mahabharata - Shanti Parva - Chapter Topics
भीष्मेण युधिष्ठिरंप्रति वैराग्यादिमोक्षसाधनप्रतिपादकगुरुवाक्यानुवादः ॥ १.।
Mahabharata - Shanti Parva - Chapter Text

१२-२१७-० (७३७९५)
गुरुरुवाच। १२-२१७-०क्ष् (६०९३)
दुरन्तेष्विन्द्रियार्थेषु सक्ताः सीदन्ति जन्तवः ।
ये त्वसक्ता महात्मानस्ते यान्ति परमां गतिम् ॥ १२-२१७-१ (७३७९६)
जन्ममृत्युजरादुःखैर्व्याधिभिर्मानसक्लमैः ।
दृष्ट्वैव संततं लोकं घटेन्मोक्षाय बुद्धिमान् ॥ १२-२१७-२ (७३७९७)
वाङ्मनोभ्यां शरीरेण शुचिः स्यादनहंकृतः ।
प्रशान्तो ज्ञानवान्भिक्षुर्निरपेक्षश्चरेत्सुखम् ॥ १२-२१७-३ (७३७९८)
ग्वशा मोक्षवतां पाशास्तासां रूपं प्रदर्शकम् ।
दुर्ग्रहं पश्यमानोऽपि मन्यते मोहितस्तदा ॥ १२-२१७-४ (७३७९९)
एवं पश्यन्तमात्मानमनुध्यातं हि बन्धुषु ।
अयथात्वेन जानामि भेदरूपेण संस्थितम् ॥' १२-२१७-५ (७३८००)

अथवा मनसः सङ्गं पश्येद्भूतानुकम्पया ।
तत्राप्युपेक्षां कुर्वीत ज्ञात्वा कर्मफलं जगत् ॥ १२-२१७-६ (७३८०१)
यत्कृतं स्याच्छुभं कर्म पापं वा यदि वाऽश्नुते ।
तस्माच्छुभानि कर्माणि कुर्याद्वा बुद्धिकर्मभिः ॥ १२-२१७-७ (७३८०२)
अहिंसा सत्यवचनं सर्वभूतेषु चार्जवम् ।
क्षमा चैवाप्रमादश्च यस्यैते स सुखी भवेत् ॥ १२-२१७-८ (७३८०३)
ग्अनक्षसाध्यं तद्ब्रह्म निर्मलं जगतः परम् ।
स्वात्मप्रकाशमग्राह्यमहेतुकमचञ्चलम् ॥ १२-२१७-९ (७३८०४)
विवेकज्ञानवाचिस्थो ह्याशुरूपेण संस्थितः ।
वैकारिकात्प्रदृश्येतै गैरिके मधुधारवत् ॥' १२-२१७-१० (७३८०५)
यश्चैनं परमं धर्मं सर्वभूतसुखावहम् ।
दुःखान्निः सरणं वेद तत्त्वज्ञः स सुखी भवेत् ॥ १२-२१७-११ (७३८०६)
तस्मात्समाहितं बुद्ध्या मनो भूतेषु धारयेत् ।
नापध्यायेन्न स्पृहयेन्नाबद्धं चिन्तयेदसत् ॥ १२-२१७-१२ (७३८०७)
अथामोघप्रयत्नेन मनो ज्ञाने निवेशयेत् ।
सुवाचोऽथ प्रयोगेण मनोज्ञं संप्रवर्तते ॥ १२-२१७-१३ (७३८०८)
विवेकयित्वा तद्वाक्यं धर्मसूक्ष्ममवेक्ष्य च ।
सत्यां वाचमहिंस्रां च वदेदनपवादिनीम् ॥ १२-२१७-१४ (७३८०९)
कल्कापेतामपरुषामनृशंसामपैशुनीम् ।
ईदृगल्पं च वक्तव्यमविक्षिप्तेन चेतसा ॥ १२-२१७-१५ (७३८१०)
वाक्यबन्धेन संरागविहाराद्व्याहरेद्यदि ।
बुद्ध्याऽप्यनुगृहीतेन मनसा कर्म तामसम् ॥ १२-२१७-१६ (७३८११)
रजोभूतैर्हि करणैः कर्मणि प्रतिपद्यते ।
स दुःखं प्राप्य लोकेऽस्मिन्नरकायोपपद्यते ।
तस्मान्मनोवाक्शरीरैराचरेद्धैर्यमात्मनः ॥ १२-२१७-१७ (७३८१२)
प्रकीर्ण एव भारो हि यद्वद्धार्येत दस्युभिः ।
प्रतिलोमां दिशं बुद्ध्वा संसारमबुधास्तथा ।
ग्संसारमार्गमापन्नः प्रतिलोमं विवर्जयेत् ॥' १२-२१७-१८ (७३८१३)
तामेव च यथा दस्यून्हत्वा गच्छेच्छिवां दिशम् ।
तथा रजस्तमः कर्माण्युत्सृज्य प्राप्नुयाच्छुभम् ॥ १२-२१७-१९ (७३८१४)
निःसंदिग्धमनीहो वै मुक्तः सर्वपरिग्रहैः ।
विविक्तचारी लघ्वाशी तपस्वी नियतेन्द्रियः ॥ १२-२१७-२० (७३८१५)
ज्ञानदग्धपरिक्लेशः प्रयोगरतिरात्मवान् ।
निष्प्रचारेण मनसा परं तदधिगच्छति ॥ १२-२१७-२१ (७३८१६)
धृतिमानात्मवान्बुद्धिं निगृह्णीयादसंशयम् ।
मनो बुद्ध्या निगृह्णीयाद्विषयान्मनसाऽऽत्मनः ।

ग्योजयित्वा मनस्तत्र निश्चलं परमात्मनि ॥ १२-२१७-२२ (७३८१७)
योगाभिसन्धियुक्तस्य ब्रह्म तत्संप्रकाशते ।
ऐकान्त्यं तदिदं विद्धि सर्ववस्त्वन्तरस्थितिः ॥ १२-२१७-२३ (७३८१८)
विशेषहीनं गृह्णन्ति विशेषां कारणात्मिकाम् ।
अथवा न प्रभुस्तत्र परमात्मनि वर्तितुम् ।
आगामित्तत्त्वं योगात्मा योगतन्त्रमुपक्रमेत् ॥' १२-२१७-२४ (७३८१९)
निगृहीतेन्द्रियस्यास्य कुर्वाणस्य मनो वशे ।
देवतास्ताः प्रकाशन्ते हृष्टा यान्ति तमीश्वरम् ॥ १२-२१७-२५ (७३८२०)
ताभिः संयुक्तमनसो ब्रह्म तत्संप्रकाशते ।
शनैश्चापगते सत्वे ब्रह्मभूयाय कल्पते ॥ १२-२१७-२६ (७३८२१)
अथवा न प्रवर्तेत योगतन्त्रैरुपक्रमेत् ।
योगतन्त्रमयं तन्त्रं वृत्तिः स्यात्ततदाचरेत् ॥ १२-२१७-२७ (७३८२२)
कणकुल्माषपिण्याकशाकयावकसक्तवः ।
तथा मूलफलं भैक्ष्यं पर्यायेणोपयोजयेत् ॥ १२-२१७-२८ (७३८२३)
आहारनियमं चैव देशे काले च सात्विकः ।
तत्परीक्ष्यानुवर्तेत यत्प्रवृत्त्यनुवर्तकम् ॥ १२-२१७-२९ (७३८२४)
प्रवृत्तं नोपरुन्धेत शनैरग्निमिवेन्धयेत् ।
ज्ञानैधितं तथा ज्ञानमर्कवत्संप्रकाशते ॥ १२-२१७-३० (७३८२५)
ज्ञानाधिष्ठानमज्ञानं त्रील्लौँकानधितिष्ठति ।
विज्ञानानुगतं ज्ञानमज्ञानेनापकृष्यते ॥ १२-२१७-३१ (७३८२६)
पृथक्त्वात्संप्रयोगाच्च नासूयुर्वेद शाश्वतम् ।
स तयोरपवर्गज्ञो वीतरागो विमुच्यते ॥ १२-२१७-३२ (७३८२७)
वयोतीतो जरामृत्यू जित्वा ब्रह्म सनातनम् ।
अमृतं तदवाप्नोति यत्तदक्षरमव्ययम् ॥ ॥ १२-२१७-३३ (७३८२८)

इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि
सप्तदशाधिकद्विशततमोऽध्यायः ॥ २१७.।

Mahabharata - Shanti Parva - Chapter Footnotes

१२-२१७-२ क्लमैः क्लेशैः संततं व्याप्तं दृष्ट्वैव नतु ममेदानीं
क्लेशो नास्तीत्युपेक्षेत ॥
१२-२१७-३ घटनमेवाहाध्यायेन वागिति । चरेद्गुरुरिति ध पाठः ॥
१२-२१७-६ पश्येद्भूतादिकं यथा इति ध । पाठः ॥
१२-२१७-१२ नापध्यायेत् परानिष्टं न चिन्तयेत् । अबद्धं स्वस्यायोग्यं
राज्यादिकं न स्पृहयेत्। असन्नष्टं भावि वा स्त्रीपुत्रादिकं न
चिन्तयेत् ॥

१२-२१७-१३ वाचामोधप्रयासेन मनोज्ञं तत्प्रवर्तते इति झ ।पाठः ॥
१२-२१७-१४ विवक्षता च तद्वाक्यं धर्मं सूक्ष्ममवेक्षता इति झ
।पाठः ॥
१२-२१७-१५ कल्कापेतां शाठ्येन हीनाम् ॥
१२-२१७-१६ वाक्प्रबद्धो हि संसारो विरागात् इति झ ।पाठः ॥
१२-२१७-१७ रजोभूतैः प्रवृत्तिपरैः ॥
१२-२१७-२० अनीहश्चेष्टाशून्यः ॥
१२-२१७-२१ प्रयोगो योगाङ्गानामनुष्ठानं तत्र रतिः प्रीतिर्यस्य
।निष्प्रचारेण निरुद्धेन ॥
१२-२१७-२६ एतैश्चाभिमतैः सर्वैरिति ध ।पाठः ॥

---

शन्तिपर्व-अध्यय२१८
॥ श्रीः ॥
१२.२१८. अध्यायः २१८

Mahabharata - Shanti Parva - Chapter Topics
भीष्मेण युधिष्ठिरंप्रति शिष्याय गुरूक्तवार्ष्णेयाध्यात्मानुवादः ॥१.।
Mahabharata - Shanti Parva - Chapter Text

१२-२१८-० (७३८२९)
गुरुरुवाच।१२-२१८-०क्ष् (६०९४)
निष्कल्मषं ब्रह्मचर्यमिच्छताचरितुं सदा ।
निद्रा सर्वात्मना त्याज्या स्वप्नदोषमवेक्षता ॥१२-२१८-१ (७३८३०)
स्वप्ने हि रजसा देही तमसा चाभिभूयते ।
देहान्तरमिवापन्नश्चरत्यपगतस्मृतिः ॥१२-२१८-२ (७३८३१)
ज्ञानाभ्यासाज्जागरिता जिज्ञासार्थमनन्तरम् ।
विज्ञानाभिनिवेशात्तु स जागर्त्यनिशं सदा ॥१२-२१८-३ (७३८३२)
अत्राह कोन्वयं भावः स्वप्ने विषयवानिव ।
प्रलीनैरिन्द्रियैर्देही वर्तते देहवानिव ॥१२-२१८-४ (७३८३३)
अत्रोच्यते यथा ह्येतद्वेद योगेश्वरो हरिः ।
तथैतदुपपन्नार्थं वर्णयन्ति महर्षयः ॥१२-२१८-५ (७३८३४)
इन्द्रियाणां श्रमात्स्वप्नमाहुः सर्वगतं मनः ।
गतन्मयानीन्द्रियाण्याहुस्तावद्गच्छन्ति तानि वै ॥१२-२१८-६ (७३८३५)
अत्राहुस्त्रितयं नित्यमतथ्यमिति चेच्च न ।
प्रथमे वर्तमानोऽसौ त्रितयं चेति सर्वदा ॥१२-२१८-७ (७३८३६)
नेतरावुपसंगम्य विजानाति कथंचन ।
स्वप्नावस्थागतो ह्येष स्वप्न इत्येव वेत्ति च ॥१२-२१८-८ (७३८३७)

तदप्यसदृशं युक्त्या त्रितयं मोहलक्षणम् ।
यदात्मत्रितयान्मुक्तस्तदा जानात्यसत्कृतः ॥' १२-२१८-९ (७३८३८)
मनसस्त्वप्रलीनत्वात्तत्तदाहुर्निदर्शनम् ।
कार्ये चासक्तमनसः संकल्पो जाग्रतो ह्यपि ।
यद्वन्मनोरथैश्वर्यं स्वप्ने तद्वन्मनोगतम् ॥ १२-२१८-१० (७३८३९)
संसाराणामसंख्यानां कामात्मा तदवाप्नुयात् ।
मनस्यन्तर्हितं सर्वं वेद सोत्तमपूरुषः ॥ १२-२१८-११ (७३८४०)
गुणानामपि यद्येतत्कर्मणा चाप्युपस्थितम् ।
तत्तच्छंसन्ति भूतानि मनो यद्भावितं यथा ॥ १२-२१८-१२ (७३८४१)
ततस्तमुपसर्पन्ति गुणा राजसतामसाः ।
सात्विका वा यथायोगमानन्तर्यफलोदयम् ॥ १२-२१८-१३ (७३८४२)
ततः पश्यन्त्यसंबन्धान्वातपित्तकफोत्तरान् ।
रजस्तमोभवैर्भावैस्तदप्याहुर्दुरत्ययम् ॥ १२-२१८-१४ (७३८४३)
प्रसन्नैरिन्द्रियैर्यद्यत्संकल्पयति मानसम् ।
तत्तत्स्वप्नेप्युपरते मनो बुद्धिर्निरीक्षते ॥ १२-२१८-१५ (७३८४४)
व्यापकं सर्वभूतेषु वर्तते दीपवन्मनः ।
आत्मप्रभावात्तं विद्यात्सर्वा ह्यात्मनि देवताः ॥ १२-२१८-१६ (७३८४५)
मनस्यन्तर्हितं द्वारं देहमास्थाय मानुषम् ।
यत्तत्सदसदव्यक्तं स्वपित्यस्मिन्निदर्शनम् ॥ १२-२१८-१७ (७३८४६)
ग्व्यक्तभेदमतीतोऽसौ चिन्मात्रं परिदृश्यते।'
सर्वभूतात्मभूतस्थं तमध्यात्मगुणं विदुः ॥ १२-२१८-१८ (७३८४७)
लिप्सेन मनसा यश्च संकल्पादैश्वरं गुणम् ।
आत्मप्रसादात्तं विद्यात्सर्वा ह्यात्मनि देवताः ॥ १२-२१८-१९ (७३८४८)
एवं हि तपसा युञ्ज्यादर्कवत्तमसः परम् ।
त्रैलोक्यप्रकृतिर्देही तमसोन्ते महेश्वरम् ॥ १२-२१८-२० (७३८४९)
तपो ह्यधिष्ठितं देवैस्तपोघ्नमसुरैस्तमः ।
एतद्देवासुरैर्गुप्तं तदाहुर्ज्ञानलक्षणम् ॥ १२-२१८-२१ (७३८५०)
सत्त्वं रजस्तमश्चेति देवासुरगुणान्विदुः ।
सत्त्वं देवगुणं विद्यादितरावासुरौ गुणौ ॥ १२-२१८-२२ (७३८५१)
ग्सत्त्वं मनस्तथा बुद्धिर्देवा इत्यभिशंब्दिताः ।
तैरेव हि वृतस्तस्माज्ज्ञात्वैवं परमं-----॥ १२-२१८-२३ (७३८५२)
निद्राविकल्पेन सतां---- विशति लोकवत् ।
स्वस्थो भवति गूढात्मा कलुषैः परिवर्जितः ॥ १२-२१८-२४ (७३८५३)
निशादिका ये कथिता लोकानां कलुषा मताः ।
तैर्हीनं यत्पुरं शुद्धं बाह्याभ्यन्तरवर्तिनम् ।
सदानन्दमयं नित्यं भूत्वा तत्परमन्वियात् ॥ १२-२१८-२५ (७३८५४)

एवमाख्यातमत्यर्थं ब्रह्मचर्यमकल्मषम् ।
सर्वसंयोगहीनं तद्विष्णवाख्यं परमं पदम् ।
अचिन्त्यमद्भुतं लोके ज्ञानेन परिवर्तते ॥' १२-२१८-२६ (७३८५५)
ब्रह्म तत्परमं ज्ञानममृतं ज्योतिरक्षरम् ।
ये विदुर्भावितात्मानस्ते यान्ति परमां गतिम् ॥ १२-२१८-२७ (७३८५६)
हेतुमच्छक्यमाख्यातुमेतावज्ज्ञानचक्षुषा ।
प्रत्याहारेण वा शक्यमव्यक्तं ब्रह्म वेदितुम् ॥ ॥ १२-२१८-२८ (७३८५७)

इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि
अष्टादशाधिकद्विशततमोऽध्यायः ॥ २१८.।
Mahabharata - Shanti Parva - Chapter Footnotes

१२-२१८-२ अपगतस्पृहः इति झ । पाठः ॥
१२-२१८-११ वेद सोऽन्तरपूरुषः इति ट । पाठः ॥
१२-२१८-१६ अप्रतिमं मनः इति ध । पाठः। अप्रतिधं मनः इति
झ। पाठः ॥
१२-२१८-२१ गुप्तं ज्ञानाज्ञानस्य लक्षणमिति थ । ध। पाठः ॥
१२-२१८-२७ ब्रह्म तत्परमं वेद्यं इति ट । थ। पाठः। ये विदुः
सात्विकात्मानः इति थ। पाठः ॥

---

शन्तिपर्व-अध्यय२१९
॥ श्रीः ॥
१२.२१९. अध्यायः २१९

Mahabharata - Shanti Parva - Chapter Topics
भीष्मेण युधिष्ठिरंप्रति शिष्याय
गुरूक्तवार्ष्णेयाध्यात्मानुवादसमापनम् ॥ १.।
Mahabharata - Shanti Parva - Chapter Text

१२-२१९-० (७३८५८)
गुरुरुवाच। १२-२१९-०क्ष् (६०९५)
न स वेद परं ब्रह्म यो न वेद चतुष्टयम् ।
व्यक्ताव्यक्तं च यत्तत्त्वं संप्रोक्तं परमर्षिणा ॥ १२-२१९-१ (७३८५९)
व्यक्तं मृत्युमुखं विद्यादव्यक्तममृतं पदम् ।
निवृत्तिलक्षणं धर्ममृषिर्नारायणोऽब्रवीत् ॥ १२-२१९-२ (७३८६०)
तत्रैवावस्थितं सर्वं त्रैलोक्यं सचराचरम् ।
निवृत्तिलक्षणं धर्ममव्यक्तं ब्रह्म शाश्वतम् ॥ १२-२१९-३ (७३८६१)

प्रवृत्तिलक्षणं धर्मं प्रजापतिरथाब्रवीत् ।
प्रवृत्तिः पुनरावृत्तिर्निवृत्तिः परमा गतिः ॥ १२-२१९-४ (७३८६२)
तां गतिं परमामेति निवृत्तिपरमो मुनिः ।
ज्ञानतत्त्वपरो नित्यं शुभाशुभनिदर्शकः ॥ १२-२१९-५ (७३८६३)
तदेवमेतौ विज्ञेयावव्यक्तपुरुषावुभौ ।
अव्यक्तपुरुषाभ्यां तु यत्स्यादन्यन्महत्तरम् ॥ १२-२१९-६ (७३८६४)
तं विशेषमवेक्षेति विशेषेण विचक्षणः ।
अनाद्यन्तावुभावेतावलिङ्गौ चाप्युभावपि ॥ १२-२१९-७ (७३८६५)
उभौ नित्यावनुचरौ महद्भ्यश्च महत्तरौ ।
सामान्यमेतदुभयोरेवं ह्यन्यद्विशेषणम् ॥ १२-२१९-८ (७३८६६)
प्रकृत्या सर्गधर्मिण्या तथा त्रिगुणसत्वया ।
विपरीतमतो विद्यात्क्षेत्रज्ञस्य स्वलक्षणम् ॥ १२-२१९-९ (७३८६७)
प्रकृतेश्च विकाराणां द्रष्टारमगुणान्वितम् ।
ग्क्षेत्रज्ञमाहुर्जीवं तु कर्तारं गुणसंवृतम् ॥ १२-२१९-१० (७३८६८)
अग्राह्यं येन जानन्ति तज्ज्ञानं दंशितश्च तत् ।
तेनैव दंशितो नित्यं न गुणः परिभूयते ॥ १२-२१९-११ (७३८६९)
अग्राह्यौ पुरुषावेतावलिङ्गत्वादसङ्गिनौ ।
संयोगलक्षणोत्पत्तिः कर्मजा गृह्यते यथा ॥ १२-२१९-१२ (७३८७०)
करणैः कर्मनिर्वृत्तैः कर्ता यद्यद्विचेष्टते ।
कीर्त्यते शब्दसंज्ञाभिः कोऽहमेषोप्यसाविति ॥ १२-२१९-१३ (७३८७१)
ग्ममापि कायमिति च तदज्ञो नित्यसंवृतः।'
उष्णीषवान्यथा वस्त्रैस्त्रिभिर्भवति संवृतः ।
संवृतोऽयं तथा देही सत्त्वराजसतामसैः ॥ १२-२१९-१४ (७३८७२)
ग्भेदवस्तु त्वभेदेन जानाति स यदा पुमान् ।
तदा परं परात्माऽसौ भवत्येव निरञ्जनः ॥ १२-२१९-१५ (७३८७३)
क्रियायोगे च भेदाख्ये बहु संक्षिप्यते क्वचित् ।
वसुरुद्रगणाद्येषु स्वानुभोगेन भोगतः ॥ १२-२१९-१६ (७३८७४)
एवमेष परः सत्त्वो नानारूपेण संस्थितः ।
संक्षिप्तो दृश्यते पश्चादेकरूपेण विष्ठितः ॥' १२-२१९-१७ (७३८७५)
तस्माच्चतुष्टयं वेद्यमेतैर्हेतुभिरावृतम् ।
तथासंज्ञो ह्ययं सम्यगन्तकाले न मुह्यति ।
ग्वायुर्विधो यथा भानुर्विप्रकाशं गमिष्यति ॥' १२-२१९-१८ (७३८७६)
श्रियं दिव्यामभिप्रेप्सुर्वर्ष्मवान्मनसा शुचिः ।
शारीरैर्नियमैरुग्रैश्चरेन्निष्कल्मषं तपः ॥ १२-२१९-१९ (७३८७७)
त्रैलोक्यं तपसा व्याप्तमन्तर्भूतेन भास्वता ।
सूर्यश्च चन्द्रमाश्चैव भासतस्तपसा दिवि ॥ १२-२१९-२० (७३८७८)

ग्अन्यच्च धर्मसाम्यं यत्तपस्तत्कीर्त्यते पुनः।'
प्रकाशस्तपसो ज्ञानं लोके संशब्दितं तपः ॥ १२-२१९-२१ (७३८७९)
रजस्तमोघ्नं यत्कर्म तपसस्तत्स्वलक्षणम् ।
गत्रितयं ह्येतदाख्यातं यद्यस्माज्ज्ञासितुं पुनः ॥१२-२१९-२२ (७३८८०)
स्वभासा भासयंश्चापि चन्द्रमा ह्यत्र वर्तते ।
सूर्ययोगे तु यः सन्धिस्तपः सर्वं प्रदीप्यते ॥' १२-२१९-२३ (७३८८१)
ब्रह्मचर्यमहिंसा च शारीरं तप उच्यते ।
वाङ्मनोनियमः सम्यङ्मानसं तप उच्यते ॥१२-२१९-२४ (७३८८२)
विधिज्ञेभ्यो द्विजातिभ्यो ग्राह्यमन्नं विशिष्यते ।
आहारनियमेनास्य पाप्मा शाम्यति राजसः ॥१२-२१९-२५ (७३८८३)
वैमनस्यं च विषये यान्त्यस्य करणानि च ।
तस्मात्तन्मात्रमादद्याद्यावदत्र प्रयोजनम् ॥१२-२१९-२६ (७३८८४)
अन्तकाले बलोत्कर्षाच्छनैः कुर्यादनातुरः ।
एवं युक्तेन मनसा ज्ञानं यदुपपद्यते ॥१२-२१९-२७ (७३८८५)
रजोवर्ज्यो ह्ययं देही देहवाञ्छब्दवांश्चरेत् ।
कार्यैरव्याहतमतिर्वैराग्यात्प्रकृतौ स्थितः ॥१२-२१९-२८ (७३८८६)
आ देहादप्रमादाच्च देहान्ताद्विप्रमुच्यते ।
हेतुयुक्तः सदा सार्गो भूतानां प्रलयस्तथा ॥१२-२१९-२९ (७३८८७)
परप्रत्ययसर्गे तु नियमो नातिवर्तते ।
एवं तत्प्रभवां प्रज्ञामासते ये विषर्यये ॥१२-२१९-३० (७३८८८)
धृत्या देहान्धारयन्तो बुद्धिसंक्षिप्तचेतसः ।
स्थानेभ्यो ध्वंसमानाश्च सूक्ष्मत्वात्तदुपासते ॥१२-२१९-३१ (७३८८९)
यथागमं च तत्सर्वं बुद्ध्या तन्नैव बुद्ध्यते ।
देहान्तं कश्चिदन्वास्ते भावितात्मा निराश्रयः ॥१२-२१९-३२ (७३८९०)
युक्तो धारणया कश्चित्सतः केचिदुपासते ।
अभ्यस्यन्ति परं देवं विद्यासंशब्दिताक्षरम् ॥१२-२१९-३३ (७३८९१)
अन्तकाले ह्युपासन्ते तपसा दग्धकिल्विषाः ।
सर्व एते महात्मानो गच्छन्ति परमां गतिम् ॥१२-२१९-३४ (७३८९२)
सूक्ष्मं विशेषणं तेषामवेक्षेच्छास्त्रचक्षुषा ।
देहं तु परमं विद्याद्विमुक्तमपरिग्रहम् ॥१२-२१९-३५ (७३८९३)
अन्तरिक्षादन्यतरं धारणासक्तमानसम् ।
मर्त्यलोकाद्विमुच्यन्ते विद्यासंसक्तचेतसः ॥१२-२१९-३६ (७३८९४)
ब्रह्मभूता विरजसस्ततो यान्ति परां गतिम् ।
एवमेकायनं धर्ममाहुर्वेदविदो जनाः ॥१२-२१९-३७ (७३८९५)
यथाज्ञानमुपासन्तः सर्वे यान्ति परां गतिम् ।
कषायवर्जितं----तेषामुत्पद्यतेऽमलम् ।

यान्ति तेऽपि----- कान्विशुध्यन्ति यथाबलं ॥ १२-२१९-३८ (७३८९६)
भगवन्तमजं दिव्य विष्णुमव्यक्तसंज्ञितम् ।
भावेन यान्ति शुद्धा ये ज्ञानतृप्ता निराशिषः ॥ १२-२१९-३९ (७३८९७)
ज्ञात्वाऽऽत्मस्थं------- न निवर्तन्ति तेऽव्ययाः ।
प्राप्य तत्परमं स्थानमोदन्तेऽक्षरमव्ययम् ॥ १२-२१९-४० (७३८९८)
एतावदेतद्विज्ञानमेतदस्ति च नास्ति च ।
तृष्णाबद्धं जगत्सर्वं चक्रवत्परिवर्तते ॥ १२-२१९-४१ (७३८९९)
विसतन्तुर्यथैवायमन्तस्थः सर्वतो बिसे ।
तृष्णातन्तुरनाद्यन्तस्तथा देहगतः सदा ॥ १२-२१९-४२ (७३९००)
सूच्या सूत्रं यथा वस्त्रे संसारयति वायकः ।
तद्वत्संसारसूत्रं हि तृष्णासूच्या निबद्धयते ॥ १२-२१९-४३ (७३९०१)
Ïइतस्ततः समाहृत्य रूपं निर्वर्तयिष्यति।ऀ
विकारं प्रकृतिं चैव पुरुषं च सनातनम् ॥ १२-२१९-४४ (७३९०२)
यो यथावद्विजानाति स वितृष्णो विमुच्यते ।
याति नित्यं स सद्भावमात्मनो वै महद्भवम् ॥ १२-२१९-४५ (७३९०३)
भीष्म उवाच। १२-२१९-४६क्ष् (६०९६)
प्रकाशं भगवानेतदृषिर्नारायणोऽमृतम् ।
भूतानामनुकम्पार्थं जगाद जगतो हितम् ॥ ॥ १२-२१९-४६ (७३९०४)

इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि
एकोनविंशत्यधिकद्विशततमोऽध्यायः ॥ २१९.।
Mahabharata - Shanti Parva - Chapter Footnotes

१२-२१९-१ न स वेद परं धर्मं इति ध । पाठः ॥
१२-२१९-२२ तपसस्तच्च लक्षणमिति थ । पाठः। तत्वलक्षणमिति
ध। पाठः ॥
१२-२१९-२५ ग्राह्यमन्नं तपस्थिभिरिति ट । थ। पाठः ॥
१२-२१९-२९ देहान्ते विप्रमुच्यत इति ट । थ। पाठः। सदोत्सर्ग इति
ध। पाठः ॥
१२-२१९-३८ विमुच्यन्ते यथाबलमिति झ । पाठः। विशुध्यन्तो
यथाबलमिति ट। थ। पाठः ॥
१२-२१९-४६ प्रकाशं स्पष्टम् । अमृतं मोक्षसाधनम् ॥

---

शन्तिपर्व-अध्यय२२०
॥ श्रीः ॥
१२.२२०. अध्यायः २२०

भीष्मेण युधिष्ठिरंप्रति जनकाथ
पञ्चशिखोक्तनास्तिकादिमतखण्डनानुवादः ॥ १. ।


१२-२२०-० (७३९२१)
युधिष्ठिर उवाच। १२-२२०-०क्ष् (६०९८)
केन वृत्तेन वृत्तज्ञो जनको मिथिलाधिपः ।
जगाम मोक्षं धर्मज्ञो भोगानुत्सृज्य बुद्धिमान् ॥ १२-२२०-१ (७३९२२)
भीष्म उवाच। १२-२२०-२क्ष् (६०९९)
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
येन वृत्तेन धर्मज्ञः स जगाम महत्सुखम् ॥ १२-२२०-२ (७३९२३)
जनको जनदेवस्तु मिथिलायां जनाधिप ।
और्ध्वदेहिकधर्माणामासीद्युक्तो विचिन्तने ॥ १२-२२०-३ (७३९२४)
तस्य स्म शतमाचार्या वसन्ति सततं गृहे ।
दर्शयन्तः पृथग्धर्मान्नानापाषण्डवादिनः ॥ १२-२२०-४ (७३९२५)
स तेषां प्रेत्यभावेन प्रेत्य गातौ विनिश्चये ।
आगमस्थः स भूयिष्ठमात्मतत्त्वेन तुष्यन्ति ॥ १२-२२०-५ (७३९२६)
तत्र पञ्चशिखो नाम कापिलेयो महामुनिः ।
परिधावन्महीं कृत्स्नां जगाम यलामथ ॥ १२-२२०-६ (७३९२७)
सर्वसंन्यासधर्माणां तत्त्वज्ञाननिश्चये ।
सुपर्यवसितार्थश्च निर्द्वन्द्वो नष्टगशयः ॥ १२-२२०-७ (७३९२८)
ऋषीणामाहुरेकं यं कामाद-----नृषु ।
शाश्वतं सुखमत्यन्तमन्वि---सुदुर्लभम् ॥ १२-२२०-८ (७३९२९)
यमाहुः कपिलं साङ्ख्याः परमर्षिं प्रजापतिम् ।
समेत्य तेन रूपेण विस्मापयति हि स्वयम् ॥ १२-२२०-९ (७३९३०)
आसुरेः प्रथमं शिष्यं यमाहुश्चिरजीविनम् ।
पञ्चस्रोतसि यः सत्रमास्ते वर्षसहस्रिकम् ॥ १२-२२०-१० (७३९३१)
तमासीनं समागम्य कापिलं मण्डलं महत् ।
श्पञ्चस्रोतसि निष्णातः पञ्चरात्रविशारदः। १२-२२०-११ (७३९३२)
पञ्चज्ञः पञ्चकृत्पञ्चगुणः पञ्चशिखः स्मृतः ϸ
पुरुषावस्थमव्यक्तं परमार्थं न्यवेदयत् ॥ १२-२२०-१२ (७३९३३)
इष्ट्वा सत्रेण संपृष्टो भूयश्च तपसाऽऽसुरिः ।
क्षेत्रक्षेत्रज्ञयोर्व्यक्तिं बुबुधे देवदर्शनात् ॥ १२-२२०-१३ (७३९३४)
यत्तदेकाक्षरं ब्रह्म नानारूपं प्रदृश्यते ।
ग्बोधायनपरान्विप्रानृषिभावमुपागतः।'

आसुरिर्मण्डले तस्मिन्प्रतिपेदे तदव्ययम् ॥ १२-२२०-१४ (७३९३५)
तस्य पञ्चशिखः शिष्यो मानुष्याः पयसा भृतः ।
ब्राह्मणी कपिला नाम काचिदासीत्कुटुम्बिनी ॥ १२-२२०-१५ (७३९३६)
तस्याः पुत्रत्वमागम्य स्त्रियाः स पिबति स्तनौ ।
ततः स कापिलेयत्वं लेभे बुद्धिं च नैष्ठिकीम् ॥ १२-२२०-१६ (७३९३७)
एतन्मे भगवानाह कापिलेयस्य संभवम् ।
तस्य तत्कापिलेयत्वं सर्ववित्त्वमनुत्तमम् ॥ १२-२२०-१७ (७३९३८)
सामान्यं जनकं ज्ञात्वा धर्मज्ञानामनुत्तमम् ।
उपेत्य शतमाचार्यान्मोहयामास हेतुभिः ॥ १२-२२०-१८ (७३९३९)
गनिराकरिष्णुस्तान्सर्वांस्तेषां हेतुगुणान्वहून् ।
श्रावयामास मतिमान्मुनिः पञ्चशिखो नृप ॥' १२-२२०-१९ (७३९४०)
जनकस्त्वभिसंरक्तः कापिलेयानुदर्शनात् ।
उत्सृज्य शतमाचार्यान्पृष्ठतोऽनुजगाम तम् ॥ १२-२२०-२० (७३९४१)
तस्मै परमकल्याय प्रणताय च धर्मतः ।
अब्रवीत्परमं मोक्षं यतः साङ्ख्यं विधीयते ॥ १२-२२०-२१ (७३९४२)
जातिनिर्वेदमुक्त्वा स कर्मनिर्वेदमब्रवीत् ।
कर्मनिर्वेदमुक्त्वा च सर्वनिर्वेदमब्रवीत् ॥ १२-२२०-२२ (७३९४३)
यदर्थं धर्मसंसर्गः कर्मणां च फलोदयः ।
तमनाश्वासिकं मोहं विनाशि चलमध्रुवम् ॥ १२-२२०-२३ (७३९४४)
दृश्यमाने विनाशे च प्रत्यक्षे लोकसाक्षिके ।
आगमात्परमस्तीति ब्रुवन्नपि पराजितः ॥ १२-२२०-२४ (७३९४५)
आत्मना ह्यात्मनो नित्यं क्लेशमृत्युजरामयम् ।
आत्मानं मन्यते मोहात्तदसम्यक्परं मतम् ॥ १२-२२०-२५ (७३९४६)
अथ चेदेवमप्यस्ति यल्लोके नोपपद्यते ।
अजरोऽयममृत्युश्च राजाऽसौ मन्यते तथा ॥ १२-२२०-२६ (७३९४७)
अस्ति नास्तीति चाप्येतत्तस्मिन्नसति लक्षणे ।
किमधिष्ठाय तद्ब्रूयाल्लोकयात्राविनिश्चयम् ॥ १२-२२०-२७ (७३९४८)
प्रत्यक्षं ह्येतयोर्मूलं कृतान्तैतिह्ययोरपि ।
प्रत्यक्षेणागमो भिन्नः कृतान्तो वा न कश्चन ॥ १२-२२०-२८ (७३९४९)
यत्रतत्रानुमानेऽस्मिन्कृतं भावयतोऽपि च ।
नान्यो जीवः शरीरस्य नास्तिकानां मते स्मृतः ॥ १२-२२०-२९ (७३९५०)
रेतो वटकणीकायां घृतपाकाधिवासनम् ।
जातिः स्मृतिरयस्कान्तः सूर्यकान्तोऽम्बुभक्षणम् ॥ १२-२२०-३० (७३९५१)
प्रेत्य भूताप्ययश्चैव देवताभ्युपयाचनम् ।
मृते कर्मनिवृत्तिश्च प्रमाणमिति निश्चयः ॥ १२-२२०-३१ (७३९५२)
न त्वेते हेतवः सन्ति ये केचिन्मूर्तिसंस्थिताः ।

अमूर्तस्य हि मूर्तेन सामान्यं नोपपद्यते ॥ १२-२२०-३२ (७३९५३)
अविद्याकर्मचेष्टानां केचिदाहुः पुनर्भवे ।
कारणं लोभमोहौ तु दोषाणां च निषेवणम् ॥ १२-२२०-३३ (७३९५४)
अविद्यां क्षेत्रमाहुर्हि कर्मबीजं तथा कृतम् ।
तृष्णासंजननं स्नेह एष तेषां पुनर्भवः ॥ १२-२२०-३४ (७३९५५)
तस्मिन्मूढे च जग्धे च देहे मरणधर्मिणि ।
अन्योऽसौ जायते प्रेतस्तदाहुस्तत्वमक्षयम् ॥ १२-२२०-३५ (७३९५६)
यदा स्वरूपतश्चान्यो जातितः श्रुतितोऽर्थतः ।
कथमस्मिन्स इत्येवं संबोधः स्यादसंहितः ॥ १२-२२०-३६ (७३९५७)
एवं सति च का प्रीतिर्दानविद्यातपोबलैः ।
यद्यदाचरितं कर्म सर्वमन्यत्प्रपद्यते ॥ १२-२२०-३७ (७३९५८)
यदि ह्ययमिहैवान्यैः प्राकृतैर्दुःखितो भवेत् ।
सुखितो दुःखितैर्वाऽपि दृश्यो ह्यस्यविनिर्णयः ॥ १२-२२०-३८ (७३९५९)
यदा हि मुसलैर्हन्युः शरीरं न पुनर्भवेत् ।
पृथग्ज्ञानं यदन्यच्च येनैतन्नोपपद्यते ॥ १२-२२०-३९ (७३९६०)
ऋतुसंवत्सरौ तिथ्यः शीतोष्णेऽथ प्रियाप्रिये ।
यथाऽतीता न दृश्यन्ते तादृशः सत्वसंक्षयः ॥ १२-२२०-४० (७३९६१)
जरयाऽभिपरीतस्य मृत्युना न विनाशिना ।
दुर्बलं दुर्बलं पूर्वं गृहस्येव विनश्यति ॥ १२-२२०-४१ (७३९६२)
इन्द्रियाणी मनो वायुः शोणितं मांसमस्थि च ।
आनुपूर्व्या विनश्यन्ति स्वं धातुमुपयान्ति च ॥ १२-२२०-४२ (७३९६३)
लोकयात्राविधानं च दानधर्मफलागमः ।
तदर्थं वेदशब्दाश्च व्यवहाराश्च लौकिकाः ॥ १२-२२०-४३ (७३९६४)
इति सम्यङ्मनस्येते बहवः सन्ति हेतवः ।
एतदासीन्ममास्तीति न कश्चित्प्रतिपद्यते ॥ १२-२२०-४४ (७३९६५)
तेषां विमृशतामेवं तत्तत्समभिधावताम् ।
क्वचिन्निविशते बुद्धिस्तत्र जीर्यति वृक्षवत् ॥ १२-२२०-४५ (७३९६६)
एवमर्थैरनर्थैश्च दुःखिताः सर्वजन्तवः ।
आगमैरपकृष्यन्ते हस्तिपैर्हस्तिनो यथा ॥ १२-२२०-४६ (७३९६७)
ग्न जातु कामः कामानामुपभोगेन शाम्यति ।
हविषा कृष्णवर्त्मेव भूय एवाभिवर्धते ॥' १२-२२०-४७ (७३९६८)
अर्थांस्तथाऽत्यन्तमुखावहांश्च
लिप्सन्त एते बहवो विशुष्काः ।
महत्तरं दुःखमनुप्रपन्ना
हित्वा सुखं मृत्युवशं प्रयान्ति ॥ १२-२२०-४८ (७३९६९)
विनाशिनो ह्यध्रुवजीवितस्य

किं बन्धुभिर्मित्रपरिग्रहैश्च ।
विहाय यो गच्छति सर्वमेव
क्षणेन गत्वा न निवर्तते च ॥ १२-२२०-४९ (७३९७०)
भूव्योमतोयानलवायवोऽपि
सदा शरीरं प्रतिपालयन्ति ।
इतीदमालक्ष्य रतिः कुतो भवे
द्विनाशिनो ह्यस्य न कर्म विद्यते ॥ १२-२२०-५० (७३९७१)
इदमनुपधिवाक्यमच्छलं
परमनिरामयमात्मसाक्षिकम् ।
नरपतिरभिवीक्ष्य विस्मितः
पुनरनुयोक्तुमिदं प्रचक्रमे ॥ ॥ १२-२२०-५१ (७३९७२)

इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि
विंशत्यधिकद्विशततमोऽध्यायः ॥ २२०.।
Mahabharata - Shanti Parva - Chapter Footnotes

१२-२२०-२ महत्सुखं मोक्षम् ॥
१२-२२०-३ जनको जनकवंश्यः नाम्ना जनदेवः ॥
१२-२२०-४ पाषण्डा लोकायतादयस्तेषां वादिनः प्रतिभटत्वेन जेतारः ॥
१२-२२०-६ कापिलेयः कपिलायाः पुत्रः । परिधावन् एकत्र वासमकुर्वन् ॥
१२-२२०-७ सुपर्यवसितार्थः सम्यङ्निश्चितप्रयोजनः ॥
१२-२२०-८ कामादवसितं यदृच्छया स्थितम् । नृषु सुखं
अन्विच्छन्तम्। स्थापयितुमिति शेषः ॥
१२-२२०-९ कपिलं तत्प्रशिष्यत्वात्तत्तुल्यम् ॥
१२-२२०-१५ मनुष्यो वयसा वृत इति ध । पाठः। धृत इति
ट थ पाठः ॥
१२-२२०-१७ भगवान्मार्कण्डेयः सनत्कुमारो वा ॥
१२-२२०-१८ सामान्यं सर्वेष्वाचार्येषु समबुद्धिम् ॥
१२-२२०-२१ कल्याय समर्थाय ॥
१२-२२०-२२ जातिर्जन्म । कमं यागादि। सर्वं ब्रह्मलोकान्तम्। तेषु
निर्वेदः क्षयिष्णुत्वात् ॥
१२-२२०-२३ तं मोहमब्रवीदित पूर्वेणान्वयः ॥
१२-२२०-२५ अनात्मा ह्यात्मनः क्लेशं जन्ममृत्युजरामयत् इति ट
। थ। पाठः ॥
१२-२२०-२९ यत्रकुत्राप्यनुमाने ईदृशानिष्टनित्यात्मान्यतमसाधके
साध्यसिद्धिं भावयतः कृतं अलम्

। भावनयालमित्यर्थः। उक्तविधयानुमानस्याप्रमाणत्वात्। शरीरस्य
शरीरात् ॥
१२-२२०-३० रेतो धातुर्वटकणिका धृतधूमाधिवासनमिति ध
। पाठः। सूर्यकान्ताग्निमोक्षणमिति थ। पाठः ॥
१२-२२०-३५ व्यूढे च दग्धे चेति ध । पाठः। अन्योन्याज्जायते
स्नेहस्तमाहुः सत्वसंक्षयमिति ध। पाठः ॥
१२-२२०-३८ सुखितैः सुखितो वापि दृष्टो ह्यस्य विनिर्णय इति ट
। थ। पाठः ॥

---

शन्तिपर्व-अध्यय२२१
॥ श्रीः ॥
१२.२२१. अध्यायः २२१

Mahabharata - Shanti Parva - Chapter Topics
भीष्मेण युधिष्ठिरंप्रति अनकं प्रत्युक्तपञ्चशिखवाक्यानुवादः ॥ १.।
Mahabharata - Shanti Parva - Chapter Text

१२-२२१-० (७३९७३)
ग्क़भीष्म उवाच। १२-२२१-०क्ष् (६१००)
जनको नरदेवस्तु ज्ञापितः परमर्षिणा ।
पुनरेवानुपप्रच्छ सांपराये भवाभवौ ॥ १२-२२१-१ (७३९७४)
भगवन्यदिदं प्रेत्य संज्ञा भवति कस्यचित् ।
एवं सति किमज्ञानं ज्ञानं वा किं करिष्यति ॥ १२-२२१-२ (७३९७५)
विवादादेव सिद्धोऽसौ कारणस्येव वेदना ।
चेतनो विद्यते ह्यत्र हैतुकं च मनोगतम् ॥ १२-२२१-३ (७३९७६)
आगमादेव सिद्धोऽसौ स्वताः सिद्धा इति श्रुतिः ।
वर्तते पृथगन्योन्यं न ह्यपःश्रित्य कर्मसु ॥ १२-२२१-४ (७३९७७)
चेतनो ह्यंशवस्तत्र स्वमूर्तं धारयन्त्यतः ।
स्वभावं पौरुषं कर्म ह्यात्मानं तमुपाश्रितम् ।
तमाश्रित्य प्रवर्तन्ते देहिनो देहबन्धनाः ॥ १२-२२१-५ (७३९७८)
गुणज्ञानमभिज्ञानं तस्य लिङ्गानुशब्दयत् ।
पृथिव्यादिषु भूतेषु तत्तदाहुर्निदर्शनम् ॥ १२-२२१-६ (७३९७९)
आत्माऽसौ वर्तते भिन्नस्तत्रतत्र समन्वितः ।
परमात्मा तथीवैको देवेऽस्मिन्निति वै श्रुतिः ॥ १२-२२१-७ (७३९८०)
आकाशं वायुरूष्मा च स्नेहो यच्चापि पार्थिवम् ।
यथा त्रिधा प्रवर्तन्ते तथाऽसौ पुरुषः स्मृतः ॥ १२-२२१-८ (७३९८१)
पपस्यन्तर्हितं यद्वत्तद्वद्व्याप्तं महात्मकम् ।

पूर्वं नैश्वर्ययोगेन तस्मादेतन्न शेपवान् ॥१२-२२१-९ (७३९८२)
शब्दाः कालः क्रिया देहो ममैकस्वैव कल्पना ।
स्वभावं तन्मयं त्वेदं मायारूपं तु भेदवत् ॥१२-२२१-१० (७३९८३)
नानाख्यं परं शुद्धं निर्विकल्पं परात्मकम् ।
लिङ्गादि देवमध्यास्ते ज्ञानं देवस्य तत्तथा ॥१२-२२१-११ (७३९८४)
चिन्मयोऽयं हि नादाख्यः शब्दश्चासौ मनो महान् ।
गतिमानुत संधत्ते वर्णमत्तत्पदान्वितम् ॥१२-२२१-१२ (७३९८५)
कायो नास्ति च तेषां वै अवकाशस्तथा परम् ।
एतेनोढा इति चाख्याताः सर्वे ते धर्मदूषकाः ॥१२-२२१-१३ (७३९८६)
अवन्धनमविज्ञानाज्ज्ञानं तद्ध्रुवमव्ययम् ।
नानाभेदविकल्पने येषामात्मा स्मृतः सदा ॥१२-२२१-१४ (७३९८७)
प्रकृतेरपरस्तेषां बहवोऽप्यात्मवादिनः ।
विरोधो ह्यात्मसन्मायां न तेषां सिद्ध एव हि ।
अन्यदा च गृहीतै-----वेदबाह्यास्ततः स्मृताः ॥ १२-२२१-१५ (७३९८८)
एकानेकात्मकं तेषां प्रतिषेधो हि भेदनुत् ।
तस्माद्वेदस्य हृदयमद्वैध्यमिति विद्धि तत् ॥१२-२२१-१६ (७३९८९)
वेदादृष्टेरयं लोकः सर्वार्थेषु प्रवर्तते ।
तस्माच्च स्मृतयो जाताः सेतिहासाः पृथग्विधाः ॥१२-२२१-१७ (७३९९०)
न यन्न साध्यं तद्ब्रह्म नादिमध्यं न चान्तवत् ।
इन्द्रियाणि च भूरीणि परा च प्रकृतिर्मनः ॥१२-२२१-१८ (७३९९१)
आत्मा च परमः शुद्धः प्रोक्तोऽसौ परमः पुमान् ॥ १२-२२१-१९ (७३९९२)
उत्पत्तिलक्षणं चेदं विपरीतमथोभयोः ।
यो वेत्ति प्रकृतिं नित्यं तथा चैवात्मनस्तु ताम् ।
प्रदहत्येष कर्माख्यं दावोद्भूत इवानलः ॥ १२-२२१-२० (७३९९३)
चिन्मात्रपरमः शुद्धः सर्वाकृतिषु वर्तते ॥ १२-२२१-२१ (७३९९४)
आकाशकल्पं विमलं नानाशक्तिसमन्वितम् ।
तापनं सर्वभूतानां ज्योतिषां मध्यमस्थितिम् ।
दुःखमस्ति न निर्दुःखं तद्विद्वान्न च लिप्यति ॥ १२-२२१-२२ (७३९९५)
असावश्नाति यद्वत्तद्भ्रमरोऽश्नाति यन्मधु ।
एवमेव महानात्मा नात्मानमवबुध्यते ॥१२-२२१-२३ (७३९९६)
एवंभूतस्त्वमित्यत्र स्वाधितो बुद्धयते परम ।
बुधस्य बोधनं तत्र क्रियते सद्भिरित्युत ।
न बुधस्येति वै कश्चिन्न तथावच्छृणुष्व मे ॥ १२-२२१-२४ (७३९९७)
शोकमस्य न गत्वा ते शास्त्राणां शास्त्रदस्यवः ।
लोकं निघ्नन्ति संभिन्ना ज्ञातिनोत्र वदन्त्युत ॥१२-२२१-२५ (७३९९८)
एवं तस्य विभोः कृत्यं धातुरस्य महात्मनः ।

क्षमन्ति ते महात्मानः सर्वद्वन्द्वविवर्जिताः ॥ १२-२२१-२६ (७३९९९)
अतोऽन्यथा महात्मानमन्यथा प्रतिपद्यते ।
किं तेन न कृतं पापं चोरेणात्मापहारिणा ॥ १२-२२१-२७ (७४०००)
तस्य संयोगयोगेन शुचिरप्यशुचिर्भवेत् ।
अशुचिश्च शुचिश्चापि ज्ञानाद्देहादयो यथा ॥ १२-२२१-२८ (७४००१)
दृश्यं न चैव दृष्टं स्याद्दृष्टं दृश्यं तु नैव च ॥
१२-२२१-२९ (७४००२)
अतीतत्रितयाः सिद्धा ज्ञानरूपेण सर्वदा ।
एवं न प्रतिपद्यन्ते रागमोहमदान्विताः ॥ १२-२२१-३० (७४००३)
वेदबाह्या दुरात्मानः संसारे दुःखभागिनः ।
आगमानुगतज्ञाना बुद्धियुक्ता भवन्ति ते ॥ १२-२२१-३१ (७४००४)
बुद्ध्या भवति बुद्ध्या त्वं यद्बुद्धं चात्मरूपवत् ।
तमस्यन्धे न संदेहात्परं यान्ति न संशयः ॥ १२-२२१-३२ (७४००५)
नित्यनैमित्तिकान्कृत्वा पापहानिमवाप्य च ।
शुद्धसत्वा महात्मानो ज्ञाननिर्धूतकल्मषाः ॥ १२-२२१-३३ (७४००६)
असक्ताः परिवर्तन्ते संसरन्त्यथ वायुवत् ।
न युज्यन्तेऽथवा क्लेशैरहंभावोद्भवैः सह ॥ १२-२२१-३४ (७४००७)
इतस्ततः समाहृत्य ज्ञानं निर्वर्णयन्त्युत ।
ज्ञानान्वितस्तमो हन्यादर्कवत्स महामतिः ॥ १२-२२१-३५ (७४००८)
एवमात्मानमन्वीक्ष्य नानादुःखसमन्वितम् ।
देहं पङ्कमले मग्नं निर्मलं परमार्थतः ॥ १२-२२१-३६ (७४००९)
तमेवं सर्वदुःखात्तु मोचयेत्परमात्मवान् ।
ब्रह्मचर्यव्रतोपेतः सर्वसङ्गबहिष्कृतः ।
लघ्वाहारो विशुद्धात्मा परं निर्वाणमृच्छति ॥ १२-२२१-३७ (७४०१०)
इन्द्रियाणि मनो वायुः शोणितं मांसमस्थि च ।
आनुपूर्व्याद्विनश्यन्ति स्वं धातुमुपयान्ति च ॥ १२-२२१-३८ (७४०११)
कारणानुगतं कार्यं यदि तच्च विनश्यति ।
अलिङ्गस्य कथं लिङ्गं युज्यते तन्मृषा दृढम् ॥ १२-२२१-३९ (७४०१२)
न त्वेव हेतवः सन्ति ये केचिन्मूर्तिसंस्थिताः ।
अमर्त्यस्य च मर्त्येन सामान्यं नोपपद्यते ॥ १२-२२१-४० (७४०१३)
लोकदृष्टो यथा जातेः स्वेदजः पुरुषः स्त्रियाम् ।
कृतानुस्मरणात्सिद्धो वेदगम्यः परः पुमान् ॥ १२-२२१-४१ (७४०१४)
प्रत्यक्षानुगतो वेदो नामहेतुभिरिष्यते ॥ १२-२२१-४२ (७४०१५)
यथा शाखा हि वै शाखा तरोः संबध्यते तदा ।
श्रुत्या तथापरोप्यात्मा दृश्यते सोऽप्यलिङ्गवान् ।
अलिङ्गसाध्यं तद्ब्रह्म बहवः सन्ति हेतवः ॥ १२-२२१-४३ (७४०१६)

लोकयात्राविधानं च दानधर्मफलागमः ।
तदर्थं वेदशब्दाश्च व्यवहाराश्च लौकिकाः ॥ १२-२२१-४४ (७४०१७)
इति सम्यङ्भनस्येते बहवः सन्ति हेतवः ।
एतदस्तीदमस्तीति न किंचित्प्रतिदृश्यते ॥ १२-२२१-४५ (७४०१८)
तेषां विमृशतामेवं तत्तत्समभिधावताम् ।
क्वचिन्निविशते बुद्धिस्तत्र जीर्यति वृक्षवत् ॥ १२-२२१-४६ (७४०१९)
एवमर्थैरनर्थैश्च दुःखिताः सर्वजन्तवः ।
आगमैरपकृष्यन्ति हस्तिनो हस्तिपैर्यथा ॥ १२-२२१-४७ (७४०२०)
न जातु कामः कामामामुपभोगेन शाम्यति ।
हविषा कृष्णवर्त्मेव भूय एवाभिर्वधते ॥ १२-२२१-४८ (७४०२१)
अर्थास्तथाऽत्यन्तदुःखाबहांश्च
लिप्सन्त एके बहवो विशुष्काः ।
महत्तरं दुःखमभिप्रपन्ना
हित्वा सुखं मृत्युवशं प्रयान्ति ॥ १२-२२१-४९ (७४०२२)
विनाशिनो ह्यध्रुवजीवितस्य
किं बन्धुभिर्मन्त्रपरिग्रहैश्च ।
विहाय यो गच्छति सर्वमेव
क्षणेन गत्वा न निवर्तते च ॥ १२-२२१-५० (७४०२३)
स्वं भूमितोयानलवायवो हि
सदा शरीरं प्रतिपालयन्ति ।
इतीदमालक्ष्य कुतो रतिर्भवे
द्विनाशिनो ह्यस्य न कर्म विद्यते ॥ १२-२२१-५१ (७४०२४)
इदमनुपधिवाक्यमच्छलं
परमनिरामयमात्मसाक्षिकम् ।
नरपतिरनुवीक्ष्य विस्मितः
पुनरनुयोक्तुमिदं प्रचक्रमे ॥' ॥ १२-२२१-५२ (७४०२५)

इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि
एकविंशत्यधिकद्विशततमोऽध्यायः ॥ २२१. ।
Mahabharata - Shanti Parva - Chapter Footnotes

क़ अयमध्यावो व ।पुस्तकएव दृश्यते ।

---

शन्तिपर्व-अध्यय२२२
॥ श्रीः ॥
१२.२२२. अध्यायः २२२

Mahabharata - Shanti Parva - Chapter Topics
भीष्मेण युधिष्ठिरंप्रति जनकाय
पञ्चशिखोक्तसांपरायिकभावादिप्रतिपादकवाक्यानुवादः ॥१.।
Mahabharata - Shanti Parva - Chapter Text

१२-२२२-० (७४०२६)
भीष्म उवाच।१२-२२२-०क्ष् (६१०१)
जनको नरदेवस्तु ज्ञापितः परमर्षिणा ।
पुनरेवानुपप्रच्छ सांपराये भवाभवौ ॥१२-२२२-१ (७४०२७)
जनक उवाच।१२-२२२-२क्ष् (६१०२)
भगवन्यदि न प्रेत्य संज्ञा भवति कस्यचित् ।
एवं सति किमज्ञानं ज्ञानं वा किं करिष्यति ॥१२-२२२-२ (७४०२८)
सर्वमुच्छेदनिष्ठं स्यात्पश्य चैतद्द्विजोत्तम ।
अप्रमत्तः प्रमत्तो वा किं विशेषं करिष्यति ॥१२-२२२-३ (७४०२९)
असंसर्गो हि भूतेषु संसर्गो वा विनाशिषु ।
कस्मै क्रियेत तत्वेन निश्चयः कोऽत्र तत्त्वतः ॥१२-२२२-४ (७४०३०)
भीष्म उवाच।१२-२२२-५क्ष् (६१०३)
तमसा हि प्रतिच्छन्नं विभ्रान्तमिव चातुरम् ।
पुनः प्रशमयन्वाक्यैः कविः पञ्चशिखोऽब्रवीत् ॥१२-२२२-५ (७४०३१)
उच्छेदनिष्ठा नेहास्ति भा निष्ठा न विद्यते ।
अयं ह्यपि समाहारः शरीरेन्द्रियचेतसाम् ।
वर्तते पृथगन्योन्यमप्यपाश्रित्य कर्मसु ॥ १२-२२२-६ (७४०३२)
धावतः पञ्च तेषां तु खं वायुर्ज्योतिरम्बु भूः ।
ते स्वभावेन तिष्ठन्ति वियुज्यन्ते स्वभावतः ॥१२-२२२-७ (७४०३३)
आकाशो वायुरूष्मा च स्नेहो यश्चापि पार्थिवः ।
एष पञ्चसमाहारः शरीरमपि नैकधा ॥१२-२२२-८ (७४०३४)
ग्अहं वाच्यं द्विजानां यद्विशिष्टं बुद्धिरूपवत् ।
वाचामगोचरं नित्यं ज्ञेयमेवं भविष्यति ॥१२-२२२-९ (७४०३५)
ज्ञानं ज्ञेयं तथा ज्ञानं त्रिविधं ज्ञानमुच्यते।'
ज्ञानमूष्मा च वायुश्च त्रिविधः कर्मसंग्रहः ॥ १२-२२२-१० (७४०३६)
इन्द्रियाणीन्द्रियार्थाश्च स्वभावश्चेतना मनः ।
प्राणापानौ विकारश्च धातवश्चात्र निःसृताः ॥१२-२२२-११ (७४०३७)
ग्प्राणादयस्तथा स्पर्शा न संबाधगतास्तथा ।
पुत्राधीनं भविष्येत चिन्मात्रः स परः पुमान् ॥१२-२२२-१२ (७४०३८)
श्रवणं स्पर्शनं जिह्वा दृष्टिर्नासा तथैव च ।
इन्द्रियाणीति पञ्चैते चित्तपूर्वगमा गुणाः ॥१२-२२२-१३ (७४०३९)

तत्र विज्ञानसंयुक्ता त्रिविधा चेतना ध्रुवा ।
सुखदुःखेति यामाहुरदुःखेत्यसुखेति च ॥ १२-२२२-१४ (७४०४०)
शब्दः स्पर्शश्च रूपं च रसो गन्धश्च मूर्तयः ।
एते ह्यामरणात्पञ्च षड्गुणा ज्ञानसिद्धये ॥ १२-२२२-१५ (७४०४१)
तेषु कर्मविसर्गश्च सर्वतत्वार्थनिश्चयः ।
तमाहुः परमं शुक्रं ग्पारे च रजसः प्रभुम् ॥ १२-२२२-१६ (७४०४२)
विरागाद्वर्तते तस्मिन्मतो रजसि नित्यगम् ।
तस्मिन्प्रसन्ने संपश्ये' द्बुद्धिरित्यव्ययं महत् ॥ १२-२२२-१७ (७४०४३)
इमं गुणसमाहारमात्मभावेन पश्यतः ।
असम्यग्दर्शिनो दुःखमनन्तं नोपशाम्यति ॥ १२-२२२-१८ (७४०४४)
ग्तस्मादेतेषु मेधावी न प्रसज्येत बुद्धिमान्।'
अनात्मेति च यद्दृष्टं तन्नाहं न ममेत्यपि ।
वर्तते किमधिष्ठाना प्रसक्ता दुःखसंततिः ॥ १२-२२२-१९ (७४०४५)
यत्र सम्यङ्भनो नाम त्यागमात्रमनुत्तमम् ।
शृणु यत्तव मोक्षाय भाष्यमाणं भविष्यति ॥ १२-२२२-२० (७४०४६)
त्याग एव हि सर्वेषां युक्तानामपि कर्मणाम् ।
नित्यदुःखविनीतानां श्लेषो दुःखवहो हतः ॥ १२-२२२-२१ (७४०४७)
द्रव्यत्यागे तु कर्माणि भोगत्यागे व्रतान्यपि ।
सुखत्यागे तपोयोगं सर्वत्यागे समापना ॥ १२-२२२-२२ (७४०४८)
तस्य मार्गोऽयमद्वैधः सर्वत्यागस्य दर्शितः ।
विप्रहाणाय दुःखस्य दुर्गतिस्त्वन्यथा भवेत् ॥ १२-२२२-२३ (७४०४९)
ग्शेते जरामृत्युभयैर्विमुक्तः
क्षीणे पुण्ये विगते च पापे ।
तपोनिमित्ते विगते च निष्ठे
फले यथाऽऽकाशमलिङ्ग एव ॥' १२-२२२-२४ (७४०५०)
पञ्चज्ञानेन्द्रियाण्युक्त्वा मनःषष्ठानि चेतसि ।
मनःषष्ठानि वक्ष्यामि पञ्चकर्मेन्द्रियाणि तु ॥ १२-२२२-२५ (७४०५१)
हस्तौ कर्मेन्द्रियं ज्ञेयमथ पादौ गतीन्द्रियम् ।
प्रजनानन्दयोः शेफो निसर्गे पायुरिन्द्रियम् ॥ १२-२२२-२६ (७४०५२)
वाक्च शब्दविशेषार्थं गतिं पञ्चान्वितां विदुः ।
एवमेकादशैतानि बुद्ध्या तूपहतं मनः ॥ १२-२२२-२७ (७४०५३)
कर्णौ शब्दश्च चित्तं च त्रयः श्रवणसंग्रहे ।
तथा स्पर्शे तथा रूपे तथैव रसगन्धयोः ॥ १२-२२२-२८ (७४०५४)
एवं पञ्चत्रिका ह्येते गुणास्तदुपलब्धये ।
येनायं त्रिविधो भावः पर्यायात्समुंपस्थितः ॥ १२-२२२-२९ (७४०५५)
सात्विको राजसश्चापि तामसश्चापि ते त्रयः ।

त्रिविधा वेदना येषु प्रसूताः सर्वसाधनाः ॥ १२-२२२-३० (७४०५६)
प्रहर्षः प्रीतिरानन्दः सुखं संशान्तचित्तता ।
अकुतश्चित्कुतश्चिद्वा चिन्तितः सात्विको गुणः ॥ १२-२२२-३१ (७४०५७)
अतुष्टिः परितापश्च शोको लोभस्तथाऽक्षमा ।
लिङ्गानि रजसस्तानि दृश्यन्ते हेत्वहेतुतः ॥ १२-२२२-३२ (७४०५८)
अविवेकस्तथा मोहः प्रमादः स्वप्नतन्द्रिता ।
कथंचिदपि वर्तन्ते विविधास्तामसा गुणाः ॥ १२-२२२-३३ (७४०५९)
तत्र यत्प्रीतिसंयुक्तं काये मनसि वा भवेत् ।
वर्तते सात्विको भाव इत्यपेक्षेत तत्तथा ॥ १२-२२२-३४ (७४०६०)
यत्तु सन्तापसंयुक्तमप्रीतिकरमात्मनः ।
प्रवृत्तं रज इत्येवं ततस्तदपि चिन्तयेत् ॥ १२-२२२-३५ (७४०६१)
अथ यन्मोहसंयुक्तं काये मनसि वा भवेत् ।
अप्रतर्क्यमविज्ञेयं तमस्तदुपधारयेत् ॥ १२-२२२-३६ (७४०६२)
श्रोत्रं व्योमाश्रितं भूतं शब्दः श्रोत्रं समाश्रितः ।
नोभयं शब्दविज्ञाने विज्ञानस्येतरस्य वा ॥ १२-२२२-३७ (७४०६३)
एवं त्वक्चक्षुषी जिह्वा नासिका चेति पञ्चमी ।
स्पर्शे रूपे रसे गन्धे तानि चेतो मनश्च तत् ॥ १२-२२२-३८ (७४०६४)
स्वकर्मयुगपद्भावो दशस्वेतेषु तिष्ठति ।
चित्तमेकादशं विद्धि बुद्धिर्द्वादशमी भवेत् ॥ १२-२२२-३९ (७४०६५)
तेषामयुगपद्भाव उच्छेदो नास्ति तामसः ।
आस्थितो युगपद्भावे व्यवहारः स लौकिकः ॥ १२-२२२-४० (७४०६६)
इन्द्रियाण्युपसृत्यापि दृष्ट्वा पूर्वं श्रुतागमात् ।
चिन्तयन्ननुपर्येति त्रिभिरेवान्वितो गुणैः ॥ १२-२२२-४१ (७४०६७)
यत्तमोपहतं चित्तमाशुसंचारमध्रुवम् ।
करोत्युपरमं काये तदाहुस्तामसं सुखम् ॥ १२-२२२-४२ (७४०६८)
यद्यदागमसंयुक्तं न कृच्छ्रादुपशाम्यति ।
अथ तत्राप्युपादत्ते तमो व्यक्तमिवानृतम् ॥ १२-२२२-४३ (७४०६९)
एवमेव प्रसङ्ख्यातः स्वकर्मप्रत्ययो गुणः ।
कथंचिद्वर्तते सम्यक्केषांचिद्वा निवर्तते ॥ १२-२२२-४४ (७४०७०)
ग्अहमित्येष वै भावो नान्यत्र प्रतितिष्ठति ।
यस्य भावो दृढो नित्यं स वै विद्वांस्तथेतरः ॥ १२-२२२-४५ (७४०७१)
देहधर्मस्तथा नित्यं सर्वभूतेषु वै दृढः ।
एतेनैवानुमानेन त्याज्यो धर्मस्तथा ह्यसौ ॥ १२-२२२-४६ (७४०७२)
ज्ञानेन मुच्यते जन्तुर्धर्मात्मा ज्ञानवान्भवेत् ।
धर्मेण धार्यते लोकः सर्वं धर्मे प्रतिष्ठितम् ॥ १२-२२२-४७ (७४०७३)
सर्वार्थजनकश्चैव धर्मः सर्वस्य कारणम् ।

सर्वो हि दृश्यते लोके न सर्वार्थः कथंचन ॥१२-२२२-४८ (७४०७४)
सर्वत्यागे कृते तस्मात्परमात्मा प्रसीदति ।
व्यक्तादव्यक्तमतुलं लोकेषु परिवर्तते ॥' १२-२२२-४९ (७४०७५)
एतदाहुः समाहारं क्षेत्रमध्यात्मचिन्तकाः ।
स्थितो मनसि यो भावः स वै क्षेत्रज्ञ उच्यते ॥१२-२२२-५० (७४०७६)
एवं सति क उच्छेदः शाश्वतो वा कथं भवेत् ।
स्वभावाद्वर्तमानेषु सर्वभूतेषु हेतुषु ॥१२-२२२-५१ (७४०७७)
यथार्णवगता नद्यो व्यक्तीर्जहति नाम च ।
नतु स्वतां नियच्छन्ति तादृशः सत्वसंक्षयः ॥१२-२२२-५२ (७४०७८)
एवं सति कुतः संज्ञा प्रेत्यभावे पुनर्भवेत् ।
प्रतिसंमिश्रिते जीवे गृह्यमाणे च सर्वतः ॥१२-२२२-५३ (७४०७९)
इमां च यो वेद विमोक्षबुद्धि
मात्मानमन्विच्छति चाप्रमत्तः ।
न लिप्यते कर्मफलैरनिष्टैः
पत्रं बिसस्येव जलेन सिक्तम् ॥ १२-२२२-५४ (७४०८०)
दृढैर्हि पाशैर्बहुभिर्विमुक्तः
प्रजानिमित्तैरपि दैवतैश्च ।
यदा ह्यसौ सुखदुःखे जहाति
मुक्तस्तदाग्र्यां गतिमेत्यलिङ्गः ॥ १२-२२२-५५ (७४०८१)
श्रुतिप्रमाणागममङ्गलैश्च
शेते जरामृत्युभयादभीतः ।
क्षीणे च पुण्ये विगते च पापे
ततो निमित्ते च फले विनष्टे ।
अलेपमाकाशमलिङ्गमेव
मास्थाय पश्यन्ति महत्यसक्ताः ॥ १२-२२२-५६ (७४०८२)
यथोर्णनाभिः परिवर्तमान
स्तन्तुक्षये तिष्ठति पात्यमानः ।
तथा विमुक्तः प्रजहाति दुःखं
बिध्वंसते लोष्ट इवाद्रिमृच्छन् ॥ १२-२२२-५७ (७४०८३)
यथा रुरुः शृङ्गमथो पुराणं
हित्वा त्वचं वाऽप्युरगो यथा च ।
विहाय गच्छत्यनवेक्षमाण
स्तथा विमुक्तो विजहाति दुःखम् ॥ १२-२२२-५८ (७४०८४)
द्रुमं यथावाऽप्युदकै पतन्त
मुत्सृज्य पक्षी निपतत्यसक्तः ।
तथा ह्यसौ सुखदुःखे विहाय

मुक्तः पराद्धर्यां गतिमेत्यलिङ्गः ॥ १२-२२२-५९ (७४०८५)
ग्इमान्स्वलोकाननुपश्य सर्वा
न्व्रजन्यथाऽऽकाशमिवाप्नुकामः ।
इमां हि गाथां प्रलपन्यथाऽस्ति
समस्तसङ्कल्पविशेषमुक्तः ।
अहं हि सर्वं किल सर्वभावे
ह्यहं तदन्तर्ह्यहमेव भोक्ता ॥' १२-२२२-६० (७४०८६)
अपिच भवति मैथिलेन गीतं
नगरमुपाहितमग्निनाऽभिवीक्ष्य ।
न खलु मम तुषोऽपि दह्यतेऽत्र
स्वयमिदमाह किल स्म भूमिपालः ॥ १२-२२२-६१ (७४०८७)
भीष्म उवाच। १२-२२२-६२क्ष् (६१०४)
इदममृतपदं विदेहराजा
स्वयमिह पञ्चशिखेन भाष्यमाणम् ।
निखिलमभिसमीक्ष्य निश्चितार्थः
परमसुखी विजहार वीतशोकः ॥ १२-२२२-६२ (७४०८८)
इमं हि यः पठति विमोक्षनिश्चयं
महीपते सततमवेक्षते तथा ।
उपद्रवान्नानुभवत्यदुःखितः
प्रमुच्यते कपिलमिवैत्य मैथिलः ॥ ॥ १२-२२२-६३ (७४०८९)

इति श्रीमन्महाभारते शान्तिपर्वणि मोश्रधर्मपर्वणि
द्वाविंशत्यधिकद्विशततमोऽध्यायः ॥ २२२.।
Mahabharata - Shanti Parva - Chapter Footnotes

१२-२२२-२ भगवन्यविदं प्रोक्तं इति ट ।ड।थ।पाठः ॥
१२-२२२-३ पञ्चत्वे तद्द्विजोत्तमेति ध ।पाठः ॥
१२-२२२-६ उच्छेदनिष्ठा देहेऽस्ति इति ट ।थ।पाठः ॥
१२-२२२-१३ चित्तरूपं गमा गुणाः इति ध ।पाठः ॥
१२-२२२-१५ गन्धश्च पञ्चमः इति ड ।पाठः।आमरणाद्युक्ता इति
ट।ड।थ।पाठः ॥
१२-२२२-२० तत्तु सम्यङ्भातं नाम स्यागशास्त्रमनुत्तममिति ट
।ड।थ।पाठः।अत्र सम्यग्बधो नाम त्यागशास्त्रमनुत्तममिति
झ।पाठः ॥
१२-२२२-२१ नित्यं मिथ्या विनीतानां क्लेशो दुःखवहो मतः इति झ ।पाठः ॥
१२-२२२-२२ सर्वशास्त्रतात्पर्यं त्यागे एवेत्याह द्रव्येति

। द्रव्यादित्यागनिमित्तं यज्ञकर्मादीन्युपदिशन्तीति शेषः। सर्वत्यागनिमित्तं योगमुपदिशन्ति। यतः सा त्यागस्य समापना समाप्तिः पराकाष्ठेत्यर्थः ॥
१२-२२२-२७ बुद्ध्याशु विसृजेन्मनः इति झ । पाठः ॥
१२-२२२-३४ इत्युपेक्षेत तं तथा इति ड । ध। पाठः ॥
१२-२२२-३५ यत्त्वसन्तोषसंयुक्तं इति झ । पाठः ॥
१२-२२२-४० उच्छेदो नास्ति मानसः इति ड । थ। पाठः। तामसे इति झ। पाठः ॥
१२-२२२-४१ इन्द्रियाण्यपि सूक्ष्माणि इति झ । पाठः ॥
१२-२२२-४२ तामसं गुणं इति ट । ड। पाठः। तामसं बुधाः इति झ। पाठः ॥
१२-२२२-४३ न कृच्छ्रमनुपश्यति इति झ । पाठः ॥
१२-२२२-५२ नदाश्च तानि यच्छन्ति इति झ । पाठः ॥
१२-२२२-५८ रुरुर्मृगभेदः ॥
१२-२२२-५९ पराङ्घ्र्यां श्रेष्ठाम् ॥
१२-२२२-६३ अवेक्षते अर्थतः पर्यालोचयति । कपिलं कपिलप्रशिष्यं पञ्चशिखम् ॥

---

शन्तिपर्व-अध्यय२२३
॥ श्रीः ॥
१२.२२३. अध्यायः २२३

Mahabharata - Shanti Parva - Chapter Topics
भीष्मेण युधिष्ठिरंप्रति जनकोपाख्यानकथनम् ॥ १.।
Mahabharata - Shanti Parva - Chapter Text

१२-२२३-० (७४०९०)
ग्क युधिष्ठिर उवाच। १२-२२३-०क्ष् (६१०५)
किं कारणं महाप्राज्ञ दह्यमानश्च मैथिलः ।
मिथिलां नेह धर्मात्मा प्राह वीक्ष्य विदाहिताम् ॥ १२-२२३-१ (७४०९१)
भीष्म उवाच। १२-२२३-२क्ष् (६१०६)
श्रृयतां नृपशार्दूल यदर्थं दीपिता पुरा ।
वह्निना दीपिता सा तु तन्मे शृणु महामते ॥ १२-२२३-२ (७४०९२)
जनको जनदेवस्तु कर्माण्याध्याय चात्मनि ।
सर्वभावमनुप्राप्य भावेन विचचार सः ॥ १२-२२३-३ (७४०९३)
यजन्ददंस्तथा जुह्वन्पालयन्पृथिवीमिमाम् ।
अध्यात्मविन्महाप्राज्ञस्तन्मयत्वेन निष्ठितः ॥ १२-२२३-४ (७४०९४)
स तस्य हृदि संकल्पं ज्ञातुमैच्छत्स्वयं प्रभुः ।

सर्वलोकाधिपस्तत्र द्विजरूपेण संयुतः ॥ १२-२२३-५ (७४०९५)
मिथिलायां महाबुद्धिर्व्यलीकं किंचिदाचरन् ।
स गृहीत्वा द्विजश्रेष्ठैर्नृपाय प्रतिवेदितः ॥ १२-२२३-६ (७४०९६)
अपराधं समुद्दिश्य तं राजा प्रत्यभाषत ।
न त्वां ब्राह्मण दण्डेन नियोक्ष्यामि कथंचन ॥ १२-२२३-७ (७४०९७)
मम राज्याद्विनिर्गच्छ यावत्सीमा भुवो मम ।
तच्छ्रुत्वा ब्राह्मणो गत्वा राजानं प्रत्युवाच ह ॥ १२-२२३-८ (७४०९८)
करिष्ये वचनं राजन्ब्रवीहि मम जानतः ।
का सीमा तव भूमेस्तु ब्रूहि धर्मं ममाद्य वै ॥ १२-२२३-९ (७४०९९)
तच्छ्रुत्वा मैथिलो राजा लज्जयावनताननः ।
नोवाच वचनं विप्रं तत्वबुद्ध्या समीक्ष्य तत् ॥ १२-२२३-१० (७४१००)
पुनःपुनश्च तं विप्रश्चोदयामास सत्वरम् ।
ब्रूहि राजेन्द्र गच्छामि तव राज्या द्विवासितः ॥ १२-२२३-११ (७४१०१)
ततो नृपो विचार्यैवमाह ब्राह्मणपुङ्गवम् ।
आवासो वा न मेऽस्त्यत्र सर्वा वा पृथिवी मम ।
गच्छ वा तिष्ठ वा ब्रह्मन्निति मे निश्चिता मतिः ॥ १२-२२३-१२ (७४१०२)
इत्युक्तः स तथा तेन मैथिलेन द्विजोत्तमः ।
अब्रवीत्तं महात्मानं राजानं मन्त्रिभिर्वृतम् ॥ १२-२२३-१३ (७४१०३)
त्वमेवं पद्मनाभस्य नित्यं पक्षपदाहितः ।
अहो सिद्धार्थरूपोऽसि गमिष्ये स्वस्ति तेऽस्तु वै ॥ १२-२२३-१४ (७४१०४)
इत्युक्त्वा प्रययौ विप्रस्तज्जिज्ञासुर्द्विजोत्तमान् ।
अदहच्चाग्निना तस्य मिथिलां भगवान्स्वयम् ॥ १२-२२३-१५ (७४१०५)
प्रदीप्यमानां मिथिलां दृष्ट्वा राजा न कम्पितः ।
जनैः स परिपृष्टस्तु वाक्यमेतदुवाच ह ॥ १२-२२३-१६ (७४१०६)
अनन्तं वत मे वित्तं भाव्यं मे नास्ति किंचन ।
मिथिलायां प्रदीप्तायां न मे किंचन दह्यते ॥ १२-२२३-१७ (७४१०७)
तदस्य भाषमाणस्य श्रुत्वा श्रुत्वा हृदि स्थितम् ।
पुनः संजीवयामास मिथिलां तां द्विजोत्तमः ॥ १२-२२३-१८ (७४१०८)
आत्मानं दर्शयामास वरं चास्मै ददौ पुनः ।
धर्मे तिष्ठस्व सद्भावो बुद्धिस्तेऽर्थे नराधिप ॥ १२-२२३-१९ (७४१०९)
सत्ये तिष्ठस्व निर्विण्णः स्वस्ति तेऽस्तु व्रजाम्यहम् ।
इत्युक्त्वा भगवांश्चैनं तत्रैवान्तरधीयत ।
एतत्ते कथितं राजन्किं भूयः श्रोतुमिच्छसि ॥' ॥ १२-२२३-२० (७४११०)

इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि
त्रयोविंशत्यधिकद्विशततमोऽध्यायः ॥ २२३.।

क़ २२३, २२३ एतदध्यायद्वयं ध ।पुस्तकएव दृश्यते ।

---

शन्तिपर्व-अध्यय२२४
॥ श्रीः ॥
१२.२२४. अध्यायः २२४

Mahabharata - Shanti Parva - Chapter Topics
भीष्मेण युधिष्ठिरंप्रति गार्हस्थ्ये स्थितस्यापि
भगवदुपासकस्य ज्ञानिनः पुरुषार्थसिद्धौ दृष्टान्ततया
सुवर्चलाश्वेतकेतूपाख्यानकथनम् ॥१.।
Mahabharata - Shanti Parva - Chapter Text

१२-२२४-० (७४१११)
ग्युधिष्ठिर उवाच।१२-२२४-०क्ष् (६१०७)
अस्ति कश्चिद्यदि विभो सदारो नियतो गृहे ।
अतीतसर्वसंसारः सर्वद्वन्द्वविवर्जितः ।
तं मे ब्रूहि महाप्राज्ञ दुर्लभः पुरुषो महान् ॥ १२-२२४-१ (७४११२)
भीष्म उवाच।१२-२२४-२क्ष् (६१०८)
शृणु राजन्यथावृत्तं यन्मां त्वं पृष्टवानसि ।
इतिहासमिमं शुद्धं संसारभयभेषजम् ॥१२-२२४-२ (७४११३)
देवलो नाम विप्रर्षिः सर्वशास्त्रार्थकोविदः ।
क्रियावान्धार्मिको नित्यं देवब्राह्मणपूजकः ॥१२-२२४-३ (७४११४)
सुता सुवर्चला नाम तस्य कल्याणलक्षणा ।
नातिह्रस्वा नातिकृशा नातिदीर्घा यशस्विनी ।
प्रदानसमयं प्राप्ता पिता तस्य ह्यचिन्तयत् ॥ १२-२२४-४ (७४११५)
अस्याः पतिः कुतो वेति ब्राह्मणः श्रोत्रियः परः ।
विद्वान्विप्रो ह्यकुटुम्बः प्रियवादी महातपाः ॥१२-२२४-५ (७४११६)
इत्येवं चिन्तयानं तं रहस्याह सुवर्चला ॥ १२-२२४-६ (७४११७)
अन्धाय मां महाप्राज्ञ देह्यनन्धाय वै पितः ।
एवं स्मर सदा विद्वन्ममेदं प्रार्थितं मुने ॥१२-२२४-७ (७४११८)
पितोवाच।१२-२२४-८क्ष् (६१०९)
न शक्यं प्रार्थितं वत्से त्वयाऽद्य प्रतिभाति मे ।
अन्धतानन्धता चेति विकारो मम जायते ॥१२-२२४-८ (७४११९)
उन्मत्तेवाशुभं वाक्यं भाषसे शुभलोचने ॥ १२-२२४-९ (७४१२०)
सुवर्चलोवाच।१२-२२४-१०क्ष् (६११०)

नाहमुन्मत्तभूताऽद्य बुद्धिपूर्वं ब्रवीमि ते ।
विद्यते चेत्पतिस्तादृक्स मां भरति वेदवित् ॥ १२-२२४-१० (७४१२१)
येभ्यस्त्वं मन्यसे दातुं मामिहानय तान्द्विजान् ।
तादृशं तं पतिं तेषु वरयिष्ये यथातथम् ॥ १२-२२४-११ (७४१२२)
भीष्म उवाच। १२-२२४-१२क्ष् (६१११)
तथेति चोक्त्वा तां कन्यामृषिः शिष्यानुवाच ह ।
ब्राह्मणान्वेदसंपन्नान्योनिगोत्रविशोधितान् ॥ १२-२२४-१२ (७४१२३)
मातृतः पितृतः शुद्धाञ्शुद्धानाचारतः शुभान् ।
अरोगान्बुद्धिसंपन्नाञ्शीलसत्वगुणान्वितान् ॥ १२-२२४-१३ (७४१२४)
असंकीर्णांश्च गोत्रेषु वेदव्रतसमन्वितान् ।
ब्राह्मणान्स्नातकाञ्शीघ्रं मातापितृसमन्वितान् ।
निवेष्टुकामान्कन्यां मे दृष्ट्वाऽऽनयत शिष्यकाः ॥ १२-२२४-१४ (७४१२५)
तच्छ्रुत्वा त्वरिताः शिष्या ह्याश्रमेषु ततस्ततः ।
ग्रामेषु च ततो गत्वा ब्राह्मणेभ्यो न्यवेदयन् ॥ १२-२२४-१५ (७४१२६)
ऋषेः प्रभावं मत्वा ते कन्यायाश्च द्विजोत्तमाः ।
अनेकमुनयो राजन्संप्राप्ता देवलाश्रमम् ॥ १२-२२४-१६ (७४१२७)
अनुमान्य यथान्यायं मुनीन्मुनिकुमारकान् ।
अभ्यर्च्य विधिवत्तत्र कन्यामाह पिता महान् ॥ १२-२२४-१७ (७४१२८)
एतेऽपि मुनयो वत्से स्वपुत्रैकमता इह ।
वेदवेदाङ्गसंपन्नाः कुलीनाः शीलसंमताः ॥ १२-२२४-१८ (७४१२९)
येऽमी तेषु वरं भद्रे त्वमिच्छसि महाव्रतम् ।
तं कुमारं वृणीष्वाद्य तस्मै दास्याम्यहं शुभे ॥ १२-२२४-१९ (७४१३०)
तथेति चोक्त्वा कल्याणी तप्तहेमनिभा तदा ।
सर्वलक्षणसंपन्ना वाक्यमाह यशस्विनी ॥ १२-२२४-२० (७४१३१)
विप्राणां समितीर्दृष्ट्वा प्रणिपत्य तपोधनान् ।
यद्यस्ति समितौ विप्रो ह्यन्धोऽनन्धः स मे वरः ॥ १२-२२४-२१ (७४१३२)
तच्छ्रुत्वा मुनयस्तत्र वीक्षमाणाः परस्परम् ।
नोचुर्विप्रा महाभागाः कन्यां मत्वा ह्यवेदिकां ॥ १२-२२४-२२ (७४१३३)
कुत्सयित्वा मुनिं तत्र मनसा मुनिसत्तमाः ।
यथागतं ययुः क्रुद्धा नानादेशनिवासिनः ॥ १२-२२४-२३ (७४१३४)
कन्या च संस्थिता तत्र पितृवेश्मनि भामिनी ॥ १२-२२४-२४ (७४१३५)
ततः कदाचिद्ब्रह्मण्यो विद्वान्न्यायविशारदः ।
ऊहापोहविधानज्ञो ब्रह्मचर्यसमन्वितः ॥ १२-२२४-२५ (७४१३६)
वेदविद्वेदतत्वज्ञः क्रियाकल्पविशारदः ।
आत्मतत्वविभागज्ञः पितृमान्गुणसागरः ॥ १२-२२४-२६ (७४१३७)
श्वेतकेतुरिति ख्यातः श्रुत्वा वृत्तान्तमादरात् ।

कन्यार्थं देवलं चापि शीघ्रं तत्रागतोऽभवत् ॥१२-२२४-२७ (७४१३८)
उद्दालकसुतं दृष्ट्वा श्वेतकेतुं महाव्रतम् ।
यथान्यायं च संपूज्य देवलः प्रत्यभाषत ॥१२-२२४-२८ (७४१३९)
कन्ये एष महाभागे प्राप्तो ऋषिकुमारकः ।
वरयैनं महाप्राज्ञं वेदवेदाङ्गपारगम् ॥१२-२२४-२९ (७४१४०)
तच्छ्रुत्वा कुपिता कन्या ऋषिपुत्रमुदैक्षत ।
तां कन्यामाह विप्रर्षिः सोऽहं भद्रे समागतः ॥१२-२२४-३० (७४१४१)
अन्धोऽहमत्र तत्वं हि तथा मन्ये च सर्वदा ।
विशालनयनं विद्धि तथा मां हीनसंशयम् ।
वृणीष्व मां वरारोहे भजे च त्वामनिन्दिते ॥ १२-२२४-३१ (७४१४२)
येनेदं वीक्षते नित्यं वृणोति स्पृशतेऽथवा ।
घ्रायते वक्ति सततं येनेदं सार्यते पुनः ॥१२-२२४-३२ (७४१४३)
येनेदं मन्यते तत्वं येन बुध्यति वा पुनः ।
न चक्षुर्विद्यते ह्येतत्स वै भूतान्ध उच्यते ॥१२-२२४-३३ (७४१४४)
यस्मिन्प्रवर्तते चेदं पश्यञ्छृण्वन्स्पृशन्नपि ।
जिघ्रंश्च रसयंस्तद्वद्वर्तते येन चक्षुषा ॥१२-२२४-३४ (७४१४५)
तन्मे नास्ति ततो ह्यन्धो वृणु भद्रेऽद्य मामतः ।
लोकदृष्ट्या करोमीह नित्यनैमित्तिकादिकम् ॥१२-२२४-३५ (७४१४६)
आत्मदृष्ट्या च तत्सर्वं विलिप्यासि च नित्यशः ।
स्थितोऽहं निर्भरः शान्तः कार्यकारणभावनः ॥१२-२२४-३६ (७४१४७)
अविद्यया तरन्मृत्युं विद्यया तं तथाऽमृतम् ।
यथाप्राप्तं तु संदृश्य वसामीह विमत्सरः ।
क्रीते व्यवसितं भद्रे भर्ताऽहं ते वृणीष्व माम् ॥ १२-२२४-३७ (७४१४८)
भीष्म उवाच।१२-२२४-३८क्ष् (६११२)
ततः सुवर्चला दृष्ट्वा प्राह तं द्विजसत्तमम् ।
मनसाऽसि वृतो विद्वञ्शेषकर्ता पिता मम ।
वृणीष्व पितरं मह्यमेष वेदविधिक्रमः ॥ १२-२२४-३८ (७४१४९)
तद्विज्ञाय पिता तस्या देवलो मुनिसत्तमः ।
श्वेतकेतुं च संपूज्य तथैवोद्दालकेन तम् ॥१२-२२४-३९ (७४१५०)
मुनीनामग्रतः कन्यां प्रददौ जलपूर्वकम् ।
उदाहरन्ति वै तत्र श्वेतकेतुं निरीक्ष्य तम् ॥१२-२२४-४० (७४१५१)
हृत्पुण्डरीकनिलयः सर्वभूतात्मको हरिः ।
श्वेतकेतुस्वरूपेण स्थितोऽसौ मधुसूदनः ॥१२-२२४-४१ (७४१५२)
प्रीयतां माधवो देवः पत्नी चेयं सुता मम ।
प्रतिपादयामि ते कन्यां सहधर्मचरीं शुभाम् ।
इत्युक्त्वा प्रददौ तस्मै देवलो मुनिपुङ्गवः ॥ १२-२२४-४२ (७४१५३)

प्रतिगृह्य च तां कन्यां श्वेतकेतुर्महायशाः ।
उपयम्य यथान्यायमत्र कृत्वा यथाविधि ॥ १२-२२४-४३ (७४१५४)
समाप्य तन्त्रं मुनिभिर्वैवाहिकमनुत्तमम् ।
स गार्हस्थ्ये वसन्धीमान्भार्यां तामिदमब्रवीत् ॥ १२-२२४-४४ (७४१५५)
यानि चोक्तानि वेदेषु तत्सर्वं कुरु शोभने ।
मया सह यथान्यायं सहधर्मचरी मम् ॥ १२-२२४-४५ (७४१५६)
अहमित्येव भावेन स्थितोऽहं त्वं तथैव च ।
तस्मात्कर्माणि कुर्वीथाः कुर्यां ते च ततः परम् ॥ १२-२२४-४६ (७४१५७)
न ममेति च भावेन ज्ञानाग्निनिलयेन च ।
अनन्तरं तथा कुर्यास्तानि कर्माणि भस्मसात् ॥ १२-२२४-४७ (७४१५८)
एवं त्वया च कर्तव्यं सर्वदा दुर्भगा मया ।
यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः ।
तस्माल्लोकस्य सिद्ध्यर्थं कर्तव्यं चात्मसिद्धये ॥ १२-२२४-४८ (७४१५९)
उक्त्वैवं स महाप्राज्ञः सर्वज्ञानैकभाजनः ।
पुत्रानुत्पाद्य तस्यां च यज्ञैः संतर्प्य देवताः ॥ १२-२२४-४९ (७४१६०)
आत्मयोगपरो नित्यं निर्द्वन्द्वो निष्परिग्रहः ।
भार्यां तां सदृशीं प्राप्य बुद्धिं क्षेत्रज्ञयोरिव ॥ १२-२२४-५० (७४१६१)
लोकमन्यमनुप्राप्तौ भार्या भर्ता तथैव च ।
साक्षिभूतौ जगत्यस्मिंश्चरमाणौ मुदाऽन्वितौ ॥ १२-२२४-५१ (७४१६२)
ततः कदाचिद्भर्तारं श्वेतकेतुं सुवर्चला ।
पप्रच्छ को भवानत्र ब्रूहि मे तद्द्विजोत्तम ॥ १२-२२४-५२ (७४१६३)
तामाह भगवान्वाग्मी तया ज्ञातो न संशयः ।
द्विजोत्तमेति मामुक्त्वा पुनः कमनुपृच्छसि ॥ १२-२२४-५३ (७४१६४)
सा तमाह महात्मानं पृच्छामि हृदि शायिनम् ।
तच्छ्रुत्वा प्रत्युवाचैनां स न वक्ष्यति भामिनि ॥ १२-२२४-५४ (७४१६५)
नामगोत्रसमायुक्तमात्मानं मन्यसे यदि ।
तन्मिथ्यागोत्रसद्भावे वर्तते देहबन्धनम् ॥ १२-२२४-५५ (७४१६६)
अहमित्येष भावोऽत्र त्वयि चापि समाहितः ।
त्वमप्यहमहं सर्वमहमित्येव वर्तते ।
नात्र तत्परमार्थं वै किमर्थमनुपृच्छसि ॥ १२-२२४-५६ (७४१६७)
ततः प्रहस्य सा हृष्टा भर्तारं धर्मचारिणी ।
उवाच वचनं काले स्मयमाना तदा नृप ॥ १२-२२४-५७ (७४१६८)
किमनेकप्रकारेण विरोधेन प्रयोजनम् ।
क्रियाकलापैर्ब्रह्मर्षे ज्ञाननष्टोऽसि सर्वदा ।
तन्मे ब्रूहि महाप्राज्ञ यथाऽहं त्वामनुव्रता ॥ १२-२२४-५८ (७४१६९)
श्वेतकेतुरुवाच। १२-२२४-५९क्ष् (६११३)

यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः ।
वर्तते तेन लोकोऽयं संकीर्णश्च भविष्यति ॥१२-२२४-५९ (७४१७०)
संकीर्णे च तथा धर्मे वर्णः संकरमेति च ।
संकरे च प्रवृत्ते तु मात्स्यो न्यायः प्रवर्तते ॥१२-२२४-६० (७४१७१)
तदनिष्टं हरेर्भद्रे धातुरस्य महात्मनः ।
परमेश्वरसंक्रीडा लोकसृष्टिरियं शुभे ॥१२-२२४-६१ (७४१७२)
यावत्पासव उद्दिष्टास्तावत्योऽस्य विभूतयः ।
तावत्यश्चैव मायास्तु तावत्योऽस्याश्च शक्तयः ॥१२-२२४-६२ (७४१७३)
एवं सुगह्वरे युक्तो यत्र मे तद्भवाभवम् ।
छित्त्वा ज्ञानासिना गच्छेत्स विद्वान्स च मे प्रियः ।
सोऽहमेव न सन्देहः प्रतिज्ञा इति तस्य वै ॥ १२-२२४-६३ (७४१७४)
ये मूढास्ते दुरात्मानो धर्मसंकरकारकाः ।
मर्यादाभेदका नीचा नरके यान्ति जन्तवः ॥१२-२२४-६४ (७४१७५)
आसुरीं योनिमापन्ना इति देवानुशासनम् ॥ १२-२२४-६५ (७४१७६)
भगवत्या तथा लोके रक्षितव्यं न संशयः ।
मर्यादालोकरक्षार्थमेवमस्ति तथा स्थितः ॥१२-२२४-६६ (७४१७७)
सुवर्चलोवाच।१२-२२४-६७क्ष् (६११४)
शब्दः कोत्र इति ख्यातस्तथाऽर्थं च महामुने ।
आकृत्या पतयो ब्रूहि लक्षणेन पृथक्पृथक् ॥१२-२२४-६७ (७४१७८)
श्वेतकेतुरुवाच।१२-२२४-६८क्ष् (६११५)
व्यत्ययेन च वर्णानां परिवादकृतो हि यः ।
स शब्द इति विज्ञेयस्तन्निपातोऽर्थ उच्यते ॥१२-२२४-६८ (७४१७९)
सुवर्चलोवाच।१२-२२४-६९क्ष् (६११६)
शब्दार्थयोर्हि संबन्धस्त्वनयोरस्ति वा न वा ।
तन्मे ब्रूहि यथातत्वं शब्दस्यानेऽर्थ एव चेत् ॥१२-२२४-६९ (७४१८०)
श्वेतकेतुरुवाच।१२-२२४-७०क्ष् (६११७)
शब्दार्थयोर्न चैवास्ति संबन्धोऽत्यन्त एव हि ।
पुष्करे च यथा तोयं तथाऽस्मीति च वेत्थ तत् ॥१२-२२४-७० (७४१८१)
सुवर्चलोवाच।१२-२२४-७१क्ष् (६११८)
अर्थे स्थितिर्हि शब्दस्य नान्यथा च स्थितिर्भवेत् ।
विद्यते चेन्महाप्राज्ञ विनाऽर्थं ब्रूहि सत्तम ॥१२-२२४-७१ (७४१८२)
श्वेतकेतुरुवाच।१२-२२४-७२क्ष् (६११९)
ससंसर्गोऽतिमात्रस्तु वाचकत्वेन वर्तते ।
अस्ति चेद्वर्तते नित्यं विकारोच्चारणेन वै ॥१२-२२४-७२ (७४१८३)
सुवर्चलोवाच।१२-२२४-७३क्ष् (६१२०)
शब्दस्थानोत्र इत्युक्तस्तथाऽर्थ इति मे कृतः ।

अर्थः स्थितो न तिष्ठेच्च विरूढमिह भाषितम् ॥ १२-२२४-७३ (७४१८४)
श्वेतकेतुरुवाच। १२-२२४-७४क्ष् (६१२१)
न विकूलोऽत्र कथितो नाकाशं हि विना जगत् ।
संबन्धस्तत्र नास्त्येव तद्वदित्येष मन्यताम् ॥ १२-२२४-७४ (७४१८५)
सुवर्चलोवाच। १२-२२४-७५क्ष् (६१२२)
सदाऽहंकारशब्दोऽयं व्यक्तमात्मनि संश्रितः ।
न वाचस्तत्र वर्तन्ते इति मिथ्या भविष्यति ॥ १२-२२४-७५ (७४१८६)
श्वेतकेतुरुवाच। १२-२२४-७६क्ष् (६१२३)
अहंशब्दो ह्यहंभावो नात्मभावे शुभव्रते ।
न वर्तन्ते परेऽचिन्त्ये वाचः सगुणलक्षणाः ॥ १२-२२४-७६ (७४१८७)
सुवर्चलोवाच। १२-२२४-७७क्ष् (६१२४)
अहं गात्रैकतः श्यामा भावनपि तथैव च ।
तन्मे ब्रूहि यथान्यायमेवं चेन्मुनिसत्तम ॥ १२-२२४-७७ (७४१८८)
श्वेतकेतुरुवाच। १२-२२४-७८क्ष् (६१२५)
मृण्मये हि घटे भावस्तादृग्भाव इहेष्यते ।
अयं भावः परेऽचिन्त्ये ह्यात्मभावो यथाच तत् ॥ १२-२२४-७८ (७४१८९)
अहं त्वमेतदित्येव परे संकल्पना मया ।
तस्माद्वाचो न वर्तन्त इति नैव विरुध्यते ॥ १२-२२४-७९ (७४१९०)
तस्माद्वामेन वर्तन्ते मनसा भीरु सर्वशः ।
यथाऽऽकाशगतं विश्वं संसक्तमिव लक्ष्यते ॥ १२-२२४-८० (७४१९१)
संसर्गे सति संबन्धात्तद्विकारं भविष्यति ।
अनाकाशगतं सर्वं विकारे च सदा गतम् ॥ १२-२२४-८१ (७४१९२)
तद्ब्रह्म परमं शुद्धमनौषम्यं न शक्यते ।
न दृश्यते तथा तच्च दृश्यते च मतिर्मम ॥ १२-२२४-८२ (७४१९३)
सुवर्चलोवाच। १२-२२४-८३क्ष् (६१२६)
निर्विकारं ह्यमूर्ति च निरयं सर्वगं तथा ।
दृश्यते च वियन्नित्यं दृगात्मा तेन दृश्यते ॥ १२-२२४-८३ (७४१९४)
श्वेतकेतुरुवाच। १२-२२४-८४क्ष् (६१२७)
त्वचा स्पृशति वै वायुमाकाशस्थं पुनः पुनः ।
तत्स्थं गन्धं तथाघ्राति ज्योतिः पश्यति चक्षुषा ॥ १२-२२४-८४ (७४१९५)
तमोरश्मिगणश्चैव मेघजालं तथैव च ।
वर्षं तारागणं चैव नाकाशं दृश्यते पुनः ॥ १२-२२४-८५ (७४१९६)
आकाशस्याप्यथाकाशं सद्रूपमिति निश्चितम् ।
तदर्थे कल्पिता ह्येते तत्सत्यो विष्णुरेव च ।
यानि नामानि गौणानि ह्युपचारात्परात्मनि ॥ १२-२२४-८६ (७४१९७)
न चक्षुषा न मनसा न चान्येन परो विभुः ।

चिन्त्यते सूक्ष्मया बुद्ध्या वाचा वक्तुं न शक्यते ॥१२-२२४-८७ (७४१९८)
एतत्प्रपञ्चमखिलं तस्मिन्सर्वं प्रतिष्ठितम् ।
महाघटोऽल्पकश्चैव यथा मह्यां प्रतिष्ठितौ ॥१२-२२४-८८ (७४१९९)
न च स्त्री न पुमांश्चैव यथैव न नपुंसकः ।
केवलज्ञानमात्रं तत्तस्मिन्सर्वं प्रतिष्ठितम् ॥१२-२२४-८९ (७४२००)
भूमिसंस्थानयोगेन वस्तुसंस्थानयोगतः ।
रसभेदा यथा तोये प्रकृत्यामात्मनस्तथा ॥१२-२२४-९० (७४२०१)
तद्वाक्यस्मरणान्नित्यं तृप्तिं वारि पिबन्निव ।
प्राप्नोति ज्ञानमखिलं तेन तत्सुखमेधते ॥१२-२२४-९१ (७४२०२)
सुवर्चलोवाच।१२-२२४-९२क्ष् (६१२८)
अनेन साध्यं किं स्याद्वै शब्देनेति मतिर्मम ।
वेदगम्यः परोऽचिन्त्य इति पौराणिका विदुः ॥१२-२२४-९२ (७४२०३)
निरर्थको यथा लोके तद्वत्स्यादिति मे मतिः ।
निरीक्ष्यैवं यथान्यायं वक्तुमर्हसि मेऽनघ ॥१२-२२४-९३ (७४२०४)
श्वेतकेतुरुवाच।१२-२२४-९४क्ष् (६१२९)
वेदगम्यं परं शुद्धमिति सत्या परा श्रुतिः ।
व्याहत्या नैतदित्याह व्युपलिङ्गे च वर्तते ॥१२-२२४-९४ (७४२०५)
निरर्थको न चैवास्ति शब्दो लौकिक उत्तमे ।
अनन्वयास्तथा शब्दा निरर्था इति लौकिकैः ॥१२-२२४-९५ (७४२०६)
गृह्यन्ते तद्वदित्येव न वर्तन्ते परात्मनि ।
अगोचरत्वं वचसां युक्तमेवं तथा शुभे ॥१२-२२४-९६ (७४२०७)
साधनस्योपदेशाच्च ह्युपायस्य च सूचनात् ।
उपलक्षणयोगेन व्यावृत्त्या च प्रदर्शनात् ।
वेदगम्यः परः शुद्ध इति मे धीयते मतिः ॥ १२-२२४-९७ (७४२०८)
अध्यात्मध्यानसंभूतमभूतं----- वत्स्फुटम् ।
ज्ञानं विद्धि शुभाचारे तेन यान्ति परां गतिम् ॥१२-२२४-९८ (७४२०९)
यदि मे व्याहृतं गुह्यं श्रुतं न तु त्वया शुभे ।
तथ्यमित्येव वा शुद्धे ज्ञानं ज्ञानविलोचने ॥१२-२२४-९९ (७४२१०)
नानारूपवदस्यैवमैश्वर्यं दृश्यते शुभे ।
न वायुस्तं न सूर्यस्तं नाग्निस्तत्तत्परं पदम् ॥१२-२२४-१०० (७४२११)
अनेन पूर्णमेतद्धि हृदि भूतमिहेष्यते ।
एतावदात्मविज्ञानमेतावद्यदहं स्मृतम् ।
आवयोर्न च सत्वे वै तस्मादज्ञानबन्धनम् ॥ १२-२२४-१०१ (७४२१२)
भीष्म उवाच।१२-२२४-१०२क्ष् (६१३०)
एवं सुवर्चला हृष्टा प्रोक्ता भर्त्रा यथार्थवत् ।
परिचर्यमाणा ह्यनिशं तत्वबुद्धिसमन्विता ॥१२-२२४-१०२ (७४२१३)

भर्ता च तामनुप्रेक्ष्य नित्यनैमित्तिकान्वितः ।
परमात्मनि गोविन्दे वासुदेवे महात्मनि ॥ १२-२२४-१०३ (७४२१४)
समाधाय च कर्माणि तन्मयत्वेन भावितः ।
कालेन महता राजन्प्राप्नोति परमां गतिम् ॥ १२-२२४-१०४ (७४२१५)
एतत्ते कथितं राजन्यस्मात्त्वं परिपृच्छसि ।
गार्हस्थ्यं च समास्थाय गतौ जायापती परम्' ॥ १२-२२४-१०५ (७४२१६)

इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि
चतुर्विंशत्यधिकद्विशततमोऽध्यायः ॥ २२४.।

---

शन्तिपर्व-अध्यय२२५
॥ श्रीः ॥
१२.२२५. अध्यायः २२५

Mahabharata - Shanti Parva - Chapter Topics
भीष्मेण युधिष्ठिरंप्रति दान्तलक्षणकथनपूर्वकं दमप्रशंसनम्
॥ १.।
Mahabharata - Shanti Parva - Chapter Text

१२-२२५-० (७४२१७)
युधिष्ठिर उवाच। १२-२२५-०क्ष् (६१३१)
किं कुर्वन्सुखमाप्नोति किं कुर्वन्दुःखमाप्नुयात् ।
किं कुर्वन्निर्भयो लोके सिद्धश्चरति भारत ॥ १२-२२५-१ (७४२१८)
भीष्म उवाच। १२-२२५-२क्ष् (६१३२)
दममेव प्रशंसन्ति वृद्धाः श्रुतिसमाधयः ।
सर्वेषामेव वर्णानां ब्राह्मणस्य विशेषतः ॥ १२-२२५-२ (७४२१९)
नादान्तस्य क्रियासिद्धिर्यथावदुपपद्यते ।
क्रिया तपश्च देवाश्च दमे सर्वं प्रतिष्ठितम् ॥ १२-२२५-३ (७४२२०)
दमस्तेजो वर्धयति पवित्रं दम उच्यते ।
विपाप्मा निर्भयो दान्तः पुरुषो विन्दते महत् ॥ १२-२२५-४ (७४२२१)
सुखं दान्तः प्रस्वपिति सुखं च प्रतिबुध्यते ।
सुखं लोके विपर्येति मनश्चास्य प्रसीदति ॥ १२-२२५-५ (७४२२२)
तेजो दमन ध्रियते तत्र तीक्ष्णोऽधिगच्छति ।
अमित्रांश्च बहून्नित्यं पृथगात्मनि पश्यति ॥ १२-२२५-६ (७४२२३)
क्रव्याद्भ्य इव भूतानामदान्तेभ्यः सदा भयम् ।
तेषां विप्रतिषेधार्थं राजा सृष्टः स्वयंभुवा ॥ १२-२२५-७ (७४२२४)
आश्रमेषु च सर्वेषु दम एव विशिष्यते। १२-२२५-८ब्ग्धर्मः

संरक्ष्यते तैस्तु यतस्ते धर्मसेतवः ।'
यच्च तेषु फलं धर्म्यं भूयो दान्ते तदुच्यते ॥ १२-२२५-८ (७४२२५)
तेषां लिङ्गानि वक्ष्यानि येषां समुदयो दमः ।
अकार्पण्यमसंरम्भः संतोषः श्रद्दधानता ॥ १२-२२५-९ (७४२२६)
अक्रोध आर्जवं नित्यं नातिवादोऽभिमानिता ।
गुरुपूजाऽनसूया च दया भूतेष्वपैशुनम् ॥ १२-२२५-१० (७४२२७)
जनवादमृषावादस्तुतिनिन्दाविवर्जनम् ।
साधुकामांश्च स्पृहयेन्नायतिं प्रत्ययेषु च ॥ १२-२२५-११ (७४२२८)
अवैरकृत्सूपचारः समो निन्दाप्रशंसयोः ।
सुवृत्तः शीलसंपन्नः प्रसन्नात्माऽऽत्मवाञ्शुचिः ॥ १२-२२५-१२ (७४२२९)
प्राप्य लोके च सत्कारं स्वर्गं वै प्रेत्य गच्छति ।
दुर्गमं सर्वभूतानां प्रापयन्मोदते सुखी ॥ १२-२२५-१३ (७४२३०)
सर्वभूतहिते युक्तो न स्म यो द्विषते जनम् ।
महाह्रद इवाक्षोभ्यः प्राज्ञस्तृप्तः प्रसीदति ॥ १२-२२५-१४ (७४२३१)
अभयं यस्य भूतेभ्यः सर्वेषामभयं यतः ।
नमस्यः सर्वभूतानां दान्तो भवति बुद्धिमान् ॥ १२-२२५-१५ (७४२३२)
न हृष्यति महत्यर्थे व्यसने च न शोचति ।
सदाऽपरिमितप्रज्ञः स दान्तो द्विज उच्यते ॥ १२-२२५-१६ (७४२३३)
कर्मभिः श्रुतसंपन्नः सद्भिराचारितः शुचिः ।
सदैव दमसंयुक्तस्तस्य भुङ्क्ते महाफलम् ॥ १२-२२५-१७ (७४२३४)
अनसूयाऽक्षमा शान्तिः संतोषः प्रियवादिता ।
सत्यं दानमनायासो नैष मार्गो दुरात्मनाम् ॥ १२-२२५-१८ (७४२३५)
कामक्रोधौ च लोभश्च परस्येर्ष्या विकत्थना ।
ग्अतुष्टिरनृतं मोह एष मार्गो दुरात्मनाम् ॥' १२-२२५-१९ (७४२३६)
कामक्रोधौ वशे कृत्वा ब्रह्मचारी जितेन्द्रियः ।
विक्रम्य घोरे तमसि ब्राह्मणः संशितव्रतः ।
कालाकाङ्क्षी चरेल्लोकान्निरपाय इवात्मवान् ॥ ॥ १२-२२५-२० (७४२३७)

इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि
पञ्चविंशत्यधिकद्विशततमोऽध्यायः ॥ २२५.।
Mahabharata - Shanti Parva - Chapter Footnotes

१२-२२५-२ श्रुतिसमाधयो वेदद्रष्टारः ॥
१२-२२५-३ तपश्च सत्यं चेति झ ।पाठः ॥
१२-२२५-६ तीक्ष्णो राजसः ।अमित्रान् कामादीन् ॥
१२-२२५-७ क्रव्याद्भयो व्याघ्रादिभ्यो मांसभक्षकेभ्यः ॥

१२-२२५-८ भूयोऽधिकम् ॥
१२-२२५-९ समुदेत्यस्मादिति समुदयो हेतुः
। अकार्पण्यमदीनत्वम्। असंरम्भोऽभिनिवेशाभावः ॥
१२-२२५-११ प्रत्ययेषु सुखदुःखाद्यनुभवेषु । आयतिमुत्तरकालम्। न स्पृहयेत्। प्राप्तं सुखादिकं भुञ्जीत नतु कालान्तरीयौ तज्जौ हर्षविषादौ चिन्तनीयावित्यर्थः ॥
१२-२२५-१२ सूपचारः शाठ्यवर्जितादरः ॥
१२-२२५-१३ दुर्गमं दुष्काले दुर्लभमन्नादि प्रापयन् दयावानित्यर्थः ॥
१२-२२५-१५ दान्तो भवति धर्मवित् इति ध । पाठः ॥
१२-२२५-१९ डम्भो दर्पश्च मानश्च नैष मार्गो महात्मनाम् इति ट । ड। पाठः ॥

---

शन्तिपर्व-अध्यय२२६
॥ श्रीः ॥
१२.२२६. अध्यायः २२६

Mahabharata - Shanti Parva - Chapter Topics
भीष्मेण युधिष्ठिरंप्रति तपउपवासादिनिरूपणम् ॥ १. ।
Mahabharata - Shanti Parva - Chapter Text

१२-२२६-० (७४२३८)
युधिष्ठिर उवाच। १२-२२६-०क्ष् (६१३३)
द्विजातयो व्रतोपेता यदिदं भुञ्जते हविः ।
अन्नं ब्राह्मणकामाय कथमेतत्पितामह ॥ १२-२२६-१ (७४२३९)
भीष्म उवाच। १२-२२६-२क्ष् (६१३४)
अवेदोक्तव्रतोपेता भुञ्जानाः कार्यकारिणः ।
वेदोक्तेषु च भुञ्जाना व्रतलुब्धा युधिष्ठिर ॥ १२-२२६-२ (७४२४०)
युधिष्ठिर उवाच। १२-२२६-३क्ष् (६१३५)
यदिदं तप इत्याहुरुपवासं पृथग्जनाः ।
एतत्तपो महाराज उताहो किं तपो भवेत् ॥ १२-२२६-३ (७४२४१)
भीष्म उवाच। १२-२२६-४क्ष् (६१३६)
मासपक्षोपवासेन मन्यन्ते यत्तपो जनाः ।
आत्मतन्त्रोपधातस्तु न तपस्तत्सतां मतम् ॥ १२-२२६-४ (७४२४२)
त्यागश्च सन्नतिश्चैव शिष्यते तप उत्तमम् ।
सदोपवासी स भवेद्ब्रह्मचारी सदा भवेत् ॥ १२-२२६-५ (७४२४३)
मुनिश्च स्यात्सदा विप्रो दैवतं च सदा भवेत् ।
कुटुम्बिको धर्मपरः सदाऽस्वप्नश्च भारत ॥ १२-२२६-६ (७४२४४)

अमांसादी सदा च स्यात्पवित्री च सदा भवेत् ।
अमृताशी सदा च स्यान्न च स्याद्विषभोजनः ॥ १२-२२६-७ (७४२४५)
विधसाशी सदा च स्यात्सदा चैवातिथिप्रियः ।
श्श्रद्दधानः सदा च स्याद्देवताद्विजपूजकः ह ॥ १२-२२६-८ (७४२४६)
युधिष्ठिर उवाच। १२-२२६-९क्ष् (६१३७)
कथं सदोपवासी स्याद्ब्रह्मचारी कथं भवेत् ।
विघसाशी कथं च स्यात्सदा चैवातिथिप्रयिः ॥ १२-२२६-९ (७४२४७)
भीष्म उवाच। १२-२२६-१०क्ष् (६१३८)
अन्तरा प्रातराशं च सायमाशं तथैव च ।
सदोपवासी स भवेद्यो न भुङ्क्तेऽन्तरा पुनः ॥ १२-२२६-१० (७४२४८)
भार्यां गच्छन्ब्रह्मचारी ऋतौ भवति ब्राह्मणः ।
ऋतवादी भवेन्नित्यं ज्ञाननित्यश्च यो नरः ॥ १२-२२६-११ (७४२४९)
न भक्षयेद्वृथा मांसममांसाशी भवत्यपि ।
दाननित्यः पवित्रीस्यादस्वप्नश्च दिवाऽस्वपन् ॥ १२-२२६-१२ (७४२५०)
भृत्यातिथिषु यो भुङ्क्ते भुक्तवत्सु सदा नरः ।
अमृतं केवलं भुङ्क्ते इति विद्धि युधिष्ठिर ॥ १२-२२६-१३ (७४२५१)
अभुक्तवत्सु भुञ्जानो विषमश्नाति वै द्विजः ।
अदत्त्वा योऽतिथिभ्योऽन्नं न भुङ्क्ते सोतिथिप्रियः ।
ग्अभुक्त्वा दैवतेभ्यश्च यो न भुङ्क्ते सदैवतम्' १२-२२६-१४ (७४२५२)
देवताभ्यः पितृभ्यश्च भृत्येभ्योऽतिथिभिः सह ।
अवशिष्टं तु योऽश्नाति तमाहुर्विघसाशिनम् ॥ १२-२२६-१५ (७४२५३)
तेषां लोका ह्यपर्यन्ताः सदने ब्रह्मणा सह ।
उपस्थिताश्चाप्सरोभिः परियान्ति दिवौकसः ॥ १२-२२६-१६ (७४२५४)
देवताभिश्च ये सार्धं पितृभ्यश्चोपभुञ्जते ।
रमन्ते पुत्रपौत्रैश्च तेषां गतिरनुत्तमा ॥ ॥ १२-२२६-१७ (७४२५५)

इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि
षड्विशत्यधिकद्विशततमोऽध्यायः ॥ २२६.।
Mahabharata - Shanti Parva - Chapter Footnotes

१२-२२६-१ द्विजातयस्त्रैवर्णिकाः । हविर्देवताशेषम् ॥
१२-२२६-२ भुज्जाना अभोज्यं मांसादीति शेषः । कार्यकारिणः
कामाचारवन्तः। इहैव सतिता इत्यर्थः। व्रतलुब्धा
दीक्षोक्तफलानुरागिणः स्वर्गं प्राप्य पतिष्यन्तीत्यर्थः ॥
१२-२२६-४ ह्यत्मतन्त्रमात्मविद्या तस्या उपघातो विघ्नः ॥
१२-२२६-५ भूतभयंकरकर्मसंन्यासस्त्यागः । सन्नतिर्भूताराधनम् ॥

१२-२२६-७ अमृताशी सदा च स्याद्देवतातिथिपूजकः इति झ ।ड।पाठः ॥
१२-२२६-९ अतिथिर्वैश्वदेवान्ते प्राप्तः ॥
१२-२२६-१२ वृथा देवपितृशेषं विना ॥
१२-२२६-१४ अभुक्तवत्सु नाश्नानः सततं यस्तु वैद्विजः ।अभोजनेन तेनास्य जितः स्वर्गो भवत्युत्तेति झ।पाठः ॥

---

शन्तिपर्व-अध्यय२२७
॥ श्रीः ॥
१२.२२७. अध्यायः २२७

Mahabharata - Shanti Parva - Chapter Topics
भीष्मेण युधिष्ठिरंप्रति
भगवत्स्वरूपनिरूपकमुनिसनत्कुमारसंवादानुवादः ॥१.।
Mahabharata - Shanti Parva - Chapter Text

१२-२२७-० (७४२५६)
ग्क़ युधिष्ठिर उवाच।१२-२२७-०क्ष् (६१३९)
केचिदाहुर्द्विधा लोके त्रिधा राजन्ननेकधा ।
न प्रत्ययो न चान्यच्च दृश्यते ब्रह्म नैव तत् ॥१२-२२७-१ (७४२५७)
नानाविधानि शास्त्राणि उक्ताश्चैव पृथग्विधाः ।
किमधिष्ठाय तिष्ठामि तन्मे ब्रूहि पितामह ॥१२-२२७-२ (७४२५८)
भीष्म उवाच।१२-२२७-३क्ष् (६१४०)
स्वेस्वे युक्ता महात्मानः शास्त्रेषु प्रभविष्णवः ।
वर्तन्ते षण्डिता लोके को विद्वान्कश्च पण्डितः ॥१२-२२७-३ (७४२५९)
सर्वेषां तत्वमज्ञाय यथारुचि तथा भवेत् ।
अस्मिन्नर्थे पुराभूतमितिहासं पुरातनम् ॥१२-२२७-४ (७४२६०)
महाविवादसंयुक्तमृषीणां भावितात्मनाम् ।
हिमवत्पार्श्वे आसीना ऋषयः संशितव्रताः ॥१२-२२७-५ (७४२६१)
षण्णां तानि सहस्राणि ऋषीणां गणमाहितम् ।
तत्र केचिद्ध्रुवं विश्वं सेश्वरं तु निरीश्वरम् ॥१२-२२७-६ (७४२६२)
प्राकृतं कारणं नास्ति सर्वं नैवमिदं जगत् ।
अनेन चापरे विप्राः स्वभावं कर्म चापरे ॥१२-२२७-७ (७४२६३)
पौरुषं कर्म दैवं च यत्स्वभावादिरेव तम् ।
नानाहेतुशतैर्युक्ता नानाशास्त्रप्रवर्तकाः ॥१२-२२७-८ (७४२६४)
स्वभावाद्ब्राह्मणा राजञ्जिगीपन्तः परस्परम् ।
ततस्तु मूलमुद्भूतं वादिप्रत्यर्थिसंयुतम् ॥१२-२२७-९ (७४२६५)
पात्रदण्डविघातं च वल्कलाजिनवाससाम् ।

एके मन्युसमापन्नास्ततः शान्ता द्विजोत्तमाः ॥१२-२२७-१० (७४२६६)
वसिष्ठमब्रुवन्सर्वे त्वं नो ब्रूहि सनातनम् ।
नाहं जानामि विप्रेन्द्राःप्रत्युवाच स तान्प्रभुः ॥१२-२२७-११ (७४२६७)
ते सर्वे सहिता विप्रा नारदं ऋषिमनुवन् ।
त्वं नो ब्रूहि महाभाग तत्वविच्च भवानसि ॥१२-२२७-१२ (७४२६८)
नाहं द्विजा विजानामि क्व हि गच्छाम संगताः ।
इति तानाह भगवांस्ततः प्राह च स द्विजान् ॥१२-२२७-१३ (७४२६९)
को विद्वानिह लोकेऽस्मिन्नमोहोऽमृतमङ्गुतम् ।
तच्च ते शुश्रुवुर्वाक्यं ब्राह्मणा ह्यशरीरिणः ॥१२-२२७-१४ (७४२७०)
सनद्धाम द्विजा गत्वा पृच्छध्वं स च वक्ष्यति ॥ १२-२२७-१५ (७४२७१)
तमाह कश्चिद्विजवर्यसत्तमो
विभाण्डको मण्डितवेदराशिः ।
कस्त्वं भवानर्थविभेदमध्ये
न दृश्यसे वाक्यमुदीरयंश्च ॥ १२-२२७-१६ (७४२७२)
अथाहेदं तं भगवान्सनन्तं
महामुने विद्धि मां पण्डितोऽसि
ऋषिं पुराणं सततैकरूपं
यमक्षयं वेदविदो वदन्ति ॥ १२-२२७-१७ (७४२७३)
पुनस्तमाहेदमसौ महात्मा
स्वरूपसंस्थं वद आह पार्थ ।
त्वमेकोऽस्मदृषिपुङ्गवाद्य
नसत्स्वरूपमथवा पुनः किम् ॥ १२-२२७-१८ (७४२७४)
अथाह गम्भीरतरानुवादं
वाक्यं महात्मा ह्यशरीर आदिः ।
न ते मुने श्रोत्रमुखेऽपि चास्यं
न पादहस्तौ प्रपदात्मके न ॥ १२-२२७-१९ (७४२७५)
ब्रुवन्मुनीन्सत्यमथो निरीक्ष्य
स्वमाह विद्वान्मनसा निगम्य ।
ऋषे कथं वाक्यमिदं ब्रवीषि
न चास्य मन्ता न च विद्यते चेत् ॥ १२-२२७-२० (७४२७६)
न शुश्रुवुस्ततस्तत्तु प्रतिवाक्यं द्विजोत्तमाः ।
निरीक्षमाणा आकाशं प्रहसन्तस्ततस्ततः ॥१२-२२७-२१ (७४२७७)
आश्चर्यमिति मत्वा ते ययुर्हैमं महागिरिम् ।
सनत्कुमारसङ्काशं सगणा मुनिसत्तमाः ॥१२-२२७-२२ (७४२७८)
तं पर्वतं समारुह्य ददृशुर्ध्यानमाश्रिताः ।
कुमारं देवमर्हन्तं वेदपाराविवर्जितम् ॥१२-२२७-२३ (७४२७९)

ततः संवत्सरे पूर्णे प्रकृतिस्थं महामुनिम् ।
सनत्कुमारं राजेन्द्र प्रणिपत्य द्विजाः स्थिताः ॥१२-२२७-२४ (७४२८०)
आगतान्भगवानाह ज्ञाननिर्धूतकल्मषः ।
ज्ञातं मया मुनिगणा वाक्यं तदशरीरिणः ।
कार्यमद्य यथाकामं पृच्छध्वं मुनिपुङ्गवाः ॥ १२-२२७-२५ (७४२८१)
तमब्रुवन्प्राञ्जलयो महामुनिं
द्विजोत्तमं ज्ञाननिधिं सुनिर्मलम् ।
कथं वयं ज्ञाननिधिं वरेण्यं
यक्ष्यामहे विश्वरूपं कुमार ॥ १२-२२७-२६ (७४२८२)
प्रसीद नो भगवञ्ज्ञानलेशं
मधुप्रयाताय सुखाय सन्तः ।
यत्तत्पदं विश्वरूपं महामुने
तत्र ब्रूहि किं तत्र महानुभाव ॥ १२-२२७-२७ (७४२८३)
स तैर्वियुक्तो भगवान्महात्मा
यः सङ्गवान्सत्यवित्तच्छृणुष्व ।
अनेक साहस्रकलेषु चैव
प्रसन्नधातुं च शुभाज्ञया सत् ॥ १२-२२७-२८ (७४२८४)
यथाह पूर्वं युष्मासु ह्यशरीरी द्विजोत्तमाः ।
तथैव वाक्यं तत्सत्यमजानन्तश्च कीर्तितम् ॥१२-२२७-२९ (७४२८५)
शृणुध्वं परमं कारणमस्ति कथमवगम्यते । अहन्यहनि
पाकविशेषो दृश्यते तेन मिश्रं सर्वं मिश्रयते। यथा मण्डली
दृशि सर्वेषामस्ति निदर्शनम्। अस्ति चक्षुष्मतामस्ति ज्ञाने स्वरूपं
पश्यति। यथा दर्पणान्तं निदर्शनम् ॥ १२-२२७-३० (७४२८६)
स एव सर्वं विद्वान्न बिभेति न गच्छति कुत्राहं कस्य नाहं केन
केनेत्यवर्तमानो विजानाति ॥ १२-२२७-३१ (७४२८७)
स युगतो व्यापी । स पृथक्स्थितः। तदपरमार्थः ॥ १२-२२७-३२ (७४२८८)
यथा वायुरेकः सन्बहुधेरितः । आश्रयविशेषो वा यस्याश्रयं
यथावद्द्विजे मृगे व्याघ्रे च मनुजे वेणुंसश्रयो भिद्यते
वायुरथैकः। आत्मा तथाऽसौ परमात्माऽसावन्य इव भाति ॥
१२-२२७-३३ (७४२८९)
एवमात्मा स एव गच्छति सर्वमात्मा पश्यञ्शृणोति न च घ्राति न
भाषते ॥ १२-२२७-३४ (७४२९०)
चक्रेऽस्य तं महात्मानं परितो दश रश्मयः ।
विनिष्क्रम्य यथा सूर्यमनुगच्छन्ति तं प्रभुम् ॥१२-२२७-३५ (७४२९१)
दिनेदिनेऽस्तमभ्येति पुनरुद्गच्छते दिशः ।
तावुभौ न रवौ चास्तां तथा वित्त शरीरिणम् ॥१२-२२७-३६ (७४२९२)

पतिते वित्त विप्रेन्द्रं भक्षणे चरणे परः ।
ऊर्ध्वमेकस्तथाऽधस्तादेकस्तिष्ठति चापरः ॥ १२-२२७-३७ (७४२९३)
हिरण्यसदनं ज्ञेयं समेत्य परमं पदम् ।
आत्मना ह्यात्मदीपं तमात्मनि ह्यात्मपूरुषम् ॥ १२-२२७-३८ (७४२९४)
संचितं संचितं पूर्वं भ्रमरो वर्तते भ्रमम् ।
योऽभिमानीव जानाति न मुह्यति न हीयते ॥ १२-२२७-३९ (७४२९५)
न चक्षुषा पश्यति कश्चनैनं
हृदा मनीषा पश्यति रुपमस्य ।
न शुक्लं न कृष्णं परमार्थभावं
गुहाशयं ज्ञानदेवीकरस्थम् ॥ १२-२२७-४० (७४२९६)
ब्राह्मणस्य न सादृश्ये वर्तते सोऽपि किं पुनः ।
इज्यते यस्तु मन्त्रेण यजमानो द्विजोत्तमः ॥ १२-२२७-४१ (७४२९७)
नैव धर्मी न चाधर्मी द्वन्द्वातीतो विमत्सरः ।
ज्ञानतृप्तः सुखं शेते ह्यमृतात्मा न संशयः ॥ १२-२२७-४२ (७४२९८)
एवमेव जगत्सृष्टिं कुरुते मायया प्रभुः ।
न जानाति विमूढात्मा कारणं चात्मनो ह्यसौ ॥ १२-२२७-४३ (७४२९९)
ध्याता द्रष्टा तथा मन्ता बोद्धा दृष्टान्स एव सः ।
को विद्वान्परमात्मानमनन्तं लोकभावनम् ।
यत्तु शक्यं मया प्रोक्तं गच्छध्वं मुनिपुङ्गवाः ॥ १२-२२७-४४ (७४३००)
भीष्म उवाच। १२-२२७-४५क्ष् (६१४१)
एवं प्रणम्य विप्रेन्द्रा ज्ञानसागरसंभवम् ।
सनत्कुमारं संदृष्ट्वा जग्मुस्ते रुचिरं पुनः ॥ १२-२२७-४५ (७४३०१)
तस्मात्त्वमपि कौन्तेय ज्ञानयोगपरो भव ।
ज्ञानमेवं महाराज सर्वदुःखविनाशनम् ॥ १२-२२७-४६ (७४३०२)
इदं महादुःखसमाकराणां
नृणां परित्राणविनिर्मितं पुरा ।
पुराणपुंसा ऋषिणा महात्मना
महामुनीनां प्रवरेण तद्भवम् ॥' ॥ १२-२२७-४७ (७४३०३)

इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि
सप्तविंशत्यधिकद्विशततमोऽध्यायः ॥ २२७.।
Mahabharata - Shanti Parva - Chapter Footnotes

क़ २२७,२२८, एतदव्यायद्वयं थ ।पुस्तक एव दृश्यते ।

---

शन्तिपर्व-अध्यय२२८
॥ श्रीः ॥

१२.२२८. अध्यायः २२८

Mahabharata - Shanti Parva - Chapter Topics
भीष्मेण युधिष्ठिरंप्रति तपश्शब्दस्य मतभेदेन नानार्थकत्वकथनपूर्वकं स्वमते तस्य ज्ञानार्थकत्वाभिधानम् ॥ १.। ज्ञानस्य मोक्षसाधनत्वे दृष्टान्ततया सुवर्चलाचरित्रकथनम् ॥ २.।
Mahabharata - Shanti Parva - Chapter Text

१२-२२८-० (७४३०४)
ग युधिष्ठिर उवाच। १२-२२८-०क्ष् (६१४२)
यदिदं तप इत्याहुः किं तपः संप्रकीर्तितम् ।
उपवासमथान्यत्तु वेदाचारमथो नु किम् ।
शास्त्रं तपो महाप्राज्ञ तन्मे ब्रूहि पितामह ॥ १२-२२८-१ (७४३०५)
भीष्म उवाच। १२-२२८-२क्ष् (६१४३)
पक्षमासोपवासादीन्मन्यन्ते वै तपोधनाः ।
वेदव्रतादीनि तप अपरे वेदपारगाः ।
वेदपारायणं चान्ये चाहुस्तत्वमथापरे ॥ १२-२२८-२ (७४३०६)
यथाविहितमाचारस्तपः सर्वं व्रतं गताः ।
आत्मविद्याविधानं यत्तत्तपः परिकीर्तितम् ॥ १२-२२८-३ (७४३०७)
त्यागस्तपस्तथा शान्तिस्तप इन्द्रियनिग्रहः ।
ब्रह्मचर्यं तपः प्रोक्तमाहुरेवं द्विजातयः ॥ १२-२२८-४ (७४३०८)
सदोपवासो यो विद्वान्ब्रह्मचारी सदा भवेत् ॥ १२-२२८-५ (७४३०९)
यो मुनिश्च सदा धीमान्विघसाशी विमत्सरः ।
ततस्त्वनन्तमप्याहुर्यो नित्यमतिथिप्रियः ॥ १२-२२८-६ (७४३१०)
नान्तराशीस्ततो नित्यमुपवासी महाव्रतः ।
ऋतुगामी तथा प्रोक्तो विघसाशी स्मृतो बुधैः ॥ १२-२२८-७ (७४३११)
भृत्यशेषं तु यो भुङ्क्ते यज्ञशेषं तथाऽमृतम् ।
एवं नानार्थसंयोगं तपः शश्वदुदाहृतम् ॥ १२-२२८-८ (७४३१२)
केषां लोका ह्यपर्यन्ताः सर्वे सत्यव्रते स्थिताः ।
येऽपि कर्ममयं प्राहुस्ते द्विजा ब्राह्मणाः स्मृताः ।
रमन्ते दिव्यभोगैश्च पूजिता ह्यप्सरोगणैः ॥ १२-२२८-९ (७४३१३)
ज्ञानात्मकं तपश्शब्दं ये वदन्ति विनिश्चिताः ।
ते ह्यन्तराऽऽत्मसद्भावं प्रपन्ना नृपसत्तम ॥ १२-२२८-१० (७४३१४)
एतत्ते नृपशार्दूल प्रोक्तं यत्पृष्टवानसि ।
यथा वस्तुनि संज्ञानि विविधानि भवन्त्युत ॥ १२-२२८-११ (७४३१५)

युधिष्ठिर उवाच। १२-२२८-१२क्ष् (६१४४)
पितामह महाप्राज्ञ राजाधीना नृपाः पुनः ।
अन्यानि च सहस्राणि नामानि विविधानि च ॥ १२-२२८-१२ (७४३१६)
प्रतियोगीनि वै तेषां छन्नान्यस्तमितानि च ।
दृढं सर्वं प्राकृतकभिदं सर्वत्र पश्य वै ॥ १२-२२८-१३ (७४३१७)
तस्माद्यथागतं राजन्यथारुचि नृणां भवेत् ।
अस्मिन्नर्थे पुरावृत्तं शृणु राजन्युधिष्ठिर ॥ १२-२२८-१४ (७४३१८)
ब्राह्मणानां समूहे तु यदुवाच सुवर्चला ।
देवलस्य सुता विद्वन्सर्वलक्षणशोभिता ॥ १२-२२८-१५ (७४३१९)
कन्या सुवर्चला नाम योगभावितचेतना ।
हेतुना केन जाता सा निर्द्वन्द्वा नष्टसंशया ॥ १२-२२८-१६ (७४३२०)
साऽब्रवीत्पितरं विप्रं वरान्वेषणतत्परा ॥ १२-२२८-१७ (७४३२१)
अन्धाय मां महाप्राज्ञ देहि वीक्ष्य सुलोचनम् ।
एवं स्म च पितः शश्वन्मयेदं---मुने ॥ १२-२२८-१८ (७४३२२)
पितोवाच। १२-२२८-१९क्ष् (६१४५)
न शक्यं प्रार्थितुं वत्से त्वयाऽद्य प्रतिभाति मे ।
अन्धताऽनन्धता चेति विचारो मम जायते ।
उन्मत्तेव सुते वाक्यं भाषसे पृथुलोचने ॥ १२-२२८-१९ (७४३२३)
कन्योवाच। १२-२२८-२०क्ष् (६१४६)
नाहमुन्मत्तभूताऽऽद्य बुद्धिपूर्वं ब्रवीमि ते ।
विद्धि वैतादृशं लोके स मां भजति वेदवित् ॥ १२-२२८-२० (७४३२४)
यान्यांस्त्वं मन्यसे दातुं मां द्विजोत्तम तानिह ।
आनयान्यान्महाभाग ह्यहं द्रक्ष्यामि तेषु तम् ॥ १२-२२८-२१ (७४३२५)
तथेति चोक्त्वा तां विप्रः प्रेषयामास शिष्यकान् ।
ऋषेः प्रभावं दृष्ट्वा ते कन्यायाश्च द्विजोत्तमाः ।
अनेकमुनयो राजन्संप्राप्ता देवलाश्रमम् ॥ १२-२२८-२२ (७४३२६)
तानागतानथाभ्यर्च्य कन्यामाह पिता महान् ।
यदीच्छसि वरं भद्रे तं विप्रं वरय स्वयम् ॥ १२-२२८-२३ (७४३२७)
तथेचि चोक्त्वा कल्याणी तप्तहेमनिभानना ।
करसंमितमध्याङ्गी वाक्यमाह तपोधनाः ॥ १२-२२८-२४ (७४३२८)
यद्यस्ति संमतो विप्रो ह्यन्धोऽनन्धः स मे वरः ।
नोचुर्विप्रा महाभागां प्रतिवाक्यं ययुश्च ते ॥ १२-२२८-२५ (७४३२९)
कन्या च तिष्ठतामत्र पितुर्वेश्मनि भारत ॥ १२-२२८-२६ (७४३३०)
श्वेतकेतुः कहालस्य श्यालः परमधर्मवित् ।
श्रुत्वा ब्रह्मा तदागम्य कन्यामाह महीपते ॥ १२-२२८-२७ (७४३३१)
सोहं भद्रे समावृत्तस्त्वयोक्तो यः पुरा द्विजः ।

विशालनयनं विद्धि मामन्धोऽहं वृणीष्व माम् ॥१२-२२८-२८ (७४३३२)
सुवर्चलोवाच।१२-२२८-२९क्ष् (६१४७)
कथं विशालनेत्रोऽसि कथं वा त्वमलोचनः ।
ब्रूहि पश्चादहं विद्वन्परीक्षे त्वां द्विजोत्तम ॥१२-२२८-२९ (७४३३३)
द्विज उवाच।१२-२२८-३०क्ष् (६१४८)
शब्दे स्पर्शे तथा रूपे रसे गन्धे सहेतुकम् ।
न मे प्रवर्तते चेतो न प्रत्यक्षं हि तेषु मे ।
अलोचनोऽहं तस्माद्धि न गतिर्विद्यते यतः ॥ १२-२२८-३० (७४३३४)
येन पश्यति सुश्रोणि भाषते स्पृशते पुनः ।
भुज्यते घ्रायते नित्यं शृणोति मनुते तथा ॥१२-२२८-३१ (७४३३५)
तच्चक्षुर्विद्यते मह्यं येन पश्यति वै स्फुटम् ।
सुलोचनोऽहं भद्रे वै पृच्छ वा किं वदामि ते ।
सर्वमस्मिन्न मे विद्या विद्वान्हि परमार्थतः ॥ १२-२२८-३२ (७४३३६)
सा विशुद्धा ततो भूत्वा श्वेतकेतुं महामुनिम् ।
प्रणम्य पूजयामास तां भार्यां स च लब्धवान् ॥१२-२२८-३३ (७४३३७)
वैराग्यसंयुता कन्या तादृशं परिमुत्तमम् ।
प्राप्ता राजन्महाप्राज्ञ तस्मादर्थः पृथक्पृथक् ॥१२-२२८-३४ (७४३३८)
एतत्ते कथितं राजन्किं भूयः श्रोतुमिच्छसि ॥' ॥ १२-२२८-३५ (७४३३९)

इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि
अष्टाविंशत्यधिकद्विशततमोऽध्यायः ॥ २२८.।

---

शन्तिपर्व-अध्यय२२९
॥ श्रीः ॥
१२.२२९. अध्यायः २२९

Mahabharata - Shanti Parva - Chapter Topics
भीष्मेण युधिष्ठिरंप्रति ज्ञानस्य
श्रेयःसाधनत्वज्ञानोपायादिप्रतिपादकेन्द्रप्रह्लादसंवादानुवादः ॥१.।
Mahabharata - Shanti Parva - Chapter Text

१२-२२९-० (७४३४०)
युधिष्ठिर उवाच।१२-२२९-०क्ष् (६१४९)
यदिदं कर्म लोकेऽस्मिञ्शुभं वा यदि वाऽशुभम् ।
पुरुषं योजयत्येव फलयोगेन भारत ॥१२-२२९-१ (७४३४१)
कर्ता स्वित्तस्य पुरुष उताहो नेति संशयः ।
एतदिच्छामि तत्त्वेन त्वत्तः श्रोतुं पितामह ॥१२-२२९-२ (७४३४२)

भीष्म उवाच। १२-२२९-३क्ष् (६१५०)
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
प्रह्लादस्य च संवादमिन्द्रस्य च युधिष्ठिर ॥ १२-२२९-३ (७४३४३)
असक्तं धूतपाप्मानं कुले जातं बहुश्रुतम् ।
अस्तब्धमनहंकारं सत्वस्थं संयतेन्द्रियम् ॥ १२-२२९-४ (७४३४४)
तुल्यनिन्दास्तुतिं दान्तं शून्यागारसमाकृतिम् ।
चराचराणां भूतानां विदितप्रभवाप्ययम् ॥ १२-२२९-५ (७४३४५)
अक्रुध्यन्तमहृष्यन्तमप्रियेषु प्रियेषु च ।
काञ्चने वाऽथ लोष्टे वा उभयोः समदर्शनम् ॥ १२-२२९-६ (७४३४६)
आत्मनि श्रेयसि ज्ञाने धीरं निश्चितनिश्चयम् ॥
परावरज्ञं भूतानां सर्वज्ञं सर्वदर्शनम् ॥ १२-२२९-७ (७४३४७)
ग्अव्यक्तात्मनि गोविन्दे वासुदेवे महात्मनि ।
हृदयेन समाविष्टं सर्वभावप्रियंकरम् ॥ १२-२२९-८ (७४३४८)
भक्तं भागवतं नित्यं नारायणपरायणम् ।
ध्यायन्तं परमात्मानं हिरण्यकशिपोः सुतम् ॥' १२-२२९-९ (७४३४९)
शक्रः प्रह्लादमासीनमेकान्ते संयतेन्द्रियम् ।
बुभुत्समानस्तत्प्रज्ञामभिगम्येदमब्रवीत् ॥ १२-२२९-१० (७४३५०)
यैः कैश्चित्संमतो लोके गुणैः स्यात्पुरुषो नृषु ।
भवत्यनपगान्सर्वांस्तान्गुणाँल्लक्षयामहे ॥ १२-२२९-११ (७४३५१)
अथ ते लक्ष्यते बुद्धिः समा बालजनैरिह ।
आत्मानं मन्यमानः सञ्श्रेयः किमिह मन्यसे ॥ १२-२२९-१२ (७४३५२)
बद्धः पाशैश्च्युतः स्थानाद्द्विषतां वशमागतः ।
श्रिया विहीनः प्रह्लाद शोचितव्ये न शोचसि ॥ १२-२२९-१३ (७४३५३)
प्रज्ञालाभेन दैतेय उताहो धृतिमत्तथा ।
प्रह्लाद स्वस्थरूपोऽसि पश्यन्व्यसनमात्मनः ॥ १२-२२९-१४ (७४३५४)
भीष्म उवाच। १२-२२९-१५क्ष् (६१५१)
इति संचोदितस्तेन धीरो निश्चितनिश्चयः ।
उवाच श्लक्ष्णया वाचा स्वां प्रज्ञामनुवर्णयन् ॥ १२-२२९-१५ (७४३५५)
प्रह्लाद उवाच। १२-२२९-१६क्ष् (६१५२)
प्रवृत्तिं च निवृत्तिं च भूतानां यो न बुध्यते ।
तस्य स्तम्भो भवेद्बाल्यान्नास्ति स्तंभोऽनुपश्यतः ॥ १२-२२९-१६ (७४३५६)
ग्गहनं सर्वभूतानां ध्येयं नित्यं सनातनम् ।
अनिग्रहमनौपम्यं सर्वाकारं परात्परम् ॥ १२-२२९-१७ (७४३५७)
सर्वावरणसंभूतं तस्मादेतत्प्रवर्तते ।
तन्मया अपि संपश्य नानालक्षणलक्षिताः ॥ १२-२२९-१८ (७४३५८)
स वै पाति जगत्स्रष्टा विष्णुरित्यभिशब्दितः ।

पुनर्दर्शति संप्राप्ते------सुरेश्वरः ॥' १२-२२९-१९ (७४३५९)
स्वभावात्संप्रवर्तन्ते निवर्तन्ते तथैव च ।
सर्वे भावास्तथा भावाः पुरुषार्थो न विद्यते ॥१२-२२९-२० (७४३६०)
पुरुषार्थस्य चाभावे नास्ति कश्चित्स्वकारकः ।
स्वयं च कुर्वतस्तस्य जातु मानो भवेदिह ॥१२-२२९-२१ (७४३६१)
यस्तु कर्तारमात्मानं मन्यते साध्वसाधु वा ।
तस्य दोषवती प्रज्ञा अतत्त्वज्ञेति मे मतिः ॥१२-२२९-२२ (७४३६२)
यदि स्यात्पुरुषः कर्ता शक्रात्मश्रेयसे ध्रुवम् ।
आरम्भास्तस्य सिद्ध्येयुर्न तु जातु पराभवेत् ॥१२-२२९-२३ (७४३६३)
अनिष्टस्य हि निर्वृत्तिरनिवृत्तिः प्रियस्य च ।
लक्ष्यते यतमानानां पुरुषार्थस्ततः कुतः ॥१२-२२९-२४ (७४३६४)
अनिष्टस्याभिनिर्वृत्तिमिष्टसंवृतिमेव च ।
अप्रयत्नेन पश्यामः केषां चित्तत्स्वभावतः ॥१२-२२९-२५ (७४३६५)
प्रतिरूपतराः केचिद्दृस्यन्ते बुद्धिमत्तराः ।
विरूपेभ्योऽल्पबुद्धिभ्यो लिप्समाना धनागमं ॥१२-२२९-२६ (७४३६६)
स्वभावप्रेरिताः सर्वे निविशन्ते गुणा यदा ।
शुभाशुभास्तदा तत्र तस्य किं मानकारणम् ॥१२-२२९-२७ (७४३६७)
स्वभावादेव तत्सर्वमिति मे निश्चिता मतिः ।
आत्मप्रतिष्ठा प्रज्ञा वा मम नास्ति ततोऽन्यथा ॥१२-२२९-२८ (७४३६८)
कर्मजं त्विह मन्यन्ते पलयोगं शुभाशुभम् ।
कर्मणां विषयं कृत्स्नमहं वक्ष्यामि तच्छृणु ॥१२-२२९-२९ (७४३६९)
यथा वेदयते कश्चिदोदनं पायसं ह्यदन् ।
एवं सर्वाणि कर्माणि स्वभावस्यैव लक्षणम् ॥१२-२२९-३० (७४३७०)
विकारानेव यो वेद न वेद प्रकृतिं पराम् ।
तस्य स्तंभोऽभवेद्बाल्यान्नास्ति स्तंभोऽनुपश्यतः ॥१२-२२९-३१ (७४३७१)
स्वभावभाविनो भावान्सर्वानेवेह निश्चये ।
बुद्ध्यमानस्य दर्पो वा मानो वा किं करिष्यति ॥१२-२२९-३२ (७४३७२)
वेद धर्मविधिं कृत्स्नं भूतानां चाप्यनित्यताम् ।
तस्माच्छक्र न शोचारि सर्वं ह्येवेदमन्तवत् ॥१२-२२९-३३ (७४३७३)
निर्ममो निरहंकारो निरीहो मुक्तबन्धनः ।
स्वस्थो व्यपेतः पश्यामि भूतानां प्रभवाप्ययौ ॥१२-२२९-३४ (७४३७४)
कृतप्रज्ञस्य दान्तस्य वितृष्णाय निराशिषः ।
नायासो विद्यते शक्र पश्यतो योगवित्तया ॥१२-२२९-३५ (७४३७५)
प्रकृतौ च विकारे च न मे प्रीतिर्न च द्विषे ।
द्वेष्टारं च न पश्यामि यो ममाद्य विरुध्यति ॥१२-२२९-३६ (७४३७६)
नोर्ध्वं नावाङ्वतिर्यक्च न क्वचिच्छक्र कामये ।

न हि ज्ञेये न विज्ञाने नाज्ञाने विद्यतेऽन्तरम् ॥१२-२२९-३७ (७४३७७)
शक्र उवाच।१२-२२९-३८क्ष् (६१५३)
येनैषा लभ्यते प्रज्ञा येन शान्तिरवाप्यते ।
प्रब्रूहि तमुपायं मे सम्यक्प्रह्लाद पृच्छते ॥१२-२२९-३८ (७४३७८)
प्रह्लाद उवाच।१२-२२९-३९क्ष् (६१५४)
आर्जवेनाप्रमादेन प्रसादेनात्मवत्तया ।
गुरुशुश्रूषया शक्र पुरुषो लभते महत् ॥१२-२२९-३९ (७४३७९)
स्वभावाल्लभते प्रज्ञां शान्तिमेति स्वभावतः ।
स्वभावादेव तत्सर्वं यत्किंचिदनुपश्यति ॥१२-२२९-४० (७४३८०)
ग्नैवान्तरं विजानाति श्रुत्वा गुरुमुखात्ततः ।
वाक्यं वाक्यार्थविज्ञानमालोक्य मनसा यतिः ॥१२-२२९-४१ (७४३८१)
विवेकप्रत्ययापन्नमात्मानमनुपश्यति ।
विरज्यति ततो भीत्या परमेश्वरमृच्छति ॥१२-२२९-४२ (७४३८२)
त्रातारं सर्वदुःखानां तत्सुखान्वेषणं ततः ।
करोति सद्भिः संसर्गमलं सन्तः सुखाय वै ॥१२-२२९-४३ (७४३८३)
सतां सकाशादाज्ञाय मार्गं लक्षणवत्तया ।
सर्वसङ्गविनिर्मुक्तः परमात्मानमृच्छति ॥१२-२२९-४४ (७४३८४)
विषयेच्छाकृतो धर्मं सरजस्को भयावहः ।
धर्महानिमवाप्नोति क्रमात्तेन नरः पुनः ॥१२-२२९-४५ (७४३८५)
भक्तिहीनो भवत्येव परमात्मनि चाच्युत ।
वाचके वाऽपि च स्थानं न हन्त्येव विमोचितः ॥१२-२२९-४६ (७४३८६)
साक्ष्ये चास्य रतिर्नित्यं संसारे च रतिर्भवेत् ।
तस्य नित्यमविज्ञानादात्माचैव न सिद्ध्यति ॥१२-२२९-४७ (७४३८७)
उन्मत्तवृत्तिर्भवति क्रमादेवं प्रवर्तते ।
आशौचं वर्धते नित्यं न शाम्यति कथंचन ॥१२-२२९-४८ (७४३८८)
विषये चान्वितस्यास्य मोक्षवाञ्छा न जायते ।
हेत्वाभासेषु संलीनः स्तौति वैषयिकान्गुणान् ॥१२-२२९-४९ (७४३८९)
न शास्त्राणि शृणोत्येव मानदर्पसमन्वितः ।
स्वतःसिद्धं न भोगस्त्वं स्वतः सिद्धं न वेत्ति च ।
चिद्रूपधारणं चैव परसृष्टिमथाव्ययम् ॥ १२-२२९-५० (७४३९०)
नानायोनिगतस्तेन भ्राम्यमाणः स्वकर्मभिः ।
तीर्णपारं न जानाति महामोहसमन्वितः ।
आचार्यसंश्रयाद्विद्याद्विनयं समुपागतः ॥ १२-२२९-५१ (७४३९१)
अनुकूलेषु धर्मेषु चिनोत्येनं ततस्ततः ।
आचार्य इति च ख्यातस्तेनासौ बलवृत्रहन् ॥१२-२२९-५२ (७४३९२)
नियतेनैव सद्भावस्तेन जन्मान्तरादिषु ।

कर्मसञ्चयतूलौघः क्षिप्यते ज्ञानवायुना ॥ १२-२२९-५३ (७४३९३)
एवं युक्तसमाचारः संसारविनिवर्तकः ।
अनुकूलवृत्तिं सततं छिनत्त्येव भृगुर्यथा ॥ १२-२२९-५४ (७४३९४)
येन चायं समापन्नं वैतृष्ण्यं नाधिगच्छति ।
अभ्यन्तरः स्मृतः शक्र तत्साम्यं परिवर्जयेत् ॥ १२-२२९-५५ (७४३९५)
प्रथमं तत्कृतेनैव कर्मणा परिमृच्छति ।
द्वितीयं स्वप्नयोगं च कर्मणा परिगच्छति ॥ १२-२२९-५६ (७४३९६)
एतैरक्षैः समापन्नः प्रत्यक्षोऽसौ समास्थितः ।
सुपुप्त्याख्यस्तुरीयोसौ न च ह्यावरणान्वितः ॥ १२-२२९-५७ (७४३९७)
लोकवृत्त्या तमीशानं यजञ्जुह्वन्यमी भवेत् ।
आत्मन्यायासयोगेन निष्क्रियं स परात्परम् ॥ १२-२२९-५८ (७४३९८)
आयामे तां विजानाति मायैषा परमात्मनः ।
प्रातिभासिकसामान्याद्बुद्धेर्या संविदात्मिका ॥ १२-२२९-५९ (७४३९९)
स्फुलिङ्गसत्त्वसदृशादग्निभावो यथा भवेत् ।
शिशूनामेवमज्ञानामात्मभावोऽन्यथा स्मृतः ॥ १२-२२९-६० (७४४००)
साध्येऽप्यवस्तुभूताख्ये मित्रामित्रादयः कुतः ।
तदभावे तु शोकाद्या न वर्तन्ते सुरेश्वर ॥ १२-२२९-६१ (७४४०१)
एवं बुध्यस्व भगवन्समबुद्धिं समन्वियात् ।
उपायमेतदाख्यातं मा वक्रं गच्छ देवप ॥ १२-२२९-६२ (७४४०२)
ज्ञानेन पश्यते कर्म ज्ञानिनां न प्रवर्तकम् ।
यावदारब्धमस्येह तावन्नैवोपशाम्यति ॥ १२-२२९-६३ (७४४०३)
तदन्ते तं प्रयात्येव न विद्वानिति मे मतिः ।
यदस्य वाचकं वक्ष्ये संस्मरे तद्भवेत्तदा ॥ १२-२२९-६४ (७४४०४)
तेनतेन च भावेन अपायं तत्र पश्यति ।
स्थानभेदेषु वागेषा तालुसंस्था यथा तथा ॥ १२-२२९-६५ (७४४०५)
तद्वदुद्धिगता ह्यर्था बुद्धिमात्मगतः सदा ॥ १२-२२९-६६ (७४४०६)
समस्तसंकल्पविशेषमुक्तं
परं पराणां परमं महात्मा ।
त्रय्यन्तविद्भिः परिगीयतेऽसौ
विष्णुर्विभुर्वास्ति गुणो न नित्यम् ॥ १२-२२९-६७ (७४४०७)
वर्णेषु लोकेषु विशेषणेषु
स वासुदेवो वसनान्महात्मा ।
गुणानुरूपं स च कर्मरूपं
ददाति सर्वस्य समस्तरूपम् ।
न संदृशे तिष्ठति रुपमस्य
न चक्षुषा पश्यति कश्चिदेनम् ॥ १२-२२९-६८ (७४४०८)

भक्त्या च धृत्या च समाहितात्मा
ज्ञानस्वरूपं परिपश्यतीह ॥ १२-२२९-६९ (७४४०९)
वदन्ति तन्मे भगवान्ददौ स
स एव शेषं मघवान्महात्मा ।
एवं ममोपायमवैहि शक्र
तस्माल्लोको नास्ति मह्यं सदैव ॥' १२-२२९-७० (७४४१०)
भीष्म उवाच। १२-२२९-७१क्ष् (६१५५)
इत्युक्तो दैत्यपतिना शक्रो विस्मयमागमत् ।
प्रीतिमांश्च तदा राजंस्तद्वाक्यं प्रत्यपूजयत् ॥ १२-२२९-७१ (७४४११)
स तदाभ्यर्च्य दैत्येन्द्रं त्रैलोक्यपतिरीश्वरः ।
असुरेन्द्रमुपामन्त्र्य जगाम स्वं निवेशनम् ॥ ॥ १२-२२९-७२ (७४४१२)

इति श्रीमन्महाभारते शन्तिपर्वणि मोक्षधर्मपर्वणि
एकोनत्रिंशदधिकद्विशततमोऽध्यायः ॥ २२९.।
Mahabharata - Shanti Parva - Chapter Footnotes

१२-२२९-२ श्रोतुं त्वत्तो वदस्व मे इति ट ।थ। पाठः ॥
१२-२२९-४ असक्तं फलेच्छारहितम् ।संयमे रतं इति
ट। थ। पाठः। समये रतं इति झ। पाठः ॥
१२-२२९-५ शून्यागारनिवासिनं इति झ ।पाठः ॥
१२-२२९-७ आत्मनि प्रतीचि ।श्रेयस्यानन्दरूपे। ज्ञाने चिन्मात्रे। धीरं
कुतर्कानभिभूतम्। सर्वज्ञं समदर्शनमिति झ। पाठः ॥
१२-२२९-११ भवति त्वयि ।अनपगान् स्थिरान् ॥
१२-२२९-१२ बालजनैः समारागद्वेषादिराहित्यात् ।मन्यमानो
जानन्नात्मज्ञानार्थं किं श्रेयः प्रशस्ततरं साधनम् ॥
१२-२२९-१५ तदुक्तमनुवर्णयन् इति ध ।पाठः ॥
१२-२२९-२१ नास्ति काचित्स्वका रतिः इति थ ।पाठः ॥
१२-२२९-२५ अनिष्टस्याप्यनिर्वृत्तिमिष्टनिर्वृत्तिमेव च इति ट
।थ। पाठः ॥
१२-२२९-३० कश्चिदोदनं वायसो ह्यदन्निति झ ।पाठः ॥
१२-२२९-३२ वुध्यमानस्य वै दर्पं मनो वा इति ध ।पाठः ॥
१२-२२९-३५ पश्यतो लोकविद्यया इति ध ।पाठः। लोकमव्ययं इति
झ। पाठः ॥
१२-२२९-३६ यो मामद्य ममायते इति झ ।पाठः ॥
१२-२२९-३७ न ज्ञाने कर्म विद्यते इति झ ।पाठः ॥
१२-२२९-३८ प्रज्ञा ज्ञानम् ।शान्तिस्तत्फलम् ॥

शन्तिपर्व-अध्यय२३०
॥ श्रीः ॥
१२.२३०. अध्यायः २३०

Mahabharata - Shanti Parva - Chapter Topics
इन्द्रबलिसंवादः ॥ १.। इन्द्रावमानितेन बलिना तंप्रति
गर्वभञ्जकवचनोपन्यासः ॥ २.।
Mahabharata - Shanti Parva - Chapter Text

१२-२३०-० (७४४६७)
युधिष्ठिर उवाच। १२-२३०-०क्ष् (६१६६)
यया बुद्ध्या महीपालो भ्रष्टश्रीर्विचरेन्महीम् ।
कालदण्डविनिष्पिष्टस्तन्मे ब्रूहि पितामह ॥ १२-२३०-१ (७४४६८)
भीष्म उवाच। १२-२३०-२क्ष् (६१६७)
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
वासवस्य च संवादं बलेर्वैरोचनस्य च ॥ १२-२३०-२ (७४४६९)
पितामहमुपागम्य प्रणिपत्य कृताञ्जलिः ।
सर्वानेवासुराञ्जित्वा बलिं पप्रच्छ वासवः ॥ १२-२३०-३ (७४४७०)
यस्य स्म ददतो वित्तं न कदाचन हीयते ।
तं बलिं नाधिगच्छामि ब्रह्मन्नाचक्ष्व मे बलिम् ॥ १२-२३०-४ (७४४७१)
स वायुर्वरुणश्चैव स रविः स च चन्द्रमाः ।
सोऽग्निस्तपति भूतानि जलं च स भवत्युत ॥ १२-२३०-५ (७४४७२)
तं बलिं नाधिगच्छामि ब्रह्मन्नाचक्ष्व मे बलिम् ।
स एव ह्यस्तमयते स स्म विद्योतते दिशः ॥ १२-२३०-६ (७४४७३)
स वर्षति स्म वर्षाणि यथाकालमतन्द्रितः ।
तं बलिं नाधिगच्छामि ब्रह्मन्नाचक्ष्व मे बलिम् ॥ १२-२३०-७ (७४४७४)
ब्रह्मोवाच। १२-२३०-८क्ष् (६१६८)
नैतत्ते साधु मघवन्यदेनमनुपृच्छसि ।
पृष्टस्तु नानृतं ब्रूयात्तस्माद्वक्ष्यामि ते बलिम् ॥ १२-२३०-८ (७४४७५)
उष्ट्रेषु यदि वा गोषु खरेष्वश्वेषु वा पुनः ।
वरिष्ठो भविता जन्तुः शून्यागारे शचीपते ॥ १२-२३०-९ (७४४७६)
शक्र उवाच। १२-२३०-१०क्ष् (६१६९)
यदि स्म बलिना ब्रह्मञ्शून्यागारे समेयिवान् ।
हन्यामेनं न वा हन्यां तद्ब्रह्मन्ननुशाधि माम् ॥ १२-२३०-१० (७४४७७)

ब्रह्मोवाच। १२-२३०-११क्ष् (६१७०)
मा स्म शक्र बलिं हिंसीर्न बलिर्वधमर्हति ।
न्यायस्तु शक्र प्रष्टव्यस्त्वया वासव काम्यया ॥ १२-२३०-११ (७४४७८)
भीष्म उवाच। १२-२३०-१२क्ष् (६१७१)
एवमुक्तो भगवता महेन्द्रः पृथिवीं तदा ।
चचारैरावतस्कन्धमधिरुह्य श्रिया वृतः ॥ १२-२३०-१२ (७४४७९)
ततो ददर्श स बलिं खरवेषेण संवृतम् ।
यथाख्यातं भगवता शून्यागारकृतालयम् ॥ १२-२३०-१३ (७४४८०)
शक्र उवाच। १२-२३०-१४क्ष् (६१७२)
खरयोनिमनुप्राप्तस्तुपभक्षोऽसि दानव ।
इदं ते योनिरसमा शोचस्याहो न शोचसि ॥ १२-२३०-१४ (७४४८१)
अदृष्टं वत पश्यामि द्विषतां वशमागतम् ।
श्रिया विहीनं मित्रैश्च भ्रष्टैश्वर्यपराक्रमम् ॥ १२-२३०-१५ (७४४८२)
यत्तद्यानसहस्रैस्त्वं ज्ञातिभिः परिवारितः ।
लोकान्प्रतापयन्सर्वान्यास्यस्मानवितर्कयन् ॥ १२-२३०-१६ (७४४८३)
त्वन्मुखाश्चैव दैतेय व्यतिष्ठंस्तव शासने ।
अकृष्टपच्या पृथिवी तवैश्वर्ये बभूव ह ॥ १२-२३०-१७ (७४४८४)
इदं च तेऽद्य व्यसनं शोचस्याहो न शोचसि ।
यदाऽतिष्ठः समुद्रस्य पूर्वकूले विलेलिखन् ॥ १२-२३०-१८ (७४४८५)
ज्ञातिभ्यो विभजन्वित्तं तदासीत्ते मनः कथम् ।
यत्ते सहस्रसमिता ननृतुर्देवसोषितः ॥ १२-२३०-१९ (७४४८६)
बहूनि वर्षपूगानि विहारे दीप्यतः श्रिया ।
सर्वाः पुष्करमालिन्यः सर्वाः काञ्चनसप्रभाः ॥ १२-२३०-२० (७४४८७)
कथमद्य तदा चैव मनस्ते दानवेश्वर ।
छत्रं तवासीत्सुमहत्सौवर्णं रत्नभूषितम् ॥ १२-२३०-२१ (७४४८८)
ननृतुस्तत्र गन्धर्वाः षट्सहस्राणि सप्तचा ।
यूपस्तवासीत्सुमहान्यजतः सर्वकाञ्चनः ॥ १२-२३०-२२ (७४४८९)
यत्राददः सहस्राणि अयुतानां गवां दश ।
अनन्तरं सहस्रेण तदाऽऽसीद्दैत्या का मतिः ॥ १२-२३०-२३ (७४४९०)
यदा च पृथिवीं सर्वां यजमानोऽनुपर्यगाः ।
शम्याक्षेपेण विधिना तदाऽऽसीत्किंतु ते हृदि ॥ १२-२३०-२४ (७४४९१)
न ते पश्यामि भृङ्गारं न च्छत्रं व्यजनं न च ।
ब्रह्मदत्तां च ते मालां न पश्याम्यसुराधिप ॥ १२-२३०-२५ (७४४९२)
गभीष्म उवाच। १२-२३०-२६क्ष् (६१७३)
ततः प्रहस्य स बलिर्वासवेन समीरितम् ।
निशम्य मानगम्भीरं सुरराजमथाब्रवीत् ॥ १२-२३०-२६ (७४४९३)

अहो हि तव बालिश्यमिह देवगणाधिप ।
अयुक्तं देवराजस्य तव कष्टमिदं वचः ॥' १२-२३०-२७ (७४४९४)
न त्वं पश्यसि भृङ्गारं न च्छत्रं व्यजनं न च ।
ब्रह्मदत्तां च मे मालां न त्वं द्रक्ष्यसि वासव ॥ १२-२३०-२८ (७४४९५)
गुहायां निहितानि त्वं मम रत्नानि पृच्छसि ।
यदा मे भविता कालस्तदा त्वं तानि द्रक्ष्यसि ॥ १२-२३०-२९ (७४४९६)
ग्न जानीषे भवान्सिद्धिं शुभाङ्गस्वरूपरूपिणीम् ।
कालेन भविता सर्वो नात्र गच्छति वासव ॥' १२-२३०-३० (७४४९७)
न त्वेतदनुरूपं ते यशसो वा कुलस्य च ।
समृद्धार्थोऽसमृद्धार्थं यन्मां कत्थितुमिच्छसि ॥ १२-२३०-३१ (७४४९८)
न हि दुःखेषु शोचन्ते न प्रहृष्यन्ति चर्द्धिषु ।
कृतप्रज्ञाः ज्ञानतृप्ताः क्षान्ताः सन्तो मनीषिणः ॥ १२-२३०-३२ (७४४९९)
त्वं तु प्राकृतया बुद्ध्या पुरंदर विकत्थसे ।
यदाऽहमिव भावी स्यास्तदा नैवं वदिष्यसि ॥ १२-२३०-३३ (७४५००)
गऐश्वर्यमदमत्तो मां स त्वं किंचिन्न बुद्ध्यसे ।
राज्याद्विनिपतानेन सोहं न त्वपराजितः ॥' ॥ १२-२३०-३४ (७४५०१)

इति श्रीमन्महाभारते शन्तिपर्वणि मोश्रधर्मपर्वणि
त्रिंशदधिकद्विशततमोऽध्यायः ॥ २३०.।
Mahabharata - Shanti Parva - Chapter Footnotes

१२-२३०-१ भ्रष्टश्रीर्विन्दते महीम् इति ध ।पाठः ॥
१२-२३०-४ स्ववीर्यख्यापनाय बलिं स्तौति यस्येत्यादिना ॥
१२-२३०-९ गोषु वृषभेषु ।शून्यागारप्रतिश्रयः इति
ट।थ।ध।पाठः ॥
१२-२३०-१५ भ्रष्टवीर्यपराक्रमम् इति झ ।पाठः ॥
१२-२३०-१७ अफुष्टयच्या कृषणंजिना धान्यप्रसृः ॥
१२-२३०-१८ विलेलिहन् इति ध ।पाठः।तत्र तालुग्रस्तं
जगाकुर्वशित्यर्थः ॥
१२-२३०-२४ सूक्ष्माग्रः स्थूलमूलः षट्त्रिंशदङ्गुलो
दण्डः शम्या सा बलवता क्षिप्ता भातहूरे पतेतावदेकं
देवप्रजनम् ।एवं सर्वापि पृथिवी शम्याप्रक्षेपविभेदा।तव
देवगजनानामपर्याप्ताभूदित्यर्थः।पर्यगाः परिहृत्य गतवान् ॥
१२-२३०-२५ भृङ्गारः सौवणं उदपात्रविशेषः ॥
१२-२३०-३५ विनिपतानेन विनिपतनेन ॥

---

शन्तिपर्व-अध्यय२३१

॥ श्रीः ॥
१२.२३१. अध्यायः २३१

Mahabharata - Shanti Parva - Chapter Topics
भीष्मेण युधिष्ठिरंप्रति सर्यस्यापि कालनियामकेश्वरनियम्यत्वप्रतिपादकशक्रबलिसंवादानुवादः ॥ १.।
Mahabharata - Shanti Parva - Chapter Text

१२-२३१-० (७४५०२)
भीष्म उवाच। १२-२३१-०क्ष् (६१७४)
पुनेरव तु सं शक्रः अहसन्निदमब्रवीत् ।
निश्वसन्तं यथा गायं प्रत्याहाराय भारत ॥ १२-२३१-१ (७४५०३)
यथज्ञानसहस्रेण ज्ञातिभिः परिवारितः ।
लोकान्यतापयन्तर्वान्यास्यस्मानवितर्कयन् ॥ १२-२३१-२ (७४५०४)
दृष्ट्वा सुकृष्णां चेमागयस्थामात्मनो बले ।
ज्ञातिमित्रपरित्यक्तः शोचस्याहो न शोचसि ॥ १२-२३१-३ (७४५०५)
प्रीतिं प्राप्यातुलां पूर्वं लोकांश्चात्मवशे स्थितान् ।
विनिपातमिमं चाद्य शोचस्याहो न शोचसि ॥ १२-२३१-४ (७४५०६)
बलिरुवाच। १२-२३१-५क्ष् (६१७५)
ग्गर्वं हित्वा तथा मानं देवराज शृणुष्व मे ।
मया च त्वाऽनुसद्भावं पूर्वमाचरितं महत् ॥ १२-२३१-५ (७४५०७)
अवश्यकालपर्यायमात्मनः परिवर्तनम् ।
अविदँल्लोकमाहात्म्यं-------॥' १२-२३१-६ (७४५०८)
अनित्यमुपलक्ष्येह कालपर्यायमात्मनः ।
तस्माच्छक्र न शोचामि सर्वं ह्येवेदमन्तवत् ॥ १२-२३१-७ (७४५०९)
अन्तवन्त इमे देहा भूतानां च सुराधिप ।
तेन शक्र न शोचामि नापराधादिदं मम ॥ १२-२३१-८ (७४५१०)
जीवितं च शरीरं च जात्या वै सह जायते ।
उभे सह विवर्धेते उभे सह विनश्यतः ॥ १२-२३१-९ (७४५११)
न हीदृशमहंभावमवशः प्राप्य केवलम् ।
यदेवमभिजानामि का व्यथा मे विजानतः ॥ १२-२३१-१० (७४५१२)
भूतानां निधनं निष्ठा स्रोतसामिव सागरः ।
नैतत्सम्यग्विजानन्तो नरा मुह्यन्ति वज्रधृत् ॥ १२-२३१-११ (७४५१३)
ये त्वेवं नाभिजानन्ति रजोमोहपरायणाः ।
ते कृच्छ्रं प्राप्य सीदन्ति बुद्धिर्येषां प्रणश्यति ॥ १२-२३१-१२ (७४५१४)
बुद्धिलाभात्तु पुरुषः सर्वं तुदति किल्विषम् ।

विपाप्मा लभते सत्वं सत्वस्थः संप्रसीदति ॥ १२-२३१-१३ (७४५१५)
ततस्तु ये निवर्तन्ते जायन्ते वा पुनः पुनः ।
कृपणाः परितप्यन्ते तैरर्थैरभिचोदिताः ॥ १२-२३१-१४ (७४५१६)
अर्थसिद्धिमनर्थं च जीवितं मरणं तथा ।
सुखं दुःखं फलं चैव न द्वेष्मि न च कामये ॥ १२-२३१-१५ (७४५१७)
हतं हन्ति हतो ह्येव यो नरो हन्ति कंचन ।
उभौ तौ न विजानीतो यश्च हन्ति हतश्च यः ॥ १२-२३१-१६ (७४५१८)
हत्वा जित्वा च मघवन्यः कश्चित्पुरुषायते ।
अकर्ता ह्येव भवति कर्ता ह्येव करोति तत् ॥ १२-२३१-१७ (७४५१९)
को हि लोकस्य कुरुते विनाशप्रभवावुभौ ।
कृतं हि तत्कृतेनैव कर्ता तस्यापि चापरः ॥ १२-२३१-१८ (७४५२०)
पृथिवी ज्योतिराकाशमापो वायुश्च पञ्चमः ।
एतद्योनीनि भूतानि तत्र का परिदेवना ॥ १२-२३१-१९ (७४५२१)
महाविद्योऽल्पविद्यश्च बलवान्दुर्बलश्च यः ।
दर्शनीयो विरूपश्च सुभगो दुर्भगश्च यः ॥ १२-२३१-२० (७४५२२)
सर्वं कालः समादत्ते गम्भीरः स्वेन तेजसा ।
तस्मिन्कालवशं प्राप्ते का व्यथा मे विजानतः ॥ १२-२३१-२१ (७४५२३)
दग्धमेवानुदहते हतमेवानुहन्यते ।
नश्यते नष्टमेवाग्रे लब्धव्यं लभते नरः ॥ १२-२३१-२२ (७४५२४)
नास्य द्वीपः कुतः पारो नावारः संप्रदृश्यते ।
नान्तमस्य प्रपश्यामि विधेर्दिव्यस्य चिन्तयन् ॥ १२-२३१-२३ (७४५२५)
यदि मे पश्यतः कालो भूतानि न विनाशयेत् ।
स्यान्मे हर्षश्च दर्पश्च क्रोधश्चैव शचीपते ॥ १२-२३१-२४ (७४५२६)
तुषभक्षं तु मां ज्ञात्वा प्रविविक्तजने गृहे ।
बिभ्रतं गार्दभं रूपमागत्य परिगर्हसे ॥ १२-२३१-२५ (७४५२७)
इच्छन्नहं विकुर्यां हि रूपाणि बहुधाऽऽत्मनः ।
विभीषणानि यानीक्ष्य पलायेथास्त्वमेव मे ॥ १२-२३१-२६ (७४५२८)
कालः सर्वं समादत्ते कालः सर्वं प्रयच्छति ।
कालेन विहितं सर्वं मा कृथाः शक्र पौरुषम् ॥ १२-२३१-२७ (७४५२९)
पुरा सर्वं प्रव्यथितं मयि क्रुद्धे पुरंदर ।
गविद्रवन्ति त्वया सार्धं सर्व एव दिबौकसः ॥' १२-२३१-२८ (७४५३०)
अवैमि त्वस्य लोकस्य कर्म शक्र सनातनम् ।
त्वमप्येवमवेक्षस्व माऽऽत्मना विस्मगं गमः ॥ १२-२३१-२९ (७४५३१)
प्रभवश्च प्रभावश्च नात्मसंस्थः कदाचन ।
कौमारमेव ते चित्तं तथैवाद्य यथा पुरा ।
समवेक्षस्व मघवन्बुद्धिं विन्दस्व नैष्ठिकीम् ॥ १२-२३१-३० (७४५३२)

देवा मनुष्याः पितरो गन्धर्वोरगराक्षसाः ।
आसन्सर्वे मम वशे तत्सर्वं वेत्थ वासव ॥ १२-२३१-३१ (७४५३३)
नमस्तस्यै दिशेऽप्यस्तु यस्यां वैरोचनो बलिः ।
इति मामभ्यपद्यन्त बुद्धिमात्सर्यमोहिताः ॥ १२-२३१-३२ (७४५३४)
नाहं तदनुशोचामि नात्मभ्रंशं शचीपते ।
एवं मे निश्चिता बुद्धिः शास्तुस्तिष्ठाम्यहं वशे ॥ १२-२३१-३३ (७४५३५)
दृश्यते हि कुले जातो दर्शनीयः प्रतापवान् ।
दुःखं जीवन्सहामात्यो भवितव्यं हि तत्तथा ॥ १२-२३१-३४ (७४५३६)
दौष्कुलेयस्तथा मूढो दुर्जातः शक्र दृश्यते ।
सुखं जीवन्सहामात्यो भवितव्यं हि तत्तथा ॥ १२-२३१-३५ (७४५३७)
कल्याणी रूपसंपन्ना दुर्भगा शक्र दृश्यते ।
अलक्षणा विरूपा च सुभगा दृश्यते परा ॥ १२-२३१-३६ (७४५३८)
नैतदस्मत्कृतं शक्र नैतच्छक्र त्वया कृतम् ।
यत्तमेवं गतो वज्रिन्यच्चाप्येवं गता वयम् ॥ १२-२३१-३७ (७४५३९)
न कर्म तव नान्येषां कुतो मम शतक्रतो ।
ऋद्धिर्वाऽप्यथवा नर्द्धिः पर्यायकृतमेव तत् ॥ १२-२३१-३८ (७४५४०)
पश्यामि त्वां विराजन्तं देवराजमवस्थितम् ।
श्रीमन्तं द्युतिमन्तं च गर्जमानं ममोपरि ॥ १२-२३१-३९ (७४५४१)
एवं नैव न चेत्कालो मामाक्रम्य स्थितो भवेत् ।
पातयेयमहं त्वाऽद्य सवज्रमपि मुष्टिना ॥ १२-२३१-४० (७४५४२)
न तु विक्रमकालोऽयं शान्तिकालोऽयमागतः ।
कालः स्थापयते सर्वं कालः पचति वै तथा ॥ १२-२३१-४१ (७४५४३)
मां चेदभ्यागतः कालो दानवेश्वरमूर्जितम् ।
गर्जन्तं प्रतपन्तं च कमन्यं नागमिष्यति ॥ १२-२३१-४२ (७४५४४)
द्वादशानां तु भवतामादित्यानां महात्मनाम् ।
तेजांस्येकेन सर्वेषां देवराज धृतानि मे ॥ १२-२३१-४३ (७४५४५)
अहमेवोद्वहाम्यापो विसृजामि च वासव ।
तपामि चैव त्रैलोक्यं विद्योताम्यहमेव च ॥ १२-२३१-४४ (७४५४६)
संरक्षामि विलुम्पामि ददाम्यहमथाददे ।
संयच्छामि नियच्छामि लोकेषु प्रभुरीश्वरः ॥ १२-२३१-४५ (७४५४७)
तदद्य विनिवृत्तं मे प्रभुत्वममराधिप ।
कालसैन्यावगाढस्य सर्वं न प्रतिभाति मे ॥ १२-२३१-४६ (७४५४८)
नाहं कर्ता न चैव त्वं नान्यः कर्ता शचीपते ।
पर्यायेण हि भुज्यन्ते लोकाः शक्र यदृच्छया ॥ १२-२३१-४७ (७४५४९)
मासमासार्धवेश्मानमहोरात्राभिसंवृतम् ।
ऋतुद्वारं वायुमुखमायुर्वेदविदो जनाः ॥ १२-२३१-४८ (७४५५०)

आहुः सर्वमिदं चिन्त्यं जनाः केचिन्मनीषया ।
ग्अनित्यपञ्चवर्षाणि षष्ठो दृश्यति देहिनाम् ॥' १२-२३१-४९ (७४५५१)
अस्याः पञ्चैव चिन्तायाः पर्येष्यामि च पञ्चधा ।
ग्ततस्तानि न पश्यामि काले तमपि वृत्रहन् ॥' १२-२३१-५० (७४५५२)
गम्भीरं गहनं ब्रह्म महत्तोयार्णवं यथा ।
अनादिनिधनं चाहुरक्षरं क्षरमेव च ॥ १२-२३१-५१ (७४५५३)
सत्त्वेषु लिङ्गमाविश्य निर्लिङ्गमपि तत्स्वयम् ।
मन्यन्ते ध्रुवमेवैनं ये जनास्तत्त्वदर्शिनः ॥ १२-२३१-५२ (७४५५४)
ग्यमिन्द्रियाणि सर्वाणि नानुपश्यन्ति पञ्चधा ।
तं कालमिति जानीहि यस्य सर्वमिदं वशे ॥' १२-२३१-५३ (७४५५५)
भूतानां तु विषर्यासं कुरुते भगवानिति ।
न ह्येतावद्भवेद्ग्राम्यं न यस्मात्प्रभवेत्पुनः ॥ १२-२३१-५४ (७४५५६)
गतिं हि सर्वभूतानामगत्वा क्व गमिष्यति ।
यो धावता न हातव्यस्तिष्ठन्नपि न हीयते ॥ १२-२३१-५५ (७४५५७)
तमिन्द्रियाणि सर्वाणि नानुपश्यन्ति पञ्चधा ।
आहुश्चैनं केचिदग्निं केचिदाहुः प्रजापतिम् ॥ १२-२३१-५६ (७४५५८)
ऋतून्मासार्धमासांश्च दिवसांश्च क्षणांस्तथा ।
पूर्वाह्णमपराह्णं च मध्याह्नमपि चापरे ॥ १२-२३१-५७ (७४५५९)
मुहूर्तमपि चैवाहुरेकं सन्तमनेकधा ।
तं कालमिति जानीहि यस्य सर्वमिदं वशे ॥ १२-२३१-५८ (७४५६०)
बहूनीन्द्रसहस्राणि समतीतानि वासव ।
बलवीर्योपपन्नानि यथैव त्वं शचीपते ॥ १२-२३१-५९ (७४५६१)
त्वामप्यतिबलं शक्र देवराजं बलोत्कटम् ।
प्राप्ते काले महावीर्यः कालः संशमयिष्यति ॥ १२-२३१-६० (७४५६२)
य इदं सर्वमादत्ते तस्माच्छक्र स्थिरो भव ।
मया त्वया च पूर्वैश्च न स शक्योऽतिवर्तितुम् ॥ १२-२३१-६१ (७४५६३)
यामेतां प्राप्य जानीषे राज्यश्रियमनुत्तमाम् ।
स्थिता मयीति तन्मिथ्या नैषा ह्येकत्र तिष्ठति ॥ १२-२३१-६२ (७४५६४)
स्थिता हीन्द्रसहस्रेषु त्वद्विशिष्टतमेष्वियम् ।
मां च लोला परित्यज्य त्वामगाद्विबुधाधिप ॥ १२-२३१-६३ (७४५६५)
मैवं शक्र पुनः कार्षीः शान्तो भवितुमर्हसि ।
त्वामप्येवंविधं ज्ञात्वा क्षिप्रमन्यं गमिष्यति ।
ग्कालेन चोदिता शक्र मा ते गर्वः शतक्रतो ॥ १२-२३१-६४ (७४५६६)
क्षमस्व कालयोगं तमागतं विद्धि देवप ।
निर्लज्जश्चैव कस्मात्त्वं देवराज विकत्थसे ॥ १२-२३१-६५ (७४५६७)
सर्वासुराणामधिपः सर्वदेवभयंकरः ।

जितवान्ब्रह्मणो लोकं को विद्यादागतं गतिम् ॥' ॥ १२-२३१-६६ (७४५६८)

इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि
एकत्रिंशदधिकद्विशततमोऽध्यायः ॥ २३१.।
Mahabharata - Shanti Parva - Chapter Footnotes

१२-२३१-१ यथा नागं प्रव्याहाराय इति ध । पाठः ॥
१२-२३१-११ निष्ठा परागतिः ॥
१२-२३१-१९ मनोऽपि पाञ्चभौतिकमित्यर्थः । भूतानि
स्थूलसूक्ष्मशरीराणि ॥
१२-२३१-२२ दग्धं कालात्मनेश्वरेणाऽनुदहते वह्न्यादिः । एवमग्रेऽपि ॥
१२-२३१-२६ ईक्ष्य दृष्ट्वा ॥
१२-२३१-२९ धर्मं वृद्धिहासवत्त्वम् ॥
१२-२३१-३० प्रभव ऐश्वर्यम् । प्रभावस्तदाविष्करणाम्। नात्मसंस्थो
नात्माधीनः। कौमारं बालस्येवाज्ञं तव चित्तम् ॥
१२-२३१-३३ शास्तुरीश्वरस्य ॥
१२-२३१-३६ सुभगा भाग्यवती ॥
१२-२३१-३८ नर्द्धिः ऋद्ध्यभावः । पर्यायः कालक्रमस्तेन कृतम् ॥
१२-२३१-४० एवं मम गर्दभत्वादिकं नैव स्यादिति शेषः
। नचेदित्यादि तत्रोपपत्तिः ॥
१२-२३१-४४ उद्वहासि मेधो भूत्वा सूर्यो भूत्वा शोषयामीति वार्थः
। आपः अपः ॥
१२-२३१-४६ कालसैन्यं मासार्धमासादि ॥
१२-२३१-४७ पर्यायेण कालक्रमेण भुज्यन्ते पाल्यन्ते संहियन्ते वा ॥

---

शन्तिपर्व-अध्यय२३२
॥ श्रीः ॥
१२.२३२. अध्यायः २३२

Mahabharata - Shanti Parva - Chapter Topics
बलिशरीरान्निर्गन्त्या श्रिया शक्रं प्रति
स्वनिर्गमनकारणाभिधानपूर्वकं ततः स्वस्य स्थानचतुष्टयवरणम्
॥ १.। इन्द्रबलिसंवादश्च ॥ २.।
Mahabharata - Shanti Parva - Chapter Text

१२-२३२-० (७४५६९)

भीष्म उवाच। १२-२३२-०क्ष् (६१७६)
शतक्रतुरथापश्यद्बलेर्दीप्तां महात्मनः ।
स्वरूपिणीं शरीराद्धि निष्क्रामन्तीं तदा श्रियम् ॥ १२-२३२-१ (७४५७०)
तां दृष्ट्वा प्रभया दीप्तां भगवान्पाककशासनः ।
विस्मयोत्फुल्लनयनो बलिं पप्रच्छ वासवः ॥ १२-२३२-२ (७४५७१)
बले केयमपक्रान्ता रोचमाना शिखण्डिनी ।
त्वत्तः स्थिता सकेयूरा दीप्यमाना स्वतेजसा ॥ १२-२३२-३ (७४५७२)
बलिरुवाच। १२-२३२-४क्ष् (६१७७)
न हीमामासुरीं वेद्मि न दैवीं च न मानुषीम् ।
त्वमेनां पृच्छ वा मा वा यथेष्टं कुरु वासव ॥ १२-२३२-४ (७४५७३)
शक्र उवाच। १२-२३२-५क्ष् (६१७८)
का त्वं बलेरपक्रान्ता रोचमाना शिखण्डिनी ।
अजानतो ममाचक्ष्व नामधेयं शुचिस्मिते ॥ १२-२३२-५ (७४५७४)
का त्वं तिष्ठसि मामेवं दीप्यमाना स्वतेजसा ।
हित्वा दैत्यवरं सुभ्रु तन्ममाचक्ष्व पृच्छतः ॥ १२-२३२-६ (७४५७५)
श्रीरुवाच। १२-२३२-७क्ष् (६१७९)
न मां विरोचनो वेद नायं वैरोचनो बलिः ।
आहुर्मां दुःसहेत्येवं विधित्सेति च मां विदुः ॥ १२-२३२-७ (७४५७६)
भूतिर्लक्ष्मीति मामाहुः श्रीरित्येव च वासव ।
त्वं मां शक्र न जानीषे सर्वे देवा न मां विदुः ॥ १२-२३२-८ (७४५७७)
शक्र उवाच। १२-२३२-९क्ष् (६१८०)
किमिदं त्वं मम कृते उताहो बलिनः कृते ।
दुःसहे विजहास्येनं चिरसंवासिनी सती ॥ १२-२३२-९ (७४५७८)
श्रीरुवाच। १२-२३२-१०क्ष् (६१८१)
नो धाता न विधाता मां विदधाति कथंचन ।
कालस्तु शक्र पर्यागान्मैवं शक्रावमन्यथाः ॥ १२-२३२-१० (७४५७९)
शक्र उवाच। १२-२३२-११क्ष् (६१८२)
कथं त्वया बलिस्त्यक्तः किमर्थं वा शिखण्डिनि ।
कथं च मां न जह्यास्त्वं तन्मे ब्रूहि शुचिस्मिते ॥ १२-२३२-११ (७४५८०)
श्रीरुवाच। १२-२३२-१२क्ष् (६१८३)
सत्ये स्थिताऽस्मि दाने च व्रते तपसि चैव हि ।
पराक्रमे च धर्मे च पराचीनस्ततो बलिः ॥ १२-२३२-१२ (७४५८१)
ब्रह्मण्योऽयं पुरा भूत्वा सत्यवादी जितेन्द्रियः ।
अभ्यसूयन्ब्राह्मणान्वै उच्छिष्टश्चास्पृशद्घृतम् ॥ १२-२३२-१३ (७४५८२)
यज्ञशीलः सदा भूत्वा मामेव यजते स्वयम् ।
ततः प्रहाय मूढात्मा कालेनोपनिपीडितः ॥ १२-२३२-१४ (७४५८३)

अपक्रान्ता ततः शक्र त्वयि वत्स्यामि वासव ।
अप्रमत्तेन धार्याऽस्मि तपसा विक्रमेण च ॥ १२-२३२-१५ (७४५८४)
शक्र उवाच। १२-२३२-१६क्ष् (६१८४)
कोऽस्ति देवमनुष्येषु सर्वभूतेषु वा पुमान् ।
यस्त्वामेको विषहितुं शक्नुयात्कमलालये ॥ १२-२३२-१६ (७४५८५)
श्रीरुवाच। १२-२३२-१७क्ष् (६१८५)
नैव देवो न गन्धर्वो नासुरो नं च न्राक्षसः ।
यो मामेको विषहितुं शक्तः कश्चित्पुरंदर ॥ १२-२३२-१७ (७४५८६)
शक्र उवाच। १२-२३२-१८क्ष् (६१८६)
तिष्ठेथा मयि नित्यं त्वं यथा तद्ब्रूहि मे शुभे ।
तत्करिष्यामि ते वाक्यमृतं तद्वक्तुमर्हसि ॥ १२-२३२-१८ (७४५८७)
शक्र उवाच। १२-२३२-१९क्ष् (६१८७)
स्थास्यामि नित्यं देवेन्द्र यथा त्वयि निबोध तत् ।
विधिना वेददृष्टेन चतुर्धा विभजस्व माम् ॥ १२-२३२-१९ (७४५८८)
शक्र उवाच। १२-२३२-२०क्ष् (६१८८)
अहं वै त्वां निधास्यामि यथाशक्ति यथाबलम् ।
न तु मेऽतिक्रमः स्याद्वै सदा लक्ष्मि तवान्तिके ॥ १२-२३२-२० (७४५८९)
भूमिरेव मनुष्येषु धारिणी भूतभाविनी ।
सा ते पादं तितिक्षेत समर्था हीति मे मतिः ॥ १२-२३२-२१ (७४५९०)
श्रीरुवाच। १२-२३२-२२क्ष् (६१८९)
एष मे निहितः पादो योऽयं भूमौ प्रतिष्ठितः ।
द्वितीयं शक्र पादं मे तस्मात्सुनिहितं कुरु ॥ १२-२३२-२२ (७४५९१)
शक्र उवाच। १२-२३२-२३क्ष् (६१९०)
आप एव मनुष्येषु द्रवन्त्यः परिधारणे ।
तास्ते पादं तितिक्षन्तामलमापस्तितिक्षितुम् ॥ १२-२३२-२३ (७४५९२)
श्रीरुवाच। १२-२३२-२४क्ष् (६१९१)
एष मे निहितः पादो योऽयमप्सु प्रतिष्ठितः ।
तृतीयं शक्र पादं मे तस्मात्सुनिहितं कुरु ॥ १२-२३२-२४ (७४५९३)
शक्र उवाच। १२-२३२-२५क्ष् (६१९२)
यस्मिन्वेदाश्च यज्ञाश्च यस्मिन्देवाः प्रतिष्ठिताः ।
तृतीयं पादमग्निस्ते सुधृतं धारयिष्यति ॥ १२-२३२-२५ (७४५९४)
श्रीरुवाच। १२-२३२-२६क्ष् (६१९३)
एष मे निहितः पादो योऽयमग्नौ प्रतिष्ठितः ।
चतुर्थं शक्र पादं मे तस्मात्सुनिहितं कुरु ॥ १२-२३२-२६ (७४५९५)
शक्र उवाच। १२-२३२-२७क्ष् (६१९४)
ये वै सन्तो मनुष्येषु ब्रह्मण्याः सत्यवादिनः ।

तेते पादं तितिक्षन्तामलं सन्तस्तितिक्षितुम् ॥१२-२३२-२७ (७४५९६)
श्रीरुवाच।१२-२३२-२८क्ष् (६१९५)
एष मे निहितः पादो योऽयं सत्सु प्रतिष्ठितः ।
एवं हि निहितां शक्र भूतेषु परिधत्स्व माम् ॥१२-२३२-२८ (७४५९७)
शक्र उवाच।१२-२३२-२९क्ष् (६१९६)
ग्भूमिशुद्धिं ततः कृत्वा अद्भिः संतर्पयन्ति ये ।
भूतानि च यजन्त्यग्नौ तेषां त्वमनपायिनी ॥१२-२३२-२९ (७४५९८)
ये क्रियाभिः सुरक्ताभिर्हेतुयुक्ताः समाहिताः ।
ज्ञानवन्तो विवत्सायां लब्धा माद्यन्ति योगिनः ॥' १२-२३२-३० (७४५९९)
भूतानामिह यो वै त्वां मया विनिहितां सतीम् ।
उपहन्यात्स मे द्वेष्यस्तथा शृण्वन्तु मे वचः ॥१२-२३२-३१ (७४६००)
ग्भीष्म उवाच।१२-२३२-३२क्ष् (६१९७)
तथेति चोक्त्वा सा भ्रष्टा सर्वलोकनमस्कृता ।
वासवं पालयामास सा देवी कमलालया ॥' १२-२३२-३२ (७४६०१)
ततस्त्यक्तः श्रिया राजा दैत्यानां बलिरब्रवीत् ॥ १२-२३२-३३ (७४६०२)
यावत्पुरस्तात्प्रतपेत्तावद्वै दक्षिणां दिशम् ।
पश्चिमां तावदेवापि तथोदीचीं दिवाकरः ॥१२-२३२-३४ (७४६०३)
तथा मध्यंदिने सूर्यो नास्तमेति यदा तदा ।
पुनर्देवासुरं युद्धं भावि जेताऽस्मि वस्तदा ॥१२-२३२-३५ (७४६०४)
सर्वलोकान्यदाऽऽदित्यो मध्यस्थस्तापयिष्यति ।
तदा देवासुरे युद्धे जेताऽहं त्वां शतक्रतो ॥१२-२३२-३६ (७४६०५)
शक्र उवाच।१२-२३२-३७क्ष् (६१९८)
ब्रह्मणाऽस्मि समादिष्टो न हन्तव्यो भवानिति ।
तेन तेऽहं बले वज्रं न विमुञ्जामि मूर्धनि ॥१२-२३२-३७ (७४६०६)
यथेष्टं गच्छ दैत्येन्द्र स्वस्ति तेऽस्तु महासुर ॥ १२-२३२-३८ (७४६०७)
आदित्यो नैव तपिता कदाचिन्मध्यतः स्थितः ।
स्थापितो ह्यस्य समयः पूर्वमेव स्वयंभुवा ॥१२-२३२-३९ (७४६०८)
अजस्रं परियात्येष सत्येनावतपन्प्रजाः ।
अयनं तस्य षण्मासा उत्तरं दक्षिणं तथा ।
येन संयाति लोकेषु शीतोष्णे विसृजन्रविः ॥ १२-२३२-४० (७४६०९)
भीष्म उवाच।१२-२३२-४१क्ष् (६१९९)
एवमुक्तस्तु दैत्येन्द्रो बलिरिन्द्रेण भारत ।
जगाम दक्षिणामाशामुदीचीं तु पुरंदरः ॥१२-२३२-४१ (७४६१०)
इत्येतद्बलिना गीतमनहंकारसंज्ञितम् ।
वाक्यं श्रुत्वा सहस्राक्षः स्वमेवारुरुहे तदा ॥ ॥१२-२३२-४२ (७४६११)

इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि
द्वात्रिंशदधिकद्विशततमोऽध्यायः ॥ २३२.।
Mahabharata - Shanti Parva - Chapter Footnotes

१२-२३२-३१ वित्तं तीर्थादिपुण्यं यज्ञादिधर्मो विद्या
चेति श्रियश्चत्वारः पादा भूमौ जलेऽग्नौ विद्वत्सु च
निहितास्तेषामुपघातः स्तेयकामाशौचाशमैः ॥
१२-२३२-३४ वैवस्वतमन्वन्तरमेवाष्टधा विभज्य तदन्ते
सर्वपुर्युच्छेदे सति मन्वन्तरान्तरे बलिरिन्द्रो भविष्यतीति ज्ञेयम्
। तदिदमुक्तं यावत्पुरस्तात्प्रतपेदित्यादिना श्लोकत्रयेण ॥
१२-२३२-३६ यदादित्यो ह्येकस्थ इति झ । ध। पाठः ॥

---

शन्तिपर्व-अध्यय२३३
॥ श्रीः ॥
१२.२३३. अध्यायः २३३

Mahabharata - Shanti Parva - Chapter Topics
भीष्मेण युधिष्ठिरंप्रति आपदि
शोकत्यागपूर्वकं भगवदनुचिन्तनादेः श्रेयः
साधनताप्रतिपादकशक्रनमुचिसंवादानुवादः ॥ १.।
Mahabharata - Shanti Parva - Chapter Text

१२-२३३-० (७४६१२)
ग्युधिष्ठिर उवाच। १२-२३३-०क्ष् (६२००)
व्यसनेषु निमग्नस्य किं श्रेयस्तद्ब्रवीहि मे ।
भूय एव महाबाहो स्थित्यर्थं तं ब्रवीहि मे ॥' १२-२३३-१ (७४६१३)
भीष्म उवाच। १२-२३३-२क्ष् (६२०१)
अत्रैवोदाहन्तीममितिहासं पुरातनम् ।
शतक्रतोश्च संवादं नमुचेश्च युधिष्ठिर ॥ १२-२३३-२ (७४६१४)
श्रिया विहीनमासीनमक्षोभ्यमिव सागरम् ।
भवाभवज्ञं भूतानामित्युवाच पुरंदरः ॥ १२-२३३-३ (७४६१५)
बद्धः पाशैश्च्युतः स्थानाद्द्विषतां वशमागतः ।
श्रिया विहीनो नमुचे शोचस्याहो न शोचसि ॥ १२-२३३-४ (७४६१६)
नमुचिरुवाच। १२-२३३-५क्ष् (६२०२)
अनवाप्यं च शोकेन शरीरं चोपशुष्यति ।
अमित्राश्च प्रहृष्यन्ति शोके नास्ति सहायता ।

तस्माच्छक्र न शोचामि सर्वं ह्येवेदमन्तवत् ॥ १२-२३३-५ (७४६१७)
संतापाद्भ्रश्यते रूपं संतापाद्भ्रश्यते श्रियः ।
संतापाद्भ्रश्यते चायुर्धर्मश्चैव सुरेश्वर ॥ १२-२३३-६ (७४६१८)
विनीय खलु तद्दुःखमागतं वै मनस्सुखम् ।
ध्यातव्यं मनसा हृद्यं कल्याणं संविजानता ॥ १२-२३३-७ (७४६१९)
यथायथा हि पुरुषः कल्याणे कुरुते मनः ।
तथैवास्य प्रसिध्यन्ति सर्वार्था नात्र संशयः ॥ १२-२३३-८ (७४६२०)
एकः शास्ता न द्वितीयोऽस्ति शास्ता
गर्भे शयानं पुरुषं शास्ति शास्ता ।
तेनानुयुक्तः प्रवणादिवोदकं
यथा नियुक्तोऽस्मि तथा भवामि ॥ १२-२३३-९ (७४६२१)
भावाभावावभिजानन्गरीयो
जानामि श्रेयो न तु तत्करोमि ।
आशासु हर्म्यासु हृदासु कुर्वन्
यथा नियुक्तोऽस्मि तथा वहामि ॥ १२-२३३-१० (७४६२२)
यथायथाऽस्म प्राप्तव्यं प्राप्नोत्येव तथातथा ।
भवितव्यं यथा यच्च भवत्येव तथातथा ॥ १२-२३३-११ (७४६२३)
यत्रयत्रैव संयुक्तो धात्रा गर्भे पुनः पुनः ।
तत्रतत्रैव वसति न यत्र स्वयमिच्छति ॥ १२-२३३-१२ (७४६२४)
भावो योऽयमनुप्राप्तो भवितव्यमिदं मम ।
इति यस्य सदा भावो न स शोचेत्कदाचन ॥ १२-२३३-१३ (७४६२५)
पर्यायैर्हन्यमानानामभिषङ्गो न विद्यते ।
दुःखमेतत्तु यद्द्वेष्टा कर्ताऽहमिति मन्यते ॥ १२-२३३-१४ (७४६२६)
ऋषींश्च देवांश्च महासुरांश्च
त्रैविद्यवृद्धांश्च वने मुनींश्च ।
का नापदो नोपनमन्ति लोके
परावरज्ञास्तु न संभ्रमन्ति ॥ १२-२३३-१५ (७४६२७)
न पण्डितः क्रुद्ध्यति नाभिषज्यते
न चापि संसीदति न प्रहृष्यति ।
न चार्थकृच्छ्रव्यसनेषु शोचते
स्थितः प्रकृत्या हिमवानिवाचलः ॥ १२-२३३-१६ (७४६२८)
यमर्थसिद्धिः परमा न हर्षये
त्तथैव काले व्यसनं न मोहयेत् ।
सुखं च दुःखं च तथैव मध्यमं
निषेवते यः स धुरधरो नरः ॥ १२-२३३-१७ (७४६२९)
यांयामवस्थां पुरुषोऽधिगच्छे

त्तस्यां रमेतापरितप्यमानः ।
एवं प्रवृद्धं प्रणुदन्मनोजं
संतापनीलं सकलं शरीरात् ॥ १२-२३३-१८ (७४६३०)
न तत्सदः सत्परिषत्सभा च
सा प्राप्य यां न कुरुते सदा भयम् ।
धर्मतत्त्वमवगाह्य बुद्धिमा
न्योऽभ्युपैति स धुरंधरः पुमान् ॥ १२-२३३-१९ (७४६३१)
प्राज्ञस्य कर्माणि दुरन्वयानि
न वै प्राज्ञो मुह्यति मोहकाले ।
स्थानाच्च्युतश्चेन्न मुमोह गौतम
स्तावत्कृच्छ्रामापदं प्राप्य वृद्धः ॥ १२-२३३-२० (७४६३२)
न मन्त्रबलवीर्येण प्रज्ञया पौरुषेण च ।
श्न शीलेन न वृत्तेन तथा नैवार्थसंपदा ॥
अलभ्यं लभते मर्त्यस्तत्र का परिदेवना ॥ १२-२३३-२१ (७४६३३)
यदेवमभिजातस्य धातारो विदधुः पुरा ।
तदेवानुभविष्यामि किं मे मृत्युः करिष्यति ॥ १२-२३३-२२ (७४६३४)
लब्धव्यान्येव लभते गन्तव्यान्येव गच्छति ।
प्राप्तव्यान्येव चाप्नोति दुःखानि च सुखानि च ॥ १२-२३३-२३ (७४६३५)
एतद्विदित्वा कार्त्स्न्येन यो न मुह्यति मानवः ।
कुशली सर्वदुःखेषु स वै सर्वधनी नरः ॥ ॥ १२-२३३-२४ (७४६३६)

इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि
त्रयस्त्रिंशदधिकद्विशततमोऽध्यायः ॥ २३३.।
Mahabharata - Shanti Parva - Chapter Footnotes

१२-२३३-३ भवाभवज्ञमुत्पत्तिप्रलयज्ञम् ॥
१२-२३३-५ सहायता शोकस्य दुःखापनोदे हेतुत्वं नास्तीत्यर्थः ॥
१२-२३३-६ श्रियः सकाशात् ॥
१२-२३३-७ विनीय निरस्य ।हृद्यं हृत्स्थम्।कल्याणं मोक्षम् ॥
१२-२३३-९ प्रवणान्निम्नदेशात् ॥
१२-२३३-१८ प्रणुदन् दूरीकुर्वन् ।सन्तापमायाराकरं शरीरात् इति झ।पाठः ॥
१२-२३३-१९ श्रौतस्मार्तलौकिकन्यायान्यायविवेचका जनसमाजाः सदः
पर्षत्सभाख्याः ।संसत्सदः परिषदः सभासदः सम्प्राप्य यो न
कुरुते सदा भयम्।इति ट।थ।ध।पाठः ॥
१२-२३३-२० न मुमोह चोत्तमः इति ध ।पाठः ॥
१२-२३३-२४ कुशलः सुखदुःखेषु इति ट ।थ।पाठः ॥

॥ श्रीः ॥
१२.२३४. अध्यायः २३४

Mahabharata - Shanti Parva - Chapter Topics
भीष्मेण युधिष्ठिरंप्रति विपदि धैर्यालम्बनस्य
सुखसाधनताप्रतिपादकबलिशक्नसंवादानुवादः ॥ १.।
Mahabharata - Shanti Parva - Chapter Text

१२-२३४-० (७४६३७)
युधिष्ठिर उवाच। १२-२३४-०क्ष् (६२०३)
मग्नस्य व्यसने कृच्छ्रे किं श्रेयः पुरुषस्य हि ।
बन्धुनाशे महीपाल राज्यनाशेऽथवा पुनः ॥ १२-२३४-१ (७४६३८)
त्वं हि नः परमो वक्ता लोकेऽस्मिन्भरतर्षभ ।
एतद्भवन्तं पृच्छामि तन्मे त्वं वक्तुमर्हसि ॥ १२-२३४-२ (७४६३९)
भीष्म उवाच। १२-२३४-३क्ष् (६२०४)
पुत्रदारैः सुखैश्चैव वियक्तस्य धनेन च ।
मग्नस्य व्यसने कृच्छ्रे धृतिः श्रेयस्करी नृप ।
धैर्येण युक्तस्य सतः शरीरं न विशीर्यते ॥ १२-२३४-३ (७४६४०)
श्विशोकता सुखं धत्ते धत्ते चारोग्यमुत्तमम् ।ि
आरोग्याच्च शरीरस्य स पुनर्विन्दते श्रियम् ॥ १२-२३४-४ (७४६४१)
यश्च प्राज्ञो नरस्तात सात्विकीं वृत्तिमास्थितः ।
तस्यैश्वर्यं च धैर्यं च व्यवसायश्च कर्मसु ॥ १२-२३४-५ (७४६४२)
अत्रैवोदाहरन्तीममितिहासं पुरातनम् ।
बलिवासवसंवादं पुनरेव युधिष्ठिर ॥ १२-२३४-६ (७४६४३)
वृत्ते देवासुरे युद्धे दैत्यदानवसंक्षये ।
विष्णुक्रान्तेषु लोकेषु देवराजे शतक्रतौ ॥ १२-२३४-७ (७४६४४)
इज्यमानेषु देवेषु चातुर्वर्ण्ये व्यवस्थिते ।
समृध्यमाने त्रैलोक्ये प्रीतियुक्ते स्वयंभुवि ॥ १२-२३४-८ (७४६४५)
रुद्रैर्वसुभिरादित्यैरश्विभ्यामपि चर्षिभिः ।
गन्धर्वैर्भुजगेन्द्रैश्च सिद्धैश्चान्यैर्वृतः प्रभुः
॥ १२-२३४-९ (७४६४६)
चतुर्दन्तं सुदान्तं च वारणेन्द्रं श्रिया वृतम् ।
आरुह्यैरावणं शक्रस्त्रैलोक्यमनुसंययौ ॥ १२-२३४-१० (७४६४७)
स कदाचित्समुद्रान्ते कस्मिंश्चिद्गिरिगह्वरे ।
बलिं वैरोचनिं वज्री ददर्शोपससर्प च ॥ १२-२३४-११ (७४६४८)

तमैरावतमूर्धस्थं प्रेक्ष्य देवगणैर्वृतम् ।
सुरेन्द्रमिन्द्रं दैत्येन्द्रो न शुशोच न विव्यथे ॥१२-२३४-१२ (७४६४९)
दृष्ट्वा तमविकारस्थं तिष्ठन्तं निर्भयं बलिम् ।
अधिरूढो द्विपश्रेष्ठमित्युवाच शतक्रतुः ॥१२-२३४-१३ (७४६५०)
दैत्य न व्यथसे शौर्यादथवा वृद्धसेवया ।
तपसा भावितत्वाद्वा सर्वथैतत्सुदुष्करम् ॥१२-२३४-१४ (७४६५१)
शत्रुभिर्वशमानीतो हीनः स्थानादनुत्तमात् ।
वैरोचने किमाश्रित्य शोचितव्ये न शोचसि ॥१२-२३४-१५ (७४६५२)
श्रैष्ठ्यं प्राप्य स्वजातीनां भुक्त्वा भोगाननुत्तमान् ।
हृतस्वरत्नराज्यस्त्वं ब्रूहि कस्मान्न शोचसि ॥१२-२३४-१६ (७४६५३)
ईश्वरो हि पुरा भूत्वा पितृपैतामहे पदे ।
तत्त्वमद्य हृतं दृष्ट्वा सपत्नैः किं न शोचसि ॥१२-२३४-१७ (७४६५४)
बद्धश्च वारुणैः पाशैर्वज्रेण च समाहतः ।
हृतदारो हृतधनो ब्रूहि कस्मान्न शोचसि ॥१२-२३४-१८ (७४६५५)
नष्टश्रीर्विभवभ्रष्टो यन्न शोचसि दुष्करम् ।
त्रैलोक्यराज्यनाशे हि कोऽन्यो जीवितुमुत्सहेत् ॥१२-२३४-१९ (७४६५६)
एतच्चान्यच्च परुषं ब्रुवन्तं परिभूय तम् ।
श्रुत्वा दुःखमसंभ्रान्तो बलिर्वैरोचनोऽब्रवीत् ॥१२-२३४-२० (७४६५७)
निगृहीते मयि भृशं शक्र किं कत्थितेन ते ।
वज्रमुद्यम्य तिष्ठन्तं पश्यामि त्वां पुरंदर ॥१२-२३४-२१ (७४६५८)
अशक्तः पूर्वमासीस्त्वं कथंचिच्छक्ततां गतः ।
कस्त्वदन्य इमां वाचं सुक्रूरां वक्तुमर्हति ॥१२-२३४-२२ (७४६५९)
यस्तु शत्रोर्वशस्थस्य शक्तोऽपि कुरुते दयाम् ।
हस्तप्राप्तस्य वीरस्य तं चैव पुरुषं विदुः ॥१२-२३४-२३ (७४६६०)
अनिश्चयो हि युद्धेषु द्वयोर्विवदमानयोः ।
एकः प्राप्नोति विजयमेकश्चैव पराजयम् ॥१२-२३४-२४ (७४६६१)
मा च ते भूत्स्वभावोऽयं मयि दानवपुङ्गवे ।
ईश्वरः सर्वभूतानां विक्रमेण जितो बलात् ॥१२-२३४-२५ (७४६६२)
नैतदस्मत्कृतं शक्र नैतच्छक्र कृतं त्वया ।
यत्त्वमेवं गतो वज्रिन्यद्वाऽऽप्येवं गता वयम् ॥१२-२३४-२६ (७४६६३)
अहमासं यथाऽद्य त्वं भविता त्वं यथा वयम् ।
मावमंस्था मया कर्म दुष्कृतं कृतमित्युत ॥१२-२३४-२७ (७४६६४)
सुखदुःखे हि पुरुषः पर्यायेणाधिगच्छति ।
पर्यायेणासि शक्रत्वं प्राप्तः शक्र न कर्मणा ॥१२-२३४-२८ (७४६६५)
कालः काले नयति मां त्वां च कालो नयत्ययम् ।
तेनाहं त्वं यथा नाद्य त्वं चापि न यथा वयम् ॥१२-२३४-२९ (७४६६६)

न मातृपितृशुश्रूषा न च दैवतपूजनम् ।
नान्यो गुणसमाचारः पुरुषस्य सुखावहः ॥ १२-२३४-३० (७४६६७)
न विद्या न तपो दानं न मित्राणि न बान्धवाः ।
शक्नुवन्ति परित्रातुं नरं कालेन पीडितम् ॥ १२-२३४-३१ (७४६६८)
नागामिनमनर्थं हि प्रतिघातशतैरपि ।
शक्नुवन्ति प्रतिव्योढुमृते बुद्धिबलान्नराः ॥ १२-२३४-३२ (७४६६९)
पर्यायैर्हन्यमानानां परित्राता न विद्यते ।
इदं तु दुःखं यच्छक्र कर्ताऽहमिति मन्यसे ॥ १२-२३४-३३ (७४६७०)
यदि कर्ता भवेत्कर्ता न क्रियेत कदाचन ।
यस्मात्तु क्रियते कर्ता तस्मात्कर्ताऽप्यनीश्वरः ॥ १२-२३४-३४ (७४६७१)
कालेन त्वाऽहमजयं कालेनाहं जितस्त्वया ।
गन्ता गतिमतां कालः कालः कलयति प्रजाः ॥ १२-२३४-३५ (७४६७२)
इन्द्र प्राकृतया बुद्ध्या प्रलपन्नावबुद्ध्यसे ।
केचित्त्वां बहुमन्यन्ते श्रैष्ठ्यं प्राप्तं स्वकर्मणा ॥ १२-२३४-३६ (७४६७३)
कथमस्मद्विधो नाम जानँल्लोकप्रवृत्तयः ।
कालेनाभ्याहतः शोचेन्मुह्येद्वाऽप्यथविभ्रमेत् ॥ १२-२३४-३७ (७४६७४)
कथं कालपरीतस्य मम वा मद्विधस्य वा ।
बुद्धिर्व्यसनमासाद्य भिन्ना नौरिव सीदति ॥ १२-२३४-३८ (७४६७५)
अहं च त्वं च ये चान्ये भविष्यन्ति सुराधिपाः ।
ते सर्वे शक्र यास्यन्ति मार्गमिन्द्रशतैर्गतम् ॥ १२-२३४-३९ (७४६७६)
त्वामप्येवं सुदुर्धर्षं ज्वलन्तं परया श्रिया ।
काले परिणते कालः कलयिष्यति मामिव ॥ १२-२३४-४० (७४६७७)
बहूनीन्द्रसहस्राणि दैवतानां युगे युगे ।
अभ्यतीतानि कालेन कालो हि दुरतिक्रमः ॥ १२-२३४-४१ (७४६७८)
इदं तु लब्ध्वा संस्थानमात्मानं बहु मन्यसे ।
सर्वभूतभवं देवं ब्रह्माणमिव शाश्वतम् ॥ १२-२३४-४२ (७४६७९)
न चेदमचलं स्थानमनन्तं वाऽपि कस्यचित् ।
त्वं तु बालिशया बुद्ध्या ममेदमिति मन्यसे ॥ १२-२३४-४३ (७४६८०)
अविश्वस्ते विश्वसिषि मन्यसे वाऽध्रुवे ध्रुवम् ।
नित्यं कालपरीतात्मा भवत्येवं सुरेश्वर ॥ १२-२३४-४४ (७४६८१)
ममेयमिति मोहात्त्वं राजश्रियमभीप्ससि ।
नेयं तव न चास्माकं न चान्येषां स्थिरा मता ॥ १२-२३४-४५ (७४६८२)
अतिक्रम्य बहूनन्यांस्त्वयि तावदियं गता ।
कंचित्कालमियं स्थित्वा त्वयि वासव चञ्चला ॥ १२-२३४-४६ (७४६८३)
गौर्निवासमिवोत्सृज्य पुनरन्यं गमिष्यति ।
सुरेशा ये ह्यतिक्रान्तास्तान्न संख्यातुमुत्सहे ॥ १२-२३४-४७ (७४६८४)

त्वत्तो बहुतराश्चान्ये भविष्यन्ति पुरंदर ।
सवृक्षौषधिगुल्मेयं ससरित्पर्वताकरा ॥१२-२३४-४८ (७४६८५)
तानिदानीं न पश्यामि यैर्भुक्तेयं पुरा मही ।
पृथुरैलो मयो भीमो नरकः शम्बरस्तथा ॥१२-२३४-४९ (७४६८६)
अश्वग्रीवः पुलोमा च स्वर्भानुरमितप्रभःঃ
प्रह्लादो नमुचिर्दक्षो विप्रचित्तिर्विरोचनः ॥ १२-२३४-५० (७४६८७)
ह्रीनिषेवः सुहोत्रश्च भूरिहा पुष्पवान्वृषः ।
सत्येषुर्ऋषभो बाहुः कपिलाश्वो निरूपकः ॥१२-२३४-५१ (७४६८८)
बाणः कार्तस्वरो वह्निर्विश्वदंष्ट्रोऽथ नैर्ऋतिः ।
संकोचोऽथ वरीताक्षो वराहाश्वो रुचिप्रभः ॥१२-२३४-५२ (७४६८९)
विश्वजित्प्रतिरूपश्च वृषाण्डो विष्करो मधुः ।
हिरण्यकशिपुश्चैव कैटभश्चैव दानवः ॥१२-२३४-५३ (७४६९०)
दैतेया दानवाश्चैव सर्वे ते नैर्ऋतैः सह ।
एते चान्ये च बहवः पूर्वे पूर्वतराश्च ये ॥१२-२३४-५४ (७४६९१)
दैत्येन्द्रा दानवेन्द्राश्च यांश्चान्याननुशुश्रुम् ।
बहवः पूर्वदैत्येन्द्राः संत्यज्य पृथिवीं गताः ॥१२-२३४-५५ (७४६९२)
कालेनाभ्याहताः सर्वे कालो हि बलवत्तरः ।
सर्वैः क्रतुशतैरिष्टं न त्वमेकः शतक्रतुः ॥१२-२३४-५६ (७४६९३)
सर्वे धर्मपराश्चासन्सर्वे सततसत्रिणः ।
अन्तरिक्षचराः सर्वे सर्वेऽभिमुखयोधिनः ॥१२-२३४-५७ (७४६९४)
सर्वे संहननोपेताः सर्वे परिघबाहवः ।
सर्वे मायाशतधराः सर्वे ते कामरूपिणः ।
सर्वे समरमासाद्य न श्रूयन्ते पराजिताः ॥ १२-२३४-५८ (७४६९५)
सर्वे सत्यव्रतपराः सर्वे कामविहारिणः ।
सर्वे वेदव्रतपराः सर्वे चैव बहुश्रुताः ॥१२-२३४-५९ (७४६९६)
सर्वे संमतमैश्वर्यमीश्वराः प्रतिपेदिरे ।
न चैश्वर्यमदस्तेषां भूतपूर्वो महात्मनाम् ॥१२-२३४-६० (७४६९७)
सर्वे यथार्हदातारः सर्वे विगतमत्सराः ।
सर्वे सर्वेषु भूतेषु यथावत्प्रतिपेदरे ॥१२-२३४-६१ (७४६९८)
सर्वे दाक्षायणीपुत्राः प्राजपत्या महाबलाः ।
ज्वलन्तः प्रतपन्तश्च कालेन प्रतिसंहृताः ॥१२-२३४-६२ (७४६९९)
त्वं चैवेमां यदा भुक्त्वा पृथिवीं त्यक्ष्यसे पुनः ।
न शक्ष्यसि तदा शक्र नियन्तुं शोकमात्मनः ॥१२-२३४-६३ (७४७००)
मुञ्चेच्छां कामभोगेषु मुञ्जेमं श्रीभवं मदम् ।
एवं स्वराज्यनाशे त्वं शोकं संप्रसहिष्यसि ॥१२-२३४-६४ (७४७०१)
शोककाले शुचो मा त्वं हर्षकाले च मा हृषः ।

अतीतानागतं हित्वा प्रत्युत्पन्नेन वर्तय ॥१२-२३४-६५ (७४७०२)
मां चेदभ्यागतः कालः सदा युक्तमतन्द्रितः ।
क्षमस्व न चिरादिन्द्र त्वामप्युपगमिष्यति ॥१२-२३४-६६ (७४७०३)
त्रासयन्निव देवेन्द्र वाग्भिस्तक्षसि मामिह ।
संयते मयि ननं त्वमात्मानं बहु मन्यसे ॥१२-२३४-६७ (७४७०४)
कालः प्रथममायान्मां पञ्चात्त्वामनुधावति ।
तेन गर्जसि देवेन्द्र पूर्वं कालहते मयि ॥१२-२३४-६८ (७४७०५)
को हि स्थातुमलं लोके मम क्रुद्धस्य संयुगे ।
कालस्तु बलवान्प्राप्तस्तेन तिष्ठसि वासव ॥१२-२३४-६९ (७४७०६)
यत्तद्वर्षसहस्रान्तं तूर्णं भवितुमर्हति ।
यथा मे सर्वगात्राणि न सुस्थानि महौजसः ॥१२-२३४-७० (७४७०७)
अहमैन्द्राच्च्युतः स्थानात्त्वमिन्द्रः प्रकृतो दिवि ।
सुचित्रे जीवलोकेऽस्मिन्नुपास्यः कालपर्ययः ॥१२-२३४-७१ (७४७०८)
किं हि कृत्वा स्वमिन्द्रोऽद्य किं वा कृत्वा वयं च्युताः ।
कालः कर्ता विकर्ता च सर्वमन्यदकारणम् ॥१२-२३४-७२ (७४७०९)
नाशं विनाशमैश्वर्यं सुखदुःखे भवाभवौ ।
विद्वान्प्राप्यैवमत्यर्थं न प्रहृष्येन्न च व्यथेत् ॥१२-२३४-७३ (७४७१०)
त्वमेव हीन्द्र वेत्थास्मान्वेदाहं त्वां च वासव ।
किं कत्थसे मां किंच त्वं कालेन निरपत्रयः ॥१२-२३४-७४ (७४७११)
त्वमेव हि पुरा वेत्थ यत्तदा पौरुषं मम ।
समरेषु च विक्रान्तं पर्याप्तं तन्निदर्शनम् ॥१२-२३४-७५ (७४७१२)
आदित्याश्चैव रुद्राश्च साध्याश्च वसुभिः सह ।
मया विनिर्जिताः पूर्वं मरुतश्च शचीपते ॥१२-२३४-७६ (७४७१३)
त्वमेव शक्र जानासि देवासुरसमागमे ।
समेता विबुधा भग्नास्तरसा समरे मया ॥१२-२३४-७७ (७४७१४)
पर्वताश्चासकृत्क्षिप्ताः सवनाः सवनौकसः ।
सशृङ्गशिखरा भग्नाः समरे मूर्ध्नि ते मया ॥१२-२३४-७८ (७४७१५)
किं नु शक्यं मया कर्तुं कालो हि दुरतिक्रमः ।
न हि त्वां नोत्सहे हन्तुं सवज्रमपि मुष्टिना ॥१२-२३४-७९ (७४७१६)
न तु विक्रमकालोऽयं क्षमाकालोऽयमागतः ।
तेन त्वां मर्षये शक्र दुर्मर्षणतरस्त्वया ॥१२-२३४-८० (७४७१७)
तं मां परिणते काले परीतं कालवह्निना ।
नियतं कालपाशेन बद्धं शक्र विकत्थसे ॥१२-२३४-८१ (७४७१८)
अयं स पुरुषः श्यामो लोकस्य दुरतिक्रमः ।
बद्धवा तिष्ठति मां रौद्रः पशुं रशनया यथा ॥१२-२३४-८२ (७४७१९)
लाभालाभौ सुखं दुःखं कामक्रोधौ भवाभवौ ।

वधो बन्धप्रमोक्षश्च सर्वं कालेन लभ्यते ॥ १२-२३४-८३ (७४७२०)
नाहं कर्ता न कर्ता त्वं कर्ता यस्तु सदा प्रभुः ।
सोयं पचति कालो मां वृक्षे फलमिवागतम् ॥ १२-२३४-८४ (७४७२१)
यान्येव पुरुषः कुर्वन्सुखैः कालेन युज्यते ।
पुनस्तान्येव कुर्वाणो दुःखैः कालेन युज्यते ॥ १२-२३४-८५ (७४७२२)
न च कालेन कालज्ञः स्पृष्टः शोचितुमर्हति ।
तेन शक्र न शोचामि नास्ति शोके सहायता ॥ १२-२३४-८६ (७४७२३)
यदा हि शोचतः शोको व्यसनं नाषकर्षति ।
सामर्थ्यं शोचतो नास्तीत्यतोऽहं नाद्य शोचिमि ॥ १२-२३४-८७ (७४७२४)
भीष्म उवाच। १२-२३४-८८क्ष् (६२०५)
एवमुक्तः सहस्राक्षो भगवान्पाकशासनः ।
प्रतिसंहृत्य संरम्भमित्युवाच शतक्रतुः ॥ १२-२३४-८८ (७४७२५)
सवज्रमुद्यतं बाहुं दृष्ट्वा पाशांश्च वारुणान् ।
कस्येह न व्यथेद्बुद्धिर्मृत्योरपि जिघांसतः ॥ १२-२३४-८९ (७४७२६)
सा ते न व्यथते बुद्धिरचला तत्त्वदर्शिनी ।
ब्रुवन्न व्यथसेऽद्य त्वं धैर्यात्सत्यपराक्रम ॥ १२-२३४-९० (७४७२७)
को हि विश्वासमर्थेषु शरीरे वा शरीरभृत् ।
कर्तुमुत्सहते लोके दृष्ट्वा संप्रस्थितं जगत् ॥ १२-२३४-९१ (७४७२८)
अहमप्येवमेवैनं लोकं जानाम्यशाश्वतम् ।
कालाग्नावाहितं घोरे गुह्ये सततगेऽक्षरे ॥ १२-२३४-९२ (७४७२९)
न चात्र परिहारोऽस्ति कालस्पृष्टस्य कस्यचित् ।
सूक्ष्माणां महतां चैव भूतानां परिपच्यताम् ॥ १२-२३४-९३ (७४७३०)
अनीशस्याप्रमत्तस्य भूतानि पचतः सदा ।
अनिवृत्तस्य कालस्य क्षयं प्राप्तो न मुच्यते ॥ १२-२३४-९४ (७४७३१)
अप्रमत्तः प्रमत्तेषु कालो जागर्ति देहिषु ।
प्रयत्नेनाप्यपक्रान्तो दृष्टपूर्वो न केनचित् ॥ १२-२३४-९५ (७४७३२)
पुराणः शाश्वतो धर्मः सर्वप्राणभृतां समः ।
कालो न परिहार्यश्च न चास्यास्ति व्यतिक्रमः ॥ १२-२३४-९६ (७४७३३)
अहोरात्रांश्च मासांश्च क्षणान्काष्ठा लवान्कलाः ।
संपीडयति यः कालो वृद्धिं वार्धुपिको यथा ॥ १२-२३४-९७ (७४७३४)
इदमद्य करिष्यामि श्वः कर्ताऽस्मीति वादिनम् ।
कालो हरति संप्राप्तो नदीवेग इव द्रुमम् ॥ १२-२३४-९८ (७४७३५)
इदानीं तावदेवासौ मया दृष्टः कथं मृतः ।
इति कालेन ह्रियतां प्रलापः श्रूयते नृणाम् ॥ १२-२३४-९९ (७४७३६)
नश्यन्त्यर्थास्तथा भोगाः स्थानमैश्वर्यमेव च ।
जीवितं जीवलोकस्य कालेनागम्य नीयते ॥ १२-२३४-१०० (७४७३७)

उच्छ्राया विनिपातान्ता भावोऽभावः स एव च ।
अनित्यमध्रुवं सर्वं व्यवसायो हि दुष्करः ॥ १२-२३४-१०१ (७४७३८)
सा ते न व्यथते बुद्धिरचला तत्त्वदर्शिनी ।
अहमासं पुरा चेति मनसाऽपि न बुद्ध्यते ॥ १२-२३४-१०२ (७४७३९)
कालेनाक्रम्य लोकेऽस्मिन्पच्यमाने बलीयसा ।
अज्येष्ठमकनिष्ठं च क्षिप्यमाणो न बुद्ध्यते ॥ १२-२३४-१०३ (७४७४०)
ईर्ष्याभिमानलोभेषु कामक्रोधभयेषु च ।
स्पृहामोहाभिमानेषु लोकः सक्तो विमुह्यति ॥ १२-२३४-१०४ (७४७४१)
भवांस्तु भावतत्त्वज्ञो विद्वाञ्ज्ञानतपोन्वितः ।
कालं पश्यति सुव्यक्तं पाणावामलकं यथा ॥ १२-२३४-१०५ (७४७४२)
कालचारित्रतत्त्वज्ञः सर्वशास्त्रविशारदः ।
वैरोचते कृतार्थोऽसि स्पृहणीयो विजानताम् ॥ १२-२३४-१०६ (७४७४३)
सर्वलोको ह्ययं मन्ये बुद्ध्या परिगतस्त्वया ।
विहरन्सर्वतोमुक्तो न क्वचिच्च विषीदसि ॥ १२-२३४-१०७ (७४७४४)
रजश्च हि तमश्च त्वां स्पृशते न जितेन्द्रियम् ।
निष्प्रीतिं नष्टसंतापमात्मानं त्वमुपाससे ॥ १२-२३४-१०८ (७४७४५)
सुहृदं सर्वभूतानां निर्वैरं शान्तमानसम् ।
दृष्ट्वा त्वां मम संजाता त्वय्यनुक्रोशिनी मतिः ॥ १२-२३४-१०९ (७४७४६)
नाहमेतादृशं बुद्धं हन्तुमिच्छामि बन्धनैः ।
आनृशंस्यं परो धर्मो ह्यनुक्रोशश्च मे त्वयि ॥ १२-२३४-११० (७४७४७)
मोक्ष्यन्ते वारुणाः पाशास्तवेमे कालपर्ययात् ।
प्रजानामुपचारेण स्वस्ति तेऽस्तु महासुर ॥ १२-२३४-१११ (७४७४८)
यदा श्वश्रूं स्नुषा वृद्धां परिचारेण योक्ष्यते ।
पुत्रश्च पितरं मोहात्प्रेषयिष्यति कर्मसु ॥ १२-२३४-११२ (७४७४९)
ब्राह्मणैः कारयिष्यन्ति वृषलाः पादधावनम् ।
शूद्राश्च ब्राह्मणीं भार्यामुपयास्यन्ति निर्भयाः ॥ १२-२३४-११३ (७४७५०)
वियोनिषु विमोक्ष्यन्ति बीजानि पुरुषा यदा ।
संकरं कांस्यभाण्डैश्च बलिं चैव कुपात्रकैः ॥ १२-२३४-११४ (७४७५१)
चातुर्वर्ण्यं यदा कृत्स्नममर्यादं भविष्यति ।
एकैकस्ते तदा पाशः क्रमशः परिमोक्ष्यते ॥ १२-२३४-११५ (७४७५२)
अस्मत्तस्ते भयं नास्ति समयं प्रतिपालय ।
सुखी भव निराबाधः स्वस्थचेता निरामयः ॥ १२-२३४-११६ (७४७५३)
भीष्म उवाच। १२-२३४-११७क्ष् (६२०६)
तमेवमुक्त्वा भगवाञ्छतक्रतुः
प्रतिप्रयातो गजराजवाहनः ।
विजित्य सर्वानसुरान्सुराधिपो

ननन्द हर्षेण बभूव चैकराट् ॥ १२-२३४-११७ (७४७५४)
महर्षयस्तुष्टुवुरञ्जसा च तं
वृषाकर्पिं सर्वचराचरेश्वरम् ।
हिमापहो हव्यमुवाह चाध्वरे
तथाऽमृतं चार्पितमीश्वरोऽपि हि ॥ १२-२३४-११८ (७४७५५)
द्विजोत्तमैः सर्वगतैरभिष्टुतो
विदीप्ततेजाः शतमन्युरीश्वरः ।
प्रशान्तचेता मुदितः स्वमालयं
त्रिविष्टपं प्राप्य मुमोद वासवः ॥ ॥ १२-२३४-११९ (७४७५६)

इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि
चतुस्त्रिंशदधिकद्विशततमोऽध्यायः ॥ २३४.।
Mahabharata - Shanti Parva - Chapter Footnotes

१२-२३४-२० श्रुत्वामुखमसंभ्रान्त इति झ ।ट।थ।पाठः ॥

---

शन्तिपर्व-अध्यय२३५
॥ श्रीः ॥
१२.२३५. अध्यायः २३५

Mahabharata - Shanti Parva - Chapter Topics
गङ्गापुलिनगतयोः शक्रनारदयोः समीपंप्रति श्रीदेव्या आगमनम्
॥ १.। शक्रंप्रति श्रिया स्वस्य देत्येषु निवासविप्रवासयोः
कारणीभूततद्गुणदोषाभिधानम् ॥ २.।
Mahabharata - Shanti Parva - Chapter Text

१२-२३५-० (७४७५७)
युधिष्ठिर उवाच। १२-२३५-०क्ष् (६२०७)
पूर्वरूपाणि मे राजन्पुरुषस्य भविष्यतः ।
पराभविष्यतश्चैव तन्मे ब्रूहि पितामह ॥ १२-२३५-१ (७४७५८)
भीष्म उवाच। १२-२३५-२क्ष् (६२०८)
मन एव मनुष्यस्य पूर्वरूपाणि शंसति ।
भविष्यतश्च भद्रं ते तथैव न भविष्यतः ॥ १२-२३५-२ (७४७५९)
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
श्रिया शक्रस्य संवादं तन्निबोध युधिष्ठिर ॥ १२-२३५-३ (७४७६०)
महतस्तपसो व्यष्ट्या पश्यँल्लोकौ परावरौ ।
सामान्यमृषिभिर्गत्वा ब्रह्मलोकनिवासिभिः ॥ १२-२३५-४ (७४७६१)

ब्रह्मेवामितदीप्तौजाः शान्तपाप्मा महातपाः ।
विचचार यथाकालं त्रिषु लोकेषु नारदः ॥ १२-२३५-५ (७४७६२)
कदाचित्प्रातरुत्थाय पिस्पृक्षुः सलिलं शुचि ।
ध्रुवद्वारभवां गङ्गां जगामावततार च ॥ १२-२३५-६ (७४७६३)
ग्मेरुपादोद्भवां गङ्गां नारायणपदच्युताम् ।
स वीक्षमाणो हृष्टात्मा तं देशमभिजग्मिवान् ॥ १२-२३५-७ (७४७६४)
यं--देवजवाकीर्णं सूक्ष्मकाञ्जनवालुकम् ।
गङ्गाद्वीपं समासाद्य नानावृक्षैरलङ्कृतम् ॥ १२-२३५-८ (७४७६५)
सालतालाश्वकर्णानां चन्दनानां च राजिभिः ।
मण्डितं विविधैः पुष्पैर्हंसकारण्डवायुतम् ॥ १२-२३५-९ (७४७६६)
नदीपुलिनमासाद्य स्नात्वा संतर्प्य देवताः ।
जजाप जप्यं धर्मात्मा तन्मयत्वेन भास्वता ॥' १२-२३५-१० (७४७६७)
सहस्रनयनश्चापि वज्री शम्बरपाकहा ।
तस्या देवर्षिजुष्टायास्तीरमभ्याजगाम ह ॥ १२-२३५-११ (७४७६८)
तावाप्लुत्य यतात्मानौ कृतजप्यौ समासतः ।
नद्याः पुलिनमासाद्य सूक्ष्मकाञ्चनवालुकम् ॥ १२-२३५-१२ (७४७६९)
पुण्यकर्मभिराख्याता देवर्षिकथिताः कथाः ।
चक्रतुस्तौ तथाऽऽसीनौ महर्षिकथितास्तथा ।
पूर्ववृत्तव्यतीतानि कथयन्तौ समाहितौ ॥ १२-२३५-१३ (७४७७०)
अद्य भास्करमुद्यन्तं रश्मिजालपुरस्कृतम् ।
पूर्णमण्डलमालोक्य तावुत्थायोपतस्थतुः ॥ १२-२३५-१४ (७४७७१)
ग्विविक्ते पुण्यदेशे तु रममाणौ मुदा युतौ ।
ददृशातेऽन्तरिक्षे तौ सूर्यस्योदयनं प्रति ॥ १२-२३५-१५ (७४७७२)
ज्योतिर्ज्वालसमाकीर्णं ज्योतिषां गणमण्डितम् ।
अभितस्तूदयन्तं तमर्कमर्कमिवापरम् ॥ १२-२३५-१६ (७४७७३)
आकाशो ददृशे ज्योतिरुद्यतार्चिः समप्रभम् ।
ग्अर्कस्य तेजसा तुल्यं तद्भास्करसमप्रभम्।'
तयोः समीपं तं प्राप्तं प्रत्यदृश्यत भारत ॥ १२-२३५-१७ (७४७७४)
तत्सुपर्णार्करचितमास्थितं वैष्णवं पदम् ।
भाभिरप्रतिमं भाति त्रैलोक्यमवभासयत् ॥ १२-२३५-१८ (७४७७५)
ग्दृष्ट्वा तौ तु विक्रान्तौ प्राञ्जली समुपास्थितौ ।
क्रमात्संप्रेक्ष्यमाणौ तौ विमानं दिव्यमद्भुतम् ॥ १२-२३५-१९ (७४७७६)
तस्मिंस्तदा सतीं कान्तां लोककान्तां परां शुभाम् ।
धात्रीं लोकस्य रमणीं लोकमातरमच्युताम् ॥' १२-२३५-२० (७४७७७)
दिव्याभिरुपशोभाभिरप्सरोभिः पुरस्कृताम् ।
बृहतीमंशुमत्प्रख्यां बृहद्भानोरिवार्चिषम् ॥ १२-२३५-२१ (७४७७८)

नक्षत्रकल्पाभरणां तारापङ्क्तिसमस्रजम् ।
श्रियं ददृशतुः पद्मां साक्षात्पद्मदलस्थिताम् ॥ १२-२३५-२२ (७४७७९)
साऽवरुह्य विमानाग्रादङ्गनानामनुत्तमा ।
अभ्यागच्छन्त्रिलोकेशं शक्रं चर्षिं च नारदम् ॥ १२-२३५-२३ (७४७८०)
नारदानुगतः साक्षान्मघवांस्तामुपागमत् ।
कृताञ्जलिपुटो देवीं निवेद्यात्मानमात्मना ॥ १२-२३५-२४ (७४७८१)
चक्रे चानुपमां पूजां तस्याश्चापि स सर्ववित् ।
देवराजः श्रियं राजन्वाक्यं चेदमुवाच ह ॥ १२-२३५-२५ (७४७८२)
का त्वं केन च कार्येण संप्राप्ता चारुहासिनि ।
कुतश्चागम्यते सुभ्रु गन्तव्यं क्व च ते शुभे ॥ १२-२३५-२६ (७४७८३)
श्रीरुवाच। १२-२३५-२७क्ष् (६२०९)
पुण्येषु त्रिषु लोकेषु सर्वे स्थावरजङ्गमाः ।
ममात्मभावमिच्छन्तो यतन्ते परमात्मना ॥ १२-२३५-२७ (७४७८४)
साऽहं वै पङ्कजे जाता सूर्यरश्मिप्रबोधिते ।
भूत्यर्तं सर्वभूतानां पद्मा श्रीः पद्ममालिनी ॥ १२-२३५-२८ (७४७८५)
अहं लक्ष्मीरहं भूतिः श्रीश्चाहं बलसूदन ।
अहं श्रद्धा च मेधा च सन्नतिर्विजितिः स्थितिः ॥ १२-२३५-२९ (७४७८६)
अहं धृतिरहं सिद्धिरहं संभूतिरेव च ।
अहं स्वाहा स्वधा चैव संस्तुतिर्नियतिः कृतिः ॥ १२-२३५-३० (७४७८७)
राज्ञां विजयमानानां सेनाग्नेषु ध्वजेषु च ।
निवसे धर्मशीलानां विषयेषु पुरेषु च ॥ १२-२३५-३१ (७४७८८)
जितकाशिनि शूरे च संग्रामेष्वनिवर्तिनि ।
निवसामि मनुष्येन्द्रे सदैव बलसूदन ॥ १२-२३५-३२ (७४७८९)
धर्मनित्ये महाबुद्धौ ब्रह्मण्ये सत्यवादिनि ।
प्रश्रिते दानशीले च सदैव निवसाम्यहम् ॥ १२-२३५-३३ (७४७९०)
असुरेष्ववसं पूर्वं सत्यधर्मनिबन्धनात् ।
विपरीतांस्तु तान्बुद्ध्वा त्वयि वासमरोचयम् ॥ १२-२३५-३४ (७४७९१)
शक्र उवाच। १२-२३५-३५क्ष् (६२१०)
कथं वृत्तेषु दैत्येषु त्वमवात्सीर्वरानाने ।
दृष्ट्वा च किमिहागास्त्वं हित्वा दैतेयदानवान् ॥ १२-२३५-३५ (७४७९२)
श्रीरुवाच। १२-२३५-३६क्ष् (६२११)
स्वधर्ममनुतिष्ठत्सु धैर्यादचलितेषु च ।
स्वर्गमार्गाभिरामेषु सत्वेषु निरता ह्यहम् ॥ १२-२३५-३६ (७४७९३)
दानाध्ययनयज्ञेज्यापितृदैवतपूजनम् ।
गुरूणामतिथीनां च तेषां नित्यमवर्तत ॥ १२-२३५-३७ (७४७९४)
सुसंमृष्टगृहाश्चासञ्जितस्त्रीका हुताग्नयः ।

गुरुशुश्रूषका दान्ता ब्रह्मण्याः सत्यवादिनः ॥१२-२३५-३८ (७४७९५)
श्रद्दधाना जितक्रोधा दानशीलाऽनसूयवः ।
भृतपुत्रा भृतामात्या भृतदारा ह्यनीर्षवः ॥१२-२३५-३९ (७४७९६)
अमर्षेण न चान्योन्यं स्पृहयन्ते कदाचन ।
न च जातूपतप्यन्ति धीराः परसमृद्धिभिः ॥१२-२३५-४० (७४७९७)
दातारः संग्रहीतार आर्याः करुणवेदिनः ।
महाप्रसादा ऋजवो दृढभक्ता जितेन्द्रियाः ॥१२-२३५-४१ (७४७९८)
संतुष्टभृत्यसचिवाः कृतज्ञाः प्रियवादिनः ।
यथार्हमानार्थकरा ह्रीनिषेवा यतव्रताः ॥१२-२३५-४२ (७४७९९)
नित्यं पर्वसु सुस्नाताः स्वनुलिप्ताः स्वलङ्कृताः ।
उपवासतपः शीलाः प्रतीता ब्रह्मवादिनः ॥१२-२३५-४३ (७४८००)
नैनानभ्युदियात्सूर्यो नैवास्वप्स्यन्प्रगेशयाः ।
रात्रौ दधि च सक्तूंश्च नित्यमेव व्यवर्जयन् ॥१२-२३५-४४ (७४८०१)
काल्यं घृतं तु चान्वीक्ष्य प्रयता ब्रह्मवादिनः ।
पङ्गल्यान्यपि चापश्यन्ब्रह्माणांश्चाप्यपूजयन् ॥१२-२३५-४५ (७४८०२)
सदा हि ददतां धर्म्यं सदाचाप्रतिगृह्णताम् ।
अर्धं च रात्र्याः स्वपतां दिवा चास्वपतां तथा ॥१२-२३५-४६ (७४८०३)
कृपणानाथवृद्धानां दुर्बलातुरयोषिताम् ।
दयां च संविभागं च नित्यमेवान्वमोदताम् ।
कालो यातः सुखेनैव धर्ममार्गे निवर्तताम् ॥ १२-२३५-४७ (७४८०४)
त्रस्तं विषण्णमुद्विग्नं भयार्तं व्याधिपीडितम् ।
हृतस्वं व्यसनार्तं च नित्यमाश्वासयन्ति ते ॥१२-२३५-४८ (७४८०५)
धर्ममेवानुवर्तन्ते न हिंसन्ति परस्परम् ।
अनुकूलाश्च कार्येषु गुरुवृद्धोपसेविनः ॥१२-२३५-४९ (७४८०६)
पितॄन्देवातिथींश्चैव गुरूंश्चैवाभ्यपूजयन् ।
अवशेषाणि चाश्नन्ति नित्यं सत्यतपोधृताः ॥१२-२३५-५० (७४८०७)
नैकेऽश्नन्ति सुसंपन्नं न गच्छन्ति परस्त्रियम् ।
सर्वभूतेष्ववर्तन्त यथाऽऽत्मनि दयां प्रति ॥१२-२३५-५१ (७४८०८)
नैवाकाशे न पशुषु नायोनौ च न पर्वसु ।
इन्द्रियस्य विसर्गं ते रोचयन्ति कदाचन ॥१२-२३५-५२ (७४८०९)
नित्यं दानं तथा दाक्ष्यमार्जवं चैव नित्यदा ।
उत्साहोऽथानहकारः परमं सौहृदं क्षमा ॥१२-२३५-५३ (७४८१०)
सत्यं दानं तपः शौचं कारुण्यं वागनिष्ठुरा ।
मित्रेषु चानभिद्रोहः सर्वं तेष्वभवत्प्रभो ॥१२-२३५-५४ (७४८११)
निद्रा तन्द्रीरसंप्रीतिरसूयाऽथानवेक्षिता ।
अरतिश्च विषादश्च स्पृहा चाप्यविशन्न तान् ॥१२-२३५-५५ (७४८१२)

साऽहमेवंगुणेष्वेव दानवेष्ववसं पुरा ।
प्रजासर्गमुपादाय यावद्गुणविपर्ययम् ॥ १२-२३५-५६ (७४८१३)
ततः कालविपर्यासे तेषां गुणविपर्ययात् ।
अपश्यं निर्गतं धर्मं कामक्रोधवशात्मनाम् ॥ १२-२३५-५७ (७४८१४)
सभासदां च वृद्धानां सतां कथयतां कथाः ।
प्राहसन्नभ्यसूयंश्च सर्वबुद्धान्गुरून्परान् ॥ १२-२३५-५८ (७४८१५)
युवानश्च समासीना वृद्धानपि गतान्सतः ।
नाभ्युत्थानाभिवादाभ्यां यथापूर्वमपूजयन् ॥ १२-२३५-५९ (७४८१६)
वर्तयत्येव पितरि पुत्रः प्रभवते तथा ।
अमित्रभृत्यतां प्राप्य ख्यापयन्त्यनपत्रपाः ॥ १२-२३५-६० (७४८१७)
तथा धर्मादपेतेन कर्मणा गर्हितेन ये ।
महतः प्राप्नुवन्त्यर्थांस्तेषां तत्राभवत्स्पृहा ॥ १२-२३५-६१ (७४८१८)
उच्चैश्चाभ्यवदन्रात्रौ नीचैस्तत्राग्निरज्वलत् ।
पुत्राः पितॄनत्यचरन्नार्यश्चात्यचरन्पतीन् ॥ १२-२३५-६२ (७४८१९)
मातरं पितरं वृद्धमाचार्यमतिथिं गुरुम् ।
गुरुत्वान्नाभ्यनन्दन्त कुमारान्नान्वपालयन् ॥ १२-२३५-६३ (७४८२०)
भिक्षां बलिमदत्त्वा च स्वयमन्नानि भुञ्जते ।
अनिष्ट्वाऽसंविभज्याथ पितृदेवातिथीन्गुरून् ॥ १२-२३५-६४ (७४८२१)
न शौचमन्वरुद्ध्यन्त तेषां सूदजनास्तथा ।
मनसा कर्मणा वाचा भक्ष्यमासीदनावृतम् ॥ १२-२३५-६५ (७४८२२)
ग्बालानां प्रेक्षमाणानां भक्तान्यश्नन्ति मोहिताः ।
एको दासो भवेत्तेषां तेषां दासीद्वयं तथा ॥ १२-२३५-६६ (७४८२३)
त्रिगवा दानवाः केचिच्चतुरोजास्तथा परे ।
षडश्वाः सप्तमातङ्गाः पञ्चमाहिषिकाः परे ॥ १२-२३५-६७ (७४८२४)
रात्रौ दधि च सक्तूंश्च नित्यमेवाविवर्जिताः ।
अन्तर्दशाहे चाश्नन्ति गवां क्षिरं विचेतनाः ॥ १२-२३५-६८ (७४८२५)
क्रमदोहं न कुर्वन्ति वत्सस्तन्यानि भुञ्जते ।
अनाथां कृपणां भार्यां घ्नन्ति नित्यं शपन्ति च ॥ १२-२३५-६९ (७४८२६)
शूद्रान्नपुष्टा विप्रास्तु निर्लज्जाश्च भवन्त्युत ।
संकीर्णानि च धान्यानि नात्यवेक्षत्कुटुंबिनी ॥ १२-२३५-७० (७४८२७)
मार्जारकुक्कुटश्वानैः क्रीडां कुर्वन्ति मानवाः ।
गृहे कण्टकिनो वृक्षास्तथा निष्पाववल्लरी ॥ १२-२३५-७१ (७४८२८)
यज्ञियाश्च तथा वृक्षास्तेषामासन्दुरात्मनाम् ।
कूपस्नानरता नित्यं पर्वमैथुनगामिनः ॥ १२-२३५-७२ (७४८२९)
तिलानश्नन्ति रात्रौ च तैलाभ्यक्ताश्च शेरते ।
विभीतककरञ्जानां छायामूलनिवासिनः ॥ १२-२३५-७३ (७४८३०)

करवीरं च ते पुष्पं धारयन्ति च मोहिताः ।
पद्मबिजानि खादन्ति पुष्पं जिघ्रन्ति मोहिताः ॥ १२-२३५-७४ (७४८३१)
न भोक्ष्यन्ति तथा नित्यं दैत्याः कालेन मोहिताः ।
निन्दन्ति स्तवनं विष्णोस्तस्य नित्यद्विषो जनाः ॥ १२-२३५-७५ (७४८३२)
होमधूमो न तत्रासीद्वेदघोषस्तथैव च ।
यज्ञाश्च न प्रवर्तन्ते यथापूर्वं गृहेगृहे ॥ १२-२३५-७६ (७४८३३)
शिष्याचार्यक्रमो नासीत्पुत्रैरात्मपितुः पिता ।
विष्णुं ब्रह्मण्यदेवेशं हित्वा पाषण्डमाश्रिताः ॥ १२-२३५-७७ (७४८३४)
हव्यकव्यविहीनाश्च ज्ञानाध्ययनवर्जिताः ।
देवस्वादानरुचयो ब्रह्मस्वरुचयस्तथा ।
स्तुतिमङ्गलहीनानि देवस्थानानि सर्वशः ॥' १२-२३५-७८ (७४८३५)
विप्रकीर्णानि धान्यानि काकमूषिकभोजनम् ।
अपावृतं पयोतिष्ठदुच्छिष्टाश्चास्पृशन्धृतम् ॥ १२-२३५-७९ (७४८३६)
कुद्दालं दात्रपिटकं प्रकीर्णं कांस्यभोजनम् ।
द्रव्योपकरणं सर्वं नान्ववैक्षत्कुटुम्बिनी ॥ १२-२३५-८० (७४८३७)
प्राकारागारविध्वंसान्न स्म ते प्रतिकुर्वते ।
ग्क्षुद्राः संस्कारहीनाश्च नार्यो ह्युदरपोषणाः ॥ १२-२३५-८१ (७४८३८)
शौचाचारपरिभ्रष्टा निर्लज्जा भोगवञ्चिताः ।
उभाभ्यामेव पाणिभ्यां शिरः कण्डूयनान्विताः ।
गृहजालाभिसंस्थाना ह्यासंस्तत्र स्त्रियः पुनः ॥ १२-२३५-८२ (७४८३९)
श्वश्रूश्वशुरयोर्मध्ये भर्तारं कृतकं यथा ।
प्रेक्षयन्ति च निर्लज्जा नार्यः कुलजलक्षणाः ॥' १२-२३५-८३ (७४८४०)
नाद्रियन्ते पशून्बद्ध्वा यवसेनोदकेन च ।
बालानां प्रेक्षमाणानां स्वयं भक्ष्यमभक्षयन् ।
तथा भृत्यजनं सर्वमसंतर्प्य च दानवाः ॥ १२-२३५-८४ (७४८४१)
पायसं कृसरं मांसमपूपानथ शष्कुलीः ।
अपाचयन्नात्मनोऽर्थे वृथा मांसान्यभक्षयन् ॥ १२-२३५-८५ (७४८४२)
उत्सूर्यशायिनश्चासन्सर्वे चासन्प्रगेशयाः ।
आवृत्तकलहाश्चात्र दिवारात्रं गृहेगृहे ॥ १२-२३५-८६ (७४८४३)
अनार्याश्चार्यमासीनं पर्युपासन्न तत्र ह ।
आश्रमस्थान्विकर्मस्थाः प्राद्विषन्त परस्परम् ॥ १२-२३५-८७ (७४८४४)
संकराश्चाभ्यवर्तन्त न च शौचमवर्तत ।
ये च वेदविदो विप्रा विस्पष्टमनुचश्च ये ।
निरन्तरविशेषास्ते बहुमानावमानयोः ॥ १२-२३५-८८ (७४८४५)
भावमाभरणं वेषं गतं स्थितमवेक्षितम् ।
असेवन्त भुजिष्या वै दुर्जनाचरितं विधिम् ॥ १२-२३५-८९ (७४८४६)

स्त्रियः पुरुषवेषेण पुंसः स्त्रीवेषधारिणः ।
क्रीडारतिविहारेषु परां मुदमवाप्नुवन् ॥१२-२३५-९० (७४८४७)
प्रभवद्भिः पुरा दायानर्हेभ्यः प्रतिपादितान् ।
नाभ्यवर्न्तत नास्तिक्याद्वर्तन्तः संभवेष्वपि ॥१२-२३५-९१ (७४८४८)
मित्रेणाभ्यर्थितं द्रव्यमर्थी संश्रयते क्वचित् ।
वालकोट्यग्रमात्रेण स्वार्थेनाघ्नत तद्वसु ॥१२-२३५-९२ (७४८४९)
परस्वादानरुचयो विपणव्यवहारिणः ।
अदृश्यन्तार्यवर्णेषु शूद्राश्चापि तपोधनाः ॥१२-२३५-९३ (७४८५०)
अधीयतेऽव्रताः केचिद्वृथा व्रतमथापरे ।
अशुश्रूषुर्गुरोः शिष्यः कश्चिच्छिष्यसखो गुरुः ॥१२-२३५-९४ (७४८५१)
पिता चैव जनित्री च श्रान्तौ वृत्तोत्सवाविव ।
अप्रभुत्वे स्थितौ वृद्धावन्नं प्रार्थयतः सुतान् ॥१२-२३५-९५ (७४८५२)
तत्र वेदविदः प्राज्ञा गाम्भीर्ये सागरोपमाः ।
कृष्यादिष्वभवन्सक्ता मूर्खाः श्राद्धान्यभुञ्जत ॥१२-२३५-९६ (७४८५३)
प्रातः सायं च सुप्रश्नं कल्पनं प्रेषणक्रियाः ।
शिष्यानप्रहितास्तेषामकुर्वन्गुरवश्च ह ॥१२-२३५-९७ (७४८५४)
श्वश्रूश्वशुरयोरग्रे वधूः प्रेष्यानशासत ।
अन्वशासच्च भर्तारं समाह्वायाभिजल्पति ॥१२-२३५-९८ (७४८५५)
प्रयत्नेनापि चारक्षच्चित्तं पुत्रस्य वै पिता ।
व्यभजच्चापि संरम्भाद्दुःखवासं तथाऽवसत् ॥१२-२३५-९९ (७४८५६)
अग्निदाहेन चोरैर्वा राजभिर्वा हृतं धनम् ।
दृष्ट्वा द्वेषात्प्राहसन्त सुहृत्संभाविता ह्यपि ॥१२-२३५-१०० (७४८५७)
कृतघ्ना नास्तिकाः पापा गुरुदाराभिमर्शिनः ।
ग्श्वशुरानुगताः सर्वे ह्युत्सृज्य पितरौ सुताः ॥१२-२३५-१०१ (७४८५८)
स्वकर्मणा च जातोऽहमित्येवंवादिनस्तथा।'
अभक्ष्यभक्षणरता निर्मर्यादा हतत्विषः ॥ १२-२३५-१०२ (७४८५९)
तेष्वेवमादीनाचारानाचरत्सु विपर्यये ।
नाहं देवेन्द्र वत्स्यामि दानवेष्विति मे मतिः ॥१२-२३५-१०३ (७४८६०)
तन्मां स्वयमनुप्राप्ताभिनन्द शचीपते ।
त्वयाऽर्चितां मां देवेश पुरो धास्यन्ति देवताः ॥१२-२३५-१०४ (७४८६१)
यत्राहं तत्र मत्कान्ता मद्विशिष्टा मदर्पणाः ।
सप्तदेव्यो जयाष्टभ्यो वासमेष्यन्ति तेऽष्टधा ॥१२-२३५-१०५ (७४८६२)
आशा श्रद्धा धृतिः क्षान्तिर्विजितिः सन्नतिः क्षमा ।
अष्टमी वृत्तिरेतासां पुरोगा पाकशासन ॥१२-२३५-१०६ (७४८६३)
ताश्चाहं चासुरांस्त्यक्त्वा युष्मद्विषयमागताः ।
त्रिदशेषु निवत्स्यामो धर्मनिष्ठान्तरात्मसु ॥१२-२३५-१०७ (७४८६४)

इत्युक्तवचनां देवीं प्रीत्यर्थं च ननन्दतुः ।
नारदश्चात्र देवर्षिर्वृत्रहन्ता च वासवः ॥ १२-२३५-१०८ (७४८६५)
ततोऽनलसखो वायुः प्रववौ देववर्त्मसु ।
इष्टगन्धः सुखस्पर्शः सर्वेन्द्रियसुखावहः ॥ १२-२३५-१०९ (७४८६६)
शुचौ चाभ्यर्थिते देशे त्रिदशाः प्रायशः स्थिताः ।
लक्ष्मीसहितमासीनं मघवन्तं दिदृक्षवः ॥ १२-२३५-११० (७४८६७)
ततो दिवं प्राप्य सहस्रलोचनः ।
स्त्रियोपपन्नः सुहृदा महर्षिणा ।
रथेन हर्यश्वयुजा सुरर्षभः
सदः सुराणामभिसत्कृतो ययौ ॥ १२-२३५-१११ (७४८६८)
अथेङ्गितं वज्रधरस्य नारदः
श्रियश्च देव्या मनसा विचारयन् ।
श्रियै शशंसामरदृष्टपौरुषः
शिवेन तत्रागमनं महर्षिभिः ॥ १२-२३५-११२ (७४८६९)
ततोऽमृतं द्यौः प्रववर्ष भास्वती
पितामहस्यायतने स्वयंभुवः ।
अनाहता दुन्दुभयोऽथ नेदिरे
तथा प्रसन्नाश्च दिशश्चकाशिरे ॥ १२-२३५-११३ (७४८७०)
यथर्तु सस्येषु ववर्ष वासवो
न धर्ममार्गाद्विचचाल कश्चन ।
अनेकरत्नाकरभूषणा च भूः
सुघोषघोषाश्च दिवौकसां जये ॥ १२-२३५-११४ (७४८७१)
क्रियाभिरामा मनुजा मनस्विनो
बभुः शुभे पुण्यकृतां पथि स्थिताः ।
नरामराः किन्नरयक्षराक्षसाः
समृद्धिमन्तः सुमनस्विनोऽभवन् ॥ १२-२३५-११५ (७४८७२)
न जात्वकाले कुसुमं कुतः फलं
पपात वृक्षात्पवनेरितादपि ।
रसप्रदाः कामदुघाश्च धेनवो
न दारुणा वाग्विचचार कस्यचित् ॥ १२-२३५-११६ (७४८७३)
इमां सपर्यां सह सर्वकामदैः
श्रियाश्च शक्रप्रमुखैश्च दैवतैः ।
पठन्ति ये विप्रसदः समागताः
समृद्धकामाः श्रियमाप्नुवन्ति ते ॥ १२-२३५-११७ (७४८७४)
त्वया कुरूणां वर यत्प्रचोदितं
भवाभवस्येह परं निदर्शनम् ।

तदद्य सर्वं परिकीर्तितं मया
परीक्ष्य तत्त्वं परिगन्तुमर्हसि ॥ १२-२३५-११८ (७४८७५)
ग्संस्मृत्य बुद्धीन्द्रियगोचरातिगं
स्वगोचरे सर्वकृतालयं तम् ।
हरिं महापाग्रहरं जनास्ते
संस्मृत्य संपूज्य विधूतपापाः ॥ १२-२३५-११९ (७४८७६)
यमैश्च नित्यं नियमैश्च संयता
स्तत्वं च विष्णोः परिपश्यमानाः ।
देवानुसारेण विमुक्तियोगं
ते गाहमानाः परमाप्नुवन्ति ॥ १२-२३५-१२० (७४८७७)
एवं राजेन्द्र सततं जपहोमपरायणः ।
वासुदेवपरो नित्यं ज्ञानध्यानपरायणः ॥ १२-२३५-१२१ (७४८७८)
दानधर्मरतिर्नित्यं प्रजास्त्वं परिपालय ।
वासुदेवपरो नित्यं ज्ञानध्यानपरायणान् ।
विशेषेणार्चयेथास्त्वं सततं पर्युपास्व च ॥' ॥ १२-२३५-१२२ (७४८७९)

इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि
पञ्चत्रिंशदधिकद्विशततमोऽध्यायः ॥ २३५.।
Mahabharata - Shanti Parva - Chapter Footnotes

१२-२३५-६ भवमौलिभवां गङ्गां इति ध ।पाठः ॥
१२-२३५-२६ विजितिः स्मृतिः टड़ ।पाठः ॥
१२-२३५-२९ इति ट ।ड।ध।पाठः ॥
१२-२३५-४४ धैर्यादुद्धारितारिषु इति नचाप्यासन्प्रगेशयाः इति ध
।पाठः ॥
१२-२३५-४५ कार्यं कृतं चान्ववेक्ष्य इति ट ।पाठः ॥
१२-२३५-६० मृत्या भर्त्रन्तरं प्राप्य इति ट ।पाठः ॥
१२-२३५-८० प्रकीर्णं कांस्यभाजनमिति झ ।पाठः ॥

---

शन्तिपर्व-अध्यय२३६
॥ श्रीः ॥
१२.२३६. अध्यायः २३६

Mahabharata - Shanti Parva - Chapter Topics
भीष्मेण युधिष्ठिरंप्रति वैराग्यादिपूर्यकभगवज्ज्ञानस्य श्रेयः
साधनत्वपरासितजैगीषव्यसंवादानुवादः ॥ १.।
Mahabharata - Shanti Parva - Chapter Text

१२-२३५-० (७४८८०)
युधिष्ठिर उवाच। १२-२३५-०क्ष् (६२१२)
किंशीलः किंसमाचारः किंविद्यः किंपराक्रमः ।
प्राप्नोति ब्रह्मणः स्थानं यत्परं प्रकृतेर्ध्रुवम् ॥ १२-२३६-१ (७४८८१)
भीष्म उवाच। १२-२३६-२क्ष् (६२१३)
मोक्षधर्मेषु नियतो लघ्वाहारो जितेन्द्रियः ।
प्राप्नोति ब्रह्मणः स्थानं तत्परं प्रकृतेर्ध्रुवम् ॥ १२-२३६-२ (७४८८२)
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
जैगीषव्यस्य संवादमसितस्य च भारत ॥ १२-२३६-३ (७४८८३)
ग्महादेवान्तरे वृत्तं देव्याश्चैवान्तरे तथा ।
यथावच्छृणु राजेन्द्र ज्ञानदं पापनाशनम् ॥' १२-२३६-४ (७४८८४)
जैगीषव्यं नहाप्रज्ञं धर्नाणामागतागमम् ।
अक्रुध्यन्तमहृष्यन्तमसितो देवलोऽब्रवीत् ॥ १२-२३६-५ (७४८८५)
न प्रीमसे बन्द्यमानो निन्द्यमानो न कुप्यसे ।
का ते प्रज्ञा कुतश्चैषा किं ते तस्याः परायणम् ॥ १२-२३६-६ (७४८८६)
भीष्म उवाच। १२-२३६-७क्ष् (६२१४)
इति तेनानुयुक्तः स तमृपाच महातपाः ।
महद्वाक्यप्रसंदिग्धं पुष्कलार्थपदं शुचि ॥ १२-२३६-७ (७४८८७)
जैगीषव्य उवाच। १२-२३६-८क्ष् (६२१५)
या यतियौ परा निष्ठा या शान्तिः पुण्यकर्मणाम् ।
तां तेऽहं सं प्रवक्ष्यामि यां मां पृच्छसि वै द्विज ॥ १२-२३६-८ (७४८८८)
निन्वत्सु वा सप्ता नित्यं प्रशंसत्सु च देवल ।
निहवन्ति च ये तेषां समयं सुकृतं च यत् ॥ १२-२३६-९ (७४८८९)
उक्ताश्च न विवक्ष्यन्ति वक्तारमहिते हितम् ।
प्रतिहन्तुं न चेच्छन्ति हन्तारं वै मनीषिणः ॥ १२-२३६-१० (७४८९०)
नाप्राप्तमनुशोचन्ति प्राप्तकालानि कुर्वते ।
न चातीतानि शोचन्ति न चैतान्प्रतिजानते ॥ १२-२३६-११ (७४८९१)
संप्राप्तानां च पूज्यानां कामादर्थेषु देवल ।
यथोपपत्तिं कुर्वन्ति शक्तिमन्तो धृतव्रताः ॥ १२-२३६-१२ (७४८९२)
पक्वविद्या महाप्राज्ञा जितक्रोधा जितेन्द्रियाः ।
मनसा कर्मणा वाचा नापराध्यन्ति कस्यचित् ॥ १२-२३६-१३ (७४८९३)
अनीर्षवो न चोन्योन्यं विहिंसन्ति कदाचन ।
न च जातूपतप्यन्ते धीराः परसमृद्धिभिः ॥ १२-२३६-१४ (७४८९४)
निन्दाप्रशंसे चात्यर्थं न वदन्ति परस्य च ।
न च निन्दाप्रशंसाभ्यां विक्रियन्ते कदाचन ॥ १२-२३६-१५ (७४८९५)

सर्वतश्च प्रशान्ता ये सर्वभूतहिते रताः ।
न कुध्यन्ति स हृष्यन्ति नापराध्यन्ति कस्यचित् ॥ १२-२३६-१६ (७४८९६)
विमुच्य हृदयग्रन्थिं चङ्क्रम्यन्ते यथासुखम् ।
न चैषां बान्धवाः सन्ति ये चान्येषां च बान्धवाः ॥ १२-२३६-१७ (७४८९७)
अमित्राश्च न सन्त्येषां ये चामित्रा न कस्यचित् ।
य एवं कुर्वते मर्त्याः सुखं जीवन्ति सर्वदा ॥ १२-२३६-१८ (७४८९८)
ये धर्मं चानुरुध्यन्ते धर्मज्ञा द्विजसत्तमाः ।
ये ह्यतो विच्युता मार्गात्ते हृष्यन्त्युद्विजन्ति च ॥ १२-२३६-१९ (७४८९९)
आस्थितस्तमहं मार्गमसूयिष्यामि कं कथम् ।
निन्द्यमानः प्रशस्तो वा हृष्येयं केन हेतुना ॥ १२-२३६-२० (७४९००)
यद्यदिच्छन्ति तत्तस्मादधिगच्छन्ति मानवाः ।
न मे निन्दाप्रशंसाभ्यां ह्रासवृद्धी भविष्यतः ॥ १२-२३६-२१ (७४९०१)
अमृतस्येव संतृप्येदवमानस्य तत्त्ववित् ।
विषस्येवोद्विजेन्नित्यं संमानस्य विचक्षणः ॥ १२-२३६-२२ (७४९०२)
अवज्ञातः सुखं शेते इह चामुत्र चोभयोः ।
विमुक्तः सर्वपापेभ्यो योऽवमन्ता स बुध्यते ॥ १२-२३६-२३ (७४९०३)
परां गतिं च ये केचित्प्रार्थयन्ति मनीषिणः ।
एतद्व्रतं समाश्रित्य सुखमेधन्ति ते जनाः ॥ १२-२३६-२४ (७४९०४)
सर्वतश्च समाहृत्य क्रतून्सर्वाञ्जितेन्द्रियः ।
प्राप्नोति ब्रह्मणः स्थानं यत्परं प्रकृतेर्ध्रुवम् ॥ १२-२३६-२५ (७४९०५)
नास्य देवा न गन्धर्वा न पिशाचा न राक्षसाः ।
पदमन्ववरोहन्ति प्राप्तस्य परमां गतिम् ॥ १२-२३६-२६ (७४९०६)
 ग्एतच्छ्रुत्वा मुनेस्तस्य वचनं देवलस्तथा ।
तदधीनो भवच्छिष्यः सर्वद्वन्द्वविनिष्ठितः ॥ १२-२३६-२७ (७४९०७)
अथान्यत्तु पुरावृतं जैगीषव्यस्य धीमतः ।
शृणु राजन्नवहितः सर्वज्ञानसमन्वितः ॥ १२-२३६-२८ (७४९०८)
यमाहुः सर्वलोकेशं सर्वलोकनमस्कृतम् ।
अष्टमूर्ति जगन्मूर्तिमिष्टसंधिविभूषितम् ॥
यं प्राप्ता न विषीदन्ति न शोचन्त्युद्विजन्ति च ॥  १२-२३६-२९ (७४९०९)
यस्य स्वाभाविकी शक्तिरिदं विश्वं चराचरम् ।
याति सज्जति सर्वात्मा स देवः परमेश्वरः ॥ १२-२३६-३० (७४९१०)
मेरोरुत्तरपूर्वे तु सर्वरत्नविभूषिते ।
अचिन्त्ये विमले स्थाने सर्वर्तुकुसुमान्विते ॥ १२-२३६-३१ (७४९११)
वृक्षैश्च शोभिते नित्यं दिव्यवायुसमीरिते ।
नानाभूतगणैर्युक्तः सर्वदेवनमस्कृतः ॥ १२-२३६-३२ (७४९१२)
तत्र विद्याधरगणा गन्धर्वाप्सरसां गणाः ।

लोकपालाः समुद्राश्च नद्यः शैलाः सरांसि च ॥ १२-२३६-३३ (७४९१३)
ऋषयो वालखिल्याश्च यज्ञाः स्तोभाह्वयास्तथा ।
उपासांचक्रिरे देवं प्रजानां पतयस्तथा ॥ १२-२३६-३४ (७४९१४)
तत्र रुद्रो महादेवो देव्या चैव सहोमया ।
आस्ते वृषध्वजः श्रीमान्सोमसूर्याग्निलोचनः ॥ १२-२३६-३५ (७४९१५)
तत्रैवं देवमालोक्य देवी धात्री विभावरी ।
उमा देवी परेशानमपृच्छद्विनयान्विता ॥ १२-२३६-३६ (७४९१६)
अर्थः कोऽथार्थशक्तिः का भगवन्ब्रूहि मेऽर्थितः ।
तयैवं परिपृष्टोऽसौ प्राह देवो महेश्वरः ॥ १२-२३६-३७ (७४९१७)
अर्थोऽहमर्थशक्तिस्त्वं भोक्ताऽहं भोज्यमेव च ।
रूपं विद्धि महाभागे प्रकृतिस्त्वं परो ह्यहम् ॥ १२-२३६-३८ (७४९१८)
अहं विष्णुरहं ब्रह्मा ह्यहं यज्ञस्तथैव च ।
आवयोर्न च भेदोऽस्ति परमार्थस्ततोऽबले ।
तथापि विघ्नस्ते भेदं किं मां त्वं परिपृच्छसि ॥ १२-२३६-३९ (७४९१९)
एवमुक्ता ततः प्राह ह्यधिकं ह्येतयोर्वद ।
श्रेष्ठं वेद महादेव नम इत्येव भामिनी ॥ १२-२३६-४० (७४९२०)
तदन्तरे स्थितो विद्वान्वसुरूपो महामुनिः ।
जैगीषव्यः स्मयन्प्राह ह्यर्थ इत्येव नादयन् ॥ १२-२३६-४१ (७४९२१)
श्रेष्ठोन्योऽस्मान्महीपिण्डा तल्लीना शक्तिरापरा ।
मुद्रिकादिविशेषेण विस्तृता संभृतेति च ॥ १२-२३६-४२ (७४९२२)
तच्छ्रुत्वा वचनं देवी कोसावित्यब्रवीद्रुषा ।
वाक्यमस्याद्य संभङ्क्त्वा प्रोक्तवानिति शंकरम् ॥ १२-२३६-४३ (७४९२३)
तच्छ्रुत्वा निर्गतो धीमानाश्रमं स्वं महामुनिः ।
स्थानात्स्वर्गगणे विद्वान्योगैश्वर्यसमन्वितः ॥ १२-२३६-४४ (७४९२४)
ततः प्रहस्य भगवान्सर्वपापहरो हरः ।
प्राह देवीं प्रशान्तात्मा जैगीषव्यो महामुनिः ॥ १२-२३६-४५ (७४९२५)
भक्तो मम सखा चैव शिष्यश्चात्र महामुनिः ।
जैगीषव्य इति ख्यातः प्रोक्त्वासा निर्गतः शुभे ॥ १२-२३६-४६ (७४९२६)
तच्छ्रुत्वा साऽथ संक्रुद्धा न न्याय्यं तेन वै कृतम् ।
विकृताऽहं त्वया देव मुनिना च तथाकृता ॥ १२-२३६-४७ (७४९२७)
अतक्रज्ञादयदेवेश मध्ये प्राप्तं न तच्छ्रुतम् ।
तच्छ्रुत्वा भगवानाह महादेवः पिनाकधृत् ॥ १२-२३६-४८ (७४९२८)
निरपेक्षो मुनिर्योगी मामुपाश्रित्य संस्थितः ।
निर्द्वन्द्वः सततं धीमान्समरूपस्वभावधृत् ॥ १२-२३६-४९ (७४९२९)
तस्मात्क्षमस्व तं देवि रक्षितव्यस्त्वया च सः ॥ १२-२३६-५० (७४९३०)
इत्युक्ता प्राह सा देवी मुनेस्तस्य महात्मनः ।

निराशत्वमहं द्रष्टुमिच्छाम्यन्तकनाशन ॥१२-२३६-५१ (७४९३१)
तथेति चोक्त्वा तां देवो वृषमारुह्य सत्वरम् ।
देवगन्धर्वसङ्घैश्च स्तूयमानो जगत्पतिः ॥१२-२३६-५२ (७४९३२)
अजरामरशुद्धात्मा यत्रास्ते स महामुनिः ।
इतस्ततः समाहृत्य वीरसंघैर्महायशाः ॥१२-२३६-५३ (७४९३३)
देहप्रावरणार्थं वै संसरन्स तदा मुनिः ।
प्रत्युद्गम्य महादेवं यथार्हं प्रतिपूज्य च ।
पुनः स पूर्ववत्कथां सूच्या सूत्रेण सूचयत् ॥ १२-२३६-५४ (७४९३४)
तमाह भगवाञ्शंभुः किं प्रदास्यामि ते मुने ।
वृणीष्व मत्तः सर्वं त्वं जैगीषव्य यदीच्छसि ॥१२-२३६-५५ (७४९३५)
नावलोकयमानस्तु देवदेवं महामुनिः ।
अनवाप्तं न पश्यामि त्वत्तो गोवृषभध्वज ।
कृतार्थः परिपूर्णोऽहं यत्ते कार्यं तु गम्यताम् ॥ १२-२३६-५६ (७४९३६)
प्रहसंस्तु पुनः शर्वो वृणीष्वेति तमब्रवीत् ।
अवश्यं हि वरो प्रत्तः श्राव्यं वरमनुत्तमम् ॥१२-२३६-५७ (७४९३७)
जैगीषव्यस्तमाहेदं श्रोतव्यं च त्वया मम ।
सूचीमनु महादेव सूत्रं समनुगच्छतः ॥१२-२३६-५८ (७४९३८)
ततः प्रहस्य भगवान्गौरीमालोक्य शङ्करः ।
स्वस्थानं प्रययौ हृष्टः सर्वदेवनमस्कृतः ॥१२-२३६-५९ (७४९३९)
एतत्ते कथितं राजन्यस्मात्त्वं परिपृच्छसि ।
निर्द्वन्द्वा योगिनो नित्याः सर्वशस्ते स्वयंभुवः ॥' ॥ १२-२३६-६० (७४९४०)

इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि
षट्त्रिंशदधिकद्विशततमोऽध्यायः ॥ २३६.।
Mahabharata - Shanti Parva - Chapter Footnotes

१२-२३६-८ या शक्तिः पुण्वकमेणां इति ट ।पाठः ॥
१२-२३६-१२ संप्रदानं च पूज्यानां इति ट ।थ। पाठः ॥

---

शन्तिपर्व-अध्यय२३७
॥ श्रीः ॥
१२.२३७. अध्यायः २३७

Mahabharata - Shanti Parva - Chapter Topics
भीष्मेण युधिष्ठिरंप्रति सद्गुणानां जनवशीकरणकारणत्वे
दृष्टान्ततया उग्रसेनाय कृष्णोदितनारदगुणानुवादः ॥१.।
Mahabharata - Shanti Parva - Chapter Text

१२-२३७-० (७४९४१)
युधिष्ठिर उवाच। १२-२३७-०क्ष् (६२१६)
प्रियः सर्वस्य लोकस्य सर्वसत्वाभिनन्दितः ।
गुणैः तर्पैरुपेतश्च कोन्वस्ति भुवि मानवः ॥ १२-२३७-१ (७४९४२)
भीष्म उवाच। १२-२३७-२क्ष् (६२१७)
अत्र ते वर्तयिष्यामि पृच्छतो भरतर्षभ ।
उग्रसेनस्य संवादं नारदे केशवस्य च ॥ १२-२३७-२ (७४९४३)
उग्रसेन उवाच। १२-२३७-३क्ष् (६२१८)
यस्य संकल्पते लोको नारदस्य प्रकीर्तने ।
मन्ये स गुणसंपन्नो ब्रूहि तन्मम पृच्छतः ॥ १२-२३७-३ (७४९४४)
वासुदेव उवाच। १२-२३७-४क्ष् (६२१९)
कुकुराधिप यान्मन्ये शृणु तान्मे विवक्षतः ।
नारदस्य गुणान्साधून्संक्षेपेण नराधिप ॥ १२-२३७-४ (७४९४५)
न चारित्रनिमित्तोऽस्याहंकारो देहपातनः ।
अभिन्नश्रुतचारित्रस्तस्मात्सर्वत्र पूजितः ॥ १२-२३७-५ (७४९४६)
अरतिः क्रोधचापल्ये भयं नैतानि नारदे ॥
अदीर्घसूत्रः शूरश्च तस्मात्सर्वत्र पूजितः ॥ १२-२३७-६ (७४९४७)
उपास्यो नारदो बाढं वाचि नास्य व्यतिक्रमः ।
कामतो यदि वा लोभात्तस्मात्सर्वत्र पूजितः ॥ १२-२३७-७ (७४९४८)
अध्यात्मविधितत्त्वज्ञः क्षान्तः शक्तो जितेन्द्रियः ।
ऋजुश्च सत्यवादी च तस्मात्सर्वत्र पूजितः ॥ १२-२३७-८ (७४९४९)
तेजसा यशसा बुद्ध्या ज्ञानेन विनयेन च ।
जन्मना तपसा वृद्धस्तस्मात्सर्वत्र पूजितः ॥ १२-२३७-९ (७४९५०)
सुशीलः सुखसंवेशः सुभोजः स्वादरः शुचिः ।
सुवाक्यश्चाप्यनीर्ष्यश्च तस्मात्सर्वत्र पूजितः ॥ १२-२३७-१० (७४९५१)
कल्याणं कुरुते बाढं पापमस्मिन्न विद्यते ।
न प्रीयते परानर्थैस्तस्मात्सर्वत्र पूजितः ॥ १२-२३७-११ (७४९५२)
वेदश्रूतिभिराख्यानैरर्थानभिजिगीषति ।
तितिक्षुरनवज्ञश्च तस्मात्सर्वत्र पूजितः ॥ १२-२३७-१२ (७४९५३)
समत्वाच्च प्रियो नास्ति नाप्रियश्च कथंचन ।
मनोऽनुकूलवादी च तस्मात्सर्वत्र पूजितः ॥ १२-२३७-१३ (७४९५४)
बहुश्रुतश्चित्रकथः पण्डितोऽनलसोऽशठः ।
अदीनोऽक्रोधनोऽलुब्धस्तस्मात्सर्वत्र पूजितः ॥ १२-२३७-१४ (७४९५५)
नार्थे धने वा कामे वा भूतपूर्वोऽस्य विग्रहः ।
दोषाश्चास्य समुच्छिन्नास्तस्मात्सर्वत्र पूजितः ॥ १२-२३७-१५ (७४९५६)

दृढभक्तिरनिन्द्यात्मा श्रुतवाननृशंसवान् ।
वीतसंमोहदोषश्च तस्मात्सर्वत्र पूजितः ॥१२-२३७-१६ (७४९५७)
असक्तः सर्वसङ्गेषु सक्तात्मेव च लक्ष्यते ।
अदीर्घसंशयो वाग्मी तस्मात्सर्वत्र पूजितः ॥१२-२३७-१७ (७४९५८)
समाधिर्नास्य कामार्थै नात्मानं स्तौति कर्हिचित् ।
अनीर्षुर्मृदुसंवादस्तस्मात्सर्वत्र पूजितः ॥१२-२३७-१८ (७४९५९)
ग्नाहंकारे मुक्तिरस्य चारित्रे बुद्धिरास्थिता ।
वेदार्थविद्विभागेन यज्ञविद्योगवित्कविः ।
भक्तिमान्य सदा विद्वांस्तस्मात्सर्वत्र पूजितः ॥ १२-२३७-१९ (७४९६०)
त्रिगुणं गुणभोक्तारं पञ्चयज्ञात्मकं तथा ।
यथावत्स विजानाति तस्मात्सर्वत्र पूजितः ॥१२-२३७-२० (७४९६१)
कल्याणं कुरुते बाढं पापमस्मिन्न विद्यते ।
न प्रीयते परानर्थैस्तस्मात्सर्वत्र पूज्यते ॥' १२-२३७-२१ (७४९६२)
लोकस्य विविधं चित्तं प्रेक्षते चाप्यकुत्सयन् ।
संसर्गविद्याकुशलस्तस्मात्सर्वत्र पूजितः ॥१२-२३७-२२ (७४९६३)
नासूयत्यागमं कंचित्स्वनयेनोपजीवति ।
अबन्ध्यकालोऽवश्यात्मा तस्मात्सर्वत्र पूजितः ॥१२-२३७-२३ (७४९६४)
कृतश्रमः कृतप्रज्ञो न च तृप्तः समाधितः ।
नित्ययुक्तोऽप्रमत्तश्च तस्मात्सर्वत्र पूजितः ॥१२-२३७-२४ (७४९६५)
नापत्रपश्च युक्तश्च नियुक्तः श्रेयसे परैः ।
अभेत्ता परगुह्यानां तस्मात्सर्वत्र पूजितः ॥१२-२३७-२५ (७४९६६)
न हृष्यत्यर्थलाभेषु नालाभे तु व्यथत्यपि ।
स्थिरबुद्धिरसक्तात्मा तस्मात्सर्वत्र पूजितः ॥१२-२३७-२६ (७४९६७)
तं सर्वगुणसंपन्नं दक्षं शुचिमनामयम् ।
कालज्ञं च प्रियज्ञं च कः प्रियं न करिष्यति ॥१२-२३७-२७ (७४९६८)
ग्इत्युक्तः संप्रशस्यैनमुग्रसेनो गतो गृहात् ।
आस्ते कृष्णस्तथैकान्ते पर्यङ्के रत्नभूषिते ॥१२-२३७-२८ (७४९६९)
कदाचित्तत्र भगवान्प्रविवेश महामुनिः ।
तमभ्यर्च्य यथान्यायं तूष्णीमास्ते जनार्दनः ॥१२-२३७-२९ (७४९७०)
तं खिन्नमिव संलक्ष्य केशवं वाक्यमब्रवीत् ।
किमिदं केशव तव वैमनस्यं जनार्दन ।
अभूतपूर्वं गोविन्द तन्मे व्याख्यातुमर्हसि ॥ १२-२३७-३० (७४९७१)
श्रीवासुदेव उवाच। १२-२३७-३१क्ष् (६२२०)
नासुहृत्परमं मेऽद्य नापदोऽर्हति वेदितुम् ।
अपण्डितो वापि सुहृत्पण्डितो वाऽप्यनात्मवान् ॥१२-२३७-३१ (७४९७२)
स त्वं सुहृच्च विद्वांश्च जितात्मा श्रोतुमर्हसि ।

अप्येतद्बूदि यद्दुःखं तद्भवाञ्श्रोतुमर्हति ॥ १२-२३७-३२ (७४९७३)
दास्यमैश्वर्यवादेन ज्ञातीनां च करोम्यहम् ।
द्विषन्ति सततं क्रुद्धा ज्ञातिसंबन्धिवान्धवाः ॥ १२-२३७-३३ (७४९७४)
दिव्या अपि तथा भोगा दत्तास्तेषां मया पृथक् ।
तथाऽपि च द्विषन्तो मां वर्तन्ते च परस्परम् ॥ १२-२३७-३४ (७४९७५)
नारद उवाच। १२-२३७-३५क्ष् (६२२१)
अनायसेन शस्त्रेण परिमृज्यानुमृज्य च ।
जिह्वामुद्धर चैतेषां न वक्ष्यन्ति ततः परम् ॥ १२-२३७-३५ (७४९७६)
भगवानुवाच। १२-२३७-३६क्ष् (६२२२)
अनायसं कथं विन्द्यां शस्त्रं मुनिवरोत्तम ।
येनषामुद्धरे जिह्वां ब्रूहि तन्मे यथातथम् ॥ १२-२३७-३६ (७४९७७)
नारद उवाच। १२-२३७-३७क्ष् (६२२३)
गोहिरण्यं च वासांसि रत्नाद्यं यद्धनं बहु ।
आस्ये प्रक्षिप चैतेषां शस्त्रमेतदनायसम् ॥ १२-२३७-३७ (७४९७८)
सुहृत्संबन्धिमित्राणां गुरूणां स्वजनस्य च ।
आख्यातं शस्त्रमेतद्धि तेन च्छिन्धि पुनः पुनः ॥ १२-२३७-३८ (७४९७९)
तवैश्वर्यप्रदानानि श्लाध्यमेषां वचांसि च ।
समर्थं त्वामभिज्ञाय प्रवदन्ति च ते नराः ॥ १२-२३७-३९ (७४९८०)
भीष्म उवाच। १२-२३७-४०क्ष् (६२२४)
ततः प्रहस्य भगवान्संपूज्य च महामुनिम् ।
तथाऽकरोन्महातेजा मुनिवाक्येन चोदितः ॥ १२-२३७-४० (७४९८१)
एवंप्रभावो ब्रह्मर्षिर्नारदो मुनिसत्तमः ।
पृष्टवानसि यन्मां त्वं तदुक्तं राजसत्तम ॥ १२-२३७-४१ (७४९८२)
सर्वधर्महिते युक्ताः सत्यधर्मपरायणाः ।
लोकप्रियत्वं गच्छन्ति ज्ञानविज्ञानकोविदाः ॥' ॥ १२-२३७-४२ (७४९८३)

इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि
सप्तत्रिंशदधिकद्विशततमोऽध्यायः ॥ २३७.।
Mahabharata - Shanti Parva - Chapter Footnotes

१२-२३७-१२ तितिक्षुरनवद्यश्चेति ट ।पाठः ॥
१२-२३७-३१ असुहृत्नापुरुषः ॥

---

शन्तिपर्व-अध्यय२३८
॥ श्रीः ॥
१२.२३८. अध्यायः २३८

Mahabharata - Shanti Parva - Chapter Topics

भीष्मेण युधिष्ठिरंप्रति

सृष्ट्यादिप्रतिपादकव्यासशुकसंवादानुवादः ॥ १. ।

Mahabharata - Shanti Parva - Chapter Text

१२-२३८-० (७४९८४)
युधिष्ठिर उवाच। १२-२३८-०क्ष् (६२२५)
आद्यन्तं सर्वभूतानां ज्ञातुमिच्छामि कौरव ।
ध्यानं कर्म च कालं च तथैवायुर्युगेयुगे ॥ १२-२३८-१ (७४९८५)
लोकतत्त्वं च कात्स्न्र्येन भूतानामागतिं गतिम् ।
सर्गश्च निधनं चैव कुत एतत्प्रवर्तते ॥ १२-२३८-२ (७४९८६)
ग्भेदकं भेदतत्वं च तथाऽन्येषां मतं तथा ।
अवस्थात्रितयं चैव यादृशं च पितामह ॥' १२-२३८-३ (७४९८७)
यदि तेऽनुग्रहे बुद्धिरस्मास्विह सतां वर ।
एतद्भवन्तं पृच्छामि तद्भवान्प्रब्रवीतु मे ॥ १२-२३८-४ (७४९८८)
पूर्वं हि कथितं श्रुत्वा भृगुभाषितमुत्तमम् ॥
भरद्वाजस्य विप्रर्षेस्ततो मे बुद्धिरुत्तमा ॥ १२-२३८-५ (७४९८९)
जाता परमधर्मिष्ठा दिव्यसंस्थानसंस्थिता ।
ततो भूयस्तु पृच्छामि तद्भवान्वक्तुमर्हति ॥ १२-२३८-६ (७४९९०)
भीष्म उवाच। १२-२३८-७क्ष् (६२२६)
अत्र ते वर्तयिष्येऽहमितिहासं पुरातनम् ।
जगौ यद्भगवान्व्यासः पुत्राय परिपृच्छते ॥ १२-२३८-७ (७४९९१)
अधीत्य वेदानखिलान्साङ्गोपनिषदस्तथा ।
अन्विच्छन्नैष्ठिकं कर्म धर्मनैपुणदर्शनात् ॥ १२-२३८-८ (७४९९२)
कृष्णद्वैपायनं व्यासं पुत्रो वैयासकिः शुकः ।
पप्रच्छ संशयमिमं छिन्नधर्मार्थसंशयम् ॥ १२-२३८-९ (७४९९३)
श्रीशुक उवाच। १२-२३८-१०क्ष् (६२२७)
भूतग्रामस्य कर्तारं कालज्ञाने च निश्चितम् ।
ग्ज्ञानं ब्रह्म च योगं च गवात्मकमिदं जगत् ॥ १२-२३८-१० (७४९९४)
त्रितये त्वेनमायाति तथा ह्येषोऽपि वा पुनः ।
केनैव च विभागः स्यात्तुरीयो लक्षणैर्विना ॥ १२-२३८-११ (७४९९५)
ज्ञानज्ञेयान्तरे कोसौ कोयं भावस्तु भेदवत् ।
यज्ज्ञानं लक्षणं चैव तेषां कर्तारमेव च।'
ब्राह्मणस्य च यत्कृत्यं तद्भवान्वक्तुमर्हति ॥ १२-२३८-१२ (७४९९६)
भीष्म उवाच। १२-२३८-१३क्ष् (६२२८)

तस्मै प्रोवाच तत्सर्वं पिता पुत्राय पृच्छते ।
अतीतानागते विद्वान्सर्वज्ञः सर्वधर्मवित् ॥ १२-२३८-१३ (७४९९७)
ग्पृच्छतस्तव सत्पुत्र यथावत्कीर्तयाम्यहम् ।
शृणुष्वावहितो भूत्वा यथाऽऽवृतमिदं जगत् ॥ १२-२३८-१४ (७४९९८)
कार्यादि कारणान्तं यत्कार्यान्तं कारणादिकम् ।
ज्ञानं तदुभयं वित्त्वा सत्यं च परमं शुभम् ॥ १२-२३८-१५ (७४९९९)
ब्रह्मेति चाभिविख्यातं तद्धि पश्यन्ति सूरयः ।
ब्रह्मतेजोमयं भूतं भूतकारणमद्भुतम् ॥ १२-२३८-१६ (७५०००)
आसीदादौ ततस्त्वाहुः प्राधान्यमिति तद्विदः ।
त्रिगुणां तां महामायां वैष्णवीं प्रकृतिं विदुः ॥ १२-२३८-१७ (७५००१)
तदीदृशमनाद्यन्तमव्यक्तमजरं ध्रुवम् ।
अप्रतर्क्यमविज्ञेयं ब्रह्माग्रे वैकृतं च तत् ॥ १२-२३८-१८ (७५००२)
तद्धि प्रधानमुद्दिष्टं त्रिसूक्ष्मं त्रिगुणात्मकम् ।
सम्यग्योगगुणं स्वस्थं तदिच्छाक्षोभितं महत् ॥ १२-२३८-१९ (७५००३)
शक्तित्रयात्मिका तस्य प्रकृतिः कारणात्मिका ।
अस्वतन्त्रा च सततं विदधिष्ठानसंयुता ॥ १२-२३८-२० (७५००४)
स्वभावाख्यं समापन्ना मोहविग्रहधारिणी ।
विविधस्यास्य जीवस्य भोगार्थं समुपागता ॥ १२-२३८-२१ (७५००५)
यथा संनिधिमात्रेण गन्धक्षोभाय जायते ।
मनस्तद्वदशेषस्य परात्पर इति स्मृतः ॥ १२-२३८-२२ (७५००६)
सृष्ट्वा प्रविश्य तत्तस्मिन्क्षोभयामास विष्ठितः ।
सात्विको राजसश्चैव तामसश्च त्रिधा महान् ॥ १२-२३८-२३ (७५००७)
प्रधानतत्वादुद्भूतो महत्वाच्च महान्स्मृतः ।
प्रधानतत्वमुद्भूतं महत्तत्वं समावृणोत् ॥ १२-२३८-२४ (७५००८)
कालात्मनाऽभिभूतं तत्कालोंऽशः परमात्मनः ।
पुरुषश्चाप्रमेयात्मा स एव इति गीयते ॥ १२-२३८-२५ (७५००९)
त्रिगुणोसौ महाज्ञातः प्रधान इति वै श्रुतिः ॥ १२-२३८-२६ (७५०१०)
सात्विको राजसश्चैव तामसश्च त्रिधात्मकः ।
त्रिविधोऽयमहङ्कारो महत्तत्वादजायत ॥ १२-२३८-२७ (७५०११)
तामसोऽसावहङ्कारो भूतादिरिति संज्ञितः ।
भूतानामादिभूतत्वाद्रक्ताहिस्तामसः स्मृतः ॥ १२-२३८-२८ (७५०१२)
भूतादिः स विकुर्वाणः शिष्टं तन्मात्रकं ततः ।
ससर्ज शब्दं तन्मात्रमाकाशं शब्दलक्षणम् ॥ १२-२३८-२९ (७५०१३)
शब्दलक्षणमाकाशं शब्दतन्मात्रमावृणोत् ।
तेन संपीड्यमानस्तु स्पर्शमात्रं ससर्ज ह ॥ १२-२३८-३० (७५०१४)
शब्दमात्रं तदाकाशं स्पर्शमात्रं समावृणोत् ।

ससर्ज वायुस्तेनासौ पीड्यमान इति श्रुतिः ॥१२-२३८-३१ (७५०१५)
स्पर्शमात्रं तदा वायू रूपमात्रं समावृणोत् ।
तेन संपीड्यमानस्तु ससर्जाग्निमिति श्रुतिः ॥१२-२३८-३२ (७५०१६)
रूपमात्रं ततो वह्निं समुत्सृज्य समावृणोत् ।
तेन संपीड्यमानस्तु रसमात्रं ससर्ज ह ॥१२-२३८-३३ (७५०१७)
रुपमात्रगतं तेजो रसमात्रं समावृणोत् ।
तेन संपीड्यमानस्तु ससर्जाम्भ इति श्रुतिः ॥१२-२३८-३४ (७५०१८)
रसमात्रात्मकं भूयो रसं तन्मात्रमावृणोत् ।
तेन संपीड्यमानस्तु गन्धं तन्मात्रकं ततः ॥१२-२३८-३५ (७५०१९)
ससर्ज गन्धं तन्मात्रमावृणोत्करकं ततः ।
तेन संपीड्यमानस्तु काठिन्यं च ससर्ज ह ॥१२-२३८-३६ (७५०२०)
पृथिवी जायते तस्माद्गन्धतन्मात्रजात्तथा ॥ १२-२३८-३७ (७५०२१)
अम्मयं सर्वमेवेदमापस्तस्तम्भिरे पुनः ।
भूतानीमानि जातानि पृथिव्यादीनि वै श्रुतिः ॥१२-२३८-३८ (७५०२२)
भूतानां मूर्तिरेवैषामन्नं चैषां मता बुधैः ।
तस्मिंस्तस्मिंस्तु तन्मात्रा तन्मात्रा इति ते स्मृताः ॥१२-२३८-३९ (७५०२३)
तैजसानीन्द्रियाण्याहुर्देवा वैकारिका दश ।
एकादशं मनश्चात्र देवा वैकारिकाः स्मृताः ॥१२-२३८-४० (७५०२४)
एषामुद्धर्तकः कालो नानाभेदवदास्थितः ।
परमात्मा च भूतात्मा गुणभेदेन संस्थितः ।
एक एव त्रिधा भिन्नः करोति विविधाः क्रियाः ॥ १२-२३८-४१ (७५०२५)
ब्रह्मा सृजति भूतानि पाति नारायणोऽव्ययः ।
रुद्रो हन्ति जगन्मूर्तिः काल एष क्रियाबुधः ॥१२-२३८-४२ (७५०२६)
कालोपि तन्मयोचिन्त्यस्त्रिगुणात्मा सनातनः ।
अव्यक्तोसावचिन्त्योसौ वर्तते भिन्नलक्षणः ॥१२-२३८-४३ (७५०२७)
कालात्मना त्विदं भिन्नमभिन्नं श्रूयते हि यत् ।
अनाद्यन्तमजं दिव्यमव्यक्तमजरं ध्रुवम्।'
अप्रतर्क्यमविज्ञेयं ब्रह्माग्रे संप्रवर्तते ॥ १२-२३८-४४ (७५०२८)
काष्ठा निमेषा दश पञ्च चैव
त्रिंशत्तु काष्ठा गणयेत्कलां ताम् ।
त्रिंशत्कलश्चापि भवेन्मुहूर्तो
भागः कलाया दशमश्च यः स्यात् ॥ १२-२३८-४५ (७५०२९)
त्रिंशन्मुहूर्तं तु भवेदहश्च
रात्रिश्च सङ्ख्या मुनिभिः प्रणीता ।
मासः स्मृतो रात्र्यहनी च त्रिंशु
त्संवत्सरो द्वादशमास उक्तः ॥ १२-२३८-४६ (७५०३०)

संवत्सरं द्वे अयने वदन्ति
सङ्ख्याविदो दक्षिणमुत्तरं च ॥ १२-२३८-४७ (७५०३१)
पहोरात्रौ विभजते सूर्यो मानुषलौकिकौ ।
रात्रिः स्वप्नाय संयाति चेष्टायै कर्मणामहः ॥ १२-२३८-४८ (७५०३२)
पित्र्ये रात्र्यहनी मासः प्रविभागस्तयोः पुनः ।
शुक्लोऽहः कर्मचेष्टायां कृष्णः स्वप्नाय शर्वरी ॥ १२-२३८-४९ (७५०३३)
दैवे रात्र्यहनी ह्यब्दः प्रविभागस्तयोः पुनः ।
अहस्तत्रोदगयनं रात्रिः स्याद्दक्षिणायनम् ॥ १२-२३८-५० (७५०३४)
ये ते रात्र्यहनी पूर्वं कीर्तिते दैवलौकिके ।
तयोः सङ्ख्याय वर्षाग्रं ब्राह्मे वक्ष्याम्यहः क्षपे ॥ १२-२३८-५१ (७५०३५)
तेषां संवत्सराग्नाणि प्रवक्ष्याम्यनुपूर्वशः ।
कृते त्रेतायुगे चैव द्वापरे च कलौ तथा ॥ १२-२३८-५२ (७५०३६)
चत्वार्याहुः सहस्राणि वर्षाणां तत्कृतं युगम् ।
तस्य तावच्छती संध्या संध्यांशश्च तथाविधः ॥ १२-२३८-५३ (७५०३७)
इतरेषु ससंध्येषु संध्यांशेषु ततस्त्रिषु ।
एकापायेन संयान्ति सहस्राणि शतानि च ॥ १२-२३८-५४ (७५०३८)
एतानि शाश्वताँल्लोकान्धारयन्ति सनातनान् ।
एतद्ब्रह्मविदां तात विदितं ब्रह्म शाश्वतम् ॥ १२-२३८-५५ (७५०३९)
चतुष्पात्सकलो धर्मः सत्यं चैव कृते युग ।
नाधर्मेणागमः कश्चिद्युगे तस्मिन्प्रवर्तते ॥ १२-२३८-५६ (७५०४०)
इतरेष्वागमाद्धर्मः पादशस्त्ववरोप्यते ।
ग्सत्यं शौत्रं तथायुश्च धर्मश्चापैति पादशः।'
चौर्यकानृतमायाभिरधर्मश्चोपचीयते ॥ १२-२३८-५७ (७५०४१)
अरोगाः सर्वसिद्धार्थाश्चतुर्वर्षशतायुषः ।
कृते त्रेतायुगे त्वेषां पादशो ह्रसते वयः ॥ १२-२३८-५८ (७५०४२)
वेदवादाश्चानुयुगं ह्रसन्तीतीह न श्रुतम् ।
आयूंषि चाशिषश्चैव वेदस्यैव च यत्फलम् ॥ १२-२३८-५९ (७५०४३)
अन्ये कृतयुगे धर्मास्त्रेतायां द्वापरेऽपरे ।
अन्ये कलियुगे धर्मा यथाशक्ति कृता इव ॥ १२-२३८-६० (७५०४४)
तपः परं कृतयुगे त्रेतायां सत्यमुत्तमम् ।
द्वापरे यज्ञमेवाहुर्दानमेव कलौ युगे ॥ १२-२३८-६१ (७५०४५)
एतां द्वादशसाहस्त्रीं युगाख्यां कवयो विदुः ।
सहस्रपरिवर्तं तद्ब्राह्मं दिवसमुच्यते ॥ १२-२३८-६२ (७५०४६)
रात्रिस्तु तावती ब्राह्मी तदादौ विश्वमीश्वरः ।
प्रलयेत्मानमाविश्य सुप्त्वासोऽन्ते विबुध्यते ॥ १२-२३८-६३ (७५०४७)
सहस्रयुगपर्यन्तमहर्यद्ब्रह्मणे विदुः ।

रात्रिं युगसहस्रां तां तेऽहोरात्रविदो जनाः ॥ १२-२३८-६४ (७५०४८)
प्रतिबुद्धो विकुरुते ब्रह्माक्षय्यं क्षपाक्षये ।
सृजते च महद्भूतं तस्माद्व्यक्तात्मकं मनः ॥ १२-२३८-६५ (७५०४९)
मनः सृष्टिं विकुरुते चोद्यमानं सिसृक्षया ।
आकाशं जायते तस्मात्तस्य शब्दे गुणो मतः ॥ १२-२३८-६६ (७५०५०)
आकाशात्तु विकुर्वाणात्सर्वगन्धवहः शुचिः ।
बलवाञ्जायते वायुस्तस्य स्पर्शो गुणो मतः ॥ १२-२३८-६७ (७५०५१)
वायोरपि विकुर्वाणाज्ज्योतिर्भवति भास्वरम् ।
रोचनं जनयेच्छुद्धं तद्रूपगुणमुच्यते ॥ १२-२३८-६८ (७५०५२)
ज्योतिषोपि विकुर्वाणाद्भवन्त्यापो रसात्मिकाः ।
अद्भ्यो गन्धवहा भूमिः पूर्वेषां सृष्टिरुच्यते ॥ १२-२३८-६९ (७५०५३)
ग्ब्रह्मतेजोमयं शुक्लं यस्य सर्वमिदं जगत् ।
एकस्य ब्रह्मभूतस्य द्वयं स्थावरजङ्गमम् ॥ १२-२३८-७० (७५०५४)
अहर्मुखे विवुद्धं तत्सृजते विद्यया जगत् ।
अग्र एव महद्भूतमाशु व्यक्तात्मकं मनः ॥ १२-२३८-७१ (७५०५५)
अभिभूयेह चातिष्ठद्व्यसृदत्सप्त मानसान् ।
दूरगं बहुधागामि प्रार्थनासंशयात्मकम् ॥ १२-२३८-७२ (७५०५६)
मनः सृष्टिं न कुरुते चोद्यमानं सिसृक्षया ।
आकाशोजायते तस्मात्तस्य शब्दो गुणो मतः ॥ १२-२३८-७३ (७५०५७)
आकाशात्तु विकुर्वाणात्सर्वगन्धवहः शुचिः ।
बलवाञ्जायते वायुस्तस्य स्पर्शगुणं विदुः ॥ १२-२३८-७४ (७५०५८)
वायोरपि विकुर्वाणाज्ज्योतिर्भूतं तमोनुदम् ।
रोचिष्णुर्जायते तत्र तद्रूपगुणमुच्यते ॥ १२-२३८-७५ (७५०५९)
ज्योतिषोपि विकुर्वाणाद्भवन्त्यापो रसात्मिकाः ।
अद्भ्यो गन्धवहा भूमिः पूर्वेषां सृष्टिरुच्यते ॥' १२-२३८-७६ (७५०६०)
गुणाः पूर्वस्य पूर्वस्य प्राप्नुवन्त्युत्तरोत्तरम् ।
तेषां यावद्गुणं यद्यत्तत्तावद्गुणकं स्मृतम् ॥ १२-२३८-७७ (७५०६१)
उपलभ्याप्सु चेद्गन्धं केचिद्ब्रयुरनैपुणात् ।
पृथिव्यामेव तं विद्यादपां वायोश्च संश्रितम् ॥ १२-२३८-७८ (७५०६२)
एते सप्तविधात्मानो नानावीर्याः पृथक्पृथक् ।
नाशक्नुवन्प्रजाः स्रष्टुमसमागम्य कृत्स्नशः ॥ १२-२३८-७९ (७५०६३)
ते समेत्य महात्मानो ह्यन्योन्यमभिसंश्रिताः ।
शरीराश्रयणं प्राप्तास्ततः पुरुष उच्यते ॥ १२-२३८-८० (७५०६४)
श्रयणाच्छरीरी भवति मूर्तिमान्षोडशात्मकः ।
तमाविशन्ति भूतानि महान्ति सह कर्मणा ॥ १२-२३८-८१ (७५०६५)
सर्वभूतान्युपादाय तपसश्चरणाय हि ।

आदिकर्ता महाभूतं तमेवाहुः प्रजापतिम् ॥१२-२३८-८२ (७५०६६)
स वै सृजति भूतानि स एव पुरुषः परः ।
अजो जनयते ब्रह्मा देवर्षिपितृमानवान् ॥१२-२३८-८३ (७५०६७)
लोकान्नदीः समुद्रांश्च दिशः शैलान्वनस्पतीन् ।
नरकिन्नररक्षांसि वयः पशुमृगोरगान् ।
अव्ययं च व्ययं चैव द्वयं स्थावरजङ्गमम् ॥ १२-२३८-८४ (७५०६८)
तेषां ये यानि कर्माणि प्राक्सृष्ट्यां प्रतिपेदिरे ।
तान्येव प्रतिपाद्यन्ते सृज्यमानाः पुनः पुनः ॥१२-२३८-८५ (७५०६९)
हिंस्राहिंस्रे मृदुक्रूरे धर्माधर्मावृत्तानृते ।
तद्भाविताः प्रपद्यन्ते तस्मात्तत्तस्य रोचते ॥१२-२३८-८६ (७५०७०)
महाभूतेषु नानात्वमिन्द्रियार्थेषु मूर्तिषु ।
विनियोगं च भूतानां धातैव विदधात्युत ॥१२-२३८-८७ (७५०७१)
केचित्पुरुषकारं तु प्राहुः कर्मविदो जनाः ।
दैवमित्यपरे विप्राः स्वभावं भूतचिन्तकाः ॥१२-२३८-८८ (७५०७२)
पौरुषं कर्म दैवं च फलवृत्तिस्वभावतः ।
त्रय एतेऽपृथग्भूता अविवेकः कथंचन ॥१२-२३८-८९ (७५०७३)
एवमेतच्च दैवं च भूतं सृजते जगत् ।
कर्मस्था विषयं ब्रूयुः सत्वस्थाः समदर्शिनः ॥१२-२३८-९० (७५०७४)
ततो निःश्रेयसं जन्तोस्तस्य मूलं शमो दमः ।
तेन सर्वानवाप्नोति यान्कामान्मनसेच्छति ॥१२-२३८-९१ (७५०७५)
तपसा तदवाप्नोति यद्भूतं सृजते जगत् ।
स तद्भूतश्च सर्वेषां भूतानां भवति प्रभुः ॥१२-२३८-९२ (७५०७६)
ऋषयस्तपसा वेदानध्यैषन्त दिवानिशम् ।
अनादिनिधना नित्या वागुत्सृष्टा स्वयंभुवा ॥१२-२३८-९३ (७५०७७)
ऋषीणां नामधेयानि याश्च वेदेषु सृष्टयः ।
नाम रूपं च भूतानां कर्मणां च प्रवर्तनम् ॥१२-२३८-९४ (७५०७८)
वेदशब्देभ्य एवादौ निर्मिमीते स ईश्वरः ।
नामधेयानि चर्षीणां याश्च वेदेषु सृष्टयः ।
शर्वर्यन्तेषु जातानामन्येभ्यो विदधात्यजः ॥ १२-२३८-९५ (७५०७९)
नामभेदतपः कर्मयज्ञाख्या लोकसिद्धये ।
आत्मसिद्धिस्तु वेदेषु प्रोच्यते दशभिः क्रमैः ॥१२-२३८-९६ (७५०८०)
यदुक्तं वेदवादेषु गहनं वेददृष्टिभिः ।
तदन्तेषु यथायुक्तं क्रमयोगेन लक्ष्यते ॥१२-२३८-९७ (७५०८१)
कर्मजोऽयं पृथग्भावो द्वन्द्वयुक्तो हि देहिनः ।
आत्मसिद्धिस्तु विज्ञानाज्जहाति प्रायशो बलम् ॥१२-२३८-९८ (७५०८२)
द्वे ब्रह्मणी वेदितव्ये शब्दब्रह्म परं च यत् ।

शब्दब्रह्मणि निष्णातः परं ब्रह्माधिगच्छति ॥ १२-२३८-९९ (७५०८३)
आलम्भयज्ञाः क्षत्राश्च हविर्यज्ञा विशः स्मृताः ।
परिचारयज्ञाः शूद्रास्तु तपोयज्ञा द्विजातयः ॥ १२-२३८-१०० (७५०८४)
त्रेतायुगे विधिस्त्वेष यज्ञानां न कृते युगे ।
द्वापरे विप्लवं यान्ति यज्ञाः कलियुगे तथा ॥ १२-२३८-१०१ (७५०८५)
अपृथग्धर्मिणो मर्त्या ऋक्सामानि यजूंषि च ।
काम्या इष्टीः पृथक्दृष्ट्वा तपोभिस्तप एव च ॥ १२-२३८-१०२ (७५०८६)
त्रेतायां तु समस्ता ये प्रादुरासन्महाबलाः ।
संयन्तारः स्थावराणां जङ्गमानां च सर्वशः ॥ १२-२३८-१०३ (७५०८७)
त्रेतायां संहता वेदा यज्ञा वर्णास्तथैव च ।
संरोधादायुषस्त्वेते व्यस्यन्ते द्वापरे युगे ॥ १२-२३८-१०४ (७५०८८)
दृश्यन्ते न च दृश्यन्ते वेदाः कलियुगेऽखिलाः ।
उत्सीदन्ते सयज्ञाश्च केवला धर्मपीडिताः ॥ १२-२३८-१०५ (७५०८९)
कृते युगे यस्तु धर्मो ब्राह्मणेषु प्रदृश्यते ।
आत्मवत्सु तपोवत्सु श्रुतवत्सु प्रतिष्ठितः ॥ १२-२३८-१०६ (७५०९०)
स धर्मः प्रैति संयोगं यथाधर्मं युगेयुगे ।
विक्रियन्ते स्वधर्मस्था वेदवादा यथागमम् ॥ १२-२३८-१०७ (७५०९१)
यथा विश्वानि भूतानि वृष्ट्या भूयांसि प्रावृषि ।
सृज्यन्ते जङ्गमस्थानि तथा धर्मा युगेयुगे ॥ १२-२३८-१०८ (७५०९२)
यथर्तुष्वृतुलिङ्गानि नानारूपाणि पर्यये ।
दृश्यन्ते तानि तान्येव तथा ब्रह्महरादिषु ॥ १२-२३८-१०९ (७५०९३)
विहितं कालनानात्वमनादिनिधनं तथा ।
कीर्तितं यत्पुरस्तात्ते तत्सूते चाति च प्रजाः ॥ १२-२३८-११० (७५०९४)
ददाति भवनस्थानं भूतानां संयमो यमः ।
स्वभावेनैव वर्तन्ते द्वन्द्वयुक्तानि भूरिशः ॥ १२-२३८-१११ (७५०९५)
सर्वकालक्रिया वेदाः कर्ता कार्यं क्रियाफलम् ।
प्रोक्तं ते पुत्र सर्वं वै यन्मां त्वं परिपृच्छसि ॥ ॥ १२-२३८-११२ (७५०९६)

इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि
अष्टत्रिंशदधिकद्विशततमोऽध्यायः ॥ २३८.।

Mahabharata - Shanti Parva - Chapter Footnotes

१२-२३८-९ संशयं संशयविषयम् । छिन्नधर्मार्थसंशयं व्यास म् ॥
१२-२३८-४५ दशपञ्च च स्थात् इति ट । थ। ध। पाठः ॥
१२-२३८-५४ एकपादेन हीयन्ते इति झ । पाठः ॥

१२-२३८-६० अन्ये कलियुगे नृणां युगह्रा सानुरूपतः इति झ ।पाठः ॥
१२-२३८-६८ रोचिष्णु जायते शुक्रं इति झ ।थ।पाठः ॥
१२-२३८-८९ अविवेकं तु केचन इति झ ।पाठः ॥
१२-२३८-९४ याश्च लोकेषु सृष्टयः इति ट ।थ ।पाठः ॥
१२-२३८-९५ याश्च लोकेषु सृष्टयः इति ट ।थ।पाठः ॥
१२-२३८-९७ कर्मयोगेषु लक्ष्यते इति ध ।पाठः ॥
१२-२३८-१०० आलम्भः पशुहिंसा
।हविर्व्रीह्यादिकम्।परिचारस्त्रैवर्णिकसेवा।तपो
ब्रह्मोपासनम्।आरम्भयज्ञा राजानः इति ट।पाठः।आरम्भयज्ञा
वैश्वस्य हविर्यज्ञा नृपस्य तु।इति ध।पाठः ॥
१२-२३८-१०१ विधिरप्रवृत्तप्रवर्तनम् ।तत्र त्रेतायामेव नतु
कृते।स्वतएव तत्र तत्सिद्धेः ॥
१२-२३८-१०८ तिष्ठन्तीति स्थानि स्थावराणि जङ्गमानि च स्थानि च
जङ्गमस्थानि ।भूयांसि वृद्धिमत्तराणि ॥
१२-२३८-१११ एतद्धि प्रभवस्थानं इति झ ।ट।पाठः।दधाति
भवति स्थानं भूतानां समयो मतं।इति झ।पाठः ॥
१२-२३८-११२ सर्गः सृष्टिः ।कालो दर्शादिः।क्रियां
यज्ञश्राद्धादिः।वेदास्तत्प्रकाशकाः।कर्ता तदनुष्ठाता।कार्यं
देहादिपरिस्पन्दः।क्रियाफलं स्वर्गः ॥

---

शन्तिपर्व-अध्यय२३९
॥ श्रीः ॥
१२.२३९. अध्यायः २३९

Mahabharata - Shanti Parva - Chapter Topics
भीष्मेण युधिष्ठिरंप्रति शुकाय श्रीव्यासोदितप्रलयप्रकाराद्यनुवादः
॥ १.।
Mahabharata - Shanti Parva - Chapter Text

१२-२३९-० (७५०९७)
व्यास उवाच।१२-२३९-०क्ष् (६२२९)
प्रत्याहारं तु वक्ष्यामि शर्वर्यादौ गतेऽहनि ।
यथेदं कुरुतेऽध्यात्मं सुसूक्ष्मं विश्वमीश्वरः ॥१२-२३९-१ (७५०९८)
दिवि सूर्यस्तथा सप्त दहन्ति शिखिनोऽर्चिषः ।
सर्वमेतत्तदाऽर्चिर्भिः पूर्णं जाज्वल्यते जगत् ॥१२-२३९-२ (७५०९९)
पृथिव्यां यानि भूतानि जङ्गमानि ध्रुवाणि च ।

तान्येवाग्रे प्रलीयन्ते भूमित्वमुपयान्ति च ॥ १२-२३९-३ (७५१००)
ततः प्रलीने सर्वास्मिन्स्थावरे जङ्गमे तथा ।
अकाष्ठा निस्तृणा भूमिर्दृश्यते कूर्मपृष्ठवत् ॥ १२-२३९-४ (७५१०१)
भूमेरपि गुणं गन्धमाप आददते यदा ।
आत्तगन्धा तदा भूमिः प्रलयत्वाय कल्पते ॥ १२-२३९-५ (७५१०२)
आपस्तत्र प्रतिष्ठन्ते ऊर्मिमत्यो महास्वनाः ।
सर्वमेवेदमापूर्य तिष्ठन्ति च चरन्ति च ॥ १२-२३९-६ (७५१०३)
अपामपि गुणांस्तात ज्योतिराददते यदा ।
आपस्तदा त्वात्तगुणा ज्योतिः षूपरमन्ति वै ॥ १२-२३९-७ (७५१०४)
यदाऽऽदित्यं स्थितं मध्ये गूहन्ति शिखिनोऽर्चिषः ।
सर्वमेवेदमर्चिर्भिः पूर्णं जाज्वल्यते नमः ॥ १२-२३९-८ (७५१०५)
ज्योतिषोऽपि गुणं रूपं वायुराददते यदा ।
प्रशाम्यति ततो ज्योतिर्वायुर्दोधूयते महान् ॥ १२-२३९-९ (७५१०६)
ततस्तु मूलमासाद्य वायुः संभवमात्मनः ।
अधश्चोर्ध्वं च तिर्यक्च दोधवीति दिशो दश ॥ १२-२३९-१० (७५१०७)
वायोरपि गुणं स्पर्शमाकाशं ग्रसते यदा ।
प्रशाम्यति तदा वायुः खं तु तिष्ठति नानदन् ॥ १२-२३९-११ (७५१०८)
अरूपमरसस्पर्शमगन्धं न च मूर्तिमत् ।
सर्वलोकप्रणुदितं स्वं तु तिष्ठति नानदत् ॥ १२-२३९-१२ (७५१०९)
आकाशस्य गुणं शब्दमभिव्यक्तात्मकं मनः ।
ग्ग्रसते च यदा सोऽपि शाम्यति प्रतिसंचरे।'
मनसो व्यक्तमव्यक्तं ब्राह्मः संप्रतिसंचरः ॥ १२-२३९-१३ (७५११०)
तदाऽऽत्मगुणमाविश्य मनो ग्रसति चन्द्रमाः ।
मनस्युपरते चात्मा चन्द्रमस्युपतिष्ठते ॥ १२-२३९-१४ (७५१११)
तं तु कालेन महता संकल्पं कुरुते वशे ।
चित्तं ग्रसति संकल्पस्तच्च ज्ञानमनुत्तमम् ॥ १२-२३९-१५ (७५११२)
कालो गिरति विज्ञानं कालं बलमिति श्रुतिः ।
बलं कालो ग्रसति तु तं विद्वान्कुरुते वशे ॥ १२-२३९-१६ (७५११३)
श्आकाशस्य तदा घोषं तं विद्वान्कुरुतेऽऽत्मनि ꣸
तदव्यक्तं परं ब्रह्म तच्छाश्वतमनुत्तमम् ।
एवं सर्वाणि भूतानि ब्रह्मैव प्रतिसंहरेत् ॥ १२-२३९-१७ (७५११४)
यथावत्कीर्तितं सत्यमेवमेतदसंशयम् ।
बोध्यं विद्यामयं दृष्ट्वा योगिभिः परमात्मभिः ॥ १२-२३९-१८ (७५११५)
एवं विस्तारसंक्षेपौ ब्रह्माव्यक्ते पुनःपुनः ।
युगसाहस्रयोरादावहोरात्र्यास्तथैव च ॥ ॥ १२-२३९-१९ (७५११६)

इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि
एकोनविंशत्यधिकद्विशततमोऽध्यायः ॥ २३९.।
Mahabharata - Shanti Parva - Chapter Footnotes

१२-२३९-१ क्रमप्राप्तं प्रलयमाह प्रत्याहारमिति
।प्रतीपमुत्पत्तिक्रमविपरीतमाहरणं प्रत्याहारः ॥
१२-२३९-२ संकर्षणमुखोद्भूतस्य शिखिनोऽग्नेरर्चिषः सप्तेति
संबन्धः ।अर्चिर्भिः सौरीभिराग्नेयीभिश्च ज्वालाभिः ॥
१२-२३९-३ ध्रुवाणि स्थावराणि ॥
१२-२३९-४ निर्वृक्षा निस्तृणेति झ ।पाठः ॥
१२-२३९-५ गन्धं काठिन्यहेतुम् ।धृतवद्भूमिः काठिन्यं त्यक्त्वा
जलमात्रं भवतीत्यर्थः।प्रलयत्वाय कारणभावाय ॥
१२-२३९-७ आपोप्यात्तगुणा अग्निना शोषितपसा अग्निमात्रं भवन्ति ॥
१२-२३९-८ यथा रसगुमांस्तासां ग्रसन्ति शिखिनोऽर्चिष इति ट
।थ।पाठः ॥
१२-२३९-९ रूपं वायुराददते ।आङ्पूर्वस्य दद दाने इत्यस्य रूपम् ॥
१२-२३९-१० ततस्तु स्वनमासाद्येति झ ।पाठः।तत्र स्वनं
शब्दतन्मात्रमित्यर्थः ॥
१२-२३९-१३ ब्राह्मोऽयं प्रतिसंचर इति ध ।पाठः ॥
१२-२३९-१६ कालो हरति विज्ञानमिति थ ।पाठः ॥
१२-२३९-१८ बोध्यं बोधयितुं योग्यमन्वर्थनामानं शिष्यम् ।विद्यामयं
अत्यौत्कण्ठेन विद्यार्थित्वात् ॥
१२-२३९-१९ विस्तार संक्षेपौ सृष्टिप्रलयावुक्ताविति शेषः ॥

---

शन्तिपर्व-अध्यय२४०
॥ श्रीः ॥
१२.२४०. अध्यायः २४०

Mahabharata - Shanti Parva - Chapter Topics
भीष्मेण युधिष्ठिरंप्रति व्यासेन शुकायोक्तब्राह्मणधर्मानुवादः
॥ १.।ब्राह्मणेभ्यो दानमहिमानुवादः ॥ २.।
Mahabharata - Shanti Parva - Chapter Text

१२-२४०-० (७५१६०)
व्यास उवाच।१२-२४०-०क्ष् (६२३१)
भूतग्रामे नियुक्तं यत्तदेतत्कीर्तितं मया ।
ब्राह्मणस्य तु यत्कृत्यं तत्ते वक्ष्यामि सांप्रतम् ॥१२-२४०-१ (७५१६१)

जातकर्मप्रभृत्यस्य कर्मणां दक्षिणावताम् ।
क्रिया स्यादासमावृत्तेराचार्ये वेदपारगे ॥१२-२४०-२ (७५१६२)
अधीत्य वेदानखिलान्गुरुशुश्रूषणे रतः ।
गुरूणामनृणो भूत्वा समावर्तेत यज्ञवित् ॥१२-२४०-३ (७५१६३)
आचार्येणाभ्यनुज्ञातश्चतुर्णामेकमाश्रमम् ।
आविमोक्षाच्छरीरस्य सोऽवतिष्ठेद्यथाविधि ॥१२-२४०-४ (७५१६४)
प्रजासर्गण दारैश्च ब्रह्मचर्येण वा पुनः ।
वने गुरुसकाशे वा यतिधर्मेण वा पुनः ॥१२-२४०-५ (७५१६५)
गृहस्थस्त्वेष धर्माणां सर्वेषां मूलमुच्यते ।
यत्र पक्वकषायो हि दान्तः सर्वत्र सिध्यति ॥१२-२४०-६ (७५१६६)
प्रजावान्श्रोत्रियो यज्वा मुक्त एव ऋणैस्त्रिभिः ।
अथान्यानाश्रमान्पश्चात्पूतो गच्छेत कर्मभिः ॥१२-२४०-७ (७५१६७)
यत्पृथिव्यां पुण्यतमं विद्यात्स्थानं तदावसेत् ।
यतेत तस्मिन्प्रामाण्यं गन्तुं यशसि चोत्तमे ॥१२-२४०-८ (७५१६८)
तपसा वः सुमहता विद्यानां पारणेन वा ।
इज्यया वा प्रदानैर्वा विप्राणां वर्धते यशः ॥१२-२४०-९ (७५१६९)
यावदस्य भवत्यस्मिन्कीर्तिर्लोके यशस्करी ।
तावत्पुण्यकृताँल्लोकाननन्तान्पुरुषोऽश्नुते ॥१२-२४०-१० (७५१७०)
अध्यापयेदधीयीत याजयेत यजेत वा ।
न वृथा प्रतिगृह्णीयान्न च दद्यात्कथंचन ॥१२-२४०-११ (७५१७१)
याज्यतः शिष्यतो वाऽपि कन्याया वा धनं महत् ।
यद्यागच्छेद्यजेद्दद्यान्नैकोऽश्नीयात्कथंचन ॥१२-२४०-१२ (७५१७२)
गृहमावसतो ह्यस्य नान्यत्तीर्थमुदाहृतम् ।
देवर्षिपितृगुर्वर्थं वृद्धातुरबुभुक्षताम् ॥१२-२४०-१३ (७५१७३)
अन्तर्हिताभितप्तानां यथाशक्ति बुभूषताम् ।
द्रव्याणामतिशक्त्याऽपि देयमेषां कृतादपि ॥१२-२४०-१४ (७५१७४)
अर्हतामनुरूपाणां नादेयं ह्यस्ति किंचन ।
उच्चैः श्रवसमप्यक्षं काश्यपाय महात्मने ।
दत्त्वा जगाम प्रह्लादो लोकान्देवैरभिष्टुतान् ॥ १२-२४०-१५ (७५१७५)
अनुनीय तथा काव्यः सत्यसन्धो महाव्रतः ।
स्वैः प्राणैर्ब्राह्मणप्राणान्परित्राय दिवं गतः ॥१२-२४०-१६ (७५१७६)
रन्तिदेवश्च सांकृत्यो वसिष्ठाय महात्मने ।
अपः प्रदाय शीतोष्णा नाकपृष्ठे महीयते ॥१२-२४०-१७ (७५१७७)
आत्रेयश्चेन्द्रद्रुमये ह्यर्हते विविधं धनम् ।
दत्त्वा लोकान्ययौ धीमाननन्तान्स महीपतिः ॥१२-२४०-१८ (७५१७८)
शिबिरौशीनरोऽङ्गानि सुतं च प्रियमौरसम् ।

ब्राह्मणार्थमुपाकृत्य नाकपृष्ठमितो गतः ॥१२-२४०-१९ (७५१७९)
प्रतर्दनः काशिपतिः प्रदाय नयने स्वके ।
ब्राह्मणायातुलां कीर्तिमिह चामुत्र चाश्नुते ॥१२-२४०-२० (७५१८०)
दिव्यमष्टशलाकं तु सौवर्णं परमर्द्धिमत् ।
छत्रं देवावृधो दत्त्वा सराष्ट्रोऽभ्यगमद्दिवम् ॥१२-२४०-२१ (७५१८१)
सांकृतिश्च तथाऽऽत्रेयः शिष्येभ्यो ब्रह्म निर्गुणम् ।
उपदिश्य महातेजा गतो लोकाननुत्तमान् ॥१२-२४०-२२ (७५१८२)
अम्बरीषो गवां दत्त्वा ब्राह्मणेभ्यः प्रतापवान् ।
अर्बुदानि दशैकं च सराष्ट्रोऽभ्यगमद्दिवम् ॥१२-२४०-२३ (७५१८३)
सावित्री कुण्डले दिव्ये शरीरं जनमेजयः ।
ब्राह्मणार्थे परित्यज्य जग्मतुर्लोकमुत्तमम् ॥१२-२४०-२४ (७५१८४)
सर्वरत्नं वृषादर्विर्युवनाश्वः प्रियाः स्त्रियः ।
रम्यमावसथं चैव दत्त्वामुं लोकमास्थितः ॥१२-२४०-२५ (७५१८५)
निमी राष्ट्रं च वैदेहो जामदग्न्यो वसुंधराम् ।
ब्राह्मणेभ्यो ददौ चापि गयश्चोर्वी सपत्तनाम् ॥१२-२४०-२६ (७५१८६)
अवर्षति च पर्जन्ये सर्वभूतानि भूतकृत ।
वसिष्ठो जीवयामास प्रजापतिरिव प्रजाः ॥१२-२४०-२७ (७५१८७)
करंधमस्य पुत्रस्तु मरुतो नृपतिस्तथा ।
कन्यामङ्गिरसे दत्त्वा दिवमाशु जगाम ह ॥१२-२४०-२८ (७५१८८)
ब्रह्मदत्तश्च पाञ्चाल्यो राजा बुद्धिमतां वरः ।
निधिं शङ्खं द्विजाग्र्येभ्यो दत्त्वा लोकानवाप्तवान् ॥१२-२४०-२९ (७५१८९)
राजा मित्रसहश्चापि वसिष्ठाय महात्मने ।
मदयन्तीं प्रियां दत्त्वा तया सह दिवं गतः ॥१२-२४०-३० (७५१९०)
सहस्रजिच्च राजर्षिः प्राणानिंष्टान्महायशाः ।
ब्राह्मणार्थं परित्यज्य गतो लोकाननुत्तमान् ॥१२-२४०-३१ (७५१९१)
सर्वकामैश्च संपूर्णं दत्त्वा वेश्म हिरण्मयम् ।
मुद्गलाय गतः स्वर्गं शतद्युम्नो महीपतिः ॥१२-२४०-३२ (७५१९२)
नाम्ना च द्युतिमान्नाम साल्वराजः प्रतापवान् ।
दत्त्वा राज्यमृचीकाय गतो लोकाननुत्तमान् ॥१२-२४०-३३ (७५१९३)
लोमपादश्च राजर्षिः शान्तां दत्त्वा सुतां प्रभुः ।
ऋश्यशृङ्गाय विपुलैः सर्वकामैरयुज्यत ॥१२-२४०-३४ (७५१९४)
मदिराश्वश्च राजर्षिर्दत्त्वा कन्यां सुमध्यमाम् ।
हिरण्यहस्ताय गतो लोकान्देवैरभिष्टुतान् ॥१२-२४०-३५ (७५१९५)
दत्त्वा शतसहस्रं तु गवां राजा प्रसेनजित् ।
सवत्सानां महातेजा गतो लोकाननुत्तमान् ॥१२-२४०-३६ (७५१९६)
एते चान्ये च बहवो दानेन तपसैव च ।

महात्मानो गताः स्वर्गं शिष्टात्मानो जितेन्द्रियाः ॥ १२-२४०-३७ (७५१९७)
तेषां प्रतिष्ठिता कीर्तिर्यावत्स्थास्यति मेदिनी ।
दानयज्ञप्रजासर्गैरेते हि दिवमाप्नुवन् ॥ ॥ १२-२४०-३८ (७५१९८)

इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि
चत्वारिंशदधिकद्विशततमोऽध्यायः ॥ २४०.।
Mahabharata - Shanti Parva - Chapter Footnotes

१२-२४०-१४ कृतात्पक्वान्नादपि ॥

---

शन्तिपर्व-अध्यय२४१
॥ श्रीः ॥
१२.२४१. अध्यायः २४१

Mahabharata - Shanti Parva - Chapter Topics
भीष्मेण युधिष्ठिरंप्रति
व्यासकृतब्राह्मणधर्मकथनपूर्वकज्ञानप्रशंसनानुवादः ॥ १.।
Mahabharata - Shanti Parva - Chapter Text

१२-२४१-० (७५१९९)
व्यास उवाच। १२-२४१-०क्ष् (६२३२)
त्रयीं विद्यामवेक्षेत वेदेपूक्तमतां गतः ।
ऋक्सामवर्णाक्षरतो यजुषोऽथर्वणस्तथा ॥ १२-२४१-१ (७५२००)
शतिष्ठत्येतेषु भगवान्षट्सु कर्मसु संस्थितः ꣵ
वेदवादेषु कुशला ह्यध्यात्मकुशलाश्च ये ॥ १२-२४१-२ (७५२०१)
सत्ववन्तो महाभागाः पश्यन्ति प्रभवाप्ययौ ।
एवं धर्मेण वर्तेत क्रियाः शिष्टवदाचरेत् ॥ १२-२४१-३ (७५२०२)
असंरोधेन भूतानां वृत्तिं लिप्सेत वै द्विजः ।
सद्भय आगतविज्ञानः शिष्टः शास्त्रविचक्षणः ॥ १२-२४१-४ (७५२०३)
स्वधर्मेण क्रिया लोके कुर्वाणः सोऽप्यसङ्करः ।
तिष्ठते तेषु गृहवान्षट्सु कर्मसु स द्विजः ॥ १२-२४१-५ (७५२०४)
पञ्चभिः सततं यज्ञैः श्रद्दधानो यजेत च ।
धृतिमानप्रमत्तश्च दान्तो धर्मविदात्मवान् ।
वीतहर्षमदक्रोधो ब्राह्मणो नावसीदति ॥ १२-२४१-६ (७५२०५)
दानमध्ययनं यज्ञस्तपो ह्रीरार्जवं दमः ।
एतैर्विवर्धते तेजः पाप्मानं चापकर्षति ॥ १२-२४१-७ (७५२०६)
धूतपाप्मा च मेधावी लघ्वाहारो जितेन्द्रियः ।

कामक्रोधौ वशे कृत्वा निनीषेद्ब्रह्मणः पदम् ॥१२-२४१-८ (७५२०७)
अग्नींश्च ब्राह्मणांश्चार्चेद्देवताः प्रणमेत च ।
वर्जयेदुशतीं वाचं हिंसां चाधर्मसंहिताम् ॥१२-२४१-९ (७५२०८)
एषा पूर्वतरा वृत्तिर्ब्राह्मणस्य विधीयते ।
ज्ञानागमेन कर्माणि कुर्वन्कर्मसु सिद्ध्यति ॥१२-२४१-१० (७५२०९)
पञ्चेन्द्रियजलां घोरां लोभकूलां सुदुस्तराम् ।
मन्युपङ्कामनाधृष्यां नदीं तरति बुद्धिमान् ॥१२-२४१-११ (७५२१०)
कालमभ्युद्यतं पश्येन्नित्यमत्यन्तमोहनम् ॥ १२-२४१-१२ (७५२११)
महता विधिदृष्टेन बलिनाऽप्रतिघातिना ।
स्वभावस्रोतसा वृत्तमुह्यते सततं जगत् ॥१२-२४१-१३ (७५२१२)
कालोदकेन महता वर्षावर्तेन संततम् ।
मासोर्मिणर्तुवेगेन पक्षोलपतृणेन च ॥१२-२४१-१४ (७५२१३)
निर्मषोन्मेषफेनेन अहोरात्रजवेन च ।
कामग्राहेण घोरेण वेदयज्ञप्लवेन च ॥१२-२४१-१५ (७५२१४)
धर्मद्वीपेन भूतानां चार्थकामरवेण च ।
ऋतवाङ्भोक्षतीरेण विहिंसातरुवाहिना ॥१२-२४१-१६ (७५२१५)
युगह्रदौघमध्येन ब्रह्मप्रायभवेन च ।
धात्रा सृष्टानि भूतानि कृष्यन्ते यमसादनम् ॥१२-२४१-१७ (७५२१६)
एतत्प्रज्ञामयैर्धीरा निस्तरन्ति मनीषिणः ।
प्लवैरप्लववन्तो हि किं करिष्यन्त्यचेतसः ॥१२-२४१-१८ (७५२१७)
उपपन्नं हि यत्प्राज्ञो निस्तरेन्नेतरो जनः ।
दूरतो गुणदोषौ हि प्राज्ञः सर्वत्र पश्यति ॥१२-२४१-१९ (७५२१८)
संशयात्तु स कामात्मा चलचित्तोऽल्पचेतनः ।
अप्राज्ञो न तरत्येनं यो ह्यास्ते न स गच्छति ॥१२-२४१-२० (७५२१९)
अप्लवो हि महादोषं मुह्यमानो न गच्छति ।
कामग्राहगृहीतस्य ज्ञानमप्यस्य न प्लवः ॥१२-२४१-२१ (७५२२०)
तस्मादुन्मज्जनस्यार्थे प्रयतेत विचक्षणः ।
एतदुन्मज्जनं तस्य यदयं ब्राह्मणो भवेत् ॥१२-२४१-२२ (७५२२१)
त्र्यवदाते कुले जातस्त्रिसंदेहस्त्रिकर्मकृत् ।
तस्मादुन्मज्जनं तिष्ठेत्प्रज्ञया निस्तरेद्यथा ॥१२-२४१-२३ (७५२२२)
संस्कृतस्य हि दान्तस्य नियतस्य यतात्मनः ।
प्राज्ञस्यानन्तरा सिद्धिरिह लोके परत्र च ॥१२-२४१-२४ (७५२२३)
वर्तेत तेषु गृहवानक्रुध्यन्ननसूयकः ।
पञ्चभिः सततं यज्ञैर्विघसाशी यजेत च ॥१२-२४१-२५ (७५२२४)
सतां धर्मेण वर्तेत क्रियां शिष्टवदाचरेत् ।
असंरोधेन लोकस्य वृत्तिं लिप्सेदगर्हिताम् ॥१२-२४१-२६ (७५२२५)

श्रुतविज्ञानतत्त्वज्ञः शिष्टाचारविचक्षणः ।
स्वधर्मेण क्रियावांश्च कर्मणा सोऽप्यसंकरः ॥ १२-२४१-२७ (७५२२६)
क्रियावाञ्श्रद्दधानो कहि दान्तः प्रायोऽनसूयकः ।
धमार्धर्मविशेषज्ञः सर्वं तरति दुस्तरम् ॥ १२-२४१-२८ (७५२२७)
धृतिमानप्रमत्तश्च दान्तो धर्मविदात्मवान् ।
वीतहर्षमदक्रोधो ब्राह्मणो नावसीदति ॥ १२-२४१-२९ (७५२२८)
एषा पुरातनी वृत्तिर्ब्राह्मणस्य विधीयते ।
ज्ञानवृद्ध्यैव कर्माणि कुर्वन्सर्वत्र सिध्यति ॥ १२-२४१-३० (७५२२९)
अधर्मं धर्मकामो हि करोति ह्यविचक्षणः ।
धर्मं वा धर्मसंकाशं शोचन्निव करोति सः ॥ १२-२४१-३१ (७५२३०)
धर्मं करोमीति करोत्यधर्म
मधर्मकामश्च करोति धर्मम् ।
उभे बालः कर्मणी न प्रजानम्
संजायते म्रियते चापि देही ॥ ॥ १२-२४१-३२ (७५२३१)

इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि
एकचत्वारिंशदधिकद्विशततमोऽध्यायः ॥ २४१.।
Mahabharata - Shanti Parva - Chapter Footnotes

१२-२४१-१ वेदेषूक्तामथाङ्गत इति झ ।पाठः ॥
१२-२४१-७ एतैर्वर्धयते इति झ ।पाठः ॥
१२-२४१-१२ काममन्यूद्धतं पश्यन्नित्यमत्यन्तमोहितमिति ट
।थ।ध।पाठः ॥
१२-२४१-१७ ब्रह्मप्रायभवेन ब्रह्मकार्यभूतेन ।स्रोतसा युगभूतेन
ब्रह्मप्रायभवेन चेति ट।थ।पाठः ॥
१२-२४१-२३ अवदातेषु शुद्धेषु कुलेष्विति शेषः
।त्रिष्वध्यापनयाजनप्रतिग्रहेषु संदेहवांस्तत्राप्रवृत्त
इत्यर्थखः।त्रिकर्मकृत् स्वाध्याययजनदानकृत् ॥
१२-२४१-२७ शिष्टशास्त्रविचक्षण इति ट ।थ।पाठः ॥

---

शन्तिपर्व-अध्यय२४२
॥ श्रीः ॥
१२.२४२. अध्यायः २४२

Mahabharata - Shanti Parva - Chapter Topics
भीष्मेण युधिष्ठिरंप्रति ज्ञानस्य
श्रेयःसाधनतापरशुकसंबोध्यकव्यासवाक्यानुवादः ॥ १.।

१२-२४२-० (७५२३२)
व्यास उवाच। १२-२४२-०क्ष् (६२३३)
अथ चेद्रोचयेदेतदुह्यते मनसा तथा ।
उन्मज्जंश्च निमज्जंश्च ज्ञानवान्प्लववान्भवेत् ॥ १२-२४२-१ (७५२३३)
प्रज्ञया निर्मितैर्धीरास्तारयन्त्यबुधान्प्लवैः ।
नाबुधास्तारयन्त्यन्यानात्मानं वा कथंचन ॥ १२-२४२-२ (७५२३४)
छिन्नदोषो मुनिर्योगयुक्तो युञ्जीत द्वादश ।
दशकर्मसुखानर्थानुपायापायनिष्क्रियः ॥ १२-२४२-३ (७५२३५)
चक्षुराचारसंग्राहैर्मनसा दर्शनेन च ।
यच्छेद्वाङ्मनसी बुद्ध्या य इच्छेज्ज्ञानमुत्तमम् ॥ १२-२४२-४ (७५२३६)
ज्ञानेन यच्छेदात्मानं य इच्छेच्छान्तिमात्मनः ।
एतेषां चेदनुद्रष्टा पुरुषोऽपि सुदारुणः ॥ १२-२४२-५ (७५२३७)
यदि वा सर्ववेदज्ञो यदि वाऽप्यनृचो द्विजः ।
यदि वा धार्मिको यज्वा यदि वा पापकृत्तमः ॥ १२-२४२-६ (७५२३८)
यदि वा पुरुषव्याघ्रो यदि वैक्लव्यधारणः ।
तरत्येवं महादुर्गं जरामरणसागरम् ॥ १२-२४२-७ (७५२३९)
एवं ह्येतेन योगेन युञ्जानो ह्येवमन्ततः ।
अपि जिज्ञासमानोऽपि शब्दब्रह्माऽतिवर्तते ॥ १२-२४२-८ (७५२४०)
धर्मोपस्थो ह्रीवरूथ उपायापायकूवरः ।
अपानाक्षः प्राणयुगः प्रज्ञायुर्जीवबन्धनः ॥ १२-२४२-९ (७५२४१)
चेतनाबन्धुरश्चारुश्चाचारग्रहनेमिमान् ।
दर्शनस्पर्शनवहो घ्राणश्रवणवाहनः ॥ १२-२४२-१० (७५२४२)
प्रज्ञानाभिः सर्वतन्त्रप्रतोदो ज्ञानसारथिः ।
क्षेत्रज्ञाधिष्ठितो धीरः श्रद्धादमपुरः सरः ॥ १२-२४२-११ (७५२४३)
त्यागरश्म्यनुगः क्षेम्यः शौचगो ध्यानगोतरः ।
जीवयुक्तो रथो दिव्यो ब्रह्मलोके धिराजते ॥ १२-२४२-१२ (७५२४४)
अथ संत्वरमाणस्य रथमेवं युयुक्षतः ।
अक्षरं गन्तुमनसो विधिं वक्ष्यामि शीघ्रगम् ॥ १२-२४२-१३ (७५२४५)
सप्त यो धारणाः कृत्स्ना वाग्यतः प्रतिपद्यते ।
पृष्ठतः पार्श्वतश्चान्यास्तावत्यस्ताः प्रधारणाः ॥ १२-२४२-१४ (७५२४६)
क्रमशः पार्थिवं यच्च वायव्यं खं तथा पयः ।
ज्योतिषो यत्तदैश्वर्यमहंकारस्य बुद्धितः ।
अव्यक्तस्य तथैश्वर्यं क्रमशः प्रतिपद्यते ॥ १२-२४२-१५ (७५२४७)
विक्रमाश्चापि यस्यैते तथा युङ्क्ते स योगतः ।

तथाऽस्य योगयुक्तस्य सिद्धिमात्मनि पश्यतः ॥१२-२४२-१६ (७५२४८)
निर्मुच्यमानः सूक्ष्मत्वाद्रूपाणीमानि पश्यतः ।
शैशिरस्तु यथा धूमः सूक्ष्मः संश्रयते नभः ॥१२-२४२-१७ (७५२४९)
तथा देहाद्विमुक्तस्य पूर्वरूपं भवत्युत ।
अथ धूमस्य विरमेद्द्वितीयं रूपदर्शनम् ॥१२-२४२-१८ (७५२५०)
जलरूपमिवाकाशे तत्रैवात्मनि पश्यति ।
अपां व्यतिक्रमे चास्य वह्निरूपं प्रकाशते ॥१२-२४२-१९ (७५२५१)
तस्मिन्नुपरते चास्य वायव्यं सूक्ष्ममव्ययम् ।
रूपं प्रकाशते तस्य पीतवस्त्रवदव्ययम् ॥१२-२४२-२० (७५२५२)
तस्मिन्नुपरते रुपमाकाशस्य प्रकाशते ।
तस्मिन्नुपरते चास्य बुद्धिरूपं प्रकाशते ।
ऊर्णारूपसवर्णस्य तस्य रूपं प्रकाशते ॥ १२-२४२-२१ (७५२५३)
अथ श्वेतां गतिं गत्वा सोहङ्कारे प्रकाशते ।
सुशुक्लं चेतसः सौक्ष्म्यमप्युक्तं ब्राह्मणस्य वै ॥१२-२४२-२२ (७५२५४)
एतेष्वपि हि जातेषु फलजातानि मे शृणु ।
जातस्य पार्थिवैश्वर्यैः सृष्टिरिष्टा विधीयते ॥१२-२४२-२३ (७५२५५)
प्रजापतिरिवाक्षोभ्यः शरीरात्सृजते प्रजाः ।
अङ्गुल्यङ्गुष्ठमात्रेण हस्तपादेन वा तथा ॥१२-२४२-२४ (७५२५६)
पृथिवीं कम्पयत्येको गुणो वायोरिति श्रुतिः ।
आकाशभूतश्चाकाशे सवर्णत्वात्प्रकाशते ।
वर्णतो गृह्यते चाप्सु नापः पिबति चाशया ॥ १२-२४२-२५ (७५२५७)
न चास्य तेजसां रूपं दृश्यते शाम्यते तथा ।
अहंकारेऽस्य विजिते पञ्चैते स्युर्वशानुगाः ॥१२-२४२-२६ (७५२५८)
षण्णामात्मनि बुद्धौ च जितायां प्रभवत्यथ ।
निर्दोषा प्रतिभा ह्येनं कृत्स्ना समभिवर्तते ॥१२-२४२-२७ (७५२५९)
तथैव व्यक्तमात्मानमव्यक्तं प्रतिपद्यते ।
यतो निःसरते लोको भवति व्यक्तसंज्ञकः ॥१२-२४२-२८ (७५२६०)
तत्राव्यक्तमयीं विद्यां शृणु त्वं विस्तरेण मे ।
तथा व्यक्तमयं चैव संख्यापूर्वं निबोध मे ॥१२-२४२-२९ (७५२६१)
पञ्चविंसतितत्त्वानि तुल्यान्युभयतः समम् ।
योगे साङ्ख्येऽपि च तथा विशेषं तत्र मे शृणु ॥१२-२४२-३० (७५२६२)
प्रोक्तं तद्व्यक्तमित्येव जायते वर्धते च यत् ।
जीर्यते म्रियते चैव चतुर्भिर्लक्षणैर्युतम् ॥१२-२४२-३१ (७५२६३)
विपरीतमतो यत्तु तदव्यक्तमुदाहृतम् ।
द्वावात्मानौ च वेदेषु सिद्धान्तेष्वप्युदाहृतौ ॥१२-२४२-३२ (७५२६४)
चतुर्लक्षणजं त्वाद्यं चतुर्वर्गं प्रचक्षते ।

व्यक्तमव्यक्तजं चैव तथा बुद्धिरथेतरत् ॥
सत्वं क्षेत्रज्ञ इत्येतद्द्वयमव्यक्तदर्शनम् ॥ १२-२४२-३३ (७५२६५)
द्वावात्मानौ च वेदेषु विषयेष्वनुरज्यतः ।
विषयात्प्रतिसंहारः साङ्ख्यानां विद्धि लक्षणम् ॥ १२-२४२-३४ (७५२६६)
निर्ममश्चानहंकारो निर्द्वन्द्वश्छिन्नसंशयः ।
नैव क्रुध्यति न द्वेष्टि नानृता भाषते गिरः ॥ १२-२४२-३५ (७५२६७)
आक्रुष्टस्ताडितश्चैव मैत्रीयं ध्याति नाशुभम् ।
वाग्दण्डकर्ममनसां त्रयाणां च निवर्तकः ॥ १२-२४२-३६ (७५२६८)
समः सर्वेषु भूतेषु ब्रह्माणमभिवर्तते ।
नैवेच्छति न चानिच्छो यात्रामात्रव्यवस्थितः ॥ १२-२४२-३७ (७५२६९)
अलोलुपोऽव्यथो दान्तो नाकृतिर्न निराकृतिः ।
नास्येन्द्रियमनेकाग्रं नाविक्षिप्तमनोरथः ॥ १२-२४२-३८ (७५२७०)
सर्वभूतसदृङ्भैत्रः समलोष्टाश्मकाञ्चनः ।
तुल्यप्रियाप्रियो धीरस्तुल्यनिन्दात्मसंस्तुतिः ॥ १२-२४२-३९ (७५२७१)
अस्पृहः सर्वकामेभ्यो ब्रह्मचर्यदृढव्रतः ।
अहिंस्रः सर्वभूतानामीदृक्साङ्ख्यो विमुच्यते ॥ १२-२४२-४० (७५२७२)
यथा योगाद्विमुच्यन्ते कारणैर्यैर्निबोध तत् ।
योगैश्वर्यमतिक्रान्तो योऽतिक्रामति मुच्यते ॥ १२-२४२-४१ (७५२७३)
इत्येषा भावजा बुद्धिः कथिता ते न संशयः ।
एवं भवति निर्द्वन्द्वो ब्रह्माणं चाधिगच्छति ॥ ॥ १२-२४२-४२ (७५२७४)

इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि
द्विचत्वारिंशदधिकद्विशततमोऽध्यायः ॥ २४२.।
Mahabharata - Shanti Parva - Chapter Footnotes

१२-२४२-१ उह्येत स्रोतसा यथेति झ ।पाठः ॥
१२-२४२-३ देशकर्मानुरागार्थानुपायेति झ ।पाठः ॥
१२-२४२-४ चक्षुराहारसंहारैरिति झ ।पाठः। यच्छेद्वाचं मनो
बुद्ध्येति थ।पाठः ॥
१२-२४२-१२ त्यागसूक्ष्मानुग इति झ ।ध।पाठः ॥
१२-२४२-१७ निर्मथ्यमानः सूक्ष्मात्मा रूपाण्येतानि दर्शयेत् इति ट
।थ।पाठः ॥
१२-२४२-२५ वर्णतो गृह्यते चापि कामात्पिबति चाशयानिति झ ।पाठः ॥
१२-२४२-३६ वाङ्भनः कायदण्डानामिति ट ।थ।पाठः ॥

---

शन्तिपर्व-अध्यय२४३

॥ श्रीः ॥

१२.२४३. अध्यायः २४३

Mahabharata - Shanti Parva - Chapter Topics

भीष्मेण युधिष्ठिरंप्रति भूतेषु तारतम्यकतनपूर्वकज्ञानप्रशंसापरशुकसंबोध्यकव्यासवाक्यानुवादः ॥ १.।

Mahabharata - Shanti Parva - Chapter Text

१२-२४३-० (७५२७५)
व्यास उवाच। १२-२४३-०क्ष् (६२३४)
अथ ज्ञानप्लवं धीरो गृहीत्वा शान्तिमात्मनः ।
उन्मज्जंश्च निमज्जंश्च विद्यामेवाभिसंश्रयेत् ॥ १२-२४३-१ (७५२७६)
शुक उवाच। १२-२४३-२क्ष् (६२३५)
किं तज्ज्ञानमथो विद्या यथा निस्तरते द्वयम् ।
प्रवृत्तिलक्षणो धर्मो निवृत्तिरिति चैव हि ॥ १२-२४३-२ (७५२७७)
व्यास उवाच। १२-२४३-३क्ष् (६२३६)
यस्तु पश्यन्स्वभावेन विनाभावमचेतनः ।
पुष्णाति स पुनः सर्वान्प्रज्ञया मुक्तहेतुकः ॥ १२-२४३-३ (७५२७८)
येषां चैकान्तभावेन स्वभावः कारणं मतम् ।
दूर्वातृणवृसीका ये ते लभन्ते न किंचन ॥ १२-२४३-४ (७५२७९)
येचैनं पक्षमाश्रित्य निवर्तन्त्यल्पमेधसः ।
स्वभावं कारणं ज्ञात्वा न श्रेयः प्राप्नुवन्ति ते ॥ १२-२४३-५ (७५२८०)
स्वभावो हि विनाशाय मोहकर्ममनोभवः ।
निरुक्तमेतयोरेतत्स्वभावपरिभावयोः ॥ १२-२४३-६ (७५२८१)
कृष्यादीनीह कर्माणि सस्यसंहरणानि च ।
प्रज्ञावद्भिः प्रक्लृप्तानि यानासनगृहाणि च ॥ १२-२४३-७ (७५२८२)
आक्रीडानां गृहाणां च गदानामगदस्य च ।
प्रज्ञावन्तः प्रवक्तारो ज्ञानवद्भिरनुष्ठिताः ॥ १२-२४३-८ (७५२८३)
प्रज्ञा संयोजयत्यर्थैः प्रज्ञा श्रेयोऽधिगच्छति ।
राजानो भुञ्जते राज्यं प्रज्ञया तुल्यलक्षणाः ॥ १२-२४३-९ (७५२८४)
परावरं तु भूतानां ज्ञानेनैवोपलभ्यते ।
विद्यया तात सृष्टानां विद्यैवेह परा गतिः ॥ १२-२४३-१० (७५२८५)
भूतानां जन्म सर्वेषां विविधानां चतुर्विधम् ।
जरायुजाण्डजोद्भिज्जस्वेदजं चोपलक्षयेत् ॥ १२-२४३-११ (७५२८६)
स्थावरेभ्यो विशिष्टानि जङ्गमान्युपधारयेत् ।

उपपन्नं हि यच्चेष्टा विशिष्येत विशेष्यया ॥ १२-२४३-१२ (७५२८७)
आहुर्द्विबहुपादानि जङ्गमानि द्वयानि तु ।
बहुषाङ्गयो विशिष्टानि द्विपादानि बहून्यपि ॥ १२-२४३-१३ (७५२८८)
द्विपदानि द्वयान्याहुः पार्थिवानीतराणि च ।
पार्थिवानि विशिष्टानि तानि ह्यन्नानि भुञ्जते ॥ १२-२४३-१४ (७५२८९)
पार्थिवानि द्वयान्याहुर्मध्यमान्युत्तमानि तु ।
मध्यमानि विशिष्टानि जातिधर्मोपधारणात् ॥ १२-२४३-१५ (७५२९०)
मध्यमानि द्वयान्याहुर्धर्मज्ञानीतराणि च ।
धर्मज्ञानि विशिष्टानि कार्याकार्योपधारणात् ॥ १२-२४३-१६ (७५२९१)
धर्मज्ञानि द्वयान्याहुर्वेदज्ञानीतराणि च ।
वेदज्ञानि विशिष्टानि वेदो ह्येषु प्रतिष्ठितः ॥ १२-२४३-१७ (७५२९२)
वेदज्ञानि द्वयान्याहुः प्रवक्तृणीतराणि च ।
प्रवक्तॄणि विशिष्टानि सर्वधर्मोपधारणात् ॥ १२-२४३-१८ (७५२९३)
विज्ञायन्ते हि यैर्वेदाः सधर्माः सक्रियाफलाः ।
सधर्मा निखिला वेदाः प्रवक्तृभ्यो विनिःसृताः ॥ १२-२४३-१९ (७५२९४)
प्रवक्तॄणि द्वयान्याहुरात्मज्ञानीतराणि च ।
आत्मज्ञानि विशिष्टानि जन्माजन्मोपधारणात् ॥ १२-२४३-२० (७५२९५)
धर्मद्वयं हि यो वेद स सर्वज्ञः स सर्ववित् ।
सत्याशीः सत्यसंकल्पः सत्यः शुचिरथेश्वरः ॥ १२-२४३-२१ (७५२९६)
धर्मज्ञानप्रतिष्ठं हि तं देवा ब्राह्मणं विदुः ।
शब्दब्रह्मणि निष्णातं परे च कृतनिश्चयम् ॥ १२-२४३-२२ (७५२९७)
अन्तस्थं च बहिष्ठं च येऽधियज्ञाधिदैवतम् ।
जानन्ति तान्नमस्यामस्ते देवास्तात ते द्विजाः ॥ १२-२४३-२३ (७५२९८)
तेषु विश्वमिदं भूतं साग्रं च जगदाहितम् ।
तेषां माहात्म्यभावस्य सदृशं नास्ति किंचन ॥ १२-२४३-२४ (७५२९९)
आद्यन्तनिधनं चैव कर्म चातीत्य सर्वशः ।
चतुर्विधस्य भूतस्य सर्वस्येशाः स्वयंभुवः ॥ ॥ १२-२४३-२५ (७५३००)

इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि
त्रिचत्वारिंशदधिकद्विशततमोऽध्यायः ॥ २४३.।
Mahabharata - Shanti Parva - Chapter Footnotes

१२-२४३-३ मुक्तहेतुकानिति झ ।पाठः ॥
१२-२४३-४ पूत्वा तृणमिषीकां वेति झ ।पाठः ॥
१२-२४३-७ सस्यसंग्रहणानि चेति थ ।पाठः ॥
१२-२४३-८ गदानां रोगाणाम् ।अगदस्यौषधस्य।अनुष्ठिताः

प्रयोजिताः। गतानामागतस्य चेति ट। थ। पाठः ॥
१२-२४३-९ तुल्यलक्षणाः प्रज्ञाधिक्याद्वैश्वर्याधिक्यभाजः ॥
१२-२४३-१२ यच्चेष्टे विशिष्येत निचेष्टक इति ट । थ। पाठः ॥
१२-२४३-१४ पार्थिवानि पृथिवीचराणि मानुषाणि । इतराणि स्वेचराणि ॥
१२-२४३-१९ सर्वयज्ञाः क्रिया वेदा इति ध । पाठः ॥
१२-२४३-२१ धर्मद्वयं प्रवृत्तिनिवत्तिरूपं । सत्यागीति
झ। पाठः। सत्यक्षान्तिः स ईश्वर इति ट थ। पाठः ॥
१२-२४३-२२ शब्दब्रह्मणि वेदशास्त्रे ॥

---

शन्तिपर्व-अध्यय२४४
॥ श्रीः ॥
१२.२४४. अध्यायः २४४

Mahabharata - Shanti Parva - Chapter Topics
भीष्मेण युधिष्ठिरंप्रति
मतभेदयुगधर्मभेदादिप्रतिपादकव्यासवाक्यानुवादः ॥ १.।
Mahabharata - Shanti Parva - Chapter Text

१२-२४४-० (७५३०१)
व्यास उवाच। १२-२४४-०क्ष् (६२३७)
एषा पूर्वतरा वृत्तिर्ब्राह्मणस्य विधीयते ।
ज्ञानवानेव कर्माणि कुर्वन्सर्वत्र सिद्ध्यति ॥ १२-२४४-१ (७५३०२)
तत्र चेन्न भवेदेवं संशयः कर्मनिश्चये ।
किंतु कर्मस्वभावोऽयं ज्ञानं कर्मेति वा पुनः ॥ १२-२४४-२ (७५३०३)
तत्र वेदविवित्सायां ज्ञानं चेत्पुरुषं प्रति ।
उपपत्त्युपलब्धिभ्यां वर्णयिष्यामि तच्छृणु ॥ १२-२४४-३ (७५३०४)
पौरुषं कारणं केचिदाहुः कर्मसु मानवाः ।
दैवमेके प्रशंसन्ति स्वभावमपरे जनाः ॥ १२-२४४-४ (७५३०५)
पौरुषं कर्म दैवं च फलवृत्तिस्वभावतः ।
त्रयमेतत्पृथग्भूतमविवेकं तु केचन ॥ १२-२४४-५ (७५३०६)
एतदेवं च नैवं न च चोभे नानुभे तथा ।
कर्मस्था विषयं ब्रूयुः सत्वस्थाः समदर्शिनः ॥ १२-२४४-६ (७५३०७)
त्रेतायां द्वापरे चैव कलिजाश्च ससंशयाः ।
तपस्विनः प्रशान्ताश्च सत्वस्थाश्च कृते युगे ॥ १२-२४४-७ (७५३०८)
अपृथग्दर्शनाः सर्वे ऋक्सामसु यजुःषु च ।
कामद्वषौ पृथग्दृष्ट्वा तपः कृत उपासते ॥ १२-२४४-८ (७५३०९)

तपोधर्मेण संयुक्तस्तपोनित्यः सुसंशितः ।
तेन सर्वानवाप्नोति कामान्यान्मनसेच्छति ॥ १२-२४४-९ (७५३१०)
तपसा तदवाप्नोति यद्भूतं सृजते जगत् ।
तद्भूतश्च ततः सर्वभूतानां भवति प्रभुः ॥ १२-२४४-१० (७५३११)
तदुक्तं वेदवादेषु गहनं वेददर्शिभिः ।
वेदान्तेषु पुनर्व्यक्तं क्रमयोगेन लक्ष्यते ॥ १२-२४४-११ (७५३१२)
आरम्भयज्ञाः क्षत्राश्च हविर्यज्ञा विशः स्मृताः ।
परिचारयज्ञाः शूद्राश्च जपयज्ञा द्विजातयः ॥ १२-२४४-१२ (७५३१३)
परिनिष्ठितकार्यो हि स्वाध्यायेन द्विजो भवेत् ।
कुर्यादन्यन्न वा कुर्यान्मैत्रो ब्राह्मण उच्यते ॥ १२-२४४-१३ (७५३१४)
त्रेतादौ सकला वेदा यज्ञा वर्णाश्रमास्तथा ।
संरोधादायुषस्त्वेते व्यस्यन्ते द्वापरे युगे ॥ १२-२४४-१४ (७५३१५)
द्वापरे विप्लवं यान्ति वेदाः कलियुगे तथा ।
दृश्यन्ते नापि दृश्यन्ते कलेरन्ते पुनः किल ॥ १२-२४४-१५ (७५३१६)
उत्सीदन्ति स्वधर्माश्च तत्राधर्मेण पीडिताः ।
गवां भूमेश्च ये चापामोषधीनां च ये रसाः ॥ १२-२४४-१६ (७५३१७)
अधर्मान्तर्हिता वेदा वेदधर्मास्तथाऽऽश्रमाः ।
विक्रियन्ते स्वधर्माश्च स्थावराणि चराणि च ॥ १२-२४४-१७ (७५३१८)
यथा सर्वाणि भूतानि वृष्ट्या तृप्यन्ति प्रावृषि ।
सृजन्ते सर्वतोऽङ्गानि तथा वेदा युगेयुगे ॥ १२-२४४-१८ (७५३१९)
विहितं कालनानात्वमनादिनिधनं च यत् ।
कीर्तितं यत्पुरस्तात्ते यतः संयान्ति च प्रजाः ॥ १२-२४४-१९ (७५३२०)
यच्चेदं प्रभवः स्थानं भूतानां संयमो यमः ।
स्वभावेनैव वर्तन्ते द्वन्द्वसृष्टानि भूरिशः ॥ १२-२४४-२० (७५३२१)
सर्गः कालो धृतिर्वेदाः कर्ता कार्यं क्रियाफलम् ।
एतत्ते कथितं तात यन्मां त्वं परिपृच्छसि ॥ ॥ १२-२४४-२१ (७५३२२)

इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि
चतुश्चत्वारिंशदधिकद्विशततमोऽध्यायः ॥ २४४.।

Mahabharata - Shanti Parva - Chapter Footnotes

१२-२४४-५ इति क्रमेण मीमांसकस्य दैवज्ञस्य शून्यवादिलोकायतयोश्च
मतान्युपन्यस्यैतेषांष ।विकल्पसमुच्चयावाह पौरुषमिति। पौरुषं
दैवं न कर्म दृष्टादृष्टयत्नः। स्वभावमनुसृत्य कर्मकालौ
फलदावित्यर्थः। अविवेकं समुच्चयम्। पृथग्भूतमेकमेव प्रधानं
नत्वितरावित्यर्थः ॥

१२-२४४-६ आर्हतमत आह एतदिति ।एवमेतन्न चाप्येवमुभे एवं नचाप्युभे इति ध। पाठः ॥
१२-२४४-१० सत्यं तपश्च भूतानां सर्वेषां भवति प्रभुरिति थ ।पाठः। स, तद्रूपश्च सर्वेषां भूतानां भवति प्रभुरिति ध। पाठः ॥
१२-२४४-२१ धर्मः काल इति ध ।पाठः ॥

---

शन्तिपर्व-अध्यय२४५
॥ श्रीः ॥
१२.२४५. अध्यायः २४५

Mahabharata - Shanti Parva - Chapter Topics
भीष्मेण युधिष्ठिरंप्रति
वर्णाश्रमोचितधर्मानुष्ठानपूर्वकब्रह्मज्ञानस्य
तत्प्राप्तिसाधनत्वादिप्रतिपादकव्यासवाक्यानुवादः ॥१.।
Mahabharata - Shanti Parva - Chapter Text

१२-२४५-० (७५३२३)
भीष्म उवाच। १२-२४५-०क्ष् (६२३८)
इत्युक्तोऽभिप्रशस्यैतत्परमर्षेस्तु शासनम् ।
मोक्षधर्मार्थसंयुक्तमिदं प्रष्टुं प्रचक्रमे ॥ १२-२४५-१ (७५३२४)
शुक उवाच। १२-२४५-२क्ष् (६२३९)
प्रजावाञ्श्रोत्रियो यज्वा कृतप्रज्ञोऽनसूयकः ।
अनागतमनैतिह्यं कथं ब्रह्माधिगच्छति ॥ १२-२४५-२ (७५३२५)
तपसा ब्रह्मचर्येण सर्वत्यागेन मेधया ।
साङ्ख्ये वा यदि वा योग एतत्पृष्टो वदस्व मे ॥ १२-२४५-३ (७५३२६)
मनसश्चेन्द्रियाणां च यथैकाग्र्यमवाप्यते ।
येनोपायेन पुरुषैस्तत्त्वं व्याख्यातुमर्हसि ॥ १२-२४५-४ (७५३२७)
व्यास उवाच। १२-२४५-५क्ष् (६२४०)
नान्यत्र विद्यातपसोर्नान्यत्रेन्द्रियनिग्रहात् ।
नान्यत्र लोभसंत्यागात्सिद्धिं विन्दति कश्चन ॥ १२-२४५-५ (७५३२८)
महाभूतानि सर्वाणि पूर्वसृष्टिः स्वयंभुवः ।
भूयिष्ठं प्राणभृत्काये निविष्टानि शरीरिषु ॥ १२-२४५-६ (७५३२९)
भूमेर्देहो जलात्स्त्रोतो ज्योतिषश्चक्षुषी स्मृते ।
प्राणापानाश्रयो वायुः स्वेष्वाकाशं शरीरिणाम् ॥ १२-२४५-७ (७५३३०)
क्रान्ते विष्णुर्बले शक्रः कोष्ठेऽग्निर्भोक्तुमिच्छति ।
कर्णयोः प्रदिशः श्रोत्रे जिह्वायां वाक् सरस्वती ॥ १२-२४५-८ (७५३३१)

कर्णौ त्वक्चक्षुषी जिह्वा नासिका चैव पञ्चमी ।
दश तानीन्द्रियोक्तानि द्वाराण्याहारसिद्धये ॥ १२-२४५-९ (७५३३२)
शब्दः स्पर्शस्तथा रूपं रसो गन्धश्च पञ्चमः ।
इन्द्रियाणि पृथक्स्वार्थान्मनसा दर्शयन्त्युत ॥ १२-२४५-१० (७५३३३)
इन्द्रियाणि मनो युङ्क्ते वश्यान्यन्तेव वाजिनः ।
मनश्चापि सदा भुक्ते भूतात्मा हृदयाश्रितः ॥ १२-२४५-११ (७५३३४)
इन्द्रियाणां तथैवैषां सर्वेषामीश्वरं मनः ।
नियमे च विसर्गे च भूतात्मा मानसस्तथा ॥ १२-२४५-१२ (७५३३५)
इन्द्रियाणीन्द्रियार्थाश्च स्वभावश्चेतना मनः ।
प्राणापानौ च जीवश्च नित्यं देहेषु देहिनाम् ॥ १२-२४५-१३ (७५३३६)
आश्रयो नास्ति सत्वस्य गुणः सत्त्वस्य चेतना ।
सत्वं हि तेजः सृजति न गुणान्वै कथंचन ॥ १२-२४५-१४ (७५३३७)
एवं सप्तदशं देहे वृतं षोडशभिर्गुणैः ।
मनीषीमनसा विप्रः पश्यत्यात्मानमात्मनि ॥ १२-२४५-१५ (७५३३८)
न ह्ययं चक्षुषा दृश्यो न च सर्वैरपीन्द्रियैः ।
मनसा दीपभूतेन महानात्मा प्रकाशते ॥ १२-२४५-१६ (७५३३९)
अशब्दस्पर्शरूपं तदरसागन्धमव्ययम् ।
अशरीरं शरीरेषु निरीक्षते निरिन्द्रियम् ॥ १२-२४५-१७ (७५३४०)
अव्यक्तं सर्वदेहेषु मर्त्येष्वमृतमाहितम् ।
योऽनुपश्यति स प्रेत्य कल्पते ब्रह्मभूयसे ॥ १२-२४५-१८ (७५३४१)
विद्याभिजनसंपन्ने ब्राह्मणे गवि हस्तिनि ।
शुनि चैव श्वपाके च पण्डिताः समदर्शिनः ॥ १२-२४५-१९ (७५३४२)
स हि सर्वेषु भूतेषु जङ्गमेषु ध्रुवेषु च ।
वसत्येको महानात्मा येन सर्वमिदं ततम् ॥ १२-२४५-२० (७५३४३)
सर्वभूतेषु चात्मानं सर्वभूतानि चात्मनि ।
यदा पश्यति भूतात्मा ब्रह्म संपद्यते तदा ॥ १२-२४५-२१ (७५३४४)
यावानात्मनि मे ह्यात्मा तावानात्मा परात्मनि ।
य एवं सततं वेद सोऽमृतत्वाय कल्पते ॥ १२-२४५-२२ (७५३४५)
सर्वभूतात्मभूतस्य सर्वभूतहितस्य च ।
देवाऽपि मार्गे मुह्यन्ति अपदस्य पदैषिणः ॥ १२-२४५-२३ (७५३४६)
शकुन्तानामिवाकाशे मत्स्यानामिव चोदके ।
यथा गतिर्न दृश्येत तथा ज्ञानविदां गतिः ॥ १२-२४५-२४ (७५३४७)
कालः पचति भूतानि सर्वाण्येवात्मनाऽऽत्मनि ।
यस्मिंस्तु पच्यते कालस्तं वेदेह न कश्चन ॥ १२-२४५-२५ (७५३४८)
न स ऊर्ध्वं न तिर्यक्च नाधश्चरति यः पुनः ।
न मध्ये प्रतिगृह्णीते नैव किंचित्कुतश्चन ॥ १२-२४५-२६ (७५३४९)

सर्वेऽन्तस्था इमे लोका बाह्यमेषां न किंचन ।
यः सहस्र समा गच्छेद्यथा बाणो गुणच्युतः ॥ १२-२४५-२७ (७५३५०)
नैवान्तं कारणस्येयाद्यद्यपि स्यान्मनोजवः ।
तस्मात्सूक्ष्मात्सूक्ष्मतरं नास्ति स्थूलतरं ततः ॥ १२-२४५-२८ (७५३५१)
सर्वतः पाणिपादं तत्सर्वतोक्षिशिरोमुखम् ।
सर्वतः श्रुतिमल्लोके सर्वमावृरत्य तिष्ठति ॥ १२-२४५-२९ (७५३५२)
तदेवाणोरणुतरं तन्महद्भ्यो महत्तरम् ।
तदन्तः सर्वभूतानां ध्रुवं तिष्ठन्न दृश्यते ॥ १२-२४५-३० (७५३५३)
अक्षरं च क्षरं चैव द्वैधीभावोऽयमात्मनः ।
क्षरः सर्वेषु भूतेषु दिवि ह्यमृतमक्षरम् ॥ १२-२४५-३१ (७५३५४)
नवद्वारं पुरं गत्वा हंसो हि नियतो वशी ।
ईशः सर्वस्य भूतस्य स्थावरस्य चरस्य च ॥ १२-२४५-३२ (७५३५५)
हानिभङ्गविकल्पानां नवानां संचयेन च ।
शरीराणामजस्याहुर्हंसत्वं पारदर्शिनः ॥ १२-२४५-३३ (७५३५६)
हंसोक्तं चाक्षरं चैव कूटस्थं यत्तदक्षरम् ।
तद्विद्वानक्षरं प्राप्य जहाति प्राणजन्मनी ॥ ॥ १२-२४५-३४ (७५३५७)

इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि
पञ्चचत्वारिंशदधिकद्विशततमोऽध्यायः ॥ २४५.।
Mahabharata - Shanti Parva - Chapter Footnotes

१२-२४५-२ अनागतं प्रत्यक्षानुमानाभ्यामज्ञातम् ।अनैतिह्यं
इदमित्थमिति वेदेनापि न निर्देश्यम् ॥
१२-२४५-५ विद्यादिपदैः क्रमेणाश्रमचतुष्टयधर्मा उक्ताः ॥
१२-२४५-७ खेषु नासादिरन्ध्रेषु ॥
१२-२४५-८ क्रान्ते पादे बले पाणौ च विष्णुशक्रौ तत्प्रयोक्तारौ
तिष्ठतः ।कर्णौ स्थानं श्रोत्रमिन्द्रियं दिशो देवताः। जिह्वा स्थानं
वागिन्द्रियं सरस्वती देवता। एतच्चान्यषामपि स्थानादीनामुपलक्षणम्
॥
१२-२४५-९ आहारः शब्दादिग्रहः ॥

---

शन्तिपर्व-अध्यय२४६
॥ श्रीः ॥
१२.२४६. अध्यायः २४६

Mahabharata - Shanti Parva - Chapter Topics

भीष्मेण युधिष्ठिरंप्रति
योगस्वरूपादिनिरूपकशुकसंबोध्यकव्यासवचनानुवादः ॥ १.।
Mahabharata - Shanti Parva - Chapter Text

१२-२४६-० (७५३५८)
व्यास उवाच। १२-२४६-०क्ष् (६२४१)
पृच्छतस्तव सत्पुत्र यथावदिह तत्त्वतः ।
साङ्ख्यन्यायेन संयुक्तं यदेतत्कीर्तितं मया ॥ १२-२४६-१ (७५३५९)
योगकृत्यं तु ते कृत्स्नं वर्तयिष्यामि तच्छृणु ।
एकत्वं बुद्धिमनसोरिन्द्रियाणां च सर्वशः ॥ १२-२४६-२ (७५३६०)
आत्मनोऽव्यथिनस्तात् ज्ञानमेतदनुत्तमम् ।
तदेतदुपशान्तेन दान्तेनाध्यात्मशीलिना ॥ १२-२४६-३ (७५३६१)
आत्मारामेण बुद्धेन बोद्धव्यं शुचिकर्मणा ।
योगदोषान्समुच्छिन्द्यात्पञ्च यान्कवयो विदुः ॥ १२-२४६-४ (७५३६२)
कामं क्रोधं त्त लोभं च भयं स्वप्नं च पञ्चमम् ।
क्रोधं शमेन जयति कामं संकल्पवर्जनात् ॥ १२-२४६-५ (७५३६३)
सत्त्वसंसेवनाद्धीरो निद्रामुच्छेत्तुमर्हति ।
धृत्या शिश्नोदरं रक्षेत्पाणिपादं च चक्षुषा ॥ १२-२४६-६ (७५३६४)
चक्षुःश्रोत्रे च मनसा मनो वाचं च कर्मणा ।
अप्रमादाद्भयं जह्याल्लोभं प्राज्ञोपसेवनात् ॥ १२-२४६-७ (७५३६५)
एवमेतान्योगदोषाञ्चयेन्नित्यमतन्द्रितः ।
अग्नींश्च ब्राह्मणांश्चार्चेद्देवताः प्रणमेत च ॥ १२-२४६-८ (७५३६६)
वर्जयेदुशतीं वाचं हिंसायुक्तां मनोनुदाम् ।
ब्रह्म तेजोमयं शुक्रं यस्य सर्वमिदं ततम् ॥ १२-२४६-९ (७५३६७)
एतस्य सूत्रभूतस्य द्वयं स्थावरजङ्गमम् ।
ध्यानमध्ययनं दानं सत्यं ह्रीरार्जवं क्षमा ॥ १२-२४६-१० (७५३६८)
शोचमाहारसंशुद्धिरिन्द्रियाणां च निग्रहः ।
एतैर्विवर्धते तेजः पाप्मानं चापकर्षति ॥ १२-२४६-११ (७५३६९)
सिद्ध्यन्ति चास्य सर्वार्था विज्ञानं च प्रवर्धते ।
समः सर्वेषु भूतेषु लब्धालब्धेन वर्तयेत् ॥ १२-२४६-१२ (७५३७०)
धूतपाप्मा तु तेजस्वी लघ्वाहारो जितेन्द्रियः ।
कामक्रोधौ वशे कृत्वा निनीषेद्ब्रह्मणः पदम् ॥ १२-२४६-१३ (७५३७१)
मनसश्चेन्द्रियाणां च कृत्वैकाग्र्यं समाहितः ।
पूर्वरात्रेऽपरात्रे च धारयेन्मन आत्मनि ॥ १२-२४६-१४ (७५३७२)
जन्तोः पञ्चेन्द्रियस्यास्य यदेकं छिद्रमिन्द्रियम् ।
ततोऽस्य स्रवते प्रज्ञा दृतेः पादादिवोदकम् ॥ १२-२४६-१५ (७५३७३)

मनस्तु पूर्वमादद्यात्कुमीनमिव मत्स्यहा ।
ततः श्रोत्रं ततश्चक्षुर्जिह्वा घ्राणं च योगवित् ॥ १२-२४६-१६ (७५३७४)
तत एतानि संयम्य मनसि स्थापयेद्यतिः ।
तथैवापो ह्यसंकल्पान्मनो ह्यात्मनि धारयेत् ॥ १२-२४६-१७ (७५३७५)
पञ्चेन्द्रियाणि संधाय मनसि स्थापयेद्यतिः ।
यदैतान्यवतिष्ठन्ति मनःषष्ठानि चात्मनि ॥ १२-२४६-१८ (७५३७६)
प्रसीदन्ति च संस्थाय तदा ब्रह्म प्रकाशते ।
विधूम इव सप्तार्चिरादित्य इव दीप्तिमान् ॥ १२-२४६-१९ (७५३७७)
वैद्युतोऽग्निरिवाकाशे दृश्यतेऽऽत्मा तथाऽऽत्मनि ।
सर्वस्तत्र स सर्वत्र व्यापकत्वाच्च दृश्यते ॥ १२-२४६-२० (७५३७८)
तं पश्यन्ति महात्मानो ब्राह्मणा ये मनीषिणः ।
धृतिमन्तो महाप्राज्ञाः सर्वभूतहिते रताः ॥ १२-२४६-२१ (७५३७९)
एवं परिमितं कालमाचरन्संशितव्रतः ।
आसीनो हि रहस्येको गच्छेदक्षरसाम्यताम् ॥ १२-२४६-२२ (७५३८०)
विमोहो भ्रम आवर्तो घ्राणं श्रवणदर्शने ।
अद्भुतानि रसस्पर्शे शीतोष्णे मारुताकृतिः ॥ १२-२४६-२३ (७५३८१)
प्रतिभामुपसर्गांश्चाप्युपसंगृह्य योगतः ।
तांस्तत्त्वविदनादृत्य आत्मन्येव निवर्तयेत् ॥ १२-२४६-२४ (७५३८२)
कुर्यात्परिचयं योगे त्रैकाल्ये नियतो मुनिः ।
गिरिशृङ्गे तथा चैत्ये वृक्षाग्रेषु च योजयेत् ॥ १२-२४६-२५ (७५३८३)
संनियम्येन्द्रियग्रामं कोष्ठे भाण्डमना इव ।
एकाग्रं चिन्तयेन्नित्यं योगान्नोद्विजयेन्मनः ॥ १२-२४६-२६ (७५३८४)
येनोपायेन शक्येत संनियन्तुं चलं मनः ।
तत्तद्युक्तो निषेवेत न चैव विचलेत्ततः ॥ १२-२४६-२७ (७५३८५)
शून्या गिरि---श्चैव देवतायतनानि च ।
शून्यागारा---काग्रो निवासार्थमुपक्रमेत् ॥ १२-२४६-२८ (७५३८६)
नाभिष्व---वाचा कर्मणा मनसाऽपि वा ।
उपे-----रो लब्धालब्धे समो भवेत् ॥ १२-२४६-२९ (७५३८७)
यश्चैन-----न्देत यश्चैनमभिवादयेत् ।
समस्त-----भयोर्नाभिध्यायेच्छुभाशुभम् ॥ १२-२४६-३० (७५३८८)
न प्रहृ---भेषु नालाभेषु च चिन्तयेत् ।
समः स-------षु सधर्मा मातरिश्वनः ॥ १२-२४६-३१ (७५३८९)
एवं सर्वात्मनः साधोः सर्वत्र समदर्शिनः ।
षण्मासान्नित्ययुक्तस्य शब्दब्रह्मातिवर्तते ॥ १२-२४६-३२ (७५३९०)
वेदनार्ताः प्रजा दृष्ट्वा समलोष्टाश्मकाञ्चनः ।
एतस्मिन्निरतो मार्गे विरमेन्न च मोहितः ॥ १२-२४६-३३ (७५३९१)

अपि वर्णावकृष्टस्तु नारी वा धर्मकाङ्क्षिणी ।
तावप्येतेन मार्गेण गच्छेतां परमां गतिम् ॥ १२-२४६-३४ (७५३९२)
अजं पुराणमजरं सनातनं
यदिन्द्रियैरुपलभेत निश्चलैः ।
अणोरणीयो महतो महत्तरं
तदात्मना पश्यति युक्तमात्मवान् ॥ १२-२४६-३५ (७५३९३)
इदं महर्षेर्वचनं महात्मनो
यथावदुक्तं मनसाऽनुदृश्य च ।
अवेक्ष्य चेमां परमेष्ठिसाम्यतां
प्रयान्ति यां भूतगतिं मनीषिणः ॥ ॥ १२-२४६-३६ (७५३९४)

इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि
षट्चत्वारिंशदधिकद्विशततमोऽध्यायः ॥ २४६.।
Mahabharata - Shanti Parva - Chapter Footnotes

१२-२४६-३ आत्मनो व्ययिन इति ध ।पाठः ॥
१२-२४६-९ सर्वमिदं रस इति झ ।पाठः ॥
१२-२४६-१० एकस्य सर्वं भूतस्येति ड ।पाठः ॥
१२-२४६-१२ विज्ञानं च प्रकाशत इति ड ।थ।पाठः ॥
१२-२४६-१५ दृतेश्चर्मकोशस्य ॥
१२-२४६-१६ कुमीनं जालदंशक्षमं मीनम् ।कुलीरमिव मत्स्यहेति
ड।थ।पाठः ॥
१२-२४६-१८ तं च ज्ञानेनेति ड ।थ।पाठः।पञ्चज्ञानेन संधाय
मनः संस्थापयेद्यतिरिति ध।पाठः ॥
१२-२४६-२३ प्रमादो भ्रम इति ड थ ।पाठः ॥
१२-२४६-२४ मनसैव निवर्तयेदिति ड ।थ।पाठः ॥
१२-२४६-२६ कोष्ठं भाण्डं यथैय चेति ध ।पाठः ॥
१२-२४६-३० यश्चैनमभिनन्देत यश्चैनमपवादयेत् इति झ ।पाठः ॥
१२-२४६-३२ सर्वात्मना साधोरिति ड ।पाठः।स्वस्थात्मन इति झ।पाठः ॥

---

शन्तिपर्व-अध्यय२४७
॥ श्रीः ॥
१२.२४७. अध्यायः २४७

Mahabharata - Shanti Parva - Chapter Topics
भीष्मेण युधिष्ठिरंप्रति विद्याकर्मस्वरूपादिनिरूपकव्यासवाक्यानुवादः
॥ १.।

१२-२४७-० (७५३९५)
शुक उवाच। १२-२४७-०क्ष् (६२४२)
यदिदं वेदवचनं कुरु कर्म त्यजेति च ।
कां दिशं विद्यया यान्ति कां च गच्छन्ति कर्मणा ॥ १२-२४७-१ (७५३९६)
एतद्वै श्रोतुमिच्छामि तद्भवान्प्रब्रवीतु मे ।
एतच्चान्योन्यवैरूप्ये वर्तेते प्रतिकूलतः ॥ १२-२४७-२ (७५३९७)
भीष्म उवाच। १२-२४७-३क्ष् (६२४३)
इत्युक्तः प्रत्युवाचेदं पराशरसुतः सुतम् ।
कर्मविद्यामयावेतौ व्याख्यास्यामि क्षराक्षरौ ॥ १२-२४७-३ (७५३९८)
यां दिशं विद्यया यान्ति यां च गच्छन्ति कर्मणा ।
शृणुष्वैकमना वत्स गह्वरं ह्येतदन्तरम् ॥ १२-२४७-४ (७५३९९)
अस्ति धर्म इति ह्युक्त्वा नास्तीत्यत्रैव यो वदेत् ।
तस्य पक्षस्य सदृशमिदं मम भवेदथ ॥ १२-२४७-५ (७५४००)
द्वाविमावथ पन्थानौ यत्र वेदाः प्रतिष्ठिताः ।
प्रवृत्तिलक्षणो धर्मो निवृत्तौ च व्यवस्थितः ॥ १२-२४७-६ (७५४०१)
कर्मणा बध्यते जन्तुर्विद्यया तु प्रमुच्यते ।
तस्मात्कर्म न कुर्वन्ति यतयः पारदर्शिनः ॥ १२-२४७-७ (७५४०२)
कर्मणा जायते प्रेत्य मूर्तिमान्षोडशात्मकः ।
विद्यया जायते नित्यमव्ययो ह्यक्षरात्मकः ॥ १२-२४७-८ (७५४०३)
कर्म त्वेके प्रशंसन्ति स्वल्पबुद्धितया नराः ।
तेन ते देहजालानि रमयन्त उपासते ॥ १२-२४७-९ (७५४०४)
ये स्म बुद्धिं परां प्राप्ता धर्मैर्नपुण्यदर्शिनः ।
न ते कर्म प्रशंसन्ति कूपं नद्यां पिबन्निव ॥ १२-२४७-१० (७५४०५)
कर्मणः फलमाप्नोति सुखदुःखे भवाभवौ ।
विद्यया तदवाप्नोति यत्र गत्वा न शोचति ॥ १२-२४७-११ (७५४०६)
यत्र गत्वा न म्रियते यत्र गत्वा न जायते ।
न जीर्यते यत्र गत्वा यत्र गत्वा न वर्धते ॥ १२-२४७-१२ (७५४०७)
यत्र तद्ब्रह्म परममव्यक्तमचलं ध्रुवम् ।
अव्याहतमनायासममृतं चावियोगि च ॥ १२-२४७-१३ (७५४०८)
द्वन्द्वैर्न यत्र बाध्यन्ते मानसेन च कर्मणा ।
समाः सर्वत्र मैत्राश्च सर्वभूतहिते रताः ॥ १२-२४७-१४ (७५४०९)
विद्यामयोऽन्यः पुरुषस्तात कर्ममयोऽपरः ।
विद्धि चन्द्रमसं दर्शे सूक्ष्मया कलया स्थितम् ।
गविद्यामयं तं पुरुषं नित्यं ज्ञानगुणात्मकम् ॥' १२-२४७-१५ (७५४१०)

तदेतदृषिणा प्रोक्तं विस्तरेणानुमीयते ।
नवं तु शशिनं दृष्ट्वा वक्रतन्तुमिवाम्बरे ॥ १२-२४७-१६ (७५४११)
एकादशविकारात्मा कलासंभारसंभृतः ।
मूर्तिमानिति तं विद्धि तात कर्म गुणात्मकम् ॥ १२-२४७-१७ (७५४१२)
ग्तस्मिन्यः संस्थितो ह्यग्निर्नित्यंस्थाल्यामिवाहितः ।
आत्मानं तं विजानीहि नित्यं त्यागजितात्मकं ॥ १२-२४७-१८ (७५४१३)
देवो यः संश्रितस्तस्मिन्नब्बिन्दुरिव पुष्करे ।
क्षेत्रज्ञं तं विजानीयान्नित्यं योगजितात्मकम् ॥ १२-२४७-१९ (७५४१४)
तमोरजश्च सत्त्वं च विद्धि जीवगुणात्मकम् ।
जीवमात्मगुणं विद्यादात्मानं प-----नः ॥ १२-२४७-२० (७५४१५)
अचेतनं जीवगुणं वदन्ति
स चेष्टते चेष्टयते च सर्वम्
ततः परं क्षेत्रविदो वदन्ति
प्राकल्पयद्यो भुवनानि सप्त ॥ ॥ १२-२४७-२१ (७५४१६)

इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि
सप्तचत्वारिंशदधिकद्विशततमोऽध्यायः ॥
Mahabharata - Shanti Parva - Chapter Footnotes

१२-२४७-३ क्षराक्षरौ नश्वरानश्वरौ मार्गाविति शेषः
। पराशरसुतः शुक मिति ध। पाठः ॥
१२-२४७-१३ यद्याति परमं ब्रह्म पुराणमचलमिति टड़ । पाठः ॥
१२-२४७-२१ स चेष्टते जीवयते चेति झ । पाठः ॥

---

शन्तिपर्व-अध्यय२४८
॥ श्रीः ॥
१२.२४८. अध्यायः २४८

Mahabharata - Shanti Parva - Chapter Topics
शुकप्रति व्यासेन ब्रह्मचर्याश्रमधर्मनिरूपणम् ॥ १.।
Mahabharata - Shanti Parva - Chapter Text

१२-२४८-० (७५४१७)
शुक उवाच। १२-२४८-०क्ष् (६२४४)
क्षरात्प्रभृति यः सर्गः सगुणानीन्द्रियाणि च ।
बुद्ध्यैश्वर्यातिसर्गोऽयं प्रधानश्चात्मनः श्रुतम् ॥ १२-२४८-१ (७५४१८)
भूय एव तु लोकेऽस्मिन्सद्भूतिं कालहेतुकीम् ।

यया सन्तः प्रवर्तन्ते तदिच्छाम्यनुवर्तितुम् ॥ १२-२४८-२ (७५४१९)
वेदे वचनमुक्तं तु कुरु कर्म त्यजेति च ।
कथमेतद्विजानीयां तच्च व्याख्यातुमर्हसि ॥ १२-२४८-३ (७५४२०)
लोकवृत्तान्ततत्वज्ञः पूतोऽहं गुरुशासनात् ।
कृत्वा बुद्धिं विमुक्तात्मा द्रक्ष्याम्यात्मानमव्ययं ॥ १२-२४८-४ (७५४२१)
व्यास उवाच। १२-२४८-५क्ष् (६२४५)
एषा वै विहिता वृत्तिः पुरस्ताद्ब्रह्मणा स्वयम् ।
एषा पूर्वतरैः सद्भिराचीर्णा परमर्षिभिः ॥ १२-२४८-५ (७५४२२)
ब्रह्मचर्येण वै लोकाञ्जयन्ति परमर्षयः ।
आत्मनश्च हृदि श्रेयो ह्यन्विच्छन्मनसाऽऽत्मनि ॥ १२-२४८-६ (७५४२३)
वने मूलफलाशी च तप्यन्सुविपुलं तपः ।
पुण्यायतनचारी च भूतानामविहिंसक ॥ १२-२४८-७ (७५४२४)
विधूमे सन्नमुसले वानप्रस्थप्रतिश्रये ।
काले प्राप्ते चरन्भैक्षं कल्पते ब्रह्मभूयसे ॥ १२-२४८-८ (७५४२५)
निस्तुतिर्निर्नमस्कारः परित्यज्य शुभाशुभे ।
अरण्ये विचरैकाकी येनकेनचिदाशितः ॥ १२-२४८-९ (७५४२६)
शुक उवाच। १२-२४८-१०क्ष् (६२४६)
यदिदं वेदवचनं लोकवादे विरुध्यते ।
प्रमाणे चाप्रमाणे च विरुद्धे शास्त्रतः कुतः ॥ १२-२४८-१० (७५४२७)
इत्येतच्छ्रोतुमिच्छामि प्रमाणं तूभयं कथम् ।
कर्मणामविरोधेन कथमेतत्प्रवर्तते ॥ १२-२४८-११ (७५४२८)
भीष्म उवाच। १२-२४८-१२क्ष् (६२४७)
इत्युक्तः प्रत्युवाचेदं गन्धवत्याः सुतः सुतम् ।
ऋषिस्तत्पूजयन्वाक्यं पुत्रस्यामिततेजसः ॥ १२-२४८-१२ (७५४२९)
व्यास उवाच। १२-२४८-१३क्ष् (६२४८)
ब्रह्मचारी गृहस्थश्च वानप्रस्थोऽथ भिक्षुकः ।
यथोक्तकारिणः सर्वे गच्छन्ति परमां गतिम् ॥ १२-२४८-१३ (७५४३०)
एको वाऽप्याश्रमानेतान्योऽनुतिष्ठेद्यथाविधि ।
अकामद्वेषसंयुक्तः स परत्र महीयते ॥ १२-२४८-१४ (७५४३१)
चतुष्पदी हि निःश्रेयणी ब्रह्मण्येषा प्रतिष्ठिता ।
एतामाश्रित्य निःश्रेणीं ब्रह्मलोके महीयते ॥ १२-२४८-१५ (७५४३२)
आयुषस्तु चतुर्भागं ब्रह्मचार्यनसूयकः ।
गुरौ वा गुरुपुत्रे वा वसेद्धर्मार्थकोविदः ॥ १२-२४८-१६ (७५४३३)
जघन्यशायी पूर्वं स्यादुत्थाय गुरुवेश्मनि ।
यच्च शिष्येण कर्तव्यं कार्यं दासेन वा पुनः ॥ १२-२४८-१७ (७५४३४)
कृतमित्येव तत्सर्वं कृत्वा तिष्ठेत पार्श्वतः ।

किंकरः सर्वकारी स्यात्सर्वकर्मसु कोविदः ॥ १२-२४८-१८ (७५४३५)
कर्मातिशेषेण गुरावध्येतव्यं बुभूषता ।
दक्षिणेनोपसादी स्यादाकूतो नुल्माश्रयेत् ॥ १२-२४८-१९ (७५४३६)
शुचिर्दक्षो गुणोपेतो ब्रूयादिष्टमिवान्तरा ।
चक्षुष गुरुमव्यग्रो निरीक्षेत जितेन्द्रियः ॥ १२-२४८-२० (७५४३७)
नाभुक्तवति चाश्नीयादपीतवति नो पिबेत् ।
नातिष्ठति तथासीत नासुप्ते प्रस्वपेत च ॥ १२-२४८-२१ (७५४३८)
उत्तानाभ्यां च पाणिभ्यां पादावस्य मृदु स्पृशेत् ।
दक्षिणं दक्षिणेनैव सव्यं सव्येन पीडयेत् ॥ १२-२४८-२२ (७५४३९)
अभिवाद्य गुरुं ब्रूयादधीष्व भगवन्निति ।
इदं करिष्ये भगवन्निदं चापि कृतं मया ॥ १२-२४८-२३ (७५४४०)
ब्रह्मंस्तदपि कर्ताऽस्मि यद्भावन्वक्ष्यते पुनः ।
इति सर्वमनुज्ञाप्य निवेद्य गुरवे पुनः। १२-२४८-२४ (७५४४१)
कुर्यात्कृत्वा च तत्सर्वमाख्येयं गुरवे पुनः ।
यांस्तु गन्धान्रसान्वाऽपि ब्रह्मचारी न सेवते ॥ १२-२४८-२५ (७५४४२)
सेवेत तान्समावृत्त इति धर्मेषु निश्चयः ।
ये केचिन्नियमेनोक्ता नियमा ब्रह्मचारिणः ॥ १२-२४८-२६ (७५४४३)
तान्सर्वाननुगृह्णीयाद्भवेच्चानपगो गुरोः ।
स एवं गुरवे प्रीतिमुपहृत्य यथाबलम् ॥ १२-२४८-२७ (७५४४४)
अग्राम्येणा मेष्वेवं शिष्यो वर्तते कर्मणा ।
वदव्रतोपवासेन चतुर्थे च-------।
गुरवे दक्षिणां दत्त्वा समावतेद्यथातिधि----॥ १२-२४८-२८ (७५४४५)
धर्मलब्धैर्युतो दारैरग्नीनुत्पाद्य यनतः ।
द्वितीयमायुषो भागं गृहमेधी भवेद्व्रती ॥ ॥ १२-२४८-२९ (७५४४६)

इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि
अष्टचत्वारिंशदधिकद्विशततमोऽध्यायः ॥ २४८.।

Mahabharata - Shanti Parva - Chapter Footnotes

१२-२४८-२ सद्वृत्तिं सतामाचारम् ।कालहैतुकीं
युगानुसारिणीम्। अनुवर्तितुं पुनः श्रोतुम्। हैतुकीं क्रियाम् इति
ट। थ। पाठः ॥
१२-२४८-३ कुरु कर्म त्यजेति श्रुत्योरेतदेतमविरोधं च कथं
विजानीयां विषयविभागेन विविच्य कथं जानीयाम् ॥
१२-२४८-४ लोकवृत्तान्तो लोकरीतिः तस्य तत्त्वं धर्माधर्ममूलकत्वं
तज्ज्ञः । पूतो धर्मानुष्ठानेन। बुद्धिं कृत्वा संस्कृत्य। विमुक्तात्मा

त्यक्तदेहः ॥
१२-२४८-५ एषा कर्मभिर्बुद्धिं संस्कृत्य तयात्मदर्शनमित्येवंरूपा ॥
१२-२४८-१२ गन्धवत्याः योजनगन्धायाः सुतो व्यासः ॥
१२-२४८-१५ चतुष्पदी चातुराश्रम्यरूपा ॥
१२-२४८-१९ कर्मातिशेषेण निःशेषं कर्म कृत्वेत्यर्थः ॥
१२-२४८-२१ अभुक्तवति गुराविति शेषः ॥
१२-२४८-२३ अधीष्वाध्यापय ॥
१२-२४८-२६ समावृत्तः समापितब्रह्मचर्यकृत्यः । विस्तरेणोक्ता
इति झ। पाठः ॥
१२-२४८-२७ अनपगः समीपस्थः ॥
१२-२४८-२८ आश्रमादाश्रमेष्वेवमिति झ । पाठः ॥

---

शन्तिपर्व-अध्यय२४९
॥ श्रीः ॥
१२.२४९. अध्यायः २४९

Mahabharata - Shanti Parva - Chapter Topics

--- प्रतिपादकव्यासयाक्यानुवादः ॥१.।
Mahabharata - Shanti Parva - Chapter Text

१२-२४९-० (७५४४७)
व्यास उवाच। १२-२४९-०क्ष् (६२४९)
--तीयमायुषो भागं गृहमेधी गृहे वसेत् ।
धर्मलब्धैर्युतो दारैरग्नीनाहृत्य सुव्रतः ॥ १२-२४९-१ (७५४४८)
गृहस्थवृत्तयश्चैव चतस्रः कविभिः स्मृताः ।
कुमूलधान्यः प्रथमः कुम्भधान्यस्त्वनन्तरम् ॥ १२-२४९-२ (७५४४९)
अश्वस्तनोऽथ कापोतीमाश्रितो वृत्तिमाहरेत् ।
तेषां परः परो ज्यायान्धर्मतो लोकजित्तमः ॥ १२-२४९-३ (७५४५०)
षट्कर्मावर्तयत्येकस्त्रिभिरन्यः प्रवर्तते ।
द्वाभ्यामेकश्चतुर्थस्तु ब्रह्मसत्रे व्यवस्थितः ॥ १२-२४९-४ (७५४५१)
गृहमेधिव्रतान्यत्र महान्तीह प्रचक्षते ।
नात्मार्थे पाचयेदन्नं न वृथा घातयेत्पशून् ॥ १२-२४९-५ (७५४५२)
प्राणी वा यदि वाऽप्राणी संस्कारं यजुषाऽर्हति ।
न दिवा प्रस्वपेज्जातु न पूर्वापररात्रयोः ॥ १२-२४९-६ (७५४५३)
न भुञ्जीतान्तराकाले नानृतावाह्वयेत्स्त्रियम् ।
नास्यानश्नन्गृहे विप्रो वसेत्कश्चिदपूजितः ॥ १२-२४९-७ (७५४५४)

तथास्यातिथयः पूज्या हव्यकव्यवहाः सदा ।
वेदविद्याव्रतस्नाताः श्रोत्रिया वेदपारगाः ॥ १२-२४९-८ (७५४५५)
स्वकर्मजीविनो दान्ताः क्रियावन्तस्तपस्विनः ।
तेषां हव्यं च कव्यं चाप्यर्हणार्थं विधीयते ॥ १२-२४९-९ (७५४५६)
नखरैः संप्रयातस्य स्वकर्मव्यापकस्य च ।
अपविद्धाग्निहोत्रस्य गुरोर्वाऽलीकचारिणः ॥ १२-२४९-१० (७५४५७)
संविभागोऽत्र भूतानां सर्वेषामेव शिष्यते ।
तथैवापचमानेभ्यः प्रदेयं गृहमेधिना ॥ १२-२४९-११ (७५४५८)
विस्साशी भवेन्नित्यं नित्यं चामृतभोजनः ।
असुत --शेषं स्याद्भोजनं हविषा समम् ॥ १२-२४९-१२ (७५४५९)
भृत्यशेष तु योऽश्नाति तमाहुर्विघसा शिनम् ।
विघसं भृत्यशेषं तु यज्ञशेषमथास्मृतय ॥ १२-२४९-१३ (७५४६०)
स्वदारनिरतो दान्तो ह्यनसूयुर्जितेन्द्रियः ।
ऋत्विक्पुरोहिताचार्यमालुलातिथिनंश्रितैः ॥ १२-२४९-१४ (७५४६१)
वृद्धबालातुरैर्वैद्यैर्ज्ञातिसंबन्धिरान्धवैः ।
मातापितृभ्यां जामीभिर्भ्रात्रा पुत्रेण भावया ॥ १२-२४९-१५ (७५४६२)
दुहित्रा दासवर्गेण विवादं न समाचरत् ।
एतान्विमुच्य संवादान्सर्वपापैर्विमुच्यते ॥ १२-२४९-१६ (७५४६३)
एतैर्जितस्तु जयति सर्वाल्लौँकान्न संशयः ।
आचार्यो ब्रह्मलोकेशः प्राजापत्ये पिता प्रभुः ॥ १२-२४९-१७ (७५४६४)
अतिथिस्त्विन्द्रलोकस्य देवलोकस्य चर्त्विजः ।
जामयोऽप्सरसां लोके वैश्वदेवे तु ज्ञातयः ॥ १२-२४९-१८ (७५४६५)
संबन्धिबान्धवा दिक्षु पृथिव्यां मातृमातुलौ ।
बृद्धबावातुरकृशास्त्वाकाशे प्रभविष्णवः ॥ १२-२४९-१९ (७५४६६)
भ्राता ज्येष्ठः समः पित्रा भार्या पुत्रः स्वका तनुः ।
छाया स्वा दासवर्गश्च दुहिता कृपणं परम् ॥ १२-२४९-२० (७५४६७)
तस्मादेतैरधिक्षिप्तः सहेन्नित्यमसंज्वरः ।
गृहधर्मरतो विद्वान्धर्मनित्यो जितक्लमः ॥ १२-२४९-२१ (७५४६८)
न चार्थबद्धः कर्माणि धर्मं वा किंचिदाचरेत् ।
गृहस्थवृत्तयस्तिस्रस्तासां निःश्रेयसं परम् ॥ १२-२४९-२२ (७५४६९)
परंपरं तथैवाहुश्चातुराश्रम्यमेव तत् ।
ये चोक्ता नियमास्तेषां सर्वं कार्यं बुभूषता ॥ १२-२४९-२३ (७५४७०)
कुम्भधान्यैरुच्छशिलैः कापोतीं चास्थितास्तथा ।
यस्मिंश्चैते वसन्त्यर्हास्तद्राष्ट्रमभिवर्धते ॥ १२-२४९-२४ (७५४७१)
दश पूर्वान्दश परान्पुनाति च पितामहान् ।
गृहस्थवृत्तीश्चाप्येता वर्तयेद्यो गतव्यथः ॥ १२-२४९-२५ (७५४७२)

स चक्रधरलोकानां सदृशीमाप्नुयाद्गतिम् ।
वितेन्द्रियाणामथवा गतिरेषा विधीयते ॥१२-२४९-२६ (७५४७३)
सर्वलोको गृहस्थानामुदारमनसां हितः ।
-- विमानसंयुक्तो वेददृष्टः -----॥१२-२४९-२७ (७५४७४)
--लोको गृहस्थानां प्रतिष्ठा निवतात्मनान् ।
ब्रह्मणा विहिता श्रेणिरेषा पस्पाद्विधीयते ।
द्वितीयं क्रमशः प्राप्य स्वर्गलोके महीयते ॥ १२-२४९-२८ (७५४७५)
अतः परं परममुदारमाश्रम्
तृतीयमाहुस्त्यजतां कलेवरम् ।
वनौकसां गृहपतिनामनुत्तमं
शृणुष्व संश्लिष्टशरीरकारिणाम् ॥ ॥ १२-२४९-२९ (७५४७६)

इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि
एकोनपञ्चाशदधिकद्विशततमोऽध्यायः ॥२४९.।
Mahabharata - Shanti Parva - Chapter Footnotes

१२-२४९-२ वृत्तयो जीविकाः ॥
१२-२४९-३ कापोतीमुञ्छवृत्तिम् ॥
१२-२४९-४ षट् यजनयाजनाध्ययनाध्यापनदानप्रतिग्रहाः कर्म तस्य
एको गृहस्थाः त्रिभिर्यजनाध्ययनदानैः ।अन्यो वानप्रस्थः द्वाभ्यां
दानाध्ययनाभ्याम्।ब्रह्मसत्रे प्रणवोपास्तौ ॥
१२-२४९-५ अत्र गार्हस्थ्ये ॥
१२-२४९-६ प्राणी छागादिः ।अप्राणी अश्वत्यादिः।यजुषा छेदनमन्त्रेणैव
क्रत्वर्थमेव संस्कारमर्हति नतु भक्षणमात्रार्थम् ॥
१२-२४९-७ अन्तरा भोजनद्वयमध्ये ।स्त्रियं मैथुनायेति शेषः ॥
१२-२४९-१० नखरैर्नखैः ।दम्भार्थं
नखलोमधरस्य।अपविद्धमविधिना त्यक्तमग्निहोत्रं येन
तस्य।एवंविधानां चाण्डालादीनां च भूतानामत्र गार्हस्थ्ये
संविभागोऽस्ति ॥
१२-२४९-११ अपचमानेभ्यो ब्रह्मचारिसंन्यासिभ्यः ।तथैव
याचमानेभ्य इति ध।पाठः ॥
१२-२४९-१५ जामीभिः सगोत्रस्त्रीभिः ॥
१२-२४९-१६ संवादानंशाद्यर्थं कलहान् ॥
१२-२४९-१७ आचार्यादयः सम्यगाराधिता ब्रह्मलोकादीन् प्रति
नयन्तीत्याहाचार्य इति सार्धाभ्याम् ॥
१२-२४९-२० कृपणं कृपास्थानमिति रत्नगर्भः ॥

१२-२४९-२२ नचेति ।अर्थाशयाऽग्निहोत्रादीन्न कुर्यात्।तिस्रो वक्ष्यमाणाः कुम्भधान्यमुञ्छशिलं कापोतीं च तासां परमुत्तरमुत्तरं श्रेयः ॥
१२-२४९-२३ चातुराश्रम्यमध्येऽपि परं परं श्रेयः ॥
१२-२४९-२६ चक्रधराश्चक्रवर्तिनो मान्धात्रादयस्तल्लोकानां सदृशीं गतिं तत्तुल्यताम् ॥
१२-२४९-२७ सुपुष्पितो रमणीयः ॥
१२-२४९-२९ गृहपतिनां हस्वत्वमार्षम् ।गृहस्थेभ्यः श्रेष्ठं संश्लिष्टमस्थिचर्ममात्रसंश्लेषवत् तच्च तच्छरीरं च तस्य कारिणां शरीरशोषकाणामित्यर्थः।शरीरकर्मणामिति ध।पाठः ॥

---

शन्तिपर्व-अध्यय२५०
॥ श्रीः ॥
१२.२५०. अध्यायः २५०

Mahabharata - Shanti Parva - Chapter Topics
भीष्मेण युधिष्ठिरंप्रति वनस्थधर्मप्रतिपादकव्यासवाक्यानुवादः ॥१.।
Mahabharata - Shanti Parva - Chapter Text

१२-२५०-० (७५४७७)
भीष्म उवाच।१२-२५०-०क्ष् (६२५०)
प्रोक्ता गृहस्थवृत्तिस्ते विहिता या मनीषिभिः ।
तदनन्तरमुक्तं यत्तन्निबोध युधिष्ठिर ॥
ग्व्यासेन कथितं पूर्वं पुत्राय सुमहात्मने।' १२-२५०-१ (७५४७८)
व्यास उवाच।१२-२५०-२क्ष् (६२५१)
क्रय----त्ववधृयैनां तृतीयां वृत्तिमुत्तमाम् ।
संयोगव्रत----वानप्रस्थाश्रमौकसाम् ॥१२-२५०-२ (७५४७९)
श्रूयतां पुत्र भद्रं ते सर्वलोकाश्रमात्मनाम् ।
प्रेक्षापूर्वं यदा पत्त्येद्वलीपलितमात्मना ॥१२-२५०-३ (७५४८०)
अपत्यस्यैव चापण्यं वनमेव तदाऽऽश्रयेत् ॥ १२-२५०-४ (७५४८१)
तृतीयमायुषो भागं वानप्रस्थाश्रमे वसेत् ।
तानेवाग्नीन्पस्त्विरेद्यजमानो दि--कसः ॥१२-२५०-५ (७५४८२)
निय------नियताराहः षष्ठभक्तो ---त्तवान ।
तदाग्रहात्रं तो --- यज्ञाङ्गां व सर्वशः ॥१२-२५०-६ (७५४८३)
अवैकृष्टं व्रीहियव नीवारे विघसानि च ।
हवींषि संप्रयच्छेत मखेष्वत्रापि पञ्चसु ॥१२-२५०-७ (७५४८४)
वानप्रस्वाश्रमेऽप्येतास्चतस्रो वृत्तयः स्मृताः ।
सद्यः प्रक्षालकाः केचित्केचिन्मासिकसंचयाः ॥१२-२५०-८ (७५४८५)

वार्षिकं संचयं केचित्केतिद्द्वादशवार्षिकम् ।
कुर्वन्त्यतिथिपूजार्थं यज्ञतन्त्रार्थमेव वा ॥१२-२५०-९ (७५४८६)
अभ्रावकाशा वर्षासु हेमन्ते जलसंश्रयाः ।
ग्रीष्मे च पञ्चतपसः शश्वच्च मितभोजनाः ॥१२-२५०-१० (७५४८७)
भूमौ विपरिवर्तन्ते तिष्ठन्ति प्रपदैरपि ।
स्थानासनैर्वर्तयन्ति स वनेष्वभिषिञ्चते ॥१२-२५०-११ (७५४८८)
दन्तोलूखलिकाः केचिदश्मकुट्टास्तथा परे ।
शुक्लपक्षे पिबन्त्येके यवागूं क्वथितां सकृत् ॥१२-२५०-१२ (७५४८९)
कृष्णपक्षे पिबन्त्यन्ये भुञ्जते वा यथागतम् ।
मूलैरेके फलैरेके पुष्पैरेके दृढव्रताः ॥१२-२५०-१३ (७५४९०)
वर्तयन्ति यथान्यायं वैखानसमतं श्रिताः ।
एताश्चान्याश्च विविधा दीक्षास्तेषां मनीषिणाम् ॥१२-२५०-१४ (७५४९१)
चतुर्थश्चौपनिषदो धर्मः साधारणः स्मृतः ।
वानप्रस्थाद्गृहस्थाच्च ततोऽन्यः संप्रवर्तते ।
अस्मिन्नेव युगे तात वितैस्तत्वार्थदर्शिभिः ॥ १२-२५०-१५ (७५४९२)
अगस्त्यः सप्तऋषयो मधुच्छन्दोऽधमर्षणः ।
सांकृतिः सुदिवातण्डिर्यथावासो कृतश्रमः ॥१२-२५०-१६ (७५४९३)
अहोवीर्यस्तथा काव्यस्ताण्ड्यो मेधातिथिदुऽ ।
बलवान्कर्णनिर्वाकः शून्यपालः कृतश्रम-----।
एते धर्मे सुविद्वांसस्ततः स्वर्गमुसागमन ॥ १२-२५०-१७ (७५४९४)
तात प्रत्यक्षधर्माणस्तथा काथवारा गणाः ।
ऋषीणामुग्रतपसां धर्मनैपुणेदर्शिनाम् ॥१२-२५०-१८ (७५४९५)
अन्ये चापरिमेयाश्च ब्राह्मणा वनमश्रितताः ।
वैखातसा वालखिल्याः सैकताच्च तथा परे ॥१२-२५०-१९ (७५४९६)
कर्मभिस्ते निरानन्दा धर्मनित्या जितेन्द्रियाः ।
गताः प्रत्यक्षधर्माणस्ते सर्वे वनमाश्रिताः ॥१२-२५०-२० (७५४९७)
अनक्षत्रास्त्वनाधृष्या दृश्यते ज्योतिषां गणाः ।
जरया च परिद्यूना व्याधिना च प्रपीडिताः ॥१२-२५०-२१ (७५४९८)
चतुर्थे चायुषः शेषे वानप्रस्थाश्रमं त्यजेत् ।
साद्यस्कां संनिरुप्येष्टिं सर्ववेदसदक्षिणाम् ॥१२-२५०-२२ (७५४९९)
आत्मयाजी सोऽत्मरतिरात्मक्रीडात्मसंश्रयः ।
आत्मन्यग्नीन्समारोप्य त्यक्त्वा सर्वपरिग्रहान् ॥१२-२५०-२३ (७५५००)
साद्यस्कांश्च यजेद्यज्ञानिष्टीश्चैवेह सर्वदा ।
यदैव याजिनां यज्ञादात्मनीज्या प्रवर्तते ॥१२-२५०-२४ (७५५०१)
त्रींश्चैवाग्नींस्त्यजेत्सम्यगात्मन्येवात्ममोक्षणात् ।
प्राणेभ्यो यजुषां पञ्च षट् प्राश्नीयादकुत्सयन् ॥१२-२५०-२५ (७५५०२)

केशलोमनखान्वाप्य वानप्रस्थो मुनिस्ततः ।
आश्रमादाश्रमं पुण्यं पूतो गच्छति कर्मभिः ॥१२-२५०-२६ (७५५०३)
अभयं सर्वभूतेभ्यो दत्त्वा यः प्रव्रजेद्द्विजः ।
लोकास्तेजोमयास्तस्य प्रेत्य चानन्त्यमश्नुते ॥१२-२५०-२७ (७५५०४)
सुशीलवृत्तो व्यपनीतकल्मषो
नचेह नामुत्र च कर्तुमीहते ।
अरोपमोहो गतसन्धिविग्रहो
भवेदुदासीनवदात्मविन्नरः ॥ १२-२५०-२८ (७५५०५)
यमेषु चैवानुगतेषु न व्यथे
त्स्वशास्त्रमूत्राहुतिमन्त्रविक्रमः ।
भवेद्यथेष्टा गतिरात्मयाजिनो
न संशयो धर्मपरे जितेन्द्रिये ॥ १२-२५०-२९ (७५५०६)
ततः परं श्रेष्ठमतीव सद्गुणै
रधिष्ठितं त्रीनधिवृत्तिमुत्तमम् ।
चतुर्थमुक्तं परमाश्रमं शृणु
प्रकीर्त्यमानं परमं परायणम् ॥ ॥ १२-२५०-३० (७५५०७)

इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि
पञ्चाशदधिकद्विशततमोऽध्यायः ॥२५०.।
Mahabharata - Shanti Parva - Chapter Footnotes

१२-२५०-२ एवां गृहस्थवृत्तिमवधूय तिरस्कृत्य कां तृतीयां
कापोतीं वृत्तिमपि ।संयोगः सहधर्मचारिणीसंयोगस्तत्र यद्व्रतं
तेन खिन्नानाम्।वानप्रस्थाश्रम ओक व्याश्रयो येषां तेषां वृत्तिः
श्रूयतामिति द्वयोः संबन्धः ॥
१२-२५०-३ सर्वे लोका आश्रमाश्चाऽऽत्मायेषाम्
।संविभागशमादिमयत्वात् सर्वाश्रमफलमत्रैवान्तर्भूतामित्यर्थः ॥
१२-२५०-४ विग्रहं तु यदा पश्येदिति ध ।पाठः ॥
१२-२५०-६ षष्ठभुक्त इति ध ।पाठः ॥
१२-२५०-७ अत्रापि वनेपि ॥
१२-२५०-१० शाश्वतामृतभोजिन इति ध ।पाठः ॥
१२-२५०-१५ चतुर्थश्चतुर्थाश्रमे विहित औपनिषदः
शान्त्यादिर्धर्मः साधारणः सर्वेष्वाश्रमेषु
।अन्योऽसाधारणः।सर्वार्थदर्शिभिरिति ध।पाठः ॥
१२-२५०-१६ सांकृतिश्च सुदीप्तार्चिर्यवक्रीतः सुतश्रमः इति ध
।पाठः ॥

१२-२५०-१७ चले वाकश्च निर्वाक इति ट।ध ।पाठः ॥
१२-२५०-२१ अनक्षत्राः नक्षत्रग्रहताराभ्योऽन्ये ॥
१२-२५०-२२ सर्ववेदसदक्षिणां सर्वस्वदक्षिणाम् ॥
१२-२५०-२३ आत्मयाजी जीवच्छ्राद्धादिकृत्
।आत्मक्रीडश्चाऽऽत्मसंश्रयश्च नतु स्त्र्यादिक्रीडो राजाद्याश्रयः ॥
१२-२५०-२४ साद्यस्कान् सद्यएव क्रियन्ते तान् ब्रह्मयज्ञादीन् तावद्यजेत्
।यदैव यस्मिन्नेव काले याजिनां यज्वनां यज्ञात् कर्ममयादन्या
आत्मनीज्या आत्मयज्ञ प्रवर्तते तावदेव तान् कुर्यादित्यर्थः ॥
१२-२५०-२५ यज्ञः सदैवात्मनि वर्तत ट ।ध।पाठः ॥
१२-२५०-२६ वाप्य वापयित्वा ॥
१२-२५०-२९ स्वस्य संन्यासविधेः शास्त्रं तत्रस्थं सूत्रं
आहुतिमन्त्रश्च तत्रोभयात्रापि विक्रमः पराक्रमो यस्य स तथा ॥
१२-२५०-३० त्रीनाश्रमानपेक्ष्याधिष्ठितमधिकत्वेन स्थितम्
।यतोऽधिवृत्तिमधिका शमाद्यात्मिका वृत्तिर्यस्मिंस्तम् ॥

---

शन्तिपर्व-अध्यय२५१
॥ श्रीः ॥
१२.२५१. अध्यायः २५१

Mahabharata - Shanti Parva - Chapter Topics
भीष्मेण युधिष्ठिरंप्रति
तुरीथाश्रमधर्मप्रतिपादकव्यासवाक्यानुवादः ॥ १.।
Mahabharata - Shanti Parva - Chapter Text

१२-२५१-० (७५५०८)
श्रीशुक उवाच।१२-२५१-०क्ष् (६२५२)
वर्तमानस्तयेवात्र वानप्रस्थाश्रमे यथा ।
योक्तव्योऽऽत्मा कथं शक्त्या परं वै काङ्क्षता पदम् ॥ १२-२५१-१ (७५५०९)
व्यास उवाच।१२-२५१-२क्ष् (६२५३)
प्राप्य संस्कारमेताभ्यामाश्रमाभ्यां ततः परम् ।
यत्कार्यं परमार्थार्थं तदिहैकमनाः शृणु ॥ १२-२५१-२ (७५५१०)
कषायं पाचयित्वाऽऽशु श्रेणिस्थानेषु च त्रिषु ।
प्रव्रजेच्च परं स्थानं पारिव्राज्यमनुत्तमम् ॥ १२-२५१-३ (७५५११)
यञ्चवानेवमभ्यस्य वर्ततां श्रूयतां तथा ।
एक एव चरेद्धर्मं सिद्ध्यर्थमसहायवान् ॥ १२-२५१-४ (७५५१२)
एकश्चरतिः यः पश्यन्न जहाति न हीयते ।
अनग्निरनिकेतश्च ग्राममन्नार्थमाश्रयेत् ॥ १२-२५१-५ (७५५१३)

अश्वस्तनविधाता स्यान्मुनिर्भावसमन्वितः ।
लघ्वाशी नियताहारः सकृदन्ननिषेविता ॥ १२-२५१-६ (७५५१४)
णलं वृक्षमलानि कुचेलमसदृ-------।
उपक्षा सर्वभूतानामेतावद्भिक्षुलक्षणाम् ॥ १२-२५१-७ (७५५१५)
यस्मिन्वाचा प्राविशन्ति कूपे प्राप्ताः शिलाइव ।
न वक्तारं पुनर्यान्ति स कैवल्याश्रमे वसेत् ॥ १२-२५१-८ (७५५१६)
नैव पश्येन्न शृणुयादवाच्यं जातु कस्यचित् ।
ब्राह्मणानां विशेषेण नैव ब्रूयात्कथंचन ॥ १२-२५१-९ (७५५१७)
बद्ब्राह्मणस्य कुशलं तदेव सततं वदेत् ।
तूष्णीमासीत निन्दायां कुर्वन्भैषज्यमात्मनः ॥ १२-२५१-१० (७५५१८)
येन पूर्णमिवाकाशं भवत्येकेन सर्वदा ।
शून्यं येन जनाकीर्णं तं देवा ब्राह्मणं विदुः ॥ १२-२५१-११ (७५५१९)
येनकेन चिदाच्छन्नो येनकेनचिदाशितः ।
यत्र क्वचन शायी च तं देवा ब्राह्मणं विदुः ॥ १२-२५१-१२ (७५५२०)
अहेरिव गणाद्भीतः सन्मानान्मरणादिव ।
कुणपादिव च स्त्रीभ्यस्तं देवा ब्राह्मणं विदुः ॥ १२-२५१-१३ (७५५२१)
न कुद्ध्येन्न प्रहृष्येच्च मानितोऽमानितश्च यः ।
सर्वभूतेष्वभयदस्तं देवा ब्राह्मणं विदुः ॥ १२-२५१-१४ (७५५२२)
नाभिनन्देत मरणं नाभिनन्देत जीवितम् ।
कालमेव प्रतीक्षेत निदेशं भृतको यथा ॥ १२-२५१-१५ (७५५२३)
अनभ्याहतचित्तः स्यादनभ्याहतवाग्भवेत् ।
निर्मुक्तः सर्वपापेभ्यो निरमित्रस्य किं भयम् ॥ १२-२५१-१६ (७५५२४)
अभयं सर्वभूतेभ्यो भूतानामभयं यतः ।
तस्य मोहाद्विमुक्तस्य भयं नास्ति कुतश्चन ॥ १२-२५१-१७ (७५५२५)
यथा नागपदेऽन्यानि पदानि पदगामिनाम् ।
सर्वाण्येवापिलीयन्ते पदजातानि कौञ्जरे ॥ १२-२५१-१८ (७५५२६)
एवं सर्वमहिंसायां धर्मार्थमभिधीयते ।
अमृतः स नित्यं भवति यो हिंसां न प्रपद्यते ॥ १२-२५१-१९ (७५५२७)
अहिसंकः समः सत्यो धृतिमान्नियतेन्द्रियः ।
शरण्यः सर्वभूतानां गतिमाप्नोत्यनुत्तमाम् ॥ १२-२५१-२० (७५५२८)
एवं प्रज्ञानतृप्तस्य निर्भयस्य निराशिषः ।
न मृत्युरतिगो भावः स मृत्युं नाधिगच्छति ॥ १२-२५१-२१ (७५५२९)
विमुक्तं सर्वसङ्गेभ्यो मुनिमाकाशवत्स्थितम् ।
अस्वमेकचरं शान्तं तं देवा ब्राह्मणं विदुः ॥ १२-२५१-२२ (७५५३०)
जीवितं यस्य धर्मार्थं धर्मो हर्यर्थमेव च ।
अहोरात्राश्च पुण्यार्थं तं देवा ब्राह्मणं विदुः ॥ १२-२५१-२३ (७५५३१)

निराशिषमनारम्भं निर्नमस्कारमस्तुतिम् ।
निर्मुक्ते बन्धनैः सर्वैस्तं देवा ब्राह्मणं विदुः ॥१२-२५१-२४ (७५५३२)
सर्वाणि भूतानि सुखे रमन्ते
सर्वाणि दुःखस्य भृशं त्रसन्ते ।
तेषां भयोत्पादनजातखेदः
कुर्यान्न कर्माणि हि श्रद्दधानः ॥ १२-२५१-२५ (७५५३३)
दानं हि भूताभयदक्षिणायाः
सर्वाणि दानान्यधितिष्ठतीह ।
तीक्ष्णां तनुं यः प्रथमं जहाति
सोऽनन्तमाप्नोत्यभयं प्रजाभ्यः ॥ १२-२५१-२६ (७५५३४)
स दत्तमास्येन हविर्जुहोति
लोकस्य नाभिर्जगतः प्रतिष्ठा ।
तस्याङ्गमङ्गानि कृताकृतं च
वैश्वानरः सर्वमिदं प्रपेदे ॥ १२-२५१-२७ (७५५३५)
प्रादेशमात्रे हृदि निःसृतं य
त्तस्मिन्प्राणानात्मयाजी जुहोति ।
तस्याग्निहोत्रं हुतमात्मसंस्थं
सर्वेषु लोकेषु सदैवतेषु ॥ १२-२५१-२८ (७५५३६)
देवं त्रिधातुं त्रिवृतं सुपर्ण
ये विद्युरग्र्यां परमात्मतां च ।
ते सर्वलोकेषु महीयमाना
देवाः समर्था अमृतं वहन्ति ॥ १२-२५१-२९ (७५५३७)
वेदांश्च वेद्यं तु विधिं च कृत्स्न
मथो निरुक्तं परमार्थतां च ।
सर्वं शरीरात्मनि यः प्रवेद
तस्य स्म देवाः स्पृहयन्ति नित्यम् ॥ १२-२५१-३० (७५५३८)
भूमावसक्तं दिवि चाप्रमेयं
हिरण्मयं योऽण्डजमण्डमध्ये ।
पतत्रिणं पक्षिणमन्तरिक्षे
यो वेद भोग्यात्मनि दीप्तरश्मिः ॥ १२-२५१-३१ (७५५३९)
आवर्तमानमजरं विवर्तनं
षण्णाभिकं द्वादशारं सुपर्व ।
यस्येदमास्योपरि याति विश्वं
यत्कालचक्रं निहितं गुहायाम् ॥ १२-२५१-३२ (७५५४०)
यः संप्रजानञ्जगतः शरीरं
सर्वान्स लोकानधिगच्छतीह ।

तस्मिन्हितं तर्पयतीह देवां
स्ते वै तृप्तास्तर्पयन्त्यास्यमस्य ॥ १२-२५१-३३ (७५५४१)
तेजोमयो नित्यमयः पुराणो
लोकाननन्तानभयानुपैति ।
भूतानि यस्मान्न त्रसन्ते कदाचि
त्स भूतानां न त्रसते कदाचित् ॥ १२-२५१-३४ (७५५४२)
अगर्हणीयो न च गर्हतेऽन्या
न्स वै विप्रः परमात्मानमीक्षेत् ।
विनीतमोहो व्यपनीतकल्मषो
न चेह नामुत्र च सोऽन्नमर्च्छति ॥ १२-२५१-३५ (७५५४३)
अरोषमोहः समलोष्टकाञ्चनः
प्रहीणशोको गतसन्धिविग्रहः ।
अपेतनिन्दास्तुतिरप्रियाप्रिय
श्चरन्नुदासीनवदेष भिक्षुकः ॥ ॥ १२-२५१-३६ (७५५४४)

इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि
एकपञ्चाशदधिकद्विशततमोऽध्यायः ॥ २५१.।

Mahabharata - Shanti Parva - Chapter Footnotes

१२-२५१-३ कषायं चित्तदोषं पाचयित्वा विश्लथं कृत्वा
।स्थानेष्वाश्रमेष्वनुत्तमम्। इदं मतं श्रेष्ठमित्यर्थः ॥
१२-२५१-८ आक्रुश्यमानो नाक्रोशेदित्यर्थः ।त्रस्ता द्विपा इवेति झ।पाठः ॥
१२-२५१-१० भैषज्यं भवरोगचिकित्साम् ॥
१२-२५१-१३ अहेः सर्पात् गणाज्जनसमूहात् ।सौहित्यान्नरकादिवेति झ।पाठः ॥
१२-२५१-१५ निदेशमाज्ञाम् ।निर्वेदं भृतको यथेति थ।पाठः ॥
१२-२५१-१६ अभ्याहतं दोषाक्रान्तम् ।निरमित्रस्याजातशत्रोः।१२-२५१-१७
सर्वभूतेभ्यो यस्तेति शेषः। ।
१२-२५१-१८ नागपदे हस्तिपदे ।पदगामिनां नृपश्वादीनां
पदान्यपिलीयन्ते तिरोधीयन्ते।तथेन्द्रादीनां पदजातानि
स्थानानि।कौञ्जरे क्लं पृथिवीं शरीररूपां जरथतीति कुञ्जरः
समाधिस्थो योगी तस्य स्थाने कौञ्जरे पदे ॥
१२-२५१-२१ स मुक्तिमुपगच्छतीति थ ।पाठः ॥
१२-२५१-२३ धर्मो रत्यर्थमेव चेति ध ।पाठः ॥
१२-२५१-२४ अक्षीणं क्षीणकर्माणं तमिति ध ।पाठः ॥
१२-२५१-२७ उत्तान आस्येनेति झ ।पाठः ॥
१२-२५१-२९ देवाः समर्त्याः सुकृतं वदन्तीति झ ।पाठः ॥

॥ श्रीः ॥
१२.२५२. अध्यायः २५२

Mahabharata - Shanti Parva - Chapter Topics
भीष्मेण युधिष्ठिरंप्रति कठवल्ल्यर्थप्रतिपादकव्यासवाक्यानुवादः ॥१.।
Mahabharata - Shanti Parva - Chapter Text

१२-२५२-० (७५५४५)
व्यास उवाच।१२-२५२-०क्ष् (६२५४)
प्रकृतेस्तु विकारा ये क्षेत्रज्ञस्तैरधिष्ठितः ।
न चैनं ते प्रजानन्ति स तु जानाति तानपि ॥१२-२५२-१ (७५५४६)
तैश्चैवं कुरुते कार्यं मनःषष्ठैरिहेन्द्रियैः ।
सुदान्तैरिव संयन्ता दृढैः परमवाजिभिः ॥१२-२५२-२ (७५५४७)
इन्द्रियेभ्यः परे ह्यर्था अर्थेभ्यः परमं मनः ।
मनसस्तु परा बुद्धिर्बुद्धेरात्मा महान्परः ॥१२-२५२-३ (७५५४८)
महतः परमव्यक्तमव्यक्तात्पुरुषः परः ।
पुरुषान्न परं किंचित्सा काष्ठा सा परा गतिः ॥१२-२५२-४ (७५५४९)
एवं सर्वेषु भूतेषु गूढोत्मा न प्रकाशते ।
दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिः ॥१२-२५२-५ (७५५५०)
अन्तरात्मनि संलीय मनः षष्ठानि मेधया ।
इन्द्रियाणीन्द्रियार्थांश्च बहुचिन्त्यमचिन्तयन् ॥१२-२५२-६ (७५५५१)
ध्यानोपरमणं कृत्वा विद्यासंपादितं मनः ।
अनिश्वरः प्रशान्तात्मा ततोर्च्छत्यमृतं पदम् ॥१२-२५२-७ (७५५५२)
इन्द्रियाणां तु सर्वेषां पश्यात्मा चलितस्मृतिः ।
आत्मनः संप्रदानेन मर्त्यो मृत्युमुपाश्नुते ॥१२-२५२-८ (७५५५३)
हित्वा तु सर्वसंकल्पान्सत्वे चित्तं निवेशयेत् ।
सत्वे चित्तं समावेश्य ततः कालंजरो भवेत् ॥१२-२५२-९ (७५५५४)
चित्तप्रसादेन यतिर्जहातीह शुभाशुभम् ।
प्रसन्नात्मात्मनि स्थित्वा सुखमत्यन्तमश्नुते ॥१२-२५२-१० (७५५५५)
लक्षणं तु प्रसादस्य यथा तृप्तः सुखं स्वपेत् ।
निवाते वा यथा दीपो दीप्यमानो न कम्पते ॥१२-२५२-११ (७५५५६)
एवं पूर्वापरे रात्रौ युञ्जन्नात्मानमात्मनि ।
लघ्वाहारो विशुद्धात्मा पश्यत्यात्मानमात्मनि ॥१२-२५२-१२ (७५५५७)
रहस्यं सर्ववेदानामनैतिह्यमनागतम् ।
आत्मप्रत्ययिकं शास्त्रमिदं पुत्रानुशासनम् ॥१२-२५२-१३ (७५५५८)

धर्माख्यानेषु सर्वेषु चित्राख्यानेषु यद्वसु ।
दृश्यते ऋक्सहस्राणि निर्मथ्यामृतमुद्धृतम् ॥ १२-२५२-१४ (७५५५९)
नवनीतं यथा दध्नः काष्ठादग्निर्यथैव च ।
तथैव विदुषां ज्ञानं पुत्रहेतोः समुद्धृतम् ॥ १२-२५२-१५ (७५५६०)
स्नातकानामिदं शास्त्रं वाच्यं पुत्रानुशासनम् ।
तदितं नाप्रशान्ताय नादान्तायातपस्विने ॥ १२-२५२-१६ (७५५६१)
नावेदविदुषे वाच्यं तथा नानुगताय च ।
नासूयकायानृजवे न चानिर्दिष्टकारिणे ॥ १२-२५२-१७ (७५५६२)
न तर्कशास्त्रदग्धाय तथैव पिशुनाय च ।
श्लाघिने श्लाघनीयाय प्रशान्ताय तपस्विने ॥ १२-२५२-१८ (७५५६३)
इदं प्रियाय पुत्राय शिष्यायानुगताय च ।
रहस्यधर्मं वक्तव्यं नान्यस्मै तु कथंचन ॥ १२-२५२-१९ (७५५६४)
यद्यप्यस्य महीं दद्याद्रत्नपूर्णामिमां नरः ।
इदमेव ततः श्रेय इति मन्येत तत्त्ववित् ॥ १२-२५२-२० (७५५६५)
अतो गुह्यतरार्थं तदध्यात्ममतिमानुषम् ।
यत्तन्महर्षिभिर्जुष्टं वेदान्तेषु च गीयते ॥ १२-२५२-२१ (७५५६६)
तत्तेऽहं संप्रवक्ष्यामि यन्मां त्वं परिपृच्छसि ॥ १२-२५२-२२ (७५५६७)
यच्च ते मनसि वर्तते परं
यत्र चास्ति तव संशयः क्वचित् ।
श्रूयतामयमहं तवाग्रतः
पुत्र किं हि कथयामि ते पुनः ॥ ॥ १२-२५२-२३ (७५५६८)

इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि
द्विपञ्चाशदधिकद्विशततमोऽध्यायः ॥ २५२.।
Mahabharata - Shanti Parva - Chapter Footnotes

१२-२५२-४ अव्यक्तात्परतोऽमृतम् ।अमृतान्न परं इति झ।थ।पाठः ॥
१२-२५२-५ महात्मा तत्वदर्शिभिरिति थ ।ध।पाठः ॥

---

शन्तिपर्व-अध्यय२५३
॥ श्रीः ॥
१२.२५३. अध्यायः २५३

Mahabharata - Shanti Parva - Chapter Topics
भीष्मेण युधिष्ठिरंप्रति अध्यात्मविषयकव्यासवाक्यानुवादः ॥ १.।
Mahabharata - Shanti Parva - Chapter Text

१२-२५३-० (७५५६९)
शुक उवाच। १२-२५३-०क्ष् (६२५५)
अध्यात्मं विस्तरेणेह पुनरेव वदस्व मे ।
यदध्यात्मं यथा वेद भगवन्नृषिसत्तम ॥ १२-२५३-१ (७५५७०)
व्यास उवाच। १२-२५३-२क्ष् (६२५६)
अध्यात्मं यदिदं तात पुरुषस्येह विद्यते ।
तत्तेऽहं वर्तयिष्यामि तस्य व्याख्यामिमां शृणु ॥ १२-२५३-२ (७५५७१)
भूमिरापस्तथा ज्योतिर्वायुराकाश एव च ।
महाभूतानि भूतानां सागरस्योर्मयो यथा ॥ १२-२५३-३ (७५५७२)
प्रसार्येह यथाऽङ्गानि कूर्मः संहरते पुनः ।
तद्वन्महान्ति भूतानि यवीयःसु विकुर्वते ॥ १२-२५३-४ (७५५७३)
इति तन्मयमेवेदं सर्वं स्थावरजङ्गमम् ।
सर्गे च प्रलये चैव तस्मिन्निर्दिश्यते तथा ॥ १२-२५३-५ (७५५७४)
महाभूतानि पञ्चैव सर्वभूतेषु भूतकृत् ।
अकरोत्तात वैषम्यं यस्मिन्यदनुपश्यति ॥ १२-२५३-६ (७५५७५)
शुक उवाच। १२-२५३-७क्ष् (६२५७)
अकरोद्यच्छरीरेषु कथं तदुपलक्षयेत् ।
इन्द्रियाणि गुणाः केचित्कथं तानुपलक्षयेत् ॥ १२-२५३-७ (७५५७६)
व्यास उवाच। १२-२५३-८क्ष् (६२५८)
एतत्ते वर्तयिष्यामि यथावदनुपूर्वकः ।
शृणु तत्त्वमिहैकाग्रो यथा तत्त्वं यथा च तत् ॥ १२-२५३-८ (७५५७७)
शब्दः श्रोत्रं तथा खानि त्रयमाकाशसंभवम् ।
प्राणश्चेष्टा तथा स्पर्श एते वायुगुणास्त्रयः ॥ १२-२५३-९ (७५५७८)
रूपं चक्षुर्विपाकश्च त्रिधा ज्योतिर्विधीयते ।
रसोऽथ रसनं स्नेहो गुणास्त्वेते त्रयोऽम्भसः ॥ १२-२५३-१० (७५५७९)
घ्रेयं घ्राणं शरीरं च भूमेरेते गुणास्त्रयः ।
गश्रोत्रं त्वक्चक्षुषी जिह्वा नासिका चैव पञ्चमी ॥ १२-२५३-११ (७५५८०)
एतावानिन्द्रियग्रामो व्याख्यातः पाञ्चभौतिकः ।
वायोः स्पर्शो रसोऽद्भयश्च ज्योतिषो रुपमुच्यते ।
आकाशप्रभवः शब्दो गन्धो भूमिगुणः स्मृतः ॥ १२-२५३-१२ (७५५८१)
मनो बुद्धिः स्वभावश्च त्रय एते मनोमयाः ।
न गुणानतिवर्तन्ते गुणेभ्यः परमागताः ॥ १२-२५३-१३ (७५५८२)
यथा कूर्म इहाङ्गानि प्रसार्य विनियच्छति ।
एवमेवेन्द्रियग्रामं बुद्धिः सृष्टवा नियच्छति ॥ १२-२५३-१४ (७५५८३)
यदूर्ध्वं पादतलयोरवाङ्भूर्ध्नश्च पश्यति ।

एतस्मिन्नेव कृत्ये तु वर्तते बुद्धिरुत्तमा ॥ १२-२५३-१५ (७५५८४)
गुणान्नेनीयते बुद्धिर्बुद्धिरेवेन्द्रियाण्यपि ।
मनः षष्ठानि सर्वाणि बुद्ध्य भावे कृतो गुणाः ॥ १२-२५३-१६ (७५५८५)
इन्द्रियाणि नरे पञ्च षष्ठं तु मन उच्यते ।
सप्तमीं बुद्धिमेवाहुः क्षेत्रज्ञं पुनरष्टमम् ॥ १२-२५३-१७ (७५५८६)
चक्षुरालोचनायैव संशयं कुरुते मनः ।
बुद्धिरध्यवसानाय साक्षी क्षेत्रज्ञ उच्यते ॥ १२-२५३-१८ (७५५८७)
रजस्तमश्च सत्वं च त्रय एते स्वयोनिजाः ।
समाः सर्वेषु भूतेषु तान्गुणानुपलक्षयेत् ॥ १२-२५३-१९ (७५५८८)
तत्र यत्प्रीतिसंयुक्तं किंचिदात्मनि लक्षयेत् ।
प्रशान्तमिव संशुद्धं सत्वं तदुपधारयेत् ॥ १२-२५३-२० (७५५८९)
यत्तु संतापसंयुक्तं काये मनसि वा भवेत् ।
प्रवृत्तं रज इत्येवं तत्र चाप्युपलक्षयेत् ॥ १२-२५३-२१ (७५५९०)
यत्तु संमोहसंयुक्तमव्यक्तविषयं भवेत् ।
अप्रतर्क्यमविज्ञेयं तमस्तदुपधार्यताम् ॥ १२-२५३-२२ (७५५९१)
प्रहर्षः प्रीतिरानन्दः साम्यं स्वस्थात्मचित्तता ।
अकस्माद्यदि वा कस्माद्वर्तन्ते सात्विका गुणाः ॥ १२-२५३-२३ (७५५९२)
अभिमानो मृषावादो लोभो मोहस्तथाऽक्षमा ।
लिङ्गानि रजसस्तानि वर्तन्ते हेत्वहेतुतः ॥ १२-२५३-२४ (७५५९३)
तथा मोहः प्रमादश्च निद्रा तन्द्रा प्रबोधिता ।
कथंचिदभिवर्तन्ते विज्ञेयास्तामसा गुणाः ॥ ॥ १२-२५३-२५ (७५५९४)

इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि
त्रिपञ्चशदधिकद्विशततमोऽध्यायः ॥ २५३.।
Mahabharata - Shanti Parva - Chapter Footnotes

१२-२५३-३ मिभूतानि भूतानामिति ध ।पाठः ॥
१२-२५३-६ सुरनरतिर्यगादिरूण वैषम्यमकरोत् ।तत्र
हेतुः।यस्मिन्कर्मणि निमित्ते सति यदनुपश्यति अन्तकाले।यंयं वापि
स्मरन् भावं त्यजत्यन्ते परम् ॥
तंतमेवैतीति स्मृतेः ॥
१२-२५३-९ पर्शः स्पर्शनेन्द्रिय --- युगुणा वायु---॥
१२-२५३-१० विपाको जाठरः ॥
१२-२५३-११ शरीरं कठिनांशबाहुल्यात्पार्थिवम् ।इन्द्रियग्रामैः सह
पाञ्चभौतिक्रो विकारः ॥
१२-२५३-१२ स्पर्शादयो वाय्वादीनां गुणास्तद्विकारैः

स्पर्शनादीन्द्रियैर्गृह्यन्ते ।वायोः प्राण इति ध।पाठः ॥
१२-२५३-१३ एतेत्मयोनिजा इति थ ।पाठः ॥

---

शन्तिपर्व-अध्यय२५४
॥ श्रीः ॥
१२.२५४. अध्यायः २५४

Mahabharata - Shanti Parva - Chapter Topics
भीष्मेण युधिष्ठिरंप्रति ज्ञानादिस्ताधनप्रतिपादकव्यासवाक्यनुवादः
॥ १.।
Mahabharata - Shanti Parva - Chapter Text

१२-२५४-० (७५५९५)
व्यास उवाच।१२-२५४-०क्ष् (६२५९)
मनः प्रसृजते भावं बुद्धिरध्यवसायिनी ।
हृदयं प्रियाप्रिये वेद त्रिविधा कर्मवेदना ॥१२-२५४-१ (७५५९६)
इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यः परमं मनः ।
मनसस्तु परा बुद्धिर्बुद्धेरात्मा परो मतः ॥१२-२५४-२ (७५५९७)
बुद्धिरात्मा मनुष्यस्य बुद्धिरेवात्मनो गतिः ।
यदा विकुरुते भाव तदा भवति सा मनः ॥१२-२५४-३ (७५५९८)
इन्द्रियाणां पृथग्भावाद्बुद्धिर्विक्रियतेऽसकृत् ।
शृण्वती भवति श्रोत्रं स्पृशती स्पर्श उच्यते ॥१२-२५४-४ (७५५९९)
पश्यती भवते दृष्टी रसती रसनं भवेत् ।
जिघ्रती भवति घ्राणं बुद्धिर्विक्रियते पृथक् ॥१२-२५४-५ (७५६००)
इन्द्रियाणीति तान्याहुस्तेष्वदृश्योऽधितिष्ठति ।
तिष्ठती पुरुषे बुद्धिस्त्रिषु भावेषु वर्तते ॥१२-२५४-६ (७५६०१)
कदाचिल्लभते प्रीतिं कदाचिदपि शोचति ।
न सुखेन न दुःखेन कदाचिदिह युज्यते ॥१२-२५४-७ (७५६०२)
सेयं भावात्मिका भावांस्त्रीनेताननुवर्तते ।
सरितां सागरो भर्ता महावेलामिवोर्मिमान् ॥१२-२५४-८ (७५६०३)
यदा प्रार्थयते किंचित्तदा भवति सा मनः ।
अधिष्ठानानि वै बुद्ध्यां पृथगेतानि संस्मरेत ।
इन्द्रियाण्येवमेतानि विजेतव्यानि कृत्स्नशः ॥ १२-२५४-९ (७५६०४)
सर्वाण्येवानुपूर्व्येण यद्यदाऽनुविधीयते ।
अविभागगता बुद्धिर्भावे मनसि वर्तते।१२-२५४-१०च्ग प्रवर्तमानं
तु रजः सत्वमप्यनुवर्तते ॥' १२-२५४-१० (७५६०५)
ये चैव भावा वर्तन्ते सर्व एष्वेव ते त्रिषु ।

अन्वर्थाः संप्रवर्तन्ते रथनेमिमरा इव ॥ १२-२५४-११ (७५६०६)
प्रदीपार्थं मनः कुर्यादिन्द्रियैर्बुद्धिसत्तमैः ।
निश्चरद्भिर्यथायोगमुदासीनैर्यदृच्छया ॥ १२-२५४-१२ (७५६०७)
एवं स्वभावमेवेदमिति विद्वान्न मुह्यति ।
अशोचन्नप्रहृष्यन्हि नित्यं विगतमत्सरः ॥ १२-२५४-१३ (७५६०८)
न चात्मा शक्यते द्रष्टुमिन्द्रियैः कामगोचरैः ।
प्रवर्तमानैरनयैर्दुर्धर्षैरकृतात्मभिः ॥ १२-२५४-१४ (७५६०९)
तेषां तु मनसा रश्मीन्यदा सम्यङ्नियच्छति ।
तदा प्रकाशतेऽस्यात्मा दीपदीप्ता यथाऽऽकृतिः ॥ १२-२५४-१५ (७५६१०)
सर्वेषामेव भूतानां मनस्युपरते यथा ।
प्रकाशं भवते सर्वं तथेदमुपधार्यताम् ॥ १२-२५४-१६ (७५६११)
यथा वारिचरः पक्षी न लिप्यति जले चरन् ।
विमुक्तात्मा तथा योगी गुणदोषैर्न लिप्यते ॥ १२-२५४-१७ (७५६१२)
एवमेव कृतप्रज्ञो न दोषैर्विषयांश्चरन् ।
असज्जमानः सर्वेषु कथंचन न लिप्यते ॥ १२-२५४-१८ (७५६१३)
त्यक्त्वा पूर्वकृतं कर्म रतिर्यस्य सदाऽऽत्मनि ।
सर्वभूतात्मभूतस्य गुणवर्गेष्वसज्जतः ॥ १२-२५४-१९ (७५६१४)
सत्वमात्मा प्रसरति गुणान्वाऽपि कदाचन ।
न गुणा विदुरात्मानं गुणान्वेद स सर्वदा ॥ १२-२५४-२० (७५६१५)
परिद्रष्टा गुणानां च परिस्रष्टा यथातथम् ।
क्षेतक्षेत्रज्ञयोरेतदन्तरं विद्धि सूक्ष्मयोः ॥ १२-२५४-२१ (७५६१६)
सृजतेऽत्र गुणानेक एको न सृजते गुणान् ।
पृथग्भूतौ प्रकृत्या तौ संप्रयुक्तौ च सर्वदा ॥ १२-२५४-२२ (७५६१७)
यथा मत्स्योऽद्भिरन्यः स्यात्संप्रयुक्तौ तथैव तौ ।
मशकोदुम्बरौ वाऽपि संप्रयुक्तौ यथा सह ॥ १२-२५४-२३ (७५६१८)
इषीका वा यथा मुञ्जे पृथक्च सह चैव च ।
तथैव सहितावेतावन्योन्यस्मिन्प्रतिष्ठितौ ॥ ॥ १२-२५४-२४ (७५६१९)

इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि
चतुःपञ्चाशदधिकद्विशततमोऽध्यायः ॥ २५४.।

---

शन्तिपर्व-अध्यय२५५
॥ श्रीः ॥
१२.२५५. अध्यायः २५५

Mahabharata - Shanti Parva - Chapter Topics
भीष्मेण युधिष्ठिरंप्रति ज्ञानादिप्रशंसापरव्यासवाक्यानुवादः ॥ १.।

१२-२५५-० (७५६२०)
व्यास उवाच। १२-२५५-०क्ष् (६२६०)
सृजते त्रिगुणान्सत्वं क्षेत्रज्ञस्त्वधितिष्ठति ।
गुणान्विक्रियते सर्वानुदासीनवदीश्वरः ॥ १२-२५५-१ (७५६२१)
स्वभावयुक्तं तत्सत्वं यदिमान्सृजते गुणान् ।
ऊर्णनाभिर्यथा सूत्रं सृजते तन्तुवद्गुणान् ॥ १२-२५५-२ (७५६२२)
प्रध्वस्ता न निवर्तन्ते प्रवृत्तिर्नोपलभ्यते ।
एवमेके व्यवस्यन्ति निवृत्तिरिति चापरे ॥ १२-२५५-३ (७५६२३)
उभयं संप्रधार्यैतदध्यवस्येद्यथामति ।
अनेनैव विधानेन भवेद्गर्भशयो महान् ॥ १२-२५५-४ (७५६२४)
अनादिनिधनं नित्यं तं बुद्ध्वा विचरेन्नरः ।
अक्रुध्यन्नप्रहृष्यंश्च नित्यं विगतमत्सरः ॥ १२-२५५-५ (७५६२५)
इत्येवं हृदयग्रन्थिं बुद्धिचिन्तामयं दृढम् ।
अतीत्य सुखमासीत अशोचंश्छिन्नसंशयः ॥ १२-२५५-६ (७५६२६)
ताम्येयुः प्रच्युताः पृथ्व्यां यथा पूर्णां नदीं नराः ।
अवगाढा ह्यविद्वांसो विद्धि लोकमिमं तथा ॥ १२-२५५-७ (७५६२७)
न तु ताम्यति वै विद्वान्स्थले चरति तत्त्ववित् ।
एवं यो विन्दतेऽऽत्मानं केवलं ज्ञानमात्मनः ॥ १२-२५५-८ (७५६२८)
एवं बुद्ध्वा नरः सर्वं भूतानामागतिं गतिम् ।
समवेक्ष्य च वैषम्यं लभते शममुत्तमम् ॥ १२-२५५-९ (७५६२९)
एतद्वै जन्मसामर्थ्यं ब्राह्मणस्य विशेषतः ।
आत्मज्ञानं शमश्चैव पर्याप्तं तत्परायणम् ॥ १२-२५५-१० (७५६३०)
एतद्बुद्ध्वा भवेद्बुद्धः किमन्यद्बुद्धलक्षणम् ।
विज्ञायैतद्विमुच्यन्ते कृतकृत्या मनीषिणः ॥ १२-२५५-११ (७५६३१)
न भवति विदुषां महद्भयं
यदविदुषां सुमहद्भयं परत्र ।
न हि गतिरधिकाऽस्ति कस्यचि
द्भवति हि या विदुषः सनातनी ॥ १२-२५५-१२ (७५६३२)
लोकमातुरमसूयते जन
स्तत्तदेव च निरीक्ष्य शोचते ।
तत्र पश्य कुशलानशोचतो
ये विदुस्तदुभयं कृताकृतम् ॥ १२-२५५-१३ (७५६३३)
यत्करोत्यनभिसन्धिपूर्वकं
तच्च निर्णुदति ---

न प्रियं तदुभयं न चाप्रिय
तस्य तज्जनयतीह कुर्वतः ॥ ॥ १२-२५५-१४ (७५६३४)

इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि
पञ्चपञ्चाशदधिकद्विशततमोऽध्यायः ॥ २५५.।
Mahabharata - Shanti Parva - Chapter Footnotes

१२-२५५-२ ऊर्णनाभिर्यथा सत्वमिति ट ।ड। पाठः ॥
१२-२५५-७ नात्येयुः प्रच्युता इति ध ।पाठः ॥

---

शन्तिपर्व-अध्यय२५६
॥ श्रीः ॥
१२.२५६. अध्यायः २५६

Mahabharata - Shanti Parva - Chapter Topics
भीष्मेण युधिष्ठिरंप्रति ज्ञानोपायादिप्रतिपादकव्यासवाक्यानुवादः ॥ १.।
Mahabharata - Shanti Parva - Chapter Text

१२-२५६-० (७५६३५)
शुक उवाच। १२-२५६-०क्ष् (६२६१)
यस्माद्धर्मात्परो धर्मो विद्यदे नेह कश्चन ।
यो वि----- न्प्रब्रवीतु मे ॥ १२-२५६-१ (७५६३६)
व्यास उवाच। १२-२५६-२क्ष् (६२६२)
धर्मं ति संप्रवक्ष्यामि पुराणमृषिसंस्तुतम् ।
विशिष्टं सर्वधर्मेभ्यस्तमिहैकमनाः शृणु ॥ १२-२५६-२ (७५६३७)
इन्द्रिया-----प्रमाथीनि बुद्ध्या संयम्य यत्नतः ।
सर्वतो

--------॥ १२-२५६-३ (७५६३८)
मनसश्चेन्द्रियाणा चाप्यकाग्य्र परमं तप ।
तज्ज्यायः सर्वधर्मेभ्यः स धर्मः पर उच्य ॥ १२-२५६-४ (७५६३९)
तानि सर्वाणि संधाय मनःषष्ठानि मेधया ।
आत्मतृप्त इवासीत बहुचिन्त्यमचिन्तयन् ॥ १२-२५६-५ (७५६४०)
गोचरेभ्यो निवृत्तानि यदा स्थास्यन्ति वेश्मनि ।
तदा त्वमात्मनाऽऽत्मानं परं द्रक्ष्यसि शाश्वतम् ॥ १२-२५६-६ (७५६४१)
सर्वात्मानं महात्मानं विधूममिव पावकम् ।
तं पश्यन्ति महात्मानो ब्राह्मणा ये मनीषिणः ॥ १२-२५६-७ (७५६४२)

यथा पुष्पफलोपेतो बहुशाखो महाद्रुमः ।
आत्मनो नाभिजानीते क्व मे पुष्पं क्व मे फलम् ॥१२-२५६-८ (७५६४३)
एवमात्मा न जानीते क्व गभिष्ये कुतस्त्वहम् ।
अन्यो ह्यत्रान्तरात्माऽस्ति यः सर्वमनुपश्यति ॥१२-२५६-९ (७५६४४)
ज्ञानदीपेन दीप्तेन पश्यत्यात्मानमात्मना ।
दृष्ट्वा त्वमात्मनाऽऽत्मानं निरात्मा भव सर्ववित् ॥१२-२५६-१० (७५६४५)
विमुक्तः सर्वपापेभ्यो विमुक्तत्वगिवोरगः ।
परां बुद्धिमवाप्येह विपाप्मा विगतज्वरः ॥१२-२५६-११ (७५६४६)
सर्वतः प्रवहां घोरां नदीं लोकप्रवाहिनीम् ।
पञ्चेन्द्रियग्राहवतीं मनःसंकल्परोधसम् ॥१२-२५६-१२ (७५६४७)
लोभमोहतृणच्छन्नां कामक्रोधसरीसृपाम् ।
सत्यतीर्थानृतक्षोभां क्रोधपङ्कां सरिद्वराम् ॥१२-२५६-१३ (७५६४८)
अव्यक्तप्रभवां शीघ्रां दुस्तरामकृतात्मभिः ।
प्रतरस्व नदीं बुद्ध्या कामग्राहसमाकुलाम् ॥१२-२५६-१४ (७५६४९)

तालदस्तराम् ।
आत्मकमा---------जिह्वावर्तां दुरासदाम् ॥१२-२५६-१५ (७५६५०)
यां तरन्ति कृतप्रज्ञा धृतिमन्तो मनीषिणः ।
तां तीर्णः सर्वतोमुक्तो विधूतात्माऽऽत्मविच्छुचिः ॥१२-२५६-१६ (७५६५१)
उत्तमां बुद्धिमास्थाय ब्रह्मभूयं भविष्यसि ।
संतीर्णः सर्वसंक्लेशान्प्रसन्नात्मा विकल्मषः ॥१२-२५६-१७ (७५६५२)
भूमिष्ठानीव भूतानि पर्वतस्थो निशामय ।
अक्रुध्यन्नप्रहृष्यंश्च अनृशंसमतिस्तथा ॥१२-२५६-१८ (७५६५३)
ततो द्रक्ष्यसि सर्वेषां भूतानां प्रभवाप्ययौ ।
एनं वै सर्वभूतेभ्यो विशिष्टं मेनिरे बुधाः ।
धर्मं धर्मभृतां श्रेष्ठा मुनयस्तत्त्वदर्शिनः ॥ १२-२५६-१९ (७५६५४)
आत्मनो व्यापिनो ज्ञानमिदं पुत्रानुशासनम् ।
प्रयताय प्रवक्तव्यं हितायानुगताय च ॥१२-२५६-२० (७५६५५)
आत्मज्ञानमिदं गुह्यं सर्वगुह्यतमं महत् ।
अब्रुवं यदहं तात आत्मसाक्षिकमञ्जसा ॥१२-२५६-२१ (७५६५६)
नैव स्त्री न पुमानेतन्नैव वेद नपुंसकम् ।
अदुःखमसुखं ब्रह्म भूतभव्यभवात्मकम् ॥१२-२५६-२२ (७५६५७)
नैतज्ज्ञात्वा पुमान्स्त्री वा पुनर्भवमवाप्नुते ।
स्वभावप्रतिपत्त्यर्थमेतद्धर्मं विधीयते ॥१२-२५६-२३ (७५६५८)
यथा मतानि सर्वाणि तथैतानि यथातथा ।
कथितानि मया पुत्र भवन्ति न भवन्ति च ॥१२-२५६-२४ (७५६५९)

तत्प्रीतियुक्तेन गुणान्वितेन
पुत्रेण सत्पुत्र दमान्वितेन ।
पृष्टो हि संप्रीतिमना यथार्थं
ब्रूयात्सुतस्येह यदुक्तमेतत् ॥ ॥ १२-२५६-२५ (७५६६०)

इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि
षट्पञ्चाशदधिकद्विशततमोऽध्यायः ॥ २५६.।
Mahabharata - Shanti Parva - Chapter Footnotes

१२-२५६-३ निष्यतिष्णूनि निष्यतनशीलानि संनियम्यैकाग्र्यं संबन्धः ॥
१२-२५६-१५ --त्मजन्मोद्भवामिति ट ।ध।पाठः ॥

---

शन्तिपर्व-अध्यय२५७
॥ श्रीः ॥
१२.२५७. अध्यायः २५७

Mahabharata - Shanti Parva - Chapter Topics
भीष्मेण युधिष्ठिरंप्रति साधनसामग्रीप्रतिपादकव्यासवाक्यानुवादः ॥ १.।
Mahabharata - Shanti Parva - Chapter Text

१२-२५७-० (७५६६१)
व्यास उवाच।१२-२५७-०क्ष् (६२६३)
---गन्धान्नसान्नानुरुन्ध्यात्सखं वा
--------कीर्तिं च यशश्च नच्छ-।
----- वै प्राचरः पश्यतो ब्राह्मणस्य ॥ १२-२५७-१ (७५६६२)
----नधीयीत शुश्रूषुर्ब्रह्मचर्यवान् ।
ऋवो यजूंषि सामानि वेदवेदाङ्गपारगः ॥१२-२५७-२ (७५६६३)
ज्ञानी यः सर्वभूतानां सर्ववित्सर्वभूतवित् ।
नाकामो म्रियते जातु

-॥१२-२५७-३ (७५६६४)
इष्टी------श्राप्य क्रतूश्चवाप्तदाक्षणान् ।
प्राप्नोति नैव ब्राह्मण्यमविज्ञानात्कथंचन ॥१२-२५७-४ (७५६६५)
यदा चायं न बिभेति यदा चास्मान्न बियति ।
यदा नेच्छति न द्वेष्टि ब्रह्म संपद्यते तदा ॥१२-२५७-५ (७५६६६)
यदा न कुरुते भावं सर्वभूतेषु पापकम् ।
कर्मणा मनसा वाचा ब्रह्म संपद्यते तदा ॥१२-२५७-६ (७५६६७)

कामबन्धनमेवेदं नान्यदस्तीह बन्धनम् ।
कामबन्धनमुक्तो हि ब्रह्मभूयाय कल्पते ॥ १२-२५७-७ (७५६६८)
कामतो मुच्यमानस्तु धूमाभ्रादिव चन्द्रमाः ।
विरजाः कालमाकाङ्क्षन्धीरो धैर्येण वर्तते ॥ १२-२५७-८ (७५६६९)
आपूर्यमाणमचलप्रतिष्ठं
समुद्रमापः प्रविशन्ति यद्वत् ।
तद्वत्कामा यं प्रविशन्ति सर्वे
स शान्तिमाप्नोति न कामकामः ॥ १२-२५७-९ (७५६७०)
क कामकान्तो न तु कामकामः
स वै कामात्स्वर्गमुपैति देही ॥ १२-२५७-१० (७५६७१)
वेदस्योपनिपद्दानं दानस्योपनिषद्दमः ।
दमस्योपनिपद्दानं दानस्योपनिपत्तपः ॥ १२-२५७-११ (७५६७२)
तपसोपनिपत्त्यागस्त्यागस्योपनिपत्सुखम् ।
सुखस्योपनिपत्स्वर्गः स्वर्गस्योपनिपच्छमः ॥ १२-२५७-१२ (७५६७३)
क्लेदनं शोकमनसोः संतीर्णं तृष्णया सह ।
सत्वमृच्छति संतोपाच्छान्तिलक्षणमुत्तमम् ॥ १२-२५७-१३ (७५६७४)
विशोको निर्ममः शांतः प्रशांतात्माऽत्मविच्छुचिः ।
पङ्क्तिर्लक्षणवानेतैः समग्रः पुनरेष्यति ॥ १२-२५७-१४ (७५६७५)
पङ्भिः सत्वगुणोपेतैः प्राज्ञैरधिगतं त्रिभिः ।
ये विदुः प्रत्यगात्मानमिहस्थानमृतान्विदुः ॥ १२-२५७-१५ (७५६७६)
अकृत्रिमसंहार्यं प्राकृतं निरुपस्कृतम् ।
अध्यात्मवित्कृतप्रज्ञः सुखमव्ययमश्नुते ॥ १२-२५७-१६ (७५६७७)
निष्प्रचारं मनः कृत्वा प्रतिष्ठाप्य च सर्वशः ।
यामयं लभते तुष्टिं सा न शक्याऽऽत्मनोन्यथा ॥ १२-२५७-१७ (७५६७८)
येन तृप्यत्यभुञ्जानो येन तृप्यत्यवित्तवान् ।
येनास्नेहो बलं धत्ते यस्तं वेद स वेदवित् ॥ १२-२५७-१८ (७५६७९)
असङ्गो ह्यात्मनो द्वाराण्यपिधाय विचिन्तयन् ।
यो ह्यास्ते ब्राह्मणः शिष्टः स आत्मरतिरुच्यते ॥ १२-२५७-१९ (७५६८०)
समाहितं परे तत्त्वे क्षीणकाममवस्थितम् ।
सर्वतः सुखमन्वेति वपुश्चान्द्रमसं यथा ॥ १२-२५७-२० (७५६८१)
अविशेषाणि भूतानि गुणांश्च जहतो मुनेः ।
सुखेनापोह्यते दुःखं भास्करेण तमो यथा ॥ १२-२५७-२१ (७५६८२)
तमतिक्रान्तकर्माणमतिक्रान्तगुणक्षयम् ।
ब्राह्मणं विपयाश्लिष्टं जरामृत्यू न विन्दतः ॥ १२-२५७-२२ (७५६८३)
स यदा सर्वतो मुक्तः समः पर्यवतिष्ठते ।
इन्द्रियाणीन्द्रियार्थांश्च शरीरस्थोऽतिवर्तते ॥ १२-२५७-२३ (७५६८४)

कारणं परमं प्राप्य अतिक्रान्तस्य कार्यताम् ।
पुनरावर्तनं नास्ति संप्राप्तस्य परात्परम् ॥ ॥१२-२५७-२४ (७५६८५)

इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि
सप्तपञ्चाशदधिकद्विशततमोऽध्यायः ॥ २५७.।
Mahabharata - Shanti Parva - Chapter Footnotes

१२-२५७-९ सकामकामो नतु कामकामः स वै लोकं स्वर्गमुपैति देहीति
ट ।ड।पाठः ॥
१२-२५७-१६ अध्यात्मसुकृतप्रज्ञमिति टङ ।पाठः ॥

---

शन्तिपर्व-अध्यय२५८
॥ श्रीः ॥
१२.२५८. अध्यायः २५८

Mahabharata - Shanti Parva - Chapter Topics
भीष्मेण युधिष्ठिरंप्रति
आकाशादिभूतगुणादिप्रतिपादकव्यासवाक्यानुवादः ॥ १.।
Mahabharata - Shanti Parva - Chapter Text

१२-२५८-० (७५६८६)
व्यास उवाच।१२-२५८-०क्ष् (६२६४)
द्वन्द्वासि मोक्षजिज्ञासुरर्थधर्मानुतिष्ठतः ।
वक्रा गुणवता शिष्यः श्राव्यः पूर्वमिदं महत् ॥१२-२५८-१ (७५६८७)
आकाशं मारुतो ज्योतिरा--पृथ्वी च पञ्चमी ।
भावाभावौ च कालश्च सर्वभूतेषु पञ्चसु ॥१२-२५८-२ (७५६८८)
अन्तरात्मकमाकाशं तन्मयं श्रोत्रमिन्द्रियम् ।
तस्य शब्दं गुणं विद्यान्मुनिः शास्त्रविधानवित् ॥१२-२५८-३ (७५६८९)
चरणं मारुतात्मेति प्राणापानौ च तन्मयौ ।
स्पर्शनं चेन्द्रियं विद्यात्तथा स्पर्शं च तन्मयम् ॥१२-२५८-४ (७५६९०)
तापः पाकः प्रकाशश्च ज्योतिश्चक्षुश्च तन्मयम् ।
तस्य रूपं गुणं विद्यात्तमोनाशकमात्मवान् ॥१२-२५८-५ (७५६९१)
प्रक्लेदो द्रवता स्नेह इत्यपामुपदिश्यते ।
श्असृङ्भज्जा च यच्चान्यत्स्निग्धं विद्यात्तदात्मकम् ।ß
रसनं चेन्द्रियं जिह्वा रसश्चापां गुणो मतः ॥ १२-२५८-६ (७५६९२)
संघातः पार्थिवो धातुरस्थिदन्तनखानि च ।

श्मश्रु रोम च केशाश्च सिरा स्नायु च चर्म च ॥ १२-२५८-७ (७५६९३)
इन्द्रियं घ्राणसंज्ञातं नासिकेत्यभिसंज्ञिता ।
गन्धश्चैवेन्द्रियार्थोऽयं विज्ञेयः पृथिवीमयः ॥ १२-२५८-८ (७५६९४)
उत्तरेषु गुणाः सर्वे सन्ति पूर्वेषु नोत्तराः ।
पञ्चानां भूतसङ्घानां संततिं मुनयो विदुः ॥ १२-२५८-९ (७५६९५)
मनो नवममेषां तु बुद्धिस्तु दशमी स्मृता ।
एकादशस्त्वन्तरात्मा स सर्वः पर उच्यते ॥ १२-२५८-१० (७५६९६)
व्यवसायात्मिका बुद्धिर्मनो व्याकरणात्मकम् ।
कर्मानुमानाद्विज्ञेयः स जीवः क्षेत्रसंज्ञकः ॥ १२-२५८-११ (७५६९७)
एभिः कालात्मकैर्भावैर्यः सर्वैः सर्वमन्वितम् ।
पश्यत्यकलुषं बुद्ध्या स मोहं नानुवर्तते ॥ ॥ १२-२५८-१२ (७५६९८)

इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि
अष्टपञ्चाशदधिकद्विशततमोऽध्यायः ॥ २५८.।
Mahabharata - Shanti Parva - Chapter Footnotes

१२-२५८-१ द्वन्द्वान्निर्मोक्षजिज्ञासुरिति ध ।पाठः ॥
१२-२५८-९ उत्तरेषु भूतेषु पूर्वभूतगुणाः सन्ति ॥
१२-२५८-११ मनोव्याहरणात्मकमिति ट ।थ।पाठः ॥

---

शन्तिपर्व-अध्यय२५९
॥ श्रीः ॥
१२.२५९. अध्यायः २५९

Mahabharata - Shanti Parva - Chapter Topics
भीष्मेण युधिष्ठिरंप्रति योगिप्रशंसादिपरव्यासवाक्यानुवादः ॥ १.।
Mahabharata - Shanti Parva - Chapter Text

१२-२५९-० (७५६९९)
व्यास उवाच। १२-२५९-०क्ष् (६२६५)
शरीराद्विप्रमुक्तं हि सूक्ष्मभूतं शरीरिणम् ।
कर्मभिः परिपश्यन्ति शास्त्रोक्तैः शास्त्रचेतसः ॥ १२-२५९-१ (७५७००)
यथा मरीच्यः सहिताश्चरन्ति
गच्छन्ति तिष्ठन्ति च दृश्यमानाः ।
देहैर्विमुक्तानि चरन्ति लोकां
स्तथैव सत्वान्यतिमानुषाणि ॥ १२-२५९-२ (७५७०१)

प्रतिरूपं यथैवाप्सु तावत्सूर्यस्य लक्ष्यते ।
सत्ववांस्तु तथा सत्वं प्रतिरूपं स पश्यति ॥ १२-२५९-३ (७५७०२)
तानि सूक्ष्माणि सत्वानि विमुक्तानि शरीरतः ।
तेन तत्वेन तत्वज्ञाः पश्यन्ति नियतेन्द्रियाः ॥ १२-२५९-४ (७५७०३)
स्वपतां जाग्रतां चैष सर्वेषामात्मचिन्तितम् ।
प्रधानाद्वैधयुक्तानां दह्यते कर्मजं रजः ॥ १२-२५९-५ (७५७०४)
यथाऽहनि तथा रात्रौ यथा रात्रौ तथाऽहनि ।
वशे तिष्ठति सत्वात्मा सततं योगयोगिनाम् ॥ १२-२५९-६ (७५७०५)
तेषां नित्यं सदा नित्यो भूतात्मा सततं गुणैः ।
सप्तभिस्त्वन्वितः सूक्ष्मैश्चरिष्णुरजरामरः ॥ १२-२५९-७ (७५७०६)
मनोवुद्धिपराभूतः स्वदेहपरदेहवित् ।
स्वप्नेष्वपि भवत्येष विज्ञाता सुखदुःखयोः ॥ १२-२५९-८ (७५७०७)
तत्रापि लभते दुःखं तत्रापि लभते सुखम् ।
कामं क्रोधं च तत्रापि कृत्वा व्यसनमृच्छति ॥ १२-२५९-९ (७५७०८)
प्रीणितश्चापि भवति महतोऽर्थानवाप्य हि ।
करोति पुण्यं तत्रापि जाग्रन्निव च पश्यति ॥ १२-२५९-१० (७५७०९)
सदोष्मान्तर्गतश्चापि गर्भत्वं समुपेयिवान् ।
दश मासान्वसन्कुक्षौ नैषोऽन्नमिव जीर्यते ॥ १२-२५९-११ (७५७१०)
तमेतमतितेजोंशं भूतात्मानं हृदि स्थितम् ।
तमोरजोभ्यामाविष्टा नानुपश्यन्ति मूर्तिषु ॥ १२-२५९-१२ (७५७११)
योगशास्त्रपरा भूत्वा स्वमात्मानं परीप्सवः ।
ग्तमोरजोभ्यां निर्मुक्तास्तं प्रपश्यन्ति मूर्तिषु ।'
अनुच्छ्वासान्यमूर्तानि यानि वज्रोपमान्यपि ॥ १२-२५९-१३ (७५७१२)
पृथग्भूतेषु सृष्टेषु चतुर्ष्वाश्रमकर्मसु ।
समाधौ योगमेवैतच्छाण्डिल्यः सममब्रवीत् ॥ १२-२५९-१४ (७५७१३)
विदित्वा सप्तसूक्ष्माणि षडङ्गं च महेश्वरम् ।
प्रधानविनियोगज्ञः परं ब्रह्मानुपश्यति ॥ ॥ १२-२५९-१५ (७५७१४)

इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि
एकोनषष्ट्यधिकद्विशततमोऽध्यायः ॥ २५९.।

Mahabharata - Shanti Parva - Chapter Footnotes

१२-२५९-८ स्वप्नेष्वपि स्वदेहं परदेहं च स्थूलादन्यं वेत्तीति तथा ॥
१२-२५९-१३ वज्रोपमानि ब्राह्मप्रलयेऽप्यविनाशीनि ॥

---

शन्तिपर्व-अध्यय२६०

॥ श्रीः ॥

## १२.२६०. अध्यायः २६०

Mahabharata - Shanti Parva - Chapter Topics

भीष्मेण युधिष्ठिरंप्रति
कामादिशक्तिप्रतिपादनपूर्वकतज्जयोपायप्रतिपादनपरव्यासवाक्यानुवादः
॥ १.।

Mahabharata - Shanti Parva - Chapter Text

१२-२६०-० (७५७४९)
व्यास उवाच। १२-२६०-०क्ष् (६२६९)
हृदि कामद्रुमश्चित्रो मोहसंचयसंभवः ।
क्रोधमानमहास्कन्धो विवित्सापरिवेषणः ॥ १२-२६०-१ (७५७५०)
तस्य चाज्ञानमाधारः प्रमादः परिषेचनम् ।
सोऽभ्यसूयापलाशो हि पुरा दुष्कृतसारवान् ॥ १२-२६०-२ (७५७५१)
संमोहचिन्ताविटपः शोकशाखो भयाङ्कुरः ।
मोहनीभिः पिपासाभिर्लताभिरनुवेष्टितः ॥ १२-२६०-३ (७५७५२)
उपासते महावृक्षं सुलुब्धास्तत्फलेप्सवः ।
आयतैः संयुताः पाशैः फलदं परिवेष्ट्य तम् ॥ १२-२६०-४ (७५७५३)
यस्तान्पाशान्वशे कृत्वा तं वृक्षमपकर्षति ।
गतः स दुःखयोरन्तं जरामरणयोर्द्वयोः ॥ १२-२६०-५ (७५७५४)
संरोहत्यकृतप्रज्ञः ससत्वो हन्ति पादपम् ।
स तमेवाहतो हन्ति विषं ग्रस्तमिवातुरम् ॥ १२-२६०-६ (७५७५५)
तस्यानुगतमूलस्य मूलमुद्ध्रियते बलात् ।
योगप्रसादात्कृतिना साम्येन परमासिना ॥ १२-२६०-७ (७५७५६)
एवं यो वेद कामस्य केवलं परिसर्पणम् ।
एतच्च कामशास्त्रस्य सुदुःखान्यतिवर्तते ॥ १२-२६०-८ (७५७५७)
शरीरं पुरमित्याहुः स्वामिनी बुद्धिरिष्यते ।
तत्र बुद्धेः शरीरस्थं मनो नामार्थचिन्तकम् ॥ १२-२६०-९ (७५७५८)
इन्द्रियाणि जनाः पौरास्तदर्थं तु परा कृतिः ।
तत्र द्वौ दारुणौ दोषौ तमो नाम रजस्तथा ।
तदर्थमुपजीवन्ति पौराः सह पुरेश्वरैः ॥ १२-२६०-१० (७५७५९)
अद्वारेण तमेवार्थं द्वौ दोषावुपजीवतः ।
तत्र बुद्धिर्हि दुर्धर्षा मनः साधर्म्यमुच्यते ॥ १२-२६०-११ (७५७६०)
पौराश्चापि मनस्तृप्तास्तेषामपि चला स्थितिः ।
यदर्थं बुद्धिरध्यास्ते सोऽनर्थः परिषीदति ॥ १२-२६०-१२ (७५७६१)

ग्पौरमन्त्रवियुक्तायाः सोऽर्थः संसीदति क्रमात्'।
यदर्थं पृथगध्यास्ते मनस्तत्परिषीदति ॥ १२-२६०-१३ (७५७६२)
पृथग्भूतं मनो बुद्ध्या मनो भवति केवलम् ।
तत्रैनं विकृतं शून्यं रजः पर्यवतिष्ठते ॥ १२-२६०-१४ (७५७६३)
तन्मनः कुरुते सख्यं रजसा सह संगतम् ।
तं चादाय जनं पौरं रजसे संप्रयच्छति ॥ ॥ १२-२६०-१५ (७५७६४)

इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि
षष्ट्यधिकद्विशततमोऽध्यायः ॥ २६०.।
Mahabharata - Shanti Parva - Chapter Footnotes

१२-२६०-१ विधित्सा परिषेचन इति झ ।पाठः ॥
१२-२६०-३ शोकशाखाभयंकर इति ङ ।थ।पाठः ॥
१२-२६०-४ फलादायिभिरन्वित इति ध ।पाठः। पाशैः फलानि
परिभक्षयन्निति ङ।थ।पाठः ॥
१२-२६०-५ त्यागप्रमाद कृतिनेति ङ ।थ।पाठः ॥

---

शन्तिपर्व-अध्यय२६१
॥ श्रीः ॥
१२.२६१. अध्यायः २६१

Mahabharata - Shanti Parva - Chapter Topics
भीष्मेण युधिष्ठिरंप्रति
पृथिव्यादिभूदगुणप्रतिपादकव्यासवाक्यानुवादः ॥ १.।
Mahabharata - Shanti Parva - Chapter Text

१२-२६१-० (७५७६५)
भीष्म उवाच। १२-२६१-०क्ष् (६२७०)
भूतानां गुणसङ्ख्यानं भूयः पुत्र निशामय ।
द्वैपायनमुखाद्भ्रष्टं श्लाघया परयाऽनघ ॥ १२-२६१-१ (७५७६६)
दीप्तानलनिभः प्राह भगवान्धूमवत्सलः ।
ततोऽहमपि वक्ष्यामि भूयः पुत्र निदर्शनम् ॥ १२-२६१-२ (७५७६७)
भूमेः स्थैर्यं गुरुत्वं च काठिन्यं प्रसवात्मता ।
गन्धो भारश्च शक्तिश्च संघातः स्थापना धृतिः ॥ १२-२६१-३ (७५७६८)
अपां शैत्यं रसः क्लेदो द्रवत्वं स्नेहसौम्यता ।
जिह्वाविस्यन्दनं चापि भौमानां श्रपणं तथा ॥ १२-२६१-४ (७५७६९)
अग्नेर्दुर्धर्षता ज्योतिस्तापः पाकः प्रकाशनम् ।

शौचं रागो लघुस्तैक्ष्ण्यं सततं चोर्ध्वभागिता ॥ १२-२६१-५ (७५७७०)
वायोरनियमस्पर्शो वादस्थानं स्वतन्त्रता ।
बलं शैघ्र्यं च मोक्षं च कर्म चेष्टात्मता भवः ॥ १२-२६१-६ (७५७७१)
आकाशस्य गुणः शब्दो व्यापित्वं छिद्रताऽपि च ।
अनाश्रयमनालम्बमव्यक्तमविकारिता ॥ १२-२६१-७ (७५७७२)
अप्रतीघातिता चैव श्रोतत्वं विवराणि च ।
गुणाः पञ्चाशतं प्रोक्ताः पञ्चभूतविभाविताः ॥ १२-२६१-८ (७५७७३)
फलोपपत्तिर्व्यक्तिश्च विसर्गः कल्पना क्षमा ।
सदसच्चाशुता चैव मनसो नव वै गुणाः ॥ १२-२६१-९ (७५७७४)
इष्टानिष्टविपत्तिश्च व्यवसायः समाधिता ।
संशयः प्रतिपत्तिश्च बुद्धेः पञ्च गुणान्विदुः ॥ १२-२६१-१० (७५७७५)
युधिष्ठिर उवाच। १२-२६१-११क्ष् (६२७१)
कथं पञ्चगुणा बुद्धिः कथं पञ्चेन्द्रिया गुणाः ।
एतन्मे सर्वमाचक्ष्व सूक्ष्मज्ञानं पितामह ॥ १२-२६१-११ (७५७७६)
भीष्म उवाच। १२-२६१-१२क्ष् (६२७२)
आहुः षष्टिं भूतगुणान्वै
भूतविषक्तान्प्रकृतिविसृष्टान् ।
नित्यविषक्तांश्चाक्षरसृष्टा
न्पुत्र न नित्यं तदिह वदन्ति ॥ १२-२६१-१२ (७५७७७)
तत्पुत्रचिन्ताकलिलं तदुक्त
मनागतं वै तव संप्रतीह ।
भूतार्थवत्त्वं तदवाप्य सर्वं
भूतप्रभावाद्भव शान्तबुद्धिः ॥ ॥ १२-२६१-१३ (७५७७८)

इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वँणि
एकषष्ट्यधिकद्विशततमोऽध्यायः ॥ २६१.।

Mahabharata - Shanti Parva - Chapter Footnotes

१२-२६१-२ धर्मवत्सल इति ड ।पाठः ॥
१२-२६१-४ जिह्वा रसनेन्द्रियम् ।विस्यन्दनं प्रस्रवणम्।भौमानां तण्डुलादीनां श्रपणं पाचनम्।विष्यन्दनं चैव भूमावास्रवणं तथेति थ।पाठः।विष्यन्दनं भूमेर्देहेष्वाश्रयणं तथेति ध।पाठः ॥
१२-२६१-५ ज्योतिर्ज्वलनकर्म ।लघुः शीघ्रगामित्वम्।दशमश्चोर्ध्वभागितेति थ.ध।पाठः ॥
१२-२६१-६ अनियमस्पर्शोऽनुष्णाशीतस्पर्शः ।वादस्थानं

वागिन्द्रियगोलकानि। स्वतन्त्रता गमनादौ। मोक्षो मूत्रादेः। कर्म उत्क्षेपणादि। चेष्टा श्वासप्रश्वासादिः। भवो जन्ममरणे। वायोस्तिर्यग्गतिः स्पर्शे इति ङ। थ। पाठः। चलं शैघ्र्यं च गमनं चेष्टा कर्मात्मता तथा इति ङ। थ। पाठः ॥
१२-२६१-७ अनाश्रयमाश्रयत्वाभावः
। अनालम्बनमाश्रयान्तरशून्यत्वम्। अव्यक्तं रूपस्पर्शशून्यत्वात्। अविकारिता द्रव्यान्तरानारम्भकत्वम् ॥
१२-२६१-८ पञ्चभूतात्मभाविताः पञ्चानां भूतानामात्मा प्रातिस्विकं स्वरूपं तत्र लक्षिताः ॥
१२-२६१-९ व्यक्तिः स्मरणम् । विसर्गो विपरीतः सर्गो भ्रान्तिः। कल्पना मनोरथवृत्तिः। क्षमा प्रसिद्ध। सत् वैराग्यादि। असत् रागद्वेषादि। आशुता अस्तिरत्वम् ॥
१२-२६१-१० इष्टानिष्टानां वृत्तिविशेषाणां विपत्तिर्नाशो निद्रारूपा वृत्तिरित्यर्थः । व्यवसाय उत्साहः। समाधिता चित्तस्थैर्यं निरोध इत्यर्थः। प्रतिपत्तिः प्रत्यक्षादिप्रमाणवृत्तिः ॥

---

शन्तिपर्व-अध्यय२६२
॥ श्रीः ॥
१२.२६२. अध्यायः २६२

Mahabharata - Shanti Parva - Chapter Topics
भीष्मेण युधिष्ठिरंप्रति नारदाकम्पनसंवादानुवादः
॥ १.। नारदेनाकम्पनं प्रति स्थाणुप्रजापतिसंवादानुवादारम्भः ॥ २.।
Mahabharata - Shanti Parva - Chapter Text

१२-२६२-० (७५७७९)
युधिष्ठिरं उवाच। १२-२६२-०क्ष् (६२७३)
य इमे पृथिवीपालाः शेरते पृथिवीतले ।
पृतनामध्य एते हि गतसत्त्वा महाबलाः ॥ १२-२६२-१ (७५७८०)
एकैकशो भीमबला नागायुतबलास्तथा ।
एते हि निहताः सङ्ख्ये तुल्यतेजीबलैर्नरैः ॥ १२-२६२-२ (७५७८१)
नैषां पश्यामि हन्तारं प्राणिनां संयुगे पुरा ।
विक्रमेणोपसंपन्नास्तेजोबलसमन्विताः ॥ १२-२६२-३ (७५७८२)
अथ चेमे महाप्राज्ञाः शेरते हि गतासवः ।
मृता इति च शब्दोऽयं वर्तत्येषु गतासुषु ॥ १२-२६२-४ (७५७८३)
इमे मृता नृपतयः प्रायशो भीमविक्रमाः ।
तत्र मे संशयो जातः कुतः संज्ञा मृता इति ॥ १२-२६२-५ (७५७८४)

कस्य मृत्युः कुतो मृत्युः केन मृत्युरिह प्रजाः ।
हरत्यमरसंकाश तन्मे ब्रूहि पितामह ॥ १२-२६२-६ (७५७८५)
भीष्म उवाच। १२-२६२-७क्ष् (६२७४)
पुरा कृतयुगे तात राजा ह्यासीदकम्पनः ।
स शत्रुवशमापन्नः संग्रामे क्षीणवाहनः ॥ १२-२६२-७ (७५७८६)
तस्य पुत्रो हरिर्नाम नारायणसमो बले ।
स शत्रुभिर्हतः सङ्ख्ये सबलः सपदानुगः ॥ १२-२६२-८ (७५७८७)
स राजा शत्रुवशगः पुत्रशोकसमन्वितः ।
यदृच्छया शान्तिपरो ददर्श भुवि नारदम् ॥ १२-२६२-९ (७५७८८)
तस्मै स सर्वमाचष्ट यथावृत्तं जनेश्वरः ।
शत्रुभिर्ग्रहणं सङ्ख्ये पुत्रस्य मरणं तथा ॥ १२-२६२-१० (७५७८९)
तस्य तद्वचनं श्रुत्वा नारदोऽथ तपोधनः ।
आख्यानमिदमाचष्ट पुत्रशोकापहं तदा ॥ १२-२६२-११ (७५७९०)
नारद उवाच। १२-२६२-१२क्ष् (६२७५)
राजञ्शृणु महाख्यानं ममेदं बहुविस्तरम् ।
यथावृत्तं श्रुतं चैव मयाऽपि वसुधाधिप ॥ १२-२६२-१२ (७५७९१)
प्रजाः सृष्ट्वा महातेजाः प्रजासर्गे पितामहः ।
अतीव वृद्धा बहुला नामृष्यत पुनः प्रजाः ॥ १२-२६२-१३ (७५७९२)
न ह्यन्तरमभूत्किंचित्क्वचिज्जन्तुभिरच्युत ।
निरुच्छ्वासमिवोन्नद्धं त्रैलोक्यमभवन्नृप ॥ १२-२६२-१४ (७५७९३)
तस्य चिन्ता समुत्पन्ना संहारं प्रति भूपते ।
चिन्तयन्नाध्यगच्छच्च संहारे हेतुकारणम् ॥ १२-२६२-१५ (७५७९४)
तस्य रोपान्महाराज खेभ्योऽग्निरुदतिष्ठत ।
तेन सर्वा दिशो राजन्ददाह स पितामहः ॥ १२-२६२-१६ (७५७९५)
ततो दिवं भुवं खं च जगच्च सचराचरम् ।
ददाह पावको राजन्भगवत्कोपसंभवः ॥ १२-२६२-१७ (७५७९६)
तत्रादह्यन्त भूतानि जङ्गमानि ध्रुवाणि च ।
महता क्रोधवेगेन कुपिते प्रपितामहे ॥ १२-२६२-१८ (७५७९७)
ततो हरो जटी स्थाणुर्देवोऽध्वरपतिः शिवः ।
जगाम शरणं देवो ब्रह्माणं परमेष्ठिनम् ॥ १२-२६२-१९ (७५७९८)
तस्मिन्नभिगते स्थाणौ प्रजानां हितकाम्यया ।
अब्रवीद्वरदो देवो ज्वलन्निव तदा शिवम् ॥ १२-२६२-२० (७५७९९)
करवाण्यद्य कं कामं व्नरार्होऽसि मतो मम ।
कर्ता ह्यसि प्रियं शंभो तव यद्धृदि वर्तते ॥ ॥ १२-२६२-२१ (७५८००)

इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि

द्विषष्ट्यधिकद्विशततमोऽध्यायः ॥ २६२.।

Mahabharata - Shanti Parva - Chapter Footnotes

१२-२६२-१ गतसंज्ञा महाबला इति थ ।पाठः ॥
१२-२६२-१६ खेभ्य इन्द्रियच्छिद्रेभ्यः ॥
१२-२६२-१७ खं खस्थं ग्रहनक्षत्रादि ॥
१२-२६२-१९ स्थाणुः श्मशाननिलयः शिव इति ड ।थ।पाठः ॥

---

शन्तिपर्व-अध्यय२६३
॥ श्रीः ॥
१२.२६३. अध्यायः २६३

Mahabharata - Shanti Parva - Chapter Topics

स्थाणुवचनाद्ब्रह्मणा लोकदाहककोपाग्नेरन्तर्नियमनम् ॥ १.। तथा स्वचक्षुरादीन्द्रियेभ्यो जातां मृत्युदेवींप्रति प्रजासंहारे नियोजनम् ॥ २.।

Mahabharata - Shanti Parva - Chapter Text

१२-२६३-० (७५८०१)
स्थाणुरुवाच। १२-२६३-०क्ष् (६२७६)
प्रजासर्गनिमित्तं मे कार्यवत्तामिमां प्रभो ।
विद्धि सृष्टास्त्वया हीमा मा कुप्यासां पितामह ॥ १२-२६३-१ (७५८०२)
तव तेजोग्निना देव प्रजा दह्यन्ति सर्वशः ।
ता दृष्ट्वा मम कारुण्यं मा कुप्यासां जगत्प्रभो ॥ १२-२६३-२ (७५८०३)
प्रजापतिरुवाच। १२-२६३-३क्ष् (६२७७)
न कुप्ये न च मे कामो नभवेयुः प्रजा इति ।
लाघवार्थं धरण्यास्तु ततः संहार इष्यते ॥ १२-२६३-३ (७५८०४)
इयं हि मां सदा देवी भारार्ता समचोदयत् ।
संहारार्थं महादेव भारेणाप्सु निमज्जती ॥ १२-२६३-४ (७५८०५)
यदाऽहं नाधिगच्छामि बुद्ध्या बहु विचारयन् ।
संहारमासां वृद्धानां ततो मां क्रोध आविशत् ॥ १२-२६३-५ (७५८०६)
स्थाणुरुवाच। १२-२६३-६क्ष् (६२७८)
संहारात्त्वं निवर्तस्य मा क्रुधो विवुधेश्वर ।
मा प्रजाः स्थावरं चैव जङ्गमं च व्यनीनशः ॥ १२-२६३-६ (७५८०७)
पल्वलानि च सर्वाणि सर्वं चैव तृणीलपम् ।
स्थावरं जङ्गमं चैव भूतग्रामं चतुर्विधम् ॥ १२-२६३-७ (७५८०८)
अकाले भस्मसाद्भूतं जगत्सर्वमुपप्लुतम् ।

प्रसीद भगवन्साधो वर एष वृतो मया ॥ १२-२६३-८ (७५८०९)
नष्टा न पुनरेष्यन्ति प्रजा ह्येताः कथंचन ।
तस्मान्निवर्ततामेतत्तेन स्वेनेव तेजसा ॥ १२-२६३-९ (७५८१०)
उपायमन्यं संपश्य भूतानां हितकाम्यया ।
यथामी जन्तवः सर्वे न दह्येरन्पितामह ॥ १२-२६३-१० (७५८११)
अभावं हि न गच्छेयुरुत्सन्नप्रजनाः प्रजाः ।
ग्पुत्रत्वेनानुसंकल्प्ये तदाऽहं तप्य दानवैः।'
अधिदैवे नियुक्तोस्मि त्वया लोकहितेप्सुना ॥ १२-२६३-११ (७५८१२)
त्वद्भवं हि जगन्नाथ एतत्स्थावरजङ्गमम् ।
प्रसाद्य त्वां महादेव याचाम्यावृत्तिजाः प्रजाः ॥ १२-२६३-१२ (७५८१३)
नारद उवाच। १२-२६३-१३क्ष् (६२७९)
श्रुत्वा तु वचनं देवः स्थाणोर्नियतवाङ्भनाः ।
तेजस्तत्सन्निजग्राह पुनरेवान्तरात्मनि ॥ १२-२६३-१३ (७५८१४)
ततोऽग्निमुपसंगृह्य भगवाँल्लोकपूजितः ।
प्रवृत्तिं च निवृत्तिं च कल्पयामास वै प्रभुः ॥ १२-२६३-१४ (७५८१५)
उपसंहरतस्तस्य तमग्निं रोषजं तदा ।
प्रादुर्बभूव विश्वेभ्यः खेभ्यो नारी महात्मनः ॥ १२-२६३-१५ (७५८१६)
कृष्णरक्ताम्बरधरा कृष्णनेत्रतलान्तरा ।
दिव्यकुण्डलसंपन्ना दिव्याभरणभूषिता ॥ १२-२६३-१६ (७५८१७)
सा विनिःसृत्य वै खेभ्यो दक्षिणामाश्रिता दिशम् ।
ददृशाते च तां कन्यां देवौ विश्वेश्वरावुभौ ॥ १२-२६३-१७ (७५८१८)
तामाहूय तदा देवो लोकानामादिरीश्वरः ।
मृत्यो इति महीपाल जहि चेमाः प्रजा इति ॥ १२-२६३-१८ (७५८१९)
त्वं हि संहारबुद्ध्या मे चिन्तिता रुषितेन च ।
तस्मात्संहर सर्वास्त्वं प्रजाः सजडपण्डिताः ॥ १२-२६३-१९ (७५८२०)
अविशेषेण चैव त्वं प्रजाः संहर कामिनि ।
मम त्वं हि नियोगेन श्रेयः परमवाप्स्यसि ॥ १२-२६३-२० (७५८२१)
एवमुक्ता तु या देवी मृत्युः कमलमालिनी ।
प्रदध्यौ दुःखिता बाला साश्रुपातमतीव च ॥ १२-२६३-२१ (७५८२२)
पाणिभ्यां चैव जग्राह तान्यश्रूणि जनेश्वरः ।
मानवानां हितार्थाय ययाचे पुनरेव ह ॥ ॥ १२-२६३-२२ (७५८२३)

इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि
त्रिषष्ट्यधिकद्विशततमोऽध्यायः ॥ २६३.।
Mahabharata - Shanti Parva - Chapter Footnotes

१२-२६३-१ कार्यवत्तामर्थित्वम् ।मा कुप्य कोपं मा कुरु।आसां आसु ॥
१२-२६३-३ नभवेयुर्नश्येयुः ॥
१२-२६३-७ उलयं तृणविशेषः ॥
१२-२६३-१० निवर्तेरन्परंतपेति ध ।पाठः थ।ध।पाठः ॥
१२-२६३-११ अधिदैवे अहंकाराधिष्ठातृत्वे ॥
१२-२६३-१२ आवृत्तिजाः प्रजा याचामि याचे ।आवृत्त्या जाताः।मृत्वा मृत्वा पुनर्जायन्तामित्यर्थः ॥
१२-२६३-१३ संनिजग्राह संहृतवान् ॥
१२-२६३-१४ प्रवृत्तिं जन्म ।निवृत्तिं मरणम् अनेन नात्यन्तं प्रजानामुच्छेदो नाप्यत्यन्तं भूमेर्भार इति दर्शितम् ॥
१२-२६३-१७ उभौ ब्रह्मरुद्रौ ॥
१२-२६३-२२ मृत्योरश्रुपातेयुगपत् सर्वभूतक्षयो माभूदिति भावः ॥

---

शन्तिपर्व-अध्ययर२६४
॥ श्रीः ॥
१२.२६४. अध्यायः २६४

Mahabharata - Shanti Parva - Chapter Topics
नारदेन मृत्युब्रह्मसंवादानुवादपूर्वकमकम्पनस्य पुत्रशोकापनोदनम्
॥ १.।
Mahabharata - Shanti Parva - Chapter Text

१२-२६४-० (७५८२४)
नारद उवाच।१२-२६४-०क्ष् (६२८०)
विनीय दुःखमबला साऽऽत्मनैवायतेक्षणा ।
उवाच प्राञ्जलिर्भूत्वा तमेवावर्जिता तदा ॥१२-२६४-१ (७५८२५)
त्वया सृष्टा कथं नारी मादृशी वदतां वर ।
रौद्रकर्माभिजायेत सर्वप्राणिभयंकरी ॥१२-२६४-२ (७५८२६)
विभेम्यहमधर्मस्य धर्म्यमादिश कर्म मे ।
त्वं मां भीतामवेक्षस्व शिवेनेश्वरचक्षुषा ॥१२-२६४-३ (७५८२७)
बालान्वृद्धान्वयस्थांश्च न हरेयमनागसः ।
प्राणिनः प्राणिनामीश नमस्तेऽस्तु प्रसीद मे ॥१२-२६४-४ (७५८२८)
प्रियान्पुत्रान्वयस्यांश्च भ्रातॄन्मातॄः पितृनपि ।
अपध्यास्यन्ति यद्येवं मृतास्तेभ्यो विभेम्यहम् ॥१२-२६४-५ (७५८२९)
कृपणाश्रुपरिक्लेदो दहेन्मां शाश्वतीः समाः ।
तेभ्योऽहं बलवद्भीता शरणं त्वामुपागता ॥१२-२६४-६ (७५८३०)
यमस्य भवने देव पात्यन्ते पापकर्मिणः ।

प्रसादये त्वां वरद प्रसादं कुरु मे प्रभो ॥ १२-२६४-७ (७५८३१)
एतदिच्छाम्यहं कामं त्वत्तो लोकपितामह ।
इच्छेयं त्वत्प्रसादाच्च तपस्तप्तुं महेश्वर ॥ १२-२६४-८ (७५८३२)
पितामह उवाच। १२-२६४-९क्ष् (६२८१)
त्वं हिं संहारबुद्ध्या मे चिन्तिता रुषितेन च ।
तस्मात्संहर सर्वास्त्वं प्रजा मा च विचारय ॥ १२-२६४-९ (७५८३३)
एतदेवमवश्यं हि भविता नैतदन्यथा ।
क्रियतामनवद्याङ्गि यथोक्तं मद्वचोऽनघे ॥ १२-२६४-१० (७५८३४)
एवमुक्ता महाबाहो मृत्युः परपुरंजय ।
न व्याजहार तस्थौ च प्रह्वा भगवदुन्मुखी ॥ १२-२६४-११ (७५८३५)
पुनः पुनरथोक्ता सा गतसत्त्वेव भामिनी ।
तूष्णीमासीत्ततो देवो लोकानामीश्वरेश्वरः ॥ १२-२६४-१२ (७५८३६)
प्रससाद किल ब्रह्मा स्वयमेवात्मनाऽऽत्मनि ।
स्मयमानश्च लोकेशो लोकान्सर्वानवैक्षत ॥ १२-२६४-१३ (७५८३७)
निवृत्तरोषे तस्मिंस्तु भगवत्यपराजिते ।
सा कन्याऽथ जगामास्य समीपादिति नःश्रुतम् ॥ १२-२६४-१४ (७५८३८)
अपसृत्याप्रतिश्रुत्य प्रजासंहरणं तदा ।
त्वरमाणेव राजेन्द्र मृत्युर्धेनुकमभ्यगात् ॥ १२-२६४-१५ (७५८३९)
सा तत्र परमं देवी तपोऽचरत दुश्चरम् ।
समा ह्येकपदे तस्थौ दशपद्मानि पञ्च च ॥ १२-२६४-१६ (७५८४०)
तां तथा कुर्वतीं तत्र तपः परमदुश्चरम् ।
पुनरेव महातेजा ब्रह्मा वचनमब्रवीत् ॥ १२-२६४-१७ (७५८४१)
कुरुष्व मे वचो मृत्यो तदनादृत्य सत्वरा ।
तथैवैकपदे तात पुनरन्यानि सप्त सा ॥ १२-२६४-१८ (७५८४२)
तस्थौ पद्मानि षट् चैव पञ्च द्वे चैव मानद ।
भूयः पद्मायुतं तात मृगैः सह चचार सा ॥ १२-२६४-१९ (७५८४३)
द्वे चायुते नरश्रेष्ठ वाय्वाहारा महामते ।
पुनरेव ततो राजन्मौनमातिष्ठदुत्तमम् ॥ १२-२६४-२० (७५८४४)
अप्सु वर्षसहस्राणि सप्त चैकं च पार्थिव ।
ततो जगाम सा कन्या कौशिकीं नृपसत्तम ॥ १२-२६४-२१ (७५८४५)
तत्र वायुजलाहारा चचार नियमं पुनः ।
ततो ययौ महाभागा गङ्गां मेरुं च केवलम् ॥ १२-२६४-२२ (७५८४६)
तस्थौ दार्विव निश्चेष्टा प्रजानां हितकाम्यया ।
ततो हिमवतो मूर्ध्नि यत्र देवाः समीजिरे ॥ १२-२६४-२३ (७५८४७)
तत्राङ्गुष्ठेन राजेन्द्र निखर्वमचरत्तपः ।
तस्थौ पितामहं चैव तोषयामास यत्नतः ॥ १२-२६४-२४ (७५८४८)

ततस्तामब्रवीत्तत्र लोकानां प्रपितामहः ।
किमिदं वर्तसे पुत्रि क्रियतां मम तद्वचः ॥ १२-२६४-२५ (७५८४९)
ततोऽब्रवीत्पुनर्मृत्युर्भगवन्तं पितामहम् ।
न हरेयं प्रजा देव पुनस्त्वाऽहं प्रसादये ॥ १२-२६४-२६ (७५८५०)
तामधर्मभयाद्भीतां पुनरेव प्रयाचतीम् ।
तदाऽब्रवीद्देवदेवो निगृह्येदं वचस्ततः ॥ १२-२६४-२७ (७५८५१)
अधर्मो नास्ति ते मृत्यो संयच्छेमाः प्रजाः शुभे ।
मयाऽप्युक्तं मृषा भद्रे भविता नेह किंचन ॥ १२-२६४-२८ (७५८५२)
धर्मः सनातनश्च त्वामिहैवानुप्रवेक्ष्यति ।
अहं च विबुधाश्चैव त्वद्धिते निरताः सदा ॥ १२-२६४-२९ (७५८५३)
इमन्यं च ते कामं ददानि मनसेप्सितम् ।
न त्वां दोषेण यास्यन्ति व्याधिसंपीडिताः प्रजाः ॥ १२-२६४-३० (७५८५४)
पुरुषेषु च रूपेण पुरुषस्त्वं भविष्यसि ।
स्त्रीषु स्त्रीरूपिणी चैव तृतीयेषु नपुंसकम् ॥ १२-२६४-३१ (७५८५५)
सैवमुक्ता महाराज कृताञ्जलिरुवाच ह ।
पुनरेव महात्मानं नेति देवेशमव्ययम् ॥ १२-२६४-३२ (७५८५६)
तामब्रवीत्तदा देवो मृत्यो संहर मानवान् ।
अधर्मस्ते न भविता यथा ध्यास्याम्यहं शुभे ॥ १२-२६४-३३ (७५८५७)
ग्त्वं हि शक्ता च युक्ता च पूर्वोत्पन्ना च भामिनि ।
अनुशिष्टा च निर्दोषा तस्मात्त्वं कुरु मे मतम्'॥ १२-२६४-३४ (७५८५८)
यानश्रुबिन्दून्पतितानपश्यं
ये पाणिभ्यां धारितास्ते पुरस्तात् ।
ते व्याधयो मानवान्घोररूपाः
प्राप्ते काले पीडयिष्यन्ति मृत्यो ॥ १२-२६४-३५ (७५८५९)
सर्वेषां त्वं प्राणिनामन्तकाले
कामक्रोधौ सहितौ योजयेथाः ।
एवं धर्मस्त्वामुपैष्यत्यमोघो
न चाधर्मं लप्स्यसे तुल्यवृत्तिः ॥ १२-२६४-३६ (७५८६०)
एवं धर्मं पालयिष्यस्यथो त्वं
न चात्मानं मज्जयिष्यस्यधर्मे ।
तस्मात्कामं रोचयाभ्यागतं त्वं
सा त्वं साधो संहरस्वेह जन्तून् ॥ १२-२६४-३७ (७५८६१)
सा वै तदा मृत्युसंज्ञा कृतास्त्री
शापाद्भीता बाढमित्यब्रवीत्तम् ।
अथो प्राणान्प्राणिनामन्तकाले
कामक्रोधौ प्राप्य नित्यं निहन्ति ॥ १२-२६४-३८ (७५८६२)

मृत्योर्ये ते व्याधयश्चाश्रुपाता
मनुष्याणां युज्यते यैः शरीरम् ।
सर्वेषां वै प्राणिनां प्राणनान्ते
तस्माच्छोकं मा कृथा बुद्धय बुद्ध्या ॥ १२-२६४-३९ (७५८६३)
सर्वे देवाः प्राणिनां प्राणनान्ते
गत्वा वृत्ताः सन्निवृत्तास्तथैव ।
एवं सर्वे मानवाः प्राणनान्ते
गत्वा वृत्ता देववद्राजसिंह ॥ १२-२६४-४० (७५८६४)
वायुर्भीमो भीमनादो महौजाः
सर्वेषां च प्राणिनां प्राणभूतः ।
अनावृत्तिर्देहिनां देहपाते
तस्माद्वायुर्देवदेवो विशिष्टः ॥ १२-२६४-४१ (७५८६५)
सर्वे देवा मर्त्यसंज्ञाविशिष्टाः
सर्वे मर्त्या देवसंज्ञाविशिष्टाः ।
तस्मात्पुत्रं मा शुचो राजसिंह
पुत्रः स्वर्गं प्राप्यते मोदते हे ॥ १२-२६४-४२ (७५८६६)
एवं मृत्युर्देवसृष्टा प्रजानां
प्राप्ते काले संहरन्ती यथावत् ।
तस्याश्चैव व्याधयस्तेऽश्रुपाताः
प्राप्ते काले संहरन्तीह जन्तून् ॥ ॥ १२-२६४-४३ (७५८६७)

इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि
चतुषष्ट्यधिकद्विशततमोऽध्यायः ॥ २६४.।
Mahabharata - Shanti Parva - Chapter Footnotes

१२-२६४-१ विनीय प्रमार्ज्य ।आवर्जिता ऋजुभूता। सात्वतीवायते क्षणेति
ट। ड। पाठः ॥
१२-२६४-५ प्रियान् पुत्रानित्यस्य न हरेयमिति पूर्वेणान्वयः ।तत्र
हेतुः। येषां संबन्धिनो मृतास्ते यद्यपध्यास्यन्ति शप्स्यन्ते तर्हि
तेषां तेभ्यो बिभेम्यहम्। अपध्यास्यन्ति ये देवमिति थ। पाठः ॥
१२-२६४-६ बलवदत्यन्तम् ॥
१२-२६४-७ निवेदये त्वा वरदेति ट ।ड। पाठः ॥
१२-२६४-९ मृत्यो संकल्पिता मे त्वं प्रजासंहारहेतुना ।गच्छ
संहरेति झ। पाठः ॥
१२-२६४-१५ अप्रतिश्रुत्याऽनङ्गीकृत्य ।धेनुकं गोतीर्थं मायान्तर्वर्ति ॥
१२-२६४-२१ कौशिकी गण्डकी नदीम् ॥

१२-२६४-२३ दार्विव स्थाणुरिव ॥
१२-२६४-२७ नेगृह्य हठं कृत्वा ॥
१२-२६४-३५ कालयिष्यन्ति मृत्यो इति झ । पाठः ॥
१२-२६४-३८ प्राप्य प्रापय्य ॥
१२-२६४-३९ प्राणनान्ते जीवनान्ते । बुद्ध्य जानीहि। प्राणिनां प्रायणान्ते इति ध। पाठः ॥
१२-२६४-४१ नानावृत्तिर्देहिनां देहभेदे इति झ । पाठः ॥
१२-२६४-४२ देवाः क्षीणपुण्या मर्त्यत्वं मर्त्याश्च कृतपुण्या देवत्वं प्राप्नुवन्तीत्यर्थः ॥

---

शन्तिपर्व-अध्यय२६५
॥ श्रीः ॥
१२.२६५. अध्यायः २६५

Mahabharata - Shanti Parva - Chapter Topics
भीष्मेण युधिष्ठिरंप्रति धर्मलक्षणकथनम् ॥ १.।
Mahabharata - Shanti Parva - Chapter Text

१२-२६५-० (७५८६८)
युधिष्ठिर उवाच। १२-२६५-०क्ष् (६२८२)
इमे वै मानसाः सर्वे धर्मं प्रति विशङ्किताः ।
कोऽयं धर्मः कुतो धर्मस्तन्मे ब्रूहि पितामह ॥ १२-२६५-१ (७५८६९)
धर्मस्त्वयमिहार्थः किममुत्रार्थोपि वा भवेत् ।
उभयार्थो हि वा धर्मस्तन्मे ब्रूहि पितामह ॥ १२-२६५-२ (७५८७०)
भीष्म उवाच। १२-२६५-३क्ष् (६२८३)
सदाचारः स्मृतिर्वेदास्त्रिविधं धर्मलक्षणम् ।
चतुर्थमर्थमप्याहुः कवयो धर्मलक्षणम् ॥ १२-२६५-३ (७५८७१)
अविध्युक्तानि कर्माणि व्यवस्यन्त्युप्तमूषरे ।
लोकयात्रार्थमेवेह धर्मस्य नियमः कृतः ॥ १२-२६५-४ (७५८७२)
उभयत्र सुखोदर्क इह चैव परत्र च ।
अलब्ध्वा निपुणं धर्मं पापः पापे प्रसज्जति ॥ १२-२६५-५ (७५८७३)
न च पापकृतः पापान्मुच्यन्ते केचिदापदि ।
अपापवादी भवति यथा भवति धर्मवित् ।
धर्मस्य निष्ठा स्वाचारस्तमेवाश्रित्य चावसेत् ॥ १२-२६५-६ (७५८७४)
यथाधर्मसमाविष्टो धनं गृह्णाति तस्करः ।
रमते निर्हरस्तेनः परवित्तमराजके ॥ १२-२६५-७ (७५८७५)
यदास्य तद्धरन्त्यन्ये तदा राजानमिच्छति ।

तदा तेषां स्पृहयते ये वै तुष्टाः स्वकैर्धनैः ॥१२-२६५-८ (७५८७६)
अभीतः शुचिरभ्येति राजद्वारमशङ्कितः ।
न हि दुश्चरितं किंचिदन्तरात्मनि पश्यति ॥१२-२६५-९ (७५८७७)
सत्यस्य वचनं साधु न सत्याद्विद्यते परम् ।
सत्येन विधृतं सर्वं सर्वं सत्ये प्रतिष्ठितम् ॥१२-२६५-१० (७५८७८)
अपि पापकृतो रौद्राः सत्यं कृत्वा मिथःकृतम् ।
अद्रोहमविसंवादं प्रवर्तन्ते तदाश्रयाः ॥१२-२६५-११ (७५८७९)
ते चेन्मिथ्या धृतिं कुर्युर्विनश्येयुरसंशयम् ।
न हर्तव्यं परधनमिति धर्मविदो विदुः ॥१२-२६५-१२ (७५८८०)
मन्यन्ते बलवन्तस्तं दुर्बलैः संप्रवर्तितम् ।
यदा नियतिदौर्बल्यमथैषामेव रोचते ॥१२-२६५-१३ (७५८८१)
न ह्यत्यन्तं बलयुता भवन्ति सुखिनोपि वा ।
तस्मादनार्जवे बुद्धिर्न कार्या ते कदाचन ॥१२-२६५-१४ (७५८८२)
असाधुभ्योऽस्य न भयं न चौरेभ्यो न राजतः ।
अकिंचित्कस्यचित्कुर्वन्निर्भयः शुचिरावसेत् ॥१२-२६५-१५ (७५८८३)
सर्वतः शङ्कते स्तेनो मृगो ग्राममिवेयिवान् ।
बहुधाऽऽचरितं पापमन्यत्रैवानुपश्यति ॥१२-२६५-१६ (७५८८४)
मुदितः शुचिरभ्येति सर्वतो निर्भयः सदा ।
न हि दुश्चरितं किंचिदात्मनोऽन्येषु पश्यति ॥१२-२६५-१७ (७५८८५)
दातव्यमित्ययं धर्म उक्तो भूतहिते रतैः ।
तं मन्यन्ते धनयुताः कृपणैः संप्रवर्तितम् ॥१२-२६५-१८ (७५८८६)
यदा नियतिकार्पण्यमथैपामव रोचते ।
धनवन्तोपि नात्यन्तं भवन्ति सुखिनोपि वा ॥१२-२६५-१९ (७५८८७)
यदन्यैर्विहितं नेच्छेदात्मनः कर्म पूरुषः ।
न तत्परेषु कुर्वीत जानन्नप्रियमात्मनः ॥१२-२६५-२० (७५८८८)
योऽन्यस्य स्यादुपपतिः स कं किं वक्तुमर्हति ।
यदन्यस्य ततः कुर्यान्न मृष्येदिति मे मतिः ॥१२-२६५-२१ (७५८८९)
जीवितुं यः स्वयं चेच्छेत्कथं सोऽन्यं प्रघातयेत् ।
यद्यदात्मन इच्छेत तत्परस्यापि चिन्तयेत् ॥१२-२६५-२२ (७५८९०)
अतिरिक्तः संविभजेद्भोगैरन्यानकिंचनान् ।
एतस्मात्कारणाद्धात्रा कुसीदं संप्रवर्तितम् ॥१२-२६५-२३ (७५८९१)
यस्मिंस्तु देवाः समये सन्तिष्ठेरंस्तथा भवेत् ।
अथ चेल्लोभसमये स्थितिर्धर्मोऽपि शोभना ॥१२-२६५-२४ (७५८९२)
सर्वं प्रियाभ्युपगतं पुण्यमाहुर्मनीषिणः ।
पश्यैतं लक्षणोद्देशं धर्माधर्मे युधिष्ठिर ॥१२-२६५-२५ (७५८९३)
लोकसंग्रहसंयुक्तं विधात्रा विहितं पुरा ।

सूक्ष्मधर्मार्थनियतं सतां चरितमुत्तमम् ॥१२-२६५-२६ (७५८९४)
धर्मलक्षणमाख्यातमेतत्ते कुरुसत्तम ।
तस्मादनार्जवे बुद्धिर्न ते कार्या कथंचन ॥ ॥१२-२६५-२७ (७५८९५)

इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि
पञ्चषष्ट्यधिकद्विशततमोऽध्यायः ॥ २६५.।
Mahabharata - Shanti Parva - Chapter Footnotes

१२-२६५-१४ तस्मादर्थार्जने बुद्धिरिति थ ।पाठः ॥
१२-२६५-१६ पापं मनस्येवाधिगच्छतीति थ ।पाठः ॥
१२-२६५-१८ क्षन्तव्यमित्ययं धर्म इति ध ।पाठः ॥
१२-२६५-२१ योऽन्यस्य स्वादुवद्वक्ति कस्तं हिंसितुमिच्छतीति ट ।थ।पाठः ॥
१२-२६५-२२ यः स्वयं नेच्छेदिति ध ।पाठः ॥

---

शन्तिपर्व-अध्यय२६६
॥ श्रीः ॥
१२.२६६. अध्यायः २६६

Mahabharata - Shanti Parva - Chapter Topics
युधिष्ठिरेण भीष्मंप्रति धर्मप्रामाण्याक्षेपः ॥१.।
Mahabharata - Shanti Parva - Chapter Text

१२-२६६-० (७५८९६)
युधिष्ठिर उवाच।१२-२६६-०क्ष् (६२८४)
सूक्ष्मं साधु समादिष्टं भवता धर्मलक्षणम् ।
प्रतिभा त्वस्ति मे काचित्तां ब्रूयामनुमानतः ॥१२-२६६-१ (७५८९७)
भूयांसो हृदये ये मे प्रश्नास्ते व्याहृतास्त्वया ।
इदं त्वन्यत्प्रवक्ष्यामि न राजन्निग्रहादिव ॥१२-२६६-२ (७५८९८)
इमानि हि प्राणयन्ति सृदन्त्युत्तारयन्ति च ।
न धर्मः परिपाठेन शक्यो भारत वेदितुम् ॥१२-२६६-३ (७५८९९)
अन्यो धर्मः समस्थस्य विषमस्थस्य चापरः ।
आपदस्तु कथं शक्याः परिपाठेन वेदितुम् ॥१२-२६६-४ (७५९००)
सदाचारो मचो धर्मः संतस्त्वाचारलक्षणाः ।
साध्यासाध्यं कथं शक्यं सदाचारो ह्यलक्षणः ॥१२-२६६-५ (७५९०१)
दृश्यते धर्मरूपेण ह्यधर्मं प्राकृतश्चरन् ।
धर्मं चाधर्मरूपेण कश्चिदप्राकृतश्चरन् ॥१२-२६६-६ (७५९०२)

पुनरस्य प्रमाणं हि निर्दिष्टं शास्त्रकोविदैः ।
वेदवादाश्चानुयुगं ह्रसन्तीतीह नः श्रुतम् ॥ १२-२६६-७ (७५९०३)
अन्ये कृतयुगे धर्मास्त्रेतायां द्वापरे परे ।
अन्ये कलियुगे धर्मा यथाशक्ति कृता इव ॥ १२-२६६-८ (७५९०४)
आम्नायवचनं सत्यमित्ययं लोकसंग्रहः ।
आम्नायेभ्यः पुनर्वेदाः प्रसृताः सर्वतोमुखाः ॥ १२-२६६-९ (७५९०५)
ते चेत्सर्वप्रमाणं वै प्रमाणं ह्यत्र विद्यते ।
प्रमाणं च प्रमाणेन विरुद्धयेच्छास्त्रता कुतः ॥ १२-२६६-१० (७५९०६)
धर्मस्य क्रियमाणस्य बलवद्भिर्दुरात्मभिः ।
यदा विक्रियते संस्था ततः साऽपि प्रणश्यति ॥ १२-२६६-११ (७५९०७)
विद्मश्चैनं न वा विद्मः शक्यं वा वेदितुं न वा ।
अणीयान्क्षुरधाराया गरीयानपि पर्वतात् ॥ १२-२६६-१२ (७५९०८)
गन्धर्वनगराकारः प्रथमं संप्रदृश्यते ।
अन्वीक्ष्यमाणः कविभिः पुनर्गच्छत्यदर्शनम् ॥ १२-२६६-१३ (७५९०९)
निपानानीव गोभ्याशे क्षेत्रे कुल्ये च भारत ।
स्मृतो हि शाश्वतो धर्मो विप्रहीणो न दृश्यते ॥ १२-२६६-१४ (७५९१०)
कामादन्ये भयादन्ये कारणैरपरैस्तथा ।
असन्तोऽपि वृथाचारं भजन्ते बहवोऽपरे ॥ १२-२६६-१५ (७५९११)
धर्मो भवति स क्षिप्रं विलोमस्त्वेष्वसाधुषु ।
अथैतानाहुरुन्मत्तानपि चावहसन्त्युत ॥ १२-२६६-१६ (७५९१२)
महाजना ह्युपावृत्ता राजधर्मं समाश्रिताः ।
न हि सर्वहितः कश्चिदाचारः संप्रवर्तते ॥ १२-२६६-१७ (७५९१३)
तेनैवान्यः प्रभवति सोऽपरं बाधते पुनः ।
दृश्यते चैव स पुनस्तुल्यरूपो यदृच्छया ॥ १२-२६६-१८ (७५९१४)
येनैवान्यः प्रभवति सोऽपरानपि बाधते ।
आचाराणामनैकाग्र्यं सर्वेषामेव लक्षयेत् ॥ १२-२६६-१९ (७५९१५)
चिराभिपन्नः कविभिः पूर्वं धर्म उदाहृतः ।
तेनाचारेण पूर्वेण संस्था भवति शाश्वती ॥ ॥ १२-२६६-२० (७५९१६)

इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि
षट्षष्ट्यधिकद्विशततमोऽध्यायः ॥ २६६.।

Mahabharata - Shanti Parva - Chapter Footnotes

१२-२६६-२ निग्रहात् कुतर्काग्रहेण ॥
१२-२६६-९ प्रसूताः सर्वतोमुखा इति ध ।पाठः ॥
१२-२६६-१६ अपि वाचं हसन्त्युतेति ध ।पाठः ॥

शन्तिपर्व-अध्यय२६७
॥ श्रीः ॥
१२.२६७. अध्यायः २६७

Mahabharata - Shanti Parva - Chapter Topics
भीष्मेण युधिष्ठिरंप्रति जाजलिचरित्रकथनारम्भः
॥ १.। धार्मिकंमन्येन जाजलिना खेचरकृतावज्ञया
तुलाधारसमीपगमनम् ॥ २.।
Mahabharata - Shanti Parva - Chapter Text

१२-२६७-० (७५११७)
भीष्म उवाच। १२-२६७-०क्ष् (६२८५)
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
तुलाधारस्य वाक्यानि धर्मे जाजलिना सह ॥ १२-२६७-१ (७५११८)
वने वनचरः कश्चिज्जाजलिर्नाम वै द्विजः ।
सागरोद्देशमागम्य तपस्तेपे महातपाः ॥ १२-२६७-२ (७५११९)
नियतो नियताहारश्चीराजिनजटाधरः ।
मलपङ्कधरो धीमान्बहून्वर्षगणान्मुनिः ॥ १२-२६७-३ (७५१२०)
स कदाचिन्महातेजा जलवासो महीपते ।
चचार लोकान्विप्रर्षिः प्रेक्षमाणो मनोजवः ॥ १२-२६७-४ (७५१२१)
स चिन्तयामास मुनिर्जलमध्ये कदाचन ।
विप्रेक्ष्य सागरान्तां वै महीं सवनकाननाम् ॥ १२-२६७-५ (७५१२२)
न मया सदृशोऽस्तीह लोके स्थावरजङ्गमे ।
अप्सु वैहायसं गच्छेन्मया योऽन्यः सहेति वै ॥ १२-२६७-६ (७५१२३)
स दृश्यमानो रक्षोभिर्जलमध्ये च भारत ।
आस्फोटयत्तदाऽऽकाशे धर्मः प्राप्तो मयेति वै ॥ १२-२६७-७ (७५१२४)
अब्रुवंश्च पिशाचास्तं नैवं त्वं वक्तुमर्हसि ।
तुलाधारो वणिग्धर्मा वाराणस्यां महायशाः ।
सोऽप्येवं नार्हते वक्तुं यथा त्वं द्विजसत्तम ॥ १२-२६७-८ (७५१२५)
इत्युक्तो जाजलिर्भूतैः प्रत्युवाच महातपाः ।
पश्येयं तमहं प्राज्ञं तुलाधारं यशस्विनम् ॥ १२-२६७-९ (७५१२६)
इति ब्रुवाणं तमृषिं रक्षांस्युत्थाय सागरात् ।
अब्रुवन्गच्छ पन्थानमास्थायेमं द्विजोत्तम् ॥ १२-२६७-१० (७५१२७)
इत्युक्तो जाजलिर्भूतैर्जगाम विमनास्तदा ।
वाराणस्यां तुलाधारं समासाद्याब्रवीदिदम् ॥ १२-२६७-११ (७५१२८)

युधिष्ठिर उवाच। १२-२६७-१२क्ष् (६२८६)
किं कृतं दुष्करं तात कर्म जाजलिना पुरा ।
येन सिद्धिं परां प्राप्तस्तन्मे व्याख्यातुमर्हसि ॥ १२-२६७-१२ (७५९२९)
भीष्म उवाच। १२-२६७-१३क्ष् (६२८७)
अतीव तपसा युक्तो घोरेण स बभूव ह ।
नद्युपस्पर्शनपरः सायंप्रातर्महातपाः ॥ १२-२६७-१३ (७५९३०)
अग्नीन्परिचरन्सम्यक्स्वाध्यायपरमो द्विजः ।
वानप्रस्थ विधानज्ञो जाजलिर्ज्वलितः श्रिया ॥ १२-२६७-१४ (७५९३१)
वने तपस्यतिष्ठत्स न चाधर्ममवैक्षत ।
वर्षास्वाकाशशायी च हेमन्ते जलसंश्रयः ॥ १२-२६७-१५ (७५९३२)
वातातपसहो ग्रीष्मे न चाधर्ममविन्दत ।
दुःखशय्याश्च विविधा भूमौ च परिवर्तनम् ॥ १२-२६७-१६ (७५९३३)
ततः कदाचित्स मुनिर्वर्षास्वाकाशमास्थितः ।
अन्तरिक्षाज्जलं मूर्ध्ना प्रत्यगृह्णान्मुहुर्मुहुः ॥ १२-२६७-१७ (७५९३४)
आप्लुतस्य जटाः क्लिन्ना बभूवुर्ग्रथिताः प्रभो ।
अरण्यगमनान्नित्यं मलिनोऽमलसंयुतः ॥ १२-२६७-१८ (७५९३५)
स कदाचिन्निराहारो वायुभक्षो महातपाः ।
तस्थौ काष्ठवदव्यग्रो न चचाल च कर्हिचित् ॥ १२-२६७-१९ (७५९३६)
तस्य स्म स्थाणुभूतस्य निर्विचेष्टस्य भारत ।
कुलिङ्गशकुनौ राजन्नीडं शिरसि चक्रतुः ॥ १२-२६७-२० (७५९३७)
स तौ दयावान्ब्रह्मर्षिरुपप्रैक्षत दंपती ।
कुर्वाणौ नीडकं तत्र जटासु तृणतन्तुभिः ॥ १२-२६७-२१ (७५९३८)
यदा न स चलत्येव स्थाणुभूतो महातपाः ।
ततस्तौ सुखविश्वस्तौ सुखं तत्रोषतुस्तदा ॥ १२-२६७-२२ (७५९३९)
अतीतास्वथ वर्षासु शरत्काल उपस्थिते ।
प्राजापत्येन विधिना विश्वासात्काममोहितौ ॥ १२-२६७-२३ (७५९४०)
तत्रोत्पादयतां राजञ्शिरस्यण्डानि खेचरौ ।
तान्यबुध्यत तेजस्वी स विप्रः संशितव्रतः ॥ १२-२६७-२४ (७५९४१)
बुद्ध्वा च स महातेजा न चचाल च जाजलिः ।
धर्मे कृतमना नित्यं नाधर्मं स त्वरोचयत् ॥ १२-२६७-२५ (७५९४२)
अहन्यहनि चागत्य ततस्तौ तस्य मूर्धनि ।
आश्वासितौ निवसतः संप्रहृष्टौ तदा विभौ ॥ १२-२६७-२६ (७५९४३)
अण्डेभ्यस्त्वथ पुष्टेभ्यः प्राजायन्त शकुन्तकाः ।
व्यवर्धन्त च तत्रैव न चाकम्पत जाजलिः ॥ १२-२६७-२७ (७५९४४)
स रक्षमाणस्त्वण्डानि कुलिङ्गानां धृतव्रतः ।
तथैव तस्थौ धर्मात्मा निर्विचेष्टः समाहितः ॥ १२-२६७-२८ (७५९४५)

ततस्तु काले राजेन्द्र बभूवुस्तेऽथ पक्षिणः ।
बुबुधे तांस्तु स मुनिर्जातपक्षान्कुलिङ्गकान् ॥ १२-२६७-२९ (७५९४६)
ततः कदाचित्तांस्तत्र पश्यन्पक्षीन्यतव्रतः ।
बभूव परमप्रीतस्तदा मतिमतां वरः ॥ १२-२६७-३० (७५९४७)
तथा तानभिसंवृद्धान्दृष्ट्वा चैवाप्तवान्मुदम् ।
शकुनौ निर्भयौ तत्र ऊषतुश्चात्मजैः सह ॥ १२-२६७-३१ (७५९४८)
जातपक्षांश्च सोऽपश्यदुड्डीनान्पुनरागतान् ।
सायंसायं द्विजान्विप्रो न चाकम्पत जाजलिः ॥ १२-२६७-३२ (७५९४९)
कदाचित्पुनरभ्येत्य पुनर्गच्छन्ति संततम् ।
त्यक्ता मातापितृभ्यां ते नचाकम्पत जाजलिः ॥ १२-२६७-३३ (७५९५०)
तथा ते दिवसं चापि गत्वा सायं पुनर्नृप ।
उपावर्तन्त तत्रैव निवासार्थं शकुन्तकाः ॥ १२-२६७-३४ (७५९५१)
कदाचिद्दिवसान्पञ्च समुत्पत्य विहगमाः ।
षष्ठेऽहनि समाजग्मुर्न चाकम्पत जाजलिः ॥ १२-२६७-३५ (७५९५२)
क्रमेण च पुनः सर्वे दिवसान्सुबहूनथ ।
नोपावर्तन्त शकुना जातपक्षाश्च ते यदा ॥ १२-२६७-३६ (७५९५३)
कदाचिन्मासमात्रेण समुत्पत्य विहंगमाः ।
नैवागच्छंस्ततो राजन्प्रातिष्ठत स जाजलिः ॥ १२-२६७-३७ (७५९५४)
ततस्तेषु प्रलीनेषु जाजलिर्जातविस्मयः ।
सिद्धोस्मीति मतिं चक्रे ततस्तं मान आविशत् ॥ १२-२६७-३८ (७५९५५)
स तथा निर्गतान्दृष्ट्वा शकुन्तान्नियतव्रतः ।
संभावितात्मा संभाव्य भृशं प्रीतस्तदाऽभवत् ॥ १२-२६७-३९ (७५९५६)
स नद्यां समुपस्पृश्य तर्पयित्वा हुताशनम् ।
उदयन्तमथादित्यमभ्यागच्छन्महातपाः ॥ १२-२६७-४० (७५९५७)
संभाव्य चटकान्मूर्ध्नि जाजलिर्जपतांवरः ।
आस्फोटयत्तथाऽऽकाशे धर्मः प्राप्तो मयेति वै ॥ १२-२६७-४१ (७५९५८)
अथान्तरिक्षे वागासीत्तां च शुश्राव जाजलिः ।
धर्मेण न समस्त्वं वै तुलाधारस्य जाजले ॥ १२-२६७-४२ (७५९५९)
वाराणस्यां महाप्राज्ञस्तुलाधारः प्रतिष्ठितः ।
सोऽप्येवं नार्हते वक्तुं यथा त्वं भाषसे द्विज ॥ १२-२६७-४३ (७५९६०)
सोमर्षवशमापन्नस्तुलाधारदिदृक्षया ।
पृथिवीमचरद्राजन्यत्रसायंगृहो मुनिः ॥ १२-२६७-४४ (७५९६१)
कालेन महताऽगच्छत्स तु वाराणसीं पुरीम् ।
विक्रीणन्तं च पण्यानि तुलाधारं ददर्श सः ॥ १२-२६७-४५ (७५९६२)
सोऽपि दृष्ट्वैव तं विप्रमायान्तं भाण्डजीवनः ।
समुत्थाय सुसंहृष्टः स्वागतेनाभ्यपूजयत् ॥ १२-२६७-४६ (७५९६३)

तुलाधार उवाच।१२-२६७-४७क्ष् (६२८८)
आयानेवासि विदितो मम ब्रह्मन्न संशयः ।
ब्रवीमि यत्तु वचनं तच्छृणुष्व द्विजोत्तम ॥१२-२६७-४७ (७५९६४)
सागरानूपमाश्रित्य तपस्तप्तं त्वया महत् ।
न च धर्मस्य संज्ञां त्वं पुरा वेत्थ कथंचन ॥१२-२६७-४८ (७५९६५)
ततः सिद्धस्य तपसा तव विप्र शकुन्तकाः ।
क्षिप्रं शिरस्यजायन्त ते च संभावितास्त्वया ॥१२-२६७-४९ (७५९६६)
जातपक्षा यदा ते च गता संचरितुं ततः ।
मन्यमानस्ततो धर्मं चटकप्रभवं द्विज ।
खे वाचां त्वमथाश्रौषीर्मां प्रति द्विजसत्तम ॥ १२-२६७-५० (७५९६७)
अमर्षवशमापन्नस्ततः प्राप्तो भवानिह ।
करवाणि प्रियं किं ते तद्ब्रूहि द्विजसत्तम ॥ ॥१२-२६७-५१ (७५९६८)

इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि
सप्तषष्ट्यधिकद्विशततमोऽध्यायः ॥२६७.।
Mahabharata - Shanti Parva - Chapter Footnotes

१२-२६७-१ जांजलिना सहेति ड ।थ।पाठः।तुलाधारवाक्यानि धर्मे प्रमाणत्वेनोदाहरन्तीत्यर्थः ॥
१२-२६७-४ प्रेक्षमाणो महाजलमिति ध ।पाठः ॥
१२-२६७-५ जलध्ये महीं विप्रेक्ष्य तपोबलाद्दूरदर्शनादिसिद्धिं प्राप्येत्यर्थः ॥
१२-२६७-६ वैहायसमाकाशमतं ग्रहनक्षत्रादि गच्छेत् अवगच्छेत् ।मया सह गच्छेशः सोऽन्यः कोस्तति योज्यम् ॥
१२-२६७-१३ उपस्पशंनरतः स्नामाचमनरतः ॥
१२-२६७-१४ स्त्रिया वेदविद्यया ॥
१२-२६७-१८ अमलसंयुतः निष्पापः ॥
१२-२६७-२१ उपप्रैक्षतोपेक्षांचक्रे ।न वारितवानित्यर्थः ॥
१२-२६७-२३ प्राजापत्येन गर्भाधानविधिना ॥
१२-२६७-२९ ते शकुन्तकाः पक्षिणः पक्षवन्तो बभूवुः ॥
१२-२६७-३० पक्षीन् ।आर्षो मत्वर्थीय इः ॥
१२-२६७-३२ द्विजान् शकुन्तान् ॥
१२-२६७-३८ प्रलीनेषु प्रडीनेषु ।मानो गर्वः ॥
१२-२६७-४१ संभाव्य वर्धयित्वा ।आस्फोटयद्बाहुशब्दमकरोत् ॥
१२-२६७-४६ भाण्डं मूलवणिग्धनं तेन जीवनं यस्य ॥
१२-२६७-४७ आयानागच्छन् ।आगतेनासि विदित इति थ।पाठः ॥

शन्तिपर्व-अध्यय२६८
॥ श्रीः ॥
१२.२६८. अध्यायः २६८

Mahabharata - Shanti Parva - Chapter Topics
तुलाधारेण जाजलये धर्मरहस्योपदेशः ॥१.।
Mahabharata - Shanti Parva - Chapter Text

१२-२६८-० (७५९६९)
भीष्म उवाच। १२-२६८-०क्ष् (६२८९)
इत्युक्तः स तदा तेन तुलाधारेण धीमता ।
प्रोवाच वचनं धीमाञ्जाजलिर्जपतांवरः ॥ १२-२६८-१ (७५९७०)
जाजलिरुवाच। १२-२६८-२क्ष् (६२९०)
विक्रीणतः सर्वरसान्सर्वगन्धांश्च वाणिज ।
वनस्पतीनोषधीश्च तेषां मूलफलानि च ॥ १२-२६८-२ (७५९७१)
अग्र्या सा नैष्ठिकी बुद्धिः कुतस्त्वामियमागता ।
एतदाचक्ष्व मे सर्वं निखिलेन महामते ॥ १२-२६८-३ (७५९७२)
भीष्म उवाच। १२-२६८-४क्ष् (६२९१)
एवमुक्तस्तुलाधारो ब्राह्मणेन यशस्विना ।
उवाच धर्मसूक्ष्माणि वैश्यो धर्मार्थतत्त्ववित् ॥ १२-२६८-४ (७५९७३)
वेदाहं जाजले धर्मं सरहस्यं सनातनम् ।
सर्वभूतहितं मैत्रं पुराणं यं जना विदुः ॥ १२-२६८-५ (७५९७४)
अद्रोहेणैव भूतानामल्पद्रोहेण वा पुनः ।
या वृत्तिः स परो धर्मस्तेन जीवामि जाजले ॥ १२-२६८-६ (७५९७५)
परिच्छिन्नैः काष्ठतृणैर्मयेदं शरणं कृतम् ।
अलक्तं पद्मकं तुङ्गं गन्धांश्चोच्चावचांस्तथा ॥ १२-२६८-७ (७५९७६)
रसांश्च तांस्तान्विप्रर्षे मद्यवर्ज्यान्बहूनहम् ।
क्रीत्वा वै प्रतिविक्रीणे परहस्तादमायया ॥ १२-२६८-८ (७५९७७)
सर्वेषां यः सुहृन्नित्यं सर्वेषां च हिते रतः ।
कर्मणा मनसा वाचा स धर्मं वेद जाजले ॥ १२-२६८-९ (७५९७८)
नानुरुध्ये विरुध्ये वा न द्वेष्मि न च कामये ।
समोऽहं सर्वभूतेषु पश्य मे जाजले व्रतम् ।
तुला मे सर्वभूतेषु समा तिष्ठति जाजले ॥ १२-२६८-१० (७५९७९)
नाहं परेषां कृत्यानि प्रशंसामि न गर्हये ।
आकाशस्येव विप्रेन्द्र पश्यँल्लोकस्य चित्रताम् ॥ १२-२६८-११ (७५९८०)

ग्कृपा मे सर्वभूतेषु समा तिष्ठति जाजले ।
इष्टानिष्टनियुक्तस्य प्रियद्वेषौ बहिष्कृतौ ॥' १२-२६८-१२ (७५९८१)
इति मां त्वं विजानीहि सर्वलोकस्य जाजले ।
समं मतिमतां श्रेष्ठ समलोष्टाश्मकाञ्चनम् ॥१२-२६८-१३ (७५९८२)
यथाऽन्धबधिरोत्मत्ता उच्छ्वासपरमाः सदा ।
देवैरपिहितद्वाराः सोपमा पश्यतो मम ॥१२-२६८-१४ (७५९८३)
यथा वृद्धातुरकृशा निस्पृहा विषयान्प्रति ।
तथाऽर्थकामभोगेषु ममापि विगता स्पृहा ॥१२-२६८-१५ (७५९८४)
यदा चायं न बिभेति यदा चास्मान्न बिभ्यति ।
यदा नेच्छति न द्वेष्टि तदा सिद्ध्यति वै द्विज ॥१२-२६८-१६ (७५९८५)
यदा न कुरुते भावं सर्वभूतेषु पापकम् ।
कर्मणा मनसा वाचा ब्रह्म संपद्यते तदा ॥१२-२६८-१७ (७५९८६)
न भूतो न भविष्योऽस्ति न च धर्मोस्ति कश्चन ।
योऽभयः सर्वभूतानां स प्राप्नोत्यभयं पदम् ॥१२-२६८-१८ (७५९८७)
यस्मादुद्विजते लोकः सर्वो मृत्युमुखादिव ।
वाक्क्रूराद्दण्डपरुषात्स प्राप्नोति महद्भयम् ॥१२-२६८-१९ (७५९८८)
यथावद्वर्तमानानां वृद्धानां पुत्रपौत्रिणाम् ।
अनुवर्तामहे वृत्तमहिंस्त्राणां महात्मनाम् ॥१२-२६८-२० (७५९८९)
प्रनष्टः शाश्वतो धर्मः सदाचारेण मोहितः ।
तेन वैद्यस्तपस्वी वा बलवान्वा विमुह्यते ॥१२-२६८-२१ (७५९९०)
आचाराज्जाजले प्राज्ञः क्षिप्रं धर्ममवाप्नुयात् ।
एवं यः साधुभिर्दान्तश्चरेदद्रोहचेतसा ॥१२-२६८-२२ (७५९९१)
नद्यां चेह यथा काष्ठमुह्यमानं यदृच्छया ।
यदृच्छयैव काष्ठेन सन्धि गच्छेत केनचित् ॥१२-२६८-२३ (७५९९२)
तत्रापराणि दारूणि संसृज्यन्ते ततस्ततः ।
तृणकाष्ठकरीपाणि कदाचिन्न समीक्षया ॥१२-२६८-२४ (७५९९३)
यस्मान्नोद्विजते भूतं जातु किंचित्कथंचन ।
अभयं सर्वभूतेभ्यः स प्राप्नोति सदा मुने ॥१२-२६८-२५ (७५९९४)
यस्मादुद्विजते विद्वन्सर्वलोको वृकादिव ।
क्रोशतस्तीरमासाद्य यथा सर्वे जलेचराः ॥१२-२६८-२६ (७५९९५)
एवमेवायमाचारः प्रादुर्भूतो यतस्ततः ।
सहायवान्द्रव्यवान्यः सुभगोऽथ परस्तथा ॥१२-२६८-२७ (७५९९६)
ततस्तानेव कवयः शास्त्रेषु प्रवदन्त्युत ।
कीर्त्यर्थमल्पहृल्लेखाः पटवः कृत्स्ननिर्णयाः ॥१२-२६८-२८ (७५९९७)
तपोभिर्यज्ञदानैश्च वाक्यैः प्रज्ञाश्रितैस्तथा ।
प्राप्नोत्यभयदानस्य यद्यत्फलमिहाश्नुते ॥१२-२६८-२९ (७५९९८)

लोके यः सर्वभूतेभ्यो ददात्यभयदक्षिणाम् ।
स सत्ययज्ञैरीजानः प्राप्नोत्यभयदक्षिणाम् ॥१२-२६८-३० (७५९९९)
न भूतानामहिंसाया ज्यायान्धर्मोऽस्ति कश्चन ।
यस्मान्नोद्विजते भूतं जातु किंचित्कथंचन ।
सोऽभयं सर्वभूतेभ्यः संप्राप्नोति महामुने ॥ १२-२६८-३१ (७६०००)
यस्मादुद्विजते लोकः सपाद्विश्मगतादिव ।
न स धर्ममवाप्नोति इह लोके परत्र च ॥१२-२६८-३२ (७६००१)
सर्वभूतात्मभूतस्य सर्वभूतानि पश्यतः ।
देवाऽपि मार्गे मुह्यन्ति ह्यपदस्य पदैपिणः ॥१२-२६८-३३ (७६००२)
दानं भूताभयस्याहुः सर्वदानेभ्य उत्तमम् ।
ब्रवीमि ते सत्यमिदं श्रद्धत्स्व मम जाजले ॥१२-२६८-३४ (७६००३)
स एव सुभगो भूत्वा पुनर्भवति दुर्भगः ।
व्यापत्तिं कर्मणां दृष्ट्वा जुगुप्सन्ति जनाः सदा ॥१२-२६८-३५ (७६००४)
अकारणो हि नैवास्ति धर्मः सूक्ष्मो हि जाजले ।
भूतभव्यार्थमेवेह धर्मप्रवचनं कृतम् ॥१२-२६८-३६ (७६००५)
सूक्ष्मत्वान्न स विज्ञातुं शक्यते बहुनिह्नवः ।
उपलभ्यान्तरा चान्यानाचारानवबुध्यते ॥१२-२६८-३७ (७६००६)
ये च च्छिन्दन्ति वृषणान्ये च भिन्दन्ति नस्तकान् ।
वहन्ति महतो भारान्बध्नन्ति दमयन्ति च ।
हत्वा सत्वानि खादन्ति तान्कथं न विगर्हसे ॥ १२-२६८-३८ (७६००७)
मानुषा मानुपानेव दासभोगेन भुञ्जते ।
वधबन्धनिरोधेन कारयन्ति दिवानिशम् ॥१२-२६८-३९ (७६००८)
आत्मनश्चापि जानाति यद्दुःखं वधबन्धने ।
पञ्चेन्द्रियेषु भूतेषु सर्वं वसति दैवतम् ॥१२-२६८-४० (७६००९)
आदित्यश्चन्द्रमा वायुर्ब्रह्मा प्राणः क्रतुर्यमः ।
तानि जीवानि विक्रीय का मृतेषु विचारणा ॥१२-२६८-४१ (७६०१०)
अजोऽग्निर्वरुणो मेपः सूर्योऽश्वः पृथिवी विराट् ।
धेनुर्वत्सश्च सोमो वै विक्रीयैतन्न सिध्यति ॥१२-२६८-४२ (७६०११)
का तैले का धृते ब्रह्मन्मधुन्यप्स्वोषधीषु वा ॥ १२-२६८-४३ (७६०१२)
अदंशमशके देशे सुखसंवर्धितान्पशून् ।
तांश्च मातुः प्रियाञ्जानन्नाक्रम्य बहुधा नराः ॥१२-२६८-४४ (७६०१३)
बहुदंशाकुलान्देशान्नयन्ति बहुकर्दमान् ।
वाहसंपीडिता धुर्याः सीदन्त्यविधिना परे ॥१२-२६८-४५ (७६०१४)
न मन्ये भ्रूणहत्याऽपि विशिष्टा तेन कर्मणा ।
कृपिं साध्विति मन्यन्ते सा च वृत्तिः सुदारुणा ॥१२-२६८-४६ (७६०१५)
भूमिं भूमिशयांश्चैव हन्ति काष्ठैरयोमुखैः ।

तथैवानडुहो युक्तान्क्षुत्तृष्णाश्रमकर्शितान् ॥१२-२६८-४७ (७६०१६)
अघ्न्या इति गवां नाम क एता हन्तुमर्हति ।
महच्चकाराकुशलं वृथा यो गां निहन्ति ह ॥१२-२६८-४८ (७६०१७)
ऋषयो यतयो ह्येतन्नहुपे प्रत्यवेदयन् ।
गां मातरं चाप्यवधीर्वृपभं च प्रजापतिम् ।
अकार्यं नहुपाकार्पीर्लप्स्यामस्त्वत्कृते व्यथाम् ॥ १२-२६८-४९ (७६०१८)
शतं चैकं च रोगाणां सर्वभूतेष्वपातयन् ।
ऋपयस्ते महाभागाः प्रशस्तास्ते च जाजले ॥१२-२६८-५० (७६०१९)
भ्रूणहं नहुषं त्वाहुर्न तं भोक्ष्यामहे वयम् ।
इत्युक्त्वा ते महात्मानः सर्वे तत्त्वार्थदर्शिनः ।
ऋषयो यतयः शान्तास्तपसा प्रत्येषधयन् ॥ १२-२६८-५१ (७६०२०)
ईदृशानशिवान्घोरानाचारानिह जाजले ।
केवलाचरितत्वात्तु निपुणो नावबुध्यसे ॥१२-२६८-५२ (७६०२१)
कारणाद्धर्ममन्विच्छन्न लोकं विरसं चरेत् ॥ १२-२६८-५३ (७६०२२)
यो हन्याद्यश्च मां स्तौति तत्रापि शृणु जाजले ।
समौ तावपि मे स्थातां न हि मे स्तः प्रियाप्रिये ।
एतदीदृशकं धर्मं प्रशंसन्ति मनीषिणः ॥ १२-२६८-५४ (७६०२३)
उपपत्त्या हि संपन्नो यतिभिश्चैव सेव्यते ।
सततं धर्मशीलैश्च निपुणेनोपलक्षितः ॥ ॥१२-२६८-५५ (७६०२४)

इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि
अष्टषष्ट्यधिकद्विशततमोऽध्यायः ॥ २६८.।

Mahabharata - Shanti Parva - Chapter Footnotes

१२-२६८-२ वाणिज वणिक्पुत्र ॥
१२-२६८-३ अध्यगा नैष्ठकीं बुद्धिं कुतस्त्वामिदमागतमिति झ ।पाठः ॥
१२-२६८-७ पद्मकं तुङ्गं च काष्ठविशेषौ ।कस्तूर्यादीन्गन्धान् ॥
१२-२६८-८ रसान् लवणादीन् ॥
१२-२६८-१६ न द्वेष्टि ब्रह्म संपद्यते तदेति झ ।पाठः ॥
१२-२६८-२६ दृष्टान्ते वडवाग्निः ॥
१२-२६८-३३ सम्यग्भूतानि पश्यत इति ध ।पाठः ॥
१२-२६८-३५ व्यापत्ति नाशम् ।कर्मणां कर्मफलानां स्वर्गादीनाम् ॥
१२-२६८-३६ अकारणः कारणमनुष्ठानप्रयोजकं फलं तद्धीनः ॥
१२-२६८-३८ यदुक्तमलक्तपद्मकादीन्यपण्यानि विक्रीणासीति तत्राह येचेति ।नस्तकान् नासागर्भान्।वहन्ति वाहयन्ति ॥
१२-२६८-३९ दासभावेन भुञ्जते इति झ ।पाठः ॥

१२-२६८-४५ अविधिना कत्वर्थापि हिंसा दोपावहा किमुताऽकत्वर्थेत्यर्थः ॥
१२-२६८-४७ भूमिशयान्सर्पादीन् । अयोमुखं काष्ठं लाङ्गलम् ॥
१२-२६८-४८ न हन्तुं शक्या अघ्न्या इति योगाद्गवमावध्यत्वं श्रौतमित्यर्थः ॥
१२-२६८-५० नहुपकृता गोवृपहत्या सर्वभूतेष्वेकाधिकशतरोगरूपेण क्षिप्तत्यर्थः ॥
१२-२६८-५१ एवमुक्त्वापि तपसा ध्यानेन तं प्रत्यवेदयन् प्रतीपमवेदयन् । हन्तारमपि धीपूर्वमहन्तारं नहुपं ध्यानबलेन ज्ञात्वा तथैव लोकेऽपि प्रमादात्कृतोऽपि गोवधो व्याधिरूपेण सर्वलोकापकारायाभृत किमुत बुद्धिपूर्वं कुत इति ज्ञापितवन्त इत्यर्थः ॥
१२-२६८-५२ केवलेति पूर्वैः कृत इत्यन्धपरंपरामात्रात्करोपि नतु तत्त्वबुद्ध्या ॥

---

शन्तिपर्व-अध्यय२६९
॥ श्रीः ॥
१२.२६९. अध्यायः २६९

Mahabharata - Shanti Parva - Chapter Topics
तुलाधारेण जाजलये धर्मरहस्योपदेशः ॥१.।
Mahabharata - Shanti Parva - Chapter Text

१२-२६९-० (७६०२५)
जाजलिरुवाच। १२-२६९-०क्ष् (६२९२)
यथा प्रवर्तितो धर्मस्तुलां धारयता त्वया ।
स्वर्गद्वारं च वत्तिं च भूतानामवरोत्स्यते ॥ १२-२६९-१ (७६०२६)
कृष्या ह्यन्नं प्रभवति ततस्त्वमपि जिवसि ।
पशुभिश्चौषधीभिश्च मर्त्या जीवन्ति वाणिज ॥ १२-२६९-२ (७६०२७)
ततो यज्ञः प्रभवति नास्तिक्यमपि जल्पसि ।
न हि वर्तेदयं लोको वार्तामुत्सृज्य केवलाम् ॥ १२-२६९-३ (७६०२८)
तुलाधार उवाच। १२-२६९-४क्ष् (६२९३)
वक्ष्यामि जाजले वृत्तिं नास्मि ब्राह्मण नास्तिकः ।
न यज्ञं च विनिन्दामि यज्ञवित्तु सुदुर्लभः ॥ १२-२६९-४ (७६०२९)
नमो ब्राह्मण यज्ञाय ये च यज्ञविदो जनाः ।
स्वयज्ञं ब्राह्मणा हित्वा क्षत्रयज्ञमनुष्ठिताः ॥ १२-२६९-५ (७६०३०)
लुब्धैर्वित्तपरैर्ब्रह्मन्नास्तिकैः संप्रवर्तितम् ।
वेदवादानभिज्ञानां सत्याभासमिवानृतम् ॥ १२-२६९-६ (७६०३१)
इदं देयमिदं देयमिति नान्यच्चिकीर्षति ।

अतः स्तैन्यं प्रभवति विकर्माणि च जाजले ॥ १२-२६९-७ (७६०३२)
यदेव सुकृतं हव्यं तेन तुष्यन्ति देवताः ।
नमस्कारेण हविषा स्वाध्यायैरौषधैस्तथा ।
पूजा स्याद्देवतानां हि यथाशास्त्रनिदर्शनम् ॥ १२-२६९-८ (७६०३३)
इष्टापूर्तादसाधूनां विदुषां जायते प्रजा ।
लुब्धेभ्यो जायते लुब्धः समेभ्यो जायते समः ॥ १२-२६९-९ (७६०३४)
यजमाना यथाऽऽत्मानमृत्विजश्च तथा प्रजाः ।
यज्ञात्प्रजा प्रभवति नभसोऽम्भ इवामलम् ॥ १२-२६९-१० (७६०३५)
अग्नौ प्रास्ताहुतिर्ब्रह्मन्नादित्यमुपगच्छति ।
आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः ॥ १२-२६९-११ (७६०३६)
तस्मात्सुनिष्ठिताः पूर्वे सर्वान्कामांश्च लेभिरे ।
अकृष्टपच्या पृथिवी आशीर्भिर्वीररुधोऽभवन् ॥ १२-२६९-१२ (७६०३७)
न ते यज्ञेष्वात्मसु वा फलं पश्यन्ति किंचन ।
शङ्कमानाः फलं यज्ञे ये यजेरन्कथंचन ॥ १२-२६९-१३ (७६०३८)
जानन्तः सर्वथा साधु लुब्धा वित्तप्रयोजनाः ।
स स्म पापकृतां लोकान्गुच्छेदशुभकर्मणा ॥ १२-२६९-१४ (७६०३९)
प्रमाणमप्रमाणेन यः कुर्यादशुभं नरः ।
पापात्मा सोऽकृतप्रज्ञः सदैवेह द्विजोत्तम ॥ १२-२६९-१५ (७६०४०)
कर्तव्यमिति कर्तव्यं वेत्ति वै ब्राह्मणो भयम् ।
ब्रह्मैव वर्तते लोके नैव कर्तव्यतां पुनः ॥ १२-२६९-१६ (७६०४१)
विगुणं च पुनः कर्म ज्याय इत्यनुशुश्रुम् ।
सर्वभूतोपकारश्च फलभावे च संयमः ॥ १२-२६९-१७ (७६०४२)
सत्ययज्ञा दमयज्ञा अलुब्धाश्चात्मवृत्तयः ।
उत्पन्नत्यागिनः सर्वे जना आसन्नमत्सराः ॥ १२-२६९-१८ (७६०४३)
क्षेत्रक्षेत्रज्ञतत्त्वज्ञाः स्वयज्ञपरिनिष्ठिताः ।
ब्राह्मं वेदमधीयन्तस्तोषयन्त्यपरानपि ॥ १२-२६९-१९ (७६०४४)
अखिलं दैवतं सर्वं ब्रह्म ब्रह्मणि संश्रितम् ।
तृप्यन्ति तृप्यतो देवास्तृप्ताऽतृप्तस्य जाजले ॥ १२-२६९-२० (७६०४५)
यथा सर्वरसैस्तृप्तो नाभिनन्दति किंचन ।
तथा प्रज्ञानतृप्तस्य नित्यतृप्तिः सुखोदया ॥ १२-२६९-२१ (७६०४६)
धर्माधारा धर्मसुखाः कृत्स्नव्यवसितास्तथा ।
अस्ति नस्तत्त्वतो भूय इति प्राज्ञस्त्ववेक्षते ॥ १२-२६९-२२ (७६०४७)
ज्ञानविज्ञानिनः केचित्परं पारं तितीर्षवः ।
अतीव पुण्यदं पुण्यं पुण्याभिजनसंहितम् ॥ १२-२६९-२३ (७६०४८)
यत्र गत्वा न शोचन्ति च च्यवन्ति व्यथन्ति च ।
ते तु तद्ब्रह्मणः स्थानं प्राप्नुवन्तीह सात्विकाः ॥ १२-२६९-२४ (७६०४९)

नैव ते स्वर्गमिच्छन्ति न यजन्ति यशोधनाः ।
सतां वर्त्मानुवर्तन्ते यथाबलमहिंसया ॥१२-२६९-२५ (७६०५०)
वनस्पतीनोषधीश्च फलमूलानि ते विदुः ।
न चैतानृत्विजो लुब्धा याजयन्ति फलार्थिनः ॥१२-२६९-२६ (७६०५१)
स्वमेव चार्थं कुर्वाणा यज्ञं चक्रुः पुनर्द्विजाः ।
परिनिष्ठितकर्माणाः प्रजानुग्रहकाम्यया ॥१२-२६९-२७ (७६०५२)
तस्मात्तानृत्विजो लुब्धा याजयन्त्यशुभान्नरान् ।
प्रापयेयुः प्रजाः स्वर्गे स्वधर्माचरणेन वै ।
इति मे वर्तते बुद्धिः समा सर्वत्र जाजले ॥ १२-२६९-२८ (७६०५३)
प्रयुञ्जते येन यज्ञे सदा प्राज्ञा द्विजर्षभाः ।
तेन ते देवयानेन पथा यान्ति महामुने ॥१२-२६९-२९ (७६०५४)
आवृत्तिस्तस्य चैकस्य नास्त्यावृत्तिर्मनीषिणाः ।
उभौ तौ देवयानेन गच्छतो जाजले यथा ॥१२-२६९-३० (७६०५५)
स्वयं चैषामनडुहो युञ्जन्ति च वहन्ति च ।
स्वयमुस्राश्च दुह्यन्ते मनःसंकल्पसिद्धिभिः ॥१२-२६९-३१ (७६०५६)
स्वयं यूपानुपादाय यजन्ते स्वाप्तदक्षिणाः ।
यस्तथा भावितात्मा स्यात्स गामालब्धुमर्हति ॥१२-२६९-३२ (७६०५७)
ओषधीभिस्तथा ब्रह्मन्यजेरंस्ते न तादृशाः ।
श्रद्धया गां पुरस्कृत्य तदृतं प्रब्रवीमि ते ॥१२-२६९-३३ (७६०५८)
निराशिषमनारम्भं निर्नमस्कारमस्तुतिम् ।
अक्षीणं क्षीणकर्माणं तं देवा ब्राह्मणं विदुः ॥१२-२६९-३४ (७६०५९)
न श्रावयन्न च यजन्न ददद्ब्राह्मणेषु च ।
काम्यां वृत्तिं लिप्समानः कां गतिं याति जाजले ।
इदं तु दैवतं कृत्वा यथा यज्ञमवाप्नुयात् ॥ १२-२६९-३५ (७६०६०)
जाजलिरुवाच।१२-२६९-३६क्ष् (६२९४)
श्न वै मुनीनां शृणुमः स्म तत्त्वं
पृच्छामि ते वाणिज कष्टमेतत् ।
पूर्वेपूर्वे चास्य नावेक्षमाणा
नातः परं तमृषयः स्थापयन्ति ॥ १२-२६९-३६ (७६०६१)
यस्मिन्नेवात्मतीर्थेन पशवः प्राप्नुयुर्मखम् ॆ
अथ स्म कर्मणा केन वाणिज प्राप्नुयात्सुखम् ।
शंस मे तन्महाप्राज्ञ भृशं वै श्रद्दधामि ते ॥ १२-२६९-३७ (७६०६२)
तुलाधार उवाच।१२-२६९-३८क्ष् (६२९५)
उत यज्ञा उतायज्ञा मखं नार्हन्ति ते क्वचित् ।
आज्येन पयसा दध्ना सत्कृत्यामिक्षया त्वचा ।
बालैः शृङ्गेण पादेन संभरत्येव गौर्मखम् ॥ १२-२६९-३८ (७६०६३)

पत्नीव्रतेन विधिना प्रकरोति नियोजयन् ।
इष्टं तु दैवतं कृत्वा यथा यज्ञमवाप्नुयात् ॥१२-२६९-३९ (७६०६४)
पुरोडाशो हि सर्वेषां पशूनां मेध्य उच्यते ।
सर्वा नद्यः सरस्वत्यः सर्वे पुण्याः शिलोच्चयाः ।
जाजले तीर्थमात्मेव मा स्म देशातिथिर्भव ॥ १२-२६९-४० (७६०६५)
एतानीदृशकान्धर्मानाचरन्निह जाजले ।
कारणैर्धर्ममन्विच्छन्स लोकानाप्नुते शुभान् ॥१२-२६९-४१ (७६०६६)
भीष्म उवाच।१२-२६९-४२क्ष् (६२९६)
एतानीदृशकान्धर्मांस्तुलाधारः प्रशंसति ।
उपपत्त्याऽभिसंपन्नान्नित्यं सद्भिर्निषेवितान् ॥ ॥१२-२६९-४२ (७६०६७)

इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि
एकोनसप्तत्यधिकद्विशततमोऽध्यायः ॥२६९.।
Mahabharata - Shanti Parva - Chapter Footnotes

१२-२६९-३ नास्तिक्यं हिंसात्मकत्वेन यज्ञनिन्दा ॥
१२-२६९-९ विगुणा जायते प्रजेति झ ।पाठः ॥
१२-२६९-२५ यजन्ते चाविहिंसयेति झ ।पाठः ॥
१२-२६९-३८ अशक्तानां तु बालैर्गोपुच्छे पितृतर्पणादिना ।शृङ्गेण
गोशृङ्गेणाभिषेकादिना।पाद्येनेति पादरजसेत्यर्थः।एतेषां
गोस्पर्शनादीनां च सद्यः पापनाशकत्वं परलोकप्रदत्वं च
स्मृत्युक्तं दर्शितम् ॥
१२-२६९-४१ ईदृशकानहिंस्रान्
।कारणैरर्थित्वसमर्थत्वविद्वत्त्वतारतम्यैः ॥
१२-२६९-४२ उपपत्त्या युक्तया ॥

---

शन्तिपर्व-अध्यय२७०
॥श्रीः ॥
१२.२७०. अध्यायः २७०

Mahabharata - Shanti Parva - Chapter Topics
भीष्मेण युधिष्ठिरंप्रति जाजलितुलाधारसंवादानुवादः ॥१.।
Mahabharata - Shanti Parva - Chapter Text

१२-२७०-० (७६०६८)
तुलाधार उवाच।१२-२७०-०क्ष् (६२९७)
सद्भिर्वा यदि वाऽसद्भिः पन्थानमिममाश्रितः ।

प्रत्यक्षं क्रियतां साधु ततो ज्ञास्यसि तद्यथा ॥ १२-२७०-१ (७६०६९)
एते शकुन्ता बहवः समन्ताद्विचरन्ति ह ।
तवोत्तमाङ्गे संभूताः श्येनाश्चान्याश्च जातयः ॥ १२-२७०-२ (७६०७०)
आहूयैनान्महाब्रह्मन्विशमानांस्ततस्ततः ।
पश्येमान्हस्तपादैश्च श्लिष्टान्देहेषु सर्वशः ॥ १२-२७०-३ (७६०७१)
संभावयन्ति पितरं त्वया संभाविताः स्वगाः ।
असंशयं पिता वै त्वं पुत्रानाह्वय जाजले ॥ १२-२७०-४ (७६०७२)
भीष्म उवाच। १२-२७०-५क्ष् (६२९८)
ततो जाजलिना तेन समाहूताः पतत्रिणः ।
वाचमुच्चारयन्ति स्म धर्मस्य वचनात्किल ॥ १२-२७०-५ (७६०७३)
तुलाधार उवाच। १२-२७०-६क्ष् (६२९९)
अहिंसादि कृतं कर्म इह चैव परत्र च ।
श्रद्धां निहन्ति वै ब्रह्मन्सा हता हन्ति तं नरम् ॥ १२-२७०-६ (७६०७४)
समानां श्रद्दधानानां संयतानां सुचेतसाम् ।
कुर्वतां यज्ञ इत्येव न यज्ञो जातु नेष्यते ॥ १२-२७०-७ (७६०७५)
श्रद्धा वै सात्विकी देवी सूर्यस्य दुहिता द्विज ।
सावित्री प्रसवित्री च हविर्वाङ्भनसी ततः ॥ १२-२७०-८ (७६०७६)
वाग्वृद्धं त्रायते श्रद्धा मनोवृद्धं च जाजले ।
श्रद्धावृद्धं वाङ्भनसी न यज्ञस्त्रातुमर्हति ॥ १२-२७०-९ (७६०७७)
अत्र गाथा ब्रह्मगीताः कीर्तयन्ति पुराविदः ।
शुचेरश्रद्दधानस्य श्रद्दधानस्यर चाशुचेः ॥ १२-२७०-१० (७६०७८)
देवा वित्तममन्यन्त सदृशं यज्ञकर्मणि ।
श्रोत्रियस्य कदर्यस्य वदान्यस्य च वार्धुषेः ॥ १२-२७०-११ (७६०७९)
मीमांसित्वोभयं देवाः सममन्नमकल्पयन् ।
प्रजापतिस्तानुवाच विषमं कृतमित्युत ॥ १२-२७०-१२ (७६०८०)
श्रद्धापूतं वदान्यस्य हतमश्रद्धयेतरत् ।
भोज्यमन्नं वदान्यस्य कदर्यस्य न वार्धुषेः ॥ १२-२७०-१३ (७६०८१)
अश्रद्दधान एवैको देवानां नार्हते हविः ।
तस्यैवान्नं न भोक्तव्यमिति धर्मविदो विदुः ॥ १२-२७०-१४ (७६०८२)
अश्रद्धा परमं पापं श्रद्धा पापप्रमोचनी ।
जहाति पापं श्रद्धावान्सर्पो जीर्णामिव त्वचम् ॥ १२-२७०-१५ (७६०८३)
ज्यायसी या पवित्राणां निवृत्तिः श्रद्धया सह ।
निवृत्तशीलदोषो यः श्रद्धावान्पूत एव सः ॥ १२-२७०-१६ (७६०८४)
किं तस्य तपसा कार्यं किं वृत्तेन किमात्मना ।
श्रद्धामयोऽयं पुरुषो यो यच्छ्रद्धः स एव सः ॥ १२-२७०-१७ (७६०८५)
इति धर्मः समाख्यातः सद्भिर्धर्मार्थदर्शिभिः ।

वयं जिज्ञासमानास्तु संप्राप्ता धर्मदर्शनात् ॥ १२-२७०-१८ (७६०८६)
श्रद्धां कुरु महाप्राज्ञ ततः प्राप्स्यसि यत्परम् ॥ १२-२७०-१९ (७६०८७)
ग्जाजलिरुवाच। १२-२७०-२०क्ष् (६३००)
न वै मुनीनां शृणुमश्च तत्वं
पृच्छामि ते वाणिज तत्वमेतत् ।
पूर्वे हि पूर्वेऽप्यनवेक्षमाणा
नातः परं ते ऋषयः स्थापयन्ति ॥ १२-२७०-२० (७६०८८)
यस्मिन्नेवानुतीर्थेन पशवः प्राप्नुयुः सुखम् ।
पत्नीव्रतेन विधिना प्रकरोति नियोजयन्।'
श्रद्धावाञ्श्रद्दधानश्च धर्मश्चैव हि वाणिज ॥ १२-२७०-२१ (७६०८९)
तुलाधार उवाच। १२-२७०-२२क्ष् (६३०१)
स्ववर्त्मनि स्थितश्चैव गरीयानेव जाजले ॥ १२-२७०-२२ (७६०९०)
भीष्म उवाच। १२-२७०-२३क्ष् (६३०२)
ततोऽचिरेण कालेन तुलाधारः स एव च ।
दिवं गत्वा महाप्राज्ञौ विहरेतां यथासुखम् ।
स्वंस्वं स्थानमुपागम्य स्वकर्मफलनिर्मितम् ॥ १२-२७०-२३ (७६०९१)
एवं बहुविधार्थं च तुलाधारेण भापितम् ।
सम्यक्चैवमुपालब्धो धर्मश्चोक्तः सनातनः ॥ १२-२७०-२४ (७६०९२)
तस्य विख्यातवीर्यस्य श्रुत्वा वाक्यानि जाजलिः ।
तुलाधारस्य कौन्तेय शान्तिमेवान्वपद्यत ॥ १२-२७०-२५ (७६०९३)
ग्समानां श्रद्दधानानां युक्तानां च यथाबलम् ।
कुर्वतां यज्ञ इत्येव नायज्ञो जातु नेष्यते ॥' १२-२७०-२६ (७६०९४)
एवं बहुमतार्थं च तुलाधारेण भाषितम् ।
यथौपम्योपदेशेन किं भूयः श्रोतुमिच्छसि ॥ ॥ १२-२७०-२७ (७६०९५)

इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि
सप्तत्यधिकद्विशततमोऽध्यायः ॥ २७०.।

Mahabharata - Shanti Parva - Chapter Footnotes

१२-२७०-१ अयं पन्थाः समाश्रित इति ट । थ। पाठः ॥
१२-२७०-३ ततस्ततः तेषु तेषु नीडेषु प्रवेशाय श्लिष्टान्
संकुचितहस्तपादान् ॥
१२-२७०-५ वाचमुच्चारयन्ति । निःशङ्कं प्रत्युत्तरं
प्रयच्छन्तीत्यर्थः। तत्र हेतुः धर्मस्याऽहिंसात्मकस्य संबन्धिनो
वचनात्प्रियवचनादित्यर्थः ॥
१२-२७०-६ हिंसा आदिपदार्थः । इह परत्र च प्रत्यक्षफलमिति

शेषः। तत्र हिंसाफलमाह श्रद्धामिति। हिंसा श्रद्धां विश्वासं निहन्तीत्यध्याहृत्य योज्यम्। तं विश्वासघातिनम्। स्पर्धानिहन्ति तं धर्मं स हतो हन्तीति ध। पाठः। हिंसा निहन्ति वै धर्मसंहतो हन्तीति थ। पाठः ॥
१२-२७०-७ समानां लाभालाभयोः यज्ञः कर्तव्य इत्येवाभिसंधाय कुर्वतां फलं चाभिसंधायेति एवार्थः । तेषां यज्ञो नेष्वत इति न। संगतानां सुचेतसामिति ध। पाठः ॥
१२-२७०-९ वाचा स्वरवर्णविपर्यासेन यद्वृद्धं छिन्नं नष्टं मन्त्राद्युच्चारणे तच्छ्रद्धा त्रायते समाधत्ते । मनसा व्यग्रेण यन्नष्टं देवताध्यानादि ॥
१२-२७०-१२ मीमांसित्वा विचार्य ॥
१२-२७०-१४ हविर्दातुमिति शेषः ॥
१२-२७०-१७ यत् या सात्विकी राजसी तामसी वा श्रद्धा यस्य स यच्छ्रद्धः । स एव स सात्विको राजसस्तामसो वा ॥
१२-२७०-१८ धर्मदर्शनाख्यान्मुनेर्धर्मं वयं प्राप्तवन्तः ॥
१२-२७०-१९ स्पर्धां जहि महाप्राज्ञेति ध । पाठः ॥
१२-२७०-२१ श्रद्धावान्वेदवाक्ये । श्रद्दधानस्तदर्थमनुष्ठातुं ममेदं श्रेय इति निश्चयवान्। धर्मो धर्मात्मा ॥
१२-२७०-२२ गरीयानेव भूतले इति ट । थ। पाठः ॥
१२-२७०-२७ यर्थापम्योपदेशेन यथायदृष्टान्तकीर्तनेन ॥

---

शन्तिपर्व-अध्यय२७१
॥ श्रीः ॥
१२.२७१. अध्यायः २७१

Mahabharata - Shanti Parva - Chapter Topics
भीष्मेण युधिष्ठिरंप्रति हिंसात्यागपूर्वकं शरीराविरोधेन धर्माचरणचोदना ॥ १.।
Mahabharata - Shanti Parva - Chapter Text

१२-२७१-० (७६०९६)
ग्युधिष्ठिर उवाच। १२-२७१-०क्ष् (६३०३)
शरीरमापदश्चैव न विदन्त्यविहिंसकाः ।
कथं यात्रा शरीरस्य निरारम्भस्य सेत्स्यते ॥ १२-२७१-१ (७६०९७)
भीष्म उवाच। १२-२७१-२क्ष् (६३०४)
यथा शरीरं न म्लायेन्नैव मृत्युवशं भवेत् ।
तथा कर्मसु वर्तेत समर्थो धर्ममाचरेत् ॥' १२-२७१-२ (७६०९८)

अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
प्रजानामनुकम्पार्थं गीतं राज्ञा विचख्नुना ॥ १२-२७१-३ (७६०९९)
छिन्नस्थूणं वृषं दृष्ट्वा विरावं च गवां भृशम् ।
गोगृहे यज्ञवाटे च प्रेक्षमाणः स पार्थिवः ॥ १२-२७१-४ (७६१००)
स्वस्ति गोभ्योऽस्तु लोकेषु ततो निर्वचनं कृतम् ।
हिंसायां हि प्रवृत्तायामाशीरेषा तु कल्पिता ॥ १२-२७१-५ (७६१०१)
अव्यवस्थितमर्यादैर्विमूढैर्नास्तिकैर्नरैः ।
संशयात्मभिरव्यक्तैर्हिंसा समनुदर्शिता ॥ १२-२७१-६ (७६१०२)
सर्वकर्मग्वहिंसां हि धर्मात्मा मनुरब्रवीत् ।
कामकाराद्विहिंसन्ति बहिर्वेद्यां पशून्नराः ॥ १२-२७१-७ (७६१०३)
तस्मात्प्रमाणतः कार्यो धर्मः सूक्ष्मो विजानता ।
अहिंसा ह्येव सर्वेभ्यो धर्मेभ्यो ज्यायसी मता ॥ १२-२७१-८ (७६१०४)
उपोष्य संशितो भूत्वा हित्वा वेदकृतां शुचिः ।
आचार इत्यनाचारः कृपणाः फलहेतवः ॥ १२-२७१-९ (७६१०५)
यदि च्छिन्दन्ति वृक्षांश्च यूपांश्चोद्दिश्य मानवाः ।
वृथा मांसानि खादन्ति नैप धर्मः प्रशस्यते ॥ १२-२७१-१० (७६१०६)
सुरां मत्स्यान्मधु मांसमासवं कृसरौदनम् ।
धूर्तैः प्रवर्तितं ह्येतन्नैतद्वेदेषु कल्पितम् ।
कामान्मोहाच्च लोभाच्च लौल्यमेतत्प्रवर्तितम् ॥ १२-२७१-११ (७६१०७)
विष्णुमेवाभिजानन्ति सर्वयज्ञेषु ब्राह्मणाः ।
पायसैः सुमनोभिश्च तस्यैव यजनं स्मृतम् ॥ १२-२७१-१२ (७६१०८)
यज्ञियाश्चैव ये वृक्षा वेदेषु परिकल्पिताः ।
यच्चापि किंचित्कर्तव्यमन्यच्चोक्षैः सुसंस्कृतम् ।
महासत्वैः शुद्धभावैः सर्वं देवार्हमेव तत् ॥ १२-२७१-१३ (७६१०९)
युधिष्ठिर उवाच। १२-२७१-१४क्ष् (६३०५)
शरीरमापदश्चापि विवदन्त्यविहंसतः ।
कथं यात्रा शरीरस्य निरारम्भस्य सेत्स्यते ॥ १२-२७१-१४ (७६११०)
भीष्म उवाच। १२-२७१-१५क्ष् (६३०६)
यथा शरीरं न ग्लायेन्नेयान्मृत्युवशं यथा ।
तथा कर्मसु वर्तेत समर्थो धर्ममाचरेत् ॥ ॥ १२-२७१-१५ (७६१११)

इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि
एकसप्तत्यधिकद्विशततमोऽध्यायः ॥ २७१.।

Mahabharata - Shanti Parva - Chapter Footnotes

१२-२७१-४ छिन्ना विशस्ता स्थूणा प्रतिमा शरीरं यस्य तम् ॥

१२-२७१-५ निश्चितं वचनं निर्वचनम् । एषा स्वस्ति गोभ्योऽस्त्विवति हिंसा कतौ पश्वालम्भः ॥
१२-२७१-९ वेदकृतां वेदोक्तां हिंसाम् । आचार इति बुद्ध्या अनाचारः आचरणहीनः ॥
१२-२७१-१२ विष्णुमेव यजन्तीहेति ट । थ। पाठः ॥
१२-२७१-१३ चोक्षैर्विशुद्धैः ॥
१२-२७१-१४ आपदः शरीरं शोपयन्ति शरीरं चापदां नाशमिच्छत्यतोऽत्यन्तं हिंसाशून्यस्य कथं शरीरनिर्वाह इत्याह शरीरमिति ॥

---

शन्तिपर्व-अध्यय२७२
॥ श्रीः ॥
१२.२७२. अध्यायः २७२

Mahabharata - Shanti Parva - Chapter Topics
भीष्मेण युधिष्ठिरंप्रति चिरकारिकोपाख्यानकथनम् ॥ १. ।
Mahabharata - Shanti Parva - Chapter Text

१२-२७२-० (७६११२)
युधिष्ठिर उवाच। १२-२७२-०क्ष् (६३०७)
कथं कार्यं परीक्षेत शीघ्रं वाऽथ चिरेण वा ।
सर्वथा कार्यदुर्गेऽस्मिन्भवान्नः परमो गुरुः ॥ १२-२७२-१ (७६११३)
भीष्म उवाच। १२-२७२-२क्ष् (६३०८)
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
चिरकारेस्तु यत्पूर्वं वृत्तमाङ्गिरसां कुले ॥ १२-२७२-२ (७६११४)
ग्गौतमस्य सुता ह्यासन्वीयांश्चिरकारिकः।'
चिरकारिक भद्रं ते भद्रं ते चिरकारिक ।
चिरकारी हि मेधावी नापराध्यति कर्मसु ॥ १२-२७२-३ (७६११५)
चिरकारी महाप्राज्ञो गौतमस्याभवत्सुतः ।
चिरेण सर्वकार्याणि विमृश्यार्थान्प्रपद्यते ॥ १२-२७२-४ (७६११६)
चिरं स चिन्तयत्यर्थांश्चिरं जाग्रच्चिरं स्वपन् ।
चिरं कार्याभिषत्तिं च चिरकारी तथोच्यते ॥ १२-२७२-५ (७६११७)
अलसग्रहणं प्राप्तो दुर्मेधावीति चोच्यते ।
बुद्धिलाघवयुक्तेन जनेनादीर्घदर्शिना ॥ १२-२७२-६ (७६११८)
व्यभिचारे तु कस्मिंश्चिद्व्यतिक्रम्यापरान्सुतान् ।
पित्रोक्तः कुपितेनाथ जहीमां जननीमिति ॥ १२-२७२-७ (७६११९)
इत्युक्त्वा स तदा विप्रो गौतमो जपतां वरः ।

अविमृश्य महाभागो वनमेव जगाम सः ॥ १२-२७२-८ (७६१२०)
स तथेति चिरेणोक्त्वा स्वभावाच्चिरकारिकः ।
विमृश्य चिरकारित्वाच्चिन्तयामास वै चिरम् ॥ १२-२७२-९ (७६१२१)
पितुराज्ञां कथं कुर्यां न हन्यां मातरं कथम् ।
कथं धर्मच्छले नास्मिन्निमज्जेयमसाधुवत् ॥ १२-२७२-१० (७६१२२)
पितुराज्ञा परो धर्मः स्वधर्मो मातृरक्षणम् ।
अस्वतन्त्रं च पुत्रत्वं किंतु मां नानुपीडयेत् ॥ १२-२७२-११ (७६१२३)
स्त्रियं हत्वा मातरं च को हि जातु सुखी भवेत् ।
पितरं चाप्यवज्ञाय कः प्रतिष्ठामवाप्नुयात् ॥ १२-२७२-१२ (७६१२४)
अनवज्ञा पितुर्युक्ता स्वधर्मो मातृरक्षणम् ।
युक्तक्षमावुभावेतौ नातिवर्तेतमां कथम् ॥ १२-२७२-१३ (७६१२५)
पिता ह्यात्मानमाधत्ते जायायां जायतामिति ।
शीलचारित्रगोत्रस्य धारणार्थं कुलस्य च ॥ १२-२७२-१४ (७६१२६)
सोऽहं मात्रा स्वयं पित्रा पुत्रत्वे प्रकृतः पुनः ।
विज्ञानं मे कथं न स्याद्द्वौ बुद्धये चात्मसंभवम् ॥ १२-२७२-१५ (७६१२७)
जातकर्मणि यत्प्राह पिता यच्चोपकर्मणि ।
पर्याप्तः स दृढीकारः पितुर्गौरवनिश्चये ॥ १२-२७२-१६ (७६१२८)
गुरुरग्र्यः परो धर्मः पोषणाध्यापनान्वितः ।
पिता यदाह धर्मः स वेदेष्वपि सुनिश्चितः ॥ १२-२७२-१७ (७६१२९)
प्रीतिमात्रं पितुः पुत्रः सर्वं पुत्रस्य वै पिता ।
शरीरादीनि देयानि पिता त्वेकः प्रयच्छति ॥ १२-२७२-१८ (७६१३०)
तस्मात्पितुर्वचः कार्यं न विचार्यं कदाचन ।
पातकान्यपि पूयन्ते पितुःर शासनकारिणः ॥ १२-२७२-१९ (७६१३१)
भाग्यभोगे प्रसवने सर्वलोकनिदर्शने ।
धात्र्याश्चैव समायोगे सीमन्तोन्नयने तथा ॥ १२-२७२-२० (७६१३२)
पिता धर्मः पिता स्वर्गः पिता हि परमं तपः ।
पितरि प्रीतिमापन्ने सर्वाः प्रीणन्ति देवताः ॥ १२-२७२-२१ (७६१३३)
आशिषस्ता भजन्त्यनं पुरुषं प्राह यत्पिता ।
निष्कृतिः सर्वपापानां पिता यच्चाभिनन्दति ॥ १२-२७२-२२ (७६१३४)
मुच्यते बन्धनात्पुरुषं फलं वृक्षान्प्रमुच्यते ।
क्लिश्यन्नपि सुतस्नेहैः पिता पुत्रं न मुञ्चति ॥ १२-२७२-२३ (७६१३५)
एतद्विचिन्तितं तावत्पुत्रस्य पितृगौरवम् ।
पिता नाल्पतरं स्थानं चिन्तयिष्यामि मातरम् ॥ १२-२७२-२४ (७६१३६)
यो ह्ययं मयि संघातो मर्त्यत्वे पाञ्चभौतिकः ।
अस्य मे जननी हेतुः पावकस्य यथाऽरणिः ॥ १२-२७२-२५ (७६१३७)
माता देहारणिः पुंसां सर्वस्यार्तस्य निर्वृतिः ।

मातृलाभे सनाथत्वमनाथत्वं विपर्यये ॥ १२-२७२-२६ (७६१३८)
न च शोचति नाप्येनं स्थाविर्यमपकर्षति ।
श्रिया हीनोऽपि यो गेहमम्बेति प्रतिपद्यते ॥ १२-२७२-२७ (७६१३९)
पुत्रपौत्रोपपन्नोपि जननीं यः समाश्रितः ।
अपि वर्षशतस्यान्ते स द्विहायनवच्चरेत् ॥ १२-२७२-२८ (७६१४०)
समर्थं वाऽसमर्थं वा कृशं वाप्यकृशं तथा ।
रक्षत्येव सुतं माता नान्यः पोष्टा विधानतः ॥ १२-२७२-२९ (७६१४१)
तदा स वृद्धो भवति तदा भवति दुःखितः ।
तदा शून्यं जगत्तस्य यदा मात्रा वियुज्यते ॥ १२-२७२-३० (७६१४२)
नास्ति मातृसमा च्छाया नास्ति मातृसमा गतिः ।
नास्ति मातृसमं त्राणं नास्ति मातृसमा प्रिया ॥ १२-२७२-३१ (७६१४३)
कुक्षौ संधारणाद्धात्री जननाज्जननी स्मृता ।
अङ्गानां वर्धनादम्बा वीरसूत्वेन वीरसूः ॥ १२-२७२-३२ (७६१४४)
शिशोः शुश्रूषणाच्छुश्रूर्माता देहमनन्तरम् ।
चेतनावान्स को हन्याद्यस्य नासुषिरं शिरः ॥ १२-२७२-३३ (७६१४५)
दंपत्योः प्राणसंश्लेषे योऽभिसन्धिः कृतः किल ।
तं माता च पिता चेति भूतार्थो मातरि स्थितः ॥ १२-२७२-३४ (७६१४६)
माता जानाति यद्गोत्रं माता जानाति यस्य सः ।
मातुर्भरणमात्रेण प्रीतिः स्नेहः पितुः प्रजाः ॥ १२-२७२-३५ (७६१४७)
पाणिबन्धं स्वयं कृत्वा सहधर्ममुपेत्य च ।
यदा यास्यन्ति पुरुषाः स्त्रियो नार्हन्ति याप्यतां ॥ १२-२७२-३६ (७६१४८)
भरणाद्धि स्त्रियो भर्ता पालनाद्धि पतिस्तथा ।
गुणस्यास्य निवृत्तौ तु न भर्ता न पुनः पतिः ॥ १२-२७२-३७ (७६१४९)
एवं स्त्री नापराध्नोति नर एवापराध्यति ।
व्युच्चरंश्च महादोषं नर एवापराध्यति ॥ १२-२७२-३८ (७६१५०)
स्त्रिया हि परमो भर्ता दैवतं परमं स्मृतम् ।
तस्मात्मना तु सदृशमात्मानं परमं ददौ ॥ १२-२७२-३९ (७६१५१)
नापराधोऽस्ति नारीणां नर एवापराध्यति ।
सर्वकार्यापराध्यत्वान्नापराध्यन्ति चाङ्गनाः ॥ १२-२७२-४० (७६१५२)
यश्चनोक्तोऽथ निर्देशः स्त्रिया मैथुनवृद्धये ।
तस्य स्मारयतो व्यक्तमधर्मो नास्ति संशयः ॥ १२-२७२-४१ (७६१५३)
एवं नारीं मातरं च गौरवे चाधिके स्थिताम् ।
अवध्यां तु विजानीयुः पशवोऽप्यविचक्षणाः ॥ १२-२७२-४२ (७६१५४)
देवतानां समावायमेकस्थं पितरं विदुः ।
मर्त्यानां देवतानां च स्नेहादभ्येति मातरम् ॥ १२-२७२-४३ (७६१५५)
एवं विमृशतस्तस्य विरकारितया बहु ।

दीर्घः कालो व्यतिक्रान्तस्ततोस्याभ्यागमत्पिता ॥ १२-२७२-४४ (७६१५६)
मेधातिथिर्महाप्राज्ञो गौतमस्तपसि स्थितः ।
विमृश्य तेन कालेन पत्न्याः संस्थाव्यतिक्रमम् ॥ १२-२७२-४५ (७६१५७)
सोऽब्रवीद्भृशसंतप्तो दुःखेनाश्रूणि वर्तयन् ।
श्रुतधैर्यप्रसादेन पश्चात्तापमुपागतः ॥ १२-२७२-४६ (७६१५८)
आश्रमं मम संप्राप्तस्त्रिलोकेशः पुरंदरः ।
अतिथिव्रतमास्थाय ब्राह्मण्यं रूपमास्थितः ॥ १२-२७२-४७ (७६१५९)
स मया सान्त्वितो वाग्भिः स्वागतेनाभिपूजितः ।
अर्घ्यं पाद्यं यथान्यायं मया च प्रतिपादितः ॥ १२-२७२-४८ (७६१६०)
परवानस्मि चेत्युक्तः प्रणयिष्यति तेन च ।
अत्र चाकुशले जाते स्त्रिया नास्ति व्यतिक्रमः ॥ १२-२७२-४९ (७६१६१)
एवं न स्त्री न चैवाहं नाध्वगस्त्रिदशेश्वरः ।
अपराध्यति धर्मस्य प्रमादस्त्वपराध्यति ॥ १२-२७२-५० (७६१६२)
ईर्ष्याजं व्यसनं प्राहुस्तेन चैवोर्ध्वरेतसः ।
ईर्ष्यया त्वहमाक्षिप्तो मग्नो दुष्कृतसागरे ॥ १२-२७२-५१ (७६१६३)
हत्वा साध्वीं च नारीं च व्यसनित्वाच्च वासिताम् ।
भर्तव्यत्वेन भार्यां च को नु मां तारयिष्यति ॥ १२-२७२-५२ (७६१६४)
अन्तरेण मयाऽऽज्ञप्तश्चिरकारीत्युदारधीः ।
यद्यद्य चिरकारी स्यात्स मां त्रायेत पातकात् ॥ १२-२७२-५३ (७६१६५)
चिरकारिक भद्रं ते भद्रं ते चिरकारिक ।
यद्यद्य चिरकारी त्वं ततोऽसि चिरकारिकः ॥ १२-२७२-५४ (७६१६६)
त्राहि मां मातरं चैव तपो यच्चार्जितं त्वया ।
आत्मानं पातकेभ्यश्च भवाद्य चिरकारिकः ॥ १२-२७२-५५ (७६१६७)
सहजं चिरकारित्वमतिप्रज्ञतया तव ।
सफलं तत्तथा तेऽस्तु भवाद्य चिरकारिकः ॥ १२-२७२-५६ (७६१६८)
चिरमांशसितो मात्रा चिरं गर्भेण धारितः ।
सफलं चिकारित्वं कुरु त्वं चिरकारिक ॥ १२-२७२-५७ (७६१६९)
चिरायते च संतापाच्चिरं स्वपिति धारितः ।
आवयोश्चिरसंतापादवेक्ष्य चिरकारिक ॥ १२-२७२-५८ (७६१७०)
भीष्म उवाच। १२-२७२-५९क्ष् (६३०९)
एवं स दुःखितो राजन्महर्षिर्गौतमस्तदा ।
चिरकारिं ददर्शाथ पुत्रं स्थितमथान्तिके ॥ १२-२७२-५९ (७६१७१)
चिरकारी तु पितरं दृष्ट्वा परमदुःखितः ।
शस्त्रं त्यक्त्वा ततो मूर्ध्ना प्रसादायोपचक्रमे ॥ १२-२७२-६० (७६१७२)
गौतमस्तं ततो दृष्ट्वा शिरसा पतितं भुवि ।
पत्नीं चैव निराकारां परामभ्यागमन्मुदम् ॥ १२-२७२-६१ (७६१७३)

न हि सा तेन संभेदं पत्नी नीता महात्मना ।
विजने चाश्रमस्थेन पुत्रश्चापि समाहितः ॥ १२-२७२-६२ (७६१७४)
हन्या इति समादेशः शस्त्रपाणौ सुते स्थिते ।
विनीते प्रसवत्यर्थे विवासे चात्मकर्मसु ॥ १२-२७२-६३ (७६१७५)
बुद्धिश्चासीत्सुतं दृष्ट्वा पितुश्चरणयोर्नतम् ।
शस्त्रग्रहणचापल्यं संवृणोति भयादिति ॥ १२-२७२-६४ (७६१७६)
ततः पित्रा चिरं स्तुत्वा चिरं चाघ्राय मूर्धनि ।
चिरं दोर्भ्यां परिष्वज्य चिरं जीवेत्युदाहृतः ॥ १२-२७२-६५ (७६१७७)
एवं स गौतमः पुत्रं प्रीतिहर्षगुणैर्युतः ।
अभिनन्द्य महाप्रज्ञ इदं वचनमब्रवीत् ॥ १२-२७२-६६ (७६१७८)
चिरकारिक भद्रं ते चिरकारी चिरं भव ।
चिराय यदि ते सौम्य चिरमस्मि न दुःखितः ॥ १२-२७२-६७ (७६१७९)
गाथाश्चाप्यब्रवीद्विद्वान्गौतमो मुनिसत्तमः ।
चिरकारिषु धीरेषु गुणोद्देशसमाश्रयाः ॥ १२-२७२-६८ (७६१८०)
चिरेण मित्रं बध्नीयाच्चिरेण च कृतं त्यजेत् ।
चिरेण हि कृतं मित्रं चिरं धारणमर्हति ॥ १२-२७२-६९ (७६१८१)
रागे दर्पे च माने च द्रोहे पापे च कर्मणि ।
अप्रिये चैव कर्तव्ये चिरकारी प्रशस्यते ॥ १२-२७२-७० (७६१८२)
बन्धूनां सुहृदां चैव भृत्यानां स्त्रीजनस्य च ।
अव्यक्तेष्वपराधेषु चिरकारी प्रशस्यते ॥ १२-२७२-७१ (७६१८३)
एवं स गौतमस्तत्र प्रीतः पुत्रस्य भारत ।
कर्मणा तेन कौरव्य चिरकारितया तथा ॥ १२-२७२-७२ (७६१८४)
एवं सर्वेषु कार्येषु विमृश्य पुरुषस्ततः ।
चिरेण निश्चयं कृत्वा चिरं न परितप्यते ॥ १२-२७२-७३ (७६१८५)
चिरं धारयते रोषं चिरं कर्म नियच्छति ।
पश्चात्तापकरं कर्म न किंचिदुपपद्यते ॥ १२-२७२-७४ (७६१८६)
चिरं वृद्धानुपासीत चिरमन्यांश्च पूजयेत् ।
चिरं धर्मं निषेवेत कुर्याच्चान्वेषणं चिरम् ॥ १२-२७२-७५ (७६१८७)
चिरमन्वास्य विदुषश्चिरं शिष्टान्निषेव्य च ।
चिरं विनीय चात्मानं चिरं चात्यनवज्ञताम् ॥ १२-२७२-७६ (७६१८८)
ब्रुवतश्च परस्यापि वाक्यं धर्मोपसंहितम् ।
चिरं पृष्टोऽपि च ब्रूयाच्चिरं न परितप्यते ॥ १२-२७२-७७ (७६१८९)
उपास्य बहुलास्तस्मिन्नाश्रमो सुमहातपाः ।
समाः स्वर्गं गतो विप्रः पुत्रेण सहितस्तदा ॥ ॥ १२-२७२-७८ (७६१९०)

इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि

१२-२७२-१ कार्यदुर्गे गुर्वादिवचनादवश्यकर्तव्ये हिंसामयत्वेन दुष्करे च सतीत्यर्थः ॥
१२-२७२-४ सर्वकार्याणि विमर्शात्प्रत्यपद्यतेति थ ।ध। पाठः ॥
१२-२७२-६ गृह्यते उपादीयते लोकेऽनेनेति ग्रह्णणं नामधेयम् ।अलस इति ग्रहणमलसग्रहणं प्राप्तः ॥
१२-२७२-७ पित्रा गौतमेन ।इमां जननीमहल्यां जहि संहर ॥
१२-२७२-१० धर्मच्छले धर्मसंकटे ॥
१२-२७२-१३ युक्तमुचितम् ।क्षमं सुखानुष्टेयम्।नातिवर्तेतमामतिशयेन नातिवर्ते।तिङन्तात्तमप आम् नातिवर्ते त्वहं कथम् इति ध।पाठः ॥
१२-२७२-१४ पिता ह्यात्मानमादत्ते माता भस्त्रा ह्यनिन्दितेति ट ।पाठः।गोत्रस्य नाम्नः ॥
१२-२७२-१५ बुद्ध्ये जानामि ।संभवमुत्पत्तिहेतुम् ॥
१२-२७२-२६ निर्वृतिः सुखं तत्कर्त्री ॥
१२-२७२-२७ हे अम्ब इत्युक्त्वा ॥
१२-२७२-२८ द्विहायनवद्द्विवर्षवान् भवेत् ।अपि वर्षशतस्यान्ते हायनत्वेन वर्तते इतिध।पाठः ॥
१२-२७२-३२ वीरसूर्वीरपुत्रसूः ॥
१२-२७२-३३ असुषिरं कर्णनासादिसुषिरहीनं यः शृणोति पश्यति जिघ्रति भक्षयति च स मातरं न हन्यादित्यर्थः ॥
१२-२७२-३४ प्राण उपस्थेन्द्रियं तत्संश्लेषे मैथुने इत्यर्थः ।अभिसंधिः पुत्रो मे गौरो जायेतेत्यादिरूपोऽभिलाषः।माता पिता वा उभौ वा कुरुतस्तत्र भूतार्थो याथार्थ्यं मातर्येव तत्कर्तृत्वं स्थितं निष्ठितं पितरि तु सोऽभिलाषः पाक्षिको भवतीत्यर्थः।दंपत्योः पाणिसंश्लेषे इति ध।पाठः ॥
१२-२७२-३५ भरणमात्रेण गर्भधारणमात्रेण संबन्धेन माता पुत्रे प्रीतिमाह्लादं स्नेहमासक्तिं च करोति ।वस्तुतस्तु पितुरेव प्रजाः।पितुराज्ञाऽनुल्लङ्घनीयेति भावः ॥
१२-२७२-३६ याप्यतां त्याज्यताम् ॥
१२-२७२-३७ तथाच भर्तृत्वादिगुणशून्यस्योन्मत्तस्येव वचनान्मातरं न हिंसिष्ये इत्याशयः ॥
१२-२७२-३८ व्युच्चरन् पोषणादिकमकुर्वन् महादोषं प्राप्नोतीति शेषः ॥
१२-२७२-४० सर्वेषु कार्येष्वपराध्यत्वादनुरोध्यत्वादल्पबलत्वेन

सर्वथा पुरुषाधीनत्वात् ॥
१२-२७२-४१ चनशब्दोऽप्यर्थे ॥
१२-२७२-४२ पशवोऽपि पशुप्राया अपि ॥
१२-२७२-४३ समावायः समूहः । मर्त्यानां देवतानां च समावायं मातरं स्नेहादभ्योतीति योजना। माता तु इह लोके पालयित्री चेति भावः ॥
१२-२७२-४५ तेन तावता कालेन । संस्थाव्यतिक्रमं मरणानौचित्यम् ॥
१२-२७२-४९ परवान् प्रणयिष्यति मयि प्रणयं करिष्यति । अत्रास्मिन्नर्थे चिन्तिते सति। अकुशले इन्द्रलौल्येन स्त्रीदूषणे जाते विषये स्त्रिया अहल्याया व्यतिक्रमो नास्ति ॥
१२-२७२-५३ अन्तरेण प्रमादेन ॥
१२-२७२-६१ निराकारा पाषाणभूताम् ॥

---

शन्तिपर्व-अध्यय२७३
॥ श्रीः ॥
१२.२७३. अध्यायः २७३

Mahabharata - Shanti Parva - Chapter Topics
भीष्मेण युधिष्ठिरंप्रति प्रजापालनप्रकारप्रतिपादकद्युमत्सेनसत्यवत्संवादानुवादः ॥ १.।
Mahabharata - Shanti Parva - Chapter Text

१२-२७३-० (७६१९१)
युधिष्ठिर उवाच। १२-२७३-०क्ष् (६३१०)
कथं राजा प्रजा रक्षेन्न च किंचित्प्रतापयेत् ।
पृच्छामि त्वां सतां श्रेष्ठ तन्मे ब्रूहि पितामह ॥ १२-२७३-१ (७६१९२)
भीष्म उवाच। १२-२७३-२क्ष् (६३११)
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
द्युमत्सेनस्य संवादं राज्ञा सत्यवता सह ॥ १२-२७३-२ (७६१९३)
अव्याहृतं व्याजहार सत्यवानिति नः श्रुतम् ।
वधाय नीयमानेषु पितुरेवानुशासनात् ॥ १२-२७३-३ (७६१९४)
अधर्मतां याति धर्मो यात्यधर्मश्च धर्मताम् ।
वधो नाम भवेद्धर्मो नैतद्भवितुमर्हति ॥ १२-२७३-४ (७६१९५)
द्युमत्सेन उवाच। १२-२७३-५क्ष् (६३१२)
अथ चेदवधो धर्मोऽधर्मः को जातुचिद्भवेत् ।
दस्यवश्चेन्न हन्येरन्सत्यवन्संकरो भवेत् ॥ १२-२७३-५ (७६१९६)
ममेदमिति नास्यैतत्प्रवर्तेत कलौ युगे ।
लोकयात्रा न चैव स्यादथ चेद्वेत्थ शंस नः ॥ १२-२७३-६ (७६१९७)

सत्यवानुवाच। १२-२७३-७क्ष् (६३१३)
सर्व एव त्रयो वर्णाः कार्या ब्राह्मणबन्धनाः ।
धर्मपाशनिबद्धानां नाल्पोऽप्यपचरिष्यति ॥ १२-२७३-७ (७६११८)
यो यस्तेषामपचरेत्तमाचक्षीत वै द्विजः ।
अयं मे न शृणोतीति तस्मिन्राजा प्रधारयेत् ॥ १२-२७३-८ (७६११९)
तत्त्वाभावेन यच्छास्त्रं तत्कुर्यान्नान्यथा वधः ।
असमीक्ष्यैव कर्माणि नीतिशास्त्रं यथाविधि ।
दस्यून्निहन्ति वै राजा भूयसो वाऽप्यनागसः ॥ १२-२७३-९ (७६२००)
भार्या माता पिता पुत्रो हन्यन्ते पुरुषेण ते ।
परेणापकृतो राजा तस्मात्सम्यक्प्रधारयेत् ॥ १२-२७३-१० (७६२०१)
असाधुश्चैव पुरुषो लभते शीतमेकदा ।
साधोश्चापि ह्यसाधुभ्यः शोभना जायते प्रजाः ॥ १२-२७३-११ (७६२०२)
न मूलघातः कर्तव्यो नैष धर्मः सनातनः ।
अपि खल्ववधेनैव प्रायश्चित्तं विधीयते ॥ १२-२७३-१२ (७६२०३)
उद्वे तेन बन्धेन विरूपकरणेन च ।
वधदण्डेन क्लिश्या न पुरोहितससदि ॥ १२-२७३-१३ (७६२०४)
यदा पुरोहितं वा ते पर्येयुः शरणैपिणः ।
करिष्यामः पुनर्ब्रह्मन्न पापमिति वादिनः ॥ १२-२७३-१४ (७६२०५)
तदा विसर्गमर्हाः स्युरितीदं धातृशासनम् ।
विभ्रद्दण्डाजिनं मुण्डो ब्राह्मणोऽर्हति शासनम् ॥ १२-२७३-१५ (७६२०६)
गरीयांसो गरीयांसमपराधे पुनः पुनः ।
तदा विसर्गमर्हन्ति न यथा प्रथमे तथा ॥ १२-२७३-१६ (७६२०७)
द्युमत्सेन उवाच। १२-२७३-१७क्ष् (६३१४)
यत्रयत्रैव शक्येरन्संयन्तुं समये प्रजाः ।
स तावान्प्रोच्यते धर्मो यावन्न प्रतिलङ्घ्यते ।
अहन्यमानेषु पुनः सर्वमेव पराभवेत् ॥ १२-२७३-१७ (७६२०८)
पूर्वे पूर्वतरे चैव सुशास्या ह्यभवञ्जनाः ।
मृदवः सत्यभूयिष्ठा अल्पद्रोहाल्पमन्यवः ॥ १२-२७३-१८ (७६२०९)
पुरा धिग्दण्ड एवासीद्वाग्दण्डस्तदनन्तरम् ।
आसीदादानदण्डोऽपि वधदण्डोऽद्य वर्तते ॥ १२-२७३-१९ (७६२१०)
वधेनापि न शक्यन्ते नियन्तुमपरे जनाः ॥ १२-२७३-२० (७६२११)
नैव दस्युर्मनुष्याणां न देवानामिति श्रुतिः ।
न गन्धर्वपितृणां च कः कस्येह न कश्चन ॥ १२-२७३-२१ (७६२१२)
पक्वं श्मशानादादत्ते पिशाचांश्चापि दैवतम् ।
तेषु यः समयं कश्चित्कुर्वीत हतबुद्धिषु ॥ १२-२७३-२२ (७६२१३)
सत्यवानुवाच। १२-२७३-२३क्ष् (६३१५)

तान्न शक्नोषि चेत्साधून्परित्रातुमहिंसया ।
कस्यचिद्भूतभव्यस्य लोभेनान्तं तथा कुरु ॥ १२-२७३-२३ (७६२१४)
राजानो लोकयात्रार्थं तप्यन्ते परमं तपः ।
तेऽपत्रपन्ति तादृग्भ्यस्तथावृत्ता भवन्ति च ॥ १२-२७३-२४ (७६२१५)
वित्रास्यमानाः सुकृतो न कामाद्घ्नन्ति दुष्कृतीन् ।
सुकृतेनैव राजानो भूयिष्ठं शासते प्रजाः ॥ १२-२७३-२५ (७६२१६)
श्रेयसः श्रेयसोऽप्येवं वृत्तं लोकोऽनुवर्तते ।
सदैव हि गुरोर्वृत्तमनुवर्तन्ति मानवाः ॥ १२-२७३-२६ (७६२१७)
द्युमत्सेन उवाच। १२-२७३-२७क्ष् (६३१६)
आत्मानमसमाधाय समाधित्सति यः परान् ।
विषयेष्विन्द्रियवशं मानवाः प्रहसन्ति तम् ॥ १२-२७३-२७ (७६२१८)
यो राज्ञो दम्भमोहेन किंचित्कुर्यादसांप्रतम् ।
सर्वोपायैर्नियम्यः स तथा पापान्निवर्तते ॥ १२-२७३-२८ (७६२१९)
आत्मैवादौ नियन्तव्यो दुष्कृतं संनियच्छता ।
दण्डयेच्च महादण्डैरपि बन्धूननन्तरान् ॥ १२-२७३-२९ (७६२२०)
ग्यो राजा लोभमोहेन किंचित्कुर्यादसांप्रतम् ।
सर्वोपायैर्नियम्यः स तथा पापान्निवर्तते ॥' १२-२७३-३० (७६२२१)
यत्र वै पापकृन्नीचो न महद्दुःखमर्च्छति ।
वर्धन्ते तत्र पापानि धर्मो ह्रसति च ध्रुवम् ॥ १२-२७३-३१ (७६२२२)
इति कारुण्यशीलस्तु विद्वान्वै ब्राह्मणोऽन्वशात् ।
इति चैवानुशिष्टोऽस्मि पूर्वैस्तातपितामहैः ।
आश्वासयद्भिः सुभृशमनुक्रोशात्तथैव च ॥ १२-२७३-३२ (७६२२३)
एतत्प्रथमकल्पेन राजा कृतयुगे जयेत् ।
पादोनेनापि धर्मेण गच्छेत्त्रेतायुगे तथा ।
द्वापरे तु द्विपादेन पादेन त्ववरे युगे ॥ १२-२७३-३३ (७६२२४)
तथा कलियुगे प्राप्ते राज्ञो दुश्चरितेन ह ।
भवेत्कालविशेषेण कला धर्मस्य षोडशी ॥ १२-२७३-३४ (७६२२५)
अथ प्रथमकल्पेन सत्यवन्संकरो भवेत् ।
आयुः शक्तिं च कालं च निर्दिश्य तप आदिशेत् ॥ १२-२७३-३५ (७६२२६)
सत्याय हि यथा नेह जह्याद्धर्मफलं महत् ।
भूतानामनुकम्पार्थं मनुः स्वायंभुवोऽब्रवीत् ॥ ॥ १२-२७३-३६ (७६२२७)

इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि
त्रिसप्तत्यधिकद्विशततमोऽध्यायः ॥ २७३.।

Mahabharata - Shanti Parva - Chapter Footnotes

१२-२७३-३ अव्याहृतं दण्ड्यानामप्यदण्ड्यत्वं प्राक्केनाप्यनुक्तम् । वधाय वध्येष्विति शेषः ॥
१२-२७३-४ वधो नाम स च धर्म इति वदतोव्याघात इत्यर्थः ॥
१२-२७३-८ अपचरेद्ब्राह्मणवचनमतिक्रामेत्
। प्रधारयेद्दण्डम् । अधर्मेण शृणोतीति ट । थ । पाठः ॥
१२-२७३-१० अनपराधिवधात् जन्मन्यस्मिन्नेव पापं फलतीत्याह भार्येति ॥
१२-२७३-११ साधोः सकाशात् शीलं लभते ॥
१२-२७३-१४ ते दस्यवः ॥
१२-२७३-१५ बिभ्रदिति संन्यासिनोऽपि शास्यां इत्यर्थः ॥
१२-२७३-१६ गरीयांसमपि शास्युरिति शेषः । पुनःपुनरपराधे कृते तदा ते विसर्गं नार्हन्ति । प्रथमापराधे इवेति व्यतिरेकदृष्टान्तः ॥
१२-२७३-१८ धर्मोल्लङ्घनेऽप्यहन्यमानेषु चोरेषु पूर्वे पूर्वकाले ॥
१२-२७३-१९ अद्य कलौ ॥
१२-२७३-२१ नैव दस्युषु दया कार्येत्याह । नैवेति । कः कस्येहेति प्रश्नः । न कश्चन कस्यापीत्युत्तरम् ॥
१२-२७३-२२ चोरेषु मर्यादाकरणमपि न संभवतीत्याह पक्कमिति
। तेषु समयं शास्त्रमर्यादां यः कुर्वीत स पक्वं श्मशानादादत्ते पिशाचान् दैवतत्वेन गृह्णाति । पात्रं श्मशानादिति ड । पाठः । पद्मं श्मशानादिति झ । पाठः । तत्र पद्मं शवालंकारमित्यर्थः ॥
१२-२७३-२३ लाभेनाथ तथा कुर्विति ड । पाठः ॥
१२-२७३-२४ ते राजानस्तादृग्भ्यः स्तेनेभ्योऽपत्रपन्ते ममापि राज्ये स्तेन इति लज्जां कुर्वतेऽतस्यथा वृत्ता लोकयात्रार्थं प्रजानां निर्दोषत्वं कामयानाः पितर इव तपस्विनो भवन्ति ॥
१२-२७३-२५ वित्रास्यमाना इति त्रासेनैव प्रजाः साध्व्यो भवन्ति ॥
१२-२७३-२९ दुष्कृतं दुष्टकर्मकारिष्यम् ॥
१२-२७३-३२ आश्वासयद्भिः द्रजा इति शेषः ॥
१२-२७३-३३ एतद्भूमण्डलं प्रथमकल्पने मुख्येवार्हिसाभवेन दण्डेन जयेद्वशीकुर्यात् । धिग्दण्डं वाग्दण्डमादातदण्डं वधृदण्डं च युगक्रमेण प्रजासु प्रवर्णयेदिति तात्पर्यम् ॥
१२-२७३-३५ निर्दिश्य निश्चित्य । तपोदण्डम् । राजभिः कृतदण्डास्तु सुच्द्यन्ति गलिना जाना इति दण्डस्यापि तपोवच्छुद्धिहेतुत्वस्मृतेः ॥
१२-२७३-३६ सत्याय ब्रह्मप्राप्तये । हि प्रतिद्धम् । महद्धमंफलं ज्ञानम् । गया येन प्रकारेणेह न जह्यात्तादृशमहिंसाख्यं धर्मं मनुरब्रवीत् ॥

---

शन्तिपर्व-अध्यय२७४
॥ श्रीः ॥

१२.२७४. अध्यायः २७४

Mahabharata - Shanti Parva - Chapter Topics
भीष्मेण युधिष्ठिरंप्रति फलानिच्छया यज्ञादेः
कर्तव्यताप्रतिपादकगोकपिलसंवादानुवादः ॥ १.।
Mahabharata - Shanti Parva - Chapter Text

१२-२७४-० (७६२२८)
युधिष्ठिर उवाच। १२-२७४-०क्ष् (६३१७)
अविरोधेन भूतानां त्यागः षाड्गुण्यकारकः ।
यः स्यादुमयभाग्धर्मस्तन्मे ब्रूहि पितामह ॥ १२-२७४-१ (७६२२९)
गार्हस्थ्यस्य च धर्मस्य योगधर्मस्य चोभयोः ।
अदूरसंप्रस्थितयोः किंस्विच्छ्रेयः पितामह ॥ १२-२७४-२ (७६२३०)
भीष्म उवाच। १२-२७४-३क्ष् (६३१८)
उभौ धर्मौ महाभागावृभौ परमदुश्चरौ ।
उभौ नहाफलौ तौ तु सद्भिराचरितावुभौ ॥ १२-२७४-३ (७६२३१)
अव ते वर्तयिष्यासि प्रामाण्यमुभयोस्तयोः ।
शुणुष्वैकमताः पार्थ च्छिन्नधर्मार्थसंशयम् ॥ १२-२७४-४ (७६२३२)
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
कपिलस्य गोश्च संवादं तन्निबोध युधिष्ठिर ॥ १२-२७४-५ (७६२३३)
आम्नायमनुपश्यन्हि पुराणं शाश्वतं ध्रुवम् ।
नहुषः पूर्वमालेभे त्वष्टुर्गामिति नः श्रुतम् ॥ १२-२७४-६ (७६२३४)
तां नियुक्तामदीनात्मा सत्वस्थः संयमे रतः ।
ज्ञानवान्नियताहारो ददर्श कपिलस्तथा ॥ १२-२७४-७ (७६२३५)
स बुद्धिमुत्तमां प्राप्तो नैष्ठिकीमकुतोभयाम् ।
स्वरेण शिथिलां सत्यां वेदा ३ इत्यब्रवीत्सकृत् ॥ १२-२७४-८ (७६२३६)
तां गामृषिः स्यूमरश्मिः प्रविश्य यतिमब्रवीत् ।
हंहो वेदा ३ यदि मता धर्माः केनापरे मताः ॥ १२-२७४-९ (७६२३७)
तपस्विनो धृतिमतः श्रुतिविज्ञानचक्षुषः ।
सर्वमार्षं हि मन्यन्ते व्याहृतं विदितात्मनः ॥ १२-२७४-१० (७६२३८)
तस्यैवं गततृष्णस्य विज्वरस्य निराशिषः ।
का विवक्षाऽस्ति वेदेषु निरारम्भस्य सर्वतः ॥ १२-२७४-११ (७६२३९)
कपिल उवाच। १२-२७४-१२क्ष् (६३१९)
नाहं वेदान्विनिन्दामि न विवक्ष्यामि कर्हिचित् ।
पृथगाश्रमिणां कर्माण्येकार्थानीति नः श्रुतम् ॥ १२-२७४-१२ (७६२४०)
गच्छत्येव परित्यागी वानप्रस्थश्च गच्छति ।

गृहस्थो ब्रह्मचारी च उभौ तावपि गच्छतः ॥ १२-२७४-१३ (७६२४१)
देवयाना हि पन्थानश्चत्वारः शाश्वता मताः ।
नैषां ज्यायः कनीयस्त्वं फलेषूक्तं बलाबलम् ॥ १२-२७४-१४ (७६२४२)
एवं विदित्वा सर्वार्थानारभेतेति वैदिकम् ।
नारभेतेति चान्यत्र नैष्ठिकी श्रूयते श्रुतिः ॥ १२-२७४-१५ (७६२४३)
अनारम्भे ह्यदोषः स्यादारम्भे दोष उत्तमः ।
एवं स्थितस्य शास्त्रस्य दुर्विज्ञेयं बलाबलम् ॥ १२-२७४-१६ (७६२४४)
यदत्र किंचित्प्रत्यक्षमहिंसायाः परं मतम् ।
ऋते त्वागमशास्त्रेभ्यो ब्रूहि तद्यदि पश्यसि ॥ १२-२७४-१७ (७६२४५)
स्यूमरश्मिरुवाच। १२-२७४-१८क्ष् (६३२०)
स्वर्गकामो यजेतेति सततं श्रूयते श्रुतिः ।
फलं प्रकल्प्य पूर्वं हि ततो यज्ञः प्रतायते ॥ १२-२७४-१८ (७६२४६)
अजश्चाश्वश्च मेषश्च गौश्च पक्षिगणाश्च ये ।
ग्राम्यारण्याश्चौषधयः प्राणस्यान्नमिति श्रुतिः ॥ १२-२७४-१९ (७६२४७)
तथैवान्नं ह्यहरहः सायंप्रातर्निरूप्यते ।
पशवश्चाथ धान्यं च यज्ञस्याङ्गमिति श्रुतिः ॥ १२-२७४-२० (७६२४८)
एतानि सह यज्ञेन प्रजापतिरकल्पयत् ।
तेन प्रजापतिर्देवान्यज्ञेनायजत प्रभुः ॥ १२-२७४-२१ (७६२४९)
तदन्योन्यवराः सर्वे प्राणिनः सप्तसप्त च ॥ १२-२७४-२२ (७६२५०)
ग्गौरजो मनुजः श्वा वा अश्वाश्वतरगर्दभाः ।
एते ग्राम्याः समाख्याताः पशवः सप्त साधुभिः ॥ १२-२७४-२३ (७६२५१)
सिंहा व्याघ्रा वराहाश्च महिषा वारणास्तथा ।
हरिणः शललाश्चैव सप्तारण्यास्तथा स्मृताः ॥' १२-२७४-२४ (७६२५२)
यज्ञेषूपाकृतं विश्वं प्राहुरुत्तमसंज्ञितम् ॥ १२-२७४-२५ (७६२५३)
एतच्चैवाभ्यनुज्ञातं पूर्वैः पूर्वतरैस्तथा ।
को जातु न विचिन्वीत विद्वान्स्वां शक्तिमात्मनः ॥ १२-२७४-२६ (७६२५४)
पशवश्च मनुष्याश्च द्रुमाश्चौषधिभिः सह ।
स्वर्गमेवाभिकाङ्क्षन्ते न च स्वर्गोस्ति ते मखात् ॥ १२-२७४-२७ (७६२५५)
ओषध्यः पशवो वृक्षा वीरुदाज्यं पयो दधि ।
हविर्भूमिर्दिशः श्रद्धा कालश्चैतानि द्वादश ॥ १२-२७४-२८ (७६२५६)
ऋचो यजूंषि सामानि ऋत्विजश्चापि षोडश ।
अग्निर्ज्ञेयो गृहपतिः स सप्तदश उच्यते ॥ १२-२७४-२९ (७६२५७)
अङ्गान्येतानि यज्ञस्य यज्ञो मूलमिति श्रुतिः ।
आज्येन पयसा दध्ना शकृताऽऽमिक्षया त्वचा ॥ १२-२७४-३० (७६२५८)
बालैः शृङ्गेण पादेन संभवत्येव गौर्मखम् ।
एवं प्रत्यकेशः सर्वं यद्यदस्य विधीयते ॥ १२-२७४-३१ (७६२५९)

यज्ञं वहन्ति संभूय सहर्त्विग्भिः सदक्षिणैः ।
संहृत्यैतानि सर्वाणि यज्ञं निर्वर्तयन्त्युत ॥ १२-२७४-३२ (७६२६०)
यज्ञार्थानि हि सृष्टानि यथार्था श्रूयते श्रुतिः ।
एवं पूर्वतराः पूर्वे प्रवृत्ताश्चैव मानवाः ॥ १२-२७४-३३ (७६२६१)
न हिनस्ति नारभते नाभिद्रुह्यति किंचन ।
यज्ञैर्यष्टव्यमित्येव यो यजत्यफलेप्सया ॥ १२-२७४-३४ (७६२६२)
यज्ञाङ्गान्यपि चैतानि यथोक्तान्यपि सर्वशः ।
विधिना विधियुक्तानि तारयन्ति परस्परम् ॥ १२-२७४-३५ (७६२६३)
आम्नायमार्षं पश्यामि यस्मिन्वेदाः प्रतिष्ठिताः ।
तं विद्वांसोऽनुपश्यन्ति ब्राह्मणस्यानुदर्शनात् ॥ १२-२७४-३६ (७६२६४)
ब्राह्मणप्रभवो यज्ञो ब्राह्मणार्पण एव च ।
अनुयज्ञं जगत्सर्वं यज्ञश्चानुजगत्सदा ॥ १२-२७४-३७ (७६२६५)
ओमिति ब्रह्मणो योनिर्नमः स्वाहा स्वधा वषट् ।
यस्यैतानि प्रयुज्यन्ते यथाशक्ति कृतान्यपि ॥ १२-२७४-३८ (७६२६६)
न तस्य त्रिषु लोकेषु परलोकभयं विदुः ।
इति वेदा वदन्तीह सिद्धाश्च परमर्षयः ॥ १२-२७४-३९ (७६२६७)
ऋचो यजूंहि सामानि स्तोत्राश्च विधिचोदिताः ।
यस्मिन्नेतानि सर्वाणि भवन्तीह स वै द्विजः ॥ १२-२७४-४० (७६२६८)
अग्न्याधेये यद्भवति यच्च सोमे सुते द्विज ।
यच्चेतरैर्महायज्ञैर्वेद तद्भगवांस्तथा ॥ १२-२७४-४१ (७६२६९)
तस्माद्ब्रह्मन्यजेच्चैव याजयेच्चाविचारयन् ।
यजतो यज्ञविधिना प्रेत्य स्वर्गफलं महत् ॥ १२-२७४-४२ (७६२७०)
नायं लोकोस्त्ययज्ञानां परश्चेति विनिश्चयः ।
वेदवादविदश्चैव प्रमाणमुभयं तदा ॥ ॥ १२-२७४-४३ (७६२७१)

इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि
चतुःसप्तत्यधिकद्विशततमोऽध्यायः ॥ २७४.।
Mahabharata - Shanti Parva - Chapter Footnotes

१२-२७४-१ योगः पाङ्गुण्यकारित इति ड ।पाठः ॥
१२-२७४-३ उभौ गार्हस्थ्ययोगधर्मौ ॥
१२-२७४-६ त्वष्टुस्त्वष्ट्रे गृहागताय मधुपर्के गामालेभे ।यष्टुं
गामितीति ट।थ।पाठः ॥
१२-२७४-७ नियुक्तां हन्तुं पुरस्कृतां दृष्ट्वा वेदा इत्यब्रवीदिति
द्वयोः संबन्धः ॥
१२-२७४-८ वेदा इति गर्हायां प्लुतिः ॥

१२-२७४-९ प्रविश्य योगबलेनेत्यर्थः ।यतिं कपिलमुनिम्।हंहो इति विस्मये।वेदा यदि मताः गर्हितत्वेन संमताः।अत्रापि गर्हार्थायाः प्लुतेरनुवादः।अपरे हिंसाशून्याधर्माः केन मताः।प्रामाण्यमप्रामाण्यं वा कर्मज्ञानकाण्डयोस्तुल्यमतो नान्यतरन्निन्देत्प्रशंसेद्वेति भावः ॥
१२-२७४-१० विलक्षणपुरुषस्य भाषितं सत्यमिति जना मन्यन्ते ।किं विदितात्मनः नित्यज्ञानवतः परमेश्वरस्य व्याहृतम् ॥
१२-२७४-१२ विवक्ष्यामि विषमान् वक्ष्यामि ॥
१२-२७४-१३ एकार्थत्वमाह गच्छत्येवेति ।परित्यागी संन्यासी।गच्छत्येव परं पदमिति शेषः ॥
१२-२७४-१४ देवयानाः देवमात्मानं यान्त्येभिरिति तथाभूताश्चत्वार आश्रमाः ॥
१२-२७४-२२ तस्माद्यागपराः सर्वे इति ध ।पाठः ॥
१२-२७४-३४ नापि दूह्यति किंचनेति ट ।ड।पाठः ॥
१२-२७४-३९ इति लोका वदन्तीहेति ध ।पाठः ॥
१२-२७४-४१ यच्च सोमे स्थितं जगत् ।इति ड।पाठः ॥

---

शन्तिपर्व-अध्यय२७५
॥ श्रीः ॥
१२.२७५. अध्यायः २७५

Mahabharata - Shanti Parva - Chapter Topics
भीष्मेण युधिष्ठिरंप्रति गोकपिलसंवादानुवादः ॥ १.।
Mahabharata - Shanti Parva - Chapter Text

१२-२७५-० (७६२७२)
कपिल उवाच।१२-२७५-०क्ष् (६३२१)
एतावदनुपश्यन्तो यतयो यान्ति मार्गगाः ।
नैषां सर्वेषु लोकेषु कश्चिदस्ति व्यतिक्रमः ॥ १२-२७५-१ (७६२७३)
निर्द्वन्द्वा निर्नमस्कारा निराशीर्बन्धना बुधाः ।
विमुक्ताः सर्वपापेभ्यश्चरन्ति शुचयोऽमलाः ॥ १२-२७५-२ (७६२७४)
अपवर्गेऽथ संत्यागे बुद्धौ च कृतनिश्चयाः ।
ब्रह्मिष्ठा ब्रह्मभूताश्च ब्रह्मण्येव कृतालयाः ॥ १२-२७५-३ (७६२७५)
येऽशोका नष्टरजसस्तेषां लोकाः सनातनाः ।
तेषां गतिं परां प्राप्य गार्हस्थ्ये किं प्रयोजनम् ॥ १२-२७५-४ (७६२७६)
स्यूमरश्मिरुवाच।१२-२७५-५क्ष् (६३२२)
यद्येषां परमा निष्ठा यद्येषां परमा गतिः ।
गृहस्थानव्यपाश्रित्य नाश्रमोऽन्यः प्रवर्तते ॥ १२-२७५-५ (७६२७७)

यथा मातरमाश्रित्य सर्वे जीवन्ति जन्तवः ।
एवं गार्हस्थ्यमाश्रित्य वर्तन्त इतराश्रमाः ॥१२-२७५-६ (७६२७८)
गृहस्थ एव यजते गृहस्थस्तप्यते तपः ।
गार्हस्थ्यमस्य धर्मस्य मूलं यत्किंचिदेव हि ॥१२-२७५-७ (७६२७९)
प्रजनाद्यभिनिर्वृत्ताः सर्वे प्राणभृतो मुनेः ।
प्रजनं चाप्युतान्यत्र न कथंचन विद्यते ॥१२-२७५-८ (७६२८०)
यास्तु स्युर्बहिरोषध्यो बहिरन्यास्तथाऽद्रिजाः ।
ओषधिभ्यो बहिर्यस्मात्प्राणी कश्चिन्न विद्यते ॥१२-२७५-९ (७६२८१)
कस्यैषा वाग्भवेत्सत्या मोक्षो नास्ति गृहादिति ।
अश्रद्दधानैरप्राज्ञैः सूक्ष्मदर्शनवर्जितैः ॥१२-२७५-१० (७६२८२)
निराशैरलसैः श्रान्तैस्तप्यमानैः स्वकर्मभिः ।
शमस्योपरमो दृष्टः प्रव्रज्यायामपण्डितैः ॥१२-२७५-११ (७६२८३)
त्रैलोक्यस्येव हेतुर्हि मर्यादा शाश्वती ध्रुवा ।
ब्राह्मणो नाम भगवाञ्जन्मप्रभृति पूज्यते ॥१२-२७५-१२ (७६२८४)
प्राग्गर्भाधानमन्त्रा हि प्रवर्तन्ते द्विजातिषु ।
अविश्वस्तेषु वर्तन्ते विश्वस्तेष्वपि संश्रिताः ॥१२-२७५-१३ (७६२८५)
दाहे पुनः संश्रयणे संश्रिते पात्रभोजने ।
दानं गवां पशूनां वा पिण्डानामप्सु मज्जनम् ॥१२-२७५-१४ (७६२८६)
अर्चिष्मन्तो बर्हिषदः क्रव्यादाः पितरस्तथा ।
मृतस्याप्यनुमन्यन्ते मन्त्रा मन्त्राश्च कारणम् ॥१२-२७५-१५ (७६२८७)
एवं क्रोशत्सु वेदेषु कुतो मोक्षोऽस्ति कस्यचित् ।
ऋणवन्तो यदा मर्त्याः पितृदेवद्विजातिषु ॥१२-२७५-१६ (७६२८८)
श्रिया विहीनैरलसैः पण्डितैश्च पलायितम् ।
वेदवादापरिज्ञानं सत्याभासमिवानृतम् ॥१२-२७५-१७ (७६२८९)
न वै पापैर्हियते कृष्यते वा
यो ब्राह्मणो यजते वेदशास्त्रैः ।
ऊर्ध्वं यजन्पशुभिः सार्धमेति
ततः पुनस्तर्कयते न कामान् ॥ १२-२७५-१८ (७६२९०)
न वेदानां परिभवान्न शाठ्येन न मायया ।
महत्प्राप्नोति पुरुषो ब्राह्मणो ब्रह्म विन्दति ॥१२-२७५-१९ (७६२९१)
कपिल उवाच।१२-२७५-२०क्ष् (६३२३)
दर्शश्च पूर्णमासश्च अग्निहोत्रं च धीमताम् ।
चातुर्मास्यानि चैवासंस्तेषु यज्ञः सनातनः ॥१२-२७५-२० (७६२९२)
अनारम्भाः सुधृतयः शुचयो ब्रह्मसंज्ञिताः ।
ब्राह्मणा एव ते देवांस्तर्पन्त्यमृतैरिव ॥१२-२७५-२१ (७६२९३)
सर्वभूतात्मभूतस्य सर्वभूतानि पश्यतः ।

देवाऽपि मार्गे मुह्यन्ति ह्यपदस्य पदैषिणः ॥१२-२७५-२२ (७६२९४)
चतुर्द्वारं पुरुष चर्तुर्मुखं
चतुर्मुखो नैनमुपैति निन्दा ।
बाहुभ्यां पद्भ्यामुदरादुपस्था
त्तेषां द्वारं द्वारपालो बुभूषेत् ॥ १२-२७५-२३ (७६२९५)
नाक्षैर्दीव्येन्नाददीतान्यवित्तं
न वाऽयोनीयस्य शृतं प्रगृह्णात् ।
क्रुद्धो न चैव प्रहरेत धीमां
स्तथास्य तत्पाणिपादं सुगुप्तम् ॥ १२-२७५-२४ (७६२९६)
नाक्रोशमृच्छेन्न वृथा वदेच्च
न पैशुनं जनवादं च कुर्यात् ।
सत्यव्रतो मितभाषोऽप्रमत्त
स्तथाऽस्य वाग्द्वारमथो सुगुप्तम् ॥ १२-२७५-२५ (७६२९७)
नानाशनः स्यान्न महाशनः स्या
न्न लोलुपः साधुभिरागतः स्यात् ।
यात्रार्थमाहारमिहाददीत
तथाऽस्य स्याज्जाठरद्वारगुप्तिः ॥ १२-२७५-२६ (७६२९८)
न वीरपत्नीं विहरेत नारीं
न चापि नारीमनृतावाह्वयीत ।
भार्याव्रतं ह्यात्मनि धारयीत
तथास्योपस्थद्वारगुप्तिर्भवेत् ॥ १२-२७५-२७ (७६२९९)
द्वाराणि यस्य सर्वाणि सुगुप्तानि मनीषिणः ।
उपस्थमुदरं पाणी वाक्चतुर्थी स वै द्विजः ॥१२-२७५-२८ (७६३००)
मोघान्यगुप्तद्वारस्य सर्वाण्येव भवन्त्युत ।
किं तस्य तपसा कार्यं किं यज्ञेन किमात्मना ॥१२-२७५-२९ (७६३०१)
अनुत्तरीयवसनमनुपस्तीर्णशायिनम् ।
बाहूपधानं शाम्यन्तं तं देवा ब्राह्मणं विदुः ॥१२-२७५-३० (७६३०२)
द्वन्द्वारामेषु सर्वेषु य एको रमते मुनिः ।
परेषामननुध्यायंस्तं देवा ब्राह्मणं विदुः ॥१२-२७५-३१ (७६३०३)
येन सर्वमिदं बुद्धं प्रकृतिर्विकृतिश्च या ।
गतिज्ञः सर्वभूतानां तं देवा ब्राह्मणं विदुः ॥१२-२७५-३२ (७६३०४)
अभयं सर्वभूतेभ्यः सर्वेषामभयं यतः ।
सर्वभूतात्मभूतो यस्तं देवा ब्राह्मणं विदुः ॥१२-२७५-३३ (७६३०५)
नान्तरेणानुजानाति वेदानां यत्क्रियाफलम् ।
अविज्ञाय च तत्सर्वमन्यद्रोचयते फलम् ॥१२-२७५-३४ (७६३०६)
स्वकर्मभिः संश्रितानां तपो घोरत्वमागमत् ।

तं सदाचारमाश्चर्यं पुराणं शाश्वतं ध्रुवम् ॥१२-२७५-३५ (७६३०७)
अशक्नुवन्तश्चरितुं किंचिद्धर्मेषु सूत्रितम् ।
निरापद्धर्म आचारो ह्यप्रमादो पराभवः ॥१२-२७५-३६ (७६३०८)
फलवन्ति च कर्माणि व्युष्टिमन्ति ध्रुवाणि च ।
विगुणानि च पश्यन्ति तथा नैकानि केन च ॥१२-२७५-३७ (७६३०९)
गुणाश्चात्र सुदुर्ज्ञेया ज्ञाताश्चात्र सुदुष्कराः ।
अनुष्ठिताश्चान्तवन्त इति त्वमनुपश्यसि ॥१२-२७५-३८ (७६३१०)
स्यूमरश्मिरुवाच।१२-२७५-३९क्ष् (६३२४)
यथा च वेदप्रामाण्यं त्यागश्च सफलो यथा ।
तौ पन्थानावुभौ व्यक्तौ भगवंस्तद्ब्रवीहि मे ॥१२-२७५-३९ (७६३११)
कपिल उवाच।१२-२७५-४०क्ष् (६३२५)
प्रत्यक्षमिह पश्यन्ति भवन्तः सत्पथे स्थिताः ।
प्रत्यक्षं तु किमत्रास्ति यद्भवन्त उपासते ॥१२-२७५-४० (७६३१२)
स्यूमरश्मिरुवाच।१२-२७५-४१क्ष् (६३२६)
स्यूमरश्मिरहं ब्रह्मञ्जिज्ञासार्थमिहागतः ।
श्रेयस्कामः प्रत्यवोचमार्जवान्न विवक्षया ॥१२-२७५-४१ (७६३१३)
इमं च संशयं घोरं भगवान्प्रब्रवीतु मे ।
प्रत्यक्षमिह पश्यन्तो भवन्तः सत्पथे स्थिताः ।
किमत्र प्रत्यक्षतमं भवन्तो यदुपासते ॥ १२-२७५-४२ (७६३१४)
अन्यत्र तर्कशास्त्रेभ्य आगमार्थं यथागमम् ।
आगमो वेदवादास्तु तर्कशास्त्राणि चागमः ॥१२-२७५-४३ (७६३१५)
यथाश्रममुपासीत आगमस्तत्र सिध्यति ।
सिद्धिः प्रत्यक्षरूपा च दृश्यत्यागमनिश्चयात् ॥१२-२७५-४४ (७६३१६)
नौर्नावीव निबद्धा हि स्रोतसा सनिबन्धना ।
ह्रियमाणा कथ विप्र कुबुद्धींस्तारयिष्यति ॥१२-२७५-४५ (७६३१७)
एतद्ब्रवीतु भगवानुपपन्नोऽस्म्यधीहि भो ।
नैव त्यागी न संतुष्टो नाशोको न निरामयः ।
नानिर्विवित्सो नावृत्तो नापवृत्तोऽस्ति कश्चन ॥ १२-२७५-४६ (७६३१८)
भवन्तोऽपि च हृष्यन्ति शोचन्ति च यथा वयम् ।
इन्द्रियार्थाश्च भवतां समानाः सर्वजन्तुषु ॥१२-२७५-४७ (७६३१९)
एवं चतुर्णां वर्णानामाश्रमाणां प्रवृत्तिषु ।
एकमालम्बमानानां निर्णये किं निरामयम् ।
गएतद्ब्रवीतु भगवानुपपन्नोस्म्यधीहि भो ॥' १२-२७५-४८ (७६३२०)
कपिल उवाच।१२-२७५-४९क्ष् (६३२७)
यद्यदाचरते शास्त्रमर्थ्यं सर्वप्रवृत्तिषु ।
यस्य यत्र ह्यनुष्ठानं तस्य तत्तु निरामयम् ॥१२-२७५-४९ (७६३२१)

सर्वं प्रापयति ज्ञानं ये ज्ञानं ह्यनुवर्तते ।
ज्ञानादपेत्य या वृत्तिः सा विनाशयति प्रजाः ॥१२-२७५-५० (७६३२२)
भवन्तो ज्ञानिनो नित्यं सर्वतश्च निरमयाः ।
ऐकात्म्यं नाम कश्चिद्धि कदाचिदभिपद्यते ॥१२-२७५-५१ (७६३२३)
शास्त्रं ह्यबुद्ध्वा तत्त्वेन केचिद्वादबलाज्जनाः ।
कामद्वेषाभिभूतत्वादहंकारवशं गताः ॥१२-२७५-५२ (७६३२४)
याथातथ्यमविज्ञाय शास्त्राणां शास्त्रदस्यवः ।
ब्रह्मस्तेना निरारम्भा अपक्वमनसोऽशिवाः ॥१२-२७५-५३ (७६३२५)
नैर्गुण्यमेव पश्यन्ति न गुणाननुयुञ्जते ।
तेषां तमः शरीराणां तम एव परायणम् ॥१२-२७५-५४ (७६३२६)
यो यथाप्रकृतिर्जन्तुः प्रकृतेः स्याद्वशानुगः ।
तस्य द्वेषश्च कामश्च क्रोधो दम्भोऽनृतं मदः ।
नित्यमेवानुवर्तन्ते गुणाः प्रकृतिसंभवाः ॥ १२-२७५-५५ (७६३२७)
ये तद्बुद्ध्वाऽनुपश्यन्तः संत्यजेयुः शुभाशुभम् ।
परां गतिमभीप्सन्तो यतयः संयमे रताः ॥१२-२७५-५६ (७६३२८)
स्यूमरश्मिरुवाच।१२-२७५-५७क्ष् (६३२८)
सर्वमेतत्त्वया ब्रह्मञ्शास्त्रतः परिकीर्तितम् ।
न ह्यविज्ञाय शास्त्रार्थं प्रवर्तन्ते प्रवृत्तयः ॥१२-२७५-५७ (७६३२९)
यः कश्चिन्न्याय्य आचारः सर्वं शास्त्रमिति श्रुतिः ।
यदन्याय्यमशास्त्रं तदित्येषा श्रूयते श्रुतिः ॥१२-२७५-५८ (७६३३०)
न प्रवृत्तिर्ऋते शास्त्रात्काचिदस्तीति निश्चयः ।
यदन्यद्वेदवादेभ्यस्तदशास्त्रमिति श्रुतिः ॥१२-२७५-५९ (७६३३१)
शास्त्रादपेतं पश्यन्ति बहवोऽत्यर्थमानिनः ।
शास्त्रदोषान्न पश्यन्ति इह चामुत्र चापरे ।
श्इन्द्रियार्थाश्च भवतां समानाः सर्वजन्तुषु ॥ १२-२७५-६० (७६३३२)
एवं चतुर्णां वर्णानामाश्रमाणां प्रवृत्तिषु ।
एकमालम्बमानानां निर्णये सर्वतो दिशम् ॥१२-२७५-६१ (७६३३३)
आनन्त्यं वदमानेन शक्तेनावर्जितात्मनाघ ।
अविज्ञानहतप्रज्ञा हीनप्रज्ञास्तमोवृताः ॥१२-२७५-६२ (७६३३४)
शक्यं त्वेकेन युक्तेन कृतकृत्येन सर्वशः ।
पिण्डमात्रं व्यपाश्रित्य चरितुं सर्वतो दिशम् ॥१२-२७५-६३ (७६३३५)
ग्नात्यन्तं वन्दमानेन शक्तेन विजितात्मना।'
वेदवादं व्यपाश्रित्य मोक्षोऽस्तीति प्रभापितुम् ।
अपेतन्यायशास्त्रेण सर्वलोकविगर्हिणा ॥ १२-२७५-६४ (७६३३६)
इदं तु दुष्करं कर्म कुटुम्बमभिसंश्रितम् ।
दानमध्ययनं यज्ञः प्रजासंतानमार्जवम् ॥१२-२७५-६५ (७६३३७)

यद्येतदेवं कृत्वाऽपि न विमोक्षोऽस्ति कस्यचित् ।
धिक्कर्तारं च कार्यं च श्रमश्चायं निरर्थकः ॥ १२-२७५-६६ (७६३३८)
नास्तिक्यमन्यथा च स्याद्वेदानां पृष्ठतः क्रिया ।
एतस्यानन्त्यमिच्छामि भगवञ्श्रोतुमञ्जसा ॥ १२-२७५-६७ (७६३३९)
तत्त्वं वदस्व मे ब्रह्मन्नुपसन्नोस्म्यधीहि भोः ।
यथा ते विदितो मोक्षस्तथेच्छाम्युपशिक्षितुम् ॥ ॥ १२-२७५-६८ (७६३४०)

इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि
पञ्चसप्तत्यधिकद्विशततमोऽध्यायः ॥ २७५.।
Mahabharata - Shanti Parva - Chapter Footnotes

१२-२७५-११ श्रमस्योपरमो दृष्ट इति ट थ । पाठः ॥
१२-२७५-१४ दानं पुनः संग्रहणं संश्रिता पात्रभोजनम् । इति
ट। थ। पाठः। दाहः पुनः संचयनं संस्थितः पात्रभोजनमिति
ध। पाठः ॥
१२-२७५-१९ ब्रह्म ब्रह्मणि विन्दतीति ट । थ। पाठः ॥
१२-२७५-२० तेषु धर्मः सनातन इति झ । पाठः ॥
१२-२७५-२२ सर्वज्ञानेन पश्यतः इति ट । पाठः ॥
१२-२७५-२४ नायोनिजस्येह स्रुवं प्रगृह्णादिति ट थ
। पाठः। नायोनिजस्यैव सुतां प्रगृह्णादिति ध। पाठः ॥
१२-२७५-२६ साधुरनागसः स्यादिति ट । थ। पाठः ॥
१२-२७५-२७ धैर्यव्रतं ह्यात्मनीति ध । पाठः ॥
१२-२७५-३९ यथा च देवब्राह्मण्यमत्यागश्च कलौ यथेति थ । पाठः ॥
१२-२७५-४४ यथागममुपासीतेति थ । पाठः यथाकाममुपासीतेति ध।पाठः ॥

---

शन्तिपर्व-अध्यय२७६
॥ श्रीः ॥
१२.२७६. अध्यायः २७६

Mahabharata - Shanti Parva - Chapter Topics
भीष्मेण युधिष्ठिरंप्रति गोकपिलसंवादानुवादः ॥ १.।
Mahabharata - Shanti Parva - Chapter Text

१२-२७६-० (७६३४१)
कपिल उवाच। १२-२७६-०क्ष् (६३२९)
वेदाः प्रमाणं लोकानां न वेदाः पृष्ठतः कृताः ।
द्वे ब्रह्मणी वेदितव्ये शब्दब्रह्म परं च यत् ॥ १२-२७६-१ (७६३४२)

शब्दब्रह्मणि निष्णातः परं ब्रह्माधिगच्छति ।
शरीरमेतत्कुरुते यद्वेदे कुरुते तनुम् ॥१२-२७६-२ (७६३४३)
कृतशुद्धशरीरो हि पात्रं भवति ब्राह्मणः ।
आनन्त्यमनुचिन्त्येदं कर्मणां तद्ब्रबीमि ते ॥१२-२७६-३ (७६३४४)
निरागममनैतिह्यमत्यक्षं लोकसाक्षिकम् ।
धर्म इत्येव ये यज्ञान्वितन्वन्ति निराशिषः ॥१२-२७६-४ (७६३४५)
उत्पन्नत्यागिनो लुब्धाः कृपासूयाविवर्जिताः ।
धनिनामेष वै पन्थास्तीर्थेषु प्रतिपादनम् ॥१२-२७६-५ (७६३४६)
अनाश्रिताः पापकृत्याः कदाचित्कर्मयोगिनः ।
मनः संकल्पसंसिद्धा विशुद्धज्ञाननिश्चयाः ॥१२-२७६-६ (७६३४७)
अक्रुध्यन्तोऽनसूयन्तो निरहंकारमत्सराः ।
ज्ञाननिष्ठास्त्रिशुक्लाश्च सर्वभूतहिते रताः ॥१२-२७६-७ (७६३४८)
आसन्गृहस्था भूयिष्ठा अपक्रान्ताः स्वकर्मसु ।
राजानश्च तथा युक्ता ब्राह्मणाश्च यथाविधि ॥१२-२७६-८ (७६३४९)
समा ह्यार्जवसंपन्नाः संतुष्टा ज्ञाननिश्चयाः ।
प्रत्यक्षधर्माः शुचयः श्रद्दधानाः परावरे ॥१२-२७६-९ (७६३५०)
पुरस्ताद्भावितात्मानो यथावच्चरितव्रताः ।
चरन्ति धर्मं कृच्छ्रेऽपि दुर्गे चैवापि संहताः ॥१२-२७६-१० (७६३५१)
संहत्य धर्मं चरतां पुराऽऽसीत्सुखमेव तत् ।
तेषां नासीद्विधातव्यं प्रायश्चित्तं कथंचन ॥१२-२७६-११ (७६३५२)
सत्यं हि धर्ममास्थाय दुराधर्षतमा मताः ।
न मात्रामनुरुध्यन्ते न धर्मच्छलमन्ततः ॥१२-२७६-१२ (७६३५३)
य एव प्रथमः कल्पस्तमेवात्र चरन्महान् ॥ १२-२७६-१३ (७६३५४)
अस्यां स्थितौ स्थितानां हि प्रायश्चित्तं न विद्यते ।
यदा तु दुर्बलात्मानः प्रायश्चित्तं तदा भवेत् ॥१२-२७६-१४ (७६३५५)
एत एवंविधाः प्राहुः पुराणा यज्ञवाहनाः ।
त्रैविद्यवृद्धाः शुचयो वृत्तवन्तो यशस्विनः ॥१२-२७६-१५ (७६३५६)
यजन्तोऽहरहर्यज्ञैर्निराशीर्बन्धना बुधाः ।
तेषा यज्ञाश्च वेदाश्च कर्माणि च यथागमम् ॥१२-२७६-१६ (७६३५७)
आगमाश्च यथाकामं संकल्पाश्च यथाव्रतम् ।
अपेतकामक्रोधानां दुश्चराचारकर्मणाम् ॥१२-२७६-१७ (७६३५८)
स्वकर्मभिः शंसितानां प्रकृत्या शंसितात्मनाम् ।
ऋजूनां शमनित्यानां स्वेषु कर्मसु वर्तताम् ॥१२-२७६-१८ (७६३५९)
सर्वमानन्त्यमेवासीदिति नः शाश्वताश्रुतिः ।
तेषामदीनसत्वानां दुश्चराचारकर्मणाम् ॥१२-२७६-१९ (७६३६०)
स्वकर्मभिः संसितानां तपो घोरत्वमागतम् ।

सं सदाचारमाश्चर्यं पुराणं शाश्वतं ध्रुवम् ॥ १२-२७६-२० (७६३६१)
अशक्नुवद्भिश्चरितुं किंचिद्धर्मेषु सूचितम् ।
निरापद्धर्म आचारो ह्यप्रमादोऽपराभवः ॥ १२-२७६-२१ (७६३६२)
सर्ववर्णेषु यत्तेषु नासीत्कश्चिद्व्यतिक्रमः ।
धर्ममेकं चतुष्पादमाश्रितास्ते नरा विभो ॥ १२-२७६-२२ (७६३६३)
तं सन्तो विधिवत्प्राप्य गच्छन्ति परमां गतिम् ।
गृहेभ्य एव निष्क्रम्य वनमन्ये समाश्रिताः ॥ १२-२७६-२३ (७६३६४)
गृहमेवाभिसंश्रित्य ततोऽन्ये ब्रह्मचारिणः ।
ग्व्यस्तमेकं चतुर्धा तु ब्राह्मणा आश्रमं विदुः ॥ १२-२७६-२४ (७६३६५)
सर्वे सर्वत्र तिष्ठन्तो गच्छन्ति परमां गतिम् ।
एव एवंविधाः प्राहुः पुराणा ब्रह्मचारिणः ॥' १२-२७६-२५ (७६३६६)
त एते दिवि दृश्यन्ते ज्योतिर्भूता द्विजातयः ।
नक्षत्राणीव धिष्ण्येषु बहवस्तारकागणाः ।
आनन्त्यमुपसंप्राप्ताः संतोषादिति वैदिकम् ॥ १२-२७६-२६ (७६३६७)
यद्यागच्छन्ति संसारं पुनर्योनिषु तादृशाः ।
न लिप्यन्ते पारकृत्यैः कदाचित्कर्मयोनितः ॥ १२-२७६-२७ (७६३६८)
एवमेव ब्रह्मचारी शुश्रूषुर्घोरनिश्चयः ।
एवंयुक्तो ब्राह्मणः स्यादन्यो ब्राह्मणको भवेत् ॥ १२-२७६-२८ (७६३६९)
कर्मैव पुरुषस्याह शुभं वा यदि वाऽशुभम् ।
एवं पक्वकषायाणामानन्त्येन श्रुतेन च ॥ १२-२७६-२९ (७६३७०)
सर्वमानन्त्यमेवासीदिति नः शाश्वती श्रुतिः ।
तेषामपेततृष्णानां निर्णिक्तानां शुभात्मनाम् ॥ १२-२७६-३० (७६३७१)
चतुर्थ औपनिषदो धर्मः साधारणः स्मृतः ।
संसिद्धैः सेव्यते नित्यं ब्राह्मणैर्नियतात्मभिः ॥ १२-२७६-३१ (७६३७२)
संतोषमूलस्त्यागात्मा ज्ञानाधिष्ठानमुच्यते ।
अपवर्गमतिर्नित्यो यतिधर्मः सनातनः ॥ १२-२७६-३२ (७६३७३)
साधारणः केवलो वा यथाबलमुपास्यते ।
गच्छन्ते बलिनः क्षेमं दुर्बलोऽत्रावसीदति ।
ब्राह्मणः पदमन्विच्छन्संसारान्मुच्यते शुचिः ॥ १२-२७६-३३ (७६३७४)
स्यूमरश्मिरुवाच। १२-२७६-३४क्ष् (६३३०)
ये भुञ्जते ये ददते यजन्तेऽधीयते च ये ।
मात्राभिर्धर्मलुब्धाभिर्ये वा त्यागं समाश्रिताः ॥ १२-२७६-३४ (७६३७५)
एतेषां प्रेत्यभावे तु कतमः स्वर्गजित्तमः ।
एतदाचक्ष्व मे ब्रह्मन्याथातथ्येन पृच्छतः ॥ १२-२७६-३५ (७६३७६)
कपिल उवाच। १२-२७६-३६क्ष् (६३३१)
परिग्रहाः शुभाः सर्वे गुणतोऽभ्युदयाश्च ते ।

न तु त्यागसुखं प्राप्ता एतत्त्वमपि पश्यसि ॥१२-२७६-३६ (७६३७७)
स्यूमरश्मिरुवाच।१२-२७६-३७क्ष् (६३३२)
भवन्तो ज्ञाननिष्ठा वै गृहस्थाः कर्मनिश्चयाः ।
आश्रमाणां च सर्वेषां निष्ठायामैक्यमुच्यते ॥१२-२७६-३७ (७६३७८)
एकत्वेन पृथक्त्वेन विशेषो नान्य उच्यते ।
तद्यथावद्यथान्यायं भगवान्प्रब्रवीतु मे ॥१२-२७६-३८ (७६३७९)
कपिल उवाच।१२-२७६-३९क्ष् (६३३३)
शरीरपक्तिः कर्माणि ज्ञानं तु परमा गतिः ।
पक्वे कषायविज्ञानं यथा ज्ञानं च तिष्ठति ॥१२-२७६-३९ (७६३८०)
आनृशंस्यं क्षमा शान्तिरहिंसा सत्यमार्जवम् ।
अद्रोहोऽनभिमानश्च ह्रीस्तितिक्षा शमस्तथा ॥१२-२७६-४० (७६३८१)
पन्थानो ब्रह्मणस्त्वेत एतैः प्राप्नोति यत्परम् ।
तद्विद्वाननुबुद्ध्येत मनसा कर्मनिश्चयम् ॥१२-२७६-४१ (७६३८२)
यां विप्राः सर्वतः शान्ता विशुद्धा ज्ञाननिश्चयाः ।
गतिं गच्छन्ति संतुष्टास्तामाहुः परमां गतिम् ॥१२-२७६-४२ (७६३८३)
वेदांश्च वेदितव्यं च विदित्वा च यथास्थितिम् ।
एवं वेदविदित्याहुरतोऽन्यो वातरेचकः ॥१२-२७६-४३ (७६३८४)
सर्वं विदुर्वेदविदो वेदे सर्वं प्रतिष्ठितम् ।
वेदे हि निष्ठा सर्वस्य यद्यदस्ति च नास्ति च ॥१२-२७६-४४ (७६३८५)
एषैव निष्ठा सर्वत्र यत्तदस्ति च नास्ति च ।
एतदन्तं च मध्यं च सच्चाऽसच्च विजानतः ॥१२-२७६-४५ (७६३८६)
समाप्तं त्याग इत्येव शम इत्येव निश्चितम् ।
संतोष इत्यनुगतमपवर्गे प्रतिष्ठितम् ॥१२-२७६-४६ (७६३८७)
ऋतं सत्यं विदितं वेदितव्यं
सर्वस्यात्मा स्थावरं जङ्गमं च ।
सर्वं सुखं यच्छिवमुत्तरं च
ब्रह्माव्यक्तं प्रभवश्चाव्ययं च ॥ १२-२७६-४७ (७६३८८)
तेजः क्षमा शान्तिरनामयं शुभं
तथाविधं व्योम सनातनं ध्रुवम् ।
एतैः शब्दैर्गम्यते बुद्धिनेत्रै
स्तस्मै नमो ब्रह्मणे ब्राह्मणाय ॥ ॥ १२-२७६-४८ (७६३८९)

इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि
षट्सप्तत्यधिकद्विशततमोऽध्यायः ॥ २७६.।
Mahabharata - Shanti Parva - Chapter Footnotes

१२-२७६-५ धनानामेष वै पन्था इति झ ट । थ। पाठः ॥
१२-२७६-१४ दुर्बलात्मन उत्पन्नं प्रायश्चित्तमिति श्रुतिः इति झ । पाठः ॥
१२-२७६-३९ कषायपङ्क्ति कर्माणीति ट । थ। पाठः ॥
१२-२७६-४१ मनसा धर्मनिश्चयमिति ध । पाठः ॥
१२-२७६-४३ रतोन्यो वेदवादक इति ट । थ। पाठः। वेदपातक इति ध। पाठः ॥
१२-२७६-४६ इत्येव सर्ववेदेषु निष्ठितमिति झ । पाठः ॥

---

शन्तिपर्व-अध्यय२७७
॥ श्रीः ॥
१२.२७७. अध्यायः २७७

Mahabharata - Shanti Parva - Chapter Topics
भीष्मेण युधिष्ठिरंप्रति धर्मार्थकामेषु धर्मस्यैव ज्यायस्त्वप्रतिपादककुण्डधारचरित्रप्रतिपादनम् ॥ १.।
Mahabharata - Shanti Parva - Chapter Text

१२-२७७-० (७६३९०)
युधिष्ठिर उवाच। १२-२७७-०क्ष् (६३३४)
धर्ममर्थं च कामं च वेदाः शंसन्ति भारत ।
कस्य लाभो विशिष्टोऽत्र तन्मे ब्रूहि पितामह ॥ १२-२७७-१ (७६३९१)
भीष्म उवाच। १२-२७७-२क्ष् (६३३५)
अत्र ते वर्तयिष्यामि इतिहासं पुरातनम् ।
कुण्डधारेण यत्प्रीत्या भक्तायोपकृतं पुरा ॥ १२-२७७-२ (७६३९२)
अधनो ब्राह्मणः कश्चित्कामाद्धनमवैक्षत ।
यज्ञार्थं सततोऽर्थार्थी तपोऽतप्यत दारुणम् ॥ १२-२७७-३ (७६३९३)
स निश्चयमथो कृत्वा पूजयामास देवताः ।
भक्त्या न चैवाध्यगच्छद्धनं संपूज्य देवताः ॥ १२-२७७-४ (७६३९४)
ततश्चिन्तामनुप्राप्तः कतमद्दैवतं तु तत् ।
यन्मे द्रुतं प्रसीदेत मानुषैरजडीकृतम् ॥ १२-२७७-५ (७६३९५)
सोऽथ सौम्येन मनसा देवानुचरमन्तिके ।
प्रत्यपश्यज्जलधरं कुण्डधारमवस्थितम् ॥ १२-२७७-६ (७६३९६)
दृष्ट्वैव तं महाबाहुं तस्य भक्तिरजायत ।
अयं मे धास्यति श्रेयो वपुरेतद्धि तादृशम् ॥ १२-२७७-७ (७६३९७)
संनिकृष्टश्च देवस्य न चान्यैर्मानुषैर्वृतः ।
एष मे दास्यति धनं प्रभूतं शीघ्रमेव च ॥ १२-२७७-८ (७६३९८)
ततो धूपैश्च गन्धैश्च माल्यैरुच्चावचैरपि ।

बलिभिर्विविधाभिश्च पूजयामास तं द्विजः ॥१२-२७७-९ (७६३९९)
ततस्त्वल्पेन कालेन तुष्टो जलधरस्तदा ।
तस्योपकारनियतामिमां वाचमुवाच ह ॥१२-२७७-१० (७६४००)
ब्रह्मघ्ने च सुरापे च चोरे भग्नव्रते तथा ।
निष्कृतिर्विहिता सद्भिः कृतघ्ने नास्ति निष्कृतिः ॥१२-२७७-११ (७६४०१)
आशायास्तनयोऽधर्मः क्रोधोऽसूयासुतः स्मृतः ।
लोभः पुत्रो निकृत्यास्तु कृतघ्नो नार्हति प्रजां ॥१२-२७७-१२ (७६४०२)
ततः स ब्राह्मणः स्वप्ने कुण्डधारस्य तेजसा ।
अपश्यत्सर्वभूतानि कुशेषु शयितस्तदा ॥१२-२७७-१३ (७६४०३)
शमेन तपसा चैव भक्त्या च निरुपस्कृतः ।
शुद्धात्मा ब्राह्मणो रात्रौ निदर्शनमपश्यत ॥१२-२७७-१४ (७६४०४)
माणिभद्रं स तत्रस्थं देवतानां महाद्युतिम् ।
अपश्यत महात्मानं व्यादिशन्तं युधिष्ठिर ॥१२-२७७-१५ (७६४०५)
तत्र देवाः प्रयच्छन्ति राज्यानि च धनानि च ।
शुभैः कर्मभिरारब्धाः प्रच्छिदन्त्यशुभेषु च ॥१२-२७७-१६ (७६४०६)
पश्यतामथ यक्षाणं कुण्डधारो महाद्युतिः ।
निष्पत्य पतितो भूमौ देवानां भरतर्षभ ॥१२-२७७-१७ (७६४०७)
ततस्तु देववचनान्मणिभद्रो महामनाः ।
उवाच पतितं भूमौ कुण्डधार किमिच्छसि ॥१२-२७७-१८ (७६४०८)
कुण्डधार उवाच।१२-२७७-१९क्ष् (६३३६)
यदि प्रसन्ना देवा मे भक्तोऽयं ब्राह्मणो मम ।
अस्यानुग्रहमिच्छामि कृतं किंचित्सुखोदयम् ॥१२-२७७-१९ (७६४०९)
ततस्तं माणिभद्रस्तु पुनर्वचनमब्रवीत्
देवानामेव वचनात्कुण्डधारं माहद्युतिम् ॥ १२-२७७-२० (७६४१०)
उत्तिष्ठोत्तिष्ठ भद्रं ते कृतकृत्यः सुखी भव ।
धनार्थी यदि विप्रोऽयं धनमस्मै प्रदीयताम् ॥१२-२७७-२१ (७६४११)
यावद्धनं प्रार्थयते ब्राह्मणोऽयं सथा तव ।
देवानां शासनात्तावदसङ्ख्येयं ददाम्यहम् ॥१२-२७७-२२ (७६४१२)
विचार्य कुण्डधारस्तु मानुष्यं चलमध्रुवम् ।
तपसो मतिमाधत्त ब्राह्मणस्य यशस्विनः ॥१२-२७७-२३ (७६४१३)
कुण्डधार उवाच।१२-२७७-२४क्ष् (६३३७)
नाहं धनानि याचामि ब्राह्मणाय धनप्रद ।
अन्यमेवाहमिच्छामि भक्तायानुग्रहं कृतम् ॥१२-२७७-२४ (७६४१४)
पृथिवीं रत्नपूर्णां वा महद्वा रत्नसंचयम् ।
भक्ताय नाहमिच्छामि भवेदेष तु धार्मिकः ॥१२-२७७-२५ (७६४१५)
धर्मेऽस्य रमतां बुद्धिर्धर्मं चैवोपजीवतु ।

धर्मप्रधानो भवतु ममैषोऽनुग्रहो मतः ॥ १२-२७७-२६ (७६४१६)
माणिभद्र उवाच। १२-२७७-२७क्ष् (६३३८)
सदा धर्मफलं राज्यं सुखानि विविधानि च ।
फलान्येवायमश्नातु कायक्लेशविवर्जितः ॥ १२-२७७-२७ (७६४१७)
भीष्म उवाच। १२-२७७-२८क्ष् (६३३९)
ततस्तदेव बहुशः कुण्डधारो महायशाः ।
अभ्यासमकरोद्धर्मे ततस्तुष्टास्तु देवताः ॥ १२-२७७-२८ (७६४१८)
माणिभद्र उवाच। १२-२७७-२९क्ष् (६३४०)
प्रीतास्ते देवताः सर्वा द्विजस्यास्य तथैव च ।
भविष्यत्येष धर्मात्मा धर्मे चाधरस्यते मतिः ॥ १२-२७७-२९ (७६४१९)
भीष्म उवाच। १२-२८८-३०क्ष् (६३४१)
ततः प्रीतो जलधरः कृतकार्यो युधिष्ठिर ।
ईप्सितं मनसो लब्ध्वा वरमन्यैः सुदुर्लभम् ॥ १२-२७७-३० (७६४२०)
ततोऽपश्यत चीराणि सूक्ष्माणि द्विजसत्तमः ।
पार्श्वतोऽभ्याशतो न्यस्तान्यथ निर्वेदमागतः ॥ १२-२७७-३१ (७६४२१)
ब्राह्मण उवाच। १२-२७७-३२क्ष् (६३४२)
अयं न सुकृतं वेत्ति को न्वन्यो वेत्स्यते कृतम् ।
गच्छामि वनमेवाहं परं धर्मेण जीवितुम् ॥ १२-२७७-३२ (७६४२२)
भीष्म उवाच। १२-२७७-३३क्ष् (६३४३)
निर्वेदाद्देवतानां च प्रसादात्स द्विजोत्तमः ।
वनं प्रविश्य सुमहत्तप आरब्धवांस्तदा ॥ १२-२७७-३३ (७६४२३)
देवतातिथिशेषेण फलमूलाशनो द्विजः ।
धर्मे चास्य महाराज दृढा बुद्धिरजायत ॥ १२-२७७-३४ (७६४२४)
त्यक्त्वा मूलफलं सर्वं पर्णाहारोऽभवद्द्विजः ।
पर्णं त्यक्त्वा जलाहारः पुनरासीद्द्विजस्तदा ॥ १२-२७७-३५ (७६४२५)
वायुभक्षस्ततः पश्चाद्बहून्वर्षगणानभूत् ।
न चास्य क्षीयते प्राणस्तदद्भुतमिवाभवत् ॥ १२-२७७-३६ (७६४२६)
धर्मे च श्रद्दधानस्य तपस्युग्रे च वर्ततः ।
कालेन महता तस्य दिव्या दृष्टिरजायत ॥ १२-२७७-३७ (७६४२७)
तस्य बुद्धिः प्रादुरासीद्यदि दद्यामहं धनम् ।
तुष्टः कस्यचिदेवेह मिथ्या वाङ्न भवेन्मम ॥ १२-२७७-३८ (७६४२८)
ततः प्रहृष्टवदनो भूय आरब्धवांस्तपः ।
भूयश्चाचिन्तयत्सिद्धो यत्परं सोऽभिमन्यते ॥ १२-२७७-३९ (७६४२९)
यदि दद्यामहं राज्यं तुष्टो वै यस्य कस्यचित् ।
स भवेदचिराद्राजा न मिथ्या वाग्भवेन्मम ॥ १२-२७७-४० (७६४३०)
तस्य साक्षात्कुण्डधारो दर्शयामास भारत ।

ब्राह्मणस्य तपोयोगात्सौहृदेनाभिचोदितः ॥ १२-२७७-४१ (७६४३१)
समागम्य स तेनाथ पूजां चक्रे यथाविधि ।
ब्राह्मणः कुण्डधारस्य विस्मितश्चाभवन्नृप ॥ १२-२७७-४२ (७६४३२)
ततोऽब्रवीत्कुण्डधारो दिव्यं ते चक्षुरुत्तमम् ।
पश्य राज्ञां गतिं विप्र लोकांश्चैव तु चक्षुषा ॥ १२-२७७-४३ (७६४३३)
ततो राजसहस्राणि मग्नानि निरये तदा ।
दूरादपश्यद्विप्रः स दिव्ययुक्तेन चक्षुषा ॥ १२-२७७-४४ (७६४३४)
कुण्डधार उवाच। १२-२७७-४५क्ष् (६३४४)
मां पूजयित्वा भावेन यदि त्वं दुःखमाप्नुयाः ।
कृतं मया भवेत्किं ते कश्च तेऽनुग्रहो भवेत् ॥ १२-२७७-४५ (७६४३५)
पश्यपश्य च भूयस्त्वं कामानिच्छेत्कथं नरः ।
स्वर्गद्वारं हि संरुद्धं मानुषेषु विशेषतः ॥ १२-२७७-४६ (७६४३६)
भीष्म उवाच। १२-२७७-४७क्ष् (६३४५)
ततोऽपश्यत्स कामं च क्रोधं लोभं भयं मदम् ।
निद्रां तन्द्रीं तथाऽऽलस्यमावृत्त्य पुरुषान्स्थितान् ॥' १२-२७७-४७ (७६४३७)
कुण्डधार उवाच। १२-२७७-४८क्ष् (६३४६)
एतैर्लोकाः सुसंरुद्धा देवानां मानुषाद्भयम् ।
तथैव देववचनाद्विघ्नं कुर्वन्ति सर्वशः ॥ १२-२७७-४८ (७६४३८)
न देवैरननुज्ञातः कश्चिद्भवति धार्मिकः ।
एष शक्तोस्मि तपसा दातुं राज्यं धनानि च ॥ १२-२७७-४९ (७६४३९)
भीष्म उवाच। १२-२७७-५०क्ष् (६३४७)
ततः पपात शिरसा ब्राह्मणस्तोयधारिणे ।
उवाच चैनं धर्मात्मा महान्मेऽनुग्रहः कृतः ॥ १२-२७७-५० (७६४४०)
कामलोभानुबन्धेन पुरा ते यदसूयितम् ।
मया स्नेहमविज्ञाय तत्र मे क्षन्तुमर्हसि ॥ १२-२७७-५१ (७६४४१)
क्षान्तमेव मयेत्युक्त्वा कुण्डधारो द्विजर्षभम् ।
संपरिष्वज्य बाहुभ्यां तत्रैवान्तरधीयत ॥ १२-२७७-५२ (७६४४२)
ततः सर्वांस्तदा लोकान्ब्राह्मणोऽनुचचार ह ।
कुण्डधारप्रसादेन तपसा सिद्धिमागतः ॥ १२-२७७-५३ (७६४४३)
विहायसा च गमनं तथा संकल्पितार्थता ।
धर्माच्छक्त्या तथा योगाद्या चैव परमा गतिः ॥ १२-२७७-५४ (७६४४४)
देवता ब्राह्मणाः सन्तो यक्षा मानुषचारणाः ।
धार्मिकान्पूजयन्तीह न धनाढ्यान्न कामिनः ॥ १२-२७७-५५ (७६४४५)
सुप्रसन्ना हि ते देवा यत्ते धर्मे रता मतिः ।
धने सुखकला काचिद्धर्मे तु परमं सुखम् ॥ ॥ १२-२७७-५६ (७६४४६)

इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि
सप्तसप्तत्यधिकद्विशततमोऽध्यायः ॥ २७७.।
Mahabharata - Shanti Parva - Chapter Footnotes

१२-२७७-६ जलधरं मेघम् ।कुण्डधारं नामतः ॥
१२-२७७-७ धास्यति विघास्यति ।तस्य बुद्धिरजायतेति
ट।थ।पाठः।दास्यति श्रेय इति ट।थ।ध।पाठः ॥
१२-२७७-१० इमां गाधामगायतेति ध ।पाठः ॥
१२-२७७-१४ निरुपस्कृतो भोगवर्जितः ॥
१२-२७७-१५ व्यादिशन्तं देवाज्ञया याचकेभ्यः फलानि समर्पयन्तम् ॥
१२-२७७-१६ अशुभेषु कर्मसूपस्थितेषु प्राग्दत्तमपि राज्यादिकं
प्रच्छिन्दन्ति हरन्ति ॥
१२-२७७-१७ भूमौ पतितो ब्राह्मणहितार्थी ।अग्रतः पतितो भूमाविति
ध।पाठः ॥
१२-२७७-१८ कुण्डधार किमिष्यत इति झ ।ध।पाठः ॥

---

शन्तिपर्व-अध्यय२७८
॥ श्रीः ॥
१२.२७८. अध्यायः २७८

Mahabharata - Shanti Parva - Chapter Topics
भीष्मेण युधिष्ठिरंप्रति हिंसाहेतुतया
यज्ञस्याप्यप्राशस्त्यप्रतिपादकनारदवचनानुवादः ॥१.।
Mahabharata - Shanti Parva - Chapter Text

१२-२७८-० (७६४४७)
युधिष्ठिर उवाच।१२-२७८-०क्ष् (६३४८)
बहूनां यज्ञतपसामेकार्थानां पितामह ।
धर्मार्थं न सुखार्थार्थं कथं यज्ञः समाहितः ॥१२-२७८-१ (७६४४८)
भीष्म उवाच।१२-२७८-२क्ष् (६३४९)
अत्र ते वर्तयिष्यामि नारदेनानुकीर्तितम् ।
उञ्छवृत्तेः पुरावृत्तं यज्ञार्थे ब्राह्मणस्य च ॥१२-२७८-२ (७६४४९)
नारद उवाच।१२-२७८-३क्ष् (६३५०)
राष्ट्रे धर्मोत्तरे श्रेष्ठे विदर्भेष्वभवद्द्विजः ।
उञ्छवृत्तिर्ऋषिः कश्चिद्यज्ञं यष्टुं समादधे ॥१२-२७८-३ (७६४५०)
श्यामाकमशनं तत्र सूर्यपर्णी सुवर्चला ।
तिक्तं च विरसं शाकं तपसा स्वादुतां गतम् ॥१२-२७८-४ (७६४५१)

उपगम्य वने पृथ्वीं सर्वभूताविहिंसया ।
अपि मूलफलैरिष्टो यज्ञः स्वर्ग्यः परंतप ॥ १२-२७८-५ (७६४५२)
तस्य भार्या व्रतकृशा शुचिः पुष्करमालिनी ।
यज्ञपत्नी समानीता सत्येनानुविधीयते ॥ १२-२७८-६ (७६४५३)
सा तु शापपरित्रस्ता तत्स्वभावानुर्तिनी ।
मायूरजीर्णपर्णानां वस्त्रं तस्याश्च वर्णितम् ॥ १२-२७८-७ (७६४५४)
अकामया कृतस्तत्र यज्ञो होत्रनुमार्गतः ।
शुकस्य पुनराजातिरवध्यानादधर्मवत् ॥ १२-२७८-८ (७६४५५)
तस्मिन्वने समीपस्थो मृगोऽभूत्सहचारिकः ।
वचोभिरब्रवीत्सत्यं त्वयेदं दुष्कृतं कृतम् ॥ १२-२७८-९ (७६४५६)
यदि मन्त्राङ्गहीनोऽयं यज्ञो भवति वैकृतः ।
मा भोःप्रक्षिप होत्रे त्वं गच्छ स्वर्गमतन्द्रितः ॥ १२-२७८-१० (७६४५७)
ततस्तु यज्ञे सावित्री साक्षात्तं संन्यमन्त्रयत् ।
निमन्त्रयन्ती प्रत्युक्ता न हन्यां सहवासिनम् ॥ १२-२७८-११ (७६४५८)
एवमुक्त्वा निवृत्ता सा प्रवृत्ता यज्ञपावकात् ।
किंनु दुश्चरितं यज्ञे दिदृक्षुः सा रसातलम् ॥ १२-२७८-१२ (७६४५९)
स तु बद्धाञ्जलिं सत्यमयाचद्धरिणः पुनः ।
सत्येन स परिष्वज्य संदिष्टो गम्यतामिति ॥ १२-२७८-१३ (७६४६०)
ततः स हरिणो गत्वा पदान्यष्टौ न्यवर्तत ।
साधु हिंसय मां सत्य हतो यास्यामि सद्गतिम् ॥ १२-२७८-१४ (७६४६१)
पश्य ह्यप्सरसो दिव्या मया दत्तेन चक्षुषा ।
विमानानि विचित्राणि गन्धर्वाणां महात्मनाम् ॥ १२-२७८-१५ (७६४६२)
ततः स सुचिरं दृष्ट्वा स्पृहालग्नेन चक्षुषा ।
मृगमालोक्य हिंसायां स्वर्गवासं समर्थयत् ॥ १२-२७८-१६ (७६४६३)
स तु धर्मो मृगो भूत्वा बहुवर्षोषितो वने ।
तस्य निष्कृतिमाधत्त न त्वसौ यज्ञसंविधिः ॥ १२-२७८-१७ (७६४६४)
तस्य तेनानुभावेन मृगहिंसात्मनस्तदा ।
तपो महत्समुच्छिन्नं तस्माद्धिंसा न यज्ञिया ॥ १२-२७८-१८ (७६४६५)
ततस्तं भगवान्धर्मो यज्ञं याजयत स्वयम् ।
समाधानं च भार्याया लेभे स तपसा परम् ॥ १२-२७८-१९ (७६४६६)
अहिंसा परो धर्मो हिंसाधर्मस्तथा हितः ।
सत्यं तेऽहं प्रवक्ष्यामि नो धर्मः सत्यवादिनाम् ॥ ॥ १२-२७८-२० (७६४६७)

इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि
अष्टसप्तत्यधिकद्विशततमोऽध्यायः ॥ २७८.।

Mahabharata - Shanti Parva - Chapter Footnotes

१२-२७८-३ कश्चित्स च यज्ञं समादध इति ट । थ। पाठः ॥
१२-२७८-४ श्यामाकमशनमदनीय । सूर्यपर्णी सुवर्चलेति शाकविशेषौ। त्रयमेतद्वन्यं यज्ञियद्रव्यम्। सूर्यपत्री सुवर्चलेति ट। थ। ध। पाठः ॥
१२-२७८-६ पुष्करमालिनी नामतः । सत्ये सत्यसंज्ञे भर्तरि नानुविधीयते हिंसा यज्ञमश्रेयस्त्वेन मन्यमाना अनुविधानमानुकूल्यं न करोति ॥
१२-२७८-७ तथापि शापाद्भीता सती भर्तुः स्वभावमनुरुध्यास्ते इत्यर्थः । मयूरपञ्छैः सन्निवेशविशेषेण गुम्फितैस्तस्या वस्त्रं वर्णितं विस्तारितम् ॥
१२-२७८-८ शुक्रस्य पुनराज्ञाभिः पर्णादो नाम धर्मविदिति झ । पाठः ॥
१२-२७८-९ सहचारिको यजमानस्य सत्यसंज्ञस्य प्रतिवेशी स मृगोऽभून्मृगो भूत्वा च सत्यं मुनिमब्रवीत् । दुष्कृतमिति। सतिसामर्थ्ये मन्त्राङ्गहीनं यज्ञं कुर्वतां दुष्कृतं भवतीत्यर्थः ॥
१२-२७८-१० ननु दरिद्रेण मयानुकल्पेनैव श्यामाकचरुणा पशुकार्यं क्रियत इत्याशङ्क्याह यदीति । होत्रे हूयतेऽस्मिन्निति व्युत्पत्त्या अग्नौ। मां पर्णादं मृगभूतम् ॥
१२-२७८-११ सावित्री सवितृमण्डलाधिष्ठात्री देवता प्रत्यक्षमेत्य संन्यमन्त्रयत् मदर्तेऽयं पशुरग्नौ होतव्य इत्युक्तवती । प्रत्युक्ता प्रत्याख्याता। तत्र हेतुः न हन्यामिति ॥
१२-२७८-१२ रसातलं दिदृक्षुः प्रवृत्ता तिरोभूदित्यर्थः ॥
१२-२७८-१३ सत्यं सत्यसंज्ञम् । अयाचत मामग्नौ प्रक्षिपेति प्रार्थितवान्। ततो हिंसायां दोषं पश्यता संदिष्ट आज्ञप्तः ॥
१२-२७८-१६ हिंसायां कृतायामेव स्वर्गवासं प्राप्नोतीति समर्थयत् समर्थितवानिति संबन्धः ॥
१२-२७८-१७ केनचिन्निमित्तेन मृगतां प्राप्तो धर्मस्तस्य निमित्तस्य निष्कृतिं प्रतीकारमाधत्त स्वात्मानं मोचितवान्नत्वसौ यज्ञस्य समीचीनो विधिहिसामयत्वात् ॥।
१२-२७८-१८ अनुभावेन पशुं हत्वा स्वर्गं प्राप्स्यामीत्यभिप्रायेण । यज्ञिया यज्ञाय हिता ॥
१२-२७८-१९ याजयत अडभाव आर्षः । याजितवान्। भार्यायाः पुष्करमालिन्याः हिंसामययज्ञमनिच्छन्त्याः ॥
१२-२७८-२० तथा तेन स्वर्गप्रदत्वेन रूपेण हितः । सत्यवादिनां ब्रह्मवादिनां त्वसौ नो धर्मः अहिंसा सकलो धर्म इति झ। पाठः ॥

शन्तिपर्व-अध्यय२७९
॥ श्रीः ॥
१२.२७९. अध्यायः २७९

Mahabharata - Shanti Parva - Chapter Topics
भीष्मेण युधिष्ठिरंप्रति धर्माचरणस्य
श्रेयस्साधनत्वप्रतिपादनम् ॥ १.।
Mahabharata - Shanti Parva - Chapter Text

१२-२७९-० (७६४६८)
युधिष्ठिर उवाच। १२-२७९-०क्ष् (६३५१)
कथं भवति पापात्मा कथं धर्मं करोति वा ।
केन निर्वेदमादत्ते मोक्षं वा केन गच्छति ॥ १२-२७९-१ (७६४६९)
भीष्म उवाच। १२-२७९-२क्ष् (६३५२)
विदिताः सर्वधर्मास्ते स्थित्यर्थमनुपृच्छसि ।
शृणु मोक्षं सनिर्वेदं पापं धर्मं च मूलतः ॥ १२-२७९-२ (७६४७०)
विज्ञानार्थं हि पञ्चानामिच्छापूर्वं प्रवर्तते ।
प्राप्यतां वर्तते कामो द्वेषो वा भरतर्षभ ॥ १२-२७९-३ (७६४७१)
ततस्तदर्थं यतते कर्म चारभते महत् ।
इष्टानां रूपगन्धानामभ्यासं च चिकीर्षति ॥ १२-२७९-४ (७६४७२)
ततो रागः प्रभवति द्वेषश्च तदनन्तरम् ।
ततो लोभः प्रभवति मोहश्च तदनन्तरम् ॥ १२-२७९-५ (७६४७३)
लोभमोहाभिभूतस्य रागद्वेषान्वितस्य च ।
न धर्मे जायते बुद्धिर्व्याजाद्धर्मं करोति च ॥ १२-२७९-६ (७६४७४)
व्याजेन चरते धर्ममर्थं व्याजेन रोचते ।
व्याजेन सिद्ध्यमानेषु धर्मेषु कुरुनन्दन ॥ १२-२७९-७ (७६४७५)
तत्रैव कुरुते बुद्धिं ततः पापं चिकीर्षति ।
सुहृद्भिर्वार्यमाणोऽपि पण्डितैश्चापि भारत ॥ १२-२७९-८ (७६४७६)
उत्तरं न्यायसंबद्धं ब्रवीति विधिचोदितम् ।
अधर्मस्त्रिविधस्तस्य वर्धते रागमोहजः ॥ १२-२७९-९ (७६४७७)
पापं चिन्तयते कर्म प्रब्रवीति करोति च ।
तस्याधर्मप्रवृत्तस्य दोषान्पश्यन्ति साधवः ॥ १२-२७९-१० (७६४७८)
एकशीलाश्च मित्रत्वं भजन्ते पापकर्मिणः ।
स नेह सुखमाप्नोति कुत एव परत्र वै ॥ १२-२७९-११ (७६४७९)
एवं भवति पापात्मा धर्मात्मानं तु मे शृणु ।

यथा कुशलधर्मा स कुशलं प्रतिपद्यते ॥ १२-२७९-१२ (७६४८०)
कुशलेनैव धर्मेण गतिमिष्टां प्रपद्यते ।
य एतान्प्रज्ञया दोषान्पूर्वमेवानुपश्यति ॥ १२-२७९-१३ (७६४८१)
कुशलस्तु सुखार्थाय साधूंश्चाप्युपसेवते ।
तस्य साधुसमाचारादभ्यासाच्चैव वर्धते ॥ १२-२७९-१४ (७६४८२)
प्राज्ञो धर्मे च रमते धर्मं चैवोपजीवति ।
सोऽथ धर्मादवाप्तेषु धनेषु कुरुनन्दन ॥ १२-२७९-१५ (७६४८३)
तस्यैव सिञ्चते मूलं गुणान्पश्यति यत्र वै ।
धर्मात्मा भवति ह्येवं मित्रं च लभते शुभम् ॥ १२-२७९-१६ (७६४८४)
स मित्रधनलाभात्तु प्रेत्य चेह च नन्दति ।
शब्दे स्पर्शे रसे रूपे तथा गन्धे च भारत ॥ १२-२७९-१७ (७६४८५)
प्रभुत्वं लभते जन्तुर्धर्मस्यैतत्फलं विदुः ।
स तु धर्मफलं लब्ध्वा न तृप्यति युधिष्ठिर ॥ १२-२७९-१८ (७६४८६)
धर्मे स्थितानां कौन्तेय सर्वभोगक्रियासु च ।
अतृप्यमाणो निर्वेदमादत्ते ज्ञानचक्षुषा ।
प्रज्ञाचक्षुर्यदा कामे दोषमेवानुपश्यति ॥ १२-२७९-१९ (७६४८७)
शब्दे स्पर्शे तथा रूपे न च भावयते मनः ।
विमुच्यते तदा कामान्न च धर्मं विमुञ्चति ॥ १२-२७९-२० (७६४८८)
सर्वत्यागे च यतते दृष्ट्वा लोकं क्षयात्मकम् ।
ततो मोक्षाय यतते नानुपायादुपायतः ॥ १२-२७९-२१ (७६४८९)
शनैर्निर्वेदमादत्ते पापं कर्म जहाति च ।
धर्मात्मा चैव भवति मोक्षं च लभते परम् ॥ १२-२७९-२२ (७६४९०)
एतत्ते कथितं तात यन्मां त्वं परिपृच्छसि ।
पापं धर्मस्तथा मोक्षो निर्वेदश्चैव भारत ॥ १२-२७९-२३ (७६४९१)
तस्माद्धर्मे प्रवर्तेथाः सर्वावस्थं युधिष्ठिर ।
धर्मे स्थितानां कौन्तेय सिद्धिर्भवति शाश्वती ॥ ॥ १२-२७९-२४ (७६४९२)

इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि
एकोनाशीत्यधिकद्विशततमोऽध्यायः ॥ २७९.।

Mahabharata - Shanti Parva - Chapter Footnotes

१२-२७९-७ व्याजेन कपटेन । अर्थमर्थजातम् ॥
१२-२७९-९ न्यायसंबद्धमाहारे व्यवहारे च त्यक्तलज्जः सुखी
भवेदित्यादि । त्रिविधः कायिको वाचिको मानसश्च ॥
१२-२७९-१० पापं परानिष्टम् ॥
१२-२७९-१२ कुशलं कल्याणं परहितमित्यर्थः ॥

१२-२७९-१९ निर्वेदं वैराग्यम् ॥
१२-२७९-२० भावयते चिन्तावशं करोति ।विरज्यति तदा कामे इति ड।थ।पाठः ॥

---

शन्तिपर्व-अध्यय२८०
॥ श्रीः ॥
१२.२८०. अध्यायः २८०

Mahabharata - Shanti Parva - Chapter Topics
भीष्मेण युधिष्ठिरंप्रति मोक्षोपायप्रतिपादनम् ॥ १.।
Mahabharata - Shanti Parva - Chapter Text

१२-२८०-० (७६४९३)
युधिष्ठिर उवाच।१२-२८०-०क्ष् (६३५३)
मोक्षः पितामहेनोक्त उपायान्नानुपायतः ।
तमुपायं यथान्यायं श्रोतुमिच्छामि भारत ॥ १२-२८०-१ (७६४९४)
भीष्म उवाच।१२-२८०-२क्ष् (६३५४)
त्वय्येवैतन्महाप्राज्ञ युक्तं निपुणदर्शनम् ।
यदुपायेन सर्वार्थं नित्यं मृगयसेऽनघ ॥ १२-२८०-२ (७६४९५)
करणे घटस्य या बुद्धिर्घटोत्पत्तौ न सा मता ।
एवं धर्माभ्युपायेषु नान्यद्धर्मेषु कारणम् ॥ १२-२८०-३ (७६४९६)
पूर्वे समुद्रे यः पन्थाः स न गच्छति पश्चिमम् ।
एकः पन्था हि मोक्षस्य तन्मे विस्तरतः शृणु ॥ १२-२८०-४ (७६४९७)
क्षमया क्रोधमुच्छिन्द्यात्कामं संकल्पवर्जनात् ।
सत्वसंसेवानद्धीरो निद्रामुच्छेत्तुमर्हति ॥ १२-२८०-५ (७६४९८)
अप्रमादाद्भयं रक्षेच्छ्वासं क्षेत्रज्ञशीलनात् ।
इच्छां द्वेषं च कामं च धैर्येण विनिवर्तयेत् ॥ १२-२८०-६ (७६४९९)
भ्रमं संमोहमावर्तमभ्यासाद्विनिवर्तयेत् ।
निद्रां चाप्रतिभां चैव ज्ञानाभ्यासेन तत्त्ववित् ॥ १२-२८०-७ (७६५००)
उपद्रवांस्तथा रोगान्हितजीर्णमिताशनात् ।
लोभं मोहं च संतोषाद्विषयांस्तत्त्वदर्शनात् ॥ १२-२८०-८ (७६५०१)
अनुक्रोशादधर्मं च जयेद्धर्ममवेक्षया ।
आयत्या च जयेदाशामर्थं सङ्गविवर्जनात् ॥ १२-२८०-९ (७६५०२)
अनित्यत्वेन च स्नेहं क्षुधं योगेन पण्डितः ।
कारुण्येनात्मनो मानं तृष्णां च परितोषतः ॥ १२-२८०-१० (७६५०३)
उत्थानेन जयेत्तन्द्रीं वितर्कं निश्चयाज्जयेत् ।
मौनेन बहुभाषां च शौर्येण च भयं जयेत् ॥ १२-२८०-११ (७६५०४)

यच्छेद्वाङ्भनसी बुद्ध्या तां यच्छेज्ज्ञानचक्षुषा ।
ज्ञानमात्मा महान्यच्छेत्तं यच्छेज्ज्ञानमात्मनः ॥ १२-२८०-१२ (७६५०५)
तदेतदुपशान्तेन बोद्धव्यं शुचिकर्मणा ।
योगदोषान्समुच्छिद्यात्पञ्च यान्कवयो विदुः ॥ १२-२८०-१३ (७६५०६)
कामं क्रोधं च लोभं च भयं स्वप्नं च पञ्चमम् ।
परित्यज्य निषेवेत तथेमान्योगसाधनान् ॥ १२-२८०-१४ (७६५०७)
ध्यानमध्ययनं दानं सत्यं ह्रीरार्जवं क्षमा ।
शौचमाहारतः शुद्धिरिन्द्रियाणां च संयमः ॥ १२-२८०-१५ (७६५०८)
एतैर्विवर्धते तेजः पाप्मानमपहन्ति च ।
सिध्यन्ति चास्य संकल्पा विज्ञानं च प्रवर्तते ॥ १२-२८०-१६ (७६५०९)
धूतपापः स तेजस्वी लध्वाहारो जितेन्द्रियः ।
कामक्रोधौ वशे कृत्वा निनीषेद्ब्रह्मणः पदम् ॥ १२-२८०-१७ (७६५१०)
अमूढत्वमसङ्गित्वं कामक्रोधविवर्जनम् ।
अदैन्यमनुदीर्णत्वमनुद्वेगो व्यवस्थितिः ॥ १२-२८०-१८ (७६५११)
एष मार्गो हि मोक्षस्य प्रसन्नो विमलः शुचिः ।
तथा वाक्कायमनसां नियमः कामतोऽन्यथा ॥ ॥ १२-२८०-१९ (७६५१२)

इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि
अशीत्यधिकद्विशततमोऽध्यायः ॥ २८०.।
Mahabharata - Shanti Parva - Chapter Footnotes

१२-२८०-९ अयेद्धर्ममुपेक्षयेति ट ।थ।ध।पाठः ॥
१२-२८०-१२ ज्ञानमात्मावबोधेन यच्छेदात्मानमात्मनेति झ ।पाठः ॥

---

शन्तिपर्व-अध्यय२८१
॥ श्रीः ॥
१२.२८१. अध्यायः २८१

Mahabharata - Shanti Parva - Chapter Topics
भीष्मेण युधिष्ठिरंप्रति
भूतोत्पत्तिविनाशादिप्रतिपादकदेवलनारदसंवादानुवादः ॥ १.।
Mahabharata - Shanti Parva - Chapter Text

१२-२८१-० (७६५१३)
भीष्म उवाच। १२-२८१-०क्ष् (६३५५)
अत्रैवोदाहरन्तीममितिहासं पुरातनम् ।

नारदस्य च संवादं देवलस्यासितस्य च ॥ १२-२८१-१ (७६५१४)
आसीनं देवलं वृद्धं बुद्ध्वा बुद्धिमतां वरम् ।
नारदः परिपप्रच्छ भूतानां प्रभवाप्ययम् ॥ १२-२८१-२ (७६५१५)
नारद उवाच। १२-२८१-३क्ष् (६३५६)
कुतः सृष्टमिदं विश्वं ब्रह्मन्स्थावरजङ्गमम् ।
प्रलये च कमभ्येति तद्भवान्प्रब्रवीतु मे ॥ १२-२८१-३ (७६५१६)
असित उवाच। १२-२८१-४क्ष् (६३५७)
येभ्यः सृजति भूतानि कालो भावप्रचोदितः ।
महाभूतानि पञ्चेति तान्याहुर्भूतचिन्तकाः ॥ १२-२८१-४ (७६५१७)
तेभ्यः सृजति भूतानि काल आत्मप्रचोदितः ।
एतेभ्यो यः परं ब्रूयादसद्ब्रूयादसंशयम् ॥ १२-२८१-५ (७६५१८)
विद्धि नारद पञ्चैताञ्शाश्वतानचलान्ध्रुवान् ।
महतस्तेजसो राशीन्कालषष्ठान्स्वभावतः ॥ १२-२८१-६ (७६५१९)
आपश्चैवान्तरिक्षं च पृथिवी वायुपावकौ ।
असिद्धिः परमेतेभ्यो भूतेभ्यो मुक्तसंशयम् ॥ १२-२८१-७ (७६५२०)
नोपपत्त्या न वा युक्त्या त्वसद्ब्रूयादसंशयम् ।
वेत्थैतानभिनिर्वृत्तान्षडेते यस्य राशयः ॥ १२-२८१-८ (७६५२१)
पञ्चैव तानि कालश्च भावाभावौ च केवलौ ।
अष्टौ भूतानि भूतानां शाश्वतानि भवाव्ययौ ॥ १२-२८१-९ (७६५२२)
अभावभावितेष्वेव तेभ्यश्च प्रभवन्त्यपि ।
विनष्टोऽप्यनुतान्येव जन्तुर्भवति पञ्चधा ॥ १२-२८१-१० (७६५२३)
तस्य भूमिमयो देहः श्रोत्रमाकाशसंभवम् ।
सूर्याच्चक्षुरसुर्वायोरद्भ्यस्तु खलु शोणितम् ॥ १२-२८१-११ (७६५२४)
चक्षुषी नासिकाकर्णौ त्वक् जिह्वेति च पञ्चमी ।
इन्द्रियाणीन्द्रियार्थानां ज्ञानानि कवयो विदुः ॥ १२-२८१-१२ (७६५२५)
दर्शनं श्रवणं घ्राणं स्पर्शनं रसनं तथा ।
उपपत्त्या गुणान्विद्धि पञ्च पञ्चसु धातुषु ॥ १२-२८१-१३ (७६५२६)
रूपं गन्धो रसः स्पर्शः शब्दश्चैवाथ तद्गुणाः ।
इन्द्रियैरुपलभ्यन्ते पञ्चधा पञ्च पञ्चभिः ॥ १२-२८१-१४ (७६५२७)
रूपं गन्धं रसं स्पर्शं शब्दं चैवाथ तद्गुणान् ।
इन्द्रियाणि न बुध्यन्ते क्षेत्रज्ञस्तैस्तु बुध्यते ॥ १२-२८१-१५ (७६५२८)
चित्तमिन्द्रियसंघातात्परं तस्मात्परं मनः ।
मनसस्तु परा बुद्धिः क्षेत्रज्ञो बुद्धितः परः ॥ १२-२८१-१६ (७६५२९)
पूर्वं चेतयते जन्तुरिन्द्रियैर्विषयान्पृथक् ।
विचार्य मनसा पश्चादथ बुद्ध्या व्यवस्यति ।
इन्द्रियैरुपसृष्टार्थान्मत्वा यस्त्वध्यवस्यति ॥ १२-२८१-१७ (७६५३०)

चित्तमिन्द्रियसंघातं मनो बुद्धिस्तथाऽष्टमी ।
अष्टौ ज्ञानेन्द्रियाण्याहुरेतान्यध्यात्मचिन्तकाः ॥ १२-२८१-१८ (७६५३१)
पाणिं पादं च पायुं च मेहनं पञ्चमं मुखम् ।
इति संशब्द्यमानानि शृणु कर्मेन्द्रियाण्यपि ॥ १२-२८१-१९ (७६५३२)
जल्पनाभ्यवहारार्थं मुखमिन्द्रियमुच्यते ।
गमनेन्द्रियं तथा पादौ कर्मणः करणे करौ ॥ १२-२८१-२० (७६५३३)
पायूपस्थं विसर्गार्थमिन्द्रिये तुल्यकर्मणी ।
विसर्गे च पुरीषस्य विसर्गे चापि कामिके ॥ १२-२८१-२१ (७६५३४)
मनः षष्ठान्यथैतानि वाचा सम्यग्यथागमम् ।
ज्ञानचेष्टेन्द्रियगुणाः सर्वेषां शब्दिता मया ॥ १२-२८१-२२ (७६५३५)
इन्द्रियाणां स्वकर्मभ्यः श्रमादुपरमो यदा ।
भवतीन्द्रियसंन्यासादथ स्वपिति वै नरः ॥ १२-२८१-२३ (७६५३६)
इन्द्रियाणां व्युपरमे मनोऽव्युपरतं यदि ।
सेवते विषयानेव तं विद्यात्स्वप्नदर्शनम् ॥ १२-२८१-२४ (७६५३७)
सात्विकाश्चैव ये भावास्तथा राजसतामसाः ।
कर्मयुक्ताः प्रशंसन्ति सात्विकान्नेतरांस्तथा ॥ १२-२८१-२५ (७६५३८)
आनन्दः कर्मणां सिद्धिः प्रतिपत्तिः परा गतिः ।
सात्विकस्य निमित्तानि भावान्संश्रयसे स्मृतिः ॥ १२-२८१-२६ (७६५३९)
जन्तुष्वेकतमेष्वेवं भावं यो वा समास्थितः ।
भावयोरीप्सितं नित्यं प्रत्यक्षं गमनं द्वयोः ॥ १२-२८१-२७ (७६५४०)
इन्द्रियाणि च भावाश्च गुणाः सप्तदश स्मृताः ।
तेषामष्टादशो देही यः शरीरे स शाश्वतः ॥ १२-२८१-२८ (७६५४१)
अथवा सशरीरास्ते गुणाः सर्वे शरीरिणाम् ।
संश्रितास्तद्वियोगे हि सशरीरा न सन्ति ते ॥ १२-२८१-२९ (७६५४२)
अथवा संविभागेन शरीरं पाञ्चभौतिकम् ।
एकश्च दश चाष्टौ च गुणाः सह शरीरिणाम् ।
ऊष्मणा सह विंशो वा संघातः पाञ्चभौतिकः ॥ १२-२८१-३० (७६५४३)
महान्संधारयत्येतच्छरीरं वायुना सह ।
सत्यप्रभावयुक्तस्य निमित्तं देहभेदने ॥ १२-२८१-३१ (७६५४४)
तथैवोत्पद्यते किंचित्पञ्चत्वं गच्छते तथा ।
पुण्यपापविनाशान्ते पुण्यपापसमीरितः ।
देहं विशति कालेन ततोऽयं कर्मसंभवम् ॥ १२-२८१-३२ (७६५४५)
हित्वाहित्वा ह्ययं प्रैति देहाद्देहं कृताश्रयः ।
कालसंचोदितः क्षेत्री विशीर्णाद्वा गृहाद्गृहम् ॥ १२-२८१-३३ (७६५४६)
तं तु नैवानुतप्यन्ते प्राज्ञा निश्चितनिश्चयाः ।
कृपणास्त्वनुतप्यन्ते जनाः संबन्धिमानिनः ॥ १२-२८१-३४ (७६५४७)

न ह्ययं कस्यचित्कश्चिन्नास्य कश्चन विद्यते ।
भवत्येको ह्ययं नित्यं शरीरे सुखदुःखकृत् ॥ १२-२८१-३५ (७६५४८)
नैव संजायते जन्तुर्न च जातु विपद्यते ।
याति देहमयं मुक्त्वा कदाचित्परमां गतिम् ॥ १२-२८१-३६ (७६५४९)
पुण्यपापमयं देहं क्षपयन्कर्मसंक्षयात् ।
क्षीणदेहः पुनर्देही ब्रह्मत्वमुपगच्छति ॥ १२-२८१-३७ (७६५५०)
पुण्यपापक्षयार्थं हि साङ्ख्यज्ञानं विधीयते ।
तत्क्षये हृदि पश्यन्ति ब्रह्मभावे परां गतिम् ॥ ॥ १२-२८१-३८ (७६५५१)

इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि
एकाशीत्यधिकद्विशततमोऽध्यायः ॥ २८१.।
Mahabharata - Shanti Parva - Chapter Footnotes

१२-२८१-१३ पञ्चधेति झ । पाठः ॥
१२-२८१-३७ क्षीणभोगः पुनर्देहीति ध । पाठः ॥

---

शन्तिपर्व-अध्यय२८२
॥ श्रीः ॥
१२.२८२. अध्यायः २८२

Mahabharata - Shanti Parva - Chapter Topics
भीष्मेण युधिष्ठिरंप्रति तृष्णात्यागस्य
सुखसाधनताप्रतिपादकजनकमाण्डव्यसंवादानुवादः ॥ १.।
Mahabharata - Shanti Parva - Chapter Text

१२-२८२-० (७६५५२)
युधिष्ठिर उवाच। १२-२८२-०क्ष् (६३५८)
भ्रातरः पितरः पौत्रा ज्ञातयः सुहृदः सुताः ।
अर्थहेतोर्हताः क्रूरैरस्माभिः पापबुद्धिभिः ॥ १२-२८२-१ (७६५५३)
येयमर्थोद्भवा तृष्णा कथमेतां पितामह ।
निवर्तयेयं पापानि तृष्णया कारिता वयम् ॥ १२-२८२-२ (७६५५४)
भीष्म उवाच। १२-२८२-३क्ष् (६३५९)
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
गीतं विदेहराजेन माण्डव्यायानुपृच्छते ॥ १२-२८२-३ (७६५५५)
सुसुखं बत जीवामि यस्य मे नास्ति किंचन ।
मिथिलायां प्रदीप्तायां न मे दह्यति किंचन ॥ १२-२८२-४ (७६५५६)

अर्थाः खलु समृद्धा हि गाढं दुःखं विजानताम् ।
असमृद्धास्त्वपि सदा मोहयन्त्यविचक्षणान् ॥ १२-२८२-५ (७६५५७)
यच्च कामसुखं लोके यच्च दिव्यं महत्सुखम् ।
तृष्णाक्षयसुखस्यैते नार्हतः षोडशीं कलाम् ॥ १२-२८२-६ (७६५५८)
यथैव शृङ्गं गोः काले वर्धमानस्य वर्धते ।
तथैव तृष्णा वित्तेन वर्धमानेन वर्धते ॥ १२-२८२-७ (७६५५९)
किंचिदेव ममत्वेन यदा भवति कल्पितम् ।
तदेव परितापाय नाशे संपद्यते पुनः ॥ १२-२८२-८ (७६५६०)
न कामाननुरुध्येत दुःखं कामेषु वै रतिः ।
प्राप्यार्थमुपयुञ्जीत धर्मं कामान्विवर्जयेत् ॥ १२-२८२-९ (७६५६१)
विद्वान्सर्वेषु भूतेषु व्याघ्रमांसोपमो भवेत् ।
कृतकृत्यो विशुद्धात्मा सर्वं ज्यजति वै स्वयम् ॥ १२-२८२-१० (७६५६२)
उभे सत्यानृते त्यक्त्वा शोकानन्दौ प्रियाप्रिये ।
भयाभये च संत्यज्य भव शान्तो निरामयः ॥ १२-२८२-११ (७६५६३)
या दुस्त्यजा दुर्मतिभिर्या न जीर्यति जीर्यतः ।
योसौ प्राणान्तिको रोगस्तां तृष्णां त्यजतः सुखं ॥ १२-२८२-१२ (७६५६४)
चारित्रमात्मनः पश्यंश्चन्द्रशुद्धमनामयम् ।
धर्मात्मा लभते कीर्तिं प्रेत्य चेह यथासुखम् ॥ १२-२८२-१३ (७६५६५)
राज्ञस्तद्वचनं श्रुत्वा प्रीतिमानभवद्द्विजः ।
पूजयित्वा च तद्वाक्यं माण्डव्यो मोक्षमाश्रितः ॥ ॥ १२-२८२-१४ (७६५६६)

इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि
द्व्यशीत्यधिकद्विशततमोऽध्यायः ॥ २८२.।

---

शन्तिपर्व-अध्यय२८३
॥ श्रीः ॥
१२.२८३. अध्यायः २८३

Mahabharata - Shanti Parva - Chapter Topics
भीष्मेण युधिष्ठिरंप्रति कालस्य द्रुततरपातितया सद्यस्साधनस्य
संपादनीयत्वे प्रमाणतया पितृपुत्रसंवादानुवादः ॥ १.।
Mahabharata - Shanti Parva - Chapter Text

१२-२८३-० (७६५६७)
क़ युधिष्ठिर उवाच। १२-२८३-०क्ष् (६३६०)
अतिक्रामति कालेऽस्मिन्सर्वभूतभयावहे ।
किं श्रेयः प्रतिपद्येत तन्मे ब्रूहि पितामह ॥ १२-२८३-१ (७६५६८)

भीष्म उवाच। १२-२८३-२क्ष् (६३६१)
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
पितुः पुत्रेण संवादं तं निबोध युधिष्ठिर ॥ १२-२८३-२ (७६५६९)
द्विजातेः कस्यजित्पार्थ स्वाध्यायनिरतस्य वै ।
पुत्रो बभूव मेधावी मेधावी नाम नामतः ॥ १२-२८३-३ (७६५७०)
सोऽब्रवीत्पितरं पुत्रः स्वाध्यायकरणे रतम् ।
मोक्षधर्मेष्वकुशलं मोक्षधर्मविचक्षणः ॥ १२-२८३-४ (७६५७१)
पुत्र उवाच। १२-२८३-५क्ष् (६३६२)
धीरः किंस्वित्तात कुर्यात्प्रजानन्
क्षिप्रं ह्यायुर्भ्रश्यते मानवानाम् ।
पितस्तथाऽऽख्याहि यथार्थयोगं
ममानुपूर्व्या येन धर्मं चरेयम् ॥ १२-२८३-५ (७६५७२)
पितोवाच। १२-२८३-६क्ष् (६३६३)
अधीत्य वेदान्ब्रह्मचर्येषु पुत्र
पुत्रानिच्छेत्पावनार्थं पितृणाम् ।
अग्नीनाधाय विधिवच्चेष्टयज्ञो
वनं प्रविश्याथ मुनिर्बुभूषेत् ॥ १२-२८३-६ (७६५७३)
पुत्र उवाच। १२-२८३-७क्ष् (६३६४)
एवमभ्याहते लोके सर्वतः परिवारिते ।
अमोधासु पतन्तीषु किं धीर इव भाषसे ॥ १२-२८३-७ (७६५७४)
पितोवाच। १२-२८३-८क्ष् (६३६५)
कथमभ्याहतो लोकः केन वा परिवारितः ।
अमोघाः काः पतन्तीह किंनु भीषयसीव माम् ॥ १२-२८३-८ (७६५७५)
पुत्र उवाच। १२-२८३-९क्ष् (६३६६)
मृत्युनाऽऽभ्याहतो लोको जस्या परिवारितः ।
अहोरात्राः पतन्तीमे तच्च कस्मान्न बुध्यसे ॥ १२-२८३-९ (७६५७६)
यदाहमेव जानामि न मृत्युस्तिष्ठतीति ह ।
सोहं कथं प्रतीक्षिप्ये ज्ञानेनापिहितश्चरन् ॥ १२-२८३-१० (७६५७७)
रात्र्यांरात्र्यां व्यतीतायामायुरल्पतरं यदा ।
गाधोदके मत्स्य इव सुखं विन्देत कस्तदा ॥ १२-२८३-११ (७६५७८)
ग्यामेकरात्रिं प्रथमां गर्भो विशति मातरम् ।
तामेव रात्रिं प्रस्वाप्य मरणाय विवर्तकः ॥' १२-२८३-१२ (७६५७९)
पुष्पाणीव विचिन्वन्तमन्यत्र गतमानसम् ।
अनवाप्तेषु कामेषु मृत्युरभ्येति गानवम् ॥ १२-२८३-१३ (७६५८०)
श्वः कार्यमद्य कुर्वीत पूर्वाह्णे चापराह्णिकम् ।
न हि प्रतीक्षते मृत्युः कृतं वाऽस्य न वा कृतम् ॥ १२-२८३-१४ (७६५८१)

अद्यैव कुरु यच्छ्रेयो मा त्वां कालोऽत्यगान्महान् ।
को हि जानाति कस्याद्य मृत्युकालो मविष्यति ॥ १२-२८३-१५ (७६५८२)
अकृतेष्वेव कार्येषु मृत्युर्वै संप्रकर्षति ।
युवैव धर्मशीलः स्यादनिमित्तं हि जीवितम् ॥ १२-२८३-१६ (७६५८३)
कृते धर्म भवेत्प्रीतिरिह प्रेत्य च शाश्वती ।
मोहेन हि समाविष्टः पुत्रदारार्तमुद्यतः ॥ १२-२८३-१७ (७६५८४)
कृत्वा कार्यमकार्यं वा तुष्टिमेषां प्रयच्छति ।
तं पुत्रपशुसंपन्नं व्याभक्तमनसं नरम् ॥ १२-२८३-१८ (७६५८५)
सप्तं व्यायं महौघो वा मृत्युरादाय गच्छति ।
संविन्वानकमेवैनं कामानामवितृप्तकम् ॥ १२-२८३-१९ (७६५८६)
वृकीवोरपमासाद्य मुत्युरादाय गच्छति ।
इदं कृतमिदं कार्यमिदमन्यत्कृताकृतम् ॥ १२-२८३-२० (७६५८७)
एवमीहासमायुक्तं मृत्युरादाय गच्छति ।
कृतानां फलमप्राप्तं कार्याणां कर्मसङ्गिनाम् ॥ १२-२८३-२१ (७६५८८)
क्षेत्रापणगृहासक्तं मृत्युरादाय गच्छति ।
दुर्बलं बलवन्तं च प्राज्ञं शूरं जडं कविम् ॥ १२-२८३-२२ (७६५८९)
अप्राप्तसर्वकामार्थं मृत्युरादाय गच्छति ।
मृत्युर्जरा च व्याधिश्चदुःखं चानेककारणम् ॥ १२-२८३-२३ (७६५९०)
असंत्याज्यं यदा मर्त्यैः किं स्वस्थ इव तिष्ठति ।
जातमेवान्तकोऽन्ताय जरा चाभ्येति देहिनम् ॥ १२-२८३-२४ (७६५९१)
अनुषक्ता द्वयेनैते भावाः स्थावरजङ्गमाः ।
न मृत्युसेनामायान्तीं जातु कश्चित्प्रबाधते ॥ १२-२८३-२५ (७६५९२)
बलात्सत्यमृते त्वेकं सत्ये ह्यमृतमाश्रितम् ।
मृत्योर्वा गृहमेतद्वै या ग्रामे वसतो रतिः ॥ १२-२८३-२६ (७६५९३)
देवानामेषु वै गोष्ठो यदरण्यमिति श्रुतिः ।
निबन्धनी रज्जुरेषा या ग्रामे वसतो रतिः ॥ १२-२८३-२७ (७६५९४)
छित्त्वैनां सुकृतो यान्ति नैनां छिन्दन्ति दुष्कृतः ।
यो न हिंसति सत्वानि मनोवाक्कर्महेतुभिः ॥ १२-२८३-२८ (७६५९५)
जीवितार्थापनयनैः प्राणिभिर्न स बध्यते ।
तस्मात्सत्यव्रताचारः सत्यव्रतपरायणः ॥ १२-२८३-२९ (७६५९६)
सत्यकामः समो दान्ताः सत्येनैवान्तकं जयेत् ।
अमृतं चैव मृत्युश्च द्वयं देहे प्रतिष्ठितम् ॥ १२-२८३-३० (७६५९७)
मृत्युरापद्यते मोहात्सत्येनापद्यतेऽमृतम् ।
सोहं सत्यमहिंसार्थी कामक्रोधबहिष्कृतः ॥ १२-२८३-३१ (७६५९८)
समाश्रित्य सुखं क्षेमी मृत्युं हास्याम्यमृत्युवत् ।
शान्तियज्ञरतो दान्तो ब्रह्मयज्ञे स्थितो मुनिः ॥ १२-२८३-३२ (७६५९९)

वाङ्भनः कर्मयज्ञश्च भविष्याम्युदगायने ।
पशुयज्ञैः कथं हिंस्रैर्मादृशो यष्टुमर्हति ॥ १२-२८३-३३ (७६६००)
अन्तवद्भिरुत प्राज्ञः क्षत्रयज्ञैः पिशाचवत् ।
आत्मन्येवात्मना जात आत्मनिष्ठोऽप्रजः पितः ॥ १२-२८३-३४ (७६६०१)
आत्मयज्ञो भविष्यामि न मां तारयति प्रजा ।
यस्य वाङ्भनसी स्यातां सम्यक्प्रणिहिते सदा ॥ १२-२८३-३५ (७६६०२)
तपस्त्यागश्च योगश्च स तैः सर्वमवाप्नुयात् ।
नास्ति विद्यासमं चक्षुर्नास्ति विद्यासमं फलम् ॥ १२-२८३-३६ (७६६०३)
नास्ति रागसमं दुःखं नास्ति त्यागसमं सुखम् ॥ १२-२८३-३७ (७६६०४)
नैतादृशं ब्राह्मणस्यास्ति वित्तं
यथैकता समता सत्यता च ।
शीले स्थितिर्दण्डविधानमार्जवं
ततस्ततश्चोपरमः क्रियाभ्यः ॥ १२-२८३-३८ (७६६०५)
किं ते धनैर्बान्धवैर्वाऽपि किं ते
किं ते दारैर्ब्राह्मण यो मरिष्यसि ।
आत्मानमन्विच्छ गृहा प्रविष्टं
पितामहास्ते क्व गताः पिता च ॥ १२-२८३-३९ (७६६०६)
भीष्म उवाच। १२-२८३-४०क्ष् (६३६७)
पुत्रस्यैतद्वचः श्रुत्वा तथाकार्षीत्पिता नृप ।
तथा त्वमपि राजेन्द्र सत्यधर्मपरो भव ॥ ॥ १२-२८३-४० (७६६०७)

इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि
त्र्यशीत्यधिकद्विशततमोऽध्यायः ॥ २८३. ।
Mahabharata - Shanti Parva - Chapter Footnotes

क़ यद्यप्ययमध्यायः पूर्वत्र १७४ तमाध्यायतया स्थापितः । तथापि
ड। थे। तरपुस्तकेषु द्वितीयवारमत्रापि दृश्यमानतयाऽस्माभिरत्रापि
स्थापितः ।

---

शन्तिपर्व-अध्यय२८४
॥ श्रीः ॥
१२.२८४. अध्यायः २८४

Mahabharata - Shanti Parva - Chapter Topics
भीष्मेण युधिष्ठिरंप्रति मोक्षसाधनप्रतिपादकहारीतगीतानुवादः ॥ १. ।
Mahabharata - Shanti Parva - Chapter Text

१२-२८४-० (७६६०८)
युधिष्ठिर उवाच। १२-२८४-०क्ष् (६३६८)
किंशीलः किंसमाचारः किंविद्यः किंपरायणः ।
प्राप्नोति ब्रह्मणः स्थानं यत्परं प्रकृतेर्ध्रुवम् ॥ १२-२८४-१ (७६६०९)
भीष्म उवाच। १२-२८४-२क्ष् (६३६९)
मोक्षधर्मेषु निरतो लघ्वाहारो जितेन्द्रियः ।
प्राप्नोति परमं स्थानं यत्परं प्रकृतेर्ध्रुवम् ॥ १२-२८४-२ (७६६१०)
ग्अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
हारीतेन पुरा गीतं तं निबोध युधिष्ठिर ॥ १२-२८४-३ (७६६११)
स्वगृहादभिनिःसृत्य लाभेऽलाभे समो मुनिः ।
समुपोढेषु कामेषु निरपेक्षः परिव्रजेत् ॥ १२-२८४-४ (७६६१२)
न चक्षुषा न मनसा न वाचा दूषयेत्परम् ।
न प्रत्यक्षं परोक्षं वा दूषणं व्याहरेत्क्वचित् ॥ १२-२८४-५ (७६६१३)
न हिंस्यात्सर्वभूतानि मैत्रायणगतिश्चरेत् ।
नेदं जीवितमासाद्य वैरं कुर्वीत केनचित् ॥ १२-२८४-६ (७६६१४)
अतिवादांस्तितिक्षेत नाभिमन्येत कंचन ।
क्रोध्यमानः प्रियं ब्रूयादाक्रुष्टः कुशलं वदेत् ॥ १२-२८४-७ (७६६१५)
प्रदक्षिणं च सव्यं च ग्राममध्ये च नाचरेत् ।
भैक्षचर्यामनापन्नो न गच्छेत्पूर्वकेतनम् ॥ १२-२८४-८ (७६६१६)
अवकीर्णः सुगुप्तश्च न वाचाऽप्यप्रियं चरेत् ।
मृदुः स्यादप्रतीकारो विस्रब्धः स्यादरोषणः ॥ १२-२८४-९ (७६६१७)
विधूमे न्यस्तमुसले व्यङ्गारे भुक्तवज्जने ।
अतीते पात्रसंचारे भिक्षां लिप्सेत वै मुनिः ॥ १२-२८४-१० (७६६१८)
प्राणयात्रिकमात्रः स्यान्मात्रालाभेष्वनादृतः ।
अलाभे न विहन्येत लाभश्चैनं न हर्षयेत् ॥ १२-२८४-११ (७६६१९)
लाभं साधारणां नेच्छेन्न भुञ्जीताभिपूजितः ।
अभिपूजितलाभं हि जुगुप्सेतैव तादृशः ॥ १२-२८४-१२ (७६६२०)
न चान्नदोषान्निन्देत न गुणानभिपूजयेत् ।
शय्यासने विविक्ते च नित्यमेवाभिपूजयेत् ॥ १२-२८४-१३ (७६६२१)
शून्यागारं वृक्षमूलमरण्यमथवा गुहाम् ।
अज्ञातचर्यां गत्वाऽन्यां ततोऽन्यत्रैव संविशेत् ॥ १२-२८४-१४ (७६६२२)
अनुरोधविरोधाभ्यां समः स्यादचलो ध्रुवः ।
सुकृतं दुष्कृतं चोभे नानुरुध्येत कर्मणि ॥ १२-२८४-१५ (७६६२३)
नित्यतृप्तः सुसंतृष्टः प्रसन्नवदनेन्द्रियः ।
विभीर्जप्यपरो मौनी वैराग्यं समुपाश्रितः ॥ १२-२८४-१६ (७६६२४)
अभ्यस्तं भौतिकं पश्यन्भूतानामागतिं गतिम् ।

विस्मितः सर्वदर्शी च पक्वापक्वेन वर्तयन् ।
आत्मारामः प्रशान्तात्मा लघ्वाहारो जितेन्द्रियः ॥ १२-२८४-१७ (७६६२५)
वाचो वेगं मनसः क्रोधवेगं
हिंसावेगमुदरोपस्थवेगम् ।
एतान्वेगान्विनयेद्वै तपस्वी
निन्दा चास्य हृदयं नोपहन्यात् ॥ १२-२८४-१८ (७६६२६)
मध्यस्थ एव तिष्ठेत प्रशंसानिन्दयोः समः ।
एतत्पवित्रं परमं परिव्राजक आश्रयेत् ॥१२-२८४-१९ (७६६२७)
महात्मा सर्वतो दान्तः सर्वत्रैवानपाश्रितः ।
अपूर्वचारकः सौम्यो ह्यनिकेतः समाहितः ॥१२-२८४-२० (७६६२८)
वानप्रस्थगृहस्थाभ्यां न संसृज्येत कर्हिचित् ।
अज्ञातलिप्सं लिप्सेत न चैनं हर्ष आविशेत् ॥१२-२८४-२१ (७६६२९)
विजानतां मोक्ष एष श्रमः स्यादविजानताम् ।
मोक्षयानमिदं कृत्स्नं विदुषां हारितोऽब्रवीत् ॥१२-२८४-२२ (७६६३०)
अभयं सर्वभूतेभ्यो दत्त्वा यः प्रव्रजेद्गृहात् ।
लोकास्तेजोमयास्तस्य तथाऽनन्त्याय कल्पते ॥ ॥१२-२८४-२३ (७६६३१)

इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि
चतुरशीत्यधिकद्विशततमोऽध्यायः ॥ २८४.।
Mahabharata - Shanti Parva - Chapter Footnotes

१२-२८४-२ प्राप्नोति ब्रह्मणः स्थानमिति झ ।थ। पाठः ॥
१२-२८४-४ समुषोढेषूपस्थितेष्वपि ।संमुखेषु च कामेषु इति
ट।ध।पाठः।समो दुःखेषु कामेषु इति थ।पाठः ॥
१२-२८४-६ मैत्रायणगतो मित्रः सूर्यस्तस्येदं मैत्रं तदयनं
गमनं तच्च मैत्रायणं तत्र गतः ।सूर्यवत्प्रत्यहं
विभिन्नमार्गः।ग्रामैकरात्रविधिना चरेदित्यर्थः मैत्रायणगतिं
चरेदिति ट।ड।पाठः ॥
१२-२८४-७ नातिमन्येत्कथंचनेति ट ।ड।पाठः ॥
१२-२८४-८ ग्राममध्ये जनसमाजे प्रदक्षिणमनुकूलं सव्यं प्रतिकूलं
वा नाचरेत् ॥
१२-२८४-९ अवतीर्णः सुगुप्तश्चेति ट ।ध।पाठः।अप्रियं
वददिति झ।पाठः।अवकीर्णो मूढैः पांसुभिश्छन्नः।धिक्कृत
इत्यर्थः।तथापि सुगुप्तोऽचपलः स्वधर्मे निष्ठावान् ॥
१२-२८४-११ अनुयात्रिकमर्थी स्यादिति ड ।पाठः ॥
१२-२८४-१२ साधारणं सर्वयोग्यं स्रक्चन्दनादिलाभम् ॥

१२-२८४-१६ ध्यानजल्पपरो मौनीति ट । ङ। पाठः ॥
१२-२८४-१७ सव्यक्तं भौतिकं स्वर्ग्यं इति ङ । ध। पाठः। निःस्पृहः समदर्शी चेति झ। पाठः। सुव्रतो दान्त इति ट। ङ। पाठः ॥
१२-२८४-२० अज्ञातनिष्ठां लिप्सेतेति ध । पाठः ॥

---

शन्तिपर्व-अध्यय२८५
॥ श्रीः ॥
१२.२८५. अध्यायः २८५

Mahabharata - Shanti Parva - Chapter Topics
भीष्मेण युधिष्ठिरंप्रति वृत्रगीतानुवादः ॥ १.।
Mahabharata - Shanti Parva - Chapter Text

१२-२८५-० (७६६३२)
युधिष्ठिर उवाच। १२-२८५-०क्ष् (६३७०)
धन्याधन्या इति जनाः सर्वेऽस्मान्प्रवदन्त्युत ।
न दुःखिततरः कश्चित्पुमानस्माभिरस्ति ह ॥ १२-२८५-१ (७६६३३)
लोकसंभावितैर्दुःखं यत्प्राप्तं कुरुसत्तम ।
प्राप्य जातिं मनुष्येषु देवैरपि पितामह ॥ १२-२८५-२ (७६६३४)
कदा वयं करिष्यामः संन्यासं दुःखभेषजम् ।
दुःखमेतच्छरीराणां धारणं कुरुसत्तम ॥ १२-२८५-३ (७६६३५)
विमुक्ताः सप्तदशभिर्हेतुभूतैश्च पञ्चभिः ।
इन्द्रियार्थैर्गुणैश्चैव अष्टाभिश्च पितामह ॥ १२-२८५-४ (७६६३६)
न गच्छन्ति पुनर्भावं मुनयः संशितव्रताः ।
कदा वयं गमिष्यामो राज्यं हित्वा परंतप ॥ १२-२८५-५ (७६६३७)
भीष्म उवाच। १२-२८५-६क्ष् (६३७१)
नास्त्यनन्तं महाराज सर्वं सङ्ख्यानगोचरम् ।
पुनर्भावोपि संख्यातो नास्ति किंचिदिहाचलम् ॥ १२-२८५-६ (७६६३८)
न चापि गम्यते राजन्नैष दोषः प्रसङ्गतः ।
उद्योगादेव धर्मज्ञाः कालेनैव गमिष्यथ ॥ १२-२८५-७ (७६६३९)
नेशेऽयं सततं देही नृपते पुण्यपापयोः ।
तत एव समुत्थेन तमसा रुध्यतेऽपि च ॥ १२-२८५-८ (७६६४०)
यथाञ्जनमयो वायुः पुनर्मानःशिलं रजः ।
अनुप्रविश्य तद्वर्णो दृश्यते रञ्जयन्दिशः ॥ १२-२८५-९ (७६६४१)
तथा कर्मफलैर्देही रञ्जितस्तमसा वृतः ।
विवर्णो वर्णमाश्रित्य देहेषु परिवर्तते ॥ १२-२८५-१० (७६६४२)

ज्ञानेन हि यदा जन्तुरज्ञानप्रभवं तमः ।
व्यपोहति तदा ब्रह्म प्रकाशेत सनातनम् ॥१२-२८५-११ (७६६४३)
अयत्नसाध्यं मुनयो वदन्ति
चे चापि मुक्तास्तदुपासितव्याः ।
त्वया च लोकेन च सामरेण
तस्मान्न शाम्यन्ति महर्षिसङ्घाः ॥ १२-२८५-१२ (७६६४४)
अस्मिन्नर्थे पुरा गीतं शृणुष्वैकमना नृप ।
यथा दैत्येन वृत्रेण भ्रष्टैश्वर्येण चेष्टितम् ॥१२-२८५-१३ (७६६४५)
निर्जितेनासहायेन हृतराज्येन भारत ।
अशोचता शत्रुमध्ये बुद्धिमास्थाय केवलाम् ॥१२-२८५-१४ (७६६४६)
भ्रष्टैश्वर्यं पुरा वृत्रमुशना वाक्यमब्रवीत् ।
कच्चित्पराजितस्याद्य न व्यथा तेऽस्ति दानव ॥१२-२८५-१५ (७६६४७)
वृत्र उवाच।१२-२८५-१६क्ष् (६३७२)
सत्येन तपसा चैव विदित्वा संक्षयं ह्यहम् ।
न शोचामि न हृष्यामि भूतानामागतिं गतिम् ॥१२-२८५-१६ (७६६४८)
कालसंचोदिता जीवा मज्जन्ति नरकेऽवशाः ।
परिहृष्टानि सर्वाणि दिव्यान्याहुर्मनीषिणः ॥१२-२८५-१७ (७६६४९)
क्षपयित्वा तु तं कालं गणितं कालचोदिताः ।
सावशेषेण कालेन संधावन्ति पुनःपुनः ॥१२-२८५-१८ (७६६५०)
तिर्यग्योनिसहस्राणि गत्वा नरकमेव च ।
निर्गच्छन्त्यवशा जीवाः कालबन्धनबन्धनाः ॥१२-२८५-१९ (७६६५१)
एवं संसरमाणानि ह्यहं भूतानि दृष्टवान् ।
यथा कर्म तथा लाभ इति शास्त्रनिदर्शनम् ॥१२-२८५-२० (७६६५२)
तिर्यग्गच्छन्ति नरकं मानुष्यं दैवमेव च ।
सुखदुःखे प्रिये द्वेष्ये चरित्वा पूर्वमेव च ॥१२-२८५-२१ (७६६५३)
कृतान्तविधिसंयुक्तः सर्वो लोकः प्रपद्यते ।
गतं गच्छन्ति चाध्वानं सर्वभूतानि सर्वदा ॥१२-२८५-२२ (७६६५४)
कालसङ्ख्यानसङ्ख्येयं सृष्टिस्थितिपरायणम् ।
तं भाषमाणं भगवानुशना प्रत्यभाषत ।
इमान्दुष्टप्रलापांस्त्वं तात कस्मात्प्रभाषते ॥ १२-२८५-२३ (७६६५५)
वृत्र उवाच।१२-२८५-२४क्ष् (६३७३)
प्रत्यक्षमेतद्भवतस्तथाऽन्येषां मनीषिणाम् ।
मया यज्जयलुब्धेन पुरा तप्तं महत्तपः ॥१२-२८५-२४ (७६६५६)
गन्धानादाय भूतानां रसांश्च विविधानपि ।
अवर्धं त्रीन्समाक्रम्य लोकान्वै स्वेन तेजसा ॥१२-२८५-२५ (७६६५७)
ज्वालामालापरिक्षिप्तो वैहायसगतिस्तथा ।

अजेयः सर्वभूतानामासं नित्यमपेतभीः ॥१२-२८५-२६ (७६६५८)
ऐश्वर्यं तपसा प्राप्तं भ्रष्टं तच्च स्वकर्मभिः ।
धृतिमास्थाय भगवन्न शोचामि ततस्त्वहम् ॥१२-२८५-२७ (७६६५९)
युयुत्सता महेन्द्रेण पुरा सार्धं महात्मना ।
ततो मे भगवान्दृष्टो हरिर्नारायणः प्रभुः ॥१२-२८५-२८ (७६६६०)
वैकुण्ठः पुरुषोऽनन्तः शुक्लो विष्णुः सनातनः ।
मुञ्जकेशो हरिश्मश्रुः सर्वभूतपितामहः ॥१२-२८५-२९ (७६६६१)
नूनं तु तस्य तपसः सावशेषं ममास्ति वै ।
यदहं प्रष्टुमिच्छामि भवन्तं कर्मणः फलम् ॥१२-२८५-३० (७६६६२)
ऐश्वर्यं वै महद्ब्रह्मन्वर्णे कस्मिन्प्रतिष्ठितम् ।
निवर्तते चापि पुनः कथमैश्वर्यमुत्तमम् ॥१२-२८५-३१ (७६६६३)
भवन्ति कस्माद्भूतानि प्रवर्तन्ते यथा पुनः ।
किं वा फलं परं प्राप्य जीवस्तिष्ठति शाश्वतः ॥१२-२८५-३२ (७६६६४)
केन वा कर्मणा शक्यमथ ज्ञानेन केन वा ।
ब्रह्मर्षे तत्फलं प्राप्तुं तन्मे व्याख्यातुमर्हसि ॥१२-२८५-३३ (७६६६५)
इतीदमुक्तः स मुनिस्तदानीं
प्रत्याह यत्तच्छृणु राजसिंह ।
मयोच्यमानं पुरुषर्षभ त्व
मनन्यचित्तः सह सोदरीयैः ॥ ॥ १२-२८५-३४ (७६६६६)

इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि
पञ्चाशीत्यधिकद्विशततमोऽध्यायः ॥ २८५.।
Mahabharata - Shanti Parva - Chapter Footnotes

१२-२८५-२ देवैर्धर्मादिभिः ।जातिं जन्म ॥
१२-२८५-३ सुखसंज्ञिकमिति ध ।पाठः ॥
१२-२८५-५ व्रजन्ति येषु न भवमिति ध ।पाठः ॥
१२-२८५-७ न चापि मन्यते राजन्नेष धर्मोऽत्रसन्तत इति ध ।पाठः ॥
१२-२८५-८ नेशे नेष्टे ।ईदृशो यतते देहीति टङ।पाठः ॥
१२-२८५-९ यथाञ्जनचयं वायुरिति ड ।ध।पाठः ॥
१२-२८५-१८ संभवन्ति पुनःपुनरिति झ ।पाठः ॥
१२-२८५-२३ धीमन्दुष्टप्रलापांस्त्वमिति झ ।पाठः।दुष्टप्रलापान्
असुरभावविनाशकान् असुरे भूत्वा कथं भाषस इत्यर्थः ॥
१२-२८५-२५ गन्धाद्यादानं तदाश्रयोपमर्देन ।अवधं हिंसितवान् ॥
१२-२८५-२६ वैहायसगतिश्चरन्निति झ ।ध।पाठः ॥

शन्तिपर्व-अध्यय२८६
॥ श्रीः ॥
१२.२८६. अध्यायः २८६

Mahabharata - Shanti Parva - Chapter Topics
भीष्मेण युधिष्ठिरंप्रति वृत्राय सनत्कुमारोक्तविष्णुमाहात्म्यानुवादः
॥ १.।
Mahabharata - Shanti Parva - Chapter Text

१२-२८६-० (७६६६७)
उशनोवाच। १२-२८६-०क्ष् (६३७४)
नमस्तस्मै भगवते देवाय प्रभविष्णवे ।
यस्य पृथ्वी तलं तात साकाशं बाहुगोचरः ॥ १२-२८६-१ (७६६६८)
मूर्धा यस्य त्वनन्तं च स्थानं दानवसत्तम ।
तस्याहं ते प्रवक्ष्यामि विष्णोर्माहात्म्यमुत्तमम् ॥ १२-२८६-२ (७६६६९)
भीष्म उवाच। १२-२८६-३क्ष् (६३७५)
तयोः संवदतोरेवमाजगाम महामुनिः ।
सनत्कुमारो धमात्मा संशयच्छेदनाय वै ॥ १२-२८६-३ (७६६७०)
स पूजितोऽसुरेन्द्रेण मुनिनोशनसा तथा ।
निषसादासने राजन्महार्हे मुनिपुङ्गवः ॥ १२-२८६-४ (७६६७१)
तमासीनं महाप्रज्ञमुशना वाक्यमब्रवीत् ।
ब्रूह्यस्मै दानवेन्दाय विष्णोर्माहात्म्यमुत्तमम् ॥ १२-२८६-५ (७६६७२)
सनत्कुमारस्तु वचः श्रुत्वा प्राह वचोऽर्थवत् ।
विष्णोर्माहात्म्यसंयुक्तं दानवेन्द्राय धीमते ॥ १२-२८६-६ (७६६७३)
शृणु सर्वमिदं दैत्य विष्णोर्माहात्म्यमुत्तमम् ।
विष्णौ जगत्स्थितं सर्वमिति विद्धि परंतप ॥ १२-२८६-७ (७६६७४)
अस्मिन्गच्छन्ति विलयमस्माच्च प्रभवन्त्युत ।
अवत्येष महाबाहुर्भूतग्रामं चराचरम् ।
एष चाक्षिपते काले काले च सृजते पुनः ॥ १२-२८६-८ (७६६७५)
नैष दानव ते शक्यस्तपसा नैव चेज्यया ।
संप्राप्तुमिन्द्रियाणां तु संयमेनैव शक्यते ॥ १२-२८६-९ (७६६७६)
बाह्ये चाभ्यन्तरे चैव कर्मणा मनसि स्थितः ।
निर्मलीकुरुते बुद्ध्या सोऽमुत्रानन्त्यमश्नुते ॥ १२-२८६-१० (७६६७७)
यथा हिरण्यकर्ता वै रूप्यमग्नौ विशोधयेत् ।
बहुशोऽतिप्रयत्नेन महताऽऽत्मकृतेन ह ॥ १२-२८६-११ (७६६७८)
तद्वज्जातिशतैर्जीवः शुद्ध्यतेऽल्पेन कर्मणा ।

यत्नेन महता चैयवाप्येकजातौ विशुद्ध्यते ॥ १२-२८६-१२ (७६६७९)
लीलयाऽल्पं यथा गात्रात्प्रमृज्यादात्मनो रजः ।
बहुयत्नेन महता दोषनिर्हरणं तथा ॥ १२-२८६-१३ (७६६८०)
यथा चाल्पेन माल्येन वासितं तिलसर्षपम् ।
न मुञ्चति स्वकं गन्धं तथा सूक्ष्मस्य दर्शनम् ॥ १२-२८६-१४ (७६६८१)
तदेव बहुभिर्माल्यैर्वास्यमानं पुनः पुनः ।
विमुच्य तं स्वकं गन्धं माल्यगन्धेऽवतिष्ठते ॥ १२-२८६-१५ (७६६८२)
एवं जातिशतैर्युक्तो गुणैरेव प्रसङ्गिषु ।
बुद्ध्या निवर्तते दोषो यत्नेनाभ्यासजेन ह ॥ १२-२८६-१६ (७६६८३)
कर्मणा स्वेन रक्तानि विरक्तानि च दानव ।
यथा कर्मविशेषांश्च प्राप्नुवन्ति तथा शृणु ॥ १२-२८६-१७ (७६६८४)
यथावत्संप्रवर्तन्ते यस्मिंस्तिष्ठति चानिशम् ।
तत्तेऽनुपूर्व्या व्याख्यास्ये तदिहैकमनाः शृणु ॥ १२-२८६-१८ (७६६८५)
अनादिनिधनः श्रीमान्हरिर्नारायणः प्रभुः ।
देवः सृजति भूतानि स्थावराणि चराणि च ॥ १२-२८६-१९ (७६६८६)
एष सर्वेषु भूतेषु क्षरश्चाक्षर एव च ।
एकादश विकारात्मा जगत्पिबति रश्मिभिः ॥ १२-२८६-२० (७६६८७)
पादौ तस्य महीं विद्धि मूर्धानं दिवमेव च ।
बाहवस्तु दिशो दैत्य श्रोत्रमाकाशमेव च ॥ १२-२८६-२१ (७६६८८)
तस्य तेजोमयः सूर्यो मनश्चन्द्रमसि स्थितम् ।
बुद्धिर्ज्ञानगता नित्यं रसस्त्वप्सु प्रवर्तते ॥ १२-२८६-२२ (७६६८९)
भ्रुवोरनन्तरास्तस्य ग्रहा दानवसत्तम ।
नक्षत्रचक्रं नेत्रं च आस्यमग्निं च दानव ।
तं विश्वभूतं विश्वादिं परमं विद्धि चेश्वरम् ॥ १२-२८६-२३ (७६६९०)
रजस्तमश्च सत्वं च विद्धि नारायणात्मकम् ।
सोश्रमाणां मुखं तात कर्मणस्तत्फलं विदुः ॥ १२-२८६-२४ (७६६९१)
अकर्मणः फलं चैव स एव परमोऽव्ययः ।
छन्दांसि यस्य रोमाणि ह्यक्षरं च सरस्वती ॥ १२-२८६-२५ (७६६९२)
बह्वाश्रयो बहुमुखो धर्मो हृदि समाश्रितः ।
स ब्रह्मपरमो धर्मस्तपश्च सदसच्च सः ॥ १२-२८६-२६ (७६६९३)
श्रोत्रशास्त्रग्रहोपेतः षोड्शर्त्विक्क्रतुश्च सः ।
पितामहश्च रुद्रश्च सोऽश्विनौ स पुरंदरः ॥ १२-२८६-२७ (७६६९४)
मित्रोऽथ वरुणश्चैव यमोऽथ धनदस्तथा ।
ते पृथग्दर्शनास्तस्य संविदन्ति तथैकताम् ।
एकस्य विद्धि देवस्य सर्वं जगदिदं वशे ॥ १२-२८६-२८ (७६६९५)
नानाभूतस्य दैत्येन्द्र तस्यैकत्वं वदन्त्यपि ।

जन्तुः पश्यति विज्ञानात्ततः सत्वं प्रकाशते ॥१२-२८६-२९ (७६६९६)
संहारविक्षेपसहस्रकोटी
स्तिष्ठन्ति जीवाः प्रचरन्ति चान्ये ।
प्रजाविसर्गस्य च पारिमाण्यं
वापीसहस्राणि बहूनि दैत्य ॥ १२-२८६-३० (७६६९७)
वाप्यः पुनर्योजनविस्तृतास्ताः
क्रोशं च गम्भीरतयाऽवगाढाः ।
आयामतः पञ्चशताश्च सर्वाः
प्रत्येकशो योजनतः प्रवृद्धाः ॥ १२-२८६-३१ (७६६९८)
वाप्या जलं क्षिप्यति वालकोट्या
त्वह्ना सकृच्चाप्यथ न द्वितीयम् ।
तासां क्षये विद्धि परं विसर्गं
संहारमेकं च तथा प्रजानाम् ॥ १२-२८६-३२ (७६६९९)
षड्जीववर्णाः परमं प्रमाणं
कृष्णो धूम्रो नीलमथास्य मध्यम् ।
रक्तं पुनः सह्यतरं सुखं तु
हारिद्रवर्णं सुसुखं च शुक्लम् ॥ १२-२८६-३३ (७६७००)
परं तु शुक्लं विमलं विशोकं
गतक्लमं सिद्ध्यति दानवेन्द्र ।
गत्वा तु योनिप्रभवाणि दैत्य
सहस्रशः सिद्धिमुपैति जीवः ॥ १२-२८६-३४ (७६७०१)
गतिं च यां दर्शनमाह देवो
गत्वा शुभं दर्शनमेव चापि ।
गतिः पुनर्वर्णकृता प्रजानां
वर्णस्तथा कालकृतोऽसुरेन्द्र ॥ १२-२८६-३५ (७६७०२)
शतं सहस्राणि चतुर्दशेह
परा गतिर्जीवगणस्य दैत्य ।
आरोहणं तत्कृतमेव विद्धि
स्थानं तथा निःसरणं च तेषाम् ॥ १२-२८६-३६ (७६७०३)
ग्योऽस्मादथ भ्रश्यति कालयोगा
त्कृष्णे वर्णे तिष्ठति सर्वकृष्टे ।
अतिप्रसक्तो निरयाच्च दैत्य
ततस्ततः संपरिवर्तते च ॥' १२-२८६-३७ (७६७०४)
कृष्णस्य वर्णस्य गतिर्निकुष्टा
स मज्जते नरके पच्यमानः ।
स्थानं तथा दुर्गतिभिस्तु तस्य

प्रजाविसर्गान्सुबहून्वदन्ति ॥ १२-२८६-३८ (७६७०५)
शतं सहस्राणि ततश्चरित्वा
प्राप्नोति वर्णं हरितं तु पश्चात् ।
स चैव तस्मिन्निवसत्यनिशो
युगक्षयं तमसा संवृतात्मा ॥ १२-२८६-३९ (७६७०६)
स वै यदा सत्वगुणेन युक्त
स्तमो व्यपोहन्घटते स्वबुद्ध्या ।
स लोहितं वर्णमुपैति नीला
न्मनुष्यलोके परिवर्तते च ॥ १२-२८६-४० (७६७०७)
स तत्र संहारविसर्गमेकं
स्वकर्मजैर्बन्धनैः क्लिश्यमानः ।
ततः स हारिद्रमुपैति वर्णं
संहारविक्षेपशते व्यतीते ॥ १२-२८६-४१ (७६७०८)
हारिद्रवर्णस्तु प्रजाविसर्गा
त्सहस्रशस्तिष्ठति संचरन्वै ।
अविप्रमुक्तो निरये च दैत्य
ततः सहस्राणि दशापराणि ॥ १२-२८६-४२ (७६७०९)
गतीः सहस्राणि च पञ्च तस्य
चत्वारि संवर्तकृतानि चैव ।
विमुक्तमेनं निरयाच्च विद्धि
सर्वेषु चान्येषु च संभवेषु ॥ १२-२८६-४३ (७६७१०)
स देवलोके विहरत्यभीक्ष्णं
ततश्च्युतो मानुषतामुपैति
संहारविक्षेपशतानि चाष्टौ
मर्त्येषु तिष्ठन्नमृतत्वमेवि ॥ १२-२८६-४४ (७६७११)
सोऽस्मादय भ्रश्यति कालयोगा
त्कृष्णे तले तिष्ठति सर्वकृष्टे ।
यथा त्वयं सिध्यति जीवलोक
स्तत्तेऽभिधास्याम्यसुरप्रवीर ॥ १२-२८६-४५ (७६७१२)
दैवानि स व्यूहशतानि सप्त
रक्तो हरिद्रोऽथ तथैव शुक्लः ।
संश्रित्य संधावति शुक्लमेत
मष्टावरानर्च्यतमान्स लोकान्। १२-२८६-४६ (७६७१३)
अष्टौ च षष्टिं च शतानि चैव
मनोविरुद्धानि महाद्युतीनाम् ।
शुक्लस्य वर्णस्य परा गतिर्या

त्रीण्येव रुद्धानि महानुभाव ॥ १२-२८६-४७ (७६७१४)
संहाराविक्षेपमनिष्टमेकं
चत्वारि चान्यानि वसत्यनीशः ।
षष्ठस्य वर्णस्य परा गतिर्या
सिद्धावसिद्धस्य गतक्लमस्यर ॥ १२-२८६-४८ (७६७१५)
सप्तोचरं तत्र वसत्यनीशः
संहारविक्षेपशतं सशेषः ।
संहारविक्षेपमनिष्टमेकं
चत्वारि चान्यानि वसत्यनीशः ।
तस्मादुपावृत्य मनुष्यलोके
ततो महान्मानुषतामुपैति ॥ १२-२८६-४९ (७६७१६)
तस्मादुपावृत्य ततः क्रमेण
सोग्रेण संतिष्ठति भूतसर्गम् ।
स सप्तकृत्वश्च परैति लोका
न्संहारविक्षेपकृतप्रवासः ॥ १२-२८६-५० (७६७१७)
सप्तैव संहारमुपप्लवानि
संभाव्य संतिष्ठति जीवलोके ।
ततोऽव्ययं स्थानमनन्तमेति
देवस्य विष्णोरथ ब्रह्मणथ ।
शेषस्य चैवाथ नरस्य चैव
देवस्य विष्णोः परमस्य चैव ॥ १२-२८६-५१ (७६७१८)
संहारकाले परदिग्धकाया
ब्रह्माणमायान्ति सदा प्रजाहि ।
चेष्टात्मनो देवगणाश्च सर्वे
ये ब्रह्मलोके ह्यमराः स्म तेऽपि ॥ १२-२८६-५२ (७६७१९)
प्रजानिसर्गे तु स शेषकाले
स्थानानि स्वान्येव सरन्ति जीवाः ।
निःशेषतस्तत्पदं वान्ति चान्ते
सर्वे देवा ये सदृशा मनुष्याः ॥ १२-२८६-५३ (७६७२०)
ये तु च्युताः सिद्धलोकात्क्रमेण
तेषां गतिं यान्ति यथाऽऽनुपूर्व्या ।
जीवाः परे तद्बलवेषरूपाः
स्वकं विधिं यान्ति विपर्ययेण ॥ १२-२८६-५४ (७६७२१)
स यावदेवास्ति सशेषभुक्तिः
प्रजाश्च देव्यौ च तथैव शुक्ले ।
तावत्तदङ्गेषु विशुद्धभावः

संयम्य पञ्चेन्द्रियरूपमेतत् ॥ १२-२८६-५५ (७६७२२)
शुद्धां गतिं तां परमां प्रयाति
शुद्धेन नित्यं मनसा विचिन्वन् ।
ततोऽव्ययं स्थानमुपैति ब्रह्म
दुष्प्रापमन्येन स शाश्वतं वै ।
इत्येतदाख्यातमहीनसत्व
नारायणस्येह बलं मया ते ॥ १२-२८६-५६ (७६७२३)
वृत्र उवाच। १२-२८६-५७क्ष् (६३७६)
एवं गते मे न विषादोस्ति कश्चि
त्सम्यक्च पश्यामि वचस्तथैतत् ।
श्रुत्वा तु ते वाचमदीनसत्व
विकल्मषोस्म्यद्य तथा विपाप्मा ॥ १२-२८६-५७ (७६७२४)
प्रवृत्तमेतद्भगवन्महर्षे
महाद्युतेश्चक्रमनन्तवीर्यम् ।
विष्णोरनन्तस्य सनातनं त
त्स्थानं सर्गा यत्र सर्वं प्रवृत्ताः ।
स वै महात्मा पुरुषोत्तमो वै
तस्मिज्जगत्सर्वमिदं प्रतिष्ठितम् ॥ १२-२८६-५८ (७६७२५)
भीष्म उवाच। १२-२८६-५९क्ष् (६३७७)
एवमुक्त्वा स कौन्तेय वृत्रः प्राणानवासृजत् ।
योजयित्वा तथाऽऽत्मानं परं स्थानमवाप्तवान् ॥ १२-२८६-५९ (७६७२६)
युधिष्ठिर उवाच। १२-२८६-६०क्ष् (६३७८)
अयं स भगवान्देवः पितामह जनार्दनः ।
सनत्कुमारो वृत्राय यत्तदाख्यातवान्पुरा ॥ १२-२८६-६० (७६७२७)
भीष्म उवाच। १२-२८६-६१क्ष् (६३७९)
मूलस्थायी स भगवान्स्वेनानन्तेन तेजसा ।
तत्स्थः सृजति तान्भावानात्मरूपान्महामनाः ॥ १२-२८६-६१ (७६७२८)
तुरीयांशेन तस्येमं विद्धि केशवमच्युतम् ।
गतुरीयांशेन ब्रह्माणं तस्य विद्धि महात्मनः।'
तुरीयार्धेन लोकांस्त्रीन्भावयत्येव बुद्धिमान् ॥ १२-२८६-६२ (७६७२९)
अर्वाक्स्थितस्तु यः स्थायी कल्पान्ते परिवर्तते ।
स शेते भगवानप्सु योऽसावतिबलः प्रभुः ।
तान्विधाता प्रसन्नात्मा लोकांश्चरति शाश्वतान् ॥ १२-२८६-६३ (७६७३०)
सर्वाण्यशून्यानि करोत्यनन्तः
सनातनः संचरते च लोकान् ।
स चानिरुद्धः सृजते महात्मा

तत्स्थं जगत्सर्वमिदं विचित्रम् ॥ १२-२८६-६४ (७६७३१)
युधिष्ठिर उवाच। १२-२८६-६५क्ष् (६३८०)
वृत्रेण परमार्थज्ञ दृष्टा मन्येत्मनो गतिः ।
सुखात्तस्मात्स सुखितो न शोचति पितामह ॥ १२-२८६-६५ (७६७३२)
शुक्लः शुक्लाभिजातीयः साध्यो नावर्ततेऽनघ ।
तिर्यग्गतेश्च निर्मुक्तो निरयाच्च पितामह ॥ १२-२८६-६६ (७६७३३)
हारिद्रवर्णे रक्ते वा वर्तमानस्तु पार्थिव ।
तिर्यगेवानुपश्येत कर्मभिस्तामसैर्वृतः ॥ १२-२८६-६७ (७६७३४)
वयं तु भृशमापन्ना रक्ताः कष्टाः सुखेऽसुखे ।
कां गतिं प्रतिपत्स्यामो नीलां कृष्णाधमामथ ॥ १२-२८६-६८ (७६७३५)
भीष्म उवाच। १२-२८६-६९क्ष् (६३८१)
शुद्धाभिजनसंपन्नाः पाण्डवाः संशितव्रताः ।
विहत्य देवलोकेषु पुनर्मानुषमेष्यथ ॥ १२-२८६-६९ (७६७३६)
प्रजाविसर्गं च सुखेन लोके
प्रेत्यान्येदेहेषु सुखानि भुक्त्वा ।
सुखेन संयास्यथ सिद्धसङ्ख्यां
मा वो भयं भवतु न वोऽस्तु पापम् ॥ ॥ १२-२८६-७० (७६७३७)

इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि
षडशीत्यधिकद्विशततमोऽध्यायः ॥ २८६.।

Mahabharata - Shanti Parva - Chapter Footnotes

१२-२८६-१ तलमधोभागः ।साकाशमाकाशसहितं
सर्वमुपरितनम्। बाहुगोचरो मध्यस्थमित्यर्थः। यस्य पृथ्वीतलं
पादमाशा वै बहुगोचरा इति ट। थ। पाठः ॥
१२-२८६-२ अनन्तं स्थानं मोक्षः ॥
१२-२८६-९ नैष दानकृता शक्य इति थ ।पाठः ॥
१२-२८६-११ महताल्पकृतेन चेति ध ।पाठः ॥
१२-२८६-१२ जातिशतैर्जन्मशतैः एकजातौ एकजन्मन्यपि ॥
१२-२८६-२२ अप्सु प्रतिष्ठित इति झ ।पाठः ॥
१२-२८६-२३ नेत्राभ्यां पादयोर्भूश्च दानयेति झ ।पाठः ॥
१२-२८६-२४ फलं तातेति झ ।पाठः ॥
१२-२८६-२९ ततो ब्रह्म प्रकाशते इति झ ।पाठः ॥
१२-२८६-३० वापीसहस्राणि ततोऽप्यशीतिः इति ध ।पाठः ॥
१२-२८६-३१ योजनविस्तृताश्चेति थ ।पाठः ॥
१२-२८६-३४ गत्वाशुयोनिप्रभावानुतीत्येति ध ।पाठः ॥

१२-२८६-३५ दर्शनमापजीव इति थ ।ध।पाठः ॥
१२-२८६-३६ जीवगुणस्य दैत्येति झ ।थ।पाठः ॥
१२-२८६-३८ प्रजानिसर्गात्सबहून्वदन्तीति ट ।थ।पाठः ॥
१२-२८६-३९ युगक्षये तपसेति झ ।पाठः ॥
१२-२८६-४४ तिष्ठग्रमलत्वमेतीति ट थ ।पाठः ॥
१२-२८६-५० स्वर्गं सुखं तिष्ठति भूतसर्गमिति ट
।पाठः।विक्षेपकृतप्रभाव इति झ।पाठः ॥
१२-२८६-५१ सिद्धिलोके इति थ ।ध।पाठः।संतिष्ठति सर्वलोके
इति ट।पाठः ॥
१२-२८६-५३ निश्शेषा वै तत्पदं यान्तति ट ।थ।ध।पाठः ॥
१२-२८६-५५ सशेषभाव इति ट ।पाठः।दिव्याश्च तथैव शुक्ले
इति ध।पाठः।तावत्तरत्येष विशुद्धभाव इतिं ध।पाठः ॥
१२-२८६-५६ दुष्प्रापमभ्येति स इति झ ।ट।थ।पाठः ॥
१२-२८६-६१ महादेवो भगवान्स्वेन तेजसेति झ
।पाठः।नानारूपान्महामना इति झ।ट।थ।पाठः ॥
१२-२८६-६४ सनत्कुमारश्चरते चेति ध ।पाठः ॥
१२-२८६-६५ मन्ये शुभा गतिरिति थ ।पाठः ॥
१२-२८६-६६ नावर्तते पुनरिति ध ।पाठः ॥
१२-२८६-६८ रक्ताः काममुखेषु वै इति ध ।पाठः।दुःखमुखेऽमुखे
इति झ।पाठः ॥
१२-२८६-७० प्रत्येत्य देवेषु सुखानि बुक्त्वेति झ ।पाठः।मा वो भयं
भूद्विमलाः स्थ सर्वे इति च।झ।पाठः ॥

---

शन्तिपर्व-अध्यय२८७
॥ श्रीः ॥
१२.२८७. अध्यायः २८७

Mahabharata - Shanti Parva - Chapter Topics
भीष्मेण युधिष्ठिरंप्रति शक्रवृत्रयुद्धवर्णनम् ॥१.।
Mahabharata - Shanti Parva - Chapter Text

१२-२८७-० (७६७३८)
युधिष्ठिर उवाच।१२-२८७-०क्ष् (६३८२)
अहो धर्मिष्ठता तस्य वृत्रस्यामिततेजसः ।
यस्य विज्ञानमतुलं विष्णोर्भक्तिश्च तादृशी ॥१२-२८७-१ (७६७३९)
दुर्विज्ञेयमिदं तस्य विष्णोरमिततेजसः ।
कथं वा राजशार्दूल पदं तु ज्ञातवानसौ ॥१२-२८७-२ (७६७४०)

भवता कथितं ह्येतच्छ्रद्दधे चाहमच्युत ।
भूयश्च मे समुत्पन्ना बुद्धिरव्यक्तदर्शना ॥ १२-२८७-३ (७६७४१)
कथं विनिहतो वृत्रः शक्रेण भरतर्षभ ।
धार्मिको विष्णुभक्तश्च तत्त्वज्ञश्च तदन्वये ॥ १२-२८७-४ (७६७४२)
एतन्मे संशयं ब्रूहि पृच्छते भरतर्षभ ।
वृत्रः स राजशार्दूल यथा शक्रेण निर्जितः ॥ १२-२८७-५ (७६७४३)
यथा चैवाभवद्युद्धं तच्चाचक्ष्व पितामह ।
विस्तरेण महाबाहो परं कौतूहलं हि मे ॥ १२-२८७-६ (७६७४४)
भीष्म उवाच। १२-२८७-७क्ष् (६३८३)
रथेनेन्द्रः प्रयातो वै सार्धं सुरगणैः पुरा ।
ददर्शाथाग्रतो वृत्रं धिष्ठितं पर्वतोपमम् ॥ १२-२८७-७ (७६७४५)
योजनानां शतान्यूर्ध्वं पञ्चोच्छ्रितमरिंदम् ।
शतानि विस्तरेणाथ त्रीणि चाभ्यधिकानि वै ॥ १२-२८७-८ (७६७४६)
तत्प्रेक्ष्य तादृशं रूपं त्रैलोक्येनापि दुर्जयम् ।
वृत्रस्य देवाः संत्रस्ता न शान्तिमुपलेभिरे ॥ १२-२८७-९ (७६७४७)
शक्रस्य तु तदा राजन्नूरुस्तम्भो व्यजायत ।
भयाद्वृत्रस्य सहसा दृष्ट्वा तद्रूपमुत्तमम् ॥ १२-२८७-१० (७६७४८)
ततो नादः समभवद्वादित्राणां च निःस्वनः ।
देवासुराणां सर्वेषां तस्मिन्युद्धे ह्युपस्थिते ॥ १२-२८७-११ (७६७४९)
अथ वृत्रस्य कौरव्य दृष्ट्वा शक्रमवस्थितम् ।
न संभ्रमो न भीः काचिदास्था वा समजायत ॥ १२-२८७-१२ (७६७५०)
ततः समभवद्युद्धं त्रैलोक्यस्य भयंकरम् ।
शक्रस्य च सुरेन्द्रस्य वृत्रस्य च महात्मनः ॥ १२-२८७-१३ (७६७५१)
असिभिः पट्टसैः शूलैः शक्तितोमरमुद्गरैः ।
शिलाभिर्विविधाभिश्च कार्मुकैश्च महास्वनैः ॥ १२-२८७-१४ (७६७५२)
अस्त्रैश्च विविधैर्दिव्यैः पावकोल्काभिरेव च ।
देवासुरैस्ततः सैन्यैः सर्वमासीत्समाकुलम् ॥ १२-२८७-१५ (७६७५३)
पितामहपुरोगाश्च सर्वे देवगणास्तदा ।
ऋषयश्च महाभागास्तद्युद्धं द्रष्टुमागमन् ॥ १२-२८७-१६ (७६७५४)
विमानाग्र्यैर्महाराज सिद्धाश्च भरतर्षभ ।
गन्धर्वाश्च विमानाग्रैरप्सरोभिः समागमन् ॥ १२-२८७-१७ (७६७५५)
ततोऽन्तरिक्षमावृत्य वृत्रो धर्मभृतां वरः ।
अश्मवर्षेण देवेन्द्रं सर्वतः समवाकिरत् ॥ १२-२८७-१८ (७६७५६)
ततो देवगणाः क्रुद्धाः सर्वतः शरवृष्टिभिः ।
अश्मवर्षमपोहन्त वृत्रप्रेरितमाहवे ॥ १२-२८७-१९ (७६७५७)
वृत्रस्तु कुरुशार्दूल महामायो महाबलः ।

मोहयामास देवेन्द्रं मायायुद्धेन सर्वशः ॥ १२-२८७-२० (७६७५८)
तस्य वृत्रार्दितस्याथ मोह आसीच्छतक्रतोः ।
रथन्तरेण तं तत्र वसिष्ठः समबोधयत् ॥ १२-२८७-२१ (७६७५९)
वसिष्ठ उवाच। १२-२८७-२२क्ष् (६३८४)
देवश्रेष्ठोऽस्ति देवेन्द्र दैत्यासुरनिबर्हण ।
त्रैलोक्यबलसंयुक्तः कस्माच्छक्र विषीदसि ॥ १२-२८७-२२ (७६७६०)
एष ब्रह्मा च विष्णुश्च शिवश्चैव जगत्पतिः ।
सोमश्च भगवान्देवः सर्वे च परमर्षयः ॥ १२-२८७-२३ (७६७६१)
ग्समुद्विग्नं समीक्ष्य त्वां स्वस्तीत्यूचुर्जयाय ते।'
मा कार्षीः कश्मलं शक्र कश्चिदेवेतरो यथा ।
आर्या युद्धे मतिं कृत्वा जहि शत्रून्सुराधिप ॥ १२-२८७-२४ (७६७६२)
एष लोकगुरुस्त्र्यक्षः सर्वलोकनमस्कृतः ।
निरीक्षते त्वां भगवांस्त्यज मोहं सुराधिप ॥ १२-२८७-२५ (७६७६३)
एते ब्रह्मर्षयश्चैव बृहस्पतिपुरोगमाः ।
स्तवेन शक्र दिव्येन स्तुवन्ति त्वां जयाय वै ॥ १२-२८७-२६ (७६७६४)
भीष्म उवाच। १२-२८७-२७क्ष् (६३८५)
एवं संबोध्यमानस्य वसिष्ठेन महात्मना ।
अतीव वासवस्यासीद्बलमुत्तमतेजसः ॥ १२-२८७-२७ (७६७६५)
ततो बुद्धिमुपागम्य भगवान्पाकशासनः ।
योगेन महता युक्तस्तां मायां व्यपकर्षत ॥ १२-२८७-२८ (७६७६६)
ततोऽङ्गिरः सुतः श्रीमांस्ते चैव सुमहर्षयः ।
दृष्ट्वा वृत्रस्य विक्रान्तुमुपागम्य महेश्वरम् ॥ १२-२८७-२९ (७६७६७)
ऊचुर्वृत्रविनाशार्थं लोकानां हितकाम्यया ।
ततो भगवतस्तेजो ज्वरो भूत्वा जगत्पतेः ॥ १२-२८७-३० (७६७६८)
समाविशत्तदा रौद्रं वृत्रं लोकपतिं तदा ।
विष्णुश्च भगवान्देवः सर्वलोकाभिपूजितः ॥ १२-२८७-३१ (७६७६९)
ऐन्द्रं समाविशुद्वज्रं लोकसंरक्षणे रतः ।
ततो बृहस्पतिर्धीमानुपागम्य शतक्रतुम् ।
वसिष्ठश्च महातेजाः सर्वे च परमर्षयः ॥ १२-२८७-३२ (७६७७०)
ते समासाद्य वरदं वासवं लोकपूजितम् ।
ऊचुरेकाग्रमनसो जहि वृत्रमिति प्रभो ॥ १२-२८७-३३ (७६७७१)
महेश्वर उवाच। १२-२८७-३४क्ष् (६३८६)
एष वृत्रो महाञ्शक्रे बलेन महता वृतः ।
विश्वात्मा सर्वगश्चैव बहुमायश्च विश्रुतः ॥ १२-२८७-३४ (७६७७२)
तदेनमसुरश्रेष्ठं त्रैलोक्येनापि दुर्जयम् ।
जहि त्वं योगमास्थाय मावमंस्थाः सुरेश्वर ॥ १२-२८७-३५ (७६७७३)

अनेन हि तपस्तप्तं बलार्थममराधिप ।
षष्टिं वर्षसहस्राणि ब्रह्मा चास्मै वरं ददौ ॥ १२-२८७-३६ (७६७७४)
महत्त्वं योगिनां चैव महामायत्वमेव च ।
महाबलत्वं च तथा तेजश्चाग्र्यं सुरेश्वर ॥ १२-२८७-३७ (७६७७५)
एतत्त्वां मामकं तेजः समाविशति वासव ।
वृत्रमेवं त्ववध्यं तं वज्रेण जहि दानवम् ॥ १२-२८७-३८ (७६७७६)
शक्र उवाच। १२-२८७-३९क्ष् (६३८७)
भगवंस्त्वत्प्रसादेन दितिजं सुदुरासदम् ।
वज्रेण निहनिष्यामि पश्यतस्ते सुरर्षभ ॥ १२-२८७-३९ (७६७७७)
भीष्म उवाच। १२-२८७-४०क्ष् (६३८८)
आविश्यमाने दैत्ये तु ज्वरेणाथ महासुरे ।
देवतानामृषीणां च हर्षान्नादो महानभूत् ॥ १२-२८७-४० (७६७७८)
ततो दुन्दुभयश्चैव शङ्खयाश्च सुमहास्वनाः ।
मुरजा डिण्डिभाश्चैव प्रावाद्यन्त सहस्रशः ॥ १२-२८७-४१ (७६७७९)
असुराणां तु सर्वेषां स्मृतिलोपो महानभूत् ।
मायानाशश्च बलवान्क्षणेन समपद्यत ॥ १२-२८७-४२ (७६७८०)
तमाविष्टमथो ज्ञात्वा ऋषयो देवतास्तथा ।
स्तुवन्तः शक्रमीशानं तथा प्राचोदयन्नपि ॥ १२-२८७-४३ (७६७८१)
रथस्थस्य हि शक्रस्य युद्धकाले महात्मनः ।
ऋषिभिः स्तूयमानस्य रूपमासीन्सुदुर्दृशम् ॥ ॥ १२-२८७-४४ (७६७८२)

इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि
सप्ताशीत्यधिकद्विशततमोऽध्यायः ॥ २८७.।
Mahabharata - Shanti Parva - Chapter Footnotes

१२-२८७-२१ अथान्तरे च तं तत्रेति ध ।पाठः ॥
१२-२८७-२२ सुरारातिनिबर्हणेति थ ।पाठः ॥
१२-२८७-२४ कश्चिदेव नरो यथेति ध ।पाठः ॥
१२-२८७-२५ एष देवगुरुस्त्वद्येति ध ।पाठः ॥
१२-२८७-२६ स्तुवन्त्यात्मजयाय वै इति ध ।पाठः ॥
१२-२८७-३४ बहुमायासु विश्रुत इति थ ।पाठः ॥
१२-२८७-४२ धृतिलोपो महानभूत् इति थ ।पाठः ॥

---

शन्तिपर्व-अध्यय२८८
॥ श्रीः ॥
१२.२८८. अध्यायः २८८

Mahabharata - Shanti Parva - Chapter Topics
भीष्मेण युधिष्ठिरंप्रति शक्रकृतवृत्रसंहारकथनम्
॥ १.। तथा शक्रमाक्रान्तवत्या ब्रह्महत्याया अग्न्यादिषु ब्रह्मकृत
विभजनकथनम् ॥ २.।
Mahabharata - Shanti Parva - Chapter Text

१२-२८०-० (७६७८३)
भीष्म उवाच। १२-२८०-०क्ष् (६३८९)
वृत्रस्य तु महाराज ज्वराविष्टस्य सर्वशः ।
अभवन्यानि लिङ्गानि शरीरे तानि मे शृणु ॥ १२-२८८-१ (७६७८४)
ज्वलितास्योऽभवद्घोरो वैवर्ण्यं चागमत्परम् ।
गात्रकम्पश्च सुमहाञ्श्वासश्चाप्यभवन्महान् ॥ १२-२८८-२ (७६७८५)
रोमहर्षश्च तीव्रोऽभून्निःश्वासश्च महान्नृप ।
शिवा चाशिवसंकाशा तस्य वक्रात्सुदारुणा ॥ १२-२८८-३ (७६७८६)
निष्पपात महाघोरा स्मृतिर्नष्टास्य भारत ।
उत्काश्च ज्वलितास्तस्य दीप्ताः पार्श्वे प्रपेदिरे ॥ १२-२८८-४ (७६७८७)
गृध्राः कङ्का बलाकाश्च वाचोऽमुञ्चन्सुदारुणाः ।
वृत्रस्योपरि संहृष्टाश्चक्रवत्परिबभ्रमुः ॥ १२-२८८-५ (७६७८८)
ततस्तं रथमास्थाय देवाप्यायित आहवे ।
वज्रोद्यतकरः शक्रस्तं दैत्यं प्रत्यवैक्षत ॥ १२-२८८-६ (७६७८९)
अमानुषमथो नादं स मुमोच महासुरः ।
व्यजृम्भच्चैव राजेन्द्र तीव्रज्वरसमन्वितः ॥ १२-२८८-७ (७६७९०)
अथास्य जृम्भतः शक्रस्ततो वज्रमवासृजत् ।
स वज्रः सुमहातेजा कालान्तकयमोपमः ॥ १२-२८८-८ (७६७९१)
क्षिप्रमेव महाकायं वृत्रं दैत्यमपातयत् ।
ततो नादः समभवत्पुनरेव समन्ततः ॥ १२-२८८-९ (७६७९२)
वृत्रं विनिहितं दृष्ट्वा देवानां भरतर्षभ ।
वृत्रं तु हत्वा मघवा दानवारिर्महायशाः ॥ १२-२८८-१० (७६७९३)
वज्रेण विष्णुयुक्तेन दिवमेव समाविशत् ।
अथ वृत्रस्य कौरव्य शरीरादभिनिःसृता ॥ १२-२८८-११ (७६७९४)
ब्रह्महत्या महाघोरा रौद्रा लोकभयावहा ।
करालदशना भीमा विकृता कृष्णपिङ्गला ॥ १२-२८८-१२ (७६७९५)
प्रकीर्णमूर्धजा चैव घोरनेत्रा च भारत ।
कपालमालिनी चैव कृत्येव भरतर्षभ ॥ १२-२८८-१३ (७६७९६)
रुधिरार्द्रा च धर्मज्ञ चीरवल्कलवासिनी ।

साऽभिनिष्क्रम्य राजेन्द्र तादृग्रूपा भयावहा ॥१२-२८८-१४ (७६७९७)
वज्रिणं मृगयामास तदा भरतसत्तम ।
कस्यचित्त्वथ कालस्य वृत्रहा कुरुनन्दन ॥१२-२८८-१५ (७६७९८)
स्वर्गायाभिमुखः प्रायाल्लोकानां हितकाम्यया ।
सा विनिःसरमाणं तु दृष्ट्वा शक्रं महौजसम् ॥१२-२८८-१६ (७६७९९)
कण्ठे जग्राह देवेन्द्रं सुलग्ना चाभवत्तदा ।
स हि तस्मिन्समुत्पन्ने ब्रह्मवध्याकृते भये ॥१२-२८८-१७ (७६८००)
नलिन्या विसमध्यस्थ उवासाब्दगणान्बहून् ।
अनुसृत्य तु यत्नात्स तया वै ब्रह्महत्यया ॥१२-२८८-१८ (७६८०१)
तदा गृहीतः कौरव्य निस्तेजाः समपद्यत ।
तस्या व्यपोहने शक्रः परं यत्नं चकार ह ॥१२-२८८-१९ (७६८०२)
न चाशकत्तां देवेन्द्रो ब्रह्मवध्यां व्यपोहितुम् ।
गृहीत एव तु तया देवेन्द्रो भरतर्षभ ॥१२-२८८-२० (७६८०३)
पितामहमुपागम्य शिरसा प्रत्यपूजयत् ।
ज्ञात्वा गृहीतं शक्रं स द्विजप्रवरवध्यया ॥१२-२८८-२१ (७६८०४)
ब्रह्मा स चिन्तयामास तदा भरतसत्तम ।
तामुवाच महाबाहो ब्रह्मवध्यां पितामहः ॥१२-२८८-२२ (७६८०५)
स्वरेण मधुरेणाथ सान्त्वयन्निव भारत ।
मुच्यतां त्रिदशेन्द्रोयं मत्प्रियं कुरु भामिनी ॥१२-२८८-२३ (७६८०६)
ब्रूहि किं ते करोम्यद्य कामं किं त्वमिहेच्छसि ॥ १२-२८८-२४ (७६८०७)
ब्रह्महत्योवाच।१२-२८८-२५क्ष् (६३९०)
त्रिलोकपूजिते देवे प्रीते त्रैलोक्यकर्तरि ।
कृतमेव हि मन्यामि निवासं तु विधत्स्व मे ॥१२-२८८-२५ (७६८०८)
त्वया कृतेयं मर्यादा लोकसंरक्षणार्थिना ।
स्थापना वै सुमहती त्वया देव प्रवर्तिता ॥१२-२८८-२६ (७६८०९)
प्रीते तु त्वयि धर्मज्ञ सर्वलोकेश्वर प्रभो ।
शक्रादपगमिष्यामि निवासं संविधत्स्व मे ॥१२-२८८-२७ (७६८१०)
भीष्म उवाच।१२-२८८-२८क्ष् (६३९१)
तथेति तां प्राह तदा ब्रह्मवध्यां पितामहः ।
उपायतः स शक्रस्य ब्रह्मवध्यां व्यपोहितुम् ॥१२-२८८-२८ (७६८११)
ततः स्वयंभुवा ध्यातस्तत्र वह्निर्महात्मना ।
ब्रह्माणमुपसंगम्य ततो वचनमब्रवीत् ॥१२-२८८-२९ (७६८१२)
प्राप्तोऽस्मि भगवन्देव त्वत्सकाशमनिन्दित् ।
यत्कर्तव्यं मया देव तद्भवान्वक्तुमर्हति ॥१२-२८८-३० (७६८१३)
ब्रह्मोवाच।१२-२८८-३१क्ष् (६३९२)
बहुधा विभजिष्यामि ब्रह्मवध्यामिमामहम् ।

शक्रस्याद्य विमोक्षार्थं चतुर्भागं प्रतीच्छ वै ॥ १२-२८८-३१ (७६८१४)
अग्निरुवाच। १२-२८८-३२क्ष् (६३९३)
मम मोक्षस्य कोऽन्तो वै ब्रह्मन्ध्यायस्व वै प्रभो ।
एतदिच्छामि विज्ञातुं तत्वतो लोकपूजित ॥ १२-२८८-३२ (७६८१५)
ब्रह्मोवाच। १२-२८८-३३क्ष् (६३९४)
यस्त्वां ज्वलन्तमासाद्य स्वयं वै मानवः क्वचित् ।
बीजौषधिरसैर्वह्ने न यक्ष्यति तमोवृतः ॥ १२-२८८-३३ (७६८१६)
तमेषा यास्यति क्षिप्रं तत्रैव च निवत्स्यति ।
ब्रह्मवध्या हव्यवाह व्येतु ते मानसो ज्वरः ॥ १२-२८८-३४ (७६८१७)
इत्युक्तः प्रतिजग्राह तद्वचो हव्यकव्यभुक् ।
पितामहस्य भगवांस्तथा च तदभूत्प्रभो ॥ १२-२८८-३५ (७६८१८)
ततो वृक्षौषधितृणं समाहूय पितामहः ।
इममर्थं महाराज वक्तुं समुपचक्रमे ॥ १२-२८८-३६ (७६८१९)
ग्इयं पुत्रादनुप्राप्ता ब्रह्महत्या महाभया ।
पुरुहूतं चतुर्थांशमस्या यूयं प्रतीच्छत ॥' १२-२८८-३७ (७६८२०)
ततो वृक्षौषधितृणं तथैवोक्तं यथातथम् ।
व्यथितं वह्निवद्राजन्ब्रह्माणमिदमब्रवीत् ॥ १२-२८८-३८ (७६८२१)
अस्माकं ब्रह्मवध्यायाः कोऽन्तो लोकपितामह ।
स्वभावनिहतानस्मान्न पुनर्हन्तुमर्हसि ॥ १२-२८८-३९ (७६८२२)
वयमग्निं तथा शीतं वर्षं च पवनेरितम् ।
सहामः सततं देव तथा च्छेदनभेदने ॥ १२-२८८-४० (७६८२३)
ब्रह्मवध्यामिमामद्य भवतः शासनाद्वयम् ।
ग्रहीष्यामस्त्रिलोकेश मोक्षं चिन्तयतां भवान्। १२-२८८-४१ (७६८२४)
ब्रह्मोवाच। १२-२८८-४२क्ष् (६३९५)
पर्वकाले तु संप्राप्ते यो वै छेदनभेदनम् ।
करिष्यति नरो मोहात्तमेषाऽनुगमिष्यति ॥ १२-२८८-४२ (७६८२५)
भीष्म उवाच। १२-२८८-४३क्ष् (६३९६)
ततो वृक्षौषधितृणमेवमुक्तं महात्मना ।
ब्रह्माणमभिसंपूज्य जगामाशु यथागतम् ॥ १२-२८८-४३ (७६८२६)
आहूयाप्सरसो देवस्ततो लोकपितामहः ।
वाचा मधुरया प्राह सान्त्वयन्निव भारत ॥ १२-२८८-४४ (७६८२७)
इयमिन्द्रादनुप्राप्ता ब्रह्मवध्या वराङ्गनाः ।
चतुर्थमस्या भागांशं मयोक्ताः संप्रतीच्छत ॥ १२-२८८-४५ (७६८२८)
अप्सरस ऊचुः। १२-२८८-४६क्ष् (६३९७)
ग्रहणे कृतबुद्धीनां देवेश तव शासनात् ।
मोक्षं समयतोऽस्माकं चिन्तयस्व पितामह ॥ १२-२८८-४६ (७६८२९)

ब्रह्मोवाच। १२-२८८-४७क्ष् (६३९८)
रजस्वलासु नारीषु यो वै मैथुनमाचरेत् ।
तमेषा यास्यति क्षिप्रं व्येतु वो मानसो ज्वरः ॥ १२-२८८-४७ (७६८३०)
भीष्म उवाच। १२-२८८-४८क्ष् (६३९९)
तथेति हृष्टमनस इत्युक्त्वाऽऽप्सरसां गणाः ।
स्वानि स्थानानि संप्राप्य रेमिरे भरतर्षभ ॥ १२-२८८-४८ (७६८३१)
ततस्त्रिलोककृद्देवः पुनरेव महातपाः ।
अथः संचिन्तयामास ध्यातास्ताश्चाप्यथागमन् ॥ १२-२८८-४९ (७६८३२)
तास्तु सर्वाः समागम्य ब्रह्माणममितौजसम् ।
इदमूचुर्वचो राजन्प्रणिपत्य पितामहम् ॥ १२-२८८-५० (७६८३३)
इमाः स्म देव संप्राप्तास्त्वत्सकाशमरिंदम् ।
शासनात्तव लोकेश समाज्ञापय नः प्रभो ॥ १२-२८८-५१ (७६८३४)
ब्रह्मोवाच। १२-२८८-५२क्ष् (६४००)
इयं वृत्रादनुप्राप्ता पुरुहूतं महाभया ।
ब्रह्मवध्या चतुर्थांशमस्या यूयं प्रतीच्छत ॥ १२-२८८-५२ (७६८३५)
आप ऊचुः। १२-२८८-५३क्ष् (६४०१)
एवं भवतु लोकेश यथा वदसि नः प्रभो ।
मोक्षं समयतोऽस्माकं संचिन्तयितुमर्हसि ॥ १२-२८८-५३ (७६८३६)
त्वं हि देवेश सर्वस्य जगतः परमा गतिः ।
कोऽन्यः प्रसाद्यो हि भवेद्यः कृच्छ्रान्नः समुद्धरेत् ॥ १२-२८८-५४ (७६८३७)
ब्रह्मोवाच। १२-२८८-५५क्ष् (६४०२)
अल्पा इति मतिं कृत्वा यो नरो बुद्धिमोहितः ।
श्लेष्ममूत्रपुरीषाणि युष्मासु प्रतिमोक्ष्यति ॥ १२-२८८-५५ (७६८३८)
तमियं यास्यति क्षिप्रं तत्रैव च निवत्स्यति ।
तथा वो भविता मोक्ष इति सत्यं ब्रवीमि वः ॥ १२-२८८-५६ (७६८३९)
ततो विमुच्य देवेन्द्रं ब्रह्मवध्या युधिष्ठिर ।
यथा निसृष्टं तं वासमगमद्देवशासनात् ॥ १२-२८८-५७ (७६८४०)
एवं शक्रेण संप्राप्ता ब्रह्मवध्या जनाधिप ।
पितामहमनुज्ञाप्य सोऽश्वमेधमकल्पयत् ॥ १२-२८८-५८ (७६८४१)
श्रूयते च महाराज संप्राप्ता वासवेन वै ।
ब्रह्मवध्या ततः शुद्धिं हयमेधेन लब्धवान् ॥ १२-२८८-५९ (७६८४२)
समवाप्य श्रियं देवो हत्वाऽरींश्च सहस्रशः ।
प्रहर्षमतुलं लेभे वासवः पृथिवीपते ॥ १२-२८८-६० (७६८४३)
वृत्रस्य रुधिराच्चैव बुद्बुदाः पार्थ जज्ञिरे ।
द्विजातिभिरभक्ष्यास्ते दीक्षितैश्च तपोधनैः ॥ १२-२८८-६१ (७६८४४)
सर्वावस्थं त्वमप्येषां द्विजातीनां प्रियं कुरु ।

इमे हि भूतले देवाः प्रथिताः कुरुनन्दन ॥ १२-२८८-६२ (७६८४५)
एवं शक्रेण कौरव्य बुद्धिसौक्ष्म्यान्महासुरः ।
उपायपूर्वं निहतो वृत्रो ह्यमिततेजसा ॥ १२-२८८-६३ (७६८४६)
एवं त्वमपि कौन्तेय पृथिव्यामपराजितः ।
भविष्यसि यथा देवः शतक्रतुरमित्रहा ॥ १२-२८८-६४ (७६८४७)
ये तु शक्रकथां दिव्यामिमां पर्वसुपर्वसु ।
विप्रमध्ये वदिष्यन्ति न ते प्राप्स्यन्ति किल्विषं ॥ १२-२८८-६५ (७६८४८)
इत्येतद्वृत्रमाश्रित्य शक्रस्यात्यद्भुतं महत् ।
कथितं कर्म ते तात किं भूयः श्रोतुमिच्छसि ॥ ॥ १२-२८८-६६ (७६८४९)

इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि
अष्टाशीत्यधिकद्विशततमोऽध्यायः ॥ २८८.।
Mahabharata - Shanti Parva - Chapter Footnotes

१२-२८८-४ स्मृतिः सा तस्य भारतेति झ ।ध। पाठः ॥
१२-२८८-११ विसमेव समाविशदिति ध ।पाठः ॥
१२-२८८-१३ कृशा च भरतर्षभेति ध।ध ।पाठः ॥
१२-२८८-१४ चीरवस्त्रा विभीषणेति थ ।पाठः ॥
१२-२८८-१६ वसान्निस्सरमाणत्विति ध ।पाठः। जग्राह वथ्या
देवेन्द्रमिति झ। पाठः ॥
१२-२८८-१८ विसमध्यस्थो बभूवाब्दगणानिति थ ।ध। पाठः ॥
१२-२८८-१९ निश्चेष्टः समपद्यतेति, तस्याश्वापनये शक्र इति
थ ।पाठः ॥
१२-२८८-३१ शक्रास्याधविमोक्षार्थमिति झ ।पाठः ॥
१२-२८८-३३ यः आहिताग्निरधिकारी बीजैः पुरोडाशादिना ओषधिरसै
सोमेन पय आदिभिर्वा ॥
१२-२८८-३९ दैवेनाभिहतानस्मानिति झ ।पाठः ॥
१२-२८८-४९ ततस्तु लोककृद्देव इति थ ।पाठः ॥
१२-२८८-३१ शिखण्डाः पार्थ जज्ञिरे इति झ ।पाठः ॥

---

शन्तिपर्व-अध्यय२८९
॥ श्रीः ॥
१२.२८९. अध्यायः २८९

Mahabharata - Shanti Parva - Chapter Topics
दक्षयज्ञे भागालाभेन रुष्टस्य रुद्रस्य

ललाटतटोद्गतस्वेदादग्निरूपज्वरोत्पत्तिः ॥ १.। ब्रह्मवचनाद्रुद्रेण ज्वरस्य पृथिव्यादिषु विभजनम् ॥ २.।

Mahabharata - Shanti Parva - Chapter Text

१२-२८९-० (७६८५०)
युधिष्ठिर उवाच। १२-२८९-०क्ष् (६४०३)
पितामह महाप्राज्ञ सर्वशास्त्रविशारद ।
अस्मिन्वृत्रवधे तात विवक्षा मम जायते ॥ १२-२८९-१ (७६८५१)
ज्वरेण मोहितो वृत्रः कथितस्ते जनाधिप ।
निहतो वासवेनेह वज्रेणेति ममानघ ॥ १२-२८९-२ (७६८५२)
कथमेष महाप्राज्ञ ज्वरः प्रादुर्बभूव ह ।
ज्वरोत्पत्तिं निपुणतः श्रोतुमिच्छाम्यहं प्रभो ॥ १२-२८९-३ (७६८५३)
भीष्म उवाच। १२-२८९-४क्ष् (६४०४)
शृणु राजञ्ज्वरस्येमं संभवं लोकविश्रुतम् ।
विस्तरं चास्य वक्ष्यामि यादृशश्चैव भारत ॥ १२-२८९-४ (७६८५४)
पुरा मेरोर्महाराज शृङ्गं त्रैलोक्यविश्रुतम् ।
ज्योतिष्कं नाम सावित्रं सर्वरत्नविभूषितम् ॥ १२-२८९-५ (७६८५५)
अप्रमेयमनाधृष्यं सर्वलोकेषु भारत ।
तत्र देवो गिरितटे हेमधातुविभूषिते ॥ १२-२८९-६ (७६८५६)
पर्यङ्क इव विभ्राजन्नुपविष्टो बभूव ह ।
शैलराजसुता चास्य नित्यं पार्श्वे स्थिता बभौ ।
तथा देवा महात्मानो वसवश्चामितौजसः ॥ १२-२८९-७ (७६८५७)
तथैव च महात्मानावश्विनौ भिषजां वरौ ।
तथा वैश्रवणो राजा गुह्यकैरभिसंवृतः ॥ १२-२८९-८ (७६८५८)
यक्षाणामीश्वरः श्रीमान्कैलासनिलयः प्रभुः ।
ंशङ्खपद्मनिधिभ्यां च लक्ष्म्या परमया सह।'
उपासन्त महात्मानमुशना च महाकविः ॥ १२-२८९-९ (७६८५९)
सनत्कुमारप्रमुखास्तथैव च महर्षयः ।
अङ्गिरः प्रमुखाश्चैव तथा देवर्षयोऽपरे ॥ १२-२८९-१० (७६८६०)
विश्वावसुश्च गन्धर्वस्तथा नारदपर्वतौ ।
अप्सरोगणसङ्घाश्च समाजग्मुरनेकशः ॥ १२-२८९-११ (७६८६१)
ववौ सुखः शिवो वायुर्नानागन्धवहः शुचिः ।
सर्वर्तुकुसुमोपेताः पुष्पवन्तो द्रुमास्तथा ॥ १२-२८९-१२ (७६८६२)
तथा विद्याधराश्चैव सिद्धाश्चैव तपोधनाः ।
महादेवं पशुपतिं पर्युपासन्त भारत ॥ १२-२८९-१३ (७६८६३)
भूतानि च महाराज नानारूपधराण्यथ ।

राक्षसाश्च महारौद्राः पिशाचाश्च महाबलाः ॥ १२-२८९-१४ (७६८६४)
बहुरूपधरा हृष्टा नानाप्रहरणोद्यताः ।
देवस्यानुचरास्तत्र तस्थिरे चानलोपमाः ॥ १२-२८९-१५ (७६८६५)
नन्दी च भगवांस्तत्र देवस्यानुमते स्थितः ।
प्रगृह्य ज्वलितं शूलं दीप्यमानं स्वतेजसा ॥ १२-२८९-१६ (७६८६६)
गङ्गा च सरितां श्रेष्ठा सर्वतीर्थजलोद्भवा ।
पर्युपासत तं देव रूपिणी कुरुनन्दन ॥ १२-२८९-१७ (७६८६७)
स एवं भगवांस्तत्र पूज्यमानः सुरर्षिभिः ।
देवैश्च सुमहातेजा महादेवो व्यतिष्ठत ॥ १२-२८९-१८ (७६८६८)
कस्यचित्त्वथ कालस्य दक्षो नाम प्रजापतिः ।
पूर्वोक्तेन विधानेन यक्ष्यमाणोऽन्वपद्यत ॥ १२-२८९-१९ (७६८६९)
ततस्तस्य मखं देवाः सर्वे शक्रपुरोगमाः ।
गमनाय समागम्य बुद्धिमापेदिरे तदा ॥ १२-२८९-२० (७६८७०)
ते विमानैर्महात्मानो ज्वलनार्कसमप्रभैः ।
देवस्यानुमतेऽगच्छन्गङ्गाद्वारमिति श्रुतिः ॥ १२-२८९-२१ (७६८७१)
प्रस्थिता देवता दृष्ट्वा शैलराजसुता तदा ।
उवाच वचनं साध्वी देवं पशुपतिं पतिम् ॥ १२-२८९-२२ (७६८७२)
भगवन्क्वनु यान्त्येते देवाः शक्रपुरोगमाः ।
ब्रूहि तत्त्वेन तत्त्वज्ञ संशयो मे महानयम् ॥ १२-२८९-२३ (७६८७३)
महेश्वर उवाच। १२-२८९-२४क्ष् (६४०५)
दक्षो नाम महाभागे प्रजानां पतिरुत्तमः ।
हयमेधेन जयते तत्र यान्ति दिवौकसः ॥ १२-२८९-२४ (७६८७४)
उमोवाच। १२-२८९-२५क्ष् (६४०६)
यज्ञमेतं महादेव किमर्थं नाधिगच्छति ।
केन वा प्रतिषेधेन गमनं ते न विद्यते ॥ १२-२८९-२५ (७६८७५)
महेश्वर उवाच। १२-२८९-२६क्ष् (६४०७)
सुरैरेव महाभागे पूर्वमेतदनुष्ठितम् ।
यज्ञेषु सर्वेषु मम न भाग उपकल्पितः ॥ १२-२८९-२६ (७६८७६)
पूर्वोपायोपपन्नेन मार्गेण वरवर्णिनि ।
न मे सुराः प्रयच्छन्ति भागं यज्ञस्य धर्मतः ॥ १२-२८९-२७ (७६८७७)
उमोवाच। १२-२८९-२८क्ष् (६४०८)
भगवन्सर्वभूतेषु प्रभावाभ्यधिको गुणैः ।
अजय्यश्चाप्यधृष्यश्च तेजसा यशसा श्रिया ॥ १२-२८९-२८ (७६८७८)
अनेन ते महाभाग प्रतिषेधेन भागतः ।
अतीव दुःखमुत्पन्नं वेपथुश्च ममानघ ॥ १२-२८९-२९ (७६८७९)
भीष्म उवाच। १२-२८९-३०क्ष् (६४०९)

एवमुक्त्वा तु सा देवी देवं पशुपतिं पतिम् ।
तुष्णींभूताऽभवद्राजन्दह्यमानेन चेतसा ॥ १२-२८९-३० (७६८८०)
अथ देव्या मतं ज्ञात्वा हृद्गतं यच्चिकीर्षितम् ।
स समाज्ञापयामास तिष्ठ त्वमिति नन्दिनम् ॥ १२-२८९-३१ (७६८८१)
ततो योगबलं कृत्वा सर्वयोगेश्वरेश्वरः ।
तं यज्ञं स महातेजा भीमैरनुचरैस्तदा ॥ १२-२८९-३२ (७६८८२)
सहसा घातयामास देवदेवः पिनाकधृत् ।
केचिन्नादानमुञ्चन्त केचिद्धासांश्च चक्रिरे ॥ १२-२८९-३३ (७६८८३)
रुधिरेणापरे राजंस्तत्राग्निं समवाकिरन् ।
केचिद्यूपान्समुत्पाट्य व्याक्षिपन्विकृताननाः ॥ १२-२८९-३४ (७६८८४)
आस्यैरन्ये चाग्रसन्त तथैव परिचारकान् ।
ततः स यज्ञो नृपतेर्वध्यमानः समन्ततः ॥ १२-२८९-३५ (७६८८५)
आस्थाय मृगरूपं वै स्वमेवाभ्यगमत्तदा ।
तं तु यज्ञं तथारूपं गच्छन्तमुपलभ्य सः ॥ १२-२८९-३६ (७६८८६)
धनुरादाय बाणेन तदान्वसरत प्रभुः ।
ततस्तस्य सुरेशस्य क्रोधादमिततेजसः ॥ १२-२८९-३७ (७६८८७)
ललाटात्प्रसृतो घोरः स्वेदबिन्दुर्बभूव ह ।
तस्मिन्पतितमात्रे च स्वेदबिन्दौ तदा भुवि ॥ १२-२८९-३८ (७६८८८)
प्रादुर्बभूव सुमहानग्निः कालानलोपमः ।
तत्र चाजायत तदा पुरुषः पुरुषर्षभ ॥ १२-२८९-३९ (७६८८९)
ह्रस्वोऽतिमात्रं रक्ताक्षो हरिश्मश्रुर्विभीषणः ।
ऊर्ध्वकेशोऽतिरोमाङ्गः श्येनोलूकस्तथैव च ॥ १२-२८९-४० (७६८९०)
करालकृष्णवर्णश्च रक्तवासास्तथैव च ।
तं यज्ञं सुमहासत्वोऽदहत्कक्षमिवानलः ॥ १२-२८९-४१ (७६८९१)
व्यचरत्सर्वतो देवान्प्राद्रवत्स ऋषींस्तथा ।
देवाश्चाप्याद्रवन्सर्वे ततो भीता दिशो दश ॥ १२-२८९-४२ (७६८९२)
तेन तस्मिन्विचरता पुरुषेण विशांपते ।
पृथिवी ह्यचलद्राजन्नतीव भरतर्षभ ॥ १२-२८९-४३ (७६८९३)
हाहाभूतं जगत्सर्वमुपलक्ष्य तदा प्रभुः ।
पितामहो महादेवं दर्शयन्प्रत्यभाषत ॥ १२-२८९-४४ (७६८९४)
ब्रह्मोवाच। १२-२८९-४५क्ष् (६४१०)
भवतोपि सुराः सर्वे भागं दास्यन्ति वै प्रभो ।
क्रियतां प्रतिसंहारः सर्वदेवेश्वर त्वया ॥ १२-२८९-४५ (७६८९५)
इमा हि देवताः सर्वा ऋषयश्च परंतप ।
तव क्रोधान्महादेव न शान्तिमुपलेभिरे ॥ १२-२८९-४६ (७६८९६)
यश्चैष पुरुषो जातः स्वेदात्ते विबुधोत्तम ।

ज्वरो नामैष धर्मज्ञ लोकेषु प्रचरिष्यति ॥१२-२८९-४७ (७६८९७)
एकीभूतस्य न त्वस्य धारणे तेजसः प्रभो ।
समर्था सकला पृथ्वी बहुधा सृज्यतामयम् ॥१२-२८९-४८ (७६८९८)
इत्युक्तो ब्रह्मणा देवो भागे चापि प्रकल्पिते ।
भगवन्तं तथेत्याह ब्रह्माणममितौजसम् ॥१२-२८९-४९ (७६८९९)
परां च प्रीतिमगमदुत्स्मयंश्च पिनाकधृत् ।
अवाप च तदा भागं यथोक्तं ब्रह्मणा भवः ॥१२-२८९-५० (७६९००)
ज्वरं च सर्वधर्मज्ञो बहुधा व्यसृजत्तदा ।
शान्त्यर्थं सर्वभूतानां शृणु तच्चापि पुत्रक ॥१२-२८९-५१ (७६९०१)
शीर्षाभितापो नागानां पर्वतानां शिलाजतु ।
अपां तु नीलिकां विद्धि निर्मोकं भुजगेषु च ॥१२-२८९-५२ (७६९०२)
खोरकः सौरभेयाणामूषरं पृथिवीतले ।
पशूनामपि धर्मज्ञ दृष्टिप्रत्यवरोधनम् ॥१२-२८९-५३ (७६९०३)
रन्ध्रागतमथाश्वानां शिखोद्भेदश्च बर्हिणाम् ।
नेत्ररोगः कोकिलानां ज्वरः प्रोक्तो महात्मना ॥१२-२८९-५४ (७६९०४)
अवीनां पित्तभेदश्च सर्वेषामिति नः श्रुतम् ।
शुकानामपि सर्वेषां हिक्किका प्रोच्यते ज्वरः ॥१२-२८९-५५ (७६९०५)
शार्दूलष्वथ धर्मज्ञ श्रमो ज्वर इहोच्यते ।
मानुषेषु तु धर्मज्ञ ज्वरो नामैष विश्रुतः ॥१२-२८९-५६ (७६९०६)
मरणे जन्मनि तथा मध्ये चाविशते नरम् ।
एतन्माहेश्वरं तेजो ज्वरो नाम सुदारुणः ॥१२-२८९-५७ (७६९०७)
नमस्यश्चैव मान्यश्च सर्वप्राणिभिरीश्वरः ।
अनेन हि समाविष्टो वृत्रो धर्मभृतां वरः ॥१२-२८९-५८ (७६९०८)
व्यजृम्भत ततः शक्रस्तस्मै वज्रमवासृजत् ।
प्रविश्य बज्रं वृत्रं च दारयामासं भारत ॥१२-२८९-५९ (७६९०९)
दारितश्च स वज्रेण महायोगी महासुरः ।
जगाम परमं स्थानं विष्णोरमिततेजसः ॥१२-२८९-६० (७६९१०)
विष्णुभक्त्या हि तेनेदं जगद्व्याप्तमभूत्पुरा ।
तस्माच्च निहतो युद्धे विष्णोः स्थानमवाप्तवान् ॥१२-२८९-६१ (७६९११)
इत्येष वृत्रमाश्रित्य ज्वरस्य महतो मया ।
विस्तरः कथितः पुत्र किमन्यत्प्रब्रवीमि ते ॥१२-२८९-६२ (७६९१२)
इमां ज्वरोत्पत्तिमदीनमानसः
पठेत्सदा यः सुसमाहितो नरः ।
विमुक्तरोगः स सुखी मुदा युतो
लभेत कामान्स यथा मनीषितान् ॥ ॥ १२-२८९-६३ (७६९१३)

इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि
एकोननवत्यधिकद्विशततमोऽध्यायः ॥ २८९.।
Mahabharata - Shanti Parva - Chapter Footnotes

१२-२८९-६ सिद्धं लोकेषु भारतेति ट ।थ।पाठः ॥
१२-२८९-१५ तस्थिरे चाचलोपमा इति ध ।पाठः ॥
१२-२८९-२१ ज्वलितैर्ज्वलनप्रभैरिति ट ।थ।ध।पापः ॥
१२-२८९-२६ सर्वमेतदनुष्ठितमिति ट ।ध।पाठः ॥
१२-२८९-२८ प्रभवस्यधिको गुणैरिति ध ।पाठः ॥
१२-२८९-३२ सर्वलोकमहेश्वर इति ध ।पाठः ॥
१२-२८९-३६ आधाय मृगरूपं इति ध ।पाठः ॥
१२-२८९-४० ऊर्ध्वकेशोतिरिक्ताङ्ग इति थ ।पाठः ॥
१२-२८९-४४ हाहाभूते प्रवृत्ते तु नादे लोकभयंकरे इति ट ।ध।पाठः ॥
१२-२८९-५२ शिलाजतु धातुविशेषः ।नीलिका शैवालम् ॥
१२-२८९-५३ खोरकः पशूनां पादरोगः ॥
१२-२८९-५४ रन्ध्रागतं अश्वगलरन्ध्रगतं मांसखण्डम्
।रन्ध्रोद्रमनमश्वानामिति ट।थ।पाठः।रन्ध्रोद्भवश्च
मत्स्यानामिति ध।पाठः ॥
१२-२८९-५५ पित्तभेदश्च सर्वेषां प्राणिनामिति नः श्रुतमिति ट
।ध।पाठः ॥

---

शन्तिपर्व-अध्यय२९०
॥ श्रीः ॥
१२.२९०. अध्यायः २९०

Mahabharata - Shanti Parva - Chapter Topics
वीरभद्रेण दक्षयज्ञभङ्गः ॥१.।दक्षकृतस्तुतिप्रसन्नेन
रुद्रेण दक्षाय वरदानम् ॥२.।
Mahabharata - Shanti Parva - Chapter Text

१२-२९०-० (७६९१४)
जनमेजय उवाच।१२-२९०-०क्ष् (६४११)
प्राचेतसस्य दक्षस्य कथं वैवस्वतेन्तरे ।
विनाशमगमद्ब्रह्मन्हयमेधः प्रजापतेः। १२-२९०-१ (७६९१५)
ग्कथं स चाभवद्ब्रह्मन्हयमेव प्रजापतेः ॥' १२-२९०-१क्ष् (६४१२)
देव्या मन्युकृतं मत्वा क्रुद्धः सर्वात्मकः प्रभुः ।
प्रसादात्तस्य दक्षेण स यज्ञः संधितः कथम् ।

एतद्वेदितुमिच्छेयं तन्मे ब्रूहि यथातथम् ॥ १२-२९०-२ (७६९१६)
वैशंपायन उवाच। १२-२९०-३क्ष् (६४१३)
पुरा हिमवतः पृष्ठे दक्षो वै यज्ञमाहरत् ।
गङ्गाद्वारे शुभे देशे ऋषिसिद्धनिषेविते ॥ १२-२९०-३ (७६९१७)
गन्धर्वाप्सरसाकीर्णे नानाद्रुमलतावृते ।
ऋषिसङ्घैः परिवृतं दक्षं धर्मभृतां वरम् ॥ १२-२९०-४ (७६९१८)
पृथिव्यामन्तरिक्षे च ये च स्वर्लोकवासिनः ।
सर्वे प्राञ्जलयो भूत्वा उपतस्थुः प्रजापतिम् ॥ १२-२९०-५ (७६९१९)
देवदानवगन्धर्वाः पिशाचोरगराक्षसाः ।
हाहा हूहूश्च गन्धर्वौ तुम्बुरुर्नारदस्तथा ॥ १२-२९०-६ (७६९२०)
विश्वावसुर्विश्वसेनो गन्धर्वाप्सरसस्तथा ।
आदित्या वसवो रुद्राः साध्याः सह मरुद्गणैः ॥ १२-२९०-७ (७६९२१)
इन्द्रेण सहिताः सर्वे आगता यज्ञभागिनः ।
ऊष्मपाः सोमपाश्चैव धूमपा आज्यपास्तथा ॥ १२-२९०-८ (७६९२२)
ऋषयः पितरश्चैव आगता ब्रह्मणा सह ।
एते चान्ये च बहवो भूतग्रामाश्चतुर्विधाः ॥ १२-२९०-९ (७६९२३)
जरायुजाण्डजाश्चैव सहसा स्वेदजोद्भिजैः ।
आहूता मन्त्रिताः सर्वे देवाश्च सह पत्निभिः ॥ १२-२९०-१० (७६९२४)
विराजन्ते विमानस्था दीप्यमाना इवाग्नयः ।
तान्दृष्ट्वा मन्युनाऽऽविष्टो दधीचिर्वाक्यमब्रवीत् ॥ १२-२९०-११ (७६९२५)
नायं यज्ञो न वा धर्मो यत्र रुद्रो न इज्यते ।
वधबन्धं प्रपन्ना वै किंनु कालस्य पर्ययः ॥ १२-२९०-१२ (७६९२६)
किंनु मोहान्न पश्यन्ति विनाशं पर्युपस्थितम् ।
उपस्थितं भयं घोरं न बुध्यन्ति यहाध्वरे ॥ १२-२९०-१३ (७६९२७)
इत्युक्त्वा स महायोगी पश्यति ध्यानचक्षुषा ।
स पश्यति महादेवं देवीं च वरदां शुभाम् ॥ १२-२९०-१४ (७६९२८)
नारदं च महात्मानं तस्या देव्याः समीपतः ।
संतोषं परमं लेभे इति निश्चित्य योगवित् ॥ १२-२९०-१५ (७६९२९)
एकमन्त्रास्तु ते सर्वे येनेशो न निमन्त्रितः ।
तस्माद्देशादपक्रम्य दधीचिर्वाक्यमब्रवीत् ॥ १२-२९०-१६ (७६९३०)
अपूज्यपूजनाच्चैव पूज्यानां चाप्यपूजनात् ।
नृघातकसमं पापं शश्वत्प्राप्नोति मानवः ॥ १२-२९०-१७ (७६९३१)
अनृतं नोक्तपूर्वं मे न च वक्ष्ये कदाचन ।
देवतानामृषीणां च मध्ये सत्यं ब्रवीम्यहम् ॥ १२-२९०-१८ (७६९३२)
आगतं पशुभर्तारं स्रष्टारं जगतः पतिम् ।
अध्वरे ह्यग्रभोक्तारं ह्यर्वेषां पश्यत प्रभुम् ॥ १२-२९०-१९ (७६९३३)

दक्ष उवाच। १२-२९०-२०क्ष् (६४१४)
सन्ति नो बहवो रुद्राः शूलहस्ताः कपर्दिनः ।
एकादशस्थानगता नाहं वेद्मि महेश्वरम् ॥१२-२९०-२० (७६९३४)
दधीचिरुवाच। १२-२९०-२१क्ष् (६४१५)
सर्वेषामेव मन्त्रोऽयं येनासौ न निमन्त्रितः ।
यथाऽहं शंकरादूर्ध्वं नान्यं पश्यामि दैवतम् ।
तथा दक्षस्य विपुलो यज्ञोऽयं नभविष्यति ॥ १२-२९०-२१ (७६९३५)
दक्ष उवाच। १२-२९०-२२क्ष् (६४१६)
एतन्मखेशाय सुवर्णपात्रे
हविः समस्तं विधिमन्त्रपूतम् ।
विष्णोर्नयाम्यप्रतिमस्य भागं
प्रभुर्विभुश्चाहवनीय एषः ॥ १२-२९०-२२ (७६९३६)
देव्युवाच। १२-२९०-२३क्ष् (६४१७)
किं नाम दानं नियमं तपो वा
कुर्यामहं येन पतिर्ममाद्य ।
ग लभेत भागं च तथैव सर्वं
प्रभुर्विभुश्चाहवनीय एषः।'
लभेत भागं भगवानचिन्त्यो
ह्यर्धं तथा भागमथो तृतीयम् ॥ १२-२९०-२३ (७६९३७)
एवं ब्रुवाणां भगवान्स्वपत्नीं
प्रहृष्टरूपः क्षुभितामुवाच ।
न वेत्सि मां देवि कृशोदराङ्गि
किं नाम युक्तं वचनं मखेशे ॥ १२-२९०-२४ (७६९३८)
अहं विजानामि विशालनेत्रे
ध्यानेन हीना न विदन्त्यसन्तः ।
तवाद्य मोहेन च सेन्द्रदेवा
लोकास्त्रयः सर्वत एव मूढाः ॥ १२-२९०-२५ (७६९३९)
मामध्वरे शंसितारः स्तुवन्ति
रथन्तरं सामगाश्चोपगान्ति ।
मां ब्राह्मणा ब्रह्मविदो यजन्ते
ममाध्वर्यवः कल्पयन्ते च भागम् ॥ १२-२९०-२६ (७६९४०)
देव्युवाच। १२-२९०-२७क्ष् (६४१८)
सुप्राकृतोऽपि पुरुषः सर्वः स्त्रीजनसंसदि ।
स्तौति गर्वायते चापि स्वमात्मानं न संशयः ॥१२-२९०-२७ (७६९४१)
श्रीभगवानुवाच। १२-२९०-२८क्ष् (६४१९)
नात्मानं स्तौमि देवेशि पश्य मे तनुमध्यमे ।

यं स्रक्ष्यामि वरारोहे यागार्थे वरवर्णिनि ॥ १२-२९०-२८ (७६९४२)
इत्युक्त्वा भगवान्पत्नीमुमां प्राणैरपि प्रियाम् ।
सोऽसृजद्भगवान्वक्त्राद्भूतं घोरं प्रहर्षणम् ॥ १२-२९०-२९ (७६९४३)
तमुवाचाक्षिप मखं दक्षस्येति महेश्वरः ।
ततो वक्त्राद्विमुक्तेन सिंहेनैकेन लीलया ॥ १२-२९०-३० (७६९४४)
देव्या मन्युव्यपोहार्थं हतो दक्षस्य वै क्रतुः ।
मन्युना च महाभीमा महाकाली महेश्वरी ॥ १२-२९०-३१ (७६९४५)
आत्मनः कर्मसाक्षित्वे तेन सार्धं सहानुगा ।
देवस्यानुमतं मत्वा प्रणम्य शिरसा ततः ॥ १२-२९०-३२ (७६९४६)
आत्मनः सदृशः शौर्याद्बलरूपसमन्वितः ।
स एव भगवान्क्रोधः प्रतिरूपसमन्वितः ॥ १२-२९०-३३ (७६९४७)
अनन्तबलवीर्यश्च अनन्तबलपौरुषः ।
वीरभद्र इति ख्यातो देव्या मन्युप्रमार्जकः ॥ १२-२९०-३४ (७६९४८)
सोऽसृजद्रोमकूपेभ्यो रौम्यान्नाम गणेश्वरान् ।
रुद्रतुल्या गणा रौद्रा रुद्रवीर्यपराक्रमाः ॥ १२-२९०-३५ (७६९४९)
ते निपेतुस्ततस्तूर्णं दक्षयज्ञविहिंसया ।
भीमरूपा महाकायाः शतशोऽथ सहस्रशः ॥ १२-२९०-३६ (७६९५०)
ततः किलकिलाशब्दैराकाशं पूरयन्ति च ।
तेन शब्देन महता त्रस्तास्तत्र दिवौकसः ॥ १२-२९०-३७ (७६९५१)
पर्वताश्च व्यशीर्यन्त चकम्पे च वसुंधरा ।
मारुताश्चैव घूर्णन्ते चुक्षुभे वरुणालयः ॥ १२-२९०-३८ (७६९५२)
अग्नयो नैव दीप्यन्ते नैव दीप्यति भास्करः ।
ग्रहा चैव प्रकाशन्ते नक्षत्राणि न चन्द्रमाः ॥ १२-२९०-३९ (७६९५३)
ऋषयो न प्रकाशन्ते न देवा न च मानुषाः ।
एवं तु तिमिरीभूते निर्दहन्त्यपमानिताः ॥ १२-२९०-४० (७६९५४)
प्रहरन्त्यपरे घोरा यूपानुत्पाटयन्ति च ।
प्रमर्दन्ति तथा चान्ये विमर्दन्ति तथाऽपरे ॥ १२-२९०-४१ (७६९५५)
आधावन्ति प्रधावन्ति वायुवेगा मनोजवाः ।
चूर्ण्यन्ते यज्ञपात्राणि दिव्यान्याभरणानि च ॥ १२-२९०-४२ (७६९५६)
विशीर्यरमाणा दृश्यन्ते तारा इव नभस्तले ।
दिव्यान्नपानभक्ष्याणां राशयः पर्वतोपमाः ॥ १२-२९०-४३ (७६९५७)
क्षीरनद्योऽथ दृश्यन्ते धृतपायसकर्दमाः ।
दधिमण्डेदका दिव्याः खण्डशर्करवालुकाः ॥ १२-२९०-४४ (७६९५८)
षड्रसा निवहन्त्येता गुडकुल्या मनोरमाः ।
उच्चावचानि मांसानि भक्ष्याणि विविधानि च ॥ १२-२९०-४५ (७६९५९)
पानकानि च दिव्यानि लेह्यचोष्याणि यानि च ।

भृञ्जते विविधैर्वक्रैर्विलुम्पन्त्याक्षिपन्ति च ॥ १२-२९०-४६ (७६९६०)
रुद्रकोपान्महाकायाः कालाग्निसदृशोपमाः ।
क्षोभयन्सुरसैन्यानि भीक्षयन्तः समन्ततः ॥ १२-२९०-४७ (७६९६१)
क्रीडन्ति विविधाकाराश्चिक्षिषुः सुरयोषितः ।
रुद्रक्रोधात्प्रयत्नेन सर्वदेवैः सुरक्षितम् ॥ १२-२९०-४८ (७६९६२)
तं यज्ञमदहच्छीघ्नं रुद्रकर्मा समन्ततः ।
चकार भैरवं नादं सर्वभूतभयंकरम् ॥ १२-२९०-४९ (७६९६३)
छित्त्वा शिरो वै यज्ञस्य ननाद च मुमोद च ।
ततो ब्रह्मादयो देवा दक्षश्चैव प्रजापतिः ॥ १२-२९०-५० (७६९६४)
ऊचुः प्राञ्जलयः सर्वे कथ्यतां को भवानिति। १२-२९०-५१ (७६९६५)
वीरभद्र उवाच ।
नाहं रुद्रो न वा देवी नैव भोक्तुमिहागतः ॥ १२-२९०-५१क्ष् (६४२०)
देव्या मन्युकृतं मत्वा क्रुद्धः सर्वात्मकः प्रभुः ।
द्रष्टुं वा नैव विप्रेन्द्रान्नैव कौतूहलेन वा ॥ १२-२९०-५२ (७६९६६)
तव यज्ञविघातार्थं संप्राप्तं विद्धि मामिह ।
वीरभद्र इति ख्यातो रुद्रकोपाद्विनिःसृतः ॥ १२-२९०-५३ (७६९६७)
भद्रकालीति विख्याता देव्याः कोपाद्विनिः सृता ।
प्रेषितौ देवदेवेन यज्ञान्तिकमिहागतौ ॥ १२-२९०-५४ (७६९६८)
शरणं गच्छ विप्रेन्द्र देवदेवमुमापतिम् ।
वरं क्रोधोऽपि देवस्य वरदानं न चान्यतः ॥ १२-२९०-५५ (७६९६९)
वीरभद्रवचः श्रुत्वा दक्षो धर्मभृतां वरः ।
तोषयामास स्तोत्रेण प्रणिपत्यं महेश्वरम् ॥ १२-२९०-५६ (७६९७०)
प्रपद्ये देवमीशानं शाश्वतं ध्रुवमव्ययम् ।
महादेवं महात्मानं विश्वस्य जगतः पतिम् ॥ १२-२९०-५७ (७६९७१)
दक्षप्रजापतेर्यज्ञेः द्रव्यैस्तैः सुसमाहितैः ।
आहूता देवताः सर्वा ऋषयश्च तपोधनाः ॥ १२-२९०-५८ (७६९७२)
देवो नाहूयते तत्र विश्वकर्मा महेश्वरः ।
तत्र क्रुद्धा महादेवी गणांस्तत्र व्यसर्जयत् ॥ १२-२९०-५९ (७६९७३)
प्रदीप्ते यज्ञवाटे तु विद्रुतेषु द्विजातिषु ।
तारागणमनुप्राप्ते रौद्रे दीप्ते महात्मनि ॥ १२-२९०-६० (७६९७४)
शूलनिर्भिन्नहृदयैः कूजद्भिः परिचारकैः ।
निखातोत्पाटितैर्यूरपविद्धैरितस्ततः ॥ १२-२९०-६१ (७६९७५)
उत्पतद्भिः पतद्भिश्च गृध्रैरामिषगृद्धिभिः ।
पक्षवातविनिर्धूतैः शिवाशतनिनादितैः ॥ १२-२९०-६२ (७६९७६)
यक्षगन्धर्वसङ्घैश्च पिशाचोरगराक्षमैः ।
प्राणापानौ संनिरुध्य वक्रस्थानेन यत्नतः ॥ १२-२९०-६३ (७६९७७)

विचार्य सर्वतो दृष्टिं बहुदृष्टिरमित्रजित् ।
सहसा देवदेवेशो ह्यग्निकुण्डात्समुत्थितः ॥१२-२९०-६४ (७६९७८)
विभ्रत्सूर्यसहस्रस्य तेजः संवर्तकोपमः ।
स्मितं कृत्वाऽब्रवीद्वाक्यं ब्रूहि किं करवाणि ते ॥१२-२९०-६५ (७६९७९)
श्राविते च मखाध्याये देवानां गुरुणा ततः ।
तमुवाचाज्जलिं कृत्वा दक्षो देवं प्रजापतिः ॥१२-२९०-६६ (७६९८०)
भीतशङ्कितवित्रस्तः सवाष्पवदनेक्षणः ।
यदि प्रसन्नो भगवान्यदि चाहं भवत्प्रियः ॥१२-२९०-६७ (७६९८१)
यदि वाऽहमनुग्राह्यो यदि वा वरदो मम ।
यद्दग्धं भक्षितं पीतमशित्तं यच्च नाशितम् ॥१२-२९०-६८ (७६९८२)
चूर्णीकृतापविद्धं च यज्ञसंभारमीदृशम् ।
दीर्घकालेन महता प्रयत्नेन सुसंचितम् ।
तन्न मिथ्या भवेन्मह्यं वरमेतमहं वृणे ॥ १२-२९०-६९ (७६९८३)
तथाऽस्त्वित्याह भगवान्भगनेत्रहरो हरः ।
धर्माध्यक्षो विरूपाक्षस्त्र्यक्षो देवः प्रजापतिः ॥१२-२९०-७० (७६९८४)
जानुभ्यामवनीं गत्वा दक्षो लब्ध्वा भवाद्वरम् ।
नाम्नामष्टसहस्रेण स्तुतवान्वृषभध्वजम् ॥१२-२९०-७१ (७६९८५)
युधिष्ठिर उवाच।१२-२९०-७२क्ष् (६४२१)
यैर्नामधेयैः स्तुतवान्दक्षो देवं प्रजापतिः ।
वक्तुमर्हसि मे तात श्रोतुं श्रद्धा ममानघ ॥१२-२९०-७२ (७६९८६)
भीष्म उवाच।१२-२९०-७३क्ष् (६४२२)
श्रूयतां देवदेवस्य नामान्यद्भुतकर्मणः ।
गूढव्रतस्य गुह्यानि प्रकाशानि च भारत ॥१२-२९०-७३ (७६९८७)
नमस्ते देवदेवेश देवारिबलसूदन ।
देवेन्द्रबलविष्टम्भ देवदानवपूजित ॥१२-२९०-७४ (७६९८८)
सहस्राक्ष विरूपाक्ष त्र्यक्ष यक्षाधिपप्रिय ।
सर्वतः पाणिपादान्त सर्वतोक्षिशिरोमुखं ॥१२-२९०-७५ (७६९८९)
सर्वतः श्रुतिमंल्लोके सर्वमावृत्य तिष्ठसि ।
शङ्कुकर्ण महाकर्ण कुम्भकर्णार्णवालय ॥१२-२९०-७६ (७६९९०)
गजेन्द्रकर्ण गोकर्ण पाणिकर्ण नमोस्तु ते ।
शतोदर शतावर्त शतजिह्व नमोस्तु ते ॥१२-२९०-७७ (७६९९१)
गायन्ति त्वा गायत्रिणोऽर्चन्त्यर्कमर्किणः ।
ब्रह्माणं त्वा शतक्रतुमूर्ध्वं खमिव मेनिरे ॥१२-२९०-७८ (७६९९२)
मूर्तौ हि ते महामूर्ते समुद्राम्बरसन्निभ ।
सर्वा वै देवता ह्यस्मिन्गावो गोष्ठ इवासते ॥१२-२९०-७९ (७६९९३)
भवच्छरीरे पश्यामि सोममग्निं जलेश्वरम् ।

आदित्यमथ वै विष्णुं ब्रह्माणं च बृहस्पतिम् ॥ १२-२९०-८० (७६९९४)
भगवान्कारणं कार्यं क्रिया करणमेव च ।
असतश्च सतश्चैव तथैव प्रभवाप्ययौ ॥ १२-२९०-८१ (७६९९५)
नमो भवाय शर्वाय रुद्राय वरदाय च ।
पशूनां पतये नित्यं नमोस्त्वन्धकघातिने ॥ १२-२९०-८२ (७६९९६)
त्रिजटाय त्रिशीर्षाय त्रिशूलवरपाणिने ।
त्र्यम्बकाय त्रिनेत्राय त्रिपुरघ्नाय वै नमः ॥ १२-२९०-८३ (७६९९७)
नमश्चण्डाय कुण्डाय अण्डायाण्डधराय च ।
दण्डिने समकर्णाय दण्डिमुण्डाय वै नमः ॥ १२-२९०-८४ (७६९९८)
नमोर्ध्वदंष्ट्रकेशाय शुक्लायावतताय च ।
विलोहिताय धूम्राय नीलग्नीवाय वै नमः ॥ १२-२९०-८५ (७६९९९)
नमोस्त्वप्रतिरूपाय विरूपाय शिवाय च ।
सूर्याय सूर्यमालाय सूर्यध्वजपताकिने ॥ १२-२९०-८६ (७७०००)
नमः प्रमथनाथाय वृषस्कन्धाय धन्विने ।
शत्रुंदमाय दण्डाय पर्णचीरपटाय च ॥ १२-२९०-८७ (७७००१)
नमो हिरण्यगर्भाय हिरण्यकवचाय च ।
हिरण्यकृतचूडाय हिरण्यपतये नमः ॥ १२-२९०-८८ (७७००२)
नमः स्तुताय स्तुत्याय स्तूयमानाय वै नमः ।
सर्वाय सर्वभक्षाय सर्वभूतान्तरात्मने ॥ १२-२९०-८९ (७७००३)
नमो होत्रेऽथ मन्त्राय शुक्लध्वजपताकिने ।
नमो नाभाय नाभ्याय नमः कटकटाय च ॥ १२-२९०-९० (७७००४)
नमोस्तु कृशनासाय कृशाङ्गाय कृशाय च ।
संहृष्टाय विहृष्टाय नमः किलकिलाय च ॥ १२-२९०-९१ (७७००५)
नमोस्तु शयमानाय शयितायोत्थिताय च ।
स्थिताय धावमानाय मुण्डाय जटिलाय च ॥ १२-२९०-९२ (७७००६)
नमो नर्तनशीलाय मुखवादित्रवादिने ।
नाद्योपहारलुब्धाय गीतवादित्रशालिने ॥ १२-२९०-९३ (७७००७)
नमो ज्येष्ठाय श्रेष्ठाय वलप्रमथनाय च ।
कालनाथाय कल्याय क्षयायोपक्षयाय च ॥ १२-२९०-९४ (७७००८)
भीमदुन्दुभिहासाय भीमव्रतधराय च ।
उग्राय च नमो नित्यं नमोस्तु दशबाहवे ॥ १२-२९०-९५ (७७००९)
नमः कपालहस्ताय चितिभस्मप्रियाय च ।
विभीषणाय भीष्माय भीमव्रतधराय च ॥ १२-२९०-९६ (७७०१०)
नमो विकृतवक्राय खङ्गजिह्वाय दंष्ट्रिणे ।
पक्वाममांसलुब्धाय तुम्बीवीणाप्रियाय च ॥ १२-२९०-९७ (७७०११)
नमो वृषाय वृष्याय गोवृषाय वृषाय च ।

कटंकटाय दण्डाय नमः पचपचाय च ॥१२-२९०-९८ (७७०१२)
नमः सर्ववरिष्ठाय वराय वरदाय च ।
वरमाल्यगन्धवस्त्राय वरातिवरदे नमः ॥१२-२९०-९९ (७७०१३)
नमो रक्तविरक्ताय भावनायाक्षमालिने ।
संभिन्नाय विभिन्नाय च्छायायातपनाय च ॥१२-२९०-१०० (७७०१४)
अघोरघोररूपाय घोरघोरतराय च ।
नमः शिवाय शान्ताय नमः शान्ततमाय च ॥१२-२९०-१०१ (७७०१५)
एकपाद्बहुनेत्राय एकशीर्ष्णे नमोस्तु ते ।
रुद्राय क्षुद्रलुब्धाय संविभागप्रियाय च ॥१२-२९०-१०२ (७७०१६)
पञ्चालाय सिताङ्गाय नमः शमशमाय च ।
नमश्चण्डिकघण्टाय घण्टायाघण्टघण्टिने ॥१२-२९०-१०३ (७७०१७)
सहस्राध्मातघण्टाय घण्टामालाप्रियाय च ।
प्राणघण्टाय गन्धाय नमः कलकलाय च ॥१२-२९०-१०४ (७७०१८)
हूंहूंहूंकारपाराय हूंहूंकारप्रियाय च ।
नमः शमशमे नित्यं गिरिवृक्षालयाया च ॥१२-२९०-१०५ (७७०१९)
गर्भमांससृगालाय तारकाय तराय च ।
नमो यज्ञाय यजिने हुताय प्रहुताय च ॥१२-२९०-१०६ (७७०२०)
यज्ञवाहाय दान्ताय तप्यायातपनाय च ।
नमस्तटाय तट्याय तटानां पतये नमः ॥१२-२९०-१०७ (७७०२१)
अन्नदायान्नपतये नमस्त्वन्नभुजे तथा ।
नमः सहस्रशीर्षाय सहस्रचरणाय च ॥१२-२९०-१०८ (७७०२२)
सहस्रोद्यतशूलाय सहस्रनयनाय च ।
नमो बालार्कवर्णाय बालरूपधराय च ॥१२-२९०-१०९ (७७०२३)
बालानुचरगोप्ताय बालक्रीडनकाय च ।
नमोवृद्धाय लुब्धाय क्षुब्धाय क्षोभणाय च ॥१२-२९०-११० (७७०२४)
तरङ्गाङ्कितकेशाय मुञ्जकेशाय वै नमः ।
नमः षट्कर्मतुष्टाय त्रिकर्मनिरताय च ॥१२-२९०-१११ (७७०२५)
वर्णाश्रमाणां विधिवत्पृथक्कर्मनिवर्तिने ।
नमो घुष्याय घोषाय नमः कलकलाय च ॥१२-२९०-११२ (७७०२६)
श्वेतपिङ्गलनेत्राय कृष्णरक्तेक्षणाय च ।
प्राणभग्नाय दण्डाय स्फोटनाय कृशाय च ॥१२-२९०-११३ (७७०२७)
धर्मकामार्थमोक्षाणां कथनीयकथाय च ।
साङ्ख्याय साङ्ख्यमुख्याय साङ्ख्ययोगप्रवर्तिने ॥१२-२९०-११४ (७७०२८)
नमो रथ्यविरथ्याय चतुष्पथरथाय च ।
कृष्णाजिनोत्तरीयाय व्यालयज्ञोपवीतिने ॥१२-२९०-११५ (७७०२९)
ईशानवज्रसंघातहरिकेश नमोस्तु ते ।

त्र्यम्बकाम्बिकनाथाय व्यक्ताव्यक्त नमोस्तु ते ॥१२-२९०-११६ (७७०३०)
काम कामद कामघ्न तृप्तातृप्तविचारिणे ।
सर्व सर्वद सर्वघ्न संन्ध्याराग नमोस्तु ते ॥१२-२९०-११७ (७७०३१)
ग्महाबल महाबाहो महासत्व महाद्युते ।
महामेघचलप्रख्य महाकाल नमोस्तु ते ।
स्थूलजीर्णाङ्गजटिले वत्कलाजिनधारिणे ॥ १२-२९०-११८ (७७०३२)
दीप्तसूर्याग्निजटिने वत्कलाजिनवाससे ।
रसहस्रसूर्यप्रतिम तपोनित्य तमोस्तु ते ॥१२-२९०-११९ (७७०३३)
उन्मादनुशतावर्त गङ्गातोयार्द्रमूर्धज ।
चन्द्रवर्त युगावर्त मेघावर्त नमोस्तु ते ॥१२-२९०-१२० (७७०३४)
त्वमन्नमत्ता भोक्ता च अन्नदोऽन्नभुगेव च ।
अन्नस्रष्टा च पक्ता च पक्कभुक्पवनोऽनलः ॥१२-२९०-१२१ (७७०३५)
जरायुजाण्डजाश्चैव स्वेदजाश्च तथोद्भिजाः ।
त्वमेव देवदेवेश भूतग्रामश्चतुर्विधः ॥१२-२९०-१२२ (७७०३६)
चराचरस्य स्रष्टा त्वं प्रतिहर्ता तथैव च ।
त्वामाहुर्ब्रह्मविदुषो ब्रह्म ब्रह्मविदांवर ॥१२-२९०-१२३ (७७०३७)
मनसः परमा योनिः खं वायुर्ज्योतिषां निधिः ।
ऋक्सामानि तथोङ्कारमाहुस्त्वां ब्रह्मवादिनः ॥१२-२९०-१२४ (७७०३८)
हायिहायि हुवाहायि हावुहायि तथाऽसकृत् ।
गायन्ति त्वां सुरश्रेष्ठ सामगा ब्रह्मवादिनः ॥१२-२९०-१२५ (७७०३९)
यजुर्मयो ऋङ्भयश्च त्वमाहुतिमयस्तथा ।
पठ्यसे स्तुतिभिश्चैव वेदोपनिषदां गणैः ॥१२-२९०-१२६ (७७०४०)
ब्राह्मणाः क्षत्रिया वैश्याः शूद्रा वर्णावराश्च ये ।
त्वमेव मेघसङ्घाश्च विद्युत्स्तनितगर्जितः ॥१२-२९०-१२७ (७७०४१)
संवत्सरस्त्वामुतवो मासो मासार्धमेव च ।
युगं निमेषाः काष्ठास्त्वं नक्षत्राणि ग्रहाः कलाः ॥१२-२९०-१२८ (७७०४२)
वृक्षाणां ककुदोसि त्वं गिरीणां शिखराणि च ।
व्याघ्रो मृगाणां पततां ताक्ष्योंऽनन्तश्च भोगिनाम् ॥१२-२९०-१२९ (७७०४३)
क्षीरादो ह्युदधीनां च यन्त्राणां धनुरेव च ।
वज्रः प्रहरणानां च व्रतानां सत्यमेव च ॥१२-२९०-१३० (७७०४४)
त्वमेव द्वेष इच्छा च रागो मोहः क्षमाक्षमे ।
व्यवसायो धृतिर्लोभः कामक्रोधौ जयाजयौ ॥१२-२९०-१३१ (७७०४५)
त्वं गदी त्वं शरी चापी खट्वाङ्गी झर्झरी तथा ।
छेत्ता भेत्ता प्रहर्ता त्वं नेता मन्ता पिता मतः ॥१२-२९०-१३२ (७७०४६)
दशलक्षणसंयुक्तो धर्मोऽर्थः काम एव च ।
गङ्गा समुद्राः सरितः पल्वलानि संरासि च ॥१२-२९०-१३३ (७७०४७)

लता वल्ल्यस्तृणौषध्यः पशवो मृगपक्षिणः ।
द्रव्यकर्मसमारम्भः कालः पुष्पफलप्रदः ॥ १२-२९०-१३४ (७७०४८)
आदिश्चान्तश्च देवानां गायत्र्योङ्कार एव च ।
हरितो रोहितो नीलः कृष्णो रक्तस्तथाऽरुणः ।
कद्रुश्च कपिलश्चैव कपोतो मेचकस्तथा ॥ १२-२९०-१३५ (७७०४९)
अवर्णश्च सुवर्णश्च वर्णकारो घनोपमः ।
सुवर्णनामा च तथा सुवर्णप्रिय एव च ॥ १२-२९०-१३६ (७७०५०)
त्वमिन्द्रश्च यमश्चैव वरुणो धनदोऽनलः ।
उपप्लवश्चित्रभानुः स्वर्भानुर्भानुरेव च ॥ १२-२९०-१३७ (७७०५१)
होत्रं होता च होम्यं च हुतं चैव तथा प्रभुः ।
त्रिसौपर्णं तथा ब्रह्म यजुषां शतरुद्रियम् ॥ १२-२९०-१३८ (७७०५२)
पवित्रं च पवित्राणां मङ्गलानां च मङ्गलम् ।
गिरिको हिण्डुको वृक्षो जीवः पुद्गल एव च ॥ १२-२९०-१३९ (७७०५३)
प्राणः सत्त्वं रजश्चैव तमश्चाप्रमदस्तथा ।
प्राणोपानः समानश्च उदानो व्यान एव च ॥ १२-२९०-१४० (७७०५४)
उन्मेषश्च निमेषश्च क्षुतं जृम्भितमेव च ।
लोहितान्तर्गता दृष्टिर्महावक्रो महोदरः ॥ १२-२९०-१४१ (७७०५५)
सूचीरोमा हरिश्मश्रुरूर्ध्वकेशश्चलाचलः ।
गीतवादित्रतत्त्वज्ञो गीतवादनकप्रियः ॥ १२-२९०-१४२ (७७०५६)
मत्स्यो जलचरो जाल्योऽकलः केलिकलः कलिः ।
अकालश्चातिकालश्च दुष्कालः काल एव च ॥ १२-२९०-१४३ (७७०५७)
मृत्युः क्षुरश्च कृत्यश्च पक्षोऽपक्षक्षयंकरः ।
मेघकालो महादंष्ट्रः संवर्तकबलाहकः ॥ १२-२९०-१४४ (७७०५८)
घण्टोऽघण्टो घटी घण्टी चरुचेली मिलीमिली ।
ब्रह्मकायिकमग्नीनां दण्डी मुण्डस्त्रिदण्डधृक् ॥ १२-२९०-१४५ (७७०५९)
चतुर्युगश्चतुर्वेदश्चातुर्होत्रप्रवर्तकः ।
चातुराश्रम्यवेता च चातुर्वर्ण्यकरश्च यः ॥ १२-२९०-१४६ (७७०६०)
सदा चाक्षप्रियो धूर्तो गणाध्यक्षो गणाधिपः ।
रक्तमाल्याम्बरघरो गिरिशो गिरिकप्रियः ॥ १२-२९०-१४७ (७७०६१)
शिल्पिकः शिल्पिनांश्रेष्ठः सर्वशिल्पप्रवर्तकः ।
भगनेत्राङ्कुशश्चण्डः पूष्णो दन्तविनाशनः ॥ १२-२९०-१४८ (७७०६२)
स्वाहास्वधावषड्कारो नमस्कारो नमो नमः ।
गूढव्रतो गुह्यतपास्तारकस्तारकामयः ॥ १२-२९०-१४९ (७७०६३)
धाता विधाता संधाता विधाता धारणो धरः ।
ब्रह्मा तपश्च सत्यं च ब्रह्मचर्यमथार्जवम् ॥ १२-२९०-१५० (७७०६४)
भूतात्मा भूतकृद्भूतो भूतभव्यवोद्भवः ।

भूर्भुवः स्वरितश्चैव ध्रुवो दान्तो महेश्वरः ॥१२-२९०-१५१ (७७०६५)
दीक्षितोऽदीक्षितः क्षान्तो दुर्दान्तोऽदान्तनाशनः ।
चन्द्रावर्तयुगावर्तः संवर्तः संप्रवर्तकः ॥१२-२९०-१५२ (७७०६६)
कामो विन्दुरणुः स्थूलः कर्णिकारस्रजप्रियः ।
नन्दीमुखो भीममुखः सुमुखो दुर्मुखोऽमुखः ॥१२-२९०-१५३ (७७०६७)
चतुर्मुखो बहुमुखो रणेष्वग्निमुखस्तथा ।
हिरण्यगर्भः शकुनिर्महोरगपतिर्विराट् ॥१२-२९०-१५४ (७७०६८)
अधर्महा महापार्श्वश्चण्डधारो गणाधिपः ।
गोनर्दो गोप्रतारश्च गोवृषेश्वरवाहनः ॥१२-२९०-१५५ (७७०६९)
त्रैलोक्यगोप्ता गोविन्दो गोमार्गोऽमार्ग एव च ।
श्रेष्ठः स्थिरश्च स्थाणुश्च निष्कम्पः कम्प एव च
॥१२-२९०-१५६ (७७०७०)
दुर्वारणो दुर्विषहो दुःसहो दुरतिक्रमः ।
दुर्धर्षो दुष्प्रकम्पश्च दुर्विषो दुर्जयो जयः ॥१२-२९०-१५७ (७७०७१)
शशः शशाङ्कः शमनः शीतोष्णक्षुज्जराधिकृत् ।
आधयो व्याधयश्चैव व्याधिहा व्याधिरेव च ॥१२-२९०-१५८ (७७०७२)
मम यज्ञमृगव्याधो व्याधीनामागमो गमः ।
शिखण्डी पुण्डरीकाक्षः पुण्डरीकवनालयः ॥१२-२९०-१५९ (७७०७३)
दण्डधारस्त्र्यम्बकश्च उग्रदण्डोऽण्डनाशनः ।
विषाग्निपाः सुरश्रेष्ठः सोमपास्त्वं मरुत्पतिः ॥१२-२९०-१६० (७७०७४)
अमृतपास्त्वं जगन्नाथ देवदेव गणेश्वरः ।
विषाग्निपा मृत्युपाश्च क्षीरपाः सोमपास्तथा ।
मधुश्च्युतानामग्रपास्त्वं त्वमेव तुषिताद्यपाः ॥ १२-२९०-१६१ (७७०७५)
हिरण्यरेताः पुरुषस्त्वमेव
त्वं स्त्री पुमांस्त्वं च नपुंसकं च ।
बालो युवा स्थविरो जीर्णदंष्ट्रस्त्वं
नागेन्द्र शक्रस्त्वं विश्वकृद्विश्वकर्ता ॥ १२-२९०-१६२ (७७०७६)
विश्वकृद्विश्वकृतां वरेण्यस्त्वं विश्वबाहो
विश्वरूपस्तेजस्वी विश्वतोमुखः ।
चन्द्रादित्यौ चक्षुषी ते हृदयं च पितामहः। १२-२९०-१६३ (७७०७७)
महोदधिः सरस्वती वाग्बलमनलोऽ
निलः अहोरात्रं निमेषोन्मेषकर्मा ॥ १२-२९०-१६४ (७७०७८)
न ब्रह्मा न च गोविन्दः पौराणा ऋषयो न ते ।
माहात्म्यं वेदितुं शक्ता याथातथ्येन ते शिव ॥१२-२९०-१६५ (७७०७९)
या मूर्तयः सुसूक्ष्मास्ते न मह्यं यान्ति दर्शनम् ।
त्राहि मां सततं रक्ष पिता पुत्रमिवौरसम् ॥१२-२९०-१६६ (७७०८०)

रक्ष मां रक्षणीयोऽहं तवानघ नमोस्तु ते ।
भक्तानुकम्पी भगवान्भक्तश्चाहं सदा त्वयि ॥१२-२९०-१६७ (७७०८१)
यः सहस्राण्यनेकापि पुंसामावृत्य दुर्दृशः ।
तिष्ठत्येकः समुद्रान्ते स मे गोप्ताऽस्तु नित्यशः ॥१२-२९०-१६८ (७७०८२)
यं विनिद्रा जितश्वासाः सत्वस्थाः संयतेन्द्रियाः ।
ज्योतिः पश्यन्ति युञ्जानास्तस्मै योगात्मने नमः ॥१२-२९०-१६९ (७७०८३)
जटिले दण्डिने नित्यं लम्बोदरशरीरिणे ।
कमण्डलुनिषङ्गाय तस्मै ब्रह्मात्मने नमः ॥१२-२९०-१७० (७७०८४)
यस्य केशेषु जीमूता नद्यः सर्वाङ्गसन्धिषु ।
कुक्षौ समुद्राश्चत्वारस्तस्मै तोयात्मने नमः ॥१२-२९०-१७१ (७७०८५)
संभक्ष्य सर्वभूतानि युगान्ते पर्युपस्थिते ।
यः शेते जलमध्यस्थस्तं प्रपद्येऽम्बुशायिनम् ॥१२-२९०-१७२ (७७०८६)
प्रविश्य वदनं राहोर्यः सोमं पिबते निशि ।
ग्रसत्यर्कं च स्वर्भानुर्भूत्वा मां सोऽभिरक्षतु ॥१२-२९०-१७३ (७७०८७)
ये चानुपतिता गर्भा यथा भागानुपासते ।
नमस्तेभ्यः स्वधा स्वाहा प्राप्नुवन्तु मुदं तु ते ॥१२-२९०-१७४ (७७०८८)
येऽङ्गुष्ठमात्राः पुरुषा देहस्थाः सर्वदेहिनाम् ।
रक्षन्तु ते हि मां नित्यं नित्यं चाप्याययन्तु माम् ॥१२-२९०-१७५ (७७०८९)
येन रोदन्ति देहस्था देहिनो रोदयन्ति च ।
हर्षयन्ति न हृष्यन्ति नमस्तेभ्योऽस्तु नित्यशः ॥१२-२९०-१७६ (७७०९०)
ये नदीषु समुद्रेषु पर्वतेषु गुहासु च ।
वृक्षमूलेषु गोष्ठेषु कान्तारे गहनेषु च ॥१२-२९०-१७७ (७७०९१)
चतुष्पथेषु रथ्यासु चत्वरेषु तटेषु च ।
हस्त्यश्वरथशालासु जीर्णोद्यानालयेषु च ॥१२-२९०-१७८ (७७०९२)
येषु पञ्चसु भूतेषु दिशासु विदिशासु च ।
चन्द्रार्कयोर्मध्यगता ये च चन्द्रार्करश्मिषु ॥१२-२९०-१७९ (७७०९३)
रसातलगता ये च ये च तस्मै परं गताः ।
नमस्तेभ्यो नमस्तेभ्यो नमस्तेभ्योस्तु नित्यशः ॥१२-२९०-१८० (७७०९४)
येषां न विद्यते सङ्ख्या प्रमाणं रुपमेव च ।
असंख्येयगुणा रुद्रा नमस्तेभ्योस्तु नित्यशः ॥१२-२९०-१८१ (७७०९५)
सर्वभूतकरो यस्मात्सर्वभूतपतिर्हरः ।
सर्वभूतान्तरात्मा च तेन त्वं न निमन्त्रितः ॥१२-२९०-१८२ (७७०९६)
त्वमेव हीज्यसे यस्माद्यज्ञैर्विविधदक्षिणैः ।
त्वमेव कर्ता सर्वस्य तेन त्वं न निमन्त्रितः ॥१२-२९०-१८३ (७७०९७)
अथवा मायया देव सूक्ष्मया तव मोहितः ।
एतस्मात्कारणाद्वाऽपि तेन त्वं न निमन्त्रितः ॥१२-२९०-१८४ (७७०९८)

प्रसीद मम भद्रं ते भव भावगतस्य मे ।
त्वयि मे हृदयं देव त्वयि बुद्धिर्मनस्त्वयि ॥ १२-२९०-१८५ (७७०९९)
स्तुत्वैवं स महादेवं विरराम प्रजापतिः ।
भगवानपि सुप्रीतः पुनर्दक्षमभाषत ॥ १२-२९०-१८६ (७७१००)
परितुष्टोऽस्मि ते दक्ष स्तवेनानेन सुव्रत ।
बहुनात्र किमुक्तेन मत्समीपे भविष्यसि ॥ १२-२९०-१८७ (७७१०१)
अश्वमेधसहस्रस्य वाजपेयशतस्य च ।
प्रजापते मत्प्रसादात्फलभागी भविष्यसि ॥ १२-२९०-१८८ (७७१०२)
अथैनमब्रवीद्वाक्यं लोकस्याधिपतिर्भवः ।
आश्वासनकरं वाक्यं वाक्यविद्वाक्यसंमितम् ॥ १२-२९०-१८९ (७७१०३)
दक्ष दक्ष न कर्तव्यो मन्युर्विघ्नमिमं प्रति ।
अहं यज्ञहरस्तुभ्यं दृष्टमेतत्पुरातनम् ॥ १२-२९०-१९० (७७१०४)
भूयश्च ते वरं दद्मि तं त्वं गृह्णीष्व सुव्रत ।
प्रसन्नवदनो भूत्वा तदिहैकमनाः शृणु ॥ १२-२९०-१९१ (७७१०५)
वेदात्षडङ्गादुद्धृत्य साङ्ख्ययोगाच्च युक्तितः ।
तपः सुतप्तं विपुलं दुश्चरं देवदानवैः ॥ १२-२९०-१९२ (७७१०६)
अपूर्वं सर्वतोभद्रं सर्वतोमुखमव्ययम् ।
अब्दैर्दशाहसंयुक्तं गूढमप्राज्ञनिन्दितम् ॥ १२-२९०-१९३ (७७१०७)
वर्णाश्रमकृतैर्धर्मैर्विपरीतं क्वचित्समम् ।
गतान्तैरध्यवसितमत्याश्रममिदं व्रतम् ॥ १२-२९०-१९४ (७७१०८)
मया पाशुपतं दक्ष शुभमुत्पादितं पुरा ।
तस्य चीर्णस्य तत्सम्यक्फलं भवति पुष्कलम् ॥ १२-२९०-१९५ (७७१०९)
तच्चास्तु ते महाभाग त्यज्यतां मानसो ज्वरः ।
एवमुक्त्वा महादेवः सपत्नीकः सहानुगः ।
अदर्शनमनुप्राप्तो दक्षस्यामितविक्रमः ॥ १२-२९०-१९६ (७७११०)
दक्षप्रोक्तं स्तवमिमं कीर्तयेद्यः शृणोति वा ।
नाशुभं प्राप्नुयात्किंचिद्दीर्घमायुरवाप्नुयात् ॥ १२-२९०-१९७ (७७१११)
यथा सर्वेषु देवेषु वरिष्ठो भगवाञ्छिवः ।
तथा स्तवो वरिष्ठोऽयं स्तवानां ब्रह्मसंमितः ॥ १२-२९०-१९८ (७७११२)
यशोराज्यसुखैश्वर्यकामार्थधनकाङ्क्षिभिः ।
श्रोतव्यो भक्तिमास्थाय विद्याकामैश्च यत्नतः ॥ १२-२९०-१९९ (७७११३)
व्याधितो दुःखितो दीनश्चोरग्रस्तो भयार्दितः ।
राजकार्याभियुक्तो वा मुच्यते महतो भयात् ॥ १२-२९०-२०० (७७११४)
अनेनैव तु देहेन गणानां समतां व्रजेत् ।
तेजसा यशसा चैव युक्तो भवति निर्मलः ॥ १२-२९०-२०१ (७७११५)
न राक्षसाः पिशाचा वा न भूता न विनायकाः ।

विघ्नं कुर्युर्गृहे तस्य यत्रायं पठ्यते स्तवः ॥ १२-२९०-२०२ (७७११६)
शृणुयाच्चैव या नारी तद्भक्ता ब्रह्मचारिणी ।
पितृपक्षे मातृपक्षे पूज्या भवति देववत् ॥ १२-२९०-२०३ (७७११७)
शृणुयाद्यः स्तवं कृत्स्नं कीर्तयेद्वा समाहितः ।
तस्य सर्वाणि कर्माणि सिद्धिं गच्छन्त्यभीक्ष्णशः ॥ १२-२९०-२०४ (७७११८)
मनसा चिन्तितं यच्च यच्च वाचाऽनुकीर्तितम् ।
सर्वं संपद्यते तस्य स्तवस्यास्यानुकीर्तनाम् ॥ १२-२९०-२०५ (७७११९)
देवस्य च गुहस्यापि देव्या नन्दीश्वरस्य च ।
बलिं सुविहितं कृत्वा दमेन नियमेन च ॥ १२-२९०-२०६ (७७१२०)
ततस्तु युक्तो गृह्णीयान्नामान्याशु यथाक्रमम् ।
ईप्सिताँल्लभते सोर्थान्भोगान्कामांश्च मानवः ॥ १२-२९०-२०७ (७७१२१)
मृतश्च स्वर्गमाप्नोति तिर्यक्षु च न जायते ।
इत्याह भगवान्व्यासः पराशरसुतः प्रभुः ॥ ॥ १२-२९०-२०८ (७७१२२)

इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि
नवत्यधिकद्विशततमोऽध्यायः ॥ २९०.।

Mahabharata - Shanti Parva - Chapter Footnotes

१२-२९०-१२ वधं च संप्रपन्ना वै किन्तु कालस्येति ध । पाठः ॥
१२-२९०-२४ क्षुभितो ह्युवाचेति ध । पाठः ॥
१२-२९०-२८ यं ददामि वरारोहे योगार्थे इति ध । पाठः ॥
१२-२९०-४१ प्रहरन्त्यध्वरे घोरा इति ध । पाठः ॥
१२-२९०-४७ क्षोभयन्त्यशुभैर्वकैरिति ध । पाठः ॥
१२-२९०-६२ यज्ञघातविनिर्घातैः शिवाशतनिनादितैरिति ध । पाठः ॥
१२-२९०-६३ वकस्थानेन पद्मासनापरपर्यायेण योगासनेन ॥
१२-२९०-६९ तृणीकृतापविद्धं चेति ध । पाठः ॥
१२-२९०-७८ स्वमिव येमिरे इति ध । पाठः ॥
१२-२९०-८४ नमश्चण्डाय मुण्डायेति ध । पाठः ॥
१२-२९०-८५ शुद्धायात्मकृताय चेति ध । पाठः ॥
१२-२९०-९० महामात्राय मन्त्रायेति ध । पाठः ॥
१२-२९०-९७ बहुजिह्वाय दंष्ट्रिणि इति ध । पाठः ॥
१२-२९०-९८ क्रिडक्रिडाय चण्डायेति ध । पाठः ॥
१२-२९०-१०३ नमश्चण्डिकदण्डाय चण्डायादन्डदण्डिने इति ध । पाठः ॥
१२-२९०-१०४ सहस्रधातुचण्डाय रुण्डमालाप्रियाय चेति ध । पाठः ॥
१२-२९०-१०९ बालसूर्यधराय चेति ध । पाठः ॥
१२-२९०-११० बालातुराणां गोपायेति ध । पाठः ॥

१२-२९०-११४ सांख्याय सांख्ययोगायेति ध । पाठः ॥
१२-२९०-११६ ईशानब्रह्मसंभूतेति ध । पाठः ॥

---

शन्तिपर्व-अध्यय२९१
॥ श्रीः ॥
१२.२९१. अध्यायः २९१

Mahabharata - Shanti Parva - Chapter Topics
भीष्मेण युधिष्ठिरं प्रत्यध्यात्मकथनम् ॥ १.।
Mahabharata - Shanti Parva - Chapter Text

१२-२९१-० (७७१२३)
क युधिष्ठिर उवाच। १२-२९१-०क्ष् (६४२३)
अध्यात्मं नाम यदिदं पुरुषस्येह विद्यते ।
यदध्यात्मं यतश्चैव तन्मे ब्रूहि पितामह ॥ १२-२९१-१ (७७१२४)
भीष्म उवाच। १२-२९१-२क्ष् (६४२४)
सर्वज्ञानं परं बुद्ध्या यन्मां त्वमनुपृच्छसि ।
तद्व्याख्यास्यामि ते तात तस्य व्याख्यामिमां शृणु ॥ १२-२९१-२ (७७१२५)
पृथिवी वायुराकाशमापो ज्योतिश्च पञ्चमम् ।
महाभूतानि भूतानां सर्वेषां प्रभवाप्ययौ ॥ १२-२९१-३ (७७१२६)
स तेषां गुणसंघातः शरीरं भरतर्षभ ।
सततं हि प्रलीयन्ते गुणास्ते प्रभवन्ति च ॥ १२-२९१-४ (७७१२७)
ततः सृष्टानि भूतानि तानि यान्ति पुनः पुनः ।
महाभूतानि भूतेभ्य ऊर्मयः सागरे यथा ॥ १२-२९१-५ (७७१२८)
प्रसारयित्वेहाङ्गानि कूर्मः संहरते यथा ।
तद्वद्भूतानि भूतानामल्पीयांसि स्थवीयसाम् ॥ १२-२९१-६ (७७१२९)
आकाशात्खलु यो घोषः संघातस्तु महीगुणः ।
वायोः प्राणो रसस्त्वद्भ्यो रूपं तेजस उच्यते ॥ १२-२९१-७ (७७१३०)
इत्येतन्मयमेवैतत्सर्वं स्थावरजङ्गमम् ।
प्रलये च तमभ्येति तस्मादुद्दिश्यते पुनः ॥ १२-२९१-८ (७७१३१)
महाभूतानि पञ्चैव सर्वभूतेषु भूतकृत् ।
विषयान्कल्पयामास यस्मिन्यदनुपश्यति ॥ १२-२९१-९ (७७१३२)
शब्दश्श्रोत्रे तथा खानि त्रयमाकाशयोनिजम् ।
रसः स्नेहश्च जिह्वा च अपामेते गुणाः स्मृताः ॥ १२-२९१-१० (७७१३३)
रूपं चक्षुर्विपाकश्च त्रिविधं ज्योतिरूच्यते ।
घ्रेयं घ्राणं शरीरं च एते भूमिगुणाः स्मृताः ॥ १२-२९१-११ (७७१३४)

प्राणः स्पर्शश्च चेष्टा च वायोरेते गुणाः स्मृताः ।
इति सर्वगुणा राजन्व्याख्याताः पाञ्चभौतिकाः ॥ १२-२९१-१२ (७७१३५)
सत्त्वं रजस्तमः कालः कर्म बुद्धिश्च भारत ।
मनः षष्ठानि चैतेषु ईश्वरः समकल्पयत् ॥ १२-२९१-१३ (७७१३६)
यदूर्ध्वपादतलयोरवाङ्मूर्ध्नश्च पश्यसि ।
एतस्मिन्नेव कृत्स्नेयं वर्तते बुद्धिरन्तरे ॥ १२-२९१-१४ (७७१३७)
इन्द्रियाणि नरे पञ्च षष्ठं तु मन उच्यते ।
सप्तमीं बुद्धिमेवाहुः क्षेत्रज्ञः पुनरष्टमः ॥ १२-२९१-१५ (७७१३८)
इन्द्रियाणि च कर्ता च विचेतव्यानि भागशः ।
तमः सत्वं रजस्तैव तेऽपि भावास्तदाश्रयाः ॥ १२-२९१-१६ (७७१३९)
चक्षुरालोचनायैव संशयं कुरुते मनः ।
बुद्धिरध्यवसानाय साक्षी क्षेत्रज्ञ उच्यते ॥ १२-२९१-१७ (७७१४०)
तमः सत्वं रजश्चेति कालः कर्म च भारत ।
गुणैर्नेनीयते बुद्धिर्बुद्धिरेवेन्द्रियाणि च ।
मनः षष्ठानि सर्वाणि बुद्ध्यभावे कुतो गुणाः ॥ १२-२९१-१८ (७७१४१)
येन पश्यति तच्चक्षुः शृण्वती श्रोत्रमुच्यते ।
जिघ्रती भवति घ्राणं रसती रसना रसान् ॥ १२-२९१-१९ (७७१४२)
स्पर्शनं स्पर्शती स्पर्शान्बुद्धिर्विक्रियतेऽसकृत् ।
यदा प्रार्थयते किंचित्तदा भवति सा मनः ॥ १२-२९१-२० (७७१४३)
अधिष्ठानानि बुद्ध्या हि पृथगेतानि पञ्चधा ।
इन्द्रियाणीति तान्याहुस्तेषु दुष्टेषु दुष्यति ॥ १२-२९१-२१ (७७१४४)
पुरुषे तिष्ठती बुद्धिस्त्रिषु भावेषु वर्तते ।
कदाचिल्लभते प्रीतिं कदाचिदपि शोचति ॥ १२-२९१-२२ (७७१४५)
न सुखेन न दुःखेन कदाचिदपि वर्तते ।
सेयं भावात्मिका भावांस्त्रीनेतान्परिवर्तते ॥ १२-२९१-२३ (७७१४६)
सरितां सागरो भर्ता यथा वेलामिवोर्मिमान् ।
इति भावगता बुद्धिर्भावे मनसि वर्तते ॥ १२-२९१-२४ (७७१४७)
प्रवर्तमानं तु रजस्तद्भावेनानुर्तते ।
प्रहर्षः प्रीतिरानन्दः सुखं संशान्तचित्तता ॥ १२-२९१-२५ (७७१४८)
कथंचिदुपपद्यन्ते पुरुषे सात्विका गुणाः ।
पिरदाहस्तथा शोकः संतापोऽपूर्तिरक्षमा ॥ १२-२९१-२६ (७७१४९)
लिङ्गानि रजसस्तानि दृश्यन्ते हेत्वहेतुभिः ।
अविद्या रागमोहौ च प्रमादः स्तब्धता भयम् ॥ १२-२९१-२७ (७७१५०)
असमृद्धिस्तथा दैन्यं प्रमोहः स्वप्नतन्द्रिता ।
कथंचिदुपवर्तन्ते विविधास्तामसा गुणाः ॥ १२-२९१-२८ (७७१५१)
तत्र यत्प्रीतिसंयुक्तं काये मनसि वा भवेत् ।

वर्तते सात्विको भाव इत्युपेक्षेत तत्तथा ॥ १२-२९१-२९ (७७१५२)
अथ यद्दुःखसंयुक्तमप्रीतिकरमात्मनः ।
प्रवृत्तं रज इत्येव तदसंरभ्य चिन्तयेत् ॥ १२-२९१-३० (७७१५३)
अथ यन्मोहसंयुक्तं काये मनसि वा भवेत् ।
अप्रतर्क्यमविज्ञेयं तमस्तदुपधारयेत् ॥ १२-२९१-३१ (७७१५४)
इति बुद्धिगतीः सर्वा व्याख्याता यावतीरिह ।
एतद्बुद्ध्वा भवेद्बुद्धः किमन्यद्बुद्धलक्षणम् ॥ १२-२९१-३२ (७७१५५)
सत्वक्षेत्रज्ञयोरेतदन्तरं विद्धि सूक्ष्मयोः ।
सृजतेऽत्र गुणानेक एको न सृजते गुणान् ॥ १२-२९१-३३ (७७१५६)
पृथग्भूतौ प्रकृत्या तु संप्रयुक्तौ च सर्वदा ।
यथा मत्स्योऽद्भिरन्यः स्यात्संप्रयुक्तो भवेत्तथा ॥ १२-२९१-३४ (७७१५७)
न गुणा विदुरात्मानं स गुणान्वेद सर्वतः ।
परिद्रष्टा गुणानां तु संस्रष्टा मन्यते यथा ॥ १२-२९१-३५ (७७१५८)
आश्रयो नास्ति सत्वस्य गुणसर्गेण चेतना ।
सत्वमस्य सृजन्त्यन्ये गुणान्वेद कदाचन ॥ १२-२९१-३६ (७७१५९)
सृजते हि गुणान्सत्वं क्षेत्रज्ञः परिपश्यति ।
संप्रयोगस्तयोरेष सत्वक्षेत्रज्ञयोर्ध्रुवः ॥ १२-२९१-३७ (७७१६०)
इन्द्रियैस्तु प्रदीपार्थं क्रियते बुद्धिरन्तरा ।
निश्चक्षुर्भिरजानद्भिरिन्द्रियाणि प्रदीपवत् ॥ १२-२९१-३८ (७७१६१)
एवं स्वभावमेवैतत्तद्बुद्ध्वा विहरन्नरः ।
अशोचन्नप्रहृष्यंश्च स वै विगतमत्सरः ॥ १२-२९१-३९ (७७१६२)
स्वभावसिद्धमेवैतद्यदिमान्सृजते गुणान् ।
ऊर्णनाभिर्यथा सूत्रं विज्ञेयास्तन्तुवद्गुणाः ॥ १२-२९१-४० (७७१६३)
प्रध्वस्ता न निवर्तन्ते प्रवृत्तिर्नोपलभ्यते ।
एवमेके व्यवस्यन्ति निवृत्तिरिति चापरे ॥ १२-२९१-४१ (७७१६४)
इतीदं हृदयग्रन्थिं बुद्धिचिन्तामयं दृढम् ।
विमुच्य सुखमासीत विशोकश्छिन्नसंशयः ॥ १२-२९१-४२ (७७१६५)
ताम्येयुः प्रच्युताः पृथ्वीं मोहपूर्णां नदीं नराः ।
यथा गाधमविद्वांसो बुद्धियोगमयं तथा ॥ १२-२९१-४३ (७७१६६)
नैव ताम्यन्ति विद्वांसः प्लवन्तः पारमम्भसः ।
अध्यात्मविदुषो धीरा ज्ञानं तु परमं प्लवः ॥ १२-२९१-४४ (७७१६७)
न भवति विदुषां महद्भयं
यदविदुषां सुमहद्भयं भवेत् ।
न हि गतिरधिकाऽस्ति कस्यचि
त्सकृदुपदर्शयतीह तुल्यताम् ॥ १२-२९१-४५ (७७१६८)
यत्करोति बहुदोषमेकत

स्तच्च दूषयति यत्पुरा कृतम् ।
नाप्रियं तदुभयं करोत्यसौ
यच्च दूषयति यत्करोति च ॥ ॥ १२-२९१-४६ (७७१६९)

इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि
एकनवत्यधिकद्विशततमोऽध्यायः ॥ २९१.।
Mahabharata - Shanti Parva - Chapter Footnotes

क़ १९२ तमाध्यायतया पूर्वं विद्यमान एवायमध्यायः ख
।ध।झ। पुस्तकेषु क्वचित्क्वचित्पाठभेदेन पुनरपि दृश्यते
न दृश्यते च दाक्षिणात्यबहुकोशेषु ।

---

शन्तिपर्व-अध्यय२९२
॥ श्रीः ॥
१२.२९२. अध्यायः २९२

Mahabharata - Shanti Parva - Chapter Topics
भीष्मेण युधिष्ठिरंप्रति ज्ञानस्य
दुःखादिनिवर्तकत्वप्रतिपादकनारदसमङ्गसंवादानुवादः ॥ १.।
Mahabharata - Shanti Parva - Chapter Text

१२-२९२-० (७७१७०)
युधिष्ठिर उवाच।१२-२९२-०क्ष् (६४२५)
शोकाद्दुःखाच्च मृत्योश्च त्रसन्ते प्राणिनः सदा ।
उभयं नो यथा न स्यात्तन्मे ब्रूहि पितामह ॥१२-२९२-१ (७७१७१)
भीष्म उवाच।१२-२९२-२क्ष् (६४२६)
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
नारदस्य च संवादं समङ्गस्य च भारत ॥१२-२९२-२ (७७१७२)
नारद उवाच।१२-२९२-३क्ष् (६४२७)
उरसेव प्रणमसे बाहुभ्यां तरसीव च ।
संप्रहृष्टमना नित्यं विशोक इव लक्ष्यसे ॥१२-२९२-३ (७७१७३)
उद्वेगं न हि ते किंचित्सुसूक्ष्ममपि लक्षये ।
नित्यतृप्त इव स्वस्थो बालवच्च विचेष्टसे ॥१२-२९२-४ (७७१७४)
समङ्ग उवाच।१२-२९२-५क्ष् (६४२८)
भूतं भव्यं भविष्यच्च सर्वभूतेषु नारद ।
तेषां तत्त्वानि जानामि ततो न विमना ह्यहम् ॥१२-२९२-५ (७७१७५)

उपक्रमानहं वेद पुनरेव फलोदयान् ।
लोके फलानि चित्राणि ततो न विमना ह्यहम् ॥ १२-२९२-६ (७७१७६)
अनाथाश्चाप्रतिष्ठाश्च गतिमन्तश्च नारद ।
अन्धा जडाश्च जीवन्ति पश्यास्मानपि जीवतः ॥ १२-२९२-७ (७७१७७)
विहितेनैव जीवन्ति अरोगाङ्गा दिवौकसः ।
बलवन्तोऽबलाश्चैव तद्वदस्मान्सभाजय ॥ १२-२९२-८ (७७१७८)
सहस्रिणोऽपि जीवन्ति जीवन्ति शतिनस्तथा ।
शाकेन चान्ये जीवन्ति पश्यास्मानपि जीवतः ॥ १२-२९२-९ (७७१७९)
यदा न शोचेमहि किं नु नः स्या
द्धर्मेण वा नारद कर्मणा वा ।
कृतान्तवश्यानि यदा सुखानि
दुःखानि वा यन्न विधर्षयन्ति ॥ १२-२९२-१० (७७१८०)
यस्मै प्राज्ञाः कथयन्ते मनुष्याः
प्रज्ञामूलं हीन्द्रियाणां प्रसादः ।
मुह्यन्ति शोचन्ति तथेन्द्रियाणि
प्रज्ञालाभो नास्ति मूढेन्द्रियस्य ॥ १२-२९२-११ (७७१८१)
मूढस्य दर्पः स पुनर्मोह एव
मूढस्य नायं न परोऽस्ति लोकः ।
न ह्येव दुःखानि सदा भवन्ति
सुखस्य वा नित्यशो लाभ एव ॥ १२-२९२-१२ (७७१८२)
भावात्मकं संपरिवर्तमानं
न मादृशः संज्वरं जातु कुर्यात् ।
इष्टान्भोगान्नानुरुध्येत्सुखं वा
न चिन्तयेद्दुःखमभ्यागतं वा ॥ १२-२९२-१३ (७७१८३)
समाहितो न स्पृहयेत्परेषां
नानागतं चाभिनन्देच्च लाभम् ।
न चापि हृष्येद्विपुलेऽर्थलाभे
तथाऽर्थनाशे च न वै विषीदेत् ॥ १२-२९२-१४ (७७१८४)
न बान्धवा न च वित्तं न कौल्यं
न च श्रुतं न च मन्त्रा न वीर्यम् ।
दुःखान्त्रातुं सर्व एवोत्सहन्ते
परत्र शीलेन तु यान्ति शान्तिम् ॥ १२-२९२-१५ (७७१८५)
नास्ति बुद्धिरयुक्तस्य नायोगाद्विन्दते सुखम् ।
धृतिश्च दुःखत्यागश्चेत्युभयं तु सुखं नृप ॥ १२-२९२-१६ (७७१८६)
प्रियं हि हर्षजननं हर्ष उत्सेकवर्धनः ।
उत्सेको नरकायैव तस्मात्तान्संत्यजाम्यहम् ॥ १२-२९२-१७ (७७१८७)

एताञ्शोकभयोत्सेकान्मोहनान्सुखदुःखयोः ।
पश्यामि साक्षिवल्लोके देहस्यास्य विचेष्टनात् ॥ १२-२९२-१८ (७७१८८)
अर्थकामौ परित्यज्य विशोको विगतज्वरः ।
तृष्णामोहौ तु संत्यज्य चरामि पृथिवीमिमाम् ॥ १२-२९२-१९ (७७१८९)
न च मृत्योर्न चाधर्मान्न लोभान्न कुतश्चन ।
पीतामृतस्येवात्यन्तमिह वामुत्र वा भयम् ॥ १२-२९२-२० (७७१९०)
एतद्ब्रह्मन्विजानामि महत्कृत्वा तपोऽव्ययम् ।
तेन नारद संप्राप्तो न मां शोकः प्रबाधते ॥ ॥ १२-२९२-२१ (७७१९१)

इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि
द्विनवत्यधिकद्विशततमोऽध्यायः ॥ २९२.।
Mahabharata - Shanti Parva - Chapter Footnotes

१२-२९२-८ पशवोऽपि हि जीवन्तीति तद्वदस्मान्विभावयेति च । ध। पाठः ॥
१२-२९२-१० दुःखानि चार्थं न विवर्धयन्तीति ध । पाठः ॥
१२-२९२-११ यत्प्रज्ञानं कथयन्ते इति थ । पाठः ॥
१२-२९२-१६ नायोगे विन्दते सुखमिति । मतिः सुखं च योगः स्यादुभयं
न सुखोदयमिति च झ। पाठः ॥

---

शन्तिपर्व-अध्यय२९३
॥ श्रीः ॥
१२.२९३. अध्यायः २९३

Mahabharata - Shanti Parva - Chapter Topics
भीष्मेण युधिष्ठिरंप्रति श्रेयःसाधनानां कथनम् ॥ १.।
Mahabharata - Shanti Parva - Chapter Text

१२-२९३-० (७७१९२)
युधिष्ठिर उवाच। १२-२९३-०क्ष् (६४२९)
अतत्त्वज्ञस्य शास्त्राणां संततं संशयात्मनः ।
अकृतव्यवसायस्य श्रेयो ब्रूहि पितामह ॥ १२-२९३-१ (७७१९३)
भीष्म उवाच। १२-२९३-२क्ष् (६४३०)
गुरुपूजा च सततं वृद्धानां पर्युपासनम् ।
श्रवणं चैव विद्यानां कूटस्थं श्रेय उच्यते ॥ १२-२९३-२ (७७१९४)
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
गालवस्य च संवादं देवर्षेर्नारदस्य च ॥ १२-२९३-३ (७७१९५)
वीतमोहक्लमं विप्रं ज्ञानतृप्तं जितेन्द्रियः ।

श्रेयस्कामो यतान्मानं नारदं गालवोऽब्रवीत् ॥१२-२९३-४ (७७१९६)
यैः कैश्चित्संमतो लोके गुणैश्च पुरुषो नृषु ।
भवत्यनपगान्सर्वांस्तान्गुणाँल्लक्षयामहे ॥१२-२९३-५ (७७१९७)
भवानेवंविधोऽस्माकं संशयं छेत्तुमर्हति ।
अमूढश्चिरमूढानां लोकतत्त्वमजानताम् ॥१२-२९३-६ (७७१९८)
ज्ञाने ह्येवं प्रवृत्तिः स्यात्कार्याणामविशेषतः ।
यत्कार्यं न व्यवस्यामस्तद्भवान्वक्तुमर्हति ॥१२-२९३-७ (७७१९९)
भगवन्नाश्रमाः सर्वे पृथगाचारदर्शिनः ।
इदं श्रेय इदं श्रेय इति सर्वे प्रबोधिताः ॥१२-२९३-८ (७७२००)
तांस्तु विप्रस्थितानदृष्ट्वा शास्त्रैः शास्त्राभिनन्दिनः ।
स्वशास्त्रैः परितुष्टाश्च श्रेयो नोपलभामहे ॥१२-२९३-९ (७७२०१)
शास्त्रं यदि भवेदेकं श्रेयो व्यक्तं भवेत्तदा ।
शास्त्रैश्च बहुभिर्भूयः श्रेयो गुह्यं प्रवेशितम् ॥१२-२९३-१० (७७२०२)
एतस्मात्कारणाच्छ्रेयो गहनं प्रतिभाति मे ।
ब्रवीतु भगवांस्तन्मे उपसन्नोस्म्यधीहि भो ॥१२-२९३-११ (७७२०३)
नारद उवाच।१२-२९३-१२क्ष् (६४३१)
आश्रमास्तात चत्वारो यथा संकल्पिताः पृथक् ।
तान्सर्वाननुपश्य त्वं समाश्रित्यैव गालव ॥१२-२९३-१२ (७७२०४)
तेषांतेषां तथाहि त्वमाश्रमाणां ततस्ततः ।
नानारूपं गुणोद्देशं पश्य विप्रस्थितं पृथक् ॥१२-२९३-१३ (७७२०५)
न यान्ति चैव ते सम्यगभिप्रेतमसंशयम् ।
अन्येऽपश्यंस्तथा सम्यगाश्रमाणां परां गतिम् ॥१२-२९३-१४ (७७२०६)
यत्तु निःश्रेयसं सम्यक्तच्चैवासंशयात्मकम् ।
अनुग्रहं च मित्राणाममित्राणां च निग्रहम् ॥१२-२९३-१५ (७७२०७)
संग्रहं च त्रिवर्गस्य श्रेय आहुर्मनीषिणः ।
निवृत्तिः कर्मणः पापात्सततं पुण्यशीलता ॥१२-२९३-१६ (७७२०८)
सद्भिश्च समुदाचारः श्रेय एतदसंशयम् ।
मार्दवं सर्वभूतेषु व्यवहारेषु चार्जवम् ॥१२-२९३-१७ (७७२०९)
वाक्चैव मधुरा प्रोक्ता श्रेय एतदसंशयम् ।
देवताभ्यः पितृभ्यश्च संविभागोऽतिथिष्वपि ॥१२-२९३-१८ (७७२१०)
असंत्यागश्च भृत्यानां श्रेय एतदसंशयम् ।
सत्यस्य वचनं श्रेयः सत्यज्ञानं तु दुष्करम् ॥१२-२९३-१९ (७७२११)
यद्भूतहितमत्यन्तमेतत्सत्यं ब्रवीम्यहम् ।
अहंकारस्य च त्यागः प्रमादस्य च निग्रहः ॥१२-२९३-२० (७७२१२)
संतोषश्चैकचर्या च कूटस्थं श्रेय उच्यते ।
धर्मेण वेदाध्ययनं वेदाङ्गानां तथैव च ॥१२-२९३-२१ (७७२१३)

ज्ञानार्थानां च जिज्ञासा श्रेय एतदसंशयम् ।
शब्दरूपरसस्पर्शान्सह गन्धेन केवलान् ॥ १२-२९३-२२ (७७२१४)
नात्यर्थमुपसेवेत श्रेयसोर्थी कथंचन ॥ १२-२९३-२३ (७७२१५)
नक्तंचर्यां दिवास्वप्नमालस्यं पैशुनं मदम् ।
अतियोगमयोगं च श्रेयसोर्थी परित्यजेत् ॥ १२-२९३-२४ (७७२१६)
आत्मोत्कर्षं न मार्गेत परेषां परिनिन्दया ।
स्वगुणैरेव मार्गेति विप्रकर्षं पृथग्जनात् ॥ १२-२९३-२५ (७७२१७)
निर्गुणास्त्वेव भूयिष्ठमात्मसंभाविता नराः ।
दोषैरन्यान्गुणवतः क्षिपन्त्यात्मगुणक्षयात् ॥ १२-२९३-२६ (७७२१८)
अनूच्यमानास्तु पुनस्ते मन्यन्ते महाजनात् ।
गुणवत्तरमात्मानं स्वेन मानेन दर्पिताः ॥ १२-२९३-२७ (७७२१९)
अब्रुवन्कस्यचिन्निन्दामात्मपूजामवर्णयन् ।
विपश्चिद्गुणसंपन्नः प्राप्नोत्येव महद्यशः ॥ १२-२९३-२८ (७७२२०)
अब्रुवन्वाऽतिसुरभिर्गन्धः सुमनसां शुचिः ।
तथैवाव्याहरन्भाति विमलो भानुरम्बरे ॥ १२-२९३-२९ (७७२२१)
एव मादीनि चान्यानि परित्यक्तानि मेधया ।
ज्वलन्ति यशसा लोके यानि न व्याहरन्ति च ॥ १२-२९३-३० (७७२२२)
न लोके दीप्यते मूर्खः केवलात्मप्रशंसया ।
अपि चापिहितः श्वभ्रे कृतविद्यः प्रकाशते ॥ १२-२९३-३१ (७७२२३)
असदुच्चैरपि प्रोक्तः शब्दः समुपशाम्यति ।
दीप्यते त्वेव लोकेषु शनैरपि सुभाषितम् ॥ १२-२९३-३२ (७७२२४)
मूढानामवलिप्तानामसारं भाषितं बहु ।
दर्शयत्यन्तरात्मानमग्निरूपमिवांशुमान् ॥ १२-२९३-३३ (७७२२५)
एतस्मात्कारणात्प्रज्ञां मृगयन्ते पृथग्विधाम् ।
प्रज्ञालाभो हि भूतानामुत्तमः प्रतिभाति मे ॥ १२-२९३-३४ (७७२२६)
नापृष्टः कस्यचिद्ब्रूयान्नाप्यन्यायेन पृच्छतः ।
जानन्नपि च मेधावी जडवत्समुपाविशेत् ॥ १२-२९३-३५ (७७२२७)
ततो वासं परीक्षेत धर्मनित्येषु साधुषु ।
मनुष्येषु वदान्येषु स्वधर्मनिरतेषु च ॥ १२-२९३-३६ (७७२२८)
चतुर्णां यत्र वर्णानां धर्मव्यतिकरो भवेत् ।
न तत्र वासं कुर्वीत श्रेयोर्थी वै कथंचन ॥ १२-२९३-३७ (७७२२९)
निरारम्भोऽप्ययमिह यथालब्धोपजीवनः ।
पुण्यं पुण्येषु विमलं पापं पापेषु चाप्नुयात् ॥ १२-२९३-३८ (७७२३०)
अपामग्नेस्तथेन्दोश्च स्पर्शं वेदयते यथा ।
तथा पश्यामहे स्पर्शमुभयोः पुण्यपापयोः ॥ १२-२९३-३९ (७७२३१)
अपश्यन्तोऽन्यविषयं भुञ्जते विघसाशिनः ।

भुञ्जानाश्चान्यविषयान्विषयान्विद्धि कर्मणाम् ॥ १२-२९३-४० (७७२३२)
यत्रागमयमानानामसत्कारेण पृच्छताम् ।
प्रब्रूयाद्ब्रह्माणो धर्मं त्यजेत्तं देशमात्मवान् ॥ १२-२९३-४१ (७७२३३)
शिष्योषाध्यायिका वृत्तिर्यत्र स्यात्सुसमाहिता ।
यथावच्छास्त्रसंपन्ना कस्तं देशं परित्यजेत् ॥ १२-२९३-४२ (७७२३४)
आकाशस्था ध्रुवं यत्र दोषं ब्रूयुर्विपश्चिताम् ।
आत्मपूजाभिकामो वै को वसेत्तत्र पण्डितः ॥ १२-२९३-४३ (७७२३५)
यत्र संलोडिता लुब्धैः प्रायशो धर्मसेतवः ।
प्रदीप्तमिव चेलान्तं कस्तं देशं न संत्यजेत् ॥ १२-२९३-४४ (७७२३६)
यत्र धर्ममनाशङ्काश्चरेयुर्वीतमत्सराः ।
भवेत्तत्र वसेच्चैव पुण्यशीलेषु साधुषु ॥ १२-२९३-४५ (७७२३७)
धर्ममर्थनिमित्तं च चरेयुर्यत्र मानवाः ।
नताननुवसेज्जातु ते हि पापकृतो जनाः ॥ १२-२९३-४६ (७७२३८)
कर्मणां यत्र पापेन वर्तन्ते जीवितेप्सवः ।
व्यवधावेत्ततस्तूर्णं ससर्पाच्छरणादिव ॥ १२-२९३-४७ (७७२३९)
येन खट्वां समारूढः कर्मणाऽनुशयी भवेत् ।
आदितस्तन्न कर्तव्यमिच्छता भवमात्मनः ॥ १२-२९३-४८ (७७२४०)
यत्र राजा च राज्ञश्च पुरुषाः प्रत्यनन्तराः ।
कुटुम्बिनामग्रभुजस्त्यजेत्तद्राष्ट्रमात्मवान् ॥ १२-२९३-४९ (७७२४१)
श्रोत्रियास्त्वग्रभोक्तारो धर्मनित्याः सनातनाः ।
याजनाध्यापने युक्ता यत्र तद्राष्ट्रमावसेत् ॥ १२-२९३-५० (७७२४२)
स्वाहास्वधावषट्कारा यत्र सम्यगनुष्ठिताः ।
अजस्रं चैव वर्तन्ते वसेत्तत्राविचारयन् ॥ १२-२९३-५१ (७७२४३)
अशुचीन्यत्र पश्येत ब्राह्मणान्वृत्तिकर्शितान् ।
त्यजेत्तद्राष्ट्रमासन्नमुपसृष्टमिवामिषम् ॥ १२-२९३-५२ (७७२४४)
प्रीयमाणा नरा यत्र प्रयच्छेयुरयाचिताः ।
स्वस्थचित्तो वसेत्तत्र कृतकृत्य इवात्मवान् ॥ १२-२९३-५३ (७७२४५)
दण्डो यत्राविनीतेषु सत्कारश्च कृतात्मसु ।
चरेत्तत्र वसेच्चैव पुण्यशीलेषु साधुषु ॥ १२-२९३-५४ (७७२४६)
उपसृष्टेषु दान्तेषु दुराचारेषु साधुषु ।
अविनीतेषु लुब्धेषु सुमहद्दण्डधारणम् ॥ १२-२९३-५५ (७७२४७)
यत्र राजा धर्मनित्यो राज्यं धर्मेण पालयेत् ।
अपास्य कामान्कामेशो वसेत्तत्राविचारयन् ॥ १२-२९३-५६ (७७२४८)
यथाशीला हि राजानः सर्वान्विषयवासिनः ।
श्रेयसा योजयत्याशु श्रेयसि प्रत्युपस्थिते ॥ १२-२९३-५७ (७७२४९)
पृच्छतस्ते मया तात श्रेय एतदुदाहृतम् ।

न हि शक्यं प्रधानेन श्रेयः सङ्ख्यातुमात्मनः ॥१२-२९३-५८ (७७२५०)
एवं प्रवर्तमानस्य वृत्तिं प्राणिहितात्मनः ।
तपसैवेह बहुलं श्रेयो व्यक्तं भविष्यति ॥ ॥१२-२९३-५९ (७७२५१)

इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि
त्रिनवत्यधिकद्विशततमोऽध्यायः ॥ २९३.।
Mahabharata - Shanti Parva - Chapter Footnotes

१२-२९३-२ श्रवणं चैव शास्त्राणामिति झ ।पाठः ॥
१२-२९३-४ श्रेयस्कामं जितात्मानमिति थ ।पाठः ॥
१२-२९३-७ प्रवृत्तिः स्यात्कार्याकार्ये विजानत इति ध ।पाठः ॥
१२-२९३-९ नानाविधा गिरस्तास्तु दृष्ट्वा शास्त्राभिनन्दिन इति ध ।पाठः ॥
१२-२९३-११ श्रेयः कलिलं प्रति भाति ये इति झ
।पाठः।उपपन्नोस्म्यधीहि भो इति ध।पाठः ॥
१२-२९३-१४ ऋजु पश्यन्ति ये सम्यगिति ध ।पाठः ॥
१२-२९३-१९ असंत्यागश्च भूतानामिति ध ।पाठः ॥
१२-२९३-२० प्रणयस्य च निग्रह इति ध ।पाठः ॥
१२-२९३-२२ वेद्यार्थानां च जिज्ञासेति ध ।पाठः ॥
१२-२९३-३७ कर्मव्यतिकरो भवेदिति ध ।पाठः ॥
१२-२९३-४३ आकारं गूहमानाय दोषान्ब्रूयुर्विपश्चिताम् इति ध ।पाठः ॥
१२-२९३-४५ धर्मशीलेषु साधुष्विति ध ।पाठः ॥
१२-२९३-४८ इच्छता हितमात्मन इति ध ।पाठः ॥
१२-२९३-५५ ये दान्तेषु उपसृष्टाः सक्रोधास्तेषु येच साधुषु
दुराचारास्तेषु ।उपसृष्टेष्वदान्तेषु दुराचारेष्वसाधुष्विति
ध।पाठः ॥
१२-२९३-५९ वृत्तिं प्रणिहितात्मन इति ध ।पाठः ॥

---

शन्तिपर्व-अध्यय२९४
॥ श्रीः ॥
१२.२९४. अध्यायः २९४

Mahabharata - Shanti Parva - Chapter Topics
भीष्मेण युधिष्ठिरंप्रति
मुक्तिसाधनप्रतिपादकसगरारिष्टनेमिसंवादानुवादः ॥१.।
Mahabharata - Shanti Parva - Chapter Text

१२-२९४-० (७७२५२)
युधिष्ठिर उवाच। १२-२९४-०क्ष् (६४३२)
कथं नु युक्तः पृथिवीं चरेदस्मद्विधो नृपः ।
नित्यं कैश्च गुणैर्युक्तः सङ्गपाशाद्विमुच्यते ॥ १२-२९४-१ (७७२५३)
भीष्म उवाच। १२-२९४-२क्ष् (६४३३)
अत्र ते वर्तयिष्येऽहमितिहासं पुरातनम् ।
अरिष्टनेमिना प्रोक्तं सगरायानुपृच्छते ॥ १२-२९४-२ (७७२५४)
सगर उवाच। १२-२९४-३क्ष् (६४३४)
किं श्रेयः परमं ब्रह्मन्कृत्वेह सुखमश्नुते ।
कथं न शोचेन्न क्षुभ्येदेतदिच्छामि वेदितुम् ॥ १२-२९४-३ (७७२५५)
भीष्म उवाच। १२-२९४-४क्ष् (६४३५)
एवमुक्तस्तदा तार्क्ष्यः सर्वशास्त्रविदां वरः ।
विबुध्य संपदं चाग्र्यां सद्वाक्यमिदमब्रवीत् ॥ १२-२९४-४ (७७२५६)
सुखं मोक्षसुखं लोके न च मूढोऽवगच्छति ।
प्रसक्तः पुत्रपशुषु धनधान्यसमाकुलः ॥ १२-२९४-५ (७७२५७)
सक्तबुद्धिरशान्तात्मा स न शक्यश्चिकित्सितुम् ।
स्नेहपाशसितो मूढो न स मोक्षाय कल्पते ॥ १२-२९४-६ (७७२५८)
स्नेहजानिह ते पाशान्वक्ष्यामि शृणु तान्मम ।
सकर्णकेन शिरसा शक्याश्छेत्तुं विजानता ॥ १२-२९४-७ (७७२५९)
संभाव्य पुत्रान्कालेन यौवनस्थान्निवेश्य च ।
समर्थाज्जीवने ज्ञात्वा मुक्तश्चर यथासुखम् ॥ १२-२९४-८ (७७२६०)
भार्यां पुत्रवतीं वृद्धां लालितां पुत्रवत्सलाम् ।
ज्ञात्वा प्रजहि कालेन परार्थमनुदृश्य च ॥ १२-२९४-९ (७७२६१)
सापत्यो निरपत्यो वा मुक्तश्चर यथासुखम् ।
इन्द्रियैरिन्द्रियार्थांस्त्वमनुभूय यथाविधि ॥ १२-२९४-१० (७७२६२)
कृतकौन्तूहलस्तेषु मुक्तश्चर यथासुखम् ।
उपपत्त्योपलब्धेषु लोकेषु च समो भव ॥ १२-२९४-११ (७७२६३)
एष तावत्समासेन तव संकीर्तितो मया ।
मोक्षार्थो विस्तरेणाथ भूयो वक्ष्यामि तच्छृणु ॥ १२-२९४-१२ (७७२६४)
मुक्ता वीतभया लोके चरन्ति सुखिनो नराः ।
सक्तभावा विनश्यन्ति नरास्तत्र न संशयः ॥ १२-२९४-१३ (७७२६५)
आहारसंचये सक्ता यथा कीटपिपीलिकाः ।
असक्ताः सुखिनो लोके सक्ताश्चैव विनाशिनः ॥ १२-२९४-१४ (७७२६६)
स्वजने न च ते चिन्ता कर्तव्या मोक्षबुद्धिना ।
इमे मया विनाभूता भविष्यन्ति कथं त्विति ॥ १२-२९४-१५ (७७२६७)
स्वयमुत्पद्यते जन्तुः स्वयमेव विवर्धते ।

सुखदुःखे तथा मृत्युं स्वयमेवाधिगच्छति ॥१२-२९४-१६ (७७२६८)
भोजनाच्छादने चैव मात्रा पित्रा च संग्रहम् ।
स्वकृते नाधिगच्छन्ति लोके नास्त्यकृतं पुरा ॥१२-२९४-१७ (७७२६९)
धात्रा विहितभक्ष्याणि सर्वभूतानि मेदिनीम् ।
लोके विपरिधावन्ति रक्षितानि स्वकर्मभिः ॥१२-२९४-१८ (७७२७०)
स्वयं मृत्पिण्डभूतस्य परतन्त्रस्य सर्वदा ।
को हेतुः स्वजनं द्रष्टुं रक्षितं वाऽदृढात्मनः ॥१२-२९४-१९ (७७२७१)
स्वजनं हि यदा मृत्युर्हन्त्येव भुवि पश्यतः ।
कृतेऽपि यत्ने महति तत्र बोद्धव्यमात्मना ॥१२-२९४-२० (७७२७२)
जीवन्तमपि चैवैनं भरणे रक्षणे तथा ।
असमाप्ते परित्यज्य पश्चादपि मरिष्यसि ॥१२-२९४-२१ (७७२७३)
यदा मृतं च स्वजनं न ज्ञास्यसि कथंचन ।
सुखितं दुःखितं वाऽपि ननु बोद्धव्यमात्मना ॥१२-२९४-२२ (७७२७४)
मृते वा त्वयि जीवे वा यदा भोक्ष्यति वै जनः ।
स्वकृतं ननु बुद्ध्वैवं कर्तव्यं हितमात्मनः ॥१२-२९४-२३ (७७२७५)
एवं विजानँल्लोकेऽस्मिन्कः कस्येत्यभिनिश्चितः ।
मोक्षे निवेशय मनो भूयश्चाप्युपधारय ॥१२-२९४-२४ (७७२७६)
क्षुत्पिपासादयो भावा जिता यस्येह देहिनः ।
क्रोधो लोभस्तथा मोहः सत्ववान्मुक्त एव सः ॥१२-२९४-२५ (७७२७७)
द्यूते पाने तथा स्त्रीषु मृगयायां च यो नरः ।
न प्रमाद्यति संमोहात्सततं मुक्त एव सः ॥१२-२९४-२६ (७७२७८)
दिवसेदिवसे नाम रात्रौरात्रौ पुमान्सदा ।
भोक्तव्यमिति यः स्विन्नो दोषबुद्धिः स उच्यते ॥१२-२९४-२७ (७७२७९)
आत्मभावं तथा स्त्रीषु सक्तमेव पुनः पुनः ।
यः पश्यति सदा युक्तो यथावन्मुक्त एव सः ॥१२-२९४-२८ (७७२८०)
संभवं च विनाशं च भूतानां चेष्टितं तथा ।
यस्तत्त्वतो विजानाति लोकेऽस्मिन्मुक्त एव सः ॥१२-२९४-२९ (७७२८१)
प्रस्थं वाहसहस्रेषु यात्रार्थं चैव कोटिषु ।
प्रासादे मञ्चकं स्थानं यः पश्यति स मुच्यते ॥१२-२९४-३० (७७२८२)
मृत्युनाऽभ्याहतं लोकं व्याधिभिश्चोपपीडितम् ।
अवृत्तिकर्शितं चैव यः पश्यति स मुच्यते ॥१२-२९४-३१ (७७२८३)
यः पश्यति स संतुष्टो नपश्यंश्च विहन्यते ।
यश्चाप्यल्पेन संतुष्टो लोकेऽस्मिन्मुक्त एव सः ॥१२-२९४-३२ (७७२८४)
अग्नीषोमाविदं सर्वमिति यश्चानुपश्यति ।
न च संस्पृश्यते भावैरद्भुतैर्मुक्त एव सः ॥१२-२९४-३३ (७७२८५)
पर्यङ्कशय्या भूमिश्च सामने यस्य देहिनः ।

शाल्यन्नं च कदन्नं च यस्य स्यान्मुक्त एव सः ॥१२-२९४-३४ (७७२८६)
क्षौमं च कुशचीरं च कौशेयं वल्कलानि च ।
आविकं चर्म च समं यस्य स्यान्मुक्त एव सः ॥१२-२९४-३५ (७७२८७)
पञ्चभूतसमुद्भूतं लोकं यश्चानुपश्यति ।
तथाच वर्तते दृष्ट्वा लोकेऽस्मिन्मुक्त एव सः ॥१२-२९४-३६ (७७२८८)
सुखदुःखे समे यस्य लाभालाभौ जयाजयौ ।
इच्छाद्वेषौ भयोद्वेगौ सर्वथा मुक्त एव सः ॥१२-२९४-३७ (७७२८९)
रक्तमूत्रपुरीषाणां दोषाणां संचयांस्तथा ।
शरीरं दोषबहुलं दृष्ट्वा चैव विमुच्यते ॥१२-२९४-३८ (७७२९०)
वलीपलितसंयोगं कार्श्यं वैवर्ण्यमेव च ।
कुजभावं च जरयाः यः पश्यति स मुच्यतेत ॥१२-२९४-३९ (७७२९१)
पुंस्त्वोपघातं कालेन दर्शनोपरमं तथा ।
बाधिर्यं प्राणमन्दत्वं यः पश्यति स मुच्यते ॥१२-२९४-४० (७७२९२)
गतानृषींस्तथा देवानसुरांश्च तथा गतान् ।
लोकादस्मात्परं लोकं यः पश्यति स मुच्यते ॥१२-२९४-४१ (७७२९३)
प्रभावैरन्वितास्तैस्तैः पार्थिवेन्द्राः सहस्रशः ।
ये गताः पृथिवीं त्यक्त्वा इति ज्ञात्वा विमुच्यते ॥१२-२९४-४२ (७७२९४)
अर्थांश्च दुर्लभाँल्लोके क्लेशांश्च सुलभांस्तथा ।
दुःखं चैव कुटुम्बार्थे यः पश्यति स मुच्यते ॥१२-२९४-४३ (७७२९५)
अपत्यानां च वैगुण्यं जनं विगुणमेव च ।
पश्यन्भूयिष्ठशो लोके को मोक्षं नाभिपूजयेत् ॥१२-२९४-४४ (७७२९६)
शास्त्राल्लोकाच्च यो बुद्धः सर्वं पश्यति मानवः ।
असारमिव मानुष्यं सर्वथा मुक्ता एव सः ॥१२-२९४-४५ (७७२९७)
एतच्छ्रुत्वा मम वचो भवांश्चरतु मुक्तवत् ।
गार्हस्थ्याद्यदि ते मोक्षे कृता बुद्धिरविक्लवा ॥१२-२९४-४६ (७७२९८)
तत्तस्य वचनं श्रुत्वा सम्यक्स पृथिवीपतिः ।
मोक्षजैश्च गुणैर्युक्तः पालयामास च प्रजाः ॥ ॥१२-२९४-४७ (७७२९९)

इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि
चतुर्नवत्यधिकद्विशततमोऽध्यायः ॥ २९४.।
Mahabharata - Shanti Parva - Chapter Footnotes

१२-२९४-१ कथं विमुक्तः पृथिवीमिति थ ।पाठः ॥
१२-२९४-५ नच लोकोऽवगच्छतीति थ ।ध।पाठः ॥
१२-२९४-८ निवेश्य दारैः संयोज्य ॥
१२-२९४-९ परार्थमन्तिमं पुरुषार्थं मोक्षम् ।प्रजहि त्यज ॥

१२-२९४-११ कृतकौतूहलः छिन्नौत्सुक्यः ।लाभेषु च समो भवेति
थ ध।पाठः ॥
१२-२९४-१२ मोक्षार्थो मोक्षप्रयोजनः ॥
१२-२९४-१३ मुक्ताश्छिन्नस्नेहपाशाः ।सक्तभावाः विषयासक्तवित्ताः ॥
१२-२९४-३० वाहः धान्यपूर्णं शकटम् ।सहस्रेषु कोटिष्विति
समानाधिकरणम्।प्रस्थं पुरुषाहारपरिमितं धान्यम्।यात्रार्थं
देहव्यवहारार्थम्।अधिकसंग्रहो व्यर्थं इति यः पश्यति ॥
१२-२९४-३१ अवृत्तिर्जीविकाया अभावः ॥
१२-२९४-३२ नपश्यन्नित्येकं पदम् ।मृत्युनाभ्याहतं
लोकमित्यनुकृष्यते ॥
१२-२९४-३३ अग्निर्जाठरो भोक्ता ।सोमोऽन्नं भोज्यम् ॥
१२-२९४-३४ शालयश्च कदग्नं चेति झ ।ध।पाठः ॥
१२-२९४-३८ श्लेष्ममूत्रपुरीषाणामिति ध ।पाठः।छर्दिमूत्रेति
थ।पाठः ॥
१२-२९४-४० बाधिर्यं घ्राणमन्दत्वमिति ध ।पाठः ॥
१२-२९४-४२ प्रतापैरन्विता इति थ ।पाठः ॥

---

शन्तिपर्व-अध्यय२९५
॥ श्रीः ॥
१२.२९५. अध्यायः २९५

Mahabharata - Shanti Parva - Chapter Topics
भीष्मेण युधिष्ठिरंप्रति भार्गवचरित्रकथनम् ॥१.।
Mahabharata - Shanti Parva - Chapter Text

१२-२९५-० (७७३००)
युधिष्ठिर उवाच।१२-२९५-०क्ष् (६४३६)
तिष्ठते मे सदा तात कौतूहलमिदं हृदि ।
तदहं श्रोतुमिच्छामि त्वत्तः कुरुपितामह ॥१२-२९५-१ (७७३०१)
कथं देवर्षिरुशना सदा काव्यो महामतिः ।
असुराणां प्रियकारः सुराणामप्रिये रतः ॥१२-२९५-२ (७७३०२)
वर्धयामास तेजश्च किमर्थममितौजसाम् ।
नित्यं वैरनिबद्धाश्च दानवाः सुरसत्तमैः ॥१२-२९५-३ (७७३०३)
कथं चाप्युशना प्राप शुक्रत्वममरद्युतिः ।
ऋद्धिं च स कथं प्राप्तः सर्वमेतद्ब्रवीहि मे ॥१२-२९५-४ (७७३०४)
न याति च स तेजस्वी मध्येन नभसः कथम् ।
एतदिच्छामि विज्ञातुं निखिलेन पितामह ॥१२-२९५-५ (७७३०५)

भीष्म उवाच। १२-२९५-६क्ष् (६४३७)
शृणु राजन्नवहितः सर्वमेतद्यथातथम् ।
यथामति यथा चैतच्छ्रुतपूर्वं मयाऽनघ ॥ १२-२९५-६ (७७३०६)
एष भार्गवदायादो मुनिर्मान्यो दृढव्रतः ।
सुराणां विप्रियकरो निमित्ते कारणात्मके ॥ १२-२९५-७ (७७३०७)
इन्द्रोऽथ धनदो राजा यक्षरक्षोधिपः सदा ।
प्रभविष्णुश्च कोशस्य जगतश्च तथा प्रभुः ॥ १२-२९५-८ (७७३०८)
तस्यात्मानमथाविश्य योगसिद्धो महामुनिः ।
रुद्ध्वा धनपतिं देवं योगेन हृतवान्वसु ॥ १२-२९५-९ (७७३०९)
हृते धने ततः शर्म न लेभे धनदस्तथा ।
आपन्नमन्युः संविग्नः सोभ्यगात्सुरसत्तमम् ॥ १२-२९५-१० (७७३१०)
निवेदयामास तदा शिवायामिततेजसे ।
देवश्रेष्ठाय रुद्राय सौम्याय बहुरूपिणे ॥ १२-२९५-११ (७७३११)
योगात्मकेनोशनसा रुद्ध्वा मम हृतं वसु ।
योगेनात्मगतं कृत्वा निःसृतश्च महातपाः ॥ १२-२९५-१२ (७७३१२)
एतच्छ्रुत्वा ततः क्रुद्धो महायोगी महेश्वरः ।
संरक्तनयनो राजञ्शूलमादाय तस्थिवान् ॥ १२-२९५-१३ (७७३१३)
क्वासौ क्वासाविति प्राह गृहीत्वा परमायुधम् ।
उशना दूरतस्तस्य ह्यभूज्ज्ञात्वा चिकीर्षितम् ॥ १२-२९५-१४ (७७३१४)
स महायोगिनो बुद्ध्वा तं रोषं वै महात्मनः ।
गतिमागमनं वेत्ति स्थानं चैव ततः प्रभुः ॥ १२-२९५-१५ (७७३१५)
संचिन्त्येग्रेण तपसा महात्मानं महेश्वरम् ।
उशना योगसिद्धात्मा शूलाग्रे प्रत्यदृश्यत ॥ १२-२९५-१६ (७७३१६)
विज्ञातरूपः स तदा तपः सिद्धोऽथ धन्विना ।
ज्ञात्वा शूलं च देवेशः पाणिना समनामयत् ॥ १२-२९५-१७ (७७३१७)
आनतेनाथ शूलेन पाणिनामिततेजसा ।
पिनाकमिति चोवाच शूलमुग्रायुधः प्रभुः ॥ १२-२९५-१८ (७७३१८)
पाणिमध्यगतं दृष्ट्वा भार्गवं तमुमापतिः ।
आस्यं विवृत्य भ्रकुटिं पाणिं संप्राक्षिपच्छनैः ॥ १२-२९५-१९ (७७३१९)
स तु प्रविष्ट उशना कोष्ठं माहेश्वरं प्रभुः ।
व्यचरच्चापि तत्रासौ महात्मा भृगुनन्दनः ॥ १२-२९५-२० (७७३२०)
युधिष्ठिर उवाच। १२-२९५-२१क्ष् (६४३८)
किमर्थं व्यचरद्राजन्नुशना तस्य धीमतः ।
जठरे देवदेवस्य किंचाकार्षीन्महाद्युतिः ॥ १२-२९५-२१ (७७३२१)
भीष्म उवाच। १२-२९५-२२क्ष् (६४३९)
पुरा सोऽन्तर्जलगतः स्थाणुभूतो महाव्रतः ।

वर्षाणामभवद्राजन्प्रयुतान्यर्बुदानि च ॥ १२-२९५-२२ (७७३२२)
उदतिष्ठत्तपस्तप्त्वा दुश्चरं च महाह्रदात् ।
ततो देवातिदेवस्तं ब्रह्मा वै समसर्पत ॥ १२-२९५-२३ (७७३२३)
तपोवृद्धिमपृच्छच्च कुशलं चैवमव्ययः ।
तपः सुचीर्णमिति च प्रोवाच वृषभध्वजः ॥ १२-२९५-२४ (७७३२४)
तत्संयोगेन वृद्धिं चाप्यपश्यत्स तु शंकरः ।
महामतिरचिन्त्यात्मा सत्यधर्मरतः सदा ॥ १२-२९५-२५ (७७३२५)
स तेनाढ्यो महायोगी तपसा च धनेन च ।
व्यराजत महाराज त्रिषु लोकेषु वीर्यवान् ॥ १२-२९५-२६ (७७३२६)
ततः पिनाकी योगात्मा ध्यानयोगं समाविशत् ।
उशना तु समुद्विग्नो निलिल्ये जठरे ततः ॥ १२-२९५-२७ (७७३२७)
तुष्टाव च महायोगी देवं तत्रस्थ एव च ।
निःसारं काङ्क्षमाणः स तेन स्म प्रतिहन्यते ॥ १२-२९५-२८ (७७३२८)
उशना तु तथोवाच जठरस्थो महामुनिः ।
प्रसादं मे कुरुष्वेति पुनः पुनररिंदम् ॥ १२-२९५-२९ (७७३२९)
तमुवाच महादेवो गच्छ शिश्नेन मोक्षणम् ।
इति सर्वाणि स्रोतांसि रुद्ध्वा त्रिदशपुङ्गवः ॥ १२-२९५-३० (७७३३०)
अपश्यमानस्तद्द्वारं सर्वतः पिहितो मुनिः ।
पर्यक्रामद्दह्यमान इतश्चेतश्च तेजसा ॥ १२-२९५-३१ (७७३३१)
स वै निष्क्रम्य शिश्नेन शुक्रत्वमभिपेदिवान् ।
कार्येण तेन नभसो नाध्यगच्छत मध्यतः ॥ १२-२९५-३२ (७७३३२)
ग्तत एव च देवेषु अप्रविष्टो महामुनिः ।
पौरोहित्यं च दैत्यानां शक्रतेजोविवृद्धये ॥' १२-२९५-३३ (७७३३३)
विनिष्क्रान्तं तु तं दृष्ट्वा ज्वलन्तमिव तेजसा ।
भवो रोषसमाविष्टः शूलोद्यतकरः स्थितः ॥ १२-२९५-३४ (७७३३४)
अवारयत तं देवी क्रुद्धं पशुपतिं पतिम् ।
पुत्रत्वमगमद्देव्या वारिते शंकरे च सः ॥ १२-२९५-३५ (७७३३५)
देव्युवाच। १२-२९५-३६क्ष् (६४४०)
हिंसनीयस्त्वया नैव मम पुत्रत्वमागतः ।
न हि देवोदरात्कश्चिन्निःसृतो नाशमर्हति ॥ १२-२९५-३६ (७७३३६)
ततः प्रीतो भवो देव्याः प्रहसंश्चेदमब्रवीत् ।
गच्छत्वेष यथाकाममिति राजन्पुनः पुनः ॥ १२-२९५-३७ (७७३३७)
ततः प्रणम्य वरदं देवं देवीमुमां तथा ।
उशना प्राप तद्धीमान्गतिमिष्टां महामुनिः ॥ १२-२९५-३८ (७७३३८)
एतत्ते कथितं तात भार्गवस्य महात्मनः ।
चरितं भरतश्रेष्ठ यन्मां त्वं परिपृच्छसि ॥ ॥ १२-२९५-३९ (७७३३९)

इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि
पञ्चनवत्यधिकद्विशततमोऽध्यायः ॥ २९५.।
Mahabharata - Shanti Parva - Chapter Footnotes

१२-२९५-३ वर्धयामास चिच्छेद ।अमितौजसां देवानाम् ॥
१२-२९५-४ शुक्रत्वं शुक्रोत्पन्नत्वम् ॥
१२-२९५-५ तस्याकाशगतिः कुतः कुण्ठितेत्यर्थः ॥
१२-२९५-७ कारणा क्रिया तदात्मके निमित्ते सति ॥
१२-२९५-८ इन्द्रो जगतः ॥
१२-२९५-९ तस्य धनदस्य ।आत्मानं शरीरम् ॥
१२-२९५-१० आपन्नमन्युः प्राप्तदैन्यः ॥
१२-२९५-१७ सः शुक्र ।धन्विना रुद्रेण।शूलं
शुक्रयुतम्।तपस्सिद्धेन चक्षुषेति थ।पाठः।तपस्सिद्धेन
चेतसेति ध।पाठः ॥
१२-२९५-२० कोष्ठमुदरम् ॥
१२-२९५-२१ व्यचरदेव नत्वन्नवनीर्णतां गतः ।किंच
तादृशमकार्षीत्तप इति शेषः ॥
१२-२९५-२६ स शुक्रः ॥
१२-२९५-२७ निलिल्ये नितरां गतिं जगाम बभ्रामेत्यर्थः ॥
१२-२९५-२८ निःसारं निर्गमम् ।तेन रुद्रेण ॥
१२-२९५-३२ तेन शिश्नान्निर्गमनेन कार्येण निमित्तेन ॥

---

शन्तिपर्व-अध्यय२९६
॥ श्रीः ॥
१२.२९६. अध्यायः २९६

Mahabharata - Shanti Parva - Chapter Topics
भीष्मेण युधिष्ठिरंप्रति श्रेयःसाधनप्रतिपादकपराशरगीतानुवादः
॥ १.।
Mahabharata - Shanti Parva - Chapter Text

१२-२९६-० (७७३४०)
युधिष्ठिर उवाच।१२-२९६-०क्ष् (६४४१)
अतः परं महाबाहो यच्छ्रेयस्तद्ब्रवीहि मे ।
न तृप्याम्यमृतस्येव वचसस्ते पितामह ॥१२-२९६-१ (७७३४१)
किं कर्म पुरुषः कृत्वा शुभं पुरुषसत्तम ।

श्रेयः परमवाप्नोति प्रेत्य चेह च तद्वद ॥१२-२९६-२ (७७३४२)
भीष्म उवाच।१२-२९६-३क्ष् (६४४२)
अत्र ते वर्तयिष्यामि यथा पूर्वं महायशाः ।
पराशरं महात्मानं पप्रच्छ जनको नृपः ॥१२-२९६-३ (७७३४३)
किं श्रेयः सर्वभूतानामस्मिँल्लोके परत्र च ।
यद्भवेत्प्रतिपत्त्व्यं तद्भवान्प्रब्रवीतु मे ॥१२-२९६-४ (७७३४४)
ततः स तपसा युक्तः सर्वधर्मविधानवित् ।
नृपायानुग्रहमना मुनिर्वाक्यमथाब्रवीत् ॥१२-२९६-५ (७७३४५)
पराशर उवाच।१२-२९६-६क्ष् (६४४३)
धर्म एव कृतः श्रेयानिह लोके परत्र च ।
तस्माद्धि परमं नास्ति यथा प्राहुर्मनीषिणः ॥१२-२९६-६ (७७३४६)
प्रतिपद्य नरो धर्मं स्वर्गलोके महीयते ।
धर्मात्मकः कर्मविधिर्देहिनां नृपसत्तम ॥१२-२९६-७ (७७३४७)
तस्मिन्नाश्रमिणः सन्तः स्वकर्माणीह कुर्वते ॥ १२-२९६-८ (७७३४८)
चतुर्विधा हि लोकेऽस्मिन्यात्रा तात विधीयते ।
मर्त्या यत्रावतिष्ठन्ते सा च कामात्प्रवर्तते ॥१२-२९६-९ (७७३४९)
सुकृतासुकृतं कर्म निषेव्य विविधैः क्रमैः ।
दशार्धप्रविभक्तानां भूतानां विविधा गतिः ॥१२-२९६-१० (७७३५०)
सौवर्णं राजतं चापि यथा भाण्डं निषिच्यते ।
तथा निपिच्यते जन्तुः पूर्वकर्मवशानुगः ॥१२-२९६-११ (७७३५१)
नाबीजाज्जायते किंचिन्नाकृत्वा सुखमेधते ।
सुकृतैर्विन्दते सौख्यं प्राप्य देहक्षयं नरः ॥१२-२९६-१२ (७७३५२)
दैवं तात न पश्यामि नास्ति दैवस्य साधनम् ।
स्वभावतो हि संसिद्धा देवगन्धर्वदानवाः ॥१२-२९६-१३ (७७३५३)
प्रेत्य यान्त्यकृतं कर्म न स्मरन्ति सदा जनाः ।
ते वै तस्य फलप्राप्तौ कर्म चापि चतुर्विधम् ॥१२-२९६-१४ (७७३५४)
लोकयात्राश्रयश्चैव शब्दो वेदाश्रयः कृतः ।
शान्त्यर्थं मनसस्तात नैतद्वृद्धानुशासनम् ॥१२-२९६-१५ (७७३५५)
चक्षुषा मनसा वाचा कर्मणा च चतुर्विधम् ।
कुरुते यादृशं कर्म तादृशं प्रतिपद्यते ॥१२-२९६-१६ (७७३५६)
निरन्तरं च मिश्रं च लभते कर्म पार्थिव ।
कल्याणं यदि वा पापं न तु नाशोऽस्य विद्यते ॥१२-२९६-१७ (७७३५७)
कदाचित्सुकृतं तात कूटस्थमिव तिष्ठति ।
मज्जमानस्य संसारे यावद्दुःखाद्विमुच्यते ॥१२-२९६-१८ (७७३५८)
ततो दुःखक्षयं कृत्वा सुकृतं कर्म सेवते ।
सुकृतक्षयाच्च दुष्कृतं तद्विद्धि मनुजाधिप ॥१२-२९६-१९ (७७३५९)

दमः क्षमा धृतिस्तेजः संतोषः सत्यवादिता ।
ह्रीरहिंसाऽव्यसनिता दाक्ष्यं चेति सुखावहाः ॥१२-२९६-२० (७७३६०)
दुष्कृते सुकृते चापि न जन्तुर्नियतो भवेत् ।
नित्यं मनः समाधाने प्रयतेत विचक्षणः ॥१२-२९६-२१ (७७३६१)
नायं परस्य सुकृतं दुष्कृतं चापि सेवते ।
करोति यादृशं कर्म तादृशं प्रतिपद्यते ॥१२-२९६-२२ (७७३६२)
सुखदुःखे समाधाय पुमानन्येन गच्छति ।
अन्येनैव जनः सर्वः संगतो यश्च पार्थिवः ॥१२-२९६-२३ (७७३६३)
परेषां यदसूयेत न तत्कुर्यात्स्वयं नरः ।
यो ह्यसूयुस्तथा युक्तः सोऽवहासं नियच्छति ॥१२-२९६-२४ (७७३६४)
भीरू राजन्यो ब्राह्मणः सर्वभक्ष्यो
वैश्योऽनीहावान्हीनवर्णोऽलसश्च ।
विद्वांश्चाशीलो वृत्तहीनः कुलीनः
सत्याद्विभ्रष्टो ब्राह्मणस्त्री च तुष्टा ॥ १२-२९६-२५ (७७३६५)
रागी युक्तः पचमानोऽऽत्महेतो
र्मूर्खो वक्ता नृपहीनं च राष्ट्रम् ।
एते सर्वे शोच्यतां यान्ति राज
न्यश्चायुक्तः स्नेहहीनः प्रजासु ॥ ॥ १२-२९६-२६ (७७३६६)

इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि
षण्णवत्यधिकद्विशततमोऽध्यायः ॥२९६.।
Mahabharata - Shanti Parva - Chapter Footnotes

१२-२९६-१८ करस्थमिव तिष्ठतीति थ ।पाठः ॥
१२-२९६-२६ रागी मुक्त इति थ ।पाठः ॥

---

शन्तिपर्व-अध्यय२९७
॥ श्रीः ॥
१२.२९७. अध्यायः २९७

Mahabharata - Shanti Parva - Chapter Topics
भीष्मेण युधिष्ठिरं प्रति
श्रेयःसाधनप्रतिपादकपराशरगीतानुवादः ॥१.।
Mahabharata - Shanti Parva - Chapter Text

१२-२९७-० (७७३६७)
पराशर उवाच।१२-२९७-०क्ष् (६४४४)

मनोरथरथं प्राप्य इन्द्रियार्थहयं नरः ।
रश्मिभिर्ज्ञानसंभूतैर्यो गच्छति स बुद्धिमान् ॥ १२-२९७-१ (७७३६८)
सेवाश्रितेन मनसा वृत्तिहीनस्य शस्यते ।
द्विजातिहस्तान्निर्वृत्ता न तु तुल्यात्परस्परात् ॥ १२-२९७-२ (७७३६९)
आयुर्नसुलभं लब्ध्वा नावकर्षेद्विशांपते ।
उत्कर्षार्थं प्रयतते नरः पुण्येन कर्मणा ॥ १२-२९७-३ (७७३७०)
वर्णेभ्यो हि परिभ्रष्टो न वै संमानमर्हति ।
न तु यः सत्क्रियां प्राप्य राजसं कर्म सेवते ॥ १२-२९७-४ (७७३७१)
वर्णोत्कर्षमवाप्नोति नरः पुण्येन कर्मणा ।
दुर्लभं तमलब्ध्वा हि हन्यात्पापेन कर्मणा ॥ १२-२९७-५ (७७३७२)
अज्ञानाद्धि कृतं पापं तपसैवाभिनिर्णुदेत् ।
पापं हि कर्म फलति पापमेव स्वयंकृतम् ।
तस्मात्पापं न सेवेत कर्म दुःखफलोदयम् ॥ १२-२९७-६ (७७३७३)
पापानुबन्धं यत्कर्म यद्यपि स्यान्महाफलम् ।
तन्न सेवेत मेधावी शुचिः कुशलिनं यथा ॥ १२-२९७-७ (७७३७४)
किंकष्टमनुपश्यामि फलं पापस्य कर्मणः ।
प्रत्यापन्नस्य हि ततो नात्मा तावद्विरोचते ॥ १२-२९७-८ (७७३७५)
प्रत्यापत्तिश्च यस्येह बालिशस्य न जायते ।
तस्यापि सुमहांस्तापः प्रस्थितस्योपजायते ॥ १२-२९७-९ (७७३७६)
विरक्तं शोध्यते वस्त्रं न तु कृष्णोपसंहितम् ।
प्रयत्नेन मनुष्येन्द्र पापमेवं निबोध मे ॥ १२-२९७-१० (७७३७७)
स्वयं कृत्वा तु यः पापं शुभमेवानुतिष्ठति ।
प्रायश्चित्तं नरः कर्तुमुभयं सोऽश्नुते पृथक् ॥ १२-२९७-११ (७७३७८)
अज्ञानात्तु कृतां हिंसामहिंसा व्यपकर्षति ।
ब्राह्मणाः शास्त्रनिर्देशादित्याहुर्ब्रह्मवादिनः ॥ १२-२९७-१२ (७७३७९)
तथा कामकृतं नास्य विहिंसैवानुकर्षति ।
इत्याहुर्ब्रह्मशास्त्रज्ञा ब्राह्मणा ब्रह्मवादिनः ॥ १२-२९७-१३ (७७३८०)
अहं तु तावत्पश्यामि कर्म यद्वर्तते कृतम् ।
गुणयुक्तं प्रकाशं वा पापेनानुपसंहितम् ॥ १२-२९७-१४ (७७३८१)
यथा सूक्ष्माणि कर्माणि फलन्तीह यथातथम् ।
बुद्धियुक्तानि तानीह कृतानि मनसा सह ॥ १२-२९७-१५ (७७३८२)
भवत्यल्पफलं कर्म सेवितं नित्यमुल्वणम् ।
अबुद्धिपूर्वं धर्मज्ञ कृतमुग्रेण कर्मणा ॥ १२-२९७-१६ (७७३८३)
कृतानि यानि कर्माणि दैवतैर्मुनिभिस्तथा ।
न चरेत्तानि धर्मात्मा श्रुत्वा चापि न कुत्सयेत् ॥ १२-२९७-१७ (७७३८४)
संचिन्त्य मनसा राजन्विदित्वा शक्तिमात्मनः ।

करोति यः शुभं कर्म स वै भद्राणि पश्यति ॥१२-२९७-१८ (७७३८५)
नवे कपाले सलिलं संन्यस्तं हीयते यथा ।
नवेतरे तथा भावं प्राप्नोति सुखभावितम् ॥१२-२९७-१९ (७७३८६)
सतोयेऽन्यत्तु यत्तोयं तस्मिन्नेव प्रसिच्यते ।
तद्धि वृद्धिमवाप्नोति सलिले सलिलं यथा ॥१२-२९७-२० (७७३८७)
एवं कर्माणि यानीह बुद्धियुक्तानि पार्थिव ।
समानि चैव यानीह तानि पुण्यतमान्यपि ॥१२-२९७-२१ (७७३८८)
राज्ञा जेतव्याः शत्रवश्चोन्नताश्च
सम्यक्कर्तव्यं पालनं च प्रजानाम् ।
अग्निश्चेयो बहुभिश्चापि यज्ञै
रन्त्ये मध्ये वा वनमाश्रित्य स्थेयम् ॥ १२-२९७-२२ (७७३८९)
दमान्वितः पुरुषो धर्मशीलो
भूतानि चात्मानमिवानुपश्येत् ।
गरीयसः पूजयेदात्मशक्त्या
सत्येन शीलेन सुखं नरेन्द्र ॥ ॥ १२-२९७-२३ (७७३९०)

इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि
सप्तनवत्यधिकद्विशततमोऽध्यायः ॥ २९७.।
Mahabharata - Shanti Parva - Chapter Footnotes

१२-२९७-२ द्विजातिहीना निर्वृत्ता इति थ ।पाठः ॥
१२-२९७-५ दुर्लभं जन्म लब्ध्या हीति थ ।पाठः। दुष्कृतं कर्म लब्ध्या हीति ध। पाठः ॥
१२-२९७-७ कुशलिनं कारुकं चण्डालविशेषमित्यर्थः ॥
१२-२९७-८ कुत्सितं च तत्कष्टं च किंकष्टम् ॥
१२-२९७-९ प्रत्यापत्तिर्वैराग्यम् ॥
१२-२९७-११ सोऽश्नुते फलमिति ध ।पाठः ॥
१२-२९७-२३ दयान्वितः पुरुष इति थ ।पाठः ॥

---

शन्तिपर्व-अध्यय२९८
॥ श्रीः ॥
१२.२९८. अध्यायः २९८

Mahabharata - Shanti Parva - Chapter Topics
भीष्मेण युधिष्ठिरंप्रति यथाविभवशक्तिधर्माचरणस्य श्रेयःसाधनताप्रतिपादकपराशरगीतानुवादः ॥१.।
Mahabharata - Shanti Parva - Chapter Text

१२-२९८-० (७७३९१)
पराशर उवाच। १२-२९८-०क्ष् (६४४५)
कः कस्य चोपकुरुते कश्च कस्मै प्रयच्छति ।
प्राणी करोत्ययं कर्म सर्वमात्मार्थमात्मना ॥ १२-२९८-१ (७७३९२)
गौरवेण परित्यक्तं निःस्नेहं परिवर्जयेत् ।
सोदर्यं भ्रातरमपि किमुतान्यं पृथग्जनम् ॥ १२-२९८-२ (७७३९३)
विशिष्टस्य विशिष्टाच्च तुल्यौ दानप्रतिग्रहौ ।
तयोः पुण्यतरं दानं तद्द्विजस्य प्रयच्छतः ॥ १२-२९८-३ (७७३९४)
न्यायागतं धनं वर्णैर्न्यायेनैव विवर्धितम् ।
संरक्ष्यं यत्नमास्थाय धर्मार्थमिति निश्चयः ॥ १२-२९८-४ (७७३९५)
न धर्मार्थी नृशंसेन कर्मणा धनमार्जयेत् ।
शक्तितः सर्वकार्याणि कुर्यान्नर्द्धिमनुस्मरन् ॥ १२-२९८-५ (७७३९६)
अपो हि प्रयताः शीतास्तापिता ज्वलनेन वा ।
शक्तितोऽतिथये दत्त्वा क्षुधार्तायाऽश्नुते फलम् ॥ १२-२९८-६ (७७३९७)
रन्तिदेवेन लोकेष्टा सिद्धिः प्राप्ता महात्मना ।
फलपत्रैरथो मूलैर्मुनीनर्चितवांश्च सः ॥ १२-२९८-७ (७७३९८)
तैरेव फलपत्रैश्च स माठरमतोषयत् ।
तस्माल्लेभे परं स्थानं शैब्योऽपि पृथिवीपतिः ॥ १२-२९८-८ (७७३९९)
देवतातिथिभृत्येभ्यः पितृभ्यश्चात्मनस्तथा ।
ऋणवाञ्जायते मर्त्यस्तस्मादनृणतां व्रजेत् ॥ १२-२९८-९ (७७४००)
स्वाध्यायेन महर्षिभ्यो देवेभ्यो यज्ञकर्मणा ।
पितृभ्यः श्राद्धदानेन नृणामभ्यर्चनेन च ॥ १२-२९८-१० (७७४०१)
पाकशेपावहार्येण पालनेनात्मनोऽपि च ।
यथावद्भृत्यवर्गस्य चिकीर्षेत्कर्म आदितः ॥ १२-२९८-११ (७७४०२)
प्रयत्नेन च संसिद्धा धनैरपि विवर्जिताः ।
सम्यग्घृत्वा हुतवहं मुनयः सिद्धिमागताः ॥ १२-२९८-१२ (७७४०३)
विश्वामित्रस्य पुत्रत्वमृचीकतनयोऽगमत् ।
ऋग्भिः स्तुत्वा महाबाहो देवान्वै यज्ञभागिनः ॥ १२-२९८-१३ (७७४०४)
गतः शुक्रत्वमुशना देवदेवप्रसादनात् ।
देवीं स्तुत्वा तु गगने मोदते तेजसा वृतः ॥ १२-२९८-१४ (७७४०५)
असितो देवलश्चैव तथा नारदपर्वतौ ।
कक्षीवाञ्जामदग्न्यश्च रामस्ताण्ड्यस्तथाऽऽत्मवान् ॥ १२-२९८-१५ (७७४०६)
वसिष्ठो जमदग्निश्च विश्वामित्रोऽत्रिरेव च ।
भरद्वाजो हरिश्मश्रुः कुण्डधारः श्रुतश्रवाः ॥ १२-२९८-१६ (७७४०७)
एते महर्षयः स्तुत्वा विष्णुमृग्भिः समाहिताः ।

लेभिरे तपसा सिद्धिं प्रसादात्तस्य धीमतः ॥ १२-२९८-१७ (७७४०८)
अनर्हाश्चार्हतां प्राप्ताः सन्तः स्तुत्वा तमेव ह ।
न तु वृद्धिमिहान्विच्छेत्कर्म कृत्वा जुगुप्सितम् ॥ १२-२९८-१८ (७७४०९)
येऽर्था धर्मेण ते सत्या येऽधर्मेण धिगस्तु तान् ।
धर्मं वै शाश्वतं लोके न जह्याद्धनकाङ्क्षया ॥ १२-२९८-१९ (७७४१०)
आहिताग्निर्हि धर्मात्मा यः स पुण्यकृदुत्तमः ।
वेदा हि सर्वे राजेन्द्र स्थितास्त्रिष्वग्निषु प्रभो ॥ १२-२९८-२० (७७४११)
च चाप्यग्न्याहितो विप्रः क्रिया यस्य न हीयते ।
श्रेयो ह्यनाहिताग्नित्वमग्निहोत्रं न निष्क्रियम् ॥ १२-२९८-२१ (७७४१२)
अग्निरात्मा च माता च पिता जनयिता तथा ।
गुरुश्च नरशार्दूल परिचर्या यथातथम् ॥ १२-२९८-२२ (७७४१३)
मानं त्यक्त्वा यो नरो वृद्धसेवी
विद्वान्क्लीबः पश्यति प्रीतियोगात् ।
दाक्ष्येण हीनो धर्मयुक्तो न दान्तो
लोकेऽस्मिन्वै पूज्यते सद्भिरार्यः ॥ ॥ १२-२९८-२३ (७७४१४)

इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि
अष्टनवत्यधिकद्विशततमोऽध्यायः ॥ २९८.।
Mahabharata - Shanti Parva - Chapter Footnotes

१२-२९८-२ सोदर्यं वा सुतमपीति थ ।ध।पाठः ॥
१२-२९८-८ स मातुरमतोषयदिति थ ।ध ॥
१२-२९८-९ देवर्ष्यतिथिभृत्येभ्य इति थ ।ध।पाठः ॥
१२-२९८-११ वाचा शेषावहार्येणेति झ ।पाठः। चिकीर्षेद्धर्ममाश्रित
इति ध।पाठः ॥
१२-२९८-१४ मोदते यशसा वृत इति झ ।पाठः ॥

---

शन्तिपर्व-अध्यय२९९
॥ श्रीः ॥
१२.२९९. अध्यायः २९९

Mahabharata - Shanti Parva - Chapter Topics
भीष्मेण युधिषठिरंप्रति
ब्राह्मणादिवर्णधर्मादिप्रतिपादकपराशरगीतानुवादः ॥ १.।
Mahabharata - Shanti Parva - Chapter Text

१२-२९९-० (७७४१५)

पराशर उवाच।१२-२९९-०क्ष् (६४४६)
वृत्तिः सकाशाद्वर्णेभ्यस्त्रिभ्यो हीनस्य शोभना ।
प्रीत्योपनीता निर्दिष्टा धर्मिष्ठान्कुरुते सदा ॥१२-२९९-१ (७७४१६)
वृत्तिश्चेन्नास्ति शूद्रस्य पितृपैतामही ध्रुवा ।
न वृत्तिं परतो मार्गेच्छुश्रूषां तु प्रयोजयेत् ॥१२-२९९-२ (७७४१७)
सद्भिस्तु सह संसर्गः शोभते धर्मदर्शिभिः ।
नित्यं सर्वास्ववस्थासु नासद्भिरिति मे मतिः ॥१२-२९९-३ (७७४१८)
यथोदयगिरौ द्रव्यं सन्निकर्षेण दीप्यते ।
तथा सत्सन्निकर्षेण हीनवर्णोऽपि दीयते ॥१२-२९९-४ (७७४१९)
यादृशेन हि वर्णेन भाव्यते शुक्लमम्बरम् ।
तादृशं कुरुते रूपमेतदेवमवेहि मे ॥१२-२९९-५ (७७४२०)
तस्माद्गुणेषु रज्येथा मा दोषेषु कदाचन ।
अनित्यमिह मर्त्यानां जीवितं हि चलाचलम् ॥१२-२९९-६ (७७४२१)
सुखे वा यदि वा दुःखे वर्तमानो विचक्षणः ।
यश्चिनोति शुभान्येव स भद्राणीह पश्यति ॥१२-२९९-७ (७७४२२)
धर्मादपेतं यत्कर्म यद्यपि स्यान्महाफलम् ।
न तत्सेवेत मेधावी न तद्धितमिहोच्यते ॥१२-२९९-८ (७७४२३)
ग्धर्मेण सहितं यत्तु भवेदल्पफलोदयम् ।
तत्कार्यमविशङ्केन कर्मात्यन्तं सुखावहम् ॥' १२-२९९-९ (७७४२४)
यो हृत्वा गोसहस्राणि नृपो दद्यादरक्षिता ।
स शब्दमात्रफलभाग्राजा भवति तस्करः ॥१२-२९९-१० (७७४२५)
स्वयंभूरसृजच्चाग्रे धातारं लोकसत्कृतम् ।
धाताऽसृजत्पुत्रमेकं लोकानां धारणे रतम् ॥१२-२९९-११ (७७४२६)
तमर्चयित्वा वैश्यस्तु कुर्यादत्यर्थमृद्धिमत् ।
रक्षितव्यं तु राजन्यैरुपयोज्यं द्विजातिभिः ॥१२-२९९-१२ (७७४२७)
अजिह्मैरशठक्रोधैर्हव्यकव्यप्रयोक्तृभिः ।
शूद्रैर्निर्मार्जनं कार्यमेवं धर्मो न नश्यति ॥१२-२९९-१३ (७७४२८)
अप्रनष्टे ततो धर्मे भवन्ति सुखिताः प्रजाः ।
सुखेन तासां राजेन्द्र मोदन्ते दिवि देवताः ॥१२-२९९-१४ (७७४२९)
तस्माद्यो रक्षति नृपः स धर्मेणेति पूज्यते ।
अधीते चापि यो विप्रो वैश्यो यश्चार्जने रतः ॥१२-२९९-१५ (७७४३०)
यश्च शुश्रूषते शूद्रः सततं नियतेन्द्रियः ।
अतोऽन्यथा मनुष्येन्द्र स्वधर्मात्परिहीयते ॥१२-२९९-१६ (७७४३१)
प्राणसंतापनिर्दिष्टाः काकिण्योऽपि महाफलाः ।
न्यायेनोपार्जिता दत्ताः किमुतान्याः सहस्रशः ॥१२-२९९-१७ (७७४३२)
सत्कृत्य हि द्विजातिभ्यो यो ददाति नराधिपः ।

यादृशं तादृशं नित्यमश्नाति फलमूर्जितम् ॥ १२-२९९-१८ (७७४३३)
अभिगम्य तु यद्दत्तं धर्म्यमाहुरभिष्टुतम् ।
याचितेन तु यद्दत्तं तदाहुर्मध्यमं फलम् ॥ १२-२९९-१९ (७७४३४)
अवज्ञया दीयते यत्तथैवाश्रद्धयाऽपि वा ।
तदाहुरधमं दानं मुनयः सत्यवादिनः ॥ १२-२९९-२० (७७४३५)
अतिक्रामेन्मज्जमानो विविधेन नरः सदा ।
तथा प्रयत्नं कुर्वीत यथा मुच्येत संशयात् ॥ १२-२९९-२१ (७७४३६)
दमेन शोभते विप्रः क्षत्रियो विजयेन तु ।
धनेन वैश्यः शूद्रस्तु नित्यं दाक्ष्येण शोभते ॥ ॥ १२-२९९-२२ (७७४३७)

इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि
एकोनत्रिशततमोऽध्यायः ॥ २९९. ।
Mahabharata - Shanti Parva - Chapter Footnotes

१२-२९९-१ नित्यं हीनस्य शोभनेति ध । पाठः ॥
१२-२९९-६ तस्माद्गुणेषु रमतामिति थ । पाठः ॥
१२-२९९-७ स तन्त्राणीहेति झ । पाठः ॥
१२-२९९-१० यो धृत्वा गोसहस्राणीति झ । पाठः ॥
१२-२९९-१२ कुर्यादर्थं समृद्धिष्विति ध । पाठः ॥
१२-२९९-१७ काकिण्यो विंशतिवराटिकाः ॥
१२-२९९-२१ तथा मुच्येत किल्विषादिति थ । पाठः ॥
१२-२९९-२२ दाक्ष्येण सेवार्थोत्साहेन ॥

---

शन्तिपर्व-अध्यय३००
॥ श्रीः ॥
१२.३००. अध्यायः ३००

Mahabharata - Shanti Parva - Chapter Topics
भीष्मेण युधिष्ठिरंप्रति वर्णधर्मादिप्रतिपादकपराशरगीतानुवादः
॥ १. ।
Mahabharata - Shanti Parva - Chapter Text

१२-३००-० (७७४३८)
पराशर उवाच । १२-३००-०क्ष् (६४४७)
प्रतिग्रहार्जिता विप्रे क्षत्रिये युधि निर्जिताः ।
वैश्ये न्यायार्जिताश्चैव शूद्रे शुश्रूषयार्जिताः ॥ १२-३००-१ (७७४३९)

स्वल्पाऽप्यर्थाः प्रशस्यन्ते धर्मस्यार्थे महाफलाः ।
नित्यं त्रयाणां वर्णानां शुश्रूषुः शूद्र उच्यते ॥ १२-३००-२ (७७४४०)
क्षत्रधर्मा वैश्यधर्मा नावृत्तिः पतते द्विजः ।
शूद्रधर्मा यदा तु स्यात्तदा पतति वै द्विजः ॥ १२-३००-३ (७७४४१)
वाणिज्यं पाशुपाल्यं च तथा शिल्पोपजिवनम् ।
सूद्रस्यापि विधीयन्ते यदा वृत्तिर्न जायते ॥ १२-३००-४ (७७४४२)
रङ्गावतरणं चैव तथा रूपोपजीवनम् ।
मद्यमांसोपजीव्यं च विक्रयं लोहचर्मणोः ॥ १२-३००-५ (७७४४३)
अपूर्विणा न कर्तव्यं कर्म लोके विगर्हितम् ।
कृतपूर्विणस्तु त्यजतो महान्धर्म इति श्रूतिः ॥ १२-३००-६ (७७४४४)
संसिद्धः पुरुषो लोके यदाचरति पापकम् ।
मदेनाभिप्लुतमनास्तच्च न ग्राह्यमुच्यते ॥ १२-३००-७ (७७४४५)
श्रूयन्ते हि पुराणेषु प्रजा धिग्दण्डशासनाः ।
दान्ता धर्मप्रधानाश्च न्यायधर्मानुवृत्तिकाः ॥ १२-३००-८ (७७४४६)
धर्म एव सदा नृणामिह राजन्प्रशस्यते ।
धर्मवृद्धा गुणानेव सेवन्ते हि नरा भुवि ॥ १२-३००-९ (७७४४७)
तं धर्ममसुरास्तात नामृष्यन्त नराधिप ।
विवर्धमानाः क्रमशस्तत्र तेऽन्वाविशन्प्रजाः ॥ १२-३००-१० (७७४४८)
तासां दर्पः समभवत्प्रजानां धर्मनाशनः ।
दर्पात्मनां ततः पश्चात्क्रोधस्तासामजायत ॥ १२-३००-११ (७७४४९)
ततः क्रोधाभिभूतानां वृत्तं लज्जासमन्वितम् ।
ह्रीश्चैवाप्यनशद्राजंस्ततो मोहो व्यजायत ॥ १२-३००-१२ (७७४५०)
ततो मोहपरीतास्ता नापश्यन्त यथा पुरा ।
परस्परावमर्देन वर्धयन्त्यो यथासुखम् ॥ १२-३००-१३ (७७४५१)
ताः प्राप्य तु स धिग्दण्डो न कारणमतो भवत् ।
ततोऽभ्यगच्छन्देवांश्च ब्राह्मणांश्चावमन्य ह ॥ १२-३००-१४ (७७४५२)
एतस्मिन्नेव काले तु देवा देववरं शिवम् ।
अगच्छञ्शरणं धीरं बहुरूपं गुणाधिकम् ॥ १२-३००-१५ (७७४५३)
तेन स्म ते गगनगाः सपुराः पातिताः क्षितौ ।
त्रिधाऽप्येकेन बाणेन देवाप्यायिततेजसा ॥ १२-३००-१६ (७७४५४)
तेषामधिपतिस्त्वासीद्भीमो भीमपराक्रमः ।
देवतानां भयकरः स हतः शूलपाणिना ॥ १२-३००-१७ (७७४५५)
तस्मिन्हतेऽथ स्वं भावं प्रत्यपद्यन्त मानवाः ।
प्रावर्तन्त च वै वेदाः शास्त्राणि च यथा पुरा ॥ १२-३००-१८ (७७४५६)
ततोऽभिषिच्य राज्येन देवानां दिवि वासवम् ।
सप्तर्षयश्चान्वयुञ्जन्नराणां दण्डधारणे ॥ १२-३००-१९ (७७४५७)

सप्तर्षीणामथोर्ध्वं च विपृथुर्नाम पार्थिवः ।
राजानः क्षत्रियाश्चैव मण्डलेषु पृथक्पृथक् ॥१२-३००-२० (७७४५८)
महाकुलेषु ये जाता वृद्धाः पूर्वतराश्च ये ।
तेषामप्यासुरो भावो हृदयान्नापसर्पति ॥१२-३००-२१ (७७४५९)
तस्मात्तेनैव भावेन सानुषङ्गेण पार्थिवाः ।
आसुराण्येव कर्माणि न्यसेवन्भीमविक्रमाः ॥१२-३००-२२ (७७४६०)
प्रत्यतिष्ठंश्च तेष्वेव तान्येव स्थापयन्त्यपि ।
भजन्ते तानि चाद्यापि ये बालिशतरा नराः ॥१२-३००-२३ (७७४६१)
तस्मादहं ब्रवीमि त्वां राजन्संचिन्त्य शास्त्रतः ।
संसिद्धावागमं कुर्यात्कर्म हिंसात्मकं त्यजेत् ॥१२-३००-२४ (७७४६२)
न संकरेण द्रविणं प्रचिन्वीयाद्विचक्षणः ।
धर्मार्थं न्यायमुत्सृज्य न तत्कल्याणमुच्यते ॥१२-३००-२५ (७७४६३)
स त्वमेवंविधो दान्तः क्षत्रियः प्रियबान्धवः ।
प्रजा भृत्यांश्च पुत्रांश्च स्वधर्मेणानुपालय ॥१२-३००-२६ (७७४६४)
इष्टानिष्टसमायोगे वैरं सौहार्दमेव च ।
अथ जातिसहस्राणि बहूनि परिवर्तते ॥१२-३००-२७ (७७४६५)
तस्माद्गुणेषु रज्येथा मा दोषेषु कथंचन ।
निर्गुणोऽपि हि दुर्बुद्धिरात्मनः सोतिरिच्यते ॥१२-३००-२८ (७७४६६)
मानुषेषु महाराज धर्माधर्मौ प्रवर्ततः ।
न तथाऽन्येषु भूतेषु मनुष्यरहितेष्विह ॥१२-३००-२९ (७७४६७)
धर्मशीलो नरो विद्वानीहकोऽनीहकोपि वा ।
आत्मभूतः सदा लोके चरेद्भूतान्यहिंसया ॥१२-३००-३० (७७४६८)
यदा व्यपेतहृल्लेखं मनो भवति तस्य वै ।
नानृतं चैव भवति तदा कल्याणमृच्छति ॥ ॥१२-३००-३१ (७७४६९)

इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि
त्रिशततमोऽध्यायः ॥ ३००.।
Mahabharata - Shanti Parva - Chapter Footnotes

१२-३००-१ प्रतिग्रहागता विप्रे इति झ ।थ। पाठः ॥
१२-३००-३ न पतत इति संबन्धः ।क्षत्रधर्माद्वैश्यधर्मान्नापन्नः
पतते द्विज इति ध। पाठः ॥
१२-३००-४ शिल्पं चित्रलेखनादि ।वृत्तिः सेवारूपा ॥
१२-३००-५ रङ्गे स्त्र्यादिवेषेण अवतरणम् ॥
१२-३००-६ अपूर्विणा येन पूर्वं मद्याद्युपजीवनं न कृतं सोऽपूर्वी
तेन तन्न कर्तव्यम् ॥

१२-३००-७ संसिद्धो लब्धान्नवस्त्रादिः ॥
१२-३००-९ धर्मवृद्ध्या गुणानेवेति थ ।पाठः ॥
१२-३००-१२ अनशत् अनवयत ॥
१२-३००-१६ त्रिदैवत्येन वाणेनेति ध ।पाठः।वाणेन देवस्यामिततेजस इति थ।पाठः ॥

---

शन्तिपर्व-अध्यय३०१
॥ श्रीः ॥
१२.३०१. अध्यायः ३०१

Mahabharata - Shanti Parva - Chapter Topics
भीष्मेण युधिष्ठिरंप्रति तपःप्रशंसादिपरपराशरगीतनुवादः ॥१.।
Mahabharata - Shanti Parva - Chapter Text

१२-३०१-० (७७४७०)
पराशर उवाच।१२-३०१-०क्ष् (६४४८)
एष धर्मविधिस्तात गृहस्थस्य प्रकीर्तितः ।
तपोविधिं तु वक्ष्यामि तन्मे निगदतः शृणु ॥१२-३०१-१ (७७४७१)
प्रायेण च गृहस्थस्य ममत्वं नाम जायते ।
सङ्गागतं नरश्रेष्ठ भावै राजसतामसैः ॥१२-३०१-२ (७७४७२)
गृहाण्याश्रित्य गावश्च क्षेत्राणि च धनानि च ।
दाराः पुत्राश्च भृत्याश्च भवन्तीह नरस्य वै ॥१२-३०१-३ (७७४७३)
एवं तस्य प्रवृत्तस्य नित्यमेवानुपश्यतः ।
रागद्वेषौ विवर्धेते ह्यनित्यत्वमपश्यतः ॥१२-३०१-४ (७७४७४)
रागद्वेषाभिभूतं च नरं द्रव्यवशानुगम् ।
मोहजस्तारतिर्नाम समुपैति नराधिप ॥१२-३०१-५ (७७४७५)
कृतार्थं भोगिनं मत्वा सर्वो रतिपरायणः ।
लाभं प्रात्यसुखादन्यं रतितो नानुपश्यति ॥१२-३०१-६ (७७४७६)
ततो लोभाभिभूतात्मा सङ्गाद्वधर्यते जनम् ।
दुष्टार्थं चैव तस्येह जनस्यार्थं चिकीर्षति ॥१२-३०१-७ (७७४७७)
स जानन्नपि चाकार्यमर्थार्थं सेवते नरः ।
बालस्नेहपरीतात्मा तत्क्षयाच्चानुतप्यते ॥१२-३०१-८ (७७४७८)
ततो दानेन संपन्नो रक्षन्नात्मपराजयम् ।
करोति येन भोनी स्यामिति तस्माद्विनश्यति ॥१२-३०१-९ (७७४७९)
तद्यदि वुद्धियुक्तानां शाश्वतं ब्रह्मवादिनाम् ।
अभिच्छतां शुभं कर्म नराणां त्यजतां सुखम् ॥१२-३०१-१० (७७४८०)
लोकायतननाशाच्च धननाशाच्च पार्थिव ।

आधिव्याधिप्रतापाच्च निर्वेदमुपगच्छति ॥ १२-३०१-११ (७७४८१)
निर्वेदादात्मसंबोधः संबोधादात्मदर्शनम् ।
शास्त्रार्थदर्शनाद्राजसंस्तप एवानुपश्यति ॥ १२-३०१-१२ (७७४८२)
दुर्लभो हि मनुष्येन्द्र नरः प्रत्यवमर्शवान् ।
यो वै प्रियसुखे क्षीणे तपः कर्तुं व्यवस्यति ॥ १२-३०१-१३ (७७४८३)
तपः सर्वगतं तात हीनस्यापि विधीयते ।
जितेन्द्रियस्य दान्तस्य स्वर्गमार्गप्रवर्तकम् ॥ १२-३०१-१४ (७७४८४)
प्रजापतिः प्रजाः पूर्वमसृजत्तपसा विभुः ।
क्वचित्क्वचिद्व्रतपरो व्रतान्यास्थाय पार्थिव ॥ १२-३०१-१५ (७७४८५)
आदित्या वसवो रुद्रास्तथैवाग्न्यश्विमारुताः ।
विश्वेदेवास्तथा साध्याः पितरोऽथ मरुद्गणाः ॥ १२-३०१-१६ (७७४८६)
यक्षराक्षसगन्धर्वाः सिद्धाश्चान्ये दिवौकसः ।
संसिद्धास्तपसा तात ये चान्ये स्वर्गवासिनः ॥ १२-३०१-१७ (७७४८७)
ये चादौ ब्राह्मणाः सृष्टा ब्रह्मणा तपसा पुरा ।
ते भावयन्तः पृथिवीं विचरन्ति दिवं तथा ॥ १२-३०१-१८ (७७४८८)
मर्त्यलोके च राजानो ये चान्ये गृहमेधिनः ।
महाकुलेषु दृश्यन्ते तत्सर्वं तपसः फलम् ॥ १२-३०१-१९ (७७४८९)
कौशेयानि च वस्त्राणि शुभान्याभरणानि च ।
वाहनासनपानानि तत्सर्वं तपसः फलम् ॥ १२-३०१-२० (७७४९०)
मनोनुकूलाः प्रमदा रूपवत्यः सहस्रशः ।
वासः प्रासादपृष्ठे च तत्सर्वं तपसः फलम् ॥ १२-३०१-२१ (७७४९१)
शयनानि च मुख्यानि भोज्यानि विविधानि च ।
अभिप्रेतानि सर्वाणि भवन्ति शुभकर्मिणाम् ॥ १२-३०१-२२ (७७४९२)
नाप्राप्यं तपसः किंचिन्त्रैलोक्येऽपि परंतप ।
उपभोगपरित्यागः फलान्यकृतकर्मणाम् ॥ १२-३०१-२३ (७७४९३)
सुखितो दुःखितो वाऽपि नरो लोभं परित्यजेत् ।
अवेक्ष्य मनसा शास्त्रं बुद्ध्या च नृपसत्तम ॥ १२-३०१-२४ (७७४९४)
असंतोषोऽसुखथायेति लोभादिन्द्रियविभ्रमः ।
ततोऽस्य नश्यति प्रज्ञा विद्येवाभ्यासवर्जिता ॥ १२-३०१-२५ (७७४९५)
नष्टप्रज्ञो यदा तु स्यात्तदा न्यायं न पश्यति ।
तस्मात्सुखक्षये प्राप्ते पुमानुग्रतपश्चरेत् ॥ १२-३०१-२६ (७७४९६)
यदिष्टं तत्सुखं प्राहुर्द्वेष्यं दुःखमिहेष्यते ।
कृताकृतस्य तपसः फलं पश्यस्व यादृशम् ॥ १२-३०१-२७ (७७४९७)
नित्यं भद्राणि पश्यन्ति विषयांश्चोपभुञ्जते ।
प्राकाश्यं चैवं गच्छन्ति कृत्वा निष्कल्मषं तपः ॥ १२-३०१-२८ (७७४९८)
अप्रियाण्यवमानाश्च दुःखं बहुविधात्मकम् ।

फलार्थी सत्पथं त्यक्त्वा प्राप्नोति विषयात्मकम् ॥ १२-३०१-२९ (७७४९९)
धर्मे तपसि दाने च विचिकित्साऽस्य जायते ।
स कृत्वा पापकान्येव निरयं प्रतिपद्यते ॥ १२-३०१-३० (७७५००)
सुखे तु वर्तमानो वै दुःखे वाऽपि नरोत्तम् ।
सुवृत्ताद्यो न चलते शास्त्रचक्षुः स मानवः ॥ १२-३०१-३१ (७७५०१)
इषुप्रपातमात्रं हि स्पर्शयोगे रतिः स्मृता ।
रसने दर्शने घ्राणे श्रवणे च विशांपते ॥ १२-३०१-३२ (७७५०२)
ततोऽस्य जायते तीव्रा वेदना तत्क्षयात्पुनः ।
बुधा ये न प्रशंसन्ति मोक्षं सुखमनुत्तमम् ॥ १२-३०१-३३ (७७५०३)
ततः फलार्थं सर्वस्य भवन्ति ज्यायसे गुणाः ।
धर्मवृद्ध्या च सततं कामार्थाभ्यां न हीयते ॥ १२-३०१-३४ (७७५०४)
अप्रयत्नागताः सेव्या गृहस्थैर्विषयाः सदा ।
प्रयत्नेनोपगम्यश्च स्वधर्म इति मे मतिः ॥ १२-३०१-३५ (७७५०५)
मानिनां कुलजातानां नित्यं शास्त्रार्थचक्षुषाम् ।
क्रियाधर्मविमुक्तानामशक्त्या संवृतात्मनाम् ॥ १२-३०१-३६ (७७५०६)
क्रियमाणं यदा कर्म नाशं गच्छति मानुषम् ।
तेषां नान्यदृते लोके तपसः कर्म विद्यते ॥ १२-३०१-३७ (७७५०७)
सर्वात्मनाऽनुकुर्वीत गृहस्थः कर्मनिश्चयम् ।
दाक्ष्येण हव्यकव्यार्थं स्वधर्मे विचरन्नृप ॥ १२-३०१-३८ (७७५०८)
यथा नदीनदाः सर्वे सागरे यान्ति संस्थितिम् ।
एवमाश्रमिणः सर्वे गृहस्थे यान्ति संस्थितिम् ॥ ॥ १२-३०१-३९ (७७५०९)

इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि
एकाधिकत्रिशततमोऽध्यायः ॥ ३०१.।

Mahabharata - Shanti Parva - Chapter Footnotes

१२-३०१-२ समाण्यं नरश्रेहेति ध ।पाठः ॥
१२-३०१-६ भोगिनं आत्मानमिति शेषः ।रत्यर्थं च धनं त्यक्त्वा
स वै रतिपरायण इति ध।पाठः ॥
१२-३०१-७ पुष्टार्थं चेह देहस्येति ध ।पाठः ॥
१२-३०१-१० तपसा सिद्धियुक्तानां शाश्वतं द्रहादर्शनम् इति थ
।ध।पाठः ॥
१२-३०१-१२ संबोधाच्छास्त्रदर्शनमिति ध ।पाठः ॥
१२-३०१-१४ तपः स्वर्गफलं तातेति थ ।पाठः ॥
स्वर्गमार्गप्रदर्शकमिति ट ।थ।पाठः ॥
१२-३०१-१५ क्वचिद्द्वह्यपर इति झ ।पाठः ॥

॥ श्रीः ॥
१२.३०२. अध्यायः ३०२

Mahabharata - Shanti Parva - Chapter Topics
भीष्मेण युधिष्ठिरंप्रति नानाधर्मप्रतिपादकपराशरगीतानुवादः ॥ १.।
Mahabharata - Shanti Parva - Chapter Text

१२-३०२-० (७७५१०)
जनक उवाच। १२-३०२-०क्ष् (६४४९)
वर्णो विशेषवर्णानां महर्षे केन जायते ।
एतदिच्छाम्यहं ज्ञातुं तद्ब्रूहि वदतां वर ॥ १२-३०२-१ (७७५११)
यदेतज्जायतेऽपत्यं स एवायमिति श्रुतिः ।
कथं ब्राह्मणतो जातो विशेषग्रहणं गतः ॥ १२-३०२-२ (७७५१२)
पराशर उवाच। १२-३०२-३क्ष् (६४५०)
एवमेतन्महाराज येन जातः स एव सः ।
तपसस्त्वपकर्षेण जातिग्रहणतां गतः ॥ १२-३०२-३ (७७५१३)
सुक्षेत्राच्च सुबीजाच्च पुण्यो भवति संभवः ।
अतोऽन्यतरतो हीनादवरो नाम जायते ॥ १२-३०२-४ (७७५१४)
वक्त्राद्भुजाभ्यामूरुभ्यां पद्भ्यां चैवाथ जज्ञिरे ।
सृजतः प्रजापतेर्लोकानिति धर्मविदो विदुः ॥ १२-३०२-५ (७७५१५)
मुखजा ब्राह्मणास्तात बाहुजाः क्षत्रियाः स्मृताः ।
ऊरुजा धनिनो राजन्पादजाः परिचारकाः ॥ १२-३०२-६ (७७५१६)
चतुर्णामेव वर्णानामागमः पुरुषर्षभ ।
अतोन्ये त्वतिरिक्ता ये ते वै संकरजाः स्मृताः ॥ १२-३०२-७ (७७५१७)
क्षत्रियातिरथाम्बष्ठा उग्रा वैदेहकास्तथा ।
श्वपाकाः पुल्कसाः स्तेना निषादाः सूतमागधाः ॥ १२-३०२-८ (७७५१८)
अयोगाः कारणा व्रात्याश्चाण्डालाश्च नराधिप ।
एते चतुर्भ्यो वर्णेभ्यो जायन्ते वै परस्परात् ॥ १२-३०२-९ (७७५१९)
जनक उवाच। १२-३०२-१०क्ष् (६४५१)
ब्रह्मणैकेन जातानां नानात्वं गोत्रतः कथम् ।
बहूनीह हि लोके वै गोत्राणि मुनिसत्तम ॥ १२-३०२-१० (७७५२०)
यत्र तत्र कथं जाताः स्वयोनिं मुनयो गताः ।
शूद्रयोनौ समुत्पन्ना वियोनौ च तथा परे ॥ १२-३०२-११ (७७५२१)
पराशर उवाच। १२-३०२-१२क्ष् (६४५२)

राजन्नैतद्भवेद्ग्राह्यमपकृष्टेन जन्मना ।
महात्मनां समुत्पत्तिस्तपसा भावितात्मनाम् ॥१२-३०२-१२ (७७५२२)
उत्पाद्य पुत्रान्मुनयो नृपते यत्र तत्र ह ।
स्वेनैव तपसा तेषामृषित्वं विदधुः पुनः ॥१२-३०२-१३ (७७५२३)
पितामहश्च मे पूर्वमृश्यशृङ्गश्च काश्यपः ।
वेदस्ताण्ड्यः कृपश्चैव काक्षीवत्कमठादयः ॥१२-३०२-१४ (७७५२४)
यवक्रीतश्च नृपते द्रोणश्च वदतांवरः ।
आयुर्मतङ्गो दत्तश्च द्रुमदो मात्स्य एव च ॥१२-३०२-१५ (७७५२५)
एते स्वां प्रकृतिं प्राप्ता वैदेह तपसो बलात् ।
प्रतिष्ठिता वेदविदो दमेन तपसैव हि ॥१२-३०२-१६ (७७५२६)
मूलगोत्राणि चत्वारि समुत्पन्नानि पार्थिव ।
अङ्गिराः कश्यपश्चैव वसिष्ठो भृगुरेव च ॥१२-३०२-१७ (७७५२७)
कर्मतोऽन्यानि गोत्राणि समुत्पन्नानि पार्थिव ।
नामधेयानि तपसा तानि च ग्रहणं सताम् ॥१२-३०२-१८ (७७५२८)
जनक उवाच।१२-३०२-१९क्ष् (६४५३)
विशेषधर्मान्वर्णानां प्रब्रूहि भगवन्मम ।
ततः सामान्यधर्मांश्च सर्वत्र कुशलो ह्यसि ॥१२-३०२-१९ (७७५२९)
पराशर उवाच।१२-३०२-२०क्ष् (६४५४)
प्रतिग्रहो याजनं च तथैवाध्यापनं नृप ।
विशेषधर्मा विप्राणां रक्षा क्षत्रस्य शोभना ॥१२-३०२-२० (७७५३०)
कृषिश्च पाशुपाल्यं च वाणिज्यं च विशामपि ।
द्विजानां परिचर्या च शूद्रकर्म नराधिप ॥१२-३०२-२१ (७७५३१)
विशेषधर्मा नृपते वर्णानां परिकीर्तिताः ।
धर्मान्साधारणांस्तात विस्तरेण शृणुष्व मे ॥१२-३०२-२२ (७७५३२)
आनृशंस्यमहिंसा चाप्रमादः संविभागिता ।
श्राद्धकर्मातिथेयं च सत्यमक्रोध एव च ॥१२-३०२-२३ (७७५३३)
स्वेषु दारेषु संतोषः शौचं नित्याऽनसूयता ।
आत्मज्ञानं तितिक्षा च धर्माः साधारणा नृप ॥१२-३०२-२४ (७७५३४)
ब्राह्मणाः क्षत्रिया वैश्यास्त्रयो वर्णा द्विजातयः ।
अत्र तेषामधीकारो धर्मेषु द्विपदां वर ॥१२-३०२-२५ (७७५३५)
विकर्मावस्थिता वर्णाः पतन्ति नृपते त्रयः ।
उन्नमन्ति यथा सन्त आश्रित्येह स्वकर्मसु ॥१२-३०२-२६ (७७५३६)
न चापि शूद्रः पततीति निश्चयो
न चापि संस्कारमिहार्हतीति वा ।
श्रुतिप्रयुक्तं न च धर्ममाप्नुते
न चास्य धर्मे प्रतिषेधनं कृतम् ॥ १२-३०२-२७ (७७५३७)

वैदेहकं शूद्रमुदाहरन्ति
द्विजा महाराज श्रुतोपपन्नाः ।
अहं हि पश्यामि नरेन्द्र देवं
विश्वस्य विष्णुं जगतः प्रधानम् ॥ १२-३०२-२८ (७७५३८)
सतां वृत्तमधिष्ठाय निहीना उद्दिधीर्षवः ।
मन्त्रवर्जं न दुष्यन्ति कुर्वाणाः पौष्टिकीः क्रियाः ॥ १२-३०२-२९ (७७५३९)
यथायथा हि सद्वृत्तमालम्बन्तीतरे जनाः ।
यथातथा सुखं प्राप्य प्रेत्य चेह च मोदते ॥ १२-३०२-३० (७७५४०)
जनक उवाच। १२-३०२-३१क्ष् (६४५५)
किं कर्म दूषयत्येनमथो जातिर्महामुने ।
संदेहो मे समुत्पन्नस्तन्मे व्याख्यातुमर्हसि ॥ १२-३०२-३१ (७७५४१)
पराशर उवाच। १२-३०२-३२क्ष् (६४५६)
असंशयं महाराज उभयं दोषकारकम् ।
कर्म चैव हि जातिश्च विशेषं तु निशामय ॥ १२-३०२-३२ (७७५४२)
जात्या च कर्मणा चैव दुष्टं कर्म न सेवते ।
जात्या दुष्टश्च यः पापं न करोति स पूरुषः ॥ १२-३०२-३३ (७७५४३)
जात्या प्रधानं पुरुषं कुर्वाणं कर्म धिक्कृतम्
कर्म तद्दूषयत्येनं तस्मात्कर्म न शोभनम् ॥ १२-३०२-३४ (७७५४४)
जनक उवाच। १२-३०२-३५क्ष् (६४५७)
कानि कर्माणि धर्म्याणि लोकेऽस्मिन्द्विजसत्तम् ।
न हिंसन्तीह भूतानि क्रियमाणानि सर्वदा ॥ १२-३०२-३५ (७७५४५)
पराशर उवाच। १२-३०२-३६क्ष् (६४५८)
शृणु मेऽत्र महाराज यन्मां त्वं परिपृच्छसि ।
यानि कर्माण्यहिंस्राणि नरं त्रायन्ति सर्वदा ॥ १२-३०२-३६ (७७५४६)
संन्यस्याग्नीनुदासीनाः पश्यन्ति विगतज्वराः ।
नैःश्रेयसं कर्मपथं समारुह्य यथाक्रमम् ॥ १२-३०२-३७ (७७५४७)
प्रश्रिता विनयोपेता दमनित्याः सुसंशिताः ।
पयान्ति स्थानमजरं सर्वकर्मविवर्जिताः ॥ १२-३०२-३८ (७७५४८)
सर्वे वर्णा धर्मकार्याणि सम्यक्
कृत्वा राजन्सत्यवाक्यानि चोक्त्वा ।
त्यक्त्वा धर्मं दारुणं जीवलोके
यान्ति स्वर्गं नात्र कार्यो विचारः ॥ ॥ १२-३०२-३९ (७७५४९)

इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि
द्व्यधिकत्रिशततमोऽध्यायः ॥ ३०२.।

१२-३०२-६ ऊरुजा वणिजो राजन्निति ध । पाठः ॥
१२-३०२-१० नानात्वं ब्रह्मक्षत्रियादिभावेन भिन्नत्वम्
। गोत्रतः अन्वयतः। गोत्राणि ब्रह्मक्षत्रियादीनि उग्राम्बष्ठादीनि
च। तस्माज्जातितारतम्यमयुक्तमित्यर्थः ॥
१२-३०२-११ यथा काक्षीवता शूद्रायामुत्पादिताः पुत्रा ब्राह्मणत्वं नीता
नतु ते निषादत्वं प्राप्ता इत्यर्थः । तस्मात्कारणद्वारा कार्यद्वारा वा
जातिभेदो न युक्त इति भावः ॥
१२-३०२-१४ वसुस्ताण्ड्य इति थ । पाठः। वटस्ताण्ड्य इति ध। पाठः ॥
१२-३०२-१६ तपसो श्रयादिति थ । पाठः ॥
१२-३०२-२६ निरयेत्रय इति थ । पाठः ॥

---

शन्तिपर्व-अध्यय३०३
॥ श्रीः ॥
१२.३०३. अध्यायः ३०३

Mahabharata - Shanti Parva - Chapter Topics
भूष्मेण युधिष्ठिरंप्रति धर्मादिसाधनतया मानुष्यप्रशंसापूर्वकं
नानाधर्मप्रतिपादकपराशारगीतानुवादः ॥ १. ।
Mahabharata - Shanti Parva - Chapter Text

१२-३०३-० (७७५५०)
पराशर उवाच। १२-३०३-०क्ष् (६४५९)
पिता सखायो गुरवः स्त्रियश्च
न निर्गुणानां प्रभवन्ति लोके ।
अनन्यभक्ताः प्रियवादिनश्च
हिताश्च वश्याश्च तथैव राजन् ॥ १२-३०३-१ (७७५५१)
पिता परं दैवतं मानवानां
मातुर्विशिष्टं पितरं वदन्ति ।
ज्ञानस्य लाभं परमं वदन्ति
जितेन्द्रियार्थाः परमाप्नुवन्ति ॥ १२-३०३-२ (७७५५२)
रणाजिरे यत्र शराग्निसंस्तरे
नृपात्मजो घातमवाप्य दह्यते ।
प्रयाति लोकानमरैः सुदुर्लभा
न्निषेवते स्वर्गफलं यथासुखम् ॥ १२-३०३-३ (७७५५३)
श्रान्तं भीतं भ्रष्टशस्त्रं रुदन्तं
पराङ्मुखं पारिवर्हैश्च हीनम् ।

अनुद्यन्तं रोगिणं याचमानं
न वै हिंस्याद्बालवृद्धौ च राजन् ॥ १२-३०३-४ (७७५५४)
पारिबर्हैः सुसंयुक्तमुद्यतं तुल्यतां गतम् ।
अतिक्रमेत्तं नृपतिः संग्रामे क्षत्रियात्मजम् ॥ १२-३०३-५ (७७५५५)
तुल्यादिह वधः श्रेयान्विशिष्टाच्चेति निश्चयः ।
निहीनात्कातराच्चैव कृपणाद्गर्हितो वधः ॥ १२-३०३-६ (७७५५६)
पापात्पापसमाचारान्निहीनाच्च नराधिप ।
पाप एष वधः प्रोक्तो नरकायेति निश्चयः ॥ १२-३०३-७ (७७५५७)
न कश्चित्त्राति वै राजन्दिष्टान्तवशमागतम् ।
सावशेषायुषं चापि कश्चिन्नैवापकर्षति ॥ १२-३०३-८ (७७५५८)
स्निग्धैश्च क्रियमाणानि कर्माणीह निवर्तयेत् ।
हिंसात्मकानि सर्वाणि नायुरिच्छेत्परायुषा ॥ १२-३०३-९ (७७५५९)
गृहस्थानां तु सर्वेषां विनाशमभिकाङ्क्षताम् ।
निधनं शोभनं तात पुलिनेषु क्रियावताम् ॥ १२-३०३-१० (७७५६०)
आयुषि क्षयमापन्ने पञ्चत्वमुपगच्छति ।
तथा ह्यकारणाद्भवति कारणैरुपपादितम् ॥ १२-३०३-११ (७७५६१)
तथा शरीरं भवति देहाद्येनोपपादितम् ।
अध्वानं गतकश्चायं प्राप्तश्चायं गृहाद्गृहम् ॥ १२-३०३-१२ (७७५६२)
द्वितीयं कारणं तत्र नान्यत्किंचन विद्यते ।
तद्देहं देहिनां युक्तं मोक्षभूतेषु वर्तते ॥ १२-३०३-१३ (७७५६३)
शिरास्नाय्वस्थिसंघातं बीभत्सामेध्यसंकुलम् ।
भूतानामिन्द्रियाणां च गुणानां च समागमम् ॥ १२-३०३-१४ (७७५६४)
त्वगन्तं देहमित्याहुर्विद्वांसोऽध्यात्मचिन्तकाः ।
गुणैरपि परिक्षीणं शरीरं मर्त्यतां गतम् ॥ १२-३०३-१५ (७७५६५)
शरीरिणा परित्यक्तं निश्चेष्टं गतचेतनम् ।
भूतैः प्रकृतिमापन्नैस्ततो भूमौ निमज्जति ॥ १२-३०३-१६ (७७५६६)
भावितं कर्मयोगेन जायते तत्रतत्र ह ।
इदं शरीरं वैदेह म्रियते यत्रयत्र ह ।
तत्प्रपाते परो दृष्टो विसर्गः कर्मणस्तथा ॥ १२-३०३-१७ (७७५६७)
न जायते तु नृपते कंचित्कालमयं पुनः ।
परिभ्रमति भूतात्मा द्यामिवाम्बुधरो महान् ॥ १२-३०३-१८ (७७५६८)
स पुनर्जायते राजन्प्राप्येहायतनं नृपः ।
मनसः परमो ह्यात्मा इन्द्रियेभ्यः परं मनः ॥ १२-३०३-१९ (७७५६९)
विविधानां च भूतानां जङ्गमाः परमा नृप ।
जङ्गमानामपि तथा द्विपदाः परमा मताः ।
द्विपदानामपि तथा द्विजा वै परमाः स्मृताः ॥ १२-३०३-२० (७७५७०)

द्विजानामपि राजेन्द्र प्रज्ञावन्तः परा मताः ।
प्राज्ञानामात्मसंबुद्धाः संबुद्धानाममानिनः ॥ १२-३०३-२१ (७७५७१)
जातमन्वेति मरणं नृणामिति विनिश्चयः ।
अन्तवन्ति हि कर्माणि सेवन्ते गुणतः प्रजाः ॥ १२-३०३-२२ (७७५७२)
आपन्ने तूत्तरां काष्ठां सूर्ये यो निधनं व्रजेत् ।
नक्षत्रे च मुहूर्ते च पुण्ये राजन्स पुण्यकृत् ॥ १२-३०३-२३ (७७५७३)
अयोजयित्वा क्लेशेन जनं प्लाप्य च दुष्कृतम् ।
मृत्युनाऽऽत्मकृतेनेह कर्म कृत्वाऽऽत्मशक्तितः ॥ १२-३०३-२४ (७७५७४)
विषमुद्बन्धनं दाहो दस्युहस्तात्तथ वधः ।
दंष्ट्रिभ्यश्च पशुभ्यश्च प्राकृतो वध उच्यते ॥ १२-३०३-२५ (७७५७५)
न चैभिः पुण्यकर्माणो युज्यन्ते चाभिसंधिजैः ।
एवंविधैश्च बहुभिरपरैः प्राकृतैरपि ॥ १२-३०३-२६ (७७५७६)
ऊर्ध्वं भित्त्वा प्रतिष्ठन्ते प्राणाः पुण्यवतां नृप ।
मध्यतो मध्यपुण्यानामधो दुष्कृतकर्मणाम् ॥ १२-३०३-२७ (७७५७७)
एकः शत्रुर्न द्वितीयोस्ति शत्रु
रज्ञानतुल्यः पुरुषस्य राजन् ।
येनावृतः कुरुते संप्रयुक्तो
घोराणि कर्माणि सुदारुणानि ॥ १२-३०३-२८ (७७५७८)
प्रबोधनार्थं श्रुतिधर्मयुक्तं
वृद्धानुपास्य प्रभवेत यस्य ।
प्रयत्नसाध्यो हि स राजपुत्र
प्रज्ञाशरेणोन्मथितः परैति ॥ १२-३०३-२९ (७७५७९)
अधीत्य वेदं तपसा ब्रह्मचारी
यज्ञाञ्शक्त्या सन्निसृज्येह पञ्च ।
वनं गच्छेत्पुरुषो धर्मकामः
श्रेयः कृत्वा स्थापयित्वा स्ववंशम् ॥ १२-३०३-३० (७७५८०)
उपभोगैरपि त्यक्तं नात्मानं सादयेन्नरः ।
चण्डालत्वेऽपि मानुष्यं सर्वथा तात शोभनम् ॥ १२-३०३-३१ (७७५८१)
इयं हि योनिः प्रथमा यां प्राप्य जगतीयते ।
आत्मा वै शक्यते त्रातुं कर्मभिः शुभलक्षणैः ॥ १२-३०३-३२ (७७५८२)
कथं न विप्रणश्येम योनितोस्या इति प्रभो ।
कुर्वन्ति धर्मं मनुजाः श्रुतिप्रामाण्यदर्शनात् ॥ १२-३०३-३३ (७७५८३)
यो दुर्लभतरं प्राप्य मानुष्यं द्विषते नरः ।
धर्मावमन्ता कामात्मा भवेत्स खलु वञ्च्यते ॥ १२-३०३-३४ (७७५८४)
यस्तु प्रीतिपुराणेन चक्षुषा तात पश्यति ।
दीपोपमानि भूतानि यावदर्थान्न पश्यति ॥ १२-३०३-३५ (७७५८५)

सान्त्वेनानुप्रदानेन प्रियवादेन चाप्युत ।
समदुःखसुखो भूत्वा स परत्र महीयते ॥१२-३०३-३६ (७७५८६)
दानं त्यागः शोभना मुर्तिमद्भयो
भूयः प्लाव्यं तपसा वै शरीरम् ।
सरस्वतीनैमिषपुष्करेषु
ये चाप्यन्ये पुण्यदेशाः पृथिव्याम् ॥ १२-३०३-३७ (७७५८७)
गृहेषु येषामसवः पतन्ति
तेषामथो निर्हरणं प्रशस्तम् ।
यानेन वै प्रापणं च श्मशाने
शुचौ देशे विधिना चैव दाहः ॥ १२-३०३-३८ (७७५८८)
इष्टिः पुष्टिर्यजनं याजनं च
दार्ग पुण्यानां कर्मणां च प्रयोगः ।
शक्त्या पित्र्यं यच्च किंचित्प्रशस्तं
सर्वाण्यात्मार्थे मानवोऽयं करोति ॥ १२-३०३-३९ (७७५८९)
ग्गृहस्थानां च सर्वेषां विनाशमभिकाङ्क्षताम् ।
निधनं शोभनं तात पुलिनेषु क्रियावताम् ॥' १२-३०३-४० (७७५९०)
धर्मशास्त्राणि वेदाश्च षडङ्गानि नराधिप ।
श्रेयसोर्थे विधीयन्ते नरस्याक्लिष्टकर्मणः ॥१२-३०३-४१ (७७५९१)
भीष्म उवाच।१२-३०३-४२क्ष् (६४६०)
एतद्वै सर्वमाख्यातं मुनिना सुमहात्मना ।
विदेहराजाय पुरा श्रयेसोर्थे नराधिप ॥ ॥१२-३०३-४२ (७७५९२)

इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि
त्र्यधिकत्रिशततमोऽध्यायः ॥३०३.।

Mahabharata - Shanti Parva - Chapter Footnotes

१२-३०३-२ लाभं लाभहेतुम् ॥
१२-३०३-४ पारिबर्हैं रथाश्वकवचादिभिः ॥
१२-३०३-५ अतिक्रमेज्जयेत् ॥
१२-३०३-८ दिष्टान्तो मृत्युः ॥
१२-३०३-९ सन्नद्धैः क्रियमाणानीति थ ।पाठः। हिंसात्मकानि कर्माणीति ध। पाठः ॥
१२-३०३-१० पुलिनेषु पुलिनवत्सु तीर्थेषु निधनं मरणं श्रेयः ॥
१२-३०३-१५ शरीरं मन्दतां गतमिति ध ।पाठः ॥
१२-३०३-१७ तत्स्वभावो परो दृष्ट इति झ ।पाठः ॥
१२-३०३-३२ आत्मा वै शक्यते ज्ञातुमिति ध ।पाठः ॥

१२-३०३-३६ सांत्वेनान्नप्रदानेनेति झ । पाठः ॥
१२-३०३-३५ प्रीतिपुराणेन प्रीत्या चिरंतनेन दीपोपमानि स्नेहेन संवर्धनीयानि । याक्दर्थान् सर्वान्विषयान् दयावान् भूतानि पश्यति विरक्तोऽर्थान्न पश्यति यः स महीयते इत्युत्तरेण संबन्धः ॥
१२-३०३-३८ शौचेनं नूनं विधिना चेति ध । पाठः ॥

---

शन्तिपर्व-अध्यय३०४
॥ श्रीः ॥
१२.३०४. अध्यायः ३०४

Mahabharata - Shanti Parva - Chapter Topics
भीष्मेण युधिष्ठिरंप्रति
श्रेयःसाधनकलापप्रतिपादकपराशरगीतानुवादसमापनम् ॥ १.।
Mahabharata - Shanti Parva - Chapter Text

१२-३०४-० (७७५९३)
भीष्म उवाच। १२-३०४-०क्ष् (६४६१)
पुनरेव तु पप्रच्छ जनको मिथिलाधिपः ।
पराशरं महात्मानं धर्मे परमनिश्चयम् ॥ १२-३०४-१ (७७५९४)
जनक उवाच। १२-३०४-२क्ष् (६४६२)
किं श्रेयः का गतिर्ब्रह्मन्किं कृतं न विनश्यति ।
क्व गतो न निवर्तेत तन्मे ब्रूहि महामते ॥ १२-३०४-२ (७७५९५)
पराशर उवाच। १२-३०४-३क्ष् (६४६३)
असङ्गः श्रेयसो मूलं ज्ञानं ज्ञानगतिः परा ।
चीर्णं तपो न प्रणश्येद्वापः क्षेत्रे न नश्यति ॥ १२-३०४-३ (७७५९६)
छित्त्वाऽधर्ममयं पाशं यदा धर्मेऽभिरज्यते ।
दत्त्वाऽभयकृतं दानं तदा सिद्धिमवाप्नुते ॥ १२-३०४-४ (७७५९७)
यो ददाति सहस्राणि गवामश्वशतानि च ।
अभयं सर्वभूतेभ्यः सदा तमभिवर्तते ॥ १२-३०४-५ (७७५९८)
वसन्विषयमध्येऽपि न वसत्येव बुद्धिमान् ।
संवसत्येव दुर्बुद्धिरसत्सु विषयेष्वपि ॥ १२-३०४-६ (७७५९९)
नाधर्मः श्लिष्यते प्राज्ञं पयः पुष्करपर्णवत् ।
अप्राज्ञमधिकं पापं श्लिष्यते जतुकाष्ठवत् ॥ १२-३०४-७ (७७६००)
नाधर्मः कारणापेक्षी कर्तारमभिमुञ्चति ।
कर्ता खलु यथाकालं ततः समभिपद्यते ॥ १२-३०४-८ (७७६०१)
न भिद्यन्ते कृतात्मान आत्मप्रत्ययदर्शिनः ।
बुद्धिकर्मेन्द्रियाणां हि प्रमत्तो यो न बुध्यते ।

शुभाशुभे प्रसक्तात्मा प्राप्नोति सुमहद्भयम् ॥ १२-३०४-९ (७७६०२)
वीतरागो जितक्रोधः सम्यग्भवति यः सदा ।
विषये वर्तमानोऽपि न स पापेन युज्यते ॥१२-३०४-१० (७७६०३)
मर्यादायां वर्तमानोऽपि नावसीदति ।
पुष्टस्रोत इवासक्तः स्फीतो भवति संचयः ॥१२-३०४-११ (७७६०४)
यथा भानुगतं तेजो मणिः शुद्धः समाधिना ।
आदत्ते राजशार्दूल तथा योगः प्रवर्तते ॥१२-३०४-१२ (७७६०५)
यथा तिलानामिह पुण्यसंश्रया
त्पृथक्पृथग्याति गुणोऽतिसाम्यताम् ।
तथा नराणां भुवि भावितात्मनां
यथाश्रयं सत्वगुणः प्रवर्तते ॥ १२-३०४-१३ (७७६०६)
जहाति दारान्विविधाश्च संपदः
पदं च यानं विविधाश्च सत्क्रियाः ।
त्रिविष्टपे जातमतिर्यदा नर
स्तदाऽस्य बुद्धिर्विषयेषु भिद्यते ॥ १२-३०४-१४ (७७६०७)
प्रसक्तबुद्धिर्विषयेषु यो नरो
न बुध्यते ह्यात्महितं कथंचन ।
स सर्वभावानुगतेन चेतसा
नृपाऽऽमिषेणेव झषो विकृष्यते ॥ १२-३०४-१५ (७७६०८)
संघातवन्मर्त्यलोकः परस्परमपाश्रितः ।
कदलीगर्भनिःसारो नौरिवाप्सु निमज्जति ॥१२-३०४-१६ (७७६०९)
न धर्मकालः पुरुषस्य निश्चितो
न चापि मृत्युः पुरुषं प्रतीक्षते ।
सदा हि धर्मस्य क्रियैव शोभना
तदा नरो मृत्युमुखान्निवर्तते ॥ १२-३०४-१७ (७७६१०)
यथाऽन्धः स्वगृहे युक्तो ह्यभ्यासादेव गच्छति ।
तथा युक्तेन मनसा प्राज्ञो गच्छति तां गतिम् ॥१२-३०४-१८ (७७६११)
मरणं जन्मनि प्रोक्तं जन्म वै मरणाश्रितम् ।
अविद्वान्मोक्षधर्मेषु बद्धो भ्रमति चक्रवत् ॥१२-३०४-१९ (७७६१२)
बुद्धिमार्गप्रयातस्य सुखं त्विह परत्र च ।
विस्तराः क्लेशसंयुक्ताः संक्षेपास्तु सुखावहाः ।
परार्थं विस्तराः सर्वे त्यागमात्महितं विदुः ॥ १२-३०४-२० (७७६१३)
यथा मृणालानुगतमाशु मुञ्चति कर्दमम् ।
तथाऽऽत्मा पुरुषस्येह मनसा परिमुच्यते ॥१२-३०४-२१ (७७६१४)
मनः प्रणयतेऽऽत्मानं स एनमभियुञ्जति ।
युक्तो यदा स भवति तदा तं पश्यते परम् ॥१२-३०४-२२ (७७६१५)

परार्थे वर्तमानस्तु स्वं कार्यं योऽभिमन्यते ।
इन्द्रियार्थेषु सक्तः स स्वकार्यात्परिहीयते ॥१२-३०४-२३ (७७६१६)
अधस्तिर्यग्गतिं चैव स्वर्गे चैव परां गतिम् ।
प्राप्नोति सुकृतैरात्मा प्राज्ञस्येहेतरस्य च ॥१२-३०४-२४ (७७६१७)
मृन्मये भाजने पक्वे यथा वै नश्यति द्रवः ।
तथा शरीरं तपसा तप्तं विषयमश्नुते ॥१२-३०४-२५ (७७६१८)
विषयानश्नुते यस्तु न स भोक्ष्यत्यसंशयम् ।
यस्तु भोगांस्त्यजेदात्मा स वै भोक्तुं व्यवस्यति ॥१२-३०४-२६ (७७६१९)
नीहारेण हि संवीतः शिश्नोदरपरायणः ।
जात्यन्ध इव पन्थानमावृतात्मा न बुध्यते ॥१२-३०४-२७ (७७६२०)
वणिग्यथा समुद्राद्वै यथार्थं लभते धनम् ।
तथा मर्त्यार्णवाज्जन्तोः कर्मविज्ञानतो गतिः ॥१२-३०४-२८ (७७६२१)
अहोरात्रमये लोके जरारूपेण संचरन् ।
मृत्युर्ग्रसति भूतानि पवनं पन्नगो यथा ॥१२-३०४-२९ (७७६२२)
स्वयं कृतानि कर्माणि जातो जन्तुः प्रपद्यते ।
नाकृतं लभते कश्चित्किंचिदत्र प्रियाप्रियम् ॥१२-३०४-३० (७७६२३)
सयानं यान्तमासीनं प्रवृत्तं विषयेषु च ।
शुभाशुभानि कर्माणि प्रपद्यन्ते नरं सदा ॥१२-३०४-३१ (७७६२४)
न ह्यन्यत्तीरमासाद्य पुनस्तर्तुं व्यवस्यति ।
दुर्लभो दृश्यते ह्यस्य विनिपातो महार्णवे ॥१२-३०४-३२ (७७६२५)
यथा भावावसन्ना हि नौर्महाम्भसि तन्तुना ।
यथा मनोभियोगाद्वै शरीरं प्रचिकीर्षति ॥१२-३०४-३३ (७७६२६)
यथा समुद्रमभितः संश्रिताः सरितोऽपराः ।
तथाऽन्याप्रकृतिर्योगादभिसंश्रियते सदा ॥१२-३०४-३४ (७७६२७)
स्नेहपाशैर्बहुविधैरासक्तमनसो नराः ।
प्रकृतिस्था विषीदन्ति जले सैकतवेश्मवत् ॥१२-३०४-३५ (७७६२८)
शरीरगृहसंस्थस्य शौचतीर्थस्य देहिनः ।
बुद्धिमार्गप्रयातस्य सुखं त्विह परत्र च ॥१२-३०४-३६ (७७६२९)
विस्तराः क्लेशसंयुक्ताः संक्षेपास्तु सुखावहाः ।
परार्थं विस्तराः सर्वे त्यागमात्महितं विदुः ॥१२-३०४-३७ (७७६३०)
संकल्पजो मित्रवर्गो ज्ञातयः कारणात्मकाः ।
भार्या पुत्रश्च दासश्च स्वमर्थमनुयुञ्जते ॥१२-३०४-३८ (७७६३१)
न माता न पिता किंचित्कस्यचित्प्रतिपद्यते ।
दानपथ्यौदनो जन्तु स्वकर्मफलमश्नुते ॥१२-३०४-३९ (७७६३२)
माता पुत्रः पिता भ्राता भार्या मित्रजनस्तथा ।
अष्टापदपदस्थाने लाक्षामुद्रेव लक्ष्यते ॥१२-३०४-४० (७७६३३)

सर्वाणि कर्माणि पुराकृतानि
शुभाशुभान्यात्मनो यान्ति जन्तोः ।
उपस्थितं कर्मफलं विदित्वा
बुद्धिं तथा चोदयतेऽन्तरात्मा ॥ १२-३०४-४१ (७७६३४)
व्यवसायं समाश्रित्य सहायान्योऽधिगच्छति ।
न तस्य कश्चिदारम्भः कदाचिदवसीदति ॥१२-३०४-४२ (७७६३५)
अद्वैधमनसं युक्तं शूरं धीरं विपश्चितम् ।
न श्रीः संत्यजते नित्यमादित्यमिव रश्मयः ॥१२-३०४-४३ (७७६३६)
आस्तिक्यव्यवसायाभ्यामुपायान्वितया धिया ।
य आरभत्यनिन्द्यात्मा न सोऽर्थात्परिसीदति ॥१२-३०४-४४ (७७६३७)
सर्वःस्वानि शुभाशुभानि नियतं कर्माणि जन्तुःस्वयं
गर्भात्संप्रतिपद्यते तदुभयं यत्तेन पूर्वं कृतम् ।
मृत्युश्चापरिहारवान्समगतिः कालेन विच्छेदिना
दारोश्चूर्णमिवाश्मसारविहितं कर्मान्तिकं प्रापयेत् १२-३०४-४५ (७७६३८)
स्वरूपतामात्मकृतं च विस्तरं
कुलान्वयं द्रव्यसमृद्धिसंचयम् ।
नरो हि सर्वो भलते यथाकृतं
शुभाशुभेनात्मकृतेन कर्मणा ॥ १२-३०४-४६ (७७६३९)
भीष्म उवाच। १२-३०४-४७क्ष् (६४६४)
इत्युक्तो जनको राजन्याथातथ्यं मनीषिणा ।
श्रुत्वा धर्मविदां श्रेष्ठः परां मुदमवाप ह ॥ ॥१२-३०४-४७ (७७६४०)

इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि
चतुरधिकत्रिशततमोऽध्यायः ॥ ३०४. ।
Mahabharata - Shanti Parva - Chapter Footnotes

१२-३०४-२ श्रेयः श्रेयः साधनम् । क्व गत्वा न निवर्तन्त इति
ड। थ। पाठः ॥
१२-३०४-३ ज्ञानं चैव परा गतिरिति ड । थ। पाठः। न
प्रणश्येत्संसिद्धो न निवर्तते इति ड। थ। पाठः ॥
१२-३०४-५ स दानमतिवर्तते इति ध । पाठः ॥
१२-३०४-११ यथा नद्यां बद्धः सेतुर्नैव सीदति स्रोतःपुष्टिं
करोति एवमसक्तो धर्म एव सेतुर्यस्य सः । मर्यादायां बद्धो नैव
सीदति। संचयस्तपावृद्धिश्च स्फीता भवतीत्यर्थः ॥
१२-३०४-१३ यथानिलानामिह पुष्पसंचयादिति ध । पाठः ॥
१२-३०४-१४ जहाति राजन्विहितेन संपदा सदश्वयानं विविधाश्च

शय्याः इति ध । पाठः ॥
१२-३०४-१५ आमिषेण बडिशमर्भितेन । झषो मत्स्यः। न विन्दते ह्यात्मपदं कदाचनेति ड। थ। पाठः ॥
१२-३०४-१६ संघातवद्देहेन्द्रियादिसमुदायवत् । मर्त्यलोकः स्त्रीपुत्रपश्वादिसमुदायः। अपाश्रित उपकारकः ॥
१२-३०४-१९ जन्मनि जन्मनिमित्तम् ॥
१२-३०४-२० विस्तराः वैतानिकान्यग्निहोत्रादीनि । संक्षेपास्त्यागादयः ॥
१२-३०४-२३ स्वकार्यं यो निवर्तते इति थ । ध। पाठः ॥
१२-३०४-२५ मृण्मये भाजने बह्नौ यथा वै शुष्यते द्रवमिति ड । थ। पाठः ॥
१२-३०४-४१ वान्ति फलं दातुमिति शेषः ॥
१२-३०४-४२ व्यपसायमुद्योगम् ॥
१२-३०४-४३ अद्वैधमनसं एकाग्रचित्तम् ॥
१२-३०४-४५ गर्भात् गर्भप्रवेशमारभ्य । यत् यस्मात्तदुभयं शुभाशुभम्। अपरिहारवान्परिहर्तुमशक्यः। कालेन प्राप्तेन विच्छेदिना जीवननाशकेन सहायेन मृत्युः कर्मान्तिकं दिष्टान्तं विनाशाख्यं प्रापयेत्। दारोः काष्ठस्य चूर्णं अश्मसारविहितं ककचकृतम्। समा सीतोष्णसाम्यवती गतिर्यस्य स समगतिर्वायुः। दारुचूर्णमिव मृत्युर्नरं कालेनान्तं नयतीत्यर्थः। कर्मान्तरं प्रापयेदिति ध। पाठः ॥
१२-३०४-४६ स्वरूपतां स्वस्य रूपं हिरण्यं पशवो विवाहा इति श्रुतं रूपमिव रूपं यस्य स्वकुलानुसारि विवाहादिकं तदेव तत्ता ताम् । आत्मकृतं विस्तरं पुत्रसंतत्यादिपौष्कल्यम्। कुलान्वयं सत्कुले जन्म। यथाकृतं कृतमनतिक्रम्य सर्वं प्राक्कर्मवशादेव लभ्यते ॥

---

शन्तिपर्व-अध्यय३०५
॥ श्रीः ॥
१२.३०५. अध्यायः ३०५

Mahabharata - Shanti Parva - Chapter Topics
भीष्मेण युधिष्ठिरंप्रति मोक्षसाधनप्रतिपादकहंससाध्यसंवादानुवादः ॥ १.।
Mahabharata - Shanti Parva - Chapter Text

१२-३०५-० (७७६४१)
युधिष्ठिर उवाच। १२-३०५-०क्ष् (६४६५)

सत्यं दमं क्षमां प्रज्ञां प्रशंसन्ति पितामह ।
विद्वांसो मनुजा लोके कथमेतन्मतं तव ॥ १२-३०५-१ (७७६४२)
भीष्म उवाच। १२-३०५-२क्ष् (६४६६)
अत्र ते वर्तयिष्येऽहमितिहासं पुरातनम् ।
साध्यानामिह संवादं हंसस्य च युधिष्ठिर ॥ १२-३०५-२ (७७६४३)
हंसो भूत्वाऽथ सौवर्णस्त्वजो नित्यः प्रजापतिः ।
स वै पर्येति लोकांस्त्रीनथ साध्यानुपागमत् ॥ १२-३०५-३ (७७६४४)
साध्या ऊचुः। १२-३०५-४क्ष् (६४६७)
शकुने वयं स्म देवा वै साध्यास्त्वामनुयुङ्क्ष्महे ।
पृच्छामस्त्वां मोक्षधर्मं भवांश्च किल मोक्षवित् ॥ १२-३०५-४ (७७६४५)
श्रुतोसि नः पण्डितो धीरवादी
साधुः शब्दश्चरते ते पतत्रिन् ।
किं मन्यसे श्रेष्ठतमं द्विज त्वं
कस्मिन्मनस्ते रमते महात्मन् ॥ १२-३०५-५ (७७६४६)
तन्नः कार्यं पक्षिवर प्रशाधि
यत्कार्याणां मन्यसे श्रेष्ठमेकम् ।
यत्कृत्वा वै पुरुषः सर्वबन्धै
र्विमुच्यते विहगेन्द्रेह शीघ्रम् ॥ १२-३०५-६ (७७६४७)
हंस उवाच। १२-३०५-७क्ष् (६४६८)
इदं कार्यममृताशाः शृणुध्वं
तपो दमः सत्यमात्माभिगुप्तिः ।
ग्रन्थीन्विमुच्य हृदयस्य सर्वा
न्प्रियाप्रिये स्वं वशमानयीत ॥ १२-३०५-७ (७७६४८)
नारुतुदः स्यान्न नृशंसवादी
न हीनतः परमभ्याददीत ।
ययाऽस्य वाचा पर उद्विजेत
न तां वदेदुशतिं पापलोक्याम् ॥ १२-३०५-८ (७७६४९)
वाक्सायका वदनान्निष्पतन्ति
यैराहतः शोचति रात्र्यहानि ।
परस्य नामर्मसु ते पतन्ति
तान्पण्डितो नावसृजेत्परेषु ॥ १२-३०५-९ (७७६५०)
परश्चेदेनमतिवादवाणै
र्भृशं विध्येच्छम एवेह कार्यः ।
संरोष्यमाणः प्रतिहृष्यते यः
स आदत्ते सुकृतं वै परस्य ॥ १२-३०५-१० (७७६५१)
क्षेपायमाणमभिषङ्गव्यलीकं

निगृह्णाति ज्वलितं यश्च मन्युम् ।
अदुष्टचेता मुदितोऽनसूयुः
स आदत्ते सुकृतं वै परेषाम् ॥ १२-३०५-११ (७७६५२)
आक्रुश्यमानो न वदामि किंचि
त्क्षमाम्यहं ताड्यमानश्च नित्यम् ।
श्रेष्ठं ह्येतद्यत्क्षमामाहुरार्याः
सत्यं तथैवार्जवमानृशंस्यम् ॥ १२-३०५-१२ (७७६५३)
वेदस्योपनिषत्सत्यं सत्यस्योपनिषद्दमः ।
दमस्योपनिषन्मोक्ष एतत्सर्वानुशासनम् ॥ १२-३०५-१३ (७७६५४)
वाचो वेगं मनसः क्रोधवेगं
विधित्सावेगमुदरोपस्थवेगम् ।
एतान्वेगान्यो विषहेदुदीर्णा
स्तं मन्येऽहं ब्राह्मणं वै मुनिं च ॥ १२-३०५-१४ (७७६५५)
अक्रोधनः क्रुध्यतां वै विशिष्ट
स्तथा तितिक्षुरतितिक्षोर्विशिष्टः ।
अमानुषान्मानुषो वै विशिष्ट
स्तथाऽज्ञानाज्ज्ञानवान्वै विशिष्टः ॥ १२-३०५-१५ (७७६५६)
आक्रुश्यमानो नाक्रोशेन्मन्युरेवं तितिक्षतः ।
आक्रोष्टारं निर्दहति सुकृतं चास्य विन्दति ॥ १२-३०५-१६ (७७६५७)
यो नायुक्तः प्राह रूक्षं प्रियं वा
यो वा हतो न प्रतिहन्ति धैर्यात् ।
पापं च यो नेच्छति तस्य हन्तु
स्तस्येह देवाः स्पृहयन्ति नित्यम् ॥ १२-३०५-१७ (७७६५८)
पापीयसः क्षमेतैव श्रेयसः सदृशस्य च ।
विमानितो हतोक्रुष्ट एवं सिद्धिं गमिष्यति ॥ १२-३०५-१८ (७७६५९)
सदाऽहमार्यान्निभृतोप्युपासे
न मे विधित्सोत्सहते न रोषः ।
न चाप्यहं लिप्समानः परैमि
न चैव किंचिद्विषमेण यामि ॥ १२-३०५-१९ (७७६६०)
नाहं शप्तः प्रतिशपामि कंचि
द्दमं द्वारं ह्यमृतस्येह वेद्मि ।
गुह्यं ब्रह्म तदिदं ब्रवीमि
न मानुषाच्छ्रेष्ठतरं हि किंचित् ॥ १२-३०५-२० (७७६६१)
निर्मुच्यमानः पापेभ्यो घनेभ्य इव चन्द्रमाः ।
विरजाः कालमाकाङ्क्षन्धीरो धैर्येण सिध्यति ॥ १२-३०५-२१ (७७६६२)
यः सर्वेषां भवति ह्यर्चनीय

उत्सेचने स्तम्भ इवाभिजातः ।
यस्मै वाचं सुप्रसन्नां वदन्ति
स वै देवान्गच्छति संयतात्मा ॥ १२-३०५-२२ (७७६६३)
न तथा वक्तुमिच्छन्ति कल्याणान्पुरुषे गुणान् ।
यथैषां वक्तुमिच्छन्ति नैर्गुण्यमनुयुञ्जकाः ॥१२-३०५-२३ (७७६६४)
यस्य वाङ्मनसी गुप्ते सम्यक्प्रणिहिते सदा ।
वेदास्तपश्च त्यागश्च स इदं सर्वमाप्नुयात् ॥१२-३०५-२४ (७७६६५)
आक्रोशनविमानाभ्यां नाबुधान्बोधयेद्बुधः ।
तस्मान्न वर्धयेदन्यं न चात्मानं विहिंसयेत् ॥१२-३०५-२५ (७७६६६)
अमृतस्येव संतृप्येदवमानस्य पण्डितः ।
सुखं ह्यवमतः शेते योऽवमन्ता स नश्यति ॥१२-३०५-२६ (७७६६७)
यत्क्रोधनो यजति यद्ददाति
यद्वा तपस्तप्यति यज्जुहोति ।
वैवस्वतस्तद्धरतेऽस्य सर्वं
मोघः श्रमो भवति हि क्रोधनस्य ॥ १२-३०५-२७ (७७६६८)
चत्वारि यस्य द्वाराणि सुगुप्तान्यमरोत्तमाः ।
उपस्थमुदरं हस्तौ वाक्चतुर्थी स धर्मवित् ॥१२-३०५-२८ (७७६६९)
सत्यं दमं ह्यार्जवमानृशंस्यं
धृतिं तितिक्षामभिसेवमानः ।
स्वाध्यायनित्योऽस्पृहयन्परेषा
मेकान्तशील्यूर्ध्वगतिर्भवेत्सः ॥ १२-३०५-२९ (७७६७०)
सर्वान्वेदाननुचरन्वत्सवच्चतुरः स्तनान् ।
न पावनतमं किंचित्सत्याद्गध्यगमं क्वचित् ॥१२-३०५-३० (७७६७१)
आचक्षेऽहं मनुष्येभ्यो देवेभ्यः प्रतिसंचरन् ।
सत्यं स्वर्गस्य सोपानं पारावारस्य नौरिव ॥१२-३०५-३१ (७७६७२)
यादृशैः संविवदते यादृशांश्चोपसेवते ।
यादृगिच्छेच्च भवितुं तादृग्भवति पूरुषः ॥१२-३०५-३२ (७७६७३)
यदि सन्तं सेवति यद्यसन्तं
तपस्विनं यदि वा स्तेनमेव ।
वासो यथा रागवशं प्रयाति
तथा स तेषां वशमभ्युपैति ॥ १२-३०५-३३ (७७६७४)
सदा देवाः साधुभिः संवदन्ते
न मानुषं विषयं यान्ति द्रष्टुम् ।
नेन्दुः समः स्यादसमो हि वायु
रुच्चावचं विषयं यः स वेद ॥ १२-३०५-३४ (७७६७५)
अदुष्टं वर्तमाने तु हृदयान्तरपूरुषे ।

तेनैव देवाः प्रीयन्ते सतां मार्गस्थितेन वै ॥ १२-३०५-३५ (७७६७६)
विश्नोदरे ये निरताः सदैव
स्तेना नरा वाक्यरुषाश्च नित्यम् ।
अपेतधर्मानिति तान्विदित्वा
दूराद्देवः संपरिवर्जयन्ति ॥ १२-३०५-३६ (७७६७७)
न वै देवा हीनसत्वेन तोष्याः
सर्वाशिना दुष्कृतकर्मणा वा ।
सत्यव्रता ये तु नराः कृतज्ञा
धर्मे रतास्तैः सह संभजन्ते ॥ १२-३०५-३७ (७७६७८)
अव्याहृतं व्याहृताच्छ्रेय आहुः
सत्यं वदेद्व्याहृतं तद्द्वितीयम् ।
धर्म्यं वदेद्व्याहृतं तत्तृतीयं
प्रियं वदेद्व्याहृतं तच्चतुर्थम् ॥ १२-३०५-३८ (७७६७९)
साध्या ऊचुः। १२-३०५-३९क्ष् (६४६९)
केनायमावृतो लोकः केन वा न प्रकाशते ।
केन त्यजति मित्राणि केन स्वर्गं न गच्छति ॥ १२-३०५-३९ (७७६८०)
हंस उवाच। १२-३०५-४०क्ष् (६४७०)
अज्ञानेनावृतो लोको मात्सर्यान्न प्रकाशते ।
लोभात्त्यजति मित्राणि सङ्गात्स्वर्गं न गच्छति ॥ १२-३०५-४० (७७६८१)
साध्या ऊचः। १२-३०५-४१क्ष् (६४७१)
कः स्विदेको रमते ब्राह्मणानां
कः स्विदेको बहुभिर्जोषमास्ते ।
कः स्विदेको बलवान्दुर्बलोपि
कः स्विदेषां कलहं नान्ववैति ॥ १२-३०५-४१ (७७६८२)
हंस उवाच। १२-३०५-४२क्ष् (६४७२)
प्राज्ञ एको रमते ब्राह्मणानां
प्राज्ञश्चैको बहुभिर्जोषमास्ते
प्राज्ञ एको बलवान्दुर्बलोऽपि
प्राज्ञ एषां कलहं नान्वबैति ॥ १२-३०५-४२ (७७६८३)
साध्या ऊचुः। १२-३०५-४३क्ष् (६४७३)
किं ब्राह्मणानां देवत्वं किंच साधुत्वमुच्यते ।
असाधुत्वे च किं तेषां किमेषां मानुषं मतम् ॥ १२-३०५-४३ (७७६८४)
हंस उवाच। १२-३०५-४४क्ष् (६४७४)
स्वाध्याय एषां देवत्वं व्रतं साधुत्वमुच्यते ।
असाधुत्वं परीवादो मृत्युर्मानुष्यमुच्यते ॥ १२-३०५-४४ (७७६८५)
भीष्म उवाच। १२-३०५-४५क्ष् (६४७५)

ग इत्युक्त्वा परमो देवो भगवान्नित्य अव्ययः ।
साध्यैर्देवगणैः सार्धं दिवमेवारुरोह सः ॥ १२-३०५-४५ (७७६८६)
एतद्यशस्यमायुष्यं पुण्यं स्वर्गाय च ध्रुवम् ।
दर्शितं देवदेवेन परमेणाव्ययेन च ॥' १२-३०५-४६ (७७६८७)
संवाद इत्ययं श्रेष्ठः साध्यानां परिकीर्तितः ।
क्षेत्रं वै कर्मणां योनिः सद्भावः सत्यमुच्यते ॥ ॥ १२-३०५-४७ (७७६८८)

इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि
पञ्चाधिकत्रिशततमोऽध्यायः ॥ ३०५.।

Mahabharata - Shanti Parva - Chapter Footnotes

१२-३०५-५ हे द्विज पक्षिन् ॥
१२-३०५-७ भो अमृताशा अमृतभुजो देवाः तपः स्वधर्माचरणम्
। ग्रन्थीन् रागादीन् ॥
१२-३०५-८ अंरुतुदो मर्मच्छित् ॥
१२-३०५-११ क्षेपायमाणमधिक्षेपकारिणम्
। अभिषङ्गंव्यलीकमभिनिवेशवशादप्रियम् ॥
१२-३०५-१३ उपनिषद्रहस्यं वेदाधिगमस्य फलं सत्यवचनमित्यर्थः
। दमस्योपनिषत्त्याग इति ध। पाठः ॥
१२-३०५-१४ विधित्सा विशिष्टा पिपासा । धेट् पानेऽस्य
रूपम्। तृष्णावेगमित्यर्थः। ब्राह्मणं ब्रह्मिष्टम्। मुनिं ध्यायिनम् ॥
१२-३०५-१५ अज्ञानाज्ज्ञानहीनान्मूढात् ॥
१२-३०५-१७ अत्युक्तोऽत्यन्तं निन्दितः ॥
१२-३०५-१९ निभृतोऽपि पूर्णोऽपि । विधित्सा तृष्णा। उत्सहते
उल्लसति। परैमि धर्मादपगच्छामि ॥
१२-३०५-२० ब्रह्म महत् ॥
१२-३०५-२३ नैर्गुण्यं दोषम् । अनुयुञ्जकाः स्पर्धावन्तः ॥
१२-३०५-२५ अबुधान् आक्रोष्टॄन् शुनकानिवन बोधयेत् । न वर्धयेत्
न हिंसयेत्। मबुध्वा वर्धते बुध इति ड। पाठः ॥
१२-३०५-२९ अस्पृहयन्परेषां आशां जितवान् ॥
१२-३०५-३१ आचक्षे कथयामि । पारावारस्य समुद्रस्य ॥
१२-३०५-३४ इन्दुरमृतमयोऽपि न समः किंतूपचयापचयधर्मा
। तथा वायुरप्यसम एव। मन्दमध्यमतीव्रभेदात्। एवं सर्वं
विषयमुच्चावयमुपचयापचयवन्तं यो वेद स एव वेद नान्य
इत्यर्थः ॥
१२-३०५-३७ हीनसत्वेन नीचबुद्धिना । संभजन्ते सुखं विभज्य सेवन्ते ॥

शन्तिपर्व-अध्यय३०६
॥ श्रीः ॥
१२.३०६. अध्यायः ३०६

Mahabharata - Shanti Parva - Chapter Topics
भीष्मेण युधिष्ठिरंप्रति योगनिरूपणम् ॥१.।
Mahabharata - Shanti Parva - Chapter Text

१२-३०६-० (७७६८९)
युधिष्ठिर उवाच।१२-३०६-०क्ष् (६४७६)
साङ्ख्ये योगे च मे तात विशेषं वक्तुमर्हसि ।
तव धर्मज्ञ सर्वं हि विदितं कुरुसत्तम ॥१२-३०६-१ (७७६९०)
भीष्म उवाच।१२-३०६-२क्ष् (६४७७)
साङ्ख्याः साङ्ख्यं प्रशंसन्ति योगा योगं द्विजातयः ।
वदन्ति कारणं श्रेष्ठं स्वपक्षोद्भावनाय वै ॥१२-३०६-२ (७७६९१)
अनीश्वरः कथं मुच्येदित्येवं शत्रुसूदन ।
वदन्ति कारणश्रैष्ठ्यं योगाः सम्यङ्भनीषिणः ॥१२-३०६-३ (७७६९२)
वदन्ति कारणं चेदं साङ्ख्याः सम्यग्द्विजातयः ।
विज्ञायेह गतीः सर्वा विरक्तो विषयेषु यः ॥१२-३०६-४ (७७६९३)
ऊर्ध्वं च देहात्सुव्यक्तं विमुच्येदिति नान्यथा ।
एतदाहुर्महाप्राज्ञाः साङ्ख्यं वै मोक्षदर्शनम् ॥१२-३०६-५ (७७६९४)
स्वपक्षे कारणं ग्राह्यं समर्थं वचनं हितम् ।
शिष्टानां हि मतं ग्राह्यं त्वद्विधैः शिष्टसंमतैः ॥१२-३०६-६ (७७६९५)
प्रत्यक्षहेतवो योगाः साङ्ख्याः शास्त्रविनिश्चयाः ।
उभे चैते मते तत्त्वे मम तात युधिष्ठिर ॥१२-३०६-७ (७७६९६)
उभे चैते मते ज्ञाने नृपते शिष्टसंमते ।
अनुष्ठिते यथाशास्त्रं नयेतां परमां गतिम् ॥१२-३०६-८ (७७६९७)
तुल्यं शौचं तयोरेकं दया भूतेषु चानघ ।
व्रतानां धारणं तुल्यं दर्शनं न समं तयोः ।
गतयोस्तु दर्शनं सम्यक्सूक्ष्माभावे प्रसज्यते ॥' १२-३०६-९ (७७६९८)
युधिष्ठिर उवाच।१२-३०६-१०क्ष् (६४७८)
यदि तुल्यं व्रतं शौचं दया चात्र फलं तथा ।
न तुल्यं दर्शनं कस्मात्तन्मे ब्रूहि पितामह ॥१२-३०६-१० (७७६९९)
भीष्म उवाच।१२-३०६-११क्ष् (६४७९)

रागं मोहं तथा स्नेहं कामं क्रोधं च केवलम् ।
योगाच्छित्त्वा ततो दोषान्पञ्चैतान्प्राप्नुवन्ति ते ॥१२-३०६-११ (७७७००)
यथा चानिमिषाः स्थूला जालं छित्त्वा पुनर्जलम् ।
प्राप्नुवन्ति तथा योगास्तत्पदं वीतकल्मषाः ॥१२-३०६-१२ (७७७०१)
तथैव वागुरां छित्त्वा बलवन्तो यथा मृगाः ।
प्राप्नुयुर्विमलं मार्गं विमुक्ताः सर्वबन्धनैः ॥१२-३०६-१३ (७७७०२)
लोभजानि तथा राजन्बन्धनानि बलान्विताः ।
छित्त्वा योगात्परं मार्गं गच्छन्ति विमलं शिवम् ॥१२-३०६-१४ (७७७०३)
अबलाश्च मृगा राजन्वागुरासु यथा परे ।
विनश्यन्ति न संदेहस्तद्वद्योगबलादृते ॥१२-३०६-१५ (७७७०४)
बलहीनाश्च कौन्तेय यथा जालं गता झषाः ।
अन्तं गच्छन्ति राजेन्द्र योगास्तद्वत्सुदुर्बलाः ॥१२-३०६-१६ (७७७०५)
यथा च शकुनाः सूक्ष्मं प्राप्य जालमरिंदम ।
तत्र सक्ता विपद्यन्ते मुच्यन्ते च बलान्विताः ॥१२-३०६-१७ (७७७०६)
कर्मजैर्बन्धनैर्बद्धास्तद्वद्योगाः परंतप ।
अबला वै विनश्यन्ति मुच्यन्ते च बलान्विताः ॥१२-३०६-१८ (७७७०७)
अल्पकश्च यथा राजन्वह्निः शाम्यति दुर्बलः ।
आक्रान्त इन्धनैः स्थूलैस्तद्वद्योगो बलः प्रभो ॥१२-३०६-१९ (७७७०८)
स एव च यदा राजन्वह्निर्जातबलः पुनः ।
समीरणयुतः क्षिप्रं दहेत्कृत्स्नां महीमपि ॥१२-३०६-२० (७७७०९)
तद्वज्जातबलो योगी दीप्ततेजा महाबलः ।
अन्तकाल इवादित्यः कृत्स्नं संशोषयेज्जगत् ॥१२-३०६-२१ (७७७१०)
दुर्बलश्च यथा राजन्स्रोतसा ह्रियते नरः ।
बलहीनस्तथा योगो विषयैर्ह्रियतेऽवशः ॥१२-३०६-२२ (७७७११)
तदेव च महास्रोतो विष्टम्भयति वारणः ।
तद्वद्योगबलं लब्ध्वा व्यूहते विषयान्बहून् ॥१२-३०६-२३ (७७७१२)
विशन्ति चावशाः पार्थ योगाद्योगबलान्विताः ।
प्रजापतीनृषीन्देवान्महाभूतानि चेश्वराः ॥१२-३०६-२४ (७७७१३)
न यमो नान्तकः क्रुद्धो न नृत्युर्भीमविक्रमः ।
ईशते नृपते सर्वे योगस्यामिततेजसः ॥१२-३०६-२५ (७७७१४)
आत्मनां च सहस्राणि बहूनि भरतर्षभ ।
योगः कुर्याद्बलं प्राप्य तैश्च सर्वैर्महीं चरेत् ॥१२-३०६-२६ (७७७१५)
प्राप्नुयाद्विषयान्कश्चित्पुनश्चोग्रं तपश्चरेत् ।
संक्षिपेच्च पुनस्तात सूर्यस्तेतोगुणानिव ॥१२-३०६-२७ (७७७१६)
बलस्थस्य हि योगस्य बन्धनेशस्य पार्थिव ।
विमोक्षे प्रभविष्णुत्वमुपपन्नमसंशयम् ॥१२-३०६-२८ (७७७१७)

बलानि योगप्राप्तानि मयैतानि विशांपते ।
निदर्शनार्थं सूक्ष्माणि वक्ष्यामि च पुनस्तव ॥ १२-३०६-२९ (७७७१८)
आत्मनश्च समाधाने धारणां प्रति वा विभो ।
निदर्शनानि सूक्ष्माणि शृणु मे भरतर्षभ ॥ १२-३०६-३० (७७७१९)
अप्रमत्तो यथा धन्वी लक्ष्यं हन्ति समाहितः ।
युक्तः सम्यक्तथा योगी मोक्षं प्राप्नोत्यसशयम् ॥ १२-३०६-३१ (७७७२०)
स्नेहपूर्णे यथा पात्रे मन आधाय निश्चलम् ।
पुरुषो युक्त आरोहेत्सोपानं युक्तमानसः ॥ १२-३०६-३२ (७७७२१)
युक्तस्तथाऽयमात्मानं योगः षार्थिव निश्चलम् ।
करोत्यमलमात्मानं भास्करोपमदर्शनम् ॥ १२-३०६-३३ (७७७२२)
यथा च नावं कौन्तेय कर्णधारः समाहितः ।
महार्णवगतां शीघ्रं नयेत्पार्थिव पत्तनम् ॥ १२-३०६-३४ (७७७२३)
तद्वदात्मसमाधानं युक्त्वा योगेन तत्ववित् ।
दुर्गमं स्थानमाप्नोति हित्वा देहमिमं नृप ॥ १२-३०६-३५ (७७७२४)
सारथिश्च यथा युक्त्वा सदश्वान्सुसमाहितः ।
देशमिष्टं नयत्याशु धन्विनं पुरुषर्षभ ॥ १२-३०६-३६ (७७७२५)
तथैव नृपते योगी धारणासु समाहितः ।
प्राप्नोत्याशु परं स्थानं लक्षं मुक्त इवाशुगः ॥ १२-३०६-३७ (७७७२६)
आवेश्यात्मनि चात्मानं योगी तिष्ठति योचलः ।
पापं हन्ति पुनीतानां पदमाप्नोति सोऽजरम् ॥ १२-३०६-३८ (७७७२७)
नाभ्यां कण्ठे च शीर्षे च हृदि वक्षसि पार्श्वयोः ।
दर्शने श्रवणे चापि घ्राणे चामितविक्रम ॥ १२-३०६-३९ (७७७२८)
स्थानेष्वेतेषु यो योगी महाव्रतसमाहितः ।
आत्मना सूक्ष्ममात्मानं युङ्क्ते सम्यग्विशांपते ॥ १२-३०६-४० (७७७२९)
स शीघ्रमचलप्रख्यं कर्म दग्ध्या शुभाशुभम् ।
उत्तमं योगमास्थाय यदीच्छति विमुच्यते ॥ १२-३०६-४१ (७७७३०)
युधिष्ठिर उवाच। १२-३०६-४२क्ष् (६४८०)
आहारान्कीदृशान्कृत्वा कानि जित्वा च भारत ।
योगी बलमवाप्नोति तद्भवान्वक्तुमर्हति ॥ १२-३०६-४२ (७७७३१)
भीष्म उवाच। १२-३०६-४३क्ष् (६४८१)
कणानां भक्षणे युक्तः पिण्याकस्य च भारत ।
स्नेहानां वर्जने युक्तो योगी बलमवाप्नुयात् ॥ १२-३०६-४३ (७७७३२)
भुञ्जानो यावकं रूक्षं दीर्घकालमरिंदम् ।
एकाहारो विशुद्धात्मा योगी बलमवाप्नुयात् ॥ १२-३०६-४४ (७७७३३)
पक्षान्मासानृतूंश्चैतान्संवत्सरानहस्तथा ।
अपः पीत्वा पयोमिश्रा योगी बलमवाप्नुयात् ॥ १२-३०६-४५ (७७७३४)

अखण्डमपि वा मांसं सततं मनुजेश्वर ।
उपोष्य सम्यक्षुद्धात्मा योगी बलमवाप्नुयात् ॥ १२-३०६-४६ (७७७३५)
कामं जित्वा तथा क्रोधं शीतोष्णे वर्षमेव च ।
भयं शोकं तथा श्वासं पौरुषान्विषयांस्तथा ॥ १२-३०६-४७ (७७७३६)
अरतिं दुर्जयां चैव घोरां तृष्णां च पार्थिव ।
स्पर्शं निद्रां तथा तन्द्रीं दुर्जयां नृपसत्तम ॥ १२-३०६-४८ (७७७३७)
दीपयन्ति महात्मानः सूक्ष्ममात्मानमात्मना ।
वीतरागा महाप्रज्ञा ध्यानाध्ययनसंपदा ॥ १२-३०६-४९ (७७७३८)
दुर्गस्त्वेप मतः पन्था ब्राह्मणानां विपश्चिताम् ।
न कश्चिद्व्रजति ह्यस्मिन्क्षेमेण भरतर्षभ ॥ १२-३०६-५० (७७७३९)
यथा कश्चिद्वनं घोरं बहुसर्पसरीसृपम् ।
श्वभ्रवत्तोयहीनं च दुर्गमं बहुकण्टकम् ॥ १२-३०६-५१ (७७७४०)
अभक्षमटवीप्रायं दावदग्धमहीरुहम् ।
पन्थानं तस्कराकीर्णं क्षेमेणाभिपतेद्युवा ॥ १२-३०६-५२ (७७७४१)
योगमार्गं तथाऽऽसाद्य यः कश्चिद्व्रजते द्विजः ।
क्षेमेणोपरमेन्मार्गाद्बहुदोषो हि स स्मृतः ॥ १२-३०६-५३ (७७७४२)
सुस्थेयं क्षुरधारासु निशितासु महीपते ।
धारणासु तु योगस्य दुःस्थेयमकृतात्मभिः ॥ १२-३०६-५४ (७७७४३)
विपन्ना धारणास्तात नयन्ति न शुभां गतिम् ।
नेतृहीना यथा नावः पुरुषानर्णवे नृप ॥ १२-३०६-५५ (७७७४४)
यस्तु तिष्ठति कौन्तेय धारणासु यथाविधि ।
मरणं जन्म दुःखं च सुखं च स विमुञ्चति ॥ १२-३०६-५६ (७७७४५)
नानाशास्त्रेषु निष्पन्नं योगेष्विदमुदाहृतम् ।
परं योगस्य यत्कृत्यं निश्चितं तद्द्विजातिषु ॥ १२-३०६-५७ (७७७४६)
परं हि तद्ब्रह्ममयं महात्म
न्ब्रह्माणमीशं वरदं च विष्णुम् ।
भवं च धर्मं च षडाननं च
षट्ब्रह्मपुत्रांश्च महान्भावान् ॥ १२-३०६-५८ (७७७४७)
तमश्च कष्टं सुमहद्रजश्च
सत्वं विशुद्धं प्रकृतिं परां च ।
सिद्धिं च देवीं वरुणस्य पत्नीं
तेजश्च कृत्स्नं सुमहच्च धैर्यम् ॥ १२-३०६-५९ (७७७४८)
ताराधिपं खे विमलं सतारं
विश्वांश्च देवानुरगान्पितृंश्च ।
शैलांश्च कृत्स्नानुदधींश्च घोरा
न्नदीश्च सर्वाः सवनान्घनांश्च ॥ १२-३०६-६० (७७७४९)

नागान्नगान्यक्षगणान्दिशश्च
गन्धर्वसंघान्पुरुषान्स्त्रियश्च ।
परात्परं प्राप्य महान्महात्मा
विशेत योगी नचिराद्विमुक्तः ॥ १२-३०६-६१ (७७७५०)
कथा च येयं नृपते प्रसक्ता
देवे महावीर्यतमौ शुभेयम् ।
योगी स सर्वानभिभूय मर्त्या
न्नारायणात्मा कुरुते महात्मा ॥ ॥ १२-३०६-६२ (७७७५१)

इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि
षडधिकत्रिशततमोऽध्यायः ॥ ३०६.।
Mahabharata - Shanti Parva - Chapter Footnotes

१२-३०६-१ तव सर्वज्ञेति थ ध । पाठः ॥
१२-३०६-२ कारणं हेतुः युक्तिरिति यावत् । स्वपक्षस्योद्भावनाय
उत्कर्णाय कारणं श्रैष्ठ्यमिति थ। पाठः ॥
१२-३०६-५ सांख्या वै मोक्षदर्शिन इति ध । पाठः ॥
१२-३०६-७ उभे चैते मते युक्ते इति ध । पाठः ॥
१२-३०६-९ भूतानां धारणं तुल्यमिति ध । पाठः ॥
१२-३०६-१४ छित्त्वा योगाः परमिति ट । थ। पाठः ॥
१२-३०६-२३ व्यूहते विक्षिपति तुच्छीकरोतीत्यर्थः ॥
१२-३०६-२४ अवशाः स्वतन्त्राः ॥
१२-३०६-२६ आत्मानं च सहस्राणीति ट
। थ। पाठः। सौभर्यादिवद्युगपदनेकदेहधारणं योगिनां
दृष्टमित्यर्थः ॥
१२-३०६-२८ बन्धनेशस्य बन्धनं छेत्तुं समर्थस्य ॥
१२-३०६-२९ बलानि योगे प्रोक्तानि इति ध । पाठः। मया उक्तानीति शेषः ॥
१२-३०६-३२ पात्रे शिरसि धृते ॥
१२-३०६-३३ योगी पार्थिव निश्चलमिति थ । पाठः ॥
१२-३०६-३८ अवेक्ष्यात्मनीति झ । पाठः। जलं हन्तेव मीनानामिति ट। पाठः ॥
१२-३०६-४४ एकारामो विशुद्धात्मेति ठ । ध। पाठः ॥
१२-३०६-४५ ऋतूंश्चित्रान्संचरश्च गृहांस्तथेति ध । पाठः ॥
१२-३०६-५१ बहुसंकटमिति ध । पाठः ॥
१२-३०६-५२ अभक्तमटवीप्रायमिति ट । ध। पाठः ॥
१२-३०६-६२ योगान्सर्वाननुभूयेह मर्त्य इति ध । पाठः ॥

॥ श्रीः ॥
१२.३०७. अध्यायः ३०७

Mahabharata - Shanti Parva - Chapter Topics
भीष्मेण युधिष्ठिरंप्रति साङ्ख्यनिरूपणम् ॥ १.।
Mahabharata - Shanti Parva - Chapter Text

१२-३०७-० (७७७५२)
युधिष्ठिर उवाच। १२-३०७-०क्ष् (६४८२)
सम्यक्त्वयाऽयं नृपते वर्णितः शिष्टसंमतः ।
योगमार्गो यथान्यायं शिष्यायेह हितैषिणा ॥ १२-३०७-१ (७७७५३)
साङ्ख्ये त्विदानीं कार्त्स्न्येन विधिं प्रब्रूहि पृच्छते ।
त्रिषु लोकेषु यज्ज्ञानं सर्वं तद्विदितं हि ते ॥ १२-३०७-२ (७७७५४)
भीष्म उवाच। १२-३०७-३क्ष् (६४८३)
शृणु मे त्वमिदं कृत्स्नं साङ्ख्यानां विदितात्मनाम् ।
विदितं यतिभिः सर्वैः कपिलादिभिरीश्वरैः ॥ १२-३०७-३ (७७७५५)
यस्मिन्नविभ्रमाः केचिद्दृश्यन्ते मनुजर्षभ ।
गुणाश्च यस्मिन्बहवो दोषहानिश्च केवला ॥ १२-३०७-४ (७७७५६)
ज्ञानेन परिसङ्ख्याय सदोषान्विषयान्नृप ।
मानुषान्दुर्जयान्कृत्स्नान्पैशाचान्विषयांस्तथा ॥ १२-३०७-५ (७७७५७)
राक्षसान्विषयाञ्ज्ञात्वा यक्षाणां विषयांस्तथा ।
विषयानौरगाञ्ज्ञात्वा गान्धर्वविषयांस्तथा ॥ १२-३०७-६ (७७७५८)
पितृणां विषयाञ्ज्ञात्वा तिर्यक्षु चरतां नृप ।
सुपर्णविषयाञ्ज्ञात्वा मरुतां विषयांस्तथा ॥ १२-३०७-७ (७७७५९)
राजर्षिविषयाञ्ज्ञात्वा ब्रह्मर्षिविषयांस्तथा ।
आसुरान्विषयाञ्ज्ञात्वा वैश्वदेवांस्तथैव च ॥ १२-३०७-८ (७७७६०)
देवर्षिविषयाञ्ज्ञात्वा योगानामपि चेश्वरान् ।
प्रजापतीनां विषयान्ब्रह्मणो विषयांस्तथा ॥ १२-३०७-९ (७७७६१)
आयुषश्च परं कालं लोके विज्ञाय तत्त्वतः ।
सुखस्य च परं तत्त्वं विज्ञाय वदतां वर ॥ १२-३०७-१० (७७७६२)
प्राप्ते काले च यद्दुःखं सततं विषयैषिणाम् ।
तिर्यक्षु पततां दुःखं पततां नरके च यत् ॥ १२-३०७-११ (७७७६३)
स्वर्गस्य च गुणान्कृत्स्नान्दोषान्सर्वांश्च भारत ।
ग्परिसंख्यानसंख्यानं सत्वं सांख्यगुणात्मकम् ।'
वेदवादे येऽपि दोषा गुणा ये चापि वैदिकाः ॥ १२-३०७-१२ (७७७६४)

ज्ञानयोगे च ये दोषा गुणा योगे च ये नृप ।
साङ्ख्यज्ञाने च ये दोषास्तथैव च गुणा नृप ।
ग्इतरेषु च ये दोषा गुणास्तेषु च भारत ॥' १२-३०७-१३ (७७७६५)
सत्वं दशगुणं ज्ञात्वा रजो नवगुणं तथा ।
तमश्चाष्टगुणं ज्ञात्वा वृद्धिं सप्तगुणां तथा ॥ १२-३०७-१४ (७७७६६)
षड्गुणं च मनो ज्ञात्वा नभः पञ्चगुणं तथा ।
बुद्धिं चतुर्गुणां ज्ञात्वा तमश्च त्रिगुणं तथा ॥ १२-३०७-१५ (७७७६७)
द्विगुणं च रजो ज्ञात्वा सत्वमेकगुणं पुनः ।
सर्गं विज्ञाय तत्त्वेन प्रलये प्रेक्ष्य चात्मनः ॥ १२-३०७-१६ (७७७६८)
ज्ञानविज्ञानसंपन्नाः कारणैर्भाविताः शुभाः ।
प्राप्नुवन्ति शुभं मोक्षं सूक्ष्मा इव नभः परम् ॥ १२-३०७-१७ (७७७६९)
रूपेण दृष्टिं संयुक्तां घ्राणं गन्धगुणेन च ।
शब्दे सक्तं तथा श्रोत्रं जिह्वा रसगुणेषु च ॥ १२-३०७-१८ (७७७७०)
त्वचं स्पर्शे तथा सक्तां वायुं नभसि चाश्रितम् ।
मोहं तमसि संयुक्तं लोभमर्थेषु संश्रितम् ॥ १२-३०७-१९ (७७७७१)
विष्णौ क्रान्तं बलं शक्रे कोष्ठे सक्तं तथाऽनलम् ।
अप्सु देवीं समासक्तामपस्तेजसि संश्रिताः ॥ १२-३०७-२० (७७७७२)
तेजः सूक्ष्मे च संयुक्तं वायुं नभसि चाश्रितम् ।
नभो महति संयुक्तं महद्बुद्धौ च संश्रितम् ॥ १२-३०७-२१ (७७७७३)
बुद्धिं तमसि संसक्तां तमो रजसि संश्रितम् ।
रजः सत्वे तथा सक्तं सत्वं सक्तं तथाऽऽत्मनि ॥ १२-३०७-२२ (७७७७४)
सक्तमात्मानमीशे च देवे नारायणे तथा ।
देवं मोक्षे च संसक्तं मोक्षं सक्तं तु न क्वचित् ॥ १२-३०७-२३ (७७७७५)
ज्ञात्वा सत्वयुतं देहं वृतं षोडशभिर्गुणैः ।
स्वभावं चेतनां चैव ज्ञात्वा देहसमाश्रिते ॥ १२-३०७-२४ (७७७७६)
मध्यस्थमेकमात्मानं पापं यस्मिन्न विद्यते ।
द्वितीयं कर्म विज्ञाय नृपते विषयैषिणाम् ॥ १२-३०७-२५ (७७७७७)
इन्द्रियाणीन्द्रियार्थांश्च सर्वानात्मनि संश्रितान् ।
दुर्लभत्वं च मोक्षस्य विज्ञाय श्रुतिपूर्वकम् ॥ १२-३०७-२६ (७७७७८)
प्राणापानौ समानं च व्यानोदानौ च तत्त्वतः ।
आवहं चानिलं ज्ञात्वा प्रवहं चानिलं पुनः ॥ १२-३०७-२७ (७७७७९)
सप्तवातांस्तथा शेषान्सप्तधा विहितान्पुनः ।
प्रजापतीनृषींश्चैव मार्गांश्चैव बहून्वरान् ॥ १२-३०७-२८ (७७७८०)
सप्तर्षींश्च बहूञ्ज्ञात्वा राजर्षींश्च परंतप ।
सुरर्षीन्महतश्चान्यान्ब्रह्मर्षीन्सूर्यसन्निभान् ॥ १२-३०७-२९ (७७७८१)
ऐश्वर्याच्च्यावितान्दृष्ट्वा कालेन महता नृप ।

महतां भूतसङ्घानां श्रुत्वा नाशं च पार्थिव ॥ १२-३०७-३० (७७७८२)
गतिं चाप्यशुभां ज्ञात्वा नृपते पापकर्मिणाम् ।
वैतरण्यां च यद्दुःखं पतितानां यमक्षये ॥ १२-३०७-३१ (७७७८३)
योनीषु च विचित्रासु संसारानशुभांस्तथा ।
जठरे चाशुभे वासं शोणितोदकभाजने ॥ १२-३०७-३२ (७७७८४)
श्लेष्ममूत्रपुरीषे च तीव्रगन्धसमन्विते ।
शुक्रशोणितसंघाते मज्जास्नायुपरिग्रहे ॥ १२-३०७-३३ (७७७८५)
सिराशतसमाकीर्णे नवद्वारे पुरेऽशुचौ ।
विज्ञायाहितमात्मानं योगांश्च विविधान्नृप ॥ १२-३०७-३४ (७७७८६)
तामसानां च जन्तूनां रमणीयावृतात्मनाम् ।
सात्विकानां च जन्तूनां कुत्सितं भरतर्षभ ॥ १२-३०७-३५ (७७७८७)
गर्हितं महतामर्थे साङ्ख्यानां विदितात्मनाम् ।
उपप्लवांस्तथा घोराञ्शशिनस्तेजसस्तथा ॥ १२-३०७-३६ (७७७८८)
ताराणां पतनं दृष्ट्वा नक्षत्राणां च पर्ययम् ।
द्वन्द्वानां विप्रयोगं च विज्ञाय कृपण नृप ॥ १२-३०७-३७ (७७७८९)
अन्योन्यभक्षणं दृष्ट्वा भूतानामपि चाशुभम् ।
बाल्ये मोहं च विज्ञाय क्षयं देहस्य चाशुभम् ॥ १२-३०७-३८ (७७७९०)
रागे मोहे च संप्राप्ते क्वचित्सत्वं समाश्रितम् ।
सहस्रेषु नरः कश्चिन्मोक्षबुद्धिं समाश्रितः ॥ १२-३०७-३९ (७७७९१)
दुर्लभत्वं च मोक्षस्य विज्ञाय श्रुतिपूर्वकम् ।
बहुमानमलब्धेषु लब्धे मध्यस्थतां पुनः ॥ १२-३०७-४० (७७७९२)
विषयाणां च दौरात्म्यं विज्ञाय नृपते पुनः ।
गतासूनां च कौन्तेय देहान्दृष्ट्वा तथाऽशुभान् ॥ १२-३०७-४१ (७७७९३)
वासं कुलेषु जन्तूनां दुःखं विज्ञाय भारत ।
ब्रह्मघ्नानां गतिं ज्ञात्वा पतितानां सुदारुणाम् ॥ १२-३०७-४२ (७७७९४)
सुरापाने च सक्तानां ब्राह्मणानां दुरात्मनाम् ।
गुरूदारप्रसक्तानां गतिं विज्ञाय चाशुभाम् ॥ १२-३०७-४३ (७७७९५)
जननीषु च वर्तन्ते येन सम्यग्युधिष्ठिर ।
सदेवकेषु लोकेषु येन वर्तन्ति मानवाः ॥ १२-३०७-४४ (७७७९६)
तेन ज्ञानेन विज्ञाय गतिं चाशुभकर्मणाम्
तिर्यग्योनिगतानां च विज्ञाय च गतिं पृथक् ॥ १२-३०७-४५ (७७७९७)
वेदवादांस्तथा चित्रानृतूनां पर्ययांस्तथा ।
क्षयं संवत्सराणां च मासानां च क्षयं तथा ॥ १२-३०७-४६ (७७७९८)
पक्षक्षयं तथा दृष्ट्वा दिवसानां च संक्षयम् ।
क्षयं वृद्धिं च चन्द्रस्य दृष्ट्वा प्रत्यक्षतस्तथा
॥ १२-३०७-४७ (७७७९९)

वृद्धिं दृष्ट्वा समुद्राणां क्षयं तेषां तथा पुनः ।
क्षयं धनानां दृष्ट्वा च पुनर्वृद्धिं तथैव च ॥१२-३०७-४८
(७७८००)
संयोगानां क्षयं दृष्ट्वा युगानां च विशेषतः ।
क्षयं च दृष्ट्वा शैलानां क्षयं च सरितां तथा ॥१२-३०७-४९ (७७८०१)
वर्णानां च क्षयं दृष्ट्वा क्षयान्तं च पुनः पुनः ।
जरा मृत्युस्तथा जन्म दृष्ट्वा दुःखानि चैव ह ॥१२-३०७-५० (७७८०२)
देहदोषांस्तथा ज्ञात्वा तेषां दुःखं च तत्त्वतः ।
देहविक्लवतां चैव सम्यग्विज्ञाय तत्त्वतः ॥१२-३०७-५१ (७७८०३)
आत्मदोषांश्च विज्ञाय सर्वानात्मनि संश्रितान् ।
स्वदेहादुत्थितान्गब्धांस्तथा विज्ञाय चाशुभान् ।
ग्मूत्रश्लेष्मपुरीषादीन्स्वेदजांश्च सुकुत्सितान् ॥' १२-३०७-५२ (७७८०४)
युधिष्ठिर उवाच।१२-३०७-५३क्ष् (६४८४)
कान्स्वगात्रोद्भवान्दोषान्पश्यस्यमितविक्रम ।
एतन्मे संशयं कृत्स्नं वक्तुमर्हसि तत्त्वतः ॥१२-३०७-५३ (७७८०५)
भीष्म उवाच।१२-३०७-५४क्ष् (६४८५)
पञ्च दोषान्प्रभो देहे प्रवदन्ति मनीषिणः ।
मार्गज्ञाः कापिलाः साङ्ख्याः शृणु तानरिसूदन ॥१२-३०७-५४ (७७८०६)
कामक्रोधौ भयं निद्रा पञ्चमः श्वास उच्यते ॥ १२-३०७-५५ (७७८०७)
एते दोषाः शरीरेषु दृश्यन्ते सर्वदेहिनाम् ।
छिन्दन्ति क्षमया क्रोधं कामं संकल्पवर्जनात् ॥१२-३०७-५६ (७७८०८)
सत्वसंसेवनान्निद्रामप्रमादाद्भयं तथा ।
छिन्दन्ति पञ्चमं श्वासमल्पाहारतया नृप ॥१२-३०७-५७ (७७८०९)
गुणान्गुणशतैर्ज्ञात्वा दोषान्दोषशतैरपि ।
हेतून्हेतुशतैश्चित्रैश्चित्रान्विज्ञाय तत्त्वतः ॥१२-३०७-५८ (७७८१०)
अपां फेनोपमं लोकं विष्णोर्मायाशतैश्चितम् ।
चित्रभित्तिप्रतीकाशं नलसारमनर्थकम् ॥१२-३०७-५९ (७७८११)
तमः श्वभ्रनिभं दृष्ट्वा वर्षबुद्बुदसंनिभम् ।
क्लेशप्रायं सुखाद्धीनं नाशोत्तरमिहावशम् ॥१२-३०७-६० (७७८१२)
रजस्तमसि संमग्नं पङ्के द्वीपमिवावशम् ।
साङ्ख्या राजन्महाप्राज्ञास्त्यक्त्वा देहं प्रजाकृतं ॥१२-३०७-६१ (७७८१३)
ज्ञानयोगेन साङ्ख्येन व्यापिना महता नृप ।
राजसानशुभान्गन्धांस्तांमसांश्च तथाविधान् ॥१२-३०७-६२ (७७८१४)
पुण्यांश्च सात्विकान्गन्धान्स्पर्शजान्देहसंश्रितान् ।
छित्त्वाऽऽशु ज्ञानशस्त्रेण तपो दण्डेन भारत ॥१२-३०७-६३ (७७८१५)
ततो दुःखोदधिं घोरं चिन्ताशोकमहाह्रदम् ।

व्याधिमृत्युमहाग्राहं महाभयमहोरगम् ॥ १२-३०७-६४ (७७८१६)
तमःकूर्मं रजोमीनं प्रज्ञया संतरन्त्युत ।
स्नेहपङ्कं जरादुर्गं ज्ञानदीपमरिंदम् ॥ १२-३०७-६५ (७७८१७)
कर्मागाधं सत्यतीरं स्थितव्रतमरिंदम् ।
हिंसाशीघ्रमहावेगं नानारससमाकरम् ॥ १२-३०७-६६ (७७८१८)
नानाप्रीतिमहारत्नं दुःखज्वरसमीरणम् ।
शोकतृष्णामहावर्तं तीक्ष्णव्याधिमहागजम् ॥ १२-३०७-६७ (७७८१९)
अस्थिसंघातसंघट्टं श्लेष्मफेनमरिंदम् ।
दानमुक्ताकरं घोरं शोणितह्रदविद्रुमम् ॥ १२-३०७-६८ (७७८२०)
हसितोत्क्रुष्टनिर्घोषं नानाज्ञानसुदुस्तरम् ।
रोदनाश्रुमलक्षारं सङ्गत्यागपरायणम्। १२-३०७-६९ (७७८२१)
पुत्रदारजलौकौघं मन्त्रिबान्धवपत्तनम् ।
अहिंसासत्यमर्यादं प्राणत्यागमहोर्मिणम् ॥ १२-३०७-७० (७७८२२)
वेदान्तगमनद्वीपं सर्वभूतदयोदकम् ।
मोक्षदुर्लभविषयं वडवामुखसागरम् ॥ १२-३०७-७१ (७७८२३)
तरन्ति मुनयः सिद्धा ज्ञानयानेन भारत ।
तीर्त्वाऽतिदुस्तरं जन्म विशन्ति विमलं नभः ॥ १२-३०७-७२ (७७८२४)
तत्र तान्सुकृतीन्साङ्ख्यान्सूर्यो वहति रश्मिभिः ।
पद्मतन्तुवदाविश्य प्रसह्य विषयान्नृप ॥ १२-३०७-७३ (७७८२५)
तत्र तान्प्रवहो वायुः प्रतिगृह्णाति भारत ।
वीतरागान्यतीन्सिद्धान्वीर्ययुक्तांस्तपोधनान् ॥ १२-३०७-७४ (७७८२६)
सूक्ष्मः शीतः सुगन्धी च सुखस्पर्शश्च भारत ।
सप्तानां मरुतां श्रेष्ठो लोकान्गच्छति यः शुभान् ।
स तान्वहति कौन्तेय नभसः परमां गतिम् ॥ १२-३०७-७५ (७७८२७)
नभो वहति लोकेश रजसः परमां गतिम् ।
Γतमो वहति लोकेश रजसः परमां गतिम्।'
रजो वहति राजेन्द्र सत्वस्य परमां गतिम् ॥ १२-३०७-७६ (७७८२८)
सत्वं वहति राजेन्द्र परं नारायणं प्रभुम् ।
प्रभुर्वहति शुद्धात्मा परमात्मानमात्मना ॥ १२-३०७-७७ (७७८२९)
परमात्मानमासाद्य तद्भूता यतयोऽमलाः ।
अमृतत्वाय कल्पन्ते न निवर्तन्ति वा विभो ॥ १२-३०७-७८ (७७८३०)
परमा सा गतिः पार्थ निर्द्वन्द्वानां महात्मनाम् ।
सत्यार्जवरतानां वै सर्वभूतदयावताम् ॥ १२-३०७-७९ (७७८३१)
युधिष्ठिर उवाच। १२-३०७-८०क्ष् (६४८६)
स्थानमुत्तममासाद्य भगवन्तं स्थिरव्रताः ।
आजन्ममरणं वा ते स्मरन्त्युत न वाऽनघ ॥ १२-३०७-८० (७७८३२)

यदत्र तथ्यं तन्मे त्वं यथावद्वक्तुमर्हसि ।
त्वदृते पुरुषं नान्यं प्रष्टुमर्हामि कौरव ॥१२-३०७-८१ (७७८३३)
मोक्षे दोषो महानेष प्राप्य सिद्धिगतानृषीन् ।
यदि तत्रैव विज्ञाने वर्तन्ते यतयः परे ॥१२-३०७-८२ (७७८३४)
प्रवृत्तिलक्षणं धर्मं पश्यामि परमं नृप ।
मग्नस्य हि परे ज्ञाने किं न दुःखतरं भवेत्। १२-३०७-८३ (७७८३५)
भीष्म उवाच।१२-३०७-८४क्ष् (६४८७)
यथान्यायं त्वया तात प्रश्नः पृष्टः सुसंकटः ।
बुधानामपि संमोहः प्रश्नेऽस्मिन्भरतर्षभ ॥१२-३०७-८४ (७७८३६)
अत्रापि तत्त्वं परमं शृणु सम्यङ्भयेरितम् ।
बुद्धिश्च परमा यत्र कापिलानां महात्मनाम् ॥१२-३०७-८५ (७७८३७)
इन्द्रियाण्येव बुध्यन्ते स्वदेहे देहिनां नृप ।
कारणान्यात्मनस्तानि सूक्ष्मः पश्यति तैस्तु सः ॥१२-३०७-८६ (७७८३८)
आत्मना विप्रहीणानि काष्ठकुड्यसमानि तु ।
विनश्यन्ति न संदेहः फेना इव महार्णवे ॥१२-३०७-८७ (७७८३९)
इन्द्रियैः सह सुप्तस्य देहिनः शत्रुतापन ।
सूक्ष्मश्चरति सर्वत्र नभसीव समीरणः ॥१२-३०७-८८ (७७८४०)
स पश्यति यथान्यायं स्पर्शान्स्पृशति वा विभो ।
बुध्यमानो यथापूर्वमखिलेनेह भारत ॥१२-३०७-८९ (७७८४१)
इन्द्रियाणीह सर्वाणि स्वे स्वे स्थाने यथाविधि ।
अनीशत्वात्प्रलीयन्ते सर्पा हतविषा इव ॥१२-३०७-९० (७७८४२)
इन्द्रियाणां तु सर्वेषां स्वस्थानेष्वेव सर्वशः ।
आक्रम्य गतयः सूक्ष्माश्चरत्यात्मा न संशयः ॥१२-३०७-९१ (७७८४३)
सत्वस्य च गुणान्कृत्स्नान्नजसश्च गुणान्पुनः ।
गुणांश्च तमसः सर्वान्गुणान्बुद्धेश्च भारत ॥१२-३०७-९२ (७७८४४)
गुणांश्च मनसश्चापि नभसश्च गुणांश्च सः ।
गुणान्वायोश्च धर्मात्मंस्तेजसां च गुणान्पुनः ॥१२-३०७-९३ (७७८४५)
अपां गुणांस्तथा पार्थ पार्थिवांश्च गुणानपि ।
सर्वात्मना गुणैर्व्याप्तः क्षेत्रज्ञेषु युधिष्ठिर ॥१२-३०७-९४ (७७८४६)
आत्मा च याति क्षेत्रज्ञं कर्मणी च शुभाशुभे ।
शिष्या इव महात्मानमिन्द्रियाणि च तं प्रभो ॥१२-३०७-९५ (७७८४७)
प्रकृतिं चाप्यतिक्रम्य गच्छत्यात्मानमव्ययम् ।
परं नारायणं देवं निर्द्वन्द्वं प्रकृतेः परम् ॥१२-३०७-९६ (७७८४८)
विमुक्तः सर्वपापेभ्यः प्रविष्टस्तमनामयम् ।
परमात्मानमगुणं न निवर्तति भारत ॥१२-३०७-९७ (७७८४९)
शिष्टं तत्र मनस्तात इन्द्रियाणि च भारत ।

आगच्छन्ति यथाकालं गुरोः संदेशकारिणः ॥१२-३०७-९८ (७७८५०)
शक्यं चाल्पेन कालेन शान्तिं प्राप्तुं गुणार्थिना ।
एवमुक्तेन कौन्तेय युक्तज्ञानेन मोक्षिणा ॥१२-३०७-९९ (७७८५१)
साङ्ख्या राजन्महाप्राज्ञा गच्छन्ति परमां गतिम् ।
ज्ञानेनानेन कौन्तेय तुल्यं ज्ञानं न विद्यते ॥१२-३०७-१०० (७७८५२)
अत्र ते संशयो मा भूज्ज्ञानं सांख्यं परं मतम् ।
अक्षरं ध्रुवमव्यक्तं पूर्णं ब्रह्म सनातनम् ॥१२-३०७-१०१ (७७८५३)
अनादिमध्यनिधनं निर्द्वन्द्वं कर्तृ शाश्वतम् ।
कूटस्थं चैव नित्यं च यद्वदन्ति शमात्मकाः ॥१२-३०७-१०२ (७७८५४)
यतः सर्वाः प्रवर्तन्ते सर्गप्रलयविक्रियाः ।
यच्च शंसन्ति शास्त्रेषु वदन्ति परमर्षयः ॥१२-३०७-१०३ (७७८५५)
सर्वे विप्राश्च देवाश्च तथा शमविदो जनाः ।
ब्रह्मण्यं परमं देवमनन्तं परमच्युतम् ॥१२-३०७-१०४ (७७८५६)
प्रार्थयन्तश्च तं विप्रा वदन्ति गुणबुद्धयः ।
सम्यग्युक्तास्तथा योगाः साङ्ख्याश्चामितदर्शनाः ॥१२-३०७-१०५ (७७८५७)
अमूर्तेस्तस्य कौन्तेय साङ्ख्यं मूर्तिरिति श्रुतिः ।
अभिज्ञानानि तस्याहुर्मतं हि भरतर्षभ ॥१२-३०७-१०६ (७७८५८)
द्विविधानीह भूतानि पृथिव्यां पृथिवीपते ।
जङ्गमाजङ्गमाख्यानि जङ्गमं तु विशिष्यते ॥१२-३०७-१०७ (७७८५९)
ज्ञानं महद्यद्धि महत्सु राज
न्वेदेषु साङ्ख्येषु तथैव योगे ।
यच्चापि दृष्टं विविधं पुराणे
साङ्ख्यागतं तन्निखिलं नरेन्द्र ॥ १२-३०७-१०८ (७७८६०)
यच्चेतिहासेषु महत्सु दृष्टं
यच्चार्थशास्त्रे नृप शिष्टजुष्टे ।
ज्ञानं च लोके यदिहास्ति किंचि
त्साङ्ख्यागतं तच्च महन्महात्मन् ॥ १२-३०७-१०९ (७७८६१)
शमश्च दृष्टः परमं बलं च
ज्ञानं च साङ्ख्यं च यथावदुक्तम् ।
तपांसि सूक्ष्माणि सुखानि चैव
साङ्ख्ये यथावद्विहितानि राजन् ॥ १२-३०७-११० (७७८६२)
विपर्यये तस्य हि पार्थ देवा
न्गच्छन्ति साङ्ख्याः सततं सुखेन ।
तांश्चानुसंचार्य ततः कृतार्थाः
पतन्ति विप्रेषु यतेषु भूयः ॥ १२-३०७-१११ (७७८६३)
हित्वा च देहं प्रविशन्ति मोक्षं

दिवौकसो द्यामिव पार्थ साङ्ख्याः ।
अतोऽधिकं तेऽभिरता महार्थे
साङ्ख्ये द्विजाः पार्थिव शिष्टजुष्टे ॥ १२-३०७-११२ (७७८६४)
तेषां न तिर्यग्गमनं हि दृष्टं
नार्वाग्गतिः पापकृताधिवासः ।
च चाबुधानामपि ते द्विजातयो
ये ज्ञानमेतन्नृपतेऽनुरक्ताः ॥ १२-३०७-११३ (७७८६५)
साङ्ख्यं विशालं परमं पुराणं
महार्णवं विमलमुदाहरन्ति
कृत्स्नं च साङ्ख्यं नृपते महात्मा
नारायणो धारयतेऽप्रमेयम् ॥ १२-३०७-११४ (७७८६६)
एतन्मयोक्तं नरदेव तत्त्वं
नारायणो विश्वमिदं पुराणम् ।
स सर्गकाले च करोति सर्गं
संहारकाले च तदत्ति भूयः ॥ १२-३०७-११५ (७७८६७)
संहृत्य सर्वं निजदेहसंस्थं
कृत्वाऽप्सु शेते जगदन्तरात्मा ॥ ॥ १२-३०७-११६ (७७८६८)

इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि
सप्ताधिकत्रिशततमोऽध्यायः ॥ ३०७.।
Mahabharata - Shanti Parva - Chapter Footnotes

१२-३०७-१ सम्यक्त्वया यज्ञपते इति थ ।पाठः ॥
१२-३०७-४ यस्मिन्न विश्रमाः इति थ ।पाठः ॥
१२-३०७-५ दोषान्विषयजान्नृपेति थ ।पाठः ॥
१२-३०७-९ विषयांश्च प्रणाशान्तान्ब्रह्मणो विषयांस्तथेति ध ।पाठः ॥
१२-३०७-१९ तनुं स्पर्शो इति झ ।पाठः ॥
१२-३०७-२० कोष्ठे उदरे ।देवीं पृथ्वीम् ॥
१२-३०७-२४ सत्वगुणं देहमिति झ ।पाठः ॥
१२-३०७-३६ उपप्लवान् उपरागान् ।तेजसः सूर्यस्य ॥
१२-३०७-३७ नराणां पतनं दृष्ट्वेति थ ।पाठः।बन्धूनां विप्रयोगं
चेति ट।पाठः।द्वन्द्वानां दम्पतीनाम् ॥
१२-३०७-३९ क्वचित्पुंसि ॥
१२-३०७-४० बहुमानं अत्यादरम् ।मध्यस्थतां औदासीन्यम् ॥
१२-३०७-४१ दौरात्म्यं बन्धहेतुताम् ॥
१२-३०७-४२ कुलेषु गृहेषु ॥

१२-३०७-४५ विज्ञाय गतयः पृथगिति थ । पाठः ॥
१२-३०७-४८ क्षयं वनानामिति थ । पाठः ॥
१२-३०७-५९ नलसारं नलतृणवदन्तःसारहीनम् ॥
१२-३०७-६० क्लेशप्रायं क्लेशबहुलम् ॥
१२-३०७-६५ स्पर्शद्विपमरिंदमेति ट । थ। पाठः ॥
१२-३०७-६७ व्याधिमहारुजमिति थ । पाठः ॥
१२-३०७-७६ तमसः परमां गतिमिति थ । पाठः ॥
१२-३०७-८३ मग्नस्य हि परं ज्ञानमिति झ । पाठः ॥
१२-३०७-८५ तथापि परमं तत्वमिति ट । थ। पाठः ॥
१२-३०७-१०४ सर्वे देवाश्च वेदाश्चेति ट । पाठः ॥

---

शन्तिपर्व-अध्यय३०८
॥ श्रीः ॥
१२.३०८. अध्यायः ३०८

Mahabharata - Shanti Parva - Chapter Topics
भीष्मेण युधिष्ठिरंप्रति
क्षराक्षरलक्षणप्रतिपादकजनकवसिष्ठसंवादानुवादः ॥ १. ।
Mahabharata - Shanti Parva - Chapter Text

१२-३०८-० (७७८६९)
युधिष्ठिर उवाच। १२-३०८-०क्ष् (६४८८)
किं तदक्षरमित्युक्तं यस्मान्नावर्तते पुनः ।
किंच तत्क्षरमित्युक्तं यस्मादावर्तते पुनः ॥ १२-३०८-१ (७७८७०)
अक्षरधरयोर्व्यक्तिं पृच्छाम्यरिनिषूदन ।
उपलब्धुं महाबाहो तत्त्वेन कुरुनन्दन ॥ १२-३०८-२ (७७८७१)
त्वं हि ज्ञाननिधिर्विप्रैरुच्यसे वेदपारगैः ।
ऋषिभिश्च महाभागैर्यतिभिश्च महात्मभिः ॥ १२-३०८-३ (७७८७२)
शेषमत्यं दिनानां ते दक्षिणायनभास्करे ।
आवृत्ते भगवत्यर्के गन्तासि परमां गतिम् ॥ १२-३०८-४ (७७८७३)
त्वयि प्रतिगते श्रेयः कुतः श्रोष्यामहे वयम् ।
कुरुवंशप्रदीपस्त्वं ज्ञानदीपेन दीप्यसे ॥ १२-३०८-५ (७७८७४)
तदेतच्छ्रोतुमिच्छामि त्वत्तः कुरुकुलोद्वह ।
न तृष्यामीह राजेन्द्र शृण्वन्नमृतमीदृशम् ॥ १२-३०८-६ (७७८७५)
भीष्म उवाच। १२-३०८-७क्ष् (६४८९)
अत्र ते वर्तयिष्यामि इतिहासं पुरातनम् ।
वसिष्ठस्य च संवादं करालजनकस्य च ॥ १२-३०८-७ (७७८७६)

वसिष्ठं श्रेष्ठमासीनमृषीणां भास्करद्युतिम् ।
पप्रच्छ जनको राजा ज्ञानं नैःश्रेयसं परम् ॥ १२-३०८-८ (७७८७७)
परमध्यात्मकुशलमध्यात्मगतिनिश्चयम् ।
मैत्रावरुणिमासीनमभिवाद्य कृताञ्जलिः ॥ १२-३०८-९ (७७८७८)
स्वक्षरं प्रश्रितं वाक्यं मधुरं चाप्यनुल्वणम् ।
पप्रच्छर्षिवरं राजा करालजनकः पुरा ॥ १२-३०८-१० (७७८७९)
भगवञ्श्रोतुमिच्छामि परं ब्रह्म सनातनम् ।
यस्मान्न पुनरावृत्तिमाप्नुवन्ति मनीषिणः ॥ १२-३०८-११ (७७८८०)
यच्च तत्क्षरमित्युक्तं यत्रेदं क्षरते जगत् ।
यच्चाक्षरमिति प्रोक्तं शिवं क्षेम्यमनामयम् ॥ १२-३०८-१२ (७७८८१)
वसिष्ठ उवाच। १२-३०८-१३क्ष् (६४९०)
श्रूयतां पृथिवीपाल क्षरतीदं यथा जगत् ।
यन्न क्षरति पूर्वेण यावत्कालेन चाप्यथ ॥ १२-३०८-१३ (७७८८२)
युगं द्वादशसाहस्रं कल्पं विद्धि चतुर्युगम् ।
दशकल्पशतावृत्तमहस्तद्ब्राह्ममुच्यते ॥ १२-३०८-१४ (७७८८३)
रात्रिश्चैतावती राजन्यस्यान्ते प्रतिबुध्यते ।
सृजत्यनन्तकर्माणं महान्तं भूतमग्रजम् ॥ १२-३०८-१५ (७७८८४)
मूर्तिमन्तममूर्तात्मा विश्वं शंभुः स्वयंभुवम् ।
अणिमा लघिमा प्राप्तिरीशानं ज्योतिरव्ययम् ॥ १२-३०८-१६ (७७८८५)
सर्वतः पाणिपादं तत्सर्वतोक्षिशिरोमुखम् ।
सर्वतः श्रुतिमल्लोके सर्वमावृत्य तिष्ठति ॥ १२-३०८-१७ (७७८८६)
हिरण्यगर्भो भगवानेष बुद्धिरिति स्मृतः ।
महानिति च योगेषु विरिञ्चिरिति चाप्यजः ॥ १२-३०८-१८ (७७८८७)
साङ्ख्ये च पठ्यते शास्त्रे नामभिर्बहुधात्मकः ।
विचित्ररूपो विश्वात्मा एकाक्षर इति स्मृतः ॥ १२-३०८-१९ (७७८८८)
वृतं नैकात्मकं येन कृतं त्रैलोक्यमात्मना ।
तथैव बहुरूपत्वाद्विश्वरूप इति स्मृतः ॥ १२-३०८-२० (७७८८९)
एष वै विक्रियापन्नः सृजत्यात्मानमात्मना ।
अहंकारं महातेजाः प्रजापतिरंकृतम् ॥ १२-३०८-२१ (७७८९०)
अव्यक्ताद्व्यक्तमापन्नं विद्यासर्गं वदन्ति तम् ।
महान्तं चाप्यहंकारमविद्यासर्गमेव च ॥ १२-३०८-२२ (७७८९१)
अपरश्च परश्चैव समुत्पन्नौ तथैकतः ।
विद्याविद्येति विख्याते श्रुतिशास्त्रार्थचिन्तकैः ॥ १२-३०८-२३ (७७८९२)
भूतसर्गमहंकारात्तृतीयं विद्धि पार्थिव ।
अहंकारेषु सर्वेषु चतुर्थं विद्धि वैकृतम् ॥ १२-३०८-२४ (७७८९३)
वायुर्ज्योतिरथाकाशमापोऽथ पृथिवी तथा ।

शब्दः स्पर्शश्च रूपं च रसो गन्धस्तथैव च ॥ १२-३०८-२५ (७७८९४)
एवं युगपदुत्पन्नं दशवर्गमसंशयम् ।
पञ्चमं विद्धि राजेन्द्र भौतिकं सर्गमर्थवत् ॥ १२-३०८-२६ (७७८९५)
श्रोत्रं त्वक्चक्षुषी जिह्वा घ्राणमेव च पञ्चमम् ।
वाक्च हस्तौ च पादौ च पायुर्मेढ्रं तथैव च ॥ १२-३०८-२७ (७७८९६)
बुद्धीन्द्रियाणि चैतानि तथा कर्मेन्द्रियाणि च ।
संभूतानीह युगपन्मनसा सह पार्थिव ॥ १२-३०८-२८ (७७८९७)
एषा तत्त्वचतुर्विंशत्सर्वाकृतिषु वर्तते ।
यां ज्ञात्वा नाभिशोचन्ति ब्राह्मणास्तत्त्वदर्शिनः ॥ १२-३०८-२९ (७७८९८)
एतद्देहं समाख्यानं त्रैलोक्ये सर्वदेहिषु ।
वेदितव्यं नरश्रेष्ठ सदेवनरदानवे ॥ १२-३०८-३० (७७८९९)
सयक्षभूतगन्धर्वे सकिन्नरमहोरगे ।
सचारणपिशाचे वै सदेवर्षिनिशाचरे ॥ १२-३०८-३१ (७७९००)
सदंशकीटमशके सपूतिकृमिमूषिके ।
शुनि श्वपाके चैणेये सचाण्डाले सपुल्कसे ॥ १२-३०८-३२ (७७९०१)
हस्त्यश्वखरशार्दूले सवृके गवि चैव ह ।
यच्च मूर्तिमयं किंचित्सर्वत्रैतन्निदर्शनम् ॥ १२-३०८-३३ (७७९०२)
जले भुवि तथाऽऽकाशे नान्यत्रेति विनिश्चयः ।
स्थानं देहवतामस्ति इत्येवमनुशुश्रुम ॥ १२-३०८-३४ (७७९०३)
कृत्स्नमेतावतस्तात क्षरते व्यक्तसंज्ञितम् ।
अहन्यहनि भूतात्मा ततः क्षर इति स्मृतः ॥ १२-३०८-३५ (७७९०४)
एतद्धि क्षरमित्युक्तं क्षरतीदं यथा जगत् ।
जगन्मोहात्मकं प्राहुरव्यक्तं व्यक्तसंज्ञकम् ॥ १२-३०८-३६ (७७९०५)
महांश्चैवाग्रजो नित्यमेतत्क्षरनिदर्शनम् ।
कथितं ते महाराजन्यस्मान्नावर्तते पुनः ॥ १२-३०८-३७ (७७९०६)
पञ्चविंशतिमो विष्णुर्निस्तत्त्वस्तत्त्वसंज्ञितः ।
तत्त्वसंश्रयणादेतत्तत्वमाहुर्मनीषिणः ॥ १२-३०८-३८ (७७९०७)
यन्मर्त्यमसृजद्व्यक्तं तत्तन्मूर्त्यधितिष्ठति ।
चतुर्विंशतिमोऽव्यक्तो ह्यमूर्तः पञ्चविंशकः ॥ १२-३०८-३९ (७७९०८)
स एव हृदि सर्वासु मूर्तिष्वात्मावतिष्ठते ।
चेतयंश्चेतनान्नित्यं सर्वमूर्तिरमूर्तिमान् ॥ १२-३०८-४० (७७९०९)
सर्वप्रत्ययधर्मिण्यां स सर्गः प्रत्ययात्मकः ।
गोचरे वर्तते नित्यं निर्गुणो गुणसंज्ञिते ॥ १२-३०८-४१ (७७९१०)
एवमेष महानात्मा सर्गप्रलयकोविदः ।
विकुर्वाणः प्रकृतिमानभिमन्यत्यबुद्धिमान् ॥ १२-३०८-४२ (७७९११)
तमः सत्वरजोयुक्तस्तासु तास्विह योनिषु ।

लीयते प्रतिबुद्धत्वादबुद्धजनसेवनात् ॥ १२-३०८-४३ (७७९१२)
सहवासनिवासात्मा नान्योऽहमिति मन्यते ।
योऽहं सोहमिति ह्युक्त्वा गुणानेवानुवर्तते ॥ १२-३०८-४४ (७७९१३)
तमसा तामसान्भावान्विविधान्प्रतिपद्यते ।
रजसा राजसांश्चैव सात्विकान्सत्वसंश्रयात् ॥ १२-३०८-४५ (७७९१४)
शुक्ललोहितकृष्णानि रूपाण्येतानि त्रीणि तु ।
सर्वाण्येतानि रूपाणि यानीह प्राकृतानि वै ॥ १२-३०८-४६ (७७९१५)
तामसा निरयं यान्ति राजसा मानुपानथ ।
सात्विका देवलोकाय गच्छन्ति सुखभागिनः ॥ १२-३०८-४७ (७७९१६)
निष्कैवल्येन पापेन तिर्यग्योनिमवाप्नुयात् ।
पुण्यपापेन मानुष्यं पुण्येनैकेन देवताः ॥ १२-३०८-४८ (७७९१७)
एवमव्यक्तविषयं क्षरमाहुर्मनीषिणः ।
पञ्चविंशतिमो योऽयं ज्ञानादेव प्रवर्तते ॥ ॥ १२-३०८-४९ (७७९१८)

इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि
अष्टाधिकत्रिशततमोऽध्यायः ॥ ३०८.।

Mahabharata - Shanti Parva - Chapter Footnotes

१२-३०८-५ ज्ञानद्रव्येण दीप्यस इति ड ।ध।पाठः ॥
१२-३०८-७ करालनामाजनकः करालजनकस्तस्य ।एतत्ते वर्तयिष्यामीति ट।ड।थ।पाठः ॥
१२-३०८-९ कुशलं ऊहापोहसमर्थम् ।गतिरनुभवस्तेन निश्चयोऽस्यास्तीति तथा।मैत्रावरुणिं वसिष्ठम् ॥
१२-३०८-२२ महतश्चाप्यहंकारमिति ड ।ध।पाठः ॥
१२-३०८-२३ अबिधिश्च विधिश्चैवेति झ ।पाठः।श्रुतिश्चाध्यात्मचिन्तकैरिति ड।थ।ध।पाठ ॥
१२-३०८-३७ एतत्क्षेत्रनिदर्शनमिति ट ।ड।ध।पाठः ॥
१२-३०८-३९ यां तु मूर्तिं सृजत्येषा तां मूर्तिमधितिष्ठतीति ट ।पाठः ॥
१२-३०८-४१ सर्गप्रलयधर्मिण्या ससर्गप्रलयात्मक इति झ ।पाठः ॥
१२-३०८-४२ सर्गप्रत्ययकोविद इति ट ।ध।पाठः।अक्षरः क्षरमात्मानमभिमज्जत्यबुद्धिमानिति थ।पाठः ॥
१२-३०८-४४ सहवासविनाशित्वान्नान्योऽहमिति झ ।पाठः ॥
१२-३०८-४६ जातानि प्राकृतानि वै इति ड ।थ।पाठः।जानीहि प्राकृतानि वै इति ध।पाठः ॥

---

शन्तिपर्व-अध्यय३०९
॥ श्रीः ॥

## १२.३०९. अध्यायः ३०९

Mahabharata - Shanti Parva - Chapter Topics
भीष्मेण युधिष्ठिरंप्रति
जीवानामज्ञाननिमित्तकानर्थप्राप्त्यादिप्रतिपादकवसिष्ठकराल-
जनकसंवादानुवादः ॥ १.।
Mahabharata - Shanti Parva - Chapter Text

१२-३०९-० (७७९१९)
वसिष्ठ उवाच। १२-३०९-०क्ष् (६४९१)
एवमप्रतिबुद्धत्वादबुद्धमनुवर्तनात् ।
देहाद्देहसहस्राणि तथा समभिपद्यते ॥ १२-३०९-१ (७७९२०)
तिर्यग्योनिसहस्रेषु कदाचिद्देवतास्वपि ।
उपपद्यति संयोगाद्गुणैः सह गुणक्षयात् ॥ १२-३०९-२ (७७९२१)
मानुषत्वाद्दिवं याति दिवो मानुष्यमेति च ।
मानुष्यान्निरयस्थानमनन्तं प्रतिपद्यते ॥ १२-३०९-३ (७७९२२)
कोशकारो यथाऽऽत्मानं कीटः समनुरुन्धति ।
सूत्रतन्तुगुणैर्नित्यं तथाऽयमगुणो गुणैः ॥ १२-३०९-४ (७७९२३)
द्वन्द्वमेति च निर्द्वन्द्वस्तासु तास्विह योनिषु ।
शीर्षरोगेऽक्षिरोगे च दन्तशूले गलग्रहे ॥ १२-३०९-५ (७७९२४)
जलोदरे तृषारोगे ज्वरगण्डे विषूचके ।
श्वित्रकुष्ठेऽग्निदग्धे च सिध्मापस्मारयोरपि ॥ १२-३०९-६ (७७९२५)
यानि चान्यानि द्वन्द्वानि प्राकृतानि शरीरिषु ।
उत्पद्यन्ते विचित्राणि तान्येषोऽप्यभिमन्यते ॥ १२-३०९-७ (७७९२६)
अभिमन्यत्यभीमानात्तथैव सुकृतान्यपि ॥ १२-३०९-८ (७७९२७)
शुक्लवासाश्च दुर्वासाः शायी नित्यमधस्तथा ।
मण्डूकशायी च तथा वीरासनगतस्तथा ॥ १२-३०९-९ (७७९२८)
चीरधारणमाकाशे शयनं स्थानमेव च ।
इष्टकाप्रस्तरे चैव कण्टकप्रस्तरे तथा ॥ १२-३०९-१० (७७९२९)
भस्मप्रस्तरशायी च भूमिशय्याऽनुलेपनः ।
वीरस्थानाम्बुपङ्के च शयनं फलकेषु च ॥ १२-३०९-११ (७७९३०)
विविधासु च शय्यासु फलगृद्ध्यान्वितस्तथा ।
मुञ्जमेखलनग्नत्वं क्षौमकृष्णाजिनानि च ॥ १२-३०९-१२ (७७९३१)
शणवालपरीधानो व्याघ्रचर्मपरिच्छदः ।
सिंहतचर्मपरीधानः पट्टवासास्तथैव च ॥ १२-३०९-१३ (७७९३२)
फलकपरिधानश्च तथा कण्टकवस्त्रधृत् ।

कीटकार्पासवसनश्चीरवासास्तथैव च ॥ १२-३०९-१४ (७७९३३)
वस्त्राणि चान्यानि बहून्यभिमन्यत्यबुद्धिमान् ।
भोजनानि विचित्राणि रत्नानि विविधानि च ॥ १२-३०९-१५ (७७९३४)
एकवस्त्रान्तराशित्वमेककालिकभोजनम् ।
चतुर्थाष्टमकालश्च षष्ठकालिक एव च ॥ १२-३०९-१६ (७७९३५)
षड्रात्रभोजनश्चैव तथैवाष्टाहभोजनः ।
सप्तरात्रदशाहारो द्वादशाहिकभोजनः ॥ १२-३०९-१७ (७७९३६)
मासोपवासी मूलाशी फलाहारस्तथैव च ।
वायुभक्षोऽम्बुपिण्याकदधिगोमयभोजनः ॥ १२-३०९-१८ (७७९३७)
गोमूत्रभोजनश्चैव शाकपुष्पाद एव च ।
शेवालभोजनश्चैव तथाऽऽचामेन वर्तयन् ॥ १२-३०९-१९ (७७९३८)
वर्तयञ्शीर्णपर्णैश्च प्रकीर्णफलभोजनः ।
विविधानि च कृच्छ्राणि सेवते सिद्धिकाङ्क्षया ॥ १२-३०९-२० (७७९३९)
चान्द्रायणानि विधिवल्लिङ्गानि विविधानि च ।
चातुराश्रम्यपन्थानमाश्रयत्यपथानपि ॥ १२-३०९-२१ (७७९४०)
उपाश्रमानप्यपरान्पाषण्डान्विविधानपि ।
विविक्ताश्च शिलाच्छायास्तथा प्रस्रवणानि च ॥ १२-३०९-२२ (७७९४१)
पुलिनानि विविक्तानि विविक्तानि वनानि च ।
देवस्थानानि पुण्यानि विविक्तानि सरांसि च ॥ १२-३०९-२३ (७७९४२)
विविक्ताश्चापि शैलानां गुहा गृहनिभोपमाः ।
विविक्तानि च जप्यानि व्रतानि विविधानि च ॥ १२-३०९-२४ (७७९४३)
नियमान्विविधांश्चापि विविधानि तपांसि च ।
यज्ञांश्च विविधाकारान्विधींश्च विविधांस्तथा ॥ १२-३०९-२५ (७७९४४)
वणिक्पथं द्विजक्षत्रं वैश्यं शूद्रांस्तथैव च ।
दानं च विविधाकारं दीनान्धकृपणादिषु ॥ १२-३०९-२६ (७७९४५)
अभिमन्यत्यसंबोधात्तथैव त्रिविधान्गुणान् ।
सत्वं रजस्तमश्चैव धर्मार्थौ काम एव च ॥ १२-३०९-२७ (७७९४६)
प्रकृत्याऽऽत्मानमेवात्मा एवं प्रवि भजत्युत ।
स्वधाकारवषट्कारौ स्वाहाकारनमस्क्रियाः ॥ १२-३०९-२८ (७७९४७)
याजनाध्यापनं दानं तथैवाहुः प्रतिग्रहम् ।
यजनाध्ययने चैव यच्चान्यदपि किंचन ॥ १२-३०९-२९ (७७९४८)
जन्ममृत्युविवादे च तथा विशसनेऽपि च ।
शुभाशुभमयं सर्वमेतदाहुः क्रियाफलम् ॥ १२-३०९-३० (७७९४९)
प्रकृतिः कुरुते देवी भवं प्रलयमेव च ।
दिवसान्ते गुणानेतानभ्येत्यैकोऽवतिष्ठते ॥ १२-३०९-३१ (७७९५०)
रश्मिजालमिवादित्यस्तत्तत्काले नियच्छति ।

एवमेषोऽसकृत्सर्वं क्रीडार्थमभिमन्यते ॥ १२-३०९-३२ (७७९५१)
आत्मरूपगुणानेतान्विविधान्हृदयप्रियान् ।
एवमेव विकुर्वाणः सर्गप्रलयधर्मिणी ॥ १२-३०९-३३ (७७९५२)
क्रियां क्रियापथे रक्तस्त्रिगुणांस्त्रिगुणाधिपः ।
क्रियां क्रियापथोपेतस्तथा तदभिमन्यते ॥ १२-३०९-३४ (७७९५३)
प्रकृत्या सर्वमेवेदं जगदन्धीकृतं विभो ।
रजसा तमसा चैव व्याप्तं सर्वमनेकधा ॥ १२-३०९-३५ (७७९५४)
एवं द्वन्द्वान्यथैतानि वर्तन्ते मयि नित्यशः ।
ममैवैतानि जायन्ते धावन्ते तानि मामिति ॥ १२-३०९-३६ (७७९५५)
निस्तर्तव्यान्यथैतानि सर्वाणीति नराधिप ।
मन्यतेऽयं ह्यबुद्धित्वात्तथैव सुकृतान्यपि ॥ १२-३०९-३७ (७७९५६)
भोक्तव्यानि मयैतानि देवलोकगतेन वै ।
इहैव चैनं भोक्ष्यामि शुभाशुभफलोदयम् ॥ १२-३०९-३८ (७७९५७)
पुण्यमेव तु कर्तव्यं तत्कृत्वा सुसुखं मम ।
यावदन्तं च मे सौख्यं जात्यां जात्यां भविष्यति ॥ १२-३०९-३९ (७७९५८)
भविष्यति च मे दुःखं कृतेनेहाप्यनन्तकम् ।
महद्दुःखं हि मानुष्यं निरये चापि मज्जनम् ॥ १२-३०९-४० (७७९५९)
निरयाच्चापि मानुष्यं कालेनैष्याम्यहं पुनः ।
मनुष्यत्वाच्च देवत्वं देवत्वात्पौरुषं पुनः ॥ १२-३०९-४१ (७७९६०)
मनुष्यत्वाच्च निरयं पर्यायेणोपगच्छति ।
य एवं वेत्ति नित्यं वै निरात्मात्मगुणैर्वृतः ॥ १२-३०९-४२ (७७९६१)
तेन देवमनुष्येषु निरये चोपपद्यते ।
ममत्वेनावृतो नित्यं तत्रैव परिवर्तते ॥ १२-३०९-४३ (७७९६२)
सर्गकोटिसहस्राणि मरणान्तासु योनिषु ।
य एवं कुरुते कर्म शुभाशुभफलात्मकम् ॥ १२-३०९-४४ (७७९६३)
स एवं फलमाप्नोति त्रिषु लोकेषु मूर्तिमान् ।
प्रकृतिः कुरुते कर्म शुभाशुभफलात्मकम् ।
प्रकृतिश्च तदश्नाति त्रिषु लोकेषु कामगा ॥ १२-३०९-४५ (७७९६४)
तिर्यग्योनिमनुष्यत्वे देवलोके तथैव च ।
त्रीणि स्थानानि चैतानि जानीयात्प्राकृतानिह ॥ १२-३०९-४६ (७७९६५)
अलिङ्गां प्रकृतिं त्वाहुर्लिङ्गैरनुमिमीमहे ।
तथैव पौरुषं लिङ्गमनुमानाद्धि गम्यते ॥ १२-३०९-४७ (७७९६६)
स लिङ्गान्तरमासाद्य प्राकृतं लिङ्गमव्रणम् ।
व्रणद्वाराण्यधिष्ठाय कर्मणाऽऽत्मनि पश्यति ॥ १२-३०९-४८ (७७९६७)
श्रोत्रादीनि तु सर्वाणि पञ्च कर्मेन्द्रियाण्यथ ।
वागादीनि प्रवर्तन्ते गुणेष्विह गुणैः सह ॥ १२-३०९-४९ (७७९६८)

अहमेतानि वै सर्वं मय्येतानीन्द्रियाणि ह ।
निरिन्द्रियो हि मन्तेत व्रणवानस्मि निर्व्रणः ॥ १२-३०९-५० (७७९६९)
अलिङ्गो लिङ्गमात्मानमकालः कालमात्मनः ।
असत्वं सत्वमात्मानमतत्त्वं तत्त्वमात्मनः ॥ १२-३०९-५१ (७७९७०)
अमृत्युर्मृत्युमात्मानमचरश्चरमात्मनः ।
अक्षेत्रः क्षेत्रमात्मानमसर्गः सर्गमात्मनः ॥ १२-३०९-५२ (७७९७१)
अतपास्तप आत्मानमगतिर्गतिमात्मनः ।
अभवो भवमात्मानमभयो भयमात्मनः ॥ १२-३०९-५३ (७७९७२)
ग्अकर्ता कर्तृ चात्मानमबीजो बीजमात्मनः।'
अक्षरः क्षरमात्मानमबुद्धिस्त्वभिमन्यते ॥ ॥ १२-३०९-५४ (७७९७३)

इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि
नवाधिकत्रिशततमोऽध्यायः ॥ ३०९.।
Mahabharata - Shanti Parva - Chapter Footnotes

१२-३०९-१ अबुद्धमनुवर्तत इति झ ।ट। पाठः। अबुद्धं अबोधं
अज्ञानम्। भावे निष्ठा न तेन नञ्समासः ॥
१२-३०९-२ गुणक्षयात् गुणसामर्थ्यात् । क्षि
क्षयैश्वर्ययोरित्यैश्वर्यार्थस्य क्षिधातो रूपम् ॥
१२-३०९-६ यक्ष्मापस्मारयोरपि इति ध ।पाठः ॥
१२-३०९-७ तान्येषोऽप्यभिपद्यते इति ध ।पाठः ॥
१२-३०९-९ मण्डूकवत्पाणिपादं संकोच्यन्युब्जः शेते इति मण्डूकशायी ॥
१२-३०९-१० आकाशे निरावरणेदेशे ॥
१२-३०९-१२ फलगृद्ध्या फलाशा ॥
१२-३०९-१३ शाणीवालपरीधान इति झ ।पाठः ॥
१२-३०९-१४ फलकं भूर्जत्वगादि ॥
१२-३०९-१९ आचामेन भक्तमण्डेन ॥
१२-३०९-२४ गृहेषु ये निभाः नितरां भान्ति ते ।दिव्यगृहोपमा इत्यर्थः ॥
१२-३०९-३० विशसने संग्रामे ॥
१२-३०९-३१ भवं सृष्टिम् ।अभ्येत्य ग्रसित्वा ॥
१२-३०९-३४ क्रियापये कर्ममार्गे ॥
१२-३०९-३९ यावद्दानस्य मे सौख्यं इति ट ।ड।थ।पाठः ॥
१२-३०९-५१ अगतिर्गतिमात्मन इति ध ।पाठः ॥

---

शन्तिपर्व-अध्यय३१०
॥ श्रीः ॥
१२.३१०. अध्यायः ३१०

Mahabharata - Shanti Parva - Chapter Topics
भीष्मेण युधिष्ठिरंप्रति प्राणिनां शरीरादिसंबन्धादिप्रकारप्रतिपादकवसिष्ठकरालजनकसंवादानुवादः ॥ १.।
Mahabharata - Shanti Parva - Chapter Text

१२-३१०-० (७७९७४)
वसिष्ठ उवाच। १२-३१०-०क्ष् (६४९२)
एवमप्रतिबुद्धत्वादबुद्धजनसेवनात् ।
सर्गकोटिसहस्राणि मरणान्तानि गच्छति ॥ १२-३१०-१ (७७९७५)
धाम्ना धामसहस्राणि पतनान्तानि गच्छति ।
तिर्यग्योनौ मनुष्यत्वे देवलोके तथैव च ॥ १२-३१०-२ (७७९७६)
चन्द्रमा इव भूतानां पुनस्तत्र सहस्रशः ।
लीयतेऽप्रतिबुद्धत्वादेवमेष ह्यबुद्धिमान् ॥ १२-३१०-३ (७७९७७)
कला पञ्चदशी योनिस्तद्धाम इति मन्यते ।
नित्यमेतं विजानीहि सोमं वै षौडशीं कलाम् ॥ १२-३१०-४ (७७९७८)
कलया जायते जन्तुः पुनः पुनरबुद्धिमान् ।
धाम तस्योपयुञ्जन्ति भूय एवोपजायते ॥ १२-३१०-५ (७७९७९)
षोडशी तु कला सूक्ष्मा स सोम उपधार्यताम् ।
न तूपयुज्यते देवैर्देवानुपयुनक्ति सा ॥ १२-३१०-६ (७७९८०)
एतामक्षपयित्वा हि जायते नृपसत्तम ।
सा ह्यस्य प्रकृतिर्दृष्टा तत्क्षयान्मोक्ष उच्यते ॥ १२-३१०-७ (७७९८१)
तदेवं षोडशकलं देहमव्यक्तसंज्ञिकम् ।
ममायमिति मन्वानस्तत्रैव परिवर्तते ॥ १२-३१०-८ (७७९८२)
पञ्चविंशस्तथैवात्मा तस्यैवाप्रतिबोधनात् ।
विमलस्य विशुद्धस्य शुद्धामलनिषेवणात् ॥ १२-३१०-९ (७७९८३)
अशुद्ध एव शुद्धात्मा तादृग्भवति पार्थिव ।
अबुद्धसेवनाच्चापि बुद्धोऽप्यबुद्धतां व्रजेत् ॥ १२-३१०-१० (७७९८४)
तथैवाप्रतिबुद्धोऽपि विज्ञेयो नृपसत्तम ।
प्रकृतेस्त्रिगुणायास्तु सेवनात्प्राकृतो भवेत् ॥ १२-३१०-११ (७७९८५)
करालजनक उवाच। १२-३१०-१२क्ष् (६४९३)
अक्षरक्षरयोरेषु द्वयोः संबन्ध उच्यते ।
स्त्रीपुंसोश्चापि भगवन्संबन्धस्तद्वदुच्यते ॥ १२-३१०-१२ (७७९८६)
ऋते तु पुरुषं नेह स्त्री गर्भं धारयत्युत ।
ऋते स्त्रियं न पुरुषो रूपं निर्वर्तयेत्तथा ॥ १२-३१०-१३ (७७९८७)

अन्योन्यस्याभिसंबन्धादन्योन्यगुणसंश्रयात् ।
रूपं निर्वर्तयत्येतदेवं सर्वासु योनिषु ॥ १२-३१०-१४ (७७९८८)
स्त्रीपुंसोरभिसंबन्धादन्योन्यगुणसंश्रयात् ।
ऋतौ निर्वर्त्यते रूपं तद्वक्ष्यामि निदर्शनम् ॥ १२-३१०-१५ (७७९८९)
ये गुणाः पुरुषस्येह ये च मातृगुणास्तथा ।
अस्थि स्नायु च मज्जानं जानीमः पैतृकान्द्विज ॥ १२-३१०-१६ (७७९९०)
त्वङ्भांसं शोणितं चेति मातृजान्यपि शुश्रुम ।
एवमेताद्द्विजश्रेष्ठ वेदे शास्त्रे च पठ्यते ॥ १२-३१०-१७ (७७९९१)
प्रमाणं यच्च वेदोक्तं शास्त्रोक्तं यच्च पठ्यते ।
वेदशास्त्रप्रमाणानां प्रमाणं तत्सनातनम् ॥ १२-३१०-१८ (७७९९२)
श्अन्योन्यगुणसंरोधादन्योन्यगुणसंश्रयात् ।ऽ
एवमेवाभिसंबद्धौ नित्यं प्रकृतिपूरुषौ ॥ १२-३१०-१९ (७७९९३)
पश्यामि भगवंस्तस्मान्मोक्षधर्मो न विद्यते ।
अथवाऽनन्तरकृतं किंचिदेव निदर्शनम् ।
तन्ममाचक्ष्व तत्त्वेन प्रत्यक्षो ह्यसि सर्वथा ॥ १२-३१०-२० (७७९९४)
मोक्षकामा वयं चापि काङ्क्षामो यदनामयम् ।
अदेहमजरं नित्यमतीन्द्रियमनीश्वरम् ॥ १२-३१०-२१ (७७९९५)
वसिष्ठ उवाच। १२-३१०-२२क्ष् (६४९४)
यदेतदुक्तं भवता देवशास्त्रनिदर्शनम् ।
एवमेतद्यथा चैतन्न गृह्णाति तथा भवान् ॥ १२-३१०-२२ (७७९९६)
धार्यते हि त्वया ग्रन्थ उभयोर्वेदशास्त्रयोः ।
न च ग्रन्थस्य तत्त्वज्ञो यथावत्त्वं नरेश्वरः ॥ १२-३१०-२३ (७७९९७)
यो हि वेदे च शास्त्रे च ग्रन्थधारणतत्परः ।
न च ग्रन्थार्थतत्त्वज्ञस्तस्य तद्धारणं वृथा ॥ १२-३१०-२४ (७७९९८)
मारं स वहते तस्य ग्रन्थस्यार्थं न वेत्ति यः ।
यस्तु ग्रन्थार्थतत्त्वज्ञो नास्य ग्रन्थगुणो वृथा ॥ १२-३१०-२५ (७७९९९)
ग्रन्थस्यार्थस्य पृष्टः संस्तादृशो वक्तुमर्हति ।
यथातत्त्वाभिगमनादर्थं तस्य स विन्दति ॥ १२-३१०-२६ (७८०००)
वस्तु संसत्सु कथयेद्ग्रन्थार्थस्थूलबुद्धिमान् ।
स कथं मन्दविज्ञानो ग्रन्थं वक्ष्यति निर्णयात् ॥ १२-३१०-२७ (७८००१)
निर्णयं चापि छिद्रात्मा न तं वक्ष्यति तत्त्वतः ।
सोपहास्यात्मतामेति यस्माच्चावाप्तवानपि ॥ १२-३१०-२८ (७८००२)
तस्मात्त्वं शृणु राजेन्द्र यथैतदनुदृश्यते ।
याथातथ्येन साङ्ख्येषु योगेषउ च महात्मसु ॥ १२-३१०-२९ (७८००३)
यदेव योगाः पश्यन्ति साङ्ख्यैस्तदवगम्यते ।
एकं साङ्ख्यं च योगं च यः पश्यति स बुद्धिमान् ॥ १२-३१०-३० (७८००४)

त्वङ्मांसं रुधिरं मेदः पित्तं मज्जा च स्नायु च ।
एतदैन्द्रियकं तात तद्भवानिदमाह माम् ॥१२-३१०-३१ (७८००५)
द्रव्याद्द्रव्यस्य निर्वृत्तिरिन्द्रियादिन्द्रियं तथा ।
देहाद्देहमवाप्नोति बीजाद्बीजं तथैव च ॥१२-३१०-३२ (७८००६)
निरिन्द्रियस्याबीजस्य निर्द्रव्यस्याप्यदेहिनः ।
कथं गुणा भविष्यन्ति निर्गुणत्वान्महात्मनः ॥१२-३१०-३३ (७८००७)
गुणा गुणेषु जायन्ते तत्रैव निविशन्ति च ।
एवं गुणाः प्रकृतितो जायन्ते निविशन्ति च ॥१२-३१०-३४ (७८००८)
त्वङ्मांसं रुधिरं मेदः पित्तं मज्जाऽस्थि स्नायु च ।
अष्टौ तान्यथ शुक्रेण जानीहि प्राकृतानि वै ॥१२-३१०-३५ (७८००९)
पुमांश्चैवापुमांश्चैव त्रैलिङ्ग्यं प्राकृतं स्मृतम् ।
न वा पुमान्पुमांश्चैव स लिङ्गीत्यभिधीयते ॥१२-३१०-३६ (७८०१०)
अलिङ्गात्प्रकृतिर्लिङ्गैरुपालभ्यति सात्मजैः ।
यथा पुष्पफलैर्नित्यमृतवो मूर्तयस्तथा ॥१२-३१०-३७ (७८०११)
एवमप्यनुमानेन ह्यलिङ्गमुपलभ्यते ।
पञ्चविंशतिमस्तात लिङ्गेषु नियतात्मकः ॥१२-३१०-३८ (७८०१२)
अनादिनिधनोऽनन्तः सर्वदर्शी निरामयः ।
केवलं त्वभिमानित्वादगुणेष्वगुणा उच्यते ॥१२-३१०-३९ (७८०१३)
गुणा गुणवतः सन्ति निर्गुणस्य कुतो गुणाः ।
तस्मादेवं विजानन्ति ये जना गुणदर्शिनः ॥१२-३१०-४० (७८०१४)
यदा त्वेष गुणनिव प्रकृतावनुमन्यते ।
तदा स गुणवानेव परमं नानुपश्यति ॥१२-३१०-४१ (७८०१५)
यत्तं बुद्धेः परं प्राहुः साङ्ख्ययोगाश्च सर्वशः ।
बुध्यमानं महाप्राज्ञमबुद्धपरिवर्जनात् ॥१२-३१०-४२ (७८०१६)
अप्रबुद्धमथाव्यक्तं गुणं प्राहुरनीश्वरम् ।
निर्गुणं चेश्वरं नित्यमधिष्ठातारमेव च ॥१२-३१०-४३ (७८०१७)
प्रकृतेश्च गुणानां च पञ्चविंशतिकं बुधाः ।
साङ्ख्ययोगे च कुशला बुध्यन्ते परमैषिणः ॥१२-३१०-४४ (७८०१८)
यदा प्रबुद्धास्त्वव्यक्तमवस्थाजन्मभीरवः ।
बुध्यमानं प्रबुद्धेन गमयन्ति समन्ततः ॥१२-३१०-४५ (७८०१९)
एतन्निदर्शनं सम्यगसम्यक्चार्थदर्शनम् ।
बुध्यमानाप्रबुद्धाना पृथग्पृथगरिंदम् ॥१२-३१०-४६ (७८०२०)
परस्परेणैतदुक्तं क्षराक्षरनिदर्शनम् ।
एकत्वमक्षरं प्राहुर्नानात्वं क्षरमुच्यते ॥१२-३१०-४७ (७८०२१)
पञ्चविंशतिनिष्ठोऽयं यदा सम्यक्प्रचक्षते ।
एकत्वं दर्शनं चास्य नानात्वं चाप्यदर्शनम् ॥१२-३१०-४८ (७८०२२)

तत्त्वनिस्तत्त्वयोरेतत्पृथग्नेव निदर्शनम् ।
पञ्चविंशतितत्वं तु तत्त्वमाहुर्मनीषिणः ॥ १२-३१०-४९ (७८०२३)
निस्तत्त्वं पञ्चविंशस्य परमाहुर्निदर्शनम् ।
वर्गस्य वर्गमाचारं तत्त्वं तत्त्वात्सनातनम् ॥ ॥ १२-३१०-५० (७८०२४)

इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि
दशाधिकत्रिशततमोऽध्यायः ॥ ३१०.।
Mahabharata - Shanti Parva - Chapter Footnotes

१२-३१०-९ तस्यैव प्रतिसाधनात् इति ट ।थ। पाठः ॥
१२-३१०-११ तथैव प्रतिबुद्धोऽपीति थ ।ध। पाठः ॥
१२-३१०-१५ रत्यर्थमभिसंबन्धादिति ट ।पाठः ॥
१२-३१०-२७ न यः संसत्स्विति झ ।पाठः ॥
१२-३१०-२८ यस्माच्चैवात्मवानपीति झ ।पाठः ॥
१२-३१०-२९ योगेशेषु मह्यत्मस्विति ध ।पाठः ॥
१२-३१०-३३ निरिन्द्रियस्य बीजस्येति ट ।ड।थ।पाठः ॥
१२-३१०-३६ स्त्रीलिङ्गं माकृतं स्मृतमिति ड ।थ।पाठः ॥
१२-३१०-४२ यं तु बुद्धेः परं इति ट ।पाठः।यत्तद्बुद्धेरिति
झ।पाठः ॥
१२-३१०-४३ सगुणं प्राहुरीश्वरमिति ट ।पाठः।अगुणं प्राहुरिति
झ।पाठः ॥
१२-३१०-४६ असत्यत्वार्थदर्शनमिति ड।पाठः ।असक्त्वार्थदर्शनमिति
ट।थ।पाठः ॥
१२-३१०-४९ पञ्चविंशतिकत्वं तु इति ट
।पाठः।पञ्चविंशतिसर्गं तु इति झ।पाठः ॥

---

शन्तिपर्व-अध्यय३११
॥ श्रीः ॥
१२.३११. अध्यायः ३११

Mahabharata - Shanti Parva - Chapter Topics
भीष्मेण युधिष्ठिरंप्रति
साङ्ख्यप्रतिपादकवसिष्ठकरालजनकसंवादानुवादः ॥ १.।
Mahabharata - Shanti Parva - Chapter Text

१२-३११-० (७८०२५)
जनक उवाच।१२-३११-०क्ष् (६४९५)

मानात्वैकत्वमित्युक्तं त्वयैतदृषिसत्तम ।
पश्यामि वाभिसंदिग्धमेतयोर्वै निदर्शनम् ॥ १२-३११-१ (७८०२६)
तथाऽबुद्धप्रबुद्धाभ्यां बुध्यमानस्य चानघ ।
स्थूलबुद्ध्या न पश्यामि तत्त्वमेतन्न संशयः ॥ १२-३११-२ (७८०२७)
अक्षरक्षरयोर्युक्तं त्वया यदपि कारणम् ।
तदप्यस्थिरबुद्धित्वात्प्रनष्टमिव मेऽनघ ॥ १२-३११-३ (७८०२८)
तदेतच्छ्रोतुमिच्छामि नानात्वैकत्वदर्शनम् ।
प्रबुद्धमप्रबुद्धं च बुध्यमानं च तत्त्वतः ॥ १२-३११-४ (७८०२९)
विद्याविद्ये च भगवन्नक्षरं क्षरमेव च ।
साङ्ख्यं योगं च कार्त्स्न्येन पृथक्चैवापृथक्च ह ॥ १२-३११-५
(७८०३०)
वसिष्ठ उवाच। १२-३११-६क्ष् (६४९६)
हन्त ते संप्रवक्ष्यामि यदेतदनुपृच्छसि ।
योगकृत्यं महाराज पृथगेव शृणुष्व मे ॥ १२-३११-६ (७८०३१)
योगकृत्यं तु योगानां ध्यानमेव परं बलम् ।
तच्चापि द्विविधं ध्यानमाहुर्वेदविदो जनाः ॥ १२-३११-७ (७८०३२)
एकाग्रता च मनसः प्राणायामस्तथैव च ।
प्राणायामस्तु सगुणो निर्गुणो मनसस्तथा ॥ १२-३११-८ (७८०३३)
मूत्रोत्सर्गपुरीषे च भोजने च नराधिप ।
द्विकालं नाभियुज्जीत शेषं युञ्जीत तत्परः ॥ १२-३११-९ (७८०३४)
इन्द्रियाणीन्द्रियार्थेभ्यो निवर्त्य मनसा मुनिः ।
दशद्वादशभिर्वापि चतुर्विंशात्परं ततः ॥ १२-३११-१० (७८०३५)
तं चोदनाभिर्मतिमानात्मानं चोदयेदथ ।
तिष्ठन्तमजरं यं तु यत्तदुक्तं मनीषिभिः ॥ १२-३११-११ (७८०३६)
तैश्चात्मा सततं योज्य इत्येवमनुशुश्रुम् ।
द्रुतं ह्यहीनमनसो नान्यथेति विनिश्चयः ॥ १२-३११-१२ (७८०३७)
विमुक्तः सर्वसङ्गेभ्यो लध्वाहारो जितेन्द्रियः ॥
पूर्वरात्रेऽपररात्रे च धारयेत मनोऽऽत्मनि ॥ १२-३११-१३ (७८०३८)
स्थिरीकृत्येन्द्रियग्रामं मनसा मिथिलेश्वर ।
मनो बुद्ध्या स्थिरं कृत्वा पाषाण इव निश्चलः ॥ १२-३११-१४ (७८०३९)
स्थाणुवच्चाप्यकम्पः स्याद्दारुवच्चापि निश्चलः ।
बुधा विधिविधानज्ञास्तदा युक्तं प्रचक्षते ॥ १२-३११-१५ (७८०४०)
न शृणोति न चाघ्राति न रस्यति न पश्यति ।
न च स्पर्शं विजानाति न संकल्पयते मनः ॥ १२-३११-१६ (७८०४१)
न चाभिमन्यते किंचिन्न च बुध्यति काष्ठवत् ।
तदा प्रकृतिमापन्नं युक्तमाहुर्मनीषिणः ॥ १२-३११-१७ (७८०४२)

निर्वाते हि यथा दीप्यन्दीपस्तद्वत्प्रकाशते ।
निर्लिङ्गो विचलश्चोर्ध्वं न तिर्यग्गतिमाप्नुयात् ॥ १२-३११-१८ (७८०४३)
तदा तमनुपश्येत यस्मिन्दृष्टे तु कथ्यते ।
हृदयस्थोऽन्तरात्मेति ज्ञेयो ज्ञस्तात मद्विधैः ॥ १२-३११-१९ (७८०४४)
विधूम इव सप्तार्चिरादित्य इव रश्मिमान् ।
वैद्युतोऽग्निरिवाकाशे दृश्यतेऽऽत्मा तथाऽऽत्मनि ॥ १२-३११-२० (७८०४५)
संपश्यन्ति महात्मानो धृतिमन्तो मनीषिणः ।
ब्राह्मणा ब्रह्मयोनिस्था ह्ययोनिममृतात्मकम् ॥ १२-३११-२१ (७८०४६)
तदेवाहुरणुभ्योऽणु तन्महद्भ्यो महत्तरम् ।
तत्तत्र सर्वभूतेषु ध्रुवं तिष्ठन्न दृश्यते ॥ १२-३११-२२ (७८०४७)
बुद्धिद्रव्येण दृश्येत मनोदीपेन लोककृत् ।
महतस्तमसस्तात पारे तिष्ठन्न तामसः ॥ १२-३११-२३ (७८०४८)
स च मानस इत्युक्तस्तत्वज्ञैर्वेदपारगैः ।
विमलो वितमस्कश्च निर्लिङ्गोऽलिङ्गसंज्ञकः ॥ १२-३११-२४ (७८०४९)
योगमेतत्तु योगानां मन्ये योगस्य लक्षणम् ।
एवं पश्यं प्रपश्यन्ति आत्मस्थमजरं परम् ॥ १२-३११-२५ (७८०५०)
योगदर्शनमेतावदुक्तं ते तत्वतो मया ।
साङ्ख्याज्ञानं प्रवक्ष्यामि परिसंख्यानदर्शनम् ॥ १२-३११-२६ (७८०५१)
अव्यक्तमाहुः प्रकृतिं परां प्रकृतिवादिनः ।
तस्मान्महत्समुत्पन्नं द्वितीयं राजसत्तम ॥ १२-३११-२७ (७८०५२)
अहंकारस्तु महतस्तृतीय इति नः श्रुतम् ।
पञ्चभूतान्यहंकारादाहुः साङ्ख्यनिदर्शिनः ॥ १२-३११-२८ (७८०५३)
एताः प्रकृतयश्चाष्टौ विकाराश्चापि षोडश ।
पञ्च चैव विशेषा वै तथा पञ्चेन्द्रियाणि च ॥ १२-३११-२९ (७८०५४)
एतावदेव तत्त्वानां साङ्ख्या आहुर्मनीषिणः ।
साङ्ख्ये विधिविधानज्ञा नित्यं साङ्ख्यपथे रताः ॥ १२-३११-३० (७८०५५)
यस्माद्यदभिजायेत तत्तत्रैव प्रलीयते ।
लीयन्ते प्रतिलोमानि सृज्यन्ते चान्तरात्मना ॥ १२-३११-३१ (७८०५६)
अनुलोमेन जायन्ते लीयन्ते प्रतिलोमतः ।
गुणा गुणेषु सततं सागरस्योर्मयो यथा ॥ १२-३११-३२ (७८०५७)
सर्वप्रलय एतावान्प्रकृतेर्नृपसत्तम ।
एकत्वं प्रलये चास्य बहुत्वं च यदाऽसृजत् ॥ १२-३११-३३ (७८०५८)
एवमेव च राजेन्द्र विज्ञेयं ज्ञेयचिन्तकैः ।
अधिष्ठाता य इत्युक्तस्तस्याप्येतन्निदर्शनम् ॥ १२-३११-३४ (७८०५९)
एकत्वं च बहुत्वं च प्रकृतेरनुतत्त्ववान् ।
एकत्वं प्रलये चास्य बहुत्वं च प्रवर्तनात् ॥ १२-३११-३५ (७८०६०)

बहुधाऽऽत्मानमकरोत्प्रकृतिः प्रसावत्मिका ।
तच्च क्षेत्रं महानात्मा पञ्चविंशोऽधितिष्ठति ॥ १२-३११-३६ (७८०६१)
अधिष्ठातेति राजेन्द्र प्रोच्यते यतिसत्तमैः ।
अधिष्ठानादधिष्ठाता क्षेत्राणामिति नः श्रुतम् ॥ १२-३११-३७ (७८०६२)
क्षेत्रं जानाति चाव्यक्तं क्षेत्रज्ञ इति चोच्यते ।
अव्यक्तके पुरे शेते पुरुषश्चेति कथ्यते ॥ १२-३११-३८ (७८०६३)
अन्यदेव च क्षेत्रं स्यादन्यः क्षेत्रज्ञ उच्यते ।
क्षेत्रमव्यक्तमित्युक्तं ज्ञाता वै पञ्चविंशकः ॥ १२-३११-३९ (७८०६४)
अन्यदेव वचो ज्ञानं स्यादन्यज्ज्ञेयमुच्यते ।
ज्ञानमव्यक्तमित्युक्तं ज्ञेयो वै पञ्चविंशकः ॥ १२-३११-४० (७८०६५)
अव्यक्तं क्षेत्रमित्युक्तं यथासत्वं तथेश्वरम् ।
अनीश्वरमतत्त्वं च तत्त्वं तत्पञ्चविंशकम् ॥ १२-३११-४१ (७८०६६)
साङ्ख्यदर्शनमेतावत्परिसङ्ख्यानदर्शनम् ।
साङ्ख्याः प्रकुर्वते चैव प्रकृतिं च प्रचक्षते ॥ १२-३११-४२ (७८०६७)
तत्त्वानि च चतुर्विंशत्परिसंख्याय तत्त्वतः ।
साङ्ख्याः सह प्रकृत्या तु निस्तत्त्वः पञ्चविंशकः ॥ १२-३११-४३ (७८०६८)
पञ्चविंशो प्रबुद्धात्मा बुध्यमान इति स्मृतः ।
यदा तु बुध्यतेऽऽत्मानं तदा भवति केवलः ॥ १२-३११-४४ (७८०६९)
सम्यग्दर्शनमेतावद्भाषितं तव तत्त्वतः ।
एवमेतद्विजानन्तः साम्यतां प्रतियान्त्युत ॥ १२-३११-४५ (७८०७०)
सम्यङ्गिदर्शनं नाम प्रत्यक्षं प्रकृतेस्तथा ।
गुणतत्त्वाद्यथैतानि निर्गुणोऽन्यस्तथा भवेत् ॥ १२-३११-४६ (७८०७१)
न त्वेवं वर्तमानानामवृत्तिर्विद्यते पुनः ।
विद्यतेऽक्षरभावत्वे स परात्परमव्ययम् ॥ १२-३११-४७ (७८०७२)
पश्येरन्नेकमतयो न सम्पक्तेषु दर्शनम् ।
तेऽव्यक्तं प्रतिपद्यन्ते पुनः पुनररिंदम् ॥ १२-३११-४८ (७८०७३)
सर्वमेतद्विजानन्तो नासर्वस्य प्रबोधनात् ।
व्यक्तीभूता भविष्यन्ति व्यक्तस्य वशवर्तिनः ॥ १२-३११-४९ (७८०७४)
सर्वमवर्यक्तमित्युक्तमसर्वः पञ्चविंशकः ।
य एनमभिजानन्ति न भयं तेषु विद्यते ॥ ॥ १२-३११-५० (७८०७५)

इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि
एकादशाधिकत्रिशततमोऽध्यायः ॥ ३११.।

Mahabharata - Shanti Parva - Chapter Footnotes

१२-३११-३ अक्षरक्षरयोरुक्तमिति ट ।पाठः। अक्षरक्षरयोगेन

त्वयेति थ। पाठः ॥
१२-३११-७ तत्रापि विविधमिति ङ । थ। पाठः ॥
१२-३११-९ विकारं नाभियुज्जीतेति ङ । थ। पाठः। त्रिकालं नाभियुज्जीतेति झ। पाठः ॥
१२-३११-१० मनसात्मनीति ट । पाठः ॥
१२-३११-१२ द्रुतं ह्यदीनेति ध । पाठः ॥
१२-३११-१९ दृष्टेति कथ्यत इति ट । ङ। थ। पाठः ॥
१२-३११-२१ यं पश्यन्ति महात्मान इति ट । ध। पाठः ॥
१२-३११-४१ तथा तत्वं तथेश्वरमिति ट । ङ। थ। पाठः ॥
१२-३११-४७ विद्यते क्षरभावत्वं यो नैवं वेत्ति पार्थिव इति ट । ङ। थ। पाठः ॥
१२-३११-४९ न सर्वस्य प्रबोध नादिति ध । पाठः ॥

---

शन्तिपर्व-अध्यय३१२
॥ श्रीः ॥
१२.३१२. अध्यायः ३१२

Mahabharata - Shanti Parva - Chapter Topics
भीष्मेण युधिष्ठिरंप्रति विद्याऽविद्यादिप्रतिपादकवसिष्ठकरालजनकसंवादानुवादः ॥ १.।
Mahabharata - Shanti Parva - Chapter Text

१२-३१२-० (७८०७६)
वसिष्ठ उवाच। १२-३१२-०क्ष् (६४९७)
साङ्ख्यदर्शनमेतावदुक्तं ते नृपसत्तम् ।
विद्याविद्ये त्विदानीं मे त्वं निबोधानुपूर्वशः ॥ १२-३१२-१ (७८०७७)
अविद्यामाहुरव्यक्तं सर्गप्रलयधर्मिणीम् ।
सर्गप्रलयनिर्मुक्तो विद्यो वै पञ्चविंशकः ॥ १२-३१२-२ (७८०७८)
गएकत्वं च बहुत्वं च प्रकृतेरनु तत्त्ववित्।'
परस्परं तु विद्यां वै त्वं निबोधानुपूर्वशः ।
यथोक्तमृषिभिस्तात साङ्ख्यस्यास्य निदर्शनम् ॥ १२-३१२-३ (७८०७९)
कर्मेन्द्रियाणां सर्वेषां विद्या बुद्धीन्द्रियं स्मृतम् ।
बुद्धीन्द्रियाणां च तथा विशेषा इति नः श्रुतम् ॥ १२-३१२-४ (७८०८०)
विशेषाणां मनस्तेषां विद्यामाहुर्मनीषिणः ।
मनसः पञ्चभूतानि विद्या इत्यभिचक्षते ॥ १२-३१२-५ (७८०८१)
अहंकारस्तु भूतानां पञ्चानां नात्र संशयः ।
अहंकारस्य च तथा बुद्धिर्विद्या नरेश्वर ॥ १२-३१२-६ (७८०८२)

बुद्धेः प्रकृतिरव्यक्तं तत्त्वानां परमेश्वरम् ।
विद्या ज्ञेया नरश्रेष्ठ विधिश्च परमः स्मृतः ॥ १२-३१२-७ (७८०८३)
अव्यक्तस्य परं प्राहुर्विद्यां वै पञ्चविंशकम् ।
सर्वस्य सर्वमित्युक्तं ज्ञेयं ज्ञानस्य पार्थिव ॥ १२-३१२-८ (७८०८४)
ज्ञानमव्यक्तमित्युक्तं ज्ञेयो वै पञ्चविंशकः ।
तथैव ज्ञानमव्यक्तं विज्ञाता पञ्चविंशक ॥ १२-३१२-९ (७८०८५)
विद्याविद्यार्थितत्त्वेन मयोक्ता ते विशेषतः ।
अक्षरं च क्षरं चैव यदुक्तं तन्निबोध मे ॥ १२-३१२-१० (७८०८६)
उभावेतौ क्षरावुक्तावुभावेतौ क्षराक्षरौ ।
कारणं तु प्रवक्ष्यामि यथाख्यातो न जानतः ॥ १२-३१२-११ (७८०८७)
अनादिनिधनावेतावुभावेवेश्वरौ मतौ ।
तत्त्वसंज्ञावुभावेतौ प्रोच्यते ज्ञानचिन्तकैः ॥ १२-३१२-१२ (७८०८८)
सर्गप्रलयधर्मत्वादव्यक्तं प्राहुरक्षरम् ।
तदेतद्गुणसर्गाय विकुर्वाणं पुनःपुनः ॥ १२-३१२-१३ (७८०८९)
गुणानां महदादीनामुत्पद्यन्ते परम्पराः ।
अधिष्ठानं क्षेत्रमाहुरेतत्तत्पञ्चविंशकम् ॥ १२-३१२-१४ (७८०९०)
यदा तु गुणजालं तदव्यक्तात्मनि संक्षिपेत् ।
तदा सह गुणैस्तैस्तु पञ्चविंशो विलीयते ॥ १२-३१२-१५ (७८०९१)
गुणा गुणेषु लीयन्ते तदैका प्रकृतिर्भवेत् ।
क्षेत्रज्ञोऽपि यदा तात तत्क्षेत्रे संप्रलीयते ॥ १२-३१२-१६ (७८०९२)
तदाऽक्षरत्वं प्रकृतिर्गच्छते गुणसंज्ञिता ।
निर्गुणत्वं च वैदेह गुणेष्वप्रतिवर्तनात् ॥ १२-३१२-१७ (७८०९३)
एवमेव च क्षेत्रज्ञः क्षेत्रज्ञानपरिक्षयात् ।
प्रकृत्या निर्गुणस्त्वेष इत्येवमनुशुश्रुम ॥ १२-३१२-१८ (७८०९४)
क्षरो भवत्येष यदा तदा गुणवती मिथः ।
प्रकृतिं त्विभजानाति निर्गुणत्वं तथाऽऽत्मनः ॥ १२-३१२-१९ (७८०९५)
तदा विशुद्धो भवति प्रकृतेः परिवर्जनात् ।
अन्योऽहमन्येयमिति यदा बुध्यति बुद्धिमान् ॥ १२-३१२-२० (७८०९६)
तदैषा त्वन्यतामेति न च मिश्रत्वतां व्रजेत् ।
प्रकृत्या चैव राजेन्द्र मिश्रोऽनन्यश्च दृश्यते ॥ १२-३१२-२१ (७८०९७)
यदा तु गुणजालं तत्प्राकृतं विजुगुप्सते ।
पश्यते चापरं पश्यं तदा पश्यन्न संस्वजेत् ॥ १२-३१२-२२ (७८०९८)
किमहं कृतवानेवं योहं कालमिमं जनम् ।
ग्यदा मत्स्योदकं ज्ञानमनुवर्तितवांस्तदा।'
मत्स्यो जालं ह्यविज्ञानादनुवर्तितवानिह ॥ १२-३१२-२३ (७८०९९)
अहमेव हि संमोहादन्यमन्यं जनाज्जनम् ।

मत्स्यो यथोदकज्ञानादनुवर्तितवानहम् ॥ १२-३१२-२४ (७८१००)
मत्स्योऽन्यत्वं यथा ज्ञानादुदकान्नाभिमन्यते ।
आत्मानं तद्वदज्ञानादन्यत्वं चैव वेदयहम् ॥ १२-३१२-२५ (७८१०१)
ममास्तु धिगबुद्धस्य योऽहमज्ञ इमं पुनः ।
अनुवर्तितवान्मोहादन्यमन्यं जनाज्जनम् ॥ १२-३१२-२६ (७८१०२)
अयमत्र भेवद्बन्धुरनेन सह मे क्षमम् ।
साम्यमेकत्वतां यास्ये यादृशस्तादृशस्त्वहम् ॥ १२-३१२-२७ (७८१०३)
तुल्यतामिह पश्यामि सदृशोऽहमनेन वै ।
अयं हि विमलोऽव्यक्तमहमीदृशकस्तथा ॥ १२-३१२-२८ (७८१०४)
योऽहमज्ञानसंमोहादज्ञया संप्रवृत्तवान् ।
ससङ्गयाऽहं निःसङ्गः स्थितः कालमिमं त्वहम् ॥ १२-३१२-२९ (७८१०५)
अनयाऽहं वशीभूतः कालमेतं न बुद्धवान् ।
उच्चमध्यमनीचानां तामहं कथमावसे ॥ १२-३१२-३० (७८१०६)
समानया न याचेह सहवासमहं कथम् ।
गच्छाम्यबुद्धभावत्वादेषेदानीं स्थिरो भवे ॥ १२-३१२-३१ (७८१०७)
सहवासं न यास्यामि कालमेतद्धि वञ्चनात् ।
वञ्चितोस्म्यनया यद्धि निर्विकारो विकारया ॥ १२-३१२-३२ (७८१०८)
न चायमपराधोऽस्या ह्यपराधो ह्ययं मम ।
योऽहमत्राभवं सक्तः पराङ्भुखमुपस्थितः ॥ १२-३१२-३३ (७८१०९)
ततोस्मि बहुरूपासु स्थितो मूर्तिष्वमूर्तिमान् ।
अमूर्तश्चापि मूर्तात्मा ममत्वेन प्रधर्षितः ॥ १२-३१२-३४ (७८११०)
प्रकृतेरनयत्वेन तासु तास्विह योनिषु ।
निर्ममस्य ममत्वेन किं कृतं तासु तासु च ॥ १२-३१२-३५ (७८१११)
योनीषु वर्तमानेन नष्टसंज्ञेन चेतसा ।
न ममात्रानया कार्यमहंकारकृतात्मना ॥ १२-३१२-३६ (७८११२)
आत्मानं बहुधा कृत्वा येयं भूयो युनक्ति माम् ।
इदानीमेष बुद्धोस्मि निर्ममो निरहंकृतः ॥ १२-३१२-३७ (७८११३)
ममत्वमनया नित्यमहंकारकृतात्मकम् ।
अपेत्याहमिमां हित्वा संश्रयिष्ये निरामयम् ॥ १२-३१२-३८ (७८११४)
अनेन साम्यं यास्यामि नानयाऽहमचेतसा ।
क्षणं मम सहानेन नैकत्वमनया सह ॥ १२-३१२-३९ (७८११५)
एवं परमसंबोधात्पञ्चविंशोऽनुबुद्धवान् ।
अक्षरत्वं नियच्छेत त्यक्त्वा क्षरमनामयम् ॥ १२-३१२-४० (७८११६)
अव्यक्तं व्यक्तकर्माणं सगुणं निर्गुणं तथा ।
निर्गुणं परमं दृष्ट्वा तादृग्भवति मैथिल ॥ १२-३१२-४१ (७८११७)
अक्षरक्षरयोरेतदुक्तं तत्वनिदर्शनम् ।

मयेह ज्ञानसंपन्नं यथाश्रुतिनिदर्शनात् ॥ १२-३१२-४२ (७८११८)
निःसंदिग्धं च सूक्ष्मं च विबुद्धं विमलं यथा ।
प्रवक्ष्यामि तुते भूयस्तन्निबोध यथाश्रुतम् ॥ १२-३१२-४३ (७८११९)
साङ्ख्ययोगौ मया प्रोक्तौ शास्त्रद्वयनिदर्शनात् ।
यदेव शास्त्रं साङ्ख्योक्तं योगदर्शनमेव तत् ॥ १२-३१२-४४ (७८१२०)
प्रबोधनकरं ज्ञानं साङ्ख्यानामवनीपते ।
विस्पष्टं प्रोच्यते तत्र शिष्याणां हितकाम्यया ॥ १२-३१२-४५ (७८१२१)
पृथक्चैवमिदं शास्त्रमित्याहुः कुशला जनाः ।
अस्मिंश्च शास्त्रे योगानां पुनर्दधि पुनः शरः ॥ १२-३१२-४६ (७८१२२)
पञ्चविंशात्परं तत्त्वं न पश्यति नराधिप ।
साङ्ख्यानां तु परं तत्त्वं यथावदनुवर्णितम् ॥ १२-३१२-४७ (७८१२३)
बुद्धमप्रतिबुद्धं च बुध्यमानं च तत्त्वतः ।
बुध्यमानं च बुद्धं च प्राहुर्योगनिदर्शनम् ॥ ॥ १२-३१२-४८ (७८१२४)

इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि
द्वादशाधिकत्रिशततमोऽध्यायः ॥ ३१२. ।

Mahabharata - Shanti Parva - Chapter Footnotes

१२-३१२-१० विद्याविद्यार्थतत्वेनेति ट । पाठः ॥
१२-३१२-१४ अधिष्ठानं क्षेममाहुरिति ड । थ। पाठः ॥
१२-३१२-२२ न संसृजेदिति ध । पाठः ॥
१२-३१२-२५ उदकादभिमन्यत इति ट । ध। पाठः ॥
१२-३१२-३५ प्राकृतेन ममत्वेनेति झ । पाठः ॥
१२-३१२-३७ श्रेयो भूयो युनक्तिमामिति ध।पाठः ॥
१२-३१२-४१ अव्यक्तं व्यक्तधर्माणमिति झ । पाठः ॥
१२-३१२-४६ पुनर्वेदे पुरःसर इति झ । पाठः ॥
१२-३१२-४७ पठ्यते न नराधिपेति झ । पाठः ॥

---

शन्तिपर्व-अध्यय३१३
॥ श्रीः ॥
१२.३१३. अध्यायः ३१३

Mahabharata - Shanti Parva - Chapter Topics
भीष्मेण युधिष्ठिरंप्रति
बुद्धाबुद्धस्वरूपनिरूपकवसिष्ठकरालजनकसंवादानुवादसमापनम्
॥ १. ।
Mahabharata - Shanti Parva - Chapter Text

१२-३१३-० (७८१२५)
वसिष्ठ उवाच। १२-३१३-०क्ष् (६४९८)
अप्रबुद्धमथाव्यक्तमिमं गुणविधिं शृणु ।
गुणान्धारयते ह्येषा सृजत्याक्षिपते तथा ॥ १२-३१३-१ (७८१२६)
अजस्रं त्विह क्रीडार्थं विकरोति जनाधिप ।
आत्मानं बहुधा कृत्वा तान्येव प्रविचक्षते ॥ १२-३१३-२ (७८१२७)
एतदेवं विकुर्वाणं बुध्यमानो न बुध्यते ।
अव्यक्तबोधनाच्चैव बुध्यमानं वदन्त्यपि ॥ १२-३१३-३ (७८१२८)
न त्वेव बुध्यतेऽव्यक्तं सगुणं वाऽथ निर्गुणम् ।
कदाचित्त्वेव खल्वेतदाहुरप्रतिबुद्धकम् ॥ १२-३१३-४ (७८१२९)
बुध्यते यदि वाऽव्यक्तमेतद्वै पञ्चविंशकम् ।
बुध्यमानो भवत्येष सङ्गात्मक इति श्रुतिः ।
अनेनाप्रतिबुद्धेति वदन्त्यव्यक्तमच्युतम् ॥ १२-३१३-५ (७८१३०)
अव्यक्तोबोधनाच्चापि बुध्यमानं वदन्त्युत ।
पञ्चविंशं महात्मानं न चासावपि बुध्यते ॥ १२-३१३-६ (७८१३१)
षड्विशं विमलं बुद्धमप्रमेयं सनातनम् ।
स तु तं पञ्चविंशं च चतुर्विंशं च बुध्यते ॥ १२-३१३-७ (७८१३२)
दृश्यादृश्यौ ह्यनुगतावुभावेव महाद्युती ।
अव्यक्तं तत्तु तद्ब्रह्म बुध्यते तात केवलम् ॥ १२-३१३-८ (७८१३३)
केवलं पञ्चविंशं च चतुर्विंशं च पश्यति ।
बुध्यमानो यदात्मानमन्योऽहमिति मन्यते ॥ १२-३१३-९ (७८१३४)
तदा प्रकृतिमानेष भवत्यव्यक्तलोचनः ।
बुध्यते च परां बुद्धिं विमलाममलां यदा ॥ १२-३१३-१० (७८१३५)
षड्विंशं राजशार्दूल तथा बुद्धत्वमाव्रजेत् ।
ततस्त्यजति सोऽव्यक्तं सर्गप्रलयधर्मि वै ॥ १२-३१३-११ (७८१३६)
निर्गुणः प्रकृतिं वेद गुणयुक्तामचेतनाम् ।
ततः केवलधर्माऽसौ भवत्यव्यक्तदर्शनात् ॥ १२-३१३-१२ (७८१३७)
केवलेन समागम्य विमुक्तोऽऽत्मानमाप्नुयात् ।
एतं वै तत्त्वमित्याहुर्निस्तत्त्वमजरामरम् ॥ १२-३१३-१३ (७८१३८)
तत्त्वसंश्रयणादेष तत्त्ववान्न च मानद ।
पञ्चविंशतितत्त्वानि प्रवदन्ति मनीषिणः ॥ १२-३१३-१४ (७८१३९)
न चैष तत्त्ववांस्तात निस्तत्त्वस्त्वेष बुद्धिमान् ।
एष मुञ्चति तत्त्वं हि क्षिप्रं बुद्धत्वलक्षणम् ॥ १२-३१३-१५ (७८१४०)
षाड्विंशोऽहमिति प्राज्ञो गृह्यमाणोऽजरामरः ।
केवलेन बलेनैव समतां यात्यसंशयम् ॥ १२-३१३-१६ (७८१४१)

षड्विंशेन प्रबुद्धेन बुध्यमानो ह्यबुद्धिमान् ।
एवं नानात्वमित्युक्तं साङ्ख्यश्रुतिनिदर्शनात् ॥ १२-३१३-१७ (७८१४२)
चेतनेन समेतस्य पञ्चविंशतिकस्य च ।
एकत्वं वै भवत्यस्य यदा बुद्ध्या न बुध्यते ॥ १२-३१३-१८ (७८१४३)
बुध्यमानोप्रबुद्धेन समतां याति मैथिल ।
सङ्गधर्मा भवत्येष निःसङ्गात्मा नराधिप ॥ १२-३१३-१९ (७८१४४)
निःसङ्गात्मानमासाद्य षड्विंशकमजं विभुम् ।
विभुस्त्यजति चाव्यक्तं यदा त्वेताद्विबुध्यते ॥ १२-३१३-२० (७८१४५)
चतुर्विंशं महाभाग षड्विंशस्य प्रबोधनात् ।
एष ह्यप्रतिबुद्धश्च बुध्यमानश्च तेऽनघ ॥ १२-३१३-२१ (७८१४६)
प्रोक्तो बुद्धश्च तत्त्वेन यथाश्रुतिनिदर्शनात् ।
नानात्वैकत्वमेतावद्द्रष्टव्यं शास्त्रदृष्टिभिः ॥ १२-३१३-२२ (७८१४७)
मशकोदुम्बरे यद्वदन्यत्वं तद्वदेतयोः ।
मत्स्योदके यथा तद्वदन्यत्वमुपलभ्यते ॥ १२-३१३-२३ (७८१४८)
एवमेवावगन्तव्यं नानात्वैकत्वमेतयोः ।
एतद्धि मोक्ष इत्युक्तमव्यक्तज्ञानसंज्ञितम् ॥ १२-३१३-२४ (७८१४९)
पञ्चविंशतिकस्यास्य योऽयं देहेषु वर्तते ।
एष मोक्षयितव्येति प्राहुरव्यक्तगोचरात् ॥ १२-३१३-२५ (७८१५०)
सोयमेवं विमुच्येत नान्यथेति विनिश्चयः ।
परेण परधर्मा च भवत्येष समेत्य वै ॥ १२-३१३-२६ (७८१५१)
विशुद्धर्मा शुद्धेन बुद्धेन च स बुद्धिमान् ।
विमुक्तधर्मा मुक्तेन समेत्य पुरुषर्षभ ॥ १२-३१३-२७ (७८१५२)
वियोगधर्मिणा चैव वियोगात्मा भवत्यथ ।
विमोक्षिणा विमोक्षश्च समेत्येह तथा भवेत् ॥ १२-३१३-२८ (७८१५३)
शुद्धधर्मा शुचिश्चैव भवत्यमितदीप्तिमान् ।
विमलात्मा च भवति समेत्य विमलात्मना ॥ १२-३१३-२९ (७८१५४)
केवलात्मा तथा चैव केवलेन समेत्य वै ।
स्वतन्त्रश्च स्वतन्त्रेण स्वतन्त्रत्वमवाप्नुते ॥ १२-३१३-३० (७८१५५)
एतावदेतत्कथितं मया ते
तथ्यं महाराज यथार्थतत्त्वम् ।
अमत्सरत्वं प्रतिगृह्य चार्थं
सनातनं ब्रह्म विशुद्धमाद्यम् ॥ १२-३१३-३१ (७८१५६)
नावेदनिष्ठस्य जनस्य राज
न्प्रदेयमेतत्परमं त्वया भवेत् ।
विवित्समानाय विबोधकारणं
प्रबोधहेतोः प्रणतस्य शासनम् ॥ १२-३१३-३२ (७८१५७)

न देयमेतच्च तथाऽनृतात्मने
शठाय क्लीबाय न जिह्मबुद्धये ।
न पण्डितज्ञानपरोपतापिने
देयं त्वयेदं विनिबोध यादृशे ॥ १२-३१३-३३ (७८१५८)
श्रद्धान्वितायाथ गुणान्विताय
परापवादाद्विरताय नित्यम् ।
विशुद्धयोगाय बुधाय चैव
क्रियावते च क्षमिणे हिताय ॥ १२-३१३-३४ (७८१५९)
विविक्तशीलाय विधिप्रियाय
विवादहीनाय बहुश्रुताम् ।
विजानते चैव दमक्षमावते
शक्ताय चैकात्मशमाय देहिनाम् ॥ १२-३१३-३५ (७८१६०)
एतैर्गुणैर्हीनतमे न देय
मेतत्परं ब्रह्म विशुद्धमाहुः ।
न श्रेयसा योक्ष्यति तादृशे कृतं
धर्मप्रवक्तारमपात्रदानात् ॥ १२-३१३-३६ (७८१६१)
पृथ्वीमिमां यद्यपि रत्नपूर्णां
दद्यान्न देयं त्विदमव्रताय ।
जितेन्द्रियायैतदसंशयं ते
भवेत्प्रदेयं परमं नरेन्द्र ॥ १२-३१३-३७ (७८१६२)
कराल मा ते भयमस्तु किंचि
देतच्छ्रुतं ब्रह्म परं त्वयाऽद्य ।
यथावदुक्तं परमं पवित्रं
विशोकमत्यन्तमनादिमध्यम् ॥ १२-३१३-३८ (७८१६३)
अगाधजन्मामरणं च राज
न्निरामयं वीतभयं शिवं च ।
समीक्ष्य मोहं त्यज बाऽद्य सर्व
ज्ञानस्य तत्त्वार्थमिदं विदित्वा ॥ १२-३१३-३९ (७८१६४)
अवाप्तमेतद्धि मया सनातना
द्धिरण्यगर्भाद्यजतो नराधिप ।
प्रसाद्य यत्नेन तमुग्रतेजसं
सनातनं ब्रह्म यथाऽद्य वै त्वया ॥ १२-३१३-४० (७८१६५)
पृष्टस्त्वया चास्मि यथा नरेन्द्र
तथा मयेदं त्वयि चोक्तमद्य ।
तथाऽवाप्तं ब्रह्मणो मे नरेन्द्र
महाज्ञानं मोक्षविदां परायणम् ॥ १२-३१३-४१ (७८१६६)

भीष्म उवाच। १२-३१३-४२क्ष् (६४९९)
एतदुक्तं परं ब्रह्म यस्मान्नावर्तते पुनः ।
पञ्चविंशो महाराज परमर्षिनिदर्शनात् ॥१२-३१३-४२ (७८१६७)
पुनरावृत्तिमाप्नोति परं ज्ञानमवाप्य च ।
नावबुध्यति तत्त्वेन बुध्यमानोऽजरामरम् ॥१२-३१३-४३ (७८१६८)
एतन्निः श्रेयसकरं ज्ञानं ते परमं मया ।
कथितं तत्त्वतस्तात श्रुत्वा देवर्षितो नृप ॥१२-३१३-४४ (७८१६९)
हिरण्यगर्भादृषिणा वसिष्ठेन महात्मना ।
वसिष्ठादृषिशार्दूलान्नारदोऽवाप्तवानिदम् ॥१२-३१३-४५ (७८१७०)
नारदाद्विदितं मह्यमेतद्ब्रह्म सनातनम् ।
मा शुचः कौरवेन्द्र त्वं श्रुत्वैतत्परमं पदम् ॥१२-३१३-४६ (७८१७१)
येन क्षराक्षरे वित्ते भयं तस्य न विद्यते ।
विद्यते तु भयं तस्य यो नैतद्वेत्ति पार्थिव ॥१२-३१३-४७ (७८१७२)
अविज्ञानाच्च मूढात्मा पुनः पुनरुपाद्रवत् ।
प्रेत्य जातिसहस्राणि मरणान्तान्युपाश्नुते ॥१२-३१३-४८ (७८१७३)
देवलोकं तथा तिर्यङ्मनुष्यमपि चाश्नुते ।
यदि शुध्यति कालेन तस्मादज्ञानसागरात् ॥१२-३१३-४९ (७८१७४)
ग्उत्तीर्णोऽस्मादगाधात्स परमाप्नोति शोभनम्।'
अज्ञानसागरो घोरो ह्यव्यक्तोऽगाध उच्यते ।
अहन्यहनि मज्जन्ति यत्र भूतानि भारत ॥ १२-३१३-५० (७८१७५)
यस्मादगाधादव्यक्तादुत्तीर्णस्त्वं सनातनात् ।
तस्मात्त्वं विरजाश्चैव वितमस्कश्च पार्थिव ॥ ॥१२-३१३-५१ (७८१७६)

इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि
त्रयोदशाधिकत्रिशततमोऽध्यायः ॥ ३१३.।

Mahabharata - Shanti Parva - Chapter Footnotes

१२-३१३-३ अव्यक्तबोधनं चैनमिति ड
। थ। पाठः। अव्यक्तबोधनाच्चैनमिति ट। पाठः ॥
१२-३१३-९ चतुर्विंशं न पश्यतीति झ । पाठः ॥
१२-३१३-१० बुद्धयते विमलं बुद्धविशुद्धमचलोपममिति ध । पाठः ॥
१२-३१३-११ षड्विशो राजशार्दूलेति झ । पाठः। प्रलयधर्मिणि इति
थ। पाठः ॥
१२-३१३-१३ एतद्वै तत्वमिति ध । पाठः ॥
१२-३१३-१५ क्षिप्रं बुद्धया सुलक्षणमिति ड । थ। पाठः। क्षिप्रं
बुद्धवा स्वलक्षणमिति ट। पाठः ॥

१२-३१३-१८ एकत्वं चैव तत्वस्येति ध । पाठः ॥
१२-३१३-४७ वित्ते विज्ञाते ॥

---

शन्तिपर्व-अध्यय३१४
॥ श्रीः ॥
१२.३१४. अध्यायः ३१४

Mahabharata - Shanti Parva - Chapter Topics
भीष्मेण युधिष्ठिरंप्रति
श्रेयःसाधनधर्मप्रतिपादकजनकानुशासनानुवादः ॥ १. ।
Mahabharata - Shanti Parva - Chapter Text

१२-३१४-० (७८१७७)
भीष्म उवाच। १२-३१४-०क्ष् (६५००)
मृगयां विचरन्कश्चिद्द्विजने जनकात्मजः ।
वने ददर्श विप्रेन्द्रमृषिं वंशधरं भृगोः ॥ १२-३१४-१ (७८१७८)
तमासीनमुपासीनः प्रणम्य शिरसा मुनिम् ।
पश्चादनुमतस्तेन पप्रच्छ वसुमानिदम् ॥ १२-३१४-२ (७८१७९)
भगवन्किमिदं श्रेयः प्रेत्य चापीह वा भवेत् ।
पुरुषस्याध्रुवे देहे कामस्य वशवर्तिनः ॥ १२-३१४-३ (७८१८०)
सत्कृत्य परिपृष्टः सन्सुमहात्मा महातपाः ।
निजगाद ततस्तस्मै श्रेयस्करमिदं वचः ॥ १२-३१४-४ (७८१८१)
ऋषिरुवाच। १२-३१४-५क्ष् (६५०१)
मनसः प्रतिकूलानि प्रेत्य चेह नचेच्छसि ।
भूतानां प्रतिकूलेभ्यो निवर्तस्य यतेन्द्रियः ॥ १२-३१४-५ (७८१८२)
धर्मः सदा हितः पुंसां धर्मश्चैवाश्रयः सताम् ।
धर्माल्लोकास्त्रयस्तात प्रवृत्ताः सचराचराः ॥ १२-३१४-६ (७८१८३)
स्वादुकामुक कामानां वैतृष्ण्यं किं न गच्छसि ।
मधु पश्यसि दुर्बुद्धे प्रपातं नानुपश्यसि ॥ १२-३१४-७ (७८१८४)
यथा ज्ञाने परिचयः कर्तव्यस्तत्फलार्थिना ।
तथा धर्मे परिचयः कर्तव्यस्तत्फलार्थिना ॥ १२-३१४-८ (७८१८५)
असता धर्मकामेन विशुद्धं कर्म दुष्करम् ।
सता तु धर्मकामेन सुकरं कर्म दुष्करम् ॥ १२-३१४-९ (७८१८६)
वने ग्राम्यसुखाचारो यथाग्राम्यस्तथैव सः ।
ग्रामे वनसुखाचारो यथा वनचरस्तथा ॥ १२-३१४-१० (७८१८७)
मनोवाक्कर्मगे धर्मे कुरु श्रद्धां समाहितः ।

निवृत्तौ वा प्रवृत्तौ वा संप्रधार्य गुणागुणान् ॥ १२-३१४-११ (७८१८८)
नित्यं च बहु दातव्यं साधुभ्यश्चानसूयता ।
प्रार्थितं ब्राह्मणेभ्यश्च सत्कृतं देशकालयोः ॥ १२-३१४-१२ (७८१८९)
शुभेन विधिना लब्धमर्हाय प्रतिपादयेत् ।
क्रोधमुत्सृज्य दत्त्वाऽथ नानुतप्येन्न कीर्तयेत् ॥ १२-३१४-१३ (७८१९०)
अनृशंसः शुचिर्दान्तः सत्यवागार्जवे स्थितः ।
योनिकर्मविशुद्धश्च पात्रं स्याद्वेदविद्द्विजः ॥ १२-३१४-१४ (७८१९१)
संस्कृता चैकपत्नी च जात्या योनिरिहेष्यते ।
ऋग्यजुःसामगो विद्वान्षट्कर्मा पात्रमुच्यते ॥ १२-३१४-१५ (७८१९२)
स एव धर्मः सोऽधर्मस्तं तं प्रति नरं भवेत् ।
पात्राकर्मविशेषेण देशकालाववेक्ष्य च ॥ १२-३१४-१६ (७८१९३)
लीलयाऽल्पं यथा गात्रात्प्रमृज्यात्तु रजः पुमान् ।
बहुयत्नेन च महत्पापनिर्हरणं तथा ॥ १२-३१४-१७ (७८१९४)
विरिक्तस्य यथा सम्यग्घृतं भवति भेषजम् ।
तथा निर्हृतदोषस्य प्रेत्य धर्मः सुखावहः ॥ १२-३१४-१८ (७८१९५)
मानसं सर्वभूतेषु वर्तते वै शुभाशुभम् ।
अशुभेभ्यः समाक्षिप्य शुभेष्वेवावधारय ॥ १२-३१४-१९ (७८१९६)
सर्वं सर्वेणा सर्वत्र क्रियमाणं च पूजय ।
स्वधर्मे यत्र रागस्ते कामं धर्मो विधीयताम् ॥ १२-३१४-२० (७८१९७)
अधृतात्मन्धृतौ तिष्ठ दुर्बुद्धे बुद्धिमान्भव ।
अप्रशान्तः प्रशाम्य त्वमप्राज्ञः प्राज्ञवच्चर ॥ १२-३१४-२१ (७८१९८)
तेजसा शक्यते प्राप्तुमुपायः सहचारिणा ।
इह च प्रेत्य च श्रेयस्तस्य मूलं धृतिः परा ॥ १२-३१४-२२ (७८१९९)
राजर्षिरधृतिः स्वर्गात्पतितो हि महाभिषः ।
ययातिः क्षीणपुण्योपि धृत्या लोकानवाप्तवान् ॥ १२-३१४-२३ (७८२००)
तपस्विनां धर्मवतां विदुषां चोपसेवनात् ।
प्राप्स्यसे विपुलां बुद्धिं तथा श्रेयोऽभिपत्स्यसे ॥ १२-३१४-२४ (७८२०१)
भीष्म उवाच। १२-३१४-२५क्ष् (६५०२)
स तु स्वभावसंपन्नस्तच्छ्रुत्वा मुनिभाषितम् ।
विनिवर्त्य मनः कामाद्धर्मे बुद्धिं चकार ह ॥ ॥ १२-३१४-२५ (७८२०२)

इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि
चतुर्दशाधिकत्रिशततमोऽध्यायः ॥ ३१४. ।

Mahabharata - Shanti Parva - Chapter Footnotes

१२-३१४-५ वैतृष्णं को न गच्छति इति ध । पाठः। किं न

पृच्छसीति थ। पाठः ॥
१२-३१४-१५ एकस्यैव पत्नी एकपत्नी नत्वन्यपूर्वा ।जात्याः पुत्रोत्पत्तेः
योनिः स्यतानम् ॥

---

शन्तिपर्व-अध्यय३१५
॥ श्रीः ॥
१२.३१५. अध्यायः ३१५

Mahabharata - Shanti Parva - Chapter Topics
भीष्मेण युधिष्ठिरंप्रति
भूतसृष्टिप्रकारादिप्रतिपादकजनकयाज्ञवल्क्यसंवादानुवादः ॥ १.।
Mahabharata - Shanti Parva - Chapter Text

१२-३१५-० (७८२०३)
युधिष्ठिर उवाच। १२-३१५-०क्ष् (६५०३)
धर्माधर्मविमुक्तं यद्विमुक्तं सर्वसंशयात् ।
जन्ममृत्युविमुक्तं च विमुक्तं पुण्यपापयोः ॥ १२-३१५-१ (७८२०४)
यच्छिवं नित्यमभयं नित्यमक्षरमव्ययम् ।
शुचि नित्यमनायासं तद्भवान्वक्तुमर्हति ॥ १२-३१५-२ (७८२०५)
भीष्म उवाच। १२-३१५-३क्ष् (६५०४)
अत्र ते वर्तयिष्यामि इतिहासं पुरातनम् ।
याज्ञवल्क्यस्य संवादं जनकस्य च भारत ॥ १२-३१५-३ (७८२०६)
याज्ञवल्क्यमृषिश्रेष्ठं दैवरातिर्महायशाः ।
पप्रच्छ जनको राजा प्रश्नं प्रश्नविदांवरः ॥ १२-३१५-४ (७८२०७)
जनक उवाच। १२-३१५-५क्ष् (६५०५)
कतीन्द्रियाणि विप्रर्षे कति प्रकृतयः स्मृताः ।
किमव्यक्तं परं ब्रह्म तस्माच्च परतस्तु किम् ॥ १२-३१५-५ (७८२०८)
प्रभवं चाप्ययं चैव कालसङ्ख्यां तथैव च ।
वक्तुमर्हसि विप्रेन्द्र त्वदनुग्रहकाङ्क्षिणः ॥ १२-३१५-६ (७८२०९)
अज्ञानात्परिपृच्छामि त्वं हि ज्ञानमयो निधिः ।
तदहं श्रोतुमिच्छामि सर्वमेतदसंशयम् ॥ १२-३१५-७ (७८२१०)
याज्ञवल्क्य उवाच। १२-३१५-८क्ष् (६५०६)
श्रूयतामवनीपाल यदेतदनुपृच्छसि ।
योगानां परमं ज्ञानं साङ्ख्यानां च विशेषतः ॥ १२-३१५-८ (७८२११)
त तवाविदितं किंचिन्मां तु जिज्ञासते भवान् ।
पृष्टेन चापि वक्तव्यमेष धर्मः सनातनः ॥ १२-३१५-९ (७८२१२)
अष्टौ प्रकृतयः प्रोक्ता विकाराश्चापि षोडश ।

आसां तु सप्त व्यक्तानि प्राहुरध्यात्मचिन्तकाः ॥ १२-३१५-१० (७८२१३)
अव्यक्तं च महांश्चैव तथाऽहंकार एव च ।
पृथिवी वायुराकाशमापो ज्योतिश्च पञ्चमम् ॥ १२-३१५-११ (७८२१४)
एताः प्रकृतयस्त्वष्टौ विकारानपि मे शृणु ।
श्रोत्रं त्वक्चैव चक्षुश्च जिह्वा घ्राणं च पञ्चमम्
॥ १२-३१५-१२ (७८२१५)
शब्दः स्पर्शश्च रूपं च रसो गन्धस्तथैव च ।
वाक्च हस्तौ च पादौ च पायुर्मेढ्रं तथैव च ॥ १२-३१५-१३ (७८२१६)
एते विशेषा राजेन्द्रा महाभूतेषु पञ्चसु ।
बुद्धीन्द्रियाण्यथैतानि सविशेषाणि मैथिल ॥ १२-३१५-१४ (७८२१७)
मनः षोडशकं प्राहुरध्यात्मगतिचिन्तकाः ।
त्वं चैवान्ये च विद्वांसस्तत्त्वबुद्धिविशारदाः ॥ १२-३१५-१५ (७८२१८)
अव्यक्ताच्च महानात्मा समुत्पद्यति पार्थिव ।
प्रथमं सर्गमित्येतदाहुः प्राधानिकं बुधाः ॥ १२-३१५-१६ (७८२१९)
महतश्चाप्यहंकार उत्पद्यति नराधिप ।
द्वितीयं सर्गमित्याहुरेतद्बुद्ध्यात्मकं स्मृतम् ॥ १२-३१५-१७ (७८२२०)
अहंकाराच्च संभूतं मनो भूतगुणात्मकम् ।
तृतीयः सर्ग इत्येष आहंकारिक उच्यते ॥ १२-३१५-१८ (७८२२१)
मनसस्तु समुद्भूता महाभूता नराधिप ।
चतुर्थं सर्गमित्येतन्मानसं चिन्तनात्मकम् ॥ १२-३१५-१९ (७८२२२)
शब्दः स्पर्शश्च रूपं च रसो गन्धस्तथैव च ।
पञ्चमं सर्गमित्याहुर्भौतिकं भूतचिन्तकाः ॥ १२-३१५-२० (७८२२३)
श्रोत्रं त्वक्चैव चक्षुश्च जिह्वा घ्राणं च पञ्चमम् ।
सर्गं तु षष्ठमित्याहुर्बहुचिन्तात्मकं स्मृतम् ॥ १२-३१५-२१ (७८२२४)
अधः श्रोत्रेन्द्रियग्राम उत्पद्यदि नराधिप ।
सप्तमं सर्गमित्याहुरेतदैन्द्रियकं स्मृतम् ॥ १२-३१५-२२ (७८२२५)
ऊर्ध्वं स्रोतस्तथा तिर्यगुत्पद्यति नराधिप ।
अष्टमं सर्गमित्याहुरेतदार्जवकं स्मृतम् ॥ १२-३१५-२३ (७८२२६)
तिर्यक्स्रोतस्त्वधःस्रोत उत्पद्यति नराधिप ।
नवमं सर्गमित्याहुरेतदार्जवकं बुधाः ॥ १२-३१५-२४ (७८२२७)
एते वै नव सर्गा हि तत्त्वानि च नराधिप ।
चतुर्विंशतिरुक्तानि यथाश्रुतिनिदर्शनम् ॥ १२-३१५-२५ (७८२२८)
अत ऊर्ध्वं महाराज गुणस्यैतस्य तत्त्वतः ।
महात्मभिरनुप्रोक्तां कालसङ्ख्यां निबोध मे ॥ ॥ १२-३१५-२६ (७८२२९)

इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि

शन्तिपर्व-अध्यय३१६
॥ श्रीः ॥
१२.३१६. अध्यायः ३१६

Mahabharata - Shanti Parva - Chapter Topics
भीष्मेण युधिष्ठिरंप्रति
अण्डादिसृष्टिप्रकारादिप्रतिपादकजनकयाज्ञवल्क्यसंवादानुवादः ॥ १.।
Mahabharata - Shanti Parva - Chapter Text

१२-३१६-० (७८२३०)
याज्ञवल्क्य उवाच। १२-३१६-०क्ष् (६५०७)
अव्यक्तस्य नरश्रेष्ठ कालसङ्ख्यां निबोध मे ।
पञ्चकल्पसहस्राणि द्विगुणान्यहरुच्यते ॥ १२-३१६-१ (७८२३१)
रात्रिरेतावती चास्य प्रतिबुद्धो नराधिप ।
सृजत्योषधिमेवाग्रे जीवनं सर्वदेहिनाम् ॥ १२-३१६-२ (७८२३२)
ततो ब्रह्माणमसृजद्धैरण्याण्डसमुद्भवम् ।
सा मूर्तिः सर्वभूतानामित्येवमनुशुश्रुम ॥ १२-३१६-३ (७८२३३)
संवत्सरमुषित्वाण्डे निष्क्रम्य च महामुनिः ।
संदधेऽर्धं महीं कृत्स्नां दिवमर्धं प्रजापतिः ॥ १२-३१६-४ (७८२३४)
द्यावापृथिव्योरिज्येष राजन्वेदेषु पठ्यते ।
तयोः शकलयोर्मध्यमाकाशमकरोत्प्रभुः ॥ १२-३१६-५ (७८२३५)
एतस्यापि च सङ्ख्यानं वेदवेदाङ्गपारगैः ।
दशकल्पसहस्राणि पादोनान्यहरुच्यते ॥ १२-३१६-६ (७८२३६)
रात्रिमेतावतीं चास्व प्राहुरध्यात्मचिन्तकाः ।
सृजत्यहंकारमृषिर्भूतं दिव्यात्मकं तथा ॥ १२-३१६-७ (७८२३७)
चतुरश्चापरान्पुत्रान्देहात्पूर्वं महानृषिः ।
ते वै पितृभ्यः पितरः श्रूयन्तें राजसत्तम ॥ १२-३१६-८ (७८२३८)
देवाः पितॄणां च सुता देवैर्लोकाः समावृताः ।
चराचरा नरश्रेष्ठ इत्येवमनुशुश्रुम ॥ १२-३१६-९ (७८२३९)
परमेष्ठी त्वहंकारोऽसृजद्भूतानि पञ्चधा ।
पृथिवी वायुराकाशमापो ज्योतिश्च पञ्चमम् ॥ १२-३१६-१० (७८२४०)
एतस्यापि निशामाहुस्तृतीयमथ कुर्वतः ।
पञ्च कल्पसहस्राणि तावदेवाहरुच्यते ॥ १२-३१६-११ (७८२४१)
शब्दः स्पर्शश्च रूपं च रसो गन्धश्च पञ्चमः ।
एते विशेषा राजेन्द्र महाभूतेषु पञ्चसु ॥ १२-३१६-१२ (७८२४२)

यैराविष्टानि भूतानि अहन्यहनि पार्थिव ।
अन्योन्यं स्पृहयन्त्येते अन्योन्यस्याहिते रताः ॥ १२-३१६-१३ (७८२४३)
अन्योन्यमतिवर्तन्ते अन्योन्यस्पर्धिनस्तथा ।
ते वध्यमाना ह्यन्योन्यं गुणैर्हारिभिरव्ययाः ॥ १२-३१६-१४ (७८२४४)
इहैव परिवर्तन्ते तिर्यग्योनिप्रवेशिनः ।
त्रीणि कल्पसहस्राणि एतेषामहरुच्यते ॥ १२-३१६-१५ (७८२४५)
रात्रिरेतावती चैव मनसश्च नराधिप ।
मनश्चरति राजेन्द्र चरितं सर्वमिन्द्रियैः ॥ १२-३१६-१६ (७८२४६)
न चेन्द्रियाणि पश्यन्ति मन एवात्र पश्यति ।
चक्षुः पश्यति रूपाणि मनसा तु न चक्षुषा ॥ १२-३१६-१७ (७८२४७)
मनसि व्याकुले चक्षुः पश्यन्नपि न पश्यति ।
अथेन्द्रियाणि सर्वाणि पश्यन्तीत्यभिचक्षते ॥ १२-३१६-१८ (७८२४८)
मनस्युपरते राजन्निन्द्रियोपरमो भवेत् ॥ १२-३१६-१९ (७८२४९)
न चेन्द्रियव्युपरमे मनस्युपरमो भवेत् ।
एवं मनः प्रधानानि इन्द्रियाणि प्रभावयेत् ॥ १२-३१६-२० (७८२५०)
इन्द्रियाणां तु सर्वेषामीश्वरं मन उच्यते ।
एतद्विशन्ति भूतानि सर्वाणीह महायशः ॥ ॥ १२-३१६-२१ (७८२५१)

इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि
षोडशाधिकत्रिशततमोऽध्यायः ॥ ३१६.।

Mahabharata - Shanti Parva - Chapter Footnotes

१२-३१६-४ संदधेऽयं महीमिति ड ।थ। पाठः ॥
१२-३१६-८ पुत्रान्देवानिति ड ।थ। पाठः। पुत्रान्पूर्वमेव
महानृषिरिति। पितॄणां पितर इति झ। पाठः ॥
१२-३१६-१३ अन्योन्यस्य हिते रता इति झ ।ध। पाठः ॥
१२-३१६-२१ एतद्वशे हि भूतानीति ट ।ड। थ। पाठः ॥

---

शन्तिपर्व-अध्यय३१७
॥ श्रीः ॥
१२.३१७. अध्यायः ३१७

Mahabharata - Shanti Parva - Chapter Topics

भीष्मेण युधिष्ठिरंप्रति
जगत्प्रलयप्रकारादिप्रतिपादकजनकयाज्ञवल्क्यसंवादानुवादः ॥ १.।

Mahabharata - Shanti Parva - Chapter Text

१२-३१७-० (७८२५२)
याज्ञवल्क्य उवाच। १२-३१७-०क्ष् (६५०८)
तत्त्वानां सर्गसङ्ख्या च कालसङ्ख्या तथैव च ।
मया प्रोक्ताऽनुपूर्वेण संहारमपि मे शृणु ॥ १२-३१७-१ (७८२५३)
यता संहरते जन्तून्ससर्ज च पुनः पुनः ।
अनादिनिधनो ब्रह्मा नित्यश्चाक्षर एव च। १२-३१७-२ (७८२५४)
अहःक्षयमथो बुद्ध्वा निशि स्वप्नमनास्तथा ।
चोदयामास भगवानव्यक्तोऽहंकृतं नरम् ॥ १२-३१७-३ (७८२५५)
ततः शतसहस्रांशुरव्यक्तेनाभिचोदितः ।
कृत्वा द्वादशधाऽऽत्मानमादित्यो ज्वलदग्निवत् ॥ १२-३१७-४ (७८२५६)
चतुर्विधं प्रजाजातं निर्दहत्याशु तेजसा ।
जराय्वण्डस्वेदजातमुद्भिज्जं स नराधिप ॥ १२-३१७-५ (७८२५७)
एतदुन्मेषमात्रेण विनष्टं स्थाणुजङ्गमम् ।
कूर्मपृष्ठसमा भूमिर्भवत्यथ समन्ततः ॥ १२-३१७-६ (७८२५८)
जगद्दग्ध्वाऽमितबलः केवलां जगतीं ततः ।
अम्भसा बलिना क्षिप्रमापूरयति सर्वशः ॥ १२-३१७-७ (७८२५९)
ततः कालाग्निमासाद्य तदम्भो याति संक्षयम् ।
विनष्टेऽम्भसि राजेन्द्र जाज्वलत्यनलो महान् ॥ १२-३१७-८ (७८२६०)
तमप्रमेयातिबलं ज्वलमानं विभावसुम् ।
ऊष्माणं सर्वभूतानां सप्तार्चिपमथाञ्जसा ॥ १२-३१७-९ (७८२६१)
भक्षयामास भगवान्वायुरष्टात्मको बली ।
विचरन्नमितप्राणस्तिर्यगूर्ध्वमधस्तथा ॥ १२-३१७-१० (७८२६२)
तमप्रतिबलं भीममाकाशं ग्रसते पुनः ।
आकाशमप्यभिनदन्मनो ग्रसति चारिकम् ॥ १२-३१७-११ (७८२६३)
मनो ग्रसति सर्वात्मा सोहंकारः प्रजापतिः ।
अहंकारो महानात्मा भूतभव्यभविष्यवित् ॥ १२-३१७-१२ (७८२६४)
तमप्यनुपमात्मानं विश्वं शंभुः प्रजापतिः ।
अणिमा लघिमा प्राप्तिरीशानो ज्योतिरव्ययः ॥ १२-३१७-१३ (७८२६५)
सर्वतः पाणिपादं तत्सर्वतोक्षिशिरोमुखम् ।
सर्वतः श्रुतिमल्लोके सर्वमावृत्य तिष्ठति ॥ १२-३१७-१४ (७८२६६)
हृदयं सर्वभूतानां पर्वणाऽङ्गुष्ठमात्रकः ।
अणुग्रसत्यनन्तो हि महात्मा विश्वमीश्वरः ॥ १२-३१७-१५ (७८२६७)
ततः समभवत्सर्वमक्षयाव्ययमव्रणम् ।
भूतभव्यभविष्याणां स्रष्टारमनघं तथा ॥ १२-३१७-१६ (७८२६८)
एषोप्ययस्ते राजेन्द्र यथावत्समुदाहृतः ।

अध्यात्ममधिभूतं च श्रूयतां चाधिदैवतम् ॥ ॥१२-३१७-१७ (७८२६९)

इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि
सप्तदशाधिकत्रिशततमोऽध्यायः ॥ ३१७.।
Mahabharata - Shanti Parva - Chapter Footnotes

१२-३१७-४ संदधेऽयं महीमिति ड ।थ। पाठः ॥
१२-३१७-८ पुत्रान्देवानिति ड ।थ। पाठः। पुत्रान्पूर्वमेव
महानृषिरिति। पितॄणां पितर इति झ। पाठः ॥
१२-३१७-१३ अन्योन्यस्य हिते रता इति झ ।ध। पाठः ॥
१२-३१७-२१ एतद्वशे हि भूतानीति ट ।ड।थ। पाठः ॥

---

शन्तिपर्व-अध्यय३१८
॥ श्रीः ॥
१२.३१८. अध्यायः ३१८

Mahabharata - Shanti Parva - Chapter Topics
याज्ञवल्क्येन जनकंप्रति इन्द्रियतद्विषयतदभिमानिदेवताकथनम्
॥ १.। तथा सत्वादिगुणत्रयकार्यधर्मप्रतिपादनम् ॥ २.।
Mahabharata - Shanti Parva - Chapter Text

१२-३१८-० (७८२७०)
याज्ञवल्क्य उवाच। १२-३१८-०क्ष् (६५०९)
पादावध्यात्ममित्याहुर्ब्राह्मणास्तत्त्वदर्शिनः ।
गन्तव्यमधिभूतं च विष्णुस्तत्राधिदैवतम् ॥ १२-३१८-१ (७८२७१)
पायुरध्यात्ममित्याहुर्यथातत्त्वार्थदर्शिनः ।
विसर्गमधिभूतं च मित्रस्तत्राधिदैवतम् ॥ १२-३१८-२ (७८२७२)
उपस्थोऽध्यात्ममित्याहुर्यथायोगप्रदर्शिनः ।
अधिभूतं तथाऽऽनन्दो दैवतं च प्रजापतिः ॥ १२-३१८-३ (७८२७३)
हस्तावध्यात्ममित्याहुर्यथासङ्ख्यानदर्शिनः ।
कर्तव्यमधिभूतं तु इन्द्रस्तत्राधिदैवतम् ॥ १२-३१८-४ (७८२७४)
वागध्यात्ममिति प्राहुर्यथाश्रुतिनिदर्शिनः ।
वक्तव्यमधिभूतं तु वह्निस्तत्राधिदैवतम् ॥ १२-३१८-५ (७८२७५)
चक्षुरध्यात्ममित्याहुर्यथाश्रुतिनिदर्शिनः ।
रूपमत्राधिभूतं तु सूर्यश्चाप्यधिदैवतम् ॥ १२-३१८-६ (७८२७६)
श्रोत्रमध्यात्ममित्याहुर्यथाश्रुतिनिदर्शिनः ।

शब्दस्तत्राधिभूतं तु दिशश्चात्राधिदैवतम् ॥१२-३१८-७ (७८२७७)
जिह्वामध्यात्ममित्याहुर्यथाश्रुतिनिदर्शिनः ।
रस एवाधिभूतं तु आपस्तत्राधिदैवतम् ॥१२-३१८-८ (७८२७८)
घ्राणमध्यात्ममित्याहुर्यथाश्रुतिनिदर्शिनः ।
गन्ध एवाधिभूतं तु पृथिवी चाधिदैवतम् ॥१२-३१८-९ (७८२७९)
त्वगध्यात्ममिति प्राहुस्तत्त्वबुद्धिविशारदाः ।
स्पर्शमेवाधिभूतं तु पवनश्चाधिदैवतम् ॥१२-३१८-१० (७८२८०)
मनोऽध्यात्ममिति प्राहुर्यथा शास्त्रविशारदाः ।
मन्तव्यमधिभूतं तु चन्द्रमाश्चाधिदैवतम् ॥१२-३१८-११ (७८२८१)
आहंकारिकमध्यात्ममाहुस्तत्त्वनिदर्शिनः ।
अभिमानोऽधिभूतं तु बुद्धिश्चात्राधिदैवतम् ॥१२-३१८-१२ (७८२८२)
बुद्धिरध्यात्ममित्याहुर्यथावदभिदर्शिनः ।
बोद्धव्यमधिभूतं तु क्षेत्रज्ञश्चाधिदैवतम् ॥१२-३१८-१३ (७८२८३)
एषा ते व्यक्तितो राजन्विभूतिरनुदर्शिता ।
आदौ मध्ये तथाऽन्ते च यथा तत्त्वेन तत्त्ववित् ॥१२-३१८-१४ (७८२८४)
प्रकृतिर्गुणान्विकुरुते स्वच्छन्देनात्मकाम्यया ।
क्रीडार्थे तु महाराज शतशोऽथ सहस्रशः ॥१२-३१८-१५ (७८२८५)
यथा दीपसहस्राणि दीपान्मर्त्याः प्रकुर्वते ।
प्रकृतिस्तथा विकुरुते पुरुषस्य गुणान्बहून् ॥१२-३१८-१६ (७८२८६)
सत्वमानन्द उद्रेकः प्रीतिः प्राकाम्यमेव च ।
सुखं शुद्धत्वमारोग्यं संतोषः श्रद्दधानता ॥१२-३१८-१७ (७८२८७)
अकार्पण्यमसंरम्भः क्षमा धृतिरहिंसता ।
समता सत्यमानृण्यमार्जवं ह्रीरचापलम् ॥१२-३१८-१८ (७८२८८)
शौचमार्दवमाचारमलौल्यं हृद्यसंभ्रमः ।
इष्टानिष्टवियोगानां कृतानामविकत्थना ॥१२-३१८-१९ (७८२८९)
दानेन चात्मग्रहणमस्पृहत्वं परार्थता ।
सर्वभूतदया चैव सत्वस्यैते गुणाः स्मृताः ॥१२-३१८-२० (७८२९०)
रजोगुणानां संघातो रूपमैश्वर्यविग्रहौ ।
अत्यागित्वमकारुण्यं सुखदुःखोपसेवनम् ॥१२-३१८-२१ (७८२९१)
परापवादेषु रतिर्विवादानां च सेवनम् ।
अहंकारस्त्वसत्कारश्चिन्ता वैरोपसेवनम् ॥१२-३१८-२२ (७८२९२)
परितापोऽभिहरणं ह्रीनाशोऽनार्जवं तथा ।
भेदः परुषता चैव कामक्रोधौ मदस्तथा ॥१२-३१८-२३ (७८२९३)
दर्पो द्वेषोऽतिमानश्च एते प्रोक्ता रजोगुणाः ।
तामसानां तु संघातान्प्रवक्ष्याम्युपधार्यताम् ॥१२-३१८-२४ (७८२९४)
मोहोऽप्रकाशस्तामिस्रमन्धतामिस्रसंज्ञितम् ।

मरणं चान्धतामिस्रं तामिस्रं क्रोध उच्यते ॥ १२-३१८-२५ (७८२९५)
तमसो लक्षणानीह भक्षणाद्यभिरोचनम् ।
भोजनानामपर्याप्तिस्तथा पेयेष्वतृप्तता ॥ १२-३१८-२६ (७८२९६)
गन्धवासो विहारेषु शयनेष्वासनेषु च ।
दिवास्वप्ने विवादे च प्रमादेषु च वै रतिः ॥ १२-३१८-२७ (७८२९७)
नृत्यवादित्रगीतानामज्ञानाच्छ्रद्दधानता ।
द्वेषो धर्मविशेषाणामेते वै तामसा गुणाः ॥ ॥ १२-३१८-२८ (७८२९८)

इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि
अष्टादशाधिकत्रिशततमोऽध्यायः ॥ ३१८.।
Mahabharata - Shanti Parva - Chapter Footnotes

१२-३१८-४ यथा तत्वनिदर्शिनः इति थ ।पाठः ॥
१२-३१८-१९ शौचतारमपारुप्यमपैशुनमिति ड
।पाठः। इष्टापूर्वविशेषाणामिति ट।ड।पाठः ॥

---

शन्तिपर्व-अध्यय३१९
॥ श्रीः ॥
१२.३१९. अध्यायः ३१९

Mahabharata - Shanti Parva - Chapter Topics
याज्ञवल्क्येन जनकंप्रति सात्विकादिसारतम्यनिरूपणम् ॥ १.। जनकेन
याज्ञवल्क्यंप्रति तत्वकथनप्रार्थना च ॥ २.।
Mahabharata - Shanti Parva - Chapter Text

१२-३१९-० (७८२९९)
याज्ञवल्क्य उवाच। १२-३१९-०क्ष् (६५१०)
एते प्रधानस्य गुणास्त्रयः पुरुषसत्तम ।
कृत्स्नस्य चैव जगतस्तिष्ठन्त्यनपगाः सदा ॥ १२-३१९-१ (७८३००)
अव्यक्तरूपो भगवाञ्शतधा च सहस्रधा ।
शतधा सहस्रधा चैव तथा शतसहस्रधा ॥ १२-३१९-२ (७८३०१)
कोटिशश्च करोत्येव प्रकृत्याऽऽत्मानमात्मना ।
सात्विकरणोत्तमं स्थानं राजसस्येह मध्यमम् ॥ १२-३१९-३ (७८३०२)
तामसस्वाधमं स्थानं प्राहुरध्यात्मचिन्तकाः ।
केवलेनेह पुण्येन भतिभूर्ध्वामवाप्नुयात् ॥ १२-३१९-४ (७८३०३)
पुण्यपापेन मानुष्यमधर्मेणाप्यघोगतिम् ।
द्वन्द्वनेषां त्रयाणां तु सन्निपातं च तत्वतः ॥ १२-३१९-५ (७८३०४)

सत्वस्य रजसश्चैव तमसश्च शृणुष्व मे ।
सत्वस्य तु रजो दृष्टं रजसश्च तमस्तथा ॥ १२-३१९-६ (७८३०५)
तमसश्च तथा सत्वं सत्वस्याव्यक्तमेव च ।
अध्यक्तः सत्वसंयुक्तो देवलोकमयाप्नुयात् ॥ १२-३१९-७ (७८३०६)
रवासत्वसमायुक्तो मानुषेषु प्रपद्यते ।
रसस्तमोभ्यां संयुक्तस्तिर्यग्योनिषु जायते ॥ १२-३१९-८ (७८३०७)
राजसैस्तामसैः सत्वैर्युक्तो मानुषमाप्नुयात् ।
पुण्यपापवियुक्तानां स्थानमाहुर्महात्मनाम् ॥ १२-३१९-९ (७८३०८)
शाश्वतं चाव्ययं चैवमक्षयं चामृतं च तत् ।
ज्ञानिनां संभवं श्रेष्ठं स्थानमव्रणमच्युतम् ।
अतीन्द्रियमबीजं च जन्ममृत्युतमोनुदम् ॥ १२-३१९-१० (७८३०९)
अव्यक्तस्थं परं यत्तत्पृष्टस्तेऽहं नराधिप ।
स एव प्रकृतिस्थो हि तत्स्थ इत्यभिधीयते ॥ १२-३१९-११ (७८३१०)
अचेतना चैव मता प्रकृतिश्चापि पार्थिव ।
एतेनाधिष्ठिता चैव सृजते संहरत्यपि ॥ १२-३१९-१२ (७८३११)
जनक उवाच। १२-३१९-१३क्ष् (६५११)
अनादिनिधनावेतावुभावेव महामते ।
अमूर्तिमन्तावचलावप्रकम्प्यगुणागुणौ ॥ १२-३१९-१३ (७८३१२)
अग्राह्यावृषिशार्दूल कथमेको ह्यचेतनः ।
चेतनावांस्तथा चैकः क्षेत्रज्ञ इति भाषितः ॥ १२-३१९-१४ (७८३१३)
त्वं हि विप्रेन्द्र कार्त्स्न्येन मोक्षधर्ममुपाससे ।
साकल्पं मोक्षधर्मस्य श्रोतुमिच्छामि तत्त्वतः ॥ १२-३१९-१५ (७८३१४)
निस्तत्वं केवलत्वं च विनाभावं तथैव च ।
दैवतानि च मे ब्रूहि देहं यान्याश्रितानि वै ॥ १२-३१९-१६ (७८३१५)
तथैवोत्क्राणिणः स्थानं देहिनो वै विपद्यतः ।
कालेन यद्धि प्राप्नोति स्थानं तत्प्रब्रवीहि मे ॥ १२-३१९-१७ (७८३१६)
साङ्ख्यज्ञानं च तत्त्वेन पृथग्योगं तथैव च ।
अरिष्टानि च तत्त्वानि वक्तुमर्हसि सत्तम ।
विदितं सर्वमेतत्ते पाणावामलकं यथा ॥ ॥ १२-३१९-१८ (७८३१७)

इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि
एकोनविंशत्यधिकत्रिशततमोऽध्यायः ॥ ३१९.।
Mahabharata - Shanti Parva - Chapter Footnotes

१२-३१९-१२ सच्चेतनश्चैप मतः प्रकृतिस्थश्च पार्थिवेति ट
। ड। पाठः ॥

१२-३१९-१३ अप्रकम्प्यौ त्रणाव्रणाविति ट । ड। पाठः। अप्रकम्प्यौ वृषावृषाविति थ। पाठः ॥
१२-३१९-१६ अस्तित्वं केव त्वं चेति झ । पाठः ॥
१२-३१९-१७ देहिनोऽपि वियुज्यत इति ट । पाठः ॥
१२-३१९-१८ अनुक्तानि च तत्वेनेति ट । पाठः ॥

---

शन्तिपर्व-अध्यय३२०
॥ श्रीः ॥
१२.३२०. अध्यायः ३२०

Mahabharata - Shanti Parva - Chapter Topics
याज्ञवल्क्येन जनकंप्रति साङ्ख्यदर्शनकथनम् ॥ १.।
Mahabharata - Shanti Parva - Chapter Text

१२-३२०-० (७८३१८)
याज्ञवल्क्य उवाच। १२-३२०-०क्ष् (६५१२)
न शक्यो निर्गुणस्तात गुणीकर्तुं विशांपते ।
गुणवांश्चाप्यगुणवान्यथातत्त्वं निबोध मे ॥ १२-३२०-१ (७८३१९)
गुणैर्हि गुणवानेव निर्गुणश्चागुणस्तथा ।
प्राहुरेवं महात्मानो मुनयस्तत्त्वदर्शिनः ॥ १२-३२०-२ (७८३२०)
गुणस्वभावस्त्वव्यक्तो गुणानेवाभिवर्तते ।
उपयुङ्क्ते च तानेव स चैवाज्ञः स्वभावतः ॥ १२-३२०-३ (७८३२१)
अव्यक्तस्तु न जानीते पुरुषोऽज्ञः स्वभावतः ।
न मत्तः परमोस्तीति नित्यमेवाभिमन्यते ॥ १२-३२०-४ (७८३२२)
अनेन कारणेनैतदव्यक्तं स्यादचेतनम् ।
नित्यत्वाच्चाक्षरत्वाच्च क्षरत्वान्न तदन्यथा ॥ १२-३२०-५ (७८३२३)
यदाऽज्ञानेन कुर्वीत गुणसर्गं पुनःपुनः ।
यदात्मानं न जानीते तदाऽऽत्मापि न मुच्यते ॥ १२-३२०-६ (७८३२४)
कर्तृत्वाच्चापि सर्गाणां सर्गधर्मा तथोच्यते ।
कर्तृत्वाच्चापि योगानां योगधर्मा तथोच्यते ॥ १२-३२०-७ (७८३२५)
कर्तृत्वात्प्रकृतीनां च तथा प्रकृतिधर्मिता ॥ १२-३२०-८ (७८३२६)
कर्तृत्वाच्चापि वीजानां बीजधर्मा तथोच्यते ।
गुणानां प्रसवत्वाच्च प्रलयत्वात्तथैव च ॥ १२-३२०-९ (७८३२७)
'कर्तृत्वात्प्रलयानां तु तथा प्रलयधर्मि च ।
कर्तृत्वात्प्रभवाणां च तथा प्रभवधर्मि च ॥ १२-३२०-१० (७८३२८)
बीजत्वात्प्रकृतित्वाच्च प्रलयत्वात्तथैव च।'
उपेक्षत्वादनन्यत्वादभिमानाच्च केवलम् ॥ १२-३२०-११ (७८३२९)

मन्यन्ते यतयः सिद्धा अध्यात्मज्ञा गतज्वराः ।
अनित्यं नित्यमव्यक्तं व्यक्तमेतद्धि शुश्रुम ॥ १२-३२०-१२ (७८३३०)
अव्यक्तैकत्वमित्याहुर्नानात्वं पुरुषास्तथा ।
सर्वभूतदयावन्तः केवलं ज्ञानमास्थिताः ॥ १२-३२०-१३ (७८३३१)
अन्यः स पुरुषोऽव्यक्तस्त्वध्रुवो ध्रुवसंज्ञकः ।
यथा मुञ्ज इषीकाणां तथैवैतद्धि जायते ।
ग्न चैव मुञ्जसंयोगादिषीका तत्र बुध्यते ॥' १२-३२०-१४ (७८३३२)
अन्यच्च मशकं विद्यादन्यच्चोदुम्बरं तथा ।
च चोदुम्बरसंयोगैर्मशकस्तत्र लिप्यते ॥ १२-३२०-१५ (७८३३३)
अन्य एव तथा मत्स्यस्तदन्यदुदुकं स्मृतम् ।
न चोदकस्य स्पर्शेन मत्स्यो लिप्यति सर्वशः ॥ १२-३२०-१६ (७८३३४)
अन्यो ह्यग्निरुखाऽप्यन्या नित्यमेवमवेहि भोः ।
न चोपलिप्यते सोऽग्निरुखासंस्पर्शनेन वै ॥ १२-३२०-१७ (७८३३५)
पुष्करं त्वन्यदेवात्र तथाऽन्यदुदकं स्मृतम् ।
न चोदकस्य स्पर्शेन लिप्यते तत्र पुष्करम् ॥ १२-३२०-१८ (७८३३६)
एतेषां सहवासं च निवासं चैव नित्यशः ।
याथातथ्येन पश्यन्ति न नित्यं प्राकृता जनाः ॥ १२-३२०-१९ (७८३३७)
ये त्वन्यथैव पश्यन्ति न सम्यक्तेषु दर्शनम् ।
ते व्यक्तं निरयं घोरं प्रविशन्ति पुनः पुनः ॥ १२-३२०-२० (७८३३८)
साङ्ख्यदर्शनमेतत्ते परिसङ्ख्यानमुत्तमम् ।
एवं हि परिसंख्याय साङ्ख्याः केवलतां गताः ॥ १२-३२०-२१ (७८३३९)
ये त्वन्ये तत्त्वकुशलास्तेषामेतन्निदर्शनम् ।
अतः परं प्रवक्ष्यामि योगानामनुदर्शनम् ॥ ॥ १२-३२०-२२ (७८३४०)

इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि
विंशत्यधिकत्रिशततमोऽध्यायः ॥ ३२०.।
Mahabharata - Shanti Parva - Chapter Footnotes

१२-३२०-३ गुणाम्नैवातिवर्तत इति झ ।पाठः ॥
१२-३२०-५ यदज्ञानेन कुरुते निर्गुणः सगुणः पुनरिति ङ ।पाठः ॥
१२-३२०-६ यदज्ञानं न जानीषे तदित्यव्यक्तमुच्यत इति थ ।पाठः ॥
१२-३२०-७ कर्तृत्वाच्चैव धर्माणामिति ट ।पाठः।कर्तृत्वाच्चापि
योनीनां योनिधर्मेत्यथोच्यत इति ट।ङ।पाठः ॥
१२-३२०-१७ उखा मृत्पात्रविशेषः ॥

---

शन्तिपर्व-अध्यय३२१
॥ श्रीः ॥

१२.३२१. अध्यायः ३२१

Mahabharata - Shanti Parva - Chapter Topics
याज्ञवल्क्येन जनकंप्रति योगनिरूपणम् ॥ १.।
Mahabharata - Shanti Parva - Chapter Text

१२-३२१-० (७८३४१)
याज्ञवल्क्य उवाच। १२-३२१-०क्ष् (६५१३)
साङ्ख्यज्ञानं मया प्रोक्तं योगज्ञानं निबोध मे ।
यथाश्रुतं यथादृष्टं तत्त्वेन नृपसत्तम ॥ १२-३२१-१ (७८३४२)
नास्ति साङ्ख्यसमं ज्ञानं नास्ति योगसमं बलम् ।
तावुभावेकचर्यौ तावुभावनिधनौ स्मृतौ ॥ १२-३२१-२ (७८३४३)
पृथक्पृथक्प्रपश्यन्ति येऽप्यबुद्धिरता नराः ।
वयं तु राजन्पश्याम एकमेव तु निश्चयात् ॥ १२-३२१-३ (७८३४४)
यदेव योगाः पश्यन्ति तत्साङ्ख्यैरपि दृश्यते ।
एकं साङ्ख्यं च योगं च यः पश्यति स तत्त्ववित् ॥ १२-३२१-४ (७८३४५)
रुद्रप्रधानानपरान्विद्धि योगानरिंदम् ।
तेनैव चाथ देहेन विचरन्ति दिशो दश ॥ १२-३२१-५ (७८३४६)
यावद्धि प्रलयस्तात सूक्ष्मेणाष्टगुणेन ह ।
योगेन लोकान्विचरन्सुखं संन्यस्य चानघ ॥ १२-३२१-६ (७८३४७)
तावदेवाष्टगुणिनं योगप्राहुर्मनीषिणः ।
सूक्ष्ममष्टगुणं प्राहुर्नेतरं नृपसत्तम ॥ १२-३२१-७ (७८३४८)
द्विगुणं योगत्यं तु योगानां प्राहुरुत्तमम् ।
सगुणं निर्गुणं चैव यथाशास्त्रनिदर्शनम् ॥ १२-३२१-८ (७८३४९)
धारणं चैव मनसः प्राणायामश्च पार्थिव ।
एकाग्रता च मनसः प्राणायामस्तथैव च ॥ १२-३२१-९ (७८३५०)
प्राणायामो हि सगुणो निर्गुणं धारयेन्मनः ।
यद्यदृश्यति मुञ्चन्वै प्राणान्मैथिलसत्तम ।
वाताधिक्यं भवत्येव तस्मात्तं न समाचरेत् ॥ १२-३२१-१० (७८३५१)
निशायाः प्रथमे यामे चोदना द्वादश स्मृताः ।
मध्ये स्वप्नात्परे यामे द्वादशैव तु चोदनाः ॥ १२-३२१-११ (७८३५२)
तदेवमुपशान्तेन दान्तेनैकान्तशीलिना ।
आत्मारामेण बुद्धेन योक्तव्योऽऽत्मा न संशयः ॥ १२-३२१-१२ (७८३५३)
पञ्चानामिन्द्रियाणां तु दोषानाक्षिप्य पञ्चधा ।
शब्दं रूपं तथा स्पर्शं रसं गन्धं तथैव च ॥ १२-३२१-१३ (७८३५४)
प्रतिभामपवर्गं च प्रतिसंहृत्य मैथिल ।

इन्द्रियग्राममखिलं मनस्यभिनिवेश्य ह ॥ १२-३२१-१४ (७८३५५)
मनस्तथैवाहंकारे प्रतिष्ठाप्य नराधिप ।
अहंकारं तथा बुद्धौ बुद्धिं च प्रकृतावपि ॥ १२-३२१-१५ (७८३५६)
एवं हि परिसंख्याय ततो ध्यायन्ति केवलम् ।
विरजस्कमलं नित्यमनन्तं शुद्धमव्रणम् ॥ १२-३२१-१६ (७८३५७)
तस्थुषं पुरुषं नित्यमभेद्यमजरामरम् ।
शाश्वतं चाव्ययं चैव ईशानं ब्रह्म चाव्ययम् ॥ १२-३२१-१७ (७८३५८)
युक्तस्य तु महाराज लक्षणान्युपधारम् ।
लक्षणं तु प्रसादस्य यथा तृप्तः सुखं स्वयेत् ॥ १२-३२१-१८ (७८३५९)
निर्वाते तु यथा दीपो ज्वलेत्स्नेहस --धतः ।
निश्चलोर्ध्वशिखस्तद्वद्युक्तमाहुर्मनीषिण ॥ १२-३२१-१९ (७८३६०)
पाषाण इव मेघोत्थैर्यथा बिन्दुभिराहतः ।
नालं चालयितुं शक्यस्तथा युक्तस्य लक्षणम् ॥ १२-३२१-२० (७८३६१)
शक्तदुन्दुभिनिर्घोषैर्विविधैर्गीतवादितैः ।
क्रियमाणैर्न कम्पेत युक्तस्यैतन्निदर्शनम् ॥ १२-३२१-२१ (७८३६२)
तैलपात्रं यथा पूर्णं कराभ्यां गृह्य पूरुषः ।
सोपानमारुहेद्भीतस्तर्ज्यमानोऽसिपाणिभिः ॥ १२-३२१-२२ (७८३६३)
संयतात्मा भयात्तेषां न पात्राद्बिन्दुमुत्सृजेत् ।
तथैवोत्तरमागम्य एकाग्रमनसस्तथा ॥ १२-३२१-२३ (७८३६४)
स्थिरत्वादिन्द्रियाणां तु निश्चलस्तथैव च ।
एवं युक्तस्य तु मुनेर्लक्षणान्युपल----॥ १२-३२१-२४ (७८३६५)
स्वयुक्तः पश्यते ब्रह्म यत्तत्परम----यम् ।
महतस्तमसो मध्ये स्थितं ज्व नसा--भम् ॥ १२-३२१-२५ (७८३६६)
एतेन केवलं याति त्यक्त्वा देहमसाक्षिकम् ।
कालेन महता राजञ्श्रुतिरेषा सनातनी ॥ १२-३२१-२६ (७८३६७)
एतद्धि योगं योगानां किमन्यद्योगलक्षणम् ।
विज्ञाय तद्धि मन्यन्ते कृतकृत्या मनीषिणः ॥ ॥ १२-३२१-२७ (७८३६८)

इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि
एकविंशत्यधिकत्रिशततमोऽध्यायः ॥ ३२१.।

Mahabharata - Shanti Parva - Chapter Footnotes

१२-३२१-२ तावुभावेकपक्षौ तु इति ट । पाठः ॥
१२-३२१-३ येऽल्पबुद्धिपरायणा इति ट । ड। पाठः ॥
१२-३२१-६ सुखं वसति चानघेति ट । ड। पाठः ॥
१२-३२१-८ निर्गुणं योगकृत्यं त्विति ट । पाठः ॥

१२-३२१-१० दृश्यते यत्र मुञ्जन्वै इति ट । ड। पाठः ॥
१२-३२१-१४ मनस्यगिर एव चेति ड । पाठः। पूतिकामुपसर्गं वेति ड। पाठः ॥
१२-३२१-२४ ह्रियमाणैर्न कम्पेयुरिति ड । पाठः ॥
१२-३२१-२६ कालेन केवलं जानञ्श्रुतिरेषा सनातनीति ड । पाठः ॥

---

शन्तिपर्व-अध्यय३२२
॥ श्रीः ॥
१२.३२२. अध्यायः ३२२

Mahabharata - Shanti Parva - Chapter Topics
याज्ञवल्क्येन जनकंप्रति प्राणिनामुत्क्रमणस्थानविशेषप्रयोज्यफलविशेषकथनम् ॥ १.। तथा प्राणिनां मरणसूचक दुःशकुनकथनम् ॥ २.।
Mahabharata - Shanti Parva - Chapter Text

१२-३२२-० (७८३६९)
याज्ञवल्क्य उवाच। १२-३२२-०क्ष् (६५१४)
तथैवोत्क्रमतां स्थानं शृणुष्वावहितो नृप ।
पद्भ्यामुत्क्रममाणस्य वैष्णवं स्थानमुच्यते ॥ १२-३२२-१ (७८३७०)
जङ्घाभ्यां तु वसून्देवानाप्नुयादिति नः श्रुतम् ।
जानुभ्यां च महाभागान्साध्यान्देवानवाप्नुयात् ॥ १२-३२२-२ (७८३७१)
पायुनोत्क्रममाणस्तु मैत्रं स्थानमवाप्नुयात् ।
पृथिवीं जघनेनाथ ऊरुभ्यां च प्रजापतिम् ॥ १२-३२२-३ (७८३७२)
पार्श्वाभ्यां मरुतो देवान्नासाभ्यामिन्दुमेव च ।
बाहुभ्यामिन्द्रमित्याहुरुरसा रुद्रमेव च ॥ १२-३२२-४ (७८३७३)
ग्रीवया तु मुनिश्रेष्टं नरमाप्नोत्यनुत्तमम् ।
विश्वेदेवान्मुखेनाथ दिशः श्रोत्रेण चाप्नुयात् ॥ १२-३२२-५ (७८३७४)
घ्राणेन गन्धवहनं नेत्राभ्यां सूर्यमेव च ।
भ्रूभ्यां चैवाश्विनौ देवौ ललाटेन पितॄनथ ॥ १२-३२२-६ (७८३७५)
ब्रह्माणमाप्नोति विभुं मूर्ध्ना देवाग्रजं तथा ।
एतान्युत्क्रमणस्थानान्युक्तानि मिथिलेश्वर ॥ १२-३२२-७ (७८३७६)
अरिगनि प्रवक्ष्यामि विहितानि मनीषिभिः ।
संवत्सराद्विमोक्षस्तु संभवेत शरीरिणः ॥ १२-३२२-८ (७८३७७)
योऽरुन्धतीं न पश्येत दृष्टपूर्वा कदाचन ।
तथैव ध्रुवमतित्याहुः पूर्णेन्दुं दीपमेव च ॥ १२-३२२-९ (७८३७८)
खण्डाभासं दक्षिणतस्तेऽपि संवत्सरायुषः ।

परचक्षुषि चात्मानं ये न पश्यन्ति पार्थिवः ॥ १२-३२२-१० (७८३७९)
आत्मच्छायाकृतीभूतं तेऽपि संवत्सरायुषः ।
अतिद्युतिरतिप्रज्ञा अप्रज्ञा चाद्युतिस्तथा ॥ १२-३२२-११ (७८३८०)
प्रकृतेर्विक्रियापत्तिः षण्मासान्मृत्युलक्षणम् ।
दैवतान्यवजानाति ब्राह्मणैश्च विरुध्यते ॥ १२-३२२-१२ (७८३८१)
कृष्णश्यावच्छविच्छायः षण्मासान्मृत्युलक्षणम् ।
शीर्णनाभिं यथा चक्रं छिद्रं सोमं प्रपश्यति ॥ १२-३२२-१३ (७८३८२)
तथैव च सहस्रांशुं सप्तरात्रेण मृत्युभाक् ।
शवगन्धमुपाघ्राति सप्तरात्रेण मृत्युभाक्। १२-३२२-१४ (७८३८३)
कर्णनासावनमनं दन्तदृष्टिविरागितां ॥
कर्णनासावनमनं दन्तदृष्टिविरागिता ॥ १२-३२२-१५ (७८३८४)
संज्ञालोपो निरूष्मत्वं सद्योमृत्युनिदर्शनम् ।
अकस्माच्च स्रवेद्यस्य वाममक्षि नराधिप ॥ १२-३२२-१६ (७८३८५)
मूर्धतश्चोत्पतेद्धूमः सद्योमृत्युनिदर्शनम् ।
एतावन्ति त्वरिष्टानि विदित्वा मानवोऽऽत्मवान् ॥ १२-३२२-१७ (७८३८६)
निशि चाहनि चात्मानं योजयेत्परमात्मनि ।
प्रतीक्षमाणस्तत्कालं यः कालः प्रकृतो भवेत् ॥ १२-३२२-१८ (७८३८७)
अथास्य नेष्टं मरणं स्थातुमिच्छेदिमां क्रियाम् ।
सर्वगन्धान्रसांश्चैव धारयीत समाहितः ॥ १२-३२२-१९ (७८३८८)
'तथा मृत्युमुपादाय तत्परेणान्दरात्मना।'
स साङ्ख्यधारणं चैव विदित्वा मनुजर्षभ ।
जयेच्च मृत्युं योगेन तत्परेणान्तरात्मना ॥ १२-३२२-२० (७८३८९)
गच्छेत्प्राप्याक्षयं कृत्स्नमजन्म शिवमव्ययम् ।
शाश्वतं स्थानमचलं दुष्प्रापमकृतात्मभिः ॥ ॥ १२-३२२-२१ (७८३९०)

इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि
द्वाविंशत्यधिकत्रिशततमोऽध्यायः ॥ ३२२.।
Mahabharata - Shanti Parva - Chapter Footnotes

१२-३२२-८ संवत्सरवियोगस्य संभवे नु इति ध ।पाठः ॥
१२-३२२-१० खण्डभागं दक्षिणत इति थ ।पाठः ॥
१२-३२२-१३ छिद्रं छिद्रवन्तम् ॥
१२-३२२-१४ सुरभिद्रव्ये शवगन्धग्रह इत्यर्थः ॥

---

शन्तिपर्व-अध्यय३२३
॥ श्रीः ॥

## १२.३२३. अध्यायः ३२३

Mahabharata - Shanti Parva - Chapter Topics
भीष्मेण युधिष्ठिरंप्रति जनकयाज्ञवल्क्यसंवादानुवादः ॥ १.।
Mahabharata - Shanti Parva - Chapter Text

१२-३२३-० (७८३९१)
याज्ञवल्क्य उवाच। १२-३२३-०क्ष् (६५१५)
अव्यक्तस्थं परं यत्तत्पृष्टस्तेऽहं नराधिप ।
परं गुह्यमिमं प्रश्नं शृणुष्वावहितो नृप ॥ १२-३२३-१ (७८३९२)
यथार्षेणेह विधिना चरताऽवमतेन ह ।
मयाऽऽदित्यादवाप्तानि यजूंषि मिथिलाधिप ॥ १२-३२३-२ (७८३९३)
महता तपसा देवस्तपिष्णुः सेवितो मया ।
प्रीतेन चाहं विभुना सूर्येणोक्तस्तदाऽनघ ॥ १२-३२३-३ (७८३९४)
वरं वृणीष्व विप्रर्षे यदिष्टं ते सुदुर्लभम् ।
तं ते दास्यामि प्रीतात्मा मत्प्रसादो हि दुर्लभः ॥ १२-३२३-४ (७८३९५)
ततः प्रणम्य शिरसा मयोक्तस्तपतांवरः ।
यजूंषि नोपयुक्तानि क्षिप्रमिच्छामि वेदितुम् ॥ १२-३२३-५ (७८३९६)
ततो मां भगवानाह वितरिष्यामि ते द्विज ।
सरस्वतीह वाग्भूता शरीरं ते प्रवेक्ष्यति ॥ १२-३२३-६ (७८३९७)
ततो मामाह भगवानास्यं स्वं विवृतं कुरु ।
विवृतं च ततो मेऽऽस्यं प्रविष्टा च सरस्वती ॥ १२-३२३-७ (७८३९८)
ततो विदह्यमानोऽहं प्रविष्टोऽम्भस्तदाऽनघ ।
अविज्ञानादमर्षाच्च भास्करस्य महात्मनः ॥ १२-३२३-८ (७८३९९)
ततो विदह्यमानं मामुवाच भगवान्रविः ।
मुहूर्तं सह्यतां दाहस्ततः शीतीभविष्यति ॥ १२-३२३-९ (७८४००)
शीतीभूतं च मां दृष्ट्वा भगवानाह भास्करः ।
प्रतिभास्यति ते वेदः सखिलः सोत्तरो द्विज ॥ १२-३२३-१० (७८४०१)
कृत्स्नं शतपथं चैव प्रणेष्यसि द्विजर्षभ ।
तस्यान्ते चापुनर्भावे बुद्धिस्तव भविष्यति ॥ १२-३२३-११ (७८४०२)
प्राप्स्यसे च यदिष्टं तत्साङ्ख्ययोगेप्सितं पदम् ।
एतावदुक्त्वा भगवानस्तमेवाभ्यवर्तत ॥ १२-३२३-१२ (७८४०३)
ततोऽनुव्याहृतं श्रुत्वा गते देवे विभावसौ ।
गृहमागत्य संहृष्टोऽचिन्तयं वै सरस्वतीम् ॥ १२-३२३-१३ (७८४०४)
ततः प्रवृत्ताऽतिशुभा स्वरव्यञ्जनभूषिता ।
ओंकारमादितः कृत्वा मम देवी सरस्वती ॥ १२-३२३-१४ (७८४०५)

ततोऽहमर्घ्यं विधिवत्सरस्वत्यै न्यवेदयम् ।
परं यत्नमवाप्यैव निषण्णस्तत्परायणः ॥ १२-३२३-१५ (७८४०६)
ततः शतपथं कृत्स्नं सरहस्यं ससंग्रहम् ।
चक्रे सपरिशेषं च हर्षेण परमेण ह ॥ १२-३२३-१६ (७८४०७)
कृत्वा चाध्ययनं तेषां शिष्याणां शतमुत्तमम् ।
विप्रियार्थं सशिष्यस्य मातुलस्य महात्मनः ॥ १२-३२३-१७ (७८४०८)
ततः सशिष्येण मया सूर्येणेव गभस्तिभिः ।
व्यस्तो यज्ञो महाराज पितुस्तव महात्मनः ॥ १२-३२३-१८ (७८४०९)
मिषतो देवलस्यापि ततोऽर्धं हृतवान्वसु ।
स्ववेददक्षिणायार्थे विमर्दे मातुलेन ह ॥ १२-३२३-१९ (७८४१०)
सुमन्तुनाऽथ पैलेन तथा जैमिनिना च वै ।
पित्रा ते मुनिभिश्चैव ततोऽहमनुमानितः ॥ १२-३२३-२० (७८४११)
दश पञ्च च प्राप्तानि यजूंष्यर्कान्मयाऽनघ ।
तथैव रोमहर्षेण पुराणमवधारितम् ॥ १२-३२३-२१ (७८४१२)
बीजमेतत्पुरस्कृत्य देवीं चैव सरस्वतीम् ।
सूर्यस्य चानुभावेन प्रवृत्तोऽहं नराधिप ॥ १२-३२३-२२ (७८४१३)
कर्तुं शतपथं चेदमपूर्वं च कृतं मया ।
यथाभिलषितं मार्गं तथा तच्चोपपादितम् ॥ १२-३२३-२३ (७८४१४)
शिष्याणामखिलं कृत्स्नमनुज्ञातं ससंग्रहम् ।
सर्वे च शिष्याः शुचयो गताः परमहर्षिताः ॥ १२-३२३-२४ (७८४१५)
शाखाः पञ्चदशेमास्तु विद्या भास्करदर्शिता ।
प्रतिष्ठाप्य यथाकामं वेद्यं तदनुचितयम् ॥ १२-३२३-२५ (७८४१६)
किमत्र ब्रह्मण्यमृतं किंच वेद्यमनुत्तमम् ।
चिन्तयंस्तत्र चागत्य गन्धर्वो मामपृच्छत ॥ १२-३२३-२६ (७८४१७)
विश्वावसुस्ततो राजन्वेदान्तज्ञानकोविदः ।
चतुर्विंशांस्ततोऽपृच्छत्प्रश्नान्वेदस्य पार्थिव ॥ १२-३२३-२७ (७८४१८)
पञ्चविंशतिमं प्रश्नं पप्रच्छान्वीक्षिकीं तदा ।
ग्तथैव पुरुषव्याघ्र मित्रं वरुणमेव च ॥' १२-३२३-२८ (७८४१९)
ज्ञानं ज्ञेयं तथा ज्ञोऽज्ञः कस्तपा अतपास्तथा ।
सूर्यातिसूर्य इति च विद्याविद्ये तथैव च ॥ १२-३२३-२९ (७८४२०)
वेद्यावेद्यं तथा राजन्नचलं चलमेव च ।
अव्ययं चाक्षरं क्षेम्यमेतत्प्रश्नमनुत्तमम् ॥ १२-३२३-३० (७८४२१)
अथोक्तश्च महाराज राजा गन्धर्वसत्तमः ।
पृष्टवानानुपूर्व्येण प्रश्नमर्थवदुत्तमम् ॥ १२-३२३-३१ (७८४२२)
मुहूर्तमुष्यतां तावद्यावदेनं विचिन्तये ।
बाढमित्येव कृत्वा स तूर्ष्णीं गन्धर्व आस्थितः ॥ १२-३२३-३२ (७८४२३)

ततोऽनुचिन्तयमहं भूयो देवीं सरस्वतीम् ।
मनसा स च मे प्रश्नो दध्नो धृतमिवोद्धृतः ॥ १२-३२३-३३ (७८४२४)
तत्रोपनिषदं चैव परिशेषं च पार्थिव ।
मथ्नामि मनसा तात दृष्ट्वा चान्वीक्षिकीं पराम् ॥ १२-३२३-३४ (७८४२५)
चतुर्थी राजशार्दूल विद्यैषा सांपरायिकी ।
उदीरिता मया तुभ्यं पञ्चविंशाऽधितिष्ठता ॥ १२-३२३-३५ (७८४२६)
अथोक्तस्तु मया राजन्राजा विश्वावसुस्तदा ।
श्रूयतां यद्भवानस्मान्प्रश्नं संपृष्टवानिह ॥ १२-३२३-३६ (७८४२७)
विश्वाविश्वेति यदिदं गन्धर्वेन्द्रानुपृच्छसि ।
विश्वाव्यक्तं परं विद्याद्भूतभव्यभयंकरम् ॥ १२-३२३-३७ (७८४२८)
त्रिगुणं गुणकर्तृत्वाद्विश्वान्यो निष्कलस्तथा ।
विश्वाविश्वेति मिथुनमेवमेवानुदृश्यते ॥ १२-३२३-३८ (७८४२९)
अव्यक्तं प्रकृतिः प्राहुः पुरुषेति च निर्गुणम् ।
तथैव मित्रं पुरुषं वरुणं प्रकृतिं तथा ॥ १२-३२३-३९ (७८४३०)
ज्ञानं तु प्रकृतिं प्राहुर्ज्ञेयं पुरुषमेव च ।
अज्ञमव्यक्तमित्युक्तं ज्ञस्तु निष्कल उच्यते ॥ १२-३२३-४० (७८४३१)
कस्तपा अतपाः प्रोक्तः कोसौ पुरुष उच्यते ।
तपास्तु प्रकृतिं प्राहुरतपा निष्कलः स्मृतः ॥ १२-३२३-४१ (७८४३२)
ग्सूर्यमव्यक्तमित्युक्तमतिसूर्यस्तु निष्कलः ।
अविद्या प्रोक्तमव्यक्तं विद्या पुरुष उच्यते ॥' १२-३२३-४२ (७८४३३)
तथैवावेद्यमव्यक्तं वेद्यः पुरुष उच्यते ।
चलाचलमिति प्रोक्तं त्वया तदपि मे शृणु ॥ १२-३२३-४३ (७८४३४)
चलां तु प्रकृतिं प्राहुः कारणं क्षेपसर्गयोः ।
अक्षेपसर्गयोः कर्ता निश्चलः पुरुषः स्मृतः ॥ १२-३२३-४४ (७८४३५)
अज्ञावुभौ ध्रुवौ चैव अक्षयौ चाप्युभावपि ॥ १२-३२३-४५ (७८४३६)
अजौ नित्यावुभौ प्राहुरध्यात्मगतिनिश्चयाः ।
अक्षयत्वात्प्रजनने अजमत्राहुरव्ययम् ।
अक्षयं पुरुषं प्राहुः क्षयो ह्यस्य न विद्यते ॥ १२-३२३-४६ (७८४३७)
गुणक्षयत्वात्प्रकृतिः कर्तृत्वादक्षयं बुधाः ।
एषा तेऽन्वीक्षिकी विद्या चतुर्थी सांपरायिकी ॥ १२-३२३-४७ (७८४३८)
विद्योपेतं धनं कृत्वा कर्मणा नित्यकर्मणि ।
एकान्तदर्शना वेदाः सर्वे विश्वावसो स्मृताः ॥ १२-३२३-४८ (७८४३९)
जायन्ते च म्रियन्ते च यस्मिन्नेते यतश्च्युताः ।
वेदार्थं ये न जानीते वेद्यं गन्धर्वसत्तम ॥ १२-३२३-४९ (७८४४०)
साङ्गोपाङ्गानपि यदि पञ्च वेदानधीयते ।
वेदवेद्यं न जानीते वेदभारवहो हि सः ॥ १२-३२३-५० (७८४४१)

यो घृतार्थी खराक्षीरं मथेद्गन्धर्वसत्तम ।
विष्ठां तत्रानुपश्येत न मण्डं न च वै घृतम् ॥ १२-३२३-५१ (७८४४२)
तथा वेद्यमवेद्यं च वेदविद्यो न विन्दति ।
स केवलं मूढमतिर्वेदभारवहः स्मृतः ॥ १२-३२३-५२ (७८४४३)
द्रष्टव्यौ नित्यमेवैतौ तत्परेणान्तरात्मना ।
यथाऽस्य जन्मनिधने न भवेतां पुनः पुनः ॥ १२-३२३-५३ (७८४४४)
अजस्रं जन्मनिधनं चिन्तयित्वा त्रयीमिमाम् ।
परित्यज्य क्षयमिह अक्षयं धर्ममास्थितः ॥ १२-३२३-५४ (७८४४५)
यदाऽनुपश्यतेऽत्यन्तमहन्यहनि काश्यप ।
तदा स केवलीभूतः षड्विंशमनुपश्यति ॥ १२-३२३-५५ (७८४४६)
अन्यश्च शाश्वतो व्यक्तस्तथाऽन्यः पञ्चविंशकः ।
तत्स्थं समनुपश्यन्ति तमेकमिति साधवः ॥ १२-३२३-५६ (७८४४७)
तेनैतं नाभिनन्दन्ति पञ्चविंसकमच्युतम् ।
जन्ममृत्युभयाद्योगाः साख्याश्च परमैषिणः ॥ १२-३२३-५७ (७८४४८)
विश्वावसुरुवाच। १२-३२३-५८क्ष् (६५१६)
पञ्चविंशं यदेतत्ते प्रोक्तं ब्राह्मणसत्तम ।
तदहं न तथा वेद्मि तद्भवान्वक्तुमर्हति ॥ १२-३२३-५८ (७८४४९)
जैगीषव्यस्यासितस्य देवलस्य मया श्रुतम् ।
पराशरस्य विप्रर्षेर्वार्षगण्यस्य धीमतः ॥ १२-३२३-५९ (७८४५०)
भिक्षोः पञ्चशिखस्यास्य कपिलस्य शुकस्य च ।
गौतमस्याष्टिंषेणस्य गर्गस्य च महात्मनः ॥ १२-३२३-६० (७८४५१)
नारदस्यासुरेश्चैव पुलस्त्यस्य च धीमतः ।
सनत्कुमारस्य ततः शुक्रस्य च महात्मनः ॥ १२-३२३-६१ (७८४५२)
कश्यपस्य पितुश्चैव पूर्वमेव मया श्रुतम् ।
तदनन्तरं च रुद्रस्य विश्वरूपस्य धीमतः ॥ १२-३२३-६२ (७८४५३)
दैवतेभ्यः पितृभ्यश्च दैतेयेभ्यस्ततस्ततः ।
प्राप्तमेतन्मया कृत्स्नं वेद्यं नित्यं वदन्त्युत ॥ १२-३२३-६३ (७८४५४)
तस्मात्तद्वै भवद्बुद्ध्या श्रोतुमिच्छामि ब्राह्मण ।
भवान्प्रबर्हः शास्त्राणां प्रगल्भश्चातिबुद्धिमान् ॥ १२-३२३-६४ (७८४५५)
न तवाविदितं किंचिद्भवाञ्श्रुतिनिधिः स्मृतः ।
कथ्यसे देवलोके च पितृलोके च ब्राह्मण ॥ १२-३२३-६५ (७८४५६)
ब्रह्मलोकगताश्चैव कथयन्ति महर्षयः ।
पतिश्च तपतां शश्वदादित्यस्तव भाषिता ॥ १२-३२३-६६ (७८४५७)
साङ्ख्यज्ञानं त्वया ब्रह्मन्नवाप्तं कृत्स्नमेव च ।
तथैव योगशास्त्रं च याज्ञवल्क्य विशेषतः ॥ १२-३२३-६७ (७८४५८)
निःसंदिग्धं प्रबुद्धस्त्वं बुध्यमानश्चराचरम् ।

श्रोतुमिच्छामि तज्ज्ञानं घृतं मण्डमयं यथा ॥१२-३२३-६८ (७८४५९)
याज्ञवल्क्य उवाच।१२-३२३-६९क्ष् (६५१७)
कृत्स्नधारिणमेव त्वां मन्ये गन्धर्वसत्तम ।
जिज्ञासमे च मां राजंस्तन्निबोध यथाश्रुतम् ॥१२-३२३-६९ (७८४६०)
बुध्यमानो हि प्रकृतिं बुध्यते पञ्चविंशकः ।
न तु बुध्यति गन्धर्वप्रकृतिः पञ्चविंशकम् ॥१२-३२३-७० (७८४६१)
अनेन प्रतिबोधेन प्रधानं प्रवदन्ति तत् ।
साङ्ख्ययोगार्थतत्त्वज्ञा यथ्नाश्रुतिनिदर्शनात् ॥१२-३२३-७१ (७८४६२)
पश्यंस्तथैव चापश्यन्पश्यत्यन्यः सदाऽनघ ।
षड्विंशं पञ्चविंशं च चतुर्विंशं च पश्यति ॥१२-३२३-७२ (७८४६३)
न तु पश्यति पश्यंस्तु यश्चैनमनुपश्यति ।
पञ्चविंशोऽभिमन्येत नान्योऽस्ति परतो मम ॥१२-३२३-७३ (७८४६४)
न चतुर्विंशको ग्राह्यो मनुजैर्ज्ञानदर्शिभिः ।
मत्स्यो वोदकमन्वेति प्रवर्तेत प्रवर्तनात् ॥१२-३२३-७४ (७८४६५)
यथैव बुध्यते मत्स्यस्तथैषोऽप्यनुबुध्यते ।
स स्नेहात्सहवासाच्च साभिमानाच्च नित्यशः ॥१२-३२३-७५ (७८४६६)
स निमज्जति कालस्य यदैकत्वं न बुध्यते ।
उन्मज्जति हि कालस्य समत्वेनाभिसंवृतः ॥१२-३२३-७६ (७८४६७)
यदा तु मन्यतेऽन्योऽहमन्य एष इति द्विजिः ।
तदा स केवलीभूतः षड्विंशमनुपश्यति ॥१२-३२३-७७ (७८४६८)
अन्यश्च राजन्परमस्तथाऽन्यः पञ्चविंशकः ।
तत्स्थत्वादनुपश्यन्ति एक एवेति साधवः ॥१२-३२३-७८ (७८४६९)
तेनैतन्नाभिनन्दन्ति पञ्चविंशकमच्युतम् ।
जन्ममृत्युभयाद्भीता योगाः साङ्ख्याश्च काश्यप ।
षड्विंशमनुपश्यन्तः शुचयस्तत्परायणाः ॥ १२-३२३-७९ (७८४७०)
यदा स केवलीभूतः षड्विंशमनुपश्यति ।
तदा स सर्वविद्विद्वान्न पुनर्जन्म विन्दति ॥१२-३२३-८० (७८४७१)
एवमप्रतिबुद्धश्च बुध्यमानश्च तेऽनघ ।
बुद्धिश्चोक्ता यथातत्त्वं मया श्रुतिनिदर्शनात् ॥१२-३२३-८१ (७८४७२)
पश्यापश्यं यो न पश्येत्क्षेम्यं तत्वं च काश्यप ।
केवलाकेवलं चान्यत्पञ्चविंशं परं च यत् ॥१२-३२३-८२ (७८४७३)
विश्वावसुरुवाच।१२-३२३-८३क्ष् (६५१८)
तथ्यं शुभं चैतदुक्तं त्वया विभो ।
सम्यक्क्षेम्यं दैवताद्यं यथावत् ।
स्वस्त्यक्षयं भवतश्चास्तु नित्यं
बुद्ध्या सदा बुद्धियुक्तं नमस्ये ॥ १२-३२३-८३ (७८४७४)

याज्ञवल्क्य उवाच।१२-३२३-८४क्ष् (६५१९)
एवमुक्त्वा संप्रयातो दिवं स
विभ्राजन्वै श्रीमता दर्शनेन ।
दृष्टश्च तुष्ट्या परयाऽभिनन्द्य
प्रदक्षिणं मम कृत्वा महात्मा ॥ १२-३२३-८४ (७८४७५)
ब्रह्मादीनां खेचराणां क्षितौ च
ये चाधस्तात्संवसन्ते नरेन्द्र ।
तत्रैव तद्दर्शनं दर्शयन्वै
सम्यक्क्षेम्यं ये पथं संश्रिता वै ॥ १२-३२३-८५ (७८४७६)
साङ्ख्याः सर्वे साङ्ख्यधर्मे रताश्च
तद्वद्योगा योगधर्मे रताश्च ।
ये चाप्यन्ये मोक्षकामा मनुष्या
स्तेषामेतद्दर्शनं ज्ञानदृष्टम् ॥ १२-३२३-८६ (७८४७७)
ज्ञानान्मोक्षो जायते राजसिंह
नास्त्यज्ञानादेवमाहुर्नरेन्द्र ।
तस्माज्ज्ञानं तत्त्वतोऽन्तेषितव्यं
येनात्मानं मोक्षयेज्जन्ममृत्योः ॥ १२-३२३-८७ (७८४७८)
प्राप्य ज्ञानं ब्राह्मणात्क्षत्रियाद्वा
वैश्याच्छूद्रादपि नीचादभीक्ष्णम् ।
श्रद्धातव्यं श्रद्दधानेन नित्यं
न श्रद्धिनं जन्ममृत्यू विशेताम् ॥ १२-३२३-८८ (७८४७९)
सर्वे वर्णा ब्राह्मणा ब्रह्मजाश्च
सर्वे नित्यं व्याहरन्ते च ब्रह्म ।
ग येनात्मानं मोक्षयेज्जन्ममृत्यो
स्तत्त्वं शास्त्रं ब्रह्मबुद्ध्या ब्रवीमि।'
तत्त्वं शास्त्रं ब्रह्मबुद्ध्या ब्रवीमि
सर्वं विश्वं ब्रह्म चैतत्समस्तम् ॥ १२-३२३-८९ (७८४८०)
ब्रह्मास्यतो ब्राह्मणाः संप्रसूता
बाहुभ्यां वै क्षत्रियाः संप्रसूताः ।
नाभ्यां वैश्याः पादतश्चापि शूद्राः
सर्वे वर्णा नान्यथा वेदितव्याः ॥ १२-३२३-९० (७८४८१)
अज्ञानतः कर्मयोनिं भजन्ते
तांतां राजंस्ते यथा यान्त्यभावम् ।
तथा वर्णा ज्ञानहीनाः पतन्ते
घोरादज्ञानात्प्राकृतं योनिजालम् ॥ १२-३२३-९१ (७८४८२)
तस्माज्ज्ञानं सर्वतो मार्गितव्यं

सर्वत्रस्थं चैतदुक्तं मया ते ।
तत्स्थो ब्रह्मा तस्थिवांश्चापरो य
स्तस्मै नित्यं मोक्षमाहुर्नरेन्द्र ॥ १२-३२३-९२ (७८४८३)
यत्ते पृष्टं तन्मया चोपदिष्टं
याथातथ्यं तद्विशोको भजस्व ।
राजन्गाच्छस्वैतदर्थस्य पारं
सम्यक्प्रोक्तं स्वस्ति ते त्वस्तु नित्यम् ॥ १२-३२३-९३ (७८४८४)
भीष्म उवाच। १२-३२३-९४क्ष् (६५२०)
स एवमनुशिष्टस्तु याज्ञवल्क्येन धीमता ।
प्रीतिमानभवद्राजा मिथिलाधिपतिस्तदा ॥ १२-३२३-९४ (७८४८५)
गते मुनिवरे तस्मिन्कृते चापि प्रदक्षिणम् ।
दैवरातिर्नरपतिरासीनस्तत्र मोक्षवित् ॥ १२-३२३-९५ (७८४८६)
गोकोटिं स्पर्शयामास हिरण्यस्य तथैव च ।
रत्नाञ्जलिमथैकैकं ब्राह्मणेभ्यो ददौ तदा ॥ १२-३२३-९६ (७८४८७)
वेदहराज्यं च तदा प्रतिष्ठाप्य सुतस्य वै ।
यतिधर्ममुपास्यंश्चाप्यवसन्मिथिलाधिपः ॥ १२-३२३-९७ (७८४८८)
साङ्ख्यज्ञानमधीयानो योगशास्त्रं च कृत्स्नशः ।
धर्माधर्मं च राजेन्द्र प्राकृतं परिगर्हयन् ॥ १२-३२३-९८ (७८४८९)
अनन्त इति कृत्वा स नित्यं केवलमेव च ।
धर्माधर्मौ पुण्यपापे सत्यासत्ये तथैव च ॥ १२-३२३-९९ (७८४९०)
जन्ममृत्यू च राजेन्द्र प्राकृतं तदचिन्तयत् ।
ब्रह्माव्यक्तस्य कर्मेदमिति नित्यं नराधिप ॥ १२-३२३-१०० (७८४९१)
पश्यन्ति योगाः साङ्ख्याश्च स्वशास्त्रकृतलक्षणाः ।
इष्टानिष्टविमुक्तं हि तस्थौ ब्रह्म परात्परम् ॥ १२-३२३-१०१ (७८४९२)
नित्यं तदाहुर्विद्वांसः शुचि तस्माच्छुचिर्भव ।
दीयते यच्च लभते दत्तं यच्चानुमन्यते ॥ १२-३२३-१०२ (७८४९३)
ग्अव्यक्तेनेति तच्चिन्त्यमन्यथा मा विचन्तय।'
ददाति च नरश्रेष्ठ प्रतिगृह्णाति यच्च ह ।
ददात्यव्यक्त इत्येतत्प्रतिगृह्णाति यच्च वै ॥ १२-३२३-१०३ (७८४९४)
आत्मा ह्येवात्मनो ह्येकः कोऽन्यस्तस्मात्परो भवेत् ।
एवं मन्यस्व सततमन्यथा मा विचिन्तय ॥ १२-३२३-१०४ (७८४९५)
यस्याव्यक्तं न विदितं सगुणं निर्गुणं पुनः ।
तेन तीर्थानि यज्ञाश्च सेवितव्या विपश्चिता ॥ १२-३२३-१०५ (७८४९६)
न स्वाध्यायैस्तपोभिर्वा यज्ञैर्वा कुरुनन्दन ।
लभतेऽव्यक्तिकं स्थानं ज्ञात्वाऽव्यक्तं महीयते ॥ १२-३२३-१०६ (७८४९७)
तथैव महतः स्थानमाहंकारिकमेव च ।

अहंकारात्परं चापि स्थानानि समवाप्नुयात् ॥१२-३२३-१०७ (७८४९८)
ये त्वव्यक्तात्परं नित्यं जानते शास्त्रतत्पराः ।
जन्ममृत्युविमुक्तं च विमुक्तं सदसच्च यत् ॥१२-३२३-१०८ (७८४९९)
एतन्मयाऽऽप्तं जनकात्पुरस्ता
त्तेनापि चाप्तं नृप याज्ञवल्क्यात् ।
ज्ञातं विशिष्टं न तथा हि यज्ञा
ज्ञानेन दुर्गं तरते न यज्ञैः ॥ १२-३२३-१०९ (७८५००)
दुर्गं जन्म निधनं चापि राज
न्न भौतिकं ज्ञानविदो वदन्ति ।
यज्ञैस्तपोभिर्नियमैर्व्रतैश्च
दिवं समासाद्य पतन्ति भूमौ ॥ १२-३२३-११० (७८५०१)
तस्मादुपासस्व परं महच्छुचि
शिवं विमोक्षं विमलं पवित्रम् ।
क्षेत्रं ज्ञात्वा पार्थिव ज्ञानयज्ञ
मुपास्य वै तत्त्वमृषिर्भविष्यसि ॥ १२-३२३-१११ (७८५०२)
युदुपनिषदमुपाकरोत्तथाऽसौ
जनकनृपस्य पुरा हि याज्ञवल्क्यः ।
यदुपगणितशाश्वताव्ययं त
च्छुभममृतत्वमशोकमर्च्छति ॥ ॥ १२-३२३-११२ (७८५०३)

इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि
त्रयोविंशत्यधिकत्रिशततमोऽध्यायः ॥ ३२३.।
Mahabharata - Shanti Parva - Chapter Footnotes

१२-३२३-२ चरतावनतेन हेति झ ।ध।पाठः ॥
१२-३२३-३ देवः सविता तोषितो मयेति ध ।पाठः ॥
१२-३२३-७ मेऽऽस्यं ममास्यम् ।संधिरार्षः ॥
१२-३२३-८ मातुलस्य महात्मन इति ट ।ड।ध।पाठः ॥
१२-३२३-९ प्रतिष्ठास्यति ते वेद इति झ
।ध।पाठः।शीतीभविष्यतित्वद्देह इति शेषः ॥
१२-३२३-१० परशाखीयं स्वशाखायामपेक्षावशात् पठ्यते
तत्खिलमित्युच्यते ।सोत्तरः सोपनिषत्कः ॥
१२-३२३-११ अपुनर्भावे मोक्षे ॥
१२-३२३-१६ चक्रे कर्मकर्तरि प्रयोगःष ।स्वयमेवाविरभूदित्यर्थः ॥
१२-३२३-१७ मातुलस्य वैशंपायनस्य ॥
१२-३२३-१९ ततोर्ध्यं कृतवानहमिति ट ।ड।थ।पाठः।देवलस्य

मातुलपक्षीयस्य मिषतः पश्यतः पुरस्तात्। अर्थे अर्थनिमित्तं मातुलादिभिः सह विमर्दे सति समं विभज्य ग्राह्यमिति निर्बन्धे सति देवलसंमत्याहं दक्षिणाया अर्धं हृतवान् स्वीकृतवानित्यर्थः। दक्षिणायार्थे इति संधिरार्षः ॥
१२-३२३-२३ कर्तुं प्रकटीकर्तुम् ॥
१२-३२३-२६ ब्रह्मण्यं ब्राह्मणजातेर्हितम् ॥
१२-३२३-२८ विश्वाविश्वं तथाश्वाश्वं मित्रं वरुणमेव चेति झ ।पाठः ॥
१२-३२३-२९ सूर्यातिसूर्यमिति चेति ट ।थ। पाठः ॥
१२-३२३-३७ विश्वमव्यक्तमित्युक्तमविश्वो निष्कलस्तथेति ट ।ड। थ। पाठः ॥
१२-३२३-३८ अश्वश्चाश्वा च मिथुनमिति झ ।पाठः ॥
१२-३२३-४० अज्ञश्च ज्ञश्च पुरुषस्तस्मान्निष्कल इति ध ।पाठः ॥
१२-३२३-४८ विद्यापेतं धनं कृत्वेति ट ।थ। पाठः। विद्योपेतं मनः कृत्वेति ड। पाठः। विद्यामेतां धनं कृत्वेति ध। पाठः ॥
१२-३२३-५६ तस्माद्द्वावनुपश्येतिति ध ।पाठः। तस्य द्वावनुपश्येतामिति झ। पाठः ॥
१२-३२३-६९ कुत्स्नहारिणमेव त्वामिति ट ।ड। थ। पाठः ॥
१२-३२३-७० अबुध्यमानः प्रकृतिमिति ड ।पाठः ॥
१२-३२३-९६ त्पर्शयामास ददौ ॥

---

शन्तिपर्व-अध्यय३२४
॥ श्रीः ॥
१२.३२४. अध्यायः ३२४

Mahabharata - Shanti Parva - Chapter Topics
भीष्मण युधिष्ठिरंप्रति दारापत्यादिषु स्नेहत्यागपूर्वकं धर्माचरणचोदकजनकपञ्चशिखसंवादानुवादः ॥१.।
Mahabharata - Shanti Parva - Chapter Text

१२-३२४-० (७८५०४)
युधिष्ठिर उवाच। १२-३२४-०क्ष् (६५२१)
ऐश्वर्यं वा महत्प्राप्य धनं वा भरतर्षभ ।
दीर्घमायुरवाप्याथ कथं मृत्युमतिक्रमेत् ॥ १२-३२४-१ (७८५०५)
तपसा वा सुमहता कर्मणा वा श्रुतेन वा ।
रसायनप्रयोगैर्वा कैर्नाप्नोति जरान्तकौ ॥ १२-३२४-२ (७८५०६)
भीष्म उवाच। १२-३२४-३क्ष् (६५२२)
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।

भिक्षोः पञ्चशिखस्येह संवादं जनकस्य च ॥ १२-३२४-३ (७८५०७)
वैदेहो जनको राजा महर्षिं वेदवित्तमम् ।
यर्यपृच्छत्पञ्चशिखं छिन्नधर्मार्थसंशयम् ॥ १२-३२४-४ (७८५०८)
केन वृत्तेन भगवन्नतिक्रामेज्जरान्तकौ ।
तपसा वाऽथवा बुद्ध्या कर्मणा वा श्रुतेन वा ॥ १२-३२४-५ (७८५०९)
एवमुक्तः स वैदेहं प्रत्युवाचापरेक्षवित् ।
निवृत्तिर्नैतयोरस्ति नातिवृत्तिः कथंचन ॥ १२-३२४-६ (७८५१०)
न ह्यहानि निवर्तन्ते न मासा न पुनः क्षपाः ।
सोयं प्रपद्यतेऽध्वानं चिराय ध्रुवमध्रुवः ॥ १२-३२४-७ (७८५११)
सर्वभूतसमुच्छेदः स्रोतसेवोह्यते सदा ।
ऊह्यमानं निमज्जन्तमप्लवे कालसागरे ॥ १२-३२४-८ (७८५१२)
जरामृत्युमहाग्राहे न कश्चिदतिवर्तते ।
नैवास्य कश्चिद्भवति नासौ भवति कस्यचित् ॥ १२-३२४-९ (७८५१३)
पथि संगतमेवेदं दारैरन्यैश्च बन्धुभिः ।
नायमत्यन्तसंवासो लब्धपूर्वो हि केनचित् ॥ १२-३२४-१० (७८५१४)
क्षिप्यन्ते तेनतेनैव निष्टनन्तः पुनः पुनः ।
कालेन जाता याता हि वायुनेवाभ्रसंचयाः ॥ १२-३२४-११ (७८५१५)
जरामृत्यू हि भूतानां खादितारौ वृकाविव ।
बलिनां दुर्बलानां च ह्रस्वानां महतामपि ॥ १२-३२४-१२ (७८५१६)
एवंभूतेषु भूतेषु नित्यभूताध्रवेषु च ।
कथं हि हृष्येज्जातेषु मृतेषु च न संज्वरेत् ॥ १२-३२४-१३ (७८५१७)
कुतोऽहमागतः कोऽस्मि क्व गमिष्यामि कस्य वा ।
कस्मिन्स्थितः क्व भविता कस्मात्किमनुशोचसि ॥ १२-३२४-१४ (७८५१८)
द्रष्टा स्वर्गस्य न ह्यस्ति तथैव नरकस्य च ।
आगमास्त्वनतिक्रम्य दद्याच्चैव यजेत च ॥ ॥ १२-३२४-१५ (७८५१९)

इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि
चतुर्विंशत्यधिकत्रिशततमोऽध्यायः ॥ ३२४.।
Mahabharata - Shanti Parva - Chapter Footnotes

१२-३२४-१४ कुतस्त्वमागतः क्वासि त्वं गमिष्यसि कस्यवेति ड ।पाठः ॥

---

शन्तिपर्व-अध्यय३२५
॥ श्रीः ॥
१२.३२५. अध्यायः ३२५

Mahabharata - Shanti Parva - Chapter Topics

१२-३२५-० (७८५२०)
युधिष्ठिर उवाच। १२-३२५-०क्ष् (६५२३)
अपरित्यज्य गार्हस्थ्यं कुरुराजर्षिसत्तम ।
कः प्राप्तो भूपतिः सिद्धिं मोक्षतत्त्वं वदस्व मे ॥ १२-३२५-१ (७८५२१)
संन्यस्यते यथाऽत्माऽयं व्यक्तस्यात्मा यथा च यत् ।
परं मोक्षस्य यच्चापि तन्मे ब्रूहि पितामह ॥ १२-३२५-२ (७८५२२)
भीष्म उवाच। १२-३२५-३क्ष् (६५२४)
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
जनकस्य च संवादं सुलभायाश्च भारत ॥ १२-३२५-३ (७८५२३)
संन्यासफलिकः कश्चिद्बभूव नृपतिः पुरा ।
मैथिलो जनको नाम धर्मध्वज इति श्रुतः ॥ १२-३२५-४ (७८५२४)
स वेदे मोक्षशास्त्रे च स्वे च शास्त्रे कृतश्रमः ।
इन्द्रियाणि समाधाय शशास वसुधामिमाम् ॥ १२-३२५-५ (७८५२५)
तस्य वेदविदः प्राज्ञाः श्रुत्वा तां साधुवृत्तताम् ।
लोकेषु स्पृहयन्त्यन्ये पुरुषाः पुरुषेश्वरम् ॥ १२-३२५-६ (७८५२६)
अथ धर्मयुगे तस्मिन्योगधर्ममनुष्ठिता ।
महीमनुचचारैका सुलभा नाम भिक्षुकी ॥ १२-३२५-७ (७८५२७)
तया जगदिदं कृत्स्नमटन्त्या मिथिलेश्वरः ।
तत्रतत्र श्रुतो मोक्षे कथ्यमानस्त्रिदण्डिभिः ॥ १२-३२५-८ (७८५२८)
साऽतिसूक्ष्मां कथां श्रुत्वा तथ्यं नेति ससंशया ।
दर्शने जातसंकल्पा जनकस्य बभूव ह ॥ १२-३२५-९ (७८५२९)
तत्र सा विप्रहायाऽथ पूर्वरूपं हि योगतः ।
अबिभ्रदनवद्याङ्गी रूपमन्यदनुत्तमम् ॥ १२-३२५-१० (७८५३०)
चक्षुर्निमेषमात्रेण लघ्वस्त्रगतिगामिनी ।
विदेहानां पुरीं सुभ्रूर्जगाम कमलेक्षणा ॥ १२-३२५-११ (७८५३१)
सा प्राप्य मिथिलां रम्यां समृद्धजनसंकुलाम् ।
भैक्ष्यचर्यापदेशेन ददर्श मिथिलेश्वरम् ॥ १२-३२५-१२ (७८५३२)
राजा तस्याः परं दृष्ट्वा सौकुमार्यं पुनस्तदा ।
केयं कस्य कुतो वेति बभूवागतविस्मयः ॥ १२-३२५-१३ (७८५३३)
ततोस्याः स्वागतं कृत्वा व्यादिश्य च वरासनम् ।
पूजितां पादशौचेन वरान्नेनाप्यतर्पयत् ॥ १२-३२५-१४ (७८५३४)
अथ भुक्तवतीं प्रीतां राजा तां मन्त्रिभिर्वृतः ।
सर्वभाष्यविदां मध्ये चोदयामास भिक्षुकीम् ॥ १२-३२५-१५ (७८५३५)

सुलभा त्वस्य धर्मेषु मुक्तो नेति ससंशया ।
सत्वं सत्वेन योगज्ञा प्रविष्टाऽभून्महीपते ॥ १२-३२५-१६ (७८५३६)
नेत्राभ्यां नेत्रयोरस्य रश्मीन्संयोज्य रश्मिभिः ।
सा स्म तं चोदयिष्यन्ती योगबन्धैर्बबन्ध ह ॥ १२-३२५-१७ (७८५३७)
जनकोप्युत्स्मयन्राजा भावमस्या विशेषयन् ।
प्रतिजग्राह भावेन भावमस्या नृपोत्तम ॥ १२-३२५-१८ (७८५३८)
तदेकस्मिन्नधिष्ठाने संवादः श्रूतयामयम् ।
छत्रादिषु विमुक्तस्य मुक्तायाश्च त्रिदण्डकैः ॥ १२-३२५-१९ (७८५३९)
जनक उवाच। १२-३२५-२०क्ष् (६५२५)
भगवत्याः क्व चर्येयं कृता क्व च गमिष्यसि ।
कस्य च त्वं कुतो वेति पप्रच्छैनां महिपतिः ॥ १२-३२५-२० (७८५४०)
श्रुते वयसि जातौ च सद्भावो नाधिगम्यते ।
एष्वर्थेषूत्तरं तस्मात्प्रवेद्यं मत्समागमे ॥ १२-३२५-२१ (७८५४१)
छत्रादिषु विशेषेषु मुक्तं मां विद्धि तत्त्वतः ।
सत्वां संवेत्तुमिच्छामि मानार्हा हि मताऽसिमे ॥ १२-३२५-२२ (७८५४२)
यस्माच्चैतन्मया प्राप्तं ज्ञानं वैशेषिकं पुरा ।
यस्य नान्यः प्रवक्ताऽस्ति मोक्षे तमपि मे शृणु ॥ १२-३२५-२३ (७८५४३)
पराशरसगोत्रस्य वृद्धस्य सुमहात्मनः ।
भिक्षोः पञ्चशिखस्याहं शिष्यः परमसंमतः ॥ १२-३२५-२४ (७८५४४)
साङ्ख्यज्ञाने च योगे च महीपालविधौ तथा ।
त्रिविधे मोक्षधर्मोस्मिन्गताध्वा छिन्नसंशयः ॥ १२-३२५-२५ (७८५४५)
स यथा शास्त्रदृष्टेन मार्गेणेह परिभ्रमन् ।
वार्षिकांश्चतुरो मासान्पुरा मयि सुखोषितः ॥ १२-३२५-२६ (७८५४६)
तेनाहं साङ्ख्यमुख्येन सुदृष्टार्थेन तत्त्वतः ।
श्रावितस्त्रिविधं मोक्षं न च राज्याद्धि चालितः ॥ १२-३२५-२७ (७८५४७)
सोहं तामखिलां वृत्तिं त्रिविधां मोक्षसंहिताम् ।
मुक्तरागश्चराम्येकः पदे परमके स्थितः ॥ १२-३२५-२८ (७८५४८)
वैराग्यं पुनरेतस्य मोक्षस्य परमो विधिः ।
ज्ञानादेव च वैराग्यं जायते येन मुच्यते ॥ १२-३२५-२९ (७८५४९)
ज्ञानेन कुरुते यत्नं यत्नेन प्राप्यते महत् ।
महद्द्वन्द्वप्रमोक्षाय सा सिद्धिर्या वयोतिगा ॥ १२-३२५-३० (७८५५०)
सेयं परमिका सिद्धिः प्राप्ता निर्द्वन्द्वता मया ।
इहैव गतमोहेन चरता मुक्तसङ्गिना ॥ १२-३२५-३१ (७८५५१)
यथा क्षेत्रं मृदुभूतमद्भिराप्लावितं तथा ।
जनयत्यङ्कुरं कर्म नृणां तद्वत्पुनर्भवम् ॥ १२-३२५-३२ (७८५५२)
यथा चोत्तापितं बीजं कपाले यत्रतत्र वा ।

प्राप्याप्यङ्कुरहेतुत्वमबीजत्वान्न जायते ॥१२-३२५-३३ (७८५५३)
तद्वद्भगवताऽनेन शिखाप्रोक्तेन भिक्षुणा ।
ज्ञानं कृतमबीजं मे विषयेषु न जायते ॥१२-३२५-३४ (७८५५४)
नाभिरज्यति कस्मिंश्चिन्नानर्थे न परिग्रहे ।
नाभिरज्यति चैतेषु व्यर्थत्वाद्रागरोषयोः ॥१२-३२५-३५ (७८५५५)
यश्च मे दक्षिणं बाहुं चन्दनेन समुक्षयेत् ।
सव्यं वाऽस्यापि यस्तक्षेत्समावेतावुभौ मम ॥१२-३२५-३६ (७८५५६)
सुखी सोऽहमवाप्तार्थः समलोष्टाश्मकाञ्चनः ।
मुक्तसङ्गः स्थितो राज्ये विशिष्टोऽन्यैस्त्रिदण्डिभिः ॥१२-३२५-३७ (७८५५७)
मोक्षे हि त्रिविधा निष्ठा दृष्टाऽन्यैर्मोक्षवित्तमैः ।
ज्ञानं लोकोत्तरं यच्च सर्वत्यागश्च कर्मणाम् ॥१२-३२५-३८ (७८५५८)
ज्ञाननिष्ठां वदन्त्येके मोक्षशास्त्रविदो जनाः ।
कर्मनिष्ठां तथैवान्ये यतयः सूक्ष्मदर्शिनः ॥१२-३२५-३९ (७८५५९)
प्रहायोभयमप्येव ज्ञानं कर्म च केवलम् ।
तृतीयेयं समाख्याता निष्ठा तेन महात्मना ॥१२-३२५-४० (७८५६०)
यमे च नियमे चैव कामे द्वेषे परिग्रहे ।
माने दम्भे तथा स्नेहे सदृशास्ते कुटुम्बिभिः ॥१२-३२५-४१ (७८५६१)
त्रिदण्डादिषु यद्यस्ति मोक्षो ज्ञानेन केनचित् ।
छत्रादिषु कथं न स्यात्तुल्यहेतौ परिग्रहे ॥१२-३२५-४२ (७८५६२)
येनयेन हि यस्यार्थः कारणेनेह कर्मणि ।
तत्तदालम्बते सर्वद्रव्ये स्वार्थपरिग्रहे ॥१२-३२५-४३ (७८५६३)
दोषदर्शी तु गार्हस्थ्ये यो व्रजत्याश्रमान्तरे ।
उत्सृजन्परिगृह्णंश्च सोऽपि सङ्गान्न मुच्यते ॥१२-३२५-४४ (७८५६४)
आधिपत्ये तथा तुल्ये निग्रहानुग्रहात्मके ।
राजभिर्भिक्षुकास्तुल्या मुच्यन्ते केन हेतुना ॥१२-३२५-४५ (७८५६५)
अथ सत्याधिपत्येऽपि ज्ञानेनैवेह केवलम् ।
मुच्यन्ते किं न मुच्यन्ते पदे परमके स्थिताः ॥१२-३२५-४६ (७८५६६)
काषायधारणं मौण्ड्यं त्रिविष्टब्धं कमण्डलुम् ।
लिङ्गान्युत्पथभूतानि न मोक्षायेति मे मतिः ॥१२-३२५-४७ (७८५६७)
यदि सत्यपि लिङ्गेऽस्मिञ्ज्ञानमेवात्र कारणम् ।
निर्मोक्षायेह दुःखस्य लिङ्गमात्रं निरर्थकम् ॥१२-३२५-४८ (७८५६८)
अथवा दुःखशैथिल्यं वीक्ष्य लिङ्गे कृता मतिः ।
किं तदेवार्थसामान्यं छत्रादिषु न लक्ष्यते ॥१२-३२५-४९ (७८५६९)
आकिञ्चन्ये न मोक्षोस्ति कैञ्चन्ये नास्ति बन्धनम् ।
कैञ्चन्ये चेतरे चैव जन्तुर्ज्ञानेन मुच्यते ॥१२-३२५-५० (७८५७०)
तस्माद्धर्मार्थकामेषु तथा राज्यपरिग्रहे ।

बन्धनायतनेष्वेषु विद्धयबन्धे पदे स्थितम् ॥१२-३२५-५१ (७८५७१)
राज्यैश्वर्यमयः पाशः स्नेहायतनबन्धनः ।
मोक्षाश्मनिशितेनेह च्छिन्नस्त्यागासिना मया ॥१२-३२५-५२ (७८५७२)
सोहमेवं गतो मुक्तो जातास्थस्त्वयि भिक्षुकि ।
अयथार्थं हि ते वर्णं वक्ष्यामि शृणु तन्मम ॥१२-३२५-५३ (७८५७३)
सौकुमार्यं तथा रूपं वपुरग्र्यं तथा वयः ।
तवैतानि समस्तानि नियमश्चेति संशयः ॥१२-३२५-५४ (७८५७४)
यच्चाप्यननुरूपं ते लिङ्गस्यास्य विचेष्टितम् ।
मुक्तोऽयं स्यान्न वेति स्याद्धर्षितो मत्परिग्रहः ॥१२-३२५-५५ (७८५७५)
न च कामसमायुक्ते युक्तेऽप्यस्ति त्रिदण्डके ।
न रक्ष्यते त्वया चेदं न मुक्तस्यास्ति गोपना ॥१२-३२५-५६ (७८५७६)
मत्पक्षसंश्रयाच्चायं शृणु यस्ते व्यतिक्रमः ।
आश्रयन्त्याः स्वभावेन मम पूर्वपरिग्रहम् ॥१२-३२५-५७ (७८५७७)
प्रवेशस्ते कृतः केन मम राष्ट्रे पुरेपि वा ।
कस्य वा सन्निकर्षात्त्वं प्रविष्टा हृदयं मम ॥१२-३२५-५८ (७८५७८)
वर्णप्रवरमुख्याऽसि ब्राह्मणी क्षत्रियस्त्वहम् ।
नावयोरेकयोगोऽस्ति मा कृथा वर्णसंकरम् ॥१२-३२५-५९ (७८५७९)
वर्तसे मोक्षधर्मेण त्वं गार्हस्थ्येऽहमाश्रमे ।
अयं चापि सुकष्टस्ते द्वितीयाश्रमसंकरः ॥१२-३२५-६० (७८५८०)
सगोत्रां वाऽसगोत्रां वा न वेद त्वां न वेत्थ माम् ।
सगोत्रमाविशन्त्यास्ते तृतीयो गोत्रसंकरः ॥१२-३२५-६१ (७८५८१)
अथ जीवति ते भर्ता प्रोषितोप्यथवा क्वचित् ।
अगम्या परभार्येति चतुर्थो धर्मसंकरः ॥१२-३२५-६२ (७८५८२)
सा त्वमेतान्यकार्याणि कार्यापेक्षा व्यवस्यसि ।
अविज्ञानेन वा युक्ता मिथ्याज्ञानेन वा पुनः ॥१२-३२५-६३ (७८५८३)
अथवापि स्वतन्त्राऽसि स्वदोषेणेह केनचित् ।
यदि किंचिच्छ्रुतं तेऽस्ति सर्वं कृतमनर्थकम् ॥१२-३२५-६४ (७८५८४)
इदमन्यत्तृतीयं ये भावस्पर्शविघातकम् ।
दुष्टायाऽलक्ष्यते लिङ्गं विवृण्वत्या प्रकाशितम् ॥१२-३२५-६५ (७८५८५)
न मय्येवाभिसन्धिस्ते जयैषिण्या जये कृतः ।
येयं मत्परिषत्कृत्स्ना चेतुमिच्छसि तामपि ॥१२-३२५-६६ (७८५८६)
तथाऽर्हतस्ततश्च त्वं दृष्टिं स्वां प्रतिमुञ्चसि ।
मत्पक्षप्रतिघाताय स्वपक्षोद्भवनाय च ॥१२-३२५-६७ (७८५८७)
सा स्वेनामर्षजेन त्वमृद्धिमोहेन मोहिता ।
भूयः सृजसि योगांस्त्वं विषामृतमिवैकताम् ॥१२-३२५-६८ (७८५८८)
इच्छतोरत्र यो लाभः स्त्रीपुंसोरमृतोपमः ।

अलाभश्चापि रक्तस्य सोपि दोषो विषोषमः ॥ १२-३२५-६९ (७८५८९)
मा त्याक्षीः साधु जानीष्व स्वशास्त्रमनुपालय ।
कृतेयं हि विजिज्ञासा मुक्तो नेति त्वया मम ॥ १२-३२५-७० (७८५९०)
एतत्सर्वं प्रतिच्छन्नं मयि नार्हसि गूहितम् ।
सा यदि त्वं स्वकार्येण यद्यन्यस्य महीपतेः ।
तत्त्वमत्र प्रतिच्छन्ना मयि नार्हसि गूहितम् ॥ १२-३२५-७१ (७८५९१)
न राजानं मृषा गच्छेन्न द्विजातिं कथंचन ।
न स्त्रियं स्त्रीगुणोपेतां हन्युर्ह्येते मृषागताः ॥ १२-३२५-७२ (७८५९२)
राज्ञां हि बलमैश्वर्यं ब्रह्म ब्रह्मविदां बलम् ।
रूपयौवनसौभाग्यं स्त्रीणां बलमनुत्तमम् ॥ १२-३२५-७३ (७८५९३)
अत एतैर्बलैरेव बलिनः स्वार्थमिच्छता ।
आर्जवेनाभिगन्तव्या विनाशाय ह्यनार्जवम् ॥ १२-३२५-७४ (७८५९४)
सा त्वं जातिं श्रुतं वृत्तं भावं प्रकृतिमात्मनः ।
कृत्यमागमने चैव वक्तुमर्हसि तत्त्वतः ॥ १२-३२५-७५ (७८५९५)
भीष्म उवाच। १२-३२५-७६क्ष् (६५२६)
इत्येतैरसुखैर्वाक्यैरयुक्तैरसमञ्जसैः ।
प्रत्यादिष्टा नरेन्द्रेण सुलभा न व्यकम्पत ॥ १२-३२५-७६ (७८५९६)
उक्तवाक्ये तु नृपतौ सुलभा चारुदर्शना ।
ततश्चारुतरं वाक्यं प्रचक्रामाथ भाषितुम् ॥ १२-३२५-७७ (७८५९७)
सुलभोवाच। १२-३२५-७८क्ष् (६५२७)
नवभिर्नवभिश्चैव दोषैर्वाग्बुद्धिदूषणैः ।
अपेतमुपपन्नार्थमष्टादशगुणान्वितम् ॥ १२-३२५-७८ (७८५९८)
सौक्ष्म्यं साङ्ख्यक्रमौ चोभौ निर्णयः सप्रयोजनः ।
पञ्चैतान्यर्थजातानि वाक्यमित्युच्यते नृप ॥ १२-३२५-७९ (७८५९९)
एषामेकैकशोऽर्थानां सौक्ष्म्यादीनां स्वलक्षणम् ।
शृणु संसार्यमाणानां पदार्थपदवाक्यतः ॥ १२-३२५-८० (७८६००)
ज्ञानं ज्ञेयेषु भिन्नेषु यदा भेदेन वर्तते ।
तत्रातिशयिनी बुद्धिस्तत्सौक्ष्म्यमिति वर्तते ॥ १२-३२५-८१ (७८६०१)
दोषाणां च गुणानां च प्रमाणं प्रविभागतः ।
कंचिदर्थमभिप्रेत्य सा सङ्ख्येत्युपधार्यताम् ॥ १२-३२५-८२ (७८६०२)
इदं पूर्वमिदं पश्चाद्वक्तव्यं यद्विवक्षितम् ।
क्रमयोगं तमप्याहुर्वाक्यं वाक्यविदो जनाः ॥ १२-३२५-८३ (७८६०३)
धर्मकामार्थमोक्षेषु प्रतिज्ञाय विशेषतः ।
इदं तदिति वाक्यान्ते प्रोच्यते स विनिर्णयः ॥ १२-३२५-८४ (७८६०४)
इच्छाद्वेषभवैर्दुःखैः प्रकर्षो यत्र जायते ।
तत्र या नृपते वृत्तिस्तत्प्रयोजनमिष्यते ॥ १२-३२५-८५ (७८६०५)

तान्येतानि यथोक्तानि सौक्ष्म्यादीनि जनाधिप ।
एकार्थसमवेतानि वाक्यं मम निशामय ॥१२-३२५-८६ (७८६०६)
उपेतार्थमभिन्नार्थं न्यायवृत्तं न चाधिकम् ।
नाश्लक्ष्णं न च संदिग्धं वक्ष्यामि परमं ततः ॥१२-३२५-८७ (७८६०७)
न गुर्वक्षरसंयुक्तं पराङ्मुखपदं न च ।
नानृतं न त्रिवर्गेण विरुद्धं नाप्यसंस्कृतम् ॥१२-३२५-८८ (७८६०८)
न न्यूनं नष्टशब्दं वा व्युत्क्रमाभिहितं न च ।
सदोषमभिकल्पेन निष्कारणमहेतुकम् ॥१२-३२५-८९ (७८६०९)
कामात्क्रोधाद्भयाल्लोभाद्दैन्याच्चानार्थकात्तथा ।
ह्रीतोऽनुक्रोशतो मानान्न वक्ष्यामि कथंचन ॥१२-३२५-९० (७८६१०)
वक्ता श्रोता च वाक्यं च यदा त्वविकलं नृप ।
स ममेति विवक्षायां तदा सोर्थः प्रकाशते ॥१२-३२५-९१ (७८६११)
वक्तव्ये तु यदा वक्ता श्रोतारमवमन्यते ।
स्वार्थमाह परार्थं तत्तदा वाक्यं न रोहति ॥१२-३२५-९२ (७८६१२)
अथ यः स्वार्थमुत्सृज्य परार्थं प्राह मानवः ।
विशङ्का जायते तस्मिन्वाक्यं तदपि दोषवत् ॥१२-३२५-९३ (७८६१३)
यस्तु वक्ता द्वयोरर्थमविरुद्धं प्रभाषते ।
श्रोतुश्चैवात्मनश्चैव स वक्ता नेतरो नृप ॥१२-३२५-९४ (७८६१४)
तदर्थवदिदं वाक्यमुपेतं वाक्यसंपदा ।
ग्अविक्षिप्तमना राजन्नेकाग्रः श्रोतुमर्हसि ॥१२-३२५-९५ (७८६१५)
काऽसि कस्य कुतो वेति त्वयाऽहमिति चोदिता ।
तत्रोत्तरमिदं वाक्यं राजन्नेकमनाः शृणु ॥' १२-३२५-९६ (७८६१६)
यथा जतु च काष्ठं च पांसवश्चोदबिन्दवः ।
सुश्लिष्टानि तथा राजन्प्राणिनामिह संभवः ॥१२-३२५-९७ (७८६१७)
शब्दः स्पर्शो रसो रूपं गन्धः पञ्चेन्द्रियाणि च ।
पृथगात्मा दशात्मानं संश्लिष्टा जतुकाष्ठवत् ।
न चैषां चोदना काचिदस्तीत्येष विनिश्चयः ॥ १२-३२५-९८ (७८६१८)
एकैकस्येह विज्ञानं नास्त्यात्मनि तथा परे ।
न वेद चक्षुश्चक्षुष्ट्वं श्रोत्रं नात्मनि वर्तते ॥१२-३२५-९९ (७८६१९)
तथैव व्यभिचारेण न वर्तन्ते परस्परम् ।
प्रश्लिष्टं च न जानन्ति यथाऽऽप इव पांवसः ॥१२-३२५-१०० (७८६२०)
वाह्यानन्यानपेक्षन्ते गुणांस्तानपि मे शृणु ।
रूपं चक्षुः प्रकाशश्च दर्शने हेतवस्त्रयः ॥१२-३२५-१०१ (७८६२१)
यथैवात्र तथाऽन्येषु ज्ञानज्ञेयेषु हेतवः ।
ज्ञानज्ञेयांतरेतस्मिन्मनो नामापरो गुणः ॥१२-३२५-१०२ (७८६२२)
विचारयति येनायं निश्चये साध्वसाधुनी ।

द्वादशस्त्वपरस्तत्र बुद्धिर्नाम गुणः स्मृतः ।
येन संशयपूर्वेषु बोद्धव्येषु व्यवस्यति ॥ १२-३२५-१०३ (७८६२३)
अथ द्वादशके तस्मिन्सत्वं नामापरो गुणः ।
महासत्वोऽल्पसत्वो वा जन्तुयेनानुमीयते ॥१२-३२५-१०४ (७८६२४)
क्षेत्रज्ञ इति चाप्यन्यो गुणस्तत चतुर्दशः ।
ममायमिति येनायं मन्यते न ममेति च ॥१२-३२५-१०५ (७८६२५)
अथ पञ्चदशो राजन्गुणस्तत्रापरः स्मृतः ।
पृथक्कालसमूहस्य सामग्र्यं तदिहोच्यते ॥१२-३२५-१०६ (७८६२६)
गुणस्त्वेकोऽपरस्तत्र संघात इति षोडशः ।
आकृतिर्व्यक्तिरित्येतौ गुणो यस्मिन्समाश्रितौ ॥१२-३२५-१०७ (७८६२७)
सुखासुखे जन्ममृत्यू लाभालाभौ प्रियाप्रिये ।
इति चैकोनविंशोऽयं द्वन्द्वयोग इति स्मृतः ॥१२-३२५-१०८ (७८६२८)
ऊर्ध्वमेकोनविंशत्या कालो नामापरो गुणः ।
इतीमं विद्धि विंशत्या भूतानां प्रभवाप्ययम् ॥१२-३२५-१०९ (७८६२९)
विंशकश्चैव संघातो महाभूतानि पञ्च च ।
सदसद्भवायोगौ तु गुणावन्यौ प्रकाशकौ ॥१२-३२५-११० (७८६३०)
इत्येवं विंशतिश्चैव गुणाः सप्त च ये स्मृताः ।
विधिः शुक्रं बलं चेति त्रय एते गुणाः परे ॥१२-३२५-१११ (७८६३१)
एवं विंशच्च दश च कलाः संख्यानतः स्मृताः ।
समग्रा यत्र वर्तन्ते तच्छरीरमिति स्मृतम् ॥१२-३२५-११२ (७८६३२)
अव्यक्तं प्रकृतिं त्वासां कलानां कश्चिदिच्छति ।
व्यक्तं चासां तथैवान्यः स्थूलदर्शी प्रपश्यति ॥१२-३२५-११३ (७८६३३)
अव्यक्तं यदि वा व्यक्तं द्वयं वाऽथ चतुष्टयम् ।
प्रकृतिं सर्वभूतानां पश्यन्त्यध्यात्मचिन्तकाः ॥१२-३२५-११४ (७८६३४)
सेयं प्रकृतिरव्यक्ता कलाभिर्व्यक्ततां गता ।
ततोऽहं त्वं च राजेन्द्र चे चाप्यन्ते शरीरिणः। १२-३२५-११५ (७८६३५)
विन्दुन्यासादयोऽवस्थाः शुक्रशोणितसंभवाः ।
यासामेव निपातेन कललं नाम जायते ॥१२-३२५-११६ (७८६३६)
कललाद्बुद्बुदोत्पत्तिः पेशी वा बुद्बुदात्स्मृता ।
पेश्यास्त्वङ्गाभिनिर्वृत्तिर्नखरोमाणि चाङ्गतः ॥१२-३२५-११७ (७८६३७)
संपूर्णे नवमे मासि जन्तोर्जातस्य मैथिल ।
जायते नामरूपत्वं स्त्रीपुमान्वेति लिङ्गतः ॥१२-३२५-११८ (७८६३८)
जातमात्रं तु तद्रूपं दृष्ट्वा ताम्रनखाङ्गुलि ।
कौमारं रूपमापन्नं रूपवानुपलभ्यते ॥१२-३२५-११९ (७८६३९)
कौमाराद्यौवनं चापि स्थाविर्यं चापि यौवनात् ।
अनेन क्रमयोगेन पूर्वं पूर्वं न लभ्यते ॥१२-३२५-१२० (७८६४०)

कलानां पृथगर्थानां प्रतिभेदः क्षणे क्षणे ।
वर्तते सर्वभूतेषु सौक्ष्म्यात्तु न विभाव्यते ॥ १२-३२५-१२१ (७८६४१)
न चैषामप्ययो राजँल्लक्ष्यते प्रभवो न च ।
अवस्थायामवस्थायां दीपस्येवार्चिषो गतिः ॥ १२-३२५-१२२ (७८६४२)
तस्याप्येवंप्रक्तारस्य सदश्वस्येव धावतः ।
अजस्रं सर्वलोकस्य कः कुतो वा न वा कुतः ॥ १२-३२५-१२३ (७८६४३)
कस्येदं कस्य वा नेदं कुतो वेदं न वा कुतः ।
संबन्धः कोऽस्ति भूतानां स्वैरप्यवयवैरिह ॥ १२-३२५-१२४ (७८६४४)
यथाऽऽदित्यान्मणेश्चापि वीरुद्भ्यश्चैव पावकः ।
जायन्त्येवं समुदयात्कलानामिह जन्तवः ॥ १२-३२५-१२५ (७८६४५)
आत्मन्येवात्मनाऽऽत्मानं यथा त्वमनुपश्यसि ।
एवमेवात्मनाऽऽत्मानमन्यस्मिन्किं न पश्यसि ॥ १२-३२५-१२६ (७८६४६)
यद्यात्मनि परस्मिंश्च समतामध्यवस्यसि ।
अथ मां काऽसि कस्येति किमर्थमनुपृच्छसि ॥ १२-३२५-१२७ (७८६४७)
इदं मे स्यादिदं नेति द्वन्द्वैर्मुक्तस्य मैथिल ।
काऽसि कस्य कुतो वेति वचनैः किं प्रयोजनम् ॥ १२-३२५-१२८ (७८६४८)
रिपौ मित्रेऽथ मध्यस्थे विजये सन्धिविग्रहे ।
कृतवान्यो महीपालः किं तस्मिन्मुक्तलक्षणम् ॥ १२-३२५-१२९ (७८६४९)
त्रिवर्गं सप्तधा न्यस्तं यो न वेदेह कर्मसु ।
सङ्गवान्यस्त्रिवर्गे च किं तस्मिन्मुक्तलक्षणम् ॥ १२-३२५-१३० (७८६५०)
प्रिये वाऽप्यप्रिये वाऽपि दुर्बले बलवत्यपि ।
यस्य नास्ति समं चक्षुः किं तस्मिन्मक्तलक्षणम् ॥ १२-३२५-१३१ (७८६५१)
तदयुक्तस्य ते मोक्षे योऽभिमानो भवेन्नृप ।
सुहृद्भिः सन्निवार्यस्तेऽविरक्तस्येव भेषजम् ॥ १२-३२५-१३२ (७८६५२)
तानि तान्यनुसंदृश्य सङ्गस्थानान्यरिंदम् ।
आत्मनाऽऽत्मनि संपश्य किमन्यन्मुक्तलक्षणम् ॥ १२-३२५-१३३ (७८६५३)
इमान्यन्यानि सूक्ष्माणि मोक्षमाश्रित्य केनचित् ।
चतुरङ्गप्रवृत्तानि सङ्गस्थानानि मे शृणु ॥ १२-३२५-१३४ (७८६५४)
य इमां पृथिवीं कृत्स्नामेकच्छत्रां प्रशास्ति ह ।
एकमेव स वै राजा पुरमध्यावसत्युत ॥ १२-३२५-१३५ (७८६५५)
तत्पुरे चैकमेवास्य गृहं यदधितिष्ठति ।
गृहे शयनमप्येकं निशायां यत्र लीयते ॥ १२-३२५-१३६ (७८६५६)
शय्यार्धं तस्य चाप्यत्र स्त्रीपूर्वमधितिष्ठति ।
तदनेन प्रसङ्गेन फलेनाल्पेन युज्यते ॥ १२-३२५-१३७ (७८६५७)
एवमेवोपभोगेषु भोजनाच्छादनेषु च ।
गुणेष्वपरिमेयेषु निग्रहानुग्रहं प्रति ॥ १२-३२५-१३८ (७८६५८)

परतन्त्रः सदा राजा स्वल्पे सोऽपि प्रसज्जते ।
सन्धिविग्रहयोगे च कुतो राज्ञः स्वतन्त्रता ॥ १२-३२५-१३९ (७८६५९)
स्त्रीषु क्रीडाविहारेषु नित्यमस्यास्वतन्त्रता ।
मन्त्रे चामात्यसहिते कुतस्तस्य स्वतन्त्रता ॥ १२-३२५-१४० (७८६६०)
यदा ह्याज्ञापयत्यन्यांस्तत्रास्योक्ता स्वतन्त्रता ।
अवशः कार्यते तत्र तस्मिंस्तस्मिन्गुणे स्थितः ॥ १२-३२५-१४१ (७८६६१)
स्वप्नकामो न लभते स्वप्तुं कार्यार्थिभिर्जनैः ।
शयने चाप्यनुज्ञातः सुप्त उत्थाप्यतेऽवशः ॥ १२-३२५-१४२ (७८६६२)
स्नाह्यालभ पिब प्राश जुहुध्यग्नीन्यजेत्यपि ।
वदस्व शृणु चापीति विवशः कार्यते परैः ॥ १२-३२५-१४३ (७८६६३)
अभिगम्याभिगम्यैवं याचन्ते सततं नराः ।
न चाप्युत्सहते दातुं वित्तरक्षी महाजनान् ॥ १२-३२५-१४४ (७८६६४)
दाने कोशक्षयोऽप्यस्य वैरं चास्य प्रयच्छतः ।
क्षणेनास्योऽपवर्तन्ते दोषा वैराग्यकारकाः ॥ १२-३२५-१४५ (७८६६५)
प्राज्ञाञ्शूरांस्तथा वैद्यानेकस्थानपि शङ्कते ।
भयमप्यनये राज्ञो यैश्च नित्यमुपास्यते ॥ १२-३२५-१४६ (७८६६६)
तथा चैते प्रदुष्यन्ति राजन्ये कीर्तिता मया ।
तथैवास्य भयं तेभ्यो जायते पश्य यादृशम् ॥ १२-३२५-१४७ (७८६६७)
सर्वः स्वेस्वे गृहे राजा सर्वः स्वेस्वे गृहे गृही ।
निग्रहानुग्रहौ कुर्वंस्तुल्यो जनक राजभिः ॥ १२-३२५-१४८ (७८६६८)
पुत्रा दारास्तथैवात्मा कोशो मित्राणि संचयाः ।
परैः साधारणा ह्येते तैस्तैरेवास्य हेतुभिः ॥ १२-३२५-१४९ (७८६६९)
हतो देशः पुरं दग्धं प्रधानः कुञ्जरो मृतः ।
लोकसाधारणेष्वेषु मिथ्याज्ञानेन तप्यते ॥ १२-३२५-१५० (७८६७०)
अमुक्तो मानसैर्दुःखैरिच्छाद्वेषप्रियोद्भवैः ।
शिरोरोगादिभी रोगैस्तथैव विनिपातिभिः ॥ १२-३२५-१५१ (७८६७१)
द्वन्द्वैस्तैस्तैरुपहतः सर्वतः परिशङ्कितः ।
बहुभिः प्रार्थितं राज्यमुपास्ते गणयन्निशाः ॥ १२-३२५-१५२ (७८६७२)
तदल्पसुखमत्यर्थं बहुदुःखमसारवत् ।
तृणाग्निज्वलनप्रख्यं फेनबुद्बुदसंनिभम् ॥ १२-३२५-१५३ (७८६७३)
को राज्यमभिपद्येत प्राप्य चोपशमं लभेत् ।
ममेदमिति यच्चेदं पुरं राष्ट्रं च मन्यसे ॥ १२-३२५-१५४ (७८६७४)
बलं कोशममात्यांश्च कस्यैतानि न वा नृप ।
मित्रामात्यपुरं राष्ट्रं दण्डः कोशो महीपतिः ॥ १२-३२५-१५५ (७८६७५)
ग्सप्ताङ्गश्चैष सङ्घातो राज्यमित्युच्यते नृप।'
सप्ताङ्गस्यास्य राज्यस्य त्रिदण्डस्येव तिष्ठतः ।

अन्योन्यगुणयुक्तस्य कः केन गुणतोऽधिकः ॥ १२-३२५-१५६ (७८६७६)
तेषुतेषु हि कालेषु तत्तदङ्गं विशिष्यते ।
येन यत्सिध्यते कार्यं तत्प्राधान्याय कल्पते ॥१२-३२५-१५७ (७८६७७)
सप्ताङ्गश्चैव संघातस्त्रयश्चान्ये नृपोत्तम ।
संभूय दशवर्गोऽयं भुङ्क्ते राज्यं हि राजवत् ॥१२-३२५-१५८ (७८६७८)
यश्च राजा महोत्साहः क्षत्रधर्मे रतो भवेत् ।
स तुष्येद्दशभागेन ततस्त्वन्यो दशावरैः ॥१२-३२५-१५९ (७८६७९)
नास्त्यसाधारणो राजा नास्ति राज्यमराजकम् ।
राज्येऽसति कुतो धर्मो धर्मेऽसति कुतः परम् ॥१२-३२५-१६० (७८६८०)
योप्यत्र परमो धर्मः पवित्रं राजराज्ययोः ।
पृथिवी दक्षिणा यस्य सोऽश्वमेधो न विद्यते ॥१२-३२५-१६१ (७८६८१)
साऽहमेतानि कर्माणि राजदुःखानि मैथिल ।
समर्था शतशो वक्तुमथवाऽपि सहस्रशः ॥१२-३२५-१६२ (७८६८२)
स्वदेहे नाभिषङ्गो मे कुतः परपरिग्रहे ।
न मामेवंविधां युक्तामीदृशं वक्तुमर्हसि ॥१२-३२५-१६३ (७८६८३)
ननु नाम त्वया मोक्षः कृत्स्नः पञ्चशिखाच्छ्रुतः ।
सोपायः सोपनिषदः सोपसङ्गः सनिश्चयः ॥१२-३२५-१६४ (७८६८४)
तस्य ते मुक्तसङ्गस्य पाशानाक्रम्य तिष्ठतः ।
छत्रादिषु विशेषेषु पुनः सङ्गः कथं नृप ॥१२-३२५-१६५ (७८६८५)
श्रुतं ते न श्रुतं मन्ये मृषा वाऽपि श्रुतं श्रुतम् ।
अथवा श्रुतसंकाशं श्रुतमन्यच्छ्रुतं त्वया ॥१२-३२५-१६६ (७८६८६)
अथापीमासु संज्ञासु लौकिकीषु प्रतिष्ठसे ।
अभिषङ्गावरोधाभ्यां बद्धस्त्वं प्राकृतो यथा ॥१२-३२५-१६७ (७८६८७)
सत्वेनानुप्रवेशो हि योऽयं त्वयि कृतो मया ।
किं तवापकृतं तत्र यदि मुक्तोऽसि सर्वशः ॥१२-३२५-१६८ (७८६८८)
नियमो ह्येषु धर्मेषु यतीनां शून्यवासिता ।
शून्यमावासयन्त्या च मया किं कस्य दूषितम् ॥१२-३२५-१६९ (७८६८९)
न पाणिभ्यां न बाहुभ्यां पादोरुभ्यां न चानघ ।
न गात्राक्यवैरन्यैः स्पृशामि त्वां नराधिप ॥१२-३२५-१७० (७८६९०)
कुले महति जातेन ह्रीमता दीर्घदर्शिना ।
नैतत्सदसि वक्तव्यं सद्वाऽसद्वा मिथः कृतम् ॥१२-३२५-१७१ (७८६९१)
ब्राह्मणा गुरवश्चेमे तथा मान्या गुरूत्तमाः ।
त्वं चाथ गुरुरप्येषामेवमन्योन्यगौरवम् ॥१२-३२५-१७२ (७८६९२)
तदेवमनुसंदृश्य वाच्यावाच्यं परीक्षता ।
स्त्रीपुंसोः समवायोऽयं त्वया वाच्यो न संसदि ॥१२-३२५-१७३ (७८६९३)
यथा पुष्करपर्णस्थं जलं तत्पर्णसंस्थितम् ।

तिष्ठत्यस्पृशती तद्वत्त्वपि वत्स्यामि मैथिल ॥ १२-३२५-१७४ (७८६९४)
यदि चाद्य स्पृशन्त्या मे स्पर्शं जानासि कंचन ।
ज्ञानं कृतमबीजं ते कथं तेनेह भिक्षुणा ॥ १२-३२५-१७५ (७८६९५)
स गार्हस्थ्याच्च्युतश्च त्वं मोक्षं चानाप्य दुर्विदम् ।
उभयोरन्तराले वै वर्तसे मोक्षवादिकः ॥ १२-३२५-१७६ (७८६९६)
न हि मुक्तस्य मुक्तेन ज्ञस्यैकत्वपृथक्त्वयोः ।
भावाभावसमायोगे जायते वर्णसंकरः ॥ १२-३२५-१७७ (७८६९७)
वर्णाश्रमाः पृथक्त्वेन दृष्टार्थस्यापृथक्त्वतः ।
नान्यदन्यदिति ज्ञात्वा नान्यदन्यत्र वर्तते ॥ १२-३२५-१७८ (७८६९८)
पापौ कुण्डं तथा कुण्डे पयः पयसि मक्षिका ।
आश्रिताश्रययोगेन पृथक्त्वेनाश्रिताः पुनः ॥ १२-३२५-१७९ (७८६९९)
न तु कुण्डे पयोभावः पयश्चापि न मक्षिका ।
स्वयमेवाश्रयन्त्येते भावा न तु पराश्रयम् ॥ १२-३२५-१८० (७८७००)
पृथक्त्वादाश्रमाणां च वर्णान्यत्वे तथैव च ।
परस्परपृथक्त्वाच्च कथं ते वर्णसंकरः ॥ १२-३२५-१८१ (७८७०१)
नास्मि पर्णोत्तमा जात्या न वैश्या नावरा तथा ।
तव राजन्सवर्णाऽस्मि शुद्धयोनिरविप्लुता ॥ १२-३२५-१८२ (७८७०२)
प्रधानो नाम राजर्षिर्व्यक्तं ते श्रोत्रमागतः ।
कुले तस्य समुत्पन्नां सुलभां नाम विद्धि माम् ॥ १२-३२५-१८३ (७८७०३)
द्रोणश्च शतशृङ्गश्च वक्रद्वारश्च पर्वतः ।
मम सत्रेषु पूर्वेषां चिता मघवता सह ॥ १२-३२५-१८४ (७८७०४)
साहं तस्मिन्कुले जाता भर्तर्यसति मद्विधे ।
विनीता मोक्षधर्मेषु चराम्येका मुनिव्रतम् ॥ १२-३२५-१८५ (७८७०५)
नास्मि सत्रप्रतिच्छन्ना न परस्वाभिमानिनी ।
न धर्मसंकरकरी स्वधर्मेऽस्मि दृढव्रता ॥ १२-३२५-१८६ (७८७०६)
नास्थिरा स्वप्रतिज्ञायां नासमीक्ष्य प्रवादिनी ।
नासमीक्ष्यागता चेह त्वत्सकाशं जनाधिप ॥ १२-३२५-१८७ (७८७०७)
मोक्षे ते भावितां बुद्धिं श्रुत्वाऽहं कुशलैषिणी ।
तव मोक्षस्य चाप्यस्य जिज्ञासार्थमिहागता ॥ १२-३२५-१८८ (७८७०८)
न वर्गस्था ब्रवीम्येतत्स्वपक्षपरपक्षयोः ।
मुक्तो विमुच्यते यश्च शान्तौ यश्च न शाम्यति ॥ १२-३२५-१८९ (७८७०९)
यथा शून्ये पुराऽगारे भिक्षुरेकां निशां वसेत् ।
तथाऽहं त्वच्छरीरेऽस्मिन्निमां वत्स्यामि शर्वरीम् ॥ १२-३२५-१९० (७८७१०)
साऽहं मानप्रदानेन वागातिथ्येन चार्चिता ।
सुप्ता सुशरणं प्रीता श्वो गमिष्यामि मैथिल ॥ १२-३२५-१९१ (७८७११)
भीष्म उवाच। १२-३२५-१९२क्ष् (६५२८)

इत्येतानि स वाक्यानि हेतुमन्त्यर्थवन्ति च ।
श्रुत्वा नाधिजगौ राजा किंचिदन्यदतः परं ॥ ॥१२-३२५-१९२ (७८७१२)

इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि
पञ्चविंशत्यधिकत्रिशततमोऽध्यायः ॥ ३२५.।
Mahabharata - Shanti Parva - Chapter Footnotes

१२-३२५-२ अव्ययस्य यथात्मा च व्यक्तस्यात्मा यथा च यदिति ध ।पाठः ॥
१२-३२५-४ संन्यासफलं सम्यग्दर्शनं तदस्यास्तीति संन्यासफलिकः ॥
१२-३२५-५ स्वे शास्त्रे दण्डनीतौ ॥
१२-३२५-७ अनुष्ठिता कर्तरिक्तः ॥
१२-३२५-८ मोक्षे मोक्षशास्त्रे निष्णात इति शेषः ॥
१२-३२५-९ नेति नवेति ॥
१२-३२५-१० ततः सा विप्रभार्याश्च पूर्वरूपवियोगत इति ट ।ड।पाठः ॥
१२-३२५-११ लघु शीघ्रमस्रगत्या गच्छतीति सा ।विदेहानां पदमिति
ड।पाठः ॥
१२-३२५-१५ भाष्यविदां सूत्रार्थज्ञानां मध्ये ।अथ भुक्तवती प्रीता
राजानं मन्त्रिभिर्वृतमिति।चोदयामासभिक्षुकीति च।झ।पाठः ॥
१२-३२५-१६ सुलभाऽयं स्वधर्मेषु इति ध ।पाठः ॥
१२-३२५-१८ भावमाशयमेनं मूकं करिष्यामीत्येवंरूपम्
।विशेषयन्नभिभवन् ॥
१२-३२५-२० भवत्याचक्ष्व वार्षेयं कुतः क्व च गमिष्यसि इति ड
।थ।पाठः ॥
१२-३२५-२९ मोक्षस्य परमो निधिरिति ध ।पाठः ॥
१२-३२५-३० सा सिद्धिर्या च योगितेति थ ।पाठः ॥
१२-३२५-४२ ज्ञानेन कस्यचिदिति झ ।पाठः ॥
१२-३२५-४५ आधिपत्ये तथा तुल्ये निग्रहानुग्रहात्मकाः ।राजानो
भिक्षुकाचार्या मुच्यन्ते इति ड।थ।पाठः ॥
१२-३२५-४६ मुच्यन्ते सर्वपापेभ्यो देहे परमके स्थिता इति झ ।पाठः ॥
१२-३२५-४७ लिङ्गान्यन्यार्थभूतानीति ट ।ड।थ।पाठः ॥
१२-३२५-४९ छत्रादिषु न लभ्यत इति टड़ ।पाठः ॥
१२-३२५-५४ नचैतानि समस्तानीति ध ।पाठः ॥
१२-३२५-५८ संनिसर्गात्त्वं इति ध ।पाठः ॥
१२-३२५-६० द्वितीयो वर्णसंकर इति ड ।पाठः ॥
१२-३२५-६२ प्रेरिता तेन गच्छसीति ध ।पाठः ॥
१२-३२५-६३ कार्यार्थज्ञा व्यवस्यसीति ध ।पाठः ॥

१२-३२५-६५ तद्वक्तव्यं प्रकाशितमि ड । पाठः ॥
१२-३२५-६७ अर्हतः पूज्यान् उद्दिश्य ॥
१२-३२५-७० माप्राक्षीरिति ध । पाठः ॥
१२-३२५-८७ नापेतार्थं न भिन्नार्थं नापवृत्तं न चाधिकमिति ड
। पाठः ॥
१२-३२५-८९ न निष्ठानमहेतुकमिति ड । पाठः ॥
१२-३२५-९० दैन्यादन्याय्यकात्तथेति ड । पाठः ॥
१२-३२५-९३ निःशङ्को जायते तस्मिन्निति ध । पाठः ॥
१२-३२५-१०० प्रश्लिष्टा नाभिजायन्ते यथाङ्गिरिव पांसव इति ड । पाठः ॥
१२-३२५-१०३ अथ त्रयोदशे तस्मिन्बुद्धिर्नाम गुणः स्मृत इति ध । पाठः ॥
१२-३२५-१०६ पृथक्कलासमूहस्येति झ । पाठः ॥
१२-३२५-१११ विधिः शुद्धं बलं चेतीति ध । पाठः ॥
१२-३२५-११४ अव्यक्तां यदि वा व्यक्तां द्वयीमथ चतुष्टयीमिति ट
। थ। पाठः ॥
१२-३२५-१२२ न चैषामप्यथो राजन्निति ट । पाठः। न चासामप्यथो
राजन्निति ड। पाठः ॥
१२-३२५-१२८ इदं मे स्यादिदं चेति इति ड । थ। पाठः ॥
१२-३२५-१३० सप्तधा व्यस्तमिति ड । पाठः ॥
१२-३२५-१४१ तस्मिंस्तस्मिन्क्षणे स्थित इति झ । पाठः ॥
१२-३२५-१५१ तथैवाभिनियन्तृभिरिति झ । पाठः ॥
१२-३२५-१५२ बहुप्रत्यर्थिकं राज्यमिति झ । ध। पाठः ॥
१२-३२५-१६८ अङ्गनानुप्रवेशोऽपि इति ध । पाठः ॥
१२-३२५-१६९ नियमो ह्येषु वर्णेष्विति झ । पाठः ॥
१२-३२५-१७४ जलं तत्पत्रसंज्ञितमिति ध
। पाठः। तत्पणंमस्पृशदिति झ। पाठः ॥
१२-३२५-१७५ यदि वाप्यस्पृशन्त्या मे इति ट । ड। ध। पाठः ॥
१२-३२५-१७६ मोक्षं चावाप्य दुर्लभमिति ड । थ। पाठः ॥
१२-३२५-१७८ पृथक्त्वे च दृष्टास्यार्थाः पृथक्कृता इति ट
। ड। पाठः ॥
१२-३२५-१८४ द्रोणादयः पर्वता मम पूर्वेषआं सत्रेषु मघवता सह
चिताश्चयने इष्टकास्थाने निवेशिता इत्यर्थः । चित्यां मघवता
सहेति थ। पाठः ॥
१२-३२५-१८५ भर्तर्यसति मद्गृहे इति ध । पाठः ॥
१२-३२५-१८६ सत्रप्रतिच्छन्ना कपटसंन्यासिनी । न परस्वापहारिणीति
झ। पाठः ॥
१२-३२५-१८९ मुक्तो व्यायच्छते यश्चेति झ । पाठः ॥

॥ श्रीः ॥
१२.३२६. अध्यायः ३२६

Mahabharata - Shanti Parva - Chapter Topics
आसुरिणा कपिलं प्रति अव्यक्तादितत्वविषयकप्रश्नः ॥ १.।
Mahabharata - Shanti Parva - Chapter Text

१२-३२६-० (७८७१३)
क़ युधिष्ठिर उवाच। १२-३२६-०क्ष् (६५२९)
अव्यक्तव्यक्ततत्वानां निश्चयं भरतर्षभ ।
वक्तुमर्हसि कौरव्य देवस्याजस्य या कृतिः ॥ १२-३२६-१ (७८७१४)
भीष्म उवाच। १२-३२६-२क्ष् (६५३०)
अत्राप्युदाहरन्तीमं संवादं गुरुशिष्ययोः ।
कपिलस्यासुरेश्चैव सर्वदुःखविमोक्षणम् ॥ १२-३२६-२ (७८७१५)
असुरिरुवाच। १२-३२६-३क्ष् (६५३१)
अव्यक्तव्यक्ततत्वानां निश्चयं बुद्धिनिश्चयम् ।
भगवन्नमितप्रज्ञ वक्तुमर्हसि मेऽर्थितः ॥ १२-३२६-३ (७८७१६)
किं व्यक्तं किमव्यक्तं किं व्यक्ता
व्यक्तं किमिति तत्वानि ।
किमाद्यं मध्यमं च तत्वानां
किमध्यात्माधिभूतदैवतं च ॥ १२-३२६-४ (७८७१७)
किंनु सर्गाप्ययं कति सर्गाः किं भूतं
किं भविष्यं किं भव्यं च किं ज्ञानम् ।
को ज्ञाता किं बुद्धं किमप्रबुद्धं
किं बुध्यमानं कति पर्वाणि ॥ १२-३२६-५ (७८७१८)
कति स्रोतांसि कति कर्मयोनयः
किमेकत्वं नानात्वम् ।
किं सहवासं निवासं
किं विद्याविद्यमिति ॥' ॥ १२-३२६-६ (७८७१९)

इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि
षड्विंशत्यधिकत्रिशततमोऽध्यायः ॥ ३२६.।
Mahabharata - Shanti Parva - Chapter Footnotes

क़ एतदादयस्त्रयोऽध्यायाः ध ।पुस्तके एव वर्तन्ते ।

॥ श्रीः ॥
१२.३२७. अध्यायः ३२७

Mahabharata - Shanti Parva - Chapter Topics
आसुरिंप्रति कपिलेन व्यक्ताव्यक्ततावनिरूपणम् ॥१.।
Mahabharata - Shanti Parva - Chapter Text

१२-३२७-० (७८७२०)
ग्कपिल उवाच। १२-३२७-०क्ष् (६५३२)
यद्भवानाह किं व्यक्तिं किमव्यक्तमिति अत्र ब्रूमः ॥ १२-३२७-१ (७८७२१)
अव्यक्तमग्राह्यमतर्क्यमपरिमेयमव्यक्तं व्यक्तमुपलक्ष्यते
यथर्तवो मूर्तयस्तेषु पुष्पफलैर्व्यक्तिरुपलक्ष्यते
तद्वद्व्यक्तगुणैरुपलक्ष्यते ॥ १२-३२७-२ (७८७२२)
प्राग्गतं प्रत्यग्गतमूर्ध्वमधस्तिर्यक्च
शतश्चानुग्राह्यत्वात्साऽकृतिः ॥ १२-३२७-३ (७८७२३)
व्यक्त उत्तमो रजः सत्वं तत्प्रधानं
तत्वमक्षमजरमित्येवमादीन्यव्यक्तनामानि भवन्ति ।
एवमाह ॥१२-३२७-४ (७८७२४)
अव्यक्तं बीजधर्माणं महाग्राहमचेतनम् ।
तस्मादेकगुणो जज्ञे तद्व्यक्तं तत्वमीश्वरः ॥१२-३२७-५ (७८७२५)
तदेतदव्यक्तम् ।प्रस्नवा घारणादानस्वभावमापोधारणे प्रजनने
दाने गुणानां प्रकृतिः सपराप्रमत्तं तदेतदस्मिन्कार्यकरणे ॥
१२-३२७-६ (७८७२६)
यदप्युक्तं किमव्यक्तमिति तत्र ब्रूमः ।व्यक्तं नामाऽऽसुरे
यत्पूर्वमव्यक्तादुत्पन्नतत्वमीश्वरमप्रतिबुद्धगुणस्यगेतत्पुरुषसंज्ञिकं
महदित्युक्तं बुद्धिरिति च। सत्ता स्मृतिर्धृतिर्मेधा व्यवसायः
समाधिप्राप्तिरित्येवमादीनि व्यक्तपर्याये नामानि वदन्त्येवमाह ॥
१२-३२७-७ (७८७२७)
मम व्यक्तादुपात्तासिद्धिरागता संयमश्च महद्यतः ।
परसर्गश्च दीप्त्यर्थमौत्सुक्यं च परं तथा ॥१२-३२७-८ (७८७२८)
यदेषोर्ध्वस्रोताभिर्महत्वादप्रतिबुद्धत्वाच्चात्मनः
यकरोत्यहंकारमव्यक्ताव्यक्ततरम् ॥ १२-३२७-९ (७८७२९)
यदप्युक्तं किमव्यक्ततरमिति अत्र ब्रूमः ॥ १२-३२७-१० (७८७३०)
व्यक्ताव्यक्ततरं नाम तृतीयं पुरुषसंज्ञकम् ।
तदेतदुभयोर्विरिञ्चवैरिञ्चयोरेकैक उत्पत्तिः ॥

विरिञ्चोऽभिमानिन्यविवेक ईर्ष्या कामः क्रोधो लोभो मदो दर्पो ममकारश्चैतान्यहंकारपर्यायनामानि भवन्त्येवमाह ॥ १२-३२७-११ (७८७३१)
अहं कर्तेत्यहंकर्ता ससृजे विश्वमीश्वरः ।
तृतीयमेनं पुरुषमभिमानगुणं विदुः ॥ १२-३२७-१३ (७८७३२)
अहंकाराद्युगपदुन्मादयामास पञ्च महाभूतानि शब्दस्पर्शरूपरसगन्धलक्षणानि । तान्येव बुद्ध्यन्त इत्येवमाह ॥ १२-३२७-१४ (७८७३३)
भूतसङ्घमहङ्काराद्यो विद्वानवबुध्यसे ।
अभिमानमतिक्रम्य महान्तं प्रतितिष्ठते ॥ १२-३२७-१५ (७८७३४)
भूतेषु चाप्यहंकारमश्वरूपस्तथोच्यते ।
पुनर्विषयहेत्वर्थे स मनस्संज्ञकः स्मृतः ॥
विखराद्विखरं युगपदिन्द्रियैः सहोत्पादयति । श्रोत्रं घ्राणं चक्षुर्जिह्वा त्वगित्येतानि शब्दस्पर्शरूपरसगन्धानवबुध्यन्त इति पञ्च बुद्धीन्द्रियाणि वदन्त्येवमाहुराचार्याः ॥
वाग्घस्तौ पादपायुरानन्दश्चेति पञ्चेन्द्रियाणि विशेषमादित्योश्वीनि नक्षत्राणीत्येतानीन्द्रियाणां पर्यायनामानि वदन्त्येवमाह ॥ १२-३२७-१६ (७८७३५)
अहंकारात्तथा भूतान्युत्पाद्य महदात्मनोः ।
वैखरत्वं ततो राज्ञा वैखर्यो विषयात्मकः ॥ १२-३२७-१९ (७८७३६)
विकारस्थमहंकारमवबुध्याथ मानवः ।
महदैश्वर्यमाप्नोति यावदाचन्द्रतारकम् ॥' ॥ १२-३२७-२० (७८७३७)

इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि सप्तविंशत्यधिकत्रिशततमोऽध्यायः ॥ ३२७. ।

---

शन्तिपर्व-अध्यय३२८
॥ श्रीः ॥
१२.३२८. अध्यायः ३२८

Mahabharata - Shanti Parva - Chapter Topics
कपिलेनासुरि प्रति तत्वविभागादिकथनम् ॥ १. ।
Mahabharata - Shanti Parva - Chapter Text

१२-३२८-० (७८७३८)
कपिल उवाच । १२-३२८-०क्ष् (६५३३)
यदप्युक्तं कति तत्वानि भवन्ति तत्वमेतानि ।

यमानुपूर्व्यशः प्रोक्तान्येवमाह ॥ १२-३२८-१ (७८७३९)
तत्वान्यथोक्तानि । तथाविद्यो निबुद्ध्यते ।
न स पापेन लिप्येत निर्मुक्तः सर्वसंकरात् ॥ १२-३२८-२ (७८७४०)
यदप्युक्तं इहाद्यं मध्यमं च तत्वानामित्यत्र ब्रूमः ॥ १२-३२८-३ (७८७४१)
एवमाद्यं मध्यमं चोक्तं बुद्ध्यादीनि त्रयोविंशतितत्वानि
विशेषपर्यवसानानि ज्ञातव्यानि भवन्तीत्येव मामकेनेत्यत्रोच्यते ॥
१२-३२८-४ (७८७४२)
तदेव तद्यदा दत्तब्राह्मणक्षत्रियवैश्यशूद्रचण्डालपुल्कसादिरेतानि
ज्ञातव्यानि बुद्ध्यादीनि विशेषपर्यवसानानि
मन्तव्यानि प्रत्येतव्याभ्युक्तानि एतदाद्यं मध्यमं च
। एतस्मात्तत्वानामुत्पत्तिर्भवति अत्र प्रलीयन्ते। केचिदाहुराचार्याः ॥
१२-३२८-५ (७८७४३)
अहमित्येतदात्मकं सशीरसङ्घातं त्रिषु लोकेषु
व्यक्तमव्यक्ताधिष्ठितमेतद्देवदत्तसंज्ञकम् ॥ १२-३२८-६ (७८७४४)
योगदशमपुरुषदर्शनानां तु पञ्चविंशतितत्वानां
प्रतिबुध्यमानयोर्व्यतिरिक्तं शुचिव्यभ्रमित्याहुराचार्याः । एवमाह ॥
१२-३२८-७ (७८७४५)
चतुर्विंशतितत्वज्ञस्त्वव्यक्ते प्रतितिष्ठति ।
पञ्चविंशतितत्वज्ञोऽप्यव्यक्तमधितिष्ठति ॥' ॥ १२-३२८-८ (७८७४६)

इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि
अष्टाविंशत्यधिकत्रिशततमोऽध्यायः ॥ ३२८.।

---

शन्तिपर्व-अध्यय३२९
॥ श्रीः ॥
१२.३२९. अध्यायः ३२९

Mahabharata - Shanti Parva - Chapter Topics
भीष्मेण युधिष्ठिरंप्रति व्यासकृतशुकानुशासनानुवादः ॥ १.।
Mahabharata - Shanti Parva - Chapter Text

१२-३२९-० (७८७४७)
युधिष्ठिर उवाच। १२-३२९-०क्ष् (६५३४)
कथं निर्वेदमापन्नः शुको वैयासकिः पुरा ।
एतदिच्छाम्यहं श्रोतुं परं कौतूहलं हि मे ॥ १२-३२९-१ (७८७४८)
भीष्म उवाच। १२-३२९-२क्ष् (६५३५)
प्राकृतेनैव वृत्तेन चरन्तमकुतोभयम् ।

अध्याप्य कृत्स्नं स्वाध्यायमन्वशाद्वै पिता सुतम् ॥ १२-३२९-२ (७८७४९)
व्यास उवाच। १२-३२९-३क्ष् (६५३६)
धर्मं पुत्र निषेवस्व सुतीक्ष्णौ च हिमातपौ ।
क्षुत्पिपासे च वायुं च जय नित्यं जितेन्द्रियः ॥ १२-३२९-३ (७८७५०)
सत्यमार्जवमक्रोधमनसूयां दमं तपः ।
अहिंसां चानृशंस्यं च विधिवत्परिपालय ॥ १२-३२९-४ (७८७५१)
सत्ये तिष्ठ रतो धर्मे हित्वा सर्वमनार्जवम् ।
देवतातिथिशेषेण यात्रां प्राणस्य संलिह ॥ १२-३२९-५ (७८७५२)
फेनमात्रोपमे देहे जीवे शकुनिवत्स्थिते ।
अनित्ये प्रियसंवासे कथं स्वपिषि पुत्रक ॥ १२-३२९-६ (७८७५३)
अप्रमत्तेषु जाग्रत्सु नित्ययुक्तेषु शत्रुषु ।
अन्तरं लिप्यमानेषु बालस्त्वं नावबुध्यसे ॥ १२-३२९-७ (७८७५४)
अहःसु गण्यमानेषु क्षीयमाणे तथाऽऽयुषि ।
जीविते लिख्यमाने च किमुत्थाय न धावसि ॥ १२-३२९-८ (७८७५५)
ऐहलौकिकनीहन्ते मांसशोणितवर्धनम् ।
पारलौकिककार्येषु प्रसुप्ता भृशनास्तिकाः ॥ १२-३२९-९ (७८७५६)
धर्माय येऽभ्यसूयन्ति बुद्धिमोहान्विता नराः ।
अपथा गच्छतां तेषामनुयाताऽपि पीड्यते ॥ १२-३२९-१० (७८७५७)
ये तु तुष्टाः श्रुतिपरा महात्मानो महाबलाः ।
धर्म्यं पन्थानमारूढास्तानुपास्स्व च पृच्छ च ॥ १२-३२९-११ (७८७५८)
उपधार्य मतं तेषां बुधानां धर्मदर्शिनाम् ।
नियच्छ परया बुद्ध्या चित्तमुत्पथगामि वै ॥ १२-३२९-१२ (७८७५९)
आद्यकालिकया बुद्ध्या दूरेश्व इति निर्भयाः ।
सर्वभक्ष्या न पश्यन्ति कर्मभूमिमचेतसः ॥ १२-३२९-१३ (७८७६०)
धर्मं निःश्रेणिमास्थाय किंचित्किंचित्समारुह ।
कोशकारवदात्मानं वेष्टयन्नावबुध्यसे ॥ १२-३२९-१४ (७८७६१)
नास्तिकं भिन्नमर्यादं कूलपातमिव स्थितम् ।
वामतः कुरु विस्रब्धो नरं वेणुमिवोद्धृतम् ॥ १२-३२९-१५ (७८७६२)
कामक्रोधग्राहवतीं पञ्चेन्द्रियजलां नदीम् ।
नावं धृतिमयीं कृत्वा जन्मदुर्गाणि संतर ॥ १२-३२९-१६ (७८७६३)
मृत्युनाऽभ्याहते लोके जरया परिपीडिते ।
अमोघासु पतन्तीषु धर्मयानेन संतर ॥ १२-३२९-१७ (७८७६४)
तिष्ठन्तं च शयानं च मृत्युरन्वेषते यदा ।
निर्वृत्तिं लभते कस्मादकस्मान्मृत्युनाऽशितः ॥ १२-३२९-१८ (७८७६५)
संचिन्वानकमेवैनं कामानामवितृप्तकम् ।
वृकीवोरणमासाद्य मृत्युरादाय गच्छति ॥ १२-३२९-१९ (७८७६६)

क्रमशः संचितशिखो धर्मबुद्धिमयो महान् ।
अन्धकारे प्रवेष्टव्ये दीपो यत्नेन धार्यताम् ॥१२-३२९-२० (७८७६७)
संपतन्देहजालानि कदाचिदिह मानुषे ।
ब्राह्मण्यं लभते जन्तुस्तत्पुत्र परिपालय ॥१२-३२९-२१ (७८७६८)
ब्राह्मणस्य तु देहोऽयं न कामार्थाय जायते ।
इह क्लेशाय तपसे प्रेत्य त्वनुपमं सुखम् ॥१२-३२९-२२ (७८७६९)
ब्राह्मण्यं बहुभिरवाप्यते तपोभि
स्तल्लब्ध्वा न रतिपरेण हेलितव्यम् ।
स्वाध्याये तपसि दमे च नित्ययुक्तः
मोक्षार्थी कुशलपरः सदा यतस्व ॥ १२-३२९-२३ (७८७७०)
अव्यक्तप्रकृतिरयं कलाशरीरः
सूक्ष्मात्मा क्षणत्रुटिका निमेषरोमा ।
यानेतत्समबलशुक्लकृष्णनेत्रो
मासाङ्गो द्रवति वयोहयो नराणाम् ॥ १२-३२९-२४ (७८७७१)
तं दृष्ट्वा प्रसृतमजस्रमुग्रवेगं
गच्छन्तं सततमिहान्ववेक्षमाणम् ।
यक्षुस्ते यदि न परप्रणेतृनेयं
धर्मे ते रमतु मनः परं निशाम्य ॥ १२-३२९-२५ (७८७७२)
येऽमी तु प्रचलितधर्मकामवृत्ताः
क्रोशन्तः सततमनिष्टसंप्रयोगात् ।
क्लिश्यन्तः परिगतवेदनाशरीरा
बह्वीभिः सुभृशमधर्मवागुराभिः ॥ १२-३२९-२६ (७८७७३)
राजा सदा धर्मपरः शुभाशुभस्य गोप्ता
समीक्ष्य सुकृतिनां दधाति लोकान् ।
बहुविधमपि चरति प्रविशति
सुखमनुपगतं निरवद्यम् ॥ १२-३२९-२७ (७८७७४)
श्वानो भीषणकाया अयोमुखानि वयांसि
बलगृध्रकुररपक्षिणां च संघातम् ।
नरकदने रुधिरपा गुरुवचन
नुदमुपरतं विशन्त्यसन्तः ॥ १२-३२९-२८ (७८७७५)
मर्यादा नियताः स्वयम्भुवा य इहेमाः
प्रभिनत्ति दश गुणा मनोऽनुगत्वात् ।
निवसति भृशमसुखं पितृविषय
विपिनमवगाह्य स पापः ॥ १२-३२९-२९ (७८७७६)
यो लुब्ध सुभृशं प्रियानृतश्च मनुष्यः
सततनिकृतिवञ्चनाभिरतिः स्यात् ।

उपनिधिभिरसुखकृत्स परमनिरयगो
भृशमसुखमनुभवति दुष्कृतकर्मा ॥ १२-३२९-३० (७८७७७)
उष्णां वैतरणीं महानदीमव
गाढोऽसिपत्रवनभिन्नगात्रः ।
परशुवनशयोनिपतितो
वसति च महानिरये भृशार्तः ॥ १२-३२९-३१ (७८७७८)
महापादनि कत्थसे न चाप्यवेक्षसे परम् ।
चिरस्य मृत्युकारिकामनागतां न बुध्यसे ॥ १२-३२९-३२ (७८७७९)
प्रयस्यतां किमास्यते समुत्थितं महद्भयम् ।
अतिप्रमार्थि दारुणं सुखस्य संविधीयताम् ॥ १२-३२९-३३ (७८७८०)
पुरा मृतः प्रणीयसे यमस्य राजशासनात् ।
त्वमन्तकाय दारुणैः प्रयत्नमार्जवे कुरु ॥ १२-३२९-३४ (७८७८१)
पुरा समूलबान्धवं प्रभुर्हरत्यदुःखवित् ।
कियत्तवेह जीवितं यमे न चास्ति वारकः ॥ १२-३२९-३५ (७८७८२)
पुरा विवाति मारुतो यमस्य यः पुरःसरः ।
पुरैक एव नीयसे कुरुष्व सांपरायिकम् ॥ १२-३२९-३६ (७८७८३)
पुरा स एक एव ते प्रवाति मारुतोऽन्तकः ।
पुरा च विभ्रमन्ति ते दिशो महाभयागमे ॥ १२-३२९-३७ (७८७८४)
श्रुतिश्च सन्निरुध्यते पुरा तवेह पुत्रक ।
समाकुलस्य गच्छतः समाधिमुत्तमं कुरु ॥ १२-३२९-३८ (७८७८५)
शुभाशुभे पुरा कृते प्रमादकर्मविप्लुते ।
स्मरन्पुराऽनुतप्यसे निधत्स्व केवलं निधिम् ॥ १२-३२९-३९ (७८७८६)
पुरा जरा कलेवरं विजर्झरीकरोति ते ।
बलाङ्गरूपहारिणी निधत्स्व केवलं निधिम् ॥ १२-३२९-४० (७८७८७)
पुरा शरीरमन्तको भिनत्ति रोगसायकैः ।
प्रसह्य जीवितक्षये तपो महत्समारभ ॥ १२-३२९-४१ (७८७८८)
पुरा वृका भयंकरा मनुष्यदेहगोचराः ।
अभिद्रवन्ति सर्वतो यतस्व पुण्यशीलने ॥ १२-३२९-४२ (७८७८९)
पुरान्धकारमेककोऽनुपश्यसि त्वरस्व वै ।
पुरा हिरण्मयान्नगान्निरीक्षसेऽद्रिमूर्धनि ॥ १२-३२९-४३ (७८७९०)
पुरा कुसङ्गतानि ते सुहृन्मुखाश्च शत्रवः ।
विचालयन्ति दर्शनाद्धटस्व पुत्र यत्परम् ॥ १२-३२९-४४ (७८७९१)
धनस्य यस्य राजतो भयं न चास्ति चोरतः ।
मृतं च यन्न मुञ्चति समार्जयस्व तद्धनम् ॥ १२-३२९-४५ (७८७९२)
न तत्र संविभज्यते स्वकर्मभिः परस्परम् ।
यदेव यस्य यौतकं तदेव तत्र सोऽश्नुते ॥ १२-३२९-४६ (७८७९३)

परत्र तेन जीव्यते तदेव पुत्र जीयताम् ।
धनं यदक्षरं ध्रुवं समार्जयस्व तत्स्वयम् ॥ १२-३२९-४७ (७८७९४)
न यावदेव पच्यते महाजनस्य यावकम् ।
अपक्व एव यावके पुरा प्रलीयते त्वरम् ॥ १२-३२९-४८ (७८७९५)
न मातृपुत्रबान्धवा न संस्तुतः प्रियो जनः ।
अनुव्रजन्ति संकटे व्रजन्तमेकपातिनम् ॥ १२-३२९-४९ (७८७९६)
यदेव कर्म केवलं पुराकृतं शुभाशुभम् ।
तदेव पुत्र यौतकं भवत्यमुत्र गच्छतः ॥ १२-३२९-५० (७८७९७)
हिरण्यरत्नसंचयाः शुभाशुभेन संचिताः ।
न तस्य देहसंक्षये भवन्ति कार्यसाधकाः ॥ १२-३२९-५१ (७८७९८)
न पुत्र शान्तिरस्ति ते कृताकृतस्य कर्मणः ।
न साक्षिकोऽऽत्मना समो नृणामिहास्ति कश्चन ॥ १२-३२९-५२ (७८७९९)
मनुष्यदेहशून्यकं भवत्यमुत्र गच्छतः ।
प्रविश्य बुद्धिचक्षुषा प्रदृश्यते हि सर्वशः ॥ १२-३२९-५३ (७८८००)
इहाग्निसूर्यवायवः शरीरमाश्रितास्त्रयः ।
त एव तस्य साक्षिणो भवन्ति धर्मदर्शिनः ॥ १२-३२९-५४ (७८८०१)
अहर्निशेषु सर्वतः स्पृशत्सु सर्वचारिषु ।
प्रकाशगूढवृत्तिषु स्वधर्ममेव पालय ॥ १२-३२९-५५ (७८८०२)
अनेकपारिपान्थके विरूपरौद्रमक्षिके ।
स्वमेव कर्म रक्ष्यतां स्वकर्म तत्र गच्छति ॥ १२-३२९-५६ (७८८०३)
न तत्र संविभज्यते स्वकर्मभिः परस्परम् ।
तथा कृतं स्वकर्मजं तदेव भुज्यते फलम् ॥ १२-३२९-५७ (७८८०४)
यथाऽप्सरोगणाः फलं सुखं महर्षिभिः सह ।
तथाऽऽप्नुवन्ति कर्मजं विमानकामगामिनः ॥ १२-३२९-५८ (७८८०५)
यथेह यत्कृतं शुभं विपाप्मभिः कृतात्मभिः ।
तदाप्नुवन्ति मानवास्तथा विशुद्धयोनयः ॥ १२-३२९-५९ (७८८०६)
प्रजापतेः सलोकतां बृहस्पतेः शतक्रतोः ।
व्रजन्ति ते परां गतिं गृहस्थधर्मसेतुभिः ॥ १२-३२९-६० (७८८०७)
सहस्रशोऽप्यनेकशः प्रवक्तुमुत्सहामहे ।
अबुद्धिमोहनं पुनः प्रभुस्तु तेन पावकः ॥ १२-३२९-६१ (७८८०८)
गता त्रिरष्टवर्षता ध्रुवोऽसि पञ्चविंशकः ।
कुरुष्व धर्मसंचयं वयो हि तेऽतिवर्तते ॥ १२-३२९-६२ (७८८०९)
पुरा करोति सोऽन्तकः प्रमादगोमुखां चमूम् ।
यथागृहीतमुत्थितस्त्वरस्व धर्मपालने ॥ १२-३२९-६३ (७८८१०)
यथा त्वमेव पृष्ठतस्त्वमग्रतो गमिष्यसि ।
तथा गतिं गमिष्यतः किमात्मना परेण वा ॥ १२-३२९-६४ (७८८११)

यदेकपातिनां सतां भवत्यमुत्र गच्छताम् ।
भयेषु सांपरायिकं निधत्स्व केवलं निधिम् ॥ १२-३२९-६५ (७८८१२)
सतूलमूलबान्धवं प्रभुर्हरत्यसङ्गवान् ।
न सन्ति यस्य वारकाः कुरष्व धर्मसंनिधिम् ॥ १२-३२९-६६ (७८८१३)
इदं निदर्शनं मया तवेह पुत्र संमतम् ।
स्वदर्शनानुपानतः प्रवर्णितं कुरुष्व तत् ॥ १२-३२९-६७ (७८८१४)
ददाति यः स्वकर्मणा धनानि यस्यकस्यचित् ।
अबुद्धिमोहजैर्गुणैः स एक एव युज्यते ॥ १२-३२९-६८ (७८८१५)
शुभं समस्तमश्नुते प्रकुर्वतः शुभाः क्रियाः ।
तदेतदर्थदर्शनं कृतज्ञमर्थसंहितम् ॥ १२-३२९-६९ (७८८१६)
निबन्धनी रज्जुरेषा या ग्रामे वसतो रतिः ।
छित्त्वैतां सुकृतो यान्ति नैनां छिदन्ति दुष्कृतः ॥ १२-३२९-७० (७८८१७)
किं ते धनेन किं बन्धुभिस्ते
किं ते पुत्रैः पुत्रक यो मरिष्यसि ।
आत्मानमन्विच्छ गुहां प्रविष्टं
पितामहास्ते क्व गताश्च सर्वे ॥ १२-३२९-७१ (७८८१८)
श्वः कार्यमद्य कुर्वीत पूर्वाह्णे चापराह्णिकम् ।
न हि प्रतीक्षते मृत्युः कृतं वाऽस्य न वाऽकृतम् ॥ १२-३२९-७२ (७८८१९)
अनुगम्य विनाशान्ते निवर्तन्ते ह बान्धवाः ।
अग्नौ प्रक्षिप्य पुरुषं ज्ञातयः सुहृदस्तथा ॥ १२-३२९-७३ (७८८२०)
नास्तिकान्निरनुक्रोशान्नरान्पापमते स्थितान् ।
वामतः कुरु विस्रब्धं परं प्रेप्सुरतन्द्रितः ॥ १२-३२९-७४ (७८८२१)
एवमभ्याहते लोके कालेनोपनिपीडिते ।
सुमहद्धैर्यमालम्ब्य धर्मं सर्वात्मना कुरु ॥ १२-३२९-७५ (७८८२२)
अथेमं दर्शनोपायं सम्यग्यो वेत्ति मानवः ।
सम्यक् स्वधर्मं कृत्वेह परत्र सुखमश्नुते ॥ १२-३२९-७६ (७८८२३)
न देहभेदे मरणं विजानतां
न च प्रणाशः स्वनुपालिते पथि ।
धर्मं हि यो बर्धयते स पण्डितो
य एव धर्माच्च्यवते स दह्यते ॥ १२-३२९-७७ (७८८२४)
प्रयुक्तयोः कर्मपथि स्वकर्मणोः
फलं प्रयोक्ता लभते यथाविधि ।
निहीनकर्मा निरयं प्रपद्यते
त्रिविष्टपं गच्छति धर्मपारगः ॥ १२-३२९-७८ (७८८२५)
सोपानभूतं स्वर्गस्य मानुष्यं प्राप्य दुर्लभम् ।
तथाऽऽत्मानं समादध्याद्भ्रश्यते न पुनर्यथा ॥ १२-३२९-७९ (७८८२६)

यस्य नोत्क्रामति मतिः स्वर्गमार्गानुसारिणी ।
तमाहुः पुण्यकर्माणमशोच्यं मित्रबान्धवैः ॥१२-३२९-८० (७८८२७)
यस्य नोपहता बुद्धिर्निश्चये ह्यवलम्बते ।
स्वर्गे कृतावकाशस्य नास्ति तस्य महद्भयम् ॥१२-३२९-८१ (७८८२८)
तपोवनेषु ये जातास्तत्रैव निधनं गताः ।
तेषामल्पतरो धर्मः कामभोगानजानताम् ॥१२-३२९-८२ (७८८२९)
यस्तु भोगान्परित्यज्य शरीरेण तपश्चरेत् ।
न तेन किंचिन्न प्राप्तं तन्मे बहुमतं फलम् ॥१२-३२९-८३ (७८८३०)
मातापितृसहस्राणि पुत्रदारशतानि च ।
अनागतान्यतीतानि कस्य ते कस्य वा वयम् ॥१२-३२९-८४ (७८८३१)
अहमेको न मे कश्चिन्नाहमन्यस्य कस्यचित् ।
न तं पश्यामि यस्याहं तन्न पश्यामि यो मम ॥१२-३२९-८५ (७८८३२)
न तेषां भवता कार्यं न कार्यं तव तैरपि ।
स्वकृतैस्तानि जातानि भवांश्चैव गमिष्यति ॥१२-३२९-८६ (७८८३३)
इह लोके हि धनिना परोऽपि स्वजनायते ।
स्वजनस्तु दरिद्राणां जीवतामपि नश्यति ॥१२-३२९-८७ (७८८३४)
संचिनोत्यशुभं कर्म कलत्रापेक्षया नरः ।
ततः क्लेशमवाप्नोति परत्रेह तथैव च ॥१२-३२९-८८ (७८८३५)
पश्यति च्छिन्नभूतं हि जीवलोकं स्वकर्मणा ।
तत्कुरुष्व तथा पुत्र कृत्स्नं यत्समुदाहृतम् ॥१२-३२९-८९ (७८८३६)
तदेतत्संप्रदृश्यैव कर्म भूमिं प्रपश्यतः ।
शुभान्याचरितव्यानि परलोकमभीप्सता ॥१२-३२९-९० (७८८३७)
मासर्तुसंज्ञापरिवर्तकेन
सूर्याग्निना रात्रिदिवेन्धनेन ।
स्वकर्मनिष्ठाफलसाक्षिकेण
भूतानि कालः पचति प्रसह्य ॥ १२-३२९-९१ (७८८३८)
धनेन किं यन्न ददाति नाश्नुते
बलेन किं येन रिपुं न बाधते ।
श्रुतेन किं येन न धर्ममाचरे
त्किमात्मना यो न जितेन्द्रियो वशी ॥ १२-३२९-९२ (७८८३९)
भीष्म उवाच। १२-३२९-९३क्ष् (६५३७)
इदं द्वैपायनवचो हितमुक्तं निशम्य तु ।
शुको गतः परित्यज्य पितरं मोक्षदैशिकम् ॥ ॥१२-३२९-९३ (७८८४०)

इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि
एकोनत्रिंशदधिकत्रिशततमोऽध्यायः ॥३२९.।

१२-३२९-२ स्वाध्यायमन्वशिक्षयत स्वयमिति ट । थ। ध। पाठः ॥
१२-३२९-५ हित्वा सङ्गमनार्जवमिति प्राणस्य लेलिहेति च
। ध। पाठः। संलिह स्पृश। स्वाद्वस्वादुविवेकं मा कार्षीरित्यर्थः ॥
१२-३२९-६ आमपात्रोपमे इति ध । पाठः। स्वपिषि पुरुषार्थसाधने
न प्रवर्तसे ॥
१२-३२९-७ शत्रुषु कामादिषु । अन्तरं छिद्रम् ॥
१२-३२९-८ न धावसि देवं गुरुं वा शरणं न यासि । जीविते लिह्यमाने
चेति ध। पाठः। जीविते लुल्यमानेचेति ट। पाठः ॥
१२-३२९-१० अपथा अपथेन । बुद्धिमोहपरायणा इति ट। थ। पाठः ॥
१२-३२९-१३ आद्यकालिकया वर्तमानमात्रदर्शिन्या ॥
१२-३२९-१५ कूलपातं महानदीपूरम् । रणरेणुमिवोत्थितमिति
ध। पाठः। रथरेणुमिवेति ध।पाठः। रथरेणुं यथा वामतः कुर्वन्ति
वामभागे कुर्वन्ति वर्जयन्तीत्यर्थ इति रत्नगर्भः। खररेणुमिति
ट। थ। पाठः ॥
१२-३२९-१७ अमोघासु आयुर्हरणेन सफलासु रात्रिषु । धर्मपोतेन
संचरेति ध। पाठः। जरया परिवारित इति ट। थ। पाठः ॥
१२-३२९-१८ मृत्युरन्वेति ते यदेति ट । थ। ध। पाठः। निवृत्तिं
लम्भसे यस्मात्तस्मात्त्वं मृत्युनाशित इति ध। पाठः ॥
१२-३२९-१९ संचिन्वानकं धनादिसंचयपरम् ॥
१२-३२९-२० अन्धकारे संसारे । दीपो ज्ञानम् ॥
१२-३२९-२२ इह क्लेशाय महते प्रेत्यानन्तसुखाय चेति ध । पाठः ॥
१२-३२९-२४ शुक्लकृष्णौ पक्षौ ॥
१२-३२९-२५ चक्षुर्ज्ञानं परप्रणेतृनेयम् । अन्धवत् यदि न
भवसीत्यर्थः। परं परलोकं आत्मानं वा ॥
१२-३२९-२६ परिगतं प्राप्तं वेदनाशरीरं यमलोके यातनाशरीरं
यैस्ते तथाभूता भवन्तीति शेषः ॥
१२-३२९-२८ श्नान इति नराणां कदनं यत्र तस्मिन्नरके । रुधिरपाः
कीटाः। गुरूणां मातृपि तृप्रभृतीनां वचनं नुदति दूरीकरोति
तं उपतरं मृतम्। श्वानोभीषिकयेति ध। पाठः ॥
१२-३२९-२९ पितृविषये यमलोके विपिनमसिपत्रवनं तदेवावगाह्य
तत्रैव निवसति ॥
१२-३२९-३० निकृतिर्नीचकर्म वञ्चनाचौर्यादि
। उपनिधिभिश्छलेन। अपकीर्तिभिरशुभकृतः कृत्स्नं
परमनिरययातनाभृशमसुखमनुभवति दुष्कृतकर्मेति

ट। पाठः ॥
१२-३२९-३२ महापदानि ब्रह्मादीनां स्थानानि दृष्ट्वा कत्थसे धन्योऽहमिति श्लाघसे परंतु ब्रह्म नावेक्षसे । मृत्युकारिकां जराम् ॥
१२-३२९-३३ प्रयास्यतां मोक्षमार्गेण प्रस्थातव्यम् । सुखस्य प्रमाथि संविधीयतां प्रयत्यताम् ॥
१२-३२९-३४ अन्तकाय अयतिसुखाय । दारुणैः कृच्छ्रादितपोभिः ॥
१२-३२९-४२ वृकाः कामादयः ॥
१२-३२९-४३ हिरण्मयवृक्षदर्शनं मरणचिह्नम् ॥
१२-३२९-४४ ते त्वाम् ॥
१२-३२९-४५ तद्धनं विद्याम् ॥
१२-३२९-४६ यौतकं विवाहाप्तंधनं दायादाग्राह्यम् ॥
१२-३२९-४८ यावके घृतखण्डमिश्रे यवपिवष्टविकारे त्वरं त्वरायुक्तं यथा स्यात्तथा प्रलीयसे म्रियसे । भोगान्भुक्त्वा मोक्षे यत्नं करिष्यामीति न मन्तव्यमिति भावः ॥
१२-३२९-५५ यथेन्द्रियेषु सर्वतः श्रुतेष्विति ध । पाठः ॥
१२-३२९-५८ तथाऽऽप्नुवन्ति कर्मतो वियुद्धिमोहनं पुनरिति ट । ध। पाठः ॥
१२-३२९-६६ कुरुष्व धर्मसंचयमिति ध । पाठः ॥
१२-३२९-७२ नहि तद्वेद कस्याद्यमृत्युसेनाभिवीक्षते इति ध । पाठः। को हि तद्वेद यस्याद्यमृत्युसेनाभिवीक्षत इति ट। थ। पाठः ॥
१२-३२९-७९ सृज्यते न पुनर्यथेति ध । पाठः। म्रियते न पुनर्यथेति ट। पाठः ॥
१२-३२९-८३ तदेव बहुलं मतमिति ट । ध। पाठः ॥
१२-३२९-९३ हितयुक्तमिति ध । पाठः। मोक्षदैशिकं मोक्षोपदेष्टारम् ॥

---

शन्तिपर्व-अध्यय३३०

॥ श्रीः ॥

१२.३३०. अध्यायः ३३०

Mahabharata - Shanti Parva - Chapter Topics

भीष्मेण युधिष्ठिरंप्रति सर्वथा धर्मस्य कर्तव्यताकथनम् ॥ १.।

Mahabharata - Shanti Parva - Chapter Text

१२-३३०-० (७८८४१)

युधिष्ठिर उवाच। १२-३३०-०क्ष् (६५३८)
यद्यस्ति दत्तमिष्टं वा तपस्तप्तं तथैव च ।
गुरूणां वाऽपि शुश्रूषा तन्मे ब्रूहि पितामह ॥ १२-३३०-१ (७८८४२)
भीष्म उवाच। १२-३३०-२क्ष् (६५३९)
आत्मनाऽनर्थयुक्तेन पापे निविशते मनः ।
स कर्म कलुषं कृत्वा क्लेशे महति धीयते ॥ १२-३३०-२ (७८८४३)
दुर्भिक्षादेव दुर्भिक्षं क्लेशात्क्लेशं भयाद्भयम् ।
मृतेभ्यः प्रमृता यान्ति दरिद्राः पापकर्मिणः ॥ १२-३३०-३ (७८८४४)
उत्सवादुत्सवं यान्ति स्वर्गात्स्वर्गं सुखात्सुखम् ।
श्रद्दधानाश्च दान्ताश्च धनस्याः शुभकारिणः ॥ १२-३३०-४ (७८८४५)
व्यालकुञ्जरदुर्गेषु सर्पचोरभयेषु च ।
हस्तावापेन गच्छन्ति नास्तिकाः किमतः परम् ॥ १२-३३०-५ (७८८४६)
प्रियदेवातिथेयाश्च वदान्याः प्रियसाधवः ।
क्षेम्यमात्मवता मार्गमास्थिता हस्तदक्षिणाः ॥ १२-३३०-६ (७८८४७)
पुलाका इव धान्येषु पूत्यण्डा इव पक्षिषु ।
तद्विधास्ते मनुष्येषु येषां धर्मो न कारणम् ॥ १२-३३०-७ (७८८४८)
सुशीघ्रमपि धावन्तं विधानमनुधावति ।
शेते सह शयानेन येनयेन यथाकृतम् ॥ १२-३३०-८ (७८८४९)
पापं तिष्ठति तिष्ठन्तं धावन्तमनुधावति ।
करोति कुर्वतः कर्म च्छायेवानुविधीयते ॥ १२-३३०-९ (७८८५०)
येनयेन यथा यद्यत्पुरा कर्म सुनिश्चितम् ।
तत्तदेव नरो भुङ्क्ते नित्यं विहितमात्मना ॥ १२-३३०-१० (७८८५१)
समानकर्मनिक्षेपं विधानपरिरक्षणम् ।
भूतग्राममिमं कालः समन्तादपकर्षति ॥ १२-३३०-११ (७८८५२)
अचोद्यमानानि यथा पुष्पाणि च फलानि च ।
स्वं कालं नातिवर्तन्ते तथा कर्म पुराकृतम् ॥ १२-३३०-१२ (७८८५३)
समानश्चावमानश्च लाभालाभौ जयाजयौ ।
प्रवृत्ता न निवर्तन्ते निधनान्ताः पदेपदे ॥ १२-३३०-१३ (७८८५४)
आत्मना विहितं दुःखमात्मना विहितं सुखम् ।
गर्भशय्यामुपादाय भजते पूर्वदेहिकम् ॥ १२-३३०-१४ (७८८५५)
बालो युवा वा वृद्धश्च यत्करोति शुभाशुभम् ।
तस्यांतस्यामवस्थायां भुङ्क्ते जन्मनिजन्मनि ॥ १२-३३०-१५ (७८८५६)
यथा धेनुसहस्रेषु वत्सो विन्दति मातरम् ।
तथा पूर्वकृतं कर्म कर्तारमनुगच्छति ॥ १२-३३०-१६ (७८८५७)
मलिनं हि यथा वस्त्रं पश्चाच्छुध्यति वारिणा ।
उपवासैः प्रतप्तानां दीर्घं सुखमनन्तकम् ॥ १२-३३०-१७ (७८८५८)

दीर्घकालेन तपसा सेवितेन तपोवने ।
धर्मनिर्धूतपापानां संसिध्यन्ते मनोरथाः ॥ १२-३३०-१८ (७८८५९)
शकुनानामिवाकाशे मत्स्यानामिव चोदके ।
पदं यथा न दृश्येत तथा पुण्यकृतां गतिः ॥ १२-३३०-१९ (७८८६०)
अलमन्यैरुपालब्धैः कीर्तितैश्च व्यतिक्रमैः ।
पेशलं चानुरूपं च कर्तव्यं हितमात्मनः ॥ ॥ १२-३३०-२० (७८८६१)

इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि
त्रिंशदधिकत्रिशततमोऽध्यायः ॥ ३३०.।
Mahabharata - Shanti Parva - Chapter Footnotes

१२-३३०-६ आस्थिता हतदक्षिणा इति ध । पाठः ॥
१२-३३०-१० तत्तदेवोत्तरं भुङ्क्ते इति झ । पाठः ॥
१२-३३०-१३ लाभोऽलाभः क्षयाक्षयाविति झ । पाठः ॥
१२-३३०-१४ भुज्यते पूर्वदैहिकमिति ध । पाठः ॥

---

शन्तिपर्व-अध्यय३३१
॥ श्रीः ॥
१२.३३१. अध्यायः ३३१

Mahabharata - Shanti Parva - Chapter Topics
भीष्मेण युधिष्ठिरंप्रति शुकोत्पत्तिप्रकारकथनारम्भः
॥ १.। तथा पुत्रार्थं व्यासतपश्चर्याकथनम् ॥ २.।
Mahabharata - Shanti Parva - Chapter Text

१२-३३१-० (७८८६२)
युधिष्ठिर उवाच। १२-३३१-०क्ष् (६५४०)
कथं व्यासस्य धर्मात्मा शुको जज्ञे महातपाः ।
सिद्धिं च परमां प्राप्तस्तन्मे ब्रूहि पितामह ॥ १२-३३१-१ (७८८६३)
कस्यां चोत्पादयामास शुकं व्यासस्तपोधनः ।
न ह्यस्य जननीं विद्मो जन्म चाग्र्यं महात्मनः ॥ १२-३३१-२ (७८८६४)
कथं च बालस्य सतः सूक्ष्मज्ञाने रता मतिः ।
यथा नान्यस्य लोकेऽस्मिन्द्वितीयस्येह कस्यचित् ॥ १२-३३१-३ (७८८६५)
एतदिच्छाम्यहं श्रोतुं विस्तरेण महामते ।
न हि मे तृप्तिरस्तीह शृण्वतोऽमृतमुत्तमम् ॥ १२-३३१-४ (७८८६६)
माहात्म्यमात्मयोगं च विज्ञानं च शुकस्य ह ।

यथावदानुपूर्व्येण तन्मे ब्रूहि पितामह ॥ १२-३३१-५ (७८८६७)
भीष्म उवाच। १२-३३१-६क्ष् (६५४१)
न हायनैर्न पलितैर्न वित्तैर्न च बन्धुभिः ।
ऋषयश्चक्रिरे धर्मं योऽनूचानः स नो महान् ॥ १२-३३१-६ (७८८६८)
तपोमूलमिदं सर्वं यन्मां पृच्छसि पाण्डव ।
तदिन्द्रियाणि संयम्य तपो भवति नान्यथा ॥ १२-३३१-७ (७८८६९)
इन्द्रियाणां प्रसङ्गेन दोषमृच्छत्यसंशयम् ।
संनियम्य तु तान्येव सिद्धिमाप्नोति मानवः ॥ १२-३३१-८ (७८८७०)
अश्वमेधसहस्रस्य वाजपेयशतस्य च ।
योगस्य कलया तात न तुल्यं विद्यते फलम् ॥ १२-३३१-९ (७८८७१)
अत्र ते वर्तयिष्यामि जन्मयोगफलं तथा ।
शुकस्याग्र्यां गतिं चैव दुर्विदामकृतात्मभिः ॥ १२-३३१-१० (७८८७२)
मेरुशृङ्गे किल पुरा कर्णिकारवनायुते ।
विजहार महादेवो भीमैर्भूतगणैर्वृतः ॥ १२-३३१-११ (७८८७३)
शैलराजसुता चैव देवी तत्राभवत्पुरा ।
तत्र दिव्यं तपस्तेषे कृष्णद्वैपायनः प्रभुः ॥ १२-३३१-१२ (७८८७४)
योगेनात्मानमाविश्य योगधर्मपरायणः ।
धारयन्स तपस्तेपे पुत्रार्थं कुरुसत्तम ॥ १२-३३१-१३ (७८८७५)
अग्नेर्भूमेरपां वायोरन्तरिक्षस्य वा विभो ।
वीर्येण संमितः पुत्रो मम भूयादिति स्म ह ॥ १२-३३१-१४ (७८८७६)
संकल्पेनाथ मौनेन दुष्प्रापमकृतात्मभिः ।
वरयामास देवेशमास्थितस्तप उत्तमम् ॥ १२-३३१-१५ (७८८७७)
अतिष्ठन्मारुताहारः शतं किल समाः प्रभुः
आराधयन्महादेवं बहुरूपमुमापतिम् ॥ १२-३३१-१६ (७८८७८)
तत्र ब्रह्मर्षयश्चैव सर्वे देवर्षयस्तथा ।
लोकपालाश्च लोकेशं साध्याश्च वसुभिः सह ॥ १२-३३१-१७ (७८८७९)
आदित्याश्चैव रुद्राश्च दिवाकरनिशाकरौ ।
मारुतो मरुतश्चैव सागराः सरितस्तथा ॥ १२-३३१-१८ (७८८८०)
अश्विनौ देवगन्धर्वास्तथा नारदपर्वतौ ।
विश्वावसुश्च गन्धर्वः सिद्धाश्चाप्सरसां गणाः ॥ १२-३३१-१९ (७८८८१)
तत्र रुद्रो महादेवः कर्णिकारमयीं शुभाम् ।
धारयाणः स्रजं भाति ज्योत्स्नामिव निशाकरः ॥ १२-३३१-२० (७८८८२)
तस्मिन्दिव्ये वने रम्ये देवदेवर्षिसंकुले ।
आस्थितः परमं योगमृषिः पुत्रार्थमच्युतः ॥ १२-३३१-२१ (७८८८३)
न चास्य हीयते प्राणो न ग्लानिरुपजायते ।
त्रयाणामपि लोकानां तदद्भुतमिवाभवत् ॥ १२-३३१-२२ (७८८८४)

जटाश्च तेजसा तस्य वैश्वानरशिखोपमाः ।
प्रज्वलन्त्यः स्म दृश्यन्ते युक्तस्यामिततेजसः ॥ १२-३३१-२३ (७८८८५)
मार्कण्डेयो हि भगवानेतदाख्यातवान्मम ।
स देवचरितानीह कथयामास मे तदा ॥ १२-३३१-२४ (७८८८६)
एता अद्यापि कृष्णस्य तपसा तेन दीपिताः ।
अग्निवर्णा जटास्तात प्रकाशन्ते महात्मनः ॥ १२-३३१-२५ (७८८८७)
एवंविधेन तपसा तस्य भक्त्या च भारत ।
महेश्वरः प्रसन्नात्मा चकार मनसा मतिम् ॥ १२-३३१-२६ (७८८८८)
ग्ततस्तस्य महादेवो दर्शयामास साम्बिकः।'
उवाच चैवं भगवांस्त्र्यम्बकः प्रहसन्निव ।
एवंविधस्ते तनयो द्वैपायन भविष्यति ॥ १२-३३१-२७ (७८८८९)
यथा ह्यग्निर्यथा वायुर्यथा भूमिर्यथा जलम् ।
यथाऽऽकारास्तथा शुद्धो भविता ते सुतो महान् ॥ १२-३३१-२८ (७८८९०)
तद्भावभावी तद्बुद्धिस्तदाऽऽत्मा तदपाश्रयः ।
तेजसाऽऽवृत्य लोकांस्त्रीन्यशः प्राप्स्यति ते सुतः ॥ ॥ १२-३३१-२९ (७८८९१)

इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि
एकत्रिंशदधिकत्रिशततमोऽध्यायः ॥ ३३१.।
Mahabharata - Shanti Parva - Chapter Footnotes

१२-३३१-२ कथं चोत्पादयामासेति ध ।पाठः ॥
१२-३३१-३ सूक्ष्मज्ञाने स्थितामतिरिति ध ।पाठः ॥
१२-३३१-१२ देवी भर्त्राभवत्पुरेति ध ।पाठः ॥
१२-३३१-१५ संकल्पेनाथ योगेनेति झ ।पाठः ॥
१२-३३१-१८ वसवो मरुतश्चैवेति झ ।पाठः ॥
१२-३३१-२२ हीयते वर्ण इति ध ।पाठः ॥
१२-३३१-२५ कृष्णस्य व्यासस्य ॥
१२-३३१-२९ यशः प्राप्स्यति केवलमिति ट ।ड।ध।पाठः ॥

---

शन्तिपर्व-अध्यय३३२
॥ श्रीः ॥
१२.३३२. अध्यायः ३३२

Mahabharata - Shanti Parva - Chapter Topics
भीष्मेण युधिष्ठिरंप्रति शुकोत्पत्तिप्रकारकथनम् ॥ १.।
Mahabharata - Shanti Parva - Chapter Text

१२-३३२-० (७८८९२)
भीष्म उवाच। १२-३३२-०क्ष् (६५४२)
स लब्ध्वा परमं देवाद्वरं सत्यवतीसुतः ।
अरणीं तु ततो गृह्य ममन्थाग्निचिकीर्षया ॥ १२-३३२-१ (७८८९३)
अथ रूपं परं राजन्बिभ्रतीं स्वेन तेजसा ।
घृताचीं नामाप्सरसमपश्यद्भगवानृषिः ॥ १२-३३२-२ (७८८९४)
ऋषिरप्सरसं दृष्ट्वा सहसा काममोहितः ।
अभवद्भगवान्व्यासो वने तस्मिन्युधिष्ठिर ॥ १२-३३२-३ (७८८९५)
सा च दृष्ट्वा तदा व्यासं कामसंविग्नमानसम् ।
शुकी भूत्वा महाराज घृताची समुपागमत् ॥ १२-३३२-४ (७८८९६)
स तामप्सरसं दृष्ट्वा रूपेणान्येन संवृताम् ।
शरीरजेनानुगतः सर्वगात्रातिगेन ह ॥ १२-३३२-५ (७८८९७)
स तु धैर्येण महता निगृह्णन्हृच्छयं मुनिः ।
न शशाक नियन्तुं तद्व्यासः प्रविसृतं मनः ।
भावित्वाच्चैव भावस्य घृताच्या वपुषा हृतः ॥ १२-३३२-६ (७८८९८)
यत्नान्नियच्छतस्तस्य मुनेरग्निचिकीर्षया ।
अरण्यामेव सहसा तस्य शुक्रमवापतत् ॥ १२-३३२-७ (७८८९९)
सोऽविशङ्केन मनसा तथैव द्विजसत्तमः ।
अरणीं ममन्थ ब्रह्मर्षिस्तस्यां जज्ञे शुको नृप ॥ १२-३३२-८ (७८९००)
शुक्रे निर्मथ्यमाने स शुको जज्ञे महातपाः ।
परमर्षिर्महायोगी अरणीगर्भसंभवः ॥ १२-३३२-९ (७८९०१)
यथाऽध्वरे समिद्धोऽग्निर्भाति हव्यमुदावहन् ।
तथारूपः शुको जज्ञे प्रज्वलन्निव तेजसा ॥ १२-३३२-१० (७८९०२)
विभ्रत्पितुश्च कौरव्य रूपवर्णमनुत्तमम् ।
बभौ तदा भावितात्मा विधूमोऽग्निरिवज्वलन् ॥ १२-३३२-११ (७८९०३)
तं गङ्गा सरितां श्रेष्ठा मेरुपृष्ठे जनेश्वर ।
स्वरूपिणी तदाऽभ्येत्य स्नापयामास वारिणा ॥ १२-३३२-१२ (७८९०४)
अन्तरिक्षाच्च कौरव्य दण्डः कृष्णाजिनं च ह ।
पपात भुवि राजेन्द्र शुकस्थार्थे महात्मनः ॥ १२-३३२-१३ (७८९०५)
जेगीयन्ते स्म गन्धर्वा ननृतुश्चाप्सरोगणाः ।
देवदुन्दुभयश्चैव प्रावाद्यन्त सहस्रशः ॥ १२-३३२-१४ (७८९०६)
विश्वासुश्च गन्धर्वस्तथा तुम्बुरुनारदौ ।
हाहा हूहूश्च गन्धर्वौ तुष्टुवुः शुकसंभवम् ॥ १२-३३२-१५ (७८९०७)
तत्र शक्रपुरोगाश्च लोकपालाः समागताः ।
देवा देवर्षयश्चैव तथा ब्रह्मर्षयोऽपि च ॥ १२-३३२-१६ (७८९०८)
दिव्यानि सर्वपुष्पाणि प्रववर्ष च मारुतः ।

जङ्गमं स्थावरं चैव प्रहृष्टमभवज्जगत् ॥ १२-३३२-१७ (७८९०९)
तं महात्मा स्वयं प्रीत्या देव्या सह महाद्युतिः ।
जतामात्रं मुनेः पुत्रं विधिनोपानयत्तदा ॥ १२-३३२-१८ (७८९१०)
तस्य देवेश्वरः शक्रो दिव्यमद्भुतदर्शनम् ।
ददौ कमण्डलुं प्रीत्या देववासांसि चाभिभो ॥ १२-३३२-१९ (७८९११)
हंसाश्च शतपत्राश्च सारसाश्च सहस्रशः ।
प्रदक्षिणमवर्तन्त शुकाश्चाषाश्च भारत ॥ १२-३३२-२० (७८९१२)
आरणेयस्ततो दिव्यं प्राप्य जन्म महाद्युतिः ।
तत्रैवोवास मेधावी ब्रह्मचारी समाहितः ॥ १२-३३२-२१ (७८९१३)
उत्पन्नमात्रं तं वेदाः सरहस्याः ससंग्रहाः ।
उपतस्थुर्महाराज यथाऽस्य पितरं तथा ॥ १२-३३२-२२ (७८९१४)
बृहस्पतिं च वव्रे स वेदवेदाङ्गभाष्यवित् ।
उपाध्यायं महाराज धर्ममेवानुचिन्तयन् ॥ १२-३३२-२३ (७८९१५)
सोऽधीत्य निखिलान्वेदान्सरहस्यान्ससंग्रहान् ।
इतिहासं च कात्स्न्येंन धर्मशास्त्राणि चाभिभो ॥ १२-३३२-२४ (७८९१६)
गुरवे दक्षिणां दत्त्वा समावृत्तो महामुनिः ।
उग्रं तपः समारेभे ब्रह्मचारी समाहितः ॥ १२-३३२-२५ (७८९१७)
देवतानामृषीणां च बाल्येऽपि स महातपाः ।
संमन्त्रणीयो मान्यश्च ज्ञानेन तपसा तथा ॥ १२-३३२-२६ (७८९१८)
न त्वस्य रमते बुद्धिराश्रमेषु नराधिप ।
त्रिषु गार्हस्थ्यमूलेषु मोक्षधर्मानुदर्शिनः ॥ ॥ १२-३३२-२७ (७८९१९)

इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि
द्वात्रिंशदधिकत्रिशततमोऽध्यायः ॥ ३३२.।

Mahabharata - Shanti Parva - Chapter Footnotes

१२-३३२-१ अरणी सहिते गृह्येति झ ।पाठः।तत्र अरणी द्वे
अधरोत्तरे सहिते मिथुनरूपे इत्यर्थः ॥
१२-३३२-४ सा च कृत्वा तदा व्यासमिति ड ।ध।पाठः ॥
१२-३३२-९ शुके निर्मथ्यमाने जातत्वात् शुक इति रेफलोपेनास्य नाम कृतम् ॥
१२-३३२-१२ तर्पयामास वारिणेति झ ।पाठः ॥
१२-३३२-१४ खे गायन्ति स्म गन्धर्वा इति ट ।पाठः ॥
१२-३३२-१८ महात्मा महादेवः उपानयत् स्वशिष्यं कृतवानिति संबन्धः ॥

---

शन्तिपर्व-अध्यय३३३
॥ श्रीः ॥

१२.३३३. अध्यायः ३३३

Mahabharata - Shanti Parva - Chapter Topics

शुकेन व्यासाज्ञया तत्वजिज्ञासया मिथिलास्थं जनकंप्रत्यग्गभनम् ॥ १.।

Mahabharata - Shanti Parva - Chapter Text

१२-३३३-० (७८९२०)
भीष्म उवाच। १२-३३३-०क्ष् (६५४३)
स मोक्षमनुचिन्त्यैव शुकः पितरमभ्यगात् ।
प्राहाभिवाद्य च गुरुं श्रेयोर्थी विनयान्वितः ॥ १२-३३३-१ (७८९२१)
मोक्षधर्मेषु कुशलो भगवान्प्रब्रवीतु मे ।
यथा मे मनसः शान्तिः परमा संभवेत्प्रभो ॥ १२-३३३-२ (७८९२२)
श्रुत्वा पुत्रस्य तु वचः परमर्षिरुवाच तम् ।
अधीहि पुत्र मोक्षं वै धर्मांश्च विविधानपि ॥ १२-३३३-३ (७८९२३)
पितुर्नियोगाज्जग्राह शुको धर्मभृतां वरः ।
योगशास्त्रं च निखिलं कापिलं चैव भारत ॥ १२-३३३-४ (७८९२४)
स तं ब्राह्म्या श्रियः युक्तं ब्रह्मतुल्यपराक्रमम् ।
मेने पुत्रं यदा व्यासो मोक्षधर्मविशारदम् ॥ १२-३३३-५ (७८९२५)
उवाच गच्छेति तदा जनकं मिथिलेश्वरम् ।
स ते वक्ष्यति मोक्षार्थं निखिलं मिथिलेश्वरः ॥ १२-३३३-६ (७८९२६)
पितुर्नियोगादगमन्मैथिलं जनकं नृपम् ।
प्रष्टुं धर्मस्य निष्ठां वै मोक्षस्य च परायणम् ॥ १२-३३३-७ (७८९२७)
उक्तश्च मानुषेण त्वं पथा गच्छेत्यविस्मितः ।
न प्रभावेण गन्तव्यमन्तरिक्षचरेण वै ॥ १२-३३३-८ (७८९२८)
आर्जवेनैव गन्तव्यं न सुखान्वेषिणा तथा ।
नान्वेष्टव्या विशेषास्तु विशेषा हि प्रसङ्गिनः ॥ १२-३३३-९ (७८९२९)
अहंकारो न कर्तव्यो याज्ये तस्मिन्नराधिपे ।
स्यातव्यं च वशे तस्य स ते छेत्स्यति संशयम् ॥ १२-३३३-१० (७८९३०)
स धर्मकुशलो राजा मोक्षशास्त्रविशारदः ।
याज्यो मम स यद्ब्रूयात्तत्कार्यमविशङ्कया ॥ १२-३३३-११ (७८९३१)
एवमुक्तः स धर्मात्मा जगाम मिथिलां मुनिः ।
पद्भ्यां शक्तोन्तरिक्षेण क्रान्तुं पृथ्वीं ससागराम् ॥ १२-३३३-१२ (७८९३२)
स गिरींश्चाप्यतिक्रम्य नदीतीर्थसरांसि च ।
बहुव्यालमृगाकीर्णा ह्यटवीश्च वनानि च ॥ १२-३३३-१३ (७८९३३)
मेहोर्हरेश्च द्वे वर्षे वर्षं हैमवतं ततः ।
क्रमेणैवं व्यतिक्रम्य भारतं वर्षमासदत् ॥ १२-३३३-१४ (७८९३४)

स देशान्विविधान्पश्यंश्चीनहूणनिषेवितान् ।
आर्यावर्तमिमं देशमाजगाम महामुनिः ॥ १२-३३३-१५ (७८९३५)
पितुर्वचनमाज्ञाय तमेवार्थं विचिन्तयन् ।
अध्वानं सोऽतिचक्राम खचरः खे पतन्निव ॥ १२-३३३-१६ (७८९३६)
पत्तनानि च रम्याणि स्फीतानि नगराणि च ।
रत्नानि च विचित्राणि पश्यन्नपि न पश्यति ॥ १२-३३३-१७ (७८९३७)
उद्यावानि च रम्याणि तथैवायतनानि च ।
पुण्यानि चैव तीर्थानि सोत्यक्रामदथाध्वगः ॥ १२-३३३-१८ (७८९३८)
सोचिरेणैव कालेन विदेहानाससाद ह ।
रक्षितान्धर्मराजेन जनकेन महात्मना ॥ १२-३३३-१९ (७८९३९)
तत्र ग्रामान्बहून्पश्यन्बह्वन्नरसभोजनान् ।
पल्लीघोषान्समृद्धांश्च बहुगोकुलसंकुलान् ॥ १२-३३३-२० (७८९४०)
स्फीतांश्च शालियवसर्हंससारससेवितान् ।
पद्मिनीभिश्च शतशः श्रीमतीभिरलकृतान् ॥ १२-३३३-२१ (७८९४१)
स विदेहानतिक्रम्य समृद्धजनसेवितान् ।
मिथिलोपवनं रम्यमाससाद समृद्धिमत् ॥ १२-३३३-२२ (७८९४२)
हस्त्यश्वरथसंकीर्णं नरनारीसमाकुलम् ।
पश्यन्नपश्यन्निव तत्समतिक्रामदच्युतः ॥ १२-३३३-२३ (७८९४३)
मनसा तं बहन्भारं तमेवार्थं विचिन्तयन् ।
आत्मारामः प्रसन्नात्मा मिथिलामाससाद ह ॥ १२-३३३-२४ (७८९४४)
तस्या द्वारं समासाद्य द्वारपालैर्निवारितः ।
स्थितो ध्यानपरो मुक्तो विदितः प्रविवेश ह ॥ १२-३३३-२५ (७८९४५)
स राजमार्गमासाद्य समृद्धजनकसंकुलम् ।
पार्थिवक्षयमासाद्य निःशङ्कः प्रविवेश ह ॥ १२-३३३-२६ (७८९४६)
तत्रापि द्वारपलास्तमुग्रवाचा न्यषेधयन् ।
तथैव च शुक्रस्तत्र निर्मन्युः समतिष्ठत ॥ १२-३३३-२७ (७८९४७)
न चातपाध्वसंतप्तः क्षुत्पिपासाश्रमान्वितः ।
प्रताम्यति ग्लायति वा नापैति च तथाऽऽतपात् ॥ १२-३३३-२८ (७८९४८)
तेषां तु द्वारपालानामेकः शोकसमन्वितः ।
मध्यंगतमिवादित्यं दृष्ट्वा शुकमवस्थितम् ॥ १२-३३३-२९ (७८९४९)
पूजयित्वा यथान्यायमभिवाद्य कृताञ्जलिः ।
प्रावेशयत्ततः कक्ष्यां प्रथमां राजवेश्मनः ॥ १२-३३३-३० (७८९५०)
तत्रासीनः शुकस्तात मोक्षमेवान्वचिन्तयत् ।
छायायामातपे चैव समदर्शी समद्युतिः ॥ १२-३३३-३१ (७८९५१)
तं मुहूर्तादिवागम्य राज्ञो मन्त्री कृताञ्जलिः ।
प्रावेशयत्ततः कक्ष्यां द्वितीयां राजवेश्मनः ॥ १२-३३३-३२ (७८९५२)

तत्रान्तः पुरसंबद्धं महच्चैत्ररथोपमम् ।
सुविभक्तजलाक्रीडं रम्यं पुष्पितपादपम् ॥ १२-३३३-३३ (७८९५३)
तं दर्शयित्वा स शुकं मन्त्री जनकमुत्तमम् ।
अर्हमासनमादिश्य निश्चक्रामः ततः पुनः ॥ १२-३३३-३४ (७८९५४)
तं चारुवेषाः सुश्रोण्यस्तरुण्यः प्रियदर्शनाः ।
सूक्ष्मरक्ताम्बरधरास्तप्तकाञ्चनभूषणाः ॥ १२-३३३-३५ (७८९५५)
संलापालापकुशला नृत्तगीतविशारदाः ।
स्मितपूर्वाभिभाषिण्यो रूपेणाप्सरसां समाः ॥ १२-३३३-३६ (७८९५६)
भावोपचारकुशला भावज्ञाः सत्वकोविदाः ।
परं पञ्चाशतं नार्यो वारमुख्याः समाद्रवन् ॥ १२-३३३-३७ (७८९५७)
पाद्यादीनि प्रतिग्राह्य पूजया परयाऽर्चयन् ।
कालोपपन्नेन तदा स्वाद्वन्नेनाभ्यतर्पयन् ॥ १२-३३३-३८ (७८९५८)
तस्य भुक्तवतस्तात तदन्तः पुरकाननम् ।
सुरम्यं दर्शयामासुरेकैकश्येन भारत ॥ १२-३३३-३९ (७८९५९)
क्रीडन्त्यश्च हसन्त्यश्च गायन्त्यश्चापि ताः शुभम् ।
उदारसत्वं सत्वज्ञाः स्त्रियः पर्यचरंस्तथा ॥ १२-३३३-४० (७८९६०)
आरणेयस्तु शुद्धात्मा निःसंदेहस्त्रिकर्मकृत् ।
वश्येन्द्रियो जितक्रोधो न हृष्यति न कुप्यति ॥ १२-३३३-४१ (७८९६१)
तस्मै शय्यासनं दिव्यं वरार्हः रत्नभूषितम् ।
स्पर्ध्यास्तरणसंकीर्णं ददुस्ताः परमस्त्रियः ॥ १२-३३३-४२ (७८९६२)
पादशौचं तु कृत्वैव शुकः संध्यामुपास्य च ।
निषसादासने पुण्ये तमेवार्थं विचिन्तयन् ॥ १२-३३३-४३ (७८९६३)
पूर्वरात्रे तु तत्रासौ हुत्वा ध्यानपरायणः ।
मध्यरात्रे यथान्यायं निद्रामाहारयत्प्रभुः। १२-३३३-४४ (७८९६४)
ततो मुहूर्तादुत्थाय कृत्वा शौचमनन्तरम् ।
स्त्रीभिः परिवृतो धीमान्ध्यानमेवान्वपद्यत ॥ १२-३३३-४५ (७८९६५)
अनेन विधिना कर्ष्णिस्तदहः शेषमच्युतः ।
तां च रात्रिं नृपकुले वर्तयामास भारत ॥ ॥ १२-३३३-४६ (७८९६६)

इति श्रीमन्महाभारते शान्तिप्रवणि मोक्षधर्मपर्वणि
त्रयस्त्रिंशदधिकत्रिशततमोऽध्यायः ॥ ३३३.।

Mahabharata - Shanti Parva - Chapter Footnotes

१२-३३३-१ मोक्षं मोक्षशास्त्रम् । अनुचिन्त्य उपादेयत्वेन ज्ञात्वा ॥
१२-३३३-३ धर्मांश्च त्रिविधानपीति ध । पाठः ॥
१२-३३३-४ शुको वेदविदांवर इति ट । ड। पाठः ॥

१२-३३३-५ मोक्षविद्याविशारदमिति ट । पाठः ॥
१२-३३३-६ मोक्षार्थं मोक्षशास्त्रार्थं । मोक्षार्थं निखिलेन
विशेषत इति ट। ड। थ। पाठः ॥
१२-३३३-१४ मेरोर्वर्षमिलावृतम् । हरेर्वर्षं
हरिवर्षाख्यम्। हैमवन्तं वर्षं किंपुरुषाख्यम् ॥
१२-३३३-२४ तं भारं जिज्ञासाख्यम् । अर्थं मोक्षम् ॥
१२-३३३-२८ नोपैति च तथा रुषमिति ड । ध। पाठः ॥
१२-३३३-३७ कालोपचारकुशला इति ड । पाठः ॥
१२-३३३-४१ आरणेयः अरणिजः शुकः ॥
१२-३३३-४२ हेवार्हं रत्नभूषितमिति झ । पाठः ॥
१२-३३३-४४ भूत्वा ध्यानपरायण इति झ । पाठः। अर्धरात्रे
यथान्यायमिति ध। पाठः ॥
१२-३३३-४६ कार्ष्णिः शुकः । अच्युतो धैर्यादिति शेषः ॥

---

शन्तिपर्व-अध्यय३३४
॥ श्रीः ॥
१२.३३४. अध्यायः ३३४

Mahabharata - Shanti Parva - Chapter Topics
जनकेन शुकंप्रति मोक्षसाधनीभूताश्रमधर्मकथनपूर्वकं
शुकप्रशंसनम् ॥ १.।
Mahabharata - Shanti Parva - Chapter Text

१२-३३४-० (७८९६७)
भीष्म उवाच। १२-३३४-०क्ष् (६५४४)
ततः स राजा जनको मन्त्रिभिः सह भारत ।
पुरोहितं पुरस्कृत्य सर्वाण्यन्तः पुराणि च ॥ १२-३३४-१ (७८९६८)
आसनं च पुरस्कृत्य रत्नानि विविधानि च ।
शिरसा चार्घ्यमादाय गुरुपुत्रं समभ्यगात् ॥ १२-३३४-२ (७८९६९)
स तदासनमादाय बहुरत्नविभूषितम् ।
स्पर्ध्यास्तरणसंस्तीर्णं सर्वतोभद्रमृद्धिमत् ॥ १२-३३४-३ (७८९७०)
पुरोधसा संगृहीतं हस्तेनालभ्य पार्थिवः ।
प्रददौ गुरुपुत्राय शुकाय परमार्चितम् ॥ १२-३३४-४ (७८९७१)
तत्रोपविष्टं तं कार्ष्णिं शास्त्रतः प्रतिपूज्य च ।
पाद्यं निवेद्य प्रथममर्घ्यं गां च न्यवेदयत् ॥ १२-३३४-५ (७८९७२)
स च तां मन्त्रवत्पूजां प्रत्यगृह्णाद्यथाविधि ।
प्रतिगृह्य तु तां पूजां जनकाद्द्विजसत्तमः ॥ १२-३३४-६ (७८९७३)

गां चैव समनुज्ञाय राजानमनुमान्य च ।
पर्यपृच्छन्महातेजा राज्ञः कुशलमव्ययम् ॥ १२-३३४-७ (७८९७४)
अनामयं च राजेन्द्र शुकः सानुचरस्य ह ।
अनुज्ञातः स तेनाथ निषसाद सहानुगः ॥ १२-३३४-८ (७८९७५)
कुशलं चाव्ययं चैव पृष्ट्वा वैयासकिं नृपः ।
किमागमनमित्येवं पर्यपृच्छत पार्थिवः ॥ १२-३३४-९ (७८९७६)
शुक उवाच। १२-३३४-१०क्ष् (६५४५)
पित्राऽहमुक्तो भद्रं ते मोक्षधर्मार्थकोविदः ।
विदेहराजो याज्यो मे जनको नाम विश्रुतः ॥ १२-३३४-१० (७८९७७)
तत्र गच्छस्व वै तूर्णं यदि ते हृदि संशयः ।
प्रवृत्तौ वा निवृत्तौ वा स ते च्छेत्स्यति संशयं ॥ १२-३३४-११ (७८९७८)
सोहं पितुर्नियोगात्त्वामुपप्रष्टुमिहागतः ।
तन्मे धर्मभृतां श्रेष्ठ यथावद्वक्तुमर्हसि ॥ १२-३३४-१२ (७८९७९)
किं कार्यं ब्राह्मणेनेह मोक्षार्थश्च किमात्मकः ।
कथं च मोक्षः प्राप्तव्यो ज्ञानेन तपसाऽथवा ॥ १२-३३४-१३ (७८९८०)
जनक उवाच। १२-३३४-१४क्ष् (६५४६)
यत्कार्यं ब्राह्मणेनेह जन्मप्रभृति तच्छृणु ।
कृतोपनयनस्तात भवेद्वेदपरायणः ॥ १२-३३४-१४ (७८९८१)
तपसा गुरुवृत्त्या च ब्रह्मचर्येण चाभिभो ।
देवतानामृषीणां चाप्यनृणो ह्यनसूयकः ॥ १२-३३४-१५ (७८९८२)
वेदानधीत्य नियतो दक्षिणामपवर्ज्य च ।
अभ्यनुज्ञामथ प्राप्य समावर्तेत वै द्विजः ॥ १२-३३४-१६ (७८९८३)
समावृत्तश्च गार्हस्थ्ये स्वदारनिरतो वसेत् ।
अनसूयुर्यथान्यायमाहिताग्निरनावृतः ॥ १२-३३४-१७ (७८९८४)
उत्पाद्य पुत्रं पौत्रं तु वन्याश्रमपदे वसेत् ।
तानेवाग्नीन्यथाशास्त्रमर्चयन्नतिथिप्रियः ॥ १२-३३४-१८ (७८९८५)
स वनेऽग्नीन्यथान्यायमात्मन्यारोप्य धर्मवित् ।
निर्द्वन्द्वो बीतरागात्मा ब्रह्माश्रमपदे वसेत् ॥ १२-३३४-१९ (७८९८६)
शुक उवाच। १२-३३४-२०क्ष् (६५४७)
उत्पन्ने ज्ञानविज्ञाने प्रत्यक्षे हृदि शाश्वते ।
किमवश्यं निवस्तव्यमाश्रमेषु वनेषु वा ॥ १२-३३४-२० (७८९८७)
एतद्भवन्तं पृच्छामि तद्भवान्वक्तुमर्हति ।
यथा वेदार्थतत्त्वेन ब्रूहि मे त्वं जनाधिप ॥ १२-३३४-२१ (७८९८८)
जनक उवाच। १२-३३४-२२क्ष् (६५४८)
न विना ज्ञानविज्ञाने मोक्षस्याधिगमो भवेत् ।
न विना गुरुसंबन्धं ज्ञानस्याधिगमः स्मृतः ॥ १२-३३४-२२ (७८९८९)

गुरुः प्लावयिता तस्य ज्ञानं प्लव इहोच्यते ।
विज्ञाय कृतकृत्यस्तु तीर्णस्तदुभयं त्यजेत् ॥१२-३३४-२३ (७८९९०)
अनुच्छेदाय लोकानामनुच्छेदाय कर्मणाम् ।
पूर्वैराचरितो धर्मश्चातुराश्रम्यसंश्रितः ॥१२-३३४-२४ (७८९९१)
अनेन क्रमयोगेन बहुजातिषु कर्मणाम् ।
कृत्वा शुभाशुभं कर्म मोक्षो नामेह लभ्यते ॥१२-३३४-२५ (७८९९२)
भावितैः करणैश्चायं बहुसंसारयोनिषु ।
आसादयति शुद्धात्मा मोक्षं वै प्रथमाश्रमे ॥१२-३३४-२६ (७८९९३)
तमासाद्य तु मुक्तस्य दृष्टार्थस्य विपश्चितः ।
त्रिष्वाश्रमेषु कोऽन्वर्थो भवेत्परमभीप्सतः ॥१२-३३४-२७ (७८९९४)
राजसांस्तामसांश्चैव नित्यं दोषान्विवर्जयेत् ।
सात्विकं मार्गमास्थाय पश्येदात्मानमात्मना ॥१२-३३४-२८ (७८९९५)
सर्वभूतेषु चात्मानं सर्वभूतानि चात्मनि ।
संपश्यन्नोपलिप्येत जले वारिचरो यथा ॥१२-३३४-२९ (७८९९६)
पक्षिवत्प्रायणादूर्ध्वममुत्रानन्त्यमश्नुते ।
विहाय देहान्निर्मुक्तो निर्द्वन्द्वः प्रशमं गतः ॥१२-३३४-३० (७८९९७)
अत्र गाथाः पुरा गीताः शृणु राज्ञा ययातिना ।
धार्यन्तो या द्विजैस्तात मोक्षशास्त्रविशारदैः ॥१२-३३४-३१ (७८९९८)
ज्योतिरात्मनि नान्यत्र सर्वजन्तुषु तत्समम् ।
स्वयं च शक्यते द्रष्टुं सुसमाहितचेतसा ॥१२-३३४-३२ (७८९९९)
न बिभेति परो यस्मान्न बिभेति पराच्च यः ।
यश्च नेच्छति न द्वेष्टि ब्रह्म संपद्यते तु सः ॥१२-३३४-३३ (७९०००)
यदा भावं न कुरुते सर्वभूतेषु पापकम् ।
कर्मणा मनसा वाचा ब्रह्म संपद्यते तदा ॥१२-३३४-३४ (७९००१)
संयोज्य मनसाऽऽत्मानमीर्ष्यामुत्सृज्य मोहनीम् ।
त्यक्त्वा कामं च मोहं च ततो ब्रह्मत्वमश्नुते ॥१२-३३४-३५ (७९००२)
यदा श्राव्ये च दृश्ये च सर्वभूतेषु चाप्ययम् ।
समो भवति निर्द्वन्द्वो ब्रह्म संपद्यते तदा ॥१२-३३४-३६ (७९००३)
यदा स्तुतिं च निन्दां च समत्वेनैव पश्यति ।
काञ्चनं चायसं चैव सुखं दुःखं तथैव च ॥१२-३३४-३७ (७९००४)
शीतमुष्णं तथैवार्थमनर्थं प्रियमप्रियम् ।
जीवितं मरणं चैव ब्रह्म संपद्यते तदा ॥१२-३३४-३८ (७९००५)
प्रसार्येह यथाङ्गानि कूर्मः संहरते पुनः ।
तथेन्द्रियाणि मनसा संयन्तव्यानि भिक्षुणा ॥१२-३३४-३९ (७९००६)
तमः परिगतं वेश्म यथा दीपेन दृश्यते ।
तथा बुद्धिप्रदीपेन शक्य आत्मा निरीक्षितुम् ॥१२-३३४-४० (७९००७)

एतत्सर्वं च पश्यामि त्वयि बुद्धिमतां वर ।
यच्चान्यदपि नोक्तं मे तत्त्वतो वेद तद्भवान् ॥ १२-३३४-४१ (७९००८)
ब्रह्मर्षे विदितश्चासि विषयान्तमुपागतः ।
गुरोस्तव प्रसादेन तव चैवोपशिक्षया ॥ १२-३३४-४२ (७९००९)
तस्यैव च प्रसादेन प्रादुर्भूतं महात्मनः ।
ज्ञानं दिव्यं ममापीदं तेनासि विदितो मम ॥ १२-३३४-४३ (७९०१०)
अधिकं तव विज्ञानमधिका च गतिस्तव ।
अधिकं तव चैश्वर्यं तच्च त्वं नावबुध्यसे ॥ १२-३३४-४४ (७९०११)
बाल्याद्वा संशयाद्वापि भयाद्वाऽप्यविमोक्षणात् ।
उत्पन्ने चापि विज्ञाने नाधिगच्छति तां गतिं ॥ १२-३३४-४५ (७९०१२)
व्यवसायेन शुद्धेन मद्विधैश्छिन्नसंशयः ।
विमुच्य हृदयग्रन्थीनासादयति तां गतिम् ॥ १२-३३४-४६ (७९०१३)
भवांश्चोत्पन्नविज्ञानः स्थिरबुद्धिरलोलुपः ।
व्यवसायादृते ब्रह्मन्नासादयति तत्परम् ॥ १२-३३४-४७ (७९०१४)
नास्ति ते सुखदुःखेषु विशेषो नास्ति लोलुपः ।
नौत्सुक्यं नृत्यगीतेषु न राग उपजायते ॥ १२-३३४-४८ (७९०१५)
न बन्धुष्वनुबन्धस्ते न भयेष्वस्ति ते भयम् ।
पश्यामि त्वां महाभाग तुल्यलोष्टाश्मकाञ्चनम् ॥ १२-३३४-४९ (७९०१६)
अहं त्वामनुपश्यामि ये चाप्यन्ते मनीषिणः ।
आस्थितं परमं मार्गमक्षयं तमनामयम् ॥ १२-३३४-५० (७९०१७)
यत्फलं ब्राह्मणस्येह मोक्षार्थश्च यदात्मकः ।
तस्मिन्वै वर्तसे विप्र किमन्यत्परिपृच्छसि ॥ ॥ १२-३३४-५१ (७९०१८)

इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि
चतुस्त्रिंशदधिकत्रिशततमोऽध्यायः ॥ ३३४.।
Mahabharata - Shanti Parva - Chapter Footnotes

१२-३३४-७ राज्ये कुशलमव्ययमिति ध । पाठः ॥
१२-३३४-१२ मोक्षः कर्तव्य इति ट । ड थ। पाठः ॥
१२-३३४-२३ आचार्यः प्रापिता तस्येति ध । पाठः ॥
१२-३३४-३२ नान्यत्र रतं तत्रैव चैव तत् इति ध । पाठः ॥
१२-३३४-४१ चच्चान्यदपि वेत्तव्यमिति झ । पाठः ॥
१२-३३४-४४ अधिकं भवति ज्ञानमिति ड । थ। पाठः ॥
१२-३३४-४६ तद्विधश्छिन्नसंशय इति ध । पाठः ॥
१२-३३४-४८ नास्ति लोलुप इति ध । पाठः ॥

---

॥ श्रीः ॥

१२.३३५. अध्यायः ३३५

Mahabharata - Shanti Parva - Chapter Topics

जनकाभ्यनुज्ञातेन शुकेन व्यासमेत्य स्वस्य जनकेन सह संवादप्रकारकथनम् ॥ १. । व्यासस्य वैशंपायनादिभिः सह संवादः ॥ २. ।

Mahabharata - Shanti Parva - Chapter Text

१२-३३५-० (७९०१९)
भीष्म उवाच। १२-३३५-०क्ष् (६५४९)
एतच्छ्रुत्वा तु वचनं कृतात्मा कृतनिश्चयः ।
आत्मनाऽऽत्मानमास्थाय दृष्ट्वा चात्मानमात्मना ॥ १२-३३५-१ (७९०२०)
कृतकार्यः सुखी शान्तस्तूष्णीं प्रायादुदङ्मुखः ।
शैशिरं गिरिमुद्दिश्य सधर्मा मातरिश्वनः ॥ १२-३३५-२ (७९०२१)
एतस्मिन्नेव काले तु देवर्षिर्नारदस्तथा ।
हिमवन्तमियाद्द्रष्टुं सिद्धचारणसेवितम् ॥ १२-३३५-३ (७९०२२)
तमप्सरोगाकीर्णं गीतस्वननिनादितम् ।
किन्नराणां सहस्रैश्च भृङ्गराजैस्तथैव च ॥ १२-३३५-४ (७९०२३)
मद्गुभिः खञ्जरीटैश्च विचित्रैर्जीवजीवकैः ॥ १२-३३५-५ (७९०२४)
चित्रवर्णैर्मयूरैश्च केकाशतविराजितैः ।
राजहंससमूहैश्च हृष्टैः परभृतैस्तथा ॥ १२-३३५-६ (७९०२५)
पक्षिराजो गरुत्मांश्च यं नित्यमधितिष्ठति ।
चत्वारो लोकपालाश्च देवाः सर्षिगणास्तथा ॥ १२-३३५-७ (७९०२६)
तत्र नित्यं समायान्ति लोकस्य हितकाम्यया ।
विष्णुना यत्र पुत्रार्थे तपस्तप्तं महात्मना ॥ १२-३३५-८ (७९०२७)
तत्रैव च कुमारेण बाल्ये क्षिप्ता दिवौकसः ।
शक्तिर्न्यस्ता क्षितितले त्रैलोक्यमवमन्य वै ॥ १२-३३५-९ (७९०२८)
तत्रोवाच जगत्स्कन्दः क्षिपन्वाक्यमिदं तदा ।
योऽन्योस्ति मत्तोऽभ्यधिको विप्रा यस्याधिकं प्रियाः ॥ १२-३३५-१० (७९०२९)
यो ब्रह्मण्यो द्वितीयोऽस्ति त्रिषु लोकेषु वीर्यवान् ।
सोभ्युद्धरत्विमां शक्तिमथवा कम्पयत्विति ॥ १२-३३५-११ (७९०३०)
तच्छ्रुत्वा व्यथिता लोकाः क इमामुद्धरेदिति ।
अथ देवगणं सर्वं संभ्रान्तेन्द्रियमानसम् ॥ १२-३३५-१२ (७९०३१)
अपश्यद्भगवान्विष्णुः क्षिप्तं सासुरराक्षसम् ।
किंन्वत्र सुकृतं कार्यं भवेदिति विचिन्तयन् ॥ १२-३३५-१३ (७९०३२)

अनामृष्य ततः क्षेपमवैक्षत च पाविकम् ।
संप्रगृह्य विशुद्धात्मा शक्तिं प्रज्वलितां तदा ॥१२-३३५-१४ (७९०३३)
कम्पयामास सव्येन पाणिना पुरुषोत्तमः ।
शक्त्यां तु कम्प्यमानायां विष्णुना बलिना तदा ॥१२-३३५-१५ (७९०३४)
मेदिनी कम्पिता सर्वा सशैलवनकानना ।
शक्तेनापि समुद्धर्तुं कम्पिता साऽभवत्तदा ॥१२-३३५-१६ (७९०३५)
रक्षिता स्कन्दराजस्य धर्षणा प्रभविष्णुना ।
तां कम्पयित्वा भगवान्प्रह्लादमिदमब्रवीत् ॥१२-३३५-१७ (७९०३६)
पश्य वीर्यं कुमारस्य नैतदन्यः करिष्यति ।
सोऽमृष्यमाणस्तद्वाक्यं समुद्धरणनिश्चितः ॥१२-३३५-१८ (७९०३७)
जग्राह तां तदा शक्तिं न चैनामभ्यकम्पयत् ।
नादं महान्तं मुक्त्वा स मूर्च्छितो गिरिमूर्धनि ॥१२-३३५-१९ (७९०३८)
विह्वलः प्रापतद्भूमौ हिरण्यकशिपोः सुतः ।
तत्रोत्तरां दिशं गत्वा शैलराजस्य पार्श्वतः ॥१२-३३५-२० (७९०३९)
तपोऽतप्यत दुर्धर्षं तात नित्यं वृषध्वजः ।
पावकेन परिक्षिप्तं दीप्यता यस्य चाश्रमम् ॥१२-३३५-२१ (७९०४०)
आदित्यपर्वतं नाम दुर्धर्षमकृतात्मभिः ।
न तत्र शक्यते गन्तुं यक्षराक्षसदानवैः ॥१२-३३५-२२ (७९०४१)
दशयोजनविस्तारमग्निज्वालसमावृतम् ।
भगवान्पावकस्तत्र स्वयं तिष्ठति वीर्यवान् ॥१२-३३५-२३ (७९०४२)
सर्वान्विघ्नान्प्रशमयन्महादेवस्य धीमतः ।
दिव्यं वर्षसहस्रं हि पादेनैकेन तिष्ठतः ॥१२-३३५-२४ (७९०४३)
देवान्संतापयंस्तत्र महादेवो महाव्रतः ।
ऐन्द्रीं तु दिशमास्थाय शैलराजस्य धीमतः ॥१२-३३५-२५ (७९०४४)
विविक्ते पर्वततटे पाराशर्यो महातपाः ।
वेदानध्यापयामास व्यासः शिष्यान्महातपाः ॥१२-३३५-२६ (७९०४५)
सुमन्तुं च महाभागं वैशंपायनमेव च ।
जैमिनिं च महाप्राज्ञं पैलं चापि तपस्विनम् ॥१२-३३५-२७ (७९०४६)
एभिः शिष्यैः परिवृतो व्यास आस्ते महातपाः ।
तत्राश्रमपदं रम्यं ददर्श पितुरुत्तमम् ।
आरणेयो विशुद्धात्मा नभसीव दिवाकरः ॥ १२-३३५-२८ (७९०४७)
अथ व्यासः परिक्षिप्तं ज्वलन्तमिव पावकम् ।
ददृशे सुतमायान्तं दिवाकरसमप्रभम् ॥१२-३३५-२९ (७९०४८)
असज्जमानं वृक्षेषु शैलेषु विषयेषु च ।
योगयुक्तं महात्मानं यथा बाणं गुणच्युतम् ॥१२-३३५-३० (७९०४९)
सोऽभिगम्य पितुः पादावगृह्णादरणीसुतः ।

यथोपजोषं तैश्चापि समागच्छन्महामुनिः ॥ १२-३३५-३१ (७९०५०)
ततो निवेदयामास पित्रे सर्वमशेषतः ।
शुको जनकराजेन संवादं प्रीतमानसः ॥ १२-३३५-३२ (७९०५१)
एवमध्यापयञ्शिष्यान्व्यासः पुत्रं च वीर्यवान् ।
उवास हिमवत्पृष्ठे पाराशर्यो महामुनिः ॥ १२-३३५-३३ (७९०५२)
ततः कदाचिच्छिष्यास्तं परिवार्यावतस्थिरे ।
वेदाध्ययनसंपन्नाः शान्तात्मानो जितेन्द्रियाः ॥ १२-३३५-३४ (७९०५३)
वेदेषु निष्ठां संप्राप्य साङ्गेष्वपि तपस्विनः ।
अथोचुस्ते तदा व्यासं शिष्याः प्राञ्जलयो गुरुम् ॥
शिष्या ऊचुः। १२-३३५-३५ (७९०५४)
महता तेजसा युक्ता यशसा चापि वर्धिताः ।
एकं त्विदानीमिच्छामो गुरुणाऽनुग्रहं कृतम् ॥ १२-३३५-३६ (७९०५५)
इति तेषां वचः श्रुत्वा ब्रह्मर्षिस्तानुवाद ह ।
उच्यतामिति तद्वत्सा यद्वः कार्यं प्रियं मया ॥ १२-३३५-३७ (७९०५६)
एतद्वाक्यं गुरोः श्रुत्वा शिष्यास्ते हृष्टमानसाः ।
पुनः प्राञ्जलयो भूत्वा प्रणम्य शिरसा गुरुम् ॥ १२-३३५-३८ (७९०५७)
ऊचुस्ते सहिता राजन्निदं वचनमुत्तमम् ।
यदि प्रीत उपाध्यायो धन्याः स्मो मुनिसत्तम ॥ १२-३३५-३९ (७९०५८)
काङ्क्षामस्तु वयं सर्वे वरं दत्तं महर्षिणा ।
षष्ठः शिष्यो न ते ख्यातिं गच्छेदत्र प्रसीद नः ॥ १२-३३५-४० (७९०५९)
चत्वारस्ते वयं शिष्या गुरुपुत्रश्च पञ्चमः ।
इह वेदाः प्रतिष्ठेरन्नेष नः काङ्क्षितो वरः ॥ १२-३३५-४१ (७९०६०)
शिष्याणां वचनं श्रुत्वा व्यासो वेदार्थतत्त्ववित् ।
पराशरात्मजो धीमान्परलोकार्थचिन्तकः ॥ १२-३३५-४२ (७९०६१)
उवाच शिष्यान्धर्मात्मा धर्म्यं नैःश्रेयसं वचः ।
ब्राह्मणाय सदा देयं ब्रह्म शुश्रूषवे तथा ॥ १२-३३५-४३ (७९०६२)
ब्रह्मलोके निवासं यो ध्रुवं समभिकाङ्क्षते ।
भवन्तो बहुलाः सन्तु वेदो विस्तार्यतामयम् ॥ १२-३३५-४४ (७९०६३)
नाशिष्ये संप्रदातव्यो नाव्रते नाकृतात्मनि ।
एते शिष्यगुणाः सर्वे विज्ञातव्या यथार्थतः ।
नापरीक्षितचारित्रे विद्या देया कथंचन ॥ १२-३३५-४५ (७९०६४)
यथा हि कनकं शुद्धं तापच्छेदनिकर्षणैः ।
परीक्षेत तथा शिष्यानीक्षेत्कुलगुणादिभिः ॥ १२-३३५-४६ (७९०६५)
न नियोज्याश्च वः शिष्या अनियोगे महाभये ।
यथामति यथापाठं तथा विद्या फलिष्यति ॥ १२-३३५-४७ (७९०६६)
सर्वस्तरतु दुर्गाणि सर्वो भद्राणि पश्यतु ।

श्रावयेच्चतुरो वर्णान्कृत्वा ब्राह्मणमग्रतः ॥ १२-३३५-४८ (७९०६७)
वेदस्याध्ययनं हीदं तच्च कार्यं महत्स्मृतम् ।
स्तुत्यर्थमिह देवानां वेदाः सृष्टाः स्वयंभुवा ॥ १२-३३५-४९ (७९०६८)
यो निर्वदेत संमोहाद्ब्राह्मणां वेदपारगम् ।
सोऽभिध्यानाद्ब्राह्मणस्य पराभूयादसंशयम् ॥ १२-३३५-५० (७९०६९)
यश्चाधर्मेण विब्रूयाद्यश्चाधर्मेण पृच्छति ।
तयोरन्यतरः प्रैति विद्वेषं चाधिगच्छति ॥ १२-३३५-५१ (७९०७०)
एतद्वः सर्वमाख्यातं स्वाध्यायस्य विधिं प्रति ।
उपकुर्याच्च शिष्याणामेतच्च हृद्वि वो भवेत् ॥ ॥ १२-३३५-५२ (७९०७१)

इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि
पञ्चत्रिंशदधिकत्रिशततमोऽध्यायः ॥ ३३५.।
Mahabharata - Shanti Parva - Chapter Footnotes

१२-३३५-२ शैशिरं गिरिं हिमालयम् ॥
१२-३३५-४ सहस्रैश्च राजहँसैस्तथैव चेति ड ।पाठः ॥
१२-३३५-२४ आसीदिति शेषः ॥

---

शन्तिपर्व-अध्यय३३६
॥ श्रीः ॥
१२.३३६. अध्यायः ३३६

Mahabharata - Shanti Parva - Chapter Topics
वैशंपायनादिशिष्यप्रवासेन विमनसं व्यासंप्रति नारदस्यागमनम् ॥ १.।
Mahabharata - Shanti Parva - Chapter Text

१२-३३६-० (७९०७२)
भीष्म उवाच। १२-३३६-०क्ष् (६५५०)
एतच्छ्रुत्वा गुरोर्वाक्यं व्यासशिष्या महौजसः ।
अन्योन्यं हृष्टमनसः परिषस्वजिरे तदा ॥ १२-३३६-१ (७९०७३)
उक्ताः स्मो यद्भगवता तदात्वायतिसंहितम् ।
तन्नो मनसि संरूढं करिष्यामस्तथा च तत् ॥ १२-३३६-२ (७९०७४)
अन्योन्यं संविभाष्यैवं सुप्रीतमनसः पुनः ।
विज्ञापयन्ति स्म गुरुं पुनर्वाक्यविशारदाः ॥ १२-३३६-३ (७९०७५)
शैलादस्मान्महीं गन्तुं काङ्क्षितं नो महामुने ।
वेदाननेकधा कर्तुं यदि ते रुचितं प्रभो ॥ १२-३३६-४ (७९०७६)
शिष्याणां वचनं श्रुत्वा पराशरसुतः प्रभुः ।

प्रत्युवाच ततो वाक्यं धर्मार्थसहितं हितम् ॥ १२-३३६-५ (७९०७७)
क्षितिं वा देवलोकं वा गम्यतां यदि रोचते ।
अप्रमादश्च वः कार्यो ब्रह्म हि प्रचुरच्छलम् ॥ १२-३३६-६ (७९०७८)
तेऽनुज्ञातास्ततः सर्वे गुरुणा सत्यवादिना ।
जग्मुः प्रदक्षिणं कृत्वा व्यासं मूर्ध्नाऽभिवाद्य च ॥ १२-३३६-७ (७९०७९)
अवतीर्य महीं तेऽथ चातुर्होत्रमकल्पयन् ।
संयाजयन्तो विप्रांश्च राजन्यांश्च विशस्तथा ॥ १२-३३६-८ (७९०८०)
पूज्यमाना द्विजैर्नित्यं मोदमाना गृहे रताः ।
याजनाध्यापनरताः श्रीमन्तो लोकविश्रुताः ॥ १२-३३६-९ (७९०८१)
अवतीर्णेषु शिष्येषु व्यासः पुत्रसहायवान् ।
तूष्णीं ध्यानपरो धीमानेकान्ते समुपाविशत् ॥ १२-३३६-१० (७९०८२)
ग्एतस्मिन्नेव काले तु देवर्षिर्नारदस्तथा ।
हिमवन्तमगं द्रष्टुं सिद्धचारणसेवितम् ॥' १२-३३६-११ (७९०८३)
तं ददर्शाश्रमपदे नारदः सुमहातपाः ।
अथैनमब्रवीत्काले मधुराक्षरया गिरा ॥ १२-३३६-१२ (७९०८४)
भोभो महर्षे वासिष्ठ ब्रह्मघोषो न वर्तते ।
एको ध्यानपरस्तूष्णीं किमास्से चिन्तयन्निव ॥ १२-३३६-१३ (७९०८५)
ब्रह्मघोषैर्विरहितः पर्वतोऽयं न शोभते ।
रजसा तमसा चैव सोमः सोपप्लवो यथा ॥ १२-३३६-१४ (७९०८६)
न भ्राजते यथापूर्वं निषादानामिवालयः ।
देवर्षिगणजुष्टोऽपि वेदध्वनिविनाकृतः ॥ १२-३३६-१५ (७९०८७)
ऋषयश्च हि देवाश्च गन्धर्वाश्च महौजसः ।
वियुक्ता ब्रह्मघोषेण न भ्राजन्ते यथा पुरा ॥ १२-३३६-१६ (७९०८८)
नारदस्य वचः श्रुत्वा कृष्णद्वैपायनोऽब्रवीत् ।
महर्षे यत्त्वया प्रोक्तं वेदवादविचक्षण ॥ १२-३३६-१७ (७९०८९)
एतन्मनोऽनुकूलं मे भवानर्हसि भाषितुम् ।
सर्वज्ञः सर्वदर्शी च सर्वत्र च कुतूहली ॥ १२-३३६-१८ (७९०९०)
त्रिषु लोकेषु यद्वृत्तं सर्वं तव मते स्थितम् ।
तदाज्ञापय विप्रर्षे ब्रूहि किं करवाणि ते ॥ १२-३३६-१९ (७९०९१)
यन्मया समनुष्ठेयं ब्रह्मर्षे तदुदाहर ।
वियुक्तस्येह शिष्यैर्मे नातिहृष्टमिदं मनः ॥ १२-३३६-२० (७९०९२)
नारद उवाच। १२-३३६-२१क्ष् (६५५१)
अनाम्नायमला वेदा ब्राह्मणस्याव्रतं मलम् ।
मलं पृथिव्या बाह्लीकाः स्त्रीणां कौतूहलं मलम् ॥ १२-३३६-२१ (७९०९३)
अधीयतां भवान्वेदान्सार्धं पुत्रेण धीमता ।
विधुन्वन्ब्रह्मघोषेण रक्षोभयकृतं तमः ॥ १२-३३६-२२ (७९०९४)

भीष्म उवाच। १२-३३६-२३क्ष् (६५५२)
नारदस्य वचः श्रुत्वा व्यासः परमधर्मवित् ।
तथेत्युक्त्वाऽथ संहृष्टो वेदाभ्यासे दृढव्रतः ॥ १२-३३६-२३ (७९०९५)
ग्क उवाच च महाप्राज्ञं नारदं पुनरेव हि ॥ १२-३३६-२४ (७९०९६)
मलं पृथिव्या बाह्लीका इत्युक्तमधुना त्वया ।
कीदृशाश्चैव वाह्लीका ब्रूहि मे वदतां वर ॥ १२-३३६-२५ (७९०९७)
नारद उवाच। १२-३३६-२६क्ष् (६५५३)
अस्यां पृथिव्यां चत्वारो देशाः पापजनैर्वृताः ।
युगन्धरस्तु प्रथमस्तथा भूतिलकः स्मृतः ॥ १२-३३६-२६ (७९०९८)
अच्युतच्छल इत्युक्तस्तृतीयः पारकृत्तमः ।
चतुर्थस्तु महापापो बाह्लीक इति संज्ञितः ॥ १२-३३६-२७ (७९०९९)
भृगोष्ट्रगर्दभक्षीरं पिबन्त्यस्य युगन्धरे ।
एवकर्णास्तु दृश्यन्ते जना वै ह्यच्युतस्थले ॥ १२-३३६-२८ (७९१००)
मेहन्ति च मलं पापा विसृजन्ति जलेषु वै ।
नित्यं भूतिलकेत्यन्नं तज्जलं च पिबन्ति च ॥ १२-३३६-२९ (७९१०१)
हरिबाह्यास्तु बाहीका न स्मरन्ति हरिं क्वचित् ।
ऐहलौकिकमोक्षं ते मांसशोणितवर्धनाः ।
वृथा जाता भविष्यन्ति बाह्लीका इति विश्रुताः ॥ १२-३३६-३० (७९१०२)
पुष्कराहारनिरताः पिशाचा यदभाषते ।
मुसुण्ठीं परिगृह्योग्रां तच्छृणुष्व महामुने ॥ १२-३३६-३१ (७९१०३)
ब्राह्मणीं बहुपुत्रां तां पुष्करे स्नातुमागताम् ।
युगन्धरे पयः पीत्वा ह्युचिता ह्यच्युतस्थले ॥ १२-३३६-३२ (७९१०४)
तथा भूतिलके स्नात्वा बाह्लीकांश्च निरीक्ष्य वै ।
आगताऽसि तथा स्नातुं कथं स्वर्गं न गच्छसि ॥ १२-३३६-३३ (७९१०५)
इत्युक्त्वा ब्राह्मणीभाण्डं पोथयित्वा मुसुण्ठिना ।
उवाच क्रोधताम्राक्षी पिशाची तीर्थपालिका ॥ १२-३३६-३४ (७९१०६)
एतत्तु ते दिवावृत्तं रात्रौ वृत्तमथान्यथा ।
गच्छ बाह्लीकसंसर्गादशुचित्वं न संशयः ॥ १२-३३६-३५ (७९१०७)
यद्द्विषन्ति महात्मानं न स्मरन्ति जनार्दनम् ।
न तेषां पुण्यतीर्थेषु गतिः संसर्गिणामपि ॥ १२-३३६-३६ (७९१०८)
उद्युक्ता ब्राह्मणी भीता प्रतियाता सुतैः सह ।
स्वदेहस्था जजापैवं सपुत्रा ध्यानतत्परा ॥ १२-३३६-३७ (७९१०९)
अनन्तस्य हरेः शुद्धं नाम वै द्वादशाक्षरम् ।
वत्सरत्रितये पूर्णे ब्राह्मणी पुनरागता ॥ १२-३३६-३८ (७९११०)
सपुत्रा पुष्करद्वारं पिशाच्याह तथागतम् ।
नमस्ते ब्राह्मणि शुभे पूताऽहं तव दर्शनात् ॥ १२-३३६-३९ (७९१११)

कुरु तीर्थाभिषेकं च सपुत्रा पापवर्जिता ।
हरेर्नाम्ना च मां साध्वी जलेन स्प्रष्टुमर्हसि ॥१२-३३६-४० (७९११२)
इत्युक्ता ब्राह्मणी हृष्टा पुत्रैः सह शुभव्रता ।
जलेन प्रोक्षयामास द्वादशाक्षरसंयुतम् ॥१२-३३६-४१ (७९११३)
तत्क्षणादभवच्छुद्धा पिशाची दिव्यरूपिणी ।
अप्सरा ह्यभवद्दिव्या गता स्वर्लोकमुत्तमम् ॥१२-३३६-४२ (७९११४)
ब्राह्मणी चैव कालेन वासुदेवपरायणा ।
सपुत्रा चागता स्थानमच्युतस्य शुभं परम् ॥१२-३३६-४३ (७९११५)
एतत्ते कथितं विद्वन्मुने कालोऽयमागतः ॥ १२-३३६-४४ (७९११६)
गमिष्येऽहं महाप्राज्ञ आगमिष्यामि वै पुनः ।
इत्युक्त्वा स जगामाथ नारदो वदतांवरः ॥१२-३३६-४५ (७९११७)
द्वैपायनस्तु भगवांस्तच्छ्रुत्वा मुनिसत्तमात्।'
शुकेन सह पुत्रेण वेदाभ्यासमथाकरोत् ।
स्वरेणोच्चैः सशैक्ष्येण लोकानापूरयन्निव ॥ १२-३३६-४६ (७९११८)
तयोरभ्यसतोरेव नानाधर्मप्रवादिनोः ।
वातोऽतिमात्रं प्रववौ समुद्रानिलवेजितः ॥१२-३३६-४७ (७९११९)
ततोऽनध्याय इति तं व्यासः पुत्रमवारयत् ।
शुको वारितमात्रस्तु कौतूहलसमन्वितः ॥१२-३३६-४८ (७९१२०)
अपृच्छत्पितरं ब्रह्मन्कुतो वायुरभूदयम् ।
आख्यातुमर्हति भवान्वायोः सर्वं विचेष्टितम् ॥१२-३३६-४९ (७९१२१)
शुकस्यैतद्वचः श्रुत्वा व्यासः परमधर्मवित् ।
अनध्यायनिमित्तेऽस्मिन्निदं वचनमब्रवीत् ॥१२-३३६-५० (७९१२२)
दिव्यं ते चक्षुरुत्पन्नं स्वस्थं ते निश्चलं मनः ।
तमसा रजसा चापि त्यक्तः सत्वे व्यवस्थितः ॥१२-३३६-५१ (७९१२३)
आदर्शे रस्वामिव च्छायां पश्यस्यात्मानमात्मना ।
न्यस्यात्मनि स्वयं चेतो बुद्ध्या समनुचिन्तय ॥१२-३३६-५२ (७९१२४)
देवयानपथो विष्णुः पितृयानपथो रविः ।
द्वावेतौ प्रेत्य पन्थानौ दिवं चाधश्च गच्छतः ॥१२-३३६-५३ (७९१२५)
पृथिव्यामन्तरिक्षे च यत्र संवान्ति वायवः ।
सप्तैते वायुमार्गा वै तान्निबोधानुपूर्वशः ॥१२-३३६-५४ (७९१२६)
तत्र देवगणाः साध्याः संबभूवुर्महाबलाः ।
तेषामप्यभवत्पुत्रः समानो नाम दुर्जयः ॥१२-३३६-५५ (७९१२७)
उदानस्तस्य पुत्रोऽभूद्व्यानस्तस्याभवत्सुतः ।
अपानश्च ततो ज्ञेयः प्राणश्चापि ततोऽपरः ॥१२-३३६-५६ (७९१२८)
अनपत्योऽभवत्प्राणो दुर्धर्षः शत्रुतापनः ।
पृथक्कर्माणि तेषां तु प्रवक्ष्यामि यथातथम् ॥१२-३३६-५७ (७९१२९)

प्राणिनां सर्वतो वायुश्चेष्टां वर्तयते पृथक् ।
प्राणनाच्चैव भूतानां प्राण इत्यभिधीयते ॥ १२-३३६-५८ (७९१३०)
प्रेरयत्यभ्रसंघातान्धूमजांश्चोष्मजांश्च यः ।
प्रथमः प्रथमे मार्गे आवहो नाम योऽनिलः ॥ १२-३३६-५९ (७९१३१)
अम्बरे स्नेहमभ्रेभ्यस्तटिद्भ्यश्च महाद्युतिः ।
प्रवहो नाम संवाति द्वितीयश्च सतोयदः ॥ १२-३३६-६० (७९१३२)
उदयं ज्योतिषां शश्वत्सोमादीनां करोति यः ।
अन्तर्देहेषु चोदानं यं वदन्ति मनीषिणः ॥ १२-३३६-६१ (७९१३३)
यश्चतुर्भ्यः समुद्रेभ्यो वायुर्धारयते जलम् ।
उद्धृत्याददते चापो जीमूतेभ्योऽम्बरेऽनिलः ॥ १२-३३६-६२ (७९१३४)
योऽद्भिः संयोज्य जीमूतान्पर्जन्याय प्रयच्छति ।
उद्वहो नाम वर्षिष्ठस्तृतीयः स सदागतिः ॥ १२-३३६-६३ (७९१३५)
समुह्यमाना बहुधा येन नीताः पृथग्घनाः ।
वर्षमोक्षकृतारम्भास्ते भवन्ति घनाघनाः ॥ १२-३३६-६४ (७९१३६)
संहता येन चाविद्धा भवन्ति नदनान्तराः ।
रक्षणार्थाय संभूता मेघत्वमुपश्यान्ति च ॥ १२-३३६-६५ (७९१३७)
योऽसौ वहति देवानां विमानानि विहायसा ।
चतुर्थः संवहो नाम वायुः स गिरिमर्दनः ॥ १२-३३६-६६ (७९१३८)
येन वेगवता तूर्णं रूक्षेणारुजता रसान् ।
वायुना विहता मेघा न भवन्ति बलाहकाः ॥ १२-३३६-६७ (७९१३९)
दारुणोत्पातसंचारो नभसः स्तनयित्नुमान् ।
पञ्चमः स महावेगो विवहो नाम मारुतः ॥ १२-३३६-६८ (७९१४०)
यस्मिन्पारिप्लवा दिव्या भवन्त्यापो विहायसा ।
पुण्यं चाकाशगङ्गायास्तोयं विष्टभ्य तिष्ठति ॥ १२-३३६-६९ (७९१४१)
दूरात्प्रतिहतो यस्मिन्नेकरश्मिर्दिवाकरः ।
यो निरंशुः सहस्रस्य येन भाति वसुंधरा ॥ १२-३३६-७० (७९१४२)
यस्मादाप्यायते सोमो योनिर्दिव्योऽमृतस्य यः ।
षष्ठः पिरवहो नाम स वायुर्जयतांवरः ॥ १२-३३६-७१ (७९१४३)
सर्वप्राणभृतां प्राणान्योऽनुकाले निरस्यति ।
यस्य वर्त्मानुवर्तेते मृत्युवैवस्वतावुभौ ॥ १२-३३६-७२ (७९१४४)
सम्यगन्वीक्षतां बुद्ध्या शान्तयाऽध्यात्मचिन्तकाः ।
ध्यानाभ्यासाभिरामाणां योऽमृतत्वाय कल्पते ॥ १२-३३६-७३ (७९१४५)
यं समासाद्य वेगेन दिशामन्तं प्रपेदिरे ।
दक्षस्य दशपुत्राणां सहस्राणि प्रजापतेः ॥ १२-३३६-७४ (७९१४६)
येन सृष्टः पराभूतो यात्येव न निवर्तते ।
परावहो नाम परो वायुः स दुरतिक्रमः ॥ १२-३३६-७५ (७९१४७)

एवमेतेऽदितेः पुत्रा मारुताः परमाद्भुताः ।
अनारतं ते संवान्ति सर्वगाः सर्वधारिणः ॥ १२-३३६-७६ (७९१४८)
एतत्तु महदाश्चर्यं यदयं पर्वतोत्तमः ।
कम्पितः सहसा तेन वायुनाऽतिप्रवायता ॥ १२-३३६-७७ (७९१४९)
विष्णोर्निः श्वासवातोऽयं यदा वेगसमीरितः ।
सहसोदीर्यते तात जगत्प्रव्यथते तदा ॥ १२-३३६-७८ (७९१५०)
तस्माद्ब्रह्मविदो ब्रह्म नाधीयन्तेऽतिवायति ।
वायोर्वायुभयं ह्युक्तं ब्रह्म तत्पीडितं भवेत् ॥ १२-३३६-७९ (७९१५१)
एतावदुक्त्वा वचनं पराशरसुतः प्रभुः ।
उक्त्वा पुत्रमधीष्वेति व्योमगङ्गामगात्तदा ॥ ॥ १२-३३६-८० (७९१५२)

इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि
षट्त्रिंशदधिकत्रिशततमोऽध्यायः ॥ ३३६.।
Mahabharata - Shanti Parva - Chapter Footnotes

१२-३३६-२ तदात्वायतिसंहितम् तदात्वे तत्काले आयतौ उत्तरकाले च संहितं सम्यक्हितम् ॥
१२-३३६-१४ सोपप्लवो राहुग्रस्तः ॥
१२-३३६-१५ वेदध्वनिनिराकृत इति झ ।ट। पाठः ॥
१२-३३६-१९ तदाज्ञापय देवर्षे इति ड ।पाठः ॥
१२-३३६-२१ पृथिव्या वाहीका इति ड ।पाठः ॥
१२-३३६-२२ अधीयता भवानिति झ ।ड। पाठः। रजोभयकृतं तम इति ध। पाठः ॥
१२-३३६-४७ समुद्रानिलवेगित इति टड़ ।पाठः ॥
१२-३३६-४९ पितरं प्रह्ल इति ट ।ड। पाठः। अपृच्छत्पितरं पुत्र इति ध। पाठः ॥
१२-३३६-५२ व्यस्यात्मनि स्वयं वेदानिति झ ।पाठः ॥
१२-३३६-६१ अन्तर्देहेषु चोदानं द्वितीयश्च ततोऽनिल इति ध ।पाठः ॥
१२-३३६-७१ सोमः क्षीणः संपूर्णमण्डल इति झ ।पाठः ॥
१२-३३६-७८ विष्णोर्निश्वासनूतोयमिति थ ।पाठः ॥
१२-३३६-७९ ब्रह्मविदो वेदानिति झ ।पाठः ॥
क़ २३ तमश्लेकादुपरि ४४ तमश्लोकात्पूर्व वर्तमानाः सार्धविशतिश्लोका ध ।पुस्तक एव दृश्यन्ते ।

---

शन्तिपर्व-अध्यय३३७
॥ श्रीः ॥
१२.३३७. अध्यायः ३३७

Mahabharata - Shanti Parva - Chapter Topics

नारदेन शुकंप्रति ऋषिभ्यः सनत्कुमारोक्तदितवचनानुव ॥ १. ।

Mahabharata - Shanti Parva - Chapter Text

१२-३३७-० (७९१५३)
भीष्म उवाच। १२-३३७-०क्ष् (६५५४)
एतस्मिन्नन्तरे भूते नारदः पुनरागमत् ।
शुकं स्वाध्यायनिरतं वेदार्थान्प्रष्टुमीप्सवा ॥ १२-३३७-१ (७९१५४)
देवर्षिं तु शुको दृष्ट्वा नारदं समुपस्यितम् ।
अर्ध्यपूर्वेण विधिवा वेदोक्तेनाभ्यपूजयत् ॥ १२-३३७-२ (७९१५५)
नारदोऽयाजवीत्प्रीतो ब्रूहि ब्रह्मविदां वर ।
केन त्वां श्रेयसा वत्स योजयामीति हृष्टवत् ॥ १२-३३७-३ (७९१५६)
नारदस्य वचः श्रुत्वा शुकः प्रोवाच भारत ।
अस्मिँल्लोके हितं यत्स्वात्तेन मां योक्तुमर्हसि ॥ १२-३३७-४ (७९१५७)
नारद उवाच। १२-३३७-५क्ष् (६५५५)
तत्त्वं जिज्ञासतां पूर्वनृषीणां भावितात्मनाम् ।
सनत्कुमारो भगवानिदं वतनमब्रवीत् ॥ १२-३३७-५ (७९१५८)
नास्ति विद्यासगं चक्षुर्नास्ति सत्यसमं तपः ।
नास्ति रागसमं दुःखं नास्ति त्यागसमं सुखम् ॥ १२-३३७-६ (७९१५९)
निवृत्तिः कर्मणा पापात्सततं पुण्यशीलता ।
सद्वृत्तिः सद्वदाचारः श्रेय एवदनुत्तमम् ॥ १२-३३७-७ (७९१६०)
नानुवयसुखं प्राप्य यः सज्जति न मुच्यते ।
नालं स दुःखमोक्षाय संयोगो दुःखलक्षणम् ॥ १२-३३७-८ (७९१६१)
सक्तस्य बुद्धिश्चलति मोहजालविवर्धनी ।
मोहवालावृतो दुःखमिह चामुत्र सोऽश्नुते ॥ १२-३३७-९ (७९१६२)
सर्वोपागात्तु कामस्व क्रोधस्य च विनिग्रहः ।
कार्यः श्रेयोर्थिना तौ हि श्रेयोघातार्थमुद्यतौ ॥ १२-३३७-१० (७९१६३)
नित्यं क्रोधात्तपो रक्षेच्छ्रियं रक्षेच्च मत्सरात् ।
विद्यां मानावमानाभ्यामात्मानं तु प्रमादतः ॥ १२-३३७-११ (७९१६४)
आनृशंस्यं परो धर्मः क्षमा च परमं बलम् ।
आत्मज्ञानं परं ज्ञानं न सत्याद्विद्यते परम् ॥ १२-३३७-१२ (७९१६५)
सत्यस्य वचनं श्रेयः सत्यादपि हितं वदेत् ।
यद्भूतहितमत्यन्तमेतत्सत्यं मतं मम ॥ १२-३३७-१३ (७९१६६)
सर्वारम्भपरित्यागी निराशीर्निष्परिग्रहः ।
येन सर्वं परित्यक्तं स विद्वान्स च पण्डितः ॥ १२-३३७-१४ (७९१६७)

इन्द्रियैरिन्द्रियार्थान्यश्चरत्यात्मवशैरिह ।
आसज्जमानः शान्तात्मा निर्विकारः समाहितः ॥ १२-३३७-१५ (७९१६८)
अत्मभूतैरतद्भूतः सह चैव विनैव च ।
स विमुक्तः परं श्रेयो नचिरेणाधिगच्छति ॥ १२-३३७-१६ (७९१६९)
अदर्शनमसंस्पर्शस्तथाऽसंभाषणं तदा ।
यस्य भूतैः सह मुने स श्रेयो विन्दते परम् ॥ १२-३३७-१७ (७९१७०)
न हिंस्यात्सर्वभूतानि मैत्रायगणतश्चरेत् ।
नेदं जन्म समासाद्य वैरं कुर्वीत केनचित् ॥ १२-३३७-१८ (७९१७१)
आकिञ्चन्यं सुसंतोषो निराशीस्त्वमचापलम् ।
एतदाहुः परं श्रेय आत्मज्ञस्य जितात्मनः ॥ १२-३३७-१९ (७९१७२)
परिग्रहं परित्यज्य भव तात जितेन्द्रियः ।
अशोकं स्थानमातिष्ठ इह चामुत्र चाभयम् ॥ १२-३३७-२० (७९१७३)
निरामिषा न शोचन्ति त्यजेदामिषमात्मनः ।
परित्यज्यामिषं सौम्य दुःखतापाद्विमोक्ष्यसे ॥ १२-३३७-२१ (७९१७४)
तपोनित्येन दान्तेन मुनिना संयतात्मना ।
अजितं जेतुकामेन भाव्यं सङ्गेष्वसङ्गिना ॥ १२-३३७-२२ (७९१७५)
गुणसङ्गेष्वनासक्त एकचर्यारतः सदा ।
ब्राह्मणो नचिरादेव सुखमायात्यनुत्तमम् ॥ १२-३३७-२३ (७९१७६)
द्वन्द्वारामेषु भूतेषु य एको रमते मुनिः ।
विद्धि प्रज्ञानतृप्तं तं ज्ञानतृप्तो न शोचति ॥ १२-३३७-२४ (७९१७७)
शुभैर्लभति देवत्वं व्यामिश्रेर्जन्म मानुषम् ।
अशुभैश्चाप्यधोजन्म कर्मभिर्लभतेऽवशः ॥ १२-३३७-२५ (७९१७८)
तत्र मृत्युवशो दुःखैः सततं समभिद्रुतः ।
संसारे पच्यते जन्तुस्तत्कथं नावबुध्यसे ॥ १२-३३७-२६ (७९१७९)
अहिते हितसंज्ञस्त्वमध्रुवे ध्रुवसंज्ञकः ।
अनर्थे चार्थसंज्ञस्त्वं किमर्थं नावबुध्यसे ॥ १२-३३७-२७ (७९१८०)
संवेष्ट्यमानं बहुभिर्मोहात्तन्तुभिरात्मजैः ।
कोशकार इवात्मानं वेष्टयन्नावबुध्यसे ॥ १२-३३७-२८ (७९१८१)
अलं परिग्रहेणेह दोषवान्हि परिग्रहः ।
कृमिर्हि कोशकारस्तु बध्यते स परिग्रहात् ॥ १२-३३७-२९ (७९१८२)
पुत्रदारकुटुम्बेषु सक्ताः सीदन्ति जन्तवः ।
सरःपङ्कार्णवे मग्ना जीर्णा वनगजा इव ॥ १२-३३७-३० (७९१८३)
महाजालसमाकृष्टान्स्थले मत्स्यानिवोद्धृतान् ।
मोहजालसमाकृष्टान्पश्य जन्तून्सुदुःखितान् ॥ १२-३३७-३१ (७९१८४)
कुटुम्बं पुत्रदारांश्च शरीरं संचयाश्च ये ।
पारक्यमध्रुवं सर्वं किं स्वं सुकृतदुष्कृतम् ॥ १२-३३७-३२ (७९१८५)

यदा सर्वान्परित्यज्य गन्तव्यमवशेन ते ।
अनर्थे किं प्रसक्तस्त्वं समर्थं नानुतिष्ठसि ॥ १२-३३७-३३ (७९१८६)
अविश्रान्तमनालम्बमपाथेयमदैशिकम् ।
तमः कान्तारमध्वानं कथमेको गमिष्यसि ॥ १२-३३७-३४ (७९१८७)
न हि त्वां प्रस्थितं कश्चित्पृष्ठतोऽनुगमिष्यति ।
सुकृतं दुष्कृतं च त्वां यास्यन्तमनुयास्यतः ॥ १२-३३७-३५ (७९१८८)
विद्या कर्म च शौचं च ज्ञानं च बहुविस्तरम् ।
अर्थार्थमनुसार्यन्ते सिद्धार्थस्य विमुच्यते ॥ १२-३३७-३६ (७९१८९)
निबन्धनी रज्जुरेषा या ग्रामे वसतो रतिः ।
छित्त्वैतां सुकृतो यान्ति नैनां छिन्दन्ति दुष्कृतः ॥ १२-३३७-३७ (७९१९०)
रूपकूलां मनःस्रोतां स्पर्शद्वीपां रसावहाम् ।
गन्धपङ्कां शब्दजलां स्वर्गमार्गदुरावहाम् ॥ १२-३३७-३८ (७९१९१)
क्षमारित्रां सत्यमयीं धर्मस्थैर्यपदाङ्कुराम् ।
त्यागवाताध्वगां शीघ्रां नौतार्यां तां नदीं तरेत् ॥ १२-३३७-३९ (७९१९२)
त्यज धर्ममधर्मं च उभे सत्यानृते त्यज ।
उभे सत्यानृते त्यक्त्वा येन त्यजसि तं त्यज ॥ १२-३३७-४० (७९१९३)
त्यज धर्ममसंकल्पादधर्मं चाप्यलिप्सया ।
उभे सत्यानृते बुद्ध्या बुद्धिं परमनिश्चयात् ॥ १२-३३७-४१ (७९१९४)
अस्थिस्थूणं स्नायुयुतं मांसशोणितलेपनम् ।
चर्मावनद्धं दुर्गन्धिं पूर्णं मूत्रपुरीषयोः ॥ १२-३३७-४२ (७९१९५)
जराशोकसमाविष्टं रोगायतनमातुरम् ।
रजस्वलमनित्यं च भूतावासमिमं त्यज ॥ १२-३३७-४३ (७९१९६)
इदं विश्वं जगत्सर्वमजगच्चापि यद्भवेत् ।
महाभूतात्मकं सर्वं महद्यत्परमाणु च ॥ १२-३३७-४४ (७९१९७)
ग्महाभूतानि खं वायुरग्निरापस्तथा मही ।
षष्ठं तु चेतना या तु आत्मा सप्तममुच्यते।'
अष्टमं तु मनो ज्ञेयं बुद्धिस्तु नवमी स्मृता ॥ १२-३३७-४५ (७९१९८)
इन्द्रियाणि च पञ्चैव तमः सत्वं रजस्तथा ।
इत्येष सप्तदशको राशिरव्यक्तसंज्ञकः ॥ १२-३३७-४६ (७९१९९)
सर्वैरिहेन्द्रियार्थैश्च व्यक्ताव्यक्तैर्हि संहितः ।
चतुर्विंशक इत्येष व्यक्ताव्यक्तमयो गणः ॥ १२-३३७-४७ (७९२००)
एतैः सर्वैः समायुक्तः पुमानित्यभिधीयते ।
त्रिवर्गं तु सुखं दुःखं जीवितं मरणं तथा ॥ १२-३३७-४८ (७९२०१)
य इदं वेद तत्त्वेन स वेद प्रभवाप्ययौ ।
पारम्पर्येह बोद्धव्यं ज्ञानानां यच्च किंचन ॥ १२-३३७-४९ (७९२०२)
इन्द्रियैर्गृह्यते यद्यत्तत्तद्व्यक्तमिति स्थितिः ।

अव्यक्तमिति विज्ञेयं लिङ्गग्राह्यमतीन्द्रियम् ॥१२-३३७-५० (७९२०३)
इन्द्रियैर्नियतैर्देही धाराभिरिव तर्प्यते ।
लोके विततमात्मानं लोकांश्चात्मनि पश्यति ॥१२-३३७-५१ (७९२०४)
परावरदृशः शक्तिर्ज्ञानमूला न नश्यति ।
पश्यतः सर्वभूतानि सर्वावस्थासु सर्वदा ॥१२-३३७-५२ (७९२०५)
ब्रह्मभूतस्य संयोगो नाशुभेनोपपद्यते ।
ज्ञानेन विविधान्क्लेशानतिवृत्तस्य मोहजान् ॥१२-३३७-५३ (७९२०६)
लोके बुद्धिप्रकाशेन लोकमार्गो न रिष्यते ।
अनादिनिधनज्ञं तमात्मनि स्थितमव्ययम् ॥१२-३३७-५४ (७९२०७)
अकर्तारममूर्तं च भगवानाह तीर्थवित् ।
यो जन्तुः स्वकृतैस्तैस्तैः कर्मभिर्नित्यदुःखितः ॥१२-३३७-५५ (७९२०८)
स दुःखप्रतिघातार्थं हन्ति जन्तूननेकधा ।
ततः कर्म समादत्ते पुनरन्यन्नवं बहु ॥१२-३३७-५६ (७९२०९)
तप्यतेऽथ पुनस्तेन भुक्त्वा पथ्यमिवातुरः ।
अजस्रमेव मोहान्धो दुःखेषु सुखसंज्ञितः ॥१२-३३७-५७ (७९२१०)
बध्यते मथ्यते चैव कर्मभिर्मन्थवत्सदा ।
ततो निबद्धः स्वां योनिं कर्मणामुदयादिह ॥१२-३३७-५८ (७९२११)
परिभ्रमति संसारं चक्रवद्बहुवेदनः ।
सत्वं निर्वृत्तबन्धस्तु निवृत्तश्चापि कर्मतः ॥१२-३३७-५९ (७९२१२)
सर्ववित्सर्वजित्सिद्धौ भव भावविवर्जितः ।
संयमेन नवं बन्धं निवर्त्य तपसो बलात् ।
संप्राप्ता बहवः सिद्धिमप्यबाधां सुखोदयाम् ॥ ॥ १२-३३७-६० (७९२१३)

इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि
सप्तत्रिंशदधिकत्रिशततमोऽध्यायः ॥ ३३७.।

Mahabharata - Shanti Parva - Chapter Footnotes

१२-३३७-१ वेदार्थान्धक्तुभीप्सयेति ड ।पाठः ॥
१२-३३७-६ नास्ति सत्यात्परं तप इति ध ।पाठः ॥
१२-३३७-८ यः सज्जति स मुह्यतीति झ ।पाठः ॥
१२-३३७-१३ सत्यस्य पालनं श्रेय इति ट ।पाठः ॥
१२-३३७-१५ इन्द्रियैरिन्द्रियार्थेभ्य इति ट ।ड।पाठः ॥
१२-३३७-२४ पञ्चानामेषु भूतेषु य एको रमते मुनिरिति ट ।पाठः ॥
१२-३३७-३६ विद्या कर्म च शौर्यं चेति ट ।ड।पाठः ॥
१२-३३७-३९ क्षमैवाऽरित्राणि नौचालनदण्डा यस्याम्
।धर्मस्थैर्यवटारकाम् इति झ।पाठः।तत्र धर्मस्थैर्यं वटारका

नौकाकर्षणरज्जुर्यस्यां तामित्यर्थः। योगवाताध्वगां कृत्वेति
ट। पाठः। कृत्वा नदीं तरेदिति ध। पाठः ॥
१२-३३७-४४ महद्यत्परमाणुवदिति ट । थ। पाठः ॥
१२-३३७-५४ रिष्यते हिंस्यते ॥
१२-३३७-५५ तीर्थविन्मोक्षोपायवित् ॥
१२-३३७-६० संयमेन धारणाध्यानसमाध्यात्मकेन । नवं
दृष्टिमात्रणोत्पत्रं ॥

---

शन्तिपर्व-अध्यय३३८
॥ श्रीः ॥
१२.३३८. अध्यायः ३३८

Mahabharata - Shanti Parva - Chapter Topics
नारदन शुकंप्रति मोक्षमार्गप्रदर्शकहितोपदेशः ॥ १.।
Mahabharata - Shanti Parva - Chapter Text

१२-३८८-० (७९२१४)
नारद उवाच। १२-३८८-०क्ष् (६५५६)
अशोकं शोकनाशार्थं शास्त्रं शान्तिकरं शिवम् ।
निशम्य लभते बुद्धिं तां लब्ध्वा सुखमेधते ॥ १२-३३८-१ (७९२१५)
शोकस्थानसहस्राणि भयस्थानशतानि च ।
दिवसेदिवसे मूढमाविशन्ति न पण्डितम् ॥ १२-३३८-२ (७९२१६)
तस्मादनिष्टनाशार्थमितिहासं निबोध मे ।
तिष्ठते चेद्वशे बुद्धिर्लभते शोकनाशनम् ॥ १२-३३८-३ (७९२१७)
अनिष्टसंप्रयोगाच्च विप्रयोगात्प्रियस्य च ।
मनुष्या मानसैर्दुःखैर्युज्यन्ते स्वल्पबुद्धयः ॥ १२-३३८-४ (७९२१८)
द्रव्येषु समतीतेषु ये गुणास्तान्न चिन्तयेत् ।
न तानाद्रियमाणस्य स्नेहबन्धः प्रमुच्यते ॥ १२-३३८-५ (७९२१९)
दोषदर्शी भवेत्तत्र यत्र रागः प्रवर्तते ।
अनिष्टवद्धितं पश्येत्तथा क्षिप्रं विरज्यते ॥ १२-३३८-६ (७९२२०)
नार्थो न धर्मो न यशो योऽतीतमनुशोचति ।
अप्यभावेन युज्येत तच्चास्य न निवर्तते ॥ १२-३३८-७ (७९२२१)
गुणैर्भूतानि युज्यन्ते वियुज्यन्ते तथैव च ।
सर्वाणि नैतदेकस्य शोकस्थानं हि युज्यते ॥ १२-३३८-८ (७९२२२)
मृतं वा यदि वा नष्टं योऽतीतमनुशोचति ।
दुःखेन लभते दुःखं द्वावनर्थौ प्रपद्यते ॥ १२-३३८-९ (७९२२३)
नाश्रु कुर्वन्ति ये बुद्ध्या दृष्ट्वा लोकेषु संततिम् ।

सम्यक्प्रपश्यतः सर्वं नाश्रुकर्मोपपद्यते ॥ १२-३३८-१० (७९२२४)
दुःखोपघाते शारीरे मानसे चाप्युपस्थिते ।
यस्मिन्न शक्यते कर्तुं यत्नस्तन्नानुचिन्तयेत् ॥ १२-३३८-११ (७९२२५)
भैषज्यमेतद्दुःखस्य यदेतन्नानुचिन्तयेत् ।
चिन्त्यमानं हि न व्येति भूयश्चापि प्रवर्धते ॥ १२-३३८-१२ (७९२२६)
प्रज्ञया मानसं दुःखं हन्याच्छारीरमौषधैः ।
एतद्विज्ञानमसामर्थ्यं न बालैः समतामियात् ॥ १२-३३८-१३ (७९२२७)
अनित्यं यौवनं रूपं जीवितं द्रव्यसंचयः ।
आरोग्यं प्रियसंसर्गो गृध्येत्तत्र न पण्डितः ॥ १२-३३८-१४ (७९२२८)
न जानपदिकं दुःखमेकः शोचितुमर्हति ।
अशोचन्प्रतिकुर्वीत यदि पश्येदुपक्रमम् ॥ १२-३३८-१५ (७९२२९)
सुखाद्बहुतरं दुःखं जीविते नात्र संशयः ।
स्निग्धत्वं चेन्द्रियार्थेषु मोहान्मरणमप्रियम् ॥ १२-३३८-१६ (७९२३०)
परित्यजति यो दुःखं सुखं वाऽप्युभयं नरः ।
अभ्येति ब्रह्म सोत्यन्तं न तं शोचन्ति पण्डिताः ॥ १२-३३८-१७ (७९२३१)
त्यजन्ते दुःखमर्था हि पालनेन च ते सुखाः ।
दुःखेन चाधिगम्यन्ते नाशमेषां न चिन्तयेत् ॥ १२-३३८-१८ (७९२३२)
अन्यामन्यां धनावस्थां प्राप्य वैशेषिकीं नराः ।
अतृप्ता यान्ति विध्वंसं संतोषं यान्ति पण्डिताः ॥ १२-३३८-१९ (७९२३३)
सर्वे क्षयान्ता निचयाः पतनान्ताः समुच्छ्रयाः ।
संयोगा विप्रयोगान्ता मरणान्तं हि जीवितम् ॥ १२-३३८-२० (७९२३४)
अन्तो नास्ति पिपासायास्तुष्टिस्तु परमं सुखम् ।
तस्मात्संतोषमेवेह धनं पश्यन्ति पण्डिताः ॥ १२-३३८-२१ (७९२३५)
निमेषमात्रमपि हि वयो गच्छन्न तिष्ठति ।
स्वशरीरेष्वनित्येषु नित्यं किमनुचिन्तयेत् ॥ १२-३३८-२२ (७९२३६)
भूतेषु भावं संचिन्त्य ये बुद्ध्वा मनसः परम् ।
न शोचन्ति गताध्वानः पश्यन्तः परमां गतिं ॥ १२-३३८-२३ (७९२३७)
संचिन्वानकमेवैनं कामानामवितृप्तकम् ।
व्याघ्रः पशुमिवासाद्य मृत्युरादाय गच्छति ॥ १२-३३८-२४ (७९२३८)
तथाऽप्युपायं संपश्येद्दुःखस्य परिमोक्षणे ।
अशोचन्नारभेतैव युक्तश्चाव्यसनी भवेत् ॥ १२-३३८-२५ (७९२३९)
शब्दे स्पर्शे च रूपे च गन्धेषु च रसेषु च ।
नोपभोगात्परं किंचिद्धनिनो वाऽधनस्य च ॥ १२-३३८-२६ (७९२४०)
प्राक्संप्रयोगाद्भूतानां नास्ति दुःखं परायणम् ।
विप्रयोगात्तु सर्वस्य न शोचेत्प्रकृतिस्थितः ॥ १२-३३८-२७ (७९२४१)
धृत्या शिश्नोदरं रक्षेत्पाणिपादं च चक्षुषा ।

चक्षुःश्रोत्रे च मनसा मनो वाचं च विद्यया ॥१२-३३८-२८ (७९२४२)
प्रणयं प्रतिसंहृत्य सस्निग्धेष्वितरेषु च ।
विचरेदसमुन्नद्धः स सुखी स च पण्डितः ॥१२-३३८-२९ (७९२४३)
अध्यात्मरतिरासीनो निरपेक्षो निरामिषः ।
आत्मनैव सहायेन यश्चरेत्स सुखी भवेत् ॥ ॥१२-३३८-३० (७९२४४)

इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि
अष्टत्रिंशदधिकत्रिशततमोऽध्यायः ॥ ३३८.।
Mahabharata - Shanti Parva - Chapter Footnotes

१२-३३८-१ शान्तिपरमिति ध । पाठः ॥
१२-३३८-५ताननाद्रियमाणस्य स्नेहबन्ध इति ध । पाठः ॥
१२-३३८-८ शोकस्थानं हि विद्यत इति झ । ट। पाठः ॥
१२-३३८-९ द्वावनर्थौ इष्टस्त्र्यादिदेहविनाशः स्वशरीरतापश्च
।शेषग्रन्थः स्पष्टार्थो व्याख्यातप्रायश्चेति न व्याख्यायते ॥
१२-३३८-११ दुःखोपघातैः शारीरैर्मानसैश्चाप्युपस्थिते इति ध । पाठः ॥
१२-३३८-१२ चिन्त्यमानं हि नापैतीति ध । पाठः ॥
१२-३३८-१८ दुःखेन चापि त्यजते पालने न च ते सुखमिति ध । पाठः ॥
१२-३३८-२३ भूतेष्वभावं संचिन्त्य ये बुद्ध्या तमसः परमिति ध
। पाठः ॥
१२-३३८-२७ नास्ति दुःखमनामयमिति ट । थ। ध। पाठः ॥

---

शन्तिपर्व-अध्यय३३९
॥ श्रीः ॥
१२.३३९. अध्यायः ३३९

Mahabharata - Shanti Parva - Chapter Topics
नारदवचनाज्जातवैराग्येण शुकेन सूर्यमण्डलप्रविविक्षया
व्यासनारदयोर्निवेदनपूर्वकं कैलासशिखरारोहणम् ॥१.।
Mahabharata - Shanti Parva - Chapter Text

१२-३३९-० (७९२४५)
नारद उवाच।१२-३३९-०क्ष् (६५५७)
सुखदुःखविपर्यासो यदा समनुपद्यते ।
नैनं प्रज्ञा सुनीतं वा त्रायते नापि पौरुषम् ॥१२-३३९-१ (७९२४६)
स्वभावाद्यत्नमातिष्ठेद्यत्नवान्नावसीदति ।
जरामरणरोगेभ्यः प्रियमात्मानमुद्धरेत् ॥१२-३३९-२ (७९२४७)

रुजन्ति हि शरीराणि रोगाः शारीरमानसाः ।
सायका इव तीक्ष्णाग्राः प्रयुक्ता दृढधन्विभिः ॥ १२-३३९-३ (७९२४८)
व्यथितस्य विधित्साभिस्त्रस्यतो जीवितैषिणः ।
अवशस्य विनाशाय शरीरमपकृष्यते ॥ १२-३३९-४ (७९२४९)
स्रवन्ति न निवर्तन्ते स्रोतांसि सरितामिव ।
आयुरादाय मर्त्यानां रात्र्यहानि पुनः पुनः ॥ १२-३३९-५ (७९२५०)
व्यत्ययो ह्ययमत्यन्तं पक्षयोः शुक्लकृष्णयोः ।
जातान्मर्त्याञ्जरयति निमेषान्नावतिष्ठते ॥ १२-३३९-६ (७९२५१)
सुखदुःखानि भूतानामजरो जरयत्यसौ ।
आदित्यो ह्यस्तमभ्येति पुनः पुनरुदेति च ॥ १२-३३९-७ (७९२५२)
अदृष्टपूर्वानादाय भावानपरिशङ्कितान् ।
इष्टानिष्टान्मनुष्याणामस्तं गच्छन्ति रात्रयः ॥ १२-३३९-८ (७९२५३)
योयदिच्छेद्यथाकाममयत्नाच्च तदाप्नुयात् ।
यदि स्यान्न पराधीनं पुरुषस्य क्रियाफलम् ॥ १२-३३९-९ (७९२५४)
संयताश्च हि दक्षाश्च मतिमन्तश्च मानवाः ।
दृश्यन्ते निष्फलाः सन्तः प्रहीणाः सर्वकर्मभिः ॥ १२-३३९-१० (७९२५५)
अपरे बालिशाः सन्तो निर्गुणाः पुरुषाधमाः ।
अशुभैरपि संयुक्ता दृश्यन्ते सर्वकामिनः ॥ १२-३३९-११ (७९२५६)
भूतानामपरः कश्चिद्धिंसायां सततोत्थितः ।
वञ्चनायां च लोकस्य स सुखेष्वेव जीर्यते ॥ १२-३३९-१२ (७९२५७)
अचेष्टमानमासीनं श्रीः कंचिदुपतिष्ठते ।
कश्चित्कर्मानुसृत्यान्यो नाप्राप्यमधिगच्छति ॥ १२-३३९-१३ (७९२५८)
अपराधं समाचक्ष्व पुरुषस्य स्वभावतः ।
शुक्रमन्यत्र संभूतं पुनरन्यत्र गच्छति ॥ १२-३३९-१४ (७९२५९)
तस्य योनौ प्रसक्तस्य गर्भो भवति वा न वा ।
आम्रपुष्पोपमा यस्य निर्वृत्तिरुपलभ्यते ॥ १२-३३९-१५ (७९२६०)
केषांचित्पुत्रकामानामनुसन्तानमिच्छताम् ।
सिद्धौ प्रयतमानानां न चाण्डमुपजायते ॥ १२-३३९-१६ (७९२६१)
गर्भाच्चोद्विजमानानां क्रुद्धादाशीविषादिव ।
आयुष्माञ्जायते पुत्रः कथं प्रेतः पितेव ह ॥ १२-३३९-१७ (७९२६२)
देवानिष्ट्वा तपस्तप्त्वा कृपणैः पुत्रगृद्धिभिः ।
दश मासान्परिधृता जायन्ते कुलपांसनाः ॥ १२-३३९-१८ (७९२६३)
अपरे धनधान्यानि भोगांश्च पितृसंचितान् ।
विपुलानभिजायन्ते लब्धास्तैरेव मङ्गलैः ॥ १२-३३९-१९ (७९२६४)
अन्योन्यं समभिप्रेत्य मैथुनस्य समागमे ।
उपद्रव इवाविष्टो योनिं गर्भः प्रपद्यते ॥ १२-३३९-२० (७९२६५)

शीर्णं परशरीराणि च्छिन्नबीजं शरीरिणम् ।
प्राणिनं प्राणंसरोधे मांसश्लेष्मविचेष्टितम् ॥ १२-३३९-२१ (७९२६६)
निर्दग्धं परदेहेऽपि परदेहं चलाचलम् ।
विनश्यन्तं विनाशान्ते भावि नावमिवाहितम् ॥ १२-३३९-२२ (७९२६७)
सङ्गत्या जठरे न्यस्तं रेतोबिन्दुमचेतनम् ।
केन यत्नेन जीवन्तं गर्भं त्वमिह पश्यसि ॥ १२-३३९-२३ (७९२६८)
अन्नपानानि जीर्यन्ते यत्र भक्षाश्च भक्षिताः ।
तस्मिन्नेवोदरे गर्भः किं नान्नमिव जीर्यते ॥ १२-३३९-२४ (७९२६९)
गर्भे मूत्रपुरीषाणां स्वभावनियता गतिः ।
धारणे वा विसर्गे वा न कर्ता विद्यतेऽवशः ॥ १२-३३९-२५ (७९२७०)
स्रवन्ति ह्युदराद्गर्भा जायमानास्तथा परे ।
आगमेन तथाऽन्येषां विनाश उपपद्यते ॥ १२-३३९-२६ (७९२७१)
एतस्माद्योनिसंबन्धाद्यो जीवः परिमुच्यते ।
प्रजां च लभते कांचित्पुनर्द्वन्द्वेषु सज्जति ॥ १२-३३९-२७ (७९२७२)
स तस्य सहजातस्य सप्तमीं नवमीं दशाम् ।
प्राप्नुवन्ति ततः पञ्च न भवन्ति शतायुषः ॥ १२-३३९-२८ (७९२७३)
नाभ्युत्थाने मनुष्याणां योगाः स्युर्नात्र संशयः ॥
व्याधिभिश्च विमथ्यन्ते व्याधैः क्षुद्रमृगा इव ॥ १२-३३९-२९ (७९२७४)
व्याधिभिर्भक्ष्यमाणानां त्यजतां विपुलं धनम् ।
वेदनां नापकर्षन्ति यतमानाश्चिकित्सकाः ॥ १२-३३९-३० (७९२७५)
ते चापि निपुणा वैद्याः कुशलाः संभृतौषधाः ।
व्याधिभिः परिकृष्यन्ते मृगा व्याधैरिवार्दिताः ॥ १२-३३९-३१ (७९२७६)
ते पिबन्तः कषायांश्च सर्पींषि विविधानि च ।
दृश्यन्ते जरया भग्ना नगा नागैरिवोत्तमैः ॥ १२-३३९-३२ (७९२७७)
के वा भुवि चिकित्सन्ते रोगार्तान्मृगपक्षिणः ।
श्वापदानि दरिद्रांश्च प्रायो नार्ता भवन्ति ते ॥ १२-३३९-३३ (७९२७८)
पौरानपि दुराधर्षान्नृपतीनुग्रतेजसः ।
आक्रम्य खादन्ते रोगाः पशून्पशुपचा इव ॥ १२-३३९-३४ (७९२७९)
इति लोकमनाक्रन्दं मोहशोकपरिप्लुतम् ।
स्रोतसा सहसा क्षिप्तं ह्रियमाणं बलीयसा ॥ १२-३३९-३५ (७९२८०)
न धनेन न राज्येन नोग्रेण तपसा तथा ।
स्वभावमतिवर्तन्ते ये नियुक्ताः शरीरिणः ॥ १२-३३९-३६ (७९२८१)
न म्रियेरन्न जीर्येरन्सर्वे स्युः सर्वकामिनः ।
नाप्रियं प्रतिपश्येयुरुत्थानस्य फले सति ॥ १२-३३९-३७ (७९२८२)
उपर्युपरि लोकस्य सर्वो भवितुमीहते ।
यतते च यथाशक्ति न च तद्वर्तते तथा ॥ १२-३३९-३८ (७९२८३)

ऐश्वर्यमदमत्तांश्च मत्तान्मद्यमदेन च ।
अप्रमत्ताश्च शूराश्च विक्रान्ताः पर्युपासते ॥ १२-३३९-३९ (७९२८४)
क्लेशाः प्रतिनिवर्तन्ते केषांचिदसमीक्षिताः ।
स्वंस्वं न पुनरन्येषां न किंचिदधिगम्यते ॥ १२-३३९-४० (७९२८५)
महच्च फलवैषम्यं दृश्यते कर्मसिद्धिषु ।
वहन्ति शिविकामन्ये यान्त्यन्ये शिविकागताः ॥ १२-३३९-४१ (७९२८६)
सर्वेषामृद्धिकामानामन्ये रथपुरःसराः ।
मनुजाश्च गतस्त्रीकाः शतशो विविधाः स्त्रियः ॥ १२-३३९-४२ (७९२८७)
द्वन्द्वारामेषु भूतेषु गच्छन्त्येकैकशो नराः ।
इदमन्यत्परं पश्य माऽत्र मोहं करिष्यसि ॥ १२-३३९-४३ (७९२८८)
त्यज धर्ममधर्मं च उभे सत्यानृते त्यज ।
उभे सत्यानृते त्यक्त्वा येन त्यजसि तं त्यज ॥ १२-३३९-४४ (७९२८९)
एतत्ते परमं गुह्यमाख्यातमृषिसत्तम ।
येन देवाः परित्यज्य मर्त्यलोकं दिवं गताः ॥ १२-३३९-४५ (७९२९०)
नारदस्य वचः श्रुत्वा शुकः परमबुद्धिमान् ।
संचिन्त्य मनसा धीरो निश्चयं नाध्यगच्छत ॥ १२-३३९-४६ (७९२९१)
पुत्रदारैर्महान्क्लेशो विद्याम्नाये महाञ्छ्रमः ।
किंनु स्याच्छाश्वतं स्थानमल्पक्लेशं महोदयम् ॥ १२-३३९-४७ (७९२९२)
ततो मुहूर्तं संचिन्त्य निश्चितां गतिमात्मनः ।
परावरज्ञो धर्मस्य परां नैःश्रेयसीं गतिम् ॥ १२-३३९-४८ (७९२९३)
कथं त्वहमसंश्लिष्टो गच्छेयं गतिमुत्तमाम् ।
नावर्तेयं यथा भूयो योनिसंसारसागरे ॥ १२-३३९-४९ (७९२९४)
परं भावं हि काङ्क्षामि यत्र नावर्तते पुनः ।
सर्वसङ्गान्परित्यज्य निश्चितो मनसा गतिम् ॥ १२-३३९-५० (७९२९५)
तत्र यास्यामि यत्रात्मा शर्म मेऽधिगमिष्यति ।
अक्षयश्चाव्ययश्चैव यत्र स्थास्यामि शाश्वतः ॥ १२-३३९-५१ (७९२९६)
न तु योगमृते शक्त्या प्राप्नुयां परमां गतिम् ।
अनुबन्धो विमुक्तस्य कर्मभिर्नोपपद्यते ॥ १२-३३९-५२ (७९२९७)
यस्माद्योगं समास्थाय त्यक्त्वा गृहकलेवरम् ।
वायुभूतः प्रवेक्ष्यामि तेजोराशिं दिवाकरम् ॥ १२-३३९-५३ (७९२९८)
न ह्येप क्षयतां याति सोमः सुरगणैर्यथा ।
कम्पितः पतते भूमिं पुनश्चैवाधिरोहति ॥ १२-३३९-५४ (७९२९९)
क्षीयते हि सदा सोमः पुनश्चैवाभिपूर्यते ।
नेच्छाम्येवं विदित्वैते ह्रासवृद्धी पुनः पुनः ॥ १२-३३९-५५ (७९३००)
रविस्तु संतापयते लोकान्रश्मिभिरुल्बणैः ।
सर्वतस्तेज आदत्ते नित्यमक्षयमण्डलः ॥ १२-३३९-५६ (७९३०१)

अतो मे रोचते गन्तुमादित्यं दीप्ततेजसम् ।
अत्र वत्स्यामि दुर्धर्षो निःसङ्गेनान्तरात्मना ॥ १२-३३९-५७ (७९३०२)
सूर्यस्यर सदने चाहं निक्षिप्येदं कलेवरम् ।
ऋषिभिः सह वत्स्यामि सौरं तेजोऽतिदुःसहं ॥ १२-३३९-५८ (७९३०३)
आपृच्छामि नगान्नागान्गिरीनुर्वी दिशो दश ।
देवदानवगन्धर्वान्पिशाचोरगराक्षसान् ॥ १२-३३९-५९ (७९३०४)
लोकेषु सर्वभूतानि प्रवेक्ष्यामि न संशयः ।
पश्यन्तु योगवीर्यं मे सर्वे देवाः सहर्षिभिः ॥ १२-३३९-६० (७९३०५)
अथानुज्ञाप्य तमृषिं नारदं लोकविश्रुतम् ।
तस्मादनुज्ञां संप्राप्य जगाम पितरं प्रति ॥ १२-३३९-६१ (७९३०६)
सोऽभिवाद्य महात्मानं कृष्णद्वैपायनं मुनिम् ।
शुकः प्रदक्षिणं कृत्वा कृष्णमापृष्टवान्मुनिम् ॥ १२-३३९-६२ (७९३०७)
श्रुत्वा चर्षिस्तद्वचनं शुकस्य
प्रीतो महात्मा पुनराह चैनम् ।
भोभो पुत्र स्थीयतां तावदद्य
यावच्चक्षुः प्रीणयामि त्वदर्थे ॥ १२-३३९-६३ (७९३०८)
निरपेक्षः शुको भूत्वा निःस्नेहो मुक्तसंशयः ।
मोक्षमेवानुसंचिन्त्य गमनाय मनो दधे ॥ १२-३३९-६४ (७९३०९)
पितरं स परित्यज्य जगाम मुनिसत्तमः ।
कैलासपृष्ठं विपुलं सिद्धसङ्घनिषेवितम् ॥ ॥ १२-३३९-६५ (७९३१०)

इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि
एकोनचत्वारिंशदधिकत्रिशततमोऽध्यायः ॥ ३३९.।
Mahabharata - Shanti Parva - Chapter Footnotes

१२-३३९-१ विपर्यासः सुखे दुःखधीर्दुःखे सुखधीः ॥
१२-३३९-४ विधित्साभिः पिपासाभिस्तृष्णाभिः ॥
१२-३३९-६ व्यत्ययः पौर्वापर्यम् ॥
१२-३३९-११ अशीर्भिरप्यसंयुक्ताः इति ध ।पाठः ॥
१२-३३९-१३ कर्मी कर्मानुसृत्यान्य इति थ ।पाठः।कश्चिच्च कर्म कुर्वन्हि नाप्राप्यमिति ध।पाठः ॥
१२-३३९-१७ कथं प्रेत्य इवाभवदिति झ ।पाठः ॥
१२-३३९-२७ यो बीजं परिमुच्यत इति झ ।पाठः ॥
१२-३३९-२८ सहजातस्य जन्माद्यन्तां तु वै दशामिति ध ।पाठः।न भवन्ति गतायुष इति झ।पाठः ॥
१२-३३९-२९ रोगाः स्युरिति ध ।पाठः।योगाः सामर्थ्यानि ॥

१२-३३९-३३ के बाहुर्विचिकित्सन्ते इति ट ।ध।पाठः ॥
१२-३३९-३४ धीरानपि दुराधर्षानिति ध ।पाठः ॥
१२-३३९-३५ अनाकन्दं वेदनया मूढम् ॥
१२-३३९-३६ स्वभावान्नातिवर्तन्ते ये नियुक्ताः शरीरिष्विति ट ।थ।ध।पाठः ॥
१२-३३९-३७ उत्थानस्य फलं प्रति इति थ ।ध।पाठः ॥
१२-३३९-४० स्वंस्वं च पुनरन्येषामिति झ ।पाठः ॥
१२-३३९-४२ गतश्रीका इति ट ।पाठः ॥
१२-३३९-४९ असंश्लिष्टः सर्वोपाधिनिर्मुक्तः ॥
१२-३३९-५२ शक्या प्राप्तुं सा परमा गतिरिति थ ।पाठः।अवबन्धो हि युक्तस्येति थ।पाठः ॥

---

शन्तिपर्व-अध्यय३४०
॥ श्रीः ॥
१२.३४०. अध्यायः ३४०

Mahabharata - Shanti Parva - Chapter Topics
शुकेन कैलासशिखरादन्तरिक्षोत्पतनम्
॥ १.। शुकेनात्मानमवलोकयतो देवान्प्रति व्यासेन शुकेत्याक्रोशे तंप्रतिप्रतिवचनचोदना ॥ २.।
Mahabharata - Shanti Parva - Chapter Text

१२-३४०-० (७९३११)
भीष्म उवाच।१२-३४०-०क्ष् (६५५८)
गिरिशृङ्गं समारुह्य सुतो व्यासस्य भारत ।
समे देशे विविक्ते स निःशलाक उपाविशत् ॥१२-३४०-१ (७९३१२)
धारयामास चात्मानं यथाशास्त्रं यथाविधि ।
पादप्रभृतिगात्रेषु क्रमेण क्रमयोगवित् ॥१२-३४०-२ (७९३१३)
ततः स प्राङ्भुखो विद्वानादित्ये नाचिरोदिते ।
पाणिपादं समाधाय विनीतवदुपाविशत् ॥१२-३४०-३ (७९३१४)
न तत्र पक्षिसंपातो न शब्दो नापि दर्शनम् ।
यत्र वैयासकिर्धीमान्योक्तुं समुपचक्रमे ॥१२-३४०-४ (७९३१५)
स ददर्श तदाऽऽत्मानं सर्वसङ्गविनिःसृतम् ।
प्रजहास ततो हासं शुकः संप्रेक्ष्य तत्परम् ॥१२-३४०-५ (७९३१६)
स पुनर्योगमास्थाय मोक्षमार्गोपलब्धये ।
महायोगेश्वरो भूत्वा सोऽत्यक्रामद्विहायसम् ॥१२-३४०-६ (७९३१७)

ततः प्रदक्षिणं कृत्वा देवर्षिं नारदं ततः ।
निवेदयामास च तं स्वं योगं परमर्षये ॥ १२-३४०-७ (७९३१८)
शुक उवाच। १२-३४०-८क्ष् (६५५९)
दृष्टो मार्गः प्रवृत्तोस्मि स्वस्ति तेऽस्तु तपोधन ।
त्वत्प्रसादाद्गमिष्यामि गतिमिष्टां महाद्युते ॥ १२-३४०-८ (७९३१९)
नारदेनाभ्यनुज्ञातः शुको द्वैपायनात्मजः ।
अभिवाद्य पुनर्योगमास्थायाकाशमाविशत् ॥ १२-३४०-९ (७९३२०)
कैलासपृष्ठादुत्पत्य स पपात दिवं तदा ।
अन्तरिक्षचरः श्रीमान्व्यासपुत्रः सुनिश्चितः ॥ १२-३४०-१० (७९३२१)
तमुद्यन्तं द्विजश्रेष्ठं वैनतेयसमद्युतिम् ।
ददृशुः सर्वभूतानि मनोऽमारुतरंहसम् ॥ १२-३४०-११ (७९३२२)
व्यवसायेन लोकांस्त्रीन्सर्वान्सोऽथ विचिन्तयन् ।
आस्थितो दिव्यमध्वानं पावकार्कसमप्रभः ॥ १२-३४०-१२ (७९३२३)
तमेकमनसं यान्तमव्यग्रमकुतोभयम् ।
ददृशुः सर्वभूतानि जङ्गमानीतराणि च ॥ १२-३४०-१३ (७९३२४)
यथाशक्ति यथान्यायं पूजयांचक्रिरे तदा ।
पुष्पवर्षैश्च दिव्यैस्तमलंचक्रुर्दिवौकसः ॥ १२-३४०-१४ (७९३२५)
तं दृष्ट्वा विस्मिताः सर्वे गन्धर्वाप्सरसां गणाः ।
ऋषयश्चैव संसिद्धाः परं विस्मयमागताः ॥ १२-३४०-१५ (७९३२६)
अन्तरिक्षगतः कोऽयं तपसा सिद्धिमागतः ।
अधः कायोर्ध्ववक्त्रश्च नेत्रैः समतिवाह्यते ॥ १२-३४०-१६ (७९३२७)
ततः परमधर्मात्मा त्रिषु लोकेषु विश्रुतः ।
भास्करं समुदीक्षन्स प्राङ्मुखो वाग्यतोऽगमत् ।
शब्देनाकाशमखिलं पूरयन्निव सर्वशः ॥ १२-३४०-१७ (७९३२८)
तमापतन्तं सहसा दृष्ट्वा सर्वाप्सरोगणाः ।
संभ्रान्तमनसो राजन्नासन्परमविस्मिताः ।
पञ्चचूडाप्रभृतयो भृशमुत्फुल्ललोचनाः ॥ १२-३४०-१८ (७९३२९)
दैवतं कतमं ह्येतदुत्तमां गतिमास्थितम् ।
सुनिश्चितमिहायाति विमुक्तमिव निःस्पृहम् ॥ १२-३४०-१९ (७९३३०)
ततः समभिचक्राम मलयं नाम पर्वतम् ।
उर्वशी पूर्वचित्तिश्च यं नित्यमुपसेवतः ॥ १२-३४०-२० (७९३३१)
तस्य ब्रह्मर्षिपुत्रस्य विस्मयं ययतुः परम् ।
अहो बुद्धिसमाधानं वेदाभ्यासरते द्विजे ॥ १२-३४०-२१ (७९३३२)
अचिरेणैव कालेन नभश्चरति चन्द्रवत् ।
पितृशुश्रूषया बुद्धिं संप्राप्तोऽयमनुत्तमाम् ॥ १२-३४०-२२ (७९३३३)
पितृभक्तो दृढतपाः पितुः सुदयितः सुतः ।

अनन्यमनसा तेन कथं पित्रा विसर्जितः ॥ १२-३४०-२३ (७९३३४)
उर्वश्या वचनं श्रुत्वा शुकः परमधर्मवित् ।
उदैक्षत दिशः सर्वा वचने गतमानसः ॥ १२-३४०-२४ (७९३३५)
सोऽन्तरिक्षं महीं चैव सशैलवनकाननाम् ।
विलोकयामास तदा सरांसि सरितस्तथा ॥ १२-३४०-२५ (७९३३६)
ततो द्वैपायनसुतं बहुमानात्समन्ततः ।
कृताञ्जलिपुटाः सर्वा निरीक्षन्ते स्म देवताः ॥ १२-३४०-२६ (७९३३७)
अब्रवीत्तास्तदा वाक्यं शुकः परमधर्मवित् ।
पिता यद्यनुगच्छेन्मां क्रोशमान शुकेति वै ॥ १२-३४०-२७ (७९३३८)
तस्य प्रतिवचो देयं सर्वैरेव समाहितैः ।
एतन्मे स्नेहनः सर्वे वचनं कर्तुमर्हथ ॥ १२-३४०-२८ (७९३३९)
शुकस्य वचन श्रुत्वा दिशः सजलकाननाः ।
समुद्राः सरितः शैलाः प्रत्यूचुस्तं समन्ततः ॥ १२-३४०-२९ (७९३४०)
यथा ज्ञापयसे विप्र बाढमेवं भविष्यति ।
ऋषेर्व्याहरतो वाक्यं प्रतिवक्ष्यामहे वयम् ॥ ॥ १२-३४०-३० (७९३४१)

इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि
चत्वारिंशदधिकत्रिशततमोऽध्यायः ॥ ३४०.।
Mahabharata - Shanti Parva - Chapter Footnotes

१२-३४०-१ निःशलाके निस्तृणे ॥
१२-३४०-१६ अधःकायात् ऊर्ध्वं वकं यस्य ।सूर्ये दत्तदृष्टिरतः
स्वदेहस्याधोभागं न पश्यतीत्यर्थः ॥

---

शन्तिपर्व-अध्यय३४१
॥ श्रीः ॥
१२.३४१. अध्यायः ३४१

Mahabharata - Shanti Parva - Chapter Topics
अन्तरिक्षाद्गिरिशिखरे निपतितेन शुकेन तद्भिदेनपूर्वकं ततो
निष्क्रमणम् ॥ १.। ततः पुत्रवियोगविषपणस्य व्यासस्य रुद्रेण
समाश्वासनम् ॥ २.।
Mahabharata - Shanti Parva - Chapter Text

१२-३४१-० (७९३४२)
भीष्म उवाच। १२-३४१-०क्ष् (६५६०)

इत्येवमुक्त्वा वचनं ब्रह्मर्षिः सुमहातपाः ।
प्रातिष्ठत शुकः सिद्धिं हित्वा दोषांश्चतुर्विधान् ॥ १२-३४१-१ (७९३४३)
तमो ह्यष्टगुणं हित्वा जहौ पञ्चविधं रजः ।
ततः सत्वं जहौ धीमांस्तदद्भुतमिवाभवत् ॥ १२-३४१-२ (७९३४४)
ततस्तस्मिन्पदे नित्ये निर्गुणे लिङ्गवर्जिते ।
ब्रह्मणि प्रत्यतिष्ठत्स विधूमोऽग्निरिव ज्वलन् ॥ १२-३४१-३ (७९३४५)
उत्कापाता दिशां दाहो भूमिकम्पस्तथैव च ।
प्रादुर्भूताः क्षणे तस्मिंस्तदद्भुतमिवाभवत् ॥ १२-३४१-४ (७९३४६)
द्रुमाः शाखाश्च मुमुचुः शिखराणि च पर्वताः ।
निर्घातशब्दैर्गुरुभिर्भूमिर्व्यादीर्यतेव ह ॥ १२-३४१-५ (७९३४७)
न बभासे सहस्रांशुर्न जज्वाल च पावकः ।
ह्रदाश्च सरितश्चैव चुक्षुभुः सागरास्तथा ॥ १२-३४१-६ (७९३४८)
ववर्ष वासवस्तोयं रसवच्च सुगन्धि च ।
ववौ समीरणश्चापि दिव्यगन्धवहः शुचिः ॥ १२-३४१-७ (७९३४९)
स शृङ्गेऽप्रतिमे दिव्ये हिमवन्मेरुसंनिभे ।
संश्लिष्टे स्वतेपीते द्वे रुक्मरूप्यमये शुभे ॥ १२-३४१-८ (७९३५०)
शतयोजनविस्तारे तिर्यगूर्ध्वं च भारत ।
उदीचीं दिशमास्थाय रुचिरे संददर्श ह ॥ १२-३४१-९ (७९३५१)
सोऽविशङ्केन मनसा तथैवाभ्यपतच्छुकः ॥ १२-३४१-१० (७९३५२)
ततः पर्वतशृङ्गे द्वे सहसैव द्विधाकृते ।
अदृश्येतां महाराज तदद्भुतमिवाभवत् ॥ १२-३४१-११ (७९३५३)
ततः पर्वतशृङ्गाभ्यां सहसैव विनिःसृतः ।
न च प्रतिजघानास्य स गतिं पर्वतोत्तमः ॥ १२-३४१-१२ (७९३५४)
ततो महानभूच्छब्दो दिवि सर्वदिवौकसाम् ।
गन्धर्वाणामृषीणां च ये च शैलनिवासिनः ॥ १२-३४१-१३ (७९३५५)
दृष्ट्वा शुकमतिक्रान्तं पर्वतं च द्विधा कृतम् ।
साधुसाध्विति तत्रासीन्नादः सर्वत्र भारत ॥ १२-३४१-१४ (७९३५६)
स पूज्यमानो देवैश्च गन्धर्वैर्ऋषिभिस्तथा ।
यक्षराक्षससङ्घैश्च विद्याधरगणैस्तथा ॥ १२-३४१-१५ (७९३५७)
दिव्यैः पुष्पैः समाकीर्णमन्तरिक्षं समन्ततः ।
आसीत्किल महाराज शुकाभिपतने तदा ॥ १२-३४१-१६ (७९३५८)
ततो मन्दाकिनीं रम्यामुपरिष्टादभिव्रजन् ।
शुको ददर्श धर्मात्मा पुष्पितद्रुमकाननाम् ॥ १२-३४१-१७ (७९३५९)
तस्यां क्रीडन्त्यभिरताः स्नान्ति चैवाप्सरोगणाः ।
शून्याकारं निराकाराः शुकं दृष्ट्वा विवाससः ॥ १२-३४१-१८ (७९३६०)
तं प्रक्रामन्तमाज्ञाय पिता स्नेहसमन्वितः ।

उत्तमां गतिमास्थाय पृष्ठतोऽनुससार ह ॥ १२-३४१-१९ (७९३६१)
शुकस्तु मारुतादूर्ध्वं गतिं कृत्वान्तरिक्षगाम् ।
दर्शयित्वा प्रभावं स्वं सर्वभूतोऽभवत्तदा ॥ १२-३४१-२० (७९३६२)
महायोगगतिं त्वग्र्यां व्यासोत्थाय महातपाः ।
निमेषान्तरमात्रेण शुकाभिपतनं ययौ ॥ १२-३४१-२१ (७९३६३)
स ददर्श द्विधा कृत्वा पर्वताग्रं शुकं गतम् ।
शशंसुर्ऋषयस्तत्र कर्म पुत्रस्य तत्तदा ॥ १२-३४१-२२ (७९३६४)
ततः शुकेति दीर्घेण शब्देनाक्रन्दितस्तदा ।
स्वयं पित्रा स्वरेणोच्चैस्त्रींल्लोँकाननुनाद्य वै ॥ १२-३४१-२३ (७९३६५)
शुकः सर्वगतो भूत्वा सर्वात्मा सर्वतोमुखः ।
प्रत्यभाषत धर्मात्मा भोःशब्देनानुनादयन् ॥ १२-३४१-२४ (७९३६६)
तत एकाक्षरं नादं भोरित्येव समीरयन् ।
प्रत्याहरञ्जगत्सर्वमुच्चैः स्थावरजङ्गमम् ॥ १२-३४१-२५ (७९३६७)
ततःप्रभृति चाद्यापि शब्दानुच्चारितान्पृथक् ।
गिरिगह्वरपृष्ठेषु व्याहरन्ति शुकं प्रति ॥ १२-३४१-२६ (७९३६८)
अन्तर्हितः प्रभावं तु दर्शयित्वा शुकस्तदा ।
गुणान्संत्यज्य शब्दादीन्पदमभ्यगमत्परम् ॥ १२-३४१-२७ (७९३६९)
महिमानं तु तं दृष्ट्वा पुत्रस्यामिततेजसः ।
निषसाद गिरिप्रस्थे पुत्रमेवानुचिन्तयन् ॥ १२-३४१-२८ (७९३७०)
ततो मन्दाकिनीतीरे क्रीडन्तोऽऽप्सरसां गणाः ।
आसाद्य तमृषिं सर्वाः संभ्रान्ता गतचेतसः ॥ १२-३४१-२९ (७९३७१)
जले निलिल्यिरे काश्चित्काश्चिद्गुल्मान्प्रपेदिरे ।
वसनान्याददुः काश्चित्तं दृष्ट्वा मुनिसत्तमम् ॥ १२-३४१-३० (७९३७२)
तां मुक्ततां तु विज्ञाय मुनिः पुत्रस्य वै तदा ।
सक्ततामात्मनश्चैव प्रीतोऽभूद्व्रीडितश्च ह ॥ १२-३४१-३१ (७९३७३)
तं देवगन्धर्ववृतो महर्षिगणपूजितः ।
पिनाकहस्तो भगवानभ्यागच्छत शंकरः ॥ १२-३४१-३२ (७९३७४)
तमुवाच महादेवः सान्त्वपूर्वमिदं वचः ।
पुत्रशोकाभिसंतप्तं कृष्णद्वैपायनं तदा ॥ १२-३४१-३३ (७९३७५)
अग्नेर्भूमेरपां वायोरन्तरिक्षस्य चैव ह ।
वीर्येण सदृशः पुत्रः पुरा मत्तस्त्वया वृतः ॥ १२-३४१-३४ (७९३७६)
स तथालक्षणो जातस्तपसा तव संभृतः ।
मम चैव प्रसादेन ब्रह्मतेजोमयः शुचिः ॥ १२-३४१-३५ (७९३७७)
स गतिं परमां प्राप्तो दुष्प्रापामजितेन्द्रियैः ।
दैवतैरपि विप्रर्षे तं त्वं किमनुशोचसि ॥ १२-३४१-३६ (७९३७८)
यावत्स्थास्यन्ति गिरयो यावत्स्थास्यन्ति सागराः ।

तावत्तवाक्षया कीर्तिः सपुत्रस्य भविष्यति ॥ १२-३४१-३७ (७९३७९)
छायां स्वपुत्रसदृशीं सर्वतोऽनपगां सदा ।
द्रक्ष्यसे त्वं च लोकेऽस्मिन्मत्प्रसादान्महामुने ॥ १२-३४१-३८ (७९३८०)
सोऽनुगीतो भगवता स्वयं रुद्रेण भारत ।
छायां पश्यन्परावृत्तः स मुनिः परया मुदा ॥ १२-३४१-३९ (७९३८१)
इति जन्म गतिश्चैव शुकस्य भरतर्षभ ।
विस्तरेण समाख्याता यन्मां त्वं परिपृच्छसि ॥ १२-३४१-४० (७९३८२)
एतदाचष्ट मे राजन्देवर्षिर्नारदः पुरा ।
व्यासश्चैव महायोगी संजल्पेषु पदेपदे ॥ १२-३४१-४१ (७९३८३)
इतिहासमिमं पुण्यं मोक्षधर्मार्थसंहितम् ।
धारयेद्यः शमपरः स गच्छेत्परमां गतिम् ॥ ॥ १२-३४१-४२ (७९३८४)

इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि
एकचत्वारिंशदधिकत्रिशततमोऽध्यायः ॥ ३४१.।
Mahabharata - Shanti Parva - Chapter Footnotes

१२-३४१-१ सिद्धिं श्रुत्वा दोषान्बहुप्रियानिति ट ।पाठः ॥
१२-३४१-५ निर्घातशब्दैर्गुरुभिर्हिमवान्दीर्यतीव हेति झ
।ट।थ।पाठः ॥
१२-३४१-६ दिशश्च सरितश्चैवेति ध ।पाठः।द्रुमाश्च
सरितश्चैवेति ट।पाठः ॥
१२-३४१-२१ व्यास उत्थाय ।संधिरार्षः ॥
१२-३४१-२३ ततः शुकेति दीर्घेण शैक्ष्येणाक्रन्दितं तथेति ट
।थ।पाठः ॥
१२-३४१-२५ तत एकाक्षरां वाचं भो इत्येव समीरयदिति थ ।पाठः ॥
१२-३४१-३० वासांस्यादददिरे काश्चिदिति थ ।पाठः ॥
१२-३४१-३६ दुष्प्रापामकृतात्मभिरिति ट ।थ।पाठः ॥
१२-३४१-४२ धारयेद्यः स परम इति ध ।पाठः ॥

---

शन्तिपर्व-अध्यय३४२
॥ श्रीः ॥
१२.३४२. अध्यायः ३४२

Mahabharata - Shanti Parva - Chapter Topics
भीष्मेण युधिष्ठिरंप्रति
दैवपित्र्यकर्मानुष्ठानस्यावश्यकत्वप्रतिपादकनारदनानायणसंवादानुवादः
॥ १.।

१२-३४२-० (७९३८५)
युधिष्ठिर उवाच। १२-३४२-०क्ष् (६५६१)
गृहस्थो ब्रह्मचारी वा वानप्रस्थोऽथ भिक्षुकः ।
य इच्छेत्सिद्धिमास्थातुं देवतां कां यजेत सः ॥ १२-३४२-१ (७९३८६)
कुतो ह्यस्य ध्रुवः स्वर्गः कुतो नैःश्रेयसं परम् ।
विधिना केन जुहुयाद्दैवं पित्र्यं तथैव च ॥ १२-३४२-२ (७९३८७)
मुक्तश्च कां गतिं गच्छेन्मोक्षश्चैव किमात्मकः ।
स्वर्गतश्चैव किं कुर्याद्येन न च्यवते दिवः ॥ १२-३४२-३ (७९३८८)
देवतानां च को देवः पितॄणां च पिता तथा ।
तस्मात्परतरं यच्च तन्मे ब्रूहि पितामह ॥ १२-३४२-४ (७९३८९)
भीष्म उवाच। १२-३४२-५क्ष् (६५६२)
गूढं मां प्रश्नवित्प्रश्नं पृच्छसे त्वमिहानघ ।
न ह्येतत्तर्कया शक्यं वक्तुं वर्षशतैरपि ॥ १२-३४२-५ (७९३९०)
ऋते देवप्रसादाद्वा राजञ्ज्ञानागमेन वा ।
गहनं ह्येतदाख्यानं व्याख्यातव्यं तवारिहन् ॥ १२-३४२-६ (७९३९१)
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
नारदस्य च संवादमृषेर्नारायणस्य च ॥ १२-३४२-७ (७९३९२)
नारायणो हि विश्वात्मा चतुर्मूर्तिः सनातनः ।
धर्मात्मजः संबभूव पितैवं मेऽभ्यभाषत ॥ १२-३४२-८ (७९३९३)
कृते युगे महाराज पुरा स्वायंभुवेऽन्तरे ।
नरो नारायणश्चैव हरिः कृष्णस्तथैव च ॥ १२-३४२-९ (७९३९४)
तेषां नारायणनरौ तपस्तेपतुरव्ययौ ।
बदर्याश्रममासाद्य शकटे कनकामये ॥ १२-३४२-१० (७९३९५)
अष्टचक्रं हि तद्यानं भूतयुक्तं मनोरमम् ।
तत्राद्यौ लोकनाथौ तौ कृशौ धमनिसंततौ ॥ १२-३४२-११ (७९३९६)
तपसा तेजसा चैव दुर्निरीक्ष्यौ सुरैरपि ।
यस्य प्रसादं कुर्वाते स देवौ द्रष्टुमर्हति ॥ १२-३४२-१२ (७९३९७)
नूनं तयोरनुमते हृदि हृच्छयचोदितः ।
महामेरोर्गिरेः शृङ्गात्प्रच्युतो गन्धमादनम् ॥ १२-३४२-१३ (७९३९८)
नारदः सुमहद्भूतं सर्वलोकानचीचरत् ।
तं देशमगमद्राजन्बदर्याश्रममाशुगः ॥ १२-३४२-१४ (७९३९९)
तयोराह्निकवेलायां तस्य कौतूहलं त्वभूत् ।
इदं तदास्पदं कृत्स्नं यस्मिँल्लोकाः प्रतिष्ठिताः ॥ १२-३४२-१५ (७९४००)
सदेवासुरगन्धर्वाः सकिन्नरमहोरगाः ।

एका मूर्तिरियं पूर्वं जाता भूयश्चतुर्विधा ॥ १२-३४२-१६ (७९४०१)
धर्मस्य कुलसंताने धर्मादेभिर्विवर्धितः ।
अहो ह्यनुगृहीतोऽद्य धर्म एभिः सुरैरिह ॥ १२-३४२-१७ (७९४०२)
नरनारायणाभ्यां च कृष्णेन हरिणा तथा ।
अत्र कृष्णो हरिश्चैव कस्मिंश्चित्कारणान्तरे ॥ १२-३४२-१८ (७९४०३)
स्थितौ धर्मसुतावेतौ तथा तपसि धिष्ठितौ ।
एतौ हि परमं धाम काऽनयोराह्निकक्रिया ॥ १२-३४२-१९ (७९४०४)
पितरौ सर्वभूतानां दैवतं च यशस्विनौ ।
कां देवतां तु यजतः पितॄन्वा कान्महामती ॥ १२-३४२-२० (७९४०५)
इति संचिन्त्य मनसा भक्त्या नारायणस्य तु ।
सहसा प्रादुरभवत्समीपे देवयोस्तदा ॥ १२-३४२-२१ (७९४०६)
कृते दैवे च पित्र्ये च ततस्ताभ्यां निरीक्षितः ।
पूजितश्चैव विधिना यथाप्रोक्तेन शास्त्रतः ॥ १२-३४२-२२ (७९४०७)
तद्दृष्ट्वा महदाश्चर्यमपूर्वं विधिविस्तरम् ।
उपोपविष्टः सुप्रीतो नारदो भगवानृषिः ॥ १२-३४२-२३ (७९४०८)
नारायणं संनिरीक्ष्य प्रसन्नेनान्तरात्मना ।
नमस्कृत्य महादेवमिदं वचनमब्रवीत् ॥ १२-३४२-२४ (७९४०९)
वेदेषु सपुराणेषु साङ्गोपाङ्गेषु गीयसे ।
त्वमजः शाश्वतो धाता माता मृतमनुत्तमम् ॥ १२-३४२-२५ (७९४१०)
प्रतिष्ठितं भूतभव्यं त्वयि सर्वमिदं जगत् ।
चत्वारो ह्याश्रमा देव सर्वे गार्हस्थ्यमूलकाः ॥ १२-३४२-२६ (७९४११)
यजन्ते त्वामहरहर्नानामूर्तिसमास्थितम् ।
पिता माता च सर्वस्य देवतानां च शाश्वतम् ।
कं त्वद्य यजसे देवं पितरं कं न विद्महे ॥ १२-३४२-२७ (७९४१२)
ग्कमर्चसि महाभाग तन्मे प्रब्रूहि पृच्छतः ॥' १२-३४२-२८ (७९४१३)
श्रीभगवानुवाच। १२-३४२-२९क्ष् (६५६३)
अवाच्यमेतद्वक्तव्यमात्मगुह्यं सनातनम् ।
तव भक्तिमतो ब्रह्मन्वक्ष्यामि तु यथातथम् ॥ १२-३४२-२९ (७९४१४)
यत्तत्सूक्ष्ममविज्ञेयमव्यक्तमचलं ध्रुवम् ।
इन्द्रियैरिन्द्रियार्थैश्च सर्वभूतैश्च वर्जितम् ॥ १२-३४२-३० (७९४१५)
स ह्यन्तरात्मा भूतानां क्षेत्रज्ञश्चेति कथ्यते ।
त्रिगुणव्यतिरिक्तो वै पुरुषश्चेति कल्पितः ॥ १२-३४२-३१ (७९४१६)
तस्मादव्यक्तमुत्पन्नं त्रिगुणं द्विजसत्तम ।
अव्यक्ताव्यक्तभावस्था या सा प्रकृतिरव्यया ॥ १२-३४२-३२ (७९४१७)
तां योनिमावयोर्विद्धि योसौ सदसदात्मकः ।
आवाभ्यां पूज्यते यो हि दैवे पित्र्ये च कल्प्यते ॥ १२-३४२-३३ (७९४१८)

नास्ति तस्मात्परोऽन्यो हि पिता देवोऽथवा द्विज ।
आत्मा हि नौ स विज्ञेयस्ततस्तं पूजयावहे ॥ १२-३४२-३४ (७९४१९)
तेनैषा प्रथिता ब्रह्मन्मर्यादा लोकमाविनी ।
दैवं पित्र्यं च कर्तव्यमिति तस्यानुशासनम् ॥ १२-३४२-३५ (७९४२०)
ब्रह्मा स्थाणुर्मनुर्दक्षो भृगुर्धर्मस्तथा यमः ।
मरीचिरङ्गिराश्चात्रिः पुलस्त्यः पुलहः क्रतुः ॥ १२-३४२-३६ (७९४२१)
वसिष्ठः परमेष्ठी च विवस्वान्सोम एव च ।
कर्दमश्चापि यः प्रोक्तः क्रोधो विक्रीत एव च ॥ १२-३४२-३७ (७९४२२)
क़एकविंशतिरुत्पन्नास्ते प्रजापतयः स्मृताः ।
तस्य देवस्य मर्यादां पूजयन्तः सनातनीम् ॥ १२-३४२-३८ (७९४२३)
दैवं पित्र्यं च सततं तस्य विज्ञाय तत्त्वतः ।
आत्मप्राप्तानि च ततो जानन्ति द्विजसत्तमाः ॥ १२-३४२-३९ (७९४२४)
स्वर्गस्था अपि ये केचित्तान्नमस्यन्ति देहिनः ।
ते तत्प्रसादाद्गच्छन्ति तेनादिष्टफलां गतिम् ॥ १२-३४२-४० (७९४२५)
ये हीनाः सप्तदशभिर्गुणैः कर्मभिरेव च ।
कलाः पञ्चदश त्यक्त्वा ते मुक्ता इति निश्चयः ॥ १२-३४२-४१ (७९४२६)
मुक्तानां तु गतिर्ब्रह्मन्क्षेत्रज्ञ इति कल्पिता ।
स हि सर्वगतिश्चैव निर्गुणश्चैव कथ्यते ॥ १२-३४२-४२ (७९४२७)
दृश्यते ज्ञानयोगेन आवां च प्रसृतौ ततः ।
एवं ज्ञात्वा तमात्मानं पूजयावः सनातनम् ॥ १२-३४२-४३ (७९४२८)
तं वेदाश्चाश्रमाश्चैव नानातनुसमाश्रितम् ।
भक्त्या संपूजयन्त्यद्य गतिं चैषां ददाति सः ॥ १२-३४२-४४ (७९४२९)
ये तु तद्भाविता लोके ह्येकान्तित्वं समास्थिताः ।
एतदभ्यधिकं तेषां यत्ते तं प्रविशन्त्युत ॥ १२-३४२-४५ (७९४३०)
इति गुह्यसमुद्देशस्तव नारद कीर्तितः ।
भक्त्या प्रेम्णा च विप्रर्षे अस्मद्भक्त्या च ते श्रुतः ॥ ॥ १२-३४२-४६
(७९४३१)

इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि
द्विचत्वारिंशदधिकत्रिशततमोऽध्यायः ॥ ३४२.।

Mahabharata - Shanti Parva - Chapter Footnotes

१२-३४२-३ किं कुर्यात्कथं न चलते दिव इति ध ।पाठः ॥
१२-३४२-५ अतिगूढमिति प्रश्नमिति ट ।पाठः।नह्येतदन्यथा
शक्यमिति ध।पाठः।तर्कया तर्केण आर्षो लिङ्गव्यत्ययः ॥
१२-३४२-६ ज्ञानागमेन ऋते विना ॥

१२-३४२-८ चतस्रो मूर्तयो नराद्याः ॥
१२-३४२-१७ धर्मस्य मूलसंतानो महानिति विवर्धित इति ध । पाठः ॥
१२-३४२-१९ स्थितौ धर्मोत्तरौ ह्येताविति झ । पाठः ॥
१२-३४२-२५ सपुराणेषु शास्त्रेषु च महामतिरिति ध । पाठः। धाता विधाता मृत्युरुत्तम इति थ। पाठः ॥
१२-३४२-३४ आत्मा हि नः स विज्ञेय इति झ । पाठः ॥
१२-३४२-३५ तेनैव स्थापिता ब्रह्मन्निति थ । पाठः ॥

---

शन्तिपर्व-अध्यय३४३
॥ श्रीः ॥
१२.३४३. अध्यायः ३४३

Mahabharata - Shanti Parva - Chapter Topics
बदरीनारायणाभ्यनुज्ञातेन नारदेन श्वेतद्वीपंप्रति गमनम् ॥ १.। श्वेतद्वीपवर्णनम् ॥ २.। भीष्मेण युधिष्ठिरंप्रति नारदोदितोपरिचरवसुचरितानुवादारम्भः ॥ ३.। मरीच्यादिचित्रशिखण्डिभिर्नारायणानुग्रहेण स्वकृतधर्मशास्त्रस्य बृहस्पतौ स्थापनम् ॥ ४.।
Mahabharata - Shanti Parva - Chapter Text

१२-३४३-० (७९४३२)
भीष्म उवाच। १२-३४३-०क्ष् (६५६४)
स एवमुक्तो द्विपदां वरिष्ठो
नारायणेनोत्तमपूरुषेण ।
जगाद वाक्यं द्विपदां वरिष्ठं
नारायणं लोकहिताधिवासम् ॥ १२-३४३-१ (७९४३३)
नारद उवाच। १२-३४३-२क्ष् (६५६५)
यदर्थमात्मप्रभवेह जन्म
त्वयोत्तमं धर्मगृहे चतुर्धा ।
तत्साध्यतां लोकहितार्थमद्य
गच्छामि द्रष्टुं प्रकृतिं तवाद्याम् ॥ १२-३४३-२ (७९४३४)
वेदाः स्वधीता मम लोकनाथ
तप्तं तपो नानृतमुक्तपूर्वम् ।
पूजां गुरूणां सततं करोमि
परस्य गुह्यं न तु भिन्नपूर्वम् ॥ १२-३४३-३ (७९४३५)
गुप्तानि चत्वारि यथागमं मे

शत्रौ च मित्रे च समोस्मि नित्यम् ।
तं चादिदेवं सततं प्रपन्न
एकान्तभावेन वृणोम्यजस्रम् ॥ १२-३४३-४ (७९४३६)
एभिर्विशेषैः परिशुद्धसत्वः
कस्मान्न पश्येयमनन्तमीशम् ।
तत्पारमेष्ठ्यस्य वचो निशम्य
नारायणः शाश्वतधर्मगोप्ता ॥ १२-३४३-५ (७९४३७)
गच्छेति तं नारदमुक्तवान्स
संपूजयित्वा विधिवत्क्रियाभिः ।
ततो विसृष्टः परमेष्ठिपुत्रः
सोऽभ्यर्चयित्वा तमृषिं पुराणम् ॥ १२-३४३-६ (७९४३८)
खमुत्पपातोत्तमयोगयुक्त
स्ततोऽधिमेरौ सहसा निलिल्ये ।
तत्रावतस्थे च मुनिर्मुहूर्त
मेकान्तमासाद्य गिरेः स शृङ्गे ॥ १२-३४३-७ (७९४३९)
आलोकयन्नुत्तरपश्चिमेन
ददर्श चाप्यद्भुतमुक्तरूपम् ।
क्षीरोदधेर्योत्तरतो हि द्वीपः
श्वेतः स नाम्ना प्रथितो विशालः ॥ १२-३४३-८ (७९४४०)
मेरोः सहस्रैः स हि योजनानां
द्वात्रिंशतोर्ध्वं कविभिर्निरुक्तः ।
अनिन्द्रियाश्चानशनाश्च तत्र
निष्पन्दहीनाः सुसुगन्धिनस्ते ॥ १२-३४३-९ (७९४४१)
श्वेताः पुमांसो गतसर्वपापा
श्चक्षुर्मुषः पापकृतां नराणाम् ।
वज्रास्थिकायाः सममानोन्माना
दिव्यावयवरूपाः शुभसारोपेताः ॥ १२-३४३-१० (७९४४२)
छत्राकृतिशीर्षा मेघौघनिनादाः
सममुष्कचतुष्का राजीवच्छदपादाः ।
षष्ट्या दन्तैर्युक्ताः शुक्लैरष्टाभिर्दंष्ट्राभिर्ये
जिह्वाभिर्ये विश्ववक्त्रंलेलिह्यन्ते सूर्यप्रख्यम् ॥ १२-३४३-११ (७९४४३)
देवं भक्त्या विश्वोत्पन्नं
यस्मात्सर्वे लोकाः संप्रसूताः ।
सर्वगात्राश्च सूक्ष्माः सहाङ्गका
वेदा धर्मा मुनयः शान्ता देवाः
सर्वे तस्य निसर्ग इति ॥ १२-३४३-१२ (७९४४४)

युधिष्ठिर उवाच। १२-३४३-१३क्ष् (६५६६)
अनिन्द्रिया निराहारा अनिष्पन्दाः सुगन्धिनः ।
कथं ते पुरुषा जाताः का तेषां गतिरुत्तमा ॥ १२-३४३-१३ (७९४४५)
ये च मुक्ता भवन्तीह नरा भरतसत्तम ।
तेषां लक्षणमेतद्धि तच्छ्वेतद्द्वीपवासिनाम् ॥ १२-३४३-१४ (७९४४६)
तस्मान्मे संशयं छिन्धि परं कौतूहलं हि मे ।
त्वं हि सर्वकथारामस्त्वां चैवोपाश्रिता वयम् ॥ १२-३४३-१५ (७९४४७)
भीष्म उवाच। १२-३४३-१६क्ष् (६५६७)
विस्तीर्णैषा कथा राजञ्श्रुता मे पितृसन्निधौ ।
यैषा तव हि वक्तव्या कथासारो हि सा मता ॥ १२-३४३-१६ (७९४४८)
ग्शन्तनोः कथयामास नारदो मुनिसत्तमः ।
राज्ञा पृष्टः पुरा प्राह तत्राहं श्रुतवान्पुरा ॥' १२-३४३-१७ (७९४४९)
राजोपरिचरो नाम बभूवाधिपतिर्भुवः ।
आखण्डलसखः ख्यातो भक्तो नारायणं हरिं ॥ १२-३४३-१८ (७९४५०)
धार्मिको नित्यभक्तश्च पितुर्नित्यमतन्द्रितः ।
साम्राज्यं तेन संप्राप्तं नारायणवरात्पुरा ॥ १२-३४३-१९ (७९४५१)
सात्वतं विधिमास्थाय प्राक्सूर्यमुखनिःसृतम् ।
पूजयामास देवेशं तच्छेषेण पितामहान् ॥ १२-३४३-२० (७९४५२)
पितृशेषेण विप्रांश्च संविभज्याश्रितांश्च सः ।
शेषान्नभुक्सत्यपरः सर्वभूतेष्वहिंसकः ॥ १२-३४३-२१ (७९४५३)
सर्वभावेन भक्तः स देवदेवं जनार्दनम् ।
अनादिमध्यनिधनं लोककर्तारमव्ययम् ॥ १२-३४३-२२ (७९४५४)
तस्य नारायणे भक्तिं वहतोऽमित्रकर्शिनः ।
एकशय्यासनं देवो दत्तवान्देवराट् स्वयम् ॥ १२-३४३-२३ (७९४५५)
आत्मराज्यं धनं चैव कलत्रं वाहनं तथा ।
यत्तद्भागवतं सर्वमिति तत्प्रेषितं सदा ॥ १२-३४३-२४ (७९४५६)
काम्यनैमित्तिका राजन्यज्ञियाः परमक्रियाः ।
सर्वाः सात्वतमास्थाय विधिं चक्रे समाहितः ॥ १२-३४३-२५ (७९४५७)
पाञ्चरात्रविदो मुख्यास्तस्य गेहे महात्मनः ।
वरान्नं भगवत्प्रोक्तं भुञ्जते वाऽग्रभोजनम् ॥ १२-३४३-२६ (७९४५८)
तस्य प्रशासतो राज्यं धर्मेणामित्रघातिनः ।
नानृता वाक्समभवन्मनो दुष्टं न चाभवत् ।
न च कायेन कृतवान्स पापं परमण्वपि ॥ १२-३४३-२७ (७९४५९)
ये हि ते ऋषयः ख्याताः सप्त चित्रशिखण्डिनः ।
तैरेकमतिभिर्भूत्वा यत्प्रोक्तं शास्त्रमुत्तमम् ॥ १२-३४३-२८ (७९४६०)
वेदैश्चतुर्भिः समितं कृतं मेरौ महागिरौ ।

आस्यैः सप्तभिरुद्गीर्णं लोकधर्ममनुत्तमम् ॥ १२-३४३-२९ (७९४६१)
मरीचिरत्र्यङ्गिरसौ पुलस्त्यः पुलहः क्रतुः ।
वसिष्ठश्च महातेजास्ते हि चित्रशिखण्डिनः ॥ १२-३४३-३० (७९४६२)
सप्त प्रकृतयो ह्येतास्तथा स्वायंभुवोऽष्टमः ।
एताभिर्धार्यते लोकस्ताभ्याः शास्त्रं विनिःसृतं ॥ १२-३४३-३१ (७९४६३)
एकाग्रमनसो दान्ता मुनयः संयमे रताः ।
भूतभव्यभविष्यज्ञाः सत्यधर्मपरायणाः ॥ १२-३४३-३२ (७९४६४)
इदं श्रेय इदं ब्रह्म इदं हितमनुत्तमम् ।
लोकान्संचिन्त्य मनसा ततः शास्त्रं प्रचक्रिरे ॥ १२-३४३-३३ (७९४६५)
तत्र धर्मार्थकामा हि मोक्षः पश्चाच्च कीर्तितः ।
मर्यादा विविधाश्चैव दिवि भूमौ च संस्थिताः ॥ १२-३४३-३४ (७९४६६)
आराध्य तपसा देवं हरिं नारायणं प्रभुम् ।
दिव्यं वर्षसहस्रं वै सर्वे ते ऋषिभिः सह ॥ १२-३४३-३५ (७९४६७)
नारायणानुशिष्टा हि तदा देवी सरस्वती ।
विवेश तानृषीन्सर्वाल्लोँकानां हितकाम्यया ॥ १२-३४३-३६ (७९४६८)
ततः प्रवर्तिता सम्यक्तपोविद्भिर्द्विजातिभिः ।
शब्दे चार्थे च हेतौ च एषा प्रथमसर्गजा ॥ १२-३४३-३७ (७९४६९)
आदावेव हि तच्छास्त्रमोंकारस्वरपूजितम् ।
ऋषिभिः श्रावितं तत्र यत्र कारुणिकोह्यसौ ॥ १२-३४३-३८ (७९४७०)
ततः प्रसन्नो भगवाननिर्दिष्टशरीरगः ।
ऋषीनुवाच तान्सर्वानदृश्यः पुरुषोत्तमः ॥ १२-३४३-३९ (७९४७१)
कृतं शतसहस्रं हि श्लोकानां हितमुत्तमम् ।
लोकतन्त्रस्य कृत्स्नस्य यस्माद्धर्मः प्रवर्तते ॥ १२-३४३-४० (७९४७२)
प्रवृत्तौ च निवृत्तौ च यस्मादेतद्भविष्यति ।
यजुर्ऋक्सामभिर्जुष्टमथर्वाङ्गिरसैस्तथा ॥ १२-३४३-४१ (७९४७३)
यथाप्रमाणं हिं मया कृतो ब्रह्म प्रसादतः ।
रुद्रश्च क्रोधजो विप्रा यूयं प्रकृतयस्तथा। १२-३४३-४२ (७९४७४)
सूर्याचन्द्रमसौ वायुर्भूमिरापोऽग्निरेव च ।
सर्वे च नक्षत्रगणा यच्च भूताभिशब्दितम् ॥ १२-३४३-४३ (७९४७५)
अधिकारेषु वर्तन्ते यथास्वं ब्रह्मवादिनः ।
सर्वे प्रमाणं हि यथा तथा तच्छास्त्रमुत्तमम् ॥ १२-३४३-४४ (७९४७६)
भविष्यति प्रमाणं वै एतन्मदनुशासनम् ।
तस्मात्प्रवक्ष्यते धर्मान्मनुः स्वायंभुवः स्वयम् ॥ १२-३४३-४५ (७९४७७)
उशना बृहस्पतिश्चैव यदोत्पन्नौ भविष्यतः ।
तदा प्रवक्ष्यतः शास्त्रं युष्मन्मतिभिरुद्धृतम् ॥ १२-३४३-४६ (७९४७८)
स्वायंभुवेषु धर्मेषु शास्त्रे चोशनसा कृते ।

बृहस्पतिमते चैव लोकेषु प्रतिचारिते ॥ १२-३४३-४७ (७९४७९)
युष्मत्कृतमिदं शास्त्रं प्रजापालो वसुस्ततः ।
बृहस्पतिसकाशाद्धि प्राप्स्यते द्विजसत्तमाः ॥ १२-३४३-४८ (७९४८०)
स हि मद्भावनिरतो मद्भक्तश्च भविष्यति ।
तेन शास्त्रेण लोकेषु क्रियाः सर्वाः करिष्यति ॥ १२-३४३-४९ (७९४८१)
एतद्धि युष्मच्छास्त्राणां शास्त्रमुत्तमसंज्ञितम् ।
एतदर्थ्यं च धर्म्यं च रहस्यं चैतदुत्तमम् ॥ १२-३४३-५० (७९४८२)
अस्य प्रवर्तनाच्चैव प्रजावन्तो भविष्यथ ।
स च राजश्रिया युक्तो भविष्यति महान्वसुः ॥ १२-३४३-५१ (७९४८३)
संस्थिते तु नृपे तस्मिञ्शास्त्रमेतत्सनातनम् ।
अन्तर्धास्यति तत्सर्वमेतद्वः कथितं मया ॥ १२-३४३-५२ (७९४८४)
एतावदुक्त्वा वचनमदृश्यः पुरुषोत्तमः ।
विसृज्य तानृषीन्सर्वान्कामपि प्रसृतो दिशम् ॥ १२-३४३-५३ (७९४८५)
ततस्ते लोकपितरः सर्वलोकार्थचिन्तकाः ।
प्रावर्तयन्त तच्छास्त्रं धर्मयोनिं सनातनम् ॥ १२-३४३-५४ (७९४८६)
उत्पन्नेऽङ्गिरसे चैव युगे प्रथमकल्पिते ।
साङ्गोपनिषदं शास्त्रं स्थापयित्वा बृहस्पतौ ॥ १२-३४३-५५ (७९४८७)
जग्मुर्यथेप्सितं सर्वलोकानां सर्वधर्मप्रवर्तकाः ॥ ॥ १२-३४३-५६ (७९४८८)

इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि
त्रिचत्वारिंशदधिकत्रिशततमोऽध्यायः ॥ ३४३.।
Mahabharata - Shanti Parva - Chapter Footnotes

१२-३४३-२ जन्म अवतारः ।आद्यां मूर्तिं श्वेतद्वीपस्थाम् ॥
१२-३४३-४ चत्वारि पाणिपादोदरोपस्थानि ॥
१२-३४३-६ संपूजयित्वात्मविधिकियाभिरिति झ ।पाठः ॥
१२-३४३-८ उत्तरपश्चिमेन वायव्यकोणतः ।योत्तरतः यः उत्तरतः ॥
१२-३४३-९ मेरुमूलाद्वत्रिशत्सहस्रयोजनार्दूर्ध्वम् ।सुगन्धिः
परमात्मा।सुगन्धिं पुष्टिवर्धनमिति मन्त्रलिङ्गात्।शोभनः
सोऽस्त्येषां ध्यानगोचर इति सुसुगन्धिनः ॥
१२-३४३-१० श्वेताः शुद्धसत्वप्रधानाः ॥
१२-३४३-११ छत्राकृतिशीर्षा निर्मांसग्रीवत्वात् ।समं पीनत्वरहितं
मुष्कौ वृषणौ चतुषाकमंसयोः कक्ष्योश्चान्तरालं च
मुष्कचतुष्कं बाहुचतुष्कं वा।षष्ट्या षष्टिसंख्यैर्दन्तैरिव
जगच्चणकचर्वणक्षमैः संवत्सरैर्युक्ताः।अष्टौ
दिशः सर्वेपामाश्रयभूतास्ताभिश्च युक्ताः।देशकालौ येषां

मुखमध्ये प्रविष्टावित्यर्थः। सूर्येण प्रख्यायते स्फुटीक्रियते दिनमासर्तुसंवत्सरात्मा महाकालस्तम्। विश्ववक्त्रं विश्वं वक्त्रे यस्य तादृशम्। जिह्वाभिरिव स्वाङ्गभूताभी रसनाशक्तिभिर्लेलिह्यन्ते पायसमिव लिहन्ति। छत्राकृतिशीर्षाणो मेघौघस्तनितसमनिनादाः सममुष्का रुचिरतराश्चतुर्मुष्कावर्जितरक्ततलपादाः इति ध। पाठः ॥
१२-३४३-१२ विश्वोत्पन्नं विश्वमुत्पन्नं यस्मात् । वेदादयस्तस्य निसर्गः अयत्नरचिताः ॥
१२-३४३-१६ कथासारो हि स स्मृत इति थ । पाठः ॥
१२-३४३-१८ आखण्डलसम इति ध । पाठः ॥
१२-३४३-१९ सात्वतं सात्वतानां पाञ्चरात्राणां हितं । तच्छेषेण विष्णुशेषेण ॥
१२-३४३-२१ पितॄनृषींश्च विप्रांश्चेति ध । पाठः ॥
१२-३४३-२६ प्रायणं भगवत्प्रोक्तमिति झ । पाठः ॥
१२-३४३-२९ वेदैश्चतुर्भिः सहितमिति ध । पाठः ॥
१२-३४३-३४ मोक्षपन्थाश्च कीर्तित इति ध । पाठः ॥
१२-३४३-५४ धर्मकामार्थचिन्तका इति ध । पाठः ॥

---

शन्तिपर्व-अध्यय३४४
॥ श्रीः ॥
१२.३४४. अध्यायः ३४४

Mahabharata - Shanti Parva - Chapter Topics
बृहस्पतिना उपरिचरवसोर्याजनम् ॥ १.। तत्र श्रीहरिणा परोक्षतया भागग्रहणात्क्रुद्धं बृहस्पतिंप्रति एकतादिभिः श्वेतद्वीपवर्णनपूर्वकं भगवन्महिमोक्त्या परिसान्त्वनम् ॥ २.।
Mahabharata - Shanti Parva - Chapter Text

१२-३४४-० (७९४८९)
भीष्म उवाच। १२-३४४-०क्ष् (६५६८)
ततोऽतीते महाकल्पे उत्पन्नेऽङ्गिरसः सुते ।
बभूवुर्निर्वृता देवा जाते देवपुरोहिते ॥ १२-३४४-१ (७९४९०)
बृहद्ब्रह्म महच्चेति शब्दाः पर्यायवाचकाः ।
एभिः समन्वितो राजन्गुणैर्विद्वान्बृहस्पतिः ॥ १२-३४४-२ (७९४९१)
तस्य शिष्यो बभूवाग्र्यो राजोपरिचरो वसुः ।
अधीतवांस्तदा शास्त्रं सम्यक्चित्रशिखण्डिजं ॥ १२-३४४-३ (७९४९२)
स राजा भावितः पूर्वं दैवेन विधिना वसुः ।

पालयामास पृथिवीं दिवमाखण्डलो यथा ॥ १२-३४४-४ (७९४९३)
तस्य यज्ञो महानासीदश्वमेधो महात्मनः ।
बृहस्पतिरुपाध्यायस्तत्र होता बभूव ह ॥ १२-३४४-५ (७९४९४)
प्रजापतिसुताश्चात्र सदस्याश्चाभवंस्त्रयः ।
एकतश्च द्वितश्चैव त्रितश्चैव मर्हषयः ॥ १२-३४४-६ (७९४९५)
धनुषाख्योऽथ रैभ्यश्च अर्वावसुपरावसू ।
ऋषिर्मेधातिथिश्चैव ताण्ड्यश्चैव महानृषिः ॥ १२-३४४-७ (७९४९६)
ऋषिः शान्तिर्महाभागस्तथा वेदशिराश्च यः ।
ऋषिश्रेष्ठश्च कपिलः शालिहोत्रपिता स्मृतः ॥ १२-३४४-८ (७९४९७)
आद्यः कठस्तैत्तिरिश्च वैशंपायनपूर्वजः ।
कण्वोऽथ देवहोत्रश्च एते षोडश कीर्तिताः ॥ १२-३४४-९ (७९४९८)
संभूताः सर्वसंभारास्तस्मिन्राजन्महाक्रतौ ।
न तत्र पशुघातोऽभूत्स राजैवं स्थितोऽभवत् ॥ १२-३४४-१० (७९४९९)
अहिंस्रः शुचिरक्षुद्रो निराशीः कर्मसंस्तुतः ।
आरण्यकपदोद्भूता भागास्तत्रोपकल्पिताः ॥ १२-३४४-११ (७९५००)
प्रीतस्ततोऽस्य भगवान्देवदेवः पुरातनः ।
साक्षात्तं दर्शयामास सोदृश्योऽन्येन केनचित् ॥ १२-३४४-१२ (७९५०१)
स्वयं भागमुपाघ्राय पुरोडाशं गृहीतवान् ।
अदृश्येन हृतो भागो देवेन हरिमेधसा ॥ १२-३४४-१३ (७९५०२)
बृहस्पतिस्ततः क्रुद्धः स्रुचमुद्यम्य वेगितः ।
आकाशं घ्नन्स्रुचः पातै रोषादश्रूण्यवर्तयत् ॥ १२-३४४-१४ (७९५०३)
उवाच चोपरिचरं मया भागोऽयमुद्यतः ।
ग्राह्यः स्वयं हि देवेन मत्प्रत्यक्षं न संशयः ॥ १२-३४४-१५ (७९५०४)
उद्यता यज्ञभागा हि साक्षात्प्राप्ताः सुरैरिह ।
किमर्थमिह न प्राप्तो दर्शनं मे हरिर्नृप ॥ १२-३४४-१६ (७९५०५)
भीष्म उवाच। १२-३४४-१७क्ष् (६५६९)
ततः स तं समुद्भूतं भूमिपालो महान्वसुः ।
प्रसादयामास मुनिं सदस्यास्ते च सर्वशः ॥ १२-३४४-१७ (७९५०६)
ग्हुतस्त्वया वदानीह पुरोडाशस्य यावती ।
गृहीता देवदेवेन मत्प्रत्यक्षं न संशयः ॥ १२-३४४-१८ (७९५०७)
इत्येवमुक्ते वसुना सरोषश्चाब्रवीद्गुरुः ।
न यजेयमहं चात्र परिभूतस्त्वया नृप ॥ १२-३४४-१९ (७९५०८)
त्वया पशुर्वारितश्च कृतः पिष्टमयः पशुः ।
त्वं देवं पश्यसे नित्यं न पश्येयमहं कथम् ॥ १२-३४४-२० (७९५०९)
वसुरुवाच। १२-३४४-२१क्ष् (६५७०)
पशुहिंसा वारिता च यजुर्वेदादिमन्त्रतः ।

अहं न वारये हिंसां द्रक्ष्याम्येकान्तिको हरिम् ।
तस्मात्कोपो न कर्तव्यो भवता गुरुणा मयि ॥ १२-३४४-२१ (७९५१०)
वसुमेवं ब्रुवाणं तु क्रुद्ध एव बृहस्पतिः ।
उवाच ऋत्विजश्चैव किं नः कर्मेति वारयन् ॥१२-३४४-२२ (७९५११)
अथैकतो द्वितश्चैव त्रितश्चैव महर्षयः।'
ऊचुश्चैनमसंभ्रान्ता न रोषं कर्तुमर्हसि ॥ १२-३४४-२३ (७९५१२)
ग्शृणु त्वं वचनं पुत्र अस्माभिः समुदाहृतम्।'
नैष धर्मः कृतयुगे यत्त्वं रोषमिहाहिथाः ॥ १२-३४४-२४ (७९५१३)
अरोषणो ह्यसौ देवो यस्य भागोऽयमुद्यतः ।
न शक्यः स त्वया द्रष्टुमस्माभिर्वा बृहस्पते ।
यस्य प्रसादं कुरुते स वै तं द्रष्टुमर्हति ॥ १२-३४४-२५ (७९५१४)
वयं हि ब्रह्मणः पुत्रा मानसाः परिकीर्तिताः ।
गता निःश्रेयसार्थं हि कदाचिद्दिशमुत्तराम् ॥१२-३४४-२६ (७९५१५)
तप्त्वा वर्षसहस्राणि चत्वारि तप उत्तमम् ।
एकपादा स्थिताः सम्यक्काष्ठभूताः समाहिताः ॥१२-३४४-२७ (७९५१६)
मेरोरुत्तरभागे तु क्षीरोदस्यानुकूलतः ।
स देशो यत्र नस्तप्तं तपः परमदारुणम् ॥१२-३४४-२८ (७९५१७)
वरेण्यं वरदं तं वै देवदेवं सनातनम् ।
कथं पश्येमहि वयं देवं नारायणं त्विति ॥१२-३४४-२९ (७९५१८)
अथ व्रतस्यावभृथे वागुवाचाशरीरिणी ।
स्निग्धगम्भीरया वाचा प्रहर्षणकरी विभो ॥१२-३४४-३० (७९५१९)
सुतप्तं वस्तपो विप्राः प्रसन्नेनान्तरात्मना ।
यूयं जिज्ञासवो भक्ताः कथं द्रक्ष्यथ तं विभुम् ॥१२-३४४-३१ (७९५२०)
क्षीरोदधेरुत्तरतः श्वेतद्वीपो महाप्रभः ।
तत्र नारायणपरा मानवाश्चन्द्रवर्चसः ॥१२-३४४-३२ (७९५२१)
एकान्तभावोपगतास्ते भक्ताः पुरुषोत्तमम् ।
ते सहस्रार्चिषं देवं प्रविशन्ति सनातनम् ॥१२-३४४-३३ (७९५२२)
अनिन्द्रिया निराहारा अनिष्पन्दाः सुगन्धिनः ।
एकान्तिनस्ते पुरुषाः श्वेतद्वीपनिवासिनः।१२-३४४-३४च गच्छध्वं
तत्र मुनयस्तत्रात्मा मे प्रकाशितः ॥ १२-३४४-३४ (७९५२३)
अथ श्रुत्वा वयं सर्वे वाचं तामशरीरिणीम् ।
यथाख्यातेन मार्गेण तं देशं प्रविशेमहि ॥१२-३४४-३५ (७९५२४)
प्राप्य श्वेतं महाद्वीपं तच्चित्तास्तद्दिदृक्षवः ।
ग्सहसा हि गताः सर्वे तेजसा तस्य मोहिताः ॥' १२-३४४-३६ (७९५२५)
ततोऽस्मद्दृष्टिविषयस्तदा प्रतिहतोऽभवत् ।
न च पश्याम पुरुषं तत्तेजोहतदर्शनाः ॥१२-३४४-३७ (७९५२६)

ततो नः प्रादुरभवद्विज्ञानं देवयोगजम् ।
न किलातप्ततपसा शक्यते द्रष्टमञ्जसा ॥ १२-३४४-३८ (७९५२७)
ततः पुनर्वर्षशतं तप्त्वा तात्कालिकं महत् ।
व्रतावसाने च शुभान्नरान्ददृशिमो वमय् ॥ १२-३४४-३९ (७९५२८)
श्वेतांश्चन्द्रप्रतीकाशान्सर्वलक्षणलक्षितान् ।
नित्याञ्जलिकृतान्ब्रह्म जपतः प्रागुदङ्मुखान् ॥ १२-३४४-४० (७९५२९)
मानसो नाम स जपो जप्यते तैर्महात्मभिः ।
तेनैकाग्रमनस्त्वेन प्रीतो भवति वै हरिः ॥ १२-३४४-४१ (७९५३०)
याऽभवन्मुनिशार्दूल भाः सूर्यस्य युगक्षये ।
एकैकस्य प्रभा तादृक्साऽभवन्मानवस्य ह ॥ १२-३४४-४२ (७९५३१)
तेजोनिवासः स द्वीप इति वै मेनिरे वयम् ।
न तत्राभ्यधिकः कश्चित्सर्वे ते समतेजसः ॥ १२-३४४-४३ (७९५३२)
अथ सूर्यसहस्रस्य प्रभां युगपदुत्थिताम् ।
सहसा दृष्टवन्तः स्म पुनरेव बृहस्पते ॥ १२-३४४-४४ (७९५३३)
सहिताश्चाभ्यधावन्त ततस्ते मानवा द्रुतम् ।
कृताञ्जलिपुष्टा हृष्टा नम इत्येव वादिनः ॥ १२-३४४-४५ (७९५३४)
ततो हि वदतां तेषामश्रौष्म विपुलं ध्वनिम् ।
बलिः किलोपह्रियते तस्य देवस्य तैर्नरैः ॥ १२-३४४-४६ (७९५३५)
वयं तु तेजसा तस्य सहसा हृतचेतसः ।
न किंचिदपि पश्यामो हतचक्षुर्बलेन्द्रियाः ॥ १२-३४४-४७ (७९५३६)
एकस्तु शब्दो विततः श्रुतोऽस्माभिरुदीरितः ।
ग्आकाशं पूरयन्सर्वं शिक्षाक्षरसमन्वितः ॥ १२-३४४-४८ (७९५३७)
जितं ते पुण्डरीकाक्ष नमस्ते विश्वभावन ।
नमस्तेऽस्तु हृषीकेश महापुरुष पूर्वज ।
इति शब्दः श्रुतोऽस्माभिः शिक्षाक्षरसमन्वितः ॥ १२-३४४-४९ (७९५३८)
एतस्मिन्नन्तरे वायुः सर्वगन्धवहः शुचिः ।
दिव्यान्युवाह पुष्पाणि कर्मण्याश्चौषधीस्तथा ॥ १२-३४४-५० (७९५३९)
तैरिष्टः पञ्चकालज्ञैर्हरिरेकान्तिभिर्नरैः ।
भक्त्या परमया युक्तैर्मनोवाक्कर्मभिस्तदा ॥ १२-३४४-५१ (७९५४०)
नूनं तत्रागतो देवो यथा तैर्वागुदीरिता ।
वयं त्वेनं न पश्यामो मोहितास्तस्य मायया ॥ १२-३४४-५२ (७९५४१)
मारुते सन्निवृत्ते च बलौ च प्रतिपादिते ।
चिन्ताव्याकुलितात्मानो जाताः स्मोङ्गिसांवर ॥ १२-३४४-५३ (७९५४२)
मानवानां सहस्रेषु तेषु वै शुद्धयोनिषु ।
अस्मान्न कश्चिन्मनसा चक्षुषा वाऽप्यपूजयत् ॥ १२-३४४-५४ (७९५४३)
तेऽपि स्वस्था मुनिगणा एक भावमनुव्रताः ।

नास्मासु दधिरे भावं ब्रह्मभावमनुष्ठिताः ॥१२-३४४-५५ (७९५४४)
ततोऽस्मान्सुपरिश्रान्तांस्तपसा चातिकर्शितान् ।
उवाच स्वस्थं किमपि भूतं तत्राशरीरकम् ॥१२-३४४-५६ (७९५४५)
देव उवाच।१२-३४४-५७क्ष् (६५७१)
दृष्टा वः पुरुषाः श्वेताः सर्वेन्द्रियविवर्जिताः ।
दृष्टो भवति देवेश एभिर्दृष्टैर्द्विजोत्तमैः ॥१२-३४४-५७ (७९५४६)
गच्छध्वं मुनयः सर्वे यथागतमितोऽचिरात् ।
न स शक्यस्त्वभक्तेन द्रष्टुं देवः कथंचन ॥१२-३४४-५८ (७९५४७)
कामं कालेन महता एकान्तित्वमुपागतैः ।
शक्यो द्रष्टुं स भगवान्प्रभामण्डलदुर्दृशः ॥१२-३४४-५९ (७९५४८)
महत्कार्यं च कर्तव्यं युष्माभिर्द्विजसत्तमाः ।
इतः कृतयुगेऽतीते विपर्यासं गतेऽपि च ॥१२-३४४-६० (७९५४९)
वैवस्वतेऽन्तरे विप्राः प्राप्ते त्रेतायुगे पुनः ।
सुराणां कार्यसिद्ध्यर्थं सहाया वै भविष्यथ ॥१२-३४४-६१ (७९५५०)
ततस्तदद्भुतं वाक्यं निशम्यैवामृतोपमम् ।
तस्य प्रसादात्प्राप्ताः स्मो देशमीप्सितमञ्जसा ॥१२-३४४-६२ (७९५५१)
एवं सुतपसा चैव हव्यकव्यस्तैथैव च ।
देवोऽस्माभिर्न दृष्टः स कथं त्वं द्रष्टुमर्हसि ॥१२-३४४-६३ (७९५५२)
नारायणो महद्भूतं विश्वसृग्घव्यकव्यभुक् ।
अनादिनिधनोऽव्यक्तो देवदानवपूजितः ॥१२-३४४-६४ (७९५५३)
एवमेकतवाक्येन द्वितत्रितमतेन च ।
अनुनीतः सदस्यैश्च बृहस्पतिरुदारधीः ।
समापयत्ततो यज्ञं दैवतं समपूजयत् ॥ १२-३४४-६५ (७९५५४)
समाप्तयज्ञो राजाऽपि प्रजां पालितवान्वसुः ।
ब्रह्मशापाद्दिवो भ्रष्टः प्रविवेश महीं ततः ॥१२-३४४-६६ (७९५५५)
स राजा राजशार्दूल सत्यधर्मपरायणः ।
अन्तर्भूमिगतश्चैव सततं धर्मवत्सलः ॥१२-३४४-६७ (७९५५६)
नारायणपरो भूत्वा नारायणजपं जपन् ।
तस्यैव च प्रसादेन पुनरेवोत्थितस्तु सः ॥१२-३४४-६८ (७९५५७)
महीतलाद्गतः स्थानं ब्रह्मणः समनन्तरम् ।
परां गतिमनुप्राप्त इति नैष्ठिकमञ्जसा ॥ ॥१२-३४४-६९ (७९५५८)

इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि नारायणीये
चतुश्चत्वारिंशदधिकत्रिशततमोऽध्यायः ॥ ३४४.।

Mahabharata - Shanti Parva - Chapter Footnotes

१२-३४४-३१ क्रुद्धं द्रक्ष्यथ तं प्रभुमिति ध ।पाठः ॥
१२-३४४-३४ अतीन्द्रिया निराहारा इति ध ।पाठः ॥
१२-३४४-४३ पुरुषव्यत्यय आर्षः ॥

---

शन्तिपर्व-अध्यय३४५
॥ श्रीः ॥
१२.३४५. अध्यायः ३४५

Mahabharata - Shanti Parva - Chapter Topics
भीष्मेण युधिष्ठिरंप्रति उपरिचरवसोः
शापप्राप्तितद्विमोचनप्रकारकथनम् ॥ १.।
Mahabharata - Shanti Parva - Chapter Text

१२-३४५-० (७९५५९)
युधिष्ठिर उवाच।१२-३४५-०क्ष् (६५७२)
यदा भक्तो भगवति आसीद्राजा महान्वसुः ।
किमर्थं स परिभ्रष्टो विवेश विवरं भुवः ॥१२-३४५-१ (७९५६०)
भीष्म उवाच।१२-३४५-२क्ष् (६५७३)
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
ऋषीणां चैव संवादं त्रिदशानां च भारत ॥१२-३४५-२ (७९५६१)
ग्इयं वै कर्मभूमिः स्यात्स्वर्गो भोगाय कल्पितः ।
तस्मादिन्द्रो महीं प्राप्य यजनाप तु दीक्षितः ॥१२-३४५-३ (७९५६२)
सवनीयपशोः काल आगते तु बृहस्पतिः ।
पिष्टमानीयतामत्र पश्वर्थमिति भाषत ॥१२-३४५-४ (७९५६३)
तच्छ्रुत्वा देवताः सर्वा इदमूचुर्द्विजोत्तमम् ।
बृहस्पतिं मांसगृद्धाः पृथक्पृथगिदं पुनः ॥' १२-३४५-५ (७९५६४)
अजेन यष्टव्यमिति प्राहुर्देवा द्विजोत्तमान् ।
स च छागोप्यजो ज्ञेयो नान्यः पशुरिति स्थितिः ॥१२-३४५-६ (७९५६५)
ऋषय ऊचुः।१२-३४५-७क्ष् (६५७४)
बीजैर्यज्ञेषु यष्टव्यमिति वै वैदिकी श्रुतिः ।
अजसंज्ञानि बीजानि च्छागं नो हन्तुमर्हथ ॥१२-३४५-७ (७९५६६)
नैष धर्मः सतां देवा यत्र बध्येत वै पशुः ।
इदं कृतयुगं श्रेष्ठं कथं वध्येत वै पशुः ॥१२-३४५-८ (७९५६७)
भीष्म उवाच।१२-३४५-९क्ष् (६५७५)
तेषां संवदतामेवमृषीणां विबुधैः सह ।
मार्गागतो नृपश्रेष्ठस्तं देशं प्राप्तवान्वसुः ॥१२-३४५-९ (७९५६८)
अन्तरिक्षचरः श्रीमान्सहस्रबलवाहनः ।

तं दृष्ट्वा सहसाऽऽयान्तं वसुं ते त्वन्तरिक्षगम् ॥ १२-३४५-१० (७९५६९)
ऊचुर्द्विजातयो देवानेष च्छेत्स्यति संशयम् ।
यज्वा दानपतिः श्रेष्ठः सर्वभूतहितप्रियः ।
कथंस्विदन्यथा ब्रूयादेष वाक्यं महान्वसुः ॥ १२-३४५-११ (७९५७०)
एवं ते संविदं कृत्वा विबुधा ऋषयस्तथा ।
अपृच्छन्सहिताऽभ्येत्य वसुं राजानमन्तिकात् ॥ १२-३४५-१२ (७९५७१)
भो राजन्केन यष्टव्यमजेनाहोस्विदौषधैः ।
एतन्नः संशयं छिन्धि प्रमाणं नो भवान्मतः ॥ १२-३४५-१३ (७९५७२)
स तान्कृताञ्जलिर्भूत्वा परिपप्रच्छ वै वसुः ।
कस्य वै को मतः पक्षो ब्रूत सत्यं द्विजोत्तमाः ॥ १२-३४५-१४ (७९५७३)
ऋषय ऊचुः। १२-३४५-१५क्ष् (६५७६)
धान्यैर्यष्टव्यमित्येव पक्षोऽस्माकं नराधिप ।
देवानां तु पशुः पक्षो मतो राजन्वदस्व नः ॥ १२-३४५-१५ (७९५७४)
भीष्म उवाच। १२-३४५-१६क्ष् (६५७७)
देवानां तु मतं ज्ञात्वा वसुना पक्षसंश्रयात् ।
छागेनाजेन यष्टव्यमेवमुक्तं वचस्तदा ॥ १२-३४५-१६ (७९५७५)
कुपितास्ते ततः सर्वे मुनयः सूर्यवर्चसः ।
ऊचुर्वसुं विमानस्थं देवपक्षार्थवादिनम् ॥ १२-३४५-१७ (७९५७६)
सुरपक्षो गृहीतस्ते यस्मात्तस्माद्दिवः पत ।
अद्यप्रभृति ते राजन्नाकाशे विहता गतिः ॥ १२-३४५-१८ (७९५७७)
अस्माच्छापाभिघातेन महीं भित्त्वा प्रवेक्ष्यसि ।
ग विरुद्धं वेदसूत्राणामुक्तं यदि भवेन्नृप ।
वयं विरुद्धवचना यदि तत्र पतामहे ॥' १२-३४५-१९ (७९५७८)
ततस्तस्मिन्मुहूर्तेऽथ राजोपरिचरस्तदा ।
अधो वै संबभूवाशु भूमेर्विवरगो नृप ॥ १२-३४५-२० (७९५७९)
स्मृतिस्त्वेवं न विजहौ तदा नारायणाज्ञया ॥ १२-३४५-२१ (७९५८०)
देवास्तु सहिताः सर्वे वमोः शापविमोक्षणम् ।
चिन्तयामासुरव्यग्राः सुकृतं हि नृपस्य तत् ॥ १२-३४५-२२ (७९५८१)
अनेनास्मत्कृते राज्ञा शापः प्राप्तो महात्मना ।
अस्य प्रतिप्रियं कार्यं सहितैर्नो दिवौकसः ॥ १२-३४५-२३ (७९५८२)
इति बुद्ध्या व्यवस्याशु गत्वा निश्चयमीश्वराः ।
ऊचुः संहृष्टमनसो राजोपरिचरं तदा ॥ १२-३४५-२४ (७९५८३)
ब्रह्मण्य देवभक्तस्त्वं सुरासुरगुरुर्हरिः ।
कामं स तव तुष्टात्मा कुर्याच्छापविभोक्षणम् ॥ १२-३४५-२५ (७९५८४)
मानना तु द्विजातीनां कर्तव्या वै महात्मनाम् ।
अवश्यं तपसा तेषां फलितव्यं नृपोत्तम ॥ १२-३४५-२६ (७९५८५)

यतस्त्वं सहसा भ्रष्ट आकाशान्मेदिनीतलम् ।
गविरुद्धं वेदसूत्राणां न वक्तव्यं हितार्थिना ॥१२-३४५-२७ (७९५८६)
अस्मत्पक्षनिमित्तेन व्यसनं प्राप्तमीदृशम्।'
एकं त्वनुग्रहं तुभ्यं दद्मो वै नृप्रसत्तम ।
यावत्त्वं शापदोषेण कालमासिप्यसेऽनघ ॥ १२-३४५-२८ (७९५८७)
भूमेर्विवरगो भूत्वा तावत्त्वं कालमाप्स्यसि ।
यज्ञेषु सुहुतां विप्रैर्वसोर्धारां समाहितैः ॥१२-३४५-२९ (७९५८८)
प्राप्स्यसेऽस्मदनुध्यानान्मा च त्वां ग्लानिराविशेत् ।
न क्षुत्पिपासे राजेन्द्र भूमेश्छिद्रे भविष्यतः ॥१२-३४५-३० (७९५८९)
वसोर्धारामिपीतत्वात्तेजसाऽऽप्यायितेन च ।
स देवोऽस्मद्वरात्प्रीतो ब्रह्मलोकं हि नेष्यति ॥१२-३४५-३१ (७९५९०)
एवं दत्त्वा वरं राज्ञे सर्वे ते च दिवौकसः ।
ऋतुं समाप्य पिष्टेन मुनीनां वचनात्तदा ॥' १२-३४५-३२ (७९५९१)
गताः धमवनं देवा ऋषगश्च तपोधनाः ।
ग्गृहीत्वा दक्षिणां सर्वे गतः स्वानाश्रमान्पुनः ॥१२-३४५-३३ (७९५९२)
वसुं विचिन्त्य शक्रश्च प्रविनेशामरावतीम् ।
वसुर्विवरगस्तत्र व्यलीकस्य फलं गुरोः ॥' १२-३४५-३४ (७९५९३)
चक्रे वसुस्ततः पूजां विष्वक्सेनाय भारत ।
जप्यं जगौ च सततं नारायणमुखोद्भवम् ॥१२-३४५-३५ (७९५९४)
तत्रापि पञ्चभिर्यज्ञैः पञ्चकालानरिंदम् ।
अयजद्धरिं सुरपतिं भूमेर्विवरगोऽपि सन् ॥१२-३४५-३६ (७९५९५)
ततोऽस्य तुष्टो भगवान्भक्त्या नारायणो हरिः ।
अनन्यभक्तस्य सतस्तत्परस्य जितात्मनः ॥१२-३४५-३७ (७९५९६)
वरदो भगवान्विष्णुः समीपस्थं द्विजोत्तमम् ।
गरुत्मन्तं महावेगमावभाषेऽप्सितं तदा ॥१२-३४५-३८ (७९५९७)
द्विजोत्तम महाभाग पश्यतां वचनान्मम ।
सम्राड्राजा वसुर्नाम धर्मात्मा संशितव्रतः ॥१२-३४५-३९ (७९५९८)
ब्राह्मणानां प्रकोपेन प्रविष्टो वसुधातलम् ।
मानितास्ते तु विप्रेन्द्रास्त्वं तु गच्छ द्विजोत्तम् ॥१२-३४५-४० (७९५९९)
भूमेर्विवरसंगुप्तं गरुडेह ममाज्ञया ।
अधश्चरं नृपश्रेष्ठं खेचरं कुरु माचिरम् ॥१२-३४५-४१ (७९६००)
गरुत्मानथ विक्षिप्य पक्षौ मारुतवेगवान् ।
विवेश विवरं भूमेर्यत्रास्ते वाग्यतो वसुः ॥१२-३४५-४२ (७९६०१)
तत एनं समुत्क्षिप्य सहसा विनतासुतः ।
उत्पपात नभस्तूर्णं तत्र चैनममुञ्चत ॥१२-३४५-४३ (७९६०२)
अस्मिन्मुहुर्ते संजज्ञे राजोपरिचरः पुनः ।

सशरीरो गतश्चैव ब्रह्मलोकं नृपोत्तमः ॥१२-३४५-४४ (७९६०३)
एवं तेनापि कौन्तेय वाग्दोषाद्देवताज्ञया ।
प्राप्ता गतिरधस्तात्तु द्विजशापान्महात्मना ॥१२-३४५-४५ (७९६०४)
केवलं पुरुषस्तेन सेवितो हरिरीश्वरः ।
ततः शीघ्रं जहौ शापं ब्रह्मलोकमवाप च ॥१२-३४५-४६ (७९६०५)
भीष्म उवाच।१२-३४५-४७क्ष् (६५७८)
एतत्ते सर्वमाख्यातं संभूता मानवा यथा ।
नारदोऽपि यथा श्वेतं द्वीपं स गतवानृषिः ।
तत्ते सर्वं प्रवक्ष्यामि शृणुष्वैकमना नृप ॥ ॥ १२-३४५-४७ (७९६०६)

इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि
पञ्चचत्वारिंशदधिकत्रिशततमोऽध्यायः ॥३४५.।
Mahabharata - Shanti Parva - Chapter Footnotes

१२-३४५-७ अजस्थस्म मेधस्य बीजेषु संक्रमाद्बीजान्येवाजसंज्ञानीति युक्तम् ॥
१२-३४५-२३ अस्य प्रतिक्रिया कार्येति ध ।पाठः ॥

---

शन्तिपर्व-अध्यय३४६
॥श्रीः ॥
१२.३४६. अध्यायः ३४६

Mahabharata - Shanti Parva - Chapter Topics
भीष्मेण युधिष्ठिरंप्रति
दडुनामभिर्नारदकृतश्वेतद्वीपगतभगवत्स्तोत्रानुवादः ॥१.।
Mahabharata - Shanti Parva - Chapter Text

१२-३४६-० (७९६०७)
भीष्म उवाच।१२-३४६-०क्ष् (६५७९)
प्राप्य श्वेतं महाद्वीपं नारदो भगवानृषिः ।
ददर्श तानेव नराञ्श्वेतांश्चन्द्रसमप्रभान् ॥१२-३४६-१ (७९६०८)
पूजयामास शिरसा मनसा तैश्च पूजितः ।
दिदृक्षुर्जप्यपरमः सर्वकृच्छ्रगतः स्थितः ॥१२-३४६-२ (७९६०९)
भूत्वैकाग्रमना विप्र ऊर्ध्वबाहुः समाहितः ।
स्तोत्रं जगौ स विश्वाय निर्गुणाय गुणात्मने ॥१२-३४६-३ (७९६१०)
नारद उवाच।१२-३४६-४क्ष् (६५८०)
१२-३४६-४ (७९६११)
ॐ नमस्ते देवदेवेश निष्क्रिय निर्गुण लोकसाक्षिन् क्षेत्रज्ञ

पुरुषोत्तम अनन्त पुरुष महापुरुष पुरुषोत्तम त्रिगुण
प्रधान अमृत अमृताख्य अनन्ताख्य व्योम अमृतात्मन् सनातन
सदसद्व्यक्ताव्यक्त ऋतधाम आदिदेव वसुप्रद प्रजापते सुप्रजापते
वनस्पते महाप्रजापते ऊर्जस्पते वाचस्पते जगत्पते मनस्पते
दिवस्पते मरुत्पते सलिलपते पृथिवीपते दिक्पते पूर्वनिवास गुह्य
ब्रह्मपुरोहित ब्रह्मकायिक राजिक महाराजिक चातुर्महाराजिक आभासुर
महाभासुर सप्तमहाभाग सप्तमहास्वरयाम्य महायाम्य संज्ञासंज्ञ
क़तुपित महातुषित प्रमर्दन परिनिर्मित अपरिनिर्मित वशवर्तिन्
अपरिनिन्दित अपरिमित वशवर्तिन् अवशवर्तिन् यज्ञ महायज्ञ
असंयज्ञ यज्ञसंभव यज्ञयोने यज्ञगर्भ यज्ञहृदय
यज्ञस्तुत यज्ञभागहर पञ्चयज्ञ पञ्चकालकर्तृपते
पाञ्चरात्रिक वैकुण्ठ अपराजित मानसिक नावमिक नामनामिक परस्वामिन्
सुस्नातहंस परमहंस महाहंस परमज्ञेय हिरण्येशय वेदेशय
देवेशय कुशेशयब्रह्मेशय पद्मेशय विश्वेश्वर विष्वक्सेन त्वं
जगदन्वयस्त्वं जगत्प्रकृतिस्तवाग्निरास्यं वडवामुखोऽग्निस्त्वमाहुतिः
सारथिस्त्वं वषट्कारस्त्वमोंकारस्त्वं तपस्त्वं मनस्त्वं चन्द्रमाः
पूर्णाङ्गस्त्वं चक्षुराज्यम् त्वं सूर्यस्त्वं दिशांगजस्त्वं
दिग्भानो विदिग्भानो हयशिरः प्रथमत्रिसौपर्णो वर्णधरः
पञचाग्ने त्रिणाचिकेत षडङ्गनिधान प्राग्जोतिष ज्येष्ठसामग
सामिकव्रतधराथर्वशिराः पञ्चमहाकल्प फेनपाचार्य
बालखिल्य वैखानसा भग्नयोगा भग्नव्रता भग्नपरिसंख्यान युगादे
युगमध्य युगनिधनाखण्डल प्राचीनगर्भकौशिक पुरुष्टुत पुरुहूत
विश्वकृद्विश्वजिद्विश्वरूपानन्तगतेऽनन्तभोगाऽनन्ताऽनादे-
ऽमध्याऽव्यक्तमध्याऽव्यक्तनिधन
व्रतावास समुद्राधिवास यशोवास तपोवास दमावास लक्ष्म्यावास
विद्यावास कीर्त्यावास श्रीवास सर्वावास वासुदेव सर्वच्छन्दक
हरिहय हरिमेध महायज्ञभागहर वरप्रद सुखप्रद धनप्रद
हरिमेध यम नियम महानियम कृच्छ्राऽतिकृच्छ्रा महाकुच्छ्र
सर्वकृच्छ्र नियमधर निवृत्तभ्रम निवृत्तिधर्मप्रवरगत
प्रवचनगत पृश्निगर्भप्रवृत्त प्रवृत्तवेदक्रियाऽजसर्वगते
सर्वदर्शिनं नग्राह्याऽक्षयाऽचल महाविभूते माहात्म्यशरीर
पवित्र महापवित्र हिरण्यमय बृहदप्रतर्क्याऽविज्ञेय ब्रह्माग्य
प्रजासर्गकर प्रजानिधनकर महामायाधर विद्याधर योगधर
चित्रशिखण्डिन् वरप्रद पुरोडाशभागहर गताध्वरच्छिन्नतृष्ण
च्छिन्नसंशय सर्वतोवृत्त निवृत्तरूप ब्राह्मणरूप
च्छिन्नसंशय सर्वतोवृत्त निवृत्तरूप ब्राह्मणरूप ब्राह्मणप्रिय

विश्वमूर्ते महामूर्ते बान्धव भक्तवत्सल ब्रह्मण्यदेव भक्तोऽहं त्वां दिदृक्षुरेकान्तदर्शनाय नमोनमः ॥

Mahabharata - Shanti Parva - Chapter Footnotes

१२-३४६-२ जप्यपरमः सर्वभूतहिते रत इति ध । पाठः ॥
१२-३४६-३ ऊर्ध्वबाहुर्महामुनिरिति ट । थ। पाठः। महामतिरिति ध। पाठः। निर्गुणाय महात्मन इति ट। थ। ध। पाठः ॥
क़ रुषित- महारुषितेति ध । पाठः ।

---

शन्तिपर्व-अध्यय३४७
॥ श्रीः ॥
१२.३४७. अध्यायः ३४७

Mahabharata - Shanti Parva - Chapter Topics

भीष्मेण युधिष्ठिरंप्रति नारदाय श्वेतद्वीपस्थहर्युक्तस्वकृतसृष्टिप्रकारानुवादः ॥ १. ।

Mahabharata - Shanti Parva - Chapter Text

१२-३४७-० (७९६१२)
भीष्म उवाच। १२-३४७-०क्ष् (६५८१)
एवं स्तुतः स भगवान् गुह्यैस्तथ्यैश्च नामभिः ।
ग्भगवान्विश्वसृक्सिंहः सर्वमूर्तिमयः प्रभुः।ं
दर्शयामास मुनये रूपं तत्परमं हरिः ॥ १२-३४७-१ (७९६१३)
किंचिच्चन्द्राद्विशुद्धात्मा किंचिच्चन्द्राद्विशेषवान् ।
कृशानुवर्णः किंचिच्च किंचिद्धिष्ण्याकृतिः प्रभुः ॥ १२-३४७-२ (७९६१४)
शुकपत्रनिभः किंचित्किंचित्स्फटिकसन्निभः ।
नीलाञ्जनचयप्रख्यो जातरूपप्रभः क्वचित् ॥ १२-३४७-३ (७९६१५)
प्रबालाङ्कुरवर्णश्च श्वेतवर्णस्तथा क्वचित् ।
क्वचित्सुवर्णवर्णाभो वैदूर्यसदृशः क्वचित् ॥ १२-३४७-४ (७९६१६)
नीलवैदूर्यसदृश इन्द्रनीलनिभः क्वचित् ।
मयूरग्रीववर्णाभो मुक्ताहारनिभः क्वचित् ॥ १२-३४७-५ (७९६१७)
एतान्बहुधान्वर्णान्रूपैर्बिभ्रत्सनातनः ।
सहस्रनयनः श्रीमाञ्छतशीर्षः सहस्रपात् ॥ १२-३४७-६ (७९६१८)
सहस्रोदरबाहुश्च अव्यक्त इति च क्वचित् ।
ओंकारमुद्गिरन्वक्रात्सावित्रीं च तदन्वयाम् ॥ १२-३४७-७ (७९६१९)
शेषेभ्यश्चैव वक्रेभ्यश्चतुर्वेदान्गिरन्बहून् ।

आरण्यकं जगौ देवो हरिर्नारायणो वशी ॥ १२-३४७-८ (७९६२०)
वेदिं कमण्डलुं दर्भान्मणिरूपांस्तथा कुशान् ।
अजिनं दण्डकाष्ठं च ज्वलितं च हुताशनम् ।
धारयामास देवेशो हस्तैर्यज्ञपतिस्तदा ॥ १२-३४७-९ (७९६२१)
तं प्रसन्नं प्रसन्नात्मा नारदो द्विजसत्तमः ।
वाग्यतः प्रणतो भूत्वा ववन्दे परमेश्वरम् ॥ १२-३४७-१० (७९६२२)
तमुवाच नतं मूर्ध्ना देवानामादिरव्ययः ॥ १२-३४७-११ (७९६२३)
श्रीभगवानुवाच। १२-३४७-१२क्ष् (६५८२)
एकतश्च द्वितश्चैव त्रितश्चैव महर्षयः ।
इमं देशमनुप्राप्ता मम दर्शनलालसाः ॥ १२-३४७-१२ (७९६२४)
न च मां ते ददृशिरे न च द्रक्ष्यति कश्चन ।
ऋते ह्यैकान्तिकश्रेष्ठात्त्वं चैवैकान्तिकोत्तम ॥ १२-३४७-१३ (७९६२५)
ममैतास्तनवः श्रेष्ठा जाता धर्मगृहे द्विज ।
तास्त्वं भजस्व सततं साधयस्व यथागतम् ॥ १२-३४७-१४ (७९६२६)
वृणीष्व च वरं प्रिय मत्तस्त्वं यदिहेच्छसि ।
प्रसन्नोऽहं तवाद्येह विश्वमूर्तिरिहाव्ययः ॥ १२-३४७-१५ (७९६२७)
नारद उवाच। १२-३४७-१६क्ष् (६५८३)
अद्य मे तपसो देव यमस्य नियमस्य च ।
सद्यः फलमवाप्तं वै दृष्टो यद्भगवान्मया ॥ १२-३४७-१६ (७९६२८)
वर एष ममात्यन्तं दृष्टस्त्वं यत्सनातनः ।
भगवन्विश्वदृक् सिंहः सर्वमूर्तिर्महान्प्रभुः ॥ १२-३४७-१७ (७९६२९)
भीष्म उवाच। १२-३४७-१८क्ष् (६५८४)
एवं संदर्शयित्वा तु नारदं परमेष्ठिजम् ।
उवाच वचनं भूयो गच्छ नारद माचिरम् ॥ १२-३४७-१८ (७९६३०)
इमे ह्यनिन्द्रियाहारा मद्भक्ताश्चन्द्रवर्चसः ।
एकाग्राश्चिन्तयेयुर्मां नैषां विघ्नो भवेदिति ॥ १२-३४७-१९ (७९६३१)
सिद्धा ह्येते महाभागाः पुरा ह्येकान्तिनोऽभवन् ।
तमोरजोभिर्निर्मुक्ता मां प्रवेक्ष्यन्त्यसंशयम् ॥ १२-३४७-२० (७९६३२)
न दृश्यश्चक्षुषा योऽसौ न स्पृश्यः स्पर्शनेन च ।
न घ्रेयश्चैव गन्धेन रसेन च विवर्जितः ॥ १२-३४७-२१ (७९६३३)
सत्वं रजस्तमश्चैव न गुणास्तं भजन्ति वै ।
यश्च सर्वगतः साक्षी लोकस्यात्मेति कथ्यते ॥ १२-३४७-२२ (७९६३४)
भूतग्रामशरीरेषु नश्यत्सु न विनश्यति ।
अजो नित्यः शाश्वतश्च निर्गुणो निष्कलस्तथा ॥ १२-३४७-२३ (७९६३५)
द्विर्द्वादशेभ्यस्तत्त्वेभ्यः ख्यातो यः पञ्चविंशकः ।
पुरुषो निष्क्रियश्चैव ज्ञानदृश्यश्च कथ्यते ॥ १२-३४७-२४ (७९६३६)

यं प्रविश्य भवन्तीह मुक्ता वै द्विजसत्तमाः ।
स वासुदेवो विज्ञेयः परमात्मा सनातनः ॥१२-३४७-२५ (७९६३७)
पश्य देवस्य माहात्म्यं महिमानं च नारद ।
शुभाशुभैः कर्मभिर्यो न लिप्यति कदाचन ॥१२-३४७-२६ (७९६३८)
सत्वं रजस्तमश्चेति गुणानेतान्प्रचक्षते ।
एते सर्वशरीरेषु तिष्ठन्ति विचरन्ति च ॥१२-३४७-२७ (७९६३९)
एतान्गुणांस्तु क्षेत्रज्ञो भुङ्क्ते नैभिः स भुज्यते ।
निर्गुणो गुणभुक्चैव गुणस्रष्टा गुणातिगः ॥१२-३४७-२८ (७९६४०)
जगत्प्रतिष्ठा देवर्षे पृथिव्यप्सु प्रलीयते ।
ज्योतिष्यापः प्रलीयन्ते ज्योतिर्वायौ प्रलीयते ॥१२-३४७-२९ (७९६४१)
खे वायुः प्रलयं याति मनस्याकाशमेव च ।
मनो हि परमं भूतं तदव्यक्ते प्रलीयते ॥१२-३४७-३० (७९६४२)
अव्यक्तं पुरुषे ब्रह्मन्निष्क्रिये संप्रलीयते ।
नास्ति तस्मात्परतरः पुरुषाद्वै सनातनात् ॥१२-३४७-३१ (७९६४३)
नित्यं हि नास्ति जगति भूतं स्थावरजङ्गमम् ।
ऋते तमेकं पुरुषं वासुदेवं सनातनम् ।
सर्वभूतात्मभूतो हि वासुदेवो महाबलः ॥ १२-३४७-३२ (७९६४४)
पृथिवी वायुराकाशमापो ज्योतिश्च पञ्चमम् ।
ते समेता महात्मानः शरीरमिति संज्ञितम् ॥१२-३४७-३३ (७९६४५)
तदाविशति यो ब्रह्मन्न दृश्यो लघुविक्रमः ।
उत्पन्न एव भवति शरीरं चेष्टयन्प्रभुः ॥१२-३४७-३४ (७९६४६)
न विना धातुसंघातं शरीरं भवति क्वचित् ।
न च जीवं विना ब्रह्मन्वायवश्चेष्टयन्त्युत ॥१२-३४७-३५ (७९६४७)
स जीवः परिसंख्यातः शेषः संकर्षणः प्रभुः ।
तस्मात्सनत्कुमारत्वं योऽलभत्स्वेन कर्मणा ॥१२-३४७-३६ (७९६४८)
यस्मिंश्च सर्वभूतानि प्रद्युम्नः परिपद्यते ।
तस्मात्प्रसूतो यः कर्ता कारणं कार्यमेव च ॥१२-३४७-३७ (७९६४९)
तस्मत्सर्वं संभवति जगत्स्थावरजङ्गमम् ।
सोऽनिरुद्धः स ईशानो व्यक्तिः सा सर्वकर्मसु ॥१२-३४७-३८ (७९६५०)
यो वासुदेवो भगवान्क्षेत्रज्ञो निर्गुणात्मकः ।
ज्ञेयः स एव राजेन्द्र जीवः संकर्षणः प्रभुः ॥१२-३४७-३९ (७९६५१)
संकर्षणाच्च प्रद्युम्नो मनोभूतः स उच्यते ।
प्रद्युम्नाद्योऽनिरूद्धस्तु सोहंकारः स ईश्वरः ॥१२-३४७-४० (७९६५२)
मत्तः सर्वं संभवति जगत्स्थावरजङ्गमम् ।
अक्षरं च क्षरं चैव सच्चासच्चैव नारद ॥१२-३४७-४१ (७९६५३)
मां प्रविश्य भवन्तीह मुक्ता भक्तास्तु ये मम ।

अहं हि पुरुषो ज्ञेयो निष्क्रियः पञ्चविंशकः ॥१२-३४७-४२ (७९६५४)
निर्गुणो निष्कलश्चैव निर्द्वन्द्वो निष्परिग्रहः ।
एतत्त्वया न विज्ञेयं रूपवानिति दृश्यते ॥१२-३४७-४३ (७९६५५)
इच्छन्मुहूर्तान्नश्येयमीशोऽहं जगतो गुरुः ।
माया ह्येषा मया सृष्टा यन्मां पश्यसि नारद ॥१२-३४७-४४ (७९६५६)
सर्वभूतगुणैर्युक्तं नैवं त्वं ज्ञातुमर्हसि ।
मयैतत्कथितं सम्यक्तव मूर्तिचतुष्टयम् ॥१२-३४७-४५ (७९६५७)
अहं हि जीवसंज्ञो वै मयि जीवः समाहितः ।
मैवं ते बुद्धिरत्राभूद्दृष्टो जीवो मयेति वै ॥१२-३४७-४६ (७९६५८)
अहं सर्वत्रगो ब्रह्मन्भूतग्रामान्तरात्मकः ।
भूतग्रामशरीरेषु नश्यत्सु न नशाम्यहम् ॥१२-३४७-४७ (७९६५९)
सिद्धा हि ते महाभागा नरा ह्येकान्तिनोऽभवन् ।
तमोरजोभ्यां निर्मुक्ताः प्रवेक्ष्यन्ति च मां मुने ॥१२-३४७-४८ (७९६६०)
ग्अहं कर्ता च कार्यं च कारणं चापि नराद ।
न दृश्यश्चक्षुषा देवः स्पृश्यो न स्पर्शनेन च ।
आघ्रेयो नैव गन्धेन रसेन च विसर्जितः ॥ १२-३४७-४९ (७९६६१)
सत्वं रजस्तमश्चैव न गुणास्ते भवन्ति हि ।
स हि सर्वगतः साक्षी लोकस्यात्मेति कथ्यते ॥' १२-३४७-५० (७९६६२)
हिरण्यगर्भो लोकादिश्चतुर्वक्रोऽनिरुक्तगः ।
ब्रह्मा सनातनो देवो मम बह्वर्थचिन्तकः ॥१२-३४७-५१ (७९६६३)
ललाटाच्चैव मे रुद्रो देवः क्रोधाद्विनिःसृतः ।
पश्यैकादश मे रुद्रान्दक्षिणं पार्श्वमास्थितान् ॥१२-३४७-५२ (७९६६४)
द्वादशैव तथाऽऽदित्यान्वामपार्श्वे समास्थितान् ।
अग्रतश्चैव मे पश्य वसूनष्टौ सुरोत्तमान् ॥१२-३४७-५३ (७९६६५)
नासत्यं चैव दस्रं च भिषजौ पश्य पृष्ठतः ।
सर्वान्प्रजापतीन्पश्य पश्य सप्तऋर्षीस्तथा ॥१२-३४७-५४ (७९६६६)
वेदान्यज्ञांश्च शतशः पश्यामृतमथौषधीः ।
तपांसि नियमांश्चैव यमानपि पृथग्विधान् ॥१२-३४७-५५ (७९६६७)
तथाऽष्टगुणमैश्वर्यमेकस्थं पश्य मूर्तिमत् ।
श्रियं लक्ष्मीं च कीर्तिं च पृथिवीं च ककुद्मिनी ॥१२-३४७-५६ (७९६६८)
वेदानां मातरं पश्य मत्स्थां देवीं सरस्वतीम् ।
ध्रुवं च ज्योतिषां श्रेष्ठं पश्य नारद खेचरम् ॥१२-३४७-५७ (७९६६९)
अम्भोधरान्समुद्रांश्च सरांसि सरितस्तथा ।
मूर्तिमन्तः पितृगणांश्चतुरः पश्य सत्तम ॥१२-३४७-५८ (७९६७०)
त्रींश्चैवेमान्गुणान्पश्य मत्स्थान्मूर्तिविवर्जितान् ।
देवकार्यादपि मुने पितृकार्यं विशिष्यते ॥१२-३४७-५९ (७९६७१)

देवानां च पितृणां च पिता ह्येकोऽहमादितः ।
अहं हयशिरा भूत्वा समुद्रे पश्चिमोत्तरे ॥ १२-३४७-६० (७९६७२)
पिबामि सुहुतं हव्यं कव्यं च श्रद्धयाऽन्वितम् ।
मया सृष्टः पुरा ब्रह्मा मां यज्ञमयजत्स्वयम् ॥ १२-३४७-६१ (७९६७३)
ततस्तस्मै वरान्प्रीतो दत्तवानस्म्यनुत्तमान् ।
मत्पुत्रत्वं च कल्पादौ लोकाध्यक्षत्वमेव च ॥ १२-३४७-६२ (७९६७४)
अहंकारकृतं चैव नामपर्यायवाचकम् ।
त्वया कृतां च मर्यादां नातिक्रंस्यति कश्चन ॥ १२-३४७-६३ (७९६७५)
त्वं चैव वरदो ब्रह्मन्वरेप्सूनां भविष्यसि ।
सुरासुरगणानां च ऋषीणां च तपोधन ॥ १२-३४७-६४ (७९६७६)
पितृणां च महाभाग सततं संशितव्रत ।
विविधानां च भूतानां त्वमुपास्यो भविष्यसि ॥ १२-३४७-६५ (७९६७७)
प्रादुर्भावगतश्चाहं सुरकार्येषु नित्यदा ।
अनुशास्यस्त्वया ब्रह्मन्नियोज्यश्च सुतो यथा ॥ १२-३४७-६६ (७९६७८)
एतांश्चान्यांश्च रुचिरान्ब्रह्मणेऽमिततेजसे ।
ग्एवं रुद्राय मनवे इन्द्रायामिततेजसे।'
अहं दत्त्वा वरान्प्रीतो निवृत्तिपरमोऽभवम् ॥ १२-३४७-६७ (७९६७९)
निर्वाणं सर्वधर्माणां निवृत्तिः परमा स्मृता ।
तस्मान्निवृत्तिमापन्नश्चरेत्सर्वाङ्गनिर्वृतः ॥ १२-३४७-६८ (७९६८०)
विद्यासहायवन्तं मामादित्यस्थं सनातनम् ।
कपिलं प्राहुराचार्याः साङ्ख्यनिश्चितनिश्चयाः ॥ १२-३४७-६९ (७९६८१)
हिरण्यगर्भो भगवानेष च्छन्दसि संस्तुतः ।
सोहं योगगतिर्ब्रह्मन्योगशास्त्रेषु शब्दितः ॥ १२-३४७-७० (७९६८२)
एषोऽहं व्यक्तिमाश्रित्य तिष्ठामि दिवि शाश्वतः ।
ततो युगसहस्रान्ते संहरिष्ये जगत्पुनः ॥ १२-३४७-७१ (७९६८३)
कृत्वाऽऽत्मस्थानि भूतानि स्थावराणि चराणि च ।
एकाकी विद्यया सार्धं विहरिष्ये जगत्पुनः ॥ १२-३४७-७२ (७९६८४)
ततो भूयो जगत्सर्वं करिष्यामीह विद्यया ।
अस्मिन्मूर्तिश्चतुर्थी या साऽसृजच्छेषमव्ययम् ॥ १२-३४७-७३ (७९६८५)
स हि संकर्षणः प्रोक्तः प्रद्युम्नः सोप्यजीजनत् ।
प्रद्युम्नादनिरुद्धोऽहं सर्गो मम पुनः पुनः ॥ १२-३४७-७४ (७९६८६)
अनिरुद्धात्तथा ब्रह्मा तन्नाभिकमलोद्भवः ।
ब्रह्मणः सर्वभूतानि चराणि स्थावराणि च ॥ १२-३४७-७५ (७९६८७)
एतां सृष्टिं विजानीहि कल्पादिषु पुनः पुनः ।
यथा सूर्यस्य गगनादुदयास्तमने इह ।
नष्टे पुनर्बलात्काल आनयत्यमितद्युते ॥ ॥ १२-३४७-७६ (७९६८८)

इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि नारायणीये सप्तचत्वारिंशदधिकत्रिशततमोऽध्यायः ॥ ३४७.।

Mahabharata - Shanti Parva - Chapter Footnotes

१२-३४७-१ स्तब्यैश्च नामभिरिति थ ।पाठः।तं मुनिं दर्शयामासनारदं विश्वरूपधृदिति झ।ध।पाठः ॥
१२-३४७-७ गायत्रीं च तदन्वयामिति ध ।पाठः ॥
१२-३४७-९ वेदिं कमण्डलुं शुभ्रान्मणीनुपानहौ कुशानिति झ ।पाठः ॥
१२-३४७-१३ ददृशिरे ददृशुः ॥
१२-३४७-१९ मद्भक्ताः सूर्यवर्चस इति ध ।पाठः ॥
१२-३४७-२२ न गुणाः संभवन्ति हीति ध ।पाठः ॥
१२-३४७-३५ शरीरं चेन्द्रियाणि चेति ध ।पाठः ॥
१२-३४७-३७ मानसः सर्वभूतानामिति ध ।पाठः ॥
१२-३४७-३८ व्यक्तः सर्वेषु कर्मस्विति ट ।पाठः ॥
१२-३४७-४२ मां प्रविश्य भजन्तीहेति ध ।पाठः ॥
१२-३४७-५३ वसूनष्टौ समाश्रितानिति थ ।पाठः ॥
१२-३४७-५५ वेदान्यज्ञान्पशूंश्चैव स्रुक्च दर्भमहौषधीरिति थ ।पाठः ॥
१२-३४७-५७ ब्रह्मण्यं ज्योतिषां श्रेष्ठमिति ध ।पाठः ॥
१२-३४७-६१ ब्रह्मा मद्यज्ञमयजत्स्वजिति ट ।ध।पाठः ॥
१२-३४७-६८ तस्मिन्निवृत्तिमापन्ने चरेत्सर्वत्र विष्ठित इति ध ।पाठः।चरेत्सर्वत्र निस्स्पृह इति ट।पाठः ॥
१२-३४७-७० हिरण्यगर्भो भगवान्विश्वयोनिः सनातन इति ट ।पाठः ॥
१२-३४७-७१ तिष्ठाममि भुवि शाश्वत इति थ ।पाठः ॥
१२-३४७-७५ तत्रादिकमलोद्भवः इति ध ।पाठः ॥

---

शन्तिपर्व-अध्यय३४८

॥ श्रीः ॥

१२.३४८. अध्यायः ३४८

Mahabharata - Shanti Parva - Chapter Topics

श्वेतद्वीपस्थेन हरिणा नारदंप्रति स्वदशावतारचरित्रकथनम् ॥१.।

Mahabharata - Shanti Parva - Chapter Text

१२-३४८-० (७९६८९)

भीष्म उवाच।१२-३४८-०क्ष् (६५८५)

नारदः परिप्रपच्छ भगवन्तं जनार्दनम् ।
एकार्णवे महाघोरे नष्टे स्थावरजङ्गमे। १२-३४८-१ (७९६९०)
श्रीभगवानुवाच।१२-३४८-२क्ष् (६५८६)
शृणु नारद तत्वेन प्रादुर्भावान्महामुने ।
मत्स्यः कूर्मो वराहश्च नरसिंहोऽथ वामनः ।
रामो रामश्च रामश्च बुद्धः कल्कीति ते दश ॥ १२-३४८-२ (७९६९१)
पूर्वं मीनो भविष्यामि स्थापयिष्याम्यहं प्रजाः ।
लोकान्वै धारयिष्यामि मज्जमानान्महार्णवे ॥१२-३४८-३ (७९६९२)
द्वितीयः कूर्मरूपो मे हेमकूटनिभः स्मृतः ।
मन्दरं धारयिष्यामि अमृतार्थं द्विजोत्तम ॥१२-३४८-४ (७९६९३)
मग्नां महार्णवे घोरे भाराक्रान्तां भुवं पुनः ।
ततो बलादहं विद्वन्सर्वभूतहिताय वै ॥' १२-३४८-५ (७९६९४)
सत्वैराक्रान्तसर्वाङ्गां नष्टां सागरमेखलाम् ।
आनयिष्यामि स्वं स्थानं वाराहं रूपमास्थितः ।
हिरण्याक्षं हनिष्यामि दैतेयं बलगर्वितम् ॥ १२-३४८-६ (७९६९५)
नारसिंहं वपुः कृत्वा हिरण्यकशिपुं पुनः ।
सुरकार्ये हनिष्यामि यज्ञघ्नं दितिनन्दनम् ॥१२-३४८-७ (७९६९६)
विरोचनस्य बलवान्बलिः पुत्रो महासुरः ।
अवध्यः सर्वलोकानां सदेवासुररक्षसाम् ।
भविष्यति स शक्रं च स्वराज्याच्च्यावयिष्यति ॥ १२-३४८-८ (७९६९७)
त्रैलोक्येऽपहृते तेन विमुखे च शचीपतौ ।
अदित्यां द्वादशः पुत्रः संभविष्यामि कश्यपान् ॥१२-३४८-९ (७९६९८)
ग्वटुर्गत्वा यज्ञसदः स्तूयमानो द्विजोत्तमैः ।
यज्ञस्तुतिं करिष्यामि श्रुत्वा प्रीतो भवेद्बलिः ॥१२-३४८-१० (७९६९९)
किमिच्छसि वटो ब्रूहीत्युक्तो याचे महद्वरम् ।
दीयतां त्रिपदीमात्रमिति याचे महाऽऽसुरम् ॥१२-३४८-११ (७९७००)
स दद्यान्मयि संप्रीतः प्रतिषिद्धश्च मन्त्रिभिः ।
यावज्जलं हस्तगतं त्रिभिर्विक्रमणैर्युतम् ॥' १२-३४८-१२ (७९७०१)
ततो राज्यं प्रदास्यामि शक्रायामिततेजसे ।
देवताः स्थापयिष्यामि स्वस्वस्थानेषु नारद ॥१२-३४८-१३ (७९७०२)
बलिं चैव करिष्यामि पातालतलवासिनम् ।
दानवं च बलिश्रेष्ठमबध्यं सर्वदैवतैः ॥१२-३४८-१४ (७९७०३)
त्रेतायुगे भविष्यामि रामो भृगुकुलोद्वहः ।
क्षत्रं चोत्सादयिष्यामि समृद्धबलवाहनम् ॥१२-३४८-१५ (७९७०४)
संधौ तु समनुप्राप्ते त्रेतायां द्वापरस्य च ।
रामो दाशरथिर्भूत्वा भविष्यामि जगत्पतिः ॥१२-३४८-१६ (७९७०५)

त्रितोपघाताद्वैरूप्यमेकतोऽथ द्वितस्तथा ।
प्राप्स्येते वानरत्वं हि प्रजापतिसुतावृषी ॥ १२-३४८-१७ (७९७०६)
तयोर्ये त्वन्वये जाता भविष्यन्ति वनौकसः ।
महाबला महावीर्याः शक्रतुल्यपराक्रमाः। १२-३४८-१८ (७९७०७)
ते सहाया भविष्यन्ति सुरकार्ये मम द्विज ॥
ततो रक्षःपतिं घोरं पुलस्त्यकुलपांसनम् ।
हनिष्ये रावणं रौद्रं सगणं लोककण्टकम् ॥ १२-३४८-१९ (७९७०८)
ग विभीषणाय दास्यामि राज्यं तस्य यथाक्रमम्
अयोध्यावासिनः सर्वान्नेष्येऽहं लोकमव्ययम् ॥' १२-३४८-२० (७९७०९)
द्वापरस्य कलेश्चैव संधौ पार्यवसानिके ।
प्रादुर्भावः कंसहेतोर्मथुरायां भविष्यति ॥ १२-३४८-२१ (७९७१०)
तत्राहं दानवान्हत्वा सुबहून्देवकण्टकान् ।
कुशस्थलीं करिष्यासि निवासं द्वारकां पुरीम् ॥ १२-३४८-२२ (७९७११)
वसानस्तत्र वै पुर्यामदितेर्विप्रियंकरम् ।
हनिष्ये नरकं भौमं मुरं पीठं च दानवम् ॥ १२-३४८-२३ (७९७१२)
प्राग्ज्योतिषं पुरं रम्यं नानाधनसमन्वितम् ।
कुशस्थलीं नष्यिष्यामि हत्वा वै दानवोत्तमान् ॥ १२-३४८-२४ (७९७१३)
गकृकलास भूतं च नृगं मोचयिष्ये च वै पुनः ॥ १२-३४८-२५ (७९७१४)
तत्र पौत्रनिमित्तेन गत्वा वै शोणितं पुरम् ।
वाणस्य च पुरं गत्वा करिष्ये कदनं महत् ॥' १२-३४८-२६ (७९७१५)
शंकरं रमहासेनं बाणप्रियहिते रतम् ।
पराजेष्याम्यथोद्युक्तौ देवौ लोकनमस्कृतौ ॥ १२-३४८-२७ (७९७१६)
ततः सुतं बलेर्जित्वा बाणं बाहुसहस्त्रिणम् ।
विनाशयिष्यामि ततः सर्वान्सौभनिवासिनः ॥ १२-३४८-२८ (७९७१७)
यः कालयवनः ख्यातो गर्गतेजोभिसंवृतः ।
भविष्यति वधस्तस्य मत्त एव द्विजोत्तम ॥ १२-३४८-२९ (७९७१८)
गकंसं केशिं तथाक्रूरमरिष्टं च महासुरम् ।
चाणूरं च महावीर्यं मुष्टिकं च महाबलम् ॥ १२-३४८-३० (७९७१९)
प्रलम्बं धेनुकं चैव अरिष्टं वृषरूपिणम् ।
कालीयं च वशे कृत्वा यमुनाया महाह्रदे ॥ १२-३४८-३१ (७९७२०)
गोकुलेषु ततः पश्चाद्गवार्थे तु महागिरिम् ।
सप्तरात्रं धरिष्यामि वर्षमाणे तु वासवे ॥ १२-३४८-३२ (७९७२१)
अपक्रान्ते ततो वर्षे गिरिमूर्ध्नि व्यवस्थितः ।
इन्द्रेण सह संवादं करिष्यामि तदा द्विज ।
लघ्वाच्छिद्य धनं सर्वं वासुदेवं च पौण्ड्रकम् ॥' १२-३४८-३३ (७९७२२)
जरासन्धश्च बलवान्सर्वराजविरोधनः

भविष्यत्यसुरः स्फीतो भूमिपालो गिरिव्रजे ॥ १२-३४८-३४ (७९७२३)
मम बुद्धिपरिस्पन्दाद्वधस्तस्य भविष्यति ।
शिशुपालं वधिष्यामि यज्ञे धर्मसुतस्य वै ॥ १२-३४८-३५ (७९७२४)
ग्दुर्योधनापराधेन युधिष्ठिरगुणेन च।'
समागतेषु बलिषु पृथिव्यां सर्वराजसु ॥ १२-३४८-३६ (७९७२५)
वासविः सुसहायो वै मम त्वेको भविष्यति ।
युधिष्ठिरं स्थापयिष्ये स्वराज्ये भ्रातृभिः सह ॥ १२-३४८-३७ (७९७२६)
एवं लोका वदिष्यन्ति नरनारायणावृषी ।
उद्युक्तौ दहतः क्षत्रं लोककार्यार्थमीश्वरौ ॥ १२-३४८-३८ (७९७२७)
ग्शस्त्रैर्निपतिताः सर्वे नृपा यास्यन्ति वै दिवम् ॥' १२-३४८-३९ (७९७२८)
कृत्वा भारावतरणं वसुधाया यथेप्सितम् ।
सर्वसात्वतमुख्यानां द्वारकायाश्च सत्तम ॥ १२-३४८-४० (७९७२९)
करिष्ये प्रलयं घोरमात्मज्ञानाभिसंश्रयः ।
ग्द्वारकामात्मसात्कृत्वा समुद्रं गमयाम्यहम् ॥ १२-३४८-४१ (७९७३०)
ततः कलियुगस्यादौ द्विजराजतरुं श्रितः ।
भीषया मागधेनैव धर्मराजगृहे वसन् ॥ १२-३४८-४२ (७९७३१)
काषायवस्त्रसंवीतो मुण्डितः शुक्लदन्तवान् ।
शुद्धोदनसुतो बुद्धो मोहयिष्यामि मानवान् ॥ १२-३४८-४३ (७९७३२)
शूद्राः सुद्धेषु भुज्यन्ते मयि बुद्धत्वमागते ।
भविष्यन्ति नराः सर्वे बुद्धाः काषायसंवृताः ॥ १२-३४८-४४ (७९७३३)
अनध्याया भविष्यन्ति विप्रा यागविवर्जिताः ।
अग्निहोत्राणि सीदन्ति गुरुपूजा च नश्यति ॥ १२-३४८-४५ (७९७३४)
न शृण्वन्ति पितुः पुत्रा न स्नुषा नैव भ्रातरः ।
न पौत्रा न कलत्रा वा वर्तन्तेऽप्यधमोत्तमाः ॥ १२-३४८-४६ (७९७३५)
एवंभूतं जगत्सर्वं श्रुतिस्मृतिविवर्जितम् ।
भविष्यति कलौ पूर्णे ह्यशुद्धो धर्मसंकरः ॥ १२-३४८-४७ (७९७३६)
तेषां सकाशाद्धर्मज्ञा देवब्रह्मविदो नराः ।
भविष्यन्ति ह्यशुद्धाश्च न्यायच्छलविभाषिणः ॥ १२-३४८-४८ (७९७३७)
ये नष्टधर्मश्रोतारस्ते समाः पापनिश्चये ।
तस्मादेता न संभाष्या न स्पृश्या च हितार्थिभिः ।
उपवासत्रयं कुर्यात्तत्संसर्गविशुद्धये ॥ १२-३४८-४९ (७९७३८)
ततः कलियुगस्यान्ते ब्राह्मणो हरिपिङ्गलः ।
कल्किर्विष्णुयशः पुत्रो याज्ञवल्क्यः पुरोहितः ॥ १२-३४८-५० (७९७३९)
तस्मिन्नाशे वनग्रामे तिष्ठेत्सोन्नासिमो हयः ।
सहया ब्राह्मणाः सर्वे तैरहं सहितः पुनः ।
म्लेच्छानुत्सादयिष्यामि पाषण्डांश्चैव सर्वशः ॥ १२-३४८-५१ (७९७४०)

पाषण्डश्च कलौ तत्र माययैव विनश्यते ।
पाषण्डकांश्चैव हत्वा तत्रान्तं प्रलये ह्यहम् ॥१२-३४८-५२ (७९७४१)
ततः पश्चाद्भविष्यामि यज्ञेषु निरतः सदा ।
राज्यं प्रशासति पुनः कुन्तीपुत्र युधिष्ठिरे ॥' १२-३४८-५३ (७९७४२)
कर्माण्यपरिमेयानि चतुर्मूर्तिधरो ह्यहम् ।
कृत्वा लोकान्गमिष्यामि स्वानहं ब्रह्मसत्कृतान् ॥१२-३४८-५४ (७९७४३)
हंसः कूर्मश्च मत्स्यश्च प्रादुर्भावा द्विजोत्तम ।
वराहो नरसिंहश्च वामनो राम एव च ।
रामो दाशरथिश्चैव सात्वतः कल्किरेव च ॥ १२-३४८-५५ (७९७४४)
यदा वेदश्रुतिर्नष्टा मया प्रत्याहृता पुनः ।
सर्वदाः सश्रुतीकाश्च कृताः पूर्वं कृते युगे ॥१२-३४८-५६ (७९७४५)
अतिक्रान्ताः पुराणेषु श्रुतास्ते यदि वा क्वचित् ।
अतिक्रान्ताश्च बहवः प्रादुर्भावा ममोत्तमाः ॥१२-३४८-५७ (७९७४६)
लोककार्याणि कृत्वा च पुनः स्वां प्रकृतिं गताः ।
न ह्येतद्ब्रह्मणा प्राप्तमीदृशं मम दर्शनम् ॥१२-३४८-५८ (७९७४७)
यत्त्वया प्राप्तमद्येह एकान्तगतबुद्धिना ।
एतत्ते सर्वमाख्यातं ब्रह्मन्भक्तिमतो मया ।
पुराणं च भविष्यं च सरहस्यं च सत्तम ॥ १२-३४८-५९ (७९७४८)
भीष्म उवाच।१२-३४८-६०क्ष् (६५८७)
एवं स भगवान्देवो विश्वमूर्तिधरोऽव्ययः ।
एतावदुक्त्वा वचनं तत्रैवान्तर्दधे पुनः ॥१२-३४८-६० (७९७४९)
नारदोऽपि महातेजाः प्राप्यानुग्रहमीप्सितम् ।
नरनारायणौ द्रष्टुं बदर्याश्रममाद्रवत् ॥१२-३४८-६१ (७९७५०)
इदं महोपनिषदं चतुर्वेदसमन्वितम् ।
सांख्ययोगकृतं तेन पञ्चरात्रानुशब्दितम् ॥१२-३४८-६२ (७९७५१)
नारायंणमुखोदीतं नारदोऽश्रावयत्पुनः ।
ब्रह्मणः सदने तात यथादृष्टं यथाश्रुतम् ॥१२-३४८-६३ (७९७५२)
युधिष्ठिर उवाच।१२-३४८-६४क्ष् (६५८८)
एतदाश्चर्यभूतं हि माहात्म्यं तस्य धीमतः ।
किं वै ब्रह्मा न जानीते यतः शुश्राव नारदात् ॥१२-३४८-६४ (७९७५३)
पितामहोऽपि भगवांस्तस्माद्देवादनन्तरः ।
कथं स न विजानीयात्प्रभावममितौजसः ॥१२-३४८-६५ (७९७५४)
भीष्म उवाच।१२-३४८-६६क्ष् (६५८९)
महाकल्पसहस्राणि महाकल्पशतानि च ।
समतीतानि राजेन्द्र सर्गाश्च प्रलयाश्च ह ॥१२-३४८-६६ (७९७५५)
सर्गस्यादौ स्मृतो ब्रह्मा प्रजासर्गकरः प्रभुः ।

जानाति देवप्रवरं भूयश्चातोधिकं नृप ।
परमात्मानमीशानमात्मनः प्रभवं तथा ॥ १२-३४८-६७ (७९७५६)
ये त्वन्ये ब्रह्मसदने सिद्धसङ्घाः समागताः ।
तेभ्यस्तच्छ्रावयामास पुराणं वेदसंमितम् ॥१२-३४८-६८ (७९७५७)
अष्टाविंशत्सहस्राणि ऋषीणां भावितात्मनाम् ।
आत्मानुगामिनां ब्रह्मा श्रावयामास तत्वतः ।
एवं पुरा प्राप्तमिदं भानुना मुनिभाषितम् ॥ १२-३४८-६९ (७९७५८)
वर्षषष्टिसहस्राणि षष्टिवर्षशतानि च ।
सूर्यस्य तपतो लोकान्निर्मिता ये पुरःसराः ।
तेषामकथयत्सूर्यः सर्वेषां भावितात्मनाम् ॥ १२-३४८-७० (७९७५९)
सूर्यानुगामिभिस्तात ऋषिभिस्तैर्महात्मभिः ।
मेरौ समागता देवाः श्राविताश्चेदनुत्तमम् ॥१२-३४८-७१ (७९७६०)
देवानां तु सकाशाद्वै ततः श्रुत्वाऽसितो द्विजः ।
श्रावयामास राजेन्द्र पितॄन्वै मुनिसत्तमः ॥१२-३४८-७२ (७९७६१)
मम चापि पिता तात कथयामास शंतनुः ।
ततो मयापि श्रुत्वा च कीर्तितं तव भारत ॥१२-३४८-७३ (७९७६२)
सुरैर्वा मुनिभिर्वापि पुराणं यैरिदं श्रुतम् ।
सर्वे ते परमात्मानं पूजयन्ते समन्ततः ॥१२-३४८-७४ (७९७६३)
इदमाख्यानमार्षेयं पारम्पर्यागतं नृप ।
नावासुदेवभक्ताय त्वया देयं कथंचन ॥१२-३४८-७५ (७९७६४)
ग्आख्यानमुत्तमं चेदं श्रावयेद्यः सदा नृप ।
तदैव मनुजो भक्तः शुचिर्भूत्वा समाहितः ।
प्राप्नुयादचिराद्राजन्विष्णुलोकं च शाश्वतम् ॥' १२-३४८-७६ (७९७६५)
मत्तोन्यानि च ते राजन्नुपाख्यानशतानि वै ।
यानि श्रुतानि सर्वाणि तेषां सारोयमुद्धृतः ॥१२-३४८-७७ (७९७६६)
सुरासुरैर्यथा राजन्निर्मथ्यामृतमुद्धृतम् ।
एवमेतत्पुरा विप्रैः कथामृतमिहोद्धृतम् ॥१२-३४८-७८ (७९७६७)
यश्चेदं पठते नित्यं यश्चेदं शृणुयान्नरः ।
एकान्तभावोपगत एकान्ते सुसमाहितः ॥१२-३४८-७९ (७९७६८)
प्राप्य श्वेतं महाद्वीपं भूत्वा चन्द्रप्रभो नरः ।
स सहस्रार्चिपं देवं प्रविशेन्नात्र संशयः ॥१२-३४८-८० (७९७६९)
मुच्येदार्तस्तथा रोगाच्छ्रुत्वेमामादितः कथाम् ।
जिज्ञासुर्लभते कामान्भक्तो भक्तगतिं व्रजेत् ॥१२-३४८-८१ (७९७७०)
त्वयापि सततं राजन्नभ्यर्च्यः पुरुषोत्तमः ।
स हि माता पिता चैव कृत्स्नस्य जगतो गुरुः ॥१२-३४८-८२ (७९७७१)
ब्रह्मण्यदेवो भगवान्प्रीयतां ते सनातनः ।

युधिष्ठिर महाबाहो महाबुद्धिर्जनार्दनः ॥ १२-३४८-८३ (७९७७२)
वैशंपायन उवाच। १२-३४८-८४क्ष् (६५९०)
श्रुत्वैतदाख्यानवरं धर्मराड्जनमेजय ।
भ्रातरश्चास्य ते सर्वे नारायणपराभवन् ॥ १२-३४८-८४ (७९७७३)
जितं भगवता तेन पुरुषेणेति भारत ।
नित्यं जप्यपरा भूत्वा सारस्वतमुदीरयन् ॥ १२-३४८-८५ (७९७७४)
यो ह्यस्माकं गुरुः श्रेष्ठः कृष्णद्वैपायनो मुनिः ।
जगौ परमकं जप्यं नारायणमुदीरयन् ॥ १२-३४८-८६ (७९७७५)
गत्वान्तरिक्षात्सततं क्षीरोदममृताशयम् ।
पूजयित्वा च देवेशं पुनरायात्स्वगाश्रमम् ॥ १२-३४८-८७ (७९७७६)
भीष्म उवाच। १२-३४८-८८क्ष् (६५९१)
एतत्ते सर्वमाख्यातं नारदोक्तं मयेरितम् ।
पारम्पर्यागतं ह्येतत्पित्रा मे कथितं पुरा ॥ १२-३४८-८८ (७९७७७)
सौतिरुवाच। १२-३४८-८९क्ष् (६५९२)
एतत्ते सर्वमाख्यातं वैशंपायनकीर्तितम् ।
जनमेजयेन तच्छ्रुत्वा कृतं सम्यग्यथाविधि ॥ १२-३४८-८९ (७९७७८)
यूयं हि तप्ततपसः सर्वे च चरितव्रताः ।
शौनकस्य महासत्रं प्राप्ताः सर्वे द्विजोत्तमाः। १२-३४८-९० (७९७७९)
यजध्वं सुहुतैर्यज्ञैः शाश्वतं परमेश्वरम् ।
पारम्पर्यागतं ह्येतत्पित्रा मे कथितं पुरा ॥ ॥ १२-३४८-९१ (७९७८०)

इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि नारायणीये
अष्टचत्वारिंशदधिकत्रिशततमोऽध्यायः ॥ ३४८.।
Mahabharata - Shanti Parva - Chapter Footnotes

१२-३४८-२ रामश्च कृष्णः कल्की च ते दशेति थ ।पाठः ॥
१२-३४८-६ यज्ञघ्नं बलगर्वितमिति ध ।पाठः ॥
१२-३४८-९ अदित्यां द्वादशादित्य इति झ ।पाठः ॥
१२-३४८-१५ ततः कृतयुगे प्राप्ते द्वात्रिंशद्युगपर्यये ।भविष्यामि
ऋषिस्तत्र जमदग्निकुलोद्भवः। इति ध। पाठः ॥
१२-३४८-१९ रावणं दृप्तं सर्वलोकैककण्टकमिति ट ।पाठः ॥
१२-३४८-२१ द्वपारस्य कलेश्चैव अष्टाविंशच्चतुर्युगे
।प्रादुर्भावं करिष्यामि भूयो वृष्णिकुलोद्भवः। मधुरायां
कंसहेतोर्वासुदेवेति नामतः। तृतीयो राम इत्येव वसुदेवसुतो बलीति
थ। ध। पाठः। कलेश्चैव अष्टाविंशच्चतुर्युगे इति ध। पाठः ॥
१२-३४८-५८ ईदृशं ब्रह्मदर्शनमिति ध ।पाठः ॥

शन्तिपर्व-अध्यय३४९
॥ श्रीः ॥
१२.३४९. अध्यायः ३४९

Mahabharata - Shanti Parva - Chapter Topics
श्रीहरेर्यज्ञेष्वग्रभागभाक्त्वप्रकारं पृष्टेन सौतिना
तत्कथनाय शौनकादीन्प्रति ब्रह्मादीनां श्वेतद्वीपगमनादिप्रतिपादक
व्यासवैशंपायनादिसंवादानुवादः ॥ १.।
Mahabharata - Shanti Parva - Chapter Text

१२-३४९-० (७९७८१)
शौकन उवाच। १२-३४९-०क्ष् (६५९३)
कथं स भगवान्देवो यज्ञेष्वग्रहरः प्रभुः ।
यज्ञधारी च सततं वेदवेदाङ्गवित्तथा ॥ १२-३४९-१ (७९७८२)
निवृत्तं चास्थितो धर्मं क्षेमी भागवतः प्रभुः ।
निवृत्तिधर्मान्विदधे स एव भगवान्प्रभुः ॥ १२-३४९-२ (७९७८३)
कथं प्रवृत्तिधर्मेषु भागार्हा देवताः कृताः ।
कथं निवृत्तिधर्माश्च कृता व्यावृत्तबुद्धयः ॥ १२-३४९-३ (७९७८४)
एतं नः संशयं सौते छिन्धि गुह्यं सनातनम् ।
त्वया नारायणकथाः श्रुता वै धर्मसंहिताः ॥ १२-३४९-४ (७९७८५)
सौतिरुवाच। १२-३४९-५क्ष् (६५९४)
जनमेजयेन यत्पृष्टः शिष्यो व्यासस्य धीमतः ।
तत्तेऽहं कथयिष्यामि पौराणं शौनकोत्तम ॥ १२-३४९-५ (७९७८६)
श्रुत्वा माहात्म्यमेतस्य देहिनां परमात्मनः ।
जनमेजयो महाप्राज्ञो वैशंपायनमब्रवीत् ॥ १२-३४९-६ (७९७८७)
इमे सब्रह्मका लोकाः ससुरासुरमानवाः ।
क्रियास्वभ्युदयोक्तासु सक्ता दृश्यन्ति सर्वशः ॥ १२-३४९-७ (७९७८८)
मोक्षश्चोक्तस्त्वया ब्रह्मन्निर्वाणं परमं सुखम् ।
ये तु मुक्ता भवन्तीह पुण्यपापविवर्जिताः ।
ते सहस्रार्चिषं देवं प्रविशन्तीह शुश्रुम् ॥ १२-३४९-८ (७९७८९)
अयं हि दुरनुष्ठेयो मोक्षधर्मः सनातनः ।
यं हित्वा देवताः सर्वा हव्यकव्यभुजोऽभवन् ॥ १२-३४९-९ (७९७९०)
किंच ब्रह्मा च रुद्रश्च बलभित्प्रभुः ।
सूर्यस्ताराधिपो वायुरग्निर्वरुण एव च ॥ १२-३४९-१० (७९७९१)
आकाशं जगती चैव ये च शेषा दिवौकसः ।

प्रलयं न विजानन्ति आत्मनः परिनिर्मितम् ॥१२-३४९-११ (७९७९२)
ततस्तेनास्थिता मार्गं ध्रुवमक्षरमव्ययम् ।
स्मृत्वा कालपरीमाणं प्रवृत्तिं ये समास्थिताः ।
दोषः कालपरीमाणो महानेष क्रियावताम् ॥ १२-३४९-१२ (७९७९३)
एतन्मे संशयं विप्र हृदि शल्यमिवार्पितम् ।
छिन्धीतिहासकथनात्परं कौतूहलं हि मे ॥१२-३४९-१३ (७९७९४)
कथं भागहराः प्रोक्ता देवताः क्रतुषु द्विज ।
किमर्थं चाध्वरे ब्रह्मन्निज्यन्ते त्रिदिवौकसः ॥१२-३४९-१४ (७९७९५)
ये च भागं प्रगृह्णन्ति यज्ञेषु द्विजसत्तम ।
ते यजन्तो महायज्ञैः कस्य भागं ददन्ति वै ॥१२-३४९-१५ (७९७९६)
वैशंपायन उवाच।१२-३४९-१६क्ष् (६५९५)
अहो गूढतमः प्रश्नस्त्वया पृष्टो जनेश्वर ।
नातप्ततपसा ह्येष नावेदविदुषा तथा ।
नापुराणविदा चैव शक्यो व्याहर्तुमञ्जसा ॥ १२-३४९-१६ (७९७९७)
हन्त ते कथयिष्यामि यन्मे पृष्टः पुरा गुरुः ।
कृष्णद्वैपायनो व्यासो वेदव्यासो महानृषिः ॥१२-३४९-१७ (७९७९८)
सुमन्तुर्जैमिनिश्चैव पैलश्च सुदृढव्रतः ।
अहं चतुर्थः शिष्यो वै पञ्चमश्च शुकः स्मृतः ॥१२-३४९-१८
(७९७९९)
एतान्समागतान्सर्वान्पञ्च शिष्यान्दमान्वितान् ।
शौचाचारसमायुक्ताञ्जितक्रोधाञ्जितेन्द्रियान् ॥१२-३४९-१९ (७९८००)
वेदानध्यापयामास महाभारतपञ्चमान् ।
मेरौ गिरिवरे रम्ये सिद्धचारणसेविते ॥१२-३४९-२० (७९८०१)
तेषामभ्यस्यतां वेदान्कदाचित्संशयोऽभवत् ।
एष वै यस्त्वया पृष्टस्तेन तेषां प्रकीर्तितः ॥१२-३४९-२१ (७९८०२)
ततः श्रुतो मया चापि तवाख्येयोऽद्य भारत ॥ १२-३४९-२२ (७९८०३)
शिष्याणां वचनं श्रुत्वा सर्वाज्ञानतमोनुदः ।
पराशरसुतः श्रीमान्व्यासो वाक्यमथाब्रवीत् ॥१२-३४९-२३ (७९८०४)
मया हि सुमहत्तप्तं तपः परमदारुणम् ।
भूतं भव्यं भविष्यं च जानीयामिति सत्तमाः ॥१२-३४९-२४ (७९८०५)
तस्य मे तप्ततपसो निगृहीतेन्द्रियस्य च ।
नारायणप्रसादेन क्षीरोदस्यानुकूलतः ॥१२-३४९-२५ (७९८०६)
त्रैकालिकमिदं ज्ञानं प्रादुर्भूतं यथेप्सितम् ।
तच्छृणुध्वं यथान्यायं वक्ष्ये संशयमुत्तमम् ॥१२-३४९-२६ (७९८०७)
यथा वृत्तं हि कल्पादौ दृष्टं मे ज्ञानचक्षुषा ।
परमात्मेति यं प्राहुः साङ्ख्ययोगविदो जनाः ॥१२-३४९-२७ (७९८०८)

महापुरुषसंज्ञां स लभते स्वेन कर्मणा ।
तस्मात्प्रसूतमव्यक्तं प्रधानं तं विदुर्बुधाः ॥ १२-३४९-२८ (७९८०९)
अव्यक्ताद्व्यक्तमुत्पन्नं लोकसृष्ट्यर्थमीश्वरात् ।
अनिरुद्धो हि लोकेषु महानात्मेति कथ्यते ॥ १२-३४९-२९ (७९८१०)
योसौ व्यक्तत्वमापन्नो निर्ममे च पितामहम् ।
योऽहंकार इति प्रोक्तः सर्वतेजोमयो हि सः ॥ १२-३४९-३० (७९८११)
पृथिवी वायुराकाशमापो ज्योतिश्च पञ्चमम् ।
अहंकारप्रसूतानि महाभूतानि पञ्चधा ॥ १२-३४९-३१ (७९८१२)
महाभूतानि सृष्ट्वैव तान्गुणान्निर्ममे पुनः ।
भूतेभ्यश्चैव निष्पन्ना मूर्तिमन्तश्च ताञ्शृणु ॥ १२-३४९-३२ (७९८१३)
मरीचिरङ्गिराश्चात्रिः पुलस्त्यः पुलहः क्रतुः ।
वसिष्ठश्च महात्मा वै मनुः स्वायंभुवस्तथा ।
ज्ञेयाः प्रकृतयोऽष्टौ ता यासु लोकाः प्रतिष्ठिताः ॥ १२-३४९-३३ (७९८१४)
वेदान्वेदाङ्गसंयुक्तान्यज्ञयज्ञाङ्गसंयुतान् ।
निर्ममे लोकसिद्ध्यर्थं ब्रह्मा लोकपितामहः ॥ १२-३४९-३४ (७९८१५)
अष्टाभ्यः प्रकृतिभ्यश्च जातं विश्वमिदं जगत् ॥ १२-३४९-३५ (७९८१६)
रुद्रो रोषात्मको जातो दशान्यान्सोसृजस्त्वयम् ।
एकादशैते रुद्रास्तु विकाराः पुरुषाः स्मृताः ॥ १२-३४९-३६ (७९८१७)
ते रुद्राः प्रकृरतिश्चैव सर्वे चैव सुरर्षयः ।
उत्पन्ना लोकसिद्ध्यर्थं ब्रह्माणं समुपस्थिताः ॥ १२-३४९-३७ (७९८१८)
वयं सृष्टा हि भगवंस्त्वया च प्रभविष्णुना ।
येन यस्मिन्नधीकारे वर्तितव्यं पितामह ॥ १२-३४९-३८ (७९८१९)
योसौ त्वयाऽभिनिर्दिष्टो ह्यधिकारोऽर्थचिन्तकः ।
परिपाल्यः कथं तेन साहंकारेण कर्तृणा ॥ १२-३४९-३९ (७९८२०)
प्रदिशस्व बलं तस्य योऽधिकारार्थचिन्तकः ।
एवमुक्तो महादेवो देवांस्तानिदमब्रवीत् ॥ १२-३४९-४० (७९८२१)
ब्रह्मोवाच। १२-३४९-४१क्ष् (६५९६)
साध्वहं ज्ञापितो देवा युष्माभिर्भद्रमस्तु वः ।
ममाप्येषा समुत्पन्ना चिन्ता या भवतामिह ॥ १२-३४९-४१ (७९८२२)
लोकतन्त्रस्य कृत्स्नस्य कथं कार्यः परिग्रहः ।
कथं बलक्षयो न स्याद्युष्माकं ह्यात्मनश्च वै ॥ १२-३४९-४२ (७९८२३)
इतः सर्वेऽपि गच्छामः शरणं लोकसाक्षिणम् ।
महापुरुषमव्यक्तं स नो वक्ष्यति यद्धितम् ॥ १२-३४९-४३ (७९८२४)
ततस्ते ब्रह्मणा सार्धमृषयो विबुधास्तथा ।
क्षीरादस्योत्तरं कूलं जग्मूर्लोकहितार्थिनः ॥ १२-३४९-४४ (७९८२५)
ते तपः समुपातिष्ठन्ब्रह्मोक्तं वेदकल्पितम् ।

स महानियमो नाम तपश्चर्या सुदारुणा ॥ १२-३४९-४५ (७९८२६)
ऊर्ध्वदृग्बाहवश्चैव एकाग्रमनसोऽभवन् ।
एकपादस्थिताः सर्वे काष्ठभूताः समाहिताः ॥ १२-३४९-४६ (७९८२७)
दिव्यं वर्षसहस्रं ते तपस्तप्त्वा सुदारुणम् ।
शुश्रुवुर्मधुरां वाणीं वेदवेदाङ्गभूषिताम् ॥ १२-३४९-४७ (७९८२८)
वागुवाच। १२-३४९-४८क्ष् (६५९७)
भोभोः सब्रह्मका देवा ऋषयश्च तपोधनाः ।
स्वागतेनार्च्य वः सर्वाञ्श्रावये वाक्यमुत्तमम् ॥ १२-३४९-४८ (७९८२९)
विज्ञातं वो मया कार्यं तच्च लोकहितं महत् ।
प्रवृत्तियुक्तं कर्तव्यं युष्मत्प्राणोपबृंहणम् ॥ १२-३४९-४९ (७९८३०)
सुतप्तं वस्तपो देवा ममाराधनकाम्यया ।
भोक्ष्यथास्य महासत्वास्तपसः फलमुत्तमम् ॥ १२-३४९-५० (७९८३१)
एष ब्रह्मा लोकगुरुः सर्वलोकपितामहः ।
यूयं च विबुधश्रेष्ठा मां यजध्वं समाहिताः ॥ १२-३४९-५१ (७९८३२)
सर्वे भागान्कल्पयध्वं यज्ञेषु मम नित्यशः ।
तत्र श्रेयोऽभिधास्यामि यथाऽधीकारमीश्वराः ॥ १२-३४९-५२ (७९८३३)
वैशंपायन उवाच। १२-३४९-५३क्ष् (६५९८)
श्रुत्वैतद्देवदेवस्य वाक्यं हृष्टतनूरुहाः ।
ततस्ते विबुधाः सर्वे ब्रह्मा ते च महर्षयः ॥ १२-३४९-५३ (७९८३४)
वेददृष्टेन विधिना वैष्णवं क्रतुमाहरन् ।
तस्मिन्सत्रे सदा ब्रह्मा स्वयं भागमकल्पयत् ॥ १२-३४९-५४ (७९८३५)
देवा देवर्षयश्चैव स्वंस्वं भागमकल्पयम् ।
ते कार्तयुगधर्माणो भागाः परमसत्कृताः ॥ १२-३४९-५५ (७९८३६)
प्राहुरादित्यवर्णं तं पुरुषं तमसः परम् ।
बृहन्तं सर्वगं देवमीशानं वरदं प्रभुम् ॥ १२-३४९-५६ (७९८३७)
ततोऽथ वरदौ देवस्तान्सर्वानमरान्स्थितान् ।
अशरीरो बभापेदं वाक्यं स्वस्थो महेश्वरः ॥ १२-३४९-५७ (७९८३८)
येन यः कल्पितो भागः स तथा मामुपागतः ।
प्रीतोऽहं प्रदिशाम्यद्य फलमावृत्तिलक्षणम् ।
एतद्वो लक्षणं देवा मत्प्रसादसमुद्भवम् ॥ १२-३४९-५८ (७९८३९)
यूयं यज्ञैरिज्यमानाः समाप्तवरदक्षिणैः ।
युगेयुगे भविष्यध्वं प्रवृत्तिफलभागिनः ॥ १२-३४९-५९ (७९८४०)
यज्ञैर्ये चापि यक्ष्यन्ति सर्वलोकेषु वै सुराः ।
कल्पयिष्यन्ति वो भागांस्ते नरा वेदकल्पितान् ॥ १२-३४९-६० (७९८४१)
यो मे यथा कल्पितवान्भागमस्मिन्महाक्रतौ ।
स तथा यज्ञभागार्हो वेदसूत्रे मया कृतः ॥ १२-३४९-६१ (७९८४२)

यूयं लोकान्भावयध्वं यज्ञभागफलोचिताः ।
सर्वार्थचिन्तका लोके मयाऽधीकारनिर्मिताः ॥ १२-३४९-६२ (७९८४३)
याः क्रियाः प्रचरिष्यन्ति प्रवृत्तिफलसत्कृताः ।
ताभिराप्यायितबला लोकान्वै धारयिष्यथ ॥ १२-३४९-६३ (७९८४४)
यूयं हि भाविता यज्ञैः सर्वयज्ञेषु मानवैः ।
मां ततो भावयिष्यध्वमेषा वो भावना मम ॥ १२-३४९-६४ (७९८४५)
इत्यर्थं निर्मिता वेदा यज्ञाश्चौषधिभिः सह ।
एभिः सम्यक्प्रयुक्तैर्हि प्रीयन्ते देवताः क्षितौ ॥ १२-३४९-६५ (७९८४६)
निर्माणमेतद्युष्माकं प्रवृत्तिगुणकल्पितम् ।
मया कृतं सुरश्रेष्ठा यवात्कल्पक्षयादिह ।
चिन्तयध्वं लोकहितं यथादीकारमीश्वराः ॥ १२-३४९-६६ (७९८४७)
मरीचिरङ्गिराश्चात्रिः पुलस्त्यः पुलहः क्रतुः ।
वसिष्ठ इति सप्तैते मनसा निर्मिता हि ते ॥ १२-३४९-६७ (७९८४८)
एते वेदविदो मुख्या वेदाचार्याश्च कल्पिताः ।
प्रवृत्तिधर्मिणश्चैव प्राजापत्ये च कल्पिताः ॥ १२-३४९-६८ (७९८४९)
अयं क्रियावतां पन्था व्यक्तीभूतः सनातनः ।
अनिरुद्ध इति प्रोक्तो लोकसर्गकरः प्रभुः ॥ १२-३४९-६९ (७९८५०)
सनः सनत्सुजातश्च सनकः समनन्दनः ।
सनत्कुमारः कपिलः सप्तमश्च सनातनः ॥ १२-३४९-७० (७९८५१)
सप्तैते मानसाः प्रोक्ता ऋषयो ब्रह्मणः सुताः ।
स्वयमागतविज्ञाना निवृत्तिं धर्ममास्थिताः ॥ १२-३४९-७१ (७९८५२)
एते योगविदो मुख्याः साङ्ख्यशास्त्रविशारदाः ।
आचार्या धर्मशास्त्रेषु मोक्षधर्मप्रवर्तकाः ॥ १२-३४९-७२ (७९८५३)
यतोऽहं प्रसृतः पूर्वमव्यक्तात्त्रिगुणो महान् ।
तस्मात्परतरो योसौ क्षेत्रज्ञ इति कल्पितः ॥ १२-३४९-७३ (७९८५४)
सोहं क्रियावतां पन्थाः पुनरावृत्तिदुर्लभः ।
यो यथा निर्मितो जन्तुर्यस्मिन्यस्मिंश्च कर्मणि ॥ १२-३४९-७४ (७९८५५)
प्रवृत्तौ वा निवृत्तौ वा तत्फलं सोश्नुतेऽवशः ।
एष लोकगुरुर्ब्रह्मा जगदादिकरः प्रभुः ॥ १२-३४९-७५ (७९८५६)
एष माता पिता चैव युष्माकं च पितामहः ।
मयाऽनुशिष्टो भविता सर्वभूतवरप्रदः ॥ १२-३४९-७६ (७९८५७)
अस्य चैवात्मजो रुद्रो ललाटाद्यः समुत्थितः ।
ब्रह्मानुशिष्टो भविता सर्वभूतधरः प्रभुः ॥ १२-३४९-७७ (७९८५८)
गच्छध्वं स्वानधीकारांश्चिन्तयध्वं यथाविधि ।
प्रवर्तन्तां क्रियाः सर्वाः सर्वलोकेषु माचिरम् ॥ १२-३४९-७८ (७९८५९)
प्रदिश्यन्तां च कर्माणि प्राणिनां गतयस्तथा ।

परिनिष्ठितकालानि आयूंषीह सुरोत्तमाः ॥ १२-३४९-७९ (७९८६०)
इदं कृतयुगं नाम कालः श्रेष्ठः प्रवर्तितः ।
अहिंस्या यज्ञपशवो युगेऽस्मिन्न तदन्यथा ॥ १२-३४९-८० (७९८६१)
चतुष्पात्सकलो धर्मो भविष्यत्यत्र वै सुराः ।
ततस्त्रेतायुगं नाम त्रयी यत्र भविष्यति ॥ १२-३४९-८१ (७९८६२)
प्रोक्षिता यत्र पशवो वधं प्राप्स्यन्ति वै मखे ।
यत्र पादश्चतुर्थो वै धर्मस्य न भविष्यति ॥ १२-३४९-८२ (७९८६३)
ततो वै द्वापरं नाम मिश्रः कालो भविष्यति ।
द्विपादहीनो धर्मश्च युगे तस्मिन्भविष्यति ॥ १२-३४९-८३ (७९८६४)
ततस्तिष्येऽथ संप्राप्ते युगे कलिपुरस्कृते ।
एकपादस्थितो धर्मो यत्र तत्र भविष्यति ॥ १२-३४९-८४ (७९८६५)
देवा ऊचुः। १२-३४९-८५क्ष् (६५९९)
देवा देवर्षयश्चोचुस्तमेवंवादिनं गुरुम् ।
एकपादस्थिते धर्मे यत्र क्वचन गामिनि ।
कथं कर्तव्यमस्माभिर्भगवंस्तद्वदस्व नः ॥ १२-३४९-८५ (७९८६६)
श्रीभगवानुवाच। १२-३४९-८६क्ष् (६६००)
ग्गुरवो यत्र पूज्यन्ते साधुवृत्तसमन्विताः ।
वस्तव्यं तत्र युष्माभिर्यत्र धर्मो न हीयते ॥' १२-३४९-८६ (७९८६७)
यत्र वेदाश्च यज्ञाश्च तपः सत्यं दमस्तथा ।
अहिंसा धर्मसंयुक्ताः प्रचरेयुः सुरोत्तमाः ।
स वो देशः सेवितव्यो मा वोऽधर्मः पदा स्पृशेत् ॥ १२-३४९-८७ (७९८६८)
व्यास उवाच। १२-३४९-८८क्ष् (६६०१)
तेऽनुशिष्टा भगवता देवाः सपिगणास्तथा ।
नमस्कृत्वा भगवते जग्मुर्देशान्यथेप्सितान् ॥ १२-३४९-८८ (७९८६९)
गतेषु त्रिदिवौकस्सु ब्रह्मैकः पर्यवस्थितः ।
दिदृक्षुर्भगवन्तं तमनिरुद्धतनौ स्थितम् ॥ १२-३४९-८९ (७९८७०)
तं देवो दर्शयामास कृत्वा हयशिरो महत् ।
साङ्गानावर्तयन्वेदान्कमण्डलुत्रिदण्डधृक् ॥ १२-३४९-९० (७९८७१)
ततोऽश्वशिरसं दृष्ट्वातं देवममितौजसम् ।
लोककर्ता प्रभुर्ब्रह्मा लोकानां हितकाम्यया ॥ १२-३४९-९१ (७९८७२)
मूर्ध्ना प्रणम्य वरदं तस्थौ प्राञ्जलिरग्रतः ।
स परिष्वज्य देवेन वचनं श्रावितस्तदा ॥ १२-३४९-९२ (७९८७३)
भगवानुवाच। १२-३४९-९३क्ष् (६६०२)
लोककार्यगतीः सर्वास्त्वं चिन्तय यथाविधि ।
धाता त्वं सर्वभूतानां त्वं प्रभुर्जगतो गुरुः ।
त्वय्यावेशितभारोऽहं धृतिं प्राप्स्याम्यथाञ्जसा ॥ १२-३४९-९३ (७९८७४)

यदा च सुरकार्यं ते अविषह्यं भविष्यति ।
प्रादुर्भावं गमिष्यामि तदात्मज्ञानदैशिकः ॥ १२-३४९-९४ (७९८७५)
व्यास उवाच। १२-३४९-९५क्ष् (६६०३)
एवमुक्त्वा हयशिरास्तत्रैवान्तरधीयत ।
तेनानुशिष्टो ब्रह्मापि स्वं लोकमचिराद्गतः ॥ १२-३४९-९५ (७९८७६)
एवमेष महाभागः पद्मनाभः सनातनः ।
यज्ञेष्वग्रहरः प्रोक्तो यज्ञधारी च नित्यदा ॥ १२-३४९-९६ (७९८७७)
निवृत्तिं चास्थितो धर्मं गमिमक्षयधर्मिणाम् ।
प्रवृत्तिधर्मान्विदधे कृत्वा लोकस्य चित्रताम् ॥ १२-३४९-९७ (७९८७८)
स आदिः स मध्यः स चान्तः प्रजानां
स धाता स धेयं स कर्ता स कार्यम् ।
युगान्ते प्रसुप्तः सुसंक्षिप्य लोकान्
युगादौ प्रबुद्धो जगद्ध्युत्ससर्ज ॥ १२-३४९-९८ (७९८७९)
तस्मै नमध्वं देवाय निर्गुणाय महात्मने ।
अजाय विश्वरूपाय धाम्ने सर्वदिवौकसाम् ॥ १२-३४९-९९ (७९८८०)
महाभूताधिपतये रुद्राणां पतये तथा ।
आदित्यपतये चैव वसूनां पतये तथा ॥ १२-३४९-१०० (७९८८१)
अश्विभ्यां पतये चैव मरुतां पतये तथा ।
वेदयज्ञाधिपतये वेदाङ्गपतयेऽपि च ॥ १२-३४९-१०१ (७९८८२)
समुद्रावसिने नित्यं हरये मुञ्जकेशिने ।
शान्ताय सर्वभूतानां मोक्षधर्मानुभाषिणे ॥ १२-३४९-१०२ (७९८८३)
तपसां तेजसां चैव पतये यशसामपि ।
वचसां पतये नित्यं सरितां पतये तथा ॥ १२-३४९-१०३ (७९८८४)
कपर्दिने वराहाय एकशृङ्गाय धीमते ।
विवस्वतेऽश्वशिरसे चतुर्मूर्तिधृते सदा ।
सूक्ष्माय ज्ञानदृश्याय अजरायाक्षयाय च ॥ १२-३४९-१०४ (७९८८५)
एष देवः संचरति सर्वत्र गतिरव्ययः ।
श्एष चैतत्परं ब्रह्म ज्ञेयो विज्ञानचक्षुषा ॥ ८ १२-३४९-१०५ (७९८८६)
एवमेतत्पुरा दृष्टं मया वै ज्ञानचक्षुषा ।
कथितं तच्च वै सर्वं मया पृष्टेन तत्त्वतः ॥ १२-३४९-१०६ (७९८८७)
क्रियतां मद्वचः शिष्याः सेव्यतां हरिरीश्वरः ।
गीयतां वेदशब्दैश्च पूज्यतां च यथाविधि ॥ १२-३४९-१०७ (७९८८८)
वैशंपायन उवाच। १२-३४९-१०८क्ष् (६६०४)
इत्युक्तास्तु वयं तेन वेदव्यासेन धीमता ।
सर्वे शिष्या सुतश्चास्य शुकः परमधर्मवित् ॥ १२-३४९-१०८ (७९८८९)
स चास्माकमुपाध्यायः सहास्माभिर्विशांपते ।

चतुर्वेदोद्गताभिस्तमृग्भिः समभितुष्टुवे ॥ १२-३४९-१०९ (७९८९०)
एतत्ते सर्वमाख्यातं यन्मां त्वं परिपृच्छसि ।
एवं मेऽकथयद्राजन्पुरा द्वैपायनो गुरुः ॥ १२-३४९-११० (७९८९१)
यश्चेदं शृणुयान्नित्यं यश्चैनं परिकीर्तयेत् ।
नमो भगवते कृत्वा समाहितमतिर्नरः ॥ १२-३४९-१११ (७९८९२)
भवत्यरोगो मतिमान्बलरूपसमन्वितः ।
आतुरो मुच्यते रोगाद्बद्धो मुच्येत बन्धनात् ॥ १२-३४९-११२ (७९८९३)
कामकामी लभेत्कामं दीर्घं चायुरवाप्नुयात् ।
ब्राह्मणः सर्ववेदी स्यात्क्षत्रियो विजयी भवेत् ॥ १२-३४९-११३ (७९८९४)
वैश्यो विपुललाभः स्याच्छूद्रः सुखमवाप्नुयात् ।
अपुत्रो लभते पुत्रं कन्या चैवेप्सितं पतिम् ॥ १२-३४९-११४ (७९८९५)
लग्नगर्भा विमुच्येत गर्भिणी जनयेत्सुतम् ।
बन्ध्या प्रसवमाप्नोति पुत्रपौत्रसमृद्धिमत् ॥ १२-३४९-११५ (७९८९६)
क्षेमेण गच्छेदध्वानमिदं यः पठते पथि ।
यो यं कामं कामयते स तमाप्नोति च ध्रुवम् ॥ १२-३४९-११६ (७९८९७)
इदं महर्षेर्वचनं विनिश्चितं
महात्मनः पुरुषवरस्य कीर्तितम् ।
समागमं चर्षिदिवौकसामिमं
निशम्य भक्ताः सुसुखं लभन्ते ॥ ॥ १२-३४९-११७ (७९८९८)

इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि नारायणीये
एकोनपञ्चाशदधिकत्रिशततमोऽध्यायः ॥ ३४९.।
Mahabharata - Shanti Parva - Chapter Footnotes

१२-३४९-१ यज्ञेष्वाहूयते प्रभुरिति ट ।ध। पाठः ॥
१२-३४९-२ क्षेमं भागवतं प्रभुरिति ट ।पाठः ॥
१२-३४९-१२ स्मृतिकालपरीमाणमिति झ ।पाठः ॥
१२-३४९-२९ लोकेषु महाराजेति कथ्यत इति थ ।पाठः ॥
१२-३४९-३२ निष्पन्नानष्टौ मूर्तिमतः शृण्विति ध ।पाठः ॥
१२-३४९-३५ निर्ममे लोकसृष्ट्यर्थमिति थ ।ध। पाठः ॥
१२-३४९-९० कमण्डलुपवित्रधृगिति ध ।पाठः ॥
१२-३४९-९४ तदात्मज्ञानयोगजमिति ट ।ध। पाठः ॥

---

शन्तिपर्व-अध्यय३५०
॥ श्रीः ॥
१२.३५०. अध्यायः ३५०

Mahabharata - Shanti Parva - Chapter Topics

वैशंपायनेन जनमेजयंप्रति अर्जुनाय स्वमाहात्म्यख्यापनपूर्वकं श्रीकृष्णकृतनारायणादिस्वनामनिर्वचनानुवादः ॥ १.।

Mahabharata - Shanti Parva - Chapter Text

१२-३५०-० (७९८९९)
जनमेजय उवाच। १२-३५०-०क्ष् (६६०५)
अस्तौर्षीद्विदिकैर्व्यासः सशिष्यो मधुसूदनम् ।
नामभिर्विविधैरेषां निरुक्तं भगवन्मम ॥ १२-३५०-१ (७९९००)
वक्तुमर्हसि शुश्रूषोः प्रजापतिपतेर्हरः ।
श्रुत्वा भवेयं यत्पूतः शरच्चन्द्र इवामलः ॥ १२-३५०-२ (७९९०१)
वैशंपायन उवाच। १२-३५०-३क्ष् (६६०६)
शृणु राजन्यथाचष्ट फल्गुनस्य हरिः प्रभुः ।
प्रसन्नात्मात्मनो नाम्नां निरुक्तं गुणकर्मजम् ॥ १२-३५०-३ (७९९०२)
नामभिः कीर्तितैस्तस्य केशवस्य महात्मनः ।
पृष्टवान्केशवं राजन्फगुनः परवीरहा ॥ १२-३५०-४ (७९९०३)
अर्जुन उवाच। १२-३५०-५क्ष् (६६०७)
भगवन्भूतभव्येश सर्वभूतसृगव्यय ।
लोकधाम जगन्नाथ लोकानामभयप्रद ॥ १२-३५०-५ (७९९०४)
यानि नामानि ते देव कीर्तितानि महर्षिभिः ।
वेदेषु सपुराणेषु यानि गुह्यानि कर्मभिः ॥ १२-३५०-६ (७९९०५)
तेषां निरुक्तं त्वत्तोऽहं श्रोतुमिच्छामि केशव ।
न ह्यन्यो वर्णयेन्नाम्नां निरुक्तं त्वामृते प्रभो ॥ १२-३५०-७ (७९९०६)
श्रीभगवानुवाच। १२-३५०-८क्ष् (६६०८)
ऋग्वेदे सयजुर्वेदे तथैवाथर्वसामसु ।
पुराणे सोपनिषदे तथैव ज्योतिषेऽर्जुन ॥ १२-३५०-८ (७९९०७)
साङ्ख्ये च योगशास्त्रे च आयुर्वेदे तथैव च ।
बहूनि मम नामानि कीर्तितानि महर्षिभिः ॥ १२-३५०-९ (७९९०८)
गौणानि तत्र नामानि कर्मजानि च कानिचित् ।
निरुक्तं कर्मजानां त्वं शृणुष्व प्रयतोऽनघ ॥ १२-३५०-१० (७९९०९)
कथ्यमानं मया तात त्वं हि मेऽर्धं स्मृतः पुरा ।
नमोऽतियशमे तस्मै देवानां परमात्मने ॥ १२-३५०-११ (७९९१०)
नारायणाय विश्वाय निर्गुणाय गुणात्मने ।
यस्य प्रसादजो ब्रह्मा रुद्रस्य क्रोधसंभवः ॥ १२-३५०-१२ (७९९११)
योसौ योनिर्हि सर्वस्य स्थावरस्य चरस्य च ।

अष्टादशगुणं यत्तत्सत्वं सत्ववतांवर ॥१२-३५०-१३ (७९९१२)
प्रकृतिः सा परा मह्यं रोदसी लोकधारिणी ।
ऋता सत्याऽमरा जय्या लोकानामात्मसंज्ञिता ॥१२-३५०-१४ (७९९१३)
तस्मात्सर्वाः प्रवर्तन्ते सर्गप्रलयविक्रियाः ।
तपो यज्ञश्च यष्टा च पुराणः पुरुषो विराट् ॥१२-३५०-१५ (७९९१४)
अनिरुद्ध इति प्रोक्तो लोकानां प्रभवाप्ययः ।
ब्राह्मे रात्रिक्षये प्राप्ते तस्य ह्यमिततेजसः ॥१२-३५०-१६ (७९९१५)
प्रसादात्प्रादुरभवत्पद्ममर्कनिभं क्षणात् ।
तत्र ब्रह्मा समभवत्स तस्यैव प्रसादजः ॥१२-३५०-१७ (७९९१६)
अह्नः क्षये ललाटाच्च सुतो देवस्य वै तथा ।
क्रोधाविष्टस्य संजज्ञे रुद्रः संहारकारकः ॥१२-३५०-१८ (७९९१७)
एतौ द्वौ विबुधश्रेष्ठौ प्रसादक्रोधजावुभौ ।
तदादर्शितपन्थानौ सृष्टिसंहारकारकौ ॥१२-३५०-१९ (७९९१८)
निमित्तमात्रं तावत्र सर्वप्राणिवरप्रदौ ।
कपर्दी जटिलो मुण्डः श्मशानगृहसेवकः ॥१२-३५०-२० (७९९१९)
उग्रव्रतचरो रुद्रो योगी त्रिपुरदारणः ।
दक्षक्रतुहरश्चैव भगनेत्रहरस्तथा ॥१२-३५०-२१ (७९९२०)
नारायणात्मको ज्ञेयः पाण्डवेय युगेयुगे ।
तस्मिन्हि पूज्यमाने वै देवदेवे महेश्वरे ॥१२-३५०-२२ (७९९२१)
संपूजितो भवत्पार्थ देवो नारायणः प्रभुः ।
अहमात्मा हि लोकानां विश्वेषां पाण्डुनन्दन ॥१२-३५०-२३ (७९९२२)
तस्मादात्मानमेवाग्रे रुद्रं संपूजयाम्यहम् ।
यद्यहं नार्चयेयं वै ईशानं वरदं शिवम् ॥१२-३५०-२४ (७९९२३)
आत्मानं नार्चयेत्कश्चिदिति मे भावितात्मनः ।
मया प्रमाणं हि कृतं लोकः समनुवर्तते ॥१२-३५०-२५ (७९९२४)
प्रमाणानि हि पूज्यानि ततस्तं पूजयाम्यहम् ।
यस्तं वेत्ति स मां वेत्ति योऽनु तं स हि मामनु ॥१२-३५०-२६ (७९९२५)
रुद्रो नारायणश्चैव सत्वमेकं द्विधा कृतम् ।
लोके चरति कौन्तेय व्यक्तिस्थं सर्वकर्मसु ॥१२-३५०-२७ (७९९२६)
न हि मे केनचिद्देयो वरः पाण्डवनन्दन ।
इति संचिन्त्य मनसा पुराणं रुद्रमीश्वरम् ॥१२-३५०-२८ (७९९२७)
पुत्रार्थमाराधितवानहमात्मानमात्मना ।
न हि विष्णुः प्रणमति कस्मैचिद्विबुधाय च ॥१२-३५०-२९ (७९९२८)
ऋते आत्मानमेवेति ततो रुद्रं नमाम्यहम् ।
सब्रह्मकाः सरुद्राश्च सेन्द्रा देवाः सहर्षिभिः ॥१२-३५०-३० (७९९२९)
अर्चयन्ति सुरश्रेष्ठं देवं नारायणं हरिम् ।

भविष्यतां वर्ततां च भूतानां चैव भारत ॥ १२-३५०-३१ (७९९३०)
सर्वेषामग्रणीर्विष्णुः सेव्यः पूज्यश्च नित्यशः ।
नमस्व हव्यदं विष्णुं तथा शरणदं नमः। १२-३५०-३२ (७९९३१)
वरदं नमस्व कौन्तेय हव्यकव्यभुजं नमः ।
चतुर्विधा मम जना भक्ता एव हि मे श्रुतम् ॥ १२-३५०-३३ (७९९३२)
तेषामेकान्तिनः श्रेष्ठा ये चैवानन्यदेवताः ।
अहमेव गतिस्तेषां निराशीः कर्मकारिणाम् ॥ १२-३५०-३४ (७९९३३)
ये च शिष्टास्त्रयो भक्ताः फलकामा हि ते मताः ।
सर्वे च्यवनधर्माणः प्रतिबुद्धस्तु श्रेष्ठभाक् ॥ १२-३५०-३५ (७९९३४)
ब्रह्माणं शितिकण्ठं च याश्चान्या देवताः स्मृताः ।
प्रबुद्धचर्याः सेवन्तो मामेवैष्यन्ति यत्फलम् ॥ १२-३५०-३६ (७९९३५)
भक्तं प्रति विशेषस्ते एष पार्थानुकीर्तितः ।
त्वं चैवाहं च कौन्तेय नरनारायणौ स्मृतौ ॥ १२-३५०-३७ (७९९३६)
भारावतरणार्थं तु प्रविष्टौ मानुषीं तनुम् ।
नानीभ्यध्यात्मयोगांश्च योऽहं यस्माच्च भारत ॥ १२-३५०-३८ (७९९३७)
निवृत्तिलक्षणो धर्मस्तथाऽऽभ्यदयिकोऽपि च ।
नराणामयनं ख्यातमहमेकः सनातनः ॥ १२-३५०-३९ (७९९३८)
आपो नारा इति प्रोक्ता आपो वै नरसूनवः ।
अयनं मम ताः पूर्वमतो नारायणोस्म्यहम् ॥ १२-३५०-४० (७९९३९)
छादयामि जगद्विश्वं भूत्वा सूर्य इवांशुभिः ।
सर्वभूताधिवासश्च वासुदेवस्ततो ह्यहम् ॥ १२-३५०-४१ (७९९४०)
गतिश्च सर्वभूतानां प्रजनश्चापि भारत ।
व्याप्ते म रोदसी पार्थ कान्तिश्चाभ्यधिका मम। १२-३५०-४२ (७९९४१)
अधिभूतनिविष्टश्च तद्विश्वं चास्मि भारत ।
क्रमणाच्चाप्यहं पार्थ विष्णुरित्यभिसंज्ञितः ॥ १२-३५०-४३ (७९९४२)
दमात्सिद्धिं परीप्सन्तो मां जनाः कामयन्ति ह ।
दिवं चोर्वीं च मध्यं च तस्माद्दामोदरो ह्यहम् ॥ १२-३५०-४४ (७९९४३)
पृश्निरित्युच्यते चान्नं वेदा आपोऽमृतं तथा ।
ममैतानि सदा गर्भः पृश्निगर्भस्ततो ह्यहम् ॥ १२-३५०-४५ (७९९४४)
ऋषयः प्राहुरेवं मां त्रितं कूपनिपातितम् ।
पृश्निगर्भ त्रितं पाहीत्येकतद्वितपातितम् ॥ १२-३५०-४६ (७९९४५)
ततः स ब्रह्मणः पुत्र आद्यो हृषिवरस्त्रितः ।
उत्ततारोदपानाद्वै पृश्निगर्भानुकीर्तनात् ॥ १२-३५०-४७ (७९९४६)
सूर्यस्य तपतो लोकानग्नेः सोमस्य चाप्युत ।
अंशवो यत्प्रकाशन्ते ममैते केशसंज्ञिताः ॥ १२-३५०-४८ (७९९४७)
सर्वज्ञाः केशवं तस्मान्मामाहुर्द्विजसत्तमाः ।

स्वपत्न्यामाहितो गर्भ उचथ्येन महात्मना ॥ १२-३५०-४९ (७९९४८)
उचथ्येऽन्तर्हिते चैव कदाचिद्देवताज्ञया ।
बृहस्पतिरथाविन्दत्तां पत्नीं तस्य धीमतः ॥ १२-३५०-५० (७९९४९)
ततो वै तमृषिश्रेष्ठं मैथुनोपगतं तथा ।
उवाच गर्भः कौन्तेय पञ्चभूतगुणात्मकः ॥ १२-३५०-५१ (७९९५०)
पूर्वागतोऽहं वरद नार्हस्यम्बां प्रबाधितुम् ।
एतद्बृहस्पतिः श्रुत्वा चुक्रोध च शशाप च ॥ १२-३५०-५२ (७९९५१)
मैथुनायागतो यस्मात्त्वयाऽहं विनिवारितः ।
तस्मादन्धो यास्यसि त्वं मच्छापान्नात्र संशयः ॥ १२-३५०-५३ (७९९५२)
स शापादृषिमुख्यस्य दीर्घं तम उपेयिवान् ।
स हि दीर्घतमा नाम नाम्ना ह्यासीदृषिः पुरा ॥ १२-३५०-५४ (७९९५३)
वेदानवाप्य चतुरः साङ्गोपाङ्गान्सनातनान् ।
प्रयोजयामास तदा नाम गुह्यमिदं मम ॥ १२-३५०-५५ (७९९५४)
आनुपूर्व्येण विधिना केशवेति पुनः पुनः ।
स चक्षुष्मान्समभवद्गौतमश्चाभवत्पुनः ॥ १२-३५०-५६ (७९९५५)
एवं हि वरदं नाम केशवेति ममार्जुन ।
देवानामथ सर्वेषामृषीणां च महात्मनाम् ॥ १२-३५०-५७ (७९९५६)
अग्निः सोमेन संयुक्त एकयोनिर्मुखं कृतम् ।
अग्नीषोममयं तस्माज्जगत्कृत्स्नं चराचरम् ॥ १२-३५०-५८ (७९९५७)
अपि हि पुराणे भवति एकयोन्यावग्नीषोमौ देवाश्चाग्निमुखा इति
। एकयोनित्वाच्च परस्परं हर्षयन्तो लोकान्धारयन्त इति ॥ ॥
१२-३५०-५९ (७९९५८)

इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि नारायणीये
पञ्चाशदधिकत्रिशततमोऽध्यायः ॥ ३५०. ।

Mahabharata - Shanti Parva - Chapter Footnotes

१२-३५०-१ निरुक्तं निर्वचनम् ॥
१२-३५०-३ गुणकर्मजं गुणः सर्वज्ञत्वादिस्तज्जम् । कर्म
जगत्सृष्ट्यादि तज्जम् ॥
१२-३५०-१४ ऋता सत्या महाराज या लोकानामसंज्ञिता इति थ । पाठः ॥
१२-३५०-१७ पद्मं पद्मनिभेक्षणेति झ । पाठः ॥
१२-३५०-३२ स्तव्यः पूज्यश्च नित्यश इति ध । पाठः ॥
१२-३५०-३३ चतुर्विधाः आर्तो जिज्ञासुरर्थार्थी ज्ञानी चेति गीतोक्ताः ॥
१२-३५०-४० तेन नारायणोऽस्म्यहमिति ट । ध । पाठः ॥
१२-३५०-४१ वासयामिजगद्विश्वमिति ध । पाठः ॥

१२-३५०-४२ सर्वभूतानां ब्रह्मादीनां च भारतेति थ । पाठः ॥
१२-३५०-४५ पृच्छन्त्येनं जिज्ञासवो धर्मजातमिति वा पृच्छन्त्येनं क्षुधितादय इति वा पृश्निर्वेदोऽत्रादि वा गर्भो गर्भस्थानि ॥

---

शन्तिपर्व-अध्यय३५१
॥ श्रीः ॥
१२.३५१. अध्यायः ३५१

Mahabharata - Shanti Parva - Chapter Topics
श्रीकृष्णेनार्जुनंप्रति सृष्टिप्रकारकथनम् ॥ १. । तथा ब्राह्मणमहिमानुवर्णनम् ॥ २. ।
Mahabharata - Shanti Parva - Chapter Text

१२-३५१-० (७९९५९)
अर्जुन उवाच। १२-३५१-०क्ष् (६६०९)
अग्नीषोमौ कथं पूर्वमेकयोनी प्रकीर्तितौ ।
एष मे संशयो वीर तं छिन्धि मधुसूदन ॥ १२-३५१-१ (७९९६०)
श्रीभगवानुवाच। १२-३५१-२क्ष् (६६१०)
हन्त ते वर्तयिष्यामि पुराणं पाण्डुनन्दन ।
आत्मतेजोद्भवं पार्थ शृणुष्वैकमना नृप ॥ १२-३५१-२ (७९९६१)
संप्रक्षालनकालेऽतिक्रान्ते चतुर्युगसहस्रान्ते ।
अव्यक्ते सर्वभूतप्रलये सर्वभूतस्थावरजङ्गमे ।
ज्योतिर्धरणिवायुरहिते अन्धे तमसि जलैकार्णवेलोके ॥ १२-३५१-३ (७९९६२)
ममायमित्यविदितभूतसंज्ञकेऽद्वितीये प्रतिष्ठिते ॥ १२-३५१-४ (७९९६३)
न वै रात्र्यां न दिवसे न सति नासति न व्यक्ते नचाप्यव्यक्ते व्यवस्थिते ॥ १२-३५१-५ (७९९६४)
एतस्यामवस्थायां
नारायणगुणाश्रयादजरामरादतीन्द्रियादग्राह्यादसंभवात्-
सत्यादहिंस्याल्लवादिभिरद्वितीयादप्रवृत्तिविशेषाद्-
अवैरादक्षयादमरादजरादमूर्तितः
सर्वव्यापिनः सर्वकर्तुः शाश्वतात्तमसः परात्पुरुषः प्रादुर्भूतोस्य पुरुषस्य ब्रह्मयोनेर्ब्रह्मणः प्रादुर्भावे हरिरव्ययः ॥ १२-३५१-६ (७९९६५)
निदर्शनमपि ह्यत्र भवति ॥ १२-३५१-७ (७९९६६)
नासीदहो न रात्रिरासीन्न सदासीन्नासदासीत्तम एव पुरस्तादभवद्विश्वरूपम् । सा विश्वरूपस्य रजनी हि एवमस्यार्थोऽनुभाष्यते ॥ १२-३५१-८ (७९९६७)

तस्येदानीं तमः संभवस्य पुरुषस्य ब्रह्मयोनेर्ब्रह्मणः प्रादुर्भावे स पुरुषः प्रजाः सिसृक्षमाणो नेत्राभ्यामग्नीषोमौ ससर्ज ।ततो भूतसर्गेषु सृष्टेषु प्रजाः क्रमवशाद्ब्रह्मक्षत्रमुपातिष्ठन्। यः सोमस्तद्ब्रह्म यद्ब्रह्म ते ब्राह्मणा योऽग्निस्तत्क्षत्रं क्षत्राद्ब्रह्मबलवत्तरम्। कस्मादिति परं भूतं नोत्पन्नपूर्वं दीप्यमानेऽग्नौ जुहोति यो ब्राह्मणमुखे जुहोतीति कृत्वा ब्रवीमि भूतसर्गः कृतो ब्रह्मणा भूतानि च प्रतिष्ठाप्य त्रैलोक्यं धार्यत इति मन्त्रवादोपि हि भवति ॥ १२-३५१-९ (७९९६८)
त्वमग्ने यज्ञानां होता विश्वेषां हितो देवानां मानुषाणां च जगत इति ॥ १२-३५१-१० (७९९६९)
निदर्शनं चात्र भावति विश्वेपामग्ने यज्ञानां त्वं होतेति ।त्वं हितो देवैर्मनुष्यैर्जगत इति ॥ १२-३५१-११ (७९९७०)
अग्निर्हि यज्ञानां होता कर्ता स चाग्निर्ब्रह्म ॥ १२-३५१-१२ (७९९७१)
न ह्रते मन्त्राणां हवनमस्ति न विना पुरुषं तपः संभवति ।हविर्मन्त्राणां संपूजा विद्यते देवमानुपऋषीणामनेन त्वं होतेति नियुक्तः। ये च मानुषहोत्राधिकारास्ते चक्रुर्ब्राह्मणस्य हि याजनं विधीयते न क्षत्रवैश्ययोर्द्विजात्योस्तस्माद्ब्राह्मणा ह्यग्निभूता यज्ञानुद्वहन्ति। यज्ञास्ते देवांस्तर्पयन्ति देवाः पृथिवीं भावयन्ति शतपथेऽपि हि ब्राह्मणमुखे भवति ॥ १२-३५१-१३ (७९९७२)
अग्नौ समिद्धे स जुहोति यो विद्वान् ब्राह्मणमुखेनाहुतिं जुहोति ॥ १२-३५१-१४ (७९९७३)
एवमप्यग्निभूता ब्राह्मणा विद्वांसोऽग्निं भावयन्ति अग्निर्विष्णुः सर्वभूतान्यनुप्रविश्य प्राणान्धारयति ॥ १२-३५१-१५ (७९९७४)
अपिचात्र सनत्कुमारगीताः श्लोका भवन्ति ।
ब्रह्मा विश्वं सृजत्पूर्वं सर्वादिर्निरवस्करः ।
ब्रह्मघोषैर्दिवं तिष्ठन्त्यमरा ब्रह्मयोनयः ॥ १२-३५१-१६ (७९९७५)
ब्राह्मणानामृतं वाक्यं कर्मश्रद्धातपांसि च ।
धारयन्ति महीं द्यां च शैत्याद्वाय्वमृतं तथा ॥१२-३५१-१७ (७९९७६)
नास्ति सत्यात्परो धर्मो नास्ति मातृसमो गुरुः ।
ब्राह्मणेभ्यः परं नास्ति प्रेत्य चेह च भूतये ॥१२-३५१-१८ (७९९७७)
नैषामुक्षा वहति नोत वाहा
न गर्गरो मथ्यति संप्रदाने ।
अपध्वस्ता दस्युभूता भवन्ति
येषां राष्ट्रे ब्राह्मणा वृत्तिहीनाः ॥ १२-३५१-१९ (७९९७८)
ते च पुराणेतिहासप्रामाण्यान्नारायणमुखोद्गताः ।
सर्वात्मानः सर्वकर्तारः सर्वभावाश्च ब्राह्मणाश्च ॥१२-३५१-२० (७९९७९)

वाक्संयमकाले हि तस्य वरप्रदस्य देवदेवस्य ब्राह्मणाः प्रथमं प्रादुर्भूता ब्राह्मणेभ्यश्च शेषा वर्णाः प्रादुर्भूताः ॥ १२-३५१-२१ (७९९८०)
इत्थं च सुरासुरविशिष्टा ब्राह्मणा वेदमया ब्रह्मभूतेन पुरा स्वयमेवोत्पादिताः सुरासुरमहर्षयो भूतविशेषाः स्थापिता निगृहीताश्च तेषां प्रभावः श्रूयताम् ॥ १२-३५१-२२ (७९९८१)
अहल्याधर्षणनिमित्तं हि गौतमाद्धरिश्मश्रुतामिन्द्रः प्राप्तः ।गौतमनिमित्तं चेन्द्रो मुष्कवियोगं मेपवृषणत्वं चावाप ॥ १२-३५१-२३ (७९९८२)
अश्विनोर्ग्रहप्रतिषेधोद्यतवज्रस्य पुरन्दरस्य च्यवनेन स्तम्भितौ वाहू ॥ १२-३५१-२४ (७९९८३)
ऋतुवधप्राप्तमन्युना च दक्षेण भूयस्तपसा चात्मानं संयोज्य त्रिनेत्राकृतिरन्या ललाटे रुद्रस्योत्पादिता ॥ १२-३५१-२५ (७९९८४)
त्रिपुरवधार्थं दीक्षामुपगतस्य रुद्रस्य उशनसाजटाः शिरस उत्कृत्याग्नौ प्रयुक्तास्ततः प्रादुर्भूता भुजगास्तैरस्य भुजगैः पीड्यमानः कण्ठो नीलतामुपगतः ।पूर्वे च मन्वन्तरे स्वायंभुवे नारायणहस्तबन्धग्रहणान्नीलकण्ठत्वमुपनीतः ॥ १२-३५१-२६ (७९९८५)
अमृतोत्पादने पुनर्भक्षणतां वायुसमीकृतस्य विषस्योपगतश्च तद्भक्षणमिति तन्निमित्तमेव चन्द्रकला ब्रह्मणा निहिता ।आङ्गिरसबृहस्पतेरुपस्पृशतो न प्रसादं गतवत्यः किलापः।अथ बृहस्पतिरङ्गयश्चुक्रोध यस्मान्ममोपस्पृशतः कलुपीभूता नच प्रसादमुपगतास्ततस्मादद्यप्रभृति झषमकरमत्स्यकच्छपजन्तुमण्डूकसंकीर्णाः कलुषीभवतेति।तदाप्रभृत्यापो यादोभिः संकीर्णाः
कलुषीभवतेति।तदाप्रभृत्यापो यादोभिः संकीर्णाः संवृत्ताः ॥ १२-३५१-२७ (७९९८६)
विश्वरूपो हि वै त्वाष्ट्रः पुरीहितो देवानामासीत् ।स्वस्त्रीयोसुराणां स प्रत्यक्षं देवेभ्यो भागमदात्परोक्षमसुरेभ्यः ॥ १२-३५१-२८ (७९९८७)
अथ हिरण्यकशिपुं पुरस्कृत्य विश्वरूपमातरं स्वसारमसुरा वरमयाचन्त हे स्वसरयं ते पुत्रस्त्वाष्ट्रो विश्वरूपस्त्रिशिरा देवानां पुरोहितः प्रत्यक्षं देवेभ्योभागमदात् परोक्षमस्माकं ततो देवा वर्धन्ते वयं क्षीयामस्तदेनं त्वं वारयितुमर्हसि तथा यथाऽस्मान्भजेदिति ॥ १२-३५१-२९ (७९९८८)
अथ विश्वरूपं नन्दनवनमुपगतं मातोवाच पुत्र किं परपक्षवर्धनस्त्वं मातुलपक्षं नाशयसि ।नार्हस्येवं कर्तुमिति स विश्वरूपो मातुर्वाक्यमनतिक्रमणीयमिति मत्वा संपूज्य

हिरण्यकशिपुमगात् ॥ १२-३५१-३० (७९९८९)
हैरण्यगर्भाच्च वसिष्ठाद्धिरण्यकशिषुः
शापं प्राप्तवान्यस्मात्त्वयाऽन्यो वृतो होता
तस्मादसमाप्तयज्ञस्त्वमपूर्वात्सत्वजाताद्वधं प्राप्स्यसीति
तच्छापदानाद्धिरण्यकशिषुः प्राप्तवान्वधम् ॥ १२-३५१-३१ (७९९९०)
अथ विश्वरूपो मातृपक्षवर्धनोत्यर्थं तपस्व्यभवत्तस्य
व्रतभङ्गार्थमिन्द्रो बह्वीः श्रीमत्योऽप्सरसो नियुयोज ताश्च
दृष्ट्वा मनः क्षुभितं तस्याभवत्तासु चाप्सरःसु नचिरादेव
सक्तोऽभवत्सक्तं चैनं ज्ञात्वा अप्सरस ऊचुर्गच्छामहे वयं
यथागतमिति ॥ १२-३५१-३२ (७९९९१)
तास्त्वाष्ट्र उवचा ।क्व गमिष्यथास्यतां तावन्मया सह श्रेयो
भविष्यतीति तास्तमब्रुवन्वयं देवस्त्रियोऽप्सरस इन्द्रं देवं वरदं
पुरा प्रभविष्णुं वृणीमह इति ॥ १२-३५१-३३ (७९९९२)
अथ ता विश्वरूपोऽब्रवीदद्यैव सेन्द्रा देवा नभविष्यन्तीति
ततो मन्त्राञ्जजाप तैर्मन्त्रैरवर्धतत्रिशिरा एकेनास्येन
सर्वलोकेषु यथावद्द्विजैः क्रियावद्भिर्यज्ञेषु सुहुतं सोमं
पपौ एके(१)नान्नमेकेन सेन्द्रान्देवानथेन्द्रस्तं विवर्धमानं
सोमपानाप्यायितसर्वगात्रं दृष्ट्वा चिन्तामापेदे सह देवैः ॥
१२-३५१-३४ (७९९९३)
ते देवाः सेन्द्रा ब्रह्माणमभिजग्मुस्त ऊचुर्विश्वरूपेण सर्वयज्ञेषु
सुहुतः सोमः पीयते वयमभागाः संवृत्ता असुरपक्षो वर्धते वयं
क्षीयामस्तदर्हसि नो विधातुं श्रेयोऽनन्तरमिति ॥ १२-३५१-३५ (७९९९४)
तान्ब्रह्मोवाच ऋषिर्भार्गवस्तपस्तप्यते दधीचः स याच्यतां
वरं स यथा कलेवरं जह्यात् तस्यास्थिभिर्वज्रं क्रियतामिति ॥
१२-३५१-३६ (७९९९५)
ततो देवास्तत्रागच्छन्यत्र दधीचो भगवानृषिस्तपस्तेपे
सेन्द्रा देवास्तमभिगम्योचुर्भगवंस्तपसा कुशलमविघ्नं चेति ॥
१२-३५१-३७ (७९९९६)
तान्दधीच उवाच स्वागतं भवतां उच्यतां किं क्रियतां यद्वक्ष्यथ
तत्करिष्यामि ॥ १२-३५१-३८ (७९९९७)
ते तमब्रुवञ्शरीपरित्यागं लोकहितार्थं भगवान्कर्तुमर्हतीति ॥
१२-३५१-३९ (७९९९८)
गएवमुक्तो दधीचस्तानब्रवीत् ।सहस्रं वर्षाणामैन्द्रं
पदमवाप्यते मया यदि जह्याम्।तथेत्युक्त्वेन्द्रः स्वस्थानं दत्वा
तपस्व्यभवत्।इन्द्रो दधीचोऽभवत्।तावत्पूर्वेण सेन्द्रा देवा
आगमन्कालोऽयं देहन्यासायेति।' अथ दधीचस्तथैवा विमनाः

सुखदुःखसमो महायोगी आत्मनि परमात्मानं समाधाय शरीरपरित्यागं
चकार ॥ १२-३५१-४० (७९९९९)
ग्श्रुतिरप्यत्र भवति इन्द्रो दधीचोस्थिभिकृतमिति' तस्य
परमात्मन्यपसृते तान्यस्थीति विधाता संगृह्य वज्रमकरोत्तेन
वज्रेणाभेद्येनामधृष्येण ब्रह्मास्थिसंभूतेन विष्णुप्रविष्टेनेन्द्रो
विश्वरूपं जघान शिरसां चास्य च्छेदनमकरोत्तक्ष्ण यज्ञपशोः
शिरस्ते ददानीत्युक्त्वा ।तस्मादनन्तर विश्वरूपगात्रमथनसंभवं
त्वाष्ट्रोत्पादितमेवारिं वृत्रमिन्द्रो जघान ॥ १२-३५१-४१ (८००००)
(२)तस्यां द्वैधीभूतानां ब्रह्मवध्यायां भयादिन्द्रो देवराज्यं
पर्यत्यजदप्सु संभवां च शीतलां मानससरोगतां नलिनीं प्रतिपेदे
तत्र चैश्वर्ययोगादणुमात्रो भूत्वा विसग्रन्थिं प्रविवेश ॥
१२-३५१-४२ (८०००१)
अथ ब्रह्मवध्याकृते प्रनष्टे त्रैलोक्यनाथे शचीपतौ
जगदनीश्वरं बभूव देवान् रजस्तमश्चाविवेशमन्त्रा न
प्रावर्तन्त महार्षीणां रक्षांसि प्रादुरभवन् ब्रह्म चोत्सादनं
जगामानिन्द्राश्चाबलालोकाः सुप्रधृष्या बभूवुः ॥ १२-३५१-४३ (८०००२)
अथ देवा ऋषयश्चायुषः पुत्रं नहुषं नाम
देवराज्येऽभिषिपिचुर्नहुषः पञ्चभिः शतैर्ज्योतिषां ललाटे
ज्वलद्भिः सर्वतेजोहरैस्त्रिविष्टपं पालयांबभूव ॥ १२-३५१-४४
(८०००३)
अथ लोकाः प्रकृतिमापेदिरे स्वस्थाश्च हृष्टाश्च बभूवुः ॥
१२-३५१-४५ (८०००४)
अथोवाच नहुषः सर्वं मां शक्रोपभोग्यमुपस्थितमृते शचीमिति
स एवमुक्त्वा शचीसमीपमगमद्बृहस्पतिगृहे चासीनामुवाचनां
सुभगेऽहमिन्द्रो देवानां भजस्व मामिति तं शचीप्रत्युवाच प्रकृत्या
त्वं धर्मवत्सलः सोमवंशोद्भवश्च नार्हसि परपत्नीधर्षणं
कर्तुमिति ॥ १२-३५१-४६ (८०००५)
तामथोवाच नहुष ऐन्द्रं पदमध्यास्यते मयाऽहमिन्द्रस्य
राज्यरत्नहरो नात्राधर्मः कश्चित्त्वमिन्द्रोपभुक्तेति सा तमुवाचास्ति
मम किंचिद्व्रतमपर्यवसितं तस्यावभृथे त्वामुपगमिष्यामि
कैश्चिदेवाहोभिरिति स शच्यैवमभिहितो जगाम ॥ १२-३५१-४७
(८०००६)
अथ शची दुःखशोकार्ता भर्तृदर्शनलालसानहुषभयगृहीता
बृहस्पतिमुपागच्छत्स च तामत्युद्विग्नां दृष्ट्वैव ध्यानं
प्रविश्य भर्तृकार्यतत्परां ज्ञात्वा बृहस्पतिरुवाचानेनैव
व्रतेन तपसा चान्विता देवीं वरदामुपश्रुतिमाह्वय तदा सा ते इन्द्रं

दर्शयिष्यतीति साऽथ महानियमस्थिता देवीं वरदामुपश्रुतिं मन्त्रैराह्वयत्सोपश्रुतिः शचीसमीपमगादुवाच चैनामियमस्तीति त्वयाऽऽहूतोपस्थिता किं ते प्रियं करवाणीति तां मूर्ध्ना प्रणम्योवाच शची भगवत्यर्हसि मे भर्तारं दर्शयितुं त्वं सत्या माता सतां चेति सैनां मानसं सरोऽनयत्तत्रेन्द्रं विसग्रन्थिगतमदर्शयत् ॥
१२-३५१-४८ (८०००७)
तामथ पत्नीं शचीं कृशां रलानां चेन्द्रो दृष्ट्वा चिन्तयांबभूव अहो मम दुःखमिदमुपगतं नष्टं हि मामियमन्विष्य यत्पत्न्यभ्यगमद्दुःस्वार्तेति तामिन्द्र उवाच (१)कथं वर्यसीति सा तमुवाच नहु(२)पो मामाह्वयति पत्नीं कर्तुं कालश्चास्य मया कृत इति तामिन्द्र उवाच गच्छ नहुषस्त्वया वाच्योऽपूर्वेण मामृषियुक्तेन यानेन त्वमधिरूढ उद्वहस्वेति ।इन्द्रस्य महान्ति वाहनानि सन्ति मनः प्रियाण्यधिरूढानि मया त्वमन्येनोपयातुमर्हतीति सैवमुक्ता हृष्टा जगामेन्द्रोपि विसग्रन्थिमेवाविवेश भूयः ॥ १२-३५१-४९ (८०००८)
अथेन्द्राणीमभ्यागतां दृष्ट्वा तामुवाच नहुषो ग्यन्मे त्वया कालः परिकल्पितः' पूर्णः स काल इति तं शच्यब्रवीच्छक्रेण यथोक्तं स महर्षियुक्तं बाहनमधिरूढः शचीसमीपमुपागच्छत् ॥ १२-३५१-५० (८०००९)
अथ मैत्रावरुणिः कुम्भयोनिरगस्त्य ऋषिवरो महर्षीन् धिक्क्रियमाणांस्तान्नहुषेणापश्यत् तद्दुष्करमिति स्वयमपि गृहीतः पद्भ्यां चास्पृश्यत ततः स नहुषमब्रवीदकार्यप्रवृत्त पाप पतस्व महीं सर्पो भव यावद्भूमिर्गिरयश्च तिष्ठेयुस्तावदिति समहर्षिवाक्यसमकालमेव तस्माद्यानादवापतत् ॥ १२-३५१-५१ (८००१०)
अथानिन्द्रं पुनस्त्रैलोक्यमभवत् ततो देवा ऋषयश्च भगवन्तं विष्णुं शरणमिन्द्रार्थेऽभिजग्मुरूचुश्चैनं भगवन्निन्द्रं ब्रह्महत्याभिभूतं त्रातुमर्हसीति ततः स वरदस्तानब्रवीदश्वमेधं यज्ञं वैष्णवं शक्रोऽभियजतां ततः स्वस्थानं प्राप्स्यतीति ततो देवा ऋषयश्चेन्द्रं नापश्यन्यदा तदा शचीमूचुर्गच्छ सुभगे इन्द्रमानयस्वेति सा तत्सर इन्द्रमाह्वयत् ।इन्द्रश्च तस्मात्सरसः प्रत्युत्थाय गत्वा सरस्वतीमभिजगाम बृहस्पतिश्चाश्वमेघं महाक्रतुं शक्रायाहारत् तत्र कृष्णसारङ्गं मेध्यमश्वमुत्सृज्य पावनं तमेव कृत्वा इन्द्रं मरुत्पतिं बृहस्पतिः स्वं स्थानं प्रापयामास ॥ १२-३५१-५२ (८००११)
ततः स देवराट् देवैर्ऋषिभिः स्तूयमानस्त्रिविष्टपस्थो निष्कल्मषो बभूव ह ब्रह्मवध्यां चतुर्षु स्थानेषु व्यभजत् वनितावृक्षगिर्यवनिषु।' वनितासु रजः

।वृक्षेषु निर्यासः।गिरिषु शिम्बः पृथिव्यामूषरः
तेऽस्पृश्याः।तस्माद्धविरलवणं पच्यते, एवमिन्द्रो ब्रह्मतेजः
प्रभावोपवृंहितः शत्रुवधं कृत्वा स्वं स्थानं प्रापितः ॥
१२-३५१-५३ (८००१२)
ग्नहुषस्य शापमोक्षार्थं देवैर्ऋषिभिश्च याच्यमानोऽगस्त्यः प्राह ।
यावत्स्वकुलजः श्रीमान्धर्मराड्भ्रातृभिर्युतः ।
भीमस्तस्यानुजस्तं त्वं ग्रहीता तु युधिष्ठरः ।
कथयित्वा स्वकान्प्रश्नांस्त्वां च तं च विमोक्ष्यति ॥' १२-३५१-५४ (८००१३)
आकाशगङ्गागतश्च पुरा भरद्वाजो
महर्षिरुपास्पृशत्रीन्क्रमान्क्रमता विष्णुनाऽभ्यासादित स भरद्वाजेन
सलक्षणेन पाणिनोरसि ताडितः सलक्षणोरस्कः संवृत्तः ॥
१२-३५१-५५ (८००१४)
भृगुणा महर्षिणा शप्तोऽग्निः सर्वभक्षत्वमुपानीतः ॥ १२-३५१-५६
(८००१५)
अदितिर्वै देवानामन्नमपचदेतद्भुक्त्वा सुरा असुरान्हनिष्यन्तीति तत्र
बुधो व्रतचर्यारामाप्तावागच्छददितिं चायाचद्भिक्षां देहीति
तत्र देवैः पूर्वमेतत्प्राश्यं नान्येनेत्यदितिर्भिक्षां नादादथ
भिक्षाप्रत्याख्यानरूषितेन बुधेन ब्रह्मभूतेनादितिः शप्ता
अदिरेरुदरे भविष्यति व्यथा विवस्वतो द्वितीयजन्मन्यण्डसंज्ञितस्य
अण्डं मातुरदित्या मारितं स मार्ताण्डो विवस्वानभवच्छ्राद्धदेवः ॥
१२-३५१-५७ (८००१६)
दक्षस्य या दै दुहितरः षष्टिरासंस्तासां कश्यपारय
त्रयोदश प्रादाद्दश धर्माय दश मनवे सप्तविँशतिमिन्दवे
तासु तुल्यासु नक्षत्राख्यां गतासु सोमो रोहिण्यामभ्यधिकं
प्रीतिमान भूत्ततस्ताः शिष्टाः पत्न्य इर्ष्याव्रत्यः पितुः समीपं
गत्वेममर्थं शशंसुर्भगवन्नस्मासु तुल्यप्रभावासु सोमो
रोहिणीं प्रत्यधिकं भजतीति सोऽब्रवीद्यक्ष्मैनमावेक्ष्यत
इति दक्षशापाच्च सोमं राजानं यक्ष्मा विवेश स
यक्ष्मणाऽऽविष्टो दक्षमगाद्दक्षश्चैनमब्रवीन्न
समं वर्तस इति तत्रर्षयः सोममब्रुवन्क्षीयसे यक्ष्मणा
पश्चिमायां दिशि समुद्रे हिरण्यसरस्तीर्थं तत्र गत्वा
आत्मानमभिषेचयस्वेत्यथागच्छत्सोमस्तत्र हिरण्यसरस्तीर्थं गत्वा
चात्मनः सेचनमकरोत् स्नात्वा चात्मानं पाप्मनो मोक्षयामास तत्र
चाव भासितस्तीर्थे यदा सोमस्तदाप्रभृति च तीर्थं तत्प्रभासमिति
नाम्ना ख्यातं बभूव ॥ १२-३५१-५८ (८००१७)
तच्छापादद्यापि क्षीयते सोमोऽमावास्यान्तरस्थः

पौर्णमासीमात्रेऽधिष्ठितो मेघलेखाप्रतिच्छन्नं बपुर्दर्शयति
मेघसदृशं वर्णमगमत्तदस्य शशलक्ष्मविमलमभवत् ॥
१२-३५१-५९ (८००१८)
स्थूलशिरा महर्षिर्मेरोः प्रागुत्तरे दिग्विभागे तपस्तेपे
ततस्तस्य तपस्तप्यमानस्य सर्वगन्धवहः शुचिर्वायुर्वायमानः
शरीरमस्पृशत्स तपसा तापितशरीरः कृशो वायुनोपवीज्यमानो
हृदये परितोषमगमत्तत्र किल तस्यानिलव्यजनकृतपरितोषस्य
सद्यो वनस्पतयः पुष्पशोभां निदर्शितवन्त इति स एताञ्शशाप
न सर्वकालं पुष्पफलवन्तो भविष्यथेति ॥ १२-३५१-६० (८००१९)
नारायणो लोकहितार्थं वडवामुखो नाम पुरा महर्षिर्बभूव तस्य मेरौ
तपस्तप्यतः समुद्र आहूतो नागतस्तेनामर्षितेनात्मगात्रोष्मणाः समुद्रः
स्तिमितजलः कृतः स्वेदप्रस्यन्दनसदृशश्चास्य लवणभावो
जनितः ॥ १२-३५१-६१ (८००२०)
उक्तश्चाप्यपेयो भविष्यस्तेतच्च ते तोयं
बडवामुखसंज्ञितेन पेपीयमानं मधुरं भविष्यति तदेतदद्यापि
बडवामुखसंज्ञितेनानुवर्तिना तोयं समुद्रात्पीयते ।ग्पुनरुमा
दक्षकोपाद्धिमवतो गिरेर्दुहिता बभूव ॥' १२-३५१-६२ (८००२१)
हिमवतो गिरेर्दुहितरमुमां कन्यां रुद्रश्चकमे भृगुरपि
च महर्षिर्हिमवन्तमागत्याब्रवीत् कन्यामिमां मे देहीति
तमब्रवीद्धिमवानभिलषितो वरो दुहितुर्हि रुद्र इति
तमब्रवीद्भृगुर्यस्मात्त्वयाऽहं कन्यावरणकृतभावः
प्रत्याख्यातस्तस्मान्न रत्नानां भवान्भाजनं भविष्यतीति ॥
१२-३५१-६३ (८००२२)
अद्यप्रभृत्येतदवस्थितमृषिवचनं तदेवंविधं माहात्म्यं
ब्राह्मणानाम् ॥ १२-३५१-६४ (८००२३)
क्षत्रमपि च ब्राह्मणप्रसादादेव शाश्वतीमव्ययां च पृथिवीं
पत्नीमभिगम्य बुभुजे ॥ १२-३५१-६५ (८००२४)
तदेतद्ब्रह्मक्षत्रग्नीषोमीयं तेन जगद्धार्यरते ॥ ॥ १२-३५१-६६ (८००२५)

इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि नारायणीये
एकपञ्चाशदधिकत्रिशततमोऽध्यायः ॥ ३५१.।
Mahabharata - Shanti Parva - Chapter Footnotes

१२-३५१-११ देवानां मानुषे जन इति ध ।पाठः ॥
१२-३५१-१७ वाक्यं मन्त्रश्रद्धामनांसि चेति ट ।पाठः ॥
१२-३५१-१८ नास्ति मन्त्रात्समाश्रयमिति ट ।पाठः ॥

१२-३५१-१९ गर्गरः दधीक्षुतैलादिनिपीडनयन्त्रम् ॥
१२-३५१-३४ एकेनापः सुरामेकेन ।१२-३५१-४२ तस्मिन्द्विधाभूते तद्ब्रह्मवध्याभयात् इति ट। ध। पाठः।१२-३५१-४९ कथं कर्तासीतीति ध। पाठः। नहुषो मां दुष्टस्तर्कयतीति थ। ध। पाठः। ।

---

शन्तिपर्व-अध्यय३५२
॥ श्रीः ॥
१२.३५२. अध्यायः ३५२

Mahabharata - Shanti Parva - Chapter Topics
श्रीकृष्णेनार्जुनंप्रति हृषीकेशादिस्वनामनिर्वचनम् ॥ १.। तथा रुद्रनारायणयुद्धवर्णनम् ॥ २.।
Mahabharata - Shanti Parva - Chapter Text

१२-३५२-० (८००२६)
ॅभगवानुवाच। १२-३५२-०क्ष् (६६११)
नाम्नां निरुक्तं वक्ष्यामि शृणुष्वैकाग्रमानसः ।
सूर्याचन्द्रमसौ शश्वत्केशैर्मे अंशुसंज्ञितैः।'
बोधयंस्तापयंश्चैव जगदुत्तिष्ठते पृथक् ॥ १२-३५२-१ (८००२७)
बोधनात्तापनाच्चैव जगतो हर्षणं भवेत् ।
अग्नीषोमकृतैरेभिः कर्मभिः पाण्डुनन्दन ।
हृषीकेशोऽहमीशानो वरदो लोकभावनः ॥ १२-३५२-२ (८००२८)
इलोपहूतं गेहेषु हरे भागं क्रतुष्वहम् ।
वर्णो मे हरितः श्रेष्ठस्तस्माद्धरिरहं स्मृतः ॥ १२-३५२-३ (८००२९)
धामसारो हि लोकानामृतं चैव विचारितम् ।
ऋतधामा ततो विप्रैः सद्यश्चाहं प्रकीर्तितः ॥ १२-३५२-४ (८००३०)
नष्टां च धरणीं पूर्वमविन्दं वै गुहागताम् ।
गोविन्द इति तेनाहं देवैर्वाग्भिरभिष्टुतः ॥ १२-३५२-५ (८००३१)
शिपिविष्टेति चाख्यायां हीनरोमा च यो भवेत् ।
तेनाविष्ट तु यत्किंचिच्छिपिविष्टेति च स्मृतः ॥ १२-३५२-६ (८००३२)
यास्को मामृपिरव्यग्रो नैकयज्ञेषु गीतवान् ।
शिपिविष्ट इति ह्यस्माद्गुह्यनामधरो ह्यहम् ॥ १२-३५२-७ (८००३३)
स्तुत्वा मां शिपिविष्टेति यास्क ऋषिरुदारधीः ।
मत्प्रसादादधो नष्टं निरुक्तमभिजग्मिवान् ॥ १२-३५२-८ (८००३४)
न हि जातो न जायेयं न जनिष्ये कदाचन ।
क्षेत्रज्ञः सर्वभूतानां तस्मादहमजं स्मृतः ॥ १२-३५२-९ (८००३५)

नोक्तपूर्वं मया क्षुद्रमश्लीलं वा कदाचन ।
ऋता ब्रह्मसुता सा मे सत्यदेवी सरस्वती ॥ १२-३५२-१० (८००३६)
सच्चासच्चैव कौन्तेय मया वेशितमात्मनि ।
पौष्करे ब्रह्मसदने सत्यं मासृषयो विदुः ॥ १२-३५२-११ (८००३७)
सत्वान्न च्युतपूर्वोऽहं सत्यं वै विद्धि मत्कृतम् ।
जन्मनीहाभवेत्सत्वं पौर्विकं मे धनंजय ॥ १२-३५२-१२ (८००३८)
निराशीः कर्मसंयुक्तः सत्वतश्चाप्यकल्मषः ।
सात्वतज्ञानगदृष्टोऽहं सत्वतामिति सात्वतः ॥ १२-३५२-१३ (८००३९)
कृषाणि मेदिनीं पार्थ भूत्वा कार्ष्णायसो महान् ।
कृष्णो वर्णश्च मे यस्मात्तस्मात्कृषणोऽहमर्जुन ॥ १२-३५२-१४ (८००४०)
मया संश्लेषिता भूमिरद्भिर्व्योम च वायुना ।
वायुश्च तेजसा सार्धं वैकुण्ठत्वं ततो मम ॥ १२-३५२-१५ (८००४१)
निर्वाणं परमं ब्रह्म धर्मोऽसौ पर उच्यते ।
तस्मान्न च्युतपूर्वोऽहमच्युतस्तेन कर्मणा ॥ १२-३५२-१६ (८००४२)
पृथिवीनभसी चोभे विश्रुते विश्वतोमुखे ।
तयोः संधारणार्थं हि मामधोक्षजमञ्जसा ॥ १२-३५२-१७ (८००४३)
निरुक्तं वेदविदुपो वेदशब्दार्थचिन्तकाः ।
ते मां गायन्ति प्राग्वंशे अधोक्षज इति स्मृतः ॥ १२-३५२-१८ (८००४४)
शब्द एकमतैरेप व्याहृतः परमर्षिभिः ।
नान्यो ह्यधोक्षजो लोके ऋते नारायणं प्रभुम् ॥ १२-३५२-१९ (८००४५)
धृतं ममार्चिषो लोके जन्तूनां प्राणधारणम् ।
घृतार्चिरहमव्यग्रैर्वेदज्ञैः परिकीर्तितः ॥ १२-३५२-२० (८००४६)
त्रयो हि धातवः ख्याताः कर्मजा इति ये स्मृताः ।
पित्तं श्लेष्मा च वायुश्च एष संघात उच्यते ॥ १२-३५२-२१ (८००४७)
एतैश्च धार्यते जन्तुरेतैः क्षीणैश्च क्षीयते ।
आयुर्वेदविदस्तस्मात्त्रिधातुं मां प्रचक्षते ॥ १२-३५२-२२ (८००४८)
वृषो हि भगवान्धर्मः ख्यातो लोकेषु भारत ।
नेघण्टुकपदाख्याने विद्धि मां वृषमुत्तमम् ॥ १२-३५२-२३ (८००४९)
कपिर्वराहः श्रेष्ठश्च धर्मश्च वृष उच्यते ।
त्समाद्वृषाकपिं प्राह कश्यपो मां प्रजापतिः ॥ १२-३५२-२४ (८००५०)
न चादिं न मध्यं तथा चैव नान्तं
कदाचिद्विमन्ते द्विजा मे सुराश्च ।
अनाद्यो ह्यमध्यस्तथा चाप्यनन्तः ।
प्रगीतोऽहमीशो विभूर्लोकसाक्षी ॥ १२-३५२-२५ (८००५१)
शुचीनि श्रवणीयानि शृणोमीह धनंजय ।
न च पापानि गृह्णामि ततोऽहं वै शुचिश्रवाः ॥ १२-३५२-२६ (८००५२)

एकशृङ्गः पुरा भूत्वा वराहो नन्दिवर्धनः ।
इमां चोद्धृतवान्भूमिमेकशृङ्गस्ततो ह्यहम् ॥ १२-३५२-२७ (८००५३)
तथैवासं त्रिककुदो वाराहं रूपमास्थितः ।
त्रिककुत्तेन विख्यातः शरीरस्य तु मापनात् ॥ १२-३५२-२८ (८००५४)
निरिञ्च इति यत्प्रोक्तं कापिल ज्ञानचिन्तकैः ।
स प्रजापतिरेवाहं चेतनात्सर्वलोककृत् ॥ १२-३५२-२९ (८००५५)
विद्यासहायवन्तं मामादित्यस्थं सनातनम् ।
कपिलं प्राहुराचार्याः साङ्ख्या निश्चितनिश्चयाः ॥ १२-३५२-३० (८००५६)
हिरण्यगर्भो द्युतिमान्य एष च्छन्दसि स्तुतः ।
योगैः संपूज्यते नित्यं स एवाहं विभुः स्मृतः ॥ १२-३५२-३१ (८००५७)
एकविंशतिसाहस्रं ऋग्वेदं मां प्रचक्षते ।
सहस्रशाखं यत्साम ये वै वेदविदो जनाः ।
गायन्त्यारण्यके विप्रा मद्भक्तास्ते हि दुर्लभाः ॥ १२-३५२-३२ (८००५८)
षट्पञ्चाशतमष्टौ च सप्तत्रिंशतमित्यत ।
यस्मिञ्शाखा यजुर्वेदे सोहमाध्वर्यवे स्मृतः ॥ १२-३५२-३३ (८००५९)
पञ्चकल्पमथर्वाणं कृत्याभिः परिबृंहितम् ।
कल्पयन्ति हि मां विप्रा अथर्वाणविदस्तथा ॥ १२-३५२-३४ (८००६०)
शाखाभेदाश्च ये केचिद्याश्च शाखासु गीतयः ।
स्वरवर्णसमुच्चाराः सर्वांस्तान्विद्धि मत्कृतान् ॥ १२-३५२-३५ (८००६१)
यत्तद्धयशिरः पार्थ समुदेति वरप्रदम् ।
सोहमेवोत्तरे भागे क्रमाक्षरविभागवित् ॥ १२-३५२-३६ (८००६२)
रामादेशितमार्गेण मत्प्रसादान्महात्मना ।
पाञ्चालेन क्रमः प्राप्तस्तस्माद्भूतात्सनातनात् ॥ १२-३५२-३७ (८००६३)
बाभ्रव्यगोत्रः स बभौ प्रथमं क्रमपारगः ।
नारायणाद्वरं लब्ध्वा प्राप्य योगमनुत्तमम् ।
क्रमं प्रणीय शिक्षां च प्रणयित्वा स गालवः ॥ १२-३५२-३८ (८००६४)
पुण्डरीकोऽथ राजा च ब्रह्मदत्तः प्रतापवान् ।
जातीमरणजं दुःखं स्मृत्वास्मृत्वा पुनः पुनः ।
सप्तजातिषु मुख्यत्वाद्योगाना संपदं गतः ॥ १२-३५२-३९ (८००६५)
पुराऽहमात्मजः पार्थ प्रथितः कारणान्तरे ।
धर्मस्य कुरुशार्दूल ततोऽहं धर्मजः स्मृतः ॥ १२-३५२-४० (८००६६)
नरनारायणौ पूर्वं तपस्तेपतुरव्ययम् ।
धर्मयानं समारूढौ पर्वते गन्धमादने ॥ १२-३५२-४१ (८००६७)
तत्कालसमये चैव दक्षयज्ञो बभूव ह ।
न चैवाकल्पयद्भागं दक्षो रुद्रस्य भारत ॥ १२-३५२-४२ (८००६८)
ततो दधीचिवचनाद्दक्षयज्ञमपाहरत् ।

ससर्ज शूलं कोपेन प्रज्वलन्तं मुहुर्मुहुः ॥१२-३५२-४३ (८००६९)
तच्छूलं भस्मसात्कृत्वा दक्षयज्ञं सविस्तरम् ।
आवयोः सहसाऽगच्छद्बदर्याश्रममन्तिकात् ।
वेगेन महता पार्थ पतन्नारायणोरसि ॥ १२-३५२-४४ (८००७०)
तत्तस्यतेजसाऽऽविष्टाः केशा नारायणस्य ह ।
बभूवुर्मुञ्जवर्णास्तु ततोऽहं मुञ्जकेशवान् ॥१२-३५२-४५ (८००७१)
तच्च शूलं विनिर्धूतं हुंकारेण महात्मना ।
जगाम शंकरकरं नारायणसमाहतम् ॥१२-३५२-४६ (८००७२)
अथ रुद्र उपाधावत्तावृषी तपसाऽन्वितौ ॥ १२-३५२-४७ (८००७३)
तत एनं समुद्धूतं कण्ठे जग्राह पाणिना ।
नारायणः स विश्वात्मा तेनास्य शितिकण्ठता ॥१२-३५२-४८ (८००७४)
अथ रुद्रविघातार्थमिषीकां नर उद्धरन् ।
मन्त्रैश्च संयुयोजाशु सोऽभवत्परशुर्महान् ॥१२-३५२-४९ (८००७५)
क्षिप्तश्च सहसा तेन खण्डनं प्राप्तवांस्तदा ।
ततोऽहं खण्डपरशुः स्मृतः परशुखण्डनात् ॥१२-३५२-५० (८००७६)
ग्रुद्रस्य भागं प्रददुर्भागमुच्छेषणं पुनः ।
श्रुतिरप्यत्र भवति वेदैरुक्तस्तथा पुनः ॥१२-३५२-५१ (८००७७)
उच्छेपणभागो वै रुद्रस्तस्योच्छेपणेन होतव्यमिति सर्वे गम्यरूपेण
तदा ॥' १२-३५२-५२ (८००७८)
अर्जुन उवाच।१२-३५२-५३क्ष् (६६१२)
अस्मिन्युद्धे तु वार्ष्णेय त्रैलोक्यशमने तदा ।
को जय प्राप्तवांस्तत्र शंसैतन्मे जनार्दन ॥१२-३५२-५३ (८००७९)
श्रीभगवानुवाच।१२-३५२-५४क्ष् (६६१३)
तयोः संरब्धयोर्युद्धे रुद्रनारायणात्मनोः ।
उद्विग्राः सहसा कृत्स्नाः सर्वे लोकास्तदाऽभवन् ॥१२-३५२-५४ (८००८०)
नागृह्णात्पाव्नकः शुभ्रं मूखेषु सुहुतं हविः ।
वेदा न प्रतिभान्ति स्म ऋषीणां भावितात्मनां ॥१२-३५२-५५ (८००८१)
देवान्रजस्तमश्चैव समाविविशतुस्तदा ।
वसुधा संचकम्पे च नभश्च विपफाल ह ॥१२-३५२-५६ (८००८२)
निष्प्रभाणि च तेजांसि ब्रह्मा चैवासनच्युतः ।
अगाच्छोपं समुद्रश्च हिमवांश्च व्यशीर्यत ॥१२-३५२-५७ (८००८३)
तस्मिन्नेवं समुत्पन्ने निमित्ते पाण्डुनन्दन ।
ब्रह्मा वृतो देवगणार्ऋषिभिश्च महात्मभिः ।
आजगामाशु तं देशं यत्र युद्धमवर्तत ॥ १२-३५२-५८ (८००८४)
सोऽञ्जलिप्रग्रहो भूत्वा चतुर्वक्रो निरुक्तगः ।
उवाच वचनं रुद्रं लोकानामस्तु वै शिवम् ।

त्यजायुधानि विश्वेश जगतो हितकाम्यया ॥ १२-३५२-५९ (८००८५)
यदक्षरमथाव्यक्तमीशं लोकस्य भावनम् ।
कूटस्थं कर्तृनिर्द्वन्द्वमकर्तेति च यं विदुः ।
व्यक्तिभावगतस्यास्य एका मूर्तिरियं शुभा ॥ १२-३५२-६० (८००८६)
नरो नारायणश्चैव जातौ धर्मकुलोद्वहौ ।
तपसा महता युक्तौ देवश्रेष्ठौ महाव्रतौ ॥ १२-३५२-६१ (८००८७)
अहं प्रसादजस्तस्य कुतश्चित्कारणान्तरे ।
त्वं चैव क्रोधजस्तात पूर्वसर्गे सनातनः ॥ १२-३५२-६२ (८००८८)
मया च सार्धं वरद विबुधैश्च महर्षिभिः ।
प्रसादयाशु लोकानां शान्तिर्भवतु माचिरम् ॥ १२-३५२-६३ (८००८९)
ब्रह्मणा त्वेवमुक्तस्तु रुद्रः क्रोधाग्निमुत्सृजन् ।
प्रसादयामास ततो देवं नारायणं प्रभुम् ।
शरणं च जगामाद्यं वरेण्यं वरदं हरिम् ॥ १२-३५२-६४ (८००९०)
ततोऽथ वरदो देवो जितक्रोधो जितेन्द्रियः ।
प्रीतिमानभवत्तत्र रुद्रेण सह संगतः ॥ १२-३५२-६५ (८००९१)
ऋषिभिर्ब्रह्मणा चैव विबुधैश्च सुपूजितः ।
उवाच देवमीशानमीशः स जगतो हरिः ॥ १२-३५२-६६ (८००९२)
यस्त्वां वेत्ति स मां वेत्ति यस्त्वामनु स मामनु ।
नावयोरन्तरं किंचिन्मा तेऽभूद्बुद्धिरन्यथा ॥ १२-३५२-६७ (८००९३)
अद्यप्रभृति श्रीवत्सः शूलाङ्को मे भवत्वयम् ।
मम पाण्यङ्कितश्चापि श्रीकण्ठस्त्वं भविष्यसि ॥ १२-३५२-६८ (८००९४)
श्रीभगवानुवाच। १२-३५२-६९क्ष् (६६१४)
एवंलक्षणमुत्पाद्य परस्परकृतं तदा ।
सख्यं चैवातुलं कृत्वा रुद्रेण सहितावृषी ।
तपस्तेपतुरव्यग्रौ विसृज्य त्रिदिवौकसः ॥ १२-३५२-६९ (८००९५)
एष ते कथितः पार्थ नारायणजयो मृधे ।
नामानि चैव गुह्यानि निरुक्तानि च भारत ।
ऋषिभिः कथितानीह यानि संकीर्तितानि ते ॥ १२-३५२-७० (८००९६)
एवं बहुविधै रूपैश्चरामीह वसुंधराम् ।
ब्रह्मलोकं च कौन्येय गोलोकं च सनातनम् ॥ १२-३५२-७१ (८००९७)
मया त्वं रक्षितो युद्धे महान्तं प्राप्तवाञ्जयम् ॥ १२-३५२-७२ (८००९८)
यस्तु ते सोग्रतो याति युद्धे संप्रत्युपस्थिते ।
तं विद्धि रुद्रं कौन्तेय देवदेवं कपर्दिनम् ॥ १२-३५२-७३ (८००९९)
कालः स एव विहितः क्रोधजेति मया तव ।
निहतांस्तेन वै पूर्वं हतवानसि यान्रिपून् ॥ १२-३५२-७४ (८०१००)
अप्रमेयप्रभावं तं देवदेवमुमापतिम् ।

नमस्व देवं प्रयतो विश्वेशं हरमक्षयम् ॥ १२-३५२-७५ (८०१०१)
यश्च ते कथितः पूर्वं क्रोधजेति पुनः पुनः ।
तस्य प्रभाव एवाग्रे यच्छ्रुतं ते धनंजय ॥ ॥ १२-३५२-७६ (८०१०२)

इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि नारायणीये द्विपञ्चाशदधिकत्रिशततमोऽध्यायः ॥ ३५२.।
Mahabharata - Shanti Parva - Chapter Footnotes

१२-३५२-१ बोधयन्स्थापयंश्चैवेति ट ।पाठः ॥
१२-३५२-२ बोधनात्स्थापनाच्चैवेति ट ।पाठः ॥
१२-३५२-३ इलोपहूतं योगेनेति झ ।पाठः ॥
१२-३५२-६ शिपिविष्टं हि तत्स्मृतमिति ट ।ध।पाठः ॥
१२-३५२-११ पौष्करे मन्नाभिकमलोत्थे ॥
१२-३५२-१३ निराशीः कर्म निष्कामकर्म ॥
१२-३५२-१५ विगता कुण्ठा पञ्चानां भूतानां मेलने असामर्थ्यं यस्य स विकुण्ठः स एव वैकुण्ठः ॥
१२-३५२-१७ अधइति पृथिवी ।अक्षू व्याप्तावित्यतोऽक् आकाशः।ते उभे सञ्जयति सङ्गेन धारयतीत्यधोक्षज इत्यर्थः ॥
१२-३५२-१८ प्राग्वंशे यज्ञशालैकदेशे ॥
१२-३५२-२० मम वह्निस्वरूपस्यार्चिपो वर्धकमिति शेषः ॥
१२-३५२-२८ शरीरस्य प्रकोपनादिति ध ।पाठः ॥
१२-३५२-२९ कालिविज्ञानचिन्तकैरिति ट ।पाठः।रेचनात्सर्वलोककृदिति ध।पाठः ॥
१२-३५२-४३ अपाहरन्नाशितवान् रुद्र इति शेषः ॥
१२-३५२-४४ तच्छूलं कर्तृ ॥
१२-३५२-४५ तत्तेजसा शूलतेजसा ॥
१२-३५२-४८ एनं समुद्धूतमुड्डीयागतं रुद्रम् ॥
१२-३५२-५० क्षिप्त आक्षिप्तस्तेन रुद्रशूलेन रुद्रेण वा ॥
१२-३५२-६४ वरदं हर इति ट ।पाठः ॥

---

शन्तिपर्व-अध्यय३५३
॥ श्रीः ॥
१२.३५३. अध्यायः ३५३

Mahabharata - Shanti Parva - Chapter Topics
श्वेतद्वीपाद्बदर्याश्रममुपागतस्य नारदस्य श्रीनारायणेन संवादः ॥ १.।

१२-३५३-० (८०१०३)
शौनक उवाच। १२-३५३-०क्ष् (६६१५)
सौते सुमहदाख्यानं भवता परिकीर्तितम् ।
यच्छ्रुत्वा मुनयः सर्वे विस्मयं परमं गताः ॥ १२-३५३-१ (८०१०४)
सर्वाश्रमाभिगमनं सर्वतीर्थावगाहनम् ।
न तथा फलदं सौते नारायणकथा यथा ॥ १२-३५३-२ (८०१०५)
पाविताङ्गाः स्म संवृत्ताः श्रुत्वेमामादितः कथाम् ।
नारायणाश्रयां पुण्यां सर्वपापप्रमोचनीम् ॥ १२-३५३-३ (८०१०६)
दुर्दर्शो भगवान्देवः सर्वलोकनमस्कृतः ।
सब्रह्मकैः सुरैः कृत्स्नैरन्यैश्चैव महर्षिभिः ॥ १२-३५३-४ (८०१०७)
दृष्टवान्नारदो यत्तु देवं नारायणं हरिम् ।
नूनमेनद्ध्यनुमतं तस्य देवस्य सूतज ॥ १२-३५३-५ (८०१०८)
यदृष्टवाञ्जगन्नाथमनिरुद्धतनौ स्थितम् ।
यत्प्राद्रवत्पुनर्भूयो नारदो देवसत्तमौ ।
नरनारायणौ द्रष्टुं कारणं तद्ब्रवीहि मे ॥ १२-३५३-६ (८०१०९)
सौतिरुवाच। १२-३५३-७क्ष् (६६१६)
तस्मिन्यज्ञे वर्तमाने राज्ञः पारिक्षितस्य वै ।
कर्मान्तरेषु विधिवद्वर्तमानेषु शौनक ॥ १२-३५३-७ (८०११०)
कृष्णद्वैपायनं व्यासमृषिं वेदनिधिं प्रभुम् ।
परिपप्रच्छ राजेन्द्रः पितामहपितामहम् ॥ १२-३५३-८ (८०१११)
जनमेजय उवाच। १२-३५३-९क्ष् (६६१७)
श्वेतद्वीपान्निवृत्तेन नारदेन सुरर्षिणा ।
ध्यायता भगवद्वाक्यं चेष्टितं किमतः परम् ॥ १२-३५३-९ (८०११२)
बदर्याश्रममागम्य समागम्य च तावृषी ।
कियन्तं कालमवसत्कां कथां पृष्टवांश्च सः ॥ १२-३५३-१० (८०११३)
इदं शतसहस्राद्धि भारताख्यानविस्तरात् ।
आमन्थ्य मतिमन्थेन ज्ञानोदधिमनुत्तमम् ॥ १२-३५३-११ (८०११४)
नवनीतं यथा दध्नो मलयाच्चन्दनं यथा ।
अरण्यकं च वेदेभ्य ओषधीभ्योऽमृतं यथा ।
समुद्धृतमिदं ब्रह्मन्कथामृतमिदं तथा ॥ १२-३५३-१२ (८०११५)
तपोनिधे त्वयोक्तं हि नारायणकथाश्रयम् ।
स ईशो भगवान्देवः सर्वभूतात्मभावनः ॥ १२-३५३-१३ (८०११६)
अहो नारायणं तेजो दुर्दर्शं द्विजसत्तम ।
यत्राविशन्ति कल्पान्ते सर्वे ब्रह्मादयः सुराः ॥ १२-३५३-१४ (८०११७)

ऋषयश्च सगन्धर्वा यच्च किंचिच्चराचरम् ।
न ततोऽस्ति परं मन्ये पावनं दिवि चेह च ॥ १२-३५३-१५ (८०११८)
सर्वाश्रमाभिगमनं सर्वतीर्थावगाहनम् ।
न तथा फलदं चापि नारायणकथा यथा ॥ १२-३५३-१६ (८०११९)
सर्वथा पाविताः स्मेह श्रुत्वेमामादितः कथाम् ।
हरेर्विश्वेश्वरस्येह सर्वपापप्रणाशनीम् ॥ १२-३५३-१७ (८०१२०)
न चित्रं कृतवांस्तत्र यदार्यो मे धनंजयः ।
वासुदेवसहायो यः प्राप्तवाञ्जयमुत्तमम् ॥ १२-३५३-१८ (८०१२१)
न चास्य किंचिदप्राप्यं मन्ये लोकेष्वपि त्रिषु ।
त्रैलोक्यनाथो विष्णुः स यथाऽसीत्साह्यकृत्सखा ॥ १२-३५३-१९ (८०१२२)
धन्याश्च सर्व एवासन्ब्रह्मंस्ते मम पूर्वजाः ।
हिताय श्रेयसे चैव येषामासीज्जनार्दनः ॥ १२-३५३-२० (८०१२३)
तपसाऽप्यथ दुर्दर्शो भगवाँल्लोकपूजितः ।
यं दृष्टवन्तस्ते साक्षाच्छ्रीवत्साङ्कविभूषणम् ॥ १२-३५३-२१ (८०१२४)
तेभ्यो धन्यतरश्चैव नारदः परमेष्ठिजः ।
ग्दृष्टवान्यो हरिं देवं नारायणमजं विभुम् ॥' १२-३५३-२२ (८०१२५)
न चाल्पतेजसमृषिं वेद्मि नारदमव्ययम् ।
श्वेतद्वीपं समासाद्य येन दृष्टः स्वयं हरिः ॥ १२-३५३-२३ (८०१२६)
देवप्रसादानुगतं व्यक्तं तत्तस्य दर्शनम् ।
यद्दृष्टवांस्तदा देवमनिरुद्धतनौ स्थितम् ॥ १२-३५३-२४ (८०१२७)
बदरीमाश्रमं यत्तु नारदः प्राद्रवत्पुनः ।
नरनारायणौ द्रष्टुं किं नु तत्कारणं मुने ॥ १२-३५३-२५ (८०१२८)
श्वेतद्वीपान्निवृत्तश्च नारदः परमेष्ठिजः ।
बदरीमाश्रमं प्राप्य समागम्य च तावृषी ।
कियन्तं कालमवसत्प्रश्नान्कान्पृष्टवांश्च ह ॥ १२-३५३-२६ (८०१२९)
श्वेतद्वीपादुपावृत्ते तस्मिन्वा सुमहात्मनि ।
किमब्रूतां महात्मानौ नरनारायणावृषी ।
तदेतन्मे यथातत्त्वं सर्वमाख्यातुमर्हसि ॥ १२-३५३-२७ (८०१३०)
ग्सौतिरुवाच। १२-३५३-२८क्ष् (६६१८)
तस्य तद्वचनं श्रुत्वा कृष्णद्वैपायनस्तदा ।
शशास शिष्यमासीनं वैशंपायनमन्तिके ।
तदस्मै सर्वमाचक्ष्व यन्मत्तः श्रुतवानसि ॥ १२-३५३-२८ (८०१३१)
गुरोर्वचनमाज्ञाय स तु विप्रर्षभस्तदा ।
आचचक्षे ततः सर्वमितिहासं पुरातनम् ॥' १२-३५३-२९ (८०१३२)
वैशंपायन उवाच। १२-३५३-३०क्ष् (६६१९)
नमो भगवते तस्मै व्यासायामिततेजसे ।

यस्य प्रसादाद्वक्ष्यामि नारायणकथामिमाम् ॥ १२-३५३-३० (८०१३३)
प्राप्य श्वेतं महाद्वीपं दृष्ट्वा च हरिमव्ययम् ।
निवृत्तो नारदो राजस्तरसा मेरुमागमत् ।
हृदयेनोद्वहन्भारं यदुक्तं परमात्मना ॥ १२-३५३-३१ (८०१३४)
पश्चादस्याभवद्राजन्नात्मनः साध्वसं महत् ।
यद्गत्वा दूरमध्वानं क्षेमी पुनरिहागतः ॥ १२-३५३-३२ (८०१३५)
मेरोः प्रचक्राम ततः पर्वतं गन्धमादनम् ।
निपपात च खात्तूर्णं विशालां बदरीमनु ॥ १२-३५३-३३ (८०१३६)
ततः स ददृशे देवौ पुराणावृषिसत्तमौ ।
तपश्चरन्तौ सुमहदात्मनिष्ठौ महाव्रतौ ॥ १२-३५३-३४ (८०१३७)
तेजसाऽभ्यधिकौ सूर्यात्सर्वलोकविरोचनात् ।
श्रीवत्सलक्षणौ पूज्यौ जटामण्डलधारिणौ ॥ १२-३५३-३५ (८०१३८)
जालपादभुजौ तौ तु पादयोश्चक्रलक्षणौ ।
व्यूढोरस्कौ दीर्घभुजौ तथा मुष्कचतुष्किणौ ॥ १२-३५३-३६ (८०१३९)
षष्टिदन्तावष्टदंष्ट्रौ मेघौघसदृशस्वनौ ।
स्वास्यौ पृथुललाटौ च सुभ्रूसुहनुनासिकौ ।
आतपत्रेण सदृशे शिरसी देवयोस्तयोः ॥ १२-३५३-३७ (८०१४०)
एवं लक्षणसंपन्नौ महापुरुषसंज्ञितौ ।
तौ दृष्ट्वा नारदो हृष्टस्ताभ्यां च प्रतिपूजितः ॥ १२-३५३-३८ (८०१४१)
स्वागतेनाभिभाष्याथ पृष्टश्चानामयं तथा ।
बभूवान्तर्गतमतिर्निरीक्ष्य पुरुषोत्तमौ ॥ १२-३५३-३९ (८०१४२)
सदोगतास्तत्र ये वै सर्वभूतनमस्कृताः ।
श्वेतद्वीपे मया दृष्टास्तादृशावृषिसत्तमौ ॥ १२-३५३-४० (८०१४३)
इति संचिन्त्य मनसा कृत्वा चाभिप्रदक्षिणाम् ।
स चोपविविशे तत्र पीठे कुशमये शुभे ॥ १२-३५३-४१ (८०१४४)
ततस्तौ तपसां वासौ यशसां तेजसामपि ।
ऋषी शमदमोपेतौ कृत्वा पौर्वाह्णिकं विधिम् ॥ १२-३५३-४२ (८०१४५)
पश्चान्नारदमव्यग्रौ पाद्यार्घ्याभ्यामथार्चतः ।
पीठयोश्चोपविष्टौ तौ कृतातिथ्याह्निकौ नृपौ ॥ १२-३५३-४३ (८०१४६)
तेषु तत्रोपविष्टेषु स देशोऽभिव्यराजत ।
आज्याहुतिमहाज्वालैर्यज्ञवाटो यथाऽग्निभिः ॥ १२-३५३-४४ (८०१४७)
अथ नारायणस्तत्र नारदं वाक्यमब्रवीत् ।
सुखोपविष्टं विश्रान्तं कृतातिथ्यं सुखस्थितम् ॥ १२-३५३-४५ (८०१४८)
अपीदानीं स भगवान्परमात्मा सनातनः ।
श्वेतद्वीपे त्वया दृष्ट आवयोः प्रकृतिः परा ॥ १२-३५३-४६ (८०१४९)
नारद उवाच। १२-३५३-४७क्ष् (६६२०)

दृष्टो मे पुरुषः श्रीमान्विश्वरूपधरोऽव्ययः ।
सर्वे लोका हि तत्रस्थास्तथा देवाः सहर्षिभिः ॥१२-३५३-४७ (८०१५०)
अद्यापि चैनं पश्यामि युवां पश्यन्सनातनौ ॥ १२-३५३-४८ (८०१५१)
यैर्लक्षणैरुपेतः स हरिरव्यरक्तरूपधृत् ।
तैर्लक्षणैरुपेतौ हि व्यक्तरूपधरौ युवाम् ॥१२-३५३-४९ (८०१५२)
दृष्टौ युवां मया तत्र तस्य देवस्य पार्श्वतः ।
इहैव चागतोऽस्म्यद्य विसृष्टः परमात्मना ॥१२-३५३-५० (८०१५३)
को हि नाम भवेत्तस्य तेजसा यशसा श्रिया ।
सदृशस्त्रिषु लोकेषु ऋते धर्मात्मजौ युवाम् ॥१२-३५३-५१ (८०१५४)
तेन मे कथितः कृत्स्नो धर्मः क्षेत्रज्ञसंज्ञितः ।
प्रादुर्भावाश्च कथिता भविष्या इह ये यथा ॥१२-३५३-५२ (८०१५५)
तत्र ये पुरुषाः श्वेताः पञ्चेन्द्रियविवर्जिताः ।
प्रतिबुद्धाश्च ते सर्वे भक्ताश्च पुरुषोत्तमम् ॥१२-३५३-५३ (८०१५६)
तेऽर्चयन्ति सदा देवं तैः सार्धं रमते च सः ।
प्रियभक्तो हि भगवान्परमात्मा द्विजप्रियः ॥१२-३५३-५४ (८०१५७)
रमते सोऽर्च्यमानो हि सदा भागवतप्रियः ।
विश्वभुक्सर्वगो देवो माधवो भक्तवत्सलः ॥१२-३५३-५५ (८०१५८)
स कर्ता कारणं चैव कार्यं चातिबलद्युतिः ।
हेतुश्चाज्ञाविधानं च तत्त्वं चैव महायशाः ॥१२-३५३-५६ (८०१५९)
तपसा योज्य सोत्मानं श्वेतद्वीपात्परं हि यत् ।
तेज इत्यभिविख्यातं स्वयं भासावभासितम् ॥१२-३५३-५७ (८०१६०)
शान्तिः सा त्रिषु लोकेषु विहिता भावितात्मना ।
एतया शुभया बुद्धया नैष्ठिकं व्रतमास्थितः ॥१२-३५३-५८ (८०१६१)
न तत्र सूर्यस्तपति न सोमोऽभिविराजते ।
न वायुर्वाति देवेशे तपश्चरति दुश्चरम् ॥१२-३५३-५९ (८०१६२)
वेदीमष्टनलोत्सेधां भूमावास्थाय विश्वकृत् ।
एकपादस्थितो देव ऊर्ध्वबाहुरुदङ्भुखः ॥१२-३५३-६० (८०१६३)
साङ्गानावर्तयन्वेदांस्तपस्तेपे सुदुश्चरम् ।
यद्ब्रह्म ऋषयश्चैव स्वयं पशुपतिश्च यत् ॥१२-३५३-६१ (८०१६४)
शेषाश्च विबुधश्रेष्ठा दैत्यदानवराक्षसाः ।
नागाः सुपर्णा गन्धर्वाः सिद्धा राजर्पयश्च ते ॥१२-३५३-६२ (८०१६५)
हव्यं कव्यं च सततं विधियुक्तं प्रयुञ्जते ।
कृत्स्नं तु तस्य देवस्य चरणावुपतिष्ठतः ॥१२-३५३-६३ (८०१६६)
याः क्रियाः संप्रयुक्ताश्च एकान्तगतबुद्धिभिः ।
ताः सर्वाः शिरसा देवः प्रतिगृह्णाति वै स्वयं ॥१२-३५३-६४ (८०१६७)
न तस्यान्यः प्रियतरः प्रतिबुद्धैर्महात्मभिः ।

विद्यते त्रिषु लोकेषु ततोऽस्यैकान्तिकं गतः ॥ १२-३५३-६५ (८०१६८)
इह चैवागतोऽस्म्यद्य विसृष्टः परमात्मना ।
एवं मे भगवान्देवः स्वयमाख्यातवान्हरिः ॥ १२-३५३-६६ (८०१६९)
आसिष्ये तत्परो भूत्वा युवाभ्यां सह नित्यशः ॥ ॥ १२-३५३-६७ (८०१७०)

इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि नारायणीये
त्रिपञ्चाशदधिकत्रिशततमोऽध्यायः ॥ ३५३. ।
Mahabharata - Shanti Parva - Chapter Footnotes

१२-३५३-१८ केशवेनाभिसंगुप्तः प्राप्तवानाहये जयमिति ट । ध। पाठः ॥
१२-३५३-२६ काः कथाः पृष्टवांश्च स इति ध । पाठः ॥
१२-३५३-३१ हृदयेनोद्वहन्भावमिति ध । पाठः ॥
१२-३५३-३६ जालपादा हंसास्तदङ्कितभुजौ हंसपादाङ्कितभुजौ
। चक्रलक्षणौ चक्राङ्कितपादौ। जानुपातभुजान्ताविति
ट। पाठः। रक्तपादभुजान्ताविति ध। पाठः ॥
१२-३५३-४० समागतौ हि तत्रैतौ सर्वभूतनमस्कृतौ । श्वेतद्वीपे
मया दृष्टौ तादृशाविह सत्तमाविति थ। ध। पाठः ॥
१२-३५३-५७ श्वेत इत्यभिविख्यातमिति ध । पाठः ॥
१२-३५३-५८ लोकेषु सिद्धानभावितात्मनामिति च । ध। पाठः ॥
१२-३५३-६० नलवत्पर्वयुकत्त्वान्नलशब्देनाङ्गुलं ग्राह्यम् ॥
१२-३५३-६४ एकान्तगतबुद्धिरव्यभिचरितबुद्धिभिः ॥
१२-३५३-६५ ततोस्म्येकान्तितां गत इति थ । ध। पाठः ॥

---

शन्तिपर्व-अध्यय३५४
॥ श्रीः ॥
१२.३५४. अध्यायः ३५४

Mahabharata - Shanti Parva - Chapter Topics
नरनारायणाभ्यां नारदाय श्रीभगवन्महिमानुवर्णनम्
॥ १. । वदर्याश्रमे नरादेन चिरतरं तपश्चर्या ॥ २. ।
Mahabharata - Shanti Parva - Chapter Text

१२-३५४-० (८०१७१)
नरनारायणावूचतुः। १२-३५४-०क्ष् (६६२१)
धन्योस्यनुगृहीतोसि यत्ते दृष्टः स्वयंप्रभुः ।
न हि तं दृष्टवान्कश्चित्पद्मयोनिरपि स्वयम् ॥ १२-३५४-१ (८०१७२)
अव्यक्तयोनिर्भगवान्दुर्दर्शः पुरुषोत्तमः ।

नारदैतद्धि नौ सत्यं वचनं समुदाहृतम् ॥१२-३५४-२ (८०१७३)
नास्य भक्तात्प्रियतरो लोके कश्चन विद्यते ।
ततः स्वयं दर्शितवान्स्वमात्मानं द्विजोत्तम ॥१२-३५४-३ (८०१७४)
तपो हि तप्यतस्तस्य यत्स्थानं परमात्मनः ।
न तत्संप्राप्नुते कश्चिदृते ह्यावां द्वितोत्तम ॥१२-३५४-४ (८०१७५)
या हि सूर्यसहस्रस्य समस्तस्य भवेद्द्युतिः ।
स्थानस्य सा भवेत्तस्य स्वयं तेन विराजता ॥१२-३५४-५ (८०१७६)
तस्मादुत्तिष्ठते विप्र देवाद्विश्वभुवः पतेः ।
क्षमा क्षमावतां श्रेष्ठ यया भूमिस्तु युज्यते ॥१२-३५४-६ (८०१७७)
तस्माच्चोत्तिष्ठते देवात्सर्वभूतहिताद्रसः ।
आपो हि तेन युज्यन्ते द्रवत्वं प्राप्नुवन्ति च ॥१२-३५४-७ (८०१७८)
तस्मादेव समुद्भूतं तेजो रूपगुणात्मकम् ।
येन संयुज्यते सूर्यस्ततो लोके विराजते ॥१२-३५४-८ (८०१७९)
तस्माद्देवात्समुद्भूतः स्पर्शस्तु पुरुषोत्तमात् ।
येन स्म युज्यते वायुस्ततो लोकान्विवात्यसौ ॥१२-३५४-९ (८०१८०)
तस्माच्चोत्तिष्ठते शब्दः सर्वलोकेश्वरात्प्रभोः ।
आकाशं युज्यते येन ततस्तिष्ठत्यसंवृतम् ॥१२-३५४-१० (८०१८१)
तस्माच्चोत्तिष्ठते देवात्सर्वभूतगतं मनः ।
चन्द्रमा येन संयुक्तः प्रकाशगुणधारणः ॥१२-३५४-११ (८०१८२)
सद्भूतोत्पादकं नाम तत्स्थानं वेदसंज्ञितम् ।
विद्यासहायो यत्रास्ते भगवान्हव्यकव्यभुक् ॥१२-३५४-१२ (८०१८३)
ये हि निष्कल्मषा लोके पुण्यपापविवर्जिताः ।
तेषां वै क्षेममध्वानं गच्छतां द्विजसत्तम ॥१२-३५४-१३ (८०१८४)
सर्वलोके तमोहन्ता आदित्यो द्वारमुच्यते ।
ग ज्वालामाली महातेजा येनेदं धार्यते जगत् ॥' १२-३५४-१४ (८०१८५)
आदित्यदग्धसर्वाङ्गा अदृश्याः केनचित्क्वचित् ।
परमाणुभूता भूत्वा तु तं देवं प्रविशन्त्युत ॥१२-३५४-१५ (८०१८६)
तस्मादपि च निर्मुक्ता अनिरुद्धतनौ स्थिताः ।
मनोभूतास्ततो भूत्वा प्रद्युम्नं प्रविशन्त्युत ॥१२-३५४-१६ (८०१८७)
प्रद्युम्नाच्चापि निर्मुक्ता जीवं संकर्षणं ततः ।
विशन्ति विप्रप्रवराः साङ्ख्या भागवतैः सह ॥१२-३५४-१७ (८०१८८)
ततस्त्रैगुण्यहीनास्ते परमात्मानमञ्जसा ।
प्रविशन्ति द्विजश्रेष्ठाः क्षेत्रज्ञं निर्गुणात्मकम् ।
सर्वावासं वासुदेवं क्षेत्रज्ञं विद्धि तत्त्वतः ॥ १२-३५४-१८ (८०१८९)
समाहितमनस्काश्च नियताः संयतेन्द्रियाः ।
एकान्तभावोपगता वासुदेवं विशन्ति ते ॥१२-३५४-१९ (८०१९०)

आवामपि च धर्मस्य गुहे जातौ द्विजोत्तम ।
रम्यां विशालामाश्रित्य तप उग्रं समास्थितौ ॥१२-३५४-२० (८०१९१)
ये तु तस्यैव देवस्य प्रादुर्भावाः सुरप्रियाः ।
भविष्यन्ति त्रिलोकस्थास्तेषां स्वस्तीत्यथो द्विज ॥१२-३५४-२१ (८०१९२)
विधिना स्वेन युक्ताभ्यां यथापूर्वं द्विजोत्तम ।
आस्थिताभ्यां सर्वकृच्छ्रं व्रतं सम्यगनुत्तमम् ॥१२-३५४-२२ (८०१९३)
ग्स्वार्थेन विधिना युक्तः सर्वकृच्छ्रव्रते स्थितः।'
आवाभ्यामपि दृष्टस्त्वं श्वेतद्वीपे तपोधन ॥ १२-३५४-२३ (८०१९४)
समागतो भगवता संकल्पं कृतवांस्तथा ।
सर्वं हि नौ संविदितं त्रैलोक्ये सचराचरे ॥१२-३५४-२४ (८०१९५)
यद्भविष्यति वृत्तं वा वर्तते वा शुभाशुभम् ।
सर्वं स ते कथितवान्देवदेवो महामुने ॥१२-३५४-२५ (८०१९६)
वैशंपायन उवाच।१२-३५४-२६क्ष् (६६२२)
एतच्छ्रुत्वा तयोर्वाक्यं तपस्युग्रे च वर्ततोः ।
नारदः प्राञ्जलिर्भूत्वा नारायणपरायणः ॥१२-३५४-२६ (८०१९७)
जजाप विधिवन्मन्त्रान्नारायणगतान्बहून् ।
दिव्यं वर्षसहस्रं हि नरनारायणाश्रमे ॥१२-३५४-२७ (८०१९८)
अवसत्स महातेजा नारदो भगवानृषिः ।
तावेवाभ्यर्चयन्देवौ नरनारायणौ च तौ ॥ ॥१२-३५४-२८ (८०१९९)

इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि नारायणीये
चतुःपञ्चादशधिकत्रिशततमोऽध्यायः ॥ ३५४.।

Mahabharata - Shanti Parva - Chapter Footnotes

१२-३५४-२ आकाशयोनिर्भगवानिति ध ।पाठः ॥
१२-३५४-७ सर्वभूतहितोरस इति थ ।पाठः ॥
१२-३५४-१५ परमाण्वात्मभूतास्तु तं देशं प्रतिसन्त्युतेति थ ।पाठः ॥
१२-३५४-१७ विप्रप्रवरास्तेषां शुद्धा गतिर्हिंसेति ध ।पाठः ॥
१२-३५४-२० विशालां बदरीम् ॥

---

शन्तिपर्व-अध्यय३५५

॥ श्रीः ॥

१२.३५५. अध्यायः ३५५

Mahabharata - Shanti Parva - Chapter Topics

नारदंप्रति नरनारायणाभ्यां पित्र्ये कर्मणि विशेषनिरूपणम् ॥१.।

Mahabharata - Shanti Parva - Chapter Text

१२-३५५-० (८०२००)
वैशंपायन उवाच। १२-३५५-०क्ष् (६६२३)
कस्यचित्त्वथ कालस्य नारदः परमेष्ठिजः ।
दैवं कृत्वा यथान्यायं पित्र्यं चक्रे ततः परम् ॥ १२-३५५-१ (८०२०१)
ततस्तं वचनं प्राह ज्येष्ठो धर्मात्मजः प्रभुः ।
क इज्यते द्विजश्रेष्ठ दैवे पित्र्ये च कल्पिते ॥ १२-३५५-२ (८०२०२)
त्वया मतिमतां श्रेष्ठ तन्मे शंस यथातथम् ।
किमेतत्क्रियते कर्म फलं वाऽस्य किमिष्यते ॥ १२-३५५-३ (८०२०३)
नारद उवाच। १२-३५५-४क्ष् (६६२४)
त्वयैतत्कथितं पूर्वं दैवं कर्तव्यमित्यपि ।
दैवतं च परो ज्ञेयः परमात्मा सनातनः ॥ १२-३५५-४ (८०२०४)
ततस्तद्भावितो नित्यं यजे वैकुण्ठमव्ययम् ।
तस्माच्च प्रसृतः पूर्वं ब्रह्मा लोकपितामहः ॥ १२-३५५-५ (८०२०५)
मम वै पितरं प्रीतः परमेष्ठ्यप्यजीजनत् ।
अहं संकल्पजस्तस्य पुत्रः प्रथमकल्पितः ॥ १२-३५५-६ (८०२०६)
यजामि वै पितॄन्साधो नारायणविधौ कृते ।
एवं स एव भगवान्पिता माता पितामहः ॥ १२-३५५-७ (८०२०७)
इज्यते पितृयज्ञेषु मया नित्यं जगत्पतिः ।
श्रुतिश्चाप्यपरा देवाः पुत्रान्हि पितरोऽयजन् ॥ १२-३५५-८ (८०२०८)
वेदश्रुतिः प्रनष्टा च पुनरध्यापिता सुतैः ।
ततस्ते मन्त्रदाः पुत्राः पितॄणामिति वैदिकम् ॥ १२-३५५-९ (८०२०९)
नूनं सुरैस्तद्विदितं युवयोर्भावितात्मनोः ।
पुत्राश्च पितरश्चैव परस्परमपूजयन् ॥ १२-३५५-१० (८०२१०)
त्रीन्पिण्डान्न्यस्य वै पित्र्यान्पूर्वं दत्त्वा कुशानिति ।
कथं तु पिण्डसंज्ञां ते पितरो लेभिरे पुरा ॥ १२-३५५-११ (८०२११)
नरनारायणावूचतुः। १२-३५५-१२क्ष् (६६२५)
इमां हि धरणीं पूर्वं नष्टां सागरमेखलाम् ।
गोविन्द उज्जहाराशु वाराहं रूपमास्थितः ॥ १२-३५५-१२ (८०२१२)
स्थापयित्वा तु धरणीं स्वे स्थाने पुरुषोत्तमः ।
जलकर्दमलिप्ताङ्गो लोककार्यार्थमुद्यतः ॥ १२-३५५-१३ (८०२१३)
प्राप्ते चाह्निककाले तु मध्यदेशगते रवौ ।
दंष्ट्राविलग्नांस्त्रीन्पिण्डान्विधूय सहसा प्रभुः ॥ १२-३५५-१४ (८०२१४)
स्थापयामास वै पृथ्व्यां कुशानास्तीर्य नारद ।
स तेष्वात्मानमुद्दिश्य पित्र्यं चक्रे यथाविधि ॥ १२-३५५-१५ (८०२१५)
संकल्पयित्वा त्रीन्पिण्डान्स्वेनैव विधिना प्रभुः ।

आत्मगात्रोष्मसंभूतैः स्नेहगर्भैस्तिलैरपि ॥ १२-३५५-१६ (८०२१६)
प्रोक्ष्यापसव्यं देवेशः प्राङ्मुखः कृतवान्स्वयम् ।
मर्यादास्थापनार्थं च ततो वचनमुक्तवान् ॥ १२-३५५-१७ (८०२१७)
वृषाकपिरुवाच। १२-३५५-१८क्ष् (६६२६)
अहं हि पितरः स्रष्टुमुद्यतो लोककृत्स्वयम् ।
तस्य चिन्तयतः सद्यः पितृकार्यविधीन्परान् ॥ १२-३५५-१८ (८०२१८)
दंष्ट्राभ्यां प्रविनिर्धूता ममैते दक्षिणां दिशम् ।
आश्रिता धरणीं पीड्य तस्मात्पितर एव ते ॥ १२-३५५-१९ (८०२१९)
त्रयो मूर्तिविहीना वै पिण्डमूर्तिधरास्त्विमे ।
भवन्तु पितरो लोके मया सृष्टाः सनातनाः ॥ १२-३५५-२० (८०२२०)
पिता पितामहश्चैव तथैव प्रपितामहः ।
अहमेवात्र विज्ञेयस्त्रिषु पिण्डेषु संस्थितः ।
नास्ति मत्तोऽधिकः कश्चित्को वान्योच्यों मया स्वयं १२-३५५-२१ (८०२२१)
अहमेव पिता लोके अहमेव पितामहः ।
पितामहपिता चैव अहमेवात्र कारणम् ॥ १२-३५५-२२ (८०२२२)
इत्येतदुक्त्वा वचनं देवदेवो वृषाकपिः ।
वराहपर्वते विप्र दत्त्वा पिण्डान्सविस्तरान् ।
आत्मानं पूजयित्वैव तत्रैवादर्शनं गतः ॥ १२-३५५-२३ (८०२२३)
एतदर्थं सुभमते पितरः पिण्डसंज्ञिताः ।
लभन्ते सततं पूजां वृषाकपिवचो यथा ॥ १२-३५५-२४ (८०२२४)
ये यजन्ति पितॄन्देवान्गुरूंश्चैवातिर्थींस्तथा ।
गाश्चैव द्विजमुख्यांश्च पितरं मातरं तथा ॥ १२-३५५-२५ (८०२२५)
कर्मणा मनसा वाचा विष्णुमेव यजन्ति ते ।
अन्तर्गतः स भगवान्सर्वसत्वशरीरगः ॥ १२-३५५-२६ (८०२२६)
समः सर्वेषु भूतेषु ईश्वरः सुखदुःखयोः ।
महान्महात्मा सर्वात्मा नारायण इति श्रुतिः ॥ ॥ १२-३५५-२७ (८०२२७)

इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि नारायणीये
पञ्चपञ्चाशदधिकत्रिशततमोऽध्यायः ॥ ३५५.।
Mahabharata - Shanti Parva - Chapter Footnotes

१२-३५५-२ क इज्यते द्विजवरैर्दैवे पित्र्ये च कर्मणीति ध ।पाठः ॥
१२-३५५-४ परो यज्ञ इति झ ।पाठः ॥
१२-३५५-६ मम पितरं प्रजापतिम् ।ब्रह्मा परमेष्ठीति
संबन्धः। नारदो दक्षशापात्प्रजापतेः सकाशात्पुनर्जन्म प्रापेति
हरिवंशेऽस्ति। तस्य ब्रह्मणः ॥

१२-३५५-७ नारायणविधौ तान्त्रिके पूजादौ ॥
१२-३५५-८ अग्निष्वात्तादीन्पुत्रान् पितरो देवा अध्याप्यासुरैः सह युद्धार्थं गतास्ततश्चिरोपिताना तेषां श्रुतिः नष्टा न प्रतिभाति ।ततस्ते पुत्रेभ्य एव वेदमधीतयन्त इत्याख्यायिका पुराणान्तरप्रसिद्धा सूचिता ॥
१२-३५५-९ पुत्राः पितृत्वमुपपेदिर इति झ ।ध।पाठः ॥
१२-३५५-११ न्यस्य वै पृथ्व्यामिति ध ।थ।पाठः।पूर्वं पृथ्व्यां कुशान्दत्वा तत्र पित्राद्युद्देशेन पिण्डान्न्यस्यापूजयमिति संबन्धः ॥
१२-३५५-१४ मध्यंदिनगते रवाविति थ ।ध।पाठः।दंष्ट्राविलग्नान्मृत्पिण्डानिति ट।थ।पाठः ॥
१२-३५५-१६ तिलैरप इति थ ।ध।पाठः ॥
१२-३५५-१८ पितरः पितॄन् ॥
१२-३५५-१९ विष्णोः शालग्रामइव पितॄणां मूर्तयः पिण्डा एवेत्याह ।दंष्ट्राभ्यामिति।दंष्ट्राभ्यां प्रविनिर्धूता मृत्पिण्डा दक्षिणां दिशमिति ध।थ।पाठः।दंष्ट्राभ्यां विनिधूतांस्त्रीन्पिण्डानां दक्षिणां दिशमिति ठ।पाठः।आश्रिता शरणीं पिण्डा इति झ।पाठः ॥
१२-३५५-२१ पित्तामहश्चेत्यादिना श्राद्धं सर्वं विष्णुदैवत्यमेवेति पित्र्यप्रकारो दर्शितः ॥
१२-३५५-२२ न को मम पिता लोक इति ध ।पाठः।को वा मम पिता लोके इति झ।पाठः।मातामहः पिता चैवेति ध।पाठः ॥
१२-३५५-२४ एषा तस्य स्थितिर्विप्रेति झ ।पाठः ॥
१२-३५५-२५ पितॄन्भक्त्येति थ ।ध।पाठः ॥

---

शन्तिपर्व-अध्यय३५६
॥ श्रीः ॥
१२.३५६. अध्यायः ३५६

Mahabharata - Shanti Parva - Chapter Topics
नरनारायणानुज्ञानेन नारदेन स्वाश्रमंप्रति गमनम् ॥ १.। वैशंपायनेन जनमेजयंप्रति श्रीव्यासमाहात्म्यकथनम् ॥ २.। सौतिना श्रीनारायणगुणवर्णनपूर्वकं शौनकादिभ्यस्तदनुग्रहाशंसनम् ॥ ३.।
Mahabharata - Shanti Parva - Chapter Text

१२-३५६-० (८०२२८)
वैशंपायन उवाच।१२-३५६-०क्ष् (६६२७)
श्रुत्वैतन्नारदो वाक्यं नरनारायणेरितम् ।

अत्यन्तं भक्तिमान्देवे एकान्तित्वमुपेयिवान् ॥ १२-३५६-१ (८०२२९)
उषित्वा वर्षसाहस्रं नरनारायणाश्रमे ।
श्रुत्वा भगवदाख्यानं दृष्ट्वा च हरिमव्ययम् ।
जगाम हिमवत्कुक्षावाश्रमं स्वं सुरार्चितम् ॥ १२-३५६-२ (८०२३०)
तावपि ख्यातयशसौ नरनारायणावृषी ।
तस्मिन्नेवाश्रमे रम्ये तेपतुस्तप सत्तमम् ॥ १२-३५६-३ (८०२३१)
त्वमप्यमितविक्रान्तः पाण्डवानां कुलोद्वहः ।
पावितात्माऽद्य संवृत्तः श्रुत्वेमामादितः कथाम् ॥ १२-३५६-४ (८०२३२)
नैव तस्यापरो लोको नायं पार्थिवसत्तम ।
कर्मणा मनसा वाचा यो द्विष्याद्विष्णुमव्ययम् ॥ १२-३५६-५ (८०२३३)
मज्जन्ति पितरस्तस्य नरके शाश्वतीः समाः ।
यो द्विष्याद्विबुधश्रेष्ठं देवं नारायणं हरिम् ॥ १२-३५६-६ (८०२३४)
कथं नाम भवेद्द्वेष्य आत्मा लोकस्य कस्यचित् ।
आत्मा हि पुरुषव्याघ्र ज्ञेयो विष्णुरिति श्रुतिः ॥ १२-३५६-७ (८०२३५)
य एष गुरुरस्माकमृषिर्गन्धवतीसुतः ।
तेनैतत्कथितं तात माहात्म्यं परमात्मनः ।
तस्माच्छ्रुतं मया चेदं कथितं च तवानघ ॥ १२-३५६-८ (८०२३६)
नारदेन तु संप्राप्तः सरहस्यः ससंग्रहः ।
एष धर्मो जगन्नाथात्साक्षान्नारायणान्नृप ॥ १२-३५६-९ (८०२३७)
एवमेष महान्धर्मः स ते पूर्वं नृपोत्तम ।
कथितो हरिगीतासु समासविधिकल्पितः ॥ १२-३५६-१० (८०२३८)
कृष्णद्वैपायनं व्यासं विद्धि नारायणं प्रभुम् ।
को ह्यन्यः पुण्डरीकाक्षान्महाभारतकृद्भवेत् ।
धर्मान्नानाविधांश्चैव को ब्रूयात्तमृते प्रभुम् ॥ १२-३५६-११ (८०२३९)
वर्ततां ते महायज्ञो यथासंकल्पितस्त्वया ।
संकल्पिताश्वमेधस्त्वं श्रुतधर्मा च तत्त्वतः ॥ १२-३५६-१२ (८०२४०)
सौतिरुवाच। १२-३५६-१३क्ष् (६६२८)
एतत्तु महदाख्यानं श्रुत्वा पारीक्षितो नृपः ।
ततो यज्ञसमाप्त्यर्थं क्रियाः सर्वाः समारभत् ॥ १२-३५६-१३ (८०२४१)
नारायणीयमाख्यानमेतत्ते कथितं मया ।
पृष्टेन शौनकाद्येह नैमिषारण्यवासिषु ॥ १२-३५६-१४ (८०२४२)
नारदेन पुरा यद्वै गुरवे तु निवेदितम् ।
ऋषीणां पाण्डवानां च शृण्वतोः कृष्णभीष्मयोः ॥ १२-३५६-१५ (८०२४३)
स हि परमर्षिर्जनभुवनपतिः
पृथुधरणिधरः श्रुतिविनयपरः ।
शमनियमनिधिर्यमनियमपरो द्विजवर

सहितस्तव च भवतु गतिर्हरिरमरहितः ॥ १२-३५६-१६ (८०२४४)
असुरवधकरस्तपसांनिधिः
सुमहतां यशसां च भाजनम् ।
एकान्तिनां शरणदोऽभयदो गतिदो
गतिदोस्तु वः सुखभागकरः ।
मधुकैटभहा कृतधर्मविदां गतिदो
भयदो मखभागहरोस्तु शरणं स ते ॥ १२-३५६-१७ (८०२४५)
त्रिगुणो विगुणश्चतुरात्मधरः
पूर्तेष्टयोश्च फलभागहरः ।
विदधातु नित्यमजितोऽतिचलो
गतिरात्मवतां सुकृतिनामृषीणाम् ॥ १२-३५६-१८ (८०२४६)
तं लोकसाक्षिणमजं पुरुषं पुराणं
रविवर्णमीश्वरं गतिं बहुशः ।
प्रणमध्वमेकमतयो यतः
सलिलोद्भवोपि तमृषिं प्रणतः ॥ १२-३५६-१९ (८०२४७)
स हि लोकयोनिरसृतस्य पदं
सूक्ष्मं परायणमचलं हि पदम् ।
तत्साङ्ख्ययोगिभिरुदाहृतं तं
बुद्ध्या यतात्मभिरिदं सनातनम् ॥ ॥ १२-३५६-२० (८०२४८)

इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि नारायणीये
षट्पञ्चाशदधिकत्रिशततमोऽध्यायः ॥ ३५६.।
Mahabharata - Shanti Parva - Chapter Footnotes

१२-३५६-१५ गुरवे बृहस्पतये ॥
१२-३५६-१६ स नारायणः ॥
१२-३५६-१७ कृतधर्मः कृतयुगधर्मः सत्यादिस्तद्विदाम् ॥
१२-३५६-१८ चत्वारो वासुदेवसंकर्षणप्रद्युम्नानिरुद्धाख्या
आत्मानस्तान्धारयति स तथा ।त्रिगुणातिगश्चतुष्पथधरः इति
ध।पाठः ॥
१२-३५६-१९ सलिलमुद्भवो यस्य स नारायणः शेषशायी तमृषिं
वासुदेवम् ॥
१२-३५६-२० लोकस्याव्यक्तादेर्योनिः ।अमृतस्य मोक्षस्य पदं
स्थानम्।पदं पदनीयम् ॥

---

शन्तिपर्व-अध्यय३५७
॥ श्रीः ॥

१२.३५७. अध्यायः ३५७

Mahabharata - Shanti Parva - Chapter Topics
श्रीनारायणेन स्वनाभिपद्मो ब्रह्मणः सर्जनम् ॥ १.। ततो मधुकैटभयोरुत्पादनम् ॥ २.। ताभ्यां ब्रह्मणो वेदापहरणम् ॥ ३.। हयशिरोरूपिणा हरिणा ब्रह्मणे पुनर्वेदप्रत्यर्पणपूर्वकं मधुकैटभसंहरणम् ॥ ४.। वैशंपायनेन जनमेजयाय श्रीनारायणमहिमानुवर्णनम् ॥ ५.।
Mahabharata - Shanti Parva - Chapter Text

१२-३५७-० (८०२४९)
शौनक उवाच। १२-३५७-०क्ष् (६६२९)
श्रुतं भगवतस्तस्य माहात्म्यं परमात्मनः ।
जन्मधर्मगृहे चैव नरनारायणात्मकम् ॥ १२-३५७-१ (८०२५०)
महावराहसृष्टा च पिण्डोत्पत्तिः पुरातनी ।
प्रवृत्तौ च निवृत्तौ च यो यथा परिकल्पितः ॥ १२-३५७-२ (८०२५१)
तथा स नः श्रुतो ब्रह्मन्कथ्यमानस्त्वयाऽनघ ।
हव्यकव्यभुजो विष्णुरुदक्पूर्वे महोदधौ ॥ १२-३५७-३ (८०२५२)
यच्च तत्कथितं पूर्वं त्वया हयशिरो महत् ।
तच्च दृष्टं भगवता ब्रह्मणा परमेष्ठिना ॥ १२-३५७-४ (८०२५३)
किं तदुत्पादितं पूर्वं हरिणा लोकधारिणा ।
रूपं प्रभावं महतामपूर्वं धीमतांवर ॥ १२-३५७-५ (८०२५४)
दृष्ट्वा हि विबुधश्रेष्ठमपूर्वममितौजसम् ।
तदश्वशिरसं पुण्यं ब्रह्मा किमकरोन्मुने ॥ १२-३५७-६ (८०२५५)
एतन्नः संशयं ब्रह्मन्पुराणं ब्रह्मसंभवम् ।
कथयस्वोत्तममते महापुरुषसंश्रितम् ।
पाविताः स्म त्वया ब्रह्मन्पुण्याः कथय ताः कथाः ॥ १२-३५७-७ (८०२५६)
सौतिरुवाच। १२-३५७-८क्ष् (६६३०)
कथयिष्यामि ते सर्वं पुराणं वेदसंमितम् ।
जगौ यद्भगवान्व्यासो राज्ञः पारिक्षितस्य वै ॥ १२-३५७-८ (८०२५७)
श्रुत्वाऽश्वशिरसो मूर्तिं देवस्य हरिमेधसः ।
उत्पन्नसंशयो राजा एतदेवमचोदयत् ॥ १२-३५७-९ (८०२५८)
जनमेजय उवाच। १२-३५७-१०क्ष् (६६३१)
यत्तद्दर्शितवान्ब्राह्म देवं हयशिरोधरम् ।
किमर्थं तत्समभवद्वपुर्देवोपकल्पितम् ॥ १२-३५७-१० (८०२५९)
वैशंपायन उवाच। १२-३५७-११क्ष् (६६३२)

यत्किंचिदिह लोके वै देहबद्धं विशांपते ।
सर्वं पञ्चभिराविष्टं भूतैरीश्वरबुद्धिजैः ॥ १२-३५७-११ (८०२६०)
ईश्वरो हि जगत्स्रष्टा प्रभुर्नारायणो विराट् ।
भूतान्तरात्मा वरदः सगुणो निर्गुणोपि च ॥ १२-३५७-१२ (८०२६१)
भूतप्रलयमव्यक्तं शृणुष्व नृपसत्तम ॥ १२-३५७-१३ (८०२६२)
धरण्यामथ लीनायामप्सु चैकार्णवे पुरा ।
ज्योतिर्भूते जले चापि लीने ज्योतिषि चानिले ॥ १२-३५७-१४ (८०२६३)
वायौ चाकाशसंलीने आकाशे च मनोनुगे ।
व्यक्ते मनसि संलीने व्यक्ते चाव्यक्ततां गते ॥ १२-३५७-१५ (८०२६४)
अव्यक्ते पुरुषं याते पुंसि सर्वगतेऽपि च ।
तम एवाभवत्सर्वं न प्राज्ञायत किंचन ॥ १२-३५७-१६ (८०२६५)
तमसो ब्रह्मसंभूतं तमोमूलमृतात्मकम् ।
तद्विश्वभावसंज्ञान्तं पौरुषीं तनुमाश्रितम् ॥ १२-३५७-१७ (८०२६६)
सोऽनिरुद्ध इति प्रोक्तस्तत्प्रधानं प्रचक्षते ।
तदव्यक्तमिति ज्ञेयं त्रिगुणं नृपसत्तम ॥ १२-३५७-१८ (८०२६७)
विद्यासहायवान्देवो विष्वक्सेनो हरिः प्रभुः ।
ग्आदिकर्ता स भूतानामप्रमेयो हरिः प्रभुः ॥ १२-३५७-१९ (८०२६८)
अप्स्वेव शयनं चक्रे निद्रायोगमुपागतः ।
जगतश्चिन्तयन्सृष्टिं चित्रां बहुगुणोद्भवाम् ॥ १२-३५७-२० (८०२६९)
तस्य चिन्तयतः सृष्टिं महानात्मगुणः स्मृतः ।
अहंकारस्ततो जातो ब्रह्मा शुभचतुर्मुखः ।
हिरण्यगर्भो भगवान्सर्वलोकपितामहः ॥ १२-३५७-२१ (८०२७०)
पद्मेऽनिरुद्धात्संभूतस्तदा पद्मनिभेक्षणः ।
सहस्रपत्रे द्युतिमानुपविष्टः सनातनः ॥ १२-३५७-२२ (८०२७१)
ददृशेऽद्भुतसंकाशो लोकानाप्याययन्प्रभुः ।
सत्वस्थः परमेष्ठी स ततो भूतगणान्सृजन् ॥ १२-३५७-२३ (८०२७२)
पूर्वमेव च पद्मस्य पत्रे सूर्यांशुसप्रभे ।
नारायणकृतौ बिन्दू अपामास्तां गुणोत्तरौ ॥ १२-३५७-२४ (८०२७३)
तावपश्यत्स भगवाननादिनिधनोऽच्युतः ।
एकस्तत्राभवद्बिन्दुर्मध्वाभो रुचिरप्रभः ॥ १२-३५७-२५ (८०२७४)
स तामसो मधुर्जातस्तदा नारायणाज्ञया ।
कठिनस्त्वपरो विन्दुः कैटभो राजसस्तु सः ॥ १२-३५७-२६ (८०२७५)
तावभ्यधातवां श्रेष्ठौ तमोरजगुणान्वितौ ।
बलवन्तौ गदाहस्तौ पद्मनालानुसारिणौ ॥ १२-३५७-२७ (८०२७६)
ददृशातेऽरविन्दस्थं ब्रह्माणममितप्रभवम् ।
सृजन्तं प्रथमं वेदांश्चतुरश्चारुविग्रहान् ॥ १२-३५७-२८ (८०२७७)

ततो विग्रहवन्तस्तान्वेदान्दृष्ट्वाऽसुरोत्तमौ ।
सहसा जगृहतुर्वेदान्ब्रह्मणः पश्यतस्तदा ॥ १२-३५७-२९ (८०२७८)
अथ तौ दानवश्रेष्ठौ वेदान्गृह्य सनातनान् ।
रसां विविशतुस्तूर्णमुदक्पूर्वे महोदधौ ॥ १२-३५७-३० (८०२७९)
ततो हृतेषु देवेषु ब्रह्मा कश्मलमाविशत् ।
ततो वचनमीशानं प्राह वेदैर्विनाकृतः ॥ १२-३५७-३१ (८०२८०)
ब्रह्मोवाच। १२-३५७-३२क्ष् (६६३३)
वेदा मे परमं चक्षुर्वेदा मे परमं बलम् ।
वेदा मे परमं धाम वेदा मे ब्रह्म चोत्तरम् ॥ १२-३५७-३२ (८०२८१)
मम वेदा हृताः सर्वे दानवाभ्यां बलादितः ।
अन्धकारा हि मे लोका जाता वेदैर्विना कृताः ॥ १२-३५७-३३ (८०२८२)
वेदानृते हि किं कुर्या लोकानां सृष्टिमुत्तमाम् ।
अहो बत महद्दुःखं वेदनाशनजं मम ॥ १२-३५७-३४ (८०२८३)
प्राप्तं दुनोति हृदयं तीव्रं शोकपरायणम् ।
को हि शोकार्णवे मग्नं मामितोऽद्य समुद्धरेत् ॥ १२-३५७-३५ (८०२८४)
वदांस्तांश्चानयेन्नष्टान्कस्य चाहं प्रियो भवे ।
इत्येवं भाषमाणस्य ब्रह्मणो नृपसत्तम ॥ १२-३५७-३६ (८०२८५)
हरेः स्तोत्रार्थमुद्भूता बुद्धिर्बुद्धिमतां वर ।
ततो जगौ परं जप्यं साञ्जलिप्रग्रहः प्रभुः ॥ १२-३५७-३७ (८०२८६)
ब्रह्मोवाच। १२-३५७-३८क्ष् (६६३४)
ॐ नमस्ते ब्रह्महृदय नमस्ते मम पूर्वज ।
लोकाद्यभुवनश्रेष्ठ साङ्ख्ययोगनिधे प्रभो ॥ १२-३५७-३८ (८०२८७)
व्यक्ताव्यक्तकराचिन्त्य क्षेमं पन्थानमास्थितः ।
विश्वभुक्सर्वभूतानामन्तरात्मन्नयोनिज ।
अहं प्रसादजस्तुभ्यं लोकधाम स्वयंभुवः ॥ १२-३५७-३९ (८०२८८)
त्वत्तो मे मानसं जन्म प्रथमं द्विजपूजितम् ।
चाक्षुषं वै द्वितीयं मे जन्म चासीत्पुरातनम् ॥ १२-३५७-४० (८०२८९)
त्वत्प्रसादात्तु मे जन्म तृतीयं वाचिकं महत् ।
त्वत्तः श्रवणजं चापि चतुर्थं जन्म मे विभो ॥ १२-३५७-४१ (८०२९०)
नासत्यं चापि मे जन्म त्वत्तः पञ्चममुच्यते ।
अण्डजं चापि मे जन्म त्वत्तः षष्ठं विनिर्मितं ॥ १२-३५७-४२ (८०२९१)
इदं च सप्तमं जन्म पद्मजन्मेति वै प्रभो ।
सर्गेसर्गे ह्यहं पुत्रस्तव त्रिगुणवर्जित ॥ १२-३५७-४३ (८०२९२)
प्रथमः पुण्डरीकाक्षः प्रधानगुणकल्पितः ।
त्वमीश्वरः स्वभावश्च भूतानां त्वं प्रभावन ॥ १२-३५७-४४ (८०२९३)
त्वया विनिर्मितोऽहं वै वेदचक्षुर्वयोतिग ।

ते मे वेदा हृताश्चक्षुरन्धो जातोस्मि जागृहि ।
ददस्व चक्षूंषि मम प्रियोऽहं ते प्रियोसि मे ॥ १२-३५७-४५ (८०२९४)
एवं स्तुतः स भगवान्पुरुषः सर्वतोमुखः ।
जहौ निद्रामथ तदा वेदकार्यार्थमुद्यतः ॥१२-३५७-४६ (८०२९५)
ऐश्वर्येण प्रयोगेण द्वितीयां तनुमास्थितः ।
सुनासिकेन कायेन भूत्वा चन्द्रप्रभस्तदा ।
कृत्वा हयशिरः शुभ्रं वेदानामालयं प्रभुः ॥ १२-३५७-४७ (८०२९६)
तस्य मूर्धा समभवद्द्यौः सनक्षत्रतारकाः ।
केशाश्चास्याभवन्दीर्घा रवेरंशुसमप्रभाः ॥१२-३५७-४८ (८०२९७)
कर्णावाकाशपाताले ललाटं भूतधारिणी ।
गङ्गासरस्वती पुण्ये भ्रुवावास्तां महाद्युती ॥१२-३५७-४९ (८०२९८)
चक्षुषी सोमसूर्यौ ते नासा संध्या पुनः स्मृता ।
ॐकारस्त्वथ संस्कारो विद्युज्जिह्वा च निर्मिता ॥१२-३५७-५० (८०२९९)
दन्ताश्च पितरो राजन्सोमपा इति विश्रुताः ।
गोलोको ब्रह्मलोकश्च ओष्ठावास्तां महात्मनः ।
ग्रीवा चास्याभवद्राजन्कालरात्रिर्गुणोत्तरा ॥ १२-३५७-५१ (८०३००)
एतद्धयशिरः कृत्वा नानामूर्तिभिरावृतम् ।
अन्तर्दधौ स विश्वेशो विवेश च रसां प्रभुः ॥१२-३५७-५२ (८०३०१)
रसां पुनः प्रविष्टश्च योगं परममास्थितः ।
शैक्ष्यं स्वरं समास्थाय उद्गीतं प्रासृजत्स्वरम् ॥१२-३५७-५३ (८०३०२)
सस्वरः सानुनादी च सर्वशः स्निग्ध एव च ।
बभूवान्तर्जलगतः सर्वभूतगुणोदितः ॥१२-३५७-५४ (८०३०३)
ततस्तावसुरौ कृत्वा वेदान्समयबन्धनान् ।
रसातले विनिक्षिप्य यतः शब्दस्ततो द्रुतौ ॥१२-३५७-५५ (८०३०४)
एतस्मिन्नन्तरे राजन्देवो हयशिरोधरः ।
जग्राह वेदानखिलान्रसालगतान्हरिः ॥१२-३५७-५६ (८०३०५)
प्रादाच्च ब्रह्मणे भूयस्ततः स्वां प्रकृतिं गतः ॥ १२-३५७-५७ (८०३०६)
स्थापयित्वा हयशिरा उदक्पूर्वे महोदधौ ।
वेदानामालयश्चापि बभूवाश्वरिरास्ततः ॥१२-३५७-५८ (८०३०७)
अथ किंचिदपश्यन्तौ दानवौ मधुकैटभौ ।
यत्र देवा विनिक्षिप्तास्तत्स्थानं शून्यमेव च ॥१२-३५७-५९ (८०३०८)
तत उत्तममास्थाय वेगं बलवतां वरौ ।
पुनरुत्तस्थतुः शीघ्रं रसानामालयात्तदा ॥१२-३५७-६० (८०३०९)
ददृशाते च पुरुषं तमेवादिकरं प्रभुम् ।
श्वेतं चन्द्रविशुद्धाभमनिरुद्धतनौ स्थितम् ट
भूयोप्यमितविक्रान्तं निद्रायोगमुपागतम् ॥ १२-३५७-६१ (८०३१०)

आत्मप्रमाणरचिते अपामुपरि कल्पिते ।
शयने नागभोगाढ्ये ज्वालामालासमावृते ॥ १२-३५७-६२ (८०३११)
निष्कल्मषेण सत्वेन संपन्नं रुचिरप्रभम् ।
तं दृष्ट्वा दानवेन्द्रौ तौ महाहासममुञ्चताम् ॥ १२-३५७-६३ (८०३१२)
ऊचतुश्च समाविष्टौ रजसा तमसा च तौ ।
अयं स पुरुषः श्वेतः शेते निद्रामुपागतः ॥ १२-३५७-६४ (८०३१३)
अनेन नूनं वेदानां कृतमाहरणं रसात् ।
कस्यैष कोनु खल्वेष किंच स्वपिति भोगवान् ।
इच्युच्चारितवाक्यौ तौ बोधयामासतुर्हरिम् ॥ १२-३५७-६५ (८०३१४)
युद्धार्थिनौ हि विज्ञाय विबुद्धः पुरुषोत्तमः ।
निरीक्ष्य चासुरेन्द्रौ तौ ततो युद्धे मनोदधे ॥ १२-३५७-६६ (८०३१५)
अथ युद्धं समभवत्तयोर्नारायणस्य वै ॥ १२-३५७-६७ (८०३१६)
रजस्तमोविष्टतनू तावुभौ मधुकैटभौ ।
ब्रह्मणोपचितिं कुर्वञ्जधान मधुसूदनः ॥ १२-३५७-६८ (८०३१७)
ततस्तयोर्वधेनाशु वेदापहरणेन च ।
शोकापनयनं चक्रे ब्रह्मणः पुरुषोत्तमः ॥ १२-३५७-६९ (८०३१८)
ततः परिवृतो ब्रह्मा हरिणा वेदसत्कृतः ।
निर्ममे स तदा लोकान्कृत्स्नान्स्थावरजङ्गमान् ॥ १२-३५७-७० (८०३१९)
दत्त्वा पितामहायाग्र्यां मतिं लोकविसर्गिकीम् ।
तत्रैवान्तर्दधे देवो यत एवागतो हरिः ॥ १२-३५७-७१ (८०३२०)
तौ दानवौ हरिर्हत्वा कृत्वा हयशिरस्तनुम् ।
पुनः प्रवृत्तिधर्मार्थं तामेव विदधे तनुम् ॥ १२-३५७-७२ (८०३२१)
एवमेष महाभागो बभूवाश्वशिरा हरिः ।
पौराणमेतत्प्रख्यातं रूपं वरदमैश्वरम् ॥ १२-३५७-७३ (८०३२२)
यो ह्येतद्ब्राह्मणो नित्यं शृणुयाद्धारयीत वा ।
न तस्याध्ययनं नाशमुपगच्छेत्कदाचन ॥ १२-३५७-७४ (८०३२३)
आराध्य तपसोग्रेण देवं हयशिरोधरम् ।
पाञ्चालेन क्रमः प्राप्तो रामेण पथि देशिते ॥ १२-३५७-७५ (८०३२४)
एतद्धयशिरो राजन्नाख्यानं तव कीर्तितम् ।
पुराणं वेदसमितं यन्मां त्वं परिपृच्छसि ॥ १२-३५७-७६ (८०३२५)
यांयामिच्छेत्तनुं देवः कर्तुं कार्यविधौ क्वचित् ।
तातां कुर्याद्विकुर्वाणः स्वयमात्मानमात्मना ॥ १२-३५७-७७ (८०३२६)
एष वेदनिधिः श्रीमानेष वै तपसोनिधिः ।
एष योगश्च साङ्ख्यं च ब्रह्म चाग्र्यं हविर्विभुः ॥ १२-३५७-७८ (८०३२७)
नारायणपरा वेदा याज्ञा नारायणात्मकाः ।
तपो नारायणपरं नारायणपरा गतिः ॥ १२-३५७-७९ (८०३२८)

नारायणपरं सत्यमृतं नारायणात्मकम् ।
नारायणपरो धर्मः पुनरावृत्तिदुर्लभः ॥ १२-३५७-८० (८०३२९)
प्रवृत्तिलक्षणश्चैव धर्मो नारायणात्मकः ।
नारायणात्मको गन्धो भूमौ श्रेष्ठतमः स्मृतः ॥ १२-३५७-८१ (८०३३०)
अपां चापि गुणा राजन्रसा नारायणात्मकाः ।
ज्योतिषां च परं रूपं स्मृतं नारायणात्मकम् ॥ १२-३५७-८२ (८०३३१)
नारायणात्मकश्चापि स्पर्शो वायुगुणः स्मृतः ।
नारायणात्मकश्चैव शब्द आकाशसंभवः ॥ १२-३५७-८३ (८०३३२)
मनश्चापि ततो भूतमव्यक्तगुणलक्षणम् ।
नारायणपरं कालो ज्योतिषामयनं च यत् ॥ १२-३५७-८४ (८०३३३)
नारायणपरा कीर्तिः श्रीश्च लक्ष्मीश्च देवताः ।
नारायणपरं साङ्ख्यं योगो नारायणात्मकः ॥ १२-३५७-८५ (८०३३४)
कारणं पुरुषो ह्येषां प्रधानं चापि कारणम् ।
स्वभावश्चैव कर्माणि दैवं येषां च कारणम् ॥ १२-३५७-८६ (८०३३५)
अधिष्ठानं तथा कर्ता करणं च पृथग्विधम् ।
विविधा च तथा चेष्टा दैवं चैवात्र पञ्चमम् ॥ १२-३५७-८७ (८०३३६)
पञ्चकारणसंख्यातो निष्ठा सर्वत्र वै हरिः ।
तत्त्वं विज्ञासमानानां हेतुभिः सर्वतोमुखैः ॥ १२-३५७-८८ (८०३३७)
तत्त्वमेको महायोगी हर्निर्नारायणः प्रभुः ।
ब्रह्मादीनां सलोकानामृषीणां च महात्मनाम् ॥ १२-३५७-८९ (८०३३८)
साङ्ख्यानां योगिनां चापि यतीनामात्मवेदिनाम् ।
मनीषितं विजानाति केशवो न तु तस्य ते ॥ १२-३५७-९० (८०३३९)
ये केचित्सर्वलोकेषु दैवं पित्र्यं च कुर्वते ।
दानानि च प्रयच्छन्ति तप्यन्ते च तपो महत् ॥ १२-३५७-९१ (८०३४०)
सर्वेषामाश्रयो विष्णुरैश्वरं विधिमास्थितः ।
सर्वभूतकृतावासो वासुदेवेति चोच्यते ॥ १२-३५७-९२ (८०३४१)
अयं हि नित्यः परमो महर्षि
र्महाविभूतिर्गुणवान्गुणाख्यः ।
गुणैश्च संयोगमुपैति शीघ्रं
कालो यथर्तावृतुसंप्रयुक्तः ॥ १२-३५७-९३ (८०३४२)
नैवास्य विन्दन्ति गतिं महात्मनो
न चागतिं कश्चिदिहानुपश्यति ।
ज्ञानात्मकाः संयमिनो महर्षयः ।
पश्यन्ति नित्यं पुरुषं गुणाधिकम् ॥ ॥ १२-३५७-९४ (८०३४३)

इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि नारायणीये

सप्तपञ्चाशदधिकत्रिशततमोऽध्यायः ॥ ३५७.।

Mahabharata - Shanti Parva - Chapter Footnotes

१२-३५७-३ हव्यकव्यभुजः ।मूलविभुजादित्वात्कः।अकारान्तः शब्दः।उदक्पूर्वे ऐशानकोणे।महोदधौ तत्समीपे।इदमुत्तरान्वयि ॥
१२-३५७-५ अपूर्वं प्रागदृष्टम् ॥
१२-३५७-६ अपूर्वं अद्भुतम् ॥
१२-३५७-१० तत् अश्वशिरोरूपम् ॥
१२-३५७-११ ईश्वरबुद्धिजैः ईश्वरसंकल्पमात्रजैः ॥
१२-३५७-२३ लोकनाथो महान्प्रभुरिति ट ।पाठः ॥
१२-३५७-३८ लोकाद्यनिधनश्रेष्ठेति ट ।पाठः ॥
१२-३५७-४६ देवकार्यार्थमुद्यत इति ट ।ध।पाठः ॥
१२-३५७-५३ ओमिति प्रासृजत्स्वरमिति थ।ध ।पाठः ॥
१२-३५७-७४ शृणुयाच्छ्राव्येत वेति थ ।ध।पाठः ॥
१२-३५७-९० केशवो ननु वै गतिरिति ट ।पाठः ॥
१२-३५७-९३ गुणवान्निर्गुणाख्य इति थ ।पाठः ॥
१२-३५७-९४ पुरुषं गुणातिगमिति ट ।पाठः ॥

---

शन्तिपर्व-अध्यय३५८
॥ श्रीः ॥
१२.३५८. अध्यायः ३५८

Mahabharata - Shanti Parva - Chapter Topics

वैशंपायनेन जनमेजयाय एकान्तिधर्मनिरूपणपूर्वकं लोके तत्प्रचारप्रकारप्रतिपादनम् ॥ १.।

Mahabharata - Shanti Parva - Chapter Text

१२-३५८-० (८०३४४)
जनमेजय उवाच।१२-३५८-०क्ष् (६६३५)
अहो ह्येकान्तिनः सर्वान्प्रीणाति भगवान्हरिः ।
विधिप्रयुक्तां पूजां च गृह्णाति शिरसा स्वयम् ॥ १२-३५८-१ (८०३४५)
ये तु दग्धेन्धना लोके पुण्यपापविवर्जिताः ।
तेषां च या हि निर्दिष्टा पारम्पर्यागता गतिः ॥ १२-३५८-२ (८०३४६)
चतुर्थ्यां चैव ते गत्यां गच्छन्ति पुरुषोत्तमम् ।
एकान्तिनस्तु पुरुषा गच्छन्ति परमं पदम् ॥ १२-३५८-३ (८०३४७)
नूनमेकान्तधर्मोऽयं श्रेष्ठो नारायणप्रियः ।
अगत्वा गतयतिस्रो यद्गच्छत्यव्ययं हरिम् ॥ १२-३५८-४ (८०३४८)

सहोपनिषदान्वेदान्ये विप्राः सम्यगास्थिताः ।
पठन्ति विधिमास्थाय ये चापि यतिधर्मिणः ॥ १२-३५८-५ (८०३४९)
तेभ्यो विशिष्टां जानामि गतिमेकान्तिनां नृणाम् ।
केनैष धर्मः कथितो देवेन ऋषिणाऽपि वा ॥ १२-३५८-६ (८०३५०)
एकान्तिनां च का चर्या कदा चोत्पादिता विभो ।
एतन्मे संशयं छिन्धि परं कौतूहलं हि मे ॥ १२-३५८-७ (८०३५१)
वैशंपायन उवाच। १२-३५८-८क्ष् (६६३६)
समुपोढेष्वनीकेषु कुरुपाण्डवयोर्मृधे ।
अर्जुने विमनस्के च गीता भगवता स्वयम् ॥ १२-३५८-८ (८०३५२)
आगतिश्च गतिश्चैव पूर्वं ते कथिता मया ।
गहनो ह्येष धर्मो वै दुर्विज्ञेयोऽकृतात्मभिः ॥ १२-३५८-९ (८०३५३)
संमितः सामवेदेन पुरैवादियुगे कृतः ।
धार्यते स्वयमीशेन राजन्नारायणेन ह ॥ १२-३५८-१० (८०३५४)
एतदर्थं महाराज पृष्टः पार्थेन नारदः ।
ऋषिमध्ये महाभागः शृण्वतोः कृष्णभीष्मयोः ॥ १२-३५८-११ (८०३५५)
गुरुणा च मयाऽप्येव कथितो नृपसत्तम ।
यथा तत्कथितं तत्र नारदेन तथा शृणु ॥ १२-३५८-१२ (८०३५६)
यदाऽऽसीन्मानजं जन्म नारायणमुखोद्गतम् ।
ब्रह्मणः पृथिवीपाल तदा नारायणः स्वयम् ॥ १२-३५८-१३ (८०३५७)
तेन धर्मेण कृतवान्दैवं पित्र्यं च भारत ।
फेनपा ऋषयश्चैव तं धर्मं प्रतिपेदिरे ॥ १२-३५८-१४ (८०३५८)
वैखानसाः फेनपेभ्यो धर्मं तं प्रतिपदिरे ।
वैखानसेभ्यः सोपस्तु ततः सोऽन्तर्दधे पुनः ॥ १२-३५८-१५ (८०३५९)
यदाऽऽसीच्चाक्षुषं जन्म द्वितीयं ब्रह्मणो नृप ।
यदा पितामहेनैव सोमाद्धर्मः परिश्रुतः ॥ १२-३५८-१६ (८०३६०)
नारायणात्मको राजन्रुद्राय प्रददौ च तम् ।
ततो योगस्थितो रुद्रः पुरा कृतयुगे नृप ॥ १२-३५८-१७ (८०३६१)
वालखिल्यानृषीन्सर्वान्धर्ममेनमपाठयत् ।
अन्तर्दधे ततो भूयस्तस्य देवस्य मायया ॥ १२-३५८-१८ (८०३६२)
तृतीयं ब्रह्मणो जन्म यदासीद्वाचिकं महत् ।
तत्रैष धर्मः संभूतः स्वयं नारायणान्नृप ॥ १२-३५८-१९ (८०३६३)
सुपर्णो नाम तमृषिः प्राप्तवान्पुरुषोत्तमात् ।
तपसा वै सुतप्तेन दमेन नियमेन च ॥ १२-३५८-२० (८०३६४)
त्रिः परिक्रान्तवानेतत्सुपर्णो धर्मसुत्तमम् ।
यस्मात्तस्माद्व्रतं ह्येतत्त्रिसौपर्णमिहोच्येत ॥ १२-३५८-२१ (८०३६५)
ऋग्वेदपाठपठितं व्रतमेतद्धि दुश्चरम् ।

सुपर्णाच्चाप्यधिगतो धर्म एष सनातनः ॥ १२-३५८-२२ (८०३६६)
वायुना द्विपदश्रेष्ठे प्रथितो जगदायुषा ।
वायोः सकाशात्प्राप्तश्च ऋषिभिर्विघसाशिभिः ॥ १२-३५८-२३ (८०३६७)
तेभ्यो महोदधिश्चैव प्राप्तवान्धर्ममुत्तमम् ।
अन्तर्दधे ततो भूयो नारायणसमाहृतः ॥ १२-३५८-२४ (८०३६८)
यदा भूयः श्रवणजा सृष्टिरासीन्महात्मनः ।
ब्रह्मणः पुरुषव्याघ्र तत्र कीर्तयतः शृणु ॥ १२-३५८-२५ (८०३६९)
जगत्स्रष्टुमना देवो हरिर्नारायणः स्वयम् ।
चिन्तयामास पुरुषं जगत्सर्गकरं प्रभुम् ॥ १२-३५८-२६ (८०३७०)
अथ चिन्तयतस्तस्य कर्णाभ्यां पुरुषः स्मृतः ।
प्रजासर्गकरो ब्रह्मा तमुवाच जगत्पतिः ॥ १२-३५८-२७ (८०३७१)
सृज प्रजाः पुत्र सर्वा मुखतः पादतस्तथा ।
श्रेयस्तव विधास्यामि बलं तेजश्च सुव्रत ॥ १२-३५८-२८ (८०३७२)
धर्मं च मत्तो गृह्णीष्व सात्वतं नाम नामतः ।
तेन सृष्टं कृतयुगं स्थापयस्व यथाविधि ॥ १२-३५८-२९ (८०३७३)
ततो ब्रह्मा नमश्चक्रे देवाय हरिमेधसे ।
धर्मं चाग्र्यं स जग्राह सरहस्यं ससंग्रहम् ॥ १२-३५८-३० (८०३७४)
आरण्यकेन सहितं नारायणमुखोद्गतम् ।
उपदिश्य ततो धर्मं ब्रह्मणेऽमिततेजसे ॥ १२-३५८-३१ (८०३७५)
तं कार्तयुगधर्माणं निराशीः कर्मसंज्ञितम् ।
जगाम तमसः पारं यत्राव्यक्तं व्यवस्थितम् ॥ १२-३५८-३२ (८०३७६)
ततोऽथ वरदो देवो ब्रह्मा लोकपितामहः ।
असृजत्स ततो लोकान्कृत्स्नान्स्थावरजङ्गमान् ॥ १२-३५८-३३ (८०३७७)
ततः प्रावर्तत तदा आदौ कृतयुगं शुभम् ।
ततो हि सात्वतो धर्मो व्याप्य लोकानवस्थितः ॥ १२-३५८-३४ (८०३७८)
तेनैवाद्येन धर्मेण ब्रह्मा लोकविसर्गकृत् ।
पूजयामास देवेशं हरिं नारायणं प्रभुम् ॥ १२-३५८-३५ (८०३७९)
धर्मप्रतिष्ठाहेतोश्च मनुं स्वारोचिषं ततः ।
अध्यापयामास तदा लोकानां हितकाम्यया ॥ १२-३५८-३६ (८०३८०)
ततः स्वारोचिषः पुत्रं स्वयं शङ्खपदं नृप ।
अध्यापयत्पुराऽव्यग्रः सर्वलोकपतिर्विभुः ॥ १२-३५८-३७ (८०३८१)
ततः शङ्खपदश्चापि पुत्रमात्मजमौरसम् ।
दिशापालं सुधर्माणमध्यापयत भारत ।
सोऽन्तर्दधे ततो भूयः प्राप्ते त्रेतायुगे पुनः ॥ १२-३५८-३८ (८०३८२)
नासत्ये जन्मनि पुरा ब्रह्मणः पार्थिवोत्तम ।
धर्ममेतं स्वयं देवो हरिर्नारायणः प्रभुः ॥ १२-३५८-३९ (८०३८३)

तज्जगादारविन्दाक्षो ब्रह्मणः पश्यतस्तदा ।
सनत्कुमारो भगवांस्ततः प्राधीतवान्नृप ॥१२-३५८-४० (८०३८४)
सनत्कुमारादपि च वीरणो वै प्रजापतिः ।
कृतादौ कुरुशार्दूल धर्ममेतदधीतवान् ॥१२-३५८-४१ (८०३८५)
वीरणश्चाप्यधीत्यैनं रैभ्याय मुनये ददौ ।
रैभ्यः पुत्राय शुद्धाय सुव्रताय सुमेधसे ॥१२-३५८-४२ (८०३८६)
कुक्षिपालाय च ददौ विशालाय च धर्मिणे ।
ततोऽप्यन्तर्दधे भूयो नारायणमुखोद्गतः ॥१२-३५८-४३ (८०३८७)
अण्डजे जन्मनि पुनर्ब्रह्मणे हरियोनये ।
एष धर्मः समुद्भूतो नारायणमुखात्पुनः ॥१२-३५८-४४ (८०३८८)
गृहीतो ब्रह्मणा राजन्प्रयुक्तश्च यथाविधि ।
अध्यापिताश्च मुनयो नाम्ना बर्हिपदो नृप ॥१२-३५८-४५ (८०३८९)
बर्हिषद्भयश्च संप्राप्तः सामवेदान्तगं द्विजम् ।
ज्येष्ठं नामाभिविख्यातं ज्येष्ठसामव्रतो हरिः ॥१२-३५८-४६ (८०३९०)
ज्येष्ठाच्चाप्यनुसंक्रान्तो राजानमविकम्पनम् ।
अन्तर्दधे ततो राजन्नेष दर्मः प्रभो हरेः ॥१२-३५८-४७ (८०३९१)
यदिदं सप्तमं जन्म पद्मजं ब्रह्मणो नृप ।
तत्रैष धर्मः कथितः स्वयं नारायणेन ह ॥१२-३५८-४८ (८०३९२)
पितामहाय शुद्धाय युगादौ लोकधारिणे ।
पितामहश्च दक्षाय धर्ममेतं पुरा ददौ ॥१२-३५८-४९ (८०३९३)
ततो ज्येष्ठे तु दौहित्रे प्रादाद्दक्षो नृपोत्तम ।
आदित्ये सवितुर्ज्येष्ठे विवस्वाञ्जगृहे ततः ॥१२-३५८-५० (८०३९४)
त्रेतायुगादौ च ततो विवस्वान्ममवे ददौ ।
मनुश्च लोकभूत्यर्थं सुतायेक्ष्वाकवे ददौ ॥१२-३५८-५१ (८०३९५)
इक्ष्वाकुणा च कथितो व्याप्य लोकानवस्थितः ।
गमिष्यति क्षयान्ते च पुनर्नारायणं नृप ॥१२-३५८-५२ (८०३९६)
यतीनां चापि यो धर्मः स ते पूर्वं नृपोत्तम ।
कथितो हरिगीतासु समासविधिकल्पितः ॥१२-३५८-५३ (८०३९७)
नारदेन सुसंप्राप्तः सरहस्यः ससंग्रहः ।
एष धर्मो जगन्नाथात्साक्षान्नारायणान्नृप ॥१२-३५८-५४ (८०३९८)
एवमेव महान्धर्मे आद्यो राजन्सनातनः ।
दुर्विज्ञेयो दुष्करश्च सात्वतैर्धार्यते सदा ॥१२-३५८-५५ (८०३९९)
धर्मज्ञानेन चैतेन सुप्रयुक्तेन कर्मणा ।
अहिंसाधर्मयुक्तेन प्रीयते हरिरीश्वरः ॥१२-३५८-५६ (८०४००)
एकव्यूहविभागो वा क्वचिद्दिव्व्यूहसंज्ञितः ।
त्रिव्यूहश्चापि संख्यातश्चतुर्व्यूहश्च दृश्यते ॥१२-३५८-५७ (८०४०१)

हरिरेव हि क्षेत्रज्ञो निर्ममो निष्कलस्तथा ।
जीवश्च सर्वभूतेषु पञ्चभूतगुणातिगः ॥ १२-३५८-५८ (८०४०२)
मनश्च प्रथितं राजन्पञ्चेन्द्रियसमीरणम् ।
एष लोकनिधिः श्रीमानेषु लोकविसर्गकृत् ॥ १२-३५८-५९ (८०४०३)
अकर्ता चैव कर्ता च कार्यं कारणमेव च ।
यथेच्छति तथा राजन्क्रीडते पुरुषोऽव्ययः ॥ १२-३५८-६० (८०४०४)
एष एकान्तिधर्मस्ते कीर्तितो नृपसत्तम ।
मया गुरुप्रसादेन दुर्विज्ञेयोऽकृतात्मभिः ॥ १२-३५८-६१ (८०४०५)
एकान्तिनो हि पुरुषा दुर्लभा बहवो नृप ।
यद्येकान्तिभिराकीर्णं जगत्स्यात्कुरुनन्दनः ॥ १२-३५८-६२ (८०४०६)
अहिंसकैरात्मविद्भिः सर्वभूतहिते रतैः ।
भवेत्कृतयुगप्राप्तिराशीः कर्मविवर्जिता ॥ १२-३५८-६३ (८०४०७)
एवं स भगवान्व्यासो गुरुर्मम विशांपते ।
कथयामास धर्मज्ञो धर्मराजे द्विजोत्तमः ॥ १२-३५८-६४ (८०४०८)
ऋषीणां संनिधौ राजञ्शृण्वतोः कृष्णभीष्मयोः ।
तस्याप्यकथयत्पूर्वं नारदः सुमहातपाः ॥ १२-३५८-६५ (८०४०९)
देवं परमकं ब्रह्म श्वेतं चन्द्राभमच्युतम् ।
यत्र चैकान्तिनो यान्ति नारायणपरायणाः ।
ग्तदेव परमं स्थानं मुक्तानां केवलं भवेत् ॥' १२-३५८-६६ (८०४१०)
जनमेजय उवाच। १२-३५८-६७क्ष् (६६३७)
एवं बहुविधं धर्मं प्रविबुद्धैर्निषेवितम् ।
न कुर्वन्ति कथं विप्रा अन्ये नानाव्रते स्थिताः ॥ १२-३५८-६७ (८०४११)
वैशंपायन उवाच। १२-३५८-६८क्ष् (६६३८)
तिस्रः प्रकृतयो राजन्देहबन्धेषु निर्मिताः ।
सात्विकी राजसी चैव तामसी चैव भारत ॥ १२-३५८-६८ (८०४१२)
देहबन्धेषु पुरुषः श्रेष्ठः कुरुकुलोद्वह ।
सात्विकः पुरुषव्याघ्र भवेन्मोक्षाय निश्चितः ॥ १२-३५८-६९ (८०४१३)
अत्रापि स विजानाति पुरुषं ब्रह्मवित्तमम् ।
नारायणां परं मोक्षे ततो वै सात्विकः स्मृतः ॥ १२-३५८-७० (८०४१४)
मनीषितं च प्राप्नोति चिन्तयन्पुरुषोत्तमम् ।
एकान्तभक्तः सततं नारायणपरायणः ॥ १२-३५८-७१ (८०४१५)
मनीषिणो हि ये केचिद्यतयो मोक्षधर्मिणः ।
तेषां विच्छिन्नतृष्णानां योगक्षेमवहो हरिः ॥ १२-३५८-७२ (८०४१६)
जायमानं हि पुरुषं यं पश्येन्मधुसूदनः ।
सात्विकस्तु स विज्ञेयो भवेन्मोक्षे च निश्चितः ॥ १२-३५८-७३ (८०४१७)
साङ्ख्ययोगेन तुल्यो हि धर्म एकान्तिसेवितः ।

नारायणात्मके मोक्षे ततो यान्ति परां गतिं ॥१२-३५८-७४ (८०४१८)
नारायणेन दृष्टस्तचु प्रतिबुद्धो भवेत्पुमान् ।
एवमात्मेच्छया राजन्प्रतिबुद्धो न जायते ॥१२-३५८-७५ (८०४१९)
राजसी तामसी चैव व्यामिश्रे प्रकृती स्मृते ।
तदात्मकं हि पुरुषं जायमानं विशांपते ।
प्रवृत्तिलक्षणैर्युक्तं नावेक्षति हरिः स्वयम् ॥ १२-३५८-७६ (८०४२०)
पश्यत्येनं जायमानं ब्रह्मा लोकपितामहः ।
रजसा तपसा चैव मानसं समभिप्लुतम् ॥१२-३५८-७७ (८०४२१)
कामं देवाश्च ऋषयः सत्वस्था नृपसत्तम ।
हीनाः सत्वेन सूक्ष्मेण ततो वैकारिकाः स्मृताः ॥१२-३५८-७८ (८०४२२)
जनमेजय उवाच।१२-३५८-७९क्ष् (६६३९)
कथं वैकारिको गच्छेत्पुरुषः पुरुषोत्तमम् ।
वद सर्वं यथादृष्टं प्रवृत्तिं च यथाक्रमम् ॥१२-३५८-७९ (८०४२३)
वैशंपायन उवाच।१२-३५८-८०क्ष् (६६४०)
सुसूक्ष्मं तत्त्वसंयुक्तं संयुक्तं त्रिभिरक्षरैः ।
पुरुषः पुरुषं गच्छेन्निष्क्रियं पञ्चविंशकम् ॥१२-३५८-८० (८०४२४)
एवमेकं साङ्ख्ययोगं वेदारण्यकमेव च ।
परस्पराङ्गान्येतानि पाञ्चरात्रं च कथ्यते ॥१२-३५८-८१ (८०४२५)
एष एकान्तिनां धर्मो नारायणपरात्मकः ॥ १२-३५८-८२ (८०४२६)
यथा समुद्रात्प्रसृता जलौघा
स्तमेव राजन्पुनराविशन्ति ।
इमे तथा ज्ञानमहाजलौघा
नारायणं वै पुनराविशन्ति ॥ १२-३५८-८३ (८०४२७)
एष ते कथितो धर्मः सात्वतो यदुबान्धव ।
कुरुष्वैनं यथान्यायं यदि शक्तोसि भारत ॥१२-३५८-८४ (८०४२८)
एवं हि स महाभागो नारदो गुरवे मम ।
श्वेतानां यतिनां चाह एकान्तगतिमव्ययाम् ॥१२-३५८-८५ (८०४२९)
व्यासश्चाकथयत्प्रीत्या धर्मपुत्राय धीमते ।
स एवायं मया तुभ्यमाख्यातः प्रसृतो गुरोः ॥१२-३५८-८६ (८०४३०)
इत्थं हि दुश्चरो धर्म एष पार्थिवसत्तम ।
यथैव त्वं तथैवान्ये न भजन्ति च मोहिताः ॥१२-३५८-८७ (८०४३१)
कृष्ण एव हि लोकानां भावनो मोहनस्तथा ।
संहारकारकश्चैव कारणं च विशांपते ॥ ॥१२-३५८-८८ (८०४३२)

इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि नारायणीये
अष्टपञ्चाशदधिकत्रिशततमोऽध्यायः ॥ ३५८.।

१२-३५८-२ दग्धेन्धनाः नष्टवासनाः । पारम्पर्यागता
गुरुसंप्रदायागतागतिर्ज्ञानम् ॥
१२-३५८-२३ प्रथितो गदता पुरेति थ । पाठः ॥
१२-३५८-२५ यदा भूयस्तमश्चास्य बुद्धिरासीन्महात्मनः इति ट । पाठः ॥
१२-३५८-२६ जगत्सर्गकरः प्रभुरिति थ । ध। पाठः ॥
१२-३५८-३१ नासिक्ये जन्मनीति थ।ध । पाठः ॥
१२-३५८-४२ रौत्र्याय मनवे ददाविति ध । ध। पाठः। सुव्रताय
सुधन्वत इति ट। ध। पाठः ॥
१२-३५८-४४ ब्रह्मणो हरिमेधस इति ट । ध। पाठः ॥
१२-३५८-४९ युगादौ लोकसाक्षिणे इति ट । पाठः ॥
१२-३५८-५८ निर्मलो निष्कलस्तथेति ट । पाठः ॥
१२-३५८-५९ अतश्च प्रथितो राजन्पञ्चेन्द्रियसमीरिति इति थ
। ध। पाठः ॥
१२-३५८-६३ कृतयुगप्राप्तिरीदृशैः कर्मवर्जितैरिति ट
। ध। पाठः। आशीः कर्म काम्यंकर्म ॥
१२-३५८-७० नारायणपरो मोक्ष इति झ । ट। पाठः ॥
१२-३५८-७२ यतयो मोक्षकाङ्क्षिण इति ट । ध। पाठः ॥
१२-३५८-७७ एनं राजसं ब्रह्मा पश्यति प्रवृत्तिमर्गि
नियोजयतीत्यर्थः । ब्रह्मा रुद्रोऽथवा पुनरिति थ।ध। पाठः ॥
१२-३५८-८१ परस्परान्यान्येतानीति ट । पाठः ॥
१२-३५८-८७ धर्मः पुण्यः पार्थिवसत्तमेति थ । पाठः ॥
१२-३५८-८८ संसारकारकश्चैवेति ध । पाठः ॥

---

शन्तिपर्व-अध्यय३५९
॥ श्रीः ॥
१२.३५९. अध्यायः ३५९

Mahabharata - Shanti Parva - Chapter Topics
वैशंपायनेन जनमेजयंप्रति श्रीव्यासस्य श्रीनारायणादपांतरतम
इति प्रादुर्भावादिकथनम् ॥ १.।
Mahabharata - Shanti Parva - Chapter Text

१२-३५९-० (८०४३३)
जनमेजय उवाच। १२-३५९-०क्ष् (६६४१)
साख्यं योगः पाञ्चरात्रं वेदारण्यकमेव च ।

ज्ञानान्येतानि ब्रह्मर्षे लोकेषु प्रचरन्ति ह ॥ १२-३५९-१ (८०४३४)
किमेतान्येकनिष्ठानिं पृथङ्निष्ठानि वा मुने ।
प्रब्रूहि वै मया पृष्टः प्रवृत्तिं च यथाक्रमम् ॥ १२-३५९-२ (८०४३५)
ग्कथं वैकारिको गच्छेत्पुरुषः पुरुषोत्तमम् ।
वदस्व त्वं मया पृष्टः प्रवृत्तिं च यथाक्रमम् ॥' १२-३५९-३ (८०४३६)
वैशंपायन उवाच। १२-३५९-४क्ष् (६६४२)
जज्ञे बहुज्ञं परमत्युदारं
यं द्वीपमध्ये सुतमात्मवन्तम् ।
पराशरात्सत्यवती महर्षि
तस्मै नमोऽज्ञानतमोनुदाय ॥ १२-३५९-४ (८०४३७)
पितामहाद्यं प्रवदन्ति षष्ठं
महर्षिमार्षेयविभूतियुक्तम् ।
नारायणस्यांशजमेकपुत्रं
द्वैपायनं वेदमहानिधानम् ॥ १२-३५९-५ (८०४३८)
तमादिकालेषु महाविभूति
र्नारायणो ब्रह्म महानिधानम् ।
ससर्ज पुत्रार्थमुदारतेजा
व्यासं महात्मानमजं पुराणम् ॥ १२-३५९-६ (८०४३९)
जनमेजाय उवाच। १२-३५९-७क्ष् (६६४३)
त्वयैव कथितः पूर्वं संभवो द्विजसत्तम ।
वसिष्ठस्य सुतः शक्तिः शक्तिपुत्रः पराशरः ॥ १२-३५९-७ (८०४४०)
पराशरस्य दायादः कृष्णद्वैपायनो मुनिः ।
भूयो नारायणसुतं त्वमेवैनं प्रभाषसे ॥ १२-३५९-८ (८०४४१)
किमतः पूर्वकं जन्म व्यासस्यामिततेजसः ।
कथयस्वोत्तममते जन्म नारायणोद्भवम् ॥ १२-३५९-९ (८०४४२)
वैशंपायन उवाच। १२-३५९-१०क्ष् (६६४४)
वेदार्थवेत्तुव्यासस्य धर्मिष्ठस्य तपोनिधेः ।
गुरोर्मे ज्ञाननिष्ठस्य हिमवत्पाद आसतः ॥ १२-३५९-१० (८०४४३)
कृत्वा भारतमाख्यानं तपः श्रान्तस्य धीमतः ।
शुश्रूषां तत्परा राजन्कृतवन्तो वयं तदा ॥ १२-३५९-११ (८०४४४)
सुमन्तुर्जैमिनिश्चैव पैलश्च सुदृढव्रतः ।
अहं चतुर्थः शिष्यो वै शुको व्यासात्मजस्तथा ॥ १२-३५९-१२ (८०४४५)
एभिः परिवृतो व्यासः शिष्यैः पञ्चभिरुत्तमैः ।
शुशुभे हिमवत्पादे भूतैर्भूतपतिर्यथा ॥ १२-३५९-१३ (८०४४६)
वेदानावर्तयन्साङ्गान्भारतार्थांश्च सर्वशः ।
तमेकमनसं दान्तं युक्ता वयमुपास्महे ॥ १२-३५९-१४ (८०४४७)

कथान्तरेऽथकस्मिंश्चित्पृष्टोऽस्माभिर्द्विजोत्तमः ।
वेदार्थान्भारतार्थांश्च जन्म नारायणात्तथा ॥ १२-३५९-१५ (८०४४८)
स पूर्वमुक्त्वा वेदार्थान्भारतार्थांश्च तत्त्ववित् ।
नारायणादिदं जन्म व्याहर्तुमुपचक्रमे ॥ १२-३५९-१६ (८०४४९)
शृणुध्वमाख्यानवरमिदमार्षेयमुत्तमम् ।
आदिकालोद्भवं विप्रास्तपसाऽधिगतं मया ॥ १२-३५९-१७ (८०४५०)
प्राप्ते प्रजाविसर्गे वै सप्तमे पद्मसंभवे ।
नारायणो महायोगी शभाशुभविवर्जितः ॥ १२-३५९-१८ (८०४५१)
ससृजे नाभितः पूर्वं ब्रह्माणममितप्रभः ।
ततः स प्रादुरभवदथैनं वाक्यमब्रवीत् ॥ १२-३५९-१९ (८०४५२)
मम त्वं नाभितो जातः प्रजासर्गकरः प्रभुः ।
सृज प्रजास्त्वं विविधा ब्रह्मन्सजडपण्डिताः ॥ १२-३५९-२० (८०४५३)
स एवमुक्तो विमुखश्चिन्ताव्याकुलमानसः ।
प्रणम्य वरदं देवमुवाच हरिमीश्वरम् ॥ १२-३५९-२१ (८०४५४)
का शक्तिर्मम देवेश प्रजाः स्रष्टुं नमोस्तु ते ।
अप्रज्ञावानहं देव विधत्स्व यदनन्तरम् ॥ १२-३५९-२२ (८०४५५)
स एवमुक्तो भगवान्भूत्वाऽथान्तर्हितस्ततः ।
चिन्तयामास देवेशो बुद्धिं बुद्धिमतांवरः ।
स्वरूपिणी ततो बुद्धिरुपतस्थे हरिं प्रभुम् ॥ १२-३५९-२३ (८०४५६)
योगेन चैनां निर्योगः स्वयं नियुयुजे तदा ।
स तामैश्वर्ययोगस्थां बुद्धिं गतिमतीं सतीम् ॥ १२-३५९-२४ (८०४५७)
उवाच वचनं देवो बुद्धिं वै प्रभुरव्ययः ।
ब्रह्माणं प्रविशस्वेति लोकसृष्ट्यर्थसिद्धये ।
ततस्तमीश्वरादिष्टा बुद्धिः क्षिप्रं विवेश सा ॥ १२-३५९-२५ (८०४५८)
अथैनं बुद्धिसंयुक्तं पुनः स ददृशे हरिः ।
भूयश्चैव वचः प्राह सृजेमा विविधाः प्रजाः ॥ १२-३५९-२६ (८०४५९)
बाढमित्येव कृत्वाऽसौ यथाऽऽज्ञां शिरसा हरेः ।
एवमुक्त्वा स भगवांस्तत्रैवान्तरधायत ॥ १२-३५९-२७ (८०४६०)
प्राप चैनं मुहूर्तेन स्वं स्थानं देवसंज्ञितम् ।
तां चैव प्रकृतिं प्राप्य एकीभावगतोऽभवत् ॥ १२-३५९-२८ (८०४६१)
अथास्य बुद्धिरभवत्पुनरन्या तदा किल ।
सृष्टाः प्रजा इमाः सर्वा ब्रह्मणा परमेष्ठिना ॥ १२-३५९-२९ (८०४६२)
दैत्यदानवगन्धर्वरक्षोगणसमाकुला ।
जाता हीयं वसुमती भाराक्रान्ता तपस्विनी ॥ १२-३५९-३० (८०४६३)
बहवो बलिनः पृथ्व्यां दैत्यदानवराक्षसाः ।
भविष्यन्ति तपोयुक्ता वरानप्राप्स्यन्ति चोत्तमान् ॥ १२-३५९-३१ (८०४६४)

अवश्यमेव तैः सर्वैर्वरदानेन दर्पितैः ।
बाधितव्याः सुरगणा ऋषयश्च तपोधनाः ॥१२-३५९-३२ (८०४६५)
तत्र न्याय्यमिदं कर्तुं भारावतरणं मया ।
अथ नानासमुद्भूतैर्वसुधायां यथाक्रमम् ॥१२-३५९-३३ (८०४६६)
निग्रहेण च पापानां साधूनां प्रग्रहेण च ।
इदं तपस्विनी सत्या धारयिष्यति मेदिनी ॥१२-३५९-३४ (८०४६७)
मया ह्येषा हि ध्रियते पातालस्थेन भोगिना ।
तस्मात्पृथ्व्याः परित्राणं करिष्ये संभवं गतः ॥१२-३५९-३५ (८०४६८)
एवं स चिन्तयित्वा तु भगवान्मघधुसूदनः ।
रुपाण्यनेकान्यसृजत्प्रादुर्भावभवाय सः ॥१२-३५९-३६ (८०४६९)
वाराहं नारसिहं च वामनं मानुषं तथा ।
एभिर्मया निहन्तव्याः दुर्विनीताः सुरारयः ॥१२-३५९-३७ (८०४७०)
अथ भूयो जगत्स्रष्टा भोःशब्देनानुनादयन् ।
सरस्वतीमुच्चचार तत्र सारस्वतोऽभवत् ॥१२-३५९-३८ (८०४७१)
अपान्तरतमा नाम सुतो वाक्संभवः प्रभोः ।
भूतभव्यभविष्यज्ञः सत्यवादी दृढव्रतः ॥१२-३५९-३९ (८०४७२)
तमुवाच नतं मूर्ध्ना देवानामादिवरव्ययः ।
वेदाख्याने श्रुतिः कार्या त्वया मतिमतांवर ॥१२-३५९-४० (८०४७३)
तस्मात्कुरु यथाज्ञप्तं ममैतद्वचनं मुने ।
तेन भिन्नास्तदा वेदा मनोः स्वायंभुवेन्तरे ॥१२-३५९-४१ (८०४७४)
ततस्तुतोष भगवान्हरिस्तेनास्य कर्मणा ।
तपसा च सुतप्तेन यमेन नियमेन च ॥१२-३५९-४२ (८०४७५)
मन्वन्तरेषु पुत्र त्वमेवं लोकप्रवर्तकः ।
भविष्यस्यचलो ब्रह्मन्नप्रधृष्यश्च नित्यशः ॥१२-३५९-४३ (८०४७६)
पुनस्तिष्ये च संप्राप्ते कुरवो नाम भारताः ।
भविष्यन्ति महात्मानो राजानः प्रथिता भुवि ॥१२-३५९-४४ (८०४७७)
तेषां त्वत्तः प्रसूतानां कुलभेदो भविष्यति ।
परस्परविनाशार्थं त्वामृते द्विजसत्तम ॥१२-३५९-४५ (८०४७८)
तत्राप्यनेकधा वेदान्भेत्स्यसे तपसाऽन्वितः ।
कृष्णे युगे च संप्राप्ते कृष्णवर्णो भविष्यसि ॥१२-३५९-४६ (८०४७९)
धर्माणां विविधानां च कर्ता ज्ञानकरस्तथा ।
भविष्यसि तपोयुक्तो न च रागाद्विमोक्ष्यसे ॥१२-३५९-४७ (८०४८०)
वीतरागश्च पुत्रस्ते परमात्मा भविष्यति ।
महेश्वरप्रसादेन नैतद्वचनमन्यथा ॥१२-३५९-४८ (८०४८१)
यं मानसं वै प्रवदन्ति विप्राः
पितामहस्योत्तमबुद्धियुक्तम् ।

वसिष्ठमग्र्यं च तपोनिधानं
यस्यातिसूर्यं व्यरिरिच्यते भाः ॥ १२-३५९-४९ (८०४८२)
तस्यान्वपे चापि ततो महर्षिः
पराशरो नाम महाप्रभावः ।
पिता स ते वेदनिधिर्वरिष्ठो
महातपा वै तपसो निवासः ॥ १२-३५९-५० (८०४८३)
कानीनगर्भः पितृकन्यकायां
तस्मादृषेस्त्वं भविता च पुत्रः ॥ १२-३५९-५१ (८०४८४)
भूतभव्यभविष्याणां ज्ञानानां वेत्स्यसे गतिम् ।
ये ह्यतिक्रान्तकाः पूर्वं सहस्रसुगपर्ययाः ॥१२-३५९-५२ (८०४८५)
तांश्च सर्वान्मयोद्दिष्टान्द्रक्ष्यसे तपसाऽन्वितः ।
पुनर्द्रक्ष्यसि चानेकसहस्रयुगपर्ययान् ॥१२-३५९-५३ (८०४८६)
अनादिनिधनं लोके चक्रहस्तं च मां मुने ।
अनुध्यानान्मम मुने नैतद्वचनमन्यथा ।
भविष्यति महासत्व ख्यातिश्चाप्यतुला तव ॥ १२-३५९-५४ (८०४८७)
क्व शनैश्चरः सूर्यपुत्रो भविष्यति मनुर्महान् ।
तस्मिन्मन्वन्तरे चैव मन्वादिगणपूर्वकः ।
त्वमेव भविता वत्स मत्प्रसादान्न संशयः ॥ १२-३५९-५५ (८०४८८)
श्यत्किंचिद्विद्यते लोके सर्वं तन्मद्विचेष्टितम् ।
अन्यो ह्यन्यं चिन्तयति स्वच्छन्दं विदधाम्यहम् ॥छ १२-३५९-५६ (८०४८९)
एवं सारस्वतमृषिमपांतरतमं तथा ।
युक्त्वा वचनमीशानः साधयस्वेत्यथाब्रवीत् ॥१२-३५९-५७ (८०४९०)
सोहं तस्य प्रसादेन देवस्य हरिमेधसः ।
अपांतरतमो नाम्ना ततो जातोऽऽज्ञया हरेः ॥१२-३५९-५८ (८०४९१)
पुनश्च जातो विख्यातो वसिष्ठकुलनन्दनः ॥ १२-३५९-५९ (८०४९२)
तदेतत्कथितं जन्म मया पूर्वकमात्ममः ।
नारायणप्रसादेन तदा नारायणांशजम् ॥१२-३५९-६० (८०४९३)
मया हि सुमहत्तप्तं तपः परमदारुणम् ।
पुरा मतिमतां श्रेष्ठाः परमेण समाधिना ॥१२-३५९-६१ (८०४९४)
एतद्वः कथितं सर्वं यन्मां पृच्छत पुत्रकाः ।
पूर्वजन्म भविष्यं च भक्तानां स्नेहतो मया ॥१२-३५९-६२ (८०४९५)
वैशंपायन उवाच।१२-३५९-६३क्ष् (६६४५)
एष ते कथितः पूर्वः संभवोऽस्मद्गुरोर्नृप ।
व्यासस्याक्लिष्टमनसो यथा पृष्टः पुनः शृणु ॥१२-३५९-६३ (८०४९६)
साङ्ख्यं योगः पाञ्चरात्रं वेदाः पाशुपतं तथा ।
ज्ञानान्येतानि राजर्षे विद्धि नानामतानि वै ॥१२-३५९-६४ (८०४९७)

साङ्ख्यस्य वक्ता कपिलः परमर्षिः स उच्यते ।
हिरण्यगर्भो योगस्य वेत्ता नान्यः पुरातनः ॥१२-३५९-६५ (८०४९८)
अपांतपतमाश्चैव वेदाचार्यः स उच्यते ।
प्राचीनगर्भं तमृषिं प्रवदन्तीह केचन ॥१२-३५९-६६ (८०४९९)
उमापतिर्भूतपतिः श्रीकण्ठो ब्रह्मणः सुतः ।
उक्तवानिदमव्यग्रो ज्ञानं पाशुपतं शिवः ॥१२-३५९-६७ (८०५००)
पाञ्चरात्रस्य कृत्स्नस्य वक्ता तु भगवान्स्वयम् ।
सर्वेषु च नृपश्रेष्ठ ज्ञानेष्वेतेषु दृश्यते ॥१२-३५९-६८ (८०५०१)
यथागमं यथाज्ञानं निष्ठा नारायणः प्रभुः ।
न चैनमेवं जानन्ति तमोभूता विशांपते ॥१२-३५९-६९ (८०५०२)
तमेव शास्त्रकर्तारं प्रवदन्ति मनीषिणः ।
निष्ठां नारायणमृषिं नान्योस्तीति च वादिनः ॥१२-३५९-७० (८०५०३)
निःसंशयेषु सर्वेषु नित्यं वसति वै हरिः ।
ससंशयान्हेतुबलान्नाध्यावसति माधवः ॥१२-३५९-७१ (८०५०४)
पाञ्चरात्रविदो ये तु यथाक्रमपरा नृप ।
एकान्तभावोपगतास्ते हरिं प्रविशन्ति वै ॥१२-३५९-७२ (८०५०५)
साङ्ख्यं च योगं च सनातने द्वे
वेदाश्च सर्वे निखिलेन राजन् ।
सर्वैः समस्तैर्ऋषिभिर्निरुक्तो
नारायणो विश्वमिदं पुराणम् ॥ १२-३५९-७३ (८०५०६)
शुभाशुभं कर्म समीरितं य
त्प्रवर्तते सर्वलोकेषु किंचित् ।
तस्मादृषेस्तद्भवतीति विद्या
द्दिव्यन्तरिक्षे भुवि चाप्सु चेति ॥ ॥ १२-३५९-७४ (८०५०७)

इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि नारायणीये
एकोनषष्ट्यधिकत्रिशततमोऽध्यायः ॥ ३५९.।

Mahabharata - Shanti Parva - Chapter Footnotes

१२-३५९-१ सांख्यं योगः पञ्चरात्रं वेदाः पाशुपतं तथा इति थ
।पाठः। सांख्यं योगः पाशुपतं वेदारण्यकमेवचेति ध।पाठः ॥
१२-३५९-५ पितामहस्याद्यो नारायणस्तमारभ्य यं षष्ठं वदन्तीति
योज्यम् ।नारायणस्याङ्गजमिति ध।पाठः ॥
१२-३५९-९ पूर्वजं जन्मेति ट ।पाठः ॥
१२-३५९-१९ नाभिजं पत्रमिति ध ।पाठः ॥
१२-३५९-३४ द्वयं तरस्विनी सत्येति ध ।पाठः। इयं सरस्वती सत्येति

ट। पाठः ॥
१२-३५९-५५ शनैश्चरभ्राता ।सप्तर्षिगुणपूर्वक इति थ। पाठः ॥

---

शन्तिपर्व-अध्यय३६०
॥ श्रीः ॥
१२.३६०. अध्यायः ३६०

Mahabharata - Shanti Parva - Chapter Topics
वैशंपायनेन जनमेजयंप्रति ब्रह्मरुद्रसंवादानुवादः ॥ १.।
Mahabharata - Shanti Parva - Chapter Text

१२-३६०-० (८०५०८)
जनमेजय उवाच। १२-३६०-०क्ष् (६६४६)
बहवः पुरुषा ब्रह्मन्नुताहो एक एव तु ।
को ह्यत्र पुरुषः श्रेष्ठः को वा योनिरिहोच्यते ॥ १२-३६०-१ (८०५०९)
वैशंपायन उवाच। १२-३६०-२क्ष् (६६४७)
बहवः पुरुषा लोके साङ्ख्ययोगविचारणे ।
नैतदिच्छन्ति पुरुषमेकं कुरुकुलोद्वह ॥ १२-३६०-२ (८०५१०)
बहनां पुरुषाणां च यथैका योनिरुच्यते ।
तथा तं पुरुषं विश्वं व्याख्यास्यामि गुणाधिकम् ॥ १२-३६०-३ (८०५११)
नमस्कृत्वा च गुरवे व्यासाय विदितात्मने ।
तपोयुक्ताय दान्ताय वन्द्याय परमपये ॥ १२-३६०-४ (८०५१२)
इदं पुरुषसूक्तं हि सर्ववेदेषु पार्थिव ।
ऋतं सत्यं च विख्यातमृपिसिंहेन चिन्तितम् ॥ १२-३६०-५ (८०५१३)
उत्सर्गेणापवादेन ऋषिभिः कपिलादिभिः ।
अध्यान्मचिन्तामाश्रित्य शास्त्राण्युक्तानि भारत ॥ १२-३६०-६ (८०५१४)
समासतेस्तु यद्व्यासः पुरुषैकत्वमुक्तवान् ।
तत्तेऽहं संप्रवक्ष्यामि प्रसादादमितौजसः ॥ १२-३६०-७ (८०५१५)
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
ब्रह्मणा सह संवादं त्र्यम्बकस्य विशांपते ॥ १२-३६०-८ (८०५१६)
क्षीरोदस्य समुद्रस्य मध्ये हाटकसप्रभः ।
वैजयन्त इति ख्यातः पर्वतप्रवरो नृप ॥ १२-३६०-९ (८०५१७)
तत्राध्यात्मगतिं देव एकाकी प्रविचिन्तयन् ।
वैराजसदनान्नित्यं वैजयन्तं निपेवते ॥ १२-३६०-१० (८०५१८)
अथ तत्राऽऽसतस्तस्य चतुर्वक्रस्य धीमतः ।
ललाटप्रभवः पुत्रः शिव आगाद्यदृच्छया ।
आकाशेन महायोगी पुरा त्रिनयनः प्रभुः ॥ १२-३६०-११ (८०५१९)

ततः खान्निपपाताशु धरणीधरमूर्धनि ।
अग्रतश्चाभवत्प्रीतो ववन्दे चापि पादयोः ॥ १२-३६०-१२ (८०५२०)
तं पादयोर्निपतितं दृष्ट्वा सव्येन पाणिना ।
अत्थापयामास तदा प्रभुरेकः प्रजापतिः ।
उवाच चैनं भगवांश्चिरस्यागतमात्मजम् ॥ १२-३६०-१३ (८०५२१)
पितामह उवाच। १२-३६०-१४क्ष् (६६४८)
स्वागतं ते महाबाहो दिष्ट्या प्राप्तोसि मेऽन्तिकम् ।
कच्चित्ते कुशलं पुत्र स्वाध्यायतपसोः सदा ।
नित्यमुग्रतपास्त्वं हि ततः पृच्छामि ते पुनः ॥ १२-३६०-१४ (८०५२२)
रुद्र उवाच। १२-३६०-१५क्ष् (६६४९)
त्वत्प्रसादेन भगवन्स्वाध्यायतपसोर्मम ।
कुशलं चाव्ययं चैव सर्वस्य जगतस्त्वथ ॥ १२-३६०-१५ (८०५२३)
चिरदृष्टोमि भगवन्वैराजसदने मया ।
ततोऽहं पर्वतं प्राप्तस्त्विमं त्वत्पादसेवितम् ॥ १२-३६०-१६ (८०५२४)
कौतूहलं चापि हि मे एकान्तगमनेन ते ।
नैतत्कारणमल्पं हि भविष्यति पितामह ॥ १२-३६०-१७ (८०५२५)
किंनु तत्सदनं श्रेष्ठं क्षुत्पिपासाविवर्जितम् ।
सुरासुरैरध्युपितमृषिभिश्चामितप्रभैः ॥ १२-३६०-१८ (८०५२६)
गन्धर्वैरप्सरोभिश्च सततं संनिषेवितम् ।
उत्सृज्येमं गिरिवरमेकाकी प्राप्तवानसि ॥ १२-३६०-१९ (८०५२७)
ब्रह्मोवाच। १२-३६०-२०क्ष् (६६५०)
वैजयन्तो गिरिवरः सततं सेव्यते मया ।
अत्रैकाग्रेण मनसा पुरुषश्चिन्त्यते विराट् ॥ १२-३६०-२० (८०५२८)
रुद्र उवाच। १२-३६०-२१क्ष् (६६५१)
बहवः पुरुषा ब्रह्मंस्त्वया सृष्टाः स्वयंभुव ।
सृज्यन्ते चापरे ब्रह्मन्स चैकः पुरुषो विराट् ॥ १२-३६०-२१ (८०५२९)
को ह्यसौ चिन्त्यते ब्रह्मंस्त्वयैकः पुरुषोत्तमः ।
एतन्मे संशयं छिन्धि महत्कौतूहलं हि मे ॥ १२-३६०-२२ (८०५३०)
ब्रह्मोवाच। १२-३६०-२३क्ष् (६६५२)
बहवः पुरुषाः पुत्र त्वया ये समुदाहृताः ।
एवमेतदतिक्रान्तं द्रष्टव्यं नैवमित्यपि ॥ १२-३६०-२३ (८०५३१)
आधारं तु प्रवक्ष्यामि एकस्य पुरुषस्य ते ।
बहूनां पुरुषाणां स यथैका योनिरुच्यते ॥ १२-३६०-२४ (८०५३२)
तथा तं पुरुषं विश्वं परमं सुमहत्तमम् ।
निर्गुणं निर्गुणा भूत्वा प्रविशन्ति सनातनम् ॥ ॥ १२-३६०-२५ (८०५३३)

इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि नारायणीये
षष्ट्यधिकत्रिशततमोऽध्यायः ॥ ३६०.।
Mahabharata - Shanti Parva - Chapter Footnotes

१२-३६०-२ साङ्ख्ययोगविचारणा इति ट ।पाठः ॥
१२-३६०-२१ स च कः पुरुषो विराडिति ट ।ध।पाठः ॥

---

शन्तिपर्व-अध्यय३६१
॥ श्रीः ॥
१२.३६१. अध्यायः ३६१

Mahabharata - Shanti Parva - Chapter Topics
ब्रह्मणा रुद्रंप्रति भगवन्महिमप्रतिपदानम् ॥१.।
Mahabharata - Shanti Parva - Chapter Text

१२-३६१-० (८०५३४)
ब्रह्मोवाच।१२-३६१-०क्ष् (६६५३)
शृणु पुत्र यथाह्येष पुरुषः शाश्वतोऽव्ययः ।
अक्षयश्चाप्रमेयश्च सर्वगश्च निरुच्यते ॥१२-३६१-१ (८०५३५)
न स शक्यस्त्वया द्रष्टुं मयाऽन्यैर्वाऽपि सत्तम ।
सगुणैर्निर्गुणैर्विश्वो ज्ञानदृश्यो ह्यसौ स्मृतः ॥१२-३६१-२ (८०५३६)
अशरीरः शरीरेषु सर्वेषु निवसत्यसौ ।
वसन्नपि शरीरेषु न स लिप्यति कर्मभिः ॥१२-३६१-३ (८०५३७)
ममान्तरात्मा तव च ये चान्ये देहसंज्ञिताः ।
सर्वेषां साक्षिभूतोऽसौ न ग्राह्यः केनचिक्वचित् ॥१२-३६१-४ (८०५३८)
विश्वमूर्धा विश्वभुजो विश्वपादाक्षिनासिकः ।
एकश्चरति क्षेत्रेषु स्वैरचारी यथासुखम् ॥१२-३६१-५ (८०५३९)
क्षेत्राणि हि शरीराणि बीजं चापि शुभाशुभम् ।
तानि वेत्ति स योगात्मा ततः क्षेत्रज्ञ उच्यते ॥१२-३६१-६ (८०५४०)
नागतिर्न गतिस्तस्य ज्ञेया भूतेषु केनचित् ।
साङ्ख्येन विधिना चैव योगेन च यथाक्रमम् ॥१२-३६१-७ (८०५४१)
चिन्तयामि गतिं चास्य न गतिं वेद्मि चोत्तराम् ।
यथाज्ञानं तु वक्ष्यामि पुरुषं तु सनातनम् ॥१२-३६१-८ (८०५४२)
तस्यैकत्वं महत्त्वं च स चैकः पुरुषः स्मृतः ।
महापुरुषशब्दं स बिभर्त्येकः सनातनः ॥१२-३६१-९ (८०५४३)
एको हुताशो बहुधा समिध्यते
एकः सूर्यस्तपसो योनिरेका ।

एको वायुर्बहुधा वाति लोके
महोदधिश्चाम्भसां योनिरेकः ।
पुरुषश्चैको निर्गुणो विश्वरूप
स्तं निर्गुणं पुरुषं चाविशन्ति ॥ १२-३६१-१० (८०५४४)
हित्वा गुणमयं सर्वं कर्म हित्वा शुभाशुभम् ।
उभे सत्यानृते त्यक्त्वा एवं भवति निर्गुणः ॥१२-३६१-११ (८०५४५)
अचिन्त्यं चापि तं ज्ञात्वा भावसूक्ष्मं चतुष्टयम् ।
विचरेद्योऽसमुन्नद्धः स गच्छेत्पुरुषं शुभम् ॥१२-३६१-१२ (८०५४६)
एकं हि परमात्मानं केचिदिच्छन्ति पण्डिताः ।
एकात्मानं तथाऽऽत्मानमपरेऽध्यात्मचिन्तकाः ॥१२-३६१-१३ (८०५४७)
तत्र यः परमात्मा हि स नित्यो निर्गुणः स्मृतः ।
स हि नारायणो ज्ञेयः सर्वात्मा पुरुषो हि सः ॥१२-३६१-१४ (८०५४८)
न लिप्यते फलैश्चापि पद्मपत्रमिवाम्भसा ।
कर्मात्मा त्वपरो योसौ मोक्षबन्धैः स युज्यते ॥१२-३६१-१५ (८०५४९)
ससप्तदशकेनापि राशिना युज्यते च सः ।
एवं बहुविधः प्रोक्तः पुरुषस्ते यथाक्रमम् ॥१२-३६१-१६ (८०५५०)
यत्तत्कृत्स्नं लोकतन्त्रस्य धाम
वेद्यं परं बोधनीयं च वेदैः ।
मन्ता मन्तव्यं प्राशिता प्राशनीयं
घ्राता घ्रेयं स्पर्शिता स्पर्शनीयम् ॥ १२-३६१-१७ (८०५५१)
द्रष्टा द्रष्टव्यं श्राविता श्रावणीयं
ज्ञाता ज्ञेयं सगुणं निर्गुणं च ।
यद्वै प्रोक्तं तात सम्यक्प्रधानं
नित्यं चैतच्छाश्वतं चाव्ययं च ॥ १२-३६१-१८ (८०५५२)
यद्वै सूते धातुराद्यं विधानं
तद्वै विप्राः प्रवदन्तेऽनिरुद्धम् ।
यद्वै लोके वैदिकं कर्म साधु
आशीर्युक्तं तद्धि तस्योपभोग्यम् ॥ १२-३६१-१९ (८०५५३)
देवाः सर्वे मनुयः साधु दान्ता
स्तं प्राग्वंशे यज्ञभागं भजन्ते ।
अहं ब्रह्मा आद्य ईशः प्रजानां
तस्माज्जातस्त्वं च मत्तः प्रसूतः ॥ १२-३६१-२० (८०५५४)
मत्तो जगज्जङ्गमं स्थावरं च
सर्वे वेदाः सरहस्या हि पुत्र ॥ १२-३६१-२१ (८०५५५)
चतुर्विभक्तः पुरुषः स क्रीडति यथेच्छति ।
एवं स भगवान्देवः स्वेन ज्ञानेन बोधयत् ॥१२-३६१-२२ (८०५५६)

एतत्ते कथितं पुत्र यथावदनुपृच्छतः ।
साङ्ख्यज्ञाने तथा योगे यथावदनुवर्णितम् ॥ ॥ १२-३६१-२३ (८०५५७)

इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि नारायणीये
समाप्तौ एकषष्ट्यधिकत्रिशततमोऽध्यायः ॥ ३६१.।
Mahabharata - Shanti Parva - Chapter Footnotes

१२-३६१-२ सगुणो निर्गुणो विश्व इति ट ।ध। पाठः ॥

---

शन्तिपर्व-अध्यय३६२
॥ श्रीः ॥
१२.३६२. अध्यायः ३६२

Mahabharata - Shanti Parva - Chapter Topics
भीष्मेण युधिष्ठिरंप्रत्युच्छवृत्त्युपाख्यानोषोद्धातकथनम् ॥ १.।
Mahabharata - Shanti Parva - Chapter Text

१२-३६२-० (८०५५८)
युधिष्ठिर उवाच।१२-३६२-०क्ष् (६६५४)
धर्माः पितामहेनोक्ता मोक्षधर्माश्रिताः शुभाः ।
धर्ममाश्रमिणां श्रेष्ठं वक्तुमर्हति मे भवान् ॥ १२-३६२-१ (८०५५९)
भीष्म उवाच।१२-३६२-२क्ष् (६६५५)
सर्वत्र विहितो धर्मः सत्यः सत्यफलोदयः ।
बहुद्वारस्य धर्मस्य नेहास्ति विफला क्रिया ॥ १२-३६२-२ (८०५६०)
यस्मिन्यस्मिंश्च विषये यो यो याति विनिश्चयम् ।
स तमेवाभिजानाति नान्यं भरतसत्तम ॥ १२-३६२-३ (८०५६१)
इमां च त्वं नरव्याघ्र श्रोतुमर्हसि मे कथाम् ।
पुरा शक्रस्य कथितां नारदेन महर्षिणा ॥ १२-३६२-४ (८०५६२)
महर्षिर्नारदो राजन्सिद्धस्त्रैलोक्यसंमतः ।
पर्येति क्रमशो लोकान्वायुरव्याहतो यथा ॥ १२-३६२-५ (८०५६३)
स कदाचिन्महेष्वास देवराजालयं गतः ।
सत्कृतश्च महेन्द्रेण प्रत्यासन्नगतोऽभवत् ॥ १२-३६२-६ (८०५६४)
तं कृतक्षणमासीनं पर्यपृच्छच्छत्तीपतिः ।
महर्षे किंचिदाश्चर्यमस्ति दृष्टं त्वयाऽनघ ॥ १२-३६२-७ (८०५६५)
दृष्टमेव हि विप्रर्षे त्रैलोक्यं सचराचरम् ।
जातकौतूहलो नित्यं सिद्धश्चरसि साक्षिवत् ॥ १२-३६२-८ (८०५६६)
न ह्यस्त्यविदितं लोके देवर्षे तव किंचन ।

श्रुतं वाऽप्यनुभूतं वा दृष्टं वा कथयस्व मे ॥ १२-३६२-९ (८०५६७)
तस्मै राजन्सुरेन्द्राय नारदो वदतांवरः ।
आसीनायोपपन्नाय प्रोक्तवान्विपुलां कथाम् ॥ १२-३६२-१० (८०५६८)
यथा येन च कल्पेन स तस्मै द्विजसत्तमः ।
कथां कथितवान्पृष्टस्तथा त्वमपि मे शृणु ॥ ॥ १२-३६२-११ (८०५६९)

इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि
द्विषष्ट्यधिकत्रिशततमोऽध्यायः ॥ ३६२. ।
Mahabharata - Shanti Parva - Chapter Footnotes

१२-३६२-२ स्वर्गः सत्यफलं महदिति झ ।पाठः ॥
१२-३६२-३ सर्वेष्वाश्रमेषु स्वर्गो मोक्षश्चास्ति तेषु यत्र
यस्य रुचिस्तेन स कृतकृत्यो नान्यं धर्मं बहु मन्यते इति
श्लोकद्वयार्थः ॥
१२-३६२-४ अपिच त्वं नरव्याघ्रेति ट ।पाठः ॥
१२-३६२-११ कल्पेन न्यायेन ॥

---

शन्तिपर्व-अध्यय३६३
॥ श्रीः ॥
१२.३६३. अध्यायः ३६३

Mahabharata - Shanti Parva - Chapter Topics
महापद्मपुरवासिना विप्रेणातिथिप्रति सत्कारपूर्वकं पश्नारम्भः ॥ १. ।
Mahabharata - Shanti Parva - Chapter Text

१२-३६३-० (८०५७०)
भीष्म उवाच। १२-३६३-०क्ष् (६६५६)
आसीत्किल नरश्रेष्ठ महापद्मे पुरोत्तमे ।
गङ्गाया दक्षिणे तीरे कश्चिद्विप्रः समाहितः ॥ १२-३६३-१ (८०५७१)
सौम्यः सोमान्वये जातो जितात्मा गोत्रतो भृगुः ।
धर्मनित्यो जितक्रोधो नित्यतप्तो जितेन्द्रियः ॥ १२-३६३-२ (८०५७२)
तपःस्वाध्यायनिरतः सत्यः सज्जनसंमतः ।
न्यायप्राप्तेन वित्तेन स्वेन शीलेन चान्वितः ॥ १२-३६३-३ (८०५७३)
ज्ञाति संबन्धिविपुले पुत्रपौत्रप्रतिष्ठिते ।
कुले महति विख्याते विशिष्टां वृत्तिमास्थितः ॥ १२-३६३-४ (८०५७४)
स पुत्रान्बहुलाँल्लब्ध्वा विपुले कर्मणि स्थितः ।
कुलधर्माश्रितो राजन्धरर्मचर्यास्थितोऽभवत् ॥ १२-३६३-५ (८०५७५)

ततः स धर्मं वेदोक्तं तथा शास्त्राक्तमेव च ।
शिष्टाचीर्णं च धर्मं च त्रिविधं चिन्त्य चेतसा ॥ १२-३६३-६ (८०५७६)
किंनु मे स्याच्छुभं कृत्वा किं कृतं किं परायणम् ।
इत्येवं चिन्तयन्नित्यं न च याति विनिश्चयम् ॥ १२-३६३-७ (८०५७७)
तस्यैवं चिन्त्यमानस्य धर्मं परममास्थितः ।
कदाचिदतिथिः प्राप्तो ब्राह्मणः सुसमाहितः ॥ १२-३६३-८ (८०५७८)
स तस्मै सत्क्रियां चक्रे क्रियायुक्तेन हेतुना ।
विश्रान्तं सुसमासीनमिदं वचनमब्रवीत् ॥ ॥ १२-३६३-९ (८०५७९)

इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि
त्रिषष्ट्यधिकत्रिशततमोऽध्यायः ॥ ३६३.।
Mahabharata - Shanti Parva - Chapter Footnotes

१२-३६३-२ सोमान्वये अत्रिगोत्रे ॥

---

शन्तिपर्व-अध्यय३६४
॥ श्रीः ॥
१२.३६४. अध्यायः ३६४

Mahabharata - Shanti Parva - Chapter Topics
श्रेयःसाधनं पृष्टेनातिथिना ब्राह्मणंप्रति
नानामार्गप्रदर्शनपूर्वकं स्वस्यापि संशयोत्कीर्तनम् ॥ १.।
Mahabharata - Shanti Parva - Chapter Text

१२-३६४-० (८०५८०)
ब्राह्मण उवाच। १२-३६४-०क्ष् (६६५७)
समुत्पन्ने विधानेऽस्मिन्वाङ्माधुर्येण तेऽनघ ।
मित्रत्वमभिसंपन्नः किंचिद्वक्ष्यामि तच्छृणु ॥ १२-३६४-१ (८०५८१)
गृहस्थधर्मं विप्रेन्द्र श्रुत्वा धर्मगतं त्वहम् ।
धर्मं परमकं कुर्यां को हि मार्गो भवेद्द्विज ॥ १२-३६४-२ (८०५८२)
अहमात्मानमास्थाय एक एवात्मनि स्थितम् ।
द्रष्टुमिच्छन्न पश्यामि बद्धः साधारणैर्गुणैः ॥ १२-३६४-३ (८०५८३)
यावदेतदतीतं मे वयः पुत्रफलाश्रितम् ।
तावदिच्छामि पाथेयमादातुं पारलौकिकम् ॥ १२-३६४-४ (८०५८४)
अस्मिन्हि लोकसंभारे परं पारमभीप्सतः ।
उत्पन्ना मे मतिरियं कुतो धर्ममयः प्लवः ॥ १२-३६४-५ (८०५८५)
संयुज्यमानानि निशाम्य लोके

निर्यात्यमानानि च सात्विकानि ।
दृष्ट्वा तु धर्मध्वजकेतुमालां
प्रकीर्यमाणामुपरि प्रजानाम् ॥ १२-३६४-६ (८०५८६)
न मे मनो रज्यति भोगरागै
र्दृष्ट्वा गतिं प्रार्थयतः परत्र ।
तेनातिथे बुद्धिबलाश्रयेण
धर्मेण धर्मे विनियुङ्क्ष्व मां त्वम् ॥ १२-३६४-७ (८०५८७)
सोऽतिथिर्वचनं तस्य श्रुत्वा धर्माभिभाषिणः ।
प्रोवाच वचनं श्लक्षणं प्राज्ञो मधुरया गिरा ॥ १२-३६४-८ (८०५८८)
अहमप्यत्र मुह्यामि ममाप्येष मनोरथः ।
न च संनिश्चयं चामि बहुद्वारे त्रिविष्टये ॥ १२-३६४-९ (८०५८९)
केचिन्मोक्षं प्रशंसन्ति केचिद्यज्ञफलं द्विजाः ।
वानप्रस्थाश्रयाः केचिद्गार्हस्थ्यं केचिदाश्रिताः ॥ १२-३६४-१० (८०५९०)
राजधर्माश्रयाः केचित्केचिदात्मफलाश्रयाः ।
गुरुधर्माश्रयाः केचित्केचिद्वाक्संयमाश्रयाः ॥ १२-३६४-११ (८०५९१)
मातरं पितरं केचिच्छुश्रूषन्तो दिवं गताः ।
अहिंसया परे स्वर्गं सत्येन च तथाऽपरे ॥ १२-३६४-१२ (८०५९२)
आहवेऽभिमुखः केचिन्निहतास्त्रिदिवं गताः ।
केचिदुञ्छव्रतैः सिद्धाः स्वर्गमार्गं समाश्रिताः ॥ १२-३६४-१३ (८०५९३)
केचिदध्ययने युक्ता वेदव्रतपराः शुभाः ।
बुद्धिमन्तो गताः स्वर्गं तुष्टात्मानो जितेन्द्रियाः ॥ १२-३६४-१४ (८०५९४)
आर्जवेनापरे युक्ता निहतानार्जवैर्जनैः ।
ऋजवो नाकपृष्ठे वै शुद्धात्मानः प्रतिष्ठिताः ॥ १२-३६४-१५ (८०५९५)
एवं बहुविधैर्लोकैर्धर्मद्वारैरनावृतैः ।
ममापि मतिराविद्धा मेघलेखेव वायुना ॥ ॥ १२-३६४-१६ (८०५९६)

इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि
चतुःषष्ट्यधिकत्रिशततमोऽध्यायः ॥ ३६४.।
Mahabharata - Shanti Parva - Chapter Footnotes

१२-३६४-१ समुत्पन्नाभिधानोस्मीति झ । पाठः। तत्र आभिधानी
बन्धनरज्जुः। अश्वाभिधानीमादत्त इति ब्राह्मणात्। तेनाभिधानशब्दोपि
बन्धनवाची। जातबन्धन इत्यर्थः ॥
१२-३६४-२ कृत्वा पुत्रगतं त्वहमिति झ । पाठः ॥
१२-३६४-५ कुतः कुत्राश्रमे । प्लवः संसाराब्धितरणसाधनम् ॥
१२-३६४-६ निशाम्य आलोच्य । निर्गात्यमानानि निपीड्यमानाति। सात्विकानि

देवादीनि। धर्मस्य यमस्य ध्वजाः पताका दण्डोपमा रोगादयस्तेषां माला संततिस्तां दृष्ट्वा मे मनो न रज्यतीत्युत्तरेण संबन्धः। समूह्यमानानि यथा हि लोके निहन्यमानानि तथाहि तानि इति प्रकीर्यमाणानीति च। ट। पाठः ॥

---

शन्तिपर्व-अध्यय३६५
॥ श्रीः ॥
१२.३६५. अध्यायः ३६५

Mahabharata - Shanti Parva - Chapter Topics
अतिथिना ब्राह्मणंप्रति श्रेयःसाधनावगमनाय पद्माख्यनागसमीपगमनचोदना ॥ १.।
Mahabharata - Shanti Parva - Chapter Text

१२-३६५-० (८०५९७)
अतिथिरुवाच। १२-३६५-०क्ष् (६६५८)
उपदेशं तु ते विप्र करिष्येऽहं यथाक्रमम् ।
गुरुणा मे यथाख्यातमर्थतत्त्वं तु मे शृणु ॥ १२-३६५-१ (८०५९८)
यत्र पूर्वाभिसर्गे वै धर्मचक्रं प्रवर्तितम् ।
नैमिषे गोमतीतीरे तत्र नागह्रदो महान् ॥ १२-३६५-२ (८०५९९)
समग्रैस्त्रिदशैस्तत्र इष्टमासीद्द्विजर्षभ ।
यत्रेन्द्रातिक्रमं चक्रे माधाता राजसत्तमः ॥ १२-३६५-३ (८०६००)
कृताधिवासो धर्मात्मा तत्र चक्षुःश्रवा महान् ।
पद्मनाभो महानागः पद्म इत्येव विश्रुतः ॥ १२-३६५-४ (८०६०१)
स वाचा कर्मणा चैव मनसा च द्विजर्षभः ।
प्रसादयति भूतानि त्रिविधे वर्त्मनि स्थितः ॥ १२-३६५-५ (८०६०२)
साम्ना भेदेन दानेन दणडेनेति चतुर्विधम् ।
पिपमस्थं समस्थं च चक्षुर्ध्यानेन रक्षति ॥ १२-३६५-६ (८०६०३)
तमतिक्रम्य विधिना प्रष्टुमर्हसि काङ्क्षित्तम् ।
स ते परमकं धर्मं न मिथ्या दर्शयिष्यरति ॥ १२-३६५-७ (८०६०४)
स हि सर्वातिथिर्नाणो बुद्धिशास्त्रविशारदः ।
गुणैरनुपमैर्युक्तः समस्तैराभिकामिकैः ॥ १२-३६५-८ (८०६०५)
प्रकृत्या नित्यसलिलो नित्यमध्ययने रतः ।
तपोदमाभ्यां संयुक्तो वृत्तेनानवरेण च ॥ १२-३६५-९ (८०६०६)
यज्वा दानपतिः क्षान्तो वृत्ते च परमे स्थितः ।
सत्यवागनसूयुश्च शीलवान्नियतेन्द्रियः ॥ १२-३६५-१० (८०६०७)
शेषान्नभोक्ता वचनानुकूलो

हितार्जवोत्कृष्टकृताकृतज्ञः ।
अवैरकृद्भूतहिते नियुक्तो
गङ्गाह्रदाम्भोभिजनोपपन्नः ॥ ॥ १२-३६५-११ (८०६०८)

इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि
पञ्चषष्ट्यधिकत्रिशततमोऽध्यायः ॥ ३६५.।
Mahabharata - Shanti Parva - Chapter Footnotes

१२-३६५-४ चक्षुःश्रवाः सर्पः ॥
१२-३६५-५ त्रिविधे कर्मज्ञानोपास्त्यात्मके ॥
१३-३६५-६ चतुर्विधं यथा स्यात्तया ।चक्षुः चक्षुरादि। ध्यानेन
वस्तुतत्त्वानुसंधानेन ॥
१३-३६५-७ अतिक्रम्योपगम्य ॥
१२-३६५-८ आभिकामिकैरभीप्सितैः ॥

---

शन्तिपर्व-अध्यय३६६
॥ श्रीः ॥
१२.३६६. अध्यायः ३६६

Mahabharata - Shanti Parva - Chapter Topics
ब्राह्मणेन धर्मावगतये नागगृहंप्रति गमनम् ॥ १.।
Mahabharata - Shanti Parva - Chapter Text

१२-३६६-० (८०६०९)
ब्राह्मण उवाच। १२-३६६-०क्ष् (६६५९)
अतिभारोद्यतस्यैव भारावतरणं महत् ।
पराश्वासकरं वाक्यमिदं मे भवतः श्रुतम् ॥ १२-३६६-१ (८०६१०)
अध्यक्लान्तस्य शयनं स्थानक्लान्तस्य चासनम् ।
तृषितस्येव पानीयं क्षुधार्तस्येव भोजनम् ॥ १२-३६६-२ (८०६११)
ईप्सितस्येव संप्राप्तिरर्थस्य समयेऽतिथे ।
एपितस्यात्मनः काले बृद्धस्यैव सुता यथा ॥ १२-३६६-३ (८०६१२)
मनसा चिन्तितस्येव प्रीतिस्निग्धस्य दर्शनम् ।
प्रह्लादयति मां वाक्यं भवता यदुदीरितम् ॥ १२-३६६-४ (८०६१३)
मनश्चक्षुरिवाकाशे पश्यामि विमृशामि च ।
प्रज्ञानवचनाद्योयमुपदेशो हि मे कृतः ॥ १२-३६६-५ (८०६१४)
वाढमेवं करिष्यामि यथा मे भाषते भवान् ।
इमां हि रजनीं साधो निवसस्व मया सह ॥ १२-३६६-६ (८०६१५)

प्रभाते यास्यति चवान्पर्याश्वस्तः सुखोपितः ।
असौ हि भगवान्सूर्यो मन्दरश्मिरवाङ्मुखः ॥ १२-३६६-७ (८०६१६)
भीष्म उवाच। १२-३६६-८क्ष् (६६६०)
ततस्तेन कृतातिथ्यः सोऽनिथिः शत्रुसूदन ।
उवास किल तां रात्रिं सह तेन द्विजेन वै ॥ १२-३६६-८ (८०६१७)
तत्वं च धर्मसंयुक्तं तयोः कथयतोस्तदा ।
व्यतीता सा निशा कृत्स्ना सुखेन दिवसोपमा ॥ १२-३६६-९ (८०६१८)
ततः प्रभातसमये सोऽतिथिस्तेन पूजितः ।
ब्राह्मणेन यथाशक्त्या स्वकार्यमभिकाङ्क्षता ॥ १२-३६६-१० (८०६१९)
ततः स विप्रः कृतकर्मनिश्चयः
कृताभ्यनुज्ञः स्वजनेन धर्मकृत् ।
यथोपदिष्टं भुजगेन्द्रसंश्रयं
जगाम काले सुकृतैकनिश्चयः ॥ ॥ १२-३६६-११ (८०६२०)

इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि
षट्ष्यधिकत्रिशततमोऽध्यायः ॥ ३६६.।
Mahabharata - Shanti Parva - Chapter Footnotes

१२-३६६-९ चतुर्थधर्मसंयुक्तमिति झ ।पाठः। तत्र च र्थधर्मो
मोक्षधर्मस्तेन संयुक्तामित्यर्थः ॥
१२-३६६-११ संश्रयं गृहम् ॥

---

शन्तिपर्व-अध्यय३६७
॥ श्रीः ॥
१२.३६७. अध्यायः ३६७

Mahabharata - Shanti Parva - Chapter Topics
पुलिनवासिना ब्राह्मणेन स्वस्य फलाद्याहारं प्रार्थयतां
नागीयानामवधिनिर्देशपूर्वकं प्रतिनिवर्तनम् ॥ १.।
Mahabharata - Shanti Parva - Chapter Text

१२-३६७-० (८०६२१)
भीष्म उवाच। १२-३६७-०क्ष् (६६६१)
स वनानि विचित्राणि तीर्थानि च सरांसि च ।
अभिगच्छन्क्रमेण स्म कंचिन्मुनिमुपस्थितः ॥ १२-३६७-१ (८०६२२)
तं स तेन यथोद्दिष्टं नागं विप्रेण ब्राह्मणः ।

पर्यपृच्छद्यथान्यायं श्रुत्वैव च जगाम सः ॥ १२-३६७-२ (८०६२३)
सोऽभिगम्य यथान्यायं नागायतनमर्थवित् ।
प्रोक्तवानहमस्मीति भोःशब्दालंकृतं वचः ॥ १२-३६७-३ (८०६२४)
तत्तस्य वचनं श्रुत्वा रूपिणी धर्मवत्सला ।
दर्शयामास तं विप्रं नागपत्नी पतिव्रता। १२-३६७-४ (८०६२५)
सा तस्मै विधिवत्पूजां चक्रे धर्मपरायणा ।
स्वागतेनागतं कृत्वा किं करोमीति चाब्रवीत् ॥ १२-३६७-५ (८०६२६)
ब्राह्मण उवाच। १२-३६७-६क्ष् (६६६२)
विश्रान्तोऽभ्यर्चितश्चास्मि भवत्या श्लक्ष्णया गिरा ।
द्रष्टुमिच्छामि भवति देवं नागमनुत्तमम् ॥ १२-३६७-६ (८०६२७)
एतद्धि परमं कार्यमेतन्मे परमप्सितम् ।
अनेन चार्थेनास्म्यद्य संप्राप्तः पन्नगाश्रमम् ॥ १२-३६७-७ (८०६२८)
नागभार्योवाच। १२-३६७-८क्ष् (६६६३)
आर्यः सूर्यरथं वोढुं गतोऽसौ मासचारिकः ।
सप्ताष्टभिर्दिनैर्विप्र दर्शयिष्यत्यसंशयम् ॥ १२-३६७-८ (८०६२९)
एतद्विदितमार्यस्य विवासकरणं तव ।
भर्तुर्भवतु किंचान्यत्क्रियतां तद्वदस्व मे ॥ १२-३६७-९ (८०६३०)
ब्राह्मण उवाच। १२-३६७-१०क्ष् (६६६४)
अनेन निश्चयेनाहं साध्वि संप्राप्तवानिह ।
प्रतीक्षन्नागमं देवि वत्स्याम्यस्मिन्प्रहावने ॥ १२-३६७-१० (८०६३१)
संप्राप्तस्यैव चाव्यग्रमावेद्योऽहमिहागतः ।
मयाभिगमनं प्राप्तो वाच्यश्च वचनं त्वया ॥ १२-३६७-११ (८०६३२)
अहमप्यत्र वत्स्यामि गोमत्याः पुलिने शुभे ।
कालं परिमिताहारो यथोक्तं परिपालयन् ॥ १२-३६७-१२ (८०६३३)
ततः स विप्रस्तां नागीं समाधाय पुनःपुनः ।
वेदवित्पुलिनं नद्याः प्रययौ ब्राह्मणर्भषः ॥ ॥ १२-३६७-१३ (८०६३४)

इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि
सप्तषष्ट्यधिकत्रिशततमोऽध्यायः ॥ ३६७.।
Mahabharata - Shanti Parva - Chapter Footnotes

१२-३६७-९ विवासकरणं प्रवासकारणम् ॥

---

शन्तिपर्व-अध्यय३६८
॥ श्रीः ॥
१२.३६८. अध्यायः ३६८

Mahabharata - Shanti Parva - Chapter Topics
पुलिनवासिना ब्राह्मणेन स्वस्य फलाद्याहारं प्रार्थयतां नागीयानामवधिनिर्देशपूर्वकं प्रतिनिवर्तनम् ॥ १.।
Mahabharata - Shanti Parva - Chapter Text

१२-३६८-० (८०६३५)
भीष्म उवाच। १२-३६८-०क्ष् (६६६५)
अथ तेन नरश्रेष्ठ ब्राह्मणेन तपस्विना ।
निराहारेण वसता दुःखितास्ते भुजङ्गमाः ॥ १२-३६८-१ (८०६३६)
सर्वे संभूय सहिता ह्यस्य नावस्य बान्धवाः ।
भ्रातरस्तनया भार्या ययुस्तं ब्राह्मणं प्रति ॥ १२-३६८-२ (८०६३७)
तेऽपश्यन्पुलिने तं वै विविक्ते नियतव्रतम् ।
समासीनं निराहारं द्विजं जप्यपरायणम् ॥ १२-३६८-३ (८०६३८)
ते सर्वे समभिक्रम्य विप्रमभ्यर्च्य चासकृत् ।
ऊचुर्वाक्यमसंदिग्धमातिथेयस्य बान्धवाः ॥ १२-३६८-४ (८०६३९)
षष्ठो हि दिवसस्तेऽद्य प्राप्तस्येह तपोधन ।
न चाभिभाषसे किंचिदाहारं धर्मवत्सल ॥ १२-३६८-५ (८०६४०)
आमानभिगतश्चासि वयं च त्वामुपस्थिताः ।
कार्यं चातिथ्यमस्माभिरीप्सितं तव ऋद्धिमत् ॥ १२-३६८-६ (८०६४१)
मूलं फलं वा पर्णं वा पयो वा द्विजसत्तम ।
आहारहेतोरन्नं वा भोक्तुमर्हसि ब्राह्मण ॥ १२-३६८-७ (८०६४२)
त्यक्ताहारेण भवता वने निवसता त्वया ।
बालवृद्धमिदं सर्वं पीड्यते धर्मसंकरात् ॥ १२-३६८-८ (८०६४३)
न हि नो भ्रूणहा कश्चित्पन्नगेष्विह विद्यते ।
पूर्वाशी वा कुले ह्यस्मिन्देवतातिथिबन्धुषु ॥ १२-३६८-९ (८०६४४)
ब्राह्मण उवाच। १२-३६८-१०क्ष् (६६६६)
उपदेशेन युष्माकमाहारोऽयं कृतो मया ।
द्विरूनं दशरात्रं वै नागस्यागमनं प्रति ॥ १२-३६८-१० (८०६४५)
यद्यष्टरात्रेऽतिक्रान्ते नागमिष्यति पन्नगः ।
तदाहारं करिष्यामि तन्निमित्तमिद व्रतम् ॥ १२-३६८-११ (८०६४६)
कर्तव्यो न च संतापो गम्यतां च यथागतम् ।
तन्निमित्तमिदं सर्वं नैतद्भेत्तुगिहार्हथ ॥ १२-३६८-१२ (८०६४७)
ते तेन समनुज्ञाता ब्राह्मणेन भुजङ्गमाः ।
स्वमेव भवनं जग्मुरकृतार्था नरर्षभ ॥ ॥ १२-३६८-१३ (८०६४८)

इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि

अष्टषष्ट्यधिकत्रिशततमोऽध्यायः ॥ ३६८. ।

Mahabharata - Shanti Parva - Chapter Footnotes

१२-३६८-३ विपिने नियतव्रतमिति ट ।पाठः ॥
१२-३६८-४ समभिक्रम्य उपेत्य ॥
१२-३६८-६ अस्माभिर्वयं सर्वे कुटुम्बिन इति झ ।पाठः ॥
१२-३६८-९ कश्चिज्जातापद्यनृतोपि वेति झ ।पाठः ॥
१२-३६८-१२ भवद्भिरनुशिष्टोस्मि गम्यतां चेति झ ।पाठः ॥

---

शन्तिपर्व-अध्यय३६९
॥ श्रीः ॥
१२.३६९. अध्यायः ३६९

Mahabharata - Shanti Parva - Chapter Topics

नागपत्न्या प्रवासादागतं स्वभर्तारं प्रति ब्राह्मणवचननिवेदनम् ॥ १. ।

Mahabharata - Shanti Parva - Chapter Text

१२-३६९-० (८०६४९)
भीष्म उवाच। १२-३६९-०क्ष् (६६६७)
अथ काले बहुतिथे पूर्णे प्राप्तो भुजङ्गमः ।
दत्ताभ्यनुज्ञः स्वं वेश्म कृतकर्मा विवस्वता ॥ १२-३६९-१ (८०६५०)
तं भार्याऽप्युपचक्राम पादशौचादिभिर्गुणैः ।
उपपन्नां च तां साध्वीं पन्नगः पर्यपृच्छत ॥ १२-३६९-२ (८०६५१)
अथ त्वमसि कल्याणि देवतातिथिपूजने ।
पूर्वमुक्तेन विधिना युक्ता कर्मसु वर्तसे ॥ १२-३६९-३ (८०६५२)
न खल्वस्यकृतार्थेन स्त्रीबुद्ध्या मार्दवीकृता ।
मद्वियोगेन सुश्रोणि विमुक्ता धर्मसेतुना ॥ १२-३६९-४ (८०६५३)
नागभार्योवाच। १२-३६९-५क्ष् (६६६८)
शिष्याणां गुरुशुश्रूषा विप्राणां वेदधारणम् ।
भृत्यानां स्वामिवचनं राज्ञो लोकानुपालनम् ॥ १२-३६९-५ (८०६५४)
सर्वभूतपरित्राणं क्षत्रधर्म इहोच्यते ।
वैश्यानां यज्ञसंवृत्तिरातिथेयसमन्विता ॥ १२-३६९-६ (८०६५५)
विप्रक्षत्रियवैश्यानां शुश्रूषा शूद्रकर्म तत् ।
गृहस्थधर्मो नागेन्द्र सर्वभूतहितैषिता ॥ १२-३६९-७ (८०६५६)
नियताहारता नित्यं व्रतचर्या यथाक्रमम् ।
धर्मो हि धर्मसंबन्धादिन्द्रियाणां विशेषतः ॥ १२-३६९-८ (८०६५७)
अहं कस्य कुतो वाऽपि कः को मे ह भवेदिति ।

प्रयोजनमतिर्नित्यमेवं मोक्षाश्रमे वसेत् ॥ १२-३६९-९ (८०६५८)
पतिव्रतात्वं भार्यायाः परमो धर्म उच्यते ।
तवोपदेशान्नागेन्द्र तच्च तत्त्वेन वेद्मि वै ॥ १२-३६९-१० (८०६५९)
साऽहं धर्मं विजानन्ती धर्ननित्ये त्वयि स्थिते ।
सत्पथं कथमुत्सृज्य यास्यामि विपथं पथः ॥ १२-३६९-११ (८०६६०)
देवतानां महाभाग धर्मचर्या न हीयते ।
अतिथीनां च सत्कारे नित्ययुक्ताऽस्म्यतन्द्रिता ॥ १२-३६९-१२ (८०६६१)
सप्ताष्टदिवसास्त्वद्य विप्रस्येहागतस्य वै ।
तच्च कार्यं न मे ख्याति दर्शनं तव काङ्क्षति ॥ १२-३६९-१३ (८०६६२)
गोमत्यास्त्वेष पुलिने त्वद्दर्शनसमुत्सुकः ।
आसीनो वर्तयन्ब्रह्म ब्राह्मणः संशितव्रतः ॥ १२-३६९-१४ (८०६६३)
अहं त्वनेन नागेन्द्र सत्यपूर्वं समाहिता ।
प्रस्थाप्यो मत्सकाशं स संप्राप्तो भुजगोत्तमः ॥ १२-३६९-१५ (८०६६४)
एतच्छ्रुत्वा महाप्राज्ञ तत्र गन्तुं त्वमर्हसि ।
दातुमर्हसि वा तस्य दर्शनं दर्शनश्रवः ॥ ॥ १२-३६९-१६ (८०६६५)

इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि
एकोनसप्तत्यधिकत्रिशततमोऽध्यायः ॥ ३६९.।
Mahabharata - Shanti Parva - Chapter Footnotes

१२-३६९-४ अकृतार्थेन धर्मसेतुना ॥
१२-३६९-५ विप्राणां वेदपालनमिति ट ।पाठः ॥
१२-३६९-६ सर्वेषामेव वर्णानामातिथेसमन्वितेति ट ।पाठः ॥
१२-३६९-८ धर्मसंबन्धात्क्षत्रियाणां विशेषत इति ट ।पाठः ॥
१२-३६९-१३ मे मांप्रति ।ख्याति कथयति ॥
१२-३६९-१४ वर्तयन् आवर्तयन् ।ब्रह्म वेदम् ॥
१२-३६९-१६ दर्शनश्रवः हे सर्प ।दर्शनं दर्शनार्थिन इति
ट।पाठः ॥

---

शन्तिपर्व-अध्यय३७०
॥ श्रीः ॥
१२.३७०. अध्यायः ३७०

Mahabharata - Shanti Parva - Chapter Topics
ब्राह्मणसंदेशश्रवणरुष्टेन नागेन पत्नीसुवाक्येन रोषत्यागपूर्वकं
ब्राह्मणंप्रति प्रस्थानम् ॥ १.।
Mahabharata - Shanti Parva - Chapter Text

१२-३७०-० (८०६६६)
नाग उवाच। १२-३७०-०क्ष् (६६६९)
अथ ब्राह्मणरूपेण कं तं समनुपश्यसि ।
मानुषं केवलं विप्रं देवं वाऽथ शुचिस्मिते ॥ १२-३७०-१ (८०६६७)
को हि मां मानुषः शक्तो द्रष्टुकामो यशस्विनि ।
संदर्शनरुचिर्वाक्यमाज्ञापूर्वं वदिष्यति ॥ १२-३७०-२ (८०६६८)
सुरासुरगणानां च देवर्षीनां च भामिनि ।
ननु नागा महावीर्याः सौरभेयास्तरस्विनः ॥ १२-३७०-३ (८०६६९)
वन्दनीयाश्च वरदा वयमप्यनुयायिनः ।
मनुष्याणां विशेषेण नावेक्ष्या इति मे मतिः ॥ १२-३७०-४ (८०६७०)
नारभार्योवाच। १२-३७०-५क्ष् (६६७०)
आर्जवेन विजानामि नासौ देवोऽनिलाशन ।
एकं तस्मिन्विजानामि भक्तिमानतिरोपण ॥ १२-३७०-५ (८०६७१)
स हि कार्यान्तराकाङ्क्षी जलेप्सुः स्तोकको यथा ।
वर्षं वर्षप्रियः पक्षी दर्शनं तव काङ्क्षते ॥ १२-३७०-६ (८०६७२)
हित्वा त्वद्दर्शनं किंचिद्विघ्नं न प्रतिपालयेत् ।
तुल्योप्यभिजने जातो न कश्चित्पर्युपासते ॥ १२-३७०-७ (८०६७३)
तद्रोषं सहजं त्यक्त्वा त्वमेनं द्रष्टुमर्हसि ।
आशाच्छेदेन तस्याद्य नात्मानं दरधुमर्हसि ॥ १२-३७०-८ (८०६७४)
आशया ह्यभिपन्नानामकृत्वाऽश्रुप्रमार्जनम् ।
राजा वा राजपुत्रो वा भ्रूणहत्यैव युज्यते ॥ १२-३७०-९ (८०६७५)
मौने ज्ञानफलावाप्तिर्दानेन च यशो महत् ।
वाग्मित्वं सत्यवाक्येन परत्र च महीयते ॥ १२-३७०-१० (८०६७६)
भूप्रदानेन च गतिं लभत्याश्रमसंमिताम् ।
न्याय्यस्यार्थस्य संप्राप्तिं कृत्वा फलमुपाश्नुते ॥ १२-३७०-११ (८०६७७)
अभिप्रेतामसंश्लिष्टां कृत्वा चात्महितां क्रियाम् ।
न याति निरयं कश्चिदिति धर्मविदो विदुः ॥ १२-३७०-१२ (८०६७८)
नाम उवाच। १२-३७०-१३क्ष् (६६७१)
अभिमानैर्न मानो मे जातिदोषेण वै महान् ।
रोषः संकल्पजः साध्वि दग्धो वागग्निना त्वया ॥ १२-३७०-१३ (८०६७९)
न च रोषादहं साध्वि पश्येयमधिकं तमः ।
तस्य वक्तव्यतां याति विशेषेण भुजङ्गमाः ॥ १२-३७०-१४ (८०६८०)
रोषस्य हि वशं गत्वा दशग्नीवः प्रतापवान् ।
तथा शक्रप्रतिस्पर्धी हतो रामेण संयुगे ॥ १२-३७०-१५ (८०६८१)
अन्तःपुरगतं वत्सं श्रुत्वा रामेण निर्हृतम् ।

धर्मणारोषसंविग्नाः कार्तवीर्यसुता हताः ॥ १२-३७०-१६ (८०६८२)
जामदग्न्येन रामेण सहस्रनयनोपमः ।
संयुगे निहतो रोषात्कार्तवीर्यो महाबलः ॥ १२-३७०-१७ (८०६८३)
तदेष तपसां शत्रुः श्रेयसां विनिपातकः ।
निगृहीतो मया रोषः श्रुत्वैवं वचनं तव ॥ १२-३७०-१८ (८०६८४)
आत्मानं च विशेषेण प्रशंसाम्यनपायिनि ।
यस्य मे त्वं विशालाक्षि भार्या गुणसमन्विता ॥ १२-३७०-१९ (८०६८५)
एष तत्रैव गच्छामि यत्र तिष्ठत्यसौ द्विजः ।
सर्वथा चोक्तवान्वाक्यं स कृतार्थः प्रयास्यति ॥ ॥ १२-३७०-२० (८०६८६)

इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि
सप्तत्यधिकत्रिशततमोऽध्यायः ॥ ३७०.।
Mahabharata - Shanti Parva - Chapter Footnotes

१२-३७०-१ कथं त्वमनुपश्यसीति ट ।पाठः ॥
१२-३७०-३ सौरभेयाः दिव्यगन्धवहाः ॥
१२-३७०-६ स्तोककः चातकः ॥
१२-३७०-७ त्वद्दर्शनं विनास्य कोपि विघ्नो माभूदित्यर्थः ।अतिथिं
त्यक्त्वा न कश्चित्स्वकुले आस्ते इत्यर्थः। नहि त्वां दैवतं
किंचिद्द्वितीयं प्रतिपालयेदिति ट। पाठः ॥
१२-३७०-९ भ्रूणहत्यैव भ्रूणहत्ययैव ॥
१२-३७०-१० दानेनाभ्युदयो महानिति ट ।पाठः ॥
१२-३७०-११ लभत्याश्रमसंपदमिति ट ।पाठः ॥
१२-३७०-१२ नष्टस्यार्थस्य संप्राप्तिं कृत्वा कामकृताः क्रिया इति
ट ।पाठः ॥
१२-३७०-१४ तस्य रोषस्य विशेषेणाधिक्येन ॥

---

शन्तिपर्व-अध्यय३७१
॥ श्रीः ॥
१२.३७१. अध्यायः ३७१

Mahabharata - Shanti Parva - Chapter Topics
नागब्राह्मणयोः संलापः ॥ १.।
Mahabharata - Shanti Parva - Chapter Text

१२-३७१-० (८०६८७)
भीष्म उवाच। १२-३७१-०क्ष् (६६७२)

स पन्नगपतिस्तत्र प्रययौ ब्राह्मणं प्रति ।
तमेव मनसा ध्यायन्कार्यवत्तां विचारयन् ॥ १२-३७१-१ (८०६८८)
तमतिक्रम्य नागेन्द्रो मतिमान्स नरेश्वर ।
प्रोवाच मधुरं वाक्यं प्रकृत्या धर्मवत्सलः ॥ १२-३७१-२ (८०६८९)
भोभो क्षाम्याभिभाषए त्वां न रोषं कर्तुमर्हसि ।
इह त्वमभिसंप्राप्तः कस्यार्थे किं प्रयोजनम् ॥ १२-३७१-३ (८०६९०)
आभिमुख्यादभिक्रम्य स्नेहात्पृच्छामि ते द्विज ।
विविक्ते गोमतीतीरे कं वा त्वं पर्युपाससे ॥ १२-३७१-४ (८०६९१)
ब्राह्मण उवाच। १२-३७१-५क्ष् (६६७३)
धर्मारण्यं हि मां विद्धि नागं द्रष्टुमिहागतम् ।
पद्मनाभं द्विजश्रेष्ठ तत्र मे कार्यमाहितम् ॥ १२-३७१-५ (८०६९२)
तस्य चाहमसान्निध्ये श्रुतवानस्मि तं गतम् ।
स्वजनात्तं प्रतीक्षामि पर्जन्यमिव कर्षकः ॥ १२-३७१-६ (८०६९३)
तस्य चाक्लेशकरणं स्वस्तिकारसमाहितम् ।
आवर्तयामि तद्ब्रह्म योगयुक्तो निरामयः ॥ १२-३७१-७ (८०६९४)
नाग उवाच। १२-३७१-८क्ष् (६६७४)
अहो कल्याणवृत्तस्त्वं साधुः सज्जनवत्सलः ।
अवाच्यस्त्वं महाभाग परं स्नेहेन पश्यसि ॥ १२-३७१-८ (८०६९५)
अहं स नागो विप्रर्षे यथा मां विन्दते भवान् ।
आज्ञापय यथास्वैरं किं करोमि प्रियं तव ॥ १२-३७१-९ (८०६९६)
भवन्तं स्वजनादस्मि संप्राप्तं श्रुतवानहम् ।
अतस्त्वां स्वयमेवाहं द्रष्टुमभ्यागतो द्विज ॥ १२-३७१-१० (८०६९७)
संप्राप्तश्च भवानद्य कृतार्थः प्रतियास्यति ।
विस्रब्धो मां द्विजश्रेष्ठ विषये योक्तमर्हसि ॥ १२-३७१-११ (८०६९८)
वयं हि भवता सर्वे गुणक्रीता विशेषतः ।
यस्त्वमात्महितं त्यक्त्वा मामेवेहानुरुध्यसे ॥ १२-३७१-१२ (८०६९९)
ब्राह्मण उवाच। १२-३७१-१३क्ष् (६६७५)
आगतोऽहं महाभाग तव दर्शनलालसः ।
कंचिदर्थमनर्यज्ञः प्रष्टुकामो भुजंगम ॥ १२-३७१-१३ (८०७००)
अहमात्मानमात्मस्थो मार्गगाणोऽऽत्मनो गतिम् ।
वासार्थिनं महाप्रज्ञं चलच्चित्तमुपास्मि ह ॥ १२-३७१-१४ (८०७०१)
प्रकाशितस्त्वं स गुणैर्यशोगर्भगभस्तिभिः ।
शशाङ्ककरसंस्पर्शैर्हृद्यैरात्मप्रकाशितैः ॥ १२-३७१-१५ (८०७०२)
तस्य मे प्रश्नमुत्पन्नं छिन्धि त्वमनिलाशन ।
पश्चात्कार्यं वदिष्यामि श्रोतुमर्हति तद्भवान् ॥ ॥ १२-३७१-१६ (८०७०३)

इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि
एकसप्तत्यधिकत्रिशततमोऽध्यायः ॥ ३७१.।
Mahabharata - Shanti Parva - Chapter Footnotes

१२-३७१-३ क्षाम्य क्षमस्व ॥
१२-३७१-५ धर्मारण्यं मुनिं मां विद्धि ।द्विजानां सर्पाणां
श्रेष्ठ। धर्मारण्याद्धि मां विद्धि इति ट। पाठः ॥
१२-३७१-६ श्रुतवानस्मि तां गतिमिति ठ ।पाठः ॥
१२-३७१-७ अक्लेशकरणं क्लेशनिवारकम् ॥
१२-३७१-८ श्रुत्वाद्य त्वं महाभाग परं यत्नेन पश्यसीति ट ।पाठः ॥
१२-३७१-१३ अनर्थज्ञः अर्थानभिज्ञः ।कंचिदर्थं हि तत्वज्ञेति
ट। पाठः ॥
१२-३७१-१५ आत्मन्यात्मप्रकाशिभिरिति ट ।पाठः ॥

---

शन्तिपर्व-अध्यय३७२
॥ श्रीः ॥
१२.३७२. अध्यायः ३७२

Mahabharata - Shanti Parva - Chapter Topics
आश्चर्यकथनं प्रार्थितेन नागेन सूर्यमण्डले
तत्तुल्यतेजोन्तरप्रवेशदर्शनकथनम् ॥ १.।
Mahabharata - Shanti Parva - Chapter Text

१२-३७२-० (८०७०४)
ब्राह्मण उवाच। १२-३७२-०क्ष् (६६७६)
विवस्वतो गच्छति पर्ययेण
वोढुं भवांस्तं यथमेकचक्रम् ।
आश्चर्यभूतं यदि तत्र किंचि
द्दृष्टं त्वयाशंसितुमर्हसि त्वम् ॥ १२-३७२-१ (८०७०५)
नाग उवाच। १२-३७२-२क्ष् (६६७७)
आश्चर्याणामनेकानां प्रतिष्ठा भगवान्रविः ।
यतो भूताः प्रवर्तन्ते सर्वे त्रैलोक्यसंमताः ॥ १२-३७२-२ (८०७०६)
यस्य रश्मिसहस्रेषु शाखास्विव विहंगमाः ।
वसन्त्याश्रित्य मुनयः संसिद्धा दैवतैः सह ॥ १२-३७२-३ (८०७०७)
यतो पायुर्विनिःसृत्य सूर्यरश्म्याश्रितो महान् ।
विजृम्भत्यम्बरे तत्र किमाश्चर्यमतः परम् ॥ १२-३७२-४ (८०७०८)
विभज्यं तं तु विप्रर्षे प्रजानां हितकाम्यया ।

तोयं सृजति वर्षासु किमाश्चर्यमतः परम् ॥१२-३७२-५ (८०७०९)
यस्य मण्डलमध्यस्थो महात्मा परमत्विषा।१२-३७२-६ दीप्तः
समीक्षतेऽलोकान्किमाश्चर्यमतः परम् ॥ १२-३७२-६ (८०७१०)
शुक्रो नामासितः पादो यश्च वारिधरोऽम्बरे ।
तोयं सृजति वर्षासु किमाश्चर्यमतः परम् ॥१२-३७२-७ (८०७११)
योऽष्टमासांस्तु शुचिना किरणेनोक्षितं पयः ।
प्रत्यादत्ते पुनः काले किमाश्चर्यमतः परम् ॥१२-३७२-८ (८०७१२)
यस्य तेजोविशेषेषु स्वयमात्मा प्रतिष्ठितः ।
यतो बीजं मही चेयं धार्यते सचराचरम् ॥१२-३७२-९ (८०७१३)
यत्र देवो महाबाहुः शाश्वतः पुरुषोत्तमः ।
अनादिनिधनो विप्र किमाश्चर्यमतः परम् ॥१२-३७२-१० (८०७१४)
आश्चर्याणामिवाश्चर्यमिदमेकं तु मे शृणु ।
विमले यन्मया दृष्टमम्बरे सूर्यसंश्रयात् ॥१२-३७२-११ (८०७१५)
पुरा मध्याह्नसमये लोकांस्तपति भास्करे ।
प्रत्यादित्यप्रतीकाशः सर्वतः समदृश्यत ॥१२-३७२-१२ (८०७१६)
स लोकांस्तेजसा सर्वान्स्वभासा निर्विभासयन् ।
आदित्याधिमुखोऽभ्येति गगनं पाटयन्निव ॥१२-३७२-१३ (८०७१७)
हुताहुतिरिव ज्योतिर्व्याप्य तेजोमरीचिभिः ।
अनिर्देश्येन रूपेण द्वितीय इव भास्करः ॥१२-३७२-१४ (८०७१८)
तस्याभिगमनप्राप्तौ हस्तौ दत्तौ विवस्वता ।
तेनापि दक्षिणो हस्तो दत्तः प्रत्यर्चितार्थिना ॥१२-३७२-१५ (८०७१९)
ततो भित्त्वैव गगन प्रविष्टो रश्मिमण्डलम् ।
एकीभूतं च तत्तेजः क्षणेनादित्यतां गतम् ॥१२-३७२-१६ (८०७२०)
तत्र नः संशयो जातस्तयोस्तेजः समागमे ।
अनयोः को भवेत्सूर्यो रथस्थो योऽयमागतः ॥१२-३७२-१७ (८०७२१)
ते वयं जातसंदेहाः पर्यपृच्छामहे रविम् ।
क एष दिवमाक्रम्य गतः सूर्य इवापरः ॥ ॥१२-३७२-१८ (८०७२२)

इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि
द्विसप्तत्यधिकत्रिशततमोऽध्यायः ॥ ३७२.।

Mahabharata - Shanti Parva - Chapter Footnotes

१२-३७२-४ विसृजत्यम्बरे तोयमिति ट ।पाठः ॥
१२-३७२-५ तं वातं पुरोवातादिरूपेण विभज्य परिणामं नीत्वा ॥
१२-३७२-६ महात्मान्तर्यामी ॥
१२-३७२-७ पादइव पादोऽवयवः नीलमेघरूपेणाप्ययमेव वर्षतीत्यर्थः ॥

१२-३७२-९ यतः सूर्यात् ।बीजं औषधम् ॥
१२-३७२-१२ प्रत्यादिप्रतीकाशः आदित्यान्तरतुल्यतेजस्कः ।समदृश्यत दृष्टः ॥
१२-३७२-१५ दत्तः प्रत्यर्चिनार्चिनेति ट ।पाठः ॥
१२-३७२-१६ भित्त्वैव रविमण्डलमिति ट ।पाठः ॥

---

शन्तिपर्व-अध्यय३७३
॥ श्रीः ॥
१२.३७३. अध्यायः ३७३

Mahabharata - Shanti Parva - Chapter Topics
नागेव ब्राह्मणंप्रति सूर्येण स्वंप्रति तद्बिम्बप्रविष्टतेजस उञ्छवृत्तिमुनिस्वरूपत्वकथनकथनम् ॥ १.।
Mahabharata - Shanti Parva - Chapter Text

१२-३७३-० (८०७२३)
सूर्य उवाच। १२-३७३-०क्ष् (६६७८)
नैष देवोऽनिलसखो नासुरो न च यन्नगः ।
उञ्छवृत्तिव्रते सिद्धो मुनिरेष दिवं गतः ॥ १२-३७३-१ (८०७२४)
एष मूलफलाहारः शीर्णपर्णाशनस्तथा ।
अब्भक्षो वायुभक्षश्च आसीद्विप्रः समाहितः ॥ १२-३७३-२ (८०७२५)
भवश्चानेन विप्रेण संहिताभिरभिष्टुतः ।
स्वर्गद्वारे कृतोद्योगो येनासौ त्रिविदं गतः ॥ १२-३७३-३ (८०७२६)
असंगतिरनाकाङ्क्षी नित्यमुञ्छशिलाशनः ।
सर्वभूतहिते युक्त एष विप्रो भुजंगमाः ॥ १२-३७३-४ (८०७२७)
न हि देवा न गन्धर्वा नासुरा न च पन्नगाः ।
प्रभवन्तीह भूतानां प्राप्तानामुत्तमां गतिम् ॥ १२-३७३-५ (८०७२८)
एतदेवंविधं दृष्टमाश्चर्यं तत्र मे द्विज ।
संसिद्धो मानुषः कामं योसौ सिद्धगतिं गतः ।
सूर्येण सहितो ब्रह्मन्पृथिवीं परिवर्तते ॥ ॥ १२-३७३-६ (८०७२९)

इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि त्रिसप्तत्यधिकत्रिशततमोऽध्यायः ॥ ३७३.।
Mahabharata - Shanti Parva - Chapter Footnotes

१२-३७३-१ अनिलसखो वह्निः ॥

---

॥ श्रीः ॥
१२.३७४. अध्यायः ३७४

Mahabharata - Shanti Parva - Chapter Topics
ब्राह्मणेन नागामन्त्रणपूर्वकमिष्टदेशंप्रति प्रस्थानम् ॥ १.।
Mahabharata - Shanti Parva - Chapter Text

१२-३७४-० (८०७३०)
ब्राह्मण उवाच। १२-३७४-०क्ष् (६६७९)
आश्चर्यं नात्र संदेहः सुप्रीतोस्मि भुजङ्गम ।
अन्वर्थोपगतैर्वाक्यैः पन्थानं चास्मि दर्शितः ॥ १२-३७४-१ (८०७३१)
स्वस्ति तेऽस्तु गमिष्यामि साधो भुजगसत्तम ।
स्मरणीयोस्मि भवता संप्रेषणनियोजनैः ॥ १२-३७४-२ (८०७३२)
नाग उवाच। १२-३७४-३क्ष् (६६८०)
अनुक्त्वा हृद्गतं कार्यं क्वेदानीं प्रस्थितो भवान् ।
उच्यतां द्विज यत्कार्यं यदर्थं त्वमिहागतः ॥ १२-३७४-३ (८०७३३)
उक्तानुक्ते कृते कार्ये मामामन्त्र्य द्विजर्षभ ।
मया प्रत्यभ्यनुज्ञातस्ततो यास्यसि सुव्रत ॥ १२-३७४-४ (८०७३४)
न हि मां केवलं दृष्ट्वा त्यक्त्वा प्रणयवानिह ।
गन्तुमर्हसि विप्रर्षे वृक्षमूलगतो यथा ॥ १२-३७४-५ (८०७३५)
त्वयि चाहं द्विजश्रेष्ठ भवान्मयि न संशयः ।
लोकोऽयं भवतः सर्वः का चिन्ता मयि तेऽनघ ॥ १२-३७४-६ (८०७३६)
ब्राह्मण उवाच। १२-३७४-७क्ष् (६६८१)
एवमेतन्महाप्राज्ञ विदितात्मन्भुजङ्गम ।
नातिरिक्तास्त्वया देवाः सर्वथैव यथातथम् ॥ १२-३७४-७ (८०७३७)
स एव त्वं स एवाहं योऽहं स तु भवानपि ।
अहं भवांश्च भूतानि सर्वे यत्र गताः सदा ॥ १२-३७४-८ (८०७३८)
आसीत्तु मे भोगिपते संशयः पुण्यरसंचये ।
सोहमुञ्छव्रतं साधो चरिष्याम्यर्थसाधनम् ॥ १२-३७४-९ (८०७३९)
एष मे निश्चयः साधो कृतं कारणमुत्तमम् ।
आमन्त्रयामि भद्रं ते कृतार्थोऽस्मि भुजङ्गम ॥ ॥ १२-३७४-१० (८०७४०)

इति श्रीमन्महाभारते शान्तिपर्वणि मोक्षधर्मपर्वणि
चतुःसप्तत्यधिकत्रिशततमोऽध्यायः ॥ ३७४.।
Mahabharata - Shanti Parva - Chapter Footnotes

१२-३७४-४ उक्तानुक्ते पृष्टे अपृष्टेपि मयैव वात्सल्यात्कृते सति ॥
१२-३७४-६ अहं त्वयि भक्तिमानिति शेषः ॥
१२-३७४-८ यत्र चाहं स एव त्वमेवमाह भुजङ्गमेति ट । पाठः ॥

---

शन्तिपर्व-अध्यय३७५
॥ श्रीः ॥
१२.३७५. अध्यायः ३७५

Mahabharata - Shanti Parva - Chapter Topics
भीष्मेण
युधिष्ठिरंप्रत्युञ्छवृत्त्युपाख्यानोपदेशपरम्पराक्रमकथन-
पूर्वकमुञ्छवृत्तिब्राह्मणस्य वनप्रवेशकथनम् ॥ १.।
Mahabharata - Shanti Parva - Chapter Text

१२-३७५-० (८०७४१)
भीष्म उवाच। १२-३७५-०क्ष् (६६८२)
स चामन्त्र्योरगश्रेष्ठं ब्राह्मणः कृतनिश्चयः ।
दीक्षाकाङ्क्षी तदा राजंश्च्यवनं भार्गवं श्रितः ॥ १२-३७५-१ (८०७४२)
स तेन कृतसत्कारो धर्ममेवाधितस्थिवान् ।
तथैव च कथामेतां राजन्कथितवांस्तदा ॥ १२-३७५-२ (८०७४३)
भार्गवेणापि राजेन्द्र जनकस्य निवेशने ।
कथैषा कथिता पुण्या नारदाय महात्मने ॥ १२-३७५-३ (८०७४४)
नारदेनापि राजेन्द्र देवेन्द्रस्य निवेशने ।
कथिता भरतश्रेष्ठ पृष्टेनाक्लिष्टकर्मणा ॥ १२-३७५-४ (८०७४५)
देवराजेन च पुरा कथितैषा कथा शुभा ।
समस्तेभ्यः प्रशस्तेभ्यो विप्रेभ्यो वसुधाधिप ॥ १२-३७५-५ (८०७४६)
यदा च मम रामेण युद्धमासीत्सुदारुणम् ।
वसुभिश्च तदा राजन्कथेयं कथिता मम ॥ १२-३७५-६ (८०७४७)
पृच्छमानाय तत्त्वेन मया चैवोत्तमा तव ।
कथेयं कथिता पुण्या धर्म्या धर्मभृतांवर ॥ १२-३७५-७ (८०७४८)
तदेव परमो धर्मो यन्मां पृच्छसि भारत ।
आसीद्धीरो ह्यनाकाङ्क्षी धर्मार्थकरणे नृप ॥ १२-३७५-८ (८०७४९)
स च किल कृतनिश्चयो द्विजो
भुजगपतिप्रतिदशितात्मकृत्यः ।
यमनियमसहो वनान्तरं

परिगणितोञ्छशिलाशनः प्रविष्टः ॥ ॥ १२-३७५-९ (८०७५०)

इति श्रीमन्महाभारते शतसाहस्रिकायां संहितायां वैयासिक्यां
शान्तिपर्वणि मोक्षधर्मपर्वणि उञ्छवृत्त्युपाख्याने
पञ्चसप्तत्यधिकत्रिशततमोऽध्यायः ॥ ३७५.।

Mahabharata - Shanti Parva - Chapter Footnotes

१२-३७५-७ मयाप्यद्य तवानद्येति ट । पाठः ॥
१२-३७५-९ यमा अहिंसादयः नियमाः शौचादयः । वनान्तरं वनमध्यं
प्रविष्टः। उञ्छः कणश आदानं कणिशाद्यर्जनं शिलम्। परिगणितं
परिमितमुञ्छशिलार्जितमन्नमश्नन् फणिपत्युक्तामुञ्छवृत्तेर्गतिं
प्रापेति शेषः। शमनियमसमाहितो वनान्तमिति ट। पाठः ॥
समाप्तं च मोक्षधर्मपर्व ॥
३.।
शान्तिपर्व च समाप्तम् ॥
१२.।
अस्यानन्तरमनुशासनपर्व भविष्यति तस्यायमाद्यः श्लोकः ।
ग्शरतल्पे महात्मानं शयानमपराजितम् । युधिष्ठिर उपागम्य
प्रणिपत्येदमब्रवीत् ॥' १३-१-१क्ष् (६७१९)

.. anusasanaparva 13 Kumbhaghonam Edition ..

॥ १३ अनुशासनपर्व ॥

१३. अनुशासनपर्व

अनुससनपर्व-अध्यय००१
॥ श्रीः ॥
१३.१. अध्यायः १

अथ दानधर्मपर्व ॥ १ ॥
Mahabharata - Anushaasana Parva - Chapter Topics
युधिष्ठिरेण भीष्मंप्रति पुनः शमादिकथनप्रार्थना
॥ १.। भीष्मादिनिधने स्वस्यैव हेतुत्वबुद्ध्या
स्वोपालम्भनपूर्वकं शोचन्तं युधिष्ठिरंप्रति भीष्मेण
जीवस्य कर्मण्यस्वातन्त्रयमभिधाय तन्निदर्शनतया
गौतमीलुब्धकादिसंवादानुवादः ॥ २ ॥

Mahabharata - Anushaasana Parva - Chapter Text

१३-१-० (८११६९)
॥ श्रीवेदव्यासाय नमः ॥ १३-१-०क्ष् (६७१८)
नारायणं नमस्कृत्य नरं चैव नरोत्तमम् ।
देवीं सरस्वतीं चैव(व्यासं)ततो जयमुदीरयेत् ॥ १३-१-१ (८११७०)
वैशंपायन उवाच ।
ग्शरतल्पे महात्मानं शयानमपराजितम् ।
युधिष्ठिर उपागम्य प्रणिपत्येदमब्रवीत् ॥' १३-१-१क्ष् (६७१९)
शमो बहुविधाकारः सूक्ष्म उक्तः पितामह ।
न च मे हृदये शान्तिरस्ति श्रुत्वेदमीदृशम् ॥ १३-१-२ (८११७१)
अस्मिन्नर्थे बहुविधा शान्तिरुक्ता पितामह ।
स्वकृतात्का नु शान्ति स्याच्छमाद्बहुविधादपि ॥ १३-१-३ (८११७२)
शराचितं शरीरं हि तीव्रव्रणमुदीक्ष्य ते ।
शमं नोपलभे वीर दुष्कृतान्येव चिन्तयन् ॥ १३-१-४ (८११७३)
रुधिरेणावसिक्ताङ्गं प्रस्रवन्तं यथाचलम् ।

त्वां दृष्ट्वा पुरुषव्याघ्र सीदे वर्षास्विवाम्बुजम् ॥ १३-१-५ (८११७४)
अतः कष्टतरं किन्नु मत्कृते यत्पितामहः ।
इमामवस्थां ग्गमितः प्रत्यमित्रै रणाजिरे ॥ १३-१-६ (८११७५)
तथा चान्ये नृपतयः सहपुत्राः सबान्धवाः ।
मत्कृते निधनं प्राप्ताः किन्नु कष्टतरं ततः ॥ १३-१-७ (८११७६)
वयं हि धार्तराष्ट्राश्च काममन्युवशं गताः ।
कृत्वेदं निन्दितं कर्म प्राप्स्यामः कां गतिं नृप ॥ १३-१-८ (८११७७)
इदं तु धार्तराष्ट्रास्य श्रेयो मन्ये जनाधिप ।
इमामवस्थां संप्राप्तं यदसौ त्वां न पश्यति ॥ १३-१-९ (८११७८)
सोऽहमार्तिकरो राजन्सुहृद्वधकरस्तथा ।
न शान्तिमधिगच्छामि पश्यंस्त्वां दुःखितं क्षितौ ॥ १३-१-१० (८११७९)
दुर्योधनो हि समरे सहसैन्यः सहानुजः ।
निहतः क्षत्रधर्मेऽस्मिन्दुसत्मा कुलपांसनः ॥ १३-१-११ (८११८०)
न स पश्यति दुष्टात्मा त्वामद्य पतितं क्षितौ ।
अतः श्रेयो मृतं मन्ये नेह जीवितमात्मनः ॥ १३-१-१२ (८११८१)
अहं हि समरे वीर गमितः शत्रुभिः क्षयम् ।
अभविष्यं यदि पुरा सह भ्रातृभिरच्युत ।
न त्वामेवं सुदुःखार्तमद्राक्षं सायकार्दितम् ॥ १३-१-१३ (८११८२)
नूनं हि पापकर्माणो धात्रा सृष्टाः स्म हे नृप ॥ १३-१-१४ (८११८३)
अन्यस्मिन्नपि लोके वै यथा मुच्येम किल्बिषात् ।
तथा प्रशाधि मां राजन्मम चेदिच्छसि प्रियम् ॥ १३-१-१५ (८११८४)
भीष्म उवाच। १३-१-१६क्ष् (६७२०)
परतन्त्रं कथं हेतुमात्मानमनु पश्यसि ।
कर्मणां हि महाभाग सूक्ष्मं ह्येतदतीन्द्रियम् ॥ १३-१-१६ (८११८५)
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
संवादं मृत्युगौतम्योः काललुब्धकपन्नगैः ॥ १३-१-१७ (८११८६)
गौतमी नाम काऽप्यासीत्स्थविरा शमसंयुता ।
सर्पेण दष्टं स्वं पुत्रमपश्यद्गतचेतनम् ॥ १३-१-१८ (८११८७)
अथ तं स्नायुपाशेन बद्धूवा सर्पममर्षितः ।
लुब्धकोऽर्जुनको नाम नाम गौतम्याः समुपानयत् ॥ १३-१-१९ (८११८८)
तां चाब्रवीदयं ते स पुत्रहा पन्नगाधमः ।
ब्रूहि क्षिप्रं महाभागे वध्यतां केन हेतुना ॥ १३-१-२० (८११८९)
अग्नौ प्रक्षिप्यतामेष च्छिद्यतां खण्डशोपि वा ।
न ह्यं बालहा पापश्चिरं जीवितुमर्हति ॥ १३-१-२१ (८११९०)
गौतम्युवाच। १३-१-२२क्ष् (६७२१)
विसृजैनमबुद्धिस्त्वमवध्योऽर्जुनक त्वया ।

को ह्यात्मानं गुरुं कुर्यात्प्राप्तव्ये सति चिन्तयन्  १३-१-२२ (८११९१)
प्लवन्ते धर्मलघवो लोकेऽम्भसि यथा प्लवाः ।
मज्जन्ति पापगुरवः शस्त्रं स्कन्नमिवोदके ॥१३-१-२३ (८११९२)
नास्यामृतत्वं भवितैवं हतेऽस्मि-
ञ्जीवत्यस्मिन्कोऽत्ययः स्यादयं ते ।
अस्योत्सर्गे प्राणयुक्तस्य जन्तो-
र्मृत्युं लोके को न गच्छेदनन्ते ॥ १३-१-२४ (८११९३)
लुब्धक उवाच।१३-१-२५क्ष् (६७२२)
जानाम्यहं नेह गुणागुणज्ञाः
सदायुक्ता गुरवो वै भवन्ति ।
स्वर्गस्य ते सूपदेशा भवन्ति
तस्मात्क्षुद्रं सर्पमेनं हनिष्ये ॥ १३-१-२५ (८११९४)
शममीप्सन्तः कालयोगं त्यजन्ति
सद्यः शुचं त्वर्थविदस्त्यजन्ति ।
श्रियः क्षयः शोचतां नित्यशो हि
तस्माच्छुचं मुञ्च हते भुजङ्गे ॥ १३-१-२६ (८११९५)
गौतम्युवाच।१३-१-२७क्ष् (६७२३)
न चैवार्तिर्विद्यतेऽस्मद्विधानां
धर्मात्मानः सर्वदा सज्जना हि ।
नित्यायस्तो बालजनो न चाहं
धर्मोपैति प्रभवाम्यस्य नाहम् ॥ १३-१-२७ (८११९६)
न ब्राह्मणानां कोपोऽस्ति कुतः कोपाच्च यातना ।
मार्दवात्क्षम्यतां साधो मुच्यतामेष पन्नगः ॥१३-१-२८ (८११९७)
लुब्धक उवाच।१३-१-२९क्ष् (६७२४)
हत्वा लाभः श्रेय एवाव्ययः स्या-
त्सद्योलाभःस्याद्बलिभ्यः प्रशस्तः ।
कालाल्लाभो यस्तु सद्यो भवेत
श्रेयोलाभः कुत्सिते त्वीदृशि स्यात् ॥ १३-१-२९ (८११९८)
गौतम्युवाच।१३-१-३०क्ष् (६७२५)
काऽर्थप्राप्तिर्गृह्य शत्रुं निहत्य
का कामाप्तिः प्राप्य शत्रुं न मुक्त्वा ।
कस्मात्सौम्याहं न क्षमे नो भुजङ्गे
मोक्षार्थं वा कस्य हेतोर्न कुर्याम् ॥ १३-१-३० (८११९९)
लुब्धक उवाच।१३-१-३१क्ष् (६७२६)
अस्मादेकाद्बहवो रक्षितव्या
नैको बहुभ्यो गौतमि रक्षितव्यः ।

कृतागसं धर्महेतोस्त्यजन्ति
सरीसृपं पापमिमं त्यज त्वम् ॥ १३-१-३१ (८१२००)
गौतम्युवाय १३-१-३२क्ष् (६७२७)
नास्मिन्हते पन्नगे पुत्रको मे
सम्प्राप्स्यते लुब्धक जीवितं वै ।
गुणं चान्यं नास्य वधे प्रपश्ये
तस्मात्सर्पं लुब्धक मुञ्च जीवम् ॥ १३-१-३२ (८१२०१)
लुब्धक उवाच। १३-१-३३क्ष् (६७२८)
वृत्रं हत्वा देवराट् श्रेष्ठभाग्वै
यज्ञं हत्वा भागमवाप चैव ।
शूली देवो देववृत्तं चर त्वं
क्षिप्रं सर्पं जहि मा भूत्ते विशङ्का ॥ १३-१-३३ (८१२०२)
भीष्म उवाच। १३-१-३४क्ष् (६७२९)
असकृत्प्रोच्यमानाऽपि गौतमी भुजगं प्रति ।
लुब्धकेन महाभागा सा पापे नाकरोन्मतिम् ॥ १३-१-३४ (८१२०३)
ईषदुच्छ्वसमानस्तु कृच्छ्रात्संस्तभ्य पन्नगः ।
उत्ससर्ज गिरं मन्दां मानुषीं पाशपीडितः ॥ १३-१-३५ (८१२०४)
सर्प उवाच। १३-१-३६क्ष् (६७३०)
को न्वर्जुनक दोषोऽत्र विद्यते मम बालिश ।
अस्वतन्त्रं हि मां मृत्युर्विवशं यदचूचुदत् ॥ १३-१-३६ (८१२०५)
तस्यायं वचनाद्दष्टो न कोपेन न काम्यया ।
तस्य तत्किल्बिषं लुब्ध विद्यते यदि किञ्चन। १३-१-३७ (८१२०६)
लुब्धक उवाच। १३-१-३८क्ष् (६७३१)
यद्यन्यवशगेनेदं कृतं ते पन्नगाशुभम् ।
कारणं वै त्वमप्यत्र तस्मात्त्वमपि किल्बिषी ॥ १३-१-३८ (८१२०७)
मृत्पात्रस्य क्रियायां हि दण्डचक्रादयो यथा ।
कारणत्वे प्रकल्प्यन्ते तथा त्वमपि पन्नग ॥ १३-१-३९ (८१२०८)
किल्बिषी चापि मे वध्यः किल्बिषी चासि पन्नग ।
आत्मानं कारणं ह्यत्र त्वमाख्यासि भुजङ्गम ॥ १३-१-४० (८१२०९)
सर्प उवाच। १३-१-४१क्ष् (६७३२)
सर्व एते ह्यस्ववशा दण्डचक्रादयो यथा ।
तथाहमपि तस्मान्मे नैष दोषो मतस्तव ॥ १३-१-४१ (८१२१०)
अथवा मतमेतत्ते तेऽप्यन्योऽन्यप्रयोजकाः ।
कार्यकारणसन्देहो भवत्यन्योन्यचोदनात् ॥ १३-१-४२ (८१२११)
एवं सति न दोषो मे नास्मि वध्यो न किल्बिषी ।
किल्बिषं समवाये स्यान्मन्यसे यदि किल्बिषम् ॥ १३-१-४३ (८१२१२)

लुब्धक उवाच। १३-१-४४क्ष् (६७३३)
कारणं यदि स्याद्धि न कर्ता स्यास्त्वमप्युत ।
विनाशे कारणं त्वं च तस्माद्वध्योऽसि मे मतः ॥ १३-१-४४ (८१२१३)
असत्यपि कृते कार्ये नेह पन्नग लिप्यते ।
तस्मान्नात्रैव हेतुः स्याद्वध्यः किं बहु भाषसे ॥ १३-१-४५ (८१२१४)
सर्प उवाच। १३-१-४६क्ष् (६७३४)
कार्याभावे क्रिया न स्यात्सत्यसत्यपि कारणे ।
तस्मात्समेऽस्मिन्हेतौ मे वाच्यो हेतुर्विशेषतः ॥ १३-१-४६ (८१२१५)
यद्यहं कारणत्वेन मतो लुब्धक तत्त्वतः ।
अन्यः प्रयोक्तास्यादत्र किन्नु जन्तुविनाशने ॥ १३-१-४७ (८१२१६)
लुब्धक उवाच। १३-१-४८क्ष् (६७३५)
वध्यस्त्वं मम दुर्बुद्धे बालघाती नृशंसकृत् ।
भाषसे किं बहु पुनर्वध्यः सन्पन्नगाधम ॥ १३-१-४८ (८१२१७)
सर्प उवाच। १३-१-४९क्ष् (६७३६)
यथा हवींषि जुह्वाना मखे वै लुब्धकर्त्विजः ।
न फलं प्राप्नुवन्त्यत्र फलयोगे तथा ह्यहम् ॥ १३-१-४९ (८१२१८)
भीष्म उवाच। १३-१-५०क्ष् (६७३७)
तथा ब्रुवति तस्मिंस्तु पन्नगे मृत्युचोदिते ।
आजगाम ततो मृत्युः पन्नगं चाब्रवीदिदम् ॥ १३-१-५० (८१२१९)
प्रचोदितोऽहं कालेन पन्नग त्वामचूचुदम् ।
विनाशहेतुर्नास्य त्वमहं न प्राणिनः शिशोः ॥ १३-१-५१ (८१२२०)
यथा वायुर्जलधरान्विकर्षति ततस्ततः ।
तद्वज्जलदवत्सर्प कालस्याहं वशानुगः ॥ १३-१-५२ (८१२२१)
सात्विका राजसाश्चैव तामसा ये च केचन ।
भावाः कालात्मकाः सर्वे प्रवर्तन्तेह जन्तुषु ॥ १३-१-५३ (८१२२२)
जङ्गमाः स्थावराश्चैव दिवि वा यदि वा भुवि ।
सर्वे कालात्मकाः सर्प कालात्मकमिदं जगत् ॥ १३-१-५४ (८१२२३)
प्रवृत्तयश्च लोके या तथैव च निवृत्तयः ।
तासां विकृतयो याश्च सर्वं कालात्मकं स्मृतम् ॥ १३-१-५५ (८१२२४)
आदित्यश्चन्द्रमा विष्णुरापो वायुः शतक्रतुः ।
अग्निः खं पृथिवी मित्रः पर्जन्यो वसवोऽदितिः ॥ १३-१-५६ (८१२२५)
सरितः सागराश्चैव भावाभावौ च पन्नग ।
सर्वे कालेन सृज्यन्ते ह्रियन्ते च पुनःपुनः ॥ १३-१-५७ (८१२२६)
एवं ज्ञात्वा कथं मां सदोषं सर्प मन्यसे ।
अथ चैवं गते दोषे मयि त्वमपि दोषवान् ॥ १३-१-५८ (८१२२७)
सर्प उवाच। १३-१-५९क्ष् (६७३८)

निर्दोषं दोषवन्तं वा न त्वां मृत्यो ब्रवीम्यहम् ।
त्वयाऽहं चोदित इति ब्रवीम्येतावदेव तु ॥ १३-१-५९ (८१२२८)
यदि काले तु दोषोऽस्ति यदि तत्रापि नेष्यते ।
दोषो नैव परीक्ष्यो मे न ह्यत्राधिकृता वयम् ॥ १३-१-६० (८१२२९)
निर्मोक्षस्त्वस्य दोषस्य मया कार्यो यथा तथा ।
मृत्योरपि न दोषः स्यादिति मेऽत्र प्रयोजनम् ॥ १३-१-६१ (८१२३०)
भीष्म उवाच। १३-१-६२क्ष् (६७३९)
सर्पोऽथार्जुनकं प्राह श्रुतं ते मृत्युभाषितम् ।
नानागसं मां पाशेन सन्तापयितुमर्हसि। १३-१-६२ (८१२३१)
लुब्धक उवाच। १३-१-६३क्ष् (६७४०)
मृत्योः श्रुतं मे वचनं तव चैव भुजङ्गम ।
नैव तावददोषत्वं भवति त्वयि पन्नग ॥ १३-१-६३ (८१२३२)
मृत्युस्त्वं चैव हेतुर्हि बालस्यास्य विनाशने ।
उभयं कारणं मन्ये न कारणमकारणम् ॥ १३-१-६४ (८१२३३)
धिङ्भृत्युं च दुरात्मानं क्रूरं दुःखकरं सताम् ।
त्वां चैवाहं वधिष्यामि परपापस्य कारणम् ॥ १३-१-६५ (८१२३४)
मृत्युरुवाच। १३-१-६६क्ष् (६७४१)
विवशौ कालवशगावावां निर्दिष्टकारिणौ ।
नावां दोषेण गन्तव्यौ यदि सम्यक्प्रपश्यसि ॥ १३-१-६६ (८१२३५)
लुब्धक उवाच। १३-१-६७क्ष् (६७४२)
युवामुभौ कालवशौ यदि मे मृत्युपन्नगौ ।
हर्षक्रोधौ यथा स्यातामेतदिच्छामि वेदितुम् ॥ १३-१-६७ (८१२३६)
मृत्युरुवाच। १३-१-६८क्ष् (६७४३)
या काचिदेव चेष्टा स्यान्सर्वा कालप्रचोदिता ।
पूर्वमेवैतदुक्तं हि मया लुब्धक तत्वतः ॥ १३-१-६८ (८१२३७)
तस्मादुभौ कालवशावावां निर्दिष्टकारिणौ ।
नावां दोपेण गन्तव्यौ त्वया लुब्धक कर्हिचित् ॥ १३-१-६९ (८१२३८)
भीष्म उवाच। १३-१-७०क्ष् (६७४४)
अथोपगम्य कालस्तु तस्मिन्धर्मार्थसंशये ।
अब्रवीत्पन्नगं मृत्युं लुब्धं चार्जुनकं तथा ॥ १३-१-७० (८१२३९)
न ह्यहं नाप्ययं मृत्युर्नायं लुब्धक पन्नगः ।
किल्बिषी जन्तुमरणे न वयं हि प्रयोजकाः ॥ १३-१-७१ (८१२४०)
अकरोद्यदयं कर्म तन्नोऽर्जुनक चोदकम् ।
विनाशहेतुर्नान्योऽस्य वध्यतेऽयं स्वकर्मणा ॥ १३-१-७२ (८१२४१)
यदनेन कृतं कर्म तेनायं निधनं गतः ।
विनाशहेतुः कर्मास्य सर्वे कर्मवशा वयम् ॥ १३-१-७३ (८१२४२)

कर्मदायादवाँल्लोकः कर्मसम्बन्धलक्षणः ।
कर्माणि चोदयन्तीह यथान्योन्यं तथावयम् ॥ १३-१-७४ (८१२४३)
यथा मृत्पिण्डतः कर्ता कुरुते यद्यदिच्छति ।
एवमात्मकृतं कर्म मानवः प्रतिपद्यते ॥ १३-१-७५ (८१२४४)
यथा च्छायातपौ नित्यं सुसम्बद्धौ निरन्तरम् ।
तथा कर्म च कर्ता च सम्बद्धावात्मकर्मभिः ॥ १३-१-७६ (८१२४५)
एवं नाहं न वै मृत्युर्न सर्पो न तथा भव न् ।
न चेयं ब्राह्मणी वृद्धा शिशुरेवात्र कारणम् ॥ १३-१-७७ (८१२४६)
तस्मिंस्तथा ब्रुवाणे तु ब्राह्मणी गौतमी नृप ।
स्वकर्मप्रत्ययाँल्लोकान्मत्वाऽर्जुनकमब्रवीत् ॥ १३-१-७८ (८१२४७)
नैव कालो न भुजगो न मृत्युरिह कारणम् ।
स्वकर्मभिरयं बालः कालेन निधं गतः ॥ १३-१-७९ (८१२४८)
मया च तत्कृतं कर्म येनायं मे मृतः सुतः ।
यातु कालस्तथा मृत्युर्मुञ्चार्जुनक पन्नगम् ॥ १३-१-८० (८१२४९)
भीष्म उवाच। १३-१-८१क्ष् (६७४५)
ततो यथागतं जग्मुर्मृत्युः कालोऽथ पन्नगः ।
अभूद्विशोकोऽर्जुनको विशोका चैव गौतमी ॥ १३-१-८१ (८१२५०)
एतच्छ्रुत्वा शमं गच्छ मा भूः शोकपरो नृप ।
स्वकर्मप्रत्ययाँल्लोकांस्त्रीन्विद्धि समितिंजय ॥ १३-१-८२ (८१२५१)
नैव त्वया कृतं कर्म नापि दुर्योधनेन वै ।
कालेनैतत्कृतं विद्धि निहता येन पार्थिवाः ॥ १३-१-८३ (८१२५२)
वैशम्पायन उवाच। १३-१-८४क्ष् (६७४६)
इत्येतद्वचनं श्रुत्वा बभूव विगतज्वरः ।
युधिष्ठरो महातेजाः पप्रच्छेदं च धर्मवित् ॥ ॥ १३-१-८४ (८१२५३)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
प्रथमोऽध्यायः ॥ १ ॥

Mahabharata - Anushaasana Parva - Chapter Footnotes

७-१-२ धर्मो बहुविधाकार इति ट । पाठ ॥
७-१-५ सीदे सीदामि सदा वर्षमिवाम्बुदम् इति थ।पाठः ॥
७-१-६ मत्कृते मन्निमित्तम् । प्रत्यमित्रैः अमित्राणां
प्रतिकूलैरस्मदीयैरर्जुनशिखण्डिप्रभृतिभिः ॥
७-१-१९ अथ तं साधुपाशेनेति ध । पाठ ॥
७-१-२० केन हेतुना केनोपायेन ॥
७-१-२१ हेतुमेवाह अग्नाविति ॥

७-१-२२ प्राप्तव्यमविचिन्तयन्निति झ।पाठः ॥
७-१-२३ प्लवन्ते दुःखार्णवं तरन्ति ।मज्जन्ति च तत्रैव।वस्त्रं क्लिन्नमिवोदके इति ट।पाठः ७-१-२४ उत्सर्गे प्राणोत्सर्गे ॥
७-१-२९ श्रेयः परलोकहितं तदेवाऽव्ययो लाभः सच शत्रून् हत्वैव लभ्य इत्यध्याहृत्य योज्यम् ।बलिभ्यः सर्वेभ्यः प्रशस्तः श्रेष्ठश्च स्यात्।शत्रुवधाल्लोकत्रयेपि मान्यो भवतीत्यर्थः ॥
७-१-३१ त्यजन्ति नाशयन्ति ॥
७-१-३२ मे पुत्रको जीवितं न सम्प्राप्स्यते ।गुणं पुण्यम्।जीवं जीवन्तम् ॥
७-१-३३ शूली यज्ञं हत्वेति सम्बन्धः ॥
७-१-३५ संस्तभ्य धैर्यमालम्ब्य ॥
७-१-३६ अचूचुदत् प्रेरितवान् ॥
७-१-३७ दष्टो दष्टवान् ।किल्बिषं चेदस्ति तर्हि प्रयोक्तुरेव न प्रयोज्यस्य मम शरस्येवेत्यर्थः ॥
७-१-३९ चेतनत्वात्किल्बिषीत्यवश्यं वध्योऽसीत्यर्थः ॥
७-१-४२ आयुधं हि अयस्कान्तवत्प्रहर्तारं प्रयोजयति ।तेनायुधकर्तापि प्रयोजकस्तस्य चायं कारयिता प्रहर्तुकामः प्रयोजक इत्यन्योन्यप्रयोज्यत्वान्न कस्यचिद्धन्तृत्वमित्यर्थः ॥
७-१-४३ समवाये समुदाये ॥
७-१-४५ यतः कृतेऽपि असति दुष्टे कार्ये दोषे हेतुः कर्ता न लिप्यते तवमते ।तस्मात् चोरादिरत्रैव राज्ञां वध्यः प्रायश्चित्ती च न स्यात् ॥
७-१-४६ कारणे कर्तरि सति कुठारोद्यमनादिकार्येण छिदिक्रिया जायते असत्यपि कर्तरि तरुशाखान्तनिघर्षेण कार्येण तज्जेनाग्निना वनदाहक्रिया जायते ।तस्माच्छाखाया इव ममापि कर्तृत्वं अप्रयोजकत्वान्न दोषहेतुः विशेषाभावादित्यर्थः ॥
७-१-४९ एवमृत्विगादिवदन्यप्रेर्यत्वान्नाहं किल्बिषी किन्तु मम प्रयोजक एवेति भावः ॥
७-१-५३ कालात्मकाः कालस्येवाऽऽत्मा स्वभावो येषां ते ।कालानुसारिण इत्यर्थः ॥
७-१-५७ भावाभावावैश्वर्यानैश्वर्ये ॥
७-१-६३ मे मया ॥
७-१-६७ भो मृत्युपन्नगौ यदि युवां कालवशौ तर्हि मे मम तटस्तस्य परोपकर्तरि हर्षः अपकर्त्रोश्च युवयोरुपरि द्वेषो वा यता स्यातां तथा ब्रूतम् ।एतदहं वेदितुमिच्छामीत्यध्याहारपूर्वकं योज्यम्।एवं सर्वस्य परवशत्वे उपकर्त्रपकर्त्रोः स्तुतिनिन्दे न स्यातामिति भावः ७-१-६८ ईश्वराधीनो जनः सदसद्वा कुर्वाणो न स्तुत्यो

न वा निन्द्य इति भावः ॥
७-१-६९ दोषेण युक्ताविति शेषः ।गन्तव्यौ ज्ञातव्यौ ॥
७-१-७० धर्मस्यार्थः फलं तत्र विषये ॥
७-१-७४ कर्मैव दायादः पुत्रवत्तारकं तद्वान् ।कर्मसम्बन्धः
कर्मफलयोगः तदेव लक्षणं पुण्यपापवत्ताज्ञापकं यस्य तथा ॥
७-१-७८ कर्मैव प्रत्ययः कारणं येषां तान् लोकान् स्वर्गनरकादीन् ॥
७-१-८० तत्कर्म पुत्रशोकप्रदम् ॥

---

अनुससनपर्व-अध्यय००२
॥ श्रीः ॥
१३.२. अध्यायः २

अथ दानधर्मपर्व ॥ १ ॥
Mahabharata - Anushaasana Parva - Chapter Topics
भीष्मेण युधिष्ठिरंप्रति गार्हस्थ्याश्रयणेनातिथिसत्कारस्य
श्रेयःसाधनतायां सुदर्शनोपाख्यानकथनम् ॥ १ ॥

Mahabharata - Anushaasana Parva - Chapter Text

१३-२-० (८१२५४)
युधिष्ठिर उवाच। १३-२-०क्ष् (६७४७)
पितामह महाप्राज्ञ सर्वशास्त्रविशारद ।
श्रुतं मे महदाख्यानमिदं मतिमतांवर ॥ १३-२-१ (८१२५५)
भूयस्तु श्रोतुमिच्छामि धर्मार्थसहितं नृप ।
कथ्यमानं त्वया किञ्चित्तन्मे व्याख्यातुमर्हसि ॥ १३-२-२ (८१२५६)
केन मृत्युर्गृहस्थेन धर्ममाश्रित्य निर्जितः ।
इत्येतद्धर्ममाचक्ष्व तत्त्वेनापि च पार्थिव ॥ १३-२-३ (८१२५७)
भीष्म उवाच। १३-२-४क्ष् (६७४८)
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
यथा मृत्युर्गृहस्थेन धर्ममाश्रित्य निर्जितः ॥ १३-२-४ (८१२५८)
मनोः प्रजापते राजन्निक्ष्वाकुरभवत्सुतः ।
तस्य पुत्रशतं जज्ञे नृपतेः सूर्यवर्चसः ॥ १३-२-५ (८१२५९)
दशमस्तस्य पुत्रस्तु दशाश्वो नाम भारत ।
माहिष्मत्यामभूद्राजा धर्मात्मा सत्यविक्रमः ॥ १३-२-६ (८१२६०)
दशाश्वस्य सुतस्त्वासीद्राजा परमधार्मिकः ।
सत्ये तपसि दाने च यस्य नित्यं रतं मनः ॥ १३-२-७ (८१२६१)

मदिराश्व इति ख्यातः पृथिव्यां पृथिवीपतिः ।
धनुर्वेदे च वेदे च निरतो योऽभवत्सदा ॥ १३-२-८ (८१२६२)
मदिराश्वस्य पुत्रस्तु द्युतिमान्नाम पार्थिवः ।
महाभागो महातेजा महासत्वो महाबलः ॥ १३-२-९ (८१२६३)
पुत्रो द्युतिमतस्त्वासीद्राजा परमधार्मिकः ।
सर्वलोकेषु विख्यातः सुवीरो नाम नामतः ।
धर्मात्मा कोशवांश्चापि देवराज इवापरः ॥ १३-२-१० (८१२६४)
सुवीरस्य तु पुत्रोऽभूत्सर्वसङ्ग्रामदुर्जयः ।
दुर्जयो नाम विख्यातः सर्वशस्त्रभृतांवर ॥ १३-२-११ (८१२६५)
दुर्जयस्येन्द्रवपुषः पुत्रोऽग्निसदृशद्युतिः ।
दुर्योधनो नाम महान्राजा राजर्षिसत्तमः ॥ १३-२-१२ (८१२६६)
तस्येन्द्रसमवीर्यस्य सङ्ग्रामेष्वनिवर्तिनः ।
विषये वासवस्तस्य सम्यगेव प्रवर्षति ॥ १३-२-१३ (८१२६७)
रत्नैर्धनैश्च पशुभिः सस्यैश्चापि पृथग्विधैः ।
नगरं विषयश्चास्य प्रतिपूर्णस्तदाऽभवत् ॥ १३-२-१४ (८१२६८)
न तस्य विषये चाभूत्कृपणो नापि दुर्गतः ।
व्याधितो वा कृशो वाऽपरि तस्मिन्नाभून्नरः क्वचित् ॥ १३-२-१५ (८१२६९)
सुदक्षिणो मधुरवागनसूयुर्जितेन्द्रियः ।
धर्मात्मा चानृशंसश्च विक्रान्तोऽथाविकत्थनः ॥ १३-२-१६ (८१२७०)
यज्वा च दान्तो मेधावी ब्रह्मण्यः सत्यसङ्गरः ।
न चावमन्ता दाता च वेदवेदाङ्गपारगः ॥ १३-२-१७ (८१२७१)
तं नर्मदा देवनदी पुण्या शीतजला शिवा ।
चकमे पुरुषव्याघ्रं स्वेन भावेन भारत ॥ १३-२-१८ (८१२७२)
तस्यां जज्ञे तदा नद्यां कन्या राजीवलोचना ।
नाम्ना सुदर्शना राजन्रूपेण च सुदर्शना ॥ १३-२-१९ (८१२७३)
तादृग्रूपा न नारीषु भूतपूर्वा युधिष्ठिर ।
दुर्योधनसुता यादृगभवद्वरवर्णिनी ॥ १३-२-२० (८१२७४)
तामग्निश्चकमे साक्षाद्राजकन्यां सुदर्शनाम् ।
स्वरूपं दीप्तिमत्कृत्वा शरदर्कसमद्युति ॥ १३-२-२१ (८१२७५)
सा चाग्निशरणे राज्ञः शुश्रूषाकृतनिश्चया ।
नियुक्ता पितृसन्देशादारिराधयिषुः शिखिम् ॥ १३-२-२२ (८१२७६)
तस्या मनोहरं रूपं दृष्ट्वा देवो हुताशनः ।
मन्मथेन समादिष्टः पत्नीत्वे यतते मिथः ॥ १३-२-२३ (८१२७७)
भज मामनवद्याङ्गि कामात्कमललोचने ।
रम्भोरु मृगशावाक्षि पूर्णचन्द्रनिभानने ॥ १३-२-२४ (८१२७८)
तवेदं पद्मपत्राक्षं मुखं दृष्ट्वा मनोहरम् ।

भ्रूलतालिलतं कान्तमनङ्गो बाधते हि माम् ॥१३-२-२५ (८१२७९)
ललाटं चन्द्ररेखाभं शिरोरुहविभूषितम् ।
दृष्ट्वा ते पत्रलेखान्तमनङ्गो बाधते भृशम् ॥१३-२-२६ (८१२८०)
बालातपेन तुलितं सस्वेदपुलकोद्गमम् ।
बिम्बाधरोष्ठवदनं विबुद्धमिव पङ्कजम् ।
अतीव चारुविभ्रान्तं मदमावहते मम ॥ १३-२-२७ (८१२८१)
दन्तप्रकाशनियता वाणी तव सुरक्षिता ।
ताम्रपल्लवसंकाशा जिह्वेयं मे मनोहरा ॥१३-२-२८ (८१२८२)
समाः स्निग्धाः सुजाताश्च सहिताश्च द्विजास्तव ।
द्विजप्रिये प्रसीदस्व भज मां सुभगा ह्यसि ॥१३-२-२९ (८१२८३)
मनोज्ञं सुकृतापाङ्गं मुखं तव मनोहरम् ।
स्तनौ ते संहतौ भीरु हाराभरणभूषितौ ॥१३-२-३० (८१२८४)
पक्वबिल्वप्रतीकाशौ कर्कशौ सङ्गमक्षमौ ।
गम्भीरनाभिसुभगे भज मां वरवर्णिनि ॥१३-२-३१ (८१२८५)
भीष्म उवाच।१३-२-३२क्ष् (६७४९)
सैवमुक्ता विरहिते पावकेन महात्मना ।
ईषदाकम्पहृदया व्रीडिता वाक्यमब्रवीत् ॥१३-२-३२ (८१२८६)
नलु नाम कुलीनानां कन्यकानां विशेषतः ।
माता पिता प्रभवतः प्रदाने बान्धवाश्च ये ॥१३-२-३३ (८१२८७)
पाणिग्रहणमन्त्रैश्च हुते चैव विभावसौ ।
सतां मध्ये निविष्टायाः कन्यायाः शरणं पतिः १३-२-३४ (८१२८८)
साऽहं नात्मवशा देव पितरं वरयस्व मे। १३-२-३५ (८१२८९)
अथ नातिचिराद्राजा कालाद्दुर्योधनस्तदा ।
यज्ञसम्भारनिपुणान्मन्त्रीनाहूय चोक्तवान् ।
यज्ञं यक्ष्येऽहमिति वै सम्भारान्सम्भ्रियन्तु मे ॥ १३-२-३६ (८१२९०)
ततः समाहिते तस्य यज्ञे ब्राह्मणसत्तमैः ।
विप्ररूपी हुतवहो नृपं कन्यामयाचत ॥१३-२-३७ (८१२९१)
न तु राजा प्रदानाय तस्मै भावमकल्पयत् ।
दरिद्रश्चासवर्णश्च ममायमिति पार्थिवः ।
इति तस्मै न वै कन्यां दित्सां चक्रे नराधिपः ॥ १३-२-३८ (८१२९२)
अथ दीक्षामुपेतस्य यज्ञे तस्य महात्मनः ।
आहितो हवनार्थाय वेद्यामग्निः प्रणश्यत ॥१३-२-३९ (८१२९३)
ततः स भीतो नृपतिर्भृशं प्रव्यथितेन्द्रियः ।
मन्त्रिणो ब्राह्मणांश्चैव पप्रच्छ किमिदं भवेत् ।
यज्ञे समिद्धो भगवान्नष्टो मे हव्यवाहनः ॥ १३-२-४० (८१२९४)
सम्मन्त्रकुशलैस्तैस्तैर्ब्राह्मणैर्वेदपारगैः ।

ऋत्विग्भिर्मन्त्रकुशलैर्यज्यतां वा हुताशनः ॥१३-२-४१ (८१२९५)
अथ ऋक्सामयजुषां ब्राह्मणैर्वेदपारगैः ।
वेदतत्वार्थकुशलैस्ततः सोमपुरस्कैरैः ॥१३-२-४२ (८१२९६)
गुह्यैश्च नामभिः सर्वैराहूतो हव्यवाहनः ।
स्वरूपं दीप्तिमत्कृत्वा शरदर्कसमद्युतिः ॥१३-२-४३ (८१२९७)
ततो महात्मा तानाह दहनो ब्राह्मणर्षभान् ।
वरयाम्यात्मनोऽर्थाय दुर्योधनसुतामिति ॥१३-२-४४ (८१२९८)
ततस्ते कल्यमुत्थाय तस्मै राज्ञे न्यवेदयन् ।
ब्राह्मणा विस्मिताः सर्वे यदुक्तं चित्रभानुना ॥१३-२-४५ (८१२९९)
ततः स राजा तच्छ्रुत्वा वचनं ब्रह्मवादिनाम् ।
अवाप्य परमं हर्षं तथेति प्राह बुद्धिमान् ॥१३-२-४६ (८१३००)
अयाचत च तं शुल्कं भगवन्तं विभावसुम् ।
नित्यं सान्निध्यमिह ते चित्रभानो भवेदिति ॥१३-२-४७ (८१३०१)
तमाह भगवानग्निरेवमस्त्विति पार्थिवम् ।
ततः सान्निध्यमद्यापि माहिष्मत्यां विभावसोः ॥
दृष्टं हि सहदेवेन दिशं विजयता च तत्। १३-२-४८ (८१३०२)
ततस्तां समलङ्कृत्य कन्यामहतवाससम् ।
ददौ दुर्योधनो राजा पावकाय महात्मने ॥१३-२-४९ (८१३०३)
प्रतिजग्राह चाग्निस्तु राजकन्यां सुदर्शनाम् ।
विधिना वेददृष्टेन वसोर्धारामिवाध्वरे ॥१३-२-५० (८१३०४)
तस्या रूपेण शीलेन कुलेन वपुषा श्रिया ।
अभवत्प्रीतिमानग्निर्गर्भं चास्यां समादधे ॥१३-२-५१ (८१३०५)
तस्याः समभवत्पुत्रो नाम्नाऽग्नेयः सुदर्शनः ॥ १३-२-५२ (८१३०६)
सुदर्शनस्तु रूपेण पूर्णेन्दुसदृशोपमः ।
शिशुरेवाध्यगात्सर्वं परं ब्रह्म सनातनम् ॥१३-२-५३ (८१३०७)
अथौघवान्नाम नृपो नृगस्यासीत्पितामहः ।
तस्याप्योघवती कन्या पुत्रश्चौघरथोऽभवत् ॥१३-२-५४ (८१३०८)
तामोघवान्ददौ तस्मै स्वयमोघवतीं सुताम् ।
सुदर्शनाय विदुषे भार्यार्थे देवरूपिणीम् ॥१३-२-५५ (८१३०९)
स गृहस्थाश्रमरतस्तया सह सुदर्शनः ।
कुरुक्षेत्रेऽवसद्राजन्नोघवत्या समन्वितः ॥१३-२-५६ (८१३१०)
गृहस्थश्चावजेष्यामि मृत्युमित्येव स प्रभो ।
प्रतिज्ञामकरोद्धीमान्दीप्ततेजा विशाम्पते ॥१३-२-५७ (८१३११)
तामेवौघवतीं राजन्स पावकसुतोऽब्रवीत् ।
अतिथेः प्रतिकूलं ते न कर्तव्यं कथञ्चन ॥१३-२-५८ (८१३१२)
येनयेन च तुष्येत नित्यमेव त्वयाऽतिथिः ।

अप्यात्मनः प्रदानेन न ते कार्या विचारणा ॥ १३-२-५९ (८१३१३)
एतद्व्रतं मम सदा हृदि सम्परिवर्तते ।
गृहस्थानां च सुश्रोणि नातिथेर्विद्यते परम् ॥ १३-२-६० (८१३१४)
प्रमाणं यदि वामोरु वचस्ते मम शोभने ।
इदं वचनमव्यग्रा हृदि त्वं धारयेः सदा ॥ १३-२-६१ (८१३१५)
निष्क्रान्ते मयि कल्याणि तथा सन्निहितेऽनघे ।
नातिथिस्तेऽवमन्तव्यः प्रमाणं यद्यहं तव ॥ १३-२-६२ (८१३१६)
तमब्रवीदोघवती तथा मूर्ध्नि कृताञ्जलिः ।
न मे त्वद्वचनात्किञ्चिन्न कर्तव्यं कथञ्चन ॥ १३-२-६३ (८१३१७)
जिगीषमाणस्तु गृहे तदा मृत्युः सुदर्शनम् ।
पृष्ठतोऽन्वगमद्राजन्रन्ध्रान्वेषी तदा सदा ॥ १३-२-६४ (८१३१८)
इध्मार्थं तु गते तस्मिन्नग्निपुत्रे सुदर्शने ।
अतिथिर्ब्राह्मणः श्रीमांस्तामाहौघवतीं तदा ॥ १३-२-६५ (८१३१९)
आतिथ्यं कृतमिच्छामि त्वयाऽद्य वरवर्णिनि ।
प्रमाणं यदि धर्मस्ते गृहस्थाश्रमसम्मतः ॥ १३-२-६६ (८१३२०)
इत्युक्ता तेन विप्रेणि राजपुत्री यशस्विनी ।
विधिना प्रतिजग्राह वेदोक्तेन विशांपते ॥ १३-२-६७ (८१३२१)
आसनं चैव पाद्यं च तस्मै दत्त्वा द्विजातये ।
प्रोवाचौघवती विप्रं केनार्थः किं ददामि ते ॥ १३-२-६८ (८१३२२)
तामब्रवीत्ततो विप्रो राजपुत्रीं सुदर्शनाम् ।
त्वया ममार्थः कल्याणि निर्विशङ्कैतदाचर ॥ १३-२-६९ (८१३२३)
यदि प्रमाणं धर्मस्ते गृहस्थाश्रमसम्मतः ।
प्रदानेनात्मनो राज्ञि कर्तुमर्हसि मे प्रियम् ॥ १३-२-७० (८१३२४)
स तया छन्द्यमानोऽन्यैरीप्सितैर्नृपकन्यया ।
नान्यमात्मप्रदानात्स तस्या वव्रे परं द्विजः ॥ १३-२-७१ (८१३२५)
सा तु राजसुता स्मृत्वा भर्तुर्वचनमादितः ।
तथेति लज्जमाना सा तमुवाच द्विजर्षभम् ॥ १३-२-७२ (८१३२६)
ततो विहस्य विप्रर्षिः सा चैवोपविवेश ह ।
संस्मृत्य भर्तुर्वचनं गृहस्थाश्रमकाङ्क्षिणः ॥ १३-२-७३ (८१३२७)
अथेध्मान्समुपादाय स पावकिरुपागमत् ।
मृत्युना रौद्रभावेन नित्यं बन्धुरिवान्वितः ॥ १३-२-७४ (८१३२८)
ततस्त्वाश्रममागम्य स पावकसुतस्तदा ।
तां व्याजहारौघवतीं क्वासि यातेति चासकृत् ॥ १३-२-७५ (८१३२९)
तस्मै प्रतिवचः सा तु भर्त्रे न प्रददौ तदा ।
कराभ्यां तेन विप्रेण स्पृष्टा भर्तृव्रता सती ॥ १३-२-७६ (८१३३०)
उच्छिष्टाऽस्मीति मन्वाना लज्जिता भर्तुरेव च ।

तूष्णींभूताऽभवत्साध्वी विप्रकोपाच्च शङ्किता ॥१३-२-७७ (८१३३१)
अथ तां किन्विति पुनः प्रोवाच स सुदर्शनः ।
क्व सा साध्वी क्व सायाता गरीय किमतो मम ॥१३-२-७८ (८१३३२)
पतिव्रता सत्यशीला नित्यं चैवार्जवे रता ।
कथं न प्रत्युदेत्यद्य स्मयमाना यथापुरम् ॥१३-२-७९ (८१३३३)
उटजस्थस्तु तं विप्रः प्रत्युवाच सुदर्शनम् ।
अतिथिं विद्धि सम्प्राप्तं ब्राह्मणं पावके च माम् ॥१३-२-८० (८१३३४)
अनया छन्द्यमानोऽहं भार्यया तव सत्तम ।
तैस्तैरतिथिसत्कारैर्ब्रह्मन्नेषा वृता मया ॥१३-२-८१ (८१३३५)
आत्मप्रदानविधिना मामर्चति शुभानना ।
अनूरूपं यदत्रान्यत्तद्भवान्कर्तुमर्हति ॥१३-२-८२ (८१३३६)
कूटमुद्गरहस्तस्तु मृत्युस्तं वै समन्वगात् ।
हीनप्रतिज्ञमत्रैवं वधिष्यामीति चिन्तयन् ॥१३-२-८३ (८१३३७)
सुदर्शनस्तु मनसा कर्मणा चक्षुषा गिरा ।
त्यक्तेर्ष्यस्त्यक्तमन्युश्च स्मयमानोऽब्रवीदिदम् ॥१३-२-८४ (८१३३८)
सुरतं तेऽस्तु विप्राग्र्य प्रीतिर्हि परमा मम ।
गृहस्थस्य हि धर्मोऽग्र्यः सम्प्राप्तातिथिपूजनम् ॥१३-२-८५ (८१३३९)
अतिथिः पूजितो यस्य गृहस्थस्य तु गच्छति ।
नान्यस्तस्मात्परो धर्म इति प्राहुर्मनीषिणः ॥१३-२-८६ (८१३४०)
प्राणाश्च मम दाराश्च यच्चान्यद्विद्यते वसु ।
अतिथिभ्यो मया देयमिति मे व्रतमाहितम् ॥१३-२-८७ (८१३४१)
निःसन्दिग्धं यथा वाक्यमेतन्मे समुदाहृतम् ।
तेनाहं विप्र सत्येन स्वयमात्मानमालभे ॥१३-२-८८ (८१३४२)
पृथिवी वायुराकाशमापो ज्योतिश्च पञ्चमम् ।
बुद्धिरात्मा मनः कालो दिशश्चैव गुणा दश ॥१३-२-८९ (८१३४३)
नित्यमेव हि पश्यन्ति देहिनां देहसंश्रिताः ।
सुकृतं दुष्कृतं चापि कर्म कर्मवतांवर ॥१३-२-९० (८१३४४)
यथैषा नानृता वाणी मयाऽद्य समुदीरिता ।
तेन सत्येन मां देवाः पालयन्तु दहन्तु वा ॥१३-२-९१ (८१३४५)
ततो नादः समभवद्दिक्षु सर्वासु भारत ।
असकृत्सत्यमित्येवं नैतन्मिथ्येति सर्वतः ॥१३-२-९२ (८१३४६)
उटजात्तु ततस्तस्मान्निश्चक्राम स वै द्विजः ।
वपुषा द्यां च भूमिं च व्याप्य वायुरिवोद्यतः ॥१३-२-९३ (८१३४७)
स्वरेण विप्रः शैक्षेण त्रींल्लोकाननुनादयन् ।
उवाच चैनं धर्मज्ञं पूर्वमामन्त्र्य नामतः ॥१३-२-९४ (८१३४८)
धर्मोऽहमस्मि भद्रं ते जिज्ञासार्थं तवानघ ।

प्राप्तः सत्यं च ते ज्ञात्वा प्रीतिर्मे परमा त्वयि ॥ १३-२-९५ (८१३४९)
विजितश्च त्वया मृत्युर्योऽयं त्वामनुगच्छति ।
रन्ध्रान्वेषी तव सदा त्वया धृत्या वशीकृतः ॥ १३-२-९६ (८१३५०)
न चास्ति शक्तिस्त्रैलोक्ये कस्य चित्पुरुषोत्तम ।
पतिव्रतामिमां साध्वीं तवोद्वीक्षितुमप्युत ॥ १३-२-९७ (८१३५१)
रक्षिता त्वद्गुणैरेषा पातिव्रत्यगुणैस्तथा ।
अधृष्या यदियं ब्रूयात्तथा तन्नान्यथा भवेत् ॥ १३-२-९८ (८१३५२)
एषा हि तपसा स्वेन संयुक्ता ब्रह्मवादिनी ।
पावनार्थं च लोकस्य सरिच्छ्रेष्ठा भविष्यति ॥ १३-२-९९ (८१३५३)
अर्धेनौघवती नाम त्वामर्धेनानुयास्यति ।
शरीरेण महाभागा योगो ह्यस्या वशे स्थितः ।
अनया सह लोकांश्च गन्ताऽसि तपसार्जितान् ॥ १३-२-१०० (८१३५४)
यत्र नावृत्तिमभ्येति शाश्वतांस्तानननुत्तमान् ।
अनेन चैव देहेन लोकांस्त्वमभिपत्स्यसे ॥ १३-२-१०१ (८१३५५)
निर्जितश्च त्वया मृत्युरैश्वर्यं च तवोत्तमम् ।
पञ्चभूतान्यतिक्रान्तः स्ववीर्याच्च मनोजवः। १३-२-१०२ (८१३५६)
गृहस्थधर्मेणानेन कामक्रोधौ च ते जितौ ॥
स्नेहो रागश्च तन्द्री च मोहो द्रोहश्च केवलः ।
तव शुश्रूषया राजन्राजपुत्र्या च निर्जिताः ॥ १३-२-१०३ (८१३५७)
भीष्म उवाच। १३-२-१०४क्ष् (६७५०)
शुक्लानां तु सहस्रेण वाजिनां रथमुत्तमम् ।
युक्तं प्रगृह्य भगवान्वासवोप्याजगाम तम् ॥ १३-२-१०४ (८१३५८)
मृत्युरात्मा च लोकाश्च जिता भूतानि पञ्च च ।
बुद्धिः कालो मदो मोहः कामक्रोधौ तथैव च १३-२-१०५ (८१३५९)
तस्माद्गृहाश्रमस्थस्य नान्यद्दैवतमस्ति वै ।
ऋतेऽतिथिं नरव्याघ्र मनसैतद्विचारय ॥ १३-२-१०६ (८१३६०)
अतिथिः पूजितो यद्धि ध्यायते मनसा शुभम् ।
न तत्क्रतुशतेनापि तुल्यमाहुर्मनीपिण ॥ १३-२-१०७ (८१३६१)
सुदत्तं सुकृतं वाऽपि कम्पयेदप्यनर्चितः ॥ १३-२-१०८ (८१३६२)
पात्रं त्वतिथिमासाद्य शीलाढ्यं यो न पूजयेत् ।
स दत्त्वा तुष्कृतं तस्मै पुण्यमादाय गच्छति ॥ १३-२-१०९ (८१३६३)
एतत्ते कथितं पुत्र मयाऽऽख्यानमनुत्तमम् ।
यथा हि विजितो मृत्युर्गृहस्थेन पुराऽभवत् ॥ १३-२-११० (८१३६४)
धन्यं यशस्यमायुष्यमिदमाख्यानमुत्तमम् ।
बुभूषताऽभिमन्तव्यं सर्वदुश्चरितापहम् ॥ १३-२-१११ (८१३६५)
इदं यः कथयेद्विद्वानहन्यहनि भारत ।

सुदर्शनस्य चरितं पुण्यAँल्लोकानवाप्नुयात् ॥ ॥१३-२-११२ (८१३६६)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
द्वितीयोऽध्यायः ॥ २ ॥

Mahabharata - Anushaasana Parva - Chapter Footnotes

७-२-१५ दुर्गतो दरिद्रः ॥
७-२-२१ चकमे कामयामास ॥
७-२-३८ असवर्णः अक्षत्रियः । दित्सां दातुमिच्छाम् ॥
७-२-३९ प्रणश्यत नादृश्यत ॥
७-२-४३ दर्शयामासेति शेषः। ७-२-४५ कल्यं प्रातः। ।
७-२-४९ अहतं नवं वासो यस्यास्ताम् ॥
७-२-५० वसोर्धारां सन्ततां घृतधाराम् ॥
७-२-५३ दृशाभ्यां दृग्भ्यां सहितं सदृशं वक्रं तस्मिन्
पूर्णेन्दोरुपमा सादृश्यं यस्य पूर्णेन्दुसदृशोपमः ॥
७-२-५७ गृहस्थश्च गृहस्थ एव ॥
७-२-५९ आत्मनः शरीरस्य ॥
७-२-६२ प्रमाणं हितज्ञापकम् ॥
७-२-६३ किञ्चिन्न कर्तव्यमिति न अपितु कर्तव्यमेव ॥
७-२-६४ पृष्ठतस्तस्याप्रत्यक्षं गृहेऽन्वगमत् ॥
७-२-६५ ब्राह्मणस्तद्रूपी मृत्युः ॥
७-२-६९ एतद्व्रतप्रदानम् ॥
७-२-७० राज्ञि राजकन्ये ॥
७-२-७१ छन्द्यमानः प्रलोभ्यमानः ॥
७-२-७७ विप्रकाराच्च शङ्कितेति थ । पाठ ॥
७-२-८२ अनुरूपं स्त्रीदूषणानुगुणं दण्डम् ॥
७-२-८३ कूटमुद्गरो लोहदण्डः । हीनप्रतिज्ञं त्यक्तातिथिव्रतम् ॥
७-२-८९ गुणाः इन्द्रियाणि तदभिमानिन्यो देवता इत्यर्थः ॥
७-२-९४ शैक्षेण उदात्तादिधर्मवता ॥
७-२-१०० अर्धेन ओघवती नाम नदी भविष्यतीति शेषः । योगो हीति
योगसिद्धेयमतः शरीरद्वयं करिष्यतीत्यर्थः ॥
७-२-१०३ राजन्निति ऋषिराजत्वात् राजजामातृत्वाद्वा संबोधनम् ॥
७-२-१०५ बुद्धिरित्यादावपि जितेत्याद्यनुषङ्गः ॥
७-२-१११ बुभूषता मिच्छता ॥

---

अनुससनपर्व-अध्यय००३

॥ श्रीः ॥
१३.३. अध्यायः ३

अथ दानधर्मपर्व ॥ १ ॥
Mahabharata - Anushaasana Parva - Chapter Topics
भीष्मेण युधिष्ठिरंप्रति ब्राह्मण्यस्य क्षत्रियादिदौर्लभ्ये
दृष्टान्ततया मतङ्गोपाख्यानकथनारम्भः ॥ १ ॥
तत्रेन्द्रमतङ्गसंवादानुवादारम्भः ॥ २ ॥

Mahabharata - Anushaasana Parva - Chapter Text

युधिष्ठिर उवाच ।
प्रज्ञाश्रुताभ्यां वृत्तेन शीलेन च यथा भवान् ।
गुणैश्च विविधैः सर्वैर्वयसा च समन्वितः ॥ १३-३-१ (८१३६७)
भवान्विशिष्टो बुद्ध्या च प्रज्ञया तपसा तथा ।
ग्सर्वेषामेव जातानां सतामेतन्न संशयः ॥' १३-३-२ (८१३६८)
तस्माद्भवन्तं पृच्छामि धर्मं धर्मभृतांवर ।
नान्यस्त्वदन्यो लोकेषु प्रष्टव्योस्ति नराधिप ॥ १३-३-३ (८१३६९)
क्षत्रियो यदि वा वैश्यः शूद्रो वा राजसत्तम ।
ब्राह्मण्यं प्राप्नुयाद्येन तन्मे व्याख्यातुमर्हसि ॥ १३-३-४ (८१३७०)
ग्ब्राह्मण्यं यदि दुष्प्रापं त्रिभिर्वर्णैर्नराधिप।'
तपसा वा सुमहता कर्मणा वा श्रुतेन वा ।
ब्राह्मण्यमथ चेदिच्छेत्कथं शक्यं पितामह ॥ १३-३-५ (८१३७१)
भीष्म उवाच। १३-३-६क्ष् (६७५१)
ब्राह्मण्यमतिदुष्प्राप्यं वर्णैः क्षत्रादिभिस्त्रिभिः ।
परं हि सर्वभूतानां स्थानमेतद्युधिष्ठिर ॥ १३-३-६ (८१३७२)
बह्वीस्तु संसरन्योनीर्जायमानः पुनःपनः ।
पर्याये तात कस्मिंश्चिद्ब्राह्मणो नाम जायते ॥ १३-३-७ (८१३७३)
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
मतङ्गस्य च संवादं गर्दभ्याश्च युधिष्ठिर ॥ १३-३-८ (८१३७४)
द्विजातेः कस्यचित्तात तुल्यवर्णः सुतस्त्वभूत् ।
मतङ्गो नाम नाम्नाऽऽसीत्सर्वैः समुदितो गुणैः ॥ १३-३-९ (८१३७५)
स यज्ञकारः कौन्तेय पित्रोत्सृष्टः परंतप ।
प्रायाद्गर्दभयुक्तेन रथेनाप्याशुगामिना ॥ १३-३-१० (८१३७६)
स बालं गर्दभं राजन्वहन्तं मातुरन्तिके ।
निरविध्यत्प्रतोदेन नासिकायां पुनःपुनः ॥ १३-३-११ (८१३७७)

तं दृश्य नसि निर्भिन्नं गर्दभी पुत्रगृद्धिनी ।
उवाच मा शुचः पुत्र चण्डालस्त्वाभिविध्यति ॥ १३-३-१२ (८१३७८)
ब्राह्मणो दारुणो नास्ति मैत्रो ब्राह्मण उच्यते ।
आचार्यः सर्वभूतानां शास्ता किं प्रहरिष्यति ॥ १३-३-१३ (८१३७९)
अयं तु पापप्रकृतिर्बाले न कुरुते दयाम् ।
स्वयोनिं मानयत्येष भावो भावं नियच्छति ॥ १३-३-१४ (८१३८०)
एतच्छ्रुत्वा मतङ्गस्तु दारुणं रासभीवचः ।
अवतीर्य रथात्तूर्णं रासभीं प्रत्यभाषत ॥ १३-३-१५ (८१३८१)
ब्रूहि रासभि कल्याणि माता मे येन दूषिता ।
केन मां वेत्सि चण्डालं ब्राह्मण्यं केन मेऽनशत् ।
तत्त्वेनैतन्महाप्राज्ञे ब्रूहि सर्वमशेषतः ॥ १३-३-१६ (८१३८२)
गर्दभ्युवाच। १३-३-१७क्ष् (६७५२)
ब्राह्मण्यां वृषलेन त्वं मत्तायां नापितेन ह ।
जातस्त्वमसि चण्डालो ब्राह्मण्यं तेन तेऽनशत् ॥ १३-३-१७ (८१३८३)
एवमुक्तो मतङ्गस्तु प्रतिप्रायाद्गृहं पुनः ।
तमागतमभिप्रेक्ष्य पिता वाक्यमथाब्रवीत् ॥ १३-३-१८ (८१३८४)
यस्त्वं यज्ञार्थसंसिद्धौ नियुक्तो गुरुकर्मणि ।
कस्मात्प्रतिनिवृत्तोसि कच्चिन्न कुशलं तव ॥ १३-३-१९ (८१३८५)
मतङ्ग उवाच। १३-३-२०क्ष् (६७५३)
अन्त्ययोनिरयोनिर्वा कथं स कुशली भवेत् ।
कुशलं तु कुतस्तस्य यस्येयं जननी पितः ॥ १३-३-२० (८१३८६)
ब्राह्मण्यां वृषलाञ्जातं पितर्वेदयते हि माम् ।
अमानुषी गर्दभीयं तस्मात्तप्स्ये तपो महत् ॥ १३-३-२१ (८१३८७)
एवमुक्त्वा स पितरं प्रतस्थे कृतनिश्चयः ।
ततो गत्वा महारण्यमतपत्सुमहत्तपः ॥ १३-३-२२ (८१३८८)
ततः स तापयामास विबुधांस्तपसाऽन्वितः ।
मतङ्गः सुसुखं प्रेप्सुः स्थानं सुचरितादपि ॥ १३-३-२३ (८१३८९)
तं तथा तपसा युक्तमुवाच हरिवाहनः ।
मतङ्ग तप्स्यसे किं त्वं भोगानुत्सृज्य मानुषान् ॥ १३-३-२४ (८१३९०)
वरं ददामि ते हन्त वृणीष्व त्वं यदिच्छसि ।
यच्चाप्यवाप्यं हृदि ते सर्वं तद्ब्रूहि मा चिरम् ॥ १३-३-२५ (८१३९१)
मतङ्ग उवाच। १३-३-२६क्ष् (६७५४)
ब्राह्मण्यं कामयानोऽहमिदमारब्धवांस्तपः ।
गच्छेयं तदवाप्येह वर एष वृतो मया ॥ १३-३-२६ (८१३९२)
भीष्म उवाच। १३-३-२७क्ष् (६७५५)
एतच्छ्रुत्वा तु वचनं तमुवाच पुरदरः ।

मतङ्ग दुर्लभमिदं विप्रत्वं प्रार्थ्यते त्वया ॥ १३-३-२७ (८१३९३)
ब्राह्मण्यं प्रार्थयानस्त्वमप्राप्यमकृतात्मभिः ।
विनशिष्यसि दुर्बुद्धे तदुपारम मा चिरम् ॥ १३-३-२८ (८१३९४)
श्रेष्ठं यत्सर्वभूतेषु तपो यदतिवर्तते ।
तदग्र्यं प्रार्थयानस्त्वमचिराद्विनशिष्यसि ॥ १३-३-२९ (८१३९५)
देवतासुरमर्त्येषु यत्पवित्रं परं स्मृतम् ।
चण्डालयोनौ जातेन न तत्प्राप्यं कथञ्चन ॥ ॥ १३-३-३० (८१३९६)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
तृतीयोऽध्यायः ॥ ३ ॥
Mahabharata - Anushaasana Parva - Chapter Footnotes

७-३-१ वृत्तमाचारः । शीलं विनयः ॥
७-३-४ ब्राह्मण्यं चेदिच्छेत्तर्हि केन प्राप्तुयात्तदिति अनुषज्य व्याख्येयम् ॥
७-३-७ पर्याये आवृत्तौ जन्मनाम् ॥
७-३-९ तुल्यवर्णः अन्यवर्णजोऽपि जातकर्मादिसंस्कारयोगात्तुल्यवर्णत्वं
गतः । नाम प्रसिद्धम् ॥
७-३-१० यज्ञकारः यज्ञं कारयन् आर्त्विज्यं कुर्वन्नित्यर्थः । प्रायात्
अग्निचयनार्थमिष्टका आनेतुमित्यर्थाद्गम्यते ॥
७-३-११ बालं अशिक्षितम् ॥
७-३-१४ बाले त्वयि । भावः जातिस्वभावः । भावं वुद्धिं नियच्छति
मार्गान्तरादपकर्षति । भावं भावोऽधिगच्छतीति थ ।ध ।पाठः ॥
७-३-१५ करुणं रासभीवच इति ध ।पाठः ॥
७-३-१९ संसिद्धौ संसिद्ध्यर्थम् ॥
७-३-२० अन्त्ययोनिश्चण्डालजातिः । अयोनिस्तदन्यः
कुत्सितयोनिः । तयोर्हीनकर्मतया कुशलित्वं नास्तीत्यर्थः ॥
७-३-२३ सुचरितात्तपसश्च हेतोः स्थानं ब्राह्मण्यं सुखेन
प्रेप्सुर्विबुधांस्तापयामासेति सम्बन्धः ॥
७-३-२४ हरिवाहन इन्द्रः ॥

---

अनुससनपर्व-अध्यय००४
॥ श्रीः ॥
१३.४. अध्यायः ४

अथ दानधर्मपर्व ॥ १ ॥
Mahabharata - Anushaasana Parva - Chapter Topics

मतङ्गेन ब्राह्मण्यप्राप्तये वर्षशतं तपश्चरणम् ॥ १ ॥
तम्प्रतीन्द्रेण प्राणिनां कथंचिन्मानुषत्वलाभेपि नानानीचयोनिषु परिभ्रमणपूर्वकं क्रमेण त्रैवर्णिकत्वमात्रप्राप्तिकथनेन ब्राह्मण्यस्य दुर्लभत्वोक्तिः ॥ २ ॥

Mahabharata - Anushaasana Parva - Chapter Text

भीष्म उवाच ।
एवमुक्तो मतङ्गस्तु संशितात्मा यतव्रतः ।
अतिष्ठदेकपादेन वर्षाणां शतमच्युतः ॥ १३-४-१ (८१३९७)
तमुवाच ततः शक्रः पुनरेव महायशाः ।
ब्राह्मण्यं दुर्लभं तात प्रार्थयानो न लप्स्यसे ॥ १३-४-२ (८१३९८)
मतङ्ग परमं स्थानं प्रार्थयन्विनशिष्यसि ।
मा कृथाः साहसं पुत्र नैष धर्मपथस्तव ॥ १३-४-३ (८१३९९)
गविमार्गतो मार्गमाणः सर्वथा नभविष्यसि'।
न हि शक्यं त्वया प्राप्तुं ब्राह्मण्यमिह दुर्मते ।
अप्राप्यं प्रार्थयानो हि नचिराद्विनशिष्यसि ॥ १३-४-४ (८१४००)
मतङ्ग परमं स्थानं वार्यमाणोऽसकृन्मया ।
चिकीर्षस्येव तपसा सर्वथा नभविष्यसि ॥ १३-४-५ (८१४०१)
तिर्यग्योनिगतः सर्वो मानुष्यं यदि गच्छति ।
स जायते पुल्कसो वा चण्डालो वाऽप्यसंशयः ॥ १३-४-६ (८१४०२)
पुल्कसः पापयोनिर्वा यः कश्चिदिह लक्ष्यते ।
स तस्यामेव सुचिरं मतङ्ग परिवर्तते ॥ १३-४-७ (८१४०३)
ततो दशशते काले लभते शूद्रतामपि ।
शूद्रयोनावपि ततो बहुशः परिवर्तते ॥ १३-४-८ (८१४०४)
ततस्त्रिंशद्गुणे काले लभते वैश्यतामपि ।
वैश्यतायां चिरं कालं तत्रैव परिवर्तते ।
ततः षष्टिगुणे काले राजन्यो नाम जायते ॥ १३-४-९ (८१४०५)
ततः षष्टिगुणे काले लभते ब्रह्मबन्धुताम् ।
ब्रह्मबन्धुश्चिरं कालं ततस्तु परिवर्तते ॥ १३-४-१० (८१४०६)
ततस्तु द्विशते काले लभते काण्डपृष्ठताम् ।
काण्डपृष्ठश्चिरं कालं तत्रैव परिवर्तते ॥ १३-४-११ (८१४०७)
ततस्तु त्रिशते काले लभते जपतामपि ।
तं च प्राप्य चिरं कालं तत्रैव परिवर्तते ॥ १३-४-१२ (८१४०८)
ततश्चतुःशते काले श्रोत्रियो नाम जायते ।
श्रोत्रियत्वे चिरं कालं तत्रैव परिवर्तते ॥ १३-४-१३ (८१४०९)

तदेवं शोकहर्षौ तु कामद्वेषौ च पुत्रक ।
अतिमानातिवादौ च प्रविशेते द्विजाधमम् ॥ १३-४-१४ (८१४१०)
तांश्चेज्जयति शत्रून्स तदा प्राप्नोति सद्गतिम् ।
अथ ते वै जयन्त्येनं तालं पक्वमिवापतेत् ॥ १३-४-१५ (८१४११)
मतङ्ग सम्प्रधार्यैवं यदहं त्वामचूचुदम् ।
वृणीष्व काममन्यं त्वं ब्राह्मण्यं हि सुदुर्लभम् ॥ ॥ १३-४-१६ (८१४१२)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
चतुर्थोऽध्यायः ॥ ४ ॥।
Mahabharata - Anushaasana Parva - Chapter Footnotes

७-४-११ काण्डपृष्ठतां शस्त्रजीवित्वम् ॥
७-४-१२ जपतां गायत्रीमात्रसेविनां कुले जन्मेति शेषः ॥
७-४-१३ श्रोत्रियः अधीतवेदः ॥
७-४-१४ तत् तदा श्रोत्रियत्वलाभेऽपि ॥
७-४-१५ ते शोकादयः । एनं श्रोत्रियम् ॥

---

अनुससनपर्व-अध्यय००५
॥ श्रीः ॥
१३.५. अध्यायः ५

अथ दानधर्मपर्व ॥ १ ॥
Mahabharata - Anushaasana Parva - Chapter Topics
इन्द्रेण पुनर्ब्राह्मण्यप्राप्तये तपस्यते मतङ्गाय ब्राह्मण्यस्य
दुष्प्रापत्वकथनपूर्वकमितराभीष्टवरदानम् ॥ १ ॥

Mahabharata - Anushaasana Parva - Chapter Text

भीष्म उवाच ।
एवमुक्तो मतङ्गस्तु संशितात्मा यतव्रतः ।
सहस्रमेकपादेन ततो ध्याने व्यतिष्ठत ॥ १३-५-१ (८१४१३)
तं सहस्रावरे काले शक्रो द्रष्टुमुपागमत् ।
तदेव च पुनर्वाक्यमुवाच बलवृत्रहा ॥ १३-५-२ (८१४१४)
मतङ्ग उवाच । १३-५-३क्ष् (६७५६)
इदं वर्षसहस्रं वै ब्रह्मचारी समाहितः ।
अतिष्ठमेकपादेन ब्राह्मण्यं नाप्नुयां कथम् ॥ १३-५-३ (८१४१५)

शक्र उवाच। १३-५-४क्ष् (६७५७)
चण्डालयोनो जातेन नावाप्यं वै कथञ्चन ।
अन्यं कामं वृणीष्व त्वं मा वृथा तेऽस्त्वयं श्रमः ॥ १३-५-४ (८१४१६)
एवमुक्तो मतङ्गस्तु भृशं शोकपरायणः ।
अध्यतिष्ठद्गयां गत्वा सोऽङ्गुष्टेन शतं समाः ॥ १३-५-५ (८१४१७)
सुदुर्वहं वहन्योगं कृशो धमनिसन्ततः ।
त्वगस्थिभूतो धर्मात्मा स ततापेति नः श्रुतम् ॥ १३-५-६ (८१४१८)
तं तपन्तमभिद्रुत्य पाणिं जग्राह वासवः ।
वराणामीश्वरो दाता सर्वभूतहिते रतः ॥ १३-५-७ (८१४१९)
शक्र उवाच। १३-५-८क्ष् (६७५८)
मतङ्ग ब्राह्मणत्वं ते विरुद्धमिह दृश्यते ।
ब्राह्मण्यं दुर्लभतरं संवृतं परिपन्थिभिः ॥ १३-५-८ (८१४२०)
पूजयन्सुखमाप्नोति दुःखमाप्नोत्यपूजयन् ।
ब्राह्मणे सर्वभूतानां योगक्षेमः समाहितः ॥ १३-५-९ (८१४२१)
ब्राह्मणेभ्योऽनुतृप्यन्ते पितरो देवतास्तथा ।
ब्राह्मणः सर्वभूतानां मतङ्ग पर उच्यते ॥ १३-५-१० (८१४२२)
ब्राह्मणः कुरुते तद्धि यथा यद्यच्च वाञ्छति ॥ १३-५-११ (८१४२३)
बह्वीस्तु संसरन्योनीर्जायमानः पनुःपुनः ।
पर्याये तात कस्मिंश्चिद्ब्राह्मण्यमिह विन्दति ॥ १३-५-१२ (८१४२४)
तदुत्सृज्येह दुष्प्रापं ब्राह्मण्यमकृतात्मभिः ।
अन्यं वरं वृणीष्व त्वं दुर्लभोऽयं हि ते वरः ॥ १३-५-१३ (८१४२५)
किं मां तुदसि दुःखार्तं मृतं मारयसे च माम् ।
त्वां तु शोचामि यो लब्ध्वा ब्राह्मण्यं न बुभूषसे ॥ १३-५-१४ (८१४२६)
ब्राह्मण्यं यदि दुष्प्रापं त्रिभिर्वर्णैर्दुरासदम् ।
सुदुर्लभं सदावाप्य नानुतिष्ठन्ति मानवाः ॥ १३-५-१५ (८१४२७)
ये पापेभ्यः पापतमास्तेषामधम एव सः ।
ब्राह्मण्यं योऽवजानीते धनं लब्ध्वेव दुर्लभम् ॥ १३-५-१६ (८१४२८)
दुष्प्रापं खलु विप्रत्वं प्राप्तं दुरनुपालनम् ।
दुरवापमवाप्यैतन्नानुतिष्ठन्ति मानवाः ॥ १३-५-१७ (८१४२९)
एकारामो ह्यहं शक्र निर्न्द्वंद्वो निष्परिग्रहः ।
अहिंसादममास्थाय कथं नार्हामि विप्रताम् ॥ १३-५-१८ (८१४३०)
दैवं तु कथमेतद्वै यदहं मातृदोषतः ।
एतामवस्थां सम्प्राप्तो धर्मज्ञः सन्पुरन्दरं ॥ १३-५-१९ (८१४३१)
नूनं दैवं न शक्यं हि पौरुषेणातिवर्तितुम् ।
यदर्थं यत्नवानेव न लभे विप्रतां विभो ॥ १३-५-२० (८१४३२)
एवंगते तु धर्मज्ञ दातुमर्हसि मे वरम् ।

यदि तेऽहमनुग्राह्यः किचिद्वा सुकृतं मम ॥ १३-५-२१ (८१४३३)
वैशम्पायन उवाच। १३-५-२२क्ष् (६७५९)
वृणीष्वेति तदा प्राह ततस्तं बलवृत्रहा ।
चोदितस्तु महेन्द्रेण मतङ्गः प्राब्रवीदिदम् ॥ १३-५-२२ (८१४३४)
यथा कामविहारी स्यां कामरूपी विहङ्गमः ।
ब्रह्मक्षत्राविरोधेन पूजां च प्राप्नुयामहम् ॥ १३-५-२३ (८१४३५)
यथा ममाक्षया कीर्तिर्भवेच्चापि पुरन्दर ।
कर्तुमर्हसि तद्देव शिरसा त्वां प्रसादये ॥ १३-५-२४ (८१४३६)
शक्र उवाच। १३-५-२५क्ष् (६७६०)
मतङ्ग गम्यतां शीघ्रमेवमेतद्भविष्यति ।
स्त्रियः सर्वास्त्वया लोके यक्ष्यन्ते भूतिकर्मणि ॥ १३-५-२५ (८१४३७)
छन्दोदेव इति ख्यातः स्त्रीणां पूज्यो भविष्यसि ।
कीर्तिश्च तेऽतुला वत्स त्रिषु लोकेषु यास्यति ॥ १३-५-२६ (८१४३८)
एवं तस्मै वरं दत्त्वा वासवोऽन्तरधीयत ।
प्राणांस्त्यक्त्वा मतङ्गोपि प्राप तत्स्थानमुत्तमम् ॥ १३-५-२७ (८१४३९)
एवमेव परं स्थानं मर्त्यानां भरतर्षभ ।
ब्राह्मण्यं नाम दुष्प्रापमिन्द्रेणोक्तं महात्मना ॥ ॥ १३-५-२८ (८१४४०)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
पञ्चमोध्यायः ॥ ५ ॥

Mahabharata - Anushaasana Parva - Chapter Footnotes

७-५-१ सहस्रं वत्सराम् ॥
७-५-७ अभिद्रुत्य गत्वा ॥
७-५-८ परिपन्थिभिः कामाद्यैश्चोरैः संवृतमतो
दुःसंरक्ष्यमपीत्यर्थः ॥
७-५-९ अपूजयन् ब्राह्मण्यमिति शेषः ॥
७-५-१० ब्राह्मणेभ्यस्तद्द्वारा देवादयस्तृप्यन्तीत्यर्थः ॥
७-५-११ यद्यद्वाञ्छति तत्तत्कुरुते ॥
७-५-१५ नानुतिष्ठन्ति तदुचितान् शमदमादीन्न सेवन्तेऽतः प्राप्तमपि
दुःसंरक्ष्यमिति भावः ॥
७-५-१६ अवजानीते अवज्ञां करोति । न रक्षतीति यावत् ॥
७-५-१९ दैवं प्राक्कर्म । यत् यतः एतां अब्राह्मणत्वरूपाम् ॥

---

अनुससनपर्व-अध्यय००६
॥ श्रीः ॥

१३.६. अध्यायः ६

अथ दानधर्मपर्व ॥ १ ॥

Mahabharata - Anushaasana Parva - Chapter Topics

युधिष्ठिरेण भीष्मंप्रत सविस्तरं विश्वामित्रचरित्रानुवादपूर्वकं तस्य ब्राह्मण्यप्राप्तिहेतुप्रश्नः ॥ १ ॥

Mahabharata - Anushaasana Parva - Chapter Text

युधिष्ठिर उवाच ।
ब्राह्मण्यं यदि दुष्प्राप्यं त्रिभिर्वर्णैर्नराधिप ।
कथं प्राप्तं महाराज क्षत्रियेण महात्मना ॥ १३-६-१ (८१४४१)
विश्वामित्रेण धर्मात्मन्ब्राह्मणत्वं नरर्षभ ।
श्रोतुमिच्छामि तत्त्वेन तन्मे ब्रूहि पितामह ॥ १३-६-२ (८१४४२)
तेन ह्यमितवीर्येण वसिष्ठस्य महात्मनः ।
हतं पुत्रशतं सद्यस्तपसाऽपि पितामह ॥ १३-६-३ (८१४४३)
यातुधानाश्च बहवो राक्षसास्तिग्मतेजसः ।
मन्युनाऽऽविष्टदेहेन सृष्टाः कालान्तकोपमाः ॥ १३-६-४ (८१४४४)
महान्कुशिकवंशश्च ब्रह्मर्षिशतसंकुलः ।
स्थापितो नरलोकेऽस्मिन्विद्वद्ब्राह्मणसंकुलः ॥ १३-६-५ (८१४४५)
ऋतीकस्यात्मजश्चैव शुनःशेपो महातपाः ।
विमोक्षितो महासत्रात्पशुतामप्युपागतः ॥ १३-६-६ (८१४४६)
हरिश्चन्द्रक्रतौ देवांस्तोषयित्वाऽऽत्मतेजसा ।
पुत्रतामनुसंप्राप्तो विश्वामित्रस्य धीमतः ॥ १३-६-७ (८१४४७)
नाभिवादयते ज्येष्ठं देवरातं नराधिप ।
पुत्राः पञ्चशतं चापि शप्ताः श्वपचतां गताः ॥ १३-६-८ (८१४४८)
त्रिशङ्कुर्बन्धुभिर्मुक्त ऐक्ष्वाकः प्रीतिपूर्वकम् ।
अवाक्शिरादिवं नीतो दक्षिणामाश्रितोदिशम् ॥ १३-६-९ (८१४४९)
विश्वामित्रस्य भगिनी नदी देवर्षिसेविता ।
कौशिकीति कृता पुण्या ब्रह्मर्षिसुरसेविता ॥ १३-६-१० (८१४५०)
तपोविघ्नकरी चैव पञ्चचूडा सुसंमता ।
रम्भा नामाप्सराः शापाद्यस्य शैलत्वमागता ॥ १३-६-११ (८१४५१)
तथैवास्य भयाद्बद्ध्वा वसिष्ठः सलिले पुरा ।
आत्मानं मज्जयञ्श्रीमान्विपाशः पुनरुत्थितः ॥ १३-६-१२ (८१४५२)
तदाप्रभृति पुण्या हि विपाशाऽभून्महानदी ।
विख्याता कर्मणा तेन वसिष्ठस्य महात्मनः ॥ १३-६-१३ (८१४५३)

वश्यश्च भगवान्येन देवसेनाग्रगः प्रभुः ।
स्तुतः प्रीतमनाश्चासीच्छापाच्चैनममुञ्चत ॥ १३-६-१४ (८१४५४)
ध्रुवस्यौत्तानपादस्य ब्रह्मर्षीणां तथैव च ।
मध्ये ज्वलति यो नित्यमुदीचीमाश्रितो दिशम् ॥ १३-६-१५ (८१४५५)
तस्यैतानि च कर्माणि तथाऽन्यानि च कौरव ।
क्षत्रियस्येत्यतो जातमिदं कौहतूलं मम ॥ १३-६-१६ (८१४५६)
किमेतदिति तत्त्वेन प्रब्रूहि भरतर्षभ ।
देहान्तरमनासाद्य कथं स ब्राह्मणोऽभवत् ॥ १३-६-१७ (८१४५७)
एतत्तत्वेन मे तात सर्वमाख्यातुमर्हसि ।
मतङ्गस्य यथातत्त्वं तथैवैतद्वदस्व मे ॥ १३-६-१८ (८१४५८)
स्थाने मतङ्गो ब्राह्मण्यं नालभद्भरतर्षभ ।
चण्डालयोनौजातो हि कथं ब्राह्मण्यमाप्तवान् ॥ ॥ १३-६-१९ (८१४५९)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानदर्मपर्वणि
षष्ठोऽध्यायः ॥ ६ ॥

Mahabharata - Anushaasana Parva - Chapter Footnotes

७-६-१ शुनःशेषो देवांस्तोषयित्वा तैर्मोक्षितः सन्पुत्रतां
विश्वामित्रस्यानुसम्प्राप्त इत्युत्तरेण सम्बन्धः ॥
७-६-८ नाभिवादयते न नमस्कुर्वन्ति । अनुस्वारलोष आर्षः। देवरातं
देवैर्विश्वामित्राय दत्तं तेन च ज्येष्ठं कृतं सन्तम्। शप्ता
येनेति शेषः ॥
७-६-९ बन्धुभिर्मुक्तः । वसिष्ठशापेन चण्डालतां गतत्वात्। दिवं
येन नीतः ॥
७-६-११ पञ्च चूडाः वलयभेदा यस्याः सा ॥
७-६-१४ त्रिशङ्कुं याजयन्विश्वामित्रो वसिष्टपुत्रैः शप्तः
श्वपचस्य याजकस्त्वं श्वपचो भविष्यसीति । तं शापमृतं
कर्तुं विश्वामित्रः कस्यांचिदापदि श्वजाघनीं चौर्येणार्जयित्वा
पक्तुमारेभे। तामिन्द्रः श्येनरूपेण हृतवान्। तावतैवायं शापान्मुक्तो
ववर्ष चेन्द्र इति। देवसेनानामग्रगः श्रेष्ठ इन्द्रः ॥
७-६-१५ ज्वलति तारारूपेण ॥

---

अनुससनपर्व-अध्यय००७
॥ श्रीः ॥
१३.७. अध्यायः ७

अथ दानधर्मपर्व ॥ १ ॥

Mahabharata - Anushaasana Parva - Chapter Topics

भीष्मेण युधिष्ठिरंप्रति विश्वामित्रस्योत्पत्तिप्रकारकथनेनैव ब्राह्मण्यप्राप्तिप्रकारकधनम् ॥ १ ॥

Mahabharata - Anushaasana Parva - Chapter Text

भीष्म उवाच ।
श्रूयतां पार्थ तत्त्वेन विश्वामित्रो यथा पुरा ।
ब्राह्मणत्वं गतस्तात् ब्रह्मर्षित्वं तथैव च ॥ १३-७-१ (८१४६०)
भरतस्यान्ववाये वै मिथिलो नाम पार्थिवः ।
बभूव भरतश्रेष्ठ यज्वा धर्मभृतांवरः ॥ १३-७-२ (८१४६१)
तस्य पुत्रो महानासीञ्जह्नुर्नाम नरेश्वरः ।
दुहितृत्वमनुप्राप्ता गङ्गा यस्य महात्मनः ॥ १३-७-३ (८१४६२)
तस्यात्मजस्तुल्यगुणः सिन्धुद्वीपो महायशाः ।
सिन्धुद्वीपाच्च राजर्षिर्बलाकाश्वो महाबलः ॥ १३-७-४ (८१४६३)
वल्लभस्तस्य तनयः साक्षाद्धर्म इवापरः ।
कुशिकस्तस्य तनयः सहस्राक्षसमद्युतिः ॥ १३-७-५ (८१४६४)
कुशिकस्यात्मजः श्रीमान्गाधिर्नाम जनेश्वरः ।
अपुत्रः प्रसवेनार्थी वनवासमुपावसत् ॥ १३-७-६ (८१४६५)
कन्या जज्ञे सुतात्तस्य वने निवसतः सतः ।
नाम्ना सत्यवती नाम रूपेणाप्रतिमा भुवि ॥ १३-७-७ (८१४६६)
तां वव्रे भार्गवः श्रीमांश्च्यवनस्यात्मसम्भवः ।
ऋचीक इति विख्यातो विपुले तपसि स्थितः ॥ १३-७-८ (८१४६७)
स तां न प्रददौ तस्मै ऋचीकाय महात्मने ।
दरिद्र इति मत्वा वै गाधिः शत्रुनिबर्हणः ॥ १३-७-९ (८१४६८)
प्रत्याख्याय पुनर्यान्तमब्रवीद्राजसत्तप्रः ।
शुल्कं प्रदीयतां मह्यं ततो वत्स्यसि मे सुताम् ॥ १३-७-१० (८१४६९)
ऋचीक उवाच। १३-७-११क्ष् (६७६१)
किं प्रयच्छामि राजेन्द्र तुभ्यं शुल्कमहं नृप ।
दुहितुर्ब्रह्मसंसक्तो माऽभूत्तत्र विचारणा ॥ १३-७-११ (८१४७०)
गाधिरुवाच। १३-७-१२क्ष् (६७६२)
चन्द्ररश्मिप्रकाशानां हयानां वातरंहसाम् ।
एकतः श्यामकर्णानां सहस्रं दाह भार्गव ॥ १३-७-१२ (८१४७१)
भीष्म उवाच। १३-७-१३क्ष् (६७६३)
ततः स भृगुशार्दूलश्च्यवनस्यात्मजः प्रभुः ।

अब्रवीद्वरुणं देवमादित्यं पतिमम्भसाम् ॥ १३-७-१३ (८१४७२)
एकतः श्यामकर्णानां हयानां चन्द्रवर्चसाम् ।
सहस्रं वातवेगानां भिक्षे त्वां देवसत्तम ॥ १३-७-१४ (८१४७३)
तथेति वरुणो देव आदित्यो भृगुसत्तमम् ।
उवाच यत्र ते च्छन्दस्तत्रोत्थास्यन्ति वाजिनः ॥ १३-७-१५ (८१४७४)
ध्यातमात्रे ऋचीकेन हयानां चन्द्रवर्चसाम् ।
गङ्गाजलात्समुत्तस्थौ सहस्रं विपुलौजसाम् ॥ १३-७-१६ (८१४७५)
अदूरे कान्यकुब्जस्य गङ्गायास्तीरमुत्तमम् ।
अश्वतीर्थं तदद्यापि मानवाः परिचक्षते ॥ १३-७-१७ (८१४७६)
ततो वै गाधये तात सहस्रं वाजिनां शुभम् ।
ऋचीकः प्रददौ प्रीतः शुल्कार्थं तपतां वरः ॥ १३-७-१८ (८१४७७)
ततः स विस्मितो राजा गाधिः शापभयेन च ।
ददौ तां समलङ्कृत्य कन्यां भृगुसुताय वै ॥ १३-७-१९ (८१४७८)
जग्राह विधिवत्पाणिं तस्या ब्रह्मर्षिसत्तमः ।
सा च तं पतिमासाद्य परं हर्षमवाप ह ॥ १३-७-२० (८१४७९)
स तुतोष च ब्रह्मर्षिस्तस्या वृत्तेन भारत ।
छन्दयामास चैवैनां वरेण वरवर्णिनीम् ॥ १३-७-२१ (८१४८०)
मात्रे तत्सर्वमाचख्यौ सा कन्या राजसत्तम ।
अथतामब्रवीन्माता सुतां किञ्चिदवाङ्मुखीम् ॥ १३-७-२२ (८१४८१)
ममापि पुत्रि भर्ता ते प्रसादं कर्तुमर्हति ।
अपत्यस्य प्रदानेन समर्थश्च महातपाः ॥ १३-७-२३ (८१४८२)
ततः सा त्वरितं गत्वा तत्सर्वं प्रत्यवेदयत् ।
मातुश्चिकीर्षितं राजनृचीकस्तामथाब्रवीत् ॥ १३-७-२४ (८१४८३)
गुणवन्तं च पुत्रं वै त्वं च साऽथ जनिष्यथ ।
जनन्यास्तव कल्याणि मा भूद्वै प्रणयोऽन्यथा ॥ १३-७-२५ (८१४८४)
तव चैव गुणश्लाघी पुत्र उत्पत्स्यते महान् ।
अस्मद्वंशकरः श्रीमांस्तव भ्राता च वंशकृत् ॥ १३-७-२६ (८१४८५)
ऋतुस्नाता च साऽश्वत्थं त्वं च वृक्षमुदुम्बरम् ।
परिष्वजेतं कल्याणि तत इष्टमवाप्स्यथः ॥ १३-७-२७ (८१४८६)
चरुद्वयमिदं चैव मन्त्रपूतं शुचिस्मिते ।
त्वं च सा चोपभुञ्जीतं ततः पुत्राववाप्स्यथः ॥ १३-७-२८ (८१४८७)
ततः सत्यवती हृष्टा मातरं प्रत्यभाषत ।
यदृचीकेन कथितं तच्चाचख्यौ चरुद्वयम् ॥ १३-७-२९ (८१४८८)
तामुवाच ततो माता सुतां सत्यवतीं तदा ।
पुत्रि पूर्वोपपन्नायाः कुरुष्व वचनं मम ॥ १३-७-३० (८१४८९)
भर्त्रा य एष दत्तस्ते चरुर्मन्त्रपुरस्कृतः ।

एनं प्रयच्छ मह्यं त्वं मदीयं त्वं गृहाण च ॥ १३-७-३१ (८१४९०)
व्यत्यासं वृक्षयोश्चापि करवाव शुचिस्मिते ।
यदि प्रमाणं वचनं मम मातुरनिन्दिते ॥ १३-७-३२ (८१४९१)
स्वमपत्यं विशिष्टं हि सर्व इच्छत्यनाविलम् ।
व्यक्तं भगवता चात्र कृतमेवं भविष्यति ॥ १३-७-३३ (८१४९२)
ततो मे त्वच्चरौ भावः पादपे च समुध्यमे ।
कथं विशिष्टो भ्राता मे भवेदित्येव चिन्तय १३-७-३४ (८१४९३)
तथाच कृतवत्यौ ते माता सत्यवती च सा ।
अथ गर्भावनुप्राप्ते उभे ते वै युधिष्ठिर ॥ १३-७-३५ (८१४९४)
दृष्ट्वा गर्भमनुप्राप्तां भार्यां स च महानृषिः ।
उवाच तां सत्यवतीं दुर्मना भृगुसत्तमः ॥ १३-७-३६ (८१४९५)
व्यत्यासेनोपयुक्तस्ते चरुर्व्यक्तं भविष्यति ।
व्यत्यासः पादपे चापि सुव्यक्तं ते कृतः शुभे ॥ १३-७-३७ (८१४९६)
मया हि विश्वं यद्ब्राह्म त्वच्चरौ सन्निवेशितम् ।
क्षत्रवीर्यं च सकलं चरौ तस्या निवेशितम् ॥ १३-७-३८ (८१४९७)
त्रैलोक्यविख्यातगुणं त्वं विप्रं जनयिष्यसि ।
सा च क्षत्रं विशिष्टं वै तत एतत्कृतं मया ॥ १३-७-३९ (८१४९८)
व्यत्यासस्तु कृतो यस्मात्त्वया मात्रा च ते शुभे ।
तस्मात्सा ब्राह्मणं श्रेष्ठं माता ते जनयिष्यति ॥ १३-७-४० (८१४९९)
क्षत्रियं तूग्रकर्माणं त्वं भद्रे जनयिष्यसि ।
न हि ते तत्कृतं साधु मातृस्नेहेन भामिनि ॥ १३-७-४१ (८१५००)
सा श्रुत्वा शोकसंतप्ता पपात वरवर्णिनी ।
भूमौ सत्यवती राजंश्छिन्नेव रुचिरा लता ॥ १३-७-४२ (८१५०१)
प्रतिलभ्य च सा सञ्ज्ञां शिरसा प्रणिपत्य च ।
उवाच भार्या भर्तारं गाधेयी भार्गवर्षभम् ॥ १३-७-४३ (८१५०२)
प्रसादयन्त्यां भार्यायां मयि ब्रह्मविदांवर ।
प्रसादं कुरु विप्रर्षे न मे स्यात्क्षत्रियः सुतः ॥ १३-७-४४ (८१५०३)
कामं ममोग्रकर्मा वै पौत्रो भवितुमर्हति ।
न तु मे स्यात्सुतो ब्रह्मन्नेष मे दीयतां वरः ॥ १३-७-४५ (८१५०४)
एवमस्त्विति होवाच स्वां भार्यां सुमहातपाः ।
ततः सा जनयामास जमदग्निं सुतं शुभम् ॥ १३-७-४६ (८१५०५)
विश्वामित्रं चाजनयद्गाधिभार्या यशस्विनी ।
ऋषेः प्रसादाद्राजेन्द्र ब्रह्मर्षिं ब्रह्मवादिनम् ॥ १३-७-४७ (८१५०६)
ततो ब्राह्मणतां यातो विश्वामित्रो महातपाः ।
क्षत्रियः सोऽप्यथ तथा ब्रह्मवंशस्य कारकः ॥ १३-७-४८ (८१५०७)
तस्य पुत्रा महात्मानो ब्रह्मवंशविवर्धनाः ।

तपस्विनो ब्रह्मविदो गोत्रकर्तार एव च ॥ १३-७-४९ (८१५०८)
मधुच्छन्दश्च भगवान्देवरातश्च वीर्यवान् ।
अक्षीणश्च शकुन्तश्च बभ्रुः कालपथस्तथा ॥ १३-७-५० (८१५०९)
याज्ञवल्क्यश्च विख्यातस्तथा स्थूणो महाव्रतः ।
उलूको यमदूतश्च तथर्षिः सैन्धवायनः ॥ १३-७-५१ (८१५१०)
पर्णजङ्घश्च भगवान्गावलश्च महानृषिः ।
ऋषिर्वज्रस्तथा ख्यातः सालङ्कायन एव च ॥ १३-७-५२ (८१५११)
लीलाढ्यो नारदश्चैव तथा कूर्चामुखः स्मृतः ।
वादुलिर्मुसलश्चैव वक्षोग्रीवस्तथैव च। १३-७-५३ (८१५१२)
आङ्घ्रिको नैकदृक्चैव शिलायूपः सितः शुचिः ।
चक्रको मारुतन्तव्यो वातघ्नोऽथाश्वलायनः ॥ १३-७-५४ (८१५१३)
श्यामायनोऽथ गार्ग्यश्च जाबालिः सुश्रुतस्तथा ।
कारीषिरथ संश्रुत्यः परपौरवतन्तवः ॥ १३-७-५५ (८१५१४)
महानृषिश्च कपिलस्तथर्षिस्ताडकायनः ।
तथैव चोपगहनस्तथर्षिश्चासुरायणः ॥ १३-७-५६ (८१५१५)
मार्दमर्षिर्हिरण्याक्षो जङ्गारिर्बाभ्रवायणिः ।
भूतिर्विभूतिः सूतश्च सुरकृत्तु तथैव च ॥ १३-७-५७ (८१५१६)
अरालिर्नाचिकश्चैव चाम्पेयोज्जयनौ तथा ।
नवतन्तुर्बकनखः सेयनो यतिरेव च ॥ १३-७-५८ (८१५१७)
अम्भोरुदश्चारुमत्स्यः शिरीषी चाथ गार्दभिः ।
ऊर्जयोनिरुदापेक्षी नारदी च महानृषिः ।
विश्वामित्रात्मजाः सर्वे मुनयो ब्रह्मवादिनः ॥ १३-७-५९ (८१५१८)
तथैव क्षत्रियो राजन्विश्वामित्रो महातपाः ।
ऋचीकेनाहितं ब्रह्म परमेतद्युधिष्ठिर ॥ १३-७-६० (८१५१९)
एतत्ते सर्वमाख्यातं तत्वेन भरतर्षभ ।
विश्वामित्रस्य वै जन्म सोमसूर्याग्नितेजसः ॥ १३-७-६१ (८१५२०)
यत्रयत्र च सन्देहो भूयस्ते राजसत्तम ।
तत्रतत्र च मां ब्रूहि च्छेत्ताऽस्मि तव संशयान् ॥ ॥ १३-७-६२ (८१५२१)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
सप्तमोऽध्यायः ॥ ७ ॥

Mahabharata - Anushaasana Parva - Chapter Footnotes

७-७-१ ब्राह्मणेष्वपि ऋषित्वं मन्त्रद्रष्टृत्वं गोत्रप्रवर्तकत्वं वा ॥
७-७-२ भरतस्यान्वये चैवाजमीढ इति झ पाठः ॥
७-७-५ पिप्पलस्तस्य तनय इति य, पाठः । पल्लवस्तस्येति ट। पाठः ॥

७-७-६ प्रसवेन सोमाभिषवनिमित्तेन ।अर्थी पुत्रार्थी ॥
७-७-७ सुतात् सोमा भिषवोपलक्षिकताद्यज्ञात् ॥
७-७-८ भार्गवो भृगोर्गोत्रापत्यम् ॥
७-७-१० वत्स्यसि उद्वाहेन प्राप्स्यसि ॥
७-७-११ असंसक्तो निःसंशयः ॥
७-७-१३ आदित्यमदितेः पुत्रम् ॥
७-७-१५ वरेण पुत्रं ते दास्यामीत्यनुग्रहेण ॥
७-७-३० पूर्वोपपन्नाया भर्तुः सम्बन्धात्पूर्वमुपपन्नायाः गुरुत्वेन प्राप्तायास्तव भर्त्रपेक्षयाहं गरीयसीत्यर्थः ।पुत्रि पूर्वप्रपन्नाया इति ट।ध पाठः ॥
७-७-४४ क्षत्रियः क्षत्रियवदुग्रक्रमा ॥
७-७-५३ ऊर्ध्वलिर्मुसलश्चेति ट।ध।पाठ ॥

---

अनुससनपर्व-अध्यय००८
॥ श्रीः ॥
१३.८. अध्यायः ८

अथ दानधर्मपर्व ॥१ ॥
Mahabharata - Anushaasana Parva - Chapter Topics
भीष्मेणि युधिष्ठिरंप्रति वीतहव्यस्य ब्राह्मण्यप्राप्तिप्रकारकथनम् ॥१ ॥

Mahabharata - Anushaasana Parva - Chapter Text

युधिष्ठिर उवाच ।
श्रुतं मे महदाख्यानमेतत्कुरुकुलोद्वह ।
सुदुष्प्रापं यद्ब्रवीषि ब्राह्मण्यं वदतांवर ॥१३-८-१ (८१५२२)
विश्वामीत्रो महाराज राजा ब्राह्मणतां गतः ।
कथितं भवता सर्वं विस्तरेण पितामह ॥१३-८-२ (८१५२३)
तच्च राजन्मया सर्वं श्रुतं बुद्धिमतांवर ।
आगमो हि परोऽस्माकं त्वत्तः कौरवनन्दन ॥१३-८-३ (८१५२४)
वीतहव्यश्च नृपतिः श्रुतो मे विप्रतां गतः ।
तदेव तावद्गाङ्गेय श्रोतुमिच्छाम्यहं विभो ॥१३-८-४ (८१५२५)
स केन कर्मणा प्राप्तो ब्राह्मण्यं राजसत्तमः ।
वरेण तपसा वाऽपि तन्मे व्याख्यातुमर्हसि ॥१३-८-५ (८१५२६)
भीष्म उवाच।१३-८-६क्ष् (६७६४)
शृणु राजन्यथा राजा वीतहव्यो महायशाः ।

राजर्षिर्दुर्लभं प्राप्तो ब्राह्मण्यं लोकसत्कृतम् ॥ १३-८-६ (८१५२७)
मनोर्महात्मनस्तात प्रजा धर्मेण शासतः ।
बभूव पुत्रो धर्मात्मा शर्यातिरिति विश्रुतः ॥ १३-८-७ (८१५२८)
तस्यान्ववाये द्वौ राजन्राजानौ सम्बभूवतुः ।
हैहयस्तालजङ्घश्च वत्सेषु जयतांवर ॥ १३-८-८ (८१५२९)
हैहयस्य तु राजेन्द्र दशसु स्त्रीषु भारत ।
शतं बभूव पुत्राणां शूराणामनिवर्तिनाम् ।
तुल्यरूपप्रभावानां बलिनां युद्धशालिनाम् ॥ १३-८-९ (८१५३०)
धनुर्वेदे च वेदे च सर्वत्रैव कृतश्रमाः ॥ १३-८-१० (८१५३१)
काशिष्वपि नृपो राजन्दिवोदासपितामहः ।
हर्यश्व इति विख्यातो बभूव जयतांवरः ॥ १३-८-११ (८१५३२)
स वीतहव्यदायादैरागत्य पुरुषर्षभ ।
गङ्गायमुनयोर्मध्ये सङ्ग्रामे विनिपातितः ॥ १३-८-१२ (८१५३३)
तं तु हत्वा नरपतिं हैहयास्ते महारथाः ।
प्रतिजग्मुः पुरीं रम्यां वत्सानामकुतोभयाः ॥ १३-८-१३ (८१५३४)
हर्यश्वस्य च दायादः काशिराजोऽभ्यषिच्यत ।
सुदेवो देवसंकाशः साक्षाद्धर्म इवापरः ॥ १३-८-१४ (८१५३५)
स पालयामास महीं धर्मात्मा काशिनन्दनः ।
तैर्वीतहव्यैरागत्य युधि सर्वैर्विनिर्जितः ॥ १३-८-१५ (८१५३६)
तमथाजौ विनिर्जित्य प्रतिजग्मुर्यथागतम् ।
सौदेविस्त्वथ काशीशोदिवोदासोऽभ्यषिच्यत ॥ १३-८-१६ (८१५३७)
दिवोदासस्तु विज्ञाय वीर्यं तेषां यतात्मनाम् ।
वाराणसीं महातेजा निर्ममे शक्रशासनात् ॥ १३-८-१७ (८१५३८)
विप्रक्षत्रियसम्बाधां वैश्यशूद्रसमाकुलाम् ।
नैकद्रव्योच्चयवतीं समृद्धविपणापणाम् ॥ १३-८-१८ (८१५३९)
गङ्गाया उत्तरे कूले वप्रान्ते राजसत्तम् ॥
गोमत्या दक्षिणे कूले शक्रस्येवामरावतीम्। १३-८-१९ (८१५४०)
तत्र तं राजशार्दूलं निवसन्तं महीपतिम् ।
आगत्य हैहया भूयः पर्यधावन्त भारत ॥ १३-८-२० (८१५४१)
स निष्क्रम्य ददौ युद्धं तेभ्यो राजा महाबलः ।
देवासुरसमं घोरं दिवोदासो महाद्युतिः ॥ १३-८-२१ (८१५४२)
स तु युद्धे महाराज दिनानां दशतीर्दश ।
हतवाहनभूयिष्ठस्ततो दैन्यमुपागमत् ॥ १३-८-२२ (८१५४३)
हतयोधस्ततो राजन्क्षीणकोशश्चक भूमिपः ।
दिवोदासः पुरीं त्यक्त्वा पलायनपरोऽभवत् ॥ १३-८-२३ (८१५४४)
गत्वाऽऽश्रमपदं रम्यं भरद्वाजस्य धीमतः ।

जगाम शरणं राजा कृताञ्जलिररिंदम् ॥१३-८-२४ (८१५४५)
तमुवाच भरद्वाजो ज्येष्ठः पुत्रो बृहस्पतेः ।
पुरोधाः शीलसम्पन्नो दिवोदासं महीपतिम् ॥१३-८-२५ (८१५४६)
किमागमनकृत्यं ते सर्वं प्रबूहि मे नृप ।
यत्ते प्रियं तत्करिष्ये न मेऽत्रास्ति विचारणा ॥१३-८-२६ (८१५४७)
राजोवाच।१३-८-२७क्ष् (६७६५)
भगवन्वैतहव्यैर्मे युद्धे वंशः प्रणाशितः ।
अहमेकः परिद्यूनो भवन्तं शरणं गतः ॥१३-८-२७ (८१५४८)
शिष्यस्नेहेन भगवंस्त्वं मां रक्षितुमर्हसि ।
एकशेषः कृतो वंशो मम तैः पापकर्मभिः ॥१३-८-२८ (८१५४९)
तमुवाच महाभागो भरद्वाजः प्रतापवान् ।
न भेतव्यं न भेतव्यं सौदेव व्येतु ते भयम् ॥१३-८-२९ (८१५५०)
अहमिष्टिं करिष्यामि पुत्रार्थं ते विशाम्पते ।
वीतहव्यसहस्राणि येन त्वं प्रहरिष्यसि ॥१३-८-३० (८१५५१)
तत इष्टिं चकारर्षिस्तस्य वै पुत्रकामिकीम् ।
अथास्य तनयो जज्ञे दैवोदासः प्रतर्दनः ॥१३-८-३१ (८१५५२)
स जातमात्रो ववृधे समाः सद्यस्त्रयोदश ।
वेदं चापि जगौ कृत्स्नं धनुर्वेदं च भारत ॥१३-८-३२ (८१५५३)
योगेन च क़क़क़क़क़विष्टो भरद्वाजेन धीमता ।
कृत्स्नं हि तेजो यल्लोके तदेतद्देहमाविशत् ॥१३-८-३३ (८१५५४)
ततः स कवची धन्वी स्तूयमानः सुरर्षिभिः ।
बन्दिभिर्वन्द्यमानश्च बभौ सूर्य इवोदितः ॥१३-८-३४ (८१५५५)
स रथी बद्धनिस्त्रिंशो बभौ दीप्त इवानलः ।
प्रययौ स धनुर्धुन्वन्विवर्षिषुरिवाम्बुदः ॥१३-८-३५ (८१५५६)
तं दृष्ट्वा परमं हर्षं सुदेवतनयो ययौ ।
मेने च मनसा दग्धान्वैतहव्यान्स पार्थिवः ॥१३-८-३६ (८१५५७)
ततोसौ यौवराज्ये च स्थापयित्वा प्रतर्दनम् ।
कृतकृत्यं तदाऽऽत्मानं स राजा प्रत्यपद्यत ॥१३-८-३७ (८१५५८)
ततस्तु वैतहव्यानां वधाय स महीपतिः ।
पुत्रं प्रस्थापयासास प्रतर्दनमरिंदमम् ॥१३-८-३८ (८१५५९)
सरथः स तु संतीर्य गङ्गामाशु पराक्रमी ।
प्रययौ वीतहव्यानां पुरीं परपुरंजयः ॥१३-८-३९ (८१५६०)
वैतहव्यास्तु संश्रुत्य रथघोषं समुद्धतम् ।
निर्ययुर्नगराकारै रथैः पररथारुजैः ॥१३-८-४० (८१५६१)
निष्क्रम्य ते नरव्याघ्रा दंशिताश्चित्रयोधिनः ।
प्रतर्दनं समाजग्मुः शरवर्षैरुदायुधाः ॥१३-८-४१ (८१५६२)

शस्त्रैश्च विविधाकारै रथौघैश्च युधिष्ठिर ।
अभ्यवर्षन्त राजानं हिमवन्तमिवाम्बुदाः ॥ १३-८-४२ (८१५६३)
अस्त्रैरस्त्राणि संवार्य तेषां राजा प्रतर्दनः ।
जघान तान्महातेजा वज्रानलसमैः शरैः ॥ १३-८-४३ (८१५६४)
कृत्तोत्तमाङ्गास्ते राजन्भल्लैः शतसहस्रशः ।
अपतन्रुधिरार्द्राङ्गा निकृत्ता इव किंशुकाः ॥ १३-८-४४ (८१५६५)
हतेषु तेषु सर्वेषु वीतहव्यः सुतेष्वथ ।
प्राद्रवन्नगरं हित्वा भृगोराश्रममप्युत ॥ १३-८-४५ (८१५६६)
ययौ भृगुं च शरणं वीतहव्यो नराधिपः ।
अभयं च ददौ तस्मै वीतहव्याय भार्गवः ।
आसनं शिष्यमध्ये च भृगुरन्यत्समादिशत् ॥ १३-८-४६ (८१५६७)
अथानुपदमेवाशु तत्रागच्छत्प्रतर्दनः ।
स प्राप्य चाश्रमपदं दिवोदासात्मजोऽब्रवीत् ॥ १३-८-४७ (८१५६८)
भोभो केऽत्राश्रमे सन्ति भृगोः शिष्या महात्मनः ।
द्रष्टुमिच्छे मुनिमहं तस्याचक्षत मामिति ॥ १३-८-४८ (८१५६९)
स तं विदित्वा तु भृगुर्निश्चक्रामाश्रमात्तदा ।
पूजयामास च ततो विधिना नृपसत्तमम् ॥ १३-८-४९ (८१५७०)
उवाच चैनं राजेन्द्र किं कार्यं ब्रूहि पार्थिव ।
स चोवाच नृपस्तस्मै यदागमनकारणम् ॥ १३-८-५० (८१५७१)
राजोवाच। १३-८-५१क्ष् (६७६६)
अयं ब्रह्मन्नितो राजा वीतहव्यो विसर्ज्यताम् ।
अस्य पुत्रैर्हि मे कृत्स्नो ब्रह्मन्वंशः प्रणाशितः ॥ १३-८-५१ (८१५७२)
उत्सादितश्च विषयः काशीनां रत्नसञ्चयः ।
एतस्य वीर्यदृप्तस्य हतं पुत्रशतं मया ।
अस्येदानीं वधादद्य भविष्याम्यनृणः पितुः ॥ १३-८-५२ (८१५७३)
तमुवाच कृपाविष्टो भृगुर्धर्मभृतांवरः ।
नेहास्ति क्षत्रियः कश्चित्सर्वे हीमे द्विजातयः ॥ १३-८-५३ (८१५७४)
एतत्तु वचनं श्रुत्वा भृगोस्तथ्यं प्रतर्दनः ।
पादावुपस्पृश्य शनैः प्रहृष्टो वाक्यमब्रवीत् ॥ १३-८-५४ (८१५७५)
एवमप्यस्मि भगवन्कृतकृत्यो न संशयः ।
य एष राजा वीर्येण स्वजातिं त्याजितो मया ॥ १३-८-५५ (८१५७६)
अनुजानीहि मां ब्रह्मन्ध्यायस्व च शिवेन माम् ।
त्याजितो हि मया जातिमेव राजा भृगूद्वह ॥ १३-८-५६ (८१५७७)
ततस्तेनाभ्यनुज्ञातो ययौ राजा प्रतर्दनः ।
यथागतं महाराज मुक्त्वा विषमिवोरगः ॥ १३-८-५७ (८१५७८)
भृगोर्वचनमात्रेण स च ब्रह्मर्षितां गतः ।

वीतहव्यो महाराज ब्रह्मवादित्वमेव च ॥१३-८-५८ (८१५७९)
तस्य गृत्समदः पुत्रो रूपेणेन्द्र इवापरः ।
शक्रस्त्वमिति यो दैत्यैर्निगृहीतः किलाभवत् ॥१३-८-५९ (८१५८०)
ऋग्वेदे वर्तते चाग्र्या श्रुतिर्यस्य महात्मनः ।
यत्र गृत्समदो राजन्ब्राह्मणैः स महीयते ॥१३-८-६० (८१५८१)
स ब्रह्मचारी विप्रर्षिः श्रीमान्गृत्समदोऽभवत् ।
पुत्रो गृत्समदस्यापि विप्रः सावैनसोऽभवत् ॥१३-८-६१ (८१५८२)
सावैनसस्य पुत्रो वै वितस्त्यस्तस्य चात्मजः ।
वितस्त्यस्य सुतस्तस्य शिवस्तश्चात्मजोऽभवत् ॥१३-८-६२ (८१५८३)
श्रवास्तस्य सुतश्चर्षिः श्रवसश्चाभवत्तमः ।
तमसश्च प्रकाशोऽभूत्तनयो द्विजसत्तमः ॥१३-८-६३ (८१५८४)
प्रकाशस्य च वागिन्द्रो बभूव जयतांवरः ।
तस्यात्मजश्च प्रमितिर्वेदवेदाङ्गपारगः ॥१३-८-६४ (८१५८५)
घृताच्यां तस्य पुत्रस्तु रुरुर्नामोदपद्यत ।
प्रमद्वरायां तु रुरोः पुत्रः समुदपद्यत ।
शुनको नाम विप्रर्षिर्यस्य पुत्रोऽथ शौनकः ॥ १३-८-६५ (८१५८६)
एवं विप्रत्वमगमद्वीतहव्यो नराधिपः ।
भृगोः प्रसादाद्राजेन्द्र क्षत्रियः क्षत्रियर्षभ ॥१३-८-६६ (८१५८७)
एष ते कथितो वंशो राजन्गार्त्समदो मया ।
विस्तरेण महाराज किमन्यदनुपृच्छसि ॥ ॥१३-८-६७ (८१५८८)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
अष्टमोऽध्यायः ॥ ८ ॥

Mahabharata - Anushaasana Parva - Chapter Footnotes

७-८-७ शय्यातिरिति विश्रुत इति ट घ पाठः ॥
७-८-१० ते चेति शेषः ॥
७-८-१२ वीतहव्यदायादैः ।हैहयस्यैव नामान्तरं वीतहव्य इति तत्पुत्रैः ॥
७-८-१३ वत्सानां वत्सवंश्यानां राज्ञाम् ॥
७-८-१९ वप्रान्ते तटसमीपे ॥
७-८-२२ दशतीर्दश सहस्रमित्यर्थः ॥
७-८-२७ परिद्यूनः सर्वतोनिरस्तः ॥
७-८-३२ सद्यो ववृधे त्रयोदशवार्षिकोऽभूत् सद्यश्च वेदान् जगौ ॥
७-८-३३ योगेन योगबलेन ॥
७-८-४८ तस्य तंप्रति मां आगतं आचक्षत कथयत ॥

७-८-५८ आख्यायिकातात्पर्थमाह भृगोरिति ॥
७-८-६० यत्र गार्त्समदं ब्रह्म ब्राह्मणैः समुदाहृतम् । इति ध ापाठः ॥

---

अनुससनपर्व-अध्यय००९
॥ श्रीः ॥
१३.९. अध्यायः ९

अथ दानधर्मपर्व ॥ १ ॥
Mahabharata - Anushaasana Parva - Chapter Topics
भीष्मेण युधिष्ठिरंप्रति सदृष्टान्तप्रदर्शनं दैवादपि
पुरुषकारस्य प्राबल्यप्रतिपादनम् ॥ १ ॥

Mahabharata - Anushaasana Parva - Chapter Text

युधिष्ठिर उवाच ।
पितामह महाप्राज्ञ सर्वसास्त्रविशारद ।
दैवे पुरुषकारे च किंस्विच्छ्रेष्ठतरं भवेत् ॥ १३-९-१ (८१५८९)
भीष्म उवाच। १३-९-२क्ष् (६७६७)
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
वसिष्ठस्य च संवादं ब्रह्मणश्च युधिष्ठिर ॥ १३-९-२ (८१५९०)
दैवमानुषयोः किंस्वित्कर्मणोः श्रेष्ठमित्युत ।
पुरा वसिष्ठो भगवान्पितामहमपृच्छत ॥ १३-९-३ (८१५९१)
ततः पद्मोद्भवो राजन्देवदेवः पितामहः ।
उवाच मधुरं वाक्यमर्थवद्धेतुभूषितम् ॥ १३-९-४ (८१५९२)
ग्बीजतो ह्यङ्कुरोत्पत्तिरङ्कुरात्पर्णसम्भवः ।
पर्णान्नालाः प्रसूयन्ते नालात्स्कन्धः प्रवर्तते ॥ १३-९-५ (८१५९३)
स्कन्धात्प्रवर्तते पुष्पं पुष्पात्संवर्धते फलम् ।
फलान्निर्वर्तते बीजं बीजात्स्यात्सम्भवः पुनः'॥ १३-९-६ (८१५९४)
नाबीजं जायते किञ्चिन्न बीजेने विना फलम् ।
बीजाद्बीजं प्रभवति नाबीजं विद्यते फलम् ॥ १३-९-७ (८१५९५)
यादृशं वपते बीजं क्षेत्रमासाद्य वापकः ।
सुकृते दुष्कृते वाऽपि तादृशं लभते फलम् ॥ १३-९-८ (८१५९६)
यथा बीजं विना क्षेत्रमुप्तं भवति निष्फलम् ।
तथा पुरुषकारेण विना दैवं न सिध्यति ॥ १३-९-९ (८१५९७)
क्षेत्रं पुरुषकारस्तु दैवं बीजमुदाहृतम् ।
क्षेत्रबीजसमायोगात्ततः सस्यं समृद्ध्यते ॥ १३-९-१० (८१५९८)

कर्मणः फलनिर्वृत्तिं स्वयमश्नाति कारकः ।
प्रत्यक्षं दृश्यते लोके कृतस्याप्यकृतस्य च ॥ १३-९-११ (८१५९९)
शुभेन कर्मणा सौख्यं दुःखं पापेन कर्मणा ।
कृतं सर्वत्र लभते नाकृतं भुज्यते क्वचित् ॥ १३-९-१२ (८१६००)
कृती सर्वत्र लभते प्रतिष्ठां भाग्यवीक्षितः ।
अकृती लभते भ्रष्टः क्षते क्षारावसेचनम् ॥ १३-९-१३ (८१६०१)
तपसा रूपसौभाग्यं रत्नानि विविधानि च ।
प्राप्यते कर्मणा सर्वं न दैवादकृतात्मना ॥ १३-९-१४ (८१६०२)
तथा स्वर्गश्च भोगश्च निष्ठा या च मनीषिता ।
सर्वं पुरुषकारेण कृतेनेहोपलभ्यते ॥ १३-९-१५ (८१६०३)
ज्योतींषि त्रिदशा नागा यक्षाश्चन्द्रार्कमारुताः ।
सर्वे पुरुषकारेण मानुष्याद्देवतां गताः ॥ १३-९-१६ (८१६०४)
अर्थो वा मित्रवर्गो वा ऐश्वर्यं वा कुलान्वितम् ।
श्रीश्चापि दुर्लभा भोक्तुं तथैवाकृतकर्मभिः ॥ १३-९-१७ (८१६०५)
शौचेन लभते विप्रः क्षत्रियो विक्रमेण तु ।
वैश्यः पुरुषकारेण शूद्रः शुश्रूषया श्रियम् ॥ १३-९-१८ (८१६०६)
नादातारं भजन्त्यर्था न क्लीबं नापि निष्क्रियम् ।
नाकर्मशीलं नाशूरं तथा नैवातपस्विनम् ॥ १३-९-१९ (८१६०७)
येन लोकास्त्रयः सृष्टा दैत्याः सर्वाश्च देवताः ।
स एष भगवान्विष्णुः समुद्रे तप्यते तपः ॥ १३-९-२० (८१६०८)
स्वं चेत्कर्मफलं न स्यात्सर्वमेवाफलं भवेत् ।
लोको दैवं समालक्ष्य उदासीनो भवेद्यदि ॥ १३-९-२१ (८१६०९)
अकृत्वा मानुषं कर्म यो दैवमनुवर्तते ।
वृथा श्राम्यति सम्प्राप्य पतिं क्लीबमिवाङ्गना ॥ १३-९-२२ (८१६१०)
न तथा मानुषे लोके फलमस्ति शुभाशुभे ।
यथा त्रिदशलोके हि फलमल्पेन जायते ॥ १३-९-२३ (८१६११)
कृतः पुरुषकारस्तु दैवमेवानुवर्तते ।
न दैवमकृते किञ्चित्कस्यचिद्दातुमर्हति ॥ १३-९-२४ (८१६१२)
यथा स्थानान्यनित्यानि दृश्यन्ते दैवतेष्वपि ।
कथं कर्म विना दैवं स्थास्यति स्थापयिष्यतः ॥ १३-९-२५ (८१६१३)
न दैवतानि लोकेऽस्मिन्व्यापारं यान्ति कस्यचित् ।
व्यासङ्गं जनयन्त्युग्रमात्माभिभवशङ्कया ॥ १३-९-२६ (८१६१४)
ऋषीणां देवतानां च सदा भवति विग्रहः ।
कस्य वाचा ह्यदैवं स्याद्यतो दैवं प्रवर्तते ॥ १३-९-२७ (८१६१५)
कथं तस्य समुत्पत्तिर्यतो दैवं प्रवर्तते ।
एवं त्रिदशलोकेऽपि प्राप्यते परमं सुखम् ॥ १३-९-२८ (८१६१६)

आत्मैव ह्यात्मनो बन्धुरात्मैव रिपुरात्मनः ।
आत्मैव ह्यात्मनः साक्षी कृतस्याप्यकृतस्य च ॥ १३-९-२९ (८१६१७)
कृतं च विकृतं किञ्चित्सिद्धयते गुरुकर्मणा ।
सुकृतं दुष्कृतं कर्म अकृतार्थं प्रपद्यते ॥ १३-९-३० (८१६१८)
देवानां शरणं पुण्यं सर्वं पुण्यैरवाप्यते ।
पुण्यहीनं नरं प्राप्य किं दैवं प्रकरिष्यति ॥ १३-९-३१ (८१६१९)
पुरा ययातिर्विभ्रष्टश्च्यावितः पतितः क्षितौ ।
पुनरारोपितः स्वर्गं दौहित्रैः पुण्यकर्मभिः ॥ १३-९-३२ (८१६२०)
पुरूरवाश्च राजर्षिर्द्विजैरभिहितः पुरा ।
ऐल इत्यभिविख्यातः स्वर्गं प्राप्तो महीपतिः ॥ १३-९-३३ (८१६२१)
अश्वमेधादिभिर्यज्ञैः सत्कृतः कोसलाधिपः ।
महर्षिशापात्सौदासः पुरुषादत्वमागतः ॥ १३-९-३४ (८१६२२)
अश्वत्थामा च रामश्च मुनिपुत्रौ धनुर्धरौ ।
न गच्छतः स्वर्गलोकं वेददृष्टेन कर्मणा ॥ १३-९-३५ (८१६२३)
वसुर्यज्ञशतैरिष्ट्वा द्वितीय इव वासवः ।
मिथ्याभिधानेनैकेन रसातलतलं गतः ॥ १३-९-३६ (८१६२४)
बलिर्वैरोचनिर्बद्धो धर्मपाशेन दैवतैः ।
विष्णोः पुरुषकारेण पातालसदनः कृपः ॥ १३-९-३७ (८१६२५)
शक्रस्याथ रथोपस्थे विष्ठितो जनमेजयः ।
द्विजस्त्रीणां वधं कृत्वा किं दैवेन न वारितः ॥ १३-९-३८ (८१६२६)
अज्ञानाद्ब्राह्मणं हत्वा स्पृष्टो बालवधेन च ।
वैशंपायनविप्रर्षिः किं दैवेन न वारितः ॥ १३-९-३९ (८१६२७)
गोप्रदानेन मिथ्या च ब्राह्मणेभ्यो महामखे ।
पुरा नृगश्च राजर्षिः कृकलासत्वमागतः ॥ १३-९-४० (८१६२८)
धुन्धुमारश्च राजर्षिः सत्रेष्वेव जरां गतः ।
प्रीतिदायं परित्यज्य सुष्वाप स गिरिव्रजे ॥ १३-९-४१ (८१६२९)
पाण्डवानां हृतं राज्यं धार्तराष्ट्रैर्महाबलैः ।
पुनः प्रत्याहृतं चैव न दैवाद्भुजसंश्रयात् ॥ १३-९-४२ (८१६३०)
तपोनियमसंयुक्ता मुनयः संशितव्रताः ।
किं ते दैवबलाच्छापमुत्सृजन्ते न कर्मणा ॥ १३-९-४३ (८१६३१)
पापमुत्सृजते लोके सर्वं प्राप्य सुदुर्लभम् ।
लोभमोहसमापन्नं न दैवं त्रायते नरम् ॥ १३-९-४४ (८१६३२)
यथाऽग्निः पवनोद्भूतः सुसूक्ष्मोऽपि महान्भवेत् ।
तथा कर्मसमायुक्तं दैवं साधु विवर्धते ॥ १३-९-४५ (८१६३३)
यथा तैलक्षयाद्दीपः प्रम्लानिमुपगच्छति ।
तथा कर्मक्षयाद्दैवं प्रम्लानिमुपगच्छति ॥ १३-९-४६ (८१६३४)

विपुलमपि धनौघं प्राप्य भोगान्त्रियो वा
पुरुष इह न शक्तः कर्महीनो हि भोक्तुम् ।
सुविहितमपि चार्थं दैवते रक्ष्यमाणं
पुरुष इह महात्मा प्राप्नुते नित्ययुक्तः ॥ १३-९-४७ (८१६३५)
व्ययगुमपि साधुं कर्मणा संश्रयन्ते
भवती मनुजलोकाद्दैवलोको विशिष्टः ।
बहुतरसुसमृद्ध्या मानुषाणां गृहाणि
पितृवनभवनाभं दृश्यते चामराणाम् ॥ १३-९-४८ (८१६३६)
न च फलति विकर्मा जीवलोके न दैवं
व्यपनयति विमार्गं नास्ति दैवे प्रभुत्वम् ।
गुरुमिव कृतमग्र्यं कर्म संयाति दैवं
नयति पुरुषकारः सञ्चितस्तत्रतत्र ॥ १३-९-४९ (८१६३७)
एतत्ते सर्वमाख्यातं मया वै मुनिसत्तम ।
फलं पुरुषकारस्य सदा संदृश्य तत्त्वतः ॥ १३-९-५० (८१६३८)
अभ्युत्थानेन दैवस्य समारब्धेन केनचित् ।
विधिना कर्मणा चैव स्वर्गमार्गमवाप्नुयात् ॥ ॥ १३-९-५१ (८१६३९)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि नवमोऽध्यायः
॥ ९ ॥

Mahabharata - Anushaasana Parva - Chapter Footnotes

७-९-१३ नाकृती लभतेऽभीष्टं क्षितिः क्षीरावसेचनमिति ध पाठः ॥
७-९-१६ चन्द्रार्कतारका इति ध पाठः। ७-९-१८ लभते श्रियमिति
सर्वत्र सम्बन्धः। ।
७-९-२४ अकृते कर्माभावे सति ॥
७-९-२६ व्यापारं पुण्यरूपं यान्ति अनुमोदन्ते ।उग्रं
धर्मविघ्नकरम्। एवं सञ्जनयन्त्युग्रा आत्मनिर्भयशङ्कयेति
ध पाठः ॥
७-९-२७ यद्यप्येवं कर्मपरत्वं देवर्षीणामस्ति तथापि अदैवं
दैवाभावो न वक्तुं शक्य इत्यर्थः ॥
७-९-२८ यतो यस्माद्दैवं प्रवर्तते तस्य कर्मणोऽपि दैवं विना
कथमुत्पत्तिः स्यान्न कथमपि ॥

---

अनुससनपर्व-अध्यय०१०
॥ श्रीः ॥
१३.१०. अध्यायः १०

अथ दानधर्मपर्व ॥ १ ॥

Mahabharata - Anushaasana Parva - Chapter Topics

भीष्मेण युधिष्ठिरंप्रति शुभाशुभकर्मफलप्रतिपादनम् ॥ १ ॥

Mahabharata - Anushaasana Parva - Chapter Text

युधिष्ठिर उवाच ।
कर्मणां च समस्तानां फलिनां भरतर्षभ ।
फलानि महतां श्रेष्ठ प्रब्रूहि परिपृच्छतः ॥ १३-१०-१ (८१६४०)
भीष्म उवाच। १३-१०-२क्ष् (६७६८)
हन्त ते कथयिष्यामि यन्मां पृच्छसि भारत ।
रहस्यं यदृषीणां तु तच्छृणुष्व युधिष्ठिर ।
या गतिः प्राप्यते येन प्रेत्यभावे चिरेप्सिता ॥ १३-१०-२ (८१६४१)
येनयेन शरीरेण यद्यत्कर्म करोति यः ।
तेनतेन शरीरेण तत्तत्फलमुपाश्नुते ॥ १३-१०-३ (८१६४२)
यस्यांयस्यामवस्थायां यत्करोति शुभाशुभम् ।
तस्यांतस्यामवस्थायां भुङ्क्ते जन्मनिजन्मनि ॥ १३-१०-४ (८१६४३)
न नश्यति कृतं कर्म चित्तपञ्चेन्द्रियैरिह ।
ते ह्यस्य साक्षिणो नित्यं षष्ठ आत्मा शुभाशुभे ॥ १३-१०-५ (८१६४४)
चक्षुर्दद्यान्मनो दद्याद्वाचं दद्याच्च सूनृताम् ।
अनुव्रजेदुपासीत स यज्ञः पञ्चदक्षिणः ॥ १३-१०-६ (८१६४५)
यो दद्यादपरिक्लिष्टमन्नमध्वनि वर्तते ।
श्रान्तायादृष्टपूर्वाय तस्य पुण्यफलं महत् ॥ १३-१०-७ (८१६४६)
स्थण्डिलेषु शयानानां गृहाणि शयनानि च ।
चीरवल्कलसंवीते वासांस्याभरणानि च ॥ १३-१०-८ (८१६४७)
वाहनानि च यानानि योगात्मनि तपोधने ।
अग्नीनुपशयानस्य राज्ञः पौरुषमेव च ॥ १३-१०-९ (८१६४८)
रसानां प्रतिसंहारे सौभाग्यमनुगच्छति ।
आमिषप्रतिसंहारे पशून्पुत्रांश्च विन्दति ॥ १३-१०-१० (८१६४९)
अवाक्शिरास्तु यो लम्बेदुदवासं च यो वसेत् ।
मण्डूकशायी च नरो लभते चेप्सितां गतिम् ॥ १३-१०-११ (८१६५०)
पाद्यमासनमेवाथ दीपमन्नं प्रतिश्रयम् ।
दद्यादतिथिपूजार्थं स यज्ञः पञ्चदक्षिणः ॥ १३-१०-१२ (८१६५१)
वीरासनं वीरशय्यां वीरस्थानमुपासतः ।
अक्षयास्तस्य वै लोकाः सर्वकामगमास्तथा ॥ १३-१०-१३ (८१६५२)

धनं लभेत दानेन मौनेनाज्ञां विशांपते ।
उपभोगांश्च तपसा ब्रह्मचर्येण जीवितम् ॥ १३-१०-१४ (८१६५३)
रूपमैश्वर्यमारोग्यमहिंसाफलमश्नुते ।
फलमूलाशिनो राज्यं स्वर्गः पर्णाशिनां भवेत् ॥ १३-१०-१५ (८१६५४)
प्रायोपवेशिनो राजन्सर्वत्र सुखमुच्यते ।
गवाढ्यः शाकदीक्षायां स्वर्गगामी तृणाशनः ॥ १३-१०-१६ (८१६५५)
स्त्रियस्त्रिषवणं स्नात्वा वायुं पीत्वा क्रतुं लभेत् ।
स्वर्गं सत्येन लभते दीक्षया कुलमुत्तमम् ॥ १३-१०-१७ (८१६५६)
सलिलाशी भवेद्यस्तु सदाग्निः संस्कृतो द्विजः ।
मरुत्साधयतो राज्यं नाकपृष्ठमनाशिने ॥ १३-१०-१८ (८१६५७)
उपवासं च दीक्षायामभिषेकं च पार्थिव ।
कृत्वा द्वादशवर्षाणि वीरस्थानाद्विशिष्यते ॥ १३-१०-१९ (८१६५८)
अधीत्य सर्ववेदान्वै सद्यो दुःखाद्विमुच्यते ।
गतत्पाठधारणात्स्वर्गमर्थज्ञानात्परां गतिम् ॥ १३-१०-२० (८१६५९)
वितृष्णानां वेदजपात्स्वर्गमोक्षफलं स्मृतम्।'
मानसं हि चरन्धर्मं स्वर्गलोकमुपाश्नुते ॥ १३-१०-२१ (८१६६०)
या दुस्त्यजा दुर्मतिभिर्या न जीर्यति जीर्यतः ।
योसौप्राणान्तिकोरोगस्तांतृष्णां त्यजतः सुखं ॥ १३-१०-२२ (८१६६१)
यथा धेनुसहस्रेषु वत्सो विन्दति मातरम् ।
एवं पूर्वकृतं कर्म कर्तारमनुगच्छति ॥ १३-१०-२३ (८१६६२)
अचोद्यमानानि यथा पुष्पाणि च फलानि च ।
स्वकालं नातिवर्तन्ते तथा कर्म पुराकृतम् ॥ १३-१०-२४ (८१६६३)
जीर्यन्ति जीर्यतः केशा दन्ता जीर्यन्ति जीर्यतः ।
चक्षुः श्रोत्रे च जीर्येते तृष्णैका न तु जीर्यते ॥ १३-१०-२५ (८१६६४)
येन प्रीणन्ति पितरस्तेन प्रीतः प्रजापतिः ।
माता च येन प्रीणाति पृथिवी तेन पूजिता ।
येन प्रीणात्युपाध्यायस्तेन स्याद्ब्रह्म पूजितम् ॥ १३-१०-२६ (८१६६५)
सर्वे तस्यादृता धर्मा यस्यैते त्रय आदृताः ।
अनादृतास्तु यस्यैते सर्वास्तस्याफलाः क्रियाः ॥ १३-१०-२७ (८१६६६)
वैशम्पायन उवाच। १३-१०-२८क्ष् (६७६९)
भीष्मस्यैतद्वचः श्रुत्वा विस्मिताः कुरुपुङ्गवाः ।
आसन्प्रहृष्टमनसः प्रीतिमन्तोऽभवंस्तदा ॥ १३-१०-२८ (८१६६७)
यन्मन्त्रे भवति वृथोपयुज्यमाने
यत्सोमे भवति वृथाऽभिषूयमाणे ।
यच्चाग्नौ भवति वृथाऽभिहूयमाने
तत्सर्वं भवति वृथाऽभिधीयमाने ॥ १३-१०-२९ (८१६६८)

इत्येतदृषिणा प्रोक्तमुक्तवानस्मि भारत ।
शुभाशुभफलप्राप्तौ किमतः श्रोतुमिच्छसि ॥ ॥ १३-१०-३० (८१६६९)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
दशमोऽध्यायः ॥ १० ॥
Mahabharata - Anushaasana Parva - Chapter Footnotes

७-१०-२ गतिः फलम् । येन कर्मणा। प्रेत्यभावे मरणोत्तरं
देहान्तरप्राप्तौ ॥
७-१०-५ अस्य कर्तुः ॥
७-१०-६ दद्यादभ्यागतायेति शेषः ॥
७-१०-८ वानप्रस्थधर्माणां फलान्याह स्थण्डिलेष्वित्यादिना ॥
७-१०-९ योगात्मनि योगयुक्तचित्ते ॥
७-१०-११ सततं चैकशायी यः स इति झ पाठः । तत्र एकशायी
ब्रह्मचर्यवान् ॥
७-१०-१३ वीरा आसतेऽस्मिन्निति वीरासनं रणदेशं उपेत्य वीरशय्यां
तत्र दीर्घनिद्रां च प्राप्य वीरस्थानं स्वर्गलोकम् ॥
७-१०-१४ आज्ञामविच्छिन्नामिति शेषः । तपसा कृच्छ्रादिना जीवितमायुः ॥
७-१०-१६ शाकदीक्षायां शाकमात्राशननियमे ॥
७-१०-१७ क्रतुं संकल्पं सत्यसंकल्पत्वमिति यावत् । दीक्षया यज्ञेन ॥
७-१०-१८ सदाग्निः अविच्छिन्नाग्निहोत्रः ॥
७-१०-१९ अभिषेकं तीर्थाटनम् । वीरस्थानात्स्वर्गादपि विशिष्यते ॥
७-१०-२२ मानसं धर्मं विवृणोति येति ॥

---

अनुससनपर्व-अध्यय०११
॥ श्रीः ॥
१३.११. अध्यायः ११

अथ दानधर्मपर्व ॥ १ ॥
Mahabharata - Anushaasana Parva - Chapter Topics
भीष्मेण युधिष्ठिरंप्रति
शुकवासवसंवादानुवादेनानृशंस्यप्रशंसनम् ॥ १ ॥

Mahabharata - Anushaasana Parva - Chapter Text

युधिष्ठिर उवाच ।

आनृशंस्यस्य धर्मज्ञ गुणान्भक्तजनस्य च ।
श्रोतुमिच्छामि धर्मज्ञ तन्मे ब्रूहि पितामह ॥ १३-११-१ (८१६७०)
भीष्म उवाच। १३-११-२क्ष् (६७७०)
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
वासवस्य च संवादं शुकस्य च महात्मनः ॥ १३-११-२ (८१६७१)
विषये काशिराजस्य ग्रामान्निष्क्रम्य लुब्धकः ।
सविषं काण्डमादाय मृगयामास वै मृगम् ॥ १३-११-३ (८१६७२)
तत्र चामिषलुब्धेन लुब्धकेन महावने ।
अविदूरे मृगान्दृष्ट्वा बाणः प्रतिसमाहितः ॥ १३-११-४ (८१६७३)
तेन दुर्वारितास्त्रेण निमित्तचपलेषुणा ।
महान्वनतरुस्तत्र विद्धो मृगजिघांसया ॥ १३-११-५ (८१६७४)
स तीक्ष्णविषदिग्धेन शरेणातिबलात्क्षतः ।
उत्सृज्य फलपत्राणि पादपः शोषमागतः ॥ १३-११-६ (८१६७५)
तस्मिन्वृक्षे तथाभूते कोटरेषु चिरोषितः ।
न जहाति शुको वासं तस्य भक्त्या वनस्पतेः ॥ १३-११-७ (८१६७६)
निष्प्रचारो निराहारो ग्लानः शिथिलवागपि ।
कृतज्ञः सह वृक्षेण धर्मात्मा सोप्यशुष्यत ॥ १३-११-८ (८१६७७)
तमुदारं महासत्वमतिमानुषचेष्टितम् ।
समदुःखसुखं दृष्ट्वा विस्मितः पाकशासनः ॥ १३-११-९ (८१६७८)
ततश्चिन्तामुपगतः शक्रः कथमयं द्विजः ।
तिर्यग्योनावसम्भाव्यमानृशंस्यमवस्थितः ॥ १३-११-१० (८१६७९)
अथवा नात्र चित्रं हीत्यभवद्वासवस्य तु ।
प्राणिनामपि सर्वेषां सर्वं सर्वत्र दृश्यते ॥ १३-११-११ (८१६८०)
ततो ब्राह्मणवेषेणि मानुषं रूपमास्थितः ।
अवतीर्य महीं शक्रस्तं पक्षिणमुवाच ह ॥ १३-११-१२ (८१६८१)
शुक भो पक्षिणांश्रेष्ठ दाक्षेयी सुप्रजास्त्वया ।
पृच्छे त्वां शुकमेनं त्वं कस्मान्न त्यजसि द्रुमम् ॥ १३-११-१३ (८१६८२)
अथ पृष्टः शुकः प्राह मूर्ध्ना समभिवाद्य तम् ।
स्वागतं देवराज त्वं विज्ञातस्तपसा मया ॥ १३-११-१४ (८१६८३)
ततो दशशताक्षेण साधुसाध्विति भाषितम् ।
अहो विज्ञानमित्येवं मनसा पूजितस्ततः ॥ १३-११-१५ (८१६८४)
तमेवं शुभकर्माणं शुकं परमधार्मिकम् ।
जानन्नपि च तत्पापं पप्रच्छ बलसूदनः ॥ १३-११-१६ (८१६८५)
निष्पत्रमफलं शुष्कमशरण्यं पतत्त्रिणाम् ।
किमर्थं सेवसे वृक्षं यदा महदिदं वनम् ॥ १३-११-१७ (८१६८६)
अन्येऽपि बहवो वृक्षाः पत्रसंछन्नकोटराः ।

शुभाः पर्याप्तसञ्चारा विद्यन्तेऽस्मिन्महावने ॥ १३-११-१८ (८१६८७)
गतायुषमसामर्थ्यं क्षीणसारं हतश्रियम् ।
विमृश्य प्रज्ञया धीर जहीमं ह्यस्थिरं द्रुमम् ॥ १३-११-१९ (८१६८८)
भीष्म उवाच। १३-११-२०क्ष् (६७७१)
तदुपश्रुत्य धर्मात्मा शुकः शक्रेण भाषितम् ।
सुदीर्घमतिनिःश्वस्य दीनो वाक्यमुवाच ह ॥ १३-११-२० (८१६८९)
अनतिक्रमणीयानि दैवतानि शचीपते ।
यत्राभवंस्तत्र भवांस्तन्निबोध सुराधिप ॥ १३-११-२१ (८१६९०)
अस्मिन्नहं द्रुमे जातः साधुभिश्च गुणैर्युते ।
चालभावेन सङ्गुप्तः शत्रुभिश्च न धर्षितः ॥ १३-११-२२ (८१६९१)
किमनुक्रोश्यं वैफल्यमुत्पादयसि मेऽनघ ।
ग्अनुरक्तस्य भक्तस्य संस्पृशे न च पावकम्।'
आनृशंस्याभियुक्तस्य भक्तस्यानन्यगस्य च ॥ १३-११-२३ (८१६९२)
अनुक्रोशो हि साधूनां महद्धर्मस्य लक्षणम् ।
अनुक्रोशश्च साधूनां सदा प्रीतिं प्रयच्छति ॥ १३-११-२४ (८१६९३)
त्वमेव दैवतैः सर्वैः पृच्छ्यसे धर्मसंशयात् ।
अतस्त्वं देवदेवानामाधिपत्ये प्रतिष्ठितः ॥ १३-११-२५ (८१६९४)
नार्हसे मां सहस्राक्ष द्रुमं त्याजयितुं चिरात् ।
समस्थमुपजीवन्वै विषमस्थं कथं त्यजेत् ॥ १३-११-२६ (८१६९५)
तस्य वाक्येन सौम्येन हर्षितः पाकशासनः ।
शुकं प्रोवाच धर्मज्ञमानृशंस्येन तोषितः ॥ १३-११-२७ (८१६९६)
वरं वृणीष्वेति तदा स च वव्रे वरं शुकः ।
आनृशंस्यपरो नित्यं तस्य वृक्षस्य सम्भवम् ॥ १३-११-२८ (८१६९७)
विदित्वा च दृढां भक्तिं तां शुके शीलसम्पदम् ।
प्रीतः क्षिप्रमथो वृक्षममृतेनावसिक्तवान् ॥ १३-११-२९ (८१६९८)
ततः फलानि पत्राणि शाखाश्चापि मनोहराः ।
शुकस्य दृढभक्तित्वाच्छ्रीमत्तां प्राप स द्रुमः ॥ १३-११-३० (८१६९९)
शुकश्च कर्मणा तेन आनृशंस्यकृतेन वै ।
आयुषोन्ते महाराज प्राप शक्रसलोकताम् ॥ १३-११-३१ (८१७००)
एवमेव मनुष्येन्द्र भक्तिमन्तं समाश्रितः ।
सर्वार्थसिद्धिं लभते शुकं प्राप्य यथा द्रुमः ॥ ॥ १३-११-३२ (८१७०१)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
एकादशोऽध्यायः ॥ ११ ॥

Mahabharata - Anushaasana Parva - Chapter Footnotes

७-११-३ विषये देशे । काण्डं बाणम् ॥
७-११-४ तत्र मृगयायाम् ॥
७-११-५ दुर्वारितास्त्रेण दुर्वार्यशस्त्रेण
। निमित्ताल्लक्ष्याच्चपलश्चलित इषुर्यस्य तेन। निमित्तविफलेषुणेति
ध। पाठः ॥
७-११-६ दिग्धेन लिप्तेन ॥
७-११-१० द्विजः पक्षी । आनृशंस्य परदुःखेन दुःखित्वम् ॥
७-११-११ सर्वेषां नृतिर्यगादीनाम् । सर्वत्र जातौ। सर्वं
कृपाऽनैष्ठुर्यादिकं दृश्यते इति वासवस्य बुद्धिरभवदिति
सम्बन्धः ॥
७-११-१३ दाक्षेयो दक्षदौहित्री शुकीनाम ॥
७-११-१४ तपसा ज्ञानदृष्ट्या ॥
७-११-२३ अनुक्रोश्य कृपायित्वा । वैफल्यं जन्मन इति शेषः ॥
७-११-२५ संशयात् संशयं प्राप्य । अतः संशयच्छेत्तृत्वात् ॥
७-११-२८ सम्भवं सम्यगौश्वर्यं वरं वव्रे ॥

---

अनुससनपर्व-अध्यय०१२
॥ श्रीः ॥
१३.१२. अध्यायः १२

अथ दानधर्मपर्व ॥ १ ॥
Mahabharata - Anushaasana Parva - Chapter Topics
भीष्मेण युधिष्ठिरंप्रति ब्राह्मणप्रशंसनम् ॥ १ ॥

Mahabharata - Anushaasana Parva - Chapter Text

युधिष्ठिर उवाच ।
यथैव ते नमस्कार्याः प्रोक्ताः शक्रेण मानद ।
एतन्मे सर्वमाचक्ष्व येभ्यः स्पृहयसे नृपः ॥ १३-१२-१ (८१७०२)
उत्तमापद्गतस्यापि यत्र ते वर्तते मनः ।
मनुष्यलोके सर्वस्मिन्यदमुत्रेह चाप्युत ॥ १३-१२-२ (८१७०३)
भीष्म उवाच। १३-१२-३क्ष् (६७७२)
स्पृहयामि द्विजातिभ्यो येषां ब्रह्म परं धनम् ।
येषां संप्रत्ययः स्वर्गस्तपःस्वाध्यायसाधनम् ॥ १३-१२-३ (८१७०४)
येषां बालाश्च वृद्धाश्च पितृपैतामहीं धुरम् ।
उद्वहन्ति न सीदन्ति तेभ्यो वै स्पृहयाम्यहम् ॥ १३-१२-४ (८१७०५)

विद्यास्वभिविनीतानां दान्तानां मृदुभाषिणाम् ।
श्रुतवृत्तोपपन्नानां सदाऽक्षरविदां सताम् ॥ १३-१२-५ (८१७०६)
संसत्सु वदतां तात हंसानामिव सङ्घशः ।
मङ्गल्यरूपा रुचिरा दिव्यजीमूतनिःस्वनाः ॥ १३-१२-६ (८१७०७)
सम्यगुच्चरिता वाचः श्रूयन्ते हि युधिष्ठिर ।
शुश्रूषमाणे नृपतौ प्रेत्य चेह सुखावहाः ॥ १३-१२-७ (८१७०८)
ये चापि तेषां श्रोतारः सदा सदसि सम्मताः ।
विज्ञानगुणसम्पन्नास्तेभ्यश्च स्पृहयाम्यहम् ॥ १३-१२-८ (८१७०९)
सुसंस्कृतानि प्रयताः शुचीनि गुणवन्ति च ।
ददत्यन्नानि तृप्त्यर्थं ब्राह्मणेभ्यो युधिष्ठर ।
ये चापि सततं राजंस्तेभ्यश्च स्पृहयाम्यहम् ॥ १३-१२-९ (८१७१०)
शक्यं ह्येवाहवे योद्धुं न दातुमनसूयितुम् ॥ १३-१२-१० (८१७११)
शूरा वीराश्च शतशः सन्ति लोके युधिष्ठिर ।
तेषां संख्यायमानानां दानशूरो विशिष्यते ॥ १३-१२-११ (८१७१२)
ग्भद्रं तु जन्म सम्प्राप्य भूयो ब्राह्मणको भवेत् ।
बन्धुमध्ये कुले जातः सुदुरापमवाप्नुयात् ॥' १३-१२-१२ (८१७१३)
धन्यः स्यां यद्यहं भूयः सौम्यब्राह्मणकोपि वा ।
कुले जातो धर्मगतिस्तपोविद्यापरायणः ॥ १३-१२-१३ (८१७१४)
न मे त्वत्तः प्रियतरो लोकेऽस्मिन्पाण्डुनन्दन ।
त्वत्तश्चापि प्रियतरा ब्राह्मणा एव भारत ॥ १३-१२-१४ (८१७१५)
यथा मम प्रियतमास्त्वत्तो विप्राः कुरूत्तम ।
तेन सत्येन गच्छेयं लोकान्यत्र स शन्तनुः ॥ १३-१२-१५ (८१७१६)
न मे पिता प्रियतरो ब्रह्मणेभ्यस्तथाऽभवत् ।
न मे पितुः पिता वाऽपि ये चान्येऽपि सुहृज्जनाः ॥ १३-१२-१६ (८१७१७)
न हि मे वृजिनं किञ्चिद्विद्यते ब्राह्मणेष्विह ।
अणु वा यदि वा स्थूलं विद्यते साधुकर्मसु ॥ १३-१२-१७ (८१७१८)
कर्मणा मनसा वाऽपि वाचा वाऽपि परंतप ।
यन्मे कृतं ब्राह्मणेभ्यस्तेनाद्य न तपाम्यहम् ॥ १३-१२-१८ (८१७१९)
ब्रह्मण्य इति मामाहुस्तया वाचाऽस्मि तोषितः ।
एतदेव पवित्रेभ्यः सर्वेभ्यः परमं स्मृतम् ॥ १३-१२-१९ (८१७२०)
पश्यामि लोकानमलाञ्शुचीन्ब्राह्मणतोषणात् ।
तेषु मे तात गन्तव्यमह्नाय च चिराय च ॥ १३-१२-२० (८१७२१)
यथा भर्त्राश्रयो धर्मः स्त्रीणां लोके युदिष्ठिर ।
स देवः सा गतिर्नान्या क्षत्रियस्य तथा द्विजाः ॥ १३-१२-२१ (८१७२२)
क्षत्रियः शतवर्षी च दशवर्षी द्विजोत्तमः ।
पितापुत्रौ च विज्ञेयौ तयोर्हि ब्राह्मणो गुरुः ॥ १३-१२-२२ (८१७२३)

नारी तु पत्यभावे वै देवरं कुरुते पतिम् ।
पृथिवी ब्राह्मणालाभे क्षत्रियं कुरुते पतिम् ॥ १३-१२-२३ (८१७२४)
ग्ब्राह्मणानुज्ञया ग्राह्यं राज्यं च सपुरोहितैः ।
तद्रक्षणेन स्वर्गोऽस्य तत्कोपान्नरकोऽक्षयः ॥' १३-१२-२४ (८१७२५)
पुत्रवच्चैव ते रक्ष्या उपास्या गुरुवच्च ते ।
अग्निवच्चोपचार्या वै ब्राह्मणाः कुरुसत्तम् ॥ १३-१२-२५ (८१७२६)
ऋजुन्सतः सत्यशीलान्सर्वभूतहिते रतान् ।
आशीविषानिव क्रुद्धान्द्विजान्परिचरेत्सदा ॥ १३-१२-२६ (८१७२७)
तेजसस्तपसश्चैव नित्यं बिभ्येद्युधिष्ठिर ।
उभे चैते परित्याज्ये तेजश्चैव तपस्तथा ॥ १३-१२-२७ (८१७२८)
व्यवसायस्तयोः शीघ्रमुभयोरेव विद्यते ।
हन्युः क्रुद्धा महाराज ब्राह्मणा ये तपस्विनः ॥ १३-१२-२८ (८१७२९)
ग्दूरतो मातृवत्पूज्या विप्रदाराः सुरक्षया ।
अकोपनापराधेन भूयो नरकमश्नुते ॥ १३-१२-२९ (८१७३०)
भूयः स्यादुभयं दत्तं ब्राह्मणाद्यदकोपनात् ।
कुर्यादुभयतः शेषं दत्तशेषं न शेषयेत् ॥ १३-१२-३० (८१७३१)
दण्डपाणिर्यथा गोष्ठं पालो नित्यं हि रक्षयेत् ।
ब्राह्मणेषु स्थितं ब्रह्म क्षत्रियः परिपालयेत् ॥ १३-१२-३१ (८१७३२)
पितेव पुत्रान्रक्षेथा ब्राह्मणान्ब्रह्मतेजसः ।
गृहे चैषामवेक्षेथाः किंस्विदस्तीति जीवनम् ॥ ॥ १३-१२-३२ (८१७३३)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
द्वादशोऽध्यायः ॥ १२ ॥

Mahabharata - Anushaasana Parva - Chapter Footnotes

७-१२-२ यदमुत्रेह च हितं तद्वदेति शेषः ॥
७-१२-५ अक्षरं ब्रह्म तद्विदाम् ॥
७-१२-६ हंससादृश्यं क्षीरनीरयोरिव सारसारयोर्विवेचनात् ॥
७-१२-७ नृपतौ नृपतेः समीपे उच्चरिताः ॥
७-१२-८ ये चापि तेषां दातार इति ध । पाठः ॥
७-१२-१३ ब्राह्मणकः कुत्सितब्राह्मणोपि यद्यहं स्यां तर्हि धन्यः
किमुत फुले जातः ॥
७-१२-१७ यृजिनं सङ्कटम् । फलाशेथियावत्। पूज्यत्वादेव तान्पूजयामि
नतु फलायेत्यर्थः ॥
७-१२-१८ तेन ब्राह्मणारावनेन । न तपामि न व्यथां प्राप्तोमि ॥
७-१२-१९ ब्रह्मण्यो ब्रह्मजातौ आसक्तः ॥

७-१२-२७ ब्राह्मणाद्बिभ्येत् नतु तत्र तेजस्तपसी स्वीये प्रकाशयेदित्यर्थः ।तेजः क्रोधबलम्।तपो योगबलम् ॥
७-१२-२८ तयोस्तपस्तेजसोर्ब्रह्मणक्षत्रियस्थयोर्व्यवसायः फलमभिभवरूपं शीघ्रं तीव्रं तथापि तपस्विन एवेतरान् हन्युर्न तेजस्विन इत्यर्थः ॥
७-१२-३० ल्यब्लोपे पञ्चमी ।अकोपनं ब्राह्मणं प्राप्य यद्भूयः बहुतरं उभयं तपस्तेजआख्यं स्यात् तद्दत्तं खण्डितं भवतीति शेषः।उभयत उभयं चेत् शेषं कुर्याद् दत्तशेषं शेषयेदित्यन्वयः।द्वाभ्यां अन्योन्यस्मिन्प्रयुक्तं तेजआदिद्वयं न निःशेषं नश्यति किन्तु शेषम्।क्षमावता खण्डितस्य तस्यावशिष्टं तु न शेषयेन्न शिष्यते अपितु निःशेषमेव नश्यतीत्यर्थः ॥
३० ॥
७-१२-३२ अभावे तद्देयमित्यर्थः ॥
७-१२-४२ द्वादशोऽध्यायः ॥

---

अनुससनपर्व-अध्यय०१३
॥ श्रीः ॥
१३.१३. अध्यायः १३

अथ दानधर्मपर्व ॥१ ॥
Mahabharata - Anushaasana Parva - Chapter Topics
भीष्मेण युधिष्ठिरंप्रति क्रमेण क्रोधस्यातिथेश्च निन्दाप्रशंसनपरवेदचतुष्टयसंवादानुवादः ॥१ ॥

Mahabharata - Anushaasana Parva - Chapter Text

भीष्म उवाच ।
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
चतुर्णामपि वेदानां संवादं शृणु पुत्रक ॥१३-१३-१ (८१७३४)
ऋग्वेद उवाच।१३-१३-२क्ष् (६७७३)
गृहानाश्रयमाणस्य अग्निहोत्रं च जुह्वतः ।
सर्वं सुकृतमादत्ते यः साये नुद्यतेऽतिथिः ॥१३-१३-२ (८१७३५)
न स्कन्दते न व्यथते नास्योर्ध्वं सर्पते रजः ।
वरिष्ठमग्निहोत्राच्च ब्राह्मणस्य मुखे हुतम् ॥१३-१३-३ (८१७३६)
सामवेद उवाच।१३-१३-४क्ष् (६७७५)
न चेद्घ्नन्ति पितरं मातरं वा

न ब्राह्मणं नापवादं करोति ।
यत्किंचिदन्यद्वृजिनं करोति ।
प्रीतोऽतिथिस्तदुपहन्ति पापम् ॥ १३-१३-४ (८१७३७)
अथर्ववेद उवाच। १३-१३-५क्ष् (६७७६)
यत्क्रोधनो यजते यद्ददाति
यद्वा तपस्तप्यति यज्जुहोति ।
वैवस्वतो हरते सर्वमस्य
मोघं चेष्टं भवति क्रोधनस्य ॥ ॥ १३-१३-६ (८१७३८)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
त्रयोदशोऽध्यायः ॥ १३ ॥

---

अनुससनपर्व-अध्यय०१४
॥ श्रीः ॥
१३.१४. अध्यायः १४

अथ दानधर्मपर्व ॥ १ ॥
Mahabharata - Anushaasana Parva - Chapter Topics
भीष्मेण युधिष्ठिरंप्रति ब्राह्मणानां पतिव्रतानां च
महिमप्रतिपादकेन्द्राग्न्यादिसंवादानुवादः ॥ १ ॥

Mahabharata - Anushaasana Parva - Chapter Text

भीष्म उवाच ।
भूयस्तु शृणु राजेन्द्र धर्मान्धर्मभृतांवर ॥ १३-१४-१ (८१७३९)
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
इन्द्राग्न्योः सूर्यशच्योश्च तन्मे निगदतः शृणु ॥ १३-१४-२ (८१७४०)
इन्द्र उवाच। १३-१४-३क्ष् (६७७७)
राज्ये विप्रान्प्रपश्यामि कामक्रोधविवर्जितान् ।
एतेन सत्यवाक्येन पादः कुम्भस्य पूर्यताम् ॥ १३-१४-३ (८१७४१)
अग्निरुवाच। १३-१४-४क्ष् (६७७८)
यथाऽहं तत्र नाश्नामि यत्र नाश्नन्ति वै द्विजाः
एतेन सत्यवाक्येन पादः कुम्भस्य पूर्यताम् ॥ १३-१४-४ (८१७४२)
सूर्य उवाच। १३-१४-५क्ष् (६७७९)
यथा गोब्राह्मणस्यार्थे न तपामि यथाबलम् ।
एतेन सत्यवाक्येन पादः कुम्भस्य पूर्यताम् ॥ १३-१४-५ (८१७४३)

शच्युवाच। १३-१४-६क्ष् (६७८०)
कर्मणा मनसा वाचा नावमन्ये पुरन्दरम् ।
एतेन सत्यवाक्येन पादः कुम्भस्य पूर्यताम् ॥ ॥१३-१४-६ (८१७४४)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
चतुर्दशोऽध्यायः ॥१४ ॥
Mahabharata - Anushaasana Parva - Chapter Footnotes

७-१४-३ यथा राज्यं प्रपास्यामि कामक्रोधविवर्जित इति पाठान्तरम्
। पास्यामि पालयिष्यामि। पा पालन इति धातोः। पादः कुम्भस्य
पूर्वतामिति। चतुर्भागादेको भागः पादः। कुम्भे एकपादोनतयोदकपूरिते
सति चतुर्थः पादः स्वयमेव पूर्यतामित्यर्थः। यथा
सत्यबलेनाग्निरनुष्णो भवति तद्वदित्यर्थः ॥

---

अनुससनपर्व-अध्यय०१५
॥ श्रीः ॥
१३.१५. अध्यायः १५

अथ दानधर्मपर्व ॥१ ॥
Mahabharata - Anushaasana Parva - Chapter Topics
भीष्मेण युधिष्ठिरंप्रति
भगवन्महिमप्रतिपादकव्यासवासुदेवसंवादानुवादः ॥१ ॥

Mahabharata - Anushaasana Parva - Chapter Text

भीष्म उवाच ।
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
मद्रराजस्य संवादं व्यासस्य च महात्मनः ॥१३-१५-१ (८१७४५)
वैताने कर्मणि तते कुन्तीपुत्र यथा पुरा ।
उक्तः स भगवान्यज्ञे तथा तत्राशृणोद्भवान् ॥१३-१५-२ (८१७४६)
मद्रराज उवाच। १३-१५-३क्ष् (६७८१)
कानि तीर्थानि भगवन्फलार्थाश्चेह केऽऽश्रमाः ।
क इज्यते कश्च यज्ञः को यूपः क्रमते च कः ॥१३-१५-३ (८१७४७)
कश्चाध्वरे शस्यते गीतिशब्दैः
कश्चाध्वरे गीयते वल्गुभाषैः ।
को ब्रह्मशब्दैः स्तुतिभिः स्तूयते च

कस्येह वै हविरध्वर्यवः कल्पयन्ति ॥ १३-१५-४ (८१७४८)
वर्णाश्रमे गोफले कश्च सोमे
कश्चोंकारः कश्च वेदार्थमार्गः ।
पृष्टस्तन्मे ब्रूहि सर्वं महर्षे
लोकज्येष्ठं कस्य विज्ञानमाहुः ॥ १३-१५-५ (८१७४९)
द्वैपायन उवाच। १३-१५-६क्ष् (६७८२)
लोकज्येष्ठं यस्य विज्ञानमाहु
र्योनिज्येष्ठं यस्य वदन्ति जन्म ।
पूतात्मानो ब्राह्मणा वेदमुख्या
अस्मिन्प्रश्नो दीयतां केशवाय ॥ १३-१५-६ (८१७५०)
ब्राह्मण उवाच। १३-१५-७क्ष् (६७८३)
बालो जात्या क्षत्रधर्मार्थशीलो
जातो देवक्यां शूरपुत्रेण वीर ।
वेत्तुं वेदानर्हते क्षत्रियो वै
दाशार्हाणामुत्तमः पुष्कराक्षः ॥ १३-१५-७ (८१७५१)
वासुदेव उवाच। १३-१५-८क्ष् (६७८४)
पाराशर्य ब्रूहि यद्ब्राह्मणेभ्यः
प्रीतात्मा वै ब्रह्मकल्पः सुमेधाः ।
पृष्टो यज्ञार्थं पाण्डवस्यातितेजा
एतच्छ्रेयस्तस्य लोकस्य चैव ॥ १३-१५-८ (८१७५२)
व्यास उवाच। १३-१५-९क्ष् (६७८५)
उक्तं वाक्यं यद्भवान्मामवोच-
त्प्रश्नं चित्रं नाहमत्रोत्सहेऽद्य ।
छेत्तुं विस्पष्टं तिष्ठति त्वद्विधे वै
लोकज्येष्ठे विश्वरूपे सुनाभे ॥ १३-१५-९ (८१७५३)
वासुदेव उवाच। १३-१५-१०क्ष् (६७८६)
तत्त्वं वाक्यं ब्रूहि यत्त्वं महर्षे
यस्मिन्कृष्णः प्रोच्यते वै यथावत् ।
प्रीतस्तेऽहं ज्ञानशक्त्या यथाव-
त्तस्मान्निर्देशे कर्मणां ब्रूहि सिद्धिम् ॥ १३-१५-१० (८१७५४)
वैशम्पायन उवाच। १३-१५-११क्ष् (६७८७)
उक्तवाक्ये सत्तमे यादवानां
कृष्णो व्यासः प्राञ्जलिर्वासुदेवम् ।
विप्रैः सार्धं पूजयन्देवदेवं
कृष्णं विष्णुं वासुदेवं बभाषे ॥ १३-१५-११ (८१७५५)
व्यास उवाच। १३-१५-१२क्ष् (६७८८)

१३-१५-१२ (८१७५६)
आनन्त्यं ते विश्वकर्मंस्तवैवं
रूपं पौराणं शाश्वतं च ध्रुवं च ।
कस्ते बुद्ध्येद्वेदवादेषु चैत-
ल्लोके ह्यस्मिञ्शासकस्त्वं पितेव ॥

---

अनुससनपर्व-अध्यय०१६
॥ श्रीः ॥
१३.१६. अध्यायः १६

अथ दानधर्मपर्व ॥ १ ॥
Mahabharata - Anushaasana Parva - Chapter Topics
भीष्मेण युधिष्ठिरंप्रति भगवन्महिमप्रतिपादकव्यासवचनानुवादः
॥ १ ॥

Mahabharata - Anushaasana Parva - Chapter Text

् भीष्म उवाच ।
द्वारकायां यथा प्राह पुराऽयं मुनिसत्तमः ।
वेदविप्रमयत्वं तु वासुदेवस्य तच्छृणु ॥१३-१६-१ (८१७५७)
यूपं विष्णुं वासुदेवं विजान-
न्सर्वान्विप्रान्बोधते तत्वदर्शि ।
विष्णुं क्रान्तं वासुदेवं विजान-
न्विप्रो विप्रत्वं गच्छते तत्वदर्शी ॥ १३-१६-२ (८१७५८)
विष्णुर्यज्ञस्त्विज्यते चापि विष्णुः
कृष्णो विष्णुर्यश्च कृत्स्नः प्रभुश्च ।
कृष्णो वेदाङ्गं वेदवादाश्च कृष्ण
एवं जानन्ब्राह्मणो ब्रह्म एति ॥ १३-१६-३ (८१७५९)
स्थानं सर्वं वैष्णवं यज्ञमार्गे
चातुर्होत्रं वैष्णवं तत्र कृष्णः ।
सर्वैर्भावैरिज्यते सर्वकामैः
पुण्याँल्लोकान्ब्राह्मणाः प्राप्नुवन्ति ॥ १३-१६-४ (८१७६०)
सोमं सद्भावाद्ये च जातं पिबन्ति
दीप्तिं कर्म ये विदानाश्चरन्ति ।
एकान्तमिष्टं चिन्तयन्तो दिविस्था-
स्ते वै स्थानं प्राप्नुवन्ति व्रतज्ञाः ॥ १३-१६-५ (८१७६१)

ओमित्येतद्व्याहरन्मानो न गच्छे-
दुर्गं पन्थानं पापकर्मापि विप्रः ।
सर्वं कृष्णं वासुदेवं हि विप्राः
कृत्वा ध्यानं दुर्गतिं न प्रयान्ति ॥ १३-१६-६ (८१७६२)
आज्यं यज्ञः स्रुक्स्रुवौ यज्ञदाता
इच्छा पत्नी पत्निशाला हवींषि ।
इध्याः पुरोडाशं सर्वदा होतृकर्ता
कृत्स्नं विष्णुं संविजानंस्तमेति ॥ १३-१६-७ (८१७६३)
योगेयोगे कर्मणां चाभिहारे
युक्ते वैताने कर्मणि ब्राह्मणस्य ।
पुष्ट्यर्थेषु प्राप्नुयात्कर्मसिद्धिं
शान्त्यर्थेषु प्राप्नुयात्सर्वशान्तिम्ट'॥ ॥ १३-१६-८ (८१७६४)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
षोडशोऽध्यायः ॥१६ ॥

---

अनुससनपर्व-अध्यय०१७
॥ श्रीः ॥
१३.१७. अध्यायः १७

अथ दानधर्मपर्व ॥१ ॥
Mahabharata - Anushaasana Parva - Chapter Topics
भीष्मेण युधिष्ठिरंप्रति भक्तिश्रद्धादीनां
भुक्तिसाधनताप्रतिपादकव्यासवाक्यानुवादः ॥१ ॥

Mahabharata - Anushaasana Parva - Chapter Text

ग्द्वैपायन उवाच ।
श्रद्धात्यागं निर्वृतिं चापि पूजां
सत्यं धर्मं यः कृतं चाभ्युपैति ।
कामद्वेषौ त्यज्य सर्वेषु तुल्यः
श्रद्धापूतः सर्वयज्ञेषु योग्यः ॥ १३-१७-१ (८१७६५)
यस्मिन्यज्ञे सर्वभूताः प्रहृष्टाः
सर्वे चारम्भाः शास्त्रदृष्टाः प्रवृत्ताः ।
धर्म्यैरर्थ्यैर्ये यजन्ते ध्रुवं ते
पूतात्मानो धर्ममेकं भजन्ते ॥ १३-१७-२ (८१७६६)

एकाक्षरं द्व्यक्षरमेकमेव
सदा यजन्ते नियताः प्रतीताः ।
दृष्ट्वा मनागर्चयित्वा स्म विप्राः
सतां मार्गं तं ध्रुवं सम्भजन्ते ॥ १३-१७-३ (८१७६७)
पापात्मानः क्रोधरगाभिभूताः
कृष्णे भक्ता नाम सङ्कीर्तयन्तः ।
पूतात्मानो यज्ञशीलाः सुमेधा
यज्ञस्यान्ते कीर्तिलोकान्भजन्ते ॥ १३-१७-४ (८१७६८)
एको वेदो ब्राह्मणानां बभूव
चतुष्पादस्त्रिगुणो ब्रह्मशीर्षः ।
पादंपादं ब्राह्मणा वेदमाहु-
स्त्रेताकाले तं च तं विद्धि शीर्षम् ॥' ॥ १३-१७-५ (८१७६९)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
सप्तदशोऽध्यायः ॥ १७ ॥

---

अनुससनपर्व-अध्यय०१८
॥ श्रीः ॥
१३.१८. अध्यायः १८

अथ दानधर्मपर्व ॥ १ ॥
Mahabharata - Anushaasana Parva - Chapter Topics
भीष्मेण युधिष्ठिरंप्रति
श्रीकृष्णमहिमप्रतिपादकव्यासमद्रराजसंवादानुवादः ॥ १ ॥

Mahabharata - Anushaasana Parva - Chapter Text

'द्वैपायन उवाच ।
सर्वे वेदाः सर्ववेद्याः सशास्त्राः
सर्वे यज्ञाः सर्व इत्यश्च कृष्णः ।
विदुः कृष्णं ब्राह्मणास्तत्वतो ये
तेषां राजन्सर्वयज्ञः समाप्तः ॥ १३-१८-१ (८१७७०)
ज्ञेयो योगी ब्राह्मणैर्वेदतत्वै-
रारण्यकैः सैष कृष्णः प्रभुत्वात् ।
सर्वान्यज्ञान्ब्राह्मणान्ब्रह्म चैव
व्याप्यातिष्ठद्देवदेवस्त्रिलोके ॥ १३-१८-२ (८१७७१)

स एष देवः शक्रमीशं यजानं
प्रीत्या प्राह क्रतुयष्टारमग्र्यम्
न मा शक्रो वेदवेदार्थतत्वा-
ज्ञक्तो भक्त्या शुद्धभावप्रधानः ॥ १३-१८-३ (८१७७२)
मा जानन्ते ब्रह्मशीर्षं वरिष्ठं
विश्वे विश्वं ब्रह्मयोनिं ह्ययोनिम् ।
सर्वत्राहं शाश्वतः शाश्वतेशः
कृत्स्नो वेदोऽग्निर्निर्गुणोऽनन्ततेजाः ॥ १३-१८-४ (८१७७३)
सर्वे देवा वासुदेवं यजन्ते
ततो बुद्ध्या मार्गमाणास्तनूनाम् ।
सर्वान्कामान्प्राप्नुवन्ते विशालां-
स्त्रैलोक्येऽस्मिन्कृष्णनामाभिधानात् ॥ १३-१८-५ (८१७७४)
कृष्णो यज्ञैरिज्यते यायजूकैः
कृष्णो वीर्यैरिज्यते विक्रमद्भिः ।
कृष्णो वाक्यैरिज्यते सम्मृशानैः
कृष्णो मुक्तैरिज्यते वीतमोहैः ॥ १३-१८-६ (८१७७५)
विद्यावन्तः सोमपा ये विपापा
इष्ट्वा यज्ञैर्गोचरं प्रार्थयन्ते। १३-१८-७ (८१७७६)
भवगानुवाच ।
सर्वं क्रान्तं देवलोकं विशाल-
मन्ते गत्वा मुक्तिलोकं भजन्ति ॥ १३-१८-७क्ष् (६७८९)
एवं सर्वे त्वाश्रमाः सुव्रता ये
मां जानन्तो यान्ति लोकानदीनान् ।
ये ध्यानदीक्षामुद्वहन्तो विपापा
ज्योतिर्भूत्वा देवलोकं भजन्ति ॥ १३-१८-८ (८१७७७)
पूज्यन्ते मां पूजयन्तः प्रहृष्टा
मां जानन्तः श्रद्धया वासुदेवम् ।
भक्त्या तुष्टोऽहं तस्य सत्त्वं प्रयच्छे
सत्वस्पृष्टो वीतमोहोऽयमेति ॥ १३-१८-९ (८१७७८)
द्वैपायन उवाच। १३-१८-१०क्ष् (६७९०)
ज्योतींषि शुक्तानि च यानि लोके
त्रयो लोका लोकपालास्त्रयश्च ।
त्रयोऽग्नयश्चाहुतयश्च पञ्च
सर्वे देवा देवकीपुत्र एव ॥ १३-१८-१० (८१७७९)
भीष्म उवाच। १३-१८-११क्ष् (६७९१)
व्यासस्यैतद्वचः श्रुत्वा मद्रराजः सहर्षिभिः ।

व्यासं कृष्णं च विधिवत्प्रीतात्मा प्रत्यपूजयत् ॥ १३-१८-११ (८१७८०)
वैशम्पायन उवाच। १३-१८-१२क्ष् (६७९२)
कविः प्रयातस्तु महर्षिपुत्रो
द्वैपायनस्तद्वचनं निशम्य ।
जगाम पृथ्वीं शिरसा महात्मा
नमश्च कृष्णाय चकार भीष्मः ॥' ॥ १३-१८-१२ (८१७८१)

इति श्रीमन्महाभारते अनुशासनपर्वणी दानधर्मपर्वणि
अष्टादशोऽध्यायः ॥ १८ ॥

---

अनुससनपर्व-अध्यय०१९
॥ श्रीः ॥
१३.१९. अध्यायः १९

अथ दानधर्मपर्व ॥ १ ॥
Mahabharata - Anushaasana Parva - Chapter Topics
श्रीकृष्णेन भीष्मंप्रति युधिष्ठिराय गरुडोपाख्यानकथनचोदना ॥ १ ॥

Mahabharata - Anushaasana Parva - Chapter Text

ग्युधिष्ठिर उवाच ।
गरुडः पक्षिणां श्रेष्ठ इति पूर्वं पितामह ।
उक्तस्त्वया महाबाहो श्वेतवाहं प्रशंसता ॥ १३-१९-१ (८१७८२)
अत्र कौतूहल इति श्रवणे जायते मतिः ।
कथं गरुत्मान्पक्षीणां श्रैष्ठ्यं प्राप परन्तप ॥ १३-१९-२ (८१७८३)
सुपर्णो वैनतेयश्च केन शत्रुश्च भोगिनाम् ।
किंवीर्यः किंबलश्चासौ वक्तुमर्हसि भारत ॥ १३-१९-३ (८१७८४)
भीष्म उवाच। १३-१९-४क्ष् (६७९३)
वासुदेव महाबाहो देवकी सुप्रजास्त्वया ।
श्रुतं ते धर्मराजस्य मम हर्षविवर्धन ॥ १३-१९-४ (८१७८५)
सुपर्णं शंस इत्येव मामाह कुरुनन्दनः ।
अस्य प्रवक्तुमिच्छामि त्वयाऽऽज्ञप्तो महाद्युते ॥ १३-१९-५ (८१७८६)
त्वं हि शौरे महाबाहो सुपर्णः प्रोच्यसे पुरा ।
अनादिनिधने काले गरुडश्चासि केशव ॥ १३-१९-६ (८१७८७)
तस्मात्पूर्वं प्रसाद्य त्वां धर्मपुत्राय धीमते ।
गरुडं पततांश्रेष्ठं वक्तुमिच्छामि माधव ॥ १३-१९-७ (८१७८८)

वासुदेव उवाच। १३-१९-८क्ष् (६७९४)
यथैव मां भवान्वेद तथा वेद युधिष्ठिरः ।
यथा च गरुडो जातस्तथाऽस्मै ब्रूहि तत्वतः'॥ ॥१३-१९-८ (८१७८९)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
एकोनविंशोऽध्यायः ॥१९ ॥

---

अनुससनपर्व-अध्यय०२०
॥ श्रीः ॥
१३.२०. अध्यायः २०

अथ दानधर्मपर्व ॥१ ॥
Mahabharata - Anushaasana Parva - Chapter Topics
कश्यपेन स्वभार्ययोः कद्रूविनतयोः क्रमेणि
पुत्रसहस्रतद्द्वयलाभरूपवरदानम् ॥१ ॥
कद्रवा अण्डसहस्रात्सर्पसहस्रविनिर्गमे उत्कण्ठितया विनतया
स्वीयाण्डद्वये एकतराण्डविभेदनम् ॥२ ॥
अकालेऽण्डभेदनादसमग्राङ्गतया जातेनारूपेण विनतायै
दास्यप्राप्तिरूपशापदानम् ॥३ ॥

Mahabharata - Anushaasana Parva - Chapter Text

ग्भीष्म उवाच ।
युधिष्ठिर महाबाहो शृणु राजन्यथातथम् ।
गरुडं पक्षिणां श्रेष्ठं वैनतेयं महाबलम् ॥१३-२०-१ (८१७९०)
तथा च गरुडो राजन्सुपर्णश्च यथाऽभवत् ।
यथा च भुजगान्हन्ति तथा मे ब्रुवतः शृणु ॥१३-२०-२ (८१७९१)
पुराऽहं तात रामेणि जामदग्न्येन धीमता ।
कैलासशिखरे रम्ये मृगान्निघ्नन्सहस्रशः ॥१३-२०-३ (८१७९२)
तमहं तात दृष्टैव शस्त्रण्युत्सृज्य सर्वशः ।
अभिवाद्य पूर्वं रामाय विनयेनोपतस्थिवान् ॥१३-२०-४ (८१७९३)
तमहं कथान्ते वरदं सुपर्णस्य बलौजसी ।
अपृच्छं स च मां प्रीतः प्रत्युवाच युधिष्ठिर ॥१३-२०-५ (८१७९४)
कद्रूश्च विनता चास्तां प्रजापतिसुते उभे ।
ते तु धर्मेणोपयेमे मारीचः कश्यपः प्रभुः ॥१३-२०-६ (८१७९५)
प्रादात्ताभ्यां वरं प्रीतो भार्याभ्यां सुमहातपाः ॥ १३-२०-७ (८१७९६)

तत्र कद्रूर्वरं वव्रे पुत्राणां दशतः शतम् ।
तुल्यतेजःप्रभावानां सर्वेषां तुल्यजन्मनाम् ॥ १३-२०-८ (८१७९७)
विनता तु वव्रे द्वौ पुत्रौ वीरौ भरतसत्तम ।
कद्रूपुत्रसहस्रेण तुल्यवेगपराक्रमौ ॥ १३-२०-९ (८१७९८)
स तु ताभ्यां वरं प्रादात्तथेत्युक्त्वा महातपाः ।
जनयामास तान्पुत्रां स्ताभ्यामासीद्यथा पुरा ॥ १३-२०-१० (८१७९९)
कद्रूः प्रजज्ञे ह्यण्डानां तथैव दशतःशतम् ।
अण्डे द्वे विनता चैव दर्शनीयतरे शुभे ॥ १३-२०-११ (८१८००)
तानि त्वण्डानि तु तयोः कद्रूविनतयोर्द्वयोः ।
सोपस्वेदेषु पात्रेषु निदधुः परिचारिणः ॥ १३-२०-१२ (८१८०१)
निस्सरन्ति तदाऽण्डेभ्यः कद्रूपुत्रा भुजङ्गमाः ।
पञ्चवर्षशते काले दृष्ट्वाऽमोघबलौजसः ॥ १३-२०-१३ (८१८०२)
विनता तेषु जातेषु पन्नगेषु महात्मसु ।
विपुत्रा पुत्रसंतापाद्दण्डमेकं बिभेद ह ॥ १३-२०-१४ (८१८०३)
किमनेन करिष्येऽहमिति वाक्यमभाषत ।
नहि पञ्चशते काले पुरा पुत्रौ ददर्श सा ॥ १३-२०-१५ (८१८०४)
सापश्यदण्डान्निष्क्रान्तं विनापत्रं मनस्विनम् ।
पूर्वकायोपसम्पन्नं वियुक्तमितरेण ह ॥ १३-२०-१६ (८१८०५)
दृष्ट्वा तु तं तथारूपमसमग्रशरीरिणम् ।
पुत्रदुःखान्विताऽशोचत्स च पक्षी तथा गतः ॥ १३-२०-१७ (८१८०६)
अब्रवीच्च मुदा युक्तः पर्यश्रुनयनस्तदा ।
मातरं च पलाशी ह हतोऽहमिति चासकृत् ॥ १३-२०-१८ (८१८०७)
न त्वया काङ्क्षतः कालो यावानेवात्यगात्पुरा ।
आवां भवाय पुत्रौ ते श्वसनाद्बलवत्तरौ ॥ १३-२०-१९ (८१८०८)
ईर्ष्याक्रोधाभिभूतत्वाद्योहमेवं कृतस्त्वया ।
तस्मात्त्वमपि मे मातर्दासीभावं गमिष्यसि ॥ १३-२०-२० (८१८०९)
पञ्चवर्षशतानि त्वं स्पर्धसे वै यया सह ।
दासी तस्या भवित्रीति साश्रुपातमुवाच ह ॥ १३-२०-२१ (८१८१०)
एष चैव महाभागे बली बलवतांवरः ।
मोक्षयिष्यति ते मातर्दासीभावान्ममानुजः ॥' ॥ १३-२०-२२ (८१८११)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि विंशोऽध्यायः ॥ २० ॥

Mahabharata - Anushaasana Parva - Chapter Footnotes

७-२०-३ रामेण सङ्गत इति शेषः ॥

अनुससनपर्व-अध्यय०२१
॥ श्रीः ॥
१३.२१. अध्यायः २१

अथ दानधर्मपर्व ॥ १ ॥
Mahabharata - Anushaasana Parva - Chapter Topics
वर्षसहस्रान्ते परिणतादण्डाद्विनिर्गतेन गरुडेन मातृपार्श्वं विहाय चिराद्देशान्तरेष्वेव सञ्चरणम् ॥ १ ॥
कदाचनं कद्रूविनताक्ष्यां समुद्रान्ते उच्चैरश्रवसो हयस्य दर्शनम् ॥ २ ॥
कद्रवा हयस्य वर्णं पृष्टया विनतया सर्वाङ्गश्वेतत्वकथनम्
। ग्कद्रवा तु नीलवालत्वकथनम् ॥ ३ ॥
' तथा विवदमानाभ्यां ताभ्यां स्वोक्तव्यत्यासे अन्यतरयाऽन्यतरस्या दास्यवहनरूपपणबन्धनम् ॥ ४ ॥

Mahabharata - Anushaasana Parva - Chapter Text

ग्भीष्म उवाच ।
विनता पुत्रशोकार्ता शापाद्भीता च भारत ।
प्रतीक्षते स्म तं कालं यः पुत्रोक्तस्तदाऽभवत् ॥ १३-२१-१ (८१८१२)
ततोऽप्यतीते पञ्चशते वर्षाणां कालसंयुगे ।
गरुडोऽथ महावीर्यो जज्ञे भुजगभुग्बली ॥ १३-२१-२ (८१८१३)
बन्धुरास्यः शिखी पत्रकोशः कूर्मनखो महान् ।
रक्ताक्षः संहतग्रीवो ह्रस्वपादो महाशिराः ॥ १३-२१-३ (८१८१४)
यस्त्वण्डात्स विनिर्भिन्नो निष्क्रान्तो भरतर्षभ ।
विनतापूर्वजः पुत्रः सोऽरुणो दृश्यते दिवि ॥ १३-२१-४ (८१८१५)
पूर्वां दिशामभिप्रेत्य सूर्यस्योदयनं प्रति ।
अरुणोऽरुणसंकाशो नाम्ना चैवारुणः स्मृतः ॥ १३-२१-५ (८१८१६)
जातमात्रस्तु विहगो गरुडः पन्नगाशनः ।
विहाय मातरं क्षिप्रमगमत्सर्वतो दिशः ॥ १३-२१-६ (८१८१७)
स तदा ववृधेऽतीव सर्वकामैः कदाऽर्चितः ।
पितामहविसृष्टेन भोजनेन विशांपते ॥ १३-२१-७ (८१८१८)
तस्मिंश्च विहगे तत्र यथाकामं विवर्धति ।
कद्रूश्च विनता चैवागच्छतां सागरं प्रति ॥ १३-२१-८ (८१८१९)
ददृशाते तु ते यान्तमुच्चैश्श्रवसमन्तिकात् ।

स्नात्वोपवृत्तं त्वरितं पीतवन्तं च वाजिनम् ॥ १३-२१-९ (८१८२०)
ततः कद्रूर्हसन्त्येव विनतामिदमब्रवीत् ।
हयस्य वर्णः को न्वत्र ब्रूहि यस्ते मतः शुभे ॥ १३-२१-१० (८१८२१)
विनतोवाच। १३-२१-११क्ष् (६७९५)
एकवर्णो हयो राज्ञि सर्वश्वेतो मतो मम ।
वर्णं वा कीदृशं तस्य मन्यते त्वं मनस्विनि ॥ १३-२१-११ (८१८२२)
कद्रूरुवाच। १३-२१-१२क्ष् (६७९६)
सर्वश्वेतो मतस्तुभ्यं य एष हयसत्तमः ।
ब्रूहि कल्याणि दीव्यावो वर्णान्यत्वेन भामिनि ॥ १३-२१-१२ (८१८२३)
विनतोवाच। १३-२१-१३क्ष् (६७९७)
यद्यार्ये दीव्यसि त्वं मे कः पणो नो भविष्यति ।
सा तज्ज्ञात्वा पणेयं वै ज्ञात्वा तु विपणे त्वया ॥ १३-२१-१३ (८१८२४)
कद्रूरुवाच। १३-२१-१४क्ष् (६७९८)
जिता दासी भवेर्मे त्वमहं चाप्यसितेक्षणे ।
नैकवर्णैकवर्णत्वे विनते रोचते च ते ॥ १३-२१-१४ (८१८२५)
रोचते मे पणे राज्ञि दासीत्वेन न संशयः ।
सत्यमातिष्ठ भद्रं ते सत्ये स्थास्यामि चाप्यहम्'॥ ॥ १३-२१-१५ (८१८२६)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
एकविंशोऽध्यायः ॥ २१ ॥

---

अनुससनपर्व-अध्यय०२२
॥ श्रीः ॥
१३.२२. अध्यायः २२

अथ दानधर्मपर्व ॥ १ ॥
Mahabharata - Anushaasana Parva - Chapter Topics
कद्रवा स्वपुत्रान्प्रति विनतया सह स्वस्य
पणबन्धननिवेदनपूर्वकमुच्चैरश्रवसो वाले स्वाङ्गवेष्टनेन
नैल्यसम्पादनचोदना ॥ १ ॥

Mahabharata - Anushaasana Parva - Chapter Text

ग्भीष्म उवाच ।
विनता तु तथेत्युक्त्वा कृतसंशयना पणे ।
कद्रूरपि तथेत्युक्त्वा पुत्रानिदमुवाच ह ॥ १३-२२-१ (८१८२७)

मया कृतः पणः पुत्रा मिथो विनतया सह ।
उच्चैरश्रवसि गान्धर्वे तच्छृणुध्वं भुजङ्गमाः ॥ १३-२२-२ (८१८२८)
अब्रवं नैकवर्णं तं सैकवर्णमथाब्रवीत् ।
जिता दासी भवेत्पुत्राः सा वाऽहं वा न संशयः ॥ १३-२२-३ (८१८२९)
एकवर्णश्च वाजी स चन्द्रकोकनदप्रभः ।
साऽहं दासी भविष्यामि जिता पुत्रा न संशयः ॥ १३-२२-४ (८१८३०)
ते यूयमश्वप्रवरमाविशध्वमतन्द्रिताः ।
सर्वश्वेतं वालधिषु वाला भूत्वाञ्जनप्रभाः ॥ १३-२२-५ (८१८३१)
सर्पा ऊचुः । १३-२२-५क्ष् (६७९९)
निकृत्या न जयः श्रेयान्मातः सत्या गिरः शृणु ।
आयत्यां च तदात्वे च न च धर्मोऽत्र विद्यते ॥ १३-२२-६ (८१८३२)
सा त्वं धर्मादपेतं वै कुलस्यैवाहितं तव ।
निकृत्या विजयं मातर्मा स्म कार्षीः कथञ्चना ॥ १३-२२-७ (८१८३३)
यद्यधर्मेण विजयं वयं काङ्क्षामहे क्वचित् ।
त्वया नाम निवार्याः स्म मा कुरुध्वमिति ध्रुवम् ॥ १३-२२-८ (८१८३४)
सा त्वमस्मानपि सतो विपापानृजुबुद्धिनः ।
कल्मषेणाभिसंयोक्तुं काङ्क्षसे लोभमोहिता ॥ १३-२२-९ (८१८३५)
ते वयं त्वां परित्यज्य द्रविष्याम दिशो दश ।
यत्र वाक्यं न ते मातः पुनः श्रोष्याम ईदृशम् ॥ १३-२२-१० (८१८३६)
गुरोरप्यवलिप्तस्य कार्याकार्यमजानतः ।
उत्पथं प्रतिपन्नस्य परित्यागो विधीयते ॥ १३-२२-११ (८१८३७)
कद्रूरुवाच । १३-२२-१२क्ष् (६८००)
शृणोमि विविधा वाचो हेतुमत्यः समीरिताः ।
वक्रमार्गनिवृत्त्यर्थं तदहं वो न रोचये ॥ १३-२२-१२ (८१८३८)
न च तत्पणितं मन्दाः शक्यं जेतुमतोऽन्वथा ।
जिते निकृत्या श्रुत्वैतत्क्षेमं कुरुत पुत्रकाः ॥ १३-२२-१३ (८१८३९)
श्वोऽहं प्रभातसमये जिता धर्मेण पुत्रकाः ।
शैलूषिणी भविष्यामि विनताया न संशयः ॥ १३-२२-१४ (८१८४०)
इह चामुत्र चार्थाय पुत्रानिच्छन्ति मातरः ।
सेयमीहा विपन्ना मे युष्मानासाद्य सङ्गताम् ॥ १३-२२-१५ (८१८४१)
इह वा तारयेत्पुत्रः प्रेत्य वा तारयेत्पितॄन् ।
मात्र चित्रं भवेकिञ्चित्पुनातीति च पुत्रकः ॥ १३-२२-१६ (८१८४२)
ते यूयं तारणार्थाय मम पुत्रा मनोजवाः ।
आविशध्वं हयश्रेष्ठं वाला भूत्वाऽञ्जनप्रभाः ॥ १३-२२-१७ (८१८४३)
जानाम्यधर्मं सकलं विजिता विनता भवेत् ।
निकृत्या दासभावस्तु युष्मानप्यवपीडयेत् ॥ १३-२२-१८ (८१८४४)

निकृत्या विजयो वेति दासत्वं वा पराभवे ।
उभयं निश्चयं कृत्वा जयो वै धार्मिको वरः ॥१३-२२-१९ (८१८४५)
यद्यप्यधर्मो विजयो युष्मानेव स्पृशेत्पुनः ।
गुरोर्वचनमास्थाय धर्मो वा सम्भविष्यति'॥ ॥१३-२२-२० (८१८४६)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
द्वाविंशोऽध्यायः ॥ २२ ॥

---

अनुससनपर्व-अध्यय०२३
॥ श्रीः ॥
१३.२३. अध्यायः २३

अथ दानधर्मपर्व ॥ १ ॥
Mahabharata - Anushaasana Parva - Chapter Topics
कद्रवा स्ववचनतिरस्कारिणः कांश्चन पुत्रान्प्रति जनमेजयसर्पसत्रे
निधनरूपशापदानम् ॥ १ ॥
कैश्चन सर्पैरुच्चैरश्रवसो वाले स्वाङ्गवेष्टनेन
नैल्यसम्पादनम् ॥ २ ॥
ततः कद्रूचोदनया हयवाले नैल्यदर्शिन्या विनतया तद्दास्याङ्गीकरणम्
॥ ३ ॥

Mahabharata - Anushaasana Parva - Chapter Text

ग्भीष्य उवाच ।
श्रुत्वा तु वचनं मातुः क्रुद्धायास्ते भुजङ्गमाः ।
कृच्छ्रेणैवान्वमोदन्त केचिद्भित्वा दिशो गताः ॥१३-२३-१ (८१८४७)
ये प्रतस्थुर्दिशस्तत्र क्रुद्धा तानशपद्भृशम् ।
भुजङ्गमानां माताऽसौ कद्रूर्वैरकरी तदा ॥१३-२३-२ (८१८४८)
उत्पत्स्यति हि राजन्यः पाण्डवो जनमेजयः ।
चतुर्थो धन्विनां श्रेष्ठात्कुन्तीपुत्राद्धनञ्जयात् ॥१३-२३-३ (८१८४९)
स सर्पसत्रमाहर्ता क्रुद्धः कुरुकुलोद्वहः ।
तस्मिन्सत्रेऽग्निना युष्मान्पञ्चत्वमुपनेष्यति ॥१३-२३-४ (८१८५०)
एवं क्रुद्धाऽशपन्माता पन्नगान्धर्मचारिणः ।
गुरोः परित्यागकृतं नैतदन्यद्भविष्यति ॥१३-२३-५ (८१८५१)
एवं शप्ता दिशः प्राप्ताः पन्नगा धर्मचारिणः ।
विहाय मातरं क्रुद्धा गता वैरकरीं तदा ॥१३-२३-६ (८१८५२)

तत्र ये वृजिनं तस्या अनापन्ना भुजङ्गमाः ।
ते तस्य वाजिनो वाला बभूवुरसितप्रभाः ॥ १३-२३-७ (८१८५३)
तान्दृष्ट्वा वालधिस्थांश्च पुत्रान्कद्रूरथाब्रवीत् ।
विनतामथ संहृष्टा हयोसौ दृश्यतामिति ॥ १३-२३-८ (८१८५४)
एकवर्णो न वा भद्रे पणो नौ सुव्यवस्थितः ।
उतकादुत्तरन्तं तं हयं चैव च भामिनि ॥ १३-२३-९ (८१८५५)
सा त्ववक्रमतिर्देवी विनता जिह्मगामिनीम् ।
अब्रवीद्भगिनीं किञ्चिद्विहसन्तीव भारत ॥ १३-२३-१० (८१८५६)
हन्त पश्याव गच्छावः सुकृतो नौ पणः शुभे ।
दासी वा ते भविष्यामि त्वं वा दासी भविष्यसि ॥ १३-२३-११ (८१८५७)
एवं स्थिरं पणं कृत्वा हयं ते तं ददर्शतुः ।
कृत्वा साक्षिणमात्मानं भगिन्यौ कुरुसत्तम ॥ १३-२३-१२ (८१८५८)
सा दृष्ट्वैव हयं मन्दं विनता शोककर्शिता ।
श्वेतं चन्द्रांशुवालं तं कालवालं मनोजवम् ॥ १३-२३-१३ (८१८५९)
तत्र सा व्रीलिता वाक्यं विनता साश्रुबिन्दुका ।
उवाच कालवालोऽयं तुरगो विजितं त्वया ॥ १३-२३-१४ (८१८६०)
दासी मां प्रेषय स्वार्थे यथा कामवशां शुभे ।
दास्यश्च कामकारा हि भर्तृणां नात्र संशयः'॥ ॥ १३-२३-१५ (८१८६१)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
त्रयोविंशोऽध्यायः ॥ २३ ॥
Mahabharata - Anushaasana Parva - Chapter Footnotes

७-२३-९ हयमुद्दिश्य नौ पणः सुव्यवस्थित इति शेषेणान्वयः ॥

---

अनुससनपर्व-अध्यय०२४
॥ श्रीः ॥
१३.२४. अध्यायः २४

अथ दानधर्मपर्व ॥ १ ॥
Mahabharata - Anushaasana Parva - Chapter Topics
नारदेन गरुडंप्रति विनतायाः कद्रूदास्यनिवेदनम् ॥ १ ॥
तच्छ्रवणखिन्नेन तेन कद्रूंप्रति स्वमातुर्दास्यान्मोचनयाचना ॥ २ ॥
कद्र्वा गरुडंप्रत्यमृतानयने मातुर्दास्यान्मोचनोक्तिः ॥ ३ ॥

Mahabharata - Anushaasana Parva - Chapter Text

ग्भीष्म उवाच ।
ततः कद्रूर्हसन्ती च विनतां धर्मचारिणीम् ।
दासीवत्प्रेषयामास सा च सर्वं चकार तत् ॥ १३-२४-१ (८१८६२)
न विवर्णा न संक्षुब्धा न च क्रुद्धा न दुःखिता ।
प्रेष्यकर्म चकारास्या विनता कमलेक्षणा ॥ १३-२४-२ (८१८६३)
इमा दिशश्चतस्रोऽस्याः प्रेष्यभावेन वर्तिताः ।
अथ स्म वैनतेयं वै बलदर्पौ समीयतुः ॥ १३-२४-३ (८१८६४)
तं दर्पवशमापन्नं परिधावन्तमन्तिकात् ।
ददर्श नारदो राजन्देवर्षिर्दर्पसंयुतम् ॥ १३-२४-४ (८१८६५)
तमब्रवीच्च देवर्षिर्नारदः प्रहसन्निव ।
किं दर्पवशमापन्नो न वै पश्यसि मातरम् ॥ १३-२४-५ (८१८६६)
बलेन दृप्तः सततमहंमानकृतः सदा ।
दासीं पन्नगराजस्य मातुरन्तर्गृहे सतीम् ॥ १३-२४-६ (८१८६७)
तमब्रवीद्विनतेयः कर्म किं तन्महामते ।
जनयित्री मयि सुते जाता दासी तपस्विनी ॥ १३-२४-७ (८१८६८)
अथाब्रवीदृषिर्वाक्यं दीव्यती विजिता खग ।
निकृत्या पन्नगेन्द्रस्य मात्रा पुत्रैः पुरा सह ॥ १३-२४-८ (८१८६९)
गरुड उवाच। १३-२४-९क्ष् (६८०१)
कथं जिता निकृत्या सा भगवञ्जननी मम ।
ब्रूहि तन्मे यथावृत्तं श्रुत्वा वेत्स्ये ततः परम् ॥ १३-२४-९ (८१८७०)
ततस्तस्य यथावृत्तं सर्वं तन्नारदस्तदा ।
आचख्यौ भरतश्रेष्ठ यथावृत्तं पतत्रिणः ॥ १३-२४-१० (८१८७१)
तच्छ्रुत्वा वैनतेयस्य कोपो हृदि समाविशत् ।
जगर्हे पन्नगान्सर्वान्मात्रा सह परंतपः ॥ १३-२४-११ (८१८७२)
ततस्तु रोषाद्दुःखाच्च तूर्णमुत्पत्यक पक्षिराट् ।
जगाम यत्र माताऽस्य कृच्छ्रे महति वर्तते ॥ १३-२४-१२ (८१८७३)
तत्रापश्यत्ततो दीनां जटिलां मलिनां कृशाम् ।
तोयदेन प्रतिच्छन्नां सूर्याभामिव मातरम् ॥ १३-२४-१३ (८१८७४)
तस्य दुःखाच्च रोषाच्च नेत्राभ्यामश्रु चास्रवत् ।
प्रवृत्तिं च निवृत्तिं च पौरुषे प्रतितस्थुषः ॥ १३-२४-१४ (८१८७५)
अनुक्त्वा मातरं किञ्चित्पतत्रिवरपुङ्गवः ।
कद्रूमेव स धर्मात्मा वचनं प्रत्यभाषत ॥ १३-२४-१५ (८१८७६)
यदि धर्मेण मे माता जिता यद्यप्यधर्मतः ।
ज्येष्ठा त्वमसि मे माता धर्मः सर्वः स मे मतः ॥ १३-२४-१६ (८१८७७)
इयं तु मे स्यात्कृपणा मयि पुत्रेऽम्ब दुःखिता ।

अनुजानीहि तां साधु मत्कृते धर्मदर्शिनि ॥ १३-२४-१७ (८१८७८)
कद्रूः श्रुत्वास्य तद्वाक्यं वैनतेयस्य धीमतः ।
उवाच वाक्यं दुष्प्रज्ञा परीता दुःखमूर्च्छिता ॥ १३-२४-१८ (८१८७९)
नाहं तव न ते मातुर्वैनतेय कथञ्चन ।
कुर्यां प्रियमनिष्टात्मा मां ब्रवीषि खग द्विजा ॥ १३-२४-१९ (८१८८०)
तां तदा ब्रुवतीं वाक्यमनिष्टं क्रूरभाषिणीम् ।
दारुणां सूनृताभिस्तामनुनेतुं प्रचक्रमे ॥ १३-२४-२० (८१८८१)
गरुड रुवाच। १३-२४-२१क्ष् (६८०२)
ज्येष्ठा त्वमसि कल्याणि मातुर्मे भामिनि प्रिया ।
सोदर्या मम चासि त्वं ज्येष्ठा माता न संशयः ॥ ७--२४-२२क्ष्
कद्रूरुवाच। १३-२४-२१ (८१८८२)
विहङ्गम यथाकामं गच्छ कामगम द्विज ।
सूनृताभिस्त्वया माता नादासी शक्यमण्डज ॥ १३-२४-२२ (८१८८३)
अमृतं यद्याहरेस्त्वं विहङ्गं जननीं तव ।
अदासीं मम पश्येमां वैनतेय न संशयः ॥ ॥ १३-२४-२३ (८१८८४)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
चतुर्विंशोऽध्यायः ॥ २४ ॥

---

अनुससनपर्व-अध्यय०२५
॥ श्रीः ॥
१३.२५. अध्यायः २५

अथ दानधर्मपर्व ॥ १ ॥
Mahabharata - Anushaasana Parva - Chapter Topics
कद्रवाऽमृताहरणं चोदितेन गरुडेन स्वपितरि कश्यपे तन्निवेदनम् ॥ १ ॥
तेन तस्य दुष्करत्वकथने गरुडेन स्वेन तस्य सुकरत्वोक्तिः ॥ २ ॥
कश्यपेन गरुडंप्रति गजकच्छपवृत्तान्तकथनपूर्वकं
तयोर्भक्षणाद्बलाप्यायनसम्पादनेनामृताहरणचोदना ॥ ३ ॥

Mahabharata - Anushaasana Parva - Chapter Text

ग्भीष्म उवाच ।
तथेत्युक्त्वा तु विहगः प्रतिज्ञाय महाद्युतिः ।
अमृताहरणे वाचं ततः पितरमब्रवीत् ॥ १३-२५-१ (८१८८५)
कामं वै सूनृता वाचो विसृज्य च मुहुर्मुहुः ।

यच्चाप्यनुज्ञां मातुर्वै न च सा ह्यनुमन्यते ॥ १३-२५-२ (८१८८६)
सा मा बहुविधा वाचो वज्रकल्पा विसृज्य वै ।
भगवन्विनता दासी मम माता महाद्युते ॥ १३-२५-३ (८१८८७)
कद्रूः प्रेषयते चैव दासीयमिति चाब्रवीत् ।
आहरामृतमित्येव मोक्ष्यते विनता ततः ॥ १३-२५-४ (८१८८८)
सोहं मातृविमोक्षार्थमाहरिष्य इति ब्रुवन् ।
अमृतं प्रार्थितस्तूर्णमाहर्तुं प्रतिनन्द्य वै ॥ १३-२५-५ (८१८८९)
पितोवाच। १३-२५-६क्ष् (६८०३)
अमृतं तात दुष्प्रापं देवैरपि कुतस्त्वया ।
रक्ष्यते हि भृशं पुत्र रक्षिभिस्तन्निबोध मे ॥ १३-२५-६ (८१८९०)
गुप्तमद्भिर्भृशं साधु सर्वतः परिवारितम् ।
अनन्तरमथो गुप्तं ज्वलता जातवेदसा ॥ १३-२५-७ (८१८९१)
ततः शतसहस्राणि अयुतान्यर्बुदानि च ।
रक्षन्त्यमृतमत्यन्तं किङ्करा नाम राक्षसाः ॥ १३-२५-८ (८१८९२)
तेषां शक्त्यृष्टिशूलांश्च शतघ्न्यः पट्टसास्तथा ।
आयुधा रक्षिणां तात वज्रकल्पाः शिलास्तथा ॥ १३-२५-९ (८१८९३)
ततो जालेन महता अवनद्धं समन्ततः ।
अयस्मयेन वै तात वृत्रहन्तुः स्म शासनात् ॥ १३-२५-१० (८१८९४)
तत्त्वमेवंविधं तात कथं प्रार्थयसेऽमृतम् ।
सुरक्षितं वज्रभृतां वैनतेय विहङ्गम ।
इन्द्रेण देवैर्नागैश्च खड्गैर्गिरिजलादिभिः ॥ १३-२५-११ (८१८९५)
गरुड उवाच। १३-२५-१३क्ष् (६८०४)
पुत्रगृद्ध्या ब्रवीष्येतच्छृणु तात विनिश्चयम् ।
बलवानुपायवानस्मि भूयः किं करवाणि ते ॥ १३-२५-१२ (८१८९६)
तमब्रवीत्पिता हृष्टः प्रहसन्वै पुनः पुनः ।
यदि तौ भक्षयेस्तात क्रूरौ कच्छपवारणौ ॥ १३-२५-१३ (८१८९७)
तथा बलममेयं ते भविता तन्न संशयः ।
अमृतस्यैव चाहर्ता भविष्यसि न संशयः ॥ १३-२५-१४ (८१८९८)
गरुड उवाच। १३-२५-१५क्ष् (६८०५)
क्व तौ क्रूरौ महाभाग वर्तेते हस्तिकच्छपौ ।
भक्षयिष्याम्यहं तात बलस्याप्यायनं प्रति ॥ १३-२५-१५ (८१८९९)
कश्यप उवाच। १३-२५-१६क्ष् (६८०६)
पर्वतो वै समुद्रान्ते नभः स्तब्ध्वेव तिष्ठति ।
उरगो नाम दुष्प्रापः पुरा देवगणैरपि ॥ १३-२५-१६ (८१९००)
गोरुतानि स विस्तीर्णः पुष्पितद्रुमसानुमान् ।
तत्र पन्थाः कृतस्तात कुञ्जरेण बलीयसा ॥ १३-२५-१७ (८१९०१)

गोरुतान्युच्छ्रयस्तस्य नव सप्त च पुत्रक ।
गच्छताऽगच्छता चैव क्षपितः स महागिरिः ॥ १३-२५-१८ (८१९०२)
तावान्भूमिसमस्तात कृतः पन्थाः समुत्थितः ।
तेन गत्वा स मातङ्गः पिपासुर्युद्धमिच्छति ॥ १३-२५-१९ (८१९०३)
तमतीत्य तु शैलेन्द्रं ह्रदः कोकनदायुतः ।
कनकेति च विख्यातस्तत्र कूर्मो महाबलः ॥ १३-२५-२० (८१९०४)
गोरुतानि स विस्तीर्णः कच्छपः कुञ्जरश्च सः ।
आयामतश्चापि समौ तेजोबलसमन्वितौ ॥ १३-२५-२१ (८१९०५)
पुनरावृत्तिमापन्नौ तावेतौ मधुकैटभौ ।
जन्मान्तरे विप्रमूढौ परस्परवधैषिणौ ॥ १३-२५-२२ (८१९०६)
यदा स नागो व्रजति पिपासुस्तं जलाशयम् ।
तदैनं कच्छपो रोषात्प्रतियाति महाबलः ॥ १३-२५-२३ (८१९०७)
नखैश्च दशनैश्चापि निमज्योन्मज्य वाऽसकृत् ।
विददाराग्रहस्तेन कुञ्जरं तं जलेचरः ॥ १३-२५-२४ (८१९०८)
नागराडपि तोयार्थी पिपासुश्चरणैरपि ।
अग्रहस्तेन दन्ताभ्यां निवारयति वारिजम् ॥ १३-२५-२५ (८१९०९)
स तु तोयादनुत्तिष्ठन्वारिजो गजयूथपम् ।
नखैश्च दशनैश्चैव द्विरदं प्रतिषेधति ॥ १३-२५-२६ (८१९१०)
निवारितो गजश्रेष्ठः पुनर्गच्छति स्वं वनम् ।
पिपासुः क्लिन्नहस्ताग्रो रुधिरेण समुक्षितः ॥ १३-२५-२७ (८१९११)
तौ गच्छ सहितौ पुत्र यदि शक्नोषि भक्षय ।
न तौ पृथक्तया शक्यावप्रमत्तौ बले स्थितौ'॥ ॥ १३-२५-२८ (८१९१२)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
पञ्चविंशोऽध्यायः ॥ २५.।
Mahabharata - Anushaasana Parva - Chapter Footnotes

७-२५-१७ गोरुतानि गव्यूतीः ॥

---

अनुससनपर्व-अध्यय०२६
॥ श्रीः ॥
१३.२६. अध्यायः २६

अथ दानधर्मपर्व ॥ १ ॥
Mahabharata - Anushaasana Parva - Chapter Topics
गरुढेन गजकच्छपावासमेत्य चरणाभ्यां तयोर्ग्रहणम् ॥ १ ॥

तथा तयोर्भक्षणाय नैमिषारण्यस्थमहातरुशाखायां वेगान्निपतनम् ॥ २ ॥
तथा स्वनिपतनमात्रेण भज्यमानशाखाया अधोभागे
लम्बमानमुनिगणावलोकनात्तुण्डेन तच्छाखाग्रहणपूर्वकं पुनरुत्पतनम्
॥ ३ ॥
तथा देवदूतवचनात्समुद्रान्ते शाखाविसर्जनेन तन्निवासिनां कुविन्दानां
हननम् ॥ ४ ॥

Mahabharata - Anushaasana Parva - Chapter Text

ग्गरुड उवाच ।
कथं तौ भगवञ्शक्यौ मया वारणकच्छपौ ॥
युगपद्गृहीतं तं मे त्वमुपायं वक्तुमर्हसि ॥ १३-२६-१ (८१९१३)
कश्यय उवाच। १३-२६-२क्ष् (६८०७)
योद्धुकामे गजे तस्मिन्मुहूर्तं स जलेचरः ।
उत्तिष्ठति जलात्तूर्णं योद्धुकामः पुनःपुनः ॥ १३-२६-२ (८१९१४)
जलजं निर्गतं तात प्रमत्तं चैव वारणम् ।
ग्रहीष्यसि पतङ्गेश नान्यो योगोऽत्र विद्यते ॥ १३-२६-३ (८१९१५)
भीष्म उवाच। १३-२६-४क्ष् (६८०८)
इत्येमुक्तो विहगस्तद्गत्वा वनमुत्तमम् ।
ददर्श वारणेन्द्रं तं मेघाचलसमप्रभम् ॥ १३-२६-४ (८१९१६)
तां स नागो गिरेर्वीथिं सम्प्राप्त इव भारतः ।
स तं दृष्ट्वा महाभागः सम्प्रहृष्टतनूरुहः ॥ १३-२६-५ (८१९१७)
बिभक्षयिषतो राजन्दारुणस्य महात्मनः ॥
मातङ्गं कच्छपं चैव प्रहर्षः सुमहानभूत् ॥ १३-२६-६ (८१९१८)
अथ वेगेन महता खेचरः स महाबलः ।
सङ्कुच्य सर्वगात्राणि कृच्छ्रेणैवान्वपद्यत ॥ १३-२६-७ (८१९१९)
तथा गत्वा तमध्वानं वारणप्रवरो बली ।
निशश्वास महाश्वासः श्रमाद्विश्रमणाय च ॥ १३-२६-८ (८१९२०)
तस्य निश्वासवातेन मदगन्धेन चैव ह ।
उदतिष्ठन्महाकूर्मो वारणप्रतिषेधकः ॥ १३-२६-९ (८१९२१)
तयोः सुतुमुलं युद्धं ददर्श पतगेश्वरः ।
कच्छपेन्द्रद्विरदयोरिन्द्रप्रह्लादयोरिव ॥ १३-२६-१० (८१९२२)
स्पृशन्तमग्रहस्तेन तोयं वारणयूथपम् ।
दन्तैर्नस्तैश्च जलजो वारयामास भारत ॥ १३-२६-११ (८१९२३)
जलजं वारणोऽप्येवं चरणैः पुष्करेण च ।
प्रत्यषेधन्निमज्जन्तमुन्मज्जन्तं तथैव च ॥ १३-२६-१२ (८१९२४)

मुहूर्तमभवद्युद्धं तयोर्भीमप्रदर्शनम् ।
अथ तस्माज्जलाद्राजन्कच्छपः स्थलमास्थितः ॥ १३-२६-१३ (८१९२५)
स तु नागः प्रभग्नोऽपि पिपासुर्न न्यवर्तत ।
तोयगृध्नुः शनैस्तर्षादपासर्पत पृष्ठतः ॥ १३-२६-१४ (८१९२६)
तं दृष्ट्वा जलजस्तूर्णमपसर्पन्तमाहवात् ।
अभिदुद्राव वेगेन वज्रपाणिरिवासुरम् ॥ १३-२६-१५ (८१९२७)
तं रोषात्स्थलमुत्तीर्णमसम्प्राप्तं गजोत्तमम् ।
उभावेव समस्तौ तु जग्राह विनतासुतः ॥ १३-२६-१६ (८१९२८)
चरणेन तु सव्येन जग्राह स गजोत्तमम् ।
प्रस्पन्दमानं बलवान्दक्षिणेन तु कच्छपम् ॥ १३-२६-१७ (८१९२९)
उत्पपात ततस्तूर्णं पन्नगेन्द्रनिषूदतः ।
दिवं खं च समुत्पत्य पक्षाभ्यामपराजितः ॥ १३-२६-१८ (८१९३०)
तेन चोत्पतता तूर्णं सङ्गृहीतौ नखैर्भृशम् ।
वज्रगर्भैः सुनिशितैः प्राणांस्तूर्णं मुमोचतुः ॥ १३-२६-१९ (८१९३१)
तौ गृह्य बलवांस्तूर्णं स्रस्तपादशिरोधरौ ।
विवल्गन्निव खे क्रीडन्खेचरोऽभिजगाम ह ॥ १३-२६-२० (८१९३२)
अत्तुकामस्ततो वीरः पृथिव्यां पृथिवीपते ।
निरैक्षत न चापश्यद्द्रुमं पर्याप्तमासितुम् ॥ १३-२६-२१ (८१९३३)
नैमिषं त्वथ सम्प्राप्य देवारण्यं महाद्युतिः ।
अपश्यत द्रुमं कञ्चिच्छाखास्कन्धसमावृतम् ॥ १३-२६-२२ (८१९३४)
हिमवच्छिखरप्रख्यं योजनद्वयमुच्छ्रितम् ।
परिणाहेन राजेन्द्र नल्वमात्रं समन्ततः ॥ १३-२६-२३ (८१९३५)
तस्य शाखाऽभवत्काचिदायता पञ्चयोजनम् ।
दृढमूला दृढस्कन्धा वज्रपत्रसमाचिता ॥ १३-२६-२४ (८१९३६)
तत्रोपविष्टः सहसा वैनतेयो निगृह्य तौ ।
अत्तुकामस्ततः शाखा तस्य वेगादवापतत् ॥ १३-२६-२५ (८१९३७)
तां पतन्तीमभिप्रेक्ष्य प्रेक्ष्य चर्षिगणानधः ।
आसीनान्वसुभिः सार्धं सत्रेण जगतीपते ॥ १३-२६-२६ (८१९३८)
वैखानसान्नाम यतीन्वालखिल्यगणानपि ।
तत्र भीराविशत्तस्य पतगेन्द्रस्य भारत ॥ १३-२६-२७ (८१९३९)
तान्दृष्ट्वा स यतींस्तत्र समासीनान्सुरैः सह ।
तुण्डेन गृह्य तां शाखामुत्पपात खगेश्वरः ।
तौच पक्षी भुजङ्गाशो व्योम्नि क्रीडन्निवाव्रजत् ॥ १३-२६-२८ (८१९४०)
तं दृष्ट्वा गुरुसम्भारं प्रगृह्योत्पतितं खगम् ।
ऋषयस्तेऽब्रुवन्सर्वे गरुडोऽयमिति स्म ह ।
न त्वन्यः क्षमते कश्चिद्यथाऽयं वीर्यवान्खगः ॥ १३-२६-२९ (८१९४१)

असौ यच्छति धर्मात्मा गुरुभारसमन्वितः ।
अयं क्रीडन्निवाकाशे तस्माद्गरुड एव सः ॥ १३-२६-३० (८१९४२)
एवं ते समयं सर्वे वसवश्च दिवौकसः ।
अकार्षुः पक्षिराजस्य गरुडेत्येव नाम ह ॥ १३-२६-३१ (८१९४३)
स पक्षी पृथिवीं सर्वां परिधावंस्ततस्ततः ।
मुमुक्षः शाखिनः शाखां न स्म देशमपश्यत ॥ १३-२६-३२ (८१९४४)
स वाचमशृणोद्दिव्यामुपर्युपरि जल्पतः ।
देवदूतस्य विस्पष्टमाभाष्य गरुडेति च ॥ १३-२६-३३ (८१९४५)
वैनतेय कुविन्देषु समुद्रान्ते महाबल ।
पात्यतां शाखिनः शाखा न हि ते धर्मनिश्चयाः ॥ १३-२६-३४ (८१९४६)
तच्छ्रुत्वा गरुडस्तूर्णं जगाम लवणाम्भसः ।
उद्देशं यत्र ते मन्दाः कुविन्दाः पापकर्मिणः ॥ १३-२६-३५ (८१९४७)
ततो गत्वा ततः शाखां मुमोच पततांवरः ।
तया हता क़क़क़क़क़क़क़क़क़क़ दास्तदा षड्विंशतो नृप ॥ १३-२६-३६ (८१९४८)
स देशो राजशार्दूल ख्यातः परमदारुणः ।
शाखापतग इत्येव कुविन्दानां महात्मनाम् ॥' ॥ १३-२६-३७ (८१९४९)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
षड्विंशोऽध्यायः ॥ २६ ॥
Mahabharata - Anushaasana Parva - Chapter Footnotes

७-२६-३६ तुण्डेन शाखां गृहीत्वा कश्यपसमीपं गते गरुडे
शाखाया अधोभागलम्बिनामृषीणां कस्यपप्रार्थनया शाखाविसर्जनेन
हिमवद्गिरिगमनमादिपर्वोक्तमत्रानुसन्धेयम् ॥

---

अनुससनपर्व-अध्यय०२७
॥ श्रीः ॥
१३.२७. अध्यायः २७

अथ दानधर्मपर्व ॥ १ ॥
Mahabharata - Anushaasana Parva - Chapter Topics
गरुडेन शैलाग्रे उपविश्य गजकच्छपयोर्भक्षणम् ॥ १ ॥
ततः स्वर्गेऽमृतसमीपं गतेन तेन तत्र परितो
ज्वलदग्निदर्शनभयाक़क़क़क़क़क़क़क़क़क़ प्रति तच्छमनोपायप्रश्नः ॥ २ ॥
ब्रह्मणा तम्प्रति नवनीतप्रक्षेपेणाग्निसंशामनचेदना ॥ ३ ॥

ग्भीष्म उवाच ।
हत्वा तं पक्षिशार्दूलः कुविन्दानां जनं व्रती ।
उपोपविश्य शैलाग्रे भक्षयामास तावुभौ ।
वारणं कच्छपं चैव संहृष्टः स पतत्रिराट् ॥ १३-२७-१ (८१९५०)
तयोः स रुधिरं पीत्वा मेदसी च परन्तप ।
संहृष्टः यततांश्रेष्ठो लब्ध्वा बलमनुत्तमम् ।
जंगाम देवराजस्य भवनं पन्नगाशनः ॥ १३-२७-२ (८१९५१)
तं प्रणम्य महात्मानं पावकं विस्फुलिङ्गिनम् ।
रात्रिदिवं प्रज्वलितं रक्षार्थममृतस्य ह ॥ १३-२७-३ (८१९५२)
तं दृष्ट्वा विहगेन्द्रस्य भयं तीव्रमुपाविशत् ।
नतु तोयान्न रक्षिभ्यो भयमस्योपपद्यते ॥ १३-२७-४ (८१९५३)
पक्षित्वमात्मनो दृष्ट्वा ज्वलन्तं च हुताशनम् ।
पितामहमथो गत्वा ददर्श भुजगाशनः ॥ १३-२७-५ (८१९५४)
तं प्रणम्य महात्मानं गरुडः प्रयताञ्जलिः ।
प्रोवाच तदसन्दिग्धं वचनं पन्नगेश्वरः ॥ १३-२७-६ (८१९५५)
उद्यतं गुरुकृत्ये मां भगवन्धर्मनिश्चितम् ।
विमोक्षणार्थं मातुर्हि दासभावादनिन्दितम् ॥ १३-२७-७ (८१९५६)
कद्रूसकाशममृतं मयाहर्तव्यमीश्वर ।
तदा मे जननी देव दासभावात्प्रमोक्ष्यते ॥ १३-२७-८ (८१९५७)
तत्रामृतं प्रज्वलितो नित्यमीश्वर रक्षति ।
हिरण्यरेता भगवान्पाकशासनशासनात् ॥ १३-२७-९ (८१९५८)
तत्र मे देवदेवेश भयं तीव्रमथाविशत् ।
ज्वलन्तं पावकं दृष्ट्वा पक्षित्वं चात्मनः प्रभो ॥ १३-२७-१० (८१९५९)
समतिक्रमितुं शक्यः कथं स्यात्पावको मया ।
तस्याभ्युपायं वरद वक्तुमीशोऽसि मे प्रभो ॥ १३-२७-११ (८१९६०)
तमब्रवीन्महाभाग तप्यमानं विहङ्गमम् ।
अग्नेः संशमनोपायमुत्सयन्त पुनःपुनः ॥ १३-२७-१२ (८१९६१)
पयसा शाम्यते वत्स सर्पिषा च हुताशनः ।
शरीरस्थोपि भूतानां किं पुनः प्रज्वलन्भुवि ॥ १३-२७-१३ (८१९६२)
नवनीतं पयो वाऽपि पावके त्वं समादधेः ।
ततो गच्छ यथाकामं न त्वा धक्ष्यति पावकः ॥' ॥ १३-२७-१४ (८१९६३)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
सप्तविंशोऽध्यायः ॥ २७ ॥

Mahabharata - Anushaasana Parva - Chapter Footnotes

७-२७-७ जानीहीति शेषः ॥

---

अनुससनपर्व-अध्यय०२८
॥ श्रीः ॥
१३.२८. अध्यायः २८

अथ दानधर्मपर्व  ॥ १ ॥
Mahabharata - Anushaasana Parva - Chapter Topics
गरुडेन नवनीतप्रक्षेपेण
मन्दीभूताभ्युल्लङ्घनपूर्वकममृतरक्षिणां पक्षप्रहारेण
निराकरणम् ॥ १ ॥
तथाऽमृतमाहृत्य विमति समुत्पतनम् ॥ २ ॥
तथा स्वस्योपरि इन्द्रेण वज्रे विसृष्टे
तत्सन्माननायैकतनूरुहविस्रंसनम् ॥ ३ ॥

Mahabharata - Anushaasana Parva - Chapter Text

ग्भीष्म उवाच ।
पितामहवचः श्रुत्वा गरुडः पततांवरः ।
जगाम गोकुलं किञ्चिन्नवनीतजिहीर्षया ॥ १३-२८-१ (८१९६४)
नवनीतं तथाऽपश्यन्मथितं कलशे स्थितम् ।
तदादाय ततोऽगच्छद्यतस्तद्रक्ष्यतेऽमृतम् ॥ १३-२८-२ (८१९६५)
स तत्र गत्वा पतगस्तिर्यक्तोयं महाबलः ।
हुताशनमपक्रम्य नवनीतमपातयत् ॥ १३-२८-३ (८१९६६)
सो र्चिष्मान्मन्दवेगोऽभूत्सर्पिषा तेन तर्पितः ।
धूमकेतुर्न जज्वाल धूममेव ससर्ज ह ॥ १३-२८-४ (८१९६७)
तमतीत्याशु गरुडो हृष्टात्मा जातवेदसम् ।
रक्षांसि समतिक्रामत्पक्षवातेन पातयन् ॥ १३-२८-५ (८१९६८)
ते पतन्ति शिरोभिस्च जानुभिश्चरणैस्तथा ।
उत्सृज्य शस्त्रावरणं पक्षिपक्षसमाहताः ॥ १३-२८-६ (८१९६९)
उत्प्लुत्य चावृतान्नागान्हत्वा चक्रं व्यतीत्य च ।
अरान्तरेण शिरसा भित्त्वा जालं समाद्रवत् ॥ १३-२८-७ (८१९७०)
स भित्त्वा शिरसा जालं वज्रवेगसमो बली ।
उज्जहार ततः शीघ्रममृतं भुजगाशनः ॥ १३-२८-८ (८१९७१)

तदादायाद्रवच्छीघ्रं गरुडः श्वसनो यथा ।
अथ सन्नाहमकरोद्वृत्रहा विबुधैः सह ॥ १३-२८-९ (८१९७२)
ततो मातलिसंयुक्तं हरिभिः स्वर्णमालिभिः ।
आरुरोह रथं शीघ्रं सूर्याग्निसमतेजसम् ॥ १३-२८-१० (८१९७३)
सोऽभ्यद्रवत्पक्षिराजं वृत्रहा पाकशासनः ।
उद्यम्य निशितं वज्रं वज्रहस्तो महाबलः ॥ १३-२८-११ (८१९७४)
तथैव गरुडो राजन्वज्रहस्तं समाद्रवत् ।
ततो वै मातलिं प्राह शीघ्रं वाहय वाजिनः ॥ १३-२८-१२ (८१९७५)
अथ दिव्यं महाघोरं गरुडाय ससर्ज ह ।
वज्रं सहस्रनयनस्तिग्मवेगपराक्रमः ॥ १३-२८-१३ (८१९७६)
उत्सिसृक्षन्तमाज्ञाय वज्रं वै त्रिदशेश्वरम् ।
तूर्णं वेगपरो भूत्वा जगाम पततांवरः ॥ १३-२८-१४ (८१९७७)
पितामहनिसर्गेण ज्ञात्वा लब्धवरः खगः ।
आयुधानां वरं वज्रमथ शक्रमुवाच ह ॥ १३-२८-१५ (८१९७८)
वृत्रहन्नेष वज्रस्ते वरो लब्धः पितामहात् ।
अतः सम्मानमाकाङ्क्षन्मुञ्चाम्येकं तनूरुहम् ॥ १३-२८-१६ (८१९७९)
एतेनायुधराजेन यदि शक्तोसि वृत्रहन् ।
हन्यास्त्वं परया शक्तया गच्छाम्यहमनामयः ॥ १३-२८-१७ (८१९८०)
तत्तु तूर्णं तदा वज्रं स्वेन वेगेन भारत ।
जघान परया शक्त्या न चैनमदहद्भृशम् ॥ १३-२८-१८ (८१९८१)
ततो देवर्षयो राजन्गाच्छन्तो वै विहायसा ।
दृष्ट्वा वज्रं विवक्तं तं पक्षइपर्णेऽब्रुवन्वचः ॥ १३-२८-१९ (८१९८२)
सुपर्णः पक्षिगरुडो यस्य पर्णे वरायुधम् ।
विषक्तं देवराजस्य वृत्रहन्तुः सनातनम् ॥ १३-२८-२० (८१९८३)
एवं सुपर्णो विहगो वैनतेयः प्रतापवान् ।
ऋषयस्तं विजानन्ति चाग्नेयं वैष्णवं पुनः ॥ १३-२८-२१ (८१९८४)
वेदाभिष्टुतमत्यर्थं स्वर्गमार्गफलप्रदम् ।
तनुपर्णं सुपर्णस्य जगृहुर्बर्हिणस्तथा ॥ १३-२८-२२ (८१९८५)
मयूराविस्मिताः सर्वे आद्रवन्ति स्म वज्रिणम् ॥' ॥ १३-२८-२३ (८१९८६)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
अष्टाविंशोऽध्यायः ॥ २८ ॥

---

अनुससनपर्व-अध्यय०२९
॥ श्रीः ॥
१३.२९. अध्यायः २९

अथ दानधर्मपर्व ॥ १ ॥

Mahabharata - Anushaasana Parva - Chapter Topics

गरुडेन कद्रूंप्रत्यमृतानयनकथनम् ॥ १ ॥

कद्रवा विनताया दास्यान्मोचनम् ॥ २ ॥

गरुडेन पुनरिन्द्रायामृतप्रत्यर्पणम् ॥ ३ ॥

Mahabharata - Anushaasana Parva - Chapter Text

ग्भीष्म उवाच ।
ततो व्रज्रं सहस्राक्षो दृष्ट्वा सक्तं वरायुधम् ।
ऋषींश्च दृष्ट्वा सहसा सुपर्णमिदमब्रवीत् ॥ १३-२९-१ (८१९८७)
न ते सुपर्ण पश्यामि प्रभावं तेन योधये ।
इत्युक्ते न मया रक्षा शक्या कर्तुमतोऽन्यथा ।
इदं वज्रं मया सार्धं निवृत्तं हि यथागतम् ॥ १३-२९-२ (८१९८८)
ततः सहस्रनयने निवृत्ते गरुडस्तथा ।
कद्रूमभ्यगमत्तूर्णममृतं गृह्य भारतः ॥ १३-२९-३ (८१९८९)
गरुड उवाच। १३-२९-४क्ष् (६८०९)
तदाहृतं मया शीघ्रममृतं जननीकृते ।
अदासी सा भवत्वद्य विनता धर्मिचारिणी ॥ १३-२९-४ (८१९९०)
कद्रूरुवाच। १३-२९-५क्ष् (६८१०)
स्वागतं स्वाहृतं चेदममृतं विनतात्मज ।
अदासी जननी तेऽद्य पुत्र कामवशा शुभा। १३-२९-५ (८१९९१)
एवमुक्ते तदा सा च सम्प्राप्ता विनता गृहम् ॥
उपनीय यथान्यायं विहगो बलिनांवरः। १३-२९-६ (८१९९२)
स्मृत्वा निकृत्या विजयं मातुः सम्प्रतिपद्य च ॥
वधं च भुजगेन्द्राणां ये वालास्तस्य वाजिनः। १३-२९-७ (८१९९३)
बभूवुरसितप्रख्या निकृत्या वै जितं त्वया ॥
तामुवाच ततो न्याय्यं विहगो बलिनांवरः। १३-२९-८ (८१९९४)
उज्जहारामृतं तूर्णमुत्पपात च रंहसा ॥
तद्गृहीत्वाऽमृतं तूर्णं प्रयान्तमपराजितम्। १३-२९-९ (८१९९५)
किमर्थं वैनतेय त्वमाहृत्यामृतमुत्तमम् ।
पुनर्हरति दुर्बुद्धे मा जातु वृजितं कृथाः ॥ १३-२९-१० (८१९९६)
सुपर्णि उवाच। १३-२९-११क्ष् (६८११)
अमृताहरणं मेऽद्य यत्कृतं जननीकृते ।
भवत्या वचनादेतदाहरामृतमित्युत ॥ १३-२९-११ (८१९९७)

आहृतं तदिदं शीघ्रं मुक्ता च जननी मम ।
हराम्येष पुनस्तत्र यत एतन्मयाऽऽहृतम् ॥१३-२९-१२ (८१९९८)
यदि मां भवती ब्रूयादमृतं मे च दीयताम् ।
तथा कुर्यां न वा कुर्यां न हि त्वममृतक्षमा ।
मया धर्मेण सत्येन विनता च समुद्धृता ॥ १३-२९-१३ (८१९९९)
भीष्म उवाच। १३-२९-१४क्ष् (६८१२)
ततो गत्वाऽथ गरुडः पुरन्दरमुवाच ह ।
इदं मया वृत्रहन्तर्हृतं तेऽमृतमुत्तमम् ।
मात्रर्थे हि तथैवेदं गृहाणामृतमाहृतम् ॥ १३-२९-१४ (८२०००)
माता च मम देवेश दासीत्वमुपजग्मुषी ।
भुजङ्गमानां मातुर्वै सा मुक्ताऽमृतदर्शनात् ॥१३-२९-१५ (८२००१)
एतच्छ्रुत्वा सहस्राक्षः सुपर्णमनुमन्यते ।
उवाच च मुदा युक्तो दिष्ट्यादिष्ट्येति वासवः ॥१३-२९-१६ (८२००२)
ऋषयो ये सहस्राक्षमुपासन्ति सुरैः सह ।
ते सर्वे च मुदा युक्ता विश्वेदेवास्तथैव च ॥१३-२९-१७ (८२००३)
ततस्तमृषयः सर्वे देवाश्च भरतर्षभ ।
ऊचुः पुरन्दरं दृष्टा गरुडो लभतां वरम् ॥१३-२९-१८ (८२००४)
ततः शचीपतिर्वाक्यमुवाच प्रहसन्निव ।
जनिष्यति हृषीकेशः स्वयमेवैष पक्षिराट् ॥१३-२९-१९ (८२००५)
केशवः पुण्डरीकाक्षः शूरपुत्रस्य वेश्मनि ।
स्वयं धर्मस्य रक्षार्थं विभज्य भुजगाशनः ॥१३-२९-२० (८२००६)
एष ते पाण्डवश्रेष्ठ गरुडोऽथ पतत्रिराट् ।
सुपर्णो वैनतेयश्च कीर्तितो भद्रमस्तु ते ॥१३-२९-२१ (८२००७)
तदेतद्भरतश्रेष्ठ मयाऽऽख्यानं प्रकीर्तितम् ।
सुपर्णस्य महाबाहो किं भूयः कथयामि ते ॥' ॥ १३-२९-२२ (८२००८)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
एकोनविंशोऽध्यायः ॥ २९ ॥
Mahabharata - Anushaasana Parva - Chapter Footnotes

७-२९-१ जितं त्वयेति तां कद्रूमुवाचेत्युत्तरेण सम्बन्धः ॥

---

अनुससनपर्व-अध्यय०३०
॥ श्रीः ॥
१३.३०. अध्यायः ३०

अथ दानधर्मपर्व ॥ १ ॥

Mahabharata - Anushaasana Parva - Chapter Topics

भीष्मेण युधिष्ठिरम्प्रति ब्राह्मणाय
प्रतिश्रुतार्थाप्रदानस्यानर्थहेतुतायां दृष्टान्ततया
सृगालवानरसंवादानुवादः ॥ १ ॥

Mahabharata - Anushaasana Parva - Chapter Text

युधिष्ठिर उवाच ।
ब्राह्मणानां तु ये लोके प्रतिश्रुत्य पितामह ।
न प्रयच्छन्ति लोभात्ते के भवन्ति महामते ॥ १३-३०-१ (८२००९)
एतन्मे तत्वतो ब्रूहि धर्मे धर्मभृतांवर ।
प्रतिश्रुत्य दुरात्मानो न प्रयच्छन्ति ये नराः ॥ १३-३०-२ (८२०१०)
भीष्म उवाच। १३-३०-३क्ष् (६८१३)
यो न दद्यात्प्रतिश्रुत्य स्वल्पं वा यदि वा बहु ।
आशास्तस्य हताः सर्वाः क्लीबस्येव प्रजाफलम् ॥ १३-३०-३ (८२०११)
यां रात्रिं जायते पापो यां च रात्रिं विनश्यति ।
एतस्मिन्नन्तरे यद्यत्सुकृतं तस्य भारत ॥ १३-३०-४ (८२०१२)
यच्च तस्य हुतं किञ्चिद्दत्तं वा भरतर्षभ ।
तपस्तप्तमथो वाऽपि सर्वं तस्योपहन्यते ॥ १३-३०-५ (८२०१३)
अथैतद्वचनं प्राहुर्धर्मशास्त्रविदो जनाः ।
निशास्य भरतश्रेष्ठ बुद्ध्या परमयुक्तया ॥ १३-३०-६ (८२०१४)
अपि चोदाहरन्तीमं धर्मशास्त्रविदो जनाः ।
अश्वानां श्यामकर्णानां सहस्रेण स मुच्यते ॥ १३-३०-७ (८२०१५)
अत्रैवोदाहरन्तीममितिहासं पुरातनम् ।
सृगालस्य च संवादं वानरस्य च भारत ॥ १३-३०-८ (८२०१६)
तौ सखायौ पुरा ह्यास्तां मानुषत्वे परंतप ।
अन्यां योनिं समापन्नौ सृगालीं वानरीं तथा ।
सम्भाषणात्ततः सख्यं तत्रतत्र परस्परम् ॥ १३-३०-९ (८२०१७)
ततः परासून्खादन्तं सृगालं वानरोऽब्रवीत् ।
श्मशानमध्ये सम्प्रेक्ष्य पूर्वजातिमनुस्मरन् ॥ १३-३०-१० (८२०१८)
किं त्वया पापकं पूर्वं कृतं कर्म सुदारुणम् ।
यस्त्वं श्मशाने मृतकान्पूतिकानत्सि कुत्सितान् ॥ १३-३०-११ (८२०१९)
एवमुक्तः प्रत्युवाच सृगालो वानरं तदा ।
ब्राह्मणस्य प्रतिश्रुत्य न मया तदुपाहृतम् ॥ १३-३०-१२ (८२०२०)
तत्कृते पापिकां योनिमापन्नोस्मि प्लवङ्गम ।

तस्मादेवंविधं भक्ष्यं भक्षयामि बुभुक्षितः ॥ १३-३०-१३ (८२०२१)
भीष्म उवाच। १३-३०-१४क्ष् (६८१४)
सृगालो वानरं प्राह पुनरेव नरोत्तम ।
किं त्वया पातकं कर्म कृतं येनासि वानरः ॥ १३-३०-१४ (८२०२२)
वानर उवाच। १३-३०-१५क्ष् (६८१५)
स चाप्याह फलाहारो ब्राह्मणानां प्लवङ्गमः ।
तस्मान्न ब्राह्मणस्वं तु हर्त्तव्यं विदुषा सदा ।
सीमाविवादे मोक्तव्यं दातव्यं च प्रतिश्रुतम् ॥ १३-३०-१५ (८२०२३)
भीष्म उवाच। १३-३०-१६क्ष् (६८१६)
इत्येतद्ब्रुवतो राजन्ब्राह्मणस्य मया श्रुतम् ।
कथां कथयतः पुण्यां धर्मज्ञस्य पुरातनीम् ॥ १३-३०-१६ (८२०२४)
श्रुतं चापि मया भूयः कृष्णस्यापि विशांपते ।
कथां कथयतः पूर्वं ब्राह्मणं प्रति पाण्डव ॥ १३-३०-१७ (८२०२५)
न हर्तव्यं विप्रधनं क्षन्तव्यं तेषु नित्यशः ।
बालाश्च नावमन्तव्या दरिद्राः कृपणा अपि ॥ १३-३०-१८ (८२०२६)
एवमेव च मां नित्यं ब्राह्मणाः संदिशन्ति वै ।
प्रतिश्रुतं भवेद्देयं नाशा कार्या द्विजोत्तमे ॥ १३-३०-१९ (८२०२७)
ब्राह्मणो ह्याशया पूर्वं कृतया पृथिवीपते ।
सुसमिद्धो यता दीप्तः पावकस्तद्विधः स्मृतः ॥ १३-३०-२० (८२०२८)
यं निरीक्षेत सङ्क्रुद्ध आशया पूर्वजातया ।
प्रदहेच्च हितं राजन्कक्षमक्षय्यभुग्यथा ॥ १३-३०-२१ (८२०२९)
स एव हि यदा तुष्टो वचसा प्रतिनन्दति ।
भवत्यगदसंकाशो विषये तस्य भारत ॥ १३-३०-२२ (८२०३०)
पुत्रान्पौत्रान्पशूंश्चैव बान्धवान्सचिवांस्तथा ।
पुरं जनपदं चैव शान्तिरिष्टेन पोषयेत् ॥ १३-३०-२३ (८२०३१)
एतद्धि परमं तेजो ब्राह्मणस्येह दृश्यते ।
सहस्रकिरणस्येव सवितुर्धरणीतले ॥ १३-३०-२४ (८२०३२)
तस्माद्दातव्यमेवेह प्रतिश्रुत्य युधिष्ठिर ।
यदीच्छेच्छोभनां जातिं प्राप्तुं भरतसत्तम ॥ १३-३०-२५ (८२०३३)
ब्राह्मणस्य हि दत्तेन ध्रुवं स्वर्गो ह्यनुत्तमः ।
शक्यः प्राप्तुं विशेषेण दानं हि महती क्रिया ॥ १३-३०-२६ (८२०३४)
इतो दत्तेन जीवन्ति देवताः पितरस्था ।
तस्माद्दानानि देयानि ब्राह्मणेभ्यो विजानता ॥ १३-३०-२७ (८२०३५)
महद्धि भरतश्रेष्ठ ब्राह्मणस्तीर्थमुच्यते ।
वेलायां न तु कस्यां चिद्गच्छेद्विप्रो ह्यपूजितः ॥ ॥ १३-३०-२८ (८२०३६)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
त्रिंशोऽध्यायः ॥ ३० ॥
Mahabharata - Anushaasana Parva - Chapter Footnotes

७-३०-६ निशाम्य विचार्य ॥
७-३०-१० ततः पुरा सखायं तं सृगालमिति थ ध पाठः ॥
७-३०-१६ ब्रुवतोऽध्यापकस्य कथां कथयतो मुखात् श्रुतम् ॥
७-३०-१७ कृष्णस्य व्यासस्य । नृगकथां कथयतो वासुदेवस्य वा मुखात् ॥
७-३०-१९ आशा वन्ध्याशा ॥
७-३०-२१ अक्षय्यं पित्रर्थमुद्दिष्टं दानं भुङ्क्ते इत्यक्षय्यभुगग्निः ॥
७-३०-२२ अगदसंकाशः चिकित्सकतुल्यः ॥
७-३०-२३ शान्तिरिष्टेन शान्त्याहितेन क्षेमेण ॥
७-३०-३० त्रिंशोऽध्यायः ॥

---

अनुससनपर्व-अध्यय०३१
॥ श्रीः ॥
१३.३१. अध्यायः ३१

अथ दानधर्मपर्व ॥ १ ॥
Mahabharata - Anushaasana Parva - Chapter Topics
भीष्मेण युधिष्ठिरम्प्रति शूद्रोपदेशस्यानर्थहेतुतायां
दृष्टान्ततया मुनिशूद्रयोः कथाकथनम् ॥ १ ॥

Mahabharata - Anushaasana Parva - Chapter Text

युधिष्ठिर उवाच ।
मित्रसौहार्दयोगेन उपदेशं करोति यः ।
जात्याऽधरस्य राजर्षे दोषस्तस्य भवेन्न वा ॥ १३-३१-१ (८२०३७)
एतदिच्छामि तत्त्वेन व्याख्यातुं वै पितामह ।
सूक्ष्मा गतिर्हि धर्मस्यि यत्र मुह्यन्ति मानवाः ॥ १३-३१-२ (८२०३८)
भीष्म उवाच। १३-३१-३क्ष् (६८१७)
अत्र ते वर्तयिष्यामि शृणु राजन्यथाक्रमम् ।
ग्मदुक्तं वचनं राजन्यथान्यायं यथागमम्।'
ऋषीणां वदतां पूर्वं श्रुतमासीद्यथा पुरा ॥ १३-३१-३ (८२०३९)
उपदेशो न कर्तव्यो जातिहीनस्य कस्य चित् ।
उपदेशे महान्दोष उपाध्यायस्य भाष्यते ॥ १३-३१-४ (८२०४०)

ग्नाध्यापयेच्छूद्रमिह तथा नैव च याजयेत्।'
निदर्शनमिदं राजञ्शृणु मे भरतर्षभ ॥ १३-३१-५ (८२०४१)
दुरुक्तवचने राजन्यथापूर्वं युधिष्ठिर ।
ब्रह्माश्रमपदे वृत्तं पार्श्वे हिमवतः शुभे ॥ १३-३१-६ (८२०४२)
तत्राश्रमपदं पुण्यं नानावृक्षगणायुतम् ।
नानागुल्मलताकीर्णं मृगद्विजनिषेवितम् ।
सिद्धचारणसंघुष्टं रम्यं पुष्पितकाननम् ॥ १३-३१-७ (८२०४३)
व्रतिभिर्बहुभिः कीर्णं तापसैरुपशोभितम् ।
ब्राह्मणैश्च महाभागैः सूर्यज्वलनसन्निभैः ॥ १३-३१-८ (८२०४४)
नियमव्रतसम्पन्नैः समाकीर्णं तपस्विभिः ।
दीक्षितैर्भरतश्रेष्ठ यताहारैः कृतात्मभिः ॥ १३-३१-९ (८२०४५)
वेदाध्ययनघोषैश्च नादितं भरतर्षभ ।
वालखिल्यैश्च बहुभिर्यतिभिश्च निषेवितम् ॥ १३-३१-१० (८२०४६)
तत्र कश्चित्समुत्साहं कृत्वा शूद्रो दयान्वितः ।
आगतो ह्याश्रमपदं पूजितश्च तपस्विभिः ॥ १३-३१-११ (८२०४७)
तांस्तु दृष्ट्वा मुनिगणान्देवकल्पान्महौजसः ।
विविधां वहतो दीक्षां सम्प्राहृष्यत भारत ॥ १३-३१-१२ (८२०४८)
अथास्य बुद्धिरभावत्तापस्ये भरतर्षभ ।
ततोऽब्रवीत्कुलपतिं पादौ सङ्गृह्य भारत ॥ १३-३१-१३ (८२०४९)
भवत्प्रसादादिच्छामि धर्मं चर्तुं द्विजर्षभ ।
तस्मादभिगतं त्वं मां प्रव्राजयितुमर्हसि ॥ १३-३१-१४ (८२०५०)
वर्णावरोऽहं भगवञ्शूद्रो जात्याऽस्मि सत्तम ।
शुश्रूषां कर्तुमिच्छामि प्रपन्नाय प्रसीद मे ॥ १३-३१-१५ (८२०५१)
कुलपतिरुवाच। १३-३१-१६क्ष् (६८१८)
न शक्यमिह शूद्रेण लिङ्गमाश्रित्य वर्तितुम् ।
आस्यतां यदि ते बुद्धिः शुश्रूषानिरतो भव ॥ १३-३१-१६ (८२०५२)
शुश्रूषया पराँल्लोकानवाप्स्यसि न संशयः ॥ १३-३१-१७ (८२०५३)
भीष्म उवाच। १३-३१-१८क्ष् (६८१९)
एवमुक्तस्तु मुनिना स शूद्रोऽचिन्तयन्नृप ।
कथमत्र मया कार्यं श्रुद्धा धर्मपरा च मे ॥ १३-३१-१८ (८२०५४)
विज्ञातमेवं भवतु करिष्ये प्रियमात्मनः ।
गत्वाऽऽश्रमपदाद्दूरमुटजं कृतवांस्तु सः ॥ १३-३१-१९ (८२०५५)
तत्र वेदीं च भूमिं च देवतायतनानि च ।
निवेश्य भरतश्रेष्ठ नियमस्थोऽभवन्मुनिः ॥ १३-३१-२० (८२०५६)
अभिषेकांश्च नियमान्देवतायतनेषु च ।
बलिं च कृत्वा हुत्वा च देवतां चाप्यपूजयत् ॥ १३-३१-२१ (८२०५७)

सङ्कल्पनियमोपेतः फलाहारो जितेन्द्रियः ।
नित्यं सन्निहिताभिस्तु ओषधीभिः फलैस्तथा ॥ १३-३१-२२ (८२०५८)
अतिथीन्पूजयामास यथावत्समुपागतान् ।
एवं हि सुमहान्कालो व्यत्यक्रामत तस्य वै ॥ १३-३१-२३ (८२०५९)
अथास्य मुनिरागच्चत्सङ्गत्या वै तमाश्रमम् ।
सम्पूज्य स्वागतेनर्षिं विधिवत्समतोषयत् ॥ १३-३१-२४ (८२०६०)
अनूकूलाः कथाः कृत्वा यथागतमपृच्छत ।
ऋषिः परमतेजस्वी धर्मात्मा संशितव्रतः ॥ १३-३१-२५ (८२०६१)
एवं सुबहुशस्तस्य शूद्रस्य भरतर्षभ ।
सोऽगच्छदाश्रममृषिः शूद्रं द्रष्टुं नरर्षभः ॥ १३-३१-२६ (८२०६२)
अथ तं तापसं शूद्रः सोऽब्रवीद्भरतर्षभ ।
पितृकार्यं करिष्यामि तत्र मेऽनुग्रहं कुरु ॥ १३-३१-२७ (८२०६३)
बाढमित्येव तं विप्र उवाच भरतर्षभ ।
शुचिर्भूत्वा स शूद्रस्तु तस्यर्षेः पाद्यमानयत् ॥ १३-३१-२८ (८२०६४)
अथ दर्भांश्च वन्यांश्च ओषधीर्भरतर्षभ ।
पवित्रमासनं चैव बृसीं चि समुपानयत् ॥ १३-३१-२९ (८२०६५)
अथ दक्षिणमावृत्य बृसीं चरमशैर्षिकीम् ।
कृतामन्यायतो दृष्ट्वा तं शूद्रमृषिरब्रवीत् ॥ १३-३१-३० (८२०६६)
कुरुष्वैतां पूर्वशीर्षां भवांश्चोदङ्मुखः शुचिः ।
स च तत्कृतवाञ्शूद्रः सर्वं यदृषिरब्रवीत् ॥ १३-३१-३१ (८२०६७)
यथोपदिष्टं मेधावी दर्भार्घादि यथातथम् ।
हव्यकव्यविधिं कृत्स्नमुक्तं तेन तपस्विना ॥ १३-३१-३२ (८२०६८)
ऋषिणा पितृकार्येषु सदा धर्मपथे स्थितः ।
पितृकार्ये कृते चापि विसृष्टः स जगाम ह ॥ १३-३१-३३ (८२०६९)
अथ दीर्घस्य कालस्य स तप्यञ्शूद्रतापसः ।
वने पञ्चत्वमगमत्सुकृतेन च तेन वै ।
अजायत महाराज वंशे स च महाद्युतिः ॥ १३-३१-३४ (८२०७०)
तथैव स ऋषिस्तात कालधर्ममवाप ह ।
पुरोहितकुले विप्रः स जातोऽस्य वशानुगः ॥ १३-३१-३५ (८२०७१)
एवं तौ तत्र सम्भूतावुभौ शूद्रमुनी तदा ।
क्रमेण वर्धितौ चापि विद्यासु कुशलावुभौ ॥ १३-३१-३६ (८२०७२)
अथर्ववेदे वेदे च बभूवर्षिः सुनिष्ठितः ।
कल्पप्रयोगे चोत्पन्ने ज्योतिषे च परं गतः ।
साङ्ख्ये चैव परा प्रीतिस्तस्य चैवं व्यवर्धत ॥ १३-३१-३७ (८२०७३)
पितर्युपरते चापि कृतशौचस्तु पार्थिवः ।
अभिषिक्तः प्रकृतिभी राजपुत्रः स पार्थिवः ॥ १३-३१-३८ (८२०७४)

अभिषिक्तेन स ऋषिरभिषिक्तः पुरोहितः ॥ १३-३१-३९ (८२०७५)
स तं पुरोधाय सुखमवसङ्गरतर्षभः ।
राज्यं शशास धर्मेण प्रजाश्च परिपालयन् ॥१३-३१-४० (८२०७६)
पुण्याहवाचने नित्यं धर्मकार्येषु चासकृत् ।
उत्स्मयन्प्राहसच्चापि दृष्ट्वा राजा पुरोहितम् ।
एवं स बहुशो राजन्पुरोधसमुपाहसत् ॥ १३-३१-४१ (८२०७७)
लक्षयित्वा पुरोधास्तु बहुशस्तं नराधिपम् ।
उत्स्मयन्तं च सततं दृष्ट्वा तं मन्युमानभूत् ॥१३-३१-४२ (८२०७८)
अथ शून्ये पुरोधास्तु सह राज्ञा समागतः ।
कथाभिरनुकूलाभी राजानं चाभ्योरचयत् ॥१३-३१-४३ (८२०७९)
ततोऽब्रवीन्नरेन्द्रं स पुरोधा भरतर्षभ ।
वरमिच्छाम्यहं त्वेकं त्वया दत्तं महाद्युते ॥१३-३१-४४ (८२०८०)
राजोवाच।१३-३१-४५क्ष् (६८२०)
वराणां ते शतं दद्यां किं बतैकं द्विजोत्तम ।
स्नेहाच्च बहुमानाच्च नास्त्यदेयं हि मे तव ॥१३-३१-४५ (८२०८१)
पुरोहित उवाच।१३-३१-४६क्ष् (६८२१)
एकं वै वरमिच्छामि यदि तुष्टिसि पार्थिव ।
प्रतिजानीहि तावत्त्वं सत्यं यद्वद नानृतम् ॥१३-३१-४६ (८२०८२)
भीष्म उवाचि।१३-३१-४७क्ष् (६८२२)
बाढमित्येव तं राजा प्रत्युवाच युधिष्ठिर ।
यदि ज्ञास्यामि वक्ष्यामि अजानन्न तु संवदे ॥१३-३१-४७ (८२०८३)
पुरोहित उवाच।१३-३१-४८क्ष् (६८२३)
पुण्याहवाचने नित्यं धर्मकृत्येषु चासकृत् ।
शान्तिहोमेषु च सदा किं त्वं हससि वीक्ष्य मां ॥१३-३१-४८ (८२०८४)
सव्रीडं वै भवति हि मनो मे हसता त्वया ।
कामया शापितो राजन्नान्यथावक्तुमर्हसि ॥१३-३१-४९ (८२०८५)
भाव्यं हि कारणेनात्र न ते हास्यमकारणम् ।
कौतूहलं मे सुभृशं तत्त्वेन कथमस्व मे ॥१३-३१-५० (८२०८६)
राजोवाच।१३-३१-५१क्ष् (६८२४)
एवमुक्ते त्वया विप्र यदवाच्यं भवेदपि ।
अवश्यमेव वक्तव्यं शृणुष्वैकमना द्विज ॥१३-३१-५१ (८२०८७)
पूर्वदेहे यथा वृत्तं तन्निबोध द्विजोत्तम ।
जातिं स्मराम्यहं ब्रह्मन्नवधानेन मे शृणु ॥१३-३१-५२ (८२०८८)
शुद्रोऽहमभवं पूर्वं तपसे कृतनिश्चयः ।
ऋषिरुग्रतपास्त्वं च तदाऽभूर्द्विजसत्तम ॥१३-३१-५३ (८२०८९)
प्रीयता हि तदा ब्रह्मन्ममानुग्रहबुद्धिना ।

पितृकार्ये त्वया पूर्वमुपदेशः कृतोऽनघ ॥ १३-३१-५४ (८२०९०)
वृस्यां दर्भेषु हव्ये च कव्ये च मुनिसत्तम ।
एतेन कर्मदोषेण पुरोधास्त्वमजायथाः ॥ १३-३१-५५ (८२०९१)
अहं राजा च विप्रेन्द्र पश्य कालस्य पर्ययम् ।
मत्कृतस्योपदेशस्य त्वयाऽवाप्तमिदं फलम् ॥ १३-३१-५६ (८२०९२)
एतस्मात्कारणाद्ब्रह्मन्प्रहसे त्वां द्विजोत्तम ।
न त्वां परिभवन्ब्रह्मनप्रहसामि गुरुर्भवान् ॥ १३-३१-५७ (८२०९३)
विपर्ययेण मे मन्युस्तेन सन्तप्यते मनः ।
जातिं स्मराम्यहं तुभ्यमतस्त्वां प्रहसामि वै ॥ १३-३१-५८ (८२०९४)
एवं तवोग्रं हि तप उपदेशेन नाशितम् ।
पुरोहितत्वमुत्सृज्य यतस्व त्वं पुनर्भवे ॥ १३-३१-५९ (८२०९५)
इतस्त्वमधमामन्यां मा योनिं प्राप्स्यसे द्विज ।
गृह्यतां द्रविणं विप्र पूतात्मा भव सत्तम ॥ १३-३१-६० (८२०९६)
भीष्म उवाच। १३-३१-६१क्ष् (६८२५)
ततो विसृष्टो राज्ञा तु विप्रो दानान्यनेकशः ।
ब्राह्मणेभ्यो ददौ वित्तं भूमिं ग्रामांश्च सर्वशः ॥ १३-३१-६१ (८२०९७)
कृच्छ्राणि चीर्त्वा च ततो यथोक्तानि द्विजोत्तमैः ।
तीर्थानि चापि गत्वा वै दानानि विविधानि च ॥ १३-३१-६२ (८२०९८)
दत्त्वा गाश्चैव विप्रेभ्यः पूतात्माऽभवदात्मवान् ।
तमेव चाश्रमं गत्वा चचार विपुलं तपः ॥ १३-३१-६३ (८२०९९)
ततः सिद्धिं परां प्राप्तो ब्राह्मणो राजसत्तम ।
सम्मतस्चाभवत्तेषामाश्रमे तन्निवासिनाम् ॥ १३-३१-६४ (८२१००)
एवं प्राप्तो महत्कृच्छ्रमृषिः सन्नृपसत्तम ।
ब्राह्मणेन न वक्तव्यं तस्माद्वर्णावरे जने ॥ १३-३१-६५ (८२१०१)
ग्वर्जयेदुपदेशं च सदैव ब्राह्मणो नृप ।
उपदेशं हि कुर्वाणो द्विजः कृच्छ्रमवाप्नुयात् ॥ १३-३१-६६ (८२१०२)
नेषितव्यं सदा वाचा द्विजेन नृपसत्तम ।
न च प्रवक्तव्यमिह किञ्चिद्वर्णावरे नरे ॥' १३-३१-६७ (८२१०३)
ब्राह्मणाः क्षत्रिया वैश्यास्त्रयो वर्णा द्विजातयः ।
एतेषु कथयन्राजन्ब्राह्मणो न प्रदुष्यति ॥ १३-३१-६८ (८२१०४)
तस्मात्सद्भिर्न वक्तव्यं कस्यचित्किंचिदग्रतः ।
सूक्ष्मा गतिर्हि धर्मस्य दुर्ज्ञेया ह्यकृतात्मभिः ॥ १३-३१-६९ (८२१०५)
तस्मान्मौनेन मुनयो दीक्षां कुर्वन्ति चादृताः ।
दुरुक्तस्य भयाद्राजन्नाभाषन्ते च किञ्चन ॥ १३-३१-७० (८२१०६)
धार्मिका गुणसम्पन्नाः सत्यार्जवसमन्विताः ।
दुरुक्तवाचाभिहितैः प्राप्नुवन्तीह दुष्कृतम् ॥ १३-३१-७१ (८२१०७)

उपदेशो न कर्तव्यो ह्यज्ञात्वा यस्यकस्य चित् ।
उपदेशाद्धि तत्पापं ब्राह्मणः समवाप्नुयात् ॥ १३-३१-७२ (८२१०८)
विमृश्य तस्मात्प्राज्ञेन वक्तव्यं धर्ममिच्छता ।
सत्यानृतेन हि कृत उपदेशो हिनस्ति हि ॥ १३-३१-७३ (८२१०९)
वक्तव्यमिह पृष्टेन विनिश्चयविपर्ययम् ।
स चोपदेशः कर्तव्यो येन धर्ममवाप्नुयात् ॥ १३-३१-७४ (८२११०)
एतत्ते सर्वमाख्यातमुपदेशकृते मया ।
महान्क्लेशो हि भवति तस्मान्नोपदिशेदिह ॥ ॥ १३-३१-७५ (८२१११)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
एकविंशोऽध्यायः ॥ ३१ ॥

Mahabharata - Anushaasana Parva - Chapter Footnotes

७-३१-१ मित्रमुपकारमपेक्ष्योपकर्ता
। सुहृदुपकारमनपेक्ष्योपकर्ता। लोभात् कृपया वेत्यर्थः ॥
७-३१-४ उपाध्यायस्योपदेशकर्तुः ॥
७-३१-६ दुरुक्तं दुःखस्थं नीचं प्रति उक्तं वचनम् ॥
७-३१-८ व्रतिभिर्ब्रह्मचारिभिः । तापसैर्वानप्रस्थैः ॥
७-३१-१० यतिभिः संन्यासिभिः ॥
७-३१-११ दयान्वितः सर्वभूताभयदानेन प्रव्रज्यां कृतवानित्यर्थः ॥
७-३१-१२ दीक्षां नियमम् ॥
७-३१-१३ प्रव्राजयितुं विधिवत् स्वोचितं कर्म त्याजयितुम् ॥
७-३१-१४ प्रव्रजायितुं विधिवत् स्वोचितं कर्म त्याजयितुम् ॥
७-३१-१६ लिङ्गं संन्यासिचिह्नम् ॥
७-३१-१९ आत्मनः प्रियं विक्षेपकस्य शुश्रूषाख्यस्य स्वधर्मस्य
त्यागम् । लिङ्गधारणानधिकारेऽपि त्यागमात्रे सर्वस्याधिकारात्। उटजं
पर्णसालाम् ॥
७-३१-२० वेदीं पूजार्थम् । भूमिं शयनाद्यर्थम् ॥
७-३१-२१ अभिषेकान् त्रिसन्ध्यं स्नानानि ॥
७-३१-२२ सङ्कल्पस्य नियमो निग्रहः । चित्तवृत्तिनिरोध इति
यावत्। तेन उपेतः ॥
७-३१-३० बृसीं चरमशैर्षिकीं आसनकूर्चं पश्चिमाग्रम् ॥
७-३१-३७ वेदे ऋग्वेदादित्रये । कल्पप्रयोगे सूत्रोक्तयज्ञप्रयोगे ॥
७-३१-४३ मत्कृतस्य मह्यं कृतस्य ॥
७-३१-५८ विपर्ययेण वैपरीत्येन मन्युर्दैन्यम् ॥
७-३१-५९ भवे भवनिमित्तम् ॥

७-३१-६३ सत्यानृतेन वाणिज्येन धनलोभेनेत्यर्थः ॥

---

अनुससनपर्व-अध्यय०३२
॥ श्रीः ॥
१३.३२. अध्यायः ३२

अथ दानधर्मपर्व ॥१ ॥
Mahabharata - Anushaasana Parva - Chapter Topics
महीलक्ष्या रुक्मिणींप्रति स्वावासस्थलनिर्देशः ॥१ ॥

Mahabharata - Anushaasana Parva - Chapter Text

युधिष्ठिर उवाच ।
कीदृशे पुरुषे तात स्त्रीषु भरतर्षभ ।
भीष्म उवाच।१३-३२-२क्ष् (६८२६)
अत्र ते वर्णयिष्यामि यथावृत्तं यथाश्रुतम् ।
रुक्मिणी देवकीपुत्रसन्निधौ पर्यपृच्छत ॥१३-३२-२ (८२११३)
नारायणस्याङ्कगतां ज्वलन्तीं
दृष्ट्वा श्रियं पद्मसमानवक्त्राम्। १३-३२-३ (८२११४)
कौतूहलाद्विस्मितचारुनेत्रा
पप्रच्छ माता मकरध्वजस्यष ॥ १३-३२-४ (८२११५)
कानीह भूतान्युपसेवसे त्वं
सन्तिष्ठसे कानि च सेवसे त्वम् ।
तानि त्रिलोकेश्वरभूतकान्ते
तत्त्वेन मे ब्रूहि महर्षिकन्ये ॥ १३-३२-४ (८२११६)
एवं तदा श्रीराभिभाष्यमाणा
देव्या समक्षं गरुडध्वजस्य ।
उवाच वाक्यं मधुराभिधानं
मनोहरं चन्द्रमुखी प्रसन्ना ॥ १३-३२-५ (८२११७)
श्रीरुवाच।१३-३२-६क्ष् (६८२७)
वसामि नित्यं सुभगे प्रगल्भे
दक्षे नरे कर्मणि वर्तमाने ।
अक्रोधने देवपरे कृतज्ञे
जितेन्द्रिये नित्यमुदीर्णसत्वे ॥ १३-३२-६ (८२११८)
नाकर्मशीले पुरुषे वसामि
न नास्तिके साङ्करिके कृतघ्ने ।

न भिन्नवृत्ते न नृशंसवृत्ते
न चाविनीते न गुरुष्वसूयके ॥ १३-३२-७ (८२११९)
ये चाल्पतेजोबलसत्त्वमानाः
क्लिश्यन्ति कुप्यन्ति च यत्रतत्र ।
न चैव तिष्ठामि तथाविधेषु
नरेषु सङ्गुप्तमनोरथेषु ॥ १३-३२-८ (८२१२०)
यश्चात्मनि प्रार्थयते न किञ्चि-
द्यश्च स्वभावोपहतान्तरात्मा ।
द्यश्च स्वभावोपहतान्तरात्मा ।
नरेषु नाहं निवसामि स्म्यक् ॥ १३-३२-९ (८२१२१)
वसामि धर्मशीलेषु धर्मज्ञेषु महात्मसु ।
वृद्धसेविषु दान्तेषु सत्वज्ञेषु महात्मसु ॥१३-३२-१० (८२१२२)
अवन्ध्यकालेषु सदा दानशौचरतषु च ।
ब्रह्मचर्यतपोज्ञानगोद्विजातिप्रियेषु च ॥१३-३२-११ (८२१२३)
स्त्रीषु कान्तासु शान्तासु देवद्विजपरासु च ।
विशुद्धगृहभाण्डासु गोधान्याभिरतासु च ॥१३-३२-१२ (८२१२४)
स्वधर्मशीलेषु च धर्मवित्सु
वृद्धोपसेवानिरते च दान्ते ।
कृतात्मनि क्षान्तिपरे समर्थे
क्षान्तासु दान्तासु तथाऽबलासु ।
सत्यस्वभावार्जवसंयुतासु
वसागि देवद्विजपूजिकासु ॥ १३-३२-१३ (८२१२५)
प्रकीर्णभाण्डामनवेक्ष्यकारिणीं
सदा च भर्तुः प्रतिकूलवादिनीम्। १३-३२-१४ (८२१२६)
लोलामदक्षामवलेपिनीं च
व्यपेतशौचां कलहप्रियां च ।
निद्राभिभूतां सततं शयाना-
मेवंविधां स्त्रीं परिवर्जयामि ॥ १३-३२-१५ (८२१२७)
सत्यासु नित्यं प्रियदर्शनासु
सौभाग्ययुक्तासु गुणान्वितासु ।
वसामि नारीषु पतिव्रतासु
कल्याणशीलासु विभूषितासु ॥ १३-३२-१६ (८२१२८)
यानेषु कन्यासु विभूषणेषु
यज्ञेषु मेघेषु च वृष्टिमत्सु ।
वसामि फुल्लासु च पद्मिनीषु
नक्षत्रवीथीषु च शारदीषु ॥ १३-३२-१७ (८२१२९)

गजेषु गोष्ठेषु तथाऽऽसनेषु
सरःसु फुल्लोत्पलपङ्कजेषु ।
नदीषु हंसस्वननादितासु
क्रौञ्चावघुष्टस्वरशोभितासु ॥ १३-३२-१८ (८२१३०)
विकीर्णकूलद्रुमराजितासु
तपस्विसिद्धद्विजसेवितासु ।
वसामि नित्यं सुबहूदकासु
सिम्हैर्गजैश्चाकुलितोदकासु ॥ १३-३२-१९ (८२१३१)
मत्ते गजे गोवृषभे नरेन्द्रे
सिम्हासने सत्पुरुषेषु नित्यम् ॥ १३-३२-२० (८२१३२)
यस्मिञ्चनो हव्यभुजं जुहोति
गोब्राह्मणं चार्चति देवताश्च
काले च पुष्पैर्बलयः क्रियन्ते
तस्मिन्गृहे नित्यमुपैमि वासम् ॥ १३-३२-२१ (८२१३३)
स्वाध्यायनित्येषु सदा द्विजेषु
क्षत्रे च धर्माभिरते सदैव ।
वैश्ये च कृष्याभिरते वसामि
शूद्रे च शुश्रूषणनित्ययुक्ते ॥ १३-३२-२२ (८२१३४)
नारायणे त्वेकमना वसामि
सर्वेण भावेन शरीरभूता ।
तस्मिन्हि धर्मः सुमहान्निविष्टो
ब्रह्मिण्यता चात्र तथा प्रियत्वम् ॥ १३-३२-२३ (८२१३५)
नाहं शरीरेण वसामि देवि
नैवं मया शक्यमिहाभिधातुम् ।
भावेन यस्मिन्निवसामि पुंसि
स वर्धते धर्मयशोर्थकामैः ॥ ॥ १३-३२-२४ (८२१३६)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
द्वात्रिंशोऽध्यायः ॥ ३२ ॥

Mahabharata - Anushaasana Parva - Chapter Footnotes

७-३२-२ पर्यपृच्छत श्रियमित्यपकृष्यते ॥
७-३२-४ उपसेवसे गजतुरगादिरूपेण । संतिष्ठसे शौर्यादिरूपेण
पुरुषे वससि ॥
७-३२-५ देव्या रुक्मिण्या ॥
७-३२-६ प्रगल्भे वाग्मिनि । दक्षे अनरुसे। वसामि सत्त्वे इति

ट थ ध पाठः ॥
७-३२-८ तेजः शौर्यं । सत्वं बुद्धिः। यत्र तत्र विशिष्टपुरुषे। सङ्क्ल्प्तमनोरथेषु अन्यत् ध्यायन्त्यन्यद्दर्शयन्ति तादृशेषु ॥
७-३२-२३ भावेन आदरेण शरीरभूता शरीरवती ॥
७-३२-२४ नारायणादन्यत्र धर्मादिवृद्धिरूपेणैव वसामि न शरीरेणेत्यर्थः ॥
७-३२-३२ द्वात्रिंशोऽध्यायः ॥

---

अनुससनपर्व-अध्यय०३३
॥ श्रीः ॥
१३.३३. अध्यायः ३३

अथ दानधर्मपर्व ॥ १ ॥
Mahabharata - Anushaasana Parva - Chapter Topics
भीष्मेण युधिष्टिरम्प्रति कृतघ्नस्य प्रायश्चित्तविषये दृष्टान्ततया वत्सनाभमुनिचरित्रकथनम् ॥ १ ॥

Mahabharata - Anushaasana Parva - Chapter Text

ग्युधिष्ठिर उवाच ।
प्रायश्चित्तं कृतघ्नानां प्रतिब्रूहि पितामह ।
मातॄः पितॄन्गुरुंश्चैव येऽवमन्यन्ति मोहिताः ॥ १३-३३-१ (८२१३७)
ये चाप्यन्ते परे तात कृतघ्ना निरपत्रपाः ।
तेषां गतिं महाबाहो श्रोतुमिच्छामि तत्वतः ॥ १३-३३-२ (८२१३८)
भीष्म उवाच। १३-३३-३क्ष् (६८२८)
कृतघ्नानां गतिस्तात नरके शाश्वतीः समाः ।
मातापितृगुरूणां च ये न तिष्ठन्ति शासने ।
क्रिमिकीटपिपीलेषु जायन्ते स्थावरेषु च ॥ १३-३३-३ (८२१३९)
दुर्लभो हि पुनस्तेषां मानुष्ये पुनरुद्भवः ।
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ॥ १३-३३-४ (८२१४०)
वत्सनाभो महाप्राज्ञो महर्षिः संशितव्रतः ।
वल्मीकभूतो ब्रह्मर्षिस्तप्यते सुमहत्तपः ॥ १३-३३-५ (८२१४१)
तस्मिंश्च तप्यति तपो वासवो भरतर्षभ ।
ववर्ष समुहद्वर्षं सविद्युत्स्तनयित्नुमान् ॥ १३-३३-६ (८२१४२)
तत्र सप्ताहवर्षं तु मुमुचे पाकशासनः ।

निमीलिताक्षस्तद्वर्षं प्रत्यगृह्यत वै द्विजः ॥ १३-३३-७ (८२१४३)
तस्मिन्पतति वर्षे तु शीतवातसमन्विते ।
विशीर्णध्वस्तशिखरो वल्मीकोऽशनिताडितः ॥ १३-३३-८ (८२१४४)
ताड्यमाने ततस्तस्मिन्वत्सनाभे महात्मनि ।
कारुण्यात्तस्य धर्मः स्वमानृशंस्यमथाकरोत् ॥ १३-३३-९ (८२१४५)
चिन्तयानस्य ब्रह्मर्षिं तपन्तमतिधार्मिकम् ।
अनुरूपा मतिः क्षिप्रमुपजाता स्वभावजा ॥ १३-३३-१० (८२१४६)
स्वं रूपं माहिषं कृत्वा क़क़क़क़क़क़क़क़क़क़ मनोहरम् ।
रक्षार्थं वत्सनामस्य चतुष्पादुपरिस्थितः ॥ १३-३३-११ (८२१४७)
यदा त्वपगतं वर्षं वृष्टिवातसमन्वितम् ।
ततो महिषरुपेण धर्मो धर्मभृतांवर ।
शनैर्वल्मीकमुत्सृज्य प्राद्रवद्भरतर्षभ ॥ १३-३३-१२ (८२१४८)
स्थितेऽस्मिन्वृष्टिसम्पाते वीक्षते स्म महातपाः ।
दिशश्च विपुलास्तत्र गिरीणां शिखराणि च ॥ १३-३३-१३ (८२१४९)
दृष्ट्वा च पृथिवीं सर्वां सलिलेन परिप्लुताम् ।
जलाशयान्स तान्दृष्ट्वा विप्रः प्रमुदितोऽभवत् ॥ १३-३३-१४ (८२१५०)
अचिन्तयद्विस्मितश्चि विप्रः प्रमुदितोऽभवत् ॥
अचिन्तयद्विस्तितश्च वर्षात्केनाभिरक्षितः ।
ततोऽपश्यत्स महिषमवस्थितमदूरतः ॥ १३-३३-१५ (८२१५१)
तिर्यग्योनावपि कथं दृश्यते धर्मवत्सलः ॥ १३-३३-१६ (८२१५२)
अतो नु भद्रमहिषः शिलापट्टमवस्थितः ।
पीवरश्चैव बल्यश्च बहुमांसो भवेदयम् ॥ १३-३३-१७ (८२१५३)
तस्य बुद्धिरियं जाता धर्मसंसक्तजा मुनेः ।
कृतघ्ना नरकं यान्ति ये च विश्वस्तघातिनः ॥ १३-३३-१८ (८२१५४)
निष्कृतिं नैव पश्यामि कृतघ्नानां कथञ्चन ।
ऋते प्राणिपरित्यागाद्धर्मज्ञानां वचो यथा ॥ १३-३३-१९ (८२१५५)
अकृत्वा भरणं पित्रोरदत्त्वा गुरुदक्षिणाम् ।
कृतघ्नतां च सम्प्राप्य मरणान्ता च निष्कृतिः ॥ १३-३३-२० (८२१५६)
आकाङ्क्षायामुपेक्षायां चोपपातकमुत्तमम् ।
तस्मात्प्राणान्परित्यक्ष्ये प्रायश्चित्तार्थमित्युत ॥ १३-३३-२१ (८२१५७)
स मेरुशिखरं गत्वा निस्यङ्केनान्तरात्मना ।
प्रायश्चित्तं कर्तुकामः शरीरं त्यक्तुमुद्यतः ।
निगृहीतश्च धर्मात्मा हस्ते धर्मेण धर्मवित् ॥ १३-३३-२२ (८२१५८)
धर्मि उवाच। १३-३३-२३क्ष् (६८२९)
वत्सनाभ महाप्राज्ञ बहुवर्षशतायुष ।
परितुष्टोस्मि त्यागेन निस्सङ्गेन तथाऽऽत्मनः ॥ १३-३३-२३ (८२१५९)

एवं धर्मभृतः सर्वे विमृशन्ति कृताकृतम् ।
न कश्चिद्व्तसनाभस्य यस्य नोपहतं मनः ॥ १३-३३-२४ (८२१६०)
यश्चानवद्यश्चरति शक्तो धर्मं च सर्वशः ।
निवर्तस्व महाप्राज्ञ पूतात्मा ह्यसि शाश्वतः'॥ ॥ १३-३३-२५ (८२१६१)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
त्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥
Mahabharata - Anushaasana Parva - Chapter Footnotes

७-३३-१७ बल्यः बलिकर्मार्हः । पीवरश्चैव वध्यश्चेति पाठान्तरम् ॥

---

अनुससनपर्व-अध्यय०३४
॥ श्रीः ॥
१३.३४. अध्यायः ३४

अथ दानधर्मपर्व ॥ १ ॥
Mahabharata - Anushaasana Parva - Chapter Topics
भीष्मेण युधिष्ठिरम्प्रति स्त्रीपुंसयोः समायोगे स्त्रियाएव सुखाधिक्ये
सवादतया भङ्गास्वनोपाख्यानकथनम् ॥ १ ॥

Mahabharata - Anushaasana Parva - Chapter Text

युधिष्ठिर उवाच ।
स्त्रीपुंसयोः सम्प्रयोगे स्पर्शः कस्याधिको भवेत् ।
एतस्मिन्संशये राजन्यथावद्वक्तुमर्हसि ॥ १३-३४-१ (८२१६२)
भीष्म उवाच। १३-३४-२क्ष् (६८३०)
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
भङ्गास्वनेन शक्रस्य यथा वैरमभूत्पुरा ॥ १३-३४-२ (८२१६३)
पुरा भङ्गास्वनो नाम राजर्षिरतिधार्मिकः ।
अपुत्रः पुरुषव्याघ्र पुत्रार्थं यज्ञमाहरत् ॥ १३-३४-३ (८२१६४)
अग्निष्टुतं स राजर्षिरिन्द्रद्विष्टं महाबलः ।
प्रायश्चित्तेषु मर्त्यानां पुत्रकामेषु चेष्यते ॥ १३-३४-४ (८२१६५)
इन्द्रो ज्ञात्वा तु तं यज्ञं महाभागः सुरेश्वरः ।
अन्तरं तस्य राजर्षेरन्विच्छन्नियतात्मनः ।
न चैवास्यान्तरं राजन्स ददर्श महात्मनः ॥ १३-३४-५ (८२१६६)
कस्य चित्त्वथ कालस्य मृगयां गतवान्नृपः ।

इदमन्तरमित्येव शक्रो नृपममोहयत् ॥१३-३४-६ (८२१६७)
एकाश्वेन च राजर्षिर्भ्रान्त इन्द्रेण मोहितः ।
न दिशोऽविन्दत नृपः क्षुत्पिपासार्दितस्तदा ॥१३-३४-७ (८२१६८)
इतश्चेतश्च धावन्वै श्रमतृष्णार्दितो नृप ।
सरोऽपश्यत्सुरुचिरं पूर्णं परमवारिणा ॥१३-३४-८ (८२१६९)
सोऽवगाह्य सरस्तात पाययामास वाजिनम् ॥ १३-३४-९ (८२१७०)
अथ पीतोदकं सोऽश्वं वृक्षे बद्धवा नृपोत्तमः ।
अवगाह्य ततः स्नातस्तत्र स्त्रीत्वमवाप्तवान् ॥१३-३४-१० (८२१७१)
आत्मानं स्त्रीकृतं दृष्ट्वा व्रीडितो नृपसत्तमः ।
चिन्तानुगतसर्वात्मा व्याकुलेन्द्रियचेतनः ॥१३-३४-११ (८२१७२)
आरोहिष्ये कथं त्वश्वं कथं यास्यामि वै पुरम् ।
इष्टेनाग्निष्टुता चापि पुत्राणां शतमौरसम् ॥१३-३४-१२ (८२१७३)
जातं महाबलानां मे तान्प्रवक्ष्यामि किन्नवहम् ।
दारेषु चात्मकीयेषु पौरजानपदेषु च ॥१३-३४-१३ (८२१७४)
मृदुत्वं च तनुत्वं च पराधीनत्वमेव च ।
ग्हासभावादि लावण्यं स्त्रीगुणाद्वा कुतूहलम्।'
स्त्रीगुणा ऋषिभिः प्रोक्ता धर्मतत्त्वार्थदर्शिभिः ॥ १३-३४-१४ (८२१७५)
व्यायामः कर्कशत्वं च वीर्यं च पुरुषे गुणाः ॥ १३-३४-१५ (८२१७६)
पौरुषं विप्रनष्टं स्त्रीत्वं केनापि मेऽभवत् ।
स्त्रीभावात्पुनरश्वं तं कथमारोढुमुत्सहे ॥१३-३४-१६ (८२१७७)
महता त्वथ खेदेन आरुह्याश्वं नराधिपः ।
पुनरायात्पुरं तात स्त्रीभूतो नृपसत्तमः। १३-३४-१७ (८२१७८)
पुत्रा दाराश्च भृत्याश्च पौरजानपदाश्च ते ।
किन्न्विदं त्विति विज्ञाय विस्मयं परमं गताः ॥१३-३४-१८ (८२१७९)
अथोवाच स राजर्षिः स्त्रीभूतो वदतांवरः ।
मृगयामस्मि निर्यातो बलैः परिवृतो दृढम् ।
उद्भ्रान्तः प्राविशं घोरामटवीं दैवमोहितः ॥ १३-३४-१९ (८२१८०)
अटव्यां च सुघोरायां तृष्णार्तो नष्टचेतनः ।
सरः सुरुचिरप्रख्यमपश्यं पक्षिभिर्वृतम् ॥१३-३४-२० (८२१८१)
तत्रावगाढः स्त्रीभूतो व्यक्तं दैवान्न संशयः ।
ग्अतृप्त एव पुत्राणां दाराणां च धनस्य च ॥' १३-३४-२१ (८२१८२)
नामगोत्राणि चाभाव्य दाराणां मन्त्रिणां तथा ।
आह पुत्रांस्ततः सोऽथ स्त्रीभूतः पार्तिवोत्तमः ।
सम्प्रीत्या भुज्यतांराज्यं वनं यास्यामि पुत्रकाः ॥ १३-३४-२२ (८२१८३)
स पुत्राणां शतं राजा अभिषिच्य वनं गतः ।
गत्वा चैवाश्रमं सा तु तापसं प्रत्यपद्यत ॥१३-३४-२३ (८२१८४)

तापसेनास्य पुत्राणामाश्रमेष्वभवच्छतम् ।
अथ साऽऽदाय तान्सर्वान्पूर्वपुत्रानभाषत ॥ १३-३४-२४ (८२१८५)
पुरुषत्वे सुता यूयं स्त्रीत्वे चेमे शतं सुताः ।
एकत्र भुज्यतां राज्यं भ्रातृभावेन पुत्रकाः ॥ १३-३४-२५ (८२१८६)
सहिता भ्रातरस्तेऽथ राज्यं बुभुजिरे तदा ॥ १३-३४-२६ (८२१८७)
तान्दृष्ट्वा भातृभावेन भुञ्जानान्राज्यमुत्तमम् ।
चिन्तयामास देवेन्द्रो मन्युनाऽथ परिप्लुतः ।
उपकारोऽस्य राजर्षेः कृतो नापकृतं मया ॥ १३-३४-२७ (८२१८८)
ततो ब्राह्मणरुपेण देवराजः शतक्रतुः ।
भेदयामास तान्गत्वा नगरं वै नृपात्मजान् ॥ १३-३४-२८ (८२१८९)
भ्रातृणां नास्ति सौभ्रात्रं येऽप्येकस्य पितः सुताः ।
कश्यपस्य सुराश्चैव असुराश्व सुतास्तथा। १३-३४-२९ (८२१९०)
राज्यहेतोर्विवदिताः कश्यपस्य सुरासुराः ॥
यूयं भङ्गास्वनापत्यास्तापसस्येतरे सुताः। १३-३४-३० (८२१९१)
युष्माकं भेदितास्ते तु युद्धेऽन्योन्यमपातयन् ।
तच्छ्रुत्वा तापसी चापि संतप्ता प्ररुरोद ह ॥ १३-३४-३१ (८२१९२)
ब्राह्मणच्छद्मनाऽभ्येत्य तामिन्द्रोऽथान्वपृच्छत ।
केन दुःखेन संतप्ता रोदिषि त्वं वरानने ॥ १३-३४-३२ (८२१९३)
ब्राह्मणं तं ततो दृष्ट्वा सा स्त्री करणमब्रवीत् ।
पुत्राणां द्वे शते ब्रह्मन्कालेन विनिपातिते ॥ १३-३४-३३ (८२१९४)
अहं राजाऽभव विप्र तत्र पूर्वं शतं मम ।
समुत्पन्नं सुरूपाणां पुत्राणां ब्राह्मणोत्तम ॥ १३-३४-३४ (८२१९५)
कदाचिन्मृगयां यात उद्धान्तो गहने वने ।
अवगाढश्च सरसि स्त्रीभूतो ब्राह्मणोत्तम ॥ १३-३४-३५ (८२१९६)
पुत्रान्राज्ये प्रतिष्ठाप्य वनमस्मि ततो गतः ॥ १३-३४-३६ (८२१९७)
स्त्रियाश्च मे पुत्रशतं तापसेन महात्मना ।
आश्रमे जनितं ब्रह्मन्नीतं तन्नगरं मया ॥ १३-३४-३७ (८२१९८)
तेषां च वैरमुत्पन्नं कालयोगेन वै द्विज ।
एतच्छोचाम्यहं ब्रह्मन्दैवेन समभिप्लुता ॥ १३-३४-३८ (८२१९९)
इन्द्रस्तां दुःशितां दृष्ट्वा अब्रवीत्परुषं वचः ॥ १३-३४-३९ (८२२००)
पुरा सुदुःसहं भद्रे मम दुःखं त्वया कृतम् ।
इन्द्रद्विष्टेन यजता मामनाहूय धिष्ठितम् ।
इन्द्रोऽहमस्मि दुर्बुद्धे वैरं ते पातितं मया ॥ १३-३४-४० (८२२०१)
इन्द्रं दृष्ट्वा तु राजर्षिः पादयोः शिरसा गतः ।
प्रसीद त्रिदशश्रेष्ठ पुत्रकामेन स क्रतुः ।
इष्टस्त्रिदशशार्दूल तत्र मे क्षन्तुमर्हसि ॥ १३-३४-४१ (८२२०२)

प्रणिपातेन तस्येन्द्रः परितुष्टो वरं ददौ ॥ १३-३४-४२ (८२२०३)
पुत्रास्ते कतमे राजञ्जीवन्त्वेतत्प्रचक्ष्व मे ।
स्त्रीभूतस्य हि ये जाताः पुरुषस्याथ येऽभवन् ॥ १३-३४-४३ (८२२०४)
तापसी तु ततः शक्रमुवाच प्रयताञ्जलिः ।
स्त्रीभूतस्य हि ये पुत्रास्ते मे जीवन्तु वासव ॥ १३-३४-४४ (८२२०५)
इन्द्रस्तु विस्मितो दृष्ट्वा स्त्रियं पप्रच्छ तां पुनः ।
पुरुषोत्पादिता ये ते कथं द्वेष्याः सुतास्तव ॥ १३-३४-४५ (८२२०६)
स्त्रीभूतस्य हि ये जाताः स्नेहस्तेभ्योऽधिकः कथम् ।
कारणं श्रोतुमिच्छामि तन्मे वक्तुमिहार्हसि ॥ १३-३४-४६ (८२२०७)
स्त्र्युवाच। १३-३४-४७क्ष् (६८३१)
स्त्रियास्त्वभ्यधिकः स्नेहो न तता पुरुषस्य वै ।
तस्मात्ते शक्र जीवन्तु ये जाताः स्त्रीकृतस्य वै ॥ १३-३४-४७ (८२२०८)
भीष्म उवाच। १३-३४-४८क्ष् (६८३२)
एवमुक्तस्ततस्त्विन्द्रः प्रीतो वाक्यमुवाच ह ।
सर्व एवेह जीवन्तु पुत्रास्ते सत्यवादिनि ॥ १३-३४-४८ (८२२०९)
वरं च वृणु राजेन्द्र यं त्वमिच्छसि सुव्रत ।
पुरुषत्वमथ स्त्रीत्वं मत्तो यदभिकाङ्क्षसे ॥ १३-३४-४९ (८२२१०)
स्त्र्युवाच। १३-३४-५०क्ष् (६८३३)
स्त्रीत्वमेव वृणे शक्र पुंस्त्वं नेच्छामि वासव ।
एवमुक्तस्तु देवेन्द्रस्तां स्त्रियं प्रत्युवाच ह ॥ १३-३४-५० (८२२११)
पुरुषत्वं कथं त्यक्त्वा स्त्रीत्वं रोचयसे विभो ।
एवमुक्तः प्रत्युवाच स्त्रीभूतो राजसत्तमः ॥ १३-३४-५१ (८२२१२)
स्त्रियाः पुरुषसंयोगे प्रीतिरभ्यधिका सदा ।
एतस्मात्कारणाच्छक्र स्त्रीत्वमेव वृणोम्यहम् ॥ १३-३४-५२ (८२२१३)
रमाभि चाधिकं स्त्रीत्वे सत्यं वै देवसत्तम ।
स्त्रीभावेन हि तुष्यामि गम्यतां त्रिदशाधिप ॥ १३-३४-५३ (८२२१४)
एवमस्त्विति चोक्त्वा तामापृच्छ्य त्रिदिवं गतः ।
एवं स्त्रिया महाराज अधिका प्रीतिरुच्यते ॥ ॥ १३-३४-५४ (८२२१५)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
चतुस्त्रिंशोऽध्यायः ॥ ३४ ॥

Mahabharata - Anushaasana Parva - Chapter Footnotes

७-३४-१ स्पर्शः वैषयिकं सुखम् ॥
७-३४-४ तत्र ह्यग्निदेव स्तूयते । सच पुत्रप्रदः क्रतुः
सचेन्द्रद्विष्टस्तत्रेन्द्रस्य प्राधान्याभावात् ॥

७-३४-५ यज्ञं कृतमिति शेषः ॥
७-३४-१४ मृदुत्वादयः स्त्रीगुणा आगताः ॥
७-३४-१५ कर्कशत्वादयः पुरुषगुणाः नष्टाः ॥
७-३४-२३ प्रत्यपद्यत भर्तृत्वेन स्वीकृतवती ॥
७-३४-२७ स्त्रीत्वदानेन द्विगुणितपुत्रप्राप्तिरूप उपकारएव जातो न स्त्रीत्वकृतोऽपकार इत्यर्थः ॥
७-३४-४० इन्दद्विष्टेन अप्रिष्टुता यज्ञेन
। धिष्ठितमधिष्ठितम्। क्रतूनिति शेषः ॥

---

अनुससनपर्व-अध्यय०३५
॥ श्रीः ॥
१३.३५. अध्यायः ३५

अथ दानधर्मपर्व ॥१ ॥
Mahabharata - Anushaasana Parva - Chapter Topics
भीष्मेण युधिष्ठिरम्प्रति
मनोवाक्कायरूपकरणैर्दुष्कर्मपरित्पागपूर्वकं शुभकर्मकरणस्य भगवत्प्रसादनहेतुत्वोक्तिः ॥१ ॥

Mahabharata - Anushaasana Parva - Chapter Text

युधिष्ठिर उवाच ।
किं कर्तव्यं मनुष्येण लोकयात्राहितार्थिना ।
कथं वै लोकयात्रां तु किंशीलश्च समाचरेत् ॥१३-३५-१ (८२२१६)
भीष्म उवाच।१३-३५-२क्ष् (६८३४)
ग्देवे नारायणे भक्तिः शंकरे साधुपूजया ।
ध्यानेनाथ जपः कार्यः स्वधर्मैः शुचिचेतसा ॥' १३-३५-२ (८२२१७)
कायेन त्रिविधं कर्म वाचा चापि चतुर्विधम् ।
मनसा त्रिविधं चैव दश कर्मपथांस्त्यजेत् ॥१३-३५-३ (८२२१८)
प्राणातिपातः स्तैन्यं च परदाराभिमर्शनम् ।
त्रीणि पापानि कायेन सर्वतः परिवर्जयेत् ॥१३-३५-४ (८२२१९)
असत्प्रलापं पारुष्यं पैशुन्यमनृतं तथा ।
चत्वारि वाचा राजेन्द्र न जल्पेन्नानुचिन्तयेत् ॥१३-३५-५ (८२२२०)
अनभिध्या परस्वेषु सर्वसत्वेषु सौहृदम् ।
कर्मणां फलमस्तीति त्रिविधं मनसा चरेत् ॥१३-३५-६ (८२२२१)
तस्माद्वाक्कायमनसा नाचरेदशुभं नरः ।

शुभान्येवाचरँल्लोके भक्तो नारायणस्य हि ।
तस्यैव तु पदं सूक्ष्मं प्रसादादश्नुयात्परम् ॥' ॥ १३-३५-७ (८२२२२)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
पञ्चत्रिंशोऽध्यायः ॥ ३५ ॥
Mahabharata - Anushaasana Parva - Chapter Footnotes

७-३५-१ लोकयात्रां लोकद्वयश्रेयःसाधनम् ॥
७-३५-३ सुभं कर्मफलं चरेदिति ध.पाठः ॥
७-३५-४ प्राणातिपातो हिंसा ॥
७-३५-५ पारुष्यं निष्ठुरभाषणम् । पैशुन्यं राजद्वारादौ
परदोषसूचनम्। अनतं मिथ्यावादः मनसाप्येवं वदिष्यामिति
नानुचिन्तयेत् ॥
७-३५-६ अनभिध्येति श्लोकेन परद्रव्येष्वभिध्यानं
परस्यानिष्टचिन्तनं वेदबादेषु नास्तिक्यमिति त्रीणि त्याज्यानि लक्षयेत्
। त्यजेदित्युपक्रमात् ॥

---

अनुससनपर्व-अध्यय०३६
॥ श्रीः ॥
१३.३६. अध्यायः ३६

अथ दानधर्मपर्व ॥ १ ॥
Mahabharata - Anushaasana Parva - Chapter Topics
युधिष्ठिरेण भीष्मांप्रति श्रुतधर्माननूद्य प्राणिनां
सांसारिकदुःखानुवर्णनपूर्वकं स्वस्य संसारनिर्वेदनिवेदनेन
पुनर्विस्तरेण वैष्णवधर्मकथनप्रार्थना ॥ १ ॥

Mahabharata - Anushaasana Parva - Chapter Text

ग्युधिष्ठिर उवाच ।
चित्तं मे दूयते तात लोके परमविन्दतः ॥ १३-३६-१ (८२२२३)
अशाश्वतमिदं सर्वं जगत्स्थावरजङ्गमम् ।
ऋते नारायणं पुण्यं प्रतिभाति पितामह ॥ १३-३६-२ (८२२२४)
नारायणो हि विश्वात्मा पुरुषः पुष्करेक्षणः ।
तस्यास्य देवकीसूनोः श्रुतं कृत्स्नं त्वयाऽनघ ॥ १३-३६-३ (८२२२५)
भीष्म उवाच। १३-३६-४क्ष् (६८३५)

युधिष्ठिर महाप्राज्ञ मया दृष्टं च सङ्गरे ॥ १३-३६-४ (८२२२६)
युधिष्ठिर उवाच। १३-३६-५क्ष् (६८३६)
त्वत्त एव तु राजेन्द्र राजधर्माश्च पुष्कलाः ।
श्रुतं पुराणमखिलं नारदेन निवेदितम् ।
गुह्यं नारायणाख्यानं त्रिविधक्लेशनाशनम् ॥ १३-३६-५ (८२२२७)
एकान्तिधर्मनियमाः समासव्यासकल्पिताः ।
कथिता वै महाभाग त्वया वै मदनुग्रहात् ॥ १३-३६-६ (८२२२८)
लोकरक्षणकर्तृत्वं तस्यैव हरिमेधसः ।
आतिथेयविधिश्चैव तपांसि नियमाश्च ये ॥ १३-३६-७ (८२२२९)
वेदवादप्रसिद्धाश्च वाजपेयादयो मखाः ।
यज्ञा द्रविणनिष्पाद्या अग्निहोत्रानुपालिताः ॥ १३-३६-८ (८२२३०)
जपयज्ञाश्च विविधा ब्राह्मणानां तपस्विनाम् ।
एकादशविधाः प्रोक्ता हविर्यज्ञा द्विजातिनाम् ॥ १३-३६-९ (८२२३१)
तेषां फलविशेषाश्च उञ्छधर्मास्तथैव च ।
अहन्यहनि ये प्रोक्ता महायज्ञा द्विजातिनाम् ॥ १३-३६-१० (८२२३२)
वेदश्रवणधर्माश्च ब्रह्मयज्ञफलं तथा ।
वेदव्रतविधानं च नियमाश्चैव वैदिकाः ॥ १३-३६-११ (८२२३३)
स्वाहा स्वधा प्रणीते च इष्टापूर्तफलं तथा ।
उत्तरोत्तरसेवायामाश्रमाणां च यत्फलम् ॥ १३-३६-१२ (८२२३४)
प्रत्येकशश्च निष्ठायामाश्रमाणां महामते ।
मासपक्षोपवासानां सम्यगुक्तफलं च यत् ॥ १३-३६-१३ (८२२३५)
अनाशितानां ये लोका ये च पञ्चतपा नराः ।
वीराध्वानं प्रपन्नानां या गतिश्चाग्निहोत्रिणाम् ॥ १३-३६-१४ (८२२३६)
ग्रीष्मे पञ्चतपानां च शिशिरे जलचारिणाम् ।
वर्षे स्थण्डिलशायीनां फलं यत्परिकीर्तितम् ॥ १३-३६-१५ (८२२३७)
लोके चक्रचराणां च द्विजानां यत्फलं स्मृतम् ।
अन्नादीनां च दानानां यत्फलं परिकीर्तितम् ॥ १३-३६-१६ (८२२३८)
सर्वतीर्थाभिषिक्तानां नराणां च फलोदयः ।
राज्ञां धर्माश्च ये लोके सम्यक्पालयतां प्रजाः ॥ १३-३६-१७ (८२२३९)
ये च सत्यव्रता लोके ये तीर्थे कृतश्रमाः ।
मातापितृपरा ये च गुरुवृत्तीश्च संश्रिताः ॥ १३-३६-१८ (८२२४०)
गोब्राह्मणपरित्राणे राष्ट्रातिक्रमणे तथा ।
त्यजन्त्यभिमुखाः प्राणान्निर्भयाः सत्वमाश्रिताः ॥ १३-३६-१९ (८२२४१)
सहस्रदक्षिणानां च या गतिर्वदनां वर ।
ये च संध्यामुपासन्ते सम्यगुक्ता महाव्रताः ॥ १३-३६-२० (८२२४२)
तथा योगविधानं च यद्ग्रन्थेष्वभिशब्दितम् ।

वेदाद्याः श्रुतयश्चापि श्रुता मे गुरुसत्तम ॥ १३-३६-२१ (८२२४३)
सिद्धान्तनिर्णयाश्चापि द्वैपायनमुखोद्गताः ।
श्रुताः पञ्च महायज्ञा येषु सर्वं प्रतिष्ठितम् ॥ १३-३६-२२ (८२२४४)
तत्प्रभेदेषु ये धर्मास्तेऽपि वै कृत्स्नशः श्रुताः ।
न च दूषयितुं शक्याः सद्भिरुक्ता हि ते तथा ॥ १३-३६-२३ (८२२४५)
एतेषां किल धर्माणामुत्तमो वैष्णवो विधिः ।
रक्षते भगवान्विष्णुर्भक्तमात्मशरीरवत् ॥ १३-३६-२४ (८२२४६)
कर्मणो हि कृतस्येह कामितस्य द्विजोत्तम ।
फलं ह्यवश्यं भोक्तव्यमृषिर्द्वैपायनोऽब्रवीत् ॥ १३-३६-२५ (८२२४७)
भोगान्ते चापि पतनं गतिः पूर्वं प्रभाषिता ।
न मे प्रीतिकरास्त्वेते विषोदर्का हि मे मताः ॥ १३-३६-२६ (८२२४८)
वधात्कृष्टतरं मन्ये गर्भवासं महाद्युते ।
दिष्टान्ते यानि दुःखानि पुरुषो विन्दते विभो ।
ततः कष्टतराणीह गर्भवासे हि विन्दति ॥ १३-३६-२७ (८२२४९)
ततश्चाभ्याधिकां तीव्रां वेदनां लभते नरः ।
गर्भापक्रमणे तात कर्मणासुपसर्पणे ॥ १३-३६-२८ (८२२५०)
तस्मान्मे निश्चयो जातो धर्मेष्वेतेषु भारत ।
तदिच्छामि कुरुश्रेष्ठ त्वत्प्रसादान्महामते ।
तं धर्मं चेह वेत्तुं वै यो जराजन्ममृत्युहा ॥ १३-३६-२९ (८२२५१)
येनोष्णदा वैतरणी असिपत्रवनं च तत् ।
कुण्डानि चाग्नितप्तानि क्षुरधारापथस्तथा ।
शाल्मलीं च महाघोरामायसीं घोरकण्टकाम् ॥ १३-३६-३० (८२२५२)
मातापितृकते चापि सुहृन्मित्रार्थकारणात् ।
आत्महेतोश्च पापानि कृतानीह नरैश्च यैः ।
तेषां फलोदयं कष्टमृषिर्द्वैपायनोऽब्रवीत् ॥ १३-३६-३१ (८२२५३)
कुम्भीपाकप्रदीप्तानां शूलार्तानां च क्रन्दताम् ।
रौरवे क्षिप्यमाणानां प्रहारैर्मथितात्मनाम् ॥ १३-३६-३२ (८२२५४)
स्तनतामपकृत्तानां पिबतामात्मशोणितम् ।
तेषामेव प्रवदतां कारुण्यं नास्ति यन्त्रतः ॥ १३-३६-३३ (८२२५५)
तृष्णाशुष्कोष्ठकण्ठानां विह्वलानामचेतसाम् ।
सर्वदुःखाभिभूतानां रुजार्तानां च क्रोशताम् ॥ १३-३६-३४ (८२२५६)
वेदनार्ता हि क्रन्दन्ति पूरयन्तो दिशो दश ॥ १३-३६-३५ (८२२५७)
एकः करोति पापानि सहभोज्यानि बान्धवैः ।
तेषामेकः फलं भुङ्क्ते कष्टं वैवस्वते गृहे ॥ १३-३६-३६ (८२२५८)
येन नैतां गतिं गच्छेन्न विण्मूत्रास्थिपिच्छिले ।
विष्ठामूत्रकृमीमध्ये बहुजन्तुनिषेविते ॥ १३-३६-३७ (८२२५९)

को गर्भवासात्परतो नरकोऽन्यो विधीयते ।
यत्र वासकृतो योगः कुक्षौ वासो विधीयते ॥ १३-३६-३८ (८२२६०)
जातो विस्तीर्णशोकः स्याद्भवेत विगतज्वरः ।
न चैष लभ्यते कामो जातमात्रं हि मानवम् ।
आविशन्तीह दुःखानि मनोवाक्कायिकानि तु ॥ १३-३६-३९ (८२२६१)
तैरस्वतन्त्रो भवति पीड्यमानो भयानकैः ।
तैर्गर्भवासं गच्छति अवशो जायते तथा ॥ १३-३६-४० (८२२६२)
अवशश्चेहते जन्तुर्व्रजत्यवश एव हि ।
जरसा रूपविध्वंसं प्राप्नोत्यवश एव तु ॥ १३-३६-४१ (८२२६३)
शरीरभेदमाप्नोति जीर्यतेऽवश एव तु ।
एवं ह्यनियतो मृत्युर्भवत्येव सदा नृषु ॥ १३-३६-४२ (८२२६४)
गर्भेषु म्रियते कश्चिज्जायमानस्तथाऽपरः ।
जाता म्रियन्ते बहवो यौवनस्थास्तथाऽपरे ।
मध्यभावे तु नश्यन्ति स्थविरो मृत एव तु ॥ १३-३६-४३ (८२२६५)
को जन्मनो नोद्विजते स्वयम्भूरपि यो भवेत् ।
कुतस्त्वस्मद्विधस्तात मरणस्य वशानुगः ॥ १३-३६-४४ (८२२६६)
नित्याविष्टो भयेनाहं मनसा कुरुसत्तम ।
मुहूर्तमप्यहं शर्म न विन्दामि महामते ॥ १३-३६-४५ (८२२६७)
कालात्मनि तिरोभूतो नित्यं तद्गुणवर्जितः ।
अन्नैर्बहुविधैः पुष्टं वस्त्रैर्नानाविधैर्वृतम् ॥ १३-३६-४६ (८२२६८)
चन्दनागरुदिग्धाङ्गं मणिमुक्ताविभूषितम् ।
यानैर्बहुविधैर्यातमेकान्तेनैव लालितम् ॥ १३-३६-४७ (८२२६९)
यौवनोद्धतरूपाभिर्मन्दविह्वलगामिभिः ।
इष्टिभिरभिरामाभिर्वरस्त्रीभिरयन्त्रितम् ॥ १३-३६-४८ (८२२७०)
रमितं सुचिरं कालं शरीरममितप्रभम् ।
अवितृप्ता गमिष्यन्ति हित्वा प्राणांस्तथाऽपरे ॥ १३-३६-४९ (८२२७१)
स्वर्गेऽप्यनियता भूतिस्तथैवाकाशसंश्रये ।
देवाऽप्यधिष्ठानवशास्तस्माद्देवं न कामये ॥ १३-३६-५० (८२२७२)
कामानां नास्त्यधिष्ठानमकामस्तु निवर्तते ।
लोकसङ्ग्रहधर्मास्तु सर्व एव न संशयः ॥ १३-३६-५१ (८२२७३)
डोलासधर्मा धर्मज्ञ ऋषिर्द्वैपायनोऽब्रवीत् ।
अस्मात्को विषमं दुःखमारोहेत विचक्षणः ॥ १३-३६-५२ (८२२७४)
विद्यमाने समे मार्गे डोलाधर्मविवर्जिते ।
को ह्यात्मानं प्रियं लोके डोलासाधर्म्यतांनयेत् ॥ १३-३६-५३ (८२२७५)
चराचरैः सर्वभूतैर्गन्तव्यमविशङ्कया ।
अस्माल्लोकात्परं लोकमपाथेयमदैशिकम् ।

घोरं तमः प्रवेष्टव्यमत्रातारमबान्धवम् ॥ १३-३६-५४ (८२२७६)
ये तु तं किल धर्मज्ञा धर्मं नारायणेरितम् ।
अनन्यमनसो दान्ताः स्मरन्ति नियतव्रताः ॥१३-३६-५५ (८२२७७)
ततस्तेनैव पश्यन्ति प्राप्नुव्ति परं पदम् ।
रक्षते भगवान्विष्णुर्भक्तानात्मशरीरवत् ॥१३-३६-५६ (८२२७८)
कुलालचक्रप्रतिमे भ्राम्यमाणेषु जन्तुषु ।
मातापितृसहस्राणि सम्प्राप्तानि मया गुरो ॥१३-३६-५७ (८२२७९)
स्नेहापन्नेन पीतास्तु मातॄणां विविधाः स्तलाः ॥ १३-३६-५८ (८२२८०)
पुत्रदारसहस्राणि इष्टानिष्टशतानि च ।
प्राप्तान्यधिष्ठानवशादतीतानि तथैव च ।
न क्वचिन्न सुखं प्राप्तं न क्वचिच्छाश्वती स्थितिः ॥ १३-३६-५९ (८२२८१)
स्थानैर्महद्भिर्विभ्रंशो दुःखलब्धैः पुनः पुनः ।
धननाशश्च सम्प्राप्तो लब्ध्वा दुःखेन तद्धनम् ।
अध्वगानामिव पथि च्छायामाश्रित्य सङ्गमः ॥ १३-३६-६० (८२२८२)
एवं कर्मवशो लोको ज्ञातीनां हितसङ्गमः ।
विश्रम्य च पुनर्याति कर्मभिर्दर्शितां गतिम् ॥१३-३६-६१ (८२२८३)
एतदीदृशकं दृष्ट्वा ज्ञात्वा चैव समागमम् ।
को न बिभ्येत्कुरुश्रेष्ठ विष्ठान्नस्येव भोजनात् ॥१३-३६-६२ (८२२८४)
बुद्धिश्च मे समुत्पन्ना वैष्णवे धर्मविस्तरे ।
तदेष शिरसा पादौ गतोऽस्मि भगवंस्तव ।
शरणं च प्रपन्नोऽस्मि गन्तव्ये शरणे ध्रुवे ॥ १३-३६-६३ (८२२८५)
जन्ममृत्युजराखिन्नस्त्रिभिर्दुःखैर्निपीडितः ।
इच्छामि भवता त्रातुमेभ्यस्त्वत्तो महामते ।
तस्याद्य युगधर्मस्य श्रवणात्कुरुपुङ्गव ॥ १३-३६-६४ (८२२८६)
एतदाद्ययुगोद्भूतं त्रेतायां तत्तिरोहितम् ।
स एव धर्ममखिलमृषिर्द्वैपायनोऽब्रवीत् ॥' ॥ १३-३६-६५ (८२२८७)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
षट्त्रिंशोऽध्यायःठ ॥३६ ॥
Mahabharata - Anushaasana Parva - Chapter Footnotes

७-३६-३ पुरुषः पुष्करो विभुरिति ट थ ध । पाठः ॥

---

अनुससनपर्व-अध्यय०३७
॥ श्रीः ॥
१३.३७. अध्यायः ३७

अथ दानधर्मपर्व ॥ १ ॥

Mahabharata - Anushaasana Parva - Chapter Topics

भीष्मेण युधिष्ठिरम्प्रति
ब्रह्मादिसर्वजगतामनित्यत्वादिकथनपूर्वकं नारायणस्य
नित्यत्वादिकथनेन तदुपासनविधानम् ॥ १ ॥

Mahabharata - Anushaasana Parva - Chapter Text

ग्भीष्म उवाच ।
सदृशं राजशार्दूल वृत्तस्य च कुलस्य च ॥ १३-३७-१ (८२२८८)
को राज्यं विपुलं गृह्य स्फीताकारं पुनर्महत् ।
निर्जितारातिसामन्तं देवराज्योपमं सुखम् ॥ १३-३७-२ (८२२८९)
राज्ये राज्यगुणा ये च तान्व्युदस्य नराधिप ।
दोषं पश्यति राजेन्द्र देहेऽस्मिन्पाञ्चभौतिके ॥ १३-३७-३ (८२२९०)
अतिक्रान्तास्त्वया राजन्वृत्तेन प्रपितामहाः ।
धर्मो विग्रहवान्धीरो विदुरश्च महायशाः ॥ १३-३७-४ (८२२९१)
सञ्जयश्च महातेजा ये चान्ये दिव्यदर्शनाः ।
प्रवृत्तज्ञानसम्पन्नास्तत्वज्ञानविदो नृप ॥ १३-३७-५ (८२२९२)
तेऽतिक्रान्ता महाराज ब्रह्माद्याः ससुरासुराः ।
अनित्यं दुःखसंतप्तं जगदेतन्न संशयः ॥ १३-३७-६ (८२२९३)
एवमेतान्महाबाहो ब्रह्माद्यान्ससुरासुरान् ।
अनित्यान्सततं पश्य मनुष्यादिषु का कथा ॥ १३-३७-७ (८२२९४)
नित्यां तु प्रकृतीमाह याऽसौ प्रसवधर्मिणी ।
अरूपिणीमनिर्देश्यामकृतां पुरुषातिगाम् ॥ १३-३७-८ (८२२९५)
तामत्यन्तसुखां सौम्यां निर्वाणमिति संज्ञिताम् ।
आहुर्ब्रह्मर्षयो ह्याद्यां भुवि चैव महर्षयः ॥ १३-३७-९ (८२२९६)
तया पुरुषरूपिण्या धर्मप्रकृतिकोऽनघ ।
स यात्येव हि निर्वाणं यत्तत्प्रकृतिसंज्ञितम् ॥ १३-३७-१० (८२२९७)
स एष प्राकृतो धर्मो भ्राजत्यादियुगे नृप ।
विकारधर्माः शेषेषु युगेषु भरतर्षभ ।
भ्राजन्तेऽभ्यधिकं वीर संसारपथगोचराः ॥ १३-३७-११ (८२२९८)
प्रकृतीनां च सर्वासामकृता प्रकृतिः स्मृता ।
एवं प्रकृतिधर्मा हि वरां प्रकृतिमाश्रिता ॥ १३-३७-१२ (८२२९९)
पश्यन्ति परमां लोके दृष्टादृष्टानुदर्शिनीम् ।
सत्वादियुगपर्यन्ते त्रेतायुगसमुद्भवे ॥ १३-३७-१३ (८२३००)

कामं कामयमानेषु ब्राह्मणेषु तिरोहितः ।
कुपथेषु तु धर्मेषु प्रादुर्भूतेषु कौरव ।
जातो मन्दप्रचारो हि धर्मः कलियुगे नृप ॥ १३-३७-१४ (८२३०१)
नित्यस्तु पुरुषो ज्ञेयो विश्वरूपो निरञ्जनः ।
ब्रह्माद्या अपि देवाश्च यं सदा पर्युपासते ॥ १३-३७-१५ (८२३०२)
तं च नारायणं विद्धि परं ब्रह्मेति शाश्वतम् ।
तत्कर्म कुरु कायेन ध्यायस्व मनसा च तम् ॥ १३-३७-१६ (८२३०३)
कीर्तयस्व च तन्नाम वाचा सर्वत्र भूपते ।
तत्पदं प्राप्नुहि प्राप्यं शाश्वतं चापुनर्भवम् ॥ १३-३७-१७ (८२३०४)
इत्येतद्विष्णुमाश्रित्य संसारग्रहमोक्षणम् ।
कथितं ते महाबाहो किं भूयः श्रोतुमिच्छसि ॥' ॥ १३-३७-१८ (८२३०५)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
सप्तत्रिंशोऽध्यायः ॥ ३७ ॥
Mahabharata - Anushaasana Parva - Chapter Footnotes

७-३७-३ देहेऽस्मिन्पञ्चविंशक इति ट । थ। ध। पाठः ॥

---

अनुससनपर्व-अध्यय०३८
॥ श्रीः ॥
१३.३८. अध्यायः ३८

अथ दानधर्मपर्व ॥ १ ॥
Mahabharata - Anushaasana Parva - Chapter Topics
भीष्मेण युधिष्ठिरम्प्रति
तत्वसृष्ट्यादिप्रतिपादकनारदसनत्कुमारसंवादानुवादः ॥ १ ॥

Mahabharata - Anushaasana Parva - Chapter Text

ग्युधिष्ठिर उवाच ।
क्लिश्यमानेषु भूतेषु जातीमरणसागरे ।
यत्प्राप्य क्लेशं नाप्नोति तन्मे ब्रूहि पितामह ॥ १३-३८-१ (८२३०६)
भीष्म उवाच। १३-३८-२क्ष् (६८३७)
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
सनत्कुमारस्य सतः संवादं नारदस्य च ॥ १३-३८-२ (८२३०७)
सनत्कुमारो भगवान्ब्रह्मपुत्रो महायशाः ।

पूर्वजातास्त्रयस्तस्य कथ्यन्ते ब्रह्मवादिनः ॥ १३-३८-३ (८२३०८)
सनकः सनन्दनश्चैव तृतीयश्च सनातनः ।
जातमात्राश्च ते सर्वे प्रतिबुद्धा इति श्रुतिः ॥ १३-३८-४ (८२३०९)
चतुर्थश्चैव तेषां स भगवान्योगवित्तमः ।
सनत्कुमार इति वै कथयन्ति महर्षयः ॥ १३-३८-५ (८२३१०)
हैरण्यगर्भः स मुनिर्वसिष्ठः पञ्चमः स्मृतः ।
षष्ठः स्थाणुः स भगवानमेयात्मा त्रिशूलधृत् ॥ १३-३८-६ (८२३११)
ततोऽपरे समुत्पन्नाः पावकादारुणे क्रतौ ।
मनसा स्वयंभुवो ह्रीमे मरीचिप्रमुखास्तथा ॥ १३-३८-७ (८२३१२)
भुगुर्मरीचेरनुजो भृगोरप्यङ्गिरास्तथा ।
अनुजोङ्गिरसोऽथात्रिः पुलस्त्योत्रेस्तथाऽनुजः ॥ १३-३८-८ (८२३१३)
पुलस्त्यस्यानुजो विद्वान्पुलहो न महाद्युतिः ।
पठ्यन्ते ब्रह्मजा ह्येते विद्वद्भिरमितौजसः ॥ १३-३८-९ (८२३१४)
सर्वमेतन्महाराज कुर्वन्नादिगुरुर्महान् ।
प्रभुर्विभुरनन्तश्रीर्ब्रह्मा लोकपितामहः ॥ १३-३८-१० (८२३१५)
मूर्तिमन्तोऽमृतीभूतास्तेजसाऽतितपोन्विताः ।
सनकप्रभृतयस्तत्र ये च प्राप्ताः परं पदम् ।
कृत्स्नं क्षयमनुप्राप्य विमुक्ता मूर्तिबन्धनात् ॥ १३-३८-११ (८२३१६)
सनत्कुमारस्तु विभुर्योगमास्थाय योगवित् ।
त्रीँल्लोकानचरच्छश्वदैर्येण परेण हि ॥ १३-३८-१२ (८२३१७)
रुद्रश्चाप्यष्टगुणितं योगं प्राप्तो महायशाः ।
सूक्ष्ममष्टगुणं राजन्नितरे नृपसत्तम ॥ १३-३८-१३ (८२३१८)
मरीचिप्रमुखास्तात सर्वे सृष्ट्यर्थमेव ते ।
नियुक्ता राजशार्दूल तेषां सृष्टिं शृणुष्व मे ॥ १३-३८-१४ (८२३१९)
सप्त ब्रह्मण इत्येते पुराणे निश्चयं गताः ।
सर्वे वेदेषु चैवोक्ताः खिलेषु च न संशयः ॥ १३-३८-१५ (८२३२०)
इतिहासपुराणे च श्रुतिरेषा सनातनी ।
ब्राह्मणा वरदानेतान्प्राहुर्वेदान्तपारगाः ॥ १३-३८-१६ (८२३२१)
एतेषां पितरस्तात पुत्रा इत्यनुचक्षते ।
गणाः सप्त महाराज मूर्तयोऽमूर्तयस्तथा ॥ १३-३८-१७ (८२३२२)
पितृणां चैव राजेन्द्र पुत्रा देवा इति श्रुतिः ।
देवैर्व्याप्ता इमे लोका इत्येवमनुशुश्रुम ॥ १३-३८-१८ (८२३२३)
कृष्णद्वैपायनाच्चैव देवस्थानात्तथैव त ।
देवलाच्च नरश्रेष्ठ काश्यपाच्च मया श्रुतम् ॥ १३-३८-१९ (८२३२४)
गौतमादपि कौण्डिन्याद्भारद्वाजात्तथैव च ।
मार्कण्डेयात्तथैवैतदृषेर्देवमतादपि ॥ १३-३८-२० (८२३२५)

पित्रा च मम राजेन्द्र श्राद्धकाले प्रभाषितम् ।
परं रहस्यं वेदान्तं प्रियं हि परमात्मनः ॥ १३-३८-२१ (८२३२६)
अतः परं प्रवक्ष्यामि यन्मां पृच्छसि भारतः ।
तदिहैकमनोबुद्धिः शृणुष्वावहितो नृप ।
स्वायंभुवस्य संवादं नारदस्य च धीमतः ॥ १३-३८-२२ (८२३२७)
सनत्कुमारो भगवान्दिव्यं जज्वाल तेजसा ।
अङ्गुष्ठमात्रो भूत्वा वै विचचार महाद्युतिः ॥ १३-३८-२३ (८२३२८)
स कदाचिन्महाभागो मेरुपृष्ठं समागमत् ।
नारदेन नरश्रेष्ठ मुनिना ब्रह्मवादिना ॥ १३-३८-२४ (८२३२९)
जिज्ञासमानावन्योन्यं सकाशे ब्रह्मणस्ततः ।
ब्रह्म भागवतौ तात परमार्थार्थचिन्तकौ ॥ १३-३८-२५ (८२३३०)
मतिमान्मतिमच्छ्रेष्ठं बुद्धिमान्बुद्धिमत्तरम् ।
क्षेत्रवित्क्षेत्रविच्छ्रेष्ठं ज्ञानविज्ज्ञानमत्तमम् ॥ १३-३८-२६ (८२३३१)
सनत्कुमारं तत्वज्ञं भगवन्तमरिंदम ।
लोकविल्लोकविच्छ्रेष्ठमात्मविच्चात्मवित्तमम् ।
सर्ववेदार्थकुशलं सर्वशास्त्रविशारदम् ॥ १३-३८-२७ (८२३३२)
साङ्ख्ययोगं च यो वेद पाणावामलकं यथा ।
नारदोऽथ नरश्रेष्ठ तं पप्रच्छ महाद्युतिः ॥ १३-३८-२८ (८२३३३)
नारद उवाच। १३-३८-२९क्ष् (६८३८)
त्रयोविंशतितत्वस्य अव्यक्तस्य महामुने ।
प्रभवं चाप्ययं चैव श्रोतुमिच्छामि तत्वतः ॥ १३-३८-२९ (८२३३४)
अध्यात्ममधिभूतं च अधिदैवं तथैव च ।
कालसङ्ख्याश्च सर्गं च स्रष्टारं पुरुषं प्रभुम्। १३-३८-३० (८२३३५)
यं विस्वमुपजीवन्ति येन सर्वमिदं ततम् ।
यं प्राप्य न निवर्तन्ते तद्भवान्वक्तुमर्हति ॥ १३-३८-३१ (८२३३६)
सनत्कुमार उवाच। १३-३८-३२क्ष् (६८३९)
यं विश्वमुपजीवन्ति यमाहुः पुरुषं परम् ।
तं वै शृणु महाबुद्धे नारायणमनामयम् ॥ १३-३८-३२ (८२३३७)
एष नारायणो नाम यं विश्वमुपजीवति ।
एष स्रष्टा विधाता च भर्ता पालयिता प्रभुः ॥ १३-३८-३३ (८२३३८)
प्राप्यैनं न निवर्तन्ते यतयोऽध्यात्मचिन्तकाः ।
एतावदेव वक्तव्यं मया नारद पृच्छते ॥ १३-३८-३४ (८२३३९)
परं न वेद्मि तत्सर्गं यावांश्चायं यथाप्यहम् ।
श्रूयतामानुपूर्व्येण न च सर्गः प्रयत्नतः ॥ १३-३८-३५ (८२३४०)
यथा कालपरीमाणं तत्वानामृषिसत्तम ।
अध्यात्ममधिभूतं च अधिदैवं तथैव च ।

कालसंख्यां च सर्गं च सर्वमेव महामुने ॥ १३-३८-३६ (८२३४१)
तमसः कुर्वतः सर्गं तामसो ह्यभिधीयते ।
ब्रह्मविद्भिर्द्विजैर्नित्यं नित्यमध्यात्मचिन्तकैः ॥१३-३८-३७ (८२३४२)
पर्यायनामान्येतस्य कथयन्ति मनीषिणः ।
तानि ते सम्प्रवक्ष्यामि तदिहैकमनाः शृणु ॥१३-३८-३८ (८२३४३)
महार्णवोऽर्णवश्चैव सलिलं च गुणास्तथा ।
वेदास्तपांसि यज्ञाश्च धर्माश्च भगवान्विभुः ।
प्राणः सांवर्तकोग्निश्च व्योम कालस्तथैव च ॥ १३-३८-३९ (८२३४४)
नामान्येतानि ब्रह्मर्षे शरीरस्येश्वरस्य वै ।
कीर्तितानि द्विजश्रेष्ठ मया शास्त्रानुसारतः ॥१३-३८-४० (८२३४५)
चतुर्युगसहस्राणि चतुर्युगमरिंदम ।
प्राहुः कल्पसहस्रं वै ब्राह्मणास्तत्वदर्शिनः ॥१३-३८-४१ (८२३४६)
दशकल्पसहस्राणि अव्ययस्य महानिशा ।
तथैव दिवसं प्राहुर्योगाः सांख्याश्च तत्वतः ॥१३-३८-४२ (८२३४७)
निशासुप्तोथ भगवान्क्षपान्ते प्रत्यबुध्यत ।
पश्चाद्बुद्ध्वा ससर्जापस्तासु वीर्यमवासृजत् ॥१३-३८-४३ (८२३४८)
तदण्डमभवद्धैमं सहस्रांशुसमप्रभम् ।
अहंकृत्वा ततस्तस्मिन्ससर्ज प्रभुरीश्वरः ॥१३-३८-४४ (८२३४९)
हिरण्यगर्भं विस्वात्मा ब्रह्माणां जलवन्मुनिम् ।
भूतभव्यभविष्यस्य कर्तारमनघं विभुम् ।
मूर्तिमन्तं महात्मानं विश्वशभुं स्वयंभुवम् ॥ १३-३८-४५ (८२३५०)
अणिमा लघिमा प्राप्तिरीशानो ज्योतिषां नरम् ।
चक्रे तिरोधां भगवानेत्कृत्वा महायशाः ॥१३-३८-४६ (८२३५१)
एतस्यापि निशामाहुर्वेदवेदाङ्गपारगाः ।
पञ्चकल्पसहस्राणि अहरेतावदेव च ॥१३-३८-४७ (८२३५२)
स सर्गं कुरुत ब्रह्मा तामसश्चानुपूर्व्यशः ।
सृजतेऽहं त्वहंकारं परमेष्ठिनमव्ययम् ॥१३-३८-४८ (८२३५३)
अहङ्कारेणैव लोका व्याप्ताः साहंकृतेन वै ।
येनाविष्टानि भूतानि मज्जन्त्यव्यक्तसागरे ॥१३-३८-४९ (८२३५४)
देवर्षिदानवनरा यक्षगन्धर्वकिन्नराः ।
उन्मज्जन्ति निमज्जन्ति ऊर्ध्वाधस्तिर्यगेव च ॥१३-३८-५० (८२३५५)
एतस्यापि निशामाहुस्तृतीयामथ कुर्वतः ।
त्रीणि कल्पसहस्राणि अहरेतावदेव तु ॥१३-३८-५१ (८२३५६)
अहङ्कारस्तु सृजति महाभूतानि पञ्च वै ।
पृथिवी वायुराकाशमापो ज्योतिश्च पञ्चमम् ॥१३-३८-५२ (८२३५७)
एतेषां गुणतत्वानि पञ्च प्राहुर्द्विजातयः ।

शब्दे स्पर्शे च रूपे च रसे गन्धे तथैव च ॥ १३-३८-५३ (८२३५८)
गुणेष्वेतेष्वभिरताः पङ्कलग्ना इव द्विपाः ।
नोत्तिष्ठन्त्यवशीभूताः सक्ता अव्यक्तसागरे ॥ १३-३८-५४ (८२३५९)
एतेषामिह वै सर्वं चतुर्थमिह कुर्वतः ।
चतुर्युगसहस्रे वै अहोरात्रास्तथैव च ॥ १३-३८-५५ (८२३६०)
अनन्त इति विख्यातः पञ्चमः सर्ग उच्यते ।
इन्द्रियाणि दशैकं च यथाश्रुतिनिदर्शनात् ॥ १३-३८-५६ (८२३६१)
मनः सर्वमिदं तात विश्वं सर्वमिदं जगत् ।
न तथान्यानि भूतानि बलवन्ति यथा मनः ॥ १३-३८-५७ (८२३६२)
एतस्यापि ह वै सर्गं षष्ठमाहुर्द्विजातयः ।
अहः कल्पसहस्रं वै रात्रिरेतावती तथा ॥ १३-३८-५८ (८२३६३)
ऊर्ध्वस्रोतस्तु वै सर्गं सप्तमं ब्रह्मणो विदुः ।
अष्टमं चाप्यधःस्रोतस्तिर्यक्तु नवमः स्मृतः ॥ १३-३८-५९ (८२३६४)
एतानि नव सर्गाणि तत्वानि च महामुने ।
चतुर्विंशतितत्वानि तत्वसंख्यानि तेऽनघ ॥ १३-३८-६० (८२३६५)
सर्वस्य प्रभवः पूर्वमुक्तो नारायणः प्रभुः ।
अव्ययः प्रभवश्चैव अव्यक्तस्य महामुने ।
प्रवक्ष्याम्यपरं तत्वं यस्य यस्येश्वरश्च यः ॥ १३-३८-६१ (८२३६६)
अध्यात्ममधिभूतं च अधिदैवं तथैव च ।
यथाश्रुतं यथादृष्टं तत्वतो वै निबोध मे ॥' ॥ १३-३८-६२ (८२३६७)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
अष्टत्रिंशोऽध्यायः ॥ ३८ ॥

---

अनुससनपर्व-अध्यय०३९
॥ श्रीः ॥
१३.३९. अध्यायः ३९

अथ दानधर्मपर्व ॥ १ ॥
Mahabharata - Anushaasana Parva - Chapter Topics
सनत्कुमारेण नारदम्प्रति प्रलयप्रकारादिकथनम् ॥ १ ॥
तथा भूतादिनिरूपणम् ॥ २ ॥

Mahabharata - Anushaasana Parva - Chapter Text

ग्सनत्कुमार उवाच ।

अधःस्रोतसि सर्गे च तिर्यक्स्रोतसि चैव हि ।
एताभ्यामीश्वरं विन्द्यादूर्ध्वस्रोतस्तथैव च ॥ १३-३९-१ (८२३६८)
कर्मेन्द्रियाणां पञ्चानामीश्वरो बुद्धिगोचरः ।
बुद्धीन्द्रियाणामपि तु ईश्वरो मन उच्यते ॥ १३-३९-२ (८२३६९)
मनसः पञ्चभूतानि सगुणान्याहुरीश्वरम् ।
भूतानामीश्वरं विद्याद्ब्रह्माणं परमेष्ठिनम् ॥ १३-३९-३ (८२३७०)
भवान्हि कुशलश्चैव धर्मेष्वेषु परेषु वै ।
कालाग्निरह्नः कल्पान्ते जगद्दहति चांशुभिः ॥ १३-३९-४ (८२३७१)
ततः सर्वाणि भूतानि स्थावराणि चराणि च ।
महाभूतानि दग्धानि स्वां योनिं गमितानि वै ॥ १३-३९-५ (८२३७२)
कूर्मपृष्ठनिभा भूमिर्निर्दग्धकुशकण्टका ।
निर्वृक्षा निस्तृणा चैव दग्धा कालाग्निना तदा ॥ १३-३९-६ (८२३७३)
जगत्प्रलीनं जगति जगच्चापि प्रलीयते ।
नष्टिगन्धा तदा सूक्ष्मा जलमेवाभवत्तदा ॥ १३-३९-७ (८२३७४)
ततो मयूखजालेन सूर्यस्त्वापीयते जलम् ।
रसात्मा लीयते चार्के तथा ब्राह्मणसत्तम ॥ १३-३९-८ (८२३७५)
अन्तरिक्षगतान्भूतान्प्रदहत्यनलस्तदा ।
अग्निभूतं तदा व्योम भवतीत्यभिचक्षते ॥ १३-३९-९ (८२३७६)
तं तथा विस्फुरद्वह्निं वायुर्जरयते महान् ।
महता बलवेगेन आदत्ते तं हि भानुमान् ॥ १३-३९-१० (८२३७७)
वायोरपि गुणं स्पर्शमाकाशं ग्रसते यदा ।
प्रशाम्यति तदा वायुः खं तु तिष्ठति नानदत् ॥ १३-३९-११ (८२३७८)
तस्य तं निनदं शब्दमादत्ते वै मनस्तदा ।
स शब्दगुणहीनात्मा तिष्ठते मूर्तिमांस्तु वै ॥ १३-३९-१२ (८२३७९)
भुङ्क्ते च स तदा व्योम मनस्तात दिगात्मकम् ।
व्योमात्मनि विनष्टे तु सङ्कल्पात्मा विवर्धते ॥ १३-३९-१३ (८२३८०)
सङ्कल्पात्मानमादत्ते चित्तं वै स्वेन तेजसा ।
चित्तं ग्रसत्यहङ्कारस्तदा वै मुनिसत्तम ॥ १३-३९-१४ (८२३८१)
विनष्टे च तदा चित्ते अहङ्कारोऽभवन्महान् ।
अहङ्कारं तदादत्ते महान्ब्रह्मा प्रजापतिः ॥ १३-३९-१५ (८२३८२)
अभिमाने विनष्टे तु महान्ब्रह्मा विराजते ।
तं तदा त्रिषु लोकेषु मूर्तिष्वेवाग्रमूर्तिजम् ॥ १३-३९-१६ (८२३८३)
येन विश्वमिदं कृत्स्नं निर्मितं वै गुणार्थिना ।
मूर्तं जलेचरमपि व्यवसायगुणात्मकम् ।
ग्रसिष्णुर्भगवान्ब्रह्मा व्यक्ताव्यक्तमसंशयम् ॥ १३-३९-१७ (८२३८४)
एषोऽव्ययस्य प्रलयो मया ते परिकीर्तितः ।

अध्यात्ममधिभूतं च अधिदैवं च श्रूयताम् ॥१३-३९-१८ (८२३८५)
आकाशं प्रथमं भूतं श्रोत्रमध्यात्मं शब्दोधिभूतं
दिशोधिदैवतं ॥ १३-३९-१९ (८२३८६)
वायुर्द्वितीयं भूतं त्वगध्यात्मं स्पर्शोधिभूतं विद्युदधिदैवतं
स्यात् ॥ १३-३९-२० (८२३८७)
ज्योतिस्तृतीयं भूतं चक्षुरध्यात्मं रूपमधिभूतं सूर्योधिदैवतं
स्यात् ॥ १३-३९-२१ (८२३८८)
आपश्चतुर्थं भूतं जिह्वाध्यात्मं रसोधिभूतं वरुणोधिदैवतं
स्यात् ॥ १३-३९-२२ (८२३८९)
पृथिवी पञ्चमं भूतं घ्राणमध्यात्मं गन्धोधिभूतं
वायुरधिदैवतं स्यात् ॥ १३-३९-२३ (८२३९०)
पाञ्चभौतिकमेतच्चतुष्टयं वर्णितम् ।अत
ऊर्ध्वमिन्द्रियमनुवर्णयिष्यामः ॥ १३-३९-२४ (८२३९१)
पादावध्यात्मं गन्तव्यमधिभूतं विष्णुरधिदैवतं स्यात् ॥ १३-३९-२५
(८२३९२)
हस्तावध्यात्मं कर्तव्यमधिभूतमिन्द्रोऽधिदैवतं स्यात् ॥ १३-३९-२६
(८२३९३)
पायुरध्यात्मं विसर्गोऽधिभूतं मित्रोऽधिदैवतं स्यात् ॥ १३-३९-२७ (८२३९४)
उपस्थोऽध्यात्ममानन्दोऽधिभूतं प्रजापतिरवधिदैवतं स्यात्।
१३-३९-२८ (८२३९५)
वागध्यात्मं वक्तव्यमधिभूतमग्निरधिदैवतं स्यात् ॥ १३-३९-२९ (८२३९६)
मनोऽध्यात्मं मन्तव्यमधिभूतं चन्द्रमा अधिदैवतं स्यात् ॥
१३-३९-३० (८२३९७)
अहङ्कारोऽध्यात्ममभिमानोऽधिभूतं विरिञ्चोऽधिदैवतं स्यात्।
१३-३९-३१ (८२३९८)
बुद्धिरध्यात्मं व्यवसायोऽधिभूतं ब्रह्माधिदैवतं स्यात् ॥
१३-३९-३२ (८२३९९)
एवमव्यक्तो भगवान्सकृत्कृत्स्नान्कुरुते सम्हरते च
।कस्मात्क्रीडार्थम् ॥ १३-३९-३३ (८२४००)
यथाऽऽदित्योंऽशुजालं क्षिपति सम्हरते च एवमव्यक्तो गुणान्सृजति
सम्हरते च ॥ १३-३९-३४ (८२४०१)
यथाऽर्णवादूर्मिमालानिच यश्चोर्ध्वमुत्तिष्ठते सम्हरते च ।
यथा चान्तरिक्षादभ्रमाकाशमुत्तिष्ठति स्तनितगर्जितोन्मिश्रं
तद्वत्तत्रैव प्राणशत् ।
एवमव्यक्तो गुणान्सृजति सम्हरति च ॥ १३-३९-३५ (८२४०२)
यथा कूर्मोऽङ्गानि कामात्प्रसारयते पुनश्च प्रवेशयति एवमव्यक्तो

भगवान्लोकान्प्रकाशयति प्रवेशयते च ॥ १३-३९-३६ (८२४०३)
एवं चेतनश्च भगवान्पञ्चविंशः शुचिस्तेनाधिष्ठिता
प्रकृतिश्चेतयति नित्यं सहधर्मा च ।भगवतोऽव्यक्तस्य
क्रियावतोक्रियावतश्च प्रकृतिः क्रियावानजरामरः क्षेत्रज्ञो
नारायणाख्यः पुरुषः ॥ १३-३९-३७ (८२४०४)
भीष्म उवाच।१३-३९-३८क्ष् (६८४०)
इत्येतन्नारदायोक्तं कुमारेण च धीमता ।
एतच्छ्रुत्वा द्विजो राजन्सर्वयज्ञफलं लभेत् ॥' ॥ १३-३९-३८ (८२४०५)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
एकोनचत्वारिंशोऽध्यायः ॥३९ ॥

---

अनुससनपर्व-अध्यय०४०
॥ श्रीः ॥
१३.४०. अध्यायः ४०

अथ दानधर्मपर्व ॥१ ॥
Mahabharata - Anushaasana Parva - Chapter Topics
ब्रह्मणा देवान्प्रति नारायणमहिमप्रतिपादकगरुडकश्यपसंवादानुवादः
॥१ ॥

Mahabharata - Anushaasana Parva - Chapter Text

ग्युधिष्ठर उवाच ।
आत्मन्यग्नौ समाधाय य एते कुरुनन्दन ।
द्विजातयो व्रतोपेता जपयज्ञपरायणाः ॥१३-४०-१ (८२४०६)
यजन्त्यारम्भयज्ञैश्च मानसं यज्ञमास्थिताः ।
अग्निभ्यश्च परं नास्ति येषामेषोऽव्यवस्थितः ॥१३-४०-२ (८२४०७)
तेषां गतिर्महाप्राज्ञ कीदृशी किम्पराश्च ते ।
एतदिच्छामि तत्वेन त्वत्तः श्रोतुं पितामह ॥१३-४०-३ (८२४०८)
भीष्म उवाच।१३-४०-४क्ष् (६८४१)
अत्र ते वर्तयिष्यामि इतिहासं पुरातनम् ।
वैकुण्ठस्य च संवादं सुपर्णस्य च भारत ॥१३-४०-४ (८२४०९)
अमृतस्य समुत्पत्तौ देवानामसुरैः सह ।
षष्टिवर्षसहस्राणि दैवासुरमवर्तत। १३-४०-५ (८२४१०)
तत्र देवास्तु दैतेयैर्वध्यन्ते भृशदारुणैः ।

त्रातारं नाधिगच्छन्ति वध्यमाना महासुरैः ॥ १३-४०-६ (८२४११)
आर्तास्ते देवदेवेशं प्रपन्नाः शरणैषिणः ।
पितामहं महाप्राज्ञं वध्यमानाः सुरेतरैः ॥ १३-४०-७ (८२४१२)
ता दृष्ट्वा देवता ब्रह्मा सम्भ्रान्तेन्द्रियमानसः ।
वैकुण्ठं शरणं देवं प्रतिपेदे च तैः सह ॥ १३-४०-८ (८२४१३)
ततः स देवैः सहितः पद्मयोनिर्नरेश्वर ।
तुष्टाव प्राञ्जलिर्भूत्वा नारायणमनामयम् ॥ १३-४०-९ (८२४१४)
त्वद्रूपचिन्तनान्नाम्नां स्मरणादर्चनादपि ।
तपोयोगादिभिश्चैव श्रेयो यान्ति मनीषिणः ॥ १३-४०-१० (८२४१५)
भक्तवत्सल पद्माक्ष परमेश्वर पापहन् ।
परमात्माऽविकाराद्य नारायण नमोंस्तु ते ॥ १३-४०-११ (८२४१६)
नमस्ते सर्वलोकादे सर्वात्मामितविक्रम ।
सर्वभूतभविष्येश सर्वभूतमहेश्वर १३-४०-१२ (८२४१७)
देवानामपि देवस्त्वं सर्वविद्यापरायणः ।
जगद्बीजसमाहार जगतः परमो ह्यसि ॥ १३-४०-१३ (८२४१८)
त्रायस्व देवता वीर दानवाद्यैः सुपीडिताः ।
लोकांश्च लोकपालांश्च ऋषींश्च जयतांवर ॥ १३-४०-१४ (८२४१९)
वेदाः साङ्गोपनिषदः सरहस्याः ससङ्ग्रहाः ।
सोङ्काराः सवषट्काराः प्राहुस्त्वां यज्ञमुत्तमम् ॥ १३-४०-१५ (८२४२०)
पवित्राणां पवित्रं च मङ्गलानां च मङ्गलम् ।
तपस्विनां तपश्चैव दैवतं देवतास्वपि ॥ १३-४०-१६ (८२४२१)
एवमादिपुरस्कारैर्ऋक्सामयजुषां गणैः ।
वैकुण्ठं तुष्टुवुर्देवाः सर्वे ब्रह्मर्षिभिः सह ॥ १३-४०-१७ (८२४२२)
ततोऽन्तरिक्षे वागासीन्मेघगम्भीरनिस्वना ।
जेष्यध्वं दानवान्यूयं मयैव सह सङ्गरे ॥ १३-४०-१८ (८२४२३)
ततो देवगणानां च दानवानां च युध्यताम् ।
प्रादुरासीन्महातेजाः शार्ङ्गचक्रगदाधरः ॥ १३-४०-१९ (८२४२४)
सुपर्णपृष्ठमास्थाय तेजसा प्रदहन्निव ।
व्यधमद्दानवान्सर्वान्बाहुद्रविणतेजसा ॥ १३-४०-२० (८२४२५)
तं समासाद्य समरे दैत्यदानवपुङ्गवाः ।
व्यनश्यन्त महाराज पतङ्गा इव पावकम् ॥ १३-४०-२१ (८२४२६)
स विजित्यासुरान्सर्वान्दानवांश्च महामतिः ।
पश्यतामेव देवानां तत्रैवान्तरधीयत ॥ १३-४०-२२ (८२४२७)
तं दृष्ट्वान्तर्हितं देवा विष्णुं देवामितद्युतिम् ।
विस्मयोत्फुल्लनयना ब्रह्माणमिदमब्रुवन् ॥ १३-४०-२३ (८२४२८)
भगवन्सर्वलोकेश सर्वलोकपितामह ।

इदमत्यद्भुतं वृत्तं तन्नः शंसितुमर्हसि ॥ १३-४०-२४ (८२४२९)
दैवासुरेऽस्मिन्सङ्ग्रामे त्राता येन वयं विभो ।
एतद्विज्ञातुमिच्छामः कुतोसौ कश्च तत्वतः ॥ १३-४०-२५ (८२४३०)
कोऽयमस्मान्परित्राय तूष्णीमेव यथागतम् ।
प्रतिप्रयातो दिव्यात्मा तं नः शंसितुमर्हसि ॥ १३-४०-२६ (८२४३१)
एवमुक्तः सुरैः सर्वैर्वचनं वचनार्थवित् ।
उवाच पद्मनाभस्य पूर्वरूपं प्रति प्रभो ॥ १३-४०-२७ (८२४३२)
ब्रह्मोवाच। १३-४०-२८क्ष् (६८४२)
न ह्येनं वेद तत्वेन भुवनं भुवनेश्वरम् ।
सङ्ख्यातुं नैव चात्मानं निर्गुणं गुणिनां वरम् ॥ १३-४०-२८ (८२४३३)
अत्र ते वर्तयिष्यामि इतिहासं पुरातनम् ।
सुपर्णस्य च संवादमृषीणां चापि देवताः ॥ १३-४०-२९ (८२४३४)
पुरा ब्रह्मर्षयश्चैव सिद्धाश्च भुवनेश्वरम् ।
आश्रित्य हिमवत्पृष्ठे चक्रिरे विविधाः कथाः ॥ १३-४०-३० (८२४३५)
तेषां कथयतां तत्र कथान्ते पततां वरः ।
प्रादुरासीन्महातेजा वाहश्चक्रगदाभृतः ॥ १३-४०-३१ (८२४३६)
स तानृषीन्समासाद्य विनयावनताननः ।
अवतीर्य महावीर्यस्तानृषीनभिजग्मिवान् ॥ १३-४०-३२ (८२४३७)
अभ्यर्चितः स ऋषिभिः स्वागतेन महाबलः ।
उपाविशत तेजस्वी भूमौ वेगवतां वरः ॥ १३-४०-३३ (८२४३८)
तमासीनं महात्मानं वैनतेयं महाद्युतिम् ।
ऋषयः परिपप्रच्छुर्महात्मानस्तपस्विनः ॥ १३-४०-३४ (८२४३९)
कौतूहलं वैनतेय परं नो हृदि वर्तते ।
तस्य नान्योस्ति वक्तेह त्वामृते पन्नगाशन ॥ १३-४०-३५ (८२४४०)
तदाख्यातमिहेच्छामो भवता प्रश्नमुत्तमम् ।
एवमुक्तः प्रत्युवाच प्राञ्जलिर्विनतासुतः ॥ १३-४०-३६ (८२४४१)
धन्योस्म्यनुगृहीतोस्मि यन्मां ब्रह्मर्षिसत्तमाः ।
प्रष्टव्यं प्रष्टुमिच्छन्ति प्रीतिमन्तोऽनसूयकाः ॥ १३-४०-३७ (८२४४२)
किं मया ब्रूत वक्तव्यं कार्यं च वदतां वराः ।
यूयं हि मां यथायुक्तं सर्वं वै प्रष्टुमर्हथ ॥ १३-४०-३८ (८२४४३)
नमस्कृत्वा ह्यनन्ताय ततस्त ऋषिसत्तमाः ।
प्रष्टुं प्रचक्रमुस्तत्र वैनतेयं महाबलम् ॥ १३-४०-३९ (८२४४४)
देवदेवं महात्मानं नारायणमनामयम् ।
भवानुपास्ते वरदं कुतोऽसौ कश्च तत्वतः ॥ १३-४०-४० (८२४४५)
प्रकृतिर्विकृतिर्वाऽस्य कीदृशी क्वनु संस्थितिः ।
एतद्भवन्तं पृच्छामो देवोऽयं क्व कृतालयः ॥ १३-४०-४१ (८२४४६)

एथ भक्तप्रियो देवः प्रियभक्तस्तथैव च ।
त्वं प्रियश्चास्य भक्तश्च नान्यः काश्यप विद्यते ॥१३-४०-४२ (८२४४७)
मुष्णन्निव मनश्चक्षूंष्यविभाव्यतनुर्विभुः ।
अनादिमध्यनिधनो न विद्मैनं कुतो ह्यसौ ॥१३-४०-४३ (८२४४८)
वेदेष्वपि च विश्वात्मा गीयते न च विद्महे ।
तत्वतस्तत्वभूतात्मा विभुर्नित्यः सनातनः ॥१३-४०-४४ (८२४४९)
पृथिवी वायुराकाशमापो ज्योतिश्च पञ्चमम् ।
गुणाश्चैषां यथासङ्ख्यं भावाभावौ तथैव च ॥१३-४०-४५ (८२४५०)
तमः सत्वं रजश्चैव भावाश्चैव तदात्मकाः ।
मनो बुद्धिश्च तेजश्च बुद्धिगम्यानि तत्वतः ।
जायन्ते तात तस्माद्धि तिष्ठते तेष्वसौ विभुः ॥ १३-४०-४६ (८२४५१)
सञ्चिन्त्य बहुधा बुद्ध्या नाध्यवस्यामहे परम् ।
तस्य देवस्य तत्वेन तन्नः शंस यथातथम् ॥१३-४०-४७ (८२४५२)
एतमेव परं प्रश्नं कौतूहलसमन्विताः ।
एवं भवन्तं पृच्छामस्तन्नः शंसितुमर्हसि ॥१३-४०-४८ (८२४५३)
सुपर्ण उवाच।१३-४०-४९क्ष् (६८४३)
स्थूलतो यस्तु भगवांस्तेनैव स्वेन हेतुना ।
त्रैलोक्यस्य तु रक्षार्थं दृश्यते रूपमास्थितः ॥१३-४०-४९ (८२४५४)
मया तु महदाश्चर्यं पुरा दृष्टं सनातने ।
देवे श्रीवत्सनिलये तच्छ्रुणुध्वमशेषतः ॥१३-४०-५० (८२४५५)
न स्म शक्यो मया वेत्तुं न भवद्भिः कथञ्चन ।
यथा मां प्राह भगवांस्तथा तच्छ्रुयतां मम ॥१३-४०-५१ (८२४५६)
मयाऽमृतं देवतानां मिषतामृषिसत्तमाः ।
हृतं विपात्य तं यन्त्रं विद्राव्यामृतरक्षिणः ॥१३-४०-५२ (८२४५७)
देवता विमुखीकृत्य सेन्द्राः समरुतो मृधे ।
उन्मथ्याशु गिरींश्चैव विक्षोभ्य च महोदधिं ॥१३-४०-५३ (८२४५८)
तं दृष्ट्वा मम विक्रान्तं वागुवाचाशरीरिणी ।
प्रीतोस्मि ते वैनतेय कर्मणाऽनेन सुव्रत ।
अवृथा तेऽस्तु मद्वाक्यं ब्रूहि किं करवाणि ते ॥ १३-४०-५४ (८२४५९)
तामेवंवादिनीं वाचमहं प्रत्युक्तवांस्तदा ।
ज्ञातुमिच्छामि कस्त्वं हि ततो मे दास्यसे वरम् ।
प्रकृतिर्विकृतिर्वा त्वं देवो वा दानवोपि वा ॥ १३-४०-५५ (८२४६०)
ततो जलदगम्भीरं प्रहस्य वदतांवरः ।
उंवाच वरदः प्रीतः काले त्वं माऽभिवेत्स्यसि ॥१३-४०-५६ (८२४६१)
वाहनं भव मे साधो वरं दद्मि तवोत्तमम् ।
न ते वीर्येण सदृशः कश्चिल्लोके भविष्यति ॥१३-४०-५७ (८२४६२)

पतङ्ग पततांश्रेष्ठ न देवो नापि दानवः ।
मत्सखित्वमनुप्राप्तो दुर्धर्षश्च भविष्यसि ॥ १३-४०-५८ (८२४६३)
तमब्रवं देवदेवं मामेवंवादिनं परम् ।
प्रयतः प्राञ्जलिर्भूत्वा प्रणम्य शिरसा विभुम् ॥ १३-४०-५९ (८२४६४)
एवमेतन्महाबाहो सर्वमेतद्भविष्यति ।
वाहनं ते भविष्यामि यथा वदति मां भवान् ॥ १३-४०-६० (८२४६५)
मम चापि महाबुद्धे निश्चयं श्रूयतामिति ।
ध्वजस्तेऽहं भविष्यामि रथस्थस्य न संशयः ॥ १३-४०-६१ (८२४६६)
तथास्त्विति स मामुक्त्वा भूयः प्राह महामनाः ।
न ते गतिविघातोऽद्य भविष्यत्यमृतं विना ॥ १३-४०-६२ (८२४६७)
एवं कृत्वा तु समयं देवदेवः सनातनः ।
मामुक्त्वा साधयस्वेति यथाऽभिप्रायतो गतः ॥ १३-४०-६३ (८२४६८)
ततोऽहं कृतसंवादो येन केनापि सत्तमाः ।
कौतूहलसमाविष्टः पितरं कश्यपं गतः ॥ १३-४०-६४ (८२४६९)
सोहं पितरमासाद्य प्रणिपत्याभिवाद्य च ।
सर्वमेतद्यथातथ्यमुक्तवान्पितुरन्तिके ॥ १३-४०-६५ (८२४७०)
श्रुत्वा तु भगवान्मह्यं ध्यानमेवान्वपद्यत ।
स मुहूर्तमिव ध्यात्वा मामाह वदतां वरः ॥ १३-४०-६६ (८२४७१)
धन्योस्यनुगृहीतश्च यत्त्वं तेन महात्मना ।
संवादं कृतवांस्तात गुह्येन परमात्मना ॥ १३-४०-६७ (८२४७२)
स्थूलदृश्यः स भगवांस्तेन तेनैव हेतुना ।
दृश्यतेऽव्यक्तरूपस्थः प्रधानप्रभवाप्ययः ॥ १३-४०-६८ (८२४७३)
मया हि स महातेजा नान्ययोगसमाधिना ।
तपसोग्रेण तेजस्वी तोषितस्तपसांनिधिः ॥ १३-४०-६९ (८२४७४)
ततो मे दर्शयामास तोषयन्निव पुत्रक ।
श्वेतपीतारुणनिभः कद्रूकपिलपिङ्गलः ॥ १३-४०-७० (८२४७५)
रक्तनीलासितनिभः सहस्रोदरपाणिमान् ।
द्विसाहस्रमहावक्त्र एकाक्षः शतलोचनः ॥ १३-४०-७१ (८२४७६)
अनिष्पन्दा निराहाराः समानाः सूर्यतेजसा ।
तमुपासन्ति परमं गुह्यमक्षरमव्ययम् ॥ १३-४०-७२ (८२४७७)
समासाद्य तु तं विश्वमहं मूर्ध्ना प्रणम्य च ।
ऋग्यजुःसामभिः स्तुत्वा शरण्यं शरणं गतः ॥ १३-४०-७३ (८२४७८)
महामेघौघधीरेण स्वरेण जयतांवरः ।
आभाष्य पुत्रपुत्रेति इदमाह धृतं वचः ॥ १३-४०-७४ (८२४७९)
त्वयाऽभ्युदयकामेन तपश्चीर्णं महामुने ।
अमुक्तस्त्वं समासङ्गैरविमुक्तोऽद्य पश्यसि ॥ १३-४०-७५ (८२४८०)

यदा सङ्गैर्विमुक्तश्च गतमोहो गतस्पृहः ।
भविष्यसि सदा ब्रह्म मामनुध्यास्यसे द्विज ॥१३-४०-७६ (८२४८१)
ऐकान्तिकीं मतिं कृत्वा मद्भक्तो मत्परायणः ।
ज्ञास्यसे मां ततो ब्रह्मन्वीतमोहश्च तत्वतः ॥१३-४०-७७ (८२४८२)
तेन त्वं कृतसंवादः स्वतः सर्वहितैषिणा ।
विश्वरूपेण देवेन पुरुषेण महात्मना ।
तमेवाराधय क्षिप्रं तमाराध्य न सीदसि ॥ १३-४०-७८ (८२४८३)
सोहमेवं भगवता पित्रा ब्रह्मर्षिसत्तमाः ।
अनुनीतो यथान्यायं स्वमेव भवनं गतः ॥' ॥ १३-४०-७९ (८२४८४)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
चत्वारिंशोऽध्यायः ॥ ४० ॥

---

अनुससनपर्व-अध्यय०४१
॥ श्रीः ॥
१३.४१. अध्यायः ४१

अथ दानधर्मपर्व ॥ १ ॥
Mahabharata - Anushaasana Parva - Chapter Topics
ब्रह्मणा देवान्प्रति गरुडस्य
बदरीनारायणानुगमनादिप्रतिपादकगरुडमुनिगणसंवादानुवादः ॥ १ ॥

Mahabharata - Anushaasana Parva - Chapter Text

ग्सुपर्ण उवाच ।
सोऽहमामन्त्र्य पितरं तद्भावगतमानसः ।
स्वमेवालयमासाद्य तमेवार्थमचिन्तयम् ॥१३-४१-१ (८२४८५)
तद्भावगतभावात्मा तद्भूतगतमानसः ।
गोविन्दं चिन्तयन्नासे शाश्वतं परमव्ययम् ॥१३-४१-२ (८२४८६)
धृतं बभूव हृदयं नारायणदिदृक्षया ।
सोहं वेगं समास्थाय मनोमारुतवेगवान् ।
रम्यां विशालां बदरीं गतो नारायणाश्रमम् ॥ १३-४१-३ (८२४८७)
ततस्तत्र हरिं जगतः प्रभवं विभुम् ।
गोविन्दं पुण्डरीकाक्षं प्रणतः शिरसा हरिम् ।
ऋग्यजुस्सामभिश्चैनं तुष्टाव परया मुदा ॥ १३-४१-४ (८२४८८)
अथापश्यं सुविपुलमश्वत्थं देवसंश्रयम् ॥ १३-४१-५ (८२४८९)

चतुर्द्विगुणपीनांसः शङ्खचक्रगदाधरः ।
प्रादुर्बभूव पुरुषः पीतवासाः सनातनः ।
मध्याह्नार्कप्रतीकाशस्तेजसा भासयन्दिशः ॥ १३-४१-६ (८२४९०)
संस्तुतः संविदं कृत्वा व्रजेति श्रेयसे रतः ।
प्रागुदीचीं दिशं देवः प्रतस्थे पुरुषोत्तमः ।
दिशश्च विदिशश्चैव भासयन्स्वेन तेजसा ॥ १३-४१-७ (८२४९१)
तमहं पुरुषं दिव्यं व्रजन्तममितौजसम् ।
अनुवव्राज वेगेन शनैर्गच्छन्तमव्ययम् ॥ १३-४१-८ (८२४९२)
योजनानां सहस्राणि षष्टिमष्टौ तथा शतम् ।
तथा शतसहस्रं च शतं द्विगुणमेव च ॥ १३-४१-९ (८२४९३)
स गत्वा दीर्गमध्वानमपश्यमहमद्भुतम् ।
महान्तं पावकं दीप्तमर्चिष्मन्तमनिन्धनम् ॥ १३-४१-१० (८२४९४)
शतयोजनविस्तीर्णं तस्माद्द्विगुणमायतम् ।
विवेश स महायोगी पावकं पावकद्युतिः ॥ १३-४१-११ (८२४९५)
तत्र शंभुस्तपस्तेपे महादेवः सहोमया ।
स तेन संविदं कृत्वा पावकं समतिक्रमत् ॥ १३-४१-१२ (८२४९६)
श्रमाभिभूतेन मया कथञ्चिदनुगम्यते ॥ १३-४१-१३ (८२४९७)
गत्वा स दीर्घमध्वानं भास्करेणावभासितम् ।
अभास्करममर्यादं विवेश सुमहत्तमः ॥ १३-४१-१४ (८२४९८)
अथ दृष्टिः प्रतिहता मम तत्र बभूव ह ।
यथास्वभावं भूतात्मा विवेश स महाद्युतिः ॥ १३-४१-१५ (८२४९९)
ततोऽहमभवं मूढो जडान्धबधिरोपमः ।
दिशश्च विदिशश्चैव न विजज्ञे तमोवृतः ॥ १३-४१-१६ (८२५००)
अविजानन्नहं किञ्चित्तस्मिंस्तमसि संवृते ।
ससंभ्रान्तेन मनसा व्यथां परमिकां गतः ॥ १३-४१-१७ (८२५०१)
सोऽहं प्रपन्नः शरणं देवदेवं सनातनम् ।
प्राञ्चलिर्मनसा भूत्वा वाक्यमेतत्तदोक्तवान् ॥ १३-४१-१८ (८२५०२)
भगवन्भूतभव्येश भवद्भूतकृदव्यय ।
शरणं सम्प्रपन्नं मां त्रातुमर्हस्यरिंदम ॥ १३-४१-१९ (८२५०३)
अहं तु तत्त्वजिज्ञासुः कोसि कस्यासि कुत्र वा ।
सम्प्राप्तः पदवीं देव स मां संत्रातुमर्हसि ॥ १३-४१-२० (८२५०४)
आविर्भूतः पुराणात्मा मामेहीति सनातनः ।
ततोपरान्ततो देवो विश्वस्य गतिरात्मवान् ।
मोहयामास मां तत्र दुर्विभाव्यवपुर्विभुः ॥ १३-४१-२१ (८२५०५)
स्वभावमात्मनस्तत्र दर्शयन्स्वयमात्मना ।
श्रमं मे जनयामास भयं चाभयदः प्रभुः ॥ १३-४१-२२ (८२५०६)

खिन्न इत्येव मां मत्वा भगवानव्ययोऽच्युतः ।
शब्देनाश्वासयामास जगाहे च तमो महत् ॥ १३-४१-२३ (८२५०७)
अहं तमेवानुगतः श्रमालसपदस्चरन् ।
मनसा देवदेवेशं ध्यातुं समुपचक्रमे ॥ १३-४१-२४ (८२५०८)
तथागतं तु मां ज्ञात्वा भगवानमितद्युतिः ।
तमः प्रणाशयामास ममानुग्रहकाङ्क्षया ॥ १३-४१-२५ (८२५०९)
ततः प्रनष्टे तमसि तमहं दीप्ततेजसम् ।
अपश्यं तेजसा व्याप्तं मध्याह्न इव भास्करम् ॥ १३-४१-२६ (८२५१०)
स्वयंप्रभांश्च पुरुषान्स्त्रियश्च परमाद्भुताः ।
अपश्यमहमव्यग्रस्तस्मिन्देशे सहस्रशः ॥ १३-४१-२७ (८२५११)
न तत्र द्योतते सूर्यो नक्षत्राणि तथैव च ।
न तत्र चन्द्रमा भाति न वायुर्वाति पांसुलः ॥ १३-४१-२८ (८२५१२)
तत्र तूर्याण्यनेकानि गीतानि मधुराणि च ।
अदृश्यानि मनोज्ञानि श्रूयन्ते सर्वतोदिशम् ॥ १३-४१-२९ (८२५१३)
स्रवन्ति वैडूर्यलताः पद्मोत्पलझषाकुलाः ।
मुक्तासिकतवप्राश्च सरितो निर्मलोदकाः ॥ १३-४१-३० (८२५१४)
अगतिस्तत्र देवानामसुराणां तथैव च ।
गन्धर्वनागयक्षाणां राक्षसानां तथैव च ॥ १३-४१-३१ (८२५१५)
स्वयंप्रभास्तत्र नरा दृश्यन्तेऽद्भुतदर्शनाः ।
येषां न देवतास्तुल्याः प्रभाभिर्भावितात्मनाम् ॥ १३-४१-३२ (८२५१६)
स च तानप्यतिक्रम्य दैवतैरपि पूजितः ।
विवेश ज्वलनं दीप्तमनिन्धनमनौपमम् ॥ १३-४१-३३ (८२५१७)
ज्वालाभिर्मां प्रविष्टं च ज्वलन्तं सर्वतोदिशम् ।
दैत्यदानवरक्षोभिर्दैवतैश्चापि दुस्सहम् ॥ १३-४१-३४ (८२५१८)
ज्वालामालिनमासाद्य तमग्निमहमव्ययम् ।
अविषह्यतमं मत्वा मनसेदमचिन्तयम् ॥ १३-४१-३५ (८२५१९)
मया हि समरेष्वग्निरनेकेषु महाद्युतिः ।
प्रविष्टश्चापविद्धश्च न च मां दग्धवान्क्वचित् ॥ १३-४१-३६ (८२५२०)
अयं च दुस्सहः शश्वत्तेजसाऽतिहुताशनः ।
अत्यादित्यप्रकाशार्चिरनलो दीप्यते महान् ॥ १३-४१-३७ (८२५२१)
स तथा दह्यमानोपि तेजसा दीप्तवर्चसा ।
प्रपन्नः शरणं देवं शङ्खचक्रगदाधरम् ॥ १३-४१-३८ (८२५२२)
भक्तश्चानुगतश्चेति त्रातुमर्हसि मां विभो ।
यथा मां न दहेदग्निः सद्यो देव तथा कुरु ॥ १३-४१-३९ (८२५२३)
एवं विलपमानस्य ज्ञात्वा मे वचनं प्रभुः ।
मा भैरिति वचः प्राह मेघगम्भीरनिस्वनः ॥ १३-४१-४० (८२५२४)

स मामाश्वास्य वचनं प्राहेदं भगवान्विभुः ।
मम त्वं विदितः सौम्य यथावत्तत्वदर्शने ॥ १३-४१-४१ (८२५२५)
ज्ञापितश्चापि यत्पित्रा तच्चापि विदितं महत् ।
वैनतेय ममाप्येवमहं वेद्यः कथञ्चन ॥ १३-४१-४२ (८२५२६)
महदेतत्स्वरूपं मे न ते वेद्यं कथञ्चन ।
मां हि विन्दन्ति विद्वांसो ये ज्ञाने परिनिष्ठिताः ॥
निर्ममा निरहङ्कारा निराशीर्बन्धनायुताः ॥ १३-४१-४३ (८२५२७)
भवांस्तु सततं भक्तो मन्मनाः पक्षिसत्तम ।
स्थूलंमां वेत्स्यसे तस्माज्जगतः कारणेस्थितम्'॥ ॥ १३-४१-४४ (८२५२८)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
एकचत्वारिंशोऽध्यायः ॥ ४१ ॥

---

अनुससनपर्व-अध्यय०४२
॥ श्रीः ॥
१३.४२. अध्यायः ४२

अथ दानधर्मपर्व ॥ १ ॥
Mahabharata - Anushaasana Parva - Chapter Topics
ब्रह्मणा देवान्प्रति
श्रीनारायणमहिमप्रतिपादकगरुडमुनिगणसंवादानुवादः ॥ १ ॥

Mahabharata - Anushaasana Parva - Chapter Text

ग्सुपर्ण उवाच ।
एवं दत्ताभयस्तेन ततोऽहमृषिसत्तमाः ।
नष्टखेदश्रमभयः क्षणेन ह्यभवं तदा ॥ १३-४२-१ (८२५२९)
स शनैर्याति भगवान्गत्या लघुपराक्रमः ।
अहं तु सुमहावेगमास्तायानुव्रजामि तम् ॥ १३-४२-२ (८२५३०)
स गत्वा दीर्घमध्वानमाकाशममितद्युतिः ।
मनसाऽप्यगमं देवमाससादात्मतत्ववित् ॥ १३-४२-३ (८२५३१)
अथ देवः समासाद्य मनसः सदृशं जवम् ।
मोहयित्वा च मां तत्र क्षणेनान्तरधीयत ॥ १३-४२-४ (८२५३२)
तत्राम्बुधरधीरेण भोशब्देनानुनादिना ।
अयं भोऽहमिति प्राह वाक्यं वाक्यविशारदः ॥ १३-४२-५ (८२५३३)
शब्दानुसारी तु ततस्तं देशमहमाव्रजम् ।

तत्रापश्यं ततश्चाहं श्रीमद्धंसयुतं सरः ॥१३-४२-६ (८२५३४)
स तत्सरः समासाद्य भगवानात्मवित्तमः ।
भोशब्दप्रतिसृष्टेन स्वरेण प्रतिवादिना ॥१३-४२-७ (८२५३५)
विवेश देवः स्वां योनिं मामिदं चाभ्यभाषत ।
विशस्व सलिलं सौम्य सुखमत्र वसामहे ॥१३-४२-८ (८२५३६)
ततश्च प्राविशं तत्र सह तेन महात्मना ।
दृष्टवानद्भुततरं तस्मिन्सरसि भास्वताम् ॥१३-४२-९ (८२५३७)
अग्नीनामप्रणीतानामिद्धानामिन्धनैर्विना ।
दीप्तानामाज्यसिक्तानां स्यानेष्वर्चिष्मतां सदा ॥१३-४२-१० (८२५३८)
दीप्तिस्तेषामनाज्यानां प्राप्ताज्यानामिवाभवत् ।
अनिद्धानामिव सतामिद्धानामिव भास्वताम् ॥१३-४२-११ (८२५३९)
अथाहं वरदं देवं नापश्यं तत्र सङ्गतम् ।
ततः सम्मोहमापन्नो विषादभगमं परम् ॥१३-४२-१२ (८२५४०)
अपश्यं चाग्निहोत्राणि शतशोऽथ सहस्रशः ।
विधिना सम्प्रणीतानि धिष्ण्येष्वाज्यवतां तदा ॥१३-४२-१३ (८२५४१)
असंभृष्टतलाश्चैव वेदीः कुसुमसंस्तृताः ।
कुशपद्मोत्पलासङ्गाः कलशांश्च हिरण्मयान् ॥१३-४२-१४ (८२५४२)
अग्निहोत्राणि चित्राणि शतशोऽथ सहस्रशः ।
अग्निहोत्राय योग्यानि यानि द्रव्याणि कानिचित् ।
तानि चात्र समृद्धानि दृष्टवानस्म्यनेकशः ॥ १३-४२-१५ (८२५४३)
मनोहृद्यतमश्चाग्निः सुरभिः पुण्यलक्षणः ।
आज्यगन्धो मनोग्राही घ्राणचक्षुस्सुखावहः ॥१३-४२-१६ (८२५४४)
तेषां तत्राग्निहोत्राणामीडितानां सहस्रशः ।
समीपे त्वद्भुततममपश्यमहमव्ययम् ॥१३-४२-१७ (८२५४५)
चन्द्रांशुकाशशुभ्राणां तुषारोद्भेदवर्चसाम् ।
विमलादित्यभासानां स्थण्डिलानि सहस्रशः ।
दृष्टान्यग्निसमीपे तु ध्युतिमन्ति महान्ति च ॥ १३-४२-१८ (८२५४६)
एषु चाग्निसमीपेषु शुश्राव सुपदाक्षराः ।
प्रभावान्तरितानां तु प्रस्पष्टाक्षरभाषिणाम् ।
ऋग्यजुःसामगानां च मधुराः सुस्वरा गिरः ॥ १३-४२-१९ (८२५४७)
सुसंमृष्टतलैस्तैस्तु बृहद्भिर्दीप्ततेजसैः ।
पावकैः पावितात्माहमभवं लघुविक्रमः ॥१३-४२-२० (८२५४८)
ततोऽहं तेषु धिष्ण्येषु ज्वलमानेषु यज्वनाम् ।
तं देशं प्रणमित्वाऽथ अन्वेष्टुमुपचक्रमे ॥१३-४२-२१ (८२५४९)
तान्यनेकसहस्राणि पर्यटंस्तु महाजवात् ।
अपश्यमानस्तं देवं ततोऽहं व्यथितोऽभवम् ॥१३-४२-२२ (८२५५०)

ततस्तेष्वग्निहोत्रेषु ज्वलत्सु विमलार्चिषु ।
भानुमत्सु न पश्यामि देवदेवं सनातनम् ॥१३-४२-२३ (८२५५१)
ततोऽहं तानि दीप्तानि परीय व्यस्थितेन्द्रियः ।
नान्तं तेषां प्रपश्यामि खेदश्च सहसाभवत् ॥१३-४२-२४ (८२५५२)
विसृत्य सर्वतो दृष्टिं भयमोहसमन्वितः ।
श्रमं परंममापन्नश्चिन्तयानस्त्वचेतनः ॥१३-४२-२५ (८२५५३)
तस्मिन्न खलु वर्तेऽहं लोके यत्रैतदीदृशम् ।
ऋग्यजुस्सामनिर्घोषः श्रूयते न च दृश्यते ॥१३-४२-२६ (८२५५४)
न च पश्यामि तं देवं येनाहमिह चोदितः ।
एवं चिन्तासभापन्नः प्रध्यातुमुपचक्रमे ॥१३-४२-२७ (८२५५५)
ततश्चिन्तयतो मह्यं मोहेनाविष्टचेतसः ।
महाशब्दः प्रादुरासीत्सुभृशं मे व्यथाकरः ॥१३-४२-२८ (८२५५६)
अथाहं सहसा तत्र शृणोमि विपुलध्वनिम् ।
अपश्यं च सुपर्णानां सहस्राण्ययुतानि च ॥१३-४२-२९ (८२५५७)
अभ्यद्रवन्त मामेव विपुलद्युतिरंहसः ।
तेषामहं प्रभावेण सर्वथैवावरोऽभवम् ॥१३-४२-३० (८२५५८)
सोऽहं समन्ततः सर्वैः सुपर्णैरतितेजसैः ।
दृष्ट्वाऽऽत्मानं परिगतं सम्भ्रमं परमं गतः ॥१३-४२-३१ (८२५५९)
विनयावनतो भूत्वा नमश्चक्रे महात्मने ।
अनादिनिधनायैभिर्नामभिः परमात्मने ॥१३-४२-३२ (८२५६०)
नारायणाय शुद्धाय शाश्वताय ध्रुवाय च ।
भूतभव्यभवेशाय शिवाय शिवमूर्तये ॥१३-४२-३३ (८२५६१)
शिवयोनेः शिवाद्यायि शिवपूज्यतमाय च ।
घोररूपाय महते युगान्तकरणाय च ॥१३-४२-३४ (८२५६२)
विश्वाय विश्वदेवाय विश्वेशाय महात्मने ।
सहस्रोदरपादाय सहस्रनयनाय च ॥१३-४२-३५ (८२५६३)
सहस्रबाहवे चैव सहस्रवदनाय च ।
शुचिश्रवाय महते ऋतुसंवत्सराय च ॥१३-४२-३६ (८२५६४)
ऋग्यजुःसामवक्त्राय अथर्वशिरसे नमः ।
हृषीकेशाय कृष्णाय द्रुहिणोरुक्रमाय च ॥१३-४२-३७ (८२५६५)
बृहद्वेगाय तार्क्ष्याय वराहायैकशृङ्गिणे ।
शिपिविष्टाय सत्याय हरयेऽथ शिखण्डिने ॥१३-४२-३८ (८२५६६)
हुताशायोर्ध्ववक्त्राय रौद्रानीकाय साधवे ।
सिन्धवे सिन्धुवर्षघ्ने देवानां सिन्धवे नमः ॥१३-४२-३९ (८२५६७)
गरुत्मते त्रिनेत्राय सुधर्माय वृषाकृते ।
सम्म्राडुग्रे संकृतये विरजे सम्भवे भवे ॥१३-४२-४० (८२५६८)

वृषाय वृषरूपाय विभवे भूर्भुवाय व ।
दीप्तसृष्टाय यज्ञाय स्थिराय स्थविराय च ॥ १३-४२-४१ (८२५६९)
अच्युताय तुषाराय वीराय च समाय च ।
जिष्णवे पुरुहूताय वसिष्ठाय वराय च ॥ १३-४२-४२ (८२५७०)
सत्येशाय सुरेशाय हरयेऽथ शिखण्डिने ।
बर्हिषाय वरेण्याय वसवे विश्ववेधसे ॥ १३-४२-४३ (८२५७१)
किरीटिने सुकेशाय वासुदेवाय शुष्मिणे ।
बृहदुक्थ्यसुषेणाय युग्ये दुन्दुभये तथा ॥ १३-४२-४४ (८२५७२)
भयेसखाय विभवे भरद्वाजेऽभयाय च ।
भास्कराय च चन्द्राय पद्मनाभाय भूरिणे ॥ १३-४२-४५ (८२५७३)
पुनर्वसुभृतत्वाय जीवप्रभविषाय च ।
वषङ्काराय स्वाहाय स्वधाय निधनाय च ॥ १३-४२-४६ (८२५७४)
ऋचे च यजुषे साम्ने त्रैलोक्यपतये नमः ।
श्रीपद्मायात्मसदृशे धरणीधारिणे परे ॥ १३-४२-४७ (८२५७५)
सौम्यासौम्यस्वरूपाय सौम्ये सुमनसे नमः ।
विश्वाय च सुविश्वाय विश्वरूपधराय च ॥ १३-४२-४८ (८२५७६)
केशवाय सुकेशाय रश्मिकेशाय भूरिणे ।
हिरण्यगर्भाय नमः सौम्याय वृषरूपिणे ॥ १३-४२-४९ (८२५७७)
नारायणाग्र्यवपुषे पुरुहूताय वज्रिणे ।
वर्मिणे वृषसेनाय धर्मसेनाय रोधसे ।
मुनये ज्वरमुक्तायि ज्वराधिपतये नमः ॥ १३-४२-५० (८२५७८)
अनेत्राय त्रिनेत्राय पिङ्गलाय विडूर्मिणे ।
तपोब्रह्मनिधानाय युगपर्यायिणे नमः ॥ १३-४२-५१ (८२५७९)
शरणाय शरण्याय भक्तेष्टशरणाय च ।
नमः सर्वभवेशाय भूतभव्यभवाय च ॥ १३-४२-५२ (८२५८०)
पाहि मां देवदेवेश कोप्यजोसि सनातनः ।
एवं गतोस्मि शरणं शरण्यं ब्रह्मयोनिनम् ॥ १३-४२-५३ (८२५८१)
स्तव्यं स्तवं स्तुतवतस्तत्तमो मे प्रणश्यत ।
भयं च मे व्यपगतं पक्षिणोऽन्तर्हिताऽभवन् ॥ १३-४२-५४ (८२५८२)
शृणोमि च गिरं दिव्यामन्तर्धानगतां शिवाम् ।
मा भैर्गरुत्मन्दान्तोसि पुनः सेन्द्रान्दिवौकसः ।
स्वं चैव भवनं गत्वा द्रक्ष्यसे पुत्रबान्धवान् ॥ १३-४२-५५ (८२५८३)
ततस्तस्मिन्क्षणेनैव सहसैव महाद्युतिः ।
प्रत्यदृश्यत तेजस्वी पुरस्तात्स ममान्तिके ॥ १३-४२-५६ (८२५८४)
समागम्य ततस्तेन शिवेन परमात्मना ।
अपश्यं चाहमायान्तं नरनारायणाश्रमे ।

चतुर्द्विगुणविन्यासं तं च देवं सनातनम् ॥ १३-४२-५७ (८२५८५)
यजतस्तानृषीन्देवान्वदतो ध्यायतो मुनीन् ।
युक्तान्सिद्धान्नैष्ठिकांश्च जपतो यजतो गृहे ॥१३-४२-५८ (८२५८६)
पुष्पपूरपरिक्षिप्तं धूपितं दीपितं हुतम् ।
वन्दितं सिक्तसम्मृष्टं नरनारायणाश्रमम् ॥१३-४२-५९ (८२५८७)
तदद्भुतमहं दृष्ट्वा विस्मितोस्मि तदाऽनघाः ।
जगाम शिरसा देवं प्रयतेनान्तरात्मना ॥१३-४२-६० (८२५८८)
तदत्यद्भुतसङ्कासं किमेतदिति चिन्तयन् ।
नाध्यगच्छं परं दिव्यं तस्य सर्वभवात्मनः ॥१३-४२-६१ (८२५८९)
प्रणिपत्य सुदुर्धर्षं पुनः पुनरुदीक्ष्य च ।
शिरस्यञ्जलिमाधाय विस्मयोत्फुल्ललोचनः ।
अवोचं तमदीनार्थं श्रेष्ठानां श्रेष्ठमुत्तमम् ॥ १३-४२-६२ (८२५९०)
नमस्ते भगवन्देव भूतभव्यभवत्प्रभो ।
यदेतदद्भुतं देव मया दृष्टं त्वदाश्रयम् ॥१३-४२-६३ (८२५९१)
अनादिमद्यपर्यन्तं किं तच्छंसितुमर्हसि ।
यदि जानासि सां भक्तं यदि वाऽनुग्रहो मयि ।
शंस सर्वमशेषेण श्रोतव्यं यदि चेन्मया ॥ १३-४२-६४ (८२५९२)
स्वभावस्तव दुर्ज्ञेयः प्रादुर्भावो भवस्य च ।
भवद्भूतभविष्येश सर्वथा गहनं भवान् ॥१३-४२-६५ (८२५९३)
ब्रूहि सर्वमशेषेण तदाश्चर्यं महामुने ।
किं तदत्यद्भुतं वृत्तं तेष्वग्निषु समन्ततः ॥१३-४२-६६ (८२५९४)
कानि तान्यग्निहोत्राणि केषां शब्दः श्रुतो मया ।
शृण्वतां ब्रह्म सततमदृश्यानां महात्मनाम् ॥१३-४२-६७ (८२५९५)
एतन्मे भगवन्कृष्ण ब्रूहि सर्वमशेषतः ।
गृणन्त्यग्निसमीपेषु के च ते ब्रह्मराशयः ॥' ॥ १३-४२-६८ (८२५९६)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
द्विचत्वारिंशोऽध्यायः ॥ ४२ ॥

---

अनुससनपर्व-अध्यय०४३
॥ श्रीः ॥
१३.४३. अध्यायः ४३

अथ दानधर्मपर्व ॥ १ ॥
Mahabharata - Anushaasana Parva - Chapter Topics
बदरीनारायणेन गरुडंप्रति स्वमहिमोक्तिः ॥ १ ॥

गरुडेन मुनिगणान्प्रति स्वानुभूतनारायणमहिमोक्तिः ॥ २ ॥

Mahabharata - Anushaasana Parva - Chapter Text

ग्भगवानुवाच ।
मां न देवा न गन्धर्वा नासुरा न व राक्षसाः ।
विदुस्तत्वेन सत्वस्थं सूक्ष्मात्मानमवस्थितम् ॥ १३-४३-१ (८२५९७)
चतुर्धाऽहं विभक्तात्मा लोकानां हितकाम्यया ।
भूतभव्यभविष्यादिरनादिर्विश्वकृत्तमः ॥ १३-४३-२ (८२५९८)
पृथिवी वायुराकाशमापो ज्योतिश्च पञ्चमम् ।
मनो बुद्धिश्च चेतश्च तमः सत्वं रजस्तथा ॥ १३-४३-३ (८२५९९)
प्रकृतिर्विकृतिश्चैव विद्याविद्ये शुभाशुभे ।
मत्त एतानि जायन्ते नाहमेभ्यः कथञ्चन ॥ १३-४३-४ (८२६००)
यत्किंचिच्छ्रेयसा युक्तं श्रेयस्करमनुत्तमम् ।
धर्मयुक्तं च पुण्यं च सोऽहमस्मि निरामयः ॥ १३-४३-५ (८२६०१)
यत्स्वभावात्मतत्वज्ञैः कारणैरुपलक्ष्यते ।
अनादिमध्यनिधनः सोन्तरात्माऽस्मि शाश्वतः ॥ १३-४३-६ (८२६०२)
यत्तु मे परमं गुह्यं रूपं सूक्ष्मार्थदर्शिभिः ।
गृह्यते सूक्ष्मभावज्ञैः सोऽविभाव्योस्मि शाश्वतः ॥ १३-४३-७ (८२६०३)
तत्तु मे परमं गुह्यं येन व्याप्तमिदं जगत् ।
सोहङ्गतः सर्वसत्वः सर्वस्य प्रभवोऽव्ययः ॥ १३-४३-८ (८२६०४)
मत्तो जायन्ति भूतानि मया धार्यन्त्यहर्निशम् ।
मय्येव विलयं यान्ति प्रलये पन्नगाशन ॥ १३-४३-९ (८२६०५)
यो मां यथा वेदयति तथा तस्यास्मि काश्यप ।
मनोबुद्धिगतः श्रेयो विदधामि विहङ्गम ॥ १३-४३-१० (८२६०६)
मां तु ज्ञातुं कृता बुद्धिर्भवता पक्षिसत्तम ।
शृणु योऽहं यतश्चाहं यदर्थश्चाहमुद्यतः ॥ १३-४३-११ (८२६०७)
ये केचिन्नियतात्मानस्त्रेताग्निपरमार्चिताः ।
अग्निकार्यपरा नित्यं जपहोमपरायणाः ॥ १३-४३-१२ (८२६०८)
आत्मन्यग्नीन्समाधाय नियता नियतेन्द्रियाः ।
अनन्यमनसस्ते मां सर्वे वै समुपासते ॥ १३-४३-१३ (८२६०९)
यजन्तो जपयज्ञैर्मां मानसैश्च सुसंयताः ।
अग्नीनभ्युद्ययुः शश्वदग्निष्वेवाभिसंश्रिताः ॥ १३-४३-१४ (८२६१०)
अनन्यकार्याः शुचयो नित्यमग्निपरायणाः ।
य एवंबुद्ध्यो धीरास्ते मां गच्छन्ति तादृशाः ॥ १३-४३-१५ (८२६११)
अकामहतसङ्कल्पा ज्ञाने नित्यं समाहिताः ।

आत्मन्यग्निं समाधाय निराहारा निराशिषः ॥ १३-४३-१६ (८२६१२)
विषयेषु निरारम्भा विमुक्ता ज्ञानचक्षुषः ।
अनन्यमनसो धीराः स्वभावनियमान्विताः ॥ १३-४३-१७ (८२६१३)
यत्तद्वियति दृष्टं तत्सरः पद्मोत्पलायुतम् ।
तत्राग्नयः सन्निहिता दीप्यन्ते स्म निरिन्धनाः ॥ १३-४३-१८ (८२६१४)
ज्ञानामलाशयास्तस्मिन्ये च चन्द्रांशुनिर्मलाः ।
उपासीना गृणन्तोऽग्निमस्पष्टाक्षरभाषिणः ।
आकाङ्क्षमाणाः शुचयस्तेष्वग्निषु विहङ्गम ॥ १३-४३-१९ (८२६१५)
ये मया भावितात्मानो मय्येवाभिरताः सदा ।
उपासते च मामेव ज्योतिर्भूता निरामयाः ॥ १३-४३-२० (८२६१६)
तैर्हि तत्रैव वस्तव्यं नीरागादिभिरच्युतैः ।
निराहारा ह्यनिष्पन्दाश्चन्द्रांशुसदृशप्रभाः ॥ १३-४३-२१ (८२६१७)
निर्मला निरहङ्कारा निरालम्बा निराशिषः ।
मद्भक्ताः सततं तेवै भक्तांस्तानपि चाप्यहम् ॥ १३-४३-२२ (८२६१८)
चतुर्धाऽहं विभक्तात्मा चरामि जगतो हितः ।
लोकानां धारणार्थाय विधानं विदधामि च ॥ १३-४३-२३ (८२६१९)
यथावत्तदशेषेण श्रोतुमर्हति मे भवान् ॥ १३-४३-२४ (८२६२०)
एका मूर्तिर्निर्गुणाख्या योगं परममास्थिता ।
द्वितीया सृजते तात भूतग्रामं चराचरम् ॥ १३-४३-२५ (८२६२१)
सृष्टं संहरते चैका जगत्स्थावरजङ्गमम् ।
ज्ञातात्मनिष्ठा क्षपयन्मोहयन्तीव मायया ।
क्षपयन्ती मोहयति आत्मनिष्ठा स्वमायया ॥ १३-४३-२६ (८२६२२)
चतुर्थी मे महामूर्तिर्जगद्वृद्धिं ददाति सा ।
रक्षते चापि नियता सोहमस्मि नभश्चरः ॥ १३-४३-२७ (८२६२३)
मया सर्वमिदं व्याप्तं मयि सर्वं प्रतिष्ठितम् ।
अहं सर्वजगद्बीजं सर्वत्रगतिरव्ययः ॥ १३-४३-२८ (८२६२४)
यानि तान्यग्निहोत्राणि ये च चन्द्रांशुराशयः ।
गृणन्ति वेदं सततं तेष्वग्निषु विहङ्गम ॥ १३-४३-२९ (८२६२५)
क्रमेण मां समायान्ति सुखिनो ज्ञानसंयुताः ।
तेषामहं तपो दीप्तं तेजः सम्यक्समाहितम् ।
नित्यं ते मयि वर्तन्ते तेषु चाहमतन्द्रितः ॥ १३-४३-३० (८२६२६)
सर्वतो मुक्तसङ्गेन मय्यनन्यसमाधिना ।
शक्यः समासादयितुमहं वै ज्ञानचक्षुषा ॥ १३-४३-३१ (८२६२७)
मां स्थूलदर्शनं विद्धि जगतः कार्यकारणम् ।
मत्तश्च सम्प्रसूतान्वै विद्धि लोकान्सदैवतान् ॥ १३-४३-३२ (८२६२८)
मया चापि चतुर्धात्मा विभक्तः प्राणिषु स्थिथः ।

आत्मभूतो वासुदेवो ह्यनिरुद्धो मतौ स्थितः ॥ १३-४३-३३ (८२६२९)
सङ्कर्षणोऽहङ्कारे च प्रद्युम्नो मनसि स्थितः ।
अन्यथा च चतुर्दा यत्सम्यक्त्वं श्रोतुमर्हसि ॥ १३-४३-३४ (८२६३०)
यत्तत्पद्ममभूत्पूर्वं तत्र ब्रह्मा व्यजायत ।
ब्राह्मणश्चापि सम्भूतः शिव इत्यवधार्यताम् ॥ १३-४३-३५ (८२६३१)
शिवात्स्कन्दः संवभूव एतत्सृष्टिचतुष्टयम् ।
दैत्यदानवदर्पघ्नमेवं मां विद्धि नित्यशः ॥ १३-४३-३६ (८२६३२)
दैत्यदानवरक्षोभिर्यदा धर्मः प्रपीड्यते ।
तदाऽहं धर्मवृद्ध्यर्थं मूर्तिमान्भविताऽऽशुग ॥ १३-४३-३७ (८२६३३)
वेदव्रतपरा ये तु धीरा निश्चितबुद्धयः ।
योगिनो योगयुक्ताश्च ते मां पश्यन्ति नान्यथा ॥ १३-४३-३८ (८२६३४)
पञ्चभिः सम्प्रयुक्तोऽहं विप्रयुक्तश्च पञ्चभिः ।
वर्तमानश्च तेष्वेवं निवृत्तश्चैव तेष्वहम् ॥ १३-४३-३९ (८२६३५)
ये विदुर्जातसङ्कल्पास्ते मां पश्यन्ति तादृशाः ॥ १३-४३-४० (८२६३६)
स्वं वायुरापो ज्योतिश्च पृथिवी चेति पञ्चमम् ।
तदात्मकोऽस्मि विज्ञेयो न चान्योस्मीति निश्चितम्। १३-४३-४१ (८२६३७)
वर्तमानमतीतं च पञ्चवर्गेषु निश्चलम् ।
शब्दस्पर्शेषु रूपेषु रसगन्धेषु चाप्यहम् ॥ १३-४३-४२ (८२६३८)
रजस्तमोभ्यामाविष्टा येषां बुद्धिरनिश्चिता ।
ते न पश्यन्ति मे तत्वं तपसा महता ह्यपि ॥ १३-४३-४३ (८२६३९)
नोपवासैर्न नियमैर्न व्रतैर्विविधैरपि ।
द्रष्टुं वा वेदितुं वाऽपि न शक्या परमा गतिः ॥ १३-४३-४४ (८२६४०)
महामोहार्थपङ्के तु निमग्नानां गतिर्हरिः ।
एकान्तिनो ध्यानपरा यतिभावाद्व्रजन्ति माम् ॥ १३-४३-४५ (८२६४१)
सत्वयुक्ता मतिर्येषां केवलाऽऽत्मविनिश्चिता ।
ते पश्यन्ति स्वमात्मानं परमात्मानमव्ययम् ॥ १३-४३-४६ (८२६४२)
अहिंसा सर्वभूतेषु तेष्ववस्तितमार्जवम् ।
तेष्वेव च समाधाय सम्यगेति च मामजम् ॥ १३-४३-४७ (८२६४३)
यदेतत्परमं गुह्यमाख्यानं परमाद्भुतम् ।
यत्तेन तदशेषेण यथावच्छ्रोतुमर्हसि ॥ १३-४३-४८ (८२६४४)
ये त्वग्निहोत्रनियता जपयज्ञपरायणाः ।
ते मामुपासते शश्वद्यांस्तांस्त्वं दृष्टवानसि ॥ १३-४३-४९ (८२६४५)
शास्त्रदृष्टविधानज्ञा असक्ताः क्वचिदन्यथा ।
शक्योऽहं वेदितुं तैस्तु यन्मे परममव्ययम् ॥ १३-४३-५० (८२६४६)
ये तु सांख्यं च योगं च ज्ञात्वाऽप्यधृतनिश्चयाः ।
न ते गच्छन्ति कुशलाः परां गतिमनुत्तमाम् ॥ १३-४३-५१ (८२६४७)

तस्माज्ज्ञानेन शुद्धेन प्रसन्नात्माऽऽन्मविच्छुचिः ।
आसादयति तद्ब्रह्म यत्र गत्वा न शोचति ॥१३-४३-५२ (८२६४८)
शुद्धाभिजनसम्पन्नाः श्रद्धायुक्तेन चेतसा ।
मद्भक्त्या च द्विजश्रेष्ठा गच्छन्ति परमां गतिं ॥१३-४३-५३ (८२६४९)
यद्ब्रह्म परमं बुद्धेरलिङ्गग्रहणं च यत् ।
तत्सूक्ष्मं गृह्यते विप्रैर्यतिभिस्तत्त्वदर्शिभिः ॥१३-४३-५४ (८२६५०)
न वायुः पवते तत्र न तस्मिञ्ज्योतिषां गतिः ।
न चापः पृथिवी चैव नाकाशं न मनोगतिः ॥१३-४३-५५ (८२६५१)
तस्माच्चैतानि सर्वाणि प्रजायन्ते विहङ्गम ।
सर्वेभ्यश्च स तेभ्यश्च प्रभवत्यमलो विभुः ॥१३-४३-५६ (८२६५२)
स्थूलदर्शनमेतन्मे यद्दृष्टं भवताऽनघ ।
एतत्सूक्ष्मस्य तद्द्वारं कार्याणां कारणं त्वहम् ॥१३-४३-५७ (८२६५३)
दृष्टो वै भवता तस्मात्सरस्यमितविक्रम ।
ब्रह्मणो यदहोरात्रसङ्ख्याभिज्ञैर्विभाव्यते ॥१३-४३-५८ (८२६५४)
एष कालस्त्वया तत्र सरस्यहमुपागतः ।
मां यज्ञमाहुर्यज्ञज्ञा वेदं वेदविदो जनाः ।
मुनयश्चापि मामेव जपयज्ञं प्रचक्षते ॥ १३-४३-५९ (८२६५५)
वक्ता मन्ता रसयिता घ्राता द्रष्टा प्रदर्शकः ।
बोद्धा बोधयिता चाहं गन्ता श्रोता चिदात्मकः ॥१३-४३-६० (८२६५६)
मामिष्ट्वा स्वर्गमायान्ति तथा चाप्नुवते महत् ।
ज्ञात्वा मामेव चैवान्ते निःसङ्गेनान्तरात्मना ॥१३-४३-६१ (८२६५७)
अहं तेजो द्विजातीनां मम तेजो द्विजातयः ।
मम यस्तेजसो देहः सोग्निरित्यवगम्यताम् ॥१३-४३-६२ (८२६५८)
प्राणपालः शरीरेऽहं योगिनामहमीश्वरः ।
सांख्यानामिदमेवाग्रे मयि सर्वमिदं जगत् ॥१३-४३-६३ (८२६५९)
धर्ममर्तं च कामं च मोक्षं चैवार्जवं जपम् ।
तमः सत्वं रजश्चैव कर्मजं च भवाप्ययम् ॥१३-४३-६४ (८२६६०)
स तदाऽहं तथारूपस्त्वया दृष्टः सनातनः ।
ततस्त्वहं परतरः शक्यः कालेन वेदितुम् ॥१३-४३-६५ (८२६६१)
मम यत्परमं गुह्यं शाश्वतं ध्रुवमव्ययम् ।
तदेवं परमो गुह्यो देवो नारायणो हरिः ।
न तच्छक्यं भुजङ्गारे वेत्तुमभ्युदयान्वितैः ॥ १३-४३-६६ (८२६६२)
निरारम्भनमस्कारा निराशीर्बन्धनास्तथा ।
गच्छन्ति तं महात्मानः परं ब्रह्म सनातनम् ॥१३-४३-६७ (८२६६३)
स्थूलोऽहमेवं विहग त्वया दृष्टस्तथाऽनघ ।
एतच्चापि न वेत्त्यन्यस्त्वामृते पन्नगाशन ॥१३-४३-६८ (८२६६४)

मा मतिस्तव गान्नाशमेषा गतिरनुत्तमा ।
मद्भक्तो भव नित्यं त्वं ततो वेत्स्यसि मे पदम् ॥ १३-४३-६९ (८२६६५)
एतत्ते सर्वमाख्यातं रहस्यं दिव्यमानुषम् ।
एतच्छ्रेयः परं चैतत्पन्थानं विद्धि मोक्षिणाम् ॥ १३-४३-७० (८२६६६)
एवमुक्त्वा स भगवांस्तत्रैवान्तरधीयत ।
पश्यतो मे महायोगी जगामात्मगतिर्गतिम् ॥ १३-४३-७१ (८२६६७)
एतदेवंविधं तस्य महिमानं महात्मनः ।
अच्युतस्याप्रमेयस्य दृष्टवानस्मि यत्पुरा ॥ १३-४३-७२ (८२६६८)
एतद्वः सर्वमाख्यातं चेष्टितं तस्य धीमतः ।
मयाऽनुभूतं प्रत्यक्षं दृष्ट्वा चाद्भुतकर्मणः ॥' ॥ १३-४३-७३
(८२६६९)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
त्रिचत्वारिंशोऽध्यायः ॥ ४३ ॥

---

अनुससनपर्व-अध्यय०४४
॥ श्रीः ॥
१३.४४. अध्यायः ४४

अथ दानधर्मपर्व ॥ १ ॥
Mahabharata - Anushaasana Parva - Chapter Topics
भीष्मेण युधिष्ठिरम्प्रति ब्रह्मणा
देवान्प्रत्यनूदितसुपर्णोपाख्यानकथनसमापनम् ॥ १ ॥

Mahabharata - Anushaasana Parva - Chapter Text

ऋषय ऊचुः ।
अहो श्रावितमाख्यानं भवताऽत्यद्भुतं महत् ।
पुण्यं यशस्यमायुष्यं स्वर्ग्यं स्वस्त्ययनं महत् ॥ १३-४४-१ (८२६७०)
एतत्पवित्रं देवानामेतद्गुह्यं परंतप ।
एतज्ज्ञानवता ज्ञेयमेषा गतिरनुत्तमा ॥ १३-४४-२ (८२६७१)
य इमां श्रावयेद्विद्वान्कथां पर्वसुपर्वसु
स लोकान्प्राप्नुयात्पुण्यान्देवर्षिभिरभिष्टुतान् ॥ १३-४४-३ (८२६७२)
श्राद्धकाले च विप्राणां य इमां श्रावयेच्छुचिः ।
न तत्र रक्षसां भागो नासुराणां च विद्यते ॥ १३-४४-४ (८२६७३)
अनसूयुर्जितक्रोधः सर्वसत्वहिते रतः ।

यः पठेत्सततं युक्तः स व्रजेत्तत्सलोकताम् ॥१३-४४-५ (८२६७४)
वेदान्पारयते विप्रो राजा विजयवान्भवेत् ।
वैश्यस्तु धनधान्याढ्यः शूद्रः सुखमवाप्नुयात् ॥१३-४४-६ (८२६७५)
भीष्म उवाच।१३-४४-७क्ष् (६८४४)
ततस्ते मुनयः सर्वे सम्पूज्य विनतासुतम् ।
स्वानेव चाश्रमाञ्जग्मुर्बभूवुः शान्तितत्पराः ॥१३-४४-७ (८२६७६)
स्थूलदर्शिभिराकृष्टो दुर्ज्ञेयो ह्यकृतात्मभिः ।
एषा धुतिर्महाराज धर्म्या धर्मभृतांवर ॥१३-४४-८ (८२६७७)
सुराणां ब्रह्मणा प्रोक्ता विस्मितानां परंतप ।
मयाप्येषा कथा तात कथिता मातुरन्तिके ।
वसुभिः सत्त्वसम्पन्नैस्तवाप्येषा मयोच्यते ॥ १३-४४-९ (८२६७८)
तदग्निहोत्रपरमा जपयज्ञपरायणाः ।
निराशीर्बन्धनाः सन्तः प्रयान्त्यक्षरसात्मतां ॥१३-४४-१० (८२६७९)
आरम्भयज्ञानुत्सृज्य जपहोमपरायणाः ।
ध्यायन्तो मनसा विष्णुं गच्छन्ति परमां गतिम् ॥१३-४४-११ (८२६८०)
तदेष परमो मोक्षो मोक्षद्वारं च भारत ।
यथा विनिश्चितात्मानो गच्छन्ति परमां गतिम् ॥ ॥१३-४४-१२ (८२६८१)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
चतुश्चत्वारिंशोऽध्यायः ॥ ४४ ॥

---

अनुससनपर्व-अध्यय०४५
॥ श्रीः ॥
१३.४५. अध्यायः ४५

अथ दानधर्मपर्व ॥ १ ॥
Mahabharata - Anushaasana Parva - Chapter Topics
भीष्मनियोगात्कृष्णेन युधिष्ठिरम्प्रति महादेवमहिमकथनम् ॥ १ ॥

Mahabharata - Anushaasana Parva - Chapter Text

युधिष्ठिर उवाच ।
पितामह महेशाय नामान्याचक्ष्व शम्भवे ।
विदुषे विश्वमायाय महाभाग्यं च तत्वतः ॥१३-४५-१ (८२६८२)
भीष्म उवाच।१३-४५-२क्ष् (६८४५)
सुरासुरगुरो देव विष्णो त्वं वक्तुमर्हसि ।

शिवाय शिवरूपाय यन्माऽपृच्छद्युधिष्ठिरः ॥ १३-४५-२ (८२६८३)
नाम्नां सहस्रं देवस्य तण्डिना ब्रह्मवादिना ।
निवेदितं ब्रह्मलोके ब्रह्मणो यत्पुराऽभवत् ॥ १३-४५-३ (८२६८४)
द्वैपायनप्रभृतयस्तथा चेमे तपोधनाः ।
ऋषयः सुव्रता दान्ताः शृण्वन्तु गदतस्तव ॥ १३-४५-४ (८२६८५)
ध्रुवाय नन्दिने होत्रे गोप्त्रे विश्वसृजेऽग्नये ।
महाभाग्यं विभोर्ब्रूहि मुण्डिनेऽथ कपर्दिने ॥ १३-४५-५ (८२६८६)
वासुदेव उवाच। १३-४५-६क्ष् (६८४६)
न गतिः कर्मणां शक्या वेत्तुमीशस्य तत्त्वतः ।
हिरण्यगर्भप्रमुखा देवाः सेन्द्रा महर्षयः ॥ १३-४५-६ (८२६८७)
न विदुर्यस्य निधनमादिं वा सूक्ष्मदर्शिनः ।
स कथं नाममात्रेण शक्यो ज्ञातुं सतां गतिः ॥ १३-४५-७ (८२६८८)
तस्याहमसुरघ्नस्य कांश्चिद्भगवतो गुणान् ।
भवतां कीर्तयिष्यामि व्रतेशाय यथातथम् ॥ १३-४५-८ (८२६८९)
वैशम्पायन उवाच। १३-४५-९क्ष् (६८४७)
एवमुक्त्वा तु भगवान्गुणांस्तस्य महात्मनः ।
उपस्पृश्य शुचिर्भूत्वा कथयामास धीमतः ॥ १३-४५-९ (८२६९०)
वासुदेव उवाच। १३-४५-१०क्ष् (६८४८)
शुश्रूषध्वं ब्राह्मणेन्द्रास्त्वं च तात युधिष्ठिर ।
त्वं चापगेय नामानि निशामय जगत्पतेः ॥ १३-४५-१० (८२६९१)
यदवाप्तं च मे पूर्वं साम्बहेतोः सुदुष्करम् ।
यथावद्भगवान्दृष्टो मया पूर्वं समाधिना ॥ १३-४५-११ (८२६९२)
शम्बरे निहते पूर्वं रौक्मिणेयेन धीमता ।
अतीते द्वादशे वर्षे जाम्बवत्यब्रवीद्धि माम् ॥ १३-४५-१२ (८२६९३)
प्रद्युम्नचारुदेष्णादीन्रुक्मिण्या वीक्ष्य पुत्रकान् ।
पुत्रार्थिनी मामुपेत्य वाक्यमाह युधिष्ठिर ॥ १३-४५-१३ (८२६९४)
शूरं बलवतां श्रेष्ठं कान्तरूपमकल्मषम् ।
आत्मतुल्यं मम सुतं प्रयच्छाच्युत माचिरम् ॥ १३-४५-१४ (८२६९५)
न हि तेऽप्राप्यमस्तीह त्रिषु लोकेषु किञ्चन ।
लोकान्सृजेस्त्वमपरानिच्छन्यदुकुलोद्वह ॥ १३-४५-१५ (८२६९६)
त्वया द्वादशवर्षाणि व्रतीभूतेन शुष्यता ।
आराध्य पशुभर्तारं रुक्मिण्यां जनिताः सुताः ॥ १३-४५-१६ (८२६९७)
चारुदेष्णः सुचारुश्च चारुवेशो यशोधरः ।
चारुश्रवाश्चारुयशाः प्रद्युम्नः सम्भुरेव च ॥ १३-४५-१७ (८२६९८)
यथा ते जनिताः पुत्रा रुक्मिण्यां चारुविक्रमाः ।
तथा ममापि तनयं प्रयच्छ मधुसूदन ॥ १३-४५-१८ (८२६९९)

इत्येवं चोदितो देव्या तामवोचं सुमध्यमाम् ।
अनुजानीहि मां राज्ञि करिष्ये वचनं तव ॥ १३-४५-१९ (८२७००)
सा च मामब्रवीद्गच्छ शिवाय विजयाय च ।
ब्रह्मा शिवः काश्यपश्च नद्यो देवा मनोऽनुगाः। १३-४५-२० (८२७०१)
क्षेत्रौषध्यो यज्ञवाहाश्छन्दास्यृषिगणाध्वराः ।
समुद्रा दक्षिणा स्तोभा ऋक्षाणि पितरो ग्रहाः ॥ १३-४५-२१ (८२७०२)
देवपत्न्यो देवकन्या देवमातर एव च ।
मन्वन्तराणि गावश्च चन्द्रमाः सविता हरिः ॥ १३-४५-२२ (८२७०३)
सावित्री ब्रह्मविद्या च ऋतवो वत्सरास्तथा ।
क्षणा लवा मुहूर्ताश्च निमेषा युगपर्ययाः ॥ १३-४५-२३ (८२७०४)
रक्षन्तु सर्वत्र गतं त्वां यादव सुखाय च ।
अरिष्टं गच्छ पन्थानमप्रमत्तो भवानघ ॥ १३-४५-२४ (८२७०५)
एवं कृतस्वस्त्ययनस्तयाऽहं
ततोऽभ्यनुज्ञाय नरेन्द्रपुत्रीम् ।
पितुः समीपं नरसत्तमस्य
मातुश्च राज्ञश्च तथाऽऽहुकस्य ॥ १३-४५-२५ (८२७०६)
गत्वा समावेद्य यदब्रवीन्मां
विद्याधरेन्द्रस्य सुता भृशर्ता ।
तानभ्यनुज्ञाय तदाऽतिदुःखा-
द्गदं तथैवातिबलं च रामम् ।
अथोचतुः प्रीतियुतौ तदानीं
ततःसमृद्धिर्भवतोऽस्त्वविघ्नम् ॥ १३-४५-२६ (८२७०७)
प्राप्यानुज्ञां गुरुजनादहं तार्क्ष्यमचिन्तयम् ।
सोवहद्धिमवन्तं मां प्राप्य चैनं व्यसर्जयम् ॥ १३-४५-२७ (८२७०८)
तत्राहमद्भुतान्भावानपश्यं गिरिसत्तमे ।
क्षेत्रं च तपसां श्रेष्ठं पश्याम्यद्भुतमुत्तमम् ॥ १३-४५-२८ (८२७०९)
दिव्यं वैयाघ्रपद्यस्य उपमन्योर्महात्मनः ।
पूजितं देवगन्धर्वैर्ब्राह्म्या लक्ष्म्या समावृतम् ॥ १३-४५-२९ (८२७१०)
धवककुभकदम्बनारिकेलैः
कुरवककेतकजम्बुपाटलाभिः ।
वटवरुणकवत्सनाभविल्वैः
सरलकपित्थप्रियालसालतालैः ॥ १३-४५-३० (८२७११)
बदरीकुन्दपुन्नागैरशोकाम्रातिमुक्तकैः ।
मधूकैः कोविदारैश्च चम्पकैः पनसैस्तथा ॥ १३-४५-३१ (८२७१२)
वन्यैर्बहुविधैर्वृक्षैः फलपुष्पप्रदैर्युतम् ।
पुष्पगुल्मलताकीर्णं कदलीषण्डशोभितम् ॥ १३-४५-३२ (८२७१३)

नानाशकुनिसम्भोज्यैः फलैर्वृक्षैरलङ्कृतम् ।
यथास्थानविनिक्षिप्तैर्भूषितं भस्मराशिभिः ॥१३-४५-३३ (८२७१४)
रुरुवानरशार्दूलसिंहद्वीपिसमाकुलम् ।
कुरङ्गबर्हिणाकीर्णं मार्जारभुजगावृतम् ।
पूगैश्च मृगजातीनां महिषर्क्षनिषेवितम् ॥ १३-४५-३४ (८२७१५)
सकृत्प्रभिन्नैश्च गजैर्विभूषितं
प्रहृष्टनानाविधपक्षिसेवितम् ।
सुपुष्पितैरम्बुधरप्रकाशै-
र्महीरुहाणां च वनैर्विचित्रैः ॥ १३-४५-३५ (८२७१६)
नानापुष्परजोमिश्रो गजदानाधइवासितः ।
दिव्यस्त्रीगीतबहुलो मारुतोऽभिमुखो ववौ १३-४५-३६ (८२७१७)
धारानिनादैर्विहगप्राणादैः
शुभैस्तथा बृंहितैः कुञ्जराणाम् ।
गीतैस्तथा किन्नराणामुदारैः
शुभैः स्वनैः सामगानां च वीर ॥ १३-४५-३७ (८२७१८)
अचिन्त्यं मनसाऽप्यन्यैः सरोभिः समलङ्कृतम् ।
विशालैश्चाग्निशरणैर्भूषितं कुसुमावृतैः ॥१३-४५-३८ (८२७१९)
विभूषितं पुण्यपवित्रतोयया
सदा च जुष्टं नृप जह्नुकन्यया ।
विभूषितं धर्मभृतां वरिष्ठै-
र्महात्मभिर्वह्निसमानकल्पैः ॥ १३-४५-३९ (८२७२०)
वाय्वाहारैरम्बुपैर्जप्यनित्यैः
सम्प्रक्षालैर्योगिभिर्ध्याननित्यैः ।
धूमप्राशैरूष्मपैः क्षीरपैश्च
संजुष्टं च ब्राह्मणेन्द्रैः समन्तात् ॥ १३-४५-४० (८२७२१)
गोचारिणोऽथाश्मकुट्टा दन्तोलूखलिकास्तथा ।
मरीचिपाः फेनपाश्च तथैव मृगचारिणः ॥१३-४५-४१ (८२७२२)
अश्वत्थफलभक्षाश्च तथा ह्युदकशायिनः ।
चीचचर्माम्बरधरास्तथा वल्कलधारिणः ॥१३-४५-४२ (८२७२३)
सुदुःखान्नियमांस्तांस्तान्वहतः सुतपोधनान् ।
पश्यन्मुनीन्बहुविधानप्रवेष्टुमुपचक्रमे ॥१३-४५-४३ (८२७२४)
सूपूजितं देवगणैर्महात्मभिः
शिवादिभिर्भारतपुण्यकर्मभिः ।
रराज तच्चाश्रममण्डलं सदा
दिवीव राजञ्शशिमण्डलं यथा ॥ १३-४५-४४ (८२७२५)
क्रीडन्ति सर्पैर्नकुला मृगैर्व्याघ्राश्च मित्रवत् ।

प्रभावाद्दीप्ततपसां सन्निकर्षान्महात्मनाम् ॥१३-४५-४५ (८२७२६)
तत्राश्रमपदे श्रेष्ठे सर्वभूतमनोरम ।
सेविते द्विजशार्दूलैर्वेदवेदाङ्गपारगैः ॥१३-४५-४६ (८२७२७)
नानानियमविख्यातैर्ऋषिभि सुमहान्मभिः ।
प्रविशन्नेव चापश्यं जटाचीरधरं प्रभुम् ॥१३-४५-४७ (८२७२८)
तेजसा तपसा चैव दीप्यमानं यथाऽनलम् ।
शिष्यैरनुगतं शान्तं युवानं ब्राह्मणर्षभम् ॥१३-४५-४८ (८२७२९)
शिरसा वन्दमानं मामुपमन्युरभाषत ॥ १३-४५-४९ (८२७३०)
स्वागतं पुण्डरीकाक्ष सफलानि तपांसि नः ।
यः पूज्यः पूजयसि मां द्रष्टव्यो द्रष्टुमिच्छसि ॥१३-४५-५० (८२७३१)
ग्मनुष्यतानुवृत्त्या त्वा ज्ञात्वा तिष्ठाम सर्वगम्।'
तमहं प्राञ्जलिर्भूत्वा मृगपक्षिष्वथाग्निषु ।
धर्मे च शिष्यवर्गे च समपृच्छमनामयम् ॥ १३-४५-५१ (८२७३२)
ततो मां भगवानाह साम्ना परमवल्गुना ।
लप्स्यसे तनयं कृष्णि आत्मतुल्यमसंशयम् ॥१३-४५-५२ (८२७३३)
तपः सुमहदास्थाय तोषयेशानमीश्वरम् ।
इह देवः सपत्नीकः समाक्रीडत्यधोक्षज ॥१३-४५-५३ (८२७३४)
इहैनं दैवतश्रेष्ठं देवाः सर्षिगणाः पुरा ।
तपसा ब्रह्मचर्येण सत्येन च दमेन च ॥१३-४५-५४ (८२७३५)
तोषयित्वा शुभान्कामान्प्राप्तवन्तो जनार्दन ।
तेजसां सपसां चैव निधिः स भगवानिह ॥१३-४५-५५ (८२७३६)
शुभाशुभान्वितान्भावान्विसृजन्स क्षिपन्नपि ।
आस्ते देव्या सहाचिन्त्यो यं प्रार्थयसि शत्रुहन् ॥१३-४५-५६ (८२७३७)
हिरण्यकशिपुर्योऽभूद्दानवो मेरुकम्पनः ।
तेन सर्वामरैश्वर्यं शर्वात्प्राप्तं समार्बुदम् ॥१३-४५-५७ (८२७३८)
तस्यैव पुत्रप्रवरो दमनो नाम विश्रुतः ।
महादेववराच्छक्रं वर्षार्बुदमयोधयम् ॥१३-४५-५८ (८२७३९)
विष्णोश्चक्रं च तद्घोरं वज्रमाखण्डलस्य च ।
शीर्णं पुराऽभवत्तात ग्रहस्याङ्गेषु केशव ॥१३-४५-५९ (८२७४०)
श्यत्तद्भगवता पूर्वं दत्तं चक्रं तवानघ ।
जलान्तरचरं हत्वा दैत्यं च बलगर्वितम् ॥१३-४५-६० (८२७४१)
उत्पादितं वृषाङ्केन दीप्तज्वलनसन्निभम् ।
दत्तं भगवता तुभ्यं दुर्धषं तेजसाऽद्भुतम् ॥१३-४५-६१ (८२७४२)
न शक्यं द्रष्टुमन्येन वर्जयित्वा पिनाकिनम् ।
सुदर्शनं भवत्येवं भवेनोक्तं तदा तु तत् ॥१३-४५-६२ (८२७४३)
सुदर्शनं तदा तस्य लोके नाम प्रतिष्ठितम् ।

तज्जीर्णमभावत्तात ग्रहस्याङ्गेषु केशव। १३-४५-६३ (८२७४४)
ग्रहस्यातिवलस्याङ्गे वरदत्तस्य धीमतः ।
न शस्त्राणि वहन्त्यङ्गे चक्रवज्रशतान्यपि ॥ि १३-४५-६४ (८२७४५)
अर्द्यमानाश्च विबुधा ग्रहेणि सुबलीयसा ।
शिवदत्तवराञ्जघ्नुरसुरेन्द्रान्सुरा भृशम् ॥१३-४५-६५ (८२७४६)
तृष्टो विद्युत्प्रभस्यापि त्रिलोकेश्वरतां ददौ ।
शतं वर्षसहस्राणां सर्वलोकेश्वरोऽभवत् ॥१३-४५-६६ (८२७४७)
ममैवानुचरो नित्यं भवितासीति चाब्रवीत् ।
तथा पुत्रसहस्राणामयुतं च ददौ प्रभुः ॥१३-४५-६७ (८२७४८)
कुशद्वीपं च स ददौ राज्येन भगवानजः ।
श्तथा शतमुखो नाम धात्रा सृष्टो महासुरः। १३-४५-६८ (८२७४९)
येन वर्षशतं साग्रमात्ममांसैर्हुतोऽनलः ।
तं प्राह भववांस्तुष्टः किंकरोमीति शंकरः ॥१३-४५-६९ (८२७५०)
तं वै शतमुखः प्राह योगो भवतु मेऽद्भुतः ।
बलं च दैवतश्रेष्ठ शाश्वतं सम्प्रयच्छ मे ॥१३-४५-७० (८२७५१)
तथेति भगवानाह तस्य तद्वचनं प्रभुः ।
स्वायंभुवः क्रतुश्चापि पुत्रार्थमभवत्पुरा ॥१३-४५-७१ (८२७५२)
आविश्य योगेनात्मानं त्रीणि वर्षशतान्यपि ।
तस्य चोपददौ पुत्रान्सहस्रं क्रतुसम्मितान् ि
योगेश्वरं देवगीतं वेत्थ कृष्ण न संशयः ॥ १३-४५-७२ (८२७५३)
याज्ञवल्क्य इति ख्यात ऋषिः परमधार्मिकः ।
आराध्य स महादेवं प्राप्तवानतुलं यशः ॥१३-४५-७३ (८२७५४)
वेदव्यासश्च योगात्मा पराशरसुतो मुनिः ।
सोऽपि शंकरमाराध्य प्राप्तवानतुलं यशः ॥१३-४५-७४ (८२७५५)
वालखिल्या मघवता ह्यवज्ञाताः पुरा किल ।
तैः क्रुद्धैर्भगवान्रुद्रस्तपसा तोषितो ह्यभूत् ॥१३-४५-७५ (८२७५६)
तांश्चापि दैवतश्रेष्ठः प्राह प्रीतो जगत्पतिः ।
सुपर्णं सोमहर्तारं तपसोत्पादयिष्यथ ॥१३-४५-७६ (८२७५७)
महादेवस्य रोषाच्च आपो नष्टाः पुराऽभवन् ।
ताश्च सप्तकपालेन देवैरन्याः प्रवर्तिताः ॥१३-४५-७७ (८२७५८)
ततः पानीयमभवत्प्रसन्ने त्र्यम्बके भुवि ।
अत्रिभार्या सुतं दत्तं सोमं दुर्वाससं प्रभो ॥१३-४५-७८ (८२७५९)
अत्रेर्भार्याऽपि भर्तारं संत्यज्य ब्रह्मवादिनी ।
नाहं तव मुने भूयो वशगा स्यां कथञ्चन ॥१३-४५-७९ (८२७६०)
इत्युक्त्वा सा महादेवमगमच्छरणं किल ।
निराहास भयादत्रेस्त्रीणि वर्षशतान्यपि ॥१३-४५-८० (८२७६१)

अशेत मुसलेष्वेव प्रसादार्थं भवस्य सा ।
तामब्रवीद्धसन्देवो भविता वै सुतस्तव ॥ १३-४५-८१ (८२७६२)
विना भर्त्रा चरुद्रेण भविष्यति न संशयः ।
वंशे तवैव नाम्ना तु ख्यातिं यास्यति चेप्सिताम् ॥ १३-४५-८२ (८२७६३)
विकर्णश्च महादेवं तथा भक्तसुखावहम् ।
प्रसाद्य भगवान्सिद्धिं प्राप्तवान्मधुसूदन ॥ १३-४५-८३ (८२७६४)
शाकल्यः संशितात्मा वै नववर्षशतान्यपि ।
आराधयामास भवं मनोयज्ञेन केशव ॥ १३-४५-८४ (८२७६५)
तं चाह भगवांस्तुष्टो ग्रन्थकारो भविष्यसि ।
वत्साक्षया च ते कीतिस्त्रैलोक्ये वै भविष्यति ॥ १३-४५-८५ (८२७६६)
अक्षयं च कुलं तेऽस्तु महर्षिभिरलंकृतम् ।
भविष्यति द्विजश्रेष्ठः सूत्रकर्ता सुतस्तव ॥ १३-४५-८६ (८२७६७)
सावर्णिश्चापि विख्यात ऋषिरासीत्कृते युगे ।
इह तेन तपस्तप्तं षष्टिवर्षशतान्यथ ॥ १३-४५-८७ (८२७६८)
तमाह भगवान्रुद्रः साक्षात्तुष्टोस्मि तेऽनघ ।
ग्रन्थकृल्लोकविख्यातो भवितास्यजरामरः ॥ १३-४५-८८ (८२७६९)
शक्रेणि तु पुरा देवो वाराणस्यां जनार्दन ।
आराधितोऽभूद्भक्तेन दिग्वासा भस्मगुष्ठितः ॥
आराध्य स महादेवं देवराज्यमवाप्तवान् ॥ १३-४५-८९ (८२७७०)
नारदेन तु भक्त्याऽसौ भव आराधितः पुरा ।
तस्य तुष्टो महादेवो जगौ देवगुरुर्गुरुः ॥ १३-४५-९० (८२७७१)
तेजसा तपसा कीर्त्या त्वत्समो न भविष्यति ।
गीतेन वादितव्येन नित्यं मामनुयास्यसि ॥ १३-४५-९१ (८२७७२)
ग्बाणः स्कन्दसमत्वं च कामो दर्पविमोक्षणम् ।
लवणोऽवध्यतामन्यैर्दशास्यश्च पुनर्बलम् ।
अन्तकोऽन्तमनुप्राप्तस्तस्मात्कोऽन्यः परः प्रभुः ॥ १३-४५-९२ (८२७७३)
मयाऽपि च यथा दृष्टो देवदेवः पुरा विभो ।
साक्षात्पशुपतिस्तात तच्चापि शृणु माधव ॥ १३-४५-९३ (८२७७४)
यदर्थं च मया देवः प्रयतेन तथा विभो ।
आराधितो महातेजास्तच्चापि शृणु विस्तरात् ॥ १३-४५-९४ (८२७७५)
यदवाप्तं च मे पूर्वं देवदेवान्महेश्वरात् ।
तत्सर्वं निखिलेनाद्य कथयिष्यामि तेऽनघ १३-४५-९५ (८२७७६)
पुरा कृतयुगे तात ऋषिरासीन्महायशाः ।
व्याघ्रपाद इति ख्यातो वेदवेदाङ्गपारगः ।
तस्याहमभवं पुत्रो धौम्यश्चापि ममानुजः ॥ १३-४५-९६ (८२७७७)
कस्यचित्त्थ कालस्य धौम्येन सह माधव ।

आगच्छमाश्रमं क्रीडन्मुनीनां भावितात्मनाम् ॥१३-४५-९७ (८२७७८)
तत्रापि च मया दृष्टा दुह्यमाना पयस्विनी ।
लक्षितं च मया क्षीरं स्वादुतो ह्यमृतोपमम् ॥१३-४५-९८ (८२७७९)
तदाप्रभृति चैवाहमरुदं मधुसूदन ।
दीयतां दीयतां क्षीरं मम मातरितीरिता ॥१३-४५-९९ (८२७८०)
अभावाच्चैव दुग्धस्य दुःखिता जननी तदा ॥ १३-४५-१०० (८२७८१)
ततः पिष्टं समालोड्य तोयेन सह माधव ।
आवयोः क्षीरमित्येव पानार्थं समुपानयत् ॥१३-४५-१०१ (८२७८२)
अथ गव्यं पयस्तात कदाचित्प्राशितं मया। १३-४५-१०२ (८२७८३)
पित्राऽहं यज्ञकाले हि नीतो ज्ञातिकुलं महत् ।
तत्र सा क्षरते देवी दिव्या गौः सुरनन्दिनी ॥१३-४५-१०३ (८२७८४)
यस्ताहं तत्पयः पीत्वा रसेन ह्यमृतोपमम् ।
ज्ञात्वा क्षीरगुणांश्चैव उपलभ्य हि सम्भवम् ।
स च पिष्टरसस्तात न मे प्रीतिमुपावहत् ॥ १३-४५-१०४ (८२७८५)
ततोऽहमब्रुवं बाल्याज्जननीमात्मनस्तदा ।
नेदं क्षीरोदनं मातर्यत्त्वं मे दत्तवत्यसि ॥ १३-४५-१०५ (८२७८६)
ततो मामब्रवीन्माता दुःखशोकसमन्विता ।
पुत्रस्नेहात्परिष्वज्य मूर्ध्नि चाघ्राय माधव ॥१३-४५-१०६ (८२७८७)
कुतः क्षीरोदनं वत्स मुनीनां भावितात्मनम् ।
वने निवसतां नित्यं कन्दमूलफलाशिनाम् ॥१३-४५-१०७ (८२७८८)
आस्थितानां नदीं दिव्यां वालखिल्यैर्निषेविताम्
कुत क्षीरं वनस्थानां मुनीनां गिरिवासिनाम् ॥ १३-४५-१०८ (८२७८९)
पावनानां वनाशानां वनाश्रमनिवासिनाम् ।
ग्राम्याहारनिवृत्तानामारण्यफलभोजिनाम् ।
नास्ति पुत्र पयोऽरण्ये सुरभीगोत्रवर्जिते ॥ १३-४५-१०९ (८२७९०)
नदीगह्वरशैलेषु तीर्थेषु विविधेषु च ।
तपसा जप्यनित्यानां शिवो नः परमा गतिः ॥१३-४५-११० (८२७९१)
अप्रसाद्य विरूपाक्षं वरदं स्थाणुमव्ययम् ।
कुतः क्षीरोदनं वत्स सुखानि वसनानि च ॥१३-४५-१११ (८२७९२)
तं प्रपद्य सदा वत्स सर्वभावेन शङ्करम् ।
तत्प्रसादाच्च कामेभ्यः फलं प्राप्स्यसि पुत्रक ॥१३-४५-११२ (८२७९३)
जनन्यास्तद्वचः श्रुत्वा तदाप्रभृति शत्रुहन् ।
श्प्राञ्जलिः प्रणतो भूत्वा इदमम्बामवोचयं ॥१३-४५-११३ (८२७९४)
कोऽयमम्ब महादेवः स कथं च प्रसीदति ।
कुत्र वा वसते देवो द्रष्टव्यो वा कथञ्चन ॥१३-४५-११४ (८२७९५)
तुष्यते वा कथं शर्वो रूपं तस्य च कीदृशम् ।

कथं ज्ञेयः प्रसन्नो वा दर्शयेज्जननी मम ॥ १३-४५-११५ (८२७९६)
एवमुक्ता तदा कृष्ण माता मे सुतवत्सला ।
मूर्घन्याध्राय गोविन्द सबाष्पाकुललोचना ॥ १३-४५-११६ (८२७९७)
प्रमार्जन्ती च गात्राणि मम वै मधुसूदन ॥
दैन्यमालम्ब्य जननी इदमाह सुरोत्तम ॥ १३-४५-११७ (८२७९८)
दुर्विज्ञेयो महादेवो दुराधारो दुरन्तकः ।
दुराबाधश्च दुर्ग्राह्यो दुर्दृश्यो ह्यकृतात्मभिः ॥ १३-४५-११८ (८२७९९)
यस्य रूपाण्यनेकानि प्रवदन्ति मनीषिणः ।
स्थानानि च विचित्राणि प्रासादाश्चाप्यनेकशः ॥ १३-४५-११९ (८२८००)
को हि तत्त्वेन तद्वेद ईशस्य चरितं शुभम् ।
कृतवान्यानि रूपाणि देवदेवः पुरा किल ।
क्रीडते च तथा शर्वः प्रसीदति यथाच वै ॥ १३-४५-१२० (८२८०१)
हृदिस्थः सर्वभूतानां विश्वरूपो महेश्वरः ।
भक्तानामनुकम्पार्थं दर्शनं च यथाश्रुतम् ।
मुनीनां ब्रुवतां दिव्यमीशानचरितं शुभम् ॥ १३-४५-१२१ (८२८०२)
कृतवान्यानि रूपाणि कथितानि दिवौकसैः ।
अनुग्रहार्थं विप्राणां शृणु वत्स समासतः ॥ १३-४५-१२२ (८२८०३)
तानि ते कीर्तयिष्यामि यन्मां त्वं परिपृच्छसि ॥ १३-४५-१२३ (८२८०४)
ब्रह्मविष्णुसुरेन्द्राणां रुद्रादित्याश्विनामपि ।
विश्वेषामपि देवानां वपुर्धारयते भवः ॥ १३-४५-१२४ (८२८०५)
नराणां देवनारीणां तथा प्रेतपिशाचयोः ।
किरातशबराणां च जलजानामनेकशः ॥ १३-४५-१२५ (८२८०६)
करोति भगवान्रूपमाटव्यशबराण्यपि ।
कूर्मो मत्स्यस्तथा शङ्खः प्रवालाङ्कुरभूषणः ॥ १३-४५-१२६ (८२८०७)
यक्षराक्षससर्पाणां दैत्यदानवयोरपि ।
वपुर्धारयते देवो भूयश्च बिलवासिनाम् ॥ १३-४५-१२७ (८२८०८)
व्याघ्रसिंहमृगाणां च तरक्ष्वृक्षपतत्त्रिणाम् ।
उलूकश्वशृगालानां रूपाणि कुरुतेऽपि च ॥ १३-४५-१२८ (८२८०९)
हंसकाकमयूराणां कृकलासकसारसाम् ।
रूपाणि च बलाकानां गृध्रचक्राङ्गयोरपि ॥ १३-४५-१२९ (८२८१०)
करोति वा स रूपाणि धारयत्यपि पर्वतम् ।
गोरूपं च महादेवो हस्त्यश्वोष्ट्रखराकृतिः ॥ १३-४५-१३० (८२८११)
छागशार्दूलरूपश्च अनेकमृगरूपधृक् ।
अण्डजानां च दिव्यानां वपुर्धारयते भवः ॥ १३-४५-१३१ (८२८१२)
दण्डी छत्री च कुण्डी च द्विजानां वारणस्तथा ।
षण्मुखो वै बहुमुखस्त्रिनेत्रो बहुशीर्षकः ॥ १३-४५-१३२ (८२८१३)

अनेककटिपादश्च अनेकोदरवक्त्रधृत् ।
अनेकपाणिपार्श्वश्च अनेकगपसंवृतः ॥ १३-४५-१३३ (८२८१४)
ऋषिगन्धर्वरूपश्च सिद्धचारणरूपधृत् ।
भस्पपाण्डुरगात्रश्च चन्द्रार्धकृतभूषणः ॥ १३-४५-१३४ (८२८१५)
अनेकरावसंघुष्टश्चानेकस्तुतिसंस्कृतः ।
सर्वभूतान्तकः सर्वः सर्वलोकप्रतिष्ठितः ॥ १३-४५-१३५ (८२८१६)
सर्वलोकान्तरात्मा च सर्वगः सर्ववाद्यपि ।
सर्वत्र भगवान्ज्ञेयो हृदिस्थः सर्वदेहिनाम् ॥ १३-४५-१३६ (८२८१७)
यो हि यं कामयेत्कामं यस्मिन्नर्थेऽर्च्यते पुनः ।
तत्सर्वं वेत्ति देवेशस्तं प्रपद्य यदीच्छसि ॥ १३-४५-१३७ (८२८१८)
नन्दते कुप्यते चापि तथा हुंकारयत्यपि ।
चक्री शूली गदापाणिर्मुसली खड्गपट्टसी ॥ १३-४५-१३८ (८२८१९)
भूधरो नागमौञ्जी च नागकुण्डलकुण्डली ।
नागयज्ञोपवीती य नागचर्मोत्तरच्छदः ॥ १३-४५-१३९ (८२८२०)
हसते गायते चैव नृत्यते च मनोहरम् ।
वादयत्यपि वाद्यानि विचित्राणि गणैर्युतः ॥ १३-४५-१४० (८२८२१)
वल्गते जृम्बते चैव रुदते रोदयत्यपि ।
उन्मत्तमत्तरूपं च भाषते चापि सुस्वरः ॥ १३-४५-१४१ (८२८२२)
अतीव हसते रौद्रस्त्रासयन्नयनैर्जनम् ।
जागर्ति चैव स्वपिति जृम्भते च यथासुवम् ॥ १३-४५-१४२ (८२८२३)
जपते जप्यते चैव तपते तप्यते पुनः ।
ददाति प्रतिगृह्णाति युञ्जते ध्यायतेऽपि च ॥ १३-४५-१४३ (८२८२४)
वेदीमध्ये तथा यूपे गोष्ठमध्ये हुताशने ।
दृश्यते दृश्यते चापि बालो वृद्धो युवा तथा ॥ १३-४५-१४४ (८२८२५)
क्रीडते ऋषिकन्याभिर्ऋषिपत्नीभिरेव च ।
ऊर्ध्वकेशो महाशेफो नग्नो विकृतलोचनः ॥ १३-४५-१४५ (८२८२६)
गौरः श्यामस्तथा कृष्णः पाण्डुरो धूमलोहितः ।
विकृताक्षो विशालाक्षो दिग्वासाः सर्ववासकः ॥ १३-४५-१४६ (८२८२७)
अरूपस्याद्यरूपस्य अतिरूपाद्यरूपिणः ।
अनाद्यन्तमजस्यान्तं वेत्स्यते कोस्य तत्त्वतः ॥ १३-४५-१४७ (८२८२८)
हृदि प्राणो मनो जीवो योगात्मा योगसंज्ञितः ।
ध्यानं तत्परमात्मा च भावग्राह्यो महेश्वरः ॥ १३-४५-१४८ (८२८२९)
वादको गायनश्चैव सहस्रशतलोचनः ।
एकवक्त्रो द्विवक्त्रश्च त्रिवक्त्रोऽनेकवक्त्रकः ॥ १३-४५-१४९ (८२८३०)
तद्भक्तस्तद्गतो नित्यं तन्निष्ठस्तत्परायणः ।
भज पुत्र महादेवं ततः प्राप्स्यसि चेप्सितं ॥ १३-४५-१५० (८२८३१)

जनन्यास्तद्वचः श्रुत्वा तदाप्रभृति शत्रुहन् ।
मम भक्तिर्महादेवे नैष्ठिकी समपद्यत ॥ १३-४५-१५१ (८२८३२)
ततोऽहं तप आस्थाय तोपयामास शंकरम् ।
दिव्यं वर्षसहस्रं तु वामाङ्गुष्ठाग्रविष्ठितः ॥ १३-४५-१५२ (८२८३३)
एकं वर्षशतं चैव फलाहारस्ततोऽभवम् ।
द्वितीयं शीर्णपर्णाशी तृतीयं चाम्बुभोजनः ॥ १३-४५-१५३ (८२८३४)
शतानि सप्त चैवाहं वायुभक्षस्तदाऽभवम् ।
एकं वर्षसहस्रं तु दिव्यमाराधितो मया ॥ १३-४५-१५४ (८२८३५)
ततस्तुष्टो महादेवः सर्वलोकेश्वरः प्रभुः ।
एकभक्त इति ज्ञात्वा जिज्ञासां कुरुते तदा ॥ १३-४५-१५५ (८२८३६)
शक्ररूपं स कृत्वा तु सर्वैर्देवगणैर्वृतः ।
सहस्राक्षस्तदा भूत्वा वज्रपाणिर्महायशाः ॥ १३-४५-१५६ (८२८३७)
सुधावदातं रक्ताक्षं स्तब्धकर्णं मदोत्कटम् ।
आवेष्टतकरं घोरं चतुर्दंष्ट्रं महागजम् ॥ १३-४५-१५७ (८२८३८)
समास्थितः स भगवान्दीप्यमानः स्वतेजसा ।
आजगाम किरीटी तु हारकेयूरभूषितः ॥ १३-४५-१५८ (८२८३९)
पाण्डुरेणातपत्रेण ध्रियमाणेन मूर्धनि ।
सेव्यभानोप्सरोभिश्च दिव्यगन्धर्वनादितैः ॥ १३-४५-१५९ (८२८४०)
ततो मामाह देवेन्द्रस्तुष्टस्तेऽहं द्विजोत्तम ।
वरं वृणीष्व मत्तस्त्वं यत्ते मनसि वर्तते ॥ १३-४५-१६० (८२८४१)
शक्रस्य तु वचः श्रुत्वा नाहं प्रीतमनाऽभवम् ।
अब्रवं च तदा कृष्ण देवराजमिदं वचः ॥ १३-४५-१६१ (८२८४२)
नाहं त्वत्तो वरं काङ्क्षे नान्यस्मादपि दैवतात् ।
महादेवादृते सौम्य सत्यमेतद्ब्रवीमि ते ॥ १३-४५-१६२ (८२८४३)
सत्यंसत्यं हि नः शक्र वाक्यमेतत्सुनिश्चितम् ।
न यन्मिहेश्वरं मुक्त्वा कथाऽन्या मम रोचते ॥ १३-४५-१६३ (८२८४४)
पशुपतिवचनाद्भवामि सद्यः
कृमिरथवा तरुरप्यनेकशाखः ।
अपशुपतिवरप्रसादजा मे
त्रिभुवनराज्यविभूतिरप्यनिष्टा ॥ १३-४५-१६४ (८२८४५)
श्जन्मश्वपाकमध्येऽ-
पि मेऽस्तु हरचरणवन्दनरतस्य ।
मा वाऽनीश्वरभक्तो
भवानि भवनेऽपि शक्रस्य ॥ १३-४५-१६५ (८२८४६)
वाय्वम्बुभुजोऽपि सतो ।
नरस्य दुःखक्षयः कुतस्तस्य ।

भवति हि सुरासुरगुरौ
यस्य न विश्वेश्वरे भक्तिः ॥ १३-४५-१६६ (८२८४७)
अलमन्याभिस्तेषां
कथाभिरप्यन्यधर्मयुक्ताभिः ।
येषां न क्षणमपि रुचितो
हरचरणस्मरणविच्छेदः ॥ १३-४५-१६७ (८२८४८)
हरचरणनिरतमतिना
भवितव्यमनार्जवं युगं प्राप्य ।
संसारभयं न भवति
हरभक्तिरसायनं पीत्वा ॥ १३-४५-१६८ (८२८४९)
दिवसं दिवसार्धं वा मुहूर्तं वा क्षणं लवम् ।
न ह्यलब्धप्रसादस्य भक्तिर्भवति शङ्करे ।॥ १३-४५-१६९ (८२८५०)
अपि कीटः पतङ्गो वा भवेयं शङ्कराज्ञया ।
न तु शक्र त्वया दत्तं त्रैलोक्यमपि कामये ॥१३-४५-१७० (८२८५१)
श्वाऽपि महेश्वरवचना-
द्भवामि स हि नः परः कामः ।
त्रिदशगणराज्यमपि खलु
नेच्छाम्यमहेश्वराज्ञप्तम् ॥ १३-४५-१७१ (८२८५२)
न नाकपृष्ठं न च देवराज्यं
न ब्रह्मलोकं न च निष्कलत्वम् ।
न सर्वकामानखिलान्वृणोमि
हरस्य दासत्वमहं वृणोमि ।॥ १३-४५-१७२ (८२८५३)
यावच्छशाङ्कधवलामलबद्धमौलि-
र्न प्रीयते पशुपतिर्भगवान्ममेशः ।
तावज्जरामरणजन्मशताभिघातै-
र्दुःखानि देहविहितानि समुद्वहामि ॥ १३-४५-१७३ (८२८५४)
दिवसकरशशाङ्कवह्निदीप्तं
त्रिभुवनसारमसारमाद्यमेकम् ।
अजरममरमप्रसाद्य रुद्रं
जगति पुमानिह को लभेत शान्तिं ॥ १३-४५-१७४ (८२८५५)
गधिक्तेषां धिक्तेषां
पुनरपि च धिगस्तु धिक्तेषाम् ।
येषां न वसति हृदये
कुपथगतिविमोक्षको रुद्रः'॥ १३-४५-१७५ (८२८५६)
यदि नाम जन्म भूयो
भवति मदीयैः पुनर्दोषैः ।

तस्मिंस्तस्मिञ्जन्मनि
भवे भवेन्मेऽक्षया भक्तिः ॥ १३-४५-१७६ (८२८५७)
शक्र उवाच। १३-४५-१७७क्ष् (६८४९)
कः पुनर्भवने हेतुरीशे कारणकारणे ।
येन शर्वादृतेऽन्यस्मात्प्रसादं नाभिकाङ्क्षसि ॥ १३-४५-१७७ (८२८५८)
श्उपमन्युरुवाच। १३-४५-१७८क्ष् (६८५०)
सदसद्व्यक्तमव्यक्तं यमाहुर्ब्रह्मवादिनः ।
नित्यमेकमनेकं च वरं तस्माद्वृणीमहे ॥ १३-४५-१७८ (८२८५९)
अनादिमध्यपर्यन्तं ज्ञानैश्वर्यमचिन्तितम् ।
आत्मानं परमं यस्माद्वरं तस्माद्वृणीमहे ॥ १३-४५-१७९ (८२८६०)
ऐश्वर्यं सकलं यस्मादनुत्पादितमव्ययम् ।
अबीजाद्बीजसम्भूतं वरं तस्माद्वृणीमहे ॥ १३-४५-१८० (८२८६१)
तमसः परमं ज्योतिस्तपस्तद्वृत्तिनां परम् ।
यं ज्ञात्वा नानुशोचन्ति वरं तस्माद्वृणीमहे ॥ १३-४५-१८१ (८२८६२)
भूतभावनभावज्ञं सर्वभूताभिभावनम् ।
सर्वगं सर्वदं देवं पूजयामि पुरंदर ॥ १३-४५-१८२ (८२८६३)
हेतुवादैर्विनिर्मुक्तं साङ्ख्ययोगार्थदं परम् ।
यमुपासन्ति तत्त्वज्ञा वरं तस्माद्वृणीमहे ॥ १३-४५-१८३ (८२८६४)
मघवन्मघवात्मानं यं वदन्ति सुरेश्वरम् ।
सर्वभूतगुरुं देवं वरं तस्माद्वृणीमहे ॥ १३-४५-१८४ (८२८६५)
यत्पूर्वमसृजद्देवं ब्रह्माणं लोकभावनम् ।
अण्डमाकाशमापूर्य वरं तस्माद्वृणीमहे ॥ १३-४५-१८५ (८२८६६)
अग्निरापोऽनिलः पृथ्वी खं बुद्धिश्च मनो महान् ।
स्रष्टा चैषां भवेद्योऽन्यो ब्रूहि कः परमेश्वरात् ॥ १३-४५-१८६ (८२८६७)
मनो मतिरहङ्कारस्तन्मात्राणीन्द्रियाणि च ।
ब्रूहि चैषां भवेच्छक्र कोऽन्योस्ति परमं शिवात् ॥ १३-४५-१८७ (८२८६८)
स्रष्टारं भुवनस्येह वदन्तीह पितामहम् ।
आराध्य स तु देवेशमश्नुते महतीं श्रियम् ॥ १३-४५-१८८ (८२८६९)
भगवत्युत्तमैश्वर्यं ब्रह्मविष्णुपुरोगमम् ।
विद्यते वै महादेवाद्ब्रूहि कः परमेश्वरात् ॥ १३-४५-१८९ (८२८७०)
दैत्यदानवमुख्यानामाधिपत्यारिमर्दनात् ।
कोऽन्यः शक्नोति देवेशाद्दितेः सम्पादितुं सुतान् ॥ १३-४५-१९० (८२८७१)
दिक्कालसूर्यतेजांसि ग्रहवाय्विन्दुतारकाः ।
विद्धि त्वेते महादेवाद्ब्रूहि कः परमेश्वरात् ॥ १३-४५-१९१ (८२८७२)
अथोत्पत्तिविनाशे वा यज्ञस्य त्रिपुरस्य वा ।
दैत्यदानवमुख्यानामाधिपत्यारिमर्दनः ॥ १३-४५-१९२ (८२८७३)

किं चात्र बहुभिः सूक्तैर्हेतुवादैः पुरंदर ।
सहस्रनयनं दृष्ट्वा त्वामेव सुरसत्तम ॥१३-४५-१९३ (८२८७४)
पूजितं सिद्धगन्धर्वैर्देवैश्च ऋषिभिस्तथा ।
देवदेवप्रसादेन तत्सर्वं कुशिकोत्तम ॥१३-४५-१९४ (८२८७५)
अव्यक्तमुक्तकेशाय सर्वगस्येदमात्मकम् ।
चेतनाचेतनाद्येषु शक्र विद्धि महेश्वरात् ॥१३-४५-१९५ (८२८७६)
भुवाद्येषु महान्तेषु लोकालोकान्तरेषु च ।
द्वीपस्थानेषु मेरोश्च विभवेष्वन्तरेषु च। १३-४५-१९६ (८२८७७)
भगवन्मघवन्देवं वदन्ते तत्त्वदर्शिनः ॥
यदि देवाः सुराः शक्र पश्यन्त्यन्यां भवाकृतिम्। १३-४५-१९७ (८२८७८)
किं न गच्छन्ति शरणं मर्दिताश्चासुरैः सुराः ॥
अभिघातेषु देवानां सयक्षोरगरक्षसाम्। १३-४५-१९८ (८२८७९)
परस्परविनाशीषु स्वस्थानैश्वर्यदो भवः ॥
अन्धकस्याथ शुक्रस्य दुन्दुभेर्महिषस्य च ।
यक्षेन्द्रबलरक्षःसु निवातकवचेषु च ।
वरदानावघाताय ब्रूहि कोऽन्यो महेश्वरात् ॥ १३-४५-१९९ (८२८८०)
सुरासुरगुरोर्वक्त्रे कस्य रेतः पुरा हुतम् ।
कस्य वाऽन्यस्य रेतस्तद्येन हैमो गिरिः कृतः ॥१३-४५-२०० (८२८८१)
दिग्वासाः कीर्त्यते कोऽन्यो लोके कश्चोर्ध्वरेतसः ।
कस्य चार्धे स्थिता कान्ता अनङ्गः केन निर्जितः ॥१३-४५-२०१ (८२८८२)
ब्रूहीन्द्र परमं स्थानं कस्य देवैः प्रशस्यते ।
श्मशाने कस्य क्रीडार्थं नृत्ते वा कोऽभिभाष्यते ॥१३-४५-२०२ (८२८८३)
कस्यैश्वर्यं समानं च भूतैः को वाऽपि क्रीडते ।
कस्य तुल्यबला देवगणाश्चैश्वर्यदर्पिताः ॥१३-४५-२०३ (८२८८४)
घुष्यते ह्यचलं स्थानं कस्य त्रैलोक्यपूजितम् ।
वर्षते तपते कोऽन्यो ज्वलते तेजसा च कः ॥१३-४५-२०४ (८२८८५)
कस्मादोषधिसम्पत्तिः को वा धारयते वसु ।
प्रकामं क्रीडते को वा त्रैलोक्ये सचराचरे ॥१३-४५-२०५ (८२८८६)
ज्ञानसिद्धिक्रियायोगैः सेव्यमानश्च योगिभिः ।
ऋषिगन्धर्वसिद्धैश्च विहितं कारणं परम् ॥१३-४५-२०६ (८२८८७)
कर्मयज्ञक्रियायोगैः सेव्यमानः सुरासुरैः ।
नित्यं कर्मफलैर्हीनं तमहं कारणं वदे ॥१३-४५-२०७ (८२८८८)
स्थूलं सूक्ष्ममनौपम्यमग्राह्यं गुणगोचरम् ।
गुणहीनं गुणाध्यक्षं परं माहेश्वरं पदम् ॥१३-४५-२०८ (८२८८९)
विश्वेशं कारणगुरुं लोककालोकान्तकारणम् ।
भूताभूतभविष्यच्च जनकं सर्वकारणम्। १३-४५-२०९ (८२८९०)

अक्षराक्षरमव्यक्तं विद्याविद्ये कृताकृते ।
धर्माधर्मौ यतः शक्र तमहं कारणं ब्रुवे ॥१३-४५-२१० (८२८९१)
प्रत्यक्षमिह देवेन्द्र पश्य लिङ्गं भगाङ्कितम् ।
देवदेवेन रुद्रेण सृष्टिसंहारहेतुना ॥१३-४५-२११ (८२८९२)
मात्रा पूर्वं ममाख्यातं कारणं लोकलक्षणम् ।
नास्ति चेशात्परं शक्र तं प्रपद्य यदीच्छसि ॥१३-४५-२१२ (८२८९३)
प्रत्यक्षं ननु ते सुरेश विदितं संयोगलिङ्गोद्भवं
त्रैलोक्यं सविकारनिर्गुणगणं ब्रह्मादिरेतोद्भवम् ।
यद्ब्रह्मेन्द्रहुताशविष्णुसहिता देवाश्च दैत्येश्वरा
नान्यत्कामसहस्रकल्पितधियः शंसन्ति ईशात्परं ॥ १३-४५-२१३ (८२८९४)
तं देवं सचराचरस्य जगतो व्याख्यातवेद्योत्तमं
कामार्थी वरयामि संयतमना मोक्षाय सद्यः शिवम्
हेतुभिर्वा किमन्यैस्तैरीशः कारणकारणम् ।
न शुश्रुम यदन्यस्य लिङ्गमभ्यर्चितं सुरैः ॥ १३-४५-२१४ (८२८९५)
कस्यान्यस्य सुरैः सर्वैर्लिङ्गं मुक्त्वा महेश्वरम् ।
अर्च्यतेऽर्चितपूर्वं वा ब्रूहि यद्यस्ति ते श्रुतिः ॥१३-४५-२१५ (८२८९६)
यस्य ब्रह्म च विष्णुश्च त्वं चापि सहदैवतैः ।
अर्चयध्वं सदा लिङ्गं तस्माच्छ्रेष्ठतमो हि सः ॥१३-४५-२१६ (८२८९७)
न पद्माङ्का न चक्राङ्का न वज्राङ्का यतः प्रजाः ।
लिङ्गाङ्का च भगाङ्का च तस्मान्माहेश्वरी प्रजा ॥१३-४५-२१७ (८२८९८)
देव्याःकरणरूपभावजनिताःसर्वाभगाङ्काः स्त्रियो
लिङ्गेनापि हरस्य सर्वपुरुषाः प्रत्यक्षचिह्नीकृताः ।
योऽन्यत्कारणमीश्वरात्प्रवदते देव्या च यन्नाङ्कितं
त्रैलोक्ये सचराचरे स तु पुमान्बाह्यो भवेद्दुर्मतिः ॥ १३-४५-२१८ (८२८९९)
पुल्लिङ्गं सर्वमीशानं स्त्रीलिङ्गं विद्धि चाप्यमाम् ।
द्वाभ्यां तनुभ्यां व्याप्तं हि चराचरमिदं जगत् ॥ १३-४५-२१९ (८२९००)
तस्माद्वरमहं काङ्क्षे निधनं वाऽपि कौशिक ।
गच्छ वा तिष्ठ वा शक्र यथेष्टं बलसूदन ॥१३-४५-२२० (८२९०१)
काममेष वरो मेस्तु शापो वाऽथ महेश्वरात् ।
न चान्यां देवतां काङ्क्षे सर्वकामफलामपि ॥१३-४५-२२१ (८२९०२)
एवमुक्त्वा तु देवेन्द्रं दुःखादाकुलितेन्द्रियः ।
न प्रसीदति मे देवः किमेतदिति चिन्तयन् ॥१३-४५-२२२ (८२९०३)
अथापश्यं क्षणेनैव तमेवैरावतं पुनः ।
हंसकुन्देन्दुसदृशं मृणालरजतप्रभम् ॥१३-४५-२२३ (८२९०४)
वृषरूपधरं साक्षात्क्षीरोदमिव सागरम् ।
कृष्णपुच्छं महाकायं मधुपिङ्गललोचनम् ॥१३-४५-२२४ (८२९०५)

वज्रसारमयैः शृङ्गैर्निष्टप्तकनकप्रभैः ।
सुतीक्ष्णैर्मृदुरक्ताग्रैरुत्किरन्तमिवावनिम् ॥ १३-४५-२२५ (८२९०६)
जाम्बूनदेन दाम्ना च सर्वतः समलङ्कृतम् ।
सुवक्त्रखुरनासं च सुकर्णं सुकटीतटम् ।
सुपार्श्वं विपुलस्कन्धं सुरूपं चारुदर्शनम् ॥ १३-४५-२२६ (८२९०७)
ककुदं तस्य चाभाति स्कन्धमापूर्य धिष्ठितम् ।
तुषारगिरिकूटाभं सिताभ्रशिखरोपमम् ॥ १३-४५-२२७ (८२९०८)
तभास्थितश्च भगवान्देवदेवः सहोमया ।
अशोभत महादेवः पौर्णमास्यामिवोडुराट् ॥ १३-४५-२२८ (८२९०९)
ग्किरीटं च जटाभारः सर्पाद्याभरणानि च ।
वज्रादिशूलमातङ्गगम्भीरस्मितमागतम् ॥' १३-४५-२२९ (८२९१०)
तस्य तेजोभवो वह्निः समेघः स्तनयित्नुमान् ।
सहस्रमिव सूर्याणां सर्वमापूर्य धिष्ठितः ॥ १३-४५-२३० (८२९११)
ईश्वरः सुमहातेजाः संवर्तक इवानलः ।
युगान्ते सर्वभूतानां दिधक्षुरिव चोद्यतः ॥ १३-४५-२३१ (८२९१२)
तेजसा तु तदा व्याप्तं दुर्निरीक्ष्यं समन्ततः ।
पुनरुद्विग्नहृदय किमेतदिति चिन्तयम् ॥ १३-४५-२३२ (८२९१३)
मुहूर्तमिव तत्तेजो व्याप्य सर्वा दिशो दश ।
प्रशान्तं च क्षणेनैव देवदेवस्य मायया ॥ १३-४५-२३३ (८२९१४)
अथापश्यं स्थितं स्थाणुं भगवन्तं महेश्वरम् ।
ग्सौरभेयगतं सौम्यं विधूममिव पावकम् ॥ १३-४५-२३४ (८२९१५)
प्रशान्तमनसं देवं त्रिनेत्रमपराजितम् ।
सहितं चारुसर्वाङ्ग्या पार्वत्या परमेश्वरम् ॥' १३-४५-२३५ (८२९१६)
नीलकण्ठं महात्मनमसक्तं तेजसां निधिम् ।
अष्टादशभुजं स्थाणुं सर्वाभरणभूषितम् ॥ १३-४५-२३६ (८२९१७)
शुक्लाम्बरधरं देवं शुक्लमाल्यानुलेपनम् ।
शुक्लध्वजमनाधृष्यं शुक्लयज्ञोपवीतिनम् ॥ १३-४५-२३७ (८२९१८)
गायद्भिर्नृत्यमानैश्च वादयद्भिश्च सर्वशः ।
वृतं पार्श्वचरैर्दिव्यैरात्मतुल्यपराक्रमैः ॥ १३-४५-२३८ (८२९१९)
बालेन्दुमुकुटं पाण्डुं शरच्चन्द्रमिवोदितम् ।
त्रिभिर्नेत्रैः कृतोद्योतं त्रिभिः सूर्यैरिवोदितैः ॥ १३-४५-२३९ (८२९२०)
ग्सर्वविद्याधिपं देवं शरच्चन्द्रसमप्रभम् ।
नयनाह्लादसौम्योऽहमपश्यं परमेश्वरम् ॥' १३-४५-२४० (८२९२१)
अशोभतास्य देवस्य माला गात्रे सितप्रभे ।
जातरूपमयैः पद्मैर्ग्रथिता रत्नभूषिता ॥ १३-४५-२४१ (८२९२२)
मूर्तिमन्ति तथाऽस्त्राणि सर्वतेजोमयानि च ।

मया दृष्टानि गोविन्द भवस्यामिततेजसः ॥१३-४५-२४२ (८२९२३)
इन्द्रायुधसहस्राभं धनुस्तस्य महात्मनः ।
पिनाकमिति विख्यातं स च वै पन्नगो महान् ॥१३-४५-२४३ (८२९२४)
सप्तशीर्षो महाकायस्तीक्ष्णदंष्ट्रो विषोल्वणः ।
ज्यावेष्टितमहाग्रीवः स्थितः पुरुषविग्रहः ॥१३-४५-२४४ (८२९२५)
शरश्च सूर्यसङ्काशो दृष्टः पाशुपताह्वयः ।
ग्सहस्रभुजजिह्वास्यो भीषणो नागविंग्रह ॥१३-४५-२४५ (८२९२६)
शङ्खशूलासिभिश्चैव पट्टसै रूपवान्स्थितः ।
येन च त्रिपुरं दग्धं सर्वदेवमयः क़क़क़क़क़क़  १३-४५-२४६ (८२९२७)
अद्वितीयमनिर्देश्यं सर्वभूतभयावहम् ।
सस्फुलिङ्गं महाकायं विसृजन्तमिवानलम् ॥१३-४५-२४७ (८२९२८)
एकपादं महादंष्ट्रं सहस्रशिरसोदरम् ।
सहस्रभुजजिह्वाक्षमुद्गिरन्तमिवानलम् ॥१३-४५-२४८ (८२९२९)
ब्राह्मान्नारायणाच्चैन्द्रादाग्नेयादपि वारुणात् ।
यद्विशिष्टं महाबाहो सर्वशस्त्रविघातनम् ॥१३-४५-२४९ (८२९३०)
येन तत्त्रिपुरं दग्ध्वा क्षणाद्भस्मीकृतं पुरा ।
शरेणैकेन गोविन्द महादेवेन लीलया ॥१३-४५-२५० (८२९३१)
निर्दहेत च यत्कृत्स्नं त्रैलोक्यं सचराचरम् ।
महेश्वरभुजोत्सृष्टं निमेषार्धान्न संशयः ॥१३-४५-२५१ (८२९३२)
नावध्यो यस्य लोकेऽस्मिन्ब्रह्मविष्णुसुरेष्वपि ।
तदहं दृष्टवांस्तत्र आश्चर्यमिदमुत्तमम् ॥१३-४५-२५२ (८२९३३)
गुह्यमस्त्रवरं नान्यत्तत्तुल्यमधिकं हि वा ।
यत्तच्छूलमिति ख्यातं सर्वलोकेषु शूलिनः  १३-४५-२५३ (८२९३४)
दारयेद्द्यां मही कृत्स्नां शोषयेद्वा महोदधिम् ।
संहरेद्वा जगत्कृत्स्नं विसृष्टं शूलपाणिना ॥१३-४५-२५४ (८२९३५)
यौवनाश्वो हतो येन मान्धाता सबलः पुरा ।
चक्रवर्ती महातेजास्त्रिलोकविजयी नृपः ॥१३-४५-२५५ (८२९३६)
महाबलो महावीर्यः शक्रतुल्यपराक्रमः ।
करस्थेनैव गोविन्द लवणस्येह रक्षसः ॥१३-४५-२५६ (८२९३७)
तच्छूलमतितीक्ष्णाग्रं सुभीमं रोमहर्षणम् ।
त्रिशिखां भ्रुकुटिं कृत्वा तर्जमानमिव स्थितम् ॥१३-४५-२५७ (८२९३८)
विधूमं सार्चिषं कृष्णं कालसूर्यमिवोदितम् ।
सर्पहस्तमनिर्देश्यं पाशहस्तामिवान्तकम् ॥१३-४५-२५८ (८२९३९)
दृष्टवानस्मि गोविन्द तदस्त्रं रुद्रसन्निधौ ।
परशुस्तीक्ष्णधारश्च दत्तो रामस्य यः पुराः ॥१३-४५-२५९ (८२९४०)
महादेवेन तुष्टेन दत्तं भृगुसुताय च ।

कार्तवीर्यो हतो येन चक्रवर्ती महामृधे ॥१३-४५-२६० (८२९४१)
त्रिःसप्तकृत्वः पृथिवी येन निःक्षत्रिया कृता ।
जामदग्न्येन गोविन्द रामेणाक्लिष्टकर्मणा ॥१३-४५-२६१ (८२९४२)
दीप्तधारः सुरौद्रास्यः सर्पकण्ठाग्रधिष्ठितः ॥
अभवच्छूलिनोऽभ्याशे दीप्तवह्निशतोपमः। १३-४५-२६२ (८२९४३)
असङ्ख्येयानि चास्त्राणि तस्य दिव्यानि धीमतः ।
प्राधान्यतो मयैतानि कीर्तितानि तवानघ ॥१३-४५-२६३ (८२९४४)
सव्यदेशे तु देवस्य ब्रह्मा लोकपितामहः ।
दिव्यं विमानमास्थाय हंसयुक्तं मनोजवम् ॥१३-४५-२६४ (८२९४५)
वामपार्श्वगतश्चापि तथा नारायणः स्थितः ।
वैनतेयं समारुह्य शङ्खचक्रगदाधरः ॥१३-४५-२६५ (८२९४६)
स्कन्दो मयूरमास्थाय स्थितो देव्याः समीपतः ।
शक्तिघण्टे समादाय द्वितीय इव पावकः ॥१३-४५-२६६ (८२९४७)
पुरस्ताच्चैव देवस्य नन्दिं पश्याम्यवस्थितम् ।
शूलं विष्टभ्य तिष्ठन्तं द्वितीयमिव शङ्करम् ॥१३-४५-२६७ (८२९४८)
स्वायंभुवाद्या मनवो भृग्वाद्या ऋषयस्तथा ।
शक्राद्या देवताश्चैव सर्व एव समभ्ययुः ॥१३-४५-२६८ (८२९४९)
सर्वभूतगणाश्चैव मातरो विविधाः स्थिताः ।
तेऽभिवाद्य महात्मानं परिवार्य समन्ततः ॥१३-४५-२६९ (८२९५०)
अस्तुवन्विविधैः सतोत्रैर्महादेवं सुरास्तदा ।
ग्जगन्मूर्ति महालिङ्गं तन्मध्ये स्फूतरूपिणम् ॥१३-४५-२७० (८२९५१)
ब्रह्मा भवं तदाऽस्तौवीद्रथन्तरमुदीरयन् ।
ज्येष्ठसाम्ना च देवेशं जगौ नारायणस्तदा ॥१३-४५-२७१ (८२९५२)
गृणन्ब्रह्म परं शक्रः शतरुद्रियमुत्तमम् ।
ब्रह्मा नारायणश्चैव देवराजश्च कौशिकः ।
अशोभन्त महात्मानस्त्रयस्त्रय इवाग्नयः ॥ १३-४५-२७२ (८२९५३)
तेषां मध्यगतो देवो रराज भगवाञ्छिवः ।
शरदभ्रविनिर्मुक्तः परिधिस्थ इवांशुमान् ॥१३-४५-२७३ (८२९५४)
अयुतानि च चन्द्रार्कानपश्यं दिवि केशव ।
ततोऽहमस्तुवं देवं स्तवेनानेन सुव्रत ॥१३-४५-२७४ (८२९५५)
उपमन्युरुवाच।१३-४५-२७५क्ष् (६८५१)
नमो देवाधिदेवाय महादेवाय ते नमः ।
शक्ररूपाय शक्राय शक्रवेषधराय च ॥१३-४५-२७५ (८२९५६)
नमस्ते वज्रहस्ताय पिङ्गलायारुणाय च ।
पिनाकपाणये नित्यं शङ्खशूलधराय च ॥।१३-४५-२७६ (८२९५७)
नमस्ते कृष्णवासाय कृष्णकुञ्चितमूर्धज ।

कृष्णाजिनोत्तरीयाय कृष्णाष्टमिरताय च ॥ १३-४५-२७७ (८२९५८)
शुक्लवर्णाय शुक्लाय शुक्लाम्बरधराय च ।
शुक्लभस्मावलिप्ताय शुक्लकर्मरताय च ॥ १३-४५-२७८ (८२९५९)
नमोस्तु रक्तवर्णाय रक्ताम्बरधराय च ।
रक्तध्वजपताकाय रक्तस्रगनुलेपिने ॥ १३-४५-२७९ (८२९६०)
नमोस्तु पीतवर्णाय पीताम्बरधराय च ॥ १३-४५-२८० (८२९६१)
नमोस्तूच्छ्रितच्छत्राय किरीटवरधारिणे ।
अर्धहारार्दकेयूर अर्धकुण्डलकर्णिने ॥ १३-४५-२८१ (८२९६२)
नमः पवनवेगाय नमो देवाय वै नमः ।
सुरेन्द्राय मुनीन्द्राय महेन्द्राय नमोस्तु ते ॥ १३-४५-२८२ (८२९६३)
नमः पद्मार्धमालाय उत्पलैर्मिश्रिताय च ।
अर्धचन्दनलिप्ताय अर्धस्रगनुलेपिने ॥ १३-४५-२८३ (८२९६४)
नम आदित्यवक्त्राय आदित्यनयनाय च ।
नम आदित्यवर्णाय आदित्यप्रतिमाय च ॥ १३-४५-२८४ (८२९६५)
नमः सोमाय सौम्याय सौम्यवक्त्रधराय च ।
सौम्यरूपाय मुख्याय सौम्यदंष्ट्राविभूषिणे ॥ १३-४५-२८५ (८२९६६)
नमः श्यामाय गौराय अर्धपीतार्धपाण्डवे ।
नारीनरशरीराय स्त्रीपुंसाय नमोस्तु ते ॥ १३-४५-२८६ (८२९६७)
नमो वृषभवाहाय गजेन्द्रगमनाय च ।
दुर्गमाय नमस्तुभ्यमगम्यागमनाय च ॥ १३-४५-२८७ (८२९६८)
नमोस्तु गणनीताय गणवृन्दरताय च ।
गुणानुयातमार्गाय गणनित्यव्रताय च ॥ १३-४५-२८८ (८२९६९)
नमः श्वेताभ्रवर्णाय संध्यारागप्रभाच य ।
अनुद्दिष्टामभिधानाय स्वरूपाय नमोस्तु ते ॥ १३-४५-२८९ (८२९७०)
नमो रक्ताग्रवासाय रक्तसूत्रधराय च ।
रक्तमालाविचित्राय रक्ताम्बरधराय च ॥ १३-४५-२९० (८२९७१)
मणिभूषितमूर्धाय नमश्चन्द्रार्धभूषिणे ।
विचित्रमणिमूर्धाय कुसुमाष्टधराय च ॥ १३-४५-२९१ (८२९७२)
नमोऽग्निमुखनेत्राय सहस्रशशिलोचने ।
अग्निरूपाय कान्ताय नमोस्तु गहनाय च ॥ १३-४५-२९२ (८२९७३)
खचराय नमस्तुभ्यं गोचराभिरताय च ।
भूचराय भुवनाय अनन्ताय शिवाय च ॥ १३-४५-२९३ (८२९७४)
नमो दिग्वाससे नित्यमधिवाससुवाससे ।
नमो जगन्निवासाय प्रतिपत्तिसुखाय च ॥ १३-४५-२९४ (८२९७५)
नित्यमुद्बद्धमुकुटे महाकेयूरधारिणे ।
सर्पकण्ठोपहाराय विचित्राभरणाय च ॥ १३-४५-२९५ (८२९७६)

नमस्त्रिनेत्रनेत्राय सहस्रशतलोचने ।
स्त्रीपुंसाय नपुंसाय नमः साङ्ख्याय योगिने ॥१३-४५-२९६ (८२९७७)
शंयोरभिस्रवन्ताय अथर्वाय नमोनमः ।
नमः सर्वार्तिनाशाय नमः शोकहराय च ॥१३-४५-२९७ (८२९७८)
नमो मेघनिनादाय बहुमायाधराय च ।
बीजक्षेत्राभिपालाय स्रष्टाराय नमोनमः ॥१३-४५-२९८ (८२९७९)
नमः सुरासुरेशाय विश्वेशाय नमोनमः ।
मनः पवनवेगाय नमः पवनरूपिणे ॥१३-४५-२९९ (८२९८०)
नमः काञ्चनमालाय गिरिमालाय वै नमः ।
नमः सुरारिमालाय चण्डवेगाय वै नमः ॥१३-४५-३०० (८२९८१)
ब्रह्मशिरोपहर्ताय महिषघ्नाय वै नमः ।
नमः स्त्रीरूपधाराय यज्ञविध्वंसनाय च ॥१३-४५-३०१ (८२९८२)
नमस्त्रिपुरहर्ताय यज्ञविध्वंसनाय च ।
नमः कामाङ्गनाशाय कालदण्डधराय च ॥१३-४५-३०२ (८२९८३)
नमः स्कन्दविशाखाय ब्रह्मदण्डाय वै नमः ।
नमो भवाय शर्वाय विश्वरूपाय वै नमः ॥१३-४५-३०३ (८२९८४)
ईशानाय भवघ्नाय नमोस्त्वन्धकघातिने ।
नमो विश्वाय मायायचिन्त्याचिन्त्याय वै नमः ॥१३-४५-३०४ (८२९८५)
त्वं नो गतिश्च श्रेष्ठश्च त्वमेव हृदयं तथा ཇ
त्वं ब्रह्मा सर्वदेवानां रुद्राणां नीललोहितः ॥ १३-४५-३०५ (८२९८६)
आत्मा च सर्वभूतानां साङ्ख्ये पुरुष उच्यते ।
ऋषभस्त्वं पवित्राणां योगिनां निष्कलः शिवः ॥१३-४५-३०६ (८२९८७)
गृहस्थस्त्वमाश्रगिणामीश्वराणां महेश्वरः ।
कुबेरः सर्वयक्षाणां क्रतूनां विष्णुरुच्यते ॥१३-४५-३०७ (८२९८८)
पर्वतानां भवान्मेरुर्नक्षत्राणां च चन्द्रमाः ।
वसिष्ठस्त्वमृषीणां च ग्रहाणां सूर्य उच्यते ॥१३-४५-३०८ (८२९८९)
आरण्यानां पशूनां च सिंहस्त्वं परमेश्वरः ।
ग्राम्याणां गोवृषश्चासि भवाँल्लोकप्रपूजितः ॥१३-४५-३०९ (८२९९०)
आदित्यानां भवान्विष्णुर्वसूनां चैव पावकः ।
पक्षिणां वैनतेयस्त्वमनन्तो भ्रुजगेषु च ॥१३-४५-३१० (८२९९१)
सामवेदश्च वेदानां यजुषां शतरुद्रियम् ।
सनत्कुमारो योगानां साङ्ख्यानां कपिलो ह्यसि ॥१३-४५-३११ (८२९९२)
शक्रोसि मरुतां देव पितॄणां हव्यवाडसि ॥
ब्रह्मलोकश्च लोकानां गतीनां मोक्ष उच्यसे ॥१३-४५-३१२ (८२९९३)
क्षीरोदः सागराणां च शैलानां हिमवान्गिरिः ।
वर्णानां ब्राह्मणश्चासि विप्राणां दीक्षितो द्विजः ॥१३-४५-३१३ (८२९९४)

आदिस्त्वमसि लोकानां संहर्ता काल एव च
यच्चान्यदपि लोके वै सर्वतेजोधिकं स्मृतम् ।
तत्सर्वं भगवानेव इति मे निश्चिता मतिः ॥ १३-४५-३१४ (८२९९५)
नमस्ते भगवन्देव नमस्ते भक्तवत्सलः ।
योगेश्वर नमस्तेऽस्तु नमस्ते विस्वसम्भव ॥१३-४५-३१५ (८२९९६)
प्रसीद मम भक्तस्य दीनस्य कृपणस्य च ।
अनैश्वर्येणि युक्तस्य गतिर्भव सनातन ॥१३-४५-३१६ (८२९९७)
यच्चापराधं कृतवानज्ञात्वा परमेश्वर ।
मद्भक्त इति देवेश तत्सर्वं क्षन्तुमर्हसि ॥१३-४५-३१७ (८२९९८)
मोहितश्चास्मि देवेश त्वया रूपविपर्ययात् ।
नार्घ्यं तेन मया दत्तं पाद्यं चापि महेश्वर ॥१३-४५-३१८ (८२९९९)
एवं स्तुत्वाऽहमीशानं पाद्यमर्घ्यं च भक्तितः ।
कृताञ्जलिपुटो भूत्वा सर्वं तस्मै न्यवेदयम् ॥१३-४५-३१९ (८३०००)
ततः शीताम्बुसंयुक्ता दिव्यगन्धसमन्विता ।
पुष्पवृष्टिः शुभा तात पपात मम मूर्धनि ॥१३-४५-३२० (८३००१)
दुन्दुभिश्च तदा दिव्यस्ताडितो देवकिंकरैः ।
ववौ च मारुतः पुण्यः शुचिगन्धः सुखावहः ॥१३-४५-३२१ (८३००२)
ततः प्रीतो महादेवः सपत्नीको वृषध्वजः ।
अब्रवीत्त्रिदशांस्तत्र हर्षयन्निव मां तदा ॥१३-४५-३२२ (८३००३)
पश्यध्वं त्रिदशाः सर्वे उपमन्योर्महात्मनः ।
मयि भक्तिं परां नित्यमेकभावादवस्थिताम् ॥१३-४५-३२३ (८३००४)
एवमुक्तास्तदा कृष्ण सुरास्ते शूलपाणिना ।
ऊचुः प्राञ्जलयः सर्वे नमस्कृत्वा वृषध्वजम् ॥१३-४५-३२४ (८३००५)
भगवन्देवदेवेश लोकनाथ जगत्पते ।
लभतां सर्वकामेभ्यः फलं त्वत्तो द्विजोत्तमः ॥१३-४५-३२५ (८३००६)
एवमुक्तस्ततः शर्वः सुरैर्ब्रह्मादिभिस्तथा ।
आह मां भगवानीशः प्रहसन्निव शङ्करः ॥१३-४५-३२६ (८३००७)
भगवानुवाच।१३-४५-३२७क्ष् (६८५२)
वत्सोपमन्यो तुष्टोस्मि पश्य मां मुनिपुङ्गव ।
दृढभक्तोसि विप्रर्षे मया जिज्ञासितो ह्यसि ॥१३-४५-३२७ (८३००८)
अनया चैव भक्त्या ते अत्यर्थं प्रीतिमानहम् ।
तस्मात्सर्वान्ददाम्यद्य कामांस्तव यथोप्सितान् ॥१३-४५-३२८ (८३००९)
एवमुक्तस्य चैवाथ महादेवेन धीमता ।
हर्षादश्रूण्यवर्तन्त रोमहर्षस्त्वजायत ॥१३-४५-३२९ (८३०१०)
अब्रवं च तदा देव हर्षगद्गदया गिरा ।
जानुभ्यामवनीं गत्वा प्रणम्य च पुनःपुनः ॥१३-४५-३३० (८३०११)

अद्य जातो ह्यहं देव सफलं जन्म चाद्य मे ।
यन्मे साक्षान्महादेवः प्रसन्नस्तिष्ठतेऽग्रतः ॥ १३-४५-३३१ (८३०१२)
यं न पश्यन्ति चैवाद्धा देवा ह्यमितविक्रमम् ।
तमहं दृष्टवान्देवं कोऽन्यो धन्यतरो मया ॥ १३-४५-३३२ (८३०१३)
एवं ध्यायन्ति विद्वांसः परं तत्त्वं सनातनम् ।
तद्विशेषमतिख्यातं यदजं ज्ञानमक्षरम् ॥ १३-४५-३३३ (८३०१४)
स एष भगवान्देवः सर्वसत्त्वादिरव्ययः ।
सर्वतत्त्वविधानज्ञः प्रधानपुरुषः परः ॥ १३-४५-३३४ (८३०१५)
योऽसृजद्दक्षिणादङ्गाद्ब्रह्माणां लोकसम्भवम् ।
वामपार्श्वात्तथा विष्णुं लोकरक्षार्थमीश्वरः ॥ १३-४५-३३५ (८३०१६)
युगान्ते चैव सम्प्राप्ते रुद्रमीशोऽसृजत्प्रभुः ।
स रुद्रः संहरन्कृत्स्नं जगत्स्थावरजङ्गमम् ॥ १३-४५-३३६ (८३०१७)
कालो भूत्वा परं ब्रह्म याति संवर्तकानलः ।
युगान्ते सर्वभूतानि ग्रसन्निव व्यवस्थितः ॥ १३-४५-३३७ (८३०१८)
एष देवो महादेवो जगत्सृष्ट्वा चराचरम् ।
कल्पान्ते चैव सर्वेषां स्मृतिमाक्षिप्य तिष्ठति ॥ १३-४५-३३८ (८३०१९)
सर्वगः सर्वभूतात्मा सर्वभूतभवोद्भवः ।
आस्ते सर्वगतो नित्यमदृश्यः सर्वदैवतैः ॥ १३-४५-३३९ (८३०२०)
यदि देयो वरो मह्यं यदि तुष्टोऽसि मे प्रभो ।
भक्तिर्भक्तु मे नित्यं त्वयि देव सुरेश्वर ॥ १३-४५-३४० (८३०२१)
अतीतानागतं चैव वर्तमानं च यद्विभो ।
जानीयामिति मे बुद्धिः प्रसादात्सुरसत्तम ॥ १३-४५-३४१ (८३०२२)
क्षीरोदनं च भुञ्जीयामक्षयं सह बान्धवैः ।
आश्रमे च सदाऽस्माकं सान्निध्यं परमस्तु ते ॥ १३-४५-३४२ (८३०२३)
एवमुक्तः स मां प्राह भगवाँल्लोकपूजितः ।
महेश्वरो महातेजाश्चराचरगुरुः शिवः ॥ १३-४५-३४३ (८३०२४)
श्रीभगवानुवाच। १३-४५-३४४क्ष् (६८५३)
अजरश्चामरश्चैव भव त्वं दुःखवर्जितः ।
यशस्वी तेजसा युक्तो दिव्यज्ञानसमन्वितः ॥ १३-४५-३४४ (८३०२५)
ऋषीणामभिगम्यश्च मत्प्रसादाद्भविष्यसि ।
शीलवान्गुणसम्पन्नः सर्वज्ञः प्रियदर्शनः ॥ १३-४५-३४५ (८३०२६)
अक्षयं यौवनं तेऽस्तु तेजश्चैवानलोपमम् ।
क्षीरोदः सागरश्चैव यत्रयत्रेच्छसि प्रियम् ॥ १३-४५-३४६ (८३०२७)
तत्र ते भविता कामं सान्निध्यं पयसोनिधेः ।
क्षीरोदनं च भुङ्क्ष्व त्वममृतेन समन्वितम् ॥ १३-४५-३४७ (८३०२८)
बन्धुभिः सहितः कल्पं ततो मामुपयास्यसि ।

अक्षया बान्धवाश्चैव कुलं गोत्रं च ते सदा ॥ १३-४५-३४८ (८३०२९)
भविष्यति द्विजश्रेष्ठ मयि भक्तिश्च शाश्वती ।
सान्निध्यं चाश्रमे नित्यं करिष्यामि द्विजोत्तम ॥ १३-४५-३४९ (८३०३०)
तिष्ठ वत्स यथाकामं नोत्कण्ठां च करिष्यति ।
स्मृतस्त्वया पुनर्विप्र करिष्यामि च दर्शनम् ॥ १३-४५-३५० (८३०३१)
एवमुक्त्वा स भगवान्सूर्यकोटिसमप्रभः ।
ईशानः स वरान्दत्त्वा तत्रैवान्तरधीयत ॥ १३-४५-३५१ (८३०३२)
एवं दृष्टो मया कृष्ण देवदेवः समाधिना ।
तदवाप्तं च मे सर्वं यदुक्तं तेन धीमता ॥ १३-४५-३५२ (८३०३३)
प्रत्यक्षं चैव ते कृष्ण पश्य सिद्धान्व्यवस्थितान् ।
ऋषीन्विद्याधरान्यक्षान्गन्धर्वाप्सरसस्तथा ॥ १३-४५-३५३ (८३०३४)
पश्य वृक्षलतागुल्मान्सर्वपुष्पफलप्रदान् ।
सर्वर्तुकुसुमैर्युक्तान्सुखपत्रान्सुगन्धिनः ॥ १३-४५-३५४ (८३०३५)
सर्वमेतन्महाबाहो दिव्यभावसमन्वितम् ।
प्रसादाद्देवदेवस्य ईशावरस्य महात्मनः ॥ १३-४५-३५५ (८३०३६)
वासुदेव उवाच। १३-४५-३५६क्ष् (६८५४)
एतच्छ्रुत्वा वचस्तस्य प्रत्यक्षमिव दर्शनम् ।
विस्मयं परमं गत्वा अब्रवं तं महामुनिम् ॥ १३-४५-३५६ (८३०३७)
धन्यस्त्वमसि विप्रेन्द्रि कस्त्वदन्योस्ति पुण्यकृत् ।
यस्य देवाधिदेवस्ते सान्निध्यं कुरुतेऽऽश्रमे ॥ १३-४५-३५७ (८३०३८)
अपि तावन्ममाप्येवं दद्यात्स भगवाञ्शिवः ।
दर्शं मुनिशार्दूल प्रसादं चापि शङ्करः ॥ १३-४५-३५८ (८३०३९)
उपमन्युरुवाच। १३-४५-३५९क्ष् (६८५५)
श्द्रक्ष्यसे पुण्डरीकाक्ष महादेवं न संशयः ।
अचिरेणैव कालेन यथा दृष्टो मयाऽनघ ॥ १३-४५-३५९ (८३०४०)
चक्षुषा चैव दिव्येन पश्याम्यमितविक्रमम् ।
षष्ठे मासि महादेवं द्रक्ष्यसे पुरुषोत्तम ॥ १३-४५-३६० (८३०४१)
षोडशाष्टौ वरांश्चापि प्राप्स्यसि त्वं महेश्वरात् ।
सपत्नीकाद्यदुश्रेष्ठ सत्यमेतद्ब्रवीमि ते ॥ १३-४५-३६१ (८३०४२)
अतीतानागतं चैव वर्तमानं च नित्यशः ।
विदितं मे महाबाहो प्रसादात्तस्य धीमतः ॥ १३-४५-३६२ (८३०४३)
एतान्सहस्रशश्चान्यान्समनुध्यातवान्हरः ।
कस्मात्प्रसादं भगवान्न कुर्यात्तव माधव ॥ १३-४५-३६३ (८३०४४)
त्वादृशेन हि देवानां श्लाघनीय समागमः ।
ब्रह्मणायेनानृशंसेन श्रद्दधानेन चाप्युत ।
जप्यं तु ते प्रदास्यामि येन द्रक्ष्यसि शंकरम् ॥ १३-४५-३६४ (८३०४५)

श्रीकृष्ण उवाच। १३-४५-३६५क्ष् (६८५६)
अब्रवं तमहं ब्रह्मन्त्वत्प्रसादान्महामुने ।
द्रक्ष्ये दितिजसङ्घानां मर्दनं त्रिदशेश्वरम् ॥ १३-४५-३६५ (८३०४६)
एवं कथयतस्तस्य महादेवाश्रितां कथाम् ।
दिनान्यष्टौ ततो जग्मुर्मुहूर्तमिव भारत ॥ १३-४५-३६६ (८३०४७)
दिनेऽष्टमे तु विप्रेणि दीक्षितोऽहं यथाविधि ।
दण्डी मुण्डी कुशी चीरि घृताक्तो मेखलीकृतः ॥ १३-४५-३६७ (८३०४८)
मासमेकं फलाहारो द्वितीयं सलिलाशनः ।
तृतीयं च चतुर्थं च पञ्चमं चानिलाशः ॥ १३-४५-३६८ (८३०४९)
एकपादेन तिष्ठंश्च ऊर्ध्वबाहुरतन्द्रितः ।
तेजः सूर्यसहस्रस्य अपश्यं दिवि भारत ॥ १३-४५-३६९ (८३०५०)
तस्य मध्यगतं चापि तेजसः पाण्डुनन्दन ।
इन्द्रायुधपिनद्धाङ्गं विद्युन्मालागवाक्षकम् ।
नीलसैलचयप्रख्यं बलाकाभूषिताम्बरम् ॥ १३-४५-३७० (८३०५१)
तत्र स्थितश्च भगवान्देव्या सह महाद्युतिः ।
तपसा तेजसा कान्त्या दीप्तया सह भार्यया ॥ १३-४५-३७१ (८३०५२)
रराज भगवांस्तत्र देव्या सह महेश्वरः ।
सोमेन सहितः सूर्यो यथा मेघस्थितस्तथा ॥ १३-४५-३७२ (८३०५३)
संहृष्टरोमा कौन्तेय विस्मयोत्फुल्ललोचनः ।
अपश्यं देवसङ्घानां गतिमार्तिहरं हरम् ॥ १३-४५-३७३ (८३०५४)
किरीटिनं गदिनं शूलपाणिं
व्याघ्राजिनं जटिलं दण्डपाणिम् ।
पिनाकिनं वज्रिणं तीक्ष्णदंष्ट्रं
शुभाङ्गदं व्यालयज्ञोपवीतम् ॥ १३-४५-३७४ (८३०५५)
दिव्यां मालामुरसाऽनेकवर्णां
समुद्वहन्तं गुल्फदेशावलम्बाम् ।
चन्द्रं यथा परिविष्टं ससन्ध्यं
वर्षात्यये तद्वदपश्यमेनम् ॥ १३-४५-३७५ (८३०५६)
प्रमथानां गणैश्चैव समन्तात्परिवारितम् ।
शरदीव सुदुष्प्रेक्ष्यं परिविष्टं दिवाकरम् ॥ १३-४५-३७६ (८३०५७)
एकादशशतान्येवं रुद्राणां वृषवाहनम्
अस्तुवं नियतात्मानं कर्मभिः शुभकर्मिणम् ॥ १३-४५-३७७ (८३०५८)
आदित्या वसवः साध्या विश्वेदेवास्तथाऽश्विनौ ।
विश्वाभिः स्तुतिभिर्देवं विश्वदेवं समस्तुवन् ॥ १३-४५-३७८ (८३०५९)
शतक्रतुश्च भगवान्विष्णुश्चादितिनन्दनौ ।
ब्रह्मा रथन्तरं साम ईरयन्ति भवान्तिके ॥ १३-४५-३७९ (८३०६०)

योगीश्वराः सुबहवो योगदं पितरं गुरुम् ।
ब्रह्मर्षयश्च ससुतास्तथा देवर्षयश्च वै ॥१३-४५-३८० (८३०६१)
पृथिवीं चान्तरिक्षं च नक्षत्राणि ग्रहास्तथा ।
मासार्धमासा ऋतवो रात्रिः संवत्सराः क्षणाः ॥१३-४५-३८१ (८३०६२)
मुहूर्ताश्च निमेपाश्च तथैव युगपर्ययाः ।
दिव्या राजन्नमस्यन्ति विद्याः सत्वविदस्तथा ॥१३-४५-३८२ (८३०६३)
सनत्कुमारो देवाश्च इतिहासास्तथैव च ।
मरीचिरङ्गिरा अत्रिः पुलस्त्यः पुलहः क्रतुः ॥१३-४५-३८३ (८३०६४)
मनवः सप्त सोमश्च अर्थवा सबृहस्पतिः ।
भृगुर्दक्षः कश्यपश्च वसिष्ठः काश्य एव च ॥१३-४५-३८४ (८३०६५)
छन्दांसि दीक्षा यज्ञाश्च दक्षिणाः पावको हविः ।
यज्ञोपगानि द्रव्याणि मूर्तिमन्ति युधिष्ठिर ॥१३-४५-३८५ (८३०६६)
प्रजानां पालकाः सर्वे सरितः पन्नगा नगाः ।
देवानां मातरः सर्वादेवपत्न्य सकन्यकाः ॥१३-४५-३८६ (८३०६७)
सहस्राणि मुनीनां च अयुतान्यर्बुदानि च ।
नमस्यन्ति प्रभुं शान्तं पर्वताःसागरा दिशः ॥१३-४५-३८७ (८३०६८)
गन्धर्वाप्सरसश्चैव गीतवादित्रकोविदाः ।
दिव्यतालेषु गायन्तः स्तुवन्ति भवमद्भुतम् ॥१३-४५-३८८ (८३०६९)
विद्याधरा दानवाश्च गुह्यका राक्षसास्तथा ।
सर्वाणि चैव भूतानि स्तावराणि चराणि च ।
नमस्यन्ति महाराज वाङ्मनः कर्मभिर्विभुम् ॥ १३-४५-३८९ (८३०७०)
पुरस्ताद्धिष्ठितः शर्वो ममासीस्त्रिदशेश्वरः ॥ १३-४५-३९० (८३०७१)
पुरस्तद्धिष्ठितं दृष्ट्वा ममेशानं च भारत ।
सप्रजापतिशक्रान्तं जगन्मामभ्युदैक्षत ॥१३-४५-३९१ (८३०७२)
ईक्षितुं च महादेवं न मे शक्तिरभूत्तदा ।
ततो मामब्रवीद्देवः पश्य कृष्ण वदस्व च ॥१३-४५-३९२ (८३०७३)
त्वया ह्याराधितश्चाहं शतशोऽथ सहस्रशः ।
त्वत्समो नास्ति मे कश्चित्त्रिषु लोकषु वै प्रियः ॥१३-४५-३९३ (८३०७४)
शिरसा वन्दिते देवे देवी प्रीता ह्युमा तदा ।
ततोऽहमब्रुवं स्थाणुं स्तुतं ब्रह्मादिभिः सुरैः ॥१३-४५-३९४ (८३०७५)
कृष्ण उवाच।१३-४५-३९५क्ष् (६८५७)
नमोस्तु ते शाश्वत सर्वयोने
ब्राह्माधिपं त्वामृषयो वदन्ति ।
तपश्च सत्वं च रजस्तमश्च
त्वामेव सत्यं च वदन्ति सन्तः ॥ १३-४५-३९५ (८३०७६)
त्वं वै ब्रह्मा च रुद्रश्च वरुणोऽग्निर्मनुर्भवः ।

धाता त्वष्टा विधाता च त्वं प्रभुः सर्वतोमुखः ॥१३-४५-३९६ (८३०७७)
त्वत्तो जातानि भूतानि स्थावराणि चराणि च ।
त्वया सृष्टमिदं कृत्स्नं त्रैलोक्यं सचराचरम् ॥१३-४५-३९७ (८३०७८)
यानीन्द्रियाणीह मनश्च कृत्स्नं
ये वायवः सप्ति तथैव चाग्नयः ।
ये देवसंस्थास्तव देवताश्च
तस्मात्परं त्वामृषयो वदन्ति ॥ १३-४५-३९८ (८३०७९)
वेदाश्च यज्ञाः सोमश्च दक्षिणा पावको हविः ।
यज्ञोपगं च यत्किंचिद्भगवांस्तदसंशयम् ॥१३-४५-३९९ (८३०८०)
इष्टं दत्तमधीतं व्रतानि नियमाश्च ये ।
ह्रीः कीर्तिः श्रीर्द्युतिस्तुष्टिः सिद्धिश्चैव तदर्पणी ॥१३-४५-४०० (८३०८१)
कामः क्रोधो भयं लोभो मदः स्तम्भोथ मत्सरः ।
आधयो व्याधयश्चैव भगवंस्तनवस्तव ॥१३-४५-४०१ (८३०८२)
कृतिर्विकारः प्रणयः प्रधानं बीजमव्ययम् ।
मनसः परमा योनिः प्रभावश्चापि शाश्वतः ॥१३-४५-४०२ (८३०८३)
अव्यक्तः पावनोऽचिन्त्यः सहस्रांशुर्हिरण्मयः ।
आदिर्गणानां सर्वेषां भवान्वैजीविताश्रयः ॥१३-४५-४०३ (८३०८४)
महानात्मा मतिर्ब्रह्मा विश्वः शंभुः स्वयंभुवः ।
बुद्धिः प्रज्ञोपलब्धिश्चसंवित्ख्यातिर्धृतिः स्मृतिः ॥१३-४५-४०४
(८३०८५)
पर्यायवाचकैः शब्दैर्महानात्मा विभाव्यते ।
त्वां बुद्ध्वा ब्राह्मणो वेदात्प्रमोहं विनियच्छति ॥१३-४५-४०५ (८३०८६)
हृदयं सर्वभूतानां क्षेत्रज्ञस्त्वमृषिस्तुतः ॥ १३-४५-४०६ (८३०८७)
सर्वतः पाणिपादस्त्वं सर्वतोक्षिशिरोमुखः ।
सर्वतः श्रुतिमाँल्लोके सर्वमावृत्य तिष्ठसि ॥१३-४५-४०७ (८३०८८)
फलं त्वमसि दिग्मांशोर्निमेषादिषु कर्मसु ।
त्वं वै प्रबार्चिः पुरुषः सर्वस्य हृदि संश्रितः ।
अणिमा महिमा प्राप्तिरीशानो ज्योतिरव्ययः ॥ १३-४५-४०८ (८३०८९)
त्वयि बुद्धिर्मतिर्लोकाः प्रपन्नाः संश्रिताश्च ये ।
ध्यानिनो नित्ययोगाश्च सत्यसत्वा जितेन्द्रियाः ॥१३-४५-४०९ (८३०९०)
यस्त्वां ध्रुवं वेदयते गुहाशयं
प्रभुं पुराणं पुरुषं विश्वरूपम् ।
हिरण्मयं बुद्धिमतां परां गतिं
स बुद्धिमान्बुद्धिमतीत्य तिष्ठति ॥ १३-४५-४१० (८३०९१)
विदित्वा सप्त सूक्ष्माणि षडङ्गं त्वां च मूर्तितः ।
प्रधानविधियोगस्थस्त्वामेव विशते बुधः ॥१३-४५-४११ (८३०९२)

एवमुक्ते मया पार्थ भवे चार्तिविनाशने ।
चराचरं जगत्सर्गं सिंहनादं तदाऽकरोत् ॥ १३-४५-४१२ (८३०९३)
तं विप्रसङ्घाश्च सुरासुराश्च
नागाः पिशाचाः पितरो वयांसि ।
रक्षोगणा भूतगणाश्च सर्वे
महर्षयश्चैव तदा प्रणेमुः ॥ १३-४५-४१३ (८३०९४)
मम मूर्ध्नि च दिव्यानां कुसुमानां सुगन्धिनाम् ।
राशयो निपतन्ति स्म वायुश्च सुसुखो ववौ ॥ १३-४५-४१४ (८३०९५)
निरीक्ष्य भगवान्देवीं ह्युमां मां च जगद्धितः ।
शतक्रतुं चाभिवीक्ष्य स्वयं मामाह शङ्करः ॥ १३-४५-४१५ (८३०९६)
विद्मः कृष्ण परां भक्तिमस्मासु तव शत्रुहन् ।
क्रियतामात्मनः श्रेयः प्रीतिर्हित्वयि मे परा ॥ १३-४५-४१६ (८३०९७)
वृणीष्वाष्टौ वरान्कृष्ण दाताऽस्मि तव सत्तम ।
ब्रूहि यादवशार्दूल यानिच्छसि सुदुर्लभान् ॥ ॥ १३-४५-४१७ (८३०९८)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
पञ्चचत्वारिंशोऽध्यायः ॥ ४५ ॥
Mahabharata - Anushaasana Parva - Chapter Footnotes

युधिष्ठिर उवाच ।
ययाऽऽपगेय नामानि श्रुतानीह जगत्पतेः ।
पितामहेशाय विभो नामान्याचक्ष्य शम्भवे ॥ १३-४५-१ (८३०९९)
बभ्रवे विश्वरूपाय महाभाग्यं च तत्त्वतः ।
सुरासुरगुरौ देवे शंकरेऽव्यक्तयोनये ॥ १३-४५-२ (८३१००)
भीष्म उवाच। १३-४५-३क्ष् (६८५८)
अशक्तोऽहं गुणान्यक्तुं महादेवस्य धीमतः ।
यो हि सर्वगतो देवो न च सर्वत्र दृश्यते ॥ १३-४५-३ (८३१०१)
ब्रह्मविष्णुसुरेशानां स्रष्टा च प्रभुरेव च ।
ब्रह्मादयः पिशाचान्ता यं हि देवा उपासते ॥ १३-४५-४ (८३१०२)
प्रकृतीनां परत्वेन पुरुषस्य च यः परः ।
चिन्त्यते यो योगविद्भिर्ऋषिभिस्तत्त्वदर्शिभिः ।
अक्षरं परमं ब्रह्म असच्च सदसच्च यः ॥ १३-४५-५ (८३१०३)
प्रकृतिं पुरुषं चैव क्षोभयित्वा स्वतेजसा ।
ब्रह्माणमसृजत्तस्माद्देवदेवः प्रजापतिः ॥ १३-४५-६ (८३१०४)
को हि शक्तो गुणान्वक्तुं देवदेवस्य धीमतः ।
गर्भजन्मजरायुक्तो मर्त्यो मृत्युसमन्वितः ॥ १३-४५-७ (८३१०५)

को हि शक्तो भवं ज्ञातुं मद्विधः परमेश्वरम् ।
ऋते नारायणात्पुत्र शङ्खचक्रगदाधरात् ॥ १३-४५-८ (८३१०६)
एष विद्वान्गुणश्रेष्ठो विष्णुः परमदुर्जयः ॥
दिव्यचक्षुर्महातेजा वीक्ष्यते योगचक्षुषा ॥ १३-४५-९ (८३१०७)
रुद्रभक्त्या तु कृष्णेन जगद्व्याप्तं महात्मना ।
तं प्रसाद्य तदा देवं बदर्यां किल भारत ॥ १३-४५-१० (८३१०८)
अर्थात्प्रियतरत्वं च सर्वलोकेषु वै तदा ।
प्राप्तवानेव राजेन्द्र सुवर्णाक्षान्महेश्वरात् ॥ १३-४५-११ (८३१०९)
पूर्णं वर्षसहस्रं तु तप्तवानेष माधवः ।
प्रसाद्य वरदं देवं चराचरगुरुं शिवम् ॥ १३-४५-१२ (८३११०)
युगेयुगे तु कृष्णेन तोषितो वै महेश्वरः ।
भक्त्या परमया चैव प्रीतश्चैव महात्मनः ॥ १३-४५-१३ (८३१११)
ऐश्वर्यं यादृसं तस्य जगद्योनेर्महात्मनः ॥
तदयं दृष्टवान्साक्षात्पुत्रार्थे हरिरच्युतः ॥ १३-४५-१४ (८३११२)
यस्मात्परतरं चैव नान्यं पश्यामि भारत ।
व्याख्यातुं देवदेवस्य शक्तो नामान्यशषतः ॥ १३-४५-१५ (८३११३)
एष शक्तो महाबाहुर्वक्तुं भगवतो गुणान् ।
विभूतिं चैव कात्स्न्र्येन सत्यां माहेश्वरीं नृप ॥ १३-४५-१६ (८३११४)
वैशम्पायन उवाच। १३-४५-१७क्ष् (६८५९)
१३-४५-१७ (८३११५)
एवमुक्त्वा तदा भीष्मो वासुदेवं महायशाः ।
भवमाहात्म्यसंयुक्तमिदमाह पितामहः। । ७-४५-२ शिवाय विष्णुरूपायेति झ पाठः ॥ ७-४५-३ तण्डिना ब्रह्मयोनिनेति झ पाठः॥ ७-४५-१८ ते त्वया॥ ७-४५-२१ यज्ञवाहा इति छन्दसामेव विशेषणम्। छन्दांसि वै देवेभ्यो हव्यमूढ्वेति ब्राह्मणात् तेषां यज्ञवाहत्वसिद्धिः। स्तोभाः सामपूरणान्यक्षराणि हुंमा इत्यादीनि॥ ७-४५-२५ नरेन्द्रपुत्रीं ऋक्षराजस्य जाम्बवतो दुहितरम्॥ ७-४५-२६ अभ्यनुज्ञाय स्थितं मामिति शेषः। अथोचतुरित्यर्थः॥ ७-४५-३३ भस्मराशिभिरिति भस्मच्छन्नैरग्निभइः॥ ७-४५-४० सम्प्रक्षालैः मैत्र्यादिभिश्चित्तशोधनं कुर्वद्भिः॥ ७-४५-४१ गोचारिणो गोवन्मुखेनैव चरन्तो हस्तव्यापारशून्या इत्यर्थः। मरीचिपाश्चन्द्ररश्मि पानेनैव जीवन्तः॥ ७-४५-४७ नियमाः अम्बुपानादयस्तैरेवाम्पुषैः क्षीरपैरित्यादिनामभिः ख्यातैः। प्रविशन्नेवापश्यमुपमन्युमिति शेषः॥ ७-४५-५८ समानां सवत्सरणामर्बुदं समार्बुदम्॥ ७-४५-५९ प्रहस्य मन्दारनाम्नः॥ ७-४५-६० भगवता महादेवेन॥ ७-४५-६१

उत्पादितं तस्यैव दैत्यस्य हननार्थम्॥ ७-४५-६३ जीर्णं
जीर्णतृणवद्व्यर्थमित्यर्थः॥ ७-४५-६४ वरदत्तस्य
सर्वशस्त्रावध्यस्त्वं भवेति दत्तवरस्य॥ ७-४५-७७ सप्तकपालेन
त्र्यम्बकदैवत्येन हेतुना। देवैः सप्तकपालेन रुद्रमिष्ट्वा आपो निर्मिता
इत्यर्थः॥ ७-४५-७८ रुद्रप्रसादाज्जनयामासति शेषः॥ ७-४५-८१
मुसलेष्वयोग्रेषु काष्ठकीलेषु॥ ७-४५-८२ चरुद्रः
चरोर्द्रवः मण्ड इति यावत्। चरुशब्दपूर्वाद्द्रवतेरन्येभ्योपि
दृश्यत इति डः। भर्तारंविनापि चरुद्रवपानमात्रेण तव
पुत्रो भविष्यतीत्यर्थः॥ ७-४५-९६ धूम्रश्चापि ममानुज
इति ट थ पाठः॥ ७-४५-१०९ पावनानां पवनाशिनाम्। वनाशानां
अब्भक्षाणाम्॥ ७-४५-११२ प्रवद्य प्रपन्नो भव॥ ७-४५-११८ दुराधारः
मनसि धर्तुमशक्यः ७-४५-१२६ प्रवालाङ्कुरभूषणे वसन्तस्तेन
कालोप्ययमेवेत्यर्थः ७-४५-१३९ भूधरः शेषनागः॥ ७-४५-१४६
सर्ववासकः सर्वस्याच्छादकः ७-४५-१६१ अभवं
सन्धिरार्षः॥ ७-४५-१६५ भावा मैव। भवानि भूयासम्॥ ७-४५-१६८
अनार्जवं वक्रम्। युगं कलियुगम्॥ ७-४५-१७४ असारं नास्ति सारो
यस्मादन्यस्तम्॥ ७-४५-१७७ ईशे ईशस्य। भवने सत्तायाम्। को हेतुः का
युक्तिः। ईशसत्त्वे प्रमाणं नास्तीत्यर्थः॥ ७-४५-२७१ रथन्तरज्येष्ठे
सामनी॥ ७-४५-२७८ शुक्लं कर्म हिंसारहितो ध्यानादिधर्मः॥ ७-४५-२८३
मिश्रिताय मिश्रितमालाय॥ ७-४५-२९५ मुकुटे मुकुटाय॥ ७-४५-२९६
त्रीणि नेत्राणीव नेत्राणि लोकयात्रानिर्वाहकाण्यग्निचन्द्रसूर्याख्यानि
नेत्राणि यस्य तस्यै त्रिनेत्रनेत्राय। लोचने लोचनाय॥ ७-४५-२९८
स्रष्टाराय औणादिकः सृजेत्वारन्। स्रष्ट्रे इत्यर्थः॥ ७-४५-३०४ मायाय
मायाविने॥ ७-४५-३२५ कामेभ्यः कामान् काम्यमानान् अर्थान्॥ ७-४५-३३३
षड्विंशकमिति ख्यातमिति ट थ पाठः॥ ७-४५-३३६ तं त्वां प्रणम्य
शइरसा प्रसाद्य प्रार्थये प्रभो इति ट थ पाठः॥ ७-४५-३७५
परिविष्टं परिवेषवन्तम्॥

---

अनुससनपर्व-अध्यय०४६
॥ श्रीः ॥
१३.४६. अध्यायः ४६

अथ दानधर्मपर्व ॥ १ ॥
Mahabharata - Anushaasana Parva - Chapter Topics
कृष्णेन युधिष्ठिरम्प्रति पार्वतीपरमेश्वराभ्यां स्यस्मै
वरप्रदानकथनम् ॥ १ ॥

कृष्ण उवाच ।
मूर्ध्ना निपत्य नियतस्तेजःसन्निचये ततः ।
परमं हर्षमागत्य भगवन्तमथाब्रवम् ॥ १३-४६-१ (८३११६)
धर्मे दृढत्वं युधि शत्रुघातं
यशस्तथाऽग्र्यं परमं बलं च
योगप्रियत्वं तव सन्निकर्षं
वृणे सुतानां च शतं शतानि ॥ १३-४६-२ (८३११७)
एवमस्त्विति तद्वाक्यं मयोक्तः प्राह शङ्करः ॥ १३-४६-३ (८३११८)
ततो मां जगतो माता धारिणी सर्वपावनी ।
उवाचोमा प्रणिहिता शर्वाणी तपसां निधिः ।
दत्तो भगवता पुत्रः साम्बो नाम तवानघ ॥ १३-४६-४ (८३११९)
मत्तोप्यष्टौ वरानिष्टान्गृहण त्वं ददामि ते ।
प्रणम्य शिरसा सा च मयोक्ता पाण्डुनन्दन ॥ १३-४६-५ (८३१२०)
द्विजेष्वकोपं पितृतः प्रसादं
शतं सुतानां परमं च भोगम् ।
कुले प्रीतिं मातृतश्च प्रसादं-
शमप्राप्तिं प्रवृणे चापि दाक्ष्यम् ॥ १३-४६-६ (८३१२१)
उमोवाच। १३-४६-७क्ष् (६८६०)
एवं भविष्यत्यमरप्रभाव
नाहं मृषा जातु वदे कदाचित् ।
भार्यासहस्राणि च षोडशैव
तासु प्रियत्वं च तथाऽक्षयं १३-४६-७ (८३१२२)
प्रीतिं चाग्र्यां बान्धवानां सकाशा-
द्ददामि तेऽहं वपुषः काम्यतां च ।
भोक्ष्यन्ते वै सप्ततिं वै शतानि
गृहे तुभ्यमतिथीनां च नित्यम् ॥ १३-४६-८ (८३१२३)
वासुदेव उवाच। १३-४६-९क्ष् (६८६१)
एवं दत्त्वा वरान्देवो मम देवी च भारत ।
अन्तर्हितः क्षणे तस्मिन्सगणो भीमपूर्वज ॥ १३-४६-९ (८३१२४)
एतदत्यद्भुतं पूर्वं ब्राह्मणायातितेजसे ।
उपमन्यवे मया कृत्स्नं व्याख्यातं पार्थिवोत्तम ।
नमस्कृत्वा तु स प्राह देवदेवाय सुव्रत ॥ १३-४६-१० (८३१२५)
नास्ति शर्वसमो देवो नास्ति शर्वसमा गतिः ।

नास्ति शर्वसमो दाने नास्ति शर्वसमो रणे ॥ ॥ १३-४६-११ (८३१२६)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
षट्चत्वारिंशोऽध्यायः ॥ ४६ ॥

---

अनुससनपर्व-अध्यय०४७
॥ श्रीः ॥
१३.४७. अध्यायः ४७

अथ दानधर्मपर्व ॥ १ ॥
Mahabharata - Anushaasana Parva - Chapter Topics
उपमन्युना कृष्णंप्रति तण्डिकृतमहादेवस्तुत्यनुवादः ॥ १ ॥

Mahabharata - Anushaasana Parva - Chapter Text

उपमन्युरुवाच ।
ऋषिरासीत्कृते तात तण्डिरित्येव विश्रुतः ।
दशवर्षसहस्राणि तेन देवः समाधिना ॥ १३-४७-१ (८३१२७)
आराधितोऽभूद्भक्तेन तस्योदर्कं निशामय ।
स दृष्टवान्महादेवमस्तौषीच्च स्तवैर्विभुम् ॥ १३-४७-२ (८३१२८)
श्इति तण्डिस्तपोयोगात्परमात्मानमव्ययम् ।
चिन्तयित्वा महात्मानमिदमाह सुविस्मितः ॥ १३-४७-३ (८३१२९)
यं पठन्ति सदा साङ्ख्याश्चिन्तयन्ति च योगिनः ।
परं प्रधानं पुरुषमधिष्ठातारमीश्वरम्। १३-४७-४ (८३१३०)
उत्पत्तौ च विनाशे च कारणं यं विदुर्बुधाः ।
देवासुरमुनीनां च परं यस्मान्न विद्यते ॥ १३-४७-५ (८३१३१)
अजं तमहमीशानमनादिनिधनं प्रभुम् ।
अत्यन्तसुखिनं देवमनघं शरणं व्रजे ॥ १३-४७-६ (८३१३२)
एवं ब्रुवन्नेव तदा ददर्श तपसान्निधिम् ।
तमव्ययमनौपम्यमचिन्त्यं शाश्वतं ध्रुवम् ॥ १३-४७-७ (८३१३३)
निष्कलं सकलं ब्रह्म निर्गुणं गुणगोचरम् ।
योगिनां परमानन्दमक्षरं मोक्षसंज्ञितम् ॥ १३-४७-८ (८३१३४)
मनोरिन्द्राग्निमरुतां विश्वस्य ब्रह्मणो गतिम् ।
अग्राह्यमचलं शुद्धं बुद्धिग्राह्यं मनोमयम् ॥ १३-४७-९ (८३१३५)
दुर्विज्ञेयमसङ्ख्येये दुष्प्रापमकृतात्मभिः ।
योनि विश्वस्य जगतस्तमसः परतः परम् ॥ १३-४७-१० (८३१३६)

यः प्राणवन्तमात्मानं ज्योतिर्जीवस्थितं मनः ।
तं देवं दर्शनाकाङ्क्षी बहून्वर्षगणानृषिः ।
तपस्युग्रे स्थितो भूत्वा दृष्ट्वा तुष्टाव चेश्वरम् ॥ १३-४७-११ (८३१३७)
तण्डिरुवाच। १३-४७-१२क्ष् (६८६२)
पवित्राणां पवित्रस्त्वं गतिर्गतिमतांवर ॥ १३-४७-१२ (८३१३८)
अत्युग्रं तेजसां तेजस्तपसां परमं तपः ।
विश्वावसुहिरण्याक्षपुरुहूतनमस्तृत ॥ १३-४७-१३ (८३१३९)
भूरिकल्याणद विभो परं सत्यं नमोस्तु ते ।
जातीमरणभीरूणां यतीनां यततां विभो ॥ १३-४७-१४ (८३१४०)
निर्वाणद सहस्रांशो नमस्तेऽस्तु सुखाश्रय ।
ब्रह्मा शतक्रतुर्विष्णुर्विश्वेदेवा महर्षयः ॥ १३-४७-१५ (८३१४१)
न विदुस्त्वां तु तत्त्वेन कुतो वेत्स्यामहे वयम् ।
त्वत्तः प्रवर्तते सर्वं त्वयि सर्वं प्रतिष्ठितम् ॥ १३-४७-१६ (८३१४२)
कालाख्यः पुरुषाख्यश्च ब्रह्माख्यश्च त्वमेव हि ।
तनवस्ते स्मृतास्तिस्रः पुराणज्ञैः सुरर्षिभिः ॥ १३-४७-१७ (८३१४३)
अधिपौरुषमध्यात्ममधिभूताधिदैवतम् ।
अधिलोकाधिविज्ञानमधियज्ञस्त्वमेव हि ॥ १३-४७-१८ (८३१४४)
त्वां विदित्वाऽऽत्मदेवस्थं दुर्विदं दैवतैरपि ।
विद्वांसो यान्ति निर्मुक्ताः परं भावमनामयम् ॥ १३-४७-१९ (८३१४५)
अनिच्छतस्तव विभो जन्ममृत्युरनेकतः ।
द्वारं तु स्वर्गमोक्षाणामाक्षेप्ता त्वं ददासि च ॥ १३-४७-२० (८३१४६)
त्वं वै स्वर्गश्च मोक्षश्च कामः क्रोधस्त्वमेव च ।
सत्वं रजस्तमश्चैव अधश्चोर्ध्वं त्वमेव हि ॥ १३-४७-२१ (८३१४७)
ब्रह्मा भवश्च विष्णुश्च स्कन्देन्द्रौ सविता यमः ।
वरुणेन्दू मनुर्धाता विधाता त्वं धनेश्वरः ॥ १३-४७-२२ (८३१४८)
भूर्वायुः सलिलाग्निश्च खं वाग्बुद्धिः स्थितिर्मतिः ।
कर्म सत्यानृते चोभे त्वमेवास्ति च नास्ति च ॥ १३-४७-२३ (८३१४९)
इन्द्रियाणीन्द्रियार्थाश्च प्रकृतिभ्यः परं ध्रुवम् ।
विश्वाविश्वपरो भावश्चिन्त्याचिन्त्यस्त्वमेव हि ॥ १३-४७-२४ (८३१५०)
यच्चैतत्परमं ब्रह्म यच्च तत्परमं पदम् ।
या गतिः साङ्ख्ययोगानां स भवान्नात्र संशयः ॥ १३-४७-२५ (८३१५१)
नूनमद्य कृतार्थाः स्म नूनं प्राप्ताः सतां गतिम् ।
यां गतिं प्रार्तयन्तीह ज्ञाननिर्मलबुद्धयः ॥ १३-४७-२६ (८३१५२)
अयो मूढाः स्म सुचिरमिमं कालमचेतसा ।
यन्न विद्मः परं देवं शाश्वतं यं विदुर्बुधाः ॥ १३-४७-२७ (८३१५३)
सेयमासादिता साक्षात्त्वद्भक्तिर्जन्मभिर्मया ।

भक्तानुग्रहकृद्देवो यं ज्ञात्वाऽमृतमश्नुते ॥ १३-४७-२८ (८३१५४)
देवासुरमुनीनां तु यच्च गुह्यं सनातनम् ।
गुहायां निहितं ब्रह्मि दुर्विज्ञेयं मुनेरपि ॥ १३-४७-२९ (८३१५५)
स एष भगवान्देवः सर्वकृत्सर्वतोमुखः ।
सर्वात्मा सर्वदर्शी च सर्वगः सर्ववेदिता ॥ १३-४७-३० (८३१५६)
देहकृद्देहभृद्देही देहभुग्देहिनां गतिः ।
प्राणकृत्प्राणभृत्प्राणी प्राणदः प्राणिनां गतिः ॥ १३-४७-३१ (८३१५७)
अध्यात्मगतिरिष्टानां ध्यायिनामात्मवेदिनाम् ।
अपुनर्भवकामानां या गतिः सोऽयमीश्वरः ॥ १३-४७-३२ (८३१५८)
अयं च सर्वभूतानां शुभाशुभगतिप्रदः ।
अयं च जन्ममरणे विदध्यात्सर्वजन्तुषु ।
अयं संसिद्धिकामानां या गतिः सोयमीस्वरः। १३-४७-३३ (८३१५९)
भूराद्यान्सर्वभुवनानुत्पाद्य सदिवौकसः ।
दधाति देवस्तनुभिरष्टाभिर्यो बिभर्ति च ॥ १३-४७-३४ (८३१६०)
अतः प्रवर्तते सर्वमस्मिन्सर्वं प्रतिष्ठितम् ।
अस्मिंश्च प्रलयं याति अयमेकः सनातनः ॥ १३-४७-३५ (८३१६१)
अयं स सत्यकामानां सत्यलोकः परं सताम् ।
अपवर्गश्च मुक्तानां कैवल्यं चात्मवेदिनाम् ॥ १३-४७-३६ (८३१६२)
अयं ब्रह्मादिभिः सिद्धैर्गुहायां गोपितः प्रभुः ।
देवासुरमनुष्याणामप्रकाशो भवेदिति ॥ १३-४७-३७ (८३१६३)
तं त्वां देवासुरनरास्तत्त्वेन न विदुर्भवम् ।
मोहिताः खल्वनेनैव हृदिस्थेनाप्रकाशिना  १३-४७-३८ (८३१६४)
ये चैनं प्रतिपद्यन्ते भक्तियोगेन भाविताः ।
तेषामेवात्मनात्मानं दर्शयत्येष हृच्छयः ॥ १३-४७-३९ (८३१६५)
यं ज्ञात्वा न पुनर्जन्म मरणं चापि विद्यते ।
यं विदित्वा परं वेद्यं वेदितव्यं न विद्यते ॥ १३-४७-४० (८३१६६)
यं लब्ध्वा परमं लाभं नाधिकं मन्यते बुधः ।
यां सूक्ष्मां परमां प्राप्तिं गच्छन्नव्ययमक्षयम् ॥ १३-४७-४१ (८३१६७)
यं साङ्ख्या गुणतत्त्वज्ञाः साङ्ख्यशास्त्रविशारदाः ।
सूक्ष्मज्ञानतराः सूक्ष्मं ज्ञात्वा मुच्यन्ति बन्धनैः  १३-४७-४२ (८३१६८)
यं च वेदविदो वेद्यं वेदान्ते च प्रतिष्ठितम् ।
प्राणायामपरा नित्यं यं विशन्ति जपन्ति च ॥ १३-४७-४३ (८३१६९)
ओंकाररथमारुह्य ते विशन्ति महेश्वरम् ।
अयं स देवयानानामादित्यो द्वारमुच्यते ॥ १३-४७-४४ (८३१७०)
अयं च पितृयानानां चन्द्रमा द्वारमुच्यते ।
एष काष्ठा दिशश्चैव संवत्सरयुगादि च ॥ १३-४७-४५ (८३१७१)

दिव्यादिव्यः परो लाभ अयने दक्षिणोत्तरे ।
एनं प्रजापतिः पूर्वमाराध्य बहुभिः स्तवैः ॥ १३-४७-४६ (८३१७२)
प्रजार्थं वरयामास नीललोहितसंज्ञितम् ।
ऋग्भिर्यमनुशासन्ति तत्त्वे कर्मणि बह्वृचाः ॥ १३-४७-४७ (८३१७३)
यजुर्भिर्यत्त्रिधा वेद्यं जुह्वत्यध्वर्यवोऽध्वरे ।
सामभिर्यं च गायन्ति सामगाः शुद्धबुद्धयः ॥ १३-४७-४८ (८३१७४)
ऋतं सत्यं परं ब्रह्म स्तुवन्त्याथर्वणा द्विजाः ।
यज्ञस्य परमा योनिः पतिश्चायं परः स्मृतः ॥ १३-४७-४९ (८३१७५)
रात्र्यहः श्रोत्रनयनः पक्षमासशिरोभुजः ।
ऋतुवीर्यस्तपोधैर्यो ह्यब्दगुह्योरुपादवान् ॥ १३-४७-५० (८३१७६)
मृत्युर्यमो हुताशश्च कालः संहारवेगवान् ।
कालस्य परमा योनिः कालश्चायं सनातनः ॥ १३-४७-५१ (८३१७७)
चन्द्रादित्यौ सनक्षत्रौ ग्रहाश्च सह वायुना ।
ध्रुवः सप्तर्षयश्चैव भुवनाः सप्त एव च ॥ १३-४७-५२ (८३१७८)
प्रधानं महदव्यक्तं विशेषान्तं सवैकृतम् ।
ब्रह्मादिस्तम्बपर्यन्तं भूतादि सदसच्च यत् ॥ १३-४७-५३ (८३१७९)
अष्टौ प्रकृतयश्चैव प्रकृतिभ्यश्च यः परः ।
अस्य देवस्य यद्भागं कृत्स्नं सम्परिवर्तते ॥ १३-४७-५४ (८३१८०)
एतत्परममानन्दं यत्तच्छाश्वतमेव च ।
एषा गतिर्विरक्तानामेष भावः परः सताम् ॥ १३-४७-५५ (८३१८१)
एतत्पदमनुद्विग्नमेतद्ब्रह्म सनातनम् ।
शास्त्रवेदाङ्गविदुषामेतद्ध्यानं परं पदम् ॥ १३-४७-५६ (८३१८२)
इयं सा परमा काष्ठा इयं सा परमा कला ।
इयं सा परमा सिद्धिरियं सा परमा गतिः ॥ १३-४७-५७ (८३१८३)
इयं सा परमा शान्तिरियं सा निर्वृतिः परा ।
यं प्राप्य कृतकृत्याः स्म इत्यमन्यन्त योगिनः ॥ १३-४७-५८ (८३१८४)
इयं तुष्टिरियं सिद्धिरियं श्रुतिरियं स्मृतिः ।
अध्यात्मगतिरिष्टानां विदुषां प्राप्तिरव्यया ॥ १३-४७-५९ (८३१८५)
यजतां कामयानानां मखैर्विपुलदक्षिणैः ।
या गतिर्यज्ञशीलानां सा गतिस्त्वं न संशयः ॥ १३-४७-६० (८३१८६)
सम्यग्योगजपैः शान्तिर्नियमैर्देहतापनैः ।
तप्यतां या गतिर्देव परमा सा गतिर्भवान् ॥ १३-४७-६१ (८३१८७)
कर्मन्यासकृतानां च विरक्तानां ततस्ततः ।
या गतिर्ब्रह्मिसदने सा गतिस्त्वं सनातन ॥ १३-४७-६२ (८३१८८)
अपुनर्भवकामानां वैराग्ये वर्ततां च या ।
प्रकृतीनां लयानां च सा गतिस्त्वं सनातन ॥ १३-४७-६३ (८३१८९)

ज्ञानविज्ञानयुक्तानां निरुपाख्या निरञ्जना ।
कैवल्या या गतिर्देव परमा सा गतिर्भवान् ॥ १३-४७-६४ (८३१९०)
वेदशास्त्रपुराणोक्ताः पञ्च ता गतयः स्मृताः ।
त्वत्प्रसादाद्धि लभ्यन्ते न लभ्यन्तेऽन्यथा विभो ॥ १३-४७-६५ (८३१९१)
इति तण्डिस्तपोराशिस्तुष्टावेसानमात्मना ।
जगौ च परमं ब्रह्म यत्पुरा लोककृज्जगौ ॥ १३-४७-६६ (८३१९२)
उपमन्युरुवाच। १३-४७-६७क्ष् (६८६३)
एवं स्तुतो महादेवस्तण्डिना ब्रह्मवादिना ।
उवाच भगवान्देव उमया सहितः प्रभुः ॥ १३-४७-६७ (८३१९३)
ब्रह्मा शतक्रतुर्विष्णुर्विश्वेदेवा महर्षयः ।
न विदुस्त्वामिति ततस्तुष्टः प्रोवाच तं शिवः ॥ १३-४७-६८ (८३१९४)
अक्षयश्चाव्ययश्चैव भविता दुःखवर्जितः ।
यशस्वी तेजसा युक्तो दिव्यज्ञानसमन्वितः ॥ १३-४७-६९ (८३१९५)
ऋषीणामभिगम्यश्च सूत्रकर्ता सुतस्तव ।
मत्प्रसादादिद्द्विजश्रेष्ठ भविष्यति न संशयः ॥ १३-४७-७० (८३१९६)
कं वा कामं ददाम्यद्य ब्रूहि यद्वत्स काङ्क्षसे ।
प्राञ्जलिः स उवाचेदं त्वयि भक्तिर्दृढाऽस्तु मे ॥ १३-४७-७१ (८३१९७)
उपमन्युरुवाच। १३-४७-७२क्ष् (६८६४)
एतान्दत्त्वा वरान्देवो वन्द्यमानः सुरर्षिभिः ।
स्तूयमानश्च विबुधैस्तत्रैवान्तरधीयत ॥ १३-४७-७२ (८३१९८)
अन्तर्हिते भगवति सानुगे यादवेश्वर ।
ऋषिराश्रममागम्य ममैतत्प्रोक्तवानिह ॥ १३-४७-७३ (८३१९९)
यानि च प्रथितान्यादौ तण्डिराख्यातवान्मम
मानानि मानवश्रेष्ठ तानि त्वं शृणु सिद्धये ॥ १३-४७-७४ (८३२००)
दश नामसहस्राणि देवेष्वाह पितामहः ।
सर्वस्य शास्त्रेषु तथा दश नामशतानि च ॥ १३-४७-७५ (८३२०१)
गुह्यानीमानि नामानि तण्डिर्भगवतोऽच्युत ।
देवप्रसादाद्देवेशः पुरा प्राह महात्मने ॥ ॥ १३-४७-७६ (८३२०२)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
सप्तचत्वारिंशोऽध्यायः ॥ ४७ ॥

Mahabharata - Anushaasana Parva - Chapter Footnotes

७-४७-२ उदर्कं फलोदयम् ॥
७-४७-२७ अचेतसा अज्ञानेन ॥
७-४७-४२ सूक्ष्मं लिङ्गं ज्ञानेन तरन्त्यतिकम्य गच्छन्ति ते

सूक्ष्मज्ञानतराः ॥

---

अनुससनपर्व-अध्यय०४८
॥ श्रीः ॥
१३.४८. अध्यायः ४८

अथ दानधर्मपर्व ॥१ ॥
Mahabharata - Anushaasana Parva - Chapter Topics
कृष्णेन युधिष्ठिरम्प्रत्युपमन्युना स्वात्मानं
प्रत्युक्तशिवसहस्रनामानुवादः ॥१ ॥

Mahabharata - Anushaasana Parva - Chapter Text

वासुदेव उवाच ।
ततः स प्रयतो भूत्वा मम तात युधिष्ठिर ।
प्राञ्जलिः प्राह विप्रर्षिर्नामसङ्ग्रहमादितः ॥१३-४८-१ (८३२०३)
उपमन्युरुवाच।१३-४८-२क्ष् (६८६५)
ब्रह्मप्रोक्तैर्ऋषिप्रोक्तैर्वेदवेदाङ्गसम्भवै ।
सर्वलोकेषु विख्यातं स्तुत्यं स्तोष्यामि नामभिः ॥१३-४८-२ (८३२०४)
महद्भिर्विहितैः सत्यैः सिद्धैः सर्वार्थसाधकैः ।
ऋषिणा तण्डिना भक्त्या कृतैर्वेदकृतात्मना ॥१३-४८-३ (८३२०५)
यथोक्तैः साधुभिः ख्यातैर्मुनिभिस्तत्त्वदर्शिभिः ।
प्रवरं प्रथमं स्वर्ग्यं सर्वभूतहितं शुभम् ॥१३-४८-४ (८३२०६)
श्रुतेः सर्वत्र जगति ब्रह्मलोकावतारितैः ।
सत्यैस्तत्परमं ब्रह्मि ब्रह्मप्रोक्तं सनातनम् ।
वक्ष्ये यदुकुलश्रेष्ठ शृणुष्वावहितो मम ॥ १३-४८-५ (८३२०७)
वरयैनं भवं देवं भक्तस्त्वं परमेश्वरम् ।
तेन ते श्रावयिष्यामि यत्तद्ब्रह्म सनातनम् ॥१३-४८-६ (८३२०८)
न शक्यं विस्तरात्कृत्स्नं वक्तुं सर्वस्य केनचित् ।
युक्तेनापि विभूतीनामपि वर्षशतैरपि ॥१३-४८-७ (८३२०९)
यस्यादिर्मध्यमन्तं च सुरैरपि न गम्यते ।
कस्तस्य शक्नुयाद्वक्तं गुणान्कार्त्स्न्येन माधव ॥१३-४८-८ (८३२१०)
किन्तु देवस्य महतः संक्षिप्तार्थपदाक्षरम् ।
शक्तितश्चरितं वक्ष्ये प्रसादात्तस्य धीमतः ॥१३-४८-९ (८३२११)
अप्राप्य तु ततोऽनुज्ञां न शक्यः स्तोतुमीश्वरः ।
यदा तेनाभ्यनुज्ञातः स्तुतो वै स तदा मया ॥१३-४८-१० (८३२१२)

अनादिनिधनस्याहं जगद्योनेर्महात्मनः ।
नाम्नां कञ्चित्समुद्देशं वक्ष्याम्यव्यक्तयोनिनः ॥ १३-४८-११ (८३२१३)
वरदस्य वरेण्यस्य विश्वरूपस्य धीमतः ।
शृणु नाम्नां चयं कृष्ण यदुक्तं पद्मयोनिना ॥ १३-४८-१२ (८३२१४)
दश नामसहस्राणि यान्याह प्रपितामहः ।
तानि निर्मथ्य मनसा दध्नो घृतमिवोद्धृतम् ॥ १३-४८-१३ (८३२१५)
गिरेः सारं यथा हेम पुष्पसारं यथा मधु ।
घृतात्सारं यथा मण्डस्तथैतत्सारमुद्धृतम्। १३-४८-१४ (८३२१६)
सर्वपापापहमिदं चतुर्वेदसमन्वितम् ।
प्रयत्नेनाधिगन्तव्यं धार्यं च प्रयतात्मना ॥ १३-४८-१५ (८३२१७)
माङ्गल्यं पौष्टिकं चैव रक्षोघ्नं पावनं महत् ॥ १३-४८-१६ (८३२१८)
इदं भक्ताय दातव्यं श्रद्दधानास्तिकाय च ।
नाश्रद्दधानरूपाय नास्तिकायाजितात्मने ॥ १३-४८-१७ (८३२१९)
यश्चाभ्यसूयते देवं कारणात्मानमीश्वरम् ।
स कृष्ण नरकं याति सहपूर्वैः सहात्मजैः ॥ १३-४८-१८ (८३२२०)
इदं ध्यानमिदं योगमिदं ध्येयमनुत्तमम् ।
इदं जप्यमिदं ज्ञानं रहस्यमिदमुत्तमम् ॥ १३-४८-१९ (८३२२१)
यं ज्ञात्वा अन्तकालेऽपि गच्छेत परमां गतिम् ।
पवित्रं मङ्गलं मेध्यं कल्याणमिदमुत्तमम् ॥ १३-४८-२० (८३२२२)
इदं ब्रह्मा पुरा कृत्वा सर्वलोकपितामहः ।
सर्वस्तवानां राजत्वे दिव्यानां समकल्पयत् ॥ १३-४८-२१ (८३२२३)
तदाप्रभृति चैवायमीश्वरस्य महात्मनः ।
स्तवराज इति ख्यातो जगत्यमरपूजितः ॥ १३-४८-२२ (८३२२४)
ब्रह्मलोकादयं स्वर्गे स्तवराजोऽवतारितः ।
यतस्तण्डिः पुरा प्राप तेन तण्डिकृतोऽभवत् ॥ १३-४८-२३ (८३२२५)
स्वर्गाच्चैवात्र भूर्लोकं तण्डिना ह्यवतारितः ।
सर्वमङ्गलमाङ्गल्यं सर्वपापप्रणाशनम् ॥ १३-४८-२४ (८३२२६)
निगदिष्ये महाबाहो स्तवानामुत्तमं स्तवम् ।
ब्रह्मणामपि यद्ब्रह्म पराणामपि यत्परम् ॥ १३-४८-२५ (८३२२७)
तेजसामपि यत्तेजस्तपसामपि यत्तपः ।
शान्तीनामपि या शान्तिर्द्युतीनामपि या द्युतिः ॥ १३-४८-२६ (८३२२८)
दान्तानामपि यो दान्तो धीमतामपि या च धीः ।
देवानामपि यो देव ऋषीणामपि यस्त्वृषिः ॥ १३-४८-२७ (८३२२९)
यज्ञानामपि यो यज्ञः शिवानामपि यः शिवः ।
रुद्राणामपि यो रुद्रः प्रभा प्रभवतामपि ॥ १३-४८-२८ (८३२३०)
योगिनामपि यो योगी कारणानां च कारणम् ।

यतो लोकाः सम्भवन्ति नभवन्ति यतः पुनः ॥ १३-४८-२९ (८३२३१)
सर्वभूतात्मभूतस्य हरस्यामिततेजसः ।
अष्टोत्तरसहस्रं तु नाम्नां शर्वस्य मे शृणु ।
यच्छ्रुत्वा मनुजव्याघ्र सर्वान्कामानवाप्स्यसि ॥ १३-४८-३० (८३२३२)
स्थिरः स्थाणुः प्रभुर्भानुः, प्रवरो वरदो वरः ।
सर्वात्मा सर्वविख्यातः सर्वः सर्वकरो भवः ॥ १३-४८-३१ (८३२३३)
जटी चर्मी शिखी खड्गी सर्वाङ्गः सर्वभावनः ।
हरश्च हरिणाक्षश्च सर्वभूतहरः प्रभुः ॥ १३-४८-३२ (८३२३४)
प्रवृत्तिश्च निवृत्तिश्च नियतः शाश्वतो ध्रुवः ।
श्मशानवासी भगवान्खचरो गोचरोऽर्दनः ॥ १३-४८-३३ (८३२३५)
अभिवाद्यो महाकर्मा तपस्वी भूतभावनः ।
उन्मत्तवेषप्रच्छन्नः सर्वलोकप्रजापतिः ॥ १३-४८-३४ (८३२३६)
महारूपो महाकायो वृषरूपो महायशाः ।
महात्मा सर्वभूतात्मा विश्वरूपो महाहनुः ॥ १३-४८-३५ (८३२३७)
लोकपालोऽन्तर्हितात्मा प्रसादो हयगर्दभिः ।
पवित्रं च महांश्चैव नियमो नियमाश्रितः ॥ १३-४८-३६ (८३२३८)
सर्वकर्मा स्वयंभूत आदिरादिकरो निधिः ।
सहस्राक्षो विशालाक्षः सोमो नक्षत्रसाधकः ॥ १३-४८-३७ (८३२३९)
चन्द्रः सूर्यः शनिः केतुर्ग्रहो ग्रहपतिर्वरः ।
अत्रिरत्र्या नमस्कर्ता मृगबाणार्पणोऽनघः ॥ १३-४८-३८ (८३२४०)
महातपा घोरतपा अदीनो दीनसाधकः ।
संवत्सरकरो मन्त्रः प्रमाणं परमं तपः ॥ १३-४८-३९ (८३२४१)
योगी योज्यो महाबीजो महारेता महाबलः ।
सुवर्णरेताः सर्वज्ञः सुबीजो बीजवाहनः ॥ १३-४८-४० (८३२४२)
दशबाहुस्त्वनिमिषो नीलकण्ठ उमापतिः ।
विश्वरूपः स्वयं श्रेष्ठो बलवीरो बलो गणः ॥ १३-४८-४१ (८३२४३)
गणकर्ता गणपतिर्दिग्वासाः काम एव च ।
मन्त्रवित्परमो मन्त्रः सर्वभावकरो हरः ॥ १३-४८-४२ (८३२४४)
कमण्डलुधरो धन्वी बाणहस्तः कपालवान् ।
अशनी शतघ्नी खड्गी पट्टिशी चायुधी महान् ॥ १३-४८-४३ (८३२४५)
स्रुवहस्तः सुरूपश्च तेजस्तेजस्करो निधिः ।
उष्णीषी च सुवक्त्रश्च उदग्रो विनतस्तथा ॥ १३-४८-४४ (८३२४६)
दीर्घश्च हरिकेशश्च सुतीर्थः कृष्ण एव च ।
शृगालरूपः सिद्धार्थो मुण्डः सर्वशुभंकरः ॥ १३-४८-४५ (८३२४७)
अजश्च बहुरूपश्च गन्धधारी कपर्द्यपि ।
ऊर्ध्वरेता ऊर्ध्वलिङ्ग ऊर्ध्वशायी नभःस्थलः ॥ १३-४८-४६ (८३२४८)

त्रिजटी चीरवासाश्च रुद्रः सेनापतिर्विभुः ।
अहश्चरो नक्तंचरस्तिग्ममन्युः सुवर्चसः ॥ १३-४८-४७ (८३२४९)
गजहा दैत्यहा कालो लोकधाता गुणाकरः ।
सिंहशार्दूलरूपश्च आर्द्रचर्माम्बरावृतः ॥ १३-४८-४८ (८३२५०)
कालयोगी महानादः सर्वकामश्चतुष्पथः ।
निशाचरः प्रेतचारी भूतचारी महेश्वरः ॥ १३-४८-४९ (८३२५१)
बहुभूतो बहुधरः स्वर्भिनुरमितो गतिः ।
नृत्यप्रियो नित्यनर्तो नर्तकः सर्वलालसः ॥ १३-४८-५० (८३२५२)
घोरो महातपाः पाशो नित्यो गिरिरुहो नभः ।
सहस्रहस्तो विजयो व्यवसायो ह्यतन्द्रितः ॥ १३-४८-५१ (८३२५३)
अधर्षणो धर्षणात्मा यज्ञहा कामनाशकः ।
दक्षयागापहारी च सुसहो मध्यमस्तथा ॥ १३-४८-५२ (८३२५४)
तेजोपहारी बलहा मुदितोऽर्थोऽजितो वरः ।
गम्भीरघोषो गम्भीरो गम्भीरबलवाहनः ॥ १३-४८-५३ (८३२५५)
न्यग्रोधरूपो न्यग्रोधो वृक्षकर्णस्थितिर्विभुः ।
सुतीक्ष्णदशनश्चैव महाकायो महाननः ॥ १३-४८-५४ (८३२५६)
विष्वक्सेनो हरिर्यज्ञः संयुगापीडवाहनः ।
तीक्ष्णतापश्च हर्यश्वः सहायः कर्मकालवित् ॥ १३-४८-५५ (८३२५७)
विष्णुप्रसादितो यज्ञः समुद्रो वडवामुखः ।
हुताशनसहायश्च प्रशान्तात्मा हुताशनः ॥ १३-४८-५६ (८३२५८)
उग्रतेजा महातेजा जन्यो विजयकालवित् ।
ज्योतिषामयनं सिद्धिः सर्वविग्रह एव च ॥ १३-४८-५७ (८३२५९)
शिखी मुण्डी जटी ज्वाली मूर्तिजो मूर्धगो बली ।
वेणवी पणवी ताली खली कालकटंकटः ॥ १३-४८-५८ (८३२६०)
नक्षत्रविग्रहमतिर्गुणबुद्धिर्लयो गमः ।
प्रजापतिर्विश्वबाहुर्विभागः सर्वगोमुखः ॥ १३-४८-५९ (८३२६१)
विमोचनः सुसरणो हिरण्यकवचोद्भवः ॥
मेढ्रजो बलचारी च महीचारी स्रुतस्तथा ॥ १३-४८-६० (८३२६२)
सर्वतूर्यनिनादी च सर्वातोद्यपरिग्रहः ।
व्यालरूपो गुहावासी गुहो माली तरङ्गवित् ॥ १३-४८-६१ (८३२६३)
त्रिदशस्त्रिकालधृक्कर्मसर्वबन्धविमोचनः ।
बन्धनस्त्वसुरेन्द्राणां युधि शत्रुविनाशनः ॥ १३-४८-६२ (८३२६४)
साङ्ख्यप्रसादो दुर्वासाः सर्वसाधुनिषेवितः ।
प्रस्कन्दनो विभागज्ञो अतुल्यो यज्ञभागवित् ॥ १३-४८-६३ (८३२६५)
सर्ववासः सर्वचारी दुर्वासा वासवोऽमरः ।
हैमो हेमकरो यज्ञः सर्वधारी धरोत्तमः ॥ १३-४८-६४ (८३२६६)

लोहिताक्षो महाक्षश्च विजयाक्षो विशारदः ।
सङ्ग्रहो निग्रहः कर्ता सर्पचीरनिवासनः ॥ १३-४८-६५ (८३२६७)
मुख्योऽमुख्यश्च देहश्च काहलिः सर्वकामदः ।
सर्वकासप्रसादश्च सुबलो बलरूपधृत् ॥ १३-४८-६६ (८३२६८)
सर्वकामवरश्चैव सर्वदः सर्वतोमुखः ।
आकाशनिर्विरूपश्च निपाती ह्यवशः खगः ॥ १३-४८-६७ (८३२६९)
रौद्ररूपोंऽशुरादित्यो बहुरश्मिः सुवर्चसी ।
वसुवेगो महावेगो मनोवेगो निशाचरः ॥ १३-४८-६८ (८३२७०)
सर्ववासी श्रियावासी उपदेशकरोऽकरः ।
मुनिरात्मनिरालोकः सम्भग्नश्च सहस्रदः ॥ १३-४८-६९ (८३२७१)
पक्षी च पक्षरूपश्च अतिदीप्तो विशाम्पतिः ।
उन्मादो मदनः कामो ह्यश्वत्थोऽर्थकरो यशः ॥ १३-४८-७० (८३२७२)
वामदेवश्च वामश्च प्राग्दक्षिणश्च वामनः ।
सिद्धयोगी महर्षिश्च सिद्धार्थः सिद्धसाधकः ॥ १३-४८-७१ (८३२७३)
भिक्षुश्च भिक्षुरूपश्च विपणो मृदुरव्ययः ।
महासेनो विशाखश्च षष्टिभागो गवांपतिः ॥ १३-४८-७२ (८३२७४)
वज्रहस्तश्च विष्कम्भी चमूस्तम्भन एव च ।
वृत्तावृत्तकरस्तालो मधुर्मधुकलोचनः ॥ १३-४८-७३ (८३२७५)
वाचस्पत्यो वाजसनो नित्यमाश्रमपूजितः ।
ब्रह्मचारी लोकचारी सर्वचारी विचारवित् ॥ १३-४८-७४ (८३२७६)
ईशान ईश्वरः कालो निशाचारी पिनाकवान् ।
निमित्तस्थो निमित्तं च नन्दिर्नन्दिकरो हरिः ॥ १३-४८-७५ (८३२७७)
नन्दीश्वरश्च नन्दी च नन्दनो नन्दिवर्धनः ।
भगहारी निहन्ता च कालो ब्रह्मा पितामहः ॥ १३-४८-७६ (८३२७८)
चतुर्मुखो महालिङ्गश्चारुलिङ्गस्तथैव च ।
लिङ्गाध्यक्षः सुराध्यक्षो योगाध्यक्षो युगावहः ॥ १३-४८-७७ (८३२७९)
बीजाध्यक्षो बीजकर्ता अव्यात्माऽनुगतो बलः ।
इतिहासः सकल्पश्च गौतमोऽथ निशाकरः ॥ १३-४८-७८ (८३२८०)
दम्भो ह्यदम्भो वैदम्भो वश्यो वशकरः कलिः ।
लोककर्ता पशुपतिर्महाकर्ता ह्यनौषधः ॥ १३-४८-७९ (८३२८१)
अक्षरं परमं ब्रह्मि बलवच्छक्र एव च ।
नीतिर्ह्यनीतिः शुद्धात्मा शुद्धो मान्यो गतागतः ॥ १३-४८-८० (८३२८२)
बहुप्रसादः सुस्वप्नो दर्पणोऽथ त्वभित्रजित् ।
वेदकारो मन्त्रकारो विद्वान्समरमर्दनः ॥ १३-४८-८१ (८३२८३)
महामेघनिवासी च महाघोरो वशीकरः ।
अग्निज्वालो महाज्वालो अतिधूम्रो हुतो हिवः ॥ १३-४८-८२ (८३२८४)

वृषणः शंकरो नित्यं वर्चस्वी धूमकेतनः ।
नीलस्तथाङ्गलुब्धश्च शोभनो निरवग्रहः ॥ १३-४८-८३ (८३२८५)
स्वस्तिदः स्वस्तिभावश्च भागी भागकरो लघुः ।
उत्सङ्गश्च महाङ्गश्च महागर्भपरायणः ॥ १३-४८-८४ (८३२८६)
कृष्णवर्णः सुवर्णश्च इन्द्रियं सर्वदेहिनाम् ।
महापादो महाहस्तो महाकायो महायशाः ॥ १३-४८-८५ (८३२८७)
महामूर्धा महाभात्रो महानेत्रो निशालयः ।
महान्तको महाकर्णो महोष्ठश्च महाहनुः ॥ १३-४८-८६ (८३२८८)
महानासो महाकम्बुर्महाग्रीवः श्मशानभाक् ।
महावक्षा महोरस्को ह्यन्तरात्मा मृगालयः ॥ १३-४८-८७ (८३२८९)
लम्बनो लम्बितोष्ठश्च महामायः पयोनिधिः ।
महादन्तो महादंष्ट्रो महाजिह्वो महामुखः ॥ १३-४८-८८ (८३२९०)
महानखो महारोमा महाकेशो महाजटः ।
प्रसन्नश्च प्रसादश्च प्रत्ययो गिरिसाधनः ॥ १३-४८-८९ (८३२९१)
स्नेहनोऽस्नेहनश्चैव अजितश्च महामुनिः ।
वृक्षाकारो वृक्षकेतुरनलो वायुवाहनः ॥ १३-४८-९० (८३२९२)
गण्डली मेरुधामा च देवाधिपतिरेव च ।
अथर्वशीर्षः सामास्य ऋक्सहस्रामितेक्षणः ॥ १३-४८-९१ (८३२९३)
यजुःपादभुजो गुह्यः प्रकाशो जङ्गमस्तथा ।
अमोघार्थः प्रसादश्च अभिगम्यः सुदर्शनः ॥ १३-४८-९२ (८३२९४)
उपकारः प्रियः सर्वः कनकः काञ्चनच्छविः ।
नाभिर्नन्दिकरो भावः पुष्करस्थपतिः स्थिरः ॥ १३-४८-९३ (८३२९५)
द्वादशस्त्रासनश्चाद्यो यज्ञो यज्ञसमाहितः ।
नक्तं कलिश्च कालश्च मकरः कालपूजितः ॥ १३-४८-९४ (८३२९६)
सगणो गणकारश्च भूतवाहनसारथिः ।
भस्मशयो भस्मगोप्ता भस्मभूतस्तरुर्गणः ॥ १३-४८-९५ (८३२९७)
लोकपालस्तथा लोको महात्मा सर्वपूजितः ।
शुक्लस्त्रिशुक्लः सम्पन्नः शुचिर्भूतनिषेवितः ॥ १३-४८-९६ (८३२९८)
आश्रमस्थः क्रियादस्थो विश्वकर्ममतिर्वरः ।
विशालशाखस्ताम्रोष्ठो ह्यम्बुजालः सुनिश्चलः ॥ १३-४८-९७ (८३२९९)
कपिलः कपिशः शुक्ल आयुश्चैवि परोऽपरः ।
गन्धर्वो ह्यदितिस्तार्क्ष्यः सुविज्ञेयः सुशारदः ॥ १३-४८-९८ (८३३००)
परश्वधायुधो देव अनुकारी सुबान्धवः ।
तुम्बवीणो महाक्रोध ऊर्ध्वरेता जलेशयः ॥ १३-४८-९९ (८३३०१)
उग्रो वंशकरो वंशो वंशनादो ह्यनिन्दितः ।
सर्वाङ्गरूपो मायावी सुहृदो ह्यनिलोऽनलः ॥ १३-४८-१०० (८३३०२)

बन्धनो बन्धकर्ता च सुबन्धनविमोचनः ।
स यज्ञारिः स कामारिर्महादंष्ट्रो महायुधः ॥ १३-४८-१०१ (८३३०३)
बहुधा निन्दितः शर्वः शङ्करः शङ्करोऽधनः ।
अमरेशो महादेवी विश्वदेवः सुरारिहा ॥ १३-४८-१०२ (८३३०४)
अहिर्बुध्न्योऽनिलाभश्च चेकितानो हविस्तथा ।
अजैकपाच्च कापाली त्रिशङ्कुरजितः शिवः ॥ १३-४८-१०३ (८३३०५)
धन्वन्तरिर्धूमकेतुः स्कन्दो वैश्रवणस्तथा ।
धाता शक्रश्च विष्णुश्च मित्रस्त्वष्टा ध्रुवो धरः ॥ १३-४८-१०४ (८३३०६)
प्रभावः सर्वगो वायुरर्यमा सविता रविः ।
उषङ्गुश्च विधाता च मांधाता भूतभावनः ॥ १३-४८-१०५ (८३३०७)
विभुर्वर्णविभावी च सर्वकामगुणावहः ।
पद्मनाभो महागर्भश्चन्द्रवक्त्रोऽनिलोऽनलः ॥ १३-४८-१०६ (८३३०८)
बलवांश्चोपशान्तश्च पुराणः पुण्यचञ्चुरी ।
कुरुकर्ता कुरुवासी कुरुभूतो गुणौषधः ॥ १३-४८-१०७ (८३३०९)
सर्वाशयो दर्भचारी सर्वेषां प्राणिनां पतिः ।
देवदेवः सुखासक्तः सदसत्सर्वरत्नवित् ॥ १३-४८-१०८ (८३३१०)
कैलासगिरिवासी च हिमवद्गिरिसंश्रयः ।
कूलहारी कूलकर्ता बहुविद्यो बहुप्रदः ॥ १३-४८-१०९ (८३३११)
वणिजो वर्धकी वृक्षो बकुलश्चन्दनश्छदः ।
सारग्रीवो महाजत्रुरलोलश्च महौषधः ॥ १३-४८-११० (८३३१२)
सिद्धार्थकारी सिद्धार्थश्छदो व्याकरणोत्तरः ।
सिंहनादः सिंहदंष्ट्रः सिंहगः सिंहवाहनः ॥ १३-४८-१११ (८३३१३)
प्रभावात्मा जगत्कालस्थालो लोकहितस्तरुः ।
सारङ्गो नवचक्राङ्गः केतुमाली सभावनः ॥ १३-४८-११२ (८३३१४)
भूतालयो भूतपतिरहोरात्रमनिन्दितः ॥ १३-४८-११३ (८३३१५)
वाहिता सर्वभूतानां निलयश्च विभुर्भवः ।
अमोघः संयतो ह्यश्वो भोजनः प्राणधारणः ॥ १३-४८-११४ (८३३१६)
धृतिमान्मतिमान्दक्षः सत्कृतश्च युगाधिपः ।
गोपालिर्गोपतिग्रामो गोचर्मवसनो हरिः। १३-४८-११५ (८३३१७)
हिरण्यबाहुश्च तता गुहापालः प्रवेशिनाम् ।
प्रकृष्टारिर्महाहर्षो जितकामो जितेन्द्रियः ॥ १३-४८-११६ (८३३१८)
गान्धारश्च सुवासस्च तपःसक्तो रतिर्नरः ।
महागीतो महानृत्यो ह्यप्सरोगणसेवितः ॥ १३-४८-११७ (८३३१९)
महाकेतुर्महाधातुर्नैकसानुचरश्चलः ।
आवेदनीय आदेशः सर्वगन्धसुखावहः ॥ १३-४८-११८ (८३३२०)
तोरणस्तारणो वातः वरिधी पतिखेचरः ।

संयोगो वर्धनो वृद्धो अतिवृद्धो गुणाधिकः ॥ १३-४८-११९ (८३३२१)
नित्य आत्मसहायश्च देवासुरपतिः पतिः ।
युक्तश्च युक्तबाहुश्च देवो दिवि सुपर्वणः ॥ १३-४८-१२० (८३३२२)
आषाढश्च सुषांढश्च ध्रुवोऽथ हरिणो हरः ।
वपुरावर्तमानेभ्यो वसुश्रेष्ठो महापथः ॥ १३-४८-१२१ (८३३२३)
शिरोहारी विमर्शश्च सर्वलक्षणलक्षितः ।
अक्षश्च रथयोगी च सर्वयोगी महाबलः ॥ १३-४८-१२२ (८३३२४)
समाम्नायोऽसमाम्नायस्तीर्थदेवो महारथः ।
निर्जीवो जीवनो मन्त्रः शुभाक्षो बहुकर्कशः ॥ १३-४८-१२३ (८३३२५)
रत्नप्रभूतो रत्नाङ्गो महार्णवनिपानवित् ।
मूलं विशालो ह्यमृतो व्यक्ताव्यक्तस्तपोनिधिः ॥ १३-४८-१२४ (८३३२६)
आरोहणोऽधिरोहश्च शीलधारी महायशाः ।
सेनाकल्पो महाकल्पो योगो युगकरो हरिः ॥ १३-४८-१२५ (८३३२७)
युगरूपो महारूपो महानागहनो वधः ।
न्यायनिर्वपणः पादः पण्डितो ह्यचलोपमः ॥ १३-४८-१२६ (८३३२८)
बहुमालो महामालः शशी हरसुलोचनः ।
विस्तारो लवणः कूपस्त्रियुगः सफलोदयः ॥ १३-४८-१२७ (८३३२९)
त्रिलोचनो विषण्णाङ्गो मणिविद्धो जटाधरः ।
बिन्दुर्विसर्गः सुमुखः शरः सर्वायुधः सहः ॥ १३-४८-१२८ (८३३३०)
निवेदनः सुखाजातः सुगन्धारो महाधनुः ।
गन्धपाली च भगवानुत्थानः सर्वकर्मणाम् ॥ १३-४८-१२९ (८३३३१)
मन्थानो बहुलो वायुः सकलः सर्वलोचनः ।
तलस्तालः करस्थाली ऊर्ध्वसंहननो महान् ॥ १३-४८-१३० (८३३३२)
धत्रं सुच्छत्रो विख्यातो लोकः सर्वाश्रयः क्रमः ।
मुण्डो विरूपो विकृतो दण्डी कुण्डी विकुर्वणः। १३-४८-१३१ (८३३३३)
हर्यक्षः ककुभो वज्री शतजिह्वः सहस्रपात् ।
सहस्रमूर्धा देवेन्द्रः सर्वदेवमयो गुरुः ॥ १३-४८-१३२ (८३३३४)
सहस्रबाहुः सर्वाङ्गः शरण्यः सर्वलोककृत् ।
पवित्रं त्रिककुन्मन्त्रः कनिष्ठः कृष्णपिङ्गलः। १३-४८-१३३ (८३३३५)
ब्रह्मदण्डविनिर्माता शतघ्नीपाशशक्तिमान् ।
पद्मगर्भो महागर्भो ब्रह्मगर्भो जलोद्भवः ॥ १३-४८-१३४ (८३३३६)
गभस्तिर्ब्रह्मकृद्ब्रह्मी ब्रह्मविद्ब्राह्मणो गतिः ।
अनन्तरुपो नैकात्मा तिग्मतेजाः स्वयंभुवः ॥ १३-४८-१३५ (८३३३७)
ऊर्ध्वगात्मा पशुपतिर्वातरंहा मनोजवः ।
चन्दनी पद्मनालाग्रः सुरभ्युत्तरणो नरः ॥ १३-४८-१३६ (८३३३८)
कर्णिकारमहास्रग्वी नीलमौलिः पिनाकधृत् ।

उमापतिरुमाकान्तो जाह्नवीधृगुमाधवः ॥ १३-४८-१३७ (८३३३९)
वरो वराहो वरदो वरेण्यः सुमाहास्वनः ।
महाप्रसादो दमनः शत्रुहा श्वेतपिङ्गलः ॥ १३-४८-१३८ (८३३४०)
पीतात्मा परमात्मा च प्रयतात्मा प्रधानधृत् ।
सर्वपार्श्वमुखस्त्र्यक्षो धर्मसाधारणो वरः ॥ १३-४८-१३९ (८३३४१)
चराचरात्मा सूक्ष्मात्मा अमृतो गोवृषेश्वरः ।
साध्यर्षिर्वसुरादित्यो विवस्वान्सविताऽमृतः १३-४८-१४० (८३३४२)
व्यासः सर्गः सुसंक्षेपो विस्तरः पर्ययो नरः ।
ऋतु संवत्सरो मासः पक्षः सङ्ख्यासमापनः ॥ १३-४८-१४१ (८३३४३)
कला काष्ठा लवा मात्रा मुहूर्ताहःक्षपाः क्षणाः ।
विश्वक्षेत्रं प्रजाबीजं लिङ्गमाद्यस्तु निर्गमः ॥ १३-४८-१४२ (८३३४४)
सदसद्व्यक्तमव्यक्तं पिता माता पितामहः ।
स्वर्गद्वारं प्रजाद्वारं मोक्षद्वारं त्रिविष्टपम् ॥ १३-४८-१४३ (८३३४५)
निर्वाणं ह्लादनश्चैव ब्रह्मलोक परा गतिः ।
देवासुरविनिर्माता देवासुरपरायणः ॥ १३-४८-१४४ (८३३४६)
देवासुरगुरुर्देवो देवासुरनमस्कृतः ।
देवासुरमहामात्रो देवासुगणाश्रयः ॥ १३-४८-१४५ (८३३४७)
देवासुरगणाध्यक्षो देवासुरगणाग्रणीः ।
देवातिदेवो देवर्षिर्देवासुरवरप्रदः ॥ १३-४८-१४६ (८३३४८)
देवासुरेश्वरो विश्वो देवासुरमहेश्वरः ।
सर्वदेवमयोचिन्त्यो देवतात्माऽत्मसम्भवः ॥ १३-४८-१४७ (८३३४९)
उद्भित्त्रिविक्रमो वैद्यो विरजो नीरजोऽमरः ॥
ईड्यो हस्तीश्वरो व्याघ्रो देवसिंहो नरर्षभः ॥ १३-४८-१४८ (८३३५०)
विबुधोऽग्रवरः सूक्ष्मः सर्वदेवस्तपोमयः ।
सुयुक्तः शोभनो वज्री प्रासानां प्रभवोऽव्ययः ॥ १३-४८-१४९ (८३३५१)
गुहः कान्तो निजः सर्गः पवित्रं सर्वपावनः ।
शृङ्गी शृङ्गप्रियो बभ्रू राजराजो निरामयः ॥ १३-४८-१५० (८३३५२)
अभिरामः सुरगणो विरामः सर्वसाधः ।
ललाटाक्षो विश्वदेवो हरिणो ब्रह्मवर्चसः ॥ १३-४८-१५१ (८३३५३)
स्थावराणां पतिश्चैव नियमन्द्रियवर्धनः ।
सिद्धार्थः सिद्धभूतार्थोऽचिन्त्यः सत्यव्रतः शुचिः ॥ १३-४८-१५२ (८३३५४)
व्रताधिपः परं ब्रह्म भक्तानां परमा गतिः ।
विमुक्तो मुक्ततेजाश्च श्रीमाञ्श्रीवर्धनो जगत् ॥ १३-४८-१५३ (८३३५५)
यथा प्रधानं भगवानिति भक्त्या स्तुतो मया ।
यन्न ब्रह्मादयो देवा विदुस्तत्त्वेन नर्षयः ।
स्तोतव्यमर्च्यं वन्द्यं च कः स्तोष्यति जगत्पतिम् ॥ १३-४८-१५४ (८३३५६)

भक्तिं त्वेवं पुरस्कृत्य मया यज्ञपतिर्विभुः ।
ततोऽभ्यनुज्ञां सम्प्राप्य स्तुतो मतिमतां वरः ॥ १३-४८-१५५ (८३३५७)
शिवमेभिः स्तुवन्देवं नामभिः पुष्टिवर्धनैः ।
नित्ययुक्तः शुचिर्भक्तः प्राप्नोत्यात्मानमात्मना ॥ १३-४८-१५६ (८३३५८)
एतद्धि परमं ब्रह्म परं ब्रह्माधिगच्छति ॥ १३-४८-१५७ (८३३५९)
ऋषयश्चैव देवाश्च स्तुवन्त्येतेन तत्परम् ॥ १३-४८-१५८ (८३३६०)
स्तूयमानो महादेवस्तष्यते नियतात्मभिः ।
भक्तानुकम्पी भगवानात्मसंस्थाकरो विभुः ॥ १३-४८-१५९ (८३३६१)
तथैव च मनुष्येषु ये मनुष्याः प्रधानतः ।
आस्तिकाः श्रद्धधानाश्च बहुभिर्जन्मभिः स्तवैः ॥ १३-४८-१६० (८३३६२)
भक्त्या ह्यनन्यमीशानं परं देवं सनातनम् ।
कर्मणा मनसा वाचा भावेनामिततेजसः ॥ १३-४८-१६१ (८३३६३)
शयाना जाग्रमाणाश्च व्रजन्नुपविशंस्तथा ।
उन्मिषन्निमिषंश्चैव चिन्तयन्तः पुनःपनः ॥ १३-४८-१६२ (८३३६४)
शृण्वन्तः श्रावयन्तश्च कथयन्तश्च ते भवम् ।
स्तुवन्तः स्तूयामानाश्च तुष्यन्ति च रमन्ति च ॥ १३-४८-१६३ (८३३६५)
जन्मकोटिसहस्रेषु नानासंसारयोनिषु ।
जन्तोर्विगतपापस्य भवे भक्तिः प्रजायते ॥ १३-४८-१६४ (८३३६६)
उत्पन्ना च भवे भक्तिरनत्या सर्वभावतः ।
भाविनः कारणे चास्य सर्वयुक्तस्य सर्वथा ॥ १३-४८-१६५ (८३३६७)
एतद्देवेषु दुष्प्रापं मनुष्येषु न लभ्तते ।
निर्विघ्ना निश्चला रुद्रे भक्तिरव्यभिचारिणी ॥ १३-४८-१६६ (८३३६८)
तस्यैव च प्रसादेन भक्तिरुत्पद्यते नृणाम् ।
येन यान्ति परां सिद्धिं तद्भागवतचेतसः ॥ १३-४८-१६७ (८३३६९)
ये सर्वभावानुगताः प्रपद्यन्ते महेश्वरम् ।
प्रपन्नवत्सलो देवः संसारात्तान्समुद्धरेत् ॥ १३-४८-१६८ (८३३७०)
एवमन्ये विकुर्वन्ति देवाः संसारमोचनम् ।
मनुष्याणामृते देवं नान्या शक्तिस्तपोबलम् ॥ १३-४८-१६९ (८३३७१)
इति तेनेन्द्रकल्पेन भगवान्सदसत्पतिः ।
कृत्तिवासाः स्तुतः कृष्ण तण्डिना शुभबुद्धिना ॥ १३-४८-१७० (८३३७२)
स्तवमेतं भगवतो ब्रह्मा स्वयमधारयत् ।
गीयते च स बुद्ध्येत ब्रह्म शंकरसन्निधौ ॥ १३-४८-१७१ (८३३७३)
इदं पुण्यं पवित्रं च सर्वदा पापनाशनम् ।
योगदं मोक्षदं चैव स्वर्गदं तोषदं तथा ॥ १३-४८-१७२ (८३३७४)
एवमेतत्पठन्ते य एकभक्त्या तु शङ्करम् ।
या गतिः साङ्ख्ययोगानां व्रजन्त्येतां गतिं तदा ॥ १३-४८-१७३ (८३३७५)

स्तवमेतं प्रयत्नेन सदा रुद्रस्य सन्निधौ ।
अब्धमेकं चरेद्भक्तः प्राप्नुयादीप्सितं फलम् ॥ १३-४८-१७४ (८३३७६)
एतद्रहस्यं परमं ब्रह्मणो हृदि संस्थितम् ।
ब्रह्मा प्रोवाच शक्राय शक्रः प्रोवाच मृत्यवे ॥ १३-४८-१७५ (८३३७७)
मृत्युः प्रोवाच रुद्रेभ्यो रुद्रेभ्यस्तण्डिमागमत् ।
महता तपसा प्राप्तस्तण्डिना ब्रह्मसद्मनि ॥ १३-४८-१७६ (८३३७८)
तण्डिः प्रोवाच शुक्राय गौतमाय च भार्गवः ।
वैवस्वताय मनवे गौतमः प्राह माधव ॥ १३-४८-१७७ (८३३७९)
नारायणाय साध्याय समाधिष्ठाय धीमते ।
यमाय प्राह भगवान्साध्यो नारायणोच्युतः ॥ १३-४८-१७८ (८३३८०)
नाचिकेताय भगवानाह वैवस्वतो यमः ।
मार्कण्डेयाय वार्ष्णेय नाचिकेतोऽभ्यभाषत ॥ १३-४८-१७९ (८३३८१)
मार्कण्डेयान्मय प्राप्तो नियमेन जनार्दन ।
तवाप्यहममित्रघ्न स्तवं दद्यां ह्यविश्रुतम्। १३-४८-१८० (८३३८२)
स्वर्ग्यमारोग्यमायुष्यं धन्यं वेदेनि संमितम् ।
नास्य विघ्नं विकुर्वन्ति दानवा यक्षराक्षसाः ॥ १३-४८-१८१ (८३३८३)
पिशाचा यातुधाना वा गुह्यका भुजगा अपि ।
यः पठेत शुचिः पार्थ ब्रह्मचारी जितेन्द्रियः ।
अभग्नयोगो वर्षं तु सोऽश्वमेधफलं लभेत् ॥ ॥ १३-४८-१८२ (८३३८४)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
अष्टचत्वारिंशोऽध्यायः ॥ ४८ ॥

Mahabharata - Anushaasana Parva - Chapter Footnotes

७-४८-३ सत्यैरन्वर्यैः वेदे कृतात्मना दत्तचित्तेन कृतैः
वेदात्पृथक्कृतै ॥
७-४८-६ वरय प्रार्थत ॥
७-४८-२० पवित्रं पापनाशकम् । मेध्यं
यज्ञादिफलप्रदम्। मङ्गलमभ्युदयकरम्। उत्तमं कल्याणं
परमानन्दरूपम् ॥

---

अनुससनपर्व-अध्यय०४९
॥ श्रीः ॥
१३.४९. अध्यायः ४९

अथ दानधर्मपर्व ॥ १ ॥

Mahabharata - Anushaasana Parva - Chapter Topics
वैशम्पानेन जनमेजयंप्रति
द्वैपायनादिभिर्युधिष्ठिरम्प्रत्युक्तमहादेवमहिमानुवादः ॥ १ ॥

Mahabharata - Anushaasana Parva - Chapter Text

वैशम्पायन उवाच ।
महायोगी तु तं प्राह कृष्णद्वैपायनो मुनिः ।
पठस्व पुत्र भद्रं ते प्रीयतां ते महेश्वरः ॥ १३-४९-१ (८३३८५)
पुरा पुत्र मया मेरौ तप्यता परमं तपः ।
पुत्रहेतोर्महाराज स्तव एषोऽनुकीर्तितः ॥ १३-४९-२ (८३३८६)
लब्धवानीप्सितं काममहं वै पाण्डुनन्दन ।
तथा त्वमपि शर्वाद्धि सर्वान्कामानवाप्स्यसि ॥ १३-४९-३ (८३३८७)
कपिलश्च ततः प्राह साङ्ख्यर्षिर्देवसम्मतः ।
मया जन्मान्यनेकानि भक्त्या चाराधितो भवः ।
प्रीतश्च भगवाञ्ज्ञानं ददौ मम भवान्तकम् ॥ १३-४९-४ (८३३८८)
चारुशीर्षस्ततः प्राह शक्रस्य दयितः सखा ।
आलम्बायन इत्येवं विश्रुतः करुणात्मकः ॥ १३-४९-५ (८३३८९)
मया गोकर्णमासाद्य तपस्तप्त्वा शतं समाः ।
अयोनिजानां दान्तानां धर्मज्ञानां सुवर्चसाम् ॥ १३-४९-६ (८३३९०)
अजराणामदुःखानां शतवर्षसहस्रिणाम् ।
लब्धं पुत्र शतं शर्वात्पुरा पाण्डुनृपात्मज ॥ १३-४९-७ (८३३९१)
वाल्मीकिश्चाह भगवान्युधिष्ठिरमिदं वचः ।
विवादे साग्निमुनिभिर्ब्रह्मघ्नो वै भवानिति ॥ १३-४९-८ (८३३९२)
उक्तः क्षणेन चाविष्टस्तेनाधर्मेण भारत ।
सोऽहमीशानमनघममोघं शरणं गतः ॥ १३-४९-९ (८३३९३)
मुक्तश्चास्मि ततः पापैस्ततो दुःखविनाशनः ।
आह मां त्रिपुरघ्नो वै यशस्तेऽग्र्यं भविष्यति ॥ १३-४९-१० (८३३९४)
जामदग्न्यश्च कौन्तेयमिदं धर्मभृतांवरः ।
ऋषिमध्ये स्थितः प्राह ज्वलन्निव दिवाकरः ॥ १३-४९-११ (८३३९५)
पितृविप्रवधेनाहमार्तो वै पाण्डवाग्रज ।
शुचिर्भूत्वा महादेवं गतोस्मि शरणं नृप ॥ १३-४९-१२ (८३३९६)
नामभिश्चास्तुवं देवं ततस्तुष्टोऽभवद्भवः ।
परशुं च ततो देवो दिव्यान्यस्त्राणि चैव मे ॥ १३-४९-१३ (८३३९७)
पापं च ते न भविता अजेयश्च भविष्यसि ।
न ते प्रभविता मृत्युरजरश्च भविष्यसि ॥ १३-४९-१४ (८३३९८)

आह मां भगवानेवं शिखण्डी शिवविग्रहः ।
तदवाप्तं च मे सर्वं प्रसादात्तस्य धीमतः ॥ १३-४९-१५ (८३३९९)
विश्वामित्रस्तदोवाच क्षत्रियोऽहं तदाऽभवम् ।
ब्राह्मणोऽहं भवानीति मया चाराधितो भवः ।
तत्प्रसादान्मया प्राप्तं ब्राह्मण्यं दुर्लभं महत् ॥ १३-४९-१६ (८३४००)
असितो देवलश्चैव प्राह पाण्डुसुतं नृपम् ॥ १३-४९-१७ (८३४०१)
शापाच्छक्रस्य कौन्तेय विभो धर्मोऽनशत्तदा ।
तन्मे धर्मं यशश्चाग्र्यमायुश्चैवाददत्प्रभुः ॥ १३-४९-१८ (८३४०२)
ऋषिर्गृत्समदो नाम शक्रस्य दयितः सखा ।
प्राहाजमीढं भगवान्बृहस्पतिसमद्युतिः ॥ १३-४९-१९ (८३४०३)
वरिष्ठो नाम भगवांश्चाक्षुषस्य मनोः सुतः ।
शतक्रतोरचिन्त्यस्य सत्रे वर्षसहस्रिके ॥ १३-४९-२० (८३४०४)
वर्तमानेऽब्रवीद्वाक्यं साम्नि ह्युच्चारिते मया ।
रथन्तरे द्विजश्रेष्ठ न सम्यगिति वर्तते ॥ १३-४९-२१ (८३४०५)
समीक्षस्व पुनर्बुद्ध्या पापं त्यक्त्वा द्विजोत्तम ।
अयज्ञवाहिनं पापमकार्षीस्त्वं सुदुर्मते ॥ १३-४९-२२ (८३४०६)
एवमुक्त्वा महाक्रोधः प्राह शम्भुं पुनर्वचः ।
प्रज्ञया रहितो दुःखी नित्यभीतो वनेचरः ॥ १३-४९-२३ (८३४०७)
दशवर्षसहस्राणि दशाष्टौ च शतानि च ।
नष्टपानीयपवने मृगैरन्यैश्च वर्जिते ॥ १३-४९-२४ (८३४०८)
अयज्ञीयद्रुमे देशे रुरुसिंहनिषेविते ।
भविता त्वं मृगः क्रूरो महादुःखसमन्वितः ॥ १३-४९-२५ (८३४०९)
तस्य वाक्यस्य निधने पार्थ जातो ह्यहं मृगः ।
ततो मां शरणं प्राप्तं प्राह योगी महेश्वरः ॥ १३-४९-२६ (८३४१०)
अजरश्चामरश्चैव भविता दुखवर्जितः ।
साम्यं ममास्तु ते सौख्यं युवयोर्वर्धतां क्रतुः ॥ १३-४९-२७ (८३४११)
अनुग्रहानेवमेष करोति भगवान्विभुः ।
अयं धाता विधाता च सुखदुःखे च सर्वदा ॥ १३-४९-२८ (८३४१२)
अचिन्त्य एष भगवान्कर्मणा मनसा गिरा ।
न मे तात युधिश्रेष्ठ विद्यया पण्डितः समः ॥ १३-४९-२९ (८३४१३)
वासुदेवस्तदोवाच पुनर्मतिमतांवरः ।
सुवर्णाक्षो महादेवस्तपसा तोषितो मया ॥ १३-४९-३० (८३४१४)
ततोऽथ भगवानाह प्रीतो मा वै युधिष्ठिर ।
अर्थात्प्रियतरः कृष्ण मत्प्रसादाद्भविष्यसि ॥ १३-४९-३१ (८३४१५)
अपराजितश्च युद्धेषु तेजश्चैवानलोपमम् ।
एवं सहस्रशश्चान्यान्महादेवो वरं ददौ ॥ १३-४९-३२ (८३४१६)

मणिमन्थेऽथ शैले वै पुरा सम्पूजितो मया ।
वर्षायुतासहस्राणां सहस्रं शतमेव च ॥ १३-४९-३३ (८३४१७)
ततो मां भगवान्प्रीत इदं वचनमब्रवीत् ।
वरं वृणीष्व भद्रं ते यस्ते मनसि वर्तते ॥ १३-४९-३४ (८३४१८)
ततः प्रणम्य शिरसा इदं वचनमब्रवम् ।
यदि प्रीतो महादेवो भक्त्या परमया प्रभुः ॥ १३-४९-३५ (८३४१९)
नित्यकालं तवेशान भक्तिर्भवतु मे स्थिरा ।
एवमस्त्विति भगवांस्तत्रोक्त्वान्तरधीयत ॥ १३-४९-३६ (८३४२०)
जैगीषव्य उवाच। १३-४९-३७क्ष् (६८६६)
ममाष्टगुणमैश्वर्यं दत्तं भगवता पुरा ।
यत्नेनान्येन बलिना वाराणस्यां युधिष्ठिर ॥ १३-४९-३७ (८३४२१)
गर्ग उवाच। १३-४९-३८क्ष् (६८६७)
चतुःषष्ष्यङ्गमददत्कलाज्ञानं ममाद्भुतम् ।
सरस्वत्यास्तटे तुष्टो मनोयज्ञेन पाण्डव ॥ १३-४९-३८ (८३४२२)
तुल्यं मम सहस्रं तु सुतानां ब्रह्मवादिनाम् ।
आयुश्चैव सपुत्रस्य संवत्सरशतायुतम् ॥ १३-४९-३९ (८३४२३)
पराशर उवाच। १३-४९-४०क्ष् (६८६८)
प्रसाद्येह पुरा शर्वं मनसाऽचिन्तयं नृप ।
महातपा महातेजा महायोगी महायशाः ॥ १३-४९-४० (८३४२४)
वेदव्यासः श्रियावासो ब्राह्मणः करुणान्वितः ।
अप्यसावीप्सितः पुत्रो मम स्याद्वै महेश्वरात् ॥ १३-४९-४१ (८३४२५)
इति मत्वा हृदि मतं प्राह मां सुरसत्तमः ।
मयि सम्भावना यास्याः फलात्कृष्णो भविष्यति ॥ १३-४९-४२ (८३४२६)
सावर्णस्य मनोः सर्गे सप्तर्षिश्च भविष्यति ।
वेदानां च स वै वक्ता कुरुवंशकरस्तथा ॥ १३-४९-४३ (८३४२७)
इतिहासस्य कर्ता च पुत्रस्ते जगतो हितः ।
भविष्यति महेन्द्रस्य दयितः स महामुनिः ॥ १३-४९-४४ (८३४२८)
अजरश्चामरश्चैव पराशर सुतस्तव ।
एवमुक्त्वा स भगवांस्तत्रैवान्तरधीयत ।
युधिष्ठिर महायोगी वीर्यवानक्षयोऽव्ययः ॥ १३-४९-४५ (८३४२९)
माण्डव्य उवाच। १३-४९-४६क्ष् (६८६९)
अचोरश्चोरशङ्कायां शूले भिन्नो ह्यहं तदा ॥ १३-४९-४६ (८३४३०)
तत्रस्थेन स्तुतो देवः प्राह मां वै नरेश्वर ।
मोक्षं प्राप्स्यसि शूलाच्च जीविष्यसि समार्बुदम् ॥ १३-४९-४७ (८३४३१)
रुजा शूलकृता चैव न ते विप्र भविष्यति ।
आधिभिर्व्याधिभिश्चैव वर्जितस्त्वं भविष्यति ॥ १३-४९-४८ (८३४३२)

पादाच्चतुर्थात्सम्भूत आत्मा यस्मान्मुने तव ।
त्वं भविष्यस्यनुपमो जन्म वै सफलं कुरु ॥ १३-४९-४९ (८३४३३)
तीर्थाभिषेकं सकलं त्वमविघ्नेन चाप्स्यसि ।
स्वर्गं चैवाक्षयं विप्र विदधामि तवोर्जितम् ॥ १३-४९-५० (८३४३४)
एवमुक्त्वा तु भगवान्वरेण्यो वृषवाहनः ।
महेश्वरो महाराजः कृत्तिवासा महाद्युतिः ।
सगणो दैवतश्रेष्ठस्तत्रैवान्तरधीयत ॥ १३-४९-५१ (८३४३५)
गालव उवाच। १३-४९-५२क्ष् (६८७०)
विश्वामित्राभ्यनुज्ञातो ह्यहं पितरमागतः ।
अब्रवीन्मां ततो माता दुःखिता रुदती भृशम् ॥ १३-४९-५२ (८३४३६)
कौशिकेनाभ्यनुज्ञातं पुत्रं देवविभूषितम् ।
न तात तरुणं दान्तं पिता त्वां पश्यतेऽनघ ॥ १३-४९-५३ (८३४३७)
श्रुत्वा जनन्या वचनं निराशो गुरुदर्शने ।
नियतात्मा महादेवमपश्यं सोऽब्रवीच्च माम् ॥ १३-४९-५४ (८३४३८)
पिता माता च ते त्वं च पुत्र मृत्युविवर्जिताः ।
भविष्यथ विश क्षिप्रं द्रष्टासि पितरं क्षये ॥ १३-४९-५५ (८३४३९)
अनुज्ञातो भगवता गृहं गत्वा युधिष्ठिर ।
अपश्यं पितरं तात इष्टिं कृत्वा विनिःसृतम् ।
उपस्पृश्य गृहीत्वेध्मं कुशांश्च शरणाकुरून् ॥ १३-४९-५६ (८३४४०)
तान्विसृज्य च मां प्राह पिता सास्राविलेक्षणः ।
प्रणमन्तं परिष्वज्य मूर्ध्न्युपाघ्राय पाण्डव ॥ १३-४९-५७ (८३४४१)
दिष्ट्या दृष्टोसि मे पुत्र कृतविद्य इहागत ॥ १३-४९-५८ (८३४४२)
वैशम्पायन उवाच। १३-४९-५९क्ष् (६८७१)
एतान्यत्यद्भुतान्येव कर्माण्यथ महात्मनः ।
प्रोक्तानि मुनिभिः श्रुत्वा विस्मयामास पाण्डवः ॥ १३-४९-५९ (८३४४३)
ततः कृष्णोऽब्रवीद्वाक्यं पुनर्मतिमतांवरः ।
युधिष्ठिरं धर्मनिधिं पुरुहूतमिवेश्वरः ॥ १३-४९-६० (८३४४४)
उपमन्युर्मयि प्राह तपन्निव दिवाकरः ।
अशुभैः पापकर्माणो ये नराः कलुषीकृताः ॥ १३-४९-६१ (८३४४५)
ईशानं न प्रपद्यन्ते तमोराजसवृत्तयः। १३-४९-६२ (८३४४६)
ईश्वरं सम्प्रपद्यन्ते द्विजा भावितभावनाः ॥ १३-४९-६३ (८३४४७)
सर्वथा वर्तमानोपि यो भक्तः परमेश्वरे ।
सदृशोऽरण्यवासीनां मुनीनां भावितात्मनाम् ॥ १३-४९-६४ (८३४४८)
ब्रह्मत्वं केशवत्वं वा शक्रत्वं वा सुरैः सह ।
त्रैलोक्यस्याधिपत्यं वा तुष्टो रुद्रः प्रयच्छति १३-४९-६५ (८३४४९)
मनसाऽपि शिवं तात ये प्रपद्यन्ति मानवाः ।

विधूय सर्वपापानि देवैः सह वसन्ति ते ॥१३-४९-६६ (८३४५०)
भित्त्वाभित्त्वा च कूलानि हुत्वा सर्वमिदं जगत् ।
जयेद्देवं विरूपाक्षं न स पापेन लिप्यते ॥१३-४९-६७ (८३४५१)
सर्वलक्षणहीनोपि युक्तो वा सर्वपातकैः ।
सर्वं तुदति तत्पापं भावयञ्शिवमात्मना १३-४९-६८ (८३४५२)
कीटपक्षिपतङ्गानां तिरश्चामपि केशव ।
महादेवप्रपन्नानां न भयं विद्यते क्वचित् ॥१३-४९-६९ (८३४५३)
एवमेव महादेवं भक्ता ये मानवा भुवि ।
न ते संसारवशगा इति मे निश्चिता मतिः ।
ततः कृष्णोऽब्रवीद्वाक्यं धर्मपुत्रं युधिष्ठिरम् ॥ १३-४९-७० (८३४५४)
विष्णुरुवाच।१३-४९-७१क्ष् (६८७२)
आदित्यचन्द्रावनिलानलौ च
द्यौर्भूमिरापो वसवोऽथ विश्वे ।
धाताऽर्यमा शुक्रबृहस्पती च
वेदा यज्ञा दक्षिणा वेदवाहाः। १३-४९-७१ (८३४५५)
सोमो यष्टा यच्च हव्यं हविश्च
रक्षा दीक्षा संयमा ये च केचित् ॥ १३-४९-७२ (८३४५६)
स्वाहा वौषट् ब्राह्मणाः सौरभेयी
धर्मं चाग्र्यं कालचक्रं बलं च ।
यशो दमो बुद्धिमतां स्थितिश्च
शुभाशुभं ये मुनयश्च सप्त ॥ १३-४९-७३ (८३४५७)
अग्र्या बुद्धिर्मनसा दर्शने च
स्पर्शश्चाग्र्यः कर्मणां या च सिद्धिः ।
गणा देवानामूष्मपाः सोमपाश्च
लेखाः सुयामास्तुषिता ब्रह्मकायाः ॥ १३-४९-७४ (८३४५८)
आभासुरा गन्धपा धूमपाश्च
वाचा विरुद्धाश्च मनोविरुद्धाः ।
शुद्धाश्च निर्माणरताश्च देवाः
स्पर्शाशना दर्शपा आज्यपाश्च ॥ १३-४९-७५ (८३४५९)
चिन्त्यद्योता ये च देवेषु मुख्या
ये चाप्यन्ते देवताश्चाजमीढ ।
सुपर्णगन्धर्वपिशाचदानवा
यक्षास्तथा चारणपन्नगाश्च ॥ १३-४९-७६ (८३४६०)
स्थूलं सूक्ष्मं मृदु चाप्यसूक्ष्मं
दुःखं सुखं दुःखमनन्तरं च ।
साङ्ख्यं योगं तत्पराणां परं च

शर्वाञ्जातं विद्धि यक्कककककककककककककक॥ १३-४९-७७ (८३४६१)
तत्सम्भूता भूतकृतो वरेण्या
सर्वे देवा भुवनस्यास्य गोपाः ।
आविश्येमां धरणीं येऽभ्यरक्षन्
पुरातनीं तस्य देवस्य सृष्टिम् ॥ १३-४९-७८ (८३४६२)
विचिन्वन्तस्तपसा तत्स्थवीयः
किञ्चित्तत्त्वं प्राणहेतोर्नतोस्मि ।
ददातु वेदः स वरानिहेष्टा-
नभिष्टुतोः नः प्रभुरव्ययः सदा ॥ १३-४९-७९ (८३४६३)
इमं स्तवं सन्नियतेन्द्रियश्च
भूत्वा शुचिर्यः पुरुषः पठेत ।
अभग्नयोगो नियतो मासमेकं
सम्प्राप्नुयादश्वमेधे फलं यत् ॥ १३-४९-८० (८३४६४)
वेदान्कृत्स्नान्ब्राह्मणः प्राप्नुयात्तु
जयेन्नृपः पार्थ महीं च कृत्स्नाम् ।
वैश्यो लाभं प्राप्नुयान्नैपुणं च
शूद्रो गतिं प्रेत्य तथा सुखं च ॥ १३-४९-८१ (८३४६५)
स्तवराजमिमं कृत्वा रुद्राय दधिरे मनः ।
सर्वदोषापहं पुण्यं पवित्रं च यशस्विनः ॥१३-४९-८२ (८३४६६)
यावन्त्यस्य शरीरेषु रोमकूपाणि भारतः ।
तावन्त्यब्दसहस्राणि स्वर्गे वसति मानवः ॥ ॥१३-४९-८३ (८३४६७)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
एकोनपञ्चाशोऽध्यायः ॥ ४९ ॥

Mahabharata - Anushaasana Parva - Chapter Footnotes

७-४९-१ पठस्व स्तवमिति शेषः । हे पुत्र युधिष्ठिर ॥
७-४९-५ आलम्बायन आलम्बगोत्रः । चतुःशीर्ष इति ट थ पाठः ॥
७-४९-७ हे पुत्र शतं पुत्राणामिति शेषः ॥
७-४९-८ विवादे वेदविपरीतवादे । अग्निसहितैर्मुनिभिरुक्त इति सम्बन्धः ॥
७-४९-९ तेन वेदविरोधजेन ॥
७-४९-१२ पितृतुल्या विप्रा ज्येष्ठो भ्राता पितुः सम इतिस्मृतेर्ज्येष्ठा
भ्रातरस्तेषां वधेन । स तु विप्रवधेनेति ट थ पाठः ॥
७-४९-१५ शिखण्डी कपर्दी । शिवविग्रहः कल्याणशरीरः ॥
७-४९-१८ प्रभुः प्रार्थितः सन्निति शेषः ॥
७-४९-२१ उच्चारिते अन्यथेति शेषः ॥

७-४९-२२ पापं वितथाभिनिवेशं त्यक्त्वा समीक्षस्व विचारय
। अयज्ञवाहिनं न यज्ञं वहति तं पापमवाक्षरपाठजमपराधम् ॥
७-४९-२३ निधने अन्दे सद्य एवेत्यर्थः ॥
७-४९-२७ साम्यभवैषम्यम् । युवयोर्गृत्समदशतक्रत्वोः ॥
७-४९-३१ अर्थः सर्वस्मात्प्रियस्ततोऽपि प्रियोऽन्तरात्मा तत्तुल्यः
सर्वेषां भविष्यसीत्यर्थः ॥
७-४९-३३ पूरा पूर्वावतारे ॥
७-४९-४२ या तव मयि सम्भावना एतस्मात्फलमहं प्राप्स्ये इति अस्याः
फलात् पुण्यात्तव कृष्णोनाम पुत्रो भविष्यति ॥
७-४९-४९ पादाच्चतुर्थात् । तपः शौचं दया सत्यमिति चत्वारो
धर्मस्य पादास्तेषां चतुर्थात्सत्यादेव तवात्मा शरीरम् ॥
७-४९-५२ पितरं द्रक्ष्ये इति बुद्ध्या गृहमागतः । दुःखिता
वैधव्यदुःखेन ॥
७-४९-५५ क्षये गृहे । विश प्रविश ॥
७-४९-५६ शरणाकुरून् वाय्वाघातेन वा स्वयं वा पक्वतया फलानामधः
पतनेन विशरणं शरणा तत्प्रधानाः कुरवोऽन्नानि शरणाकुरवस्तान्
। शॄ विशरणेऽस्माद्भावे ल्युः ॥
७-४९-५७ सास्रत्वादाविले ईक्षणे यस्य ॥
७-४९-६० ईश्वरो विष्णुः ॥
७-४९-६७ कूलानि गृहतटाकादीनि ॥
७-४९-६८ आत्मना चित्तेन ॥
७-४९-७१ आदित्यचन्द्रावित्यादिसर्वं सर्वाज्जातं विद्धीति सप्तमस्थेनान्वयः ॥
७-४९-७२ उपनिषत् । प्राधान्यात्पृथक्कीर्तनम् । वेदवाहा वेदपाठकाः ॥
७-४९-७५ वाचाविरुद्धाः । वाङ्नियमनशीलाः । निर्माणं अनेकधाभवनं
योगेनानेकशरीरधारणं तत्र रताः ॥
७-४९-७७ चिन्त्यद्योताः सङ्कल्पितमात्रं वस्तु येषां सद्यः पुरतः
प्रकाशते तादृशाः ॥

---

अनुससनपर्व-अध्यय०५०
॥ श्रीः ॥
१३.५०. अध्यायः ५०

अथ दानधर्मपर्व ॥ १ ॥
Mahabharata - Anushaasana Parva - Chapter Topics
भीष्मेण युधिष्ठिरम्प्रति स्त्रीस्वभावप्रदर्शनाय
दृष्टान्ततयाऽष्टावक्रोपाख्यानकथनारम्भः ॥ अष्टावक्रेण

भार्यात्वाय वदान्यंप्रति कन्यायाचनम् ॥ २ ॥
तथा वदाव्यनियोगादुत्तरदिगन्तगमनम् ॥ ३ ॥
तथोत्तरदिगभिमानिन्या जरतीरूप धारिण्या संवादः ॥ ४ ॥

Mahabharata - Anushaasana Parva - Chapter Text

युधिष्ठिर उवाच ।
यदिदं सहधर्मेति प्रोच्यते भरतर्षभ ।
पाणिग्रहणकाले तु स्त्रीणामेतत्कथं स्मृतम् ॥ १३-५०-१ (८३४६८)
आर्ष एष भवेद्धर्मः प्राजापत्योऽथवाऽसुरः ।
यदेतत्सहधर्मेति पूर्वमुक्तं महर्षिभिः ॥ १३-५०-२ (८३४६९)
सन्देहः सुमहानेष विरुद्ध इति मे मतिः ।
इह यः सहधर्मो वै प्रेत्यायं विहितः क्वनु ॥ १३-५०-३ (८३४७०)
स्वर्गो मृतानां भवति सहधर्मः पितामह ।
पूर्वमेकस्तु म्रियकककककककककककस्तिष्ठते वद ॥ १३-५०-४ (८३४७१)
नानाधर्मफलोपेता नानाकर्मनिवासिताः ।
नानानिरयनिष्ठान्ता मानुपा बहवो यदा ॥ १३-५०-५ (८३४७२)
अनृताः स्त्रिय इत्येवं सूत्रकारो व्यवस्यति ।
यदाऽनृताः स्त्रियस्तात सहधर्मः कुतः स्मृतः ॥ १३-५०-६ (८३४७३)
अनृताः स्त्रिय इत्येवं वेदेष्वपि हि पठ्यते ।
धर्मो यः पूर्विको दृष्ट उपचारः क्रियाविधिः ॥ १३-५०-७ (८३४७४)
गहरं प्रतिभात्येतन्मम चिन्तयतोऽनिशम् ।
निःसन्देहमिदं सर्वं पितामह यथाश्रुतिः ॥ १३-५०-८ (८३४७५)
यदैतद्यादृशं चैतद्यथा चैतत्प्रवर्तितम् ।
निखिलेन महाप्राज्ञ भवानेतद्ब्रवीतु मे ॥ १३-५०-९ (८३४७६)
भीष्म उवाच। १३-५०-१०क्ष् (६८७३)
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
अष्टावक्रस्य संवादं दिशया सह भारत ॥ इ १३-५०-१० (८३४७७)
निर्विष्टुकामस्तु पुरा अष्टावक्रो महातपाः ।
ऋषेरथ वदान्यस्य वव्रे कन्यां महात्मनः ॥ १३-५०-११ (८३४७८)
सुप्रभां नाम वै नाम्ना रूपेणाप्रतिमां भुवि ।
गुणप्रभावशीलेन चारित्रेण च शोभनाम् ॥ १३-५०-१२ (८३४७९)
सा तस्यर्षेर्मनो दृष्टा जहार शुभलोचना ।
वनराजी यथा चित्रा वसन्ते कुसुमाञ्चिता ॥ १३-५०-१३ (८३४८०)
ऋषिस्तमाह देया मे सुता तुभ्यं हि तच्छृणु ॥ १३-५०-१४ (८३४८१)
ग्अनन्यस्त्रीजनः प्राज्ञो ह्यप्रवासी प्रियंवदः ।

सुरूपः सम्मतो वीरः शीलवान्भोगभुक्छुचिः ॥ १३-५०-१५ (८३४८२)
दारानुमतयज्ञश्च सुनक्षत्रामथोद्वहेत् ।
सभृत्यः स्वजनोपेत इह प्रेत्य च मोदते ॥ १३-५०-१६ (८३४८३)
गच्छ तावद्दिशं पुण्यामुत्तरां द्रक्ष्यसे ततः ॥ १३-५०-१७ (८३४८४)
अष्टावक्र उवाच। १३-५०-१८क्ष् (६८७४)
किं द्रष्टव्यं मया तत्र वक्तुमर्हति मे भवान् ।
तथेदानीं मयो कार्यं यथा वक्ष्यति मां भवान् ॥ १३-५०-१८ (८३४८५)
वदान्य उवाच। १३-५०-१९क्ष् (६८७५)
धनदं समतिक्रम्य हिमवन्तं च पर्वतम् ।
रुद्रस्यायतनं दृष्ट्वा सिद्धचारणसेवितम् ॥ १३-५०-१९ (८३४८६)
संहृष्टैः पार्षदैर्जुष्टं नृत्यद्भिर्विविधाननैः ।
दिव्याङ्गरागैः पैशाचैरन्यैर्नानाविधैः प्रभोः ॥ १३-५०-२० (८३४८७)
पाणितालसुतालैश्च शम्पातालैः समैस्तथा ।
सम्प्रहृष्टैः प्रनृत्यद्भिः शर्वस्तत्र निषेव्यते ॥ १३-५०-२१ (८३४८८)
इष्टं किल गिरौ स्थानं तद्दिव्यमिति शुश्रुम ।
नित्यं सन्निहितो देवस्तथा ते पार्षदाः स्मृताः ॥ १३-५०-२२ (८३४८९)
तत्र देव्या तपस्तप्तं सङ्करार्थं सुदुश्चरम् ।
अतस्तदिष्टं देवस्य तथोमाया इति श्रुतिः ॥ १३-५०-२३ (८३४९०)
पूर्वे तत्र महापार्श्वे देवस्योत्तरतस्तथा ॥
ऋतवः कालरात्रिश्च ये दिव्या ये च मानुषाः ॥ १३-५०-२४ (८३४९१)
देवं चोपासते सर्वे रूपिणः किल तत्र ह ।
तदतिक्रम्य भवनं त्वया यातव्यमेव हि ॥ १३-५०-२५ (८३४९२)
ततो नीलं वनोद्देशं द्रक्ष्यसे मेघसन्निभम् ।
रमणीयं मनोग्राहि तत्र वै द्रक्ष्यसे स्त्रियम् ॥ १३-५०-२६ (८३४९३)
तपस्विनीं महाभागां वृद्धां दीक्षामनुष्ठिताम् ।
द्रष्टव्या सा त्वया तत्र सम्पूज्या चैव यत्नतः ॥ १३-५०-२७ (८३४९४)
तां दृष्ट्वा विनिवृत्तस्त्वं ततः पाणिं ग्रहीष्यसि ।
यद्येष समयः सर्वः साध्यतां तत्र गम्यताम् ॥ १३-५०-२८ (८३४९५)
अष्टावक्र उवाच। १३-५०-२९क्ष् (६८७६)
तथाऽस्तु साधयिष्यामि तत्र यास्याम्यसंशयम् ।
यत्र त्वं वदसे साधो भवान्भवतु सत्यवाक् ॥ १३-५०-२९ (८३४९६)
भीष्म उवाच। १३-५०-३०क्ष् (६८७७)
ततोऽगच्छत्स भगवानुत्तरामुत्तरां दिशम् ।
हिमवन्तं गिरिश्रेष्ठं सिद्धचारणसेवितम् ॥ १३-५०-३० (८३४९७)
स गत्वा द्विजशार्दूलो हिमवन्तं महागिरिम् ।
अभ्यगच्छन्नदीं पुण्यां बाहुदां पुण्यदायिनीम् ॥ १३-५०-३१ (८३४९८)

अशोके विमले तीर्थे स्नात्वा वै तर्प्य देवताः ।
तत्र वासाय शयने कौशे सुखमुवास ह ॥ १३-५०-३२ (८३४९९)
ततो रात्र्यां व्यतीतायां प्रातरुत्थाय स द्विजः ।
स्नात्वा प्रादुश्चकाराग्निं हुत्वा चैवं विधानतः ॥ १३-५०-३३ (८३५००)
रुद्राणीकूपमासाद्य ह्रदे तत्र समाश्वसत् ।
विश्रान्तश्च समुत्थाय कैलासमभितो ययौ ॥ १३-५०-३४ (८३५०१)
सोऽपश्यत्काञ्चनद्वारं दीप्यमानमिव श्रिया ।
मन्दाकिनीं च नलिनीं धनदस्य महात्मनः ॥ १३-५०-३५ (८३५०२)
अथ ते राक्षसाः सर्वे येऽभिरक्षन्ति पद्मिनीम् ।
प्रत्युत्थिता भगवन्तं माणिभद्रपुरोगमाः ॥ १३-५०-३६ (८३५०३)
स तान्प्रत्यर्चयामास राक्षसान्भीमविक्रमान् ।
निवेदयत मां क्षिप्रं धनदायेति चाब्रवीत् ॥ १३-५०-३७ (८३५०४)
ते राक्षसास्तथा राजन्भगवन्तमथाब्रुवन् ।
असौ वैश्रवणो राजा स्वयमायाति तेऽन्तिकम् ॥ १३-५०-३८ (८३५०५)
विदितो भगवानस्य कार्यमागमनस्य यत् ।
पश्यैनं त्वं महाभागं ज्वलन्तमिव तेजसा ॥ १३-५०-३९ (८३५०६)
ततो वैश्रवणोऽभ्येत्य अष्टावक्रमनिन्दितम् ।
विधिवत्कुशलं पृष्ट्वा ततो ब्रह्मर्षिमब्रवीत् ॥ १३-५०-४० (८३५०७)
सुखं प्राप्तो भवान्कच्चित्किंवा मत्तश्चिकीर्षति ।
ब्रूहि सर्वं करिष्यामि यन्मां वक्ष्यसि वै द्विज ॥ १३-५०-४१ (८३५०८)
भवनं प्रविश त्वं मे यथाकामं द्विजोत्तम ।
सत्कृतः कृतकार्यश्च भवान्यास्यत्यविघ्नतः ॥ १३-५०-४२ (८३५०९)
प्राविशद्भवनं स्वं वै गृहीत्वा तं द्विजोत्तमम् ।
आसनं स्वं ददौ चैव पाद्यमर्घ्यं तथैव च ॥ १३-५०-४३ (८३५१०)
अथोपविष्टयोस्तत्र माणिभद्रपुरोगमाः ।
निषेदुस्तत्र कौबेरा यक्षगन्धर्वकिन्नराः ॥ १३-५०-४४ (८३५११)
ततस्तेषां निषण्णानां धनदो वाक्यमब्रवीत् ।
भवच्छन्दं समाज्ञाय नृत्येरन्नप्सरोगणाः ॥ १३-५०-४५ (८३५१२)
आतिथ्यं परमं कार्यं शुश्रूषा भवतस्तथा ।
संवर्ततामित्युवाच मुनिर्मधुरया गिरा ॥ १३-५०-४६ (८३५१३)
यथोर्वरा मिश्रकेशी रम्भा चैवोर्वशी तथा ।
अलम्बुसा घृताची च चित्रा चित्राङ्गदारुचिः ॥ १३-५०-४७ (८३५१४)
मनोहरा सुकेशी च सुमुखी हासिनी प्रभा ।
विद्युता प्रशमी दान्ता विद्योता रतिरेव च ॥ १३-५०-४८ (८३५१५)
एताश्चान्याश्च वै बह्व्यः प्रनृत्ताप्सरसः शुभाः ।
अवादयंश्च गन्धर्वा वाद्यानि विविधानि च ॥ १३-५०-४९ (८३५१६)

अथ प्रवृत्ते गान्धर्वे दिव्ये ऋषिरुपाविशत् ।
दिव्यं संवत्सरं तत्रारमतैष महातपाः ॥ १३-५०-५० (८३५१७)
ततो वैश्रवणो राजा भगवन्तमुवाच ह ।
साग्रः संवत्सरो यातो विप्रेह तव पश्यतः ॥ १३-५०-५१ (८३५१८)
हार्योऽयं विषयो ब्रह्मन्गान्धर्वो नाम नामतः ।
छन्दतो वर्ततां विप्र यथा वदति वा भवान् ॥ १३-५०-५२ (८३५१९)
अतिथिः पूजनीयस्त्वमिदं च भवतो गृहम् ।
सर्वमाज्ञाप्यतामाशु परवन्तो वयं त्वयि ॥ १३-५०-५३ (८३५२०)
अथ वैश्रवणं प्रीतो भगवान्प्रत्यभाषत ।
अर्चितोस्मि यथान्यायं गमिष्यामि धनेश्वर ॥ १३-५०-५४ (८३५२१)
प्रीतोस्मि सदृशं चैव तव सर्वं धनाधिप ।
तव प्रसादाद्भगवन्महर्षेश्च महात्मनः ।
नियोगादद्य यास्यामि वृद्धिमानृद्धिमान्भव ॥ १३-५०-५५ (८३५२२)
अथ निष्क्रम्य भगवान्प्रययावुत्तरामुखः ।
ग्कैलासे सङ्करावासमभिवीक्ष्य प्रणम्य च ॥ १३-५०-५६ (८३५२३)
गौरीशं शङ्करं दान्तं शरणागतवत्सलम् ।
गङ्गाधरं गोपतिनं गणावृतमकल्पषम् ॥' १३-५०-५७ (८३५२४)
कैलासं मन्दरं हैमं सर्वाननुचचार ह ।
तानतीत्य महाशैलान्कैरातं स्थानमुत्तमम् ॥ १३-५०-५८ (८३५२५)
प्रदक्षिणं तथा चक्रे प्रयतः शिरसा नतः ।
धरणीमवतीर्याथ पूतात्माऽसौ तदाऽभकवत् ॥ १३-५०-५९ (८३५२६)
स तं प्रदक्षिणं कृत्वा निर्यातश्चोत्तरामुखः ।
समेन भूमिभागेन ययौ प्रीतिपुरस्कृतः ॥ १३-५०-६० (८३५२७)
ततोऽपरं वनोद्देशं रमणीयमपश्यत ।
सर्वर्तुभिर्मूलफलैः पक्षिभिश्च समन्वितैः ।
रमणीयैर्वनोद्देशैस्तत्रतत्र विभूषितम् ॥ १३-५०-६१ (८३५२८)
तत्राश्रमपदं दिव्यं ददर्श भगवानथ ॥ १३-५०-६२ (८३५२९)
शैलांश्च विविधाकारान्काञ्चनान्रत्नभूषितान् ।
मणिभूमौ निविष्टाश्च पुष्करिण्यस्तथैव च ॥ १३-५०-६३ (८३५३०)
अन्यान्यपि सुरम्याणि ददर्श सुबहून्यथ ।
भृशं तस्य मनो रमे महर्षेर्भावितात्मनः ॥ १३-५०-६४ (८३५३१)
स तत्र काञ्चनं दिव्यं सर्वरत्नमयं गृहम् ।
ददर्शाद्भुतसङ्काशं धनदस्य गृहाद्वरम् ॥ १३-५०-६५ (८३५३२)
महान्तो यत्र विविधा मणिकाञ्चनपर्वताः ।
विमानानि च रम्याणि रत्नानि विविधानि च ॥ १३-५०-६६ (८३५३३)
मन्दारपुष्पैः सङ्कीर्णां तथा मन्दाकिनीं नदीम् ।

स्वयम्प्रभाश्च मणयो वज्रैर्भूमिश्च भूषिता ॥ १३-५०-६७ (८३५३४)
नानाविधैश्च भवनैर्विचित्रमणितोरणैः ।
मुक्ताजालविनिक्षिप्तैर्मणिरत्नविभूषितैः ॥ १३-५०-६८ (८३५३५)
मनोद्दष्टिहरै रम्यैः सर्वतः संवृतं शुभैः ।
ऋषिभिश्चावृतं तत्र आश्रमं तं मनोहरम् ॥ १३-५०-६९ (८३५३६)
ततस्तस्याभवच्चिन्ता कुत्र वासो भवेदिति ।
अथ द्वारं समभितो गत्वा स्थित्वा ततोऽब्रवीत् ॥ १३-५०-७० (८३५३७)
अतिथिं समनुप्राप्तमभिजानन्तु येऽत्र वै ॥ १३-५०-७१ (८३५३८)
अथ कन्याः परिवृता गृहात्तस्माद्विनिर्गताः ।
नानारूपाः सप्त विभो कन्याः सर्वा मनोहराः ॥ १३-५०-७२ (८३५३९)
यांयामपश्यत्कन्यां वै सासा तस्य मनोऽहरत् ।
न च शक्तो वारयितुं मनोऽस्याथावसीदति ।
ततो धृतिः समुत्पन्ना तस्य विप्रस्य धीमतः ॥ १३-५०-७३ (८३५४०)
अथ तं प्रमदाः प्राहुर्भगवान्प्रविशत्विति ।
स च तासां सुरुपेण तस्यैव भवनस्य च ।
कौतूहलं समाविष्टः प्रविवेश गृहं द्विजः ॥ १३-५०-७४ (८३५४१)
तत्रापश्यज्जरायुक्तामरजोम्बरधारिणीम् ।
वृद्धां पर्यङ्कमासीनां सर्वाभरणभूषिताम् ॥ १३-५०-७५ (८३५४२)
स्वस्तीति तेन चैवोक्ता सा स्त्री प्रत्यवदत्तदा ।
प्रत्युत्थाय च तं विप्रमास्यतामित्युवाच ह ॥ १३-५०-७६ (८३५४३)
अष्टावक्र उवाच। १३-५०-७७क्ष् (६८७८)
सर्वाः स्वानालयान्यान्तु एका मामुपतिष्ठतु ।
प्रज्ञाता या प्रशान्ता या शेषा गच्छन्तु च्छन्दतः ॥ १३-५०-७७ (८३५४४)
ततः प्रदक्षिणीकृत्य कन्यास्तास्तमृषिं तदा ।
निश्चक्रमुर्गृहात्तस्मात्सा वृद्धाऽथ व्यतिष्ठतः ।
तया सम्पूजितस्तत्र शयने चापि निर्मले ॥ १३-५०-७८ (८३५४५)
अथ तां संविशन्प्राह शयने भास्वरे तदा ।
त्वयाऽपि सुप्यतां भद्रे रजनी ह्यतिवर्तते ॥ १३-५०-७९ (८३५४६)
संलापात्तेन विप्रेण तथा सा तत्र भाषिता ।
द्वितीये शयने दिव्ये संविवेश महाप्रभे ॥ १३-५०-८० (८३५४७)
अथ सा वेपमानाङ्गी निमित्तं शीतजं तदा ।
व्यपदिश्य महर्षेर्वै शयनं व्यवरोहत ॥ १३-५०-८१ (८३५४८)
स्वागतेनागतां तां तु भगवानभ्यभाषत ।
सा जुगूह भुजाभ्यां तु ऋषिं प्रीत्या नरर्षभ ॥ १३-५०-८२ (८३५४९)
निर्विकारमृषिं चापि काष्ठकुड्योपमं तदा ।
दुखिता प्रेक्ष्य सञ्जल्पमकार्षीदृषिणा सह ॥ १३-५०-८३ (८३५५०)

ब्रह्मन्नकामकरोस्ति स्त्रीणां पुरुषतो धृतिः ।
कामेन मोहिता चाहं त्वां भजन्तीं भजस्व माम् ॥१३-५०-८४ (८३५५१)
प्रहृष्टो भव विप्रर्षे समागच्छ मया सह ।
उपगूह च मां विप्र कामार्ताऽहं भृशं त्वयि ॥१३-५०-८५ (८३५५२)
एतद्धि तव धर्मात्मंस्तपसः पूज्यते फलम् ।
प्रार्थितं दर्शनादेव भजमानां भजस्व माम् ॥१३-५०-८६ (८३५५३)
सद्म चेदं धनं सर्वं यच्चान्यदपि पश्यसि ।
प्रभुस्त्वं भव सर्वत्र मयि चैव न संशयः ॥१३-५०-८७ (८३५५४)
सर्वान्कामान्विधास्यामि रमस्व सहितो मया ।
रमणीये वने विप्र सर्वकामफलप्रदे ॥१३-५०-८८ (८३५५५)
त्वद्वशाऽहं भविष्यामि रंस्यसे च मया सह ।
सर्वान्कामानुपाश्नीमो ये दिव्या ये च मानुषाः ॥१३-५०-८९ (८३५५६)
नातः परं हि नारीणां विद्यते च कदाचन ।
यथा पुरुषसंसर्गः परमेतद्धि नः फलम् ॥१३-५०-९० (८३५५७)
आत्मच्छन्देन वर्तन्ते नार्यो मन्मथचोदिताः ।
न च दह्यन्ति गच्छन्त्यः सुतप्तैरपि पांसुभिः ॥१३-५०-९१ (८३५५८)
अष्टावक्र उवाच।१३-५०-९२क्ष् (६८७९)
परदारानहं भद्रे न गच्छेयं कथञ्चन ।
दूषितं धर्मशास्त्रज्ञैः परदाराभिमर्शनम् ॥१३-५०-९२ (८३५५९)
ग्शुद्धक्षेत्रे ब्रह्महत्याप्रायश्चित्तमथोच्यते ।
पुनश्च पातकं दृष्टं विप्रक्षेत्रे विशेषतः'॥१३-५०-९३ (८३५६०)
भद्रे निर्वेष्टुकामोऽहं तत्रावकिरणं मम ।
ग्प्रायश्चित्तं महदतो दारग्रहणपूर्वकम् ॥१३-५०-९४ (८३५६१)
बीजं न शुद्ध्यते वोढुरन्यथा कृतनिष्कृतेः ।
मातृतः पितृतः शुद्धो ज्ञेयः पुत्रो यथार्थतः ॥' १३-५०-९५ (८३५६२)
विषयेष्वनभिज्ञोऽहं धर्मार्थं किल सन्ततिः ।
एवं लोकान्गमिष्यामि पुत्रैरिति न संशयः ॥१३-५०-९६ (८३५६३)
भद्रे धर्मं विजानीहि ज्ञात्वा चोपरमस्व ह ॥ १३-५०-९७ (८३५६४)
स्त्र्युवाच।१३-५०-९८क्ष् (६८८०)
नानिलोऽग्निर्न वरुणो न चान्ये त्रिदशा द्विज ।
प्रियाः स्त्रीणां यथा कामो रतिशीला हि योषितः ॥१३-५०-९८ (८३५६५)
सहस्रे किल नारीणां प्राप्येतैका कदाचन ।
तथा शतसहस्रेषु यदि काचित्पतिव्रता ॥१३-५०-९९ (८३५६६)
नैता जानन्ति पितरं न कुलं न च मातरम् ।
न भ्रातॄन्न च भर्तारं न च पुत्रान्न देवरान् ॥१३-५०-१०० (८३५६७)
लीलायन्त्यः कुलं घ्नन्ति कूलानीव सरिद्वराः ।

दोषान्सर्वांश्च मत्वाऽऽशु प्रजापतिरभाषत ॥ १३-५०-१०१ (८३५६८)
भीष्म उवाच। १३-५०-१०२क्ष् (६८८१)
ततः स ऋषिरेकाग्रस्तां स्त्रियं प्रत्यभाषत ।
आस्यतांरुचितश्छन्दः किञ्च कार्यं ब्रवीहि मे ॥ १३-५०-१०२ (८३५६९)
सा स्त्री प्रोवाच भगवन्द्रक्ष्यसे देशकालतः ।
वस तावन्महाभाग कृतकृत्यो भविष्यसि ॥ १३-५०-१०३ (८३५७०)
ब्रह्मर्षिस्तामथोवाच स तथेति युधिष्ठिर ।
वत्स्येऽहं यावदुत्साहो भवत्या नात्र संशयः ॥ १३-५०-१०४ (८३५७१)
अथर्षिरभिसम्प्रेक्ष्य स्त्रियं तां जरयाऽर्दिताम् ।
चिन्तां परमिकां भेजे सन्तप्त इव चाभवत् ॥ १३-५०-१०५ (८३५७२)
यद्यदङ्गं हि सोऽपश्यत्तस्या विप्रर्षभस्तदा ।
नारमत्तत्रतत्रास्य दृष्टी रूपविरागिता ॥ १३-५०-१०६ (८३५७३)
देवतेयं गृहस्यास्य शापात्किंनु विरूपिता ।
अस्याश्च कारणं वेत्तुं न युक्तं सहसा भया ॥ १३-५०-१०७ (८३५७४)
इति चिन्ताविषक्तस्य तमर्थं ज्ञातुमिच्छतः ।
व्यगमद्रात्रिशेषः स मनसा व्याकुलेन तु ॥ १३-५०-१०८ (८३५७५)
अथ सा स्त्री तथोवाच भगवन्पश्य वै रवेः ।
रूपं सन्ध्याभ्रसंरक्तं किमुपस्थाप्यतां तव ॥ १३-५०-१०९ (८३५७६)
स उवाच ततस्तां स्त्रीं स्नानोदकमिहानय ।
उपासिष्ये ततः सन्ध्यां वाग्यतो नियतेन्द्रियः ॥ ॥ १३-५०-११० (८३५७७)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
पञ्चाशोऽध्यायः ॥ ५० ॥

Mahabharata - Anushaasana Parva - Chapter Footnotes

७-५०-१ सहोभौ चरतां धर्मं क्षौमे वसानौ जायापती
अग्निमादधीयातामिति धर्मपत्नीसाहित्यं शास्त्रे दृश्यमानमाक्षिपति
यदिदमिति । पाणग्रहणात्प्राक्साहित्याभावात्सहोभाविति वाक्यं व्याकुप्येतेति
भावः ॥
७-५०-३ इहैव साहित्यं दंपत्योर्दृश्यते परलोके तयोः साहित्यं
क्वनु । न क्वापीत्यर्थः ॥
७-५०-६ सूत्रकारो धर्मप्रवक्ता । अनृतं साहसं माया
मूर्खत्वमतिलोभतेति स्त्रीधर्मानाह ॥
७-५०-८ गह्वरं गहनं दुर्बोधमित्यर्थः ॥
७-५०-१० दिशया दिगभिमानिदेवतया ॥
७-५०-११ निर्वेष्टुकामः दारसंग्रहार्थी ॥

७-५०-२१ तालैः कांस्यमयैर्वाद्यभाण्डैः
। शम्पातालैः विद्युद्वदतिचपलैर्भ्रमणादिघटितैः
गीतनृत्यक्रियामानविशेषैः। समैर्भ्रमणादिरहितैस्तैरेव ॥
७-५०-२४ महापार्श्वे पर्वते । ततः कोपो महान्पार्श्वे इति
ट। थ। पाठः। ततः कालो महान्पार्श्वे इति ध। पाठः ॥
७-५०-३० उत्तरां श्रेष्ठाम् ॥
७-५०-४५ भवच्छन्दं भवदिच्छाम् ॥
७-५०-५२ हार्यः हरतीति हार्यः ॥
७-५०-५४ भगवान् अष्टावक्रः ॥
७-५०-५५ वृद्धिरुपचयस्तद्वान् । ऋद्धिः सम्पत् तद्वान् ॥
७-५०-५८ कैरातं किरातवेषधारिणो महादेवस्य सम्बन्धि ॥
७-५०-५९ धरणीमवतीर्येत्यनेनाकाशमार्गेणाष्टावक्रो गच्छतीति गम्यते ॥
७-५०-७२ सप्त इतरदिग्देवताः ॥
७-५०-७५ उत्तराधिष्ठात्री तु देवता मुख्याऽष्टमी सैव जरायुक्ता ॥
७-५०-७७ प्रज्ञाता अत्यन्तं ज्ञानवती । प्रशान्ता निर्जितचिता ॥
७-५०-८२ जुगूह आलिङ्गितवती ॥
७-५०-८४ ब्रह्मन्नकामतोऽन्यास्तीति झ । पाठः। तत्र
अकामतोऽनिच्छातः स्वभावत इत्यर्थः। पुरुषतः पुरुषं प्राप्य
स्त्रीणां धृतिर्धैर्यमन्या परकीयास्ति पुंयोगे स्त्रीणां धृतिः स्वकीया
सर्वथा नास्तीत्यर्थः ॥
७-५०-८५ प्रहृष्टः कामुको भव । उपनृह अलिङ्गस्व ॥
७-५०-९६ अनभिज्ञोऽप्रीतिमान् ॥
७-५०-१०१ लीलायन्त्यः लीलां रतिमात्मन इच्छन्त्यः दोषांश्च
मन्दान्मन्दासुः प्रजापतिरभाषत इति ध । पाठः ॥
७-५०-१०२ एकाग्रः स्त्रीदोषाननुसन्दधानः स्त्रियम्प्रति आस्यता
तूर्ष्णीं स्थीयताम् । रुचितः रुचिं प्राप्य छन्दः इच्छा भवतीति
अभाषत। त्वं रुचिज्ञा मामिच्छसि अहं त्वरुचिज्ञो न त्वां
स्फुष्टुमिच्छामीति भावः। एवमपि यत्कार्यं कर्तव्यं तव तन्मे
ब्रवीहि ॥
७-५०-१०३ द्रक्ष्यसे स्पर्शसुखं ज्ञायसे ॥
७-५०-१०६ रूपे विरागिता वैराग्यवती दृष्टिर्नारमत् न रेमे ॥
७-५०-१०८ व्यगच्छत्तदहःशेष इति झ।पाठः ॥

---

अनुससनपर्व-अध्यय०५१
॥ श्रीः ॥
१३.५१. अध्यायः ५१

अथ दानधर्मपर्व ॥ १ ॥

Mahabharata - Anushaasana Parva - Chapter Topics

उत्तरदिगभिमानिदेवतया परदारत्वशङ्कया
स्वभोगमनङ्गीकुर्वाणमष्टावक्रम्प्रति जरतीरूपत्यागेन
कन्यारूपस्वीकरणपूर्वकं स्वपाणिग्रहणप्रार्थना ॥ १ ॥

Mahabharata - Anushaasana Parva - Chapter Text

भीष्म उवाच ।
अथ सा स्त्री तमुवाच विप्रमेवं भवत्विति ।
तैलं दिव्यमुपादाय स्नानशाटीमुपानयत् ॥ १३-५१-१ (८३५७८)
अनुज्ञाता च मुनिना सा स्त्री तेन महात्मना ।
अथास्य तैलेनाङ्गानि सर्वाण्येवाभ्यमृक्षत ॥ १३-५१-२ (८३५७९)
शनैश्चाच्छादितस्तत्र स्नानशालामुपागमत् ।
भद्रासनं ततश्चित्रमृषिरन्वगमन्नवम् ॥ १३-५१-३ (८३५८०)
अथोपविष्टश्च यदा तस्मिन्भद्रासने तदा ।
स्नापयामास शनकैस्तमृषिं सुखहस्तवत् ।
दिव्यं च विधिवच्चक्रे सोपचारं मुनेस्तदा ॥ १३-५१-४ (८३५८१)
जलेन सुसुखोष्णेन तस्या हस्तसुखेन च ।
व्यतीतां रजनीं कृत्स्नां नाजानात्स महाव्रतः ॥ १३-५१-५ (८३५८२)
तत उत्थाय स मुनिस्तदा परमविस्मितः ।
पूर्वस्यां दिशि सूर्यं च सोऽपश्यदुदितं दिवि ॥ १३-५१-६ (८३५८३)
ग्सन्ध्योपासनमित्येव सर्वपापहरं न मे।'
तस्य बुद्धिरियं किन्तु मोहस्तत्त्वमिदं भवेत् ॥ १३-५१-७ (८३५८४)
अथोपास्य सहस्रांशुं किं कोरमीत्युवाच ताम् ।
सा चामृतरसप्रख्यं ऋषेरन्नमुपाहरत् ॥ १३-५१-८ (८३५८५)
तस्य स्वादुतयाऽन्नस्य न प्रभूतं चकार सः ।
व्यगमच्चाप्यहःशेष ततः सन्ध्याऽऽगमत्पुनः ॥ १३-५१-९ (८३५८६)
अथ सा स्त्री भगवन्तं सुप्यतामित्यचोदयत् ।
तत्र वै शयने दिव्ये तस्य तस्याश्च कल्पिते ॥ १३-५१-१० (८३५८७)
श्पृथक्चैव तथा सुप्तौ सा स्त्री स च मुनिस्तदा ।
तथाऽर्धरात्रे सा स्त्री तु शयनं तदुपागमत् ॥ৈ १३-५१-११ (८३५८८)
अष्टावक्र उवाच। १३-५१-१२क्ष् (६८८२)
न भद्रे परदारेषु मनो मे सम्प्रसज्जति ।
उत्तिष्ठ भद्रे भद्रं ते स्वापं वै विरमस्व च ॥ १३-५१-१२ (८३५८९)

भीष्म उवाच। १३-५१-१३क्ष् (६८८३)
सा तदा तेन विप्रेण तथा धृत्या निवर्तिता ।
स्वतन्त्राऽस्मीत्युवाचर्षिं न धर्मच्छलमस्ति ते ॥ १३-५१-१३ (८३५९०)
अष्टावक्र उवाच। १३-५१-१४क्ष् (६८८४)
नास्ति स्वतन्त्रता स्त्रीणामस्वतन्त्रा हि योषितः ।
प्रजापतिमतं ह्येतन्न स्त्री स्वातन्त्र्यमर्हति ॥ १३-५१-१४ (८३५९१)
स्त्र्युवाच। १३-५१-१५क्ष् (६८८५)
बाधने मैथुनं विप्र मम भक्तिं च पश्य वै ।
अधर्मं प्राप्स्यसे विप्र यन्मां त्वं नाभिनन्दसि ॥ १३-५१-१५ (८३५९२)
अष्टावक्र उवाच। १३-५१-१६क्ष् (६८८६)
हरन्ति दोषजातानि नरमिन्द्रियकिङ्करम् ।
प्रभवामि सदा धृत्या भद्रे स्वशयनं व्रज ॥ १३-५१-१६ (८३५९३)
स्त्र्युवाच। १३-५१-१७क्ष् (६८८७)
शिरसा प्रणमे विप्र प्रसादं कर्तुमर्हसि ।
भूमौ निपतमानायाः शरणं भव मेऽनघ ॥ १३-५१-१७ (८३५९४)
यदि वा दोषजातं त्वं परदारेषु पश्यसि ।
आत्मानं स्पर्शयाम्यद्य पाणिं गृह्णीष्व मे द्विज ॥ १३-५१-१८ (८३५९५)
न दोषो भविता चैव सत्येनैतद्ब्रवीम्यहम् ।
स्वतन्त्रां मां विजानीहि यो धर्मः सोस्तु वै मयि ।
त्वय्यावेशितचित्ता च स्वतन्त्राऽस्मि भजस्व माम् ॥ १३-५१-१९ (८३५९६)
अष्टावक्र उवाच। १३-५१-२०क्ष् (६८८८)
स्वतन्त्रा त्वं कथं भद्रे ब्रूहि कारणमत्र वै ।
नास्ति त्रिलोके स्त्री काचिद्या वै स्वातन्त्र्यमर्हति ॥ १३-५१-२० (८३५९७)
पिता रक्षति कौमारे भर्ता रक्षति यौवने ।
पुत्रस्तु स्थाविरे भावे न स्त्री स्वातन्त्र्यमर्हति ।
ग्न वृद्धामक्षतां मन्ये च चेच्छा त्वयि मेऽनघे' १३-५१-२१ (८३५९८)
स्त्र्युवाच। १३-५१-२२क्ष् (६८८९)
कौमारं ब्रह्मचर्यं मे कन्यैवास्मि न संशयः ।
पत्नीं कुरुष्व मां विप्र श्रद्धां विजहि मा मम ॥ १३-५१-२२ (८३५९९)
अष्टावक्र उवाच। १३-५१-२३क्ष् (६८९०)
यथा मम तथा तुभ्यं यथा तुभ्यं तथा मम ।
जिज्ञासेयमृषेस्तस्य विघ्नः सत्यं नु किं भवेत् ॥ १३-५१-२३ (८३६००)
आश्चर्यं परमं हीदं किन्नु श्रेयो हि मे भवेत् ।
दिव्याभरणवस्त्रा हि कन्येयं मामुपस्थिता ॥ १३-५१-२४ (८३६०१)
किं त्वस्याः परमं रूपं जीर्णमासीत्कथं पुनः ।
कन्यारूपमिहाद्यैवं किमिवात्रोत्तरं भवेत् ॥ १३-५१-२५ (८३६०२)

यथा मे परमा शक्तिर्न व्युत्थाने कथंचन ।
न रोचते हि व्युत्थानं सत्येनासादयाम्यहम् ॥ ॥१३-५१-२६ (८३६०३)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
एकपञ्चाशोऽध्यायः ॥ ५१ ॥
Mahabharata - Anushaasana Parva - Chapter Footnotes

७-५१-२ अभ्यमृक्षति अभ्यञ्जितवती ॥
७-५१-३ शनैश्चोत्सादित इति ड झ ।पाठः। तत्र उत्सादितः चालितः ॥
७-५१-५ नाजानात् न ज्ञातवान् ॥
७-५१-९ न प्रभूतं चकार पूर्णमिति नाभ्यवददित्यर्थः ॥
७-५१-१२ स्वयं वै विरमस्व चेति झ ।पाठः ॥
७-५१-१३ स्वातन्त्र्यान्मम ।न तव पारदार्यदोषोऽस्तीत्यर्थः ॥
धर्मच्छलं परपुरुषप्रलोभनम् ।नाधर्मफलमस्ति त इति ध। पाठः ॥
७-५१-१४ नास्तीति अप्रदत्ता त्वां न कामये इत्यर्थः ॥
७-५१-१८ स्पर्शयामि ददामि ॥
७-५१-१९ स्वतन्त्रामात्मप्रदानं इति शेषः ।यो धर्मः
पाणिग्रहणादिसंस्कारो मयि मन्निमित्तं सोस्तु ॥
७-५१-२२ विजहि मा मा नाशय ॥
७-५१-२३ तुभ्यं तव ।सङ्गमश्रद्धेत्युभयत्र शेषः। किं तस्य
मया कन्यार्थिना प्रार्तितस्य तत्कर्तृका इयं जिज्ञासा मम परीक्षा
किमयं साधुरसाधुर्वेति ॥
७-५१-२४ विघ्नत्वमेवाह आश्चर्यमिति ।पूर्वमतिजीर्णत्वेन दृष्टा
पुनः कन्येव दृश्यत इति मायारूपमाश्चर्यम् ॥
७-५१-२५ अत्रास्मिन्विषये किमुत्तरं श्रेष्ठतरम्
।पर्वपरिगृहीतस्यात्यागः उत एतस्याः स्वीकारः कर्तव्य इति भावः ॥
७-५१-२६ न व्युत्थास्येऽस्याः स्वीकारं न करिष्ये ।व्युत्थानं
धर्मातिक्रमो मम न रोचते किन्तु सत्येनासादयाम्बहं दारानिति
शेषः। धृत्यैनां साधयाम्यहमिति ध ।पाठः ॥

---

अनुससनपर्व-अध्यय०५२
॥ श्रीः ॥
१३.५२. अध्यायः ५२

अथ दानधर्मपर्व ॥ १ ॥
Mahabharata - Anushaasana Parva - Chapter Topics

उत्तरदिगभिमानिदेवतया स्वीयप्रार्थनायाः
स्त्रीचापलप्रदर्शनाद्यर्थकत्वकथनपूर्वकमष्टावक्रस्य
धर्मोपदेशेन स्वगृहम्प्रति प्रेषणम् ॥ १ ॥
अष्टावक्रेण वदान्यकन्यापाणिग्रहणेन स्वाश्रमे सुखनिवासः ॥ २ ॥

Mahabharata - Anushaasana Parva - Chapter Text

युधिष्ठिर उवाच ।
न बिभेति कथं सा स्त्री शापाच्च परमद्युते ।
कथं निवृत्तो भगवांस्तद्भवान्प्रब्रवीतु मे ॥ १३-५२-१ (८३६०४)
भीष्म उवाच। १३-५२-२क्ष् (६८९१)
अष्टावक्रोऽन्वपृच्छत्तां रूपं विकुरुषे कथम् ।
न चानृतं ते वक्तव्यं ब्रूहि ब्राह्मणकाम्यया ॥ १३-५२-२ (८३६०५)
स्त्र्युवाच। १३-५२-३क्ष् (६८९२)
द्यावापृथिव्योर्यत्रैषा काम्या ब्राह्मणसत्तम ।
शृणुष्वावहितः सर्वं यदिदं सत्यविक्रम ॥ १३-५२-३ (८३६०६)
जिज्ञासेयं प्रयुक्ता मे स्थैर्यं कर्तुं तवानघ ।
अव्युत्थानेन ते लोका जिताः सत्यपराक्रम ॥ १३-५२-४ (८३६०७)
उत्तरां मां दिशं विद्धि दृष्टं स्त्रीचापलं च ते ।
स्थविराणामपि स्त्रीणां बाधते मैथुनज्वरः ॥ १३-५२-५ (८३६०८)
ग्अविश्वासो न व्यसनी नातिसक्तोऽप्रवासकः ।
विद्वान्सुशीलः पुरुषः सदारः सुखमश्नुते ॥' १३-५२-६ (८३६०९)
तुष्टः पितामहस्तेऽद्य तथा देवाः सवासवाः ॥ १३-५२-७ (८३६१०)
सत्वं येन च कार्येण सम्प्राप्तो भगवानिह ।
प्रेषितस्तेन विप्रेण कन्यापित्रा द्विजर्षभः ॥ १३-५२-८ (८३६११)
प्रेषितश्चोपदेशाय तच्च सर्वं श्रुतं त्वया ॥ १३-५२-९ (८३६१२)
गनितान्तं स्त्री भोगपरा प्रियवादाप्रवासनात् ।
रक्ष्यते चाकुचेलाद्यैरप्रसङ्गानुवर्तनैः ॥ १३-५२-१० (८३६१३)
अपर्वस्वनिषिद्धासु रात्रिष्वप्यनृतौ व्रजेत् ।
रात्रौ च नातिनियमो न वै ह्यनियमो भवेत् ॥'॥ १३-५२-११ (८३६१४)
क्षेमैर्गमिष्यसि गृहं श्रमश्च न भविष्यति ।
कन्यां प्राप्स्यसि तां विप्र पुत्रिणी च भविष्यति ॥ १३-५२-१२ (८३६१५)
काम्यया पृष्टवांस्त्वं मां ततो व्याहृतमुत्तरम् ।
अनतिक्रमणीया साकृत्स्नैर्लोकैस्त्रिभिः सदा ॥ १३-५२-१३ (८३६१६)
गच्छस्व कृतकृत्यस्त्वं किं वाऽन्यच्छ्रोतुमिच्छसि ।
यावद्ब्रवीमि विप्रर्षे अष्टावक्र यथातथम् ॥ १३-५२-१४ (८३६१७)

ऋषिणा प्रसादिता चास्मि तव हेतोर्द्विजर्षभ ।
तस्य सम्माननार्थं मे त्वयि वाक्यं प्रभाषितम् ॥ १३-५२-१५ (८३६१८)
भीष्म उवाच। १३-५२-१६क्ष् (६८९३)
श्रुत्वा तु वचनं तस्याः स विप्रः प्राञ्जलिः स्थितः ।
अनुज्ञातस्तया चापि स्वगृहं पुनराव्रजत् ॥ १३-५२-१६ (८३६१९)
गृहमागत्य विश्रान्तः स्वजनं परिपृच्छ्य च ।
अभ्यागच्छच्च तं विप्रं न्यायतः कुरुनन्दन ॥ १३-५२-१७ (८३६२०)
पृष्टश्च तेन विप्रेण दृष्टं त्वेतन्निदर्शनम् ।
प्राह विप्रं तदा विप्रः सुप्रीतेनान्तरात्मना ॥ १३-५२-१८ (८३६२१)
भवताऽहमनुज्ञातः प्रास्थितो गन्धमादनम् ।
तस्य चोत्तरतो देशे दृष्टं मे दैवतं महत् ॥ १३-५२-१९ (८३६२२)
तया चाहमनुज्ञातो भवांश्चापि प्रकीर्तितः ।
श्रावितश्चापि तद्वाक्यं गृहं चाभ्यागतः प्रभो ॥ १३-५२-२० (८३६२३)
तमुवाच तदा विप्रः सुतां प्रतिगृहाण मे ।
नक्षत्रतिथिसंयोगे पात्रं हि परमं भवान् ॥ १३-५२-२१ (८३६२४)
भीष्म उवाच। १३-५२-२२क्ष् (६८९४)
अष्टावक्रस्तथेत्युक्त्वा प्रतिगृह्य च तां प्रभो ।
कन्यां परमधर्मात्मा प्रीतिमांश्चाभवत्तदा ॥ १३-५२-२२ (८३६२५)
कन्यां तां प्रतिगृह्यैव भार्यां परमशोभनाम् ।
उवास मुदितस्तत्र स्वाश्रमे विगतज्वरः ॥ ॥ १३-५२-२३ (८३६२६)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणिः
द्विपञ्चाशोऽध्यायः ॥ ५२ ॥

Mahabharata - Anushaasana Parva - Chapter Footnotes

७-५२-२ विकुरुषेऽन्यथान्यथा करोषि । ब्राह्मणकाम्यया
ब्राह्मणमानलिप्सया ॥
७-५२-३ द्यावापृथिव्योः दिवि पृथिव्यां च यत्र स्थीयते तत्र एषा
काम्या स्त्रीपुंसयोः अन्योन्याभिलाषरूपा इच्छास्तीत्यर्थः ॥
७-५२-४ मे मया ॥
७-५२-८ तत्कार्यं ज्ञापयामीति शेषः। ७-५२-१३ सा काम्याऽनतिक्रमणीया। ।
७-५२-१५ ऋषिणा वदान्येन ॥

---

अनुससनपर्व-अध्यय०५३
॥ श्रीः ॥
१३.५३. अध्यायः ५३

अथ दानधर्मपर्व ॥ १ ॥

Mahabharata - Anushaasana Parva - Chapter Topics

भीष्मेण युधिष्ठिरम्प्रति ऋष्यादीनां वियोनिजत्वेपि तपोविद्यादीनामेव माहात्म्यप्रयोजकत्वे निदर्शनतया तादृशानां सम्भवप्रकारादिकथनम् ॥ १ ॥

Mahabharata - Anushaasana Parva - Chapter Text

ग्युधिष्ठिर उवाच ।
वैश्ययोन्यां समुत्पन्नाः शूद्रयोन्यां तथैव च ।
ब्रह्मर्षय इति प्रोक्ताः पुराणि द्विजसत्तमाः ॥ १३-५३-१ (८३६२७)
कथमेतन्महाराज तत्त्वं शंसितुमर्हसि ।
विरुद्धमिह पश्यामि वियोनौ ब्राह्मणो भवेत् ॥ १३-५३-२ (८३६२८)
भीष्म उवाच। १३-५३-३क्ष् (६८९५)
अलं कौतूहलेनात्र निबोध त्वं युधिष्ठिर ।
शुभेतरं शुभं वाऽपि न चिन्तयितुमर्हसि ॥ १३-५३-३ (८३६२९)
ईशन्त्यात्मन इत्येते गतिश्चैषां न सज्जते ।
ब्रह्मभूयांस इत्येव ऋषयः श्रुतिचोदिताः ॥ १३-५३-४ (८३६३०)
निन्द्या न चैते राजेन्द्र प्रमाणं हि प्रमाणिनाम् ।
लोकोऽनुमन्यते चैतान्प्रमाणं ह्यत्र वै तपः ॥ १३-५३-५ (८३६३१)
एवं महात्मभिस्तात तपोज्ञानसमन्वितैः ।
प्रवर्तितानि कार्याणि प्रमाणान्येव सत्तम ॥ १३-५३-६ (८३६३२)
भार्याश्चतस्रो राजेन्द्र ब्राह्मणस्य स्वधर्मतः ।
ब्राह्मणी क्षत्रिया वैश्या शूद्रा च भरतर्षभ ॥ १३-५३-७ (८३६३३)
राज्ञां तु क्षत्रिया वैश्या शूद्रा च भरतर्षभ ।
वैश्यस्य वैश्या विहिता शूद्रा च भरतर्षभ ॥ १३-५३-८ (८३६३४)
शूद्रस्यैका स्मृता भार्या प्रतिलोमे तु सङ्करः ।
शूद्रायास्तु नरश्रेष्ठ चत्वारः पतयः स्मृताः ॥ १३-५३-९ (८३६३५)
वर्णोत्तमायास्तु पतिः सवर्णस्त्वेक एव सः ।
द्वौ क्षत्रियाया विहितौ ब्राह्मणः क्षत्रियस्तथा ॥ १३-५३-१० (८३६३६)
वैश्यायास्तु नरश्रेष्ठ विहिताः पतयस्त्रयः ।
सवर्णः क्षत्रियश्चैव ब्राह्मणश्च विशाम्पते ॥ १३-५३-११ (८३६३७)
एवंविधिमनुस्मृत्य ततस्ते ऋषिभिः पुरा ।
उत्पादिता महात्मानः पुत्रा ब्रह्मर्षयः पुरा ॥ १३-५३-१२ (८३६३८)
पुराणाभ्यामृषिभ्यां तु मित्रेण वरुणेन च ।

वसिष्ठोऽथ तथाऽगस्त्यो बर्हिषव्यस्तथैव च ॥ १३-५३-१३ (८३६३९)
कक्षीवानार्ष्टिषेणश्च पुरुषः कष एव च ।
मामतेयस्य वै पुत्रा गौतमश्चात्मजाः स्मृताः ॥ १३-५३-१४ (८३६४०)
वत्सप्रियश्च भगवान्स्थूलरश्मिस्तथाक्षणिः ।
गौतमस्यैव तनया ये दास्यां जनिता ह्युत ॥ १३-५३-१५ (८३६४१)
कपिञ्जलादो ब्रह्मर्षिश्चाण्डाल्यामुदपद्यत ।
वैनतेयस्तथा पक्षी तुर्यायां च वसिष्ठतः ॥ १३-५३-१६ (८३६४२)
प्रसादाच्च वसिष्ठस्य शुक्लाभ्युपगमेन च ।
अदृश्यन्त्याः पिता वैश्यो नाम्ना चित्रमुखः पुरा ।
ब्राह्मणत्वमनुप्राप्तो ब्रह्मर्षित्वं च कौरव ॥ १३-५३-१७ (८३६४३)
वैश्यश्चित्रमुखः कन्यां वसिष्ठतनयस्य वै ।
शुभां प्रादाद्यतो जातो ब्रह्मर्षिस्तु पराशरः ॥ १३-५३-१८ (८३६४४)
तथैव दाशकन्यायां सत्यवत्यां महानृषिः ।
पराशरात्प्रसूतश्च व्यासो योगमयो मुनिः ॥ १३-५३-१९ (८३६४५)
विभण्डकस्य मृग्यां च तपोयोगात्मको मुनिः ।
ऋस्यशृङ्गः समुत्पन्नो ब्रह्मचारी महायशाः ॥ १३-५३-२० (८३६४६)
शाङ्ग्र्यां च मन्दपालस्य चत्वारो ब्रह्मवादिनः ।
जाता ब्रह्मर्षयः पुण्या यैः स्तुतो हव्यवाहनः ॥ १३-५३-२१ (८३६४७)
द्रोणश्च स्तम्बमित्रश्च सारिसृक्वश्च बुद्धिमान् ।
जरितारिश्च विख्यातश्चत्वारः सूर्यसन्निभाः ॥ १३-५३-२२ (८३६४८)
महर्षेः कालवृक्षस्य शकुन्त्यामेव जज्ञिवान् ।
हिरण्यहस्तो भगवान्महर्षिः काञ्चनप्रभः ॥ १३-५३-२३ (८३६४९)
पावकात्तात सम्भूता मनसा च महर्षयः ।
पितामहस्य राजेन्द्र पुरस्त्यपुलहादयः ॥ १३-५३-२४ (८३६५०)
सावर्ण्यश्चापि राजर्षिः सवर्णायामजायत ।
मृण्मय्यां भरतश्रेष्ठ आदित्येन विवस्वता ॥ १३-५३-२५ (८३६५१)
शाण्डिल्यश्चाग्नितो जातः कश्यपस्याग्रजः प्रभुः ।
शरद्वतः शरस्तम्बात्कृपश्च कृपया सह ॥ १३-५३-२६ (८३६५२)
पद्माश्च जज्ञे राजेन्द्र सोस्यपस्य महात्मनः ।
रेणुश्च रेणुका चैव राममाता यशस्विनी ॥ १३-५३-२७ (८३६५३)
समुनायाः समुद्भूतः सोमकेन महात्मना ।
अर्कदन्तो महानृषिः प्रथितः पृथिवीतले ॥ १३-५३-२८ (८३६५४)
अग्नेराहवनीयाच्च द्रुपदस्येन्द्रवर्चसः ।
धृष्टद्युम्नश्च सम्भूतो वेद्यां कृष्णा च भारत ॥ १३-५३-२९ (८३६५५)
व्याघ्रयोन्यां ततो जाता वसिष्ठस्य महात्मनः ।
एकोनविंशतिः पुत्राः ख्याता व्याघ्रपदादयः ॥ १३-५३-३० (८३६५६)

मन्धश्च बादलोमस्च जावालिश्च महानृषिः ।
मन्युश्चैवोपमन्युश्च सेतुकर्णस्तथैव च ।
एते चान्ये च विख्याताः पृथिव्यां गोत्रतां गताः ॥ १३-५३-३१ (८३६५७)
विश्वकाशस्य राजर्षेरैक्ष्वाकोस्तु महात्मनः ।
बालाश्वो नाम पुत्रोऽभूच्छिखां भित्त्वा विनिस्सृतः ॥१३-५३-३२ (८३६५८)
मान्धाता चैव राजर्षिर्युवनाश्वेन धीमता ।
स्वयं धृतोऽथ गर्भेण दिव्यास्त्रबलसंयुतः ॥१३-५३-३३ (८३६५९)
गौरिकश्चापि राजर्षिश्चक्रवर्ती महायशाः ।
बाहुदायां समुत्पन्नो नद्यां राज्ञा सुबाहुना ॥१३-५३-३४ (८३६६०)
भूमेश्च पुत्रो नरकः संवर्तश्चैव पुष्कलः ।
अङ्गिश्चैव महातेजा ऋषिर्गार्ग्योऽभ्यजायत ॥१३-५३-३५ (८३६६१)
एते चान्ये च बहवो राजन्या ब्राह्मणास्तथा ।
प्रभावेनाभिसम्भूता महर्षीणां महात्मनाम् ।
नासाध्य तपसा तेषां विद्ययाऽऽत्मगुणैः परैः ॥ १३-५३-३६ (८३६६२)
अस्मिन्नर्थे च मनुना नीतः श्लोको नराधिप ।
धर्मं प्रणयता राजंस्तं निबोध युधिष्ठिर ॥१३-५३-३७ (८३६६३)
ऋषिणां च नदीनां च साधूनां च महात्मनाम् ।
प्रभवो नाधिगन्तव्यः स्त्रीणां दुश्चरितस्य च ॥१३-५३-३८ (८३६६४)
तन्नात्र चिन्ता कर्तव्या महर्षीणां समुद्भवे ।
यथा सर्वगतो ह्यग्निस्तथा तेजो महात्मसु ॥' ॥ १३-५३-३९ (८३६६५)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
त्रिपञ्चाशोऽध्यायः ॥५३ ॥
Mahabharata - Anushaasana Parva - Chapter Footnotes

७-५३-१ एतदादिसप्ताध्याया दाक्षिणात्यकोशेष्वेव दृश्यन्ते ।

---

अनुससनपर्व-अध्यय०५४
॥ श्रीः ॥
१३.५४. अध्यायः ५४

अथ दानधर्मपर्व ॥ १ ॥
Mahabharata - Anushaasana Parva - Chapter Topics
भीष्मेण युधिष्ठिरम्प्रति
युगचतुष्टयधर्मादिप्रतिपादकनारदमार्कण्डेयसंवादानुवादः ॥ १ ॥

ग्युधिष्ठिर उवाच ।
पुत्रैः कथं महाराज पुरुषस्तारितो भवेत् ।
यावन्न लब्धवान्पुत्रमफलः पुरुषो नृप ॥ १३-५४-१ (८३६६६)
भीष्म उवाच। १३-५४-२क्ष् (६८९६)
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
नारदेन पुरा गीतं मार्कण्डेयाय पृच्छते ॥ १३-५४-२ (८३६६७)
पर्वतं नारदं चैव असितं देवलं च तम् ।
आरुणेयं च रैभ्यं च एतानत्रागतान्पुरा ॥ १३-५४-३ (८३६६८)
गङ्गायमुनयोर्मध्ये भोगवत्याः समागमे ।
दृष्ट्वा पूर्वं समासीनान्मार्कण्डेयोऽभ्यगच्छत ॥ १३-५४-४ (८३६६९)
ऋषयस्तु मुनिं दृष्ट्वा समुत्थायोन्मुखाः स्थिताः ।
अर्चयित्वाऽर्हतो विप्रं किं कुर्म इति चाब्रुवन् ॥ १३-५४-५ (८३६७०)
मार्कण्डेय उवाच। १३-५४-६क्ष् (६८९७)
अयं समागमः सद्भिर्यत्नेनासादितो मया ।
अत्र प्राप्स्यामि धर्माणामाचारस्य च निश्चयम् ॥ १३-५४-६ (८३६७१)
ऋजुः कृतयुगे धर्मस्तस्मिन्क्षीणे विमुह्यति ।
युगेयुगे महर्षिभ्यो धर्ममिच्छामि वेदितुम् ॥ १३-५४-७ (८३६७२)
ऋषिभिर्नारदः प्रोक्तो ब्रूहि यत्रास्य संशयः ।
धर्माधर्मेषु तत्वज्ञ त्वं हि च्छेत्ता हि संशयान् ॥ १३-५४-८ (८३६७३)
ऋषिभ्योऽनुमतं वाक्यं नियोगान्नारदस्तदा ।
सर्वधर्मार्थतत्वज्ञं मार्कण्डेयं ततोऽब्रवीत् ॥ १३-५४-९ (८३६७४)
दीर्घायो तपसा दीप्त वदेवदाङ्गतत्ववित् ।
यत्र ते संशयो ब्रह्मन्समुत्पन्नः स उच्यताम् ॥ १३-५४-१० (८३६७५)
धर्मं लोकोपकारं वा यच्चान्यच्छ्रोतुमिच्छसि ।
तदहं कथयिष्यामि ब्रूहि त्वं सुमहातपाः ॥ १३-५४-११ (८३६७६)
मार्कण्डेय उवाच। १३-५४-१२क्ष् (६८९८)
युगेयुगे व्यतीतेऽस्मिन्धर्मसेतुः प्रणश्यति ।
कथं धर्मच्छलेनाहं प्राप्नुयामिति मे मतिः ॥ १३-५४-१२ (८३६७७)
नारद उवाच। १३-५४-१३क्ष् (६८९९)
आसीद्धर्मः पुरा विप्र चतुष्पादः कृते युगे ।
ततो ह्यधर्मः कालेन प्रसूतः किञ्चिदूनतः ॥ १३-५४-१३ (८३६७८)
ततस्त्रेतायुगं नाम प्रवृत्तं धर्मदूषणम् ॥ १३-५४-१४ (८३६७९)
तस्मिन्नतीते सम्प्राप्तं तृतीयं द्वापरं युगम् ।
तदा धर्मस्य द्वौ पादावधर्मो नाशयिष्यति ॥ १३-५४-१५ (८३६८०)

द्वापरे तु परिक्षीणे नन्दिके समुपस्थिते ।
लोकवृत्तं च धर्मं च उच्यमानं निबोध मे ॥ १३-५४-१६ (८३६८१)
चतुर्थं नन्दिकं नाम धर्मः पादावशेषितः ।
ततः प्रभृति जायन्ते क्षीणप्रज्ञायुपो नराः ।
क्षीणप्राणधना लोके धर्माचारबहिष्कृताः ॥ १३-५४-१७ (८३६८२)
मार्कण्डेय उवाच। १३-५४-१८क्ष् (६९००)
एवं विलुलिते धर्मे लोके चाधर्मसंयुते ।
चातुर्वर्ण्यस्य नियतं हव्यं कव्यं नियच्छति ॥ १३-५४-१८ (८३६८३)
नारद उवाच। १३-५४-१९क्ष् (६९०१)
मन्त्रपूतं सदा हव्यं कव्यं चैव न नश्यति ।
प्रतिगृह्णन्ति तद्देवा दातुर्न्यायात्प्रयच्छतः ॥ १३-५४-१९ (८३६८४)
सत्वयुक्तं च दाता च सर्वान्कामानवाप्नुयात् ।
अवाप्तकामः स्वर्गे च महीयेत यथेप्सितम् ॥ १३-५४-२० (८३६८५)
मार्कण्डेय उवाच। १३-५४-२१क्ष् (६९०२)
चत्वारो ह्यथ ये वर्णा हव्यं कव्यं प्रदास्यति ।
मन्त्रहीनमपन्यायं तेषां दत्तं क्व गच्छति ॥ १३-५४-२१ (८३६८६)
नारद उवाच। १३-५४-२२क्ष् (६९०३)
असुरान्गाच्छते दत्तं विप्रै रक्षांसि क्षत्रियैः ।
वैश्यैः प्रेतानि वै दत्तं शूद्रैर्भूतानि गच्छति ॥ १३-५४-२२ (८३६८७)
मार्कण्डेय उवाच। १३-५४-२३क्ष् (६९०४)
अथ वर्णावरे जाताश्चातुर्वर्ण्योपदेशिनः ।
दास्यन्ति हव्यकव्यानि तेषां दत्तं क्व गच्छति १३-५४-२३ (८३६८८)
नारद उवाच। १३-५४-२४क्ष् (६९०५)
वर्णावराणां भूतानां हव्यकव्यप्रदातृणाम् ।
नैव देवा न पितरः प्रतिगृह्णन्ति तत्स्वयम् ॥ १३-५४-२४ (८३६८९)
यातुधानाः पिशाचाश्च भूता ये चापि नैर्ऋताः ।
तेषां सा विहिता वृत्तिः पितृदैवतनिर्गताः ॥ १३-५४-२५ (८३६९०)
तेषां सर्वप्रदातॄणां हव्यकव्यं समाहिताः ।
यत्प्रयच्छन्ति विधइवत्तद्ध भुञ्जन्ति देवताः ॥' ॥ १३-५४-२६ (८३६९१)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
चतुःपञ्चाशोऽध्यायः ॥ ५४ ॥

Mahabharata - Anushaasana Parva - Chapter Footnotes

७-५४-१६ नन्दिक इति कलियुगे प्रवर्तमानधर्मैकपादस्य नाम ॥
१६ ॥

अनुससनपर्व-अध्यय०५५
॥ श्रीः ॥
१३.५५. अध्यायः ५५

अथ दानधर्मपर्व ॥१ ॥
Mahabharata - Anushaasana Parva - Chapter Topics
भीष्मेण युधिष्ठिरम्प्रति कन्यानां
प्रदानकालादिप्रतिपादकनारदमार्कण्डेयसंवादानुवादः ॥१ ॥

Mahabharata - Anushaasana Parva - Chapter Text

ग्मार्कण्डेय उवाच ।
श्रुतं वर्णावरैर्दत्तं हव्यं कव्यं च नारद ।
सम्प्रयोगे च पुत्राणां कन्यानां च ब्रवीहि मे ॥१३-५५-१ (८३६९२)
नारद उवाच।१३-५५-२क्ष् (६९०६)
कन्याप्रदानं प्रत्राणां स्त्रीणां संयोगमेव च ।
आनुपूर्व्यान्मया सम्यगुच्यमानं निबोध मे ॥१३-५५-२ (८३६९३)
जातमात्रा तु दातव्या कन्यका सदृशे वरे ।
काले दत्तासु कन्यासु पिता धर्मेण युज्यते ॥१३-५५-३ (८३६९४)
यस्तु पुष्पवतीं कन्यां बान्धवो न प्रयच्छति ।
मासिमासि गते बन्धुस्तस्या भ्रौणघ्न्यमाप्नुते ॥१३-५५-४ (८३६९५)
यस्तु कन्यां गृहे रुन्ध्याद्ग्राम्यैर्भोगैर्विवर्जिताम् ।
अवध्यातः स कन्याया बन्धुः प्राप्नोति भ्रूणहाम् ॥१३-५५-५ (८३६९६)
दूषिता पाणिमात्रेण मृते भर्तरि दारिका ।
संस्कारं लभते नारी द्वितीये सा पुनः पतौ ॥१३-५५-६ (८३६९७)
पुनर्भूर्नाम सा कन्या सपुत्रा हव्यकव्यदा ।
अदूष्या सा प्रसूतीषु प्रजानां दारकर्मणि ॥१३-५५-७ (८३६९८)
मार्कण्डेय उवाच।१३-५५-८क्ष् (६९०७)
या तु कन्या प्रसूयेत गर्भिणी या तु वा भवेत् ।
कथं दारक्रियां भूयः सा भवेदृषिसत्तम ॥१३-५५-८ (८३६९९)
नारद उवाच।१३-५५-९क्ष् (६९०८)
तत्वार्थनिश्चितं शब्दं कन्यका नयतेऽग्नये ।
तस्मात्कुर्वन्ति वै भावं कुमार्यस्ता न कन्यकाः ॥१३-५५-९ (८३७००)
ब्रह्महत्यात्रिभागेन गर्भाधानविशोधितः ।
गृह्णीयात्तां चतुर्भागविशुद्धां सर्जनात्पुनः ॥१३-५५-१० (८३७०१)

मार्कण्डेय उवाच। १३-५५-११क्ष् (६९०९)
कथं कन्यासु ये जाता बन्धूनां दूषिताः सदा ।
कस्य ते हव्यकव्यानि प्रदास्यन्ति महामुने ॥ १३-५५-११ (८३७०२)
नारद उवाच। १३-५५-१२क्ष् (६९१०)
कन्यायास्तु पितुः पुत्राः कानीना हव्यकव्यदाः ।
अन्तर्वत्नयास्तु यः पाणिं गृह्णीयात्स सहोढजः ॥ १३-५५-१२ (८३७०३)
मार्कण्डेय उवाच। १३-५५-१३क्ष् (६९११)
अथ येनाहितो गर्भः कन्यायां तत्र नारद ।
कथं पुत्रफलं तस्य भवेदेतत्प्रचक्ष्व मे ॥ १३-५५-१३ (८३७०४)
नारद उवाच। १३-५५-१४क्ष् (६९१२)
धर्माचारेषु ते नित्यं दूषकाः कृतशोधनाः ।
बीजं च नश्यते तेषां मोघचेष्टा भवन्ति ते ॥ १३-५५-१४ (८३७०५)
मार्कण्डेय उवाच। १३-५५-१५क्ष् (६९१३)
अथ काचिद्भवेत्कन्या क्रीता दत्ता हृताऽपि वा ।
कथं पुत्रकृतं तस्यास्तद्भवेद्दृषिसत्तम ॥ १३-५५-१५ (८३७०६)
नारद उवाच। १३-५५-१६क्ष् (६९१४)
क्रीता दत्ता हृता चैव या कन्या पाणिवर्जिता ।
कौमारी नाम सा भार्या प्रसवेदौरसान्सुतान् ।
न पत्न्यर्थे शुभा प्रोक्ता तत्कर्मण्यपराजिते ॥ १३-५५-१६ (८३७०७)
मार्कण्डेय उवाच। १३-५५-१७क्ष् (६९१५)
केन मङ्गलकृत्येषु विनियुज्यन्ति कन्यकाः ।
एतदिच्छामि विज्ञातुं तत्वेनेह महामुने ॥ १३-५५-१७ (८३७०८)
नारद उवाच। १३-५५-१८क्ष् (६९१६)
नित्यं निवसते लक्ष्मीः कन्यकासु प्रतिष्ठिता ।
शोभना शुभयोग्या च पूज्या मङ्गलकर्मसु ॥ १३-५५-१८ (८३७०९)
आकरस्थं यथा रत्नं सर्वकामफलोपगम् ।
तथा कन्या महालक्ष्मीः सर्वलोकस्य मङ्गलम् ॥ १३-५५-१९ (८३७१०)
एवं कन्या परा लक्ष्मी रतिस्तोषश्च देहिनाम् ।
महाकुलानां चारित्रवृत्तेन निकषोपलम् ॥ १३-५५-२० (८३७११)
आनयित्वा स्वकाद्वर्णात्कन्यकां यो भजेन्नरः ।
दातारं हव्यकव्यानां पुत्रकं या प्रसूयति ॥ १३-५५-२१ (८३७१२)
साध्वी कुलं वर्धयति साध्वी पुष्टिग्रहे परा ।
साध्वी लक्ष्मी रतिः साक्षात्प्रतिष्ठा सन्ततिस्तथा ॥ ॥ १३-५५-२२ (८३७१३)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
पञ्चपञ्चाशोऽध्यायः ॥ ५५ ॥

७-५५-१० चतुर्भागविशुद्धात्स्वजनात्पुनरिति ध पाठः ॥

---

अनुससनपर्व-अध्यय०५६
॥ श्रीः ॥
१३.५६. अध्यायः ५६

अथ दानधर्मपर्व ॥१ ॥
Mahabharata - Anushaasana Parva - Chapter Topics
भीष्मेण युधिष्ठिरम्प्रति स्त्रीणां भार्यात्वेन
परिग्रहयोग्यताप्रतिपादकनारदमार्कण्डेयसंवादानुवादः ॥१ ॥

Mahabharata - Anushaasana Parva - Chapter Text

ग्मार्कण्डेय उवाच ।
श्रुतं बहुविधं वृत्तं कन्यकानां महामते ।
इच्छामि योषितां श्रोतुं धर्माधर्मौ परिग्रहे ॥१३-५६-१ (८३७१४)
नारद उवाच।१३-५६-२क्ष् (६९१७)
अष्टौ भार्यागमा धर्म्या नराणां दारकर्मणि ।
प्रेत्येह च हिता यास्तु सपुत्रा हव्यकव्यदाः ॥१३-५६-२ (८३७१५)
साध्वी पाणिगृहीता या कौमारी पाणिवर्जिता ।
भ्रातृभार्या स्वभार्येति प्रसूयेत्पुत्रमौरसम् ॥१३-५६-३ (८३७१६)
मार्कण्डेय उवाच।१३-५६-४क्ष् (६९१८)
त्रयो भार्यागमा ज्ञेया यत्र धर्मो न नश्यति ।
पञ्चान्याः पश्चिमा ब्रूहि भार्यास्तासां च ये सुताः ॥१३-५६-४ (८३७१७)
नारद उवाच।१३-५६-५क्ष् (६९१९)
सगोत्रभार्या क्रीता च परभार्या च कारिता ।
गतागता च या भार्या आश्रमादाहृता च या ॥१३-५६-५ (८३७१८)
एता भार्यागमाः पञ्च पुनर्भार्या भवन्ति याः ।
एता भार्या नृणां गम्यास्तत्पुत्रा हव्यकव्यदाः ॥' ॥ १३-५६-६ (८३७१९)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
षट्पञ्चाशोऽध्यायः ॥५६ ॥

---

अनुससनपर्व-अध्यय०५७
॥ श्रीः ॥
१३.५७. अध्यायः ५७

अथ दानधर्मपर्व ॥ १ ॥
Mahabharata - Anushaasana Parva - Chapter Topics
भीष्मेण युधिष्ठिरम्प्रति सतीनामसतनां
गुणदोषप्रतिपादकनारदमार्कण्डेयसंवादानुवादः ॥ १ ॥

Mahabharata - Anushaasana Parva - Chapter Text

ग्मार्कण्डेय उवाच ।
श्रुता भार्याश्च पुत्राश्च विस्तरेण महामुने ।
आश्रमस्थाः कथं नार्यो न दुष्यन्तीति ब्रूहि भो ॥ १३-५७-१ (८३७२०)
नारद उवाच। १३-५७-२क्ष् (६९२०)
आश्रमस्थासु नारीषु बान्धवत्वं प्रणश्यति ।
नष्टवंश्या भवन्त्येता बन्धूनामथ भर्तृणाम् ॥ १३-५७-२ (८३७२१)
परदारा मुक्तदोषास्ता नार्योऽऽश्रमसंस्थिताः ।
स्वयमीशाः स्वदेहानां काम्यास्तद्गतमानसाः ॥ १३-५७-३ (८३७२२)
एवं नार्यो न दुष्यन्ति नराणां तत्प्रसूतिषु ।
धर्मपत्न्यो भवन्त्येताः सपुत्रा हव्यकव्यदाः ॥ १३-५७-४ (८३७२३)
मार्कण्डेय उवाच। १३-५७-५क्ष् (६९२१)
परस्य भार्या या पूर्वं मृते भर्तरि या पुनः ।
अन्यं भजति भर्तारं ससुता असुता कथम् ॥ १३-५७-५ (८३७२४)
नारद उवाच। १३-५७-६क्ष् (६९२२)
असुता वा प्रसूता वा गृहस्थानां परस्त्रियः ।
परामृष्टेति ता वर्ज्या धर्माचारेषु दूषिताः ॥ १३-५७-६ (८३७२५)
न चासां हव्यकव्यानि प्रतिगृह्णन्ति देवताः ।
यस्तासु जनयेत्पुत्रान्न तैः पुत्रमवाप्नुयात् ॥ १३-५७-७ (८३७२६)
मार्कण्डेय उवाच। १३-५७-८क्ष् (६९२३)
परक्षेत्रेषु यो बीजं चापलाद्विसृजेन्नरः ।
कथं पुत्रफलं तस्य भवेत्तदृषिसत्तम ॥ १३-५७-८ (८३७२७)
नारद उवाच। १३-५७-९क्ष् (६९२४)
अस्वामिके परक्षेत्रे यो नरो बीजमुत्सृजेत् ।
स्वयंवृतोऽऽश्रमस्थायां तद्बीजं न विनश्यति ॥ १३-५७-९ (८३७२८)
परक्षेत्रेषु यो बीजं नरो दर्पात्समुत्सृजेत् ।

क्षेत्रिकस्यैव तद्बीजं न बीजी लभते फलम् ॥ १३-५७-१० (८३७२९)
नातः परमधर्म्यं चाप्ययशस्यं तथोत्तरम् ।
गर्भादीनां च बहुभिस्ताश्च त्याज्याः समेष्वपि ॥ १३-५७-११ (८३७३०)
मार्कण्डेय उवाच। १३-५७-१२क्ष् (६९२५)
अथ ये परदारेषु पुत्रा जायन्ति नारद ।
कस्य ते बन्धुदायादा भवन्ति परमद्युते ॥ १३-५७-१२ (८३७३१)
नारद उवाच। १३-५७-१३क्ष् (६९२६)
परदारेषु जायेते द्वौ पुत्रौ कुण्डगोलकौ ।
जीवत्यथ पतौ कुण्डो मृते भर्तरि गोलकः ॥ १३-५७-१३ (८३७३२)
ते च जाताः परक्षेत्रे देहिनां प्रेत्य चेह च ।
दत्तानि हव्यकव्यानि नाशयन्त्यथ दातृणाम् ॥ १३-५७-१४ (८३७३३)
पितुर्हि नरकायैते गोलकस्तु विशेषतः ।
चण्डालतुल्यौ तज्जौ हि परत्रेह च नश्यतः ॥ १३-५७-१५ (८३७३४)
मार्कण्डेय उवाच। १३-५७-१६क्ष् (६९२७)
कस्य ते गर्हिताः पुत्राः पितॄणां हव्यकव्यदाः ।
यस्य क्षेत्रे प्रसूयन्ते यो वा ताञ्जनयेत्सुतान् ॥ १३-५७-१६ (८३७३५)
नारद उवाच। १३-५७-१७क्ष् (६९२८)
क्षेत्रिकश्चैव बीजी च द्वावेतौ निरयं गतौ ।
न रक्षति च यो दारान्परदाराश्च गच्छति ॥ १३-५७-१७ (८३७३६)
गर्हितास्ते नरा नित्यं धर्माचारबहिष्कृताः ।
कुण्डो भोक्ता च भोगी च कुत्सिताः पितृदैवतैः ॥ १३-५७-१८ (८३७३७)
मार्कण्डेय उवाच। १३-५७-१९क्ष् (६९२९)
तथैते गर्हिताः पुत्रा हव्यकव्यानि नारद ।
कस्य नित्यं प्रयच्छन्ति धर्मो वा तेषु किं फलं ॥ १३-५७-१९ (८३७३८)
नारद उवाच। १३-५७-२०क्ष् (६९३०)
यातुधानाः पिशाचाश्च प्रतिगृह्णन्ति तैर्हुतम् ।
हव्यं कव्यं च तैर्दत्तं ये च भूता निशाचराः ॥ १३-५७-२० (८३७३९)
मार्कण्डेय उवाच। १३-५७-२१क्ष् (६९३१)
अथ ते राक्षसाः प्रीताः किं प्रयच्छन्ति दातृणाम् ।
किं वा धर्मफलं तेषां भवेत्तदृषिसत्तम ॥ १३-५७-२१ (८३७४०)
नारद उवाच। १३-५७-२२क्ष् (६९३२)
न दत्तं नश्यते किञ्चित्सर्वभूतेषु दातृणाम् ।
प्रेत्य चेह च तां पुष्टिमुपाश्नन्ति प्रदायिनः ॥ १३-५७-२२ (८३७४१)
मार्कण्डेय उवाच। १३-५७-२३क्ष् (६९३३)
अथ गोलककुण्डाभ्यां सन्ततिर्या भविष्यति ।
तयोर्ये बान्धवाः केचित्प्रदास्यन्ति कथं नु तं ॥ १३-५७-२३ (८३७४२)

नारद उवाच। १३-५७-२४क्ष् (६९३४)
साध्वीजाताः सुतास्तेषां तां वृत्तिमनुतिष्ठताम् ।
प्रीणन्ति पितृदैवत्यं हव्यकव्यसमाहिताः ॥ १३-५७-२४ (८३७४३)
एवं गोलककुण्डाभ्यां ये च वर्णापदेशिनः ।
हव्यं कव्यं च शुद्धानां प्रतिगृह्णन्ति देवताः ॥' ॥ १३-५७-२५ (८३७४४)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
सप्तपञ्चाशोऽध्यायः ॥ ५७ ॥
Mahabharata - Anushaasana Parva - Chapter Footnotes

७-५७-३ परमं मुक्तदोषास्ता या नार्योऽऽश्रमसंस्थिता इति ध ।पाठः ॥

---

अनुससनपर्व-अध्यय०५८
॥ श्रीः ॥
१३.५८. अध्यायः ५८

अथ दानधर्मपर्व ॥ १ ॥
Mahabharata - Anushaasana Parva - Chapter Topics
भीष्मेण युधिष्ठिरम्प्रति स्त्रीणामतिक्रमे
प्रायश्चित्तादिप्रतिपादकनारदमार्कण्डेयसंवादानुवादः ॥ १ ॥

Mahabharata - Anushaasana Parva - Chapter Text

मार्कण्डेय उवाच ।
श्रुतं नराणां चापल्यं परस्त्रीषु प्रजायताम् ।
प्रमदानां तु चापल्ये दोषमिच्छामि वेदितुम् ॥ १३-५८-१ (८३७४५)
नारद उवाच। १३-५८-२क्ष् (६९३५)
एकवर्णे विदोषं तु गमनं पूर्वकालिकम् ।
धाता च समनुज्ञातो विष्णुना तत्तथाऽकरोत् ॥ १३-५८-२ (८३७४६)
भगलिङ्गे महाप्राज्ञ पूर्वमेव प्रजापतिः ।
ससर्ज ताभ्यां संयोगमनुज्ञातश्चकार सः ॥ १३-५८-३ (८३७४७)
अथ विष्णुप्रसादेन भगो दत्तवरः किल ।
तेन चैव प्रसादेन सर्वांल्लोकानुपाश्नुते ॥ १३-५८-४ (८३७४८)
तस्मात्तु पुरुषे दोषो ह्यधिको नात्र संशयः ।
विना गर्भं सवर्णेषु न त्याज्या गमनात्स्त्रियः ॥ १३-५८-५ (८३७४९)
प्रायश्चित्तं यथान्यायं दण्डं कुर्यात्स पण्डितः ।

श्वभिर्वा दंशनं स्नानं सवनत्रितयं निशि ॥१३-५८-६ (८३७५०)
भूमौ च भस्मशयनं दानं भोगविवर्जितम् ।
दोषगौरवतः कालो द्रव्यगौरवमेव च ।
मर्यादा स्थापिता पूर्वमिति तीर्थान्तरं गते ॥ १३-५८-७ (८३७५१)
तद्योषितीं तु दीर्घायो नास्ति दोषो व्यतिक्रमे ।
भगतीर्थान्तरे शुद्धो विष्णोस्तु वचनादिह ॥१३-५८-८ (८३७५२)
रक्ष्याश्चैवान्यसंवादैरन्यगेहाद्विचक्षणैः ।
आसां शुद्धौ विशेषेण कर्मणां फलमश्नुते ॥१३-५८-९ (८३७५३)
नैता वाच्या न वै वध्या न क्लेश्याः शुभमिच्छता ।
विष्णुप्रसादादित्येव भगस्तीर्थान्तरं गतः ।
मासिमासि ऋतुस्तासां दुष्कृतान्यपकर्षति ॥ १३-५८-१० (८३७५४)
स्त्रियस्तोषकरा नृणां स्त्रियः पुष्टिप्रदाः सदा ।
पुत्रसेतुप्रतिष्ठाश्च स्त्रियो लोके महाद्युते ॥ ॥१३-५८-११ (८३७५५)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
अष्टपञ्चाशोऽध्यायः ॥५८ ॥

---

अनुससनपर्व-अध्यय०५९
॥ श्रीः ॥
१३.५९. अध्यायः ५९

अथ दानधर्मपर्व ॥१ ॥
Mahabharata - Anushaasana Parva - Chapter Topics
भीष्मेण युधिष्ठिरम्प्रति
स्त्रीणामपरित्यागपरित्यागप्रयोजकगुणदोषादिप्रतिपादकनारद-
मार्कण्डेयसंवादानुवादः ॥१ ॥

Mahabharata - Anushaasana Parva - Chapter Text

ग्मार्कण्डेय उवाच ।
श्रुतं बलं प्रभावश्च योषितां मुनिसत्तम ।
एकस्य बहुभार्यस्य धर्ममिच्छामि वेदितुम् ॥१३-५९-१ (८३७५६)
नारद उवाच।१३-५९-२क्ष् (६९३६)
बहुभार्यासु सक्तस्य नारीभोगेषु गेहिनः ।
ऋतौ विमुञ्चमानस्य सांनिध्ये भ्रूणहा स्मृतः ॥१३-५९-२ (८३७५७)
वृद्धां वन्ध्यां सुव्रता च मृतापत्यामपुष्पिणीम् ।

कन्यां च बहुपुत्रां च वर्जयन्मुच्यते भयात् ॥ १३-५९-३ (८३७५८)
व्याधितो बन्धनस्थो वा प्रवासेष्वथ पर्वसु ।
ऋतुकाले तु नारीणां भ्रूणहत्यां प्रमुञ्चति ॥ १३-५९-४ (८३७५९)
मार्कण्डेय उवाच। १३-५९-५क्ष् (६९३७)
वैश्यनारीषु वै जाताः परप्रेष्यासु वा सुताः ।
कस्य ते बन्धुदायादा भवन्ति हि महामुने ॥ १३-५९-५ (८३७६०)
नारद उवाच। १३-५९-६क्ष् (६९३८)
पण्यस्त्रीषु प्रसूता ये यस्य स्त्री तस्य ते सुताः ।
क्रयाच्च कृत्रिमाः पुत्रा प्रदानाच्चैव दत्रिमाः ॥ १३-५९-६ (८३७६१)
मार्कण्डेय उवाच। १३-५९-७क्ष् (६९३९)
पण्यनारीष्वनियतः पुंसोऽर्थो वर्तते ध्रुवम् ।
अत्र चाहितगर्भायाः कस्य पुत्रं वदन्ति तम् ॥ १३-५९-७ (८३७६२)
नारद उवाच। १३-५९-८क्ष् (६९४०)
तीर्थभूतासु नारीषु ज्ञायते योऽभिगच्छति ।
ऋतौ तस्य भवेद्गर्भो यं वा नारी न शङ्कते ॥ १३-५९-८ (८३७६३)
मार्कण्डेय उवाच। १३-५९-९क्ष् (६९४१)
नराणां त्यजतां भार्यां कामक्रोधाद्गुणान्विताम् ।
अप्रसूतां प्रसूतां वा तेषां पृच्छामि निष्कृतिम् ॥ १३-५९-९ (८३७६४)
नारद उवाच। १३-५९-१०क्ष् (६९४२)
अपापां त्यजमानस्य साध्वीं मत्वा यमादितः ।
आत्मवंशस्वधर्मो वा त्यजतो निष्कृतिर्न तु ॥ १३-५९-१० (८३७६५)
यो नरस्त्यजते भार्या पुष्पिणीमप्रसूतिकाम् ।
स नष्टवंशः पितृभिर्युक्तस्त्यज्येत दैवतैः ॥ १३-५९-११ (८३७६६)
भार्यामपत्यसञ्जातां प्रसूतां पुत्रपौत्रिणीम् ।
पुत्रदारपरित्यागी न स प्राप्नोति निष्कृतिम् ॥ १३-५९-१२ (८३७६७)
एवं हि भार्यां त्यजतां नराणां नास्ति निष्कृतिः ।
नार्हन्ति प्रमदास्त्यक्तुं पुत्रपौत्रप्रतिष्ठिताः ॥ १३-५९-१३ (८३७६८)
मार्कण्डेय उवाच। १३-५९-१४क्ष् (६९४३)
कीदृशीं संत्यजन्भार्यां नरो दोषैर्न लिप्यते ।
एतदिच्छामि तत्वेन विज्ञातुमृषिसत्तम ॥ १३-५९-१४ (८३७६९)
नारद उवाच। १३-५९-१५क्ष् (६९४४)
मोक्षधर्मस्थितानां तु अन्योन्यमनुजानताम् ।
भार्यापतीनां मुक्तानामधर्मो न विधीयते ॥ १३-५९-१५ (८३७७०)
अन्यसङ्गां गतापत्यां शूद्रगां परगामिनीम् ।
परीक्ष्य त्यजमानानां नराणां नास्ति पातकम् ॥ १३-५९-१६ (८३७७१)
पातकेऽपि तु भर्तव्यौ द्वौ तु माता पिता तथा ॥ १३-५९-१७ (८३७७२)

मार्कण्डेय उवाच। १३-५९-१८क्ष् (६९४५)
भार्यायां व्यभिचारिण्यां नरस्य त्यजतो रुषा ।
कथं धर्मोऽप्यधर्मो वा भवतीह महामते ॥ १३-५९-१८ (८३७७३)
नारद उवाच। १३-५९-१९क्ष् (६९४६)
अनृतेऽपि हि सत्ये वा यो नारीं दूषितां त्यजेत् ।
अरक्षमाणः स्वां भार्यां नरो भवति भ्रूणहा ॥ १३-५९-१९ (८३७७४)
अपत्यहेतोर्या नारी भर्तारमतिलङ्घयेत् ।
लोलेन्द्रियेति सा रक्ष्या न सन्त्याज्या कथञ्चन ॥ १३-५९-२० (८३७७५)
नद्यश्च नार्यश्च समस्वभावा
नैताः प्रमुञ्चन्ति नरावगाढाः ।
स्रोतांसि नद्यो वहते निपातं
नारी रजोभिः पुनरेति शौचम् ॥ १३-५९-२१ (८३७७६)
एवं नार्यो न दुष्यन्ति व्यभिचारेऽपि भर्तृणाम् ।
मासिमासि भवेद्रागस्ततः शुद्धा भवन्त्युत ॥ १३-५९-२२ (८३७७७)
मार्कण्डेय उवाच। १३-५९-२३क्ष् (६९४७)
कानि तीर्थानि भगवन्नृणां देहाश्रितानि वै ।
तानि वै शंस भगवन्याथातथ्येन पृच्छतः ॥ १३-५९-२३ (८३७७८)
सर्वतीर्थेषु सर्वज्ञ किं तीर्थं परमं नृणाम् ।
यत्रोपस्पृश्य पूतो यो नरो भवति नित्यशः ॥ १३-५९-२४ (८३७७९)
नारद उवाच। १३-५९-२५क्ष् (६९४८)
देवर्षिपितृतीर्थानि ब्राह्मं मध्येऽथं वैष्णवम् ।
नृणां तीर्थानि पञ्चाहुः पाणौ सन्निहितानि वै ॥ १३-५९-२५ (८३७८०)
आद्यतीर्थं तु तीर्थानां वैष्णवो भाग उच्यते ।
यत्रोपस्पृश्य वर्णानां चतुर्णां वर्धते कुलम् ।
पितृदैवतकार्याणि वर्धन्ते प्रेत्य चेह च ॥ १३-५९-२६ (८३७८१)
मार्कण्डेय उवाच। १३-५९-२७क्ष् (६९४९)
नराणां कामवृत्तानां या नार्यो निरवग्रहाः ।
यासामभिग्रहो नास्ति ता मे कथय नारद ॥ १३-५९-२७ (८३७८२)
नारद उवाच। १३-५९-२८क्ष् (६९५०)
पाशुर्वैश्या नटी गोपी तान्तुकी तुन्नवायिकी ।
नारी किराती शबरी नर्तकी चानवग्रहा ॥ १३-५९-२८ (८३७८३)
मार्कण्डेय उवाच। १३-५९-२९क्ष् (६९५१)
एतासु जाता नारीषु सर्ववर्णेषु ये सुताः ।
केषु के बन्धुदायादा भवन्ति ऋषिसत्तम ॥ १३-५९-२९ (८३७८४)
नारद उवाच। १३-५९-३०क्ष् (६९५२)
य एताः परिगृह्णन्ति तेषामेव हि ते सुताः ।

सर्वत्र तु प्रवृत्तासु बीजं नश्यति देहिनाम् ॥ १३-५९-३० (८३७८५)
मार्कण्डेय उवाच। १३-५९-३१क्ष् (६९५३)
सर्वस्त्रीषु प्रवृत्ताश्च साधुवेदविवर्जिताः ।
मानवाः काण्डपृष्ठाश्च वेदमन्त्रबहिष्कृताः ।
नियुक्ता हव्यकव्येषु तेषां दत्तं कथं भवेत् ॥ १३-५९-३१ (८३७८६)
नारद उवाच। १३-५९-३२क्ष् (६९५४)
नार्हन्ति हव्यकव्यानि सावित्रीवर्जिता द्विजाः ।
व्रात्येष्वन्नप्रदानं तद्यथा शूद्रेषु वै तथा ॥ १३-५९-३२ (८३७८७)
मार्कण्डेय उवाच। १३-५९-३३क्ष् (६९५५)
धर्मेष्वधिकृतानां तु नराणां मुह्यते मनः ।
कथं न विघ्नो भवति एतदिच्छामि वेदितुम् ॥ १३-५९-३३ (८३७८८)
नारद उवाच। १३-५९-३४क्ष् (६९५६)
अर्थाश्च नार्यश्च समानमेन-
च्छ्रेयांसि पुंसामिह मोहयन्ति ।
रतिप्रमोदात्प्रमदा हरन्ति
भोगैर्धनं चाप्युपहन्ति धर्मान् ॥ १३-५९-३४ (८३७८९)
हव्यं कव्यं च धर्मात्मा सर्वं तच्छ्रोत्रियोऽर्हति ।
दत्तं हि श्रोत्रिये साधौ ज्वलिताग्नाविवाहुतिः ॥ १३-५९-३५ (८३७९०)
मार्कण्डेय उवाच। १३-५९-३६क्ष् (६९५७)
श्रोत्रियाणां कुले जाता वेदार्थविदितात्मनाम् ।
हित्वा कस्मात्त्रयीं विद्यां वार्तां वृत्तिमुपाश्रिताः ॥ १३-५९-३६ (८३७९१)
नारद उवाच। १३-५९-३७क्ष् (६९५८)
चातुर्वर्ण्यं पुरा न्यस्तं सुविद्वत्सु द्विजातिषु ।
तस्माद्वर्णैः संविभज्या वृत्तिः सङ्करवर्जिता ॥ १३-५९-३७ (८३७९२)
ये चान्ये श्रोत्रिया जाताः संस्कृताः पुत्रगृध्नुभिः ।
पूर्वनिर्वाणनिर्वृत्तां जातां वृत्तिमुपाश्रिताः ॥ १३-५९-३८ (८३७९३)
मार्कण्डेय उवाच। १३-५९-३९क्ष् (६९५९)
असंस्कृताः श्रोत्रियजाः संस्कृता ज्ञानिजाः कथम्। १३-५९-३९ (८३७९४)
नारद उवाच। १३-५९-४०क्ष् (६९६०)
असंस्कारो वैदिकश्च स मान्यः श्रोत्रियात्मजः ।
शुद्धान्वयः श्रोत्रियस्तु सुविद्वद्भिः समोऽन्यथा ॥ १३-५९-४० (८३७९५)
अनधीयानपुत्राश्च वेदसंस्कारवर्जिताः ।
तस्मात्ते वेदविज्ञाऽपि विप्राः श्रुतिनिकारिणः ॥ १३-५९-४१ (८३७९६)
ब्रह्मराशौ पुरा सृष्टा वेदसंस्कारसंस्कृताः ।
तस्मात्तेष्वेव ते जाताः साधवः कुलधारिणः ॥ १३-५९-४२ (८३७९७)
मार्कण्डेय उवाच। १३-५९-४३क्ष् (६९६१)

स्वयं क्रीतासु प्रेष्यासु प्रसूयन्ते तु ये नराः ।
कस्य नार्यः सुताश्चैव भवन्ति ऋषिसत्तम ॥१३-५९-४३ (८३७९८)
नारद उवाच।१३-५९-४४क्ष् (६९६२)
स्वदास्यां यो नरो मोहात्प्रसूयेत स पापकृत् ।
इहाभिनिन्दितः प्रेत्य अपत्यं प्रेष्यतां नयेत् ॥१३-५९-४४ (८३७९९)
सा तस्य भार्या पुत्रा ये हव्यकव्यप्रदास्तु ते ।
तस्या ये बान्धवाः केचिद्विषक्ताः प्रेष्यतां गताः ।
सर्वे तस्यास्तु सम्बन्धा मुच्यन्ते प्रेष्यकर्मसु ॥ १३-५९-४५ (८३८००)
एतत्ते कथितं सर्वं यदभिव्याहृतं त्वया ।
अथवा संशयः कश्चिद्भूयः सम्प्रष्टुमर्हसि ॥१३-५९-४६ (८३८०१)
मार्कण्डेय उवाच।१३-५९-४७क्ष् (६९६३)
अमिथ्यादर्शनालोके नारदः सर्वकोविदः ।
प्रत्यक्षदर्शी लोकानां स्वयंभुरिव सत्तमः ॥१३-५९-४७ (८३८०२)
भीष्म उवाच।१३-५९-४८क्ष् (६९६४)
इति सम्भाष्य ऋषिभिर्मार्कण्डेयो महातपाः ।
नारदं चापि सत्कृत्य तेन चैवाभिसत्कृतः ।
आमन्त्रयित्वा ऋषिभिः प्रययावाश्रमं मुनिः ॥ १३-५९-४८ (८३८०३)
ऋषयश्चापि तीर्थानां परिचर्यां प्रचक्रमुः ॥ १३-५९-४९ (८३८०४)
सुक्षेत्रबीजसंस्कारविशुद्धो ब्रह्मिचर्यया ।
नित्यनैमित्तिकात्स्नातो मनश्शुद्ध्या च शुद्ध्यति ॥' ॥ १३-५९-५० (८३८०५)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
एकोनषष्टितमोऽध्यायः ॥५९ ॥

---

अनुससनपर्व-अध्यय०६०
॥ श्रीः ॥
१३.६०. अध्यायः ६०

अथ दानधर्मपर्व ॥१ ॥
Mahabharata - Anushaasana Parva - Chapter Topics
भीष्मेण युधिष्ठिरं प्रति दाने पात्राणां लक्षणादिकथनम् ॥१ ॥

Mahabharata - Anushaasana Parva - Chapter Text

युधिष्ठिर उवाच ।
किमाहुर्भरतश्रेष्ठ पात्रं विप्राः सनातनम् ।

ब्राह्मणं लिङ्गिनं चैव ब्राह्मणं वाऽप्यलिङ्गिनम् ॥ १३-६०-१ (८३८०६)
भीष्म उवाच। १३-६०-२क्ष् (६९६५)
स्ववृत्तिमभिपन्नाय लिङ्गिने चेतराय च ।
देयमाहुर्महाराज उभावेतौ तपस्विनौ ॥ १३-६०-२ (८३८०७)
युधिष्ठिर उवाच। १३-६०-३क्ष् (६९६६)
श्रद्धया परयाऽपूतो यः प्रयच्छेद्दिद्वजातये ।
हव्यं कव्यं तथा दानं को दोषः स्यात्पितामह ॥ १३-६०-३ (८३८०८)
भीष्म उवाच। १३-६०-४क्ष् (६९६७)
श्रद्धापूतो नरस्तात दुर्दान्तोऽपि न संशयः ।
पूतो भवति सर्वत्र किमुत त्वं महाद्युते ॥ १३-६०-४ (८३८०९)
युधिष्ठिर उवाच। १३-६०-५क्ष् (६९६८)
न ब्राह्मणं परिक्षेत दैवेषु सततं नरः ।
कव्यप्रदाने तु बुधाः परीक्ष्यं ब्राह्मणं विदुः ॥ १३-६०-५ (८३८१०)
भीष्म उवाच। १३-६०-६क्ष् (६९६९)
न ब्राह्मणः साधयते हव्यं दैवात्प्रसिद्ध्यति ।
देवप्रसादादिज्यन्ते यजमानैर्न संशयः ॥ १३-६०-६ (८३८११)
ब्राह्मणान्भरतश्रेष्ठ सततं ब्रह्मवादिनः ।
मार्कण्डेयः पुरा प्राह इति लोकेषु बुद्धिमान् ।
ग्ब्राह्मणाः पात्रभूताश्च शुद्धा नैवं पितृष्विह ॥ १३-६०-७ (८३८१२)
युधिष्ठिर उवाच। १३-६०-८क्ष् (६९७०)
अपर्वोऽप्यथवा विद्वान्सम्बन्धी वा यथा भवेत् ।
तपस्वी यज्ञशीलो वा कथं पात्रं भवेत्तु सः ॥ १३-६०-८ (८३८१३)
भीष्म उवाच। १३-६०-९क्ष् (६९७१)
कुलीनः कर्मकृद्वैद्यस्तथैवाप्यनृशंस्यवान् ।
ह्रीमानृजुः सत्यवादी पात्रं पूर्वे च ये त्रयः ॥ १३-६०-९ (८३८१४)
तत्रेमं शृणु मे पार्थ चतुर्णां तेजसां मतम् ।
पृथिव्याः काश्यपस्याग्नेर्मार्कण्डेयस्य चैव हि ॥ १३-६०-१० (८३८१५)
पृथिव्युवाच। १३-६०-११ (८३८१६)
यथा महार्णवे क्षिप्तः क्षिप्रं नेष्टुर्विनश्यति ।
तथा दुश्चरितं सर्वं त्रयीनित्ये निमज्जति ॥ १३-६०-११ (८३८१७)
काश्यप उवाच। १३-६०-१२क्ष् (६९७२)
सर्वे च वेदाः सह षड्भिरङ्गैः
साङ्ख्यं पुराणं च कुले च जन्म ।
नैतानि सर्वाणि गतिर्भवन्ति
शीलव्यपेतस्य नृप द्विजस्य ॥ १३-६०-१२ (८३८१८)
अग्निरुवाच। १३-६०-१३क्ष् (६९७३)

अधीयानः पण्डितम्मन्यमानो
यो विद्यया हन्ति यशः परेषाम् ।
ब्रह्मन्स तेन लभते ब्रह्मवध्यां
लोकास्तस्य ह्यन्तवन्तो भवन्ति ॥ १३-६०-१३ (८३८१९)
मार्कण्डेय उवाच। १३-६०-१४क्ष् (६९७४)
अश्वमेधसहस्रं च सत्यं च तुलया धृतम् ।
नाभिजानामि यज्ञं तु सत्यस्यार्धमवाप्नुयात् ॥ १३-६०-१४ (८३८२०)
भीष्म उवाच। १३-६०-१५क्ष् (६९७५)
इत्युक्त्वा ते जग्मुराशु चत्वारोऽमिततेजसः ।
पृथिवी काश्यपोऽग्निश्च प्रकृष्टायुश्च भार्गवः ॥ १३-६०-१५ (८३८२१)
युधिष्ठिर उवाच। १३-६०-१६क्ष् (६९७६)
यदि ते ब्राह्मणा लोके व्रतिनो भुञ्जते हविः ।
दत्तं ब्राह्मणकामाय कथं तत्सुकृतं भवेत् ॥ १३-६०-१६ (८३८२२)
भीष्म उवाच। १३-६०-१७क्ष् (६९७७)
आदिष्टिनो ये राजेन्द्र ब्राह्मणा वेदपारगाः ।
भुञ्जते ब्रह्मकामाय व्रतलुप्ता भवन्ति ते ॥ १३-६०-१७ (८३८२३)
युधिष्ठिर उवाच। १३-६०-१८क्ष् (६९७८)
अनेकान्तं बहुद्वारं धर्ममाहुर्मनीषिणः ।
किं निमित्तं भवेदत्र तन्मे ब्रूहि पितामह ॥ १३-६०-१८ (८३८२४)
भीष्म उवाच। १३-६०-१९क्ष् (६९७९)
अहिंसा सत्यमक्रोध आनृशंस्यं दमस्तथा ।
आर्जवं चैव राजेन्द्र निश्चितं धर्मलक्षणम् ॥ १३-६०-१९ (८३८२५)
ये तु धर्मं प्रशंसन्तश्चरन्ति पृथिवीमिमाम् ।
अनाचरन्तस्तद्धर्मं सङ्करेऽभिरता प्रभो ॥ १३-६०-२० (८३८२६)
तेभ्यो हिरण्यं रत्नं वा गामश्वं वा ददाति यः ।
दशवर्षाणि विष्ठां स भुङ्क्ते निरयमास्थितः ॥ १३-६०-२१ (८३८२७)
धनेन पुल्कसानां च तथैवान्तेवसायिनाम् ।
कृतं कर्माकृतं वाऽपि रागमोहेन जल्पताम् ॥ १३-६०-२२ (८३८२८)
वैश्वदेवं च ये मूढा विप्राय ब्रह्मचारिणे ।
न ददन्तीह राजेन्द्र ते लोकान्भुञ्जतेऽशुभान् ॥ १३-६०-२३ (८३८२९)
युधिष्ठिर उवाच। १३-६०-२४क्ष् (६९८०)
किं परं ब्रह्मचर्यं च किं परं धर्मलक्षणम् ।
किञ्च श्रेष्ठतमं शौचं तन्मे ब्रूहि पितामह ॥ १३-६०-२४ (८३८३०)
भीष्म उवाच। १३-६०-२५क्ष् (६९८१)
ब्रह्मचर्यं परं तात मधुमांसस्य वर्जनम् ।
मर्यादायां स्थितो धर्मः शमः शौचस्य लक्षणम् ॥ १३-६०-२५ (८३८३१)

युधिष्ठिर उवाच। १३-६०-२६क्ष् (६९८२)
कस्मिन्काले चरेद्धर्मं कस्मिन्कालेऽर्थमाचरेत् ।
कस्मिन्काले सुखी च स्यात्तन्मे ब्रूहि पितामह ॥ १३-६०-२६ (८३८३२)
भीष्म उवाच। १३-६०-२७क्ष् (६९८३)
काल्यमर्थं निषेवेत ततो धर्ममनन्तरम् ।
पश्चात्कामं निषेवेत न च गच्छेत्प्रसङ्गिताम् ॥ १३-६०-२७ (८३८३३)
ब्राह्मणांश्चैव मन्येत गुरूंश्चाप्यभिपूजयेत् ।
सर्वभूतानुलोमश्च मृदुशीलः प्रियंवदः ॥ १३-६०-२८ (८३८३४)
अधिकारे यदनृतं यच्च राजसु पैशुनम् ।
गुरोश्चालीकनिर्बन्धः समानि ब्रह्महत्यया ॥ १३-६०-२९ (८३८३५)
प्रहरेन्न नरेन्द्रेषु न हन्याद्गां तथैव च ।
भ्रूणहत्यासमं चैतदुभयं ये निषेधते ॥ १३-६०-३० (८३८३६)
नाग्निं परित्यजेज्जातु न च वेदान्परित्यजेत् ।
न च ब्राह्मणमाक्रोशेत्समं तद्ब्रह्महत्यया ॥ १३-६०-३१ (८३८३७)
युधिष्ठिर उवाच। १३-६०-३२क्ष् (६९८४)
कीदृशाः साधवो विप्राः केभ्यो दत्तं महाफलम् ।
कीदृशानां च भोक्तव्यं तन्मे ब्रूहि पितामह ॥ १३-६०-३२ (८३८३८)
भीष्म उवाच। १३-६०-३३क्ष् (६९८५)
अक्रोधना धर्मपराः सत्यनित्या दमे रताः ।
तादृशाः साधवो विप्रास्तेभ्यो दत्तं महाफलम् ॥ १३-६०-३३ (८३८३९)
अमानिनः सर्वसहा दृढार्था विजितेन्द्रियाः ।
सर्वभूतहिता मैत्रास्तेभ्यो दत्तं महाफलम् ॥ १३-६०-३४ (८३८४०)
अलुब्धाः शुचयो वैद्या ह्रीमन्तः सत्यवादिनः ।
स्वकर्मनिरता ये च तेभ्यो दत्तं महाफलम् ॥ १३-६०-३५ (८३८४१)
साङ्गांश्च चतुरो वेदानधीते यो द्विजर्षभः ।
षड्भ्यः प्रवृत्तः कर्मभ्यस्तं पात्रमृषयो विदुः ॥ १३-६०-३६ (८३८४२)
ये त्वेवंगुणजातीयास्तेभ्यो दत्तं महाफलम् ।
सहस्रगुणमाप्नोति गुणार्हाय प्रदायकः ॥ १३-६०-३७ (८३८४३)
प्रज्ञाश्रुताभ्यां वृत्तेन शीलेन च समन्वितः ।
तारयेत कुलं सर्वमेकोऽपीह द्विजर्षभः ।
ग्तृप्ते तृप्ताः सर्वदेवाः पितरो मुनयोपि च ॥' १३-६०-३८ (८३८४४)
गामश्वं वित्तमन्नं वा तद्विधे प्रतिपादयेत् ।
द्रव्याणि चान्यानि तथा प्रेत्यभावे न शोचति ॥ १३-६०-३९ (८३८४५)
तारयेत कुलं सर्वमेकोपि ह द्विजोत्तमः ।
किमङ्ग पुनरेवैते तस्मात्पात्रं समाचरेत् ॥ १३-६०-४० (८३८४६)
निशाम्य च गुणोपेतं ब्राह्मणं साधुसम्मतम् ।

दूरादानाय्य सत्कृत्य सर्वतश्चापि पूजयेत् ॥ ॥१३-६०-४१ (८३८४७)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि षष्टितमोऽध्यायः ॥ ६० ॥



७-६०-१ ब्राह्मणं ब्रह्मविदम् । लिङ्गिनं ब्रह्मचारिणं संन्यासिनं च दण्डादिलिङ्गवन्तम् ॥
७-६०-३ अपूतोपि परया श्रद्धयां यदि प्रयच्छति तर्हि तस्य दातुरपूतत्वप्रयुक्तः को दोषः स्यात्तं वद ॥
७-६०-४ श्रद्धैवास्य पूतत्वं करोतीत्यर्थः ॥
७-६०-५ श्रद्धैव पूतत्वकर्त्री चेत् कव्ये पात्रपरीक्षा न विधेया स्यादित्याशयः ॥
७-६०-६ हव्यं दैवं कर्म सिध्यति फलदं भवति नतु ब्राह्मणगुणादिति भावः । इज्यन्ते देवा इति शेषः। दैवं कर्म देवानुग्रहादेव पूर्णं भवति। श्रद्धामात्रप्रियत्वाद्देवानामिति भावः ॥
७-६०-७ पित्र्यं तु कर्म ब्राह्मणानुग्रहादेव पूर्णं भवतीति तत्रानुग्रहकर्तरि तपोबलमावश्यकमित्याशयेनाह ब्राह्मणानिति ॥
७-६०-९ त्रयः अपूर्वसम्बन्धितपस्विनः कुलीनत्वादिगुणसप्तकयुक्ता एव पात्रत्वं भजन्ते परिशेषात् ॥
७-६०-१० तेजसां तेजस्विनां सर्वज्ञानामिति यावत् ॥
७-६०-११ नेष्टुः पांसुपिण्डः लोष्ठो विनश्यतीति ध । पाठः ॥
७-६०-१५ भार्गवः मार्कण्डेयः ॥
७-६०-१६ व्रतिनः ब्रह्मचारिणः । तदीयव्रतनाशात्स्वीयं श्राद्धं दुष्यति नवेति प्रश्नः ॥
७-६०-१७ आदिष्टं द्वादशवर्षाणि ब्रह्मचर्यं चरेति गुर्वादेशस्तद्वन्तः । भोक्तुरेव व्रतं लुप्यते। नतु दाता प्रत्यवैति ॥
७-६०-१८ अन्तो निष्ठा । अनेकान्तं अनेकफलाकारमित्यर्थः। पात्रगुणानामनन्तत्वात्के गुणा नियमेन पात्रताया निमित्तं तानेव संक्षेपेण ब्रूहीति प्रश्नार्थः ॥
७-६०-२२ मेदानां पुल्कसां चेति झ । पाठः। तत्र मेदादीनां स विष्ठां भुङ्क्ते इति सम्बन्धः। मेदा गोमहिष्यादीनां मृतानां मांसमश्नन्तः। पुल्कसा ये ब्राह्मणादीनपि स्वभावादेव हिंसन्ति। अन्तेवसायिनश्चर्मकारादयः। कृतमकृतं वा परकीयं पापं कर्म ॥
७-६०-२४ परं श्रेष्ठम् ॥

७-६०-२७ काल्यं पूर्वाह्णे ॥
७-६०-३९ न शोचति प्रतिपादयन् ॥
७-६०-४० द्विजोत्तमः निर्दोषः । एते पूर्वोक्ता गुणाश्च तत्र यदि लभ्यन्ते तर्हि तारयेतेति किमु ॥

---

अनुससनपर्व-अध्यय०६१
॥ श्रीः ॥
१३.६१. अध्यायः ६१

अथ दानधर्मपर्व ॥ १ ॥
Mahabharata - Anushaasana Parva - Chapter Topics
भीष्मेण युधिष्ठिरम्प्रति श्राद्धे
निमन्त्रणार्हानर्हब्राह्मणलक्षणादिकथनम् ॥ १ ॥

Mahabharata - Anushaasana Parva - Chapter Text

युधिष्ठिर उवाच ।
श्राद्धकाले च दैवे च पित्र्येऽपि च पितामह ।
इच्छामीह त्वयाऽऽख्यातं विहितं यत्सुरर्षिभिः ॥ १३-६१-१ (८३८४८)
भीष्म उवाच। १३-६१-२क्ष् (६९८६)
दैवं पौर्वाह्णिके कुर्यादपराह्णे तु पैतृकम् ।
मङ्गलाचारसम्पन्नः कृतशौचः प्रयत्नवान् ॥ १३-६१-२ (८३८४९)
मनुष्याणां तु मध्याह्ने प्रदद्यादुपपत्तिभिः ।
कालहीनं तु यद्दानं तं भागं रक्षसां विदुः ॥ १३-६१-३ (८३८५०)
लङ्घितं चावलीढं च लाकपूर्वं च यत्कृतम् ।
रजस्वलाभिदृष्टं च तं भागं रक्षसां विदुः ॥ १३-६१-४ (८३८५१)
अवघुष्टं च यद्भुक्तमव्रतेन च भारत ।
परामृष्टं शुना चैव तं भागं रक्षसां विदुः ॥ १३-६१-५ (८३८५२)
केशकीटावपतितं क्षुतं श्वभिरवेक्षितम् ।
रुदितं चावधूतं च तं भागं रक्षसां विदुः ॥ १३-६१-६ (८३८५३)
निरोङ्कारेण यद्भुक्तं सशस्त्रेण च भारत ।
दुरात्मना च यद्भुक्तं तं भागं रक्षसां विदुः ॥ १३-६१-७ (८३८५४)
परोच्छिष्टं च यद्भुक्तं परिभुक्तं च यद्भवेत् ।
दैवे पित्र्ये च सततं तं भागं रक्षसां विदुः ॥ १३-६१-८ (८३८५५)
मन्त्रहीनं क्रियाहीनं यच्छ्राद्धं परिविष्यते ।
त्रिभिर्वर्णैर्नरश्रेष्ठ तं भागं रक्षसां विदुः ॥ १३-६१-९ (८३८५६)

आज्याहुतिं विना चैव यत्किञ्चित्परिविष्यते ।
दुराचारैश्च यद्भुक्तं तं भागं रक्षसां विदुः ॥ १३-६१-१० (८३८५७)
ये भागा रक्षसां प्राप्तास्त उक्ता भरतर्षभ ।
अत ऊर्ध्वं विसर्गस्य परीक्षां ब्राह्मणे शृणु ॥ १३-६१-११ (८३८५८)
यावन्तः पतिता विप्रा जडोन्मत्तास्तथैव च ।
दैवे वाऽप्यथ पित्र्ये वा राजन्नार्हन्ति केतनम् ॥ १३-६१-१२ (८३८५९)
श्वित्री क्लीबश्च कुष्ठी च तता यक्ष्महतश्च यः ।
अपस्मारी च यश्चान्धो राजन्नार्हन्ति केतनम् ॥ १३-६१-१३ (८३८६०)
चिकित्सका देवलका वृथा नियमधारिणः ।
सोमविक्रयिणश्चैव श्राद्धे नार्हन्ति केतनम् ॥ १३-६१-१४ (८३८६१)
गायना नर्तकाश्चैव प्लवका वादकास्तथा ।
कथका योधकाश्चैव राजन्नार्हन्ति केतनम् ॥ १३-६१-१५ (८३८६२)
होतारो वृषलानां च वृषलाध्यापकास्तथा ।
तथा वृषलशिष्याश्च राजन्नार्हन्ति केतनम् ॥ १३-६१-१६ (८३८६३)
अनुयोक्ता च यो विप्रो अनुयुक्तश्च भारत ।
नार्हतस्तावपि श्राद्धं ब्रह्मविक्रयिणौ हि तौ ॥ १३-६१-१७ (८३८६४)
अग्रणीर्यः कृतः पूर्वं वर्णावरपरिग्रहः ।
ब्राह्मणः सर्वविद्योऽपि राजन्नार्हति केतनम् ॥ १३-६१-१८ (८३८६५)
अनग्नयश्च ये विप्रा मृतनिर्यातकाश्च ये ।
स्तेनाश्च पतिताश्चैव राजन्नार्हन्ति केतनम् ॥ १३-६१-१९ (८३८६६)
अपरिज्ञातपूर्वाश्च गणपूर्वाश्च भारत ।
पुत्रिकापूर्वपुत्राश्च श्राद्धे नार्हन्ति केतनम् ॥ १३-६१-२० (८३८६७)
ऋणकर्ता च यो राजन्यश्च वार्धुषिको नरः ।
प्राणिविक्रयवृत्तिश्च राजन्नार्हन्ति केतनम् ॥ १३-६१-२१ (८३८६८)
स्त्रीपूर्वाः काण्डपृष्ठाश्च यावन्तो भरतर्षभ ।
आजपा ब्राह्मणाश्चैव श्राद्धे नार्हन्ति केतनम् ॥ १३-६१-२२ (८३८६९)
श्राद्धे दैवे च निर्दिष्टो ब्राह्मणो भरतर्षभ ।
दातुः प्रतिग्रहीतुश्च शृणुष्वानुग्रहं पुनः ॥ १३-६१-२३ (८३८७०)
चीर्णव्रता गुणैर्युक्ता भवेयुर्येऽपि कर्षकाः ।
सावित्रीज्ञाः क्रियावन्तस्ते राजन्केतनक्षमाः ॥ १३-६१-२४ (८३८७१)
क्षात्रधर्मिणमप्याजौ केतयेत्कुलजं द्विजम् ।
न त्वेव वणिजं तात श्राद्धे च परिकल्पयेत् ॥ १३-६१-२५ (८३८७२)
अग्निहोत्री च यो विप्रो ग्रामवासी च यो भवेत् ।
अस्तेनश्चातिथिज्ञश्च स राजन्केतनक्षमः ॥ १३-६१-२६ (८३८७३)
सावित्रीं जपते यस्तु त्रिकालं भरतर्षभ ।
भिक्षावृत्तिः क्रियावांश्च स राजन्केतनक्षमः ॥ १३-६१-२७ (८३८७४)

उदितास्तमितो यश्च तथैवास्तमितोदितः ।
अहिंस्रश्चाल्पदोषश्च स राजन्केतनक्षमः ॥ १३-६१-२८ (८३८७५)
अकल्कको ह्यतर्कश्च ब्राह्मणो भरतर्षभ ।
संसर्ग भैक्ष्यवृत्तिश्च स राजन्केतनक्षमः ॥ १३-६१-२९ (८३८७६)
अव्रती कितवः स्तेनः प्राणिविक्रयिको वणिक् ।
सनिष्कृतिः पुनः सोमं पीतवान्केतनक्षमः ॥ १३-६१-३० (८३८७७)
अर्जयित्वा धनं पूर्वं दारुणैरपि कर्मभिः ।
भवेत्सर्वातिथिः पश्चात्स राजन्केतनक्षमः ॥ १३-६१-३१ (८३८७८)
ब्रह्मविक्रयनिर्दिष्टं स्त्रिया यच्चार्जितं धनम् ।
अदेयं पितृविप्रेभ्यो यच्च क्लैब्यादुपार्जितम् ॥ १३-६१-३२ (८३८७९)
क्रियमाणेऽपवर्गे च यो द्विजो भरतर्षभ ।
न व्याहरति यद्युक्तं तस्याधर्मो गवानृतम् ॥ १३-६१-३३ (८३८८०)
श्राद्धस्य ब्राह्मणः कालः प्राप्तं दधि घृतं तथा ।
सोमक्षयश्च मांसं च यदारण्यं युधिष्ठिर ॥ १३-६१-३४ (८३८८१)
ग्मुहूर्तानां त्रयं पूर्वमह्नः प्रातरिति स्मृतम् ।
जपध्यानादिभिस्तस्मिन्विप्रैः कार्यं शुभव्रतम् ॥ १३-६१-३५ (८३८८२)
सङ्गवाख्यं त्रिभागं तु मध्याह्नस्त्रिमुहूर्तकः ।
लौकिकं सङ्गवेऽर्धं च स्नानादि ह्यथ मध्यमे ॥ १३-६१-३६ (८३८८३)
चतुर्थमपराह्णं तु त्रिमुहूर्तं तु पित्र्यकम् ।
सायाह्नस्त्रिमुहूर्तं च मध्यमं कविभिः स्मृतम् ॥ १३-६१-३७ (८३८८४)
चतुर्थ त्वपराह्णाख्ये श्राद्धं कुर्यात्सदा नृप ॥ १३-६१-३८ (८३८८५)
प्रागुदीचीमुखा विप्राः विश्वेदेवे च दक्षिणाः ।
श्रावितेषु सुतृप्तेषु पिण्डं दद्यात्सदक्षिणम् ॥' १३-६१-३९ (८३८८६)
श्राद्धापवर्गे विप्रस्य दातारो वोस्त्विवतीरयेत् ।
क्षत्रियस्यापि यो ब्रूयात्प्रीयन्तां पितरस्त्विति ॥ १३-६१-४० (८३८८७)
अपवर्गे तु वैश्यस्य श्राद्धकर्मणि भारत ।
अक्षय्यमभिधातव्यं स्वस्ति शूद्रस्य भारत ॥ १३-६१-४१ (८३८८८)
पुण्याहवाचनं दैवं ब्राह्मणस्य विधीयते ।
एतदेव निरोङ्कारं क्षत्रियस्य विधीयते ॥ १३-६१-४२ (८३८८९)
वैश्यस्य दैवे वक्तव्यं प्रीयन्तां देवता इति ।
ग्गोर्हिसायां चतुर्भागं पूर्वं विप्रातिकेतिनः ॥ १३-६१-४३ (८३८९०)
वर्णावरेषु भुञ्जानं क्रमाच्छूद्रे चतुर्गुणम् ।
नान्यत्र ब्राह्मणो ब्रूयात्पूर्वं विप्रेण केतितः ॥ १३-६१-४४ (८३८९१)
अभोजने च दोषः स्याद्वर्जयेच्छूद्रकेतनम् ।
शूद्रान्नरसपुष्टाङ्गो द्विजो नोर्ध्वां गतिं लभेत् ॥ १३-६१-४५ (८३८९२)
अशुचिर्नैव चाश्नीयान्नास्तिको मानवर्जितः ।

न पूर्वं लङ्घयेल्लोभादेकवर्णोऽपि पार्थिव ॥ १३-६१-४६ (८३८९३)
विप्राः स्मृता भूमिदेवा उपकुर्वाणवर्जिताः।'
कर्मणामानुपूर्व्येण विदिपूर्वं कृतं शृणु ॥ १३-६१-४७ (८३८९४)
जातकर्मादिकाः सर्वास्त्रिषु वर्णेषु भारत ।
ब्रह्मक्षत्रे हि मन्त्रोक्ता वैश्यस्य च युधिष्ठिर ॥ १३-६१-४८ (८३८९५)
विप्रस्य रशना मौञ्जी मौर्वी राजन्यगामिनी ।
बाल्वजी ह्येव वैश्यस्य धर्म एष युधिष्ठिर ॥ १३-६१-४९ (८३८९६)
ग्पालाशो द्विजदण्डः स्यादश्वत्थः क्षत्रियस्य तु ।
औदुम्बरश्च वैश्यस्य धर्म एष युधिष्ठिर ॥' १३-६१-५० (८३८९७)
दातुः प्रतिग्रहीतुश्च धर्माधर्माविमौ शृणु ।
ब्राह्मणस्यानृतेऽधर्मः प्रोक्तः पातकसंज्ञितः ।
चतुर्गुणः क्षत्रियस्य वैश्यस्याष्टगुणः स्मृतः ॥ १३-६१-५१ (८३८९८)
नान्यत्र ब्राह्मणोऽश्नीयात्पूर्वं विप्रेण केतितः ।
श्यवीयान्पशुहिंसायां तुल्यधर्मा भवेत्स हि ॥ १३-६१-५२ (८३८९९)
तथा राजन्यवैश्याभ्यां यद्यश्नीयात्तु केतितः ।
यवीयान्पशुहिंसायां भागार्धं समवाप्नुयात् ॥ १३-६१-५३ (८३९००)
दैवं वाऽक़क़क़क़क़क़क़क़क़क़क़क़क़क़क़क़क़ पित्र्यं योऽश्नीयाद्ब्राह्मणादिषु ।़
अस्नातो ब्राह्मणो राजंस्तस्याधर्मोऽनृतं स्मृतम् ॥ १३-६१-५४ (८३९०१)
आशौचो ब्राह्मणो राजन्योऽश्नीयाद्ब्राह्मणादिषु ।
ज्ञानपूर्वमथो लोभात्तस्याधर्मो गवानृतम् ॥ १३-६१-५५ (८३९०२)
अर्थेनान्येन यो लिप्सेत्कर्मार्थं चैव भारत ।
आमन्त्रयति राजेन्द्र तस्याधर्मोऽनृतं स्मृतम् ॥ १३-६१-५६ (८३९०३)
अवेदव्रतचारित्रास्त्रिभिर्वर्णैर्युधिष्ठिर ।
मन्त्रवत्परिविष्यन्ते तस्याधर्मो गवानृतम् ॥ ॥ १३-६१-५७ (८३९०४)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
एकषष्टितमोऽध्यायः ॥ ६१ ॥

Mahabharata - Anushaasana Parva - Chapter Footnotes

७-६१-१ कालादौ विहितं विशेषमिति शेषः ॥
७-६१-३ उपपत्तिभिः आदरादिभिर्युक्तः सन् ॥
७-६१-४ कलिपूर्वं चेति झ ।पाठः ॥
७-६१-६ क्षुतं क्षुतेन दूषितम् ॥
७-६१-७ निरोंकारेण अननुज्ञातेन शूद्रेण वा ॥
७-६१-८ परिभुक्तं देवातिथिपितृबालकादीन्वर्जयित्वा भुक्तं स्वेनैव ॥
७-६१-१० आज्याहुतिं पात्राभिघारणं विना ॥

७-६१-११ विसर्गस्य ब्राह्मणे दानस्य पात्रभूते ॥
७-६१-१२ पतिताः महापातकेन जातिबहिर्भूताः ।केतनं निमन्त्रणम् ॥
७-६१-१३ श्वित्री श्वेतकुष्ठी ।कुष्ठी मण्डलकुष्ठी।यक्ष्महतो
महारोगी।अपस्मारी ग्रहग्रस्तः ॥
७-६१-१४ देवलका देवार्चनवृत्तिजीविनः ।७-६१-१५ प्लवकाः
क्रीडापराः।कथका वृथालापिनः।योधका मल्लाः ॥
७-६१-१६ वृषलानां शूद्राणां होतारो याजकाः ॥
७-६१-१७ अनुयोक्ता भृतकाध्यापकः ।अनुयुक्तो भृतकाध्येता ॥
७-६१-१८ वर्णावरपरिग्रहः शूद्रापतिः ॥
७-६१-२० गणपूर्वा ग्रामण्यः ।पुत्रिकापूर्वपुत्राः।अस्यामुत्पन्नः पुत्रो
मदीय इति नियमेन या दीयते तस्यां च यो जातः स पुत्रिकापूर्वपुत्रः ॥
७-६१-२१ ऋणकर्ता वृद्ध्यार्थं धनप्रयोक्ता ॥
७-६१-२२ स्त्रीपूर्वाः स्त्रीजिताः स्त्रीपण्योपजीविनो वा ।काण्डपृष्ठो
वेश्यापतिः।अजपाः सन्ध्यावन्दनहीनाः ॥
७-६१-२३ अनुग्रहं निषिद्धानामपि केनचिद्गुणेनाभ्यनुज्ञानम् ॥
७-६१-२५ वणिजं वणिग्वृत्तिम् ॥
७-६१-२८ उदित आढ्यः ।अस्तमितो दरिद्रः पूर्वं आढ्यः सद्यो दरिद्रः ॥
७-६१-२९ अकल्ककोऽदाम्भिकः अपापो वा ।अतर्कोऽहैतुकः संसर्गे
सङ्गत्यर्हे गृहे ज्ञाते भैक्ष्यवृत्तिः ॥
७-६१-३० कितवो धूर्तः ॥
७-६१-३१ सर्वं देवतादिकं अतिथिरेव यस्य स सर्वातिथिः ॥
७-६१-३२ ब्रह्म वेदः ।क्लैब्यात् दीनभाषणेन मिथ्याशपथादिना वा ॥
७-६१-३३ अपवर्गे श्राद्धसमाप्तौ युक्तं अस्तुस्वधेत्यादिवचनं
गवानृतं अनृतगोशपथस्य पापम् ॥
७-६१-३४ सोमक्षयो दर्शः ।आरण्यं मृगादिमांसं च यदा प्राप्तं
तदैव श्राद्धस्य कालः ॥
७-६१-४० स्वधा वै मुदिता भवेदिति झ।पाठः ।स्वधोच्यतामिति
प्रदात्रा उक्ते अस्तुस्वधेति ब्राह्मणो वदेत्।एवमुत्तरत्र मुदिता प्रीतिकरी
पितॄणामित्यर्थात् ॥
७-६१-४२ पुण्याहं भवन्तो ब्रुवन्त्विति यजमानेन प्रोक्ते ओं
पुण्याहमस्त्विति ब्राह्मणा ब्रूयुः ।दैवं सोङ्कारम् ॥
७-६१-४३ दैवे ओङ्कारस्थाने प्रीयन्तां देवताः पुण्याहमस्त्विति
प्रतिवदेदित्यर्थः ॥
७-६१-४९ रशना मेखला ।मौञ्जी मुञ्जमयी।मौर्वी धनुर्ज्या।बाल्बजी
बल्बजस्तृणविसेषस्तन्मयी ॥
७-६१-५१ धर्मो दातुः ।अधर्मः प्रतिग्रहीतुः ॥

७-६१-५३ ब्राह्मणेन केतितः सन् यदि यवीयान् भवेत्तर्हि वृथा पशुहिंसायाः पूर्णं पापं प्राप्नुयात् । क्षत्रियादिना केतितः सन् यदि यवीयान्स्यात्तर्हि वृथापशुहिंसाया अर्धं पापं प्राप्नुयाटिति श्लोकद्वयार्थः ॥
७-६१-५५ आशौचः जननमरणाशौचवान् ॥
७-६१-५६ अर्थेन प्रयोजनेन तीर्थयात्राव्यपदेशेन जीविकाद्यर्थी यो धनं लिप्तेत् यो वा कर्मार्थं मे भिक्षां देहीत्यामन्त्रयति दातारमभिमुखीकरोति तस्यापि अनृतं गवानृतमेव स्मृतम् ॥
७-६१-५७ वेदव्रतं चारित्रं च येषां नास्ति ते । येन मन्त्रवत् मन्त्रयुक्तं यथा स्यात्तथा श्राद्धे परिविष्यन्ते तस्य ॥

---

अनुससनपर्व-अध्यय०६२
॥ श्रीः ॥
१३.६२. अध्यायः ६२

अथ दानधर्मपर्व ॥ १ ॥
Mahabharata - Anushaasana Parva - Chapter Topics
भीष्मेण युधिष्ठिरम्प्रति दानादिषु पात्रलक्षणानां स्वर्गनरकप्रापकपुण्यपापानां च प्रतिपादनम् ॥ १ ॥

Mahabharata - Anushaasana Parva - Chapter Text

युधिष्ठिर उवाच ।
पित्र्यं वाऽप्यथवा दैवं दीयते यत्पितामह ।
एतदिच्छाम्यहं ज्ञातुं दत्तं केषु महाफलम् ॥ १३-६२-१ (८३९०५)
भीष्म उवाच । १३-६२-२क्ष् (६९८७)
येषां दाराः प्रतीक्षन्ते सुवृष्टिमिव कर्षकाः ।
उच्छेषपरिशेषं हि तान्भोजय युधिष्ठिर ॥ १३-६२-२ (८३९०६)
चारित्रनिरता राजन्ये कृशाः कृशवृत्तयः ॥
अर्थिनश्चोपगच्छन्ति तेषु दत्तं महाफलम् ॥ १३-६२-३ (८३९०७)
तद्भक्तास्तद्गृहा राजंस्तद्बलास्तदपाश्रयाः ।
अर्थिनश्च भवन्त्यर्थे तेषु दत्तं महाफलम् ॥ १३-६२-४ (८३९०८)
तस्करेभ्यः परेभ्यो वा हृतस्वा भयदुःखिताः ।
अर्थिनो भोक्तुमिच्छन्ति तेषु दत्तं महाफलम् ॥ १३-६२-५ (८३९०९)
अकल्ककस्य विप्रस्य रौक्ष्यात्करकृतात्मनः ।
वटवो यस्य भिक्षन्ति तेभ्यो दत्तं महाफलम् ॥ १३-६२-६ (८३९१०)

हृतस्वा हृतदाराश्च ये विप्रा देशसम्प्लवे ।
अर्थार्थमभिगच्छन्ति तेभ्यो दत्तं महाफलम् ॥१३-६२-७ (८३९११)
व्रतोनो नियमस्थाश्च ये विप्राः श्रुतसम्मताः ।
तस्मपाप्त्यर्थमिच्छन्ति तेभ्यो दत्तं महाफलम् ॥१३-६२-८ (८३९१२)
अत्युत्क्रान्ताश्च धर्मेषु पाषण्डसमयेषु च ।
कृशप्राणाः कृशधनास्तेभ्यो दत्तं महाफलम् ॥१३-६२-९ (८३९१३)
कृतसर्वस्वहरणा निर्दोषाः प्रभविष्णुभिः ।
स्पृहयन्ति च भुक्त्वाऽन्नं तेषुदत्तं महाफलम् ॥१३-६२-१० (८३९१४)
तपस्विनस्तपोनिष्ठास्तेषां भैक्षचराश्च ये ।
अर्थिनः किञ्चिदिच्छन्ति तेषु दत्तं महाफलम् ॥१३-६२-११ (८३९१५)
महाफलविधिर्दाने श्रुतस्ते भरतर्षभ ।
निरयं येन गच्छन्ति स्वर्गं चैव हि तच्छृणु ॥१३-६२-१२ (८३९१६)
ग्व्रतानां पारणार्थाय गुर्वर्थे यज्ञदक्षिणाम् ।
निर्वेशार्थं च विद्वांसस्तेषां दत्तं महाफलम् ॥१३-६२-१३ (८३९१७)
पित्रोश्च रक्षणार्थाय पुत्रदारार्थमेव वा ।
महाव्याधिविमोक्षार्थं तेषु दत्तं महाफलम् ॥१३-६२-१४ (८३९१८)
बालाः स्त्रियश्च वाञ्छन्ति सुभक्तं चाप्यसाधनाः ।
स्वर्गमायान्ति दत्त्वैषां निरयान्नोपयान्ति ते ॥'॥१३-६२-१५ (८३९१९)
गुर्वर्थमभयार्थं वा वर्जयित्वा युधिष्ठिर ।
येऽनृतं कथयन्ति स्म ते वा निरयगामिनः ॥१३-६२-१६ (८३९२०)
परदाराभिहर्तारः परदाराभिमर्शिनः ।
परदारप्रयोक्तास्ते वै निरयगामिनः ॥१३-६२-१७ (८३९२१)
ये परस्वापहर्तारः परस्वानां च नाशकाः ।
सूचकाश्च परेषां ये ते वा निरयगामिनः ॥१३-६२-१८ (८३९२२)
प्रपाणां च सभानां च संक्रमाणां च भारत ।
अगाराणां च भेत्तारो नरा निरयगामिनः ॥१३-६२-१९ (८३९२३)
अनाथां प्रमदां बालां वृद्धां भीतां तपस्विनीम् ।
वञ्चयन्ति नरा ये च ते वै निरयगामिनः ॥१३-६२-२० (८३९२४)
वृत्तिच्छेदं गृहच्छेदं दारच्छेदं च भारत ।
मित्रच्छेदं तथाऽऽशायास्ते वै निरयगामिनः ॥१३-६२-२१ (८३९२५)
सूचकाः सेतुभेत्तारः परवृत्त्युपजीवकाः ।
अकृतज्ञाश्च मित्राणां ते वै निरयगामिनः ॥१३-६२-२२ (८३९२६)
पाषण्डा दूषकाश्चैव समयानां च दूषकाः ।
ये प्रत्यवसिताश्चैव ते वै निरयगामिनः ॥१३-६२-२३ (८३९२७)
विषमव्यवहाराश्च विषमाश्चैव वृद्धिषु ।
लाभेषु विषमाश्चैव ते वै निरयगामिनः ॥१३-६२-२४ (८३९२८)

दूतसंव्यवहाराश्च निष्परीक्षाश्च मानवाः ।
प्राणिहिंसाप्रवृत्ताश्च ते वै निरयगामिनः ॥ १३-६२-२५ (८३९२९)
कृताशं कृतनिर्देशं कृतभक्तं कृतश्रमम् ।
भेदैर्ये व्यपकर्षन्ति ते वै निरयगामिनः ॥ १३-६२-२६ (८३९३०)
पर्यश्नन्ति च ये दारानग्निभृत्यातिथींस्तथा ।
उत्सन्नपितृदेवेज्यास्ते वै निरयगामिनः ॥ १३-६२-२७ (८३९३१)
वेदविक्रयिणश्चैव वेदानां चैव दूषकाः ।
वेदानां लेखकाश्चैव ते वै निरयगामिनः ॥ १३-६२-२८ (८३९३२)
चातुराश्रम्यबाह्याश्च श्रुतिबाह्याश्च ये नराः ।
विकर्मभिश्च जीवन्ति ते वै निरयगामिनः ॥ १३-६२-२९ (८३९३३)
केशविक्रयिका राजन्विषविक्रयिकाश्च ये ।
क्षीरविक्रयिकाश्चैव ते वै निरयगामिनः ॥ १३-६२-३० (८३९३४)
ब्राह्मणानां गवां चैव कन्यानां च युधिष्ठिर ।
येऽन्तरायान्ति कार्येषु ते वै निरयगामिनः ॥ १३-६२-३१ (८३९३५)
शस्त्रविक्रयिकाश्चैव कर्तारश्च युधिष्ठिर ।
शल्यानां धनुषां चैव ते वै निरयगामिनः ॥ १३-६२-३२ (८३९३६)
शिलाभिः शङ्कुभिर्वाऽपि श्वभ्रैर्वा भरतर्षभ ।
ये मार्गमनुरुन्धन्ति ते वै निरयगामिनः ॥ १३-६२-३३ (८३९३७)
उपाध्यायांश्च भृत्यांश्च भक्तांश्च भरतर्षभ ।
ये त्यजन्त्यविकारांस्त्रींस्ते वै निरयगामिनः ॥ १३-६२-३४ (८३९३८)
अप्राप्तदमकाश्चैव नासानां वेधकाश्च ये ।
बन्धकाश्च पशूनां ये ते वै निरयगामिनः ॥ १३-६२-३५ (८३९३९)
अगोप्तारश्च राजानो बलिषड्भागतस्कराः ।
समर्थाश्चाप्यदातारस्ते वै निरयगामिनः ॥ १३-६२-३६ (८३९४०)
क्षान्तान्दान्तांस्तथा प्राज्ञान्दीर्घकालं सहोषितान् ।
त्यजन्ति कृतकृत्या ये ते वै निरयगामिनः ॥ १३-६२-३७ (८३९४१)
बालानामथ वृद्धानां दासानां चैव ये नराः ।
अदत्त्वा भक्षयन्त्यग्रे ते वै निरयगामिनः ॥ १३-६२-३८ (८३९४२)
एते पूर्वं विनिर्दिष्टाः प्रोक्ता निरयगामिनः ।
भागिनः स्वर्गलोकस्य वक्ष्यामि भरतर्षभ ॥ १३-६२-३९ (८३९४३)
सर्वेष्वेव तु कार्येषु दैवपूर्वेषु भारत ।
हन्ति पुत्रान्पशून्कृत्स्नान्ब्राह्मणातिक्रमः कृतः ॥ १३-६२-४० (८३९४४)
दानेन तपसा चैव सत्येन च युधिष्ठिर ।
ये धर्ममनुवर्तन्ते ते नराः स्वर्गगामिनः ॥ १३-६२-४१ (८३९४५)
शुश्रूषाभिस्तपोभिश्च विद्यामादाय भारत ।
ये प्रतिग्रहनिःस्नेहास्ते नराः स्वर्गगामिनः ॥ १३-६२-४२ (८३९४६)

भयात्पाषात्तथा बाधाद्दारिद्र्याद्व्याधिधर्षणात् ।
तत्कृते धनमीप्सन्ते ते नराः स्वर्गगामिनः ॥ १३-६२-४३ (८३९४७)
क्षमावन्तश्च धीराश्च धर्मकार्येषु चोत्थिताः ।
मङ्गलाचारसम्पन्नाः पुरुषाः स्वर्गगामिनः ॥ १३-६२-४४ (८३९४८)
निवृत्ता मधुमांसेभ्यः परदारेभ्य एव च ।
निवृत्ताश्चैव मद्येभ्यस्ते नराः स्वर्गगामिनः ॥ १३-६२-४५ (८३९४९)
आश्रमाणां च कर्तारः कुलानां चैव भारत ।
देशानां नगराणां च ते नराः स्वर्गगामिनः ॥ १३-६२-४६ (८३९५०)
वस्त्राभरणदातारो भक्ष्यपानान्नदास्तथा ।
कुटुम्बानां च भर्तारः पुरुषाः स्वर्गगामिनः ॥ १३-६२-४७ (८३९५१)
सर्वहिंसानिवृत्ताश्च नराः सर्वसहाश्च ये ।
सर्वस्याश्रयभूताश्च ते नराः स्वर्गगामिनः ॥ १३-६२-४८ (८३९५२)
मातरं पितरं चैव शुश्रुषन्ति जितेन्द्रियाः ।
भ्रातॄणां चैव सस्नेहास्ते नराः स्वर्गगामिनः ॥ १३-६२-४९ (८३९५३)
आढ्याश्च बलवन्तश्च यौवनस्थाश्च भारत ।
ये वै जितेन्द्रिया धीरास्ते नराः स्वर्गगामिनः ॥ १३-६२-५० (८३९५४)
अपराधिषु सस्नेहा मृदवो मृदुवत्सलाः ।
आराधनसुखाश्चापि पुरुषाः स्वर्गगामिनः ॥ १३-६२-५१ (८३९५५)
सहस्रपरिवेष्टारस्तथैव च सहस्रदाः ।
त्रातारश्च सहस्राणां ते नराः स्वर्गगामिनः ॥ १३-६२-५२ (८३९५६)
सुवर्णस्य च दातारो गवां च भरतर्षभ ।
यानानां वाहनानां च ते नराः स्वर्गगामिनः ॥ १३-६२-५३ (८३९५७)
वैवाहिकानां द्रव्याणां प्रेष्याणां च युधिष्ठिर ।
दातारो वाससां चैव ते नराः स्वर्गगामिनः ॥ १३-६२-५४ (८३९५८)
विहारावसथोद्यानकूपारामसभाप्रपा ।
वप्राणां चैव कर्तारस्ते नराः स्वर्गगामिनः ॥ १३-६२-५५ (८३९५९)
निवेशनानां क्षेत्राणां वसतीनां च भारत ।
दातारः प्रार्थितानां च ते नराः स्वर्गगामिनः ॥ १३-६२-५६ (८३९६०)
रसानां चाथ बीजानां धान्यानां च युधिष्ठिर ।
स्वयमुत्पाद्य दातारः पुरुषाः स्वर्गगामिनः ॥ १३-६२-५७ (८३९६१)
यस्मिंस्तस्मिन्कुले जाता बहुपुत्राः शतायुषः ।
सानुक्रोशा जितक्रोधाः पुरुषाः स्वर्गगामिनः ॥ १३-६२-५८ (८३९६२)
एतदुक्तममुत्रार्थं दैवं पित्र्यं च भारत ।
दानधर्मं च दानस्य यत्पूर्वमृषितिः कृतम् ॥ ॥ १३-६२-५९ (८३९६३)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि

७-६२-२ भोजनपात्रेऽवशिष्टमुच्छेषः तेन सहितं परिशेषं स्थाल्यामवशिष्टं प्रतीक्षन्ते ।येषां पाकपर्याप्तमेव धान्यादिकमस्ति न कुसूलादौ तान् भोजय ॥
७-६२-४ तद्भक्ताः चारित्रमेव भक्तोऽन्नं तद्वज्जीवनं येषां ते ।तद्गृहाः तदेव गृहे स्त्र्यादौ येषां ते अर्थे प्रयोजने सत्येवार्थिनो भवन्ति न सङ्ग्रहार्थम् ॥
७-६२-६ रौक्ष्यात् दारिद्र्यात् ।करे कृतः आत्मेवात्मा जीवनमन्नम्।हस्ते गृहीतान्नस्य वटवः क्षुधार्ताः मह्य देहि मह्यं देवीति याचन्ते तेभ्योऽतिदरिद्रेभ्यः ॥
७-६२-९ पाषण्डानां समयो मर्यादा येषु धर्मेषु तत्र अत्युत्क्रान्ताः अत्यन्तं ततो दूरे स्थिताः ॥
७-६२-१० भुक्त्वान्नमेव स्पृहयन्ति न स्वादु ।अतएव न चतुर्थी ॥
७-६२-१६ असयार्थं, भयनिवृत्तिरूपं प्रयोजनम् ॥
७-६२-१७ अभिमर्शितो जाराः ।प्रयोक्तारः हर्त्रभिमर्शिनोर्दूताः ॥
७-६२-१८ परेषां दोषस्येति शेषः ॥
७-६२-२१ आशायाश्छेदमित्येकदेशानुषङ्गः ।कुर्वन्तीति शेषः ॥
७-६२-२२ सूचकाः राजगामिपैशुन्यवादिनः ।सेतुः आर्यमर्यादा ॥
७-६२-२३ पाषण्डाः वेदविरोधिनः शाक्यादयः दूषकाः सतां निन्दकाः ।समयानां धर्मसङ्केतानाम्।प्रत्यवसिताः आरूढपतिताः ॥
७-६२-२६ कृताशं दासमर्थिन वा ।कृतनिर्देशं निर्देशः तुभ्यमिदं दास्यामीति प्रतिज्ञा सा कृतायस्मै तम्।भक्तं वेतनम्।व्यपकर्षन्ति षत्युः सकाशाद्दूरीकुर्वन्ति ॥
७-६२-२७ पर्यश्नन्ति ।परित्यज्याश्नन्ति ॥
७-६२-२९ विकर्मभइः स्वस्य निषिद्धैः कर्मभिः ॥
७-६२-३० केशाश्चामरकम्बलादयः ॥
७-६२-३२ कर्तारः शस्त्रशल्यादीनाम् ॥
७-६२-३५ अप्राप्तानामदान्तानां पशूनाम् ।अण्डमर्दनेन बलवीर्ययोर्नाशका अप्राप्तदमकाः ॥
७-६२-४० ये ब्राह्मणातिक्रमं न कुर्वन्ति ते स्वर्गागामिन इत्यर्थः ॥
७-६२-४३ कर्तारः पालनकर्तारः ॥
७-६२-५१ आराधनेनि इतरान् सुखयनति ते तथा ॥
७-६२-५७ दानस्य प्रत्यर्पणस्य ।दानं च तद्धर्म येति शोधको धर्मः दैष् शोधन इति धातुः अमुत्रार्थं परलोकफलम् ॥

अनुससनपर्व-अध्यय०६३
॥ श्रीः ॥
१३.६३. अध्यायः ६३

अथ दानधर्मपर्व ॥ १ ॥
Mahabharata - Anushaasana Parva - Chapter Topics
भीष्मेण युधिष्ठिरम्प्रति हिंसाभावेपि ब्रह्महत्याप्राप्तिप्रतिपादकव्यासवचनानुवादः ॥ १ ॥

Mahabharata - Anushaasana Parva - Chapter Text

युधिष्ठिर उवाच ।
इदं मे तत्त्वतो राजन्वक्तुमर्हसि भारत ।
अहिंसयित्वाऽपि कथं ब्रह्महत्या विधीयते ॥ १३-६३-१ (८३९६४)
भीष्म उवाच। १३-६३-२क्ष् (६९८८)
व्यासमामन्त्र्य राजेन्द्र पुरा यत्पृष्टवानहम् ।
तत्तेऽहं सम्प्रवक्ष्यामि तदिहैकमनाः शृणु ॥ १३-६३-२ (८३९६५)
चतुर्थस्त्वं वसिष्ठस्य तत्त्वमाख्याहि मे मुने ।
अहिंसयित्वा केनेह ब्रह्महत्या विधीयते ॥ १३-६३-३ (८३९६६)
इति पृष्टो मया राजन्पराशरशरीरजः ।
अब्रवीन्निपुणो धर्मे निःसंशयमनुत्तमम् ॥ १३-६३-४ (८३९६७)
ब्राह्मणं स्वयमाहूय भिक्षार्थे कृशवृत्तिनम् ।
ब्रूयान्नास्तीति यः पश्चात्तं विद्याद्ब्रह्मघातिनम् ॥ १३-६३-५ (८३९६८)
मध्यस्थस्येह विप्रस्य योऽनूचानस्य भारत ।
वृत्तिं हरति दुर्बुद्धिस्तं विद्याद्ब्रह्मघातिनम् ॥ १३-६३-६ (८३९६९)
गोकुलस्य तृषार्तस्य जलार्थमभिधावतः ।
उत्पादयति यो विघ्नं तं विद्याक़्क़ ह्मघातिनम् ॥ १३-६३-७ (८३९७०)
यः प्रवृत्तां श्रुतिं सम्यक् शास्त्र वा मुनिभिः कृतम् ।
दूषयत्यनभिज्ञाय तं विद्याद्ब्रह्मघातिनम् ॥ १३-६३-८ (८३९७१)
आत्मजां रूपसम्पन्नां महतीं सदृशे वरे ।
न प्रयच्छति यः कन्यां तं विद्याद्ब्रह्मधातिनम् ॥ १३-६३-९ (८३९७२)
अधर्मनिरतो मूढो मिथ्या यो वै द्विजातिषु ।
दद्यान्मर्मातिगं शोकं तं विद्याद्ब्रह्मघातिनम् ॥ १३-६३-१० (८३९७३)
चक्षुषा विप्रहीणस्य पङ्गुलस्य जडस्य वा ।
हरेत यो वै सर्वस्वं तं विद्या क़्क़क़्क़ घातिनम् ॥ १३-६३-११ (८३९७४)

आश्रमे वा वने वाऽपि ग्रामे वा यदि वा पुरे ।
अग्निं समुत्सृजेन्मोहात्तं विद्याद्ब्रह्मघातिनम् ॥ ॥१३-६३-१२ (८३९७५)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
त्रिषष्टितमोऽध्यायः ॥६३ ॥

---

अनुससनपर्व-अध्यय०६४
॥ श्रीः ॥
१३.६४. अध्यायः ६४

अथ दानधर्मपर्व ॥१ ॥
Mahabharata - Anushaasana Parva - Chapter Topics
भीष्मेण युधिष्ठिरम्प्रति नद्यादितीर्थानां तत्तन्नामविशेषनिर्देशेन
तत्सेवनफलप्रतिपादकगौतमाङ्गिरःसंवादानुवादः ॥१ ॥

Mahabharata - Anushaasana Parva - Chapter Text

युधिष्ठिर उवाच ।
तीर्थानां दर्शनं श्रेयः स्नानं च भरतर्षभ ।
श्रवणं च महाप्राज्ञ श्रोतुमिच्छामि तत्त्वतः। १३-६४-१ (८३९७६)
पृथिव्यां यानि तीर्थानि पुण्यानि भरतर्षभ ।
वक्तुमर्हसि मे तानि श्रोताऽस्मि नियतं प्रभो ॥१३-६४-२ (८३९७७)
भीष्म उवाच।१३-६४-३क्ष् (६९८९)
इममङ्गिरसा प्रोक्तं तीर्थवंशं महाद्युते ।
श्रोतुमर्हसि भद्रं ते प्राप्स्यसे धर्ममुत्तमम् ॥१३-६४-३ (८३९७८)
तपोवनगतं विप्रमभिगम्य महामुनिम् ।
पप्रच्छाङ्गिरसं धीरं गौतमः संशितव्रतः। १३-६४-४ (८३९७९)
अस्ति मे भगवन्कश्चित्तीर्थेभ्यो धर्मसंशयः ।
तत्सर्वं श्रोतुमिच्छामि तन्मे शंस महामुने ॥१३-६४-५ (८३९८०)
उपस्पृश्य फलं किं स्यात्तेषु तीर्थेषु वै मुने ।
प्रेत्यभावे महाप्राज्ञ तद्यथाऽस्ति तथा वद ॥१३-६४-६ (८३९८१)
अङ्गिरा उवाच।१३-६४-७क्ष् (६९९०)
सप्ताहं चन्द्रभागां वै वितस्तामूर्मिमालिनीम् ।
विगाह्य वै निराहारो निर्मलो मुनिवद्भवेत् ॥१३-६४-७ (८३९८२)
काश्मीरमण्डले नद्यो याः पतन्ति महास्वनम् ।
ता नदीः सिन्धुमासाद्य शीलवान्स्वर्गमाप्नुयात् ॥१३-६४-८ (८३९८३)

पुष्करं च प्रभासं च नैमिषं सागरोदकम् ।
देविकामिन्द्रमार्गं च स्वर्णबिन्दुं विगाह्य च ॥ १३-६४-९ (८३९८४)
विबोध्यते विमानस्थः सोऽप्सरोभिरभिष्टुतः ।
हिरण्यबिन्दुमालक्ष्य प्रयतश्चाभिवाद्य च ॥ १३-६४-१० (८३९८५)
कुशेशये च देवत्वं धूयते तस्य किल्बिषम् ।
इन्द्रतोयां समासाद्य गन्धमादनसन्निधौ ॥ १३-६४-११ (८३९८६)
करतोयां कुरुङ्गे च त्रिरात्रोपोषितो नरः ।
अश्वमेधमवाप्नोति विगाह्य प्रयतः शुचिः ॥ १३-६४-१२ (८३९८७)
गङ्गाद्वारे कुशावर्ते बिल्वके नीलपर्वते ।
तथा कनखले स्नात्वा धूतपाप्मा दिवं व्रजेत् ॥ १३-६४-१३ (८३९८८)
अपां ह्रद उपस्पृश्य वाजिमेधफलं लभेत् ।
ब्रह्मचारी जितक्रोधः सत्यसन्धस्त्वहिंसकः ॥ १३-६४-१४ (८३९८९)
यत्र भागीरथी गङ्गा वहते दिशमुत्तरम् ।
महेश्वरस्य त्रिस्थाने यो नरस्त्वभिषिच्यते ॥ १३-६४-१५ (८३९९०)
एकमासं निराहारः स पश्यति हि देवताः ।
सप्तगङ्गे त्रिगङ्गे च इन्द्रमार्गे च तर्पयन् ॥ १३-६४-१६ (८३९९१)
अर्थान्वै लभते भोक्तुं यो नरो जायते पुनः ।
महाश्रम उपस्पृश्य योऽग्निहोत्रपरः शुचिः ॥ १३-६४-१७ (८३९९२)
एकमासं निराहारः सिद्धिं मासेन स व्रजेत् ।
महाह्रद उपस्पृश्य भृगुतुङ्गे त्वलोलुपः ॥ १३-६४-१८ (८३९९३)
त्रिरात्रोपोषितो भूत्वा मुच्यते ब्रह्महत्यया ।
कन्याकूप उपस्पृश्य बलाकायां कृतोदकः ॥ १३-६४-१९ (८३९९४)
देवेषु लभते कीर्तिं यशसा च विराजते ॥ १३-६४-२० (८३९९५)
देविकायामुपस्पृश्य तथा सुन्दरिकाह्रदे ।
अश्विन्यां रूपवर्चस्कं प्रेत्य वै लभते नरः ॥ १३-६४-२१ (८३९९६)
महागङ्गामुपस्पृश्य कृत्तिकाङ्गारके तथा ।
पक्षमेकं निराहारः स्वर्गमाप्नोति निर्मलः ॥ १३-६४-२२ (८३९९७)
वैमानिक उपस्पृश्य किङ्किणीकाश्रमे तथा ।
निवासेऽप्सरसां दिव्ये कामचारी महीयते ॥ १३-६४-२३ (८३९९८)
कालिकाश्रममासाद्य विपाशायां कृतोदकः ।
ब्रह्मचारी जितक्रोधस्त्रिरात्रं मुच्यते भवात् ॥ १३-६४-२४ (८३९९९)
आश्रमे कृत्तिकानां तु स्नात्वा यस्तर्पयेत्पितॄन् ।
तोषयित्वा महादेवं निर्मलः स्वर्गमाप्नुयात् ॥ १३-६४-२५ (८४०००)
महाकूपमुपस्पृश्य त्रिरात्रोपोषितः शुचिः ।
त्रसानां स्थावराणां च द्विपदानां भयं त्यजेत् ॥ १३-६४-२६ (८४००१)
देवदारुवने स्नात्वा धूतपाप्मा कृतोदकः ।

देवशब्दमवाप्नोति सप्तरात्रोषितः शुचिः ॥ १३-६४-२७ (८४००२)
शरस्तम्बे कुशस्तम्बे द्रोणशर्मपदे तथा ।
अपांप्रपतनासेवी सेव्यते सोप्सरोगणैः ॥ १३-६४-२८ (८४००३)
चित्रकूटे जनस्थाने तथा मन्दाकिनीजले ।
विगाह्य वै निराहारो राजलक्ष्म्या निषेव्यते ॥ १३-६४-२९ (८४००४)
श्यामायास्त्वाश्रमं गत्वा उषित्वा चाभिषिच्य च ।
एकपक्षं निराहारस्त्वन्तर्धानफलं लभेत् ॥ १३-६४-३० (८४००५)
कौशिकीं तु समासाद्य वायुभक्षस्त्वलोलुपः ।
एकविंशतिरात्रेण स्वर्गमारोहते नरः ॥ १३-६४-३१ (८४००६)
मतङ्गवाप्यां यः स्नायादेकरात्रेण सिध्यति ।
विगाहति ह्यनालम्बमन्धकं वै सनातनम् ॥ १३-६४-३२ (८४००७)
नैमिषे स्वर्गतीर्थे च उपस्पृश्य जितेन्द्रियः ।
फलं पुरुषमेधस्य लभेन्मासं कृतोदकः ॥ १३-६४-३३ (८४००८)
गङ्गाह्रद उपस्पृस्य तथा चैवोत्पलावने ।
अश्वमेघमवाप्नोति तत्र मासं कृतोदकः ॥ १३-६४-३४ (८४००९)
गङ्गायमुनयोस्तीर्थे तथा कालञ्जरे गिरौ ।
दशाश्वमेधानाप्नोति तत्र मासं कृतोदकः ॥ १३-६४-३५ (८४०१०)
यष्टिह्रद उपस्पृश्य चान्नदानाद्विशिष्यते ॥ १३-६४-३६ (८४०११)
दशतीर्थसहस्राणि तिस्रः कोट्यस्तथाऽपराः ।
समागच्छन्ति माघ्यां तु प्रयागे भरतर्षभ ॥ १३-६४-३७ (८४०१२)
माघमासं प्रयागे तु नियतः संशितव्रतः ।
स्नात्वा तु भरतश्रेष्ठ निर्मलः स्वर्गमाप्नुयात् ॥ १३-६४-३८ (८४०१३)
मरुद्गण उपस्पृश्य पितॄणामाश्रमे शुचिः ।
वैवस्वतस्य तीर्थे च तीर्थभूतो भवेन्नरः ॥ १३-६४-३९ (८४०१४)
तथा ब्रह्मसरो गत्वा भागीरथ्यां कृतोदकः ।
एकमासं निराहारः सोमलोकमवाप्नुयात् ॥ १३-६४-४० (८४०१५)
उत्पातके नरः स्नात्वा अष्टावक्रे कृतोदकः ।
द्वादशाहं निराहारो नरमेधफलं लभेत् ॥ १३-६४-४१ (८४०१६)
अश्मपृष्ठे गयायां च निरविन्दे च पर्वते ।
तृतीयां क्रौञ्चपद्यां च ब्रह्महत्यां विशुध्यते १३-६४-४२ (८४०१७)
कलविङ्क उपस्पृश्य विद्याच्च बहुशो जलम् ।
अग्नेः पुरे नरः स्नात्वा अग्निकन्यापुरे वसेत् ॥ १३-६४-४३ (८४०१८)
करवीरपुरे स्नात्वा विशालायां कृतोदकः ।
देवह्रद उपस्पृश्य ब्रह्मभूतो विराजते ॥ १३-६४-४४ (८४०१९)
पुनरावर्तनन्दां च महानन्दां च सेव्य वै ।
नन्दने सेव्यते दान्तस्त्वप्सरोभिरहिंसकः ॥ १३-६४-४५ (८४०२०)

उर्वशीं कृत्तिकायोगे गत्वा चैव समाहितः ।
लौहित्ये विधिवत्स्नात्वा पुण्डरीकफलं लभेत् ॥ १३-६४-४६ (८४०२१)
रामह्रद उपस्पृश्य विपाशायां कृतोदकः ।
द्वादशाहं निराहारः कल्मषाद्विप्रमुच्यते ॥ १३-६४-४७ (८४०२२)
महाह्रद उपस्पृश्य शुद्धेन मनसा नरः ।
एकमासं निराहारो जमदग्निगतिं लभेत् ॥ १३-६४-४८ (८४०२३)
विन्ध्ये संताप्य चात्मानं सत्यसन्धस्त्वहिंसकः ।
विनयात्तप आस्थाय मासेनैकेन सिध्यति ॥ १३-६४-४९ (८४०२४)
ग्मुण्डे ब्रह्मगवा चैव निरिचिं देवपर्वतम् ।
देवह्रदमुपस्पृश्य ब्रह्मभूतो विराजते ।
कुमारपदमास्थाय मासेनैकेन शुध्यति ॥' १३-६४-५० (८४०२५)
नर्मदायामुपस्पृश्य तता शूर्पारकोदके ।
एकपक्षं निराहारो राजपुत्रो विधीयते ॥ १३-६४-५१ (८४०२६)
जम्बूमार्गे त्रिभिर्मासैः संयतः सुसमाहितः ।
अहोरात्रेण चैकेन सिद्धिं समधिगच्छति ॥ १३-६४-५२ (८४०२७)
कोकामुखे विगाह्याथ गत्वा चाञ्जलिकाश्रमम् ।
शाकभक्षश्चीरवासाः कुमारीर्विन्दते दश ॥ १३-६४-५३ (८४०२८)
वैवस्वतस्य सदनं न स गच्छेत्कदाचन ।
यस्य कन्याह्रद वासो देवलोकं स गच्छति ॥ १३-६४-५४ (८४०२९)
प्रभासे त्वेकरात्रेण अमावास्यां ममाहितः ।
सिद्ध्यते तु महाबाहो यो नरो जायतेऽमरः ॥ १३-६४-५५ (८४०३०)
उज्जानक उपस्पृस्य आर्ष्टिषेणस्य चाश्रमे ।
पिङ्गायाश्चाश्रमे स्नात्वा सर्वपापैः प्रमुच्यते ॥ १३-६४-५६ (८४०३१)
कुल्यायां समुपस्पृश्य जप्त्वा चैवाघमर्षणम् ।
अश्वमेधमवाप्नोति त्रिरात्रोपोषितो नरः ॥ १३-६४-५७ (८४०३२)
पिण्डारक उपस्पृश्य एकरात्रोषितो नरः ।
अग्निष्टोममवाप्नोति प्रभातां शर्वरीं शुचिः ॥ १३-६४-५८ (८४०३३)
तथा ब्रह्मसरो गत्वा धर्मारण्योपशोभितम् ।
पुण्डरीकमवाप्नोति उपस्पृश्य नरः शुचिः ॥ १३-६४-५९ (८४०३४)
मैनाके पर्वते स्नात्वा तथा सन्ध्यामुपास्य च ।
कामं जित्वा च वै मासं सर्वयज्ञफलं लभेत् ॥ १३-६४-६० (८४०३५)
कालोदकं नन्दिकुण्डं तथा चोत्तरमानसम् ।
अभ्येत्य योजनशताद्भ्रूणहा विप्रमुच्यते ॥ १३-६४-६१ (८४०३६)
नन्दीश्वरस्य मूर्तिं तु दृष्ट्वा मुच्येत किल्बिषैः ।
स्वर्गमार्गे नरः स्नात्वा ब्रह्मलोकं स गच्छति ॥ १३-६४-६२ (८४०३७)
विख्यातो हिमवान्पुण्यः शंकरश्वशुरो गिरिः ।

आकरः सर्वरत्नानां सिद्धचारणसेवितः ॥ १३-६४-६३ (८४०३८)
ग्दर्शनाद्गमनात्पूतो भवेदनशनादपि।'
शरीरमुत्सृजेत्तत्र विधिपूर्वमनाशके ॥ १३-६४-६४ (८४०३९)
अध्रुवं जीवितं ज्ञात्वा यो वै वेदान्तगो द्विजः ।
अभ्यर्च्य देवतास्तत्र नमस्कृत्य मुनींस्तथा। १३-६४-६५ (८४०४०)
ततः क्रोधं च लोभं च यो जित्वा तीर्थमावसेत् ।
न तेन किञ्चिन्न प्राप्तं तीर्थाभिगमनाद्भवेत् ॥ १३-६४-६६ (८४०४१)
यान्यगम्यानि तीर्थानि दुर्गाणि विषमाणि च ।
मनसा तानि गम्यानि सर्वतीर्थसमीक्षया ॥ १३-६४-६७ (८४०४२)
इदं मेध्यमिदं पुण्यमिदं स्वर्ग्यमनुत्तमम् ।
इदं रहस्यं वेदानामाप्लाव्यं पावनं तथा ॥ १३-६४-६८ (८४०४३)
इदं दद्याद्द्विजातीनां साधोरात्महितस्य च ।
सुहृदां च जपेत्कर्णे शिष्यस्यानुगतस्य च। १३-६४-६९ (८४०४४)
दत्तवान्गौतमस्यैतदङ्गिरा वै महातपाः ।
अङ्गिराः समनुज्ञातः काश्यपेन च धीमता ॥ १३-६४-७० (८४०४५)
महर्षीणामिदं जप्यं पावनानां तथोत्तमम् ।
जपंश्चाभ्युत्थितः शश्वन्निर्मलः स्वर्गमाप्नुयात् ॥ १३-६४-७१ (८४०४६)
इदं यश्चापि शृणुयाद्रहस्यं त्वङ्गिरोमतम् ।
उत्तमे च कुले जन्म लभेज्जातीश्च संस्मरेत् ॥ ॥ १३-६४-७२ (८४०४७)

इति श्रीमन्महाभारते अनुसासनपर्वणि दानधर्मपर्वणि
चतुःषष्टितमोऽध्यायः ॥ ६४ ॥

Mahabharata - Anushaasana Parva - Chapter Footnotes

७-६४-३ तीर्थवंशं तीर्थसंघम् ॥
७-६४-५ तीर्थेभ्यः तीर्थान्युद्दिश्य ॥
७-६४-६ प्रेत्यभावे जन्मान्तरे ॥
७-६४-७ मुनिवद्भवेत् मुनीनां गतिं लभेतेत्यर्थः ॥
७-६४-८ सिंधुं समुद्रं पतन्तीत्यन्वयः ॥
७-६४-९ स्वर्गबिन्दुं विगाह्येति थ ।ध । पाठः ॥
७-६४-२१ रूपवर्चसोः समाहारः रूपवर्चस्कम् । वर्चस्तेजः ॥
७-६४-२६ त्रसानां जङ्गमानाम् ॥
७-६४-३० अन्तर्धानफलं गन्धर्वादिभोगम् ॥
७-६४-३५ कालाञ्जने गिराविति थ ।ध ।पाठः ॥
७-६४-३७ समागच्छन्त्यगावास्यामिति थ ।पाठ ॥
७-६४-४३ उर्वशीं उर्वशीतीर्थम् । कृत्तिकायोगे कार्तिक्यां पौर्णमास्याम् ॥

७-६४-६८ इदं तीर्थसेवनम् । मेध्यं यज्ञफलप्रदम्। पुण्यं पापघ्नम् ॥
७-६४-७० समनुज्ञातः प्रार्थितः । काश्यपेन एतद्विज्ञातुकामेनेति शेषः ॥

---

अनुससनपर्व-अध्यय०६५
॥ श्रीः ॥
१३.६५. अध्यायः ६५

अथ दानधर्मपर्व ॥ १ ॥
Mahabharata - Anushaasana Parva - Chapter Topics
भीष्मेण युधिष्ठिरम्प्रति
गङ्गामहिमप्रतिपादकसिद्धसिलवृत्तिसंवादानुवादः ॥ १ ॥

Mahabharata - Anushaasana Parva - Chapter Text

वैशम्पायन उवाच ।
बृहस्पतिसमं बुद्ध्या क्षमया ब्रह्मणः समम् ।
पराक्रमे शक्रसममादित्यसमतेजसम् ॥ १३-६५-१ (८४०४८)
गाङ्गेयमर्जुनेनाजौ निहतं भूरितेजसम् ।
भ्रातृभिः सहितोऽन्यैश्च पर्यपृच्छद्युधिष्ठिरः ॥ १३-६५-२ (८४०४९)
शयानं वीरशयने कालाकाङ्क्षिणमच्युतम् ।
आजग्मुर्भरतश्रेष्ठं द्रष्टुकामा महर्षयः ॥ १३-६५-३ (८४०५०)
अत्रिर्वसिष्ठोऽथ भृगुः पुलस्त्यः पुलहः क्रतुः ।
अङ्गिरा गौतमोऽगस्त्यः सुमतिः सुयतात्मवान् ॥ १३-६५-४ (८४०५१)
विश्वामित्रः स्थूलगिराः संवर्तः प्रमतिर्दमः ।
बृहस्पत्युशनोव्यासश्च्यवनः फाश्यपो ध्रुवः ॥ १३-६५-५ (८४०५२)
दुर्वासा जमदग्निश्च मार्कण्डेयोऽथ गालवः ।
भरद्वाजोऽथ रैभ्यश्चक यवक्रीतस्त्रितस्तथा ॥ १३-६५-६ (८४०५३)
स्थूलाक्षः शबलाक्षश्च कण्वो मेधातिथिः कृशः ।
नारदः पर्वतश्चैव सुधन्वाऽथैकतो द्विजः ॥ १३-६५-७ (८४०५४)
नितंभूर्भुवनो धौम्यः शतानन्दोऽकृतव्रणः ।
जामदग्न्यस्तथा रामः कचश्चेत्येवमादयः ।
समागता महात्मानो भीष्मं द्रष्टुं महर्षयः ॥ १३-६५-८ (८४०५५)
तेषां महात्मनां पूजामागतानां युधिष्ठिरः ।
भ्रातृभिः सहितश्चक्रे यतावदनुपूर्वशः ॥ १३-६५-९ (८४०५६)
ते पूजिताः सुखासीनाः कथाश्चक्रुर्महर्षयः ।
भीष्माश्रिताः सुमधुराः सर्वेन्द्रियमनोहराः ॥ १३-६५-१० (८४०५७)

भीष्मस्तेषां कथाः श्रुत्वा ऋषीणां भावितात्मनाम् ।
मेने दिविष्ठमात्मानं तुष्ट्या परमया युतः ॥ १३-६५-११ (८४०५८)
ततस्ते भीष्ममामन्त्र्य पाण्डवांश्च महर्षयः ।
अन्तर्धानं गताः सर्वे सर्वेषामेव पश्यताम् ॥ १३-६५-१२ (८४०५९)
तानृषीन्सुमहाभागानन्तर्धानगतानपि ।
पाण्डवास्तुष्टुवुः सर्वे प्रणेमुश्च मुहुर्मुहुः ॥ १३-६५-१३ (८४०६०)
प्रसन्नमनसः सर्वे गाङ्गेयं कुरुसत्तमम् ।
उपतस्थुर्यथोद्यन्तमादित्यं मन्त्रकोविदाः ॥ १३-६५-१४ (८४०६१)
प्रभावं तपसस्तेषामृषीणां वीक्ष्य पाण्डवाः ।
प्रकाशन्तो दिशः सर्वा विस्मयं परमं ययुः ॥ १३-६५-१५ (८४०६२)
महाभाग्यं परं तेषामृषीणामनुचिन्त्य ते ।
पाण्डवाः सह भीष्मेण कथाश्चक्रुस्तदाश्रयाः ॥ १३-६५-१६ (८४०६३)
कथान्ते शिरसा पादौ स्पृष्ट्वा भीष्मस्य पाण्डवः ।
धर्म्यं धर्मसुतः प्रश्नं पर्यपृच्छद्युधिष्ठिरः ॥ १३-६५-१७ (८४०६४)
के देशाः के जनपदा आश्रमाः के च पर्वताः ।
प्रकृष्टाः पुण्यतः काश्च ज्ञेया नद्यः पितामह ॥ १३-६५-१८ (८४०६५)
भीष्म उवाच। १३-६५-१९क्ष् (६९९१)
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
शिलोच्छवृत्तेः संवादं सिद्धस्य च युधिष्ठिर ॥ १३-६५-१९ (८४०६६)
इमां कश्चित्परिक्रम्य पृथिवीं शैलभूषणाम् ।
असकृद्द्विपदां श्रेष्ठः श्रेष्ठस्य गृहमेधिनः ॥ १३-६५-२० (८४०६७)
शिलवृत्तेर्गृहं प्राप्तः स तेन विधिनाऽर्चितः ।
उवास रजनीं तत्र सुमुखः सुखभागृषिः ॥ १३-६५-२१ (८४०६८)
शिलवृत्तिस्तु यत्कृत्यं प्रातस्तत्कृतवाञ्शुचिः ।
कृतकृत्यमुपातिष्ठत्सिद्धं तमतिथिं तदा ॥ १३-६५-२२ (८४०६९)
तौ समेत्य महात्मानौ सुखासीनौ कथाः शुभाः ।
चक्रतुर्वेदसम्बद्धास्तच्छेषकृतलक्षणाः ॥ १३-६५-२३ (८४०७०)
शिलवृत्तिः कथान्ते तु सिद्धमामन्त्र्य यत्नतः ।
प्रश्नं पप्रच्छ मेधावी यन्मां त्वं परिपृच्छसि ॥ १३-६५-२४ (८४०७१)
शिलवृत्तिरुवाच। १३-६५-२५क्ष् (६९९२)
केदेशाः के जनपदाः केऽऽश्रमाः के च पर्वताः ।
प्रकृष्टाः पुण्यतः काश्च ज्ञेया नद्यस्तदुच्यताम् ॥ १३-६५-२५ (८४०७२)
सिद्ध उवाच। १३-६५-२६क्ष् (६९९३)
ते देशास्ते जनपदास्तेऽऽश्रमास्ते च पर्वताः ।
येषां भागीरथी गङ्गा मध्येनैति रारिद्वरा ॥ १३-६५-२६ (८४०७३)
तपसा ब्रह्मचर्येण यज्ञैस्त्यागेन वा पुनः ।

गतिं तां न लभेज्जन्तुर्गङ्गां संसेव्य यां लभेत् ॥ १३-६५-२७ (८४०७४)
स्पष्टानि येषां गाङ्गेयैस्तोयैर्गात्राणि देहिनाम् ।
न्यस्तानि न पुनस्तेषां त्यागः स्वर्गाद्विधीयते ॥ १३-६५-२८ (८४०७५)
सर्वाणि येषां गाङ्गेयैस्तोयैः कार्याणि देहिनाम् ।
गां त्यक्त्वा मानवा विप्र दिवि तिष्ठन्ति ते जनाः ॥ १३-६५-२९ (८४०७६)
पूर्वे वयसि कर्माणि कृत्वा पापानि ये नराः ।
पश्चाद्गङ्गां निषेवन्ते तेऽपि यान्त्युत्तमां गतिम् ॥ १३-६५-३० (८४०७७)
ग्युक्ताश्च पातकैस्त्यक्त्वा देहं शुद्धा भवन्ति ते ।
मुच्यन्ते देहसंत्यागाद्गङ्गायमुनसङ्गमे ॥' १३-६५-३१ (८४०७८)
स्नातानां शुचिभिस्तोयैर्गाङ्गेयैः प्रयतात्मनाम् ।
व्युष्टिर्भवति या पुंसां न सा क्रतुशतैरपि ॥ १३-६५-३२ (८४०७९)
यावदस्थि मनुष्यस्य गङ्गातोयेषु तिष्ठति ।
तावद्वर्षसहस्राणि स्वर्गलोके महीयते ॥ १३-६५-३३ (८४०८०)
अपहत्य तमस्तीव्रं यथा भात्युदये रविः ।
तथाऽपहत्य पाप्मानं भाति गङ्गाजलोक्षितः ॥ १३-६५-३४ (८४०८१)
विसोमा इव शर्वर्यो विपुष्पास्तरवो यथा ।
तद्वद्देशा दिशश्चैव हीना गङ्गाजलैः शिवैः ॥ १३-६५-३५ (८४०८२)
वर्णाश्रमा यथा सर्वे धर्मज्ञानविवर्जिताः ।
क्रतवश्च यथाऽसोमास्तथा गङ्गां विना जगत् ॥ १३-६५-३६ (८४०८३)
यथा हीनं नभोऽर्केण भूः शैलैः खं च वायुना ।
तथा देशा दिशश्चैव गङ्गाहीना न संशयः ॥ १३-६५-३७ (८४०८४)
त्रिषु लोकेषु ये केचित्प्राणिनः सर्व एव ते ।
तर्प्यमाणाः परां तृप्तिं यान्ति गङ्गाजलैः शुभैः ॥ १३-६५-३८ (८४०८५)
ग्अन्ये च देवा मुनयः प्रेतानि पितृभिः सह ।
तर्पितास्तृप्तिमायान्ति त्रिषु लोकेषु सर्वशः ॥' १३-६५-३९ (८४०८६)
यस्तु सूर्येण निष्टप्तं गाङ्गेयं पिबते जलम् ।
गवां निर्हरनिर्मुक्ताद्यावकात्तद्विशिष्यते ॥ १३-६५-४० (८४०८७)
इन्द्रव्रतसहस्रं तु यश्चोरत्कायशोधनम् ।
पिवेद्यश्चापि गङ्गाम्भ्यः समौ स्यातां न वा समौ ॥ १३-६५-४१ (८४०८८)
तिष्ठेद्युगसहस्रं तु पदेनैकेन यः पुमान् ।
मासमेकं तु गङ्गायां समौ स्यातां न वा सभौ ॥ १३-६५-४२ (८४०८९)
लम्बतेऽवाक्शिरा यस्तु युगानामयुतं पुमान् ।
तिष्ठेद्यथेष्टं यश्चापि गङ्गायां स विशिष्यते ॥ १३-६५-४३ (८४०९०)
अग्नौ प्रास्तं प्रधूयेत यथा तूलं द्विजोत्तम ।
तथा गङ्गावगाढस्य सर्वपापं प्रधूयते ॥ १३-६५-४४ (८४०९१)
भूतानामिह सर्वेषां दुःखोपहतचेतसाम् ।

गतिमन्वेषमाणानां न गङ्गासदृशी गतिः ॥ १३-६५-४५ (८४०९२)
भवन्ति निर्विषाः सर्पा यथा तार्क्ष्यस्य दर्शनात् ।
गङ्गाया दर्शनातद्वत्सर्वपापैः प्रमुच्यते ॥ १३-६५-४६ (८४०९३)
अप्रतिष्ठाश्च ये केचिदधर्मशरणाश्च ये ।
येषां प्रतिष्ठा गङ्गेह शरणं शर्म वर्म च। १३-६५-४७ (८४०९४)
प्रकृष्टैरशुभैर्ग्रस्तानन्नेकैः पुरुषाधमान् ।
पततो नरके गङ्गा संश्रितान्प्रेत्य तारयेत् ॥ १३-६५-४८ (८४०९५)
ते संविभक्ता मुनिभिर्नूनं देवैः सवासवैः ।
येऽभिगच्छन्ति सततं गङ्गां मतिमतांवर ॥ १३-६५-४९ (८४०९६)
विनयाचारहीनाश्च अशिवाश्च नराधमाः ।
ते भवन्ति शिवा विप्र ये वै गङ्गामुपाश्रिताः ॥ १३-६५-५० (८४०९७)
यथा सुराणाममृतं पितॄणां च यथा स्वधा ।
सुधा यथा च नागानां तथा गङ्गाजलं नृणाम् ॥ १३-६५-५१ (८४०९८)
उपासते यथा बाला मातरं क्षुधयाऽर्दिताः ।
श्रेयस्कामास्तथा गङ्गामुपासन्तीह देहिनः ॥ १३-६५-५२ (८४०९९)
स्वायंभुवं यथा स्थानं सर्वेषां श्रेष्ठमुच्यते ।
स्थानानां सरितां श्रेष्ठा गङ्गा तद्वदिहोच्यते ॥ १३-६५-५३ (८४१००)
ग्उपजीव्या यथा धेनुर्लोकानां ब्राह्ममेव वा ।
हविषां तु यथा सोमस्तरणेषु तथा त्वियम् ॥ १३-६५-५४ (८४१०१)
यथोपजीविनां धेनुर्देवादीनां परा स्मृता ।
तथोपजीविनां गङ्गा सर्वप्राणभृतामिह ॥ १३-६५-५५ (८४१०२)
देवाः सोमार्कसंस्थानि यता सत्रादिभिर्मखैः ।
अमृतान्युपजीवन्ति तथा गङ्गाजलं नराः ॥ १३-६५-५६ (८४१०३)
जाह्नवीपुलिनोत्थाभिः सिकताभिः समुक्षितम् ।
आत्मानं मन्यते लोको दिविष्ठमिव शोभितम् ॥ १३-६५-५७ (८४१०४)
जाह्नवीतीरसम्भूतां मृदं मूर्ध्ना बिभर्ति यः ।
बिभर्ति रूपं सोऽर्कस्य तमोनाशाय निर्मलम् ॥ १३-६५-५८ (८४१०५)
गङ्गोर्मिभिरथो दिग्धः पुरुषं पवनो यदा ।
स्पृश्यते सोऽस्य पाप्मानं सद्य एवापकर्षति ॥ १३-६५-५९ (८४१०६)
व्यसनैरभितप्तस्य नरस्य विनशिष्यतः ।
गङ्गादर्शनजा प्रीतिर्व्यसनान्यपकर्षति ॥ १३-६५-६० (८४१०७)
हंसारावैः कोकरवै रवैरन्यैश्च पक्षिणाम् ।
पस्पर्ध गङ्गा गन्धर्वान्पुलिनैश्च शिलोच्चयान् ॥ १३-६५-६१ (८४१०८)
हंसादिभिः सुबहुभिर्विविधैः पक्षिभिर्वृताम् ।
गङ्गां गोकुलसम्बादां दृष्ट्वा स्वर्गोऽपि विस्मृतः ॥ १३-६५-६२ (८४१०९)
न सा प्रीतिर्दिविष्ठस्य सर्वकामानुपाश्नतः ।

सम्भवेद्या परा प्रीतिर्गङ्गायाः पुलिने नृणाम् ॥ १३-६५-६३ (८४११०)
वाङ्मन कर्मजैर्ग्रस्तः पापैरपि पुमानिह ।
वीक्ष्य गङ्गां भवेन्मूतो अत्र मे नास्ति संशयः ॥ १३-६५-६४ (८४१११)
सप्तावरान्सप्त परान्पितॄंस्तेभ्यश्च ये परे ।
पुमांस्तारयते गङ्गां वीक्ष्य स्पृष्ट्वाऽवगाह्य च ॥ १३-६५-६५ (८४११२)
श्रुताभिलषिता पीता स्पृष्टा दृष्टाऽवगाहिता ।
गङ्गा तारयते नृणामुभौ वंशौ विशेषतः ॥ १३-६५-६६ (८४११३)
ग्तत्तीरगानां तपसा श्राद्धपारायणादिभिः ।
गङ्गाद्वारप्रभृतिभिस्तत्तीर्थैर्न परं नृणाम् ॥ १३-६५-६७ (८४११४)
सायं प्रातः स्मरेद्गङ्गां नित्यं स्नाने तु कीर्तयेत् ।
तर्पणे पितृपूजासु मरणे चापि संस्मरेत् ॥' १३-६५-६८ (८४११५)
दर्शनात्स्पर्शनात्पानात्तथा गङ्गेति कीर्तनात् ।
पुनात्युपुण्यान्पुरुषाञ्शतशोऽथ सहस्रशः ॥ १३-६५-६९ (८४११६)
य इच्छेत्सफलं जन्म जीवितं श्रुतमेव च ।
स पितॄंस्तर्पयेद्गङ्गामभिगम्य सुरांस्तथा ॥ १३-६५-७० (८४११७)
न श्रुतैर्न च वित्तेन कर्मणा न च तत्फलम् ।
प्राप्नुयात्पुरुषोऽत्यन्तं गङ्गां प्राप्य यदाप्नुयात् ॥ १३-६५-७१ (८४११८)
जात्यन्धैरिह तुल्यास्ते मृतैः पङ्गुभिरेव च ।
समर्था ये न पश्यन्ति गङ्गां पुण्यजलां शिवाम् ॥ १३-६५-७२ (८४११९)
भूतभव्यभविष्यज्ञैर्महर्षिभिरुपस्थिताम् ।
देवैः सेन्द्रैश्च को गङ्गां नोपसेवेत मानवः ॥ १३-६५-७३ (८४१२०)
वानप्रस्थैर्गृहस्थैश्च यतिभिर्ब्रह्मचारिभिः ।
विद्यावद्भिः श्रितां गङ्गां पुमान्को नाम नाश्रयेत् ॥ १३-६५-७४ (८४१२१)
उत्कामद्भिश्च यः प्राणैः प्रयतः शिष्टसम्मतः ।
चिन्तयेन्मनसा गङ्गां स गतिं परमांलभेत् ॥ १३-६५-७५ (८४१२२)
न भयेभ्यो भयं तस्य न पापेभ्यो न राजतः ।
आदेहपतनाद्गङ्गामुपास्ते यः पुमानिह ॥ १३-६५-७६ (८४१२३)
गगनाद्गां पतन्तीं वै महापुण्यां महेश्वरः ।
दधार शिरसा गङ्गां तामेव दिवि सेवते ॥ १३-६५-७७ (८४१२४)
अलङ्कृतास्त्रयो लोकाः पथिभिर्विमलैस्त्रिभिः ।
यस्तु तस्या जलं सेवेत्कृतकृत्यः पुमान्भवेत्। १३-६५-७८ (८४१२५)
दिवि ज्योतिर्यथाऽऽदित्यः पितॄणां चैव चन्द्रमाः ।
देवेश यथा नृणां गङ्गा च सरितां तथा ॥ १३-६५-७९ (८४१२६)
मात्रा पित्रा सुतैर्दारैर्विमुक्तस्य धनेन वा ।
न भवेद्धि तथा दुःखं यथा गङ्गा वियोगजम् ॥ १३-६५-८० (८४१२७)
नारण्यैर्नेष्टविषयैर्न सुतैर्न धनागमैः ।

तथा प्रसादो भवति गङ्गां वीक्ष्य यथा भवेत् ॥१३-६५-८१ (८४१२८)
पूर्णमिन्दुं यथा दृष्ट्वा नृणां दृष्टिः प्रसीदति ।
तथा त्रिपथगां दृष्ट्वा नृणां दृष्टिः प्रसीदति ॥१३-६५-८२ (८४१२९)
तद्भावस्तद्गतमनास्तन्निष्ठस्तत्परायणः ।
गङ्गांयोऽनुगतो भक्त्यास तस्याः प्रियतां व्रजेत् ॥१३-६५-८३ (८४१३०)
भूस्थैः खस्थैर्दिविष्ठैश्च भूतैरुच्चावचैरपि ।
गङ्गा विगाह्या सततमेतत्कार्यतमं सताम् ॥१३-६५-८४ (८४१३१)
विश्वलोकेषु पुण्यत्वाद्गङ्गायाः प्रथितं यशः ।
ग्दुर्मृताननपत्यांश्च सा मृताननयद्दिवम्।'
यत्पुत्रान्सगरस्येतो भस्माख्याननयद्दिवम् ॥ १३-६५-८५ (८४१३२)
वाय्वीरिताभिः सुमनोहराभि-
र्द्रुताभिरत्यर्थसमुत्थिताभिः ।
गङ्गोर्मिभिर्भानुमतीभिरिद्धाः
सहस्ररश्मिप्रतिमा भवन्ति ॥ १३-६५-८६ (८४१३३)
पयस्विनीं घृतिनीमत्युदारां
समृद्धिनीं वेगिनीं दुर्विगाह्याम् ।
गङ्गां गत्वा यैः शरीरं विसृष्टं
गता धीरस्ते विबुधैः समत्वम् ॥ १३-६५-८७ (८४१३४)
अन्धाञ्चडान्द्रव्यहीनांश्च गङ्गा
यशस्विनी बृहती विश्वरूपा ।
देवैः सेन्द्रैर्मुनिभिर्मानवैश्च
निषेविता सर्वकामैर्युनक्ति ॥ १३-६५-८८ (८४१३५)
ऊर्जस्वतीं मधुमतीं महापुण्यां त्रिवर्त्मगाम् ।
त्रिलोकगोप्त्रीं ये गङ्गां संश्रितास्ते दिवं गताः ॥१३-६५-८९ (८४१३६)
यो वत्स्यति द्रक्ष्यति वाऽपि मर्त्य-
स्मस्मै प्रयच्छन्ति सुखानि देवाः ।
तद्भाविताः स्पर्शनदर्शनेन
इष्टां गतिं तस्य सुरा दिशन्ति ॥ १३-६५-९० (८४१३७)
दक्षां पृश्निं बृहतीं विप्रकृष्टां
शिवामृद्धां भागिनीं सुप्रसन्नाम् ।
विभावरीं सर्वभूतप्रतिष्ठां
गङ्गां गता ये त्रिदिवं गतास्ते ॥ १३-६५-९१ (८४१३८)
ख्यातिर्यस्याः खं दिवं गां च नित्या-
मूर्ध्वं दिशो विदिशश्चावतस्थे ।
तस्या जलं सेव्य सरिद्वराया
मर्त्याः सर्वे कुतकृत्या भवन्ति ॥ १३-६५-९२ (८४१३९)

इयं गङ्गेति नियतं प्रतिष्ठा
गुहस्य स्कमस्य च गर्भयोषा ।
प्रातस्त्रिवर्गा घृतवहा विपाप्मा
गङ्गाऽवतीर्णा वियतो विश्वतोया ॥ १३-६५-९३ (८४१४०)
ग्नारायणादक्षयात्पूर्वजाता
विष्णोः पादाच्छिंशुमाराद्ध्रुवाच्च ।
सोमात्सूर्यान्मेरुरूपाच्च विष्णोः
समागता शिवमूर्ध्नो हिमाद्रिम् ।
सत्यावती द्रव्यपरस्य वर्या
दिवो भुवश्चापि वीक्ष्यानुरूपा ॥' १३-६५-९४ (८४१४१)
सुताऽवनीध्रस्य हरस्य भार्या
दिवो भुवश्चापि कृतानुरूपा ।
भव्या पृथिव्यां भागिनी चापि राज-
न्गाङ्गा लोकानां पुण्यदा वै त्रयाणाम् ॥ १३-६५-९५ (८४१४२)
मधुस्रवा घृतधारा घृतार्चि-
र्महोर्मिभिः शोभिता ब्राह्मणैश्च ।
दिवश्च्युता शिरसाऽऽप्ता शिवेन
गङ्गाऽवनीध्रात्त्रिदिवस्य माता ॥ १३-६५-९६ (८४१४३)
योनिर्वरिष्ठा विरजा वितन्वी
शय्याऽचिरा वारिवहा यशोदा ।
विश्वावती चाकृतिरिष्टसिद्धा
गङ्गोक्षितानां भुवनस्य पन्थाः ॥ १३-६५-९७ (८४१४४)
क्षान्त्या मह्या गोपने धारणे च
दीप्त्य, कृशानोस्तपनस्य चैव ।
तुल्या गङ्गा सम्मता ब्राह्मणानां
गृहस्य ब्रह्मण्यतया च नित्यम् ॥ १३-६५-९८ (८४१४५)
ऋषिष्टुतां विष्णुपदीं पुराणां
सुपुण्यतोयां मनसाऽपि लोके ।
सर्वात्मना जाह्नवीं ये प्रपन्ना
स्ते ब्रह्मणः सदनं सम्प्रयाताः ॥ १३-६५-९९ (८४१४६)
लोकानिमान्नयति या जननीव पुत्रा-
न्सर्वात्मना सर्वगुणोपपन्ना ।
तत्स्थानकं ब्राह्ममभीप्समानै-
र्गङ्गा सदैवात्मवशैरुपास्या ॥ १३-६५-१०० (८४१४७)
ग्न तैर्जुष्टां स्पृशतीं विश्वतोया-
मिरावज्ञां रवेतीं भूधराणाम्।'

उसां पृष्टां मिषतीं विश्वभोज्या-
मिरावतीं धारिणीं भूधराणाम् ।
शिष्टाश्रयाममृतां ब्रह्मकान्तां
गंङ्गां श्रयेदात्मवान्सिद्धिकामः ॥ १३-६५-१०१ (८४१४८)
प्रसाद्य देवान्सविभून्समस्ता-
न्भगीरथस्तपसोग्रेण गङ्गाम् ।
गामानयत्तामभिगम्य शश्व-
त्पुंसां भयं नेह चामुत्र विद्यात् ॥ १३-६५-१०२ (८४१४९)
उदाहृतः सर्वथा ते गुणानां
मयैकदेशः प्रसमीक्ष्य बृद्धया ।
शक्तिर्न से काचिदिहास्ति वक्तुं
गुणान्सर्वान्परिमातुं तथैव ॥ १३-६५-१०३ (८४१५०)
मेरोः समुद्रस्य च सर्वयत्नैः
सङ्ख्योपलानामुदकस्य वाऽपि ।
शक्यं वक्तुं नेह गङ्गाजलानां
गुणाख्यानं परिमातुं तथैव ॥ १३-६५-१०४ (८४१५१)
तस्मादेतान्परया श्रद्धयोक्ता-
न्गुणान्सर्वाञ्जाह्नवीयान्सदैव ।
भवेद्वाचा मनसा कर्मणा च
भक्त्या युक्तः श्रद्धया श्रद्दधानः ॥ १३-६५-१०५ (८४१५२)
लोकानिमांस्त्रीन्यशसा वितत्य
सिद्धिं प्राप्य महतीं तां दुरापाम् ।
गङ्गाकृतानचिरेणैव लोका-
न्यथेष्टमिष्टान्विहरिष्यसि त्वम् ॥ १३-६५-१०६ (८४१५३)
तव मम च गुणैर्महानुभावा
जुषतु भतिं सततं स्वधर्मयुक्तैः ।
अभिमतजनवत्सला हि गङ्गा
जगति युनक्ति सुखैश्च भक्तिमन्तम् ॥ १३-६५-१०७ (८४१५४)
भीष्म उवाच। १३-६५-१०८क्ष् (६९९४)
इति परममतिर्गुणानशेषा-
ञ्शिलरतये त्रिपथानुयोगरूपान् ।
बहुविधमनुशास्य तथ्यरूपा-
न्गगनतलं द्युतिमान्विवेश सिद्धः ॥ १३-६५-१०८ (८४१५५)
शिलवृत्तिस्तु सिद्धस्य वाक्यैः सम्बोधितस्तदा ।
गङ्गामुपास्य विधिवत्सिद्धिं प्राप सुदुर्लभाम् ॥१३-६५-१०९ (८४१५६)
तथा त्वमपि कौन्तेय भक्त्या परमया युतः ।

गङ्गामभ्येहि सततं प्राप्स्यसे सिद्धिमुत्तमाम् ॥ १३-६५-११० (८४१५७)
वैशम्पायन उवाच। १३-६५-१११क्ष् (६९९५)
श्रुत्वेतिहासं भीष्मोक्तं गङ्गायाः स्तवसंयुतम् ।
युधिष्ठिरः परां प्रीतिमगच्छद्भ्रातृभिः सह ॥ ॥ १३-६५-१११ (८४१५८)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
पञ्चषष्टितमोऽध्यायः ॥ ६५ ॥

Mahabharata - Anushaasana Parva - Chapter Footnotes

७-६५-२ यदाऽपृच्छत्तदैवाजग्मुरिति द्वितीयेन यत्तदोरध्याहारेण
न्वयः ॥
७-६५-१६ महाभाग्यं योगैश्वर्यं
खेचरत्वान्तर्धानशक्त्यादिसिद्धिमत्त्वम् ॥
७-६५-१८ देशाः भूमिभागाः । जनपदाः महाजननिवासस्थानानि। आश्रमाः
ऋषिस्थानानि ॥
७-६५-२६ ते देशा इति प्रकृष्टाः पुण्यत इत्यनुषङ्गः ॥
७-६५-२८ गात्राण्यस्थीनि । न्यस्तानि गङ्गायाम्। त्यक्तानि यानि वै तेषां
त्यागात्स्वर्गो विधीयते इति ध। पाठः ॥
७-६५-३२ व्युष्टिः पुण्यवृद्धिः ॥
७-६५-३३ यावदस्थि मनुष्याणामिति थ।ध । पाठः ॥
७-६५-४० गवां निर्हार आहारनिर्गमनामार्गस्ततो निर्मुक्तं यावकं
यवविकारस्तस्मात् । गां यवानादयित्वा तच्छकृदन्तर्गतान् यवान् पक्त्वा
भुञ्जानो यावकव्रतीत्युच्यते ॥
७-६५-४१ इन्दुव्रतं चान्द्रायणम् ॥
७-६५-४४ धूयते दूरे जायते भस्मीभूयापि न शिव्यते इत्यर्थः ॥
७-६५-६३ कामान् भोगान् ॥
७-६५-८१ उपस्थितां नित्यं सेविताम् ॥
इष्टं यागादि तत्प्राप्यैरिष्टविषयैः स्वर्ग्यैः ॥
७-६५-८३ इद्धाः निर्दोषत्वेन दीप्ताः ॥
७-६५-८७ पयोघृते यागीये हविषी समृद्धिर्यागफलं तद्वतीम्
। यागादिजं पुण्यं तत्फलं स्वर्गादि च गङ्गाप्राप्त्यैव लभ्यत
इत्यर्थः ॥
७-६५-८९ ऊर्क अन्नपश्वादिः तत्प्रदामित्यर्थः । मधु कर्मफलं
ब्रह्म वा तत्प्रदां मधुमतीम् ॥
७-६५-९० योगं गामिति शेषः । तथा गङ्गया भाविताः महत्त्वं गताः
देवाः। स्पर्शनदर्शनेन गङ्गाया एव ॥

७-६५-९१ दक्षां तारणसमर्थाम् । पृश्निं विष्णुमातरम्। बृहतीं वाचम्। वाग्वै बृहतीतिश्रुतेः। भागिनीं भनानामैश्वर्यादीनां षण्णां समूहो भागं तद्वतीम्। विभावरीं प्रकाशिकाम् ॥
७-६५-९३ गङ्गां दृष्ट्वा इयं गङ्गेति अन्यान् गङ्गां दर्शयतः पुरुषस्य नियतं नियमेन गङ्गैव प्रतिष्ठा संसारावसानहेतुर्भवति । गुहस्य कार्तिकेयस्य रुक्मस्य स्वर्णस्य च गर्भयोषा गर्भधारिणी स्त्री। वियतः सकाशात्प्रातरवतीर्णा त्रिवर्गा धर्प्रार्थकामदा। धृतवहा जलवाहिनी। विश्वतोया विश्वप्रियतोया ॥
७-६५-९५ अवनीध्रस्य मेरोः हिमवतो वा पर्वतस्य । कृतं अनुरूपं अलङ्कारो यया सा कृतानुरूपा ॥
७-६५-९६ मधुस्रवा धर्मद्रवा । घृतधारा तेजोधारा घृतार्चिः आज्यस्येव अर्चिर्वा यस्याः। सा अवनीध्रात् पृथिवीं प्राप्तेति शेषः ॥
७-६५-९७ वरिष्ठा योनिः परमकारणम् । वि जा निर्मला। वितन्वी विशेषेण तन्वी सूक्ष्मा। शय्या दीर्घनिद्रा तल्पः। मरणं जाह्नवीतट इति वचनात्। अचिरा शीघ्रा। विश्वावती विश्वं अवन्ती पालयन्ती। नुमभाव आर्षः। इष्टसिद्धा इष्टाःक सिद्धा यस्याः सा, सिद्धानामिष्टा इति वा। अक्षेतानां स्नातानाम्। भुवनस्य स्वर्गस्य। पुष्पाविला परिवाहा यशोदेति ध। पाठः ॥
७-६५-९८ क्षान्त्यादित्रये मह्या तुल्येति सम्बन्धः । गुहस्य कुमारस्य सम्मता। ब्रह्मण्यतया ब्राह्मणजात्यनुग्राहकतयः ॥
७-६५-९९ मनसापि प्रपन्नाः किमुत साक्षात् ॥
७-६५-१०१ उस्रं धेनुममृतदुघामिति यावत् । मिषतीं पश्यन्तीं सर्वज्ञामित्यर्थः। हरावतीमन्नवतीम्। ब्रह्मणोपि कान्तो चेतोहराम् ॥
७-६५-१०२ सविभून् सेक्षरान् । गां पृथ्वीम् ॥
७-६५-१०३ मदुक्तान् गङ्गागुणान् ज्ञात्वा वागादिभिः स्तोत्रध्यानस्नानादिषु श्रद्दधानो भवेदिती सम्बन्धः । गङ्गाकृतान् गङ्गासेवनप्राप्तान्। इष्टान् सङ्कल्पसिद्धान्। ७-६५-१०७ महानुभावा गङ्गा मतिं जुषतु प्रीणातु। गङ्गादर्शनादिना मतिः प्रसीदत्वित्यर्थः। अभिमतः श्रद्धालुः। ।

---

अनुससनपर्व-अध्यय०६६
॥ श्रीः ॥
१३.६६. अध्यायः ६६

अथ दानधर्मपर्व ॥ १ ॥

## भीष्मेण युधिष्ठिरम्प्रति मानवेषु पूज्यताप्रयोजकगुणप्रतिपादककृष्णनारदसंवादानुवादः ॥ १ ॥

Mahabharata - Anushaasana Parva - Chapter Text

युधिष्ठिर उवाच ।
के पूज्या वै त्रिलोकेऽस्मिन्मानवा भरतर्षभ ।
विस्तरेण तदाचक्ष्व न हि तृप्यामि कथ्यतः ॥ १३-६६-१ (८४१५९)
भीष्म उवाच। १३-६६-२क्ष् (६९९६)
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
नारदस्य च संवादं वासुदेवस्य चोभयोः ॥ १३-६६-२ (८४१६०)
नारदं प्राञ्जलिं दृष्ट्वा पूजयानं द्विजर्षभान् ।
केशवः परिपप्रच्छ भगवन्कान्नमस्यमि ॥ १३-६६-३ (८४१६१)
बहुमानपरस्तेषु भगवन्यान्नमस्यसि ।
शक्यं चेच्छ्रोतुमस्माभिर्ब्रूह्येतद्धर्मवित्तम ॥ १३-६६-४ (८४१६२)
नारद उवाच। १३-६६-५क्ष् (६९९७)
शृणु गोविन्द यानेतान्पूजयाम्यरिमर्दन ।
त्वत्तोऽन्यः कः पुमाँल्लोके श्रोतुमेतदिहार्हति ॥ १३-६६-५ (८४१६३)
वरुणं वायुमादित्यं पर्जन्यं जातवेदसम् ।
स्थाणु स्कन्दं महालक्ष्मीं विष्णुं ब्रह्माणमेव च ॥ १३-६६-६ (८४१६४)
वाचस्पतिं चन्द्रमसमपः पृथ्वीं सरस्वतीम् ।
सततं ये नमस्यन्ति तान्नमस्याम्यहं विभो ॥ १३-६६-७ (८४१६५)
तपोधनान्वेदविदो नित्यं वेदपरायणान् ।
महार्हान्वृष्णिशार्दूल सदा सम्पूजयाम्यहम् ॥ १३-६६-८ (८४१६६)
अभुक्त्वा देवकार्याणि कुर्वते येऽविकत्थनाः ।
सन्तुष्टाश्च क्षमायुक्तास्तान्नमस्याम्यहं विभो ॥ १३-६६-९ (८४१६७)
सम्यग्यजन्ति ये चेष्टीः क्षान्ता दान्ता जितेन्द्रियाः ।
सत्यं धर्मं क्षितिं गाश्च तान्नमस्यामि यादव ॥ १३-६६-१० (८४१६८)
ये वै तपसि वर्तन्ते वने मूलफलाशनाः ।
असञ्चयाः क्रियावन्तस्तान्नमस्यामि यादव ॥ १३-६६-११ (८४१६९)
ये भृत्यभरणे शक्ताः सततं चातिथिव्रताः ।
भुञ्जते देवशेषाणि तान्नमस्यामि यादव ॥ १३-६६-१२ (८४१७०)
ये वेद प्राप्य दुर्धर्षा वाग्मिनो ब्रह्मचारिणः ।
याजनाध्यापने युक्ता नित्यं तान्पूजयाम्यहम् ॥ १३-६६-१३ (८४१७१)
प्रसन्नहृदयाश्चैव सर्वसत्वेषु नित्यशः ।
अपृष्ठतापान्स्वाध्याये युक्तास्तान्पूजयाम्यहम् ॥ १३-६६-१४ (८४१७२)

गुरुप्रसादे स्वाध्याये यतन्तो ये स्थिरव्रताः ।
शुश्रूषवोऽनसूयन्तस्तान्नमस्यामि यादव ॥१३-६६-१५ (८४१७३)
सुव्रता मुनयो ये च ब्राह्मणाः सत्यसङ्गराः ।
वोढारो हव्यकव्यानां तान्नमस्यामि यादव ॥१३-६६-१६ (८४१७४)
भैक्षचर्यासु निरताः कृशा गुरुकुलाश्रयाः ।
निःसुखा निर्धना ये तु तान्नमस्यामि यादव ॥१३-६६-१७ (८४१७५)
निर्ममा निष्प्रतिद्वन्द्वा निष्ठिता निष्प्रयोजनाः ।
ये वेदं प्राप्य दुर्धर्षा वाग्मिनो ब्रह्मवादिनः ॥१३-६६-१८ (८४१७६)
अहिंसानिरता ये च ये च सत्यव्रता नराः ।
दान्ताः शमपराश्चैव तान्नमस्यामि केशव ॥१३-६६-१९ (८४१७७)
देवतातिथिपूजायां युक्ता ये गृहमेधिनः ।
कपोतवृत्तयो नित्यं तान्नमस्यामि यादव ॥१३-६६-२० (८४१७८)
येषां त्रिवर्गः कृत्येषु वर्तते नोपहीयते ।
शिष्टाचारप्रवृत्ताश्च तान्नमस्याम्यहं सदा ॥१३-६६-२१ (८४१७९)
ब्राह्मणाः श्रुतसम्पन्ना ये त्रिवर्गमनुष्ठिताः ।
अलोलुपाः पुण्यशीलास्तान्नमस्यामि केशव ॥१३-६६-२२ (८४१८०)
ग्अवन्ध्यकाला येऽलुब्धास्त्रिवर्गे साधनेषु च ।
विशिष्टाचारयुक्ताश्च नारायण नमामि तान् ॥' १३-६६-२३ (८४१८१)
अब्भक्षा वायुभक्षाश्चक सुधाभक्षाश्च ये सदा ।
व्रतैश्च विविधैर्युक्तास्तान्नमस्यामि माधव ॥१३-६६-२४ (८४१८२)
अयोनीनग्नियोनींश्च ब्रह्मयोनींस्तथैव च ।
सर्वभूतात्मयोनींश्च तान्नमस्याम्यहं सदा ॥१३-६६-२५ (८४१८३)
नित्यमेतान्नमस्यामि कृष्ण लोककरानृषीन् ।
लोकज्येष्ठान्कुलज्येष्ठांस्तमोघ्नँल्लोकभास्करान् ॥१३-६६-२६ (८४१८४)
तस्मात्त्वमपि वार्ष्णेय द्विजान्पूजय नित्यदा ।
पूजिताः पूजनार्हा हि सुखं दास्यन्ति तेऽनघ ॥१३-६६-२७ (८४१८५)
अस्मिँल्लोके सदा ह्येते परत्र च सुखप्रदाः ।
चरन्ते मान्यमाना वै प्रदास्यन्ति सुखं तव ॥१३-६६-२८ (८४१८६)
ये सर्वातिथयो नित्यं गोषु च ब्राह्मणेषु च ।
नित्यं सत्ये चाभिरता दुर्गाण्यतितरन्ति ते ॥१३-६६-२९ (८४१८७)
नित्यं शमपरा ये च तथा ये चानसूयकाः ।
नित्यस्वाध्यायिनो ये च दुर्गाण्यतितरन्ति ते ॥१३-६६-३० (८४१८८)
सर्वान्देवान्नमस्यन्ति य चैकं वेदमाश्रिताः ।
श्रद्दधानाश्च दान्ताश्च दुर्गाण्यतितरन्ति ते ॥१३-६६-३१ (८४१८९)
तथैव विप्रप्रवरान्नमस्कृत्य यतव्रताः ।
भवन्ति ये दानरता दुर्गाण्यतितरन्ति ते ॥१३-६६-३२ (८४१९०)

तपस्विनश्च ये नित्यं कौमारब्रह्मचारिणः ।
तपसा भावितात्मानो दुर्गाण्यतितरन्ति ते ॥ १३-६६-३३ (८४१९१)
देवतातिथिभृत्यानां पितॄणां चार्चने रताः ।
शिष्टान्नभोजिनो ये च दुर्गाण्यतितरन्ति ते ॥ १३-६६-३४ (८४१९२)
अग्निमाधाय विधिवत्प्रणता धारयन्ति ये ।
प्राप्तः सोमाहुतिं चैव दुर्गाण्यतितरन्ति ते ॥ १३-६६-३५ (८४१९३)
मातापित्रोर्गुरुषु च सम्यग्वर्तन्ति ये सदा ।
यथा त्वं वृष्णिशार्दूलेत्युक्त्वैवं विरराम सः ॥ १३-६६-३६ (८४१९४)
तस्मात्त्वमपि कौन्तेय पितृदेवद्विजातिथीन् ।
सम्यक्पूजयसे नित्यं गतिमिष्टामवाप्स्यसि ॥ ॥ १३-६६-३७ (८४१९५)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
षट्षष्टितमोऽध्यायः ॥ ६६ ॥

Mahabharata - Anushaasana Parva - Chapter Footnotes

७-६६-१ मानवैर्भरतर्षभेति झ.थ.ध.पाठः ॥
७-६६-४ तेषु मानवेषु बहुमानपरः सन् कान्नमस्यप्तीति योज्यम् ॥
७-६६-८ महार्हान् महान् अर्हः पूजा येषाम्, अतिपूज्यानित्यर्थः ॥
७-६६-९ अविकत्थनाः श्लाघाहीनाः ॥
७-६६-१० सत्यं धर्मं च यजन्ति पूजयन्ति । क्षितिं गाश्च यजन्ति
ब्राह्मणेभ्यः प्रयच्छन्ति। यज देवपूजासङ्गतिकरणदानेषु। सस्यं
धनं क्षितिमिति थ.ध. पाठः ॥
७-६६-१४ आपृष्ठतापान् यावन्मध्याह्नम् ॥
७-६६-१५ स्वाध्याये ब्रह्मयज्ञे मन्त्रजपे वा ॥
७-६६-१८ निर्ह्रीका निष्प्रयोजनाः इति झ.पाठः । निर्ह्रीकाः दिग्म्बराः ॥
७-६६-२० कपोतवृत्तयः कणश आदाय ये सङ्ग्रहं न कुर्वन्तीत्यर्थः ॥
७-६६-२१ त्रिवर्गो धर्मार्थकामाः । कृत्येषु कर्तुं योग्येषु
कर्मसु वर्तते उत्तममध्यमाधमभावेन वर्तते नतु हीयते
अधममध्यमोत्तमभावेनेत्यर्थः ॥
७-६६-२४ सुधा वैश्वदेवशेषः ॥
७-६६-२५ अयोनीन् अकृतदारान् । अग्नियोनीन् दाराग्निहोत्रयुतान्। ब्रह्मणो
वेदस्य योनीन् आश्रयभूतान्। अब्योनीनग्नियोनींश्चेति थ.ध.। पाठः ॥
७-६६-२६ लोकज्येष्ठाञ्ज्ञाननिष्ठानिति थ.ध. । पाठः ॥
७-६६-३१ स्वाध्याये सर्वे यज्ञा अन्तर्भवन्तीत्यर्थः ॥

---

अनुससनपर्व-अध्यय०६७

॥ श्रीः ॥
१३.६७. अध्यायः ६७

अथ दानधर्मपर्व ॥ १ ॥
Mahabharata - Anushaasana Parva - Chapter Topics
भीष्मेण युधिष्ठिरम्प्रति
शरणागतरक्षणफलप्रतिपादकश्येनकपोतोपाख्यानकथनम् ॥ १ ॥

Mahabharata - Anushaasana Parva - Chapter Text

युधिष्ठिर उवाच ।
पितामह महाप्राज्ञ सर्वशास्त्रविशारद ।
त्वत्तोऽहं श्रोतुमिच्छामि धर्मं भरतसत्तम ॥ १३-६७-१ (८४१९६)
शरणागतं ये रक्षन्ति भूतग्रामं चतुर्विधम् ।
किं तस्य भरतश्रेष्ठ फलं भवति तत्त्वतः ॥ १३-६७-२ (८४१९७)
भीष्म उवाच। १३-६७-३क्ष् (६९९८)
इदं शृणु महाप्राज्ञ धर्मपुत्र महायशः ।
इतिहासं पुरावृत्तं शरणार्थं महाफलम् ॥ १३-६७-३ (८४१९८)
प्रपात्यमानः श्येनेन कपोतः प्रियदर्शनः ।
वृषदर्भं महाभागं नरेन्द्रं शरणं गतः ॥ १३-६७-४ (८४१९९)
स तं दृष्ट्वा विशुद्धात्मा त्रासादङ्कमुपागतम् ।
आश्वास्याश्वसिहीत्याह न तेऽस्ति भयमण्डज ॥ १३-६७-५ (८४२००)
भयं ते सुमहत्कस्मात्कुत्र किं वा कृतं त्वया ।
येन त्वमिह सम्प्राप्तो विसंज्ञो भ्रान्तचेतनः ॥ १३-६७-६ (८४२०१)
नवनीलोत्पलापीड चारुवर्ण सुदर्शन ।
दाडिमाशोकपुष्पाक्ष मा त्रसस्वाभयं तव ॥ १३-६७-७ (८४२०२)
मत्सकाशमनुप्राप्तं न त्वां कश्चित्समुत्सहेत् ।
मनसा ग्रहणं कर्तुं रक्षाध्यक्षपुरस्कृतम् ॥ १३-६७-८ (८४२०३)
काशिराज्यं तदद्यैव त्वदर्थं जीवितं तथा ।
त्यजेयं भव विस्रब्धः कपोत भयं तव ॥ १३-६७-९ (८४२०४)
श्येन उवाच। १३-६७-१०क्ष् (६९९९)
ममैतद्विहितं भक्ष्यं न राजंस्त्रातुमर्हसि ।
अतिक्रान्तं च प्राप्तं च प्रयत्नाच्चोपपादितम् ॥ १३-६७-१० (८४२०५)
मांसं च रुधइरं चास्य मज्जा मेदश्च मे हितम् ।
परितोषकरो ह्येष मम माऽस्याग्रतो भव ॥ १३-६७-११ (८४२०६)
तृष्णा मे बाधतेऽत्युग्रा क्षुधा निर्दहतीव माम् ।

मुञ्चैनं नहि शक्ष्यामि राजन्मन्दयितुं क्षुधाम् ॥१३-६७-१२ (८४२०७)
मया ह्यनुसृतो ह्येष मत्पक्षनखविक्षतः ।
किञ्चिदुच्छ्वासनिःश्वासं न राजन्गोप्तुमर्हसि ॥१३-६७-१३ (८४२०८)
यदि स्वविषये राजन्प्रभुस्त्वं रक्षणे नृणाम् ।
खेचरस्य तृषार्तस्य न त्वं प्रभुरथोत्तम ॥१३-६७-१४ (८४२०९)
यदि वैरिषु भृत्येषु स्वजनव्यवहारयोः ।
विषयेष्विन्द्रियाणां च आकाशे मा पराक्रम ॥१३-६७-१५ (८४२१०)
प्रभुत्वं हि पराक्रम्य सम्यक् पक्षहरेषु ते ।
यदि त्वमिह धर्मार्थी मामपि द्रष्टुमर्हसि ॥१३-६७-१६ (८४२११)
भीष्म उवाच।१३-६७-१७क्ष् (७०००)
श्रुत्वा श्येनस्य तद्वाक्यं राजर्षिर्विस्मयं गतः ।
सम्भाव्य चैनं तद्वाक्यं तदर्थी प्रत्यभाषत ॥१३-६७-१७ (८४२१२)
राजोवाच।१३-६७-१८क्ष् (७००१)
गोवृषो वा वराहो वा मृगो वा महिषोपि वा ।
त्वदथर्मद्य क्रियतां क्षुधाप्रशमनाय ते ॥१३-६७-१८ (८४२१३)
शरणागतं न त्यजेयमिति मे व्रतमाहितम् ।
न मुञ्चति ममाङ्गानि द्विजोऽयं पश्य वै द्विज ॥१३-६७-१९ (८४२१४)
श्येन उवाच।१३-६७-२०क्ष् (७००२)
न वराहं न चोक्षाणं न चान्यान्विविधान्द्विजान्
भक्षयामि महाराज किमन्नाद्येन तेन मे ॥ १३-६७-२० (८४२१५)
यस्तु मे विहितो भक्ष्यः स्वयं देवैः सनातनः ।
श्येनाः कपोतान्खादन्ति स्तितिरेषा सनातनी ॥१३-६७-२१ (८४२१६)
उशीनर कपोते तु यदि स्नेहस्तवानघ ।
ततस्त्वं मे प्रयच्छाद्य स्वमांसं तुलया धृतम् ॥१३-६७-२२ (८४२१७)
राजोवाच।१३-६७-२३क्ष् (७००३)
महाननुग्रहो मेऽद्य यस्त्वमेवमिहात्थ माम् ।
बाढमेव करिष्यामीत्युक्त्वाऽसौ राजसत्तमः ॥१३-६७-२३ (८४२१८)
उत्कृत्योत्कृत्य मांसानि तुलया समतोलयत् ।
अन्तःपुरे ततस्तस्य स्त्रियो रत्नविभूषिताः ॥१३-६७-२४ (८४२१९)
हाहाभूता विनिष्क्रान्ताः श्रुत्वा परमदुःखिताः ।
तासां रुदितशब्देन मन्त्रिभृत्यजनस्य च ॥१३-६७-२५ (८४२२०)
बभूव सुमहान्नादो मेघगम्भीरनिःस्वनः ।
निरुद्धं गगनं सर्वं व्यभ्रं मेघैः समन्ततः ॥१३-६७-२६ (८४२२१)
मही प्रचलिता चासीत्तस्य सत्येन कर्मणा ॥ १३-६७-२७ (८४२२२)
स राजा पार्श्वतश्चैव बाहुभ्यामूरुतश्च यत् ।
तानि मांसानि सञ्छिद्य तुलां पूरयतेऽशनैः ।

तथापि न समस्तेन कपोतेन बभूव ह ॥ १३-६७-२८ (८४२२३)
अस्थिभूतो यदा राजा निर्मांसो रुधिरस्रवः ।
तुलां ततः समारूढः स्वं मांसक्षयमुत्सृजन् ॥ १३-६७-२९ (८४२२४)
ततः सेन्द्रास्त्रयो लोकास्तं नरेन्द्रमुपस्थिताः ।
भेर्यश्चाकाशगैस्तत्र वादिता देवदुन्दुभिः ॥ १३-६७-३० (८४२२५)
अमृतेनावसिक्तश्च वृषदर्भो नरेश्वरः ।
दिव्यैश्च सुसुखैर्माल्यैरभिवृष्टः पुनःपुनः ॥ १३-६७-३१ (८४२२६)
देवगन्धर्वसन्घातैरप्सरोभिश्च सर्वतः ।
नृत्तश्चैवोपगीतश्च पितामह इव प्रभुः ॥ १३-६७-३२ (८४२२७)
हेमप्रासादसम्बाधं मणिकाञ्चनतोरणम् ।
सवैडूर्यमणिस्तम्भं विमानं समधिष्ठितः ॥ १३-६७-३३ (८४२२८)
स राजर्षिर्गतः स्वर्गं कर्मणा तेन शाश्वतम् ।
शरणागतेषु चैवं त्वं कुरु सर्वं युधिष्ठिर ॥ १३-६७-३४ (८४२२९)
भक्तानामनुरक्तानामाश्रितानां च रक्षिता ।
दयावान्सर्वभूतेषु परत्र सुखमेधते ॥ १३-६७-३५ (८४२३०)
साधुवृत्तो हि यो राजा सद्वृत्तमनुतिष्ठति ।
किं न प्राप्तं भवेत्तेनि स्वव्याजेनेह कर्मणा ॥ १३-६७-३६ (८४२३१)
स राजर्षिर्विशुद्धात्मा धीरः सत्यपराक्रमः ।
काशीनामीश्वरः ख्यातस्त्रिषु लोकेषु कर्मणा ॥ १३-६७-३७ (८४२३२)
योऽप्यन्यः कारेयदेवं शरणागतरक्षणम् ।
सोपि गच्छेत तामेव गतिं भरतसत्तम ॥ १३-६७-३८ (८४२३३)
इदं वृत्तं हि राजर्षे वृषदर्भस्य कीर्तयन् ।
पूतात्मा वै भवेल्लोके शृणुयाद्यश्च नित्यशः ॥ ॥ १३-६७-३९ (८४२३४)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
सप्तषष्टितमोऽध्यायः ॥ ६७ ॥

Mahabharata - Anushaasana Parva - Chapter Footnotes

७-६७-४ प्रात्यमान आकशादिति शेषः । वृषदर्भमौशीनरं शिबिम् ॥
७-६७-७ नवं नीलं च यदुत्पलं लस्याऽऽपीड इवालङ्कारभूत ॥
७-६७-१० अतिक्रान्तं गत्प्रायजवितम् ॥
७-६७-१५ यदि वैर्यादिषु पराक्रमसे तद्युक्तं न त्वाकाशे आकाशचारिषु ॥
७-६७-१६ पक्षहरेष्वाज्ञाभङ्गिषु शत्रुषु ॥
७-६७-१७ तदर्थी कपोतार्थी ॥
७-६७-१९ द्विजः पक्षी ॥
७-६७-२८ अशनैः शीघ्रम् ॥

७-६७-२९ मांसक्षयं मांसालयं शरीरम् ॥
७-६७-३२ नृत्तः नृत्येन तोपितः ।एवमुपगीतः ॥
७-६७-३६ साधुवृत्तः सुशीलः ।सद्वृत्तं शिष्टाचारम्। स्वव्याजेन सुतरां नष्कपटेन ॥

---

अनुससनपर्व-अध्यय०६८
॥ श्रीः ॥
१३.६८. अध्यायः ६८

अथ दानधर्मपर्व ॥१ ॥
Mahabharata - Anushaasana Parva - Chapter Topics
भीष्मेण युधिष्ठिरम्प्रति ब्राह्मणमहिमकथनम् ॥१ ॥

Mahabharata - Anushaasana Parva - Chapter Text

युधिष्ठिर उवाच ।
किं राज्ञः सर्वकृत्यानां गरीयः स्यात्पितामह ।
कुर्वन्किं कर्म नृपतिरुभौ लोकौ समश्नुते १३-६८-१ (८४२३५)
भीष्म उवाच। १३-६८-२क्ष् (७००४)
एतद्राज्ञः कृत्यतममभिषिक्तस्य भारत ।
ब्राह्मणानां रक्षणं च पूजा च सुखमिच्छतः ॥ १३-६८-२ (८४२३६)
कर्तव्यं पार्थिवेन्द्रेण तथैव भरतर्षभ ।
श्रोत्रियान्ब्राह्मणान्वृद्धान्नित्यमेवाभिपूजयेत् ॥ १३-६८-३ (८४२३७)
पौरजानपदांश्चापि ब्राह्मणांश्च बहुश्रुतान् ।
सांत्वेन भोगदानेन नमस्कारैः सदाऽर्चयेत् ॥ १३-६८-४ (८४२३८)
एतत्कृत्यतमं राज्ञो नित्यमेवोपलक्षयेत् ।
यथाऽऽत्मानं यथा पुत्रांस्तथैतान्प्रतिपालयेत् ॥ १३-६८-५ (८४२३९)
ये चाप्येषां पूज्यतमास्तान्दृढं प्रतिपूजयेत् ।
तेषु शान्तेषु तद्राष्ट्रं सर्वमेव विराजते ॥ १३-६८-६ (८४२४०)
ते पूज्यास्ते नमस्कार्या मान्यास्ते पितरो यथा ।
तेष्वेव यात्रा लोकानां भूतानामिव वासवे ॥ १३-६८-७ (८४२४१)
अभिचारैरुपायैश्च दहेयुरपि चेतसा ।
निःशेपं कुपिताः कुर्युरुग्राः सत्यपराक्रमाः। १३-६८-८ (८४२४२)
नान्तमेषां प्रपश्यामि न दिशश्चाप्यपावृताः ।
कुपिताः समुदीक्षन्ते दावेषावग्निशिखा इव ॥ १३-६८-९ (८४२४३)
ग्मान्यास्तेषां साधवो ये न निन्द्याश्चाप्यसाधवः'।

बिभ्यत्येषां साहसिका गुणास्तेषामतीव हि ।
कूपा इव तृणच्छन्ना विशुद्धा द्यौरिवापरे ॥ १३-६८-१० (८४२४४)
प्रसह्यकारिणः केचित्कार्पासमृदवोऽपरे ।
सन्ति चैषामतिशठास्तथैवान्ये तपस्विनः ॥ १३-६८-११ (८४२४५)
कृषिगोरक्ष्यमप्येके भैक्ष्यमन्येऽप्यनुष्ठिताः ।
चोराश्चान्येऽनृताश्चान्ये तथाऽन्ये नटनर्तकाः ॥ १३-६८-१२ (८४२४६)
सर्वकर्मसहाश्चान्ये पार्थिवेष्वितरेषु च ।
विविधाचारयुक्ताश्च ब्राह्मणा भरतर्षभ ॥ १३-६८-१३ (८४२४७)
नानाकर्मसु रक्तानां बहुकर्मोपजीविनाम् ।
धर्मज्ञानां सतां तेषां नित्यमवोनुकीर्तयेत्  १३-६८-१४ (८४२४८)
पितॄणां देवतानं च मनुष्योरगरक्षसाम् ।
पुराऽप्येते महाभागा ब्राह्मणा वै जनाधिप ॥ १३-६८-१५ (८४२४९)
नैते देवैर्न पितृभिर्न गन्धर्वैर्न राक्षसैः ।
नासुरैर्न पिशाचैश्च शक्या जेतुं द्विजातयः ॥ १३-६८-१६ (८४२५०)
अदैवं दैवतं कुर्युर्दैवतं चाप्यदैवतम् ।
यमिच्छेयुः स राजा स्याद्यं द्विष्युः स पराभवेत् ॥ १३-६८-१७ (८४२५१)
परिवादं च ये कुर्युर्ब्राह्मणानामचेतसः ।
सत्यं ब्रवीमि ते राजन्विनश्येयुर्न संशयः ॥ १३-६८-१८ (८४२५२)
निन्दाप्रशंसाकुशलाः कीर्त्यकीर्तिपरायणाः ।
परिकुप्यन्ति ते राजन्सततं द्विषतां द्विजाः ॥ १३-६८-१९ (८४२५३)
ब्राह्मणा यं प्रशंसन्ति पुरुषः स प्रवर्धते ।
ब्राह्मणैर्यः पराकृष्टः पराभूयात्क्षणाद्धि सः ॥ १३-६८-२० (८४२५४)
शका यवनकाम्भोजास्तास्ताः क्षत्रियजातयः ।
वृषलत्वं परिगता ब्राह्मणानामदर्शनात् ॥ १३-६८-२१ (८४२५५)
द्राविडाश्च कलिङ्गाश्च पुलिन्दाश्चाप्युशीनराः ।
कोलिसर्पा महिपकास्तास्ताः क्षत्रियजातयः ॥ १३-६८-२२ (८४२५६)
वृपलत्वं परिगता ब्राह्मणानामदर्शनात् ।
श्रेयान्पराजयस्तेभ्यो न जयो जयतांवर ॥ १३-६८-२३ (८४२५७)
यस्तु सर्वमिदं हन्याद्ब्राह्मणं च न तत्समम् ।
ब्रह्मवध्या महान्दोष इत्याहुः परमर्षयः ॥ १३-६८-२४ (८४२५८)
परिवादो द्विजातीनां न श्रोतव्यः कथञ्चन ।
आसीताधोमुखस्तूष्णीं समुत्थाय व्रजेत वा ॥ १३-६८-२५ (८४२५९)
न स जातो जनिष्यो वा पृथिव्यामिह कश्चन ।
यो ब्राह्मणविरोधेन सुखं जीवितुमुत्सहेत् ॥ १३-६८-२६ (८४२६०)
दुर्ग्राह्यो मुष्टिना वायुर्दुःस्पर्शः पाणिना शशी ।
दुर्धरा पृथिवी मूर्ध्ना दुर्जया ब्राह्मणा भुवि ॥ ॥ १३-६८-२७ (८४२६१)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
अष्टषष्टितमोऽध्यायः ॥ ६८ ॥
Mahabharata - Anushaasana Parva - Chapter Footnotes

७-६८-६ एषां ब्राह्मणानां मध्ये ॥
७-६८-७ वासवे पर्जन्ये ॥
७-६८-८ अभिचारैः श्येनयागादिभिः । उणयैः
कौलिकशास्त्रप्रसिद्धैः। चेतसा सङ्कल्पमात्रेण ॥
७-६८-१० एषां एभ्यः साहसिका अकार्यकारिणोऽपि बिभ्यति किमुन विवेकिनः ॥
७-६८-१५ एते पूज्या इति शेषः । यतो महाभागाः ॥
७-६८-१९ परायणाः हेतवः ॥

---

अनुससनपर्व-अध्यय०६९
॥ श्रीः ॥
१३.६९. अध्यायः ६९

अथ दानधर्मपर्व ॥ १ ॥
Mahabharata - Anushaasana Parva - Chapter Topics
भीष्मेण युधिष्ठिरम्प्रति
ब्राह्मणमाहात्म्यप्रतिपादकपृथ्वीवासुदेवसंवादानुवादः ॥ १ ॥

Mahabharata - Anushaasana Parva - Chapter Text

भीष्म उवाच ।
ब्राह्मणानेव सततं भृशं सम्परिपूजयेत् ।
एते हि सोमराजान ईश्वरः सुखदुःखयोः ॥ १३-६९-१ (८४२६२)
एते भोगैरलङ्कारैरन्यैश्चैव किमिच्छकैः ।
सदा पूज्या नमस्कारै रक्ष्याश्च पितृवन्नृपैः ।
ततो राष्ट्राय शान्तिर्हि भूतानामिव वासवात् ॥ १३-६९-२ (८४२६३)
ज्ञानवान्ब्रह्मवर्चस्वी राष्ट्रे वै ब्राह्मणः शुचिः ।
महारथश्च राजन्य एष्टव्यः शत्रुतापनः ॥ १३-६९-३ (८४२६४)
ब्राह्मणं जातिसम्पन्नं धर्मज्ञं संशितव्रतम् ।
बोजयीत गृहे राजन्न तस्मात्परमस्ति वै ॥ १३-६९-४ (८४२६५)
ब्राह्मणेभ्यो हविर्दत्तं प्रतिगृह्णन्ति देवताः ।
पितरः सर्वभूतानां नैतेभ्यो विद्यते परम् ॥ १३-६९-५ (८४२६६)

आदित्यश्चन्द्रमा विष्णुः सङ्करोऽग्निः प्रजापतिः ।
सर्वे ब्राह्मणमाविश्य सदाऽन्नमुपभुञ्जते ॥ १३-६९-६ (८४२६७)
न तस्याश्नन्ति पितरो यस्य विप्रा न भुञ्जते ।
देवाश्चाप्यस्य नाश्नन्ति पापस्य ब्राह्मणद्विषः ॥ १३-६९-७ (८४२६८)
ब्राह्मणेषु तु तुष्टेषु प्रीयन्ते पितरः सदा ।
तथैव देवता राजन्नात्र कार्या विचारणा ॥ १३-६९-८ (८४२६९)
तथैव तेऽपि प्रीयन्ते येषां भवति तद्धविः ।
न च प्रेत्य विनश्यन्ति गच्छन्ति च परां गतिम् ॥ १३-६९-९ (८४२७०)
येनयेनैव प्रीयन्ते पितरो देवतास्तथा ॥
तेनतेनैव प्रीयन्ते पितरो देवतास्तथा ॥ १३-६९-१० (८४२७१)
ब्राह्मणादेव तद्भूतं प्रभवन्ति यतः प्रजाः ।
यतश्चायं प्रभवति प्रेत्य यत्र च गच्छति ॥ १३-६९-११ (८४२७२)
वेदैष मार्गं स्वर्गस्य तथैव नरकस्य च ।
आगतानागते चोमे ब्राह्मणो द्विपदांवरः ॥ १३-६९-१२ (८४२७३)
ब्राह्मणो द्विपदां श्रेष्ठः स्वधर्मं चैव वेद यः ।
ये चैनमनुवर्तन्ते ते न यान्ति पराभवम् ।
न ते प्रेत्य विनश्यन्ति गच्छन्ति न पराभवम् ॥ १३-६९-१३ (८४२७४)
यद्ब्राह्मणमुखात्प्राप्तं प्रतिगृह्णन्ति वै वचः ।
कृतात्मानो महात्मानस्ते न यान्ति पराभवम् ॥ १३-६९-१४ (८४२७५)
क्षत्रियाणां प्रतपतां तेजसा च बलेन च ।
ब्राह्मणेष्वेव शाम्यन्ति तेजांसि च बलानि च ॥ १३-६९-१५ (८४२७६)
भृगवस्तालजङ्घांश्च नीपानाङ्गिरसोऽजयन् ।
भरद्वाजो वैतहव्यानैलांश्च भरतर्षभ ॥ १३-६९-१६ (८४२७७)
चित्रायुधांश्चाप्यजयन्नेते कृष्णाजिनध्वजाः ।
प्रक्षिप्याथ च कुम्भान्वै पारगामिनमारभेत् ॥ १३-६९-१७ (८४२७८)
यत्किंचित्कथ्यते लोके श्रूयते पठ्यतेऽपि वा ।
सर्वं तद्ब्राह्मणेष्वेव गूढोऽग्निरिव दारुषु ॥ १३-६९-१८ (८४२७९)
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
संवादं वासुदेवस्य पृथ्व्याश्च भरतर्षभ ॥ १३-६९-१९ (८४२८०)
वासुदेव उवाच। १३-६९-२०क्ष् (७००५)
मातरं सर्वभूतानां पृच्छे त्वां संशयं शुभे ।
केनस्वित्कर्मणा पापं व्यपोहति नरो गृही ॥ १३-६९-२० (८४२८१)
पृथिव्युवाच। १३-६९-२१क्ष् (७००६)
ब्राह्मणानेव सेवेत पवित्रं ह्येतदुत्तमम् ।
ब्राह्मणान्सेवमानस्य रजः सर्वं प्रणश्यति ।
भूतो भूतिरतः कीर्तिरतो बुद्धिः प्रजायते ॥ १३-६९-२१ (८४२८२)

महारथश्च राजन्य एष्टव्यः शत्रुतापनः ।
इति मां नारदः प्राह सततं सर्वभूतये ॥ १३-६९-२२ (८४२८३)
ब्राह्मणं जातिसम्पन्नं धर्मज्ञं संशितं शुचिम् ।
अपरेषां परेषां च परेभ्यश्चैव ये परे ॥ १३-६९-२३ (८४२८४)
ब्राह्मणा यं प्रशंसन्ति स मनुष्यः प्रवर्धते ।
अथ यो ब्राह्मणान्क्रुष्टः पराभवति सोचिरात् ॥ १३-६९-२४ (८४२८५)
यथा महार्णवे क्षिप्त आमलोष्टो विनश्यति ।
तथा दुश्चरितं विप्रे पराभावाय कल्पते ॥ १३-६९-२५ (८४२८६)
पश्य चन्द्रे कृतं लक्ष्म समुद्रे लवणोदकम् ।
तथा भगसहस्रेण महेन्द्रः परिचिह्नितः ॥ १३-६९-२६ (८४२८७)
तेषामेव प्रभावेन सहस्रनयनो ह्यसौ ।
शतक्रतुः समभवत्पश्य माधव यादृशम् ॥ १३-६९-२७ (८४२८८)
इच्छन्कीर्तिं च भूतिं च लोकांश्च मधुसूदन ।
ब्राह्मणानुमते तिष्ठेत्पुरुषः शुचिरात्मवान् ॥ १३-६९-२८ (८४२८९)
भीष्म उवाच। १३-६९-२९क्ष् (७००७)
इत्येतद्वचनं श्रुत्वा मेदिन्या मधुसूदनः ।
साधुसाध्विति कौरव्य मेदिनीं प्रत्यपूजयत् ॥ १३-६९-२९ (८४२९०)
एतां श्रुत्वोपमां पार्थ प्रयतो ब्राह्मणर्षभान् ।
सततं पूजयेथास्त्वं ततः श्रेयोऽभिपत्स्यसे ॥ ॥ १३-६९-३० (८४२९१)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
एकोनसप्ततितमोऽध्यायः ॥ ६९ ॥

Mahabharata - Anushaasana Parva - Chapter Footnotes

७-६९-१ सोमो राजा येषां ते सोमराजानः ॥
७-६९-२ प्रश्नपूर्वकं यत्तदिष्टं दीयते तत्किमिच्छकम् ॥
७-६९-६ चन्द्रमा वायुरापो भूरम्बरं दिशः इति झ.पाठः ॥
७-६९-९ तेपि दातारोपि । तत् प्रदेयं द्रव्यम् ॥
७-६९-११ तद्यज्ञादिकम् । भूतमुत्पन्नम्। ब्राह्मणो वेद तद्भूतमिति थ.ध। पाठः ॥
७-६९-१७ कुं पृथिवीं ब्राह्मणाय प्रक्षिप्य दत्त्वा पारगामिनं परलोकहितं कर्म आरभेदाचरेत् । भानू दीप्तिं कुर्वन्नुभयलोके इति शेषः। पुरगामिनमाहरन्निति थ.पाठः ॥
७-६९-२३ अपरे ब्राह्मणं सर्वभूतये इच्छेदित्याहुरिति विपरिणामेनानषङ्गः ॥
७-६९-२४ क्रुष्टः क्रोशति । कर्तरि क्तः ॥

अनुससनपर्व-अध्यय०७०
॥ श्रीः ॥
१३.७०. अध्यायः ७०

अथ दानधर्मपर्व ॥ १ ॥
Mahabharata - Anushaasana Parva - Chapter Topics
भीष्मेण युधिष्ठिरम्प्रति ब्राह्मणमाहात्म्यकथनम् ॥ १ ॥

Mahabharata - Anushaasana Parva - Chapter Text

भीष्म उवाच ।
जन्मनैव महाभागो ब्राह्मणो नाम जायते ।
नमस्यः सर्वभूतानामतिथिः प्रश्रिताग्रभुक् ॥ १३-७०-१ (८४२९२)
सर्वेषां सुहृदस्तात ब्राह्मणाः सुमनोमुकाः ।
ग्सर्वानेते हनिष्यन्ति ब्राह्मणा जातमन्यवः।'
गीर्भिर्मङ्गलयुक्ताभिरनुध्यायन्ति पूजिताः ॥ १३-७०-२ (८४२९३)
सर्वान्नो द्विषतस्तात ब्राह्मणा जातमन्यवः ।
गीर्भिर्दारुणयुक्ताभिर्हन्युश्चैते ह्यपूजिताः ॥ १३-७०-३ (८४२९४)
अत्र गाथाः पुरा गीताः कीर्तयन्ति पुराविदः ।
सृष्ट्वा द्विजातीन्धाता हि यथापूर्वं समादधत् ॥ १३-७०-४ (८४२९५)
न वोऽन्यदिह कर्तव्यं किञ्चिदूर्ध्वायनं विधि ।
गुप्तो गोपायते ब्रह्मा श्रेयो वस्तेन शोभनम् ॥ १३-७०-५ (८४२९६)
स्वमेव कुर्वतां कर्म श्रीर्वो ब्राह्मी भविष्यति ।
प्रमाणं सर्वभूतानां प्रग्रहाश्च भविष्यथ ॥ १३-७०-६ (८४२९७)
न शौद्रं कर्म कर्तव्यं ब्राह्मणेन विपश्चिता ।
शौद्रं हि कुर्वतः कर्म ब्राह्मी श्रीरुपरुध्यते ॥ १३-७०-७ (८४२९८)
श्रीश्च बुद्धिश्च तेजश्च विभूतिश्च प्रतापिनी ।
स्वाध्यायेनैव महात्म्यं विपुलं प्रतिपत्स्यथ ॥ १३-७०-८ (८४२९९)
हुत्वा चाहवनीयस्थं महाभाग्ये प्रतिष्ठिताः ।
अग्रभोज्याः प्रसूतीनां श्रिया ब्राह्मयाऽनुकल्पिताः १३-७०-९ (८४३००)
श्रद्धया परया युक्ता ह्यनभिद्रोहलब्धया ।
दमस्वाध्यायनिरताः सर्वान्कामानवाप्स्यथ ॥ १३-७०-१० (८४३०१)
यच्चैव मानुषे लोके यच्च देवेषु किञ्चन ।
सर्वं वस्तपसा साध्यं ज्ञानेन नियमेन च ॥ १३-७०-११ (८४३०२)
ग्युष्मत्संमाननां प्रीतिं पावनैः क्षत्रिया भृशम्।'

अमुत्रेह समायान्ति वैश्यशूद्राधिकास्तथा ॥ १३-७०-१२ (८४३०३)
अरक्षिताश्च युष्माभिर्विरुद्धा यान्ति विप्रवम् ।
युष्मत्तेजोधृता लोकास्तद्रक्ष्यथ जगत्त्रयम् ॥' १३-७०-१३ (८४३०४)
इत्येवं ब्रह्मगीतास्ते समाख्याता मयाऽनघ ।
विप्रानुकम्पार्थमिदं तेन प्रोक्तं हि धीमता ॥ १३-७०-१४ (८४३०५)
भूयस्तेषां बलं मन्ये यथा राज्ञस्तपस्विनः ।
दुरासदाश्च चण्डाश्च तपसा क्षिप्रकारिणः ॥ १३-७०-१५ (८४३०६)
सन्त्येषां सिम्हसत्वाश्च व्याघ्रसत्वास्तथाऽपरे ।
वराहमृगसत्वाश्च गजसत्वास्तथाऽपरे ॥ १३-७०-१६ (८४३०७)
सर्पस्पर्शसमाः केचित्तथाऽन्ये मकरस्पृशः ।
विभाष्य घातिनः केचित्तथा चक्षुर्हणोऽपरे ॥ १३-७०-१७ (८४३०८)
सन्ति चाशीविषसमाः सन्ति मन्दास्तथाऽपरे ।
विविधानीह वृत्तानि ब्राह्मणानां युधिष्ठिर ॥ १३-७०-१८ (८४३०९)
मेकला द्राविडा लाटाः पौण्ड्राः कान्वशिरास्तथा ।
शौण्डिका दरदा दार्वाश्चोराः शबरबर्बराः ॥ १३-७०-१९ (८४३१०)
किराता यवनाश्चैव तास्ताः क्षत्रियजातयः ।
वृषत्वमनुप्राप्ता ब्राह्मणानामदर्शनात् ॥ १३-७०-२० (८४३११)
ब्राह्मणानां परिभवादसुराः सलिलेशयाः ।
ब्राह्मणानां प्रसादाच्च देवाः स्वर्गनिवासिनः ॥ १३-७०-२१ (८४३१२)
अशक्यं स्प्रष्टुमाकाशमचाल्यो हिमवान्गिरिः ।
अवार्या सेतुना गङ्गा दुर्जया ब्राह्ममा भुवि ॥ १३-७०-२२ (८४३१३)
न ब्राह्मणविरोधेन शक्या शास्तुं वसुन्धरा ।
ब्राह्मणा हि महात्मानो देवानामपि देवताः ॥ १३-७०-२३ (८४३१४)
तान्पूजयस्व सततं दानेन परिचर्यया ।
यदीच्छसि महीं भोक्तमिमां सागरमेखलाम् ॥ १३-७०-२४ (८४३१५)
प्रतिग्रहेण तेजो हि विप्राणा शाम्यतेऽनघ ।
प्रतिग्रहं ये नेच्छेयुस्तेऽपि रक्ष्यास्त्वया नृप ॥ ॥ १३-७०-२५ (८४३१६)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
सप्ततितमोऽध्यायः ॥ ७० ॥

Mahabharata - Anushaasana Parva - Chapter Footnotes

७-७०-१ जन्मनैव संस्काराद्यभावेऽपि ब्राह्मणो नमस्य एव । प्रश्रितं पक्वमन्नं तत्स्वाग्रे भोक्तुमर्हः प्रश्रिताग्रभुक् ॥
७-७०-२ सुमनसां देवानां मुखमिव भूताः सुमनोमुखाः ॥
७-७०-३ नोऽस्माकं द्विषतः शत्रून् । तैरपूजिता ब्राह्मणा हन्युरिति

सम्बन्धः ॥
७-७०-४ समादधत् समाधिं नियमं कृतवान् ॥
७-७०-५ ब्रह्मा ब्राह्मणः । वः शोभनं श्रेयस्तेनैव ॥
७-७०-६ प्रग्रहाः दमनक्षभा रज्ज्व इव ॥
७-७०-७ शौद्रं कर्म सेवा ॥
७-७०-८ श्रीश्चेत्यादेः श्रियमित्यादिरर्थः ॥
७-७०-९ आह्वनीयस्थं देवतागणं प्रसूतीनां शिशुभ्योऽप्यग्रे
भोज्यं येषां ते । ब्राह्म्या श्रिया विद्ययाऽनुकल्पिताः पात्रीभूताः ॥
७-७०-१५ चण्डत्वादिदोषवन्तोपि पूज्या एवेत्यर्थः ॥
७-७०-१७ कार्पासमृदवः केचिदिति थ । पाठः ॥
७-७०-२० अदर्शनात् अननुग्रहात् ॥

---

अनुससनपर्व-अध्यय०७१
॥ श्रीः ॥
१३.७१. अध्यायः ७१

अथ दानधर्मपर्व ॥ १ ॥
Mahabharata - Anushaasana Parva - Chapter Topics
भीष्मेण युधिष्ठिरम्प्रति
ब्राह्मणमाहात्म्यप्रतिपादकशक्रशम्बरसंवादानुवादः ॥ १ ॥

Mahabharata - Anushaasana Parva - Chapter Text

भीष्म उवाच ।
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
शक्रशम्बरसंवादं तन्निवोध युधिष्ठिर ॥ १३-७१-१ (८४३१७)
शक्रो ह्यज्ञातरूपेण जटी भूत्वा सुवारुणः ।
विप्ररूपं समास्थाय प्रश्नं पप्रच्छ शम्बरम् ॥ १३-७१-२ (८४३१८)
केन शम्बर वृत्तेन स्वजात्यानधितिष्ठसि ।
श्रेष्ठं त्वां केन मन्यन्ते तद्वै प्रब्रूहि तत्त्वतः ॥ १३-७१-३ (८४३१९)
शम्बर उवाच । १३-७१-४क्ष् (७००८)
नासूयामि सदा विप्रान्ब्राह्ममेव च मे मतम् ।
शास्त्राणि वदतो विप्रान्संमन्यामि यथासुखम् ॥ १३-७१-४ (८४३२०)
श्रुत्वा च नावजानामि नापराध्यामि कर्हिचित् ।
अभ्यर्च्याभ्यनुपृच्छामि पादौ गृह्णामि धीमताम् ॥ १३-७१-५ (८४३२१)
ते विस्रब्धाः प्रभाषन्ते संयच्छन्ति च मां सदा ।

प्रमत्तेष्वप्रमत्तोऽस्मि सदा सुप्तेषु जागृमि ॥ १३-७१-६ (८४३२२)
ते मां शास्त्रपथे युक्तं ब्रह्मण्यमनसूयकम् ।
समासिञ्चति शास्तारः क्षौद्रं मध्विव मक्षिकाः ॥ १३-७१-७ (८४३२३)
यच्च भाषन्ति संतुष्टास्तच्च गृह्णाम्यमायया ।
समाधिमात्मनो नित्यमनुलोममचिन्तयम् ॥ १३-७१-८ (८४३२४)
सोहं वागग्रमृष्टानां रसानामवलेहकः ।
स्वजात्यानधितिष्ठामि नक्षत्राणीव चन्द्रमाः ॥ १३-७१-९ (८४३२५)
एतत्पृथिव्याममृतमेतच्चक्षुरनुत्तमम् ।
यद्ब्राह्मणमुखाच्छास्त्रमिह श्रुत्वा प्रवर्तते ॥ १३-७१-१० (८४३२६)
एतत्कारणमाज्ञाय दृष्ट्वा देवासुरं पुरा ।
युद्धं पिता मे हृष्टात्मा विस्मितः समपद्यत ॥ १३-७१-११ (८४३२७)
दृष्ट्वा च ब्राह्मणानां तु महिमानं महात्मनाम् ।
पर्यपृच्छत्कथममी सिद्धा इति निशाकरम् ॥ १३-७१-१२ (८४३२८)
सोम उवाच। १३-७१-१३क्ष् (७००९)
ब्राह्मणास्तपसा सर्वे सिध्यन्ते वाग्बलाः सदा ।
भुजवीर्याश्च राजानो वागस्त्राश्च द्विजातयः ॥ १३-७१-१३ (८४३२९)
प्रवसन्वाप्यधीयीत ब्राह्मीर्दुर्वसतीर्वसन् ।
निर्मन्युरपि निर्वाणो यतिः स्यात्समदर्शनः ॥ १३-७१-१४ (८४३३०)
अपि च ज्ञानसम्पन्नः सर्वान्वेदान्पितुर्गृहे ।
श्लाघमान इवाधीयाद्ग्राम्य इत्येव तं विदुः ॥ १३-७१-१५ (८४३३१)
भूमिरेतौ निगिरति सर्पो बिलशयानिव ।
राजानं चाप्ययोद्धारं ब्राह्मणं चाप्रवासिनम् ॥ १३-७१-१६ (८४३३२)
अभिमानः श्रियं हन्ति पुरुषस्याल्पमेधसः ।
गर्भेण दुष्यते कन्या गृहवासेन च द्विजः ॥ १३-७१-१७ (८४३३३)
गविद्याविदो लोकविदस्तपोदमसमन्विताः ।
नित्यपूज्याश्च वन्द्याश्च द्विजा लोकद्वयेच्छुभिः ॥ १३-७१-१८ (८४३३४)
इत्येतन्मे पिता श्रुत्वा सोमादद्भुतदर्शनात् ।
ब्राह्मणान्पूजयामास तथैवाहं महाव्रतान् ॥ १३-७१-१९ (८४३३५)
भीष्म उवाच। १३-७१-२०क्ष् (७०१०)
श्रुत्वैतद्वचनं शक्रो दानवेन्द्रमुखाच्च्युतम् ।
द्विजान्संम्पूजयामास महेन्द्रत्वमवाप च ॥ ॥ १३-७१-२० (८४३३६)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
एकसप्ततितमोऽध्यायः ॥ ७१ ॥
Mahabharata - Anushaasana Parva - Chapter Footnotes

७-७१-७ मां मयि । मधु अमृततुल्यां विद्यां समासिच्चन्ति क्षौद्रं मधुपटलम् मक्षिका मध्विवेत्यावृत्त्या योज्यम् ॥
७-७१-८ समाधिं ब्राह्मणेषु निष्ठाम् ॥
७-७१-९ वागग्रे जिह्वाग्रे मृष्टं विद्यामृतं येषां ब्राह्मणानाम् । रसानामुक्तिसुधानाम् ॥
७-७१-१४ ब्राह्मर्वेदार्थाः दुर्वसतीः गुरुकुलवासक्लेशात् । अपि अपिवा। सति वैराग्ये यतिः स्यात् ॥
७-७१-१५ पितुर्गृहे वेदाध्ययनं निन्दति अपीति ॥
७-७१-१६ अप्रवासिनं वेदार्थं ग्रामान्तरे वा समकुर्वाणम् ॥

---

अनुससनपर्व-अध्यय०७२
॥ श्रीः ॥
१३.७२. अध्यायः ७२

अथ दानधर्मपर्व ॥ १ ॥
Mahabharata - Anushaasana Parva - Chapter Topics
भीष्मेण युधिष्ठिरम्प्रति पात्रलक्षणादिकथनम् ॥ १ ॥

Mahabharata - Anushaasana Parva - Chapter Text

युधिष्ठिर उवाच ।
अपूर्वं वा भवेत्पात्रमथवाऽपि चिरोषितम् ।
दूरादभ्यागतं वाऽपि किं पात्रं स्यात्पितामह ॥ १३-७२-१ (८४३३७)
भीष्म उवाच। १३-७२-२क्ष् (७०११)
क्रिया भवति केषांचिदुपांशुव्रतमुत्तमम् ।
यो नो याचेत यत्किंचित्सर्वं दद्याम इत्यपि ॥ १३-७२-२ (८४३३८)
अपीडयन्भृत्यवर्गमित्येवमनुशुश्रुम ।
पीडयन्भृत्यवर्गं हि आत्मानमपकर्षति ॥ १३-७२-३ (८४३३९)
अपूर्वं चापि यत्पात्रं यच्चापि स्याच्चिरोषितम् ।
दूरादभ्यागतं चापि तत्पात्रं न विदुर्बुधाः ॥ १३-७२-४ (८४३४०)
युधिष्ठिर उवाच। १३-७२-५क्ष् (७०१२)
अपीडया च भूतानां धर्मस्याहिंसया तथा ।
पात्रं विद्यामतत्त्वेन यस्मै दत्तं न सन्तपेत् ॥ १३-७२-५ (८४३४१)
भीष्म उवाच। १३-७२-६क्ष् (७०१३)
ऋत्विक्पुरोहिताचार्याः शिष्यसम्बन्धिबान्धवाः ।
सर्वे पूज्याश्च मान्याश्च श्रुतवन्तोऽनसूयकाः ॥ १३-७२-६ (८४३४२)

अतोऽन्यथा वर्तमानाः सर्वे नार्हन्ति सत्क्रियाम् ।
तस्माद्गुणैः परीक्षेत पुरुषान्प्रणिधाय वै ॥ १३-७२-७ (८४३४३)
अक्रोधः सत्यवचनमहिंसा दम आर्जवम् ।
अद्रोहोऽनभिमानश्च ह्रीस्तितिक्षा दमः शमः ॥ १३-७२-८ (८४३४४)
यस्मिन्नेतानि दृश्यन्ते न चाकार्याणि भारत ।
स्वभावतो निविष्टानि तत्पात्रं मानमर्हति ॥ १३-७२-९ (८४३४५)
तथा चिरोषितं चापि सम्प्रत्यागतमेव च ।
अपूर्वं चैव पूर्वं च तत्पात्रं मानमर्हति ॥ १३-७२-१० (८४३४६)
अप्रामाण्यं च वेदानां शास्त्राणां चाभिलङ्घनम् ।
अव्यवस्था च सर्वत्र एतन्नाशनमात्मनः ॥ १३-७२-११ (८४३४७)
भवेत्पण्डितमानी यो ब्राह्मणो वेदनिन्दकः ।
आन्वीक्षिकीं तर्कविद्यामनुरक्तो निरर्थिकां ॥ १३-७२-१२ (८४३४८)
हेतुवादान्बुवन्सत्सु विजेताऽहेतुवादकः ।
आक्रोष्टा चातिवक्ता च ब्राह्मणानां सदैवहि ॥ १३-७२-१३ (८४३४९)
सर्वाभिशङ्की मूढश्च बालः कटुकवागपि ।
बोद्धव्यस्तादृशस्तात नरं श्वानं हि तं विदुः ॥ १३-७२-१४ (८४३५०)
यथा श्वा भषितुं चैव हन्तु चैवावसज्जते ।
एवं सम्भाषणार्थाय सर्वशास्त्रवधाय च ।
ग्अल्पश्रुताः कुतर्काश्च दृष्टाः सृष्टाः कुपण्डिताः ॥ १३-७२-१५ (८४३५१)
श्रुतिस्मृती चेतिहासपुराणारण्यवेदिनः ।
अनुरुन्ध्याद्बहुज्ञांश्च सारज्ञाश्चैव पण्डिताः ॥' १३-७२-१६ (८४३५२)
लोकयात्रा च द्रष्टव्या धर्मश्चात्महितानि च ।
एवं नरो वर्तमानः शाश्वतीर्वर्धते समाः ॥ १३-७२-१७ (८४३५३)
ऋणमुन्मुच्य देवानामृषीणां च तथैव च ।
पितॄणामथ विप्राणामतिथीनां च पञ्चमम् ॥ १३-७२-१८ (८४३५४)
पर्यायेण विमुक्तो यः सुनिर्णिक्तेन कर्मणा ।
एवं गृहस्थः कर्माणि कुर्वन्धर्मानन हीयते ॥ ॥ १३-७२-१९ (८४३५५)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
द्विसप्ततितमोऽध्यायः ॥ ७२ ॥

Mahabharata - Anushaasana Parva - Chapter Footnotes

७-७२-२ कश्चिद्यज्ञार्थं कश्चित् गुरुदक्षिणार्थं
कश्चित्कुटुम्बभरणार्थमिति एवंरूपा क्रिया केषांचित्पात्रत्वे प्रधानं
भवति केषांचिदुषांशुव्रतं मौनं पारिव्राज्यमिति । दद्यामः ददाम
इत्येव वक्तव्यं नत्वेतेषु कञ्चित्प्रत्याचक्षीतेत्यर्थः ॥

७-७२-५ दत्तं प्रदेयवस्त्वभिमानिनी देवता न सन्तपेत् । विप्रे वेदविवर्जिते। दीयमानं रुदत्यन्नमिति स्मृतेः। अतः कस्तादृश इति प्रश्नः ॥
७-७२-६ मुख्यं पात्रं विशेषेण श्रुतवन्तोऽनसूयका इति ॥
७-७२-१० तथा अक्रोधादिगुणविशिष्टम् ॥
७-७२-११ अपात्रतावीजमाह अप्रामाण्यमिति । आत्मनः पात्रताया इति शेषः ॥
७-७२-१२ निरर्थिकां श्रुतिविरोधित्वेन मोक्षानुपयोगिनीम् ॥
७-७२-१३ अहेतुवादकः शास्त्रोक्तहेतुवादविरोधात् ॥
७-७२-१४ बोद्धव्यः अस्पृश्यत्वेनेति शेषः ॥
७-७२-१७ धर्मश्चात्महिताय चेति थ।ध।पाठः ॥
७-७२-१८ देवानामृणं यज्ञेन ऋषीणां वेदाधिगमेन पितॄणां प्रजोत्पादनेन विप्राणां दानमानेनाऽतिथीनां सम्यगातिथ्येन चोन्मुच्याऽपाकृत्य कर्माणि कुर्यन्नित्युत्तरेणान्वयः ॥

---

अनुससनपर्व-अध्यय०७३
॥ श्रीः ॥
१३.७३. अध्यायः ७३

अथ दानधर्मपर्व ॥ १ ॥
Mahabharata - Anushaasana Parva - Chapter Topics
भीष्मेण युधिष्ठिरम्प्रति
स्त्रीस्वभावप्रतिपादकनारदपञ्चचूडासंवादानुवादः ॥ १ ॥

Mahabharata - Anushaasana Parva - Chapter Text

युधिष्ठिर उवाच ।
स्त्रीणां स्वभावमिच्छामि श्रोतुं भरतसत्तम ।
स्त्रियो हि मूलं दोषाणां लघुचित्ता हि ताः स्मृताः? १३-७३-१ (८४३५६)
भीष्म उवाच। १३-७३-२क्ष् (७०१४)
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
नारदस्य च संवादं पुंश्चल्या पञ्चचूडाया ॥ १३-७३-२ (८४३५७)
लोकाननुचरन्सर्वान्देवर्षिर्नारदः पुरा ।
ददर्शाप्सरसं ब्राह्मीं पञ्चचूडामनिन्दिताम् ॥ १३-७३-३ (८४३५८)
तां दृष्ट्वा चारुसर्वाङ्गीं पप्रच्छाप्सरसं मुनिः ।
संशयो हृदि कश्चिन्मे ब्रूहि तन्मे सुमध्यमे ॥ १३-७३-४ (८४३५९)
एवमुक्ताऽथ सा विप्रं प्रत्युवाचाथ नारदम् ।

विषये सति वक्ष्यामि समर्था मन्यसे च माम् ॥१३-७३-५ (८४३६०)
नारद उवाच।१३-७३-६क्ष् (७०१५)
न त्वामविषये भद्रे नियोक्ष्यामि कथञ्चन ।
स्त्रीणां स्वभावमिच्छामि त्वत्तः श्रोतुं वरानने ॥१३-७३-६ (८४३६१)
एतच्छ्रुत्वा वचस्तस्य देवर्षेरप्सरोत्तमा ।
प्रत्युवाच न शक्ष्यामि स्त्री सती निन्दितुं स्त्रियः ॥१३-७३-७ (८४३६२)
विदितास्ते स्त्रियो याश्च यादृशाश्च स्वभावतः ।
न मामर्हसि देवर्षे नियोक्तुं कार्य ईदृशे ॥१३-७३-८ (८४३६३)
तामुवाच स देवर्षिः सत्यं वद सुमध्यमे ।
मृषावादे भवेद्दोषः सत्ये दोषो न विद्यते ॥१३-७३-९ (८४३६४)
इत्युक्ता सा कृतमतिरभवच्चारुहासिनी ।
स्त्रीदोषाञ्शाश्वतान्सत्यान्भाषितुं सम्प्रचक्रमे ॥१३-७३-१० (८४३६५)
कुलीना रूपवत्यश्च नाथवत्यश्च योषितः ।
मर्यादासु न तिष्ठन्ति स दोषः स्त्रीषु नारद १३-७३-११ (८४३६६)
न स्त्रीभ्यः किञ्चिदन्यद्वै पापीयस्तरमस्ति वै ।
स्त्रियो हि मूलं दोषाणां तथा त्वमपि वेत्थ ह ॥१३-७३-१२ (८४३६७)
समाज्ञातानृद्धिमतः प्रतिरूपान्वशे स्थितान् ।
पतीनन्तरमासाद्य नालं नार्यः परीक्षितुम् ॥१३-७३-१३ (८४३६८)
असद्धर्मस्त्वयं स्त्रीणामस्माकं भवति प्रभो ।
पापीयसो नरान्यद्वै लज्जां त्यक्त्वा भजामहे ॥१३-७३-१४ (८४३६९)
स्त्रियं हि यः प्रार्थयते सन्निकर्षं च गच्छति ।
ईषच्च कुरुते सेवां तमेवेच्छन्ति योषितः ॥१३-७३-१५ (८४३७०)
अनर्थित्वान्मनुष्याणां भयात्परिजनस्य च ।
मर्यादायाममर्यादाः स्त्रियस्तिष्ठन्ति भर्तृषु ॥१३-७३-१६ (८४३७१)
नासां कश्चिदगम्योस्ति नासां वयसि निश्चयः ॥
विरूपं रूपवन्तं वा पुमानित्येव भुञ्जते ॥१३-७३-१७ (८४३७२)
न भयान्नाप्यनुक्रोशान्नार्थहेतोः कथञ्चन ।
न ज्ञातिकुलसम्बन्धात्स्त्रियस्तिष्ठन्ति भर्तृषु ॥१३-७३-१८ (८४३७३)
यौवने वर्तमानानां मृष्टाभरणवाससाम् ।
नारीणां स्वैरवृत्तीनां स्पृहयन्ति कुलस्त्रियः ॥१३-७३-१९ (८४३७४)
याश्च शश्वद्बहुमता रक्ष्यन्ते दयिताः स्त्रियः ।
अपि ताः सम्प्रसज्जन्ते कुब्जान्धजडवामनैः ॥१३-७३-२० (८४३७५)
पङ्गुष्वथ च देवर्षे ये चान्ये कुत्सिता नराः ।
स्त्रीणामगम्यो लोकेऽस्मिन्नास्ति कश्चिन्महामुने ॥१३-७३-२१ (८४३७६)
यदि पुंसां गतिर्ब्रह्मन्कथंचिन्नोपपद्यते ।
अप्यन्योन्यं प्रवर्तन्ते न हि तिष्ठन्ति भर्तृषु ॥१३-७३-२२ (८४३७७)

ग्दुष्टाचाराः पापरता असत्या मायया वृताः ।
अदृष्टबुद्धिबहुलाः प्रायेणेत्यवगम्यताम् ॥ १३-७३-२३ (८४३७८)
अलाभात्पुरुषाणां हि भयात्परिजनस्य च ।
वधबन्धभयाच्चापि स्वयं गुप्ता भवन्ति ताः ॥ १३-७३-२४ (८४३७९)
चलस्वभावा दुःसेव्या दुर्ग्राह्या भावतस्तथा ।
प्राज्ञस्य पुरुषस्येह यथाभावास्तथा स्त्रियः ॥ १३-७३-२५ (८४३८०)
नाग्निस्तृप्यति काष्ठानां नापगानां महोदधिः ।
नान्तकः सर्वभूतानां न पुंसां वामलोचनाः ॥ १३-७३-२६ (८४३८१)
इदमन्यच्च देवर्षे रहस्यं सर्वयोषिताम् ।
दृष्ट्वैव पुरुषं ह्यन्यं योनिः प्रक्लिद्यते स्त्रियाः ॥ १३-७३-२७ (८४३८२)
कामानामपि दातारं कर्तारं मानसान्त्वयोः ।
रक्षितारं न मृष्यन्ति स्वभर्तारमसत्स्त्रियः ॥ १३-७३-२८ (८४३८३)
न कामभोगान्विपुलान्नालङ्कारार्थसञ्चयान् ।
तथैव बहुमन्वन्ते यथा रत्यामनुग्रहम् ॥ १३-७३-२९ (८४३८४)
अन्तकः शमनो मृत्युः पातालं बडबामुखम् ।
क्षुरधारा विषं सर्पो वह्निरित्येकतः स्त्रियः ॥ १३-७३-३० (८४३८५)
यतश्च भूतानि महान्ति पञ्च
यतश्च लोका विहिता विधात्रा ।
यतः पुमांसः प्रमदाश्च निर्मिता-
स्ततश्च दोषाः प्रमदासु नारद ॥ ॥ १३-७३-३१ (८४३८६)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
त्रिसप्ततितमोऽध्यायः ॥ ७३ ॥

Mahabharata - Anushaasana Parva - Chapter Footnotes

७-७३-१ लघुचित्ताः वायुवत् चलचित्ताः ॥
७-७३-३ ब्राह्मीं ब्रह्मलोकस्थाम् ॥
७-७३-५ विषये वक्तुं योग्यत्वे ॥
७-७३-८ नियोक्तुं प्रश्न ईदृशे इति ट थ ध पाठः ॥
७-७३-१० कृतमतिः वक्ष्यामीति कृतनिश्चयाऽभवत् ॥
७-७३-२२ गतिः प्राप्तिः । अन्योन्यं कृत्रिमलिङ्गधारिण्यो भूत्वा मैथुनार्थं प्रवर्तन्ते। एतच्च लोकप्रसिद्धम्। भर्तृषु दूरस्थेषु इति शेषः। नहि तिष्ठन्ति धैर्ये इति शेषः ॥
७-७३-२४ भयात्परिभवस्य चेति थ ध । पाठः ॥
७-७३-२६ काष्ठानां काष्ठैः ॥

अनुससनपर्व-अध्यय०७४
॥ श्रीः ॥
१३.७४. अध्यायः ७४

अथ दानधर्मपर्व ॥ १ ॥
Mahabharata - Anushaasana Parva - Chapter Topics
भीष्मेण युधिष्ठिरम्प्रति स्त्रीणां दुश्चरितकथनम् ॥
Mahabharata - Anushaasana Parva - Chapter Text

युधिष्ठिर उवाच ।
इमे वै मानवा लोके स्त्रीषु सज्जन्त्यभीक्ष्णशः ।
मोहेन परमाविष्टा देवदृष्टेन कर्मणा ॥ १३-७४-१ (८४३८७)
स्त्रियश्च पुरुषेष्वेव प्रत्यक्षं लोकसाक्षिकम् ।
अत्र मे संशयस्तीव्रो हृदि सम्परिवर्तते ॥ १३-७४-२ (८४३८८)
कथमासां नराः सङ्गं कुर्वते कुरुनन्दनः ।
स्त्रियो वातेषु रज्यन्ते विरज्यन्ते च ताः पुनः ॥ १३-७४-३ (८४३८९)
इति ताः पुरुषव्याघ्र कथं शक्यास्तु रक्षितुम् ।
प्रमदाः पुरुषेणेह तन्मे व्याख्यातुमर्हसि ॥ १३-७४-४ (८४३९०)
भीष्म उवाच। १३-७४-५क्ष् (७०१६)
एत्वा हि स्वीयमायाभिर्वञ्चयन्तीह मानवान् ।
न चासां मुच्यते कश्चित्पुरुषो हस्तमागतः ॥ १३-७४-५ (८४३९१)
गावो नवतृणानीव गृह्णन्त्येता नवन्नवम् ॥ १३-७४-६ (८४३९२)
शम्बरस्य च या माया माया या नमुचेरपि ।
बलेः कुम्भीनसेश्चैव सर्वास्तां योषितो विदुः ॥ १३-७४-७ (८४३९३)
हसन्तं प्रहसन्त्येता रुद्रन्तं प्ररुदन्ति च ।
अप्रियं प्रियवाक्यैश्च गृह्णते कालयोगतः ॥ १३-७४-८ (८४३९४)
ग्यदि जिह्वासहस्रं स्याज्जीवेच्च शरदां शतम् ।
अनन्यकर्मा स्त्रीदोषाननुक्त्वा निधनं व्रजेत् ॥' १३-७४-९ (८४३९५)
उशना वेद यच्छास्त्रं यच्च वेद बृहस्पतिः ।
स्त्री बुद्ध्या न विशिष्येत तास्तु रक्ष्याः कथं नरैः ॥ १३-७४-१० (८४३९६)
अनृतं सत्यमित्याहुः सत्यं चापि तथाऽनृतम् ।
इति यास्ताः कथं वीर संरक्ष्याः पुरुषैरिह ।
ग्दोषास्पदेऽशुचौ देहे ह्यासां सक्तास्त्वहो नराः'॥ १३-७४-११ (८४३९७)
स्त्रीणां बुद्ध्यर्थनिष्कर्षादर्थशास्त्राणि शत्रुहन् ।
बृहस्पतिप्रभृतिभिर्मन्ये सद्भिः कृतानि वै ॥ १३-७४-१२ (८४३९८)
संपूज्यमानाः पुरुषैर्विकुर्वन्ति मनो नृषु ।

अपास्ताश्च तथा राजन्विकुर्वन्ति मनः स्त्रियः ॥१३-७४-१३ (८४३९९)
इमाः प्रजा महापाहो धार्मिक्य इति नः श्रुतम् ॥ १३-७४-१४ (८४४००)
सत्कृतासत्कृताश्चापि विकुर्वन्ति मनः सदा ।
कस्ताः शक्तो रक्षितुं स्यादिति मे संशयो महान् ॥१३-७४-१५ (८४४०१)
तथा ब्रूहि महाभाग कुरूणां वंशवर्धन ।
यदि शक्या कुरुश्रेष्ठ रक्षा तासां कदाचन। १३-७४-१६ (८४४०२)
कर्तुं वा कृतपूर्वं वा तन्मे व्याख्यातुमर्हसि ॥ ॥ १३-७४-१७ (८४४०३)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
चतुःसप्ततितमोऽध्यायः ॥ ७४ ॥
Mahabharata - Anushaasana Parva - Chapter Footnotes

७-७४-७ कुहकानि च वार्ष्णेय सर्वास्ता इति ट थ पाठः ॥
७-७४-१३ एताः पूजिता दिक्कृता वा तुल्यवद्विकारं जनयन्तीत्यर्थः ॥
७-७४-१४ इमाः स्त्रीरूपाः धार्मिक्य इति श्रुतं सावित्र्यादिषु दृष्टं च ॥

---

अनुससनपर्व-अध्यय०७५
॥ श्रीः ॥
१३.७५. अध्यायः ७५

अथ दानधर्मपर्व ॥ १ ॥
Mahabharata - Anushaasana Parva - Chapter Topics
भीष्मेण युधिष्ठिरम्प्रति स्त्रीणां पुरुषचित्तप्रमथनाय
शक्तिशेषदानपूर्वकं ब्रह्मणा सृष्टतया तद्रक्षणस्य
दुष्करत्वकथनम् ॥ १ ॥
स्त्रीणां रक्षणस्य दुश्शकत्वे दृष्टान्ततया
विपुलोपाख्यानकथनारम्भः ॥ २ ॥
गुरुणा स्वभार्वारक्षणं नियुक्तेन विपुलनाम्ना तदर्थं योगेन
तच्छरीरप्रवेशः ॥ ३ ॥

Mahabharata - Anushaasana Parva - Chapter Text

भीष्म उवाच ।
एवमेतन्महाबाहो नात्र मिथ्याऽस्ति किञ्चन ।
यथा ब्रवीषि कौरव्य नारीं प्रति जनाधिप ॥१३-७५-१ (८४४०४)
अत्र ते वर्तयिष्यामि इतिहासं पुरातनम् ।

यथा रक्षा कृता पूर्वं विपुलेन महात्मना ॥१३-७५-२ (८४४०५)
प्रमदाश्च यथा सृष्टा ब्रह्मणा भरतर्षभ ॥
यदर्थं तच्च ते तात प्रवक्ष्यामि नराधिप ॥१३-७५-३ (८४४०६)
न हि स्त्रीभ्यः परं पुत्र पापीयः किञ्चिदस्ति वै ।
अग्निर्हिः प्रमदा दीप्तो मायाश्च मयजा विभो ।
क्षुरधारा विषं सर्पो मृत्युरित्येकतः स्त्रियः ॥ १३-७५-४ (८४४०७)
प्रजा इमा महाबाहो धार्मिक्य इति नः श्रुतम् ।
स्वयं गच्छन्ति देवत्वं ततो देवानियाद्भयम् ॥१३-७५-५ (८४४०८)
अथाभ्यागच्छन्देवास्ते पितामहमरिंदम ।
निवेद्य मानसं चापि तूष्णीमासन्नधोमुखाः ॥१३-७५-६ (८४४०९)
तेषामन्तर्गतं ज्ञात्वा देवानां स पितामहः ।
मानवानां प्रमोहार्थं कृत्या नार्योऽसृजत्प्रभुः ॥१३-७५-७ (८४४१०)
पूर्वसर्गे तु कौन्तेय साध्व्यो नार्य इहाभवन् ।
असाध्व्यस्तु समुत्पन्नाः कृत्याः सर्गात्प्रजापतेः १३-७५-८ (८४४११)
ताभ्यः कामान्यथाकामं प्रादाद्धि स पितामहः ।
ताः कामलुब्धाः प्रमदाः प्रामथ्नन्त नरान्सदा ॥१३-७५-९ (८४४१२)
क्रोधं कामस्य देवेशः सहायं चासृजत्प्रभुः ।
असज्जन्त प्रजाः सर्वाः कामक्रोधवशङ्गताः ॥१३-७५-१० (८४४१३)
गद्विजानां च गुरूणां च महागुरुनृपादिनाम् ।
क्षणस्त्रीसङ्गकामोत्था यातनाहो निरन्तरा ॥१३-७५-११ (८४४१४)
अरक्तमनसां नित्यं ब्रह्मचर्यामलात्मनाम् ।
तपोदमार्चनाध्यानयुक्तानां शुद्धिरुत्तमा ॥' १३-७५-१२ (८४४१५)
न च स्त्रीणां क्रियाः काश्चिदिति धर्मो व्यवस्थितः ।
निरिन्द्रिया ह्यशास्त्राश्च स्त्रियोऽनृतमिति श्रुतिः ॥१३-७५-१३ (८४४१६)
शय्यासनमलङ्कारमन्नपानमनार्यताम् ।
दुर्वाग्भावं रतिं चैव ददौ स्त्रीभ्यः प्रजापतिः ॥१३-७५-१४ (८४४१७)
न तासां रक्षणं शक्यं कर्तुं पुंसां कथञ्चन ।
अपि विस्वकृता तात कुतस्तु पुरुषैरिह ॥१३-७५-१५ (८४४१८)
वाचा च वधबन्धैर्वा क्लेशैर्वा विविधैस्तथा ।
न शक्या रक्षितुं नार्यस्ता हि नित्यमसंयताः ॥१३-७५-१६ (८४४१९)
इदं तु पुरुषव्याघ्र पुरस्ताच्छ्रुतवानहम् ।
यथा रक्षा कृता पूर्वं विपुलेन गुरुस्त्रियाः ॥१३-७५-१७ (८४४२०)
ऋषिरासीन्महाभागो देवशर्मेति विश्रुतः ।
तस्य भार्या रुचिर्नाम रूपेणासदृशी भुवि ॥१३-७५-१८ (८४४२१)
तस्या रूपेण सम्मत्ता देवगन्धर्वदानवाः ।
विशेषेण तु राजेन्द्र वृत्रहा पाकशासनः ॥१३-७५-१९ (८४४२२)

नारीणां चरितज्ञश्च देवशर्मा महामतिः ।
यथाशक्ति यथोत्साहं भार्यां तामभ्यरक्षत ॥ १३-७५-२० (८४४२३)
पुरंदरं च जानंश्च परस्त्रीकामचारिणम् ।
तस्माद्यत्नेन भार्याया रक्षणं स चकार ह ॥ १३-७५-२१ (८४४२४)
स कदाचिदृषिस्तात यज्ञं कर्तुमनास्तदा ।
भार्यासंरक्षणं कार्यं कथं स्यादित्यचिन्तयत् ॥ १३-७५-२२ (८४४२५)
रक्षाविधानं मनसा स सञ्चिन्त्य महातपाः ।
आहूय दयितं शिष्यं विपुलं प्राह भार्गवम् ॥ १३-७५-२३ (८४४२६)
यज्ञकारो गमिष्यामि रुचिं चेमां सुरेश्वरः ।
यतः प्रार्थयते नित्यं तां रक्षस्व यथाबलम् ॥ १३-७५-२४ (८४४२७)
अप्रमत्तेन ते भाव्यं सदा प्रति पुरंदरम् ।
स हि रूपाणि कुरुते विविधानि भृगूत्तम ॥ १३-७५-२५ (८४४२८)
भीष्म उवाच। १३-७५-२६क्ष् (७०१७)
इत्युक्तो विपुलस्तेन तपस्वी नियतेन्द्रियः ।
सदैवोग्रतपा राजन्नग्न्यर्कसदृशद्युतिः ॥ १३-७५-२६ (८४४२९)
धर्मज्ञः सत्यवादी च तथेति प्रत्यभाषत ।
पुनश्चेदं महाराज पप्रच्छ प्रस्थितं गुरुम् ॥ १३-७५-२७ (८४४३०)
कानि रूपाणि शक्रस्य भवन्त्यागच्छतो मुने ।
वपुस्तेजश्च कीदृग्वै तन्मे व्याख्यातुमर्हसि ॥ १३-७५-२८ (८४४३१)
भीष्म उवाच। १३-७५-२९क्ष् (७०१८)
ततः स भगवांस्तस्मै विपुलाय महात्मने ।
आचचक्षे यथातत्त्वं मायां शक्रस्य भारत ॥ १३-७५-२९ (८४४३२)
बहुमायः स विप्रर्षे बलहा पाकशासनः ।
तांस्तान्विकुरुते भावान्बहूनथ मुहुर्मुहुः ॥ १३-७५-३० (८४४३३)
किरीटी वज्रधृग्धन्वी मुकुटी बद्धकुण्डलः ।
भवत्यथ मुहूर्तेन चण्डालसमदर्शनः ॥ १३-७५-३१ (८४४३४)
शिखी जटी चीरवासाः पुनर्भवति पुत्रक ।
बृहच्छरीरश्च पनश्चीरवासाः पुनः कृशः ॥ १३-७५-३२ (८४४३५)
गौरं श्यामं च कृष्णं च वर्णं विकुरुते पुनः ।
विरूपो रूपवांश्चैव युवा वृद्धस्तथैव च ॥ १३-७५-३३ (८४४३६)
ग्प्राज्ञो जडश्च मूकश्च ह्रस्वो दीर्घस्तथैव च।
ब्राह्मणः क्षत्रियश्चैव वैश्यः शूद्रस्तथैव च ॥ १३-७५-३४ (८४४३७)
प्रतिलोमोऽनुलोमश्च भवत्यथ शतक्रतुः ।
शुकवायसरूपी च हंसकोकिलरूपवान् ॥ १३-७५-३५ (८४४३८)
सिंहव्याघ्रगजानां च रूपं धारयते पुनः ।
दैवं दैत्यमथो राज्ञां वपुर्धारयतेऽपि च ॥ १३-७५-३६ (८४४३९)

अकृशो मायुभग्राङ्गः शकुनिर्विकृतस्तथा ।
चतुष्पाद्बहुरूपश्च पुनर्भवति बालिशः ॥ १३-७५-३७ (८४४४०)
मक्षिकामशकादीनां वपुर्धारयतेऽपि च ।
न शक्यमस्य ग्रहणं कर्तुं विपुल केनचित् ॥ १३-७५-३८ (८४४४१)
अपि विश्वकृता तात येन सृष्टमिदं जगत् ।
पुनरन्तर्हितः शक्रो दृश्यते ज्ञानचक्षुषा ॥ १३-७५-३९ (८४४४२)
वायुभूतश्च स पुनर्देवराजो भवत्युतः ।
एवंरूपाणि सततं कुरुते पाकशासनः ।
तस्माद्विपुल यत्नेन रक्षेमां तनुमध्यमाम् ॥ १३-७५-४० (८४४४३)
यथा रुचिं नवलिहेद्देवेन्द्रो भृगुसत्तम ।
क्रतावुपहिते न्यस्तं हविः श्वेव दुरात्मवान् ॥ १३-७५-४१ (८४४४४)
एवमाख्याय स मुनिर्यज्ञकारोऽगमत्तदा ।
देवशर्मा महाभागस्ततो भरतसत्तम ॥ १३-७५-४२ (८४४४५)
विपुलस्तु वचः श्रुत्वा गुरोश्चिन्तामुपेयिवान् ।
रक्षां च परमां चक्रे देवराजान्महाबलात् ॥ १३-७५-४३ (८४४४६)
किन्नु शक्यं मया कर्तुं गुरुदाराभिरक्षणे ।
मायावी हि सुरेन्द्रोसौ दुर्धर्षश्चापि वीर्यवान् ॥ १३-७५-४४ (८४४४७)
नीपिधायाश्रमं शक्यो रक्षितुं पाकशासनः ।
उटजं वा तथा ह्यस्य नानाविधसरूपता ॥ १३-७५-४५ (८४४४८)
वायुरूपेण वा शक्रो गुरुपत्नीं प्रधर्षयेत् ।
तस्मादिमां सम्प्रविश्य रुचिं स्थास्येहमद्य वै ॥ १३-७५-४६ (८४४४९)
अथवा पौरुषेणेयं न शक्या रक्षितुं मया ।
बहुरूपो हि भगवाञ्छ्रूयते पाकशासनः ॥ १३-७५-४७ (८४४५०)
सोहं योगबलादेनां रक्षिष्ये पाकशासनात् ।
गात्राणि गात्रैरस्याहं सम्प्रवेक्ष्ये हि रक्षितुम् ॥ १३-७५-४८ (८४४५१)
यद्युच्छिष्टामिमां पत्नीमद्य पश्यति मे गुरुः ।
शप्स्यत्यसंशयं कोपाद्दिव्यज्ञानो महातपाः ॥ १३-७५-४९ (८४४५२)
न चेयं रक्षितुं शक्या यथाऽन्या प्रमदा नृभिः ।
मायावी हि सुरेन्द्रोसावहो प्राप्तोस्मि संशयम् ॥ १३-७५-५० (८४४५३)
अवश्यं करणीयं हि गुरोरिह हि शासनम् ।
यदि त्वेतदहं कुर्यामाश्चर्यं स्यात्कृतं मया ॥ १३-७५-५१ (८४४५४)
योगेनाथ प्रविश्येदं गुरुपत्न्याः कलेवरम् ।
असक्तः पद्मपत्रस्थो जलबिन्दुर्यथा चलः ॥ १३-७५-५२ (८४४५५)
एवमेव शरीरे ऽस्या निवत्स्यामि समाहितः ।
निर्मुक्तस्य रजोरूपान्नापराधो भवेन्मम ॥ १३-७५-५३ (८४४५६)
यथाहि शून्यां पथिकः सभामध्यावसेत्यथि ।

तथाऽद्यावासयिष्यामि गुरुपत्न्याः कलेवरम् ।
एवमेव शरीरे ऽस्य निवत्स्यामि समाहितः ॥ १३-७५-५४ (८४४५७)
इत्येवं धर्ममालोक्य वेदवेदांश्च सर्वशः ।
तपश्च विपुलं दृष्ट्वा गुरोरात्मन एव च ॥१३-७५-५५ (८४४५८)
इति निश्चित्य मनसा रक्षां प्रति स भार्गवः ।
अन्वतिष्ठत्परं यत्नं यथा तच्छ्रुणु पार्थिव ॥१३-७५-५६ (८४४५९)
गुरुपत्नीं समासीनो विपुलः स महातपाः ।
उपासीनामनिन्द्याङ्गीं कथार्थैः समलोभयत् ॥१३-७५-५७ (८४४६०)
नेत्राभ्यां नेत्रयोरस्या रश्मिं संयोज्य रश्मिभिः ।
विवेश विपुलः कायमाकाशं पवनो यथा ॥१३-७५-५८ (८४४६१)
लक्षणं लक्षणेनैव वदनं वदनेन च ।
अविचेष्टन्नतिष्ठद्वै छायेवान्तर्गतो मुनिः ॥ १३-७५-५९ (८४४६२)
ततो विष्टभ्य विपुलो गुरुपत्न्याः कलेवरम् ।
उवास रक्षणे युक्तो न च सा तमबुध्यत ॥१३-७५-६० (८४४६३)
१३-७५-६१ (८४४६४)
यं कालं नागतो राजन्गुरुस्तस्य महात्मनः ।
क्रतुं समाप्य स्वगृहं तं कालं सोऽभ्यरक्षत ॥
Mahabharata - Anushaasana Parva - Chapter Footnotes

७-७५-४ अस्ति हि प्रमदा दीप्तेति ट थ । पाठः ॥
७-७५-१३ दरिद्राश्च ह्यमन्त्रश्च स्त्रियो नित्यमिति श्रुतिरिति ध पाठः ॥
७-७५-५१ अशक्यकरणीयं हीति ध पाठः ॥

---

अनुससनपर्व-अध्यय०७६
॥ श्रीः ॥
१३.७६. अध्यायः ७६

अथ दानधर्मपर्व ॥ १ ॥
Mahabharata - Anushaasana Parva - Chapter Topics
इन्द्रेण देवशर्ममुन्यसन्निधाने तद्भार्याविलोभनाय
तदाश्रमाभिगमनम् ॥ १ ॥
तथा विपुलतपोऽभिभूतेन भयात्ततो निर्गमनम् ॥ २ ॥
विपुलेन शक्रवृत्तान्तनिवेदनतुष्टाद्गुरोर्वरग्रहणपूर्वकं
तपश्चरणम् ॥ ३ ॥

Mahabharata - Anushaasana Parva - Chapter Text

भीष्म उवाच ।
ततः कदाचिद्देवेन्द्रो दिव्यरूपवपुर्धरः ।
इदमन्तरमित्येवमभ्यगात्तमथाश्रमम् ॥ १३-७६-१ (८४४६५)
रूपमप्रतिमं कृत्वा लोभनीयं जनाधिपः ।
दर्शनीयतमो भूत्वा प्रविवेश तमाश्रमम् ॥ १३-७६-२ (८४४६६)
स ददर्श तमासीनं विपुलस्य कलेबरम् ।
निश्चेष्टं स्तब्धनयनं यताऽऽलेख्यगतं तथा ॥ १३-७६-३ (८४४६७)
रुचिं च रुचिरापाङ्गीं पीनश्रोणिपयोधराम् ।
पद्मपत्रविशालाक्षीं सम्पूर्णेन्दुनिभाननाम् ॥ १३-७६-४ (८४४६८)
सा तमालोक्य सहसा प्रत्युत्तातुमियेष ह ।
रूपेण विस्मिता कोऽसीत्यथ वक्तुमिवेच्छती ॥ १३-७६-५ (८४४६९)
उत्थातुकामा तु सती विष्टब्धा विपुलेन सा ।
निगृहीता मनुष्येन्द्र न शशाक विचेष्टितुम् ॥ १३-७६-६ (८४४७०)
तामाबभाषे देवेन्द्रः साम्ना परमवल्क्कक्कक्कक्कक्क।
त्वदर्थमागतं विद्धि देवेन्द्र मां शुचिस्मिते ॥ १३-७६-७ (८४४७१)
क्लिश्यमानमनङ्गेन त्वत्सङ्कल्पभवेन ह ।
तत्पर्याप्नुहि मां सुभ्रु पुरा कालोऽतिवर्तते ॥ १३-७६-८ (८४४७२)
तमेवंवादिनं शक्रं शुश्राव विपुलो मुनिः ।
गुरुपत्नयाः शरीरस्थो ददर्श त्रिदसाधिपम् ॥ १३-७६-९ (८४४७३)
न शशाक च सा राजन्प्रत्युत्थातुमनिन्दिता ।
वक्तुं च नाशकद्राजन्विष्टब्दा विपुलेन सा ॥ १३-७६-१० (८४४७४)
आकारं गुरुपत्न्यास्तु स विज्ञाय भृगूद्वहः ।
निजग्नाह महातेजा योगेन बलवत्प्रभो ।
बबन्ध योगबन्धैश्च तस्याः सर्वेन्द्रियाणि सः ॥ १३-७६-११ (८४४७५)
तां निर्विकारां दृष्ट्वा तु पुनरेव शचीपतिः ।
उवाच व्रीहितो राजंस्तां योगबलमोहिताम् ॥ १३-७६-१२ (८४४७६)
एह्येहीति ततः सा तु प्रतिवक्तुमियेष तम् ।
स तां वाच्यं गुरोः पत्न्या विपुलः पर्यवर्तयत् ॥ १३-७६-१३ (८४४७७)
भोः किमागमने कृत्यमिति तस्यास्तु निःसृता ।
वक्त्राच्छशाङ्कसदृशाद्वाणी संस्कारभूषणा ॥ १३-७६-१४ (८४४७८)
वीडिता सा तु तद्वाक्यमुक्त्वा परवशा तदा ।
पुरन्दरश्च संत्रस्तो बभूव विमना भृशम् ॥ १३-७६-१५ (८४४७९)
स तद्वैकृतमालक्ष्य देवराजो विशांपते ।
अवैक्षत सहस्राक्षस्तदा दिव्येन चक्षुषा ॥ १३-७६-१६ (८४४८०)
स ददर्श मुनिं तस्याः शरीरान्तरगोचरम् ।

प्रतिबिम्बमिवादर्शे गुरुपत्न्याः शरीरगम् ॥ १३-७६-१७ (८४४८१)
स तं घोरेण तपसा युक्तं दृष्ट्वा पुरंदरः ।
प्रावेपत सुसंत्रस्तो व्रीडितश्च तदा विभो ॥ १३-७६-१८ (८४४८२)
विमुच्य गुरुपत्नीं तु विपुलः सुमहातपाः ।
स्वकलेबरमाविश्य शक्रं भीतमथाब्रवीत् ॥ १३-७६-१९ (८४४८३)
अजितेन्द्रिय दुर्बुद्धे पापात्मक पुरंदर ।
न चिरं पूजयिष्यन्ति देवास्त्वां मानुषास्तथा ॥ १३-७६-२० (८४४८४)
किन्नु तद्विस्मृतं शक्र न तन्मनसि ते स्थितम् ।
गौतमेनासि यन्मुक्तो भगाङ्कपरिचिह्नितः ॥ १३-७६-२१ (८४४८५)
जाने त्वां बालिशमतिमकृतात्मानमस्थिरम् ।
मयेयं रक्ष्यते मूढ गच्छ पाप यथागतम् ॥ १३-७६-२२ (८४४८६)
नाहं त्वामद्य मूढात्मन्दहेयं हि स्वतेजसा ।
कृपायमानस्तु न ते दग्धुमिच्छामि वासव ॥ १३-७६-२३ (८४४८७)
स च घोरतमो धीमान्गुरुर्मे पापचेतसम् ।
दृष्ट्वा त्वां निर्दहेदद्य क्रोधदीप्तेन चक्षुषा ॥ १३-७६-२४ (८४४८८)
नैवं तु शक्र कर्तव्यं पुनर्मान्याश्च ते द्विजाः ।
मा गमः ससुतामात्यः क्षयं ब्रह्मबलार्दितः ॥ १३-७६-२५ (८४४८९)
अमरोस्मीति यद्बुद्धिं समास्थाय प्रवर्तते ।
मावमंस्था न तपसा न साध्यं नाम किञ्चन ॥ १३-७६-२६ (८४४९०)
भीष्म उवाच। १३-७६-२७क्ष् (७०१९)
तच्छ्रुत्वा वचनं शक्रो विपुलस्य महात्मनः ।
न किञ्चिदुक्त्वा व्रीडार्तस्तत्रैवान्तरधीयत ॥ १३-७६-२७ (८४४९१)
मुहूर्तयाते तस्मिंस्तु देवशर्मा महातपाः ।
कृत्वा यज्ञं यथाकाममाजगाम स्वमाश्रमम् ॥ १३-७६-२८ (८४४९२)
आगतेऽथ गुरौ राजन्विपुलः प्रियकर्मकृत् ।
रक्षितां गुरेव भार्यां न्यवेदयदनिन्दिताम् ॥ १३-७६-२९ (८४४९३)
अभिवाद्य च शान्तात्मा स गुरुं गुरुवत्सलः ।
विपुलः पर्युपातिष्ठद्यथापूर्वमशङ्कितः ॥ १३-७६-३० (८४४९४)
विश्रान्ताय ततस्तस्मै सहासीनाय भार्यया ।
निवेदयामास तदा विपुलः शक्रकर्म तत् ॥ १३-७६-३१ (८४४९५)
तच्छ्रुत्वा स मुनिस्तुष्टों विपुलस्य प्रतापवान् ।
बभूव शीलवृत्ताभ्यां तपसा नियमेन च ॥ १३-७६-३२ (८४४९६)
विपुलस्य गुरौ वृत्तिं भक्तिमात्मनि तत्प्रभुः ।
धर्मे च स्थिरतां दृष्ट्वा साधुसाध्वित्यभाषत ॥ १३-७६-३३ (८४४९७)
प्रतिनन्द्य च धर्मात्मा शिष्यं धर्मपरायणम् ।
वरेण च्छन्दयामास देवशर्मा महामतिः ॥ १३-७६-३४ (८४४९८)

स्थितिं च धर्मे जग्राह स तस्माद्गुरुवत्सलः ।
अनुज्ञातश्च गुरुणा चचारानुत्तमं तपः ॥ १३-७६-३५ (८४४९९)
तथैव देवशर्मापि सभार्यः स महातपाः ।
निर्भयो बलवृत्रघ्नाच्चचार विजने वने ॥ ॥ १३-७६-३६ (८४५००)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
षट्सप्ततितमोऽध्यायः ॥ ७६ ॥
Mahabharata - Anushaasana Parva - Chapter Footnotes

७-७६-२० कामात्मक पुरन्दरेति ध पाठः ॥

---

अनुससनपर्व-अध्यय०७७
॥ श्रीः ॥
१३.७७. अध्यायः ७७

अथ दानधर्मपर्व ॥ १ ॥
Mahabharata - Anushaasana Parva - Chapter Topics
गुरुनियोगाद्दिव्यपुष्पनयनार्थं गतेन विपुलेन मध्येमार्गं
नरवरमिथुनात्स्वगतिनिन्दाश्रवणम् ॥ १ ॥
निन्दितगतिप्रापकस्वदुश्चरितं चिन्तयता तेन चिराय तदनुस्मरणम् ॥ २ ॥

Mahabharata - Anushaasana Parva - Chapter Text

भीष्म उवाच ।
विपुलस्त्वकरोत्तीव्रं तपः कृत्वा गुरोर्वचः ।
तपोयुक्तमथात्मानममन्यत स वीर्यवान् ॥ १३-७७-१ (८४५०१)
स तेन कर्मणा स्वर्गं पृथिवीं पृथिवीपते ।
चचार गतभीः प्रीतो लब्धकीर्तिवरो नृप ॥ १३-७७-२ (८४५०२)
उभौ लोकौ जितौ चापि तथैवामन्यत प्रभुः ।
कर्मणा तेन कौरव्य तपसा विपुलेन च ॥ १३-७७-३ (८४५०३)
अथ काले व्यतिक्रान्ते कस्मिंश्चित्कुरुनन्दन ।
रुच्या भगिन्या आदानं प्रभूतदनधान्यवत् ॥ १३-७७-४ (८४५०४)
एतस्मिन्नेव काले तु दिव्या काचिद्वराङ्गना ।
बिभ्रती परमं रूपं जगामाथ विहायसा ॥ १३-७७-५ (८४५०५)
तस्याः शरीरात्पुष्पाणि पतितानि महीतले ।
तस्याश्रमस्याविदूरे दिव्यगन्धानि भारत ॥ १३-७७-६ (८४५०६)

तान्यगृह्णात्ततो राजन्रुचिर्ललितलोचना ।
तदा निमन्त्रकस्तस्या अङ्गेभ्यः क्षिप्रमागमत् ॥ १३-७७-७ (८४५०७)
तस्या हि भगिनी तात ज्येष्ठा नाम्ना प्रभावती ।
भार्या चित्ररथस्याथ बभूवाङ्गेश्वरस्य वै ॥ १३-७७-८ (८४५०८)
पिनह्य तानि पुष्पाणि केशेषु वरवर्णिनी ।
आमन्त्रिता ततोऽगच्छद्रुचिरङ्गपतेर्गृहम् ॥ १३-७७-९ (८४५०९)
पुष्पाणि तानि दृष्ट्वा तु तदाङ्गेन्द्रवराङ्गना ।
भगिनीं चोदयामास पुष्पार्थे चारुलोचना ॥ १३-७७-१० (८४५१०)
सा भर्त्रे सर्वमाचष्ट रुचिः सुरुचिरानना ।
भगिन्या भाषितं सर्वमृषिस्तच्चाभ्यनन्दत ॥ १३-७७-११ (८४५११)
ततो विपुलमानाय्य देवशर्मा महातपाः ।
पुष्पार्थे चोदयामास गच्छगच्छेति भारत ॥ १३-७७-१२ (८४५१२)
विपुलस्तु गुरोर्वाक्यमविचार्य महातपाः ।
स तथेत्यब्रवीद्राजंस्तं च देशं जगाम ह ॥ १३-७७-१३ (८४५१३)
यस्मिन्देशे तु तान्यासन्पतितानि नभस्तलात् ।
अम्लानान्यपि तत्रासन्कुसुमान्यपराण्यपि ॥ १३-७७-१४ (८४५१४)
स ततस्तानि जग्राह दिव्यानि रुचिराणि च ।
प्राप्तानि स्वेन तपसा दिव्यगन्धानि भारत ॥ १३-७७-१५ (८४५१५)
सम्प्राप्य तानि प्रीतात्मा गुरोर्वचनकारकः ।
तदा जगाम तूर्णं च चम्पां चम्पकमालिनीम् ॥ १३-७७-१६ (८४५१६)
स वने निर्जने तात ददर्श मिथुनं नृणाम् ।
चक्रवत्परिवर्तन्तं गृहीत्वा पाणिना करम् ॥ १३-७७-१७ (८४५१७)
तत्रैकस्तूर्णमगमत्तत्पदे च विवर्तयन् ।
एकस्तु न तदा राजंश्चक्रतुः कलहं ततः ॥ १३-७७-१८ (८४५१८)
त्वं शीघ्रं गच्छसीत्येकोऽब्रवीन्नेति तथाऽपरः ।
पतितेति च तौ राजन्परस्परमथोचतुः ॥ १३-७७-१९ (८४५१९)
तयोर्विस्पर्धतोरेवं शपथोऽयमभूत्तदा ।
सहसोद्दिश्य विपुलं ततो वाक्यमथोचतुः ॥ १३-७७-२० (८४५२०)
आवयोरनृतं प्राह यस्तस्याभूद्द्विजस्य वै ।
विपुलस्य परे लोके या गतिः सा भवेदिति ॥ १३-७७-२१ (८४५२१)
एतच्छ्रुत्वा तु विपुलो विषण्णवदनोऽभवत् ।
एवं तीव्रतपाश्चाहं कष्टश्चायं परिश्रमः ॥ १३-७७-२२ (८४५२२)
मिथुनस्यास्य किं मे स्यात्कृतं पापं यथा गतिः ।
अनिष्टा सर्वभूतानां कीर्तिताऽनेन मेऽद्य वै ॥ १३-७७-२३ (८४५२३)
एवं सञ्चिन्तयन्नेव विपुलो राजसत्तम ।
अवाङ्मुखो दीनमना दध्यौ दुष्कृतमात्मनः ॥ १३-७७-२४ (८४५२४)

ततः षडन्यान्पुरुषानक्षैः काञ्चनराजतैः ।
अपश्यद्दीव्यमानान्वै लोभामर्षान्वितांस्तथा ॥ १३-७७-२५ (८४५२५)
कुर्वतः शपथं तेन यः कृतो मिथुनेन तु ।
विपुलं वै समुद्दिश्य तेपि वाक्यमथाब्रुवन् ॥ १३-७७-२६ (८४५२६)
लोभमास्थाय योऽस्माकं विषमं कर्तुमुत्सहेत् ।
विपुलस्य परे लोके या गतिस्तामवाप्नुयात्। १३-७७-२७ (८४५२७)
एतच्छ्रुत्वा तु विपुलो नापश्यद्धर्मसङ्करम् ॥
जन्मप्रभृति कौरव्य कृतपूर्वमथात्मनः ॥ १३-७७-२८ (८४५२८)
स प्रदध्यौ तथा राजन्नग्नावग्निरिवाहितः ।
दह्यमानेन मनसा शापं श्रुत्वा तथाविधम् ॥ १३-७७-२९ (८४५२९)
तस्य चिन्तयतस्तात बह्वीर्वाचो निशम्य तु ।
इदमासीन्मनसि च रुच्या रक्षणकारितम् ॥ १३-७७-३० (८४५३०)
लक्षणं लक्षणेनैव वदनं वदनेन च ।
विधाय न मया चोक्तं सत्यमेतद्गुरोस्तथा ॥ १३-७७-३१ (८४५३१)
एतदात्मनि कौरव्य दुष्कृतं विपुलस्तदा ।
अमन्यत महाभाग तथा तच्च न संशयः ॥ १३-७७-३२ (८४५३२)
स चम्पां नगरीमेत्य पुष्पाणि गुरवे ददौ ।
पूजयामास च गुरुं विधिवत्स गुरुप्रियः ॥ ॥ १३-७७-३३ (८४५३३)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
सप्तसप्ततितमोऽध्यायः ॥ ७७ ॥
Mahabharata - Anushaasana Parva - Chapter Footnotes

७-७७-४ आदीयतेऽस्मिन्बान्धवैर्दत्तं उपायनादिकं स आदानं
क़क़क़क़क़क़द्युत्सवः । प्रभूतं बहुधनादिकं यत्र ॥
७-७७-७ निमन्त्रकः आकारणार्थं दूतः ॥
७-७७-१८ तत्पदे इतरस्य पदे पांसुषु व्यक्ते आकर्षणेन विवर्तयन्
विषमतां नयन् ॥
७-७७-२१ वचः श्रुत्वा तथाविधमिति ध पाठः ॥
७-७७-३० रुच्याः गुरुभार्यायाः ॥
७-७७-३१ लक्षणं स्त्रीपुंसयोरसाधारणं चिह्नं विधाय एकीकृत्य ॥

---

अनुससनपर्व-अध्यय०७८
॥ श्रीः ॥
१३.७८. अध्यायः ७८

अथ दानधर्मपर्व ॥ १ ॥

Mahabharata - Anushaasana Parva - Chapter Topics

देवशर्मणा स्वशिष्यं विपुलम्प्रति तद्दृष्टानां मिथुनानां षट्पुरुषाणां च क्रमेणाहोरात्रऋत्वभिमानिदवतात्वकथनम् ॥ १ ॥
तथा स्वस्मिन्स्वदाररक्षणाय योगेन तच्छरीरप्रवेशानिवेदनस्य दुर्गतिहेतुत्वकथनम् ॥ २ ॥
तथा तत्कृतस्वदाररक्षमपरितोषेण तद्दुरितदूरीकरणपूर्वकं तेन स्वभार्यया च सह स्वर्गे सुखविहरणम् ॥ ३ ॥

Mahabharata - Anushaasana Parva - Chapter Text

भीष्म उवाच ।
तमागतमभिप्रेक्ष्य शिष्यं वाक्यमथाब्रवीत् ।
देवशर्मा महातेजा यत्तच्छृणु जनाधिप ॥ १३-७८-१ (८४५३४)
देवशर्मोवाच। १३-७८-२क्ष् (७०२०)
किं त्वया मिथुनं दृष्टं तस्मिञ्शिष्य महावने ।
ते त्वां जानन्ति निपुणा आत्मा च रुचिरेव च ॥ १३-७८-२ (८४५३५)
विपुल उवाच। १३-७८-३क्ष् (७०२१)
ब्रह्मर्षे मिथुनं किन्तत्के च षट्पुरुषा विभो ।
ये मां जानन्ति तत्त्वेन यन्मां त्वं परिपृच्छसि ॥ १३-७८-३ (८४५३६)
देवशर्मोवाच। १३-७८-४क्ष् (७०२२)
यद्वै तन्मिथुनं ब्रह्मिन्नहोरात्रं हि विद्धि तत् ।
चक्रवत्परिवर्तेत तत्ते जानाति दुष्कृतम् ॥ १३-७८-४ (८४५३७)
ये च ते पुरुषा विप्र अक्षैर्दीव्यन्ति हृष्टवत् ।
ऋतूंस्तानभिजानीहि ते ते जानन्ति दुष्कृतम् ॥ १३-७८-५ (८४५३८)
न मां कश्चिद्विजानीत इति कृत्वा न विश्वसेत् ।
नरो रहसि पापात्मा पापकं कर्म वै द्विज ॥ १३-७८-६ (८४५३९)
कुर्वाणं हि नरं कर्म पापं रहसि सर्वदा ।
पश्यन्ति ऋतवश्चापि तथा दिननिशेऽप्युत ॥ १३-७८-७ (८४५४०)
तथैव हि भवेयुस्ते लोकाः पापकृतो यथा ।
कृत्वाऽनाचक्षतः कर्म मम तच्च यथा कृतम् ॥ १३-७८-८ (८४५४१)
ते त्वां हर्षस्मितं दृष्ट्वा गुरोः कर्मानिवेदकम् ।
स्मारयन्तस्तथा प्राहुस्ते यथा श्रउतवान्भवान् ॥ १३-७८-९ (८४५४२)
अहोरात्रं विजानाति ऋतवश्चापि नित्यशः ।
पुरुषे पापकं कर्म शुभं वाऽशुभकर्मिणः ॥ १३-७८-१० (८४५४३)
तत्त्वया मम यत्कर्म व्यभिचाराद्भयात्मकम् ।

नाख्यातमिति जानन्तस्ते त्वामाहुस्तथा द्विज ॥१३-७८-११ (८४५४४)
तेनैव हि भवेयुस्ते लोकाः पापकृतो यथा ।
कृत्वा नाचक्षतः कर्म मम यच्च त्वया कृतम् ॥१३-७८-१२ (८४५४५)
तथाऽशक्याश्च दुर्वृत्ता रक्षितुं प्रमदा द्विज ।
न च त्वं कृतवान्किंचिदागः प्रीतोस्मि तेन ते ॥१३-७८-१३ (८४५४६)
ग्मनोदोषविहीनानां न दोषः स्यात्तथा तव ।
अन्यथाऽऽलिङ्ग्यते कान्ता स्नेहेन दुहिताऽन्यथा ॥१३-७८-१४ (८४५४७)
यतेश्च कामुकानां च योषिद्रूपेऽन्यथा मतिः ।
अशिक्षयैव मनसः प्रायो लोकस्तु वञ्च्यते ॥१३-७८-१५ (८४५४८)
लालेत्युद्विजते लोको वक्त्रासव इति स्पहा ।
अबन्धायोग्यमनसामिति मन्त्रात्मदैवकम् ॥१३-७८-१६ (८४५४९)
न रागस्नेहलोभान्धं कर्मिणां तन्महाफलम् ।
निष्कषायो विशुद्धस्त्वं रुच्यावेशान्न दूषितः ॥१३-७८-१७ (८४५५०)
यदि त्वहं त्वां दुर्वृत्तमद्राक्षं द्विजसत्तम ।
शपेयं त्वामहं क्रोधान्न मेऽत्रास्ति विचारणा ॥१३-७८-१८ (८४५५१)
सज्जन्ति पुरुषे नार्यः पुंसां सोऽर्थश्च पुष्कलः ।
अन्यथा रक्षतः शापोऽभविष्यत्ते मतिश्च मे ॥१३-७८-१९ (८४५५२)
रक्षिता च त्वया पुत्र मम चापि निवेदिता ।
अहं ते प्रीतिमांस्तात स्वस्थः स्वर्गं गमिष्यसि ॥१३-७८-२० (८४५५३)
इत्युक्त्वा विपुलं प्रीतो देवशर्मा महानृषिः ।
मुमोद स्वर्गमास्थाय सहभार्यः सशिष्यकः ॥१३-७८-२१ (८४५५४)
इदमाख्यातवांश्चापि ममाख्यानं महामुनिः ।
मार्कण्डेयः पुरा राजन्गङ्गाकूले कथान्तरे ॥१३-७८-२२ (८४५५५)
तस्माद्ब्रवीमि पार्थ त्वां स्त्रियो रक्ष्याः सदैव च ।
उभयं दृश्यते तासु सततं साध्वसाधु च ॥१३-७८-२३ (८४५५६)
स्त्रियः साध्व्यो महाभागाः सम्मता लोकमातरः ।
धारयन्ति महीं राजन्निमां सवनकाननाम् ॥१३-७८-२४ (८४५५७)
असाध्व्यश्चापि दुर्वृत्ताः कुलघ्नाः पापनिश्चयाः ।
विज्ञेया लक्षणैर्दुष्टैः स्वगात्रसहजैर्नृप ॥१३-७८-२५ (८४५५८)
एवमेतासु रक्षा वै शक्या कर्तुं महात्मभिः ।
अन्यथा राजशार्दूल न शक्या रक्षितुं स्त्रियः ॥१३-७८-२६ (८४५५९)
एता हि मनुजव्याघ्र तीक्ष्णास्तीक्ष्णपराक्रमाः ।
नासामस्ति प्रियो नाम मैथुने सङ्गमेति यः ॥१३-७८-२७ (८४५६०)
एताः कृत्याश्च कष्टाश्च कृतघ्ना भरतर्षभ ।
न चैकस्मिन्नमन्त्येताः पुरुषे पाण्डुनन्दन ॥१३-७८-२८ (८४५६१)
नासु स्नेहो नरैः कार्यस्तथैवेर्ष्या जनेश्वर ।

खेदमास्थाय भुञ्जीत धर्ममास्थाय चैव ह ।
गअनृताविह पर्वादिदोषवर्जं नराधिप ॥' १३-७८-२९ (८४५६२)
विहन्येतान्यथा कुर्वन्नरः कौरवनन्दन ।
सर्वथा राजशार्दूल युक्तः सर्वत्र युज्यते ॥ १३-७८-३० (८४५६३)
तेनैकेन तु रक्षा वै विपुलेन कृता स्त्रियाः ।
नान्यः शक्तस्त्रिलोकेऽस्मिन्नक्षितुं नृप योषितः ॥ ॥ १३-७८-३१ (८४५६४)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
अष्टसप्ततितमोऽध्यायः ॥ ७८ ॥
Mahabharata - Anushaasana Parva - Chapter Footnotes

७-७८-९ हर्षस्मितं हर्षेण गर्वितम् ॥
७-७८-१२ तेनैव अनाख्यानेनैव ॥
७-७८-१६ लाला वदनात्स्वतो गलज्जलधारा ॥
७-७८-२५ सहजैः पीणिपादरेखादिभिः ॥
७-७८-२८ कृत्याः प्राणग्राहिदेवतारूपाः ॥
७-७८-२९ खेदमास्तायाऽप्रीत्या विष्टिगृहीतवत् भुञ्जीत नतु प्रीत्या
। धर्मं ऋतुकालानुरोधम् ॥

---

अनुससनपर्व-अध्यय०७९
॥ श्रीः ॥
१३.७९. अध्यायः ७९

अथ दानधर्मपर्व ॥ १ ॥
Mahabharata - Anushaasana Parva - Chapter Topics
भीष्मेण युधिष्ठिरम्प्रति विवाहविभागकथनम् ॥ १ ॥
तथा कन्यानां भार्यात्वप्रापकविध्यादिनिरूपणम् ॥ २ ॥

Mahabharata - Anushaasana Parva - Chapter Text

युधिष्ठिर उवाच ।
यन्मूलं सर्वधर्माणां प्रजनस्य गृहस्य च ।
पितृदेवातिथीनां च तन्मे ब्रूहि पितामह ॥ १३-७९-१ (८४५६५)
अयं हि सर्वधर्माणां धर्मश्चिन्त्यतमो मतः ।
कीदृशाय प्रदेया स्यात्कन्येति वसुधाधिप ॥ १३-७९-२ (८४५६६)
भीष्म उवाच। १३-७९-३क्ष् (७०२३)

शीलवृत्ते समाज्ञाय विद्यां योनिं च कर्म च ।
अद्भिरेव प्रदातव्या कन्या गुणवते भवेत् ।
ब्राह्मणानां सतामेष नित्यं धर्मो युधिष्ठिर ॥ १३-७९-३ (८४५६७)
आवाह्यमावहेदेवं यो दद्यादनुकूलतः ।
शिष्टानां क्षत्रियाणां च धर्म एष सनातनः ॥ १३-७९-४ (८४५६८)
आत्माभिप्रेतमुत्सृज्य कन्याभिप्रेत एष यः ।
अभिप्रेता च या यस्य तस्मै देया युधिष्ठिर ।
गान्धर्वमिति तं धर्मं प्राहुर्वेदविदो जनाः ॥ १३-७९-५ (८४५६९)
धनेन बहुधा क्रीत्वा सम्प्रलोभ्य च बान्धवान् ।
असुराणां नृपैतं वै धर्ममाहुर्मनीषिणः ॥ १३-७९-६ (८४५७०)
हत्वा छित्त्वा च शीर्षाणि रुदतां रुदतीं गृहात् ।
प्रसह्य हरणं तात राक्षसो विधिरुच्यते ॥ १३-७९-७ (८४५७१)
ग्सुसां मत्तां प्रमत्तां वा रहो रात्रौ च गच्छति ।
स पापिष्ठो विवाहानां पैशाचः कथितोऽधमः ॥ १३-७९-८ (८४५७२)
पञ्चानां तु त्रयो धर्म्या द्वावधर्म्यौ युधिष्ठिर ।
पैशाचश्चासुरश्चैव न कर्तव्यौ कथञ्चन ॥ १३-७९-९ (८४५७३)
ब्राह्मः क्षात्रोऽथ गान्धर्व एते धर्म्या नरर्षभ ।
पृथग्वा यदि वा मिश्राः कर्तव्या नात्र संशयः ॥ १३-७९-१० (८४५७४)
तिस्त्रो भार्या ब्राह्मणस्य द्वे भार्ये क्षत्रियस्य तु ।
वैश्यः स्वजात्यां विन्देत तास्वपत्यं हिताय हि ॥ १३-७९-११ (८४५७५)
द्विजस्य ब्राह्मणी श्रेष्ठा क्षत्रिया क्षत्रियस्य तु ।
रत्यर्थमपि शूद्रा स्यान्नेत्याहुरपरे जनाः ॥ १३-७९-१२ (८४५७६)
अपत्यजन्म शूद्रायां न प्रशंसन्ति साधवः ।
शूद्रायां जनयविन्प्रः प्रायश्चित्ती विधीयते ॥ १३-७९-१३ (८४५७७)
ग्नातिबालां वहन्त्यन्ते अनित्यत्वात्प्रजार्थिनः ।
वहन्ति कर्मिणस्तस्यामन्तः शुद्धिव्यपेक्षया ॥ १३-७९-१४ (८४५७८)
अपरान्वयसम्भूतां संस्वप्नादिविवर्जिताम् ।
कामो यस्यां निषिद्धश्च केचिदिच्छन्ति चापदि ॥ १३-७९-१५ (८४५७९)
त्रिंशद्वर्षो दशवर्षां भार्यां विन्देत नग्निकाम् ।
एकविंशतिवर्षो वा सप्तवर्षामवाप्नुयात् ॥ १३-७९-१६ (८४५८०)
यस्यास्तु न भवेद्भाता पिता वा भरतर्षभ ।
नोपयच्छेत तां जातु पुत्रिकाधर्मिणी हि सा ॥ १३-७९-१७ (८४५८१)
त्रीणि वर्षाण्युदीक्षेत कन्या ऋतुमती सती ।
चतुर्थेऽत्वथ सम्प्राप्ते स्वयं भर्तारमर्जयेत् ॥ १३-७९-१८ (८४५८२)
प्रजा न हीयते तस्या रतिश्च भरतर्षभ ।
अतोऽन्यथा वर्तमाना भवेद्वाच्या प्रजापतेः ॥ १३-७९-१९ (८४५८३)

असपिण्डा च या मातुरसगोत्रा च या पितुः ।
इत्येतामुपयच्छेत तं धर्मं मनुरब्रवीत् ॥१३-७९-२० (८४५८४)
युधिष्ठिर उवाच।१३-७९-२१क्ष् (७०२४)
शुल्कमन्येन दत्तं स्याद्ददानीत्याह चापरः ।
बलादन्यः प्रभाषेत धनमन्यः प्रदर्शयेत् ॥१३-७९-२१ (८४५८५)
पाणिग्रहीत्ता चान्यः स्यात्कस्य भार्या पितामह ।
तत्त्वं जिज्ञासमानानां चक्षुर्भवतु नो भवान् ॥१३-७९-२२ (८४५८६)
भीष्म उवाच।१३-७९-२३क्ष् (७०२५)
यत्किञ्चित्कर्म मानुष्यं संस्थानाय प्रदृश्यते ।
मन्त्रवन्मन्त्रितं तस्य मृषावादस्तु पातकः ॥१३-७९-२३ (८४५८७)
भार्यापत्यृत्विगाचार्याः शिष्योपाध्याय एव च ।
मृषोक्ते दण्डमर्हन्ति नेत्याहुरपरे जनाः ॥१३-७९-२४ (८४५८८)
नह्यकामेन संवादं मनुरेवं प्रशंसति ।
अयशस्यमधर्म्यं च यन्मृषा धर्मगोपनम् ॥१३-७९-२५ (८४५८९)
नैकान्तो दोष एकस्मिंस्तदा केनोपपद्यते ।
धर्मतो यां प्रयच्छन्ति यां च क्रीणन्ति भारत ॥१३-७९-२६ (८४५९०)
बन्धुभिः समनुज्ञाते मन्त्रहोमौ प्रयोजयेत् ।
तथा सिध्यन्ति ते मन्त्रा नादत्तायाः कथञ्चन ॥१३-७९-२७ (८४५९१)
यस्त्वत्र मनित्रसमयो भार्यापत्योर्मिथः कृतः ।
तमेवाहुर्गरीयांसं यश्चासौ ज्ञातिभिः कृतः ॥१३-७९-२८ (८४५९२)
देवदत्तां पतिर्भार्यां वेत्ति धर्मस्य शासनात् ।
स दैवीं मानुषीं वाचमनृतां पर्युदस्यति ॥१३-७९-२९ (८४५९३)
युधिष्ठिर उवाच।१३-७९-३०क्ष् (७०२६)
कन्यायां प्राप्तसुल्कायां ज्यायांश्चेदाव्रजेद्वरः ।
धर्मकामार्थसम्पन्नो वाच्यमत्रानृतं न वा ॥१३-७९-३० (८४५९४)
तस्मिन्नुभयतो दोषे कुर्वञ्श्रेयः समाचरेत् ।
अयं नः सर्वधर्माणां धर्मश्चिन्त्यतमो मतः ॥१३-७९-३१ (८४५९५)
तत्त्वं जिज्ञासमानानां चक्षुर्भवतु नो भवान् ।
तदेतत्सर्वमाचक्ष्व न हि तृप्यामि कथ्यताम् ॥१३-७९-३२ (८४५९६)
भीष्म उवाच।१३-७९-३३क्ष् (७०२७)
नैव निष्ठाकरं शुल्कं ज्ञात्वाऽऽसीत्तेन नानृतम् ।
न हि शुल्कपराः सन्तः कन्यां ददति कर्हिचित् ।
अन्यैर्गुणैरुपेतं तु शुल्कं याचन्ति बान्धवाः ॥ १३-७९-३३ (८४५९७)
अलङ्कृत्वा वहस्वेति यो दद्यादनुकूलतः ।
यच्च तां च ददत्येवं न शुल्कं विक्रयो न सः ।
प्रतिगृह्य भवेद्देमेव धर्मः सनातनः ॥ १३-७९-३४ (८४५९८)

दास्यामि भवते कन्यामिति पूर्वं नभाषितम् ।
ये चाहुर्ये च नाहुर्ये ये चावश्यं वदन्त्युत ॥ १३-७९-३५ (८४५९९)
तस्मादाग्रहणात्पाणेर्याचयन्ति परस्परम् ।
कन्यावरः पुरा दत्तो मरुद्भिरिति नः श्रुतम् ॥ १३-७९-३६ (८४६००)
नानिष्टाय प्रदातव्या कन्या इत्यृषिचोदितम् ।
तन्मूलं काममूलस्य प्रजनस्येति मे मतिः ॥ १३-७९-३७ (८४६०१)
समीक्ष्य च बहून्दोषान्संवासाद्विद्धि पाणयोः ।
यथा निष्ठाकरं शुल्कं न जात्वासीत्तथा शृणु ॥ १३-७९-३८ (८४६०२)
अहं विचित्रवीर्यस्य द्वे कन्ये समुदावहम् ।
जित्वाऽङ्गमागधान्सर्वान्काशीनथ च कोसलान् ॥ १३-७९-३९ (८४६०३)
गृहीतपाणिरेकाऽऽसीत्प्राप्तशुल्काऽपराऽभवत् ।
कन्याऽगृहीता तत्रैव विसर्ज्या इति मे पिता ।
अब्रवीदितरां कन्यामावहेति स कौरवः ॥ १३-७९-४० (८४६०४)
अप्यन्याननुपप्रच्छ शङ्कमानः पितुर्वचः ।
अतीव ह्यस्य धर्मेच्छा पितुर्मेऽभ्यधिकाऽभवत् ॥ १३-७९-४१ (८४६०५)
ततोहमब्रवं राजन्नाचारेप्सुरिदं वचः ।
आचारं तत्त्वतो वेत्तुमिच्छामि च पुनःपुनः ॥ १३-७९-४२ (८४६०६)
ततो मयैवमुक्ते तु वाक्ये धर्मभृतावरः ॥
पिता मम महाराज बीह्लीको वाक्यमब्रवीत् ॥ १३-७९-४३ (८४६०७)
यदि व शुल्कतो निष्ठा न पाणिग्रहणात्तथा ।
लाजान्तरमुपासीत प्राप्तशुल्क इति स्मृतिः ॥ १३-७९-४४ (८४६०८)
न हि धर्मविदः प्राहुः प्रमाणं वाक्यतः स्मृतम् ।
येषां वै शुल्कतो निष्ठा न पाणिग्रहणात्तथा ॥ १३-७९-४५ (८४६०९)
प्रसिद्धं भाषितं दाने नैषां प्रत्यायकं पुनः ।
ये मन्यन्ते क्रयं शुल्कं न ते धर्मविदो नराः ॥ १३-७९-४६ (८४६१०)
न चैतेभ्यः प्रदातव्या न वोढव्या तथाविधा ।
न ह्येव भार्या क्रेतव्या न विक्रय्यां कथञ्चन ॥ १३-७९-४७ (८४६११)
ये च क्रीणन्ति दासीवद्विक्रीणन्ति तथैव च ।
भवेत्तेषां तथा निष्ठा लुब्धानां पापचेतसाम् ॥ १३-७९-४८ (८४६१२)
अस्मिन्नर्थे सत्यवन्तं पर्यपृच्छन्त वै जनाः ।
कन्यायाः प्राप्तशुल्कायाः शुल्कदः प्रशमं गतः ॥ १३-७९-४९ (८४६१३)
पाणिग्रहीता वाऽन्यः स्यादत्र नो धर्मसंशयः ।
तन्नश्छिन्धि महाप्राज्ञ त्वं हि वै प्राज्ञसम्मतः ॥ १३-७९-५० (८४६१४)
तत्त्वं जिज्ञासमानानां चक्षुर्भवतु नो भवान् ।
तानेवं ब्रुवतः सर्वान्सत्यवान्वाक्यमब्रवीत् ॥ १३-७९-५१ (८४६१५)
यत्रेष्टं तत्र देया स्यान्नात्र कार्या विचारणा ।

कुर्वते जीवतोप्येवं मृते नैवास्ति संशयः ॥१३-७९-५२ (८४६१६)
देवरं प्रविशेत्कन्या तप्येद्वाऽपि तपः पुनः ।
तमेवानुगता भूत्वा पाणिग्राहस्य नाम सा ॥१३-७९-५३ (८४६१७)
लिखन्त्येव तु केषांचिदपरेषां शनैरपि ।
इति ये संवदन्त्यत्र त एतं निश्चयं विदुः ॥१३-७९-५४ (८४६१८)
तत्पाणिग्रहणात्पूर्वमन्तरं यत्र वर्तते ।
सर्वमङ्गलमन्त्रं वै मृषावादस्तु पातकः ॥१३-७९-५५ (८४६१९)
पाणिग्रहणमन्त्राणां निष्ठा स्यात्सप्तमे पदे ।
पाणिग्रहस्य भार्या स्याद्यस्य चाद्भिः प्रदीयते ॥१३-७९-५६ (८४६२०)
इति देयं वदन्त्यत्र त एतं निश्चयं विदुः ।
अनुकूलामनुवशां भ्रात्रा दत्तामुपाग्निकाम् ।
परिक्रम्य यथान्यायं भार्यां विन्देद्द्विजोत्तमः ॥ ॥ १३-७९-५७ (८४६२१)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
एकोनाशीतितमोऽध्यायः ॥

Mahabharata - Anushaasana Parva - Chapter Footnotes

७-७९-३ योनि मातृतः पितृतश्च शुद्धिम् ।अयं ब्राह्माः प्रथमो
विवाहः ॥
७-७९-४ एवं उक्तगुणवन्तं आवाह्यं विवाहयोग्यं आवहेत् आकारयेत्
।ततश्च अनुकूलतो धनदानादिना अभिमुखीकृताय दद्यात्।अयं
प्राजापत्यो नाम द्वितीयो विप्राणां क्षत्रियाणां च प्रशस्ततरः ॥
७-७९-६ आसुरं चतुर्थमाह धनेनेति ॥
७-७९-७ हत्वेति राक्षसः पञ्चमः ।अत्रैव प्रमत्तानां बन्धूनां
कन्याहरणात् पैशाचो हरणसामान्यादन्तर्भवति ॥
७-७९-१३ नग्निकां एकवाससम् ।अजातस्त्रीव्यञ्जनामिति यावत् ॥
७-७९-१७ पुत्रिकाधर्मिणी यस्याः पिता इयमेव दुहिता मम पुत्रस्थाने
इत्यभिप्रायवान्न वेति न ज्ञायते सा ॥
७-७९-१९ वाच्या निद्या ।प्रजनो हीयते इति ध।पाठः ॥
७-७९-२३ संस्थानाय व्यवस्थार्थं मन्त्रवन्मन्त्रितं
विचारवद्भिः सर्वैरेकीभूय मन्त्रितमियमस्मै देयेति
विचारितम् ।तस्य गृषाकरणं पातकः पातयितुं
भवतीत्यर्थः।मृषावादस्त्वपातकमिति थ।ध।पाठः ॥
७-७९-२५ तत्र नेति पक्षं निन्दति नहीति ॥
७-७९-२८ यद्यपि ज्ञातिभिः कृतः समयो गुरुस्तथापि मन्त्रपूर्वकः
समयो गुरुतर इत्यर्थः ॥

७-७९-२९ देवः प्राक्कर्म ईश्वरो वा ।वेत्ति लभते ॥
७-७९-३१ दोषे सति कुर्वन् कर्ता श्रेयः प्रशस्ततरं किं समाचरेदित्यध्याहृत्य योज्यम् ॥
७-७९-३२ कथ्यतामित्यादरसूचनार्था पुनरुक्तिः ॥
७-७९-३३ गुणैर्वयोधिकत्वादिभिः ॥
७-७९-३४ कन्यार्तालङ्कारग्रहणे न दोषोऽस्तीत्याह अलङ्कृत्वेति ॥
७-७९-३५ नभाषितमित्येकपदम् ।ये पूर्वं दास्यामीत्याहुर्ये च नदास्यामीत्याहुर्ये च अवश्यं दास्यामीति वदन्ति तत्सर्वं नभाषितं अनुक्तवदेवेत्यर्थः ॥
७-७९-३६ यस्मादेवं तस्मात् आपाणिग्रहणात्कन्यां याचेतेति मरुतां वरस्तेन ततः पूर्वं विशिष्टवरार्थमपहारेपि न दोष इति भावः ॥
७-७९-३७ तत्कन्या कामो मूलं यस्य ।तस्मादुत्तमदौहित्रार्थिना श्रेयसे एव कन्या प्रदेयेति भावः ॥
७-७९-३८ संवासाच्चिरपरिचयात् ।पाणयोः क्रयविक्रययोः संवादे विद्विषाणयोरिति ध.पाठः ॥
७-७९-३९ वीर्यमपि शुल्कं भवतीत्यभिप्रायेणाह अहमिति ।अम्बिकाम्बालिकयोरेकत्वविवक्षयां द्वे इत्युक्तम् ॥
७-७९-४० प्राप्तशुल्का वीर्येण निर्जितापि कन्या अगृहीता अप्राप्तपाणिग्रहेयं अम्बा विसर्ज्या उत्स्रष्टुं योग्या इति पिता पितृव्यो बाह्लीकोऽब्रवीत् ॥
७-७९-४१ अनुपप्रच्छ अनुपृष्टवानहम् ॥
७-७९-४४ प्राप्तं शुल्कं येन ।पाठान्तरे यस्याः सा।कन्यापिता कन्या वा लाजान्तरं वरान्तरमुपासीत इति या स्मृतिस्तर्हि बाध्येतेत्यध्याहृत्य योजना।लाजा विद्यन्ते ह्यौम्यद्रव्यमस्य स इति लाजशब्दोऽर्शआद्यच्प्रत्ययान्तः।लाजोप्तारमुपासीतेति थ.ध.पाठः ॥
७-७९-४५ येषां शुल्कतो निष्ठा तेषां वाक्यतो वाक्यं प्रमाणं स्मृतमिति धर्मविदो नह्याहुरित्यन्वयः ७-७९-४६ लोकविरोधमप्याहार्धेन ।प्रसिद्धमिति कन्याया दानमित्येवोच्यते नतु क्रयो जयो वेति।एषां शुल्कवादिनां प्रत्यायकं भार्यात्वज्ञापकं किमपि नास्ति।परिणयनादेव भार्या भवति न शुल्कमात्रादिति लोकव्यवहारस्य स्पष्टत्वादित्यर्थः ॥
७-७९-५२ जीवत इत्यनादरे षष्ठी ।जीवन्तमपि शुल्कदमनादृत्य शिष्टा एवं यथेष्टदानं कुर्वत इत्यर्थः ॥
७-७९-५३ देवरमिति युगान्तरधर्मः ॥
७-७९-५४ केषांचिन्मते देवरादयः अलिखितां भ्रातृभार्या लिखन्त्येव सुरतेन योजयन्त्येव ।अपरेषां मते शनैक्मन्थरा इयं

प्रवृत्तिः। ऐच्छिकी नतु वैधीत्यर्थः ॥
७-७९-५५ सङ्कल्पपूर्वकं दत्ताया अपि कन्याया योऽपहारस्तज्जन्यो मृषावादः पातको भवति दातुर्नतु तावन्मात्रेण तस्यां भार्यात्वमुत्पन्नमित्यर्थः ॥

---

अनुससनपर्व-अध्यय०८०
॥ श्रीः ॥
१३.८०. अध्यायः ८०

अथ दानधर्मपर्व ॥ १ ॥
Mahabharata - Anushaasana Parva - Chapter Topics
भीष्मेण युधिष्ठिरम्प्रति वैवाहिकविध्यादेर्दायार्हतादेश्च कथनम् ॥ १ ॥

Mahabharata - Anushaasana Parva - Chapter Text

युधिष्ठिर उवाच
कन्यायां प्राप्तशुल्कायां पतिश्चेन्नास्ति कश्चन ।
तत्र का प्रतिपत्तिः स्यात्तन्मे ब्रूहि पितामह ॥ १३-८०-१ (८४६२२)
भीष्म उवाच। १३-८०-२क्ष् (७०२८)
या पुत्रकस्य ऋद्धस्य प्रतिपाल्या तदा भवेत् ।
अथवा सा हरेच्छुल्कं क्रीता शुल्कप्रदस्य सा ॥ १३-८०-२ (८४६२३)
तस्यार्थेऽपत्यमीहेव येन न्यायेन शक्नुयात् ।
न तस्मान्मन्त्रवत्कार्यं कश्चित्कुर्वीत किञ्चन ॥ १३-८०-३ (८४६२४)
स्वयंवृतेन साज्ञप्ता पित्रा वै प्रत्यपद्यत ।
तत्तस्यान्ये प्रशंसन्ति धर्मज्ञा नेतरे जनाः ॥ १३-८०-४ (८४६२५)
एतत्तु नापरे चक्रुरपरे जातु साधवः ।
साधूनां पुनराचारो गरीयान्धर्मलक्षणः ॥ १३-८०-५ (८४६२६)
अस्मिन्नेव प्रकारे तुसुक्रतुर्वाक्यमब्रवीत् ।
नप्ता विदेहराजस्य जनकस्य महात्मनः ॥ १३-८०-६ (८४६२७)
असदाचरिते मार्गे कथं स्यादनुकीर्तनम् ।
अनुप्रश्नः संशयो वा सतामेवमुपालभेत् ॥ १३-८०-७ (८४६२८)
असदेव हि धर्मस्य प्रदानं धर्म आसुरः ।
नानुशुश्रुम जात्वेनामिमां पूर्वेषु कर्मसु ॥ १३-८०-८ (८४६२९)
भार्यापत्योर्हि सम्बन्धः स्त्रीपुंसोस्तुल्य एव तु ।
रतिः साधारणो धर्म इति चाह स पार्थिवः ॥ १३-८०-९ (८४६३०)
युधिष्ठिर उवाच। १३-८०-१०क्ष् (७०२९)

अथ केन प्रमाणेन पुंसामादीयते धनम् ।
पुत्रवद्धि पितुस्तस्य कन्या भवितुमर्हति ॥ १३-८०-१० (८४६३१)
भीष्म उवाच। १३-८०-११क्ष् (७०३०)
यथैवात्मा तथा पुत्रः पुत्रेण दुहिता समा ।
तस्यामात्मनि तिष्ठन्त्यां कथमन्यो धनं हरेत् ॥ १३-८०-११ (८४६३२)
मातुश्च यौतकं यत्स्यात्कुमारीभाग एव सः ।
दौहित्र एव तद्रिक्थमपुत्रस्य पितुर्हरेत् ॥ १३-८०-१२ (८४६३३)
ददाति हि स पिण्डान्वै पितुर्मातामहस्य च ।
पुत्रदौहित्रयोरेव विशेषो नास्ति धर्मतः ॥ १३-८०-१३ (८४६३४)
अन्यत्र जामया सार्धं प्रजानां पुत्र ईहते ।
दुहिताऽन्यत्र जातेन पुत्रेणापि विशिष्यते ॥ १३-८०-१४ (८४६३५)
दौहित्रकेण धर्मेण तत्र पश्यामि कारणम् ।
विक्रीतासु हि ये पुत्रा भवन्ति पितुरेव ते ॥ १३-८०-१५ (८४६३६)
असूयवस्त्वधर्मिष्ठाः परस्वादायिनः शठाः ।
आसुरादधिसम्भूता धर्माद्विषमवृत्तयः ॥ १३-८०-१६ (८४६३७)
अत्र गाथा यमोद्गीताः कीर्तयन्ति पुराविदः ।
धर्मज्ञा धर्मशास्त्रेषु निबद्धा धर्मसेतुषु ॥ १३-८०-१७ (८४६३८)
यो मनुष्यः स्वकं पुत्रं विक्रीय धनमिच्छति ।
कन्यां वा जीवितार्थाय यः शुल्केन प्रयच्छति ॥ १३-८०-१८ (८४६३९)
सप्तावरे महाघोरे निरये कालसाह्वये ।
स्वेदं मूत्रं पुरीषं च तस्मिन्मूढः समश्नुते ॥ १३-८०-१९ (८४६४०)
आर्षे गोमिथुनं शुल्कं केचिदाहुर्मृषैव तत् ।
अल्पो वा बहु वा राजन्विक्रयस्तावदेव सः ॥ १३-८०-२० (८४६४१)
यद्यप्याचरितः कैश्चिन्नैष धर्मः सनातनः ।
अन्येषामपि दृश्यन्ते लोभतः सम्प्रवृत्तयः ॥ १३-८०-२१ (८४६४२)
वश्यां कुमारीं बलतो ये तां समुपभुञ्जते ।
एते पापस्य कर्तारस्तमस्यन्धे च शेरते ॥ १३-८०-२२ (८४६४३)
अन्योप्यथ न विक्रेयो मनुष्यः किं पुनः प्रजाः ।
अधर्ममूलैर्हि धनैस्तैर्न धर्मोऽथ कश्चन ॥ ॥ १३-८०-२३ (८४६४४)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
अशीतितमोऽध्यायः ॥ ८०।

Mahabharata - Anushaasana Parva - Chapter Footnotes

७-८०-१ शुल्कदश्चेत्प्रोषितस्तद्भयादन्यश्च न वृणुते तदा
तत्पित्रा किं कर्तव्यमिति प्रश्नार्थः ॥

७-८०-२ या कन्याः पितुः प्रतिपाल्या पिता च यदि तत् शुल्कं परपक्षीयेभ्यः परावृत्य न दद्यात्तर्हि सा कन्या शुल्कप्रदस्यैव ज्ञेया ॥
७-८०-४ स्वयंवृतेति सावित्रीति धर्मज्ञानपरा जना इति च ध पाठः ॥
७-८०-८ धर्मस्य सित्रीणामस्वातन्त्र्यलक्षणस्य धर्मस्य प्रदानं खण्डनं यत्स आसुरो धर्मः एतां पद्धतिम् । पूर्वेषु वृद्धेषु। कर्मसु विवाहेषु। जात्वेव तदिदं पूर्वजन्मसविति ध पाठः ॥
७-८०-१४ जामया कन्ययापि तामपेक्ष्येत्यर्थः । अन्यत्र जायते सोपि प्रजया पुत्र ईयते इति ट थ ध पाठः ॥
७-८०-१९ कालसाह्वये कालसूत्राख्ये ॥
७-८०-२२ बलतो वश्यां नतु स्वच्छन्दत इत्यर्थः ॥
७-८०-२३ अन्योपि पशुरपि ॥

---

अनुससनपर्व-अध्यय०८१
॥ श्रीः ॥
१३.८१. अध्यायः ८१

अथ दानधर्मपर्व ॥ १ ॥
Mahabharata - Anushaasana Parva - Chapter Topics
भीष्मेण युधिष्ठिरम्प्रति स्त्रीणां प्रशंसनम् ॥ १ ॥

Mahabharata - Anushaasana Parva - Chapter Text

भीष्म उवाच ।
प्राचेतसस्य वचनं कीर्तयन्ति पुराविदः ।
यस्याः किञ्चिन्नाददते ज्ञातयो न स विक्रयः ॥ १३-८१-१ (८४६४५)
अर्हणं तत्कुमारीणामानृशंस्यं व्रतं च तत् ।
सर्वं च प्रतिदेयं स्यात्कन्यायै तदशेषतः ॥ १३-८१-२ (८४६४६)
पितृभिर्भ्रातृभिश्चापि श्वशुरैरथ देवरैः ।
पूज्या लालयितव्याश्च बहुकल्याणमीप्सुभिः ॥ १३-८१-३ (८४६४७)
यदि वै स्त्री न रोचेत पुमांसं न प्रमोदयेत् ।
अप्रमोदात्पुनः पुंसः प्रजनो न प्रवर्धते ॥ १३-८१-४ (८४६४८)
पूज्या लालयितव्याश्च स्त्रियो नित्यं जनाधिप ।
स्त्रियो यत्र च पूज्यन्ते रमन्ते तत्र देवताः ॥ १३-८१-५ (८४६४९)
अपूजिताश्च यत्रैताः सर्वास्तत्राफलाः क्रियाः ।

तदा चैतत्कुलं नास्ति यदा शोचन्ति जामयः ॥ १३-८१-६ (८४६५०)
जामीशप्तानि गेहानि निकृत्तानीव कृत्यया ।
नैव भान्ति न वर्धन्ते श्रिया हीनानि पार्थिव ॥ १३-८१-७ (८४६५१)
स्त्रियः पुंसां परिददौ मनुर्जिगमिषुर्दिवम् ।
अबलाः स्वल्पकौपीनाः सुहृद सत्यजिष्णवः ॥ १३-८१-८ (८४६५२)
ईर्षवो मानकामाश्च चण्डाश्च सुहृदोऽबुधाः ।
स्त्रियस्तु मानमर्हन्ति ता मानयत मानवाः ॥ १३-८१-९ (८४६५३)
स्त्रीप्रत्ययो हि वै धर्मो रतिभोगाश्च केवलाः ।
परिचर्या नमस्कारास्तदायत्ता भवन्तु वः ॥ १३-८१-१० (८४६५४)
उत्पादनमपत्यस्य जातस्य परिपालनम् ।
प्रीत्यर्थं लोकयात्रायाः पश्यत स्त्रीनिबन्धनम् ॥ १३-८१-११ (८४६५५)
सम्मान्यमानाश्चैता हि सर्वकार्याण्यवाप्स्यथ ।
विदेहराजदुहिता चात्र श्लोकमगायत ॥ १३-८१-१२ (८४६५६)
नास्ति यज्ञः स्त्रियाः कश्चिन्न श्राद्धं नोप्रवासकम् ।
धर्मः स्वभर्तृशुश्रूषा तया स्वर्गं जयन्त्युत ॥ १३-८१-१३ (८४६५७)
पिता रक्षति कौमारे भर्ता रक्षति यौवने ।
पुत्राश्च स्थाविरे भावे न स्त्री स्वातन्त्र्यमर्हति ॥ १३-८१-१४ (८४६५८)
श्रिय एताः स्त्रियो नाम सत्कार्या भूतिमिच्छता ।
लालिताऽनुगृहीता च श्रीः स्त्री भवति भारतः ॥ ॥ १३-८१-१५ (८४६५९)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
एकाशीतितमोऽध्यायः ॥ ८१ ॥
Mahabharata - Anushaasana Parva - Chapter Footnotes

७-८१-१ प्राचेतसस्य दक्षस्य । ज्ञातयः कन्यापक्षीयाः। स्वयं
नाददतेऽथ च कन्यालङ्कारर्थमिच्छन्ति स विक्रयो न भवतीत्यर्थ
॥
७-८१-४ न रोचेत न कामयेत । न प्रमोदयेत्कामुकं न कुर्यात्। प्रजनः
सन्ततिः ॥
७-८१-८ स्वल्प ईषदायासेन अपनेयः कौपीनो गुह्याच्छादनपटो यासाम्
। सद्योहार्या इत्यर्थः। सुहृदः सौहार्दयुक्ताः ॥
७-८१-९ बुध्यन्त इत्यबुधाः ॥
७-८१-१० स्त्रीप्रत्ययः स्त्रीहेतुकः ॥
७-८१-१२ अत्र स्त्रीधर्मविषये ॥

---

अनुससनपर्व-अध्यय०८२

॥ श्रीः ॥
१३.८२. अध्यायः ८२

अथ दानधर्मपर्व ॥ १ ॥
Mahabharata - Anushaasana Parva - Chapter Topics
भीष्मेण युधिष्ठिरम्प्रति ब्राह्मणादीनां दायविभजनविधिनिरूपणम् ॥ १ ॥

Mahabharata - Anushaasana Parva - Chapter Text

युधिष्ठिर उवाच ।
सर्वशास्त्रविधानज्ञ राजधर्मविदुत्तम ।
अतीव संशयच्छेत्ता भवान्वै प्रथितः क्षितौ ॥ १३-८२-१ (८४६६०)
कश्चित्तु संशयो मेऽस्ति तन्मे ब्रूहि पितामह ।
ग्अस्यामापदि कष्टायामन्यं पृच्छाम कं वयम्'॥
जातेऽस्मिन्संशये राजन्नान्यं पृच्छेम कञ्चन ॥ १३-८२-२ (८४६६१)
यथा नरेण कर्तव्यं धर्ममार्गानुवर्तिना ।
एतत्सर्वं महाबाहो भवान्व्याख्यातुमर्हति ॥ १३-८२-३ (८४६६२)
चतस्रो विहिता भार्या ब्राह्मणस्य पितामह ।
ब्राह्मणी क्षत्रिया वैश्या शूद्रा च रतिमिच्छतः ॥ १३-८२-४ (८४६६३)
तत्र जातेषु पुत्रेषु सर्वासां कुरुसत्तम ।
आनुपूर्व्येण कस्तेषां पित्र्यं दायाद्यमर्हति ॥ १३-८२-५ (८४६६४)
केन वा किं ततो हार्यं पितृवित्तात्पितामह ।
एतदिच्छामि कथितं विभागस्तेषु कः स्मृतः ॥ १३-८२-६ (८४६६५)
भीष्म उवाच। १३-८२-७क्ष् (७०३१)
ब्राह्मणः क्षत्रियो वैश्यस्त्रयो वर्णा द्विजातयः ।
एतेषु विहितो धर्मो ब्राह्मणस्य युधिष्ठिर ॥ १३-८२-७ (८४६६६)
वैषम्यादथवा लोभात्कामाद्वाऽपि परन्तप ।
ब्राह्मणस्य भवेच्छूद्रा न तु दृष्टा न तु स्मृता ॥ १३-८२-८ (८४६६७)
शूद्रां शयनमारोप्य ब्राह्मणि यात्यधोगतिम् ।
प्रायश्चित्तीयते चापि विधिदृष्टेन कर्मणा ॥ १३-८२-९ (८४६६८)
तत्र जातेष्वपत्येषु द्विगुणं स्वाद्युधिष्ठिर ।
अतस्ते नियमं वित्ते सम्प्रवक्ष्यामि भारत ॥ १३-८२-१० (८४६६९)
लक्षण्यं गोवृषो यानं यत्प्रधानतमं भवेत् ।
ब्राह्मण्यास्तद्धरेत्पुत्र एकांशं वै पितुर्धनात् ॥ १३-८२-११ (८४६७०)
एषं तु दशधा कार्यं ब्राह्मणस्वं युधिष्ठिर ।
तत्र तेनैव हर्तव्याश्चत्वारोंशाः पितुर्धनात् ॥ १३-८२-१२ (८४६७१)

त्रियायास्तु यः पुत्रो ब्राह्मणः सोप्यसंशयः ।
स तु मातुर्विशेषेण त्रीनंशान्हर्तुमर्हति ॥ १३-८२-१३ (८४६७२)
वर्णे तृतीये जातस्तु वैश्यायां ब्राह्मणादपि ।
द्विरंशस्तेन हर्तव्यो ब्राह्मणस्वाद्युधिष्ठिर ॥ १३-८२-१४ (८४६७३)
शूद्रायां ब्राह्मणाज्जातो नित्यादेयधनः स्मृतः ।
अल्पं चापि प्रदातव्यं शूद्रापुत्राय भारत ॥ १३-८२-१५ (८४६७४)
दशधा प्रविभक्तस्य धनस्यैव भवेत्क्रमः ।
सवर्णासु तु जातानां समान्भागान्प्रकल्पयेत् ॥ १३-८२-१६ (८४६७५)
अब्राह्मणं तु मन्यन्ते शूद्रापुत्रमनैपुणात् ।
त्रिषु वर्णेषु जातो हि ब्राह्मणादब्राह्मणो भवेत् ॥ १३-८२-१७ (८४६७६)
स्मृताश्च वर्णाश्चत्वारः पञ्चमो नाधिगम्यते ।
हरेच्च दशमं भागं शूद्रापुत्रः पितुर्धनात् ॥ १३-८२-१८ (८४६७७)
तत्तु दत्तं हरेत्पित्रा नादत्तं हर्तुमर्हति ।
अवश्यं हि धनं देयं शूद्रापुत्राय भारत ॥ १३-८२-१९ (८४६७८)
आनृशंस्यं परो धर्म इति तस्मै प्रदीयते ।
यत्रतत्र समुत्पन्नं गुणायैवोपपद्यते ॥ १३-८२-२० (८४६७९)
यद्यप्येष सुपुत्रः स्यादपुत्रो यदि वा भवेत् ।
नाधिकं दशमाद्दद्याच्छूद्रापुत्राय भारत ॥ १३-८२-२१ (८४६८०)
ग्स्मृत एकश्चतुर्भागः कन्याभागस्तु धर्मतः ।
अभ्रातृका समग्राहा चार्धास्येत्यपरे विदुः ॥' १३-८२-२२ (८४६८१)
त्रैवार्विकाद्यदा भक्तादधिकं स्याद्द्विजस्य तु ।
यजेत तेन द्रव्येण न वृथा साधयेद्धनम् ॥ १३-८२-२३ (८४६८२)
त्रिसहस्रपरो दायः स्त्रियै देयो धनस्य वै ।
भर्त्रा तच्च धनं दत्तं यथार्हं भोक्तुमर्हति ॥ १३-८२-२४ (८४६८३)
स्त्रीणां तु पतिदायाद्यमुपभोगफलं स्मृतम् ।
नापहारं स्त्रियः कुर्युः पितृवित्तात्कथञ्चन ॥ १३-८२-२५ (८४६८४)
स्त्रियास्तु यद्भवेद्वित्तं पित्रा दत्तं युधिष्ठिर ।
ब्राह्मण्यास्तद्धरेत्कन्या यथा पुत्रस्तथाऽस्य सा ॥ १३-८२-२६ (८४६८५)
सा हि पुत्रसमा राजन्विहिता कुरुनन्दन ।
एवमेव समुद्दिष्टो धर्मो वै भरतर्षभ ।
एवं धर्ममनुस्मृत्य न वृथा साधयेद्धनम् ॥ १३-८२-२७ (८४६८६)
युधिष्ठिर उवाच। १३-८२-२८क्ष् (७०३२)
शूद्रायां ब्राह्मणाज्जातो यद्यदेयधनः स्मृतः ।
केन प्रतिविशेषेण दशमोऽप्यस्य दीयते ॥ १३-८२-२८ (८४६८७)
ब्राह्मण्यां ब्राह्मणाज्जातो ब्राह्मणः स्यान्न संशयः ।
क्षत्रियायां तथैव स्याद्वैश्यायामपि चैव हि ॥ १३-८२-२९ (८४६८८)

कस्मात्तु विषमं भागं भजेरन्नृपसत्तम ।
यदा सर्वे त्रयो वर्णास्त्वयोक्ता ब्राह्मणा इति ॥१३-८२-३० (८४६८९)
भीष्म उवाच। १३-८२-३१क्ष् (७०३३)
दारा इत्युच्यते लोके नाम्नैकेन परन्तप ।
प्रोक्तेनि चैव नाम्नाऽयं विशेषः सुमहान्भवेत् ॥१३-८२-३१ (८४६९०)
तिस्रः कृत्वा पुरो भार्याः पश्चाद्विन्देत ब्राह्मणीम् ।
सा ज्येष्ठा सा च पूज्या स्यात्सा च ताभ्यो गरीयसी  १३-८२-३२ (८४६९१)
स्नानं प्रसाधनं भर्तुर्दन्तधावनमुञ्जनम् ।
हव्यं कव्यं च यच्चान्यद्धर्मयुक्तं गृहे भवेत् ॥१३-८२-३३ (८४६९२)
न तस्यां जातु तिष्ठन्त्यामन्या तत्कर्तुमर्हति ।
ब्राह्मणीत्वेव कुर्याद्वा ब्राह्मणस्य युधिष्ठिर ॥१३-८२-३४ (८४६९३)
अन्नं पानं च माल्यं च वासांस्याभरणानि च ।
ब्राह्मण्यैतानि देयानि भर्तुः सा हि गरीयसी ॥१३-८२-३५ (८४६९४)
मनुनाऽभिहितं शास्त्रं यच्चापि कुरुनन्दन ।
तत्राप्येष महाराज दृष्टो धर्मः सनातनः ॥१३-८२-३६ (८४६९५)
अथ चेदन्यथा कुर्याद्यदि कामाद्युधिष्ठिर ।
यथा ब्राह्मणचाण्डालः पूर्वदृष्टस्तथैव सः ॥१३-८२-३७ (८४६९६)
ब्राह्मण्याः सदृशः पुत्रः क्षत्रियायाश्च यो भवेत् ।
राजन्विशेषो यस्त्वत्र वर्णयोरुभयोरपि ॥१३-८२-३८ (८४६९७)
न तु जात्या समा लोके ब्राह्मण्याः क्षत्रिया भवेत् ।
ब्राह्मण्याः प्रथमः पुत्रो भूयान्स्याद्राजसत्तम ॥१३-८२-३९ (८४६९८)
भूयोभूयोपि संहार्यः पितृवित्ताद्युधिष्ठिर ।
यथा न सदृशी जातु ब्राह्मण्याः क्षत्रिया भवेत् ॥१३-८२-४० (८४६९९)
क्षत्रियायास्तथा वैश्या न जातु सदृशी भवेत् ।
श्रीश्च राज्यं च कोशश्च क्षत्रियाणां युधिष्ठिर ॥१३-८२-४१ (८४७००)
विहितं दृश्यते राजन्सागरान्तां च मेदिनीम् ।
क्षत्रियो हि स्वधर्मेण श्रियं प्राप्नोति भूयसीम् ।
राजा दण्डधरो राजन्रक्षा नान्यत्र क्षत्रियात् ॥ १३-८२-४२ (८४७०१)
ब्राह्मणा हि महाभाग देवानामपि देवताः ।
तेषु राजा प्रवर्तेत पूजया विधिपूर्वकम् ॥१३-८२-४३ (८४७०२)
प्रणीतमृषिभिर्ज्ञात्वा धर्मं शाश्वतमव्ययम् ।
लुप्यमानं स्वधर्मेण क्षत्रियो रक्षति प्रजाः ॥१३-८२-४४ (८४७०३)
दस्युभिर्ह्रियमाणं च धनं दारांश्च सर्वशः ।
सर्वेषामेव वर्णानां त्राता भवति पार्थिवः ॥१३-८२-४५ (८४७०४)
भूयान्स्यात्क्षत्रियापुत्रो वैश्यापुत्रान्न संशयः ।
भूयस्तेनापि हर्तव्यं पितृवित्ताद्युधिष्ठिर ॥१३-८२-४६ (८४७०५)

युधिष्ठिर उवाच। १३-८२-४७क्ष् (७०३४)
उक्तं ते विधिवद्राजन्ब्राह्मणस्य पितामह ।
इतरेषां तु वर्णानां कथं वै नियमो भवेत् ॥ १३-८२-४७ (८४७०६)
भीष्म उवाच। १३-८२-४८क्ष् (७०३५)
क्षत्रियस्यापि भार्ये द्वे विहिते कुरुनन्दन ।
तृतीया च भवेच्छूद्रा न तु दृष्टा न तु स्मृता ॥ १३-८२-४८ (८४७०७)
एष एव क्रमो हि स्यात्क्षत्रियाणां युधिष्ठिर ।
अष्टधा तु भवेत्कार्यं क्षत्रियस्वं जनाधिप ॥ १३-८२-४९ (८४७०८)
क्षत्रियाया हरेत्पुत्रश्चतुरोंशान्पितुर्धनात् ।
युद्धावहारिकं यच्च पितुः स्वात्स हरेत्तु तत् ॥ १३-८२-५० (८४७०९)
वैश्यापुत्रस्तु भागांस्त्रीञ्शूद्रापुत्रस्तथाष्टमम् ।
एकैव हि भवेद्भार्या वैश्यस्य कुरुनन्दन। १३-८२-५१ (८४७१०)
द्वितीया तु भवेच्छूद्रा न तु दृष्टा न तु स्मृता ॥
वैश्यस्य वर्तमानस्य वैश्यायां भरतर्षभ। १३-८२-५२ (८४७११)
शूद्रायां चापि कौन्तेय तयोर्विनियमः स्मृतः ॥
पञ्चधा तु भवेत्कार्यं वैश्यस्वं भरतर्षभ। १३-८२-५३ (८४७१२)
तयोरपत्ये वक्ष्यामि विभागं च जनाधिप ॥
वैश्यापुत्रेण हर्तव्याश्चत्वारोंशाः पितुर्धनात्। १३-८२-५४ (८४७१३)
पञ्चमस्तु स्मृतोः भागः शूद्रापुत्राय भारत ॥
सोपि दत्तं हरेत्पित्रा नादत्तं हर्तुमर्हति। १३-८२-५५ (८४७१४)
त्रिभिर्वर्णैः सदा जातः शूद्रो देयधनो भवेत् ॥ १३-८२-५६ (८४७१५)
शूद्रस्य स्यात्सवर्णैव भार्या नान्या कथञ्चन ।
समभागाश्च पुत्राः स्युर्यदि पुत्रशतं भवेत् ॥ १३-८२-५७ (८४७१६)
जातानां समवर्णायाः पुत्राणामविशेषतः ।
सर्वेषामेव वर्णानां समभागो धनात्स्मृतः ॥ १३-८२-५८ (८४७१७)
ज्येष्ठस्य भागो ज्येष्ठः स्यादेकांशो यः प्रधानतः ।
एष दायविधिः पार्थ पूर्वमुक्तः स्वयंभुवा ॥ १३-८२-५९ (८४७१८)
समवर्णासु जातानां विशेषोऽस्त्यपरो नृप ।
विवाहवैशिष्ट्यकृतः पूर्वपूर्वो विशिष्यते ॥ १३-८२-६० (८४७१९)
हरेज्ज्येष्ठः प्रधानांशमेकभार्यासुतेष्वपि ।
मध्यमो मध्यमं चैव कनीयांस्तु कनीयसम् ॥ १३-८२-६१ (८४७२०)
एवं जातिषु सर्वासु सवर्णः श्रेष्ठतां गतः ।
महर्षिरपि चैतद्वै मारीचः काश्यपोऽब्रवीत् ॥ ॥ १३-८२-६२ (८४७२१)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
द्व्यशीतितमोऽध्यायः ॥। ८२ ॥

७-८२-३ एवमृत्विगात्मस्त्रीशुद्धिमुक्त्वा धनशुद्ध्यर्थं दायविभागं प्रस्तौति ॥
७-८२-४ रतिमिच्छत एव विहिता नतु धर्मम् ॥
७-८२-६ किं कियत्प्रमाणम् ॥
७-८२-९ प्रायश्चित्तमात्मन इच्छति प्रायश्चित्तीयते ॥
७-८२-१० द्विगुणं प्रायश्चित्तम् ॥
७-८२-११ एकांशं मुख्यांशम् ॥
७-८२-१२ तेनैव ब्राह्मणीपुत्रेणैव ॥
७-८२-२० समुत्पन्नं आनृशंस्यम् ॥
७-८२-२३ वृथा यज्ञादिप्रयोजनंविना न साधयेत् ॥
७-८२-२४ स्त्रियोऽधिको दायो न देय इत्यर्थः ।तच्चतुर्धा धनं दत्तं नादत्तंभोक्तुमर्हतीति थ।ध।पाठः ॥
७-८२-२५ कुर्युः पुत्रा इति शेषः ।पतिवित्तात्कथं चनेति झ।पाठः।पतिवितात्पत्या दत्ताद्वित्तात् ॥
७-८२-२७ धर्मो विभागप्रकारः ।वृथा अन्यायेन ॥
७-८२-३१ आद्रियन्ते त्रिधर्गार्तिमिरिति दारपदप्रवृत्तिनिमित्तमादरः ।यतश्च भर्षा आदरस्तासु वर्णक्रमेण यथायोग्यं तारतम्यक्रमेण क्रियत इति तात्पुत्राणां भागवैषम्यं चास्तीत्यभिप्रायः ॥
७-८२-४० भूयोभूयोपि अधिकमधिकम् ॥
७-८२-४७ उक्तं दायविभागादि ॥
७-८२-५० युद्धेऽवहियते तद्रथगजायुधकवचादिकं युद्धावहारिकम् ॥
७-८२-५३ सवर्णाज्येष्ठतां गतेति थ।ध।पाठः ॥

---

अनुससनपर्व-अध्यय०८३
॥ श्रीः ॥
१३.८३. अध्यायः ८३

अथ दानधर्मपर्व ॥ १ ॥
Mahabharata - Anushaasana Parva - Chapter Topics
भीष्मेण युधिष्ठिरम्प्रति सङ्करजातीनां शीलविभागादिनिरूपणम् ॥ १ ॥

Mahabharata - Anushaasana Parva - Chapter Text

युधिष्ठिर उवाच ।

अर्थाश्रयाद्वा कामाद्वा वर्णानां चाप्यनिश्चयात् ।
अज्ञानाद्वापि वर्णानां जायते वर्णसङ्करः ॥ १३-८३-१ (८४७२२)
तेषामेतेन विधिना जातानां वर्णसङ्करे ।
को धर्मः कानि कर्माणि तन्मे ब्रूहि पितामह ॥ १३-८३-२ (८४७२३)
भीष्म उवाच। १३-८३-३क्ष् (७०३६)
चातुर्वर्ण्यस्य कर्माणि चातुर्वर्ण्यं च केवलम् ।
असृजत्स हि यज्ञार्थे पूर्वमेव प्रजापतिः ॥ १३-८३-३ (८४७२४)
भार्याश्चतस्नो विप्रस्य द्वयोरात्मा प्रजायते ।
आनुपूर्व्याद्द्वयोर्हीनौ मातृजात्यौ प्रसूयतः ॥ १३-८३-४ (८४७२५)
परं शवाद्ब्राह्मणस्यैव पुत्रः
शूद्रापुत्रं पारशवं तमाहुः ।
शुश्रूषकः स्वस्य कुलस्य स स्या-
त्स्वचारित्रं नित्यमथो न जह्यात् ॥ १३-८३-५ (८४७२६)
सर्वानुपायानथ सम्प्रधार्य
समुद्धरेत्स्वस्य कुलस्य तन्त्रम् ।
ज्येष्ठो यवीयानपि यो द्विजस्य
शुश्रूषया दानपरायणः स्यात् ॥ १३-८३-६ (८४७२७)
तिस्रः क्षत्रियसम्बन्धाद्द्वयोरात्माऽस्य जायते ।
हीनवर्णास्तृतीयायां शूद्रा उग्रा इति स्मृतिः ॥ १३-८३-७ (८४७२८)
द्वे चापि भार्ये वैश्यस्य द्वयोरात्माऽस्व जायते ।
शूद्रा शूद्रस्य चाप्येका शूद्रमेव प्रजायते ॥ १३-८३-८ (८४७२९)
अतोऽविशिष्टस्त्वधमो गुरुदारप्रधर्षकः ।
ब्राह्यं वर्णं जनयति चातुर्वर्ण्यविगर्हितम् ॥ १३-८३-९ (८४७३०)
अयाज्यं क्षत्रियो व्रात्यंक सूतं स्तोत्रक्रियापरम् ।
वैश्यो वैदेहकं चापि मौद्गल्यमपवर्जितम् ॥ १३-८३-१० (८४७३१)
शूद्रश्चण्डालमत्युग्रं वध्यघ्नं बाह्यवासिनम् ।
ब्राह्मण्यां सम्प्रजायन्त इत्येते कुलपांसनाः ।
एते मतिमतांश्रेष्ठ वर्णसङ्करजाः प्रभो ॥ १३-८३-११ (८४७३२)
बन्दी तु जायते वैश्यान्मागधो वाक्यजीवनः ।
शूद्रान्निषादो मत्स्यघ्नः क्षत्रियायां व्यतिक्रमात् ॥ १३-८३-१२ (८४७३३)
शूद्रादायोगवश्चापि वैश्यायां ग्राम्यधर्मिणः ।
ब्राह्मणैरप्रतिग्राह्यस्तक्षा स्वधनजीवनः ॥ १३-८३-१३ (८४७३४)
एतेऽपि सदृशान्वर्णाञ्जनयन्ति स्वयोनिषु ।
मातृजात्या प्रसूयन्ते ह्यवरा हीनयोनिषु ॥ १३-८३-१४ (८४७३५)
यथा चतुर्षु वर्णेषु द्वयोरात्माऽस्य जायते ।
आनन्तर्यात्प्रजायन्ते यथा बाह्या प्रधानतः ॥ १३-८३-१५ (८४७३६)

ते चापि सदृशं वर्णं जनयन्ति स्वयोनिषु ।
परस्परस्य दारेषु जनयन्ति विगर्हितान् ॥ १३-८३-१६ (८४७३७)
यथा शूद्रोऽपि ब्राह्मण्यां जन्तुं बाह्यं प्रसूयते ।
एवं बाह्यतराद्बाह्यश्चातुर्वर्ण्यात्प्रजायते ॥ १३-८३-१७ (८४७३८)
प्रतिलोमं तु वर्धन्ते बाह्योद्बाह्यतरात्पुनः ।
हीनाद्धीनाः प्रसूयन्ते वर्णाः पञ्चदशैव तु ॥ १३-८३-१८ (८४७३९)
अगम्यागमनाच्चैव जायते वर्णसङ्करः ।
बाह्यानामनुजायन्ते सैरन्ध्र्यां मागधेषु च ।
प्रसाधनोपचारज्ञमदासं दासजीवनम् ॥ १३-८३-१९ (८४७४०)
क्षत्रा ह्यायोगवं सूते वागुराबन्धजीवनम् ।
मैरेयकं च वैदेहः सम्प्रसूतेऽथ माधुकम् ॥ १३-८३-२० (८४७४१)
निषादो मद्गुरं सूते दासं नावोपजीविनम् ।
मृतपं चापि चाण्डालः श्वपाकमिति विश्रुतम् १३-८३-२१ (८४७४२)
चतुरो मागधी सूते क्रूरान्मायोपजीविनः ।
मांसं स्वादुकरं क्षौद्रं सौगन्धमिति विश्रुतम् ॥ १३-८३-२२ (८४७४३)
वैदेहकाच्च पापिष्ठा क्रूरं मायोपजीविनम् ।
निषादान्मद्रनाभं च खरयानप्रयायिनम् ॥ १३-८३-२३ (८४७४४)
चण्डालात्पुल्कसं चापि खराश्वगजभोजिनम् ।
भृतचैलप्रतिच्छन्नं भिन्नभाजनभोजिनम् ॥ १३-८३-२४ (८४७४५)
आयोगवीषु जायन्ते हीनवर्णास्तु ते त्रयः ।
क्षुद्रो वैदेहकादन्धो बहिर्ग्रामप्रतिश्रयः ॥ १३-८३-२५ (८४७४६)
कारावरो निषाद्यां तु चर्मकारः प्रसूयते ।
चाण्डालात्पाण्डुसौपाकस्त्वक्सारव्यवहारवान् ॥ १३-८३-२६ (८४७४७)
आहिण्कों निषादेन वैदेह्यां सम्प्रसूयते ।
चण्डालेन तु सौपाकश्चण्डालसमवृत्तिमान् ॥ १३-८३-२७ (८४७४८)
निषादी चापि चण्डालात्पुत्रमन्तेवसायिनम् ।
श्मशानगोचरं सूते बाह्यैरपि बहिष्कृतम् ॥ १३-८३-२८ (८४७४९)
इत्येते सङ्करे जाताः पितृमातृव्यतिक्रमात् ।
प्रच्छन्नान्वा प्रकाशा वा वेदितव्याः स्वकर्मभिः ॥ १३-८३-२९ (८४७५०)
चतुर्णामेव वर्णानां धर्मो नान्यस्य विद्यते ।
वर्णानां धर्महीनेषु सङ्ख्या नास्तीह कस्यचित् ॥ १३-८३-३० (८४७५१)
यदृच्छयोपसम्पन्नैर्यज्ञसाधुबहिष्कृतैः ।
बाह्या बाह्यैश्च जायन्ते यथावृत्ति यथाश्रयम् ॥ १३-८३-३१ (८४७५२)
चतुष्पथश्मशानानि शैलांश्चान्यान्वनस्पतीन् ।
कार्ष्णायसमलङ्कारं परिगृह्य च नित्यशः ।
वसेयुरेते विज्ञाता वर्तयन्तः स्वकर्मभिः ॥ १३-८३-३२ (८४७५३)

युञ्जन्तो वाऽप्यलङ्कारांस्तथोपकरणानि च ।
गोब्राह्मणाय साहय्यं कुर्वाणा वै न संशयः ॥१३-८३-३३ (८४७५४)
आनृशंस्यमनुक्रोशः सत्यवाक्यं तथा क्षमा ।
स्वशरीरैरपि त्राणं बाह्यानां सिद्धिकारणम् ।
भवन्ति मनुजव्याघ्र तत्र मे नास्ति संशयः ॥ १३-८३-३४ (८४७५५)
यथोपदेशं परिकीर्तितासु
नरः प्रजायेत विचार्य बुद्धिमान् ।
निहीनयोनिर्हि सुतोऽवसादये-
त्तितीर्षमाणं हि यथोपलो जले ॥ १३-८३-३५ (८४७५६)
अविद्वांसमलं लोके विद्वांसमपि वा पुनः ।
नयन्ति ह्यपथं नार्यः कामक्रोधवशानुगम् ॥१३-८३-३६ (८४७५७)
स्वभावश्चैव नारीणां नराणामिह दूषणम् ।
अत्यर्थं न प्रसज्जन्ते प्रमदासु विपश्चितः ॥१३-८३-३७ (८४७५८)
युधिष्ठिर उवाच।१३-८३-३८क्ष् (७०३७)
वर्णापेतमविज्ञाय नरं कलुषयोनिजम् ।
आर्यरूपमिवानार्यं कथं विद्यामहे वयम् ॥१३-८३-३८ (८४७५९)
भीष्म उवाच।१३-८३-३९क्ष् (७०३८)
योनिसङ्कलुषे जातं नानाभावसमन्वितम् ।
कर्मभिः सज्जनाचीर्णैर्विज्ञेयाः शुद्धयोनिकाः ॥१३-८३-३९ (८४७६०)
अनार्यत्वमनाचारः क्रूरत्वं निष्क्रियात्मता ।
पुरुषं व्यञ्जयन्तीह लोके कलुषयोनिजम् ॥१३-८३-४० (८४७६१)
पित्र्यं वा भजते शीलं मातृजं वा तथोभयम् ।
न कथञ्च सङ्कीर्णः प्रवृतिं स्वां नियच्छति ॥१३-८३-४१ (८४७६२)
यथैव सदृसो रूपे मातापित्रोर्हि जायते ।
व्याघ्रबिन्दोस्तथा योनिं पुरुषः स्वां नियच्छति ॥१३-८३-४२ (८४७६३)
कुले स्रोतसि संच्छन्ने यस्य स्याद्योनिसङ्करः ।
संश्रयत्येव तच्छीलं नरोऽल्पमथवा बहु ॥१३-८३-४३ (८४७६४)
आर्यरूपसमाचारं चरन्तं कृतके पथि ।
सवर्णमन्यवर्णं वा स्वशीलं सास्ति निश्चये ॥१३-८३-४४ (८४७६५)
नानावृत्तेषु भूतेषु नानाक्रमरतेषु च ।
जन्मवृत्तसमं लोके सुश्लिष्टं न विरज्यते ॥१३-८३-४५ (८४७६६)
शरीरमिह सत्वेन न तस्य परिकृष्यते ।
ज्येष्ठमध्यावरं सत्वं तुल्यसत्वं प्रमोदते ॥१३-८३-४६ (८४७६७)
ज्यायांसमपि शीलेन विहीनं नैव पूजयेत् ।
अपि शूद्रं च धर्मज्ञं सद्वृत्तमभिपूजयेत् ॥१३-८३-४७ (८४७६८)
आत्मानमाख्याति हि कर्मभिर्नरः

सुशीलचारित्रकुलैः शुभाशुभैः ।
प्रनष्टमप्यात्मकुलं तथा नरः
पुनः प्रकाशं कुरुते स्वकर्मतः ॥ १३-८३-४८ (८४७६९)
योनिष्वेतासु सर्वासु सङ्कीर्णास्वितरासु च ।
यत्रात्मानं न जनयेद्बुधस्तां परिवर्जयेत् ॥ ॥१३-८३-४९ (८४७७०)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
त्र्यशीतितमोऽध्यायः ॥ ८३ ॥

Mahabharata - Anushaasana Parva - Chapter Footnotes

७-८३-२ एतेन उक्तेन ।विधिना प्रकारेण ॥
७-८३-३ शूद्राणां सेवाद्वारा यज्ञार्थत्वं नतु साक्षात् ॥
७-८३-४ मातृजात्यौ वैश्यायां वैश्योऽम्बष्ठो नाम ।शूद्रायां
शूद्रो निषादो नाम पारशवाख्यो भवति ॥
७-८३-५ शवस्थानतुल्याच्छूद्रात्परमुत्कृष्टम्
।परोंशभाग्ब्राह्मणस्यैव पुत्र इति थ ध पाठः ॥
७-८३-६ तन्त्रमुपकरणम् ।वयसा ज्येष्ठोऽपि पारशवो द्विजस्य
त्रिवर्णजस्य यवीयान् कनीयानेवेति सम्बन्धः ॥
७-८३-९ अतः स्वपितुरविशिष्ठो नाधिकः सन्नधमः शूद्रो गुरूणां
ब्राह्मणादीनां दारप्रधर्षकश्चेत् बाह्यं चाण्डालादिम् ॥
७-८३-१० विप्रायां क्षत्रियो बाह्यं सूतं स्तोमक्रियापरमिति झ पाठः ॥
७-८३-११ वध्यानां चोरादीनां शिरश्छेदादिकार्यकारिणं वद्यघ्नम् ॥
७-८३-३० चातुर्वर्ण्यस्यैव धर्माः क़क़क़क़क़न्ने दिहिताः इतरेषां इतरेषां
तु जातिभेदानां धर्मनियम इयता च नास्ति ॥
७-८३-३५ निहीनक़क़क़ रेतःसेक न कुर्यादिति भावः ॥
७-८३-३८ कलुषयोनिजं सङ्करयोनिजम् ॥
७-८३-३९ नानाभावैरार्येभ्यः पृथग्भूताभिश्चेष्टाभिः समन्वितं
नरं सङ्करयोनिजं जानीयात् ॥
७-८३-४१ प्रकृतिं योनिम् ।नियच्छति गूहितुं न शक्नोतीत्यर्थः ॥
७-८३-४२ यथा तिर्यक्स्थारादिकं बीजगुणं न त्यजत्येवं
मनुष्योऽपीत्यर्थः ॥
७-८३-४३ सञ्चन्ने सुगुप्तेऽपि यस्य जन्मनीति शेषः ।सः तच्छीलं
सङ्करकर्तुः स्वभावम् ॥
७-८३-४६ तस्य सङ्करजस्य शरीरं सत्वेन शास्त्रीयबुद्ध्या न
परिकृष्यते न नीचमार्गादपकृष्यते ।बीजगुणस्य प्राबल्यात् ॥

॥ श्रीः ॥
१३.८४. अध्यायः ८४

अथ दानधर्मपर्व ॥ १ ॥
Mahabharata - Anushaasana Parva - Chapter Topics
भीष्मेण युधिष्ठिरम्प्रत्यौरसादिपुत्रनिरूपणम् ॥ १ ॥

Mahabharata - Anushaasana Parva - Chapter Text

युधिष्ठिर उवाच ।
ब्रूहि तात कुरुश्रेष्ठ वर्णानां त्वं पृथक् पृथक् ।
कीदृश्यां कीदृशाश्चापि पुत्राः कस्य च के च ते ॥ १३-८४-१ (८४७७१)
विप्रवादाः सुबहवः श्रूयन्ते पुत्रकारिणाम् ।
अत्र नो मुह्यतां राजन्संशयं छेत्तुमर्हसि ॥ १३-८४-२ (८४७७२)
भीष्म उवाच। १३-८४-३क्ष् (७०३९)
ग्आत्मा पुत्रस्तु विज्ञेयः प्रथमो बहुधा परे ॥ १३-८४-३ (८४७७३)
स्वे क्षेत्रे संस्कृते यस्तु पुत्रमुत्पादयेत्स्वयम् ।
तमौरसं विजानीयात्पुत्रं प्रथमकल्पितम् ॥ १३-८४-४ (८४७७४)
अग्निं प्रजापतिं चेष्ट्वा वराय प्रतिपादिता ।
पुत्रिका स्याद्दुहितरि सङ्कल्पे वाऽपि वा सुतः ॥ १३-८४-५ (८४७७५)
तल्पे जातः प्रमीतस्य क्लीबस्य पतितस्य वा ।
स्वधर्मेण नियुक्तो यः स पुत्रः क्षेत्रजः स्मृतः ॥ १३-८४-६ (८४७७६)
माता पिता च दद्यातां यमद्भिः पुत्रमापदि ।
सदृशप्रीतिसंयुक्तो विज्ञेयो दत्रिमः सुतः ॥ १३-८४-७ (८४७७७)
सदृशं तु प्रकुर्याद्यं गुणदोषविचक्षणम् ।
पुत्रं पुत्रगुणैर्युक्तं विज्ञेयः स तु कृत्रिमः ॥ १३-८४-८ (८४७७८)
उत्पद्यते यस्य गूढं न च ज्ञायेत कस्यचित् ।
स भवेद्गूढजो नाम तस्य स्याद्यस्य तल्पतः ॥ १३-८४-९ (८४७७९)
मातापितृभ्यामुत्सृष्टस्तयोरन्यतरेण वा ।
यं पुत्रं प्रतिगृह्णीयादपविद्धः स उच्यते ॥ १३-८४-१० (८४७८०)
पितृवेश्मनि कन्या तु यं पुत्रं जनयेद्रहः ।
तं कानीनं वदन्नाम्ना वोढुः कन्यासमुद्भवे ॥ १३-८४-११ (८४७८१)
या गर्भिणी संस्क्रियते ज्ञाताऽज्ञातापि वा सती ।
वोढुः स गर्भो भवति सहोढ इति उच्यते ॥ १३-८४-१२ (८४७८२)
क्रीणीयाद्यस्त्वपर्यार्थं मातापित्रोर्यमन्तिकात् ।

स क्रीतकः सुतस्तस्य सदृशोऽसदृशोपि वा ॥ १३-८४-१३ (८४७८३)
या पत्या वा परित्यक्ता विधवा वा स्वकेच्छया ।
उत्पादयति पुनर्भूत्वा स पौनर्भव उच्यते ॥ १३-८४-१४ (८४७८४)
सा चेदक्षतयोनिः स्याद्गतप्रत्याङ्गताऽपि वा ।
पौनर्भवेन भर्त्रा सा पुनसंस्कारमर्हति ॥ १३-८४-१५ (८४७८५)
मातापितृहनो यः स्यात्त्यक्तो वा स्यादकारणम् ।
आत्मानं स्पर्शयेद्यस्तु स्वयंदत्तस्तु स स्मृतः ॥ १३-८४-१६ (८४७८६)
यं ब्राह्मणस्तु शूद्रायां कामादुत्पादयेत्सुतम् ।
स पावयन्नेव शवस्तस्मात्पारशवः स्मृतः ॥ १३-८४-१७ (८४७८७)
दास्यां वा दासदास्यां वा यः शूद्रस्य सुतो भवेत् ।
सोऽनुज्ञातो हरेदंशमिति धर्मो व्यवस्थितः ॥ १३-८४-१८ (८४७८८)
क्षेत्रजादीन्सुतानेतानेकादश यथोदितान् ।
पुत्रप्रतिनिधीनाहुः क्रियालोपान्मनीषिणः ॥ १३-८४-१९ (८४७८९)
प्रातॄणामेकजातानामेकश्चेत्पुत्रवान्भवेत् ।
सर्वांस्तांस्तेन पुत्रेण पुत्रिणो मनुरब्रवीत् ॥ १३-८४-२० (८४७९०)
सर्वासामेकपत्नीनामेका चेत्पुत्रिणी भवेत् ।
सर्वास्तास्तेन पुत्रेण प्राह पुत्रवतीर्मनुः ॥ १३-८४-२१ (८४७९१)
आत्मा पुत्रश्च विज्ञेयस्तस्यानन्तरजश्च यः ।
निरुक्तजश्च विज्ञेयः सुतः प्रसृतजस्तथा ॥ १३-८४-२२ (८४७९२)
पतितस्य तु भार्याया भर्त्रा सुसमवेतया ।
तथा दत्तकृतौ पुत्रावध्यूढश्च तथाऽपरः ॥ १३-८४-२३ (८४७९३)
षडपध्वंसजाश्चापि कानीनापसदास्तथा ।
इत्येते वै समाख्यातास्तान्विजानीहि भारत ॥ १३-८४-२४ (८४७९४)
युधिष्ठिर उवाच। १३-८४-२५क्ष् (७०४०)
षडपध्वंसजाः के स्युः के वाऽप्यपसदास्तथा ।
एतत्सर्वं यथातत्त्वं व्याख्यातुं मे त्वमर्हसि ॥ १३-८४-२५ (८४७९५)
भीष्म उवाच। १३-८४-२६क्ष् (७०४१)
त्रिषु वर्णेषु ये पुत्रा ब्राह्मणस्य युधिष्ठिर ।
वर्णयोश्च द्वयोः स्यातां यौ राजन्यस्य भारत ॥ १३-८४-२६ (८४७९६)
एको द्विवर्ण एवाथ तथाऽत्रैवोपलक्षितः ।
षडपध्वंसजास्ते हि तथैवापसदाञ्शृणु ॥ १३-८४-२७ (८४७९७)
चाण्डालो व्रात्यवर्णौ तु ब्राह्मण्यां क्षत्रियासु च ।
वैश्यायां चैव शूद्रस्य लक्ष्यास्तेऽपसदास्त्रयः ॥ १३-८४-२८ (८४७९८)
मागधो वामकश्चैव द्वौ वैश्यस्योपलक्षितौ ।
ब्राह्मण्यां क्षत्रियायां च क्षत्रियस्यैक एव तु ॥ १३-८४-२९ (८४७९९)
ब्राह्मण्यां लक्ष्यते सूत इत्येतेऽपसदाः स्मृताः ।

पुत्रा ह्येते न शक्यन्ते मिथ्या कर्तुं नराधिप ॥ १३-८४-३० (८४८००)
युधिष्ठिर उवाच। १३-८४-३१क्ष् (७०४२)
क्षेत्रजं केचिदेवाहुः सुतं केचित्तु शुक्रजम् ।
तुल्यावेतौ सुतौ कस्य तन्मे ब्रूहि पितामह ॥ १३-८४-३१ (८४८०१)
भीष्म उवाच। १३-८४-३२क्ष् (७०४३)
रेतजो वा भवेत्पुत्रः पुत्रो वा क्षत्रेजो भवेत् ।
अध्यूढः समयं भित्त्वेत्येतदेव निबोध मे ॥ १३-८४-३२ (८४८०२)
युधिष्ठिर उवाच। १३-८४-३३क्ष् (७०४४)
रेतजं विद्म वै पुत्रं क्षत्रेजस्यागमः कथम् ।
अध्यूढं विद्म वै पुत्रं भित्त्वा तु समयं कथम् ॥ १३-८४-३३ (८४८०३)
भीष्म उवाच। १३-८४-३४क्ष् (७०४५)
आत्मजं पुत्रमुत्पाद्य यस्त्यजेत्कारणान्तरे ।
न तत्र कारणं रेतः स क्षेत्रस्वामिनो भवेत् ॥ १३-८४-३४ (८४८०४)
पुत्रकामो हि पुत्रार्थे यां वृणीते विशाम्पते ।
तत्र क्षेत्रं प्रमाणं स्यान्न वै तत्रात्मजः सुतः ॥ १३-८४-३५ (८४८०५)
अन्यत्र क्षेत्रजः पुत्रो लक्ष्यते भरतर्षभ ।
न ह्यात्मा शक्यते हन्तुं दृष्टान्तोपगतो ह्यसौ ॥ १३-८४-३६ (८४८०६)
क्वचिच्च कुतकः पुत्रः सङ्ग्रहादेव लक्ष्यते ।
न तत्र रेतः क्षेत्रं वा प्रमाणं स्याद्युधिष्ठिर ॥ १३-८४-३७ (८४८०७)
युधिष्ठिर उवाच। १३-८४-३८क्ष् (७०४६)
कीदृशः कृतकः पुत्रः सङ्ग्रहादेव लक्ष्यते ।
शुक्रं क्षेत्रं प्रमाणं वा यत्र लक्ष्यं न भारत ॥ १३-८४-३८ (८४८०८)
भीष्म उवाच। १३-८४-३९क्ष् (७०४७)
मातापितृभ्यां यस्त्यक्तः पथि यस्तं प्रकल्पयेत् ।
न चास्य मातापितरौ ज्ञायेतां स हि कृत्रिमः ॥ १३-८४-३९ (८४८०९)
अस्वामिकस्य स्वामित्वं यस्मिन्सम्प्रतिलक्ष्यते ।
यो वर्णः पोषयेत्तं च तद्वर्णस्तस्य जायते ॥ १३-८४-४० (८४८१०)
युधिष्ठिर उवाच। १३-८४-४१क्ष् (७०४८)
कथमस्य प्रयोक्तव्यः संस्कारः कस्य वा कथम् ।
देया कन्या कथं चेति तन्मे ब्रूहि पितामह ॥ १३-८४-४१ (८४८११)
भीष्म उवाच। १३-८४-४२क्ष् (७०४९)
आत्मवत्तस्य कुर्वीत संस्कारं स्वामिवत्तथा ।
त्यक्तो मातापितृभ्यां यः सवर्णं प्रतिपद्यते ॥ १३-८४-४२ (८४८१२)
तद्गोत्रबन्धुजं तस्य कुर्यात्संस्कारमच्युत ।
अथ देया तु कन्या स्यात्तद्वर्णस्य युधिष्ठिर ॥ १३-८४-४३ (८४८१३)
संस्कर्तुं वर्णगोत्रं च मातृवर्णविनिश्चये ।

कानीनाध्यूढजौ वाऽपि विज्ञेयौ पुत्रकिल्बिषौ ॥१३-८४-४४ (८४८१४)
कानीनाध्यूढजौ वाऽपि विज्ञेयौ पुत्रकिल्बिषौ ॥
तावपि स्वाविव सुतौ संस्कार्याविति निश्चयः। १३-८४-४५ (८४८१५)
क्षेत्रजो वाऽप्यपसदो येऽध्यूढास्तेषु चाप्युत ॥
आत्मवद्वै प्रयुञ्जीरन्संस्कारान्ब्राह्मणादयः। १३-८४-४६ (८४८१६)
ग्स्वं जन्मे मातृगोत्रेण संस्कारं ब्राह्मणादयः ॥'
धर्मशास्त्रेषु वर्णानां निश्चयोऽयं पदृश्यते। १३-८४-४७ (८४८१७)
एतत्ते सर्वमाख्यातं किं भूयः श्रोतुमिच्छसि ॥ ॥ १३-८४-४८ (८४८१८)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
चतुरशीतितमोऽध्यायः ॥८४ ॥
Mahabharata - Anushaasana Parva - Chapter Footnotes

७-८४-२ विप्रवादाः विविधाः प्रवादः पूर्वोक्ता एव ॥
७-८४-६ तल्पे कलत्रे ॥
७-८४-२२ अनन्तरजः औरसः निरुक्तजः स्वक्षेत्रेऽन्यो
रेतःसेकार्थमुक्तस्तज्जः ।प्रसृतोऽनिरुक्तोऽपि यो लौल्यात्परक्षेत्रे
रेतः सिञ्चति तज्जः प्रसृतजः ॥
७-८४-२३ तथा पतितात्स्वभार्यायामेव जातः ।भार्यायाः तृतीयार्थे
षष्ठी।दत्तः पञ्चमः।कृतः क्रीतः स्वयमुपायगम्यो वा
षष्ठः।अध्यूढः यस्य माता गर्भवत्येव ऊढा तादृशः सप्तमः ॥
७-८४-२४ षडपध्वंसजा वक्ष्यमाणाः ।कानीनः कन्यायां
विवाहात् प्रागुत्पन्नश्चतुर्दशः।अपसदा वक्ष्यमाणाः षट्।एते
विंशतिः।तान्सर्वान् पुत्रानिति विजानीहि ॥
७-८४-३४ कारणान्तरे लोकापवादादिभये सति ॥
७-८४-३५ यां गर्भवती कन्यां वृणीते तत्र स पुत्रो वोदुरेव क्षेत्रजो
नतु सेक्तुरात्मज ॥

---

अनुससनपर्व-अध्यय०८५
॥ श्रीः ॥
१३.८५. अध्यायः ८५

अथ दानधर्मपर्व ॥१ ॥
Mahabharata - Anushaasana Parva - Chapter Topics
भीष्मेण युधिष्ठिरम्प्रति महद्दर्शनसहवासयोर्गवां च
प्रभावबोधनाय च्यवनोपाख्यानकथनारम्भः ॥१ ॥

गङ्गायमुना सङ्गमेऽन्तर्जले निमज्य तपस्यतश्च्यवनस्य
दाशैर्जालेन जलचरैः सह कूलप्रापणम् ॥ २ ॥
दाशैः प्रार्थितेन तेन तान्प्रति मत्स्यै सह स्वस्य
प्राणजालान्यतरस्मान्मोचनचोदना ॥ ३.।



युधिष्ठिर उवाच ।
दर्शने कीदृशः स्नेहः संवासे च पितामह ।
महाभाग्यं गवां चैव तन्मे व्याख्यातुमर्हसि ॥ १३-८५-१ (८४८१९)
भीष्म उवाच। १३-८५-२क्ष् (७०५०)
हन्त ते कथयिष्यामि पुरावृत्तं महाद्युते ।
नहुषस्य च संवादं महर्षेश्च्यवनस्य च ॥ १३-८५-२ (८४८२०)
पुरा महर्षिश्च्यवनो भार्गवो भरतर्षभ ।
उदवासकृतारम्भो बभूव स महाव्रतः ॥ १३-८५-३ (८४८२१)
निहत्य मानं क्रोधं च प्रहर्षं शोकमेव च ।
वर्षाणि द्वादश मुनिर्जलवासे धृतव्रतः ॥ १३-८५-४ (८४८२२)
आदधत्सर्वभूतेषु विस्रम्भं परमं शुभम् ।
जलेचरेषु सर्वेषु शीतरश्मिरिव प्रभुः ॥ १३-८५-५ (८४८२३)
स्थाणुभूतः शुचिर्भूत्वा दैवतेभ्यः प्रणम्य च ।
गङ्गायमुनयोर्मध्ये जलं सम्प्रविवेश ह ॥ १३-८५-६ (८४८२४)
गङ्गायमुनयोर्वेगं सुभीमं भीमनिःस्वनम् ।
प्रतिजग्राह शिरसा वातवेगसमं जवे ॥ १३-८५-७ (८४८२५)
गङ्गा च यमुना चैव सरितश्च सरांसि च ।
प्रदक्षिणमृषिं चक्रुर्न चैनं पर्यपीडयन् ॥ १३-८५-८ (८४८२६)
अन्तर्जलेषु सुष्वाप काष्ठभूतो महामुनिः ।
ततश्चोर्ध्वस्थितो धीमानभवद्भरतर्षभ ॥ १३-८५-९ (८४८२७)
जलौकसां ससत्वानां बभूव प्रियदर्शनः ।
उपाजिघ्नन्त च तदा मत्स्यास्तं हृष्टमानसाः ।
तत्र तस्यासतः कालः समतीतोऽभवन्महान् ॥ १३-८५-१० (८४८२८)
ततः कदाचित्समये कस्मिंश्चिन्मत्स्यजीविनः ।
तं देशं समुपाजग्मुर्जालहस्ता महाद्युते ॥ १३-८५-११ (८४८२९)
निषादा बहवस्तत्र मत्स्योद्धरणनिश्चयाः ।
व्यायता बलिनः शूराः सलिलेष्वनुवर्तिनः ।
अभ्याययुश्च तं देशं निश्चिता जालकर्मिणि ॥ १३-८५-१२ (८४८३०)
जालं ते योजयामासुर्नवसूत्रकृतं दृढम् ।
मत्स्योद्धरणमाकर्षस्तदा भरतसत्तम ॥ १३-८५-१३ (८४८३१)

ततस्ते बहुभिर्योगैः कैवर्ता मत्स्यकाङ्क्षिणः ।
गङ्गायमुनयोर्वारि जालेनावकिरन्ति ते ॥ १३-८५-१४ (८४८३२)
जालं सुविततं तेषां नवसूत्रकृतं तथा ।
विस्तारायामसम्पन्नं यत्तत्र सलिले क्षमम् ॥ १३-८५-१५ (८४८३३)
ततस्ते सुमहच्चैव बलवच्च सुवर्तितम् ।
अवतीर्य ततः सर्वे जालं चकृषिरे तदा ॥ १३-८५-१६ (८४८३४)
अभीतरूपाः संहृष्टा अन्योन्यवशवर्तिनः ।
बबन्धुस्तत्र मत्स्यांश्च तथाऽन्याञ्जलचारिणः ॥ १३-८५-१७ (८४८३५)
तथा मत्स्यैः परिवृतं च्यवनं भृगुनन्दनम् ।
आकर्षयन्महाराज जालेनाथ यदृच्छया ॥ १३-८५-१८ (८४८३६)
नदीशैवलदिग्धाङ्गं हरिश्मश्रुजटाधरम् ।
लग्नैः शङ्खनखैर्गात्रे क्रोडैश्चित्रैरिवार्पितम्। १३-८५-१९ (८४८३७)
तं जालेनोद्धृतं दृष्ट्वा ते तदा वेदपारगम् ।
सर्वे प्राञ्जलयो दाशाः शिरोभिः प्रापतन्भुवि ॥ १३-८५-२० (८४८३८)
परिखेदपरित्रासाज्जालस्याकर्षणेन च ।
मत्स्या बभूवुर्व्यापन्नाः स्थलसंस्पर्शनेन च ॥ १३-८५-२१ (८४८३९)
स मुनिस्तत्तदा दृष्ट्वा मत्स्यानां कदनं कृतम् ।
बभूव कृपयाविष्टो निःश्वसंश्च पुनःपनः ॥ १३-८५-२२ (८४८४०)
निषादा ऊचुः। १३-८५-२३क्ष् (७०५१)
अज्ञानाद्यत्कृतं पापं प्रसादं तत्र नः कुरु ।
करवाम प्रिय किं ते तन्नो ब्रूहि महामुने ॥ १३-८५-२३ (८४८४१)
इत्युक्तो मत्स्यमध्यस्थश्च्यवनो वाक्यमब्रवीत् ।
यो मेऽद्य परमः कामस्तं शृणुध्वं मसाहिताः ॥ १३-८५-२४ (८४८४२)
प्राणोत्सर्गं विसर्गं वा मत्स्यैर्यास्याम्यहं सह ।
संवासान्नोत्सहे त्यक्तुं सलिलेऽध्युपितानहम् ॥ १३-८५-२५ (८४८४३)
इत्युक्तास्ते निषादास्तु सुभृशं भयकम्पिताः ।
सर्वे विवर्णवदना नहुषाय न्यवेदयन् ॥ ॥ १३-८५-२६ (८४८४४)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
पञ्चाशीतितमोऽध्यायः ॥ ८५ ॥

Mahabharata - Anushaasana Parva - Chapter Footnotes

७-८५-१ परपीडादर्शने परैः सह संवासे च कीदृशः स्नेह
आतृशंस्यं च कर्तव्यम् ।गवां माहात्म्यं च ब्रूहीति प्रश्नदूयम् ॥
७-८५-८ सरितश्च तथानुगा इति ट थ ध पाठः ॥
७-८५-९ ऊर्ध्वस्थितः उपविष्टः ॥

७-८५-१० आसतः आसीनस्य ॥
७-८५-१९ शङ्खानां जलजन्तुविशेषाणां नखानि तैः ॥

---

अनुससनपर्व-अध्यय०८६
॥ श्रीः ॥
१३.८६. अध्यायः ८६

अथ दानधर्मपर्व ॥ १ ॥
Mahabharata - Anushaasana Parva - Chapter Topics
दाशैश्च्यवनवृत्तान्तं निवेदितेन नहुषेण तंप्रति
तदभीष्टकरणप्रतिज्ञानम् ॥ १ ॥
च्यवनेन नहुषंप्रति दाशेभ्यः स्वोचितमूल्यदानेनात्ममोचनचोदना ॥ २ ॥
नहुषेण संपूर्णराज्यस्य मूल्यतापरिकल्पनेपि मुनिता तदनङ्गीकरणे
गवि जातेन मुनिना गोः प्रतिनिधीकरणम् ॥ ३ ॥
च्यवनेन गोप्रतिग्रहणेन स्वसहवासिभिर्मत्स्यैः सह दाशानां
स्वर्गप्रापणम् ॥ ४ ॥

Mahabharata - Anushaasana Parva - Chapter Text

भीष्म उवाच ।
नहुषस्तु ततः श्रुत्वा च्यवनं तं तथाऽऽगतम् ।
त्वरितः प्रययौ तत्रि सहामात्यपुरोहितः ॥ १३-८६-१ (८४८४५)
शौचं कृत्वा यथान्यायं प्राञ्जलिः प्रयतो नृपः ।
आत्मानमाचचक्षे च च्यवनाय महात्मने ॥ १३-८६-२ (८४८४६)
अर्चयामास तं चापि तस्य राज्ञः पुरोहितः ।
सत्यव्रतं महात्मानं देवकल्पं विशाम्पते ॥ १३-८६-३ (८४८४७)
नहुष उवाच। १३-८६-४क्ष् (७०५२)
करवाणि प्रियं किं ते तन्मे ब्रूहि द्विजोत्तम ।
सर्वं कर्ताऽस्मि भगवन्यद्यपि स्यात्सुदुष्करम् ॥ १३-८६-४ (८४८४८)
च्यवन उवाच। १३-८६-५क्ष् (७०५३)
श्रमेणि महता युक्ताः कैवर्ता मत्स्यजीविनः ।
मम मूल्यं प्रयच्छैभ्यो मत्स्यानां विक्रयैः सह ॥ १३-८६-५ (८४८४९)
नहुष उवाच। १३-८६-६क्ष् (७०५४)
सहस्रं दीयतां मूल्यं निषादेभ्यः पुरोहित ।
निष्क्रयार्थे भगवतो यथाऽऽह भृगुनन्दनः ॥ १३-८६-६ (८४८५०)
च्यवन उवाच। १३-८६-७क्ष् (७०५५)

आत्ममूल्यं च वक्तव्यं न तल्लोकः प्रशंसति ।
तस्मादहं प्रवक्ष्यामि न चात्मस्तुतिम्मवृतः ॥ १३-८६-७ (८४८५१)
सहस्रं नाहमर्हामि किं वा त्वं मन्यसे नृप ।
सदृशं दीयतां मूल्यं स्वबुद्ध्या निश्चयं कुरु ॥ १३-८६-८ (८४८५२)
नहुष उवाच। १३-८६-९क्ष् (७०५६)
सहस्राणां शतं विप्र निषोदेभ्यः प्रदीयताम् ।
स्यादिदं भगवन्मूल्यं किं वाऽन्यन्मन्यते भवान् ॥ १३-८६-९ (८४८५३)
च्यवन उवाच। १३-८६-१०क्ष् (७०५७)
नाहं शतसहस्रेण निमेयः पार्थिवर्षभ ।
दीयतां सदृशं मूल्यममात्यैः सह चिन्तय ॥ १३-८६-१० (८४८५४)
नहुष उवाच। १३-८६-११क्ष् (७०५८)
कोटिः प्रदीयतां मूल्यं निषादेभ्यः पुरोहित ।
यदेतदपि नो मूल्यमतो भूयः प्रदीयताम् ॥ १३-८६-११ (८४८५५)
च्यवन उवाच। १३-८६-१२क्ष् (७०५९)
राजन्नार्हाम्यहं कोटिं भूयो वाऽपि महाद्युते ।
सदृशं दीयतां मूल्यं ब्राह्मणैः सह चिन्तय ॥ १३-८६-१२ (८४८५६)
नहुष उवाच। १३-८६-१३क्ष् (७०६०)
अर्दं राज्यं समग्रं वा निषादेभ्यः प्रदीयताम् ।
एतत्तुल्यमहं मन्ये किं वाऽन्यन्मन्यसे द्विज ॥ १३-८६-१३ (८४८५७)
च्यवन उवाच। १३-८६-१४क्ष् (७०६१)
अर्धं राज्यं समग्रं च मूल्यं नार्हामि पार्थिव ।
सदृशं दीयतां मूल्यमृषिभिः सह चिन्त्यताम् ॥ १३-८६-१४ (८४८५८)
भीष्म उवाच। १३-८६-१५क्ष् (७०६२)
महर्षेर्वचनं श्रुत्वा नहुषो दुःखकर्शितः ।
स चिन्तयामास तदा सहामात्यपुरोहितः ॥ १३-८६-१५ (८४८५९)
तत्र त्वन्यो वनचरः कश्चिन्मूलफलाशनः ।
नहुषस्य समीपस्थो गविजातोऽभवन्मुनिः ॥ १३-८६-१६ (८४८६०)
स तमाभाष्य राजानमब्रवीद्द्विजसत्तमः ।
तोषयिष्याम्यहं क्षिप्तं यथा तुष्टो भविष्यति ॥ १३-८६-१७ (८४८६१)
नाहं मिथ्यावचो ब्रूयां स्वैरेष्वपि कुतोऽन्यथा ।
भवतो यदहं ब्रयां तत्कार्यमविशङ्कया ॥ १३-८६-१८ (८४८६२)
नहुष उवाच। १३-८६-१९क्ष् (७०६३)
ब्रवीतु भगवान्मूल्यं महर्षेः सदृशं भृगोः ।
परित्रायस्व मामस्मद्विषयं च कुलं च मे ॥ १३-८६-१९ (८४८६३)
हन्याद्धि भगवान्क्रुद्धस्त्रैलोक्यमपि केवलम् ।
किं पुनर्मां तपोहीनं बाहुवीर्यपरायणम्। १३-८६-२० (८४८६४)

अगाधाम्भसि मग्नस्य सामात्यस्य सऋत्विजः ।
प्लवो भव महर्षे त्वं कुरु मूल्यविनिश्चयम् ॥ १३-८६-२१ (८४८६५)
भीष्म उवाच। १३-८६-२२क्ष् (७०६४)
नहुषस्य वचः श्रुत्वा गविजातः प्रतापवान् ।
उवाच हर्षयन्सर्वानमात्यान्पार्थिवं च तम् ॥ १३-८६-२२ (८४८६६)
ग्ब्राह्मणानां गवां चैव कुलमेकं द्विधा कृतम् ।
एकत्र मन्त्रास्तिष्ठन्ति हविरन्यत्र तिष्ठति ॥' १३-८६-२३ (८४८६७)
अनर्घेया महाराज द्विजा वर्णेषु चोत्तमाः ।
गावश्च पुरुषव्याग्र गौर्मूल्यं परिकल्प्यताम् ॥ १३-८६-२४ (८४८६८)
नहुषस्तु ततः श्रुत्वा महर्षेर्वचनं नृप ।
हर्षेण महता युक्तः सहामात्यपुरोहितः ॥ १३-८६-२५ (८४८६९)
अभिगम्य भृगोः पुत्रं च्यवनं संशितव्रतम् ।
इदं प्रोवाच नृपते वाचा सन्तर्पयन्निव ॥ १३-८६-२६ (८४८७०)
उत्तिष्ठोत्तिष्ठ विप्रर्षे गवा क्रीतोसि भार्गव ।
एतन्मूल्यमहं मन्ये तव धर्मभृतांवर ॥ १३-८६-२७ (८४८७१)
च्यवन उवाच। १३-८६-२८क्ष् (७०६५)
उत्तिष्ठाम्येष राजेन्द्र सम्यक् क्रीतोस्मि तेऽनघ ।
गोभिस्तुल्यं न पश्यामि धनं किञ्चिदिहाच्युत ॥ १३-८६-२८ (८४८७२)
कीर्तनं श्रवणं दानं दर्शनं चापि पार्थिव ।
गवां प्रशस्यते वीर सर्वपापहरं शिवम् ॥ १३-८६-२९ (८४८७३)
गावो लक्ष्म्याः सदा मूलं गोषु पाप्मा न विद्यते ।
अन्नमेव सदा गावो देवानां परमं हविः ॥ १३-८६-३० (८४८७४)
स्वाहाकारवषट्कारौ गोषु नित्यं प्रतिष्ठितौ ।
गावो यज्ञस्य नेत्र्यो वै तथा यज्ञस्य ता मुखम् ॥ १३-८६-३१ (८४८७५)
अमृतं ह्यव्ययं दिव्यं क्षरन्ति च वहन्ति च ।
अमृतायतनं चैताः सर्वलोकनमस्कृताः ॥ १३-८६-३२ (८४८७६)
तेजसा वपुषा चैव गावो वह्निसमा भुवि ।
गावो हि सुमहत्तेजः प्राणिनां च सुखप्रदाः ॥ १३-८६-३३ (८४८७७)
निविष्टं गोकुलं यत्र श्वासं मुञ्चति निर्भयम् ।
विराजयति तं देशं पापं चास्यापकर्षति ॥ १३-८६-३४ (८४८७८)
गावः स्वर्गस्य सोपानं गावः स्वर्गेऽपि पूजिताः ।
गावः कामदुहोदेव्यो नान्यत्किञ्चित्परं स्मृतम् ॥ १३-८६-३५ (८४८७९)
इत्येतद्गोषु मे प्रोक्तं महात्म्यं भरतर्षभ ।
गुणैकदेशवचनं शक्यं पारायणं न तु ॥ १३-८६-३६ (८४८८०)
निषादा ऊचुः। १३-८६-३७क्ष् (७०६६)
दर्शनं कथनं चैव सहास्माभिः कृतं मुने ।

सतां साप्तपदं मैत्रं प्रसादं न कुरु प्रभो ॥१३-८६-३७ (८४८८१)
हवींषि सर्वाणि यथा ह्युपभुङ्क्ते हुताशनः ।
एवं त्वमपि धर्मात्मन्पुरुषाग्निः प्रतापवान् ॥१३-८६-३८ (८४८८२)
प्रसादयामहे विद्वन्भवन्तं प्रणता वयम् ।
अनुग्रहार्थमस्माकमियं गौः प्रतिगृह्यताम् ॥१३-८६-३९ (८४८८३)
ग्अत्यन्तापदि शक्तानां परित्राणं हि कुर्वताम् ।
या गतिर्विदिता त्वद्य नरके शरणं भवान् ॥१३-८६-४० (८४८८४)
च्यवन उवाच।१३-८६-४०क्ष् (७०६७)
कृपणस्य च यच्चक्षुर्मुनेराशीविषस्य च ।
नरं समूलं दहति कक्षमग्निरिव ज्वलन् ॥१३-८६-४१ (८४८८५)
प्रतिगृह्णामि वो धेनुं कैवर्ता मुक्तकिल्बिषाः ।
दिवं गच्छत वै क्षिप्रं मत्स्यैर्जालोद्धृतैः सह ॥१३-८६-४२ (८४८८६)
भीष्म उवाच।१३-८६-४३क्ष् (७०६८)
ततस्तस्य प्रभावात्ते महर्षेर्भावितात्मनः ।
निषादास्तेन वाक्येन सह मत्स्यैर्दिवं ययुः ॥१३-८६-४३ (८४८८७)
ततः स राजा नहुषो विस्मितः प्रेक्ष्य धीवरान् ।
आरोहमाणांस्त्रिदिवं मत्स्यांश्च भरतर्षभ ॥१३-८६-४४ (८४८८८)
ततस्तौ गविजश्चैव च्यवनश्च भृगूद्वहः ।
वराभ्यामनुरूपाभ्यां छन्दयामासतुर्नृपम् ॥१३-८६-४५ (८४८८९)
ततो राजा महावीर्यो नहुषः पृथिवीपतिः ।
परमित्यब्रवीत्प्रीतस्तदा भरतसत्तम ॥१३-८६-४६ (८४८९०)
ततो जग्राह धर्मे स स्थितिमिन्द्रनिभो नृपः ।
तथेति चोदितः प्रीतस्तावृषी प्रत्यपूजयत् ॥१३-८६-४७ (८४८९१)
समाप्तदीक्षश्च्यवनस्ततोऽगच्छत्स्वमाश्रमम् ।
गविजश्च महातेजाः स्वमाश्रमपदं ययौ ॥१३-८६-४८ (८४८९२)
निषादाश्च दिवं जग्मुस्ते च मत्स्या जनाधिप ।
नहुषोपि वरं लब्ध्वा प्रविवेश स्वकं पुरम् ॥१३-८६-४९ (८४८९३)
एतत्ते कथितं तात यन्मां त्वं परिपृच्छसि ।
दर्शने यादृशः स्नेहः संवासे वा युधिष्ठिर ॥१३-८६-५० (८४८९४)
महाभाग्यं गवां चैव तता धर्मविनिश्चयम् ।
किं भूयः कथ्यतां वीर किं ते हृदि विवक्षितम् ॥ ॥१३-८६-५१ (८४८९५)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
षडशीतितमोऽध्यायः ॥८६ ॥

---

॥ श्रीः ॥

१३.८७. अध्यायः ८७

अथ दानधर्मपर्व ॥ १ ॥

Mahabharata - Anushaasana Parva - Chapter Topics

भीष्मेण युधिष्ठिरम्प्रति
रामविश्वामित्रयोरुत्पत्तिप्रकारकथनारम्भः ॥ १ ॥
च्यवनेन कुशिकराजमेत्य सभार्यं तम्प्रति स्वशुश्रूषाविधानम् ॥ २ ॥
सभार्येण कुशिकेन एकविंशतिदिवसाननवरतमेकपार्श्वेन प्रसुप्तस्य च्यवनस्य पादसंवाहनेन पर्युपासनम् ॥ ३ ॥
ततः शयनादुत्थितेन मुनिना किञ्चिद्दूरं गत्वा पुनरन्तर्धानम् ॥ ४ ॥

Mahabharata - Anushaasana Parva - Chapter Text

युधिष्ठिर उवाच ।
संशयो मे महाप्राज्ञ सुमहान्सागरोपम ।
तं मे शृणु महाबाहो श्रुत्वा व्याख्यातुमर्हसि ॥ १३-८७-१ (८४८९६)
कौतूहलं मे सुमहज्जामदग्न्यं प्रति प्रभो ।
रामं धर्मभृतां श्रेष्ठं तन्मे व्याख्यातुमर्हसि ॥ १३-८७-२ (८४८९७)
ग्ब्राह्मे बले सुपूर्णानामेतेषां च्यवनादिनाम् ।'
कथमेष समुत्पन्नो रामः सत्यपराक्रमः ।
कथं ब्रह्मर्षिवंशोऽयं क्षत्रधर्मा व्यजायत ॥ १३-८७-३ (८४८९८)
तदस्य सम्भवं राजन्निखिलेनानुकीर्तय ।
कौशिकश्च कथं वंशात्क्षात्राद्वै ब्राह्मणोऽभवत् ॥ १३-८७-४ (८४८९९)
अहो प्रभावः सुमहानासीद्वै सुमहात्मनोः ।
रामस्य च नरव्याघ्र विश्वामित्रस्य चैव हि ॥ १३-८७-५ (८४९००)
कथं पुत्रानतिक्रम्य तेषां नप्तृष्वथाभवत् ।
एष दोषो महाप्राज्ञ तत्त्वं व्याख्यातुमर्हसि ॥ १३-८७-६ (८४९०१)
भीष्म उवाच। १३-८७-७क्ष् (७०६९)
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
च्यवनस्य च संवादं कुशिकस्य च भारत ॥ १३-८७-७ (८४९०२)
एतं दोषं पुरा दृष्ट्वा भार्गवश्च्यवनस्तदा ।
आगामिनं महाबुद्धिः स्ववंशे मुनिसत्तमः ॥ १३-८७-८ (८४९०३)
निश्चित्य मनसा सर्वं गुणदोषबलाबलम् ।
दग्धुकामः कुलं सर्वं कुशिकानां तपोधनः ॥ १३-८७-९ (८४९०४)
च्यवनस्तमनुप्राप्य कुशिकं वाक्यमब्रवीत् ।

वस्तुमिच्छा समुत्पन्ना त्वया सह ममानघ ॥ १३-८७-१० (८४९०५)
कुशिक उवाच। १३-८७-११क्ष् (७०७०)
भगवन्सहधर्मोऽयं पण्डितैरिह चर्यते ।
प्रदानकाले कन्यानामुच्यते च सदा बुधैः ॥ १३-८७-११ (८४९०६)
यत्तु तावदतिक्रान्तं धर्मद्वारं तपोधन ।
तत्कार्यं प्रकरिष्यामि तदनुज्ञातुमर्हसि ॥ १३-८७-१२ (८४९०७)
भीष्म उवाच। १३-८७-१३क्ष् (७०७१)
अथासनमुपादाय च्यवनस्य महामुनेः ।
कुशिको भार्यया सार्धमाजगाम यतो मुनिः ॥ १३-८७-१३ (८४९०८)
प्रगृह्य राजा भृङ्गारं पाद्यमस्मै न्यवेदयत् ।
कारयामास सर्वाश्च क्रियास्तस्य महात्मनः ॥ १३-८७-१४ (८४९०९)
ततः स राजा च्यवनं मधुपर्कं यथाविधि ।
ग्राहयामास चाव्यग्रो महात्मा नियतव्रतः ॥ १३-८७-१५ (८४९१०)
सत्कृत्य तं तथा विप्रमिदं पुनरथाब्रवीत् ।
भगवन्परवन्तौ स्वो ब्रूहि किं करवावहे ॥ १३-८७-१६ (८४९११)
यदि राज्यं यदि धनं यदि गाः संशितव्रत ।
यज्ञदानानि च तथा ब्रूहि सर्वं ददामि ते ॥ १३-८७-१७ (८४९१२)
इदं गृहमिदं राज्यमिदं धर्मासनं च ते ।
राजा त्वमसि शाध्युर्वीं भृत्योऽहं परवान्स्त्रिया ॥ १३-८७-१८ (८४९१३)
एवमुक्ते ततो वाक्ये च्यवनो भार्गवस्तदा ।
कुशिकं प्रत्युवाचेदं मुदा परमया युतः ॥ १३-८७-१९ (८४९१४)
न राज्यं कामये राजन्न धनं न च योषितः ।
न च गा न च वै देशान्न यज्ञं श्रूयतामिदम् ॥ १३-८७-२० (८४९१५)
नियमं किञ्चिदारप्स्ये युवयोर्यदि रोचते ।
परिचर्योस्मि यत्ताभ्यां युवाभ्यामविशङ्कया ॥ १३-८७-२१ (८४९१६)
एवमुक्ते तदा तेन दम्पती तौ जहर्षतुः ।
प्रत्यब्रूतां च तमृषिमेवमस्त्विति भारत ॥ १३-८७-२२ (८४९१७)
अथ तं कुशिको हृष्टः प्रावेशयदनुत्तमम् ।
गृहोद्देशं ततस्तस्य दर्शनीयमदर्शयत् ॥ १३-८७-२३ (८४९१८)
इयं शय्या भगवतो यथाकाममिहोष्यताम् ।
प्रयतिष्यावहे प्रीतिमाहर्तुं ते तपोधन ॥ १३-८७-२४ (८४९१९)
अथ सूर्योतिचक्राम तेषां संवदतां तथा ।
अथर्षिश्चोदयामास पानमन्नं तथैव च ॥ १३-८७-२५ (८४९२०)
तमपृच्छत्ततो राजा कुशिकः प्रणतस्तदा ।
किमन्नजातमिष्टं ते किमुपस्थापयाम्यहम् ॥ १३-८७-२६ (८४९२१)
ततः स परया प्रीत्या प्रत्युवाच नराधिपम् ।

औपपत्तिकमाहारं प्रयच्छस्वेति भारत ॥ १३-८७-२७ (८४९२२)
तद्वचः पूजयित्वा तु तथेत्याह स पार्थिवः ।
यथोपपन्नमाहारं तस्मै प्रादाज्जनाधिप ॥ १३-८७-२८ (८४९२३)
ततः स भुक्त्वा भगवन्दम्पती प्राह धर्मवित् ।
स्वप्तुमिच्छाम्यहं निद्रा बाधते मामिति प्रभो ॥ १३-८७-२९ (८४९२४)
ततः शय्यागृहं प्राप्य भगवानृषिसत्तमः ।
संविवेश नरेशस्तु सपत्नीकः स्थितोऽभवत् ॥ १३-८७-३० (८४९२५)
न प्रबोध्योस्मि संसुप्त इत्युवाचाथ भार्गवः ।
संवाहितव्यौ मे पादौ जागर्तव्यं च वां निशि ॥ १३-८७-३१ (८४९२६)
अविशङ्कस्तु कुशिकस्तथेत्येवाह धर्मवित् ।
न प्राबोधयतां तौ च दंपती रजनीक्षये ॥ १३-८७-३२ (८४९२७)
यथादेशं महर्षेस्तु शुश्रूषापरमौ तदा ।
बभूवतुर्महाराज प्रयतावथ दम्पती ॥ १३-८७-३३ (८४९२८)
ततः स भगवान्विप्रः समादिश्य नराधिपम् ।
सुष्वापैकेन पार्श्वेन दिवसानेकविंशतिम् ॥ १३-८७-३४ (८४९२९)
स तु राजा निराहारः सभार्यः कुरुनन्दन ।
पर्युपासत तं हृष्टश्च्यवनाराधने रतः ॥ १३-८७-३५ (८४९३०)
भार्गवस्तु समुत्तस्थौ स्वयमेव तपोधनः ।
अकिञ्चिदुक्त्वा तु गृहान्निश्चक्राम महातपाः ॥ १३-८७-३६ (८४९३१)
तमन्वगच्छतां तौ च क्षुधितौ श्रमकर्शितौ ।
भार्यापती मुनिश्रेष्ठस्तावेतौ नावलोकयत् ॥ १३-८७-३७ (८४९३२)
तयोस्तु प्रेक्षतोऽरेव भार्गवाणां कुलोद्वहः ।
अन्तर्हितोभूद्राजेन्द्र ततो राजाऽपतत्क्षितौ ॥ १३-८७-३८ (८४९३३)
ततो मुहूर्तादाश्वस्य सह देव्या महामुनेः ।
पुनरन्वेषणे यत्नमकरोत्स महीपतिः ॥ ॥ १३-८७-३९ (८४९३४)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
सप्ताशीतितमोऽध्यायः ॥ ८७ ॥

Mahabharata - Anushaasana Parva - Chapter Footnotes

७-८७-११ अतिथिसेवाधर्म एव सहधर्मः स्त्रीसहितधर्मः ॥
७-८७-३७ मुनिश्रेष्ठो नच तावभ्यवारयदिति ट थ ध पाठः ॥

---

अनुससनपर्व-अध्यय०८८
॥ श्रीः ॥
१३.८८. अध्यायः ८८

अथ दानधर्मपर्व ॥ १ ॥

Mahabharata - Anushaasana Parva - Chapter Topics

पूर्वमन्तर्हितेन घ्यवनेन कुशिकम्प्रति पुनः शयने प्रस्वपत
आत्मनः प्रदर्शनम् ॥ १ ॥
पुनरुत्थितेन मुनिना राजानम्प्रति आत्मनस्तैलाभ्यञ्जननियोजनेन
स्नानशालायां पुनरन्तर्धानम् ॥ २ ॥
पुनराविष्कृतात्मना तेन सभार्यस्य राज्ञो रथधुरि संयोजनपूर्वकं
याचकेभ्यस्तदीयवित्तादिवितरणेन वीथ्यां रथेन निर्गमनम् ॥ ३ ॥
स्वीयप्रतोदताडनेऽप्यविकृतमानसे सभार्ये कुशिके प्रसीदता मुनिना
वरदानेन तस्य स्वगृहप्रेषणम् ॥ ४ ॥

Mahabharata - Anushaasana Parva - Chapter Text

युधिष्ठिर उवाच ।
तस्मिन्नन्तर्हिते विप्रे राजा किमकरोत्तदा ।
भार्या चास्य महाभागा तन्मे ब्रूहि पितामह ॥ १३-८८-१ (८४९३५)
भीष्म उवाच। १३-८८-२क्ष् (७०७२)
अदृष्ट्वा स महीपालस्तमृषिं सह भार्यया ।
परिश्रान्तो निववृते व्रीडितो नष्टचेतनः ॥ १३-८८-२ (८४९३६)
स प्रविश्य पुरीं दीनो नाभ्यभाषत किञ्चन ।
तदेव चिन्तयामास च्यवनस्य विचेष्टितम् ॥ १३-८८-३ (८४९३७)
अथ शून्येन मनसा प्रविवेश गृहं नृपः ।
ददर्श शयने तस्मिञ्शयानं भृगुनन्दनम् ॥ १३-८८-४ (८४९३८)
विस्मितौ तमृषिं दृष्ट्वा तदाश्चर्यं विचिन्त्य च ।
दर्शनात्तस्य तु तदा विश्रान्तौ सम्बभूवतुः ॥ १३-८८-५ (८४९३९)
यथास्थानं ततो गत्वा तत्पादौ संववाहतुः ।
अथापरेण पार्श्वेन सुष्वाप स महामुनिः ॥ १३-८८-६ (८४९४०)
तेनैव च स कालेन प्रत्यबुद्धयत वीर्यवान् ।
न च तौ चक्रतुः किञ्चिद्विकारं भयशङ्कितौ ॥ १३-८८-७ (८४९४१)
प्रतिबुद्धस्तु स मुनिस्तौ प्रोवाच विशाम्पते ।
तैलाभ्यङ्गो दीयतां मे स्नास्येऽहमिति भारत ॥ १३-८८-८ (८४९४२)
तौ तथेति प्रतिश्रुत्य क्षुधितौ श्रमकर्शितौ ।
शतपाकेन तैलेन महार्हेणोपतस्थतुः ॥ १३-८८-९ (८४९४३)
ततः सुखासीनमृषिं वाग्यतौ संववाहतुः ।
न च पर्याप्तमित्याह भार्गवः सुमहातपाः ॥ १३-८८-१० (८४९४४)

यदा तौ निर्विकारौ तु लक्षमायास भार्गवः ।
तत उत्थाय सहसा स्नानशालां विवेश ह ॥ १३-८८-११ (८४९४५)
क्लृप्तमेव तु तत्रासीत्स्नानीयं पार्थिवोचितम् ।
असत्कृत्य च तत्सर्वं तत्रैवान्तरधीयत ॥ १३-८८-१२ (८४९४६)
स मुनिः पुनरेवाथ नृपतेः पश्यतस्तदा ।
नासूयां चक्रतुस्तौ च दम्पती भरतर्षभ ॥ १३-८८-१३ (८४९४७)
अथ स्नातः स भगवान्सिंहासनगतः प्रभुः ।
दर्शयामास कुशिकं सभार्यं कुरुनन्दन ॥ १३-८८-१४ (८४९४८)
संहृष्टवदनो राजा सभार्यः कुशिको मुनिम् ।
सिद्धमन्नमिति प्रह्वो निर्विकारो न्यवेदयत् ॥ १३-८८-१५ (८४९४९)
आनीयतामिति मुनिस्तं चोवाच नराधिपम् ।
स राजा समुपाजह्रे तदन्नं सह भार्यया ॥ १३-८८-१६ (८४९५०)
मांसप्रकारान्विविधाञ्शाकानि विविधानि च ।
लेह्यपिष्टविकारांश्च पानकानि लघूनि च ॥ १३-८८-१७ (८४९५१)
रसालापूपकांश्चित्रान्मोदकानथ षड्रसान् ।
रसान्नानाप्रकारांश्च वन्यं च मुनिभोजनम् ॥ १३-८८-१८ (८४९५२)
फलानि च विचित्राणि राजभोज्यानि भूरिशः ।
बदरेङ्गुदकाश्मर्यभल्लातकफलानि च ॥ १३-८८-१९ (८४९५३)
गृहस्थानां च यद्भोज्यं यच्चापि वनवासिनाम् ।
सर्वमाहारयामास राजा शापभयान्मुनेः ॥ १३-८८-२० (८४९५४)
अथ सर्वमुपन्यस्तमग्रतश्च्यवनस्य तत् ।
ततः सर्वं समानीय तच्च शय्यासनं मुनिः ॥ १३-८८-२१ (८४९५५)
वस्त्रैः शुभैरवच्छाद्य भोजनोपस्करैः सह ।
सर्वमादीपयामास च्यवनो भृगुनन्दनः ॥ १३-८८-२२ (८४९५६)
न च तौ चक्रतुः क्रोधं दम्पती सुमहाव्रतौ ।
तयोः सम्प्रेक्षतोरेव पुनरन्तर्हितोऽभवत् ॥ १३-८८-२३ (८४९५७)
तथैव च स राजर्षिस्तस्थौ तां रजनीं तदा ।
सभार्यो वाग्यतः श्रीमान्न चकोपं समाविशत् ॥ १३-८८-२४ (८४९५८)
नित्यसंस्कृतमन्नं तु विविधं राजवेश्मनि ॥
शयनानि च मुख्यानि परिषेकाश्च पुष्कलाः ॥ १३-८८-२५ (८४९५९)
वस्त्रं च विविधाकारमभवत्समुपार्जितम् ।
न शशाक ततो द्रष्टमन्तरं च्यवनस्तदा ॥ १३-८८-२६ (८४९६०)
पुनरेव च विप्रर्षिः प्रोवाच कुशिकं नृपम् ।
सभार्यो मां रथेनाशु वह यत्र ब्रवीम्यहम् ॥ १३-८८-२७ (८४९६१)
तथेति च प्राह नृपो निर्विशङ्कस्तपोधनम् ।
क्रीडारथोस्तु भगवन्नुत साङ्ग्रामिको रथः ॥ १३-८८-२८ (८४९६२)

इत्युक्तः स मुनी राज्ञा तेन हृष्टेन तद्वचः ।
च्यवनः प्रत्युवाचेदं हृष्टः परपुरंजयम् ॥ १३-८८-२९ (८४९६३)
सज्जीकुरु रथं क्षिप्रं यस्ते साङ्ग्रामिको मतः ।
सायुधः सपताकश्च शक्तीकनकयष्टिमान् ॥ १३-८८-३० (८४९६४)
किंकिणीस्वननिर्घोषो युक्तस्तोरणकल्पनैः ।
गदास्वङ्गनिबद्धश्च परमेषुशतान्वितः ॥ १३-८८-३१ (८४९६५)
ततः स तं तथेत्युक्त्वा कल्पयित्वा महारथम् ।
भार्यां वामे धुरि तदा चात्मानं दक्षिणे तथा ॥ १३-८८-३२ (८४९६६)
त्रिदण्डं वज्रसूच्यग्रं प्रतोदं तत्र चादधत् ।
सर्वमेतत्तथा दत्त्वा नृपो वाक्यमऽथाब्रवीत् ॥ १३-८८-३३ (८४९६७)
भगवन्क्व रथो यातु ब्रवीतु भृगुनन्दन ।
यत्र वक्ष्यसि विप्रर्षे तत्र यास्यति ते रथः ॥ १३-८८-३४ (८४९६८)
एवमुक्तस्तु भगवान्प्रत्युवाचाथ तं नृपम् ।
इतः प्रभृति यातव्यं पदकम्पदकं शनैः ॥ १३-८८-३५ (८४९६९)
श्रमो मम यथा न स्यात्तथा मच्छन्दचारिणौ ।
सुसुखं चैव वोढव्यो जनः सर्वश्च पश्यतु ॥ १३-८८-३६ (८४९७०)
नोत्सार्याः पथिकाः केचित्तेभ्योदास्ये वसु ह्यहम् ।
ब्राह्मणेभ्यश्च ये कामानर्थयिष्यन्तिमां पथि ॥ १३-८८-३७ (८४९७१)
सर्वान्दास्याम्यशेषेण धनं रत्नानि चैव हि ।
क्रियतां निखिलेनैतन्मा विचारय पार्थिव ॥ १३-८८-३८ (८४९७२)
तस्य तद्वचनं श्रुत्वा राजा भृत्यांस्तथाऽब्रवीत् ।
यद्यद्ब्रूयान्मुनिस्तत्तत्सर्वं देयमशङ्कितैः ॥ १३-८८-३९ (८४९७३)
ततो रत्नान्यनेकानि स्त्रियो युग्यमजाविकम् ।
कृताकृतं च कनकं गजेन्द्राश्चाचलोपमाः ॥ १३-८८-४० (८४९७४)
अन्वगच्छन्त तमृषिं राजामात्याश्च सर्वशः ।
हाहाभूतं च तत्सर्वमासीन्नगरमार्तवत् ॥ १३-८८-४१ (८४९७५)
तौ तीक्ष्णाग्रेण सहसा प्रतोदेन प्रतोदितौ ।
पृष्ठे विद्धौ कटे चैव निर्विकारौ तमूहतुः ॥ १३-८८-४२ (८४९७६)
वेपमानौ निराहारौ पञ्चाशद्रात्रकर्शितौ ।
कथंचिदूहतुर्धैर्याद्दम्पती तं रथोत्तमम् ॥ १३-८८-४३ (८४९७७)
बहुशो भृशविद्धौ तौ क्षरमाणौ क्षतोद्भवम् ।
ददृशाते महाराज पुष्पिताविव किंशुकौ ॥ १३-८८-४४ (८४९७८)
तौ दृष्ट्वा पौरवर्गस्तु भृशं शोकसमाकुलः ।
अभिशापभयत्रस्तो न तं किञ्चिदुवाच ह ॥ १३-८८-४५ (८४९७९)
द्वन्द्वशश्चाब्रुवन्सर्वे पश्यध्वं तपसो बलम् ।
क्रुद्धा अपि मुनिश्रेष्ठं वीक्षितुं नेह शक्नुमः ॥ १३-८८-४६ (८४९८०)

अहो भगवतो वीर्यं महर्षेर्भावितात्मनः ।
राज्ञश्चापि सभार्यस्य धैर्यं पश्यत यादृशम् ॥ १३-८८-४७ (८४९८१)
श्रान्तावपि हि कच्छ्रेण रथमेनं समूहतुः ।
न चैतयोर्विकारं वै ददर्श भृगुनन्दनः ॥ १३-८८-४८ (८४९८२)
भीष्म उवाच। १३-८८-४९क्ष् (७०७३)
ततः स निर्विकारौ तु दृष्ट्वा भृगुकुलोद्वहः ।
वसु विश्राणयामास यथा वैश्रवणस्तथा ॥ १३-८८-४९ (८४९८३)
तत्रापि राजा प्रीतात्मा यथादिष्टमथाकरोत् ।
ततोऽस्य भगवान्प्रीतो बभूव मुनिसत्तमः ॥ १३-८८-५० (८४९८४)
अवतीर्य रथश्रेष्ठाद्दम्पती तौ मुमोच ह ।
विमोच्य चैतौ विधिवत्ततो वाक्यमुवाच ह ॥ १३-८८-५१ (८४९८५)
स्निग्धगम्भीरया वाचा भार्गवः सुप्रसन्नया ।
ददामि वां वरं श्रेष्ठं तं ब्रूतामिति भारत ॥ १३-८८-५२ (८४९८६)
सुकुमारौ च तौ विद्धौ कराभ्यां मुनिसत्तमः ।
पस्पर्शामृतकल्पाभ्यां स्नेहाद्भरतसतम ॥ १३-८८-५३ (८४९८७)
अथाब्रवीन्नृपो वाक्यं श्रमो नास्त्यावयोरिह ।
विश्रान्तौ स्वः प्रभावात्ते ध्यानेनैवेह भार्गव ॥ १३-८८-५४ (८४९८८)
अथ तौ भगवान्प्राह प्रहृष्टश्च्यवनस्तदा ।
न वृथा व्याहृतं पूर्वं यन्मया तद्भविष्यति ॥ १३-८८-५५ (८४९८९)
रमणीयः समुद्देशो गङ्गातीरमिदं शुभम् ।
किञ्चित्कालं व्रतपरो निवत्स्यामीह पार्थिव ॥ १३-८८-५६ (८४९९०)
गम्यतां स्वपुरं पुत्र विश्रान्तः पुनरेष्यसि ।
इहस्थं मां सभार्यस्त्वं द्रष्टासि श्वो नराधिप ॥ १३-८८-५७ (८४९९१)
न च मन्युस्त्वया कार्यः श्रेयस्त्वां समुपस्थितम् ।
यत्काङ्क्षितं हृदिस्थं ते तत्सर्वं हि भविष्यति ॥ १३-८८-५८ (८४९९२)
इत्येवमुक्तः कुशिकः प्रहृष्टेनान्तरात्मना ।
प्रोवाच मुनिशार्दूलमिदं वचनमर्थवत् ॥ १३-८८-५९ (८४९९३)
न मे मन्युर्महाभाग पूतौ स्वो भगवंस्त्वया ।
संवृतौ यौवनस्थौ स्वो वपुष्मन्तौ बलान्वितौ ॥ १३-८८-६० (८४९९४)
प्रतोदेन व्रणा ये मे सभार्यस्य त्वया कृताः ।
तान्न पश्यामि गात्रेषु स्वस्थोस्मि सह भार्यया ॥ १३-८८-६१ (८४९९५)
इमां च देवीं पश्यामि वपुषाऽप्सरसोपमाम् ।
श्रिया परमया युक्ता तथा दृष्टा पुरा मया ॥ १३-८८-६२ (८४९९६)
तव प्रसादसंवृत्तमिदं सर्वं महामुने ।
नैतच्चित्रं तु भगवंस्त्वयि सत्यपराक्रम ॥ १३-८८-६३ (८४९९७)
इत्युक्तः प्रत्युवाचैनं कुशिकं च्यवनस्तदा ।

आगच्छेथाः सभार्यश्च त्वमिहेति नराधिप ॥१३-८८-६४ (८४९९८)
इत्युक्तः समनुज्ञातो राजर्षिरभिवाद्य तम् ।
प्रययौ वपुषा युक्तो नगरं देवराजवत् ॥१३-८८-६५ (८४९९९)
तत एनमुपाजग्मुरमात्याः सपुरोहिताः ।
बलस्था गणिकायुक्ताः सर्वाः प्रकृतयस्तथा ॥१३-८८-६६ (८५०००)
तैर्वृतः कुशिको राजा श्रिया परमया ज्वलन् ।
प्रविवेश पुरं हृष्टः पूज्यमानोऽथ बन्दिभिः ॥१३-८८-६७ (८५००१)
ततः प्रविश्य नगरं कृत्वा पौर्वाह्णिकीः क्रियाः ।
भुक्त्वा सभार्यो रजनीमुवास स महाद्युतिः ॥१३-८८-६८ (८५००२)
ततस्तु तौ नवमभिवीक्ष्य यौवनं
परस्परं विगतजराविवामरौ ।
ननन्दतुः शयनगतौ वपुर्धरौ
श्रिया युतौ द्विजवरदत्तया तदा ॥ १३-८८-६९ (८५००३)
अथाप्युषिर्भृगुकुलकीर्तिवर्धन-
स्तपोधनो वनमभिराममृद्धिमत् ।
मनीषया बहुविधरत्नभूषितं
ससर्ज यन्न पुरि शतक्रतोरपि ॥ ॥ १३-८८-७० (८५००४)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
अष्टाशीष्टितमोऽध्यायः ॥८८ ॥

---

अनुससनपर्व-अध्यय०८९
॥श्रीः ॥
१३.८९. अध्यायः ८९

अथ दानधर्मपर्व ॥१ ॥
Mahabharata - Anushaasana Parva - Chapter Topics
परेद्युः प्रभाते सभार्येण कुशिकेन च्यवनावलोकनाय वनप्रवेशः ॥१ ॥
च्यवनेन कुशिकम्प्रति
स्वयोगप्रभावसृष्टस्वर्गप्रदर्शनपूर्वकमभिमतवरवरणप्रेरणा
॥२ ॥

Mahabharata - Anushaasana Parva - Chapter Text

भीष्म उवाच ।
ततः स राजा रात्र्यन्ते प्रतिबुद्धो महामनाः ।

कृतपूर्वाह्णिकः प्रायात्सभार्यस्तद्वनं प्रति ॥ १३-८९-१ (८५००५)
ततो ददर्श नृपतिः प्रासादं सर्वकाञ्चनम् ।
मणिस्तम्भसहस्राढ्यं गन्धर्वनगरोपमम् ।
तत्र दिव्यानभिप्रायान्ददर्श कुशिकस्तदा ॥ १३-८९-२ (८५००६)
पर्वतान्रूप्यसानूंश्च नलिनीश्च सपङ्कजाः ।
चित्रशालाश्च विविधास्तोरणानि च भारत ।
शाद्वलोपचितां भूमिं तथा काञ्चनकुट्टिमाम् ॥ १३-८९-३ (८५००७)
सहकारान्प्रफुल्लांश्च केतकोद्दालकान्वरान् ।
अशोकान्सहकुन्दांश्च फुल्लांश्चैवातिमुक्तकान् ॥ १३-८९-४ (८५००८)
चम्पकांस्तिलकान्भव्यान्पनसान्वञ्जुलानपि ।
पुष्पितान्कर्णिकारांश्च तत्रतत्र ददर्श ह ॥ १३-८९-५ (८५००९)
श्यामान्वारणपुष्पांश्च तथाऽष्टपदिका लताः ।
तत्रतत्र परिक्लृप्ता ददर्श स महीपतिः ॥ १३-८९-६ (८५०१०)
रम्यान्पद्मोत्पलधरान्सर्वर्तुकुसुमांस्तथा ।
विमानप्रतिमांश्चापि प्रासादाञ्शैलसन्निभान् ॥ १३-८९-७ (८५०११)
शीतलानि च तोयानि क्वचिदुष्णानि भारत ।
आसनानि विचित्राणि शयनप्रवराणि च ॥ १३-८९-८ (८५०१२)
पर्यङ्कान्रत्नसौवर्णान्परार्ध्यास्तरणास्तृतान् ।
भक्ष्यं भोज्यमनन्तं च तत्रतत्रोपकल्पितम् ॥ १३-८९-९ (८५०१३)
वाणीवादाञ्छुकांश्चैव शारिका भृङ्गराजकान् ।
कोकिलाञ्छतपत्रांश्च सकोयष्टिककुक्कुभान् ॥ १३-८९-१० (८५०१४)
मयूरान्कुक्कुटांश्चापि दात्यूहाञ्जीवजीवकान् ।
चकोरान्वानरान्हंसान्सारसांश्चक्रसाह्वयान् ॥ १३-८९-११ (८५०१५)
समन्ततः प्रणदतो ददर्श सुमनोहरान् ।
क्वचिदप्सरसां सङ्घान्गन्धर्वाणां च पार्थिव ॥ १३-८९-१२ (८५०१६)
कान्ताभिरपरांस्तत्र परिष्वक्तान्ददर्श ह ।
न ददर्श च तान्भूयो ददर्श च पुनर्नृपः ॥ १३-८९-१३ (८५०१७)
गीतध्वनिं सुमधुरं तथैवाध्ययनध्वनिम् ।
हंसानसुमधुरांश्चापि तत्र शुश्राव पार्थिवः ॥ १३-८९-१४ (८५०१८)
तं दृष्ट्वाऽत्यद्भुतं राजा मनसाऽचिन्तयत्तदा ।
स्वप्नोऽयं चित्तविभ्रंश उताहो सत्यमेव तु ॥ १३-८९-१५ (८५०१९)
अहो सह शरीरेण प्राप्तोस्मि परमां गतिम् ।
उत्तरान्वा कुरून्पुण्यानथवाऽप्यमरावतीम् ॥ १३-८९-१६ (८५०२०)
किञ्चेदं महदाश्चर्यं सम्पश्यामीत्यचिन्तयत् ।
एवं सञ्चिन्तयन्नेव ददर्श मुनिपुङ्गवम् ॥ १३-८९-१७ (८५०२१)
तस्मिन्विमाने सौवर्णे मणिस्तम्भसमाकुले ।

महार्हे शयने दिव्ये शयानं भृगुनन्दनम् ॥१३-८९-१८ (८५०२२)
तमभ्ययात्प्रहर्षेण नरेन्द्रः सह भार्यया ।
अन्तर्हितस्ततो भूयश्च्यवनः शयनं व तत् ॥१३-८९-१९ (८५०२३)
ततोऽन्यस्मिन्वनोद्देशे पुनरेव ददर्श तम् ।
कौश्यां बृस्यां समासीनं जपमानं महाव्रतम् ॥१३-८९-२० (८५०२४)
एवं योगबलाद्विप्रो मोहयामास पार्थिवम् ॥ १३-८९-२१ (८५०२५)
क्षणेन तद्वनं चैव ते चैवाप्सरसां गणाः ।
गन्धर्वाः पादपाश्चैव सर्वमन्तरधीयत ॥१३-८९-२२ (८५०२६)
निःशब्दमभवच्चापि गङ्गाकूलं पुनर्नृप ।
कुशवल्मीकभूयिष्ठं बभूव च यथा पुरा ॥१३-८९-२३ (८५०२७)
ततः स राजा कुशिकः सभार्यस्तेन कर्मणा ।
विस्मयं परमं प्राप्तस्तद्दृष्ट्वा महदद्भुतम् ॥१३-८९-२४ (८५०२८)
ततः प्रोवाच कुशिको भार्यां हर्षसमन्वितः ।
पश्य भद्रे यथाभावाश्चित्रा दृष्टाः सुदुर्लभाः ।
प्रसादाद्भृगुमुख्यस्य किमन्यत्र तपोबलात् ॥ १३-८९-२५ (८५०२९)
तपसा तदवाप्यं हि यन्न शक्यं मनोरथैः ।
त्रैलोक्यराज्यादपि हि तप एव विशिष्यते ॥१३-८९-२६ (८५०३०)
तपसा हि सुतप्तेनि क्रीडत्येष तपोधनः ।
अहो प्रभावो ब्रह्मर्षेश्च्यवनस्य महात्मनः ॥१३-८९-२७ (८५०३१)
इच्छयैष तपोवीर्यादन्याँल्लोकान्सृजेदपि ।
ब्राह्मणा एव जायेरन्पुण्यवाग्बुद्धिकर्मणा ॥१३-८९-२८ (८५०३२)
उत्सहेदिह कृत्वैव कोऽन्यो वै च्यवनादृते ।
ब्राह्मण्यं दुर्लभं लोके राज्यं हि सुलभं नरैः ॥१३-८९-२९ (८५०३३)
ब्राह्मण्यस्य प्रभावाद्धि रथे युक्तौ स्वधुर्यवत् ।
इत्येवं चिन्तयानः स विदितश्च्यवनस्य वै ॥१३-८९-३० (८५०३४)
सम्प्रेक्ष्योवाच नृपतिं क्षिप्रमागम्यतामिति ।
इत्युक्तः सहभार्यस्तु सोभ्यगच्छन्महामुनिम् ॥१३-८९-३१ (८५०३५)
शिरसा वन्दनीयं तमवन्दत च पार्थिवः ।
तस्याशिषः प्रयुज्याथ स मुनिस्तं नराधिपम् ।
निषीदेत्यब्रवीद्धीमान्सान्त्वयन्पुरुषर्षभः ॥ १३-८९-३२ (८५०३६)
ततः प्रकृतिमापन्नो भार्गवो नृपते नृपम् ।
उवाच श्लक्ष्णया वाचा तर्पयन्निव भारत ॥१३-८९-३३ (८५०३७)
राजन्सम्यग्जितानीह पञ्चपञ्च स्वयं त्वया ।
मनःषष्ठानीन्द्रियाणि कृच्छ्रान्मुक्तोसि तेन वै ॥१३-८९-३४ (८५०३८)
सम्यगाराधितः पुत्र त्वयाऽहं वदतांवर ।
न हि ते वृजितं किञ्चित्सुसूक्ष्ममपि दृश्यते ॥१३-८९-३५ (८५०३९)

अनुजानीहि मां राजन्गमिष्यामि यथागतम् ।
प्रीतोस्मि तव राजेन्द्र वरश्च प्रतिगृह्यताम् ॥ १३-८९-३६ (८५०४०)
कुशिक उवाच। १३-८९-३७क्ष् (७०७४)
अग्निमध्ये गतेनेव भगवन्सन्निधौ मया ।
वर्तितं भृगुशार्दूल यन्न दग्धोस्मि तद्वहु ॥ १३-८९-३७ (८५०४१)
एष एव वरो मुख्यः प्राप्तो मे भृगुनन्दन ।
यत्प्रीतोसि ममाचारैः कुलं त्रातं च मेऽनघ ॥ १३-८९-३८ (८५०४२)
एथ मेऽन्द्रग्रहो विप्र जीविते च प्रयोजनम् ।
एतद्राज्यफलं चैव तपसश्च फलं मम ॥ १३-८९-३९ (८५०४३)
यदि त्वं प्रीतिमान्विप्र मयि वै भृगुनन्दन ।
अस्ति मे संशयः कश्चित्तन्मे व्याख्यातुमर्हसि ॥ ॥ १३-८९-४० (८५०४४)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
एकोननवतितमोऽध्यायः ॥ ८९.।
Mahabharata - Anushaasana Parva - Chapter Footnotes

७-८९-२९ उत्साहमिह कृत्वेदं कोऽन्यो वै च्यवनादृते ।ब्राह्मण्यं
दुर्लभं लोके तल्लब्ध्वा दुर्लभं तपः। सिद्धिस्तत्रापि दुष्प्रापा
सिद्धेरपि परा गतिः इति ध.पाठः ॥

---

अनुससनपर्व-अध्यय०९०
॥ श्रीः ॥
१३.९०. अध्यायः ९०

अथ दानधर्मपर्व ॥ १ ॥
Mahabharata - Anushaasana Parva - Chapter Topics
च्यवनेन कुशिकम्प्रति स्वस्य तद्गृहे निवासादेः कारणकथनम् ॥ १ ॥
तथा तस्य ब्राह्मण्यप्राप्तीच्छावगमेन तत्पौत्रादेस्तल्लाभवरदानम् ॥ २ ॥

Mahabharata - Anushaasana Parva - Chapter Text

च्यवन उवाच ।
वरश्च गृह्यतां मत्तो यश्च ते संशयो हृदि ।
तं प्रब्रूदि नरश्रेष्ठ सर्वं सम्पादयामि ते ॥ १३-९०-१ (८५०४५)
कुशिक उवाच। १३-९०-२क्ष् (७०७५)
यदि प्रीतोसि भगवंस्ततो मे वद भार्गव ।

कारणं श्रोतुमिच्छामि मद्गृहे वासकारितम् ॥ १३-९०-२ (८५०४६)
शयनं चैकपार्श्वेन दिवसानेकविंशतिम् ।
न किञ्चिदुक्त्वा गमनं बहिश्च मुनिपुङ्गवः ॥ १३-९०-३ (८५०४७)
अन्तर्धानमकस्माच्च पुनरेव च दर्शनम् ।
पुनश्च शयनं विप्र दिवसानेकविंशतिम् ॥ १३-९०-४ (८५०४८)
तैलाभ्यक्तस्य गमनं भोजनं च गृहे मम ।
समुपानीय विविधं यद्दग्धं जातवेदसा ॥ १३-९०-५ (८५०४९)
निर्याणं च रथेनाशु सहसा यत्कृतं त्वया ।
धनानां च विसर्गश्च वनस्यापि च दर्शनम् ॥ १३-९०-६ (८५०५०)
प्रासादानां बहूनां च काञ्चनानां महामुने ।
मणिविद्रुमपादानां पर्यङ्काणां च दर्शनम् ॥ १३-९०-७ (८५०५१)
पुनश्चादर्शनं तस्य श्रोतुमिच्छामि कारणम् ।
अतीव ह्यत्र मुह्यामि चिन्तयानो भृगूद्वह ॥ १३-९०-८ (८५०५२)
न चैवात्राधिगच्छामि सर्वस्यास्य विनिश्चयम् ।
एतदिच्छामि कात्स्न्येंन सत्यं श्रोतुं तपोधन ॥ १३-९०-९ (८५०५३)
च्यवन उवाच। १३-९०-१०क्ष् (७०७६)
शृणु सर्वमशेषेण यदिदं येन हेतुना ।
न हि शक्यमनाख्यातुमेवं पृष्टेन पार्थिव ॥ १३-९०-१० (८५०५४)
पितामहस्य वदतः पुरा देवसमागमे ।
श्रुतवानस्मि यद्राजंस्तन्मे निगदतः शृणु। १३-९०-११ (८५०५५)
ब्रह्मक्षत्रविरोधेन भविता कुलसङ्करः ।
पौत्रस्ते भविता राजंस्तेजोवीर्यसमन्वितः ॥ १३-९०-१२ (८५०५६)
ततः स्वकुलरक्षार्थमहं त्वां समुपागतः ।
चिकीर्षन्कुशिकोच्छेदं संदिधक्षुः कुलं तव ॥ १३-९०-१३ (८५०५७)
ततोऽहमागम्य पुरे त्वामवोचं महीपते ।
नियमं कञ्चिदारप्स्ये शुश्रूषा क्रियतामिति ॥ १३-९०-१४ (८५०५८)
न च ते दुष्कृतं किञ्चिदहमासादयं गृहे ।
तेन जीवसि राजर्षे न भवेथास्त्वमन्यथा ॥ १३-९०-१५ (८५०५९)
एवं बुद्धिं समास्थाय दिवसानेकविंशतिम् ।
सुप्तोस्मि यदि मां कश्चिद्बोधयेदिति पार्थिव ॥ १३-९०-१६ (८५०६०)
यदा त्वया सभार्येण संसुप्तो न प्रबोधितः ।
अहं तदैव ते प्रीतो मनसा राजसत्तम ॥ १३-९०-१७ (८५०६१)
उत्थाय चास्मि निष्क्रान्तो यदि मां त्वं महीपते ।
पृच्छेः क्व यास्यसीत्येवं शपेयं त्वामिति प्रभो ॥ १३-९०-१८ (८५०६२)
अन्तर्हितः पुनश्चास्मि पुनरेव च ते गृहे ।
योगमास्थाय संसुप्तो दिवसानेकविंशतिम् ॥ १३-९०-१९ (८५०६३)

क्षुधितौ मामसूयेथां श्रमाद्वेति नराधिप ।
एतां बुद्धिं समास्थाय कर्शितौ वां क्षुधा मया ॥ १३-९०-२० (८५०६४)
न च तेऽभूत्सुसूक्ष्मोपि मन्युर्मनसि पार्थिव ।
सभार्यस्य नरश्रेष्ठ तेन ते प्रीतिमानहम् ॥ १३-९०-२१ (८५०६५)
भोजनं च समानाय्य यत्तदादीपितं मया ।
क्रुध्येथा यदि मात्सर्यादिति तन्मर्षितं च मे ॥ १३-९०-२२ (८५०६६)
ततोऽहं रथमारुह्य त्वामवोचं नराधिप ।
सभार्यो मां वहस्वेति तच्च त्वं कृतवांस्तथा ॥ १३-९०-२३ (८५०६७)
अविशङ्को नरपते प्रीतोऽहं चापि तेन ह ।
धनोत्सर्गेऽपि च कृते न त्वां क्रोधोप्यधर्षयत् ॥ १३-९०-२४ (८५०६८)
ततः प्रीतेन ते राजन्पुनरेतत्कृतं तव ।
सभार्यस्य वनं भूयस्तद्विद्धि मनुजाधिप ॥ १३-९०-२५ (८५०६९)
प्रीत्यर्थं तव चैतन्मे स्वर्गसंदर्शनं कृतम् ।
यत्ते वनेऽस्मिन्नृपते दृष्टं दिव्यं सुदर्शनम् ॥ १३-९०-२६ (८५०७०)
स्वर्गोद्देशस्त्वया राजन्सशरीरेण पार्थिव ।
मुहूर्तमनुभूतोऽसौ सभार्येण नृपोत्तम ॥ १३-९०-२७ (८५०७१)
निदर्शनार्थं तपसो धर्मस्य च नराधिप ।
तत्र नासीत्स्पृहा राजंस्तच्चापि विदितं मया ॥ १३-९०-२८ (८५०७२)
ब्राह्मण्यं काङ्क्षसे हि त्वं तपश्च पृथिवीपते ।
अवमत्य नरेन्द्रत्वं देवेन्द्रत्वं च पार्थिव ॥ १३-९०-२९ (८५०७३)
एवमेतद्यथातत्वं ब्राह्मण्यं तात दुर्लभम् ।
ब्राह्मण्ये सति चर्षित्वमृषित्वे च तपस्विता ॥ १३-९०-३० (८५०७४)
भविष्यत्येष ते कामः कुशिकात्कौशिको द्विजः ॥ १३-९०-३१ (८५०७५)
तृतीयं पुरुषं प्राप्य ब्राह्मणत्वं गमिष्यति ।
वंशस्ते पार्थिवश्रेष्ठ भृगूणामेव तेजसा ॥ १३-९०-३२ (८५०७६)
पौत्रस्ते भविता विप्रस्तपस्वी पावकद्युतिः ।
ग्जमदग्नौ महाभाग तपसा भावितात्मनि ॥' १३-९०-३३ (८५०७७)
यः स देवमनुष्याणआं भयमुत्पादयिष्यति ।
त्रयाणामेव लोकानां सत्यमेतद्ब्रवीमि ते ॥ १३-९०-३४ (८५०७८)
वरं गृहाण राजर्षे यस्ते मनसि वर्तते ।
तीर्थयात्रां गमिष्यामि पुरा कालोऽतिवर्तते ॥ १३-९०-३५ (८५०७९)
कुशिक उवाच। १३-९०-३६क्ष् (७०७७)
एष एव वरो मेऽद्य यत्त्वं प्रीतो महामुने ।
भवत्वेतद्यथार्थत्वं भवेत्पौत्रो ममानघ ॥ १३-९०-३६ (८५०८०)
ब्राह्मण्यं मे कुलस्यास्तु भगवन्नेष मे वरः ।
पुनश्चाख्यातुमिच्छामि भगवन्विस्तरेण वै ॥ १३-९०-३७ (८५०८१)

कथमेष्यति विप्रत्वं कुलं मे भृगुनन्दन ।
कश्चासौ भविता बन्धुर्मम कश्चापि सम्मतः ॥ ॥१३-९०-३८ (८५०८२)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
नवतितमोऽध्यायः ॥ ९० ॥

---

अनुससनपर्व-अध्यय०९१
॥ श्रीः ॥
१३.९१. अध्यायः ९१

अथ दानधर्मपर्व ॥ १ ॥
Mahabharata - Anushaasana Parva - Chapter Topics
च्यवनेन कुशिकम्प्रति स्वकुले जनिष्यत ऋचीकस्यानुभावेन
तद्भार्याश्वश्र्वो कुशिकपौत्रस्य गाधेः पुत्रीपत्र्योः क्रमेण
पौत्रपुत्रभावेन परशुरामविश्वामित्रयोर्जन्मकथनम् ॥ १ ॥

Mahabharata - Anushaasana Parva - Chapter Text

च्यवन उवाच ।
अवश्यं कथनीयं मे तवैतन्नरपुङ्गव ।
यदर्थं त्वाहमुच्छेत्तुं सम्प्राप्तो मनुजाधिप ॥ १३-९१-१ (८५०८३)
भृगूणां क्षत्रिया याज्या नित्यमेतज्जनाधिप ।
ते च भेदं गमिष्यन्ति दैवयुक्तेन हेतुना ॥ १३-९१-२ (८५०८४)
क्षत्रियाश्च भृगून्सर्वान्वधिष्यन्ति नराधिप ।
आगर्भादनुकृन्तन्तो दैतदण्डनिपीडिताः ॥ १३-९१-३ (८५०८५)
तत उत्पत्स्यतेऽस्माकं कुले गोत्रविवर्धनः ।
और्वो नाम महातेजा ज्वलितार्कसमद्युतिः ॥ १३-९१-४ (८५०८६)
स त्रैलोक्यविनाशाय कोपाग्निं जनयिष्यति ।
महीं सपर्वतवनां यः करिष्यति भस्मसात्। १३-९१-५ (८५०८७)
कञ्चित्कालं तु वह्निं च स एव शमयिष्यति ।
समुद्रे वडवावक्त्रे प्रक्षिप्य मुनिसत्तमः। १३-९१-६ (८५०८८)
पुत्रं तस्य महाराज ऋचीकं भृगुनन्दनम् ।
साक्षात्कृत्स्नो धनुर्वेदः समुपस्थास्यतेऽनघ ॥ १३-९१-७ (८५०८९)
क्षत्रियाणामभावाय दैवयुक्तेनु हेतुना ।
स तु तं प्रतिगृह्यैव पुत्रे संक्रामयिष्यति ॥ १३-९१-८ (८५०९०)
जमदग्नौ महाभागे तपसा भावितात्मनि ।

स चापि भृगुशार्दूलस्तं वेदं धारयिष्यति ॥ १३-९१-९ (८५०९१)
कुलात्तु तव धर्मात्मन्कन्यां सोऽधिगमिष्यति ।
उद्भावनार्थं भवतो वंशस्य भरतर्षभ ॥ १३-९१-१० (८५०९२)
ग्क्षत्रहन्ता भवेद्धिंस्र इति दैवं सनातनम् ।
नारायणमुपास्यास्य वरात्तं पुत्रमृच्छति ॥' १३-९१-११ (८५०९३)
गाधेर्दुहितरं प्राप्यि पौत्रीं तव महातपाः ।
ब्राह्मणं क्षत्रधर्माणं पुत्रमुत्पादयिष्यति ॥ १३-९१-१२ (८५०९४)
क्षत्रियं विप्रधर्माणं बृहस्पतिमिवौजसा ।
विश्वामित्रं तव कुले गाधेः पुत्रं सुधार्मिकम् ।
तपसा महता युक्तं प्रदास्यति महाद्युते ॥ १३-९१-१३ (८५०९५)
स्त्रियौ तु कारणं तत्र परिवर्ते भविष्यतः ।
पितामहनियोगाद्वै नान्यथैतद्भविष्यति ॥ १३-९१-१४ (८५०९६)
तृतीये पुरुषे तुभ्यं ब्राह्मणत्वमुपैष्यति ।
भविता त्वं च सम्बन्धी भृगूणां भावितात्मनाम् ॥ १३-९१-१५ (८५०९७)
भीष्म उवाच। १३-९१-१६क्ष् (७०७८)
कुशिकस्तु मुनेर्वाक्यं च्यवनस्य महात्मनः ।
श्रुत्वा हृष्टोऽभवद्राजा वाक्यं चेदमुवाच ह ।
एवमस्त्विति धर्मात्मा तदा भरतसत्तम ॥ १३-९१-१६ (८५०९८)
च्यवनस्तु महातेजाः पुनरेव नराधिपम् ।
वरार्थं चोदयामास तमुवाच स पार्थिवः ॥ १३-९१-१७ (८५०९९)
बाढमेवं ग्रहीष्यामि कामांस्त्वत्तो महामुने ।
ब्रह्मभूतं कुलं मेऽस्तु धर्मे चास्य मनो भवेत् ॥ १३-९१-१८ (८५१००)
एवमुक्तस्तथेत्येवं प्रत्युक्त्वा च्यवनो मुनिः ।
अभ्यनुज्ञाय नृपतिं तीर्थयात्रां ययौ तदा ॥ १३-९१-१९ (८५१०१)
एतत्ते कथितं सर्वमशेषेण मया नृप ।
भृगूणां कुशिकानां च अभिसम्बन्धकारणम् ॥ १३-९१-२० (८५१०२)
यथोक्तमृषिणा चापि तदा तदभवन्नृप ।
जन्म रामस्य च मुनेर्विश्वामित्रस्य चैव हि ॥ ॥ १३-९१-२१ (८५१०३)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
एकनवतितमोऽध्यायः ॥ ९१ ॥



७-९१-१५ तुभ्यं तव । ब्राह्मणत्वं कर्तृ ॥

---

अनुससनपर्व-अध्यय०९२

॥ श्रीः ॥
१३.९२. अध्यायः ९२

अथ दानधर्मपर्व ॥ १ ॥
Mahabharata - Anushaasana Parva - Chapter Topics
भीष्मेण युधिष्ठिरम्प्रति तत्तद्दानानां विशिष्यफलकथनम् ॥ १ ॥

Mahabharata - Anushaasana Parva - Chapter Text

युधिष्ठिर उवाच ।
मुह्यामीति निशम्याद्य चिन्तयानः पुनःपुनः ।
हीनां पार्थिवसिंहैस्तैः श्रीमद्भिः पृथिवीमिमाम् ॥ १३-९२-१ (८५१०४)
प्राप्य राज्यानि शतशो महीं जित्वाऽपि भारत ।
कोटिशः पुरुषान्हत्वा परितप्ये पितामह ॥ १३-९२-२ (८५१०५)
का नु तासां वरस्त्रीणामवस्थाऽद्य भविष्यति ।
या हीनाः पतिभिः पुत्रैर्मातुलैर्भ्रातृभिस्तथा ॥ १३-९२-३ (८५१०६)
वयं हि तान्कुरुन्हत्वा ज्ञातींश्च सुहृदोऽपि च ।
अवाक्शीर्षाः पतिष्यामो नरके नात्र संशयः ॥ १३-९२-४ (८५१०७)
शरीरं योक्तुमिच्छामि तपसोग्रेण भारत ।
उपदिष्टमिहेच्छामि तत्त्वतोऽहं विशाम्पते ॥ १३-९२-५ (८५१०८)
वैशम्पायन उवाच। १३-९२-६क्ष् (७०७९)
युधिष्ठिरस्य तद्वाक्यं श्रुत्वा भीष्मो महामनाः ।
परीक्ष्य निपुणं बुद्ध्या युधिष्ठिरमभाषत ॥ १३-९२-६ (८५१०९)
रहस्यमद्भुतं चैव शृणु वक्ष्यामि भारत ।
या गतिः प्राप्यते वेन प्रेत्यभावे विशाम्पते ॥ १३-९२-७ (८५११०)
तपसा प्राप्यते स्वर्गस्तपसा प्राप्यते यशः ।
आयुःप्रकर्षो भोगाश्च लभ्यन्ते तपसा विभो ॥ १३-९२-८ (८५१११)
ज्ञानं विज्ञानमारोग्यं रूपं सम्पत्तथैव च ।
सौभाग्यं चैव तपसा प्राप्यते भरतर्षभ ॥ १३-९२-९ (८५११२)
धं प्राप्नोति तपसा मौनं ज्ञानं प्रयच्छति ।
उपभोगांस्तु दानेन ब्रह्मचर्येण जीवितम् ॥ १३-९२-१० (८५११३)
अहिंसायाः फलं रूपं दीक्षाया जन्म वै कुले ।
फलमूलाशनाद्राज्यं स्वर्गः पर्णशनाद्भवेत् ॥ १३-९२-११ (८५११४)
पयोभक्षो दिवं याति दानेन द्रविणाधिकः ।
गुरुशुश्रूषया विद्या नित्यश्राद्धेन सन्ततिः ॥ १३-९२-१२ (८५११५)
गवाढ्यः शाकदीक्षाभिः स्वर्गमाहुस्तृणाशनात् ।

स्त्रियस्त्रिषवण्सनानाद्वायुं पीत्वा क्रतुं लभेत् ॥१३-९२-१३ (८५११६)
नित्यस्नायी दीर्घजीवी सन्ध्ये तु द्वे जपन्द्विजः ।
मन्त्रं साधयतो राजन्नाकपृष्ठमनाशने ॥१३-९२-१४ (८५११७)
स्थण्डिलेषु शयानानां गृहाणि शयनानि च ।
चीरवल्कलवासोभिर्वासांस्याभाणानि च ॥१३-९२-१५ (८५११८)
शय्यासनानि यानानि योगयुक्ते तपोधने ।
अग्निप्रवेशे नियतं ब्रह्मलोके महीयते ॥१३-९२-१६ (८५११९)
रसानां प्रतिसंहारात्सौभाग्यमिह विन्दति ।
आमिषप्रतिसंहारात्प्रजा ह्यायुष्मती भवेत् ॥१३-९२-१७ (८५१२०)
उदवासं वसेद्यस्तु स नराधिपतिर्भवेत् ।
सत्यवादी नरश्रेष्ठ दैवतैः सह मोदते ॥१३-९२-१८ (८५१२१)
कीर्तिर्भवति दानेन तथाऽऽरोग्यमहिंसया ।
द्विजशुश्रूषया राज्यं द्विजत्वं चापि पुष्कलम् ॥१३-९२-१९ (८५१२२)
पानीयस्य प्रदानेन कीर्तिर्भवति शाश्वती ।
अन्नस्य तु प्रदानेन तृप्यन्ते कामभोगतः ॥१३-९२-२० (८५१२३)
सान्त्वदः सर्वभूतानां सर्वशोकैर्विमुच्यते ।
देवशुश्रूषया राज्यं दिव्यं रूपं निगच्छति ॥१३-९२-२१ (८५१२४)
दीपालोकप्रदानेन चक्षुष्मान्बुद्धिमान्भवेत् ।
प्रेक्षणीयप्रदानेन स्मृतिं मेधां च विन्दति ॥१३-९२-२२ (८५१२५)
गन्धमाल्यप्रदानेन कीर्तिर्भवति पुष्कला ।
केशश्मश्रू धारयतामग्र्या भवति सन्ततिः ॥१३-९२-२३ (८५१२६)
उपवासं च दीक्षां च अभिषेकं च पार्थिव ।
कृत्वा द्वादशवर्षाणि वीरस्थानाद्विशिष्यते ॥१३-९२-२४ (८५१२७)
दासीदासमलङ्कारान्क्षेत्राणि च गृहाणि च ।
ब्रह्मदेयां सुतां दत्त्वा प्राप्नोति मनुजर्षभ ॥१३-९२-२५ (८५१२८)
क्रतुभिश्चोपवासैश्च त्रिदिवं याति भारत ।
लभते च शिवं ज्ञानं फलपुष्पप्रदो नरः ॥१३-९२-२६ (८५१२९)
सुवर्णशृङ्गैस्तु विराजितानां
गवां सहस्रस्य नरः प्रदानात् ।
प्राप्नोति पुण्यं दिवि देवलोक-
मित्येवमाहुर्दिवि वेदसङ्घाः ॥ १३-९२-२७ (८५१३०)
प्रयच्छते यः कपिलां सवत्सां
कांस्योपदोहां कनकाग्रशृङ्गीम् ।
तैस्तैर्गुणैः कामदुघाऽस्य भूत्वा
नरं प्रदातारमुपैति सा गौः ॥ १३-९२-२८ (८५१३१)
यावन्ति रोमाणि भवन्ति धेन्वा-

स्तावत्फलं प्राप्य स गोप्रदानात् ।
पुत्रांश्च पौत्रांश्च कुलं च सर्व-
मासप्तमं तारयते परत्र ॥ १३-९२-२९ (८५१३२)
सदक्षिणां काञ्चनचारुशृङ्गीं
कांस्योपदोहां द्रविणोत्तरीयाम् ।
धेनुं तिलानां ददतो द्विजाय
लोका वसूनां सुलभा भवन्ति ॥ १३-९२-३० (८५१३३)
स्वकर्मभिर्मानवं संनिरुद्धं
तीव्रान्धकारे नरके पतन्तम् ।
महार्णवे नौरिव वायुयुक्ता
दानं गवां तारयते परत्र ॥ १३-९२-३१ (८५१३४)
यो ब्रह्मदेयां तु ददाति कन्यां
भूमिप्रदानं च करोति विप्रे ।
ददाति चान्नं विधिवच्च यश्च
स लोकमाप्नोति पुरंदरस्य ॥ १३-९२-३२ (८५१३५)
नैवेशिकं सर्वगुणोपपन्नं
ददाति वै यस्तु नरो द्विजाय ।
स्वाध्यायचारित्र्यगुणान्विताय
तस्यापि लोकाः कुरुषूत्तरेषु ॥ १३-९२-३३ (८५१३६)
धुर्यप्रदानेन गवां तथा वै
लोकानवाप्नोति नरो वसूनाम् ।
स्वर्गाय चाहुस्तु हिरण्यदानं
ततो विशिष्टं कनकप्रदानम् ॥ १३-९२-३४ (८५१३७)
छत्रप्रदानेन गृहं वरिष्ठं
यानं तथोपानहसम्प्रदाने ।
वस्त्रप्रदानेन फलं सुरूपं
गन्धप्रदानात्सुरभिर्नरः स्यात् ॥ १३-९२-३५ (८५१३८)
पुष्पोपगं वाऽथ फलोपगं वा
यः पादपं स्पर्शयते द्विजाय ।
सश्रीकमृद्धं बहुरत्नपूर्णं
लभत्ययत्नोपगतं गृहं वै ॥ १३-९२-३६ (८५१३९)
भक्ष्यान्नपानीयरसप्रदाता
सर्वान्समाप्नोति रसान्प्रकामम् ।
प्रतिश्रयाच्छादनसम्प्रदाता
प्राप्नोति तान्येव न संशयोऽत्र ॥ १३-९२-३७ (८५१४०)
स्रग्धूपगन्धाननुलेपनानि

स्नानानि माल्यानि च मानवो यः ।
दद्यादिद्वजेभ्यः स भवेदरोग-
स्तथाऽभिरूपश्च नरेन्द्रलोके ॥ १३-९२-३८ (८५१४१)
बीजैरशून्यं शयनैरुपेतं
दद्याद्गृहं यः पुरुषो द्विजाय ।
पुण्याभिरामं बहुरत्नपूर्णं
लभत्यधिष्ठानवरं स राजन् ॥ १३-९२-३९ (८५१४२)
सुगन्धचित्रास्तरणोपधानं
दद्यान्नरो यः शयनं द्विजाय ।
रूपान्वितां पक्षवतीं मनोज्ञां
भार्यामयत्नोपगतां लभेत्सः ॥ १३-९२-४० (८५१४३)
पितामहस्यानवरो वीरशायी भवेन्नरः ।
नाधिकं विद्यते यस्मादित्याहुः परमर्षयः ॥१३-९२-४१ (८५१४४)
वैशम्पायन उवाच।१३-९२-४२क्ष् (७०८०)
तस्य तद्वचनं श्रुत्वा प्रीतात्मा कुरुनन्दनः ।
नाश्रमेऽरोचयद्वासं वीरमार्गाभिकाङ्क्षया ॥१३-९२-४२ (८५१४५)
ततो युधिष्ठिरः प्राह पाण्डवान्पुरुषर्षभ ।
पितामहस्य यद्वाक्यं तद्वो रोचत्विति प्रभुः ॥१३-९२-४३ (८५१४६)
ततस्तु पाण्डवाः सर्वे द्रौपदी च यशस्विनी ।
युधिष्ठिरस्य तद्वाक्यं बाढमित्यभ्यपूजयन् ॥ ॥१३-९२-४४ (८५१४७)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
द्विनवतितमोऽध्यायः ॥९२ ॥

Mahabharata - Anushaasana Parva - Chapter Footnotes

७-९२-७ या गतिः फलं, येन साधनेन, प्रेत्यभावे मरणानन्तरम् ॥
७-९२-१० जीवितं आयुः ॥
७-९२-१३ क्रतुं प्रजापतिम् ।प्रणायामैः प्रजापतिलोकं प्राप्नोतीत्यर्थः ॥
७-९२-१४ अनाशनं अनाहारः ।नित्यस्नायी भवेद्दक्ष इति झ पाठः ॥
७-९२-१७ प्रतिसंहारात्यागात ॥
७-९२-२४ उपवार्सः सर्वभोगत्यागः ।दीक्षा
जपादिनियमस्वीकारः।अभिषेकस्त्रिषवणं स्नानम् ॥
७-९२-३३ नैवेशिकं गृहोपस्करं शय्यादि ॥
७-९२-४० पक्षवतीं महाकुलोद्भवाम् ॥
७-९२-४१ अनवरः रामानः ।यस्मात् पितामहात् ॥

अनुससनपर्व-अध्यय०९३
॥ श्रीः ॥
१३.९३. अध्यायः ९३

अथ दानधर्मपर्व ॥ १ ॥
Mahabharata - Anushaasana Parva - Chapter Topics
भीष्मेण युधिष्ठिरम्प्रति तटाकादिप्रतिष्ठाया वृक्षाद्यारोपणस्य
च फलनिरूपणम् ॥ १ ॥

Mahabharata - Anushaasana Parva - Chapter Text

युधिष्ठिर उवाच ।
आरामाणां तटाकानां यत्फलं कुरुपुङ्गव ।
तदहं श्रोतुमिच्छामि त्वत्तोऽद्य भरतर्षभ ॥ १३-९३-१ (८५१४८)
भीष्म उवाच। १३-९३-२क्ष् (७०८१)
सुप्रदर्शा बलवती चित्रा धातुविभूषिता ।
उपेता सर्वभूतैश्च श्रेष्ठा भूमिरिहोच्यते ॥ १३-९३-२ (८५१४९)
तस्याः क्षेत्रविशेषाश्च तटाकानां च बन्धनम् ।
औदकानि च सर्वाणि प्रवक्ष्याम्यनुपूर्वशः ॥ १३-९३-३ (८५१५०)
तटाकानां च वक्ष्यामि कृतानां चापि ये गुणाः ।
त्रिषु लोकेषु सर्वत्र पूजनीयस्तटाकवान् ॥ १३-९३-४ (८५१५१)
अथवा मित्रसदनं मैत्रं मित्रविवर्धनम् ।
कीर्तिसंजननं श्रेष्ठं तटाकानां निवेशनम् ॥ १३-९३-५ (८५१५२)
धर्मस्यार्थस्य कामस्य फलमाहुर्मनीषिणः ।
तटाकसुकृतं देशे क्षेत्रमेकं महाश्रयम् ॥ १३-९३-६ (८५१५३)
चतुर्विधानां भूतानां तटाकमुपलक्षयेत् ।
तटाकानि च सर्वाणि दिशन्ति श्रियमुत्तमाम् ॥ १३-९३-७ (८५१५४)
देवा मनुष्यगन्धर्वाः पितरोरगराक्षसाः ।
स्थावराणि च भूतानि संश्रयन्ति जलाशयम् ॥ १३-९३-८ (८५१५५)
तस्मात्तांस्ते प्रवक्ष्यामि तटाके ये गुणाः स्मृताः ।
या च तत्र फलावाप्तिर्ऋषिभिः समुदाहृताः ॥ १३-९३-९ (८५१५६)
वर्षाकाले तटाके तु सलिलं यस्य तिष्ठति ।
अग्निहोत्रफलं तस्य फलमाहुर्मनीषिणः ॥ १३-९३-१० (८५१५७)
शरत्काले तु सलिलं तटाके यस्य तिष्ठति ।
गोसहस्रस्य स प्रेत्य लभते फलमुत्तमम् ॥ १३-९३-११ (८५१५८)
हेमन्तकाले सलिलं तटाके यस्य तिष्ठति ।

स वै बहुसुवर्णस्य यज्ञस्य लभते फलम् ॥ १३-९३-१२ (८५१५९)
यस्य वै शैशिरे काले तटाके सलिलं भवेत् ।
तस्याग्निष्टोमयज्ञस्य फलमाहुर्मनीषिणः ॥ १३-९३-१३ (८५१६०)
तटाकं सुकृतं यस्य वसन्ते तु महाश्रयम् ।
अतिरात्रस्य यज्ञस्य फलं स समुपाश्नुते ॥ १३-९३-१४ (८५१६१)
निदाघकाले पानीयं तटाके यस्य तिष्ठति ।
वाजिमेधफलं तस्य फलं वै मुनयो विदुः ॥ १३-९३-१५ (८५१६२)
स कुलं तारयेत्सर्वं यस्य खाते जलाशये ।
गावः पिबन्ति सलिलं साधवश्च नराः सदा ॥ १३-९३-१६ (८५१६३)
तटाके यस्य गावस्तु पिबन्ति तृषिता जलम् ।
मृगपक्षिमनुष्याश्च सोऽश्वमेधफलं लभेत ॥ १३-९३-१७ (८५१६४)
यत्पिबन्ति जलं तत्र स्नायन्ते विश्रमन्ति च ।
तटाके यस्य तत्सर्वं प्रेत्यानन्त्याय कल्पते ॥ १३-९३-१८ (८५१६५)
दुर्लभं सलिलं तात विशेषेण परत्र वै ।
पानीयस्य प्रदानेन प्रीतिर्भवति शाश्वती ॥ १३-९३-१९ (८५१६६)
तिलान्ददत पानीयं दीपान्ददत जागृत ।
ज्ञातिभिः सह मोदध्वमेतत्प्रेत्य सुदुर्लभम् ॥ १३-९३-२० (८५१६७)
सर्वदानैर्गुरुतरं सर्वदानैर्विशिष्यते ।
पानीयं नरशार्दूल तस्माद्दातव्यमेव हि ॥ १३-९३-२१ (८५१६८)
एवमेतत्तटाकस्य कीर्तितं फलमुत्तमम् ।
अत ऊर्ध्वं प्रवक्ष्यामि वृक्षाणामवरोपणम् ॥ १३-९३-२२ (८५१६९)
स्थावराणां च भूतानां जातयः षट् प्रकीर्तिताः ।
वृक्षगुल्मलतावल्ल्यस्त्वक्सारास्तृणजातयः ॥ १३-९३-२३ (८५१७०)
एता जात्यस्तु वृक्षाणां तेषां रोपे गुणास्त्विमे ।
कीर्तिश्च मानुषे लोके प्रेत्य चैव फलं शुभम् ॥ १३-९३-२४ (८५१७१)
लभते नाम लोके च पितृभिश्च महीयते ।
देवलोके गतस्यापि नाम तस्य न नश्यति ॥ १३-९३-२५ (८५१७२)
अतीतानागते चोभे पितृवंशं च भारत ।
तारयेद्वृक्षरोपी च तस्माद्वृक्षांश्च रोपयेत् ॥ १३-९३-२६ (८५१७३)
तस्य पुत्रा भवन्त्येते पादपा नात्र संशयः ।
परलोकगतः स्वर्गं लोकांश्चाप्नोति सोऽव्ययान् ॥ १३-९३-२७ (८५१७४)
पुष्पैः सुरगणान्वृक्षाः फलैश्चापि तथा पितॄन् ।
छायया चातिथिं तात पूजयन्ति महीरुहः ॥ १३-९३-२८ (८५१७५)
किन्नरोरगरक्षांसि देवगन्धर्वमानवाः ।
तथा ऋषिगणाश्चैव संश्रयन्ति महीरुहान् ॥ १३-९३-२९ (८५१७६)
पुष्पिताः फलवन्तश्च तर्पयन्तीह मानवान् ।

वृक्षदं पुत्रवद्वृक्षास्तारयन्ति परत्र तु ॥१३-९३-३० (८५१७७)
तस्मात्तटाके सद्वृक्षा रोप्याः श्रेयोर्थिना सदा ।
पुत्रवत्परिपाल्याश्च पुत्रास्ते धर्मतः स्मृताः ॥१३-९३-३१ (८५१७८)
तटाककृद्वृक्षरोपी इष्टयज्ञश्च यो द्विजः ।
एते स्वर्गे महीयन्ते ये चान्ये सत्यवादिनः ॥१३-९३-३२ (८५१७९)
तस्मात्तटाकं कुर्वीत आरामांश्चैव रोपयेत् ।
यजेच्च विविधैर्यज्ञैः सत्यं च सततं वदेत् ॥ ॥१३-९३-३३ (८५१८०)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
त्रिनवतितमोऽध्यायः ॥ ९३ ॥

Mahabharata - Anushaasana Parva - Chapter Footnotes

७-९३-२ बलवती बहुसस्योत्पादिका ॥
७-९३-४ औदकानि खातानि तटाकानि ॥
७-९३-४ तटाकवान् तटाककृत् ॥
७-९३-५ मित्राणां सदनमिवोपकारकं सस्योत्पादनादिना । मैत्रं मित्रस्य सूर्यस्येदं प्रीतिकरम्। मित्राणां देवानां विवर्धनं पोषकम् ॥

---

अनुससनपर्व-अध्यय०९४
॥ श्रीः ॥
१३.९४. अध्यायः ९४

अथ दानधर्मपर्व ॥ १ ॥

Mahabharata - Anushaasana Parva - Chapter Topics

भीष्मेण युधिष्ठिरम्प्रति ब्राह्मणप्रशंसनपूर्वकं
तदाराधनविधानम् ॥ १ ॥

Mahabharata - Anushaasana Parva - Chapter Text

युधिष्ठिर उवाच ।
यानीमानि बहिर्वेद्यां दानानि परिचक्षते ।
तेभ्यो विशिष्टं किं दानं मतं ते कुरुपुङ्गव ॥१३-९४-१ (८५१८१)
कौतूहलं हि परमं तत्र मे विद्यते प्रभो ।
दातारं दत्तमन्वेति यद्दानं तत्प्रचक्ष्व मे ॥१३-९४-२ (८५१८२)
भीष्म उवाच। १३-९४-३क्ष् (७०८२)
अभयं सर्वभूतेभ्यो व्यसने चाप्यनुग्रहः ।

यच्चाभिलषितं दद्यात्तृषितायाभियाचते ॥ १३-९४-३ (८५१८३)
भरणे पुत्रदाराणां तद्दानं श्रेष्ठमुच्यते ।
दत्तं दातारमन्वेति तद्दानं भरतर्षभ ॥ १३-९४-४ (८५१८४)
हिरण्यदानं गोदानं पृथिवीदानमेव च ।
एतानि वै पवित्राणि तारयन्त्यपि दुष्कृतात् ॥ १३-९४-५ (८५१८५)
एतानि पुरुषव्याघ्र साधुभ्यो देहि नित्यदा ।
दानानि हि नरं पापान्मोक्षयन्ति न संशयः ॥ १३-९४-६ (८५१८६)
यद्यदिष्टतमं लोके यच्चास्य दयितं गृहे ।
तत्तद्गुणवते देयं तदेवाक्षयमिच्छता ॥ १३-९४-७ (८५१८७)
प्रियाणि लभते नित्यं प्रियदः प्रियकृत्तथा ।
प्रियो भवति भूतानामिह चैव परत्र च ॥ १३-९४-८ (८५१८८)
याचमानमभीमानादनासक्तमकिञ्चनम् ।
यो नार्चति यथाशक्ति स नृशंसो युधिष्ठिर ॥ १३-९४-९ (८५१८९)
अमित्रमपि चेद्दीनं शरणैषिणमागतम् ।
व्यसने योऽनुगृह्णाति स वै पुरुषसत्तमः ॥ १३-९४-१० (८५१९०)
कृशाय कृतविद्याय वृत्तिक्षीणाय सीदते ।
अपहन्यात्क्षुधां यस्तु न तेन पुरुषः समः ॥ १३-९४-११ (८५१९१)
क्रियानियमितान्साधुन्पुत्रदारैश्च कर्शितान् ।
अयाचमानान्कौन्तेय सर्वोपायैर्निमन्त्रयेत् ॥ १३-९४-१२ (८५१९२)
आशिषं ये न देवेषु न च मर्त्येषु कुर्वते ।
अर्हन्तो नित्यसत्वस्था यथालब्धोपजीविनः ॥ १३-९४-१३ (८५१९३)
आशीविषसमेभ्यश्च तेभ्यो रक्षस्व भारत ।
तान्युक्तैरुपजिज्ञास्य भोगैर्निर्वप रक्ष च ॥ १३-९४-१४ (८५१९४)
कृतैरावसथैर्नित्यं सप्रेष्यैः सपरिच्छदैः ।
निमन्त्रयेथाः कौरव्य सर्वभूतसुखावहैः ॥ १३-९४-१५ (८५१९५)
यदि ते प्रतिगृह्णीयुः श्रद्धापूतं युधिष्ठिर ।
कार्यमित्येव मन्वाना धार्मिकाः पुण्यकर्मिणः ॥ १३-९४-१६ (८५१९६)
विद्यास्नाता व्रतस्नाता धर्ममाश्रित्य जीविनः ।
गूढस्वाध्यायतपसो ब्राह्मणाः संशितव्रताः ॥ १३-९४-१७ (८५१९७)
तेषु शुद्धेषु दान्तेषु स्वदारनिरतेषु च ।
यत्करिष्यसि कल्याणं तत्ते लोके युधाम्पते ॥ १३-९४-१८ (८५१९८)
यथाऽग्निहोत्रं सुहुतं सायम्प्रातर्द्विजातिना ।
तथा भवति दत्तं वै विद्वद्भयो यत्कृतात्मना ॥ १३-९४-१९ (८५१९९)
एष ते विततो यज्ञः श्रद्धापूतः सदक्षिणः ।
विशिष्टः सर्वयज्ञेभ्यो ददतस्तात वर्तताम् ॥ १३-९४-२० (८५२००)
निवापो दानसदृशः सदृशेषु युधिष्ठिर ।

निवेदयन्पूजयन्वै तेष्वानृण्यं निगच्छति ॥१३-९४-२१ (८५२०१)
य एवं नैव कुप्यन्ते न लुभ्यन्ति तृणेष्वपि ।
त एव नः पूज्यतमा ये चापि प्रियवादिनः ॥१३-९४-२२ (८५२०२)
ये नो न बहुमन्यन्ते न प्रवर्तन्ति याचने ।
पुत्रवत्परिपाल्यास्ते नमस्तेभ्यस्तथाऽभयम् ॥१३-९४-२३ (८५२०३)
ऋत्विक्पुरोहिताचार्या मृदुधर्मपरा हि ये ।
क्षात्रेणापि हि संसृष्टं तेजः शाम्यति तेष्वपि ॥१३-९४-२४ (८५२०४)
ईश्वरो बलवानस्मि राजाऽस्मीति युधिष्ठिर ।
ब्राह्मणान्मास्म पर्यासीर्वासोभिरशनेन च ॥१३-९४-२५ (८५२०५)
यच्छोभार्थं बलार्तं वा वित्तमस्ति तवानघ ।
तेन ते ब्राह्मणाः पूज्याः स्वधर्ममनुतिष्ठता ॥१३-९४-२६ (८५२०६)
नमस्कार्यास्तथा विप्रा वर्तमाना यथातथम् ।
यथासुखं यथोत्साहं ललन्तु त्वयि पुत्रवत् ॥१३-९४-२७ (८५२०७)
को ह्यक्षयप्रसादानां सुहृदामल्पतोषिणाम् ।
वृत्तिमर्हत्युपक्षेप्तुं त्वदन्यः कुरुसत्तम ॥१३-९४-२८ (८५२०८)
यथाऽपत्याश्रयो धर्मः स्त्रीणां लोके सनातनः ।
सदैव सा गतिर्नान्या तथाऽस्माकं द्विजातयः ॥१३-९४-२९ (८५२०९)
यदि नो ब्राह्मणास्तात संत्यजेयुरपूजिताः ।
पश्यन्तो दारुणं कर्म सततं क्षत्रिये स्थितम् ॥१३-९४-३० (८५२१०)
अवेदानामकीर्तीनामलोकानामयज्विनाम् ।
कोनु स्याज्जीवितेनार्थस्तद्धिनो ब्राह्मणाश्रयम् ॥१३-९४-३१ (८५२११)
अत्र ते वर्तयिष्यामि यथा धर्मं सनातनम् ।
राजन्यो ब्राह्मणान्राजन्पुरा परिचचार ह ।
वैश्यो राजन्यमित्येव शूद्रो वैश्यमिति श्रुतिः ॥ १३-९४-३२ (८५२१२)
दूराच्छूद्रेणोपचर्यो ब्राह्मणोऽग्निरिव ज्वलन् ।
संस्पर्शपरिचर्यसल्तु वैश्येन क्षत्रियेण च ॥१३-९४-३३ (८५२१३)
मृदुभावान्सत्यशीलान्सत्यधर्मानुपालकान् ।
आशीविषानिव क्रुद्धांस्तानुपाचरत द्विजान् ॥१३-९४-३४ (८५२१४)
अपरेषां परेषां च परेभ्यश्चापि ये परे ।
क्षत्रियाणां प्रतपतां तेजसा च बलेन च ।
ब्राह्मणेष्वेव शाम्यन्ति तेजांसि च तपांसि च ॥ १३-९४-३५ (८५२१५)
न मे पिता प्रियतरो न त्वं तात तथा प्रियः ।
न मे पितुः पिता राजन्न चात्मा न च जीवितम् ॥१३-९४-३६ (८५२१६)
त्वत्तश्च मे प्रियतरः पृथिव्यां नास्ति कश्चन ।
त्वत्तोऽपि मे प्रियतरा ब्राह्मणा भरतर्षभ ॥१३-९४-३७ (८५२१७)
ब्रवीमि सत्यमेतच्च यथाऽहं पाण्डुनन्दन ।

तेन सत्येन गच्छेयं लोकान्यत्र स शान्तनुः ॥१३-९४-३८ (८५२१८)
पश्येयं च सतां लोकाञ्छुचीन्ब्रह्मपुरस्कृतान् ।
तत्र मे तात गन्तव्यमह्नाय च चिराय च ॥१३-९४-३९ (८५२१९)
सोहमेतादृशान्लोकान्दृष्ट्वा भरतसत्तम ।
यन्मे कृतं ब्राह्मणेषु न तप्ये तेन पार्थिव ॥ ॥१३-९४-४० (८५२२०)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
चतुर्नवतितमोऽध्यायः ॥ ९४ ॥

Mahabharata - Anushaasana Parva - Chapter Footnotes

७-९४-९ अभीमानादतिसमर्थोऽयमित्यभिमानं स्वमनस्येव कृत्वा
याचमानम् । याचमानावमानाच्च आशावन्तमकिञ्चनमिति थ.ध.पाठः
॥
७-९४-११ कृशायेत्यादिचतुर्थी षष्ठ्यर्थ । कृशाय ह्रीमते
तातेति ट.थ.ध.पाठः ॥
७-९४-१२ क्रियानियमितान् स्वधर्मयन्त्रितान् । ह्रिया तु नियतानिति
थ.ध.पाठ ॥
७-९४-१६ धर्मार्थमेव धर्मं कुर्वन्ति नतु फलान्तरार्थमिति भावः ॥
७-९४-२० ददतः दातुस्तव वर्ततां सर्वदास्तु ॥
७-९४-२१ निवापः पितृतर्पणम् । दानसदृशः इत्यत्र दानं महादानम् ॥
७-९४-२६ ते त्वया ॥
७-९४-२७ ललन्तु रमन्ताम् ॥
७-९४-२८ उपक्षेप्तं समर्पितुम् ॥
७-९४-३१ अवेदानामिति । तर्हि ब्राह्मणैरस्मत्त्यागे तत एव
अवेदादीनामस्माकं जीवितेन कोर्थः। तत् जीवितं ॥
७-९४-३५ क्षत्रियाणां प्रभावं च तेजांसि च तपांसि च
। ब्राह्मणेष्वेव मन्यन्ते श्रीरयुर्बलमेव चेति ट.थ.ध.पाठः ॥

---

अनुससनपर्व-अध्यय०९५
॥ श्रीः ॥
१३.९५. अध्यायः ९५

अथ दानधर्मपर्व ॥१ ॥

Mahabharata - Anushaasana Parva - Chapter Topics

भीष्मेण युधिष्ठिरम्प्रति ब्राह्मणमहिमानुवर्णनम् ॥१ ॥

युधिष्ठिर उवाच ।
यौ च स्यातां चरणेनोपपन्नौ
यौ विद्यया सदृशौ जन्मना च ।
ताभ्यां दानं कतरस्मै विशिष्ट-
मयाचमानाय च याचते च ॥ १३-९५-१ (८५२२१)
भीष्म उवाच। १३-९५-२क्ष् (७०८३)
श्रेयो वै याचतः पार्थ दानमाहुरयाचते ।
अर्हत्तमो वै धृतिमान्कृपणादकृतात्मनः ॥ १३-९५-२ (८५२२२)
क्षत्रियो रक्षणधृतिर्ब्राह्मणोऽनर्थनाधृतिः ।
ब्राह्मणो धृतिमान्विद्वान्देवान्प्रीणाति तुष्टिमान् ॥ १३-९५-३ (८५२२३)
याच्यमाहुरनीशस्य अतिहारं च भारत ।
उद्वेजयन्ति याचन्ति यदा भूतानि दस्युवत् ॥ १३-९५-४ (८५२२४)
म्रियते याचमानो वै तमनु म्रियतेऽददत् ।
ददत्संजीवयत्येनमात्मानं च युधिष्ठिर ॥ १३-९५-५ (८५२२५)
आनृशंस्यं परो धर्मो याचते यत्प्रदीयते ।
अयाचतः सीदमानान्सर्वोपायैर्निमन्त्रयेत् ॥ १३-९५-६ (८५२२६)
यदि वै तादृशा राष्ट्रे वसेयुस्ते द्विजोत्तमाः ।
भस्मच्छन्नानिवाग्नींस्तान्बुध्येथास्त्वं प्रयत्नतः ॥ १३-९५-७ (८५२२७)
तपसा दीप्यमानास्ते दहेयुः पृथिवीमपि ।
अपूज्यमानाः कौरव्य पूजार्हास्तु तथाविधाः ॥ १३-९५-८ (८५२२८)
पूज्या हि ज्ञानविज्ञानतपोयोगसमन्विताः ।
तेभ्यः पूजां प्रयुञ्जीथा ब्राह्मणेभ्यः परन्तपः १३-९५-९ (८५२२९)
ददद्बहुविधान्देयानुपच्छन्दयते च तान् ॥ १३-९५-१० (८५२३०)
यदग्निहोत्रे सुहुते सायंप्रातर्भवेत्फलम् ।
विद्यावेदव्रतवति तद्दानफलमुच्यते ॥ १३-९५-११ (८५२३१)
विद्यावेदव्रतस्नाता न व्यापाश्रयजीविनः ।
गूढस्वाध्यायतपसो ब्राह्मणान्संशितव्रतान् ॥ १३-९५-१२ (८५२३२)
कृतैरावसथैर्हृद्यैः सप्रेष्यैः सपरिच्छदैः ।
निमन्त्रयेथाः कौरव्य कामैश्चान्यैर्द्विजोत्तमान् ॥ १३-९५-१३ (८५२३३)
अपि ते प्रतिगृह्णीयुः श्रद्धोपेतं युधिष्ठिर ।
कार्यमित्येव मन्वाना धर्मज्ञाः सूक्ष्मदर्शिनः ॥ १३-९५-१४ (८५२३४)
अपि ते ब्राह्मणा भुक्त्वा गताः सोद्धरणान्गृहान् ।
येषां दाराः प्रतीक्षन्ते पर्जन्यमिव कर्षकाः ॥ १३-९५-१५ (८५२३५)
अन्नानि प्रातःसवने नियता ब्रह्मचारिणः ।

ब्राह्मणास्तात भुञ्जानास्त्रेताग्निं प्रीणयन्त्युत ॥१३-९५-१६ (८५२३६)
माध्यंदिनं ते सवनं ददतस्तात वर्तताम् ।
गोहिरण्यानि वासांसि तेनेन्द्रः प्रीयतां तव ॥१३-९५-१७ (८५२३७)
तृतीयं सवनं ते वै वैश्वदेवं युधिष्ठिर ।
यद्देवेभ्यः पितृभ्यश्च विप्रेभ्यश्च प्रयच्छसि ॥१३-९५-१८ (८५२३८)
अहिंसा सर्वभूतेभ्यः संविभागश्च सर्वशः ।
दमस्त्यागो धृतिः सत्यं भवत्यवभृथाय ते ॥१३-९५-१९ (८५२३९)
एथ ते चिततो यज्ञः श्रद्धापूतः सदक्षिणः ।
विशिष्टः सर्वयज्ञानां नित्यं तात प्रवर्तताम् ॥ ॥१३-९५-२० (८५२४०)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
पञ्चनवतितमोऽध्यायः ॥९५ ॥

Mahabharata - Anushaasana Parva - Chapter Footnotes

७-९५-१ चरणेनाचरणेन ॥
७-९५-२ याचतः याचकात् तद्दानादिस्यर्थः ॥
७-९५-३ अनर्थना अयाच्चा ।७-९५-४ याच्यं याचनारूपं
कर्म। अनीशस्य दरिद्रस्यातिहारं तिरस्कारमाहुः। यदा यतः याचन्ति
याचमानानि भूतानि दस्युवल्लोकानुद्वेजयन्ति ॥
७-९५-१० उपच्छन्दयते उपच्छन्दयेत
। ददद्बहुविधान्दायानुपागच्छन्नयाचतामिति झ पाठः। अयाचतां
अयाचमानानाम्। उपागच्छन्समीपमुपसर्पन् दायान्धनादीन्ददत् दाता
भवेति शेषः ॥
७-९५-१५ सोद्धरणान्स्वामिन्यागते दास्यामीति याचमानेभ्यो बालकेभ्य
आशाप्रदर्शनमुद्धरणं तत्सहितान् ॥

---

अनुससनपर्व-अध्यय०९६
॥ श्रीः ॥
१३.९६. अध्यायः ९६

अथ दानधर्मपर्व ॥१ ॥

Mahabharata - Anushaasana Parva - Chapter Topics

भीष्मेणि युधिष्ठिरम्प्रति ब्राह्मणप्रशंसनपूर्वकं ब्राह्मणानां
प्रजानां च रक्षणस्यावश्यकर्तव्यत्वकथनम् ॥१ ॥

Mahabharata - Anushaasana Parva - Chapter Text

युधिष्ठर उवाच ।
दानं यज्ञः क्रिया चेह किंस्वित्प्रेत्य महाफलम् ।
कस्य ज्यायः फलं प्रोक्तं कीदृशेभ्यः कथं कदा ॥ १३-९६-१ (८५२४१)
एतदिच्छामि विज्ञातुं याथातथ्येनि भारत ।
विद्वञ्जिज्ञासमानाय दानधर्मान्प्रचक्ष्व मे ॥ १३-९६-२ (८५२४२)
अन्तर्वेद्यां च यद्दत्तं श्रद्धया चानृशंस्यतः ।
किंस्विन्नैःश्रेयसं तात तन्मे ब्रूहि पितामह ॥ १३-९६-३ (८५२४३)
भीष्म उवाच। १३-९६-४क्ष् (७०८४)
रौद्रं कर्म क्षत्रियस्य सततं तात वर्तते ।
नास्य वैतानिकफलं विना दानं सुपावनम् ॥ १३-९६-४ (८५२४४)
न तु पापकृतां राज्ञां याजका द्विजसत्तमाः ॥
धने सत्यप्रदातॄणां प्रतिगृह्णन्ति साधवः ॥ १३-९६-५ (८५२४५)
प्रतिगृह्णन्ति न तु चेद्यद्रोषादाप्तदक्षिणैः ।
एतस्मात्कारणाद्यज्ञैर्यजेद्राजाऽऽप्तदक्षिणैः ॥ १३-९६-६ (८५२४६)
अथ चेत्प्रतिगृह्णीयुर्दद्यादहरहर्नृपः ।
श्रद्धामास्थाय परमां पावनं ह्येतुदुत्तमम् ॥ १३-९६-७ (८५२४७)
ब्राह्मणांस्तर्पयन्द्रव्यैः स वै यज्ञोऽनुपद्रवः ।
मैत्रान्साधून्वेदविदः शीलवृत्ततपोर्जितान् ॥ १३-९६-८ (८५२४८)
यत्ते ते न करिष्यन्ति कृतं ते न भविष्यति ।
यज्ञान्साधय साधुभ्यः स्वाद्वन्नान्दक्षिणावतः ॥ १३-९६-९ (८५२४९)
इष्टं दत्तं च मन्येथा आत्मानं दानकर्मणा ।
पूजयेथा यायजूकांस्तवाप्यंशो भवेद्यथा ॥ १३-९६-१० (८५२५०)
गविद्वद्भयः सम्प्रदानेन तत्राप्यंशोऽस्य पूजया ।
यज्वभ्यश्चाथ विद्वद्भयो दत्त्वा लोकं प्रदापयेत् ।
प्रदद्याज्ज्ञानदातॄणां ज्ञानदानांशभाग्यभवेत् ॥' १३-९६-११ (८५२५१)
प्रजावतो भरेथाश्च ब्राह्मणान्बहुभारिणः ।
प्रजावांस्तेन भवति यथा जनयिता तथा ॥ १३-९६-१२ (८५२५२)
यावतः साधुधर्मान्वै सन्तः संवर्धयन्त्युत ।
सर्वस्वैश्चापि भर्तव्या नरा ये बहुकारिणः ॥ १३-९६-१३ (८५२५३)
समृद्धः सम्प्रयच्छ त्वं ब्राह्मणेभ्यो युधिष्टिर ।
धेनूरनडुहोऽन्नानि च्छत्रं वासांस्युपानहौ ॥ १३-९६-१४ (८५२५४)
आज्यानि यजमानेभ्यस्तथाऽन्नानि च भारत ।
अश्ववन्ति च यानानि वेश्मानि शयनानि च ॥ १३-९६-१५ (८५२५५)
एते देयाः पुष्टिमद्भिर्लघूपायाश्च भारत ।
अजुगुप्सांश्च विज्ञाय ब्राह्मणान्वृत्तिकर्शितान् ॥ १३-९६-१६ (८५२५६)

उपच्छन्नं प्रकाशं वा वृत्त्या तान्प्रतिपालय ।
राजसूयाश्वमेधाभ्यां श्रेयस्तत्क्षत्रियान्प्रति ॥ १३-९६-१७ (८५२५७)
एवं पापैर्विनिर्मुक्तस्त्वं पूतः स्वर्गमाप्स्यसि ।
सञ्चयित्वा पुनः कोशं यद्राष्ट्रं पालयिष्यसि ॥ १३-९६-१८ (८५२५८)
तेन त्वं ब्रह्मभूयत्वमवाप्स्यसि धनानि च ।
आत्मनश्च परेषां च वृत्तिं संरक्ष भारत ॥ १३-९६-१९ (८५२५९)
पुत्रवच्चापि भृत्यान्स्वान्प्रजाश्च परिपालय ।
श्योगः क्षेमश्च ते नित्यं ब्राह्मणेष्वस्तु भारत ॥ १३-९६-२० (८५२६०)
तदर्थं जीवितं तेऽस्तु मा तेभ्योऽप्रतिपालनम् ।
अनर्थो ब्राह्मणस्यैष यद्वित्तनिचयो महान् ॥ १३-९६-२१ (८५२६१)
क्षिया ह्यभीक्ष्णं संवासो दर्पयेत्सम्प्रमोहयेत् ।
ब्राह्मणेषु प्रमूढेषु धर्मो विप्रणशेद्ध्रुवम् ।
धर्मप्रणाशे भूतानामभावः स्यान्न संशयः ॥ १३-९६-२२ (८५२६२)
यो रक्षिभ्यः सम्प्रदाय राजा राष्ट्रं विलुम्पति ।
यज्ञे राष्ट्राद्धनं तस्मादानयध्वमिति ब्रुवन् ॥ १३-९६-२३ (८५२६३)
यच्चादाय तदाज्ञप्तं भीतं दत्तं सुदारुणम् ।
यजेद्राजा न तं यज्ञं प्रशंसन्त्यस्य साधवः ॥ १३-९६-२४ (८५२६४)
अपीडिताः सुसंवृद्धा ये ददत्यनुकूलतः ।
तादृशेनाप्युपायेन यष्टव्यं नोद्यमाहृतैः ॥ १३-९६-२५ (८५२६५)
यदा परिनिषिच्येत निहितो वै यथाविधि ।
तदा राजा महायज्ञैर्यजेत बहुदक्षिणैः ॥ १३-९६-२६ (८५२६६)
वृद्धबालधनं रक्ष्यमन्धस्य कृपणस्य च ।
न खातपूर्वं कुर्वीत न रुदन्तीधनं हरेत् ॥ १३-९६-२७ (८५२६७)
हृतं कृपणवित्तं हि राष्ट्रं हन्ति नृप श्रियम् ।
दद्याच्च महतो भोगान्क्षुद्भयं प्रणुदेत्सताम् ॥ १३-९६-२८ (८५२६८)
येषां स्वादूनि भोज्यानि समवेक्ष्यन्ति बालकाः ।
नाश्नन्ति विधिवत्तानि किन्नु पापतरं ततः ॥ १३-९६-२९ (८५२६९)
यदि ते तादृशो राष्ट्रे विद्वान्त्सीदेत्क्षुधा द्विजः ।
भ्रूणहत्यां च गच्छेथाः कृत्वा पापमिवोत्तमम् ॥ १३-९६-३० (८५२७०)
धिक्तस्य जीवितं राज्ञो राष्ट्रे यस्यावसीदति ।
द्विजोऽन्यो वा मनुष्योपि शिबिराह वचो यथा ॥ १३-९६-३१ (८५२७१)
यस्य स्म विषये राज्ञः स्नातकः सीदति क्षुधा ।
अवृद्धिमेति तद्राष्ट्रं विन्दते सह राजकम् ॥ १३-९६-३२ (८५२७२)
क्रोशन्त्यो यस्य वै राष्ट्राद्ध्रियन्ते तरसा स्त्रियः ।
क्रोशतां पतिपुत्राणां मृतोऽसौ न च जीवतिघ ॥ १३-९६-३३ (८५२७३)
अरक्षितारं हर्तारं विलोप्तारमनायकम् ।

तं वै राजकलिं हन्युः प्रजाः सन्नह्य निर्घृणं ॥ १३-९६-३४ (८५२७४)
अहं वो रक्षितेत्युक्त्वा यो न रक्षति भूमिपः ।
स संहत्य निहन्तव्यः श्वेव सोन्माद आतुरः ॥ १३-९६-३५ (८५२७५)
पापं कुर्वन्ति यत्किञ्चित्प्रजा राज्ञा ह्यरक्षिताः ।
चतुर्थं तस्य पापस्य राजा विन्दति भारत ॥ १३-९६-३६ (८५२७६)
अथाहुः सर्वमेवैति भूयोऽर्धमिति निश्चयः ।
चतुर्थं मतमस्माकं मनोः श्रुत्वानुशासनम् ॥ १३-९६-३७ (८५२७७)
शुभं वा यच्च कुर्वन्ति प्रजा राज्ञा सुरक्षिताः ।
चतुर्थं तस्य पुण्यस्य राजा चाप्नोति भारत ॥ १३-९६-३८ (८५२७८)
जीवन्तं त्वानुजीवन्तु प्रजाः सर्वा युधिष्ठिर ।
पर्जन्यमिव भूतानि महाद्रुममिवाण्डजाः ॥ १३-९६-३९ (८५२७९)
कुबेरमिव रक्षांसि शतक्रतुमिवामराः ।
ज्ञातयस्त्वाऽनुजीवन्तु सुहृदश्च परन्तप ॥ ॥ १३-९६-४० (८५२८०)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
षण्णवतितमोऽध्यायः ॥ ९६ ॥

Mahabharata - Anushaasana Parva - Chapter Footnotes

७-९६-१ यज्ञः क्रिया यज्ञरूपाक्रियेत्यर्थः । कीदृशेभ्यो दानं
कथं यज्ञक्रियेति। कदेत्युभयत्र सम्बन्धः ॥
७-९६-७ एतद्दानम् ॥
७-९६-९ यद्यदि ते ब्राह्मणास्ते तव न करिष्यन्ति प्रतिग्रहमिति
शेषः । तर्हि कृतं सुकृतं ते तव न भविष्यति। तदा
सुकृतोत्पत्त्यर्थं यज्ञान्साधय ॥
७-९६-१० दाने यज्ञादिकमन्तर्भवतीत्यर्थः ॥
७-९६-१२ जनयिता प्रजापतिः ॥
७-९६-१३ तस्य राज्ञस्ते सन्तो बहुकारिणोऽत्यन्तमुपकर्तारो भवन्ति
। नरा ये बहुभाषिण इति त थ पाठः ॥
७-९६-१९ ब्रह्मणो भूयं भावोऽस्यास्ति स ब्राह्मणो ब्रह्मभूयस्तस्य
भावो ब्रह्मभूयत्वं ब्राह्मणत्वम् ॥
७-९६-२३ यो राजा रक्षिभ्यः सङ्ग्रहपरेभ्यो धनं दत्त्वा यज्ञे
यज्ञार्थं धनमानयध्वमिति ब्रुवन् यजेत् तर्हि राष्ट्रं विलुम्पति ॥
७-९६-२४ यच्चासौ तद्धनिभिर्भातं भययुक्तं यथास्यात्तथा
दत्तं प्रजाभ्य आदाय सुदारुणं यथास्यात्तथा यजेत्तं यज्ञं न
प्रशंसन्ति ॥
७-९६-२५ उद्यमः प्रजापीडनात्मकोऽतियत्नः ॥

७-९६-२६ निहितः प्रजानां नितरां हितो राजा यदा प्रजाभिर्निषिच्येत धनैरभिषिच्येत ॥
७-९६-२७ स्वातपूर्वं धनं न कुर्वीत स्वाधीनं न कुर्वीतेत्यर्थः ॥
७-९६-२९ समवेक्ष्यन्त्येव नतु लभन्ते ॥
७-९६-३२ सहयुगपत् । राजकं राजसमूहं प्रतिपक्षभूतं विन्दते ॥
७-९६-३७ सर्वं पापं एति राजानम् ॥

---

अनुससनपर्व-अध्यय०९७
॥ श्रीः ॥
१३.९७. अध्यायः ९७

अथ दानधर्मपर्व ॥ १ ॥
Mahabharata - Anushaasana Parva - Chapter Topics
भीष्मेण युधिष्ठिरम्प्रति सेन्द्रबृहस्पतिसंवादानुवादं भूमिदानप्रशंसनम् ॥ १ ॥

Mahabharata - Anushaasana Parva - Chapter Text

युधिष्ठिर उवाच ।
इदं देयमिदं देयमितीयं श्रुतिचोदनात् ।
बहुदेयाश्च राजानः किंस्विद्देयमनुत्तमम् ॥ १३-९७-१ (८५२८१)
भीष्म उवाच। १३-९७-२क्ष् (७०८५)
अति दानानि सर्वाणि पृथिवीदानमुच्यते ।
अचला ह्यक्षया भूमिर्दोग्ध्री कामानिहोत्तमान् ॥ १३-९७-२ (८५२८२)
दोग्ध्री वासांसि रत्नानि पशून्व्रीहियवांस्तथा ।
भूमिदः सर्वभूतेषु शाश्वतीरेधते समाः ॥ १३-९७-३ (८५२८३)
यावद्भूमेरायुरिह तावद्भूमिद एधते ।
न भूमिदानादस्तीह परं किञ्चिद्युधिष्ठिर ॥ १३-९७-४ (८५२८४)
अप्यल्पं प्रददुः सर्वे पृथिव्या इति नः श्रुतम् ।
भूमिमेव ददुः सर्वे भूमिं ते भुञ्जते जनाः ॥ १३-९७-५ (८५२८५)
स्वकर्मैवोपजीवन्ति नरा इह परत्र च ।
भूमिः पतिं महादेवी दातारं कुरुते प्रियम् ॥ १३-९७-६ (८५२८६)
य एतां दक्षिणां दद्यादक्षयां राजसत्तम ।
पुनर्नरत्वं सम्प्राप्य भवेत्स पृथिवीपतिः ॥ १३-९७-७ (८५२८७)
यथा दानं तथा भोग इति धर्मेषु निश्चयः ।
सङ्ग्रामे वा तनुं जह्याद्दद्याच्च पृथिवीमिमाम् ॥ १३-९७-८ (८५२८८)

इत्येतत्क्षत्रबन्धूनां वदन्ति परमाशिषः ।
पुनाति दत्ता पृथिवी दातारमिति शुश्रुम ॥ १३-९७-९ (८५२८९)
अपि पापसमाचारं ब्रह्मघ्नमपि चानृतम् ।
सैव पापं प्लावयति सैव पापात्प्रमोचयेत् ॥ १३-९७-१० (८५२९०)
अपि पापकृतां राज्ञां प्रतिगृह्णन्ति साधवः ।
पृथिवीं नान्यदिच्छन्ति पावनं जगती यतः ॥ १३-९७-११ (८५२९१)
नामास्याः प्रियदत्तेति गुह्यं देव्याः सनातनम् ।
दानं वाऽप्यथवाऽदानं नामास्याः प्रथमप्रियम् ॥ १३-९७-१२ (८५२९२)
य एतां विदुषे दद्यात्पृथिवीं पृथिवीपतिः ।
पृथिव्यामेतदिष्टं स राजा राज्यमितो व्रजेत् ॥ १३-९७-१३ (८५२९३)
पुनश्चासौ जनिं प्राप्य राजवत्स्यान्न संशयः ।
तस्मात्प्राप्यैव पृथिवीं दद्याद्विप्राय पार्थिवः ॥ १३-९७-१४ (८५२९४)
नाभूमिपतिना भूमिरधिष्ठेया कथञ्चन ।
न च वस्त्रेणि वा गूहेदन्तर्धानेन वा चरेत् ॥ १३-९७-१५ (८५२९५)
ये चान्ये भूमिमिच्छेयुः कुर्युरेवं न संशयः ।
यः साधोर्भूमिमादत्ते न भूमिं विन्दते तु सः ॥ १३-९७-१६ (८५२९६)
भूमिं दत्त्वा तु साधुभ्यो विन्दते भूमिमुत्तमाम् ।
प्रेत्य चेह च धर्मात्मा सम्प्राप्नोति महद्यशः ॥ १३-९७-१७ (८५२९७)
गएकाहारकरीं दत्त्वा षष्ठिसाहस्रमूर्ध्वगः ।
तावत्या हरणे पृथ्व्या नरकं द्विगुणोत्तरम् ॥' १३-९७-१८ (८५२९८)
यस्य विप्रास्तु शंसन्ति साधोर्भूमिं सदैव हि ।
न तस्य शत्रवो राजन्प्रशंसन्ति वसुन्धराम् ॥ १३-९७-१९ (८५२९९)
यत्किञ्चित्पुरुषः पापं कुरुते वृत्तिकर्शितः ।
अपि गोचर्ममात्रेण भूमिदानेन पूयते ॥ १३-९७-२० (८५३००)
येऽपि सङ्कीर्णकर्माणो राजानो रौद्रकर्मिणः ।
तेभ्यः पवित्रमाख्येयं भूमिदानमनुत्तमम् ॥ १३-९७-२१ (८५३०१)
अल्पान्तरमिदं शश्वत्पुराणा मेनिरे जनाः ।
यो यजेताश्वमेधेन दद्याद्वा साधवे महीम् ॥ १३-९७-२२ (८५३०२)
अपि चेत्सुकृतं कृत्वा शङ्केरन्नपि पण्डिताः ।
अशंक्यमेकमेवैतद्भूमिदानमनुत्तमम् ॥ १३-९७-२३ (८५३०३)
सुवर्णं रजतं वस्त्रं मणिमुक्तावसूनि च ।
सर्वमेतन्महाप्राज्ञो ददाति वसुधां ददत् ॥ १३-९७-२४ (८५३०४)
तपो यज्ञः श्रुतं शीलमलोभः सत्यसन्धता ।
गुरुदैवतपूजा च एता वर्तन्ति भूमिदम् ॥ १३-९७-२५ (८५३०५)
भर्तुर्निःश्रेयसे युक्तास्त्यक्तात्मानो रणे हताः ।
ब्रह्मलोकगताः सिद्धा नातिक्रामन्ति भूमिदम् ॥ १३-९७-२६ (८५३०६)

यथा जनित्री स्वं पुत्रं क्षीरेण भरते सदा ।
अनुगृह्णाति दातारं तथा सर्वरसैर्मही ॥१३-९७-२७ (८५३०७)
मृत्युर्वैकिंकरो दण्डस्तापो वह्नेः सुदारुणः ।
घोराश्च वारुणाः पाशा नोपसर्पन्ति भूमिदम् ॥१३-९७-२८ (८५३०८)
पितॄंश्च पितृलोकस्थान्देवलोके च देवताः ।
सन्तर्पयति शान्तात्मा यो ददाति वसुन्धराम् ॥१३-९७-२९ (८५३०९)
कृशाय म्रियमाणाय वृत्तिग्लानाय सीदते ।
भूमिं वृत्तिकरीं दत्त्वा सत्री भवति मानवः ॥१३-९७-३० (८५३१०)
यथा धावति गौर्वत्सं स्रवन्ती वत्सला पयः ।
एवमेव महाभाग भूमिर्भरति भूमिदम् ॥१३-९७-३१ (८५३११)
हलकृष्टां महीं दत्त्वा सबीजां सफलामपि ।
सोदकं वाऽपि शरणं तथा भवति कामदः ॥१३-९७-३२ (८५३१२)
ब्राह्मणं वृत्तसम्पन्नमाहिताग्निं शुचिव्रतम् ।
नरः प्रतिग्राह्य महीं न याति यमसादनम् ॥१३-९७-३३ (८५३१३)
यथा चन्द्रमसो वृद्धिरहन्यहनि जायते ।
तथा भूमिकृतं दानं सस्येसस्ये विवर्धते ॥१३-९७-३४ (८५३१४)
अत्र गाथा भूमिगीताः कीर्तयन्ति पुराविदः ।
याः श्रुत्वा जामदग्न्येन दत्ता भूः काश्यपाय वै ॥१३-९७-३५ (८५३१५)
मामेवादत्त मां दत्त मां दत्त्वा मामवाप्स्यथ ।
अस्मिँल्लोके परे चैव तद्दत्तं जायते पुनः ॥१३-९७-३६ (८५३१६)
य इमां व्याहृतिं वेद ब्राह्मणो वेदसम्मिताम् ।
श्राद्धस्य हूयमानस्य ब्रह्मभूयं स गच्छति ॥१३-९७-३७ (८५३१७)
कृत्यानामभिशप्तानामरिष्टशमनं महत् ।
प्रायश्चित्तं महीं दत्त्वा पुनात्युभयतो दश ॥१३-९७-३८ (८५३१८)
पुनाति य इदं वेद वेदवादं तथैव च ।
प्रकृतिः सर्वभूतानां भूमिर्वै शाश्वती मता ॥१३-९७-३९ (८५३१९)
अभिषिच्यैव नृपतिं श्रावयेदिममागमम् ।
यथा श्रुत्वा महीं दद्यान्नादद्यात्साधुतश्च तां ॥१३-९७-४० (८५३२०)
सोऽयं कृत्स्नो ब्राह्मणार्थो राजार्थश्चाप्यसंशयः ।
राजा हि धर्मकुशलः प्रथमं भूतिलक्षणम् ॥१३-९७-४१ (८५३२१)
अथ येषामधर्मज्ञो राजा भवति नास्तिकः ।
न ते सुखं प्रबुध्यन्ति न सुखं प्रस्वपन्ति च ॥१३-९७-४२ (८५३२२)
सदा भवन्ति चोद्विग्नास्तस्य दुश्चरितैर्नराः ।
योगक्षेमा हि बहवो राष्ट्रं नास्याविशन्ति तत् ॥१३-९७-४३ (८५३२३)
अथ येषां पुनः प्राज्ञो राजा भवति धार्मिकः ।
सुखं ते प्रतिबुध्यन्ते सुसुखं प्रस्वपन्ति च ॥१३-९७-४४ (८५३२४)

तस्य राज्ञः शुभे राज्ये कर्मभिर्निर्वृता नराः ।
योगक्षेमेण वृष्ट्या च विवर्धन्ते स्वकर्मभिः ॥ १३-९७-४५ (८५३२५)
स कुलीनः स पुरुषः स बन्धुः स च पुण्यकृत् ।
स दाता स च विक्रान्तो यो ददाति वसुन्धरां ॥ १३-९७-४६ (८५३२६)
आदित्या इव दीप्यन्ते तेजसा भुवि मानवाः ।
ददन्ति वसुधां स्फीतां ये वेदविदुषि द्विजे ॥ १३-९७-४७ (८५३२७)
यथा सस्यानि रोहन्ति प्रकीर्णानि महीतले ।
तथा कामाः प्ररोहन्ति भूमिदानसमार्जिताः ॥ १३-९७-४८ (८५३२८)
आदित्यो वरुणो विष्णुर्ब्रह्मा सोमो हुताशनः ।
शूलिपाणिश्च भगवान्प्रतिनन्दन्ति भूमिदम् ॥ १३-९७-४९ (८५३२९)
भूमौ जायन्ति पुरुषा भूमौ निष्ठां व्रजन्ति च ।
चतुर्विधो हि लोकोऽयं योऽयं भूमिगुणात्मकः ॥ १३-९७-५० (८५३३०)
एषा माता पिता चैव जगतः पृथिवीपते ।
नानया सदृशं भूतं किञ्चिदस्ति जनाधिप ॥ १३-९७-५१ (८५३३१)
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
बृहस्पतेश्च संवादमिन्द्रस्य च युधिष्ठिर ॥ १३-९७-५२ (८५३३२)
इष्ट्वा क्रतुशतेनाथ महता दक्षिणावता ।
मघवा वाग्विदांश्रेष्ठं पप्रच्छेदं बृहस्पतिम् ॥ १३-९७-५३ (८५३३३)
भगवन्केन दानेन स्वर्गतः सुखमेधते ।
यदक्षयमहार्यं च तद्ब्रूहि वदतांवर ॥ १३-९७-५४ (८५३३४)
भीष्म उवाच। १३-९७-५५क्ष् (७०८६)
इत्युक्तः स सुरेन्द्रेण ततो देवपुलोहितः ।
बृहस्पतिर्बृहत्तेजाः प्रत्युवाच शतक्रतुम् ॥ १३-९७-५५ (८५३३५)
सुवर्णदानं गोदानं भूमिदानं च वृत्रहन् ।
गविद्यादानं च कन्यानां दानं पापहरं परम्।'
ददतेतान्महाप्राज्ञः सर्वपापैः प्रमुच्यते ॥ १३-९७-५६ (८५३३६)
न भूमिदानाद्देवेन्द्र परं किञ्चिदिति प्रभो ।
विशिष्टमिति मन्येऽहं यता प्राहुर्मनीषिणः ॥ १३-९७-५७ (८५३३७)
गब्राह्मणार्थे गवार्थे वा राष्ट्रघातेऽथ स्वामिनः ।
कुलस्त्रीणां परिभवे मृतास्ते भूमिपैः समाः'॥ १३-९७-५८ (८५३३८)
ये शूरा निहता युद्धे स्वर्याता रणगृद्धिनः ।
सर्वे ते विबुधश्रेष्ठ नातिक्रामन्ति भूमिदम् ॥ १३-९७-५९ (८५३३९)
भर्तुर्निःश्रेयसे युक्तास्त्यक्तात्मानो रणे हताः ।
ब्राह्मलोकगता युक्ता नातिक्रामन्ति भूमिदम् ॥ १३-९७-६० (८५३४०)
पञ्च पूर्वा हि पुरुषाः षडन्ये वसुधां गताः ।
एकादश ददद्भूमिं परित्रातीह मानवः ॥ १३-९७-६१ (८५३४१)

रत्नोपकीर्णां वसुधां यो ददाति पुरंदर ।
स मुक्तः सर्वकलुषैः स्वर्गलोके महीयते ॥ १३-९७-६२ (८५३४२)
महीं स्फीतां ददद्राजन्सर्वकामगुणान्विताम् ।
राजाधिराजो भवति तद्धि दानमनुत्तमम् ॥ १३-९७-६३ (८५३४३)
सर्वकामसमायुक्तां काश्यपीं यः प्रयच्छति ।
सर्वभूतानि मन्यन्ते मां ददातीति वासव ॥ १३-९७-६४ (८५३४४)
सर्वकामदुघां धेनुं सर्वकामगुणान्विताम् ।
ददाति यः सहस्राक्ष स्वर्गं याति स मानवः ॥ १३-९७-६५ (८५३४५)
मधुसर्पिःप्रवाहिण्यः पयोदधिवहास्तथा ।
सरितस्तपर्यन्तीह सुरेन्द्र वसुधाप्रदम् ॥ १३-९७-६६ (८५३४६)
भूमिप्रदानान्नृपतिर्मुच्यते सर्वकिल्बिषात् ।
न हि भूमिप्रदानेन दानमन्यद्विशिष्यते ॥ १३-९७-६७ (८५३४७)
ददाति यः समुन्द्रान्तां पृथिवीं शस्त्रनिर्जिताम् ।
तं जनाः कथयन्तीह यावद्धरति गौरियम् ॥ १३-९७-६८ (८५३४८)
पुण्यामृद्धिरसां भूमिं यो ददाति पुरंदर ।
न तस्य लोकाः क्षीयन्ते भूमिदानगुणान्विताः ॥ १३-९७-६९ (८५३४९)
सर्वदा पार्थिवेनेह सततं भूतिमिच्छता ।
भूर्देया विधिवच्छक्र पात्रे सुखमभीप्सुनां ॥ १३-९७-७० (८५३५०)
अपि कृत्वा नरः पापं भूमिं दत्त्वा द्विजातये ।
समुत्सृजति तत्पापं जीर्णां त्वचमिवोरगः ॥ १३-९७-७१ (८५३५१)
सागरान्सरितः शैलान्काननानि च सर्वशः ।
सर्वमेतन्नरः शक्र ददाति वसुधां ददत् ॥ १३-९७-७२ (८५३५२)
तटाकान्युदपानानि स्रोतांसि च सरांसि च ।
स्नेहान्सर्वरसांश्चैव ददाति वसुधां ददत् ॥ १३-९७-७३ (८५३५३)
ओषधीर्वीर्यसम्पन्नानगान्पुष्पफलान्वितान् ।
काननोपलशैलांश्च ददाति वसुधां ददत् ॥ १३-९७-७४ (८५३५४)
अग्निष्टोमप्रभृतिभिरिष्ट्वा च स्वाप्तदक्षिणैः ।
न तत्फलमवाप्नोति भूमिदानाद्यदश्नुते ॥ १३-९७-७५ (८५३५५)
दाता दशानुगृह्णाति दश हन्ति तथा क्षिपन् ।
पूर्वदत्तां हरन्भूमिं नरकायोपगच्छति ॥ १३-९७-७६ (८५३५६)
न ददाति प्रतिश्रुत्य दत्त्वाऽपि च हरेत्तु यः ।
स बद्धो वारुणैः पाशैस्तप्यते मृत्युसासनात् ॥ १३-९७-७७ (८५३५७)
आहिताग्निं सदायज्ञं कृशवृत्तिं प्रियातिथिम् ।
ये भरन्ति द्विजश्रेष्ठं नोपसर्पन्ति ते यमम् ॥ १३-९७-७८ (८५३५८)
ब्राह्मणेष्वनृणीभूतः पार्थिवः स्यात्पुरंदर ।
इतरेषां तु वर्णानां तारयेत्कृशदुर्बलान् ॥ १३-९७-७९ (८५३५९)

नाच्छिन्द्यात्स्पर्शितां भूमिं परेण त्रिदशाधिप ।
ब्राह्मणस्य सुरश्रेष्ठ कृशवृत्तेः कदाचन ॥१३-९७-८० (८५३६०)
यथाश्रु पतितं तेषां दीनानामथ सीदताम् ।
ब्राह्मणानां हृते क्षेत्रे हन्यात्त्रिपुरुषं कुलम् ॥१३-९७-८१ (८५३६१)
भूमिपालं च्युतं राष्ट्राद्यस्तु संस्थापयेत्पुनः ।
तस्य वासः सहस्राक्ष नाकपृष्ठे महीयते ॥१३-९७-८२ (८५३६२)
ग्सुनिर्मितां सुविक्रीतां सुभृतां स्थापयेन्नृप।'
इक्षुभिः सन्ततां भूमिं यवगोधूमसालिनीम् ॥ १३-९७-८३ (८५३६३)
गोश्ववाहनपूर्णां वा यो ददाति वसुन्धराम् ।
विमुक्तः सर्वपापेभ्यः स्वर्गलोके महीयते ॥' १३-९७-८४ (८५३६४)
निधिगर्भां ददद्भूमिं सर्वरत्नपरिच्छदाम् ।
अक्षयाँल्लभते लोकान्भूमिसत्रं हि तस्य तत ॥१३-९७-८५ (८५३६५)
विधूय कलुषं सर्वं विरजाः सम्मतः सताम् ।
लोके महीयते सद्भिर्यो ददाति वसुन्धराम् ॥१३-९७-८६ (८५३६६)
यथाऽप्सु पतितः शक्र तैलबिन्दुर्विसर्पति ।
तथा भूमिकृतं दानं सस्येसस्ये विवर्धते ॥१३-९७-८७ (८५३६७)
ये रणाग्रे महीपालाः शूराः समितिशोभनाः ।
वध्यन्तेऽभिमुखाः शक्र ब्रह्मलोकं व्रजन्ति ते ॥१३-९७-८८ (८५३६८)
नृत्तगीतपरा नार्यो दिव्यमाल्यविभूषिताः ।
उपतिष्ठन्ति देवेन्द्र यथा भूमिप्रदं दिवि ॥१३-९७-८९ (८५३६९)
मोदते च सुखं स्वर्गे देवगन्धर्वपूजितः ।
यो ददाति महीं सम्यग्विधिनेह द्विजातये ॥१३-९७-९० (८५३७०)
शतमप्सरसश्चैव दिव्यमाल्यविभूषिताः ।
उपतिष्ठन्ति देवेन्द्र ब्रह्मलोके धराप्रदम् ॥१३-९७-९१ (८५३७१)
उपतिष्ठन्ति पुण्यानि सदा भूमिप्रदं नरम् ।
शङ्खं भद्रासनं छत्रं वराश्वा वरवाहनम् ॥१३-९७-९२ (८५३७२)
भूमिप्रदानात्पुष्पाणि हिरण्यनिचयास्तथा ।
आज्ञा सदाऽप्रतिहता जयशब्दा वसूनि च ॥१३-९७-९३ (८५३७३)
भूमिदानस्य पुण्यानि फलं स्वर्गः पुरन्दर ।
हिरण्यपुष्पाश्चौषध्यः कुशकाञ्चनशाद्वलाः ॥१३-९७-९४ (८५३७४)
अमृतप्रसवां भूमिं प्राप्नोति पुरुषो ददत् ॥ १३-९७-९५ (८५३७५)
नास्ति भूमिसमं दानं नास्ति मातृसमो गुरुः ।
नास्ति सत्यसमो धर्मो नास्ति दानसमो निधिः ॥१३-९७-९६ (८५३७६)
भीष्म उवाच।१३-९७-९७क्ष् (७०८७)
एतदाङ्गिरसाच्छ्रुत्वा वासवो वसुधामिमाम् ।
वसुरत्नसमाकीर्णां ददावाङ्गिरसे तदा ॥१३-९७-९७ (८५३७७)

य इदं श्रावयेच्छ्राद्धे भूमिदानस्य संस्तवम् ।
न तस्य रक्षसां भागो नासुराणां भवत्युत ॥ १३-९७-९८ (८५३७८)
अक्षयं च भवेद्दत्तं पितृभ्यस्तन्न संशयः ।
तस्माच्छ्राद्धेष्विदं विद्वान्भुञ्जतः श्रावयेद्द्विजान् ॥ १३-९७-९९ (८५३७९)
इत्येतत्सर्वदानानां श्रेष्ठमुक्तं तवानघ ।
मया भरतशार्दूल किं भूयः श्रोतुमिच्छसि ॥ ॥ १३-९७-१०० (८५३८०)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
सप्तनवतितमोऽध्यायः ॥ ९७ ॥

Mahabharata - Anushaasana Parva - Chapter Footnotes

७-९७-६ प्रियं स्वपतिम् ॥
७-९७-१२ प्रियेण प्रियाय वा दत्तेति योगात्तस्या दानमादानं वा कुर्वन्
प्रियदत्ताया अस्याः प्रियो भवतीत्यर्थः । दानं वाप्यथ वा ज्ञानं
नामास्याः परमप्रियम् इति ट ध पाठः ॥
७-९७-१९ शंसन्त्यमुकदत्ते गृहे तिष्ठाम इति कथयन्ति ॥
७-९७-२३ अर्पितदानान्तरवद्भूमिदाने पुण्योत्पत्तौ शङ्कैव नास्तीत्यर्थः ॥
७-९७-२५ एता एतानि । सुपो डादेशः। वर्तन्त्यनुसरन्ति। नातिक्रामन्ति
भूमिदमिति थ ध पाठः ॥
७-९७-२८ वैकिंकरः विपरीतं कुत्सितं च करोतीति विकिंकरः
कालस्तत्सम्बन्धी कालमृत्युरित्यर्थः ॥
७-९७-३० सत्री सत्रकृत् ॥
७-९७-३१ उदीर्णं इति पाठे महत् । शरणं गृहम् ॥
७-९७-३६ ततश्च जनने पुनरिति थ पाठ ॥।
७-९७-३७ ब्रह्मभूयं बृहत्त्वं फलमिति यावत् । गच्छति
प्राप्नोति। ब्राह्मणो ब्रह्मसंश्रित इति ट ध पाठः ॥
७-९७-३८ कृत्यानां मन्त्रमयीनां मारणार्थशक्तीनां सम्बन्धि
यदरिष्टं तच्छमनम् ॥
७-९७-३९ इदं भूमिदानं यो वेद । वादं भूमिवाक्यं यो वेद। सोऽपि
पुनाति दशपुरुषानिति शेषः ॥
७-९७-४१ भूतिलक्षणं ऐश्वर्यसूचकम् ॥
७-९७-७६ क्षिपन् हरन् ॥
७-९७-८० स्पर्शितां दत्ताम् ॥
७-९७-९२ वराश्वा वरवारणा इति थ पाठः ॥

---

अनुससनपर्व-अध्यय०९८

॥ श्रीः ॥
१३.९८. अध्यायः ९८

अथ दानधर्मपर्व ॥ १ ॥
Mahabharata - Anushaasana Parva - Chapter Topics
भीष्मेण युधिष्ठिरम्प्रत्यन्नदानप्रशंसनपूर्वकं तत्फलकथनम् ॥ १ ॥

Mahabharata - Anushaasana Parva - Chapter Text

युधिष्ठिर उवाच ।
कानि दानानि लोकेऽस्मिन्दातुकामो महीपतिः ।
गुणाधिकेभ्यो विप्रेभ्यो दद्याद्भरतसत्तम ॥ १३-९८-१ (८५३८१)
केन तुष्यन्ति ते सद्यः किं तुष्टाः प्रदिशन्ति च ।
शंस मे तन्महाबाहो फलं पुण्यकृतं महत् ॥ १३-९८-२ (८५३८२)
दत्तं किं फलवद्राजन्निह लोकें परत्र च ।
भवतः श्रोतुमिच्छामि तन्मे विस्तरतो वद ॥ १३-९८-३ (८५३८३)
भीष्म उवाच। १३-९८-४क्ष् (७०८८)
इममर्थं पुरा पृष्टो नारदो देवदर्शनः ।
यदुक्तवानसौ वाक्यं तन्मे निगदतः शृणु ॥ १३-९८-४ (८५३८४)
नारद उवाच। १३-९८-५क्ष् (७०८९)
अन्नमेव प्रशंसन्ति देवा ऋषिगणास्तथा ।
लोकतन्त्रं हि यज्ञाश्च सर्वमन्ने प्रतिष्ठितम् ॥ १३-९८-५ (८५३८५)
अन्नेन सदृशं दानं न भूतं न भविष्यति ।
तस्मादन्नं विशेषेणि दातुमिच्छन्ति मानवाः ॥ १३-९८-६ (८५३८६)
अन्नमूर्जस्करं लोके प्राणाश्चान्ने प्रतिष्ठिताः ।
अन्नेन धार्यते सर्वं विश्वं जगदिदं प्रभो ॥ १३-९८-७ (८५३८७)
अन्नाद्गृहस्था लोकेऽस्मिन्भिक्षवस्तापसास्तथा ॥
अन्नाद्भवन्ति वै प्राणाः प्रत्यक्षं नात्र संशयः ॥ १३-९८-८ (८५३८८)
कटुम्बिने सीदते च ब्राह्मणाय महात्मने ।
दातव्यं भिक्षवे चान्नमात्मनो भूतिमिच्छता ॥ १३-९८-९ (८५३८९)
ब्राह्मणायाभिरूपाय यो दद्यादन्नमर्थिने ।
निदधाति निधिं श्रेष्ठं पारलौकिकमात्मनः ॥ १३-९८-१० (८५३९०)
श्रान्तमध्वनि वर्तन्तं वृद्धमर्हमुपस्थितम् ।
अर्चयेद्भूतिमन्विच्छन्गृहस्थो गृहमागतम् ॥ १३-९८-११ (८५३९१)
क्रोधमुत्पतितं हित्वा सुशीलो वीतमत्सरः ।
अन्नदः प्राप्नुते राजन्दिवि चेह च यत्सुखम् ॥ १३-९८-१२ (८५३९२)

नावमन्येदभिगतं न प्रणुद्यात्कदाचन ।
अपि श्वपाके शुनि वा नान्नदानं प्रणश्यति ॥ १३-९८-१३ (८५३९३)
यो दद्यादपरिक्लिष्टमन्नमध्वनि वर्तते ।
आर्तायादृष्टपूर्वाय स महद्धर्ममाप्नुयात् ॥ १३-९८-१४ (८५३९४)
पितॄन्देवानृपीन्विप्रानतिथींश्च जनाधिप ।
यो नरः प्रीणयत्यन्नैस्तस्य पुण्यफलं महत् ॥ १३-९८-१५ (८५३९५)
कृत्वाऽतिपातकं कर्म यो दद्यादन्नमर्थिने ।
ब्राह्मणाय विशेषेण न स पापेन मुह्यते ॥ १३-९८-१६ (८५३९६)
ब्राह्मणेष्वक्षयं दानमन्नं शूद्रे महाफलम् ।
अन्नदानं हि शूद्रे च ब्राह्मणे च विशिष्यते ॥ १३-९८-१७ (८५३९७)
न पृच्छेद्गोत्रचरणं स्वाध्यायं देशमेव च ।
भिक्षितो ब्राह्मणेनान्नं दद्यादेवाविचारतः ॥ १३-९८-१८ (८५३९८)
अन्नदस्यान्नदा वृक्षाः सर्वकामफलप्रदाः ।
भवन्ति चेह चामुत्र नृपते नात्र संशयः ॥ १३-९८-१९ (८५३९९)
आशंसन्ते हि पितरः सुवृष्टिमिव कर्षकाः ।
अस्माकमपि पुत्रो वा पौत्रो वाऽन्नं प्रदास्यति ॥ १३-९८-२० (८५४००)
ब्राह्मणो हि महद्भूतं स्वयं देहीति याचते ।
अकामो वा सकामो वा दत्त्वा पुण्यमवाप्नुयात् ॥ १३-९८-२१ (८५४०१)
ब्राह्मणः सर्वभूतानामतिथिः प्रसृताग्रभुक् ।
विप्रा यदधिगच्छन्ति भिक्षमाणा गृहं सदा ॥ १३-९८-२२ (८५४०२)
सत्कृताश्च निवर्तन्ते तदतीव प्रवर्धते ।
महाभागे कुले प्रेत्य जन्म चाप्नोति भारत ॥ १३-९८-२३ (८५४०३)
दत्त्वा त्वन्नं नरो लोके तथा स्थानमनुत्तमम् ।
स्विष्टमृष्टान्नदायी तु स्वर्गे वसति सत्कृतः ॥ १३-९८-२४ (८५४०४)
अन्नं प्राणा नराणां हि सर्वमन्ने प्रतिष्ठिम् ।
अन्नदः पशुमान्पुत्री धनवान्भोगवानपि ॥ १३-९८-२५ (८५४०५)
प्राणवांश्चापि भवति रूपवांश्च तथा नृप ।
अन्नदः प्राणदो लोके सर्वदः प्रोच्यते तु सः ॥ १३-९८-२६ (८५४०६)
अन्नं हि दत्त्वाऽतिथये ब्राह्मणाय यथाविधि ।
प्रदाता सुखमाप्नोति दैवतैश्चापि पूज्यते ॥ १३-९८-२७ (८५४०७)
ब्राह्मणो हि महद्भूतं क्षेत्रभूतं युधिष्ठिर ।
उप्यते तत्रि यद्बीजं तद्धि पुण्यफलं महत् ॥ १३-९८-२८ (८५४०८)
प्रत्यक्षं प्रीतिजननं भोक्तुर्दातुर्भवत्युत ।
सर्वाण्यन्यानि दानानि परोक्षफलवन्त्युत ॥ १३-९८-२९ (८५४०९)
अन्नाद्धि प्रसवं यान्ति रतिरन्नाद्धि भारत ।
धर्मार्थावन्नतो विद्धि रोगनाशं तथाऽन्नतः ॥ १३-९८-३० (८५४१०)

अन्नं ह्यमृतमित्याह पुरा कल्पे प्रजापतिः। ७-९८-३अब् अन्नं भुवं
दिवं खं च सर्वमन्ने प्रतिष्ठितम् ॥ १३-९८-३१ (८५४११)
अन्नप्रणाशे भिद्यन्ते शरीरे पञ्च धातवः ।
बलं बलवतोपीह प्रणश्यत्यन्नहानितः ॥ १३-९८-३२ (८५४१२)
आवाहाश्च विवाहाश्च यज्ञाश्चान्नमृते तथा ।
निवर्तन्ते नरश्रेष्ठ ब्रह्म चात्र प्रलीयते ॥ १३-९८-३३ (८५४१३)
अन्नतः सर्वमेतद्धि यत्किञ्चित्स्थाणु जङ्गमम् ।
त्रिषु लोकेषु धर्मार्थमन्नं देयमतो बुधैः ॥ १३-९८-३४ (८५४१४)
अन्नदस्य मनुष्यस्य बलमोजो यशांसि च ।
कीर्तिश्च वर्धते शश्वत्त्रिषु लोकेषु पार्थिव ॥ १३-९८-३५ (८५४१५)
मेघेषूर्ध्वं सन्निधत्ते प्राणानां पवनः पतिः ।
तच्च मेघगतं वारि शक्रो वर्षति भारत ॥ १३-९८-३६ (८५४१६)
आदत्ते च रसान्भौनानादित्यः स्वगभस्तिभिः ।
वायुरादित्यतस्तांश्च रसान्देवः प्रवर्षति ॥ १३-९८-३७ (८५४१७)
तद्यदा मेघतो वारि पतितं भवति क्षितौ ।
तदा वसुमती देवी स्निग्धा भवति भारत ॥ १३-९८-३८ (८५४१८)
ततः सस्यानि रोहन्ति येन वर्तयते जगत् ।
मांसमेदोस्थिशुक्राणां प्रादुर्भावस्ततः पुनः ॥ १३-९८-३९ (८५४१९)
सम्भवन्ति ततः शुक्रात्प्राणिनः पृथिवीपते ।
अग्नीषोमौ हि तच्छुक्रं सृजतः पुष्यतश्च ह ॥ १३-९८-४० (८५४२०)
एवमन्नाद्धि सूर्यश्च पवनः शक्रमेव च ।
एक एव स्मृतो राशिस्ततो भूतानि जज्ञिरे ॥ १३-९८-४१ (८५४२१)
प्राणान्ददाति भूतानां तेजश्च भरतर्षभ ।
गृहमभ्यागतायाथ यो दद्यादन्नमर्थिने ॥ १३-९८-४२ (८५४२२)
भीष्म उवाच। १३-९८-४३क्ष् (७०९०)
नारदेनैवमुक्तोऽहमन्नदानं सदा नृप ।
अनसूयुस्त्वमप्यन्नं तस्माद्देहि गतज्वरः ॥ १३-९८-४३ (८५४२३)
दत्त्वाऽन्नं विधिवद्राजन्विप्रेभ्यस्त्वमपि प्रभो ।
यथावदनुरूपेभ्यस्ततः स्वर्गमवाप्स्यसि ॥ १३-९८-४४ (८५४२४)
अन्नदानां हि ये लोकास्तांस्त्वं शृणु जनाधिप ।
भवनानि प्रकाशन्ते दिवि तेषां महात्मनाम् ॥ १३-९८-४५ (८५४२५)
नानासंस्थानि रूपाणि नानास्तम्भान्वितानि च ।
चन्द्रमण्डलशुभ्राणि किंकिणीजालवन्ति च ॥ १३-९८-४६ (८५४२६)
तरुणादित्यवर्णानि स्थावराणि चराणि च ।
अनेकशतभौमानि सान्तर्जलचराणि च ॥ १३-९८-४७ (८५४२७)
वैदूर्यार्कप्रकाशानि रौप्यरुक्ममयानि च ।

सर्वकामफलाश्चापि वृक्षा भवनसंस्थिताः ॥ १३-९८-४८ (८५४२८)
वाप्यो वीथ्यः सभाः कूपा दीर्घिकाश्चैव सर्वशः ।
घोषवन्ति च यानानि युक्तान्यथ सहस्रशः ॥ १३-९८-४९ (८५४२९)
भक्ष्यभोज्यमयाः शैला वासांस्याभरणानि च ।
क्षीरं स्रवन्ति सरितस्तथा चैवान्नपर्वताः ॥ १३-९८-५० (८५४३०)
प्रासादाः पाण्डुराभ्राभाः शय्याश्च कनकोज्ज्वलाः ।
तान्यन्नदाः प्रपद्यन्ते तस्मादन्नप्रदो भव ॥ १३-९८-५१ (८५४३१)
एते लोकाः पुण्यकृता अन्नदानां महात्मनाम् ।
तस्मादन्नं प्रयत्नेन दातव्यं मानवैर्भुवि ॥ ॥ १३-९८-५२ (८५४३२)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
अष्टनवतितमोऽध्यायः ॥ ९८ ॥
Mahabharata - Anushaasana Parva - Chapter Footnotes

७-९८-९ कुटुम्बं पीडयित्वापि ब्राह्मणायेति ट ध पाठः ॥
७-९८-१९ अन्नदस्यान्नवृक्षाश्चेति झ पाठः ॥
७-९८-२८ क्षेत्र चरति पादवत् इति थ ध पाठः ॥
७-९८-३३ ब्रह्म वेदः ॥
७-९८-३६ मेघेषूदकमादत्ते प्राणानां पवनः शिव इति थ पाठः ॥

---

अनुससनपर्व-अध्यय०९९
॥ श्रीः ॥
१३.९९. अध्यायः ९९

अथ दानधर्मपर्व ॥ १ ॥
Mahabharata - Anushaasana Parva - Chapter Topics
भीष्मेण
युधिष्ठिरम्प्रत्यश्विन्यादिनक्षत्रयोगेऽन्नदानफलप्रतिपादक-
नारददेवकीसंवादानुवादः ॥ १ ॥

Mahabharata - Anushaasana Parva - Chapter Text

युधिष्ठिर उवाच ।
श्रुतं मे भवतो वाक्यमन्नदानस्य यो विधिः ।
नक्षत्रयोगस्येदानीं दानकल्पं ब्रवीहि मे ॥ १३-९९-१ (८५४३३)
भीष्म उवाच। १३-९९-२क्ष् (७०९१)

अत्राप्युदाहरन्तीममितिहासं पुरानम् ।
देवक्याश्चैव संवादं समर्षेर्नारदस्य च ॥१३-९९-२ (८५४३४)
द्वारकामनुसम्प्राप्तं नारदं देवदर्शनम् ।
पप्रच्छेदं वचः प्रश्नं देवकी धर्मदर्शिनी ॥१३-९९-३ (८५४३५)
तस्याः सम्पृच्छमानाया देवर्षिर्नारदस्ततः ।
आचष्ट विधइवत्सर्वं तच्छृणुष्व विशाम्पते ॥१३-९९-४ (८५४३६)
नारद उवाच।१३-९९-५क्ष् (७०९२)
कृत्तिकासु महाभागे पायसेन ससर्पिषा ।
सन्तर्प्य ब्राह्मणान्साधूँल्लोकानाप्नोत्यनुत्तमान् ॥१३-९९-५ (८५४३७)
रोहिण्यां प्रसृतैर्मार्गैर्मांसैरन्नेन सर्पिषा ।
पयोऽन्नपानं दातव्यमनृणार्थं द्विजातये ॥१३-९९-६ (८५४३८)
दोग्ध्रीं दत्त्वा सवत्सां तु नक्षत्रे सोमदैवते ।
गच्छन्ति मानुपाल्लोकात्स्वर्गलोकमनुत्तमम् ॥१३-९९-७ (८५४३९)
आर्द्रायां कृसरं दत्त्वा तिलभिश्रमुपोषितः ।
नरस्तरति दुर्गाणि क्षुरधारांश्च पर्वतान् ॥१३-९९-८ (८५४४०)
पूपान्पुनर्वसौ दत्त्वा तथैवान्नानि शोभने ।
यशस्वी रूपसम्पन्नो बह्वन्नो जायते कुले ॥१३-९९-९ (८५४४१)
पुण्येण कनकं दत्त्वा कृतं वाऽकृतमेव च ।
अनालोकेषु लोकेषु सोमवत्स विराजते ॥१३-९९-१० (८५४४२)
आश्लेषायां तु यो रूप्यमृषभं वा प्रयच्छति ।
स सर्पभयनिर्मुक्तः सम्भवानधितिष्ठति ॥१३-९९-११ (८५४४३)
मघासु तिलपूर्णानि वर्धमानानि मानवः ।
प्रदाय पुत्रपशुमानिह प्रेत्य च मोदते ॥१३-९९-१२ (८५४४४)
फल्गुनीपूर्वसमये ब्राह्मणानामुपोषितः ।
भक्ष्यान्फाणितसंयुक्तान्दत्त्वा सौभाग्यमृच्छति ॥१३-९९-१३ (८५४४५)
घृतक्षीरसमायुक्तं विधिवत्षष्टिकौदनम् ।
उत्तराविषये दत्त्वा स्वर्गलोके महीयते ॥१३-९९-१४ (८५४४६)
यद्यत्प्रदीयते दानमुत्तराविषये नरैः ।
महाफलमनन्तं तद्भवतीति विनिश्चयः ॥१३-९९-१५ (८५४४७)
हस्ते हस्तिरथं दत्त्वा चतुर्युक्तमुपोषितः ।
प्राप्नोति परमाँल्लोकान्पुण्यकामसमन्वितान् ॥१३-९९-१६ (८५४४८)
चित्रायां वृषभं दत्त्वा पुण्यगन्धांश्च भारत ।
चरन्त्यप्सरसां लोके रमन्ते नन्दने तथा ॥१३-९९-१७ (८५४४९)
स्वात्यामथ धनं दत्त्वा यदिष्टतममात्मनः ।
प्राप्नोति लोकान्स शुभानिह चैव महद्यशः ॥ १३-९९-१८ (८५४५०)
विशाखायामनड्वाहं धेनुं दत्त्वा च दुग्धदाम् ।

सप्रासङ्गं च शकटं सधान्यं वस्त्रसंयुतम्। १३-९९-१९ (८५४५१)
पितॄन्देवांश्च प्रीणाति प्रेत्य चानन्त्यमश्नुते ।
न च दुर्गाण्यवाप्नोति स्वर्गलोकं च गच्छति ॥१३-९९-२० (८५४५२)
दत्त्वा यथोक्तं विप्रेभ्यो वृत्तिमिष्टां स विन्दति ।
नरकादींश्च संक्लेशान्नाप्नोतीति विनिश्चयः ॥१३-९९-२१ (८५४५३)
अनुराधासु प्रावरं वरान्नं समुपोषितः ।
दत्त्वा युगशतं चापि नरः स्वर्गे महीयते ॥१३-९९-२२ (८५४५४)
कालशाकं तु विप्रेभ्यो दत्त्वा मर्त्यः समूलकम् ।
ज्येष्ठायामृद्धिमिष्टां वै गतिमिष्टां स गच्छति ॥१३-९९-२३ (८५४५५)
मूले मूलफलं दत्त्वा ब्राह्मणेभ्यः समाहितः ।
पितॄन्प्रीणयते चापि गतिमिष्टां च गच्छति। १३-९९-२४ (८५४५६)
अथ पूर्वास्वषाढासु दधिपात्राण्युपोषितः ।
कुलवृत्तोपसम्पन्ने ब्राह्मणे वेदपारगे ॥१३-९९-२५ (८५४५७)
प्रदाय जायते प्रेत्य कुले सुबहुगोधने ।
उदमन्थं ससर्पिष्कं प्रभूतमधुफाणितम् ॥१३-९९-२६ (८५४५८)
दत्त्वोत्तरास्वषाढासु सर्वकामानवाप्नुयात् ।
दुग्धं त्वभिजिते योगे दत्त्वा मधुघृतप्लुतम् ।
धर्मनित्यो मनीषिभ्यः स्वर्गलोके महीयते ॥ १३-९९-२७ (८५४५९)
श्रवणे कम्बलं दत्त्वा वस्त्रान्तरितमेव वा ।
श्वेतेन याति यानेन स्वर्गलोकानसंवृतान् ॥१३-९९-२८ (८५४६०)
गोप्रयुक्तं धनिष्ठासु यानं दत्त्वा समाहितः ।
वस्त्रराशिधनं सद्यः प्रेत्य राज्यं प्रपद्यते ॥१३-९९-२९ (८५४६१)
गन्धाञ्शतभिषग्योगे दत्त्वा सागरुचन्दनान् ।
प्राप्नोत्यप्सरसां सङ्घान्प्रेत्य गन्धांश्च शाश्वतान् १३-९९-३० (८५४६२)
पूर्वप्रोष्ठपदायोगे राजमाषान्प्रदाय तु ।
सर्वभक्षफलोपेतः स वै प्रेत्य सुखी भवेत् ॥१३-९९-३१ (८५४६३)
औरभ्रमुत्तरायोगे यस्तु मांसं प्रयच्छति ।
स पितॄन्प्रीणयति वै प्रेत्य चानन्त्यमश्नुते ॥१३-९९-३२ (८५४६४)
कांस्योपदोहनां धेनु रेवत्यां यः प्रयच्छति ।
सा प्रेत्य कामानादाय दातारमुपतिष्ठति ॥१३-९९-३३ (८५४६५)
रथमश्वसमायुक्तं दत्त्वाऽश्विन्यां नरोत्तमः ।
हस्त्यश्वरथसम्पन्ने वर्चस्वी जायते कुले ॥१३-९९-३४ (८५४६६)
भरणीषु द्विजातिभ्यस्तिलधेनुं प्रदाय वै ।
गाः सुप्रभूताः प्राप्नोति नरः प्रेत्य यशस्तथा ॥१३-९९-३५ (८५४६७)
भीष्म उवाच।१३-९९-३६क्ष् (७०९३)
इत्येष लक्षणोद्देशः प्रोक्तो नक्षत्रयोगतः ।

देवक्या नारदेनेह सा स्नुषाभ्योऽब्रवीदिदम् ॥ ॥१३-९९-३६ (८५४६८)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
एकोनशततमोऽध्यायः ॥ ९९.।
Mahabharata - Anushaasana Parva - Chapter Footnotes

७-९९-६ मार्गैर्मृगसम्बन्धिभिः ॥
७-९९-७ सौम्यनक्षत्रे मृगशिरसि ॥
७-९९-९ पूपान् पिष्टमयान् घृतपाचितपिण्डान् ॥
७-९९-१० अनालोकेष आलोकान्तरवर्जितेषु स्वयंप्रकाशेष्वित्यर्थः ॥
७-९९-१३ फाणितं गोरसविकारः ॥
७-९९-१९ प्रासङ्गो धान्यादिपिधानयोग्यं चतुरश्रम् ॥
७-९९-२३ उदमन्थं उदकुम्भयुक्तं सक्तुविकारम् ॥
७-९९-३१ पूर्वप्रोष्टपदायोगे छागमांसमिति थ पाठः ॥
७-९९-३२ उरभ्रः पशुविशेष अजो वा ॥

---

अनुससनपर्व-अध्यय१००
॥ श्रीः ॥
१३.१००. अध्यायः १००

अथ दानधर्मपर्व ॥ १ ॥
Mahabharata - Anushaasana Parva - Chapter Topics
भीष्मेण युधिष्ठिरम्प्रति जलादिदानफलप्रतिपादनम् ॥ १ ॥

Mahabharata - Anushaasana Parva - Chapter Text

भीष्म उवाच ।
सर्वान्कामान्प्रयच्छन्ति ये प्रयच्छन्ति काञ्चनम् ।
इत्येवं भगवानत्रिः पितामहसुतोऽब्रवीत् ॥ १३-१००-१ (८५४६९)
पवित्रं शुच्यथायुष्यं पितृणामक्ष्यं च तत् ।
सुवर्णं मनुजेन्द्रेण हरिश्चन्द्रेण कीर्तितम् ॥ १३-१००-२ (८५४७०)
पानीयपरमं दानं दानानां मनुरब्रवीत् ।
तस्मात्कूपांश्च वापीश्च तटाकानि च स्वानयेत् ॥ १३-१००-३ (८५४७१)
सर्वं विनाशयेत्पापं पुरुषस्येह कर्मणः ।
कूपः प्रवृत्तपानीयः सुप्रवृत्तश्च नित्यशः ॥ १३-१००-४ (८५४७२)
सर्वं तारयते वंशं यस्य खाते जलाशये ।

गावः पिबन्ति विप्राश्च साधवश्च नराः सदा ॥ १३-१००-५ (८५४७३)
निदाघकाले पानीयं यस्य तिष्ठत्यवारितम् ।
स दुर्गं विषमं कृत्स्नं न कदाचिदवाप्नुते ॥ १३-१००-६ (८५४७४)
बृहस्पतेर्भगवतः पूष्णश्चैव भगस्य च ।
अश्विनोश्चैव वह्नेश्च प्रीतिर्भवति सर्पिषा ॥ १३-१००-७ (८५४७५)
परमं भेषजं ह्येतद्यज्ञानामेतदुत्तमम् ।
रसानामुत्तमं चैतत्फलानां चैतदुत्तमम् ॥ १३-१००-८ (८५४७६)
फलकामो यशस्कामः पुष्टिकामश्च नित्यदा ।
घृतं दद्याद्द्विजातिभ्यः पुरुषः शुचिरात्मवान् ॥ १३-१००-९ (८५४७७)
घृतं मासे आश्वयुजि विप्रभ्यो यः प्रयच्छति ।
तस्मै प्रयच्छतो रूपं प्रीतौ देवाविहाश्विनौ ॥ १३-१००-१० (८५४७८)
पायसं सर्पिषा मिश्रं द्विजेभ्यो यः प्रयच्छति ।
गृहं तस्य न रक्षांसि धर्षयन्ति कदाचन ॥ १३-१००-११ (८५४७९)
पिपासया न म्रियते सोपच्छन्दश्च जायते ।
न प्राप्नुयाच्च व्यसनं करकान्यः प्रयच्छति ॥ १३-१००-१२ (८५४८०)
प्रयतो ब्राह्मणाग्रे यः श्रद्धया परया युतः ।
उपस्पर्शनषड्भागं लभते पुरुषः सदा ॥ १३-१००-१३ (८५४८१)
यः साधनार्थं काष्ठानि ब्राह्मणेभ्यः प्रयच्छति ।
प्रतापनार्थं राजेन्द्र वृत्तवद्भ्यः सदा नरः ॥ १३-१००-१४ (८५४८२)
सिद्ध्यन्त्यर्थाः सदा तस्य कार्याणि विविधानि च ।
उपर्युपरि शत्रूणां वपुषा दीप्यते च सः ॥ १३-१००-१५ (८५४८३)
भगवांश्चापि सम्प्रतो वह्निर्भवति नित्यशः ।
न तं त्यजन्ति पशवः सङ्ग्रामे च जयत्यपि ॥ १३-१००-१६ (८५४८४)
पुत्राञ्श्रियं च लभते यश्छत्रं सम्प्रच्छति ।
न चक्षुर्व्याधिं लभते यज्ञभागमथाश्नुते ॥ १३-१००-१७ (८५४८५)
निदाघकाले वर्षे वा यश्छत्रं सम्प्रयच्छति ।
नास्य कश्चिन्मनोदाहः कदाचिदपि जायते ।
कृच्छ्रात्स विषमाच्चैव क्षिप्रं मोक्षमवाप्नुते ॥ १३-१००-१८ (८५४८६)
प्रदानं सर्वदानानां शकटस्य विशाम्पते ।
एवमाह महाभागः शाण्डिल्यो भगवानृषिः ॥ ॥ १३-१००-१९ (८५४८७)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
शततमोऽध्यायः ॥ १०० ॥

Mahabharata - Anushaasana Parva - Chapter Footnotes

७-१००-१२ सोपच्छन्दः सोपकरणः । करकान्पात्रविशेषान् ॥

७-१००-१३ अग्रं वृत्तिक्षेत्रादि तदर्थम् । उत्कोचं विना। उपस्पर्शनं दानम् ॥

---

अनुससनपर्व-अध्यय१०१
॥ श्रीः ॥
१३.१०१. अध्यायः १०१

अथ दानधर्मपर्व ॥ १ ॥
Mahabharata - Anushaasana Parva - Chapter Topics
भीष्मेण युधिष्ठिरम्प्रति जलतिलभूम्यन्नगोदानादिफलकथनम्। १ । ।

Mahabharata - Anushaasana Parva - Chapter Text

युधिष्ठिर उवाच ।
दह्यमानाय विप्राय यः प्रयच्छत्युपानहौ ।
यत्फलं तस्य भवति तन्मे ब्रूहि पितामह ॥ १३-१०१-१ (८५४८८)
भीष्म उवाच। १३-१०१-२क्ष् (७०९४)
उपानहौ प्रयच्छेद्यो ब्राह्मणेभ्यः समाहितः ।
मर्दते कण्टकान्सर्वान्विषमान्निस्तरत्यपि ॥ १३-१०१-२ (८५४८९)
स शत्रूणामुपरि च सन्तिष्ठति युधिष्ठिर ।
यानं चाश्वतरीयुक्तं तस्य शुभ्रं विशाम्पते ॥ १३-१०१-३ (८५४९०)
उपतिष्ठति कौन्तेय रौप्यकाञ्चनभूषितम् ।
शकटं दम्यसंयुक्तं दत्तं भवति चैव हि ॥ १३-१०१-४ (८५४९१)
युधिष्ठिर उवाच। १३-१०१-५क्ष् (७०९५)
यत्फलं तिलदाने च भूमिदाने च कीर्तितम् ।
गोदाने चान्नदाने च भूयस्तद्ब्रूहि कौरव ॥ १३-१०१-५ (८५४९२)
भीष्म उवाच। १३-१०१-६क्ष् (७०९६)
शृणुष्व मम कौन्तैय तिलदानस्य यत्फलम् ।
निशम्य च यथान्यायं प्रयच्छ कुरुसत्तम ॥ १३-१०१-६ (८५४९३)
पितॄणां प्रथमं भोज्यं तिलाः सृष्टाः स्वयंभुवा ।
तिलदानेन वै तस्मात्पितृपक्षः प्रमोदते ॥ १३-१०१-७ (८५४९४)
माघमासे तिलान्यस्तु ब्राह्मणेभ्यः प्रयच्छति ।
सर्वसत्वसमाकीर्णं नरकं स न पश्यति ॥ १३-१०१-८ (८५४९५)
सर्वसत्रैश्च यजते यस्तिलैर्यजते पितॄन् ।
न चाकामेन दातव्यं तिलैः श्राद्धं कदाचन ॥ १३-१०१-९ (८५४९६)
महर्षेः कश्यपस्यैते गात्रेभ्यः प्रसृतास्तिलाः ।

ततो दिव्यं गता भावं प्रदानेषु तिलाः प्रभो  १३-१०१-१० (८५४९७)
पौष्टिका रूपदाश्चैव तथा पापविनाशनाः ।
तस्मात्सर्वप्रदानेभ्यस्तिलदानं विशिष्यते ॥ १३-१०१-११ (८५४९८)
आपस्तम्बश्च मेधावी शङ्खश्च लिखितस्तथा ।
महर्षिर्गौतमश्चापि तिलदानैर्दिवं गताः ॥ १३-१०१-१२ (८५४९९)
तिलहोमरता विप्राः सर्वे संयतमैथुनाः ।
समा गव्येन हविषा प्रवृत्तिषु च संस्थिताः ॥ १३-१०१-१३ (८५५००)
सर्वेषामिति दानानां तिलदानं विशिष्यते ।
अक्षयं सर्वदानानां तिलदानमिहोच्यते ॥ १३-१०१-१४ (८५५०१)
उच्छिन्ने तु पुरा हव्ये कुशिकर्षिः परन्तपः ।
तिलैरग्नित्रयं हुत्वा प्राप्तवान्गातिमुत्तमाम् ॥ १३-१०१-१५ (८५५०२)
इति प्रोक्तं कुरुश्रेष्ठ तिलदानमनुत्तमम् ।
विधानं येन विधिना तिलानामिह शस्यते ॥ १३-१०१-१६ (८५५०३)
अत ऊर्ध्वं निबोधेदं देवानां यष्टुमिच्छताम् ।
समागमे महाराज ब्रह्मणा वै स्वयंभुवा ॥ १३-१०१-१७ (८५५०४)
देवाः समेत्य ब्रह्माणं भूमिभागे यियश्रवः ।
शुभं देशमयाचन्त यजेम इति पार्थिव ॥ १३-१०१-१८ (८५५०५)
देवा ऊचुः। १३-१०१-१९क्ष् (७०९७)
भगवंस्त्वं प्रभुर्भूमेः सर्वस्य त्रिदिवस्य च ।
यजेम हि महाभाग यज्ञं भवदनुज्ञया ॥ १३-१०१-१९ (८५५०६)
नाननुज्ञातभूमिर्हि यज्ञस्य फलमश्नुते ।
त्वं हि सर्वस्य जगतः स्थावरस्य चरस्य च ।
प्रभुर्भवसि तस्मात्त्वं समनुज्ञातुमर्हसि ॥ १३-१०१-२० (८५५०७)
ब्रह्मोवाच। १३-१०१-२१क्ष् (७०९८)
ददानि मेदिनीभागं भवद्भयोऽहं सुरर्षभाः ।
यस्मिन्देशे करिष्यध्वं यज्ञान्काश्यपनन्दनाः ॥ १३-१०१-२१ (८५५०८)
दैवा ऊचुः। १३-१०१-२२क्ष् (७०९९)
भगवन्कृतकामाः स्म यक्ष्महे स्वाप्तदक्षिणैः ।
इमं तु देशं मुनयः पर्युपासन्ति नित्यदा ॥ १३-१०१-२२ (८५५०९)
ततोऽगस्त्यश्च कण्वश्च भृगुरत्रिर्वृषाकपिः ।
असितो देवलश्चैव देवयज्ञमुपागमन् ॥ १३-१०१-२३ (८५५१०)
ततो देवा महात्मान ईजिरे यज्ञमच्युतम् ।
तथा समापयामासुर्यथाकालं सुरर्षभाः ॥ १३-१०१-२४ (८५५११)
त इष्टयज्ञास्त्रिदशा हिमवत्यचलोत्तमे ।
षष्ठमंशं क्रतोस्तस्य भूमिदानं प्रचक्रिरे। १३-१०१-२५ (८५५१२)
प्रादेशमात्रं भूमेस्तु यो दद्यादनुपस्कृतम् ।

न सीदति स कृच्छ्रेषु न च दुर्गाण्यवाप्नुते ॥ १३-१०१-२६ (८५५१३)
शीतवातातपसहां यागभूमिं सुसंस्कृताम् ।
प्रदाय सुरलोकस्थः पुण्यान्तेऽपि न चाल्यते ॥ १३-१०१-२७ (८५५१४)
मुदितो वसति प्राज्ञः शक्रेण सह पार्थिव ।
पतिश्रयप्रदानाच्च सोऽपि स्वर्गे महीयते ॥ १३-१०१-२८ (८५५१५)
अध्यापककुले जातः श्रोत्रियो नियतेन्द्रियः ।
गृहे यस्य वसेत्तुष्टः प्रधानं लोकमश्नुते ॥ १३-१०१-२९ (८५५१६)
तथा गवार्थे शरणं शीतवर्षसहं दृढम् ।
आसप्तमं तारयति कुलं भरतसत्तम ॥ १३-१०१-३० (८५५१७)
क्षेत्रभूमिं ददल्लोके शुभां श्रियमवाप्नुयात् ।
रत्नभूमिं प्रदद्यात्तु कुलवंशं प्रवर्धयेत् ॥ १३-१०१-३१ (८५५१८)
न चोषरां न निर्दग्धां महीं दद्यात्कथञ्चन ।
न श्मशानपरीतां च न च पापनिषेविताम् ॥ १३-१०१-३२ (८५५१९)
पारक्ये भूमिदेशे तु पितॄणां निर्वपेत्तु यः ।
तद्भूमिं वाऽपि पितृभिः श्राद्धकर्म विहन्यते ॥ १३-१०१-३३ (८५५२०)
तस्मात्क्रीत्वा महीं दद्यात्स्वल्पामपि विचक्षणः ।
पिण्डः पितृभ्यो दत्तो वै तस्यां भवति शाश्वतः ॥ १३-१०१-३४ (८५५२१)
अटवी पर्वताश्चैव नद्यस्तीर्थानि यानि च ।
सर्वाण्यस्वामिकान्याहुर्न हि तत्र परिग्रहः ॥ १३-१०१-३५ (८५५२२)
इत्येतद्भूमिदानस्य फलमुक्तं विशाम्पते ।
अतः परं तु गोदानं कीर्तयिष्यामि तेऽनघ ॥ १३-१०१-३६ (८५५२३)
गावोऽधिकास्तपस्विभ्यो यस्मात्सर्वेभ्य एव च ।
तस्मान्महेश्वरो देवस्तपस्ताभिः सहास्थितः ॥ १३-१०१-३७ (८५५२४)
ब्राह्मे लोके वसन्त्येताः सोमेन सह भारत ।
यां तां ब्रह्मर्षयः सिद्धाः प्रार्थयन्ति परां गतिम् ॥ १३-१०१-३८ (८५५२५)
पयसा हविषा दध्ना शकृता चाथ चर्मणा ।
अस्थिभिश्चोपकुर्वन्ति शृङ्गैर्वालैश्च भारत ॥ १३-१०१-३९ (८५५२६)
नासां शीतातपौ स्यातां सदैताः कर्म कुर्वते ।
न वर्षविषयं वाऽपि दुःखमासां भवत्युत ॥ १३-१०१-४० (८५५२७)
ब्राह्मणैः सहिता यान्ति तस्मात्पारमकं पदम् ।
एकं गोब्राह्मणं तस्मात्प्रवदन्ति मनीषिणः ॥ १३-१०१-४१ (८५५२८)
रन्तिदेवस्य यज्ञे ताः पशुत्वेनोपकल्पिताः ।
अतश्चर्मण्वती राजन्गोचर्मभ्यः प्रवर्तिता ।
पशुत्वाच्च विनिर्मुक्ताः प्रदानायोपकल्पिताः ॥ १३-१०१-४२ (८५५२९)
ता इमा विप्रमुख्येभ्यो यो ददाति महीपते ।
निस्तरेदापदं कृच्छ्रां विषमस्थोऽपि पार्थिव ॥ १३-१०१-४३ (८५५३०)

गवां सहस्रदः प्रेत्य नरकं न प्रपद्यते ।
सर्वत्र विजयं चापि लभते मनुजाधिप ॥ १३-१०१-४४ (८५५३१)
अमृतं वै गवां क्षीरमित्याह त्रिदशाधिपः ।
तस्माद्ददाति यो धेनुममृतं स प्रयच्छति ॥ १३-१०१-४५ (८५५३२)
अग्नीनामव्ययं ह्येतद्धौम्यं वेदविदो विदुः ।
तस्माद्ददाति यो धेनुं स हौम्यं सम्प्रयच्छति ॥ १३-१०१-४६ (८५५३३)
स्वर्गो वै मूर्तिमानेष वृषभं यो गवां पतिम् ।
विप्रे गुणयुते दद्यात्स वै स्वर्गे महीयते ॥ १३-१०१-४७ (८५५३४)
प्राणा वै प्राणिनामेते प्रोच्यन्ते भरतर्षभ ।
तस्माद्ददाति यो धेनुं प्राणानेष प्रयच्छति ॥ १३-१०१-४८ (८५५३५)
गावः शरण्या भूतानामिति वेदविदो विदुः ।
तस्माद्ददाति यो धेनुं शरणं सम्प्रयच्छति ॥ १३-१०१-४९ (८५५३६)
न वधार्थं प्रदातव्या न कीनाशे न नास्तिके ।
गोजीविने न दातव्या तथा गौर्भरतर्षभ ।
ग्गोरसानां न विक्रेतू रसं च यजनस्य च ॥' १३-१०१-५० (८५५३७)
ददत्स तादृशानां वै नरो गां पापकर्मणाम् ।
अक्षयं नरकं यातीत्येवमाहुर्महर्षयः ॥ १३-१०१-५१ (८५५३८)
न कृशां नापवत्सां वा वन्ध्यां रोगान्वितां तथा ।
न व्यङ्गां न परिश्रान्तां दद्याद्गां ब्राह्मणाय वै ॥ १३-१०१-५२ (८५५३९)
दशगोसहस्रदः सम्यक् शक्रेण सह मोदते ।
अक्षयाँल्लभते लोकान्नरः शतसहस्रशः ॥ १३-१०१-५३ (८५५४०)
इत्येतद्गोप्रदानं च तिलदानं च कीर्तितम् ।
तथा भूमिप्रदानं च शृणुष्वान्ने च भारत ॥ १३-१०१-५४ (८५५४१)
अन्नदानं प्रधानं हि कौन्तेय परिचक्षते ।
अन्नस्य हि प्रदानेन रन्तिदेवो दिवं गतः ॥ १३-१०१-५५ (८५५४२)
श्रान्ताय क्षुधितायान्नं यः प्रयच्छति भूमिप ।
स्वायंभुवं महात्स्थानं स गच्छति नराधिप ॥ १३-१०१-५६ (८५५४३)
न हिरण्यैर्न वासोभिर्नान्यदानेन भारत ।
प्राप्नुवन्ति नराः श्रेयो यथा ह्यन्नप्रदाः प्रभो ॥ १३-१०१-५७ (८५५४४)
अन्नं वै प्रथमं द्रव्यमन्नं श्रीश्च परा मता ।
अन्नात्प्राणः प्रभवति तेजो वीर्यं बलं तथा ॥ १३-१०१-५८ (८५५४५)
सद्यो ददाति यश्चान्नं सदैकाग्रमना नरः ।
न स दुर्गाण्यवाप्नोतीत्येवमाह पराशरः ॥ १३-१०१-५९ (८५५४६)
अर्चयित्वा यथान्यायं देवेभ्योऽन्नं निवेदयेत् ।
यदन्ना हि नरा राजंस्तदन्नास्तस्य देवतः ॥ १३-१०१-६० (८५५४७)
कौमुद्यां शुक्लपक्षे तु योऽन्नदानं करोत्युत ।

स सन्तरति दुर्गाणि प्रेत्य चानन्त्यमश्नुते ॥१३-१०१-६१ (८५५४८)
अभुक्त्वाऽतिथेये चान्नं प्रयच्छेद्यः समाहितः ।
स वै ब्रह्मविदां लोकान्प्राप्नुयाद्भरतर्षभ ॥१३-१०१-६२ (८५५४९)
सुकृच्छ्रामापदं प्राप्तश्चान्नदः पुरुषस्तरेत् ।
पापं तरति चैवेह दुष्कृतं चापकर्षति ॥१३-१०१-६३ (८५५५०)
इत्येतदन्नदानस्य तिलदानस्य चैव ह ।
भूमिदानस्य च फलं गोदानस्य च कीर्तितम् ॥ ॥१३-१०१-६४ (८५५५१)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
एकाधिकशततमोऽध्यायः ॥१०१ ॥
Mahabharata - Anushaasana Parva - Chapter Footnotes

७-१०१-७ वै पुण्यं पितृलोके महीयते इति ध पाठः ॥
७-१०१-९ सर्वकामैश्च जयति यस्तिलैरिति नच कामेन दातव्यमिति
च ध पाठः ॥
७-१०१-२२ इमं हिमवत्सन्निहितम् ॥
७-१०१-२७ प्रतिश्रयो वासार्थं स्थलम् ॥
७-१०१-३३ तद्भूमिं परकीयां भूमिं वा यो निर्वपेत् पितृभिः पितृभ्यो
दद्यात्तर्हि तच्छ्राद्धं तद्भूमिदानाख्यं कर्म चोभयं विहन्यते
वृथा भवति ॥
७-१०१-३४ तस्यां क्रीतायाम् ॥
७-१०१-४६ आकुञ्चितमपि ह्येतद्द्रव्यं वेदविदो विदुरिति ध पाठः ॥
७-१०१-५६ स्वयंभुवं महाभागं स पश्यति नराधिपेति ध पाठः ॥
७-१०१-५८ अन्नं वै परमं दैवमिति ध पाठः ॥

---

अनुससनपर्व-अध्यय१०२
॥ श्रीः ॥
१३.१०२. अध्यायः १०२

अथ दानधर्मपर्व ॥१ ॥
Mahabharata - Anushaasana Parva - Chapter Topics
भीष्मेण युधिष्ठिरम्प्रति जलप्रभाववर्णनपूर्वकं
तद्दानप्रशंसनम् ॥१ ॥

Mahabharata - Anushaasana Parva - Chapter Text

युधिष्ठिर उवाच ।
श्रुतं दानफलं तात यत्त्वया परिकीर्तितम् ।
अन्नदानं विशेषेण प्रशस्तमिह भारत ॥ १३-१०२-१ (८५५५२)
पानीयदानमेवैतत्कथं चेह महाफलम् ।
इत्येतच्छ्रोतुमिच्छामि विस्तरेण पितामह ॥ १३-१०२-२ (८५५५३)
भीष्म उवाच। १३-१०२-३क्ष् (७१००)
हन्त ते वर्तयिष्यामि यथावद्भरतर्षभ ।
गदतस्तन्ममाद्येह शृणु सत्यपराक्रम ।
पानीयदानात्प्रभृति सर्वं वक्ष्यामि तेऽनघ ॥ १३-१०२-३ (८५५५४)
यदन्नं यच्च पानीयं सम्प्रदायाश्नुते फलम् ।
न ताभ्यां परमं दानं किञ्चिदस्तीति मे मनः ॥ १३-१०२-४ (८५५५५)
अन्नात्प्राणभृतस्तात प्रवर्तन्ते हि सर्वशः ।
तस्मादन्नं परं लोके सर्वदानेषु कथ्यते ॥ १३-१०२-५ (८५५५६)
अन्नाद्बलं च तेजश्च प्राणिनां वर्धते सदा ।
अन्नादानमतस्तस्माच्छ्रेष्ठमाह प्रजापतिः ॥ १३-१०२-६ (८५५५७)
सावित्र्या ह्यपि कौन्तेय श्रूयते वचनं शुभम् ।
यच्चेदं नान्यथा चैतद्देव सत्रे महामखे ॥ १३-१०२-७ (८५५५८)
अन्ने दत्ते नरेणेह प्राणा दत्ता भवन्त्युत ।
प्राणदानाद्धि परमं न दानमिह विद्यते ॥ १३-१०२-८ (८५५५९)
श्रुतं हि ते महाबाहो लोमशस्यापि तद्वचः ।
प्राणान्दत्त्वा कपोताय यत्प्राप्तं शिबिना पुरा ॥ १३-१०२-९ (८५५६०)
यां गतिं लभते दत्त्वा द्विजस्यान्न विशाम्पते ।
ततो विशिष्टां गच्छन्ति प्राणदा इति नः श्रुतं ॥ १३-१०२-१० (८५५६१)
अन्नं चापि प्रभवति पानीयात्कुरुसत्तम ।
नीरजातेन हि विना न किञ्चित्सम्प्रवर्तते ॥ १३-१०२-११ (८५५६२)
नीरजातश्च भगवान्सोमो ग्रहगणेश्वरः ।
अमृतं च सुधा चैव सुधा चैवामृतं तथा ॥ १३-१०२-१२ (८५५६३)
अन्नौषध्यो महाराज वीरुधश्च जलोद्भवाः ।
यतः प्राणभृतां प्राणाः सम्भवन्ति विशाम्पते ॥ १३-१०२-१३ (८५५६४)
देवानाममृतं ह्यन्नं नागानां च सुधा तथा ।
पितॄणां च स्वधा प्रोक्ता पशूनां चापि वीरुधः ॥ १३-१०२-१४ (८५५६५)
अन्नमेव मनुष्याणां प्राणानाहुर्मनीषिणः ।
तच्च सर्वं नरव्याघ्र पानीयात्सम्प्रवर्तते ॥ १३-१०२-१५ (८५५६६)
तस्मात्पानीयदानाद्वै न परं विद्यते क्वचित् ।
तच्च दद्यान्नरो नित्यं यदीच्छेद्भूतिमात्मनः ॥ १३-१०२-१६ (८५५६७)
धन्यं यशस्यमायुष्यं जलदानमिहोच्यते ।

शत्रूंश्चाप्यधि कौन्तेय सदा तिष्ठति तोयदः ॥ १३-१०२-१७ (८५५६८)
सर्वकामानवाप्नोति कीर्तिं चैव हि शाश्वतीम् ।
प्रेत्य चानन्त्यमश्नाति पापेभ्यश्च प्रमुच्यते ॥ १३-१०२-१८ (८५५६९)
तोयदो मनुजव्याघ्र स्वर्गं गत्वा महाद्युते ।
अक्षयान्समवाप्नोति लोकानित्यब्रवीन्मनुः ॥ ॥ १३-१०२-१९ (८५५७०)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
द्व्यधिकशततमोऽध्यायः ॥ १०२ ॥
Mahabharata - Anushaasana Parva - Chapter Footnotes

७-१०२-११ नीरजातेन जलोद्भवेन धान्यादिना ॥
७-१०२-१२ स्वधा चैव सुरा तथेति ध पाठः ॥

---

अनुससनपर्व-अध्यय१०३
॥ श्रीः ॥
१३.१०३. अध्यायः १०३

अथ दानधर्मपर्व ॥ १ ॥
Mahabharata - Anushaasana Parva - Chapter Topics
भीष्मेण युधिष्ठिरम्प्रति
तिलजलदीपादिदानप्रशंसापरयमब्राह्मणसंवादानुवादः ॥ १ ॥

Mahabharata - Anushaasana Parva - Chapter Text

युधिष्ठिर उवाच ।
तिलानां कीदृशं दानमथ दीपस्य चैव हि ।
अन्नानां वाससा चैव भूय एव ब्रवीहि मे ॥ १३-१०३-१ (८५५७१)
भीष्म उवाच। १३-१०३-२क्ष् (७१०१)
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
ब्राह्मणस्य च संवादं यमस्य च युधिष्ठिर ॥ १३-१०३-२ (८५५७२)
मध्यदेशे महान्ग्रामो ब्राह्मणानां बभूव ह ।
गङ्गायमुनयोर्मध्ये यामुनस्य गिरेरधः ॥ १३-१०३-३ (८५५७३)
पर्णशालेति विख्यातो रमणीयो नराधिप ।
विद्वांशस्तत्र भूयिष्ठा ब्राह्मणाश्चावसंस्तथा ॥ १३-१०३-४ (८५५७४)
अथ प्राह यमः कञ्चित्पुरुषं कृष्णवाससम् ।
रक्ताक्षमूर्ध्वरोमाणं काकजङ्घाक्षिनासिकम् ॥ १३-१०३-५ (८५५७५)

गच्छ त्वं ब्राह्मणग्रामं ततो गत्वा तमानय ।
अगस्त्यं गोत्रतश्चापि नामतश्चापि शर्मिणम् ॥ १३-१०३-६ (८५५७६)
शमे निविष्टं विद्वांसमध्यापकमनावृतम् ।
मा चान्यमानयेथास्त्वं सगोत्रं तस्य पार्श्वतः ॥ १३-१०३-७ (८५५७७)
स हि तादृग्गुणस्तेन तुल्योऽध्ययनजन्मना ।
अपत्येषु तथा वृत्ते समस्तेनैव धीमता ।
तमानय यथोद्दिष्टं पूजा कार्या हि तस्य मे ॥ १३-१०३-८ (८५५७८)
स गत्वा प्रतिकूलं तच्चकार यमशासनम् ।
तमाक्रम्यानयामास प्रतिषिद्धो यमेन यः ॥ १३-१०३-९ (८५५७९)
तस्मै यमः समुत्थाय पूजा कृत्वा च वीर्यवान् ।
प्रोवाच नीयतामेष सोऽन्य आनीयतामिति ॥ १३-१०३-१० (८५५८०)
एवमुक्ते तु वचने धर्मराजेन स द्विजः ।
उवाच धर्मराजानं निर्विण्णोऽध्ययनेन वै ।
यो मे कालो भवेच्छेषस्तं वसेयमिहाच्युत ॥ १३-१०३-११ (८५५८१)
यम उवाच। १३-१०३-१२क्ष् (७१०२)
नाहं कालस्य विहितं प्राप्नोमीह कथञ्चन ।
यो हि धर्मं चरति वै तं तु जानामि केवलम् ॥ १३-१०३-१२ (८५५८२)
गच्छ विप्र त्वमद्यैव आलयं स्वं महाद्युते ।
ब्रूहि सर्वं यथा स्वैरं करवाणि किमच्युत ॥ १३-१०३-१३ (८५५८३)
ब्राह्मण उवाच। १३-१०३-१४क्ष् (७१०३)
शुद्धदानं च सुमहत्पुण्यं स्यात्तद्ब्रवीहि मे ।
सर्वस्य हि प्रमाणं त्वं त्रैलोक्यस्यापि सत्तम ॥ १३-१०३-१४ (८५५८४)
यम उवाच। १३-१०३-१५क्ष् (७१०४)
शृणु तत्त्वेन विप्रर्षे प्रदानविधिमुत्तमम् ।
तिलाः परमकं दानं पुण्यं चैवेह शाश्वतम् ॥ १३-१०३-१५ (८५५८५)
तिलाश्च सम्प्रदातव्या यथाशक्ति द्विजर्षभ ।
नित्यदानात्सर्वकामांस्तिला निर्वर्तयन्त्युत ॥ १३-१०३-१६ (८५५८६)
तिलाञ्श्राद्धे प्रशंसन्ति दानमेतद्ध्यनुत्तमम् ।
तान्प्रयच्छस्व विप्रेभायो विधिदृष्टेन कर्मणाः ॥ १३-१०३-१७ (८५५८७)
वैशाख्यां पौर्णमास्यां तु तिलान्दद्याद्द्विजातिषु ।
तिला भक्षयितव्याश्च सदा त्वालम्भं च तैः १३-१०३-१८ (८५५८८)
कार्यं सततमिच्छद्भिः श्रेयः सर्वात्मना गृहे ।
तथाऽऽपः सर्वदा देयाः पेयाश्चैव न संशयः ॥ १३-१०३-१९ (८५५८९)
पुष्करिण्यस्तटाकानि कूपांश्चैवात्र खानयेत् ।
एतत्सुदुर्लभतरमिह लोके द्विजोत्तम ॥ १३-१०३-२० (८५५९०)
आपो नित्यं प्रदेयास्ते पुण्यं ह्येतदनुत्तमम् ।

प्रपाश्च कार्या दानार्थं नित्यं ते द्विजसत्तम ।
भुक्तेऽप्यथ प्रदेयं तु पानीयं वै विशेषतः ॥ १३-१०३-२१ (८५५९१)
ग्पानीयाभ्यर्थिनं दृष्ट्वा प्रीत्या दत्त्वा त्वरान्वितः ।
वस्त्रे तन्तुप्रमाणेन दीपे निमिषवत्सरम् ॥ १३-१०३-२२ (८५५९२)
गवां रोमप्रमाणेन स्वर्गभोगमुपाश्नुते ।
जलबिन्दुप्रमाणेन तदेतान्युपवर्तय ॥' ॥ १३-१०३-२३ (८५५९३)
भीष्म उवाच। १३-१०३-२४क्ष् (७१०५)
इत्युक्ते स तदा तेन यमदूतेन वै गृहान् ।
नीतश्च कारयामास सर्वं तद्यमशासनम् ॥ १३-१०३-२४ (८५५९४)
नीत्वा तं यमदूतोऽपि गृहीत्वा शर्मिणं तदा ।
ययौ स धर्मराजाय न्यवेदयत चापि तम् ॥ १३-१०३-२५ (८५५९५)
तं धर्मराजो धर्मज्ञं पूजयित्वा प्रतापवान् ।
कृत्वा च संविदं तेन विससर्ज यथागतम् ॥ १३-१०३-२६ (८५५९६)
तस्यापि च यमः सर्वमुपदेशं चकार ह ।
प्रेत्यैत्य च ततः सर्वं चकारोक्तं यमेन तत् ॥ १३-१०३-२७ (८५५९७)
तथा प्रशंसने दीपान्यमः पितृहितेप्सया ।
तस्माद्दीपप्रदो नित्यं सन्तारति वै पितॄन् ॥ १३-१०३-२८ (८५५९८)
दातव्याः सततं दीपास्तस्माद्भरतसत्तम ।
देवतानां पितॄणां च चक्षुष्यं चात्मनां विभो ॥ १३-१०३-२९ (८५५९९)
रत्नदानं च सुमहत्पुण्यमुक्तं जनाधिप ।
यस्तान्विक्रीय यजते ब्राह्मणो ह्यभयंकरम् ॥ १३-१०३-३० (८५६००)
यद्वै ददाति विप्रेभ्यो ब्राह्मणः प्रतिगृह्य वै ।
उभयोः स्यात्तदक्षय्यं दातुरादातुरेव च ॥ १३-१०३-३१ (८५६०१)
यो ददाति स्थितः स्थित्यां तादृशाय प्रतिग्रहम् ।
उभयोरक्षयं धर्मं तं मनुः प्राह धर्मवित् ॥ १३-१०३-३२ (८५६०२)
वाससां सम्प्रदानेनि स्वदारनिरतो नरः ।
सुवस्त्रश्च सुवेषश्च भवतीत्यनुशुश्रुम ॥ १३-१०३-३३ (८५६०३)
गावः सुवर्णं च तथा तिलाश्चैवानुवर्णिताः ।
बहुशः पुरुषव्याघ्र वेदप्रामाण्यदर्शनात् ॥ १३-१०३-३४ (८५६०४)
विवाहांश्चैव कुर्वीत पुत्रानुत्पादयेत च ।
पुत्रलाभो हि कौरव्य सर्वलाभाद्विशिष्यते ॥ ॥ १३-१०३-३५ (८५६०५)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
त्र्यधिकशततमोऽध्यायः ॥ १०३ ॥

Mahabharata - Anushaasana Parva - Chapter Footnotes

७-१०३-७ अध्यापकमनानृतमिति थ पाठः । अध्यापकमनारतमिति ध पाठः ॥
७-१०३-९ चकारचयमाश्रय इति थ ध पाठः ॥
७-१०३-११ इह यमलोके ॥
७-१०३-१३ कालस्य विहितं आयुःप्रमाणं न प्राप्नोमि न जानामि । कालेनाप्रवर्तितं त्वामिह स्थापयितुं न शक्नोमीत्यर्थः। विहितं प्रापयामीह कञ्चनेति थ पाठः ॥
७-१०३-१४ बृहि पृच्छ ॥
७-१०३-१७ निर्घर्तयन्ति साधयन्ति ॥
७-१०३-१८ आलम्भनं सर्वतः स्पर्शनं उद्वर्तनमित्यर्थः ॥
७-१०३-३२ एतद्धि तस्याऽभयङ्करं प्रतिग्रहविक्रयजदोषघ्नम् ॥

---

अनुससनपर्व-अध्यय१०४
॥ श्रीः ॥
१३.१०४. अध्यायः १०४

अथ दानधर्मपर्व ॥ १ ॥
Mahabharata - Anushaasana Parva - Chapter Topics
भीष्मेण युधिष्ठिरम्प्रति गोभूविद्यादानप्रशंसनम् ॥ १ ॥

Mahabharata - Anushaasana Parva - Chapter Text

युधिष्ठिर उवाच ।
भूय एव कुरुश्रेष्ठ दानानां विधिमुत्तमम् ।
कथयस्व महाप्राज्ञ भूमिदानं विशेषतः ॥ १३-१०४-१ (८५६०६)
पृथिवीं क्षत्रियो दद्याद्ब्राह्मणायेष्टिकर्मिणे ।
विधिवत्प्रतिगृह्णीयान्न त्वन्यो दातुमर्हति ॥ १३-१०४-२ (८५६०७)
सर्ववर्णैस्तु यच्छक्यं प्रदातुं फलकाङ्क्षिभिः ।
वेदे वा यत्समाख्यातं तन्मे व्याख्यातुमर्हसि ॥ १३-१०४-३ (८५६०८)
भीष्म उवाच। १३-१०४-४क्ष् (७१०६)
तुल्यनामानि देयानि त्रीणि तुल्यफलानि च ।
सर्वकामफलानीह गावः पृथ्वी सरस्वती ॥ १३-१०४-४ (८५६०९)
यो ब्रूयाच्चापि शिष्याय धर्म्यां ब्राह्मीं सरस्वतीम् ।
पृथिवीगोप्रदानाभ्यां तुल्यं स फलमश्नुते ॥ १३-१०४-५ (८५६१०)
तथैव गाः प्रशंसन्ति न तु देयं ततः परम् ।
सन्निकृष्टफलास्ता हि लघ्वर्थाश्च युधिष्ठिर ॥ १३-१०४-६ (८५६११)

मातरः सर्वभूतानां गावः सर्वसुखप्रदाः ।
वृद्धिमाकाङ्क्षता नित्यं गावः कार्याः प्रदक्षिणाः १३-१०४-७ (८५६१२)
सन्ताड्या न तु पादेन गवां मध्ये न च व्रजेत् ।
मङ्गलायतनं देव्यस्तस्मात्पूज्याः सदैव गाः ॥ १३-१०४-८ (८५६१३)
प्रचोदनं देवकृतं गवां कर्मसु वर्तताम् ।
पूर्वमेवाक्षरं चान्यदभिधेयं ततः परम् ॥ १३-१०४-९ (८५६१४)
प्रचारे वा निवाते वा बुधो नोद्विजयेत गाः ।
तृषिता ह्यभिवीक्षन्त्यो नरं हन्युः सबान्धवम् ॥ १३-१०४-१० (८५६१५)
पितृसद्मानि सततं देवतायतनानि च ।
पूयन्ते शकृता यासां पूतं किमधिकं ततः ॥ १३-१०४-११ (८५६१६)
घासमुष्टिं परगवे दद्यात्संवत्सरं तु यः ।
अकृत्वा स्वयमाहारं व्रतं तत्सार्वकामिकम् ॥ १३-१०४-१२ (८५६१७)
स हि पुत्रान्यशोऽर्थं च श्रियं चाप्यधिगच्छति ।
नाशयत्यशुभं चैव दुःस्वप्नं चाप्यपोहति ॥ १३-१०४-१३ (८५६१८)
युधिष्ठिर उवाच। १३-१०४-१४क्ष् (७१०७)
देयाः किंलक्षणा गावः काश्चापि परिवर्जयेत् ।
कीदृशाय प्रदातव्या न देयाः कीदृशाय च ॥ १३-१०४-१४ (८५६१९)
भीष्म उवाच। १३-१०४-१५क्ष् (७१०८)
असद्वृत्ताय पापाय लुब्धायानृतवादिने ।
हव्यकव्यव्यपेताय न देया गौः कथञ्चन ॥ १३-१०४-१५ (८५६२०)
भिक्षवे बहुपुत्राय श्रोत्रियायाहिताग्नये ।
दत्त्वा दशगवां दाता लोकानाप्नोत्यनुत्तमान् ॥ १३-१०४-१६ (८५६२१)
ग्जुहोति यद्भोजयति यद्ददाति गवां रसैः ।
सर्वस्यैवांशभाग्दाता तन्निमित्तं प्रवर्तितः ॥' १३-१०४-१७ (८५६२२)
यश्चैव धर्मं कुरुते तस्य धर्मफलं च यत् ।
सर्वस्यैवांशभाग्दाता तन्निमित्तं प्रवृत्तयः ॥ १३-१०४-१८ (८५६२३)
यश्चैनमुत्पादयते यश्चैनं त्रायते भयात् ।
यश्चास्य कुरुते वृत्तिं सर्वे ते पितरस्त्रयः ॥ १३-१०४-१९ (८५६२४)
कल्मषं गुरुशुश्रूषा हन्ति मानो महद्यशः ।
अपुत्रतां त्रयः पुत्रा अवृत्तिं दश धेनवः ॥ १३-१०४-२० (८५६२५)
वेदान्तनिष्ठस्य बहुश्रुतस्य
प्रज्ञानतृप्तस्य जितेन्द्रियस्य ।
शिष्टस्य दान्तस्य यतस्य चैव
भूतेषु नित्यं प्रियवादिनश्च ॥ १३-१०४-२१ (८५६२६)
यः क्षुद्भयाद्वै न विकर्म कुर्या-
न्मृदुश्च शान्तौ ह्यतिथिप्रियश्च ।

शुभे पात्रे ये गुणा गोप्रदाने
तावान्दोषो ब्राह्मणस्वापहारे। १३-१०४-२२ (८५६२७)
सर्वावस्थं ब्राह्मणस्वापहारे
दाराश्चैषां दूरतो वर्जनीयाः ॥ १३-१०४-२३ (८५६२८)
गविप्रदारे परिहृते तद्धनेऽपहृते च तु ।
परित्रायन्ति शक्तास्तु नमस्तेभ्यो मृताश्च ये ॥१३-१०४-२४ (८५६२९)
न पालयन्ति निहतान्ये तान्वैवस्वतो यमः ।
दण्डयन्भर्सयन्नित्यं निरयेभ्यो न मुञ्चति ॥१३-१०४-२५ (८५६३०)
तथा गवां परित्राणे पीडने च शुभाशुभम् ।
विप्रगोषु विशेषेण रक्षितेषु गृहेषु वा ॥' ॥ १३-१०४-२६ (८५६३१)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
चतुरधिकशततमोऽध्यायः ॥१०४ ॥
Mahabharata - Anushaasana Parva - Chapter Footnotes

७-१०४-२ इष्टिकर्मिणे याज्ञिकाय ॥
७-१०४-४ तुल्यनामानि गोपदवाच्यानि ॥
७-१०४-६ देयं दानयोग्यम् । परं श्रेष्ठम् ॥
७-१०४-९ गवां बलीवर्दानां कर्मसु यज्ञाद्यर्थेषु कृष्याद्यर्थेषु
कर्षणादिषु वर्ततां प्रचोदनं प्रतोदेन प्रेरणं देवैः
कृतमिति न तत्र दोष इति भावः । तथापि पूर्वं यज्ञार्थमेव
चोदनमक्षरं श्रेयस्करम्। अन्यत्कृष्याद्यर्थं तु ततः परं
वैदिककर्षणमनुप्रवृत्तमभिधेयं वाच्यं निन्द्यमित्यर्थः ॥
७-१०४-१० निवाते कठिनोपवेशने । अभिवीक्षन्त्यो जलमलभमानाः ॥
७-१०४-१२ आहारं तदीयतक्राद्याहरणमकृत्वा ॥
७-१०४-२१ वेदान्तनिष्ठस्य वृत्तिं अतिसृजेतेत्युत्तरेणान्वयः
। चतुर्थ्यर्थे षष्ठी ॥

---

अनुससनपर्व-अध्यय१०५
॥ श्रीः ॥
१३.१०५. अध्यायः १०५

अथ दानधर्मपर्व ॥ १ ॥
Mahabharata - Anushaasana Parva - Chapter Topics
भीष्मेण युधिष्ठिरम्प्रति ब्राह्मणस्वापहारस्यानर्थहेतुतायां
दृष्टान्ततया नृगोपाख्यानकथनम् ॥ १ ॥

भीष्म उवाच ।
अत्रैव कीर्त्यते सद्भिर्ब्राह्मणस्वाभिमर्शने ।
नृगेण सुमहत्कृच्छ्रं यदवाप्तं कुरूद्वह ॥ १३-१०५-१ (८५६३२)
निविशन्त्यां पुरा पार्थ द्वारवत्यामिति श्रुतिः ।
अदृश्यत महाकूपस्तृणवीरुत्समावृतः। १३-१०५-२ (८५६३३)
प्रयत्नं तत्र कुर्वाणास्तस्मात्कूपाज्जलार्थिनः ।
श्रमेण महता युक्तास्तस्मिंस्तोये सुसंवृते ॥ १३-१०५-३ (८५६३४)
ददृशुस्ते महाकायं कृकलासमवस्थितम् ।
तस्य चोद्धरणे यत्नमकुर्वंस्ते सहस्रशः ॥ १३-१०५-४ (८५६३५)
प्रग्रहैश्चर्मपट्टैश्च तं बद्धवा पर्वतोपमम् ।
नाशक्नुवन्समुद्धर्तुं ततो जग्मुर्जनार्दनम् ॥ १३-१०५-५ (८५६३६)
खमावृत्योदपानस्य कृकलासः स्थितो महान् ।
तस्य नास्ति समुद्धर्तेत्येतत्कृष्णे न्यवेदयन् ॥ १३-१०५-६ (८५६३७)
स वासुदेवेन समुद्धृतश्च
पृष्टश्च कामान्निजगाद राजा ।
नृगस्तदाऽऽत्मानमथो न्यवेदय-
त्पुरातनं यज्ञसहस्रयाजिनम् ॥ १३-१०५-७ (८५६३८)
तथा ब्रुवाणं तु तमाह माधवः
शुभं त्वया कर्म कृतं न पापकम् ।
कथं भवान्दुर्गतिमीदृशीं गतो
नरेन्द्र तद्ब्रूहि किमेतदीदृशम् ॥ १३-१०५-८ (८५६३९)
शतं सहस्राणि गवां शतं पुनः
पुनः शतान्यष्टशतायुतानि ।
नृप द्विजेभ्यः क्व नु तद्गतं तव ॥ १३-१०५-९ (८५६४०)
नृगस्ततोऽब्रवीत्कृष्णं ब्राह्मणस्याग्निहोत्रिणः ।
प्रोषितस्य परिभ्रष्टा गौरेका मम गोधनेक़क़क़क़॥ १३-१०५-१० (८५६४१)
गवां सहस्रे संख्याता तदा सा पशुपैर्मम ।
सा ब्राह्मणाय मे दत्ता प्रेत्यार्थमभिकाङ्क्षता ॥ १३-१०५-११ (८५६४२)
अपश्यत्परिमार्गंश्च तां गां परगृहे द्विजः ।
ममेयमिति चोवाच ब्राह्मणो यस्य साऽभवत् ॥ १३-१०५-१२ (८५६४३)
तावुभौ समनुप्राप्तौ विवदन्तौ भृशज्वरौ ।
भवान्दाता भवान्हर्तेत्यथ तौ मामवोचताम् ॥ १३-१०५-१३ (८५६४४)
शतेन शतसङ्ख्येन गवां विनिमयेन वै ।

याचे प्रतिग्रहीतारं स तु मामब्रवीदिदम् ॥ १३-१०५-१४ (८५६४५)
देशकालोपसम्पन्ना दोग्ध्री शान्ताऽतिवत्सला ।
स्वादुक्षीरप्रदा धन्या मम नित्यं निवेशने ॥ १३-१०५-१५ (८५६४६)
कृशं च भरते सा गौर्मम पुत्रमपस्तनम् ।
न सा शक्या मया दातुमित्युक्त्वा स जगाम ह ॥ १३-१०५-१६ (८५६४७)
ततस्तमपरं विप्रं याचे विनिमयेन वै ।
गवां शतसहस्रं हि तत्कृते गृह्यतामिति ॥ १३-१०५-१७ (८५६४८)
ब्राह्मण उवाच। १३-१०५-१८क्ष् (७१०९)
न राज्ञां प्रतिगृह्णामि शक्तोऽहं स्वस्य मार्गणे ।
सैव गौर्दीयतां शीघ्रं ममेति मधुसूदन ॥ १३-१०५-१८ (८५६४९)
रुक्ममश्वांश्च ददतो रजतस्यन्दनांस्तथा ।
न जग्राह ययौ चापि तदा स ब्राह्मणर्षभः ॥ १३-१०५-१९ (८५६५०)
एतस्मिन्नेव काले तु चोदितः कालधर्मणा ।
पितृलोकमहं प्राप्य धर्मराजमुपागमम् ॥ १३-१०५-२० (८५६५१)
यमस्तु पूजयित्वा मां ततो वचनमब्रवीत् ।
नान्तः सङ्ख्यायते राजंस्तव पुण्यस्य कर्मणः ॥ १३-१०५-२१ (८५६५२)
अस्ति चैव कृतं पापमज्ञानात्तदपि त्वया ।
चरस्व पापं पश्चाद्वा पूर्वं वा त्वं यथेच्छसि ॥ १३-१०५-२२ (८५६५३)
रक्षितास्मीति चोक्तं ते प्रतिज्ञा चानृता तव ।
ब्राह्मणस्वस्य चादानं द्विविधस्ते व्यतिक्रमः ॥ १३-१०५-२३ (८५६५४)
पूर्वं कृच्छ्रं चरिष्येऽहं पश्चाच्छुभमिति प्रभो ।
धर्मराजं ब्रुवन्नेवं पतितोस्मि महीतले ॥ १३-१०५-२४ (८५६५५)
अश्रौषं पतितश्चाहं यमस्योच्चैः प्रभाषतः ।
वासुदेवः समुद्धर्ता भविता ते जनार्दनः ॥ १३-१०५-२५ (८५६५६)
पूर्णे वर्षसहस्रान्ते क्षीणे कर्मणि दुष्कृते ।
प्राप्तस्यसे शाश्वताँल्लोकाञ्जितान्स्वेनैव कर्मणा ॥ १३-१०५-२६ (८५६५७)
कूपेऽऽत्मानमधःशीर्षमपश्यं पतितं च ह ।
तिर्यग्योनिमनुप्राप्तं न च मामजहात्स्मृतिः ॥ १३-१०५-२७ (८५६५८)
त्वया तु तारितोऽस्म्यद्य किमन्यत्र तपोबलात् ।
अनुजानीहि मां कृष्ण गच्छेयं दिवमद्य वै ॥ १३-१०५-२८ (८५६५९)
अनुज्ञातः स कृष्णेन नमस्कृत्य जनार्दनम् ।
विमानं दिव्यमास्थाय ययौ दिवमरिन्दमः ॥ १३-१०५-२९ (८५६६०)
ततस्तस्मिन्दिवं याते नृगे भरतसत्तम ।
वासुदेव इमाञ्श्लोकाञ्जगाद कुरुनन्दन ॥ १३-१०५-३० (८५६६१)
ब्राह्मणस्वं न हर्तव्यं पुरुषेण विजानता ।
ब्राह्मणस्वं हृतं हन्ति नृगं ब्राह्मणगौरिव ॥ १३-१०५-३१ (८५६६२)

सतां समागमः सद्भिर्नाफलः पार्थ विद्यते ।
विमुक्तं नरकात्पश्य नृगं साधुसमागमात् ॥ १३-१०५-३२ (८५६६३)
प्रदानं फलवत्तत्र द्रोहस्तत्र तथाऽफलः ।
अपहारं गवां तस्माद्वर्जयेत युधिष्ठिर ॥ ॥ १३-१०५-३३ (८५६६४)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
पञ्चाधिकशततमोऽध्यायः ॥ १०५ ॥
Mahabharata - Anushaasana Parva - Chapter Footnotes

७-१०५-२३ प्रतिज्ञा च कृता त्वयेति, त्रिविधस्ते व्यतिक्रम इति
च थ ध । पाठः ॥
७-१०५-२४ कृच्छ्रं चरिष्ये पापफलं भोक्ष्ये ॥
७-१०५-३१ न हर्तव्यं क्षत्रियेण विशेषत इति थ ध पाठः ॥

---

अनुससनपर्व-अध्यय१०६
॥ श्रीः ॥
१३.१०६. अध्यायः १०६

अथ दानधर्मपर्व ॥ १ ॥
Mahabharata - Anushaasana Parva - Chapter Topics
भीष्मेण युधिष्ठिरम्प्रति गोदानप्रशंसापरनाचिकेतोपाख्यानकथनम्
॥ १ ॥

Mahabharata - Anushaasana Parva - Chapter Text

युधिष्ठिर उवाच ।
दत्तानां फलसम्प्राप्तिं गवां प्रब्रूहि मेऽनघ ।
विस्तरेण महाबाहो न हि तृप्यामि कथ्यताम् ॥ १३-१०६-१ (८५६६५)
भीष्म उवाच । १३-१०६-२क्ष् (७११०)
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
ऋषेरौद्दालकेर्वाक्यं नाचिकेतस्य चोभयोः ॥ १३-१०६-२ (८५६६६)
ऋषिरौद्दालकिर्दीक्षामुपगम्य ततः सुतम् ।
त्वं मामुपचरस्वेति नाचिकेतमभाषत ॥ १३-१०६-३ (८५६६७)
समाप्ते नियमे तस्मिन्महर्षिः पुत्रमब्रवीत् ।
उपस्पर्शनसक्तस्य स्वाध्यायाभिरतस्य च ॥ १३-१०६-४ (८५६६८)
इध्मा दर्भाः सुमनसः कलशश्चाभितो जलम् ।

विस्मृतं मे तदादाय नदीतीरादिहाव्रज ॥१३-१०६-५ (८५६६९)
गत्वानवाप्य तत्सर्वं नदीवेगसमाप्लुतम् ।
न पश्यामि तदित्येवं पितरं सोऽब्रवीन्मुनिः ॥१३-१०६-६ (८५६७०)
क्षुत्पिपासाश्रमाविष्टो मुनिरौद्दालकिस्तदा ।
यमं पश्येति तं पुत्रमशपत्क्रोधमूर्च्छितः ॥१३-१०६-७ (८५६७१)
तथा स पित्राऽभिहतो वाग्वज्रेण कृताञ्जलिः ।
प्रसीदेति ब्रुवन्नेव गतसत्वोऽपतद्भुवि ॥१३-१०६-८ (८५६७२)
नाचिकेतं प्रिता दृष्ट्वा पतितं दुःखमूर्च्छितः ।
किं मया कृतमित्युक्त्वा निपपात महीतले ॥१३-१०६-९ (८५६७३)
तस्य दुःखपरीतस्य स्वं पुत्रमनुशोचतः ।
व्यतीतं तदहःशेषं सा चोग्रा तत्र शर्वरी ॥१३-१०६-१० (८५६७४)
पित्र्येणाश्रुप्रपातेन नाचिकेतः कुरूद्वह ।
प्रास्यन्दच्छयने कौश्ये वृष्ट्या सस्यमिवाप्लुतम् ॥१३-१०६-११ (८५६७५)
स पर्यपृच्छत्तं पुत्रं श्लाघ्यं पर्यागतं पुनः ।
दिव्यैर्गन्धैः समादिग्धं क्षीणस्वप्नमिवोत्थितम् ॥१३-१०६-१२ (८५६७६)
अपि पुत्र जिता लोकाः शुभास्ते स्वेन कर्मणा ।
दिष्ट्या चासि पुनः प्राप्तो न हि ते मानुषं वपुः ॥१३-१०६-१३ (८५६७७)
प्रत्यक्षदार्शी सर्वस्य वित्रा पृष्टो महात्मना ।
अभ्युत्थाय पितुर्मध्ये महर्षीणां न्यवेदयत् ॥१३-१०६-१४ (८५६७८)
कुर्वन्मवच्छासनमाशु यातो
ह्यहं विशालां रुचिरप्रभासाम् ।
वैवस्वतीं प्राप्य सभामवश्यं
सहस्रशो योजनहैमभौमाम् ॥ १३-१०६-१५ (८५६७९)
दृष्टैव मामभिमुखमापतन्तं
गृहं निवेद्यासनमादिदेश ।
वैवस्वतोऽर्घ्यादिभिरर्हणैश्च
भवत्कृते पूजयामास मां साः ॥ १३-१०६-१६ (८५६८०)
ततस्त्वहं तं शनकैरवोचं
वृतः सदस्यैरभिपूज्यमानः ।
प्राप्तोऽस्मि ते विषयं धर्मराज
लोकानर्हो यानहं तान्विधत्स्व ॥ १३-१०६-१७ (८५६८१)
यमोऽब्रवीन्मां न मृतोसि सौम्य
यमं पश्येत्याह स त्वां तपस्वी ।
पिता प्रदीप्ताग्निसमानतेजा
न तत्छक्यमनृतं विप्र कर्तुम् ॥ १३-१०६-१८ (८५६८२)
दृष्टस्तेऽहं प्रतिगच्छस्व तात

शोचत्यसौ तव देहस्य कर्ता ।
ददानि किञ्चापि मनःप्रणीतं
प्रियातिथेस्तव कामान्वृणीष्व ॥ १३-१०६-१९ (८५६८३)
तेनैवमुक्तस्तमहं प्रत्यवोचं
प्राप्तोस्मि ते विषयं दुर्निवर्त्यम् ।
इच्छाम्यहं पुण्यकृतां समृद्धाँ-
ल्लोकान्द्रष्टुं यदि तेऽहं वरार्हः ॥ १३-१०६-२० (८५६८४)
यानं समारोप्य तु मां स देवो
वाहैर्युक्तं सुप्रभं भानुमत्तम् ।
संदर्शयामास तदाऽऽत्मलोका-
न्सर्वास्तथा पुण्यकृतां द्विजेन्द्र ॥ १३-१०६-२१ (८५६८५)
अपश्यं तत्र वेश्मानि तैजसानि महात्मनाम् ।
नानासंस्थानरूपाणि सर्वरत्नमयानि च ॥ १३-१०६-२२ (८५६८६)
चन्द्रमण्डलशुभ्राणि किंकिणीजालवन्ति च ।
अनेकशतभौमानि सान्तर्जलवनानि च ॥ १३-१०६-२३ (८५६८७)
वैडूर्यार्कप्रकाशानि रूप्यरुक्ममयानि च ।
तरुणादित्यवर्णानि स्थावराणि चराणि च ॥ १३-१०६-२४ (८५६८८)
भक्ष्यभोज्यमयाञ्शैलान्वासांसि शयनानि च ।
सर्वकामफलांश्चैव वृक्षान्भवनसंस्थितान् ॥ १३-१०६-२५ (८५६८९)
नद्यो वीथ्यः सभा वाप्यो दीर्घिकाश्चैव सर्वशः ।
घोषवन्ति च यानानि युक्तान्यथ सहस्रशः ॥ १३-१०६-२६ (८५६९०)
क्षीरस्रवा वै सरितो गिरींश्च
सर्पिस्तथा विमलं चापि तोयम् ।
वैवस्वतस्यानुमतांश्च देशा-
नदृष्टपूर्वान्सुबहूनपश्यम् ॥ १३-१०६-२७ (८५६९१)
सर्वान्दृष्ट्वा तदहं धर्मराज-
मवोचं वै सर्वदेवं सहिष्णुम् ।
क्षीरस्यैताः सर्पिषश्चैव नद्यः
शश्वत्स्रोताः कस्य भोज्याः प्रवृत्ताः ॥ १३-१०६-२८ (८५६९२)
यमोऽब्रवीद्विद्धि भोज्यांस्त्वमेता-
न्ये दातारः साधवो गोरसानाम् ।
अन्ये लोकाः शाश्वता वीतशोकैः
समाकीर्णा गोप्रदाने रतानाम् ॥ १३-१०६-२९ (८५६९३)
न त्वेतासां दानमात्रं प्रशस्तं
पात्रं कालो गोविशेषो विधिश्च ।
ज्ञात्वा देयं विप्र गवान्तरं हि

दुःखं ज्ञातुं पावकादित्यभूतम् ॥ १३-१०६-३० (८५६९४)
स्वाध्यायवान्योऽतिमात्रं तपस्वी
वैतानस्थो ब्राह्मणः पात्रमासाम् ।
गोषु क्षान्तं गोशरण्यं कृतज्ञं
वृत्तिग्लानं तादृशं पात्रमाहुः ॥ १३-१०६-३१ (८५६९५)
कृच्छ्रोत्सृष्टाः पोष्णाभ्यागताश्च
द्वारैरेतैर्गोविशेषाः प्रशस्ताः ।
अन्तर्जाताः सुक्रयज्ञानलब्धाः
प्राणक्रीताः सोदकाः सोद्वहाश्च ॥ १३-१०६-३२ (८५६९६)
तिस्रो रात्र्यस्त्वद्भिरुपोष्य भूमौ
तृप्ता गावस्तर्पितेभ्यः प्रदेयाः ।
वत्सैः प्रीताः सुप्रजाः सोपचारा-
स्त्र्यहं दत्त्वा गोरसैर्वर्तितव्यम् ॥ १३-१०६-३३ (८५६९७)
दत्त्वा धेनुं सुव्रतां साधुदोहां
कल्याणवत्सामपलायिनीं च ।
यावन्ति रोमाणि भवन्ति तस्या-
स्तावद्वर्षाण्यश्नुते स्वर्गलोकम् ॥ १३-१०६-३४ (८५६९८)
तथाऽनड्वाहं ब्राह्मणेभ्यः प्रदाय
दान्तं धुर्यं बलवन्तं युवानम् ।
कुलानुजीव्यं वीर्यवन्तं बृहन्तं
भुङ्क्ते लोकान्सम्मितान्धेनुदस्य ॥ १३-१०६-३५ (८५६९९)
वृद्धे ग्लाने सम्भ्रमे वा महार्थे
कृष्यर्थं वा हौम्यहेतोः प्रमूत्याम् ।
गुर्वर्थं वा यज्ञसमाप्तये वा
गां वै दातुं देशकालोऽविशिष्टः ॥ १३-१०६-३६ (८५७००)
नाचिकेत उवाच। १३-१०६-३७क्ष् (७१११)
श्रुत्वा वैवस्वतवचस्तमहं पुनरब्रवम् ।
अगोमी गोप्रदातॄणां कथं लोकान्हि गच्छति ॥ १३-१०६-३७ (८५७०१)
ततोऽब्रवीद्यमो धीमान्गोप्रदानं ततो गतिम् ।
गोप्रदानानुकल्पात्तु गामृते सन्तु गोप्रदाः ॥ १३-१०६-३८ (८५७०२)
अलाभे यो गवां दद्याद्धृतधेनुं यतव्रतः ।
तस्यैता घृतवाहिन्यः क्षरन्ते वत्सला इव ॥ १३-१०६-३९ (८५७०३)
घृतालाभे तु यो दद्यात्तिलधेनुं यतव्रतः ।
स दुर्गात्तारितो धेन्वा क्षीरनद्यां प्रमोदते ॥ १३-१०६-४० (८५७०४)
तिलालाभे तु यो दद्याज्जलधेनुं यतव्रतः ।
स कामप्रवहां शीतीं नदीमेतामुपाश्नुते ॥ १३-१०६-४१ (८५७०५)

एवमेतानि मे तत्र धर्मराजो न्यदर्शयत् ।
दृष्ट्वा च परमं हर्षमवापमहमच्युत ॥१३-१०६-४२ (८५७०६)
निवेदये चाहमिमं प्रियं ते
क्रतुर्महानल्पधनप्रचारः ।
प्राप्तो मया तात स मत्प्रसूतः
प्रपत्स्यते वेदविधिप्रवृत्तः ॥ १३-१०६-४३ (८५७०७)
शापो ह्ययं भवतोऽनुग्रहाय
प्राप्तो मया यत्र दृष्टो यमो वै ।
दानव्युष्टिं तत्र दृष्ट्वा महात्म-
न्निःसंदिग्धान्दानधर्मांश्चरिष्ये ॥ १३-१०६-४४ (८५७०८)
इदं च मामब्रवीद्धर्मराजः
पुनः पुनः सम्प्रहृष्टो महर्षे ।
दानेन यः प्रयतोऽभूत्सदैव
विशेषतो गोप्रदानं च कुर्याम् ॥ १३-१०६-४५ (८५७०९)
शुद्धो ह्यर्थो नावमन्यस्व धर्मा-
न्पात्रे देयं देशकालोपपन्ने ।
तस्माद्गावस्ते नित्यमेव प्रदेया
माभूच्च ते संशयः कश्चिदत्र ॥ १३-१०६-४६ (८५७१०)
एताः पुरा ह्यददन्नित्यमेव
सान्तात्मानो दानपथे निविष्टाः ।
तपांस्युग्राण्यप्रतिशङ्कमाना-
स्ते वै दानं प्रददुश्चैव शक्त्या ॥ १३-१०६-४७ (८५७११)
काले च शक्त्या मत्सरं वर्जयित्वा
शुद्धात्मानः श्रद्धिनः पुण्यशीलाः ।
दत्त्वा गा वै लोकममुं प्रपन्ना
देदीप्यन्ते पुण्यशीलास्तु नाके ॥ १३-१०६-४८ (८५७१२)
एतद्दानं न्यायलब्धं द्विजेभ्यः
पात्रे दत्तं प्रापणीयं परीक्ष्य ।
काम्याष्टम्यां वर्तितव्यं दशाहं
रसैर्गवां शकृता प्रस्नवैर्वा ॥ १३-१०६-४९ (८५७१३)
देवव्रती स्याद्वृषभप्रदानै-
र्वेदावाप्तिर्गोयुगस्य प्रदाने ।
तीर्थावाप्तिर्गोप्रयुक्तप्रदाने
पापोत्सर्गः कपिलायाः प्रदाने ॥ १३-१०६-५० (८५७१४)
गामप्येकां कपिलां सम्प्रदाय
न्यायोपेतां कलुषाद्विप्रमुच्येत् ।

गवां रसात्परमं नास्ति किञ्चि-
द्गवां प्रदानं सुमहद्वदन्ति ॥ १३-१०६-५१ (८५७१५)
गावो लोकांस्तारयन्ति क्षरन्त्यो
गावश्चान्नं संजनयन्ति लोके ।
यस्तं जानन्न गवां हार्दमेति
स वै गन्ता निरयं पापचेताः ॥ १३-१०६-५२ (८५७१६)
यैस्तद्दत्तं गोसहस्रं शतं वा
दशार्धं वा दश वा साधुवत्सम् ।
अप्येका वै साधवे ब्राह्मणाय
सास्यामुष्मिन्पुण्यतीर्था नदी वै ॥ १३-१०६-५३ (८५७१७)
प्राप्त्या पुष्ट्या लोकसंरक्षणेन
गावस्तुल्याः सूर्यपादैः पृथिव्याम् ।
शब्दश्चैकः संनतिश्चोपभोगा-
स्तस्माद्गोदः सूर्य इवावभाति ॥ १३-१०६-५४ (८५७१८)
गुरुं शिष्यो वरयेद्गोप्रदाने
स वै गन्ता नियतं स्वर्गमेव ।
विधिज्ञानां सुमहान्धर्म एष
विधिं ह्याद्यं विधयः संविशन्ति ॥ १३-१०६-५५ (८५७१९)
इदं दानं न्यायलब्धं द्विजेभ्यः
पात्रे दत्त्वा प्रापयेथाः परीक्ष्य ।
त्वय्याशंसन्त्यमरा दानवाश्च
वयं चापि प्रसृते पुण्यशीले ॥ १३-१०६-५६ (८५७२०)
इत्युक्तोऽहं धर्मराजं द्विजर्षे
धर्मात्मानं शिरसाऽभिप्रणम्य ।
अनुज्ञातस्तेन वैवस्वतेन
प्रत्यागमं भगवत्पादमूलम् ॥ ॥ १३-१०६-५७ (८५७२१)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
षडधिकशततमोऽध्यायः ॥१०६ ॥

Mahabharata - Anushaasana Parva - Chapter Footnotes

७-१०६-५ कलशश्चातिभोजनम् इति झ पाठ ॥
तत्र अतिभोजनं भोजनसामग्रिकं शाकादि ॥
७-१०६-८ गतसत्वो मृतः ॥
७-१०६-११ सस्यं शुष्यमाणम् ॥
७-१०६-१५ योजनेति लुप्ततृतीयान्तं पदम् ।योजनैः सहस्रशः

सम्मितामिति शेषः ॥
७-१०६-२३ अनेकशतानि भौमानि उपर्युपरि भूमिसमूहा येषु तानि प्रासादमण्डलानि ॥
७-१०६-३० गवामन्तरमन्योन्यतारतम्यं । अवङ् ॥
७-१०६-३१ कृच्छ्रोत्सृष्टाः सङ्कटात् निरोधात् मुक्ताः । पोषणार्थं दरिद्रागारादागताः। तादृशीनां पालनं प्रशस्ततरमित्यर्थः ॥
७-१०६-३३ त्र्यहमम्मात्राहारो भूमिशायी भूत्वा चतुर्थं दिनमारभ्य त्र्यहमेकैकां गां दत्त्वा गोरसैर्वृत्तिं कुर्यात् । एवं व्रतपूर्वकं गोत्रयं ददत उक्तं वक्ष्यमाणं च फलं भवतीत्यर्थः ॥
७-१०६-३६ वृद्धे ग्लाने रोगिणि पथ्याशनार्थं सम्भ्रमे दुर्भिक्षे । महार्थे यज्ञाद्यर्थे च। प्रसूत्यां पुत्रजन्मनि ॥
७-१०६-४३ क्रतुः गोदानरूपः ॥
७-१०६-४९ प्रापणीयं गोः आहारादि । कामे इच्छापूरणे साधुः काम्या या अष्टमी शुक्लकृष्णान्यतरा तस्यां ॥

---

अनुससनपर्व-अध्यय१०७
॥ श्रीः ॥
१३.१०७. अध्यायः १०७

अथ दानधर्मपर्व ॥ १ ॥
Mahabharata - Anushaasana Parva - Chapter Topics
युधिष्ठिरम्प्रति भीष्मेण गोदानफलविशेषविषयकेन्द्रप्रश्नानुवादः ॥ १ ॥

Mahabharata - Anushaasana Parva - Chapter Text

युधिष्ठिर उवाच ।
उक्तं ते गोप्रदानं वै नाचिकेतमृषिं प्रति ।
माहात्म्यमपि चैवोक्तमुद्देशेन गवां प्रभो ॥ १३-१०७-१ (८५७२२)
नृगेण च महद्दुःखमनुभूतं महात्मना ।
एकापराधादज्ञानात्पितामह महामते ॥ १३-१०७-२ (८५७२३)
द्वारवत्यां यथा चासौ निविशन्त्यां समुद्धृतः ।
मोक्षहेतुरभूत्कृष्णस्तदप्यवधृतं मया ॥ १३-१०७-३ (८५७२४)
किं त्वस्ति मम संदेहो गवां लोकं प्रति प्रभो ।
तत्त्वतः श्रोतुमिच्छामि गोदा यत्र वसन्त्युत ॥ १३-१०७-४ (८५७२५)
भीष्म उवाच। १३-१०७-५क्ष् (७११२)

अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
यथाऽपृच्छत्पद्मयोनिमेतदेव शतक्रतुः ॥ १३-१०७-५ (८५७२६)
शक्र उवाच। १३-१०७-६क्ष् (७११३)
स्वर्लोकवासिनां लक्ष्मीमभिभूय स्वयाऽर्चिषा ।
गोलोकवासिनः पश्ये वदतां संशयोऽत्र मे ॥ १३-१०७-६ (८५७२७)
कीदृशा भगवँल्लोका गवां तद्ब्रूहि मेऽनघ ।
यानावसन्ति दातार एतदिच्छामि वेदितुम् ॥ १३-१०७-७ (८५७२८)
कीदृशाः किंफलाः किंस्वित्परमस्तत्र को गुणः ।
कथं च पुरुषास्तत्र गच्छन्ति विगतज्वराः ॥ १३-१०७-८ (८५७२९)
कियत्कालं प्रदानस्य दाता च फलमश्नुते ।
कथं बहुविधं दानं स्यादल्पमपि वा कथम् ॥ १३-१०७-९ (८५७३०)
बह्वीनां कीदृशं दानमल्पानां वाऽपि दीदृशम् ।
अदत्त्वा गोप्रदाः सन्ति केन वा तच्च शंस मे १३-१०७-१० (८५७३१)
कथं वा बहुदाता स्यादल्पदात्रा समः प्रभो ।
अल्पप्रदाता बहुदः कथं स्वित्स्यादिहेश्वर ॥ १३-१०७-११ (८५७३२)
कीदृशी दक्षिणा चैव गोप्रदाने विशिष्यते ।
एतत्तथ्येन भगवन्मम शंसितुमर्हसि ॥ ॥ १३-१०७-१२ (८५७३३)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
सप्ताधिकशततमोऽध्यायः ॥ १०७ ॥
Mahabharata - Anushaasana Parva - Chapter Footnotes

७-१०७-२ एकापराधादज्ञानान्नृगस्तां दुर्गतिं गतः । इति ट। ध। पाठः ॥

---

अनुससनपर्व-अध्यय१०८
॥ श्रीः ॥
१३.१०८. अध्यायः १०८

अथ दानधर्मपर्व ॥ १ ॥
Mahabharata - Anushaasana Parva - Chapter Topics
इन्द्रम्प्रति ब्रह्मणा गोदानफलप्रशंसनम् ॥ १ ॥

Mahabharata - Anushaasana Parva - Chapter Text

पितामह उवाच ।
योऽयं प्रश्नस्त्वया पृष्टो गोप्रदानादिकारितः ।

नान्यः प्रष्टास्ति लोकेस्मिंस्त्वत्तोन्यो हि शतक्रतो? १३-१०८-१ (८५७३४)
सन्ति नानाविधा लोका यांस्त्वं शक्र न पश्यसि ।
पश्यामि यानहं लोकानेकपत्न्यश्च याः स्त्रियः ॥ १३-१०८-२ (८५७३५)
कर्मभिश्चापि सुशुभैः सुव्रता ऋषयस्तथा ।
सशरीरा हि तान्यान्ति ब्राह्मणाः शुभबुद्धयः ॥ १३-१०८-३ (८५७३६)
शरीरन्यासमोक्षेण मनसा निर्मलेन च ।
स्वप्नभूतांश्च ताँल्लोकान्पश्यन्तीहापि सुव्रताः ॥ १३-१०८-४ (८५७३७)
ते तु लोकाः सहस्राक्ष शृणु यादृग्गुणान्विताः ।
न तत्र क्रमते कालो न जरा न च पावकः ॥ १३-१०८-५ (८५७३८)
तथा नास्त्यशुभं किञ्चिन्न व्याधिस्तत्र न क्लमः ।
यद्यच्च गावो मनसा तस्मिन्वाञ्छन्ति वासव ॥ १३-१०८-६ (८५७३९)
तत्सर्वं प्रापयन्ति स्म मम प्रत्यक्षदर्शनात् ।
कामगाः कामचारिण्यः कामात्कामांश्च भुञ्जते ॥ १३-१०८-७ (८५७४०)
वाप्यः सरांसि सरितो विविधानि वनानि च ।
गृहाणि पर्वताश्चैव यावद्द्रव्यं च किञ्चन ॥ १३-१०८-८ (८५७४१)
मनोज्ञं सर्वभूतेभ्यस्तद्वनं तत्र दृश्यते ।
ईदृशान्विद्धि ताँल्लोकान्नास्ति लोकस्तथाविधः ॥ १३-१०८-९ (८५७४२)
तत्र सर्वसहाः क्षान्ता वत्सला गुरुवर्तिनः ।
अहङ्कारैर्विरहिता यान्ति शक्र नरोत्तमाः ॥ १३-१०८-१० (८५७४३)
यः सर्वमांसानि न भक्षयीत
पुमान्सदा भावितो धर्मयुक्तः ।
मातापित्रोरर्चिता सत्ययुक्तः
शुश्रुषिता ब्राह्मणानामनिन्द्यः ॥ १३-१०८-११ (८५७४४)
अक्रोधनो गोषु तथा द्विजेषु
धर्मे रतो गुरुशुश्रूषकश्च ।
यावज्जीवं सत्यवृत्ते रतश्च
दाने रतो यः क्षमी चापराधे ॥ १३-१०८-१२ (८५७४५)
मृदुर्दान्तो देवपरायणश्च
सर्वातिथिश्चापि यथा दयावान् ।
ईदृग्गुणो मानवस्तं प्रयाति
लोकं गवां शाश्वतं चाव्ययं च ॥ १३-१०८-१३ (८५७४६)
न पारदारी पश्यति लोकमेतं
न वै गुरुघ्नो न मृषा सम्प्रलापी ।
सदापवादी ब्राह्मणेष्वात्तवैरो
दोषैरन्यैर्यश्च युक्तो दुरात्मा ॥ १३-१०८-१४ (८५७४७)
न मित्रध्रुङ्नैकृतिकः कृतघ्नः

शठोऽनुजुर्धर्मविद्वेषकश्च ।
न ब्रह्महा मनसाऽपि प्रपश्ये-
द्गवां लोकं पुण्यकृतां निवासम् ॥ १३-१०८-१५ (८५७४८)
एतत्ते सर्वमाख्यातं नैपुण्येन सुरेश्वर ।
गोप्रदानरतानां तु फलं शृणु शतक्रतो ॥ १३-१०८-१६ (८५७४९)
दायाद्यलब्धैरर्थैर्यो गाः क्रीत्वा सम्प्रयच्छति ।
धर्मार्जितान्धैः क्रीतान्स लोकानाप्नुतेऽक्षयान् ॥ १३-१०८-१७ (८५७५०)
यो वै द्यूते धनं जित्वा गाः क्रीत्वा सम्प्रयच्छति ।
स दिव्यमयुतं शक्र वर्षाणां फलमश्नुते ॥ १३-१०८-१८ (८५७५१)
दायाद्याद्याः स्म वै गावो न्यायपूर्वैरुपार्जिताः ।
प्रदद्यात्ताः प्रदातॄणां सम्भवन्त्यपि च ध्रुवाः ॥ १३-१०८-१९ (८५७५२)
प्रतिगृह्य तु यो दद्याद्गाः संशुद्धेनि चेतसा ।
तस्यापीहाक्षयाँल्लोकान्ध्रुवान्विद्धि शचीपते ॥ १३-१०८-२० (८५७५३)
जन्मप्रभृति सत्यं च यो ब्रूयान्नियतेन्द्रियः ।
गुरुद्विजसहः क्षान्तस्तस्य गोभिः समा गतिः ॥ १३-१०८-२१ (८५७५४)
न जातु ब्राह्मणो वाच्यो यदवाच्यं शचीपते ।
मनसा गोषु न द्रुह्येद्गोवृत्तिर्गोनुकम्पकः ॥ १३-१०८-२२ (८५७५५)
सत्ये धर्मे च निरतस्तस्य शक्र फलं शृणु ।
गोसहस्रेण समिता तस्य धेनुर्भवत्युत ॥ १३-१०८-२३ (८५७५६)
क्षत्रियस्य गुणैरतैरन्वितस्य फलं शृणु ।
सप्तार्धशततुल्या गौर्भवतीति विनिश्चयः ॥ १३-१०८-२४ (८५७५७)
वैश्यस्यैते यदि गुणास्तस्य पञ्चशतं भवेत् ।
शूद्रस्यापि विनीतस्य चतुर्भागफलं स्मृतम् ॥ १३-१०८-२५ (८५७५८)
एतच्चैनं योऽनुतिष्ठेत युक्तः
सत्ये रतो गुरुशुश्रूषया च ।
दक्षः क्षान्तो देवतार्थी प्रशान्तः
शुचिर्बुद्धो धर्मशीलोऽनहंवाक् ॥ १३-१०८-२६ (८५७५९)
महत्फलं प्राप्यते सद्द्विजाय
दत्त्वा दोग्ध्रीं विधिनाऽनेन धेनुम् ।
नित्यं दद्यादेकभक्तः सदा च
सत्ये स्थितो गुरुशुश्रुषिता च ॥ १३-१०८-२७ (८५७६०)
वेदाध्यायी गोषु यो भक्तिमांश्च
नित्यं दत्त्वा योऽभिनन्देत गाश्च ।
आजातितो यश्च गवां नमेत
इदं फलं शक्र निबोध तस्य ॥ १३-१०८-२८ (८५७६१)
यत्स्यादिष्ट्वा राजसूये फलं तु

यत्स्यादिष्ट्वा बहुना काञ्चनेन ।
एततुल्यं फलमप्याहुरग्र्यं
सर्वे संन्तस्त्वषयो ये च सिद्धाः ॥ १३-१०८-२९ (८५७६२)
योऽग्रं भक्तं किञ्चिदप्राश्य दद्या-
द्गोभ्यो नित्यं गोव्रती सत्यवादी ।
शान्तोऽलुब्धो गोसहस्रस्य पुण्यं
संवत्सरेणाप्नुयात्सत्यशीलः ॥ १३-१०८-३० (८५७६३)
यदकेभक्तमश्नीयाद्दद्यादेकं गवां च यत् ।
दशवर्षाण्यनन्तानि गोव्रती गोनुकम्पकः ॥१३-१०८-३१ (८५७६४)
एकेनैव च भक्तेन यः क्रीत्वा गां प्रयच्छति ।
यावन्ति तस्या रोमाणि सम्भवन्ति शतक्रतो ॥१३-१०८-३२ (८५७६५)
तावच्छतानां स गवां फलमाप्नोति शाश्वतम् ।
ब्राह्मणस्य फलं हीदं क्षत्रियस्य तु वै शृणु ॥१३-१०८-३३ (८५७६६)
पञ्चवार्षिकमेवं तु क्षत्रियस्य फलं स्मृतम् ।
ततोऽर्धेन तु वैश्यस्य शूद्रो वैश्यार्धतः स्मृतः ॥१३-१०८-३४ (८५७६७)
यश्चात्मावेक्रयं कृत्वा गाः क्रीत्वा सम्प्रयच्छति ।
यावत्संदर्शयेद्गां वै स तावत्फलमश्नुते ॥१३-१०८-३५ (८५७६८)
रोम्णि रोम्णि महाभाग लोकाश्चास्याक्षयाः स्मृताः
सङ्ग्रामेष्वर्जयित्वा तु यो वै गाः सम्प्रयच्छति ।
आत्मविक्रयतुल्यास्ताः शाश्वता विद्धि कौशिक ॥ १३-१०८-३६ (८५७६९)
अभावे यो गवां दद्यात्तिलधेनुं यतव्रतः ।
दुर्गात्स तारितो धेन्वा क्षीरनद्यां प्रमोदत्ते ॥१३-१०८-३७ (८५७७०)
न त्वेवासां दानमात्रं प्रशस्तं
पात्रं कालो गोविशेषो विधिश्च ।
कालज्ञानं विप्रगवान्तरं हि
दुःखं ज्ञातुं पावकादित्यभूतम् ॥ १३-१०८-३८ (८५७७१)
स्वाध्यायाढ्यं शुद्धयोनिं प्रशान्तं
वैतानस्थं पापभीरुं बहुज्ञम् ।
गोषु क्षान्तं नातितीक्ष्णं शरण्यं
वृत्तिग्लानं तादृशं पात्रमाहुः। १३-१०८-३९ (८५७७२)
वृत्तिग्लाने सीदति चातिमात्रं
तुष्ट्यर्थं वा होम्यहेतोः प्रसूतेः ।
गुर्वर्थं वा बालसंवृद्धये वा
धेनुं दद्याद्देशकाले विशिष्टे ॥ १३-१०८-४० (८५७७३)
अन्तर्ज्ञाताः सक्रयज्ञानलब्धाः
प्राणैः क्रीतास्तेजसा यौतकाश्च ।

कृच्छ्रोत्सृष्टाः पोषणाभ्यागताश्च
द्वारैरेतैर्गोविशेषाः प्रशस्ताः ॥ १३-१०८-४१ (८५७७४)
बलान्विताः शीलवयोपपन्नाः
सर्वाः प्रशंसन्ति सुगन्धवत्यः
यथा हि गङ्गा सरितां वरिष्ठा
तथाऽर्जुनीनां कपिला वरिष्ठा ॥ १३-१०८-४२ (८५७७५)
तिस्रो रात्रीस्त्वद्भिरुपोष्य भूमौ
तृप्ता गावस्तर्पितेभ्यः प्रदेयाः ।
वत्सैः पुष्टैः क्षीरपैः सुप्रचारा-
स्त्र्यहं दत्त्वा गोरसैर्वर्तितव्यम् ॥ १३-१०८-४३ (८५७७६)
दत्त्वा धेनुं सुव्रतां साधुदोहां
कल्याणवत्सामपलायिनीं च ।
यावन्ति रोमाणि भवन्ति तस्या-
स्तावन्ति वर्षामि भवन्त्यमुत्र ॥ १३-१०८-४४ (८५७७७)
तथाऽनड्वाहं ब्राह्मणाय प्रदाय
धुर्यं युवानं बलिनं विनीतम् ।
हलस्य वोढारमनन्तवीर्यं
प्राप्नोति लोकान्दशधेनुदस्य ॥ १३-१०८-४५ (८५७७८)
कान्ताराद्ब्राह्मणान्गाश्च यः परित्राति कौशिक ।
क्षेमेण स विमुच्येत तस्य पुण्यफलं शृणु ॥ १३-१०८-४६ (८५७७९)
अश्वमेधक्रतोस्तुल्यं फलं भवति शाश्वतम् ।
मृत्युकाले सहस्राक्ष यां वृत्तिमनुकाङ्क्षते ॥ १३-१०८-४७ (८५७८०)
लोकान्बहुविधान्दिव्यान्यच्चास्य हृदि वर्तते ।
तत्सर्वं समवाप्नोति कर्मणैतेन मानवः ॥ १३-१०८-४८ (८५७८१)
गोभिश्च समनुज्ञातः सर्वत्र च महीयते ।
यस्त्वेतेनैव कल्पेन गां वनेष्वनुगच्छति ॥ १३-१०८-४९ (८५७८२)
तृणगोमयपर्णाशी निस्पृहो नियतः शुचिः ।
अकामं तेन वस्तव्यं मुदितेन शतक्रतो ॥ १३-१०८-५० (८५७८३)
मम लोके वसति स लोके वा यत्र चेच्छति ॥ ॥ १३-१०८-५१ (८५७८४)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
अष्टाधिकशततमोऽध्यायः ॥ १०८ ॥

Mahabharata - Anushaasana Parva - Chapter Footnotes

७-१०८-४ शरीरस्य न्यासः समाधिकाले । मोक्षः मरणे ॥
७-१०८-१५ नैकृतिको वञ्चकः । शठः समर्थोऽपि दारिद्र्यभाषी ॥

७-१०८-२१ गुरूणां द्विजानां वापराधं सहते इति गुरुद्विजसहः ॥
७-१०८-२२ गोवृत्तिरसङ्ग्रहपरः ॥
७-१०८-२४ सप्तार्धशतं पञ्चाशदधिकसप्तशतं ॥
७-१०८-३१ दशवर्षाणिच फलं वाजपेयस्य विन्दतीति ध पाठः ॥
७-१०८-३२ यावन्ति तस्य प्रोक्तानि दिवसानि शतक्रतो इति ध पाठः ॥
७-१०८-३५ संदर्शयेत्पश्येत् । यावद्ब्रह्माण्डे गोजातीयमस्ति तावतत्र वसेदित्यर्थः ॥
७-१०८-३७ अलाभे यो गवामिति ध । पाठः ॥
७-१०८-४१ अन्तर्जाताः सुक्रयज्ञानलब्धाः प्राणक्रीताः सोदकाः सोद्वहाश्चेति ध पाठः ॥
७-१०८-४२ अर्जुनीनां गवाम् ॥
७-१०८-४५ कुलस्य कर्तारमनन्तवीर्यमिति ध पाठः ॥

---

अनुससनपर्व-अध्यय१०९
॥ श्रीः ॥
१३.१०९. अध्यायः १०९

अथ दानधर्मपर्व ॥ १ ॥
Mahabharata - Anushaasana Parva - Chapter Topics
भीष्मेण युधिष्ठिरम्प्रति ब्रह्मणा इन्द्रायोक्तगोविक्रयापहारफलानुवादः ॥ १ ॥
तथा सुवर्णस्य गोदाने दक्षिणात्वप्रशंसनानुवादः ॥ २ ॥

Mahabharata - Anushaasana Parva - Chapter Text

इन्द्र उवाच ।
जान्यो गामपहरेद्विक्रीयाच्चार्थकारणात् ।
एतद्विज्ञातुमिच्छामि कानु तस्य गतिर्भवेत् ॥ १३-१०९-१ (८५७८५)
पितामह उवाच । १३-१०९-२क्ष् (७११४)
भक्तार्थं विक्रयार्थं वा येऽपहारं हि कुर्वते ।
दानार्थं ब्राह्मणार्थाय तत्रेदं श्रूयतां फलम् ॥ १३-१०९-२ (८५७८६)
विक्रयार्थं हि यो हिंस्याद्भक्षयेद्वा निरङ्कुशः ।
घातयानं हि पुरुषं येऽनुमन्येयुरर्थिनः ॥ १३-१०९-३ (८५७८७)
घातकः खादको वाऽपि तथा यश्चानुमन्यते ।
यावन्ति तस्या रोमाणि तावद्वर्षाणि मज्जति ॥ १३-१०९-४ (८५७८८)
ये दोषा यादृशाश्चैव द्विजयज्ञोपघातके ।

विक्रये चापहारे च ते दोषा वै स्मृता गवाम् ॥१३-१०९-५ (८५७८९)
अपहृत्य तु यो गां वै ब्राह्मणाय प्रयच्छति ।
यावद्दाने तु यो गां वै ब्राह्मणाय प्रयच्छति। १३-१०९-६ (८५७९०)
सुवर्णं दक्षिणामाहुर्गोप्रदाने महाद्युते ।
सुवर्णं परमित्युक्तं दक्षिणार्थमसंशयम् ॥१३-१०९-७ (८५७९१)
गोप्रदानात्तारयते सप्त पूर्वांस्तथाऽपरान् ।
सुवर्णं दक्षिणां कृत्वा तावद्द्विगुणमुच्यते ॥१३-१०९-८ (८५७९२)
सुवर्णं परमं दानं सुवर्णं दक्षिणा परा ।
सुवर्णं पावनं शक्र पावनानां परं स्मृतम् ॥१३-१०९-९ (८५७९३)
कुलानां पावनं प्राहुर्जातरूपं शतक्रतो ।
एषा मे दक्षिणा प्रोक्ता समासेन महाद्युते ॥१३-१०९-१० (८५७९४)
भीष्म उवाच।१३-१०९-११क्ष् (७११५)
एतत्पितामहेनोक्तमिन्द्राय भरतर्षभ ।
इन्द्रो दशरथायाह रामायाह पिता तथा ॥१३-१०९-११ (८५७९५)
राघवोपि प्रियभ्रात्रे लक्ष्मणाय यशस्विने ।
ऋषिभ्यो लक्ष्मणेनोक्तमरण्ये वसता प्रभो ॥१३-१०९-१२ (८५७९६)
पारम्पर्यागतं चेदमृषयः संशितव्रताः ।
दुर्धरं दारयामासू राजानश्चैव धार्मिकाः ॥१३-१०९-१३ (८५७९७)
उपाध्यायेन गदितं मम चेदं युधिष्ठिर ॥ १३-१०९-१४ (८५७९८)
य इदं ब्राह्मणो नित्यं वदेद्ब्राह्मणसंसदि ।
यज्ञेषु गोप्रदानेषु द्वयोरपि समागमे ॥१३-१०९-१५ (८५७९९)
तस्य लोकाः किलाक्षय्या दैवतैः सह नित्यदा ।
इति ब्रह्मा स भगवानुवाच परमेश्वरः ॥ ॥१३-१०९-१६ (८५८००)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
नवाधिकशततमोऽध्यायः ॥१०९ ॥

Mahabharata - Anushaasana Parva - Chapter Footnotes

७-१०९-३ विक्रयार्थं यो नियुङ्क्ते इति शेषः ॥
७-१०९-१० सुवर्णं प्राहुरित्यग्नाजातरूपमिति ध पाठः ॥

---

अनुससनपर्व-अध्यय११०
॥श्रीः ॥
१३.११०. अध्यायः ११०

अथ दानधर्मपर्व ॥१ ॥

Mahabharata - Anushaasana Parva - Chapter Topics
भीष्मेण युधिष्ठिरम्प्रति सत्यदमादिप्रशंसनम् ॥ १ ॥

Mahabharata - Anushaasana Parva - Chapter Text

युधिष्ठिर उवाच ।
विस्रम्भितोऽहं भवता धर्मान्प्रवदता विभो ।
प्रवक्ष्यामि तु संदेहं तन्मे ब्रूहि पितामह ॥ १३-११०-१ (८५८०१)
व्रतानां किं फलं प्रोक्तं कीदृशं वा महाद्युते ।
नियमानां फलं किं च स्वधीतस्य च किं फलम् ॥ १३-११०-२ (८५८०२)
दमस्येह फलं किं च वेदानां धारणे च किम् ।
अध्यापने फलं किं च सर्वमिच्छामि वेदितुम् ॥ १३-११०-३ (८५८०३)
अप्रतिग्राहके किं च फलं लोके पितामह ।
तस्य किञ्च फलं दृष्टं श्रुतं यस्तु प्रयच्छति ॥ १३-११०-४ (८५८०४)
स्वकर्मनिरतानां च शूराणां चापि किं फलम् ।
सत्ये च किं फलं प्रोक्तं ब्रह्मचर्ये च किं फलम्। १३-११०-५ (८५८०५)
पितृशुश्रूषणे किञ्च मातृशुश्रूषणे तथा ।
आचार्यगुरुशुश्रूषा स्वनुक्रोशानुकम्पने ॥ १३-११०-६ (८५८०६)
एतत्सर्वमशेषेण पितामह यथातथम् ।
वेतुमिच्छामि धर्मज्ञ परं कौतूहलं हि मे ॥ १३-११०-७ (८५८०७)
भीष्म उवाच। १३-११०-८क्ष् (७११६)
यो व्रतं वै यथोद्दिष्टं तथा सम्प्रतिपद्यते ।
अखण्डं सम्यगारभ्य तस्य लोकाः सनातनाः ॥ १३-११०-८ (८५८०८)
नियमानां फलं राजन्प्रत्यक्षमिह दृश्यते ।
नियमानां क्रतूनां च त्वयाऽवाप्तमिदं फलम् ॥ १३-११०-९ (८५८०९)
स्वधीतस्यापि च फलं दृश्यतेऽमुत्र चेह च ।
इह लोकेऽर्थवान्नित्यं ब्रह्मलोके च मोदते ॥ १३-११०-१० (८५८१०)
दमस्य तु फलं राजञ्शृणु त्वं विस्तरेण मे ।
दान्ताः सर्वत्र सुखिनो दान्ताः सर्वत्र निर्वृताः ।
यत्रेच्छागामिनो दान्ताः सर्वशत्रुनिषूदनाः ॥ १३-११०-११ (८५८११)
प्रार्थयन्ति च यद्दान्ता लभन्ते तन्न संशयः ।
युज्यन्ते सर्वकामैर्हि दान्ताः सर्वत्र पाण्डव ॥ १३-११०-१२ (८५८१२)
स्वर्गे यथा प्रमोदन्ते तपसा विक्रमेण च ।
दानैर्यज्ञैश्च विविधैस्तथा दान्ताः क्षमान्विताः ॥ १३-११०-१३ (८५८१३)
दानाद्दमो विशिष्टो हि ददत्किञ्चिद्द्विजातये ।
दाता कुप्यति नो दान्तस्तस्माद्दानात्परंदमः ॥

यस्तु दद्यादकुप्यन्हि तस्य लोकाः सनातनाः ।
क्रोधो हन्ति हि यद्दानं तस्माद्दानाद्वरो दमः ॥ १३-११०-१४ (८५८१४)
अदृश्यानि महाराज स्थानान्ययुतशो दिवि ।
ऋषीणां सर्वलोकषु यानि ते यान्ति देवताः ॥१३-११०-१६ (८५८१५)
दमेन यानि नृपते गच्छन्ति परमर्षयः ।
कामयाना महत्स्थानं तस्माद्दानात्परं दमः ॥१३-११०-१७ (८५८१६)
ग्विद्यादानाद्वरं नास्ति वेदविद्या महाफलाः।'
अध्यापकः परिक्लेशादक्षयं फलमश्नुते ॥ १३-११०-१८ (८५८१७)
विधिवत्पावकं हुत्वा ब्रह्मलोके नराधिप ।
अधीत्यापि हि यो वेदान्न्यायविद्भ्यः प्रयच्छति ।
गुरुकर्मप्रशंसी तु सोपि स्वर्गे महीयते ॥ १३-११०-१९ (८५८१८)
क्षत्रियोऽध्ययने युक्तो यजने दानकर्मणि ।
युद्धे यश्च परित्राता सोपि स्वर्गे महीयते ॥१३-११०-२० (८५८१९)
वैश्यः स्वकर्मनिरतः प्रदानाल्लभते महत् ।
शूद्रः स्वकर्मनिरतः स्वर्गं शुश्रूषयाऽऽर्च्छति ॥१३-११०-२१ (८५८२०)
शूरा बहुविधाः प्रोक्तास्तेषामर्थास्तु मे शृणु ।
शूरान्वयानां निर्दिष्टं फलं शूरस्य चैव हि ॥१३-११०-२२ (८५८२१)
यज्ञशूरा दमे शूराः सत्यशूरास्तथा परे ।
युद्धशूरास्तथैवोक्ता दानशूराश्च मानवाः ॥१३-११०-२३ (८५८२२)
ग्बुद्धिशूरास्तथैवान्ये क्षमाशूरास्तथा परे।'
साङ्ख्यशूराश्च बहवो योगशूरास्तथा परे ।
अरण्ये गृहवासे च त्यागे शूरास्तथा परे ॥ १३-११०-२४ (८५८२३)
आर्जवे च तथा शूराः शमे वर्तन्ति मानवाः ।
तैस्तैश्च नियमैः शूरा बहवः सन्ति चापरे ।
वेदाध्ययनशूराश्च शूराश्चाध्यापने रताः ॥ १३-११०-२५ (८५८२४)
गुरुशुश्रूषया शूराः पितृशुश्रूषया परे ।
मातृशुश्रूषया शूरा भैक्ष्यशूरास्तथा परे ॥१३-११०-२६ (८५८२५)
अरण्ये गृहवासे च शूराश्चातिथिपूजने ।
सर्वे यान्ति पराँल्लोकान्स्वकर्मफलनिर्जितान् ॥१३-११०-२७ (८५८२६)
धारणं सर्ववेदानां सर्वतीर्थावगाहनम् ।
सत्यं च ब्रुवतो नित्यं समं वा स्यान्नवा समम् ॥१३-११०-२८ (८५८२७)
अश्वमेधसहस्रं च सत्यं च तुलया धृतम् ।
अश्वमेधसहस्राद्धि सत्यमेव विशिष्यते ॥१३-११०-२९ (८५८२८)
सत्येन सूर्यस्तपति सत्येनाग्निः प्रदीप्यते ।
सत्येन मरुतो वान्ति सर्वं सत्ये प्रतिष्ठितम् ॥१३-११०-३० (८५८२९)
सत्येन देवाः प्रीयन्ते पितरो ब्राह्मणास्तथा ।

सत्यमाहुः परो धर्मस्तस्मात्सत्यं न लोपयेत् ॥ १३-११०-३१ (८५८३०)
मुनयः सत्यनिरता मुनयः सत्यविक्रमाः ।
मुनयः सत्यशपथास्तस्मात्सत्यं विशिष्यते ॥ १३-११०-३२ (८५८३१)
सत्यवन्तः सत्यलोके मोदन्ते भरतर्षभ ।
दमः सत्यफलावाप्तिरुक्ता सर्वात्मना मया ॥ १३-११०-३३ (८५८३२)
असंशयं विनीतात्मा स वै स्वर्गे महीयते ।
ब्रह्मचर्यस्य च गुणं शृणु त्वं वसुधाधिप ॥ १३-११०-३४ (८५८३३)
आजन्ममरणाद्यस्तु ब्रह्मचारी भवेदिह ।
न तस्य किञ्चिदप्राप्यमिति विद्धि नराधिप ॥ १३-११०-३५ (८५८३४)
बह्व्यः कोट्यस्त्वषीणां तु ब्रह्मलोके वसन्त्युत
सत्ये रतानां सततं दान्तानामूर्ध्वरेतसाम् ॥ १३-११०-३६ (८५८३५)
ब्रह्मचर्यं दहेद्राजन्सर्वपापान्युपासितम् ।
ब्राह्मणेन विशेषेण ब्राह्मणो ह्यग्निरुच्यते ॥ १३-११०-३७ (८५८३६)
प्रत्यक्षं हि तथा ह्येतद्ब्राह्मणेषु तपस्विषु ।
बिभेति हि यथा शक्रो ब्रह्मचारिप्रधर्षितः ॥ १३-११०-३८ (८५८३७)
तद्ब्रह्मचर्यस्य फलमृषीणामिह दृश्यते ।
मातापित्रोः पूजने यो धर्मस्तमपि मे शृणु ॥ १३-११०-३९ (८५८३८)
शुश्रूषते यः पितरं न चासूयेत्कदाचन ।
मातरं भ्रातरं वाऽपि गुरुमाचार्यमेव च ॥ १३-११०-४० (८५८३९)
तस्य राजन्फलं विद्धि स्वर्लोके स्थानमर्चितम् ।
न च पश्येत नरकं गुरुशुश्रूषयाऽऽत्मवान् ॥ ॥ १३-११०-४१ (८५८४०)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
दशाधिकशततमोऽध्यायः ॥ ११० ॥
Mahabharata - Anushaasana Parva - Chapter Footnotes

७-११०-६ अनुक्रोशः परदुःखेन दुःखितत्वम् । अनुकम्पा तत्प्रतीकारकरणम् ॥
७-११०-९ फलमैश्वर्यमेव प्रत्यक्षम् ॥

---

अनुससनपर्व-अध्यय१११
॥ श्रीः ॥
१३.१११. अध्यायः १११

अथ दानधर्मपर्व ॥ १ ॥
Mahabharata - Anushaasana Parva - Chapter Topics
भीष्मेण युधिष्ठिरम्प्रति गोदानविधिफलादिकथनम् ॥ १ ॥

युधिष्ठिर उवाच ।
विधिं गवां परं श्रोतुमिच्छामि नृप तत्त्वतः ।
येन ताञ्शाश्वताँल्लोकानर्थिनां प्राप्नुयादिह ॥ १३-१११-१ (८५८४१)
भीष्म उवाच। १३-१११-२क्ष् (७११७)
न गोदानात्परं किञ्चिद्विद्यते वसुधाधिप ।
गौर्हि न्यायागता दत्ता सद्यस्तारयते कुलम् ॥ १३-१११-२ (८५८४२)
सतामर्थे सम्यगुत्पादितो यः
स वै क्लृप्तः सम्यगाभ्यः प्रजाभ्यः ।
तस्मात्पूर्वं ह्यादिकालप्रवृत्तं
गोदानार्थं शृणु राजन्विधिं मे ॥ १३-१११-३ (८५८४३)
पुरा गोष्ठे निलीनासु गोषु सन्दिग्धदर्शिना ।
मांधात्रा प्रकृतं प्रश्नं बृहस्पतिरभाषत ॥ १३-१११-४ (८५८४४)
द्विजानामन्त्र्य सत्कृत्य प्रोक्तं कालमुपोष्य च ।
गोदानार्थे प्रयुञ्जीत रोहिणीं नियतव्रतः ॥ १३-१११-५ (८५८४५)
आह्वानं च प्रयुञ्जीत समङ्गे बहुलेति च ।
प्रविश्य च गवां मध्यमिमां श्रुतिमुदाहरेत् ॥ १३-१११-६ (८५८४६)
गौर्मे माता वृषभः पिता मे
दिवं गर्भं जगती मे प्रतिष्ठा ।
प्रपद्यैवं शर्वरीमुष्य गोषु
पुनर्वाणीमुत्सृजेद्गोप्रदाने ॥ १३-१११-७ (८५८४७)
स तामेकां निशां गोभिः समसख्यः समव्रतः ।
ऐकात्म्यगमनात्सद्यः कलुषाद्विप्रमुच्यते ॥ १३-१११-८ (८५८४८)
उत्सृष्टवृषवत्सा हि प्रदेया सूर्यदर्शने ।
त्रिदिवं प्रतिपत्तव्यमर्थवादाशिषस्तव ॥ १३-१११-९ (८५८४९)
ऊर्जस्विन्य ऊर्जमेधाश्च यज्ञे
गर्भोऽमृतस्य जगतश्च प्रतिष्ठा ।
क्षिते रोहः प्रवहः शश्वदेव ।
प्राजापत्याः सर्वमित्यर्थवादाः ॥ १३-१११-१० (८५८५०)
गावो ममैनः प्रणुदन्तु सौर्या-
स्तथा सौम्याः स्वर्गयानाय सन्तु ।
आत्मानं मे मातृवच्चाश्रयन्तु
तथाऽनुक्ताः सन्तु सर्वाशिषो मे ॥ १३-१११-११ (८५८५१)
शोषोत्सर्गे कर्मभिर्देहमोक्षे

सरस्वत्यः श्रेयसे सम्प्रवृत्ताः ।
यूयं नित्यं सर्वपुण्योपवाह्यां
दिशध्वं मे गतिमिष्टां प्रसन्नाः ॥ १३-१११-१२ (८५८५२)
या वै यूयं सोऽहमद्यैव भावो
युष्मान्दत्त्वा चाहमात्मप्रदाता ।
मनश्च्युता मन एवोपपन्नाः
सन्धुक्षध्वं सौम्यरूपाग्र्यदेहाः ॥ १३-१११-१३ (८५८५३)
दानस्याग्रे पूर्वमेतद्वदेत
गवां दाता विधिवत्पर्वदृष्टम् ।
प्रतिब्रूयाच्छेषमर्धं द्विजातिः
प्रतिगृह्णन्वै गोप्रदाने विधिज्ञः ॥ १३-१११-१४ (८५८५४)
गां ददानीति वक्तव्यमर्घ्यमुत्सृज्य सुव्रतः ।
ऊढव्या भरितव्या च वैष्णवीति च चोदयेत् ॥ १३-१११-१५ (८५८५५)
नाम सङ्कीर्तयेत्तस्या यथासंख्योत्तरं स वै ।
फलं षट्त्रिंशदष्टौ च सहस्राणि च विंशतिः ॥ १३-१११-१६ (८५८५६)
एवमेतान्गुणान्विद्याद्गवादीनां यथाक्रमम् ।
गोप्रदाता समाप्नोति समस्तानष्टमे क्रमे ॥ १३-१११-१७ (८५८५७)
गोदः शीली निर्भयश्चार्घदाता
न स्याद्दुःखी वसुदाता च कामम् ।
उपस्योढा भारते यश्च विद्वा-
न्विख्यातास्ते वैष्णवाश्चन्द्रलोकाः ॥ १३-१११-१८ (८५८५८)
गा वै दत्त्वा गोव्रती स्यात्त्रिरात्रं
निशां चैकां संवसेतेह ताभिः ।
काम्याष्टम्यां वर्तितव्यं त्रिरात्रं
रसैर्वा गोः शकृता प्रश्नवैर्वा ॥ १३-१११-१९ (८५८५९)
देवव्रती स्याद्वृषभप्रदाने
वेदावाप्तिर्गोयुगस्य प्रदाने ।
तथा गवां विधिमासाद्य यज्वा
लोकानग्र्यान्विन्दते गोविधिज्ञः ॥ १३-१११-२० (८५८६०)
कामान्सर्वान्पार्थिवानेकसंस्था-
न्यो वै दद्यात्कामदुघां च धेनुम् ।
सम्यक्ताः स्युर्हव्यकव्यौघवत्य
स्तासामुक्ष्णां ज्यायसां सम्प्रदानम् ॥ १३-१११-२१ (८५८६१)
न चाशिष्यायाव्रतायोपकुर्या-
न्नाश्रद्दधानाय न वक्रबुद्धये ।
गुह्यो ह्ययं सर्वलोकस्य धर्मो

नेमं धर्मं यत्र तत्र प्रजल्पेत् ॥ १३-१११-२२ (८५८६२)
सन्ति लोके श्रद्दधाना मनुष्याः
सन्ति क्षुद्रा राक्षसमानुषेषु ।
एषामेतद्दीयमानं ह्यनिष्टं
ये नास्तिक्यं चाश्रयन्तेऽल्पपुण्याः ॥ १३-१११-२३ (८५८६३)
बार्हस्पत्यं वाक्यमेतन्निशम्य
ये राजानो गोप्रदानानि दत्त्वा ।
लोकान्प्राप्ताः पुण्यशीलाः प्रवृत्ता-
स्तान्मे राजन्कीर्त्यमानान्निबोध ॥ १३-१११-२४ (८५८६४)
उशीनरो विश्वगश्वो नृगश्च
भगीरथो विश्रुतो यौवनाश्वः ।
मान्धाता वै मुचुकुन्दश्च राजा
भूरिद्युम्नो नैषधः सोमकश्च ॥ १३-१११-२५ (८५८६५)
पुरूरवा भरतश्चक्रवर्ती
यस्यान्ववाये भरताः सर्व एव ।
तथा वीरो दाशरथिश्च रामो
ये चाप्यन्ये विश्रुताः कीर्तिमन्तः ॥ १३-१११-२६ (८५८६६)
तथा राजा पृथुकर्मा दिलीपो
दिवं प्राप्तो गोप्रदानैर्विधिज्ञः ।
यज्ञैर्दानैस्तपसा राजधर्मै-
र्मांधाताऽभूद्गोप्रदानैश्च युक्तः ॥ १३-१११-२७ (८५८६७)
तस्मात्पार्थ त्वमपीमां मयोक्तां
बार्हस्पतीं भारतीं धारयस्व ।
द्विजाग्र्येभ्यः सम्प्रयच्छस्व प्रीतो
गाः पुण्या वै प्राप्य राज्यं कुरूणाम् ॥ १३-१११-२८ (८५८६८)
वैशम्पायन उवाच। १३-१११-२९क्ष् (७११८)
तथा सर्वं कृतवान्धर्मराजो
भीष्मेणोक्तो विधिवद्गोप्रदाने
स मान्धातुर्वेद देवोपदिष्टं
सम्यग्धर्मं धारयामास राजा ॥ १३-१११-२९ (८५८६९)
इति नृप सततं गवां प्रदाने
यवशकलान्सह गोमयैः पिबानः ।
क्षितितलशयनः शिखी यतात्मा
वृष इव राजवृषस्तदा बभूव ॥ १३-१११-३० (८५८७०)
नरपतिरभवत्सदैव ताभ्यः
प्रयतमनास्त्वभिसंस्तुवंश्च गा वै ।

नृपतिधुरि च गामयुक्त भूप-
स्तुरगवरैरगमच्च यत्र तत्र ॥ ॥ १३-१११-३१ (८५८७१)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
एकादशाधिकशततमोऽध्यायः ॥ १११ ॥।

Mahabharata - Anushaasana Parva - Chapter Footnotes

७-१११-३ यो विधिरुत्पादितः । सम्यगिज्याः प्रजाभ्य इति थ ध पाठः ॥
७-१११-५ द्विजातिमतिसत्कृत्य श्वः कालमभिवेद्य चेति झ
। पाठः। रोहिणीं लोहितवर्णाम् ॥
७-१११-८ समसंख्यो गा अनिवारयन् । समव्रतः
भूतलशायित्वदंशाद्यनिवारकत्वादिगुणयुक्तः ॥
७-१११-९ उत्सृष्टः वृषवत्सो यया सार्धं सा उत्सृष्टवृषवत्सा
। त्वया प्रदेया त्रिदिवं च प्रतिपत्तव्यं गन्तव्यम्। अर्थवादमन्त्रोक्ता
आशिषश्च तव भविष्यन्तीति योज्यम् ॥
७-१११-१० आशिषमेवाह ऊर्जस्विन्य इति । बलवत्य उत्साहवत्यो वा
ऊर्जस्विन्यः। ऊर्जमेधा उपगतप्रज्ञाः। यज्ञे अमृ-तस्य तत्साधनस्य
हविषो गर्भ इव गर्भः क्षेत्रभूताः। क्षितेः ऐश्वर्यस्य
रोहः। शश्वत् शाश्वतः क्षितेः प्रहवः प्रवाहरूपाश्च। प्राजापत्यः
सर्ववद्याप्रवाद इति थ ध पाठः ॥
७-१११-११ अनुक्ताः मन्त्रद्वयेन उक्ता आशिषो मे सन्तु
। आम्नातायामनधीताः श्रयन्तु इति थ पाठः ॥
७-१११-१२ शोषोत्सर्गे क्षयरोगोपतापापनये क्षयरोगादिनिवृत्तौ
देहमोक्षे च कर्मभिः पञ्चगव्यादिभिः सेविताः सत्यः सरस्वत्यो
नद्य इव श्रेयसे सम्प्रवृत्ताः ॥
७-१११-१३ मनश्च्युताः दातुर्ममत्वाभिमानाच्च्युताः । मनएव उपपन्नाः
मदीयममतास्पदीभूताः। सन्धुध्वं दातारं मां च इष्टैर्भोगैः
प्रकाशयध्वम् ॥
७-१११-१८ गवादीनां गोप्रतिनिधीनां एव तत्फलम् । प्रत्यक्षगोदाने
गोप्रतिग्रहीतुर्गृहं गच्छन्त्या अष्टमे पदे भवन्ति
किमु तद्गृहगमनादिष्विति भावः। गुणान्वृद्धान्भावनीयं
यथाक्रममिति थ ध। पाठः। शीली शीलवान् अर्घदाता निर्भय इति
सम्बन्धः। उषस्यं प्रातः स्नानादिकर्म ऊढं प्राप्तं यैः। भारते
विद्वान् भारतवेत्ता। वैष्णवाः विष्णुभक्ताः। चन्द्रवत् लोक आलोको
येषां एव विख्याताः कथिताः ॥
७-१११-२१ एकसंस्थान् एकीकृतान् । तासां ताभ्योऽधिकमिति

शेषः। उक्ष्णां वृषभाणाम् ॥
७-१११-२२ उपकुर्यात् एतत्कथनेन ॥

---

अनुससनपर्व-अध्यय११२
॥ श्रीः ॥
१३.११२. अध्यायः ११२

अथ दानधर्मपर्व ॥ १ ॥
Mahabharata - Anushaasana Parva - Chapter Topics
भीष्मेण युधिष्ठिरम्प्रति गोसामान्योत्पत्तिप्रकारकथनपूर्वकं
कपिलोत्पत्तिप्रकारकथनम् ॥ १ ॥

Mahabharata - Anushaasana Parva - Chapter Text

वैशम्पायन उवाच ।
ततो युधिष्ठिरे राजा भूयः शान्तनवं नृपम् ।
गोदानविस्तरं धीमान्पप्रच्छ विनयान्वितः ॥ १३-११२-१ (८५८७२)
गोप्रदानगुणान्सम्यक् पुनर्मे ब्रूहि भारत ।
न हि तृप्याम्यहं वीर शृण्वानोऽमृतमीदृशम् ॥ १३-११२-२ (८५८७३)
इत्युक्तो धर्मराजेन तदा शान्तनवो नृपः ।
सम्यगाह गुणांस्तस्मै गोप्रदानस्य केवलान् ॥ १३-११२-३ (८५८७४)
भीष्म उवाच। १३-११२-४क्ष् (७११९)
वत्सलां गुणसम्प्रन्ना तरुणीं वस्त्रसंयुताम् ।
दत्त्वेदृशीं गां विप्राय सर्वपापैः प्रमुच्यते ॥ १३-११२-४ (८५८७५)
असुर्या नाम ते लोका गां दत्त्वा तान्न गच्छति। १३-११२-५ (८५८७६)
पीतोदकां जग्धतृणां नष्टक्षीरां निरिन्द्रियाम् ।
जरारोगोपसम्पन्नां जीर्णां वापीमिवाजलाम् ।
दत्त्वा तमः प्रविशति द्विजं क्लेशेन योजयेत् ॥ १३-११२-६ (८५८७७)
रुष्टा दुष्टा व्याधिता दुर्बला वा
नो दातव्या याश्च मूल्यैरदत्तैः ।
क्लेशैर्विप्रं योऽफलैः संयुनक्ति
तस्याऽवीर्याश्चाफलाश्चैव लोकाः ॥ १३-११२-७ (८५८७८)
बलान्विताः शीलवीर्योपपन्नाः
सर्वे प्रशंसन्ति सुगन्धवत्यः ।
यथा हि गङ्गा सरितां वरिष्ठा
तथाऽर्जुनीनां कपिला वरिष्ठा ॥ १३-११२-८ (८५८७९)

युधिष्ठिर उवाच। १३-११२-९क्ष् (७१२०)
कस्मात्समाने बहुलाप्रदाने
सद्भिः प्रशस्तं कपिलाप्रदानम् ।
विशेषमिच्छामि महाप्रभावं
श्रोतुं समर्थोस्मि भवान्प्रवक्तुम् ॥ १३-११२-९ (८५८८०)
भीष्म उवाच। १३-११२-१०क्ष् (७१२१)
वृद्धानां ब्रुवतां श्रुत्वा कपिलानामथोद्भवम् ।
वक्ष्यामि तदशेषेण रोहिण्यो निर्मिता यथा ॥ १३-११२-१० (८५८८१)
प्रजाः सृजेति चादिष्टः पूर्वं दक्षः स्वयंभुवा ।
नासृजद्वृत्तिमेवाग्रे प्रजानां हितकाम्यया ॥ १३-११२-११ (८५८८२)
यथा ह्यमृतमाश्रित्य वर्तयन्ति दिवौकसः ।
तथा वृत्तिं समाश्रित्य वर्तयन्ति प्रजा विभो ॥ १३-११२-१२ (८५८८३)
अचरेभ्यश्च भूतेभ्यश्चराः श्रेष्ठास्ततो नराः ।
ब्राह्मणाश्च ततः श्रेष्ठास्तेषु यज्ञाः प्रतिष्ठिताः ॥ १३-११२-१३ (८५८८४)
यज्ञैराप्यायते सोमः स च गोषु प्रतिष्ठितः ।
ताभ्यो देवाः प्रमोदन्ते प्रजानां वृत्तिरासु च ॥ १३-११२-१४ (८५८८५)
ततः प्रजासु सृष्टासु दक्षाद्यैः क्षुधिताः प्रजाः ।
प्रजापतिमुपाधावन्विनिश्चित्य चतुर्मखम् ॥ १३-११२-१५ (८५८८६)
प्रजातान्येव भूतानि प्राक्रोशन्वृत्तिकाङ्क्षया ।
वृत्तिदं चान्वपद्यन्त तृषिताः पितृमातृवत् ॥ १३-११२-१६ (८५८८७)
इतीदं मनसा गत्वा प्रजासर्गार्थमात्मनः ।
प्रजापतिर्बलाधानममृतं प्रापिबत्तदा ।
शंसतस्तस्य तृप्तिं तु गन्धात्सुरभिरुत्थिता ॥ १३-११२-१७ (८५८८८)
मुखजा साऽसृजद्धातुः सुरभिर्लोकमातरम् ।
दर्शनीयरसं वृत्तिं सुरभिं मुखजां सुताम् ॥ १३-११२-१८ (८५८८९)
साऽसृजत्सौरभेयीस्तु सुरभिर्लोकमातृकाः ।
सुवर्णवर्णाः कपिलाः प्रजानां वृत्तिधेनवः ॥ १३-११२-१९ (८५८९०)
तासाममृतवृत्तीनां क्षरन्तीनां समन्ततः ।
बभूवामृतजः फेनः स्रवन्तीनामिवोर्मिजः ॥ १३-११२-२० (८५८९१)
स वत्समुखविभ्रष्टो भवस्य भुवि तिष्ठतः ।
शिरस्यवापतत्क्रुद्धः स तदैक्षत च प्रभुः ।
ललाटप्रभवेणाक्ष्णा रोहिणीं प्रदहन्निव ॥ १३-११२-२१ (८५८९२)
तत्तेजस्तु ततो रौद्रं कपिलां गां विशाम्पते ।
नानावर्णत्वमनयन्मेघानिव दिवाकरः ॥ १३-११२-२२ (८५८९३)
यास्तु तस्मादपक्रम्य सोममेवाभिसंश्रिताः ।
यथोत्पन्नाः स्ववर्णस्था न नीतास्वान्यवर्णतां ॥ १३-११२-२३ (८५८९४)

अथ क्रुद्धं महादेवं प्रजापतिरभाषत ।
अमृतेनावसिक्तस्त्वं नोच्छिष्टं विद्यते गवाम् ॥१३-११२-२४ (८५८९५)
यथा ह्यमृतमादाय सोमो विष्यन्दते पुनः ।
तथा क्षीरं क्षरन्त्येता रोहिण्योऽमृतसम्भवाः ॥१३-११२-२५ (८५८९६)
न दुष्यत्यनिलो नाग्निर्न सुवर्णं न चोदधिः ।
नामृतेनामृतं पीतं न वत्सैर्दुष्यते पयः ॥१३-११२-२६ (८५८९७)
इमाँल्लोकान्भरिष्यन्ति हविषा प्रस्रवेण च ।
आसामैश्वर्यमिच्छन्ति सर्वेऽमृतमयं शुभम् ॥१३-११२-२७ (८५८९८)
वृषभं च ददौ तस्मै भगवाँल्लोकभावनः ।
प्रसादयामास मनस्तेन रुद्रस्य भारत ॥१३-११२-२८ (८५८९९)
प्रीतश्चापि महादेवश्चकार वृषभं तदा ।
ध्वजं च वाहनं चैव तस्मात्स वृषभध्वजः ॥१३-११२-२९ (८५९००)
ततो देवैर्महादेवस्तदा पशुपतिः कृतः ।
ईश्वरः स गवां मध्ये वृषभाङ्कः प्रकीर्तितः ॥१३-११२-३० (८५९०१)
एवमव्यग्रवर्णानां कपिलानां महौजसाम् ।
प्रदाने प्रथमः कल्पः सर्वासामेव कीर्तितः ॥१३-११२-३१ (८५९०२)
लोकज्येष्ठा लोकवृत्तिप्रवृत्ता
रुद्रोद्भूताः सोमविष्यन्दभूताः ।
सौम्याः पुण्याः कामदाः प्राणदाश्च
गा वै दत्त्वा सर्वकामप्रदः स्यात् ॥ १३-११२-३२ (८५९०३)
इदं गवां प्रभवविधानमुत्तमं
पठन्सदा शुचिरपि मङ्गलप्रियः ।
विमुच्यते कलिकलुषेण मानवः
प्रियान्सुतान्धनपशुमाप्नुयात्सदा ॥ १३-११२-३३ (८५९०४)
हव्यं कव्यं तर्पणं शान्तिकर्म
यानं वासो वृद्धबालस्य तुष्टिः ।
एतान्सर्वान्गोप्रदाने गुणान्वै
दाता राजन्नाप्नुयाद्वै सदैव ॥ १३-११२-३४ (८५९०५)
वैशम्पायन उवाच। १३-११२-३५क्ष् (७१२२)
पितामहस्याथ निशम्य वाक्यं
राजा सह भ्रातृभिराजमीढः ।
सुवर्णवर्णानडुहस्तथा गाः
पार्थो ददौ ब्राह्मणसत्तमेभ्यः ॥ १३-११२-३५ (८५९०६)
तथैव तेभ्योपि ददौ द्विजेभ्यो
गवां सहस्राणि शतानि चैव ।
यज्ञान्समुद्दिश्य च दक्षिणार्थे

लोकान्विजेतुं परमां च कीर्तिम् ॥ ॥ १३-११२-३६ (८५९०७)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
द्वादशाधिकशततमोऽध्यायः ॥ ११२ ॥
Mahabharata - Anushaasana Parva - Chapter Footnotes

७-११२-६ अनन्ता नाम ते लोका गां दत्त्वा यत्र गच्छतीति थ ध पाठः ॥
७-११२-११ पीतोदकां त्यक्ततृणामिति थ ध पाठः ॥
७-११२-२० असृजद्वृत्तिमेवाग्र इति झ पाठः ॥
७-११२-२३ स्रवन्तीनां नदीनां ॥
७-११२-२६ ता ह्येता नान्यवर्णगा इति ट थ ध पाठः ॥
७-११२-३५ न सुवर्णं घृतं दधीति थ पाठः ॥

---

अनुससनपर्व-अध्यय११३
॥ श्रीः ॥
१३.११३. अध्यायः ११३

अथ दानधर्मपर्व ॥ १ ॥
Mahabharata - Anushaasana Parva - Chapter Topics
भीष्मेण युधिष्ठिरम्प्रति
गोमहिमप्रतिपादकविसिष्ठसौदाससंवादानुवादः ॥ १ ॥

Mahabharata - Anushaasana Parva - Chapter Text

वैशम्पायन उवाच ।
एवमुक्त्वा ततो भीष्मः पुनर्धर्मसुतं नृपम् ।
जनमेजयभूपाल उवाचेदं सहेतुकम् ॥ १३-११३-१ (८५९०८)
एतस्मिन्नेव काले तु वसिष्ठमृषिसत्तमम् ।
इक्ष्वाकुवंशजो राजा सौदासो वदतां वरः ॥ १३-११३-२ (८५९०९)
सर्वलोकचरं सिद्धं ब्रह्मकोशं सनातनम् ।
पुरोहितमभिप्रष्टुमभिवाद्योपचक्रमे ॥ १३-११३-३ (८५९१०)
त्रैलोक्ये भगवन्किंस्वित्पवीत्रं कथ्यतेऽनघ ।
यत्कीर्तयन्सदा मर्त्यः प्राप्नुयात्पुण्यमुत्तमम् ॥ १३-११३-४ (८५९११)
भीष्म उवाच। १३-११३-५क्ष् (७१२३)
तस्मै प्रोवाच वचनं प्रणताय हितं तदा ।
गवामुपनिषद्विद्यां नमस्कृत्य गवां शुचिः ॥ १३-११३-५ (८५९१२)

गावः सुरभिगन्धिन्यस्तथा गुग्गुलुगन्धयः ।
गावः प्रतिष्ठा भूतानां गावः स्वस्त्ययनं महत् ॥ १३-११३-६ (८५९१३)
गावो भूतं च भव्यं च गावः पुष्टिः सनातनी ।
गावो लक्ष्म्यास्तथा मूलं गोषु दत्तं न नश्यति ॥ १३-११३-७ (८५९१४)
अन्नं हि परमं गावो देवानां परमं हविः ।
स्वाहाकारवषट्कारौ गोषु नित्यं प्रतिष्ठितौ ॥ १३-११३-८ (८५९१५)
गावो यज्ञस्य हि फलं गोषु यज्ञाः प्रतिष्ठिताः ।
गावो भविष्यं भूतं च गोषु यज्ञाः प्रतिष्ठिताः ॥ १३-११३-९ (८५९१६)
सायं प्रातश्च सततं होमकाले महाद्युते ।
गावो ददति वै हौम्यमृषिभ्यः पुरुषर्षभ ॥ १३-११३-१० (८५९१७)
यानि कानि च दुर्गाणि दुष्कृतानि कृतानि च ।
तरन्ति चैव पाप्मानं धेनुं ये ददति प्रभो ॥ १३-११३-११ (८५९१८)
एकां च दशगुर्दद्याद्दश दद्याच्च गोशती ।
शतं सहस्रगुर्दद्यात्सर्वे तुल्यफला हि ते ॥ १३-११३-१२ (८५९१९)
अनाहिताग्निः शतगुरयज्वा च सहस्रगुः ।
समृद्धो यश्च कीनाशो नार्घमर्हन्ति ते त्रयः ॥ १३-११३-१३ (८५९२०)
कपिलां ये प्रयच्छन्ति सवत्सां कांस्यदोहनाम् ।
सुव्रतां वस्त्रसंवीतामुभौ लोकौ जयन्ति ते ॥ १३-११३-१४ (८५९२१)
युवानमिन्द्रियोपेतं शतेन सहयूथपम् ।
गवेन्द्रं ब्राह्मणेन्द्राय भूरिशृङ्गमलङ्कृतम् ॥ १३-११३-१५ (८५९२२)
वृषभं ये प्रयच्छन्ति श्रोत्रियाय परन्तप ।
ऐश्वर्यं तेऽधिगच्छन्ति जायमानाः पुनःपुनः ॥ १३-११३-१६ (८५९२३)
नाकीर्तयित्वा गाःक सुप्यात्तासां संस्मृत्य चोत्पतेत् ।
सायं प्रातर्नमस्येच्च गास्ततः पुष्टिमाप्नुयात् ॥ १३-११३-१७ (८५९२४)
गवां मूत्रपुरीषस्य नोद्विजेत कथञ्चन ।
न चासां मांसमश्नीयाद्गवां पुष्टिं तथाऽऽप्नुयात् ॥ १३-११३-१८ (८५९२५)
गाश्च संकीर्तयन्नित्यं नावमन्येत तास्तथा ।
अनिष्टं स्वप्नमालक्ष्य गां नरः सम्प्रकीर्तयेत् ॥ १३-११३-१९ (८५९२६)
गोमयेन सदा स्नायाद्गोकरीषे च संविशेत् ।
श्लोष्ममूत्रपुरीषाणि प्रतिघातं च वर्जयेत् ॥ १३-११३-२० (८५९२७)
सार्द्रे चर्मणि भुञ्जीत निरीक्षेद्वारुणीं दिशम् ।
वाग्यतः सर्पिषा भूमौ गवां व्युष्टिं सदाऽऽश्नुते ॥ १३-११३-२१ (८५९२८)
घृतेन जुहुयादग्निं घृतेन स्वस्ति वाचयेत् ।
घृतं दद्याद्घृतं प्राशेद्गवां व्युष्टिं सदाऽऽश्नुते
॥ १३-११३-२२ (८५९२९)
गोमत्या विद्यया धेनुं तिलानामभिमन्त्र्य यः ।

सर्वरत्नमयीं दद्यान्न स शोचेत्कृताकृते ॥ १३-११३-२३ (८५९३०)
गावो मामुपतिष्ठन्तु हेमशृङ्ग्यः पयोमुचः ।
सुरभ्यः सौरभेय्यश्च सरितः सागरं यथा ॥ १३-११३-२४ (८५९३१)
गा वै पश्याम्यहं नित्यं गावः पश्यन्तु मां सदा ।
गावोस्माकं वयं तासां यतो गावस्ततो वयम् ॥ १३-११३-२५ (८५९३२)
एवं रात्रौ दिवा चापि समेषु विषमेषु च ।
महाभयेषु च नरः कीर्तयन्मुच्यते भवात् ॥ ॥ १३-११३-२६ (८५९३३)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
त्रयोदशाधिकशततमोऽध्यायः ॥ ११३ ॥
Mahabharata - Anushaasana Parva - Chapter Footnotes

७-११३-१३ कीनाशः कर्षकः कृपणो वा । अर्घं पूजाम् ॥
७-११३-२१ सौम्ये चर्मणीति ध।पाठः ॥
७-११३-२३ गोमाँ अग्नेविमाँ अश्वीति मन्त्रो गोमती ॥

---

अनुससनपर्व-अध्यय११४
॥ श्रीः ॥
१३.११४. अध्यायः ११४

अथ दानधर्मपर्व ॥ १ ॥
Mahabharata - Anushaasana Parva - Chapter Topics
भीष्मेण युधिष्ठिरम्प्रति गवां
चिरचीर्णतपःप्रसादिताच्चतुर्मुखाल्लोकश्रैष्ठ्यपावित्र्यादिवरलाभकथनम्
॥ १ ॥
तथा गोविशेषदानस्य फलविशेषकथनम् ॥ २ ॥

Mahabharata - Anushaasana Parva - Chapter Text

वसिष्ठ उवाच ।
शतं वर्षसहस्राणां तपस्तप्तं सुदुष्करम् ।
गोभिः पूर्वं विसृष्टाभिर्गच्छेम श्रेष्ठतामिति ॥ १३-११४-१ (८५९३४)
लोकेऽस्मिन्दक्षिणानां च सर्वासां वयमुत्तमाः ।
भवेम न च लोप्येम दोषेणेति परन्तप ॥ १३-११४-२ (८५९३५)
अस्मत्पुरीषस्नानेन जनः पुयेत सर्वदा ।
शकृता च पवित्रार्थं कुर्वीरन्देवमानुषाःठ ॥ १३-११४-३ (८५९३६)

तथा सर्वाणि भूतानि स्थावराणि चराणि च ।
प्रदातारश्च लोकान्नो गच्छेयुरिति मानद ॥ १३-११४-४ (८५९३७)
ताभ्यो वरं ददौ ब्रह्मा तपसोऽन्ते स्वयं प्रभुः ।
एवं भवन्विति विभुर्लोकांस्तारयतेति च ॥ १३-११४-५ (८५९३८)
उत्तस्थुः सिद्धकामास्ता भूतभव्यस्य मातरः ।
तपसोऽन्ते महाराज गावो लोकपरायणाः ॥ १३-११४-६ (८५९३९)
तस्माद्गावो महाभागाः पवित्रं परमुच्यते ।
तथैव सर्वभूतानां समतिष्ठन्त मूर्धनि ॥ १३-११४-७ (८५९४०)
सम्मनवत्सां कपिलां धेनुं दत्त्वा पयस्विनीम् ॥
सुव्रतां वस्त्रसंवीतां ब्रह्मलोके महीयते ॥ १३-११४-८ (८५९४१)
लोहितां तुल्यवत्सां तु धेनुं दत्त्वा पयस्विनीम् ।
सुव्रतां वस्त्रसंवीतां सूर्यलोके महीयते ॥ १३-११४-९ (८५९४२)
समानवत्सां शबलां धेनुं दत्त्वा पयस्विनीम् ।
सुव्रतां वस्त्रसंवीतीं सोमलोके महीयते ॥ १३-११४-१० (८५९४३)
समानवत्सां श्वेतां तु धेनुं दत्त्वा पयस्विनीम् ।
सुव्रतां वस्त्रसंवीतामिन्द्रलोके महीयते ॥ १३-११४-११ (८५९४४)
समानवत्सां कृष्णां तु धेनु दत्त्वा पयस्विनीम् ।
सुव्रतां वस्त्रसंवीतामग्निलोके महीयते ॥ १३-११४-१२ (८५९४५)
समानवत्सां धूम्रां तु धेनुं दत्त्वा पयस्विनीम् ।
सुव्रतां वस्त्रसंवीतां याम्यलोके महीयते ॥ १३-११४-१३ (८५९४६)
अपां फेनसवर्णां तु सवत्सां कांस्यदोहनाम् ।
प्रदाय वस्त्रसंवीतां वारुणं लोकमाप्नुते ॥ १३-११४-१४ (८५९४७)
वातरेणुसवर्णां तु सवत्सां कांस्यदोहनाम् ।
प्रदाय वस्त्रसंवीतां वायुलोके महीयते ॥ १३-११४-१५ (८५९४८)
हिरण्यवर्णां पिङ्गाक्षीं सवत्सां कांस्यदोहनाम् ।
प्रदाय वस्त्रसंवीतां कौबेरं लोकमश्नुते ॥ १३-११४-१६ (८५९४९)
पलालधूम्रवर्णां तु सवत्सां कांस्यदोहनाम् ।
प्रदाय वस्त्रसंवीतां पितृलोके महीयते ॥ १३-११४-१७ (८५९५०)
सवत्सां पीवरीं दत्त्वा दृतिकण्ठामलङ्कृताम् ।
वैश्वदेवमसम्बाधं स्थानं श्रेष्ठं प्रपद्यते ॥ १३-११४-१८ (८५९५१)
समानवत्सां गौरीं तु धेनुं दत्त्वा पयस्विनीम् ।
सुव्रतां वस्त्रसंवीतां वसूनां लोकमाप्नुयात् ॥ १३-११४-१९ (८५९५२)
पाण्डुकम्बलवर्णाभां सवत्सां कांस्यकदोहनाम् ।
प्रदाय वस्त्रसंवीतां साध्यानां लोकमाप्नुते ॥ १३-११४-२० (८५९५३)
वैराटपृष्ठमुक्षाणं सर्वरत्नैरलङ्कृतम् ।
प्रददन्मरुतां लोकान्स राजन्प्रतिपद्यते ॥ १३-११४-२१ (८५९५४)

वत्सोपपन्नां नीलां गां सर्वरत्नसमन्विताम् ।
गन्धर्वाप्सरसां लोकान्दत्त्वा प्राप्नोति मानवः ॥ १३-११४-२२ (८५९५५)
दृतिकण्ठमनड्वाहं सर्वरत्नैरलङ्कृतम् ।
दत्त्वा प्रजापतेर्लोकान्विशोकः प्रतिपद्यते ॥ १३-११४-२३ (८५९५६)
गोप्रदानरतो याति भित्त्वा जलदसञ्चयान् ।
विमानेनार्कवर्णेन दिवि राजन्विराजता ॥ १३-११४-२४ (८५९५७)
तं चोरुवेषाः सुश्रोण्यः सहस्रं वारयोपितः ।
रमयन्ति नरश्रेष्ठं गोप्रदानरतं नरम् ॥ १३-११४-२५ (८५९५८)
वीणानां वल्लकीनां च नू पुराणां च शिञ्जितैः ।
हासैश्च हरिणाक्षीणां सुप्तः सुप्रतिबोध्यते ॥ १३-११४-२६ (८५९५९)
यावन्ति रोमाणि भवन्ति धेन्वा-
स्तावन्ति वर्षाणि महीयते सः ।
स्वर्गच्युतश्चापि ततो नृलोके
कुले प्रसूतो विपुले विशोकः ॥ ॥ १३-११४-२७ (८५९६०)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
चतुर्दशाधिकशततमोऽध्यायः ॥ ११२ ॥
Mahabharata - Anushaasana Parva - Chapter Footnotes

७-११४-१ गच्छामः शृङ्गितामितीति क ध पाठः ॥
७-११४-१८ प्रलम्बगलकम्बलाम् । शितिकण्ठामलङ्कृतामिति
क थ ध पाठः ॥
७-११४-२१ वैराटं वृद्धं पृष्टं यस्य । वैतानस्थितमुक्षाणमिति
क ध पाठः ॥

---

अनुससनपर्व-अध्यय११५
॥ श्रीः ॥
१३.११५. अध्यायः ११५

अथ दानधर्मपर्व ॥ १ ॥
Mahabharata - Anushaasana Parva - Chapter Topics
भीष्मेणि युधिष्ठिरम्प्रति गोदानफलप्रशंसनपूर्वकं
वसिष्ठवचनाद्गोमहिमावगमेन तद्दातुः सौदासस्य
पुण्यलोकप्राप्तिकथनम् ॥ १ ॥

Mahabharata - Anushaasana Parva - Chapter Text

वसिष्ठ उवाच ।
घृतक्षीरप्रदा गावो घृतयोन्यो घृतोद्भवाः ।
घृतनद्यो घृतावर्तास्ता मे सन्तु सदा गृहे ॥ १३-११५-१ (८५९६१)
घृतं मे हृदये नित्यं घृतं नाभ्यां प्रतिष्ठितम् ।
घृतं सर्वेषु गात्रेषु घृतं मे मनसि स्थितम् ॥ १३-११५-२ (८५९६२)
गावो ममाग्रतो नित्यं गावः पृष्ठत एव च ।
गावो मे सर्वतश्चैव गवां मध्ये वसाम्यहम् ॥ १३-११५-३ (८५९६३)
इत्याचम्य जपेत्सायं प्रातश्च पुरुषः सदा ।
यदह्ना कुरुते पापं तस्मात्स परिमुच्यते ॥ १३-११५-४ (८५९६४)
प्रासादा यत्र सौवर्णा वसोर्धाराश्च कामदाः ।
गन्धर्वाप्सरसो यत्र तत्र यान्ति सहस्रदाः ॥ १३-११५-५ (८५९६५)
नवनीतपङ्काः क्षीरोदा दधिशैवलसङ्कुलाः ।
वहन्ति यत्र वै नद्यस्तत्र यान्ति सहस्रदाः ॥ १३-११५-६ (८५९६६)
गवां शतसहस्रं तु यः प्रच्छेद्यथाविधि ।
परां वृद्धिमवाप्याथ स्वर्गलोके महीयते ॥ १३-११५-७ (८५९६७)
दश चोभयतः प्रेत्य मातापित्रोः पितामहान् ।
दधाति सुकृताँल्लोकान्पुनाति च कुलं नरः ॥ १३-११५-८ (८५९६८)
धेन्वाः प्रमाणेन समप्रमाणां
धेनुं तिलानामपि च प्रदाय ।
पानीयवापीः स यमस्य लोके
न यातनां काञ्चिदुपैति तत्र ॥ १३-११५-९ (८५९६९)
पवित्रमग्र्यं जगतः प्रतिष्ठा
दिवौकसां मातरोऽथाप्रमेयाः ।
अन्वालभेद्दक्षिणतो व्रजेच्च
दद्याच्च पात्रे प्रसमीक्ष्य कालम् ॥ १३-११५-१० (८५९७०)
धेनुं सवत्सां कपिलां भूरिशृङ्गीं
कांस्योपदोहां वसनोत्तरीयाम् ।
प्रदाय तां गाहति दुर्विगाह्यां
याम्यां सभां वीतभयो मनुष्यः ॥ १३-११५-११ (८५९७१)
सुरूपा बहुरूपाश्च विश्वरूपाश्च मातरः ।
गावो मामुपतिष्ठन्तामिति नित्यं प्रकीर्तयेत् ॥ १३-११५-१२ (८५९७२)
नातः पुण्यतरं दानं नातः पुण्यतरं फलम् ।
नातो विशिष्टं लोकेषु भूतं भवितुमर्हति ॥ १३-११५-१३ (८५९७३)
त्वचा लोम्नाऽथ शृङ्गैर्वा वालैः क्षीरेण मेदसा ।
यज्ञं वहति सम्भूय किमस्त्यभ्यधिकं ततः ॥ १३-११५-१४ (८५९७४)

यया सर्वमिदं व्याप्तं जगत्स्थावरजङ्गमम् ।
तां धेनुं शिरसा वन्दे भूतभव्यस्य मातरम् ॥ १३-११५-१५ (८५९७५)
गुणवचनसमुच्चयैकदेशो
नृवर मयैष गवां प्रकीर्तितस्ते ।
न च परमिह दानमस्ति गोभ्यो
भवति न चापि परायणं ततोऽन्यम् ॥ १३-११५-१६ (८५९७६)
भीष्म उवाच। १३-११५-१७क्ष् (७१२४)
वरमिदमिति भूमिपो विचिन्त्य
प्रवरमृषेर्वचनं ततो महात्मा ।
व्यसृजत नियतात्मवान्द्विजेभ्यः
सुबहु च गोधनमाप्तवांश्च लोकान् ॥ ॥ १३-११५-१७ (८५९७७)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
पञ्चदशाधिकशततमोऽध्यायः ॥ ११५ ॥

---

अनुससनपर्व-अध्यय११६
॥ श्रीः ॥
१३.११६. अध्यायः ११६

अथ दानधर्मपर्व ॥ १ ॥
Mahabharata - Anushaasana Parva - Chapter Topics
भीष्मेण युधिष्ठिरम्प्रति गवां तपःप्रसन्नाद्ब्रह्मणः
शृङ्गप्राप्त्यादिकथनम् ॥ १ ॥
तथा गोदानप्राप्यपुण्यलोकवर्णनम् ॥ २ ॥

Mahabharata - Anushaasana Parva - Chapter Text

युधिष्ठिर उवाच ।
पवित्राणां पवित्रं यच्छ्रेष्ठं लोके च यद्भवेत् ।
पावनं परमं चैव तन्मे ब्रूहि पितामह ॥ १३-११६-१ (८५९७८)
भीष्म उवाच। १३-११६-२क्ष् (७१२५)
गावो महार्थाः पुण्याश्च तारयन्ति च मानवान् ।
धारयन्ति प्रजाश्चेमा हविषा पयसा तथा ॥ १३-११६-२ (८५९७९)
न हि पुण्यतमं किञ्चिद्गोभ्यो भरतसत्तम ।
एताः पुण्याः पवित्राश्च त्रिषु लोकेषु सत्तमाः ॥ १३-११६-३ (८५९८०)
देवानामुपरिष्टाच्च गावः प्रतिवसन्ति वै ।

दत्त्वा चैतास्तारयते यान्ति स्वर्गं मनीषिणः ॥१३-११६-४ (८५९८१)
मान्धाता यौवनाश्वश्च ययातिर्नहुषस्तथा ।
गा वै ददन्तः सततं सहस्रशतसम्मिताः ॥१३-११६-५ (८५९८२)
गताः परमकं स्थानं देवैरपि सुदुर्लभम् ।
अपि चात्र पुरावृत्तं कथयिष्यामि तेऽनघ ॥१३-११६-६ (८५९८३)
ऋषीणामुत्तमं धीमान्कृष्णद्वैपायनं शुकः ।
अभिवाद्याह्निकं कृत्वा शुचिः प्रयतमानसः ॥१३-११६-७ (८५९८४)
पितरं परिपप्रच्छ दृष्टलोकपरावरम् ।
को यज्ञः सर्वयज्ञानां वरिष्ठोऽभ्युपलक्ष्यते ॥१३-११६-८ (८५९८५)
किञ्च कृत्वा परं स्थानं प्राप्नुवन्ति मनीषिणः ।
केन देवाः पवित्रेण स्वर्गमश्नन्ति वा विभो ॥१३-११६-९ (८५९८६)
किञ्च यज्ञस्य यज्ञत्वं क्व च यज्ञः प्रतिष्ठितः ।
दानानामुत्तमं किञ्च किञ्च सत्रमितः परम् ।
पवित्राणां पवित्रं च यत्तद्ब्रूहि महामुने ॥ १३-११६-१० (८५९८७)
एतच्छ्रुत्वा तु वचनं व्यासः परमधर्मवित् ।
पुत्रायाकथयत्सर्वं तत्त्वेन भरतर्षभ ॥१३-११६-११ (८५९८८)
गावः प्रतिष्ठा भूतानां तथा गावः परायणम् ।
गावः पुण्याः पवित्राश्च गोधनं पावनं तथा ॥१३-११६-१२ (८५९८९)
पूर्वमासन्नशृङ्गा वै गाव इत्यनुशश्रुम ।
शृङ्गार्थे समुपासन्त ताः किल प्रभुमव्ययम् ॥१३-११६-१३ (८५९९०)
ततो ब्रह्मा तु गाः सत्रमुपविष्टाः समीक्ष्य ह ।
ईप्सितं प्रददौ ताभ्यो गोभ्यः प्रत्येकशः प्रभुः ॥१३-११६-१४ (८५९९१)
तासां शृङ्गाण्यजायन्त तस्या यादृङ्भनोगतम् ।
नानावर्णाः शृङ्गवन्त्यस्ता व्यरोचन्त पुत्रक ॥१३-११६-१५ (८५९९२)
ब्रह्मणा वरदत्तास्ता हव्यकव्यप्रदाः शुभाः ।
पुण्याः पवित्राः सुभगा दिव्यसंस्थानलक्षणाः ॥१३-११६-१६ (८५९९३)
गावस्तेजो महद्दिव्यं गवां दानं प्रशस्यते ।
ये चैताः सम्प्रयच्छन्ति साधवो वीतमत्सराः ॥१३-११६-१७ (८५९९४)
ते वै सुकृतिनः प्रोक्ताः सर्वदानप्रदाश्च ते ।
गवां लोकं तथा पुण्यमाप्नुवन्ति च तेऽनघ ॥१३-११६-१८ (८५९९५)
यत्र वृक्षा मधुफला दिव्यपुष्पफलोपगाः ।
पुष्पाणि च सुगन्धीनि दिव्यानि द्विजसत्तम ॥१३-११६-१९ (८५९९६)
सर्वा मणिमयी भूमिः सर्वकाञ्चनवालुकाः ।
सर्वर्तुसुखसंस्पर्शा निष्पङ्का निरजाः शुभाः ॥१३-११६-२० (८५९९७)
रक्तोत्पलवनैश्चैव मणिखण्डैर्हिरण्मयैः ।
तरुणादित्यसङ्काशैर्भान्ति तत्र जलाशयाः ॥१३-११६-२१ (८५९९८)

महार्हमणिपत्रैश्च काञ्चनप्रभकेसरैः ।
नीलोत्पलविमिश्रैश्च सरोभिर्बहुपङ्कजैः ॥ १३-११६-२२ (८५९९९)
करवीरवनैः फुल्लैः सहस्रावर्तसंवृतैः ।
सन्तानकवनैः फुल्लैर्वृक्षैश्च समलङ्कृताः ॥ १३-११६-२३ (८६०००)
निर्मिलाभिश्च मुक्ताभिर्मणिभिश्च महाप्रभैः ।
उद्भूतपुलिनास्तत्र जातरूपैश्चि निम्नगाः ॥ १३-११६-२४ (८६००१)
सर्वरत्नमयैश्चित्रैरवगाढा द्रुमोत्तमैः ।
जातरूपमयैश्चान्यैर्हुताशनसमप्रभैः ॥ १३-११६-२५ (८६००२)
सौवर्णि गिरयस्तत्र मणिरत्नशिलोच्चयाः ।
सर्वरत्नमयैर्भान्ति शृङ्गैश्चारुभिरुच्छ्रितैः ॥ १३-११६-२६ (८६००३)
नित्यपुष्पफलास्तत्र नगाः पत्ररथाकुलाः ।
दिव्यगन्धरसैः पुष्पैः फलैश्च भरतर्षभ ॥ १३-११६-२७ (८६००४)
रमन्ते पुण्यकर्माणस्तत्र नित्यं युधिष्ठिर ।
सर्वकामसमृद्धार्था निःशोका गतमन्यवः ॥ १३-११६-२८ (८६००५)
विमानेषु विचित्रेषु रमणीयेषु भारत ।
मोदन्ते पुण्यकर्माणो विरहन्तो यशस्विनः ॥ १३-११६-२९ (८६००६)
उपक्रीडन्ति तान्राजञ्शुभाश्चाप्सरसां गणाः ।
एतान्लोकानवाप्नोति गां दत्त्वा वै युधिष्ठिर ॥ १३-११६-३० (८६००७)
यासामधिपतिः पूषा मारुतो बलवान्बले ।
ऐश्वर्ये वरुणो राजा ता मां पान्तु युगन्धराः ॥ १३-११६-३१ (८६००८)
सुरूपा बहुरूपाश्च विश्वरूपाश्च मातरः ।
प्राजापत्या इति ब्रह्मञ्जपेन्नित्यं यतव्रतः ॥ १३-११६-३२ (८६००९)
गाश्च शुश्रूषते यश्च समन्वेति च सर्वशः ।
तस्मै तुष्टाः प्रयच्छन्ति वरानपि सुदुर्लभान् ॥ १३-११६-३३ (८६०१०)
द्रुह्येन मनसा वाऽपि गोषु ता हि सुखप्रदाः ।
अर्चयेत सदा चैव नमस्कारैश्च पूजयेत् ॥ १३-११६-३४ (८६०११)
दान्तः प्रीतमना नित्यं गवां व्युष्टिं तथाऽश्नुते ।
त्र्यहमुष्णं पिबेन्मूत्रं त्र्यहमुष्णं पिबेत्पयः ॥ १३-११६-३५ (८६०१२)
गवामुष्णं पयः पीत्वा त्र्यहमुष्णं घृतं विबेत् ।
त्र्यहमुष्णं घृतं पीत्वा वायुभक्षो भवेत्र्यहम् ॥ १३-११६-३६ (८६०१३)
योन देवाः पवित्रेणि भुञ्जते लोकमुत्तमम् ।
यत्पवित्रं पवित्राणां तद्धृतं शिरसा वहेत् ॥ १३-११६-३७ (८६०१४)
घृतेन जुहुयादग्निं घृतेन स्वस्ति वाचयेत् ।
घृतं प्राशेद्धृतं दद्याद्गवां पुष्टिं तथाऽश्नुते ॥ १३-११६-३८
(८६०१५)
निर्हृतैश्च यवैर्गोभिर्मासं प्रश्रितयावकः ।

ब्रह्महत्यासमं पापं सर्वमेतेन शुध्यते ॥ १३-११६-३९ (८६०१६)
पराभवार्थं दैत्यानां देवैः शौचमिदं कृतम् ॥
ते देवत्वमपि प्राप्ताः संसिद्धाश्च महाबलाः ॥ १३-११६-४० (८६०१७)
गावः पवित्राः पुण्याश्च पावनं परमं महत् ।
ताश्च दत्त्वा द्विजातिभ्यो नरः स्वर्गमुपाश्नुते ॥ १३-११६-४१ (८६०१८)
गवां मध्ये शुचिर्भूत्वा गोमतीं मनसा जपेत् ।
पूताभिरद्भिराचम्यि शुचिर्भवति निर्मलः ॥ १३-११६-४२ (८६०१९)
अग्निमध्ये गवां मध्ये ब्राह्मणानां च संसदि ।
विद्यावेदप्रतस्नाता ब्राह्मणाः पुण्यकर्मिणः ॥ १३-११६-४३ (८६०२०)
अध्यापयेरञ्शिष्यान्वै गोमतीं यज्ञसम्मिताम् ।
त्रिरात्रोपोषितो भूत्वा गोमतीं लभते वरम् ॥ १३-११६-४४ (८६०२१)
पुत्रिकामश्च लभते पुत्रं धनमथापि वा ॥
पतिकामा च भर्तारं सर्वकामांश्च मानवः ॥ १३-११६-४५ (८६०२२)
गावस्तुष्टाः प्रयच्छन्ति सेविता वै न संशयः ।
एवमेतां महाभागा यज्ञियाः सर्वकामदाः ।
रोहिण्य इति जानीहि नैताभ्यो विद्यते परम् ॥ १३-११६-४६ (८६०२३)
इत्युक्तः स महातेजाः शुकः पित्रा महात्मना ।
पूजयामास तां नित्यं तस्मात्त्वमपि पूजय ॥ ॥ १३-११६-४७ (८६०२४)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
षोडशाधिकशततमोऽध्यायः ॥ ११६ ॥
Mahabharata - Anushaasana Parva - Chapter Footnotes

७-११६-१३ अशृङ्गा इत्यखुरा इत्यस्याप्युपलक्षणम् ॥
७-११६-१४ गाः प्रायमुपविष्टा इति झ पाठः ॥
७-११६-२७ गनाः वृक्षाः । पत्ररथाः पक्षिणः ॥
७-११६-३९ निर्हृतैः गोमयनिर्गतैः ॥
७-११६-४४ गोमतीं गोमत्या ऋचा प्रकाशितमर्थं वरं लभते ॥

---

अनुससनपर्व-अध्यय११७
॥ श्रीः ॥
१३.११७. अध्यायः ११७

अथ दानधर्मपर्व ॥ १ ॥
Mahabharata - Anushaasana Parva - Chapter Topics
भीष्मेण युधिष्ठिरम्प्रति गोलोकस्य ब्रह्मलोकादप्युपरितनत्वे ब्रह्मणो

वरदानस्य कारणत्वकथनम् ॥ १ ॥

Mahabharata - Anushaasana Parva - Chapter Text

ग्क्युधिष्ठिर उवाच ।
सुराणामसुराणां च भूतानां च पितामह ।
प्रभुः स्रष्टा च भगवान्मुनिभिः स्तूयते भुवि ॥ १३-११७-१ (८६०२५)
तस्योपरि कथं ह्येष गोलोकः स्थानतां गतः ।
संशयो मे महानेष तन्मे व्याख्यातुमर्हसि ॥ १३-११७-२ (८६०२६)
भीष्म उवाच। १३-११७-३क्ष् (७१२६)
मनोवाग्बुद्धयस्तावदेकस्थाः कुरुसत्तम ।
ततो मे शृणु कार्त्स्न्येन गोमहाभाग्यमुत्तमम् ॥ १३-११७-३ (८६०२७)
पुण्यं यशस्यमायुष्यं तथा स्वस्त्ययनं महत् ।
कीर्तिर्विहरता लोके गवां यो गोषु भक्तिमान् ॥ १३-११७-४ (८६०२८)
श्रूयते हि पुराणेषु महर्षीणां महात्मनाम् ।
संस्थाने सर्वलोकानां देवानां चापि सम्भवे ॥ १३-११७-५ (८६०२९)
देवतार्थेऽमृतार्थे च यज्ञार्थे चैव भारत ।
सुरभिर्नाम विख्याता रोहिणी कामरूपिणी ॥ १३-११७-६ (८६०३०)
सङ्कल्प्य मनसा पूर्वं रोहिणी ह्यमृतात्मना ।
घोरं तपः समास्थाय निर्मिती विस्वकर्मणा ॥ १३-११७-७ (८६०३१)
पुरुषं चासृजञ्छस्तेजसा तपसा च ह ।
देदीप्यमानं वपुषा समिद्धमिव पावकम् ॥ १३-११७-८ (८६०३२)
सोऽपश्यदिष्टरूपां तां सुरभिं रोहिणीं तदा ।
दृष्ट्वैव चातिविमनाः सोऽभवत्काममोहितः ॥ १३-११७-९ (८६०३३)
तं कामार्तमथो ज्ञात्वा स्वयंभूर्लोकभावनः ।
माऽऽर्तो भव तथा चैष भगवानभ्यभाषत ॥ १३-११७-१० (८६०३४)
ततः स भगवांस्तत्र मार्ताण्ड इति विश्रुतः ।
चकार नाम तं दृष्ट्वा तस्यार्तीभावमुत्तमम् ॥ १३-११७-११ (८६०३५)
सोऽददाद्भगवांस्तस्मै मार्ताण्डाय महात्मने ।
सुरूपां सुरभिं कन्यां तपस्तेजोमयीं शुभाम् ॥ १३-११७-१२ (८६०३६)
यथा मयैष चोद्भूतस्त्वं चैवषा च रोहिणी ।
मैथुनं गतवन्तौ च तथा चोत्पत्स्यति प्रजा ॥ १३-११७-१३ (८६०३७)
प्रजा भविष्यते पुण्या पवित्रं परमं च वाम् ।
न चाप्यगम्यागमनाद्दोषं प्राप्स्यसि कर्हिचित् ॥ १३-११७-१४ (८६०३८)
त्वत्प्रजासम्भवं क्षीरं भविष्यति परं हविः ।
यज्ञेषु चाज्यभागानां त्वत्प्रजामूलजो विधिः ॥ १३-११७-१५ (८६०३९)

प्रजाशुश्रूषवश्चैव ये भविष्यन्ति रोहिणि ।
तव तेनैव पुण्येनि गोलोकं यान्तु मानवाः ॥ १३-११७-१६ (८६०४०)
इदं पवित्रं परममृषभं नाम कर्हिचित् ।
यद्वै ज्ञात्वा द्विजा लोके मोक्ष्यन्ते योनिसङ्करात् ॥ १३-११७-१७ (८६०४१)
एतत्क्रियाः प्रवर्तन्ते मन्त्रब्राह्मणसंस्कृताः ।
देवतानां वितॄणां च हव्यकव्यपुरोगमाः ॥ १३-११७-१८ (८६०४२)
तत एतेन पुण्येन प्रजास्तव तु रोहिणि ।
ऊर्ध्वं ममापि लोकस्य वत्स्यन्ते निरुपद्रवाः ॥ १३-११७-१९ (८६०४३)
भद्रं तेभ्यश्च भद्रं ते ये प्रजासु भवन्ति वै ।
युगन्धराश्च ते पुत्राः सन्तु लोकस्य धारणे ॥ १३-११७-२० (८६०४४)
यान्यान्कामयसे लोकांस्ताँल्लोकाननुयास्यसि ।
सर्वदेवगणश्चैव तव यास्यन्ति पुत्रताम् ।
तव स्तनसमुद्भूतं पिबन्तोऽमृतमुत्तमम् ॥ १३-११७-२१ (८६०४५)
एवमेतान्वरान्सर्वानगृह्णात्सुरभिस्तदा ।
ब्रुवतः सर्वलोकेशान्निर्वृतिं चागमत्पराम् ॥ १३-११७-२२ (८६०४६)
सृष्ट्वा प्रजाश्च विपुला लोकसन्धारणाय वै ।
ब्रह्मणा समनुज्ञाता सुरभिर्लोकमाविशत् ॥ १३-११७-२३ (८६०४७)
एवं वरप्रदानेन स्वयंभोरेव भारत ।
उपरिष्टाद्गवां लोकः प्रोक्तस्ते सर्वमादितः ॥' ॥ १३-११७-२४ (८६०४८)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
सप्तदशाधिकशततमोऽध्यायः ॥ ११७ ॥
Mahabharata - Anushaasana Parva - Chapter Footnotes

क एतदाद्येकादशाध्याया दाक्षिणात्यकोशेष्वेव दृश्यन्ते। ७-११७-३
मनोवाग्बुद्धयः मनोवाग्बुद्धीरेकस्थाः कुरु। ।
७-११७-१० आर्तो मा भवेत्यभ्यभाषत ॥

---

अनुससनपर्व-अध्यय११८
॥ श्रीः ॥
१३.११८. अध्यायः ११८

अथ दानधर्मपर्व ॥ १ ॥
Mahabharata - Anushaasana Parva - Chapter Topics
भीष्मेण युधिष्ठिरम्प्रति विस्तरेण गवोत्पत्तिप्रकारकथनम् ॥ १ ॥

ग्युधिष्ठिर उवाच ।
सुरभेः काः प्रजाः पूर्वं मार्ताण्डादभवन्पुरा ।
एतन्मे शंस तत्वेनि गोषु मे प्रीयते मनः ॥ १३-११८-१ (८६०४९)
भीष्म उवाच। १३-११८-२क्ष् (७१२७)
शृणु नामानि दिव्यानि गोमातॄणां विशेषतः ।
याभिर्व्याप्तास्त्रयो लोकाः कल्याणीभिर्जनाधिप ॥ १३-११८-२ (८६०५०)
सुरभ्यः प्रथमोद्भूता याश्च स्युः प्रथमाः प्रजाः ।
मयोच्यमानाः शृणु ताः प्राप्स्यसे विपुलं यशः ॥ १३-११८-३ (८६०५१)
तप्त्वा तपो घोरतपाः सुरभिर्दिप्ततेजसः ।
सुषावैकादश सुतान्रुद्रा ये च्छन्दसि स्तुताः ॥ १३-११८-४ (८६०५२)
अजैकपादहिर्बुध्न्यस्त्र्यम्बकश्च महायशाः ।
वृषाकपिश्च शम्भुश्च कपाली रैवतस्तथा ॥ १३-११८-५ (८६०५३)
हरश्च बहुरूपश्च उग्र उग्रोऽथ वीर्यवान् ।
तस्य चैवात्मजः श्रीमान्विश्वरूपो महायशाः ॥ १३-११८-६ (८६०५४)
एकादशैते कथिता रुद्रास्ते नाम नामतः ।
महात्मानो महायोगास्तेजोयुक्ता महाबलाः ॥ १३-११८-७ (८६०५५)
एते वरिष्ठजन्मानो देवानां ब्रह्मवादिनाम् ।
विप्राणां प्रकृतिर्लोके एत एव हि विश्रुताः ॥ १३-११८-८ (८६०५६)
एत एकादश प्रोक्ता रुद्रास्त्रिभुवनेश्वराः ।
शतं त्वेतत्समाख्यातं शतरुद्रं महात्मनाम् ॥ १३-११८-९ (८६०५७)
सुषुवे प्रथमां कन्यां सुरभिः पृथिवीं तदा ।
विश्वकामदुघा धेनुर्या धारयति देहिनः ॥ १३-११८-१० (८६०५८)
सुतं गोब्राह्मणं राजन्नेकमित्यभिधीयते ।
गोब्राह्मणस्य जननी सुरभिः परिकीर्त्यते ॥ १३-११८-११ (८६०५९)
सृष्टवा तु प्रथमं रुद्रान्वरदान्रुद्रसम्भवान् ।
पश्चात्प्रभुं ग्रहपतिं सुषुवे लोकसम्मतम् ॥ १३-११८-१२ (८६०६०)
सोमराजानममृतं यज्ञसर्वस्वमुत्तमम् ।
ओषधीनां रसानां च देवानां जीवितस्य च ॥ १३-११८-१३ (८६०६१)
ततः श्रियं च मेधां च कीर्तिं देवीं सरस्वतीम् ।
चतस्रः सुषुवे कन्या योगेषु नियताः स्तिताः ॥ १३-११८-१४ (८६०६२)
एताः सृष्टवा प्रजा एषा सुरभिः कामरूपिणी ।
सुषुवे परमं भूयो दिव्या गोमातरः शुभाः ॥ १३-११८-१५ (८६०६३)
पुण्यां मायां मधुश्च्योतां शिवां शीघ्रां सरिद्वराम् ।
हिरण्यवर्णां सुभगां गव्यां पृश्नीं कुथावतीम् ॥ १३-११८-१६ (८६०६४)

अङ्गावतीं घृतवतीं दधिक्षीरपयोवतीम् ।
अमोघां सुरमां सत्यां रेवतीं मारुतीं रसाम् ॥ १३-११८-१७ (८६०६५)
अजां च सिकतां चैव शुद्धधूमामधारिणीम् ।
जीवां प्राणवतीं धन्यां शुद्धां धेनुं धनावहाम् ॥ १३-११८-१८ (८६०६६)
इन्द्रामृद्धिं च शान्तिं च शान्तपापां सरिद्वराम् ।
चत्वारिंशतिमेकां च धन्यास्ता दिवि पूजिताः ॥ १३-११८-१९ (८६०६७)
भूयो जज्ञे सुरभ्याश्च श्रीमांश्चन्द्रांशुसप्रभः ।
वृषो दक्ष इति ख्यातः कण्ढे मणितलप्रभः। १३-११८-२० (८६०६८)
स्रग्वी ककुद्मान्द्युतिमान्मृणालसदृशप्रभः ।
सुरभ्यनुमते दत्तो ध्वजो माहेशावरस्तु सः ॥ १३-११८-२१ (८६०६९)
सुरभ्यः कामरूपिण्यो गावः पुण्यार्थमुत्कटाः ।
आदित्येभ्यो वसुभ्यश्च विश्वेभ्यश्च ददौ वरान् ॥ १३-११८-२२ (८६०७०)
सुरभिस्तु तपस्तप्त्वा सुषुवे गास्ततः पुनः ।
या दत्ता लोकपालानामिन्द्रादीनां युधिष्ठिर ॥ १३-११८-२३ (८६०७१)
सुष्टुनां कपिलां चैव रोहिणीं च यशस्विनीम् ।
सर्वकामदुघां चैव मरुतां कामरूपिणीम् ॥ १३-११८-२४ (८६०७२)
गावो मृष्टदुघा ह्येतास्ताश्चतस्रोऽत्र संस्तुताः ।
यासां भूत्वा पुरा वत्साः पिबन्त्यमृतमुत्तमम् ॥ १३-११८-२५ (८६०७३)
सुष्टुतां देवराजाय वासवाय महात्मने ।
कपिलां धर्मराजाय वरुणाय च रोहिणीम् ॥ १३-११८-२६ (८६०७४)
सर्वकामदुघां धेनुं राज्ञे वैश्रवणाय च ।
इत्येता लोकमहिता विश्रुताः सुरभेः प्रजाः ॥ १३-११८-२७ (८६०७५)
एतासां प्रजया पूर्णा पृथिवी मुनिपुङ्गवः ।
गोभ्यः प्रभवते सर्वं यत्किंचिदिह शोभनम् ॥ १३-११८-२८ (८६०७६)
सुरभ्यपत्यमित्येतन्नामतस्तेऽनुपूर्वशः ।
कीर्तितं ब्रूहि राजेन्द्र किं भूयः कथयामि ते'॥ ॥ १३-११८-२९ (८६०७७)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
अष्टादशाधिकशततमोऽध्यायः ॥ ११८ ॥

---

अनुससनपर्व-अध्यय११९
॥ श्रीः ॥
१३.११९. अध्यायः ११९

अथ दानधर्मपर्व ॥ १ ॥

भीष्मेण युधिष्ठिरम्प्रति इन्द्रस्य वत्सभावेन सुरभ्याः
क्षीरपानादमरत्वादिलाभकथनम् ॥ १ ॥
तथा इन्द्रदिदेवानां वासार्थं सुरभेरनुमत्या
तदीयमुखाद्यवयवसमाश्रयणकथनम् ॥ २ ॥

Mahabharata - Anushaasana Parva - Chapter Text

ग्युधिष्ठिर उवाच ।
सुरभ्यास्तु तदा देव्याः कीर्तिर्लक्ष्मीः सरस्वती ।
मेधा च प्रवरा देवी याश्चतस्रोऽभिविश्रुताः ॥ १३-११९-१ (८६०७८)
पृथग्गोभ्यः किमेताः स्युरुताहो गोषु संश्रिताः ।
देवाः के वाऽऽश्रिता गोषु तन्मे ब्रूहि पितामह ॥ १३-११९-२ (८६०७९)
भीष्म उवाच। १३-११९-३क्ष् (७१२८)
यं देवं संश्रिता गावस्तं देवं देवसंज्ञितम् ।
यद्यद्देवाश्रितं दैवं तत्तद्दैवं द्विजा विदुः ॥ १३-११९-३ (८६०८०)
सर्वेषामेव देवानां पूर्वं किल समुद्भवे ।
अमृतार्थे सुरपतिः सुरभिं समुपस्थितः ॥ १३-११९-४ (८६०८१)
इन्द्र उवाच। १३-११९-५क्ष् (७१२९)
इच्छेयममृतं दत्तं त्वया देवि रसाधिकम् ।
त्वत्प्रसादाच्छिवं मह्यममरत्वं भवेदिति ॥ १३-११९-५ (८६०८२)
सुरभिरुवाच। १३-११९-६क्ष् (७१३०)
वत्सो भूत्वा सुपरते पिबस्व प्रस्रवं मम ।
ततोऽमरत्वमपि तस्थानमैन्द्रमवाप्स्यसि ॥ १३-११९-६ (८६०८३)
न च ते वृत्रहन्युद्धे व्यथाऽरिभ्यो भविष्यति ।
बलार्थमात्मनः शक्र प्रस्रवं पिब मे विभो ॥ १३-११९-७ (८६०८४)
भीष्म उवाच। १३-११९-८क्ष् (७१३१)
ततोऽपिबत्स्नं तस्याः सुरभ्याः सुरसत्तमः ।
अमरत्वं सुरूपत्वं बलं चापदनुत्तमम् ॥ १३-११९-८ (८६०८५)
पुरंदरोऽमृतं पीत्वा प्रहृष्टः समुपस्थितः ।
पुत्रोऽहं तव भद्रं ते ब्रूहि किं करवाणि ते ॥ १३-११९-९ (८६०८६)
सुरभिरुवाच। १३-११९-१०क्ष् (७१३२)
कृतं पुत्र त्वया सर्वमुपयाहि त्रिविष्टपम् ।
पालयस्व सुरान्सर्वाञ्जहि ये सुरशत्रवः ॥ १३-११९-१० (८६०८७)
न च गोब्राह्मणेऽवज्ञा कार्या ते शान्तिमिच्छता ।
गोब्राह्मणस्य निश्वासः शोषयेदपि देवताः ॥ १३-११९-११ (८६०८८)
गोब्राह्मणप्रियो नित्यं स्वस्तिशब्दमुदाहरन् ।

पृथिव्यामन्तरिक्षे च नाकपृष्ठे च विक्रमेत् ॥ १३-११९-१२ (८६०८९)
यच्च तेऽन्यद्भवेत्कृत्यं तन्मे ब्रूयाः समासतः ।
तत्ते सर्वं करिष्यामि सत्येनैतद्ब्रवीमि ते ॥ १३-११९-१३ (८६०९०)
इन्द्र उवाच। १३-११९-१४क्ष् (७१३३)
इच्छेयं गोषु नियतं वस्तुं देवि ब्रवीमि ते ।
एभिः सुरगणैः सार्धं ममानुग्रहमाचर ॥ १३-११९-१४ (८६०९१)
सुरभिरुवाच। १३-११९-१५क्ष् (७१३४)
गवां शरीरं प्रत्यक्षमेतत्कौशिक लक्ष्ये ।
यो यत्रोत्सहते वस्तुं स तत्र वसतां सुरः ॥ १३-११९-१५ (८६०९२)
सर्वं पवित्रं परमं गवां गात्रं सुपूजितम् ।
तथा कुरुष्व भद्रं ते यथा त्वं शक्र मन्यसे ॥ १३-११९-१६ (८६०९३)
भीष्म उवाच। १३-११९-१७क्ष् (७१३५)
तस्यास्तद्वचनं श्रुत्वा सुरभ्याः सुरसत्तमः ।
सह सर्वैः सुरगणैरभजत्सौरभीं प्रजाम् ॥ १३-११९-१७ (८६०९४)
शृङ्गे वक्त्रे च जिह्वायां देवराजः समाविशत् ।
सर्वच्छिद्रेषु पवनः पादेषु मरुतां गणाः ॥ १३-११९-१८ (८६०९५)
ककुदं सर्वगो रुद्रः कुक्षौ चैव हुताशनः ।
सरस्वती स्तनेष्वग्र्या श्रीः पुरीषे जगत्प्रिया ॥ १३-११९-१९ (८६०९६)
मूत्रे कीर्तिश्च गङ्गा च मेधा पयसि शाश्वती ।
वक्त्रे सोमश्च वै देवो हृदये भगवान्यमः ॥ १३-११९-२० (८६०९७)
धर्मः पुच्छे क्रिया लोम्नि भास्करश्चक्षुषी श्रितः ।
सिद्धाः सन्धिषु सिद्धिश्च तपस्तेजश्च चेष्टने ॥ १३-११९-२१ (८६०९८)
एवं सर्वे सुरगणा नियता गात्रवर्त्मसु ।
महती देवता गावो ब्राह्मणैः परिसंस्कृताः ॥ १३-११९-२२ (८६०९९)
गामाश्रयन्ति सहिता देवा हि प्रभविष्णवः ।
किमासां सर्वभावेन विदध्याद्भगवान्प्रियम् ॥ १३-११९-२३ (८६१००)
भवांश्च परया भक्त्या पूजयस्व नरेश्वर ।
गावस्तु परमं लोके पवित्रं पावनं हविः ॥ १३-११९-२४ (८६१०१)
निपात्य भक्षितः स्वर्गाद्भार्गवः फेनपः किल ।
स च प्राणान्पुनर्लब्ध्वा ततो गोलोकमाश्रितः ॥' ॥ १३-११९-२५ (८६१०२)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
एकोनविंशत्यधिकशततमोऽध्यायः ॥ ११९ ॥

---

अनुससनपर्व-अध्यय१२०
॥ श्रीः ॥

१३.१२०. अध्यायः १२०

अथ दानधर्मपर्व ॥ १ ॥

Mahabharata - Anushaasana Parva - Chapter Topics

भीष्मेण युधिष्ठिरम्प्रति पेनपोपाख्यानकथनारम्भः ॥ १ ॥
त्रिशिखरगिर्याश्रमवासिने सुमित्रनाम्ने विप्रवराय आङ्गिरसेनैकस्या गोर्दानम् ॥ २ ॥
तस्या वंशेऽसङ्ख्येयानां गवां सम्भवः ॥ ३ ॥
सुमित्रेण वत्समुखोद्गतक्षीरफेनपानात्फेनप इति नामाधिगमः ॥ ४ ॥

Mahabharata - Anushaasana Parva - Chapter Text

ग्युधिष्ठिर उवाच ।
कः फेनपेति नाम्नाऽसौ कथं वा भक्षितः पुरा ।
मृत उज्जीवितः कस्मात्कथं गोलोकमाश्रितः ॥ १३-१२०-१ (८६१०३)
विरुद्ध मानुषे लोके तथा समयवर्त्मसु ।
ऋते दैवं हि दुष्प्रपं मानुषेषु विशेषतः ।
संशयो मे महानत्र तन्मे व्याख्यातुमर्हसि ॥ भीष्म उवाच।
१३-१२०-२ (८६१०४)
श्रूयते भार्गवे वंशे सुमित्रो नाम भारत ।
वेदाध्ययनसम्पन्नो विपुले तपसि स्थितः ॥ १३-१२०-३ (८६१०५)
वानप्रस्थाश्रमे युक्तः स्वकर्मनिरतः सदा ।
विनयाचारतत्वज्ञः सर्वधर्मार्थकोविदः ॥ १३-१२०-४ (८६१०६)
यत्नात्त्रिषवणस्नायी संध्योपासनतत्परः ।
अग्निहोत्ररतः क्षान्तो जपञ्जुह्वच्च नित्यदाः ॥ १३-१२०-५ (८६१०७)
पितृदेवांश्च नियतमतिर्थींश्च स पूजयन् ।
प्राणसन्धारणार्थं च यत्किंचिदुपहारयन् ॥ १३-१२०-६ (८६१०८)
गिरिस्त्रिशिखरो नाम यतः प्रभवते नदी ।
कुलजेति पुराणेषु विश्रुता रुद्रनिर्मिता ॥ १३-१२०-७ (८६१०९)
तस्यास्तीरे समे देशे पुष्पमालासमाकुले ।
वन्यौषधिद्रुमोपेते नानापक्षिमृगायुते ॥ १३-१२०-८ (८६११०)
व्यपेतदंशमशके ध्वाङ्क्षगृध्रैरसेविते ।
कृष्णदर्भतृणप्राये सुरम्ये ज्योतिरश्मिनि ॥ १३-१२०-९ (८६१११)
सर्वोन्नतैः समैः श्यामैर्याज्ञीयैस्तरुभिर्वृते ।
तत्राश्रमपदं पुण्यं भृगूणामभवत्पुरा। १३-१२०-१० (८६११२)
उवास तत्र नियतः सुमित्रो नाम भार्गवः ।

यथोद्दिष्टेन पूर्वेषां भृगूणां साधुवर्त्मना ॥ १३-१२०-११ (८६११३)
तस्मा आङ्गिरसः कश्चिद्ददौ गां शर्करीं शुभाम् ।
वर्षासु पश्चिमे मासि पौर्णमास्यां शुचिव्रतः ॥ १३-१२०-१२ (८६११४)
स तां लब्ध्वा धर्मशीलश्चिन्तयामास तत्परः ।
सुमित्रः परया भक्त्या जननीमिव मातरम् ॥ १३-१२०-१३ (८६११५)
तेन सन्धुक्ष्यमाणा सा रोहिणी कामरूपिणी ।
प्रवृद्धिमगमच्छ्रेष्ठा प्राणतश्च सुदर्शना ॥ १३-१२०-१४ (८६११६)
सिराविमुक्तपार्श्वान्ता विपुलां कान्तिमुद्वहत् ।
श्यामपार्श्वान्तपृष्ठा सा सुरभिर्मधुपिङ्गला ॥ १३-१२०-१५ (८६११७)
बृहती सूक्ष्मरोमान्ता रूपोदग्रा तनुत्वचा ।
कृष्णपुच्छा श्वेतवक्त्रा समवृत्तपयोधरा ॥ १३-१२०-१६ (८६११८)
पृष्ठोन्नता पूर्वनता शङ्कुकर्णी सुलोचना ।
दीर्घजिह्वा ह्रस्वशृङ्गी सम्पूर्णदशनान्तरा ॥ १३-१२०-१७ (८६११९)
मांसाधिकगलान्ता सा प्रसन्ना शुभदर्शना ।
नित्यं शमयुता स्निग्धा सम्पूर्णोदात्तनिस्वना ॥ १३-१२०-१८ (८६१२०)
प्राजापत्यैर्गवां नित्यं प्रशस्तैर्लक्षणैर्युता ।
यौवनस्थेव वनिता शुशुभे रूपशोभया ॥ १३-१२०-१९ (८६१२१)
वृषेणोपगता सा तु कल्या मधुरदर्शना ।
मिथुनं जनयामास तुल्यरूपमिवात्मनः ॥ १३-१२०-२० (८६१२२)
संवर्धयामास स तां सवत्सां भार्गवो मुनिः ।
तयोः प्रजाधिसंसर्गात्सहस्रं च गवामभूत् ॥ १३-१२०-२१ (८६१२३)
गवां जातिसहस्राणि सम्भूतानि परस्परम् ।
ऋषभाणां च राजेन्द्र नैवान्तः प्रतिदृश्यते ॥ १३-१२०-२२ (८६१२४)
तैराश्रमपदं रम्यमरण्यं चैव सर्वशः ।
समाकुलं समभवन्मेघैरिव नभस्थलम् ॥ १३-१२०-२३ (८६१२५)
कानि चित्पद्मवर्णानि किंशुकाभानि कानिचित् ।
रुक्मवर्णानि चान्यानि चन्द्रांशुसदृशानि च ॥ १३-१२०-२४ (८६१२६)
तथा राजतवर्णानि कानिचिल्लोहितानि वै ।
नीललोहितताम्राणि कृष्णानि कपिलानि च ।
नानारागविचित्राणि यूथानि कुलयूथप ॥ १३-१२०-२५ (८६१२७)
न च क्षीरं सुतस्नेहाद्वत्सानामुपजीवति ।
भार्गवः केवलं चासीद्गवां प्राणायने रतः ॥ १३-१२०-२६ (८६१२८)
तथा शुश्रूषतस्तस्य गवां हितमवेक्षतः ।
व्यतीयात्सुमाहान्कालो वत्सोच्छिष्टेन वर्ततः ॥ १३-१२०-२७ (८६१२९)
क्षुत्पिपासापरिश्रान्तः सततं प्रस्रवं गवाम् ।
वत्सैरुच्छिष्टमुदितं बहुक्षीरतया बहु ॥ १३-१२०-२८ (८६१३०)

पीतवांस्तेन नामास्य फेनपेत्यभिविश्रुतम् ।
गौतमस्याभिनिष्पन्नमेवं नाम युधिष्ठिर ॥ ॥ १३-१२०-२९ (८६१३१)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
विंशत्यधिकशततमोऽध्यायः ॥ १२० ॥
Mahabharata - Anushaasana Parva - Chapter Footnotes

७-१२०-७ कूलहेति पुराणेष्विति ट ध पाठः ॥

---

अनुससनपर्व-अध्यय१२१
॥ श्रीः ॥
१३.१२१. अध्यायः १२१

अथ दानधर्मपर्व ॥ १ ॥
Mahabharata - Anushaasana Parva - Chapter Topics
फेनपस्य गोभिः कदाचन गोलोकादेत्य गिरिह्रदे स्त्रीरूपधारणेन
विहरमाणानां गवामवलोकनम् ॥ १ ॥
फेनपस्य गोभिः स्वेषां गोलोकप्राप्त्युपायं पृष्टाभिस्ताभिस्ताः प्रति
रन्तिदेवस्य सत्रे आत्मनां पशुत्वोपकल्पनस्य तदुपायत्वोक्तिः ॥ २ ॥
फेनपस्य स्वेष्वतिवत्सलतया यागीयपशुत्वे तदभ्यनुज्ञानस्य
दुःसम्पादतां चिन्तयन्तीषु तासु कपिलाभिस्ताभ्यः स्वेषामेव गोषु
श्रैष्ठ्यप्राप्तिरूपवराधिगमेन पेनपवधप्रतिज्ञानम् ॥ ३ ॥

Mahabharata - Anushaasana Parva - Chapter Text

भीष्म उवाच ।
कदाचित्कामरूपिण्यो गावः स्त्रीवेषमाश्रिताः ।
ह्रदे क्रीडन्ति संहृष्टा गायन्त्यः पुण्यलक्षणाः ॥? १३-१२१-१ (८६१३२)
ददृशुस्तस्य गावो वै विस्मयोत्फुल्ललोचनाः ।
ऊचुश्च का यूयमिति स्त्रियो मानुषया गिरा ॥ १३-१२१-२ (८६१३३)
स्त्रिय ऊचुः। १३-१२१-३क्ष् (७१३६)
गाव एव वयं सर्वकर्मभिः शोभनैर्युताः ।
सर्वाः स्त्रीवेषधारिण्यो यथाकामं चरामेहे। १३-१२१-३ (८६१३४)
गाव ऊचुः। १३-१२१-४क्ष् (७१३७)
गवां गावः परं दैवं गवां गावः परा गतिः ।
कथयध्वमिहास्माकं केन वः सुकृतां गतिः ॥ १३-१२१-४ (८६१३५)

स्त्रिय ऊचुः। १३-१२१-५क्ष् (७१३८)
अस्माकं हविषा देवा ब्राह्मणास्तर्पितास्तथा ।
कव्येन पितरश्चैव हव्येनाग्निश्च तर्पितः ॥ १३-१२१-५ (८६१३६)
प्रजया च तथाऽस्माकं कृषिरभ्युद्धृता सदा ।
शकटैश्चापि संयुक्ता दशवाहशतेन वै ॥ १३-१२१-६ (८६१३७)
तदेतैः सुकृतैः स्फीतैर्वयं याश्चैव नः प्रजाः ।
गोलोकमनुसम्प्राप्ता यः परं कामगोचरः ॥ १३-१२१-७ (८६१३८)
यूयं तु सर्वा रोहिण्यः सप्रजाः सहपुङ्गवाः ।
अधोगामिन्य इत्येव पश्यामो दिव्यचक्षुषा ॥ १३-१२१-८ (८६१३९)
गाव ऊचुः। १३-१२१-९क्ष् (७१३९)
एवं गवां परं दैवं गाव एव परायणम् ।
स्वपक्ष्यास्तारणीया वः शरणाय गता वयम् ॥ १३-१२१-९ (८६१४०)
किमस्माभिः करणीयं वर्तितव्यं कथञ्चन ।
प्राप्नुयाम च गोलोकं भवाम न च गर्हिताः ॥ १३-१२१-१० (८६१४१)
स्त्रिय ऊचुः। १३-१२१-११क्ष् (७१४०)
वर्तते रन्तिदेवस्य सत्रं वर्षसहस्रकम् ।
तत्र तस्य नृपस्याशु पशुत्वमुपगच्छतः ॥ १३-१२१-११ (८६१४२)
ततस्तस्योपयोगेन पशुत्वे यज्ञसंस्कृताः ।
गोलोकान्प्राप्स्यथ शुभांस्तेन पुण्येन संयुताः ॥ १३-१२१-१२ (८६१४३)
भीष्म उवाच। १३-१२१-१३क्ष् (७१४१)
एतत्तासां वचः श्रुत्वा गवां संहृष्टमानसाः ।
गमनाय मनश्चक्रुरौत्सुक्यं चागमन्परम् ॥ १३-१२१-१३ (८६१४४)
न हि नो भार्गवो दाता पशुत्वेनोपयोजनम् ।
यज्ञस्तस्य नरेन्द्रस्य वर्तते धर्मतस्तथा ॥ १३-१२१-१४ (८६१४५)
वयं न चाननुज्ञाताः शक्ता गन्तुं कथञ्चन ।
अवोचन्नथ तत्रत्या भार्गवो वध्यतामयम् ॥ १३-१२१-१५ (८६१४६)
एतत्सर्वा रोचयत न हि शक्यमतोऽन्यथा ।
लोकान्प्राप्तुं सहास्माभिर्निश्चयः क्रियतामयम् ॥ १३-१२१-१६ (८६१४७)
न तु तासां समेतानां काचिद्घोरेण चक्षुषा ।
शक्नोति भार्गवं द्रष्टुं सत्कृतेनोपसंयुता ॥ १३-१२१-१७ (८६१४८)
अथ पद्मसवर्णाभा भास्करांशुसमप्रभाः ।
जपालोहितताम्राक्ष्यो निर्मांसकठिनाननाः ॥ १३-१२१-१८ (८६१४९)
रोहिण्यः कपिलाः प्राहुः सर्वासां वै समक्षतः ।
मेघस्तनितनिर्घोषास्तेजोभिरभिरञ्जिताः ॥ १३-१२१-१९ (८६१५०)
वयं हि तं वधिष्यामः सुमित्रं नात्रं संशयः ।
सुकृतं पृष्ठतः कृत्वा किं नः श्रेयो विधास्यथ ॥ १३-१२१-२० (८६१५१)

गाव ऊचुः। १३-१२१-२१क्ष् (७१४२)
कपिलाः सर्ववर्णेषु प्रधानत्वमवाप्स्यथ ।
गवां शतफला चैकां दत्त्वा फलमवाप्स्यति ॥ १३-१२१-२१ (८६१५२)
भीष्म उवाच। १३-१२१-२२क्ष् (७१४३)
एतद्गवां वचः श्रुत्वा कपिला हृष्टमानसाः ।
चक्रुः सर्वा भार्गवस्य सुमित्रस्य वधे मतिम् ॥' ॥ १३-१२१-२२ (८६१५३)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
एकविंशत्यधिकशततमोऽध्यायः ॥ १२१ ॥
Mahabharata - Anushaasana Parva - Chapter Footnotes

७-१२१-२ तस्य फेनपस्य स्त्रियः प्रति ॥
७-१२१-४ सुकृतां पुण्यकृताम् ॥
७-१२१-६ शक्ताश्चापि तथा युक्ता इति थ।ध।पाठः ॥

---

अनुससनपर्व-अध्यय१२२
॥ श्रीः ॥
१३.१२२. अध्यायः १२२

अथ दानधर्मपर्व ॥ १ ॥
Mahabharata - Anushaasana Parva - Chapter Topics
फेनपस्य गोभक्तयुद्रेकसन्तुष्टाभिर्गोलोकादागतगोमातृभिः
योगप्रभावेण शरीराद्वियोजनेन स्वलोकप्रापणपूर्वकं
तस्मिन्कपिलानिश्चयनिवेदनम् ॥ १ ॥
ततः कपिलाभिर्यथाप्रतिज्ञं शृङ्गाघातादिना फेनपस्य
कुणपशरीरविभेदनम् ॥ २ ॥

Mahabharata - Anushaasana Parva - Chapter Text

ग्भीष्म उवाच ।
यास्तु गोमातरस्तस्य कामचारिण्य आगताः ।
समीपं हि सुमित्रस्य कृतज्ञाः समुपस्थिताः ॥ १३-१२२-१ (८६१५४)
अभिप्रशस्य चैवाहुस्तमृषिं पुण्यदर्शनाः ।
गोलोकादागता वेद वृषगोमातरो वयम् ॥ १३-१२२-२ (८६१५५)
सुप्रीताः स्म वरं गृह्ण यमिच्छसि महामुने ।
यद्भि गोषु परां बुद्धिं कृतवानसि नित्यदा ॥ १३-१२२-३ (८६१५६)

सुमित्र उवाच। १३-१२२-४क्ष् (७१४४)
प्रीतोस्म्यनुगृहीतोस्मि यन्मां गोमातरः शुभाः ।
सुप्रीतमनसः सर्वास्तिष्ठन्ते च वरप्रदाः ॥ १३-१२२-४ (८६१५७)
भवेद्गोष्वेव मे भक्तिर्यथैवाद्य तथा सदा ।
गोघ्नाश्चैवावसीदन्तु नरा ब्रह्मद्विषश्च ये ॥ १३-१२२-५ (८६१५८)
गोमातर ऊचुः। १३-१२२-६क्ष् (७१४५)
एवमेतदृषिश्रेष्ठ हितं वदसि नः प्रियम् ।
एहि गच्छ सहाऽस्माभिर्गोलोकमृषिसत्तम ॥ १३-१२२-६ (८६१५९)
सुमित्र उवाच। १३-१२२-७क्ष् (७१४६)
यूयमिष्टां गतिं यान्तु न ह्यहं गन्तुमुत्सहे ।
इमा गावः समुत्सृज्य तपस्विन्यो मम प्रियाः ॥ १३-१२२-७ (८६१६०)
भीष्म उवाच। १३-१२२-८क्ष् (७१४७)
तास्तु तस्य वचः श्रुत्वा कपिलानां सुदारुणम् ।
नित्युस्तमृषिमुत्क्षिप्य भार्गवं नभ उद्वहन् ॥ १३-१२२-८ (८६१६१)
कलेवरं तु तत्रैव तस्य संन्यस्य मातरः ।
निष्कृष्य करणं योगादानयन्भार्गवस्य वै ॥ १३-१२२-९ (८६१६२)
सर्वं चास्य तदाचख्युः कपिलानां विचेष्टितम् ।
यदर्थं हरणं गोभिर्गोलोकं लोकमातरः ॥ १३-१२२-१० (८६१६३)
ततस्तु कपिलास्तत्र तस्य दृष्ट्वा कलेवरम् ।
तथाप्रतिज्ञं शृङ्गैश्च खुरैश्चाप्यवचूर्णयन् ॥ १३-१२२-११ (८६१६४)
ततः संछिद्य बहुधा भार्गवं नृपसत्तम ।
युयुर्यत्रेतरा गावस्तच्च सर्वं न्यवेदयन् ॥ १३-१२२-१२ (८६१६५)
अथ गोमातृभिः शप्तास्ता गावः पृथिवीचराः ।
अमेध्यवदनाः क्षिप्रं भवध्वं ब्रह्मघातकाः ॥ १३-१२२-१३ (८६१६६)
एवं कृतज्ञा गावो हि यता गोमातरो नृप ।
ऋषिश्च प्राप्तवाँल्लोकं गावश्च परिमोक्षिताः ॥' ॥ १३-१२२-१४ (८६१६७)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
द्वाविंशत्यधिकशततमोऽध्यायः ॥ १२२ ॥

Mahabharata - Anushaasana Parva - Chapter Footnotes

७-१२२-२ वेद विद्धि । ऋषे गोमातरो वयमिति थ।पाठः ॥
७-१२२-८ कपिलानां सुदारुणं सुमित्रवधप्रतिज्ञानं च श्रुत्वा ॥

---

अनुससनपर्व-अध्यय१२३
॥ श्रीः ॥

१३.१२३. अध्यायः १२३

अथ दानधर्मपर्व ॥ १ ॥

Mahabharata - Anushaasana Parva - Chapter Topics

फेनपस्य गोभी रन्तिदेवं प्रति तत्सत्रे स्वेषां पशुत्वेन विनियोगप्रार्थना ॥ १ ॥
तेन गवां मध्ये कस्याश्चिदपि सकामत्वज्ञाने सत्रविरामरूपसमयकरणेन सत्रारम्भः ॥ २ ॥
कदाजन कस्याश्चिद्गोर्वत्सस्नेहाद्विशसने दुःखावगमेन यागोपरमः ॥ ३ ॥

Mahabharata - Anushaasana Parva - Chapter Text

ग्भीष्म उवाच ।
ता गावो रन्तिदेवस्य गत्वा यज्ञं मनीषिणः ।
आत्मानं ज्ञापयामासुर्महर्षीणां समक्षतः ॥ १३-१२३-१ (८६१६८)
रन्तिदेवस्ततो राजा प्रयतः प्राञ्जलिः शुचिः ।
उवाच गावः प्रणतः किमागमनमित्यपि ॥ १३-१२३-२ (८६१६९)
गाव ऊचुः। १३-१२३-३क्ष् (७१४८)
इच्चामस्तव राजेन्द्र सत्रेऽस्मिन्विनियोजनम् ।
पशुत्वमुपसम्प्राप्तुं प्रसादं कर्तुमर्हसि ॥ १३-१२३-३ (८६१७०)
रन्तिदेव उवाच। १३-१२३-४क्ष् (७१४९)
नास्ति शक्तो गवां घातं कर्तुं शतसहस्रशः ।
घातयित्वा त्वहं युष्मान्कथमात्मानमुत्तरे ॥ १३-१२३-४ (८६१७१)
यः पशुत्वेन संयोज्य युष्मान्स्वर्गं नयेदिह ।
आत्मानं चैव तपसा गावः समुपगम्यताम् ॥ १३-१२३-५ (८६१७२)
गाव ऊचुः। १३-१२३-६क्ष् (७१५०)
अस्माकं तारणे युक्तो धर्मात्मा तपसि स्थितः ।
श्रुतोऽस्माभिर्भवान्राजंस्ततस्तु स्वयमागताः ॥ १३-१२३-६ (८६१७३)
रन्तिदेव उवाच। १३-१२३-७क्ष् (७१५१)
मम सत्रे पशुत्वं वो यद्येवं हि मनीषितम् ।
समयेनाहमेतेन जुहुयां वो हुताशने ॥ १३-१२३-७ (८६१७४)
कदाचिद्यदि वः काचिदकामा विनियुज्यते ।
तदा समाप्तिः सत्रस्य गवां स्यादिति नैष्ठिकी ॥ १३-१२३-८ (८६१७५)
गाव ऊचुः। १३-१२३-९क्ष् (७१५२)
एवमस्तु महाराज यथा त्वं प्रब्रवीषि नः ।
अकामाः स्युर्यदा गावस्तदा सत्रं समाप्यताम् ॥ १३-१२३-९ (८६१७६)

भीष्म उवाच। १३-१२३-१०क्ष् (७१५३)
ततः प्रवृत्ते गोसत्रे रन्तिदेवस्य धीमतः ।
गोसहस्राण्यहरहर्नियुज्यन्ते शमीतृभिः ॥ १३-१२३-१० (८६१७७)
एवं बहूनि वर्षाणि व्यतीतानि नराधिप ।
गवां वै वध्यमानानां न चान्तः प्रत्यदृश्यत ॥ १३-१२३-११ (८६१७८)
गवां चर्मसहस्रैस्तु राशयः पर्वतोपमाः ।
बभूवुः कुरुशार्दूल बहुधा मेघसंनिभाः ॥ १३-१२३-१२ (८६१७९)
मेदःक्लेदवहा चैव प्रावर्तत महानदी ।
अद्यापि भुवि विख्याता नदी चर्मण्वती शुभा ॥ १३-१२३-१३ (८६१८०)
ततः कदाचित्स्वं वत्सं गौरुपामन्त्र्य दुःखिता ।
एहि वत्स स्तनं पाहि मा त्वं पश्चात्क्षुदार्दितः ॥ १३-१२३-१४ (८६१८१)
तप्स्यसे विमना दुःखं घातितायां मयि ध्रुवम् ।
एते ह्यायान्ति चण्डालाः सशस्त्रामां जिघांसवः ॥ १३-१२३-१५ (८६१८२)
अथ शुश्राव तां वाणीं मानुषीं समुदाहृताम् ।
रन्तिदेवो महाराज ततस्तां समवारयत् ॥ १३-१२३-१६ (८६१८३)
स्थापयामास गोसत्रमथ तं पार्तिवर्षभ ।
सत्रोत्सृष्टाः परित्यक्ता गावोऽन्याः समुपाश्रिताः ॥ १३-१२३-१७ (८६१८४)
यास्तस्य राज्ञो निहता गावो यज्ञे महात्मनः ।
ता गोलोकमुपाजग्मुः प्रेक्षिता ब्रह्मवादिभिः ॥ १३-१२३-१८ (८६१८५)
रन्तिदेवोपि राजर्षिरिष्ट्वा यज्ञं यथाविधि ।
ततः सख्यं सुरपतेस्त्रिदिवं चाक्षयं ययौ ॥ १३-१२३-१९ (८६१८६)
फेनपो दिवि गोलोके मुमुदे शाश्वतीः समाः ।
अवशिष्टश्च या गवस्ता बभूवुर्वनेचराः ॥ १३-१२३-२० (८६१८७)
फेनपाख्यानमेतत्ते गवां माहात्म्यमेव च ।
कथितं पावनं पुण्यं कृष्णद्वैपायनेरितम् ॥ १३-१२३-२१ (८६१८८)
नारायणोऽपि भगवान्दृष्ट्वा गोषु परं यशः ।
शुश्रूषां परमां चक्रे भक्तिं च भरतर्षभ ॥ १३-१२३-२२ (८६१८९)
तस्मात्त्वमपि राजेन्द्र गा वै पूजय भारत ।
द्विजेभ्यश्चैव सततं प्रयच्छ कुरुसत्तम ॥ ॥ १३-१२३-२३ (८६१९०)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
त्रयोविंशत्यधिकशततमोऽध्यायः ॥ १२३ ॥

Mahabharata - Anushaasana Parva - Chapter Footnotes

७-१२३-८ कदाचित् कदापि । काचित् कापि ॥
७-१२३-१० शमीतृभिः शमितृभिः । दीर्घ आर्षः ॥

अनुससनपर्व-अध्यय१२४
॥ श्रीः ॥
१३.१२४. अध्यायः १२४

अथ दानधर्मपर्व ॥ १ ॥
Mahabharata - Anushaasana Parva - Chapter Topics
भीष्मेण युधिष्ठिरम्प्रति गोमाहात्म्यप्रतिपादकव्यासशुकसंवादानुवादः
॥ १ ॥

Mahabharata - Anushaasana Parva - Chapter Text

ग्युधिष्ठिर उवाच ।
पवित्राणां पवित्रं यच्छ्रेष्ठं लोकेषु पूजितम् ।
महाव्रतं महाभाग तन्मे ब्रूहि पितामह ॥ १३-१२४-१ (८६१९१)
भीष्म उवाच। १३-१२४-२क्ष् (७१५४)
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
पितुः पुत्रस्य संवादं व्यासस्य च शुकस्य च ॥ १३-१२४-२ (८६१९२)
ऋषीणामुत्तमं कृष्णं भावितात्मानमच्युतम् ।
पारम्पर्यविशेषज्ञं सर्वशास्त्रार्थकोविदम् ॥ १३-१२४-३ (८६१९३)
कृतशौचः शुकस्तत्र कृतजप्यः कृताह्निकः ।
परं नियममास्थाय परं धर्ममुपाश्रितः ॥ १३-१२४-४ (८६१९४)
प्रणम्य शिरसा व्यासं सूक्ष्मतत्वार्थदर्शिनम् ।
शुकः पप्रच्छ वै प्रश्नं दानधर्मकुतूहलः ॥ १३-१२४-५ (८६१९५)
बहुचित्राणि दानानि बहुशः शंससे मुने ।
महार्थं पावनं पुण्यं किंस्विद्दानं महाफलम् ॥ १३-१२४-६ (८६१९६)
केन दुर्गाणि तरति केन लोकानवाप्नुते ।
केन वा महदाप्नोति इह लोके परत्र च ॥ १३-१२४-७ (८६१९७)
के वा यज्ञस्य वोढारः केषु यज्ञः प्रतिष्ठितः ।
किञ्च यज्ञस्य यज्ञत्वं किञ्च यज्ञस्य भेषजम् ।
यज्ञानामुत्तमं किञ्च तद्भवान्प्रब्रवीतु मे ॥ १३-१२४-८ (८६१९८)
स तस्मै भजमानाय जातकौतूहलाय च ।
व्यासो व्रतनिधिः प्राह गवामिदमनुत्तमम् ॥ १३-१२४-९ (८६१९९)
धन्यं यशस्यमायुष्यं लोके श्रुतिसुखावहम् ।
यत्पवित्रं पवित्राणां मङ्गलानां च मङ्गलम् ॥ १३-१२४-१० (८६२००)
सर्वपापप्रशमनं तत्समासेन मे शृणु ।

यदिदं तिष्ठते लोके जगत्स्थावरजङ्गमम् ।
गावस्तत्प्राप्य तिष्ठन्ति गोलोके पुण्यदर्शनाः ॥ १३-१२४-११ (८६२०१)
मातरः सर्वभूतानां विश्वस्य जगतश्च ह ।
रुद्राणामिह साध्यानां गाव एव तु मातरः ॥ १३-१२४-१२ (८६२०२)
रुद्राणां मातरो ह्येता ह्यादित्यानां स्वसा स्मृताः ।
वसूनां च दुहित्रस्ता ब्रह्मसन्तानमूलजाः ॥ १३-१२४-१३ (८६२०३)
यासामधिपतिः पूषा मरुतो वालबन्धनाः ।
ऐश्वर्यं वरुणो राजा विश्वेदेवाः समाश्रिताः ॥ १३-१२४-१४ (८६२०४)
य एवं वेद ता गावो मातरो देवपूजिताः ।
स विप्रो ब्रह्मलोकाय गवां लोकाय वा ध्रुवः ॥ १३-१२४-१५ (८६२०५)
गावस्तु नावमन्येत कर्मणा मनसा गिरा ।
गवां स्थानं परं लोके प्रार्थयेद्यः परां गतिम् ॥ १३-१२४-१६ (८६२०६)
न पद्भ्यां ताडयेद्गा वै न दण्डेन न मुष्टिना ।
इमां विद्यामुपाश्रित्य पावनीं ब्रह्मनिर्मिताम् ॥ १३-१२४-१७ (८६२०७)
मातॄणामन्ववाये च न गोमध्ये न गोव्रजे ।
नरो मूत्रपुरीषस्य दृष्ट्वा कुर्याद्विसर्जनम् ॥ १३-१२४-१८ (८६२०८)
शुद्धाश्चन्दनशीताङ्ग्यश्चन्द्ररश्मिसमप्रभाः ।
सौम्याः सुरभ्यः सुभगा गावो गुग्गुलुगन्धयः ॥ १३-१२४-१९ (८६२०९)
सर्वे देवाऽविशन्गा वै समुद्रमिव सिन्धवः ।
दिवं चैवान्तरिक्षं च गवां व्युष्टिं समश्नुते ॥ १३-१२४-२० (८६२१०)
दधिना जुहुयादग्निं दधिना स्वस्ति वाचयेत् ।
दधि दद्याच्च प्राशेत गवां व्युष्टिं समश्नुते ॥ १३-१२४-२१ (८६२११)
घृतेन जुहुयादग्निं घृतेन स्वस्ति वाचयेत् ।
घृतमालभ्य प्राश्नीयाद्गवां व्युष्टिं समश्नुते ॥ १३-१२४-२२ (८६२१२)
गावः संजीवना यास्तु गावो दानमनुत्तमम् ।
ताः पुण्यगोपाः सुफला भजमानं भजन्तु माम् ॥ १३-१२४-२३ (८६२१३)
येन देवाः पवित्रेण स्वर्गलोकमितो गताः ।
तत्पवित्रं पवित्राणां मम मूर्ध्नि प्रतिष्ठितम् ॥ १३-१२४-२४ (८६२१४)
वीणामृदङ्गपणवा गवां गात्रं प्रतिष्ठिताः ।
क्रीडारतिविहारार्थे त्रिषु लोकेषु वर्तते ॥ १३-१२४-२५ (८६२१५)
न तत्र देवा वर्तन्ते नाग्निहोत्राणि जुह्वति ।
न यज्ञैरिज्यते चात्र यत्र गौर्वै न दृश्यते ॥ १३-१२४-२६ (८६२१६)
क्षीरं दधि घृथं यासां रसानामुत्तमो रसः ।
अमृतप्रभवा गावस्त्रैलोक्यं येन जीवति ॥ १३-१२४-२७ (८६२१७)
इमामाहूय धेनुं च सवत्सां यज्ञमातरम् ।
उपाह्वयन्ति यां विप्रा गावो यज्ञहविष्कृतम् ॥ १३-१२४-२८ (८६२१८)

या मेध्या प्रथमं कर्म इयं धेनुः सरस्वती ।
पौर्णमासेन वत्सेन कामं कामगुणान्विता ॥ १३-१२४-२९ (८६२१९)
यत्र सर्वमिदं प्रोतं यत्किंचिज्जङ्गमं जगत् ।
स गौर्वै प्रथमा पुण्या सर्वभूतहिते रता ॥ १३-१२४-३० (८६२२०)
धारणाः पावनाः पुण्या भावना भूतभावनाः ।
गावो मामभिरक्षन्तु इह लोके परत्र च ॥ १३-१२४-३१ (८६२२१)
एष यज्ञः सहोपाङ्ग एष यज्ञः सनातनः ।
वेदाः सहोपनिषदो गवां रूपाः प्रतिष्ठिताः ॥ १३-१२४-३२ (८६२२२)
एतत्तात मया प्रोक्तं गवामिह परं मतम् ।
सर्वतः श्रावयेन्नित्यं प्रयतो ब्रह्मसंसदि ॥ १३-१२४-३३ (८६२२३)
श्रुत्वा लभेत ताँल्लोकान्ये मया परिकीर्तिताः ।
श्रावयित्वापि प्रीतात्मा लोकांस्तान्प्रतिपद्यते १३-१२४-३४ (८६२२४)
धेनुमेकां समादद्यादहन्यहनि पावनीम् ।
तत्तथा प्राप्नुयाद्विप्रः पठन्वै गोमतीं सदा ॥ १३-१२४-३५ (८६२२५)
अथ धेनुर्न विद्यते तिलधेनुमनुत्तमाम् ।
दद्याद्गोमतिकल्पेन तां धेनुं सर्वपावनीम् ॥ १३-१२४-३६ (८६२२६)
आह्निकं गोमतीं नित्यं यः पठेत सदा नरः ।
सर्वपापात्प्रमुच्येत प्रयतात्मा य आचरेत् ॥ १३-१२४-३७ (८६२२७)
घृतं वा नित्यमालभ्य प्राश्य वा गोमतीं जपेत् ।
स्नात्वा वा गोकरीषेण पठन्पापात्प्रमुच्यते ॥ १३-१२४-३८ (८६२२८)
मनसा गोमतीं जप्येद्गोमत्या नित्यमाह्निकम् ।
न त्वेन दिवसं कुर्याद्व्यर्थं गोमत्यपाठकः ॥ १३-१२४-३९ (८६२२९)
गोमतीं जपमाना हि देवा देवत्वमाप्नुवन् ।
ऋषित्वमृषयश्चापि गोमत्या सर्वमाप्नुवन् ॥ १३-१२४-४० (८६२३०)
बद्धो बन्धात्प्रमुच्येत कृच्छ्रान्मुच्येत सङ्कटात् ।
गोमतीं सेवते यस्तु लभते प्रियसङ्गमम् ॥ १३-१२४-४१ (८६२३१)
एतत्पवित्रं कार्त्स्न्येन एतद्व्रतमनुत्तमम् ।
एतत्तु पृथिवीपाल पावनं शृण्वतां सदा ॥ १३-१२४-४२ (८६२३२)
पुत्रकामाश्च ये केचिद्धनकामाश्च मानवाः ।
अद्धाने चोरवैरिभ्यो मुच्यते गोमतीं पठन् ॥ १३-१२४-४३ (८६२३३)
पूर्ववैरानुबन्धेषु रणए चाप्याततायिनः ।
लभेत जयमेवाशु सदा गोमतिपाठकः ॥'॥ ॥ १३-१२४-४४ (८६२३४)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
चतुर्विंशत्यधिकशततमोऽध्यायः ॥ १२४ ॥

७-१२४-१ देवव्रत महाभागेति क пाठः ॥
७-१२४-१८ मातॄणामनुपाते चेति थ пाठ ॥।
७-१२४-२६ यत्र गौर्वै न दुह्यते इति थ пाठ ॥

---

अनुससनपर्व-अध्यय१२५
॥ श्रीः ॥
१३.१२५. अध्यायः १२५

अथ दानधर्मपर्व ॥ १ ॥
Mahabharata - Anushaasana Parva - Chapter Topics
व्यासेन शुकम्प्रति ब्राह्मणेतरवर्णानां
कपिलाक्षीरोपजीवनार्हत्वादिकथनम् ॥ १ ॥

Mahabharata - Anushaasana Parva - Chapter Text

ग्शुक उवाच ।
क्षत्रियाश्चैव शूद्राश्च मन्त्रहीनाश्च ये द्विजाः ।
कपिलामुपजीवन्ति कथमेतत्पितर्भवेत् ॥ १३-१२५-१ (८६२३५)
श्रीव्यास उवाच। १३-१२५-२क्ष् (७१५५)
क्षत्रियाश्चैव शूद्राश्च मन्त्रहीनाश्च ये द्विजाः ।
कपिलामुपजीवन्ति तेषां वक्ष्यामि निर्णयम् ॥ १३-१२५-२ (८६२३६)
कपिलास्तूत्तमा लोके गोषु चैवोत्तमा मताः ।
तासां दाता लभेत्स्वर्गं विधिना यश्च सेवते ॥ १३-१२५-३ (८६२३७)
स्पृशेत कपिलां यस्तु दण्डेन चरणेन वा ।
स तेन स्पर्शमात्रेण नरकायोपपद्यते ॥ १३-१२५-४ (८६२३८)
मन्त्रेण युञ्ज्यात्कपिलां मन्त्रेणैव प्रमुञ्चते ।
मन्त्रिहीनं तु यो युञ्जात्कृमियोनौ प्रसूयते ॥ १३-१२५-५ (८६२३९)
प्रहाराहतमर्माङ्गा दुःखेन च जडीकृता ।
पदानि यावद्गच्छेत तावल्लोकान्कृमिर्भवेत् ॥ १३-१२५-६ (८६२४०)
यावन्तो बिन्दवस्तस्याः शोणितस्य क्षितिं गताः ।
तावद्वर्षसहस्राणि नरकं प्रतिपद्यते ॥ १३-१२५-७ (८६२४१)
मन्त्रेण युञ्ज्यात्कपिलां मन्त्रेण विनियोजयेत् ।
मन्त्रहीनैरनुयुतो मज्जयेत्तमसि प्रभो ॥ १३-१२५-८ (८६२४२)
कपिलां येऽपि जीवन्ति बुद्धिमोहान्विता नराः ।
तेऽपि वर्षसहस्राणि पतन्ति नरके नृप ॥ १३-१२५-९ (८६२४३)

अथ न्यायेन ये विप्राः कपिलामुपयुञ्जते ।
तस्मिंल्लोके प्रमोदन्ते लोकाश्चैषामनामयाः ॥ १३-१२५-१० (८६२४४)
विधिना ये न कुर्वन्ति शूद्रास्तानुपधारय ॥' ॥ १३-१२५-११ (८६२४५)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
पञ्चविंशत्यधिकशततमोऽध्यायः ॥ १२५ ॥

---

अनुससनपर्व-अध्यय१२६
॥ श्रीः ॥
१३.१२६. अध्यायः १२६

अथ दानधर्मपर्व ॥ १ ॥
Mahabharata - Anushaasana Parva - Chapter Topics
व्यासेन शुकम्प्रति कपिलानां गवां स्वाङ्गप्रवेशनेन देवेभ्यः
प्रच्छन्नमात्मनोगोपनात्परितुष्टस्याग्नेर्वरात्सर्वश्रैष्ठ्यप्राप्तिकथनम्
॥ १ ॥

Mahabharata - Anushaasana Parva - Chapter Text

ग्शुक उवाच ।
नानावर्णैरुपेतानां गवां किं मुनिसत्तम ।
कपिलाः सर्ववर्णेषु वरिष्ठत्वमवाप्नुवन् ॥ १३-१२६-१ (८६२४६)
व्यास उवाच। १३-१२६-२क्ष् (७१५६)
शृणु पुत्र यथा गोषु वरिष्ठाः कपिलाः स्मृताः ।
कपिलत्वं च सम्प्राप्ताः पूज्याश्चि सततं नृषु ॥ १३-१२६-२ (८६२४७)
अग्निः पुरापचक्राम देवेभ्य इति नः श्रुतम् ।
देवेभ्यो मां छादयत शरण्याः शरणं गतम् ॥ १३-१२६-३ (८६२४८)
ऊचुस्ताः सहितास्तत्र स्वागतं तव पावकः ।
इह गुप्तस्त्वमस्माभिर्न देवैरुपलप्स्यसे ॥ १३-१२६-४ (८६२४९)
अथ देवा विवित्सन्तः पावकं परिचक्रमुः ।
गोषु गुप्तं च विज्ञाय ताः क्षिप्रमुपतस्थिरे ॥ १३-१२६-५ (८६२५०)
युष्मासु निवसत्यग्निरिति गाः समचूचुदन् ।
प्रकाश्यतां हुतवहो लोकान्न च्छेत्तुमर्हथ ॥ १३-१२६-६ (८६२५१)
एवमस्त्वित्युनुज्ञाय पावकं समदर्शयन् ॥ १३-१२६-७ (८६२५२)
अधिगम्य पावकं तुष्टास्ते देवाः सद्य एव तु ।
अग्निं प्रचोदयामासुः क्रियतां गोष्वनुग्रहः ॥ १३-१२६-८ (८६२५३)

गवां तु यासां गात्रेषु पावकः समवस्थितः ।
कपिलत्वमनुप्राप्ताः सर्वश्रेष्ठत्वमेव च ॥१३-१२६-९ (८६२५४)
महाफलत्वं लोके च ददौ तासां हुताशनः ।
तस्माद्धि सर्ववर्णानां कपिलां गां प्रदापय ।
श्रोत्रियाय प्रशान्ताय प्रयतायाग्निहोत्रिणे ॥ १३-१२६-१० (८६२५५)
यावन्ति रोमाणि भन्ति धेन्वा
युगानि तावन्ति पुनाति दातॄन् ।
प्रतिग्रहीतॄंश्च पुनाति दत्ता
शिष्टे तु गौर्वै प्रतिपादनेन ॥ ॥ १३-१२६-११ (८६२५६)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
षड्विंशत्यधिकशततमोऽध्यायः ॥१२६ ॥

---

अनुससनपर्व-अध्यय१२७
॥ श्रीः ॥
१३.१२७. अध्यायः १२७

अथ दानधर्मपर्व ॥१ ॥
Mahabharata - Anushaasana Parva - Chapter Topics
व्यासेन शुकम्प्रति कपिलालक्षणविभागादिकथनम् ॥१ ॥

Mahabharata - Anushaasana Parva - Chapter Text

शुक उवाच ।
केन वर्णविभागेन विज्ञेया कपिला भवेत् ।
कति वा लक्षणान्यस्या दृष्टानि मुनिभिः पुरा ॥१३-१२७-१ (८६२५७)
श्रीव्यास उवाच।१३-१२७-२क्ष् (७१५७)
शृणु तात यथा गोषु विज्ञेया कपिला भवेत् ।
नेत्रयोः शृङ्गयोश्चैव खुरेषु वृषणेषु च ।
कर्णतो घ्राणतश्चापि षड्विधाः कपिलाः स्मृताः ॥ १३-१२७-२ (८६२५८)
एतेषां लक्षणानां तु यद्येकमपि दृश्यते ।
कपिलां तां विजानीयादेवमाहुर्मनीषिणः ॥१३-१२७-३ (८६२५९)
आग्नेयी नेत्रकपिला खुरैर्माहेश्वरी भवेत् ।
ग्रीवायां वैष्णवी ज्ञेया पूष्णो घ्राणादजायत ॥१३-१२७-४ (८६२६०)
कर्णतस्तु वसन्तेन स्वयोनिमभिजायते ।
गायत्र्याश्च वृषणयोरुत्पत्तिः षड्गुणा स्मृता ॥१३-१२७-५ (८६२६१)

एवं गावश्च विप्राश्च गायत्री सत्यमेव च ।
वसन्तश्च सुवर्णश्च एकतः समजायत ॥१३-१२७-६ (८६२६२)
नेत्रयोः कपिलां यस्तु वाहयेत दुहेत वा ।
स पापकर्मा नरकं प्रतिष्ठां प्रतिपद्यते ॥१३-१२७-७ (८६२६३)
नरकाद्विप्रमुक्तस्तु तिर्यग्योनिं निषेवते ।
यदा लभेत मानुष्यं जात्यन्धो जायते नरः ॥१३-१२७-८ (८६२६४)
शृङ्गयोः कपिलां यस्तु वाहयेत दुहेत वा ।
तिर्यग्योनिं स लभते जायमानः पुनः पुनः ॥१३-१२७-९ (८६२६५)
खुरेषु कपिलां यस्तु वाहयेत दुहेत वा ।
तमस्यपारे मज्जेत धनहीनो नराधमः ॥१३-१२७-१० (८६२६६)
कपिलां वालधानेषु वाहयेत दुहेत वा ।
निराश्रयः सदा चैव जायते यदि चेत्कृमिः ॥१३-१२७-११ (८६२६७)
कर्णेन कपिलां यस्तु जानन्नप्युपजीवति ।
सहस्रशः शुचिर्भुत्वा मानुष्यं प्राप्नुयादथ ।
चण्डालः पापयोनिश्च जायते स नराधमः ॥ १३-१२७-१२ (८६२६८)
घ्राणेन कपिलां यस्तु प्रमादादुपजीवति ।
सोऽपि वर्षसहस्राणि तिर्यग्योनौ प्रजायते ॥१३-१२७-१३ (८६२६९)
व्याधिग्रस्तो जडो रोगी भवेन्मानुष्यमागतः ॥ १३-१२७-१४ (८६२७०)
मधुसर्पिस्सुगन्धास्तु कपिलाः शास्त्रतः स्मृताः ।
एताः समुपजीवेत सोऽपि तिर्यक्षु जायते ॥१३-१२७-१५ (८६२७१)
स्थावरत्वमनुप्राप्तो यदि मानुष्यतां लभेत् ।
अल्पायुः स भवेज्जातो हीनवर्णकुलोद्भवः ॥१३-१२७-१६ (८६२७२)
ये तु पापा ह्यसूयन्ते कपिलां वाहयन्ति च ।
निरयेषु प्रतिष्ठन्ते यावदाभूतसम्प्लवम् ॥ ॥१३-१२७-१७ (८६२७३)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
सप्तविंशत्यधिकशततमोऽध्यायः ॥१२७ ॥
Mahabharata - Anushaasana Parva - Chapter Footnotes

७-१२७-७ वाहयेन दमेत वेति थ पाठ ॥।

---

अनुससनपर्व-अध्यय१२८
॥ श्रीः ॥
१३.१२८. अध्यायः १२८

अथ दानधर्मपर्व ॥ १ ॥

Mahabharata - Anushaasana Parva - Chapter Topics
भीष्मेण युधिष्ठिरम्प्रति श्रियो बलात्कारेण स्वप्रार्थनया गोमूत्रपुरीषयोर्निवासस्य कथनम् ॥ १ ॥

Mahabharata - Anushaasana Parva - Chapter Text

युधिष्ठिर उवाच ।
मया गवां पुरीषं वै श्रिया जुष्टमिति श्रुतम् ।
एतदिच्छाम्यहं श्रोतुं संशयोऽत्र हि मे महान् ॥ १३-१२८-१ (८६२७४)
भीष्म उवाच। १३-१२८-२क्ष् (७१५८)
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
गोभिर्नृपेहं संवादं श्रिया भारतसत्तम ॥ १३-१२८-२ (८६२७५)
गावोऽथ विस्मितास्तस्या दृष्ट्वा रूपस्य सम्पदम् ॥ १३-१२८-३ (८६२७६)
गाव ऊचुः। १३-१२८-४क्ष् (७१५९)
काऽसि देवि कुतो वा त्वं रूपेणाप्रतिमा भुवि ।
विस्मिताः स्म महाभागे तव रूपस्य सम्पदा ॥ १३-१२८-४ (८६२७७)
इच्छामस्त्वां वयं ज्ञातुं का त्वं क्व च गमिष्यसि ।
तत्त्वेन हि सुवर्णाभे सर्वमेतद्ब्रवीहि नः ॥ १३-१२८-५ (८६२७८)
श्रीरुवाच। १३-१२८-६क्ष् (७१६०)
लोकस्य कान्तिर्भद्रं वः श्रीर्नामाहं परिश्रुता ।
मया दैत्याः परित्यक्ता विनष्टाः शाश्वतीः समाः ॥ १३-१२८-६ (८६२७९)
मयाऽभिपन्ना देवाश्च मोदन्ते शाश्वतीः समाः ।
इन्द्रो विवस्वान्सोमश्च विष्णुरापोऽग्निरेव च ॥ १३-१२८-७ (८६२८०)
मयाऽभिपन्ना दीप्यन्ते ऋषयो देवतास्तथा ।
यान्नाविशाम्यहं गावस्ते विनश्यन्ति सर्वशः ॥ १३-१२८-८ (८६२८१)
धर्मश्चार्थश्च कामश्च मया जुष्टाः सुखान्विताः ।
एवंप्रभावां मां गावो विजानीत सुखप्रदाम् ॥ १३-१२८-९ (८६२८२)
इच्छामि चापि युष्मासु वस्तुं सर्वासु नित्यदा ।
आगत्य प्रार्थये युष्माञ्श्रीजुष्टा भवताऽनघाः ॥ १३-१२८-१० (८६२८३)
गाव ऊचुः। १३-१२८-११क्ष् (७१६१)
अध्रुवा चपला च त्वं सामान्या बहुभिः सह ।
न त्वामिच्छाम भद्रं ते गम्यतां यत्र रोचते ॥ १३-१२८-११ (८६२८४)
वपुष्मन्त्यो वयं सर्वाः किमस्माकं त्वयाऽद्य वै ।
यथेष्टं गम्यतां तत्र कृतकार्या वयं त्वया ॥ १३-१२८-१२ (८६२८५)
श्रीरुवाच। १३-१२८-१३क्ष् (७१६२)
किमेतद्वः क्षमं गावो यन्मां नेहाभिनन्दथ ।

न मां सम्प्रतिगृह्णीध्वं कस्माद्वै दुर्लभां सतीम् ॥१३-१२८-१३ (८६२८६)
सत्यश्च लोकवादोऽयं लोके चरति सुव्रताः ।
स्वयं प्राप्ते परिभवो भवतीति विनिश्चयः ॥१३-१२८-१४ (८६२८७)
महदुग्रं तपः कृत्वा मां निषेवन्ति मानवाः ।
देवदानवगन्धर्वाः पिशाचोरगराक्षसाः ॥१३-१२८-१५ (८६२८८)
क्षममेतद्धि वो गावः प्रतिगृह्णीत मामिह ।
नावमन्या ह्यहं सौम्यास्त्रैलोक्ये सचराचरे ॥१३-१२८-१६ (८६२८९)
गाव ऊचुः।१३-१२८-१७क्ष् (७१६३)
नावमान्यामहे देवि न त्वां परिभवामहे ।
अध्रुवा चलचित्तासि ततस्त्वां वर्जयामहे ॥१३-१२८-१७ (८६२९०)
बहुना च किमुक्तेन गम्यतां यत्र वाञ्छसि ।
वपुष्मन्त्यो वयं सर्वाः किमस्माकं त्वयाऽनघे ॥१३-१२८-१८ (८६२९१)
श्रीरुवाच।१३-१२८-१९क्ष् (७१६४)
अवज्ञाता भविष्यामि सर्वलोकेषु मानवैः ।
प्रत्याख्यातेति युष्माभिः प्रसादः क्रियतां मम ॥१३-१२८-१९ (८६२९२)
महाभागा भवत्यो वै शरण्याः शरणागताम् ।
परित्रायन्तु मां नित्यं भजमानामनिन्दिताम् ॥१३-१२८-२० (८६२९३)
माननामहमिच्छामि भवत्यः सततं शिवाः ।
अप्येकाङ्गेष्वधो वस्तुमिच्छामि च सुकुत्सिते ॥१३-१२८-२१ (८६२९४)
न वोऽस्ति कुत्सितं किञ्चिदङ्गेष्वालक्ष्यतेऽनघाः ।
पुण्याः पवित्राः सुभगा अवाग्देशं प्रयच्छथ ।
वसेयं यत्र वो देहे तन्मे व्याख्यातुमर्हथ ॥ १३-१२८-२२ (८६२९५)
एवमुक्तास्तु ता गावः शुभाः करुणवत्सलाः ।
सम्मान्य सहिताः सर्वाः श्रियमुचुर्नराधिप ॥१३-१२८-२३ (८६२९६)
अवश्यं मानना कार्या तवास्माभिर्यशस्विनि ।
शकृन्मूत्रे निवसतां पुण्यमेतद्धि नः शुभे ॥१३-१२८-२४ (८६२९७)
श्रीरुवाच।१३-१२८-२५क्ष् (७१६५)
दिष्ट्या प्रसादो युष्माभिः कृतो मेऽनुग्रहात्मकः ।
एवं भवतु भद्रं वः पूजिताऽस्मि सुखप्रदाः ॥१३-१२८-२५ (८६२९८)
भीष्म उवाच।१३-१२८-२६क्ष् (७१६६)
एवं कृत्वा तु समयं श्रीर्गोभिः सह भारत ।
पश्यन्तीनां ततस्तासां तत्रैवान्तरधीयत ॥१३-१२८-२६ (८६२९९)
एवं गोशकृतः पुत्र माहात्म्यं तेऽनुवर्णितम् ।
माहात्म्यं च गवां भूयः श्रूयतां गदतो मम ॥ ॥१३-१२८-२७ (८६३००)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि

अष्टविंशत्यधिकशततमोऽध्यायः ॥ १२८ ॥

Mahabharata - Anushaasana Parva - Chapter Footnotes

७-१२८-३ विस्मिता अभवन्निति शेषः ॥
७-१२८-२१ एका अहम् । अङ्गेषु मध्ये कुत्सिते। सुप्रीताङ्गेषु वो वस्तुमिच्छामीह न कुत्सिते इति ध पाठः ॥
७-१२८-२३ सम्मन्त्र्य सहिता इति झ पाठः ॥

---

अनुससनपर्व-अध्यय१२९
॥ श्रीः ॥
१३.१२९. अध्यायः १२९

अथ दानधर्मपर्व ॥ १ ॥

Mahabharata - Anushaasana Parva - Chapter Topics

भीष्मेण युधिष्ठिरम्प्रति गोलोकस्य देवलोकस्य देवलोकादप्युपरितनत्वे निमित्तप्रतिपादकब्रह्मशक्रसंवादानुवादः ॥ १ ॥

Mahabharata - Anushaasana Parva - Chapter Text

भीष्म उवाच ।
ये च गाः सम्प्रयच्छन्ति हुतशिष्टाशिनश्च ये ।
तेषां सत्राणि यज्ञाश्च नित्यमेव युधिष्ठिर ॥ १३-१२९-१ (८६३०१)
ऋते दधिघृतेनेह न यज्ञः सम्प्रवर्तते ।
तेन यज्ञस्य यज्ञत्वमतो मूलं च लक्ष्यते ॥ १३-१२९-२ (८६३०२)
दानानामपि सर्वेषां गवां दानं प्रशस्यते ।
गावः श्रेष्ठाः पवित्राश्च पावनं ह्येतदुत्तमम् ॥ १३-१२९-३ (८६३०३)
पुष्ट्यर्थमेताः सेवेत शान्त्यर्थमपि चैव ह ।
पयो दधि घृतं चासां सर्वपापप्रमोचनम् ॥ १३-१२९-४ (८६३०४)
गावस्तेजः परं प्रोक्तमिह लोके परत्र च ।
न गोभ्यः परमं किञ्चित्पवित्रं भरतर्षभ ॥ १३-१२९-५ (८६३०५)
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
पितामहस्य संवादमिन्द्रस्य च युधिष्ठिर ॥ १३-१२९-६ (८६३०६)
पराभूतेषु दैत्येषु शक्रस्त्रिभुवनेश्वरः ।
प्रजाः समुदिताः सर्वाः सत्यधर्मपरायणाः ॥ १३-१२९-७ (८६३०७)
अथर्षयः सगन्धर्वाः किन्नरोरगराक्षसाः ।

देवासुरसुपर्णाश्च प्रजानां पतयस्तथा ।
पर्युपासत कौन्तेय कदाचिद्वै पितामहम् ॥ १३-१२९-८ (८६३०८)
नारदः पर्वतश्चैव विश्वावसुहहाहुहूः ।
दिव्यतानेषु गायन्तः पर्युपासत तं प्रभुम् ॥ १३-१२९-९ (८६३०९)
तत्र दिव्यानि पुष्पाणि प्रावहत्पवनस्तदा ।
आजह्रुर्ऋतवश्चापि सुगन्धीनि पृथक्पृथक् ॥ १३-१२९-१० (८६३१०)
तस्मिन्देवसमावाये सर्वभूतसमागमे ।
दिव्यवादित्रसंघुष्टे दिव्यस्त्रीचारणावृते ।
इन्द्रः पप्रच्छ देवेशमभिवाद्य प्रणम्य च ॥ १३-१२९-११ (८६३११)
देवानां भगवन्कस्माल्लोकेशानां पितामह ।
उपरिष्टाद्गवां लोक एतदिच्छामि वेदितुम् ॥ १३-१२९-१२ (८६३१२)
किं तपो ब्रह्मचर्यं वा गोभिः कृतमिहेश्वर ॥
देवानामुपरिष्टाद्यद्वसन्त्यरजसः सुखम् ॥ १३-१२९-१३ (८६३१३)
ततः प्रोवाच ब्रह्मा तं शक्रं बलनिषूदनम् ।
अवज्ञातास्त्वया नित्यं गावो बलनिषूदन ॥ १३-१२९-१४ (८६३१४)
तेन त्वमासां माहात्म्यं न वेत्सि शृणु यत्प्रभो ।
गवां प्रभावं परमं माहात्म्यं च सुरर्षभ ॥ १३-१२९-१५ (८६३१५)
यज्ञाङ्गं कथिता गावो यज्ञ एव च वासव ।
एताभिश्च विना विज्ञो न वर्तेत कथञ्चन ॥ १३-१२९-१६ (८६३१६)
धारयन्ति प्रजाश्चैताः पयसा हविषा तथा ।
एतासां तनयाश्चापि कृषियोगमुपासते ॥ १३-१२९-१७ (८६३१७)
जनयन्ति च धान्यानि बीजानि विविधानि च ।
ततो यज्ञाः प्रवर्तन्ते हव्यं कव्यं च सर्वशः ॥ १३-१२९-१८ (८६३१८)
पयो दधि घृतं चैव पुण्याश्चैताः सुराधिप ।
वहन्ति विविधान्भोगान्क्षुत्तृष्णापरिपीडिताः ॥ १३-१२९-१९ (८६३१९)
मुनींश्च धारयन्तीह प्रजाश्चैवापि कर्मणा ।
वासवाऽकूटवाहिन्यः कर्मणा सुकृतेन च ॥ १३-१२९-२० (८६३२०)
उपरिष्टात्ततोऽस्माकं वसन्त्येताः सदैव हि ।
एतत्ते कारणं शक्र निवासकृतमध्य वै ।
गावो देवोपरिष्टाद्धि समाख्याताः शतक्रतो ॥ १३-१२९-२१ (८६३२१)
एता हि वरदत्ताश्च वरदाश्चापि वासव ।
सुरभ्यः पुण्यकर्मिण्यः पावनाः शुभलक्षणाः ॥ १३-१२९-२२ (८६३२२)
यदर्थं गां गताश्चैव सुरभ्यः सुरसत्तम ।
तच्च मे शृणु कार्त्स्न्येन वदतो बलसूदन ॥ १३-१२९-२३ (८६३२३)
पुरा देवयुगे तात दैत्येन्द्रेषु महात्मसु ।
त्रींल्लोकाननुशासत्सु विष्णौ गर्भत्वमागते ॥ १३-१२९-२४ (८६३२४)

अदित्यां तप्यमानायां तपो घोरं सुदुश्चरम् ।
पुत्रार्थममरश्रेष्ठ पादेनैकेन नित्यदा ॥ १३-१२९-२५ (८६३२५)
तां तु दृष्ट्वा महादेवीं तप्यमानां महत्तपः ।
दक्षस्य दुहिता देवी सुरभिर्नाम नामतः ॥ १३-१२९-२६ (८६३२६)
अतप्यत तपो घोरं हृष्टा धर्मपरायणा ।
कैलासशिखरे रम्ये देवगन्धर्वसेविते ॥ १३-१२९-२७ (८६३२७)
व्यतिष्ठदेकपादेन परमं योगमास्थिता ।
दशवर्षसहस्राणि दशवर्षशतानि च ॥ १३-१२९-२८ (८६३२८)
सन्तप्तास्तपसा तस्या देवाः सर्षिमहोरगाः ।
तत्र गत्वा मया सार्धं पर्युपासत तां शुभां ॥ १३-१२९-२९ (८६३२९)
अथाहमब्रवं तत्र देवीं तां तपसाऽन्विताम् ।
किमर्थं तप्यसे देवि तपो घोरमनिन्दिते ॥ १३-१२९-३० (८६३३०)
प्रीतस्तेऽहं महाभागो तपसाऽनेन शोभने ।
वरयस्व वरं देवि दातास्मीति पुरन्दर ॥ १३-१२९-३१ (८६३३१)
सुरभिरुवाच। १३-१२९-३२क्ष् (७१६७)
वरेण भगवन्मह्यं कृतं लोकपितामह ।
एष एव वरो मेऽद्य यत्प्रीतोसि ममानघ ॥ १३-१२९-३२ (८६३३२)
ब्रह्मोवाच। १३-१२९-३३क्ष् (७१६८)
तामेव ब्रुवतीं देवीं सुरभिं त्रिदशेश्वर ।
प्रत्यब्रवं यद्देवेन्द्र तन्निबोध शचीपते ॥ १३-१२९-३३ (८६३३३)
अलोभकाम्यया देवि तपसा शुचिना च ते ।
प्रसन्नोऽहं वरं तस्मादमरत्वं ददामि ते ॥ १३-१२९-३४ (८६३३४)
त्रयाणामपि लोकानामुपरिष्टान्निवत्स्यसि ।
मत्प्रसादाच्च विख्यातो गोलोकः सम्भविष्यति ॥ १३-१२९-३५ (८६३३५)
मानुषेषु च कुर्वाणाः प्रजाः कर्म शुभास्तव ।
निवत्स्यन्ति महाभागो सर्वा दुहितरश्च ते ॥ १३-१२९-३६ (८६३३६)
मनसा चिन्तिता भोगास्त्वया वै दिव्यमानुषाः ।
यच्च स्वर्गसुखं देवि तत्ते सम्पत्स्यते शुभे ॥ १३-१२९-३७ (८६३३७)
तस्या लोकाः सहस्राक्ष सर्वकामसमन्विताः ।
न तत्र क्रमते मृत्युर्न जरा न च पावकः ।
न दैन्यं नाशुभं किञ्चिद्विद्यते तत्र वासव ॥ १३-१२९-३८ (८६३३८)
तत्र दिव्यान्यरण्यानि दिव्यानि भवनानि च ।
विमानानि सुयुक्तानि कामगानि च वासव ॥ १३-१२९-३९ (८६३३९)
ब्रह्मचर्येण तपसा सत्येन च दमेन च ।
दानैश्च विविधैः पुण्यैस्तथा तीर्थानुसेवनात् ॥ १३-१२९-४० (८६३४०)
तपसा महता चैव सुकृतेन च कर्मणा ।

शक्यः समासादयितुं गोलोकः पुष्करेक्षण ॥ १३-१२९-४१ (८६३४१)
एतत्ते सर्वमाख्यातं मया शक्रानुपृच्छते ।
न ते परिभवः कार्यो गवामसुरसूदन ॥ १३-१२९-४२ (८६३४२)
भीष्म उवाच। १३-१२९-४३क्ष् (७१६९)
एतच्छ्रुत्वा सहस्राक्षः पूजयामास नित्यदा ।
गाश्चक्रे बहुमानं च तासु नित्यं युधिष्ठिर ॥ १३-१२९-४३ (८६३४३)
एतत्ते सर्वमाख्यातं पावनं च महाद्युते ।
पवित्रं परमं चापि गवां माहात्म्यमुत्तमम्। १३-१२९-४४ (८६३४४)
कीर्तितं पुरुषव्याघ्र सर्वपापविमोचनम् ।
य इदं कथयेन्नित्यं ब्राह्मणेभ्यः समाहितः ॥ १३-१२९-४५ (८६३४५)
हव्यकव्येषु यज्ञेषु पितृकार्येषु चैव ह ।
सार्वकामिकमक्षय्यं पितॄंस्तस्योपतिष्ठते ॥ १३-१२९-४६ (८६३४६)
गोषु भक्तश्च लभते यद्यदिच्छति मानवः ।
स्त्रियोपि भक्ता या गोषु ताश्च काममवाप्नुयुः ॥ १३-१२९-४७ (८६३४७)
पुत्रार्थी लभते पुत्रं कन्यार्थी तामवाप्नुयात् ।
धनार्थी लभते वित्तं धर्मार्थी धर्ममाप्नुयात् ॥ १३-१२९-४८ (८६३४८)
विद्यार्थी चाप्नुयाद्विद्यां सुखार्थी प्राप्नुयात्सुखम् ।
न किञ्चिद्दुर्लभं चैव गवां भक्तस्य भारत ॥ ॥ १३-१२९-४९ (८६३४९)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
एकोनत्रिंशदधिकशततमोऽध्यायः ॥ १२८ ॥
Mahabharata - Anushaasana Parva - Chapter Footnotes

७-१२९-२० वासव अकूटवाहिन्यः अमायाव्यवहारिण्यः ॥
७-१२९-२१ निवासार्थं कृतं निवासकृतम् ॥
७-१२९-४८ कन्या पतिमवाप्नुयादिति क थ ध पाठः ॥

---

अनुससनपर्व-अध्यय१३०
॥ श्रीः ॥
१३.१३०. अध्यायः १३०

अथ दानधर्मपर्व ॥ १ ॥
Mahabharata - Anushaasana Parva - Chapter Topics
युधिष्ठिरेण सुवर्णोत्पत्तिप्रकारं पृष्टेन भीष्मेण
तत्प्रतिपादकवसिष्ठपरसुरामसंवादानुवादारम्भः ॥ १ ॥

युधिष्ठिर उवाच ।
उक्तं पितामहेनेदं गवां दानमनुत्तमम् ।
विशेषेण नरेन्द्राणामिह धर्ममवेक्षताम् ॥ १३-१३०-१ (८६३५०)
राज्यं हि सततं दुःखमाश्रमाश्च सुदुर्विदाः ।
परिचारेषु वै दुःखं दुर्धरं चाकृतात्मभिः ।
भूयिष्ठं च नरेन्द्राणां विद्यते न शुभा गतिः ॥ १३-१३०-२ (८६३५१)
पूयन्ते तत्र नियतं प्रयच्छन्तो वसुन्धराम् ।
सर्वे च कथिता धर्मास्त्वया मे कुरुनन्दन ॥ १३-१३०-३ (८६३५२)
एवमेव गवामुक्तं प्रदानं ते नृगेण ह ।
ऋषिणा नाचिकेतेन पूर्वमेव निदर्शितम् ॥ १३-१३०-४ (८६३५३)
वेदोपनिषदे चैव सर्वकर्मसु दक्षिणाः ।
सर्वक्रतुषु चोद्दिष्टा भूमिर्गावोऽथ काञ्चनम् ॥ १३-१३०-५ (८६३५४)
तत्र श्रुतिस्तु परमा सुवर्णं दक्षिणेति वै ।
एतदिच्छाम्यहं श्रोतुं पितामह यथातथम् ॥ १३-१३०-६ (८६३५५)
किं सुवर्णं कथं जातं कस्मिन्काले किमात्मकम् ।
किंदैव किंफलं चैव कस्माच्च परमुच्यते ॥ १३-१३०-७ (८६३५६)
कस्माद्दानं सुवर्णस्य पूजयन्ति मनीषिणः ।
कस्माच्च दक्षिणार्थं तद्यज्ञकर्मसु शस्यते ॥ १३-१३०-८ (८६३५७)
कस्माच्च पावनं श्रेष्ठं भूमेर्गोभ्यश्च काञ्चनम् ।
परमं दक्षिणार्थे च तद्ब्रवीहि पितामह ॥ १३-१३०-९ (८६३५८)
भीष्म उवाच। १३-१३०-१०क्ष् (७१७०)
शृणु राजन्नवहितो बहुकारणविस्तरम् ।
जातरूपसमुत्पत्तिमनुभूतं च यन्मया ॥ १३-१३०-१० (८६३५९)
पिता मम महातेजाः श्तनुर्निधनं गतः ।
तस्य दित्सुरहं श्राद्धं गङ्गाद्वारमुपागमम् ॥ १३-१३०-११ (८६३६०)
तत्रागम्य पितुः पुत्र श्राद्धकर्म समारभम् ।
मातो मे जाह्नवी चात्र साहाय्यमकरोत्तदा ॥ १३-१३०-१२ (८६३६१)
तत्रागतांस्तपस्सिद्धानुपवेश्य बहूनृषीन् ।
तोयप्रदानात्प्रभृति कार्याण्यहमथारभम् ॥ १३-१३०-१३ (८६३६२)
तत्समाप्य यथोद्दिष्टं पूर्वकर्म समाहितः ।
दातुं निर्वपणं सम्यग्यथावदहमारभम् ॥ १३-१३०-१४ (८६३६३)
ततस्तं दर्भविन्यासं भित्त्वा सुरुचिराङ्गदः ।
प्रलम्बाभरणो बाहुरुदतिष्ठद्विशाम्पते ॥ १३-१३०-१५ (८६३६४)
मुहूर्तमपि तं दृष्ट्वा परं विस्मयमागमम् ।

प्रतिग्रहीता साक्षान्मे पितेति भरतर्षभ ॥ १३-१३०-१६ (८६३६५)
ततो मे पुनरेवासीत्संज्ञा सञ्चिन्त्य शास्त्रतः ।
नायं वेदेषु विहितो विधिर्हस्त इति प्रभो ।
पिण्डो देयो नरेणेह ततो मतिरभून्मम ॥ १३-१३०-१७ (८६३६६)
साक्षान्नेह मनुष्यस्य पिण्डं हि पितरः क्वचित् ।
गृह्णन्ति विहितं चेत्थं पिण्डो देयः कुशेष्विति ॥ १३-१३०-१८ (८६३६७)
ततोऽहं तदनादृत्य पितुर्हस्तनिदर्शनम् ।
शास्त्रप्रामाण्यसूक्ष्मं तु विधइं पिण्डस्य संस्मरन् ॥ १३-१३०-१९ (८६३६८)
ततो दर्भेषु तत्सर्वमददं भरतर्षभ ।
शास्त्रमार्गानुसारेण तद्विद्धि मनुजर्षभ ॥ १३-१३०-२० (८६३६९)
ततः सोऽन्तर्हितो बाहुः पितुर्मम जनाधिप ।
ततो मां दर्शयामासुः स्वप्नान्ते पितरस्तथा ॥ १३-१३०-२१ (८६३७०)
प्रीयमाणास्तु मामूचुः प्रीताः स्म भरतर्षभ ।
विज्ञानेन तवानेन यन्न मुह्यसि धर्मतः ॥ १३-१३०-२२ (८६३७१)
त्वया हि कुर्वता शास्त्रं प्रमाणमिह पार्थिव ।
आत्मा धर्मः श्रुतं वेदाः पितरश्चर्षिभिः सह ॥ १३-१३०-२३ (८६३७२)
साक्षात्पितामहो ब्रह्मा गुरवोऽथ प्रजापतिः ।
प्रमाणमुपनीता वै स्थिताश्च न विचालिताः ॥ १३-१३०-२४ (८६३७३)
तदिदं सम्यगारब्धं त्वयाऽद्य भरतर्षभ ।
किन्तु भूमेर्गवां चार्थे सुवर्णं दीयतामिति ॥ १३-१३०-२५ (८६३७४)
एवं वयं च धर्मश्च सर्वे चास्मत्पितामहाः ।
पाविता वै भविष्यन्ति पावनं हि परं हि तत् ॥ १३-१३०-२६ (८६३७५)
दश पूर्वान्दशैवान्यांस्तथा सन्तारयन्ति ते ।
सुवर्णं ये प्रयच्छन्ति एवं मत्पितरोऽब्रुवन् ॥ १३-१३०-२७ (८६३७६)
ततोऽहं विस्मितो राजन्प्रतिबुद्धो विशाम्पते ।
सुवर्णदानेऽकरवं मतिं च भरतर्षभ ॥ १३-१३०-२८ (८६३७७)
इतिहासमिमं चापि शृणु राजन्पुरातनम् ।
जामदग्न्यं प्रति विभो धन्यमायुष्यमेव च ॥ १३-१३०-२९ (८६३७८)
जामदग्न्येन रामेण तीव्ररोषान्वितेन वै ।
त्रिःसप्तकृत्वः पृथिवी कृता निःक्षत्रिया पुरा ॥ १३-१३०-३० (८६३७९)
ततो जित्वा महीं कृत्स्नां रामो राजीवलोचनः ।
आजहार क्रतुं वीरो ब्रह्मक्षत्रेण पूजितम् ॥ १३-१३०-३१ (८६३८०)
वाजिमेधं महाराज सर्वकामसमन्वितम् ।
पावनं सर्वभूतानां तेजोद्युतिविवर्धनम् ॥ १३-१३०-३२ (८६३८१)
विपाप्मा च स तेजस्वी तेन क्रतुफलेन च ।
नैवात्मनोऽथ लघुतां जामदग्न्योऽध्यगच्छत ॥ १३-१३०-३३ (८६३८२)

स तु क्रतुवरेणेष्ट्वा महात्मा दक्षिणावता ।
पप्रच्छागमसम्पन्नानृषीन्देवांश्च भारत ॥ १३-१३०-३४ (८६३८३)
पावनं यत्परं नृणामुग्रे कर्मणि वर्तताम् ।
तदुच्यतां महाभागा इति जागघृणोऽब्रवीत् ॥ १३-१३०-३५ (८६३८४)
इत्युक्ता वेदशास्त्रज्ञास्तमूचुस्ते महर्षयः ।
राम विप्राः सत्क्रियन्तां वेदप्रामाण्यदर्शनात् ॥ १३-१३०-३६ (८६३८५)
भूयश्च विप्रर्षिगणाः प्रष्टव्याः पावनं प्रति ।
ते यद्ब्रूर्महाप्राज्ञास्तच्चैव समुदाचर ॥ १३-१३०-३७ (८६३८६)
ततो वसिष्ठं देवर्षिमगस्त्यमथ काश्यपम् ।
तमेवार्तं महातेजाः पप्रच्छ भृगुनन्दनः ॥ १३-१३०-३८ (८६३८७)
जाता मतिर्मे विप्रेन्द्राः कथं पूयेयमित्युत ।
केन वा कर्मयोगेन प्रदानेनेह केन वा ॥ १३-१३०-३९ (८६३८८)
यदि वोऽनुग्रहकृता बुद्धिर्मां प्रति सत्तमाः ।
प्रबूत पावनं किं मे भवेदिति तपोधनाः ॥ १३-१३०-४० (८६३८९)
ऋषय ऊचुः। १३-१३०-४१क्ष् (७१७१)
गाश्च भूमिं च वित्तं च दत्त्वेह भृगुनन्दन ।
पापकृत्पूयते मर्त्य इति भार्गव शुश्रुम ॥ १३-१३०-४१ (८६३९०)
अन्यद्दानं तु विप्रर्षे श्रूयतां पावनं महत् ।
दिव्यमत्यद्भुताकारमपत्यं जातवेदसः ॥ १३-१३०-४२ (८६३९१)
दग्ध्वा लोकान्पुरा वीर्यात्सम्भूतमिह शुश्रुम ।
सुवर्णमिति विख्यातं तद्ददत्सिद्धिमेष्यसि ॥ १३-१३०-४३ (८६३९२)
ततोऽब्रवीद्वसिष्ठस्तं भगवान्संशितव्रतः ।
शृणु राम यथोत्पन्नं सुवर्णमनलप्रभम् ॥ १३-१३०-४४ (८६३९३)
फलं दास्यति ते यत्तु दाने परमिहोच्यते ।
सुवर्णं यच्च यस्माच्च यथा च गुणवत्तमम् ॥ १३-१३०-४५ (८६३९४)
तन्निबोध महाबाहो सर्वं निगदतो मम ।
अग्निषोमात्मकमिदं सुवर्णं विद्धि निश्चये ॥ १३-१३०-४६ (८६३९५)
अजोऽग्निर्वरुणो मेषः सूर्योऽश्व इति दर्शनम् ।
कुञ्जराश्च मृगा नागा महिषाश्चासुरा इति ॥ १३-१३०-४७ (८६३९६)
कुक्कुटाश्च वराहाश्च राक्षसा भृगुनन्दन ।
इडा गावः पयः सोमो भूमिरित्येव च स्मृतिः ॥ १३-१३०-४८ (८६३९७)
जगत्सर्वं च निर्मथ्य तेजोराशिः समुत्थितः ।
सुवर्णमेभ्यो विप्रर्षे रत्नं परममुत्तमम् ॥ १३-१३०-४९ (८६३९८)
एतस्मात्कारणाद्देवा गन्धर्वोरगराक्षसाः ।
मनुष्याश्च पिशाचाश्च प्रयता धारयन्ति तत् ॥ १३-१३०-५० (८६३९९)
मुकुटैरङ्गदयुतैरलङ्कारैः पृथग्विधैः ।

सुवर्णविकृतैस्तत्र विराजन्ते भृगूत्तम ॥ १३-१३०-५१ (८६४००)
तस्मात्सर्वपवित्रेभ्यः पवित्रं परमं स्मृतम् ।
भूमेर्गोभ्योऽथ रत्नेभ्यस्तद्विद्धि मनुजर्षभ ॥ १३-१३०-५२ (८६४०१)
पृथिवीं गाश्च दत्त्वेह यच्चान्यदपि किञ्चन ।
विशिष्यते सुवर्णस्य दानं परमकं विभो ॥ १३-१३०-५३ (८६४०२)
अक्षयं पावनं चैव सुवर्णममरद्युते ।
प्रयच्छ द्विजमुख्येभ्यः पावनं ह्येतदुत्तमम् ॥ १३-१३०-५४ (८६४०३)
सुवर्णमेव सर्वासु दक्षिणासु विधीयते ।
सुवर्णं ये प्रयच्छन्ति सर्वदास्ते भवन्त्युत ॥ १३-१३०-५५ (८६४०४)
देवतास्ते प्रयच्छन्ति ये सुवर्णं ददत्यथ ।
अग्निर्हि देवताः सर्वाः सुवर्णं च तदात्मकम् ॥ १३-१३०-५६ (८६४०५)
तस्मात्सुवर्णं ददता दत्ताः सर्वाः स्म देवताः ।
भवन्ति पुरुषव्याघ्र न ह्यतः परमं विदुः ॥ १३-१३०-५७ (८६४०६)
भूय एव च महात्म्यं सुवर्णस्य निबोध मे ।
गदतो मम विप्रर्षे सर्वशस्त्रभृतांवर ॥ १३-१३०-५८ (८६४०७)
मया श्रुतमिदं पूर्वं पुराणे भृगुनन्दन ।
प्रजापतेः कथयतो मनोः स्वायंभुवस्य वै ॥ १३-१३०-५९ (८६४०८)
शूलपाणेर्भगवतो रुद्रस्य च महात्मनः ।
गिरौ हिमवति श्रेष्ठे तदा भृगुकुलोद्वह ॥ १३-१३०-६० (८६४०९)
देव्या विवाहे निर्वृत्ते रुद्राण्या भृगुनन्दन ।
समागमे भगवतो देव्या सह महात्मनः ॥ १३-१३०-६१ (८६४१०)
ततः सर्वे समुद्विग्रा देवा रुद्रमुपागमन् ॥
ते महादेवमासीनं देवीं च वरदामुमाम्। १३-१३०-६२ (८६४११)
प्रसाद्य शिरसा सर्वे रुद्रमूचुर्भृगूद्वह ॥
अयं समागमो देव देव्या सह तवानघ। १३-१३०-६३ (८६४१२)
तपस्विनस्तपस्विन्या तेजस्विन्याऽतितेजसः ॥
अमोघतेजास्त्वं देव देवी चेयमुमा तथा। १३-१३०-६४ (८६४१३)
अपत्यं युवयोर्देव बलवद्भविता विभो ।
तन्नूनं त्रिषु लोकेषु न किञ्चिच्छेषयिष्यति ॥ १३-१३०-६५ (८६४१४)
तदेभ्यः प्रणतेभ्यस्त्वं देवेभ्यः पृथुलोचन ।
वरं प्रयच्छ लोकेश त्रैलोक्यहितकाम्यया ॥ १३-१३०-६६ (८६४१५)
अपत्यार्थं निगृह्णीष्व तेजः परमकं विभो ।
श्त्रैलोक्यसारौ हि युवां लोकं सन्तापयिष्यथ ॥ १३-१३०-६७ (८६४१६)
तदपत्यं हि युवयोर्देवानभिभवेद्ध्रुवम् ।
न हि ते पृथिवी देवी न च द्यौर्न दिवं विभो ॥ १३-१३०-६८ (८६४१७)
नेदं धारयितुं शक्ताः समस्ता इति मे मतिः ।

तेजःप्रभावनिर्दग्धं तस्मात्सर्वमिदं जगत् ॥ १३-१३०-६९ (८६४१८)
तस्मात्प्रसादं भगवन्कर्तुमर्हसि नः प्रभो ।
न देव्यां सम्भवेत्पुत्रो भवतः सुरसत्तम ।
धैर्यादेव निगृह्णीष्व तेजो ज्वलितमुत्तमम् ॥ १३-१३०-७० (८६४१९)
इति तेषां कथयतां भगवान्वृषभध्वजः ।
एवमस्त्विति देवांस्तान्विप्रर्षे प्रत्यभाषत ॥ १३-१३०-७१ (८६४२०)
इत्युक्त्वा चोर्ध्वमनयद्रेतो वृषभवाहनः ।
ऊर्ध्वरेषः समभवत्ततः प्रभृति चापि सः ॥ १३-१३०-७२ (८६४२१)
रुद्राणीति ततः क्रुद्धा प्रजोच्छेद तदा कृते ।
देवानथाब्रवीत्तत्र स्त्रीभावात्परुषं वचः ॥ १३-१३०-७३ (८६४२२)
यस्मादपत्यकामो वै भर्ता मे विनिवर्तितः ।
तस्मात्सर्वे सुरा भूयमनपत्या भविष्यथ ॥ १३-१३०-७४ (८६४२३)
प्रजोच्छेदो मम कृतो यस्माद्युष्माभिरद्य वै ।
तस्मात्प्रजा वः खगमाः सर्वेषां न भविष्यति ॥ १३-१३०-७५ (८६४२४)
पावकस्तु न तत्रासीच्छापकाले भृगूद्वह ।
देवा देव्यास्तथा शापादनपत्यास्ततोऽभवन् ॥ १३-१३०-७६ (८६४२५)
रुद्रस्तु तेजोऽप्रतिमं धारयामास वै तदा ।
प्रस्कन्नं तु ततस्तस्मात्किंचित्तत्रापतद्भुवि ॥ १३-१३०-७७ (८६४२६)
उत्पपात तदा वह्नौ ववृधे चाद्भुतोपमम् ।
तेजस्तेजसि संयुक्तमेकयोनित्वमागतम् ॥ १३-१३०-७८ (८६४२७)
एतस्मिन्नेव काले तु देवाः शक्रपुरोगमाः ।
असुरस्तारको नाम तेन सन्तापिता भृशम् ॥ १३-१३०-७९ (८६४२८)
आदित्या वसवो रुद्रा मरुतोऽथाश्विनावपि ।
साध्याश्च सर्वे संत्रस्ता दैतेयस्य पराक्रमात् ॥ १३-१३०-८० (८६४२९)
स्थानानि देवतानां हि विमानानि पुराणि च ।
ऋषीणां चाश्रमाश्चैव बभूवुरसुरैर्हृताः ॥ १३-१३०-८१ (८६४३०)
ते दीनमनसः सर्वे देवता ऋषयश्च ये ।
प्रजग्मुः शरणं देवं ब्रह्माणमजरं विभुम् ॥ ॥ १३-१३०-८२ (८६४३१)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
त्रिंशदधिकशततमोऽध्यायः ॥ १३० ॥

Mahabharata - Anushaasana Parva - Chapter Footnotes

७-१३०-३ पूयन्ते शुध्यन्ति ॥
७-१३०-२१ तृप्तास्ते पितरस्तथेति थ ध पाठः ॥
७-१३०-२७ नवपूर्वानधश्चान्यान्नव सन्तारयन्ति ते इति थ ध पाठः ॥

७-१३०-३३ लघुतां निष्पापताम् ॥

---

अनुससनपर्व-अध्यय१३१
॥ श्रीः ॥
१३.१३१. अध्यायः १३१

अथ दानधर्मपर्व ॥ १ ॥
Mahabharata - Anushaasana Parva - Chapter Topics
तारकासुरबाधितैर्देवैर्ब्रह्माणं प्रति स्वेषां
पार्वतीशापेनानपत्यत्वकथनपूर्वकमसुरवधोपायकथनप्रार्थना
॥ १ ॥
ब्रह्मणां देवान्प्रति अग्नेरसन्निहितत्वेन देवीशापाविषयतया
देवेन स्ववीर्यनिरोधकाले भुवि प्रस्कन्नकिञ्चिद्वीर्यांशस्य
तस्मिन्संसृष्टतया च तेन गङ्गायां
कुमारोत्पादनकथनेनाग्न्यन्वेषणचोदना ॥ २ ॥
अग्निना देवानां प्रार्थनया गङ्गायां स्वयंसृष्टरुद्रवीर्याधानम् ॥ ३ ॥
गङ्गयाऽग्निता स्वस्मिन्नाहितगर्भस्य मेरुगिरौ समुत्सर्जने
तदीयतेजोव्याप्तयावद्वस्तूनां काञ्चनीभावप्राप्तिः ॥ ४ ॥
एवं भीष्मेण सुवर्णोत्पत्तिप्रकारकथनम् ॥ ५ ॥

Mahabharata - Anushaasana Parva - Chapter Text

देवा ऊचुः ।
असुरस्तारको नाम त्वया दत्तवरः प्रभो ।
सुरानृषींश्च क्लिश्नाति वधस्तस्य विधीयताम् ॥ १३-१३१-१ (८६४३२)
तस्माद्भयं समुत्पन्नमस्माकं वै पितामह ।
परित्रायस्व नो देव न ह्यन्या गतिरस्ति नः ॥ १३-१३१-२ (८६४३३)
ब्रह्मोवाच। १३-१३१-३क्ष् (७१७२)
समोहं सर्वभूतानामधर्मं नेह रोचये ।
हन्यतां तारकः क्षिप्र सुरर्षिगणबाधिता ॥ १३-१३१-३ (८६४३४)
वेदा धर्माश्च नोच्छेदं गच्छेयुः सुरसत्तमाः ।
विहितं पूर्वमेवात्र मया वै व्येतु वो ज्वरः ॥ १३-१३१-४ (८६४३५)
देवा ऊचुः। १३-१३१-५क्ष् (७१७३)
वरदानाद्भगवतो दैतेयो बलगर्वितः ।
देवैर्न शक्यते हन्तु स कथं प्रशमं व्रजेत् ॥ १३-१३१-५ (८६४३६)
स हि नैव स्म देवानां नासुराणां न रक्षसाम् ।

वध्यः स्यामिति जग्राह वरं त्वत्तः पितामह ॥१३-१३१-६ (८६४३७)
देवाश्च शप्ता रुद्राण्या प्रजोच्छेदे पुरा कृते ।
न भविष्यति वोऽपत्यमिति सर्वे जगत्पते ॥१३-१३१-७ (८६४३८)
ब्रह्मोवाच। १३-१३१-८क्ष् (७१७४)
हुताशनो न तत्रासीच्छापकाले सुरोत्तमाः ।
स उत्पादयिताऽपत्यं वधाय त्रिदशद्विषाम् ॥१३-१३१-८ (८६४३९)
तद्वै सर्वानतिक्रम्य देवदानवराक्षसान् ।
मानुषानथ गन्धर्वान्नागानथ च पक्षिणः ॥१३-१३१-९ (८६४४०)
अस्त्रेणामोघपातेन शक्त्या तं घातयिष्यति ।
यतो वो भयपुत्पन्नं ये चान्ये सुरशत्रवः ॥१३-१३१-१० (८६४४१)
सनातनो हि सङ्कल्पः काम इत्यभिधीयते ।
रुद्रस्य तेजः प्रस्कन्नमग्नौ निपतितं च यत् ॥१३-१३१-११ (८६४४२)
तत्तजोऽग्निर्महद्भूतं द्वितीयमिव पावकम् ।
वधार्थं देवशत्रूणां गङ्गायां जनयिष्यति ॥१३-१३१-१२ (८६४४३)
स तु नावाप तं शापं नष्टः स हुतभुक्तदा ।
तस्माद्वो भयहृद्देवाः समुत्पत्स्यति पावकिः ॥१३-१३१-१३ (८६४४४)
अन्विष्यतां वै ज्वलनस्तथा चाद्य नियुज्यताम् ।
तारकस्य वधोपायः कथितो वै मयाऽनघाः ॥१३-१३१-१४ (८६४४५)
न हि तेजस्विनां शापास्तेजःसु प्रभवन्ति वै ।
बलान्यतिबलं प्राप्य दुर्बलानि भवन्ति वै ॥१३-१३१-१५ (८६४४६)
हन्यादवध्यान्वरदानपि चैव तपस्विनः ।
सङ्कल्पाभिरुचिः कामः सनातनतमोऽभवत् ॥१३-१३१-१६ (८६४४७)
जगत्पतिरनिर्देश्य सर्वगः सर्वभावनः ।
हृच्छयः सर्वभूतानां ज्येष्ठो रुद्रादपि प्रभुः ॥१३-१३१-१७ (८६४४८)
अन्विष्यतां स तु क्षिप्रं तेजोराशिर्हुताशनः ।
स वो मनोगतं कामं देवः सम्पादयिष्यति ॥१३-१३१-१८ (८६४४९)
एतद्वाक्यमुपश्रुत्य ततो देवा महात्मनः ।
जग्मु- संसिद्धसङ्कल्पाः पर्येषन्तो विभावसुम् ॥१३-१३१-१९ (८६४५०)
ततस्त्रैलोक्यमृषयो व्यचिन्वन्त सुरैः सह ।
काङ्क्षन्तो दर्शनं वह्नेः सर्वे तद्गतमानसाः ॥१३-१३१-२० (८६४५१)
परेण तपसा युक्ताः श्रीमन्तो लोकविश्रुताः ।
लोकानन्वचरन्सिद्धाः सर्व एव भृगूत्तम ।
नष्टमात्मनि संलीनं नाभिजग्मुर्हुताशनम् ॥ १३-१३१-२१ (८६४५२)
ततः संजातसंत्रासानग्निदर्शनलालसान् ।
जलेचरः क्लान्तमनास्तेजसाऽग्नेः प्रदीपितः ।
उवाच देवान्मण्डूको रसातलतलोत्थितः। १३-१३१-२२ (८६४५३)

रसातलतले देवा वसत्यग्निरिति प्रभो ।
सन्तापादिह सम्प्राप्तः पावकप्रभवादहम् ॥ १३-१३१-२३ (८६४५४)
स संसुप्तो जले देवा भगवान्हव्यवाहनः ।
अपः संसृज्य तेजोभिस्तेन सन्तापिता वयम् ॥ १३-१३१-२४ (८६४५५)
तस्य दर्शनमिष्टं वो यदि देवा विभावसोः ।
तत्रैवमधिगच्छध्वं कार्यं वो यदि वह्निना ॥ १३-१३१-२५ (८६४५६)
गम्यतां साधयिष्यामो वयं ह्यग्निभयात्सुराः ।
एतावदुक्त्वा मण्डूकस्त्वरितो जलमाविशत् ॥ १३-१३१-२६ (८६४५७)
हुताशनस्तु बुबुधे मण्डूकस्य च पैशुनम् ।
शशाप स तमासाद्य न रसान्वेत्स्यसीति वै ॥ १३-१३१-२७ (८६४५८)
तं वै संयुज्य शापेन मण्डूकं त्वरितो ययौ ।
अन्यत्र वासाय विभुर्न चात्मानमदर्शयत् ॥ १३-१३१-२८ (८६४५९)
देवास्त्वनुग्रहं चक्रुर्मण्डूकानां भृगूत्तम ।
यत्तच्छृणु महाबाहो गदतो मम सर्वशः ॥ १३-१३१-२९ (८६४६०)
देवा ऊचुः । १३-१३१-३०क्ष् (७१७५)
अग्निशापादजिह्वाऽपि रसज्ञानबहिष्कृताः ।
सरस्वतीं बहुविधां यूममुच्चारयिष्यथ ॥ १३-१३१-३० (८६४६१)
बिलवासं गतांश्चैव निराहारानचेतसः ।
गतासूनपि वः शुष्कान्भूमिः सन्धारयिष्यति ॥ १३-१३१-३१ (८६४६२)
तमोघनायामपि वै निशायां विचरिष्यथ ।
इत्युक्त्वा तांस्ततो देवाः पुनरेव महीमिमाम् ॥ १३-१३१-३२ (८६४६३)
परीयुर्ज्वलनस्यार्थे न चाविन्दन्हुताशनम् ।
अथ तान्द्विरदः कश्चित्सुरेन्द्रद्विरदोपमः ॥ १३-१३१-३३ (८६४६४)
अश्वत्थस्थोऽग्निरित्येवमाह देवान्भृगूद्वह ।
शशाप ज्वलनः सर्वान्द्विरदान्क्रोधमूर्च्छितः ॥ १३-१३१-३४ (८६४६५)
प्रतीपा भवतां जिह्वा भवित्रीति भृगूद्वह ।
इत्युक्त्वा निःसृतोऽश्वत्थादग्निर्वारणसूचितः ।
प्रविवेश शमीगर्भमथ वह्निः सुषुप्सया ॥ १३-१३१-३५ (८६४६६)
अनुग्रहं तु नागानां यं चक्रुः शृणु तं प्रभो ।
देवा भृगुकुलश्रेष्ठ प्रीत्या सत्यपराक्रमाः ॥ १३-१३१-३६ (८६४६७)
देवा ऊचुः । १३-१३१-३७क्ष् (७१७६)
प्रतीपया जिह्वयाऽपि सर्वाहारान्हरिष्यथ ।
वाचं चोच्चारयिष्यध्वमुच्चैरव्यञ्जिताक्षराम् ।
इत्युक्त्वा पुनरेवाग्निमनुसस्रुर्दिवौकसः ॥ १३-१३१-३७ (८६४६८)
अश्वत्थान्निःसृतश्चाग्निः शमीगर्भमुपाविशत् ।
शुकेन ख्यापितो विप्र तं देवाः समुपाद्रवन् ॥ १३-१३१-३८ (८६४६९)

शशाप सुकमग्निस्तु वाग्विहीनो भविष्यसि ।
जिह्वामावर्तयामास तस्यापि हुतभुक्तदा ॥ १३-१३१-३९ (८६४७०)
दृष्ट्वा तु ज्वलनं देवाः शुकमूचुर्दयान्विताः ।
भविता न त्वमत्यन्तं शुकत्वे नष्टवागिति ॥ १३-१३१-४० (८६४७१)
आवृत्तजिह्वस्य सतो वाक्यं कान्तं भविष्यति ।
बालस्येव प्रवृद्धस्य कलमव्यक्तमद्भुतम् ॥ १३-१३१-४१ (८६४७२)
इत्युक्त्वा तं शमीगर्भे वह्निमालक्ष्य देवताः ।
तदेवायतनं चक्रुः पुण्यं सर्वक्रियास्वपि ॥ १३-१३१-४२ (८६४७३)
तदाप्रभृति चाप्यग्निः शमीगर्भेषु दृश्यते ।
उत्पादने तथोपायमभिजग्मुश्च मानवाः ॥ १३-१३१-४३ (८६४७४)
आपो रसातले यास्तु संस्पृष्टाश्चित्रभानुना ।
ताः पर्वतप्रस्रवणैरूष्मां मुञ्चन्ति भार्गव ।
पावकेनाधिशयता सन्तप्तास्तस्य तेजसा ॥ १३-१३१-४४ (८६४७५)
अथाग्निर्देवता दृष्ट्वा बभूव व्यथितस्तदा ।
किमागमनमित्येवं तानपृच्छत पावकः ॥ १३-१३१-४५ (८६४७६)
तमूचुर्विबुधाः सर्वे ते चैव परमर्षयः ।
त्वां नियोक्ष्यामहे कार्ये तद्भवान्कर्तुमर्हति ।
कृते च तस्मिन्भविता तवापि सुमहान्गुणः ॥ १३-१३१-४६ (८६४७७)
अग्निरुवाच। १३-१३१-४७क्ष् (७१७७)
ब्रूत यद्भवतां कार्यं कर्तास्मि तदहं सुराः ।
भवतां तु नियोज्योस्मि मावोत्रास्तु विचारणा ॥ १३-१३१-४७ (८६४७८)
देवा ऊचुः। १३-१३१-४८क्ष् (७१७८)
असुरस्तारको नाम ब्रह्मणो वरदर्पितः ।
अस्मान्प्रबाधते वीर्याद्वधस्तस्य विधीयताम् ॥ १३-१३१-४८ (८६४७९)
इमान्देवगणांस्तात प्रजापतिगणांस्तथा ।
ऋषींश्चापि महाभाग परित्रायस्व पावक ॥ १३-१३१-४९ (८६४८०)
अपत्यं तेजसा युक्तं प्रवीरं जनयक प्रभो ।
यद्भयं नोऽसुरात्तस्मान्नाशयेद्धव्यवाहन ॥ १३-१३१-५० (८६४८१)
शप्तानां नो महादेव्या नान्यदस्ति परायणम् ।
अन्यत्र भवतो वीर तस्मात्त्रायस्व नः प्रभो ॥ १३-१३१-५१ (८६४८२)
इत्युक्तः स तथेत्युक्त्वा भगवान्हव्यवाहनः ।
जगामाथ दुराधर्षो गङ्गां भागीरथीं प्रति ॥ १३-१३१-५२ (८६४८३)
तया चाप्यभवन्मिश्रो गर्भं चास्यां दधे तदा ।
ववृधे स तदा गर्भः कक्षे कृष्णगतिर्यथा ॥ १३-१३१-५३ (८६४८४)
तेजसा तस्य देवस्य गङ्गा विह्वलचेतना ।
सन्तापमगमत्तीव्रं वोढुं सा न शशाक ह ॥ १३-१३१-५४ (८६४८५)

आहिते ज्वलनेनाथ गर्भे तेजःसमन्विते ।
गङ्गायामसुरः कश्चिद्भैरवं नादमानदत् ॥ १३-१३१-५५ (८६४८६)
अबुद्धिपतितेनाथ नादेन विपुलेन सा ॥
वित्रस्तोद्धान्तनयना गङ्गा विप्लुतलोचना ॥ १३-१३१-५६ (८६४८७)
विसंज्ञा नाशकद्गर्भं वोढुमात्मानमेव च ।
सा तु तेजःपरीताङ्गी कम्पमाना च जाह्नवी ॥ १३-१३१-५७ (८६४८८)
उवाच ज्वलनं विप्र तदा गर्भबलोद्धुता ।
नते शक्ताऽस्मि भगवंस्तेजसोऽस्य विधारणे ॥ १३-१३१-५८ (८६४८९)
विमूढाऽस्मि कृताऽनेन न मे स्वास्थ्यं यथा पुरा ।
विह्वला चास्मि भगवंश्चेतो नष्टं च मेऽनघ  १३-१३१-५९ (८६४९०)
धारणे नास्य शक्ताऽहं गर्भस्य तपतांवर ।
उत्स्रक्ष्येऽहमिमं दुःखान्न तु कामात्कथञ्चन ॥ १३-१३१-६० (८६४९१)
न तेजसाऽस्ति संस्पर्शो मम देव विभावसो ।
आपदर्थे हि सम्बन्धः सुसूक्ष्मोऽपि महाद्युते ॥ १३-१३१-६१ (८६४९२)
यदत्र गुणसम्पन्नमितरद्वा हुताशन ।
त्वय्येव तदहं मन्ये धर्माधर्मौ च केवलौ ॥ १३-१३१-६२ (८६४९३)
तामुवाच ततो वह्निर्धार्यतां धार्यतामिति ।
गर्भो मत्तेजसा युक्तो महागुणफलोदयः ॥ १३-१३१-६३ (८६४९४)
शक्ता ह्यसि महीं कृत्स्नां वोढुं धारयितुं तथा ।
न हि ते किञ्चिदप्राप्यमन्यतो धारणादृते ॥ १३-१३१-६४ (८६४९५)
गएवमुक्ता तु सा देवी तत्रैवान्तरधीयत ।
पावकश्चापि तेजस्वी कृत्वा कार्यं दिवौकसाम् ।
जगामेष्टं तदा देशं ततो भार्गवनन्दन ॥' १३-१३१-६५ (८६४९६)
सा वह्निना वार्यमाणा देवैरपि सरिद्वरा ।
समुत्ससर्ज तं गर्भं मेरौ गिरिवेर तदा ॥ १३-१३१-६६ (८६४९७)
समर्था धारणे चापि रुद्रतेजःप्रधर्षिता ।
नाशकत्सा तदा गर्भं सन्धारयितुमोजसा ।
समुत्ससर्ज तं दुःखाद्दीप्तवैश्वानरप्रभम् ॥ १३-१३१-६७ (८६४९८)
दर्शयामास चाग्निस्तां तदा गङ्गां भृगूद्वह ।
पप्रच्छ सरितां श्रेष्ठां कच्चिद्गर्भः सुखोदयः ॥ १३-१३१-६८ (८६४९९)
कीदृग्गुणोपि वा देवि कीदृग्रूपश्च दृश्यते ।
तेजसा केन वा युक्तः सर्वमेतद्ब्रवीहि मे ॥ १३-१३१-६९ (८६५००)
गङ्गोवाच। १३-१३१-७०क्ष् (७१७९)
जातरूपः स गर्भो वै तेजसा त्वमिवानघ ।
सुवर्णो विमलो दीप्तः पर्वतं चावभासयन् ॥ १३-१३१-७० (८६५०१)
पद्मोत्पलविमिश्राणां ह्रदानामिव शीतलः ।

गन्धोस्य स कदम्बानां तुल्यो वै तपतांवर ॥ १३-१३१-७१ (८६५०२)
तेजसा तस्य गर्भस्य भास्करस्येव रश्मिभिः ।
यद्द्रव्यं परिसंसृष्टं पृथिव्यां पर्वतेषु च ।
तत्सर्वं काञ्चनीभूतं समन्तात्प्रत्यदृश्यत ॥ १३-१३१-७२ (८६५०३)
पर्यधावत शैलांश्च नदीः प्रस्रवणानि च ।
व्यादीपयत्तेजसा च त्रैलोक्यं सचराचरम् ॥ १३-१३१-७३ (८६५०४)
एवंरूपः स भगवान्पुत्रस्ते हव्यवाहन ।
सूर्यवैश्वानरसमः कान्त्या सोम इवापरः ॥ १३-१३१-७४ (८६५०५)
वसिष्ठ उवाच। १३-१३१-७५क्ष् (७१८०)
एवमुक्त्वा तु सा देवी तत्रैवान्तरधीयत ।
पावकश्चापि तेजस्वी कृत्वा कार्यं दिवौकसाम् ।
जगामेष्टं ततो देशं तदा भार्गवनन्दन ॥ १३-१३१-७५ (८६५०६)
एतैः कर्मगुणैर्लोके नामाग्नेः परिगीयते ।
हिरण्यरेता इति वै ऋषिभिर्विबुधैस्तथा ।
पृथिवी च तदा देवी ख्याता वसुमतीति वै ॥ १३-१३१-७६ (८६५०७)
स तु गर्भो महातेजा गाङ्गेयः पावकोद्भवः ।
दिव्यं शरवणं प्राप्य ववृधेऽद्भुतदर्शनः ॥ १३-१३१-७७ (८६५०८)
ददृशुः कृत्तिकास्तं तु बालार्कसदृशद्युतिम् ।
जातस्नेहास्तु तं बालं पुपुषुः स्तन्यविस्रवैः ॥ १३-१३१-७८ (८६५०९)
ततः स कार्तिकेयत्वमवाप परमद्युतिः ।
स्कन्नत्वात्स्कन्दतां चापि गुहावासाद्गुहोऽभवत् ॥ १३-१३१-७९ (८६५१०)
एवं सुवर्णमुत्पन्नमपत्यं जातवेदसः ।
तत्र जाम्बूनदं श्रेष्ठं देवानामपि भूषणम् ॥ १३-१३१-८० (८६५११)
ततःप्रभृति चाप्येतज्जातरूपमुदाहृतम् ।
रत्नानामुत्तमं रत्नं भूषणानां तथैव च ॥ १३-१३१-८१ (८६५१२)
पवित्रं च पवित्राणां मङ्गलानां च मङ्गलम् ।
यत्सुवर्णं स भगवानग्निरीशः प्रजापतिः ॥ १३-१३१-८२ (८६५१३)
पवित्राणां पवित्रं हि कनकं द्विजसत्तमाः ।
अग्नीषोमात्मकं चैव जातरूपमुदाहृतम् ॥ ॥ १३-१३१-८३ (८६५१४)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
एकत्रिंशदधिकशततमोऽध्यायः ॥ १३१ ॥

Mahabharata - Anushaasana Parva - Chapter Footnotes

७-१३१-१३ नष्टः अदर्शं गतः ॥
७-१३१-१६ कामः काम्यमानो वह्निः ॥

७-१३१-२१ नष्टं अदर्शनं गतम् ।आत्मनि जले जलस्य तेजोजन्यत्वात् ॥
७-१३१-२६ मृग्यतां साधयिष्याम इति थ ध पाठः ॥
७-१३१-२७ न रसानिति ।रसनेन्द्रियहीनो भविष्यसीत्यर्थः ॥
७-१३१-२८ नच देवानदर्शयदिति थ ध पाठः ॥
७-१३१-३० अजिह्वा अपीति च्छेदः ॥
७-१३१-३९ जिह्वां च कर्तयामासेति ङ पाठः ॥
७-१३१-४१ बालस्येव प्रवृत्तस्येति ङ थ ध पाठः ॥
७-१३१-४४ ऊष्मा ऊष्माणम् ।अदिशयता अधिशयानेन।पावकेनाधिशयिता इति ट ध पाठः ॥
७-१३१-५३ दधे आदधे ।गर्भश्चास्याभवत्तदेति थ पाठः ॥
७-१३१-५४ सोढुं सा न शशाक हेति थ पाठः ॥
७-१३१-५६ अबुद्धिपतितेन अकस्माज्जातेन ॥
७-१३१-६१ न चेतसास्ति संस्पर्श इति थ पाठः ॥
७-१३१-७१ कदम्बानां कदम्बपुष्पाणाम् ॥
७-१३१-८३ अग्निष्टोभात्मकं चैवेति थ ध पाठः ॥

---

अनुससनपर्व-अध्यय१३२
॥ श्रीः ॥
१३.१३२. अध्यायः १३२

अथ दानधर्मपर्व ॥ १ ॥
Mahabharata - Anushaasana Parva - Chapter Topics
वसिष्ठेन परशुरामंप्रति सुवर्णप्रभावकथनप्रसङ्गेन
रुद्रयज्ञे भृग्वङ्गिरः प्रभृतिप्रभावादिकथनम् ॥ १ ॥

Mahabharata - Anushaasana Parva - Chapter Text

वसिष्ठ उवाच ।
अपि चेदं पुरा राम श्रुतं मे ब्रह्मदर्शनम् ।
पितामहस्य यद्वृत्तं ब्रह्मणः परमात्मनः ॥ १३-१३२-१ (८६५१५)
देवस्य महतस्तात वारुणीं बिभ्रतस्तनुम् ।
ऐश्वर्ये वारुणेवाऽथ रुद्रस्येशस्य वै प्रभो ॥ १३-१३२-२ (८६५१६)
आजग्मुर्मुनयः सर्वे देवाश्चाग्निपुरोगमाः ।
यज्ञाङ्गानि च सर्वाणि वषड्कारश्च मूर्तिमान् ॥ १३-१३२-३ (८६५१७)
मूर्तिमन्ति च सामानि यजूंषि च सहस्रशः ।
ऋग्वेदश्चागमत्तत्र पदक्रमविभूषितः ॥ १३-१३२-४ (८६५१८)

लक्षणानि स्वरास्तोभा निरुक्ताः स्वरभक्तयः ।
ओंकारश्छन्दसां नेत्रं निग्रहप्रग्रहौ तथा ॥ १३-१३२-५ (८६५१९)
वेदाश्च सोपनिषदो विद्या सावित्र्यथापि च ।
भूतं भव्यं भविष्यच्च दधार भगवाञ्शिवः ॥ १३-१३२-६ (८६५२०)
संजुहावात्मनाऽऽत्मानं स्वयमेव तदा प्रभो ।
यज्ञं च शोभयामास बहुरूपं पिनाकधृत् ॥ १३-१३२-७ (८६५२१)
द्यौर्नभः पृथिवी खं च तथा चैवैष भूपतिः ।
सर्वविद्येश्वरः श्रीमानेष चापि विभावसुः ॥ १३-१३२-८ (८६५२२)
एष ब्रह्मा शिवो रुद्रो वरुणोऽग्निः प्रजापतिः ।
कीर्त्यते भगवान्देवः सर्वभूतपतिः शिवः ॥ १३-१३२-९ (८६५२३)
तस्य यज्ञः पशुपतेस्तपः क्रतव एव च ।
दीक्षा दीप्तव्रता देवी दिशश्च सदिगीश्वराः ॥ १३-१३२-१० (८६५२४)
देवपत्न्यश्च कन्याश्च देवानां चैव मातरः ।
आजग्मुः सहितास्तत्र तदा भृगुकुलोद्वह ।
यज्ञं पशुपतेः प्रीता वरुणस्य महात्मनः ॥ १३-१३२-११ (८६५२५)
स्वयंभुवस्तु ता दृष्ट्वा रेतः समपतद्भुवि ॥ १३-१३२-१२ (८६५२६)
तस्य शुक्रस्य निष्यन्दान्पांसून्सङ्गृह्य भूमितः ।
प्रास्यत्पूषा कराभ्यां वै तस्मिन्नेव हुताशने ॥ १३-१३२-१३ (८६५२७)
ततस्तस्मिन्सम्प्रवृत्ते सत्रे ज्वलितपावके ।
ब्रह्मणो जुह्वतस्तत्र प्रादुर्भावो बभूवह ॥ १३-१३२-१४ (८६५२८)
स्कन्नमात्रं च तच्छुक्रं स्रुवेण परिगृह्य सः ।
आज्यवन्मन्त्रतश्चापि सोऽजुहोद्भृगुनन्दन ॥ १३-१३२-१५ (८६५२९)
ततः स जनयामास भूतग्रामं च वीर्यवान् ।
तस्य तत्तेजसस्तस्माज्जज्ञे लोकेषु तैजसम् ॥ १३-१३२-१६ (८६५३०)
तमसस्तामसा भावा व्यापि सत्वं तथोभयम् ।
स गुणस्तेजसो नित्यं तमस्याकाशमेव च ।
सर्वभूतेषु च तथा सत्वं तेजस्तथोत्तमम् ॥ १३-१३२-१७ (८६५३१)
शुक्रे हुतेऽग्नौ तस्मिंस्तु प्रादुरासंस्त्रयः प्रभो ।
पुरुषा वपुषा युक्ताः स्वैः स्वैः प्रसवजैर्गुणैः ॥ १३-१३२-१८ (८६५३२)
भर्जनाद्भृगुरित्येवमङ्गारेभ्योऽङ्गिराऽभवत् ।
अङ्गारसंश्रयाच्चैव कविरित्यपरोऽभवत् ।
सह ज्वालाभइरुत्पन्नो भृगुस्तस्माद्भृगुः स्मृतः ॥ १३-१३२-१९ (८६५३३)
मरीचिभ्यो मरीचिस्तु मारीचः कश्यपो ह्यभूत् ।
अङ्गोरभ्योऽङ्गिरास्तात वालखिल्याः कुशोच्चयात् ॥ १३-१३२-२० (८६५३४)
अत्रैवात्रेति च विभो जातमत्रिं वदन्त्यपि ॥ १३-१३२-२१ (८६५३५)
तथा भस्मव्यपोहेभ्यो ब्रह्मर्षिगणसम्मताः ।

वैखानसाः समुत्पन्नास्तपः श्रुतगुणेप्सवः ॥ १३-१३२-२२ (८६५३६)
अश्रुतोऽस्य समुत्पन्नावश्विनौ रूपसम्मतौ ।
शेषाः प्रजानां पतयः स्रोतोभ्यस्तस्य जज्ञिरे ।
ऋषयो रोमकूपेभ्यः स्वेदाच्छन्दो बलान्मनः ॥ १३-१३२-२३ (८६५३७)
एतस्मात्कारणादाहुरग्निः सर्वास्तु देवताः ।
ऋषयः श्रुतसम्पन्ना वेदप्रामाण्यदर्शनात् ॥ १३-१३२-२४ (८६५३८)
यानि दारूणि निर्यासास्ते मासाः पक्षसंज्ञिताः ।
अहोरात्रा मुहूर्ताश्च वीतज्योतिश्च वारुणम् ॥ १३-१३२-२५ (८६५३९)
रौद्रं लोहितमित्याहुर्लोहितात्कनकं स्मृतम् ।
तन्मैत्रमिति विज्ञेयं धूमाच्च वसवः स्मृताः ॥ १३-१३२-२६ (८६५४०)
अर्चिषो याश्च ते रुद्रास्तथाऽऽदित्या महाप्रभाः ।
उद्दीप्तास्ते तथाऽङ्गारा ये धिष्ण्येषु दिवि स्थिताः ॥ १३-१३२-२७ (८६५४१)
अग्निर्नाथश्च लोकस्य तत्परं ब्रह्म तद्भवम् ।
सर्वकामदमित्याहुस्तत्र हव्यमुपावहन् ॥ १३-१३२-२८ (८६५४२)
ततोऽब्रवीन्महादेवो वरुणः पवनात्मकः ।
मम सत्रमिदं दिव्यमहं गृहपतिस्त्विह ॥ १३-१३२-२९ (८६५४३)
त्रीणि पूर्वाण्यपत्यानि मम तानि न संशयः ।
इति जानीत खगमा मम यज्ञफलं हि तत् ॥ १३-१३२-३० (८६५४४)
अग्निरुवाच। १३-१३२-३१क्ष् (७१८१)
मदङ्गेभ्यः प्रसूतानि मदाश्रयकृतानि च ।
ममैव तान्मपत्यानि मम शुक्लं हुतं हि तत् ॥ १३-१३२-३१ (८६५४५)
अथाब्रवील्लोकगुरुर्ब्रह्मा लोकपितामहः ।
ममैव तान्यपत्यानि मम शुक्लं हुतं हि तत् ॥ १३-१३२-३२ (८६५४६)
अहं वक्ता च मन्त्रस्य होता शुक्रस्य चैव ह ।
यस्य बीजं फलं तस्य शुक्रं चेत्कारणं मतम् ॥ १३-१३२-३३ (८६५४७)
ततोऽब्रुवन्देवगणाः पितामहमुपेत्य वै ।
कृताञ्जलिपुटाः सर्वे शिरोभिरभिवन्द्य च ॥ १३-१३२-३४ (८६५४८)
वयं च भगवन्सर्वे जगच्च सचराचरम् ।
तवैव प्रसवाः सर्वे तस्मादग्निर्विभावसुः ।
वरुणश्चेश्वरो देवो लभतां काममीप्सितम् ॥ १३-१३२-३५ (८६५४९)
निसर्गाद्ब्रह्मणश्चापि वरुणो यादसाम्पतिः ।
जग्राह वै भृगु पूर्वमपत्यं सूर्यवर्चसम् ॥ १३-१३२-३६ (८६५५०)
ईश्वरोऽङ्गिरसं चाग्नेरपत्यार्थमकल्पयत् ।
पितामहस्त्वपत्यं वैकविं जग्राह तत्त्ववित् ॥ १३-१३२-३७ (८६५५१)
तदा स वारुणिः ख्यातो भृगुः प्रसवकर्मकृत् ।
आग्नेयस्त्वङ्गिराः श्रीमान्कविर्ब्राह्मो महायशाः ।

भार्गवाङ्गिरसौ लोके लोकसन्तानलक्षणौ ॥ १३-१३२-३८ (८६५५२)
एते विप्रवराः सर्वे प्रजानां पतयस्त्रयः ।
सर्वं सन्तानमेतेषामिदमित्युपधारय ॥ १३-१३२-३९ (८६५५३)
भृगोस्तु पुत्राः सप्तासन्सर्वे तुल्या भृगोर्गुणैः ।
च्यवनो वज्रशीर्षश्च शुचिरौर्वस्तथैव च ॥ १३-१३२-४० (८६५५४)
शुक्रो वरेण्यश्च विभुः सवनश्चेति सप्त ते ।
भार्गवा वारुणाः सर्वे येषां वंशे भवानपि ॥ १३-१३२-४१ (८६५५५)
अषाटौ चाङ्गिरसः पुत्रा वारुणास्तेऽप्यवारुणाः ।
बृहस्पतिरुचथ्यश्च वयस्यः शान्तिरेव च ॥ १३-१३२-४२ (८६५५६)
घोरो विरूपः संवर्तः सुधन्वा चाष्टमः स्मृतः ।
एतेऽष्टौ वह्निजाः सर्वे ज्ञाननिष्ठा निरामयाः ॥ १३-१३२-४३ (८६५५७)
ब्राह्मणाश्च कवेः पुत्रा वारुणास्तेऽप्युदाहृताः ।
अष्टौ प्रसवजैर्युक्ता गुणैर्ब्रह्मविदः शुभाः ॥ १३-१३२-४४ (८६५५८)
कविः काव्यश्च विष्णुश्च बुद्धिमानुशना तथा ।
भृगुश्च वरुणश्चैव काश्यपोऽग्निश्च धर्मवित् ॥ १३-१३२-४५ (८६५५९)
अष्टौ कविसुता ह्येते सर्वमेभिर्जगत्ततम् ।
प्रजापतय एते हि प्रजानां यैरिमाः प्रजाः ॥ १३-१३२-४६ (८६५६०)
एवमङ्गिरसश्चैव कवेश्च प्रसवान्वयैः ।
भृगोश्च भृगुशार्दूल वंशजैः सततं जगत् ॥ १३-१३२-४७ (८६५६१)
वरुणश्चादितो विप्र जग्राह प्रभुरीश्वरः ।
कविं तात भृगुं चापि तस्मात्तौ वारुणौ स्मृतौ ॥ १३-१३२-४८ (८६५६२)
जग्राहाङ्गिरसं देवः शिखी तस्माद्धुताशनः ।
तस्मादाङ्गिरसा ज्ञेयाः सर्व एव तदन्वयाः ॥ १३-१३२-४९ (८६५६३)
ब्रह्मा पितामहः पूर्वं देवताभिः प्रसादितः ।
इमे नः सन्तरिष्यन्ति प्रजाभिर्जगदीश्वराः ॥ १३-१३२-५० (८६५६४)
सर्वे प्रजानां पतयः सर्वे चातितपस्विनः ।
त्वत्प्रसादादिमं लोकं धारयिष्यन्ति शाश्वतं ॥ १३-१३२-५१ (८६५६५)
तथैव वंशकर्तारस्तव तेजोविवर्धनाः ।
भवेयुर्वेदविदुषः सर्वे च कृतिनस्तथा ॥ १३-१३२-५२ (८६५६६)
देवपक्षचराः सौम्याः प्राजापत्या महर्षयः ।
अनन्तं ब्रह्म सत्यं च तपश्च परमं भुवि ॥ १३-१३२-५३ (८६५६७)
सर्वे हि वयमेते च तवैव प्रसवाः प्रभो ।
देवानां ब्राह्मणानां च त्वं हि कर्ता पितामह ॥ १३-१३२-५४ (८६५६८)
मारीचमादितः कृत्वा सर्वे चैवाथ भार्गवाः ।
अपत्यानीति सम्प्रेक्ष्य क्षमयाम पितामह ॥ १३-१३२-५५ (८६५६९)
अथ स्वेनैव रूपेणि प्रजनिष्यन्ति वै प्रजाः ।

स्थापयिष्यन्ति चात्मानं युगादिनिधने तथा ॥१३-१३२-५६ (८६५७०)
इत्युक्तः स तदा तैस्तु ब्रह्मा लोकपितामहः ।
ततेत्येवाब्रवीत्प्रीतस्तेऽपि जग्मुर्यथागतम् ॥१३-१३२-५७ (८६५७१)
एवमेतत्पुरावृत्तं तस्य यज्ञे महात्मनः ।
देवश्रेष्ठस्य लोकादौ वारुणीं बिभ्रतस्तनुम् ॥१३-१३२-५८ (८६५७२)
अग्निर्ब्रह्म पशुपतिः शर्वो रुद्रः प्रजापतिः ।
अग्नेरपत्यमेतद्वै सुवर्णमिति धारणाः ॥१३-१३२-५९ (८६५७३)
अग्न्यभावे च कुरुते वह्निस्थानेषु काञ्चनम् ।
जामदग्न्यप्रमाणज्ञो वेदश्रुतिनिदर्शनात् ॥१३-१३२-६० (८६५७४)
कुशस्तम्बे जुहोत्यग्निं सुवर्णे तत्र च स्थिते ।
वल्मीकस्य वपायां च कर्णे वाजस्य दक्षिणे ॥१३-१३२-६१ (८६५७५)
शकटोर्व्यां परस्याप्सु ब्राह्मणस्य करे तथा ।
हुते प्रीतिकरीमृद्धिं भगवांस्तत्र मन्यते ॥१३-१३२-६२ (८६५७६)
तस्मादग्निपराः सर्वे देवता इति शुश्रुम ।
ब्रह्मणो हि प्रभूतोऽग्निरग्नेरपि च काञ्चनम् ॥१३-१३२-६३ (८६५७७)
तस्माद्ये वै प्रयच्छन्ति सुवर्णं धर्मदर्शिनः ।
देवतास्ते प्रयच्छन्ति समस्ता इति नः श्रुतम् ॥१३-१३२-६४ (८६५७८)
तस्य वा तपसो लोकान्गाच्छतः परमां गतिम् ।
स्वर्लोके राजराज्येन सोभिषिच्येत भार्गव ॥१३-१३२-६५ (८६५७९)
आदित्योदयने प्राप्ते विधिमन्त्रपुरस्कृतम् ।
ददाति काञ्चनं यो वाः दुःस्वप्नं प्रतिहन्ति सः ॥१३-१३२-६६ (८६५८०)
ददात्युदितमात्रे यस्यस्य पाप्मा विधूयते ।
मध्याह्ने ददतो रुक्मं हन्ति पापमनागतम् ॥१३-१३२-६७ (८६५८१)
ददाति पस्चिमां सन्ध्यां यः सुवर्णं यतव्रतः ।
ब्रह्मवाय्वग्निसोमानां सालोक्यमुपयाति सः ॥१३-१३२-६८ (८६५८२)
सेन्द्रेषु चैव लोकेषु प्रतिष्ठा विन्दते शुभाम् ।
इह लोके यशः प्राप्य शान्तपाप्मा च मोदते ॥१३-१३२-६९ (८६५८३)
ततः सम्पद्यतेऽन्येषु लोकेष्वप्रतिमः सदा ।
अनावृतगतिश्चैव कामचारो भवत्युत ॥१३-१३२-७० (८६५८४)
न च क्षरति तेभ्यश्च यशश्चैवाप्नुते महत् ।
सुवर्णमक्षयं दत्त्वा लोकांश्चाप्नोति पुष्कलान् ॥१३-१३२-७१ (८६५८५)
यस्तु सञ्जनयित्वाऽग्निमादित्योदयनं प्रति ।
दद्याद्वै व्रतमुद्दिश्य सर्वकामान्समश्नुते ॥१३-१३२-७२ (८६५८६)
अग्निरित्येव तत्प्राहुः प्रदानं च सुखावहम् ।
यथेष्टगुणसंवृत्तं प्रवर्तकमिति स्मृतम् ॥१३-१३२-७३ (८६५८७)
एषा सुवर्णस्योत्पत्तिः कथिता ते मयाऽनघ ।

कार्तिकेयस्य च विभो तद्विद्धि भृगुनन्दन ॥ १३-१३२-७४ (८६५८८)
कार्तिकेयस्तु संवृद्धः कालेन महता तदा ।
देवैः सेनापतित्वेन वृतः सेन्द्रैर्भृगूद्वह ॥ १३-१३२-७५ (८६५८९)
जघान तारकं चापि दैत्यमन्यांस्तथाऽसुरान् ।
त्रिदशेन्द्राज्ञया ब्रह्मँल्लोकानां हितकाम्यया ॥ १३-१३२-७६ (८६५९०)
सुवर्णदाने च मया कथितास्ते गुणा विभो ।
तस्मात्सुवर्णं विप्रेभ्यः प्रयच्छ तदतांवर ॥ १३-१३२-७७ (८६५९१)
भीष्म उवाच। १३-१३२-७८क्ष् (७१८२)
इत्युक्तः स वसिष्ठेन जामदग्न्यः प्रतापवान् ।
ददौ सुवर्णं विप्रभ्यो व्यमुच्यत च किल्बिषात् ॥ १३-१३२-७८ (८६५९२)
एतत्ते सर्वमाख्यातं सुवर्णस्य महीपते ।
प्रदानस्य फलं चैव जन्म चास्य युधिष्ठिर ॥ १३-१३२-७९ (८६५९३)
तस्मात्त्वमपि विप्रेभ्यः प्रयच्छ कनकं बहुः ।
ददत्सुवर्णं नृपते किल्बिषाद्विप्रमोक्ष्यसि ॥ ॥ १३-१३२-८० (८६५९४)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
द्वात्रिंशदधिकशततमोऽध्यायः ॥ १३२ ॥

Mahabharata - Anushaasana Parva - Chapter Footnotes

७-१३२-४ ऋग्वेदोऽथर्ववेदश्चेति क ङ ध पाठः ॥
७-१३२-१४ प्रादुर्भावश्चरमधातुः ॥
७-१३२-१६ भूतग्रामं चतुर्विधं तत्तेजसस्तस्य त्रिगुणमयस्य
रेतसः सम्बन्धी यस्तेजोंशो रजोंशस्तस्मात्तैजसप्रवृत्तिप्रधानं
जङ्गममभूत् ॥
७-१३२-१७ तमसस्तमोंशात्तामसं स्थावरम् । सत्वांशस्तूभयत्रानुगतः ॥
७-१३२-१८ प्रसवजैः कारणजैर्गुणैः ॥
७-१३२-१९ सहयज्वभिरुत्पन्न इति ध पाठः ॥
७-१३२-२० वालखिल्याः शरोच्चयादिति ध पाठः ॥
७-१३२-२१ अत्रैव कुशोच्चये । अत्र अत्रैवेति सम्बन्धः। अत्रैवात्रिं
च हि विभो इति ध। पाठः ॥
७-१३२-२२ व्यपोहेभ्यः समूहेभ्यः । तथाग्नेस्तस्य भस्मभ्य
इति ध पाठः ॥
७-१३२-२३ अश्रुतः अश्रुसकाशात् । स्नोतोभ्यः श्रोत्रादीन्द्रियेभ्यः। बलात्
वीर्यात्। बलान्मख इति क ट ध पाठः ॥
७-१३२-२४ एतस्मादग्निजत्वात् ॥
७-१३२-२५ निर्यासा दारुगता लाक्षादयो वृक्षरसाः ॥

७-१३२-२७ दिविस्थिताः ग्रहतारादयः धिष्ण्येषु स्थानेषु ॥
७-१३२-३० त्रीणि भृग्वङ्गिरःकविसंज्ञानि ॥
७-१३२-४४ कवेः पुत्रा वारुणा इत्यनेनि स्वीयभागोपि कविर्ब्रह्मणा वरुणाय समर्पित इत्युन्नेयम् ॥
७-१३२-५० नोऽस्मान् सन्तरिष्यन्ति सन्तारयिष्यन्ति ॥
७-१३२-५२ विदुषो विद्वांसः ॥
७-१३२-५६ आदिनिधने उत्पत्तिप्रलययोरन्तराले ॥
७-१३२-५८ देवश्रेष्ठस्य रुद्रस्य ॥
७-१३२-५९ धारणा निश्चयः ॥
७-१३२-६१ ब्राह्मणपाण्यजकर्णदर्भस्तम्बाप्सु काष्ठेष्वित्येतानि श्रुतौ दृश्यन्ते ।वपायां रन्ध्रे ॥
७-१३२-६२ शकटोर्वी तु श्रुत्यन्तरात् ज्ञेया ।परस्य तीर्थादिरप्सु ॥
७-१३२-६४ सुवर्णं ये प्रयच्छन्ति नराः शुद्धेन चेतसेति ध.पाठः ॥
७-१३२-७१ तेभ्यो लोकेभ्यो न च क्षरति ॥

---

अनुससनपर्व-अध्यय१३३
॥ श्रीः ॥
१३.१३३. अध्यायः १३३

अथ दानधर्मपर्व ॥१ ॥
Mahabharata - Anushaasana Parva - Chapter Topics
भीष्मेण युधिष्ठिरंप्रति कुमारोत्पत्तिप्रकारस्य देवादिभिस्तस्मै क्रीडनकादिदानस्य तारकासुरवधादेश्च कथनम् ॥१ ॥

Mahabharata - Anushaasana Parva - Chapter Text

युधिष्ठिर उवाच ।
उक्ताः पितामहेनेह सुवर्णस्य विधानतः ।
विस्तरेण प्रदानस्य ये गुणाः श्रुतिलक्षणाः ॥१३-१३३-१ (८६५९५)
यत्तु कारणमुत्पत्तेः सुवर्णस्य प्रकीर्तितम् ।
स कथं तारकः प्राप्तो निधनं तद्ब्रवीहि मे ॥१३-१३३-२ (८६५९६)
उक्तं स दैवतानां हि अवध्य इति पार्थिव ।
कथं तस्याभवन्मृत्युर्विस्तरेण प्रकीर्तय ॥१३-१३३-३ (८६५९७)
एतदिच्छाम्यहं श्रोतुं त्वत्तः कुरुकुलोद्वह ।
कात्स्न्र्येन तारकवधं परं कौतूहलं हि मे ॥१३-१३३-४ (८६५९८)
भीष्म उवाच।१३-१३३-५क्ष् (७१८३)

विपन्नकृत्या राजेन्द्र देवता ऋषयस्तथा ।
कृत्तिकाश्चोदयामासुरपत्यभरणाय वै ॥ १३-१३३-५ (८६५९९)
न देवतानां काचिद्धि समर्था जातवेदसः ।
एता हि शक्तास्तं गर्भं सन्धारयितुमोजसा ॥ १३-१३३-६ (८६६००)
षण्णां तासां ततः प्रीतः पावको गर्भधारणात् ।
स्वेन तेजोविसर्गेण वीर्येण परमेण च ॥ १३-१३३-७ (८६६०१)
तास्तु षट् कृत्तिका गर्भं पुपुषुर्जातवेदसः ।
षट्सु वर्त्मसु तेजोऽग्नेः सकलं निहितं प्रभो ॥ १३-१३३-८ (८६६०२)
ततस्ता वर्धमानस्य कुमारस्य महात्मनः ।
तेजसाऽभिपरीताङ्ग्यो न क्वचिच्छर्म लेभिरे ॥ १३-१३३-९ (८६६०३)
ततस्तेजःपरीताङ्ग्यः सर्वाः काल उपस्थिते ।
समं गर्भं सुषुविरे कृतिकास्ता नरर्षभ ॥ १३-१३३-१० (८६६०४)
ततस्तं षडधिष्ठानं गर्भमेकत्वमागतम् ।
पृथिवी प्रतिजग्राह कृत्तिकानां समीपतः ॥ १३-१३३-११ (८६६०५)
स गर्भो दिव्यसंस्थानो दीप्तिमान्पावकप्रभः ।
दिव्यं शरवणं प्राप्य ववृधे प्रियदर्शनः ॥ १३-१३३-१२ (८६६०६)
ददृशुः कृत्तिकास्तं तु बालमर्कसमद्युतिम् ।
जातस्नेहाश्च सौहार्दात्पुपुषुः स्तन्तविस्रवैः ॥ १३-१३३-१३ (८६६०७)
अभवत्कार्तिकेयः स त्रैलोक्ये सचराचरे ।
स्कन्नत्वात्स्कन्दतां प्राप्तो गुहावासाद्गुहोऽभवत् ॥ १३-१३३-१४ (८६६०८)
ततो देवास्त्रयस्त्रिंशद्दिशश्च सदिगीश्वराः ।
रुद्रो धाता च विष्णुश्च यमः पूषाऽर्यमा भगः ॥ १३-१३३-१५ (८६६०९)
अंशो मित्रश्च साध्याश्च वासवो वसवोऽश्विनौ ।
आपो वायुर्नभश्चन्द्रो नक्षत्राणि ग्रहा रविः ॥ १३-१३३-१६ (८६६१०)
पृथग्भूतानि चान्यानि यानि देवगणानि वै ।
आजग्मुस्तेऽद्भुतं द्रष्टुं कुमारं ज्वलनात्मजम् ॥ १३-१३३-१७ (८६६११)
ऋषयस्तुष्टुवुश्चैव गन्धर्वाश्च जगुस्तथा ।
षडाननं कुमारं तु द्विषडक्षं द्विजप्रियम् ॥ १३-१३३-१८ (८६६१२)
पीनांसं द्वादशभुजं पावकादित्यवर्चसम् ।
शयानं शरगुल्मस्थं दृष्ट्वा देवाः सहर्षिभिः ।
लेभिरे परमं हर्षं मेनिरे चासुरं हतम् ॥ १३-१३३-१९ (८६६१३)
ततो देवाः प्रियाण्यस्य सर्व एव समाहरन् ।
क्रीडतः क्रीडनीयानि ददुः पक्षिगणांश्च ह ॥ १३-१३३-२० (८६६१४)
सुपर्णोऽस्य ददौ पुत्रं मयूरं चित्रबर्हिणम् ।
राक्षसाश्च ददुस्तस्मै वराहमहिषावुभौ ॥ १३-१३३-२१ (८६६१५)
कुक्कुटं चाग्निसङ्काशं प्रददावरुणः स्वयम् ।

चन्द्रमाः प्रददौ मेषमादित्यो रुचिरां प्रभाम् ॥ १३-१३३-२२ (८६६१६)
गवां माता च गा देवी ददौ शतसहस्रशः ।
छागमग्निर्गुणोपेतमिला पुष्पफलं बहु ॥ १३-१३३-२३ (८६६१७)
सुधन्वा शकटं चैव रथं चाञ्चितकूबरम् ।
वरुणो वारुणान्दिव्यान्सगजान्प्रददौ शुभान् ॥ १३-१३३-२४ (८६६१८)
सिंहान्सुरेन्द्रो व्याघ्रांश्च द्विपानन्यांश्च दंष्ट्रिणः ।
श्वापदांश्च बहून्घोराञ्शस्त्राणि विविधानि च ॥ १३-१३३-२५ (८६६१९)
राक्षसासुरसङ्घाश्च अनुजग्मुस्तमीश्वरम् ॥ १३-१३३-२६ (८६६२०)
वर्धमानवधोपायं प्रार्थयामास तारकः ।
उपायैर्बहुभिर्हन्तुं नाशकच्चापि तं विभुम् ॥ १३-१३३-२७ (८६६२१)
सैनापत्येन तं देवाः पूजयित्वा गुहालयम् ।
शशंसुर्विप्रकारं तं तस्मै तारककारितम् ॥ १३-१३३-२८ (८६६२२)
स विवृद्धो महावीर्यो देवसेनापतिः प्रभुः ।
जघानामोघया शक्त्या दानवं तारकं गुहः ॥ १३-१३३-२९ (८६६२३)
तेन तस्मिन्कुमारेण क्रीडता निहतेऽसुरे ।
सुरेन्द्रः स्थापितो राज्ये देवानां पुनरीश्वरः ॥ १३-१३३-३० (८६६२४)
स सेनापतिरेवाथ बभौ स्कन्दः प्रतापवान् ।
ईशो गोप्ता च देवानां प्रियकृच्छङ्करस्य च ॥ १३-१३३-३१ (८६६२५)
हिरण्यमूर्तिर्भगवानेव एव च पावकिः ।
सदा कुमारो देवानां सैनापत्यमवाप्तवान् ॥ १३-१३३-३२ (८६६२६)
तस्मात्सुवर्णं मङ्गल्यं रत्नमक्षय्यमुत्तमम् ।
सहजं कार्तिकेयस्य वह्नेस्तेजः परं मतम् ॥ १३-१३३-३३ (८६६२७)
एवं रामाय कौरव्य वसिष्ठोऽकथयत्पुरा ।
तस्मात्सुवर्णदानाय प्रयतस्व नराधिप ॥ १३-१३३-३४ (८६६२८)
रामः सुवर्णं दत्त्वा हि विमुक्तः सर्वकिल्बिषैः ।
त्रिविष्टपे महत्स्थानमवापासुलभं नरैः ॥ ॥ १३-१३३-३५ (८६६२९)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
त्रयस्त्रिंशदधिकशततमोऽध्यायः ॥ १३३ ॥

Mahabharata - Anushaasana Parva - Chapter Footnotes

७-१३३-१ श्रुतिर्वेदो लक्षणं ज्ञापकं येषां ते श्रुतिलक्षणाः
। श्रुत्युक्ता इत्यर्थः ॥
७-१३३-५ विपन्नं कृत्यं येषां ते गङ्गया गर्भे त्यक्ते सति
नष्टकार्याः ॥
७-१३३-६ गर्भं सन्धारयितुमित्यपकृष्यते पूर्वार्धेपि ॥

७-१३३-७ प्रीतस्ताभिर्गरुडीरूपेण तद्रेतः पीत्वा षोढा गर्भे धृते सतीति शेषः ॥
७-१३३-८ वर्त्मसु गर्भागमनमार्गेषु योनिष्वित्यर्थः ॥

---

अनुससनपर्व-अध्यय१३४
॥ श्रीः ॥
१३.१३४. अध्यायः १३४

अथ दानधर्मपर्व ॥ १ ॥
Mahabharata - Anushaasana Parva - Chapter Topics
भीष्मेण युधिष्ठिरंप्रति प्रतिपदादितिथिषु श्राद्धकरणस्य प्रत्येकं फलकथनम् ॥ १ ॥

Mahabharata - Anushaasana Parva - Chapter Text

युधिष्ठिर उवाच ।
चातुर्वर्ण्यस्य धर्मात्मन्धर्माः प्रोक्ता यथा त्वया ।
तथैव मे श्राद्धविधिं कृत्स्नं प्रब्रूहि पार्थिव ॥ १३-१३४-१ (८६६३०)
वैशम्पायन उवाच। १३-१३४-२क्ष् (७१८४)
युधिष्ठिरेणैवमुक्तो भीष्मः शान्तनवस्तदा ।
इमं श्राद्धविधिं कृत्स्नं वक्तुं समुपचक्रमे ॥ १३-१३४-२ (८६६३१)
भीष्म उवाच। १३-१३४-३क्ष् (७१८५)
शृणुष्वावहितो राजञ्श्राद्धकर्मविधिं शुभम् ।
धन्यं यशस्यं पुत्रीयं पितृयज्ञं परन्तप ॥ १३-१३४-३ (८६६३२)
देवासुरमनुष्याणां गन्धर्वोरगरक्षसाम् ।
पिशाचकिन्नराणां च पूज्या वै पितरः सदा ॥ १३-१३४-४ (८६६३३)
पितॄन्पूज्यादितः पश्चाद्देवतास्तर्पयन्ति वै ।
तस्मात्तान्सर्वयत्नेन पुरुषः पूजयेत्सदा ॥ १३-१३४-५ (८६६३४)
अन्वाहार्यं महाराज पितॄणां श्राद्धमुच्यते ।
तस्माद्विशेषविधिना विधिः प्रथमकल्पितः ॥ १३-१३४-६ (८६६३५)
सर्वेष्वहःसु प्रीयन्ते कृते श्राद्धे पितामहाः ।
गपिण्डान्वाहार्यकं श्राद्धं कुर्यान्मासानुमासिकम् ।
पितृयज्ञं तु निर्वर्त्य विप्रश्चन्द्रक्षयेऽग्निमान् ॥ १३-१३४-७ (८६६३६)
पिण्डानां मासिकश्राद्धमन्वाहार्यं विदुर्बुधाः ।
तदामिषेण कुर्वीत प्रयतः प्राञ्जलिः शुचिः ॥' १३-१३४-८ (८६६३७)
प्रवक्ष्यामि तु ते सर्वांस्तिथ्यांतिथ्यां दिने गुणान् ।

येष्वहःसु कृतैः श्राद्धैर्यत्फलं प्राप्यतेऽनघ ।
तत्सर्वं कीर्तयिष्यामि यथावत्तन्निबोध मे ॥ १३-१३४-९ (८६६३८)
पितॄनर्च्य प्रतिपदि प्राप्नुयात्स्वगृहे स्त्रियः ।
अभिरूपप्रजायिन्यो दर्शनीया बहुप्रजाः ॥ १३-१३४-१० (८६६३९)
स्त्रियो द्वितीयां जायन्ते तृतीयायां तु वाजिनः ।
चतुर्थ्यां क्षुद्रपशवो भवन्ति बहवो गृहे ॥ १३-१३४-११ (८६६४०)
पञ्चम्यां बहवः पुत्रा जायन्ते कुर्वतां नृप ।
कुर्वाणास्तु नराः षष्ठ्यां भवन्ति द्युतिभागिनः ॥ १३-१३४-१२ (८६६४१)
कृषिभागी भवेच्छ्राद्धं कुर्वाणः सप्तमीं नृप ।
अष्टम्यां तु प्रकुर्वाणो वाणिज्ये लाभमाप्नुयात् ॥ १३-१३४-१३ (८६६४२)
नवम्यां कुर्वतः श्राद्धं भवत्येकशफं बहु ।
विवर्धन्ते तु दशमीं गावः श्राद्धानि कुर्वतः ॥ १३-१३४-१४ (८६६४३)
कुप्यभागी भवेन्मर्त्यः कुर्वन्नेकादशीं नृप ।
ब्रह्मवर्चस्विनः पुत्रा जायन्ते तस्य वेश्मनि ॥ १३-१३४-१५ (८६६४४)
द्वादश्यामीहमानस्य नित्यमेव प्रदृश्यते ।
रजतं बहुवित्तं च सुवर्णं च मनोरमम् ॥ १३-१३४-१६ (८६६४५)
ज्ञातीनां तु भवेच्छ्रेष्ठः कुर्वञ्श्राद्धं त्रयोदशीम् ॥
१३-१३४-१७ (८६६४६)
अवश्यं तु युवानोऽस्य प्रमीयन्ते नरा गृहे ।
युद्धभागी भवेन्मर्त्यः कुर्वञ्श्राद्धं चतुर्दशीम् ॥ १३-१३४-१८ (८६६४७)
अमावास्यां तु निवपन्सर्वकामानवाप्नुयात् ॥ १३-१३४-१९ (८६६४८)
कृष्णपक्षे दशम्यादौ वर्जयित्वा चतुर्दशीम् ।
श्राद्धकर्मणि तिथ्यस्तु प्रशस्ता न तथेतराः ॥ १३-१३४-२० (८६६४९)
यथा चैवापरः पक्षः पूर्वपक्षाद्विशिष्यते ।
तथा श्राद्धस्य पूर्वाह्णादपराह्णो विशिष्यते ॥ ॥ १३-१३४-२१ (८६६५०)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
चतुस्त्रिंशदधिकशततमोऽध्यायः ॥ १३४ ॥

Mahabharata - Anushaasana Parva - Chapter Footnotes

७-१३४-५ आदितः अमावास्यायां । पश्चात्प्रतिपदि ॥
७-१३४-६ तच्चामिषेण विधिनेति क ट थ ध पाठः ॥
७-१३४-१० गृहे स्त्रियो भार्याः ॥
७-१३४-११ स्त्रियो दुहितरः ॥
७-१३४-१२ भवन्ति द्यूतभागिन इति ट थ ध पाठः ॥
७-१३४-१५ कुप्यं वस्त्रपात्रादि ॥

अनुससनपर्व-अध्यय१३५
॥ श्रीः ॥
१३.१३५. अध्यायः १३५

अथ दानधर्मपर्व ॥ १ ॥
Mahabharata - Anushaasana Parva - Chapter Topics
भीष्मेण युधिष्ठिरंप्रति श्राद्धे तिलमांसविशेषदानस्य फलविशेषकथनम् ॥ १ ॥

Mahabharata - Anushaasana Parva - Chapter Text

युधिष्ठिर उवाच ।
किंस्विद्दत्तं पितृभ्यो वै भवत्यक्षयमीश्वरः ।
किंस्विद्बहुफलं प्रोक्तं किमानन्त्याय कल्पते ॥ १३-१३५-१ (८६६५१)
भीष्म उवाच। १३-१३५-२क्ष् (७१८६)
हवींषि श्राद्धकल्पे तु यानि श्राद्धविदो विदुः ।
तानि मे शृणु काम्यानि फलं चैषां युधिष्ठिर ॥ १३-१३५-२ (८६६५२)
तिलैर्व्रीहियवैर्माषैरद्भिर्मूलफलैस्तथा ।
दत्तेन मासं प्रीयन्ते श्राद्धेन पितरो नृप ॥ १३-१३५-३ (८६६५३)
वर्धमानतिलं श्राद्धमक्षयं मनुरब्रवीत् ।
सर्वेष्वेव तु भोज्येषु तिलाः प्राधान्यतः स्मृताः ॥ १३-१३५-४ (८६६५४)
द्वौ मासौ तु भवेत्तुप्तिर्मत्स्यैः तितृगणस्य ह ।
त्रीन्मासानाविकेनाहुश्चतुर्मासं शशेन ह ॥ १३-१३५-५ (८६६५५)
आजेन मासान्प्रीयन्ते पञ्चैव पितरो नृप ।
वाराहेण तु षण्मासान्सप्त वै शाकुलेन तु ॥ १३-१३५-६ (८६६५६)
मासानष्टौ पार्षतेन रौरवेण नव प्रभो ।
गवयस्य तु मांसेन तृप्तिः स्याद्दशमासिकी ॥ १३-१३५-७ (८६६५७)
मांसेनेकादश प्रीतिः पितॄणां माहिषेण तु ।
गव्येन दत्ते श्राद्धे तु संवत्सरमिहोच्यते ॥ १३-१३५-८ (८६६५८)
यथा गव्यं तथा युक्तं पायसं सर्पिषा सह ।
वाध्रीणसस्य मांसेन तृप्तिर्द्वादशवार्षिकी ॥ १३-१३५-९ (८६६५९)
आन्त्याय भवेद्दत्तं खड्गमांसं पितृक्षते ।
कालशाकं च लौहं चाप्यानन्त्यं छाग उच्यते ॥ १३-१३५-१० (८६६६०)
गाथाश्चाप्यत्र गायन्ति पितृगीता युधिष्ठिर ।
सनत्कुमारो भगवान्पुरा मध्यभ्यभाषत ॥ १३-१३५-११ (८६६६१)

अपि नः स्वकुले जायाद्यो नो दद्यात्त्रयोदशीम् ।
मघासु सर्पिःसंयुक्तं पायसं दक्षिणायने ॥ १३-१३५-१२ (८६६६२)
आजेन वाऽपि लौहेन मघास्वेव यतव्रतः ।
हस्तिच्छायासु विधिवत्कर्णव्यजनवीजितम् ॥ १३-१३५-१३ (८६६६३)
एष्टव्या बहवः पुत्रा यद्येकोपि गयां व्रजेत् ।
यत्रासौ प्रथितो लोकेष्वक्ष्यकरणो वटः ॥ १३-१३५-१४ (८६६६४)
आपो मूलं फलं मांसमन्नं वाऽपि पितृक्षये ।
यत्किञ्चिन्मधुसंमिश्रं तदानन्त्याय कल्पते ॥ ॥ १३-१३५-१५ (८६६६५)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
पञ्चत्रिंशदधिकशततमोऽध्यायः ॥ १३५ ॥
Mahabharata - Anushaasana Parva - Chapter Footnotes

७-१३५-७ पृषतश्चित्रमृगस्तदीयं पार्षतम् । रुरुः
कृष्णमृगस्तदीयं रौरवम् ॥
७-१३५-९ वाध्रीणसः वध्र्या स्यूतनासिको महोक्षः
। पक्षिविशेषोऽजविशेषश्चेत्यन्ये ॥
७-१३५-१० पितृक्षते मृततिथौ । लौहं काञ्चनवृक्षजं
पुष्पादिशाकम् ॥
७-१३५-१३ वीजितं पायसादिकं दद्यादिति पूर्वेणान्वयः ॥

---

अनुससनपर्व-अध्यय१३६
॥ श्रीः ॥
१३.१३६. अध्यायः १३६

अथ दानधर्मपर्व ॥ १ ॥
Mahabharata - Anushaasana Parva - Chapter Topics
भीष्मेण युधिष्ठिरंप्रत्य श्विन्यादिनक्षत्रेषु श्राद्धकरणस्य
फलविशेषकथनम् ॥ १ ॥

Mahabharata - Anushaasana Parva - Chapter Text

भीष्म उवाच ।
यमस्तु यानि श्राद्धानि प्रोवाच शशबिन्दवे ।
तानि मे शृणु काम्यानि नक्षत्रेषु पृथक्पृथक् ॥ १३-१३६-१ (८६६६६)
श्राद्धं यः कृत्तिकायोगे कुर्वीत सततं नरः ।

अग्नीनाधाय सापत्यो यजेत विगतज्वरः ॥ १३-१३६-२ (८६६६७)
अपत्यकामो रोहिण्यां तेजस्कामो मृगोत्तमे ।
क्रूरकर्मा ददच्छ्राद्धमार्द्रायां मानवो भवेत् ॥ १३-१३६-३ (८६६६८)
कृषिभागी भवेन्मर्त्यः कुर्वञ्श्राद्धं पुनर्वसौ ।
पुष्टिकामोऽथ पुष्येण श्राद्धमीहेत मानवः ॥ १३-१३६-४ (८६६६९)
आश्लेषायां ददच्छ्राद्धं धीरान्पुत्रान्प्रजायते ।
ज्ञातीनां तु भवेच्छ्रेष्ठो मघासु श्राद्धमावपन् ॥ १३-१३६-५ (८६६७०)
फल्गुनीषु ददच्छ्राद्धं सुभगः श्राद्धदो भवेत् ।
अपत्यभागुत्तरासु हस्तेन फलभाग्भवेत् ॥ १३-१३६-६ (८६६७१)
चित्रायां तु ददच्छ्राद्धं लभेद्रूपवतः सुतान् ।
स्वातियोगे पितॄनर्च्य वाणिज्यमुपजीवति ॥ १३-१३६-७ (८६६७२)
बहुपुत्रो विशाखासु पुत्रमीनहन्भवेन्नरः ।
अनुराधासु कुर्वाणो राज्यचक्रं प्रवर्तयेत् ॥ १३-१३६-८ (८६६७३)
आधिपत्यं व्रजेन्मर्त्यो ज्येष्ठायामपवर्जयन् ।
नरः कुरुकुलश्रेष्ठ ऋद्धो दमपुरःसरः ॥ १३-१३६-९ (८६६७४)
मूले त्वारोग्यमृच्छेत यशोऽषाढासु चोत्तमम् ।
उत्तरासु त्वषाढासु वीतशोकश्चरेन्महीम् ॥ १३-१३६-१० (८६६७५)
श्राद्धं त्वभिजितौ कुर्वन्विद्यां श्रेष्ठामवाप्नुयात् ।
श्रवणेषु ददच्छ्राद्धं प्रेत्य गच्छेत्स तद्गतिम् ॥ १३-१३६-११ (८६६७६)
राज्यभागी धनिष्ठायां भवेत नियतं नरः ।
नक्षत्रे वारुणे कुर्वन्भिषक्सिद्धिमवाप्नुयात् ॥ १३-१३६-१२ (८६६७७)
पूर्वप्रोष्ठपदाः कुर्वन्बहून्विन्दत्यजाविकान् ।
उत्तरासु प्रकुर्वाणो विन्दो गाः सहस्रशः ॥ १३-१३६-१३ (८६६७८)
बहुकुप्यकृतं वित्तं विन्दते रेवतीं श्रितः ।
अश्विनीष्वश्वान्विन्देत भरणीष्वायुरुत्तमम् ॥ १३-१३६-१४ (८६६७९)
इमं श्राद्धविधिं श्रुत्वा शशबिन्दुस्तथाऽकरोत् ।
अक्लेसेनाजयच्चापि महीं सोऽनुशशास ह ॥ ॥ १३-१३६-१५ (८६६८०)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
षट्त्रिंशदधिकशततमोऽध्यायः ॥ १३६ ॥

Mahabharata - Anushaasana Parva - Chapter Footnotes

७-१३६-३ आर्द्रायां मानदो भवेदिति थ पाठः ॥
७-१३६-६ फलभाक् इष्टार्थभाक् ॥
७-१३६-१२ वारुणे शतभिषजि ॥
७-१३६-१४ अश्वांश्चाश्वयुजेवेत्तीति ध पाठः ॥

अनुससनपर्व-अध्यय१३७
॥ श्रीः ॥
१३.१३७. अध्यायः १३७

अथ दानधर्मपर्व ॥१ ॥
Mahabharata - Anushaasana Parva - Chapter Topics
भीष्मेण युधिष्ठिरंप्रति श्राद्धे निमन्त्रणार्हानर्हाणां लक्षणनिरूपणम् ॥१ ॥

Mahabharata - Anushaasana Parva - Chapter Text

युधिष्ठिर उवाच ।
कीदृशेभ्यः प्रदातव्यं भवेच्छ्राद्धं पितामह ।
द्विजेभ्यः कुरुशार्दूल तन्मे व्याख्यातुमर्हसि ॥१३-१३७-१ (८६६८१)
भीष्म उवाच।१३-१३७-२क्ष् (७१८७)
ब्राह्मणान्न परीक्षेत क्षत्रियो दानधर्मवित् ।
दैवे कर्मणि पित्र्ये तु न्यायमाहुः परीक्षणम् ॥१३-१३७-२ (८६६८२)
देवताः पावयन्तीह दैवेनैवेह तेजसा ।
उपेत्य तस्माद्देवेभ्यः सर्वेभ्यो दापयेन्नरः ॥१३-१३७-३ (८६६८३)
श्राद्धे त्वथ महाराज परीक्षेद्ब्राह्मणान्बुधः ।
कुलशीलवयोरूपैर्विद्ययाऽभिजनेन च ॥१३-१३७-४ (८६६८४)
तेषामन्ये पङ्क्तिदूष्यास्तथाऽन्ये पङ्क्तिपावनाः ।
अपाङ्क्तेयास्तु ये राजन्कीर्तयिष्यामि ताञ्शृणु ॥१३-१३७-५ (८६६८५)
कितवो भ्रूणहा यक्ष्मीं पशुपालो निराकृतिः ।
ग्रामप्रेष्यो वार्धुषिको गायनः सर्वविक्रयी ॥१३-१३७-६ (८६६८६)
अगारदाही गरदः कुण्डाशी सोमविक्रयी ।
सामुद्रिको राजभृत्यस्तैलिकः कूटकारकः ॥१३-१३७-७ (८६६८७)
पित्रा विभजमानश्च यस्य चोपपतिर्गृहे ।
अभिशस्तस्तथा स्तेनः शिल्पं यश्चोपजीवती ॥१३-१३७-८ (८६६८८)
पर्वकारश्च सूची च मित्रध्रुक् पारदारिकः ।
अव्रतानामुपाध्यायः काण्डपृष्ठस्तथैव च ॥१३-१३७-९ (८६६८९)
श्वभिश्च यः परिक्रामेद्यः शुना दष्ट एव च ।
परिवित्तिश्च यश्च स्याद्दुश्चर्मा गुरुतल्पगः। १३-१३७-१० (८६६९०)
कुशीलवो देवलको नक्षत्रैर्यश्च जीवती ॥
ईदृशैर्ब्राह्मणैर्भुक्तमपाङ्क्तेयैर्युधिष्ठिर। १३-१३७-११ (८६६९१)

रक्षांसि गच्छते हव्यमित्याहुर्ब्रह्मवादिनः ॥
श्राद्धं भुक्त्वा त्वधीयीत वृषलीतल्पगश्च यः। १३-१३७-१२ (८६६९२)
पुरीषे तस्य ते मासं पितरस्तस्य शेरते ।
सोमविक्रयिणे विष्ठा भिषजे पूयशोणितम् ॥ १३-१३७-१३ (८६६९३)
नष्टं देवलके दत्तमप्रतिष्ठं च वार्धुषे ।
यत्तु वाणिजके दत्तं नेह नामुत्र तद्भवेत् ।
भस्मनीव हुतं हव्यं तथा पौनर्भवे द्विजे ॥ १३-१३७-१४ (८६६९४)
ये तु धर्मव्यपेतेषु चारित्रापगतेषु च ।
हव्यं कव्यं प्रयच्छन्ति येषां तत्प्रेत्य नश्यति ॥ १३-१३७-१५ (८६६९५)
ज्ञानपूर्वं तु ये तेभ्यः प्रयच्छन्त्यल्पबुद्धयः ।
पुरीषं भुञ्जते तस्य पितरः प्रेत्य निश्चयः ॥ १३-१३७-१६ (८६६९६)
एतानिमान्विजानीयादपाङ्क्तेयान्द्विजाधमान् ।
शूद्राणामुपदेशं च ये कुर्वन्त्यल्पचेतसः ॥ १३-१३७-१७ (८६६९७)
षष्टिं काणः शतं षण्डः श्वित्री यावत्प्रपश्यति ।
पङ्क्त्यां समुपविष्टायां तावद्दूषयते नृप ॥ १३-१३७-१८ (८६६९८)
यद्वेष्टितशिरा भुङ्क्ते यद्भुङ्क्ते दक्षिणामुखः ।
सोपानत्कश्च यद्भुङ्क्ते सर्वं विद्यात्तदासुरम् ॥ १३-१३७-१९ (८६६९९)
असूयता च यद्दत्तं यच्च श्रद्धाविवर्जितम् ।
सर्वं तदसुरेन्द्राय ब्रह्मा भागमकल्पयत् ॥ १३-१३७-२० (८६७००)
श्वानश्च पङ्क्तिदूषाश्च नावेक्षेरन्कथञ्चन ।
तस्मात्परिसृते दद्यात्तिलांश्चान्ववकीरयेत् ॥ १३-१३७-२१ (८६७०१)
तिलैर्विरहितं श्राद्धं कृतं क्रोधवशेन च ।
यातुधानाः पिशाचाश्च विप्रलुम्पन्ति तद्धविः ॥ १३-१३७-२२ (८६७०२)
अपाङ्क्तो यावतः पाङ्क्तान्भुञ्जानाननुपश्यति ।
तावत्फलाद्भ्रंशयति दातारं तस्य बालिशम् ॥ १३-१३७-२३ (८६७०३)
इमे तु भरतश्रेष्ठ विज्ञेयाः पङ्क्तिपावनाः ।
हेतुतस्तान्प्रवक्ष्यामि परीक्षस्वेह तान्द्विजान् ॥ १३-१३७-२४ (८६७०४)
विद्यावेदव्रतस्नाता ब्राह्मणाः सर्व एव हि ।
सदाचारपराश्चैव विज्ञेयाः सर्वपावनाः ॥ १३-१३७-२५ (८६७०५)
पाङ्क्तेयांस्तु प्रवक्ष्यामि ज्ञेयास्ते पङ्क्तिपावनाः ।
त्रिणाचिकेतः पञ्चाग्निस्त्रिसुपर्णः षडङ्गवित् ॥ १३-१३७-२६ (८६७०६)
ब्रह्मदेयानुसन्तानश्छन्दोगो ज्येष्ठसामगः ।
मातापित्रोर्यश्च वश्यः श्रोत्रियो दशपूरुषः ॥ १३-१३७-२७ (८६७०७)
ऋतुकालाभिगामी च धर्मपत्नीषु यः सदा ।
वेदविद्याव्रतस्नातो विप्रः पङ्क्तिं पुनात्युत ॥ १३-१३७-२८ (८६७०८)
अथर्वशिरसोऽध्येता ब्रह्मचारी यतव्रतः ।

सत्यवादी धर्मशीलः स्वकर्मनिरतश्च सः ॥ १३-१३७-२९ (८६७०९)
ये च पुण्येषु तीर्थेषु अभिषेककृतश्रमाः ।
मखेषु च समन्त्रेषु भन्त्यवभृथप्लुताः ॥ १३-१३७-३० (८६७१०)
अक्रोधना ह्यचपलाः क्षान्ताः दान्ता जितेन्द्रियाः ।
सर्वभूतहिता ये च श्राद्धेष्वेतान्निमन्त्रयेत् ॥ १३-१३७-३१ (८६७११)
एतेषु दत्तमक्षय्यमेते वै पङ्क्तिपावनाः ।
इमे परे महाभागा विज्ञेयाः पङ्क्तिपावनाः ॥ १३-१३७-३२ (८६७१२)
यतयो मोक्षधर्मज्ञा योगिनश्चरितव्रताः ।
ग्पञ्चरात्रविदो मुख्यास्तथा भागवताः परे ॥ १३-१३७-३३ (८६७१३)
वैखानसाः कुलश्रेष्ठा वैदिकाचारचारिणः।'
ये चेतिहासं प्रयताः श्रावयन्ति द्विजोत्तमान् ॥ १३-१३७-३४ (८६७१४)
ये च भाष्यविदः केचिद्ये च व्याकरणे रताः ।
अधीयते पुराणं ये धर्मशास्त्राण्यथापि च ॥ १३-१३७-३५ (८६७१५)
अधीत्य च यथान्यायं विधिवत्तस्य कारिणः ।
उपपन्नो गुरुकुले सत्यवादी सहस्रशः ॥ १३-१३७-३६ (८६७१६)
अग्र्याः सर्वेषु वेदेषु सर्वप्रवचनेषु च ।
यावदेते प्रपश्यन्ति पङ्क्त्यास्तावत्पुनन्त्युत ॥ १३-१३७-३७ (८६७१७)
ततो हि पावनात्पङ्क्त्याः पङ्क्तिपावन उच्यते ।
क्रोशादर्धतृतीयाच्च पावयेदेक एव हि ।
ब्रह्मदेयानुसन्तान इति ब्रह्मविदो विदुः ॥ १३-१३७-३८ (८६७१८)
अनुत्विगनुपाध्यायः स चेदग्रासनं व्रजेत् ।
ऋत्विग्भिरभ्यनुज्ञातः पङ्क्त्या हरति दुष्कृतम् ॥ १३-१३७-३९ (८६७१९)
अथ चेद्वेदवित्सर्वैः पङ्क्तिदोषैर्विवर्जितः ।
न च स्यात्पतितो राजन्पङ्क्तिपावन एव सः ॥ १३-१३७-४० (८६७२०)
तस्मात्सर्वप्रयत्नेन परीक्ष्यामन्त्रयेद्द्विजान् ।
स्वकर्मनिरतान्दान्तान्कुले जातान्बहुश्रुतान् ॥ १३-१३७-४१ (८६७२१)
यस्य मित्रप्रधानानि श्राद्धानि च हवींषि च ।
न प्रीणन्ति पितॄन्देवान्स्वर्गं च न स गच्छति ॥ १३-१३७-४२ (८६७२२)
यश्च श्राद्धे कुरुते सङ्गतानि
न देवयानेन पथा स याति ।
स वै मुक्तः पिप्पलं बन्धनाद्वा
स्वर्गाल्लोकच्च्यवते श्राद्धमित्रः ॥ १३-१३७-४३ (८६७२३)
तस्मान्मित्रं श्राद्धकृन्नाद्रियेत
दद्यान्मित्रेभ्यः सङ्ग्रहार्थं धनानि ।
यन्मन्यते नैव शत्रुं न मित्रं
तं मध्यस्थं भोजयेद्धव्यकव्ये ॥ १३-१३७-४४ (८६७२४)

यथोषरे बीजमुप्तं न रोहे-
न्नचावप्ता प्राप्नुयाद्बीजभागम् ।
एवं श्राद्धं भुक्तमनर्हमाणै-
र्न चेह नामुत्र फलं ददाति ॥ १३-१३७-४५ (८६७२५)
ब्राह्मणो ह्यनधीयानस्तृणाग्निरिव शाम्यति ।
तस्मै श्राद्धं न दातव्यं न हि भस्मनि हूयते ॥१३-१३७-४६ (८६७२६)
सम्भोजनी नाम पिशाचदक्षिणा
सा नैव देवान्न पितॄनुपैति ।
इहैव सा भ्राम्यति हीनपुण्या
शालान्तरे गौरिव नष्टवत्सा ॥ १३-१३७-४७ (८६७२७)
यथाऽग्नौ शान्ते घृतमाजुहोति
तन्नैव देवान्न पितॄनुपैति ।
तथा दत्तं नर्तके गायके च
यां चानृते दक्षिणामावृणोति ॥ १३-१३७-४८ (८६७२८)
उभौ हिनस्ति न भुनक्ति चैषा
या चानृते दक्षिणा दीयते वै ।
आघातिनी गर्हितैषा पतन्ती
तेषां प्रेतान्पातयेद्देवयानात् ॥ १३-१३७-४९ (८६७२९)
ऋषीणां समये नित्यं ये चरन्ति युधिष्ठिर ।
निश्चिताः सर्वधर्मज्ञास्तान्देवा ब्राह्मणान्विदुः ॥१३-१३७-५० (८६७३०)
स्वाध्यायनिष्ठा ऋषयो ज्ञाननिष्ठास्तथैव च ।
तपोनिष्ठाश्च बोद्धव्याः कर्मनिष्ठाश्च भारत ॥१३-१३७-५१ (८६७३१)
कव्यानि ज्ञाननिष्ठेभ्यः प्रतिष्ठाप्यानि भारत ।
तत्र ये ब्राह्मणान्केचिन्न सीदन्ति हि ते नराः ॥१३-१३७-५२ (८६७३२)
ये तु निन्दन्ति जल्पेषु न ताञ्श्राद्धेषु भोजयत् ।
ब्राह्मणा निन्दिता राजन्हन्युस्त्रैपुरुषं कुलम् ॥१३-१३७-५३ (८६७३३)
वैखानसानां वचनमृषीणां श्रूयते नृप ।
दूरादेव परीक्षेत ब्राह्मणान्वेदपारगान् ॥१३-१३७-५४ (८६७३४)
प्रियो वा यदि वा द्वेष्यस्तेषां तु श्राद्धमावपेत् ॥ १३-१३७-५५ (८६७३५)
यः सहस्रं सहस्राणां भोजयदेनृचो नरः ।
एकस्तान्मन्त्रवित्प्रीतः सर्वानर्हति भारत ॥ ॥१३-१३७-५६ (८६७३६)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
सप्तत्रिंशदधिकशततमोऽध्यायः ॥१३७ ॥

Mahabharata - Anushaasana Parva - Chapter Footnotes

७-१३७-३ देवेभ्यो देवानुद्दिश्य ।सर्वेभ्यो विप्रेभ्यः ॥
७-१३७-५ तेषामन्ये पङ्क्तिदूषा इति झ पाठः ॥
७-१३७-६ निराकृतिरध्ययनादिशून्यः ।वार्धुषिको वृद्ध्यर्थं धनप्रयोक्ता ॥
७-१३७-७ कुण्डाशी भगभक्षः ।तैलिकस्तत्कर्मकृत्।कूटसाक्षिक इति ट पाठः ॥
७-१३७-८ पित्रा विवदमानश्चेति झ पाठः ॥
७-१३७-९ पर्वकारो वेषान्तरधारी ।सूची पिशुनः।अव्रतानां शूद्राणाम्।काण्डपृष्ठः शस्त्राजीवी ॥
७-१३७-१० श्वभिः परिक्रामेन्मृगयां कुर्वन् ॥
७-१३७-१८ षष्टिंशतं पुरुषानिति शेषः ॥
७-१३७-२० असुरेन्द्राय बलये ॥
७-१३७-२१ परिसृते आवृतदेशे ॥
७-१३७-२२ तिलदानेप्यदायादा ये च क्रोधवशा गणाः ।यातुधानाः पिशाचाश्च न प्रलुपन्ति तद्धविरिति थ ध पाठः ॥
७-१३७-२६ त्रिसुपर्णं चतुष्कपर्दा युवतिः सुपेशा इति बह्वृचानां मन्त्रत्रयं वा ब्रह्ममेतुमाम् इत्यादितैत्तिरीयप्रसिद्धं वा ।षडङ्गानि शिक्षादीनि ॥
७-१३७-२७ ब्रह्म देवः परविद्या वा तदेव देयं येषां तेषामनुसन्तानः परम्परायामुत्पन्नः ब्रह्मदेयानुसन्तानः ॥
७-१३७-३० मुखेषु च सहस्रेष्विति थ पाठ ॥
७-१३७-४२ मित्रमेव प्रधानं न योग्यत्वादिकं येषु तानि ॥
७-१३७-४३ श्राद्धेन निमित्तेन सङ्गतानि सख्यानि ॥
७-१३७-४७ सम्भोजनी अन्योन्यं दीयमाना ॥
७-१३७-४८ यां च दक्षिणामनृते अपात्रे आवृणोति प्रयच्छति ॥
७-१३७-४९ न भुनक्ति न पालयति ।आघातिनी हन्त्री ॥

---

अनुससनपर्व-अध्यय१३८
॥ श्रीः ॥
१३.१३८. अध्यायः १३८

अथ दानधर्मपर्व ॥ १ ॥
Mahabharata - Anushaasana Parva - Chapter Topics
भीष्मेण युधिष्ठिरंप्रति श्राद्धे वर्जनीयधान्यशाकादिप्रतिपादकात्रिनिमिसंवादानुवादः ॥ १ ॥

युधिष्ठिर उवाच ।
केन सङ्कल्पितं श्राद्धं कस्मिन्काले किमात्मकम् ।
भृग्वङ्गिरसिके काले मुनिना कतरेण वा ॥ १३-१३८-१ (८६७३७)
ग्येन सङ्कल्पितं चैव तन्मे ब्रूहि पितामह।'
कानि श्राद्धेषु वर्ज्यानि कानि मूलफलानि च ।
धान्यजात्यश्च का वर्ज्यास्तन्मे ब्रूहि पितामह ॥ १३-१३८-२ (८६७३८)
भीष्म उवाच। १३-१३८-३क्ष् (७१८८)
यथा श्राद्धं सम्प्रवृत्तं यस्मिन्काले सदात्मकम् ।
येन सङ्कल्पितं चैव तन्मे शृणु जनाधिप ॥ १३-१३८-३ (८६७३९)
स्वायम्भुवोऽत्रिः कौरव्य परमर्षिः प्रतापवान् ।
तस्य वंशे महाराज दत्तात्रेय इति स्मृतः ॥ १३-१३८-४ (८६७४०)
दत्तात्रेयस्य पुत्रोऽभून्निमिर्नाम तपोधनः ।
निमेश्चाप्यभवत्पुत्रः श्रीमान्नाम श्रिया वृतः ॥ १३-१३८-५ (८६७४१)
पूर्णो वर्षसहस्रान्ते स कृत्वा दुष्करं तपः ।
कालधर्मपरीतात्मा निधनं समुपागतः ॥ १३-१३८-६ (८६७४२)
निमिस्तु कृत्वा शौचानि विधिदृष्टेन कर्मणा ।
सन्तापमगमत्तीप्रं पुत्रशोकपरायणः ॥ १३-१३८-७ (८६७४३)
अथ कृत्वोपकार्याणि चतुर्दश्यां महामतिः ।
तमेव गणयञ्शोकं विरात्रे प्रत्यबुध्यत ॥ १३-१३८-८ (८६७४४)
तस्यासीत्प्रतिबुद्धस्य शोकेन व्यथितात्मनः ।
मनः संहृत्य विषये बुद्धिर्विस्तारगामिनी ॥ १३-१३८-९ (८६७४५)
ततः सञ्चिन्तयामास श्राद्धकल्पं समाहितः ।
यानि तस्यैव भोज्यानि मूलानि च फलानि च ॥ १३-१३८-१० (८६७४६)
उक्तानि यानि चान्यानि यानि चेष्टानि तस्य ह ।
तानि सर्वाणि मनसा विनिश्चित्य तपोधनः ॥ १३-१३८-११ (८६७४७)
अमावास्यां महाप्राज्ञो विप्रानानाय्य पूजितान् ।
दक्षिणावर्तिकाः सर्वा बृसीः स्वयमथाकरोत् ॥ १३-१३८-१२ (८६७४८)
सप्त विप्रांस्ततो भोज्ये युगपत्समुपानयत् ।
ऋते च लवणं भोज्यं श्यामाकान्नं ददौ प्रभुः ॥ १३-१३८-१३ (८६७४९)
दक्षिणाग्रास्ततो दर्भा विष्टरेषु निवेशिताः ।
पादयोश्चैव विप्राणां ये त्वन्नमुपभुञ्जते ॥ १३-१३८-१४ (८६७५०)
कृत्वा च दक्षिणाग्नान्वै दर्भान्स प्रयतः शुचिः ।
प्रददौ श्रीमते पिण्डान्नामगोत्रमुदाहरन् ॥ १३-१३८-१५ (८६७५१)
तत्कृत्वा स मुनिश्रेष्ठो धर्मसङ्करमात्मनः ।

पश्चात्तापेन महता तप्यमानोऽभ्यचिन्तयत् ॥ १३-१३८-१६ (८६७५२)
अकृतं मुनिभिः पूर्वं किं मयेदमनुष्ठितम् ।
कथं नु शापेन न मां दहेयुर्ब्राह्मणा इति ॥ १३-१३८-१७ (८६७५३)
ततः सञ्चिन्तयामास वंशकर्तारमात्मनः ।
ग्बुद्धवाऽत्रिं मनसा दध्यौ भगवन्तं समाहितः।'
ध्यातमात्रस्तथा चात्रिराजगाम तपोधनः ॥ १३-१३८-१८ (८६७५४)
अथात्रिस्तं तथा दृष्ट्वा पुत्रशोकेन कर्शितम् ।
भृशमाश्वासयामास वाग्भिरिष्टाभिरव्ययः ॥ १३-१३८-१९ (८६७५५)
निमे सङ्कल्पितस्तेऽयं पितृयज्ञस्तपोधन ।
मतो मे पूर्वदृष्टोऽत्र धर्मोऽयं ब्रह्मणा स्वयम् ॥ १३-१३८-२० (८६७५६)
सोयं स्वयभुविहितो धर्मः सङ्कल्पितस्त्वया ।
ऋते स्वयम्भुवः कोऽन्यः श्राद्धे संविधिमाहरेत् ॥ १३-१३८-२१ (८६७५७)
अथाख्यास्यामि ते पुत्र श्राद्धे यं विधिमुत्तमम् ।
स्वयम्भुविहितं पुत्र तत्कुरुष्व निबोध मे ॥ १३-१३८-२२ (८६७५८)
कृत्वाऽग्निशरणं पूर्वं मन्त्रपूर्वं तपोधन ।
ततोऽग्नयेऽथ सोमाय वरुणाय च नित्यशः ॥ १३-१३८-२३ (८६७५९)
विश्वेदवाश्च यि नित्यं पितृभिः सह गोचराः ।
तेभ्यः सङ्कल्पिता भागाः स्वयमेव स्वयम्भुवा ॥ १३-१३८-२४ (८६७६०)
स्तोतव्या चेह पृथिवी लोकस्यैव तु धारिणी ।
वैष्णवी काश्यपि चेति तथैवेहाक्षयेति च ॥ १३-१३८-२५ (८६७६१)
उदकानयने चैव स्तोतव्यो वरुणो विभुः ।
ततोऽग्निश्चैव सोमश्च आराध्याविह तेऽनघ ॥ १३-१३८-२६ (८६७६२)
देवास्तु पितरो नाम निर्मिता ये स्वयम्भुवा ।
ऊष्मपा ये महाभागास्तेषां भागः प्रकल्पितः ॥ १३-१३८-२७ (८६७६३)
ते श्राद्धेनार्च्यमाना वै विमुच्यन्ते ह किल्बिषात् ।
सप्तकाः पितृवंशास्तु पूर्वदृष्टाः स्वयंभुवा ॥ १३-१३८-२८ (८६७६४)
विश्वे चाग्निमुखा देवाः संख्याताः पूर्वमेव ते ।
तेषां नामानि वक्ष्यामि भागार्हाणां महात्मनाम् ॥ १३-१३८-२९ (८६७६५)
सहः कृतिर्विपाप्मा च पुण्यकृत्पावनस्तथा ।
ग्राम्यः क्षेम्यः समूहश्च दिव्यसानुस्तथैव च ॥ १३-१३८-३० (८६७६६)
विवस्वान्वीर्यवाञ्श्रीमान्कीर्तिमान्कृत एव च ।
जितात्मा मुनिवीर्यश्च दीप्तरोमा भयङ्करः ॥ १३-१३८-३१ (८६७६७)
अनुकर्मा प्रतीतश्च प्रदाताऽप्यंशुमांस्तथा ।
शैलाभः परमक्रोधी धीरोष्णी भूपतिस्तथा ॥ १३-१३८-३२ (८६७६८)
स्रजो वज्रीवरी चैव विश्वेदेवाः सनातनाः ।
विद्युद्वर्चाः सोमवर्चाः सूर्यश्रीश्चेति नामतः ॥ १३-१३८-३३ (८६७६९)

सोमपः सूर्यसावित्रो दत्तात्मा पुण्डरीयकः ।
उष्णीनाभो नभोदश्च विश्वायुर्दीप्तिरेव च ॥१३-१३८-३४ (८६७७०)
चमूहरः सुरेशश्च व्योमारिः शङ्करो भवः ।
ईशः कर्ता कृतिर्दक्षो भुवनो दिव्यकर्मकृत् ॥१३-१३८-३५ (८६७७१)
गणितः पञ्चवीर्यश्च आदित्यो रश्मिवांस्तथा ।
सप्तकृत्सोमवर्चाश्च विश्वकृत्कविरेव च ॥१३-१३८-३६ (८६७७२)
अनुगोप्ता सुगोप्ता च नप्ता चेश्वर एव च ।
कीर्तितास्ते महाभागाः कालस्य गतिगोचराः ॥१३-१३८-३७ (८६७७३)
अश्राद्धेयानि धान्यानि कोद्रवाः पुलकास्तथा ।
हिङ्गुद्रवेषु शाकेषु मूलानां लशुनं तथा ॥१३-१३८-३८ (८६७७४)
पलाण्डुः सौभाञ्जनकस्तथा गृञ्जनकादयः ।
कूश्माण्डजात्यलाबुं च कृष्णं लवणमेव च ॥१३-१३८-३९ (८६७७५)
ग्राम्यवाराहमांसं च यच्चैवाप्रोक्षितं भवेत् ।
कृष्णाजं जीरकं चैव शीतपाकी तथैव च ।
अङ्कुराद्यास्तथा वर्ज्या इह शृङ्गाटकानि च ॥ १३-१३८-४० (८६७७६)
वर्जयेल्लवणं सर्वं तथा जम्बूफलानि च ।
अवक्षुतावरुदितं तथा श्राद्धे च वर्जयेत्। १३-१३८-४१ (८६७७७)
निवापे हव्यकव्ये वा गर्हितं च सुदर्शनम् ।
पितरश्च हि देवाश्च नाभिनन्दन्ति तद्धविः ॥१३-१३८-४२ (८६७७८)
चण्डालश्वपचौ वर्ज्यौ निवापे समुपस्थिते ।
काषायवासाः कुष्ठी वा पतितो ब्रह्महाऽपि वा ॥१३-१३८-४३ (८६७७९)
सङ्कीर्णयोनिर्विप्रश्च सम्बन्धी पतितश्च यः ।
वर्जनीय बुधैरेते निवापे समुपस्थिते ॥१३-१३८-४४ (८६७८०)
इत्येवमुक्त्वा भगवान्स्ववंश्यं तमृषिं पुरा ।
पितामहसभां दिव्या जगामात्रिस्तपोधनः ॥ ॥१३-१३८-४५ (८६७८१)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
अष्टत्रिंशदधिकशततमोऽध्यायः ॥१३८ ॥

Mahabharata - Anushaasana Parva - Chapter Footnotes

७-१३८-१ भृग्वङ्गिरसके यदा भृगवोऽङ्गिरसश्च वर्तन्ते नान्ये ॥
७-१३८-२ श्राद्धेषु कानि कर्माणि वर्ज्यानि ॥
७-१३८-८ कृत्वा उपकल्प्य ।उपकार्याणि
मृष्टान्नकशिपूपबर्हणादीनि। विरात्रे प्रभाते ॥
७-१३८-९ विषये मनःसंहृत्य शोकं त्यक्त्वेत्यर्थः ॥
७-१३८-१२ दक्षिणावर्तिकाः प्रदक्षिणावर्तिताः ।बृसीः आसनानि ॥

७-१३८-१६ श्रौते पित्राद्युद्देशेन दृष्टो धर्मो लोके पुत्रोद्देशेनापि स्वेच्छया कल्पित इति सङ्करः ॥
७-१३८-२३ तत्रार्थम्णे च सोमायेति ट थ पाठः ॥
७-१३८-२८ ते प्रसिद्धाः पित्रादयः । विमुच्यन्ते किल्बिषात् नरकादिरूपात् ॥
७-१३८-३८ पुलकाः असम्पूर्णतण्डुलयुक्तधान्यानि । हिङ्गुद्रवेषु शाकादिसंस्कारकद्रव्येषु ॥
७-१३८-३९ सौभाञ्जनकः शिग्रुः ॥
७-१३८-४० शीतपाकी शाकविशेषः ॥
७-१३८-४२ सुदर्शनं शाकविशेषः ॥

---

अनुससनपर्व-अध्यय१३९
॥ श्रीः ॥
१३.१३९. अध्यायः १३९

अथ दानधर्मपर्व ॥ १ ॥
Mahabharata - Anushaasana Parva - Chapter Topics
भीष्मेण युधिष्ठिरंप्रति निमिकृतश्राद्धप्रकारानुवादेन श्राद्धविधिकथनम् ॥ १ ॥

Mahabharata - Anushaasana Parva - Chapter Text

भीष्म उवाच ।
तथा विधौ प्रवृत्ते तु सर्व एव महर्षयः ।
पितृयज्ञानकुर्वन्त विधिदृष्टेन कर्मणा ॥ १३-१३९-१ (८६७८२)
ऋषयो धर्मनित्यास्तु कृत्वा निवपनान्युत ।
तर्पणं चापि कुर्वन्त तीर्थाम्भोभिर्यतव्रताः ॥ १३-१३९-२ (८६७८३)
निवापैर्दीयमानैश्च चातुर्वर्ण्येन भारत ।
तर्पिताः पितरो देवास्तत्रान्नं जरयन्ति वै ॥ १३-१३९-३ (८६७८४)
अजीर्णैस्त्वभिहन्यन्ते ते देवाः पितृभिः सह ॥
सोममेवाभ्यपद्यन्त तदा ह्यन्नाभिपीडिताः ॥ १३-१३९-४ (८६७८५)
तेऽब्रुवन्सोममासाद्य पितरोऽजीर्णपीडिताः ।
निवापान्नेन पीड्यामः श्रेयो नोत्र विधीयताम् ॥ १३-१३९-५ (८६७८६)
तान्सोमः प्रत्युवाचाथ श्रेयश्चेदीप्सितं सुराः ।
स्वयंभूसदनं यात स वः श्रेयोऽभिधास्यति ॥ १३-१३९-६ (८६७८७)
ते सोमवचनाद्देवाः पितृभिः सह भारत ।
मेरुशृङ्गे समासीनं पितामहमुपागमन् ॥ १३-१३९-७ (८६७८८)

पितर ऊचुः।१३-१३९-८क्ष् (७१८९)
निवापान्नेन भगवन्भृशं पीड्यामहे वयम् ।
प्रसादं कुरु नो देव श्रेयो नः संविधीयताम् ॥१३-१३९-८ (८६७८९)
इति तेषां वचः श्रुत्वा स्वयम्भूरिदमब्रवीत् ।
एष मे पार्श्वतो वह्निर्युष्मच्छ्रेयो विधास्यति। १३-१३९-९ (८६७९०)
अग्निरुवाच।१३-१३९-१०क्ष् (७१९०)
सहितास्तस्य भोक्ष्यामो निवापे समुपस्थिते ।
जरयिष्यथ चाप्यन्नं मया सार्धं न संशयः ॥१३-१३९-१० (८६७९१)
एतच्छ्रुत्वा तु पितरस्ततस्ते विज्वराऽभवन् ।
एतस्मात्कारणाच्चाग्नेः प्राग्भागो दीयते नृप ॥१३-१३९-११ (८६७९२)
निवापे चाग्निपूर्वं वै निवृत्ते पुरुषर्षभ ।
न ब्रह्मराक्षसास्तं वै निवापं धर्षयन्त्युत ॥१३-१३९-१२ (८६७९३)
रक्षांसि नाभिवर्धन्ते स्थिते देवे हुताशने ।
पूर्वं पिण्डं पितुर्दद्यात्ततो दद्यात्पितामहे ॥१३-१३९-१३ (८६७९४)
प्रपितामहाय च तत एष श्राद्धविधिः स्मृतः ।
ब्रूयाच्छ्राद्धे च सावित्रीं पिण्डे पिण्डे समाहितः ।
सोमायेति च वक्तव्यं तथा पितृमतेति च ॥ १३-१३९-१४ (८६७९५)
रजस्वला च या नारी व्यङ्गिता कर्णयोश्च या ।
निवापे नोपतिष्ठेत सङ्ग्राह्या नान्यवंशजा ॥१३-१३९-१५ (८६७९६)
जलं प्रतरमाणस्च कीर्तयेत पितामहान् ।
नदीमासाद्य कुर्वीत पितॄणां पितृतर्पणम् ॥१३-१३९-१६ (८६७९७)
पूर्वं स्ववंशजानां तु कृत्वाऽद्भिस्तर्पणं पुनः ।
सुहृत्सम्बन्धिवर्गाणां ततो दद्याज्जलाञ्जलिम् ॥१३-१३९-१७ (८६७९८)
कल्माषगोयुगेनाथ युक्तेन तरतो जलम् ।
पितरोऽभिलषन्ते वै नावं चाप्यधिरोहिताः ॥१३-१३९-१८ (८६७९९)
सदा नावि जलं तज्ज्ञाः प्रयच्छन्ति समाहिताः ।
मासार्धे कृष्णपक्षस्य कुर्यान्निर्वपणानि वै ॥१३-१३९-१९ (८६८००)
पुष्टिरायुस्तथा वीर्यं श्रीश्चैव पितृभक्तितः ॥ १३-१३९-२० (८६८०१)
पितामहः पुलस्त्यश्च वसिष्ठः पुलहस्तथा ।
अङ्गिराश्च क्रतुश्चैव कश्यपश्च महानृषिः। १३-१३९-२१ (८६८०२)
एते कुरुकुलश्रेष्ठ महायोगेश्वराः स्मृताः ॥
एते च पितरो राजन्नेष श्राद्धविधिः परः। १३-१३९-२२ (८६८०३)
प्रेतास्तु पिण्डसम्बन्धान्मुच्यन्ते तेन कर्मणा ॥
इत्येषा पुरुषश्रेष्ठ श्राद्धोत्पत्तिर्यथागमम्। १३-१३९-२३ (८६८०४)
व्याख्याता पूर्वनिर्दिष्टा किं ते वक्ष्याम्यतः परम् ॥ ॥ १३-१३९-२४ (८६८०५)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
एकोनचत्वारिंशदधिकशततमोऽध्यायः ॥ १३९ ॥
Mahabharata - Anushaasana Parva - Chapter Footnotes

७-१३९-१ तथानिमौ प्रवृत्ते इति झ पाठः । तथा पित्र्ये प्रवृत्ते
इति ध पाठः ॥
७-१३९-१५ अन्यवंशजापि पाकार्थं न सङ्ग्राह्य । न
ग्राह्यास्वाप्यवंशजा इति ट थ पाठ ॥
७-१३९-१८ युक्तेन शकटेन ॥
७-१३९-१९ मासार्धे अमावास्यायाम् । कृष्णपक्षस्येत्युक्तेर्नात्र
शुक्लादिमासो विवक्षितः ॥

---

अनुससनपर्व-अध्यय१४०
॥ श्रीः ॥
१३.१४०. अध्यायः १४०

अथ दानधर्मपर्व ॥ १ ॥
Mahabharata - Anushaasana Parva - Chapter Topics
भीष्मेण युधिष्ठिरंप्रत्युपवासब्रह्मचर्यादीनां लक्षणकथनम् ॥ १ ॥

Mahabharata - Anushaasana Parva - Chapter Text

युधिष्ठिर उवाच ।
द्विजातयो व्रतोपेता हविस्ते यदि भुञ्जते ।
अन्नं ब्राह्मणकामाय कथमेतत्पितामह ॥ १३-१४०-१ (८६८०६)
भीष्म उवाच। १३-१४०-२क्ष् (७१९१)
अवेदोक्तव्रताश्चैव भुञ्जानाः कामकारणे ।
वेदोक्तेषु तु भुञ्जाना व्रतलुप्ता युधिष्ठिर ॥ १३-१४०-२ (८६८०७)
युधिष्ठिर उवाच। १३-१४०-३क्ष् (७१९२)
यदिदं तप इत्याहुरुपवासं पृथग्जनाः ।
तपः स्यादेतदेवेह तपोऽन्यद्वाऽपि किं भवेत् ॥ १३-१४०-३ (८६८०८)
भीष्म उवाच। १३-१४०-४क्ष् (७१९३)
मासार्धमासोपवासाद्यत्तपो मन्यते जनः ।
आत्मतन्त्रोपघाती यो न तपस्वी न धर्मवित् ॥ १३-१४०-४ (८६८०९)
त्यागस्य चापि सम्पत्तिः शिष्यते तप उत्तमम् ।
सदोपवासी च भवेद्ब्रह्मचारी तथैव च ॥ १३-१४०-५ (८६८१०)

मुनिश्च स्यात्सदा विप्रो देवांश्चैव सदा यजेत् ।
कुटुम्बिको धर्मकामः सदाऽस्वप्नश्च मानवः ॥ १३-१४०-६ (८६८११)
अमृताशी सदा च स्यात्पवित्रं च सदा पठेत् ।
ऋतवादी सदा च स्यान्नियतश्च सदा भवेत् ॥ १३-१४०-७ (८६८१२)
विघसाशी कथं च स्यात्सदा चैवातिथिप्रियः ।
अमृताशी सदा च स्यात्पवित्री च सदा भवेत् ॥ १३-१४०-८ (८६८१३)
युधिष्ठिर उवाच। १३-१४०-९क्ष् (७१९४)
कथं सदोपवासी स्याद्ब्रह्मचारी च पार्थिव ।
विघसाशी कथं च स्यात्कथं चैवातिथिप्रियः ॥ १३-१४०-९ (८६८१४)
भीष्म उवाच। १३-१४०-१०क्ष् (७१९५)
अन्तरा सायमाशं च प्रातराशं च यो नरः ।
सदोपवासी भवति यो न भुङ्क्तेऽन्तरा पुनः ॥ १३-१४०-१० (८६८१५)
भार्या गच्छन्ब्रह्मचारी ऋतौ भवति चैव ह ।
ऋतवादी सदा च स्याद्दानशीलस्तु मानवः ॥ १३-१४०-११ (८६८१६)
अभक्षयन्वृथा मांसममांसाशी भवत्युत ।
दानं ददत्पवित्री स्यादस्वप्नश्च दिवाऽस्वपन् ॥ १३-१४०-१२ (८६८१७)
भृत्यातिथिषु यो भुङ्क्ते भुक्तवत्सु नरः सदा ।
अमृतं केवलं भुङ्क्ते इति विद्धि युधिष्ठिर ॥ १३-१४०-१३ (८६८१८)
अभुक्तवत्सु नाश्नाति ब्राह्मणेषु तु यो नरः ।
अभोजनेन तेनास्य जितः स्वर्गो भवत्युत ॥ १३-१४०-१४ (८६८१९)
देवेभ्यश्च पितृभ्यश्च संश्रितेभ्यस्तथैव च ।
अवशिष्टानि यो भुङ्क्ते तमाहुर्विघसाशिनम् ॥ १३-१४०-१५ (८६८२०)
तेषां लोका ह्यपर्यन्ताः सदने ब्रह्मणः स्मृताः ।
उपस्थिता ह्यप्सरसो गन्धर्वैश्च जनाधिप ॥ १३-१४०-१६ (८६८२१)
देवतातिथिभिः सार्धं पितृभिश्चोपभुञ्जते ।
रमन्ते पुत्रपौत्रैश्च तेषां गतिरनुत्तमा ॥ ॥ १३-१४०-१७ (८६८२२)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
चत्वारिंशदधिकशततमोऽध्यायः ॥ १४० ॥

Mahabharata - Anushaasana Parva - Chapter Footnotes

७-१४०-२ कामकारणे इच्छया हेतुना भुञ्जना भोजनं कुर्वन्तु नाम ॥
७-१४०-४ आत्मतन्त्रं शरीररूपं कुटुम्बरूपं वा तदुपघाती ॥
७-१४०-६ अस्वप्नः स्वधर्मे जागरूकः । वेदांश्चैव सदा जपेदिति
झ पाठः ॥
७-१४०-८ सदा च स्यादस्वप्नश्च तथैव चेति ङ पाठः ॥

७-१४०-१२ वृथा यज्ञादिनिमित्तं विना ॥

---

अनुससनपर्व-अध्यय१४१
॥ श्रीः ॥
१३.१४१. अध्यायः १४१

अथ दानधर्मपर्व ॥ १ ॥
Mahabharata - Anushaasana Parva - Chapter Topics
भीष्मेण युधिष्ठिरंप्रत्यसाधुभ्यः प्रतिग्रहस्य निन्द्यत्वे
प्रमाणतया सप्तर्षिवृषादर्भिसंवादानुवादः ॥ १ ॥
वृषादर्भिणा राज्ञा कश्यपादिसप्तर्षिभि-
स्वस्मात्प्रतिग्रहनिराकरणे तज्जिघांसया कृत्योत्पादनम् ॥ २ ॥
तन्नामार्थपरिज्ञानेन तद्वधं चोदितया कृत्यया वने तत्समीपम्प्रति
गमनम् ॥ ३ ॥

Mahabharata - Anushaasana Parva - Chapter Text

युधिष्ठिर उवाच ।
ब्राह्मणेभ्यः प्रयच्छन्ति दानानि विविधानि च ।
दातृप्रतिग्रहीत्रोर्वै को विशेषः पितामह ॥ १३-१४१-१ (८६८२३)
भीष्म उवाच। १३-१४१-२क्ष् (७१९६)
साधोर्यः प्रतिगृह्णीयात्तथैवासाधुतो द्विजः ।
गुणवत्यल्पदोषः स्यान्निर्गुणे तु निमज्जति ॥ १३-१४१-२ (८६८२४)
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
वृषादर्भेश्च संवादं सप्तर्षीणां च भारत ॥ १३-१४१-३ (८६८२५)
कश्यपोऽत्रिर्वसिष्ठश्च भरद्वाजोऽथ गौतमः ।
विश्वामित्रो जमदग्निः साध्वी चैवाप्यरुन्धती ॥ १३-१४१-४ (८६८२६)
सर्वेषामथ तेषां तु गण्डाभूत्परिचारिका ।
शूद्रः पशुसखश्चैव भर्ता चास्या बभूव ह ॥ १३-१४१-५ (८६८२७)
ते च सर्वे तपस्यन्तः पुरा चेरुर्महीमिमाम् ।
समाधिना प्रतीक्षन्तो ब्रह्मलोकं सनातनम् ॥ १३-१४१-६ (८६८२८)
अथाभवदनावृष्टिर्महती कुरुनन्दन ।
कृच्छ्रप्राणोऽभवद्यत्र लोकोऽयं वै क्षुधान्वितः ॥ १३-१४१-७ (८६८२९)
कस्मिंश्चिच्च पुरा यज्ञे याज्येन शिबिसूनुना ।
दक्षिणार्थेऽथ ऋत्विग्भ्यो दत्तः पुत्रोऽनिलः किल १३-१४१-८ (८६८३०)
अस्मिन्कालेऽथ सोऽल्पायुर्दिष्टान्तमगमत्प्रभुः ।

ते तं क्षुधाभिसन्तप्ताः परिवार्योपतस्थिरे ॥ १३-१४१-९ (८६८३१)
याज्यात्मजमथो दृष्ट्वा गतासुमृषिसत्तमाः ।
अपचन्त तदा स्थाल्यां क्षुधार्ताः किल भारत १३-१४१-१० (८६८३२)
नाजीव्ये मर्त्यलोकेऽस्मिन्नात्मानं ते परीप्सवः ।
कृच्छ्रामापेदिरे वृत्तिमन्नहेतोस्तपस्विनः ॥ १३-१४१-११ (८६८३३)
अटमानोऽथ तान्मार्गे पचमानान्महीपतिः ।
राजा शैब्यो वृषादर्भिः क्लिश्यमानान्ददर्श ह ॥ १३-१४१-१२ (८६८३४)
वृषादर्भिरुवाच। १३-१४१-१३क्ष् (७१९७)
प्रतिग्रहस्तारयति पुष्टिर्वै प्रतिगृह्णताम् ।
मयि यद्विद्यते वित्तं तद्वृणुध्वं तपोधनाः ॥ १३-१४१-१३ (८६८३५)
ग्प्रतिग्रहो ब्राह्मणानां सृष्टा वृत्तिरनिन्दिता ।
तस्माद्ददामि वो वित्तं तद्वृणुध्वं तपोधनाः ॥' १३-१४१-१४ (८६८३६)
प्रियो हि मे ब्राह्मणो याचमानो
दद्यामहं वोऽश्वतरीसहस्रम् ।
धेनूनां दद्यामयुतं समग्र-
मेकैकशः सवृषाः सम्प्रसूताः ॥ १३-१४१-१५ (८६८३७)
अश्वांस्तथा शीघ्रगाञ्श्वेतरूपां-
न्मनोजवान्प्रददाम्यर्बुदानि ।
कुलम्भराननडुहः शतं शता-
न्धुर्याञ्श्वेतान्सर्वशोऽहं ददामि ।
प्रष्ठौहीनां पीवराणां च ताव-
दग्र्या गृष्टीर्धेनवः सुव्रताश्च ॥ १३-१४१-१६ (८६८३८)
वरान्ग्रमान्व्रीहिरसं यवांश्च
रत्नं चान्यद्दुर्लभं किं ददानि ।
नास्मिन्नभक्ष्ये भावमेवं कुरुध्वं
पुष्ट्यर्थं वः किं प्रयच्छाम्यहं वै ॥ १३-१४१-१७ (८६८३९)
ऋषय ऊचुः। १३-१४१-१८क्ष् (७१९८)
राजन्प्रतिग्रहो राज्ञं मध्वास्वादो विषोपमः ।
तज्जानमानः कस्मात्त्वं कुरुषे नः प्रलोभनम् ॥ १३-१४१-१८ (८६८४०)
ग्दशसूनासमश्चक्री दशचक्रिसमो ध्वजी ।
दशध्वजिसमा वेश्या दशवेश्यासमो नृपः ॥ १३-१४१-१९ (८६८४१)
दशसूनासहस्राणि यो वाहयति सौनिकः ।
तेन तुल्यो भवेद्राजा घोरस्तस्य प्रतिग्रहः ॥' १३-१४१-२० (८६८४२)
क्षेत्रं हि दैवतमिव ब्राह्मणान्समुपाश्रितम् ।
अमलो ह्येष तपसा प्रीतः प्रीणाति देवताः ॥ १३-१४१-२१ (८६८४३)
अह्नायेह तपो जातु ब्राह्मणस्योपजायते ।

तद्दाव इव निर्दह्यात्प्राप्तो राजप्रतिग्रहः ॥ १३-१४१-२२ (८६८४४)
कुशलं सह दानेन राजन्नस्तु सदा तव ।
अर्थिभ्यो दीयतां सर्वमित्युक्त्वा तेन्यतो ययुः ॥ १३-१४१-२३ (८६८४५)
अपक्वमेव तन्मांसमभूत्तेषां महात्मनाम् ।
अथ हित्वा ययु सर्वे वनमाहारकाङ्क्षिणः ॥ १३-१४१-२४ (८६८४६)
ततः प्रचोदिता राज्ञा वनं गत्वाऽस्य मन्त्रिणः ।
प्रचीयोदुम्बराणि स्म दातुं तेषां प्रचक्रिरे ॥ १३-१४१-२५ (८६८४७)
ग्दृष्ट्वा फलानि मुनयस्ते ग्रहीतुमुपाद्रवन् ॥' १३-१४१-२६ (८६८४८)
उदुम्बराण्यथान्यानि हेमगर्भाण्युपाहरन् ।
भृत्यास्तेषां ततस्तानि प्रग्राहितुमुपाद्रवन् ॥ १३-१४१-२७ (८६८४९)
गुरूणीति विदित्वाऽथ न ग्राह्याण्यत्रिरब्रवीत् ।
नास्मेह मन्दविज्ञाना नास्म मानुषबुद्धयः ॥ १३-१४१-२८ (८६८५०)
हैमानीमानि जानीमः प्रतिबुद्धाः स्म जागृम ।
इह ह्येतदुपावृत्तं प्रेत्य स्यात्कटुकोदयम् ।
अप्रतिग्राह्यमेवैतत्प्रेत्येह च सुखेप्सुना ॥ १३-१४१-२९ (८६८५१)
वसिष्ठ उवाच। १३-१४१-३०क्ष् (७१९९)
शतेन निष्कगुणितं सहस्रेण च सम्मितम् ।
तथा बहु प्रतीच्छन्वै पापिष्ठां लभते गतिम् ॥ १३-१४१-३० (८६८५२)
कश्यप उवाच। १३-१४१-३१क्ष् (७२००)
यत्पृथिव्यां व्रीहियवं हिरण्यं पशवः स्त्रियः ।
सर्वं तन्नालमेकस्य तस्माद्विद्वाञ्शमं व्रजेत् ॥ १३-१४१-३१ (८६८५३)
भरद्वाज उवाच। १३-१४१-३२क्ष् (७२०१)
उत्पन्नस्य रुरोः शृङ्गं वर्दमानस्य वर्धते ।
प्रार्थना पुरुषस्येव तस्य मात्रा न विद्यते ॥ १३-१४१-३२ (८६८५४)
गौतम उवाच। १३-१४१-३३क्ष् (७२०२)
न तल्लोके द्रव्यमस्ति यल्लोभं प्रतिपूरयेत् ।
समुद्रकल्पः पुरुषो न कदाचन पूर्यते ॥ १३-१४१-३३ (८६८५५)
विश्वामित्र उवाच। १३-१४१-३४क्ष् (७२०३)
कामं कामयमानस्य यदा कामः समृध्यते ।
अथैनमपरः काम इष्टो विध्यति बाणवत् ॥ १३-१४१-३४ (८६८५६)
ग्अत्रिरुवाच। १३-१४१-३५क्ष् (७२०४)
न जातु कामः कामानामुपभोगेन शाम्यति ।
हविषा कृष्णवर्त्मेव भूय एवाभिवर्धते ॥' १३-१४१-३५ (८६८५७)
जमदग्निरुवाच। १३-१४१-३६क्ष् (७२०५)
प्रतिग्रहे संयमो वै तपो धारयते ध्रुवम् ।
तद्धनं ब्राह्मणस्येह लुभ्यमानस्य विस्रवेत् ॥ १३-१४१-३६ (८६८५८)

अरुन्धत्युवाच। १३-१४१-३७क्ष् (७२०६)
धर्मार्थं सञ्चयो यो वा द्रव्याणां पक्षसम्मतः ।
तपःसञ्चय एवेह विशिष्टो द्रव्यसञ्चयात् ॥ १३-१४१-३७ (८६८५९)
चण्डोवाच। १३-१४१-३८क्ष् (७२०७)
उग्रादितो भयाद्यस्माद्बिभ्यतीमे ममेश्वराः ।
बलीयसो दुर्बलवद्बिभेम्यहमतः परम् ॥ १३-१४१-३८ (८६८६०)
पशुसस्व उवाच। १३-१४१-३९क्ष् (७२०८)
यद्वै धर्मात्परं नास्ति तादृशं ब्राह्मणा विदुः ।
विनयात्साधु विद्वांसमुपासेयं यथातथम् ॥ १३-१४१-३९ (८६८६१)
ऋषय ऊचुः। १३-१४१-४०क्ष् (७२०९)
कुशलं सह दानेन तस्मै यस्य प्रजा इमाः ।
फलान्युपधियुक्तानि य एवं नः प्रयच्छति ॥ १३-१४१-४० (८६८६२)
भीष्म उवाच। १३-१४१-४१क्ष् (७२१०)
इत्युक्त्वा हेमगर्भाणि हित्वा तानि फलानि ते ।
ऋषयो जग्मुरन्यत्र सर्व एव दृढव्रताः ॥ १३-१४१-४१ (८६८६३)
अथ ते मन्त्रिणः सर्वे राजानमिदमब्रुवन् ।
उपधिं शङ्कमानास्ते हित्वा तानि फलानि वै ।
ततोऽन्यत्रैव गच्छन्ति विदितं तेऽस्तु पार्थिव ॥ १३-१४१-४२ (८६८६४)
इत्युक्तः स तु भृत्यैस्तैर्वृषादर्भिश्चुकोप ह ।
तेषां वै प्रतिकर्तुं च सर्वेषामगमद्गृहम् ॥ १३-१४१-४३ (८६८६५)
स गत्वाऽऽहवनीयेऽग्नौ तीव्रं नियममास्थितः ।
जुहाव संस्कृतैर्मन्त्रैरेकैकामाहुतिं नृपः ॥ १३-१४१-४४ (८६८६६)
तस्मादग्नेः समुत्तस्थौ कृत्या लोकभयंकरी ।
तस्या नाम वृषादर्भिर्यातुधानीत्यथाकरोत् ॥ १३-१४१-४५ (८६८६७)
सा कृत्या कालरात्रीव कृताञ्जलिरुपस्थिता ।
वृषादर्भि नरपतिं किं करोमीति चाब्रवीत् ॥ १३-१४१-४६ (८६८६८)
वृषादर्भिरुवाच। १३-१४१-४७क्ष् (७२११)
ऋषीणां गच्छ सप्तानामरुन्धत्यास्तथैव च ।
दासीभर्तुश्च दास्याश्च मनसा नाम धारय ॥ १३-१४१-४७ (८६८६९)
ज्ञात्वा नामानि चैवैषां सर्वानेतान्विनाशय ।
विनष्टेषु तथा स्वैरं गच्छ यत्रेप्सितं तव ॥ १३-१४१-४८ (८६८७०)
सा तथेति प्रतिश्रुत्य यातुधानी स्वरूपिणी ।
जगाम तद्वनं यत्र विचेरुस्ते महर्षयः ॥ ॥ १३-१४१-४९ (८६८७१)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
एकचत्वारिंशदधिकशततमोऽध्यायः ॥ १४१ ॥

७-१४१-३ वृषा दर्वेश्च संवादमिति थ ध पाठः ॥
७-१४१-५ गण्डाभूत्कर्मकारिकेति झ पाठः । गण्डा नामतः ॥
७-१४१-९ दिष्टान्तं मरणम् ॥
७-१४१-११ आत्मानं शरीरं परीप्सवः रक्षितुकामाः । निरन्ने मर्त्यलोकेऽस्मिन्निति झ पाठः ॥
७-१४१-१३ पुष्टिः पुष्टिहेतुः । तच्छृणुध्वं तपोधना इति ट थ ध पाठः ॥
७-१४१-३० प्रतीच्छन् प्रतिगृह्णन् ॥
७-१४१-३२ तस्य लाभसुखस्य मात्रा इयत्ता ॥
७-१४१-३६ तद्धनं तपोधनम् ॥
७-१४१-३७ पक्षसम्मतः पाक्षिकत्वेन मतः ॥
७-१४१-३९ यद्वै धर्मे परं नास्ति ब्राह्मणास्तद्धनं विदुरिति झ पाठः । यत् यतो हेतोः। वैधर्मे विधर्म एव वैधर्मः तस्मिँलोभादिदोषे सति परं उत्कृष्टं पदं नास्ति न लभ्यतेऽतस्तदलोभाख्यमेव धनं ब्राह्मणा विदुः ॥
७-१४१-४० उपधिश्छलम् । कश्मलाधमदानाय प्रतियत्नः प्रजाधमाः। फलान्युपधियुक्तानि यत्र यः सम्प्रच्छतीति थ ध पाठः ॥
७-१४१-४७ नाम नाम्नोर्थम् ॥
७-१४१-४८ ज्ञात्वा नामानुरूपं तेषां सामर्थ्यं परीक्ष्य तान् विनाशय । अन्यथा त्वामेव ते विनाशयिष्यन्तीति भावः ॥

---

अनुससनपर्व-अध्यय१४२
॥ श्रीः ॥
१३.१४२. अध्यायः १४२

अथ दानधर्मपर्व ॥ १ ॥


वने विचरतां सप्तर्षीणां परिव्राड्रूपधारिणेन्द्रेण समागमः ॥ १ ॥
अरुन्धत्या तस्यातिपीनाङ्गत्वे कारणं पृष्टैस्तैस्तत्कथनः ॥ २ ॥
तथा कामपि पद्मिनीमवलोकितवद्भिस्तैर्बिसग्रहणाय तत्समीपगमनम् ॥ ३ ॥
तत्र तद्रक्षिण्या वृषादर्भिनिर्मितकत्यया स्वस्वनामनिर्वचनेन सरःप्रवेशं चोदिसैस्तांप्रति तन्निर्वचनम् ॥ ४ ॥
भिक्षुरूपिणेन्द्रेण सकृत्स्वनामनिर्वचनेऽपि पुन पृच्छन्त्याः

कृत्याया दण्डेन मारणपूर्वकमृषीन्प्रति स्वस्वरूपप्रकटनम् ॥ ५ ॥

Mahabharata - Anushaasana Parva - Chapter Text

भीष्म उवाच ।
अथात्रिप्रमुखा राजन्वने तस्मिन्महर्षयः ।
व्यचरन्भक्षयन्तो वै मूलानि च फलानि च ॥ १३-१४२-१ (८६८७२)
अथापश्यन्सुपीनांसपाणिपादमुखोदरम् ।
परिव्रजन्तं स्थूलाङ्गं परिव्राजं शुनस्सखम् ॥ १३-१४२-२ (८६८७३)
अरुन्धती तु तं दृष्ट्वा सर्वाङ्गोपचितं शुभम् ।
भवितारो भवन्तो वै नैवमित्यब्रवीदृषीन् ॥ १३-१४२-३ (८६८७४)
वसिष्ठ उवाच। १३-१४२-४क्ष् (७२१२)
नैतस्येह यथाऽस्माकमग्निहोत्रमनिर्हुतम् ।
सायं प्रातश्च होतव्यं तेन पीवाञ्शुनस्सखः ॥ १३-१४२-४ (८६८७५)
अत्रिरुवाच। १३-१४२-५क्ष् (७२१३)
नैतस्येह यथाऽस्माकं क्षुधया वीर्यमाहतम् ।
कृच्छ्राधीतं प्रनष्टं च तेन पीवाञ्छुनस्सखः ॥ १३-१४२-५ (८६८७६)
विश्वामित्र उवाच। १३-१४२-६क्ष् (७२१४)
नैतस्येह यथाऽस्माकं शश्वच्छास्त्रकृतो ज्वरः ।
अलसः क्षुत्परो मूर्खस्तेन पीवाञ्शुनस्सखः ॥ १३-१४२-६ (८६८७७)
जमदग्निरुवाच। १३-१४२-७क्ष् (७२१५)
नैतस्येह यथाऽस्माकं भक्तमिन्धनमेव च ।
सञ्चित्यं वार्षिकं चित्ते तेन पीवाञ्शुनस्सखः ॥ १३-१४२-७ (८६८७८)
कश्यप उवाच। १३-१४२-८क्ष् (७२१६)
नैतस्येह यथाऽस्माकं चत्वारश्च सहोदराः ।
देहिदेहीति भिक्षन्ति तेन पीवाञ्शुनस्सखः ॥ १३-१४२-८ (८६८७९)
भरद्वाज उवाच। १३-१४२-९क्ष् (७२१७)
नैतस्येह यथाऽस्माकं ब्रह्मबन्धोरचेतसः ।
शोको भार्यापवादेन तेन पीवाञ्शुनस्सखः ॥ १३-१४२-९ (८६८८०)
गौतम उवाच। १३-१४२-१०क्ष् (७२१८)
नैतस्येह यथाऽस्माकं त्रिकौशेयं च राङ्कवम् ।
एकैकं वै त्रिवर्षीयं तेन पीवाञ्शुनस्सखः ॥ १३-१४२-१० (८६८८१)
भीष्म उवाच। १३-१४२-११क्ष् (७२१९)
अथ दृष्ट्वा परिव्राट् स तान्महर्षीञ्शुनस्सखः ।
अभिवाद्य यथान्यायं पाणिस्पर्शमथाचरत् ॥ १३-१४२-११ (८६८८२)
परिचर्यां वने तां तु क्षुत्प्रतीकारकाङ्क्षिणः ।

अन्योन्येन निवेद्याथ प्रातिष्ठन्त सहैव ते ॥ १३-१४२-१२ (८६८८३)
एकनिश्चयकार्याश्च व्यचरन्त वनानि ते ।
आददानाः समुद्धृत्य मूलानि च फलानि च ॥ १३-१४२-१३ (८६८८४)
कदाचिद्विचरन्तस्ते वृक्षैरविरलैर्वृताम् ।
शुचिपूर्णप्रसन्नोदां ददृशुः पद्मिनीं शुभाम् ॥ १३-१४२-१४ (८६८८५)
बालादित्यवपुःप्रख्यैः पुष्करैरुपशोभिताम् ।
वैडूर्यवर्णसदृशैः पद्मपत्रैरथावृताम् ॥ १३-१४२-१५ (८६८८६)
नानाविधैश्च विहगैर्जलप्रवरसेविभिः ।
एकद्वारामनादेयां सूपतीर्थामकर्दमाम् ॥ १३-१४२-१६ (८६८८७)
वृषादर्भिप्रयुक्ता तु कृत्या विकृतदर्शना ।
यातुधानीति विख्याता पद्मिनीं तामरक्षत ॥ १३-१४२-१७ (८६८८८)
शुनस्सखसहायास्तु बिसार्थं ते महर्षयः ।
पद्मिनीमभिजग्मुस्ते सर्वे कृत्याभिरक्षिताम् ॥ १३-१४२-१८ (८६८८९)
ततस्ते यातुधानीं तां दृष्ट्वा विकृतदर्शनाम् ।
स्थितां कमलिनीतीरे कृत्यामूचुर्महर्षयः ॥ १३-१४२-१९ (८६८९०)
एका तिष्ठसि का च त्वं कस्यार्थे किं प्रयोजनम् ।
पद्मिनीतीरमाश्रित्य ब्रूहि त्वं किं चिकीर्षसि ॥ १३-१४२-२० (८६८९१)
यातुधान्युवाच। १३-१४२-२१क्ष् (७२२०)
याऽस्मि काऽस्म्यनुयोगो मे न कर्तव्यः कथञ्चन ।
आरक्षिणीं मा पद्मिन्या वित्त सर्वे तपोधनाः ॥ १३-१४२-२१ (८६८९२)
ऋषय ऊचुः। १३-१४२-२२क्ष् (७२२१)
सर्व एव क्षुधार्ताः स्म न चान्यत्किंचिदस्ति नः ।
भवत्याः सम्मते सर्वे गृह्णीयाम बिसान्युत ॥ १३-१४२-२२ (८६८९३)
यातुधान्युवाच। १३-१४२-२३क्ष् (७२२२)
समयेन बिसानीतो गृह्णीध्वं कामकारतः ।
एकैको नाम मे प्रोक्त्वा ततो गृह्णीत माचिरम् ॥ १३-१४२-२३ (८६८९४)
भीष्म उवाच। १३-१४२-२४क्ष् (७२२३)
विज्ञाय यातुधानीं तां कृत्यमृषिवधैषिणीम् ।
अत्रिः क्षुधा परीतात्मा ततो वचनमब्रवीत् ॥ १३-१४२-२४ (८६८९५)
अत्रिरुवाच। १३-१४२-२५क्ष् (७२२४)
अरात्त्रिरत्त्रिः सा रात्रिर्या नाधीते त्रिरद्य वै ।
अरात्रिरत्रिरित्येव नाम मे विद्धि शोभने ॥ १३-१४२-२५ (८६८९६)
यातुधान्युवाच। १३-१४२-२६क्ष् (७२२५)
यथोदाहृतमेतत्ते त्वया नाम महाद्युते ।
दुर्धार्यमेतन्मनसा गच्छाऽवतर पद्मिनीम् ॥ १३-१४२-२६ (८६८९७)
वसिष्ठ उवाच। १३-१४२-२७क्ष् (७२२६)

वसिष्ठोऽस्मि वरिष्ठोऽस्मि वसे वासगृहेष्वपि ।
वरिष्ठत्वाच्च वासाच्च वसिष्ठ इति विद्दि माम् ॥१३-१४२-२७ (८६८९८)
यातुधान्युवाच। १३-१४२-२८क्ष् (७२२७)
नाम नैरुक्तमेतत्ते दुःखव्याभाषिताक्षरम् ।
नैतद्धारयितुं शक्यं गच्छाऽवतर पद्मिनीम् ॥१३-१४२-२८ (८६८९९)
कश्यप उवाच। १३-१४२-२९क्ष् (७२२८)
कुलंकुलं च कुवमः कुवमः कश्यपो द्विजः ।
काश्यः काशनिकाशत्वादेतन्मे नाम धारय ॥१३-१४२-२९ (८६९००)
यातुधान्युवाच। १३-१४२-३०क्ष् (७२२९)
यथोदाहृतमेतत्ते मयि नाम महाद्युते ।
दुर्धार्यमेतन्मनसा गच्छाऽवतर पद्मिनीम् ॥१३-१४२-३० (८६९०१)
भरद्वाज उवाच। १३-१४२-३१क्ष् (७२३०)
भरेऽसुतान्भरे पोष्यान्भरे देवान्भरे द्विजान् ।
भरे भार्यामहं व्याजाद्भरद्वाजोऽस्मि शोभने ॥१३-१४२-३१ (८६९०२)
यातुधान्युवाच। १३-१४२-३२क्ष् (७२३१)
नाम नैरुक्तमेतत्ते दुःखव्याभाषिताक्षरम् ।
नैतद्धारयितुं शक्यं गच्छाऽवतर पद्मिनीम् ॥१३-१४२-३२ (८६९०३)
गौतम उवाच। १३-१४२-३३क्ष् (७२३२)
गोदमो दमतोऽधूमोऽदमस्ते समदर्शनात् ।
विद्धि मां गोतमं कृत्ये यातुधानि निबोध मां १३-१४२-३३ (८६९०४)
यातुधान्युवाच। १३-१४२-३४क्ष् (७२३३)
यथोदाहृतमेतत्ते मयि नाम महामुने ।
नैतद्धारयितुं शक्यं गच्छाऽवतर पद्मिनीम् ॥१३-१४२-३४ (८६९०५)
विश्वामित्र उवाच। १३-१४२-३५क्ष् (७२३४)
विश्वेदेवाश्च मे मित्रं मित्रमस्मि गवां तथा ।
विश्वामित्र इति ख्यातं यातुधानि निबोध मां १३-१४२-३५ (८६९०६)
यातुधान्युवाच। १३-१४२-३६क्ष् (७२३५)
नाम नैरुक्तमेतत्ते दुःखव्याभाषिताक्षरम् ।
नैतद्धारयितुं शक्यं गच्छाऽवतर पद्मिनीम् ॥१३-१४२-३६ (८६९०७)
जमदग्निरुवाच। १३-१४२-३७क्ष् (७२३६)
जाजमद्यजजानेऽहं जिजाहीह जिजायिषि ।
जमदग्निरिति ख्यातं ततो मां विद्धि शोभने ॥१३-१४२-३७ (८६९०८)
यातुधान्युवाच। १३-१४२-३८क्ष् (७२३७)
यथोदाहृतमेतत्ते मयि नाम महामुने ।
नैतद्धारयितुं शक्यं गच्छाऽवतर पद्मिनीम् ॥१३-१४२-३८ (८६९०९)
अरुन्धत्युवाच। १३-१४२-३८क्ष् (७२३८)

धरान्धरित्रीं वसुधां भर्तुस्तिष्ठाम्यनन्तरम् ।
मनोऽनुरुन्धती भर्तुरिति मां विद्ध्यरुन्धतीम् ॥ १३-१४२-३९ (८६९१०)
यातुधान्युवाच। १३-१४२-४०क्ष् (७२३९)
नामनैरुक्तमेतत्ते दुःखव्याभाषिताक्षरम् ।
नैतद्धारयितुं शक्यं गच्छाऽवतर पद्मिनीम् ॥ १३-१४२-४० (८६९११)
गण्डोवाच। १३-१४२-४१क्ष् (७२४०)
वक्त्रैकदेशे गण्डेति धातुमेतं प्रचक्षते ।
तेनोन्नतेन गण्डेति विद्धि माऽनलसम्भवे ॥ १३-१४२-४१ (८६९१२)
यातुधान्युवाच। १३-१४२-४२क्ष् (७२४१)
नामनैरुक्तमेतत्ते दुःखव्याभाषिताक्षरम् ।
नैतद्धारयितुं शक्यं गच्छावतर पद्मिनीम् ॥ १३-१४२-४२ (८६९१३)
पशुसख उवाच। १३-१४२-४३क्ष् (७२४२)
पशून्यञ्जामि दृष्ट्वाऽहं पशूनां च सदा सखा ।
गौणं पशुसखेत्येवं विद्धि मामग्निसम्भवे ॥ १३-१४२-४३ (८६९१४)
यातुधान्युवाच। १३-१४२-४४क्ष् (७२४३)
नामनैरुक्तमेतत्ते दुःखव्याभाषिताक्षरम् ।
नैतद्धारयितुं शक्यं गच्छाऽवतर पद्मिनीम् ॥ १३-१४२-४४ (८६९१५)
शुनःसख उवाच। १३-१४२-४५क्ष् (७२४४)
एभिरुक्तं यथा नाम नाहं वक्तुमिहोत्सहे ।
शुनःसखसखायं मां यातुधान्युपधारय ॥ १३-१४२-४५ (८६९१६)
यातुधान्युवाच। १३-१४२-४६क्ष् (७२४५)
नाम न व्यक्तमुक्तं वै वाक्यं संदिग्धया गिरा ।
तस्मात्सकृदिदानीं त्वं ब्रूहि यन्नाम ते द्विज ॥ १३-१४२-४६ (८६९१७)
शुनःसख उवाच। १३-१४२-४७क्ष् (७२४६)
सकृदुक्तं मया नाम न गृहीतं त्वया यदि ।
तस्मात्त्रिदण्डाभिहता गच्छ भस्मेति माचिरम् ॥ १३-१४२-४७ (८६९१८)
भीष्म उवाच। १३-१४२-४८क्ष् (७२४७)
सा ब्रह्मदण्डकल्पेन तेन मूर्ध्नि हता तदा ।
कृत्या पपात मेदिन्यां भस्म साच जगाम ह ॥ १३-१४२-४८ (८६९१९)
शुनःसखश्च हत्वा तां यातुधानीं महाबलाम् ।
भुवि त्रिदण्डं विष्टभ्य शाद्वले समुपाविशत् ॥ १३-१४२-४९ (८६९२०)
ततस्ते मुनयः सर्वेः पुष्कराणि बिसानि च ।
यथाकाममुपादाय समुत्तस्थुर्मुदाऽन्विताः ॥ १३-१४२-५० (८६९२१)
श्रमेण महता युक्तास्ते बिसानि कलापशः ।
तीरे निक्षिप्य पद्मिन्यास्तर्पणं चक्रुरम्भसा ॥ १३-१४२-५१ (८६९२२)
अथोत्थाय जलात्तस्मात्सर्वे ते समुपागमन् ।

नापश्यंश्चापि ते तानि बिसानि पुरुषर्षभाः ॥ १३-१४२-५२ (८६९२३)
ऋषय ऊचुः। १३-१४२-५३क्ष् (७२४८)
केन क्षुधाभिभूतानामस्माकं पापकर्मणाम् ।
नृशंसेनापनीतानि बिसान्याहारकाङ्क्षिणाम् ॥ १३-१४२-५३ (८६९२४)
भीष्म उवाच। १३-१४२-५४क्ष् (७२४९)
ते शङ्कमानास्त्वन्योन्यं पप्रच्छुर्द्विजसत्तमाः ।
त ऊचुः शपथं सर्वे कुर्म इत्यरिकर्शन ॥ १३-१४२-५४ (८६९२५)
त उक्त्वा बाढमित्येव सर्व एव तदा समम् ।
क्षुधार्ताः सुपरिश्रान्ताः शपथायोपचक्रमुः ॥ १३-१४२-५५ (८६९२६)
अत्रिरुवाच। १३-१४२-५६क्ष् (७२५०)
स गां स्पृशतु पादेन सूर्यं च प्रतिमेहतु ।
अध्यायेष्वधीयीत बिसस्तैन्यं करोति यः ॥ १३-१४२-५६ (८६९२७)
वसिष्ठ उवाच। १३-१४२-५७क्ष् (७२५१)
अनध्याये पठेल्लोके शुनः स परिकर्षतु ।
परिव्राट् कामवृत्तिस्तु बिसस्तैन्यं करोति यः ॥ १३-१४२-५७ (८६९२८)
शरणागतं हन्तु मित्रं स्वसुतां चोपजीवतु ।
अर्थान्काङ्क्षतु कीनाशाद्बिसस्तैन्यं करोति यः ॥ १३-१४२-५८ (८६९२९)
कश्यप उवाच। १३-१४२-५९क्ष् (७२५२)
गविष्णुं ब्रह्मण्यदेवेशं देवदेवं जगद्गुरुम् ।
आधातारं विधातारं सन्धातारं जगद्गुरुम् ।
विहाय स भजत्वन्यं बिसस्तैन्यं करोति यः ॥' १३-१४२-५९ (८६९३०)
सर्वत्र सर्वं लपतु न्यासलोपं करोतु च ।
कूटसाक्षित्वमभ्येतु बिसस्तैन्यं करोति यः ॥ १३-१४२-६० (८६९३१)
वृथा मांसाशनश्चास्तु वृथा दानं करोतु च ।
यातु स्त्रियं दिवा चैव बिसस्तैन्यं करोति यः ॥ १३-१४२-६१ (८६९३२)
भरद्वाज उवाच। १३-१४२-६२क्ष् (७२५३)
नृशंसस्त्यक्तधर्माऽस्तु स्त्रीषु ज्ञातिषु गोषु च ।
ब्राह्मणं चापि जयतां बिसस्तैन्यं करोति यः ॥ १३-१४२-६२ (८६९३३)
उपाध्यायमधः कृत्वा ऋचोऽध्येतु यजूंषि च ।
जुहोतु च स कक्षाग्नौ बिसस्तैन्यं करोति यः ॥ १३-१४२-६३ (८६९३४)
जमदग्निरुवाच। १३-१४२-६४क्ष् (७२५४)
पुरीषमुत्सृजत्वप्सु हन्तु गां चैव द्रुह्यत् ।
अनृतौ मैथुनं यातु बिसस्तैन्यं करोति यः ॥ १३-१४२-६४ (८६९३५)
द्वेष्यो भार्योपजीवी स्याद्दूरबन्धुश्च वैरवान् ।
अन्योन्यस्यातिथिश्चास्तु बिसस्तैन्यं करोति यः ॥ १३-१४२-६५ (८६९३६)
गौतम उवाच। १३-१४२-६६क्ष् (७२५५)

अधीत्य वेदांस्त्यजतु त्रीनग्नीनपविध्यतु ।
विक्रीणातु तथा सोमं बिसस्तैन्यं करोति यः ॥ १३-१४२-६६ (८६९३७)
उदपानोदके ग्रामे ब्राह्मणो वृषलीपतिः ।
तस्य सालोक्यतां यातु बिसस्तैन्यं करोति यः ॥ १३-१४२-६७ (८६९३८)
विश्वामित्र उवाच। १३-१४२-६८क्ष् (७२५६)
जीवतो वै गुरूान्भृत्यान्भरन्त्वस्य परे जनाः ।
दरिद्रो बहुपुत्रः स्याद्बिसस्तैन्यं करोति यः ॥ १३-१४२-६८ (८६९३९)
अशुचिर्ब्रह्मकूटोऽस्तु मिथ्या चैवाप्यहङ्कृतः ।
कर्षको मत्सरी चास्तु बिसस्तैन्यं करोति यः ॥ १३-१४२-६९ (८६९४०)
हर्षं करोतु भृतको राज्ञश्चास्तु पुरोहितः ।
अयाज्यस्य भवेदृत्विक् बिसस्तैन्यं करोति यः १३-१४२-७० (८६९४१)
अरुन्धत्युवाच। १३-१४२-७१क्ष् (७२५७)
नित्यं परिभवेच्छ्वश्रूं भर्तुर्भवतु दुर्मनाः ।
एका स्वादु समश्नातु बिसस्तैन्यं करोति या ॥ १३-१४२-७१ (८६९४२)
ज्ञातीनां गृहमध्यस्था सक्तूनत्तु दिनक्षये ।
अभोग्या वीरसूरस्तु बिसस्तैन्यं करोति या ॥ १३-१४२-७२ (८६९४३)
गण्डोवाच। १३-१४२-७३क्ष् (७२५८)
अनृतं भाषतु सदा बन्धुभिश्च विरुध्यतु ।
ददातु कन्यां शुल्केन बिसस्तैन्यं करोति या ॥ १३-१४२-७३ (८६९४४)
साधयित्वा स्वयं प्राशेद्दास्ये जीर्यतु चैव ह ।
विकर्मणा प्रमीयेत बिसस्तैन्यं करोति या ॥ १३-१४२-७४ (८६९४५)
पशुसख उवाच। १३-१४२-७५क्ष् (७२५९)
दास एव प्रजायेतामप्रसूतिरकिञ्चन ।
दैवतेष्वनमस्कारो बिसस्तैन्यं करोति यः ॥ १३-१४२-७५ (८६९४६)
शुनःसख उवाच। १३-१४२-७६क्ष् (७२६०)
अध्वर्यवे दुहितरं वा ददातु
च्छन्दोगे वाऽऽचरितब्रह्मचर्ये ।
आथर्वणं वेदमधीत्य विप्रः
स्नायीत वा यो हरते बिसानि ॥ १३-१४२-७६ (८६९४७)
ऋषय ऊचुः। १३-१४२-७७क्ष् (७२६१)
इष्टमेतद्द्विजातीनां योऽयं ते शपथः कृतः ।
त्वया कृतं बिसस्तैन्यं सर्वेषां नः शुनःसख ॥ १३-१४२-७७ (८६९४८)
शुनःसख उवाच। १३-१४२-७८क्ष् (७२६२)
न्यस्तमद्यं न पश्यद्भिर्यदुक्तं कृतकर्मभिः ।
सत्यमेतन्न मिथ्यैतद्बिसस्तैन्यं कृतं मया ॥ १३-१४२-७८ (८६९४९)
मया ह्यन्तर्हितानीह बिसानीमानि पश्यत ।

परीक्षार्थं भगवतां कृतमेवं मयाऽनघाः ॥१३-१४२-७९ (८६९५०)
रक्षणार्थं च सर्वेषां भवतामहमागतः ।
यातुधानी ह्यतिक्रूरा कृत्यैषा वो वधैषिणी ॥१३-१४२-८० (८६९५१)
वृषादर्भिप्रयुक्तैषा निहता मे तपोधनाः ।
दुष्टा हिंस्यादियं पापा युष्मान्प्रत्यग्निसम्भवा ॥१३-१४२-८१ (८६९५२)
तस्मादस्म्यागतो विप्रा वासवं मां निबोधत ।
अलोभादक्षया लोकाः प्राप्ता वः सार्वकामिकाः ।
उत्तिष्ठध्वमितः क्षिप्रं तानवाप्नुत वै द्विजाः ॥ १३-१४२-८२ (८६९५३)
भीष्म उवाच।१३-१४२-८३क्ष् (७२६३)
ततो महर्षयः प्रीतास्तथेत्युक्त्वा पुरन्दरम् ।
सहैव त्रिदशेन्द्रेण सर्वे जग्मुस्त्रिविष्टपम् ॥१३-१४२-८३ (८६९५४)
एवमेते महात्मानो योगैर्बहुविधैरपि ।
क्षुधा परमया युक्ताश्छन्द्यमाना महात्मभिः ।
नैव लोभं तदा यक्रुस्ततः स्वर्गमवाप्नुवन् ॥ १३-१४२-८४ (८६९५५)
तस्मात्सर्वास्ववस्थासु नरो लोभं विवर्जयेत् ।
एष धर्मः परो राजंस्तस्माल्लोभं विवर्जयेत् ॥१३-१४२-८५ (८६९५६)
इदं नरः सुचरितं समवायेषु कीर्तयन् ।
अर्थभागी च भवति न च दुर्गाण्यवाप्नुते ॥१३-१४२-८६ (८६९५७)
प्रीयन्ते पितरश्चास्य ऋषयो देवतास्तथा ।
यशोधर्मार्थभागी च भवति प्रेत्य मानवः ॥ ॥१३-१४२-८७ (८६९५८)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
द्विचत्वारिंशदधिकशततमोऽध्यायः ॥१४२ ॥

Mahabharata - Anushaasana Parva - Chapter Footnotes

७-१४२-२ परिव्राजं शुना सहेति झ़पाठः ॥
७-१४२-४ तेन पीवान्शुना सहेति झ़पाठः ॥
७-१४२-९ भार्यापवादः कृत्तिकास्वभिशापात् ॥
७-१४२-१० त्रिकौशेयं कुशा रज्जुस्तया निर्वृत्तं
काशेयं पाटितसन्धानम् ।त्रीणि कौशेयानि यस्मिन्। राङ्कवं
रङ्कोर्मृगाविशेषस्य चर्म तदपि त्रिवर्षीयमतिजीर्णम् ॥
७-१४२-१२ परिचर्यां करिष्यामि कुर्वित्यन्योन्यमुक्त्वेत्यर्थः ॥
७-१४२-१३ एकरूप एव निश्चयः कार्यं च येषां ते ॥
७-१४२-१६ उपतीर्थमवतरणमार्गः ॥
७-१४२-२४ नामार्थद्वारा सामर्थ्यं ज्ञात्वा अस्माकं वधैषिणीयमिति
विज्ञायेत्यर्थः ॥

७-१४२-२५ अरात्रिः अरयः कामादयः सन्त्यस्मिन्नित्यरं
पापं अर्शआदिभ्योऽजित्यच् । तस्मात्त्रायत
इत्यरात्रिः। अरशब्दादलुप्तपञ्चमीकात् परस्य त्रायतेरुपरि
क्विप्प्रत्ययः। यस्मादरात्रिस्तस्मादत्रिः। अत्तीत्यद् मृत्युस्तस्मात्त्रायत
इत्यत्रिः। मृत्युशब्दस्य पाप्मनि प्रयोगदर्शनात् ॥
७-१४२-२६ मयि नाम महामुने इति झ पाठः ॥
७-१४२-२७ वायुश्च पृथिवी चेति श्रुतिप्रसिद्धा
वाय्वादयो वसवस्ते यस्य स्वाधीना भवन्ति स
वसुमान्प्राप्ताणिमाद्यैश्वर्यो महायोगी । अतिशयेन वसुमानिति
वसिष्ठस्तादृशोऽहमस्ति। वसुमच्छब्दादिष्ठन्प्रत्यये
परे मतुब्लोपे टिलोपे च वसिष्ठः। वासगृहेषु वासयोग्येषु
गृहस्थाश्रमेषु सर्वेषामुपजीव्येषु वसे वसामि अतोऽहं वस्तॄणां
मध्ये अतिश्रेष्ठ इति वसिष्ठोऽस्मि ॥
७-१४२-२९ कशा अश्वताडनरज्जुस्तामर्हन्ति ते कश्या
अश्वाः । इन्द्रियाण्येवाश्वाः कश्यास्तदाश्रयत्वाच्छरीराण्यपि
कश्यानि। कुलङ्कुलमिति वीप्सायां द्विर्वचनम्। सर्वशरीरेष्वहमेवैकः
कश्यपो नाम द्विजोऽस्मि। कश्यानि शरीराणि पाति रक्षति पिबति
भुङ्क्ते पाययति योषयति वा कश्यप इति योगात्। कुवमः कुवम इति। कुः
पृथवीं तस्यां वमति वर्षतीति कुवम आदित्यः पूर्ववद्द्विवचनम्।
सर्वोप्यादित्योऽहमेव। मत्पुत्रत्वात्सर्वेषामादित्यानामित्यर्थः। काश्यो
दीप्तिमान्। तत्र हेतुः। काशनिकाशत्वात् बहुकालीनत्वेन
काशपुष्पसदृशः सर्वतः पलितश्चिरन्तनस्तपसा
दीप्तोऽस्मीस्तर्थः। कुलं कुलं च कुशलः कुपयः काश्यपो
द्विजः। काश्यपः काशनीकाश एतन्मे नाम धारयेति कङ थ पाठः ॥
७-१४२-३१ प्रजा वै वाजस्ता एष बिभर्तीति श्रुत्यनुसारेण स्वनामाह
भरे इति । असुतान् अपुत्रानुदासीनानपि दीनानदीनान्पालयामि। भरे
सुतान्भरे शिष्यानिति झ पाठः ॥
७-१४२-३३ गोपदार्थं स्वर्गं भूमिं च दमयति वशीकरोतीति गोदमः
। तत्र हेतुः दमत इति। दमेन इन्द्रियजयेन दमयतीति जितेन्द्रियत्वात्
गां द्यां च दमितुं शक्तोस्मीत्यर्थः। अधूमः निर्धूमाग्नितुल्यः। अत
एवादमः अन्येन दमितुमयोग्यः तत्र हेतुः। ते त्वयि। समदर्शनात्समस्य
ब्रह्मणो दर्शनात् ब्रह्मज्ञानित्वादित्यर्थः। अत्र दकारस्थाने
तकारः। गौतमो दमगोधूमो धूमो दुर्दर्शनश्च ते इति थ ध पाठः
॥
७-१४२-३५ मित्रे चर्षौ इति विश्वपदान्तस्य दीर्घः । गवां इन्द्रियाणाम् ॥
७-१४२-३७ जजामाद्यं जजामायं जजामाहं जजायुषीति क थ ध पाठः

। भूयोभूयोऽतिशयेन जमन्ति युगपदनेकेषु यज्ञादिष्वनेकवारं पुनःपुनर्भक्षयन्ति हवींषि ते जाजमन्तो देवाः। ग्जमु भक्षणे' यङ्लुकि शत्रन्तस्य रूपम्। इज्यन्ते देवता अस्मिन्निति यजोऽग्निः तेषां जान आविर्भावस्तस्मिन जिजायिषि जातोऽस्मि इहलोके अतो मां जिजाहि जानीहि। ततो योगात् मां जमदग्निरिति नामतो विद्धि। जाजमदित्यत्राद्यपदे प्रथमाक्षरलोपे द्वितीयस्याग्नित्वे जमदग्निरिति सिद्धम्। ततो जाजमन्तोऽग्निश्चास्मिन् सन्तीति जमदग्निमान्। ततो मतुब्लोपेन जमदग्निरिति पदम्। एतेनापि स्वस्याधर्षणीयत्वमुक्तम् ॥
७-१४२-३९ धरान्पर्वतान् । धरित्रीं भुवम्। वसून्देवान्धत्ते इति व्युत्पत्त्या वसुधां दिवं च तिष्ठामि अधितिष्ठामि। भर्तुर्वसिष्ठस्यानन्तरं अव्यवधानेन अनुरुन्धतीत्या नुकारलोपः। सारं धरित्रीवसुधां नेच्छे भर्तुरनन्तरम्। इति ध पाठः। वसुधामिच्छे भर्तुरिति क थ पाठः ॥
७-१४२-४१ गडि वदनैकदेश इति धातोः गण्डेति नुमा सहितस्यानुकरणम् । मा माम्। वृषादर्भिणाऽग्नौ हुत्वाऽस्या उत्पादितत्वादनलसंभवत्वम्। गण्डं गतवती गण्डं गण्डा गण्डेति संज्ञिता। गण्डं गण्डेति गण्डेतीति ध पाठः। चण्डं गतवत्प्रचण्डा चण्डाचण्डेति संज्ञिता। चण्डाचण्डेति चण्डेतीति थ पाठः ॥
७-१४२-४३ पशून् जीवान् रञ्जामि रञ्जयामि । मां मम नामेत्यर्थः। सखे सखायौ सख्येय इति थ पाठः। सहेऽपराधं सख्येय इति ङ पाठः ॥
७-१४२-४५ श्वा धर्मः तत्सखायो मुनयः तेषां सखा शुनःसखसखः तम् । शुनां सदा सखायं मामिति ङ थ। पाठः ॥
७-१४२-४७ भस्म भस्मताम् ॥
७-१४२-५१ कलापशः सङ्घशः ॥
७-१४२-५५ सर्व एव शुनस्सखमिति थ ध पाठः ॥
७-१४२-५७ शुनः सारमेयान्परिकर्षतु क्रीडार्थं मृगयार्थं वा । परिव्राट् कर्मवृत्तिस्त्विति थ ध पाठः ॥
७-१४२-५८ स्वसुतां शुल्कग्रहणेन । कीनाशात् कर्षकात् ॥
७-१४२-६० सर्वत्र सर्वं पणतु न्यासलोभं करोतु चेति ट थ पाठः ॥
७-१४२-६१ वृथा यागादिनिमित्तं विना । वृथा नटनर्तकादौ ॥
७-१४२-६२ जयतां युद्धे वादे वा । मातरं चापि जहत्विति क पाठः ॥
७-१४२-६३ कक्षाप्तौ तत्र हि हुतं भस्मीभावमप्राप्य होतुर्दोषकरमित्याशयः ॥
७-१४२-६७ निर्गुणान्बिभृयाद्भृत्यानिति क ट थ पाठः ॥
७-१४२-६९ ऋद्ध्या चैवाप्यहंकृत इति झ पाठः ॥

७-१४२-७० वर्षाचरोस्तु भृतक इति झ पाठः ॥
७-१४२-७२ ज्ञातीनां अनादरे षष्ठी । ज्ञातीननादृत्येत्यर्थः। अभोग्या योनिदूषिता ॥
७-१४२-७३ साधुभिश्च विरुध्यत्विति ट थ पाठः ॥
७-१४२-७४ साधयित्वा अन्नं पक्त्वा ॥
७-१४२-७८ अद्यं भक्ष्यम् ॥
७-१४२-७९ अन्तर्हितानि अन्तर्धानं प्रापितानि ॥
७-१४२-८५ राजन्ब्राह्मणस्य प्रकीर्तित इति क थ पाठः ॥

---

अनुससनपर्व-अध्यय१४३
॥ श्रीः ॥
१३.१४३. अध्यायः १४३

अथ दानधर्मपर्व ॥ १ ॥
Mahabharata - Anushaasana Parva - Chapter Topics
सम्भूय तीर्थयात्रां कुर्वद्भिर्द्विजर्षिभी राजर्षिभिश्च क्रमेण ब्रह्मसरःप्रति गमनम् ॥ १ ॥
तत्रागस्त्येन ह्रदात्समुद्धृतपद्मस्य धर्मशुश्रूषुणेन्द्रेण गूढमपहारे ऋषिभी राजभिश्च स्वेषु पुष्करस्तेयं शङ्कमानमगस्त्यंप्रति प्रत्येकशो नानाशपथकरणम् ॥ २ ॥
पश्चादिन्द्रेण स्वस्वरूपप्रकाशनपूर्वकं स्वेन पुष्करापहारस्य प्रयोजननिवेदनेन तत्प्रसादनम् ॥ ३ ॥

Mahabharata - Anushaasana Parva - Chapter Text

भीष्म उवाच ।
अत्रैवोदाहरन्तीममितिहासं पुरातनम् ।
यद्वृत्तं तीर्थयात्रायां शपथं प्रति तच्छृणु ॥ १३-१४३-१ (८६९५९)
पुष्करार्थं कृतं स्तैन्यं पुरा भरतसत्तम ।
राजर्षिभिर्महाराज तथैव च द्विजर्षिभिः ॥ १३-१४३-२ (८६९६०)
पुरा प्रभासे ऋषयः समग्राः
समेता वै मन्त्रममन्त्रयन्त ।
चराम सर्वां पृथिवीं पुण्यतीर्थां
तन्नः कामं हन्त गच्छाम सर्वे ॥ १३-१४३-३ (८६९६१)
शुक्रोऽङ्गिराश्चैव कविश्च विद्वां-
स्तथा ह्यगस्त्यो नारदपर्वतौ च ।

भृगुर्वसिष्ठः कश्यपो गौतमश्च
विश्वामित्रो जमदग्निश्च राजन् ॥ १३-१४३-४ (८६९६२)
ऋषिस्तथा गालवोऽथाष्टकश्च
भरद्वाजोऽरुन्धती वालखिल्याः ।
शिबिर्दिलीपो नहुषोऽम्बरीषो
राजा ययातिर्धुन्धुमारोऽथ पूरुः ॥ १३-१४३-५ (८६९६३)
जग्मुः पुरस्कृत्य महानुभावं
शतक्रतुं वृत्रहणं नरेन्द्राः ।
तीर्थानि सर्वाणि परिभ्रमन्तो
माघ्यां ययुः कौशिकीं पुण्यतीर्थाम् ॥ १३-१४३-६ (८६९६४)
सर्वेषु तीर्थेष्ववधूतपापा
जग्मुस्ततो ब्रह्मसरः सुपुण्यम् ।
देवस्य तीर्थे जलमग्निकल्पा
विगाह्य ते भुक्तबिसप्रसूनाः ॥ १३-१४३-७ (८६९६५)
केचिद्बिसान्यखनंस्तत्र राजन्न-
न्ये मृणालान्यखनंस्तत्र विप्राः ।
अथापश्यन्पुष्करं ते ह्रियन्तं
ह्रदादगस्त्येन समुद्धृतं तत् ॥ १३-१४३-८ (८६९६६)
नानाह सर्वानृषिमुख्यानगस्त्यः
केनाहृतं पुष्करं मे सुजातम् ।
युष्माञ्शङ्के पुष्करं दीयतां मे
न वै भवन्तो हर्तुमर्हन्ति पद्मम् ॥ १३-१४३-९ (८६९६७)
शृणोमि कालो हिंसते धर्मवीर्यं
सेयं प्राप्ता वर्तते धर्मपीडा ।
पुराऽधर्मो वर्तते नेह याव-
त्तावद्गच्छामः सुरलोकं चिराय ॥ १३-१४३-१० (८६९६८)
पुरा वेदान्ब्राह्मणा ग्राममध्ये
घुष्टस्वरा वृषलाञ्श्रावयन्ति ।
पुरा राजा व्यवहारानधर्मा-
न्पश्यत्यहं परलोकं व्रजामि ॥ १३-१४३-११ (८६९६९)
पुरा राजा प्रत्यवरान्गरीयसो
मंस्यत्यथैनमनुयास्यन्ति सर्वे ।
धर्मोत्तरं यावदिदं न वर्तते
तावद्व्रजामि परलोकं चिराय ॥ १३-१४३-१२ (८६९७०)
पुरा प्रपश्यामि परेण मर्त्या-
न्बलीयसा दुर्बलान्भुज्यमानान् ।

तस्माद्यास्यामि परलोकं चिराय
न ह्युत्सहे द्रष्टुमीदृङ्गलोके ॥ १३-१४३-१३ (८६९७१)
तमाहुरार्ता ऋषयो महर्षिं
न ते वयं पुष्करं चोरयामः ।
मिथ्याभिशंसा भवता न कार्या
शपाम तीक्ष्णैः शपथैर्महर्षे ॥ १३-१४३-१४ (८६९७२)
ते निश्चितास्तत्र महर्षयस्तु
सम्पश्यन्तो धर्ममेतं नरेन्द्राः ।
ततोऽशपन्त शपथान्पर्ययेण
सहैव ते पार्थिव पुत्रपौत्रैः ॥ १३-१४३-१५ (८६९७३)
भृगुरुवाच। १३-१४३-१६क्ष् (७२६४)
प्रत्याक्रोशेदिहाक्रुष्टस्ताडितः प्रतिताडयेत् ।
खादेच्च पृष्ठमांसानि यस्ते हरति पुष्करम् ॥ १३-१४३-१६ (८६९७४)
वसिष्ठ उवाच। १३-१४३-१७क्ष् (७२६५)
अस्वाध्यायपरो लोके श्वानं च परिकर्षतु ।
पुरे च भिक्षुर्भवतु यस्ते हरति पुष्करम् ॥ १३-१४३-१७ (८६९७५)
कश्यप उवाच। १३-१४३-१८क्ष् (७२६६)
सर्वत्र सर्वं पणतु न्यासे लोभं करोतु च ।
कूटसाक्षित्वमभ्येतु यस्ते हरति पुष्करम् ॥ १३-१४३-१८ (८६९७६)
गौतम उवाच। १३-१४३-१९क्ष् (७२६७)
जीवत्वहङ्कृतो बुद्ध्या विषमेणासमेन सः ।
कर्षको मत्सरी चास्तु यस्ते हरति पुष्करम् ॥ १३-१४३-१९ (८६९७७)
अङ्गिरा उवाच। १३-१४३-२०क्ष् (७२६८)
अशुचिर्ब्रह्मकूटोस्तु श्वानं च परिकर्षतु ।
ब्रह्महाऽनिकृतिश्चास्तु यस्ते हरति पुष्करम् ॥ १३-१४३-२० (८६९७८)
धुन्धुमार उवाच। १३-१४३-२१क्ष् (७२६९)
अकृतज्ञस्तु मित्राणां शूद्रायां च प्रजायतु ।
एकः सम्पन्नमश्नातु यस्ते हरति पुष्करम् ॥ १३-१४३-२१ (८६९७९)
पुरूरवा उवाच। १३-१३२-२२क्ष् (७२७०)
चिकित्सायां प्रचरतु भार्यया चैव पुष्यतु ।
श्वशुरात्तस्य वृत्तिः स्याद्यस्ते हरति पुष्करम् ॥ १३-१४३-२२ (८६९८०)
दिलीप उवाच। १३-१४३-२३क्ष् (७२७१)
उदपानप्लवे ग्रामे ब्राह्मणो वृषलीपतिः ।
तस्य लोकान्स व्रजतु यस्ते हरति पुष्करम् ॥ १३-१४३-२३ (८६९८१)
शुक्र उवाच। १३-१४३-२४क्ष् (७२७२)
वृथा मांसं समश्नातु दिवा गच्छतु मैथुनम् ।

प्रेष्यो भवतु राज्ञश्च यस्ते हरति पुष्करम् ॥ १३-१४३-२४ (८६९८२)
जमदग्निरुवाच। १३-१४३-२५क्ष् (७२७३)
अनध्यायेष्वधीयीत मित्रं श्राद्धे च भोजयेत् ।
श्राद्धे शूद्रस्य चाश्नीयाद्यस्ते हरति पुष्करम् ॥ १३-१४३-२५ (८६९८३)
शिबिरुवाच। १३-१४३-२६क्ष् (७२७४)
अनाहिताग्निर्म्रियतां यज्ञे विघ्नं करोतु च ।
तपस्विभिर्विरुध्येच्च यस्ते हरति पुष्करम् ॥ १३-१४३-२६ (८६९८४)
ययातिरुवाच। १३-१४३-२७क्ष् (७२७५)
अनृतौ व्रतनियतायां भार्यायां स प्रजायतु ।
निराकरोतु वेदांश्च यस्ते हरति पुष्करम् ॥ १३-१४३-२७ (८६९८५)
नहुष उवाच। १३-१४३-२८क्ष् (७२७६)
अतिथिर्गृहसंस्थोऽस्तु कामवृत्तस्तु दीक्षितः ।
विद्यां प्रयच्छतु भृतो यस्ते हरति पुष्करम् ॥ १३-१४३-२८ (८६९८६)
अम्बरीष उवाच। १३-१४३-२९क्ष् (७२७७)
नृशंसस्त्यक्तधर्मोऽस्तु स्त्रीषु ज्ञातिषु गोषु च ।
निहन्तु ब्राह्मणं चापि यस्ते हरति पुष्करम् ॥ १३-१४३-२९ (८६९८७)
नारद उवाच। १३-१४३-३०क्ष् (७२७८)
गृहज्ञानी बहिःशास्त्रं पठतां विस्वरं पदम् ।
गरीयसोऽवजानातु यस्ते हरति पुष्करम् ॥ १३-१४३-३० (८६९८८)
नाभाग उवाच। १३-१४३-३१क्ष् (७२७९)
अनृतं भाषतु सदा सद्भिश्चैव विरुध्यतु ।
शुल्केन ददतु कन्यां यस्ते हरपि पुष्करम् ॥ १३-१४३-३१ (८६९८९)
कविरुवाच। १३-१४३-३२क्ष् (७२८०)
पदा च गां संस्पृशतु सूर्यं च प्रति मेहतु ।
शरणागतं संत्यजतु यस्ते हरति पुष्करम् ॥ १३-१४३-३२ (८६९९०)
विश्वामीत्र उवाच। १३-१४३-३३क्ष् (७२८१)
करोतु भृतकोऽवर्षा राज्ञश्चास्तु पुरोहितः ।
ऋत्विगस्तु ह्ययाज्यस्य यस्ते हरति पुष्करम् ॥ १३-१४३-३३ (८६९९१)
पर्वत उवाच। १३-१४३-३४क्ष् (७२८२)
ग्रामे चाधिकृतः सोऽस्तु खरयानेन गच्छतु ।
शुनः कर्षतु वृत्त्यर्थे यस्ते हरति पुष्करम् ॥ १३-१४३-३४ (८६९९२)
भरद्वाज उवाच। १३-१४३-३५क्ष् (७२८३)
सर्वपापसमादानं नृशंसे चानृते च यत् ।
तत्तस्यास्तु सदा पापं यस्ते हरति पुष्करम् ॥ १३-१४३-३५ (८६९९३)
अष्टक उवाच। १३-१४३-३६क्ष् (७२८४)
स राजास्त्वकृतप्रज्ञः कामवृत्तश्च पापकृत् ।

अधर्मेणाभिशास्तूर्वी यस्ते हरति पुष्करम् ॥ १३-१४३-३६ (८६९९४)
गालव उवाच। १३-१४३-३७क्ष् (७२८५)
पापिष्ठेभ्यो ह्यनर्घार्हः स नरोऽस्तु स्वपापकृत् ।
दत्त्वा दानं कीर्तयतु यस्ते हरति पुष्करम् ॥ १३-१४३-३७ (८६९९५)
अरुन्धत्युवाच। १३-१४३-३८क्ष् (७२८६)
श्वश्र्वाऽपवादं वदतु भर्तुर्भवतु दुर्मनाः ।
एका स्वादु समश्नातु या ते हरति पुष्करम् ॥ १३-१४३-३८ (८६९९६)
वालखिल्या ऊचुः। १३-१४३-३९क्ष् (७२८७)
एकपादेन वृत्त्यर्थं ग्रामद्वारे स तिष्ठतु ।
धर्मज्ञस्त्यक्तधर्मास्तु यस्ते हरति पुष्करम् ॥ १३-१४३-३९ (८६९९७)
पशुसख उवाच। १३-१४३-४०क्ष् (७२८८)
अग्निहोत्रमनादृत्य स सुखं स्वपतु द्विजः ।
परिव्राट् कामवृत्तोस्तु यस्ते हरति पुष्करम् ॥ १३-१४३-४० (८६९९८)
सुरभ्युवाच। १३-१४३-४१क्ष् (७२८९)
वालजेन निदानेन कांस्यं भवतु दोहनम् ।
दुह्येत परवत्सेन या ते हरति पुष्करम् ॥ १३-१४३-४१ (८६९९९)
भीष्म उवाच। १३-१४३-४२क्ष् (७२९०)
ततस्तु तैः शपथैः शप्यमानै-
र्नानाविधैर्बहुभिः कौरवेन्द्र ।
सहस्राक्षो देवराट् सम्प्रहृष्टः
समीक्ष्य तं कोपनं विप्रमुख्यम् ॥ १३-१४३-४२ (८७०००)
यथाब्रवीन्मघवा प्रत्ययं स्वं
स्वयं समागत्य तमृषिं जातरोषम् ।
ब्रह्मर्षिदेवर्षिनृपर्षिमध्ये
यं तं निबोधेह ममाद्य राजन् ॥ १३-१४३-४३ (८७००१)
शक्र उवाच। १३-१४३-४४क्ष् (७२९१)
अध्वर्यवे दुहितरं ददातु
छन्दोगे वाऽऽचरितब्रह्मचर्ये ।
अथर्वणं वेदमधीत्य विप्रः
स्नायीत यः पुष्करमाददाति ॥ १३-१४३-४४ (८७००२)
सर्वान्वेदानधीयीत पुण्यशीलोऽस्तु धार्मिकः ।
ब्रह्मणः सदनं यातु यस्ते हरति पुष्करम् ॥ १३-१४३-४५ (८७००३)
अगस्त्य उवाच। १३-१४३-४६क्ष् (७२९२)
आशीर्वादस्त्वया प्रोक्तः शपथो बलसूदन ।
दीयतां पुष्करं मह्यमेष धर्मः सनातनः ॥ १३-१४३-४६ (८७००४)
इन्द्र उवाच। १३-१४३-४७क्ष् (७२९३)

न मया भगवँल्लोभाद्धृतं पुष्करमद्य वै ।
धर्मांस्तु श्रोतुकामेन हृतं न क्रोद्धुमर्हसि ॥ १३-१४३-४७ (८७००५)
धर्मश्रुतिसमुत्कर्षो धर्मसेतुरनामयः ।
आर्षो वै शाश्वतो नित्यमव्ययोऽयं मया श्रुतः ॥ १३-१४३-४८ (८७००६)
तदिदं गृह्यतां विद्वन्पुष्करं द्विजसत्तम ।
अतिक्रमं मे भगवन्क्षन्तुमर्हस्यनिन्दित ॥ १३-१४३-४९ (८७००७)
इत्युक्तः स महेन्द्रेण तपस्वी कोपनो भृशम् ।
जग्राह पुष्करं धीमान्प्रसन्नश्चाभवन्मुनिः ॥ १३-१४३-५० (८७००८)
प्रययुस्ते ततो भूयस्तीर्थानि वनगोचराः ।
पुण्येषु तीर्थेषु तथा गात्राण्याप्लावयन्त ते ॥ १३-१४३-५१ (८७००९)
आख्यानं य इदं युक्तः पठेत्पर्वणिपर्वणि ।
न मूर्खं जनयेत्पुत्रं न भवेच्च निराकृतिः ॥ १३-१४३-५२ (८७०१०)
न तमापत्स्पृशेत्काचिद्विज्वरो न जरावहः ।
विरजाः श्रेयसा युक्तः प्रेत्य स्वर्गमवाप्नुयात् ॥ १३-१४३-५३ (८७०११)
यश्च शास्त्रमधीयीत ऋषिभिः परिपालितम् ।
स गच्छेद्ब्रह्मणो लोकमव्ययं च नरोत्तम ॥ ॥ १३-१४३-५४ (८७०१२)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
त्रिचत्वारिंशदधिकशततमोऽध्यायः ॥ १४३ ॥
Mahabharata - Anushaasana Parva - Chapter Footnotes

७-१४३-१ अत्र शपथेनैव निषिद्धार्थप्रकाशने ॥
७-१४३-२ पुष्करार्थं इन्द्रेण स्तैन्यं कृतम् । मुनिभिः शपथाः
कृता इत्यर्थः ॥
७-१४३-८ बिसमृणालयोः कमलकुमुदवदवान्तरभेदो ज्ञेयः । ह्रियन्तं
ह्रियमाणम् ॥
७-१४३-१२ प्रत्यवरान्मध्यमान् । तमोत्तरं यावदिदं न वर्तत इति
झ पाठः ॥
७-१४३-१६ पृष्ठमांसानि पृष्ठवाहानां हयवृषभोष्ट्रादीनां
मांसानि । खादेच्च ब्रह्ममांसानीति ङ पाठः ॥
७-१४३-१७ भिक्षुः संन्यासी ॥
७-१४३-१८ पणतु क्रयविक्रयं करोतु । सर्वं अपण्यमपि ॥
७-१४३-१९ विगतः समभावो यस्मात्तेनासमेन कामक्रोधादिना
। कृपणत्वं समेतु स इति ट ध पाठः ॥
७-१४३-२० अनिकृतिः अकृतप्रायाश्चेतः ॥
मानं च परिकर्षत्विति ट ध पाठः ॥

७-१४३-२२ चोरकार्यं प्रचरतु इति ट ध पाठः । भार्या स्वां चैव दूष्यतु इति थ पाठः। भार्या वाचैव तुष्यत्विति ध। पाठः ॥
७-१४३-२३ उदपाने प्लव आप्लवः स्नानं यस्मिन् ॥
७-१४३-२४ यतिर्गच्छतु मैथुनमिति ट ध पाठः ॥
७-१४३-२८ अतिथिर्यतिः । गृहसंस्थो गृहवासी। अतिथिं गृहस्थस्त्यजत्विति थ पाठः। भृतो वित्तेन क्रीतः ॥
७-१४३-३० गूढो ज्ञातुं बहिश्शास्त्रमिति थ । ध पाठः ॥
७-१४३-३३ भृतकौ धान्यविक्रीतः सन् अवर्षा वृष्टिनिर्बन्धं करोतु ॥
७-१४३-३७ पापिष्ठा एव अनर्घार्हाः अपूज्याः । अयं तु ततोप्यपूज्योस्तु। स्वपापकृत् स्वेषु ज्ञातिषु पापकृत् ॥
७-१४३-४१ निदानं दोहनकाले गवां पादबन्धनी रज्जुस्तेन ॥
७-१४३-४३ प्रत्ययमभिप्रायम् ॥
७-१४३-४८ धर्मश्रुतीनां सम्यगुत्कर्षः । धर्म एव सेतुस्तरणोपायः ॥

---

अनुससनपर्व-अध्यय१४४
॥ श्रीः ॥
१३.१४४. अध्यायः १४४

अथ दानधर्मपर्व ॥ १ ॥
Mahabharata - Anushaasana Parva - Chapter Topics
भीष्मेण युधिष्ठिरंप्रति छत्रोपानत्प्रवृत्तिप्रदाननिदानकथनाय सूर्यजमदग्निसंवादानुवादः ॥ १ ॥
जमदग्निना रेणुकायाः स्वधनुर्निस्सृतशराणां पुनःपुनरादाने नियोजनेन बाणक्रीडारम्भः ॥ २ ॥
रेणुकया सूर्यतेजः प्रतप्तशिरः पादतया तरुच्छायाश्रयणेन शरानयनविलम्बने रुष्टेन मुनिना तत्कारणप्रश्नः ॥ ३ ॥
रेणुकया तन्निवेदने मुनिना कोपाच्छस्त्रेण भूमौ सूर्यनिपातनोद्यमनम् ॥ ४ ॥
भयात्सूर्येण विप्ररूपधारणेन भुवमेत्य तत्प्रसादनम् ॥ ५ ॥

Mahabharata - Anushaasana Parva - Chapter Text

युधिष्ठिर उवाच ।
यदिदं श्राद्धकृत्येषु दीयते भरतर्षभ ।
छत्रं चोपानहौ चैव केनैतत्सम्प्रवर्तितम् ॥ १३-१४४-१ (८७०१३)
कथं चैतत्समुत्पन्नं किमर्थं चैव दीयते ।
न केवलं श्राद्धकृत्ये पुण्यकेष्वपि दीयते ॥ १३-१४४-२ (८७०१४)

बहुष्वपि निमित्तेषु पुण्यमाश्रित्य दीयते ।
एतद्विस्तरतो ब्रह्मञ्श्रोतुमिच्छामि तत्त्वतः ॥ १३-१४४-३ (८७०१५)
भीष्म उवाच। १३-१४४-४क्ष् (७२९४)
शृणु राजन्नवहितश्छत्रोपानहविस्तरम् ।
यथैतत्प्रथितं लोके यथा चैतत्प्रवर्तितम् ॥ १३-१४४-४ (८७०१६)
यथा चाक्षय्यतां प्राप्तं पुण्यतां च यथागतम् ।
सर्वमेतदशेषेण प्रवक्ष्यामि नराधिप ॥ १३-१४४-५ (८७०१७)
ऽइतिहासं पुरावृत्तमिदं शृणु नराधिप।'
जमदग्नेश्च संवादं सूर्यस्य च महात्मनः ॥ १३-१४४-६ (८७०१८)
पुरा स भगवान्साक्षाद्धनुषा क्रीडति प्रभो ।
सन्धायसन्धाय शरांश्चिक्षेप किल भार्गवः ॥ १३-१४४-७ (८७०१९)
तान्क्षिप्तान्रेणुका सर्वांस्तस्येषून्दीप्ततेजसः ।
आनीय सा तदा तस्मै प्रादादसकृदच्युत ॥ १३-१४४-८ (८७०२०)
अथ तेन स शब्देनि ज्यायाश्चैव शरस्य च ।
प्रहृष्टः सम्प्रचिक्षेप सा च प्रत्याजहार तान् ॥ १३-१४४-९ (८७०२१)
ततो मध्याह्नमारूढे ज्येष्ठामूले दिवाकरे ।
स सायकान्द्विजो मुक्त्वा रेणुकामिदमब्रवीत् ॥ १३-१४४-१० (८७०२२)
गच्छानय विशालाक्षि शरानेतान्धनुश्च्युतान् ।
यावदेतान्पुनः सुभ्रु क्षिपामीति जनाधिप ॥ १३-१४४-११ (८७०२३)
सा गच्छन्त्यन्तरा छायां वृक्षमाश्रित्य भामिनी ।
तस्थौ तस्या हि सन्तप्तं शिरः पादौ तथैव च ॥ १३-१४४-१२ (८७०२४)
स्थिता सा तु मूहूर्तं वै भर्तुः शापभयाच्छुभा ।
ययावानयितुं भूयः सायकानसितेक्षणा ।
प्रत्याजगाम च शरांस्तानादाय यशस्विनी ॥ १३-१४४-१३ (८७०२५)
सा वै प्रस्विन्नसर्वाङ्गी पद्भयां दुःखं नियच्छती ।
उपाजगाम भर्तारं भयाद्भर्तुः प्रवेपती ॥ १३-१४४-१४ (८७०२६)
स तामृषिस्तदा क्रुद्धो वाक्यमाह शुभाननाम् ।
रेणुके किं चिरेण त्वमागतेति पुनःपुनः ॥ १३-१४४-१५ (८७०२७)
रेणुकोवाच। १३-१४४-१६क्ष् (७२९५)
शिरस्तप्तं प्रदीप्तौ मे पादौ चैव तपोधन ।
सूर्यतेजोनिरुद्धाऽहं वृक्षच्छायां समाश्रिता ॥ १३-१४४-१६ (८७०२८)
एतस्मात्कारणाद्ब्रह्मंश्चिरायैतत्कृतं मया ।
एतच्छ्रुत्वा मम विभो मा क्रुधस्त्वं पतोधन ॥ १३-१४४-१७ (८७०२९)
जमदग्निरुवाच। १३-१४४-१८क्ष् (७२९६)
अद्यैनं दीप्तकिरणं रेणुके तव दुःखदम् ।
शरैर्निपातयिष्यामि सूर्यमस्त्राग्नितेजसा ॥ १३-१४४-१८ (८७०३०)

भीष्म उवाच। १३-१४४-१९क्ष् (७२९७)
स विष्फार्य धनुर्दिव्यं गृहीत्वा च शरान्बहून् ।
अतिष्ठत्सूर्यमभितो यतो याति ततोमुखः ॥ १३-१४४-१९ (८७०३१)
अथ तं प्रेक्ष्य सन्नद्धं सूर्योऽभ्येत्य वचोऽब्रवीत् ।
द्विजरूपेण कौन्तेय किं ते सूर्योऽपराध्यति ॥ १३-१४४-२० (८७०३२)
आदत्ते रश्मिभिः सूर्यो दिवि तिष्ठंस्ततस्ततः ।
रसं हृतं वै वर्षासु प्रवर्षति दिवाकरः ॥ १३-१४४-२१ (८७०३३)
ततोऽन्नं जायते विप्र मनुष्याणां सुखावहम् ।
अन्नं प्राणा इति यथा वेदेषु परिपद्यते ॥ १३-१४४-२२ (८७०३४)
अथाऽभ्रेषु निगूढश्च रश्मिभिः परिवारितः ।
सप्तद्वीपानिमान्ब्रह्मन्वर्षेणाभिप्रवर्षति ॥ १३-१४४-२३ (८७०३५)
ततस्तदौषधीनां च वीरुधां पुष्पपत्रजम् ।
सर्वं वर्षाभिनिर्वृत्तमन्नं सम्भवति प्रभो ॥ १३-१४४-२४ (८७०३६)
जातकर्माणि सर्वाणि व्रतोपनयनानि च ।
गोदानानि विवाहाश्च तथा यज्ञसमृद्धयः ॥ १३-१४४-२५ (८७०३७)
सत्राणि दानानि तथा संयोगा वित्तसञ्चयाः ।
अन्नतः सम्प्रवर्तन्ते यथा त्वं वेत्थ भार्गव ॥ १३-१४४-२६ (८७०३८)
रमणीयानि यावन्ति यावदारम्भिकाणि च ।
सर्वमन्नात्प्रभवति विदितं कीर्तयामि ते ॥ १३-१४४-२७ (८७०३९)
सर्वं हि वेत्थ विप्र त्वं यदेतत्कीर्तितं मया ।
प्रसादये त्वां विप्रर्षे किं ते सूर्यो निपात्यते ॥ ॥ १३-१४४-२८ (८७०४०)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
चतुश्चत्वारिंशदधिकशततमोऽध्यायः ॥ १४४ ॥

Mahabharata - Anushaasana Parva - Chapter Footnotes

७-१४४-२ पुण्यकेषु स्त्रीणां व्रतोत्सवेषु ॥
७-१४४-४ ज्येष्ठामूले दक्षिणावर्ते भ्रमम्मणे भचक्रे
ज्येष्ठानां समसूत्रे पतितं रोहिणीनक्षत्रं तदेव ज्येष्ठानां
मूलं । यथाश्रुतार्थग्रहणं तु न। ज्येष्ठामूलस्थेर्के हेमन्ते
शिरःपाददाहस्यानवसरात्। लोके येन चैव प्रकीर्तितदिति ध पाठः ॥
७-१४४-१० द्विजो विद्धवतिट । ध पाठः ॥
७-१४४-२८ किं ते सूर्यं निपात्य वै इति झ पाठः ॥

---

अनुससनपर्व-अध्यय१४५
॥ श्रीः ॥

## १३.१४५. अध्यायः १४५

अथ दानधर्मपर्व ॥ १ ॥

Mahabharata - Anushaasana Parva - Chapter Topics

जमदग्निना सौरातपतापनिवारणोपायकल्पनं चोदितेन सूर्येण तस्मै छत्रोपानत्प्रदानम् ॥ १ ॥

एवं भीष्मेण युधिष्ठिरंप्रति तत्प्रवृत्तिकथनपूर्वकं तद्दानप्रशंसनम् ॥ २ ॥

Mahabharata - Anushaasana Parva - Chapter Text

युधिष्ठिर उवाच ।
एवं प्रयाचति तदा भास्करे मुनिसत्तमः ।
जमदग्निर्महातेजाः किं कार्यं प्रत्यपद्यत ॥ १३-१४५-१ (८७०४१)
भीष्म उवाच। १३-१४५-२क्ष् (७२९८)
स तथा याचमानस्य मुनिरग्निसमप्रभः ।
जमदग्निः शमं नैव जगाम कुरुनन्दन ॥ १३-१४५-२ (८७०४२)
ततः सूर्यो मधुरया वाचा तमिदमब्रवीत् ।
कृताञ्जलिर्विप्ररूपी प्रणम्यैनं विशाम्पते ॥ १३-१४५-३ (८७०४३)
चलं निमित्तं विप्रर्षे सदा सूर्यस्य गच्छतः ।
कतं चलं भेत्स्यसि त्वं सदा यान्तं दिवाकरम् ॥ १३-१४५-४ (८७०४४)
जमदग्निरुवाच। १३-१४५-५क्ष् (७२९९)
स्थिरं चापि चलं चापि जाने त्वां ज्ञानचक्षुषा ।
अवस्यं विनयाधानं कार्यमद्य मया तव ॥ १३-१४५-५ (८७०४५)
मध्याह्ने वै निमेषार्धं तिष्टसि त्वं दिवाकर ।
तत्र भेत्स्यामि सूर्य त्वां न मेऽत्रास्ति विचारणा ॥ १३-१४५-६ (८७०४६)
सूर्य उवाच। १३-१४५-७क्ष् (७३००)
असंशयं मां विप्रर्षे भेत्स्यसे धन्विनांवर ।
अपकारिणं मां विद्दि भगवञ्शरणागतम् ॥ १३-१४५-७ (८७०४७)
भीष्म उवाच। १३-१४५-८क्ष् (७३०१)
ततः प्रहस्य भगवाञ्जमदग्निरुवाच तम् ।
न भीः सूर्य त्वया कार्या प्रणिपातगतो ह्यसि ॥ १३-१४५-८ (८७०४८)
ब्राह्मणेष्वार्जवं यच्च स्थैर्यं च धरणीतले ।
सौम्यतां चैव सोमस्य गाम्भीर्यं वरुणस्य च ॥ १३-१४५-९ (८७०४९)
दीप्तिमग्नेः प्रभां मेरोः प्रतापं धनदस्य च ।
एतान्यतिक्रमेद्यो वै स हन्याच्छरणागतम् ॥ १३-१४५-१० (८७०५०)

भवेत्स गुरुतल्पी च ब्रह्मिहा च स वै भवेत् ।
सुरापानं स कुर्याच्च यो हन्याच्छरणागतम् ॥ १३-१४५-११ (८७०५१)
एतस्य त्वपनीतस्य समाधिं तात चिन्तय ।
यथा सुखगमः पन्था भवेत्त्वद्रश्मितापितः ॥ १३-१४५-१२ (८७०५२)
भीष्म उवाच। १३-१४५-१३क्ष् (७३०२)
एतावदुक्त्वा स तदा तूष्णीमासीद्भृगूत्तमः ।
अथ सूर्योऽददत्तस्मै छत्रोपानहमाशु वै ॥ १३-१४५-१३ (८७०५३)
सूर्य उवाच। १३-१४५-१४क्ष् (७३०३)
महर्षे शिरसस्त्राणां छत्रं मद्रश्मिवारणम् ।
प्रतिगृह्णीष्व पद्भ्यां च त्राणार्थं चर्मपादुके। १३-१४५-१४ (८७०५४)
अद्यप्रभृति चैवेह लोके सम्प्रचरिष्यति ।
पुण्यकेषु च सर्वेषु परमक्षय्यमेव च ॥ १३-१४५-१५ (८७०५५)
भीष्म उवाच। १३-१४५-१६क्ष् (७३०४)
उपानहौ च च्छत्रं च सूर्येणैतत्प्रवर्तितम् ।
पुण्यमेतदभिख्यातं त्रिषु लोकेषु भारत ॥ १३-१४५-१६ (८७०५६)
तस्मात्प्रयच्छ विप्रेषु छत्रोपानहमुत्तमम् ।
धर्मस्ते सुमहान्भावी न मेऽत्रास्ति विचारणा ॥ १३-१४५-१७ (८७०५७)
छत्रं हि भरतश्रेष्ठः यः प्रदद्याद्द्विजातये ।
शुभ्रं शतशलाकं वै स प्रेत्य सुखमेधते ॥ १३-१४५-१८ (८७०५८)
स शक्रलोके वसति पूज्यमानो द्विजातिभिः ।
अप्सरोभिश्च सततं देवैश्च भरतर्षभ ॥ १३-१४५-१९ (८७०५९)
उपानहौ च यो दद्याच्छुलक्ष्णौ स्नेहसमन्वितौ ।
स्नातकाय महाबाहो संशिताय द्विजातये ॥ १३-१४५-२० (८७०६०)
सोपि लोकानवाप्नोति देवतैरभिपूजितान् ।
गोलोके स मुदा युक्तो वसति प्रेत्य भारत ॥ १३-१४५-२१ (८७०६१)
एतत्ते भरतश्रेष्ठ मया कार्त्स्न्येन कीर्तितम् ।
छत्रोपानहदानस्य फलं भरतसत्तम ॥ ॥ १३-१४५-२२ (८७०६२)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
पञ्चचत्वारिंशदधिकशततमोऽध्यायः ॥ १४५ ॥
Mahabharata - Anushaasana Parva - Chapter Footnotes

७-१४५-४ निमित्तं लक्ष्यम् ॥
७-१४५-९ ब्राह्मणेष्वपि यज्ज्ञानमिति ट क्ष पाठः ॥
७-१४५-१२ अपनीतस्यापनयस्य सन्तापनरूपस्य समाधिं समाधानम् ॥

अनुससनपर्व-अध्यय१४६
॥ श्रीः ॥
१३.१४६. अध्यायः १४६

अथ दानधर्मपर्व ॥ १ ॥
Mahabharata - Anushaasana Parva - Chapter Topics
भीष्मेण युधिष्ठिरंप्रति शूद्रधर्माणां मृत्तिकाशौचादीनां च निरूपणम् ॥ १ ॥

Mahabharata - Anushaasana Parva - Chapter Text

क़युधिष्ठिर उवाच ।
शूद्राणामिह शुश्रूषा नित्यमेवानुवर्णिता ।
कैः कारणैः कतिविधा शुश्रूषा समुदाहृता ॥ १३-१४६-१ (८७०६३)
के च शुश्रूषया लोका विहिता भरतर्षभ ।
शुद्राणां भरतश्रेष्ठ ब्रूहि मे धर्मलक्षणम् ॥ १३-१४६-२ (८७०६४)
भीष्म उवाच। १३-१४६-३क्ष् (७३०५)
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
शूद्राणामनुकम्पार्थं यदुक्तं ब्रह्मवादिना ॥ १३-१४६-३ (८७०६५)
वृद्धः पराशरः प्राह धर्मं शुभ्रमनामयम् ।
अनुग्रहार्थं वर्णानां शौचाचारसमन्वितम् ॥ १३-१४६-४ (८७०६६)
धर्मोपदेशमकिलं यथावदनुपूर्वशः ।
शिष्यानध्यापयामास शास्त्रमर्थवदर्थवित् ॥ १३-१४६-५ (८७०६७)
क्षान्तेन्द्रियेण मानेन शुचिनाऽचापलेन वै ।
अदुर्बलेन धीरेण शान्तेनोत्तरवादिना ॥ १३-१४६-६ (८७०६८)
अलुब्धेनानृशंसेन ऋजुना ब्रह्मवादिना ।
चारित्रतत्परेणैव सर्वभूतहितात्मना ॥ १३-१४६-७ (८७०६९)
अरयः षड्विजेतव्या नित्यं स्वं देहमाश्रिताः ।
कामक्रोधौ च लोभश्च मानमोहौ मदस्तथा ॥ १३-१४६-८ (८७०७०)
विधिना धृतिमास्थाय शुश्रूषुरनहंकृतः ।
वर्णत्रयस्यानुमतो यथाशक्ति यथाबलम् ॥ १३-१४६-९ (८७०७१)
कर्मणा मनसा वाचा चक्षुषा च चतुर्विधम् ।
आस्थाय नियमं धीमाञ्शान्तो दान्तो जितेन्द्रियः ॥ १३-१४६-१० (८७०७२)
रक्षोयक्षजनद्वेषी शेषान्नकृतभोजनः ।
वर्णत्रयान्मधु यथा भ्रमरो धर्ममाचरेत् ॥ १३-१४६-११ (८७०७३)
यदि शूद्रस्तपः कुर्याद्विददृष्टेन कर्मणा ॥

इह चास्य परिक्लेशः प्रेत्य चास्यासुभागतिः ॥ १३-१४६-१२ (८७०७४)
अधर्म्यमयशस्यं च तपः शूद्रे प्रतिष्ठितम् ।
अमार्गेण तपस्तप्त्वा म्लेच्छेषु फलमश्नुते ॥ १३-१४६-१३ (८७०७५)
अन्यथा वर्तमानो हि न शूद्रो धर्ममर्हति ।
अमार्गेणि प्रयातानां प्रत्यक्षादुपलभ्यते ।
चातुर्वर्ण्यव्यपेतानां जातिमूर्तिपरिग्रहः ॥ १३-१४६-१४ (८७०७६)
तथा ते हि शकाश्चीनाः काम्भोजाः पारदास्तथा ।
शबराः पप्लवाश्चैव तुषारयवनास्तथा ॥ १३-१४६-१५ (८७०७७)
दार्वाश्च दरदाश्चैव उज्जिहानास्तथेतराः ।
वेणाश्च कङ्कणाश्चैव सिम्हला मद्रकास्तथा ॥ १३-१४६-१६ (८७०७८)
किष्किन्धकाः पुलिन्दाश्च कह्वाश्चान्ध्राः सनीरगाः ।
गन्धिका द्रमिडाश्चैव बर्बराश्चूचुकास्तथा ॥ १३-१४६-१७ (८७०७९)
किराताः पार्वतेयाश्च कोलाश्चोलाः सकाषकाः ।
आरूकाश्चैव दोहाश्च याश्चान्याम्लेच्छजातयः ॥ १३-१४६-१८ (८७०८०)
विकृता विकृताचारा दृश्यन्ते क्रूरबुद्धयः ।
अमार्गेणाश्रिता धर्मं ततो जात्यन्तरं गताः ॥ १३-१४६-१९ (८७०८१)
अमार्गोपार्जितस्यैतत्तपसो विदितं फलम् ।
न नश्यति कृतं कर्म शुभं वा यदि वाऽशुभम् ॥ १३-१४६-२० (८७०८२)
अत्राप्येते वसु प्राप्य विकर्म तपसार्जितम् ।
पाषण्डानर्चयिष्यन्ति धर्मकामा वृथा श्रमाः ॥ १३-१४६-२१ (८७०८३)
एवं चतुर्णां वर्णानामाश्रमाणां च पार्थिव ।
विपरीतं वर्तमाना म्लेच्छा जायन्त्यबुद्धयः ॥ १३-१४६-२२ (८७०८४)
अध्यायधनिनो विप्राः क्षत्रियाणां बलं धनम् ।
वणिक्कृषिश्च वैश्यानां शूद्राणां परिचारिका ॥ १३-१४६-२३ (८७०८५)
व्युच्छेदात्तस्य धर्मस्य निरयायोपपद्यते ।
ततो म्लेच्छा भवन्त्येते निर्घृणा धर्मवर्जिताः ।
पुनश्च निरयं तेषां तिर्यग्योनिश्च शाश्वती ॥ १३-१४६-२४ (८७०८६)
ये तु सत्यथमास्थाय वर्णाश्रमकृतं पुरा ।
सर्वान्विमार्गानुत्सृज्य स्वधर्मविधिमाश्रिताः ॥ १३-१४६-२५ (८७०८७)
सर्वभूतदयावन्तो दैवतद्विजपूजकाः ।
शास्त्रदृष्टेन विधिना श्रद्धया जितमन्यवः ॥ १३-१४६-२६ (८७०८८)
तेषां विधिं प्रवक्ष्यामि यथावदनुपूर्वशः ।
उपादानविधइं कृत्स्नं शुश्रूषाधिगमं तथा ॥ १३-१४६-२७ (८७०८९)
शिष्टोपनयनं चैव मन्त्राणि विविधानि च ।
तथा शिष्यपरीक्षां च शास्त्रप्रामाण्यदर्शनात् ॥ १३-१४६-२८ (८७०९०)
प्रवक्ष्यामि यथातत्वं यथावदनुपूर्वशः ।

शौचकृत्यस्य शौचार्थान्सर्वानेव विशेषतः ॥१३-१४६-२९ (८७०९१)
महाशौचप्रभृतयो दृष्टास्तत्वार्थदर्शिभिः ।
तत्रापि शूद्रो भिक्षूणामिदं शेष च कल्पयेत् ॥१३-१४६-३० (८७०९२)
भिक्षुभिः सुकृतप्रज्ञैः केवलं दर्ममाश्रितैः ।
सम्यग्दर्शनसम्पन्नैर्गताध्वनि हितार्थिभिः ।
अवकाशमिमं मेध्यं निर्मितं तामवीरुधम् ॥ १३-१४६-३१ (८७०९३)
निर्जनं संवृतं बुद्धवा नियतात्मा जितेन्द्रियः ।
सजलं भाजनं स्थाप्य मृत्तिकां च परीक्षिताम् ॥१३-१४६-३२ (८७०९४)
परीक्ष्य भूमिं मूत्रार्थी तत आसीत वाग्यतः ।
उदङ्मुखो दिवा कुर्याद्रात्रौ चेद्दक्षिणामुखः ॥१३-१४६-३३ (८७०९५)
अन्तर्हितायां भूमौ तु अन्तर्हितशिरास्तथा ।
असमाप्ते तथा शौचे न वाचं किञ्चिदीरयेत् ॥१३-१४६-३४ (८७०९६)
कृतकृत्यस्तथाऽऽचम्य गच्छन्नोदीरयेद्वचः ।
शौचार्थमुपविष्टस्तु मृद्भाजनपुरस्कृतः ॥१३-१४६-३५ (८७०९७)
स्थाप्यं कमण्डलुं गृह्यि पार्श्वोरुभ्यामथान्तरे ।
शौचं कुर्याच्छनैर्वीरो बुद्धिपूर्वमसङ्करम् ॥१३-१४६-३६ (८७०९८)
पाणिना शुद्धमुदकं सङ्गृह्य विधिपूर्वकम् ।
विप्रुषश्च यता न स्युर्यथा चोरू न संस्पृशेत् ॥१३-१४६-३७ (८७०९९)
अपाने मृत्तिकास्तिस्रः प्रदेयास्त्वनुपूर्वशः ।
हस्ताभ्यां च तथा विप्रो हस्तं हस्तेन संस्पृशेत् १३-१४६-३८ (८७१००)
अपाने नव देयाः स्युरिति वृद्धानुशासनम् ।
मृत्तिका दीयमाना हि शोधयेद्देशमञ्जसा ॥१३-१४६-३९ (८७१०१)
तस्मात्पाणितले देया मृत्तिकास्तु पुनः पुनः ।
बृद्धिपूर्वं प्रयत्नेन यथा नैव स्पृशेत्स्फिजौ ॥१३-१४६-४० (८७१०२)
यथा घातो हि न भवेत्क्लेदजः परिधानके ।
तथा गुदं प्रमार्जेत शौचार्थं तु पुनःपुनः ॥१३-१४६-४१ (८७१०३)
प्रतिपादं ततस्त्यक्त्वा शौचमुत्थाय कारयेत् ।
सव्ये द्वादश देयाः स्युस्तिस्रस्तिस्रः पुनः पुनः ।
देया कूर्परके हस्ते पृष्ठे बन्धे पुनः पनः। १३-१४६-४२ (८७१०४)
तथैवादर्शके दद्याच्चतस्रस्तूभयोरपि ।
उभयोर्हस्तयोरेवं सप्तसप्त प्रदापयेत् ॥१३-१४६-४३ (८७१०५)
ततोऽन्यां मृत्तिकां गृह्य कार्यं शौचं पुनस्तयोः ।
हस्तयोरेवमेतद्धि महाशौच विधीयते ।
ततोऽन्यथा न कुर्वीत विधिरेष सनातनः ॥ १३-१४६-४४ (८७१०६)
उपस्थे मूत्रशौचं स्यादत ऊर्ध्वं विधीयते ।
अतोऽन्यथा तु यः सुर्यात्प्रायश्चित्तीयते तु सः ॥१३-१४६-४५ (८७१०७)

मलोपहतचेलस्य द्विगुणं तु विधीयते ।
सहपादमथोरुभ्यां हस्तशौचमसंशयम् ॥ १३-१४६-४६ (८७१०८)
अवधीरयमाणस्य सन्देह उपजायते ।
यथायथा विशुद्धयेत तत्तथा तदुपक्रमे ॥ १३-१४६-४७ (८७१०९)
सकर्दमं तु वर्षासु गृहमाविश्य सङ्कटम् ।
हस्तयोर्मृत्तिकास्तिस्रः पादयोः षट् प्रदापयेत् ॥ १३-१४६-४८ (८७११०)
कामं दत्त्वा गुदे दद्यात्तिस्रः पड्यां तथैव च ।
हस्तशौचं प्रकर्तव्यं मूत्रशौचविधेस्तथा ॥ १३-१४६-४९ (८७१११)
मूत्रशौचे तथा हस्तौ पादाभ्यां चानुपूर्वशः ।
नैष्ठिके स्थानशौचे तु महाशौचं विधीयते ॥ १३-१४६-५० (८७११२)
क्षारौषराभ्यां वस्त्रस्य कुर्याच्छौचं मृदा सह ।
लेपगन्धापनयनममेध्यस्य विधीयते ॥ १३-१४६-५१ (८७११३)
स्नानशाट्यां मृदस्तिस्रो हस्ताभ्यां चानुपूर्वशः ।
शौचं प्रयत्नतः कृत्वा कम्पमानः समुद्धरेत् ॥ १३-१४६-५२ (८७११४)
देयाश्चतस्रस्तिस्रो वा द्वे वाऽप्येकां तथाऽऽपदि ।
कालमासाद्य देशं च शौचस्य गुरुलाघवम् ॥ १३-१४६-५३ (८७११५)
विधिनाऽनेन शौचं तु नित्यं कुर्यादतन्द्रितः ।
अविप्रेक्षन्नसम्भ्रान्तः पादौ प्रक्षाल्य तत्परः ॥ १३-१४६-५४ (८७११६)
अप्रक्षालितपादस्तु पाणिमामणिबन्धनात् ।
अधस्तादुपरिष्टाच्च ततः पाणिमुपस्पृशेत् ॥ १३-१४६-५५ (८७११७)
मनोगतास्तु निश्शब्दा निश्शब्दं त्रिरपः पिबेत् ।
द्विर्मुखं परिमृज्याच्च खानि चोपस्पृशेद्बुधः ॥ १३-१४६-५६ (८७११८)
ऋग्वेदं तेन प्रीणाति प्रथमं यः पिबेदपः ।
द्वितीयं तु यजुर्वेदं तृतीयं साम एव च ॥ १३-१४६-५७ (८७११९)
मृज्यते प्रथमं तेन अथर्वा प्रीतिमाप्नुयात् ।
द्वितीयेनेतिहासं च पुराणस्मृतिदेवताः ॥ १३-१४६-५८ (८७१२०)
यच्चक्षुषि समाधत्ते तेनादित्यं तु प्रीणयेत् ।
प्रीणाति वायुं घ्राणं च दिशश्चाप्यथ श्रोत्रयोः ॥ १३-१४६-५९ (८७१२१)
ब्रह्माणं तेन प्रीणाति यन्मूर्धनि समापयेत् ।
समुत्क्षिपति चापोर्ध्वमाकाशं तेन प्रीणयेत् ॥ १३-१४६-६० (८७१२२)
प्रीणाति विष्णुः पड्यां तु सलिलं वै समादधत् ॥
प्राङ्मुखोदङ्मुखो वाऽपि अन्तर्जानुरुपस्पृशेत्। १३-१४६-६१ (८७१२३)
सर्वत्र विधिरित्येष भोजनादिषु नित्यशः ॥
अन्नेषु दन्तलग्नेषु उच्छिष्टः पुनराचमेत्। १३-१४६-६२ (८७१२४)
विधिरेष समुद्दिष्टः शौचे चाभ्युक्षणं स्मृतम् ॥
शूद्रस्यैव विधिर्दृष्टो गृहान्निष्क्रमतस्ततः। १३-१४६-६३ (८७१२५)

नित्यं त्वलुप्तशौचेन वर्तितव्यं कृतात्मना ।
यशस्कामेन भिक्षुभ्यः शुद्रेणात्महितार्थिना'॥ ॥१३-१४६-६४ (८७१२६)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
षट्चत्वारिंशदधिकशततमोऽध्यायः ॥
Mahabharata - Anushaasana Parva - Chapter Footnotes

क एतदाद्यष्टाध्याया दाक्षिण्यत्यकोशेष्वेन दृश्यन्ते। ७-१४६-२
शुश्रूषां भरतश्रेष्ठति ट पाठः। ।
७-१४६-११ नित्यं रक्ष जनाद्विषीति क । पाठः ॥
७-१४६-१२ विकृताकारा इति थ पाठः ॥
७-१४६-२५ स्वधर्मपथमाश्रिताः इति क ट थ । पाठः ॥
७-१४६-४८ पदमाविश्य सङ्कटम् इति थ पाठः ॥

---

अनुससनपर्व-अध्यय१४७
॥ श्रीः ॥
१३.१४७. अध्यायः १४७

अथ दानधर्मपर्व ॥ १ ॥
Mahabharata - Anushaasana Parva - Chapter Topics
भीष्मेण युधिष्ठिरंप्रति ब्राह्मणादिधर्मनिरूपणपूर्वकं शूद्रस्य
यतिशुश्रूषाप्रकारनिरूपणम् ॥ १ ॥

Mahabharata - Anushaasana Parva - Chapter Text

ग्पुराशर उवाच ।
क्षत्रा आरम्भयज्ञास्तु वीर्ययज्ञा विशः स्मृताः ।
शूद्रा परिचरायज्ञा जपयज्ञास्तु ब्राह्मणाः ॥ १३-१४७-१ (८७१२७)
शुश्रूषाजीविनः शूद्रा वैश्या विपणिजीविनः ।
अनिष्टनिग्रहः क्षत्रा विप्राः स्वाध्यायजीविनः ॥ १३-१४७-२ (८७१२८)
तपसा शोभते विप्रो राजन्यः पालनादिभिः ।
आतिथ्येन तथा वैश्यः शूद्रो दास्येन शोभते ॥ १३-१४७-३ (८७१२९)
यतात्मना तु शूद्रेण शुश्रूषा नित्यमेव च ।
कर्तव्या त्रिषु वर्णेषु प्रायेणाश्रमवासिषु ॥ १३-१४७-४ (८७१३०)
अशक्तेन त्रिवर्गस्य सेव्या ह्याश्रमवासिनः ।
यथाशक्यं यथाप्रज्ञं यथाधर्मं यथाश्रुतम् ॥ १३-१४७-५ (८७१३१)

विशेषेणैव कर्तव्या शुश्रूषा भिक्षुकाश्रमे ॥ १३-१४७-६ (८७१३२)
आश्रमाणां तु सर्वेषां चतुर्णां भिक्षुकाश्रमम् ।
प्रधानमिति वर्ण्यन्ते शिष्टाः शास्त्रविनिश्चये ॥ १३-१४७-७ (८७१३३)
यच्चोपदिश्यते शिष्टैः श्रुतिस्मृतिविधानतः ।
तथाऽऽस्थेयमशक्तेन स धर्म इति निश्चितः ॥ १३-१४७-८ (८७१३४)
अतोऽन्यथा तु कुर्वाणः श्रेयो नाप्नोति मानवः ।
तस्माद्भिक्षुषु शूद्रेण कार्यमात्महितं सदा ॥ १३-१४७-९ (८७१३५)
इह यत्कुरुते श्रेयस्तत्प्रेत्य समुपाश्नुते ।
तच्चानसूयता कार्यं कर्तव्यं यद्धि मन्यते ॥ १३-१४७-१० (८७१३६)
असूयता तु तस्येह फलं दुःखादवाप्यते ।
प्रियवादी जितक्रोधो वीततन्द्रीरमत्सरः ॥ १३-१४७-११ (८७१३७)
क्षमावाञ्शीलसम्पन्नः सत्यधर्मपरायणः ।
आपद्भावेन कुर्याद्धि शुश्रूषां भिक्षुकाश्रमे ॥ १३-१४७-१२ (८७१३८)
अयं मे परमो धर्मस्त्वनेनेदं सुदुष्करम् ।
संसारसागरं घोरं तरिष्यामि न संशयः ॥ १३-१४७-१३ (८७१३९)
विभयो देहमुत्सृज्य यास्यामि परमां गतिम् ।
नातः परं ममाप्यन्य एष धर्मः सनातनः ॥ १३-१४७-१४ (८७१४०)
एवं सञ्चिन्त्य मनसा शूद्रो बुद्धिसमाधिना ।
कुर्यादविमना नित्यं शुश्रूषाधर्ममुत्तमम् ॥ १३-१४७-१५ (८७१४१)
शुश्रूषानियमेनेह भाव्यं शिष्टाशिना सदा ।
शमान्वितेन दान्तेन कार्याकार्यविदा सदा ॥ १३-१४७-१६ (८७१४२)
सर्वकार्येषु कृत्यानि कृतान्येव तु दर्शयेत् ।
यथा प्रियो भवेद्भिक्षुस्तथा कार्यं प्रसाधयेत् ॥ १३-१४७-१७ (८७१४३)
यदकल्प्यं भवेद्भिक्षोर्न तत्कार्यं समाचरेत् ।
यथाऽऽश्रमस्याविरुद्धं धर्ममात्राभिसंहितम् ॥ १३-१४७-१८ (८७१४४)
तत्कार्यमविचारेण नित्यमेव शुभार्थिना ।
मनसा कर्ममा वाचा नित्यमेव प्रसादयेत् ॥ १३-१४७-१९ (८७१४५)
स्थातव्यं तिष्ठमानेषु गच्छमानाननुव्रजेत् ।
आसीनेष्वासितव्यं च नित्यमेवानुवर्तता ॥ १३-१४७-२० (८७१४६)
धर्मलब्धेन स्नेहेन पादौ सम्पीडयेत्सदा ।
उद्वर्तनादींश्च तथा कुर्यादप्रतिचोदितः ॥ १३-१४७-२१ (८७१४७)
नैजकार्याणि कृत्वा तु नित्यं चैवानुचोदितः ।
यथाविधिरुपस्पृश्य संन्यस्य जलभाजनम् ॥ १३-१४७-२२ (८७१४८)
भिक्षूणां निलयं गत्वा प्रणम्य विधिपूर्वकम् ।
ब्रह्मपूर्वान्गुरूंस्तत्र प्रणम्यि नियतेन्द्रियः ॥ १३-१४७-२३ (८७१४९)
तथाऽऽचार्यपुरोगाणामनुकुर्यान्नमस्क्रियाम् ।

स्वधर्मचारिणां चापि सुखं पृष्ट्वाऽभिवाद्य च ॥१३-१४७-२४ (८७१५०)
यो भवेत्पूर्वसंसिद्धस्तुल्यकर्मा भवेत्सदा ।
तस्मै प्रणामः कर्तव्यो नेतरेषु कदाचन ॥१३-१४७-२५ (८७१५१)
अनुक्त्वा तेषु चोत्थाय नित्यमेव यतव्रतः ।
सम्मार्जनमथो गत्वा कृत्वा चाप्युपलेपनम् ॥१३-१४७-२६ (८७१५२)
ततः पुष्पबलिं दद्यापुष्पाण्यादाय धर्मतः ।
निष्क्रम्यावसथात्तूर्णमन्यत्कर्म समाचरेत् ॥१३-१४७-२७ (८७१५३)
यथोपघातो न भवेत्स्वाध्यायेऽऽश्रमिणां तथा ।
उपघातं तु कुर्वाण एनसा सम्प्रयुज्यते ।
तथाऽऽत्मा प्रणिधातव्यो यथा ते प्रीतिमाप्नुयुः ॥ १३-१४७-२८ (८७१५४)
परिचारकोऽहं वर्णानां त्रयाणां धर्मतः स्मृतः ।
किमुताश्रमवृद्धानां यथालब्धोपजीविनाम् ॥१३-१४७-२९ (८७१५५)
भिक्षूणां गतरागाणां केवलं ज्ञानदर्शिनम् ।
विशेषेण मया कार्या शुश्रूषा नियतात्मना ॥१३-१४७-३० (८७१५६)
तेषां प्रसादात्तपसा प्राप्स्यामीष्टां शुभां गतिम् ।
एवमेतद्विनिश्चित्य यदि सेवेत भिक्षुकान् ।
विधिना स्वोपदिष्टेन प्राप्नोति परमां गतिम् ॥' ॥ १३-१४७-३१ (८७१५७)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
सप्तचत्वारिंशदधिकशततमोऽध्यायः ॥१४७ ॥
Mahabharata - Anushaasana Parva - Chapter Footnotes

७-१४७-१ हविर्यज्ञा विशः स्मृता इति ङ.थ.पाठः ॥

---

अनुससनपर्व-अध्यय१४८
॥ श्रीः ॥
१३.१४८. अध्यायः १४८

अथ दानधर्मपर्व ॥१ ॥
Mahabharata - Anushaasana Parva - Chapter Topics
भीष्मेण युधिष्ठिरंप्रति यतिशुश्रूषाप्रशंसनम् ॥१ ॥

Mahabharata - Anushaasana Parva - Chapter Text

ग्पराशर उवाच ।
न तथा सम्प्रदानेन नोपवासादिभिस्तथा ।

इष्टां गतिमवाप्नोति यथा शुश्रूषकर्मणा ॥ १३-१४८-१ (८७१५८)
यादृशेन तु तोयेन शुद्धिं प्रकुरुते नरः ।
तादृग्भवति तद्धौतमुदकस्य प्रभावतः ॥ १३-१४८-२ (८७१५९)
शूद्रोप्येतेन मार्गेण यादृशं सेवते जनम् ।
तादृग्भवति संसर्गादचिरेण न संशयः ॥ १३-१४८-३ (८७१६०)
तस्मात्प्रयत्नतः सेव्या भिक्षवो नियतात्मना ।
उदकग्राहणाद्येन स्नपनोद्वर्तनैस्तथा ॥ १३-१४८-४ (८७१६१)
अध्वना कर्शितानां च व्याधितानां तथैव च ।
शुश्रूषां नियतं कुर्यात्तेषामापदि यत्नतः ॥ १३-१४८-५ (८७१६२)
दर्भाजिनान्यवेक्षेत भैक्षभाजनमेव च ।
यथाकामं च कार्याणि सर्वाण्येवोपसाधयेत् ।
प्रायश्चित्तं यता न स्यात्तथा सर्वं समाचरेत् ॥ १३-१४८-६ (८७१६३)
व्याधितानां तु भिक्षूणां चेलप्रक्षालनादिभिः ।
प्रतिकर्मक्रिया कार्या भेषजानयनैस्तथा ॥ १३-१४८-७ (८७१६४)
पिंषणालेपनं चूर्णं कषायमथ साधनम् ।
नान्यस्य प्रतिचारेषु सुखार्थमुपपादयेत् ॥ १३-१४८-८ (८७१६५)
भिक्षाटनोऽभिगच्छेत भिषजश्च विपश्चितः ।
ततो विनिष्क्रियार्थानि द्रव्याणि समुपार्जयेत् ॥ १३-१४८-९ (८७१६६)
यश्च प्रीतमना दद्यादादद्याद्भेषजं नरः ।
अश्रद्धया हि दत्तानि तान्यभोक्ष्याणि भिक्षुभिः ॥ १३-१४८-१० (८७१६७)
श्रद्धया यदुपादत्तं श्रद्धया चोपपादितम् ।
तस्योपभोगाद्धर्मः स्याद्व्याधिभिश्च निवर्त्यते ॥ १३-१४८-११ (८७१६८)
आदेहपतनादेवं शुश्रूषेद्विधिपूर्वकम् ।
न त्वेवं धर्ममुत्सृज्य कुर्यात्तेषां प्रतिक्रियाम् ॥ १३-१४८-१२ (८७१६९)
स्वभावतो हि द्वन्द्वानि विप्रयान्त्युपयान्ति च ।
स्वभावतः सर्वभावा भवन्ति नभवन्ति च ।
सागरस्योर्मिसदृशा विज्ञातव्या गुणात्मकाः ॥ १३-१४८-१३ (८७१७०)
विद्यादेवं हि यो धीमांस्तत्त्ववित्तत्त्वदर्शनः ।
न स लिप्येत पापेन पद्मपत्रमिवाम्भसा ॥' ॥ १३-१४८-१४ (८७१७१)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
अष्टचत्वारिंशदधिकशततमोऽध्यायः ॥ १४८ ॥

---

अनुससनपर्व-अध्यय१४९
॥ श्रीः ॥
१३.१४९. अध्यायः १४९

अथ दानधर्मपर्व ॥ १ ॥

Mahabharata - Anushaasana Parva - Chapter Topics

भीष्मेण युधिष्ठिरंप्रति यतिशुश्रूषादिनानाधर्मकथनम् ॥ १ ॥

Mahabharata - Anushaasana Parva - Chapter Text

ग्पराशर उवाच ।
एवं प्रयतितव्यं हि शुश्रूषार्थमतन्द्रितैः ।
सर्वाभिरूपसेवाभिस्तुष्यन्ति यतयो यथा ॥ १३-१४९-१ (८७१७२)
नापराध्येत भिक्षोस्तु न चैनमवधीरयेत् ।
उत्तरं च न सन्दद्यात्क्रुद्धं चैव प्रसादयेत् ॥ १३-१४९-२ (८७१७३)
श्रेय एवाभिधातव्यं कर्तव्यं च प्रहृष्टवत् ।
तूष्णींभावेन वै तत्र न क्रुद्धमभिसंवदेत् ॥ १३-१४९-३ (८७१७४)
नाददीत परस्वानि न गृह्णीयादयाचितम् ।
लब्धालब्धेन जीवेत तथैव परितोषयेत् ॥ १३-१४९-४ (८७१७५)
कोपिनं तु न याचेत ज्ञानविद्वेषकारितः ।
स्थावरेषु दयां कुर्याज्जङ्गमेषु चु प्राणिषु ॥ १३-१४९-५ (८७१७६)
यथाऽऽत्मनि तथाऽन्येषु समां दृष्टिं निपातयेत् ।
सर्वभूतेषु चात्मानं सर्वभूतानि चात्मनि ।
सम्पश्यमानो विचरन्ब्रह्मभूयाय कल्पते ॥ १३-१४९-६ (८७१७७)
हिंसा वा यदि वाऽहिंसां न कुर्यादात्मकारणात् ।
यत्रेतरो भवेन्नित्यं दोषं तत्र न कारयेत् ॥ १३-१४९-७ (८७१७८)
एवं स मुच्यते दोषात्परानाश्रित्य वर्तयन् ।
आत्माश्रयेण दोषेण लिप्यते ह्यल्पबुद्धिमान् ॥ १३-१४९-८ (८७१७९)
जरायुजाण्डजाश्चैव उद्भिज्जाः स्वेदजाश्च ये ।
अवध्याः सर्व एतैते बुधैः समनुवर्णिताः ॥ १३-१४९-९ (८७१८०)
निश्चयार्थं विबुद्धानां प्रायश्चित्तं विधीयते ।
हिंसा यथाऽन्या विहिता तथा दोष प्रयोजयेत् ।
तथोपदिष्टं गुरुणा शिष्यस्य चरतो विधिम् ॥ १३-१४९-१० (८७१८१)
न हि लोभः प्रभवति हिंसा वाऽपि तदात्मिका ।
शास्त्रदर्शनमेतद्धि विहितं विश्वयोनिना ॥ १३-१४९-११ (८७१८२)
यद्येतदेवं मन्येत शूद्रो ह्यपि च बुद्धिमान् ।
कृतं कृतवतां गच्छेत्किं पुनर्यो निषेवते ॥ १३-१४९-१२ (८७१८३)
न शूद्रः पतते कश्चिन्न च संस्कारमर्हति ।
नास्याधिकारो धर्मेऽस्ति न धर्मात्प्रतिषेधनम् ॥ १३-१४९-१३ (८७१८४)

अनुग्रहार्तं मनुना सर्ववर्णेषु वर्णितम्। १३-१४९-१४ (८७१८५)
यदापवादस्तु भवेत्स्त्रीकृतः परिचारके ।
अभ्रावकाशशयनं तस्य संवत्सरं स्मृतम् ।
तेन तस्य भवेच्छान्तिस्ततो भूयोप्युपाव्रजेत् ॥ १३-१४९-१५ (८७१८६)
सवर्णाया भवेदेतद्धीनायास्त्वर्धमर्हति ।
वर्षत्रयं तु वैश्यायाः क्षत्रियायास्तु षट् समाः ।
ब्राह्मण्या तु समेतस्य समा द्वादश कीर्तिताः। १३-१४९-१६ (८७१८७)
कटाग्निना वा दग्धव्यस्तस्मिन्नेव क्षणे भवेत् ।
शिश्नावपातनाद्वाऽपि विशुद्धिं समवाप्नुयात् ॥१३-१४९-१७ (८७१८८)
अनस्थिबन्धमेकं तु यदि प्राणैर्वियोजयेत् ।
उपोष्यैकाहमादद्यात्प्राणायामांस्तु द्वादश ॥१३-१४९-१८ (८७१८९)
त्रिः स्नानमुदके कृत्वा तस्मात्पापात्प्रमुच्यते ।
अस्थिबन्धेषु द्विगुणं प्रायश्चित्तं विधीयते ॥१३-१४९-१९ (८७१९०)
अनेन विधिना वाऽपि स्थावरेषु न संशयः ।
कायेन पङ्भ्यां हस्ताभ्यामपराधात्तु मुच्यते ॥१३-१४९-२० (८७१९१)
अदुष्टं क्षपयेद्यस्तु सर्ववर्णेषु यश्चरेत् ।
तस्याप्यष्टगुणं विद्यात्प्रायश्चित्तं तदेव तु ॥१३-१४९-२१ (८७१९२)
चतुर्गुणं कर्मकृते द्विगुणं वाक्प्रदूषिते ।
कृत्वा तु मानसं पापं तथैवैकगुणं स्मृतम् ॥१३-१४९-२२ (८७१९३)
तस्मादेतानि सर्वाणि विदित्वा न समाचरेत् ।
सर्वभूतहितार्थं हि कुशलानि समाचरेत् ॥१३-१४९-२३ (८७१९४)
एवं समाहितमनाः सेवते यदि यत्तमान् ।
तद्गतिस्तत्समाचारस्तन्मनास्तत्परायणः ॥१३-१४९-२४ (८७१९५)
नाभिनन्देत मरणं नाभिनन्देत जीवितम् ।
कालमेव प्रतीक्षेत निर्वेशं भृतको यथा ॥१३-१४९-२५ (८७१९६)
एवं प्रवर्तमानस्तु विनीतः प्रयतात्मवान् ।
निर्णयं पुण्यपापाभ्यामचिरेणोपगच्छति'॥ ॥१३-१४९-२६ (८७१९७)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
एकोनपञ्चाशदधिकशततमोऽध्यायः ॥१४९ ॥

---

अनुससनपर्व-अध्यय१५०
॥ श्रीः ॥
१३.१५०. अध्यायः १५०

अथ दानधर्मपर्व ॥१ ॥

Mahabharata - Anushaasana Parva - Chapter Topics
भीष्मेण युधिष्ठिरंप्रति पुरुषस्य मृतिसूचकलिङ्गैः
स्वमरणनिश्चयेन भगवत्स्मरणादिपूर्वकं देहत्यागे
स्वर्गभोगप्रकारस्य सुकृतशेषेण पुनर्भूलोके जननादिप्रकारादेश्च
कथनम् ॥ १ ॥

Mahabharata - Anushaasana Parva - Chapter Text

ग्पराशर उवाच ।
शुश्रूषानिरतो नित्यमरिष्टान्युपलक्षयेत् ।
त्रैवार्षिकं द्विवार्षिकं वा वार्षिकं वा समुत्थितम् ॥ १३-१५०-१ (८७१९८)
षाण्मासिकं मासिकं वा साप्तरात्रिकमेव वा ।
सर्वांस्तदर्थान्वा विद्यात्तेषां चिह्नानि लभयेत् ॥ १३-१५०-२ (८७१९९)
पुरुषं हिरण्मयं यस्तु तिष्ठन्तं दक्षिणामुखम् ।
लक्षयेदुत्तरेणैव मृत्युस्त्रैवार्षिको भवेत् ॥ १३-१५०-३ (८७२००)
शुद्धमण्डलमादित्यमरश्मिं सम्प्रपश्यतः ।
संवत्सरद्वयेनैव तस्य मत्युं समादिशेत् ॥ १३-१५०-४ (८७२०१)
ज्योत्स्नायामात्मनश्छायां सच्छिद्रां यः प्रपश्यति ।
मृत्युं संवत्सरेणैव जानीयात्सुविचक्षणः ॥ १३-१५०-५ (८७२०२)
विशिरस्कां यदा छायां पश्येत्पुरुष आत्मनः ।
जानीयादात्मनो मृत्युं षाण्मासेनेह बुद्धिमान् ॥ १३-१५०-६ (८७२०३)
कर्णौ पिधाय हस्ताभ्यां शब्दं न शृणुते यदि ।
जानीयादात्मनो मृत्युं मासेनैव विचक्षणः ॥ १३-१५०-७ (८७२०४)
शवगन्धमुपाघ्राति अन्यद्वा सुरभिं नरः ।
देवतायतनस्थो वै सप्तरात्रेण मृत्युभाक् ॥ १३-१५०-८ (८७२०५)
कर्णनासापनयनं दन्यदृष्टिविरागता ।
लुप्तसंज्ञं हि करणं सद्यो मृत्युं समादिशेत् ॥ १३-१५०-९ (८७२०६)
एवमेषामरिष्टानां पश्येदन्यतमं यदि ।
न तं कालं परीक्षेत यथाऽरिष्टं प्रकल्पितम् ॥ १३-१५०-१० (८७२०७)
अभ्यासेन तु कालस्य गच्छेत पुलिनं शुचि ।
तत्र प्राणान्प्रमुञ्चेत तमीशानमनुस्मरन् ॥ १३-१५०-११ (८७२०८)
ततोऽन्यदेहमासाद्य गान्धर्वं स्थानमाप्नुयात् ।
तत्रस्थो वसते विंशत्पद्मानि सुहृद्द्युतिः ॥ १३-१५०-१२ (८७२०९)
गन्धर्वैश्चित्रसेनाद्यैः सहितः सत्कृतस्तथा ।
नीलवैडूर्यवर्णेन विमानेनावभासयन् ॥ १३-१५०-१३ (८७२१०)
नभस्थलमदीनात्मा सार्धमप्सरसां गणैः ।

छन्दकामानुसारी च तत्रतत्र महीयते ॥ १३-१५०-१४ (८७२११)
मोदतेऽमरतुल्यात्मा सदाऽमरगणैः सह ।
पतितश्च क्षये काले क्षणेन विमलद्युतिः ॥ १३-१५०-१५ (८७२१२)
वैश्यस्य बहुवित्तस्य कुलेऽग्र्ये बहुगोधने ।
अवाप्य तत्र वै जन्म स पूतो देवकर्मणा ॥ १३-१५०-१६ (८७२१३)
छन्दसा जागतेनैव प्राप्तोपनयनं ततः ।
क्षौमवस्त्रोपकरणं द्विजत्वं समवाप्य तु ॥ १३-१५०-१७ (८७२१४)
अधीयमानो वेदार्थान्गुरुशुश्रूषणे रतः ।
ब्रह्मचारी जितक्रोधस्तपस्वी जायते ततः ॥ १३-१५०-१८ (८७२१५)
अधीत्य दक्षिणां दत्त्वा गुरवे विधिपूर्वकम् ।
कृतदारः समुपैति गृहस्थव्रतमुत्तमम् ॥ १३-१५०-१९ (८७२१६)
ददाति यजते चैव यज्ञैर्विपुलदक्षिणैः ।
अग्निहोत्रमुपासन्वै जुह्वच्चैव यथाविधिः ॥ १३-१५०-२० (८७२१७)
धर्मं सञ्चिनुते नित्यं मृदुगामी जितेन्द्रियः ।
स कालपरिणामात्तु मृत्युना सम्प्रयुज्यते ॥ १३-१५०-२१ (८७२१८)
संस्कृतश्चाग्निहोत्रेण कृतपात्रोपधानवान् ।
संस्कृतो देहमुत्सृज्य मरुद्भिरुपपद्यते ॥ १३-१५०-२२ (८७२१९)
मरुद्भिः सहितश्चापि तुल्यतेजा महाद्युतिः ।
बालार्कसमवर्णेन विमानेन विराजता ॥ १३-१५०-२३ (८७२२०)
सुखं चरति तत्रस्तो गन्धर्वाप्सरसां गणैः ।
विरजोम्बरसंवीतस्तप्तकाञ्चनभूषणः ॥ १३-१५०-२४ (८७२२१)
छन्दकामानुसारी च द्विगुणं कालमावसेत् ।
सन्निवर्तेत कालेन स्थानादस्मात्परिच्युतः ॥ १३-१५०-२५ (८७२२२)
अवितृप्तविहारार्थो दिव्यभोगान्विहाय तु ।
सञ्जायते नृपकुले गजाश्वरथसंकुले ॥ १३-१५०-२६ (८७२२३)
पार्थिवीं श्रियमापन्नः श्रीमान्धर्मपतिर्यथा ।
जन्मप्रभृति संस्कारं चौलोपनयनानि च ॥ १३-१५०-२७ (८७२२४)
प्राप्य राजकुले तत्र यथावद्विधिपूर्वकम् ।
छुदसा त्रैष्टुभेनेह द्विजत्वमुपनीयते ॥ १३-१५०-२८ (८७२२५)
अधीत्य वेदमखिलं धनुर्वेदं च मुख्यशः ।
समावृत्तस्ततः पित्रा यौवराज्येऽभिषिच्यते ॥ १३-१५०-२९ (८७२२६)
कृतदारक्रियः श्रीमान्राज्यं सम्प्राप्य धर्मतः ।
प्रजाः पालयते सम्यक् षड्भागकृतसंविधिः ॥ १३-१५०-३० (८७२२७)
यज्ञैर्बहुभिरीजानः सम्यगाप्तार्थदक्षिणैः ।
प्रशासति महीं श्रीमान्राज्यमिन्द्रसमुद्युतिः ॥ १३-१५०-३१ (८७२२८)
स्वधर्मनिरतो नित्यं पुत्रपौत्रसहायवान् ।

कालस्य वशमापन्नः प्राणांस्त्यजति संयुगे ॥१३-१५०-३२ (८७२२९)
देवराजस्य भवनमिन्द्रलोकमवाप्नुते ।
सम्पूज्यमानस्त्रिदिवैर्विचचार यथासुखम् ॥१३-१५०-३३ (८७२३०)
राजर्षिभिः पुण्यकृद्भिर्यथा देवपतिस्तथा ।
तैः स्तूयते बन्दिभिस्तु नानावाद्यैः प्रबोध्यते ॥१३-१५०-३४ (८७२३१)
दिव्यजाम्बूनदमयं भ्राजमानं समन्ततः ।
वराप्सरोभिः सम्पूर्णं देवगन्धर्वसेवितम् ॥१३-१५०-३५ (८७२३२)
यानमारुह्य विचरेद्यथा शक्रः शचीपतिः ।
स तत्र वसते षष्टिं पद्मानीह मुदान्वितः ॥१३-१५०-३६ (८७२३३)
सर्वाँल्लोकाननुचरन्महर्द्धिरवभासयन् ।
अथ पुण्यक्षयात्तस्मात्स्थाप्यते भुवि भारत ।
जायते च द्विजकुले वेदवेदाङ्गपारगे ॥' ॥ १३-१५०-३७ (८७२३४)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
पञ्चाशदधिकशततमोऽध्यायः ॥१५० ॥

---

अनुससनपर्व-अध्यय१५१
॥ श्रीः ॥
१३.१५१. अध्यायः १५१

अथ दानधर्मपर्व ॥ १ ॥
Mahabharata - Anushaasana Parva - Chapter Topics
भीष्मेण युधिष्ठिरंप्रति पुरुषस्य पुण्यविशेषेणि
पुनःपुनः स्वर्गभूम्यादिषु परिवर्ततेन जातवैराग्यस्य
ब्रह्मज्ञानेनापुनरावृत्तिशाश्वतपदाप्राप्त्यादिप्रकारप्रतिपादनम्
॥ १ ॥

Mahabharata - Anushaasana Parva - Chapter Text

ग्पराशर उवाच ।
ततः श्रुतिसमापन्नः संस्कृश्च यथाविधि ।
चौलोपनयनं तस्य यथावत्क्रियते द्विजैः ॥१३-१५१-१ (८७२३५)
ततोऽष्टमे स वर्षे तु व्रतोपनयनादिभिः ।
क्रियाभिर्विधिदृष्टाभिर्ब्रह्मत्वमुपनीयते ॥१३-१५१-२ (८७२३६)
गायत्रेण छन्दसा तु संस्कृतश्चरितव्रतः ।
अधीयमानो मेधावी शुद्धात्मा नियतव्रतः ॥१३-१५१-३ (८७२३७)

अचिरेणैव कालेन साङ्गान्वेदानवाप्नुते ।
समावृत्तः स धर्मात्मा समावृत्तिक्रियस्तथा ॥ १३-१५१-४ (८७२३८)
याजनाध्यापनरतः कुशले कर्मणि स्थितः ।
अग्निहोइत्रपरो नित्यं देवतातिथिपूजकः ॥ १३-१५१-५ (८७२३९)
यजते विविधैर्यज्ञैर्जपयज्ञैस्तथैव च ।
न्यायागतधनान्वेषी न्यायवृत्तस्तपोधनः ॥ १३-१५१-६ (८७२४०)
सर्वभूतहितश्चैव सर्वशास्त्रविशारदः ।
स्वदारपरितुष्टात्मा ऋतुगामी जितेन्द्रियः ॥ १३-१५१-७ (८७२४१)
परापवादविरतः सत्यव्रतपरः सदा ।
स कालपरिणामात्तु संयुतः कालधर्मणा ॥ १३-१५१-८ (८७२४२)
संस्कृतश्चाग्निहोत्रेण यथावद्विधिपूर्वकम् ।
सोमलोकमवाप्नोति देहन्यासान्न संशयः ॥ १३-१५१-९ (८७२४३)
तत्र सोमप्रभैर्देवैरग्निष्वात्तैश्च भास्वरैः ।
तथा बर्हिषदैश्चैव देवैराङ्गिरसैरपि ॥ १३-१५१-१० (८७२४४)
विश्वेभिश्चैव देवैश्च तथा ब्रह्मर्षिभिः पुनः ।
देवर्षिभिश्चाप्रतिमैस्तथैवाप्सरसां गणैः ।
साध्यैः सिद्धैश्च सततं सत्कृतस्तत्र मोदते ॥ १३-१५१-११ (८७२४५)
जातरूपमयं दिव्यमर्कतुल्यं मनोजवम् ।
देवगन्धर्वसंकीर्णं विमानमधिरोहति ॥ १३-१५१-१२ (८७२४६)
सौम्यरूपा मनःकान्तास्तप्तकाञ्चनभूषणाः ।
सोमकन्या विमानस्थं रमयन्ति मुदान्विताः ॥ १३-१५१-१३ (८७२४७)
स तत्र रमते प्रीतः सह देवैः सहर्षिभिः ।
लोकान्सर्वाननुचरन्दीप्ततेजा मनोजवः ॥ १३-१५१-१४ (८७२४८)
सभां कामजवीं चापि नित्यमेवाभिगच्छति ।
सर्वलोकेश्वरमृषिं नमस्कृत्य पितामहम् ॥ १३-१५१-१५ (८७२४९)
परमेष्ठिरनन्तश्रीर्लोकानां प्रभवाप्ययः ।
यतः सर्वाः प्रवर्तन्ते सर्गप्रलयविक्रियाः ।
स तत्र वर्तते श्रीमान्द्विशतं द्विजसत्तम ॥ १३-१५१-१६ (८७२५०)
अथ कालक्षयात्तस्मात्स्थानादावर्तते पुनः ।
जातिधर्मांस्तथा सर्वान्सर्गादावर्तनानि च ॥ १३-१५१-१७ (८७२५१)
अशाश्वतमिदं सवेमिति चिन्त्योपलभ्य च ।
शाश्वतं दिव्यमचलमदीनमपनर्भवम् ॥ १३-१५१-१८ (८७२५२)
आस्थास्यत्यभयं नित्यं यत्रावृत्तिर्न विद्यते ।
यत्रि गत्वा न म्रियते जन्म चापि न विद्यते ॥ १३-१५१-१९ (८७२५३)
गर्भक्लेशामयाः प्राप्ता जायता च पुनः पुनः ।
कायक्लेशाश्च विविधा द्वन्द्वानि विविधानि च ॥ १३-१५१-२० (८७२५४)

शीतोष्णसुखदुःखानि ईर्ष्याद्विषकृतानि च ।
तत्रतत्रोपभुक्तानि न क्वचिच्छाश्वती स्थितिः ॥ १३-१५१-२१ (८७२५५)
एवं स निश्चयं कृत्वा निर्मुच्यि ग्रहबन्धनात् ।
छित्त्वा भार्यामयं पाशं तथैवापत्यसम्भवम् ॥ १३-१५१-२२ (८७२५६)
यतिधर्ममुपाश्रित्यि गुरुशुश्रूषणे रतः ।
अचिरेणैव कालेन श्रेयः समभिगच्छति ॥ १३-१५१-२३ (८७२५७)
योगशास्त्रं च साङ्ख्यं च विदित्वा सोऽर्थतत्वतः ।
अनुज्ञातश्च गुरुणा यथाशास्त्रमवस्थितः ॥ १३-१५१-२४ (८७२५८)
पुण्यतीर्थानुसेवी च नदीनां पुलिनाश्रयः ।
शून्यागारनिकेतश्च वनवृक्षगुहाशयः ॥ १३-१५१-२५ (८७२५९)
अरण्यानुचरो नित्यं देवारण्यनिकेतनः ।
एकरात्रं द्विरात्रं वा न क्वचित्सज्जते द्विजः ॥ १३-१५१-२६ (८७२६०)
शीर्णपर्णभुगेवापि वने चरति भिक्षुकः ।
न भोगार्थमनुप्रेत्य यात्रामात्रं समश्नुते ॥ १३-१५१-२७ (८७२६१)
धर्मलब्धं समश्नाति न कामात्किञ्चिदश्नुते ।
युगमात्रदृगध्वानं क्रोशादूर्ध्वं न गच्छति ॥ १३-१५१-२८ (८७२६२)
समो मानावमानाभ्यां समलोष्टाश्मकाञ्चनः ।
सर्वभूताभयकरस्तथैवाभयदक्षिणः ॥ १३-१५१-२९ (८७२६३)
निर्द्वन्द्वो निर्नमस्कारो निरानन्दपरिग्रहः ।
निर्ममो निरहङ्कारः सर्वभूतनिराश्रयः ॥ १३-१५१-३० (८७२६४)
परिसङ्ख्यानतत्वज्ञस्तदा सत्यरतः सदा ।
ऊर्ध्वं नाधो न तिर्यक्च न किञ्चिदभिकामयेत् ॥ १३-१५१-३१ (८७२६५)
एवं हि रममाणस्तु यतिधर्मं यथाविधि ।
कालस्य परिणामात्तु यथा पक्वफलं तथा ॥ १३-१५१-३२ (८७२६६)
स विसृज्य स्वकं देहं प्रविशेद्ब्रह्म शाश्वतम् ।
निरामयमनाद्यन्तं गुणसौम्यमचेतनम् ॥ १३-१५१-३३ (८७२६७)
निरक्षरमबीजं च निरिन्द्रियमजं तथा ।
अजय्यमक्षयं यत्तदभेद्यं सूक्ष्ममेव च ॥ १३-१५१-३४ (८७२६८)
निर्गुणं च प्रकृतिमन्निर्विकारं च सर्वशः ।
भूतभव्यभविष्यस्य कालस्य परमेश्वरम्। १३-१५१-३५ (८७२६९)
अव्यक्तं पुरुषं क्षेत्रमानन्त्याय प्रपद्यते ॥' ॥ ॥ १३-१५१-३६ (८७२७०)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
एकपञ्चाशदधिकशततमोऽध्यायः ॥ १५१ ॥

Mahabharata - Anushaasana Parva - Chapter Footnotes

७-१५१-३३ गुणसाम्यमचेतनमिति क थ पाठः ॥
७-१५१-३५ निर्गुणं चाप्रकृतिमदिति थ पाठः ॥

---

अनुससनपर्व-अध्यय१५२
॥ श्रीः ॥
१३.१५२. अध्यायः १५२

अथ दानधर्मपर्व ॥ १ ॥
Mahabharata - Anushaasana Parva - Chapter Topics
भीष्मेण युधिष्ठिरंप्रति चातुर्वर्ण्यस्य
श्रेयस्साधनोपायप्रतिपादकपराशरवचनानुवादः ॥ १ ॥

Mahabharata - Anushaasana Parva - Chapter Text

ग्पराशर उवाच ।
एवं स भिक्षुर्निर्वाणं प्राप्नुयाद्दग्धकिल्बिषः ।
इहस्थो देहमुत्सृज्य नीडं शकुनिवद्यथा ॥ १३-१५२-१ (८७२७१)
सत्पथालम्बनादेव शूद्रः प्राप्नोति सद्गतिम् ।
ब्रह्मणः स्थानमचलं स्थानात्स्थानमवाप्नुयात् ॥ १३-१५२-२ (८७२७२)
यथा खनन्खनित्रेण जाङ्गले वारि विन्दति ।
अनिर्वेदात्ततः स्थानमीप्सितं प्रतिपद्यते ॥ १३-१५२-३ (८७२७३)
सैषा गतिरनाद्यन्ता सर्वैरप्युपधारिता ।
तस्माच्छूद्रैरनिर्वेदाच्छ्रद्दधानैस्तु नित्यदा ।
वर्तितव्यं यथाशक्त्या यथा प्रोक्तं मनीषिभिः। १३-१५२-४ (८७२७४)
यत्करोति तदश्नाति शुभं वा यदि वाऽशुभम् ।
नाकृतं भुज्यते कर्म न कृतं नश्यते फलम् ॥ १३-१५२-५ (८७२७५)
तथा शुभसमाचारः शुभमेवाप्नुते फलम् ।
तथाऽशुभसमाचारो ह्यशुभं समवाप्नुते ।
शुभान्येव समादद्याद्य इच्छेद्भूतिमात्मनः ॥ १३-१५२-६ (८७२७६)
भूतिश्च नान्यतः शक्त्या शूद्राणामिति निश्चयः ।
ऋते यतीनां शुश्रूषामिति सन्तो व्यवस्थिताः ॥ १३-१५२-७ (८७२७७)
तस्मादागमसम्पन्नो भवेत्सुनियतेन्द्रियः ।
शक्यते ह्यागमादेव गतिं प्राप्तुमनामयाम् ॥ १३-१५२-८ (८७२७८)
वरा चैषा गतिर्दृष्टा यामन्वेपन्ति साधवः ।
यत्रामृतत्वं लभते त्यक्त्वा दुःखमनन्तरम् ॥ १३-१५२-९ (८७२७९)
इमं हि धर्ममास्थाय येऽपि स्युः पापयोनयः ।

स्त्रियो वैश्याश्च शूद्राश्च प्राप्नुयुः परमां गतिम् ।
किं पुनर्ब्राह्मणो विद्वान्क्षत्रियो वा बहुश्रुतः ॥ १३-१५२-१० (८७२८०)
न चाप्यक्षीणपापस्य ज्ञानं भवति देहिनः ।
ज्ञानोपलब्धिर्भवति कृतकृत्यो यदा भवेत् ॥१३-१५२-११ (८७२८१)
उपलभ्य तु विज्ञानं ज्ञानं वाऽप्यनसूयकः ।
तथैव वर्तेद्गुरुषु भूयांसं वा समाहितः ॥१३-१५२-१२ (८७२८२)
अथावमन्येत गुरुं तथा तेषु प्रवर्तते ।
व्यर्थमस्य श्रुतं भवति ज्ञानमज्ञानतां व्रजेत् ॥१३-१५२-१३ (८७२८३)
गतिं चाप्यशुभां गच्छेन्निरयाय न संशयः ।
प्रक्षीयते तस्य पुण्यं ज्ञानमस्य विरुध्यते ॥१३-१५२-१४ (८७२८४)
अदृष्टपूर्वकल्याणो यथा दृष्ट्वा विधिं नरः ।
उत्सेकान्मोहमापद्य तत्वज्ञानमवाप्तवान् ॥१३-१५२-१५ (८७२८५)
एवमेवि हि नोत्सेकः कर्तव्यो ज्ञानसम्भवः ।
फलं ज्ञानस्य हि शमः प्रशामाय यतेत्सदा ॥१३-१५२-१६ (८७२८६)
उपशान्तेन दान्तेन क्षमायुक्तेन सर्वदा ।
शुश्रूषा प्रतिपत्तव्या नित्यमेवानसूयता ॥१३-१५२-१७ (८७२८७)
धृत्या शिश्नोदरं रक्षेत्पाणिपादं च चक्षुषा ।
इन्द्रियार्थांश्च मनसा मनो बुद्धौ समादधेत् ॥१३-१५२-१८ (८७२८८)
धृत्याऽऽसीत ततो गत्वा शुद्धदेशं सुसंवृतम् ।
लब्धासनं यथा दृष्टं विधिपूर्वं समाचरेत् ॥१३-१५२-१९ (८७२८९)
ज्ञानयुक्तस्तथा देवं हृदिस्थमुपलक्षयेत् ।
आदीप्यमानं वपुषा विधूममनलं यथा ॥१३-१५२-२० (८७२९०)
रश्मिमन्तमिवादित्यं वैद्युताग्निमिवाम्बरे ।
संस्थितं हृदये पश्येदीशं शाश्वतमव्ययम् ॥१३-१५२-२१ (८७२९१)
न चायुक्तेन शक्येत द्रष्टुं देहे महेश्वरः ।
युक्तस्तु पश्यते बुद्ध्या सन्निवेश्य मनो हृदि ॥१३-१५२-२२ (८७२९२)
अथ त्वेवं न शक्नोति कर्तुं हृदयधारणम् ।
यथासांख्यमुपासीत यथावद्योगमास्थितः ॥१३-१५२-२३ (८७२९३)
पञ्च बुद्धीन्द्रियाणीह पञ्च कर्मेन्द्रियाणि वै ।
पञ्च भूतविशेषाश्च मनश्चैव तु षोडश ॥१३-१५२-२४ (८७२९४)
तन्मात्राण्यपबि पञ्चैव मनोऽहङ्कार एव च ।
अष्टमं चाप्यथाव्यक्तमेताः प्रकृतिसंज्ञिताः ।
एताः प्रकृतयश्चाष्टौ विकाराश्चापि षोडश ॥ १३-१५२-२५ (८७२९५)
एवमेतदिहस्थेन विज्ञेयं तत्वबुद्धिना ।
एवं वर्ष्म समुत्तीर्य तीर्णो भवति नान्यथा ॥१३-१५२-२६ (८७२९६)
परिसंख्यानमेवैतन्मन्तव्यं ज्ञानबुद्धिना ॥ १३-१५२-२७ (८७२९७)

अहन्यहनि शान्तात्मा पावनाय हिताय च ।
एवमेव प्रसंख्याय तत्वबुद्धिर्विमुच्यते ।
निष्पलं केवलं भवति शुद्धतत्वार्थतत्ववित् ॥ १३-१५२-२८ (८७२९८)
भिक्षुकाश्रममास्थाय शुश्रूषानिरतो बुधः ।
शूद्रो निर्मुच्यते सत्वसंसर्गादेव नान्यथा ॥१३-१५२-२९ (८७२९९)
सत्संनिकर्षे परिवर्तितव्यं
विद्याधिकाश्चापि निषेवितव्याः ।
सवर्णतां गच्छति सन्निकर्षा-
न्नीलः खगो मेरुमिवाश्रयन्वै ॥ १३-१५२-३० (८७३००)
भीष्म उवाच। १३-१५२-३१क्ष् (७३०६)
इत्येवमाख्याय महामुनिस्तदा
चतुर्षु वर्णेषु विधानमर्थवित् ।
शुश्रूषया वृत्तगतिं समाधिना
समाधियुक्तः प्रययौ स्वमाश्रमम् ॥' ॥ १३-१५२-३१ (८७३०१)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
द्विपञ्चाशदधिकशततमोऽध्यायः ॥१५२ ॥

---

अनुससनपर्व-अध्यय१५३
॥ श्रीः ॥
१३.१५३. अध्यायः १५३

अथ दानधर्मपर्व ॥१ ॥
Mahabharata - Anushaasana Parva - Chapter Topics
भीष्मेण युधिष्ठिरंप्रति
सकलसेव्यताप्रयोजकगुणप्रतिपादकेन्द्रमातलिसंवादानुवादः ॥१ ॥

Mahabharata - Anushaasana Parva - Chapter Text

ग्युधिष्ठिर उवाच ।
केषां देवा महाभागाः सन्नमन्ते महात्मनाम् ।
लोकेऽस्मिंस्तनृषीन्सर्वञ्श्रोतुमिच्छामि सत्तम ॥१३-१५३-१ (८७३०२)
भीष्म उवाच। १३-१५३-२क्ष् (७३०७)
इतिहासमिमं विप्राः कीर्तयन्ति पुराविदः ।
अस्मिन्नर्थे महाप्राज्ञास्तं निबोध युधिष्ठिर ॥१३-१५३-२ (८७३०३)
वृत्रं हत्वाऽप्युपावृत्तं त्रिदशानां पुरस्कृतम् ।

महेन्द्रमनुसम्प्राप्तं स्तूयमानं महर्षिभिः ॥ १३-१५३-३ (८७३०४)
श्रिया परमया युक्तं रथस्थं हरिवाहनम् ।
मातलिः प्राञ्जलिर्भूत्वा देवमिन्द्रमुघाच ह ॥ १३-१५३-४ (८७३०५)
नमस्कृतानां सर्वेषां भगवंस्त्वं पुरस्कृतः ।
येषां लोके नमस्कुर्यात्तान्ब्रवीतु भवान्मम ॥ १३-१५३-५ (८७३०६)
तस्य तद्वचनं श्रुत्वा देवराजः शचीपतिः ।
यन्तारं परिपृच्छन्तं तमिन्द्रः प्रत्युवाच सः ॥ १३-१५३-६ (८७३०७)
धर्मं चार्थं च कामं च येषां चिन्तयतां मतिः ।
नाधर्मे वर्तते नित्यं तान्नमस्यामि मातले ॥ १३-१५३-७ (८७३०८)
ये रूपगुणसम्पन्नाः प्रमदाहृदयंगमाः ।
निवृत्ताः कामभोगेषु तान्नमस्यामि मातले ॥ १३-१५३-८ (८७३०९)
स्वेषु भोगेषु सन्तुष्टाः सुवाचो वचनक्षमाः ।
अमानकामाश्चार्घार्हास्तान्नमस्यामि मातले ॥ १३-१५३-९ (८७३१०)
धनं विद्यास्तथैश्वर्यं येषां न चलयेन्मतिम् ।
चलितां ये निगृह्णन्ति तान्नित्यं पूजयाम्यहम् ॥ १३-१५३-१० (८७३११)
इष्टैर्दारैरुपेतानां शुचीनामग्निहोत्रिणाम् ।
चतुष्पादकुटुम्बानां मातिले प्रणमाम्यहम् ॥ १३-१५३-११ (८७३१२)
महतस्तपसा प्राप्तौ धनस्य विपुलस्य च ।
कत्यागस्तस्य न वै कार्यो योऽऽत्मानं नावबुध्यते ॥ १३-१५३-१२ (८७३१३)
येषामर्थस्तथा कामो धर्ममूलविवर्धितः ।
धर्मार्थौ तस्य नियतौ तान्नमस्यामि मातले ॥ १३-१५३-१३ (८७३१४)
धर्ममूलार्थकामानां ब्राह्मणानां गवामपि ॥
पतिव्रतानां नारीणां प्रणामं प्रकरोम्यहम् ॥ १३-१५३-१४ (८७३१५)
ये भुक्त्वा मानुषान्भोगान्पूर्वे वयसि मातले ।
तपसा स्वर्गमायान्ति शश्वत्तान्पूजयाम्यहम् ॥ १३-१५३-१५ (८७३१६)
असंभोगान्नचासक्तान्धर्मनित्याञ्जितेन्द्रियान् ।
संन्यस्तानचलप्रख्यान्मनसा पूजयामि तान् ॥ १३-१५३-१६ (८७३१७)
ज्ञानप्रसन्नविद्यानां निरूढं धर्ममीप्सितम् ।
परैः कीर्तितशौचानां मातले तान्नमाम्यहम्'॥ ॥ १३-१५३-१७ (८७३१८)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
त्रिपञ्चाशदधिकशततमोऽध्यायः ॥ १५३ ॥

---

अनुससनपर्व-अध्यय१५४
॥ श्रीः ॥
१३.१५४. अध्यायः १५४

अथ दानधर्मपर्व ॥ १ ॥

Mahabharata - Anushaasana Parva - Chapter Topics

भीष्मेण युधिष्ठिरंप्रति
गृहस्थधर्मप्रतिपादकपृथिवीवासुदेवसंवादानुवादः ॥ १ ॥

Mahabharata - Anushaasana Parva - Chapter Text

ग्युधिष्ठिर उवाच ।
गार्हस्थ्यं धर्ममखिलं प्रब्रूहि भरतर्षभ ।
ऋद्धिमाप्नोति किं कृत्वा मनुष्य इह पार्थिव ॥ १३-१५४-१ (८७३१९)
भीष्म उवाच। १३-१५४-२क्ष् (७३०८)
अत्र ते वर्तयिष्यामि पुरावृत्तं जनाधिप ।
वासुदेवस्य संवादं पृथिव्याश्चैव भारत ॥ १३-१५४-२ (८७३२०)
संस्तुत्य पृथिवीं देवीं वासुदेवः प्रतापवान् ।
पप्रच्छ भरतश्रेष्ठ मां त्वं यत्पृच्छसेऽद्य वै ॥ १३-१५४-३
(८७३२१)
वासुदेव उवाच। १३-१५४-४क्ष् (७३०९)
गार्हस्थ्यं धर्ममाश्रित्य मया वा मद्विधेन वा ।
किमवश्यं धरे कार्यं किं वा कृत्वा सुखं भवेत् ॥ १३-१५४-४ (८७३२२)
पृथिव्युवाच। १३-१५४-५क्ष् (७३१०)
ऋषयः पितरो देवा मनुष्याश्चैव माधव ।
पूज्याश्चैवार्चनीयाश्च यथा चैव निबोध मे ॥ १३-१५४-५ (८७३२३)
सदा यज्ञेन देवांश्च सदाऽऽतिथ्येन मानुषान् ।
छन्दतस्तर्पणेनापि पितॄन्युञ्जन्ति नित्यशः ॥ १३-१५४-६ (८७३२४)
तेन ह्यषिगणाः प्रीता ब्रह्मचर्येण चानघ ।
नित्यमग्निं परिचरेदभुक्त्वा बलिकर्म च ॥ १३-१५४-७ (८७३२५)
कुर्यात्तथैव देवान्वै प्रियं मे मधुसूदन ।
कुर्यादहरहः श्राद्धमन्नाद्येनोदकेन च ॥ १३-१५४-८ (८७३२६)
पयोमूलफलैर्वाऽपि पितॄणां प्रीतिमावहेत् ।
सिद्धान्नाद्वैश्वदेवं वै कुर्यादग्नौ यथाविधि ॥ १३-१५४-९ (८७३२७)
आग्नीषोमं वैश्वदेवं धान्वन्तर्यमनन्तरम् ।
प्रजानां पतये चैव पृथग्घोमो विधीयते ॥ १३-१५४-१० (८७३२८)
तथैव चानुपूर्व्येण बलिकर्म प्रयोजयेत् ।
दक्षिणायां यमायेति प्रतीच्यां वरुणाय च ॥ १३-१५४-११ (८७३२९)
सोमाय चाप्युदीच्यां वै वास्तुमध्ये प्रजापतेः ।

धन्वन्तरेः प्रागुदीच्यां प्राच्यां शक्राय माधव ॥ १३-१५४-१२ (८७३३०)
मनुष्येभ्य इति प्राहुर्बलिं द्वारि गृहस्य वै ।
मरुद्भयो दैवतेभ्यश्च बलिमन्तर्गृहे हरेत् ॥ १३-१५४-१३ (८७३३१)
तथैव विश्वेदेवेभ्यो बलिमाकाशतो हरेत् ।
निशाचरेभ्यो भूतेभ्यो बलिं नक्तं यथा हरेत् ॥ १३-१५४-१४ (८७३३२)
एवं कृत्वा बलिं सम्यग्दद्याद्भिक्षां द्विजाय वै ।
अलाभे ब्राह्मणस्याग्नावग्रमुद्धृत्य निक्षिपेत् ॥ १३-१५४-१५ (८७३३३)
यदा श्राद्धं पितृभ्योपि दातुमिच्छेत मानवः ।
तदा पश्चात्प्रकुर्वीत निवृत्ते श्राद्धकर्मणि ॥ १३-१५४-१६ (८७३३४)
पितॄन्सन्तर्पयित्वा तु बलिं कुर्याद्विधानतः ।
वेश्वदैवं ततः कुर्यात्पश्चाद्ब्राह्मणभोजनम् ॥ १३-१५४-१७ (८७३३५)
ततोऽन्नेनावशेषेण भोजयेदतिथीनपि ।
अर्घ्यपूर्वं महाराज ततः प्रीणाति मानवान् ।
अनित्यं हि स्थितो यस्मात्तस्मादतिथिरुच्यते ॥ १३-१५४-१८ (८७३३६)
आचार्यस्य पितुश्चैव सख्युराप्तस्य चातिथेः ।
इदमस्ति गृहे मह्यमिति नित्यं निवेदयेत् ॥ १३-१५४-१९ (८७३३७)
ते यद्वदेयुस्तत्कुर्यादिति धर्मो विधीयते ।
गृहस्थः पुरुषः कृष्ण शिष्टाशी च सदा भवेत् ॥ १३-१५४-२० (८७३३८)
राजर्त्विजं स्नातकं च गुरुं श्वशुरमेव च ।
अर्चयेन्मधुपर्केण परिसंवत्सरोषितान् ॥ १३-१५४-२१ (८७३३९)
श्वभ्यश्च श्वपचेभ्यश्च वयोभ्यश्चावपेद्भुवि ॥ १३-१५४-२२ (८७३४०)
वैश्वदेवं हि नामैतत्सायं प्रातर्विधीयते ॥ १३-१५४-२३ (८७३४१)
एतांस्तु धर्मान्गार्हस्थ्यान्यः कुर्यादनसूयकः ।
स इहर्द्धिं परां प्राप्य प्रेत्य लोके महीयते ॥ १३-१५४-२४ (८७३४२)
भीष्म उवाच। १३-१५४-२५क्ष् (७३११)
इति भूमेर्वचः श्रुत्वा वासुदेवः प्रतापवान् ।
तथा चकार सततं त्वमप्येवं सदाऽऽचर ॥ १३-१५४-२५ (८७३४३)
एतद्गृहस्थधर्मं त्वं चेष्टमानो जनाधिप ।
इह लोके यशः प्राप्य प्रेत्य स्वर्गमवाप्स्यसि ॥ ॥ १३-१५४-२६ (८७३४४)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
चतुःपञ्चाशदधिकशततमोऽध्यायः ॥ १५४ ॥

Mahabharata - Anushaasana Parva - Chapter Footnotes

७-१५४-१ गार्हस्थ्यं गृहस्थयोग्यम् ॥
७-१५४-७ बलिकर्म वैश्वदेवः तत्र प्रागन्नमेव ग्राह्यम् ॥

७-१५४-१५ भिक्षाद्वयं तथेति थ ाध ापाठः ॥

---

अनुससनपर्व-अध्यय१५५
॥ श्रीः ॥
१३.१५५. अध्यायः १५५

अथ दानधर्मपर्व ॥ १ ॥

Mahabharata - Anushaasana Parva - Chapter Topics

भीष्मेणि युधिष्ठिरंप्रति
पुष्पधूपदीपदानादिप्रशंसापरबलिशुक्रसंवादानुवादः ॥ १ ॥

Mahabharata - Anushaasana Parva - Chapter Text

युधिष्ठिर उवाच ।
आलोकदानं नामैतत्कीदृशं भरतर्षभ ।
कथमेतत्समुत्पन्नं फलं वा तद्ब्रवीहि मे ॥ १३-१५५-१ (८७३४५)
भीष्म उवाच। १३-१५५-२क्ष् (७३१२)
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
मनोः प्रजापतेर्वादं सुवर्णस्य च भारत ॥ १३-१५५-२ (८७३४६)
तपस्वी कश्चिदभवत्सुवर्णो नाम भारत ।
वर्णतो हेमवर्णः स सुवर्ण इति विश्रुतः ॥ १३-१५५-३ (८७३४७)
कुलशीलगुणोपेतः स्वाध्यायोपरमं गतः ।
बहून्सुवंशप्रभवान्समतीतः स्वकैर्गुणैः ॥ १३-१५५-४ (८७३४८)
स कदाचिन्मनुं विप्रो ददर्शोपससर्प च ।
कुशलप्रश्नमन्योन्यं तौ चोभौ तत्र चक्रतुः ॥ १३-१५५-५ (८७३४९)
ततस्तौ सत्यसंकल्पौ मेरौ काञ्चनपर्वते ।
देवर्षिभिः सदा जुष्टे सहितौ संन्यषीदताम् ॥ १३-१५५-६ (८७३५०)
तत्र तौ कथयन्तौ स्तां कथा नानाविधाश्रयाः ।
ब्रह्मर्षिदेवदैत्यानां पुराणानां महात्मनाम् ॥ १३-१५५-७ (८७३५१)
सुवर्णस्त्वब्रवीद्वाक्यं मनुं स्वायंभुवं प्रति ।
हितार्थं सर्वभूतानां प्रश्नं मे वक्तुमर्हसि ॥ १३-१५५-८ (८७३५२)
सुमनोगन्धधूपाद्यैरिज्यन्ते दैवतानि च ।
किमेतत्कथमुत्पन्नं फलं योगं च शंस मे ॥ १३-१५५-९ (८७३५३)
मनुरुवाच। १३-१५५-१०क्ष् (७३१३)
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
शुक्रस्य च बलेश्चैव संवादं वै महात्मनोः ॥ १३-१५५-१० (८७३५४)

बलेर्वैरोचनस्येह त्रैलोक्यमनुशासतः ।
समीपमाजगामाशु शुक्रो भृगुकुलोद्वहः ॥ १३-१५५-११ (८७३५५)
तमर्घ्यादिभिरभ्यर्च्य भार्गवं सोऽसुराधिपः ।
निषसादासने पश्चाद्विधिवद्भूरिदक्षिणः ॥ १३-१५५-१२ (८७३५६)
कथेयमभवत्तत्र त्वया या परिकीर्तिता ।
सुमनोधूपदीपानां सम्प्रदाने फलं प्रति ॥ १३-१५५-१३ (८७३५७)
ततः पप्रच्छ दैत्येन्द्रः कवीन्द्रं प्रश्नमुत्तमम् ॥ १३-१५५-१४ (८७३५८)
सुमनोधूपदीपानां किं फलं ब्रह्मिवित्तम ।
प्रदानस्य द्विजश्रेष्ठ तद्भवान्वक्तुमर्हति ॥ १३-१५५-१५ (८७३५९)
शुक्र उवाच। १३-१५५-१६क्ष् (७३१४)
अग्नीषोमादिसृष्टौ तु विष्णोः सर्वात्मनः प्रभोः ।
तपः पूर्वं समुत्पन्नं धर्मस्तस्मादनन्तरम् ॥ १३-१५५-१६ (८७३६०)
एतस्मिन्नन्तरे चैव वीरुदोषध्य एव च ।
सोमस्यात्मा च बहुधा सम्भूतः पृथिवीतले ।
अमृतं च विषं चैव याश्चान्यास्तृणजातयः ॥ १३-१५५-१७ (८७३६१)
अमृतं मनसः प्रीतिं सद्यस्तृप्तिं ददाति च ।
मनो ग्लपयते तीव्रं विषं गन्धेन सर्वशः ॥ १३-१५५-१८ (८७३६२)
अमृतं मङ्गलं विद्धि महद्विषममङ्गलम् ।
ओषध्यो ह्यमृतं सर्वा विषं तेजोग्निसम्भवम् ॥ १३-१५५-१९ (८७३६३)
अमृतं मनो ह्लादयते श्रियं चापि ददाति च ।
तस्मात्सुमनसः प्रोक्ता नरैः सुकृतकर्मभिः ॥ १३-१५५-२० (८७३६४)
देवताभ्यः सुमनसो यो ददाति नरः शुचिः ।
तस्मै सुमनसो देवास्तस्मात्सुमनसः स्मृताः ॥ १३-१५५-२१ (८७३६५)
यंयमुद्दिश्य दीयेरन्देवं सुमनसः प्रभो ।
मङ्गलार्तं स तेनास्य प्रीतो भवति दैत्यप ॥ १३-१५५-२२ (८७३६६)
ज्ञेयास्तूग्राश्च सौम्याश्च तेजस्विन्यश्च ताः पृथक् ।
ओषध्यो बहुवीर्या हि बहुरूपास्तथैव च ॥ १३-१५५-२३ (८७३६७)
यज्ञियानां च वृक्षाणामयज्ञीयान्निबोध मे ।
आसुराणि च माल्यानि दैवतेभ्यो हितानि च ॥ १३-१५५-२४ (८७३६८)
रक्षसामुरगाणां च यक्षाणां च तथा प्रियाः ।
मनुष्याणां पितॄणां च कान्ता यास्त्वनुपूर्वशः ॥ १३-१५५-२५ (८७३६९)
वन्या ग्राम्याश्चेह तथा कृष्टोप्ताः पर्वताश्रयाः ।
अकण्टकाः कण्टकिनो गन्धरूपरसान्विताः ॥ १३-१५५-२६ (८७३७०)
द्विविधो हि स्मृतो गन्ध इष्टोऽनिष्टश्च पुष्पजः ।
इष्टगन्धानि देवानां पुष्पाणीति विभावय ॥ १३-१५५-२७ (८७३७१)
अकण्टकानां वृक्षाणां श्वेतप्रायाश्च वर्णतः ।

तेषां पुष्पाणि देवानामिष्टानि सततं प्रभो ॥ १३-१५५-२८ (८७३७२)
ग्पद्मं च तुलसी जातिरापः सर्वेषु पूजिता।'
जलजानि च माल्यानि पद्मादीनि च यानि वै ।
गन्धर्वनागयक्षेभ्यस्तानि दद्याद्विचक्षणः ॥ १३-१५५-२९ (८७३७३)
ओपध्यो रक्तपुष्पाश्च कटुकाः कण्टकान्विताः ।
शत्रूणामभिचारार्थमथर्वसु निदर्शिताः ॥ १३-१५५-३० (८७३७४)
तीक्ष्णवीर्यास्तु भूतानां दुरालम्भाः सकण्टकाः ।
रक्तभूयिष्ठवर्णाश्च कृष्णाश्चैवोपहारयेत् ॥ १३-१५५-३१ (८७३७५)
मनोहृदयनन्दिन्यो विमर्दे मधुराश्च याः ।
चारुररूपाः सुमनसो मानुपाणां स्मृता विभो ॥ १३-१५५-३२ (८७३७६)
न तु श्मशानसम्भूता न देवायतनोद्भवाः ।
सन्नयेत्पुष्टियुक्तेषु विवाहेषु रहःसु च ॥ १३-१५५-३३ (८७३७७)
गिरिसानुरुहाः सौम्या देवानामुपधारयेत् ।
प्रोक्षिताभ्युक्षिताः सौम्या यथायोगं यथास्मृति ॥ १३-१५५-३४ (८७३७८)
गन्धेन देवास्तुष्यन्ति दर्शनाद्यक्षराक्षसाः ।
नागाः समुपभोगेन त्रिभिरेतैस्तु मानुषाः ॥ १३-१५५-३५ (८७३७९)
सद्यः प्रीणाति देवान्वै ते प्रीता भावयन्त्युत ।
सङ्कल्पसिद्धा मर्त्यानामीप्सिताश्च मनोरथाः ॥ १३-१५५-३६ (८७३८०)
देवाः प्रीणन्ति सततं मानिता मानयन्ति च ।
अवज्ञातावधूताश्च निर्दहन्त्यधमान्नरान् ॥ १३-१५५-३७ (८७३८१)
अत ऊर्ध्वं प्रवक्ष्यामि धूपदानविधेः फलम् ।
धूपांश्च विविधान्साधूनसाधूंश्च निबोध मे ॥ १३-१५५-३८ (८७३८२)
निर्यासाः सरलाश्चैव कृत्रिमाश्चैव ते त्रयः ।
इष्टोऽनिष्टो भवेद्गन्धस्तन्मे विस्तरशः शृणु ॥ १३-१५५-३९ (८७३८३)
निर्यासाः सल्लकीवर्ज्या देवानां दयितास्तु ते ।
गुग्गुलुः प्रवरस्तेषां सर्वेपामिति निश्चयः ॥ १३-१५५-४० (८७३८४)
अगुरुः सारिणां श्रेष्ठो यक्षराक्षसभोगिनाम् ।
दैत्यानां सल्लकीजश्च काङ्क्षितो यश्च तद्विधः ॥ १३-१५५-४१ (८७३८५)
अथ सर्जरसादीनां गन्धैः पार्थिवदारवैः ।
फाणितासवसंयुक्तैर्मनुष्याणां विधीयते ॥ १३-१५५-४२ (८७३८६)
देवदानवभूतानां सद्यस्तुष्टिकरः स्मृतः ।
येऽन्ये वैहारिकास्तत्र मानुषाणामिति स्मृताः ॥ १३-१५५-४३ (८७३८७)
य एवोक्ताः सुमनसां प्रदाने गुणहेतवः ।
धूपेष्वपि परिज्ञेयास्त एव प्रीतिवर्धनाः ॥ १३-१५५-४४ (८७३८८)
दीपदाने प्रवक्ष्यामि फलयोगमनुत्तमम् ।
यथा येन यदा चैव प्रदेया यादृशाश्च ते ॥ १३-१५५-४५ (८७३८९)

ज्योतिस्तेजः प्रकाशं वाऽप्यूर्ध्वगं चापि वर्धते ।
प्रदानं तेजसां तस्मात्तेजो वर्धयते नृणाम् ॥ १३-१५५-४६ (८७३९०)
अन्धतमस्तमिस्रं च दक्षिणायनमेव च ।
उत्तरायणमेतस्माज्ज्योतिर्दानं प्रशस्यते ॥ १३-१५५-४७ (८७३९१)
यस्मादूर्ध्वगमे तत्तु तमसश्चैव भेषजम् ।
तस्मादूर्ध्वगतेर्दाता भवेदत्रेति निश्चयः ॥ १३-१५५-४८ (८७३९२)
देवास्तेजस्विनो यस्मात्प्रभावन्तः प्रकाशकाः ।
तामसा राक्षसाश्चैव तस्माद्दीपः प्रदीयते ॥ १३-१५५-४९ (८७३९३)
आलोकदानाच्चक्षुष्मान्प्रभायुक्तो भवेन्नरः ।
तान्दत्त्वा नोपहिंसेन न हरेन्नोपनाशयेत् ॥ १३-१५५-५० (८७३९४)
दीपहार्ता भवेदन्धस्तमोगतिरसुप्रभः ।
दीपप्रदः स्वर्गलोके दीपमाली विराजते ॥ १३-१५५-५१ (८७३९५)
हविषा प्रथमः कल्पो द्वितीयश्चौषधीरसैः ।
वसामेदोस्थिनिर्यासैर्न कार्यः पुष्टिमिच्छता ॥ १३-१५५-५२ (८७३९६)
देवालये सभायां च गिरौ चैत्यचतुष्पथे ।
दीपदाता भवेन्नित्यं य इच्छेद्भूतिमात्मनः ॥ १३-१५५-५३ (८७३९७)
कुलोद्योतो विशुद्धात्मा प्रकाशत्वं च गच्छति ।
ज्योतिषां चैव सालोक्यं दीपदाता भवेन्नरः ॥ १३-१५५-५४ (८७३९८)
बलिकर्मसु वक्ष्यामि गुणान्कर्मफलोदयान् ।
देवयक्षोरगनृणां भूतानामथ रक्षसाम् ॥ १३-१५५-५५ (८७३९९)
येषां नाग्रभुजो विप्रा देवतातिथिबालकाः ।
राक्षसानेव तान्विद्धि निर्वषट्कारमङ्गलान् ॥ १३-१५५-५६ (८७४००)
तस्मादग्रं प्रयच्छेत देवभ्यः प्रतिपूजितम् ।
शिरसा प्रणतश्चापि हरेद्बलिमतन्द्रितः ॥ १३-१५५-५७ (८७४०१)
गृह्णन्ति देवता नित्यमाशंसन्ति सदा गृहान् ।
बाह्याश्चागन्तवो येऽन्ये यक्षराक्षसपन्नगाः ॥ १३-१५५-५८ (८७४०२)
इतो दत्तेन जीवन्ति देवताः पितरस्तथा ।
ते प्रीताः प्रीणयन्त्येनमायुषा यशसा धनैः ॥ १३-१५५-५९ (८७४०३)
बलयः सह पुष्पैस्तु देवानामुपहारयेत् ।
दधिदुग्धमयाः पुण्याः सुगन्धाः प्रियदर्शनाः ॥ १३-१५५-६० (८७४०४)
कार्या रुधिरमांसाढ्या बलयो यक्षरक्षसाम् ।
सुरासवपुरस्कारा लाजोल्लापिकभूषिताः ॥ १३-१५५-६१ (८७४०५)
नागानां दयिता नित्यं पद्मोत्पलविमिश्रिताः ।
तिलान्गुडसुसम्पन्नान्भूतानामुपहारयेत् ॥ १३-१५५-६२ (८७४०६)
अग्रदाताऽग्रभोगी स्याद्बलवीर्यसमन्वितः ।
तस्मादग्रं प्रयच्छेत देवभ्यः प्रतिपूजितम् ॥ १३-१५५-६३ (८७४०७)

ज्वलन्त्यहरहो वेश्म याश्चास्य गृहदेवताः ।
ताः पूज्या भूतिकामेन प्रसृताग्रप्रदायिना ॥ १३-१५५-६४ (८७४०८)
इत्येतदसुरेन्द्राय काव्यः प्रोवाच भार्गवः ।
सुवर्णाय मनुः प्राह सुवर्णो नारदाय च ॥ १३-१५५-६५ (८७४०९)
नारदोऽपि मयि प्राह गुणानेतान्महाद्युते ।
त्वमप्येतद्विदित्वेह सर्वमाचर पुत्रक ॥ ॥ १३-१५५-६६ (८७४१०)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
पञ्चपञ्चाशदधिकशततमोऽध्यायः ॥ १५५ ॥
Mahabharata - Anushaasana Parva - Chapter Footnotes

७-१५५-६ रमणीये शिलापृष्ठ इति झ पाठः ॥
७-१५५-७ स्तां अभवताम् ॥
७-१५५-१६ तपः वर्णाश्रमधर्मः । धर्मो दयादिः ॥
७-१५५-१७ लताः ओषध्यो व्रीह्यादयः ॥
७-१५५-४० प्रवरस्तेषां घृतमिश्रोऽथ कुञ्जर इति थ पाठः ॥
७-१५५-४६ ज्योतिर्दीपादि । तेजः कान्तिः। प्रकाशः कीर्तिः ॥
७-१५५-४७ तमिस्रं अन्धकारः । अन्धं तमो नाम नरकरूपम्। तथा
दक्षिणायनमप्यन्धं तम एव। अत उत्तरायणे रात्रौ तमोनाशकं
ज्योतिर्देयं नरकनिवृत्त्यर्थं ॥
७-१५५-५२ हविषा घृतेन ओषधीरसैः तिलसर्षपादिस्नेहैः
। वसामेदोस्थीनि प्राण्यवयवास्तेषां निर्यासाः स्नेहाः। वसादयः पृथग्वा
निर्यासात् ॥
७-१५५-६० दधिद्रप्सयुताः पुण्या इति ध पाठः ॥
७-१५५-६१ लाजोल्लापिकभूषिताः । उल्लापिक उपरिलापनम् ॥

---

अनुससनपर्व-अध्यय१५६
॥ श्रीः ॥
१३.१५६. अध्यायः १५६

अथ दानधर्मपर्व ॥ १ ॥
Mahabharata - Anushaasana Parva - Chapter Topics
भीष्मेण युधिष्ठिरंप्रति बलिदीपप्रदानकथनोपयोगितया
नहुषचरितकथनारम्भः ॥ १ ॥
देवैर्वरदानपूर्वकमिन्द्रपदं प्रापितेन नहुषेण
पर्यात्सप्तर्ष्यादिभिः पर्यायेण स्वयानवाहनम् ॥ २ ॥

अगस्त्यस्य तद्यानवहनपर्याये भृगुणाऽगस्त्यंप्रति स्वेन नहुषस्याधःपातनप्रतिज्ञानम् ॥ ३ ॥

Mahabharata - Anushaasana Parva - Chapter Text

युधिष्ठिर उवाच ।
श्रुतं मे भरतश्रेष्ठ पुष्पधूपप्रदायिनाम् ।
फलं बलिविधाने च तद्ब्रूयो वक्तुमर्हसि ॥ १३-१५६-१ (८७४११)
धूपप्रदानस्य फलं प्रदीपस्य तथैव च ।
बलयश्च किमर्थं वै क्षिप्यन्ते गृहमेधिभिः ॥ १३-१५६-२ (८७४१२)
भीष्म उवाच। १३-१५६-३क्ष् (७३१५)
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
नहुषस्य च संवादमगस्त्यस्य भृगोस्तता ॥ १३-१५६-३ (८७४१३)
नहुषो हि महाराज राजर्षिः सुमहातपाः ।
देवराज्यमनुप्राप्तः सुकृतेनेह कर्मणा ॥ १३-१५६-४ (८७४१४)
तत्रापि प्रयतो राजन्नहुषस्त्रिदिवे वसन् ।
मानुषीश्चैव दिव्याश्च कुर्वाणो विविधाः क्रियाः ॥ १३-१५६-५ (८७४१५)
मानुष्यस्तत्र सर्वाः स्म क्रियास्तस्य महात्मनः ।
प्रवृत्तास्त्रिदिवे राजन्दिव्याश्चैव सनातनाः ॥ १३-१५६-६ (८७४१६)
अग्निकार्याणि समिधः कुशाः सुमनसस्तथा ।
बलयश्चान्नलाजाभिर्धूपनं दीपकर्म च ॥ १३-१५६-७ (८७४१७)
सर्वं तस्य गृहे राज्ञः प्रावर्तत महात्मनः ।
जपयज्ञान्मनोयज्ञांस्त्रिदिवेऽपि चकार सः ॥ १३-१५६-८ (८७४१८)
देवानभ्यर्चयच्चापि विधिवत्स सुरेश्वरः ।
सर्वानेव यथान्यायं यथापूर्वमरिंदम ॥ १३-१५६-९ (८७४१९)
अथेनद्रोऽहमिति ज्ञात्वा अहङ्कारं समाविशत् ।
सर्वाश्चैव क्रियास्तस्य पर्यहीयन्त भूपतेः ॥ १३-१५६-१० (८७४२०)
सप्तर्षीन्वाहयामास वरदानदमान्वितः ।
परिहीनक्रियश्चैव दुर्बलत्वमुपेयिवान् ॥ १३-१५६-११ (८७४२१)
तस्य वाहयतः कालो मुनिमुख्यांस्तपोधनान् ।
अहङ्काराभिभूतस्य सुमहानत्यवर्तत ॥ १३-१५६-१२ (८७४२२)
अथ पर्यायशः सर्वान्वाहनायोपचक्रमे ।
पर्यायश्चाप्यगस्त्यस्य समपद्यत भारत ॥ १३-१५६-१३ (८७४२३)
अथागत्य महातेजा भृगुर्ब्रह्मविदांवरः ।
अगस्त्यमाश्रमस्थं वै समुपेत्येदमब्रवीत् ॥ १३-१५६-१४ (८७४२४)
एवं वयमसत्कारं देवेन्द्रस्यास्य दुर्मतेः ।

नहुषस्य किमर्थं वै मर्षयाम महामुने ॥ १३-१५६-१५ (८७४२५)
अगस्त्य उवाच। १३-१५६-१६क्ष् (७३१६)
कथमेष मया शक्यः शप्तुं यस्य महामुने ।
वरदेन वरो दत्तो भवतो विदितश्च सः ॥ १३-१५६-१६ (८७४२६)
यो मे दृष्टिपथं गच्छेत्स मे वश्यो भवेदिति ।
इत्यनेन वरं देवो याचितो गच्छता दिवम् ॥ १३-१५६-१७ (८७४२७)
एवं न दग्धः स मया भवता च न संशयः ।
अन्येनाप्यृषिमुख्येन न दग्धो न च पातितः ॥ १३-१५६-१८ (८७४२८)
अमृतं चैव पानाय दत्तमस्मै पुरा विभो ।
महात्मना तदर्तं च नास्माभिर्विनिपात्यते ॥ १३-१५६-१९ (८७४२९)
प्रायच्छत वरं देवः प्रजानां दुःखकारणम् ।
द्विजेष्वधर्मयुक्तानि स करोति नराधमः ॥ १३-१५६-२० (८७४३०)
तत्र यत्प्राप्तकालं नस्तद्ब्रू वदतांवर ।
भवांश्चापि यथा ब्रूयात्तत्कर्तास्मि न संशयः ॥ १३-१५६-२१ (८७४३१)
भृगुरुवाच। १३-१५६-२२क्ष् (७३१७)
पितामहनियोगेन भवन्तं सोऽहमागतः ।
प्रतिकर्तुं बलवति नहुषे दर्पमोहिते ॥ १३-१५६-२२ (८७४३२)
अद्य हि त्वां सुदुर्बुद्धी रथे योक्ष्यति देवराट् ।
अद्यैनमहमुद्वृत्तं करिष्येऽनिन्द्रमोजसा ॥ १३-१५६-२३ (८७४३३)
अद्येन्द्रं स्थापयिष्यामि पश्यतस्ते शतक्रतुम् ।
सञ्चाल्य पापकर्माणमैन्द्रात्स्थानात्सुदुर्मतिम्। १३-१५६-२४ (८७४३४)
अद्य चासौ कुदेवेन्द्रस्त्वां पदा धर्षयिष्यति ।
दैवोपहतचित्तत्वादात्मनाशाय मन्दधीः ॥ १३-१५६-२५ (८७४३५)
व्युत्क्रान्तधर्मं तमहं धर्षणामर्षितो भृशम् ।
अहिर्भवस्वेति रुषा शप्स्ये पापं द्विजद्रुहम् ॥ १३-१५६-२६ (८७४३६)
तत एनं सुदुर्बुद्धिं धिक्षब्दाभिहतत्विषम् ।
धरण्यां पातयिष्यामि पश्यतस्ते महामुने ॥ १३-१५६-२७ (८७४३७)
नहुषं पापकर्माणमैश्वर्यबलमोहितम् ।
यथा च रोचते तुभ्यं तथा कर्तास्म्यहं मुने ॥ १३-१५६-२८ (८७४३८)
एवमुक्तस्तु भृगुणा मैत्रावरुणिरव्ययः ।
अगस्त्यः परमप्रीतो बभूव विगतज्वरः ॥ ॥ १३-१५६-२९ (८७४३९)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
षट्पञ्चाशदधिकशततमोऽध्यायः ॥ १५६ ॥

Mahabharata - Anushaasana Parva - Chapter Footnotes

७-१५६-७ लाजाभिः ।आर्षं स्त्रीत्वम् ॥
७-१५६-१० अथेन्द्रस्य भविष्यत्वादहङ्कारः समाविशत् इति ध पाठः ॥
७-१५६-१८ न शप्तो विनिपातिन इति थ ध पाठः ॥
७-१५६-२६ शपिष्ये पापमोहितमिति थ ध पाठः ॥

---

अनुससनपर्व-अध्यय१५७
॥ श्रीः ॥
१३.१५७. अध्यायः १५७

अथ दानधर्मपर्व ॥ १ ॥
Mahabharata - Anushaasana Parva - Chapter Topics
नहुषेणागस्त्यस्य स्वयाने योजनम् ॥ १ ॥
तथा तेन सह श्रुतिप्रामाण्यविवादे स्वविरुद्धभाषिणोऽगस्त्यस्य मस्तके स्वपादेन ताडनम् ॥ २ ॥
तदा तज्जटान्तर्निगूढेन भृगुणा शापदानेन तस्याधःपातनम् ॥ ३ ॥
ततो देवैरिन्द्रस्य स्वपदेऽभिषेचनम् ॥ ४ ।नहुषस्य स्वकृतपूर्वबलिदीपदानादिजसुकृतमहिम्ना पुनः स्वर्गप्राप्तिः ॥ ५ ॥

Mahabharata - Anushaasana Parva - Chapter Text

युधिष्ठिर उवाच ।
कथं वै स विपन्नश्च कथं वै पातितो भुवि ।
कथं देवेन्द्रतां प्राप्तस्तद्भवान्वक्तुमर्हति ॥ १३-१५७-१ (८७४४०)
भीष्म उवाच। १३-१५७-२क्ष् (७३१८)
एवं तयोः संवदतोः क्रियास्तस्य महात्मनः ।
सर्वा एव प्रवर्तन्ते या दिव्या याश्च मानुषाः ॥ १३-१५७-२ (८७४४१)
तथैव दीपदानानि सर्वोपकरणानि वै ।
बलिकर्म च यच्चान्यद्बुत्सकाश्च पृथग्विधाः ॥ १३-१५७-३ (८७४४२)
सर्वास्तस्य समुत्पन्ना देवेन्द्रस्य महात्मनः ।
देवलोके नृलोके च सदाचारपुरस्कृताः ॥ १३-१५७-४ (८७४४३)
ताश्चोद्भवन्ति राजेन्द्र समृद्ध्यै गृहमेधिनः ।
धूपप्रदानैर्दीपैश्च नमस्कारैस्तथैव च ॥ १३-१५७-५ (८७४४४)
यथा सिद्धस्य चान्नस्य गृह्य चाग्रं प्रदीयते ।
बलयश्च गृहोद्देशे ततः प्रीयन्ति देवताः ॥ १३-१५७-६ (८७४४५)
यथा च गृहिणस्तोषो भवेद्वै बलिकर्मणि ।
तथा शतगुणा प्रीतिर्देवतानां प्रजायते ॥ १३-१५७-७ (८७४४६)

एवं धूपप्रदानं च दीपदानं च साधवः ।
प्रयच्छति नमस्कारैर्युक्तमात्मगुणावहम् ॥१३-१५७-८ (८७४४७)
स्नानेनाद्भिश्च यत्कर्म क्रियते वै विपश्चिता ।
नमस्कारप्रयुक्तेन तेन प्रीणन्ति देवताः ॥१३-१५७-९ (८७४४८)
पितरश्च महाभागा ऋषयश्च तपोधनाः ।
गृह्याश्च देवताः सर्वाः प्रीयन्ते विधिनाऽर्चिताः ॥१३-१५७-१० (८७४४९)
इत्येतां बुद्धिमास्थाय नहुषः स नरेश्वरः ।
सुरेन्द्रत्वं महत्प्राप्य कृतवानेतदद्भुतम् ॥१३-१५७-११ (८७४५०)
कस्य चित्त्वथ कालस्य भाग्यक्षय उपस्थिते ।
सर्वमेतदवज्ञाय न चकार यथाविधि ॥१३-१५७-१२ (८७४५१)
ततः स परिहीणोऽभूत्सुरेन्द्रो बलदर्पतः ।
धूपदीपादिकविधिं न यथावच्चकार ह ।
ततोऽस्य यज्ञविषयो रक्षोभिः परिबाध्यते ॥ १३-१५७-१३ (८७४५२)
अथागस्त्यमृषिश्रेष्ठं वाहनायाजुहाव ह ।
द्रुतं सरस्वतीकूलात्स्मयन्निव महाबलः ॥१३-१५७-१४ (८७४५३)
ततो भृगुर्महातेजा मैत्रावरुणिमब्रवीत् ।
निमीलयस्व नयने जटां यावद्विशामि ते ।
ग्सुरेन्द्रपतनायेति स च नेत्र न्यमीलयत् ॥' १३-१५७-१५ (८७४५४)
ततोऽगस्त्यस्याथ जटां दृष्ट्वा प्राविशदच्युतः ।
भृगुः स सुमहातेजाः पातनाय नृपस्य च ॥१३-१५७-१६ (८७४५५)
ततः स देवराट् प्राप्तस्तमृषिं वाहनाय वै ।
ततोऽगस्त्यः सुरपतिं वाक्यमाह विशाम्पते ।
योजयस्वेति मां क्षिप्रं कं च देशं वहामि ते ॥ १३-१५७-१७ (८७४५६)
यत्र वक्ष्यसि तत्र त्वां नयिष्यामि सुराधिप ।
इत्युक्तो नरहुषस्तेन योजयामास तं मुनिम् ॥१३-१५७-१८ (८७४५७)
भृगुस्तस्य जटान्तस्थो बभूव हृषितो भृशम् ।
न चापि दर्शनं तस्य चकार स भृगुस्तदा ।
वरदानप्रभावज्ञो नहुषस्य महात्मनः ॥ १३-१५७-१९ (८७४५८)
न चुकोप तदाऽगस्त्यो युक्तोऽपि नहुषेण वै ।
तं तु राजा पदैकेन चोदयामास भारत ।
ग्श्रुतिः स्मृतिः प्रमाणं वा नेतिवादेन देवराट् ॥' १३-१५७-२० (८७४५९)
न चुकोप स धर्मात्मा ततः पादेन देवराट् ।
अगस्त्यस्य तदा क्रुद्धो वामेनाभ्यहनच्छिरः ॥१३-१५७-२१ (८७४६०)
तस्मिञ्शिरस्यभिहते स जटान्तर्गतो भृगुः ।
शशाप बलवत्क्रुद्धो नहुषं पापचेतसम् ॥१३-१५७-२२ (८७४६१)
यस्मात्पदाऽवधीः क्रोधाच्छिरसीमं महामुनिम् ।

तस्मादाशु महीं गच्छ सर्पो भूत्वा सुदुर्मते ॥ १३-१५७-२३ (८७४६२)
शप्तोऽथ स तदा तेन सर्पो भूत्वा पपात ह ।
अदृष्टेनाथ भृगुणा भूतले भरतर्षभ ॥ १३-१५७-२४ (८७४६३)
भृगुं हि यदि सोऽद्राक्षीन्नहुषः पृथिवीपते ।
स शक्तोनाऽभविष्यद्वै पातने तस्य तेजसा ॥ १३-१५७-२५ (८७४६४)
स तु तैस्तैः प्रदानैश्च तपोभिर्नियमैस्तथा ।
पतितोऽपि महाराज भूतले स्मृतिमानभूत् ॥ १३-१५७-२६ (८७४६५)
प्रसादयामास भृगुं शापान्तो मे भवेदिति ।
ततोऽगस्त्यः कृपाविष्टः प्रासादयत तं भृगुम् ।
शापान्तार्थं महाराज स च प्रादात्कृपान्वितः ॥ १३-१५७-२७ (८७४६६)
भृगुरुवाच। १३-१५७-२८क्ष् (७३१९)
राजा युधिष्ठिरो नाम भविष्यति कुरूद्वहः ।
स त्वां मोक्षयिता शापादित्युक्त्वाऽन्तरधीयत ॥ १३-१५७-२८ (८७४६७)
अगस्त्योऽपि महातेजाः कृत्वा कार्यं शतक्रतोः ।
स्वमाश्रमपदं प्रायात्पूज्यमानो द्विजातिभिः ॥ १३-१५७-२९ (८७४६८)
नहुषोऽपि त्वया राजंस्तस्माच्छापात्समुद्धृतः ।
जगाम ब्रह्मभवनं पश्यतस्ते जनाधिप ॥ १३-१५७-३० (८७४६९)
तदा स पातयित्वा तं नहुषं भूतले भृगुः ।
जगाम ब्रह्मभवनं ब्रह्मणे च न्यवेदयत् ॥ १३-१५७-३१ (८७४७०)
ततः शक्रं समानाय्य देवानाह पितामहः ।
वरदानान्मम सुरा नहुषो राज्यमाप्तवान् ।
स चागस्त्येन क्रुद्धेन भ्रंशितो भूतलं गतः ॥ १३-१५७-३२ (८७४७१)
न च शक्यं विना राज्ञा सुखं वर्तयितुं क्वचित् ।
तस्मादयं पुनः शक्रो देवराज्येऽभिषिच्यताम् ॥ १३-१५७-३३ (८७४७२)
एवं सम्भाषमाणं तु देवाः पार्थ पितामहम् ।
एवमस्त्विति संहृष्टाः प्रत्यूचुस्तं नराधिप ॥ १३-१५७-३४ (८७४७३)
सोऽभिषिक्तो भगवता देवराज्ये च वासवः ।
ब्रह्मणा राजशार्दूल यथापूर्वं व्यरोचत ॥ १३-१५७-३५ (८७४७४)
एवमेतत्पुरावृत्तं नहुषस्य व्यतिक्रमात् ।
स च तैरेव संसिद्धो नहुषः कर्मभिः पुनः ॥ १३-१५७-३६ (८७४७५)
तस्माद्दीपाः प्रदातव्याः सायं वै गृहमेधिभिः ।
दिव्यं चक्षुरवाप्नोति प्रेत्य दीपस्य दायकः ।
पूर्णचन्द्रप्रतीकाशा दीपदाश्च भवन्त्युत ॥ १३-१५७-३७ (८७४७६)
यावदक्षिनिमेषाणि ज्वलन्ते तावतीः समाः ।
रूपवान्बलवांश्चापि नरो भवति दीपदः ॥ १३-१५७-३८ (८७४७७)
य इदं शृणुयाद्वापि पठते यो द्विजोत्तमः ।

ब्रह्मलोकमवाप्नोति स च वै नात्र संशयः ॥ ॥१३-१५७-३९ (८७४७८)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
सप्तपञ्चाशदधिकशततमोऽध्यायः ॥१५७ ॥
Mahabharata - Anushaasana Parva - Chapter Footnotes

७-१५७-३ वत्सकाः पुत्रादेर्वार्षिकोत्सवाः । यच्चान्यदुत्सेकाश्चेति
थ ध पाठः ॥
७-१५७-२० तं तु राजा प्रतोदेनेति झ पाठः ॥
७-१५७-३० भवनं तेन पुण्येन कर्मणेति थ ध पाठः ॥
७-१५७-३८ रूपवान्धर्मवांश्चापीति ध पाठः ॥

---

अनुससनपर्व-अध्यय१५८
॥ श्रीः ॥
१३.१५८. अध्यायः १५८

अथ दानधर्मपर्व ॥१ ॥
Mahabharata - Anushaasana Parva - Chapter Topics
भीष्मेण युधिष्ठिरं प्रति ब्रह्मस्वापहारस्यानर्थहेतुताया प्रमाणतया
नृपचण्डलसंवादानुवादः ॥१ ॥

Mahabharata - Anushaasana Parva - Chapter Text

युधिष्ठिर उवाच ।
ब्राह्मणस्वानि ये मन्दा हरन्ति भरतर्षभ ।
नृशंसकारिणो योनिं कां ते गच्छन्ति मानवाः ॥१३-१५८-१ (८७४७९)
भीष्य उवाच।१३-१५८-२क्ष् (७३२०)
पातकानां परं ह्येतद्ब्रह्मस्वहरणं बलात् ।
सान्वयास्ते विनश्यन्ति चण्डालाः प्रेत्य चेह च ॥१३-१५८-२ (८७४८०)
अत्राप्युदाहरन्तीममितिहासं पुरातनमम् ।
चण्डालस्य च संवादं क्षत्रबन्धोश्च भारत ॥१३-१५८-३ (८७४८१)
राजोवाच।१३-१५८-४क्ष् (७३२१)
वृद्धरूपोऽसि चण्डाल बालवच्च विचेष्टसे ।
श्वखराणां रजःसेवी कस्मादुद्विजसे गवाम् ॥१३-१५८-४ (८७४८२)
साधुभिर्गर्हितं कर्म चण्डालस्य विधीयते ।
कस्माद्गोरजसा ध्वस्तमङ्गं तोयेन सिञ्चसि ॥१३-१५८-५ (८७४८३)

चण्डाल उवाच। १३-१५८-६क्ष् (७३२२)
ब्राह्मणस्य गवां राजन्प्रयान्तीनां रजः पुरा ।
सोममुद्ध्वंसयामास तं सोममपिबन्द्विजाः ॥ १३-१५८-६ (८७४८४)
भृत्यानामपि राज्ञस्तु रजसा ध्वंसितं मखे ।
तत्पानाच्च द्विजाः सर्वे क्षिप्रं नरकमाविशन् ॥ १३-१५८-७ (८७४८५)
दीक्षितश्च स राजाऽपि क्षिप्रं नरकमाविशत् ।
सह तैर्याजकैः सर्वैर्ब्रह्मस्वमुपजीव्य तत् ॥ १३-१५८-८ (८७४८६)
येऽपि तत्रापिबन्क्षीरं घृतं दधि च मानवाः ।
ब्राह्मणाः सहराजन्याः सर्वे नरकमाविशन् ॥ १३-१५८-९ (८७४८७)
जघ्नुस्ताः पयसा पुत्रांस्तथा पौत्रान्विधूय तान् ।
पशूनवेक्षमाणश्च साधुवृत्तेन दंपती ॥ १३-१५८-१० (८७४८८)
अहं तत्रावसं राजन्ब्रह्मचारी जितेन्द्रियः ।
तासां मे रजसा ध्वस्तं भैक्षमासीन्नराधिप १३-१५८-११ (८७४८९)
चण्डालोऽहं ततो राजन्भुक्त्वा तदभवं नृप ।
ब्रह्मस्वहारी न नृपः सोऽप्रतिष्ठां गतिं ययौ ॥ १३-१५८-१२ (८७४९०)
तस्माद्धरेन्न विप्रस्वं कदाचिदपि किञ्चन ।
न पश्येन्नानुमोदेच्च न हर्तुं किञ्चिदाहरेत् ॥ १३-१५८-१३ (८७४९१)
ब्रह्मस्वं रजसा ध्वस्तं भुक्त्वा मां पश्य यादृशम् ।
तस्मात्सोमोऽप्यविक्रेयः पुरुषेण विपश्चिता ॥ १३-१५८-१४ (८७४९२)
एतद्धि धनमुत्कृष्टं द्विजानामविशेषतः ।
विक्रयं त्विह सोमस्य गर्हयन्ति मनीषिणः ॥ १३-१५८-१५ (८७४९३)
ये चैनं क्रीणते तात ये च विक्रीणते जनाः ।
ते तु वैवस्वतं प्राप्य रौरवं यान्ति सर्वशः ॥ १३-१५८-१६ (८७४९४)
सोमं तु रजसा ध्वस्तं विक्रीणन्विधिपूर्वकम् ।
श्रोत्रियो वार्धुषी भूत्वा नचिरं स विनश्यति ॥ १३-१५८-१७ (८७४९५)
नरकं त्रिंशतं प्राप्य स्वविष्ठामुपजीवति ।
ब्रह्मस्वहारी नरकान्यातनाश्चानुभूय तु ।
मलेषु च कृमिर्भूत्वा श्वविष्ठामुपजीवती ॥ १३-१५८-१८ (८७४९६)
श्वचर्यामतिमानं च सखिदारेषु विप्लवम् ।
तुलयाधारयद्धर्मो ह्यतिमानोऽतिरिच्यते ॥ १३-१५८-१९ (८७४९७)
म्लानं मां विकलं पश्य विवर्णं हरिणं कृशम् ।
अतिमानेनि मां पश्य पापां गतिमुपागतम् ॥ १३-१५८-२० (८७४९८)
अहं वै विपुले तात कुले दनसमन्विते ।
पौराणे जन्मनि विभो ज्ञानविज्ञानपारगः ॥ १३-१५८-२१ (८७४९९)
अभवं तत्र जानानो ह्येतान्दोषान्मदात्सदा ।
संरब्ध एव भूतानां पृष्ठमांसमभक्षयम् ॥ १३-१५८-२२ (८७५००)

सोऽहं वै विदितः सर्वैर्दूरगो वनिनो वने ।
साधूनां परिभावेप्सुर्विप्राणां गर्वितो धनैः ।
इमामवस्थां सम्प्राप्तः पश्य कालस्य पर्ययम् ॥ १३-१५८-२३ (८७५०१)
आदीप्तमिव चैलान्तं भ्रमरैरिव चार्दितम् ।
धावमानं सुसंरब्दं फश्य मां रजसाऽन्वितम् ॥१३-१५८-२४ (८७५०२)
स्वाध्यायैस्तु महात्पापं हरन्ति गृहमेधिनः ।
दानैः पृथग्विधैश्चापि विप्रजात्यां मनीषिणः ॥१३-१५८-२५ (८७५०३)
तथा पापकृतं विप्रमाश्रमस्तं महीपते ।
सर्वसङ्गविनिर्मुक्तं छन्दांस्युत्तारयन्त्युत ॥१३-१५८-२६ (८७५०४)
अहं हि पापयोन्यां वै प्रसूतः क्षत्रियर्षभ ।
निश्चयं नाधिगच्छामि कथं मुच्येयमित्युत ॥१३-१५८-२७ (८७५०५)
जातिस्मरत्वं च मम केनचित्पूर्वकर्मणा ।
शुभने येन मोक्षं वै प्राप्तुमिच्छाम्यहं नृप ॥१३-१५८-२८ (८७५०६)
त्वमिमं सम्प्रपन्नाय संशयं ब्रूहि पृच्छते ।
चण्डालत्वात्कथमहं मुच्येयमिति सत्तम ॥१३-१५८-२९ (८७५०७)
राजोवाच।१३-१५८-३०क्ष् (७३२३)
चण्डाल प्रतिजानीहि येन मोक्षमवाप्स्यसि ।
ब्राह्मणार्थे त्यजन्प्राणान्गतिमिष्टामवाप्स्यसि ॥१३-१५८-३० (८७५०८)
दत्त्वा शरीरं क्रव्याद्भ्यो रणाग्नौ द्विजहेतुकम् ।
हित्वा प्राणान्प्रमोक्षस्ते नान्यथा मोक्षमर्हसि ॥१३-१५८-३१ (८७५०९)
भीष्म उवाच।१३-१५८-३२क्ष् (७३२४)
इत्युक्तः स तदा तेन ब्रह्मस्वार्थे परन्तप ।
हित्वा रणमुखे प्राणान्गतिमिष्टामवाप ह ॥१३-१५८-३२ (८७५१०)
तस्माद्रक्ष्यं त्वया पुत्र ब्रह्मस्वं भरतर्षभ ।
यदीच्छसि महाबाहो शाश्वतीं गतिमात्मनः ॥ ॥१३-१५८-३३ (८७५११)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
अष्टपञ्चाशदधिकशततमोऽध्यायः ॥१५८ ॥
Mahabharata - Anushaasana Parva - Chapter Footnotes

७-१५८-४ रजःसेवी रजोगुण्ठितः ॥
७-१५८-५ गोरजसा गोपरागेण प्रचलत्या धेनोरूधसः
सकाशात्प्रसरन्त्यः क्षीरविप्रुषोऽत्र परागपर्यायेण
रजःपदेनोच्यन्ते ।ध्वस्तं व्याप्तं विप्रुण्मात्रेणापि ब्रह्मस्वेन
देहस्निग्धत्वं माभूदिति भावः ॥
७-१५८-६ रजः क्षीरं कर्तृ मार्गस्थवल्लीरूपं सोममुद्ध्वंसयामास

नाशितवत् ॥
७-१५८-१० ता गावः परैः पीतेन स्वपयसा तेषां पुत्रपौत्रान् पशून् दम्पती च जघ्नुः सद्योऽल्पायुषश्चक्रुः ॥
७-१५८-१६ एनं ब्रह्मस्वसृष्टम् ॥
७-१५८-१९ श्वचर्यां नीचसेवाम् । अतिमानी इतरद्वयापेक्षया अत्यन्तं पापीत्यर्थः। स्वस्वदारेषु विप्लवमिति ध पाठः ॥
७-१५८-२२ भूतानामुपरि सदा संरब्द एव कुपित एवेत्यन्वयः ॥
७-१५८-२४ भ्रमरैस्तीक्ष्णतुण्डैरर्द्यमानमिव चेलान्तवद्दह्यमानमिव क्लिश्यन्तं मां पश्य । आदीप्तमिव चालातमिति थ पाठः ॥

---

अनुससनपर्व-अध्यय१५९
॥ श्रीः ॥
१३.१५९. अध्यायः १५९

अथ दानधर्मपर्व ॥ १ ॥
Mahabharata - Anushaasana Parva - Chapter Topics
भीष्मेण युधिष्ठिरंप्रति पुण्यपापकर्मफलभेदस्य पुण्यकर्मणां च तरतमभावस्य च बोधनाय तादृश कर्मविशेषसाध्यफलविशेषप्रतिपादकशक्रगौतमसंवादानुवादः ॥ १ ॥

Mahabharata - Anushaasana Parva - Chapter Text

युधिष्ठिर उवाच ।
एको लोकस्तु कृतिनां स्वर्गे लोके पितामह ।
उत तत्रापि नानात्वं सर्वं ब्रूहि पितामह ॥ १३-१५९-१ (८७५१२)
भीष्म उवाच। १३-१५९-२क्ष् (७३२५)
कर्मभिः पार्थ नानात्वं लोकानां यान्ति मानवाः ।
पुण्यान्पुण्यकृतो यान्ति पापान्पापकृतो नराः ॥ १३-१५९-२ (८७५१३)
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
गौतमस्य मुनेस्तात संवादं वासवस्य च ॥ १३-१५९-३ (८७५१४)
ब्राह्मणो गौतमः कश्चिन्मृदुर्दान्तो जितेन्द्रियः ।
महावने हस्तिशिशुं परिद्यूनममातृकम् ॥ १३-१५९-४ (८७५१५)
तं दृष्ट्वा जीवयामास सानुक्रोशो धृतव्रतः ।
स तु दीर्घेण कालेनि बभूवातिबलो महान् ॥ १३-१५९-५ (८७५१६)
तं प्रपन्नं महादीर्घं प्रभूतं सर्वतोमदम् ।

धृतराष्ट्रस्वरूपेण शक्रो जग्राह हस्तिनम् ॥१३-१५९-६ (८७५१७)
ह्रियमाणं तु तं दृष्ट्वा गौतमः संशितव्रतः ।
अभ्यभाषत राजानं धृतराष्ट्रं महातपाः ॥१३-१५९-७ (८७५१८)
मामाहार्षीर्हस्तिनं पुत्रमेनं
दुःखात्पुष्टं धृतराष्ट्रात्कृतघ्न ।
मैत्रं सतां सप्तपदं वदन्ति
मित्रद्रोहो नेह राजन्स्पृसेत्त्वाम् ॥ १३-१५९-८ (८७५१९)
इध्मोदकप्रदातारं शून्यपालं ममाश्रमे ।
विनीतमाचार्यकुले सुयुक्तं गुरुकर्मणि ॥१३-१५९-९ (८७५२०)
शिष्टं दान्तं कृतज्ञं च प्रियं च सततं मम ।
न मे विक्रोशतो राजन्हर्तुमर्हसि कुञ्जरम् ॥१३-१५९-१० (८७५२१)
धृतराष्ट्र उवाच।१३-१५९-११क्ष् (७३२६)
गवां सहस्रं भवते ददानि
शतानि निष्कस्य ददानि पञ्च ।
अन्यच्च वित्तं विविधं महर्षे
किं ब्राह्मणस्येह गजेन कृत्यम् ॥ १३-१५९-११ (८७५२२)
गौतम उवाच।१३-१५९-१२क्ष् (७३२७)
तवैव गावो हि भवन्तु राज-
न्दास्यः सनिष्का विविधं च रत्नम् ।
अन्यच्च वित्तं विविधं नरेन्द्र
किं ब्राह्मणस्येह धनेन कृत्यम् ॥ १३-१५९-१२ (८७५२३)
धृतराष्ट्र उवाच।१३-१५९-१३क्ष् (७३२८)
ब्राह्मणानां हस्तिभिर्नास्ति कृत्यं
राजन्यानां नागकुलानि विप्र ।
स्वं वाहनं नयतो नास्त्यधर्मो
नागश्रेष्ठं गौतमास्मान्निवर्त ॥ १३-१५९-१३ (८७५२४)
गौतम उवाच।१३-१५९-१४क्ष् (७३२९)
यत्र प्रेतो नन्दति पुण्यकर्मा
यत्र प्रेतः शोचते पापकर्मा ।
वैवस्वतस्य सदने महात्मन-
स्तत्र त्वाऽहं हस्तिनं यातयिष्ये ॥ १३-१५९-१४ (८७५२५)
धृतराष्ट्र उवाच।१३-१५९-१५क्ष् (७३३०)
ये निष्क्रिया नास्तिकाः श्रद्धधानाः
पापात्मान इन्द्रियार्थे निसृष्टाः ।
यमस्य ते यातनां प्राप्नुवन्ति
परं गन्ता धृतराष्ट्रो न तत्र ॥ १३-१५९-१५ (८७५२६)

गौतम उवाच। १३-१५९-१६क्ष् (७३३१)
वैवस्वती संयमनी जनानां
यत्रानृतं नोच्यते यत्र सत्यम् ।
यत्रांबलान्बलिनो घातयन्ति
तत्र त्वाऽहं हस्तिनं यातयिष्ये ॥ १३-१५९-१६ (८७५२७)
धृतराष्ट्र उवाच। १३-१५९-१७क्ष् (७३३२)
ज्येष्ठां स्वसारं पितरं मातरं च
गुरून्यथाऽमानयन्तश्चरन्ति ।
तथाविधानामेष लोको महर्षे
परं गन्ता धृतराष्ट्रो न तत्र ॥ १३-१५९-१७ (८७५२८)
गौतम उवाच। १३-१५९-१८क्ष् (७३३३)
मन्दाकिनी वैश्रवणस् राज्ञो
महाभागा भोगिजनप्रवेश्या ।
गन्धर्वयक्षैरप्सरोभिश्च जुष्टा
तत्र त्वाऽहं हस्तिनं यातयिष्ये ॥ १३-१५९-१८ (८७५२९)
धृतराष्ट्र उवाच। १३-१५९-१९क्ष् (७३३४)
अतिथिव्रताः सुव्रता ये जना वै
प्रतिश्रयं ददति ब्राह्मणेभ्यः ।
शिष्टाशिनः संविभज्याश्रितेभ्यो
मन्दाकिनीं तेऽपि हि भूषयन्ति ॥ १३-१५९-१९ (८७५३०)
गौतम उवाच। १३-१५९-२०क्ष् (७३३५)
मेरोरग्रे यद्वनं भाति रम्यं
सुपुष्पितं किन्नरीगीतजुष्टम् ।
सुदर्शना यत्र जम्बूर्विशाला
तत्र त्वाऽहं हस्तिनं यातयिष्ये ॥ १३-१५९-२० (८७५३१)
धृतराष्ट्र उवाच। १३-१५९-२१क्ष् (७३३६)
ये ब्राह्मणा मृदवः सत्यशीला
बहुश्रुताः सर्वभूताभिरामाः ।
येऽधीयते सेतिहासं पुराणं
मध्वाहुत्या जुह्वति वै द्विजेभ्यः ॥ १३-१५९-२१ (८७५३२)
तथाविधानामेष लोको महर्षे
परं गन्ता धृतराष्ट्रो न तत्र ।
यदन्यत्ते विदितं स्थानमस्ति
तद्ब्रूहि त्वं त्वरितो ह्येष यामि ॥ १३-१५९-२२ (८७५३३)
गौतम उवाच। १३-१५९-२३क्ष् (७३३७)
सुपुष्पितं किंनरराजजुष्टं

प्रियं वनं नन्दनं नारदस्य ।
गन्धर्वाणामप्सरसां च सद्म
तत्र त्वाऽहं हस्तिनं यातयिष्ये ॥ १३-१५९-२३ (८७५३४)
धृतराष्ट्र उवाच। १३-१५४-२४क्ष् (७३३८)
ये नृत्यगीते कुशला जनाः सदा
देवात्मानः प्रियकामाश्चरन्ति ।
तथाविधानामेष लोको महर्षे
परं गन्ता धृतराष्ट्रो न तत्र ॥ १३-१५९-२४ (८७५३५)
गौतम उवाच। १३-१५९-२५क्ष् (७३३९)
यत्रोत्तराः कुरवो भान्ति रम्या
देवैः सार्धं मोदमाना नरेन्द्रः ।
यत्राग्नियौनाश्च वसन्ति विप्रा
अब्योनयः पर्वतयोनयश्च ॥ १३-१५९-२५ (८७५३६)
यत्र शक्रो वर्षति सर्वकामा-
न्यत्र स्त्रियः कामचारा भवन्ति ।
यत्र चेर्ष्या नास्ति नारीनराणां
तत्र त्वाऽहं हस्तिनं यातयिष्ये ॥ १३-१५९-२६ (८७५३७)
धृतराष्ट्र उवाच। १३-१५९-२७क्ष् (७३४०)
ये सर्वभूतेषु निवृत्तकामा
अमांसादा न्यस्तदण्डाश्चरन्ति ।
न हिंसन्ति स्थावरं जङ्गमानि
भूतानां ये सर्वभूतात्मभूताः ॥ १३-१५९-२७ (८७५३८)
निराशिषो निर्ममा वीतरागा
लाभालाभे तुल्यनिन्दाप्रशंसाः ।
तथाविधानामेष लोको महर्षे
परं गन्ता धृतराष्ट्रो न तत्र ॥ १३-१५९-२८ (८७५३९)
गौतम उवाच। १३-१५९-२९क्ष् (७३४१)
ततोऽपरे भान्ति लोकाः सनातनाः
सुपुण्यगन्धा विरजा वीतशोकाः ।
सोमस्य राज्ञः सदने महात्मन-
स्तत्र त्वाऽहं हस्तिनं यातयिष्ये ॥ १३-१५९-२९ (८७५४०)
धृतराष्ट्र उवाच। १३-१५९-३०क्ष् (७३४२)
ये दानशीला न प्रतिगृह्णते सदा
न चाप्यर्थांश्चाददते परेभ्यः ।
येषामदेयमर्हते नास्ति किञ्चि-
त्सर्वातिथ्याः सुप्रजना जनाश्च ॥ १३-१५९-३० (८७५४१)

ये क्षन्तारो नाभिजल्पन्ति चान्या-
ञ्शक्ता भूत्वा सततं पुण्यशीलाः ।
तथाविधानामेष लोको महर्षे
परं गन्ता धृतराष्ट्रो न तत्र ॥ १३-१५९-३१ (८७५४२)
गौतम उवाच। १३-१५९-३२क्ष् (७३४३)
ततोऽपरे भान्ति लोकाः सनातना
विराजसा वितमस्का विशोकाः ।
आदित्यदेवस्य पदं महात्मन-
स्तत्र त्वाऽहं हस्तिनं यातयिष्ये ॥ १३-१५९-३२ (८७५४३)
धृतराष्ट्र उवाच। १३-१५९-३३क्ष् (७३४४)
स्वाध्यायशीला गुरुशुश्रूषकाश्च
तपस्विनः सुव्रताः सत्यसन्धाः ।
आचार्याणामप्रतिकूलभाषिणो
नित्योत्थिता गुरुकर्मस्वचोद्याः ॥ १३-१५९-३३ (८७५४४)
तथाविधानामेष लोको महर्षे
विशुद्धानां भावितो वाग्यतानाम् ।
सत्ये स्थितानां वेदविदां महात्मनां
परं गन्ता धृतराष्ट्रो न तत्र ॥ १३-१५९-३४ (८७५४५)
गौतम उवाच। १३-१५९-३५क्ष् (७३४५)
ततोऽपरे भान्ति लोकाः सनातनाः
सुपुण्यगन्धा विरजा विशोकाः ।
वरुणस्य राज्ञः सदने महात्मन-
स्तत्र त्वाऽहं हस्तिनं यातयिष्ये ॥ १३-१५९-३५ (८७५४६)
धृतराष्ट्र उवाच। १३-१५९-३६क्ष् (७३४६)
चातुर्मास्यैर्ये यजन्ते जनाः सदा
तथेष्टीनां दशशतं प्राप्नुवन्ति ।
ये चाग्निहोत्रं जुह्वति श्रद्दधाना
यथान्यायं त्रीणि वर्षाणि विप्राः ॥ १३-१५९-३६ (८७५४७)
स्वदारगाणां धर्मकृतां महात्मनां
यथोदिते वर्त्मनि सुस्थितानाम् ।
धर्मान्मनामुद्वहतां गतिं तां
परं गन्ता धृतराष्ट्रो न तत्र ॥ १३-१५९-३७ (८७५४८)
गौतम उवाच। १३-१५९-३८क्ष् (७३४७)
इन्द्रस्य लोका विरजा विशोका
दुरन्वयाः काङ्क्षिता मानवानाम् ।
तस्याहं ते भवने भूरितेजसो

राजन्निमं हस्तिनं यातयिष्ये ॥ १३-१५९-३८ (८७५४९)
धृतराष्ट्र उवाच। १३-१५९-३९क्ष् (७३४८)
शतवर्षजीवी यश्च शूरो मनुष्यो
वेदाध्यायी यश्च यज्वाऽप्रमत्तः ।
एते सर्वे शक्रलोकं व्रजन्ति
परं गन्ता धृतराष्ट्रो न तत्र ॥ १३-१५९-३९ (८७५५०)
गौतम उवाच। १३-१५९-४०क्ष् (७३४९)
प्राजापत्याः सन्ति लोका महान्तो
नाकस्य पृष्ठे पुष्कला वीतशोकाः ।
मनीषिणां सर्वलोकाभयानां
तत्र त्वाऽहं हस्तिनं यातयिष्ये ॥ १३-१५९-४० (८७५५१)
धृतराष्ट्र उवाच। १३-१५९-४१क्ष् (७३५०)
ये राजानो राजसूयाभिषिक्ता
धर्मात्मानो रक्षितारः प्रजानाम् ।
ये चाश्वमेधावभृथे प्लुताङ्गा-
स्तेषां लोका धृतराष्ट्रो न तत्र ॥ १३-१५९-४१ (८७५५२)
गौतम उवाच। १३-१५९-४२क्ष् (७३५१)
ततःपरं भान्ति लोकाः सनातनाः
सुपुण्यगन्धा विरजा वीतशोकाः ।
तस्मिन्नहं दुर्लभे चाप्यधृष्ये
गवां लोके हस्तिनं यातयिष्ये ॥ १३-१५९-४२ (८७५५३)
धृतराष्ट्र उवाच। १३-१५९-४३क्ष् (७३५२)
यो गोसहस्री शतदो महात्मा
यो गोशती दश दद्याच्च शक्त्या ।
तथा दशभ्यो यश्च दद्यादिहैकां
पञ्चभ्यो वा दानशीलस्तथैकाम् ॥ १३-१५९-४३ (८७५५४)
ये जीर्यन्ते ब्रह्मचर्येण विप्रा
ब्राह्मीं वाचं परिरक्षन्ति चैव ।
मनस्विनस्तीर्थयात्रापरा ये
ते तत्र मोदन्ति ततो विमानैः ॥ १३-१५९-४४ (८७५५५)
प्रभासं मानसं तीर्थं पुष्कराणि महत्सरः ।
पुण्यं च नैमिषं तीर्थं बाहुदां करतोयिनीम् ॥ १३-१५९-४५ (८७५५६)
गां हयशिरश्चैव विपाशां स्थूलवालुकाम् ।
तूष्णीं गङ्गां शनैर्गङ्गां महाह्रदमथापि च ॥ १३-१५९-४६ (८७५५७)
गोमतीं कौशिकीं पंपां महात्मानो धृतव्रताः ।
सरस्वतीदृषद्वत्यौ यमुनां ये तु यान्ति च ॥ १३-१५९-४७ (८७५५८)

तत ते दिव्यसंस्थाना दिव्यमाल्यधराः शिवाः ।
प्रयान्ति पुण्यगन्धाढ्या धृतराष्ट्रो न तत्र वै ॥ १३-१५९-४८ (८७५५९)
गौतम उवाच। १३-१५९-४९क्ष् (७३५३)
यत्र शीतभयं नास्ति न चोष्णभयमण्वपि ।
न क्षुत्पिपासे न ग्लानिर्न दुःखं न सुखं तथा ॥ १३-१५९-४९ (८७५६०)
न द्वेष्यो न प्रियः कश्चिन्न बन्धुर्न रिपुस्तथा ।
न जरामरणे तत्र न पुण्यं न च पातकम्। १३-१५९-५० (८७५६१)
तस्मिन्विरजसि स्फीते प्रज्ञासत्वव्यवस्थिते ।
स्वयम्भुभवने पुण्ये हस्तिनं यातयिष्यति ॥ १३-१५९-५१ (८७५६२)
धृतराष्ट्र उवाच। १३-१५९-५२क्ष् (७३५४)
निर्मुक्ताः सर्वसङ्गैर्ये कृतात्मानो यतव्रताः ।
अध्यात्मयोगसंस्तानैर्युक्ताः स्वर्गगतिं गताः ॥ १३-१५९-५२ (८७५६३)
ते ब्रह्मभवनं पुण्यं प्राप्नुवन्तीह सात्विकाः ।
न तत्र धृतराष्ट्रस्ते शक्यो द्रष्टुं महामुने ॥ १३-१५९-५३ (८७५६४)
गौतम उवाच। १३-१५९-५४क्ष् (७३५५)
रथन्तरं यत्र बृहच्च गीयते
यत्र वेदिः पुण्यजनैर्वृता च ।
यत्रोपयाति हरिभिः सोमपीथी
तत्र त्वाऽहं हस्तिनं यातयिष्ये ॥ १३-१५९-५४ (८७५६५)
बुध्यामि त्वां वृत्रहणं शतक्रतुं
व्यतिक्रमन्तं भुवनानि विश्वा ।
कच्चिन्न वाचा वृजिनं कदाचि-
दकार्षं ते मनसोऽभिषङ्गात् ॥ १३-१५९-५५ (८७५६६)
शतक्रतुरुवाच। १३-१५९-५६क्ष् (७३५६)
मघवाऽहं लोकपथं प्रजाना-
मन्वागमं परिवादे गजस्य ।
तस्माद्भवान्प्रणतं माऽनुशास्तु
ब्रवीषि यत्तत्करवाणि सर्वम् ॥ १३-१५९-५६ (८७५६७)
गौतम उवाच। १३-१५९-५७क्ष् (७३५७)
श्वेतं करेणुं मम पुत्रं हि नागं
प्रियं तु मे षष्टिवर्षं तु बालम् ।
यो मे वने वसतोऽभूद्द्वितीय-
स्तमेव मे देहि सुरेन्द्र नागम् ॥ १३-१५९-५७ (८७५६८)
शतक्रतुरुवाच। १३-१५९-५८क्ष् (७३५८)
अयं सुतस्ते द्विजमुख्यनाग
आघ्रायते त्वामभिवीक्षमाणः ।

पादौ च ते नासिकयोपजिघ्रते
श्रेयो ममाध्याहि नमश्च तेऽस्तु ॥ १३-१५९-५८ (८७५६९)
गौतम उवाच। १३-१५९-५९क्ष् (७३५९)
शिवं सदैवेह सुरेन्द्र तुभ्यं
ध्यायामि पूजां च सदा प्रयुञ्जे ।
ममापि त्वं शक्र शिवं ददस्व
त्वया दत्तं प्रतिगृह्णामि नागम् ॥ १३-१५९-५९ (८७५७०)
शतक्रतुरुवाच। १३-१५९-६०क्ष् (७३६०)
येषां वेदा निहिता वै गुहायां
मनीषिणां सत्यवतां महात्मनाम् ।
तेषां त्वयैकेन महात्मनाऽस्मि
बुद्धस्तस्मात्प्रीतिमांस्तेऽहतद्य ॥ १३-१५९-६० (८७५७१)
हन्तैहि ब्राह्मणि क्षिप्रं सह पुत्रेण हस्तिना ।
त्वं हि प्राप्तुं शुभाँल्लोकानह्नाय च चिराय च ॥ १३-१५९-६१ (८७५७२)
भीष्म उवाच। १३-१५९-६२क्ष् (७३६१)
स गौतमं पुरुस्कृत्य सह पुत्रेण हस्तिना ।
दिवमाचक्रमे वज्री सद्भिः सह दुरासदम् ॥ १३-१५९-६२ (८७५७३)
इदं यः शृणुयान्नित्यं यः पठेद्वा जितेन्द्रियः ।
स याति ब्रह्मणो लोकं ब्राह्मणो गौतमो यथा ॥ ॥ १३-१५९-६३ (८७५७४)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
एकोनषष्ट्यधिकशततमोऽध्यायः ॥ १५९ ॥
Mahabharata - Anushaasana Parva - Chapter Footnotes

७-१५९-२ पुण्यपापयोरिव पुण्यानामवान्तरभेदोऽस्तीत्यर्थः ॥
७-१५९-११ दासीशतं निष्कशतानि पञ्च । इति झ पाठः ॥
७-१५९-१२ ब्राह्मणस्य ब्राह्मणसम्बन्धिना धनेन ॥
७-१५९-१४ यातयिष्ये हस्तिनम् । स्वीयं फलं त्वत्तो ग्रहीष्ये
इत्यर्थः। हस्तिनं याचयिष्ये इति क ङ ध पाठः ॥
७-१५९-१८ यथा शत्रुं मदमत्ताश्चरन्ति इति झ पाठः ॥
७-१५९-२५ अग्नियौना धृष्टद्युम्नवदग्निरेव यौनं योनिर्येषां ते ॥
७-१५९-३१ क्षन्तारः क्षमिणः ॥
७-१५९-५१ हस्तिनं मे प्रदास्यसि इति झ पाठः ॥

---

अनुससनपर्व-अध्यय१६०
॥ श्रीः ॥

१३.१६०. अध्यायः १६०

अथ दानधर्मपर्व ॥ १ ॥

Mahabharata - Anushaasana Parva - Chapter Topics

भीष्मेण युधिष्ठिरंप्रति
विप्रवचनस्यैहिकपारत्रिकश्रेयस्साधनत्वकथनम् ॥ १ ॥
तथाऽनशनस्य महातपस्त्वकथनम् ॥ २ ॥

Mahabharata - Anushaasana Parva - Chapter Text

युधिष्ठिर उवाच ।
दानं बहुविधाकारं शान्तिः सत्यमहिंसितम् ।
स्वदारतुष्टिश्चोक्ता ते फलं दानस्य वाऽपि यत् ॥ १३-१६०-१ (८७५७५)
पितामहस्य विदितं किमन्यत्तपसो बलात् ।
तपसो यत्परं तेऽद्य तन्नो व्याख्यातुमर्हसि ॥ १३-१६०-२ (८७५७६)
भीष्म उवाच। १३-१६०-३क्ष् (७३६२)
तपसः प्रक्षयो यावत्ताल्लोको युधिष्ठिर ।
मतं ममात्र कौन्तेय तपो नानशनात्परम् ॥ १३-१६०-३ (८७५७७)
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
भगीरथस्य संवादं ब्रह्मणश्च महात्मनः ॥ १३-१६०-४ (८७५७८)
अतीत्य सुरलोकं च गवां लोकं च भारत ।
ऋषिलोकं च सोऽगच्छद्भगीरथ इति श्रुतम् ॥ १३-१६०-५ (८७५७९)
तं तु दृष्ट्वा वचः प्राह ब्रह्मा राजन्भगीरथम् ।
कथं भगीरथाऽऽगास्त्वमिमं लोकं दुरासदम् ॥ १३-१६०-६ (८७५८०)
न हि देवा न गन्धर्वा न मनुष्या भगीरथ ।
आयान्त्यतप्ततपसः कथं वै त्वमिहागतः ॥ १३-१६०-७ (८७५८१)
भगीरथ उवाच। १३-१६०-८क्ष् (७३६३)
निश्शङ्कमन्नमददां ब्राह्मणेभ्यः
शतं सहस्राणि सदैवतानाम् ।
ब्राह्मं व्रतं नित्यमास्थाय विद्व-
न्न त्वेवाहं तस्य फलादिहागाम् ॥ १३-१६०-८ (८७५८२)
दशैकरात्रान्दशपञ्चरात्रा-
नेकादशैकादशकान्क्रतूंश्च ।
ज्योतिष्टोमानां च शतं यदिष्टं
फलेन तेनापि च नागतोऽहम् ॥ १३-१६०-९ (८७५८३)
यच्चावसं जाह्नवीतीरनित्यः

शतं समास्तप्यमानस्तपोऽहम् ।
अदां च तत्राश्वतरीसहस्रं
नारीपुरं न च तेनाहमागाम् ॥ १३-१६०-१० (८७५८४)
दशायुतानि चाश्वानां गोऽयुतानि च विंशतिम् ।
पुष्करेषु द्विजातिभ्यः प्रादां शतसहस्रशः ॥ १३-१६०-११ (८७५८५)
सुवर्णचन्द्रोत्तमधारिणीनां
कन्योत्तमानामददं सहस्रम् ।
षष्टिं सहस्राणि विभूषितानां
जाम्बूनदैराभरणैर्न तेन ॥ १३-१६०-१२ (८७५८६)
दशार्बुदान्यददं गोसवेज्या-
स्वेकैकशो दश गा ओकनाथ ।
समानवत्साः पयसा समन्विताः
सुवर्णकांस्योपदुहा न तेन ॥ १३-१६०-१३ (८७५८७)
आप्तोर्यामेषु नियतमेकैकस्मिन्दशाददम् ।
गृष्टीनां क्षीरदोग्ध्रीणां रोहिणीनां शतानि च ॥ १३-१६०-१४ (८७५८८)
दोग्ध्रीणां वै गवां चापि प्रयुतानि दशैव ह ।
प्रादां दशगुणं ब्रह्मन्न तेनाहमिहागतः ॥ १३-१६०-१५ (८७५८९)
वाजिनां बाह्लिजातानामयुतान्यददं दश ।
कर्काणां हेममालानां न च तेनाहमागतः ॥ १३-१६०-१६ (८७५९०)
कोटीश्च काञ्चनस्याष्टौ प्रादां ब्रह्मन्दशान्वहम् ।
एकैकस्मिन्क्रतौ तेन फलेनाहं न चागतः ॥ १३-१६०-१७ (८७५९१)
वाजिनां श्यामकर्णानां हरितानां पितामह ।
प्रादां हेमस्रजां ब्रह्मन्कोटीर्दश च सप्त च ॥ १३-१६०-१८ (८७५९२)
ईषादन्तान्महाकायान्काञ्चतस्रग्विभूषितान् ।
पद्मिनो वै सहस्राणि प्रादां दश च सप्त च ॥ १३-१६०-१९ (८७५९३)
अलङ्कृतानां देवेश दिव्यैः कनकभूषणैः ।
रथानां काञ्चनाङ्गानां सहस्राण्यददं दश ॥ १३-१६०-२० (८७५९४)
सप्त चान्यानि युक्तानि वाजिभिः समलङ्कृतैः ।
दक्षिणावयवाः केचिद्वेदैर्ये सम्प्रकीर्तिताः ॥ १३-१६०-२१ (८७५९५)
वाजपेयेषु दशसु प्रादां तेष्वपि चाप्यहम् ।
शक्रतुल्यप्रभावाणामिज्यया विक्रमेण ह ॥ १३-१६०-२२ (८७५९६)
सहस्रं निष्ककण्ठानामददं दक्षिणामहम् ।
विजित्य भूपतीन्सर्वानर्थैरिष्ट्वा पितामह ।
अष्टभ्यो राजसूयेभ्यो न च तेनाहमागतः ॥ १३-१६०-२३ (८७५९७)
स्रोतश्च यावद्गङ्गायाश्छन्नमासीज्जगत्पते ।
दक्षिणाभिः प्रवृत्ताभिर्मम नागां च तत्कृते ॥ १३-१६०-२४ (८७५९८)

वाजिनां च सहस्रे द्वे सुवर्णशतभूषिते ।
वरं ग्रामशतं चाहमेकैकस्यां तिथावदाम् ॥१३-१६०-२५ (८७५९९)
तपस्वी नियताहारः शममास्थाय वाग्यतः ।
दीर्घकालं हिमवति गङ्गार्थमचरं तपः ॥१३-१६०-२६ (८७६००)
मूर्ध्ना हरं महादेवं प्रणम्याभ्यर्चयन्नृपः ।
न तेनाप्यहमागच्छं फलेनेह पितामह ॥१३-१६०-२७ (८७६०१)
शम्याक्षेपैरयजं यच्च देवा-
ञ्शतैः क्रतूनामयुतैश्चापि यच्च ।
त्रयोदशद्वादशाहैश्च देव
सपौण्डरीकैर्न च तेषां फलेन ॥ १३-१६०-२८ (८७६०२)
अष्टौ सहस्राणि ककुद्मिनामहं
शुक्लर्षभाणामददं द्विजेभ्यः ।
एकैकं वै काञ्चनं शृङ्गमेभ्यः
पत्नीश्चैषामददं निष्ककण्ठीः ॥ १३-१६०-२९ (८७६०३)
हिरण्यरत्ननिचयानददं रत्नपर्वतान् ।
धनधान्यैः समृद्धांश्च ग्रामाञ्शतसहस्रशः ॥१३-१६०-३० (८७६०४)
शतं शतानां गृष्टीनामददं चाप्यतन्द्रितः ।
इष्ट्वाऽनेकैर्महायज्ञैर्ब्राह्मणेभ्यो न तेन च ॥१३-१६०-३१ (८७६०५)
एकादशाहैरयजं सदक्षिणै-
र्द्विर्द्वादशाहैरश्वमेधैश्च देव ।
गवां धनैः षोडशभिश्च ब्रह्मं-
स्तेषां फलेनेह न चागतोऽस्मि ॥ १३-१६०-३२ (८७६०६)
निष्कैककण्ठमददं योजनायतं
तद्विस्तीर्णं काञ्चनपादपानाम् ।
वनं चूतानां रत्नविभूषितानां
नचैव तेषामागतोऽहं फलेन ॥ १३-१६०-३३ (८७६०७)
तुरायणं हि व्रतमप्यधृष्य-
मक्रोधनोऽकरवं त्रिंशदब्दान् ।
शतं गवामष्टशतानि चैव
दिनेदिने ह्यददं ब्राह्मणेभ्यः ॥ १३-१६०-३४ (८७६०८)
पयस्विनीनामथ रोहिणीनां
तथैवान्याननडुहो लोकनाथ ।
प्रादां नित्यं ब्राह्मणेभ्यः सुरेश
नेहागतस्तेन फलेन चाहम् ॥ १३-१६०-३५ (८७६०९)
ग्शम्याक्षेपेण पृथिवीं त्रिधा पर्यचरं यजन्।'
त्रिंशदग्नीनहं ब्रह्मन्नयजं यच्च नित्यदा ।

अष्टाभिः सर्वमेधैश्च नरमेधैश्च सप्तभिः ॥ १३-१६०-३६ (८७६१०)
दशभिर्विश्वजिद्भिश्च शतैरष्टादशोत्तरैः ।
न चैव तेषां देवेश फलेनाहमिहागमम् ॥१३-१६०-३७ (८७६११)
सरय्वां बाहुदायां च गङ्गायामथ नैमिषे ।
गवां शतानामयुतमददं न च तेन वै ॥१३-१६०-३८ (८७६१२)
इन्द्रेण गुह्यं निहितं वै गुहायां
यद्भार्गवस्तपसेहाभ्यविन्दत् ।
जाज्वल्यमानमुशनस्तेजसेह
तत्साधयामासमहं वरेण्य ॥ १३-१६०-३९ (८७६१३)
ग्ब्राह्मणार्थाय कर्माणि रणं चैव करोमि यत्।'
ततो मे ब्राह्मणास्तुष्टास्तस्मिन्कर्मणि साधिते ।
ग्पूजितैर्ब्राह्मणैर्नित्यं न च तेनाहमागतः ॥' १३-१६०-४० (८७६१४)
सहस्रमृषयश्चासन्ये वै तत्र समागताः ।
उक्तस्तैरस्मि गच्छ त्वं ब्रह्मलोकमिति प्रभो ॥१३-१६०-४१ (८७६१५)
प्रीतेनोक्तः सहस्रेण ब्राह्मणानामहं प्रभो ।
इमं लोकमनुप्राप्तो मा भूत्तेऽत्र विचारणा ॥१३-१६०-४२ (८७६१६)
कामं यथावद्विहितं विधात्रा
पृष्टेन वाच्यं तु मया यथावत् ।
तपो हि नान्यच्चानशनान्मतं मे
नमोस्तु ते देववर प्रसीद ॥ १३-१६०-४३ (८७६१७)
भीष्म उवाच।१३-१६०-४४क्ष् (७३६४)
इत्युक्तवन्तं ब्रह्मि तु राजानं स भगीरथम् ।
पूजयामास पूजार्हं विधिदृष्टेन कर्मणा ॥१३-१६०-४४ (८७६१८)
तस्मादनशनैर्युक्तो विप्रान्पूज्य नित्यदा ।
विप्राणां वचनात्सर्वं परत्रेहं च सिध्यति ॥१३-१६०-४५ (८७६१९)
वासोभिरन्नैर्गोभिस्च शुभैर्नैवेशिकैरपि ।
शुभैः सुरक्षणैश्चापि स्तोष्या एव द्विजास्तथा ।
एतदेव परं गुह्यमलोभेन समाचर ॥ ॥ १३-१६०-४६ (८७६२०)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
षष्ट्यधिकशततमोऽध्यायः ॥१६० ॥

Mahabharata - Anushaasana Parva - Chapter Footnotes

७-१६०-१ अहिंसितमहिंसा ॥
७-१६०-२ तपसः कृच्छ्रचान्द्रायणादेर्बलादन्यत्किं बलवत्तरं
विदितं न किमप्यपितु तपसस्तपसां मध्ये यत्परम् ॥

७-१६०-३ लोको भोग्यप्रदेशः ॥
७-१६०-५ ब्रह्मलोकं च सोगच्छत् इति क पाठः ॥
७-१६०-९ एकरात्रादयः क्रतुविशेषाः ॥
७-१६०-१० नारीपुरं कन्यासमूहमदाम् ॥
७-१६०-१२ चन्द्रो भूषणविशेषः । न तेनाहमागामित्यनुवर्तते ॥
७-१६०-१३ एकैकशो ब्राह्मणाय दश गाः ॥
७-१६०-१४ आप्तोर्यामः सोमयागः ॥
७-१६०-१६ कर्काणां शुक्लाश्वानाम् ॥
७-१६०-१९ पद्मिनः पद्मचिह्नान् ॥
७-१६०-२१ दक्षिणारूपा यज्ञाङ्गभूता दक्षिणावयवाः ॥
७-१६०-२३ निष्ककण्ठानां युद्धे जितानां राज्ञां सहस्रं विप्रेभ्यो
विप्रवचनाद्दक्षिणा अददं उत्सृष्टवान् ॥
७-१६०-२८ शम्या पृथुबुध्नः काष्ठदण्डः । स बलेनाक्षिप्तो
यावद्दूरं पतति तावद्देशो यस्य वेदिकाया भवति स
शम्याक्षोपोयागः। देवान् साद्यस्कानामयुतैश्चापि यत्तत् इति झ पाठः ॥
७-१६०-३२ आर्कायणैः षोडशभिश्च इति झ पाठः ॥
७-१६०-३३ काञ्चनमयानां वृक्षाणां चूतानां नानावर्णरत्नखचितानां
वनमित्यर्थः ॥
७-१६०-३६ अग्नीनग्निचयनानि ॥
७-१६०-३९ गुहायां निहितं गोपितं गुह्यं यदनशनं तपसा अभ्यविन्दत्
आज्ञासीत् । उशनस्तेजसा शुक्रस्य बलेन जाज्वल्यमानम्। तच्च
वाक्यशेषात्सर्वबोगत्यागात्मकमनशनं सर्वभोगैर्ब्राह्मणानां
सन्तर्पणं च। साधयामासमित्यार्षम् ॥

---

अनुससनपर्व-अध्यय१६१
॥ श्रीः ॥
१३.१६१. अध्यायः १६१

अथ दानधर्मपर्व ॥ १ ॥
Mahabharata - Anushaasana Parva - Chapter Topics
भीष्मेण
युधिष्ठिरंप्रत्यायुष्यानायुष्यकारणशुभाशुभकर्मप्रतिपादनम्
॥ १ ॥

Mahabharata - Anushaasana Parva - Chapter Text

युधिष्ठिर उवाच ।
शतायुरुक्तः पुरुषः शतवीर्यश्च वैदिके ।
कस्मान्म्रियन्ते पुरुषा बाला अपि पितामह ॥ १३-१६१-१ (८७६२१)
आयुष्मान्केन भवति अल्पायुर्वाऽपि मानवः ।
केन वा लभते कीर्तिं केन वा लभते श्रियम् ॥ १३-१६१-२ (८७६२२)
तपसा ब्रह्मचर्येण जपैर्होमैस्तथा परैः ।
जन्मना यदि वाऽचारात्तन्मे ब्रूहि पितामह ॥ १३-१६१-३ (८७६२३)
भीष्म उवाच। १३-१६१-४क्ष् (७३६५)
अत्र तेऽहं प्रवक्ष्यामि यन्मां त्वमनुपृच्छसि ।
अल्पायुर्येन भवति दीर्घायुर्येनि मानवः ॥ १३-१६१-४ (८७६२४)
येन वा लभते कीर्तिं येन वा लभते श्रियम् ।
यथा च वर्तयन्पुरुषः श्रेयसा सम्प्रयुज्यते ॥ १३-१६१-५ (८७६२५)
आचाराल्लभते ह्यायुराचाराल्लभते श्रियम् ।
आचारात्कीर्तिमाप्नोति पुरुषः प्रेत्य चेह च ॥ १३-१६१-६ (८७६२६)
दुराचारो हि पुरुषो नेहायुर्विन्दते महत् ।
त्रसन्ति चास्य भूतानि तथा परिभवन्ति च ॥ १३-१६१-७ (८७६२७)
तस्मात्कुर्यादिहाचारं य इच्छेद्भूतिमात्मनः ।
अपि पापशरीरस्य आचारो हन्त्यलक्षणम् ॥ १३-१६१-८ (८७६२८)
आचारलक्षणो धर्मः सन्तश्चारित्रलक्षणाः ।
साधूनां च यथावृत्तमेतदाचारलक्षणम् ॥ १३-१६१-९ (८७६२९)
अप्यदृष्टं श्रवादेव पुरुषं धर्मचारिणम् ।
स्वानि कर्माणि कुर्वाणं तं जनाः कुर्वते प्रियम् ॥ १३-१६१-१० (८७६३०)
ये नास्तिका निष्क्रियाश्च गुरुशास्त्रातिलङ्घिनः ।
अधर्मज्ञा दुराचारास्ते भवन्ति गतायुषः ॥ १३-१६१-११ (८७६३१)
विशीला भिन्नमर्यादा नित्यं सङ्कीर्णमैथुनाः ।
अल्पायुषो भवन्तीह नरा निरयगामिनः ॥ १३-१६१-१२ (८७६३२)
सर्वलक्षणहीनोऽपि समुदाचारवान्नरः ।
श्रद्दधानोऽनसूयुश्च शतं वर्षाणि जीवति ॥ १३-१६१-१३ (८७६३३)
अक्रोधनः सत्यवादी भूतानामविहिंसकः ।
अनसूयुरजिह्मश्च शतं वर्षाणि जीवति ॥ १३-१६१-१४ (८७६३४)
लोष्टमर्दी तृणच्छेदी नखखादी च यो नरः ।
नित्योच्छिष्टः सङ्कुसुको नेहायुर्विन्दते महत् ॥ १३-१६१-१५ (८७६३५)
ब्राह्मे मुहूर्ते बुध्येत धर्मार्थौ चानुचिन्तयेत् ।
उत्थाय चोपतिष्ठेत पूर्वां सन्ध्यां कृताञ्जलिः ।
एवमेवापरां सन्ध्यां समुपासीत वाग्यतः ॥ १३-१६१-१६ (८७६३६)
नेक्षेतादित्यमुद्यन्तं नास्तं यन्तं कदाचन ।

नोपसृष्टं न वारिस्थं न मध्यं नभसो गतम् ॥ १३-१६१-१७ (८७६३७)
ऋषयो नित्यसन्ध्यत्वाद्दीर्घमायुरवाप्नुवन् ॥ १३-१६१-१८ (८७६३८)
ग्सदर्भपाणिस्तत्कुर्वन्वाग्यतस्तन्मनाः शुचिः।
तस्मात्तिष्ठेत्सदा पूर्वां पश्चिमां चैव वाग्यतः ॥ १३-१६१-१९ (८७६३९)
ये न पूर्वामुपासन्ते द्विजाः संध्यां न पश्चिमाम् ।
सर्वांस्तान्धार्मिको राजा शूद्रकर्माणि कारयेत् ॥ १३-१६१-२० (८७६४०)
परदारा न गन्तव्याः सर्ववर्णेषु कर्हिचित् ।
नहीदृशमनायुष्यं लोके किञ्चन विद्यते ॥ १३-१६१-२१ (८७६४१)
यादृशं पुरुषस्येह परदारोपसेवनम् ।
तादृशं विद्यते किञ्चिदनायुष्यं नृणामिह ॥ १३-१६१-२२ (८७६४२)
यावन्तो रोमकूपाः स्युः स्त्रीणां गात्रेषु निर्मिताः ।
तावद्वर्षसहस्राणि नरकं पर्युपासते ॥ १३-१६१-२३ (८७६४३)
मैत्रं प्रसाधनं स्नानमञ्जनं दन्तधावनम् ।
पूर्वाह्ण एव कुर्वीत देवतानां च पूजनम् ॥ १३-१६१-२४ (८७६४४)
पुरीषमूत्रे नोदीक्षेन्नाधितिष्ठेत्कदाचन ।
नातिकल्यं नातिसायं न च मध्यंदिने स्थिते ।
नाज्ञातैः सह गच्छेत नैको न वृषलैः सह ॥ १३-१६१-२५ (८७६४५)
पन्था देयो ब्राह्मणाय गोभ्यो राजभ्य एव च ।
वृद्धाय भारतप्ताय गर्भिण्यै दुर्बलाय च ॥ १३-१६१-२६ (८७६४६)
प्रदक्षिणं च कुर्वीत परिज्ञातान्वनस्पतीन् ।
चतुष्पदान्मङ्गलांश्च मान्यान्वृद्धान्द्विजानपि ॥ १३-१६१-२७ (८७६४७)
मध्यंदिने निशाकाले अर्धरात्रे च सर्वदा ।
चतुष्पथं न सेवेत उभे सन्ध्ये तथैव च ॥ १३-१६१-२८ (८७६४८)
उपानहौ न वस्त्रं च धृतमन्यैर्न धारयेत् ।
ब्रह्मचारी च नित्यं स्यात्पादं पादेन नाक्रमेत् ॥ १३-१६१-२९ (८७६४९)
अमावास्यां पौर्णमास्यां चतुर्दश्यां च जन्मनि ।
अष्टम्यामथ द्वादश्यां ब्रह्मचारी सदा भवेत् ॥ १३-१६१-३० (८७६५०)
वृथा मांसं न खादेनि पृष्ठमांसं तथैव च ।
आक्रोशं परिवादं च पैशुन्यं च विवर्जयेत् ॥ १३-१६१-३१ (८७६५१)
नारुन्तुदः स्यान्न नृशंसवादी
न हीनतो वरमभ्याददीत ।
ययाऽस्य वाचा पर उद्विजेत
न तां वदेद्रुशतीं पापलोक्याम् ॥ १३-१६१-३२ (८७६५२)
अतिवादबाणा मुखतो निःसरन्ति
यैराहतः शोचति रात्र्यहानि ।
परस्य वा मर्मसु ये पतन्ति

तान्पण्डितो नावसृजेत्परेषु ॥ १३-१६१-३३ (८७६५३)
संरोहत्यग्निना दग्धं वनं परशुना हतम् ।
वाचा दुरुक्तं बीभत्सं न संरोहति वाक्क्षतम् ॥१३-१६१-३४ (८७६५४)
कर्णिनालीकनाराचान्निर्हरन्ति शरीरतः ।
वाक्षल्यस्तु न निर्हर्तुं शक्यो हृदिशयो हि सः ॥१३-१६१-३५ (८७६५५)
हीनाङ्गानतिरिक्ताङ्गान्विद्याहीनान्वयोधिकान् ।
रूपद्रविणहीनांश्च सत्यहीनांश्च नाक्षिपेत् ॥१३-१६१-३६ (८७६५६)
नास्तिक्यं वेदनिन्दां च परनिन्दां च कुत्सनम् ।
द्वेषस्तम्भाभिमानं च तैक्ष्ण्यं च परिवर्जयेत् ॥१३-१६१-३७ (८७६५७)
परस्य दण्डं नोद्यच्छेत्क्रुद्धो नैनं निपातयेत् ।
अन्यत्रि पुत्राच्छिष्याच्च शिक्षार्थं ताडनं स्मृतं ॥१३-१६१-३८ (८७६५८)
न ब्राह्मणान्परिवदेन्नक्षत्राणि न निर्दिशेत् ।
तिथिं पक्षस्य न ब्रूयात्तथाऽस्यायुर्न रिष्यते ॥१३-१६१-३९ (८७६५९)
‘अमावास्यामृते नित्यं दन्तधावनमाचरेत् ।
इतिहासपुराणानि दानं वेदं च नित्यशः ।
गायत्रीमननं नित्यं कुर्यात्सन्ध्यां समाहितः ॥’ १३-१६१-४० (८७६६०)
कृत्वा मूत्रपुरीषे तु रथ्यामाक्रम्य वा पुनः ।
पादप्रक्षालनं कुर्यात्स्वाध्याये भोजने तथा ॥१३-१६१-४१ (८७६६१)
त्रीणि देवाः पवित्राणि ब्राह्मणानामकल्पयन् ।
अदृष्टमद्भिर्निर्णिक्तं यच्च वाचा प्रशस्यते ॥१३-१६१-४२ (८७६६२)
यावकं कृसरं मांसं शष्कुलीं पायसं तथा ।
आत्मार्थंतं न प्रकर्तव्यं देवार्थं तु प्रकल्पयेत् ॥१३-१६१-४३ (८७६६३)
नित्यमग्निं परिचरेद्भिक्षां दद्याच्च नित्यदा ।
दन्तकाष्ठे च सन्ध्यायां मलोत्सर्गे च मौनगः ॥१३-१६१-४४ (८७६६४)
न चाभ्युदितसायी स्यात्प्रायश्चित्ती तथा भवेत् ।
मातापितरमुत्थाय पूर्वमेवाभिवादयेत् ।
आचार्यमथवाऽप्यन्तं तथाऽऽयुर्विदन्ते महत् ॥ १३-१६१-४५ (८७६६५)
वर्जयेद्दन्तकाष्ठानि वर्जनीयानि नित्यशः ।
भक्षयेच्छास्त्रदृष्टानि पर्वस्वपि विवर्जयेत् ।
उदङ्मुखश्च सततं शौचं कुर्यात्समाहितः ॥ १३-१६१-४६ (८७६६६)
अकृत्वा देवपूजां च नाचरेद्दन्तधावनम् ।
अकृत्वा देवपूजां च नान्यं गच्छेत्कदाचन ।
अन्यत्र तु गुरुं वृद्धं धार्मिकं वा विचक्षणम् ॥ १३-१६१-४७ (८७६६७)
अवलोक्यो न चादर्शो मलिनो बुद्धिमत्तरैः ।
न चाज्ञातां स्त्रियं गच्छेद्गर्भिणीं वा कदाचन ॥१३-१६१-४८ (८७६६८)
दारसङ्ग्रहणात्पूर्वं नाचरेन्मैथुनं बुधः ।

अन्यथा त्ववकीर्णः स्यात्प्रायश्चित्तं सदाऽऽचरेत् ॥ १३-१६१-४९ (८७६६९)
नीदीक्षेत्परदारांश्च रहस्येकासनो भवेत् ।
इन्द्रियाणि सदा यच्छेत्स्वग्ने शुद्धमना भवेत् ॥ १३-१६१-५० (८७६७०)
उदक्शिरा न स्वपेत तथा प्रत्यक्शिरा न च ।
प्राक्शिरास्तु स्वपेद्विद्वांस्तथा वै दक्षिणाशिराः ॥ १३-१६१-५१ (८७६७१)
न भग्ने नावशीर्णो च शयने प्रस्वपीत च ।
नान्तर्धानेन संयुक्ते न च तिर्यक्कदाचन ॥ १३-१६१-५२ (८७६७२)
न चापि गच्छेत्कार्येण समयाद्वाऽपि नास्तिकैः ।
आसनं तु पदाऽऽकृष्य न प्रसज्जेत्तथा नरः ॥ १३-१६१-५३ (८७६७३)
न नग्नः कर्हिचित्स्नायान्न निशायां कदाचन ।
स्नात्वा च नावमृज्येत गात्राणि सुविचक्षणः ।
न निशायां पुनः स्नायादापद्यग्निर्द्विजान्तिके ॥ १३-१६१-५४ (८७६७४)
न चानुलिम्पेदस्नात्वा वासश्चापि न निर्धुनेत् ।
आर्द्र एव तु वासांसि नित्यं सेवेत मानवः ॥ १३-१६१-५५ (८७६७५)
स्रजश्च नावकृष्येत न बहिर्धारयीत च ।
उदक्यया च सम्भाषां न कुर्वीत कदाचन ॥ १३-१६१-५६ (८७६७६)
नोत्सृजेत पुरिषं च क्षेत्रे मार्गस्य चान्तिके ।
उभे मूत्रपुरीषे तु नाप्सु कुर्यात्कदाचन ॥ १३-१६१-५७ (८७६७७)
देवालयेऽथ गोवृन्दे चैत्ये सस्येषु विश्रमे ।
भोक्ष्यं भुक्त्वा क्षुतेऽध्वानं गत्वा मूत्रपुरीषयोः ।
द्विराचामेद्यथान्यायं हृद्गतं तु पिबन्नपः ॥ १३-१६१-५८ (८७६७८)
अन्नं बुभुक्षमाणस्तु त्रिमुखेन स्पृशेदपः ।
भुक्त्वा चान्नं तथैव त्रिर्द्विः पुनः परिमार्जयेत् ॥ १३-१६१-५९ (८७६७९)
प्राङ्मुखो नित्यमश्नीयाद्वाग्यतोऽन्नमकुत्सयन् ।
प्रस्कन्दयेच्च मनसा भुक्त्वा चाग्निमुपस्पृशेत् ॥ १३-१६१-६० (८७६८०)
आयुष्यं प्राङ्मुखो भुङ्क्ते यशस्यं दक्षिणामुखः ।
धन्यं पश्चान्मुखो भुङ्क्त ऋतं भुङ्क्त उदङ्मुखः ॥ १३-१६१-६१
(८७६८१)
ग्अग्रासनो जितक्रोधो बालपूर्वस्त्वलङ्कृतः ।
घृताहुतिविशुद्धान्नं हुताग्निश्च क्षिपन्ग्रसेत् ॥' १३-१६१-६२ (८७६८२)
अग्निमालभ्य तोयेन सर्वान्प्राणानुपस्पृशेत् ।
गात्राणि चैव सर्वाणि नाभिं पाणितले तथा ॥ १३-१६१-६३ (८७६८३)
नाधितिष्ठेत्तुषं जातु केशभस्मकपालिकाः ।
अन्यस्य चाप्यवस्नातं दूरतः परिवर्जयेत् ॥ १३-१६१-६४ (८७६८४)
शान्तिहोमांश्च कुर्वीत सावित्राणि च धारयेत् ।
निषण्णश्चापि खादेन न तु गच्छन्कदाचन ॥ १३-१६१-६५ (८७६८५)

मूत्रं नोत्तिष्ठता कार्यं न भस्मनि न गोव्रजे ।
आर्द्रपादस्तु भुञ्जीत नार्द्रपादस्तु संविशेत् ॥ १३-१६१-६६ (८७६८६)
आर्द्रपादस्तु भुञ्जानो वर्षाणां जीवते शतम् ।
त्रीणि तेजांसि नोच्छिष्ट आलभेत कदाचन ।
अग्निं गां ब्राह्मणं चैव तता ह्यायुर्न रिष्यते ॥ १३-१६१-६७ (८७६८७)
त्रीणि ज्योतींषि नोच्छिष्ट उदीक्षेत कदाचन ।
सूर्याचन्द्रमसौ चैव नक्षत्राणि च सर्वशः ॥ १३-१६१-६८ (८७६८८)
ऊर्ध्वं प्राणा ह्युत्क्रमन्ति यूनः स्थविर आगते ।
प्रत्युत्थानाभिवादाभ्यां पुनस्तान्प्रतिपद्यते ॥ १३-१६१-६९ (८७६८९)
अभिवादयीत वृद्धांश्च दद्याच्चैवासनं स्वयम् ।
कृताञ्जलिरुपासीत गच्छन्तं पृष्ठतोऽन्वियात् ॥ १३-१६१-७० (८७६९०)
न चासीतासने भिन्ने भिन्नकांस्यं च वर्जयेत् ।
नैकवस्त्रेण भोक्तव्यं न नग्नः स्नातुमर्हति ॥ १३-१६१-७१ (८७६९१)
स्पप्तव्यं नैव नग्नेन न चोच्छिष्टोपि संविशेत् ।
उच्छिष्टो न स्पृशेच्छीर्षं सर्वे प्राणास्तदाश्रयाः ॥ १३-१६१-७२ (८७६९२)
केशग्रहं प्रहारांश्च सिरस्येतान्विवर्जयेत् ।
न संहताभ्यां पाणिभ्यां कण्डूयेदात्मनः शिरः ।
न चाभीक्ष्णं शिरःस्नायात्तथा स्यायुर्न रिष्यते ॥ १३-१६१-७३ (८७६९३)
शिरःस्नातस्तु तैलैश्च नाङ्गं किञ्चिदपि स्पृशेत् ।
तिलपिष्टं न चाश्नीयाद्गतसर्वरसं तथा ॥ १३-१६१-७४ (८७६९४)
नाध्यापयेत्तथोच्छिष्टो नाधीयीत कदाचन ।
वाते च पूतिगन्धे च मनसाऽपि न चिन्तयेत् ॥ १३-१६१-७५ (८७६९५)
अत्र गाथा यमोद्गीताः कीर्तयन्ति पुराविदः ।
आयुरस्य निकृन्तामि प्रज्ञामस्याददे तथा ॥ १३-१६१-७६ (८७६९६)
उच्छिष्टो यः प्राद्रवति स्वाध्यायं चाधिगच्छति ।
यश्चानध्यायकालेऽपि मोहादभ्यस्यति द्विजः ॥ १३-१६१-७७ (८७६९७)
तस्य वेदः प्रणश्येत आयुश्च परिहीयते ।
तस्माद्युक्तो ह्यनध्याये नाधीयीत कदाचन ॥ १३-१६१-७८ (८७६९८)
प्रत्यादित्यं प्रत्यनलं प्रतिगां च प्रतिद्विजान् ।
ये मेहन्ति च पन्थानं ते भवन्ति गतायुषः ॥ १३-१६१-७९ (८७६९९)
उभे मूत्रपुरीषे तु दिवा कुर्यादुदङ्मुखः ।
दक्षिणाभिमुखो रात्रौ तथा हन्युर्न रिष्यते ॥ १३-१६१-८० (८७७००)
त्रीन्कृशान्नावजानीयाद्दीर्घमायुर्जिजीविषु ।
ब्राह्मणं क्षत्रियं सर्पं सर्वे ह्याशीविषास्त्रयः ॥ १३-१६१-८१ (८७७०१)
दहत्याशीविषः क्रुद्धो यावत्पश्यति चक्षुषा ।
क्षत्रियोपि दहेत्क्रुद्धो यावत्स्पृशति तेजसा ॥ १३-१६१-८२ (८७७०२)

ब्राह्मिणस्तु कुलं हन्याद्ध्यानेनावेक्षितेन च ।
तस्मादेतत्त्रयं यत्नादुपसेवेत पण्डितः ॥ १३-१६१-८३ (८७७०३)
गुरुणा वैरनिर्बन्धो न कर्तव्यः कदाचन ।
अनुमान्यः प्रसाद्यश्च गुरुः क्रुद्धो युदिष्ठिर ॥ १३-१६१-८४ (८७७०४)
सम्यङ्मिथ्याप्रवृत्तेऽपि वर्तितव्यं गुराविह ।
गुरुनिन्दा दहत्यायुर्मनुष्याणां न संशयः ॥ १३-१६१-८५ (८७७०५)
दूरादावसथान्मूत्रं दूरात्पादावसेचनम् ।
उच्छिष्टोत्सर्जनं चैव दूरे कार्यं हितैषिणा ॥ १३-१६१-८६ (८७७०६)
रक्तमाल्यं न धार्यं स्याच्छुक्लं धार्यं तु पण्डितैः ।
वर्जयित्वा तु कमलं तथा कुवलयं प्रभो ॥ १३-१६१-८७ (८७७०७)
रक्तं शिरसि धार्यं तु तथा वानेयमित्यपि ।
काञ्चनीयाऽपि माला या न सा दुष्यति कर्हिचित् ॥ १३-१६१-८८ (८७७०८)
स्नातस्य वर्णकं नित्यमार्द्रं दद्याद्विशांपते ॥ १३-१६१-८९ (८७७०९)
विपर्ययं न कुर्वीत वाससो बुद्धिमान्नरः ।
तथा नान्यधृतं धार्यं न चातिविकृतं तथा ॥ १३-१६१-९० (८७७१०)
अन्यदेव भवेद्वासः शयनीये नरोत्तम ।
अन्यद्रथ्यासु देवानामर्चायामन्यदेव हि ॥ १३-१६१-९१ (८७७११)
प्रियङ्गुचन्दनाभ्यां च बिल्वेन स्थगरेण च ।
पृथगेवानुलिम्पेत केसरेण च बुद्धिमान् ॥ १३-१६१-९२ (८७७१२)
उपवासं च कुर्वीत स्नातः शुचिरलङ्कृतः ।
ग्नोपवासं वृथा कुर्याद्धनं नापहरेदिह ॥' १३-१६१-९३ (८७७१३)
पर्वकालेषु सर्वेषु ब्रह्मचारी सदा भवेत् ।
समानमेकपात्रे तु भुञ्जेन्नान्नं जनेश्वर ॥ १३-१६१-९४ (८७७१४)
नावलीढमवज्ञातमाघ्रातुं भक्षयेदपि ।
तथा नोद्धृतसाराणि प्रेक्षतामप्रदाय च ॥ १३-१६१-९५ (८७७१५)
नासंनिविष्टो मेधावी नाशुचिर्नि च सत्यु च ।
प्रतिषिद्धान्नं धर्मेषु भक्ष्यान्भुञ्जीत पृष्ठतः ॥ १३-१६१-९६
(८७७१६)
पिप्पलं च वटं चैव शणशाकं तथैव च ।
उदुम्बरं न खादेश्च भवार्थी पुरुषो नृप ॥ १३-१६१-९७ (८७७१७)
आजं गव्यं च यन्मांसं मायूरं चैव वर्जयेत् ।
वर्जयेच्छुष्कमांसं च तथा पर्युषितं च यत् ॥ १३-१६१-९८ (८७७१८)
न पाणौ लवणं विद्वान्प्राश्नीयान्न च रात्रिषु ।
दधिसक्तून्न दोषायां पिबेन्मधु च नित्यशः ॥ १३-१६१-९९ (८७७१९)
सायं प्रातश्च भुञ्जीत नान्तराले समाहितः ।
वालेन तु न भुञ्जीत परश्राद्धं तथैव च ॥ १३-१६१-१०० (८७७२०)

वाग्यतो नैकवस्त्रश्च नासंविष्टः कदाचन ।
भूमौ सदैव नाश्नीयान्नाशौचं न च शब्दवत् ॥ १३-१६१-१०१ (८७७२१)
तोयपूर्वं प्रदायान्नमतिथिभ्यो विशाम्पते ।
पश्चाद्भुञ्जीत मेधावी न चाप्यन्यमना नरः ॥ १३-१६१-१०२ (८७७२२)
समानमेकपङ्क्त्यां तु भोज्यमन्नं नरेश्वर ।
विषं हालाहलं भुङ्क्ते योऽप्रदाय सुहृज्जने ॥ १३-१६१-१०३ (८७७२३)
पानीयं पायसं सक्तून्दधि सर्पिर्मधून्यपि ।
निरस्य शेषमन्येषां न प्रदेयं तु कस्यचित् ॥ १३-१६१-१०४ (८७७२४)
भुञ्जानो मनुजव्याघ्र नैव शङ्कां समाचरेत् ।
दधि चाप्यनु पानं वै न कर्तव्यं भवार्थिना ॥ १३-१६१-१०५ (८७७२५)
आचम्य चैव हस्तेनि परिस्राव्य तथोदकम् ।
अङ्गुष्ठं चरणस्याथ दक्षिणस्यावसेचयेत् ॥ १३-१६१-१०६ (८७७२६)
पाणिं मूर्ध्नि समाधाय स्पृष्ट्वा चाग्निं समाहितः ।
ज्ञातिश्रैष्ठ्यमवाप्नोति प्रयोगकुशलो नरः ॥ १३-१६१-१०७ (८७७२७)
अद्भिः प्राणान्समालभ्य नाभिं पाणितले तथा ।
स्पृशंश्चैव प्रतिष्ठेत न चाप्यार्द्रेण पाणिना ॥ १३-१६१-१०८ (८७७२८)
अङ्गुष्ठमूलस्य तले ब्राह्मं तीर्तमुदाहृतम् ।
कनिष्ठिकायाः पश्चात्तु देवतीर्थमिहोच्यते ॥ १३-१६१-१०९ (८७७२९)
अङ्गुष्ठस्य च यन्मध्यं प्रदेशिन्याश्च भारत ।
तेन पित्र्याणि कुर्वीत स्पृष्ट्वाऽऽपो न्यायतः सदा ॥ १३-१६१-११० (८७७३०)
परापवादं न ब्रूयान्नाप्रियं च कदाचन ।
न मन्युः कश्चिदुत्पाद्यः पुरुषेणि भवार्थिना ॥ १३-१६१-१११ (८७७३१)
एतितैस्तु कथां नेच्छेद्दर्शनं च विवर्जयेत् ।
संसर्गं च न गच्छेत तथाऽऽयुर्विन्दते महत् ॥ १३-१६१-११२ (८७७३२)
न दिवा मैथुनं गच्छेन्न कन्यां न च बन्धकीम् ।
न चास्नातां स्त्रियं गच्छेत्तथाऽऽयुर्विन्दते महत् ॥ १३-१६१-११३ (८७७३३)
स्वेस्वे तीर्थे समाचम्य कार्ये समुपकल्पिते ।
त्रिः पीत्वाऽऽपो द्विः प्रमृज्य कृतशौचो भवेन्नरः ॥ १३-१६१-११४
(८७७३४)
इन्द्रियाणि सकृत्स्पृश्य त्रिरभ्युक्ष्य च मानवः ।
कुर्वीत पित्र्यं दैवं च वेददृष्टेन कर्मणा ॥ १३-१६१-११५ (८७७३५)
ब्राह्मणार्थे च यच्छौचं तच्च मे शृणु कौरव ।
प्रवृत्तं चाहितं चोक्त्वा बहुभोजनवत्तदा ॥ १३-१६१-११६ (८७७३६)
सर्वशौचेषु ब्राह्मेण तीर्थेन समुपस्पृशेत् ।
निष्ठीव्य तु तथा क्षुत्वा स्पृश्यापो हि शुचिर्भवेत् ॥ १३-१६१-११७ (८७७३७)
निष्ठिवने मैथुने च क्षुते अक्ष्याविमेचने ।

उदक्या दर्शने तद्वन्नग्नस्याचमनं स्मृतम् ।
स्पृशेत्कर्णं सप्रणवं सूर्यमीक्षेत्सदा तदा ॥ १३-१६१-११८ (८७७३८)
वृद्धो ज्ञातिस्तथा मित्रमनाथा च स्वसा गुरुः ।
कुलीनः पण्डित इति रक्ष्या निःस्वः स्वशक्तितः ।
गृहे वासयितव्यास्ते धन्यमायुष्यमेव च ॥ १३-१६१-११९ (८७७३९)
गृहे पारावता धार्याः शुकाश्च सहशारिकाः ।
ग्देवताप्रतिमाऽऽदर्शश्चन्दनाः पुष्पवल्लिकाः ॥ १३-१६१-१२० (८७७४०)
शुद्धं जलं सुवर्णं च रजतं गृहमङ्गलम् ।'
गृहेष्वेते न पापाय यथा वै तैलपायिकाः ॥ १३-१६१-१२१ (८७७४१)
उद्दीपकाश्च गृध्रास्च कपोता भ्रमरास्तथा ।
निविशेयुर्यदा तत्र शान्तिमेव तदाऽऽचरेत् ॥ १३-१६१-१२२ (८७७४२)
अमङ्गल्यः सतां शापस्तथाऽऽक्रोशो महात्मनाम् ।
महात्मनोतिगुह्यानि न वक्तव्यानि कर्हिचित्। १३-१६१-१२३ (८७७४३)
अगम्याश्च न गच्छेत राज्ञः पत्नीं सखीस्तथा ।
वैद्यानां बालवृद्धानां भृत्यानां च युधिष्ठिर १३-१६१-१२४ (८७७४४)
बन्धूनां ब्राह्मणानां च तथा शारणिकस्य च ।
सम्बन्धिनां च राजेन्द्र तथाऽऽयुर्विन्दते महत् ॥ १३-१६१-१२५ (८७७४५)
ब्राह्मणस्तपतिभ्यां च निर्मितं यन्निवेशनम् ।
तदा वसेत्सदा प्राज्ञो भवार्थी मनुजेश्वर ॥ १३-१६१-१२६ (८७७४६)
सन्ध्यायां न स्वपेद्राजन्विद्यां न च समाचरेत् ।
न भुञ्जीत च मेधावी तथाऽऽयुर्विन्दते महत् ॥ १३-१६१-१२७ (८७७४७)
नक्तं न कुर्यात्पित्र्याणि नक्तं चैव प्रसाधनम् ।
पानीयस्य क्रिया नक्तं न कार्या भूतिमिच्छता ॥ १३-१६१-१२८ (८७७४८)
वर्जनीयाश्चैव नित्यं सक्तवो निशि भारत ।
शेषाणि चावदातानि पानीयं चापि भोजने ॥ १३-१६१-१२९ (८७७४९)
सौहित्यं न च कर्तव्यं रात्रौ न च समाचरेत् ।
ग्न भुक्त्वा मैथुनं गच्छेन्न धावेन्नातिहासकम् ।'
द्विजच्छेदं न कुर्वीत भुक्त्वा न च समाचरेत् ॥ १३-१६१-१३० (८७७५०)
महाकुले प्रसूतां च प्रशस्तां लक्षणैस्तथा ।
वयसाऽवरां सुनक्षत्रां कन्यामावोढुमर्हति ॥ १३-१६१-१३१ (८७७५१)
अपत्यमुत्पाद्य ततः प्रतिष्ठाप्य कुलं तथा ।
पुत्राः प्रदेया जातेषु कुलधर्मेषु भारत ॥ १३-१६१-१३२ (८७७५२)
कन्या चोत्पाद्य दातव्या कुलपुत्राय धीमते ।
पुत्रा निवेश्याश्च कुलाद्भृत्या लभ्याश्च भारत ॥ १३-१६१-१३३ (८७७५३)
शिरःस्नातोथ कुर्वीत दैवं पित्र्यमथापि च ॥ १३-१६१-१३४ (८७७५४)
ग्तैलं जन्मदिनेऽष्टम्यां चतुर्दश्यां च पर्वसु ।'

नक्षत्रे न च कुर्वीत यस्मिञ्जातो भवेन्नरः ।
न प्रोष्ठपदयोः कार्यं तथाऽऽग्नेये च भारत ॥ १३-१६१-१३५ (८७७५५)
दारुणेषु च सर्वेषु प्रत्यरिं च विवर्जयेत् ।
ज्योतिषे यानि चोक्तानि तानि सर्वाणि वर्जयेत् ॥ १३-१६१-१३६ (८७७५६)
प्राङ्मुखः श्मश्रुकर्माणि कारयेत्सुसमाहितः ।
उदङ्मुखो वा राजेन्द्र तथाऽऽयुर्विन्दते महत् ॥ १३-१६१-१३७ (८७७५७)
ग्सामुद्रेणाम्यसा स्नानं क्षौरं श्राद्धेषु भोजनम् ।
अन्तर्वत्नीपतिः कुर्वन्न पुत्रफलमश्नुते ॥ १३-१६१-१३८ (८७७५८)
सतां गुरूणां वृद्धानां कुलस्त्रीणां विशेषतः।ʾ
परिवादं न च ब्रूयात्परेषामात्मनस्तथा ।
परिवादो ह्यधर्माय प्रोच्यते भरतर्षभ ॥ १३-१६१-१३९ (८७७५९)
वर्जयेद्व्यङ्गिनीं नारीं तथा कन्यां नरोत्तम ।
समार्षां व्यङ्गिकां चैव मातुः सकुलजां तथा ॥ १३-१६१-१४० (८७७६०)
वृद्धां प्रव्रजितां चैव तथैव च पतिव्रताम् ।
तथा निकृष्टवर्णा च वर्णोत्कृष्टां च वर्जयेत्। १३-१६१-१४१ (८७७६१)
अयोनिं च वियोनिं च न गच्छेत विचक्षणः ।
पिङ्गलां कुष्ठिनीं नारीं न त्वमुद्वोढुमर्हसि ॥ १३-१६१-१४२ (८७७६२)
अपस्मारिकुले जातां निहीनां चापि वर्जयेत् ।
श्वित्रिणां च कुले जातां क्षयिणां मनुजेश्वर ॥ १३-१६१-१४३ (८७७६३)
ग्सुरोमशामतिस्थूलां कन्यां मातृपितृस्थिताम् ।
अलज्जां भ्रातृजां तुष्टां वर्जयेद्रक्तकेशिनीम् ॥ʾ १३-१६१-१४४ (८७७६४)
लक्षणैरन्विता या च प्रशस्ता या च लक्षणैः ।
मनोज्ञां दर्शनीयां च तां भवान्वोढुमर्हति ॥ १३-१६१-१४५ (८७७६५)
महाकुले निवेष्टव्यं सदृशे वा युधिष्ठिर ।
अवरा पतिता चैव न ग्राह्या भूतिमिच्छता ॥ १३-१६१-१४६ (८७७६६)
अग्नीनुत्पाद्य यत्नेन क्रियाः सुविहिताश्च याः ।
वेदे च ब्राह्मणैः प्रोक्तास्ताश्च सर्वाः समाचरेत् ॥ १३-१६१-१४७ (८७७६७)
न चेर्ष्या स्त्रीषु कर्तव्या रक्ष्या दाराश्च सर्वशः ।
अनायुष्या भवेदीर्ष्या तस्मादीर्ष्यां विवर्जयेत् ॥ १३-१६१-१४८ (८७७६८)
अनायुष्यं दिवा स्वप्नं तथाऽभ्युदितशायिता ।
प्रातर्निशायां च तथा ये चोच्छिष्टा भवन्ति च ॥ १३-१६१-१४९ (८७७६९)
पारदार्यमनायुष्यं नापितोच्छिष्टता तथा ।
यत्नतो वै न कर्तव्यमत्याशश्चैव भारत ॥ १३-१६१-१५० (८७७७०)
सन्ध्यां न भुञ्ज्यान्न स्नायेन्न पुरीषं समुत्सृजेत् ।
प्रयतश्च भवेत्तस्यां न च किञ्चित्समाचरेत् ॥ १३-१६१-१५१ (८७७७१)
ब्राह्मणान्पूजयेच्चापि तथा स्नात्वा नराधिप ।

देवांश्च प्रणमेत्स्नातो गुरूंश्चाप्यभिवादयेत् ॥ १३-१६१-१५२ (८७७७२)
अनिमन्त्रितो न गच्छेत यज्ञं गच्छेत दर्शकः ।
अनर्चिते ह्यनायुष्यं गमनं तत्र भारत ॥ १३-१६१-१५३ (८७७७३)
न चैकेन परिव्रज्यं न गन्तव्यं तथा निशि ।
ग्नानापदि परस्यान्नमनिमन्त्रितमाहरेत् ॥ १३-१६१-१५४ (८७७७४)
एकोद्दिष्टं न भुञ्जीत प्रथमं तु विशेषतः ।
सपिण्डीकरणं वर्ज्यं सविधानं च मासिकम् ॥ १३-१६१-१५५ (८७७७५)
अनागतायां सन्ध्यायां पश्चिमायां गृहे वसेत् ॥ १३-१६१-१५६ (८७७७६)
मातुः पितुर्गुरूणां च कार्यमेवानुशासनम् ।
हितं चाप्यहितं चापि न विचार्यं नरर्षभ ॥ १३-१६१-१५७ (८७७७७)
ग्क्षत्रियस्तु विशेषेण धनुर्वेदं समभ्यसेत्।'
धनुर्वेदे च वेदे च यत्नः कार्यो नाराधिप ॥ १३-१६१-१५८ (८७७७८)
हस्तिपृष्ठेऽश्वपृष्ठे च रथचर्यासु चैव ह ।
यत्नवान्भव राजेन्द्र यत्नवान्सुवमेधते ॥ १३-१६१-१५९ (८७७७९)
अप्रधृष्यश्च शत्रूमां भृत्यानां स्वजनस्य च ।
प्रजापालनयुक्तश्च नारतिं लभते क्वचित् ॥ १३-१६१-१६० (८७७८०)
युक्तिशास्त्रं च ते ज्ञेयं शब्दशास्त्रं च भारत ।
गान्धर्वशास्त्रं च कलाः परिज्ञेया नराधिप ॥ १३-१६१-१६१ (८७७८१)
पुराणमितिहासाश्च तथाऽऽख्यानानि यानि च ।
महात्मनां च चरितं श्रोतव्यं नित्यमेव ते ॥ १३-१६१-१६२ (८७७८२)
ग्मान्यानां माननं कुर्यान्निन्द्यानां निन्दनं तथा ।
गोब्राह्मणार्थे युध्येत प्राणानपि परित्यजेत् ॥ १३-१६१-१६३ (८७७८३)
न स्त्रीषु सज्जेद्द्रष्टव्यं शक्त्या दानरुचिर्भवेत् ।
न ब्राह्मणान्परिभवेत्कार्पण्यं ब्राह्मणैर्वृतम् ।
पतितान्नाभिभाषेत नाह्वयेत रजस्वलाम् ॥' १३-१६१-१६४ (८७७८४)
पत्नीं रजस्वलां चैव नाभिगच्छेन्न चाह्वयेत् ।
स्नातां चतुर्थे दिवसे रात्रौ गच्छेद्विचक्षणः ॥ १३-१६१-१६५ (८७७८५)
पञ्चमे दिवसे नारी षष्ठेऽहनि पुमान्भवेत् ।
ग्आषोडशादृतुर्मुख्यः पुत्रजन्मनि शब्दितः' १३-१६१-१६६ (८७७८६)
एतेन विधिना पत्नीमुपगच्छेत पण्डितः ।
ज्ञातिसम्बन्धिमित्राणि पूजनीयानि सर्वशः ॥ १३-१६१-१६७ (८७७८७)
यष्टव्यं च यथाशक्ति यज्ञैर्विविधदक्षिणैः ।
अत ऊर्ध्वमरण्यं च सेवितव्यं नराधिप ॥ १३-१६१-१६८ (८७७८८)
एष ते लक्षणोद्देश आयुष्याणां प्रकीर्तितः ।
शेषस्त्रैविद्यवृद्धेभ्यः प्रत्याहार्यो युधिष्ठिर ॥ १३-१६१-१६९ (८७७८९)
आचारो भूतिजनन आचारः कीर्तिवर्धनः ।

आचाराद्वर्धते ह्यायुराचारो हन्त्यलक्षणम् ॥ १३-१६१-१७० (८७७९०)
आगमानां हि सर्वेषामाचारः श्रेष्ठ उच्यते ।
आचारप्रभवो धर्मो धर्मादायुर्विवर्धते ॥ १३-१६१-१७१ (८७७९१)
एतद्यशस्यमायुष्यं स्वर्ग्यं स्वस्त्ययनं महत् ।
अनुकम्प्य सर्ववर्णान्ब्रह्मणा समुदाहृतम् ॥ १३-१६१-१७२ (८७७९२)
य इदं शृणुयान्नित्यं यश्चापि परिकीर्तयेत् ।
स शुभान्प्राप्नुयाल्लोकान्सदाचारपरो नृप ॥ ॥ १३-१६१-१७३ (८७७९३)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
एकषष्ट्यधिकशततमोऽध्यायः ॥ १६१ ॥

Mahabharata - Anushaasana Parva - Chapter Footnotes

७-१६१-३ जपैर्होमैस्तथौषधैरिति झ पाठः ॥
७-१६१-५ वर्तयन् अनुतिष्ठन् ॥
७-१६१-८ अलक्षणं कुष्ठापस्मारादिविरुद्धं लक्षणम् ॥
७-१६१-१० श्रवात् श्रवणात् । तं पुरुषम्। जनाः साधवः ॥
७-१६१-१५ सङ्कुसुको दुर्जनः अस्थिरश्च । नित्योच्छिष्टः
सूचकश्चेति क थ पाठः ॥
७-१६१-१७ उपसृष्टं राहुग्रस्तम् ॥
७-१६१-२९ उपानहौ च छत्रं च इति थ पाठः ॥
७-१६१-३९ न रिष्यते न हिंस्यते ॥
७-१६१-४८ त्रीणि भोज्यानि । अदृष्टं शूद्रोदक्यादिभिः ॥
७-१६१-५२ अज्ञातामृतुमतीत्वेन कामुकत्वेन वा ॥
७-१६१-५२ अन्तर्धाने अत्यन्तमन्धकारे । संयुक्ते इतरेण स्त्र्यादिना ॥
७-१६१-५२ स्नात्वा वासो न निर्धुनेत् इति । न चैवार्द्राणि वासांसि इति
च झ पाठः ॥
७-१६१-६० प्रस्कन्दयेदन्नशेषं किञ्चित्त्यजेत् । भुक्त्वा च
मनसाग्निमुपस्पृशेत् ॥
७-१६१-६१ ऋतं निःश्रेयसमिच्छन्निति शेषः ॥
७-१६१-६३ प्राणान्नासादीन् ऊर्ध्वच्छिद्राणि ॥
७-१६१-६४ अवस्नातं स्नानजलं । अन्यस्य चाप्युपस्थानं दूरतः
परिवर्जयेत् इति क थ ध पाठः ॥
७-१६१-६५ सावित्राणि मन्त्रविशेषान् । शान्तिहोमांश्च कुर्वीत पवित्राणि
च कारयेत् इति क थ ध पाठः ॥
७-१६१-७३ नरिष्यते हिंस्यते ॥
७-१६१-७४ शिरोभ्यक्तेन तैलेनेति क थ ध पाठः ॥

७-१६१-७५ न चिन्तयेत् वेदम् ॥
७-१६१-७६ प्रजास्तस्याददे तथा इति झ पाठः ॥
७-१६१-८५ मिथ्याप्रवृत्तेपि सम्यग्वर्तितव्यम् ॥
७-१६१-९० विपर्ययमौत्तराधर्यम् । अपदशं दशाहीनम्। न चापदशमेव चेति झ पाठः ॥
७-१६१-९३ उपवासं ब्रह्मचर्यम् ॥
७-१६१-९६ धर्मेषु श्राद्धादिषु ॥
७-१६१-१०० वालेन केशेन उपलक्षितम् । परश्राद्धं शत्रुश्राद्धम् ॥
७-१६१-१०४ निरस्य पानीयादीन्विहाय । अन्येषां भक्षाणां शेषमन्यस्मै न देयम् ॥
७-१६१-१०५ अधिकं तोयपानं तु न कर्तव्यं इति ङ पाठः । शङ्कां जीर्यति न वेति। दधीति तक्रं त्वनुपानं कर्तव्यमेव। यथेष्टं भुंक्ष्व माभैषीस्तक्रं सलवणं पिबेति तस्य दृष्टार्थत्वोक्तेः ॥
७-१६१-१०८ प्राणान्नासादीन् ॥
७-१६१-११३ नच वर्धकीम् इति ङ थ ध पाठः । नच नर्तकीम् इति क पाठः ॥
७-१६१-१२१ एते तैलपायिकादिवन्न पापाय । अभ्युदयायेत्यर्थः। पारावतादयः सर्वे पक्षिविशेषा एव ॥
७-१६१-१२५ शारणिकस्य रक्षणार्थिनः । तथा नागरिकस्य चेति ध पाठः ॥
७-१६१-१२८ प्रसाधनं केशानां संस्कारादिकम् । पानीयस्य क्रिया स्नानं न नक्तं स्नायादिति गृहे रात्रौ शिरःस्नाननिषेधः ॥
७-१६१-१३२ पुत्राः प्रदेया ज्ञानेष्विति झ पाठः । ज्ञानेषु बहुज्ञाननिमित्तं पुत्रा देया विद्वत्सु समर्पणीयाः ॥
७-१६१-१३३ कुलात्सत्कुलसम्बन्धेन । निवेश्या विवाह्याः। लभ्या लम्भनीयाः ॥
७-१६१-१३५ तैलाभ्यञ्जनमष्टम्यामिति ङ थ पाठः । आग्नेये कृत्तिकायाम् ॥
७-१६१-१३६ स्वनक्षत्राद्दिननक्षत्रं यावद्गणयित्वा नवभिर्भागे हृते पञ्चमी तारा प्रत्यरिः ॥
७-१६१-१४० व्यङ्गिनीं न्यूनाङ्गीम् । व्यङ्गिकां विरुद्धाङ्गेनाधिकेन युक्ताम्। समार्षा समानप्रवराम् ॥
७-१६१-१४२ अयोनि अज्ञातकुलाम् । वियोनिं हीनकुलाम् ॥
७-१६१-१५० नापितोच्छिष्टता श्मश्रुकर्मोत्तरमस्नातता ॥
७-१६१-१५३ दर्शको द्रष्टा ॥
७-१६१-१५४ परिव्रज्यं देशान्तरे गन्तव्यम् ॥
७-१६१-१५७ मातुः पितुश्च पुत्राणां कार्यमिति थ पाठः ॥
७-१६१-१६९ आयुष्याणामाक्रक्रष्कराणां कर्मणाम् । उद्देशः संक्षेपः ॥

॥ श्रीः ॥
१३.१६२. अध्यायः १६२

अथ दानधर्मपर्व ॥१ ॥
Mahabharata - Anushaasana Parva - Chapter Topics
भीष्मेण युधिष्ठिरंप्रति ज्येष्ठकनिष्ठयोः परस्परस्मिन्वर्तनप्रकारादिकथनम् ॥१ ॥

Mahabharata - Anushaasana Parva - Chapter Text

युधिष्ठिर उवाच ।
कथं ज्येष्ठः कनिष्ठेषु वर्तेत भरतर्षभ ।
कनिष्ठाश्च यथा ज्येष्ठे वर्तेरंस्तद्ब्रवीहि मे ॥१३-१६२-१ (८७७९४)
भीष्म उवाच।१३-१६२-२क्ष् (७३६६)
ज्येष्ठवत्तात वर्तस्व ज्येष्ठोसि हि तथा भवान् ।
गुरोर्गरीयसी वृत्तिर्या च शिष्यस्य भारत ॥१३-१६२-२ (८७७९५)
न गुरावकृतप्रज्ञे शक्यं शिष्येण वर्तितुम् ।
गुरौ हि सदृशी वृत्तिर्यथा शिष्यस्य भारत ॥१३-१६२-३ (८७७९६)
अन्धः स्यादन्धवेलायां जडः स्यादपि वा बुधः ।
परिहारेण तद्ब्रूयाद्यस्तेषां स्याद्व्यतिक्रमः ॥१३-१६२-४ (८७७९७)
प्रत्यक्षं भिन्नहृदया भेदयेयुर्यथाऽहिताः ।
गश्रियाऽभितप्तास्तद्भेदान्नभिन्नाः स्युः समाहिताः'
श्रियाऽभितप्ताः कौन्तेय भेदकामास्तथाऽरयः ॥ १३-१६२-५ (८७७९८)
ज्येष्ठः कुलं वर्धयति विनाशयति वा पुनः ।
हन्ति सर्वमपि ज्येष्ठः प्रायो दुर्विनयादिह ॥१३-१६२-६ (८७७९९)
अथ यो विनिकुर्वीत ज्येष्ठो भ्राता यवीयसः ।
अज्येष्ठः स्यादभागश्च नियम्यो राजभिश्च सः ॥१३-१६२-७ (८७८००)
निकृती हि नरो लोकान्पापान्गच्छत्यसंशयम् ।
विफलं तस्य पुत्रत्वं मोघं जनयितुः स्मृतम् ॥१३-१६२-८ (८७८०१)
पित्रोरनर्थायक कुले जायते पापपूरुषः ।
अकीर्तिं जनयत्येव कीर्तिमन्तर्दधाति च ॥१३-१६२-९ (८७८०२)
सर्वे चापि विकर्मस्था भागं नार्हन्ति सोदराः ।
ज्येष्ठोऽपि दुर्विनीतस्तु कनिष्ठस्तु विशेषतः ।
नाप्रदाय कनिष्ठेभ्यो ज्येष्ठः कुर्वीत वेतनम् ॥ १३-१६२-१० (८७८०३)
अनुजस्य पितुर्दायो जङ्घाश्रमफलोऽध्वगः ।

स्वयमीहेत लब्धं तु नाकामो दातुमर्हति ॥१३-१६२-११ (८७८०४)
भ्रातॄणामविभक्तानामुत्थानमपि चेत्सह ।
न पुत्रभागं विषमं पिता दद्यात्कदाचन। १३-१६२-१२ (८७८०५)
न ज्येष्ठो वाऽवमन्येत दुष्कृतः सुकृतोऽपि वा ।
गुरूणामपराधो हि शक्यः क्षन्तव्य एव च ॥१३-१६२-१३ (८७८०६)
यदि स्त्री यद्यवरज श्रेयः पश्येत्तदाचरेत् ।
धर्मार्थः श्रेय इत्याहुस्त्रयो ज्ञाता विधायकाः ॥१३-१६२-१४ (८७८०७)
दशाचार्यानुपाध्याय उपाध्यायान्पिता दश ।
दश चैव पितॄन्माता सर्वां वा पृथिवीमपि ।
गौरवेणाभिभवति नास्ति मातृसमो गुरुः ॥ १३-१६२-१५ (८७८०८)
माता गरीयसी यच्च तेनैतां मन्यते गुरुम् ।
ज्येष्ठो भ्राता पितृसमो मृते पितरि भारत ॥१३-१६२-१६ (८७८०९)
स ह्येषां वृत्तिदाता स्यात्स चैतान्प्रतिपालयेत् ।
कनिष्ठास्तं नमस्येरन्सर्वे छन्दानुवर्तिनः ॥१३-१६२-१७ (८७८१०)
तमेव चोपजीवेरन्यथैव पितरं तथा ।
शरीरमेतौ सृजतः पिता मता च भारत ॥१३-१६२-१८ (८७८११)
आचार्यशिष्टा या जातिः सा सत्या साऽजरामरा ।
ज्येष्ठा मातृसमा चापि भगिनी भरतर्षभ। १३-१६२-१९ (८७८१२)
भ्रातुर्भार्या च तद्वत्स्याद्यस्या बाल्ये स्तनं पिबेत् ॥ ॥ १३-१६२-२० (८७८१३)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
द्विषष्ट्यधिकशततमोऽध्यायः ॥

Mahabharata - Anushaasana Parva - Chapter Footnotes

७-१६२-२ या च शिष्यस्य गुरौ वृत्तिस्तां वर्तस्व ॥
७-१६२-४ तेषां गुरूणाम् ॥
७-१६२-७ यवीयसः कनिष्ठान् ॥
७-१६२-८ विदुलस्येव तत्पुष्पं मोघमिति झ पाठः ॥
७-१६२-१० ज्येष्ठः कुर्वीत यौतकमिति झ पाठः ॥
७-१६२-११ जङ्घाश्रम एव फलं धनं यस्य ।अध्वगः
प्रवासी।अनुपघ्नन्पितुर्दायं इति झ पाठः ॥
७-१६२-१२ उत्थानं भोजनादौ विभागे वा ॥
७-१६२-१४ यदि स्त्री यदि वा कनिष्ठो दुष्कृतस्तथापि तस्य श्रेय
आचरेत् ॥

---

॥ श्रीः ॥
१३.१६३. अध्यायः १६३

अथ दानधर्मपर्व ॥ १ ॥
Mahabharata - Anushaasana Parva - Chapter Topics
भीष्मेणि युधिष्ठिरंप्रति
पक्षमासोपवासफलप्रतिपादकाङ्गिरोवचनानुवादः ॥ १ ॥

Mahabharata - Anushaasana Parva - Chapter Text

युधिष्ठिर उवाच ।
सर्वेषामेव वर्णानां म्लेच्छानां च पितामह ।
उपवासे मतिरियं कारणं च न विद्महे ॥ १३-१६३-१ (८७८१४)
ब्रह्मक्षत्रेण नियमाः कर्तव्या इति नः श्रुतम् ।
उपवासे कथं तेषां कृतमस्ति पितामह। १३-१६३-२ (८७८१५)
नियमांश्चोपवासांश्च सर्वेषां ब्रूहि पार्थिव ।
आप्नोति कां गतिं तात उपवासपरायणः ॥ १३-१६३-३ (८७८१६)
उपवासः परं पुण्यं पवित्रमपि चोत्तमम् ॥
उपोष्येह नरश्रेष्ठ किं फलं प्रतिपद्यते ॥ १३-१६३-४ (८७८१७)
अधर्मान्मुच्यते केन धर्ममाप्नोति वा कथम् ।
स्वर्गं पुण्यं च लभते कथं भरतसत्तम ॥ १३-१६३-५ (८७८१८)
उपोष्य चापि किं तेन प्रयोज्यं स्यान्नराधिप ।
धर्मेण च सुखानर्थाँल्लभेद्येन ब्रवीहि मे ॥ १३-१६३-६ (८७८१९)
वैशम्पायन उवाच। १३-१६३-७क्ष् (७३६७)
एवं ब्रुवाणं कौन्तेयं धर्मज्ञं धर्मतत्त्ववित् ।
धर्मपुत्रमिदं वाक्यं भीष्मः शान्तनवोऽब्रवीत् ॥ १३-१६३-७ (८७८२०)
इदं खलु महाराज श्रुतमासीत्पुरातनम् ।
उपावासविधौ श्रेष्ठा गुणा ये भरतर्षभ ॥ १३-१६३-८ (८७८२१)
प्राजापत्यमाङ्गिरसं पृष्टवानस्मि भारत ।
यथा मां त्वं तथैवाहं पृष्टवांस्तं तपोधनम् ॥ १३-१६३-९ (८७८२२)
प्रश्नमेतं मया पृष्टो भगवानग्निसम्भवः ।
उपवासविधिं पुण्यमाचष्ट भरतर्षभ ॥ १३-१६३-१० (८७८२३)
अङ्गिरा उवाच। १३-१६३-११क्ष् (७३६८)
ब्रह्मक्षत्रे त्रिरात्रं तु विहितं कुरुनन्दन ।
द्विस्त्रिरात्रमथैकाहं निर्दिष्टं पुरुषर्षभ ॥ १३-१६३-११ (८७८२४)
वैश्याः शूद्राश्च यन्मोहादुपवासं प्रकुर्वते ।

त्रिरात्रं वा द्विराइत्रं वा तयोर्व्युष्टिर्न विद्यते ॥ १३-१६३-१२ (८७८२५)
चतुर्थभक्तक्षपणं वैश्ये शूद्रे विधीयते ।
त्रिरात्रं न तु धर्मज्ञैर्विहितं ब्रह्मवादिभिः ॥ १३-१६३-१३ (८७८२६)
पञ्चम्यां वाऽपि षष्ठ्यां च पौर्णमास्यां च भारत ।
उपोष्य एकभक्तेन नियतात्मा जितेन्द्रियः ॥ १३-१६३-१४ (८७८२७)
क्षमावान्रूपसम्पन्नः सुरभिश्चैव जायते ।
नानपत्यो भवेत्प्राज्ञो दरिद्रो वा कदाचन ॥ १३-१६३-१५ (८७८२८)
यजिष्णुः पञ्चमीं षष्ठीं कुले भोजयते द्विजान् ।
अष्टमीमथ कौरव्य कृष्णपक्षे चतुर्दशीम् ।
उपोष्य व्याधिरहितो वीर्यवानभिजायते ॥ १३-१६३-१६ (८७८२९)
मार्गशीर्षं तु वै मासमेकभक्तेन यः क्षिपेत् ।
भोजयेच्च द्विजाञ्शक्त्या स मुच्येद्व्याधिकिल्बिषैः ॥ १३-१६३-१७ (८७८३०)
सर्वकल्याणसम्पूर्णः सर्वौषधिसमन्वितः ।
कृषिभागी बहुधनो बहुधान्यश्च जायते ॥ १३-१६३-१८ (८७८३१)
पौषमासं तु कौन्तेय भक्तेनैकेन यः क्षिपेत् ।
सुभगो दर्शनीयश्च यशोभागी च जायते ॥ १३-१६३-१९ (८७८३२)
पितृभक्तो माघमासं यः क्षिपेदेकभोजनः ।
श्रीमत्कुले ज्ञातिमध्ये सुभगत्वं प्रपद्यते ॥ १३-१६३-२० (८७८३३)
भगदैवतमासं तु एकभक्तेन यः क्षिपेत् ।
ग्सुभगो दर्शनीयश्च यशोभागी च जायते।'
स्त्रीषु वल्लभतां याति वश्याश्चास्य भवन्ति ताः ॥ १३-१६३-२१ (८७८३४)
चैत्रं तु नियतो मासमेकभक्तेन यः क्षिपेत् ।
सुवर्णमणिमुक्ताढ्ये कुले महति जायते ॥ १३-१६३-२२ (८७८३५)
निस्तरेदेकभक्तेन वैशाखं यो जितेन्द्रियः ।
नरो वा यदि वा नरी ज्ञातीनां श्रेष्ठतां व्रजेत् ॥ १३-१६३-२३ (८७८३६)
ज्येष्ठामूलं तु यो मासमेकभक्तेन संक्षिपेत् ।
ऐश्वर्यमतुलं श्रेष्ठं पुमान्स्त्री वा प्रपद्यते ॥ १३-१६३-२४ (८७८३७)
आषाढमेकभक्तेन स्थित्वा मासमतन्द्रितः ।
बहुधान्यो बहुधनो बहुपुत्रश्च जायते ॥ १३-१६३-२५ (८७८३८)
श्रावणं नियतो मासमेकभक्तेन यः क्षिपेत् ।
रूपद्रविणसम्पन्नः सुखी भवति नित्यशः ।
बहुभार्यो बहुधनो बहुपुत्रश्चि जायते ॥ १३-१६३-२६ (८७८३९)
प्रौष्ठपादं तु यो मासमेकाहारो भवेन्नरः ।
गवाढ्यं स्फीतमचलमैश्वर्यं प्रतिपद्यते ॥ १३-१६३-२७ (८७८४०)
तथैवाश्वयुजं मासमेकभक्तेन यः क्षिपेत् ।
प्रज्ञावान्वाहनाढ्यश्च बहुपुत्रश्च जायते ॥ १३-१६३-२८ (८७८४१)

कार्तिकं तु नरो मासं यः कुर्यादेकभोजनम् ।
शूरश्च बहुभार्यश्च कीर्तिमांश्चैव जायते ॥ १३-१६३-२९ (८७८४२)
इति मासा नरव्याघ्र क्षिपतां परिकीर्तिताः ।
तिथीनां नियमा ये तु शृणु तानपि पार्थिव ॥ १३-१६३-३० (८७८४३)
पक्षेपक्षे गते यस्तु भक्तमश्नाति भारत ।
गवाढ्यो बहुपुत्रश्च दीर्घायुश्च स जायते ॥ १३-१६३-३१ (८७८४४)
मासिमासि त्रिरात्राणि कृत्वा वर्षाणि द्वादश ।
गणाधिपत्यं प्राप्नोति निःसपत्नमनाविलम् ॥ १३-१६३-३२ (८७८४५)
एते तु नियमाः सर्वे कर्तव्याः शरदो दश ।
द्वे चान्ये भरतश्रेष्ठ प्रवृत्तिरनुकीर्तिता ॥ १३-१६३-३३ (८७८४६)
यस्तु प्रातस्तथा सायं भुञ्जानो नान्तरा पिबेत् ।
अहिंसानिरतो नित्यं जुह्वानो जातवेदसम् ॥ १३-१६३-३४ (८७८४७)
षड्भिः स वर्षैर्नृपते सिध्यते नाइत्र संशयः ।
अग्निष्टोमस्य यज्ञस्य फलं प्राप्नोति मानवः ॥ १३-१६३-३५ (८७८४८)
अधिवासे सोप्सरसां नृत्यगीतविनादिते ।
रमते स्त्रीसहस्राढ्ये सुकृती विरजा नरः ॥ १३-१६३-३६ (८७८४९)
तप्तकाञ्चनवर्णाभं विमानमधिरोहति ।
पूर्णं वर्षसहस्रं च ब्रह्मिलोके महीयते ।
तत्क्षयादिह चागम्य माहात्म्यं प्रतिपद्यते ॥ १३-१६३-३७ (८७८५०)
यस्तु संवत्सरं पूर्णमेकाहारो भवेन्नरः ।
अतिरात्रस्य यज्ञस्य स फलं समुपाश्नुते ॥ १३-१६३-३८ (८७८५१)
त्रिंशद्वर्षसहस्राणि स्वर्गे च स महीयते ।
तत्क्षयादिह चागम्य माहात्म्यं प्रतिपद्यते ॥ १३-१६३-३९ (८७८५२)
यस्तु संवत्सरं पूर्णं चतुर्थं भक्तमश्नुते ।
अहिंसानिरतो नित्यं सत्यवाग्विजितेन्द्रियः ॥ १३-१६३-४० (८७८५३)
वाजपेयस्य यज्ञस्य स फलं समुपाश्नुते ।
त्रिंशद्वर्षसहस्राणि स्वर्गलोके महीयते ॥ १३-१६३-४१ (८७८५४)
षष्ठे काले तु कौन्तेय नरः संवत्सरं क्षिपन् ।
अश्वमेधस्य यज्ञस्य फलं प्राप्नोति मानवः ॥ १३-१६३-४२ (८७८५५)
चक्रवाकप्रयुक्तेन विमानेन स गच्छति ।
चत्वारिंशत्सहस्राणि वर्षाणि दिवि मोदते ॥ १३-१६३-४३ (८७८५६)
अष्टमेन तु भक्तेन जीवन्संवत्सरं नृप ।
गवामयनयज्ञस्य फलं प्राप्नोति मानवः ॥ १३-१६३-४४ (८७८५७)
हंससारसयुक्तेन विमानेन स गच्छति ।
पञ्चाशतं सहस्राणि वर्षाणां दिवि मोदते ॥ १३-१६३-४५ (८७८५८)
पक्षेपक्षे गते राजन्योऽश्नीयाद्वर्षमेव तु ।

षण्मासानशनं तस्य भगवानङ्गिराऽब्रवीत् ।
षष्टिं वर्षसहस्राणि दिवमावसते च सः ॥ १३-१६३-४६ (८७८५९)
विणानां वल्लकीनां च वेणूनां च विशाम्पते ।
सुघोषैर्मधुरैः शब्दैः सुप्तः स प्रतिबोध्यते ॥ १३-१६३-४७ (८७८६०)
संवत्सरमिहैकं तु मासिमासि पिबेदपः ।
फलं विश्वजितस्तात प्राप्नोति स नरो नृप ॥ १३-१६३-४८ (८७८६१)
सिंहव्याघ्रप्रयुक्तेन विमानेन स गच्छति ।
सप्ततिं च सहस्राणि वर्षाणां दिवि मोदते ॥ १३-१६३-४९ (८७८६२)
मासादूर्ध्वं नरव्याघ्र नोपवासो विधीयते ।
विधिं त्वनशनस्याहुः पार्थ धर्मविदो जनाः ॥ १३-१६३-५० (८७८६३)
अनार्तो व्याधिरहितो गच्छेदनशनं तु यः ।
पदेपदे यज्ञफलं स प्राप्नोति न संशयः ॥ १३-१६३-५१ (८७८६४)
दिवं हंसप्रयुक्तेन विमानेन स गच्छति ।
शतं वर्षसहस्राणां मोदते स दिवि प्रभो ॥ १३-१६३-५२ (८७८६५)
शतं चाप्सरसः कन्या रमयन्त्यपि तं नरम् ।
आर्तो वा व्याधितो वाऽपि गच्छेदनशनं तु यः ॥ १३-१६३-५३ (८७८६६)
शतं वर्षसहस्राणां मोदते स दिवि प्रभो ।
काञ्चीनूपुरशब्देन सुप्तश्चैव प्रबोध्यते ॥ १३-१६३-५४ (८७८६७)
सहस्रहंसयुक्तेन विमानेन तु गच्छति ।
स गत्वा स्त्रीशताकीर्णे रमते भरतर्षभ ॥ १३-१६३-५५ (८७८६८)
क्षीणस्याप्यायनं दृष्टं क्षतस्य क्षतरोहणम् ।
व्याधितस्यौषधग्रामः क्रुद्धस्य च प्रसादनम् ॥ १३-१६३-५६ (८७८६९)
दुःखितस्यार्तपूर्वस्य द्रव्याणां प्रतिपादनम् ।
न चैतद्रोचते तेषां ये धनैः सुखमेधिताः ॥ १३-१६३-५७ (८७८७०)
अतः स कामसंयुक्ते विमाने हेमसन्निभे ।
रमते स्त्रीशताकीर्णे पुरुषोऽलङ्कृतः शुचिः ॥ १३-१६३-५८ (८७८७१)
स्वस्थः सफलसङ्कल्पः सुखी विगतकल्मषः ।
अनशनन्देहमुत्सृज्य फलं प्राप्नोति मानवः ॥ १३-१६३-५९ (८७८७२)
बालसूर्यप्रतीकाशे विमाने सोमवर्चसि ।
वैदूर्यमुक्ताखचिते वीणामुरजनादिते ॥ १३-१६३-६० (८७८७३)
पताकादीपिकाकीर्णे दिव्यघण्टानिनादिते ।
स्त्रीसहस्रानुचरिते स नरः सुखमेधते ॥ १३-१६३-६१ (८७८७४)
यावन्ति रोमकूपाणि तस्य गात्रेषु पाण्डव ।
तावन्त्येव सहस्राणि वर्षाणां दिवि मोदते ॥ १३-१६३-६२ (८७८७५)
नास्ति वेदात्परं शास्त्रं नास्ति मातृसमो गुरुः ।
न धर्मात्परमो लाभस्तपो नानशनात्परम् ॥ १३-१६३-६३ (८७८७६)

ब्राह्मणेभ्यः परं नास्ति पावनं दिवि चेह च ।
उपवासैस्तथा तुल्यं तपःकर्म न विद्यते ॥ १३-१६३-६४ (८७८७७)
उपोष्य विधिवद्देवास्त्रिदिवं प्रतिपेदिरे ।
ऋषयश्च परां सिद्धिमुपवासैरवाप्नुवन् ॥ १३-१६३-६५ (८७८७८)
दिव्यवर्षसहस्राणि विश्वामित्रेण धीमता ।
क्षान्तमेकेन भक्तेन तेन विप्रत्वमागतम् ॥ १३-१६३-६६ (८७८७९)
च्यवनो जमदग्निश्च वसिष्ठो गौतमो भृगुः ।
सर्व एव दिवं प्राप्ताः क्षमावन्तो महर्षयः ॥ १३-१६३-६७ (८७८८०)
इदमङ्गीरसा पूर्वं महर्षिभ्यः प्रदर्शितम् ।
यः प्रदर्शयते नित्यं न स दुःखमवाप्नुते ॥ १३-१६३-६८ (८७८८१)
इमं तु कौन्तेय यथाक्रमं विधिं
प्रवर्तितं ह्यङ्गिरसा महर्षिणा ।
पठेच्च यो वै शृणुयाच्च नित्यदा
न विद्यते तस्य नरस्य किल्बिषम् ॥ १३-१६३-६९ (८७८८२)
विमुच्यते चापि स सर्वसङ्करै-
र्न चास्य दोषैरभिभूयते मनः ।
वियोनिजानां च विजानते रुतं
ध्रुवां च कीर्तिं लभते नरोत्तमः ॥ ॥ १३-१६३-७० (८७८८३)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
त्रिषष्ट्यधिकशततमोऽध्यायः ॥ १६३ ॥

Mahabharata - Anushaasana Parva - Chapter Footnotes

७-१६३-१२ व्युष्टिः फलम् ॥
७-१६३-१३ दिनस्य द्वे भक्ते तत्र चतुर्थस्य भक्तस्य क्षपणम्
। द्विरात्रमभोजनमित्यर्थः ॥
७-१६३-१६ यजिष्णुः देवतापूजनशीलः कुले स एव महानन्नदाता
भवतीत्यर्थः ॥
७-१६३-२४ ज्येष्ठामूलं ज्येष्ठमासम् ॥
७-१६३-२८ मृजावान् वाहनाढ्यश्च इति झ.पाठः ॥
७-१६३-३१ सर्वेषु मासेष्वेकैकस्मिन्पक्षे गते द्वितीयपक्षे
भक्तमेकभक्तमश्नाति ॥
७-१६३-५७ दुःखितस्यार्थमानाभ्यां दुःखानां प्रतिषेधनम् इति झ.पाठः ॥
७-१६३-७० वियोनिजानां पक्ष्यादीनां रुतं शब्दं विजानते विजानीते ॥

---

॥ श्रीः ॥
१३.१६४. अध्यायः १६४

अथ दानधर्मपर्व ॥ १ ॥
Mahabharata - Anushaasana Parva - Chapter Topics
युधिष्ठिरेणि भीष्मंप्रति दरिद्राणां यज्ञस्य बहुद्रव्यसाध्यत्वेन दुष्करतया तत्फलप्राप्त्यै तत्प्रतिनिधिकथनप्रार्थना ॥ १ ॥
भीष्मेण युधिष्ठिरंप्रति एकैकदिनवृद्ध्या मासावध्युपवासस्य यज्ञप्रतिनिधित्वकथनम् ॥ २ ॥

Mahabharata - Anushaasana Parva - Chapter Text

युधिष्ठिर उवाच ।
पितामहेन विधिवद्यज्ञाः प्रोक्ता महात्मना ।
गुणाश्चैषां यथातथ्यं प्रेत्य चेह च सर्वशः ॥ १३-१६४-१ (८७८८४)
न तै शक्या दरिद्रेण यज्ञाः प्राप्तुं पितामह ।
बहूपकरणा यज्ञा नानासम्भारविस्तराः ॥ १३-१६४-२ (८७८८५)
पार्थिवै राजपुत्रैर्वा शक्याः प्राप्तुं पितामह ।
नार्थन्यूनैरवगुणैरेकात्मभिरसंहतैः ॥ १३-१६४-३ (८७८८६)
यो दरिद्रैरपि विधिः शक्यः प्राप्तुं सदा भवेत् ।
अर्थन्यूनैरवगुणैरेकात्मभिरसंहतैः ।
तुल्यो यज्ञफलैरेतैस्तन्मे ब्रूहि पितामह ॥ १३-१६४-४ (८७८८७)
भीष्म उवाच। १३-१६४-५क्ष् (७३६९)
इदमङ्गिरसा प्रोक्तमुपवासफलात्मकम् ।
विधिं यज्ञफलैस्तुल्यं तन्निबोध युधिष्ठिर ॥ १३-१६४-५ (८७८८८)
यस्तु कल्यं तथा सायं भुञ्जानो नान्तरा पिबेत् ।
अहिंसानिरतो नित्यं जुह्वानो जातवेदसम् ।
षड्भिरेव स वर्षैस्तु सिध्यते नात्र संशयः ॥ १३-१६४-६ (८७८८९)
तप्तकाञ्चनवर्णं च विमानं लभते नरः ।
देवस्त्रीणामधीवासे नृत्तगीतनिनादिते ।
प्राजापत्ये वसेत्पद्मं वर्षाणामग्निसन्निभे ॥ १३-१६४-७ (८७८९०)
त्रीणि वर्षाणि यः प्राशेत्सततं त्वेकभोजनम् ।
धर्मत्नीरतो नित्यमग्निष्टोमफलं लभेत् ।
यज्ञं बहुसुवर्णं वा वासवप्रियमाचरेत् ॥ १३-१६४-८ (८७८९१)
सत्यवान्दानशीलश्च ब्रह्मण्यश्चानसूयकः ।
क्षान्तो दान्तो जितक्रोधः स गच्छति परां गतिम् ॥ १३-१६४-९ (८७८९२)

पाण्डुराभ्रपतीकाशे विमाने हंसलक्षणे ।
द्वे समाप्ते ततः पद्मे सोप्सरोभिर्वसेत्सह ॥१३-१६४-१० (८७८९३)
द्वितीये दिवसे यस्तु प्राश्नीयादेकभोजनम् ।
सदा द्वादशमासांस्तु जुह्वानो जातवेदसम् ॥१३-१६४-११ (८७८९४)
अग्निकार्यपरो नित्यं नित्यं कल्यप्रबोधनः ।
अग्निष्टोमस्य यज्ञस्य फलं प्राप्नोति मानवः ॥१३-१६४-१२ (८७८९५)
हंससारसयुक्तं च विमानं लभते नरः ।
इन्द्रलोके च वसते वरस्त्रीभिः समावृतः ॥१३-१६४-१३ (८७८९६)
तृतीये दिवसे यस्तु प्राश्नीयादेकभोजनम् ।
सदा द्वादशमासांस्तु जुह्वानो जातवेदसम् ॥१३-१६४-१४ (८७८९७)
अग्निकार्यपरो नित्यं नित्यं कल्यप्रबोधनः ।
अतिरात्रस्य यज्ञस्य फलं प्राप्नोत्यनुत्तमम् ॥१३-१६४-१५ (८७८९८)
मयूरहंसयुक्तं च विमानं लभते नरः ।
सप्तर्षीणां सदा लोके सोप्सरोभिर्वसेत्सह ।
निवर्तनं च तत्रास्य त्रीणि पद्मानि वै विदुः ॥ १३-१६४-१६ (८७८९९)
दिवसे यश्चतुर्थे तु प्राश्नीयादेकभोजनम् ।
सदा द्वादशमासान्वै जुह्वानो जातवेदसम् ।
वाजपेयस्य यज्ञस्य फलं प्राप्नीत्यनुत्तमम्। १३-१६४-१७ (८७९००)
इन्द्रिकन्याभिरूढं च विमान लभते नरः ।
सागरस्य च पर्यन्ते वासवं लोकमावसेत् ।
देवराजस्य च क्रीडां नित्यकालमवेक्षते ॥ १३-१६४-१८ (८७९०१)
दिवसे पञ्चमे यस्तु प्राश्नीयादैकभोजनम् ।
सदा द्वादशमासांस्तु जुह्वानो जातवेदसम् ॥१३-१६४-१९ (८७९०२)
अलुब्धः ।सत्यवादी च ब्रह्मण्यश्चाविहिंसकः ।
अनसूयुरपापस्थो द्वादशाहफलं लभेत् ॥१३-१६४-२० (८७९०३)
जाम्बूनदमयं दिव्यं विमानं हंसलक्षणम् ।
सूर्यमालासमाभासमारोहेत्पाण्डुरं गुहम् ॥१३-१६४-२१ (८७९०४)
आवर्तनानि चत्वारि तथा पद्मानि द्वादश ।
शराग्निपरिमाणं च तत्रासौ वसते सुखम् ॥१३-१६४-२२ (८७९०५)
दिवसे यस्तु षष्ठे वै मुनिः प्राशेत भोजनम् ।
सदा द्वादशमासान्वै जुह्वानो जातवेदसम् ॥१३-१६४-२३ (८७९०६)
सदा त्रिषवणस्नायी ब्रह्मचार्यनसूयकः ।
गवामयनयज्ञस्य फलं प्राप्नोत्यनुत्तमम् ॥१३-१६४-२४ (८७९०७)
अग्निज्वालासमाभासं हंसबर्हिणसेवितम् ।
शातकुम्भसमायुक्तं साधयेद्यानमुत्तमम् ॥१३-१६४-२५ (८७९०८)
तथैवाप्सरसामङ्के प्रतिसुप्तः प्रबोध्यते ।

नूपुराणां निनादेन मेखलानां च निःस्वनैः ॥ १३-१६४-२६ (८७९०९)
कोटीसहस्रं वर्षाणां त्रीणि कोटिशतानि च ।
पद्मान्यष्टादश तथा पताके द्वे तथैव च ॥ १३-१६४-२७ (८७९१०)
अयुतानि च पञ्चशदृक्षचर्मशतस्य च ।
लोम्नां प्रमाणेन समं ब्रह्मलोके महीयते ॥ १३-१६४-२८ (८७९११)
दिवसे सप्तमे यस्तु प्राश्नीयादेकभोजनम् ।
सदा द्वादशमासान्वै जुह्वानो जातवेदसम् ॥ १३-१६४-२९ (८७९१२)
सरस्वतीं गोपयानो ब्रह्मचर्यं समाचरन् ।
सुमनोवर्णकं चैव मधु मांसं च वर्जयन् ॥ १३-१६४-३० (८७९१३)
पुरुषो मरुतां लोकमिन्द्रलोकं च गच्छति ।
तत्रतत्र हि सिद्धार्थो देवकन्याभिरुह्यते ॥ १३-१६४-३१ (८७९१४)
फलं बहुसुवर्णस्य यज्ञस्य लभते नरः ।
सङ्ख्यामतिगुणां चापि तेषु लोकेषु मोदते ॥ १३-१६४-३२ (८७९१५)
यस्तु संवत्सरं क्षान्तो भुङ्क्तेऽहन्यष्टमे नरः ।
देवकार्यपरो नित्यं जुह्वानो जातवेदसम् ॥ १३-१६४-३३ (८७९१६)
पौण्डरीकस्य यज्ञस्य फलं प्राप्नोत्यनुत्तमम् ।
पद्मवर्णनिभं चैव विमानमधिरोहति ॥ १३-१६४-३४ (८७९१७)
मृष्टाः कनकगौर्यश्च नार्यः श्यामास्तथा पराः ।
वयोरूपविलासिन्यो लभते नात्र संशयः ॥ १३-१६४-३५ (८७९१८)
यस्तु संवत्सरं भुङ्क्ते नवमेनवमेऽहनि ।
सदा द्वादशमासान्वै जुह्वानो जातवेदसम् ॥ १३-१६४-३६ (८७९१९)
अश्वमेधसहस्रस्य फलं प्राप्नोत्यनुत्तमम् ।
पुण्डरीकप्रकाशं च विमानं लभते नरः ॥ १३-१६४-३७ (८७९२०)
दीप्तसूर्याग्नितेजोभिर्दिव्यमालाभिरेव च ।
नीयते रुद्रकन्याभिः सोन्तरिक्षं सनातनम् ॥ १३-१६४-३८ (८७९२१)
अष्टादशसहस्राणि वर्षाणां कल्पमेव च ।
कोटीशतसहस्रं च तेषु लोकेषु मोदते ॥ १३-१६४-३९ (८७९२२)
यस्तु संवत्सरं भुङ्क्ते दशाहे वै गतेगते ।
सदा द्वादश मासान्वै जुह्वानो जातवेदसम् ॥ १३-१६४-४० (८७९२३)
ब्रह्मकन्यानिवासे स सर्वभूतमनोहरे ।
अश्वमेधसहस्रस्य फलं प्राप्नोत्यनुत्तमम् ॥ १३-१६४-४१ (८७९२४)
रूपवत्यश्च तं कन्या रमयन्ति सदा नरम् ।
नीलोत्पलनिभैर्वर्णै रक्तोत्पलनिभैस्तथा ॥ १३-१६४-४२ (८७९२५)
विमानं मण्डलावर्तमावर्तगहनाकुलम् ।
सागरोर्मिप्रतीकाशं स लभेद्यानमुत्तमम् ॥ १३-१६४-४३ (८७९२६)
विचित्रमणिमालाभिर्नादितं शङ्खनिःस्वनैः ।

स्फाटिकैर्वज्रसारैश्च स्तम्भैः सुकृतवेदिकम् ।
आरोहति महद्यानं हंससारसवाहनम् ॥ १३-१६४-४४ (८७९२७)
एकादशे तु दिवसे यः प्राप्ते प्राशते हविः ।
सदा द्वादशमासांस्तु जुह्वानो जातवेदसम् ॥१३-१६४-४५ (८७९२८)
परिस्त्रियं नाभिलषेद्वाचाथ मनसाऽपि वा ।
अनृतं च न भाषेत मातापित्रोःक कृतेऽपि वा ।
अभिगच्छेन्महादेवं विमानस्थं महाबलम् ॥ १३-१६४-४६ (८७९२९)
अश्वमेधसहस्रस्य फलं प्राप्नोत्यनुत्तमम् ।
स्वायंभुवं च पश्येत विमानं समुपस्थितम् ॥१३-१६४-४७ (८७९३०)
कुमार्यः काञ्चनाभासा रूपवत्यो नयन्ति तम् ।
रुद्राणां तमधीवासं दिवि दिव्यं मनोहरम् ॥१३-१६४-४८ (८७९३१)
वर्षाण्यपरिमेयानि युगान्तमपि चावसेत् ।
कोटीशतसहस्रं च दशकोटिशतानि च ॥१३-१६४-४९ (८७९३२)
रुद्रं नित्यं प्रणमते देवदानवसम्मतम् ।
स तस्मै दर्शनं प्राप्तो दिवसेदिवसे भवेत् ॥१३-१६४-५० (८७९३३)
दिवसे द्वादशे यस्तु प्राप्तो वै प्राशते हविः ।
सदा द्वादश मासान्वै जुह्वानो जातवेदसम् ॥१३-१६४-५१ (८७९३४)
नियमेन समायुक्तः सर्वमेधफलं लभेत ।
आदित्यैर्द्वादशैस्तस्य विमानं संविधीयते ॥१३-१६४-५२ (८७९३५)
मणिमुक्ताप्रवालैश्च महार्हैरुपशोभितम् ।
हंसभासा परिक्षिप्तं नागवीथीसमाकुलम् ॥१३-१६४-५३ (८७९३६)
मयूरैश्चक्रवाकैश्च कूजद्भिरुपशोभितम् ।
अट्टैर्महद्भिः संयुक्तं ब्रह्मलोके प्रतिष्ठितम् ॥१३-१६४-५४ (८७९३७)
नित्यमावसथं राजन्नरनारीसमावृतम् ।
ऋषिरेवं महाभागस्त्वङ्गिराः प्राह धर्मिवित् ॥१३-१६४-५५ (८७९३८)
त्रयोदशे तु दिवसे प्राप्ते यः प्राशते हविः ।
सदा द्वादश मासान्वै देवसत्रफलं लभेत् ॥१३-१६४-५६ (८७९३९)
रक्तपद्मोदयं नाम विमानं साधयेन्नरः ।
जातरूपप्रयुक्तं च रत्नसञ्चयभूषितम् ॥१३-१६४-५७ (८७९४०)
देवकन्याभिराकीर्णं दिव्याभरणभूषितम् ।
पुण्यगन्धोदयं दिव्यं वादित्रैरुपशोभितम् ॥१३-१६४-५८ (८७९४१)
तत्र शङ्कुपताके द्वे युगान्तं कल्पमेव च ।
अयुतायुतं तथा पद्मं समुद्रं च तथा वसेत् ॥१३-१६४-५९ (८७९४२)
गीतगन्धर्वघोषैश्च भेरीपणवनिःस्वनैः ।
सदा प्रह्लादितस्ताभिर्देवकन्याभिरीड्यते ॥१३-१६४-६० (८७९४३)
चतुर्दशे तु दिवसे यः पूर्णे प्राशते हविः ।

सदा द्वादशमासांस्तु महामेधफलं लभेत् ॥१३-१६४-६१ (८७९४४)
अनिर्देश्यवयोरूपा देवकन्याः स्वलङ्कृताः ।
मृष्टतप्ताङ्गदधरा विमानैरुपयान्ति तम् ॥१३-१६४-६२ (८७९४५)
कलहंसविनिर्घोषैर्नूपुराणां च निःस्वनैः ।
काञ्चीनां च समुत्कर्षैस्तत्रतत्र निबोध्यते ॥१३-१६४-६३ (८७९४६)
देवकन्यानिवासे च तस्मिन्वसति मानवः ।
जाह्नवीवालुकाकीर्णं पूर्णं संवत्सरं नरः ॥१३-१६४-६४ (८७९४७)
यस्तु पक्षे गते भुङ्क्ते एकभक्तं जितेन्द्रियः ।
सदा द्वादशमासांस्तु जुह्वानो जातवेदसम् ॥१३-१६४-६५ (८७९४८)
राजसूयसहस्रस्य फलं प्राप्नोत्यनुत्तमम् ।
यानमारोहते दिव्यं हंसबर्हिणलक्षणम् ॥१३-१६४-६६ (८७९४९)
मणिमण्डलकैश्चित्रं जातरूपसमावृतम् ।
दिव्याभरणशोभाभिर्वरस्त्रीभिरलङ्कृतम् ॥१३-१६४-६७ (८७९५०)
एकस्तम्भं चतुर्द्वारं सप्तभौमं सुमङ्गलम् ।
वैजयन्तीसहस्रैश्च शोभितं गीतनिःस्वनै ।
दिव्यं दिव्यगुणोपेतं विमानमधिरोहति ॥ १३-१६४-६८ (८७९५१)
मणिमुक्ताप्रवालैश्च भूषितं वैद्युतप्रभम् ।
वसेद्युगसहस्रं च खड्गकुञ्जरवाहनः ॥१३-१६४-६९ (८७९५२)
षोडशे दिवसे यस्तु सम्प्राप्ते प्राशते हविः ।
सदा द्वादशमासान्वै सोमयज्ञफलं लभेत् ॥१३-१६४-७० (८७९५३)
सोमकन्यानिवासेषु सोऽध्यावसति नित्यशः ।
सौम्यगन्धानुलिप्तश्च कामचारगतिर्भवेत् ॥१३-१६४-७१ (८७९५४)
सुदर्शनाभिर्नारीभिर्मधुराभिस्तथैव च ।
अर्च्यते वै विमानस्थः कामभोगैश्च सेव्यते ॥१३-१६४-७२ (८७९५५)
फलं पद्मशतप्रख्यं महाकल्पं दशाधिकम् ।
आवर्तनानि चत्वारि साधयेच्चाप्यसौ नरः ॥१३-१६४-७३ (८७९५६)
दिवसे सप्तदशमे यः प्राप्ते प्राशते हविः ।
सदा द्वादशमासान्वै जुह्वानो जातवेदसम् ॥१३-१६४-७४ (८७९५७)
स्थानं वारुणमैन्द्रं च रौद्रं वाऽप्यधिगच्छति ॥ १३-१६४-७५ (८७९५८)
मारुतं शयनं चैव ब्रह्मलोकं स गच्छति ।
तत्र दैवतकन्याभिरासनेनोपचर्यते ॥१३-१६४-७६ (८७९५९)
भूर्भुवःस्वश्च देवर्षिर्विश्वरूपमवेक्षते ।
तत्र देवाधिदेवस्य कुमार्यो रमयन्ति तम् ।
द्वात्रिंशद्रूपधारिण्यो मधुराः समलङ्कृताः ॥ १३-१६४-७७ (८७९६०)
चन्द्रादित्यावुभौ यावद्गगने चरतः प्रभो ।
तावच्चरत्यसौ धीरः सुधातुल्यरसाशनः ॥१३-१६४-७८ (८७९६१)

अष्टादशे यो दिवसे प्राश्नीयादेकभोजनम् ।
सदा द्वादशमासान्वै सप्तलोकान्स पश्यति ॥ १३-१६४-७९ (८७९६२)
रथैः स नन्दिघोषैश्च पृष्ठतः सोऽनुगम्यते ।
देवकन्याधिरूढैस्तु भ्राजमानैः स्वलंकृतैः ॥ १३-१६४-८० (८७९६३)
व्याघ्रसिंहप्रयुक्तं च मेघस्वननिनादितम् ।
विमानमुत्तमं दिव्यं सुसुखि ह्यधिरोहति ॥ १३-१६४-८१ (८७९६४)
तत्र कल्पसहस्रं स कन्याभिः सह मोदते ।
सुधारसं च भुञ्जीत अमृतोपममुत्तमम् ॥ १३-१६४-८२ (८७९६५)
एकोनविंशदिवसे यो भुङ्क्ते एकभोजनम् ।
सदा द्वादशमासान्वै सप्त लोकान्स पश्यति ॥ १३-१६४-८३ (८७९६६)
उत्तमं लभते स्थानमप्सरोगणसेवितम् ।
गन्धर्वैरुपगीतं च विमानं सूर्यवर्चसम् ॥ १३-१६४-८४ (८७९६७)
तत्रामरवरस्त्रीभिर्मोदते विगतज्वरः ।
दिव्याम्बरधरः श्रीमानयुतानां शतंशतम् ॥ १३-१६४-८५ (८७९६८)
पूर्णेऽथ विंशे दिवसे यो भुङ्क्ते ह्येकभोजनम् ।
सदा द्वादशमासांस्तु सत्यवादी धृतव्रतः ॥ १३-१६४-८६ (८७९६९)
अमांसाशी ब्रह्मचारी सर्वभूतहिते रतः ।
स लोकान्विपुलान्रम्यानादित्यानामुपाश्नुते ॥ १३-१६४-८७ (८७९७०)
गन्धर्वैरप्सरोभिश्च दिव्यमाल्यानुलेपनैः ।
विमानैः काञ्चनैर्हृद्यैः पृष्ठतश्चानुगम्यते ॥ १३-१६४-८८ (८७९७१)
एकविंशो तु दिवसे यो भुङ्क्ते ह्येकभोजनम् ।
सदा द्वादशमासान्वै जुह्वानो जातवेदसम् ।
लोकमौशनसं दिव्यं शक्रलोकं च गच्छति ॥ १३-१६४-८९ (८७९७२)
अश्विनोर्मरुतां चैव सुखेष्वभिरतः सदा ।
अनभिज्ञश्च दुःखानां विमानवरमास्थितः ।
सेव्यमानो वरस्त्रीभिः क्रीडत्यमरवत्प्रभुः ॥ १३-१६४-९० (८७९७३)
द्वाविंशे दिवसे प्राप्ते यो भुङ्क्ते ह्येकभोजनम् ।
सदा द्वादश मासान्वै जुह्वानो जातवेदसम् ॥ १३-१६४-९१ (८७९७४)
अहिंसानिरतो धीमान्सत्यवागनसूयकः ।
लोकान्वसूनामाप्नोति दिवाकरसमप्रभः ॥ १३-१६४-९२ (८७९७५)
कामचारी सुधाहारो विमानवरमास्थितः ।
रमते देवकन्याभिर्दिव्याभरणभूषितः ॥ १३-१६४-९३ (८७९७६)
त्रयोविंशे तु दिवसे प्राशेद्यस्त्वेकभोजनम् ।
सदा द्वादशमासांस्तु मिताहारो जितेन्द्रियः ।
वायोरुशनसस्चैव रुद्रलोकं च गच्छति ॥ १३-१६४-९४ (८७९७७)
कामचारी कामगमः पूज्यमानोऽप्सरोगणैः ।

अनेकयुगपर्यन्तं विमानवरमास्थितः ।
रमते देवकन्याभिर्दिव्याभरणभूषितः ॥ १३-१६४-९५ (८७९७८)
चतुर्विंशे तु दिवसे यः प्राप्ते प्राशते हविः ।
सदा द्वादशमासांश्च जुह्वानो जातवेदसम् ।
आदित्यानामधीवासे मोदमानो वसेच्चिरम् ॥ १३-१६४-९६ (८७९७९)
दिव्यमाल्याम्बरधरो दिव्यगन्धानुलेपनः ।
विमाने काञ्चने दिव्ये हंसयुक्ते मनोरमे ।
रमते देवकन्यानां सहस्रैरयुतैस्तथा ॥ १३-१६४-९७ (८७९८०)
पञ्चविंशे तु दिवसे यः प्राशेदेकभोजनम् ।
सदा द्वादशमासांस्तु पुष्कलं यानमारुहेत् ॥ १३-१६४-९८ (८७९८१)
सिंहव्याघ्रप्रयुक्तैस्तु मेघनिःस्वननादितैः ।
स रथैर्नन्दिघोषैश्च पृष्ठतो ह्यनुगम्यते ।
देवकन्यासमारूढैः काञ्चनैर्विमलैः शुभैः ॥ १३-१६४-९९ (८७९८२)
विमानमुत्तमं दिव्यमास्थाय सुमनोहरम् ।
तत्र कल्पसहस्रं वै वसते स्त्रीशतावृते ।
सुधारसं चोपजीवन्नमृतोपममुत्तमम् ॥ १३-१६४-१०० (८७९८३)
षड्विंशे दिवसे यस्तु प्रकुर्यादेकभोजनम् ।
सदा द्वादशमासांस्तु नियतो नियताशनः ।
जितेन्द्रियो वीतरागो जुह्वानो जातवेदसम् ॥ १३-१६४-१०१ (८७९८४)
स प्राप्नोति महाभागः पूज्यमानोऽप्सरोगणैः ।
सप्तानां मरुतां लोकान्वसूनां चापि सोश्नुते ॥ १३-१६४-१०२ (८७९८५)
विमानैः स्फाटिकैर्दिव्यैःइ सर्वरत्नैरलङ्कृतैः ।
गन्धर्वैरप्सरोभिश्च पूज्यमानः प्रमोदते ।
द्वेऽर्बुदानां सहस्रे तु दिव्ये दिव्येन तेजसा ॥ १३-१६४-१०३ (८७९८६)
सप्तविंशेऽथ दिवसे यः कुर्यादेकभोजनम् ।
सदा द्वादशमासांस्तु जुह्वानो जातवेदसम् ॥ १३-१६४-१०४ (८७९८७)
फलं प्राप्नोति विपुलं देवलोके च पूज्यते ।
अमृताशी वसंस्तत्र स वितृपः प्रमोदते ॥ १३-१६४-१०५ (८७९८८)
देवर्षिचरिताँल्लोकान्राजर्षिभिरनुष्ठितान् ।
अध्यावसति दिव्यात्मा विमानवरमास्थितः ॥ १३-१६४-१०६ (८७९८९)
स्त्रीभिर्मिनोभिरामाभी रममाणो मदोत्कटः ।
युगकल्पसहस्राणि त्रीण्यावसति वै सुखम् ॥ १३-१६४-१०७ (८७९९०)
योऽष्टाविंशे तु दिवसे प्राश्नीयादेकभोजनम् ।
सदा द्वादशमासांस्तु जितात्मा विजितेन्द्रियः ॥ १३-१६४-१०८ (८७९९१)
फलं देवर्षिचरितं विपुलं समुपाश्नुते ।
भोगवांस्तेजसा भाति सहस्रांशुरिवामलः ॥ १३-१६४-१०९ (८७९९२)

सुकुमार्यश्च नार्यस्तं रममाणाः सुवर्चसः ।
पीनस्तनोरुजघना दिव्याभरणभूषिताः ॥ १३-१६४-११० (८७९९३)
रमयन्ति मनःकान्ता विमाने सूर्यसन्निबे ।
सर्वकामगमे दिव्ये कल्पायुतशतं समाः ॥ १३-१६४-१११ (८७९९४)
एकोनत्रिंशदिवसे यः प्राशेदेकभोजनम् ।
तस्य लोकाः शुभा दिव्या देवराजर्षिपूजिताः ॥
तस्य लोकाः शुभा दिव्या देवराजर्षिपूजिताः ॥ १३-१६४-११२ (८७९९५)
विमानं सूर्यचन्द्राभं दिव्यं समधिगच्छति ।
जातरूपमयं युक्तं सर्वरत्नसमन्वितम् ।
अप्सरोगणसङ्कीर्णं गन्धर्वैरभिनादितम् ॥ १३-१६४-११३ (८७९९६)
तत्र चैनं शुभा नार्यो दिव्याभरणभूषिताः ।
मनोभिरामा मधुरा रमयन्ति मदोत्कटाः ॥ १३-१६४-११४ (८७९९७)
भोगवांस्तेजसा युक्तो वैश्वानरसमप्रभः ।
दिव्यो दिव्येन वपुषा भ्राजमान इवामरः ॥ १३-१६४-११५ (८७९९८)
वसूनां मरुतां चैव साध्यानामश्विनोस्तथा ।
रुद्राणां च तथा लोकं ब्रह्मलोकं च गच्छति ॥ १३-१६४-११६ (८७९९९)
यस्तु मासे गते भुङ्क्ते एकभक्तं समाहितः ।
सदा द्वादश मासान्वै ब्रह्मलोकमवाप्नुयात् ॥ १३-१६४-११७ (८८०००)
सुधारसकृताहार श्रीमान्सर्वमनोहरः ।
तेजसा वपुषा लक्ष्म्या भ्राजते रश्मिवानिव ॥ १३-१६४-११८ (८८००१)
दिव्यमाल्याम्बरधरो दिव्यगन्धानुलेपनः ।
सुखेष्वभिरतो भोगी दुःखानामविजानकः ॥ १३-१६४-११९ (८८००२)
स्वयंप्रभाभिर्नारीभिर्विमानस्थो महीयते ।
रुद्रदेवर्षिकन्याभिः सततं चाभिपूज्यते ॥ १३-१६४-१२० (८८००३)
नानारमणरूपाभिर्नानारागाभिरेव च ।
नानामधुरभाषाभिर्नानारतिभिरेव च ॥ १३-१६४-१२१ (८८००४)
विमाने गगनाकारे सूर्यवैडूर्यसन्निभे ।
पृष्ठतः सोमसङ्करो उदर्के चाभ्रसन्निभे ॥ १३-१६४-१२२ (८८००५)
दक्षिणायां तु रक्ताभे अधस्तान्नीलमण्डले ।
ऊर्ध्वं विचित्रसङ्काशे नैको वसति पूजितः ॥ १३-१६४-१२३ (८८००६)
यावद्वर्षसहस्रं वै जम्बूद्वीपे प्रवर्षति ।
तावत्संवत्सराः प्रोक्ता ब्रह्मलोकेऽस्य धीमतः ॥ १३-१६४-१२४ (८८००७)
विप्रुषश्चैव यावन्त्यो निपतन्ति नभस्तलात् ।
वर्षासु वर्षतस्तावन्निवसत्यमरप्रभः ॥ १३-१६४-१२५ (८८००८)
मासोपवासी वर्षैस्तु दशभिः स्वर्गमुत्तमम् ।
महर्षित्वमथासाद्य सशरीरगतिर्भवेत् ॥ १३-१६४-१२६ (८८००९)

मुनिर्दान्तो जितक्रोधो जितशिश्नोदरः सदा ।
जुह्वन्नग्नींश्च नियतः सन्ध्योपासनसेविता ॥ १३-१६४-१२७ (८८०१०)
बहुभिर्नियमैरेवं शुचिरश्नाति यो नरः ।
अभ्रावकाशशीलश्च तस्य भानोरिव त्विषः ॥ १३-१६४-१२८ (८८०११)
दिवं गत्वा शरीरेण स्वेन राजन्यथाऽमरः ।
स्वर्गं पुण्यं यथाकाममुपभुङ्क्ते तथाविधः ॥ १३-१६४-१२९ (८८०१२)
एथ ते भरतश्रेष्ठ यज्ञानां विधिरुत्तमः ।
व्याख्यातो ह्यानुपूर्व्येण उपवासफलात्मकः। १३-१६४-१३० (८८०१३)
दरिद्रैर्मनुजैः पार्थ प्राप्यं यज्ञफलं यथा ॥
देवद्विजातिपूजायां रतो भरतसत्तमम् ॥ १३-१६४-१३१ (८८०१४)
उपवासविधिस्त्वेष विस्तरेण प्रकीर्तितः ।
नियतेष्वप्रमत्तेषु शौचवत्सु महात्मसु ॥ १३-१६४-१३२ (८८०१५)
दम्भद्रोहनिवृत्तेषु कृतबुद्धिषु भारत ।
अचलेष्वप्रकम्पेषु मा ते भूदत्र संशयः ॥ ॥ १३-१६४-१३३ (८८०१६)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
चतुःषष्ट्यधिकशततमोऽध्यायः ॥ १६४ ॥
Mahabharata - Anushaasana Parva - Chapter Footnotes

७-१६४-३ अवगुणैर्निर्गुणैः । एकात्मभिरेकाकिभिः। अत एवासंहतैरसहायैः ॥
७-१६४-६ कल्यं प्रातः ॥
७-१६४-१० सगाप्ते सम्पूर्णे द्वे पद्मे वर्षाणीति शेषः । शतकोटय
एकं पद्मम् ॥
७-१६४-१६ निवर्तनं नियमेन वर्तनम् ॥
७-१६४-२२ आवर्तनानि वर्षाणि चत्वारि द्वादशचेति षोडश पद्मानि
। तथा शराग्निरिति पञ्चत्रिंशत्। एवमेकपञ्चाशत्पद्मानि ॥
७-१६४-२७ पताका महापद्माख्यसंख्याविशेषः ॥
७-१६४-३० सुमनोवर्णकं स्रक्चन्दनादि ॥
७-१६४-५९ शङ्कुपताके संख्याविशेषौ ॥
७-१६४-८२ सुधा अमृतम् । अमृतं देवभोग्यं तदुपमम् ॥

---

अनुससनपर्व-अध्यय१६५
॥ श्रीः ॥
१३.१६५. अध्यायः १६५

अथ दानधर्मपर्व ॥ १ ॥

Mahabharata - Anushaasana Parva - Chapter Topics
भीष्मेण युधिष्ठिरंप्रति
तत्वसृष्टिप्रतिपादकरुद्रसनत्कुमारसंवादानुवादः ॥ १ ॥

Mahabharata - Anushaasana Parva - Chapter Text

युधिष्ठिर उवाच ।
पितामहेन कथिता दानधर्माश्रिताः कथाः ।
मया श्रुता ऋषीणां तु संनिधौ केशवस्य च ॥ १३-१६५-१ (८८०१७)
पुनः कौतूहलमभूत्तामेवाध्यात्मिकीं प्रति ।
कथाः कथय राजेन्द्र त्वदन्यः क उदाहरेत् ॥ १३-१६५-२ (८८०१८)
एष यादवदायादस्तथानुज्ञातुमर्हति ।
ज्ञाते तु यस्मिञ्ज्ञातव्यं ज्ञातं भवति भारत ॥ १३-१६५-३ (८८०१९)
पश्चाच्छ्रोष्यामहे राज्ञां श्राव्यान्धर्मान्पितामह ।
कौतूहलमृषीणां तु च्छेतुमर्हसि साम्प्रतम् ॥ १३-१६५-४ (८८०२०)
भीष्म उवाच। १३-१६५-५क्ष् (७३७०)
अत ऊर्ध्वं महाराज साङ्ख्ययोगोभयशास्त्राधि-
गतयाथात्म्यदर्शनसम्पन्नयोराचार्ययोः संवादमनुव्याख्यास्यामः ॥
१३-१६५-५ (८८०२१)
तद्यथा भगवन्तं सनत्कुमारमासीनमङ्गुष्ठपर्व-
मात्रं महति विमानवरे योजनसहस्रमण्डले तरुण-
भास्करप्रतीकाशे शयनीये महति बद्धासनमनु-
ध्यायन्तममृतमनावर्तकरममूर्तमक्षयजमथोपदि-
ष्टमुपससर्प भगवन्तमाचार्यं भगवानाचार्यो रुद्रः ॥ १३-१६५-६
(८८०२२)
तं प्रोवाच स्वागतं महेश्वर ब्रह्मसुत एतदास-
नमास्तां भगवान् ॥ १३-१६५-७ (८८०२३)
इत्युक्ते चासीनो भगवाननन्तरूपो रुद्रस्तं
प्रोवाच भगवानपि ध्यानमावर्तयति । इत्युक्ते चाह
भगवान्सनत्कुमारस्तथेति ॥ १३-१६५-८ (८८०२४)
तथेत्युक्तश्च प्रोवाच भगवाञ्शङ्करस्तदा ।
परावरज्ञं सर्वस्य त्रैलोक्यस्य महामुनिम् ॥ १३-१६५-९ (८८०२५)
किं वा ध्यानेन द्रष्टव्यं यद्भवाननुपश्यति ।
यच्च ध्यात्वा न शोचन्ति यतयस्तत्वदर्शिनः ॥ १३-१६५-१० (८८०२६)
कथय त्वमिमं देवं देहिनां यतिसत्तम ।
यच्च तत्पुरुषं शुद्धमित्युक्तं योगसाङ्ख्ययोः ॥ १३-१६५-११ (८८०२७)

किमध्यात्माधिभूतं च तथा चाप्यधिदैवतम् ।
कालसङ्ख्या च का देव द्रष्टव्या तस्य ब्रह्मणः ॥ १३-१६५-१२ (८८०२८)
सङ्ख्या सङ्ख्यादनस्यैव या प्रोक्ता परमर्षिभिः ।
शास्त्रदृष्टेन मार्गेण यथावद्यतिसत्तम ॥ १३-१६५-१३ (८८०२९)
यच्च तत्पुरुषं शुद्धं प्रबुद्धमजरं ध्रुवम् ।
बुध्यमानाप्रबुद्धाभ्यां विद्यावेद्यं तथैव च ॥ १३-१६५-१४ (८८०३०)
विमोक्षं त्रिविधं चैव ब्रूहि मोक्षविदांवर ।
परिसाङ्ख्यं च साङ्ख्यानां ध्यानं योगेषु चार्थवत् ॥ १३-१६५-१५ (८८०३१)
एकत्वदर्शनं चैव तथा नानात्वदर्शनम् ।
अरिष्टानि च तत्वेन तथैवोत्क्रमणानि च ॥ १३-१६५-१६ (८८०३२)
दैवतानि च सर्वाणि निखिलेनानुपूर्वशः ।
यान्याश्रितानि देहेषु देहिनां यतिसत्तम ।
सर्वमेतद्यथातत्वमाख्याहि मुनिसत्तम ॥ १३-१६५-१७ (८८०३३)
श्रेष्ठो भवान्हि सर्वेषां ब्रह्मज्ञानामनिन्दितः ।
चतुर्थस्त्वं त्रयाणां तु ये गताःइ परमां गतिम् ।
ज्ञानेन च प्राकृतेन निर्मुक्तो मृत्युबन्धनात् ॥ १३-१६५-१८ (८८०३४)
वयं तु वैकृतं मार्गमाश्रिता वै क्षरं सदा ।
परमुत्सृज्य पन्थानममृताक्षरमेव तु ॥ १३-१६५-१९ (८८०३५)
न्यूने पथि निमग्नास्तु ऐश्वर्येऽष्टगुणे तथा ।
महिमानं प्रगृह्योमं विचरामो यथासुखम् ॥ १३-१६५-२० (८८०३६)
न चैतत्सुखमत्यन्तं न्यूनमेतदनन्तरम् ।
मूर्तिमत्परमेतत्स्यादिदमेवं सुसत्तम ॥ १३-१६५-२१ (८८०३७)
पुनः पुनश्च पतनं मूर्तिमत्युपदिश्यते ।
न पुनर्मृत्युमित्यन्यं निर्मुक्तानां तु मूर्तितः ॥ १३-१६५-२२ (८८०३८)
मृत्युदोषास्त्वनन्ता वै उत्पद्यन्ते कृतात्मनाम् ।
मर्त्येषु नाकपृष्ठेषु निरयेषु महामुने ॥ १३-१६५-२३ (८८०३९)
तत्र मज्जन्ति पुरुषाः सुखदुःखेन वेष्टिताः ॥ १३-१६५-२४ (८८०४०)
सुखदुःखव्यपेतं च यदाहुरमृतं पदम् ।
तदहं श्रोतुमिच्छामि यथावच्छ्रुतिदर्शनात् ॥ १३-१६५-२५ (८८०४१)
सनत्कुमार उवाच। १३-१६५-२६क्ष् (७३७१)
यदुक्तं भवता वाक्यं तत्वसंज्ञेति देहिनाम् ।
चतुर्विंशतिमेवात्र केचिदाहुर्मनीषिणः ॥ १३-१६५-२६ (८८०४२)
केचिदाहुस्त्रयोविंशं यथाश्रुतिनिदर्शनात् ।
वयं तु पञ्चविंशं वै तदधिष्ठानसंज्ञितम् ।
तत्वं समधिमन्यामः सर्वतन्त्रप्रलापनात् ॥ १३-१६५-२७ (८८०४३)
अव्ययश्चैव वै व्यक्तावुभावपि पिनाकधृक् ।

सह चैव विना चैव तावन्योन्यं प्रतिष्ठितौ ॥ १३-१६५-२८ (८८०४४)
हिरण्मयीं प्रविश्यैष मूर्तिं मूर्तिमतांवर ।
चकार पुरुषस्तात विकारपुरुषावुभौ ॥ १३-१६५-२९ (८८०४५)
अव्यक्तादेक एवैष महानात्मा प्रसूयते ।
अहङ्कारेण लोकांश्च व्याप्य चाहंकृतेन वै ॥ १३-१६५-३० (८८०४६)
पिना सर्वं तदव्यक्तादभफिमन्यस्व शूलधृक् ।
भूतसर्गमहङ्कारात्तृतीयं विद्धि वै क्रमात् ॥ १३-१६५-३१ (८८०४७)
अहङ्काराच्च भूतेषु चतुर्थं विद्दि वैकृतम् ।
अहङ्काराच्च जातानि युगपद्विबुधेश्वर ॥ १३-१६५-३२ (८८०४८)
सविशेषाणि भूतानि पञ्च प्राहुर्मनीषिणः ।
चतुर्विंशात्तु वै प्रोक्तात्पञ्चविंशोऽधितिष्ठति ॥ १३-१६५-३३ (८८०४९)
एते सर्गा मया प्रोक्ताश्चत्वारः प्राकृतास्त्विह ।
अहङ्काराच्च जातानि युगपद्विबुधेश्वर ॥ १३-१६५-३४ (८८०५०)
अङ्काराच्च भूतेषु विविधार्थं व्यजायत ।
इन्द्रियैर्युगपत्सर्वैः सो नित्यश्च समीक्षते ॥ १३-१६५-३५ (८८०५१)
मरुत्त्वं सत्वसर्गश्च तुष्टिः सिद्धिस्तथैव च ।
वैकृतानि प्रवक्ष्यामि शृणु तानि महामते ॥ १३-१६५-३६ (८८०५२)
एषा तत्वचतुर्विंशन्मया शास्त्रानुमानतः ।
वर्णिता तव देवेश पञ्चविंशत्समन्विता ॥ १३-१६५-३७ (८८०५३)
पञ्चमोऽनुग्रहश्चैव नवैते प्राकृतैः सह ।
ऐन्द्रेप्यहमधोप्यन्यन्ममात्मनि च भास्वरः ॥ १३-१६५-३८ (८८०५४)
यच्च देहमयं किञ्चित्त्रिषु लोकेषु विद्यते ।
सर्वत्रैवाभिमन्तव्यं त्वया त्रिपुरसूदन ॥ १३-१६५-३९ (८८०५५)
अन्यथा येऽनुपश्यन्ति ते न पश्यन्ति ब्रह्मज ।
एतदव्यक्तविषयं पञ्चविंशसमन्वितम् ॥ १३-१६५-४० (८८०५६)
अनेन कारणेनैव तत्वमाहुर्मनीषिणः ।
विकारमात्रमेतं तु तत्वमाचक्षते परम् ॥ १३-१६५-४१ (८८०५७)
निस्तत्वश्चैष देवेश बोद्धव्यं तु न बुद्ध्यते ।
यदि बुद्ध्येत्परं बुद्धं बुद्ध्यमानः सुरर्षभः ।
प्रबुद्धो ह्यभिमन्येत योयं नाहमिति प्रभो ॥ ॥ १३-१६५-४२ (८८०५८)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
पञ्चषष्ट्यधिकशततमोऽध्यायः ॥ १६५ ॥

Mahabharata - Anushaasana Parva - Chapter Footnotes

७-१६५-१क्ष् एतदादिपञ्चाध्याया दाक्षिणात्यकोशेष्वेव दृश्यन्ते ॥

७-१६५-१३ यथावद्वद सत्तमेति ङ पाठः ॥
७-१६५-३६ मम त्वं सत्त्वसर्गश्चेति ध पाठः ॥

---

अनुससनपर्व-अध्यय१६६
॥ श्रीः ॥
१३.१६६. अध्यायः १६६

अथ दानधर्मपर्व ॥ १ ॥
Mahabharata - Anushaasana Parva - Chapter Topics
रुद्रंप्रति सनत्कुमारेण तत्वलयक्रमाध्यात्मादिप्रतिपादनम् ॥ १.।
Mahabharata - Anushaasana Parva - Chapter Text

ग्सनत्कुमार उवाच ।
तत्वसङ्ख्या श्रुता चैषा येषां ब्रह्मविदांवर ।
सर्गसङ्ख्या मया प्रोक्ता नवानामानुपूर्व्यशः ।
प्रवक्ष्यामि तु तेऽध्यात्ममधिभूताधिदैवतम् ॥ १३-१६६-१ (८८०५९)
नैतद्युक्तैर्वेदविद्भिर्गृहस्थै-
र्मान्यैरेभिस्तपसा वाभिपन्नैः ।
यत्नेन दृष्टं परमात्मतत्वं
तत्वेन प्राप्यं तु यथोक्तमेतत् ।
परं परेभ्यस्त्वमृतार्थतत्वं
स्वभावसत्वस्थमनीशमीशम् ॥ १३-१६६-२ (८८०६०)
कैवल्यतां प्राप्य महासुरोत्तम
तवैतदाख्यामि मुनीन्द्रवृत्त्या ।
रहस्यमेवान्यदवाप्य दिव्यं
पवित्रपूतस्तव मृत्युजालम् ॥ १३-१६६-३ (८८०६१)
पृथ्वीमिमां यद्यपि रत्नपूर्णां
दद्यान्न देयं त्वपरीक्षिताय ।
नाश्रद्दधानाय न चान्यबुद्धे-
र्नाज्ञानयुक्ताय न विस्मिताय ॥ १३-१६६-४ (८८०६२)
स्वाध्याययुक्ताय गुणान्विताय
प्रदेयमेतन्नियतेन्द्रियाय ॥ १३-१६६-५ (८८०६३)
संक्षेपं चाप्यथैतेषां तत्वानां वृषभध्वज ।
अनुलोमानुजातानां प्रतिलोमप्रमीयतम् ॥ १३-१६६-६ (८८०६४)
प्रवक्ष्यामि तमध्यात्मं साधिभूताधिदैवतम् ।
यथांशुजालमर्कस्य तथैतत्प्रवदन्ति वै ॥ १३-१६६-७ (८८०६५)

संक्षीणे ब्रह्मदिवसे जगज्जलधिमाविशेत् ।
प्रलीयते जले भूमिर्जलमग्नौ प्रलीयते ॥ १३-१६६-८ (८८०६६)
लीयतेऽग्निस्तथा वायौ वायुराकाश एव तु ।
मनसि प्रलीयते खं तु मनोऽहंकार एव च ॥ १३-१६६-९ (८८०६७)
अहङ्कारस्तथा तस्मिन्महति प्रविलीयते ।
महानव्यक्त इत्याहुस्तदेकत्वं प्रचक्षते ॥ १३-१६६-१० (८८०६८)
अव्यक्तस्य महादेव प्रलयं विद्धि ब्रह्मिण ।
एवमस्यासकृत्क्रीडामाहुस्तत्वविदो जनाः ॥ १३-१६६-११ (८८०६९)
अध्यात्ममधिभूतं च तथैवाप्यधिदैवतम् ।
यथावदुदितं शास्त्रं योगे तु सुमहात्मभिः ॥ १३-१६६-१२ (८८०७०)
तथैव चेह साङ्ख्ये तु परिसंख्यात्मचिन्तकैः ।
प्रपञ्चितार्थमेतावन्महादेव महात्मभिः ॥ १३-१६६-१३ (८८०७१)
ब्रह्मेति विद्यादध्यात्मं पुरुषं चाधिदैवतम् ।
प्रभवं सर्वभूतानां रक्षणं तत्र कर्म च ॥ १३-१६६-१४ (८८०७२)
अध्यात्मं प्राणमित्याहुः क्रतुमप्यधिदैवतम् ।
रथं च यज्ञवाहोऽत्र कर्माहङ्कारमेव च ॥ १३-१६६-१५ (८८०७३)
अध्यात्मं तु मनो विद्याच्चन्द्रमाश्चाधिदैवतम् ।
दैवं च प्रभवश्चैव कर्म व्याहृतयस्तथा ॥ १३-१६६-१६ (८८०७४)
विद्यात्तु श्रोत्रमध्यात्ममाकाशमधिदैवतम् ।
सर्वभावाभिधानार्थं शब्दः कर्म सदा स्मृतं ॥ १३-१६६-१७ (८८०७५)
त्वगध्यात्ममथो विद्याद्वायुरत्राधिदैवतम् ।
सन्निपातय विज्ञानं सर्वकर्म च तत्र ह ॥ १३-१६६-१८ (८८०७६)
अध्यात्मं चक्षुरित्याहुर्भास्करोऽत्राधिदैवतम् ।
ज्ञापतं सर्ववर्णानां रूपं कर्म सदा स्मृतम् ॥ १३-१६६-१९ (८८०७७)
जिह्वेति विद्यादध्यात्ममापश्चात्राधिदैवतम् ॥ १३-१६६-२० (८८०७८)
पायुरध्यात्ममित्याहुर्यथावद्यतिसत्तमाः ।
विसर्गमधिभूतं च मित्रं चाप्यधिदैवतम् ॥ १३-१६६-२१ (८८०७९)
उपस्थोऽध्यात्ममित्याहुर्देवदेव पिनाकधृक् ।
अनुभावोऽधिभूतं तु दैवतं च प्रजापतिः ॥ १३-१६६-२२ (८८०८०)
पादावध्यात्ममित्याहुस्त्रिशूलाङ्क मनीषिणः ।
गन्तव्यमधिभूतं तु विष्णुस्तत्राधिदैवतम् ॥ १३-१६६-२३ (८८०८१)
वागध्यात्मं तथैवाहुः पिनाकिंस्तत्वदर्शिनः ।
वक्तव्यमधिभूतं तु वह्निस्तत्राधिदैवतम् ॥ १३-१६६-२४ (८८०८२)
एतदध्यात्ममतुलं साधिभूताधिदैवतम् ।
मया तु वर्णितं सम्यग्देहिनाममरर्षभ ॥ १३-१६६-२५ (८८०८३)
एतत्कीटपतङ्गे च श्वपाके शुनि हस्तिनि ।

पुत्रिकादंशमशके ब्राह्मणे गवि पार्थिवे ॥१३-१६६-२६ (८८०८४)
सर्वमेव हि द्रष्टव्यमन्यथा मा विचिन्तय ।
अतोऽन्यथा ये पश्यन्ति न सम्यक्तेषु दर्शनम् ॥१३-१६६-२७ (८८०८५)
देवदानवगन्धर्वयक्षराक्षसकिन्नराः ।
यन्न जानन्ति को ह्येष कुतो वा भगवानिति ॥१३-१६६-२८ (८८०८६)
ओमित्येकाक्षरं ब्रह्म यत्तत्सदसतः परम् ।
अनादिमध्यपर्यन्तं कूटस्थमचलं ध्रुवम् ॥१३-१६६-२९ (८८०८७)
योगेश्वरं पद्मनाभं विष्णुं जिष्णुं जगत्पतिम् ।
अनादिनिधं देवं देवदेवं सनातनम् ॥१३-१६६-३० (८८०८८)
अपमेयमविज्ञेयं हरिं नारायणं प्रभुम् ।
कृताञ्जलिः शुचिर्भूत्वा प्रणम्य प्रयतोऽर्चयेत् ॥१३-१६६-३१ (८८०८९)
अनाद्यन्तं परं ब्रह्म न देवा ऋषयो विदुः ।
एकोयं वेद भगवांस्त्राता नारायणो हरिः ॥१३-१६६-३२ (८८०९०)
नारायणादृषिगणास्ततः सिद्धा महोरगाः ।
देवा देवर्षयश्चैव यं विदुर्दुःखभेषजम् ॥१३-१६६-३३ (८८०९१)
यमाहुर्विजितक्लेशं यस्मिंश्च विहिताः प्रजाः ।
यस्मिँल्लोकाः स्फुरन्तीमे जाले शकुनयो यथा ॥१३-१६६-३४ (८८०९२)
सप्तर्षयो मनः सप्त साङ्ख्यास्तु मुनिदर्शनात् ।
सप्तर्षयश्चेन्द्रियाणि पञ्च बुद्धीन्द्रियाणि च ॥१३-१६६-३५ (८८०९३)
श्रोत्रयोश्च दिशः प्राहुर्मनसि त्वथ चन्द्रमाः ॥ १३-१६६-३६ (८८०९४)
मनः षष्ठं बुद्धिः सप्तमी ह्यात्मनि स्थापितानि
शरीरेषु नात्मनि तस्य हि कारणानि भन्ति सर्वा-
ण्यपि सर्वकर्मसु वा विषयेषुवा युञ्जन्ति यथात्म-
नि स्वानि कर्माणि प्रवृत्तानि सप्तस्वपि ॥ १३-१६६-३७ (८८०९५)
विषयाणां व्यापकत्वानि तान्येव स्वपतो भूत-
ग्रामस्याजमात्मानं देवलोकस्थानसंमितं देहान्तर-
गामिनं मुमुक्षुं वानुप्रतिशन्ति सूक्ष्माणि प्रलीयन्ते ॥ १३-१६६-३८ (८८०९६)
मोक्षकाले तमेकं न कश्चिद्वेत्ति स्वपरम् ।
एवं प्रविष्टेषु भूतेषु को जागर्तीत्युच्यते ॥१३-१६६-३९ (८८०९७)
निद्राप्रसुप्तेषु वाऽत्र जाग्रत्स्वप्नशीलोत्रसदनौ
च देवद्योतनो भगवांश्चात्र क्षत्रेज्ञो बुद्धिर्वाऽभिसुप्त-
स्यापि स्वप्नदर्शनानि पश्यन्ति ॥ १३-१६६-४० (८८०९८)
अप्रतिबुद्धेषु लोकेषु स एव प्रतिबुध्यते ।स
एष प्राज्ञः ।अथ तैजसः कायाग्निः स हि सुप्तस्यात्मा वा ॥
१३-१६६-४१ (८८०९९)
अविदुषो वाऽप्रतिबुध्यमानस्यान्नं पचतीत्यन्ते

वै तिष्ठति एतदात्मानमधिकृत्यानुज्ञातमिति ॥ ॥ १३-१६६-४२ (८८१००)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
षट्षष्ट्यधिकशततमोऽध्यायः ॥ १६६ ॥
Mahabharata - Anushaasana Parva - Chapter Footnotes

७-१६६-२ गृहस्यैर्मान्येज्याभिरिति ट थ पाठः ॥

---

अनुससनपर्व-अध्यय१६७
॥ श्रीः ॥
१३.१६७. अध्यायः १६७

अथ दानधर्मपर्व ॥ १ ॥
Mahabharata - Anushaasana Parva - Chapter Topics
सनत्कुमारेण रुद्रंप्रति देहिदेहावयवाश्रितदेवताकथनपूर्वकं
योगनिरूपणम् ॥ १ ॥

Mahabharata - Anushaasana Parva - Chapter Text

ग्सनत्कुमार उवाच ।
प्रभवश्चाप्ययस्तात वर्णितस्तेऽनुपूर्वशः ।
तथाऽध्यात्माधेभूतं च तथैवात्राधिदैवतम् ॥ १३-१६७-१ (८८१०१)
निखिलेन तु वक्ष्यामि दैवतानि ह देहिनाम् ।
यान्याश्रितेषु देहेषु यानि पृच्छसि शङ्कर ॥ १३-१६७-२ (८८१०२)
वाच्यग्निस्त्वथ जिह्वायां सोमः प्राणे तु मारुतः ।
रूपे चाप्यथ नक्षत्रं जिह्वायां चाप एव तु ॥ १३-१६७-३ (८८१०३)
नाभ्यां समुद्रश्च विभुर्नखरोम तथैव च ।
वनस्पतिवनौषध्यस्त्वङ्गेषु मरुतस्तथा ॥ १३-१६७-४ (८८१०४)
संवत्सराः पर्वसु च आकाशे दैवमानुषे ।
उदाने विद्युदभवद्घ्राने पर्जन्य एव च ॥ १३-१६७-५ (८८१०५)
स्तनयोरेव चाकाशं बले चेन्द्रस्तथैव च ।
मनसोऽप्यथ चेशानस्त्वपाने रुद्र एव च ॥ १३-१६७-६ (८८१०६)
गन्धर्वाप्सरसो व्याने सत्ये मित्रश्च शङ्कर ।
प्रज्ञायां वरुणश्चैव चक्षुष्यादित्य एव च ॥ १३-१६७-७ (८८१०७)
शरीरे पृथिवी चैव पादयोर्विष्णुरेव च ।
पायौ मित्रस्तथोपस्थे प्रजापतिररिंदम ॥ १३-१६७-८ (८८१०८)

मूर्ध्नि चैव दिशः प्राहुर्बुद्धौ ब्रह्मा प्रतिष्ठितः ।
बुध्यमानोऽऽत्मनिष्ठः स्यादधिष्ठाता तु शङ्करः ॥ १३-१६७-९ (८८१०९)
अबुद्धश्चाभवत्तस्माद्बुध्यमानान्न संशयः ।
आभ्यामन्यः परो बुद्धो वेदवादेषु शङ्कर ॥ १३-१६७-१० (८८११०)
यदाश्रितानि देहेषु दैवतानि पृथक्पृथक् ।
योऽग्नये जायते नित्यमात्मयाजी समाहितः ॥ १३-१६७-११ (८८१११)
य एवमनुपश्येत दैवतानि समाहितः ।
सोत्र योगी भवत्येव य एवमनुपश्यति ।
स सर्वज्ञयाजिभ्यो ह्यात्मयाजी विशिष्यते ॥ १३-१६७-१२ (८८११२)
मुखे जुहोति यो नित्यं कृत्स्नं विश्वमिदं जगत् ।
सोत्मवित्प्रोच्यते तज्ज्ञैर्महादेव महात्मभिः ॥ १३-१६७-१३ (८८११३)
सर्वेभ्यः परमेभ्यो वै दैवतेभ्यो ह्यात्मयाजिना ।
गन्तव्यं परमाकाङ्क्षन्परमेव च चिन्तयन् ॥ १३-१६७-१४ (८८११४)
यथा संक्रमते देहाद्देही त्रिपुरसूदन ।
तथास्य स्थानमाख्यास्ये पृथक्त्वेनेह शङ्कर ॥ १३-१६७-१५ (८८११५)
पादाभ्यां वैष्णवं स्थानमाप्नोति विनियोजनात् ।
पायुना मित्रमाप्नोति उपस्थेन प्रजापतिम् ॥ १३-१६७-१६ (८८११६)
नाभ्या च वारुणं स्थानं स्तनाभ्यां तु भवो लभेत्
बाहुभ्यां वासवं स्थानं श्रोत्राभ्यामाप्नुयाद्दिशः ।
आदित्यं चक्षुषा स्थानं मूर्ध्ना ब्रह्मण एव च ॥ १३-१६७-१७ (८८११७)
अथ मूर्धसु यः प्राणान्धारयेत समाहितः ।
बुद्ध्या मानमवाप्नोति द्रव्यावस्थं च संशयः ॥ १३-१६७-१८ (८८११८)
अव्यक्तात्परमं शुद्धमप्रमेयमनामयम् ।
तमाहुः परमं नित्यं यद्यदाप्नोति बुद्धिमान् ॥ १३-१६७-१९ (८८११९)
बुध्यमानाप्रबुद्धाभ्यां स बुद्ध इति पठ्यते ।
बुध्यमानमबुद्धश्च नित्यमेवानुपश्यति ॥ १३-१६७-२० (८८१२०)
विकारपुरुषस्त्वेष बुध्यमान इति स्मृतः ।
पञ्चविंशतितत्वं तत्प्रोच्यते तत्र संशयः ॥ १३-१६७-२१ (८८१२१)
स एष प्रकृतिस्थत्वात्तस्थुरित्युपदिश्यते ।
महानात्मा महादेव महानत्राधितिष्ठति ॥ १३-१६७-२२ (८८१२२)
अधिष्ठानादधिष्ठाता प्रोच्यते शास्त्रदर्शनात् ।
एष चेतयते देव मोहजालमबुद्धिमान् ॥ १३-१६७-२३ (८८१२३)
अव्यक्तस्यैव साधर्म्यमेतदाहुर्मनीषिणः ।
सोहं सोहमतो नित्यादज्ञानादिति मन्यते ॥ १३-१६७-२४ (८८१२४)
यदि बुध्यति चैवायं मन्येयमिति भास्वरः ।
न प्रबुद्धो न वर्तेत पानीयं मत्स्यको यथा ॥ १३-१६७-२५ (८८१२५)

देवता निखिलेनैताः प्रोक्तास्त्रिभुवनेश्वर ।
योगकृत्यं तु तावन्मे त्वं निबोधानुपूर्वशः ॥ १३-१६७-२६ (८८१२६)
शून्यागारेष्वरण्येषु सागरे वा गुहासु वा ।
विष्टम्भयित्वा त्रीन्दण्डानवाप्तो ह्यद्वयो भवेत् ॥ १३-१६७-२७ (८८१२७)
प्राङ्मुखोदङ्मुखो वापि तथा पश्चान्मुखोपि वा ।
दक्षिणावदनो वापि बद्ध्वा विधिवदासनम् ॥ १३-१६७-२८ (८८१२८)
स्वस्तिकेनोपसंविष्टः कायमुन्नाम्य भास्वरम् ।
यथोपदिष्टं गुरुणा तथा तद्ब्रह्म धारयेत् ॥ १३-१६७-२९ (८८१२९)
लघ्वाहारो यतो दान्तस्त्रिकालपरिवर्जकः ।
मूत्रोत्सर्गपुरीषाभ्यामाहारे च समाहितः ॥ १३-१६७-३० (८८१३०)
शेषकालं तु युञ्जीत मनसा सुसमाहितः ।
इन्द्रियाणीन्द्रियार्थेभ्यो मनसा विनिवर्तयेत् ॥ १३-१६७-३१ (८८१३१)
मनस्तथैव सङ्गृह्य बुद्ध्या बुद्धिमतां वर ।
विधावमानं धैर्येण विस्फुरन्तमितस्ततः ॥ १३-१६७-३२ (८८१३२)
निरुध्य सर्वसङ्कल्पांस्ततो वै स्थिरतां व्रजेत् ।
एकाग्रस्तद्विजानीयात्सर्वं गुह्यतमं परम् ॥ १३-१६७-३३ (८८१३३)
निवातस्थ इवालोलो यथा दीपोऽतिदीप्यते ।
ऊर्ध्वमेव न तिर्यक्च तथैवाभ्रान्ति ते मनः ॥ १३-१६७-३४ (८८१३४)
हृदिस्थस्तिष्ठते योसौ तस्यैवाभिमुखो यदा ।
मनो भवति देवेश पाषाणमिव निश्चलम् ॥ १३-१६७-३५ (८८१३५)
स निर्जने विनिर्घोषे सघोषे चाऽऽवसञ्जने ।
युक्तो यो न विकम्पेत योगी योगविधिः श्रुतः ॥ १३-१६७-३६ (८८१३६)
ततः पश्यति तद्ब्रह्म ज्वलदात्मनि संस्थितम् ।
विद्युदम्बुधरे यद्वत्तद्वदेकमनाश्रयम् ॥ १३-१६७-३७ (८८१३७)
तमस्यगाधे तिष्ठन्तं निस्तमस्कमचेतनम् ।
चेतयानमचेतं च दीप्यमानं स्वतेजसा ॥ १३-१६७-३८ (८८१३८)
अङ्गुष्ठपर्वमात्रं तन्नैश्रेयसमनिन्दितम् ।
महद्भूतमनन्तं च स्वतन्त्रं विगतज्वरम् ॥ १३-१६७-३९ (८८१३९)
ज्योतिषां ज्योतिषं देवं विष्णुमत्यन्तनिर्मलम् ।
नारायणमणीयांसमीश्वराणामधीश्वरम् ॥ १३-१६७-४० (८८१४०)
विश्वतः परमं नित्यं विश्वं नारायणं प्रभुम् ।
अविज्ञाय निमज्जन्ति लोकाः संसारसागरे ॥ १३-१६७-४१ (८८१४१)
यं दृष्ट्वा यतयस्तात न शोचन्ति गतज्वराः ।
जन्ममृत्युभयान्मुक्तास्तीर्णाः संसारसागरम् ॥ १३-१६७-४२ (८८१४२)
अणिमा लघिमा भूमा प्राप्तिः प्राकम्यमेव च ।
ईशित्वं च वशित्वं च यत्र कामावसायिता ।

एतदष्टगुणं योगं योगानाममितं स्मृतम् ॥ १३-१६७-४३ (८८१४३)
दृष्ट्वात्मानं निरात्मानमप्रमेयं सनातनम् ।
ते विशन्ति शरीराणि योगेनानेन भास्वरम् ।
दैत्यदेवमनुष्याणां बलेन बलवत्तमाः ॥ १३-१६७-४४ (८८१४४)
एतत्तत्वमनाद्यन्तं यद्भवाननुपृच्छति ।
नित्यं वयमुपास्यामो योगधर्मं सनातनम् ॥ १३-१६७-४५ (८८१४५)
योगधर्मान्न धर्मोस्ति गरीयान्सुरसत्तम ।
एतद्धर्म हि धर्माणामपुनर्भवसंस्कृतम् ॥ १३-१६७-४६ (८८१४६)
तत्वतः परमस्तीस्ति केचिदाहुर्मनीषिणः ।
केचिदाहुः परं नास्ति ये ज्ञानफलमाश्रिताः ॥ १३-१६७-४७ (८८१४७)
ज्ञानस्थः पुरुषस्त्वेष विकृतः स्वेन वर्णितः ।
ये ध्यानेनानुपश्यन्ति नित्यं योगपरायणाः ॥ १३-१६७-४८ (८८१४८)
तमेव पुरुषं देवं केचिदेव महेश्वर ।
नित्यमन्यतमाः प्राहुर्ज्ञानं परमकं स्मृतम् ॥ १३-१६७-४९ (८८१४९)
ज्ञानमेव विनिर्मुक्ताः सांख्या गच्छन्ति केवलम् ।
चिन्ताध्यात्मनि चान्यत्र योगाः परमबुद्धयः ॥ १३-१६७-५० (८८१५०)
उक्तमेतावदेतत्ते योगदर्शनमुत्तमम् ।
साङ्ख्यज्ञानं प्रवक्ष्यामि परिसंख्याविदर्शनम् ॥' ॥ १३-१६७-५१ (८८१५१)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
सप्तषष्ट्यधिकशततमोऽध्यायः ॥ १६७ ॥
Mahabharata - Anushaasana Parva - Chapter Footnotes

७-१६७-११ योऽग्निं याजयते नित्यमिति थ पाठः ॥
७-१६७-२१ पञ्चविंशतिकं तत्वमिति थ पाठः ॥
७-१६७-२७ त्रीन्दण्डानवाप्नोति च योगविदिति ट पाठः ॥

---

अनुससनपर्व-अध्यय१६८
॥ श्रीः ॥
१३.१६८. अध्यायः १६८

अथ दानधर्मपर्व ॥ १ ॥
Mahabharata - Anushaasana Parva - Chapter Topics
सनत्कुमारेण रुद्रंप्रति अव्यक्तादितत्वानां तारतम्यकथनपूर्वकं
तत्सृष्टिलयादिकथनम् ॥ १ ॥
तथा एतज्ज्ञानस्य संसारतारकत्वोक्तिः ॥ २ ॥

ग्सनत्कुमार उवाच ।
इन्द्रियेभ्यो मनः पूर्वमहङ्कारस्ततः परम् ।
अहङ्कारात्परा बुद्धिर्बुद्धेः परतरं महत् ॥ १३-१६८-१ (८८१५२)
महतः परमव्यक्तमव्यक्तात्पुरुषः परः ।
एतावदेतत्सांख्यानां दर्शनं देवसत्तम ॥ १३-१६८-२ (८८१५३)
अव्यक्तं बुद्ध्यहङ्कारौ महाभूतानि पञ्च च ।
मनस्तथा विशेषाश्च दश चैवेन्द्रियाणि च ।
एतास्तत्वचतुर्विंशन्महापुरुषसम्मिताः ॥ १३-१६८-३ (८८१५४)
बुद्ध्यामानेन देवेश चेतनेन महात्मना ।
संयोगमेतयोर्नित्यमाहुरव्यक्तपुंसयोः ॥ १३-१६८-४ (८८१५५)
एकत्वं च बहुत्वं च सर्गप्रलयकोटिशः ।
तमःसंज्ञितमेतद्धि प्रवदन्ति त्रिशूलधृक् ॥ १३-१६८-५ (८८१५६)
समुत्पाद्य यथाव्यक्ताज्जीवा यान्ति पुनःपुनः ।
आदिरेष महानात्मा गुणानामिति नः प्रभो ॥ १३-१६८-६ (८८१५७)
गुणस्थत्वाद्गुणं चैनमाहुरव्यक्तलक्षणम् ।
एतेनाध्युषितो व्यक्तस्त्रिगुणं चेतयत्युत ॥ १३-१६८-७ (८८१५८)
अचेतनः प्रकृत्येषु न चान्यमनुबुध्यते ।
बुध्यमानो ह्यहंकारो नित्यं मानाप्रबोधनात् ॥ १३-१६८-८ (८८१५९)
विमलस्व विशुद्धस्य नीरुजस्य महात्मनः ।
विमलोदरशीलः स्याद्बुध्यमानाप्रबुद्धयोः ॥ १३-१६८-९ (८८१६०)
द्रष्टा भवत्यभोक्ता च सत्वमूर्तिश्च निर्गुणः ।
बुध्यमानाप्रबुद्धाभ्यामन्य एव तु निर्गुणः ॥ १३-१६८-१० (८८१६१)
उपेक्षकः शुचिस्ताभ्यामुभाभ्यामयुतस्तथा ।
बुध्यमानो न बुध्येत बुद्धमेवं सनातनम् ॥ १३-१६८-११ (८८१६२)
स एव बुद्धेरव्यक्तस्वभावत्वादचेतनः ।
सोहमेव न मेऽन्योस्ति य एवमभिमन्यते ॥ १३-१६८-१२ (८८१६३)
न मन्यते ममान्योस्ति येन चेतोस्म्यचेतनः ।
एवमेवाभिमन्येत बुध्यमानोप्यनात्मवान् ॥ १३-१६८-१३ (८८१६४)
अहमेव न मेऽन्योस्ति न प्रबुद्धवशानुगः ।
अव्यक्तस्थो गुणानेष नित्यमेवाभिमन्यते ॥ १३-१६८-१४ (८८१६५)
तेनाधिष्ठिततत्वज्ञैर्महद्भिरभिधीयते ।
अहङ्कारेण संयुक्तस्ततस्ददभिमन्यते ॥ १३-१६८-१५ (८८१६६)
क्षेत्रं प्रविश्य दुर्बुद्धिर्बुद्ध्यमानो ह्यनात्मवान् ।

अहमेव सृजत्यन्यद्द्वितीयं लोकसारथिः ॥ १३-१६८-१६ (८८१६७)
सर्वाभावैरहङ्कारैस्तृतीयं सर्गसंज्ञितम् ।
ततो भूतान्यहङ्कारमहङ्कारो मनोऽसृजत् ॥ १३-१६८-१७ (८८१६८)
सर्वस्नोतस्यभिमुखं सम्प्रावर्तत बुद्धिमान् ।
तथैव यज्ञे भूतेषु विषयार्थी पुनःपुनः ।
इन्द्रियैः सह शूलाङ्क पञ्च पञ्चभिरेव च ॥ १३-१६८-१८ (८८१६९)
मनो वेद न चात्मानमङ्कारं प्रजापतिः ।
न वेद वाप्यहङ्कारो बुद्धिं बुद्धिमतांवर ॥ १३-१६८-१९ (८८१७०)
एवमेते महाभाग नेतरे नयवादिनः ।
अहङ्कारेण संयुक्तः स्रोतस्यभिमुखः सदा ॥ १३-१६८-२० (८८१७१)
एवमेष विकारात्मा महापुरुषसञ्ज्ञकः ।
प्रतनोति जगत्कृत्स्नं पुनराददते सकृत् ॥ १३-१६८-२१ (८८१७२)
ससंज्ञत्वाज्जगत्कृत्स्नमव्यक्तस्य हृदि स्थितम् ।
संविशद्रजनीं कृत्स्नां निशान्ते दिवसागमे ॥ १३-१६८-२२ (८८१७३)
पुनरात्मा विजयते बहवो निर्गुणास्तथा ।
अज्ञानेन समायुक्तः सोव्यक्तेन तमोत्मना ॥ १३-१६८-२३ (८८१७४)
यदि ह्येषो नु मन्येत ममास्ति परतो वरः ।
स पुनः पुनरात्मानं न कुर्यादाक्षिपेत च ॥ १३-१६८-२४ (८८१७५)
एतमव्यक्तविषयं सूक्ष्मं मन्येत बुद्धिमान् ।
पञ्चविंशं महादेव महापुरुषवैकृतम् ॥ १३-१६८-२५ (८८१७६)
प्रबुद्धौ बुद्धवानेतत्सृजमानमबुद्धवान् ।
गुणान्पुनश्च तानेव सोत्मनात्मनि निक्षिपेत् ॥ १३-१६८-२६ (८८१७७)
अव्यक्तस्य वशीभूतो योऽज्ञानस्य तमोत्मनः ।
बुध्यमानो ह्यबुद्धस्य बुद्धस्तदनुभुज्यते ॥ १३-१६८-२७ (८८१७८)
उपेक्षकः शुचिर्व्यग्रः सोलिङ्गः सोव्रणोऽमलः ।
षड्विंशो भगवानास्ते बुद्धः शुद्धो निरामयः ॥ १३-१६८-२८ (८८१७९)
अव्यक्तादिविशेषान्तमेतद्वैद्या वदन्त्युत ।
एतैरेव विहीनं तु केचिदाहुर्मनीषिणः ॥ १३-१६८-२९ (८८१८०)
निस्तत्वं बुध्यमानास्तु केचिदाहुर्महामते ।
केचिदाहुर्महात्मानस्तत्वसंज्ञितमेव तु ॥ १३-१६८-३० (८८१८१)
तत्वस्य श्रवणादेनं तत्वमेवं वदन्ति वै ।
सत्वसंश्रयणाच्चैव सत्ववन्तं महेश्वर ॥ १३-१६८-३१ (८८१८२)
एवमेष विकारात्मा बुध्यमानो महाभुज ।
अव्यक्तो भवते व्यक्तौ सत्वंसत्वं तथा गुणौ ।
विद्या च भवते विद्या भवेत्तु ग्रहसंज्ञितम् ॥ १३-१६८-३२ (८८१८३)
य एवमनुबुद्ध्यन्ते योगसाङ्ख्याश्च तत्वतः ।

तेऽव्यक्तं शङ्करागाढं मुञ्चन्ते शास्त्रबुद्धयः ॥१३-१६८-३३ (८८१८४)
तेषामेतत्तु वदतां शास्त्रार्थं सूक्ष्मदर्शिनाम् ।
बुद्धिर्विस्तीर्यते सर्वं तैलबिन्दुरिवाम्भसि ॥१३-१६८-३४ (८८१८५)
विद्या तु सर्वविद्यानामवबोध इति स्मृतः ।
येन विद्यामविद्यां च विन्दन्ति यतिसत्तमाः ॥१३-१६८-३५ (८८१८६)
सैषा त्रयी परा विद्या चतुर्थ्यान्वीक्षिकी स्मृता ।
यां बुद्ध्यमानो बुद्ध्येत बुद्ध्यात्मनि समं गतः ॥१३-१६८-३६ (८८१८७)
अप्रबुद्धमथाव्यक्तमविद्यासंज्ञिकं स्मृतम् ।
विमोहितं तु शोकेन केवलेन समन्वितम् ।
एतद्बुद्ध्या भवेद्बुद्धः किमन्यद्बुद्धिलक्षणम् ॥ १३-१६८-३७ (८८१८८)
ये त्वेतन्नावबुद्ध्यन्ते ते प्रबुद्धवशानुगाः ।
ते पुनःपुनरव्यक्ताज्जनिष्यन्त्यबुधांत्मनः ॥१३-१६८-३८ (८८१८९)
तमेव तुलयिष्यन्ति अबुद्धिवशवर्तिनः ।
ये चाप्यन्ये तन्मनसस्तेप्येतत्फलभागिनः ॥१३-१६८-३९ (८८१९०)
विदित्वैनं न शोचन्ति योगोपेतार्थदर्शिनः ।
स्वातन्त्र्यं प्रतिलप्स्यन्ते केवलत्वं च भास्वरम् ॥१३-१६८-४० (८८१९१)
अज्ञानबन्धनान्मुक्तास्तीर्णाः संसारबन्धनात् ।
अज्ञानसागरं घोरमगाधं तमसंज्ञकम् ।
यत्र मज्जन्ति भूतानि पुनःपुनररिंदम् ॥ १३-१६८-४१ (८८१९२)
एषा विद्या तथाऽविद्या कथिता ते मयाऽर्थतः ।
यस्मिन्देयं च नो ग्राह्यं सांख्याः सांख्यं तथैव च ॥१३-१६८-४२ (८८१९३)
तथा चैकत्वनानात्वमक्षरं क्षरमेव च ।
निगदिष्यामि देवेश विमोक्षं त्रिविधं च ते ॥१३-१६८-४३ (८८१९४)
बुद्ध्यमानाप्रबुद्धाभ्यामबुद्धस्य प्रपञ्चनम् ।
भूय एव निबोध त्वं देवानां देवसत्तम ॥१३-१६८-४४ (८८१९५)
यच्च किञ्च श्रुतं न स्याद्दृष्टं चैव न किञ्चन ।
तच्च ते सम्प्रवक्ष्यामि एकाग्रः शृणु तत्परः ॥' ॥ १३-१६८-४५ (८८१९६)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
अष्टषष्ट्यधिकशततमोऽध्यायः ॥१६८ ॥

---

अनुससनपर्व-अध्यय१६९
॥ श्रीः ॥
१३.१६९. अध्यायः १६९

अथ दानधर्मपर्व ॥ १ ॥

Mahabharata - Anushaasana Parva - Chapter Topics
सनत्कुमारेण रुद्रंप्रति प्राणिनां मरणसूचकदुर्निमित्तकथनपूर्वकं
जिजीविषोस्तत्पहिहारोपायकथनम् ॥ १ ॥
तथाऽनिच्छोर्भगवद्ध्यानेन शरीरत्यागस्य
पारत्रिकसुखसाधनत्वोक्तिः ॥ २ ॥
तथा भगवज्ज्ञानप्रशंसनपूर्वकं तदुपदेशपरंपराकथनम् ॥ ३ ॥

Mahabharata - Anushaasana Parva - Chapter Text

ग्सनत्कुमार उवाच ।
अरिष्टानि प्रवक्ष्यामि तत्वेन शृणु तद्भवान् ।
मध्य उत्तरतस्तात दक्षिणामुखनिष्ठितम् ॥ १३-१६९-१ (८८१९७)
विद्युत्संस्थानपुरुषं यदि पश्येत मानवः ।
वर्षत्रयेण जानीयाद्देहन्यासमुपस्थितम् ।
एतत्फलमंरिष्टस्य शङ्कराहुर्मनीषिणः। १३-१६९-२ (८८१९८)
शुद्धमण्डमादित्यमरश्मिमथ पश्यतः ।
वर्षार्धकेन जानीयाद्देहन्यासमुपस्थितम् ॥ १३-१६९-३ (८८१९९)
छिद्रां चन्द्रमसश्छायां पादावप्यनपश्यतः ।
संवत्सरेण जानीयाद्देहन्यासमुपस्थितम् ॥ १३-१६९-४ (८८२००)
कनीनिकायामशिरःपुरुषं यदि पश्यति ।
जानीयात्षट्सु मासेषु देहन्यासमुपस्थितम् ॥ १३-१६९-५ (८८२०१)
कर्णौ पिधाय हस्ताभ्यां शब्दं न शृणुयाद्यदि ।
विजानीयात्तु मासेन देहन्यासमुपस्थितम् ॥ १३-१६९-६ (८८२०२)
आमगन्धमुपाघ्राति सुरभिं प्राप्य भास्वरम् ।
देवतायतनस्थोपि सप्तरात्रेण मृत्युभाक् ॥ १३-१६९-७ (८८२०३)
सर्वाङ्गधारणावस्थां धारयेत समाहितः ।
यथा स मृत्युं जयति नान्यथेह महेश्वर ।
यदि जीवितुमिच्छेत चिरकालं महामुने ॥ १३-१६९-८ (८८२०४)
अथ नेच्छेच्चिरं कालं त्यजेदात्मानमात्मना ।
केवलं चिन्तयानस्तु निष्कलं स निरामयम् ॥ १३-१६९-९ (८८२०५)
अथ तं निर्विकारं तु प्रकृते परमं शुचिः ।
पुरुषं देहसाधर्म्यं देहन्यासमुपाश्नुयात् ॥ १३-१६९-१० (८८२०६)
जाग्रतो हि मयोक्तानि तवारिष्टानि तत्वतः ।
धारणाच्चैव सर्वाङ्गे मृत्यु जीयात्सुरर्षभ ॥ १३-१६९-११ (८८२०७)
एकत्वदर्शनं भूयो नानात्वं च निबोध मे ।
अक्षरं च क्षरं चैव चतुष्टयविधानतः ॥ १३-१६९-१२ (८८२०८)

अव्यक्तादीनि तत्वानि सर्वाण्येव महाद्युते ।
आहुश्चतुर्विंशतितमं विकारपुरुषान्वितम् ॥ १३-१६९-१३ (८८२०९)
एकत्वदर्शनं चैव नानात्वेन वरं स्मृतम् ।
पञ्चविंशतिवर्गः स्यादपवर्गोऽजरामरः ॥ १३-१६९-१४ (८८२१०)
स निर्विकारः पुरुषस्तत्वेनैवोपदिश्यते ।
स एव पञ्चविंशस्तु विकारः पुरुषः स्मृतः ॥ १३-१६९-१५ (८८२११)
यद्येष निर्विकारः स्यात्तत्वं न तु भवेद्भव ।
विकारो विद्यमानस्तु तत्वसंज्ञकमुच्यते ॥ १३-१६९-१६ (८८२१२)
यद्योषोऽव्यक्ततां नैति व्यतिरेकान्न संशयः ।
तथा भवति निस्तत्वस्तथा सत्वस्तथागुणः ॥ १३-१६९-१७ (८८२१३)
विकारगुणसंत्यागात्प्रकृत्यन्यत्वता शुचिः ।
तदा नानात्वतामेति सर्गहीनोऽपवर्गभाक् ॥ १३-१६९-१८ (८८२१४)
बोध्यमानः प्रबुध्येत समो भवति बुद्धिमान् ।
अक्षरश्च भवत्येष यथावा च्युतवान्क्षणात् ॥ १३-१६९-१९ (८८२१५)
अव्यक्ताव्यक्तिरुक्ता स्यान्निर्गुणस्य गुणाकरात् ।
एतदेकत्वनानात्वमक्षरः क्षर एव च ॥ १३-१६९-२० (८८२१६)
व्याख्यातं तव शूलाङ्क तथारिष्टानि चैव हि ।
विमोक्षलक्षणं शेषं तदपीह ब्रवीमि ते ।
यं ज्ञात्वा यतयः प्राप्ताः केवलत्वमनामयम् ॥ १३-१६९-२१ (८८२१७)
साङ्ख्याश्चाप्यथ योगाश्च दग्धपङ्का गतज्वराः ।
अमूर्तित्वमनुप्राप्ता निर्गुणा निर्भया भव ॥ १३-१६९-२२ (८८२१८)
विपाप्मानो महादेव मुक्ताः संसारसागरात् ।
सरणे प्रजनादाने गुणानां प्रकृतिः सदा ।
परा प्रमत्ता सततमेतावत्कार्यकारणम् ॥ १३-१६९-२३ (८८२१९)
असच्चैव च सच्चैव कुरुते स पुनः पुनः ।
चैतन्येन पुराणेन चेतनाचेतनात्परः ॥ १३-१६९-२४ (८८२२०)
यस्तु चेतयते चेतो मनसा चैकबुद्धिकम् ।
स नैव सन्न चैवासन्सदसन्न च संस्मृतः ॥ १३-१६९-२५ (८८२२१)
व्यतिरिक्तश्च शुद्धश्च सोऽन्यश्चाप्रकृतिस्तथा ।
उपेक्षकश्च प्रकृतेर्विकारपुरुषः स्मृतः ॥ १३-१६९-२६ (८८२२२)
विकारपुरुषेणैषा संयुक्ता सृजते जगत् ।
पुनराददते चैव गुणानामन्यथात्मनि ॥ १३-१६९-२७ (८८२२३)
मत्स्योदकात्ससंज्ञातः प्रकृतेरेव कर्मणः ।
तद्वत्क्षेत्रसहस्राणि स एव प्रकरिष्यति ॥ १३-१६९-२८ (८८२२४)
क्षेत्रप्रलयतज्ज्ञस्तु क्षेत्रज्ञ इति चोच्यते ।
सयोगो नित्य इत्याहुर्ये जनास्तत्वदर्शिनः ॥ १३-१६९-२९ (८८२२५)

एवमेष ह्यसत्सच्च विकारपुरुषः स्मृतः ।
विकारापद्यमानं तु विकृतिं प्रवदन्ति नः ॥ १३-१६९-३० (८८२२६)
यदा त्वेष विकारस्य प्रकृतानिति मन्यते ।
तदा विकारतामेति विकारान्यत्वतां व्रजेत् ॥ १३-१६९-३१ (८८२२७)
प्रकृत्या च विकारैश्च व्यतिरिक्तो यदा भवेत् ।
शुचि यत्परमं शुद्धं प्रतिबुद्धं सनातनम् ।
अयुक्तं निष्कलं शुद्धमव्ययं चाजरामरम् ॥ १३-१६९-३२ (८८२२८)
समेत्य तेन शुद्धेन बुध्यमानः स भास्वरः ।
विमोक्षं भजते व्यक्तादप्रबुद्धादचेतनात् ॥ १३-१६९-३३ (८८२२९)
उदुम्बराद्वा मशकः प्रलयान्निर्गतो यथा ।
तथाऽव्यक्तस्य संत्यागान्निर्ममः पञ्च विंशकः ॥ १३-१६९-३४ (८८२३०)
यथा पुष्करपर्णस्थो जलबिन्दुर्न संश्लिषेत् ।
तथैवाव्यक्तविषये न लिप्येत्पञ्चविंशकः ॥ १३-१६९-३५ (८८२३१)
आकाश इव निःसङ्गस्तथा सङ्गस्त्था वरः ।
पञ्चविंशतिमो बुद्धो बुद्धेनि समतां गतः ॥ १३-१६९-३६ (८८२३२)
एतद्धि प्रकृतं ज्ञानं तत्वतश्च समुत्थितम् ।
पूर्वजेभ्यस्तथोत्पन्नं ब्रह्मजेभ्यस्तथानघ ॥ १३-१६९-३७ (८८२३३)
आदिसर्गो महाबाहो तामसेनावृतं परम् ।
प्रतिष्टावयवंदेवमभेद्यमजरामरम् ॥ १३-१६९-३८ (८८२३४)
सनकः सनन्दनश्चैवि तृतीयश्च सनातनः ।
ते विदुः परमं धर्ममव्ययं व्ययधर्षणम् ॥ १३-१६९-३९ (८८२३५)
अव्यक्तात्परमात्सूक्ष्मादव्रणान्मूर्तिसंज्ञकात् ।
क्षेत्रज्ञो भगवानास्ते नरायणपरायणः ॥ १३-१६९-४० (८८२३६)
अस्माकं सहजातानामुत्पन्नं ज्ञानमुत्तमम् ।
एते हि मूर्तिमन्तो वै लोकान्प्रविचरामहे ॥ १३-१६९-४१ (८८२३७)
पुनःपुनः प्रजाता वै तत्रतत्र पिनाकधृक् ।
द्वन्द्वैर्विरज्यमानस्य ज्ञानमुत्पन्नमुत्तमम् ॥ १३-१६९-४२ (८८२३८)
कपिलान्मूलआचार्यात्तत्वबुद्धिविनिश्चयम् ।
योगसांख्यमवाप्तं मे कात्स्न्र्येन मुनिसत्तमात् ॥ १३-१६९-४३ (८८२३९)
तेन संबोधिताः शिष्या बहवस्तत्वदर्शिनः ।
तद्बुद्ध्वा बहवः शिष्या मयाप्येतन्निदर्शिताः ॥ १३-१६९-४४ (८८२४०)
जन्ममृत्युहरं तथ्यं ज्ञानं ज्ञेयं सनातनम् ।
यज्ज्ञात्वा नानुशोचन्ति तत्वज्ञाना निरिन्द्रियाः ॥ १३-१६९-४५ (८८२४१)
शुद्धबीजमलाश्चैव विपङ्का वै निरक्षराः ।
स्वतन्त्रास्ते स्वतन्त्रेण सम्मिता निष्कलाः स्मृताः ॥ १३-१६९-४६ (८८२४२)
शाश्वताश्चाव्ययाश्चैव तमोग्राह्याश्च भास्वर ।

विपाप्मानस्तथा सर्वे सत्वस्थाश्चापि निर्व्रणाः ॥ १३-१६९-४७ (८८२४३)
विमुक्ताः केवलाश्चैव वीतमोहभयास्तथा ।
अमूर्तास्ते महाभाग सर्वे च विगतज्वराः ॥ १३-१६९-४८ (८८२४४)
हिरण्यनाभस्त्रिशिरास्तथा प्रह्लादभास्करौ ।
वसुर्विश्वावसुश्चैव सार्धं पञ्चशिखस्तथा ॥ १३-१६९-४९ (८८२४५)
गार्ग्योऽथासुरिरावन्त्यो गौतमो वृत एव च ।
कात्यायनोऽथ नमुचिर्हरिश्च दमनश्चि ह ॥ १३-१६९-५० (८८२४६)
एते चान्ये च बहवस्तत्वमेवोपदर्शिताः ।
केचिन्मुक्ताः स्थिताः केचिच्छन्दतश्चापरे मृताः ॥ १३-१६९-५१ (८८२४७)
दर्शितास्त्रिविधं बन्धं विमोक्षं त्रिविधं तथा ।
अज्ञानं चैव रागश्च संयोगं प्राकृतं तथा ॥ १३-१६९-५२ (८८२४८)
एतेभ्यो बन्धनं प्रोक्तं विमोक्षमपि मे शृणु ।
परितस्तावता सम्यक्सम्बन्धो यावता कृतः ॥ १३-१६९-५३ (८८२४९)
कृत्स्नक्षयपरित्यागाद्विमोक्ष इति नः श्रुतिः ।
निवृत्तः सर्वसङ्गेभ्यः केवलः पुरुषोऽमलः ॥ १३-१६९-५४ (८८२५०)
भीष्म उवाच। १३-१६९-५५क्ष् (७३७२)
१३-१६९-५५ (८८२५१)
इत्येवमुक्त्वा भगवानीश्वराय महात्मने ।
सनत्कुमारः प्रययावाकाशं समुपाश्रितः ॥'

---

अनुससनपर्व-अध्यय१७०
॥ श्रीः ॥
१३.१७०. अध्यायः १७०

अथ दानधर्मपर्व ॥ १ ॥
Mahabharata - Anushaasana Parva - Chapter Topics
भीष्मेण युधिष्ठिरंप्रति तीर्थशौचनिरूपणम् ॥ १.।
Mahabharata - Anushaasana Parva - Chapter Text

युधिष्ठिर उवाच ।
यद्वरं सर्वतीर्थानां तद्ब्रवीहि पितामह ।
यत्र चैव परं शौचं तन्मे व्याख्यातुमर्हसि ॥ १३-१७०-१ (८८२५२)
भीष्म उवाच। १३-१७०-२क्ष् (७३७३)
सर्वाणि खलु तीर्थानि गुणवन्ति मनीषिणः ।
यत्तु तीर्थं च शौचं च तन्मे शृणु समाहितः ॥ १३-१७०-२ (८८२५३)
अगाधे विमले शुद्धे सत्यतीर्थे धृतिह्रदे ।

स्नातव्यं मानसे तीर्थे सत्वमालम्ब्य शाश्वतम् ॥१३-१७०-३ (८८२५४)
तीर्थशौचं तपो ज्ञानं मार्दवं सत्यमार्जवम् ।
अहिंसा सर्वभूतानामानृशंस्यं दमः शमः ॥१३-१७०-४ (८८२५५)
निर्ममा निरहङ्कारा निर्द्वन्द्वा निष्परिग्रहाः ।
योगिनस्तीर्थभूतास्ते तीर्थं परममुच्यते ॥१३-१७०-५ (८८२५६)
नारायणेऽथ रुद्रे वा भक्तिस्तीर्थं परं मतम् ।
शौचलक्षणमेतत्ते सर्वत्रैवान्ववेक्षतः ॥१३-१७०-६ (८८२५७)
रजस्तमःसत्वमथो येषां निर्धूतमात्मना ।
तीर्थमाचारशुद्धिश्च स्वमार्गपरिमार्गणम्। १३-१७०-७ (८८२५८)
सर्वत्यागेष्वभिरताः सर्वज्ञाः समदर्शिनः ।
शौचष्वेतेष्वभिरतास्ते तीर्थशुचयोऽपि च ॥१३-१७०-८ (८८२५९)
नोदकक्लिन्नगात्रस्तु स्नात इत्यभिधीयते ।
स स्नातो यो दमस्नातः स बाह्याभ्यन्तरः शुचिः ॥१३-१७०-९ (८८२६०)
अदृष्टेष्वनपेक्षा ये प्राप्तेष्वर्थेषु निर्ममाः ।
शौचमेव परं तेषां येषां नोत्पद्यते स्पृहा ॥१३-१७०-१० (८८२६१)
प्रज्ञानं शौचमेवेह शरीरस्य विशेषतः ।
तथा निष्किंचनत्वं च मनसश्च प्रसन्नता ॥१३-१७०-११ (८८२६२)
वृत्तं शौचं महाशौचं तीर्थशौचमतः परम् ।
ज्ञानोत्पन्नं च यच्छौचं तच्छौचं परमं स्मृतम्
॥१३-१७०-१२ (८८२६३)
मनसा च प्रदीप्तेन ब्रह्मज्ञानजलेन च ।
स्नाता ये मानसे तीर्थे तज्ज्ञाः क्षेत्रज्ञदर्शनाः ॥१३-१७०-१३ (८८२६४)
समारोपितशौचस्तु नित्यं भवसमन्वितः ।
केवलं गुणसम्पन्नः शुचिरेव नरः सदा ॥१३-१७०-१४ (८८२६५)
शरीरस्थानि तीर्थानि प्रोक्तान्येतानि भारत ।
पृथिव्यां यानि तीर्थानि पुण्यानि शृणु तान्यपि ॥१३-१७०-१५ (८८२६६)
शरीरस्य यथोद्देशः शरीरोपरि निर्मिताः ।
तथा पृथिव्या भागाश्च पुण्यानि सलिलानि च ॥१३-१७०-१६ (८८२६७)
कीर्तनाच्चैव तीर्थस्य स्नानाच्च पितृतर्पणात् ।
शोध्यं हि पातकं तीर्थे पूता यान्ति सुखं दिवम्। १३-१७०-१७ (८८२६८)
परिग्रहाच्च साधूनां पृथिव्याश्चैव तेजसा ।
अतीव पुण्यभागास्ते सलिलस्य च तेजसा ॥१३-१७०-१८ (८८२६९)
मनसश्च पृथिव्याश्च पुण्यास्तीर्थास्तथापरे ।
उभयोरेव यः स्नायात्स सिद्धिं शीघ्रमाप्नुयात् ॥१३-१७०-१९ (८८२७०)
यथा फलं क्रियाहीनं क्रिया वा फलवर्जिता ।
नेह साधयते कार्यं समायुक्ता तु सिध्यति ॥१३-१७०-२० (८८२७१)

एवं शरीरशौचेन तीर्थशौचेन चान्वितः ।
शुचिः सिद्धिमवाप्नोति द्विविधं शौचमुत्तमम् ॥ ॥ १३-१७०-२१ (८८२७२)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
सप्तत्यधिकशततमोऽध्यायः ॥ १७० ॥
Mahabharata - Anushaasana Parva - Chapter Footnotes

७-१७०-७ तत्त्ववित्त्वनहंबुद्धिस्तीर्थप्रवरमुच्यते इति झ पाठः ॥

---

अनुससनपर्व-अध्यय१७१
॥ श्रीः ॥
१३.१७१. अध्यायः १७१

अथ दानधर्मपर्व ॥ १ ॥
Mahabharata - Anushaasana Parva - Chapter Topics
भीष्मेण युधिष्ठिरंप्रति मार्गशीर्षादि
कार्तिकान्तेषु द्वादशमासेषु द्वादशद्वादशीषु
केशवादिदामोदरान्तभगवद्रूपविशेषपूजाफलविशेषकथनम् ॥ १ ॥

Mahabharata - Anushaasana Parva - Chapter Text

श्क्युधिष्ठिर उवाच ।
सर्वेषामुपवासानां यच्छ्रेयः सुमहत्फलम् ।
यच्चाप्यसंशयं लोके तन्मे त्वं वक्तुमर्हसि ॥ १३-१७१-१ (८८२७३)
भीष्म उवाच। १३-१७१-२क्ष् (७३७४)
शृणु राजन्यथा गीतं स्वयमेव स्वयंभुवा ।
यत्कृत्वा निर्वृतो भूयात्पुरुषो नात्र संशयः ॥ १३-१७१-२ (८८२७४)
द्वादश्यां मार्गशीर्षे तु अहोरात्रेण केशवम् ।
अर्च्याश्वमेधं प्राप्नोति दुष्कृतं चास्य नश्यति ॥ १३-१७१-३ (८८२७५)
तथैव पौषमासे तु पूज्यो नारायणेति च ।
वाजपेयमवाप्नोति सिद्धिं च परमां व्रजेत् ॥ १३-१७१-४ (८८२७६)
अहोरात्रेण द्वादश्यां माघमासे तु माघवम् ।
राजसूयमवाप्नोति कुलं चैव समुद्धरेत् ॥ १३-१७१-५ (८८२७७)
तथैव फाल्गुने मासि गोविन्देति च पूजयन् ।
अतिरात्रमवाप्नोति सोमलोकं च गच्छति ॥ १३-१७१-६ (८८२७८)
अहोरात्रेण द्वादश्यां चैत्रे विष्णुरिति स्मरन् ।

पौण्डरीकमवाप्नोति देवलोकं च गच्छति ॥ १३-१७१-७ (८८२७९)
वैशाखमासे द्वादश्यां पूजयन्मधुसूदनम् ।
अग्निष्टोममवाप्नोति सोमलोकं च गच्छति ॥ १३-१७१-८ (८८२८०)
अहोरात्रेण द्वादश्यां ज्येष्ठे मासि त्रिविक्रमम् ।
गवां मेधमवाप्नोति अप्सरोभिश्च मोदते ॥ १३-१७१-९ (८८२८१)
आषाढे मासि द्वादश्यां वामनेति च पूजयन् ।
नरमेधमवाप्नोति पुण्यं च लभते महत् ॥ १३-१७१-१० (८८२८२)
अहोरात्रेण द्वादश्यां श्रावणे मासि श्रीधरम् ।
पञ्चयज्ञानवाप्नोति विमानस्थश्च मोदते ॥ १३-१७१-११ (८८२८३)
तथा भाद्रपदे मासि हृषीकेशेति पूजयन् ।
सौत्रामणिमवाप्नोति पूतात्मा भवते च हि ॥ १३-१७१-१२ (८८२८४)
द्वादश्यामाश्विने मासि पद्मनाभेति चार्चयन् ।
गोसहस्रफलं पुण्यं प्राप्नुयान्नात्र संशयः ॥ १३-१७१-१३ (८८२८५)
द्वादश्यां कार्तिके मासि पूज्यो दामोदरेति च ।
गवां यज्ञमवाप्नोति पुमान्स्त्री वा न संशयः ॥ १३-१७१-१४ (८८२८६)
अर्चयेत्पुण्डरीकाक्षमेवं संवत्सरं तु यः ।
जातिस्मरत्वं प्राप्नोति विन्द्याद्बहु सुवर्णकम् ॥ १३-१७१-१५ (८८२८७)
अहन्यहनि तद्भावमुपेन्द्रं योऽधिगच्छति ।
समाप्ते भोजयेद्विप्रानथवा दापयेद्घृतम् ॥ १३-१७१-१६ (८८२८८)
अतः परं नोपवासो भवतीति विनिश्चयः ॥
उवाच भगवान्विष्णुः स्वयमेव पुरातनम् ॥ ॥ १३-१७१-१७ (८८२८९)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
एकसप्तत्यधिकशततमोऽध्यायः ॥ १७१ ॥
Mahabharata - Anushaasana Parva - Chapter Footnotes

क एतदाद्यध्यायद्वयं झ पुस्तक एव दृश्यते। ७-१७१-३ अर्च्य
अभ्यर्च्य। ।

---

अनुससनपर्व-अध्यय१७२
॥ श्रीः ॥
१३.१७२. अध्यायः १७२

अथ दानधर्मपर्व ॥ १ ॥
Mahabharata - Anushaasana Parva - Chapter Topics
भीष्मेण युधिष्ठिरंप्रति

शरीरसौन्दर्यादिफलकचान्द्रव्रताचरणप्रकारकथनम् ॥ १ ॥

Mahabharata - Anushaasana Parva - Chapter Text

श्वैशम्पायन उवाच ।
शरतल्पगतं भीष्मं वृद्धं कुरुपितामहम् ।
उपगम्य महाप्राज्ञः पर्यपृच्छद्युधिष्ठिरः ॥ १३-१७२-१ (८८२९०)
अङ्गानां रूपसौभाग्यं प्रियं चैव कथं भवेत् ।
धर्मार्थकामसंयुक्तः सुखभागी कथं भवेत् ॥ १३-१७२-२ (८८२९१)
भीष्म उवाच। १३-१७२-३क्ष् (७३७५)
मार्गशीर्षस्य मासस्य चन्द्रे मूलेन संयुते ।
पादौ मूलेन राजेन्द्रि जङ्घायामथ रोहिणीम् ॥ १३-१७२-३ (८८२९२)
अश्विन्यां सक्थिनी चैव ऊरू चाषाढयोस्तथा ।
गुह्यं तु फाल्गुनी विद्यात्कृत्तिका कटिकास्तथा ॥ १३-१७२-४ (८८२९३)
नाभिं भाद्रपदे विद्याद्रेवत्यामक्षिमण्डलम् ।
पृष्ठमेव धनिष्ठासु अनुराधोत्तरास्तथा ॥ १३-१७२-५ (८८२९४)
बाहुभ्यां तु विशाखासु हस्तौ हस्तेन निर्दिशेत् ।
पुनर्वस्वङ्गुली राजन्नाश्लेषासु नखास्तथा ॥ १३-१७२-६ (८८२९५)
ग्रीवां ज्येष्ठा च राजेन्द्र श्रवणेन तु कर्णयोः ।
मुखं पुष्येण दानेन दन्तोष्ठौ स्वातिरुच्यते ॥ १३-१७२-७ (८८२९६)
हासं शतभिषां चैव मघां चैवाथ नासिकाम् ।
नेत्रे मृगशिरो विद्याल्ललाटे मित्रमेव तु ॥ १३-१७२-८ (८८२९७)
भरण्यां तु शिरो विद्यात्केशानार्द्रा नराधिप ।
समाप्ते तु घृतं दद्याद्ब्राह्मणे वेदपारगे ॥ १३-१७२-९ (८८२९८)
सुभगो दर्शनीयश्च ज्ञानभाग्यथ जानते ।
जायते परिपूर्णाङ्गः पौर्णमास्येव चन्द्रमाः ॥ ॥ १३-१७२-१० (८८२९९)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
द्विसप्तत्यधिकशततमोऽध्यायः ॥ १७२ ॥

Mahabharata - Anushaasana Parva - Chapter Footnotes

७-१७२-३ इष्टकामनासिद्ध्यर्थं चान्द्रव्रतमाह मार्गेति
। मार्गशीर्षशुक्लप्रतिपदि मूलनक्षत्रयोगे स्तीदं चान्द्रं
व्रतमारभेत। तत्र चन्द्रावयवेषु नक्षत्राणि न्यसेत्
पादौ मूलेनेत्यादिना। स्वदेवतासहितेन मूलेन चन्द्रस्य पादौ
कल्पयेदित्यर्थः। एवं रोहिण्यादिभिः सदेवताभिर्जङ्घादयः

कल्पनीयाः। सर्वत्र विभक्तिव्यत्यय आर्षः ॥
७-१७२-४ आषाढाद्वयं फाल्गुनीद्वयं भाद्रपदाद्वयं च ज्ञेयम् ॥
७-१७२-१० एवं कुर्वन्विकलाङ्गोऽपि पौर्णमास्यां सकलाङ्गो भवति
एतत्सदृष्टान्तमाह परिपूर्णाङ्ग इति ॥

---

अनुससनपर्व-अध्यय१७३
॥ श्रीः ॥
१३.१७३. अध्यायः १७३

अथ दानधर्मपर्व ॥ १ ॥
Mahabharata - Anushaasana Parva - Chapter Topics
बृहस्पतिना युधिष्ठिरंप्रति देहिनां जननादिप्रकारनिरूपणम् ॥ १ ॥
तथा प्राणिनां दुष्कर्मविशेषफलतया तिर्यग्योनिविशेषेषु
जननकथनम् ॥ २ ॥

Mahabharata - Anushaasana Parva - Chapter Text

युधिष्ठिर उवाच ।
पितामह महाप्राज्ञ सर्वशास्त्रविशारद ।
श्रोतुमिच्छामि मर्त्यानां संसारविधिमुत्तमम् ॥ १३-१७३-१ (८८३००)
केन वृत्तेन राजेन्द्र वर्तमाना नरा भुवि ।
प्राप्नुवन्त्युत्तमं स्वर्गं कथं च नरकं नृप ॥ १३-१७३-२ (८८३०१)
मृतं शरीरमुत्सृज्य काष्ठलोष्टसमं जनाः ।
प्रयान्त्यमुं लोकमितः को वैताननुगच्छति ॥ भीष्म उवाच।
१३-१७३-३ (८८३०२)
दूरादायाति भगवान्बृहस्पतिरुदारधीः ।
पृच्छैनं सुमहाभागमेतद्गुह्यं सनातनम् ॥ १३-१७३-४ (८८३०३)
नैतदन्येन शक्यं हि वक्तुं केनचिदद्य वै ।
वक्ता बृहस्पतिसमो न ह्यन्यो विद्यते क्वचित् ॥ वैशम्पायन उवाच।
१३-१७३-५ (८८३०४)
तयोः संवदतोरेवं पार्थगाङ्गेययोस्तदा ।
आजगाम विशुद्धात्मा भगवान्स बृहस्पतिः ॥ १३-१७३-६ (८८३०५)
ततो राजा समुत्थाय धृतराष्ट्रपुरोगमः ।
पूजामनुषमां चक्रे सर्वे ते च सभासदः ॥ १३-१७३-७ (८८३०६)
ततो धर्मसुतो राजा भगवन्तं बृहस्पतिम् ।
उपगम्य यथान्यायं प्रश्नं पप्रच्छ तत्त्वतः ॥ १३-१७३-८ (८८३०७)

भगवन्सर्वधर्मज्ञ सर्वशास्त्रविशारद ।
मर्त्यस्य कः सहायो वै पिता माता सुतो गुरुः ।ज्ञातिसम्बन्धिवर्गश्च
मित्रवर्गस्तथैव च ॥ १३-१७३-९ (८८३०८)
मृतं शरीरमुत्सृज्य काष्ठलोष्टसमं जनाः ।
गच्छन्त्यमुं च लोकं वै क एताननुगच्छति ॥ बृहस्पतिरुवाच।
१३-१७३-१० (८८३०९)
एकः प्रसूयते राजन्नेक एव विनश्यति ।
एकस्तरति दुर्गाणि गच्छत्येकस्तु दुर्गतिम् ॥ १३-१७३-११ (८८३१०)
न सहायः पिता माता तथा भ्राता सुतो गुरुः ।
ज्ञातिसम्बन्धिवर्गश्च मित्रवर्गस्तथैव च ॥ १३-१७३-१२ (८८३११)
मृतं शरीरमुत्सृज्य काष्ठलोष्टसमं जनाः ।
मुहूर्तमुपयुज्याथ ततो यान्ति पराङ्मुखाः ॥ १३-१७३-१३ (८८३१२)
तैस्तच्छरीरमुत्सृष्टं धर्म एकोऽनुगच्छति ।
तस्माद्धर्मः सहायार्थे सेवितव्यः सदा नृपः ॥ १३-१७३-१४ (८८३१३)
प्राणी धर्मसमायुक्तो गच्छेत्स्वर्गगतिं पराम् ।
तथैवाधर्मसंयुक्तो नरकं चोपपद्यते ॥ १३-१७३-१५ (८८३१४)
तस्मान्न्यायागतैरर्थैर्धर्मं सेवेत पण्डितः ।
धर्म एको मनुष्याणां सहायः पारलौकिकः ॥ १३-१७३-१६ (८८३१५)
लोभान्मोहादनुक्रोशाद्भयाद्वाऽप्यबहुश्रुतः ।
नरः करोत्यकार्याणि परार्थे लोभमोहितः ॥ १३-१७३-१७ (८८३१६)
धर्मश्चार्थश्च कामश्च त्रितयं जीविते फलम् ।
एतत्त्रयमवाप्तव्यमधर्मपरिवर्जितम् ॥ युधिष्ठिर उवाच।
१३-१७३-१८ (८८३१७)
श्रुतं भगवतो वाक्यं धर्मयुक्तं परं हितम् ।
शरीरनिश्चयं ज्ञातुं बुद्धिस्तु मम जायते ॥ १३-१७३-१९ (८८३१८)
मृतं शरीरं हि नृणां सूक्ष्ममव्यक्ततां गतम् ।
अचक्षुर्विषयं प्राप्तं कथं धर्मोऽनुगच्छति
॥ बृहस्पतिरुवाच। १३-१७३-२० (८८३१९)
पृथिवी वायुराकाशमापो ज्योतिरनन्तरम् ।
बुद्धिरात्मा च सहिता धर्मं पश्यन्ति नित्यदा ॥ १३-१७३-२१ (८८३२०)
प्राणिनामिह सर्वेषां साक्षिभूतं दिवानिशम् ।
एतैश्च सह धर्मोऽपि तं जीवमनुगच्छति ॥ १३-१७३-२२ (८८३२१)
त्वगस्थि मांसं शुक्रं च शोणितं च महामते ।
शरीरं वर्जयन्त्येते जीवितेन विवर्जितम् ॥ १३-१७३-२३ (८८३२२)
ततो धर्मसमायुक्तः स जीवः सुखमेधते ।
इह लोके परे चैव किं भूयः कथयामि ते ॥ युधिष्ठिर उवाच।

१३-१७३-२४ (८८३२३)
तद्दर्शितं भगवता यथा धर्मोऽनुगच्छति ।
एतत्तु ज्ञातुमिच्छामि कथं रेतः प्रवर्तते ॥ बृहस्पतिरुवाच।
१३-१७३-२५ (८८३२४)
अन्नमश्नन्ति यद्देवाः शरीरस्था नरेश्वर ।
पृथिवी वायुराकाशमापो ज्योतिर्मनस्तथा ॥ १३-१७३-२६ (८८३२५)
ततस्तृप्तेषु राजेन्द्र तेषु भूतेषु पञ्चसु ।
मनःषष्ठेषु शुद्धात्मन्रेतः सम्पद्यते महत् ॥ १३-१७३-२७ (८८३२६)
ततो गर्भः सम्भवति श्लेषात्स्त्रीपुंसयोर्नृप ।
एतत्ते सर्वमाख्यातं भूयः किं श्रोतुमिच्छसि ॥ युधिष्ठिर उवाच।
१३-१७३-२८ (८८३२७)
आख्यातं मे भगवता गर्भः सञ्जायते यथा ।
यथा जातस्तु पुरुषः प्रपद्यति तदुच्यताम् ॥ बृहस्पतिरुवाच।
१३-१७३-२९ (८८३२८)
आसन्नमात्रः पुरुषस्तैर्भूतैरभिभूयते ।
विप्रयुक्तश्च तैर्भूतैः पुनर्यात्यपरां गतिम् ।
स च भूतसमायुक्तः प्राप्नुते जीव एव हि ॥ १३-१७३-३० (८८३२९)
ततोऽस्य कर्म पश्यन्ति शुभं वा यदि वाशुभम् ।
देवताः पञ्चभूतस्थाः किं भूयः श्रोतुमिच्छसि ॥ युधिष्ठिर
उवाच। १३-१७३-३१ (८८३३०)
त्वगस्थिमांसमुत्सृज्य तैश्च भूतैर्विवर्जितः ।
जीवः सह वसन्कृत्स्नं सुखदुःखसहः प्रभो ॥ बृहस्पतिरुवाच।
१३-१७३-३२ (८८३३१)
ंभोगवश्यं कर्मवश्यं यातनावश्यमित्यपि ।
एतत्त्रयाणामासाद्य कर्मतः सोऽश्नुते फलम् ॥' १३-१७३-३३ (८८३३२)
जीवः कर्मसमायुक्तः शीघ्रं रेतस्त्वमागतः ।
स्त्रीणां पुष्पं समासाद्य सूतिकाले लभेत तत् ॥ १३-१७३-३४ (८८३३३)
यमस्य पुरुषैः क्लेसं यमस्य पुरुषैर्वधम् ।
दुःखं संसारचक्रं च नरः क्लेशं स विन्दति ॥ १३-१७३-३५ (८८३३४)
इह लोके स च प्राणी जन्मप्रभृति पार्थिव ।
सुकृतं कर्म वै भुङ्क्ते धर्मस्य फलमाश्रितः ॥ १३-१७३-३६ (८८३३५)
यदि धर्मं यथाशक्ति जन्मप्रभृति सेवते ।
ततः स पुरुषो भूत्वा सेवते नियतं सुखम् ॥ १३-१७३-३७ (८८३३६)
अथान्तरा तु धर्मस्याप्यधर्ममुपसेवते ।
सुखस्यानन्तरं दुःखं स जीवोऽप्यधिगच्छति ॥ १३-१७३-३८ (८८३३७)
अधर्मेण समायुक्तो यमस्य विषयं गतः ।

महद्दुःखं समासाद्य तिर्यग्योनौ प्रजायते ॥ १३-१७३-३९ (८८३३८)
कर्मणा येन येनेह यस्यां योनौ प्रजायते ।
जीवो मोहसमायुक्तस्तन्मे निगदतः शृणु ॥ १३-१७३-४० (८८३३९)
यदेतदुच्यते शास्त्रे सेतिहासे च च्छन्दसि ।
यमस्य विषयं घोरं मर्त्यो लोकः प्रपद्यते ॥ १३-१७३-४१ (८८३४०)
इह स्थानानि पुण्यानि देवतुल्यानि भूपते ।
तिर्यग्योन्यतिरिक्तानि गतिमन्ति च सर्वशः ॥ १३-१७३-४२ (८८३४१)
यमस्य भवने दिव्ये ब्रह्मलोकसमे गुणैः ।
कर्मभिर्नियतैर्बद्धो जन्तुर्दुःखान्युपाश्नुते ॥ १३-१७३-४३ (८८३४२)
येनयेन तु भावेन कर्मणा पुरुषो गतिम् ।
प्रयाति परुषां घोरां तत्ते वक्ष्याम्यतः परम् ॥ १३-१७३-४४ (८८३४३)
अधीत्य चतुरो वेदान्द्विजो मोहसमन्वितः ।
पतितात्प्रतिगृह्याथ खरयोनौ प्रजायते ॥ १३-१७३-४५ (८८३४४)
खरो जीवति वर्षाणि दश पञ्च च भारत ।
खरो मृतो बलीवर्दः सप्तवर्षाणि जीवति ॥ १३-१७३-४६ (८८३४५)
बलीवर्दो मृतश्चापि जायते ब्रह्मराक्षसः ।
ब्रह्मरक्षश्च मासांस्त्रींस्ततो जायेत ब्राह्मणः ॥ १३-१७३-४७ (८८३४६)
पतितं याजयित्वा तु कृमियोनौ प्रजायते ।
तत्र जीवति वर्षाणि दश पञ्च च भारत ॥ १३-१७३-४८ (८८३४७)
कृमिभावाद्विमुक्तस्तु ततो जायेत गर्दभः ।
गर्दभः पञ्चवर्षाणि पञ्चवर्षाणि सूकरः ॥ १३-१७३-४९ (८८३४८)
कुक्कुटः पञ्चवर्षाणि पञ्चवर्षाणि जम्बुकः ।
श्वा वर्षमेकं भवति ततो जायेत मानवः ॥ १३-१७३-५० (८८३४९)
उपाध्यायस्त्रियः पापं शिष्यः कुर्यादबुद्धिमान् ।
स जीव इह संसारांस्त्रीनाप्नोति न संशयः ॥ १३-१७३-५१ (८८३५०)
वृको भवति राजेन्द्र ततः क्रव्यात्ततः खरः ।
ततः प्रेतः परिक्लिष्टः पश्चाज्जायेत ब्राह्मणः ॥ १३-१७३-५२ (८८३५१)
मनसाऽपि गुरोर्भार्यां यः शिष्यो याति पापकृत् ।
स उग्रान्प्रैति संसारानधर्मेणेह चेतसा ॥ १३-१७३-५३ (८८३५२)
श्वयोनौ तु स सम्भूतस्त्रीणि वर्षाणि जीवति ।
तत्रापि निधनं प्राप्तः कृमियोनौ प्रजायते ॥ १३-१७३-५४ (८८३५३)
कृमिभावमनुप्राप्तो वर्षमेकं तु जीवति ।
ततस्तु निधनं प्राप्तो ब्रह्मयोनौ प्रजायते ॥ १३-१७३-५५ (८८३५४)
यदि पुत्रसमं शिष्यं गुरुर्हन्यादकारणे ।
आत्मनः कामकारेण सोपि हिंस्रः प्रजायते ॥ १३-१७३-५६ (८८३५५)
पितरं मातरं चैव यस्तु पुत्रोऽवमन्यते ।

सोऽपि राजन्मृतो जन्तुः पूर्वं जायेत गर्दभः ॥१३-१७३-५७ (८८३५६)
गर्दभत्वं तु सम्प्राप्य दशवर्षाणि जीवति ।
संवत्सरं तु कुम्भीरस्ततो जायेत मानवः ॥१३-१७३-५८ (८८३५७)
पुत्रस्य मातापितरौ यस्य रुष्टावुभावपि ।
गुर्वपध्यानतः सोपि मृतो जायति गर्दभः ॥१३-१७३-५९ (८८३५८)
खरो जीवति मासांस्तु दश श्वा च चतुर्दशः ।
बिडालः सप्तमासांस्तु ततो जायेत मानवः ॥१३-१७३-६० (८८३५९)
मातापितरावाक्रुश्य शारिका सम्प्रजायते ।
ताडयित्वा तु तावेव जायते कच्छपो नृप ॥१३-१७३-६१ (८८३६०)
कच्छपो दशवर्षाणि त्रीणि वर्षाणि शल्यकः ।
व्यालो भूत्वा च षण्मासांस्ततो जायति मानुषः ॥१३-१७३-६२ (८८३६१)
भर्तृपिण्डमुपाश्नन्यो राजद्विष्टानि सेवते ।
सोपि मोहसमापन्नो मृतो जायति वानरः ॥१३-१७३-६३ (८८३६२)
वानरो दशवर्षाणि पञ्चवर्षाणि सूकरः ।
श्वाऽथ भूत्वा तु षण्मासांस्ततो जायति मानुषः ॥१३-१७३-६४ (८८३६३)
न्यासापहर्ता तु नरो यमस्य विषयं गतः ।
यातनानां शतं गत्वा कृमियोनौ प्रजायते ॥१३-१७३-६५ (८८३६४)
तत्र जीवति वर्षाणि दशपञ्च च भारत ।
दुष्कृतस्य क्षयं कृत्वा ततो जायति मानुषः ॥१३-१७३-६६ (८८३६५)
असूयकः कुत्सितश्च चण्डालो दुःखमश्नुते ।
विश्वासहर्ता तु नरो मीनो जायति दुर्मतिः ॥१३-१७३-६७ (८८३६६)
भूत्वा मीनोऽष्टमासांस्तु मृगो जायति भारत ।
मृगस्तु चतुरो मासांस्ततश्छागः प्रजायते ॥१३-१७३-६८ (८८३६७)
छागस्तु निधनं प्राप्य पूर्णे संवत्सरे ततः ।
गौः स सञ्जायते जन्तुस्ततो जायति मानुषः ॥१३-१७३-६९ (८८३६८)
धान्यान्यवांस्तिलान्माषान्कुलत्थान्सर्षपांश्चणान् ।
कलायानथ मुद्गांश्च गोधूमानतसीस्तथा ॥१३-१७३-७० (८८३६९)
यस्तु धान्यापहर्ता च मोहाज्जन्तुरचेतनः ।
स जायते महाराज मूषिको निरपत्रपः ॥१३-१७३-७१ (८८३७०)
ततः प्रेत्य महाराज मृतो जायति सूकरः ।
सूकरो जातमात्रस्तु रोगेणि म्रियते नृप ॥१३-१७३-७२ (८८३७१)
श्वा ततो जायते मूढः कर्मणा तेन पार्थिव ।
भूत्वा श्वा पञ्चवर्षाणि ततो जायति मानवः ॥१३-१७३-७३ (८८३७२)
परदाराभिमर्शं तु कृत्वा जायति वै वृकः ।
श्वा शृगालस्ततो गृध्रो व्यालः कङ्को बकस्तथा ॥१३-१७३-७४ (८८३७३)
भ्रातुर्भार्यां तु पापात्मा यो धर्मयति मोहितः ।

पुंस्कोकिलत्वमाप्नोति सोऽपि संवत्सरं नृप ॥ १३-१७३-७५ (८८३७४)
सखिभार्यां गुरोर्भार्यां राजभार्यां तथैव च ।
प्रधर्षयित्वा कामाद्यो मृतो जायति सूकरः ॥ १३-१७३-७६ (८८३७५)
सूकरः पञ्चवर्षाणि दशवर्षाणि श्वाविधः ।
बिडालः पञ्चवर्षाणि दशवर्षाणि कुक्कुटः ॥ १३-१७३-७७ (८८३७६)
पिपीलिका तु मासांस्त्रीन्वानरो मासमेव तु ।
एतानासाद्य संसारान्कृमियोनौ प्रजायते ॥ १३-१७३-७८ (८८३७७)
तत्र जीवति मासांस्तु कृमियोनौ चतुर्दश ।
ततोऽधर्मक्षयं कृत्वा पुनर्जायति मानवः ॥ १३-१७३-७९ (८८३७८)
उपस्थिते विवाहे तु यज्ञे दानेऽपि वा विभो ।
मोहात्करोति यो विघ्नं स मृतो जायते कृमिः ॥ १३-१७३-८० (८८३७९)
कृमिर्जीवति वर्षाणि दश पञ्च च भारत ।
अधर्मिस्य क्षयं कृत्वा ततो जायति मानवः ॥ १३-१७३-८१ (८८३८०)
पूर्वं दत्त्वा तु यः कन्यां द्वितीये दातुमिच्छति ।
सोपि राजन्मृतो जन्तुः कृमियोनौ प्रजायते ॥ १३-१७३-८२ (८८३८१)
तत्र जीवति वर्षाणि त्रयोदश युधिष्ठिर ।
अधर्मसंक्षये युक्तस्ततो जायति मानवः ॥ १३-१७३-८३ (८८३८२)
देवकार्यमकृत्वा तु पितृकार्यमथापि वा ।
अनिर्वाप्य समश्नन्वै मृतो जायति वायसः ॥ १३-१७३-८४ (८८३८३)
वायसः शतवर्षाणि ततो जायति कुक्कुटः ।
जायते व्यालकश्चापि मासं तस्मात्तु मानुषः ॥ १३-१७३-८५ (८८३८४)
ज्येष्ठं पितृसमं चापि भ्रातरं योऽवमन्यते ।
सोऽपि मृत्युमुपागम्य क्रौञ्चयोनौ प्रजायते ॥ १३-१७३-८६ (८८३८५)
क्रौञ्चो जीवति वर्षं तु ततो जायति चीरकः ।
ततो निधनमापन्नो मानुषत्वमुपाश्नुते ॥ १३-१७३-८७ (८८३८६)
वृषलो ब्राह्मणीं गत्वा कृमियोनौ प्रजायते ।
श्ततः सम्प्राप्य निधनं जायते सूकरः पुनः ॥ १३-१७३-८८ (८८३८७)
सूकरो जातमात्रस्तु रोगेण म्रियते नृप ।
श्वा ततो जायते मूढः कर्मणा तेन पार्थिव ॥ १३-१७३-८९ (८८३८८)
श्वा भूत्वा कृतकर्माऽसौ जायते मानुषस्ततः ।
तत्रापत्यं समुत्पाद्य मृतो जायति मूषिकः ॥ १३-१७३-९० (८८३८९)
कृतघ्नस्तु मृतो राजन्यमस्य विषयं गतः ।
यमस्य पुरुषैः क्रुद्धैर्वधं प्राप्नोति दारणम् ॥ १३-१७३-९१ (८८३९०)
दण्डं समुद्गरं शूलमग्निकुम्भं च दारुणम् ।
असिपत्रवनं घोरवालुकं कूटशाल्मलीम् ॥ १३-१७३-९२ (८८३९१)
एताश्चान्याश्च बह्वीश्च यमस्य विषयं गतः ।

यातनाः प्राप्य तत्रोग्रास्ततो वध्यति भारत ॥१३-१७३-९३ (८८३९२)
ततो हतः कृतघ्नः स तत्रोग्रैर्भरतर्षभ ।
संसारचक्रमासाद्य कृमियोनौ प्रजायते ॥१३-१७३-९४ (८८३९३)
कृमिर्भवति वर्षाणि दशपञ्च च भारत ।
ततो गर्भं समासाद्य तत्रैव म्रियते शिशुः ॥१३-१७३-९५ (८८३९४)
ततो गर्भशतैर्जन्तुर्बहुभि सम्प्रपद्यते ।
संसारांश्च बहून्गत्वा ततस्मिर्यक्षु जायते ॥१३-१७३-९६ (८८३९५)
ततो दुःखमनुप्राप्य बहुवर्षगणानिह ।
स पुनर्भवसंयुक्तस्ततः कूर्मः प्रजायते ॥१३-१७३-९७ (८८३९६)
दधि हृत्वा बकश्चापि प्लवो मत्स्यानसंस्कृतान् ।
चोरयित्वा तु दुर्बुद्धिर्मधुदंशः प्रजायते ॥१३-१७३-९८ (८८३९७)
फलं वा मूलकं हृत्वा अपूपं वा पिपीलिकाः ।
चोरयित्वा च निष्पावं जायते हलगोलकः ॥१३-१७३-९९ (८८३९८)
पायसं चोरयित्वा तु तित्तिरित्वमवाप्नुते ।
हृत्वा पिष्टमयं पूपं कुम्भोलूकः प्रजायते ॥१३-१७३-१०० (८८३९९)
अयो हृत्वा तु दुर्बुद्धिर्वायसो जायते नरः ।
कांस्यं हृत्वा तु दुर्बद्धिर्हारितो जायते नरः ॥१३-१७३-१०१ (८८४००)
राजतं भाजनं हृत्वा कपोतः सम्प्रजायते ।
हृत्वा तु काञ्चनं भाण्डं कृमियोनौ प्रजायते ॥१३-१७३-१०२ (८८४०१)
पत्रोर्णं चोरयित्वा तु कृकलत्वं निगच्छति ।
कौशिकं तु ततो हृत्वा नरो जायति वर्तकः ॥१३-१७३-१०३ (८८४०२)
अंशुकं चोरयित्वा तु शुक्रो जायति मानवः ।
चोरयित्वा दुकूलं तु मृतो हंसः प्रजायते ॥१३-१७३-१०४ (८८४०३)
क्रौञ्चः कार्पासिकं हृत्वा मृतो जायति मानवः ।
चोरयित्वा नरः पट्टं त्वाविकं चैव भारत ।क्षौमं च
वस्त्रमादाय शशो जन्तुः प्रजायते ॥ १३-१७३-१०५ (८८४०४)
वर्णान्हृत्वा तु पुरुषो मृतो जायति बर्हिणः ।
हृत्वा रक्तानि वस्त्राणि जायते जीवजीवकः ॥१३-१७३-१०६ (८८४०५)
वर्णकादींस्तथा गन्धांश्चोरयित्वेह मानवः ।
छुन्दुन्दरित्वमाप्नोति राजँल्लोभपरायणः ॥१३-१७३-१०७ (८८४०६)
तत्र जीवति वर्षाणि ततो दश च पञ्च च ।
अधर्मस्य क्षयं गत्वा ततो जायति मानुषः ॥१०९अ चोरयित्वा
पयश्चापि बलाका सम्प्रजायते॥११०अ यस्तु चोरयते तैलं नरो
मोहसमन्वितः।११०ब् सोपि राजन्मृतो जन्तुस्तैलपायी प्रजायते॥१११अ
अशस्त्रं पुरुषं हत्वा सशस्त्रः पुरुषाधमः।१११ब् अर्थार्थी
यदि वा वैरी स मृतो जायते स्वरः॥११२अ खरो जीवति

वर्षे द्वे ततः शस्त्रेण वध्यते। ११२ब् स मृतो मृगयोनौ तु
नित्योद्विग्नोऽभिजायते॥ ११३अ मृगो वध्यति शस्त्रेण गते संवत्सरे
तु सः। ११३ब् हतो मृगस्ततो मीनः सोपि जालेन बध्यते॥ ११४अ
मासे चतुर्थे सम्प्राप्ते श्वापदः सम्प्रजायते। ११४ब् श्वापदो
दशवर्षाणि द्वीपी वर्षाणि पञ्च च॥ ११५अ ततस्तु निधनं
प्राप्तः कालपर्यायचोदितः। ११५ब् अधर्मस्य क्षयं कृत्वा ततो
जायति मानुषः॥ ११६अ स्त्रियं हत्वा तु दुर्बुद्धिर्यमस्य विषयं
गतः। ११६ब् बहून्क्लेशान्समासाद्य नरकानेकविंशतिम्॥ ११७अ ततः
पश्चान्महाराज कृमियोनौ प्रजायते। ११७ब् कृमिर्विंशतिवर्षाणि
भूत्वा जायति मानुषः॥ ११८अ भोजनं चोरयित्वा तु मक्षिका जायते
नरः। ११८ब् मक्षिकासङ्घवशगो बहून्मासान्भवत्युत॥ ११९अ
ततः पापक्षयं कृत्वा मानुषत्वमवाप्नुते। ११९ब् ग्भक्ष्यं
हृत्वा तु पुरुषो जालपाशः प्रजायते॥ १२०अ स्वाद्यं हृत्वा तु
पुरुषश्चीरपाशः प्रजायते।' १२०ब् धान्यं हृत्वा तु पुरुषो लोमशः
सम्प्रजायते॥ १२१अ तथा पिण्याकसम्मिश्रमशनं चोरयेन्नरः। १२१ब् स
जायते भृतिधनो दारुणो मूषिको नरः॥ १२२अ दशन्वै मानुषान्नित्यं
पापात्मा स विशाम्पते। १२२ब् घृतं हृत्वा तु दुर्बुद्धिः काकमद्गुः
प्रजायते॥ १२३अ मत्स्यमांसमथो हृत्वा काको जायति दुर्मतिः। १२३ब्
लवणं चोरयित्वा तु चिरिकाकः प्रजायते। १२४अ विश्वासेन तु
निक्षिप्तं यो विनिह्नोति मानवः। १२४ब् स गतायुर्नरस्तात मत्स्ययोनौ
प्रजायते॥ १२५अ मत्स्ययोनिमनुप्राप्य मृतो जायति मानुषः। १२५ब्
मानुषत्वमनुप्राप्य क्षीणायुरुपपद्यते॥ १२६अ पापानि तु नराः
कृत्वा तिर्यग्जायन्ति भारत। १२६ब् न चात्मनः प्रयाणान्ते धर्मं
जानन्ति कञ्चन॥ १२७अ ये पापानि नराः कृत्वा निरस्यन्ति व्रतैः
सदा। १२७ब् सुखदुःखसमायुक्ता व्यथितास्ते भवन्त्युत॥ १२८अ अपुमांसः
प्रजायन्ते म्लेच्छाश्चापि न संशयः। १२८ब् नराः पापसमाचारा
लोभमोहसमन्विताः॥ १२९अ वर्जयन्ति च पापानि जन्मप्रभृति
ये नराः। १२९ब् अरोगा रूपवन्तस्ते धनिनश्च भवन्त्युत॥ १३०अ
स्त्रियोऽप्येतेन कल्पेन कृत्वा पापमवाप्नुयुः। १३०ब् एतेषामेव
जन्तूनां भार्यात्वमुपयान्ति ताः॥ १३१अ परस्वहरणे दोषाः सर्व एव
प्रकीर्तिताः। १३१ब् एतद्धि लेशमात्रेण कथितं ते मयाऽनघ॥ १३२अ
अपरस्मिन्कथायोगे भूयः श्रोष्यसि भारत। १३२ब् एतन्मया महाराज
ब्रह्मणो गदतः पुरा॥ १३३अ सुरर्षीणां श्रुतं मध्ये पृष्टश्चापि
यथातथम्। १३३ब् मयाऽपि तच्च कार्त्स्न्येन यथावदनुवर्णितम्। १३३च्
एतच्छ्रुत्वा महाराज धर्मे कुरु मनः सदा॥ ॥ १३-१७३-१०८ (८८४०७)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
त्रिसप्तत्यधिकशततमोऽध्यायः ॥ १७३ ॥
Mahabharata - Anushaasana Parva - Chapter Footnotes

७-१७३-१३ मुहूर्तमिव रोदित्वेति झ पाठः ॥
७-१७३-३२ जीवः स भगवन्क्वस्थः सुखदुःखे समश्नुते इति झ पाठः ॥
७-१७३-५१ उपाध्यायस्य यः पापं इति झ पाठः ॥
७-१७३-५२ प्राक् श्वा भवति इति झ पाठः ॥
७-१७३-५८ कुम्भीरो नक्रः ॥
७-१७३-६४ पञ्चवर्षाणि मूषिकः इति झ पाठः ॥
७-१७३-६५ संसाराणां शतं इति झ पाठः ॥
७-१७३-९९ निष्पावं राजमाषम् । हलगोलकः दीर्घपुच्छो गोलरूपी कीटविशेषः ॥
७-१७३-१०० कुम्भोलूक उलूकजातिभेदः ॥
७-१७३-१०१ हारितः पक्षिविशेषः ॥
७-१७३-१०३ पत्रोर्मं धौतकौशेयम् ॥
७-१७३-१०६ वर्णान् हरितालादीन् ॥
७-१७३-१२२ काकमद्गुः शृङ्गवान् जलपक्षी ॥
७-१७३-१२८ असंवासाः प्रजायन्ते इति झ पाठः ॥

---

अनुससनपर्व-अध्यय१७४
॥ श्रीः ॥
१३.१७४. अध्यायः १७४

अथ दानधर्मपर्व ॥ १ ॥
Mahabharata - Anushaasana Parva - Chapter Topics
बृहस्पतिना युधिष्ठिरंप्रति पश्चात्तापादेर्ब्राह्मणेभ्योऽन्नदानस्य च पापपरिहारोपायत्वकथनम् ॥ १ ॥

Mahabharata - Anushaasana Parva - Chapter Text

युधिष्ठिर उवाच ।
अधर्मस्य गतिर्ब्रह्मन्कथिता मे त्वयाऽनघ ।
धर्मस्य तु गतिं श्रोतुमिच्छामि वदतांवर ॥ १३-१७४-१ (८८४०८)
कृत्वा कर्माणि पापानि कथं यान्ति शुभां गतिम् ।
कर्मणा च कृतेनेह केन यान्ति शुभां गतिम् ॥ १३-१७४-२ (८८४०९)

बृहस्पतिरुवाच। १३-१७४-३क्ष् (७३७६)
कृत्वा पापानि कर्माणि अधर्मवशमागतः ।
मनसा विपरीतेन निरयं प्रतिपद्यते ॥ १३-१७४-३ (८८४१०)
मोहादधर्मं यः कृत्वा पुनः समनुतप्यते ।
मनःसमाधिसंयुक्तो न स सेवेत दुष्कृतम् ॥ १३-१७४-४ (८८४११)
श्यथायथा मनस्तस्य दुष्कृतं कर्म गर्हते ।
तथातथा शरीरं तु तेनाधर्मेण मुच्यते ॥ १३-१७४-५ (८८४१२)
यदि व्याहरते राजन्विप्राणां धर्मवादिनाम् ।
ततोऽधर्मकृतात्क्षिप्रमपवादात्प्रमुच्यते ॥ऽ १३-१७४-६ (८८४१३)
यथायथा नरः सम्यगधर्ममनुभाषते ।
समाहितेन मनसा विमुच्येत तथातथा ।
भुजङ्ग इव निर्मोकात्पूर्वभुक्ताज्जरान्वितात् ॥ १३-१७४-७ (८८४१४)
दत्त्वा विप्रस्य दानानि विविधानि समाहितः ।
मनःसमाधिसंयुक्तः सुगतिं प्रतिपद्यते ॥ १३-१७४-८ (८८४१५)
प्रदानानि तु वक्ष्यामि यानि दत्त्वा युधिष्ठिर ।
नरः कृत्वाऽप्यकार्याणि ततो धर्मेण युज्यते ॥ १३-१७४-९ (८८४१६)
सर्वेषामेव दानानामन्नं श्रेष्ठमुदाहृतम् ।
पूर्वमन्नं प्रदातव्यमृजुना धर्ममिच्छता ॥ १३-१७४-१० (८८४१७)
प्राणा ह्यन्नं मनुष्याणां तस्माज्जन्तुश्च जायते ।
अन्ने प्रतिष्ठितो लोकस्तस्मादन्नं प्रशस्यते ॥ १३-१७४-११ (८८४१८)
अन्नमेव प्रशंसन्ति देवर्षिपितृमानवाः ।
अन्नस्य हि प्रदानेन स्वर्गमाप्नोति मानवः ॥ १३-१७४-१२ (८८४१९)
न्यायलब्धं प्रदातव्यं द्विजातिभ्योऽन्नमुत्तमम् ।
स्वाध्यायसमुपेतेभ्यः प्रहृष्टेनान्तरात्मना ॥ १३-१७४-१३ (८८४२०)
यस्य ह्यन्नमुपाश्नन्ति ब्राह्मणानां शतं दश ।
हृष्टेन मनसा दत्तं न स तिर्यग्गतिर्भवेत् ॥ १३-१७४-१४ (८८४२१)
ब्राह्मणानां सहस्राणि दश भोज्य नरर्षभ ।
नरोऽधर्मात्प्रमुच्येत योगेष्वभिरतः सदा ॥ १३-१७४-१५ (८८४२२)
भैक्ष्येणान्नं समाहृत्य दद्यादन्नं द्विजेषु वै ।
सुवर्णदानात्पापानि नश्यन्ति सुबहून्यपि ॥ १३-१७४-१६ (८८४२३)
दत्त्वा वृत्तिकरीं भूमिं पातकेनापि मुच्यते ।
पारायणैश्च वेदानां मुच्यते पातकैर्द्विजः ॥ १३-१७४-१७ (८८४२४)
गायत्र्याश्चैव लक्षेण गोसहस्रस्य तर्पणात् ।
वेदार्थं ज्ञापयित्वा तु शुद्धान्विप्रान्यथार्थतः ॥ १३-१७४-१८ (८८४२५)
सर्वत्यागादिभिश्चैव मुच्यते पातकैर्द्विजः ।
सर्वातिथ्यं परं ह्येषां तस्माद्दानं परं स्मृतम् ॥ १३-१७४-१९ (८८४२६)

अहिंसन्ब्राह्मणस्वानि न्यायेन परिपाल्य च ।
क्षत्रियस्तरसा प्राप्तमन्नं यो वै प्रयच्छति ॥ १३-१७४-२० (८८४२७)
द्विजेभ्यो वेदवृद्धेभ्यः प्रयतः सुसमाहितः ।
तेनापोहति धर्मात्मन्दुष्कृतं कर्म पाण्डव ॥ १३-१७४-२१ (८८४२८)
षड्भागपरिशुद्धं च कृषेर्भागमुपार्जितम् ।
वैश्योऽददद्द्विजातिभ्यः पापेभ्यः परिमुच्यते ॥ १३-१७४-२२ (८८४२९)
अवाप्य प्राणसंदेहं कार्कश्येन समार्जितम् ।
अन्नं दत्त्वा द्विजातिभ्यः शूद्रः पापात्प्रमुच्यते ॥ १३-१७४-२३ (८८४३०)
औरसेन बलेनान्नमर्जयित्वाऽविहिंसकः ।
यः प्रयच्छति विप्रेभ्यो न स दुर्गाणि पश्यति ॥ १३-१७४-२४ (८८४३१)
न्यायेनैवाप्तमन्नं तु नरो हर्षसमन्वितः ।
द्विजेभ्यो वेदवृद्धेभ्यो दत्त्वा पापात्प्रमुच्यते ॥ १३-१७४-२५ (८८४३२)
अन्नमूर्जस्करं लोके दत्त्वोर्जस्वी भवेन्नरः ।
सतां पन्थानमावृत्य सर्वपापैः प्रमुच्यते ॥ १३-१७४-२६ (८८४३३)
ग्शूद्रान्नं नैव भोक्तव्यं विप्रैर्धर्मपरायणैः ।
आपद्येव स्वदासानां भोक्तव्यं स्वयमुद्यतैः ॥ १३-१७४-२७ (८८४३४)
दानवद्भिः कृतः पन्था येन यान्ति मनीषिणः ।
ते हि प्राणस्य दातारस्तेभ्यो धर्मः सनातनः ॥ १३-१७४-२८ (८८४३५)
सर्वावस्थं मनुष्येण न्यायेनान्नमुपार्जितम् ।
कार्यं पात्रागतं नित्यमन्नं हि परमा गतिः ॥ १३-१७४-२९ (८८४३६)
अन्नस्य हि प्रदानेन नरो रौद्रं न सेवते ।
तस्मादन्नं प्रदातव्यमन्यायपरिवर्जितम् ॥ १३-१७४-३० (८८४३७)
यतेद्ब्राह्मणपूर्वं हि भोक्तुमन्नं गृही सदा ।
अवन्ध्यं दिवसं कुर्यादन्नपानीयदानतः ॥ १३-१७४-३१ (८८४३८)
भोजयित्वा दशशतं नरो वेदविदां नृप ।
न्यायविद्धर्मविदुषामितिहासविदां तथा ॥ १३-१७४-३२ (८८४३९)
न याति नरकं घोरं संसारांश्च न सेवते ।
सर्वकामसमायुक्तः प्रेत्य चाप्यश्नुते सुखम् ॥ १३-१७४-३३ (८८४४०)
एवं सुखसमायुक्तो रमते विगतज्वरः ।
रूपवान्कीर्तिमांश्चैव धनवांश्चोपपद्यते ॥ १३-१७४-३४ (८८४४१)
एतत्ते सर्वमाख्यातमन्नदानफलं महत् ।
मूलमेतत्तु धर्माणां प्रदानानां च भारत ॥ ॥ १३-१७४-३५ (८८४४२)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
चतुःसप्तत्यधिकशततमोऽध्यायः ॥ ११७ ॥

Mahabharata - Anushaasana Parva - Chapter Footnotes

७-१७४-१२ प्रदानेन रन्तिदेवो दिवं गतः इति झ पाठः ॥

---

अनुससनपर्व-अध्यय१७५
॥ श्रीः ॥
१३.१७५. अध्यायः १७५

अथ दानधर्मपर्व ॥ १ ॥
Mahabharata - Anushaasana Parva - Chapter Topics
बृहस्पतीना युधिष्ठिरंप्रत्यहिंसाप्रशंसनम्।१ ।।

Mahabharata - Anushaasana Parva - Chapter Text

युधिष्ठिर उवाच ।
अहिंसा वैदिकं कर्म ध्यानमिन्द्रियसंयमः ।
तपोऽथ गुरुशुश्रूषा किं श्रेयः पुरुषं प्रति ॥ १३-१७५-१ (८८४४३)
बृहस्पतिरुवाच। १३-१७५-२क्ष् (७३७७)
सर्वाण्येतानि धर्मस्य पृथग्द्वाराणि नित्यशः ।
शृणु संकीर्त्यमानानि षडेव भरतर्षभ ॥ १३-१७५-२ (८८४४४)
हन्त निःश्रेयसं जन्तोरहं वक्ष्याम्यनुत्तमम् ।
अहिंसापाश्रयं धर्मं दान्तो विद्वान्समाचरेत् ॥ १३-१७५-३ (८८४४५)
त्रिदण्डं सर्वभूतेषु निधाय पुरुषः शुचिः ।
कामक्रोधौ च संयम्य ततः सिद्धिमवाप्नुते ॥ १३-१७५-४ (८८४४६)
अहिंसकानि भूतानि दण्डेन विनिहन्ति यः ।
आत्मनः सुखमन्विच्छन्स प्रेत्य न सुखी भवेत् ॥ १३-१७५-५ (८८४४७)
आत्मोपमस्तु भूतेषु यो वै भवति पूरुषः ।
त्यक्तदण्डो जितक्रोधः स प्रेत्य सुखमेधते ॥ १३-१७५-६ (८८४४८)
सर्वभूतात्मभूतस्य सर्वभूतानि पश्यतः ।
देवाऽपि मार्गे मुह्यन्ति ह्यपदस्य पदेषिणः ॥ १३-१७५-७ (८८४४९)
न तत्परस्य संदध्यात्प्रतिकूलं यदात्मनः ।
एष साङ्ग्राहिको धर्मः कामादन्यः प्रवर्तते ॥ १३-१७५-८ (८८४५०)
प्रख्यापने च दाने च सुखदुःखे प्रियाप्रिये ।
आत्मौपम्येन पुरुषः प्रमाणमधिगच्छति ॥ १३-१७५-९ (८८४५१)
यथा परः प्रक्रमते परेषु
तथा परे प्रक्रमन्ते परस्मिन् ।
निषेवते स्वसमां जीवलोके

यथा धर्मो नैपुणेनोपदिष्टः। १३-१७५-१० (८८४५२)
वैशम्पायन उवाच।१३-१७५-११क्ष् (७३७८)
इत्युक्त्वा तं सुरगुरुधर्मराजं युधिष्ठिरम् ।
दिवामचक्रमे धीमान्पश्यतामेव नस्तदा ॥ ॥१३-१७५-११ (८८४५३)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
पञ्चसप्तत्यधिकशततमोऽध्यायः ॥१७५ ॥
Mahabharata - Anushaasana Parva - Chapter Footnotes

७-१७५-७ सर्वेषां भूतानामात्मभूतस्याऽऽदुःखेनेव
परदुःखेनाप्युद्विजतः ॥
७-१७५-१० हिंसितो हिनस्ति पालितः पालयति तस्मःत्पालयेदेव नो
हिंसयेदित्यर्थः ॥

---

अनुससनपर्व-अध्यय१७६
॥ श्रीः ॥
१३.१७६. अध्यायः १७६

अथ दानधर्मपर्व ॥१ ॥
Mahabharata - Anushaasana Parva - Chapter Topics
भीष्मेण युदिष्ठिरंप्रति हिंसाया मांसभक्षणस्य च गर्हणम् ॥१ ॥

Mahabharata - Anushaasana Parva - Chapter Text

वैशम्पायन उवाच ।
ततो युधिष्ठिरो राजा शरतल्पे पितामहम् ।
पुनरेव महाराज पप्रच्छ वदतांवरः ॥१३-१७६-१ (८८४५४)
युधिष्ठिर उवाच।१३-१७६-२क्ष् (७३७९)
ऋषयो ब्राह्मणा देवाः प्रशंसन्ति महामते ।
अहिंसालक्षणं धर्मं वेदप्रामाण्यदर्शनात् ॥१३-१७६-२ (८८४५५)
कर्मणा न नरः कुर्वन्हिंसां पार्थिवसत्तम ।
वाचा च मनसा चैवं ततो दुःखात्प्रमुच्यते ॥१३-१७६-३ (८८४५६)
भीष्म उवाच।१३-१७६-४क्ष् (७३८०)
चतुर्विधेयं निर्दिष्टा ह्यहिंसा ब्रह्मवादिभिः ।
एकैकतोऽपि विभ्रष्टा न भवत्यरिसूदन ॥१३-१७६-४ (८८४५७)
यथा सर्वश्चतुष्पाद्वै त्रिभिः पादैर्न तिष्ठति ।

तथैवेयं महीपाल कारणैः प्रोच्यते त्रिभिः ॥ १३-१७६-५ (८८४५८)
यथा नागपदेऽन्यानि पदानि पदगामिनाम् ।
सर्वाण्येवापिधीयन्ते पदजातानि कौञ्जरे ॥ १३-१७६-६ (८८४५९)
एवं लोकेष्वहिंसा तु निर्दिष्टा धर्मतः पुरा ।
कर्म्णा लिप्यते जन्तुर्वाचा च मनसाऽपि च ॥ १३-१७६-७ (८८४६०)
पूर्वं तु मनसा त्यक्त्वा त्यजेद्वाचाऽथ कर्मणा ।
ग्हिंसां तु नोपयुञ्जीत तथा हिंसा चतुर्विधा ॥ १३-१७६-८ (८८४६१)
काये मनसि वाक्येऽपि दोषा ह्येते प्रकीर्तिताः'।
श्न भक्षयति यो मांसं त्रिविधं स विमुच्यते ॥ १३-१७६-९ (८८४६२)
त्रिकारणं तु निर्दिष्टं श्रूयते ब्रह्मवादिभिः ।
मनो वाचि तथाऽऽस्वादे दोषा ह्येषु प्रतिष्ठिताः ॥ ँ १३-१७६-१० (८८४६३)
न भक्षयन्त्यतो मांसं तपोयुक्ता मनीषिणः ।
दोषांस्तु भक्षणे राजन्मांसस्येह निबोध मे ॥ १३-१७६-११ (८८४६४)
पुत्र मांसोपमं जानन्खादते यो विचेतनः ।
मांसं मोहसमायुक्तः पुरुषः सोऽधमः स्मृतः ॥ १३-१७६-१२ (८८४६५)
पितृमातृसमायोगे पुत्रत्वं जायते यथा ।
हिंसां कृत्वाऽवशः पापो भूयिष्ठं जायते तथा ॥ १३-१७६-१३ (८८४६६)
रसश्च हृदि जिह्वाया ज्ञानं प्रज्ञायते यथा ।
तथा शास्त्रेषु नियतं रागो ह्यास्वादिताद्भवेत् ॥ १३-१७६-१४ (८८४६७)
संस्कृतासंस्कृताः पक्वा लवणालवणास्तथा ।
प्रजायन्ते यथा भावास्तथा चित्तं निरुध्यते ॥ १३-१७६-१५ (८८४६८)
भेरीमृदङ्गशब्दांश्च तन्त्रीशब्दांश्च पुष्कलान् ।
निषेविष्यन्ति वै मन्दा मांसभक्षाः कथं नराः ॥ १३-१७६-१६ (८८४६९)
ग्परेषां धनधान्यानां हिसकाः स्तावकास्तथा ।
प्रशंसकाश्च मांसस्य नित्यं स्वर्गे बहिष्कृताः ॥' १३-१७६-१७ (८८४७०)
अचिन्तितमनिर्दिष्टमसङ्कल्पितमेव च ।
रसगृद्ध्याऽभिभूता ये प्रशंसन्ति फलार्थिनः ॥ १३-१७६-१८ (८८४७१)
प्रशंसा ह्येव मांसस्य दोषकल्पफलान्विता ॥ १३-१७६-१९ (८८४७२)
ग्भस्म विष्ठा कृमिर्वाऽपि निष्ठा यस्येदृशी ध्रुवा ।
स कायः परपीडाभिः कथं धार्योविपश्चिता ॥' १३-१७६-२० (८८४७३)
जीवितं हि परित्यज्य बहवः साधवो जनाः ।
स्वमांसैः परमांसानि परिपाल्य दिवं गताः ॥ १३-१७६-२१ (८८४७४)
एवमेषा महाराज चतुर्भिः कारणैः स्मृता ।
अहिंसा तव निर्दिष्टा सर्वधर्मानुसंहिता ॥ ॥ १३-१७६-२२ (८८४७५)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि

षट्सप्तत्यधिकशततमोऽध्यायः ॥ १७६ ॥
Mahabharata - Anushaasana Parva - Chapter Footnotes

७-१७६-४ मनसा वचसा कर्मणा भक्षणेनेति चतुर्विधा हिंसा । तत्र एकेन त्यक्ता सर्वात्मना त्यक्ता न भवति ॥
७-१७६-६ नागपदे गजपदे क्षुद्रपदानामिव सर्वेषां धर्माणां समावेशो भवति अहिंसायाम् । कौञ्जरे पदे दत्ते सति सर्वाणि पदानि यथा पिधीयन्ते एवं हिंसायां सर्वे धर्माः पिधीयन्ते ॥
७-१७६-१३ यथा स्त्रीपुंयोगे नान्तरीयकं पुत्रजन्म एवं हिंसकस्य भूयिष्ठं पापयोनौ जन्मेत्यर्थः ॥

---

अनुससनपर्व-अध्यय१७७
॥ श्रीः ॥
१३.१७७. अध्यायः १७७

अथ दानधर्मपर्व ॥ १ ॥
Mahabharata - Anushaasana Parva - Chapter Topics
भीष्मेण युधिष्ठिरंप्रति मांसभक्षणाभक्षणयोः क्रमेण निन्दाप्रशंसने ॥ १ ॥

Mahabharata - Anushaasana Parva - Chapter Text

युधिष्ठिर उवाच ।
अहिंसा परमो धर्म इत्युक्तं बहुशस्त्वया ।
श्राद्धेषु च भवानाह पितॄणां मांसमीप्सितम् ॥ १३-१७७-१ (८८४७६)
मांसैर्बहुविधैः प्रोक्तस्त्वया श्राद्धविधिः पुरा ।
अहत्वा च कुतो मांसमेवमेतद्विरुध्यते ॥ १३-१७७-२ (८८४७७)
जातो नः संशयो धर्मे मांसस्य परिवर्जने ।
दोषो भक्षयत कः स्यात्कश्चाभक्षयतो गुणः ॥ १३-१७७-३ (८८४७८)
हत्वा भक्षयतो वाऽपि परेणोपहृतस्य वा ।
हन्याद्वा यः परस्यार्थे क्रीत्वा वा भक्षयेन्नरः ॥ १३-१७७-४ (८८४७९)
एतदिच्छामि तत्त्वेन कथ्यमानं त्वयाऽनघ ।
निश्चयेन चिकीर्षामि धर्ममेतं सनातनम् ॥ १३-१७७-५ (८८४८०)
कथमायुरवाप्नोति कथं भवति सत्ववान् ।
कथमव्यङ्गतामेति लक्षण्यो जायते कथम् ॥ १३-१७७-६ (८८४८१)
भीष्म उवाच। १३-१७७-७क्ष् (७३८१)

मांसस्याभक्षणाद्राजन्यो धर्मः कुरुनन्दन ।
तं मे शृणु यथातत्त्वं यश्चास्य विधिरुत्तमः ॥ १३-१७७-७ (८८४८२)
रूपमव्यङ्गतामायुर्बुद्धिं सत्वं बलं स्मृतिम् ।
प्राप्तुकामैर्नरैर्हिंसा वर्जनीया कृतात्मभिः ॥ १३-१७७-८ (८८४८३)
ऋषीणामत्र संवादो बहुशः कुरुनन्दन ।
बभूव तेषां तु मतं यत्तच्छृणु युधिष्ठिर ॥ १३-१७७-९ (८८४८४)
यो यजेताश्वमेधेन मासिमासि यतव्रतः ।
वर्जयेन्मधु मांसं च सममेतद्युधिष्ठिर ॥ १३-१७७-१० (८८४८५)
सप्तर्षयो वालखिल्यास्तथैव च मरीचिपाः ।
मांसस्याभक्षणं राजन्प्रशंसन्ति मनीषिणः ॥ १३-१७७-११ (८८४८६)
न भक्षयति यो मांसं न च हन्यान्न घातयेत् ।
तन्मित्रं सर्वभूतानां मनुः स्वायंभुवोऽब्रवीत् ॥ १३-१७७-१२ (८८४८७)
अधृष्यः सर्वभूतानां विश्वास्यः सर्वजन्तुषु ।
साधूनां सम्मतो नित्यं भवेन्मांसं विवर्जयन् ॥ १३-१७७-१३ (८८४८८)
स्वमांसं परमांसेन यो वर्धयितुमिच्छति ।
अविश्वास्योऽवसीदेत्स इति होवाच नारदः ॥ १३-१७७-१४ (८८४८९)
ददाति यजते चापि तपस्वी च भवत्यपि ।
मधुमांसनिवृत्त्येति प्राह चैवं बृहस्पतिः ॥ १३-१७७-१५ (८८४९०)
मासिमास्यश्वमेधेन यो यजेत शतं समाः ।
न खादति च यो मांसं सममेतन्मतं मम ॥ १३-१७७-१६ (८८४९१)
सदा यजति सत्रेण सदा दानं प्रयच्छति ।
सदा तपस्वी भवति मद्यमांसविवर्जनात् ॥ १३-१७७-१७ (८८४९२)
सर्वे वेदा न तत्कुर्युः सर्वे यज्ञाश्च भारत ।
यो भक्षयित्वा मांसानि पश्चादपि निवर्तते ॥ १३-१७७-१८ (८८४९३)
॑भक्षयित्वा निमित्तेऽपि दुष्करं कुरुते तपः।॑
दुष्करं च रसज्ञेन मांसस्य परिवर्जनम् ।
चर्तुं व्रतमिदं श्रेष्टं सर्वप्राण्यभयप्रदम् ॥ १३-१७७-१९ (८८४९४)
सर्वभूतेषु यो विद्वान्ददात्यभयदक्षिणाम् ।
दाता भवति लोके स प्राणानां नात्र संशयः ।
एवं वै परमं धर्मं प्रशंसन्ति मनीषिणः ॥ १३-१७७-२० (८८४९५)
प्राणा यथाऽऽत्मनोऽभीष्टा भूतानामपि वै तथा ।
आत्मौपम्येन गन्तव्यं बुद्धिमद्भिः कृतात्मभिः ॥ १३-१७७-२१ (८८४९६)
विकीर्णकर्णकेनापि तृणमस्पन्दने भयम् ।
किं पुनर्हन्यमानानां तरसा जीवितार्थिनाम् ।
अरोगाणामपापानां पापैर्मांसोपजीविभिः ॥ १३-१७७-२२ (८८४९७)
मृत्युतो भयमस्तीति शङ्कायां दुःखमुत्तरम् ।

धर्मस्यायतनं तस्मान्मांसस्य परिवर्जनम् ॥ १३-१७७-२३ (८८४९८)
अहिंसा परमो धर्मस्तथाऽहिंसा परं तपः ।
अहिंसा परमं सत्यं ततो धर्मः प्रवर्तते ॥ १३-१७७-२४ (८८४९९)
न हि मांसं तृणात्काष्ठादुपलाद्वाऽपि जायते ।
हत्वा जन्तुं ततो मांसं तस्माद्दोषस्तु भक्षणे ॥ १३-१७७-२५ (८८५००)
स्वाहास्वाधामृतभुजो देवाः सत्यार्जवप्रियाः ।
राक्षसेन्द्रभयान्मुक्ताः सर्वभूतपरायणाः ॥ १३-१७७-२६ (८८५०१)
कान्तारेष्वथ घोरेषु दुर्गेषु गहनेषु च ।
रात्रावहनि सन्ध्यासु चत्वरेषु सभासु च ॥ १३-१७७-२७ (८८५०२)
उद्यतेषु च शस्त्रेषु मृगव्यालहतेषु च ।
अमांसभक्षणाद्राजन्न भयं तेषु विद्यते ॥ १३-१७७-२८ (८८५०३)
शरण्यः सर्वभूतानां विश्वास्यः सर्वजन्तुषु ।
अनुद्वेगकरो लोके न चाप्युद्विजते सदा ॥ १३-१७७-२९ (८८५०४)
यदि चेत्स्वादको न स्यान्न तदा घातको भवेत् ।
घातकः खादकार्थाय तद्घातयति वै नरः ॥ १३-१७७-३० (८८५०५)
अभक्ष्यमेतदिति वै इति हिंसा निवर्तते ।
खादकार्थमतो हिंसा मृगादीनां प्रवर्तते ॥ १३-१७७-३१ (८८५०६)
यस्माद्ग्रसति चैवायुर्हिंसकानां महाद्युते ।
तस्माद्विवर्जयेन्मांसं य इच्छेद्भूतिमात्मनः ॥ १३-१७७-३२ (८८५०७)
त्रातारं नाधिगच्छन्ति रौद्राः प्राणिविहिंसकाः ।
उद्वेजकास्तु भूतानां यथा व्यालमृगास्तथा ॥ १३-१७७-३३ (८८५०८)
लोभाद्वा बुद्धिमोहाद्वा बलवीर्यार्थमेव च ।
संसर्गादथ पापानामधर्मो रुचितो नृणाम् ॥ १३-१७७-३४ (८८५०९)
स्वमांसं परमांसेन यो वर्धयितुमिच्छति ।
उद्विग्नराष्ट्रे वसति यत्र यत्राभिजायते ॥ १३-१७७-३५ (८८५१०)
धन्यं यशस्यामायुष्यं स्वर्ग्यं स्वस्त्ययनं महत् ।
मांसस्याभक्षणं प्राहुर्नियताः परमर्षयः ॥ १३-१७७-३६ (८८५११)
इदं तु खलु कौन्तेय श्रुतमासीत्पुरा मया ।
मार्कण्डेयस्य वदतो ये दोषा मांसभक्षणे ॥ १३-१७७-३७ (८८५१२)
यो हि खादति सांसानि प्राणिनां जीवितैषिणाम् ।
सदा भवति वै पापः प्राणिहन्ता तथैव सः ॥ १३-१७७-३८ (८८५१३)
धनेन क्रयिको हन्ति खादकश्चोपभोगतः ।
घातको वधबन्धाभ्यामित्येष त्रिविधो वधः ॥ १३-१७७-३९ (८८५१४)
अखादन्ननुमोदंश्च भावदोषेण मानवः ।
योऽनुमोदति हन्यन्तं सोऽपि दोषेण लिप्यते ॥ १३-१७७-४० (८८५१५)
अधृष्यः सर्वभूतानामायुष्मान्निरुजः सदा ।

भवत्यभक्षयन्मासं दयावान्प्राणिनामिह ॥ १३-१७७-४१ (८८५१६)
हिरण्यदानैर्गोदानैर्भूमिदानैश्च सर्वशः ।
मांसस्याभक्षणे धर्मो विशिष्ट इति नः श्रुतिः ॥ १३-१७७-४२ (८८५१७)
अप्रोक्षितं वृथामासं विधिहीनं न भक्षयेत् ।
भक्षयन्निरयं याति नरो नास्त्यत्र संशयः ॥ १३-१७७-४३ (८८५१८)
प्रोक्षिताभ्युक्षितं मांसं तथा ब्राह्मणकाम्यया ।
अल्पदोषमिति ज्ञेयं विपरिते तु लिप्यते ॥ १३-१७७-४४ (८८५१९)
खादकस्य कृते जन्तून्यो हन्यात्पुरुषाधमः ।
महादोषकरस्तत्र घातको न तु खादकः ॥ १३-१७७-४५ (८८५२०)
इज्यायज्ञश्रुतिकृतैर्या मार्गैरबुधोऽधमः ।
हन्याज्जन्तून्मांसगृध्नुः स वै नरकभाङ्नरः ॥ १३-१७७-४६ (८८५२१)
भक्षयित्वाऽपि यो मांसं पश्चादपि निवर्तते ।
तस्यापि सुमहान्धर्मो यः पापाद्विनिवर्तते ॥ १३-१७७-४७ (८८५२२)
आहर्ता चानुमन्ता च विशस्ता क्रयविक्रयी ।
संस्कर्ता चोपभोक्ता च घातकाः सर्व एव ते ॥ १३-१७७-४८ (८८५२३)
इदमन्यत्तु वक्ष्यामि प्रमाणं विधिनिर्मितम् ।
पुराणमुषिभिर्जुष्टं वेदेषु परिनिश्चितम् ॥ १३-१७७-४९ (८८५२४)
प्रवृत्तिलक्षणे धर्मे फलार्थिभिरभिद्रुते ।
यथोक्तं राजशार्दूल न तु तन्मोक्षकारणम् ॥ १३-१७७-५० (८८५२५)
हविर्यत्संस्कृतं मन्त्रैः प्रोक्षिताभ्युक्षितं शुचि ।
वेदोक्तेन प्रमाणेन पितॄणां प्रक्रियासु च ।
प्रवृत्तिधर्मिणा भक्ष्यं नान्यथा मनुरब्रवीत् ॥ १३-१७७-५१ (८८५२६)
अस्वर्ग्यमयशस्यं च रक्षोवद्भरतर्षभ ।
विधिहीनं नरः पूर्वं मांसं राजन्न भक्षयेत् ॥ १३-१७७-५२ (८८५२७)
य इच्छेत्पुरुषोऽत्यन्तमात्मानं निरुपद्रवम् ।
स वर्जयेत मांसानि प्राणिनामिह सर्वशः ॥ १३-१७७-५३ (८८५२८)
श्रूयते हि पुराकल्पे नृणां व्रीहिमयः पशुः ।
येनायजन्त विद्वांसः पुण्यलोकपरायणाः ॥ १३-१७७-५४ (८८५२९)
ऋषिभिः संशयं पृष्टो वसुश्चेदिपतिः पुरा ।
अभक्ष्यमपि मांसं यः प्राह भक्ष्यमिति प्रभो ॥ १३-१७७-५५ (८८५३०)
आकाशादवनिं प्राप्तस्ततः स पृथिवीपतिः ।
यस्तदेव पुनश्चोक्त्वा विवेश धरणीतलम् ॥ १३-१७७-५६ (८८५३१)
प्रजानां हितकामेन त्वगस्त्येन महात्मना ।
आरण्याः सर्वदैवत्याः प्रोक्षितास्तापसैर्मृगाः ॥ १३-१७७-५७ (८८५३२)
क्रिया ह्येवं न हीयन्ते पितृदैवतसंश्रिताः ।
प्रीयन्ते पितरश्चैव न्यायतो मांसतर्पिताः ॥ १३-१७७-५८ (८८५३३)

इदं तु शृणु राजेन्द्र मांसस्याभक्षणे गुणाः ।
श्अभक्षणे सर्वसुखं मांसस्य मनुजाधिप ॥ट १३-१७७-५९ (८८५३४)
यस्तु वर्षशतं पूर्णं तपस्तप्येत्सुदारुणम् ।
यश्चैव वर्जयेन्मांसं सममेतन्मतं मम ॥ १३-१७७-६० (८८५३५)
कौमुद्यास्तु विशेषेण शुक्लपक्षे नराधिप ।
वर्जयेत्सर्वमांसानि धर्मो ह्यत्र विधीयते ॥ १३-१७७-६१ (८८५३६)
श्चतुरो वार्षिकान्मासान्यो मांसं परिवर्जयेत् ।
चत्वारि भद्राण्याप्नोति कीर्तिमायुर्यशो बलम् ॥ १३-१७७-६२ (८८५३७)
अथवा मासमेकं वै सर्वमांसान्यभक्षयन् ।
अतीत्य सर्वदुःखानि सुखं जीवेन्निरामयः ॥ १३-१७७-६३ (८८५३८)
वर्जयन्ति हि मांसानि मासशः पक्षशोपि वा ।
तेषां हिंसानिवृत्तानां ब्रह्मलोको विधीयते ॥ट १३-१७७-६४ (८८५३९)
मांसं तु कौमुदं पक्षं वर्जितं पार्थ राजभिः ।
सर्वभूतात्मभूतस्थैर्विदितार्थपरावरैः ॥ १३-१७७-६५ (८८५४०)
नाभागेनाम्बरीषेण गयेन च महात्मना ।
आयुषाऽथानरण्येन दिलीपरघुसूनुभिः ॥ १३-१७७-६६ (८८५४१)
कार्तवीर्यानिरुद्धाभ्यां नहुषेण ययातिना ।
नृगेण विष्वगश्वेन तथैव शशबिन्दुना ॥ १३-१७७-६७ (८८५४२)
युवनाश्वेन च तथा शिबिनौशीनरेण च ।
मुचुकुन्देन मान्धात्रा हरिश्चन्द्रेण वा विभो ॥ १३-१७७-६८ (८८५४३)
सत्यं वदत माऽसत्यं सत्यं धर्मः सनातनः ।
हरिश्चन्द्रश्चरति वै दिवि सत्येन चन्द्रवत् ॥ १३-१७७-६९ (८८५४४)
श्येनचित्रेण राजेन्द्र सोमकेन वृकेण च ।
रैवते रन्तिदेवेन वसुना सृञ्जयेन च ॥ १३-१७७-७० (८८५४५)
एतैश्चान्यैश्च राजेन्द्र कृपेण भरतेन च ।
दुष्यन्तेन करूशेन रामालर्कनलैस्तथा ।
विचकाश्वेन निमिना जनकेन च धीमता ॥ १३-१७७-७१ (८८५४६)
ऐलेन पृथुना चैंव वीरसेनेन चैव ह ।
इक्ष्वाकुणा शम्भुना च श्वेतेन सगरेण च ॥ १३-१७७-७२ (८८५४७)
अजेन धुन्धुना चैव तथैव च सुबाहुना ।
हर्यश्वेन च राजेन्द्र क्षुपेण भरतेन च ॥ १३-१७७-७३ (८८५४८)
एतैश्चान्यैश्च राजेन्द्रि पुरा मांसं न भक्षितम् ।
शारदं कौमुदं मासं ततस्ते स्वर्गमाप्नुवन् ॥ १३-१७७-७४ (८८५४९)
ब्रह्मलोके च तिष्ठन्ति ज्वलमानाः श्रियाऽन्विताः ।
उपास्यमाना गन्धर्वैः स्त्रीसहस्रसमन्विताः ॥ १३-१७७-७५ (८८५५०)
तदेतदुत्तमं धर्ममहिंसाधर्मलक्षणम् ।

ये चरन्ति महात्मानो नाकपृष्ठे वसन्ति ते ॥१३-१७७-७६ (८८५५१)
मधु मांसं च ये नित्यं वर्जयन्तीह धार्मिकाः ।
जन्मप्रभृति मद्यं च सर्वे ते मुनयः स्मृताः ॥१३-१७७-७७ (८८५५२)
इमं धर्ममममांसादं यश्चरेनच्छ्रावयीत वा ।
अपि चेत्सुदुराचारो न जातु निरयं व्रजेत् ॥१३-१७७-७८ (८८५५३)
पठेद्वा च इदं राजञ्शृणुयाद्वाऽप्यभीक्ष्णशः ।
अमांसभक्षणविधिं पवित्रमृषिपूजितम् ॥१३-१७७-७९ (८८५५४)
विमुक्तः सर्वपापेभ्यः सर्वकामैर्महीयते ।
विशिष्टतां ज्ञातिषु च लभते नात्र संशयः ।
ग्अहिंस्रो दानशीलश्च मधुमांसविवर्जितः ॥' १३-१७७-८० (८८५५५)
आपन्नश्चापदो मुच्येद्बद्धो मुच्येत बन्धनात् ।
मुच्येत्तथाऽऽतुरो रोगाद्दुःखान्मुच्येत दुःखितः ॥१३-१७७-८१ (८८५५६)
तिर्यग्योनिं न गच्छेत रूपवांश्च भवेन्नरः ।
ऋद्धिमान्वै कुरुश्रेष्ठ प्राप्नुयाच्च महद्यशः ॥१३-१७७-८२ (८८५५७)
एतत्ते कथितं राजन्मांसस्य परिवर्जने ।
प्रवृत्तौ च निवृत्तौ च विधानमृषिनिर्मितम् ॥ ॥१३-१७७-८३ (८८५५८)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
सप्तसप्तत्यधिकशततमोऽध्यायः ॥१७७ ॥

Mahabharata - Anushaasana Parva - Chapter Footnotes

७-१७७-१८ नहि कृत्स्नो वेदस्तथा तद्बोधिता यज्ञाश्च पुरुषं
हिंसायां पवर्तयन्ति ।किन्तु परिसंख्याविधया निवृत्तिमेव
बोधयन्तीत्यर्थः ॥
७-१७७-३३ व्यालमृगाः मांसादपशवः ॥
७-१७७-४० हन्यन्तं हन्यमानम् ॥
७-१७७-४६ इज्या देवपूजा यज्ञोऽश्वमेधादिस्तदर्थं
श्रुतिकृतैर्मार्गैरुपायैरबुधो यज्ञोपनिषदमजानन्मांसगृध्नुः
।केवलं यज्ञव्याजेन मांसं भोक्तुकामः ॥
७-१७७-५० प्रवत्तिलक्षणो धर्मः प्रजार्थिभिरुदाहृतः ।यथोक्तं
राजशार्दूल नतु तन्मोक्षकाङ्क्षिणाम्।इति झ।पाठः ॥
७-१७७-५७ आरण्याः प्रोक्षिता इति पर्यग्निकृतानारण्यानुत्सृजन्तीति
श्रुतेरारण्यैर्यज्ञं कृत्वापि तेषां वधो न कृत इत्यर्थः ॥

---

अनुससनपर्व-अध्यय१७८
॥ श्रीः ॥

१३.१७८. अध्यायः १७८

अथ दानधर्मपर्व ॥ १ ॥

Mahabharata - Anushaasana Parva - Chapter Topics

भीष्मेण युधिष्ठिरंप्रति मांसगतगुणकथनपूर्वकं
तद्भक्षणगर्हणम् ॥ १ ॥
तथा दयाया अहिंसायाश्च प्रशंसनम् ॥ २ ॥

Mahabharata - Anushaasana Parva - Chapter Text

युधिष्ठिर उवाच ।
इमे वै मानवा लोके भृशं मांसेषु गृद्धिनः ।
विसृज्य विविधान्भक्ष्यान्महारक्षोगणा इव ॥ १३-१७८-१ (८८५५९)
अपूपान्विविधाकाराञ्शाकानि विविधानि च ।
पादपान्नससंयुक्तान्न चेच्छन्ति यथाऽऽमिषम् ॥ १३-१७८-२ (८८५६०)
तत्र मे बुद्धिरत्रैव विषये परिमुह्यते ।
न मन्ये रसतः किञ्चिन्मांसतोऽस्तीति किञ्चन ॥ १३-१७८-३ (८८५६१)
तदिच्छामि गुणाञ्श्रोतुं मांसस्याभक्षणे प्रभो ।
भक्षणे चैव ये दोषास्तांश्चैव पुरुषर्षभ ॥ १३-१७८-४ (८८५६२)
सर्वसत्त्वेन धर्मज्ञ यथावदिह धर्मतः ।
किं वा भक्ष्यमभक्ष्यं वा सर्वमेतद्वदस्व मे ॥ १३-१७८-५ (८८५६३)
यथैतद्यादृशं चैव गुणा ये चास्य वर्जने ।
दोषा भक्षयतो येऽपि तन्मे ब्रूहि पितामह ॥ १३-१७८-६ (८८५६४)
भीष्म उवाच। १३-१७८-७क्ष् (७३८२)
सर्वमेतन्महाबाहो यथा वदसि भारत ।
न मांसात्परमं किञ्चिद्रसतो विद्यते भुवि ॥ १३-१७८-७ (८८५६५)
क्षतक्षीणाभितप्तानां ग्राम्यधर्मरतात्मनाम् ।
अध्वना कर्शितानां च न मांसाद्विद्यते परम् ॥ १३-१७८-८ (८८५६६)
सद्यो वर्धयति प्राणान्पुष्टिमग्र्यां दधाति च ।
ग्नाशो भक्षणदोषः स्याद्दानमेव सदा मतम् ॥ १३-१७८-९ (८८५६७)
क्षुधितानां द्विजानां च सर्वेषां चापि जीवितम् ।
दत्त्वा भवति पूतात्मा श्रद्धया लोभवर्जितः ॥ १३-१७८-१० (८८५६८)
शिक्षयन्ति न याचन्ते दर्शयन्ति स्वमूर्तिभिः ।
अवस्थेयमदानस्य मा भूदेवं भवानिति ।
दानाद्यः सुशुचिर्मांसं पुनर्नैव च भक्षयेत् ॥' १३-१७८-११ (८८५६९)
न भक्ष्योऽभ्याधिकः कश्चिन्मांसादस्ति परंतप ।

विवर्जने तु बहवो गुणाः कौरवनन्दन ।
ये भवन्ति मनुष्याणां तान्मे निगदतः शृणु ॥ १३-१७८-१२ (८८५७०)
स्वमांसं परमांसेन यो वर्धयितुमिच्छति ।
नास्ति क्षुद्रतरस्तस्मात्स नृशंसतरो नरः ॥ १३-१७८-१३ (८८५७१)
न हि प्राणात्प्रियतरं लोके किञ्चन विद्यते ।
तस्माद्दयां नरः कुर्याद्यथाऽऽत्मनि तथा परे ॥ १३-१७८-१४ (८८५७२)
शुक्राच्च तात सम्भूतिर्मांसस्येह न संशयः ।
भक्षणे तु महान्दोषो मलेन स हि कल्प्यते ॥ १३-१७८-१५ (८८५७३)
ग्अहिंसालक्षणो धर्म इति वेदविदो विदुः ।
यदहिंस्रं भवेत्कर्म तत्कुर्यादात्मविन्नरः ॥ १३-१७८-१६ (८८५७४)
पितृदैवतयज्ञेषु प्रोक्षितं हविरुच्यते।'
विधिना वेददृष्टेन तद्भुक्त्वेह न दुष्यति ॥ १३-१७८-१७ (८८५७५)
यज्ञार्थे पशवः सृष्टा इत्यपि श्रूयते श्रुतिः ।
अतोऽन्यथा प्रवृत्तानां राक्षसो विधिरुच्यते ॥ १३-१७८-१८ (८८५७६)
क्षत्रियाणां तु यो दृष्टो विधिस्तमपि मे शृणु ।
वीर्येणोपार्जितं मांसं यथा भुञ्जन्न दुष्यति ॥ १३-१७८-१९ (८८५७७)
आरण्याः सर्वदैवत्याः सर्वशः प्रोक्षिता मृगाः ।
अगस्त्येन पुरा राजन्मृगया येन पूज्यते ॥ १३-१७८-२० (८८५७८)
ग्रक्षणार्थाय भूतानां हिंस्रान्हन्यान्मृगान्पुनः।'
नात्मानमपरित्यज्य मृगया नाम विद्यते ॥ १३-१७८-२१ (८८५७९)
समतामुपसङ्गम्य रूपं हन्यान्न वा नृप ।
अतो राजर्षयः सर्वे मृगयां यान्ति भारत ।
न हि लिप्यन्ति पापेन न चैतत्पातकं भुवि ॥ १३-१७८-२२ (८८५८०)
न ह्यतः सदृशं किञ्चिदिह लोके परत्र च ।
यत्सर्वेष्विह भूतेषु दया कौरवन्दन ॥ १३-१७८-२३ (८८५८१)
न भयं विद्यते जातु नरस्येह दयावतः ।
दयावतामिमे लोकाः परे चापि तपस्विनाम् ॥ १३-१७८-२४ (८८५८२)
अभयं सर्वभूतेभ्यो यो ददाति दयापरः ।
अभयं तस्य भूतानि ददतीत्यनुशुश्रुम ॥ १३-१७८-२५ (८८५८३)
क्षतं च स्खलितं चैव पतितं क्लिन्नमाहतम् ।
सर्वभूतानि रक्षन्ति समेषु विषमेषु च। १३-१७८-२६ (८८५८४)
नैनं व्यालमृगा घ्नन्ति न पिशाचा न राक्षसाः ।
मुच्यते भयकालेषु मोक्षयेद्यो भये परान् ॥ १३-१७८-२७ (८८५८५)
प्राणदानात्परं दानं न भूतं न भविष्यति ।
न ह्यात्मनः प्रियतरं किञ्चिदस्तीह निश्चितम् ॥ १३-१७८-२८ (८८५८६)
अनिष्टं सर्वभूतानां मरणं नाम भारत ।

मृत्युकाले हि भूतानां सद्यो जायति वेपथुः ॥ १३-१७८-२९ (८८५८७)
व्याधिजन्मजरादुःखैर्नित्यं संसारसागरे ।
जन्तवः परिवर्तन्ते मरणादुद्विजन्ति च ॥ १३-१७८-३० (८८५८८)
गर्भवासेषु पच्यन्ते क्षाराम्लकटुकै रसैः ।
मूत्रस्वेदपुरीषाणां परुषैर्भृशदारुणैः ॥ १३-१७८-३१ (८८५८९)
जाताश्चाप्यवशास्तत्र च्छिद्यमानाः पुनःपुनः ।
हन्यमानाश्च दृश्यन्ते विवशा मांसगृद्धिनः ॥ १३-१७८-३२ (८८५९०)
कुम्भीपाके च पच्यन्ते तां तां योनिमुपागताः ।
आक्रम्य मार्यमाणाश्च त्रास्यन्त्यन्ये पुनःपुनः ॥ १३-१७८-३३ (८८५९१)
नात्मनोऽस्ति प्रियतरः पृथिवीमनुसृत्य ह ।
तस्मात्प्राणिषु सर्वेषु दयावानात्मवान्भवेत् ॥ १३-१७८-३४ (८८५९२)
सर्वमांसानि यो राजन्यावज्जीवं न भक्षयेत् ।
आश्वासं विपुलं स्थानं प्राप्नुयान्नात्र संशयः ॥ १३-१७८-३५ (८८५९३)
ये भक्षयन्ति मांसानि भूतानां जीवितैषिणाम् ।
भक्ष्यन्ते तेऽपि भूतैस्तैरिति मे नास्ति संशयः ॥ १३-१७८-३६ (८८५९४)
मां स भक्षयते यस्माद्भक्षयिष्ये तमप्यहम् ।
एतन्मांसस्य मांसत्वमनुबुद्ध्यस्व भारत ॥ १३-१७८-३७ (८८५९५)
घातको वध्यते नित्यं तथा बध्येत बन्धकः ।
आक्रोष्टा क्रुध्यते राजन्द्वेष्टा द्वेष्यत्वमाप्नुते ॥ १३-१७८-३८ (८८५९६)
येनयेन शरीरेण यद्यत्कर्म करोति यः ।
तेनतेन शरीरेण तत्तत्फलमुपाश्नुते ॥ १३-१७८-३९ (८८५९७)
अहिंसा परमो धर्मस्तथाऽहिंसा परो दमः ।
अहिंसा परमं दानमहिंसा परमं तपः ॥ १३-१७८-४० (८८५९८)
अहिंसा परमं मिमहिंसा परमं सुखम् ॥
सर्वयज्ञेषु वा दानं सर्वतीर्थेषु वा प्लुतम्। १३-१७८-४१ (८८५९९)
सर्वदानफलं वाऽपि नैतत्तुल्यमहिंसया ॥
अहिंसस्य तपोऽक्षय्यमहिंस्रो जयते सदा। १३-१७८-४२ (८८६००)
अहिंस्रः सर्वभूतानां यथा माता यथा पिता ॥
एतत्फलमहिंसायां भूयश्च कुरुपुङ्गव। १३-१७८-४३ (८८६०१)
न हि शक्या गुणा वक्तुमपि वर्षशतैरपि ॥ ॥ १३-१७८-४४ (८८६०२)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
अष्टसप्तत्यधिकशततमोऽध्यायः ॥ १७८ ॥

Mahabharata - Anushaasana Parva - Chapter Footnotes

७-१७८-१५ दोषो निवृत्त्या पुण्यमुच्यत इति झ पाठः ॥

१५ ॥
७-१७८-२१ किञ्च हन्यमानात्पशोः स्ववधस्यापि सम्भवात् प्राणपणेनेयं क्रियमाणा मृगया न दोषायेत्याह नात्मानमिति ॥
२१ ॥
७-१७८-३७ मां सः पूर्वजन्मनि भक्षितवानत एव तस्य मांसमहं भक्षयिष्यामीति व्यवहारान्मांसपदनिरुक्तिः ॥

---

अनुससनपर्व-अध्यय१७९
॥ श्रीः ॥
१३.१७९. अध्यायः १७९

अथ दानधर्मपर्व ॥ १ ॥
Mahabharata - Anushaasana Parva - Chapter Topics
भीष्मेण युधिष्ठिरंप्रति कीटोपाख्यानकथनम् ॥ १ ॥
कीटेन व्यासंप्रतति स्वपूर्वजन्मवृत्तान्तकथनम् ॥ २ ॥

Mahabharata - Anushaasana Parva - Chapter Text

युधिष्ठिर उवाच ।
अकामाश्च सकामाश्च ये हताः स्म महामृधे ।
कां योनिं प्रतिपन्नास्ते तन्मे ब्रूहि पितामह ॥ १३-१७९-१ (८८६०३)
दुःखं प्राणपरित्यागः पुरुषाणां महामृधे ।
जानामि चाहं धर्मज्ञ प्राणत्यागं सुदुष्करम् ॥ १३-१७९-२ (८८६०४)
समृद्दे वाऽसमृद्धे वा शुभे वा यदि वाऽशुभे ।
ग्संसारेऽस्मिन्सदाजाताः प्राणिनोऽभिरताःकथम् '
कारणं तत्र मे ब्रूहि सर्वज्ञो ह्यसि मे मतः ॥ १३-१७९-३ (८८६०५)
भीष्म उवाच। १३-१७९-४क्ष् (७३८३)
समृद्धे वाऽसमृद्धे वा शुभे वा यदि वाऽशुभे ।
संसारेऽस्मिन्समे जाताः प्राणिनः पृथिवीपते ॥ १३-१७९-४ (८८६०६)
निरता येन भावेन तत्र मे शृणु कारणम् ।
सम्यक्चायमनुप्रश्नस्त्वयोक्तस्तु युधिष्ठिर ॥ १३-१७९-५ (८८६०७)
अत्र ते वर्तयिष्यामि पुरावृत्तमिदं नृप ।
द्वैपायनस्य संवादं कीटस्य च युधिष्ठिर ॥ १३-१७९-६ (८८६०८)
ब्रह्मिभूतश्चरन्विप्रः कृष्णद्वैपायनः पुरा ।
ददर्श कीटं धावन्तं शीघ्रं शकटवर्त्मनि ॥ १३-१७९-७ (८८६०९)
गतिज्ञः सर्वभूतानां रुतज्ञश्च शरीरिणाम् ।

सर्वज्ञस्त्वरितं दृष्ट्वा कीटं वचनमब्रवीत् ॥ १३-१७९-८ (८८६१०)
कीट संत्रस्तरूपोऽसि त्वरितश्चैव लक्ष्यसे ।
क्व च वासस्तदाचक्ष्व कुतस्ते भयमागतम् ॥ १३-१७९-९ (८८६११)
कीट उवाच। १३-१७९-१०क्ष् (७३८४)
शकटव्रजस्य महतो घोषं श्रुत्वा भयं मम ।
आगतं वै महाबुद्धे स्वन एष हि दारुणः ॥ १३-१७९-१० (८८६१२)
श्रूयते तु स मा हन्यादिति ह्यस्मादपक्रमे ।
श्वसतां च शृणोम्येनं गोवृषाणां प्रतोद्यताम् ॥ १३-१७९-११ (८८६१३)
वहतां सुमहाभारं सन्निकर्षे स्वनं प्रभो ।
नृणां च संवाहयतां श्रूयन्ते विविधाः स्वनाः ॥ १३-१७९-१२ (८८६१४)
वोढुमस्मद्विधेनैव न शक्यः कीटयोनिना ।
तस्मादतिक्रमाम्येष भयादस्मात्सुदारुणात् ॥ १३-१७९-१३ (८८६१५)
दुःखं हि मृत्युर्भूतानां जीवितं च सुदुर्लभम् ।
अतो भीतः पलायामि गच्छेयं नापदं यथा ॥ १३-१७९-१४ (८८६१६)
भीष्म उवाच। १३-१७९-१५क्ष् (७३८५)
इत्युक्तः स तु सं प्राह कुतः कीट सुखं तव ।
मरणं ते सुखं मन्ये तिर्यग्योनौ हि वर्तसे ॥ १३-१७९-१५ (८८६१७)
शब्दं स्पर्शं रसं गन्धं भोगांश्चोच्चावचान्बहून् ।
नाभिजानासि कीट त्वं श्रेयो मरणमेव ते ॥ १३-१७९-१६ (८८६१८)
कीट उवाच। १३-१७९-१७क्ष् (७३८६)
सर्वत्र निरतो जीव इहापि च सुखं मम ।
चेतयामि महाप्राज्ञ तस्मादिच्छामि जीवितुम् ॥ १३-१७९-१७ (८८६१९)
इहापि विषयः सर्वो यथादेहं प्रवर्तितः ।
मनुष्यास्तिर्यगाश्चैव पृथग्भोगा विशेषतः ॥ १३-१७९-१८ (८८६२०)
अहमासं मनुष्यो वै शूद्रो बहुधनः प्रभो ।
अब्रह्मण्यो नृशंसश्च कदर्यो बुद्धिजीवनः ॥ १३-१७९-१९ (८८६२१)
वाक्श्लक्ष्णो ह्यकृतप्रज्ञो द्वेष्टा विश्वस्य कर्मणः ।
मिथोगुप्तनिधिर्नित्यं परस्वहरणे रतः ॥ १३-१७९-२० (८८६२२)
भृत्यातिथिजनश्चापि गृहेऽपर्यशितो मया ।
मात्सर्यात्स्वादुकामेन नृशंसेन बुभुक्षता ॥ १३-१७९-२१ (८८६२३)
देवार्थं पितृयज्ञार्थं न च श्राद्धं कृतं मया ।
न दत्तमन्नकामेषु दत्तमन्नं लुनामि च ॥ १३-१७९-२२ (८८६२४)
गुप्तं शरणमाश्रित्य भयेषु शरणागतान् ।
त्यक्त्वाऽकस्मान्निशायां च न दत्तमभयं मया ॥ १३-१७९-२३ (८८६२५)
धनं धान्यं प्रियान्दारान्यानं वासस्तथाऽद्भुतम् ।
श्रियं दृष्ट्वा मनुष्याणामसूयामि निरर्थकम् ॥ १३-१७९-२४ (८८६२६)

ईर्ष्युः परसुखं दृष्ट्वा अन्यस्य न बुभूषकः ।
त्रिवर्गहन्ता चान्येषामात्मकामानुवर्तकः ॥ १३-१७९-२५ (८८६२७)
नृशंसगुणभूयिष्ठं पुरा कर्म कृतं मया ।
स्मृत्वा तदनुतप्येऽहं हित्वा प्रियमिवात्मजम् ॥ १३-१७९-२६ (८८६२८)
शुभानां नाभिजानामि कृतानां कर्मणां फलम् ।
माता च पूजिता वृद्धा ब्राह्मणश्चार्चितो मया ॥ १३-१७९-२७ (८८६२९)
सकृज्जातिगुणोपेतः सङ्गत्या गृहमागतः ।
अतिथिः पूजितो ब्रह्मंस्तेन मां नाजहात्स्मृतिः ॥ १३-१७९-२८ (८८६३०)
कर्मणामेव चैवाहं सुखाशामिव लक्षये ।
तच्छ्रोतुमहमिच्छामि त्वत्तः श्रेयस्तपोधन ॥ ॥ १३-१७९-२९ (८८६३१)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
एकोनाशीत्यधिकशततमोऽध्यायः ॥ १७९ ॥
Mahabharata - Anushaasana Parva - Chapter Footnotes

७-१७९-१९ कदर्यो वृद्धिजीवनः इति झ पाठः ॥
७-१७९-२५ न बुभूषकः अनैश्वर्यमिच्छन् ॥

---

अनुससनपर्व-अध्यय१८०
॥ श्रीः ॥
१३.१८०. अध्यायः १८०

अथ दानधर्मपर्व ॥ १ ॥
Mahabharata - Anushaasana Parva - Chapter Topics
व्यासेन कीटाय राज्यदानम् ॥ १ ॥

Mahabharata - Anushaasana Parva - Chapter Text

व्यास उवाच ।
शुभेन कर्मणा यद्वै तिर्यग्योनौ न मुह्यसे ।
ममैव कीट तत्कर्म येन त्वं न प्रमुह्यसे ॥ १३-१८०-१ (८८६३२)
अहं त्वां दर्शनादेव तारयामि तपोबलात् ।
तपोबलाद्धि बलवद्बलमन्यन्न विद्यते ॥ १३-१८०-२ (८८६३३)
जानामि पापैः स्वकृतैर्गतं त्वां कीट कीटताम् ।
अवाप्स्यिस परं धर्मं मानुष्ये यदि मन्यसे ॥ १३-१८०-३ (८८६३४)
कर्मभूमिकृतं देवा भुञ्जते तिर्यगाश्च ये ।

धन्या अपि मनुष्येषु कामार्थाश्च यथा गुणाः ॥१३-१८०-४ (८८६३५)
वाग्बुद्धिपाणिपादैश्च समुपेता विपश्चितः ।
किमायाति मनुष्यस्य मन्दस्यार्थस्य जीवतः ॥१३-१८०-५ (८८६३६)
दैवे यः कुरुते पूजां विप्राग्निशशिसूर्ययोः ।
ब्रुवन्नपि कथां पुण्यां तत्र कीट त्वमेष्यसि ॥१३-१८०-६ (८८६३७)
गुणभूतानि भूतानि तत्र त्वमुपभोक्ष्यसे ।
क्रमात्तेऽहं विनेष्यामि ब्रह्मत्वं यदि चेच्छसि। १३-१८०-७ (८८६३८)
भीष्म उवाच ।
स तथेति प्रतिश्रुत्य कीटः समवतिष्ठत ॥ १३-१८०-७क्ष् (७३८७)
क़तमृषिं द्रष्टुमगमत्सर्वास्वन्यासु योनिषु ॥ १३-१८०-८ (८८६३९)
श्वाविद्गोधावराहाणां तथैव मृगपक्षिणाम् ।
श्वपाकशूद्रवैश्यानां क्षत्रियाणां च योनिषु ॥१३-१८०-९ (८८६४०)
स कीटे एवमाख्यातमृषिणा सत्यवादिना ।
प्रतिस्मृत्याथ जग्राह पादौ मूर्ध्नि कृताञ्जलिः ॥१३-१८०-१० (८८६४१)
कीट उवाच।१३-१८०-११क्ष् (७३८८)
इदं तदतुलं स्थानमीप्सितं दशभिर्गुणैः ।
यदहं प्राप्य कीटत्वमागतो राजपुत्रताम् ॥१३-१८०-११ (८८६४२)
वहन्ति मामतिबलाः कुञ्जरा हेममालिनः ।
स्यन्दनेषु च काम्भोजा युक्ताःसमरवाजिनः ॥१३-१८०-१२ (८८६४३)
उष्ट्राश्वतरयुक्तानि यानानि च वहन्ति माम् ।
सबान्धवः सहामात्यश्चाश्नामि पिशिताशनम् ॥१३-१८०-१३ (८८६४४)
गृहेषु स्वनिवासेषु सुखेषु शयनेषु च ।
वरार्हेषु महाभाग स्वपामि च सुपूजितः ॥१३-१८०-१४ (८८६४५)
सर्वेष्वपररात्रेषु सूतमागधबन्दिनः ।
स्तुवन्ति मां यथा देवा महेन्द्रं प्रियवादिनः ॥१३-१८०-१५ (८८६४६)
प्रसादात्सत्यसन्धस्य भवतोऽमिततेजसः ।
यदहं कीटतां प्राप्य स्मृतिजाता जुगुप्सिताम् ।
ननु नाशोस्ति पापस्य यन्मयोपचितं पुरा ॥ १३-१८०-१६ (८८६४७)
श्नमस्तेऽस्तु महाप्राज्ञ किं करोमि प्रशाधि माम् ।
त्वत्तपोबलनिर्दिष्टमिदं ह्यधिगतं मया ॥ृ १३-१८०-१७ (८८६४८)
व्यास उवाच।१३-१८०-१८क्ष् (७३८९)
श्अर्चितोऽहं त्वया राजन्वाग्भिरद्य यदृच्छया ।
अद्य ते कीटतां प्राप्य स्मृतिर्जाताजुगुप्सिताम्ष् ॥१३-१८०-१८ (८८६४९)
शूद्रेणार्थप्रधानेन नृशंसेनाततायिना ।
ममैतद्दर्शनं प्राप्तं तच्च वै सुकृतं पुरा ।
तिर्यग्योनौ स्म जातेन मम चाभ्यर्चनात्तथा ॥ १३-१८०-१९ (८८६५०)

इतस्त्वं राजपुत्रत्वाद्ब्राह्मण्यं समवाप्स्यसि ।
गोब्राह्मणकृते प्राणान्हित्वाऽऽत्मीयान्रणाजिरे ॥ १३-१८०-२० (८८६५१)
भीष्म उवाच। १३-१८०-२१क्ष् (७३९०)
राजपुत्रः सुखं प्राप्य ईजे चैवाप्तदक्षिणैः ।
अथ चोद्दीप्यत स्वर्गे प्रभूतोप्यव्ययः सुखी ॥ १३-१८०-२१ (८८६५२)
तिर्यग्योन्याः शूद्रतामभ्यपैति
शूद्रो वैश्यं क्षत्रियत्वं च वैश्यः ।
वृत्तश्लाघी क्षत्रियो ब्राह्मणत्वं
स्वर्गं पुण्याद्ब्राह्मणः साधुवृत्तः ॥ ॥ १३-१८०-२२ (८८६५३)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
अशीत्यधिकशततमोऽध्यायः ॥ १८० ॥
Mahabharata - Anushaasana Parva - Chapter Footnotes

७-१८०-१ तदैव कीट तत्कर्मेति कड़ थ । पाठः ॥
७-१८०-६ जीवन्हि कुरुते पूजां विप्राग्र्यः शशिसूर्ययोः इति झ पाठः ॥
७-१८०-८ क़ अत्र सप्तमश्लोकादनन्तरं सार्धश्लोको झ । पुस्तकेऽधिको
दृस्यते सच व्रजंश्च सुमहानागतश्च यदृच्छया। चक्राक्रमेण
भिन्नश्च कीटः प्राणान्मुमोच ह ॥
सम्भूतः क्षत्रियकुले प्रसादादमितौजसः । इति ॥

---

अनुससनपर्व-अध्यय१८१
॥ श्रीः ॥
१३.१८१. अध्यायः १८१

अथ दानधर्मपर्व ॥ १ ॥
Mahabharata - Anushaasana Parva - Chapter Topics
कीटेन व्यासचोदनया राज्यपालनपूर्वकं जन्मान्तरे ब्राह्मण्यलाभेन
तपश्चर्यादिना ब्रह्मसालोक्याधिगमः ॥ १ ॥

Mahabharata - Anushaasana Parva - Chapter Text

भीष्म उवाच ।
क्षत्रधर्ममनुप्राप्तः स्मरन्नेव च वीर्यवान् ।
त्यक्त्वा हि कीटतां राजंश्चचार विपुलं तपः ॥ १३-१८१-१ (८८६५४)
तस्य धर्मार्थविदुषो दृष्ट्वा तद्विपुलं तपः ।

आजगाम द्विजश्रेष्ठः कृष्णद्वैपायनस्तदा ॥ १३-१८१-२ (८८६५५)
व्यास उवाच। १३-१८१-३क्ष् (७३९१)
क्षात्रादेव व्रतात्कीट भूतानां परिपालय ।
क्षात्रं देवव्रतं ध्यासंस्ततो विप्रत्वमेष्यसि ॥ १३-१८१-३ (८८६५६)
पाहि सर्वाः प्रजाः सम्यक् शुभाशुभविदात्मवान् ।
शुभैः संविभजन्कामैरशुभानां च भावनैः ॥ १३-१८१-४ (८८६५७)
आत्मवान्भव सुप्रीतः स्वधर्माचरणे रतः ।
क्षात्रीं तनुं समुत्सृज्य ततो विप्रत्वमेष्यसि ॥ १३-१८१-५ (८८६५८)
भीष्म उवाच। १३-१८१-६क्ष् (७३९२)
सोऽप्यरण्यादभिप्रेत्य पुनरेव युधिष्ठिर ।
महर्षेर्वचनं श्रुत्वा प्रजा धर्मेण पालयन् ॥ १३-१८१-६ (८८६५९)
अचिरेणैव कालेन कीटः पार्थिवसत्तम ।
प्रजापालनधर्मेणि प्रेत्य विप्रत्वमागतः ॥ १३-१८१-७ (८८६६०)
ततस्तं ब्राह्मणं द्रष्टुं पुनरेव महायशाः ।
आजगाम महाप्राज्ञः कृष्णद्वैपायनस्तदा ॥ १३-१८१-८ (८८६६१)
व्यास उवाच। १३-१८१-९क्ष् (७३९३)
भोभो ब्रह्मर्षभ श्रीमन्मा व्यथिष्ठाः कथञ्चन ।
शुभकृच्छुभयोनीषु पापकृत्पापयोनिषु ॥ १३-१८१-९ (८८६६२)
उपपद्यति धर्मज्ञ यथाधर्मं यथाव्रतम् ।
तस्मान्मृत्युभयात्कीट मा व्यथिष्ठाः कथञ्चन ।
धर्मलाभात्परं न स्यात्तस्माद्धर्मं चरोत्तमम् ॥ १३-१८१-१० (८८६६३)
कीट उवाच। १३-१८१-११क्ष् (७३९४)
सुखात्सुखतरं प्राप्तो भगवंस्त्वत्कृते ह्यहम् ।
धर्ममूलं शुभं प्राप्य पाप्मा नष्ट इहाद्य मे ॥ १३-१८१-११ (८८६६४)
भीष्म उवाच। १३-१८१-१२क्ष् (७३९५)
भगवद्वचनात्कीटो ब्राह्मण्यं प्राप्य दुर्लभम् ।
अकरोत्पृथिवीं राजन्यज्ञयूपशताङ्किताम् ।
ततः सालोक्यमगमद्ब्रह्मणो ब्रह्मवित्तमः ॥ १३-१८१-१२ (८८६६५)
अथ पापहरं कीटः पार्थ ब्रह्म सनातनम् ।
स्वकर्मफलनिर्वृत्तं व्यासस्य वचनात्तदा ॥ १३-१८१-१३ (८८६६६)
कुरुक्षेत्रे युद्धहताः पुण्ये क्षत्रियपुङ्गवाः ।
सम्प्राप्तास्ते गतिं पुण्यां तन्मा त्वं शोच पुत्रक ॥ ॥ १३-१८१-१४ (८८६६७)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
एकाशीत्यधिकशततमोऽध्यायः ॥ १८१ ॥

अनुससनपर्व-अध्यय१८२
॥ श्रीः ॥
१३.१८२. अध्यायः १८२

अथ दानधर्मपर्व ॥ १ ॥
Mahabharata - Anushaasana Parva - Chapter Topics
भीष्मेण युधिष्ठिरंप्रति विद्यातपोदानानां मध्ये
दानप्रशंसनपरव्यासमैत्रेयसंवादानुवादः ॥ १ ॥

Mahabharata - Anushaasana Parva - Chapter Text

युधिष्ठिर उवाच ।
विद्या तपश्च दानं च किमेतेषां विशिष्यते ।
पृच्छामि त्वां सतां श्रेष्ठ तन्मे ब्रूहि पितामह ॥ १३-१८२-१ (८८६६८)
भीष्म उवाच। १३-१८२-२क्ष् (७३९६)
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
मैत्रेयस्य च संवादं कृष्णद्वैपायनस्य च ॥ १३-१८२-२ (८८६६९)
कृष्णद्वैपायनो राजन्नज्ञातचरितं चरन् ।
वाराणस्यामुपातिष्ठन्मैत्रेयं स्वैरिणीकुले ॥ १३-१८२-३ (८८६७०)
तमुपच्छन्नमासीनं ज्ञात्वा स मुनिसत्तमः ।
अर्चित्वा भोजयामास मैत्रेयोऽशनमुत्तमम् ॥ १३-१८२-४ (८८६७१)
तदन्नमुत्तमं भुक्त्वा गुणवत्सार्वकामिकम् ।
उत्तिष्ठमानोऽस्मयत प्रीतः कृष्णो महामनाः ॥ १३-१८२-५ (८८६७२)
तमुत्स्मयन्तं सम्प्रेक्ष्य मैत्रेयः कृष्णमब्रवीत् ।
कारणं ब्रूहि धर्मात्मन्व्यस्मयिष्ठाः कुतश्च ते ।
तपस्विनो धृतिमतः प्रमोदः समुपागतः ॥ १३-१८२-६ (८८६७३)
एतदिच्छामि ते विद्वन्नभिवाद्य प्रणम्य च ।
आत्मनश्च तपोभाग्यं सुखभाग्यं ममेह च ॥ १३-१८२-७ (८८६७४)
ग्तपोभाग्यान्महाभाग सुखभाग्यात्तथैव च।'
पृथगाचरितं तात पृथगाचरितात्मनः ।
अल्पान्तरमहं मन्ये विशिष्टमपि चान्वयात् ॥ १३-१८२-८ (८८६७५)
व्यास उवाच। १३-१८२-९क्ष् (७३९७)
अतिच्छेदातिवादाभ्यां स्मयोऽयं समुपागतः ।
असत्यं वेदवचनं कस्माद्वेदोऽनृतं वदेत् ॥ १३-१८२-९ (८८६७६)
त्रीण्येव तु पदान्याहुः पुरुषस्योत्तमं प्रति ।
न द्रुह्येच्चैव दद्याच्च सत्यं चैव परान्वदेत् ॥ १३-१८२-१० (८८६७७)

इति वेदोक्तमृषिभिः पुरस्तात्परिकल्पितम् ।
इदानीं चैव नः कृत्यं पुरस्ताच्च परिश्रुतम् ॥ १३-१८२-११ (८८६७८)
अल्पोऽपि तादृशो न्यासो भवत्युत महाफलः ।
तृषिताय च यद्दत्तं हृदयेनानसूयता ॥ १३-१८२-१२ (८८६७९)
तोषितास्त्रिदशा यत्ते दत्त्वैतद्दर्शनं मम ।
अजैषीर्महतो लोकान्महायज्ञैरिव प्रभो ॥ १३-१८२-१३ (८८६८०)
ततो दानपवित्रेण प्रीतोऽस्मि तपसैव च ।
दूरात्पुण्यवतो गन्धः पुण्यस्यैव च दर्शनात् ॥ १३-१८२-१४ (८८६८१)
पुण्यश्च वातिगन्धस्ते मन्ये कर्म विधानजम् ।
अथ कर्मार्जितस्तात यथाचैवानुलेपनात् ॥ १३-१८२-१५ (८८६८२)
शुभं सर्वपवित्रेब्यो दानमेव परं द्विज ।
श्नोचेत्सर्वपवित्रेभ्यो दानमेव परं भवेत् ॥ ॰ १३-१८२-१६ (८८६८३)
यानीमान्युत्तमानीह वेदोक्तानि प्रशंसति ।
तेषां श्रेष्ठतरं दानमिति मे नात्र संशयः ॥ १३-१८२-१७ (८८६८४)
दानवद्भिः कृतः पन्था येन यान्ति मनीषिणः ।
ते हि प्राणस्य दातारस्तेषु धर्मः प्रतिष्ठितः ॥ १३-१८२-१८ (८८६८५)
यथा वेदाः स्वधीताश्च यथा चेन्द्रियसंयमः ।
सर्वत्यागो यता चेह तता दानमनुत्तमम् ॥ १३-१८२-१९ (८८६८६)
त्वं हि तात सुखादेव शुभमेष्यसि शोभनम् ।
सुखात्सुखतरप्राप्तिमाप्नुते मतिमान्नरः ॥ १३-१८२-२० (८८६८७)
तन्नः प्रत्यक्षमेवेदमुपलक्ष्यमसंशयम् ।
श्रीमन्तः प्राप्नुवन्त्यर्थान्दानं यज्ञं तथा सुखम् ॥ १३-१८२-२१ (८८६८८)
सुखादेव परं दुःखं दुःखादन्यत्परं सुखम् ।
दृश्यते हि महाप्राज्ञ नियतं वै स्वभावतः ॥ १३-१८२-२२ (८८६८९)
विविधानीह वृत्तानि नरस्याहुर्मनीषिणः ।
पुण्यमन्यत्पापमन्यन्न पुण्यं न च पापकम् ॥ १३-१८२-२३ (८८६९०)
न वृत्तं मन्यतेऽन्यस्य मन्यतेऽन्यस्य पातकम् ।
यथा स्वकर्मनिर्वृत्तं न पुण्यं न च पापकम् ॥ १३-१८२-२४ (८८६९१)
यज्ञदानतपःशीला नरा वै पुण्यकर्मिणः ।
येऽभिद्रुह्यन्ति भूतानि ते वै पापकृतो जनाः ॥ १३-१८२-२५ (८८६९२)
द्रव्याण्याददते चैव दुःखं यान्ति पतन्ति च ।
ततोऽन्यत्कर्म यत्किंचिन्न पुण्यं न च पातकम् ॥ १३-१८२-२६ (८८६९३)
गनित्यं चाकृपणो भुङ्क्ते स्वजनैर्देहि याचतः ।
भाग्यक्षयेण क्षीयन्ते नोपभोगेन सञ्चयाः ॥' १३-१८२-२७ (८८६९४)
रमस्वैधस्व मोदस्व देहि दाने रमस्व च ।
न त्वामतिभविष्यन्ति वैद्या न च तपस्विनः ॥ ॥ १३-१८२-२८ (८८६९५)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
द्व्यशीत्यधिकशततमोऽध्यायः ॥ १८२ ॥
Mahabharata - Anushaasana Parva - Chapter Footnotes

७-१८२-३ मैत्रेयमपि अज्ञातचरितं चरन्तमित्यर्थः । स्वं ईरयति
धर्माय प्रेरयति स्वैरिणी मुनिश्रेणी तस्याः कुले गृहे। स्वैरिणं
कुल इति थ। पाठः ॥
७-१८२-५ अस्मयत विस्मयं प्राप्तवान् ॥
७-१८२-६ कुतश्च ते प्रमोद इति सम्बन्धः ॥
७-१८२-७ इच्छामि ज्ञातुमिति शेषः ॥
७-१८२-९ अतिच्छेदोऽत्यन्तमन्तरं मशकेन
समुद्रशोषणमिव अतिवादस्तस्यैवार्थस्य कथनं लोके
ताभ्यां विस्मयो मे भवेत् । इदं स्थानं क्रतुशतं विना
न प्राप्यत इति वेदवचनमसत्यम्। जलमात्रदानेन तव
तत्प्राप्तिदर्शनात्। देशकालपात्रश्रद्धाविशेषादल्पमपि महत्तमत्वं
जलमौक्तिकन्यायेन प्राप्नोतीति दर्शनात्। कस्माद्वेदोऽनृतं वदेदिति
उक्तम् ॥

---

अनुससनपर्व-अध्यय१८३
॥ श्रीः ॥
१३.१८३. अध्यायः १८३

अथ दानधर्मपर्व ॥ १ ॥
Mahabharata - Anushaasana Parva - Chapter Topics
भीष्मेण युधिष्ठिरंप्रति
दानादिप्रशंसापरव्यासमैत्रेयसंवादानुवादः ॥ १ ॥

Mahabharata - Anushaasana Parva - Chapter Text

भीष्म उवाच ।
एवमुक्तः प्रत्युवाच मैत्रेयः कर्मपूर्वकः ।
अत्यन्तं श्रीमति कुले जातः प्राज्ञो बहुश्रुतः ॥ १३-१८३-१ (८८६९६)
असंशयं महाप्राज्ञ यथैवात्थ तथैव तत् ।
अनुज्ञातश्च भवता किञ्चिद्ब्रूयामहं विभो ॥ १३-१८३-२ (८८६९७)
व्यास उवाच। १३-१८३-३क्ष् (७३९८)

यद्यदिच्छसि मैत्रेय यावद्यावद्यथायथा ।
ब्रूहि तत्वं महाप्राज्ञ शुश्रुषे वचनं तव ॥ १३-१८३-३ (८८६९८)
मैत्रेय उवाच। १३-१८३-४क्ष् (७३९९)
निर्दोषं निर्मलं चैव वचनं सत्यसंहितम् ।
विद्यातपोभ्यां हि भवान्भावितात्मा न संशयः ॥ १३-१८३-४ (८८६९९)
भवतो भावितात्मत्वाल्लाभोऽयं सुमहान्मम ।
भूयो बुद्ध्याऽनुपश्यामि सुसमृद्धतपा इव ॥ १३-१८३-५ (८८७००)
अपि मे दर्शनादेव भवतोऽभ्युदयो महान् ।
मन्ये भवत्प्रसादोऽयं बुद्धिकर्मस्वभावतः ॥ १३-१८३-६ (८८७०१)
तपः श्रुतं च योनिश्चाप्येतद्ब्राह्मण्यकारणम् ।
त्रिभिर्गुणैः समुदितः स्नातो भवति वै द्विजः ॥ १३-१८३-७ (८८७०२)
अस्मिंस्तृप्ते च तृप्यन्ति पितरो दैवतानि च ।
न हि श्रुतवतां किञ्चिदधिकं ब्राह्मणादृते ॥ १३-१८३-८ (८८७०३)
ग्असंस्कारात्क्षत्रवैश्यौ नश्येते ब्राह्मणादृते ।
शूद्रो नश्यत्यशुश्रूषुराश्रमाणां यथार्हतः ॥' १३-१८३-९ (८८७०४)
श्अन्धं स्यात्तम एवेदं न प्रज्ञायेत किञ्चन ।
चातुर्वर्ण्यं न वर्तेत धर्माधर्मावृतानृते ॥ॄ १३-१८३-१० (८८७०५)
यथाहि सुकृते क्षेत्रे फलं विन्दति मानवः ।
एवं दत्त्वा श्रुतवते फलं दाता समश्नुते ॥ १३-१८३-११ (८८७०६)
ब्राह्मणश्चेन्न विन्देत श्रुतवृत्तोपसंहितः ।
प्रतिग्रहीता दानस्य मोघं स्याद्धनिनां धनम् ॥ १३-१८३-१२ (८८७०७)
अन्नं ह्यविद्वान्हन्त्येवमविद्वांसं च हन्ति तत् ।
तच्चान्यं हन्ति यच्चान्यत्स भुक्त्वा हन्यतेऽबुधः ॥ १३-१८३-१३ (८८७०८)
प्राहुर्ह्यन्नमदन्विद्वान्पुनर्जनयतीश्वरः ।
स चान्नाज्जायते तस्मात्सूक्ष्म एष व्यतिक्रमः ॥ १३-१८३-१४ (८८७०९)
ग्ब्राह्मं ह्यनुपयोगी यो ददंश्चान्नमसंशयम् ।
यस्तारयति वै विद्वान्पितॄन्देवान्सदाऽमृतान्' १३-१८३-१५ (८८७१०)
यदेव ददतः पुण्यं तदेव प्रतिगृह्णतः ।
न ह्येकचक्रं वर्तेत इत्येवमृषयो विदुः ॥ १३-१८३-१६ (८८७११)
यत्र वै ब्राह्मणाः सन्ति श्रुतवृत्तोपसंहिताः ।
तत्र दानफलं पुण्यमिह चामुत्र चाश्नुते ॥ १३-१८३-१७ (८८७१२)
ये योनिशुद्धाः सततं तपस्यभिरता भृशम् ।
दानाध्ययनसम्पन्नास्ते वै पूज्यतमाः सदा ॥ १३-१८३-१८ (८८७१३)
तैर्हि सद्भिः कृतः पन्था देवयानो न मुह्यते ।
ते हि स्वर्गस्य नेतारो यज्ञवाहाः सनातनाः ॥ ॥ १३-१८३-१९ (८८७१४)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
त्र्यशीत्यधिकशततमोऽध्यायः ॥ १८३ ॥
Mahabharata - Anushaasana Parva - Chapter Footnotes

७-१८३-७ श्रुतं शास्त्रज्ञानम्। ७-१८३-८ ब्राह्मणादृते इदमन्धन्तम
एव स्याद्यतो वर्णधर्मादिकं तेन विना न प्रज्ञायेतेति सम्बन्धः। ।
७-१८३-१४ ईश्वरत्वाच्च क्षेत्रभूतः सन् पुनर्जनयति
दात्रे अनेकगुणितं प्रयच्छतीत्यर्थः ।सच दातुरन्नाज्जायते
प्रजारूपेण। गृहस्थश्चेत्तत्र यस्यान्नं तस्य सन्ततिरिति सूक्ष्मो
व्यतिक्रमोऽस्ति। तेन गृहस्थः परपाकं नाश्नीयादिति गम्यते ॥
७-१८३-१५ प्रतिग्रहीत्रभावे अन्नस्य वृद्धिर्न स्यात् ।वद्धयभावे
दातुर्दाने प्रवृत्तिर्न स्यादिति दातृप्रतिग्रहीतारौ चक्रवल्लोकतन्त्रं
वहत इत्यर्थः ॥

---

अनुससनपर्व-अध्यय१८४
॥ श्रीः ॥
१३.१८४. अध्यायः १८४

अथ दानधर्मपर्व ॥ १ ॥
Mahabharata - Anushaasana Parva - Chapter Topics
भीष्मेण युधिष्ठिरंप्रति
विद्यातपोदानप्रशंसापरख्यासमैत्रेयसंवादानुवादः ॥ १ ॥

Mahabharata - Anushaasana Parva - Chapter Text

भीष्म उवाच ।
एवमुक्तः स भगवान्मैत्रेयं प्रत्यभाषत ।
दिष्ट्यैतत्त्वं विजानासि दिष्ट्या ते बुद्धिरीदृशी? १३-१८४-१ (८८७१५)
लोको ह्ययं गुणानेव भूयिष्ठं सम्प्रशंसति ।
रूपमानो वयोमानो धनविद्यामदस्तथा ॥ १३-१८४-२ (८८७१६)
दिष्ट्या नाभिभवन्ति त्वां दैवस्तेऽयमनुग्रहः ।
तत्ते बहुगुणं दानं वर्तयिष्यामि तच्छृणु ॥ १३-१८४-३ (८८७१७)
यानीहागमशास्त्राणि याश्च काश्चित्प्रिवृत्तयः ।
तानि वेदं पुरस्कृत्य प्रवृत्तानि यथाक्रमम्। १३-१८४-४ (८८७१८)
अहं दानं प्रशंसामि भवानपि तपःश्रुतेः ।
तपः पवित्रं वेदस्य तपः स्वर्गस्य साधनम् ॥ १३-१८४-५ (८८७१९)

तपसा महदाप्नोति विद्यया चेति नः श्रुतम् ।
तपसैव चापनुदेद्यच्चान्यदपि दुष्कृतम् ॥१३-१८४-६ (८८७२०)
यद्यद्धि किञ्चित्सन्धाय पुरुषस्तप्यते तपः ।
सर्वमेतदवाप्नोति ब्राह्मणो वेदपारगः ॥१३-१८४-७ (८८७२१)
दुरन्वयं दुष्प्रधर्षं दुरापं दुरतिक्रमम् ।
सर्वं वै तपसाऽभ्योति तपो हि बलवत्तरम् ॥१३-१८४-८ (८८७२२)
सुरापः स्वर्णहारी च भ्रूणहा गुरुतल्पगः ।
तपसा तरते सर्वमेनसश्च प्रमुच्यते ॥१३-१८४-९ (८८७२३)
सर्वो वैद्यस्तु चक्षुष्मानपि यादृशतादृशः ।
तपस्विनं तथैवाहुस्ताभ्यां कार्यं सतां मतम् ॥१३-१८४-१० (८८७२४)
सर्वे पूज्याः श्रुतधनास्तथैव च तपस्विनः ।
दानप्रदाः सुखं प्रेत्य प्राप्नुवन्तीह च श्रियम् ॥१३-१८४-११ (८८७२५)
इमं च ब्रह्मलोकं च लोकं च बलवत्तरम् ।
अन्नदानैः सुकृतिनः प्रतिपद्यन्ति लौकिकम् ॥१३-१८४-१२ (८८७२६)
पूजिताः पूजयन्त्येते मानिता मानयन्ति च ।
स दाता यत्र यत्रैति सर्वतः सम्प्रणूयते ॥१३-१८४-१३ (८८७२७)
अकर्ता चैव कर्ता च लभते यस्य यादृशम् ।
यदि चोर्ध्वं यद्यधो वा स्वान्लोकानभियास्यति ॥१३-१८४-१४ (८८७२८)
प्राप्स्यसि त्वन्नपानानि यानि दास्यसि कर्हिचित् ।
मेधाव्यसि कुले जातः श्रुतवाननृशंसवान् ॥१३-१८४-१५ (८८७२९)
कौमारदारो व्रतवान्मैत्रेय निरतो भव ।
श्एतद्गृहाण प्रथमं प्रशस्तं गृहमेधिनाम् ॥१३-१८४-१६ (८८७३०)
यो भर्ता वासितातुष्टो भर्तुस्तुष्टा च वासिता ।
यस्मिन्नेवं कुले सर्वं कल्याणं तत्र वर्तते ॥१३-१८४-१७ (८८७३१)
अद्भिर्गात्रान्मलमिव तमोऽग्निप्रभया यथा ।
दानेन तपसा चैव विष्णोरभ्यर्चनेन च ।
ग्ब्राह्मणः स महाभाग तरेत्संसारसागरात् ॥ १३-१८४-१८ (८८७३२)
स्वकर्मशुद्धसत्त्वानां तपोभिर्निर्मलात्मनाम् ।
विद्यया गतमोहानां तारणाय हरिः स्मृतः ॥१३-१८४-१९ (८८७३३)
तदर्चनपरो नित्यं तद्भक्तस्तं नमस्कुरु ।
तद्भक्ता न विनश्यन्ति ह्यष्टाक्षरपरायणाः ॥१३-१८४-२० (८८७३४)
प्रणवोपासनपराः परमार्थिपरास्त्विह ।
एतैः पावय चात्मानं सर्वपापमपोह्य च ॥' १३-१८४-२१ (८८७३५)
स्वस्ति प्राप्नुहि मैत्रेय गृहान्साधु व्रजाम्यहम् ।
एतन्मनसि कर्तव्यं श्रेय एवं भविष्यति ॥१३-१८४-२२ (८८७३६)
तं प्रणम्याथ मैत्रेयः कृत्वा चापि प्रदक्षिणम् ।

स्वस्ति प्राप्नोतु भगवानित्युवाच कृताञ्जलिः ॥ ॥ १३-१८४-२३ (८८७३७)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
चतुरशीत्यधिकशततमोऽध्यायः ॥ १८४ ॥
Mahabharata - Anushaasana Parva - Chapter Footnotes

७-१८४-३ वर्तयिष्यामि कथयिष्यामि ॥
७-१८४-१० यः सर्ववित्स चक्षुष्मान् यादृशतादृशमपि तपस्विनं
तथैव चक्षुष्मन्तमेवाहुः ।ताभ्यां सर्ववित्तपस्विभ्याम् ॥
७-१८४-१७ वासिता स्वस्त्री ॥

---

अनुससनपर्व-अध्यय१८५
॥ श्रीः ॥
१३.१८५. अध्यायः १८५

अथ दानधर्मपर्व ॥ १ ॥
Mahabharata - Anushaasana Parva - Chapter Topics
भीष्मेण युधिष्ठिरंप्रति
पतिव्रताधर्मप्रतिपादकशाण्डिलीसुमनासंवादानुवादः ॥ १ ॥

Mahabharata - Anushaasana Parva - Chapter Text

युधिष्ठिर उवाच ।
स्त्रीणां हि समुदाचारं सर्वधर्मविदांवर ।
श्रोतुमिच्छाम्यहं त्वत्तस्तन्मे ब्रूहि पितामह ॥ १३-१८५-१ (८८७३८)
भीष्म उवाच। १३-१८५-२क्ष् (७४००)
सर्वज्ञां सर्वतत्त्वज्ञां देवलोके मनस्विनीम् ।
कैकेयी सुमना नाम शाण्डिलीं पर्यपृच्छत ॥ १३-१८५-२ (८८७३९)
केन वृत्तेन कल्याणि समाचारेण केन वा ।
विधूय सर्वपापानि देवलोकं त्वमागता ॥ १३-१८५-३ (८८७४०)
हुताशनशिखेव त्वं ज्वलमाना स्वतेजसा ।
सुता ताराधिपस्येव प्रभया दिवमागता ॥ १३-१८५-४ (८८७४१)
अरजांसि च वस्त्राणि धारयन्ती गतक्लमा ।
विमानस्था शुभा भासि सहस्रगुणमोजसा ॥ १३-१८५-५ (८८७४२)
न त्वमल्पेन तपसा दानेन नियमेन वा ।
इमं लोकमनुप्राप्ता त्वं हि तत्त्वं वदस्व मे ॥ १३-१८५-६ (८८७४३)

इति पृष्टा सुमनया मधुरं चारुहासिनी ।
शाण्डिली निभृतं वाक्यं सुमनामिदमब्रवीत् ॥ १३-१८५-७ (८८७४४)
नाहं काषायवसना नापि वल्कलधारिणी ।
न च मुण्डा च जटिला भूत्वा देवत्वमागता ॥ १३-१८५-८ (८८७४५)
अहितानि च वाक्यानि सर्वाणि परुषाणि च ।
अप्रमत्ता च भर्तारं कदाचिन्नाहमब्रवम् ॥ १३-१८५-९ (८८७४६)
देवतानां पितॄणां च ब्राह्मणानां च पूजने ।
अप्रमत्ता सदा युक्ता श्वश्रूश्वशुरवर्तिनी ॥ १३-१८५-१० (८८७४७)
पैशुन्ये न प्रवर्तामि न ममैतन्मनो गतम् ।
अद्वारि न च तिष्ठामि चिरं न कथयामि च ॥ १३-१८५-११ (८८७४८)
असद्वा हसितं किञ्चिदहितं वाऽपि कर्मणा ।
रहस्यमरहस्यं वा न प्रवर्तामि सर्वथा ॥ १३-१८५-१२ (८८७४९)
कार्यार्थे निर्गतं चापि भर्तारं गृहमागतम् ।
आसनेनोपसंयोज्य पूजयामि समाहिता ॥ १३-१८५-१३ (८८७५०)
यदन्नं नाभिजानाति यद्भोज्यं नाभिनन्दति ।
भक्ष्यं वा यदि वा लेह्यं तत्सर्वं वर्जयाम्यहम् ॥ १३-१८५-१४ (८८७५१)
कुटुंबार्थे समानीतं यत्किञ्चित्कार्यमेव तु ।
पुनरुत्थाय तत्सर्वं कारयामि करोमि च ॥ १३-१८५-१५ (८८७५२)
अग्निसंरक्षणपरा गृहशुद्धिं च कारये ।
कुमारान्पालये नित्यं कुमारीं परिशिक्षये ॥ १३-१८५-१६ (८८७५३)
आत्मप्रियाणि हित्वाऽपि गर्भसंरक्षणे रता ।
बालानां वर्जये नित्यं शापं कोपं प्रतापनम् ॥ १३-१८५-१७ (८८७५४)
अविक्षिप्तानि धान्यानि नान्नविक्षेपणं गृहे ।
रक्तवत्स्पृहये गेहे गावः सयवसोदकाः ।
समुद्गम्य च शुद्धाऽहं भिक्षां दद्यां द्विजातिषु ॥ १३-१८५-१८ (८८७५५)
प्रवासं यदि मे याति भर्ता कार्येण केनचित् ।
मङ्गलैर्बहुभिर्युक्ता भवामि नियता तदा ॥ १३-१८५-१९ (८८७५६)
अञ्जनं रोचनां चैव स्नानं माल्यानुलेपनम् ।
प्रसाधनं च निष्क्रान्ते नामिनन्दामि भर्तरि ॥ १३-१८५-२० (८८७५७)
नोत्थापयामि भर्तारं सुखं सुप्तमहं सदा ।
आतुरेष्वपि कार्येषु तेन तुष्यति मे मनः ।
नोत्थापये सुखं सुप्तं ह्यातुरं पालये पतिम् ॥ १३-१८५-२१ (८८७५८)
नायासयामि भर्तारं कुटुम्बार्थेऽपि सर्वदा ।
गुप्तगुह्या सदा चास्मि सुसंमृष्टनिवेशना ॥ १३-१८५-२२ (८८७५९)
इमं धर्मपथं नारी पालयन्ती समाहिता ।
अरुन्धतीव नारीणीस्वर्गलोके महीयते ॥ १३-१८५-२३ (८८७६०)

भीष्म उवाच। १३-१८५-२४क्ष् (७४०१)
एतदाख्याय सा देवी सुमनायै तपस्विनी ।
पतिधर्मं महाभागा जगामादर्शनं तदा ॥ १३-१८५-२४ (८८७६१)
यश्चेदं पाण्डवाख्यानं पठेत्पर्वणि पर्वणि ।
स देवलोकं सम्प्राप्य नन्दने स सुखी वसेत् ॥ ॥ १३-१८५-२५ (८८७६२)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
पञ्चाशीत्यधिकशततमोऽध्यायः ॥ १८५ ॥
Mahabharata - Anushaasana Parva - Chapter Footnotes

७-१८५-१९ मङ्गलैर्नियतेति मङ्गलसूत्रमात्रं धारयामि नतु
ताम्बूलादीनित्यर्थः ॥
७-१८५-२५ पाण्डवाख्यानं पाण्डवेति च्छेदः ॥

---

अनुससनपर्व-अध्यय१८६
॥ श्रीः ॥
१३.१८६. अध्यायः १८६

अथ दानधर्मपर्व ॥ १ ॥
Mahabharata - Anushaasana Parva - Chapter Topics
युधिष्ठिरेणावश्चवेद्योपास्येषु परावधिं पृष्टेनि भीष्मेण
तम्प्रति श्रीनारायणमहिमप्रतिपादकनारदपुण्डरीकसंवादानुवादपूर्वकं
नारायणस्य सर्वोत्कृष्टत्वेन वेद्यत्वोपास्यत्वविधानम् ॥ १ ॥

Mahabharata - Anushaasana Parva - Chapter Text

ग्क्ष्युधिष्ठिर उवाच ।
यज्ज्ञेयं परमं कृत्यमनुष्ठेयं महात्मभिः ।
सारं मे सर्वशास्त्राणां वक्तुमर्हस्यनुग्रहात् ॥ १३-१८६-१ (८८७६३)
भीष्म उवाच। १३-१८६-२क्ष् (७४०२)
श्रूयतामिदमत्यन्तं गूढं संसारमोचनम् ।
श्रोतव्यं च त्वया सम्यग्ज्ञातव्यं च विशाम्पते ॥ १३-१८६-२ (८८७६४)
पुण्डरीकः पुरा विप्रः पुण्यतीर्थे जपान्वितः ।
नारदं परिपप्रच्छ श्रेयो योगपरं मुनिम् ॥ १३-१८६-३ (८८७६५)
नारदश्चाब्रवीदेनं ब्रह्मणोक्तं महात्मना ॥ १३-१८६-४ (८८७६६)
शृणुष्वावहितस्तात ज्ञानयोगमनुत्तमम् ।

अप्रभूतं प्रभूतार्थं वेदशास्त्रार्थसंयुतम्। १३-१८६-५ (८८७६७)
यः परः प्रकृते प्रोक्तः पुरुषः पञ्चविंशकः ।
स एव सर्वभूतात्मा नर इत्यभिधीयते ॥ १३-१८६-६ (८८७६८)
नराज्जातानि तत्वानि नाराणीति ततो विदुः ।
तान्येव चायनं तस्य तेन नारायणः स्मृतः ॥ १३-१८६-७ (८८७६९)
नारायणाज्जगत्सर्वं सर्गकाले प्रजायते ।
तस्मिन्नेव पुनस्तच्च प्रलये सम्प्रलीयते ॥ १३-१८६-८ (८८७७०)
नारायणः परं ब्रह्म तत्वं नारायणः परः ।
परादपि परश्चासौ तस्मान्नास्ति परात्परः ॥ १३-१८६-९ (८८७७१)
वासुदेवं तथा विष्णुमात्मानं च तथा विदुः ।
संज्ञाभेदैः स एवैकः सर्वशास्त्राभिसंस्कृतः ॥ १३-१८६-१० (८८७७२)
आलोड्य सर्वशास्त्राणि विचार्य च पुनःपुनः ।
इदमेकं सुनिष्पन्नं ध्येयो नारायणः सदा ॥ १३-१८६-११ (८८७७३)
तस्मात्त्वं गहनान्सर्वांस्त्यक्त्वा शास्त्रार्थविस्तरान् ।
अनन्यचेता ध्यायस्व नारायणमजं विभुम् ॥ १३-१८६-१२ (८८७७४)
मुहूर्तिमपि यो ध्यायेन्नारायणमतन्द्रितः ।
सोऽपि तद्गतिमाप्नोति किं पुनस्तत्परायणः ॥ १३-१८६-१३ (८८७७५)
नमो नारायणायेति यो वेद ब्रह्म शाश्वतम् ।
अन्त्यकाले जपन्नेति तद्विष्णोः परमं पदम् ॥ १३-१८६-१४ (८८७७६)
श्रवणान्मननाच्चैव गीतिस्तुत्यर्चनादिभिः ।
आराध्यं सर्वदा ब्रह्म पुरुषेण हितैषिणा ॥ १३-१८६-१५ (८८७७७)
लिप्यते न स पापेन नारायणपरायणः ।
पुनाति सकलं लोकं सहस्रांशुरिवोदितः ॥ १३-१८६-१६ (८८७७८)
ब्रह्मचारी गृहस्थोऽपि वानप्रस्थोऽथ भिक्षुकः ।
केशवाराधनं हित्वा नैव याति परां गतिम् ॥ १३-१८६-१७ (८८७७९)
जन्मान्तरसहस्रेषु दुर्लभा तद्गता मतिः ।
तद्भक्तवत्सलं देवं समराधय सुव्रत ॥ १३-१८६-१८ (८८७८०)
नारदेनैवमुक्तस्तु स विप्रोऽभ्यर्चयद्धरिम् ।
स्वप्नोऽपि पुण्डरीकाक्षं शङ्खचक्रगदाधरम् ॥ १३-१८६-१९ (८८७८१)
किरीटकुण्डलधरं लसच्छ्रीवत्सकौस्तुभम् ।
तं दृष्ट्वा देवदेवेशं प्राणमत्सम्भ्रमान्वितः ॥ १३-१८६-२० (८८७८२)
अथ कालेन महता तथा प्रत्यक्षतां गतः ।
संस्तुतः स्तुतिभिर्वेदैर्देवगन्धर्वकिन्नरैः ॥ १३-१८६-२१ (८८७८३)
अथ तेनैव भगवानात्मलोकमधोक्षजः ।
गतः सम्प्रजितः सर्वैः स योगिनिलयो हरिः ॥ १३-१८६-२२ (८८७८४)
तस्मात्त्वमपि राजेन्द्र तद्भक्तस्तत्परायणः ।

अर्चयित्वा यथायोगं भजस्व पुरुषोत्तमम् ॥ १३-१८६-२३ (८८७८५)
अजरममरमेकं ध्येयमाद्यन्तशून्यं
सगुणमगुणमाद्यं स्थूलमत्यन्तसूक्ष्मम् ।
निरुपममुपमेयं योगिविज्ञानगम्यं
त्रिभुवनगुरुमीशं सम्प्रपद्यस्व विष्णुम् ॥ १३-१८६-२४ (८८७८६)
॥ इती श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
षडशीत्यधिकशततमोऽध्यायः ॥ १८६ ॥
Mahabharata - Anushaasana Parva - Chapter Footnotes

७-१८६-१क्ष् अयमध्यायो दाक्षिणात्यकोशेष्वेव दृश्यते ।

---

अनुससनपर्व-अध्यय१८७
॥ श्रीः ॥
१३.१८७. अध्यायः १८७

अथ दानधर्मपर्व ॥ १ ॥
Mahabharata - Anushaasana Parva - Chapter Topics
भीष्मेण युधिष्ठिरंप्रति साम्नः सकलवशीकरणोपायत्वे
दृष्टान्ततया रक्षोब्राह्मणसंवादानुवादः ॥ १ ॥

Mahabharata - Anushaasana Parva - Chapter Text

युधिष्ठिर उवाच ।
साम्नि चापि प्रदानेन च ज्यायः किं भवतो मतम् ।
प्रब्रूहि भरतश्रेष्ठ यदत्र व्यतिरिच्यते ॥ १३-१८७-१ (८८७८७)
भीष्म उवाच। १३-१८७-२क्ष् (७४०३)
साम्ना प्रसाद्यते कश्चिद्दानेन च तथाऽपरः ।
पौरुषीं प्रकृतिं ज्ञात्वा तयोरेकतरं भजेत् ॥ १३-१८७-२ (८८७८८)
गुणांस्तु शृणु वैराजन्त्सान्त्वस्य पुरुषर्षभ ।
दारुणान्यपि भूतानि सान्त्वेनाराधयेद्यथा ॥ १३-१८७-३ (८८७८९)
अत्राप्युदाहरन्तीममिदिहासं पुरातनम् ।
गृहीत्वा रक्षसा मुक्तो द्विजातिः कानने यथा ॥ १३-१८७-४ (८८७९०)
कश्चित्तु बुद्धिसम्पन्नो ब्राह्मणो विजने वने ।
गृहीतः कृच्छ्रमापन्नो रक्षसा भक्षयिष्यता ॥ १३-१८७-५ (८८७९१)
सुबुद्धिः श्रुतिसम्पन्नो दृष्ट्वा तमतिभीषणम् ।
सामैवास्मै प्रयुञ्जानो न मुमोह न विव्यधे ॥ १३-१८७-६ (८८७९२)

रक्षस्तु वाचा सम्पूज्य प्रश्नं पप्रच्छ तं द्विजम् ।
मोक्ष्यसे ब्रूहि मे प्रश्नं केनास्मि हरिणः कृशः ॥ १३-१८७-७ (८८७९३)
भीष्म उवाच। १३-१८७-८क्ष् (७४०४)
मुहूर्तमथ सञ्चिन्त्य ब्राह्मणिस्तं निरीक्ष्य सः ।
अभीतवदथाव्यग्रः प्रश्नं प्रतिजगाद ह ॥ १३-१८७-८ (८८७९४)
विदेशस्थो विलोकस्थो विना नूनं सुहृज्जनैः ।
विषयानतुलान्भुङ्क्षे तेनासि हरिणः कृशः ॥ १३-१८७-९ (८८७९५)
नूनं मित्राणि ते रक्षः साधूपचरितान्यपि ।
स्वदोषात्तु परित्यज्य तेनासि हरिणः कृशः ॥ १३-१८७-१० (८८७९६)
अवृत्त्या पीड्यमानोऽपि वृत्त्युपायान्विगर्हयन् ।
महार्थान्ध्यायसे नूनं तेनासि हरिणः कृशः ॥ १३-१८७-११ (८८७९७)
परकार्याधिकारस्थाः सद्गुणैरधमा नराः ।
अवजानन्ति नूनं त्वां तेनासि हरिणः कृशः ॥ १३-१८७-१२ (८८७९८)
गुणवान्निर्गुणानन्यान्नूनं पश्यसि तत्कृतान् ।
प्राज्ञैरपि विनीतात्मा तेनासि हरिणः कृशः ॥ १३-१८७-१३ (८८७९९)
सम्पीड्यात्मानमार्यत्वात्त्वया कश्चिदुपस्कृतः ।
जितं त्वां मन्यते साधो तेनासि हरिमः कृशः ॥ १३-१८७-१४ (८८८००)
क्लिश्यमानान्विमार्गेषु कामक्रोधावृतात्मनः ।
मन्येऽनुध्यायसि जनांस्तेनासि हरिमः कृशः ॥ १३-१८७-१५ (८८८०१)
प्राज्ञैरपुजितो नूनं प्राज्ञैरप्यभिनिन्दितः ।
ह्रीमानमर्षी दुर्वृत्तस्तेनासि हरिणः कृशः ॥ १३-१८७-१६ (८८८०२)
नूनं मित्रमुखः शत्रुः कश्चिदार्यवदाचरन् ।
वञ्चयित्वा गतस्त्वां वै तेनासि हरिणः कृशः ॥ १३-१८७-१७ (८८८०३)
नूनमद्य सतां मध्ये तव वाक्यमनुत्तमम् ।
न भाति कालेऽभिहितं तेनासि हरिणः कृशः ॥ १३-१८७-१८ (८८८०४)
दृष्टपूर्वाञ्श्रुतपूर्वान्कुपितान्हृदयप्रियान् ।
अनुनेतुं न शक्नोषि तेनासि हरिणः कृशः ॥ १३-१८७-१९ (८८८०५)
नूनमासञ्जयित्वा त्वा कृत्ये कस्मिंश्चिदीप्सिते ।
कच्चिदर्थयते नित्यं तेनासि हरिणः कृशः ॥ १३-१८७-२० (८८८०६)
परोक्षवादिभिर्मिथ्यादोषस्ते सम्प्रदर्शितः ।
तज्ज्ञैर्न पूज्यसे व्यक्तं तेनासि हरिणः कृशः ॥ १३-१८७-२१ (८८८०७)
नूनं त्वां सद्गुणापेक्षं पूजयानं सुहृत्प्रजाः ।
मायावीति च जानन्ति तेनासि हरिणः कृशः ॥ १३-१८७-२२ (८८८०८)
अन्तर्गतमभिप्रायंन न नूनं लज्जयेच्छसि ।
विवक्तुं प्राप्य शैथिल्यात्तेनासि हरिणः कृशः ॥ १३-१८७-२३ (८८८०९)
नानाबुद्धिरुचीँल्लोके मानुषान्नूनमिच्छसि ।

ग्रहीतुं स्वैर्गुणैः सर्वांस्तेनासि हरिणः कृशः ॥ १३-१८७-२४ (८८८१०)
असत्सु विनिविष्टेषु न गुणान्वदतः स्वयम् ।
गुणास्ते न विराजन्ते तेनासि हरिणः कृशः ॥ १३-१८७-२५ (८८८११)
धर्मवृत्तः श्रुतैर्हीनः पदं त्वं रजसान्वितः ।
महत्प्रार्थयसे नूनं तेनासि हरिणः कृशः ॥ १३-१८७-२६ (८८८१२)
तपःप्रणिहितात्मानं मन्ये त्वारण्यकाङ्क्षिणम् ।
बन्धुवर्गो निगृह्णाति तेनासि हरिमः कृशः ॥ १३-१८७-२७ (८८८१३)
इष्टभार्यस्य ते नूनं प्रातिवेश्यो महाधनः ।
युवा सुललितः कामी तेनासि हरिणः कृशः ॥ १३-१८७-२८ (८८८१४)
दुर्विनीतहतः पुत्रो जामाता वाऽप्रमार्जकः ।
दारा वा प्रतिकूलास्ते तेनासि हरिमः कृशः ॥ १३-१८७-२९ (८८८१५)
भ्रातरोऽतीव विषमाः पिता वा क्षुत्क्षतो मृतः ।
माता ज्योष्ठो गुरुर्वाऽपि तेनासि हरिमः कृशः ॥ १३-१८७-३० (८८८१६)
ब्राह्मणो वा हतो गौर्वा ब्रह्मस्वं वापहृतं पुरा ।
देवस्यं वा हृतं काले तेनासि हरिणः कृशः ॥ १३-१८७-३१ (८८८१७)
हृतदारोऽथ वृद्धो वा लोके द्विष्टोऽथवा नरैः ।
अविज्ञानेन वा वृद्धस्तेनासि हरिणः कृशः ॥ १३-१८७-३२ (८८८१८)
वार्धकार्थं धनं दृष्ट्वा स्वा श्रीर्वाऽपि परैर्हृता ।
वृत्तिर्वा दुर्जनापेक्षा तेनासि हरिणः कृशः ॥ १३-१८७-३३ (८८८१९)
सम्पत्कालेन ते धर्मः क्षीणस्तात सुहृद्भवैः ।
असंन्यासमतिस्तत्र तेनासि हरिणः कृशः ॥ १३-१८७-३४ (८८८२०)
अविद्वान्भीरुरल्पार्थे विद्याविक्रमदानजम् ।
यशः प्रार्थयसे नित्यं तेनासि हरिणः कृशः ॥ १३-१८७-३५ (८८८२१)
चिरहाभिलषितं किञ्चित्फलमप्राप्तमेव ते ।
कृतमन्यैरपहृतं तेनासि हरिणः कृशः ॥ १३-१८७-३६ (८८८२२)
नूनमात्मगतं दोषमपश्यन्किंचिदात्मनि ।
अकारणेऽभिशस्तो हि तेनासि हरिणः कृशः ॥ १३-१८७-३७ (८८८२३)
सुहृदां दुःखमार्तानां न प्रमोक्ष्यसि हानिजम् ।
अलमर्थगुणैर्हीनं तेनासि हरिणः कृशः ॥ १३-१८७-३८ (८८८२४)
साधून्गृहस्थान्दृष्ट्वा च तथा साधून्वनेचरान् ।
मुक्तांश्चावसथे सक्तांस्तेनासि हरिमः कृशः ॥ १३-१८७-३९ (८८८२५)
धर्म्यमर्थ्यं च काम्यं च देशे च रहितं वचः ।
न प्रसिद्ध्यति ते नूनं तेनासि हरिणः कृशः ॥ १३-१८७-४० (८८८२६)
दत्तानकुशलैरर्थान्मनीषी संजिजीविषुः ।
प्राप्य वर्तयसे नूनं तेनासि हरिणः कृशः ॥ १३-१८७-४१ (८८८२७)
परस्परविरुद्धानां प्रियं नूनं चिकीर्षसि ।

सुहृदामुपरोधेन तेनासि हरिणः कृशः ॥ १३-१८७-४२ (८८८२८)
पापान्विवर्धितान्दृष्ट्वा कल्याणांश्चावसीदतः ।
ध्रुवं गर्हयसे नूनं तेनासि हरिणः कृशः ॥ १३-१८७-४३ (८८८२९)
एवं सम्पूजितं रक्षो विप्रं तं प्रत्यपूजयत् ।
सहायमकरोच्चैनं सम्पूज्यामुं मुमोच ह ॥ ॥ १३-१८७-४४ (८८८३०)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
सप्ताशीत्यधिकशततमोऽध्यायः ॥ १८७ ॥
Mahabharata - Anushaasana Parva - Chapter Footnotes

७-१८७-८ आभिर्गाधाभिरव्यग्र इति झ पाठः ॥
७-१८७-१० स्वदोषादपरज्यन्ते इति झ पाठः ॥
७-१८७-१६ प्रज्ञासम्भावितो नूनमप्रदैरुपसंहिते इति झ पाठः ॥

---

अनुससनपर्व-अध्यय१८८
॥ श्रीः ॥
१३.१८८. अध्यायः १८८

अथ दानधर्मपर्व ॥ १ ॥
Mahabharata - Anushaasana Parva - Chapter Topics
भीष्मेण युधिष्ठिरंप्रति
श्राद्धविद्यादिप्रतिपादकपितृदेवदूतादिसंवादानुवादः ॥ १ ॥

Mahabharata - Anushaasana Parva - Chapter Text

श्क्रयुधिष्ठिर उवाच ।
जन्म मानुष्यकं प्राप्य कर्मक्षेत्रं सुदुर्लभम् ।
श्रेयोर्थिना दरिद्रेण किं कर्तव्यं पितामह ॥ १३-१८८-१ (८८८३१)
दानानामुत्तमं यच्च देयं यच्च यथायथा ।
मान्यान्पूज्यांश्च गाङ्गेय रहस्यं वक्तुमर्हसि ॥ १३-१८८-२ (८८८३२)
वैशम्पायन उवाच। १३-१८८-३क्ष् (७४०५)
एवं पृष्टो नरेन्द्रेण पाण्डवेन यशस्विना ।
धर्माणां परमं गुह्यं भीष्मः प्रोवाच पार्थिवम् ॥ १३-१८८-३ (८८८३३)
भीष्म उवाच। १३-१८८-४क्ष् (७४०६)
शृणुष्वावहितो राजन्धर्मगुह्यानि भारत ।
यथाहि भगवान्व्यासः पुरा कथितवान्मयि ॥ १३-१८८-४ (८८८३४)

देवगुह्यमिदं राजन्यमेनाक्लिष्टकर्मणा ।
नियमस्थेन युक्तेन तपसो महतः फलम् ॥ १३-१८८-५ (८८८३५)
येन यः प्रीयते देवः प्रीयन्ते पितरस्तथा ।
ऋषयः प्रमथाः श्रीश्च चित्रगुप्तो दिशां गजाः ॥ १३-१८८-६ (८८८३६)
ऋषिधर्मः स्मृतो यत्र सरहस्यो महाफलः ।
महादानफलं चैव सर्वयज्ञफलं तथा ॥ १३-१८८-७ (८८८३७)
यश्चैतदेवं जानीयाज्ज्ञात्वा वा कुरुतेऽनघ ।
सदोषोऽदोषवांश्चेह तैर्गुणैः सह युज्यते ॥ १३-१८८-८ (८८८३८)
दशसूनासमं चक्रं दशचक्रसमो ध्वजः ।
दशध्वजसमा वेश्या दशवेश्यासमो नृपः १३-१८८-९ (८८८३९)
अर्धेनैतानि सर्वाणि नृपतिः कथ्यतेऽधिकः ।
त्रिवर्गसहितं शास्त्रं पवित्रं पुण्यलक्षणम् ॥ १३-१८८-१० (८८८४०)
धर्मव्याकरणं पुण्यं रहस्यश्रवणं महत् ।
श्रोतव्यं धर्मसंयुक्तं विहितं त्रिदशैः स्वयम् ॥ १३-१८८-११ (८८८४१)
पितॄणां यत्र गुह्यानि प्रोच्यन्ते श्राद्धकर्मणि ।
देवतानां च सर्वेषां रहस्यं कथ्यतेऽखिलम् ॥ १३-१८८-१२ (८८८४२)
ऋषिधर्मः स्मृतो यत्र सरहस्यो महाफलः ।
महायज्ञफलं चैव सर्वदानफलं तथा ॥ १३-१८८-१३ (८८८४३)
ये पठन्ति सदा मर्त्या येषां चैवोपतिष्ठति ।
श्रुत्वा च फलमाचष्टे स्वयं नारायणः प्रभुः ॥ १३-१८८-१४ (८८८४४)
गवां फलं तीर्थफलं यज्ञानां चैव यत्फलम् ।
एतत्फलमवाप्नोति यो नरोऽतिथिपूजकः ॥ १३-१८८-१५ (८८८४५)
श्रोतारः श्रद्धधानाश्च येषां शुद्धं च मानसम् ।
तेषां व्यक्तं जिता लोकाः श्रद्दधानेन साधुना ॥ १३-१८८-१६ (८८८४६)
मुच्यते किल्बिषाच्चैव न स पापेन लिप्यते ।
धर्मं च लभते नित्यं प्रेत्य लोकगतो नरः ॥ १३-१८८-१७ (८८८४७)
कस्यचित्त्वथ कालस्य देवदूतो यदृच्छया ।
स्थितो ह्यन्तर्हितो भूत्वा पर्यभाषत वासवम् ॥ १३-१८८-१८ (८८८४८)
यो तौ कामगुणोपेतावश्विनौ भिषजां वरौ ।
आज्ञयाऽहं तयोः प्राप्तः सनरान्पितृदैवतान् ॥ १३-१८८-१९ (८८८४९)
कस्माद्धि मैथुनं श्राद्धे दातुर्भोक्तुश्च वर्जितम् ।
केमर्थं च त्रयः पिण्डाः प्रविभक्ताः पृथक्पृथक् ॥ १३-१८८-२० (८८८५०)
प्रथमः कस्य दातव्यो मध्यमः क्व च गच्छति ।
उत्तरश्च स्मृतः कस्य एतदिच्छामि वेदितुम् ॥ १३-१८८-२१ (८८८५१)
श्रद्दधानेन दूतेन भाषितं धर्मसंहितम् ।
पूर्वस्थास्त्रिदशाः सर्वे पितरः पूज्य खेचरम् ॥ १३-१८८-२२ (८८८५२)

पितर ऊचुः। १३-१८८-२३क्ष् (७४०७)
स्वागतं तेऽस्तु भद्रं ते श्रूयतां खेचरोत्तम ।
गूढार्थः परमः प्रश्नो भवता समुदीरितः ॥ १३-१८८-२३ (८८८५३)
श्राद्धं दत्त्वा च भुक्त्वा च पुरुषो यः स्त्रियं व्रजेत् ।
पितरस्तस्य तं मासं तस्मिन्रेतसि शेरते ॥ १३-१८८-२४ (८८८५४)
प्रविभागं तु पिण्डानां प्रवक्ष्याम्यनुपूर्वशः ।
पिण्डो ह्यधस्ताद्गच्छंस्तु अप आविश्य भावयेत् ॥ १३-१८८-२५ (८८८५५)
पिण्डं तु मध्यमं तत्र पत्नीत्वेका समश्नुते ।
पिण्डस्तृतीयो यस्तेषां तं दद्याज्जातवेदसि ।
एष श्राद्धविधिः प्रोक्तो यथा धर्मो न लुप्यते ॥ १३-१८८-२६ (८८८५६)
पितरस्तस्य तुष्यन्ति प्रहृष्टमनसः सदा ।
प्रजा विवर्धते चास्य अक्षयं चोपतिष्ठति ॥ १३-१८८-२७ (८८८५७)
देवदूत उवाच। १३-१८८-२८क्ष् (७४०८)
आनुपूर्व्येण पिण्डानां प्रविभागः पृथक्पृथक् ।
पितॄणां त्रिषु सर्वेषां निरुक्तं कथितं त्वया ॥ १३-१८८-२८ (८८८५८)
एकः समुद्धृतः पिण्डो ह्यधस्तात्कस्य गच्छति ।
कं वा प्रीणयते देवं कथं तारयते पितॄन् ॥ १३-१८८-२९ (८८८५९)
मध्यमं तु तदा पत्नी भुङ्क्तेऽनुज्ञातमेव हि ।
किमर्थं पितरस्तस्य कव्यमेव च भुञ्जते ॥ १३-१८८-३० (८८८६०)
अत्र यस्त्वन्तिमः पिण्डो गच्छते जातवेदसम् ।
भवते का गतिस्तस्य कं वा समनुगच्छति ॥ १३-१८८-३१ (८८८६१)
एतदिच्छाम्यहं श्रोतुं पिण्डेषु त्रिषु या गतिः ।
फलं वृत्तिं च मार्गं च यश्चैनं प्रतिपद्यते ॥ १३-१८८-३२ (८८८६२)
पितर ऊचुः। १३-१८८-३३क्ष् (७४०९)
सुमहानेष प्रश्नो वै यस्त्वया समुदीरितः ।
रहस्यमद्भुतं चापि पृष्टाः स्म गगनेचर ॥ १३-१८८-३३ (८८८६३)
एतदेव प्रशंसन्ति देवाश्च मुनयस्तथा ।
तेऽप्येवं नाभिजानन्ति पितृकार्यविनिश्चयम् ।
वर्जयित्वा महात्मानं चिरजीविनमुत्तमम् ॥ १३-१८८-३४ (८८८६४)
पितृभक्तस्तु यो विप्रो वलब्धो महायशाः ।
त्रयाणामपि पिण्डानां श्रुत्वा भगवतो गतिम् ॥ १३-१८८-३५ (८८८६५)
देवदूतेन यः पृष्टः श्राद्धस्य विदिनिश्चयः ।
गतिं त्रयाणां पिण्डानां शृणुष्वावहितो मम ॥ १३-१८८-३६ (८८८६६)
अपो गच्छति यो ह्यत्र शशिनं ह्येष प्रीणयेत् ।
शशी प्रीणयते देवान्पितॄंश्चैव महामते ॥ १३-१८८-३७ (८८८६७)
भुङ्क्ते तु पत्नीं यं चैषामनुज्ञाता तु मध्यमम् ।

पुत्रकामाय पुत्रं तु प्रयच्छन्ति पितामहाः ॥ १३-१८८-३८ (८८८६८)
हव्यवाहे तु यः पिण्डो दीयते तन्निबोध मे ।
पितरस्तेन तृप्यन्ति प्रीताः कामान्दिशन्ति च ।
एतत्ते कथितं सर्वं त्रिषु पिण्डेषु या गतिः ॥ १३-१८८-३९ (८८८६९)
ऋत्विग्यो यजमानस्य पितृत्वमनुगच्छति ।
तस्मिन्नहनि मन्यन्ते परिहार्यं हि मैथुनम् ॥ १३-१८८-४० (८८८७०)
शुचिना तु सदा श्राद्धं भोक्तव्यं खेचरोत्तम ।
ये मया कथिता दोषास्ते तथा स्युर्न चान्यथा ॥ १३-१८८-४१ (८८८७१)
तस्मात्स्नातः शुचिः क्षान्तः श्राद्धं भुञ्जीत वै द्विजः ।
प्रजा विवर्दते चास्य चश्चैवं सम्प्रयच्छति ॥ १३-१८८-४२ (८८८७२)
ततो विद्युत्प्रभो नाम ऋषिराह महातपाः ।
आदित्यतेजसा तस्य तुल्यं रूपं प्रकाशते ॥ १३-१८८-४३ (८८८७३)
स च धर्मरहस्यानि श्रुत्वा शक्रमथाब्रवीत् ॥ १३-१८८-४४ (८८८७४)
तिर्यग्योनिगतान्सत्वान्मर्त्या हिंसन्ति मोहिताः ।
कीटान्पिपीलिकान्सर्पान्मेषान्समृगपक्षिणः ।
किल्बिषं सुबहु प्राप्ताः किंस्विदेषां प्रतिक्रिया ॥ १३-१८८-४५ (८८८७५)
ततो देवगणाः सर्वे ऋषयश्च तपोधनाः ।
पितरश्च महाभागाः पूजयन्ति स्म तं मुनिम् ॥ १३-१८८-४६ (८८८७६)
शक्र उवाच। १३-१८८-४७क्ष् (७४१०)
कुरुक्षेत्रं गयां गङ्गां प्रभासं पुष्कराणि च ।
एतानि मनसा ध्यात्वा अवगाहेत्ततो जलम् ।
तथा मुच्यति पापेनि राहुणा चन्द्रमा यथा ॥ १३-१८८-४७ (८८८७७)
त्र्यहं स्नातः स भवति निराहारश्च वर्तते ।
स्पृशते यो गवां पृष्ठं वालधिं च नमस्यति ॥ १३-१८८-४८ (८८८७८)
ततो विद्युत्प्रभो वाक्यमभ्यभाषत वासवम् ।
अयं सूक्ष्मतरो धर्मस्तं निबोध शतक्रतो ॥ १३-१८८-४९ (८८८७९)
घृष्टो वटकषायेणि अनुलिप्तः प्रियङ्गुणा ।
क्षीरेण षष्टिकान्भुक्त्वा सर्वपापैः प्रमुच्यते ॥ १३-१८८-५० (८८८८०)
श्रूयतां चापरं गुह्यं रहस्यमृषिचिन्तितम् ।
श्रुतं मे भाषमाणस्य स्थाणोः स्थाने बृहस्पतेः ।
रुद्रेण सह देवेश तन्निबोध शचीपते ॥ १३-१८८-५१ (८८८८१)
पर्वतारोहणं कृत्वा एकपादो विभावसुम् ।
निरीक्षेत निराहार ऊर्ध्वबाहुः कृताञ्जलिः ।
तपसा महता युक्त उपवासफलं लभेत् ॥ १३-१८८-५२ (८८८८२)
रश्मिभिस्तापितोऽर्कस्य सर्वपापमपोहति ।
ग्रीष्मकालेऽथवा शीते एवं पापमपोहति ॥ १३-१८८-५३ (८८८८३)

ततः पापात्प्रमुक्तस्य द्युतिर्भवति शाश्वती ।
तेजसा सूर्यवद्दीप्तो भ्राजते सोमवत्पनः ॥ १३-१८८-५४ (८८८८४)
मध्ये त्रिदशवर्गस्य देवराजः शतक्रतुः ।
उवाच मधुरं वाक्यं बृहस्पतिमनुत्तमम् ॥ १३-१८८-५४ (८८८८५)
धर्मगुह्यं तु भगवन्मानुषाणां सुखावहम् ।
सरहस्याश्च ये दोषास्तान्यथावदुदीरथ ॥ १३-१८८-५६ (८८८८६)
बृहस्पतिरुवाच। १३-१८८-५७क्ष् (७४११)
प्रतिमेहन्ति ये सूर्यमनिलं द्विषते च ये ।
हव्यवाहे प्रदीप्ते च समिधं ये न जुह्वति ॥ १३-१८८-५७ (८८८८७)
बालवत्सां च ये धेनुं दुहन्ति क्षीरकारणात् ।
तेषां दोषान्प्रवक्ष्यामि तान्निबोध शचीपते ॥ १३-१८८-५८ (८८८८८)
भानुमाननिलश्चैव हव्यवाहश्च वासव ।
लोकानां मातरश्चैव गावः सृष्टाः स्वयंभुवा ॥ १३-१८८-५९ (८८८८९)
लोकांस्तारयितुं शक्ता मर्त्येष्वेतेषु देवताः ।
सर्वे भवन्तः शृणिवन्तु एकैकं धर्मनिश्चयम् ॥ १३-१८८-६० (८८८९०)
वर्षाणि षडशीतिं तु दुर्वृत्ताः कुलपांसनाः ।
स्त्रियः सर्वाश्च दुर्वृत्ताः प्रतिमेहन्ति या रविम् ॥ १३-१८८-६१ (८८८९१)
अनिलद्वेषिणः शक्र गर्भस्था च्यवते प्रजा ।
हव्यवाहस्य दीप्तस्य समिधं ये न जुह्वति ।
अग्निकार्येषु वै तेषां हव्यं नाश्नाति पावकः ॥ १३-१८८-६२ (८८८९२)
क्षीरं तु बालवत्सानां ये पिबन्तीह मानवाः ।
न तेषां क्षीरपाः केचिज्जायन्ते कुलवर्धनाः ॥ १३-१८८-६३ (८८८९३)
प्रजाक्षयेण युज्यन्ते कुलवंशक्षयेण च ।
एवमेतत्पुरा दृष्टं कुलवृद्धैर्द्विजातिभिः ॥ १३-१८८-६४ (८८८९४)
तस्माद्वर्ज्यानि वर्ज्यानि कार्यं कार्यं च नित्यशः ।
भूतिकामेनि मर्त्येन सत्यमेतद्ब्रवीमि ते ॥ १३-१८८-६५ (८८८९५)
ततः सर्वा महाभाग देवताः समरुद्गणाः ।
ऋषयश्च महाभागाः पृच्छन्ति स्म पितॄंस्ततः ॥ १३-१८८-६६ (८८८९६)
पितरः केन तुष्यन्ति मर्त्यानामल्पचेतसाम् ।
अक्षयं च कथं दानं भवेच्चैवौर्ध्वदेहिकम् ॥ १३-१८८-६७ (८८८९७)
आनृण्यं वा कथं मर्त्या गच्छेयुः केन कर्मणा ।
एतदिच्छामहे श्रोतुं परं कौतूहलं हि नः ॥ १३-१८८-६८ (८८८९८)
पितर ऊचुः। १३-१८८-६९क्ष् (७४१२)
न्यायतो वै महाभागाः संशयः समुदाहृतः ।
श्रूयतां येन तुष्यामो मर्त्यानां साधुकर्मणाम् ॥ १३-१८८-६९ (८८८९९)
नीलषण्डप्रमोक्षेण अणावास्यां तिलोदकैः ।

वर्षासु दीपकैश्चैव पितॄणामनृणो भवेत् ॥ १३-१८८-७० (८८९००)
अक्षयं निर्व्यलीकं च दानमेतन्महाफलम् ।
अस्माकं परितोषश्च अक्षयः परिकीर्त्यते ॥ १३-१८८-७१ (८८९०१)
श्रद्धधानाश्च ये मर्त्या आहरिष्यन्ति सन्ततिम् ।
दुर्गात्ते तारयिष्यन्ति नरकात्प्रपितामहान् ॥ १३-१८८-७२ (८८९०२)
पितॄणां भाषितं श्रुत्वा हृष्टरोमा तपोधनः ।
वृद्धगार्ग्यो महातेजास्तानेवं वाक्यमब्रवीत् ॥ १३-१८८-७३ (८८९०३)
के गुणा नीलषण्डस्य प्रमुक्तस्य तपोधनाः ।
वर्षासु दीपदानेन तथैव च तिलोदकैः ॥ १३-१८८-७४ (८८९०४)
पितर ऊचुः । १३-१८८-७५x (७४१३)
नीलषण्डस्य लाङ्गूलं तोयमभ्युद्वरेद्यदि ।
षष्टिं वर्षसहस्राणि पितरस्तेन तर्पिताः ॥ १३-१८८-७५ (८८९०५)
यस्तु शृङ्गगतं पङ्कं कूलादुद्धृत्य तिष्ठति ।
पितरस्तेन गच्छन्ति सोमलोकमसंशयम् ॥ १३-१८८-७६ (८८९०६)
वर्षासु दीपदानेन शशीवच्छोभते नरः ।
तमोरूपं न तस्यास्ति दीपकं यः प्रयच्छति ॥ १३-१८८-७७ (८८९०७)
अमावास्यां तु ये मर्त्याः प्रयच्छन्ति तिलोदकम् ।
पात्रमौदुम्बरं गृह्य मधुमिश्रं तपोधन ।
कृतं भवति तैः श्राद्धं सरहस्यं यथार्थवत् ॥ १३-१८८-७८ (८८९०८)
हृष्टपुष्टमनास्तेषां प्रजा भवति नित्यदा ।
कुलवंशस्य वृद्धिस्तु पिण्डदस्य फलं भवेत् ।
श्रद्दधानस्तु यः कुर्यात्पितॄणामनृणो भवेत् ॥ १३-१८८-७९ (८८९०९)
एवमेव समुद्दिष्टः श्राद्धकालक्रमस्तथा ।
विधिः पात्रं फलं चैव यथावदनुकीर्तितम् ॥८ ॥ १३-१८८-८० (८८९१०)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
अष्टाशीत्यधिकशततमोऽध्यायः ॥ १८८ ॥

Mahabharata - Anushaasana Parva - Chapter Footnotes

७-१८८-५ यमेनप्राप्तमिति शेषः ॥
७-१८८-९ दशानां पशूनां सूना वधो यत्र सा पशुघ्नजातिर्दशसूना । चक्रं चक्रवान् तैलिकः । ध्वजः सुरापायी । नृपः क्षुद्रो राजा ॥
७-१८८-१० एवं दुष्प्रतिग्रहपराङ्मुखेन त्रिवर्गशास्त्रं धर्मार्थकामशास्त्राणि ज्ञेयानि ॥
७-१८८-१४ पठन्ति शास्त्रम् । उपतिष्ठति सम्यक् स्फुरत्याचष्टे च यः स स्वयं नारायण एवेति ज्ञातव्यः ॥

७-१८८-१९ सनरान् सहर्षीन्प्राप्तः प्रष्टुमिति शेषः ॥
७-१८८-२२ पूज्य सम्पूज्य ॥
७-१८८-३४ चिरजीविनं मार्कण्डेयम् ॥
७-१८८-४० यतः ऋत्विक् श्राद्धभोक्ता यजमानस्य पितृत्वं गच्छति तस्मादन्यात्मतां गतः स्वस्त्रियं न गच्छेत् । पारदार्यदोषतुल्यं ह्येतदित्यर्थः ॥
७-१८८-४१ एतच्च वरणमारभ्य द्रष्टव्यमित्याशयेनाह शुचिनेति ॥
७-१८८-५० वटकषायेण वटजटाकषायेण । प्रियङ्गुः राजसर्षपः षष्टिकान् षष्टिरात्रेण पक्वधान्यम् ॥
७-१८८-५२ विभावसुं सूर्यम् ॥

---

अनुससनपर्व-अध्यय१८९
॥ श्रीः ॥
१३.१८९. अध्यायः १८९

अथ दानधर्मपर्व ॥ १ ॥
Mahabharata - Anushaasana Parva - Chapter Topics
विष्णुनेन्द्रंप्रति स्वप्रीतिकरधर्मकथनम् ॥ १ ॥
तता बलदेवदेवाग्निविश्वामित्रादिभिः पृथक्पृथग्धर्मविशेषकथनम् ॥ २ ॥

Mahabharata - Anushaasana Parva - Chapter Text

१भीष्म उवाच ।
केन ते च भवेत्प्रीतिः कथं तुष्टिं तु गच्छसि ।
इति पृष्टः सुरेन्द्रेण प्रोवाच हरिरीश्वरः ॥ १३-१८९-१ (८८९११)
ब्राह्मणानां परीवादो मम विद्वेषणं महत् ।
ब्राह्मणैः पूजितैर्नित्यं पूजितोऽहं न संशयः ॥ १३-१८९-२ (८८९१२)
नित्याभिवाद्या विप्रेन्द्रा भुक्त्वा पादौ तथाऽऽत्मनः ।
तेषां तुष्यामि मर्त्यानां यश्चक्रे च बलिं हरेत् ॥ १३-१८९-३ (८८९१३)
वामनं ब्राह्मणं दृष्ट्वा वराहं च जलोत्थितम् ।
उद्धृतां धरणीं चैव मूर्ध्ना धारयते तु यः ।
न तेषामशुभं किञ्चित्कल्मषं चोपपद्यते ॥ १३-१८९-४ (८८९१४)
अश्वत्थं रोचनां गां च पूजयेद्यो नरः सदा ।
पूजितं च जगत्तेन सदेवासुरमानुषम् ॥ १३-१८९-५ (८८९१५)
तेन रूपेण तेषां च पूजां गृह्णामि तत्त्वतः ।

पूजा ममैषा नास्त्यन्या यावल्लोकाः प्रतिष्ठिताः ॥ १३-१८९-६ (८८९१६)
अन्यथा हि वृथा मर्त्याः पूजयन्त्यल्पबुद्धयः ।
नाहं तत्प्रतिगृह्णामि न सा तुष्टिकरी मम ॥ १३-१८९-७ (८८९१७)
इन्द्र उवाच। १३-१८९-८क्ष् (७४१४)
चक्रं पादौ वराहं च ब्राह्मणं चापि वामनम् ।
उद्धृतां धरणीं चैव किमर्थं त्वं प्रशंससि ॥ १३-१८९-८ (८८९१८)
भवान्सृजति भूतानि भावन्संहरति प्रजाः ।
प्रकृतिः सर्वभूतानां समर्त्यानां सनातनी ॥ १३-१८९-९ (८८९१९)
भीष्म उवाच। १३-१८९-१०क्ष् (७४१५)
सम्प्रहस्य ततो विष्णुरिदं वचनमब्रवीत् ।
चक्रेण निहता दैत्याः पद्भ्यां क्रान्ता वसुन्धरा ॥ १३-१८९-१० (८८९२०)
वाराहं रूपमास्थाय हिरण्याक्षो निपातितः ।
वामनं रूपमास्थाय जितो राजा मया बलिः। १३-१८९-११ (८८९२१)
परितुष्टो भवाम्येवं मानुषाणां महात्मनाम् ।
तन्मां ये पूजयिष्यन्ति नास्ति तेषां पराभवः ॥ १३-१८९-१२ (८८९२२)
अपि वा ब्राह्मणं दृष्ट्वा ब्रह्म चारिणमागतम् ।
ब्राह्मणाग्न्याहुतिं दत्त्वा अमृतं तस्य भोजनम् ॥ १३-१८९-१३ (८८९२३)
ऐन्द्रीं संध्यामुपासित्वा आदित्याभिमुखः स्थितः ।
सर्वतीर्थेषु स स्नातो मुच्यते सर्वकिल्बिषैः ॥ १३-१८९-१४ (८८९२४)
एतद्वः कथितं गुह्यमखिलेनि तपोधनाः ।
संशयं पृच्छमानानां किं भूयः कथयाम्यहम् ॥ १३-१८९-१५ (८८९२५)
बलदेव उवाच। १३-१८९-१६क्ष् (७४१६)
श्रूयतां परमं गुह्यं मानुषाणां सुखावहम् ।
अजानन्तो यदबुधाः क्लिश्यन्ते भूतपीडिताः ॥ १३-१८९-१६ (८८९२६)
कल्य उत्थाय यो मर्त्यः स्पृशेद्गां वै घृतं दधि ।
सर्षपं च प्रियङ्गुं च कल्मषात्प्रतिमुच्यते ॥ १३-१८९-१७ (८८९२७)
भूतानि चैव सर्वाणि अग्रतः पृष्ठतोपि वा ।
उच्छिष्टं वाऽपि च्छिद्रेषु वर्जयन्ति तपोधनाः ॥ १३-१८९-१८ (८८९२८)
देवा ऊचुः। १३-१८९-१९क्ष् (७४१७)
प्रगृह्यौदुम्बरं पात्रं तोयपूर्णमुदङ्मुखः ।
उपवासं तु गृह्णीयाद्यद्वा सङ्कल्पयेद्व्रतम् ॥ १३-१८९-१९ (८८९२९)
देवतास्तस्य तुष्यन्ति कामिकं चापि सिध्यति ।
अन्यथा हि वृथा मर्त्याः कुर्वते स्वल्पबुद्धयः ॥ १३-१८९-२० (८८९३०)
उपवासे बलौ चापि ताम्रपात्रं विशिष्यते ।
बलिर्भिक्षा तथाऽर्घ्यं च पितॄणां च तिलोदकं १३-१८९-२१ (८८९३१)
ताम्रपात्रेण दातव्यमन्यथाऽल्पफलं भवेत् ।

गुह्यमेतत्समुद्दिष्टं यथा तुष्यन्ति देवताः ॥ १३-१८९-२२ (८८९३२)
धर्म उवाच। १३-१८९-२३क्ष् (७४१८)
राजपौरुषिके विप्रे घाण्टिके परिचारिके ।
गोरक्षके वाणिजके तथा कारुकुशीलवे ॥ १३-१८९-२३ (८८९३३)
मित्रद्रुह्यनधीयाने यश्च स्याद्वृषलीपतिः ।
एतेषु दैवं पित्र्यं वा न देयं स्यात्कथञ्चन ।
पिण्डदास्तस्य हीयन्ते न च प्रीणाति वै पितॄन् ॥ १३-१८९-२४ (८८९३४)
अतिथिर्यस्य भग्नाशो गृहात्प्रतिनिवर्तते ।
पितरस्तस्य देवाश्च अग्नयश्च तथैव हि ।
निराशाः प्रतिगच्छन्ति अतिथेरप्रतिग्रहात् ॥ १३-१८९-२५ (८८९३५)
स्त्रीघ्नैर्गोघ्नैः कृतघ्नैश्च ब्रह्मघ्नैर्गुरुतल्पगैः ।
तुल्यदोषो भवत्येभिर्यस्यातिथिरनर्चितः ॥ १३-१८९-२६ (८८९३६)
अग्निरुवाच। १३-१८९-२७क्ष् (७४१९)
पादमुद्यम्य यो मर्त्यः स्पृशेद्गाश्च सुदुर्मतिः ।
ब्राह्मणं वा महाभागं दीप्यमानं तथाऽनलम् ।
तस्य दोषान्प्रवक्ष्यामि तच्छृणुध्वं समाहिताः ॥ १३-१८९-२७ (८८९३७)
दिवं स्पृशत्यशब्दोऽस्य त्रस्यन्ति पितरश्च वै ।
वैमनस्यं च देवानां कृतं भवति पुष्कलम् ।
पावकश्च महातेजा हव्यं न प्रतिगृह्णति ॥ १३-१८९-२८ (८८९३८)
आजन्मनां शतं चैव नरके पच्यते तु सः ।
निष्कृतिं च न तस्यापि अनुमन्यन्ति कर्हिचित् ॥ १३-१८९-२९ (८८९३९)
तस्माद्गावो न पादेन स्प्रष्टव्या वै कदाचन ।
ब्राह्मणश्च महातेजा दीप्यमानस्तथाऽनलः ।
श्रद्दधानेन मर्त्येन आत्मनो हितमिच्छता ॥ १३-१८९-३० (८८९४०)
एते दोषा मया प्रोक्तास्त्रिषु यः पादमुत्सृजेत्। १३-१८९-३१ (८८९४१)
विश्वामित्र उवाच। १३-१८९-३२क्ष् (७४२०)
श्रूयतां परमं गुह्यं रहस्यं धर्मसंहितम् ।
परमान्नेन यो दद्यात्पितॄणामौपहारिकम् ॥ १३-१८९-३२ (८८९४२)
गजच्छायायां पूर्वस्यां कुतपे दक्षिणामुखः ।
यदा भाद्रपदे मासि भवते बहुले मघा ॥ १३-१८९-३३ (८८९४३)
श्रूयतां तस्य दानस्य यादृशो गुणविस्तरः ।
कृतं तेन महच्छ्राद्धं वर्षाणीह त्रयोदश ॥ १३-१८९-३४ (८८९४४)
बहपल् समङ्गे ह्यकुतोभये च
क्षेमे च संख्येव हि भूयसी च ।
यथा पुरा ब्रह्मपुरे सवत्सा
शतक्रतोर्वज्रधरस्य यज्ञे ॥ १३-१८९-३५ (८८९४५)

भूयश्च या विष्णुपदे स्थिताया
विभावसोश्चापि पथे स्थिता या ।
देवाश्च सर्वे सह नारदेन
प्रकुर्वते सर्वसहेति नाम ॥ १३-१८९-३६ (८८९४६)
मन्त्रेणैतेनाभिवन्देत यो वै
विमुच्यते पापकृतेन कर्मणा ।
लोकानवाप्नोति पुरंदरस्य
गवां फलं चन्द्रमसो द्युतिं च ॥ १३-१८९-३७ (८८९४७)
एवं हि मन्त्रं त्रिदशाभिजुष्टं
पठेत यः पर्वसु गोष्ठमध्ये ।
न तस्यि पापं न भयं न शोकः
सहस्रनेत्रस्य च याति लोकम् ॥ १३-१८९-३८ (८८९४८)
भीष्म उवाच। १३-१८९-३९क्ष् (७४२१)
अथ सप्त महाभाग ऋषयो लोकविश्रुताः ।
वसिष्ठप्रमुखाः सर्वे ब्रह्मणं पद्मसम्भवम्। १३-१८९-३९ (८८९४९)
प्रदक्षिणमभिक्रम्य सर्वे प्राञ्जलयः स्थिताः ॥
उवाच वचनं तेषां वसिष्ठो ब्रह्मवित्तमः। १३-१८९-४० (८८९५०)
सर्वप्राणिहितं प्रश्नं ब्रह्मिक्षत्रे विशेषतः ॥
द्रव्यहीनाः कथं मर्त्या दरिद्राः साधुवर्तिनः। १३-१८९-४१ (८८९५१)
प्राप्नुवन्तीह यज्ञस्य फलं केन च कर्मणा ॥
एतच्छ्रुत्वा वचस्तेषां ब्रह्मा वचनमब्रवीत् ॥ १३-१८९-४२ (८८९५२)
अहो प्रश्नो महाभाग गूढार्थः परमः शुभः ।
सूक्ष्मः श्रेयांश्च मर्त्यानां भवद्भिः समुदाहृतः ॥ १३-१८९-४३ (८८९५३)
श्रूयतां सर्वमाख्यास्ये निखिलेन तपोधनाः ।
यथा यज्ञफलं मर्त्यो लभते नात्र संशयः ॥ १३-१८९-४४ (८८९५४)
पौषमासस्य शुक्ले वै यदा युज्येत रोहिणी ।
तेन नक्षत्रयोगेन आकाशशयनो भवेत् ॥ १३-१८९-४५ (८८९५५)
एकवस्त्रः शुचिः स्नातः श्रद्दधानः समाहितः ।
सोमस्य रश्मयः पीत्वा महायज्ञफलं लभेत् ॥ १३-१८९-४६ (८८९५६)
एतद्वः परमं गुह्यं कथितं द्विजसत्तमाः ।
यन्मां भवन्तः पृच्छन्ति सूक्ष्मतत्त्वार्थदर्शिनःह ॥ १३-१८९-४७
(८८९५७)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
एकोननवत्यधिकशततमोऽध्यायः ॥ १८९ ॥

Mahabharata - Anushaasana Parva - Chapter Footnotes

७-१८९-३ चक्रे गोमयोपलिप्ते मण्डले सुदर्शनमन्त्रेण पूजिते ॥
७-१८९-२८ अशब्दः अपशब्दः निन्दारूपः ॥
७-१८९-४६ रश्मयः रश्मीन् ॥

---

अनुससनपर्व-अध्यय१९०
॥ श्रीः ॥
१३.१९०. अध्यायः १९०

अथ दानधर्मपर्व ॥ १ ॥
Mahabharata - Anushaasana Parva - Chapter Topics
सूर्यगार्ग्यादिभिः पृथक्पृथग्धर्मरहस्यकथनम् ॥ १ ॥

Mahabharata - Anushaasana Parva - Chapter Text

शविभावसुरुवाच ।
सलिलस्याञ्जलिं पूर्णमक्षताश्च धृतोत्तराः ।
सोमस्योत्तिष्ठमानस्य तज्जलं चाक्षतांश्च तान् ॥ १३-१९०-१ (८८९५८)
स्थितो ह्यभिमुखो मर्त्यः पौर्णमास्यां बलिं हरेत् ।
अग्निकार्यं कृतं तेन हुताश्चास्याग्नयस्त्रयः ॥ १३-१९०-२ (८८९५९)
वनस्पतिं च यो हन्यादमावास्यामबुद्धिमान् ।
अपि ह्येकेन पत्रेण लिप्यते ब्रह्महत्यया ॥ १३-१९०-३ (८८९६०)
दन्तकाष्ठं तु यः खादेदमावास्यामबुद्धिमान् ।
हिंसितश्चन्द्रमाक़क़क़क़ पितरश्चोद्विजन्ति च ॥ १३-१९०-४ (८८९६१)
हव्यं न तस्य देवाश्च प्रतिगृह्णन्ति पर्वसु ।
कुप्यन्ते पितरश्चास्य कुले वंशोऽस्य हीयते ॥ १३-१९०-५ (८८९६२)
श्रीरुवाच। १३-१९०-६क्ष् (७४२२)
प्रकीर्णं भाजनं यत्र भिन्नभाण्डमथासनम् ।
योषितश्चैव हन्यन्ते कश्मलोपहते गृहे ॥ १३-१९०-६ (८८९६३)
देवताः पितरश्चैव उत्सवे पर्वणीषु वा ।
निराशाः प्रतिगच्छन्ति कश्मलोपहताद्गृहात् ॥ १३-१९०-७ (८८९६४)
अङ्गिरा उवाच। १३-१९०-८क्ष् (७४२३)
यस्तु संवत्सरं पूर्णं दद्याद्दीपं करञ्जके ।
सुवर्चलामूलहस्तः प्रजा तस्य विवर्धते ॥ १३-१९०-८ (८८९६५)
गार्ग्य उवाच। १३-१९०-९क्ष् (७४२४)
आतीथ्यं सततं कुर्याद्दीपं दद्यात्प्रतिश्रये ।

वर्जयानो दिवास्वापं न च मांसानि भक्षयेत् ॥१३-१९०-९ (८८९६६)
गोब्राह्मणं न हिंस्याच्च पुष्कराणि च कीर्तयेत् ।
एत श्रेष्ठतमो धर्मः सरहस्यो महाफलः ॥१३-१९०-१० (८८९६७)
अपि क्रतुशतैरिष्ट्वा क्षयं गच्छति तद्धविः ।
न तु क्षीयन्ति ते धर्माः श्रद्दधानैः प्रयोजिताः ॥१३-१९०-११ (८८९६८)
इदं च परमं गुह्यं सरहस्यं निबोधत ।
श्राद्धकल्पे च दैवे च तैर्थिके पर्वणीषु च ॥१३-१९०-१२ (८८९६९)
रजस्वला च या नारी श्वित्रिकाऽपुत्रिका च या ।
एताभिश्चक्षुषा दृष्टं हविर्नाश्नन्ति देवताः ।
पितरश्च न तुष्यन्ति वर्षाण्यपि त्रयोदश ॥ १३-१९०-१३ (८८९७०)
शुक्लवासाः शुचिर्भूत्वा ब्राह्मणान्स्वस्ति वाचयेत् ।
कीर्तयेद्भारतं चैव तथा स्यादक्षयं हविः ॥१३-१९०-१४ (८८९७१)
धौम्य उवाच। १३-१९०-१५क्ष् (७४२५)
भिन्नभाण्डं च खट्वां च कुक्कुटं शुनकं तथा ।
अप्रशस्तानि सर्वाणि यश्च वृक्षो गृहेरुहः ॥१३-१९०-१५ (८८९७२)
भिन्नभाण्डे कलिं प्राहुः खट्वायां तु धनक्षयः ।
कुक्कुटे शुनके चैव हविर्नाश्नन्ति देवताः ।
वृक्षमूले ध्रुवं सत्वं तस्माद्वृक्षं न रोपयेत् ॥ १३-१९०-१६ (८८९७३)
जमदग्निरुवाच। १३-१९०-१७क्ष् (७४२६)
यो यजेदश्वमेधेन वाजपेयशतेन ह ।
अवाक्शिरा वा लम्बेत सत्रं वा स्फीतमाहरेत् ॥१३-१९०-१७ (८८९७४)
न यस्य हृदयं शुद्धं नरकं स ध्रुवं व्रजेत् ।
तुल्यं यज्ञश्च सत्यं च हृदयस्य च शुद्धता ॥१३-१९०-१८ (८८९७५)
शुद्धेन मनसा दत्त्वा सक्तुप्रस्थं द्विजातये ।
ब्रह्मलोकमनुप्राप्तः पर्याप्तं तन्निदर्शनम् ।F ॥ १३-१९०-१९ (८८९७६)

इति श्रीमन्महाभारते अनुशासनपर्वणि नवत्यधिकशततमोऽध्यायः
॥ १९० ॥

Mahabharata - Anushaasana Parva - Chapter Footnotes

७-१९०-८ करञ्जसुवर्चले वृक्षवल्लिविशेषौ ॥
७-१९०-१६ सत्वं वृश्चिकसर्पादि । न रोपयेत् गृहे इति शेषः ॥

---

अनुससनपर्व-अध्यय१९१
॥ श्रीः ॥
१३.१९१. अध्यायः १९१

अथ दानधर्मपर्व ॥ १ ॥

Mahabharata - Anushaasana Parva - Chapter Topics

वायुना धर्मरहस्यकथनम् ॥ १ ॥

Mahabharata - Anushaasana Parva - Chapter Text

श्वायुरुवाच ।
किञ्चिद्धर्मं प्रवक्ष्यामि मानुषाणां सुखावहम् ।
सरहस्याश्च ये दोषास्ताञ्शृणुध्वं समाहिताः ॥ १३-१९१-१ (८८९७७)
अग्निकार्यं च कर्तव्यं परमान्नेन भोजनम् ।
दीपकश्चापि कर्तव्यः पितॄणां सतिलोदकः ॥ १३-१९१-२ (८८९७८)
एतेन विधिना मर्त्यः श्रद्दधानः समाहितः ।
चतुरो वार्षिकान्मासान्यो ददाति तिलोदकाम् ॥ १३-१९१-३ (८८९७९)
भोजनं च यथाशक्त्या ब्राह्मणे वेदपारगे ।
पशुबन्धशतस्येह फलं प्राप्नोति पुष्कलम् ॥ १३-१९१-४ (८८९८०)
इदं चैवापरं गुह्यमप्रशस्तं निबोधत ।
अग्नेस्तु वृषलो नेता हविर्मूढाश्च योषितः ॥ १३-१९१-५ (८८९८१)
मन्यते धर्म एवेति च चाधर्मेणि लिप्यते ।
अग्नयस्तस्य कुप्यन्ति शूद्रयोनिं स गच्छति ॥ १३-१९१-६ (८८९८२)
पितरश्च न तुष्यन्ति सहदेवैर्विशेषतः ।
प्रायश्चित्तं तु यत्तत्र ब्रुवतस्तन्निबोध मे ।
यत्कृत्वा तु नरः सम्यक्सुखी भवति विज्वरः ॥ १३-१९१-७ (८८९८३)
गवां मूत्रपुरीषेणि पयसा च घृतेन च ।
अग्निकार्यं त्र्यहं कुर्यान्निराहारः समाहितः ॥ १३-१९१-८ (८८९८४)
ततः संवत्सरे पूर्णे प्रतिगृह्णन्ति देवताः ।
हृष्यन्ति पितरश्चास्य श्राद्धकाल उपस्थिते ॥ १३-१९१-९ (८८९८५)
एष ह्यधर्मो धर्मश्च सरहस्यः प्रकीर्तितः ।
मर्त्यानां स्वर्गकामानां प्रेत्य स्वर्गसुखावह ॥ ॥ १३-१९१-१० (८८९८६)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
एकनवत्यधिकशततमोऽध्यायः ॥ १९१ ॥

Mahabharata - Anushaasana Parva - Chapter Footnotes

७-१९१-५ नेता देशान्तरप्रापको यदि शूद्रः स्यात् तर्हि तस्य दोषः ॥

अनुससनपर्व-अध्यय१९२
॥ श्रीः ॥
१३.१९२. अध्यायः १९२

अथ दानधर्मपर्व ॥ १ ॥
Mahabharata - Anushaasana Parva - Chapter Topics
लोमशेन धर्मरहस्यकथनम् ॥ १ ॥

Mahabharata - Anushaasana Parva - Chapter Text

श्लोमश उवाच ।
परदारेषु ये सक्ता अकृत्वा दारसङ्ग्रहम् ।
निराशाः पितरस्तेषां श्राद्धकाले भवन्ति वै ॥ १३-१९२-१ (८८९८७)
परदाररतिर्यश्च यश्च वन्ध्यामुपासते ।
ब्रह्मस्वं हरते यश्च समदोषा भवन्ति ते ॥ १३-१९२-२ (८८९८८)
असम्भाष्या भवन्त्येते पितॄणां नात्र संशयः ।
देवताः पितरश्चैषां नाभिनन्दन्ति तद्धविः ॥ १३-१९२-३ (८८९८९)
तस्मात्परस्य वै दारांस्त्यजेद्वन्ध्यां च योषितम् ।
ब्रह्मस्वं हि न हर्तव्यमात्मनो हितमिच्छता ॥ १३-१९२-४ (८८९९०)
श्रूयतां चापरं गुह्यं रहस्यं धर्मसंहितम् ।
श्रद्दधानेन कर्तव्यं गुरुणां वचनं सदा ॥ १३-१९२-५ (८८९९१)
द्वादश्यां पौर्णमास्यां च मासिमासि घृताक्षतम् ।
ब्राह्मणेभ्यः प्रयच्छेत तस्य पुण्यं निबोधत ॥ १३-१९२-६ (८८९९२)
सोमश्च वर्धते तेन समुद्रश्च महोदधिः ।
अश्वमेधचतुर्भागं फलं सृजति वासवः ॥ १३-१९२-७ (८८९९३)
दानेनैतेन तेजस्वी वीर्यवांश्च भवेन्नरः ।
प्रीतश्च भगवान्सोम इष्टान्कामान्प्रयच्छति ॥ १३-१९२-८ (८८९९४)
श्रूयतां चापरो धर्मः सरहस्यो महाफलः ।
इदं कलियुगं प्राप्य मनुष्याणां सुखावहः ॥ १३-१९२-९ (८८९९५)
कल्यमुत्थाय यो मर्त्यः स्नातः शुक्लेन वाससा ।
तिलपात्रं प्रयच्छेत ब्राह्मणेभ्यः समाहितः ॥ १३-१९२-१० (८८९९६)
तिलोदकं च यो दद्यात्पितॄणां मधुना सह ।
दीपकं कृसरं चैव श्रूयतां तस्य यत्फलम् ॥ १३-१९२-११ (८८९९७)
तिलपात्रे फलं प्राह भगवान्पाकशासनः ।
गोप्रदानं च यः कुर्याद्भूमिदानं च शाश्वतम् ॥ १३-१९२-१२ (८८९९८)
अग्निष्टोमं च यो यज्ञं यजेत बहुदक्षिणम् ।

तिलपात्रं सहैतेन समं मन्यन्ति देवताः ॥ १३-१९२-१३ (८८९९९)
तिलोदकं सदा श्राद्धे मन्यन्ते पितरोऽक्षयम् ।
दीपे च कृसरे चैव तुष्यन्तेऽस्य पितामहाः ॥ १३-१९२-१४ (८९०००)
स्वर्गे च पितृलोके च पितृदेवाभिपूजितम् ।
एवमेतन्मयोद्दिष्टंपिदृष्टं पुरातनम् ॥८ ॥ १३-१९२-१५ (८९००१)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
द्विनवत्यधिकशततमोऽध्यायः ॥ १९२ ॥
Mahabharata - Anushaasana Parva - Chapter Footnotes

७-१९२-७ महान्त्युदकानि धीयन्तेऽस्मिन्निति । यद्वा
महानामुत्सवानामुदधिरिव ॥

---

अनुससनपर्व-अध्यय१९३
॥ श्रीः ॥
१३.१९३. अध्यायः १९३

अथ दानधर्मपर्व ॥ १ ॥
Mahabharata - Anushaasana Parva - Chapter Topics
भीष्मेण युधिष्ठिरंप्रत्यरुन्धतीचित्रगुप्तोदितधर्मरहस्यकथनम्
॥ १ ॥

Mahabharata - Anushaasana Parva - Chapter Text

१भीष्म उवाच ।
ततस्त्वृषिगणाः सर्वे पितरश्च सदेवताः ।
अरुन्धतीं तपोवृद्धामपृच्छन्त समाहिताः ॥ १३-१९३-१ (८९००२)
समानशीलां वीर्येण वसिष्ठस्य महात्मनः ।
त्वत्तो धर्मरहस्यानि श्रोतुमिच्छामहे वयम् ।
यत्ते गुह्यतमं भद्रे तत्प्रभाषितुमर्हसि ॥ १३-१९३-२ (८९००३)
अरुन्धत्युवाच । १३-१९३-३क्ष् (७४२७)
तपोवृद्धिर्मया प्राप्ता भवतां स्मरणेन वै ।
भवतां च प्रसादेन धर्मान्वक्ष्यामि शाश्वतान् ॥ १३-१९३-३ (८९००४)
सगुह्यान्सरहस्यांश्च ताञ्शृणुद्ध्वमशेषतः ।
श्रद्दधाने प्रयोक्तव्या यस्य शुद्धं तथा मनः ॥ १३-१९३-४ (८९००५)
अश्रद्दधानो मानी च ब्रह्महा गुरुतल्पग ।

असम्भाष्या हि चत्वारो नैषां धर्मं प्रकाशयेत् ॥ १३-१९३-५ (८९००६)
अहन्यहनि यो दद्यात्कपिलां द्वादशीः समाः ।
मासिमासि च सत्रेण यो यजेत सदा नरः ॥ १३-१९३-६ (८९००७)
गवां शतसहस्रं च यो दद्याज्ज्येष्ठपुष्करे ।
न तद्धर्मफलं तुल्यमतिथिर्यस्य तुष्यति ॥ १३-१९३-७ (८९००८)
श्रूयतां चापरो धर्मो मनुष्याणां सुखावहः ।
श्रद्दधानेन कर्तव्यः सरहस्यो महाफलः ॥ १३-१९३-८ (८९००९)
कल्यमुत्थाय गोमध्ये गृह्य दर्भान्सहोदकान् ।
निषिञ्चेत गवां शृङ्गे मस्तकेन च तज्जलम् ।
प्रतीच्छेत निराहारस्तस्यि धर्मफलं शृणु ॥ १३-१९३-९ (८९०१०)
श्रूयन्ते यानि तीर्थानि त्रिषु लोकेषु कानिचित् ।
सिद्धचारणजुष्टानि सेवितानि महर्षिभिः ।
अभिषेकः समस्तेषां गवां शृङ्गोदकस्य च ॥ १३-१९३-१० (८९०११)
साधुसाध्विति चोद्दिष्टं दैवतैः पितृभिस्तथा ।
भूतैश्चैव सुसंहृष्टैः पूजिता साऽप्यरुन्धती ॥ १३-१९३-११ (८९०१२)
पितामह उवाच। १३-१९३-१२क्ष् (७४२८)
अहो धर्मो महाभागे सरहस्य उदाहृतः ।
वरं ददामि ते धन्ये तपस्ते वर्दतां सदा ॥ १३-१९३-१२ (८९०१३)
यम उवाच। १३-१९३-१३क्ष् (७४२९)
रमणीया कथा दिव्या युष्मत्तो या मया श्रुता ।
श्रूयतां चित्रगुप्तस्य भाषितं मम च प्रियम् ॥ १३-१९३-१३ (८९०१४)
रहस्यं धर्मसंयुक्तं शक्यं श्रोतुं महर्षिभिः ।
श्रद्दधानेन मर्त्येन आत्मनो हितमिच्छाता ॥ १३-१९३-१४ (८९०१५)
न हि पुण्यं तथा पापं कृतं किञ्चिद्विनश्यति ।
पर्वकाले च यत्किंचिदादित्यं चाधितिष्ठति ॥ १३-१९३-१५ (८९०१६)
प्रेतलोकं गते मर्त्ये तत्तत्सर्वं विभावसुः ।
प्रतिजानाति पुण्यात्मा तच्चि तत्रोपयुज्यते ॥ १३-१९३-१६ (८९०१७)
किञ्चिद्धर्मं प्रवक्ष्यामि चित्रगुप्तमतं शुभम् ।
पानीयं चैव दीपं च दातव्यं सततं तथा ॥ १३-१९३-१७ (८९०१८)
उपानहौ च च्छत्रं च कपिला च यथातथम् ।
पुष्करे कपिला देया ब्राह्मणे वेदपारगे ॥ १३-१९३-१८ (८९०१९)
अग्निहोत्रं च यत्नेन सर्वशः प्रतिपालयेत् ।
अयं चैवापरो धर्मश्चित्रगुप्तेन भाषितः ॥ १३-१९३-१९ (८९०२०)
फलमस्य पृथक्त्वेन श्रोतुमर्हन्ति सत्तमाः ।
प्रलयं सर्वभूतैस्तु गन्तव्यं कालपर्ययात् ॥ १३-१९३-२० (८९०२१)
तत्र दुर्गमनुप्राप्ताः क्षुत्तृष्णापरिपीडिताः ।

दह्यमाना विपच्यन्ते न तत्रास्ति पलायनम् ॥१३-१९३-२१ (८९०२२)
अन्धकारं तमो घोरं प्रविशन्त्यल्पबुद्धयः ।
तत्र धर्मं प्रवक्ष्यामि येन दुर्गाणि सन्तरेत् ॥१३-१९३-२२ (८९०२३)
अल्पव्ययं महार्थं च प्रेत्य चैव सुखोदयम् ।
पानीयस्य गुणा दिव्याः प्रेतलोके विशेषतः ॥१३-१९३-२३ (८९०२४)
तत्र पुण्योदका नाम नदी तेषां विधीयते ।
अक्षयं सलिलं तत्र शीतलं ह्यमृतोपमम् ॥१३-१९३-२४ (८९०२५)
स तत्र तोयं पिबति पीनीयं यः प्रयच्छति ।
प्रदीपस्य प्रदानेन श्रूयतां गुणविस्तरः ॥१३-१९३-२५ (८९०२६)
तमोन्धकारं नियतं दीपदो न प्रपश्यति ।
प्रभां चास्य प्रयच्छन्ति सोमभास्करपावकाः ।
देवताश्चानुमन्यन्ते विमलाः सर्वतो दिशः ॥ १३-१९३-२६ (८९०२७)
द्योततें च यथाऽऽदित्यः प्रेतलोकगतो नरः ।
तस्माद्दीपः प्रदातव्यः पानीयं च विशेषतः ॥१३-१९३-२७ (८९०२८)
कपिलां ये प्रयच्छन्ति ब्राह्मणे वेदपारगे ।
पुष्करे च विशेषेण श्रूयतां तस्य यत्फलम् ॥१३-१९३-२८ (८९०२९)
गोशतं सवृषं तेन दत्तं भवति शाश्वतम् ।
पापं कर्म च यत्किञ्चिद्ब्रह्महत्यासमं भवेत् ।
शोधयेत्कपिला ह्येका प्रदत्तं गोशतं यथा ॥ १३-१९३-२९ (८९०३०)
तस्मात्तु कपिला देया कौमुद्यां ज्येष्ठपुष्करे ।
न तेषां विषमं किञ्चिन्न दुःखं न च कण्टकाः ॥१३-१९३-३० (८९०३१)
उपानहौ च यो दद्यात्पात्रभूते द्विजोत्तमे ।
छत्रदाने सुखां छायां लभते परलोकगः ॥१३-१९३-३१ (८९०३२)
न हि दत्तस्य दानस्य नाशोऽस्तीह कदाचन ।
चित्रगुप्तमतं श्रुत्वा हृष्टरोमा विभावसुः ॥१३-१९३-३२ (८९०३३)
उवाच देवताः सर्वाः पितॄंश्चैव महाद्युतिः ।
श्रुतं हि चित्रगुप्तस्य धर्मगुह्यं महात्मनः ॥१३-१९३-३३ (८९०३४)
श्रद्दधानाश्च ये मर्त्या ब्राह्मणेषु महात्मसु ।
दानमेतत्प्रयच्छन्ति न तेषां विद्यते भयम् ॥१३-१९३-३४ (८९०३५)
धर्मदोषास्त्विमे पञ्च येषां नास्तीह निष्कृतिः ।
असंभाष्या अनाचारा वर्जनीया नराधमाः ॥१३-१९३-३५ (८९०३६)
ब्रह्महा चैव गोघ्नश्च परदाररतश्च यः ।
अश्रद्दधानश्च नरः स्त्रियं यश्चोपजीवति ॥१३-१९३-३६ (८९०३७)
प्रेतलोकगता ह्येते नरके पापकर्मिणः ।
पच्यन्ते वै यथा मीनाः पूयशोणितभोजनाः ॥१३-१९३-३७ (८९०३८)
असम्भाष्याः पितॄणां च देवानां चैव पञ्च ते ।

स्नातकानां च विप्राणां ये चान्ये च तपोधनाः ॥ ॥१३-१९३-३८ (८९०३९)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
त्रिनवत्यधिकशततमोऽध्यायः ॥१९३ ॥
Mahabharata - Anushaasana Parva - Chapter Footnotes

७-१९३-४ प्रयोक्तव्या धर्मा वाच्याः ॥
७-१९३-१६ प्रतीजानात्यर्पयति ।उपयुज्यते पुण्यपापकर्ता ॥
७-१९३-२० प्रकृष्टो लयोऽदर्शनं यस्मात्तत्प्रलयं मरणम् ॥

---

अनुससनपर्व-अध्यय१९४
॥ श्रीः ॥
१३.१९४. अध्यायः १९४

अथ दानधर्मपर्व ॥१ ॥
Mahabharata - Anushaasana Parva - Chapter Topics
प्रमथैर्ऋषिगणान्प्रति प्रजानां स्वहिंसातदभावकारणाभिधानम् ॥१ ॥

Mahabharata - Anushaasana Parva - Chapter Text

भीष्म उवाच ।
ततः सर्वे महाभागा देवाश्च पितरश्च ह ।
ऋषयश्च महाभागाः प्रमथान्वाक्यमब्रुवन् ॥१३-१९४-१ (८९०४०)
भवन्तो वै महाभागा अपरोक्षनिशाचराः ।
उच्छिष्टानशुचीन्क्षुद्रान्कथं हिसथ मानवान् ॥१३-१९४-२ (८९०४१)
के च स्मृताः प्रतीघाता येन मर्त्यान्न हिंसथ ।
रक्षोघ्नानि च कानि स्युर्यैर्गृहेषु प्रणश्यथ ।
श्रोतुमिच्छाम युष्माकं सर्वमेतन्निशाचराः ॥ १३-१९४-३ (८९०४२)
प्रमथा ऊचुः।१३-१९४-४क्ष् (७४३०)
मैथुनेन सदोच्छिष्टाः कृते चैवाधरोत्तरे ।
मोहान्मांसानि खादेत वृक्षमूले च यः स्वपेत् ॥१३-१९४-४ (८९०४३)
आमिषं शीर्षतो यस्य पादतो यश्च संविशेत् ।
तत उच्छिष्टकाः सर्वे बहुच्छिद्राश्च मानवाः ॥१३-१९४-५ (८९०४४)
उदके चाप्यमेध्यानि श्लेष्माणं च प्रमुञ्चति ।
एते भक्ष्याश्च वध्याश्च मानुषा नात्र संशयः ॥१३-१९४-६ (८९०४५)
एवं शीलसमाचारान्धर्षयामो हि मानवान् ।

श्रूयतां च प्रतीघातान्यैर्न शक्नुम हिंसितुम्। १३-१९४-७ (८९०४६)
गोरोचनासमालम्भो वचाहस्तश्च यो भवेत् ।
घृताक्षतं च यो दद्यान्मस्तके तत्परायणः ॥१३-१९४-८ (८९०४७)
ये च मांसं न खादन्ति तान्न शक्नुम हिंसितुम् ।
यस्य चाग्निर्गृहे नित्यं दिवारात्रौ च दीप्यते ॥१३-१९४-९ (८९०४८)
तरक्षोश्चर्मदंष्ट्राश्च तथैव गिरिकच्छपः ।
आज्यधूमो बिडालश्च च्छागः कृष्णोऽत पिङ्गलः ॥१३-१९४-१० (८९०४९)
येषामेतानि तिष्ठन्ति गृहेषु गृहमेधिनाम् ।
तान्यधृष्याण्यगाराणि पिशिताशैः सुदारुणैः ॥१३-१९४-११ (८९०५०)
लोकानस्मद्विधा ये च विचरन्ति यथासुखम् ।
तस्मादेतानि गेहेषु रक्षोघ्नानि विशाम्पते ।
एतद्वः कथितं सर्वं यत्र वः संशयो महान् ।ॎ ॥ १३-१९४-१२ (८९०५१)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
चतुर्नवत्यधिकशततमोऽध्यायः ॥१९४ ॥

Mahabharata - Anushaasana Parva - Chapter Footnotes

७-१९४-४ अधरोत्तरे अधर उत्तरः श्रेष्ठो यत्र श्रेष्ठस्यावमाने
कृते सति ॥
७-१९४-५ आमिषं मांसं शिरसि दधानः । पादतः शय्यायां पादस्थाने
शिरः कृत्वा यः संविशेत् ॥
७-१९४-१० तरक्षोर्व्याघ्रस्य । गिरिकच्छपःक पर्वतदरीशायी
स्थलकूर्मः ॥

---

अनुससनपर्व-अध्यय१९५
॥ श्रीः ॥
१३.१९५. अध्यायः १९५

अथ दानधर्मपर्व ॥ १ ॥

Mahabharata - Anushaasana Parva - Chapter Topics

रेणुकनामकेन करेणुना देवादीन्प्रति दिग्गजगदितधर्मनिवेदनम् ॥ १ ॥

Mahabharata - Anushaasana Parva - Chapter Text

श्भीष्म उवाच ।
ततः पद्मप्रतीकाशः पद्मोद्भूतः पितामहः ।

उवाच वचनं देवान्वासवं च शचीपतिम् ॥ १३-१९५-१ (८९०५२)
अयं महाबलो नागो रसातलचरो बली ।
तेजस्वी रेणुको नाम महासत्वपराक्रमः ॥ १३-१९५-२ (८९०५३)
अतितेजस्विनः सर्वे महावीर्या महागजाः ।
धारयन्ति महीं कृत्स्नां सशैलवनकाननाम् ॥ १३-१९५-३ (८९०५४)
भवद्भिः समनुज्ञातो रेणुकस्तान्महागजान् ।
धर्मगुह्यानि सर्वाणि गत्वा पृच्छतु तत्र वै ॥ १३-१९५-४ (८९०५५)
पितामहवचःक श्रुत्वा ते देवा रेणुकं तदा ।
प्रेषयामासुरव्यग्रा यत्र ते धरणीधराः ॥ १३-१९५-५ (८९०५६)
रेणुक उवाच। १३-१९५-६क्ष् (७४३१)
अनुज्ञातोऽस्मि देवैश्च पितृभिस्चक महाबलाः ।
धर्मगुह्यानि युष्माकं श्रोतुमिच्छामि तत्त्वतः ।
कथयध्वं महाभागा यद्वस्तत्त्वं मनीषितम् ॥ १३-१९५-६ (८९०५७)
दिग्गजा ऊचुः। १३-१९५-७क्ष् (७४३२)
कार्तिके मासि चाश्लेषा बहुलस्याष्टमी शिवा ।
तेन नक्षत्रयोगेन यो ददाति गुडौदनम् ।
इमं मन्त्रं जपच्छ्राद्धे यताहारो ह्यकोपनः ॥ १३-१९५-७ (८९०५८)
बलदेवप्रभृतयो ये नागा बलवत्तराः ।
अनन्ता ह्यक्षया नित्यं भोगिनः सुमहाबलाः ॥ १३-१९५-८ (८९०५९)
तेषां कुलोद्भवा ये च महाभूता भुजङ्गमाः ।
ते मे बलिं प्रयच्छन्तु बलतेजोभिवृद्धये ॥ १३-१९५-९ (८९०६०)
यदा नारायणः श्रीमानुज्जहार वसुन्धराम् ।
तद्बलं तस्य देवस्य धरामुद्धरतस्तथा ॥ १३-१९५-१० (८९०६१)
एवमुक्त्वा बलिं तत्र वल्मीके तु निवेदयेत् ॥ १३-१९५-११ (८९०६२)
गजेन्द्रकुसुमाकीर्णं नीलवस्त्रानुलेपनम् ।
निर्वपेत्तं तु वल्मीके अस्तं याते दिवाकरे ॥ १३-१९५-१२ (८९०६३)
एवं तुष्टास्ततः सर्वे अधस्ताद्भारपीडिताः ।
श्रमं तं नावबुध्यामो धारयन्तो वसुन्धराम् ॥ १३-१९५-१३ (८९०६४)
एवं मन्यामहे सर्वे भारार्ता निरपेक्षिणः ।
ब्राह्मणः क्षत्रियो वैश्यः शूद्रो वा यद्युपोषितः ॥ १३-१९५-१४ (८९०६५)
एवं संवत्सरं कृत्वा दानं बहुफलं लभेत् ।
वल्मीके बलिमादाय तन्नो बहुफलं मतम् ॥ १३-१९५-१५ (८९०६६)
ये च नागा महावीर्यास्त्रिषु लोकेषु कृत्स्नशः ।
कृतातिथ्या भवेयुस्ते शतं वर्षाणि तत्त्वतः ॥ १३-१९५-१६ (८९०६७)
दिग्गजानां च तच्छ्रुत्वा देवताः पितरस्तथा ।
ऋषयश्च महाभागाः पूजयन्ति स्म रेणुकम् ॥ऽ ॥ १३-१९५-१७ (८९०६८)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
पञ्चनवत्यधिकशततमोऽध्यायः ॥ १९५ ॥
Mahabharata - Anushaasana Parva - Chapter Footnotes

७-१९५-२ नागो गजः ॥

---

अनुससनपर्व-अध्यय१९६
॥ श्रीः ॥
१३.१९६. अध्यायः १९६

अथ दानधर्मपर्व ॥ १ ॥
Mahabharata - Anushaasana Parva - Chapter Topics
महेश्वरेण देवादीन्प्रति गोप्रशंसनम् ॥ १ ॥

Mahabharata - Anushaasana Parva - Chapter Text

श्महेश्वर उवाच ।
सारमुद्धृत्य युष्माभिः साधुधर्म उदाहृतः ।
धर्मगुह्यमिदं मत्तः शृणुध्वं सर्व एव ह ॥ १३-१९६-१ (८९०६९)
येषां धर्माश्रिता बुद्धिःक श्रद्दधानाश्च ये नराः ।
तेषां स्यादुपदेष्टव्यः सरहस्यो महाफलः ॥ १३-१९६-२ (८९०७०)
निरुद्विग्नस्तु यो दद्यान्मासमेकं गवाह्निकम् ।
एकभक्तं तथाऽश्नीयाच्छ्रूयतां तस्य यत्फलम् ॥ १३-१९६-३ (८९०७१)
इमा गावो महाभागाः पवित्रं परमं स्मृताः ।
त्रीन्लोकान्धानयन्ति स्म सदेवासुरमानुपान् ॥ १३-१९६-४ (८९०७२)
तासु चैव महापुण्यं शुश्रूषा च महाफलम् ।
अहन्यहनि धर्मेण युज्यते वै गवाह्निकः ॥ १३-१९६-५ (८९०७३)
मया ह्येता ह्यनुज्ञाताः पूर्वमासन्कृते युगे ।
ततोऽहमनुनीतो वै ब्रह्मणा पद्मयोनिना ॥ १३-१९६-६ (८९०७४)
तस्माद्व्रजस्थानगतस्तिष्ठत्युपरि मे वृषः ।
रमेऽहं सह गोभिश्च तस्मात्पूज्याः सदैव ताः ॥ १३-१९६-७ (८९०७५)
महाप्रभावा वरदा वरं दद्युरुपासिताः ।
ता गावोऽस्यानुमन्यन्ते सर्वकर्मसु युत्फलम् ॥ १३-१९६-८ (८९०७६)
तस्य तत्र चतुर्भागो यो ददाति गवाह्निकम् ॥८ ॥ १३-१९६-९ (८९०७७)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
षण्णवत्यधिकशततमोऽध्यायः ॥ १९६ ॥

---

अनुससनपर्व-अध्यय१९७
॥ श्रीः ॥
१३.१९७. अध्यायः १९७

अथ दानधर्मपर्व ॥ १ ॥
Mahabharata - Anushaasana Parva - Chapter Topics
स्कन्देन देवादीन्प्रति धर्मरहस्यविशेषकथनम् ॥ १ ॥

Mahabharata - Anushaasana Parva - Chapter Text

श्स्कन्द उवाच ।
ममाप्यनुमतो धर्मस्तं शृणुध्वं समाहिताः ।
नीलषण्डस्य शृङ्गाभ्यां गृहीत्वा मृत्तिकां तु यः ॥ १३-१९७-१ (८९०७८)
अभिषेकं त्र्यहं कुर्यात्तस्य धर्मं निबोधत ।
शोधयेदशुभं सर्वमाधिपत्यं परत्र च ॥ १३-१९७-२ (८९०७९)
यावच्च जायते मर्त्यस्तावच्छूरो भविष्यति ।
इदं चाप्यपरं गुह्यं सरहस्यं निबोधत ॥ १३-१९७-३ (८९०८०)
प्रगृह्यौदुम्बरं पात्रं पक्वान्नं मधुना सह ।
सोमस्योत्तिष्ठमानस्यि पौर्णमास्यां बलिं हरेत् ॥ १३-१९७-४ (८९०८१)
तस्य धर्मफलं नित्यं श्रद्दधाना निबोधत ।
साध्या रुद्रास्तथाऽऽदित्या विश्वेदेवास्तथाऽश्विनौ १३-१९७-५ (८९०८२)
मरुतो वसवश्चैव प्रतिगृह्णन्ति तं बलिम् ।
सोमश्च वर्धते तेन समुद्रश्च महोदधिः ॥ १३-१९७-६ (८९०८३)
एष धर्मो मयोद्दिष्टः सरहस्यः सुखावहः ॥ १३-१९७-७ (८९०८४)
विष्णुरुवाच। १३-१९७-८क्ष् (७४३३)
धर्मगुह्यानि सर्वाणि देवतानां महात्मनाम् ।
ऋषीणां चैव गुह्यानि यः पठेदाह्निकं सदा ॥ १३-१९७-८ (८९०८५)
शृणुयाद्वाऽनसूयुर्यः श्रद्दधानः समाहितः ।
नास्य विघ्नः प्रभवति भयं चास्य न विद्यते ॥ १३-१९७-९ (८९०८६)
ये च धर्माः शुभाः पुण्याः सरहस्या उदाहृताः ।
तेषां धर्मफलं तस्य यः पठेत जितेन्द्रियः ॥ १३-१९७-१० (८९०८७)
नास्य पापं प्रभवति न च पापेन लिप्यते ।
पठेद्वा श्रावयेद्वाऽपि श्रुत्वा वा लभते फलम् ॥ १३-१९७-११ (८९०८८)

भुञ्जते पितरो देवा हव्यं कव्यमथाक्षयम् ।
श्रावयंश्चापि विप्रेन्द्रान्पर्वसु प्रयतो नरः ॥१३-१९७-१२ (८९०८९)
ऋषीणां देवतानां च पितॄणां चैव नित्यदा ।
भवत्यभिमतः श्रीमान्धर्मेषु प्रयतः सदा ॥१३-१९७-१३ (८९०९०)
कृत्वाऽपि पापकं कर्म महापातकवर्जितम् ।
रहस्यधर्मं श्रुत्वेमं सर्वपापैः प्रमुच्यते ॥१३-१९७-१४ (८९०९१)
भीष्म उवाच।१३-१९७-१५क्ष् (७४३४)
एतद्धर्मरहस्यं वै देवतानां नराधिप ।
व्यासोद्दिष्टं मया प्रोक्तं सर्वदेवनमस्कृतम् ॥१३-१९७-१५ (८९०९२)
पृथिवी रत्नसंपूर्णा ज्ञानं चेदमनुत्तमम् ।
इदमेव ततः श्राव्यमिति मन्येत धर्मवित् ॥१३-१९७-१६ (८९०९३)
नाश्रद्दधानाय न नास्तिकाय
न नष्टधर्माय न निर्घृणाय ।
न हेतुदुष्टाय गुरुद्विषे वा
नानात्मभूताय निवेद्यमेतत् ॥ ॥ १३-१९७-१७ (८९०९४)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
सप्तनवत्यधिकशततमोऽध्यायः ॥१९७ ॥

---

अनुससनपर्व-अध्यय१९८
॥ श्रीः ॥
१३.१९८. अध्यायः १९८

अथ दानधर्मपर्व ॥१ ॥
Mahabharata - Anushaasana Parva - Chapter Topics
भाष्मेणि युधिष्ठिरंप्रति भोज्याभोज्यान्नकानां भोजनीयानां जनानां
च विवेचनम् ॥१ ॥

Mahabharata - Anushaasana Parva - Chapter Text

युधिष्ठिर उवाच ।
के भोज्या ब्राह्मणस्येह के भोज्याः क्षत्रियस्य ह ।
तथा वैश्यस्य के भोज्याः के शूद्रस्य च भारत ॥१३-१९८-१ (८९०९५)
भीष्म उवाच।१३-१९८-२क्ष् (७४३५)
ब्राह्मणा ब्राह्मणस्येह भोज्या ये चैव क्षत्रियाः ।
वैश्याश्चापि तथा भोज्याः शूद्राश्च परिवर्जिताः ॥१३-१९८-२ (८९०९६)

ब्राह्मणाः क्षत्रिया वैश्या भोज्या वै क्षत्रियस्य ह ।
वर्जनीयास्तु वै शूद्राः सर्वभक्षा विकर्मिणः ॥ १३-१९८-३ (८९०९७)
वैश्यास्तु भोज्या विप्राणां क्षत्रियाणां तथैव च ।
नित्याग्नयो विविक्ताश्च चातुर्मास्यरताश्च ये ॥ १३-१९८-४ (८९०९८)
शूद्राणामथ यो भुङ्क्ते स भुङ्क्ते पृथिवीमलम् ।
मलं नृणां स पिबति मलं भुङ्क्ते जनस्य च ॥ १३-१९८-५ (८९०९९)
शूद्राणां यस्तथा भुङ्क्ते स भुङ्क्ते पृथिवीमलम् ।
पृथिवीमलमश्नन्ति ये द्विजाः शूद्रभोजिनः ॥ १३-१९८-६ (८९१००)
शूद्रस्य कर्मनिष्ठायां विकर्मस्थोपि पच्यते ।
ब्राह्मणः क्षत्रियो वैश्यो विकर्मस्थश्च पच्यते ॥ १३-१९८-७ (८९१०१)
स्वाध्यायनिरता विप्रास्तथा स्वस्त्ययने नृणाम् ।
रक्षणे क्षत्रियं प्राहुर्वैश्यं पुष्ट्यर्थमेव च ॥ १३-१९८-८ (८९१०२)
करोति कर्म यद्वैश्यस्तद्गत्वा ह्युपजीवति ।
कृषिगोरक्ष्यवाणिज्यमकुत्सा वैश्यकर्मणि ॥ १३-१९८-९ (८९१०३)
शूद्रकर्म तु यः कुर्यादवहाय स्वकर्म च ।
स विज्ञेयो यथा शूद्रो न च भोज्यः कदाचन ॥ १३-१९८-१० (८९१०४)
चिकित्सकः काण्डपृष्ठः पुराऽध्यक्षः पुरोहितः ।
सांवत्सरो वृथाध्यायी सर्वे ते शूद्रसंमिताः ॥ १३-१९८-११ (८९१०५)
शूद्रकर्मस्वथैतेषु यो भुङ्क्ते निरपत्रपः ।
अभोज्यभोजनं भुक्त्वा भयं प्राप्नोति दारुणम् ॥ १३-१९८-१२ (८९१०६)
कुलं वीर्यं च तेजश्च तिर्यग्योनित्वमेव च ।
स प्रयाति यथा श्वा वै निष्क्रियो धर्मवर्जितः ॥ १३-१९८-१३ (८९१०७)
भुङ्क्ते चिकित्सकस्यान्नं तदन्नं च पुरीषवत् ।
पुंश्चल्यन्नं च मूत्रं स्यात्कारुकान्नं च शोणितम् ॥ १३-१९८-१४ (८९१०८)
विद्योपजीविनोऽन्नं च यो भुङ्क्ते साधुसम्मतः ।
तदप्यन्नं यथा शौद्रं तत्साधुः परिवर्जयेत् ॥ १३-१९८-१५ (८९१०९)
वचनीयस्य यो भुङ्क्ते तमाहुः शोणितं ह्रदम् ।
पिशुनं भोजनं भुङ्क्ते ब्रह्महत्यासमं विदुः ॥ १३-१९८-१६ (८९११०)
असत्कृतमवज्ञातं न भोक्तव्यं कदाचन ॥ १३-१९८-१७ (८९१११)
व्याधिं कुलक्षयं चैव क्षिप्रं प्राप्नोति ब्राह्मणः ।
नगरीरक्षिणो भुङ्क्ते श्वपचप्रवणो भवेत् ॥ १३-१९८-१८ (८९११२)
गोघ्ने च ब्राह्मणघ्ने च सुरापे गुरुतल्पगे ।
भुक्त्वाऽन्नं जायते विप्रो रक्षसां कुलवर्धनः ॥ १३-१९८-१९ (८९११३)
न्यासापहारिणो भुक्त्वा कृतघ्ने क्लीबवर्तिनि ।
जायते शबरावासे मध्यदेशबहिष्कृते ॥ १३-१९८-२० (८९११४)
अभोज्याश्चैव भोज्याश्च मया प्रोक्ता यथाविधि ।

किमन्यदद्य कौन्तेय मत्तस्त्वं श्रोतुमिच्छसि ॥८ ॥ १३-१९८-२१ (८९११५)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
अष्टनवत्यधिकशततमोऽध्यायः ॥१९८ ॥
Mahabharata - Anushaasana Parva - Chapter Footnotes

७-१९८-१ के भोज्या भोज्यान्नाः ॥
७-१९८-४ वैश्या भोज्या भोजनीयाः ॥
७-१९८-७ शूद्रस्य कर्मनिष्ठायां सेवायां वर्तमानो विकर्मस्थो
विशिष्टकर्मस्थः संध्यावन्दनादियुक्तोऽपि पच्यते नरके इति
शेषः ॥
७-१९८-११ काण्डपृष्ठोऽधमः ॥
७-१९८-१६ पिशुनं तत्सम्बन्धि ॥
७-१९८-१८ नगरीं रक्षति तस्य ॥

---

अनुससनपर्व-अध्यय१९९
॥ श्रीः ॥
१३.१९९. अध्यायः १९९

अथ दानधर्मपर्व ॥१ ॥
Mahabharata - Anushaasana Parva - Chapter Topics
भीष्मेण युधिष्ठिरंप्रति अप्रतिग्राह्यप्रतिग्रहे अभोज्यभोजने च
प्रायश्चित्तकथनम् ॥१ ॥

Mahabharata - Anushaasana Parva - Chapter Text

श्युधिष्ठिर उवाच ।
उक्तास्तु भवता भोज्यास्तथाऽभोज्याश्च सर्वशः ।
अत्र मे प्रश्नसन्देहस्तन्मे वद पितामह ॥१३-१९९-१ (८९११६)
ब्राह्मणानां विशेषेण हव्यकव्यप्रतिग्रहे ।
नानाविधेषु भोज्येषु प्रायश्चित्तानि शंस मे ॥१३-१९९-२ (८९११७)
भीष्म उवाच।१३-१९९-३क्ष् (७४३६)
हन्त वक्ष्यामि ते राजन्ब्राह्मणानां महात्मनाम् ।
प्रतिग्रहेषु भोज्ये च मुच्यते येन पाप्मनः ॥१३-१९९-३ (८९११८)
घृतप्रतिग्रहे चैव सावित्री समिदाहुतिः ।
तिलप्रतिग्रहे चैव सममेतद्युधिष्ठिर ॥१३-१९९-४ (८९११९)

मांसप्रतिग्रहे चैव मधुनो लवणस्य च ।
आदित्योदयनं स्थित्वा पूतो भवति ब्राह्मणः ॥१३-१९९-५ (८९१२०)
काञ्चनं प्रतिगृह्याथ जपमानो गुरुश्रुतिम् ।
कृष्णायसं च विवृतं धारयन्मुच्यते द्विजः ॥१३-१९९-६ (८९१२१)
एवं प्रतिगृहीतेऽथ धने वस्त्रे तथा स्त्रियाम् ।
एवमेव नरश्रेष्ठ सुवर्णस्य प्रतिग्रहे। १३-१९९-७ (८९१२२)
अन्नप्रतिग्रहे चैव पायसेक्षुरसे तथा ।
इक्षुतैलपवित्राणां त्रिसन्ध्येऽप्सु निमज्जनम् ॥१३-१९९-८ (८९१२३)
व्रीहौ पुष्पे फले चैव जले पिष्टमये तथा ।
यावके दधिदुग्धे च सावित्रीं शतशोऽन्विताम् ॥१३-१९९-९ (८९१२४)
उपानहौ च च्छत्रं च प्रतिगृह्यौर्ध्वदेहिके ।
जपेच्छतं समायुक्तस्तेन मुच्यते पाप्मना ॥१३-१९९-१० (८९१२५)
क्षेत्रप्रतिग्रहे चैव ग्रहसूतकयोस्तथा ।
त्रीणि रात्राण्युपोषित्वा तेन पापाद्विमुच्यते ॥१३-१९९-११ (८९१२६)
कृष्णपक्षे तु यः श्राद्धं पितॄणामश्नुते द्विजः ।
अन्नमेतदहोरात्रात्पूतो भवति ब्राह्मणः ॥१३-१९९-१२ (८९१२७)
न च सन्ध्यामुपासीत न च जाप्यं प्रवर्तयेत् ।
न सङ्किरेत्तदन्नं च ततः पूयेत ब्राह्मणः ॥१३-१९९-१३ (८९१२८)
इत्यर्थमपराङ्णे तु पितॄणां श्राद्धमुच्यते ।
यथोक्तानां यदश्नीयुर्ब्राह्मणाः पूर्वकेतिताः ॥१३-१९९-१४ (८९१२९)
मृतकस्य तृतीयाहे ब्राह्मणो योऽन्नमश्नुते ।
स त्रिवेलं समुन्मज्ज्य द्वादशाहेन शुध्यति ॥१३-१९९-१५ (८९१३०)
द्वादशाहे व्यतीते तु कृतशौचो विशेषतः ।
ब्राह्मणेभ्यो हविर्दत्त्वा मुच्यते तेन पाप्मना ॥१३-१९९-१६ (८९१३१)
मृतस्य दशरात्रेण प्रायश्चित्तानि दापयेत् ।
सावित्रीं रैवतीमिष्टिं कूश्माण्डमघमर्षणम् ॥१३-१९९-१७ (८९१३२)
मृतकस्य त्रिरात्रे यः समुद्दिष्टे समश्नुते ।
सप्तत्रिषवणं स्नात्वा पूतो भवति ब्राह्मणः ॥१३-१९९-१८ (८९१३३)
सिद्धिमाप्नोति विपुलामापदं चैव नाप्नुयात् ॥ १३-१९९-१९ (८९१३४)
यस्तु शूद्रैः समश्नीयाद्ब्राह्मणोऽप्येकभोजने ।
अशौचं विधिवत्तस्य शौचमत्र विधीयते ॥१३-१९९-२० (८९१३५)
यस्तु वैश्यैः सहाश्नीयाद्ब्राह्मणोऽप्येकभोजने ।
स वै त्रिरात्रं दीक्षित्वा मुच्यते तेन कर्मणा ॥१३-१९९-२१ (८९१३६)
क्षत्रियैः सह योऽश्नीयाद्ब्राह्मणोऽप्येकभोजने ।
आप्लुतः सह वासोभिस्तेन मुच्येत पाप्मना ॥१३-१९९-२२ (८९१३७)
शूद्रास्य तु कुलं हन्ति वैश्यस्य पशुबान्धवान् ।

क्षत्रियस्य श्रियं हन्ति ब्राह्मणस्य सुवर्चसम् ॥१३-१९९-२३ (८९१३८)
प्रायश्चित्तं च शान्तिं च जुहुयात्तेन मुच्यते ।
सावित्रीं रैवतीमिष्टिं कूश्माण्डमघमर्षणम्। १३-१९९-२४ (८९१३९)
तथोच्छिष्टमथान्योन्यं सम्प्राशेन्नात्र संशयः ।
रोचना विरजा रात्रिर्मङ्गलालम्भनानि च ॥ ॥१३-१९९-२५ (८९१४०)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
एकोनद्विशततमोध्यायः ॥१९९ ॥
Mahabharata - Anushaasana Parva - Chapter Footnotes

७-१९९-५ आदित्योदयनं तत्पर्यन्तं स्थित्वा ॥
७-१९९-६ विवृतं लोकप्रत्यक्षं धारयन् ॥
७-१९९-११ ग्रहसूतकयोः कारागारस्ताशौचवतोः ॥
७-१९९-१३ नच संध्यामुपासीतेत्यत्र अस्नात इति शेषः ।न
सङ्किरेदिति पुनर्भोजन न कुर्यादित्यर्थः ॥
७-१९९-१४ अश्नीयुरित्यर्थमिति सम्बन्धे अपराह्णे
क्षुद्बोधात्सम्यगन्नमश्नन्त्वित्यर्थः ।केतिताः निमन्त्रिताः ॥
७-१९९-१६ हविरन्नम् ।७-१९९-१७ सावित्रीं
जपन्।रैवतीं रैवतं साम।इष्टिं पवित्रेष्टिम्।कूश्माण्डं
यद्देवादेवहेडनमित्यनुवाकपञ्चकम्।अघमर्षणं जले निमज्ज्य
दश प्रणवसंयुक्तगायत्र्याः ऋतंचेति तृचस्य वा त्रिर्जपः ॥
७-१९९-२० अशौचं प्रायश्चित्ताभाव एव ॥
७-१९९-२५ विरजा दूर्वा रात्रिर्हरिद्रेति विश्वः ॥

---

अनुससनपर्व-अध्यय२००
॥श्रीः ॥
१३.२००. अध्यायः २००

अथ दानधर्मपर्व ॥१ ॥
Mahabharata - Anushaasana Parva - Chapter Topics
भीष्मेण युधिष्ठिरंप्रति दृष्टान्तप्रदर्शनपूर्वकं
दानप्रशंसनम् ॥१ ॥

Mahabharata - Anushaasana Parva - Chapter Text

युधिष्ठिर उवाच ।

दानेन वर्ततेत्याह तपसा चैव भारत ।
तदेतन्मे मनोदुःशं व्यपोह त्वं पितामह ।
किंस्विपृथिव्यां ह्येतन्मे भवाञ्शंसितुमर्हति ॥ १३-२००-१ (८९१४१)
भीष्म उवाच। १३-२००-२क्ष् (७४३७)
शृणु यैर्धर्मनिरतैस्तपसा भावितात्मभिः ।
लोका ह्यसंशयं प्राप्ता दानपुण्यरतैर्नृपैः ॥ १३-२००-२ (८९१४२)
सत्कृतश्च तथाऽऽत्रेयः शिष्येभ्यो ब्रह्म निर्गुणम् ।
उपदिश्य तदा राजन्गतो लोकाननुत्तमान् ॥ १३-२००-३ (८९१४३)
शिबिरोशीनरः प्राणान्प्रियस्य तनयस्य च ।
ब्राह्मणार्थमुपाकृत्य नाकपृष्ठमितो गतः ॥ १३-२००-४ (८९१४४)
प्रतर्दनः काशिपतिः प्रदाय तनयं स्वकम् ।
ब्राह्मणायातुलां कीर्तिमिह चामुत्र चाश्नुते ॥ १३-२००-५ (८९१४५)
रन्तिदेवश्च सांकृत्यो वसिष्ठाय महात्मने ।
अर्घ्यं प्रदाय विधिवल्लेभे लोकाननुत्तमान् ॥ १३-२००-६ (८९१४६)
दिव्यं शतशलाकं च यज्ञार्थं काञ्चनं शुभम् ।
छत्रं देवावृधो दत्त्वा ब्राह्मणायास्थितो दिवम् ॥ १३-२००-७ (८९१४७)
भगवानम्बरीषश्च ब्राह्मणायामितौजसे ।
प्रदाय सकलं राष्ट्रं सुरोलकमवाप्तवान् ॥ १३-२००-८ (८९१४८)
सावित्रः कुण्डलं दिव्यं यानं च जनमेजयः ।
ब्राह्मणाय च गा दत्त्वा गतो लोकाननुत्तमान् ॥ १३-२००-९ (८९१४९)
वृषादर्भिश्च राजर्षी रत्नानि विविधानि च ।
रम्यांश्चावसथान्दत्त्वा द्विजेभ्यो दिवमागतः ॥ १३-२००-१० (८९१५०)
निमी राष्ट्रं च वैदर्भिः कन्यां दत्त्वा महात्मने ।
अगस्त्याय गतः स्वर्गं सपुत्रपशुबान्धवः ॥ १३-२००-११ (८९१५१)
जामदग्न्यश्च विप्राय भूमिं दत्त्वा महायशाः ।
रामोऽक्षयांस्तथा लोकाञ्जगाम मनसोऽधिकान् ॥ १३-२००-१२ (८९१५२)
अवर्षति च पर्जन्ये सर्वभूतानि देवराट् ।
वसिष्ठो जीवयामास येन यातोऽक्षयां गतिम् ॥ १३-२००-१३ (८९१५३)
रामो दाशरथिश्चैव हुत्वा यज्ञेषु वै वसु ।
सगतो ह्यक्षयाँल्लोकान्यस्य लोके महद्यशः ॥ १३-२००-१४ (८९१५४)
कक्षसेनश्च राजर्षिर्वसिष्ठाय महात्मने ।
न्यासं यथावत्संन्यस्य जगामि सुमहायशः ॥ १३-२००-१५ (८९१५५)
करंधमस्य पौत्रस्तु मरुत्तोऽविक्षितः सुतः ।
कन्यामाङ्गिरसे दत्त्वा दिवामाशु जगाम सः ॥ १३-२००-१६ (८९१५६)
ब्रह्मदत्तश्च पाञ्चाल्यो राजा धर्मभृतांवरः ।
निधिं शङ्खमनुज्ञाप्य जगाम परमां गतिम् ॥ १३-२००-१७ (८९१५७)

राजा मित्रसहश्चैव वसिष्ठाय महात्मने ।
मदयन्तीं प्रियां भार्यां दत्त्वा च त्रिदिवं गतः ॥ १३-२००-१८ (८९१५८)
मनोः पुत्रश्च सुद्युम्नो लिखिताय महात्मने ।
दण्डमुद्धृत्य धर्मेण गतो लोकाननुत्तमान् ॥ १३-२००-१९ (८९१५९)
सहस्रचित्यो राजर्षिः प्राणानिष्टान्महायशाः ।
ब्राह्मणार्थे परित्यज्य गतो लोकाननुत्तमान् ॥ १३-२००-२० (८९१६०)
सर्वकामैश्च सम्पूर्णं दत्त्वा वेश्म हिरण्मयम् ।
मौद्गल्याय गतः स्वर्गं शतद्युम्नो महीपतिः ॥ १३-२००-२१ (८९१६१)
भक्ष्यभोज्यस्य च कृतान्राशयः पर्वतोपमान् ।
शाण्डिल्याय पुरा दत्त्वा सुमन्युर्दिवमास्थितः ॥ १३-२००-२२ (८९१६२)
नाम्ना च द्युतिमान्नाम साल्वराजो महाद्युतिः ।
दत्त्वा राज्यमृचीकाय गतो लोकाननुत्तमान् ॥ १३-२००-२३ (८९१६३)
मदिराश्वश्च राजर्षिर्दत्त्वा कन्यां सुमध्यमाम् ।
हिरण्यहस्ताय गतो लोकान्देवैरधिष्ठितान् ॥ १३-२००-२४ (८९१६४)
लोमपादश्च राजर्षिः शान्तां दत्त्वा सुतां प्रभुः ।
ऋश्यशृङ्गाय विपुलैः सर्वैः कामैरयुज्यत ॥ १३-२००-२५ (८९१६५)
कौत्साय दत्त्वा कन्यां तु हंसीं नाम यशस्विनीम् ।
गतोऽक्षयानतो लोकान्राजर्षिश्च भगीरथः ॥ १३-२००-२६ (८९१६६)
दत्त्वा शतसहस्रं तु गवां राजा भगीरथः ।
स वत्सानां कोहलाय गतो लोकाननुत्तमान् ॥ १३-२००-२७ (८९१६७)
एते चान्ये च बहवो दानेन तपसा च ह ।
युधिष्ठिर गताः स्वर्गं निवर्तन्ते पुनःपुनः ॥ १३-२००-२८ (८९१६८)
तेषां प्रतिष्ठिता कीर्तिर्यावत्स्थास्यति मेदिनी ।
गृहस्थैर्दानतपसा यैर्लोका वै विनिर्जिताः ॥ १३-२००-२९ (८९१६९)
शिष्टानां चरितं ह्येतत्कीर्तितं मे युधिष्ठिर ।
दानयज्ञप्रजासर्गैरेते हि दिवमास्थिताः ॥ १३-२००-३० (८९१७०)
दत्त्वा तु सततं तेऽस्तु कौरवाणां धुरन्धर ।
दानयज्ञक्रियायुक्ता बुद्धिर्धर्मोपचायिनी ॥ १३-२००-३१ (८९१७१)
यत्र ते नृपशार्दूल सन्देहो वै भविष्यति ।
श्वः प्रभाते हि वक्ष्यामि सन्ध्या हि समुपस्थिता ॥ ॥ १३-२००-३२ (८९१७२)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
द्विशततमोऽध्यायः ॥ २०० ॥

Mahabharata - Anushaasana Parva - Chapter Footnotes

७-२००-१ दानतपसोर्मध्ये किं श्रेष्ठमिति प्रश्नः । वर्तते स्वर्गे

इति शेषः सन्धिरार्षः ॥
७-२००-९ सावित्रः कर्णः ॥
७-२००-१२ मनसो मनःसङ्कल्पादप्यधिकान् ॥
७-२००-१३ देवराट् भूदेवाराट् वसिष्ठः ॥
७-२००-१५ न्यासं दानरूपेण स्थापनम् ॥
७-२००-१७ अनुज्ञाप्य दत्त्वा ॥
७-२००-१९ दण्डं चोरयोग्यं हस्तच्छेदरूपम् ॥
७-२००-२२ राशयः राशीन् ॥

---

अनुससनपर्व-अध्यय२०१
॥ श्रीः ॥
१३.२०१. अध्यायः २०१

अथ दानधर्मपर्व ॥ १ ॥
Mahabharata - Anushaasana Parva - Chapter Topics
भीष्मेण युधिष्ठिरंप्रति दानस्य पञ्चविधत्वकथनपूर्वकं
तत्तल्लक्ष्यप्रदर्शनम् ॥ १ ॥

Mahabharata - Anushaasana Parva - Chapter Text

श्युधिष्ठिर उवाच ।
श्रुतं मे भवतस्तात सत्यव्रतपराक्रम ।
दानधर्मेण महता ये प्राप्तास्त्रिदिवं नृपाः ॥ १३-२०१-१ (८९१७३)
इमांस्तु श्रोतुमिच्छामि ध्रमान्धर्मभृतांवर ।
दानं कतिविधं देयं किं तस्य च फलं लभेत् ॥ १३-२०१-२ (८९१७४)
कथं केभ्यस्च धर्म्यं च दानं दातव्यमिष्यते ।
कैः कारणैः कतिविधं श्रोतुमिच्छामि तत्त्वतः ॥ १३-२०१-३ (८९१७५)
भीष्म उवाच। १३-२०१-४क्ष् (७४३८)
शृणु तत्त्वेन कौन्तेय दानं प्रति ममानघ ।
यथा दानं प्रदातव्यं सर्ववर्णेषु भारत ॥ १३-२०१-४ (८९१७६)
धर्मादर्थाद्भयात्कामात्कारुण्यादिति भारत ।
दानं पञ्चविधं ज्ञेयं कारणैर्यैर्निबोध तत् ॥ १३-२०१-५ (८९१७७)
इह कीर्तिमवाप्नोति प्रेत्य चानुत्तमं सुखम् ।
इति दानं प्रदातव्यं ब्राह्मणेभ्योऽनसूयता ॥ १३-२०१-६ (८९१७८)
ददाति वा दास्यति वा मह्यं दत्तमनेन वा ।
इत्यर्थिभ्यो निशम्यैव सर्वं दातव्यमर्थिने ॥ १३-२०१-७ (८९१७९)

नास्याहं न मदीयोऽयं पापं कुर्याद्विमानितः ।
इति दद्याद्भयादेव दृढं मूढाय पण्डितः ॥ १३-२०१-८ (८९१८०)
प्रियो मे यं प्रियोऽस्याहमिति सम्प्रेक्ष्य बुद्धिमान् ।
वयस्यायैवमक्लिष्टं दानं दद्यादतन्द्रितः ॥ १३-२०१-९ (८९१८१)
दीनश्च याचते चायमल्पेनापि हि तुष्यति ।
इति दद्याद्दरिद्राय कारुण्यादिति सर्वथा ॥ १३-२०१-१० (८९१८२)
इति पञ्चविधं दानं पुण्यकीर्तिविवर्धनम् ।
यथाशक्त्या प्रदातव्यमेवमाह प्रजापतिः ॥ ॥ १३-२०१-११ (८९१८३)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
एकाधिकद्विशततमोऽध्यायः ॥ २०१ ॥
Mahabharata - Anushaasana Parva - Chapter Footnotes

७-२०१-६ धर्मद्दानं व्याचष्टे इहेति ॥
७-२०१-७ अर्थादित्यस्य लक्षणमाह ददातीति ॥

---

अनुससनपर्व-अध्यय२०२
॥ श्रीः ॥
१३.२०२. अध्यायः २०२

अथ दानधर्मपर्व ॥ १ ॥
Mahabharata - Anushaasana Parva - Chapter Topics
युधिष्ठिरेण भीष्मंप्रति सप्रशंसनं पुनर्धर्मकथनप्रार्थना ॥ १ ॥

Mahabharata - Anushaasana Parva - Chapter Text

वैशम्पायनक उवाच ।
अनुशास्य शुभैर्वाक्यैर्भीष्ममाह महामतिः ।
प्रीत्या पुनः स शुश्रूषुर्वचनं यद्युधिष्ठिरः ॥ १३-२०२-१ (८९१८४)
जनमेजय उवाच। १३-२०२-२क्ष् (७४३९)
पितामहो मे विप्रर्षे भीष्मं कालवशं गतम् ।
किमपृच्छत्तदा राजा सर्वसामाजिकं हितम् ॥ १३-२०२-२ (८९१८५)
उभयोर्लोकयोर्युक्तं पुरुषार्थमनुत्तमम् ।
तन्मे वद महाप्राज्ञ श्रोतुं कौतूहलं हि मे ॥ १३-२०२-३ (८९१८६)
वैशम्पायन उवाच। १३-२०२-४क्ष् (७४४०)
भूय एव महाराज शृणु धर्मसमुच्चयम् ।

यदपृच्छत्तदा राजा कुन्तीपुत्रो युधिष्ठिरः ॥ १३-२०२-४ (८९१८७)
शरतल्पगतं भीष्मं सर्वपार्थिवसन्निधौ ।
अजातशत्रुः प्रीतात्मा पुनरेवाभ्यभाषत ॥ १३-२०२-५ (८९१८८)
पितामह महाप्राज्ञ सर्वशास्त्रविशारदः ।
श्रूयतां मे हि वचनमर्थित्वात्प्रब्रवीम्यहम् ॥ १३-२०२-६ (८९१८९)
परावरज्ञो भूतानां दयावान्सर्वजन्तुषु ।
आगमैर्बहुभिः प्रीतो भवान्नः परमं कुले ॥ १३-२०२-७ (८९१९०)
त्वादृशो दुर्लभो लोके साम्प्रतं ज्ञानसंयुतः ।
भवता गुरुणा चैव धन्याश्चैव वयं प्रभो ॥ १३-२०२-८ (८९१९१)
अयं स कालः सम्प्राप्तो दुर्लभैर्ज्ञातिबान्धवैः ।
शास्ता तु नास्ति नः कश्चित्त्वदृते पुरुषर्षभ ॥ १३-२०२-९ (८९१९२)
तस्माद्धर्मार्थसहितमायत्यां च हितोदयम् ।
आश्चर्यं परमं वाक्यं श्रोतुमिच्छामि भारत ॥ १३-२०२-१० (८९१९३)
अयं नारायणः श्रीमन्सर्वपार्थिवसन्निधौ ।
भवन्तं बहुमानाच्च प्रणयाच्चैव सेवते ॥ १३-२०२-११ (८९१९४)
अस्यैव तु समक्षं नः पार्तिवानां तथैव च ।
इतिवृत्तं पुराणं च श्रोतॄणां परमं हितम् ॥ १३-२०२-१२ (८९१९५)
यदि तेऽहमनुग्राह्यो भ्रातृभिः सहितोऽनघ ।
मत्प्रियार्थं हि कौरव्य स्नेहाद्भाषितुमर्हसि ॥ १३-२०२-१३ (८९१९६)
वैशम्पायन उवाच। १३-२०२-१४क्ष् (७४४१)
तस्य तद्वचनं श्रुत्वा स्नेहादागतविक्लवः ।
प्रविबन्निव तं दृष्ट्वा भीष्मो वचनमब्रवीत् ॥ १३-२०२-१४ (८९१९७)
शृणु राजन्पुरावृत्तिमितिहासं पुरातनम् ।
एतावदुक्त्वा गाङ्गेयः प्रणम्य शिरसा हरिम् ।
धर्मराजं समीक्ष्येदं पुनर्वक्तुं समारभत् ॥ ॥ १३-२०२-१५ (८९१९८)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
द्व्यधिकद्विशततमोऽध्यायः ॥ २०२ ॥

Mahabharata - Anushaasana Parva - Chapter Footnotes

७-२०२-१क्ष् क एकोत्तरद्विशततमाध्यायात्परं
एकपञ्चाशदधिकद्विशततमाद्यायात्पूर्वं मध्ये
परिदृश्यमानैकोनपञ्चाशदध्यायप्रतिनिधितया
औत्तराहकोशे अष्टावेवाध्यायाः परिदृश्यन्ते । तेचानुपूर्वीभेदेन
तदर्थैकदेशप्रतिपादकाएव दृश्यन्ते नतु तदनुक्तार्थप्रतिपादकाः
॥

अनुससनपर्व-अध्यय२०३
॥ श्रीः ॥
१३.२०३. अध्यायः २०३

अथ दानधर्मपर्व ॥ १ ॥
Mahabharata - Anushaasana Parva - Chapter Topics
कृष्णेन पुत्रार्थं कैलासे तपश्चरणम् ॥ १ ॥
तत्र कृष्णदर्शनाय नारदादीनामागमनम् ॥ २ ॥
कृष्णेन स्वमुखनिःसृताग्निना तत्पर्वतस्य भस्मीकरणम् ॥ ३ ॥
तथा पुनः प्रसन्नदृष्ट्या गिरेरुज्जीवनम् ॥ ४ ॥
तथा नारदादीन्प्रति तत्कारणकथनम् ॥ ५ ॥

Mahabharata - Anushaasana Parva - Chapter Text

भीष्म उवाच ।
अयं नारायणः श्रीमान्पुत्रार्थे व्रतकाङ्क्षया ।
दीक्षितोऽभून्महाबाहुः पुरा द्वादशवार्षिकम् ॥ १३-२०३-१ (८९१९९)
दीक्षितं केशवं द्रष्टुमभिजग्मुर्महर्षयः ।
सेवित्वा च महात्मानः प्रीयमाणं जनार्दनम् ॥ १३-२०३-२ (८९२००)
नारदः पर्वतश्चैव कृष्णद्वैपायनस्तथा ।
देवलः काश्यपश्चैव हस्तिकाश्यप एव च ।
जमदग्निश्च राजेन्द्र धौम्यो वाल्मीकिरेव च ॥ १३-२०३-३ (८९२०१)
अपरेऽपि तपःसिद्धाः सत्यव्रतपरायणाः ।
शिष्यैरनुगताः सर्वे ब्रह्मविद्भिरकल्मषैः ॥ १३-२०३-४ (८९२०२)
केशवस्तानभिगतान्प्रीत्या सम्परिगृह्य च ।
तेषामतिथिसत्कारं पूजनार्थं कुलोचितम् ।
देवकीतनयो हृष्टो देवतुल्यमकल्पयत् ॥ १३-२०३-५ (८९२०३)
उपविष्टेषु सर्वेषु विष्टरेषु तदाऽनघ ।
विश्वस्तेष्वभितुष्टेषु केशवार्चनया पुनः ॥ १३-२०३-६ (८९२०४)
परस्परं कथा दिव्याः प्रावर्तन्त मनोरमाः ।
विष्णोर्नारायणस्यैव प्रसादात्कथयामि ताः ॥ १३-२०३-७ (८९२०५)
तस्यैव व्रतचर्यायां मुनिभिर्विस्मितं पुरा ।
यत्र गोवृषभाङ्कस्य प्रभावोऽभून्महात्मनः ॥ १३-२०३-८ (८९२०६)
यत्र देवी महादेवमपृच्छत्संशयान्पुरा ।
कथयामास सर्वांस्तान्देव्याः प्रियचिकीर्षया ॥ १३-२०३-९ (८९२०७)

उमापत्योश्च संवादं शृणु तात मनोरमम् ।
वर्णाश्रमाणां धर्मश्च तत्र तात समाहितः ॥ १३-२०३-१० (८९२०८)
ऋषिधर्मश्च निखिलो राजधर्मस्च पुष्कलः ।
गृहस्थधर्मश्च शुभः कर्मपाकफलानि च ॥ १३-२०३-११ (८९२०९)
देवगुह्यं च विविधं दानधर्मविधिस्तथा ।
विधानमत्र प्रोक्तं यद्यमस्य नियमस्य च ॥ १३-२०३-१२ (८९२१०)
यमलोकविधानं च स्वर्गलोकगतिस्तथा ।
प्राणमोक्षविधिश्चैव तीर्थचर्या च पुष्कला ॥ १३-२०३-१३ (८९२११)
मोक्षधर्मविधानं च साङ्ख्ययोगसमन्वितम् ।
स्त्रीधर्मश्च स्वयं देव्या देवदेवाय भाषितः ॥ १३-२०३-१४ (८९२१२)
एवमादि शुभं सर्वं तत्र तात समाहितम् ।
रुद्राण्याः संशयप्रश्नो यत्र तात प्रवर्तते ॥ १३-२०३-१५ (८९२१३)
धन्यं यशस्यमायुष्यं धर्म्यं च परमं हितम् ।
पुष्टियोगमिमं दिव्यं कथ्यमानं मया शृणु ॥ १३-२०३-१६ (८९२१४)
इतिहासमिमं दिव्यं पवित्रं परमं शुभम् ।
सायं प्रातः सदा सम्यक् श्रोतव्यं च बुभूषता ॥ १३-२०३-१७ (८९२१५)
भीष्म उवाच। १३-२०३-१८क्ष् (७४४२)
ततो नारायणो देवः संक्लिष्टो व्रतचर्यया ।
वह्निर्विनिःसृतो वक्त्रात्कृष्णस्याद्भुतदर्शनः ॥ १३-२०३-१८ (८९२१६)
अग्निना तेन महता निःसृतेन मुखाद्विभोः ।
पश्यतामेव सर्वेषां दग्ध एव नगोत्तमः ॥ १३-२०३-१९ (८९२१७)
मृगपक्षिगणाकीर्णः श्वापदैरपि सङ्कुलः ।
वृक्षगुल्मलताकीर्णो मथितो दीनदर्शनः ॥ १३-२०३-२० (८९२१८)
पुनः स दृष्टमात्रेण हरिणा सौम्यचेतसा ।
स बभूव गिरिः क्षिप्रं प्रफुल्लद्रुमकाननः ॥ १३-२०३-२१ (८९२१९)
सिद्धचारणसङ्घैश्च प्रसन्नैरुपशोभितः ।
मत्तवारणसंयुक्तो नानापक्षिगणैर्युतः ।
तदद्भुतमचिन्त्यं च सर्वेषामभवद्भृशम् ॥ १३-२०३-२२ (८९२२०)
तं दृष्ट्वा हृष्टरोमाणः सर्वे मुनिगणास्तदा ।
विस्तिताः परमायत्ताः साध्यसाकुललोचनाः ।
न किञ्चिदब्रुवंस्तत्र शुभं वा यदि वेतरत् ॥ १३-२०३-२३ (८९२२१)
ततो नारायणो देवो मुनिसङ्घे तु विस्मिते ।
तान्समीक्ष्यैव मधुरं बभाषे पुष्करेक्षणः ॥ १३-२०३-२४ (८९२२२)
किमर्थं मुनिसङ्घेऽस्मिन्विस्मयोऽयमनुत्तमः ।
एतन्मे संशयं सर्वे याथातथ्येन नन्दिताः ।
ऋषयो वक्तुमर्हन्ति निश्चयेनार्थकोविदाः ॥ १३-२०३-२५ (८९२२३)

केशवस्य वचः श्रुत्वा तुष्टुवुर्मुनिपुङ्गवाः ।
भवान्सृजति वै लोकान्भवान्संहरति प्रजाः ।
भवाञ्शीतं भवानुष्णं भवान्सत्यं भवान्क्रतुः ॥ १३-२०३-२६ (८९२२४)
भवानादिर्भवानन्तो भवतोऽन्यन्न विद्यते ।
स्थावरं जङ्गमं सर्वं त्वमेव पुरुषोत्तम ॥ १३-२०३-२७ (८९२२५)
त्वत्तः सर्वमिदं तात लोकचक्रं प्रवर्तते ।
त्वमेवार्हसि तद्वक्तुं मुखादग्निविनिर्गमम् ॥ १३-२०३-२८ (८९२२६)
एतन्नो विस्मयकरं बभूव मधुसूदन ।
ततो विगतसंत्रासा भवाम पुरुषोत्तम ।
यदिच्छेत्तत्र वक्तव्यं कुतोऽस्माकं नियोगतः ॥ १३-२०३-२९ (८९२२७)
श्रीभगवानुवाच। १३-२०३-३०क्ष् (७४४३)
नित्यं हितार्थं लोकानां भवद्भिः क्रियते तपः ।
तस्माल्लोकहितं गुह्यं श्रूयतां कथयामि वः ॥ १३-२०३-३० (८९२२८)
असुरः साम्प्रतं कश्चिदहितो लोकनाशनः ।
मायास्त्रकुशलश्चैव बलदर्पसमन्वितः ॥ १३-२०३-३१ (८९२२९)
बभूव स मया बद्धो लोकानां हितकाम्यया ।
पुत्रेण मे वधो दृष्टस्तस्य वै मुनिपुङ्गवाः ॥ १३-२०३-३२ (८९२३०)
तदर्थं पुत्रमेवाहं सिसृक्षुर्वनमागतः ।
आत्मनः सदृशं पुत्रमहं जनयितुं व्रतैः ॥ १३-२०३-३३ (८९२३१)
एवं व्रतपरीतस्य तपस्तीव्रतया मम ।
अथात्मा मम देहस्थः सोग्निर्भूत्वा विनिःसृतः ॥ १३-२०३-३४ (८९२३२)
विनिःसृत्य गतो द्रष्टुं क्षणेन च पितामहम् ।
ब्रह्मणा मन्मथोऽनङ्गः पुत्रत्वेन प्रकल्पितः ।
अनुज्ञातश्च तेनैव पुनरायान्ममान्तिकम् ॥ १३-२०३-३५ (८९२३३)
एवं मे वैष्णवं तेजो मम वक्त्राद्विनिःसृतम् ।
तत्तेजसा निर्मथितः पुरतोऽयं गिरिः स्थितः ॥ १३-२०३-३६ (८९२३४)
दृष्ट्वा दाहं गिरेस्तस्य सौम्यभावतया मम ।
पुनः स दृष्टमात्रेण गिरिरासीद्यथा पुरा ॥ १३-२०३-३७ (८९२३५)
एतद्गुह्यं यथातथ्यं कथितं वः समासतः ।
भवन्तो व्यथिता येन विस्मिताश्च तपोधनाः ॥ १३-२०३-३८ (८९२३६)
ऋषीणामेवमुक्त्वा तु तान्पुनः प्रत्यभाषत ॥ ॥ १३-२०३-३९ (८९२३७)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
त्र्यधिकद्विशततमोऽध्यायः ॥ २०३ ॥

---

अनुससनपर्व-अध्यय२०४

॥ श्रीः ॥
१३.२०४. अध्यायः २०४

अथ दानधर्मपर्व ॥ १ ॥
Mahabharata - Anushaasana Parva - Chapter Topics
कृष्णेनाश्चर्यकथनं प्रार्थितैर्मुनिगणैर्नारदंप्रति तच्चोदना ॥ १ ॥

Mahabharata - Anushaasana Parva - Chapter Text

श्रीभगवानुवाच ।
भवतां दर्शनादेव प्रीतिरभ्यधिका मम ।
भवन्तस्तु तपःसिद्धा भवन्तो दिव्यदर्शनाः ॥ १३-२०४-१ (८९२३८)
सर्वत्र गतिमन्तश्च ज्ञानविज्ञानभाविताः ।
गत्यागतिज्ञा लोकानां सर्वे निर्दूतकल्मषाः ॥ १३-२०४-२ (८९२३९)
तस्माद्भवद्भिर्यत्किंचिद्दृष्टं वाऽप्यथवा श्रुतम् ।
आश्चर्यभूतं लोकेषु तद्भवन्तो ब्रुवन्तु मे ॥ १३-२०४-३ (८९२४०)
युष्माभिः कथितं यत्स्यात्तपसा भावितात्मभिः
तस्यादमृतसंकाशं वाङ्मधुश्रवणे स्पृहा ॥ १३-२०४-४ (८९२४१)
रागद्वेषवियुक्तानां सततं सत्यवादिनाम् ।
श्रद्धेयं श्रवणीयं च वचनं हि सतां भवेत् ॥ १३-२०४-५ (८९२४२)
तत्संयोगं हितं मेऽस्तु न वृथा कर्तुमर्हथ ।
भवतां दर्शनं तस्मात्सफलं तु भवेन्मम ॥ १३-२०४-६ (८९२४३)
तदहं सज्जनमुखान्निःसृतं जनसंसदि ।
कथयिष्याम्यहं बुद्ध्या बुद्धिदीपकरं नृणाम् ॥ १३-२०४-७ (८९२४४)
तदन्ये वर्धयिष्यन्ति पूजयिष्यन्ति चापरे ।
वात्सल्यविगताश्चान्ये प्रशंसन्ति पुरातनाः ॥ १३-२०४-८ (८९२४५)
एवं ब्रुवति गोविन्दे श्रवणार्थं महर्षयः ।
वाग्भिः साञ्जलिमालाभिरिदमूचुर्जनार्दनम् ॥ १३-२०४-९ (८९२४६)
अयुक्तमस्मानेवं त्वं वाचा वरद भाषितुम् ।
त्वच्छासनमुखाः सर्वे त्वदधीनपरिश्रमाः ॥ १३-२०४-१० (८९२४७)
एवं पूजयितुं चास्मान्न चैवार्हसि केशव ।
त्वत्तस्त्वन्यं न पश्यामो यल्लोके ते न विद्यते ।
दिवि वा भुवि वा किञ्चित्तत्सर्वं हि त्वया ततम् ॥ १३-२०४-११ (८९२४८)
न विद्महे वयं देव कथ्यमानं तवान्तिके ।
एवमुक्तो हृषीकेशः सस्मितं चेदमब्रवीत् ॥ १३-२०४-१२ (८९२४९)
अहं मानुषयोनिस्थः साम्प्रतं मुनिपुङ्गवाः ।

तस्मान्मानुषवद्वीर्यं मम जानीत सुव्रताः ।
भवद्भिः कथ्यमानं च अपूर्वमिव तद्भवेत् ॥ १३-२०४-१३ (८९२५०)
भीष्म उवाच। १३-२०४-१४क्ष् (७४४४)
एवं संचोदिताः सर्वे केशवेन महात्मना ।
ऋषयश्चानुवर्तन्ते वासुदेवस्य शासनम् ॥ १३-२०४-१४ (८९२५१)
ततस्त्वृषिगणाः सर्वे नारदं देवदर्शनम् ।
अमन्यन्त बुधा बुद्ध्या समर्थं तन्निबोधने ॥ १३-२०४-१५ (८९२५२)
ऋषिरुग्रतपाश्चायं केशवस्य प्रियोऽधिकम् ।
पुराणज्ञश्च वाग्मी च कारणैस्तं च मेनिरे ॥ १३-२०४-१६ (८९२५३)
सर्वे तदर्हणं कृत्वा नारदं वाक्यमब्रुवन् ॥ १३-२०४-१७ (८९२५४)
भवता तीर्थयात्रार्थं चरता हिमवद्गिरौ ।
दृष्टं वै यत्तदाश्चर्यं श्रोतॄणां परमं प्रियम् ॥ १३-२०४-१८ (८९२५५)
अतस्त्वमविशेषेण हितार्थं सर्वमादितः ।
प्रियार्थं केशवस्यास्य स भवान्वक्तुमर्हति ॥ १३-२०४-१९ (८९२५६)
तदा संयोजितः सर्वैर्ऋषिभिर्नारदस्तदा ।
प्रणम्य शिरसा विष्णुं सर्वलोकहिते रतम् ।
समुद्वीक्ष्य हृषीकेशं वक्तुमेवोपचक्रमे ॥ १३-२०४-२० (८९२५७)
ततो नारायणसुहृन्नारदो वदतांवरः ।
शङ्करस्योमया सार्धं संवादमनुभाषत ॥ ॥ १३-२०४-२१ (८९२५८)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
चतुरधिकद्विशततमोऽध्यायः ॥ २०४ ॥

---

अनुससनपर्व-अध्यय२०५
॥ श्रीः ॥
१३.२०५. अध्यायः २०५

अथ दानधर्मपर्व ॥ १ ॥
Mahabharata - Anushaasana Parva - Chapter Topics
नारदेन कृष्णंप्रति उमामहेश्वरसंवदानुवादारम्भः ॥ १ ॥
नानामुनिगणाकीर्णहिमवत्तटमुपविष्टे महादेवे
तत्पृष्ठभागमुपागतया पार्वत्या क्रीडार्थं स्वपाणिभ्यां
तदीयनयनद्वयपिधानम् ॥ २ ॥
तदा जगत आन्ध्यप्राप्तौ देवेन स्वललाटे तृतीयनेत्रसर्जनम् ॥ ३ ॥
तत्तेजसा निर्दग्धे गिरौ देवीप्रार्थनया देवेन पुनर्गिरेरुज्जीवनम् ॥ ४ ॥

नारद उवाच ।
भगवंस्तीर्थयात्रार्थं तथैव चरता मया ।
दिव्यमद्भुतसङ्काशं दृष्टं हैमवतं वनम् ॥ १३-२०५-१ (८९२५९)
नानावृक्षसमायुक्तं नानापक्षिगणैर्वृतम् ।
नानरत्नगणाकीर्णं नानाभावसमन्वितम् ॥ १३-२०५-२ (८९२६०)
दिव्यचन्दनसंयुक्तं दिव्यधूपेन धूपितम् ।
दिव्यपुष्पसमाकीर्णं दिव्यगन्धेन वासितम् ॥ १३-२०५-३ (८९२६१)
सिद्धचारणसंघातैर्भूतसङ्घैर्निषेवितम् ।
वरिष्ठाप्सरसाकीर्णं नागगन्धर्वसङ्कुलम् ॥ १३-२०५-४ (८९२६२)
मृदङ्गमुरजोद्धुष्टं शङ्खवीणाभिनादितम् ।
नृत्यद्भिर्भूतसङ्घैश्च सर्वतस्त्वभिशोभितम् ॥ १३-२०५-५ (८९२६३)
नानारूपैर्विरूपैश्च भीमरूपैर्भयानकैः ।
सिंहव्याघ्रोरगमृगैर्बिडालवदनैस्तथा ॥ १३-२०५-६ (८९२६४)
स्वरोष्ट्रद्वीपिवदनैर्गजवक्त्रैस्तथैव च ।
उलूकश्येनवदनैः काकगृध्रमुखैस्तथा ॥ १३-२०५-७ (८९२६५)
एवं बहुविधाकारैर्भूतसङ्घैर्भृशाकुलम् ।
नानद्यमानं बहुधा हरपारिषदैर्भृशम् ॥ १३-२०५-८ (८९२६६)
घोररूपं सुदुर्दर्शं रक्षोगणशतैर्वृतम् ।
समाजं तद्वने दृष्टं मया भूतपतेः पुरा ॥ १३-२०५-९ (८९२६७)
प्रनृत्ताप्सरसं दिव्यं देवगन्धर्वनादितम् ।
प्रथमे वर्षरात्रे तु मेघसङ्घनिनादितम् ॥ १३-२०५-१० (८९२६८)
नानाबर्हिणसंघुष्टं गजयूथसमाकुलम् ।
षट्पदैरुपगीतं च प्रथमे मासि माधवे ॥ १३-२०५-११ (८९२६९)
उत्क्रोशत्क्रौञ्चकुररैः सारसैर्जीवजीवकैः ।
मत्ताभिः परपुष्टाभिः कूजन्तीभिः समाकुलम् ॥ १३-२०५-१२ (८९२७०)
उत्तमावाससङ्काशं भीमरूपतरं ततः ।
द्रष्टुं भवति धर्मस्य धर्मभागिजनस्य च ॥ १३-२०५-१३ (८९२७१)
ये चोर्ध्वरेतसः सिद्धास्तत्रतत्र समागताः ।
मार्ताण्डरश्मिसञ्चारा विश्वेदेवगणास्तथा ॥ १३-२०५-१४ (८९२७२)
तथा नागास्तथा दिव्या लोकपाला हुताशनाः ।
वाताश्च सर्वे चायान्ति दिव्यपुष्पसमाकुलाः ॥ १३-२०५-१५ (८९२७३)
किरन्तः सर्वपुष्पाणि किरन्तोऽद्भुतदर्शनाः ।
ओषध्यः प्रज्वलन्त्यश्च द्योतयन्त्यो दिशो दश ॥ १३-२०५-१६ (८९२७४)
विहगाश्च मुदा युक्ता नृत्यन्ति च नदन्ति च ।

ततः समन्ततस्तत्र दिव्या दिव्यजनप्रियाः ॥ १३-२०५-१७ (८९२७५)
तत्र देवो गिरितटे हेमधातुविभूषिते ।
पर्यङ्क इव बभ्राज उपविष्टो महाद्युतिः ॥ १३-२०५-१८ (८९२७६)
व्याघ्रचर्मपरीधानो गजचर्मोत्तरच्छदः ।
व्यालयज्ञोपवीतश्च लोहितान्त्रविभूषितः ॥ १३-२०५-१९ (८९२७७)
हरिश्मश्रुजटो भीमो भयकर्ताऽमरद्विषाम् ।
भयहेतुरभक्तानां भक्तानामभयङ्करः ॥ १३-२०५-२० (८९२७८)
किन्नरैर्देवगन्धर्वैः स्तूयमानस्ततस्ततः ।
ऋषिभिश्चाप्सरोभिश्च सर्वतश्चैव शोभितः ॥ १३-२०५-२१ (८९२७९)
तत्र भूतपतेः स्थानं देवदानवसङ्कुलम् ।
सर्वतेजोमयं भूम्ना लोकपालनिषेवितम् ॥ १३-२०५-२२ (८९२८०)
महोरगसमाकीर्णं सर्वेषां रोमहर्षणम् ।
भीमरूपमनिर्देश्यमप्रधृष्यतमं विभोः ॥ १३-२०५-२३ (८९२८१)
तत्र भूतपतिं देवमासीनं शिखरोत्तमे ।
ऋषयो भूतसङ्घाश्च प्रणम्य शिरसा हरम् ।
गीर्भिः परमशुद्धाभिस्तुष्टुवुस्च मनोहरम् ॥ १३-२०५-२४ (८९२८२)
विमुक्ताश्चैव पापेभ्यो बभूवुर्विगतज्वराः ।
ऋषयो बालकिल्याश्च तथा विप्रर्षयश्च ये ॥ १३-२०५-२५ (८९२८३)
अयोनिजा योनिजाश्च तपःसिद्धा महर्षयः ।
ततस्तं देवदेवेशं भगवन्तमुपासते। १३-२०५-२६ (८९२८४)
ततस्तस्मिन्क्षणे देवी भूतस्त्रीगणसंवृता ।
हरतुल्याम्बरधरा समानव्रतचारिणी ॥ १३-२०५-२७ (८९२८५)
काञ्चनं कलशं गृह्य सर्वतीर्थाम्बुपूरितम् ।
पुष्पवृष्ट्याऽभिवर्षन्ती दिव्यगन्धसमावृता ॥ १३-२०५-२८ (८९२८६)
सरिद्वराभिः सर्वाभिः पृष्ठतोऽनुगता वरा ।
सेवितुं भगवत्पार्श्वमाजगाम शुचिस्मिता ॥ १३-२०५-२९ (८९२८७)
आगम्य तु गिरेः पुत्री देवदेवस्य चान्तिकम् ।
मनःप्रियं चिकीर्षन्ती क्रीडार्थं शङ्करान्तिके ॥ १३-२०५-३० (८९२८८)
मनोहराभ्यां पाणिभ्यां हरनेत्रे पिधाय तु ।
अवेक्ष्य हृष्टा स्वगणान्स्मयन्ती पृष्ठतः स्थिता ॥ १३-२०५-३१ (८९२८९)
देव्या चान्धीकृते देवे कश्मलं समपद्यत ।
निमीलिते भूतपतौ नष्टचन्द्रार्कतारकम् ॥ १३-२०५-३२ (८९२९०)
निःस्वाध्यायवषट्कारं तमसा चाभिसंवृतम् ।
विषण्णं भयवित्रस्तं जगदासीद्भयाकुलम् ॥ १३-२०५-३३ (८९२९१)
हाहाकारमृषीणां च लोकानामभवत्तदा ।
तमोभिभूते सम्भ्रान्ते लोके जीवनसंक्षये ॥ १३-२०५-३४ (८९२९२)

तृतीयं चास्य सम्भूतं ललाटे नेत्रमायतम् ।
द्वादशादित्यसङ्काशं लोकान्भासाऽवभासयत् ॥ १३-२०५-३५ (८९२९३)
तत्रक तेनाग्निना तेन युगान्ताग्निनिभेन वै ।
अदह्यत गिरिः सर्वो हिमवानग्रतः स्थितः ॥ १३-२०५-३६ (८९२९४)
दह्यमाने गिरौ तस्मिन्मृगपक्षिसमाकुले ।
सविद्याधरगन्धर्वे दिव्यौषधसमाकुले ॥ १३-२०५-३७ (८९२९५)
ततो गिरिसुता चापि विस्मयोत्फुल्ललोचना ।
बभूव च जगत्सर्वं तथा विस्मयसंयुतम् ॥ १३-२०५-३८ (८९२९६)
पश्यतामेव सर्वेषां देवदानवरक्षसाम् ।
नेत्रजेनाग्निना तेन दग्ध एव नगोत्तमः ॥ १३-२०५-३९ (८९२९७)
तं दृष्ट्वा मथितं शैलं शैलपुत्री सविक्लवा ।
पितुः सम्मानमिच्छन्ती पपात भुवि पादयोः ॥ १३-२०५-४० (८९२९८)
तं दृष्ट्वा देवदेवेशो देव्या दुःखमनुत्तमम् ।
हैमवत्याः प्रियार्थं च गिरिं पुनरवैक्षत ॥ १३-२०५-४१ (८९२९९)
दृष्टमात्रे भगवता सौम्ययुक्तेन चेतसा ।
क्षणेन हिमवाञ्शैलः प्रकृतिस्थोऽभवत्पुनः ॥ १३-२०५-४२ (८९३००)
हृष्टपुष्टविहङ्गैश्च प्रफुल्लद्रुमकाननः ।
सिद्धचारणसङ्घैश्च प्रीतियुक्तैः समाकुलः ॥ १३-२०५-४३ (८९३०१)
पितरं प्रकृतिस्थं च दृष्ट्वा हैमवती भृशम् ।
अभवत्प्रीतिसंयुक्ता मुदितात्र पिनाकिनम् ॥ १३-२०५-४४ (८९३०२)
देवी विस्मयसंयुक्ता प्रष्टुकामा महेश्वरम् ।
हितार्तं सर्वलोकानां प्रजानां हितकाम्यया ।
देवदेवं महादेवी बभाषेदं वचोऽर्थवत् ॥ १३-२०५-४५ (८९३०३)
भगवन्देवदेवेश शूलपाणे महाद्युते ।
विस्मयो मे महाञ्जातस्तस्मिन्नेत्राग्निसम्भवे ॥ १३-२०५-४६ (८९३०४)
किमर्थं देवदेवेश ललाटेऽस्मिन्प्रकाशते ।
अतिसूर्याग्निसङ्काशं तृतीयं नेत्रमायतम् ॥ १३-२०५-४७ (८९३०५)
नेत्राग्निना तु महता निर्दग्धो हिमवानसौ ।
पुनः संदृष्टमात्रस्तु प्रकृतिस्थः पिता मम ॥ १३-२०५-४८ (८९३०६)
एष मे संशयो देव हृदि मे सम्प्रवर्तते ।
देवदेव नमस्तुभ्यं तन्मे संसितुमर्हसि ॥ १३-२०५-४९ (८९३०७)
नारद उवाच। १३-२०५-५०क्ष् (७४४५)
एवमुक्तस्तया देव्या प्रीयमाणोऽब्रवीद्भवः ।
स्थाने संशयितुं देवि धर्मज्ञे प्रियभाषिणि ॥ १३-२०५-५० (८९३०८)
त्वदृते मां हि वै प्रष्टुं न शक्यं केन चेत्प्रिये ।
प्रकाशं यदि वा गुह्यं प्रियार्थं प्रब्रवीम्यहम् ॥ १३-२०५-५१ (८९३०९)

शृणु तत्सर्वमकिलमस्यां संसदि भामिनि ।
सर्वेषामेव लोकानां कूटस्थं विद्धि मां प्रिये ॥ १३-२०५-५२ (८९३१०)
मदधीनास्त्रयो लोका यथा विष्णौ तथा मयि ।
स्रष्टा विष्णुरहं गोप्ता इत्येतद्विद्धि भामिनि ॥ १३-२०५-५३ (८९३११)
तस्माद्यदा मां स्पृशति शुभं वा यदि वेतरत् ।
तथैवेदं जगत्सर्वं तत्तद्भवति शोभने ॥ १३-२०५-५४ (८९३१२)
एतद्गुह्यमजानन्त्या त्वया बाल्यादनिन्दिते ।
मन्नेत्रे पिहिते देवि क्रीडनार्थं दृढव्रते ॥ १३-२०५-५५ (८९३१३)
तत्कृते नष्टचन्द्रार्कं जगदासीद्भयाकुलम् ।
नष्टादित्ये तमोभूते लोके गिरिसुते प्रिये ॥ १३-२०५-५६ (८९३१४)
तृतीयं लोचनं सृष्टं लोकं संरक्षितुं मया ।
कथितं संशयस्थानं निर्विशङ्का भव प्रिये ॥ ॥ १३-२०५-५७ (८९३१५)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
पञ्चाधिकद्विशततमोऽध्यायः ॥ २०५ ॥

---

अनुससनपर्व-अध्यय२०६
॥ श्रीः ॥
१३.२०६. अध्यायः २०६

अथ दानधर्मपर्व ॥ १ ॥
Mahabharata - Anushaasana Parva - Chapter Topics
ईश्वरेण पार्वतींप्रति स्वस्य चतुर्मुखत्वस्य नीलकण्ठतायाः
पिनाककार्मुकताया वृषभवाहनत्वस्य च कारणाभिधानम् ॥ १ ॥

Mahabharata - Anushaasana Parva - Chapter Text

नारद उवाच ।
क्षणज्ञा देवदेवस्य श्रोतुकामा प्रियं हितम् ।
उमादेवी महादेवमपृच्छत्पुनरेव तु ॥ १३-२०६-१ (८९३१६)
भगवन्देवदेवेश सर्वदेवनमस्कृत ।
चतुर्मुखो वै भगवानभवत्केन हेतुना ॥ १३-२०६-२ (८९३१७)
भगवन्केन ते वक्त्रमैन्द्रमद्भुतदर्शनम् ।
उत्तरं चापि भगवन्पश्चिमं शुभदर्शनम् ।
दक्षिणं च मुखं रौद्रं केनोर्ध्वं जटिलावृतम् ॥ १३-२०६-३ (८९३१८)
यथादृशं महाभाग श्रोतुमिच्छामि कारणम् ।

एष मे संशयो देव तन्मे शंसितुमर्हसि ॥१३-२०६-४ (८९३१९)
महादेव उवाच।१३-२०६-५क्ष् (७४४६)
तदहं ते प्रवक्ष्यामि यत्त्वमिच्छसि भामिनि ।
पुराऽसुरो महाघोरौ लोकोद्वेगकरौ भृशम् ॥१३-२०६-५ (८९३२०)
सुन्दोपसुन्दनामानावासतुर्बलगर्वितौ ।
अशस्त्रवध्यौ बलिनौ परस्परहितैषिणौ ॥१३-२०६-६ (८९३२१)
तयोरेव विनाशाय निर्मिता विश्वकर्मणा ।
सर्वतः सारमुद्धृत्य तिलशो लोकपूजिता ।
तिलोत्तमेति विख्याता अप्सराः सा बभूव ह ॥ १३-२०६-७ (८९३२२)
देवकार्यं करिष्यन्ती हासभावसमन्विता ।
सा तपस्यन्तमागम्य रूपेणाप्रतिमा भुवि ॥१३-२०६-८ (८९३२३)
मया बहुमता चेयं देवकार्यं करिष्यति ।
इति मत्वा तदा चाहं कुर्वन्तीं मां प्रदक्षिणम् ।
तथैव तां दिदृक्षुश्च चतुर्वक्त्रोऽभवं प्रिये ॥ १३-२०६-९ (८९३२४)
ऐन्द्रं मुखमिदं पूर्वं तपश्चर्यापरं सदा ।
दक्षिणं मे मुखं दिव्यं रौद्रं संहरति प्रजाः ॥१३-२०६-१० (८९३२५)
लोककार्यपरं नित्यं पश्चिमं मे मुखं प्रिये ।
वेदानधीते सततमद्भुतं चोत्तरं मुखम् ।
एतत्ते सर्वमाख्यातं किं भूयः श्रोतुमिच्छसि ॥ १३-२०६-११ (८९३२६)
उमोवाच।१३-२०६-१२क्ष् (७४४७)
भगवञ्श्रोतुमिच्छामि शूलपाणे वरप्रद ।
किमर्थं नीलता कण्ठे भाति बर्हिनिभा तव ॥१३-२०६-१२ (८९३२७)
महेश्वर उवात।१३-२०६-१३क्ष् (७४४८)
एतत्ते कथयिष्यामि शृणु देवि समाहिता ॥ १३-२०६-१३ (८९३२८)
पुरा युगान्तरे यत्नादमृतार्थं सुरासुरैः ।
बलवद्भिर्विमथितश्चिरकालं महोदधिः ॥१३-२०६-१४ (८९३२९)
रज्जुना नागराजेन मथ्यमाने महोदधौ ।
विषं तत्र समुद्भूतं सर्वलोकविनाशनम् ॥१३-२०६-१५ (८९३३०)
तद्दृष्ट्वा विबुधाः सर्वे तदा विमनसोऽभवन् ।
ग्रस्तं हि तन्मया देवि लोकानां हितकारणात् ॥१३-२०६-१६ (८९३३१)
तत्कृता नीलता चासीत्कण्ठे बर्हिनिभा शुभे ।
तदाप्रभृति चैवाहं नीलकण्ठ इति स्मृतः ।
एतत्ते सर्वमाख्यातं किं भूयः श्रोतुमिच्छसि ॥ १३-२०६-१७ (८९३३२)
उमोवाच।१३-२०६-१८क्ष् (७४४९)
नीलकण्ठ नमस्तेऽस्तु सर्वलोकसुखावह ।
बहूनामायुधानां त्वं पिनाकं धर्मुमिच्छसि ।

किमर्थं देवदेवेश तन्मे शंसितुमर्हसि ॥ १३-२०६-१८ (८९३३३)
महेश्वर उवाच। १३-२०६-१९क्ष् (७४५०)
शस्त्रागमं ते वक्ष्यामि शृणु धर्म्यं शुचिस्मिते ।
युगान्तरे महादेवि कण्वो नाम महामुनिः ॥ १३-२०६-१९ (८९३३४)
स हि दिव्यां तपश्चर्यां कर्तुमेवोपचक्रमे ।
तथा तस्य तपो घोरं चरतः कालपर्ययात् ।
वल्मीकं पुनरुद्भूतं तस्यैव शिरसि प्रिये ॥ १३-२०६-२० (८९३३५)
वेणुर्वल्मीकसंयोगान्मूर्ध्नि तस्य बभूव ह ।
धरमाणश्च तत्सर्वं तपश्चर्यां तथाऽकरोत् ॥ १३-२०६-२१ (८९३३६)
तस्मै ब्रह्मा वरं दातुं जगाम तपसार्चितः ।
दत्त्वा तस्मै वरं देवो वेणुं दृष्ट्वा त्वचिन्तयत् ॥ १३-२०६-२२ (८९३३७)
लोककार्यं समुद्दिश्य वेणुनाऽनेन भामिनि ।
चिन्तयित्वा तमादाय कार्मुकार्थे न्ययोजयत् ॥ १३-२०६-२३ (८९३३८)
विष्णोर्मम च सामर्थ्यं ज्ञात्वा लोकपितामहः ।
धनुषी द्वे तदा प्रादाद्विष्णवे च ममैव च ॥ १३-२०६-२४ (८९३३९)
पिनाकं नाम मे चापं शार्ङ्गं नाम हरेर्धनुः ।
तृतीयमवशेषेण गाण्डीवमभवद्धनुः ॥ १३-२०६-२५ (८९३४०)
तच्च सोमाय निर्दिश्य ब्रह्मा लोकं गतः पुनः ।
एतत्ते सर्वमाख्यातं शस्त्रागममनिन्दिते ॥ १३-२०६-२६ (८९३४१)
उमोवाच। १३-२०६-२७क्ष् (७४५१)
भगवन्देवदेवेश पिनाकपरमप्रिय ।
वाहनेषु तथाऽन्येषु सत्सु भूतपते तव ॥ १३-२०६-२७ (८९३४२)
अयं तु वृषभः कस्माद्वाहनं स यथाऽभवत् ।
एष मे सशयो देव तन्मे शंसितुमर्हसि ॥ १३-२०६-२८ (८९३४३)
महादेव उवाच। १३-२०६-२९क्ष् (७४५२)
तदहं ते प्रवक्ष्यामि वाहनं स यथाऽभवत् ॥ १३-२०६-२९ (८९३४४)
आदिसर्गे पुरा गावः श्वेतवर्णाः शुचिस्मिते ।
बलसंहनना गावो दर्पयुक्ताश्चरन्ति ताः ॥ १३-२०६-३० (८९३४५)
अहं तु तप आतिष्ठं तस्मिन्काले शुभानने ।
एकपादश्चोर्ध्वबाहुर्लोकार्थं हिमवद्गिरौ ॥ १३-२०६-३१ (८९३४६)
गावो मे पार्श्वमागम्य दर्पोत्सिक्ताः समन्ततः ।
स्थानभ्रंशं तदा देवि चक्रिरे बहुशस्तदा ॥ १३-२०६-३२ (८९३४७)
अपचारेण वै तासां मनःक्षोभोऽभवन्मम ।
तस्माद्दग्धा यदा गावो रोषाविष्टेन चेतसा ॥ १३-२०६-३३ (८९३४८)
तस्मिंस्तु व्यसने घोरे वर्तमाने पशून्प्रति ।
अनेन वृषभेणाहं शमितः सम्प्रसादनैः ॥ १३-२०६-३४ (८९३४९)

तदाप्रभृति शान्ताश्च वर्णभेदत्वमागताः ।
श्वेतोऽयं वृषभो देवि पूर्वसंस्कारसंयुतः ।
वाहनत्वे ध्वजत्वे मे तदाप्रभृति योजितः ॥ १३-२०६-३५ (८९३५०)
तस्मान्मे गोपतित्वं च देवैर्गोभिश्च कल्पितम् ।
प्रसन्नश्चाभवं देवि तदा गोपतितां गतः ॥ ॥ १३-२०६-३६ (८९३५१)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
षडधिकद्विशततमोऽध्यायः ॥ २०६ ॥

---

अनुससनपर्व-अध्यय२०७
॥ श्रीः ॥
१३.२०७. अध्यायः २०७

अथ दानधर्मपर्व ॥ १ ॥
Mahabharata - Anushaasana Parva - Chapter Topics
ईश्वरेण पार्वतींप्रति स्वस्य श्मशानवासचन्द्रकलाधारणादेः
कारणाभिधानम् ॥ १ ॥

Mahabharata - Anushaasana Parva - Chapter Text

उमोवाच ।
भगवन्सर्वभूतेश शूलपाणे वृषध्वज ।
आवासेषु विचित्रेषु रम्येषु च शुभेशु च ॥ १३-२०७-१ (८९३५२)
सत्सु चान्येषु भूतेषु श्मशाने रमसे कथम् ।
केशास्थिकलिले भीमे कपालशतसङ्कुले ॥ १३-२०७-२ (८९३५३)
सृगालगृध्रम्पूर्णे शवधूमसमाकुले ।
चिताग्निविषमे घोरे गहने च भयानके ॥ १३-२०७-३ (८९३५४)
एवं कलेवरक्षेत्रे दुर्दर्शे रमसे कथम् ।
एष मे संशयो देव तन्मे शंसितुमर्हसि ॥ १३-२०७-४ (८९३५५)
महादेव उवाच। १३-२०७-५क्ष् (७४५३)
हन्त ते कथयिष्यामि शृणु देवि समाहिता ।
आवासार्थं पुरा देवि शुद्धान्वेषी शुचिस्मिते ॥ १३-२०७-५ (८९३५६)
नाध्यगच्छं चिरं कालं देशं शुचितमं शुभे ।
एष मेऽभिनिवेशोऽभूत्तस्मिन्काले प्रजापतिः ॥ १३-२०७-६ (८९३५७)
आकुलः सुमहाघोरः प्रादुरासीत्समन्ततः ।
सम्भूता भूतसृष्टिश्च घोरा लोकभयावहा ॥ १३-२०७-७ (८९३५८)

नानावर्णा विरूपाश्च तीक्ष्णदंष्ट्राः प्रहारिणः ।
पिशाचरक्षोवदनाः प्राणिनां प्राणहारिणः ।
इतश्चरन्ति निघ्नन्तः प्राणिनो भृशमेव च ॥ १३-२०७-८ (८९३५९)
एवं लोके प्राणिहीने क्षयं याते पितामहः ।
चिन्तयंस्तत्प्रतीकारं मां च शक्तं हि निग्रहे ॥१३-२०७-९ (८९३६०)
एवं ज्ञात्वा ततो ब्रह्मा तस्मिन्कर्मण्योजयत् ।
तच्च प्राणिहितार्थं तु मयाऽप्यनुमतं प्रिये ॥१३-२०७-१० (८९३६१)
तस्मात्संरक्षिता देवि भूतेभ्यः प्राणिनो भयात् ।
अस्माच्छ्मशानान्मेध्यं तु नास्ति किञ्चिदनिन्दिते ।
निःसम्पातान्मनुष्याणां तस्माच्छुचितमं स्मृतं ॥ १३-२०७-११ (८९३६२)
भूतसृष्टिं च तां चाहं श्मशाने संन्यवेशयम् ।
तत्रस्थः सर्वभूतानां विनिहन्मि प्रिये भयम् ॥१३-२०७-१२ (८९३६३)
न च भूतगणेनाहं विना वसितुमुत्सहे ।
तस्मान्मे सन्निवासाय श्मशाने रोचते मनः ॥१३-२०७-१३ (८९३६४)
मेध्यकामैर्द्विजैर्नित्यं मेध्यमित्यभिधीयते ।
आचरद्भिर्व्रतं नित्यं मोक्षकामैश्च सेव्यते ॥१३-२०७-१४ (८९३६५)
स्थानं मे तत्र विहितं वीरस्थानमिति प्रिये ।
कपालशतसम्पूर्णमभिरूपं भयानकम् ॥१३-२०७-१५ (८९३६६)
मध्याह्ने सन्ध्ययोस्तत्र नक्षत्रे रुद्रदेवते ।
आयुष्कामैरशुद्धैर्वा न गन्तव्यमिति स्थितिः ॥१३-२०७-१६ (८९३६७)
मदन्येन न शक्यं हि निहन्तुं भूतजं भयम् ।
तत्रस्थोऽहं प्रजाः सर्वाः पालयामि दिनेदिने ॥१३-२०७-१७ (८९३६८)
मन्नियोगाद्भूतसङ्घा न च घ्नन्तीह कञ्चन ।
तांस्तु लोकहितार्ताय श्मशाने रमयान्महम् ।
एतत्ते सर्वमाख्यातं किं भूयः श्रोतुमिच्छसि ॥ १३-२०७-१८ (८९३६९)
उमोवाच।१३-२०७-१९क्ष् (७४५४)
भगवन्देवदेवेश त्रिनेत्र वृषभध्वज ।
पिङ्गलं विकृतं भाति रूपं ते तु भयानकम् ॥१३-२०७-१९ (८९३७०)
भस्मदिग्धं विरूपाक्षं तीक्ष्णदंष्ट्रं जटाकुलम् ।
व्याघ्रोदरत्वक्संवीतं कपिलश्मश्रुसंततम् ॥१३-२०७-२० (८९३७१)
रौद्रं भयानकं घोरं शूलपट्टससंयुतम् ।
किमर्थं त्वीदृशं रूपं तन्मे शंसितुमर्हसि ॥१३-२०७-२१ (८९३७२)
महेश्वर उवाच।१३-२०७-२२क्ष् (७४५५)
तदहं कथयिष्यामि शृणु तत्त्वं समाहिता ।
द्विविधो लौकिको भावः शीतमुष्णमिति प्रिये ॥१३-२०७-२२ (८९३७३)
तयोर्हि ग्रसितं सर्वं सौम्याग्नेयमिदं जगत् ॥ १३-२०७-२३ (८९३७४)

सौम्यत्वं सततं विष्णौ मय्याग्नेयं प्रतिष्ठितम् ।
अनेन वपुषा नित्यं सर्वलोकान्बिभर्म्यहम् ॥ १३-२०७-२४ (८९३७५)
रौद्राकृतिं विरूपाक्षं शूलपट्टससंयुतम् ।
आग्नेयमिति मे रूपं देवि लोकहिते रतम् ॥ १३-२०७-२५ (८९३७६)
यद्यहं विपरीतः स्यामेतत्त्यक्त्वा शुभानने ।
तदैव सर्वलोकानां विपरीतं प्रवर्तते ॥ १३-२०७-२६ (८९३७७)
तस्मान्मयेदं ध्रियते रूपं लोकहितैषिणा ।
इति ते कथितं देवि किं भूयः श्रोतुमिच्छसि ॥ १३-२०७-२७ (८९३७८)
उमोवाच। १३-२०७-२८क्ष् (७४५६)
भगवन्देवदेवेश शूलपाणे वृषध्वज ।
किमर्थं चन्द्ररेखा ते शिरोभागे विरोचते ।
श्रोतुमिच्छाम्यहं देव तन्मे शंसितुमर्हसि ॥ १३-२०७-२८ (८९३७९)
महेश्वर उवाच। १३-२०७-२९क्ष् (७४५७)
तदहं ते प्रवक्ष्यामि शृणु कल्याणि कारणम् ।
पुराऽहं कारणाद्देवि कोपयुक्तः शुचिस्मिते ।
दक्षयज्ञवधार्याय भूतसङ्घैः समावृतः ॥ १३-२०७-२९ (८९३८०)
तस्मिन्क्रतुवरे घोरे यज्ञभागनिमित्ततः ।
देवा विभ्रंशितास्ते वै येषां भागः क्रतौ कृतः ॥ १३-२०७-३० (८९३८१)
सोमस्तत्र मया देवि कुपितेन भृशार्दितः ।
पश्यंश्चानपराधी सन्पादङ्गुष्ठेन ताडितः ॥ १३-२०७-३१ (८९३८२)
तथापि विकृतेनाहं सामपूर्वं प्रसादितः ।
तन्मे चिन्तयतश्चासीत्पश्चात्तापः पुरा प्रिये ॥ १३-२०७-३२ (८९३८३)
तदाप्रभृति सोमं वै शिरसा धारयाम्यम् ।
एवं मे पापहानिस्तु भवेदिति मतिर्मम ।
तदाप्रभृति वै सोमो मूर्ध्नि संदृश्यते सदा ॥ १३-२०७-३३ (८९३८४)
नारद उवाच। १३-२०७-३४क्ष् (७४५८)
एवं ब्रुवति देवेशे विस्मिताः परमर्षयः ।
वाग्भिः साञ्जलिमालाभिरभितुष्टुवुरीश्वरम् ॥ १३-२०७-३४ (८९३८५)
ऋषय ऊचुः। १३-२०७-३५क्ष् (७४५९)
नमः शङ्कर सर्वेश नमः सर्वजगद्गुरो ।
नमो देवादिदेवाय नमः शशिकलाधर ॥ १३-२०७-३५ (८९३८६)
नमो घोरतराद्घोर नमो रुद्राय शङ्कर ।
नमः शान्ततराच्छान्त नमश्चन्द्रस्य पालक ॥ १३-२०७-३६ (८९३८७)
नमः सोमाय देवाय नमस्तुभ्यं चतुर्मुख ।
नमो भूतपते शंभो जह्नुकन्याम्बुशेखर ॥ १३-२०७-३७ (८९३८८)
नमस्त्रिशूलहस्ताय पन्नगाभरणाय च ।

नमोस्तु विषमाक्षाय दक्षयज्ञप्रदाहक ॥१३-२०७-३८ (८९३८९)
नमोस्तु बहुनेत्राय लोकरक्षणतत्पर ।
अहो देवस्य महात्म्यमहो देवस्य वै कृपा ।
एवं धर्मपरत्वं च देवदेवस्य चार्हति ॥ १३-२०७-३९ (८९३९०)
एवं ब्रुवत्सु मुनिषु वचो देव्यब्रवीद्धरम् ।
सम्प्रीत्यर्थं मुनीनां सा क्षणज्ञा परमं हितम् ॥१३-२०७-४० (८९३९१)
उमोवाच।१३-२०७-४१क्ष् (७४६०)
भगवन्देवदेवेश सर्वलोकनमस्कृत ।
अस्यैव ऋषिसङ्घस्य मम च प्रियकाम्यया ॥१३-२०७-४१ (८९३९२)
वर्णाश्रमकृतं धर्मं वक्तुमर्हस्यशेषतः ।
न तृप्तिरस्ति देवेश श्रवणीयं हि ते वचः ॥१३-२०७-४२ (८९३९३)
सधर्मचारिणी चेयं भक्ता चेयमिति प्रभो ।
वक्तुमर्हसि देवेश लोकानां हितकाम्यया ।
याथातथ्येन तत्सर्वं वक्तुमर्हसि शंकर ॥ ॥ १३-२०७-४३ (८९३९४)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
सप्ताधिकद्विशततमोऽध्यायः ॥ २०७ ॥

---

अनुससनपर्व-अध्यय२०८
॥ श्रीः ॥
१३.२०८. अध्यायः २०८

अथ दानधर्मपर्व ॥१ ॥
Mahabharata - Anushaasana Parva - Chapter Topics
ईश्वरेण पार्वतींप्रति वर्णाश्रमधर्मकथनम् ॥१ ॥

Mahabharata - Anushaasana Parva - Chapter Text

महेश्वर उवाच ।
हन्त ते कथयिष्यामि यत्ते देवि मनःप्रियम् ।
शृणु तत्सर्वमखिलं धर्मं वर्णाश्रमाश्रितम् ॥१३-२०८-१ (८९३९५)
ब्राह्मणाः क्षत्रिया वैश्याः शुद्राश्चेति चतुर्विधम् ।
ब्राह्मणा विहिताः पूर्वं लोकतन्त्रमभीप्सता ।
कर्माणि च तदर्हाणि शास्त्रेषु विहितानि वै ॥ १३-२०८-२ (८९३९६)
यदीदमेकवर्णं स्याज्जगत्सर्वं विनश्यति ।
सहैव देवि वर्णानि चत्वारि विहितान्यतः ॥१३-२०८-३ (८९३९७)

मुखतो ब्राह्मणाः सृष्टस्तस्मात्ते वाग्विशारदाः ।
बाहुभ्यां क्षत्रियाः सृष्टास्तस्मात्ते बाहुगर्विताः ॥ १३-२०८-४ (८९३९८)
ऊरुभ्यामुद्गता वैश्यास्तस्माद्वार्तोपजीविनः ।
शूद्राश्च पादतः सृष्टास्तस्मात्ते परिचाकाः ॥ १३-२०८-५ (८९३९९)
तेषां धर्मांश्च कर्माणि शृणु देवि समाहिता ।
विप्राः कृता भूमिदेवा लोकानां धारणे कृताः ।
ते कैश्चिन्नावमन्तव्या ब्राह्मणा हितमिच्छुभिः ॥ १३-२०८-६ (८९४००)
यदि ते ब्राह्मणा न स्युर्दानयोगवहाः सदा ।
उभयोर्लोकयोर्देवि स्थितिर्न स्यात्समासतः ॥ १३-२०८-७ (८९४०१)
लोकेषु दुर्लभं किंतु ब्राह्मणत्वमिति स्मृतम् ।
अबुधो वा दरिद्रो वा पूजनीयः सदैव सः ॥ १३-२०८-८ (८९४०२)
ब्राह्मणान्योऽवमन्येत निन्देच्च क्रोधयेच्च वा ।
प्रहरेत हरेद्वाऽपि धनं तेषां नराधमः ॥ १३-२०८-९ (८९४०३)
कारयेद्धीनकर्मणि कामलोभविमोहनात् ।
स च मामवमन्येत मां क्रोधयति निन्दति ॥ १३-२०८-१० (८९४०४)
मामेव प्रहरेन्मूढो मद्धनस्यापहारकः ।
मामेव प्रेषणं कृत्वा निदन्ते मूढचेतनः ॥ १३-२०८-११ (८९४०५)
स्वाध्यायो यजनं दानं तस्य धर्म इति स्थितिः ।
कर्मण्यध्यापनं चैव याजनं च प्रतिग्रहः ।
सत्यं शान्तिस्तपः शौचं तस्य धर्मः सनातनः ॥ १३-२०८-१२ (८९४०६)
विक्रयो रसधान्यानां ब्राह्मणस्य विगर्हितः ।
अनापदि च शूद्रान्नं वृषलीसङ्ग्रहस्तथा ॥ १३-२०८-१३ (८९४०७)
तप एव सदा धर्मो ब्राह्मणस्य न संशयः ।
स तु धर्मार्थमुत्पन्नः पूर्वं धात्रा तपोबलात् ॥ १३-२०८-१४ (८९४०८)
तस्योपनयनं धर्मो नित्यं चोदकधारणम् ।
शास्त्रस्य श्रवणं धर्मो देवव्रतनिषेवणम् ॥ १३-२०८-१५ (८९४०९)
अग्निकार्यं परो धर्मो नित्ययज्ञोपवीतिता ।
शूद्रान्नवर्जनं धर्मो धर्मः सत्पथसेवनम् ।
धर्मो नित्योपवासित्वं ब्रह्मचर्यं परं तथा ॥ १३-२०८-१६ (८९४१०)
गृहस्थस्य परो धर्मो गृहस्थाश्रमिणस्तथा ।
गृहसम्मार्जनं धर्म आलेपनविधिस्तथा ॥ १३-२०८-१७ (८९४११)
अतिथिप्रियता धर्मो धर्मस्त्रेताग्निधारणम् ।
इष्टिर्वा पशुबन्धाश्च विधिपूर्वं परंतप ॥ १३-२०८-१८ (८९४१२)
दम्पत्योः समशीलत्वं धर्मो वै गृहमेधिनाम् ।
एवं द्विजन्मनो धर्मो गार्हस्थ्ये धर्मधारणम् ॥ १३-२०८-१९ (८९४१३)
यस्तु क्षत्रगतो धर्मस्त्वया देवि प्रयोदितः ।

तमहं ते प्रवक्ष्यामि शृणु देवि समाहिता ॥१३-२०८-२० (८९४१४)
क्षत्रियास्तु ततो देवि द्विजानां पालने स्मृताः ।
यदि निःक्षत्रियो लोको जगत्स्यादधरोत्तरम् ॥१३-२०८-२१ (८९४१५)
रक्षणात्क्षत्रियैरेव जगद्भवति शाश्वतम् ।
तस्याप्यध्ययनं दानं यजनं धर्मतः स्मृतम् ॥१३-२०८-२२ (८९४१६)
दीनानां रक्षणं चैव पापनामनुशासनम् ।
सतां सम्पोषणं चैव कर्मषण्मार्गजीवनम् ॥१३-२०८-२३ (८९४१७)
उत्साहः शस्त्रजीवित्वं तस्य धर्मः सनातनः ।
भृत्यानां भरणं धर्मः कृते कर्मण्यमोघता ॥१३-२०८-२४ (८९४१८)
सम्यग्गुणयुतो धर्मो धर्मः पौरहितक्रिया ।
व्यवहारस्थितिर्नित्यं गुणयुक्तो महीपतिः ॥१३-२०८-२५ (८९४१९)
आर्तवित्तप्रदो राजा धर्मं प्राप्नोत्यनुत्तमम् ।
एवं तैर्विहितः पूर्वैर्धर्मः कर्मविधानतः ॥१३-२०८-२६ (८९४२०)
तथैव देवि वैश्याश्च लोकयात्राहिताः स्मृताः ।
अन्ये तानुपजीवन्ति प्रत्यक्षफलदा हि ते ॥१३-२०८-२७ (८९४२१)
यदि न स्युस्तथा वैश्या न भवेयुस्तथा परे ।
तेषामध्ययनं दानं गजनं धर्म उच्यते ॥१३-२०८-२८ (८९४२२)
वैश्यस्य सततं धर्मः पाशुपाल्यं कृषिस्तथा ।
अग्निहोत्रपरिस्पन्दास्त्रयो वर्णा द्विजातयः ॥१३-२०८-२९ (८९४२३)
वाणिज्यं सत्पथे स्थानमातिथेयत्वमेव च ।
विप्राणां स्वागतन्यायो वैश्यधर्मः सनातनः ॥१३-२०८-३० (८९४२४)
तिलगन्धरसाश्चैव न विक्रेयाः कथञ्चन ।
वणिक्पथमुपासद्भिर्वैश्यैर्वैश्यपथि स्थितैः ॥१३-२०८-३१ (८९४२५)
सर्वातिथ्यं त्रिवर्गस्य यथाशक्ति दिवानिशम् ।
एवं ते विहिता देवि लोकयात्रा स्वयंभुवा ॥१३-२०८-३२ (८९४२६)
तथैव शूद्रा विहिताः सर्वधर्मप्रसाधकाः ।
शूद्राश्च यदि ते न स्युः कर्मकर्ता न विद्यते ॥१३-२०८-३३ (८९४२७)
त्रयः पूर्वे शूद्रमूलाः सर्वे कर्मकराः स्मृताः ।
ब्राह्मणादिषु शुश्रूषा दासधर्म इति स्मृतः ॥१३-२०८-३४ (८९४२८)
वार्ता च कारुकर्माणि शिल्पं नाट्यं तथैव च ।
अहिंसकः शुभाचारो देवतद्विजवन्दकः ॥१३-२०८-३५ (८९४२९)
शूद्रो धर्मफलैरिष्टैः स्वधर्मेणोपपद्यते ।
एवमादि तथाऽन्यच्च शूद्रधर्म इति स्मृतः ॥१३-२०८-३६ (८९४३०)
तेऽप्येवं विहिता लोके कर्मयोग्याः शुभानने ॥ १३-२०८-३७ (८९४३१)
एवं चतुर्णां वर्णानां वर्णलोकाः परत्र च ।
विहिताश्च तथा दृष्टा यथावद्धर्मचारिणि ॥१३-२०८-३८ (८९४३२)

एष वर्णाश्रयो धर्मः कर्म चैव तदर्पणम् ।
कथितं श्रोतुकामायाः किं भूयः श्रोतुमिच्छसि ॥१३-२०८-३९ (८९४३३)
उमोवाच।१३-२०८-४०क्ष् (७४६१)
भगवन्देवदेवेश नमस्ते वृषभध्वज ।
श्रोतुमिच्छाम्यहं देव धर्ममाश्रमिणां विभो ॥१३-२०८-४० (८९४३४)
महेश्वर उवाच।१३-२०८-४१क्ष् (७४६२)
तथाऽऽश्रमगतं धर्मं शृणु देवि समाहिता ।
आश्रमाणां तु यो धर्मः क्रियते ब्रह्मवादिभिः ॥१३-२०८-४१ (८९४३५)
गृहस्थः प्रवरस्तेषां गार्हस्थ्यं धर्ममाश्रितः ।
पञ्चयज्ञक्रियाशौचं दारतुष्टिरतन्द्रिता ॥१३-२०८-४२ (८९४३६)
ऋतुकालाभिगमनं दानयज्ञतपांसि च ।
अविप्रवासस्तस्येष्टः स्वाध्यायश्चाग्निपूर्वकम् ॥१३-२०८-४३ (८९४३७)
अतिथीनामाभिमुख्यं शक्त्या चेष्टनिमन्त्रणम् ।
अनुग्रहश्च सर्वेषां मनोवाक्कायकर्मभिः ॥१३-२०८-४४ (८९४३८)
एवमादि शुभं चान्यत्कुर्यात्तद्वृत्तिमान्गृही ।
एवं सञ्चरतस्तस्य पुण्यलोका न संशयः। १३-२०८-४५ (८९४३९)
तथैव वानप्रस्थस्य धर्माः प्रोक्ताः सनातनाः ॥ १३-२०८-४६ (८९४४०)
गृहवासं समुत्सृकज्य निश्चित्यैकमनाः शुभैः ।
वन्यैरेव तदाहारैः वर्तयेदिति च स्थितिः ॥१३-२०८-४७ (८९४४१)
भूमिशय्या जटाश्मश्रुचर्मवल्कलधारणम् ।
देवतातिथिसत्कारो महाकृच्छ्राभिपूजनम् ॥१३-२०८-४८ (८९४४२)
अग्निहोत्रं त्रिषवणं नित्यं तस्य विधीयते ।
ब्रह्मचर्यं क्षमा शौचं तस्य धर्मः सनातनः ।
एवं स विगते प्राणे देवलोके महीयते ॥ १३-२०८-४९ (८९४४३)
यतिधर्मास्तथा देवि गृहांस्त्यक्त्वा यतस्ततः ।
आकिञ्चन्यमनारम्भः सर्वतः शौचमार्जवम् ॥१३-२०८-५० (८९४४४)
सर्वत्र भैक्षचर्या च सर्वत्रैव विवासनम् ।
सदा ध्यानपरत्वं च देहशुद्धिः क्षमा दया ।
तत्वानुगतबुद्धित्वं तस्य धर्मविधिर्भवेत् ॥ १३-२०८-५१ (८९४४५)
ब्रह्मचारी च यो देवि जन्मप्रभृति भिक्षितः ।
ब्रह्मचर्यपरो भूत्वा साधयेद्गुरुमात्मनः ।
सर्वकालेषु सर्वत्र गुरुपूजां समाचरेत् ॥ १३-२०८-५२ (८९४४६)
भैक्षचर्याग्निकार्यं च सदा जलनिषेवणम् ।
स्वाध्यायः सततं तस्य एष धर्मः सनातनः ॥१३-२०८-५३ (८९४४७)
तस्य चेष्टा तु गुर्वर्थमाप्राणान्तमिति स्थितिः ।
गुरोरभावे तत्पुत्रे गुरुवद्वृत्तिमाचरेत् ॥१३-२०८-५४ (८९४४८)

एवं सोप्यमलाँल्लोकान्ब्राह्मणः प्रतिपद्यते ।
एष ते कथितो देवि धर्मश्चाश्रमवासिनाम् ॥१३-२०८-५५ (८९४४९)
चतुर्णामाश्रमो युक्तो लोक इत्येव विद्यते ।
कथितं ते समासेन किं भूयः श्रोतुमिच्छसि ॥ ॥१३-२०८-५६ (८९४५०)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
अष्टोत्तरद्विशततमोऽध्यायः ॥ २०८ ॥
Mahabharata - Anushaasana Parva - Chapter Footnotes

७-२०८-९ ब्राह्मणोऽभिहिता शुचिः इति क पाठः ॥
७-२०८-५५ आयुष्कामो द्विजो देवि धारयेद्वस्य नित्पशः । मोक्षकामी
च यो विप्रो भूतिकामोथवा पुनः। पुनरावृत्तिरहितं लोकं
सम्प्रतिपद्यते। इति थ पाठः ॥

---

अनुससनपर्व-अध्यय२०९
॥ श्रीः ॥
१३.२०९. अध्यायः २०९

अथ दानधर्मपर्व ॥ १ ॥
Mahabharata - Anushaasana Parva - Chapter Topics
ईश्वरेण पार्वतींप्रति ऋषिधर्मकथनम् ॥ १ ॥

Mahabharata - Anushaasana Parva - Chapter Text

उमोवाच ।
भगवन्देवदेवेश त्रिपुरान्तक शङ्कर ।
अयं त्वृषिगणो देव तपस्तप इति प्रभो ॥१३-२०९-१ (८९४५१)
तपसा कर्शितो नित्यं तपोऽर्जनपरायणः ।
अस्य किंलक्षणो धर्मः कीदृशश्चागमस्तथा ।
एतदिच्छाम्यहं श्रोतुं तन्मे वद वरप्रद ॥ १३-२०९-२ (८९४५२)
नारद उवाच। १३-२०९-३क्ष् (७४६३)
एवं ब्रुवन्त्यां रुद्राण्यामृषयः साधुसाध्विति ।
अब्रुवन्हृष्टमनसः सर्वे तद्गतमानसाः ॥१३-२०९-३ (८९४५३)
शृण्वन्तीमृषिधर्मांस्तु ऋषयश्चाभ्यपूजयन् ॥ १३-२०९-४ (८९४५४)
ऋषय ऊचुः। १३-२०९-५क्ष् (७४६४)
त्वत्प्रसादद्वयं देवि श्रोष्यामः परमं हितम् ।

धन्याः खलु वयं सर्वे पादमूलं तवाश्रिताः ।
इति सर्वे तदा देवीं वाचा समभिपूजयन् ॥ १३-२०९-५ (८९४५५)
महेश्वर उवाच। १३-२०९-६क्ष् (७४६५)
न्यायतस्त्वं महाभागे श्रोतुकामा मनस्विनि ।
हन्त ते कथयिष्यामि मुनिधर्मं शुचिस्मिते ॥ १३-२०९-६ (८९४५६)
वानप्रस्थं समाश्रित्य क्रियते बहुधा नरैः ।
बहुशाखो बहुविधो ऋषिधर्मः सनातनः ॥ १३-२०९-७ (८९४५७)
प्रायशः सर्वभोगार्थमृषिभिः क्रियते तपः ।
तथा सञ्चरतां तेषां देवि धर्मविधिं शृणु ॥ १३-२०९-८ (८९४५८)
भूत्वा पूर्वं गृहस्थस्तु पुत्रानृण्यमवाप्य च ।
कलत्रकार्यं संस्थाप्य कारणात्संत्यजेद्गृहम् ॥ १३-२०९-९ (८९४५९)
अवस्थाप्य मनो धृत्या व्यवसायपुरःसरः ।
निर्दारो वा सदारो वा वनवासाय संव्रजेत् ॥ १३-२०९-१० (८९४६०)
देशाः परमपुण्या ये नदीवनसमन्विताः ।
अबोधमुक्ताः प्रायेण तीर्थायतनसंयुताः ॥ १३-२०९-११ (८९४६१)
तत्र गत्वा विधिं ज्ञात्वा दीक्षां कुर्याद्यथागमम् ।
दीक्षित्वैकमना भूत्वा परिचर्यां समाचरेत् ॥ १३-२०९-१२ (८९४६२)
काल्योत्थानं च शौचं च सर्वदेवप्रणामनम् ।
सकृदालेपनं काये त्यक्तदोषोऽप्रमादिता ॥ १३-२०९-१३ (८९४६३)
सायंप्रातश्चाभिषेकं चाग्निहोत्रं यथाविधि ।
काले शौचं च कार्यं च जटावल्कलधारणम् ॥ १३-२०९-१४ (८९४६४)
सततं वनचर्या च समित्कुसुमकारणात् ।
नीवाराग्रयणं काले शाकमूलोपचायनम् ॥ १३-२०९-१५ (८९४६५)
सदायतनशौचं च तस्य धर्माय चेष्यते ।
अतिथीनामाभिमुख्यं तत्परत्वं च सर्वदा ॥ १३-२०९-१६ (८९४६६)
पाद्यासनाभ्यां सम्पूज्य तथाऽऽहारनिमन्त्रणम् ।
अग्राम्यपचनं काले पितृदेवार्चनं तथा ॥ १३-२०९-१७ (८९४६७)
पश्चादतिथिसत्कारस्तस्य धर्मः सनातनः ।
शिष्टैर्धर्मासने चैव धर्मार्थसहिताः कथाः ॥ १३-२०९-१८ (८९४६८)
प्रतिश्रयविभागश्च भूमिशय्या शिलासु वा ।
व्रतोपवासयोगश्च क्षमा चेन्द्रियनिग्रहः ॥ १३-२०९-१९ (८९४६९)
दिवारात्रं यथायोगं शौचं धर्मस्य चिन्तनम् ।
एवं धर्माः पुरा दृष्टाः सामान्या वनवासिनाम् ॥ १३-२०९-२० (८९४७०)
एवं वै यतमानस्य कालधर्मो यथा भवेत् ।
तथैव सोऽभिजयति स्वर्गलोकं शुचिस्मिते ॥ १३-२०९-२१ (८९४७१)
तत्र संविदिता भोगाः स्वर्गस्त्रीभिरनिन्दिते ।

परिभ्रष्टो यथा स्वर्गाद्विशिष्टस्तु भवेन्नृषु ॥१३-२०९-२२ (८९४७२)
एवं धर्मस्तथा देवि सर्वेषां वनवासिनाम् ।
एतत्ते कथितं सर्वं किं भूयः श्रोतुमिच्छसि ॥१३-२०९-२३ (८९४७३)
उमोवाच।१३-२०९-२४क्ष् (७४६६)
भगवन्देवदेवेश ऋषीणां चरितं शुभम् ।
विशेषधर्मानिच्छामि श्रोतुं कौतूहलं हि मे ॥१३-२०९-२४ (८९४७४)
महेश्वर उवाच।१३-२०९-२५क्ष् (७४६७)
तदहं ते प्रवक्ष्यामि शृणु देवि समाहिता ॥ १३-२०९-२५ (८९४७५)
वननित्यैर्वनरतैर्वानप्रस्थैर्महर्षिभिः ।
वनं गुरुमिवालम्ब्य वस्तुव्यमिति निश्चयः ॥१३-२०९-२६ (८९४७६)
वीरशय्यामुपासद्भिर्वीरस्थानोपसेविभिः ।
व्रतोपवासैर्बहुलैर्ग्रीष्मे पञ्चतपैस्तथा ॥१३-२०९-२७ (८९४७७)
पञ्चयज्ञपरैर्नित्यं पौर्णमास्यापरायणैः ।
मण्डूकशायैर्हेमन्ते शैवालाङ्कुरभोजनैः ॥१३-२०९-२८ (८९४७८)
चीरवल्कलसंवीतैर्मृगाजिनधरैस्तथा ।
चातुर्मास्यपरैः कैश्चिद्देवधर्मपरायणैः ॥१३-२०९-२९ (८९४७९)
एवंविधैर्वनेवासैस्तप्यते सुमहत्तपः ।
एवं कृत्वा शुभं कर्म पश्चाद्याति त्रिविष्टपम् ॥१३-२०९-३० (८९४८०)
तत्रापि सुमहत्कालं संविहृत्यि यथासुखम् ।
जायते मानुषे लोके दानभोगसमन्वितः ॥१३-२०९-३१ (८९४८१)
तपोविशेषसंयुक्ताः कथितास्ते शुचिस्मिते ॥ १३-२०९-३२ (८९४८२)
उमोवाच।१३-२०९-३३क्ष् (७४६८)
भगवन्देवदेवेश तेषु ये दारसंयुताः ।
कीदृशं चरितं तेषां तन्मे शंसितुमर्हसि ॥१३-२०९-३३ (८९४८३)
महेश्व उवाच।१३-२०९-३४क्ष् (७४६९)
य एकपत्नीधर्माणश्चरन्ति विपुलं तपः ।
विंध्यपादेषु ये केचिद्ये च नैमिशवासिनः ॥१३-२०९-३४ (८९४८४)
पुष्करेषु च ये चान्ये नदीवनसमाश्रिताः ।
सर्वे ते विधिदृष्टेन चरन्ति विपुलं तपः ॥१३-२०९-३५ (८९४८५)
हिंसाद्रोहविमुक्ताश्च सर्वभूतानुकम्पिनः ।
शान्ता दान्ता जितक्रोधाः सर्वातिथ्यपरायणाः ॥१३-२०९-३६ (८९४८६)
प्राणिष्वात्मोपमा नित्यमृतुकालाभिगामिनः ।
स्वदारसहिता देवि चरन्ति व्रतमुत्तमम् ॥१३-२०९-३७ (८९४८७)
वसन्ति सुखमव्यग्राः पुत्रदारसमन्विताः ।
तेषां परिच्छदारम्भाः कृतोपकरणानि च ॥१३-२०९-३८ (८९४८८)
गृहस्थवद्द्वितीयं ते यथायोगं प्रमाणतः ।

पोषणार्थं स्वदाराणामग्निकार्यार्थमेव च ।
गावश्च कर्षणं चैव सर्वमेतद्विधीयते। १३-२०९-३९ (८९४८९)
एवं वनगतैर्देवि कर्तव्यं दारसङ्ग्रहैः ।
ते स्वदारैः समायान्ति पुण्याँल्लोकान्दृढव्रताः ॥१३-२०९-४० (८९४९०)
पतिभिः सह ये दाराश्चरन्ति विपुलं तपः ।
अव्यग्रभावादैकात्म्यात्ताश्च गच्छन्ति वै दिवम् ।
एतत्ते कथितं देवि किं भूयः श्रोतुमिच्छसि ॥ ॥ १३-२०९-४१ (८९४९१)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
नवाधिकद्विशततमोऽध्यायः ॥ २०९ ॥

---

अनुससनपर्व-अध्यय२१०
॥ श्रीः ॥
१३.२१०. अध्यायः २१०

अथ दानधर्मपर्व ॥ १ ॥
Mahabharata - Anushaasana Parva - Chapter Topics
ईश्वरेण पार्वतींप्रति ऋषीणां कर्मफलविशेषादिकथनम् ॥ १ ॥

Mahabharata - Anushaasana Parva - Chapter Text

उमोवाच ।
भगवन्देवदेवेश तेषां कर्मफलं प्रभो ।
श्रोतुमिच्छाम्यहं देव प्रसादात्ते वरप्रद ॥१३-२१०-१ (८९४९२)
महेश्वर उवाच।१३-२१०-२क्ष् (७४७०)
वानप्रस्थगतं सर्वं फलपाकं शृणु प्रिये ॥ १३-२१०-२ (८९४९३)
अग्नियोगं व्रजन्ग्रीष्मे ततो द्वादशवार्षिकम् ।
रुद्रलोकेऽभिजायेत विधिदृष्टेन कर्मणा ॥१३-२१०-३ (८९४९४)
उपवासव्रतं कुर्वन्वर्षाकाले दृढव्रतः ।
सोमलोकेऽभिजायेत नरो द्वादशवार्षिकम् ॥१३-२१०-४ (८९४९५)
काष्ठवन्मौनमास्थाय नरो द्वादशवार्षिकम् ।
मरुतां लोकमास्थाय तत्र भोगैश्च युज्यते ॥१३-२१०-५ (८९४९६)
कुशशर्करसंयुक्ते स्थण्डिले संविशन्मुनिः ।
यक्षलोकेऽभिजायेत सहस्राणि चतुर्दश ॥१३-२१०-६ (८९४९७)
वर्षाणां भोगसंयुक्तो नरो द्वादशवार्षिकम् ।
वीरासनगतो यस्तु कण्टकाफलकाश्रितः ।

गन्धर्वेष्वभिजायेत नरो द्वादशवार्षिकम् ॥ १३-२१०-७ (८९४९८)
वीरस्थायी चोर्ध्वबाहुर्नरो द्वादशवार्षिकम् ।
देवलोकेऽभिजायेत दिव्यभोगसमन्वितः ॥ १३-२१०-८ (८९४९९)
पादाङ्गुष्ठेन यस्तिष्ठेदूर्ध्वबाहुर्जितेन्द्रियः ।
इन्द्रलोकेऽभिजायेत सहस्राणि चतुर्दश। १३-२१०-९ (८९५००)
आहारनियमं कृत्वा मुनिर्द्वादशवार्षिकम् ।
नागलोकेऽभिजायेत संवत्सरगणान्बहून् ॥ १३-२१०-१० (८९५०१)
एवं दृढव्रता देवि वानप्रस्थाश्च कर्मभिः ।
स्थानेषु तत्र तिष्ठन्ति तत्तद्भोगसमन्विताः ॥ १३-२१०-११ (८९५०२)
तेभ्यो भ्रष्टाः पुनर्देवि जायन्ते नृषु भोगिनः ।
वर्णोत्तमकुलेष्वेव धनधान्यसमन्विताः ॥ १३-२१०-१२ (८९५०३)
एतत्ते कथितं देवि किं भूयः श्रोतुमिच्छसि ॥ १३-२१०-१३ (८९५०४)
उमोवाच। १३-२१०-१४क्ष् (७४७१)
एषां यथा वराणां तु धर्ममिच्छामि मानद ।
कृपया परयाऽऽविष्टस्तन्मे ब्रूहि महेश्वर ॥ १३-२१०-१४ (८९५०५)
महेश्वर उवाच। १३-२१०-१५क्ष् (७४७२)
धर्मं यथा वराणां त्वं शृणु भामिनि तत्परा ॥ १३-२१०-१५ (८९५०६)
व्रतोपवासशुद्धाङ्गास्तीर्थस्नानपरायणाः ।
धृतिमन्तःक क्षमायुक्ताः सत्यव्रतपरायणाः ॥ १३-२१०-१६ (८९५०७)
पक्षमासोपवासैश्च कर्शिता धर्मदर्शिनः ।
वर्षैः शीतातपैश्चैव कुर्वन्तः परमं तपः ॥ १३-२१०-१७ (८९५०८)
कालयोगेन गच्छन्ति शक्रलोकं शुचिस्मिते ।
तत्र ते भोगसंयुक्ता दिव्यगन्धसमन्विताः ॥ १३-२१०-१८ (८९५०९)
दिव्यभूषणसंयुक्ता विमानवरसंयुताः ।
विचरन्ति यथाकामं दिव्यस्त्रीगणसंयुताः ।
एतत्ते कथितं देवि किं भूयः श्रोतुमिच्छसि ॥ १३-२१०-१९ (८९५१०)
उमोवाच। १३-२१०-२०क्ष् (७४७३)
तेषां चक्रचराणां च धर्ममिच्छामि वै प्रभो ॥ १३-२१०-२० (८९५११)
महेश्वर उवाच। १३-२१०-२१क्ष् (७४७४)
हन्त ते कथयिष्यामि शृणु शाकटिकं शुभे ॥ १३-२१०-२१ (८९५१२)
संवहन्तो धुरं दानैः शकटानां तु सर्वदा ।
प्रार्थयन्ते यथाकालं शकटैर्भैक्षचर्यया ॥ १३-२१०-२२ (८९५१३)
तपोर्जनपरा धीरास्तपसा क्षीणकल्मषाः ।
पर्यटन्तो दिशः सर्वाः कामक्रोधविवर्जिताः ॥ १३-२१०-२३ (८९५१४)
तेनैव कालयोगेन त्रिदिवं यान्ति शोभने ।
तत्र प्रमुदिता भोगैर्विचरन्ति यथासुखम् ॥ १३-२१०-२४ (८९५१५)

एतत्ते कथितं देवि किं भूयः श्रोतुमिच्छसि ॥ १३-२१०-२५ (८९५१६)
उमोवाच। १३-२१०-२६क्ष् (७४७५)
वैखानसानां वै धर्मं श्रोतुमिच्छाम्यहं प्रभो ॥ १३-२१०-२६ (८९५१७)
महेश्वर उवाच। १३-२१०-२७क्ष् (७४७६)
ते वै वैखानसा नाम वानप्रस्थाः शुभेक्षणे ।
तीव्रेण तपसा युक्ता दीप्तिमन्तः स्वतेजसा ।
सत्यव्रतपरा धीरास्तेषां निष्कल्मषं तपः ॥ १३-२१०-२७ (८९५१८)
अश्मकुट्टास्तथाऽन्ये च दन्तोलूखलिनस्तथा ।
शीर्णपर्णाशिनश्चान्ये उञ्छवृत्तास्तथा परे ॥ १३-२१०-२८ (८९५१९)
कपोतवृत्तयश्चान्ये कापोतीं वृत्तिमाश्रिताः ।
पशुप्रचारनिरताः फेनपाश्च तथा परे ॥ १३-२१०-२९ (८९५२०)
मृगवन्मृगचर्यायां सञ्चरन्ति तथा परे ।
अब्भक्षा वायुभक्षाश्च निराहारास्तथैव च ॥ १३-२१०-३० (८९५२१)
केचिच्चरन्ति सद्विष्णोः पादपूजनमुत्तमम् ।
सञ्चरन्ति तपो घोरं व्याधिमृत्युविवर्जिताः ।
स्ववशादेव ते मृत्युं भीषयन्ति च नित्यशः ॥ १३-२१०-३१ (८९५२२)
इन्द्रलोके तथा तेषां निर्मिता भोगसञ्चयाः ।
अमरैः समतां यान्ति देववद्भोगसंयुताः ॥ १३-२१०-३२ (८९५२३)
वराप्सरोभिः संयुक्ताश्चिरकालमनिन्दिते ।
एतत्ते कथितं देवि भूयः श्रोतुं किमिच्छसि ॥ १३-२१०-३३ (८९५२४)
उमोवाच। १३-२१०-३४क्ष् (७४७७)
भगवञ्श्रोतुमिच्छामि वालखिल्यांस्तपोधनान् ॥ १३-२१०-३४ (८९५२५)
महेस्वर उवाच। १३-२१०-३५क्ष् (७४७८)
धर्मचर्यां तथा देवि वालखिल्यगतां शृणु ॥ १३-२१०-३५ (८९५२६)
मृगनिर्मोकवसना निर्द्वन्द्वास्ते तपोधनाः ।
अङ्गुष्ठमात्राः सुश्रोणि तेष्वेवाङ्गेषु संश्रिताः ॥ १३-२१०-३६ (८९५२७)
उद्यन्तं सततं सूर्यं स्तुवन्तो विविधैः स्तवैः ।
भास्करस्येव किरणैः सहसा यान्ति नित्यदा ।
द्योतयन्तो दिशः सर्वा धर्मज्ञाः सत्यवादिनः ॥ १३-२१०-३७ (८९५२८)
तेष्वेव निर्मलं सत्यं लोकार्थं तु प्रतिष्ठितम् ।
लोकोऽयं धार्यते देवि तेषामेव तपोबलात् ॥ १३-२१०-३८ (८९५२९)
महात्मनां तु तपसा सत्येन च शुचिस्मिते ।
क्षमया च महाभागे भूतानां संस्थितिं विदुः ॥ १३-२१०-३९ (८९५३०)
प्रजार्थमपि लोकार्थं महद्भिः क्रियते तपः ।
तपसा प्राप्यते सर्वं तपसा प्राप्यते फलम् ।
दुष्प्रापमपि यल्लोके तपसा प्राप्यते हि तत् ॥ १३-२१०-४० (८९५३१)

पञ्चभूतार्थतत्वे च लोकसृष्टिविर्धनम् ।
एतत्सर्वं समासेन तपोयोगाद्विनिर्मितम् ॥ १३-२१०-४१ (८९५३२)
तस्मादयं त्वृषिगणस्तपस्तप इति प्रिये ।
धर्मान्वेषी तपः कर्तुं यतते सततं प्रिये ॥ १३-२१०-४२ (८९५३३)
अमरत्वं शिवत्वं च तपसा प्रापयेत्सदा ।
एतत्ते कथितं सर्वं शृण्वन्त्यास्ते श्रुतं प्रिये ।
प्रियार्थमृषिसङ्घस्य प्रजानां हितकाम्यया ॥ १३-२१०-४३ (८९५३४)
नारद उवाच। १३-२१०-४४क्ष् (७४७९)
एवं ब्रुवन्तं देवेशमृषयश्चापि तुष्टुवुः ।
भूयः परतरं यत्तु तदाप्रभृति चक्रिरे ॥ ॥ १३-२१०-४४ (८९५३५)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
दशाधिकद्विशततमोऽध्यायः ॥ २१० ॥

---

अनुससनपर्व-अध्यय२११
॥ श्रीः ॥
१३.२११. अध्यायः २११

अथ दानधर्मपर्व ॥ १ ॥
Mahabharata - Anushaasana Parva - Chapter Topics
महेश्वरेण पार्वतीप्रति निवृत्तिधर्मफलकथनम् ॥ १ ॥
तथा गार्हस्थ्यप्रशंसनपूर्वकं तद्धर्मफलादिकथनम् ॥ २ ॥

Mahabharata - Anushaasana Parva - Chapter Text

उमोवाच ।
उक्तस्त्वया त्रिवर्गस्य धर्मश्च परमः शुभः ।
सर्वव्यापी तु यो धर्मो भगवंस्तं ब्रवीतु मे। १३-२११-१ (८९५३६)
महेश्वर उवाच। १३-२११-२क्ष् (७४८०)
ब्रह्मणा लोकसंसारे सृष्टा धात्रा गुणार्थिना ।
लोकांस्तारयितुं युक्ता मर्त्येषु क्षितिदेवताः ॥ १३-२११-२ (८९५३७)
तेषु तावत्प्रवक्ष्यामि धर्मं शुभफलोदयम् ।
ब्राह्मणेष्वभयो धर्मः परमः शुभलक्षणः ॥ १३-२११-३ (८९५३८)
इमे च धर्मा लोकानां पूर्वं सृष्टाः स्वयंभुवा ।
पृथिव्यां सद्द्विजैर्नित्यं कीर्त्यमानं निबोध मे ॥ १३-२११-४ (८९५३९)
स्वदारनिरतिर्धर्मो नित्यं जप्यं तथैव च ।

सर्वातिथ्यं त्रिवर्गस्य यथाशक्ति दिवानिशम् ॥१३-२११-५ (८९५४०)
शूद्रो धर्मपरो नित्यं शुश्रूषानिरतो भवेत् ॥ १३-२११-६ (८९५४१)
त्रैविद्यो ब्राह्मणो वृद्धो न चाध्ययनजीवकः ।
त्रिवर्गस्य व्यतिक्रान्तं तस्य धर्मः सनातनः ॥१३-२११-७ (८९५४२)
षट् कर्माणि च प्रोक्तानि सृष्टानि ब्रह्मणा पुरा ।
धर्मिष्ठानि वरिष्ठानि तानितानि शृणूत्तमे ॥१३-२११-८ (८९५४३)
यजनं याजनं चैव दानं पात्रे प्रतिग्रहः ।
अध्यापनमध्ययनं षट्कर्मा धर्मभागृजुः ॥१३-२११-९ (८९५४४)
नित्यः स्वाध्यायतो धर्मः नित्ययज्ञः सनातनः ।
दानं प्रशंसते नित्यं ब्राह्मणेषु त्रिकर्मसु ॥१३-२११-१० (८९५४५)
अयमेव परो धर्मः संवृतः सत्सु विद्यते ।
गर्भस्थाने विशुद्धानां धर्मस्य नियमो महान् ॥१३-२११-११ (८९५४६)
पञ्चयज्ञविशुद्धात्मा ऋतुनित्योऽनसूयकः ।
दान्तो ब्राह्मणसत्कर्ता सुसंमृष्टनिवेशनः ॥१३-२११-१२ (८९५४७)
चक्षुःश्रोत्रमनोजिह्वास्निग्धवर्णप्रदः सदा ।
अतिथ्यभ्यागतरतः शेषान्नकृतभोजनः ॥१३-२११-१३ (८९५४८)
पाद्यमर्घ्यं यथान्यायमासनं शयनं तथा ।
दीपं प्रतिश्रयं चैव यो ददाति स धार्मिकः ॥१३-२११-१४ (८९५४९)
प्रातरुत्थाय वै पश्चाद्भोजने तु निमन्त्रयेत् ।
सत्कृत्याऽनुव्रजेद्यश्च तस्य धर्मः सनातनः ॥१३-२११-१५ (८९५५०)
प्रवृत्तिलक्षणो धर्मो गृहस्थेषु विधीयते ।
तदहं कीर्तयिष्यामि त्रिवर्गेषु च यद्यथा ॥१३-२११-१६ (८९५५१)
एकेनांशेन धर्मार्थः कर्तव्यो हितमिच्छता ।
एकेनांशेन कामार्थमेकमंशं विवर्धयेत् ॥१३-२११-१७ (८९५५२)
निवृत्तिलक्षणः पुण्यो धर्मो मोक्षो विधीयते ।
तस्य वृत्तिं प्रवक्ष्यामि तां शृणुष्व समाहिता ॥१३-२११-१८ (८९५५३)
सर्वभूतदया धर्मो निवृत्तेः परम सदा ।
बुभुक्षितं पिपासार्तमतिथिं श्रान्तमागतम् ।
अर्चयन्ति वरारोहे तेषामपि फलं महत् ॥ १३-२११-१९ (८९५५४)
पात्रमित्येव दातव्यं सर्वस्मै धर्मकाङ्क्षिभिः ।
आगमिष्यति यत्पात्रं तत्पात्रं तारयिष्यति ॥१३-२११-२० (८९५५५)
काले सम्प्राप्तमतिथिं भोक्तुकाममुपस्थितम् ।
यस्तं सम्भावयेत्तत्र व्यासोऽयं समुपस्थितः ॥१३-२११-२१ (८९५५६)
तस्य पूजां यथाशक्त्या सौम्यचित्तः प्रयोजयेत् ।
चित्तमूलो भवेद्धर्मो धर्ममूलं भवेद्यशः ॥१३-२११-२२ (८९५५७)
तस्मात्सौम्येन चित्तेन दातव्यं देवि सर्वथा ।

सौम्यचित्तस्तु यो दद्यात्तद्धि दानमनुत्तमम् ॥१३-२११-२३ (८९५५८)
यथाम्बुबिन्दुभिः सूक्ष्मैः पतद्भिर्मेदिनीतले ।
केदाराश्च तटाकानि सरांसि सरितस्तथा ॥१३-२११-२४ (८९५५९)
तोयपूर्णानि दृश्यन्ते अप्रतर्क्योऽतिशोभने ।
अल्पमल्पमपि ह्येकं दीयमानं विवर्धते ॥१३-२११-२५ (८९५६०)
पीडयाऽपि च भृत्यानां दानमेव विशिष्यते ।
पुत्रदारधनं धान्यं न मृताननुगच्छति ॥१३-२११-२६ (८९५६१)
श्रेयो दानं च भोगश्च धनं प्राप्य यशस्विनि ।
दानेन हि महाभागा भवन्ति मनुजाधिपाः ॥१३-२११-२७ (८९५६२)
नास्ति भूमौ दानसमं नास्ति दानसमो निधिः ।
नास्ति सत्यात्परो धर्मो नानृतात्पातकं परम् ॥१३-२११-२८ (८९५६३)
आश्रमे यस्तु तप्येत तपो मूलफलाशनः ।
आदित्याभिमुखो भूत्वा जटावल्कलसंवृतः ।
मण्डूकशायी हेमन्ते ग्रीष्मे पञ्चतपा भवेत् ॥ १३-२११-२९ (८९५६४)
सम्यक्तपश्चरन्तीह श्रद्दधाना वनाश्रमे ।
गृहाश्रमस्य ते देवि कलां नार्हन्ति षोडशीम् ॥१३-२११-३० (८९५६५)
उमोवाच।१३-२११-३१क्ष् (७४८१)
गृहाश्रमस्य या चर्या व्रतानि नियमाश्च ये ।
तथा च देवताः पूज्याः सततं गृहमेधिना ॥१३-२११-३१ (८९५६६)
यद्यच्च परिहर्तव्यं गृहीणातिथिपर्वसु ।
तत्सर्वं श्रोतुमिच्छामि कथ्यमानं त्वया विभो ॥१३-२११-३२ (८९५६७)
महेश्वर उवाच।१३-२११-३३क्ष् (७४८२)
गृहाश्रमस्य यन्मूलं फलं धर्मोऽयमुत्तमम् ।
पादैश्चतुर्भिः सततं धर्मो यत्र प्रतिष्ठितः ॥१३-२११-३३ (८९५६८)
सारभूतं वरारोहे दध्नो घृतमिवोद्धृतम् ।
तदहं ते प्रवक्ष्यामि श्रूयतां धर्मचारिणि ॥१३-२११-३४ (८९५६९)
ग्दंपत्यलङ्करिष्णुश्च गृहदानरतिर्नरः ।
कलत्रसौख्यं विन्देत नास्ति तत्र विचारणा ॥१३-२११-३५ (८९५७०)
स्त्रियो वा पुरुषो वाऽपि दम्पतीन्पूजयन्ति ते ।
मनोभिलषितान्कामान्प्राप्नुवन्ति न संशयः ॥' १३-२११-३६ (८९५७१)
शुश्रूषन्ते ये पितरं मातरं च गृहाश्रमे ।
भर्तारं चैव या नारी अग्निहोत्रं च ये द्विजाः ॥१३-२११-३७ (८९५७२)
तेषुतेषु च प्रीणन्ति देवा इन्द्रपुरोगमाः ।
पितरः पितृलोकस्थाः स्वधर्मेण स रज्यते ॥१३-२११-३८ (८९५७३)
उमोवाच।१३-२११-३९क्ष् (७४८३)
मातापितृवियुक्तानां का चर्या गृहमेधिनाम् ।

विधवानां च नारीणां भवानेव ब्रवीतु मे ॥१३-२११-३९ (८९५७४)
महेश्वर उवाच।१३-२११-४०क्ष् (७४८४)
देवतातिथिशुश्रूषा गुरुवृद्धाभिवादनम् ।
अहिंसा सर्वभूतानामलोभः सत्यसन्धता ॥१३-२११-४० (८९५७५)
ब्रह्मचर्यं शरण्यत्वाशौचं पूर्वाभिभाषणम् ।
कृतज्ञत्वमपैशुन्यं सततं धर्मशीलता ॥१३-२११-४१ (८९५७६)
दिने द्विरभिषेकं च पितृदैवतपूजनम् ।
गवाह्निकप्रदानं च संविभागोऽतिथिष्वपि ॥१३-२११-४२ (८९५७७)
दीपप्रतिश्रयं चैव दद्यात्पाद्यासनं तथा ।
पञ्चमेऽहनि षष्ठे वा द्वादशेऽप्यष्टमेऽथवा ।
तदुर्दशे पञ्चदशे ब्रह्मचारी सदा भवेत् ॥ १३-२११-४३ (८९५७८)
श्मश्रुकर्म शिरोभ्यङ्गमञ्जनं दन्तधावनम् ।
नैतेष्वहस्तु कुर्वीत तेषु लक्ष्मीः प्रतिष्ठिता ॥१३-२११-४४ (८९५७९)
व्रतोपवासनियमस्तपो दानं च शक्तितः ।
भरणं भृत्यवर्गस्य दीनानामनुकम्पनम् ॥१३-२११-४५ (८९५८०)
परदारान्निवृत्तिश्च स्वदारेषु रतिः सदा ।
शरीरमेकं दंपत्योर्विधात्रा पूर्वनिर्मितम् ।
तस्मात्स्वदारनिरतो ब्रह्मचारी विधीयते ॥ १३-२११-४६ (८९५८१)
शीलवृत्तविनीतस्य निगृहीतेन्द्रियस्य च ।
आर्जवे वर्तमानस्य सर्वभूतहितैषिणः ॥१३-२११-४७ (८९५८२)
प्रियातिथेश्च क्षान्तस्य धर्मार्जितधनस्य च ।
गृहाश्रमपदस्थस्य किमन्यैः कृत्यमाश्रमैः ॥१३-२११-४८ (८९५८३)
यथा मातरमाश्रित्य सर्वे जीवन्ति जन्तवः ।
तथा गृहाश्रमं प्राप्य सर्वे जीवन्ति चाश्रमाः ॥१३-२११-४९ (८९५८४)
राजानः सर्वपाषण्डाः सर्वे रङ्गोपजीविनः ।
व्यालग्रहाश्च डम्याश्च चोरा राजभटास्तथा ॥१३-२११-५० (८९५८५)
सविद्याः सर्वजीवज्ञाः सर्वे वै विचिकित्सकाः ।
दूराध्वानं प्रपन्नाश्च क्षीणपथ्योदना नराः ।
एते चान्ये च बहवस्तर्कयन्ति गृहाश्रमम् ॥ १३-२११-५१ (८९५८६)
मार्जारा मूषिकाः श्वानः सूकराश्च शुकास्तथा ।
कपोतका कावटकाः सरीसृपनिषेवणाः ।
अरण्यवासिनश्चान्ये सङ्घा ये मृगपक्षिणाम् ॥ १३-२११-५२ (८९५८७)
एवं बहुविधा देवि लोकेऽस्मिन्सचराचराः ।
गृहे क्षेत्रे बिले चैव शतशोऽथ सहस्रशः ॥१३-२११-५३ (८९५८८)
गृहस्थेन कृतं कर्म सर्वैस्तैरिह भुज्यते ।
उपयुक्तं च यत्तेषां मतिमान्नानुशोचति ॥१३-२११-५४ (८९५८९)

धर्म इत्येव सहकल्प्य यस्तु तस्य फलं शृणु ।
सर्वयज्ञप्रणीतस्य हयमेधेन यत्फलम् ।
वर्षे स द्वादशे देवि फलेनैतेन युज्यते ॥ १३-२११-५५ (८९५९०)
आशापाशविमोक्षं च विधिधर्ममनुत्तमम् ।
वृक्षमूलचरो नित्यं शून्यागारिनिवेशनमम् ॥१३-२११-५६ (८९५९१)
नदीपुलिनशायी च नदीतीरमनुव्रजन् ।
विमुक्तः सर्वसङ्गेभ्यः स्नेहबन्धेन वै द्विजः। १३-२११-५७ (८९५९२)
आत्मन्येवात्मना भावं समायोज्येह तेन वै ।
आत्मभूतो यताहारो मोक्षदृष्टेन कर्मणा ॥१३-२११-५८ (८९५९३)
पवित्रनित्यो युक्तश्च तस्य धर्मःक सनातनः ।
नैकत्र रमते सक्तो न चैकग्रामगोचरः ।
युक्तोऽप्यटति यो युक्तो न चैकपुलिनाश्रयः ॥ १३-२११-५९ (८९५९४)
एष मोक्षविदां धर्मो वेदोक्तः सत्पथे स्थितः ॥ ॥ १३-२११-६० (८९५९५)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
एकादशाधिकद्विशततमोऽध्यायः ॥ २११ ॥

---

अनुससनपर्व-अध्यय२१२
॥ श्रीः ॥
१३.२१२. अध्यायः २१२

अथ दानधर्मपर्व ॥ १ ॥
Mahabharata - Anushaasana Parva - Chapter Topics
महेश्वरेण पार्वतींप्रति विस्तरेण राजधर्मकथनम् ॥ १ ॥

Mahabharata - Anushaasana Parva - Chapter Text

उमोवाच ।
देवदेव नमस्तुभ्यं त्र्यक्ष भो वृषभध्वज ।
श्रुतं मे भगवन्सर्वं त्वत्प्रसादान्महेश्वर ॥१३-२१२-१ (८९५९६)
सङ्गृहीतं मया तच्च तव वाक्यमनुत्तमम् ।
इदानीमस्ति संदेहो मानुषेष्विह कश्चन ॥१३-२१२-२ (८९५९७)
तुल्यप्राणशिरःकायो राजाऽयमिति मृश्यते ।
केन कर्मविपाकेन सर्वप्राधान्यमर्हति ॥१३-२१२-३ (८९५९८)
स चापि दण्डयन्मर्त्यान्भर्त्सयन्विधमन्नपि ।
प्रेत्यभावे कथं लोकाँल्लभते पुण्यकर्मणा ।

राजवृत्तमहं तस्माच्छ्रोतुमिच्छामि मानद ॥ १३-२१२-४ (८९५९९)
महेश्वर उवाच। १३-२१२-५क्ष् (७४८५)
तदहं ते प्रवक्ष्यामि राजधर्मं शुभानने ॥ १३-२१२-५ (८९६००)
राजायत्तं हि यत्सर्वं लोकवृत्तं शुभाशुभम् ।
महतस्तपसो देवि फलं राज्यमिति स्मृतम् ॥ १३-२१२-६ (८९६०१)
तपोदानमयं राज्यं परं स्थानं विधीयते ।
तस्माद्राज्ञः सदा मर्त्याः प्रणमन्ति यतस्ततः ॥ १३-२१२-७ (८९६०२)
न्यायतस्त्वं महाभागे श्रोतुकामाऽसि भामिनि ।
तस्मात्तस्यैव चरितं जगत्पथ्यं शृणु प्रिये ॥ १३-२१२-८ (८९६०३)
अराजके पुरा त्वासीत्प्रजानां सङ्कुलं महत् ।
तदृष्ट्वा सङ्कुलं ब्रह्मा मनुं राज्ये न्यवेदयत् ।
तदाप्रभृति संदृष्टं राज्ञां वृत्तं शुभाशुभम् ॥ १३-२१२-९
(८९६०४)
तन्मे शृणु वरारोहे तस्य पथ्यं जगद्धितम् ।
यथा प्रेत्य लभेत्स्वर्गं यथा वीर्यं यशस्तथा ॥ १३-२१२-१० (८९६०५)
पित्र्यं वा भूतपूर्वं वा स्वयमुत्पाद्य वा पुनः ।
राज्यधर्ममनुष्ठाय विधिवद्भोक्तुमर्हति ॥ १३-२१२-११ (८९६०६)
आत्मानमेव प्रथमं विनयैरुपपादयेत् ।
अनु भृत्यान्प्रजाः पश्चादित्येष विनयक्रमः ॥ १३-२१२-१२ (८९६०७)
स्वामिनं चोषमां कृत्वा प्रजास्तद्वृत्तकाङ्क्षया ।
स्वयं विनयसम्पन्ना भवन्तीह शुभेक्षणे ॥ १३-२१२-१३ (८९६०८)
स्वस्मात्पूर्वतरा राजा विनयत्येव वै प्रजाः ।
अपहास्यो भवेत्तादृक्स्वदोषस्यानवेक्षणात् ॥ १३-२१२-१४ (८९६०९)
विद्याभ्यासैर्वृद्धयोगैरात्मानं विनयं नयेत् ।
विद्या धर्मार्थफलिनी तद्विदो वृद्धसंज्ञिताः ॥ १३-२१२-१५ (८९६१०)
इन्द्रियाणां जयो देवि अत ऊर्ध्वमुदाहृतः ।
अजये सुमहान्दोषो राजानं विनिपातयेत् ॥ १३-२१२-१६ (८९६११)
पञ्चैव स्ववशे कृत्वा तदर्थान्पञ्च शोषयेत् ।
षडुत्सृज्य यथायोगं ज्ञानेन विनयेन च ।
सास्त्रचक्षुर्नयपरो भूत्वा भृत्यान्समाहरेत् ॥ १३-२१२-१७ (८९६१२)
वृत्तश्रुतकुलोपेतानुपधाबिः परीक्षितान् ।
अमात्यानुपधातीतान्सोपसर्पाञ्जितेन्द्रियान् ।
योजयेत यथायोगं यथार्हं स्वेषु कर्मसु ॥ १३-२१२-१८ (८९६१३)
अमात्या बुद्धिसम्पन्ना राष्ट्रं बहुजनप्रियम् ।
दुराधर्षं पुरश्रेष्ठं कोशः कृच्छ्रसहः स्मृतः ॥ १३-२१२-१९
(८९६१४)

अनुरक्तं बलं साम्नामद्वैधं मन्त्रमेव च ।
एताः प्रकृतयः स्वेषु स्वामी विनयतत्ववित्। १३-२१२-२० (८९६१५)
प्रजानां रक्षणार्थाय सर्वमेतद्विनिर्मितम् ।
आभिः करणभूताभिः कुर्याल्लोकहितं नृपः ॥ १३-२१२-२१ (८९६१६)
आत्मरक्षा नरेन्द्रस्य प्रजारक्षार्थमिष्यते ।
तस्मात्सततमात्मानं संरक्षेदप्रमादवान् ॥ १३-२१२-२२ (८९६१७)
भोजनाच्छादनस्नानाद्बहिर्निष्क्रमणादपि ।
नित्यं स्त्रीगणसंयोगाद्रक्षेदात्मानमात्मवान् ॥ १३-२१२-२३ (८९६१८)
स्वेभ्यश्चैव परेभ्यश्च शशत्रादपि विषादपि ।
सततं पुत्रदारेभ्यो रक्षेदात्मानमात्मवान् ॥ १३-२१२-२४ (८९६१९)
सर्वेभ्य एव स्थानेभ्यो रक्षेदात्मानमात्मवान् ।
प्रजानां रक्षणार्थाय प्रजाहितकरो भवेत् ॥ १३-२१२-२५ (८९६२०)
प्रजाकार्यं तु तत्कार्यं प्रजासौख्यं तु तत्सुखम् ।
प्रजाप्रियं प्रियं तस्य स्वहितं तु प्रजाहितम् ।
प्रजार्तं तस्य सर्वस्वमात्मार्थं न विधीयते। १३-२१२-२६ (८९६२१)
प्रकृतीनां हि रक्षार्थं रागद्वेषौ व्युदस्य च ।
उभयोः पक्षयोर्वादं श्रुत्वा चैव यथातथम् ।
तमर्थं विमृशेद्बुद्ध्या स्वयमातत्वदर्शनात् ॥ १३-२१२-२७ (८९६२२)
तत्वविद्भिश्च बहुभिर्वृद्धैः सह नरोत्तमैः ।
कर्तारमपराधं च देशकालौ नयानयौ ॥ १३-२१२-२८ (८९६२३)
ज्ञात्वा सम्यग्यथाशास्त्रं ततो दण्डं नयेन्नृषु ।
एवं कुर्वंल्लभेद्धर्मं पक्षपातविवर्जनात् ॥ १३-२१२-२९ (८९६२४)
प्रत्यक्षाप्तोपदेशाभ्यामनुमानेन वा पुनः ।
बोद्धव्यं सततं राज्ञा देशवृत्तं शुभाशुभम् ॥ १३-२१२-३० (८९६२५)
चारैः कर्मप्रवृत्त्या च तद्विज्ञाय विचारयेत् ।
अशुभं निर्हरेत्सद्यो जोषयेच्छुभमात्मनः ॥ १३-२१२-३१ (८९६२६)
गर्ह्यान्विगर्हयेदेव पूज्यान्सम्पूजयेत्तथा ।
दण्ड्यांश्च दण्डयेद्देवि नात्र कार्या विचारणा ॥ १३-२१२-३२ (८९६२७)
पञ्चावेक्षन्सदा मन्त्रं कुर्याद्बुद्धियुतैर्नरैः ।
कुलवृत्तश्रुतोपेतैर्नित्यं मन्त्रपरो भवेत् ॥ १३-२१२-३३ (८९६२८)
कामकारेण वै मुख्यैर्न च मन्त्रमना भवेत् ।
राजा राष्ट्रहितापेक्षं सत्यधर्माणि कारयेत् ॥ १३-२१२-३४ (८९६२९)
सर्वोद्योगं स्वयं कुर्याद्दुर्गादिषु सदा नृषु ।
देशवृद्धिकरान्भृत्यानप्रमादेन कारयेत् ॥ १३-२१२-३५ (८९६३०)
देशक्षयकरान्सर्वानप्रियांश्च विवर्जयेत् ।
अहन्यहनि सम्पश्येदनुजीविगणं स्वयम् ॥ १३-२१२-३६ (८९६३१)

सुमुखः सुप्रियो दत्त्वा सम्यग्वृत्तं समाचरेत् ।
अधर्म्यं परुषं तीक्ष्णं वाक्यं वक्तुं न चार्हति ॥ १३-२१२-३७ (८९६३२)
असंविश्वास्य वचनं वक्तुं सत्सु न चार्हति ।
नरेनरे गुणान्दोषान्सम्यग्वेदितुमर्हति ॥ १३-२१२-३८ (८९६३३)
स्वेङ्गितं वृणुयाद्धैर्यं न कुर्यात्क्षुद्रसंविदम् ।
परेङ्गितज्ञो लोकेषु भूत्वा संसर्गमाचरेत् ॥ १३-२१२-३९ (८९६३४)
स्वतश्च परतश्चैव परस्परभयादपि ।
अमानुषभयेभ्यश्च स्वाः प्रजाः पालयेन्नृपः ॥ १३-२१२-४० (८९६३५)
लुब्धाः कठोराश्चाप्यस्य मानवा दस्युवृत्तयः ।
निग्राह्या एव ते राज्ञा सङ्गृहीत्वा यतस्ततः ॥ १३-२१२-४१ (८९६३६)
कुमारान्विनयोद्बोधैर्जन्मप्रभृति योजयेत् ।
तेषामात्मगुणोपेतं यौवराज्येन योजयेत् ॥ १३-२१२-४२ (८९६३७)
प्रकृतीनां यथा न स्याद्राज्यभ्रंशो भवेद्भयम् ।
एतत्संचिन्तयेन्नित्यं तद्विधानं तथार्हति ॥ १३-२१२-४३ (८९६३८)
अराजकं क्षणमपि राज्यं न स्याद्धि शोभने ।
आत्मनोऽनुविधानाय यौवराज्यं सदेष्यते ॥ १३-२१२-४४ (८९६३९)
कुलजानां च वैद्यानां श्रोत्रियाणां तपस्विनाम् ।
अन्येषां वृत्तियुक्तानां विशेषं कर्तुमर्हति ॥ १३-२१२-४५ (८९६४०)
आत्मार्थं राज्यतन्त्रार्थं कोशार्थं च समाचरेत् ।
दुर्गाद्राष्ट्रात्समुद्राच्च वणिग्भ्यः पुरुषात्ययात् ॥ १३-२१२-४६ (८९६४१)
परात्मगुणसाराभ्यां भृत्यपोषणमाचरेत् ।
वाहनानां प्रकुर्वीत पोषणं योधकर्मसु ॥ १३-२१२-४७ (८९६४२)
सादरः सततं भूत्वा अवेक्षाव्रतमाचरेत् ।
चतुर्दा विभजेत्कोशं धर्मभृत्यात्मकारणात् ॥ १३-२१२-४८ (८९६४३)
आपदर्थं च नीतिज्ञो देशकालवशेन तु ।
अनाथान्व्यथितान्वृद्धान्स्वे देशे पोषयेन्नृपः ॥ १३-२१२-४९ (८९६४४)
सन्धिं च विग्रहं चैव तद्विशेषांस्तथा पारन् ।
यथावत्संविमृश्यैव बुद्धिपूर्वं समाचरेत् ॥ १३-२१२-५० (८९६४५)
सर्वेषां सम्प्रियो भूत्वा मण्डलं सततं चरेत् ।
शुभेष्वपि च कार्येषु च चैकान्तः समाचरेत् ॥ १३-२१२-५१ (८९६४६)
स्वतश्च परतश्चैव व्यसनानि विमृश्य सः ।
परेणि धार्मिकान्योगान्नातीयाद्द्वेषलोभतः ॥ १३-२१२-५२ (८९६४७)
रक्ष्यत्वं वै प्रजाधर्मः क्षत्रधर्मस्तु रक्षणम् ।
कुनृपैः पीडितास्तस्मात्प्रजाः सर्वत्र पालयेत् ॥ १३-२१२-५३ (८९६४८)
यात्राकालेऽनवेक्ष्यैव पश्चात्कोपफलोदयः ।
तद्युक्ताश्चापदश्चैव शासनादिति चिन्तयेत् ॥ १३-२१२-५४ (८९६४९)

व्यसनेभ्यो बलं रक्षेन्नयतो व्ययतोपि वा ।
प्रायशो वर्जयेद्युद्धं प्राणरक्षणकारणात् ॥ १३-२१२-५५ (८९६५०)
कारणादेवि योद्धव्यं नात्मनः परदोषतः ।
सुयुद्धे प्राणमोक्षश्च तस्य धर्माय इष्यते ॥ १३-२१२-५६ (८९६५१)
अभियुक्तो बलवता कुर्यादापद्विधिं नृपः ।
अनुनीय तथा सर्वान्प्रजानां हितकारणात् ॥ १३-२१२-५७ (८९६५२)
अन्यप्रकृतियुक्तानां राज्ञां वृत्तिविचारिणाम् ।
अन्यांश्चापत्प्रपन्नानां न तान्संयोक्तुमर्हति ॥ १३-२१२-५८ (८९६५३)
शुभाशुभं यदा देवि व्रतं तूभयसाधनम् ।
आत्मैव तच्छुभं कुर्यादशुभं योजयेत्परान्। १३-२१२-५९ (८९६५४)
एवमुद्देशतः प्रोक्तमलेपत्वं यथा भवेत् ।
एष देवि समासेन राजधर्मः प्रकीर्तितः ॥ १३-२१२-६० (८९६५५)
एवं संवर्तमानस्तु दण्डयन्भर्त्सयन्प्रजाः ।
निष्कल्मषमवाप्नोति पद्मपत्रमिवाम्भसा ॥ १३-२१२-६१ (८९६५६)
एवं संवर्तमानस्य कालधर्मो यदा भवेत् ।
स्वर्गलोके तदा राजा त्रिदशैः सह तोष्यते ॥ १३-२१२-६२ (८९६५७)
द्विविधं राज्यवृत्तं च न्यायभाग्यसमन्वितम् ।
एवं न्यायानुगं वृत्तं कथितं ते शुभेक्षणे ॥ १३-२१२-६३ (८९६५८)
राज्यं न्यायानुगं तात बुद्धिशास्त्रानुगं भवेत् ।
धर्म्यं पथ्यं यशस्यं च स्वर्ग्यं चैव तथा भवेत् ॥ १३-२१२-६४
(८९६५९)
राज्यं भाग्यानुगं नाम अयथावत्प्रदृश्यते ।
तत्तु शास्त्रविनिर्मुक्तं सतां कोपकरं भवेत् ।
अधर्म्यमयशस्यं च दुरन्तं च भवेद्ध्रुवम् ॥ १३-२१२-६५ (८९६६०)
यत्र स्वच्छन्दतः सर्वं क्रियते कर्म राजभिः ।
तत्र भाग्यवशाद्भृत्या लभन्ते न विशेषतः ॥ १३-२१२-६६ (८९६६१)
यत्र दण्ड्या न दण्ड्यन्ते पूज्यन्ते वा नराधमाः ।
यत्र सन्तोपि हन्यन्ते तत्र भाग्यानुगं भवेत् ॥ १३-२१२-६७ (८९६६२)
शुभाशुभं यथा यत्र विपरीतं प्रदृश्यते ।
राज्ञि चासुरपक्षे तु तत्र भाग्यानुगं भवेत् ॥ १३-२१२-६८ (८९६६३)
भाग्यानुगे तु राजानो वर्तमाना यथातथा ।
प्राप्याकीर्तिमनर्थं च इह लोके शुभेक्षणे ॥ १३-२१२-६९ (८९६६४)
परत्र सुमहाघोरं तमः प्राप्य दुरत्ययम् ।
तिष्ठन्ति नरके देवि प्रलयान्तादिति स्थितिः ॥ १३-२१२-७० (८९६६५)
मोक्षं दुष्कृतिनां चापि विद्यते कालपर्ययात् ।
नास्त्येव मोक्षणं देवि राज्ञां दुष्कृतिकारिणाम् ॥ १३-२१२-७१ (८९६६६)

एतत्सर्वं समासेन राजवृत्तं शुभाशुभम् ।
कथितं ते महाभागे भूयः श्रोतुं किमिच्छसि ॥ ॥१३-२१२-७२ (८९६६७)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
द्वादशाधिकद्विशततमोऽध्यायः ॥ २१२ ॥

---

अनुससनपर्व-अध्यय२१३
॥ श्रीः ॥
१३.२१३. अध्यायः २१३

अथ दानधर्मपर्व ॥ १ ॥
Mahabharata - Anushaasana Parva - Chapter Topics
ईश्वरेण हिंसाया दुस्त्यजत्वनिरूपणपूर्वकमहिंसाप्रशंसनम् ॥ १ ॥

Mahabharata - Anushaasana Parva - Chapter Text

उमोवाच ।
देवदेव महादेव सर्वदेवनमस्कृत ।
यानि धर्मरहस्यानि श्रोतुमिच्छामि तान्यहम् ॥ १३-२१३-१ (८९६६८)
महेश्वर उवाच। १३-२१३-२क्ष् (७४८६)
रहस्यं श्रूयतां देवि मानुषाणां सुखावहम् ।
नपुंसकेषु वन्ध्यासु वियोनौ पृथिवीतले ॥ १३-२१३-२ (८९६६९)
उत्सर्गो रेतसस्तेषु न कार्यो धर्मकाङ्क्षिभिः ।
एतेषु बीजं प्रक्षिप्तं न च रोहति वै प्रिये ॥ १३-२१३-३ (८९६७०)
यत्र वा तत्र वा बीजं धर्मार्थी नोत्सृजेत्पुनः ।
नरो बीजविनाशेन लिप्यते ब्रह्महत्यया ॥ १३-२१३-४ (८९६७१)
अहिंसा परमो धर्म अहिंसा परमं सुखम् ।
अहिंसा धर्मशास्त्रेषु सर्वेषु परमं पदम् ॥ १३-२१३-५ (८९६७२)
देवतातिथिशुश्रूषा सततं धर्मशीलता ।
वेदाध्ययनयज्ञाश्च तपो दानं दमस्तथा ॥ १३-२१३-६ (८९६७३)
आचार्यगुरुशुश्रूषा तीर्थाभिगमनं तथा ।
अहिंसाया वरारोहे कलां नार्हन्ति षोडशीम् ॥ १३-२१३-७ (८९६७४)
एतत्ते परमं गुह्यमाख्यातं परमार्चितम् ॥ १३-२१३-८ (८९६७५)
उमोवाच। १३-२१३-९क्ष् (७४८७)
यद्यधर्मस्तु हिंसायां किमर्थममरोत्तम ।
यज्ञेषु पशुबन्धेषु हन्यन्ते पशवो द्विजैः ॥ १३-२१३-९ (८९६७६)

कथं च भगवन्भूयो हिंसमाना नराधिपाः ।
स्वर्गं सुदुर्गमं यान्ति तदा स्म रिपुसूदन ॥ १३-२१३-१० (८९६७७)
यस्यैव गोसहस्राणि विंशतिः स्वादिकानि तु ।
अहन्यहनि हन्यन्ते द्विजानां मांसकारणात् ॥ १३-२१३-११ (८९६७८)
समांसं तु स दत्त्वाऽन्नं रन्तिदेवो नराधिपः ।
कथं स्वर्गमनुप्राप्तः परं कौतूहलं हि मे ॥ १३-२१३-१२ (८९६७९)
किन्तु धर्मं न शृण्वन्ति न श्रद्दधति वा श्रुतम् ।
मृयां वै विनिर्गत्य मृगान्हन्ति नराधिपाः ॥ १३-२१३-१३ (८९६८०)
एतत्सर्वं विशेषेण विस्तरेण वृषध्वज ।
श्रोतुमिच्छामि सर्वज्ञ तत्त्वमद्य ममोच्यताम् ॥ १३-२१३-१४ (८९६८१)
ईश्वर उवाच। १३-२१३-१५क्ष् (७४८८)
बहुमान्यमिदं देवि नास्ति कश्चिदहिंसकः ।
श्रूयतां कारणं चात्र यथाऽनेकविधं भवेत् ॥ १३-२१३-१५ (८९६८२)
दृश्यते चापि लोकेऽस्मिन्न हि कश्चिदहिंसकः ।
धरणीसंश्रिता देवि सुसूक्ष्मांश्चैव मध्यमान् ॥ १३-२१३-१६ (८९६८३)
सञ्चरंश्चरणाभ्यां च हन्ति जीवाननेकशः ।
अज्ञानाज्ज्ञानतो वाऽपि यो जीवः शयनासनात् ।
उपाविशञ्शयानश्च हन्ति जीवाननेकशः ॥ १३-२१३-१७ (८९६८४)
शिरोवस्त्रेषु ये जीवा नरणां स्वेदसम्भवाः ।
तांश्च हिंसन्ति सततं दंशांश्च मशकानपि ॥ १३-२१३-१८ (८९६८५)
जले जीवास्तथाऽऽकाशे पृथिवी जीवमालिनी ।
एवं जीवाकुले लोके कोसौ स्याद्यस्त्वहिंसकः ॥ १३-२१३-१९ (८९६८६)
स्थूलमध्यमसूक्ष्मैश्च स्वेदवारिमहीरुहैः ।
दृश्यरूपैरदृश्यैश्च नानारूपैश्च भामिनि ॥ १३-२१३-२० (८९६८७)
जीवैस्ततमिदं सर्वमाकाशं पृथिवी तथा ।
अन्योन्यं ते च हिंसन्ति दुर्बलान्बलवत्तराः ॥ १३-२१३-२१ (८९६८८)
मत्स्या मत्स्यान्ग्रसन्तीह खगाश्चैव खगांस्तथा ।
सरीसृपैश्च जीवन्ति कपोताद्या विहङ्गमाः ॥ १३-२१३-२२ (८९६८९)
भूचराः खेचराश्चान्ये क्रव्यादा मांसगृद्धिनः ।
समृद्धाः परमांसैस्तु भक्षेरंस्तेऽपि चापरैः ॥ १३-२१३-२३ (८९६९०)
सत्वैः सत्वानि जीवन्ति शतशोथ सहस्रशः ।
अपीडयित्वा नैवान्यं जीवा जीवन्ति सुन्दरि ॥ १३-२१३-२४ (८९६९१)
स्थूलकायस्य सत्वस्य खरस्य महिषस्य च ।
जीवस्यैकस्य मांसेन पयसा रुधिरेण वा ।
तृप्यन्ते बहवो जीवाः क्रव्यादा मांसजीविनः ॥ १३-२१३-२५ (८९६९२)
एको जीवसहस्राणि सदा खादति मानवः ।

अन्नाद्यस्य च भोगेन दान्यसंज्ञानि यानि तु ॥ १३-२१३-२६ (८९६९३)
मांसधान्यैः सबीजैश्च भोजनं परिवर्जयेत् ॥ १३-२१३-२७ (८९६९४)
त्रिरात्रं पञ्चरात्रं वा सप्तरात्रं तथाऽपि वा ।
धान्यानि यो न हिंसेताहिंसकः परिकीर्तितः ॥ १३-२१३-२८ (८९६९५)
नाश्नाति यावतो जीवस्तावत्पुण्येन युज्यते ।
आहारस्य वियोगेन शरीरं परितप्यते ॥ १३-२१३-२९ (८९६९६)
तप्यमाने शरीरे तु शरीरे चेन्द्रियाणि तु ।
वशे तिष्ठन्ति सुश्रोणि नृपाणामिव किंकराः ॥ १३-२१३-३० (८९६९७)
निरुणद्धीन्द्रियाण्येव स सुखी स विचक्षणः ।
इन्द्रियाणां निरोधेन दानेन च दमेन च ।
नरः सर्वमवाप्नोति मनसा यद्यधिच्छति ॥ १३-२१३-३१ (८९६९८)
एवं मूलमर्हिसाया उपवासः प्रकीर्तितः ॥ १३-२१३-३२ (८९६९९)
आहारं कुरुते यस्तु भूमिमाक्रमते च यः ।
सर्वे ते हिंसका देवि यथा धर्मेषु दृश्यते ॥ १३-२१३-३३ (८९७००)
यथैवाहिंसको देवि तत्वतो ज्ञायते नरः ।
तथा ते सम्प्रवक्ष्यामि श्रूयतां धर्मचारिणि ॥ १३-२१३-३४ (८९७०१)
फलानि मूलपर्णानि भस्म वा योपि भक्षयेत् ।
अलेख्यमिव निश्चेष्टं तं मन्येऽहमहिंसकम् ॥ १३-२१३-३५ (८९७०२)
आरम्भा हिंसया युक्ता धूमेनाग्निरिवावृताः ।
तस्माद्यस्तु निराहारस्तं मन्येऽहमहिंसकम् ॥ १३-२१३-३६ (८९७०३)
यस्तु सर्वं समुत्सृज्य दीक्षित्वा नियतः शुचिः ।
कृत्वा मण्डलमर्यादां सङ्कल्पं कुरुते नरः ॥ १३-२१३-३७ (८९७०४)
यावज्जीवमनाशित्वा कालकाङ्क्षी दृढव्रतः ।
ध्यानेन तपसा युक्तस्तं मन्येऽहमहिंसकम् ॥ १३-२१३-३८ (८९७०५)
अन्यथा हि न पश्यामि नरो यः स्यादहिंसकः ।
बहु चिन्त्यमिदं देवि नास्ति कश्चिदहिंसकः ॥ १३-२१३-३९ (८९७०६)
यतो यतो महाभागे हिंसा स्यान्महती ततः ।
निवृत्तो मधुमांसाभ्यां हिंसा त्वल्पतरा भवेत् ॥ १३-२१३-४० (८९७०७)
निवृत्तिः परमो धर्मो निवृत्तिः परमं सुखम् ।
मनसा विनिवृत्तानां धर्मस्य निचयो महान् ॥ १३-२१३-४१ (८९७०८)
मनःपूर्वागमा धर्मा अधर्माश्च न संशयः ।
मनसा बध्यते चापि मुच्यते चापि मानवः ॥ १३-२१३-४२ (८९७०९)
निगृहीते भवेत्स्वर्गो विसृष्टे नरको ध्रुवः ।
घातकः शस्त्रमुद्यम्य मनसा चिन्तयेद्यदि ॥ १३-२१३-४३ (८९७१०)
आयुःक्षयं गतेऽन्येषां मृते तु प्रहराम्यहम् ।
इति यो घातको हन्यान्न स पापेन लिप्यते ॥ १३-२१३-४४ (८९७११)

विधिना निहताः पूर्वं निमित्तं स तु घातकः ।
विधिर्हि बलवान्देवि दुस्त्यजं वै पुराकृतम् ॥ १३-२१३-४५ (८९७१२)
जीवाः पुराकृतेनैव तिर्यग्योनिसरीसृपाः ।
नानायोनिषु जायन्ते स्वकर्मपरिवेष्टिताः ॥ १३-२१३-४६ (८९७१३)
नानाविधविचित्राङ्गा नानाशौर्यपराक्रमाः ।
नानाभूमिप्रदेशेषु नानाहारश्च जन्तवः ॥ १३-२१३-४७ (८९७१४)
जायमानस्य जीवस्य मृत्युः पूर्वं प्रजायते ।
सुखं वा यदि वा दुःखं यथापूर्वं कृतं तु वा ॥ १३-२१३-४८ (८९७१५)
प्राप्नुवन्ति नरा मृत्युं यदा यत्र च येन च ।
नातिक्रान्तुं हि शक्यः स्यान्निदेशः पूर्वकर्मणः ॥ १३-२१३-४९ (८९७१६)
अप्रमत्तः प्रमत्तेषु विधिर्जागर्ति जन्तुषु ।
न हि तस्य प्रियः कश्चिन्न द्वेष्यो न च मध्यमः ॥ १३-२१३-५० (८९७१७)
समः सर्वेषु भूतेषु कालः कालं निरीक्षते ।
गतायुषो ह्याक्षिपते जीवः सर्वस्य देहिनः ॥ १३-२१३-५१ (८९७१८)
यथा येन च मर्तव्यं नान्यथा म्रियते हि सः ।
दृश्यते न च लोकेऽस्मिन्भूतो भव्यो द्विधा पुनः ॥ १३-२१३-५२ (८९७१९)
विज्ञानैर्विक्रमैर्वाऽपि नानामन्त्रौषधैरपि ।
यो हि वञ्चयितुं शक्तो विधेस्तु नियतां गतिम् ॥ १३-२१३-५३ (८९७२०)
एष तेऽभिहितो देवि जीवहिंसाविधिक्रमः ॥ ॥ १३-२१३-५४ (८९७२१)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
त्रयोदसाधिकद्विशततमोऽध्यायः ॥ २१३ ॥

---

अनुससनपर्व-अध्यय२१४
॥ श्रीः ॥
१३.२१४. अध्यायः २१४

अथ दानधर्मपर्व ॥ १ ॥
Mahabharata - Anushaasana Parva - Chapter Topics
महेश्वरेण पार्वतींप्रति सदृष्टान्तप्रदर्शनं
सर्वैर्विधेर्दुरतिक्रमत्वनिरूपणम् ॥ १ ॥
तता योधधर्मकथनपूर्वकं राज्ञां योधानां च
प्राणयज्ञप्रशंसनम् ॥ २ ॥

Mahabharata - Anushaasana Parva - Chapter Text

महेश्वर उवाच ।
श्रूयतां कारणं देवि यथा हि दुरतिक्रमः ।
विधिः सर्वेषु भूतेषु मर्तव्ये समुपस्थिते ॥ १३-२१४-१ (८९७२२)
आयुःक्षयेणोपहिताः समागम्य वरानने ।
कीटाः पतङ्गा बहवः स्थूलाः सूक्ष्माश्च मध्यमाः। ७-२१४-२द्च्
प्रज्वलत्सु प्रदीपेषु स्वयमेव पतन्ति ते ॥ १३-२१४-२ (८९७२३)
बहूनां मृगयूथानां नानावननिषेविणाम् ।
यस्तु कालं गतस्तेषां स वै पाशेन बध्यते ॥ १३-२१४-३ (८९७२४)
सूनार्थं देवि बद्धानां क्षीणायुर्यो निबध्यते ।
अवशो घातकस्याथ हस्तं तदहरेति सः ॥ १३-२१४-४ (८९७२५)
यथा पक्षिगणाः क्षिप्रं विस्तीर्णाकाशगामिनः ।
क्षीणायुषो निबध्यन्ते शक्ता अपि पलायितुम् ॥ १३-२१४-५ (८९७२६)
यथा वारिचरा मीना बहवोऽम्बुजजातयः ।
जालं समधिरोहन्ति स्वयमेव विधेर्वशात् ॥ १३-२१४-६ (८९७२७)
शल्यकस्य च जिह्वाग्रं स्वयमारुह्य शोभने ।
आयुःक्षयेणोपहता निबध्यन्ते सरीसृपाः ॥ १३-२१४-७ (८९७२८)
कृषतां कर्षकाणां च नास्ति बुद्धिर्विहिंसने ।
अथैषां लाङ्गलाग्राद्यैर्हन्यन्ते जन्तवोऽक्षयाः ॥ १३-२१४-८ (८९७२९)
पादाग्रेणैव चैकेन यां हिंसां कुरुते नरः ।
मातङ्गोपि न तां कुर्यात्क्रूरो जन्मशतैरपि ॥ १३-२१४-९ (८९७३०)
म्रियन्ते यैर्हि मर्तव्यं न तान्घ्नन्ति कृषीवलाः ।
कृषामीति मनस्तस्य नास्ति चिन्ता विहिंसने ॥ १३-२१४-१० (८९७३१)
तस्माज्जीवसहस्राणि हत्वाऽपि न स लिप्यते ।
विधिना स हतः पूर्वं पश्चात्प्राणि विपद्यते ।
एवं सर्वेषु भूतेषु विधिर्हि दुरतिक्रमः ॥ १३-२१४-११ (८९७३२)
गतायुषा मुहूर्तं तु न शक्यमुपजीवितुम् ।
जीवितव्ये न मर्तव्यं न भूतं न भविष्यति ॥ १३-२१४-१२ (८९७३३)
शुभाशुभं कर्मफलं न शक्यमतिवर्तितुम् ।
तथा ताभिश्च मर्तव्यं मोक्तव्याश्चैव तास्तथा ॥ १३-२१४-१३ (८९७३४)
रन्तिदेवस्य गावो वै विधेर्हि वशमागताः ।
स्वयमायान्ति गावो वै हन्यन्ते यत्र सुन्दरि ॥ १३-२१४-१४ (८९७३५)
गवां वै हन्यमानानां रुधिरप्रभवा नदी ।
चर्मण्वतीति विख्याता खुरशृङ्गास्थिदुर्गमा ॥ १३-२१४-१५ (८९७३६)
रुधिरं तां नदीं प्राप्य तोयं भवति शोभने ।
मेध्यं पुण्यं पवित्रं च गन्धवर्णरसैर्युतम् ॥ १३-२१४-१६ (८९७३७)
तत्राऽभिषेकं कुर्वन्ति कृतजप्याः कृताह्निकाः ।

द्विजा देवगणाश्चापि लोकपाला महेश्वराः ॥ १३-२१४-१७ (८९७३८)
तस्य राज्ञः सदा सत्रे स्वयमागम्य सुन्दरि ।
विधिना पूर्वदृष्टेन तन्मांसमुपकल्पितम् ।
मन्त्रवत्प्रतिगृह्णन्ति यतान्यायं यताविधि ॥ १३-२१४-१८ (८९७३९)
समांसं च सदा ह्यन्नं शतशोऽथ सहस्रशः ।
भुञ्जानानां द्विजातीनामस्तमेति दिवाकरः ॥ १३-२१४-१९ (८९७४०)
गावो यास्तत्र हन्यन्ते राज्ञस्तस्य क्रतूत्तमे ।
पठ्यमानेषु मन्त्रेषु यथान्यायं यथाविधि ॥ १३-२१४-२० (८९७४१)
ताश्च स्वर्गं गता गावो रन्तिदेवश्च पार्थिवः ।
सदा सत्रविधानेन सिद्धिं प्राप्तो नरोत्तमः ॥ १३-२१४-२१ (८९७४२)
अथ यस्तु सहायार्थमुक्तः स्यात्पार्थिवैर्नरैः ।
भोगानां संविभागेन वस्त्राभरणभूषणैः ॥ १३-२१४-२२ (८९७४३)
सहभोजनसम्बद्धैः सत्कारैर्विविधैरपि ।
सहायकाले सम्प्राप्ते सङ्ग्रामे शस्त्रमुद्धरेत् ॥ १३-२१४-२३ (८९७४४)
व्यूढानीके यथा सास्त्रं सेनयोरुभयोरपि ।
हस्त्यश्वरथसम्पूर्णे पदातिबलसङ्कुले ।
चामरच्छत्रशबले ध्वजचर्मायुधोज्ज्वले ॥ १३-२१४-२४ (८९७४५)
शक्तितोमरकुन्तासिशूलमुद्गरपाणिभिः ।
कूटमुद्गरचापेषु मुसुण्ठीजुष्टमुष्टिभिः ॥ १३-२१४-२५ (८९७४६)
भिण्डिपालगदाचक्रप्रासकर्पटधारिभिः ।
नानाप्रहरणैर्योधैः सेनयोरुभयोरपि ।
युद्धशौण्डैः प्रगर्जद्भिर्वृषेषु वृषभैरिव ॥ १३-२१४-२६ (८९७४७)
शङ्खदुन्दुभिनादेन नानातूर्यरवेण च ।
हयहेषितशब्देन कुञ्जराणां तु बृंहितैः ॥ १३-२१४-२७ (८९७४८)
योधानां सिंहनादैश्च घण्टानां शिञ्जितस्वनैः ।
दिशश्च विदिशश्चैव समन्ताद्बधिरीकृताः ॥ १३-२१४-२८ (८९७४९)
ग्रीष्मान्तेष्विव गर्जद्भिर्नभशीव बलाहकैः ।
रथनेमिखुरोद्धूतैररुणै रणरेणुभिः ।
कपिलाभिरिवाकाशे छाद्यमाने समन्ततः ॥ १३-२१४-२९ (८९७५०)
प्रवृत्ते शस्त्रसम्पाते योधानां तत्र सेनयोः ।
तेषां प्रहारक्षतजं रक्तचन्दनसन्निभम् ॥ १३-२१४-३० (८९७५१)
तेषामस्राणि गात्रेभ्य स्रवन्ते रणमूर्धनि ।
पलाशाशोकपुष्पाणां जङ्गमा इव राशयः ॥ १३-२१४-३१ (८९७५२)
रणे समभिवर्तन्त उद्यतायुधपाणयः ।
शोभमाना रणे शूरा आह्वयन्तः परस्परम् ॥ १३-२१४-३२ (८९७५३)
हन्यमानेष्वभिघ्नत्सु शूरेषु रणसङ्कटे ।

पृष्ठं दत्त्वा च ये तत्र नायकस्य नराधमाः ॥१३-२१४-३३ (८९७५४)
अनाहता निवर्तन्ते नायके चाप्यनीप्सति ।
ते दुष्कृतं प्रपद्यन्ते नायकस्याखिलं नराः ।
यच्चास्ति सुकृतं तेषां युज्यते तेन नायकः ॥ १३-२१४-३४ (८९७५५)
अहिंसा परमो धर्म इति येऽपि नरा विदुः ।
सङ्ग्रामेषु न युध्यन्ते भृत्याश्चैवानुरूपतः ।
नरकं यान्ति ते घोरं भर्तृपिण्डापहारिणइः ॥ १३-२१४-३५ (८९७५६)
यस्तु प्राणान्परित्यज्य प्रविशेदुद्यतायुधः ।
सङ्ग्राममग्निप्रतिमं पतह्ग इव निर्भयः ।
स्वर्गमाविशते प्रेत्य ज्ञात्वा योधस्य निश्चयम् ॥ १३-२१४-३६ (८९७५७)
आविष्टश्चैव सत्त्वेन सघृणो जायते नरः ।
प्रहारैर्नन्दयेद्देवि सत्वेनाधिष्ठितो हि सः ।
प्रहारव्यथितश्चैव न वैक्लब्यमुपैति सः ॥ १३-२१४-३७ (८९७५८)
यस्तु स्वं नायकं रक्षेदतिघोरे रणाङ्कणे ।
तापयन्नरिसैन्यानि सिंहो मृगगणानिव ।
आदित्य इव मध्याह्ने दुर्निरीक्ष्यो रणाजिरे ॥ १३-२१४-३८ (८९७५९)
निर्दयो यस्तु सङ्ग्रामे प्रहरन्नुद्यतायुधः ।
यजते स तु पूतात्मा सङ्ग्रामेण महाक्रतुम् ॥१३-२१४-३९ (८९७६०)
चर्म कृष्णाजिनं तस्य दन्तकाष्ठं धनुः स्मृतम् ।
रथो वेदिर्ध्वजो यूपः कुशाश्च रथरश्मयः ॥१३-२१४-४० (८९७६१)
मानो दर्पस्त्वहङ्कारस्त्रयस्त्रेताग्नयः स्मृताः ।
प्रमोदस्च स्रुवस्तस्य उपाध्यायो हि सारथिः ॥१३-२१४-४१ (८९७६२)
स्रुग्भाण्डं चापि यत्किञ्चिद्यज्ञोपकरणानि च ।
आयुधान्यस्य तत्सर्वं समिधः सायकाः स्मृताः ॥१३-२१४-४२ (८९७६३)
स्वेदस्रवश्च गात्रेभ्यः क्षौद्रं तस्य यशस्विनः ।
पुरोडाशा नृशीर्षाणि रुधिरं चाहुतिः स्मृता ।
तूणाश्चैव चरुर्ज्ञेया वसोर्धारा वसाः स्मृताः ॥ १३-२१४-४३ (८९७६४)
क्रव्यादा भूतसङ्घाश्च तस्मिन्यज्ञे द्विजतयः ।
तेषां भक्षान्नपानानि हता नृगजवाजिनः ।
भुञ्जते ते यथाकामं यता यज्ञे किमिच्छति ॥ १३-२१४-४४ (८९७६५)
निहतानां तु योधानां वस्त्राभरणभूषणम् ।
हिरण्यं च सुवर्णं च यद्वै यज्ञस्य दक्षिणा ॥१३-२१४-४५ (८९७६६)
यस्तत्र हन्यते देवि गजस्कन्धगतो नरः ।
ब्रह्मलोकमवाप्नोति रणेष्वभिमुखो हतः ॥१३-२१४-४६ (८९७६७)
रथमध्यगतो वाऽपि हयपृष्ठगतोपि वा ।
हन्यते यस्तु सङ्ग्रामे शक्रलोके महीयते ॥१३-२१४-४७ (८९७६८)

स्वर्गे हताः प्रपूज्यते हन्ता त्वत्रैव पूज्यते ।
द्वावेतौ सुखमेधेते हन्ता यश्चैव हन्यते ॥ १३-२१४-४८ (८९७६९)
तस्मात्सङ्ग्राममासाद्य प्रहर्तव्यमभीतवत् ॥ १३-२१४-४९ (८९७७०)
निर्भयो यस्तु सङ्ग्रामे यस्तु सङ्ग्रामे प्रहरेदुद्यतायुधः ।
यथा नदीसहस्राणि प्रविष्टानि महोदधिम् ॥ १३-२१४-५० (८९७७१)
तथा सर्वे न सन्देहो धर्मा धर्मभृतांवरम् ।
प्रविष्टा राजधर्मेण आचारविनयस्तथा ॥ १३-२१४-५१ (८९७७२)
वेदोक्ताश्चैव ये धर्माः पाषण्डेषु च कीर्तिताः ।
तथैव मानुषा धर्मा धर्माश्चान्ये तथेतरे ॥ १३-२१४-५२ (८९७७३)
देशजातिकुलानां च ग्रामधर्मास्तथैव च ।
ये धर्माः पार्वतीयेषु ये धर्माः पत्तनादिषु ।
तेषां पूर्वप्रवृत्तानां कर्तव्यं परिरक्षणम् ॥ १३-२१४-५३ (८९७७४)
धर्म एव हतो हन्ति धर्मो रक्षति रक्षितः ।
तस्माद्धर्मो न हन्तव्यः पार्थिवेन विशेषतः ॥ १३-२१४-५४ (८९७७५)
प्रजाः पालयते यत्र धर्मेण वसुधाधिपः ।
षट्कर्मनिरता विप्राः पूज्यन्ते पितृदेवताः ॥ १३-२१४-५५ (८९७७६)
नैव तस्मिन्ननावृष्टिर्न रोगा नाप्युपद्रवाः ।
धर्मशीलाः प्रजाः सर्वाः स्वधर्मनिरते नृपे ॥ १३-२१४-५६ (८९७७७)
एष्टव्यः सततं देवि युक्ताचारो नराधिपः ।
छिद्रज्ञश्चैव शत्रूणामप्रमत्तः प्रतापवान् ॥ १३-२१४-५७ (८९७७८)
शूद्राः पृथिव्यां बहवो राज्ञां बहुविनाशकाः ।
तस्मात्प्रमादं सुश्रोणि न कुर्यात्पण्डितो नृपः ॥ १३-२१४-५८ (८९७७९)
तेषु मित्रेषु त्यक्तेषु तथा मर्त्येषु हस्तिषु ।
विस्रम्भो नोपगन्तव्यः स्नानपानेषु नित्यशः ॥ १३-२१४-५९ (८९७८०)
राज्ञो वल्लभतामेति कुलं भावयते स्वकम् ।
यस्तु राष्ट्रहितार्थाय गोब्राह्मणकृते तथा ।
बन्दीग्रहाय मित्रार्थे प्राणांस्त्यजति दुस्त्यजान् ॥ १३-२१४-६० (८९७८१)
सर्वकामदुघां धेनुं धरणीं लोकधारिणीम् ।
समुद्रान्तां वरारोहे सशैलवनकाननाम् ॥ १३-२१४-६१ (८९७८२)
दद्याद्देवि द्विजातिभ्यो वसुपूर्णां वसुन्धराम् ।
न तत्समं वरारोहे प्राणत्यागी विशिष्यते ॥ १३-२१४-६२ (८९७८३)
सहस्रमपि यज्ञानां यजते च यतर्द्धिमान् ।
यज्ञैस्तस्य किमाश्चर्यं प्राणत्यागः सुदुष्करः ॥ १३-२१४-६३ (८९७८४)
तस्मात्सर्वेषु यज्ञेषु प्राणयज्ञो विशिष्यते ।
एवं सङ्ग्रामयज्ञास्ते यथार्थं समुदाहृताः ॥ ॥ १३-२१४-६४ (८९७८५)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
चतुर्दशाधिकद्विशततमोऽध्यायः ॥ २१४ ॥

---

अनुससनपर्व-अध्यय२१५
॥ श्रीः ॥
१३.२१५. अध्यायः २१५

अथ दानधर्मपर्व ॥ १ ॥
Mahabharata - Anushaasana Parva - Chapter Topics
ईश्वरेण पार्वतींप्रति राज्ञां मृगयायां मृगहिंसाया
धर्मत्वप्रतिपादनम् ॥ १ ॥
तथा सदृष्टान्तप्रदर्शनं ब्राह्मणमहिमप्रशो सनपूर्वकं
तेषाभदण्ड्यत्वकथनम् ॥ २ ॥
तथा सामान्येन राजधर्मकथनम् ॥ ३ ॥

Mahabharata - Anushaasana Parva - Chapter Text

महेश्वर उवाच ।
मृगयात्रां तु वक्ष्यामि शृणु तां धर्मिचारिणि ।
मृगान्हत्वा महीपालो यथा पापैर्न लिप्यते ॥ १३-२१५-१ (८९७८६)
निर्मानुषामिमां सर्वे मृगा इच्छन्ति मेदिनीम् ।
भक्षयन्ति च सस्यानि शासितव्या नृपेण ते ॥ १३-२१५-२ (८९७८७)
दुष्टानां शासनं धर्मः शिष्टानां परिपालनम् ।
कर्तव्यं भूमिपालेन नित्यं कार्येषु चार्जवम् ।
स्वर्गं मृगाश्च गच्छन्ति स्वयं नृपतिना हताः ॥ १३-२१५-३ (८९७८८)
यथा गावो ह्यगोपालास्तथा राष्ट्रमनायकम् ।
तस्मादंशास्तु देवानां गन्धर्वोरगरक्षसाम् ।
राज्ये नियुक्ता राष्ट्रेषु प्रजापालनकारणात् ॥ १३-२१५-४ (८९७८९)
अशिष्टशासने चैव शिष्टानां परिपालने ।
तेषां चर्यां प्रवक्ष्यामि श्रूयतामनुपूर्वशः ॥ १३-२१५-५ (८९७९०)
यथा प्रचरतां तेषां पार्थिवानां यशस्विनाम् ।
राष्ट्रं धर्मो धनं चैव यशः कीर्तिश्च वर्धते ॥ १३-२१५-६ (८९७९१)
नृपाणां पूर्वमेवायं धर्मो धर्मभृतांवर ।
सभाप्रपातटाकानि देवतायतनानि च ।
ब्राह्मणावसथाश्चैव कर्तव्या नृपसत्तमैः ॥ १३-२१५-७ (८९७९२)
ब्राह्मणा नावमन्तव्या भस्मच्छन्ना इवाग्नयः ।

कुलमुत्सादयेयुस्ते क्रोधाविष्टा द्विजातयः ॥१३-२१५-८ (८९७९३)
ध्मायमानो यता ह्यग्निर्निर्दहेत्सर्वमिन्धनम् ।
तथा क्रोधाग्निना विप्रा दहेयुः पृथिवीमिमाम् ।
न हि विप्रेषु क्रुद्धेषु राज्यं भुञ्जन्ति भूमिपाः ॥ १३-२१५-९ (८९७९४)
परिभूय द्विजान्मोहाद्वातापिनहुषादयः ।
सबन्धुमित्रा नष्टास्ते दग्धा ब्राह्मणमन्युभिः ।
शरीरं चापि शक्रस्य कृतं भगनिरन्तरम् ॥ १३-२१५-१० (८९७९५)
ततो देवगणाः सर्वे इन्द्रस्यार्थे महामुनिम् ।
प्रसादं कारयामासुः प्रणासस्तुतिवन्दनैः ॥१३-२१५-११ (८९७९६)
तेन प्रीतेन सुश्रोणि गौतमेन महात्मना ।
तच्छरीरं तु शक्रस्य सहस्रभगचिह्नितम् ।
कृतं नेत्रसहस्रेण क्षणेनैव निरन्तरम् ॥ १३-२१५-१२ (८९७९७)
छित्त्वा मेषस्य वृषणौ गौतमेनाभिमन्त्रितौ ।
इन्द्रस्य वृषणौ भूत्वा क्षिप्रं वै श्लेषमागतौ ॥१३-२१५-१३ (८९७९८)
एवं विप्रेषु क्रुद्धेषु देवराजः शतक्रतुः ।
अशक्तः शासितुं राज्यं किंपुनर्मानुषा भुवि ॥१३-२१५-१४ (८९७९९)
क्रोधाविष्टो दहेद्विप्रः शुष्केन्धनमिवानलः ।
भस्मीकृत्य जगत्सर्वं सृजेदन्यज्जगत्पुनः ॥१३-२१५-१५ (८९८००)
अदेवानपि देवान्स कुर्याद्देवानदेवताः ।
तस्मान्नोत्पादयेन्मन्युं मन्युप्रहरणा द्विजाः ॥१३-२१५-१६ (८९८०१)
महत्स्वप्यपराधेषु शासनं नार्हति द्विजः ।
न च शस्त्रनिपातानि न च प्राणैर्वियोजनम् ।
दृश्यते त्रिषु लोकेषु ब्राह्ममानामनिन्दिते ॥ १३-२१५-१७ (८९८०२)
क्रोधाश्च विपुला घोराः प्रसादाश्चाप्यनुत्तमाः ।
तस्मान्नोत्पादयेत्क्रोधं नित्यं पूज्या द्विजातयः ॥१३-२१५-१८ (८९८०३)
दृश्यते न स लोकेऽस्मिन्भूते वाऽथ भविष्यति ।
क्रुद्धेषु यो वै विप्रेषु राज्यं भुङ्क्ते नराधिपः ॥१३-२१५-१९ (८९८०४)
न चैवापहसेद्विप्रान्नि चैवोपालभेच्च तान् ।
कालमासाद्य कुप्येच्च काले कुर्यादनुग्रहम् ॥१३-२१५-२० (८९८०५)
सम्प्रहासश्च भृत्येषु न कर्तव्यो नराधिपैः ।
लघुत्वं चैव प्राप्नोति आज्ञा चास्य निवर्तते ॥१३-२१५-२१ (८९८०६)
भृत्यानां सम्प्रहासेन पार्थिवः परिभूयते ।
अयाच्यानि च याचन्ति अवक्तव्यं ब्रुवन्ति च ॥१३-२१५-२२ (८९८०७)
पूर्वमप्यर्पितैर्लोभैः परितोषं न यान्ति ते ।
तस्माद्भृत्येषु नृपतिः सम्प्रहासं विवर्जयेत् ॥१३-२१५-२३ (८९८०८)
न विश्वसेदविश्वस्ते विश्वस्ते नातिविश्वसेत् ।

सगोत्रेषु विशेषेण सर्वोपायैर्न विश्वसेत् ॥ १३-२१५-२४ (८९८०९)
विश्वासाद्भयमुत्पन्नं हन्याद्वृक्षमिवाशनिः ।
प्रमादाद्धन्यते राजा लोभेन च वशीकृतः ।
तस्मात्प्रमादं लोभं च न च कुर्यान्न विश्वसेत् ॥ १३-२१५-२५ (८९८१०)
भयार्तानां भयत्राता दीनानुग्रहकारणात् ।
कार्याकार्यविशेषज्ञो नित्यं राष्ट्रहिते रतः ॥ १३-२१५-२६ (८९८११)
सत्यसन्धः स्थितो राज्ये प्रजापालनतत्परः ।
अलुब्धो न्यायवादी च षड्भागमुपजीवति ॥ १३-२१५-२७ (८९८१२)
कार्याकार्यविशेषज्ञः सर्वं धर्मेण पश्यति ।
स्वराष्ट्रेषु दयां कुर्यादकार्ये न प्रवर्तते ॥ १३-२१५-२८ (८९८१३)
ये चैवैनं प्रशंसन्ति ये च निन्दन्ति मानवाः ।
शत्रुं च मित्रवत्पश्येदपराधविवर्जितम्। १३-२१५-२९ (८९८१४)
अपराधानुरूपेण दुष्टं दण्डेन शासयेत् ।
धर्मः प्रवर्तते तत्र यत्र दण्डरुचिर्नृपः ।
न धर्मो विद्यते तत्र यत्र राजा क्षमान्वितः ॥ १३-२१५-३० (८९८१५)
अशिष्टशासनं धर्मः शिष्टानां परिपालनम् ।
वध्यांश्च घातयेद्यस्तु अवध्यानपरिरक्षति ॥ १३-२१५-३१ (८९८१६)
अवध्या ब्राह्मणा गावो दूताश्चैव पिता तथा ।
विद्यां ग्राहयते यश्च ये च पूर्वोपकारिणः ।
स्त्रियश्चैव न हन्तव्या यच्च सर्वातिथिर्नरः ॥ १३-२१५-३२ (८९८१७)
धरणीं गां हिरण्यं च सिद्धान्नं च तिलान्घृतम् ।
ददन्नित्यं द्विजातिभ्यो मुच्यते राजकिल्बिषात् ॥ १३-२१५-३३ (८९८१८)
एवं चरति यो नित्यं राजा राष्ट्रहिते रतः ।
तस्य राष्ट्रं धनं धर्मो यशः कीर्तिश्च वर्धते ।
न च पापैर्न चानर्थैर्युज्यते स नराधिपः ॥ १३-२१५-३४ (८९८१९)
षड्भागमुपभुञ्जानः प्रजा राजा न रक्षति ।
स्वचक्रपरचक्राभ्यां धर्मैर्वा विक्रमेण वा ॥ १३-२१५-३५ (८९८२०)
निरुद्योगो नृपो यश्च परराष्ट्रनिघातने ।
स्वराष्ट्रं निष्प्रतापस्य परचक्रेण हन्यते ॥ १३-२१५-३६ (८९८२१)
यत्पापं सकलं राजा हतराष्ट्रः प्रपद्यते ॥
मातुलं भागिनेयं वा मातरं श्वशुरं गुरुम्। १३-२१५-३७ (८९८२२)
पितरं वर्जयित्वैकं हन्याद्धातकमागतम् ॥ १३-२१५-३८ (८९८२३)
स्वस्य राष्ट्रस्य रक्षार्थं युद्यमानश्च यो हतः ।
सङ्ग्रामे परचक्रेण श्रूयतां तस्य या गतिः ॥ १३-२१५-३९ (८९८२४)
विमानेन वरारोहे अप्सरोगणसेवितः ।
शक्रलोकमितो याति सङ्ग्रामे निहतो नृपः ॥ १३-२१५-४० (८९८२५)

यावन्तो रोमकूपाः स्युस्तस्य गात्रेषु सुन्दरि ।
तावद्वर्षसहस्राणि शक्रलोके महीयते ॥ १३-२१५-४१ (८९८२६)
यदि वै मानुषे लोके कदाचिदुपपद्यते ।
राजा वा राजमात्रो वा भूयो भवति वीर्यवान् ॥ १३-२१५-४२ (८९८२७)
तस्माद्यत्नेन कर्तव्यं स्वराष्ट्रपरिपालनम् ।
व्यवहाराश्च चारश्च सततं सत्यसन्धता ॥ १३-२१५-४३ (८९८२८)
अप्रमादः प्रमोदश्च व्यवसायेऽप्यचण्डता ।
भरणं चैव भृत्यानां वाहनानां च पोषणम् ॥ १३-२१५-४४ (८९८२९)
योधानां चैव सत्कारः कृते कर्मण्यमोघता ।
श्रेय एव नरेन्द्राणामिह चैव परत्र च ॥ ॥ १३-२१५-४५ (८९८३०)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
पञ्चदशाधिकद्विशततमोऽध्यायः ॥ २१५ ॥

Mahabharata - Anushaasana Parva - Chapter Footnotes

७-२१५-२३ पूर्वमप्युचितैर्लाभैरिति ठ पाठः ॥
७-२१५-३० नाधर्मो विद्यते तत्रेति थ पाठः ॥
७-२१५-३१ यो घातयेत् तस्याशिष्टशासनं धर्मं इत्यन्वयः ॥

---

अनुससनपर्व-अध्यय२१६
॥ श्रीः ॥
१३.२१६. अध्यायः २१६

अथ दानधर्मपर्व ॥ १ ॥

Mahabharata - Anushaasana Parva - Chapter Topics

महेश्वरेण पार्वतींप्रति त्रिवर्गनिरूपणम् ॥ १ ॥

Mahabharata - Anushaasana Parva - Chapter Text

महेश्वर उवाच ।
पशवः पशुबन्धेषु ये हन्यन्तेऽध्वरेषु च ।
यूपे निबध्य मन्त्रैश्च यथान्यायं यथाविधि ।
मन्त्राहुतिविपूतास्ते स्वर्गं यान्ति यशस्विनि ॥ १३-२१६-१ (८९८३१)
तर्पिता यज्ञभागेषु तेषां मांसैर्वरानने ।
अग्नयस्त्रिदशाश्चैव लोकपाला महेश्वराः। १३-२१६-२ (८९८३२)
तेषु तुष्टेषु जायेत यस्य यज्ञस्य यत्फलम् ।

तेन संयुज्यते देवि यजमानो न संशयः ॥१३-२१६-३ (८९८३३)
सपत्नीकः सपुत्रश्च पित्रा च भ्रातृभिः सह ।
ये तत्र दीक्षिता देवि सर्वे स्वर्गं प्रयान्ति ते ॥१३-२१६-४ (८९८३४)
एतत्ते सर्वमाख्यातं किं भूयः श्रोतुमिच्छसि ॥ १३-२१६-५ (८९८३५)
उमोवाच।१३-२१६-६क्ष् (७४८९)
भगवन्सर्वभूतेश शूलपाणे महाद्युते ।
श्रोतुमिच्छाम्यहं वृत्तं सर्वेषां गृहमेधिनाम् ॥१३-२१६-६ (८९८३६)
कीदृशं चरितं तेषां त्रिवर्गसहितं प्रभो ।
प्रत्यायतिः कथं तेषां जीवनार्थमुदाहृतम् ॥१३-२१६-७ (८९८३७)
वर्तमानाः कथं सर्वे प्राप्नुवन्त्युत्तमां गतिम् ।
एतत्सर्वं समासेन वक्तुमर्हसि मानदः ॥१३-२१६-८ (८९८३८)
महेश्वर उवाच।१३-२१६-९क्ष् (७४९०)
न्यायतस्त्वं महाभागे श्रोतुकामाऽसि भामिनि ।
प्रायशो लोकसद्वृत्तमिष्यते गृहवासिनाम् ॥१३-२१६-९ (८९८३९)
तेषां संरक्षणार्थाय राजानः संस्कृता भुवि ।
सर्वेषामथ मर्त्यानां वृत्तिं सामान्यतः शृणुः ॥१३-२१६-१० (८९८४०)
विद्या वार्ता च सेवा च कारुत्वं नाट्यता तथा ।
इत्यते जीवनार्थाय मर्त्यानां विहिताः प्रिये ॥१३-२१६-११ (८९८४१)
अपि जन्मफलं तावन्मानुषाणां विशेषतः ।
विहितं तत्स्ववृत्तेन तन्मे शृणु समाहिताः ॥१३-२१६-१२ (८९८४२)
कर्मक्षेत्रं हि मानुष्यं सुखदुःखयुताः परे ।
सर्वेषां प्राणिनां तस्मान्मानुष्ये वृत्तिरिष्यते ॥१३-२१६-१३ (८९८४३)
विद्यायोगस्तु सर्वेषां पूर्वमेव विधीयते ।
कार्याकार्यं विजानन्ति विद्यया देवि नान्यथा ॥१३-२१६-१४ (८९८४४)
विद्यया स्फीयते ज्ञानं ज्ञानात्तत्वनिदर्शनम् ।
दृष्टतत्वो विनीतात्मा सर्वार्थस्य च भाजनम् ॥१३-२१६-१५ (८९८४५)
शक्यं विद्याविनीतेन लोके संजीवनं शुभम् ॥ १३-२१६-१६ (८९८४६)
आत्मानं विद्यया तस्मात्पूर्वं वृत्वा तु भाजनम् ।
वश्येन्द्रियो जितक्रोधो भूतात्मानं तु भावयेत् ।
भावयित्वा तदाऽऽत्मानं पूजनीयः सतामपि ॥ १३-२१६-१७ (८९८४७)
कुलानुवृत्तं वृत्तं वा पूर्वमात्मा समाश्रयेत् ।
इत्येतत्कुलवासाय दानकर्म यथा पुरा ॥१३-२१६-१८ (८९८४८)
यदि चेद्विद्यया चैव वृत्तिं काङ्क्षेदथात्मनः ।
राजविद्यानुवादेऽपि लोकविद्यामथापि वा ।
तीर्थतश्चापि गृह्णीयाच्छुश्रूषादिगुणैर्युतः ॥ १३-२१६-१९ (८९८४९)
ग्रन्थतश्चार्थतश्चैव दृढं कुर्यात्प्रयत्नतः ।

एवं विद्याफलं देवि प्राप्नुयान्नान्यथा नरः ।
न्यायाद्विद्याफलानीच्छेदधर्मं तत्र वर्जयेत् ॥ १३-२१६-२० (८९८५०)
यदिच्छेद्वार्तया वृत्तिं काङ्क्षेत विधिपूर्वकम् ।
क्षेत्रे जलोपपन्ने च तद्योग्यां कृषिमाचरेत् ॥ १३-२१६-२१ (८९८५१)
वाणिज्यं वा यथाकालं कुर्यात्तद्देशयोगतः ।
मूल्यमर्थं प्रयासं च विचार्यैव व्ययोदयौ ॥ १३-२१६-२२ (८९८५२)
पशुसंजीवनं चैव दश गाः पोषयेद्ध्रुवम् ।
बहुप्रकारा बहवः पशवस्तस्य साधकाः ॥ १३-२१६-२३ (८९८५३)
यः कश्चित्सेवया वृत्तिं काङ्क्षेत मतिमान्नरः ।
यतात्मा श्रवणीयानां भवेद्वै सम्प्रयोजकः ॥ १३-२१६-२४ (८९८५४)
बुद्ध्या वा कर्मयोगाद्वा बोधनाद्वा समाश्रयेत् ।
मार्गतस्तु समाश्रित्य तदा तत्सम्प्रयोजयेत् ॥ १३-२१६-२५ (८९८५५)
यथायथा सु तुष्येत तथा संतोषयेत्तु तम् ।
अनुजीविगुणोपेतः कुर्यादात्मार्थमाश्रितम् ॥ १३-२१६-२६ (८९८५६)
विप्रियं नाचरेत्तस्य एषा सेवा समासतः ।
विप्रयोगात्पुरा तेन गतिमन्यां न लक्षयेत् ॥ १३-२१६-२७ (८९८५७)
कारुकर्म च नाट्यं च प्रायशो नीचयोनिषु ।
तयोरपि यथायोगं न्यायतः कर्मवेतनम् ॥ १३-२१६-२८ (८९८५८)
आजीवेभ्योऽपि सर्वभ्यः स्वार्जवाद्वेतनं हरेत् ।
अनार्जवादाहरतस्तत्तु पापाय कल्पते ॥ १३-२१६-२९ (८९८५९)
सर्वेषां पूर्वमारम्भांश्चिन्तयेन्नयपूर्वकम् ।
आत्मशक्तिमुपायांश्च देशकालौ च युक्तितः ।
कारणानि प्रयासं च प्रक्षेपं च फलोदयम् ॥ १३-२१६-३० (८९८६०)
एवमादीनि सञ्चिन्त्य दृष्ट्वा दैवानुकूलताम् ।
अतः परं समारम्भेद्यत्रात्महितमाहितम् ॥ १३-२१६-३१ (८९८६१)
वृत्तिमेव समासाद्य तां सदा परिपालयेत् ।
देवमानुषविघ्नेभ्यो न पुनर्मन्यते यथा ॥ १३-२१६-३२ (८९८६२)
पालयन्वर्धयन्भुञ्जंस्तां प्राप्य न विनाशयेत् ।
क्षीयते गिरिसङ्काशमश्नतो ह्यनपेक्षया ॥ १३-२१६-३३ (८९८६३)
आजीवेभ्यो धनं प्राप्य चतुर्धा विभजेद्बुधः ।
धर्मायार्थाय कामाय आपत्प्रशमनाय च ॥ १३-२१६-३४ (८९८६४)
चतुर्ष्वपि विभागेषु विधानं शृणु शोभने ॥ १३-२१६-३५ (८९८६५)
यज्ञार्थं चान्नदानार्थं दीनानुग्रहकारणात् ।
देवब्राह्मणपूजार्थं पितृपूजार्थमेव च ॥ १३-२१६-३६ (८९८६६)
मूलार्थं सन्निवासार्थं क्रियानित्यैश्च धार्मिकैः ।
एवमादिषु चान्येषु धर्मार्थं संत्यजेद्धनम् ॥ १३-२१६-३७ (८९८६७)

धर्मकार्ये धनं दद्यादनवेक्ष्य फलोदयम् ।
ऐश्वर्यस्थानलाभार्थं राजवाल्लभ्यकारणात् ॥ १३-२१६-३८ (८९८६८)
वार्तायां च समारम्भेऽमात्यमित्रपरिग्रहे ।
आवाहे च विवाहे च पुत्राणां वृत्तिकारणात् ॥ १३-२१६-३९ (८९८६९)
अर्थोदयसमावाप्तावनर्थस्य विघातने ।
एवमादिषु चान्येषु अर्थार्थं विसृजेद्धनम् ॥ १३-२१६-४० (८९८७०)
अनुबन्धं हेतुयुक्तं दृष्ट्वा वित्तं परित्यजेत् ।
अनर्थं बाधते ह्यर्थो अर्तं चैव फलान्युत ॥ १३-२१६-४१ (८९८७१)
नाधनाः प्राप्नुन्त्यर्थं नरा यत्नशतैरपि ।
तस्माद्धनं रक्षितव्यं दातव्यं च विधानतः ॥ १३-२१६-४२ (८९८७२)
शरीरपोषणार्थाय आहारस्य विशोषणे ।
नटक़क़क़क़क़धर्वसंयोगे कामयात्राविहारयोः ॥ १३-२१६-४३ (८९८७३)
मनःप्रियाणां संयोगे प्रीतिदाने तथैव च ।
एवमादिषु चान्येषु कामार्तं विसृजेद्धनम् ॥ १३-२१६-४४ (८९८७४)
विचार्य गुणदोषांस्तु त्रयाणां तत्र संत्यजेत् ।
चतुर्थं सन्निदध्याच्च आपदर्थं शुचिस्मिते ॥ १३-२१६-४५ (८९८७५)
राज्यभ्रंशविनाशार्थं दुर्भिक्षार्थं च शोभने ।
महाव्याधिविमोक्षार्थं वार्धकस्यैव कारणात् ॥ १३-२१६-४६ (८९८७६)
शत्रूणां प्रतिकाराय साहसैश्चाप्यमर्षणात् ।
प्रस्थाने चान्यदेशार्थमापदां विप्रमोक्षणे ।
एवमादि समुद्दिश्य सन्निदध्यात्स्वकं धनम् ॥ १३-२१६-४७ (८९८७७)
सुखमर्थवतां लोके कृच्छ्राणां विप्रमोक्षणम् ।
यस्य नास्ति धनं किञ्चित्तस्य लोकद्वयं न च ॥ १३-२१६-४८ (८९८७८)
अशनादिन्द्रियाणीव सर्वमर्थात्प्रवर्तते ।
निधानमात्रं यस्तेषामन्यथा विलयं व्रजेत् ।
एवं देवि मनुष्याणां लोकानां जीवनं प्रति ॥ १३-२१६-४९ (८९८७९)
एवं लोकस्य वृत्तस्य लोकवृत्तं पुनः शृणु ।
धन्यं यशस्यमायुष्यं स्वर्ग्यं च परमं यशः ॥ १३-२१६-५० (८९८८०)
त्रिवर्गो हि वशे युक्तः सर्वेषां संविधीयते ।
तथा संवर्तमानास्तु लोकयोर्हितमाप्नुयुः ॥ १३-२१६-५१ (८९८८१)
काल्योत्थानं च शौचं च देवब्राह्मणभक्तितः ।
गुरुणामेव शुश्रूषा ब्राह्मणेष्वभिवादनम् ॥ १३-२१६-५२ (८९८८२)
प्रत्युत्थानं च वृद्धानां देवस्थानप्रणामनम् ।
आभिमुख्यं पुरस्कृत्य अतिथीनां च पूजनम् ॥ १३-२१६-५३ (८९८८३)
वृद्धोपदेशकरणं श्रवणं हितपथ्ययोः ।
पोषणं भृत्यवर्गस्य सान्त्वदानपरिग्रहे ॥ १३-२१६-५४ (८९८८४)

न्यायतः कर्मकरणमन्यायाहितवर्जितम् ।
सम्यग्वृत्तं स्वदारेषु दोषाणां प्रतिषेधनम् ॥ १३-२१६-५५ (८९८८५)
पुत्राणां विनयं कुर्यात्तत्तत्कार्यनियोजनम् ।
वर्जनं चाशुभार्थानां शुभानां जोषणं तथा ॥ १३-२१६-५६ (८९८८६)
कुलोचितानां धर्माणां यतावत्परिपालनम् ।
कुलसन्धारणं चैव पौरुषेणैव सर्वशः ।
एवमादि शुभं सर्वं तस्य वृत्तमिति स्थितम् ॥ १३-२१६-५७ (८९८८७)
वृद्धसेवी भवेन्नित्यं हितार्थं ज्ञानकाङ्क्षया ।
परार्थं नाहरेद्द्रव्यमनामन्त्र्य तु सर्वथा ।
न याचेत परान्धीरः स्वबाहुबलमाश्रयेत् ॥ १३-२१६-५८ (८९८८८)
स्वशरीरं सदा रक्षेदाहाराचारयोरपि ।
हितं पथ्यं सदाहारं जीर्णं भुञ्जीत मात्रया ॥ १३-२१६-५९ (८९८८९)
देवतातिथिसत्कारं कृत्वा सर्वं यथाविधि ।
शेषं भुञ्जेच्छुचिर्भूत्वा न च भाषेत विप्रियम् ॥ १३-२१६-६० (८९८९०)
प्रतिश्रयं च पानीयं बलिं भिक्षां च सर्वतः ।
गृहस्थवासी सततं तद्याह्नाश्चैव पोषयेत् ॥ १३-२१६-६१ (८९८९१)
बहिर्निष्क्रमणं चैव कुर्यात्कारणतोपि वा ।
मध्याह्ने वाऽर्धरात्रे वा गमनाय न रोचयेत् ॥ १३-२१६-६२ (८९८९२)
विषयान्नावगाहेत स्वशक्त्या तु समाचरेत् ।
यथाऽऽयव्ययता लोके गृहस्थानां प्रपूजितम् ॥ १३-२१६-६३ (८९८९३)
अयशस्करमर्थघ्नं कर्म यत्परपीडनम् ।
भयाद्वा यदि लोभाद्वा न कुर्वीत कदाचन ॥ १३-२१६-६४ (८९८९४)
बुद्धिपूर्वं समालोक्य दूरतो गुणदोषतः ।
आरभेत तदा कर्भ शुभं वा यदि वेतरत् ॥ १३-२१६-६५ (८९८९५)
आत्मसाक्षी भवेन्नित्यमात्मनस्तु शुभाशुभे ।
मनसा कर्मणा वाचा न च काङ्क्षेत पातकम् ॥ ॥ १३-२१६-६६ (८९८९६)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
षोडशाधिकद्विशततमोऽध्यायः ॥ २१६ ॥

---

अनुससनपर्व-अध्यय२१७
॥ श्रीः ॥
१३.२१७. अध्यायः २१७

अथ दानधर्मपर्व ॥ १ ॥

पार्वत्या ब्राह्मण्यादिकं किं स्वाभाविकं उत कर्माधीनमिति प्रश्ने ईश्वरेण तस्य कर्माधीनत्वप्रतिपादनम् ॥ १ ॥
तथा प्राणिनां भोगाभोगादेः स्वस्वकर्मायत्तत्वप्रतिपादनम् ॥ २ ॥

Mahabharata - Anushaasana Parva - Chapter Text

उमोवाच ।
भगवन्भगनेत्रघ्न कालसूदन शङ्कर ।
इमे वर्णाश्च चत्वारो विहिताः स्वस्वभावतः ।
उताहो क्रियया वर्णाः सम्भवन्ति महेश्वर ॥ १३-२१७-१ (८९८९७)
एवं मे संशयप्रश्नस्तं मे छेत्तुं त्वमर्हसि ॥ १३-२१७-२ (८९८९८)
महेश्वर उवाच। १३-२१७-३क्ष् (७४९१)
स्वभावादेव विद्यन्ते चत्वारो ब्राह्मणादयः ।
एकजात्या सुदुष्प्रापमन्यवर्णत्वमागतम् ॥ १३-२१७-३ (८९८९९)
तच्च कर्मविशेषेण पुनर्जन्मनि जायते ।
तस्मात्तेषां प्रवक्ष्यामि तत्सर्वं कर्मपाकजम् १३-२१७-४ (८९९००)
ब्राह्मणस्तु नरो भूत्वा स्वजातिमनुपालयन् ।
दृढं ब्राह्मणकर्माणि वेदोक्तानि समाचरेत् ॥ १३-२१७-५ (८९९०१)
सत्यार्जवपरो भूत्वा दानयज्ञपरस्तथा ।
सत्यां जात्यां समुदितो जातिधर्मान्न हापयेत् ॥ १३-२१७-६ (८९९०२)
एवं संवर्तमानस्तु कालधर्मं गतः पुनः ।
स्वर्गलोके हि जायेत स्वर्गभोगाय भामिनि ॥ १३-२१७-७ (८९९०३)
तत्क्षये ब्राह्मणो भूत्वा तथैव नृषु जायते ।
एवंस्वकर्मणा मर्त्यः स्वजातिं लभते पुनः ॥ १३-२१७-८ (८९९०४)
अपरस्तु तथा कश्चिद्ब्रह्मयोनिसमुद्भवः ।
अवमत्यैव तां जातिमज्ञानतमसा वृतः ॥ १३-२१७-९ (८९९०५)
अन्यथा वर्तमानस्तु जातिकर्माणि वर्जयेत् ।
शूद्रवद्विचरेल्लोके शूद्रकर्माभिलाषवान् ।
शूद्रैः सह चरन्नित्यं शौचमङ्गलवर्जितः। १३-२१७-१० (८९९०६)
स चापि कालधर्मस्थो यमलोके सुदण्डितः ।
यदि जायेत मर्त्येषु शूद्र एवाभिजायते ॥ १३-२१७-११ (८९९०७)
शूद्र एव भवेद्देवि ब्राह्मणोऽपि स्वकर्मणा ॥ १३-२१७-१२ (८९९०८)
तथैव शूद्रस्त्वपरः शूद्रकर्माणि वर्जयेत् ।
सत्यार्जवपरो भूत्वा दानधर्मपरस्तथा ।
मन्त्रब्राह्मणसत्कर्ता मनसा ब्राह्मणप्रियः ॥ १३-२१७-१३ (८९९०९)
एवं युक्तसमाचारः शूद्रोपि मरणं गतः ।

स्वर्गलोके हि जायेत तत्क्षये नृषु जायते ।
ब्राह्मणानां कुले मुख्ये वेदस्वाध्यायसंयुते ॥ १३-२१७-१४ (८९११०)
एवमेव सदा लोके शूद्रो ब्राह्मण्यमाप्नुयात् ॥ १३-२१७-१५ (८९१११)
एवं क्षत्रियवैश्याश्च जातिधर्मेण संयुताः ।
स्वकर्मणैव जायन्ते विशिष्टेष्वधमेषु च ॥१३-२१७-१६ (८९११२)
एवं जातिविपर्यासः प्रेत्यभावे भवेन्नृणाम् ।
अन्यथा तु न शक्यं तल्लोकसंस्थितिकारणात् ॥१३-२१७-१७ (८९११३)
तस्माज्जातिं विशिष्टां तु कथंचित्प्राप्य पण्डितः ।
सर्वथा तां तथा रक्षेन्न पुनर्भ्रश्यते यथा ।
इति ते कथितं देवि भूयः श्रोतुं किमिच्छसि ॥ १३-२१७-१८ (८९११४)
उमोवाच। १३-२१७-१९क्ष् (७४९२)
जन्मप्रभृति कः शुद्धो लभेज्जन्मफलं नरः ।
शोभनाशोभनं सर्वमधइकारवशात्स्वकम् ॥१३-२१७-१९ (८९११५)
महेश्वर उवाच। १३-२१७-२०क्ष् (७४९३)
कर्म कुर्वन्न लिप्येत आर्जवेन समाचरेत् ।
आत्मैव तच्छुभं कुर्यादशुभे योजयेत्परान् ॥१३-२१७-२० (८९११६)
शठेषु शठवत्कुर्योदार्यष्वार्यवदाचरेत् ।
आपत्सु नावसीदेच्च घोरान्सङ्ग्रामयेत्परात् ।
साम्नैव सर्वकार्याणि कर्तुं पूर्वं समारभेत् ॥ १३-२१७-२१ (८९११७)
अनर्थाधर्मशोकानां यथा न प्राप्नुयात्स्वयम् ।
प्रीयते तत्तथा कर्तुमेतद्वृत्तं समासतः ॥१३-२१७-२२ (८९११८)
एवं वृत्तं समासाद्य गृहमाश्रित्य मानवाः ।
निराहारा निरुद्वेगाः प्राप्नुवन्त्युत्तमां गतिम् ॥१३-२१७-२३ (८९११९)
एतज्जन्मफलं नित्यं सर्वेषां गृहवासिनाम् ।
एवं गृहस्थितैर्नित्यं वर्तितव्यमिति स्थितिः ।
एतत्सर्वं मया प्रोक्तं किं भूयः श्रोतुमिच्छसि ॥ १३-२१७-२४ (८९१२०)
उमोवाच। १३-२१७-२५क्ष् (७४९४)
सुरासुरपते देव वरद प्रीतिवर्धन ।
मानुषेष्वेव ये के चिदाढ्याः क्लेशविवर्जिताः ।
भुञ्जाना विविधान्भोगान्दृश्यन्ते निरुपद्रवाः ॥ १३-२१७-२५ (८९१२१)
अपरे क्लेशसंयुक्ता दरिद्रा भोगवर्जिताः ॥ १३-२१७-२६ (८९१२२)
किमर्थं मानुषे लोके न समत्वेन कल्पिताः ।
एतच्छ्रोतुं महादेव कौतूहलमतीव मे ॥१३-२१७-२७ (८९१२३)
महेश्वर उवाच। १३-२१७-२८क्ष् (७४९५)
न्यायतस्त्वं महाभागे श्रोतुकामासि भामिनि ।
शृणु तत्सर्वमखिलं मानुषाणां हितं वचः ॥१३-२१७-२८ (८९१२४)

आदिसर्गे पुरा ब्रह्मा समत्वेनासृजत्प्रजाः ।
नित्यं न भवतो ह्यस्य रागद्वेषौ प्रजापतेः ।
तदा तस्मात्सुराः सर्वे बभूवुः समतो नराः ॥ १३-२१७-२९ (८९९२५)
एवं संवर्तमाने तु युगे कालविपर्ययात् ।
केचित्प्रपेदिरे तत्र विषमं बुद्धिमोहिताः ॥ १३-२१७-३० (८९९२६)
तेषां हानिं ततो दृष्ट्वा तुल्यानामेव भामिनि ।
ब्राह्मणास्ते समाजग्मुस्तत्तत्कारणवेदकाः ॥ १३-२१७-३१ (८९९२७)
कर्तुं नार्हसि देवेश पक्षपातं त्वमीदृशम् ।
पुत्रभावे समे देव किमर्थं नो भवेत्कलिः ॥ १३-२१७-३२ (८९९२८)
एवमेतैरुपालब्धो ब्रह्मा वचनमब्रवीत् ।
यूयं मा ब्रूत मे दोषं स्वकृतं स्मरथ प्रजाः ॥ १३-२१७-३३ (८९९२९)
युष्माभिरेव युष्माकं ग्रथितं हि शुभाशुभम् ।
यादृशं कुरुते कर्म तादृशं फलमश्नुते ।
स्वकृतस्य फलं भुङ्क्ते नान्यस्तद्बोक्तुमर्हति ॥ १३-२१७-३४ (८९९३०)
एवं संबोधितास्तेन कालकर्त्रा स्वयंभुवा ।
पुनर्विवृत्य कर्माणि शुभान्येव प्रपेदिरे ॥ १३-२१७-३५ (८९९३१)
एवं विज्ञाततत्वास्ते दानधर्मपरायणाः ।
शुभानि विधिवत्कृत्वा कालधर्मगताः पुनः ।
तानि दानफलान्येव भुञ्जते सुखभोगिनः ॥ १३-२१७-३६ (८९९३२)
स्वकृतं तु नरस्तस्मात्स्वयमेव प्रपद्यते ॥ १३-२१७-३७ (८९९३३)
अपरे धर्मकामेभ्यो निवृत्ताश्च शुभेक्षणे ।
कदर्या निरनुक्रोशाः प्रायेणात्मपरायणाः ॥ १३-२१७-३८ (८९९३४)
तादृशा मरणं प्राप्ताः पुनर्जन्मनि शोभने ।
दरिद्राः क्लेशभूयिष्ठा भवन्त्येव न संशयः ॥ १३-२१७-३९ (८९९३५)
उमोवाच। १३-२१७-४०क्ष् (७४९६)
मानुषेष्वथ ये केचिद्धनधान्यसमन्विताः ।
भोगहीनाः प्रदृश्यन्ते सर्वभोगेषु सत्स्वपि ।
न भुञ्जते किमर्थं ते तन्मे शंसितुमर्हसि ॥ १३-२१७-४० (८९९३६)
महेश्वर उवाच। १३-२१७-४१क्ष् (७४९७)
परैः संचोदिता धर्मं कुर्वते न स्वकामतः ।
स्वयं श्रद्धां बहिष्कृत्य कुर्वन्ति च रुदन्ति च ॥ १३-२१७-४१ (८९९३७)
तादृशा मरणं प्राप्ताः पुनर्जन्मनि शोभने ।
फलानि तानि सम्प्राप्य भुञ्जते न कदाचन ।
रक्षन्तो वर्धयन्तश्च आसते निधिपालवत् ॥ १३-२१७-४२ (८९९३८)
उमोवाच। १३-२१७-४३क्ष् (७४९८)
केचिद्धनवियुक्ताश्च भोगयुक्ता महेश्वर ।

मानुषाः सम्प्रदृश्यन्ते तन्मे शंसितुमर्हसि ॥ १३-२१७-४३ (८९९३९)
महेश्वर उवाच। १३-२१७-४४क्ष् (७४९९)
आनृशंस्यपरा ये तु धर्मकामाश्च दुर्गताः ।
परोपकारं कुर्वन्ति दीनानुग्रहकारणात् ॥ १३-२१७-४४ (८९९४०)
प्रतिपद्युः परधनं नष्टं वाऽन्यैर्नरैर्हृतम् ।
नित्यं ये दातुमनसो नरा वित्तेष्वसत्स्वपि ॥ १३-२१७-४५ (८९९४१)
कालधर्मवशं प्राप्ताः पुनर्जन्मनि ते नराः ।
एते धनविहीनाश्च भोगयुक्ता भवन्त्युत ॥ १३-२१७-४६ (८९९४२)
धर्मदानोपदेशं वा कर्तव्यमिति निश्चयः ।
इति ते कथितं देवि किं भूयः श्रोतुमिच्छसि ॥ ॥ १३-२१७-४७ (८९९४३)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
सप्तदशाधिकद्विशततमोऽध्यायः ॥ २१७ ॥

---

अनुससनपर्व-अध्यय२१८
॥ श्रीः ॥
१३.२१८. अध्यायः २१८

अथ दानधर्मपर्व ॥ १ ॥
Mahabharata - Anushaasana Parva - Chapter Topics
महेश्वरेण पार्वतींप्रति प्राणिनां शुभाशुभकर्मानुसारेण
शुभाशुभफलप्राप्तिकथनम् ॥ १ ॥

Mahabharata - Anushaasana Parva - Chapter Text

उमोवाच ।
भगवन्देवदेवेश त्र्यक्ष भो वृषभध्वज ।
मानुषास्त्रिविधा देव दृश्यन्ते सततं विभो ॥ १३-२१८-१ (८९९४४)
आसीना एव भुञ्जन्ते स्थानैश्वर्यपरिग्रहैः ।
अपरे यत्नपूर्वं तु लभन्ते भोगसङ्ग्रहम् ॥ १३-२१८-२ (८९९४५)
अपरे यतमानाश्च न लभन्ते तु किञ्चन ।
केन कर्मविपाकेन तन्मे शंसितुमर्हसि ॥ १३-२१८-३ (८९९४६)
महेश्वर उवाच। १३-२१८-४क्ष् (७५००)
न्यायतस्त्वं महाभागे श्रोतुकामाऽसि भामिनि ॥ १३-२१८-४ (८९९४७)
ये लोके मानुषा देवि दानधर्मपरायणाः ।
पात्राणि विधिवज्ज्ञात्वा दूरतोप्यनुमानतः ॥ १३-२१८-५ (८९९४८)

अभिगम्य स्वयं तत्र ग्राहयन्ति प्रसाद्य च ।
दानादि चेङ्गितैरेव तैरविज्ञातमेव वा ॥१३-२१८-६ (८९९४९)
पुनर्जन्मनि ते देवि तादृशाः शोभना नराः ।
अयत्नतस्तु तान्येव फलानि प्राप्नुवन्त्युत ॥१३-२१८-७ (८९९५०)
आसीना एव भुञ्जन्ते भोगान्सुकृतभोगिनः ॥ १३-२१८-८ (८९९५१)
अपरे ये च दानानि ददत्येव प्रयाचिताः ।
यदायदाऽर्थिने दत्त्वा पुनर्दानं च याचिताः ॥१३-२१८-९ (८९९५२)
तावत्कालं ततो देवि पुनर्जन्मनि ते नराः ।
यत्नतः श्रमसंयुक्ताः पुनस्तान्प्राप्नुवन्ति च ॥१३-२१८-१० (८९९५३)
याचिता अपि केचित्तु अदत्त्वैव कथञ्चन ।
अभ्यसूयापरा मर्त्या लोभोपहतचेतसः ॥१३-२१८-११ (८९९५४)
ते पुनर्जन्मनि शुभे यतन्तो बहुधा नराः ।
न प्राप्नुवन्ति मनुजा मार्गन्तस्तेऽपि किञ्चन ॥१३-२१८-१२ (८९९५५)
नानुप्तं रोहते सस्यं तद्वद्दानफलं विदुः ।
यद्यद्ददाति पुरुषस्तत्तत्प्राप्नोति केवलम् ॥१३-२१८-१३ (८९९५६)
इति ते कथितं देवि भूयः श्रोतुं किमिच्छसि ॥ १३-२१८-१४ (८९९५७)
उमोवाच।१३-२१८-१५क्ष् (७५०१)
भगवन्भगनेत्रघ्न केचिद्वार्धकसंयुताः ।
अभोगयोग्यकाले तु भोगांश्चैव धनानि च ॥१३-२१८-१५ (८९९५८)
लभन्ते स्थविरा भूता भोगैश्वर्यं यतस्ततः ।
केन कर्मविपाकेन तन्मे शंसितुमर्हसि ॥ १३-२१८-१६ (८९९५९)
महेश्वर उवाच।१३-२१८-१७क्ष् (७५०२)
हन्त ते कथयिष्यामि शृणु तत्वं समाहिता ॥ १३-२१८-१७ (८९९६०)
धर्मकार्यं चिरं कालं विस्मृत्य धनसंयुताः ।
प्राणान्तकाले सम्प्राप्ते व्याधिभिश्च निपीडिताः ॥१३-२१८-१८ (८९९६१)
आरभन्ते पुनर्धर्मं दातुं दानानि वा नराः ।
ते पुनर्जन्मनि शुभे भूत्वा दुःखपरिप्लुताः ॥१३-२१८-१९ (८९९६२)
अतीतयौवने काले स्थविरत्वमुपागताः ।
लभन्ते पूर्वदत्तानां फलानि शुभलक्षणे ॥१३-२१८-२० (८९९६३)
एतत्कर्मफलं देवि कालयोगाद्भवत्युत ॥ १३-२१८-२१ (८९९६४)
उमोवाच।१३-२१८-२२क्ष् (७५०३)
भोगयुक्ता महादेव केचिद्व्याधिपरिप्लुताः ।
असमर्थाश्च तान्भोक्तं भवन्ति किमु कारणम् ॥१३-२१८-२२ (८९९६५)
महेश्वर उवाच।१३-२१८-२३क्ष् (७५०४)
व्याधियोगपरिक्लिष्टा ये निराशाः स्वजविते ।
आरभन्ते तदा कर्तुं दानानि शुभलक्षणम् ॥१३-२१८-२३ (८९९६६)

ते पुनर्जन्मनि शुभे प्राप्य तानि फलान्युत ।
असमर्थाश्च तान्भोक्तुं व्याधितास्ते भवन्त्युत ॥१३-२१८-२४ (८९१६७)
उमोवाच।१३-२१८-२५क्ष् (७५०५)
भगवन्देवदेवेश मानुषेष्वेव केचन ।
रूपयुक्ताः प्रदृश्यन्ते शुभाङ्गा प्रियदर्शनाः ।
केन कर्मविपाकेन तन्मे शंसितुमर्हसि ॥ १३-२१८-२५ (८९१६८)
महेश्वर उवाच।१३-२१८-२६क्ष् (७५०६)
हन्त ते कथयिष्यामि शृणु तत्वं समाहिता ॥ १३-२१८-२६ (८९१६९)
ये पुरा मनुजा देवि लज्जायुक्ताः प्रियंवदाः ।
शक्ताः सुमधुरा नित्यं भूत्वा चैव स्वभावतः ॥१३-२१८-२७ (८९१७०)
अमांसभोजिनश्चैव सदा प्राणिदयायुताः ।
प्रतिकर्मप्रदा वाऽपि वस्त्रदा धर्मकारणात् ।
भूमिशुद्धिकरा वाऽपि कारणादग्निपूजकाः ॥ १३-२१८-२८ (८९१७१)
एवं युक्तसमाचाराः पुनर्जन्मनि ते नराः ।
रूपेण स्पृहणीयास्तु भवन्त्येव न संशयः ॥१३-२१८-२९ (८९१७२)
उमोवाच।१३-२१८-३०क्ष् (७५०७)
विरूपाश्च प्रदृश्यन्ते मानुषेष्वेव केचन ।
केन कर्मविपाकेन तन्मे शंसितुमर्हसि ॥१३-२१८-३० (८९१७३)
महेश्वर उवाच।१३-२१८-३१क्ष् (७५०८)
तदहं ते प्रवक्ष्यामि शृणु कल्याणि कारणम् ॥ १३-२१८-३१ (८९१७४)
रूपयोगात्पुरा मर्त्या दर्पाहंकारसंयुताः ।
विरूपहासकास्चैव स्तुतिनिन्दादिभिर्भृशम् ॥१३-२१८-३२ (८९१७५)
परोपतापनाश्चैव मांसादाश्च तथैव च ।
अभ्यसूयापराश्चैव अशुद्धाश्च तथा नराः ॥१३-२१८-३३ (८९१७६)
एवं युक्तसमाचारा यमलोके सुदण्डिताः ।
कथंचित्प्राप्य मानुष्यं तत्र ते रूपवर्जिताः ।
विरूपाः सम्भवन्त्येव नास्ति तत्र विचारणा ॥ १३-२१८-३४ (८९१७७)
उमोवाच।१३-२१८-३५क्ष् (७५०९)
भगवन्देवदेवेश केचित्सौभाग्यसंयुताः ।
रूपभोग्यविहीनाश्च दृश्यन्ते प्रमदाप्रियाः ।
केन कर्मविपाकेन तन्मे शंसितुमर्हसि ॥ १३-२१८-३५ (८९१७८)
महेश्वर उवाच।१३-२१८-३६क्ष् (७५१०)
ये पुरा मनुजा देवि सौम्यशीलाः प्रियंवदाः ।
स्वदारैरेव संतुष्टा दारेषु समवृत्तयः ॥१३-२१८-३६ (८९१७९)
दाक्षिण्येनैव वर्तन्ते प्रमदास्वप्रियास्वपि ।
न तु प्रत्यादिशन्त्येव स्त्रीदोषान्गुणसंश्रितान्। १३-२१८-३७ (८९१८०)

अन्नपानीयदाः काले नृणां स्वादुप्रदाश्च ये ।
स्वदारवर्तिनश्चैव धृतिमन्तो निरत्ययाः ॥ १३-२१८-३८ (८९९८१)
एवं युक्तसमाचाराः पुनर्जन्मनि शोभने ।
मानुषास्ते भवन्त्येव सततं सुभगा भृशम् ।
अर्थादृतेऽपि ते देवि भवन्ति प्रमदाप्रियाः ॥ १३-२१८-३९ (८९९८२)
उमोवाच। १३-२१८-४०क्ष् (७५११)
दुर्भगाः सम्प्रदृश्यन्ते आढ्या भोगयुता अपि ।
केन कर्मविपाकेन तन्मे शंसितुमर्हसि ॥ १३-२१८-४० (८९९८३)
महेश्वर उवाच। १३-२१८-४१क्ष् (७५१२)
तदहं ते प्रवक्ष्यामि शृणु सर्वं समाहिता ॥ १३-२१८-४१ (८९९८४)
ये पुरा मनुजा देवि स्वदारेष्वनपेक्षया ।
यथेष्टवृत्तयश्चैव निर्लज्जा वीतसम्भ्रमाः ॥ १३-२१८-४२ (८९९८५)
परेषां विप्रियकरा वाङ्मनःकायकर्मभिः ।
निराश्रया निरानन्दाः स्त्रीणां हृदयकोपनाः ॥ १३-२१८-४३ (८९९८६)
एवं युक्तसमाचाराः पनर्जन्मनि ते नराः ।
दुर्भगास्तु भवन्त्येव स्त्रीणां हृदयविप्रियाः। १३-२१८-४४ (८९९८७)
नास्ति तेषां रतिसुखं स्वदारेष्वपि किञ्चन ॥ ॥ १३-२१८-४५ (८९९८८)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
अष्टादशाधिकद्विशततमोऽध्यायः ॥

---

अनुससनपर्व-अध्यय२१९
॥ श्रीः ॥
१३.२१९. अध्यायः २१९

अथ दानधर्मपर्व ॥ १ ॥
Mahabharata - Anushaasana Parva - Chapter Topics
महेश्वरेण पार्वतींप्रति शुभाशुभकर्मणोः सुखदुःखहेतुत्वकथनम्
॥ १ ॥

Mahabharata - Anushaasana Parva - Chapter Text

उमोवाच ।
भगवन्देवदेवेश मानुषेष्वेव केचन ।
ज्ञानविज्ञानसम्पन्ना बुद्धिमन्तो विचक्षणाः ॥ १३-२१९-१ (८९९८९)
दुर्गतास्तु प्रदृश्यन्ते यतमाना यथाविधि ।

केन कर्मविपाकेन तन्मे शंसितुमर्हसि ॥१३-२१९-२ (८९९९०)
महेश्वर उवाच।१३-२१९-३क्ष् (७५१३)
तदहं ते प्रवक्ष्यामि शृणु कल्याणि कारणम् ॥ १३-२१९-३ (८९९९१)
ये पुरा मनुजा देवि श्रुतवन्तोपि केवलम् ।
निराक़क़क़क़ निरन्नाद्या भृशमात्मपरायणाः ॥१३-२१९-४ (८९९९२)
ते पुनर्जन्मनि शुभे ज्ञानबुद्धियुता अपि ।
निष्किञ्चना भवन्त्येव अनुप्तं हि न रोहति ॥१३-२१९-५ (८९९९३)
उमोवाच।१३-२१९-६क्ष् (७५१४)
मूर्खा लोके प्रदृश्यन्ते वृथा मूढा विचेतसः ।
ज्ञानविज्ञानरहिताः समृद्धाश्च समन्ततः ।
केन कर्मविपाकेन तन्मे शंसितुमर्हसि ॥ १३-२१९-६ (८९९९४)
महेश्वर उवाच।१३-२१९-७क्ष् (७५१५)
ये पुरा मनुजा देवि बालिशा अपि सर्वतः ।
समाचरन्ति दानानि दीनानुग्रहकारणात् ॥१३-२१९-७ (८९९९५)
अबुद्धिपूर्वं वा दानं ददत्येव यतस्ततः ।
ते पुनर्जन्मनि शुभे प्राप्नुवन्त्येव तत्तथा ॥१३-२१९-८ (८९९९६)
पण्डितोऽपण्डितो वाऽपि भुङ्क्ते दानफलं नरः ।
बुद्ध्याऽनपेक्षितं दानं सर्वथा तत्फलत्युत ॥१३-२१९-९ (८९९९७)
उमोवाच।१३-२१९-१०क्ष् (७५१६)
भगवन्देवदेवेश मानुषेष्वेव केचन ।
मेधाविनः श्रुतधरा भवन्ति विशदाक्षराः ।
केन कर्मविपाकेन तन्मे शंसितुमर्हसि ॥ १३-२१९-१० (८९९९८)
महेश्वर उवाच।१३-२१९-११क्ष् (७५१७)
ये पुरा मनुजा देवि गुरुशुश्रूषका भृशम् ।
ज्ञानार्थं ते तु सङ्गृह्य तीर्थतो विधिपूर्वकम् ॥१३-२१९-११ (८९९९९)
विधिनैव परांश्चैव ग्राहयन्ति च नान्यथा ।
अश्लाघमाना ज्ञानेन प्रशान्ता यतवाचकाः ।
विद्यास्थानानि ये लोके स्थापयन्ति च यत्नतः ॥ १३-२१९-१२ (९००००)
तादृश मरणं प्राप्ताः पुनर्जन्मनि शोभने ।
मेधाविनः श्रुतधरा भवन्ति विशदाक्षराः ॥१३-२१९-१३ (९०००१)
उमोवाच।१३-२१९-१४क्ष् (७५१८)
अपरे मानुषा देव यतन्तोपि यतस्ततः ।
बहिष्कृताः प्रदृश्यन्ते श्रुतविज्ञानबुद्धितः ।
केन कर्मविपाकेन तन्मे शंसितुमर्हसि ॥ १३-२१९-१४ (९०००२)
महेश्वर उवाच।१३-२१९-१५क्ष् (७५१९)
ये पुरा मनुजा देवि ज्ञानदर्पसमन्विताः ।

श्लाघमानाश्च तत्प्राप्य ज्ञानाहङ्कारमोहिताः ॥ १३-२१९-१५ (९०००३)
वदन्ति ये परान्नित्यं ज्ञानाधिक्येन दर्पिताः ।
ज्ञानादसूयां कुर्वन्ति न सहन्ते च चापरान् ॥ १३-२१९-१६ (९०००४)
तादृशा मरणं प्राप्ताः पुनर्जन्मनि शोभने ।
मानुष्यं सुचिरात्प्राप्य तत्र बोधविवर्जिताः ।
भवन्ति सततं देवि यतन्तो हीनमेधसः ॥ १३-२१९-१७ (९०००५)
उमोवाच। १३-२१९-१८क्ष् (७५२०)
भगवन्मानुषाः केचित्सर्वकल्याणसंयुताः ।
पुत्रैर्दारैर्गुणयुतैर्दासीदासपरिच्छदैः ॥ १३-२१९-१८ (९०००६)
परमं बुद्धिसंयुक्ताः स्थानैश्वर्यपरिग्रहैः ।
व्याधिहीना नबाधाश्च रूपारोग्यबलैर्युताः ॥ १३-२१९-१९ (९०००७)
धनधान्येन सम्पन्नाः प्रासादैर्यानवाहनैः ।
सर्वोपभोगसंयुक्ता नानाचित्रैर्मनोहरैः ॥ १३-२१९-२० (९०००८)
ज्ञातिभिः सह मोदन्ते अविघ्नं तु दिनेदिने ।
केन कर्मविपाकेन तन्मे शंसितुमर्हसि ॥ १३-२१९-२१ (९०००९)
महेश्वर उवाच। १३-२१९-२२क्ष् (७५२१)
तदहं ते प्रवक्ष्यामि शृणु सर्वं समाहिता ॥ १३-२१९-२२ (९००१०)
ये पुरा मनुजा देवि आढ्या वा इतरेऽपि वा ।
श्रुतवृत्तसमायुक्ता दानकामाः श्रुतप्रियाः ॥ १३-२१९-२३ (९००११)
परेङ्गितपरा नित्यं दातव्यमिति निश्चिताः ।
सत्यसन्धाः क्षमाशीला लोभमोहविवर्जिताः ॥ १३-२१९-२४ (९००१२)
दातारः पात्रतो दानं व्रतैर्नियमसंयुताः ।
स्वदुःखमिव संस्मृत्य परदुःखविवर्जिताः ।
सौम्यशीलाः शुभाचारा देवब्राह्मणपूजकाः ॥ १३-२१९-२५ (९००१३)
एवंशीलसमाचाराः पुनर्जन्मनि शोभने ।
दिवि वा भुवि वा देवि जायन्ते कर्मभोगिनः ॥ १३-२१९-२६ (९००१४)
मानुषेष्वपि ये जातास्तादृशाः सम्भवन्ति ते ।
यादृशास्तु तथा प्रोक्ताः सर्वे कल्याणसंयुताः ॥ १३-२१९-२७ (९००१५)
रूपं द्रव्यं बलं चायुर्भोगैश्वर्यं बलं श्रुतम् ।
इत्येतत्सर्वसाद्गुण्यं दानाद्भवति नान्यथा ।
तपोदानमयं सर्वमिति विद्धि शुभानने ॥ १३-२१९-२८ (९००१६)
उमोवाच। १३-२१९-२९क्ष् (७५२२)
अथ केचित्प्रदृश्यन्ते मानुषेष्वेव मानुषाः ।
दुर्गताः क्लेशभूयिष्ठा दानभोगविवर्जिताः ॥ १३-२१९-२९ (९००१७)
भयैस्त्रिभिः समाजुष्टा व्याधिक्षुद्भयसंयुताः ।
दुष्कलत्राभिभूताश्च सततं विघ्नदर्शकाः ।

केन कर्मविपाकेन तन्मे शंसितुमर्हसि ॥ १३-२१९-३० (९००१८)
महेश्वर उवाच। १३-२१९-३१क्ष् (७५२३)
ये पुरा मनुजा देवि आसुरं भावमाश्रिताः ।
क्रोधलोभसमायुक्ता निरन्नाद्याश्च निष्क्रियाः ॥ १३-२१९-३१ (९००१९)
नास्तिकाश्चैव धूर्ताश्च मूर्खाश्चात्मपरायणाः ।
परोपतापिनो देवि प्रायशः प्राणिनिर्दयाः ॥ १३-२१९-३२ (९००२०)
एवंयुक्तसमाचाराः पुनर्जन्मनि शोभने ।
कथंचित्प्राप्य मानुष्यं तत्र ते दुःखपीडिताः ॥ १३-२१९-३३ (९००२१)
सर्वतः सम्भवन्त्येव पूर्वमात्मप्रमादतः ।
यथा ते पूर्वकथितास्तथा ते सम्भवन्त्युत ॥ १३-२१९-३४ (९००२२)
शुभाशुभं कृतं कर्म सुखदुःखफलोदयम् ।
इति ते कथितं देवि भूयः श्रोतुं किमिच्छसि ॥ ॥ १३-२१९-३५ (९००२३)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
एकोनविंशत्यधिकद्विशततमोऽध्यायः ॥ २१९ ॥

---

अनुससनपर्व-अध्यय२२०
॥ श्रीः ॥
१३.२२०. अध्यायः २२०

अथ दानधर्मपर्व ॥ १ ॥
Mahabharata - Anushaasana Parva - Chapter Topics
ईश्वरेणोमांप्रति अन्धत्वपङ्गुत्वादिनानादोषकारणीभूतानां दुष्कर्मणां
विशिष्य कथनम् ॥ १ ॥

Mahabharata - Anushaasana Parva - Chapter Text

उमोवाच ।
भगवन्देवदेवेश मम प्रीतिविवर्धन ।
ग्जात्यन्धाश्चैव दृश्यन्ते जाता वा नष्टचक्षुषः ।
केन कर्मविपाकेन तन्मे शंसितुमर्हसि ॥ १३-२२०-१ (९००२४)
महेश्वर उवाच। १३-२२०-२क्ष् (७५२४)
हन्त ते कथयिष्यामि शृणु कल्याणि कारणम् ॥ १३-२२०-२ (९००२५)
ये पुरा कामकारेणि परवेश्मसु लोलुपाः ।
परस्त्रियोऽभिवीक्षन्ते दुष्टेनैव स्वचक्षुषाः ॥ १३-२२०-३ (९००२६)
अन्धीकुर्वन्ति यन्मर्त्यान्क्रोधलोभसमन्विताः ।

लक्षणज्ञाश्च रूपेषु अयथावत्प्रदर्शकाः ॥१३-२२०-४ (९००२७)
एवं युक्तसमाचाराः कालधर्मवशास्तु ते ।
दण्डिता यमदण्डेन निरयस्थाश्चिरं प्रिये ॥१३-२२०-५ (९००२८)
यदि चेन्मानुषं जन्म लभेरंस्ते तथापि वा ।
स्वभावतो वा जाता वा अन्धा एव भवन्ति ते ।
अक्षिरोगयुता वाऽपि नास्ति तत्र विचारणा ॥ १३-२२०-६ (९००२९)
उमोवाच।१३-२२०-७क्ष् (७५२५)
मुखरोगयुताः केचिद्दृश्यन्ते सततं नराः ।
दन्तकण्ठकपोलस्थैर्व्याधिभिर्बहुपीडिताः ॥१३-२२०-७ (९००३०)
आदिप्रभृति वै मर्त्या जाता वाऽप्यथ कारणात् ।
केन कर्मविपाकेन तन्मे शंसितुमर्हसि ॥१३-२२०-८ (९००३१)
महेश्वर उवाच।१३-२२०-९क्ष् (७५२६)
हन्त ते कथयिष्यामि शृणु देवि समाहिता ॥ १३-२२०-९ (९००३२)
कुवक्तारस्तु ये देवि जिह्वया कटुकं भृशम् ।
असत्यं परुषं घोरं गुरून्प्रति परान्प्रति ॥१३-२२०-१० (९००३३)
जिह्वाबाधां तदाऽन्येषां कुर्वते कोपकारणात् ।
प्रायशोऽनृतभूयिष्ठा नराः कार्यवशेन वा ।
तेषां जिह्वाप्रदेशस्था व्याधयः सम्भवन्ति ते ॥ १३-२२०-११ (९००३४)
कुश्रोतारस्तु ये चार्यं परेषां कर्णनाशकाः ।
कर्णरोगान्बहुविधाँल्लभन्ते ते पुनर्भवे ॥१३-२२०-१२ (९००३५)
दन्तरोगशिरोरोगकर्णरोगास्तथैव च ।
अन्ये दुःखाश्रिता दोषाः सर्वे चात्मकृतं फलम् ॥१३-२२०-१३ (९००३६)
उमोवाच।१३-२२०-१४क्ष् (७५२७)
पीड्यन्ते सततं देव मानुषेष्वेव केचन ।
कुक्षिपक्षाश्रितैर्दोषैर्व्याधिभिश्चोदराश्रितैः ॥१३-२२०-१४ (९००३७)
तीक्ष्णशूलैश्च पीड्यन्ते नरा दुःखपरिप्लुताः ।
केन कर्मविपाकेन तन्मे शंसितुमर्हसि ॥१३-२२०-१५ (९००३८)
महेश्वर उवाच।१३-२२०-१६क्ष् (७५२८)
ये पुरा मनुजा देवि कामक्रोधवशा भृशम् ।
आत्मार्थमेव चाहारं भुञ्जन्ते निरपेक्षकाः ॥१३-२२०-१६ (९००३९)
अभक्ष्याहारदानैश्च विश्वस्तानां विषप्रदाः ।
अभक्ष्यभक्षदाश्चैव शौचमङ्गलवर्जिताः ॥१३-२२०-१७ (९००४०)
मांसयुक्तसमाचाराः पुनर्जन्मनि शोभने ।
कथञ्चित्प्राप्य मानुष्यं तत्र ते व्याधिपीडिताः ॥१३-२२०-१८ (९००४१)
तैस्तैर्बहुविधाकारैर्व्याधिभिर्दुःखसंश्रिताः ।
भवन्त्येवं तथा देवि यथा चैवं तथा कृतम् ॥१३-२२०-१९ (९००४२)

उमोवाच। १३-२२०-२०क्ष् (७५२९)
दृश्यन्ते सततं देव व्याधिभिर्मेहनाश्रितैः ।
पीड्यमानास्तथा मर्त्या अश्मरीशर्करादिभिः ।
केन कर्मविपाकेन तन्मे शंसितुमर्हसि ॥ १३-२२०-२० (९००४३)
महेश्वर उवाच। १३-२२०-२१क्ष् (७५३०)
ये पुरा मनुजा देवि परदारप्रधर्षकाः ।
तिर्यग्योनिषु धूर्ता वै मैथुनार्थं चरन्ति च ॥ १३-२२०-२१ (९००४४)
कामदोषेणि ये धूर्ताः कन्यासु विधवासु च ।
बलात्कारेण गच्छन्ति रूपदर्पसमन्विताः ॥ १३-२२०-२२ (९००४५)
तादृशा मरणं पुनर्जन्मनि शोभने ।
यदि चेन्मानुषं जन्म लभेरंस्ते तथाविधाः ।
मेहनस्थैस्तथा घोरैः पीड्यन्ते व्यधिभिः प्रिये ॥ १३-२२०-२३ (९००४६)
उमोवाच। १३-२२०-२४क्ष् (७५३१)
भगवन्मानुषाः केचिद्दृश्यन्ते शोषिणः कृशाः ।
केन कर्मविपाकेन तन्मे शंसितुमर्हसि ॥ १३-२२०-२४ (९००४७)
महेश्वर उवाच। १३-२२०-२५क्ष् (७५३२)
ये पुरा मनुजा देवि मांसलुब्धाः सुलोलुपाः ।
आत्मार्थे स्वादुगृद्धाश्च परभोगोपतापिनः ॥ १३-२२०-२५ (९००४८)
अभ्यसूयाश्चोपतापाः परभोगेषु ये नराः ।
एवं युक्तसमाचाराः पुनर्जन्मनि शोभने ॥ १३-२२०-२६ (९००४९)
शेषव्याधियुतास्तत्र नरा धमनिसंतताः ।
भवन्त्येव नरा देवि पापकर्मोपभोगिनः ॥ १३-२२०-२७ (९००५०)
उमोवाच। १३-२२०-२८क्ष् (७५३३)
भगवन्मानुषाः केचित्क्लिश्यन्ते कण्ठरोगिणः ।
केन कर्मविपाकेन तन्मे शंसितुमर्हसि ॥ १३-२२०-२८ (९००५१)
महेश्वर उवाच। १३-२२०-२९क्ष् (७५३४)
ये पुरा मनुजा देवि परेषां रूपनाशनाः ।
आघातवधबन्धैश्च वृथा दण्डेन मोहिताः ॥ १३-२२०-२९ (९००५२)
इष्टनाशकरा ये तु अपथ्याहारदा नराः ।
चिकित्सका वा दुष्टास्च द्वेषलोभसमन्विताः ॥ १३-२२०-३० (९००५३)
निर्दयाः प्राणिहिंसायां मलदाश्चित्तनाशनाः ।
एवंयुक्तसमाचाराः पुनर्जन्मनि शोभने ॥ १३-२२०-३१ (९००५४)
यदि वै मानुषं जन्म लभेरंस्तेषु दुःखिताः ।
अत्र ते क्लेशसंयुक्ताः कण्ठरोगशतैर्वृताः ॥ १३-२२०-३२ (९००५५)
केचित्त्वग्दोषसंयुक्ता व्रणकुष्ठैश्च संयुताः ।
श्वित्रकुष्ठयुता वाऽपि बहुधा कृच्छ्रसंयुताः ।

भवन्त्येव नरा देवि यथा तेन कृतं फलम् ॥ १३-२२०-३३ (९००५६)
उमोवाच। १३-२२०-३४क्ष् (७५३५)
भगवन्मानुषाः केचिदङ्गहीनाश्च पङ्गव ।
केन कर्मविपाकेन तन्मे शंसितुमर्हसि ॥ १३-२२०-३४ (९००५७)
महेश्वर उवाच। १३-२२०-३५क्ष् (७५३६)
ये पुरा मनुजा देवि लोभमोहसमावृताः ।
प्राणिनां प्राणहिंसार्थमङ्गविघ्नं प्रकुर्वते ।
शस्त्रेणोत्कृत्य वा देवि प्राणिनां चेष्टनाशकाः ॥ १३-२२०-३५ (९००५८)
एवं युक्तसमाचाराः पुनर्जन्मनि शोभने ।
तदङ्गहीना वै प्रेत्य भवन्त्येव न संशयः ।
स्वभावतो वा जाता वा पङ्गवश्च भवन्ति ते ॥ १३-२२०-३६ (९००५९)
उमोवाच। १३-२२०-३७क्ष् (७५३७)
भगवन्मानुषाः केचिद्ग्रन्थिभिः पिलकैस्तथा ।
क्लिश्यमानाः प्रदृश्यन्ते तन्मे शंसितुमर्हसि ॥ १३-२२०-३७ (९००६०)
महेश्वर उवाच। १३-२२०-३८क्ष् (७५३८)
ये पुरा मनुजा देवि ग्रन्थिभेदकरा नृणाम् ।
मुष्टिप्रहारपरुषा नृशंसाः पापकारिणः ।
पाटकास्तोटकाश्चैव शूलतुन्नास्तथैव च ॥ १३-२२०-३८ (९००६१)
एवंयुक्तसमाचाराः पुनर्जन्मनि शोभने ।
ग्रन्थिभिः पिलकैश्चैव क्लिश्यन्ते भृशदुःखिताः ॥ १३-२२०-३९ (९००६२)
उमोवाच। १३-२२०-४०क्ष् (७५३९)
भगवन्मानुषाः केचित्पादरोगसमन्विताः ।
दृश्यन्ते सततं देव तन्मे शंसितुमर्हसि ॥ १३-२२०-४० (९००६३)
महेश्वर उवाच। १३-२२०-४१क्ष् (७५४०)
ये पुरा मनुजा देवि क्रोधलोभसमन्विताः ।
मनुजा देवतास्थानं स्वपादैर्भ्रंशयन्त्युत ।
जानुभिः पार्ष्णिभिश्चैव प्राणिहिंसां प्रकुर्वते ॥ १३-२२०-४१ (९००६४)
एवंयुक्तसमाचाराः पुनर्जन्मनि शोभने ।
पादरोगैर्बहुविधैर्बाध्यन्ते विपदादिभिः ॥ १३-२२०-४२ (९००६५)
उमोवाच। १३-२२०-४३क्ष् (७५४१)
भगवन्मानुषाः केचिद्दृश्यन्ते बहवो भुवि ।
वातजैः पित्तजै रोगैर्युगपत्सान्निपातकैः ॥ १३-२२०-४३ (९००६६)
रोगैर्बहुविधैर्देव क्लिश्यमानाः सुदुःखिताः ।
असमस्तैः समस्तैश्च आढ्या वा दुर्गतास्तथा ।
केन कर्मविपाकेन तन्मे शंसितुमर्हसि ॥ १३-२२०-४४ (९००६७)
महेश्वर उवाच। १३-२२०-४५क्ष् (७५४२)

तदहं ते प्रवक्ष्यामि शृणु कल्याणि कारणम् ॥ १३-२२०-४५ (९००६८)
ये पुरा मनुजा देवि त्वासुरं भावमाश्रिताः ।
स्ववशाः कोपनपरा गुरुविद्विषिणस्तथा ॥ १३-२२०-४६ (९००६९)
परेषां दुःखजनका मनोवाक्कायकर्मभिः ।
छिन्दन्भिन्दन्स्तुदन्नेव नित्यं प्राणिषु निर्दयाः ॥ १३-२२०-४७ (९००७०)
एवंयुक्तसमाचाराः पुनर्जन्मनि शोभने ।
यदि वै मानुषं जन्म लभेरंस्ते तथाविधाः ।
तत्र ते बहुभिर्घोरैस्तप्यन्ते व्याधिभिः प्रिये ॥ १३-२२०-४८ (९००७१)
केचिद्वातादिसंयुक्ताः केचित्कासससमन्विताः ।
ज्वरातिसारतृष्णाभिः पीड्यमानास्तथा परे ॥ १३-२२०-४९ (९००७२)
पादगुल्मैश्च बहुभिः श्लेष्मदोषसमन्विताः ।
पादरोगैश्च विविधैर्व्रणकुष्ठभगंदरैः ।
आढ्या वा दुर्गता वाऽपि दृश्यन्ते व्याधिपीडिताः। १३-२२०-५० (९००७३)
एवमात्मकृतं कर्म भुञ्जन्ते तत्रतत्र ते ।
अभिभूतुं न शक्यं हि केनचित्स्वकृतं फलम् ।
इति ते कथितं देवि भूयः श्रोतुं किमिच्छसि ॥ ॥ १३-२२०-५१ (९००७४)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
विंशत्यधिकद्विशततमोऽध्यायः ॥

---

अनुससनपर्व-अध्यय२२१
॥ श्रीः ॥
१३.२२१. अध्यायः २२१

अथ दानधर्मपर्व ॥ १ ॥
Mahabharata - Anushaasana Parva - Chapter Topics
ईश्वरेण पार्वतींप्रति
प्राणिनामङ्गविकृत्यनपत्यतादिदोषहेतुभूतदुष्कर्मप्रतिपादनम्
॥ १ ॥

Mahabharata - Anushaasana Parva - Chapter Text

उमोवाच ।
भगवन्देवदेवेश भूतपाल नमोस्तु ते ।
ह्रस्वाङ्गाश्चैव वक्राङ्गाः कुब्जा वामनकास्तथा ॥ १३-२२१-१ (९००७५)
अपरे मानुषा देव दृश्यन्ते कुणिबाहवः ।

केन कर्मविपाकेन तन्मे शंसितुमर्हसि ॥ १३-२२१-२ (९००७६)
महेश्वर उवाच। १३-२२१-३क्ष् (७५४३)
ये पुरा मनुजा देवि लोभमोहसमन्विताः ।
धान्यमानान्विकुर्वन्ति क्रयविक्रयकारणात् ॥ १३-२२१-३ (९००७७)
कुलदोषं तदा देवि धृतमानेषु नित्यशः ।
अर्धापकर्षणं चैव सर्वेषां क्रयविक्रये ॥ १३-२२१-४ (९००७८)
अङ्गदोषकरा ये तु परेषां कोपकारणात् ।
मांसादाश्चैव ये मूर्खा अयथावत्प्रथाः सदा ॥ १३-२२१-५ (९००७९)
एवंयुक्तसमाचाराः पुनर्जन्मनि शोभने ।
ह्रस्वाङ्गा वामनाश्चैव कुब्जाश्चैव भवन्ति ते ॥ १३-२२१-६ (९००८०)
उमोवाच। १३-२२१-७क्ष् (७५४४)
भगवन्मानुषाः केचिद्दृश्यन्ते मानुषेषु वै ।
उन्मत्ताश्च पिशाचाश्च पर्यटन्तो यतस्ततः ।
केन कर्मविपाकेन तन्मे शंसितुमर्हसि ॥ १३-२२१-७ (९००८१)
महेश्वर उवाच। १३-२२१-८क्ष् (७५४५)
ये पुरा मनुजा देवि दर्पाहंकारसंयुताः ।
बहुधा प्रलपन्त्येव हसन्ति च परान्भृशम् ॥ १३-२२१-८ (९००८२)
मोहयन्ति परान्भोगैर्मदनैर्लोभकारणात् ।
वृद्धान्गुरूंश्च ये मूर्खा वृथैवापहसन्ति च ।
शौण्डा विदग्धाः शास्त्रेषु सदैवानृतवादिनः ॥ १३-२२१-९ (९००८३)
एवंयुक्तसमाचाराः पुनर्जन्मनि शोभने ।
उन्मत्ताश्च पिशाचाश्च भवन्त्येव न संशयः ॥ १३-२२१-१० (९००८४)
उमोवाच। १३-२२१-११क्ष् (७५४६)
भगवन्मानुषाः केचिन्निरपत्याः सुदुःखिताः ।
यतन्तो न लभन्त्येव अपत्यानि यतस्ततः ।
केन कर्मविपाकेन तन्मे शंसितुमर्हसि ॥ १३-२२१-११ (९००८५)
महेश्वर उवाच। १३-२२१-१२क्ष् (७५४७)
ये पुरा मनुजा देवि सर्वप्राणिषु निर्दयाः ।
घ्नन्ति बालांश्च भुञ्जन्ते मृगाणां पक्षिणामपि ॥ १३-२२१-१२ (९००८६)
गुरुविद्वेषिणश्चैव परपुत्राभ्यसूयकाः ।
पितृपूजां न कुर्वन्ति यथोक्तां चाष्टकादिभिः ॥ १३-२२१-१३ (९००८७)
एवंयुक्तसमाचाराः पुनर्जन्मनि शोभने ।
मानुष्यं वा चिरात्प्राप्य निरपत्या भवन्ति ते ।
पुत्रशोकयुताश्चापि नास्ति तत्र विचारणा ॥ १३-२२१-१४ (९००८८)
उमोवाच। १३-२२१-१५क्ष् (७५४८)
भगवन्मानुषाः केचित्प्रदृश्यन्ते सुदुःखिताः ।

उद्वेगवासनिरताः सोद्विगाश्च यतव्रताः ॥१३-२२१-१५ (९००८९)
नित्यं शोकसमाविष्टा दुर्गताश्च तथैव च ।
केन कर्मविपाकेन तन्मे शंसितुमर्हसि ॥१३-२२१-१६ (९००९०)
महेश्वर उवाच।१३-२२१-१७क्ष् (७५४९)
ये पुरा मनुजा नित्यमुत्क्रोशनपरायणाः ।
भीषयन्ति परानित्यं विकुर्वन्ति तथैव च ॥१३-२२१-१७ (९००९१)
ऋणवृद्धिकराश्चैव दरिद्रेभ्यो यथेष्टतः ।
ऋणार्थमभिगच्छन्ति सततं वृद्धिरूपकाः ॥१३-२२१-१८ (९००९२)
उद्विजन्ते हि तान्दृष्ट्वा धारकाः स्वार्थकारणात् ।
अतिवृद्धिर्न कर्तव्या दरिद्रेभ्यो यथेष्टतः ॥१३-२२१-१९ (९००९३)
ये श्वभिः क्रीडमानाश्च त्रासयन्ति वने मृगान् ।
प्राणिहिंसां तथा देवि कुर्वन्ति च यतस्ततः ॥१३-२२१-२० (९००९४)
येषां गृहेषु वै श्वानस्त्रासयन्ति वृथा नरान् ।
एवंयुक्तसमाचाराः कालधर्मगताः पुनः ॥१३-२२१-२१ (९००९५)
पीडिता यमदण्डेन निरयस्थाश्चिरं प्रिये ।
कथञ्चित्प्राप्य मानुष्यं तत्र ते दुःखसंयुताः ॥१३-२२१-२२ (९००९६)
कुदेशे दुःखभूयिष्ठे व्याघातशतसङ्कुले ।
जायन्ते तत्र शोचन्तः सोद्विगाश्च यतस्ततः ॥१३-२२१-२३ (९००९७)
उमोवाच।१३-२२१-२४क्ष् (७५५०)
भगवन्मानुषाः केचिदैश्वर्यज्ञानसंयुताः ।
म्लेच्छभूमिषु दृश्यन्ते म्लेच्छैश्वर्यसमन्विताः ।
केन कर्मविपाकेन तन्मे शंसितुमर्हसि ॥ १३-२२१-२४ (९००९८)
महेश्वर उवाच।१३-२२१-२५क्ष् (७५५१)
ये पुरा मनुजा देवि धनधान्यसमन्विताः ।
अयथावत्प्रयच्छन्ति श्रद्धावर्जितमेव वा ॥१३-२२१-२५ (९००९९)
अपात्रेभ्यश्च ये दानं शौचमङ्गलवर्जिताः ।
ददत्येव च ये मूर्खाः श्लाघयाऽवज्ञयाऽपि वा ॥१३-२२१-२६ (९०१००)
एवंयुक्तसमाचाराः पुनर्जन्मनि शोभने ।
कुदेशे म्लेच्छभूयिष्ठे दुर्गमे वनसंकटे ।
म्लेच्छाधिपत्यं सम्प्राप्य जायन्ते तत्रतत्र वै ॥ १३-२२१-२७ (९०१०१)
उमोवाच।१३-२२१-२८क्ष् (७५५२)
भगवन्भगनेत्रघ्न मानुषेषु च केचन ।
क्लीबा नपुंसकाश्चैव दृश्यन्ते षण्डकास्तथा ॥१३-२२१-२८ (९०१०२)
नीचकर्मरता नीचा नीचसक्यास्तथा भुवि ।
केन कर्मविपाकेन तन्मे शंसितुमर्हसि ॥१३-२२१-२९ (९०१०३)
महेश्वर उवाच।१३-२२१-३०क्ष् (७५५३)

तदहं ते प्रवक्ष्यामि शृणु कल्याणि कारणम् ॥ १३-२२१-३० (९०१०४)
ये पुरा मनुजा भूत्वा घोरकर्मरतास्तथा ।
पशुपंस्त्वोपगातेन जीवन्ति च रमन्ति च ॥ १३-२२१-३१ (९०१०५)
पुंस्त्वोपघातिनश्चैव नराणां कोपकारणात् ।
ये धूर्ताः स्त्रीषु गच्छन्ति अयथावद्यथेष्टतः ॥ १३-२२१-३२ (९०१०६)
कामविघ्नकरा ये तु द्वेषपैशुन्यकारणात् ।
एवंयुक्तसमाचाराः कालधर्मं गतास्तु ते ।
दण्डिता यमदण्डेन निरयस्थाश्चिरं प्रिये ॥ १३-२२१-३३ (९०१०७)
यदि चेन्मानुषं जन्म लभेरंस्ते तथाविधाः ।
क्लीबा वर्षवराश्चैव षण्डकाश्च भवन्ति ते ॥ १३-२२१-३४ (९०१०८)
नीचकर्मपरा लोके निर्लज्जा वीतसम्भ्रमाः ।
परान्दीनान्बहिष्कृत्य ते भवन्ति स्वकर्मणा ॥ १३-२२१-३५ (९०१०९)
यदि चेत्सम्प्रपश्येरंस्ते मुच्यन्ते हि कल्मषात् ।
अत्रापि ते प्रमाद्येयुः पतन्ति नरकालये ॥ १३-२२१-३६ (९०११०)
स्त्रीणामपि तथा देवि यथा पुंसां तु कर्मजम् ।
इति ते कथितं देवि भूयः श्रोतुं किमिच्छसि ॥ ॥ १३-२२१-३७ (९०१११)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
एकविंशत्यधिकद्विशततमोऽध्यायः ॥ २२१ ॥

---

अनुससनपर्व-अध्यय२२२
॥ श्रीः ॥
१३.२२२. अध्यायः २२२

अथ दानधर्मपर्व ॥ १ ॥
Mahabharata - Anushaasana Parva - Chapter Topics
महेश्वरेणोमांप्रति स्त्रीणां
पुंश्चलीत्वादिदोषहेतुभूतदुष्कर्मकथनम् ॥ १ ॥
तथा प्राणिसाधारण्येन दास्यादिप्रयोजकदुष्कर्मकथनम् ॥ २ ॥

Mahabharata - Anushaasana Parva - Chapter Text

उमोवाच ।
भगवन्देवदेवेश शूलपाणे वृषध्वज ।
पुंश्चल्य इव या स्त्रीषु नीचवृत्तिरताः स्मृताः ।
केन कर्मविपाकेन तन्मे शंसितुमर्हसि ॥ १३-२२२-१ (९०११२)

महेश्वर उवाच। १३-२२२-२क्ष् (७५५४)
याः पुरा मनुजा देवि बुद्धिमोहसमन्विताः ।
कामरागसमायुक्ताः पतीनतिचरन्ति वै ॥ १३-२२२-२ (९०११३)
प्रतिकूलपरा यास्तु पतीन्प्रति यथा तथा ।
शौचं लज्जां तु विस्मृत्य यथेष्टपरिचारणाः ॥ १३-२२२-३ (९०११४)
एवंयुक्तसमाचारा यमलोके सुदण्डिताः ।
यदि वै मानुषं जन्म लभेरंस्तास्तथाविधाः ।
बहुसाधारणा एव पुंश्चल्यश्च भवन्ति ताः ॥ १३-२२२-४ (९०११५)
पौश्चल्यं यत्तु तद्वृत्तं स्त्रीणां कष्टतमं स्मृतम् ।
ततःप्रभृति ता देवि पतन्त्येव न संशयः ॥ १३-२२२-५ (९०११६)
शोचन्ति चेत्तु तद्वृत्तं मनसा हितमाप्नुयुः ॥ १३-२२२-६ (९०११७)
उमोवाच ।
भगवन्देवदेवेश प्रमदा विधवा भृशम्। १३-२२२-६क्ष् (७५५५)
दृश्यन्ते मानुषा लोके सर्वकल्याणवर्जिताः ।
केन कर्मविपाकेन तन्मे शंसितुमर्हसि ॥ १३-२२२-७ (९०११८)
महेश्वर उवाच। १३-२२२-८क्ष् (७५५६)
याः पुरा मनुजा देवि बुद्धिमोहसमन्विताः ।
कुटुम्बं तत्र वे पत्युर्नाशयन्ति वृथा तथा ॥ १३-२२२-८ (९०११९)
विषदाश्चाग्निदाश्चैव पतीन्प्रति सुनिर्दयाः ।
अन्यासां हि पतीन्यान्ति स्वपतिद्वेषकारणात् ॥ १३-२२२-९ (९०१२०)
एवंयुक्तसमाचारा यमलोके सुदण्डिताः ।
निरयस्थाश्चिरं कालं कथंचित्प्राप्य मानुषम् ।
तत्र ता भोगरहिता विधवास्तु भवन्ति वै ॥ १३-२२२-१० (९०१२१)
उमोवाच। १३-२२२-११क्ष् (७५५७)
भगवन्प्रमदा लोके पत्यौ ज्ञातिषु सत्सुच ।
लिङ्गिन्यः सम्प्रदृश्यन्ते पाषण्डं मतमाश्रिताः ।
केन कर्मविपाकेन तन्मे शंसितुमर्हसि ॥ १३-२२२-११ (९०१२२)
महेश्वर उवाच। १३-२२२-१२क्ष् (७५५८)
याः पुरा भावदोषेणि लोभमोहसमन्विताः ।
परद्रव्यपरा लोभात्परेषां द्रव्यहारकाः ॥ १३-२२२-१२ (९०१२३)
अभ्यसूयापरा यास्तु सपत्नीनां प्रदूषकाः ।
ईर्ष्यापराः कोपनाश्च बन्धूनां विफलाः सदा ॥ १३-२२२-१३ (९०१२४)
एवंयुक्तसमाचाराः पुनर्जन्मनि ताः स्त्रियः ।
अलक्षणसमायुक्ताः पाषण्डं धर्ममाश्रिताः ।
स्त्रियः प्रव्राजशीलाश्च भवन्त्येव न संशयः ॥ १३-२२२-१४ (९०१२५)
उमोवाच। १३-२२२-१५क्ष् (७५५९)

भगवन्मानुषाः केचित्कारुवृत्तिसमाश्रिताः ।
प्रदृश्यन्ते मनुष्येषु नीचकर्मरतास्तथा ।
केन कर्मविपाकेन तन्मे शंसितुमर्हति ॥ १३-२२२-१५ (९०१२६)
महेश्वर उवाच। १३-२२२-१६क्ष् (७५६०)
ये पुरा मनुजा देवि स्तब्धमानयुता भृशम् ।
दर्पाहङ्कारसंयुक्ताः केवलात्मपरायणाः ॥ १३-२२२-१६ (९०१२७)
तादृशा मानुषा देवि पुनर्जन्मनि शोभने ।
कात्वो नटगन्धर्वाः सम्भवन्ति यथा तथा ॥ १३-२२२-१७ (९०१२८)
नापिता बन्दिनश्चैव तथा वैतालिकाः प्रिये ।
एवंभूतास्त्वधोवृत्तिं जीवन्त्याश्रित्य मानवाः ॥ १३-२२२-१८ (९०१२९)
परप्रसाधनकरास्ते परैः कृतवेतनाः ।
परावमानस्य फलं भुञ्जते पौर्वदैहिकम् ॥ १३-२२२-१९ (९०१३०)
उमोवाच। १३-२२२-२०क्ष् (७५६१)
भगवन्देवदेवेश मानुषेष्वेव केचन ।
दासभूताः प्रदृश्यन्ते सर्वकर्मपरा भृशम् ॥ १३-२२२-२० (९०१३१)
आघातभर्त्सनसहाः पीड्यमानाश्च सर्वशः ।
केन कर्मविपाकेन तन्मे शंसितुमर्हसि ॥ १३-२२२-२१ (९०१३२)
महेश्वर उवाच। १३-२२२-२२क्ष् (७५६२)
तदहं ते प्रवक्ष्यामि शृणु कल्याणि कारणम् ॥ १३-२२२-२२ (९०१३३)
ये पुरा मनुजा देवि परेषां वित्तहारकाः ।
ऋणवृद्धिकरं कृष्या न्यासदत्तं तथैव च ॥ १३-२२२-२३ (९०१३४)
निक्षेपकारणाद्दत्तपरद्रव्यापहारिणः ।
प्रमादाद्विस्मृतं नष्टं परेषां धनहारकाः ॥ १३-२२२-२४ (९०१३५)
वधबन्धपरिक्लेशैर्दासत्वं कुर्वते परान् ।
तादृशा मरणं प्राप्ता दण्डिता यमशासनैः ॥ १३-२२२-२५ (९०१३६)
कथञ्चित्प्राप्य मानुष्यं तत्र ते देवि सर्वथा ।
दासभूता भविष्यन्ति जन्मप्रभृति मानवाः ॥ १३-२२२-२६ (९०१३७)
तेषां कर्माणि कुर्वन्ति येषां ते धनहारकाः ।
आसमाप्तेः स्वपापस्य कुर्वन्तीति विनिश्चयः ॥ १३-२२२-२७ (९०१३८)
पशुभूतास्तथा चान्ये भवन्ति धनहारकाः ।
तत्तथा क्षीयते कर्म तेषां पूर्वापराधजम् ।
अतोऽन्यथा न तच्छक्यं कर्म भोक्तुं सुरासुरैः ॥ १३-२२२-२८ (९०१३९)
किन्तु मोक्षविधिस्तेषां सर्वता तत्प्रसादनम् ।
अयथावन्मोक्षकामः पुनर्जन्मनि चेष्यते ॥ १३-२२२-२९ (९०१४०)
मोक्षकामी यथान्यायं कुर्वन्कर्माणि सर्वशः ।
भर्तुः प्रसादमाकाङ्क्षेदायासान्सर्वथा सहन् ॥ १३-२२२-३० (९०१४१)

प्रीतिपूर्वं तु यो भर्त्रा मुक्तो मुक्तः स्वपापतः ।
तथाभूतान्कर्मकरान्सदा सन्तोषयेत्पतिः ॥ १३-२२२-३१ (९०१४२)
यथार्हं कारयेत्कर्म दण्डकारणतः क्षिपेत् ।
वृद्धान्बालांस्तथा क्षीणान्पालयन्धर्ममाप्नुयात् ॥ १३-२२२-३२ (९०१४३)
इति ते कथितं देवि भूयः श्रोतुं किमिच्छसि ॥ ॥ १३-२२२-३३ (९०१४४)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
द्वाविंशत्यधिकद्विशततमोऽध्यायः ॥ २२२ ॥

---

अनुससनपर्व-अध्यय२२३
॥ श्रीः ॥
१३.२२३. अध्यायः २२३

अथ दानधर्मपर्व ॥ १ ॥
Mahabharata - Anushaasana Parva - Chapter Topics
परमेश्वरेण पार्वतीप्रति प्राणिनां
चण्डालत्वदरिद्रत्वादिप्रापकदुष्कर्मप्रतिपादनम् ॥ १ ॥

Mahabharata - Anushaasana Parva - Chapter Text

उमोवाच ।
भगवन्मानुषेष्वेव मानुषाः समदर्शनाः ।
चण्डाला इव दृश्यन्ते स्पर्शमात्रविदूषिताइः ॥ १३-२२३-१ (९०१४५)
नीचकर्मरता देव सर्वेषां मलहारकाः ।
दुर्गताः क्लेशभूयिष्ठा विरूपा दुष्टचेतसः ।
केन कर्मविपाकेन तन्मे शंसितुमर्हसि ॥ १३-२२३-२ (९०१४६)
महेश्वर उवाच। १३-२२३-३क्ष् (७५६३)
तदहं ते प्रवक्ष्यामि तदेकाग्रमनाः शृणु ॥ १३-२२३-३ (९०१४७)
ये पुरा मनुजा देवि अतिमानयुता भृशम् ।
आत्मसम्भावनायुक्ताः स्तब्धा दर्पसमन्विताः ॥ १३-२२३-४ (९०१४८)
प्रणामं तु न कुर्वन्ति गुरूणामपि पामराः ।
ये स्वधर्मार्पणं कार्यमतिमानान्न कुर्वते ॥ १३-२२३-५ (९०१४९)
परान्संनामयन्त्येव आज्ञयात्मनि ये बलात् ।
ऋद्धियोगात्परान्नित्यमवमन्यन्ति मानवान् ।
पानपाः सर्वभक्षाश्च परुषाः कटुका नराः ॥ १३-२२३-६ (९०१५०)
एवंयुक्तसमाचाराक दण्डिता यमशासनैः ।

कथंचित्प्राप्य मानुष्यं चण्डालाः सम्भवन्ति ते ॥ १३-२२३-७ (९०१५१)
नीचकर्मरताश्चैव सर्वेषां मलहारकाः ।
परेषां वन्दनपरास्ते भवन्त्येव मानिनः ॥ १३-२२३-८ (९०१५२)
विरूपाः पापयोनिस्थाः स्पर्शनादिविवर्जिताः ।
कुवृत्तिमुपजीवन्ति भुत्वा ते रजकादयः ।
पुराऽतिमानदोषात्तु भुञ्जते स्वकृतं फलम् ॥ १३-२२३-९ (९०१५३)
तानप्यवस्ताकृपणांश्चण्डालानपि बुद्धिमान् ।
न च निन्देन्नापि कुप्येद्भुञ्जते स्वकृतं फलम् ।
चण्डाला अपि तां जातिं शोचन्तः शुद्धिमाप्नुयुः ॥ १३-२२३-१० (९०१५४)
उमोवाच। १३-२२३-११क्ष् (७५६४)
भगवन्मानुषाः केचिदाशापाशशतैर्वृताः ।
परेषां द्वारि तिष्ठन्ति प्रतिषिद्धाः प्रवेशने ॥ १३-२२३-११ (९०१५५)
द्रष्टुं ज्ञापयितुं चैव न लभन्ते च यत्नतः ।
केन कर्मविपाकेन तन्मे शंसितुमर्हसि ॥ १३-२२३-१२ (९०१५६)
महेश्वर उवाच। १३-२२३-१३क्ष् (७५६५)
ये पुरा मानुषा देवि ऐश्वर्यस्थानसंयुताः ।
संवादं तु न कुर्वन्ति परैरैश्वर्यमोहिताः ॥ १३-२२३-१३ (९०१५७)
द्वाराणि न ददत्येव लोभमोहादिभिर्वृताः ।
अवस्थामोहसंयुक्ताः स्वार्थमात्रपरायणाः ॥ १३-२२३-१४ (९०१५८)
सर्वभोगयुता वाऽपि सर्वेषां निष्फला भृशम् ।
अपि शक्ता न कुर्युस्ते परानुग्रहकारणात् ॥ १३-२२३-१५ (९०१५९)
निर्दयाश्चैव निर्द्वारा भोगैश्वर्यगतिं प्रति ।
एवंयुक्तसमाचाराः पुनर्जन्मनि शोभने ॥ १३-२२३-१६ (९०१६०)
यदि चेन्मानुषं जन्म लभेरंस्ते तथाविधाः ।
दुर्गता दुरवस्थाश्च कर्मव्याक्षेपसंयुताः ॥ १३-२२३-१७ (९०१६१)
अभिधावन्ति ते सर्वे तमर्थमभिवेदिनः ।
राज्ञां वा राजमात्राणां द्वारि तिष्ठन्ति वारिताः ॥ १३-२२३-१८ (९०१६२)
कर्म विज्ञापितुं द्रष्टुं न लभन्ते कथञ्चन ।
प्रवेष्टुमपि ते द्वारं बहिस्तिष्ठन्ति काङ्क्षया ॥ १३-२२३-१९ (९०१६३)
उमोवाच। १३-२२३-२०क्ष् (७५६६)
भगवन्मानुषाः केचिन्मनुष्येषु बहुष्वपि ।
सहसा नष्टसर्वस्वा भ्रष्टकोशपरिग्रहाः ॥ १३-२२३-२० (९०१६४)
दृश्यन्ते मानुषाः केचिद्राजचोरोदकादिभिः ।
केन कर्मविपाकेन तन्मे शंसितुमर्हसि ॥ १३-२२३-२१ (९०१६५)
महेश्वर उवाच। १३-२२३-२२क्ष् (७५६७)
ये पुरा मानुषा देवि आसुरं भावमाश्रिताः ।

परेषां वृत्तिनाशं तु कुर्वते द्वेषलोभतः ॥ १३-२२३-२२ (९०१६६)
उत्कोचनपराश्चैव पिशुनाश्च तथाविधाः ।
परद्रव्यहरा घोराश्चौर्याद्वाऽन्येन कर्मणा ॥ १३-२२३-२३ (९०१६७)
निर्दया निरनुक्रोशाः परेषां वृत्तिनाशकाः ।
नास्तिकाऽनृतभूयिष्ठाः परद्रव्यापहारिणः ॥ १३-२२३-२४ (९०१६८)
एवंयुक्तसमाचारा दण्डिता यमशासनैः ।
निरयस्थाश्चिरं कालं तत्र दुःखसमन्विताः ॥ १३-२२३-२५ (९०१६९)
यदि चेन्मानुषं जन्म लभेरंस्ते तथाविधाः ।
तत्रस्थाः प्राप्नुवन्त्येव सहसा द्रव्यवाशनम् ॥ १३-२२३-२६ (९०१७०)
कष्टं तत्प्राप्नुवन्त्येव कारणाकारणादपि ।
नाशं विनाशं द्रव्याणामुपघातं च सर्वशः ॥ १३-२२३-२७ (९०१७१)
उमोवाच। १३-२२३-२८क्ष् (७५६८)
भगवन्मानुषाः केचिद्बान्धवैः सहसा पृथक् ।
कारणादेव सहसा सर्वेषां प्राणनाशनम् ॥ १३-२२३-२८ (९०१७२)
शस्त्रेण वाऽन्यथा वाऽपि प्राप्नुवन्ति वधं नराः ।
केन कर्मविपाकेन तन्मे शंसितुमर्हसि ॥ १३-२२३-२९ (९०१७३)
महेश्वर उवाच। १३-२२३-३०क्ष् (७५६९)
ये पुरा मनुजा देवि घोरकर्मरतानृताः ।
आसुराः प्रायशो मूर्खाः प्राणिहिंसाप्रिया भृशं ॥ १३-२२३-३० (९०१७४)
निर्दयाः प्राणिहिंसायां तथा प्राणिविघातकाः ।
विश्वस्तघातकाश्चैव तथा सुप्तविघातकाः ।
प्रायशोऽनृतभूयिष्ठा नास्तिका मांसभोजनाः ॥ १३-२२३-३१ (९०१७५)
एवंयुक्तसमाचाराः कालधर्मं गताः पुनः ।
दण्डिता यमदण्डेन निरयस्थाश्चिरं प्रिये ॥ १३-२२३-३२ (९०१७६)
तिर्यग्योनिं पुनः प्राप्य तत्र दुःखपरिक्षयात् ।
यदि चेन्मानुपं जन्म लभेरंस्ते तथाविधाः ।
तत्र ते प्राप्नुवन्त्येव वधबन्धान्यथा तथा ॥ १३-२२३-३३ (९०१७७)
आढ्या वा दुर्गता वाऽपि भुञ्जते स्वकृतं फलम् ।
सुप्ता मत्ताश्च विश्वस्तास्तथा ते प्राप्नुवन्त्युत ॥ १३-२२३-३४ (९०१७८)
प्राणवाधकृतं दुःखं बान्धवैः सहसा पृथक् ।
पुत्रदारविनाशं वा शस्त्रेणान्येन वा वधम् ॥ १३-२२३-३५ (९०१७९)
उमोवाच। १३-२२३-३६क्ष् (७५७०)
भगवन्मानुषाः केचिद्राजनीतिविशार दैः ।
दण्ड्यन्ते मानुषे लोके मानुषाः सर्वतोभयाः ।
केन कर्मविपाकेन तन्मे शंसितुमर्हसि ॥ १३-२२३-३६ (९०१८०)
महेश्वर उवाच। १३-२२३-३७क्ष् (७५७१)

ये पुरा मनुजा देवि मानुषांश्चेतराणि वा ।
क्लिष्टघातेन निघ्नन्ति प्राणान्प्राणिषु निर्दयाः ।
आसुर घोरकर्माणः क्रूरदण्डवधप्रियाः ॥ १३-२२३-३७ (९०१८१)
ये दण्डयन्त्यदण्ड्यांश्च राजानः कोपमोहिताः ।
हिंसाहङ्कारपरुषा मांसादा नास्तिकाशुभाः ॥ १३-२२३-३८ (९०१८२)
केचित्स्त्रीपुरुषघ्नाश्च गुरुघ्नाश्च तथा प्रिये ।
एवंयुक्तसमाचारा प्राणिधर्मं गताः पुनः ॥ १३-२२३-३९ (९०१८३)
दण्डिता यमदण्डेन निरयस्थाश्चिरं प्रिये ।
पूर्वजन्मकृतं कर्म भुञ्जते तदिह प्रजाः ॥ १३-२२३-४० (९०१८४)
इहैव यत्कर्म कृतं तत्परत्र फलत्युत ।
एषा व्यवस्थितिर्देवि मानुषेष्वेव दृश्यते ॥ १३-२२३-४१ (९०१८५)
न चर्षीणां न देवानाममृतत्वात्तपोबलात् ।
तैरेकेन शरीरेण भुज्यते कर्मणः फलम् ॥ १३-२२३-४२ (९०१८६)
न तथा मानुषाणां स्यादन्तर्धाय भवेद्धि तत् ॥ १३-२२३-४३ (९०१८७)
उमोवाच। १३-२२३-४४क्ष् (७५७२)
किमर्थं मानुषा लोके दण्ड्यन्ते पृथिवीश्वरैः ।
कृतापराधमुद्दिश्य हन्ता हर्ताऽयमित्युत ॥ १३-२२३-४४ (९०१८८)
पुत्रार्थी पुत्रकामेष्ट्या इहैव लभते सुतान् ।
तैरेव हि शरीरेण भुञ्जन्ते कर्मणां फलम् ॥ १३-२२३-४५ (९०१८९)
दृश्यन्ते मानुषे लोके तद्भवान्नानुमन्यते ।
एतन्मे संशयस्थानं तन्मे त्वं छेत्तुमर्हसि ॥ १३-२२३-४६ (९०१९०)
महेश्वर उवाच। १३-२२३-४७क्ष् (७५७३)
स्थाने संशयितं देवि तत्त्वं शृणु समाहिता ।
कर्म कर्मफलं चेति युगपद्भुवि नेष्यते ॥ १३-२२३-४७ (९०१९१)
ये त्वयाऽभिहिता देवि हन्ता हर्ताऽयमित्यपि ।
तेषां तत्पूर्वकं कर्म दण्ड्यते यत्र राजभिः ॥ १३-२२३-४८ (९०१९२)
देवि कर्म कृतं चैषां हेतुर्भवति शासने ।
अपराधापरेशेन राजा दण्डयति प्रजाः ॥ १३-२२३-४९ (९०१९३)
इह लोके व्यवस्थार्थं राजभिर्दण्डनं स्मृतम् ।
उद्वेजनार्थं शेषाणामपराधं तमुद्दिशन् ॥ १३-२२३-५० (९०१९४)
पुराकृतफलं दण्डो दण्ड्यमानस्य तद्ध्रुवम् ।
प्रागेव च मया प्रोक्तं तत्र निःसंशया भव ॥ १३-२२३-५१ (९०१९५)
उमोवाच। १३-२२३-५२क्ष् (७५७४)
भगवन्भुवि मर्त्यानां दण्डितानां नरेश्वरैः ।
दण्डेनैव तु तेनेह पापनाशो भवेन्न वा। १३-२२३-५२ (९०१९६)
एतन्मया संशयितं तद्भवांश्छेत्तुमर्हति ॥ १३-२२३-५३ (९०१९७)

महेश्वर उवाच ।
स्थाने संशयितं देवि शृणु तत्वं समाहिता ॥ १३-२२३-५३क्ष् (७५७५)
ये नृपैर्दण्डिता भूमावपराधापदेशतः ।
यमलोके न दण्ड्यन्ते तत्र ते यमदण्डनैः ॥ १३-२२३-५४ (९०१९८)
अदण्डिता वा ये मिथ्या मिथ्या वा दण्डिता भुवि ।
तान्यमो दण्डयत्येव स हि वेद कृताकृतम् ।
नातिक्रमेद्यमं कश्चित्कर्म कृत्वेह मानुषः ॥ १३-२२३-५५ (९०१९९)
राजा यमश्च कुर्वाते दण्डमात्रं तु शोभने ।
उभाभ्यां यमराजभ्यां दण्डितोऽदण्डितोपि वा ।
पश्चात्कर्मफलं भुङ्क्ते नरके मानुषेषु वा ॥ १३-२२३-५६ (९०२००)
नास्ति कर्मफलच्छेत्ता कश्चिल्लोकत्रयेऽपि च ।
इति ते कथितं सर्वं निर्विशङ्का भव प्रिये ॥ १३-२२३-५७ (९०२०१)
उमोवाच। १३-२२३-५८क्ष् (७५७६)
किमर्थं दुष्कृतं कृत्वा मानुषा भुवि नित्यशः ।
पुनस्तत्कर्मनाशाय प्रायश्चित्तानि कुर्वते ॥ १३-२२३-५८ (९०२०२)
सर्वपापहरं चेति हयमेधं वदन्ति च ।
प्रायश्चित्तानि चान्यानि पापनाशाय कुर्वते ।
तस्मान्मया संशयितं त्वं तच्छेत्तुमिहार्हसि ॥ १३-२२३-५९ (९०२०३)
महेश्वर उवाच। १३-२२३-६०क्ष् (७५७७)
स्थाने संशयितं देवि शृणु तत्वं समाहिता ।
संशयो हि महानेव पूर्वेषां च मनीषिणाम् ॥ १३-२२३-६० (९०२०४)
द्विधा तु क्रियते पापं सद्भिश्चासद्भिरेव च ।
अभिसन्धाय वा नित्यमन्यथा वा यदृच्छया ॥ १३-२२३-६१ (९०२०५)
केवलं चाभिसन्धाय संरम्भाच्च करोति यत् ।
कर्मणस्तस्य नाशस्तु न कथंचन विद्यते ॥ १३-२२३-६२ (९०२०६)
अभिसन्धिकृतस्यैव नैव नाशोस्ति कर्मणः ।
अश्वमेधसहस्रैश्च प्रायश्चित्तशतैरपि ॥ १३-२२३-६३ (९०२०७)
अन्यथा यत्कृतं पापं प्रमादाद्वा यदृच्छया ।
प्रायश्चित्ताश्वमेधाब्यां श्रेयसा तत्प्रणश्यति ॥ १३-२२३-६४ (९०२०८)
लोकसंव्यवहारार्थं प्रायश्चित्तादिरिष्यते ।
विद्धयेवं पापके कार्ये निर्विशङ्का भव प्रिये ॥ १३-२२३-६५ (९०२०९)
इति ते कथितं देवि भूयः श्रोतुं किमिच्छसि ॥ १३-२२३-६६ (९०२१०)
उमोवाच। १३-२२३-६७क्ष् (७५७८)
भगवन्देवदेवेश मानुषाश्चेतरा अपि ।
म्रियन्ते मानुषा लोके कारणाकारणादपि ।
केन कर्मविपाकेन तन्मे शंसितुमर्हसि ॥ १३-२२३-६७ (९०२११)

महेश्वर उवाच।१३-२२३-६८क्ष् (७५७९)
ये पुरा मनुजा देवि कारणाकारणादपि ।
यथाऽसुभिर्वियुज्यन्ते प्राणिनः प्राणिनिर्दयैः ॥१३-२२३-६८ (९०२१२)
तथैव ते प्राप्नुवन्ति यथैवात्मकृतं फलम् ।
विषदास्तु विषेणैव शस्त्रैः शस्त्रेण घातकाः ॥१३-२२३-६९ (९०२१३)
एवमेव यथा लोके मानुषान्घ्नन्ति मानुषाः ।
कारणेनैव तेनाथ तता स्वप्राणनाशनम् ।
प्राप्नुवन्ति पुनर्देवि नास्ति तत्र विचारणा ॥ १३-२२३-७० (९०२१४)
इति ते कथितं सर्वं कर्मपाकफलं प्रिये ।
भूयस्तव समासेन कथयिष्यामि तच्छृणु ॥१३-२२३-७१ (९०२१५)
सत्यप्रमाणकरणान्नित्यमव्यभिचारि च ।
यैः पुरा मनुजैर्देवि यस्मिन्काले यथा कृतम् ॥१३-२२३-७२ (९०२१६)
येनैव कारणेनापि कर्म यत्तु शुभाशुभम् ।
तस्मन्काले तथा देवि कारणेनैव तेन तु ॥१३-२२३-७३ (९०२१७)
प्राप्नुवन्ति नराः प्रेत्य निःसन्देहं शुभाशुभम् ।
इति सत्यं प्रजानीहि लोके तत्र विधिं प्रति ॥१३-२२३-७४ (९०२१८)
कर्मकर्ता नरो भोक्ता स नास्ति दिवि वा भुवि ।
न शक्यं कर्म चाभोक्तुं सदेवासुरमानुषैः ॥१३-२२३-७५ (९०२१९)
कर्मणा ग्रथितो लोक आदिप्रभृति वर्तते ।
एतदुद्देशतः प्रोक्तं कर्मपाकफलं प्रति ॥१३-२२३-७६ (९०२२०)
यदन्यच्च मया नोक्तं यस्मिंस्ते कर्मसङ्ग्रहे ।
बुद्धितर्केण तत्सर्वं तथा वेदितुमर्हसि ।
कथितं श्रोतुकामाया भूयः श्रोतुं किमिच्छसि ॥ ॥ १३-२२३-७७ (९०२२१)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
त्रयोविंशत्यधिकद्विशततमोऽध्यायः ॥२२३ ॥

---

अनुससनपर्व-अध्यय२२४
॥श्रीः ॥
१३.२२४. अध्यायः २२४

अथ दानधर्मपर्व ॥१ ॥
Mahabharata - Anushaasana Parva - Chapter Topics
परमेश्वरेण पार्वतींप्रति मर्त्यामर्त्यानां शरीरभेदाभेदेन
कर्मफलभोगोक्तिः ॥१ ॥

उमोवाच ।
भगवन्देवदेवेश लोकपालनमस्कृत ।
प्रसादात्ते महादेव श्रुता मे कर्मणां गतिः ॥ १३-२२४-१ (९०२२२)
सङ्गृहीतं च तत्सर्वं तत्वतोऽमृतसंनिभम् ।
कर्मणा ग्रथितं सर्वमिति वेद शुभाशुभम् ॥ १३-२२४-२ (९०२२३)
गोवत्सवच्च जननीं निम्नं सलिलवत्तथा ।
कर्तारं स्वकृतं कर्म नित्यं तदनुधावति ॥ १३-२२४-३ (९०२२४)
कृतस्य कर्मणश्चेह नाशो नास्तीति निश्चयः ।
अशुभस्य शुभस्यापि तदप्युपगतं मया ॥ १३-२२४-४ (९०२२५)
भूय एव महादेव वरद प्रीतिवर्धन ।
कर्मणां गतिमाश्रित्य संशयान्मोक्तुमर्हसि ॥ १३-२२४-५ (९०२२६)
महेश्वर उवाच। १३-२२४-६क्ष् (७५८०)
यत्ते विवक्षितं देवि गुह्यमप्यसितेक्षणे ।
तत्सर्वं निर्विशंका त्वं पृच्छ मां शुभलक्षणे ॥ १३-२२४-६ (९०२२७)
उमोवाच। १३-२२४-७क्ष् (७५८१)
एवं व्यवस्थिते लोके कर्ममां वृषभध्वज ।
कृत्वा तत्पुरुषः कर्म शुभं वा यदि वेतरत् ॥ १३-२२४-७ (९०२२८)
कर्मणः सुकृतस्येह कदा भुङ्क्ते फलं पुनः ।
इह वा प्रेत्य वा देव तन्मे शंसितुमर्हसि ॥ १३-२२४-८ (९०२२९)
महेश्वर उवाच। १३-२२४-९क्ष् (७५८२)
स्थाने संशयितं देवि तद्धि गुह्यतमं नृषु ।
त्वत्प्रियार्थं प्रवक्ष्यामि देवि गुह्यं शुभानने ॥ १३-२२४-९ (९०२३०)
पूर्वदेहकृतं कर्म भुञ्जते तदिह प्रजाः ।
इहैव यत्कृतं पुंसां तत्परत्र फलिष्यतै ।
एषा व्यवस्थितिर्देवि मानुषेष्वेव दृश्यते ॥ १३-२२४-१० (९०२३१)
देवानामसुराणां च अमरत्वात्तपोबलात् ।
एकेनैव शरीरेण भुज्यते कर्मणां फलम् ।
मानुषैर्न तथा देवि अन्तरं त्वेतदिष्यते ॥ ॥ १३-२२४-११ (९०२३२)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
चतुर्विंसत्यधिकद्विशततमोऽध्यायः ॥ २२४ ॥

---

अनुससनपर्व-अध्यय२२५
॥ श्रीः ॥

१३.२२५. अध्यायः २२५

अथ दानधर्मपर्व ॥ १ ॥

Mahabharata - Anushaasana Parva - Chapter Topics

पार्वत्या परमेश्वरंप्रति प्राणिनां शुभाशुभफलयोर्मध्ये कस्य पूर्वोपभोग इति प्रश्नः ॥ १ ॥
परमेश्वरेण तांप्रति सदृष्टान्तप्रदर्शनं तयोर्यौगपद्येनोपभोगकथनम् ॥ २ ॥
तथा पूर्वकर्मणामल्पायुष्ट्वादिकारणत्वाभिधानम् ॥ ३ ॥

Mahabharata - Anushaasana Parva - Chapter Text

उमोवाच ।
भगवन्भगनेत्रघ्न मानुषाणां विचेष्टितम् ।
सर्वमात्मकृतं चेति श्रुतं मे भगवन्मतम् ॥ १३-२२५-१ (९०२३३)
लोके ग्रहकृतं सर्वं मत्वा कर्म शुभाशुभम् ।
तदेव ग्रहनक्षत्रं प्रायशः पर्युपासते ।
एष मे संशयो देव तं मे त्वं छेत्तुमर्हसि ॥ १३-२२५-२ (९०२३४)
महेश्वर उवाच। १३-२२५-३क्ष् (७५८३)
स्थाने संशयितं देवि शृणु तत्वविनिश्चयम् ॥ १३-२२५-३ (९०२३५)
नक्षत्राणि ग्रहाश्चैव शुभाशुभनिवेदकाः ।
मानवानां महाभागे न तु कर्मकराः स्वयम् ॥ १३-२२५-४ (९०२३६)
प्रजानां तु हितार्थाय शुभाशुभविधिं प्रति ।
अनागतमतिक्रान्तं ज्योतिश्चक्रेण बोध्यते ॥ १३-२२५-५ (९०२३७)
किन्तु तत्र शुभं कर्म सुग्रहैस्तु निवेद्यते ।
दुष्कृतस्याशुभैरेव समावायो भवेदिति ॥ १३-२२५-६ (९०२३८)
तस्मात्तु ग्रहवैषम्ये विषमं कुरुते जनः ।
ग्रहसाम्ये शुभं कुर्याज्ज्ञात्वाऽऽत्मानं तथा कृतम् ॥ १३-२२५-७ (९०२३९)
केवलं ग्रहनक्षत्रं न करोति शुभाशुभम् ।
सर्वमात्मकृतं कर्म लोकवादो ग्रहा इति ॥ १३-२२५-८ (९०२४०)
पृथग्ग्रहाः पृथक्कर्ता कर्ता स्वं भुञ्जते फलम् ।
इति ते कथितं सर्वं विशङ्कां जहि शोभने ॥ १३-२२५-९ (९०२४१)
उमोवाच। १३-२२५-१०क्ष् (७५८४)
भगवन्विविधं कर्म कृत्वा जन्तुः शुभाशुभम् ।
किं तयोः पूर्वकतरं भुङ्क्ते जन्मान्तरे पुनः ।
एष मे संशयो देव तं मे त्वं छेत्तुमर्हसि ॥ १३-२२५-१० (९०२४२)

महेश्वर उवाच। १३-२२५-११क्ष् (७५८५)
स्थाने संशयितं देवि तत्ते वक्ष्यामि तत्वतः ॥
अशुभं पूर्वमित्याहुरपरे शुभमित्यपि। १३-२२५-११ (१०२४३)
मिथ्या तदुभयं प्रोक्तं केवलं तद्ब्रवीमि ते ॥ १३-२२५-१२ (१०२४४)
मानुषे तु पदे कर्म युगपद्भुज्यते सदा ।
यथाकृतं यथायोगमुभयं भुज्यते क्रमात् ॥ १३-२२५-१३ (१०२४५)
भुञ्जानाश्चापि दृश्यन्ते क्रमशो भुवि मानवाः ।
ऋद्धिं हानिं सुखं दुःखं तत्सर्वमुभयं भयम् ॥ १३-२२५-१४ (१०२४६)
दुःखान्यनुभवन्त्याढ्या दरिद्राश्च सुखानि च ।
यौगपद्याद्धि भुञ्जाना दृश्यन्ते लोकसाक्षिकम् ॥ १३-२२५-१५ (१०२४७)
नरके स्वर्गलोके च न तथा संस्थितिः प्रिये ।
नित्यं दुःखं हि नरके स्वर्गे नित्यं सुखं तथा ॥ १३-२२५-१६ (१०२४८)
शुभाशुभानामाधिक्यं कर्मणां तत्र सेव्यते ।
निरन्तरं सुखं दुःखं स्वर्गे च नरके भवेत् ॥ १३-२२५-१७ (१०२४९)
तत्रापि सुमहद्भुक्त्वा पूर्वमल्पं पुनः शुभे ।
एतत्ते सर्वमाख्यातं किं भूयः श्रोतुमिच्छसि ॥ १३-२२५-१८ (१०२५०)
उमोवाच। १३-२२५-१९क्ष् (७५८६)
भगवन्प्राणिनो लोके म्रियन्ते केन हेतुना ।
जाताजाता न तिष्ठन्ति तन्मे शंसितुमर्हसि ॥ १३-२२५-१९ (१०२५१)
महेश्वर उवाच। १३-२२५-२०क्ष् (७५८७)
तदहं ते प्रवक्ष्यामि शृणु सत्यं समाहिता ।
आत्मा कर्मक्षयाद्देहं यथा मुञ्चति तच्छृणु ॥ १३-२२५-२० (१०२५२)
शरीरात्मसमाहारो जन्तुरित्यभिधीयते ।
तत्रात्मानं नित्यमाहुरनित्यं क्षेत्रिमुच्यते ॥ १३-२२५-२१ (१०२५३)
एवं कालेन सङ्क्रान्तं शरीरं जर्झरीकृतम् ।
अकर्मयोग्यं संशीर्णं त्यक्त्वा देही ततो व्रजेत् ॥ १३-२२५-२२ (१०२५४)
नित्यस्यानित्यसंत्यागाल्लोके तन्मरणं विदुः ।
कालं नातिक्रमेरन्हि सदेवासुरमानवाः ॥ १३-२२५-२३ (१०२५५)
यथाऽऽकाशे न तिष्ठेत द्रव्यं किञ्चिदचेतनम् ।
तथा धावति कालोऽयं क्षणं किञ्चिन्न तिष्ठति ॥ १३-२२५-२४ (१०२५६)
स पुनर्जायतेऽन्यत्र शरीरं नवमाविशन् ।
एवंलोकगतिर्नित्यमादिप्रभृति वर्तते ॥ १३-२२५-२५ (१०२५७)
उमोवाच। १३-२२५-२६क्ष् (७५८८)
भगवन्प्राणिनो बाला दृश्यन्ते मरणं गताः ।
अतिवृद्धाश्च जीवन्तो दृश्यन्ते चिरजीविनः ॥ १३-२२५-२६ (१०२५८)
केवलं कालमरणं न प्रमाणं महेश्वर ।

तस्मान्मे संशय ब्रूहि प्राणिनां जीवकारणम् ॥१३-२२५-२७ (९०२५९)
महेश्वर उवाच।१३-२२५-२८क्ष् (७५८९)
शृणु तत्कारणं देवि निर्णयस्त्वेक एव सः ।
जीर्णत्वमात्रं कुरुते कालो देहं न पातयेत् ॥१३-२२५-२८ (९०२६०)
जीर्णे कर्मणि संघातः स्वयमेव विशीर्यते ।
पूर्वकर्मप्रमाणेन जीवितं मृत्युरेव वा ॥१३-२२५-२९ (९०२६१)
यावत्पूर्वकृतं कर्म तावज्जीवति मानवः ।
तत्र कर्मवशाद्बाला म्रियन्ते कालसंक्षयात् ॥१३-२२५-३० (९०२६२)
चिरं जीवन्ति वृद्धाश्च तथा कर्मप्रमाणतः ।
इति ते कथितं देवि निर्विशङ्का भव प्रिये ॥१३-२२५-३१ (९०२६३)
उमोवाच।१३-२२५-३२क्ष् (७५९०)
भगवन्केन वृत्तेन भवन्ति चिरजीविनः ।
अल्पायुषो नराः केन तन्मे शंसितुमर्हसि ॥१३-२२५-३२ (९०२६४)
महेश्वर उवाच।१३-२२५-३३क्ष् (७५९१)
शृणु तत्सर्वमखिलं गुह्यं पथ्यतरं नृणाम् ।
येन वृत्तेन सम्पन्ना भवन्ति चिरजीविनः ॥१३-२२५-३३ (९०२६५)
अहिंसा सत्यवचनमक्रोधः क्षीन्तिरार्जवम् ।
गुरूणां नित्यशुश्रूषा वृद्धानामपि पूजनम् ॥१३-२२५-३४ (९०२६६)
शौचादकार्यसंत्यागात्सदा पथ्यस्य भोजनम् ।
एवमादिगुणं वृत्तं नराणां दीर्घजीविनाम् ॥१३-२२५-३५ (९०२६७)
तपसा ब्रह्मचर्येण रसायननिषेवणात् ।
उदग्रसत्त्वा बलिनो भवन्ति चिरजीविनः ।
स्वर्गे वा मानुषे वाऽपि चिरं तिष्ठन्ति धार्मिकाः १३-२२५-३६ (९०२६८)
अपरे पापकर्माणः प्रायशोऽनृतवादिनः ।
हिंसाप्रिया गुरुद्विष्टा निष्क्रियाः शौचवर्जिताः ॥१३-२२५-३७ (९०२६९)
नास्तिका घोरकर्माणः सततं मांसपानपाः ।
पापाचारा गुरुद्विष्टाः कोपनाः कलहप्रियाः ॥१३-२२५-३८ (९०२७०)
एवमेवाशुभाचारास्तिष्ठन्ति नरके चिरम् ।
तिर्यग्योनौ तथाऽत्यन्तमल्पास्तिष्ठन्ति मानवाः ।
तस्मादल्पायुषो मर्त्यास्तादृशाः सम्भवन्ति ते ॥ १३-२२५-३९ (९०२७१)
अगम्यदेशगमनादपथ्यानां च भोजनात् ।
आयुःक्षयो भवेन्नृणामायुःक्षयकरा हि ते ॥१३-२२५-४० (९०२७२)
भवन्त्यल्पायुषस्तैस्तैरन्यथा चिरजीविनः ।
एतत्ते कथितं सर्वं भूयः श्रोतुं किमिच्छसि ॥ ॥१३-२२५-४१ (९०२७३)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि

पञ्चविंशत्यधिकद्विशततमोऽध्यायः ॥ २२५ ॥

---

अनुससनपर्व-अध्यय२२६
॥ श्रीः ॥
१३.२२६. अध्यायः २२६

अथ दानधर्मपर्व ॥ १ ॥
Mahabharata - Anushaasana Parva - Chapter Topics
परमेश्वरेण पार्वतींप्रति प्राणिनां स्त्रीत्वपुंस्त्वयोः
स्वाभाविकत्वनिषेधेन कर्मायत्तत्वोक्तिः ॥ १ ॥
तथा सात्विकादिधर्मादिप्रतिपादनम् ॥ २ ॥

Mahabharata - Anushaasana Parva - Chapter Text

उमोवाच ।
देवदेव महादेव श्रुतं मे भगवन्निदम् ।
आत्मनो जातिसम्बन्धं ब्रूहि स्त्रीपुरुषान्तरम् ॥ १३-२२६-१ (९०२७४)
स्त्रीप्राणाः पुरुषप्राणा एकतः पृथगेव वा ।
एष मे संशयो देव तं मे छेत्तुं त्वमर्हसि ॥ १३-२२६-२ (९०२७५)
महेश्वर उवाच। १३-२२६-३क्ष् (७५९२)
तदहं ते प्रवक्ष्यामि शृणु सर्वं समाहिता ।
स्त्रीत्वं पुंस्त्वमिति प्राणे स्थितिर्नास्ति शुभेक्षणे ॥ १३-२२६-३ (९०२७६)
निर्विकारः सदैवात्मा स्त्रीत्वं पुंस्त्वं न चात्मनि ।
कर्मप्रकारेण तथा जात्यां जात्यां प्रजायते ॥ १३-२२६-४ (९०२७७)
कृत्वा कर्म पुमान्स्त्री वा स्त्री पुमानपि जायते ।
स्त्रीभावं यत्पुमान्कृत्वा कर्मणा प्रमदा भवेत् ॥ १३-२२६-५ (९०२७८)
उमोवाच। १३-२२६-६क्ष् (७५९३)
भगवन्सर्वलोकेश कर्मात्मा न करोति चेत् ।
कोऽन्यः कर्मकरो देहे तन्मे त्वं वक्तुमर्हसि ॥ १३-२२६-६ (९०२७९)
महेश्वर उवाच। १३-२२६-७क्ष् (७५९४)
शृणु भामिनि कर्तारमात्मा हि न च कर्मकृत् ।
प्रकृत्या गुणयुक्तेन क्रियते कर्म नित्यशः ॥ १३-२२६-७ (९०२८०)
शरीरं प्राणिनां लोके यथा पित्तकफानिलैः ।
व्याप्तमेभिस्त्रिभिर्दोषैस्तथा व्याप्तं त्रिभिर्गुणैः ॥ १३-२२६-८ (९०२८१)
सत्वं रजस्तमश्चैव गुणास्त्वेते शरीरिणः ।
प्रकाशात्मकमेतेषां सत्वं सततमिष्यते ॥ १३-२२६-९ (९०२८२)

रजो दुःखत्मकं तत्र तमो मोहात्मकं स्मृतम् ।
त्रिभिरेतैर्गुणैर्युक्तं लोके कर्म प्रवर्तते ॥ १३-२२६-१० (९०२८३)
सत्यं प्राणिदया शौचं श्रेयः प्रीतिः क्षमा दमः ।
एवमादि तथाऽन्यश्च कर्म सात्विकमुच्यते ॥ १३-२२६-११ (९०२८४)
दाक्ष्यं कर्मपरत्वं च लोभो मोहो विधिं प्रति ।
कलत्रसङ्गो माधुर्यं नित्यमैश्वर्यलुब्धता ।
रजसश्चोद्भवं चैतत्कर्म नानाविधं सदा ॥ १३-२२६-१२ (९०२८५)
अनृतं चैव पारुष्यं धृतिर्विद्विषिता भृशम् ।
हिंसाऽसत्यं च नास्तिक्यं निद्रालस्यभयानि च ।
तमसश्चोद्भवं चैतत्कर्म पापयुतं तथा ॥ १३-२२६-१३ (९०२८६)
तस्माद्गुणमयः सर्वः कार्यारम्भः शुभाशुभः ।
तस्मादात्मानमव्यग्रं विद्धयकर्तारमव्ययम् ॥ १३-२२६-१४ (९०२८७)
सात्विकाः पुण्यलोकेषु राजसा मानुषे पदे ।
तिर्यग्योनौ च नरके तिष्ठेयुस्तामसा नराः ॥ १३-२२६-१५ (९०२८८)
उमोवाच। १३-२२६-१६क्ष् (७५९५)
किमर्थमात्मा भिन्नेऽस्मिन्देहे शस्त्रेण वा हते ।
स्वयं प्रयास्यति तदा तन्मे शंसितुमर्हसि ॥ १३-२२६-१६ (९०२८९)
महेश्वर उवाच। १३-२२६-१७क्ष् (७५९६)
तदहं ते प्रक्ष्यामि शृणु कल्याणि कारणम् ।
एतन्निर्णायकैश्चापि मुह्यन्ते सूक्ष्मबुद्धिभिः ॥ १३-२२६-१७ (९०२९०)
कर्मक्षये तु सम्प्राप्ते प्राणिनां जन्मधारिणाम् ।
उपद्रवो भवेद्देहे येन केनापि हेतुना ॥ १३-२२६-१८ (९०२९१)
तन्निमित्तं शरीरी तु शरीरं प्राप्य संक्षयम् ।
अपयाति परित्यज्य ततः कर्मवशेन सः ॥ १३-२२६-१९ (९०२९२)
देहक्षयेपि नैवात्मा वेदनाभिर्न चाल्यते ।
तिष्ठेत्कर्मफलं यावद्व्रजेत्कर्मक्षये पुनः ॥ १३-२२६-२० (९०२९३)
आदिप्रभृति लोकेऽस्मिन्नेवमात्मगतिः स्मृता ।
एतत्ते कथितं देवि किं भूयः श्रोतुमिच्छसि ॥ ॥ १३-२२६-२१ (९०२९४)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
षड्विंशत्यधिकद्विशततमोऽध्यायः ॥ २२६ ॥

---

अनुससनपर्व-अध्यय२२७
॥ श्रीः ॥
१३.२२७. अध्यायः २२७

अथ दानधर्मपर्व ॥१ ॥

Mahabharata - Anushaasana Parva - Chapter Topics

ईश्वरेणोमांप्रति प्राणिनामुद्भिदादिभेदेन चातुर्विध्यादिनिरूपणम् ॥१ ॥
तथा शास्त्रजन्यज्ञानस्य श्रेयः साधनत्वाद्युक्तिः ॥२ ॥

Mahabharata - Anushaasana Parva - Chapter Text

उमोवाच ।
भगवन्देवदेवेश कर्मणैव शुभाशुभम् ।
यथायोगं फलं जन्तुः प्राप्नोतीति विनिश्चयः ॥१३-२२७-१ (९०२९५)
परेषां विप्रियं कुर्वन्यथा सम्प्राप्नुयाच्छुभम् ।
यद्येतदस्मिंश्चेद्देहे तन्मे शंसितुमर्हसि ॥१३-२२७-२ (९०२९६)
महेश्वर उवाच।१३-२२७-३क्ष् (७५९७)
तदप्यस्ति महाभागे अभिसन्धिबलान्नृणम् ।
हितार्थं दुःखमन्येषां कृत्वा सुखमवाप्नुयात् ॥१३-२२७-३ (९०२९७)
दण्डयन्भर्त्सयन्राजा जनान्पुण्यमवाप्नुयात् ।
गुरुः सन्तर्जयञ्शिष्यान्भर्ता भृत्यजनान्स्वकान् ।
उन्मार्गप्रतिपन्नांश्च शास्ता धर्मफलं लभेत् ॥ १३-२२७-४ (९०२९८)
चिकित्सकश्च दुःखानि जनयन्हितमाप्नुयात् ।
यज्ञार्थं पशुहिंसां च कुर्वन्नपि न लिप्यते ।
एवमन्ये सुमनसो हिंसकाः स्वर्गमाप्नुयुः ॥ १३-२२७-५ (९०२९९)
एकस्मिन्निहते भद्रे बहवः सुखमाप्नुयुः ।
तस्मिन्हते भवेद्धर्मः कुत एव तु पातकम् ॥१३-२२७-६ (९०३००)
अहिंसतेति हत्वा तु शुद्धे कर्मणि गौरवात् ।
अभिसन्धेरजिह्मत्वाच्छुद्धे धर्मस्य गौरवात् ।
एतत्कृत्वा तु पापेभ्यो न दोषं प्राप्नुयुः क्वचित् ॥ १३-२२७-७ (९०३०१)
उमोवाच।१३-२२७-८क्ष् (७५९८)
चतुर्विधानां जन्तूनां कथं ज्ञानमिह स्मृतम् ।
कृत्रिमं तत्स्वभावं वा तन्मे शंसितुमर्हसि ॥१३-२२७-८ (९०३०२)
महेश्वर उवाच।१३-२२७-९क्ष् (७५९९)
स्थावरं जङ्गमं चैव जगद्द्विविधमुच्यते ।
चतस्रो योनयस्तत्र प्रजानां क्रमशो यथा ॥१३-२२७-९ (९०३०३)
तेषामुद्भिदजा वृक्षा लतावल्ल्यश्च वीरुधः ।
दंशयूकादयश्चान्ये स्वेदजाः क्रिमिजातयः ॥१३-२२७-१० (९०३०४)
पक्षिणश्छिद्रकर्णाश्च प्राणिनस्त्वण्डजा मताः ।
मृगव्यालमनुष्यांश्च विद्धि तेषां जरायुजान् ॥१३-२२७-११ (९०३०५)

एवं चतुर्विधां जातिमात्मा संसृत्य तिष्ठति ॥ १३-२२७-१२ (९०३०६)
स्पर्शनैकेन्द्रियेणात्मा तिष्ठत्युद्भिदजेषु वै ।
शरीरस्पर्शरूपाभ्यां स्वेदजेष्वपि तिष्ठति ॥ १३-२२७-१३ (९०३०७)
पञ्चभिश्चेन्द्रियद्वारैर्जीवन्त्यण्डजरायुजाः ॥ १३-२२७-१४ (९०३०८)
तथा भूम्यम्बुसंयोगाद्भवन्त्युद्भिदजाः प्रिये ।
शीकतोष्णयोस्तु संयोगाज्जायन्ते स्वेदजाः प्रिये ।
अण्डजाश्चापि जायन्ते संयोगात्क्लेदबीजयोः ॥ १३-२२७-१५ (९०३०९)
शुक्लशोणितसंयोगात्सम्भवन्ति जरायुजाः ।
जरायुजानां सर्वेषां मानुषं पदमुत्तमम् ॥ १३-२२७-१६ (९०३१०)
अतःपरं तमोत्पत्तिं शृणु देवि समाहिता ।
द्विविधं हि तमो लोके शार्वरं देहजं तथा ॥ १३-२२७-१७ (९०३११)
जोतिर्भिश्च तमो लोके नाशं गच्छति शार्वरम् ।
देहजं तु तमो लोके तैः समस्तैर्न शाम्यते ॥ १३-२२७-१८ (९०३१२)
तमसस्तस्य नाशार्थं नोपायमधिजग्मिवान् ।
तपश्चचार वलिपुलं लोककर्ता पितामहः ॥ १३-२२७-१९ (९०३१३)
चरतस्तु समुद्भूता वेदाः साङ्गाः सहोत्तराः ।
ताँल्लब्ध्वा मुमुदे ब्रह्मा लोकानां हितकाम्यया ।
देहजं तु तमो घोरमभूत्तैरेव नाशितम् ॥ १३-२२७-२० (९०३१४)
कार्याकार्यमिदं चेति वाच्यावाच्यमिदं त्विति ।
यदि चेन्न भवेल्लोके श्रुतं चारित्रदैशिकम् ।
पसुभिर्निर्विशेषं तु चेष्टन्ते मानुषा अपि ॥ १३-२२७-२१ (९०३१५)
यज्ञादीनां समारम्भः श्रुतेनैव विधीयते ।
यज्ञस्य फलयोगेन देवलोकः समृद्ध्यते ॥ १३-२२७-२२ (९०३१६)
प्रीतियुक्ताः पुनर्देवा मानुषाणां भवन्त्युत ।
एवं नित्यं प्रवर्धेते रोदसी च परस्परम् ॥ १३-२२७-२३ (९०३१७)
लोकसन्धारणं तस्माच्छ्रुतमित्यवधारय ।
ज्ञानाद्विशिष्टं जन्तूनां नास्ति लोकत्रयेऽपि च ॥ १३-२२७-२४ (९०३१८)
सहजं तत्प्रधानं स्यादपरं कृत्रिमं स्मृतम् ।
उभयं यत्र सम्पन्नं भवेत्तत्र तु शोभनम् ॥ १३-२२७-२५ (९०३१९)
सम्प्रगृह्य श्रुतं सर्वं कृतकृत्यो भवत्युत ।
उपर्युपरि मर्त्यानां देववत्सम्प्रकाशते ॥ १३-२२७-२६ (९०३२०)
कामं क्रोधं भयं दर्पमज्ञानं चैव बुद्धिजम् ।
तच्छ्रुतं नुदति क्षिप्रं यथा वायुर्बलाहकान् ॥ १३-२२७-२७ (९०३२१)
अल्पमात्रं कृतो धर्मो भवेज्ज्ञानवतां महान् ।
महानपि कृतो धर्मो ह्यज्ञानान्निष्फलो भवेत् ॥ १३-२२७-२८ (९०३२२)
परावरज्ञो भूतानां ज्ञानवांस्तत्वविद्भवेत् ।

एवं श्रुतफलं सर्वं कथितं ते शुभक्षणे ॥१३-२२७-२९ (९०३२३)
उमोवाच।१३-२२७-३०क्ष् (७६००)
भगवन्मानुषाः केचिज्जातिस्मरणसंयुताः ।
किमर्थमभिजायन्ते जानन्तः पौर्वदैहिकम् ।
एतन्मे तत्वतो देव मानुषेषु वदस्व भो ॥ १३-२२७-३० (९०३२४)
महेश्वर उवाच।१३-२२७-३१क्ष् (७६०१)
तदहं ते प्रवक्ष्यामि शृणु तत्वं समाहिता ॥ १३-२२७-३१ (९०३२५)
ये मृताः सहसा मर्त्या जायन्ते सहसा पुनः ।
तेषां पौराणिको बोधः कञ्चित्कालं हि तिष्ठति ॥१३-२२७-३२ (९०३२६)
तस्माज्जातिस्मरा लोके जायन्ते बोधसंयुताः ।
तेषां विवर्धतां संज्ञा स्वप्नवत्सा प्रणश्यति ।
परलोकस्य चास्तित्वे मूढानां कारणं च तत् ॥ १३-२२७-३३ (९०३२७)
उमोवाच।१३-२२७-३४क्ष् (७६०२)
भगवन्मानुषाः केचिन्मृता भूत्वाऽपि सम्प्रति ।
निवर्तमाना दृश्यन्ते देहेष्वेव पुनर्नराः ॥१३-२२७-३४ (९०३२८)
महेश्वर उवाच।१३-२२७-३५क्ष् (७६०३)
तदहं ते प्रवक्ष्यामि कारणं शृणु शोभने ॥ १३-२२७-३५ (९०३२९)
प्राणैर्वियुज्यमानानां बहुत्वात्प्राणिनां वधे ।
तथैव नामसामान्याद्यमदूता नृणां प्रति ॥१३-२२७-३६ (९०३३०)
वहन्ति ते क्वचिन्मोहादन्यं मर्त्यं तु यामिकाः ।
निर्विकारं हि तत्सर्वं यमो वेद कृताकृतम् ॥१३-२२७-३७ (९०३३१)
तस्मात्संयमनीं प्राप्य यमेनैकेन मोक्षिताः ।
पुनरेव निवर्तन्ते शेषं भोक्तुं स्वकर्मणः ।
स्वकर्मण्यसमाप्ते तु निवर्तन्ते हि मानवाः ॥ १३-२२७-३८ (९०३३२)
उमोवाच।१३-२२७-३९क्ष् (७६०४)
भगवन्सुप्तमात्रेण प्राणिनां स्वप्नदर्शनम् ।
किं तत्स्वभावमन्यद्वा तन्मे शंसितुमर्हसि ॥१३-२२७-३९ (९०३३३)
महेश्वर उवाच।१३-२२७-४०क्ष् (७६०५)
सुप्तानां तु मनश्चेष्टा स्वप्न इत्यभिधीयते ।
अनागतमतिक्रान्तं पश्यते सञ्चरन्मनः ॥१३-२२७-४० (९०३३४)
निमित्तं च भवेत्तस्मात्प्राणिनां स्वप्नदर्शनम् ।
एतत्ते कथितं देवि भूयः श्रोतु किमिच्छसि ॥ ॥१३-२२७-४१ (९०३३५)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
सप्तविंशत्यधिकद्विशततमोऽध्यायः ॥२२७ ॥

॥ श्रीः ॥
१३.२२८. अध्यायः २२८

अथ दानधर्मपर्व ॥ १ ॥
Mahabharata - Anushaasana Parva - Chapter Topics
परमेश्वरेण पार्वतींप्रति प्राणिनां फलनित्पत्तौ दैवपुरुषकारयोः परस्परसापेक्षत्वेन साधनत्वोक्तिः ॥ १ ॥
तथाऽण्डजरायुजानां गर्भप्रवेशादिप्रकारकथनम् ॥ २ ॥

Mahabharata - Anushaasana Parva - Chapter Text

उमोवाच ।
भगवन्सर्वभूतेश लोके कर्मक्रियापथे ।
दैवात्प्रवर्तते सर्वमिति केचिद्व्यवस्थिताः ॥ १३-२२८-१ (९०३३६)
अपरे चेष्टया चेति दृष्ट्वा प्रत्यक्षतः क्रियाम् ।
पक्षभेदे द्विधा चास्मिन्संशयस्थं मनो मम ।
तत्त्वं वद महादेव श्रोतुं कौतूहलं हि मे ॥ १३-२२८-२ (९०३३७)
महेश्वर उवाच। १३-२२८-३क्ष् (७६०६)
तदहं ते प्रवक्ष्यामि शृणु तत्वं समाहिता ।
तदेवं कुरुते कर्म लोके देवि शुभाशुभम् ॥ १३-२२८-३ (९०३३८)
लक्ष्यते द्विविधं कर्म मानुषेष्वेव तच्छृणु ।
पुराकृतं तयोरेकमैहिकं त्वितरस्तथा ॥ १३-२२८-४ (९०३३९)
अदृष्टपूर्वं यत्कर्म तद्दैवमिति लक्ष्यते ।
विहीनं दृष्टकरणं तन्मानुषमिति स्मृतम् ॥ १३-२२८-५ (९०३४०)
मानुषं तु क्रियामात्रं दैवात्सम्भवते फलम् ।
एवं तदुभयं कर्म मानुषं विद्धि तन्नृषु ॥ १३-२२८-६ (९०३४१)
लौकिकं तु प्रवक्ष्यामि दैवमानुषनिर्मितम् ।
कृषौ तु दृश्यते कर्म कर्षणं वपनं तथा ॥ १३-२२८-७ (९०३४२)
रोपणं चैव लवनं यच्चान्यत्पौरुषं स्मृतम् ।
दैवादसिद्धिश्च भवेद्दुष्कृतं चास्ति पौरुषे ॥ १३-२२८-८ (९०३४३)
सुयत्नाल्लभ्यते कीर्तिर्दुर्यत्नादयशस्तथा ।
एवं लोकगतिर्देवि आदिप्रभृति वर्तते ॥ १३-२२८-९ (९०३४४)
उमोवाच। १३-२२८-१०क्ष् (७६०७)
भगवन्सर्वलोकेश सुरासुरनमस्कृत ।
कथमात्मा सदा गर्भं संविशेष्कर्मकारणात् ।

तन्मे वद महादेव तद्धि गुह्यं परं मतम् ॥ १३-२२८-१० (९०३४५)
महेश्वर उवाच।१३-२२८-११क्ष् (७६०८)
शृणु भामिनि तत्सर्वं गुह्यानां परमं प्रिये ।
देवगुह्यादपि परमात्मगुह्यमिति स्मृतम् ॥१३-२२८-११ (९०३४६)
देवासुरास्तन्न विदुरात्मनो हि गतागतम् ।
अदृश्यो हि सदैवात्मा जनैः सौक्ष्म्यान्निराश्रयात् ॥ १३-२२८-१२ (९०३४७)
अतिमायेति मायानामात्ममाया सेदष्यते ।
सोयं चतुर्विधां जातिं संविशत्यात्ममायया ।
मैथुनं शोणितं बीजं दैवमेवात्र कारणम् ॥ १३-२२८-१३ (९०३४८)
बीजशोणितसंयोगे यदा सम्भवते शुभे ।
तदाऽऽत्मा विशते गर्भमेवमण्डजरायुजे ॥१३-२२८-१४ (९०३४९)
एवं संयोगकाले तु आत्मा गर्भत्वमेयिवान् ॥ १३-२२८-१५ (९०३५०)
कलिलाज्जायते पिण्डं पिण्डात्पेश्यर्बुदं भवेत् ।
व्यक्तिभावगतं चैव कर्म त्वाश्रयते क्रमात् ॥१३-२२८-१६ (९०३५१)
एवं विवर्धमानेन कर्मात्मा सह वर्धते ।
एवमात्मगतिं विद्धि यन्मां पृच्छसि सुप्रभे ॥१३-२२८-१७ (९०३५२)
रोपणं चैव लवनं यच्चान्यत्पौरुषं स्मृतम् ॥ १३-२२८-१८ (९०३५३)
काले वृष्टिः सुवापं च प्ररोहः पक्तिरेव च ।
एवमादि तु यच्चान्यत्तद्दैवतमिति स्मृतम् ॥१३-२२८-१९ (९०३५४)
पञ्चभूतस्थितिश्चैव ज्योतिषामयनं तथा ।
अबुद्धिगम्यं यन्मर्त्यैर्हेतुभिर्वा न विद्यते ॥१३-२२८-२० (९०३५५)
तादृशं कारणं दैवं शुभं वा यदि वेतरत् ।
यादृशं चात्मना शक्यं तत्पौरुषमिति स्मृतम् ॥१३-२२८-२१ (९०३५६)
केवलं फलनिष्पत्तिरेकेन तु न शक्यते ।
पौरुषेणैव दैवेनि युगपद्ग्रथितं प्रिये ।
तयोः समाहितं कर्म शीतोष्णं युगपत्तथा ॥ १३-२२८-२२ (९०३५७)
पौरुषं तु तयोः पूर्वमारब्धव्यं विजानता ।
आत्मना तु न शक्यं हि न तथा कीर्तिमाप्नुयात् ॥१३-२२८-२३ (९०३५८)
खननान्मथनाल्लोके जलाग्निप्रापणं यथा ।
तथा पुरुषकारे तु दैवसम्पत्समाहिता ॥१३-२२८-२४ (९०३५९)
नरस्याकुर्वतः कर्म दैवसम्पन्न लभ्यते ।
तस्मात्सर्वसमारम्भो दैवमानुषनिर्मितः ॥१३-२२८-२५ (९०३६०)
असुरा राक्षसाश्चैव मन्यन्ते लोकनाशनाः ।
पश्यन्ते न च ते पापाः केवलं मांसभक्षणाः ॥१३-२२८-२६ (९०३६१)
प्रच्छादितं हि तत्सर्वं गूढमाया हि देवताः ।
तदहं ते प्रवक्ष्यामि देवि गुह्यं पुरस्सरम् ॥१३-२२८-२७ (९०३६२)

आदिकाले नराः सर्वे कृत्वा कर्म शुभाशुभम् ।
भुञ्जते पश्यमानास्ते वृत्तान्तं लोकयोर्द्वयोः ॥१३-२२८-२८ (९०३६३)
यथैवात्मकृतं विद्युर्देशान्तरगता नराः ।
विद्युस्तथैवान्तकाले सुकृतं पौर्वदैहिकम् ॥१३-२२८-२९ (९०३६४)
एवं व्यवस्थिते लोके सर्वे धर्मरताऽभवन् ।
अचिरेणैव कालेन स्वर्गः सम्पूरितस्तदा ॥१३-२२८-३० (९०३६५)
देवानामपि सम्बाधं दृष्ट्वा ब्रह्माऽप्यचिन्तयत् ।
सञ्चरन्ते कथं स्वर्गं मानुषाः प्रविशन्ति हि ॥१३-२२८-३१ (९०३६६)
इत्येवमनुचिन्त्यैव मानुषान्सममोहयत् ।
तदाप्रभृति ते मर्त्या न विदुस्ते पुराकृतम् ॥१३-२२८-३२ (९०३६७)
कामक्रोधौ तु तत्काले मानुषेष्ववपातयत् ।
ताभ्यामभिहता मर्त्याः स्वर्गलोकं न पेदिरे ॥१३-२२८-३३ (९०३६८)
पुराकृतस्याविज्ञानात्कामक्रोधाभिपीडिताः ।
नैतदस्तीति मन्वाना विकारंश्चक्रिरे पुनः ॥१३-२२८-३४ (९०३६९)
अकार्यादिमहादोषानाहरन्त्यात्मकारणात् ।
विस्मृत्य धर्मकार्याणि परलोकभयं तदा ॥१३-२२८-३५ (९०३७०)
एवं व्यवस्थिते लोके कश्मलं समपद्यत ।
लोकानां चैव देवानां क्षयायैव तथा प्रिये ।
नरकाः पूरिताश्चासन्प्राणिभिः पापकारिभिः ॥ १३-२२८-३६ (९०३७१)
पुनरेव तु तान्दृष्ट्वा लोककर्ता पितामहः ।
अचिन्तयत्तमेवार्थं लोकानां हितकारणात् ।
समत्वेन कथं लोके वर्तेतेति मुहुर्मुहुः ॥ १३-२२८-३७ (९०३७२)
चिन्तयित्वा तदा ब्रह्मा ज्ञानेन तपसा प्रिये ।
अकरोज्ज्ञानदृश्यं तत्परलोकं न चक्षुषा ॥१३-२२८-३८ (९०३७३)
उमोवाच।१३-२२८-३९क्ष् (७६०९)
भगवन्मृतमात्रस्तु योयं जात इति स्मृतः ।
तथैव दृश्यते जातस्तत्रात्मा तु कथं भवेत् ॥१३-२२८-३९ (९०३७४)
गर्भादावेव संविष्ट आत्मा तु भगवन्मम ।
एष मे संशयो देव तन्मे छेत्तुं त्वमर्हसि ॥१३-२२८-४० (९०३७५)
महेश्वर उवाच।१३-२२८-४१क्ष् (७६१०)
तदहं ते प्रवक्ष्यामि शृणु तत्वं समाहिता। १३-२२८-४१ (९०३७६)
अन्यो गर्भगतो भूत्वा तत्रैव निधनं गतः ।
पुनरन्यच्छरीरं तत्प्रविश्य भुवि जायते ।
तत्वविन्नैव सर्वस्तु दैवयोगस्तु सम्भवेत् ॥ १३-२२८-४२ (९०३७७)
सूतिकाया हितार्थं च मोहनार्थं च देहिनाम् ।
समकर्मविधानत्वादित्येवं विद्धि शोभने ॥१३-२२८-४३ (९०३७८)

काङ्क्षमाणास्तु नरकं भुक्त्वा केचित्प्रयान्ति हि ।
मायासंयामिका नाम यज्जन्ममरणान्तरे ।
इति ते कथितं देवि भूयः श्रोतुं किमिच्छसि ॥ १३-२२८-४४ (९०३७९)
उमोवाच। १३-२२८-४५क्ष् (७६११)
भगवन्सर्वलोकेश लोकनाथ वृषध्वज ।
नास्त्यात्मा कर्मभोक्तेति मृतो जन्तुर्न जायते ॥ १३-२२८-४५ (९०३८०)
स्वभावाज्जायते सर्वं यथा वृक्षफलं तथा ।
यथोर्मयः सम्भवन्ति तथैव जगदाकृतिः ॥ १३-२२८-४६ (९०३८१)
तपोदानानि यत्कर्म तत्र तद्दृश्यते वृथा ।
नास्ति पौनर्भवं जन्म इति केचिद्व्यवस्थिताः ॥ १३-२२८-४७ (९०३८२)
परोक्षवचनं श्रुत्वा न प्रत्यक्षस्य दर्शनात् ।
तत्सर्वं नास्तिनास्तीति संशयस्थास्तथा परे ॥ १३-२२८-४८ (९०३८३)
पक्षभेदान्तरे चास्मिंस्तत्वं मे वक्तुमर्हसि ।
उक्तं भगवता यत्तु तत्तु लोकस्य संस्थितिः ॥ १३-२२८-४९ (९०३८४)
प्रश्नमेतत्तु पृच्छत्या रुद्राण्या परिषत्तदा ।
कौतूहलयुता श्रोतुं समाहितमनाऽभवत् ॥ १३-२२८-५० (९०३८५)
महेश्वर उवाच। १३-२२८-५१क्ष् (७६१२)
नैतदस्ति महाभागे यद्वदन्तीह नास्तिकाः ।
एतदेवाभिशस्तानां श्रुतविद्वेषिणां मतम् ॥ १३-२२८-५१ (९०३८६)
सर्वमर्थं श्रुतं दृष्टं यत्प्रागुक्तं मया तव ।
तदाप्रभृति मर्त्यानां श्रुतमाश्रित्य पण्डिताः ॥ १३-२२८-५२ (९०३८७)
कामान्संछिद्य परिगान्धृत्या वै परमासिना ।
अभियान्त्येव ते स्वर्गं पश्यन्तः कर्मणः पलम् ॥ १३-२२८-५३ (९०३८८)
एवं श्रद्धाफलं लोके परतः सुमहत्फलम् ।
बुद्धिः श्रद्धा च विनयः कारणानि हितैषिणाम् ॥ १३-२२८-५४ (९०३८९)
तस्मात्स्वर्गाभिगन्तारः कतिचित्त्वभवन्नराः ।
अन्ये करणहीनत्वान्नास्तिक्यं भावमाश्रिताः ॥ १३-२२८-५५ (९०३९०)
श्रुतविद्वेषिणो मूर्खा नास्तिका दृढनिश्चयाः ।
निष्क्रियास्तु निरन्नादाः पतन्त्येवाधमां गतिम् ॥ १३-२२८-५६ (९०३९१)
नास्त्यस्तीति पुनर्जन्म कवयोऽप्यत्र मोहिताः ।
नाधिगच्छन्ति तन्नित्यं हेतुवादशतैरपि ॥ १३-२२८-५७ (९०३९२)
एषा ब्रह्मकृता माया दुर्विज्ञेया सुरासुरैः ।
किंपुनर्मानवैर्लोके ज्ञातुकामैः कुबुद्धिभिः ॥ १३-२२८-५८ (९०३९३)
केवलं श्रद्धया देवि श्रुतमात्मनिविष्टया ।
ततोस्तीऽत्येव मन्तव्यं तथा हितमवाप्नुयात् ॥ १३-२२८-५९ (९०३९४)
दैवगुह्येषु चान्येषु हेतुर्देवि निरर्थकः ।

बधिरान्धवदेवात्र वर्तितव्यं हितैषिणा ।
एतत्ते कथितं देवि ऋषिगुह्यं प्रजाहितम् ॥ ॥ १३-२२८-६० (९०३९५)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
अष्टाविंशत्यधिकद्विशततमोऽध्यायः ॥ २२८ ॥

---

अनुससनपर्व-अध्यय२२९
॥ श्रीः ॥
१३.२२९. अध्यायः २२९

अथ दानधर्मपर्व ॥ १ ॥
Mahabharata - Anushaasana Parva - Chapter Topics
महादेवेन देवींप्रति यमनगरतन्मार्गादिप्रतिपादनपूर्वकं पापिनां
यातनानुभवप्रकारादिप्रतिपादनम् ॥ १ ॥

Mahabharata - Anushaasana Parva - Chapter Text

उमोवाच ।
भगवन्सर्वलोकेश त्रिपुरार्दन शङ्कर ।
कीदृशा यमदण्डास्ते कीदृशाः परिचारकाः ॥ १३-२२९-१ (९०३९६)
कथं मृतास्ते गच्छन्ति प्राणिनो यमसादनम् ।
कीदृशं भवनं तस्य कथं दण्डयति प्रजाः ।
एतत्सर्वं महादेव श्रोतुमिच्छाम्यहं प्रभो ॥ १३-२२९-२ (९०३९७)
महेश्वर उवाच। १३-२२९-३क्ष् (७६१३)
शृणु कल्याणि तत्सर्वं यत्ते देवि मनःप्रियम् ।
दक्षिणस्यां दिशि शुभे यमस्य सदनं महत् ॥ १३-२२९-३ (९०३९८)
विचित्रं रमणीयं च नानाभावसमन्वितम् ।
पितृभिः प्रेतसङ्घैश्च यमदूतैश्च सन्ततम् ॥ १३-२२९-४ (९०३९९)
प्राणिसङ्घैश्च बहुभिः कर्मवश्यैश्च पूरितम् ।
तत्रास्ते दण्डयन्नित्यं यमो लोकहिते रतः ॥ १३-२२९-५ (९०४००)
मायया सततं वेत्ति प्राणिनां यच्छुभाशुभम् ।
मायया संहरंस्तत्र प्राणिसङ्घान्यतस्ततः ॥ १३-२२९-६ (९०४०१)
तस्य मायामयाः पाशा न वेद्यन्ते सुरासुरैः ।
को हि मानुषमात्रस्तु देवस्य चरितं महत् ॥ १३-२२९-७ (९०४०२)
एवं संवसतस्तस्य यमस्य परिचारकाः ।
गृहीत्वा सन्नयन्त्येव प्राणिनः क्षीणकर्मणः ।

यन केनापदेशेन त्वपदेशसमुद्भवाः ॥ १३-२२९-८ (९०४०३)
कर्मणा प्राणिनो लोके उत्तमाधममध्यमाः ।
यथार्हं तान्समादाय नयन्ति यमसादनम् ॥ १३-२२९-९ (९०४०४)
धार्मिकानुत्तमान्विद्धि स्वर्गिणस्ते यथाऽमराः ।
त्रिषु जन्म लभन्ते ये कर्मणा मध्यमाः स्मृताः ।
तिर्यङ्नरकगन्तारो ह्यधमास्ते नराधमाः ॥ १३-२२९-१० (९०४०५)
पन्थानस्त्रिविधा दृष्टाः सर्वेषां गतजीविनाम् ।
रमणीयं निराबाधं दुर्दर्शमिति नामतः ॥ १३-२२९-११ (९०४०६)
रमणीयं तु यन्मार्गं पताकाध्वजसङ्कुलम् ।
धूपितं सिक्तसंमृष्टं पुष्पमालाभिसङ्कुलम् ॥ १३-२२९-१२ (९०४०७)
मनोहरं सुखस्पर्शं गच्छतामेव तद्भवेत् ।
निराबाधं यथालोकं सुप्रशस्तं कृतं भवेत् ॥ १३-२२९-१३ (९०४०८)
तृतीयं यत्तु दुर्दर्शं दुर्गन्धि तमसा वृतम् ।
परुषं शर्कराकीर्णं श्वदंष्ट्राबहुलं भृशम् ।
क्रिमिकीटसमाकीर्णं भजतामतिदुर्गमम् ॥ १३-२२९-१४ (९०४०९)
मार्गैरेवं त्रिभिर्नित्यमुत्तमाधममध्यमान् ।
सन्नयन्ति यथा काले तन्मे शृणु शुचिस्मिते ॥ १३-२२९-१५ (९०४१०)
उत्तमानन्तकाले तु यमदूताः सुसंवृताः ।
नयन्ति सुखमादाय रमणीयपथेन वै ॥ १३-२२९-१६ (९०४११)
उमोवाच। १३-२२९-१७क्ष् (७६१४)
भगवंस्तत्र चात्मानं त्यक्तदेहं निराश्रयम् ।
अदृश्यं कथमादाय सन्नयन्ति यमान्तिकम् ॥ १३-२२९-१७ (९०४१२)
महेश्वर उवाच। १३-२२९-१८क्ष् (७६१५)
शृणु भामिनि तत्सर्वं त्रिविधं देहकारणम् ।
कर्मवश्यं भोगवश्यं दुःखवश्यमिति प्रिये ॥ १३-२२९-१८ (९०४१३)
मानुषं कर्मवश्यं स्याद्द्वितीयं भोगसाधनम् ।
तृतीयं यातनावश्यं शरीरं मायया कृतम् ।
यमलोके न चान्यत्र दृश्यते यातनायुतम् ॥ १३-२२९-१९ (९०४१४)
शरीरैर्यातनावश्यैर्जीवानामुच्य भामिनि ।
नयन्ति यामिकास्तत्र प्राणिनो मायया मृतान् ॥ १३-२२९-२० (९०४१५)
मध्यमान्योधवेषेण मध्यमेन पथा तथा ॥ १३-२२९-२१ (९०४१६)
चण्डालवेषास्त्वधमान्गृहीत्वा भर्त्सतर्जनैः ।
आकर्षन्तस्तथा पाशैर्दुर्दर्शेन नयन्ति तान् ॥ १३-२२९-२२ (९०४१७)
त्रिविधानेवमादाय नयन्ति यमसादनम् ।
धर्मासनगतं दक्षं भ्राजमानं स्वतेजसा ॥ १३-२२९-२३ (९०४१८)
लोकपालं सहाध्यक्षं तथैव परिषद्गतम् ।

दर्शयन्ति महाभागे यामिकास्तं निवेद्य ते ॥
पूजयन्दण्डयन्कांश्चित्तेषां शृण्वञ्शुभाशुभम् ।
व्याहृतो बहुसाहस्रैस्तत्रास्ते सततं यमः ॥ १३-२२९-२४ (९०४१९)
गतानां तु यमस्तेषामुत्तमानभिपूजया ।
अभिसङ्गृह्य विधिवत्पृष्ट्वा स्वागतकौशलम् ।
प्रस्तुत्य तत्कृतं तेषां लोकं संदिशते यमः ॥ १३-२२९-२६ (९०४२०)
यमेनैवमनुज्ञाता यान्ति पश्चात्त्रिविष्टपम् ॥ १३-२२९-२७ (९०४२१)
मध्यमानां यमस्तेषां श्रुत्वा कर्म यथातथम् ।
जायन्तां मानुषेष्वेव इति संदिशते च तान् ॥ १३-२२९-२८ (९०४२२)
अधमान्पाशसंयुक्तान्यमो नावेक्षते गतान् ।
यमस्य पुरुषा घोराश्चण्डालसमदर्शनाः ।
यातनाः प्रापयन्त्येताँल्लोकपालस्य शासनात् ॥ १३-२२९-२९ (९०४२३)
भिन्दन्तश्च तुदन्तश्च प्रकर्षन्तो यतस्ततः ।
क्रोशन्तः पातयन्त्येतान्मिथो गर्तेष्ववाङ्मुखान् ॥ १३-२२९-३० (९०४२४)
संयामिन्यः शिलास्तेषां पतन्ति शिरसि प्रिये ।
अयोमुखाः कङ्कवला भक्षयन्ति सुदारुणाः ॥ १३-२२९-३१ (९०४२५)
असिपत्रवने घोरे चारयन्ति तथा परान् ।
तीक्ष्णदंष्ट्रास्तथा श्वानः कांश्चित्तत्र ह्यदन्ति वै ॥ १३-२२९-३२ (९०४२६)
तत्र वैतरणी नाम नदी ग्राहसमाकुला ।
दुष्प्रवेशा च घोरा च मूत्रशोणितवाहिनी ।
तस्यां सम्मज्जयन्त्येते तृषितान्पाययन्ति तान् ॥ १३-२२९-३३ (९०४२७)
आरोपयन्ति वै कांश्चित्तत्र कण्टकशल्मलीम् ।
यन्त्रचक्रेषु तिलवत्पीड्यन्ते तत्र केचन ॥ १३-२२९-३४ (९०४२८)
अङ्गारेषु च दह्यन्ते तथा दुष्कृतकारिणः ।
कुम्भीपाकेषु पच्यन्ते पच्यन्ते सिकतासु वै ॥ १३-२२९-३५ (९०४२९)
पाट्यन्ते तरुवच्छस्त्रैः पापिनः क्रकचादिभिः ।
भिद्यन्ते भागशः शूलैस्तुद्यन्ते सूक्ष्मसूचिभिः ॥ १३-२२९-३६ (९०४३०)
एवं त्वया कृतं दोषं तदर्थं दण्डनं त्विति ।
वाचैव घोषयन्ति स्म दण्डमानाः समन्ततः ॥ १३-२२९-३७ (९०४३१)
एवं ते यातनां प्राप्य शरीरैर्यातनाशयैः ।
प्रसहन्तश्च तद्दुःखं स्मरन्तः स्वापराधजम् ॥ १३-२२९-३८ (९०४३२)
क्रोशन्तश्च रुदन्तश्च न मुच्यन्ते कथञ्चन ।
स्मरन्तस्तत्र तप्यन्ते पापमात्मकृतं भृशम् ॥ १३-२२९-३९ (९०४३३)
एवं बहुविधा दण्डा भुज्यन्ते पापकारिभिः ।
यातनाभिश्च पच्यन्ते नरकेषु पुनः पुनः ॥ १३-२२९-४० (९०४३४)
अपरे यातनां भुक्त्वा मुच्यन्ते तत्र किल्बिषात् ।

पापदोषक्षयकरा यातनाः संस्मृता नृणाम् ।
बहुतप्तं यथा लोहममलं तत्तथा भवेत् ॥ ॥ १३-२२९-४१ (९०४३५)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
एकोनत्रिंशदधिकद्विशततमोऽध्यायः ॥ २२९ ॥

---

अनुससनपर्व-अध्यय२३०
॥ श्रीः ॥
१३.२३०. अध्यायः २३०

अथ दानधर्मपर्व ॥ १ ॥
Mahabharata - Anushaasana Parva - Chapter Topics
परमेश्वरेण पार्वतींप्रति रौरवादिनरकविभजनपूर्वकं प्राणिनां
दुष्कृततारतम्येन तेषु यातनानुभवप्रकारकथनम् ॥ १ ॥
तथा यातनानुभवानन्तरं कर्मशेषफलतया
नानानीचयोनिप्राप्त्यादिकथनम् ॥ २ ॥

Mahabharata - Anushaasana Parva - Chapter Text

उमोवाच ।
भगवंस्ते कथं तत्र दण्ड्यन्ते नरकेषु वै ।
कति ते नरका घोराः कीदृशास्ते महेश्वर ॥ १३-२३०-१ (९०४३६)
महेश्वर उवाच। १३-२३०-२क्ष् (७६१६)
शृणु भामिनि तत्सर्वं पञ्चैते नरकाः स्मृताः ।
भूमेरधस्ताद्विहिता घोरा दुष्कृतकर्मणाम् ॥ १३-२३०-२ (९०४३७)
प्रथमं रौरवं नाम शतयोजनमायतम् ।
तावत्प्रमाणविस्तीर्णं तामसं पापपीडितम् ॥ १३-२३०-३ (९०४३८)
भृशं दुर्गन्धि परुषं क्रिमिभिर्दारुणैर्वृतम् ।
अतिघोरमनिर्देश्यं प्रतिकूलं ततस्ततः ॥ १३-२३०-४ (९०४३९)
ते चिरं तत्र तिष्ठन्ति न तत्र शयनासने ।
क्रिमिभिर्भक्ष्यमाणाश्च विष्ठागन्धसमायुताः ॥ १३-२३०-५ (९०४४०)
एवंप्रमाणमुद्विग्ना यावत्तिष्ठन्ति तत्र ते ।
यातनाभ्यो दशगुणं नरके दुःखमिष्यते ॥ १३-२३०-६ (९०४४१)
तत्र चात्यन्तिकं दुःखमिष्यते च शुभेक्षणे
क्रोशन्तश्च रुदन्तश्च वेदनास्तत्रि भुञ्जते ॥ १३-२३०-७ (९०४४२)
भ्रमन्ति दुःखमोक्षार्थं ज्ञाता कश्चिन्न विद्यते ।

दुःखस्यान्तरमात्रं तु ज्ञानं वा न च लभ्यते ॥१३-२३०-८ (९०४४३)
महारौरवसंज्ञं तु द्वितीयं नरकं प्रिये ।
तस्माद्द्विगुणितं विद्धि माने दुःखे च रौरवात् ॥१३-२३०-९ (९०४४४)
तृतीयं नरकं तत्र कण्टिकावनसंज्ञितम् ।
ततो द्विगुणितं तच्च पूर्वाभ्यां दुःखमानयोः ।
महापातकसंयुक्ता घोरास्तस्मिन्विशन्ति हि ॥ १३-२३०-१० (९०४४५)
अग्निकुण्डमिति ख्यातं चतुर्थं नरकं प्रिये ।
एतद्द्विगुणितं तस्माद्यथानिष्टसुखं तथा ॥१३-२३०-११ (९०४४६)
ततो दुःखं हि सुमहदमानुषमिति स्मृतम् ।
भुञ्जते तत्रतत्रैव दुःखं दुष्कृतकारिणः ॥१३-२३०-१२ (९०४४७)
तत्र दुःखमनिर्देश्यं वहद्घोरं यथा तथा ।
पञ्चेन्द्रियैरसम्बाधात्पञ्चकष्टमिति स्मृतम् ।
भुञ्जते तत्रतत्रैव दुःखं दुष्कृतकारिणः ॥ १३-२३०-१३ (९०४४८)
अमानुषार्हजं दुःखं महाभूतैश्च भुञ्जते ।
अतिघोरं चिरं कृत्वा महाभूतानि यान्ति तम् ॥१३-२३०-१४ (९०४४९)
पञ्च् कष्टेन हि समं नास्ति दुःखं तथा परम् ।
दुःखस्थानमिति प्राहुः पञ्चकष्टमिति प्रिये ॥१३-२३०-१५ (९०४५०)
एवं त्वेतेषु तिष्ठन्ति प्राणिनोः दुःखभागिनः ।
अन्ये च नरकाः सन्ति अवीचिप्रमुखाः प्रिये ॥१३-२३०-१६ (९०४५१)
क्रोशन्तश्च रुदन्तश्च वेदनर्ता भृशातुराः ।
केचिद्भ्रमन्तश्चेष्टन्ते केचिद्धावन्ति चातुराः ॥१३-२३०-१७ (९०४५२)
आधावन्तो निवार्यन्ते शूलहस्तैर्यतस्ततः ।
रुजार्दितास्तृषायुक्ताः प्राणिनः पापकारिणः ॥१३-२३०-१८ (९०४५३)
यावत्पूर्वकृतं तावन्न मुच्यन्ते कथञ्चन ।
क्रिमिभिर्भक्ष्यमाणाश्च वेदनार्तास्तृषान्विताः ॥१३-२३०-१९ (९०४५४)
संस्मरन्तः स्वकं पापं कृतमात्मापराधजम् ।
शोचन्तस्तत्र तिष्ठन्ति यावत्पापक्षयं प्रिये ।
एवं भुक्त्वा तु नरकं मुच्यन्ते पापसंक्षयात् ॥ १३-२३०-२० (९०४५५)
उमोवाच। १३-२३०-२१क्ष् (७६१७)
भगवन्कतिकालं ते तिष्ठन्ति नरकेषु वै ॥ १३-२३०-२१ (९०४५६)
महेश्वर उवाच। १३-२३०-२२क्ष् (७६१८)
शतवर्षसहस्राणामादिं कृत्वा हि जन्तवः। १३-२३०-२२ (९०४५७)
तिष्ठन्ति नरकावासाः प्रलयान्तमिति स्थितिः ॥ १३-२३०-२२ (९०४५८)
उमोवाच। १३-२३०-२३क्ष् (७६१९)
भगवंस्तेषु के तत्र तिष्ठन्तीति वद प्रभो ॥ १३-२३०-२३ (९०४५९)
महेश्वर उवाच। १३-२३०-२४क्ष् (७६२०)

रौरवे शतसाहस्रं वर्षाणामिति संस्थितिः। १३-२३०-२४ (९०४६०)
मानुषघ्नाः कृतघ्नाश्च तथैवानृतवादिनः ॥ १३-२३०-२४ (९०४६१)
द्वितीये द्विगुणं कालं पच्यन्ते तादृशा नराः ।
महापातकयुक्तास्तु तृतीये दुःखमाप्नुयुः ॥१३-२३०-२५ (९०४६२)
एतावन्मानुषसहं परमन्येषु लक्ष्यते ॥ १३-२३०-२६ (९०४६३)
यक्षा विद्याधराश्चैव काद्रवेयाश्च किंनराः ।
गन्धर्वभूतसङ्घाश्च तेषां पापयुता भृशम् ।
चतुर्थे परिपच्यन्ते तादृशा नरकाः स्मृताः ॥
चतुर्थे परितप्यन्ते यावद्युगविपर्ययः। १३-२३०-२७ (९०४६४)
सहन्तस्तादृशं घोरं पञ्चकष्टे तु यादृशम् ।
तत्रास्य चिरदुःखस्य ह्यधोन्यान्विद्धि मानुषान् ॥१३-२३०-२८ (९०४६५)
एवं ते नरकान्भुक्त्वा तत्र क्षपितकल्मषाः ।
नरकेभ्यो विमुक्ताश्च जायन्ते कृमिजातिषु ॥१३-२३०-२९ (९०४६६)
उद्भेदजेषु वा केचिदत्रापि क्षीणकल्मषाः ।
पुनरेव प्रजायन्ते मृगपक्षिषु शोभने ।
मृगपक्षिषु तद्भुक्त्वा लभन्ते मानुषं पदम् ॥ १३-२३०-३० (९०४६७)
उमोवाच।१३-२३०-३१क्ष् (७६२१)
नानाजातिषु केनैव जायन्ते पापकारिणः ॥ १३-२३०-३१ (९०४६८)
महेश्वर उवाच।१३-२३०-३२क्ष् (७६२२)
तदहं ते प्रवक्ष्यामि यत्त्वमिच्छसि शोभने ।
सर्वदाऽऽत्मा कर्मवशो नानाजातिषु जायते ॥१३-२३०-३२ (९०४६९)
यश्च मांसप्रियो नित्यं काकगृध्रान्स संस्पृशेत् ।
सुरापः सततं मर्त्यः सूकरत्वं व्रजेद्ध्रुवम् ॥१३-२३०-३३ (९०४७०)
अभक्ष्यभक्षणो मर्त्यः काकजातिषु जायते ।
आत्मघ्नो यो नरः कोपात्प्रेतजातिसु तिष्ठति ॥१३-२३०-३४ (९०४७१)
पैशुन्यात्परिवादाच्च कुक्कुटत्वमवाप्नुयात् ।
नास्तिकश्चैव यो मूर्खो मृगजातिं स गच्छति ॥१३-२३०-३५ (९०४७२)
हिंसाविहारस्तु नरः क्रिमिकीटेषु जायते ।
अतिमानयुतो नित्यं प्रेत्य गर्दभतां व्रजेत् ॥१३-२३०-३६ (९०४७३)
अगम्यागमनाच्चैव परदारनिषेवणात् ।
मूषिकत्वं व्रजेन्मर्त्यो नास्ति तत्र विचारणा ॥१३-२३०-३७ (९०४७४)
कृतघ्नो मित्रघाती च सृगालवृकजातिषु ।
कृतघ्नः पुत्रघाती च स्थावरेष्वथ तिष्ठति ॥१३-२३०-३८ (९०४७५)
एवमाद्यशुभं कृत्वा नरा निरयगामिनः ।
तांस्तान्भावान्प्रपद्यन्ते स्वकृतस्यैव कारणात् ॥१३-२३०-३९ (९०४७६)
एवंजातिषु निर्देश्याः प्राणिनः पापकारिणः ।

कथंचित्पुनरुत्पद्यि लभन्ते मानुषं पदम् ॥१३-२३०-४० (९०४७७)
बहुशश्वाग्निसङ्क्रान्तं लोहं शुचिमयं तथा ।
बहुदुःखाभिसन्तप्तस्तथाऽऽत्मा शोध्यते बलात् ।
तस्मात्सुदुर्लभं चेति विद्धि जन्मसु मानुषम् ॥ ॥ १३-२३०-४१ (९०४७८)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
त्रिंशदधिकद्विशततमोऽध्यायः ॥ २३० ॥

---

अनुससनपर्व-अध्यय२३१
॥ श्रीः ॥
१३.२३१. अध्यायः २३१

अथ दानधर्मपर्व ॥ १ ॥
Mahabharata - Anushaasana Parva - Chapter Topics
परमेश्वरेण पार्वतींप्रति शुभाशुभकर्मणां मानसिकत्वादिभेदेन
त्रैविध्यकथनपूर्वकं तत्तत्फलनिरूपणम् ॥ १ ॥
तथा मद्योत्पत्तिकारणादिकथनपूर्वकं तत्पानजदोषादिप्रतिपादनम् ॥ २ ॥

Mahabharata - Anushaasana Parva - Chapter Text

उमोवाच ।
भगवन्देवदेवेश शूलपाणे वृषध्वज ।
श्रुतं मे परमं गुह्यं प्रसादात्ते वरप्रद ॥१३-२३१-१ (९०४७९)
श्रोतुं भूयोऽहमिच्छामि प्रजानां हितकारणात् ।
शुभाशुभमिति प्रोक्तं कर्म स्वस्वं समासतः ॥१३-२३१-२ (९०४८०)
तन्मे विस्तरतो ब्रूहि शुभाशुभविधइं प्रति ।
अशुभं कीदृशं कर्म प्राणिनो यन्निपातयेत् ॥१३-२३१-३ (९०४८१)
शुभं वापि कथं देव प्रजानामूर्ध्वदं भवेत् ।
एतन्मे वद देवेश श्रोतुकामाऽस्मि कीर्तय ॥१३-२३१-४ (९०४८२)
महेश्वर उवाच।१३-२३१-५क्ष् (७६२३)
तदहं ते प्रवक्ष्यामि तत्सर्वं शृणु शोभने ।
सुकृतं दुष्कृतं चेति द्विविधं कर्मविस्तरम् ॥१३-२३१-५ (९०४८३)
तयोर्यद्दुष्कृतं कर्म तच्च सञ्जायते त्रिधा ।
मनसा कर्मणा वाचा बुद्धिमोहसमुद्भवात् ॥१३-२३१-६ (९०४८४)
मनःपूर्वं तु वा कर्म वर्तते वाङ्मयं ततः ।
जायते वै क्रियायोगमनु चेष्टाक्रमः प्रिये ॥१३-२३१-७ (९०४८५)

अभिद्रोहोऽभ्यसूया च परार्थेषु च वै स्पृहा ।
शुभाशुभानां मर्त्यानां वर्तनं परिवारितम् ॥ १३-२३१-८ (९०४८६)
धर्मकार्ये यदाऽश्रद्धा पापकर्मणि हर्षणम् ।
एवमाद्यशुभं कर्म मनसा पापमुच्यते ॥ १३-२३१-९ (९०४८७)
अनृतं यच्च परुषमबद्धवचनं कटु ।
असत्यं परिवादश्च पापमेतत्तु वाङ्मयम् ॥ १३-२३१-१० (९०४८८)
अगम्यागमनं चैव परदारनिषेवणम् ।
वधबन्धपरिक्लेशैः परप्राणोपतापनम् ॥ १३-२३१-११ (९०४८९)
चौर्यं परेषां द्रव्याणां हरणं नाशनं तथा ।
अभक्ष्यभक्षणं चैव व्यसनेष्वविषङ्गता ॥ १३-२३१-१२ (९०४९०)
दर्पात्स्तम्भाभिमानाच्च परेषामुपतापनम् ।
अकार्याणां च करणमशौचं पानसेवनम् ॥ १३-२३१-१३ (९०४९१)
दौःशील्यं पापसम्पर्के साहाय्यं पापकर्मणि ।
अधर्म्यमयशस्यं च कार्यं तस्य निषेवणम् ।
एवमाद्यशुभं चान्यच्छारीरं पापमुच्यते ॥ १३-२३१-१४ (९०४९२)
मानसाद्वाङ्मयं पापं विशिष्टमिति लक्ष्यते ।
वाङ्मयादपि वै पापाच्छारीरं गण्यते बहु ॥ १३-२३१-१५ (९०४९३)
एवं पापयुतं कर्म त्रिविधं पातयेन्नरम् ।
परापकारजननमत्यन्तं पातकं स्मृतम् ॥ १३-२३१-१६ (९०४९४)
त्रिविधं तत्कृतं पापं कर्तारं पापकं नयेत् ।
पातकं चापि यत्कर्म कर्मणा बुद्धिपूर्वकम् ॥ १३-२३१-१७ (९०४९५)
सापदेशमवश्यं तत्कर्तव्यमिति तत्कृतम् ।
कथञ्चित्तत्कृतमपि कर्ता तेन स लिप्यते ॥ १३-२३१-१८ (९०४९६)
अवश्यं पापदेशेन प्रतिहन्येत कारणम् ॥ १३-२३१-१९ (९०४९७)
उमोवाच। १३-२३१-२०क्ष् (७६२४)
भगवन्पापकं कर्म यथा कृत्वा न लिप्यते ॥ १३-२३१-२० (९०४९८)
महेश्वर उवाच। १३-२३१-२१क्ष् (७६२५)
यो नरोऽनपराधी च स्वात्मप्राणस्य रक्षणात् ।
शत्रुमुद्यतशस्त्रं वा पूर्वं तेन हतोपि वा ।
प्रतिहन्यान्नरो हिंस्यान्न स पापेन लिप्यते ॥ १३-२३१-२१ (९०४९९)
चोरादधिकसंत्रस्तस्तत्प्रतीकारचेष्टया ।
यः प्रजघ्नन्नरो हन्यान्न स पापेन लिप्यते ॥ १३-२३१-२२ (९०५००)
ग्रामार्थं भर्तृपिण्डार्थं दीनानुग्रहकारणात् ।
वधबन्धपरिक्लेशान्कुर्वन्पापात्प्रमुच्यते ॥ १३-२३१-२३ (९०५०१)
दुर्भिक्षे चात्मवृत्त्यर्थमेकायतनगस्तथा ।
अकार्यं वाऽप्यभक्ष्यं वा कृत्वा पपान्न लिप्यते  १३-२३१-२४ (९०५०२)

विधिरेष गृहस्थानां प्रायेणैवोपदिश्यते ।
अवाच्यं वाऽप्यकार्यं वा देशकालवशेन तु ॥ १३-२३१-२५ (९०५०३)
बुद्धिपूर्वं नरः कुर्वंस्तत्प्रयोजनमात्रया ।
किञ्चिद्वा लिप्यते पापैरथवा न च लिप्यते ॥ १३-२३१-२६ (९०५०४)
एवं देवि विजानीहि नास्ति तत्र विचारणा ॥ १३-२३१-२७ (९०५०५)
उमोवाच। १३-२३१-२८क्ष् (७६२६)
भगवन्पानदोषांश्च पेयापेयत्वकारणम् ।
एतदिच्छाम्यहं श्रोतुं तन्मे वद महेश्वर ॥ १३-२३१-२८ (९०५०६)
महेश्वर उवाच। १३-२३१-२९क्ष् (७६२७)
हन्त ते कथयिष्यामि पानोत्पत्तिं शुचिस्मिते ॥ १३-२३१-२९ (९०५०७)
पुरा सर्वेऽभवन्मर्त्या बुद्धिमन्तो नयानुगाः ।
शुचयश्च शुभाचाराः सर्वे चोन्मनसः प्रिये ॥ १३-२३१-३० (९०५०८)
एवंभूते तदा लोके प्रेष्यकृन्न परस्परम् ।
प्रेष्याबावान्मनुष्याणां कर्मारम्भो ननाश ह ॥ १३-२३१-३१ (९०५०९)
उभयोर्लोकयोर्नाशं दृष्ट्वा कर्मक्षयात्प्रभुः ।
यज्ञकर्म कथं लोके वर्तेतेति पितामहः ॥ १३-२३१-३२ (९०५१०)
आज्ञापयत्सुरान्देवि मोहयस्वेति मानुषान् ।
तमसः सारमुद्धृत्य पानं बुद्धिप्रणाशनमि ।
न्यपातयन्मनुष्येषु पापदोषावहं प्रिये ॥ १३-२३१-३३ (९०५११)
तदाप्रभृति तत्पानान्मुमुहुर्मानवा भुवि ।
कार्याकार्यमजानन्तो वाच्यावाच्यं गुणागुणम् ॥ १३-२३१-३४ (९०५१२)
केचिद्धसन्ति तत्पीत्वा प्रवदन्ति तथा परे ।
नृत्यन्ति मुदिताः केचिद्गायन्ति शुभाशुभान्। १३-२३१-३५ (९०५१३)
कलिं ते कुर्वतेऽभीष्टं प्रहरन्ति परस्परम् ।
क्वचिद्धावन्ति सहसा प्रस्खलन्ति पतन्ति च ॥ १३-२३१-३६ (९०५१४)
अयुक्तं बहु भाषन्ते यत्र क्वचन शोभने ।
नग्ना विक्षिप्य गात्राणि नष्टज्ञाना इवासते ॥ १३-२३१-३७ (९०५१५)
एवं बहुविधान्भावान्कुर्वन्ति भ्रान्तचेतनाः ।
ये पिबन्ति महामोहं पानं पापयुता नराः ॥ १३-२३१-३८ (९०५१६)
धृतिं लज्जां च बुद्धिं च पानं पीतं प्रणाशयेत् ।
तस्मान्नराः सम्भवन्ति निर्लज्जा निरपत्रपाः ॥ १३-२३१-३९ (९०५१७)
बुद्धिसत्वैः परिक्षीणास्तेजोहीना मलान्विताः ।
पीत्वापीत्वा तृषायुक्ताः पानपाः सम्भवन्ति च ॥ १३-२३१-४० (९०५१८)
पानकामाः पानकथाः पानकालाभिकाङ्क्षिणः ।
पानार्थं कर्मवश्यास्ते सम्भवन्ति नराधमाः ॥ १३-२३१-४१ (९०५१९)
पानकामास्तृषायोगाद्बुद्धिसत्वपरिक्षयात् ।

पानदानां प्रेष्यकाराः पानपाः सहसाऽभवन् ॥ १३-२३१-४२ (९०५२०)
तदाप्रभृति वै लोके दीनैः पानवशैर्नरैः ।
कारयन्ति च कर्माणि बुद्धिमन्तस्तु पानपाः ॥ १३-२३१-४३ (९०५२१)
कारुत्वमथ दासत्वं प्रेष्यतामेत्य पानपाः ।
सर्वकर्मकराश्चासन्पशुवद्रज्जुबन्धिताः ॥ १३-२३१-४४ (९०५२२)
पानपस्तु सुरां पीत्वा तदा बुद्धिप्रणाशनात् ।
कार्याकार्यस्य चाज्ञानाद्यथेष्टकरणात्स्वयम् ।
विदुषामविधेयत्वात्पापमेवाभिपद्यते ॥ १३-२३१-४५ (९०५२३)
परिभूतो भवेल्लोके मद्यपो मित्रभेदकः ।
सर्वकालमशुद्धिं च सर्वभक्षस्तथा भवेत् ॥ १३-२३१-४६ (९०५२४)
विनष्टो ज्ञातिविद्वद्भ्यः सततं कलिभावगः ।
परुषं कटुकं घोरं वाक्यं वदति सर्वशः ॥ १३-२३१-४७ (९०५२५)
गुरूनतिवदेन्मत्तः परदारान्प्रधर्षयेत् ।
संविदं कुरुते शौण्डेर्न शृणोति हितं क्वचित् ॥ १३-२३१-४८ (९०५२६)
एवं बहुविधा दोषाः पानपे सन्ति शोभने ।
केवलं नरकं यान्ति नास्ति तत्र विचारणा ।
तस्मात्तद्वर्जितं सद्भिः पानमात्महितैषिभिः ॥ १३-२३१-४९ (९०५२७)
यदि पानं न वर्जेरन्सन्तश्चारित्रकारणात् ।
भवेदेतज्जगत्सर्वममर्यादं च निष्क्रियम् ॥ १३-२३१-५० (९०५२८)
तस्माद्बुद्धेर्हि रक्षार्थं सद्भिः पानं विवर्जितम् ।
इति ते दुष्कृतं सर्वं कथितं त्रिविधं प्रिये ॥ ॥ १३-२३१-५१ (९०५२९)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
एकत्रिंशदधिकद्विशततमोऽध्यायः ॥ २३१ ॥
Mahabharata - Anushaasana Parva - Chapter Footnotes

७-२३१-४७ विनष्टो ज्ञानविद्वद्भ्य इति ङ.थ.पाठः ॥

---

अनुससनपर्व-अध्यय२३२
॥ श्रीः ॥
१३.२३२. अध्यायः २३२

अथ दानधर्मपर्व ॥ १ ॥
Mahabharata - Anushaasana Parva - Chapter Topics
परमेश्वरेणि पार्वतींप्रति सुकृतस्य त्रेधा विभजनेन
तल्लक्षणादिकथनम् ॥ १ ॥

महेश्वर उवाच ।
विधानं सुकृतस्यापि भूयः शृणु शुचिस्मिते ।
प्रोच्यते तत्त्रिधा देवि सुकृतं च समासतः ॥ १३-२३२-१ (९०५३०)
यदौपरमिकं चैव सुकृतं निरुपद्रवम् ।
तथैव सोपकरणं तावता सुकृतं विदुः ॥ १३-२३२-२ (९०५३१)
निवृत्तिः पापकर्मभ्यस्तदौपरमिकं प्रिये ।
मनोवाक्कायजा दोषाः शृणु मे वर्जनाच्छुभम् ॥ १३-२३२-३ (९०५३२)
त्रैविध्यदोषोपरमे यस्तु दोषव्यपेक्षया ।
स हि प्राप्नोति सकलं सर्वदुष्कृतवर्जनात् ॥ १३-२३२-४ (९०५३३)
प्रथमं वर्जयेद्दोषान्युगपत्पृथगेव वा ।
तथा धर्ममवाप्नोति दोषत्यागो हि दुष्करः ।
दोषसाकल्यसंत्यागान्मुनिर्भवति मानवः ॥ १३-२३२-५ (९०५३४)
सौकर्यं पस्य धर्मस्य कार्यारम्भादृतेऽपि च ।
आत्मा च लब्धोपरमो लभन्ते सुकृतं परम् ॥ १३-२३२-६ (९०५३५)
अहो नृशंसाः पच्यन्ते मानुषाः स्वल्पबुद्धयः ।
एतादृशं न बुध्यन्ते आत्माधीनं न निर्व्यथाः ॥ १३-२३२-७ (९०५३६)
दुष्कृतत्यागमात्रेण पदमूर्ध्वं हि लभ्यते ॥ १३-२३२-८ (९०५३७)
पापभीरुत्वमात्रेण दोषाणां परिवर्जनात् ।
सुशोभनो भवेद्देवि ऋजुर्धर्मव्यपेक्षया ।
इत्यौपरमिकं देवि कथितं सुकृतं तव ॥ १३-२३२-९ (९०५३८)
श्रुत्वा च वृद्धसंयोगादिन्द्रियाणां च निग्रहात् ।
सन्तोषाच्च धृतेश्चैव शक्यते दोषवर्जनम् ॥ १३-२३२-१० (९०५३९)
तदेव धर्ममित्याहुर्दोषसंयमनं प्रिये ।
यमधर्मेण धर्मोस्ति नान्यः शुभतरः प्रिये ।
यमधर्मेण यतयः प्राप्नुवन्त्युत्तमां गतिम् ॥ १३-२३२-११ (९०५४०)
ईश्वराणां प्रभवतां दरिद्राणां च वै नृणाम् ।
सफलो दोषसंत्यागो दानादपि शुभादपि ॥ १३-२३२-१२ (९०५४१)
तपो दानं महादेवि दोषमल्पं हि निर्भरेत् ।
सुकृतं यामिकं चोक्तं वक्ष्ये निरुपसाधनम् ॥ १३-२३२-१३ (९०५४२)
सुखाभिसन्धिर्लोकानां सत्यं शौचमथार्जवम् ।
व्रतोपवासः प्रीतिश्च ब्रह्मचर्यं दमः शमः ॥ १३-२३२-१४ (९०५४३)
एवमादि शुभं कर्म सुकृतं नियमाश्रितम् ।
शृणु तेषां विशेषांश्च कीर्तयिष्यामि भामिनि ॥ १३-२३२-१५ (९०५४४)

सत्यं स्वर्गस्य सोपानं पारावारस्य नौरिव ।
नास्ति सत्यात्परं दानं नास्ति सत्यात्परं तपः ॥ १३-२३२-१६ (९०५४५)
यथा श्रुतं यथा दृष्टमात्मना यद्यथा कृतम् ।
तथा तस्याविकारेण वचनं सत्यलक्षणम् ॥ १३-२३२-१७ (९०५४६)
यच्छलेनाभिसंयुक्तं सत्यरूपं मृषैव तत् ।
सत्यमेव प्रवक्तव्यं पारावर्यं विजानता ॥ १३-२३२-१८ (९०५४७)
दीर्घायुश्च भवेत्सत्यात्कुलसन्तानपालकः ।
लोकसंस्थितिपालश्च भवेत्सत्येन मानवः ॥ १३-२३२-१९ (९०५४८)
उमोवाच। १३-२३२-२०क्ष् (७६२८)
कथं सन्धारयन्मर्त्यो व्रतं शुभमवाप्नुयात् ॥ १३-२३२-२० (९०५४९)
महेश्वर उवाच। १३-२३२-२१क्ष् (७६२९)
पूर्वमुक्तं तु यत्पापं मनोवाक्कायकर्मभिः ।
व्रतवत्तस्य संत्यागस्तपोव्रतमिति स्मृतम् ॥ १३-२३२-२१ (९०५५०)
त्याज्यं वा यदि वा जोष्यमव्रतेनि वृथा चरन् ।
तथा फलं न लभते तस्माद्धर्मं वृथा चरेत् ॥ १३-२३२-२२ (९०५५१)
शुद्धकायो नरो भूत्वा स्नात्वा तीर्थे यथाविधि ।
पञ्चभूतानि चन्द्रार्कौ संध्ये धर्मयमौ पितॄन् ॥ १३-२३२-२३ (९०५५२)
आत्मनैव तथाऽऽत्मानं निवेद्य व्रतवच्चरेत् ।
व्रतमामरणाद्वाऽपि कालच्छेदेन वा हरेत् ॥ १३-२३२-२४ (९०५५३)
शाकादिषु व्रतं कुर्यात्तथा पुष्पफलादिषु ।
ब्रह्मचर्यव्रतं कुर्यादुपवासव्रतं तथा ॥ १३-२३२-२५ (९०५५४)
एवमन्येषु बहुषु व्रतं कार्यं हितैषिणा ।
व्रतभङ्गो यथा न स्याद्रक्षितव्यं तथा बुधैः ।
व्रतभङ्गे महत्पापमिति विद्धि शुभेक्षणे ॥ १३-२३२-२६ (९०५५५)
औषधार्थं यदज्ञानाद्गुरूणां वचनादपि ।
अनुग्रहार्थं बन्धूनां व्रतभङ्गो न दुष्यते ॥ १३-२३२-२७ (९०५५६)
व्रतापवर्गकाले तु दैवब्राह्मणपूजनम् ।
नरेण तु यथा विद्धि कार्यसिद्धिं यथाऽऽप्तुयात् ॥ १३-२३२-२८ (९०५५७)
उमोवाच। १३-२३२-२९क्ष् (७६३०)
कथं शौचविधिस्तत्र तन्मे शंसितुमर्हसि ॥ १३-२३२-२९ (९०५५८)
महेश्वर उवाच। १३-२३२-३०क्ष् (७६३१)
बाह्यमाभ्यन्तरं चेति द्विविधं शौचमिष्यते ।
मानसं सुकृतं यत्तच्छौचमाभ्यन्तरं स्मृतम् ॥ १३-२३२-३० (९०५५९)
सदाऽऽहारविशुद्धिश्च कायप्रक्षालनं च यत् ।
बाह्यशौचं भवेदेतत्तथैवाचमनादिना ॥ १३-२३२-३१ (९०५६०)
मृच्चैव शुद्धदेशस्था गोशकृन्मूत्रमेव च ।

द्रव्याणि गन्धयुक्तानि यानि पुष्टिकराणि च ।
एतैः सम्मार्जयेत्कायमम्भसा च पुनः पुनः ॥ १३-२३२-३२ (९०५६१)
अक्षोभ्यं यत्प्रकीर्णं च नित्यस्रोतं च यज्जलम् ।
प्रायशस्तादृशे मज्जेदन्यथा च विवर्जयेत् ॥ १३-२३२-३३ (९०५६२)
त्रिस्त्रिराचमनं श्रेष्ठं निष्फेनैर्निर्मलैर्जलैः ।
तथा विण्मूत्रयोः शुद्धिरद्भिर्बहुमृदा भवेत् ।
तथैव जलसंशुद्धिर्यत्संशुद्धं तु संस्पृशेत् ॥ १३-२३२-३४ (९०५६३)
शकृता भूमिशुद्धिः स्याल्लौहानां भस्मना स्मृतम् ।
तक्षणं घर्षणं चैव दारवाणां विशोधनम् ॥ १३-२३२-३५ (९०५६४)
दहनं मृण्मयानां च मर्त्यानां कृच्छ्रधारणम् ।
शेषाणां देवि सर्वेषामातपेन जलेन च ।
ब्राह्मणानां च वाक्येन सदा संशोधनं भवेत् ॥ १३-२३२-३६ (९०५६५)
अदृष्टमद्भिर्निर्णिक्तं यच्च वाचा प्रशस्यते ।
एवमापदि संशुद्धिरेवं शौचं विधीयते। १३-२३२-३७ (९०५६६)
उमोवाच। १३-२३२-३८क्ष् (७६३२)
आहारशुद्धिस्तु कथं देवदेव महेश्वर ॥ १३-२३२-३८ (९०५६७)
महेश्वर उवाच। १३-२३२-३९क्ष् (७६३३)
अमांसमद्यमक्लेद्यमपर्युषितमेव च ।
अतिकट्वम्ललवणहनं च शुभगन्धि च ॥ १३-२३२-३९ (९०५६८)
क्रिमिकेशमलैर्हीनं संवृतं शुद्धदर्शम् ।
एवंविधं सदाहार्यं देवब्राह्मणसात्कृतम् ॥ १३-२३२-४० (९०५६९)
श्रुतमित्येव तज्ज्ञेयमन्यथा मन्यसेऽशुभम् ।
ग्राम्यादारण्यकैः सिद्धं श्रेष्ठमित्यवधारय ॥ १३-२३२-४१ (९०५७०)
अतिमात्रगृहीतात्तु अल्पदत्तं भवेच्छुचि ।
यज्ञशेषं हविःशेषं पितृशेषं च निर्मलम् ।
इति ते कथितं देवि भूयः किं श्रोतुमिच्छसि ॥ ॥ १३-२३२-४२ (९०५७१)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
द्वात्रिंशदधिकद्विशततमोऽध्यायः ॥ २३२ ॥

---

अनुससनपर्व-अध्यय२३३
॥ श्रीः ॥
१३.२३३. अध्यायः २३३

अथ दानधर्मपर्व ॥ १ ॥

महेश्वरेणोमांप्रति मांसभक्षणाभक्षणयोर्दोषगुणकथनम् ॥ १ ॥
गुरुप्रशंसनपूर्वकं तत्पूजादिफलकथनम् ॥ २ ॥
तथा तीर्थस्नानोपवासादिफलकथनम् ॥ ३ ॥

Mahabharata - Anushaasana Parva - Chapter Text

उमोवाच ।
भक्षयन्त्यपरे मांसं वर्जयन्त्यपरे विभो ।
तन्मे वद महादेव भक्ष्याभक्ष्यविनिर्णयम् ॥ १३-२३३-१ (९०५७२)
महेश्वर उवाच। १३-२३३-२क्ष् (७६३४)
मांसस्य भक्षणे दोषो यश्चास्याभक्षणे गुणः ।
तदहं कीर्तयिष्यामि तन्निबोध यथातथम् ॥ १३-२३३-२ (९०५७३)
इष्टं दत्तमधीतं च क्रतवश्च सदक्षिणाः ।
अमांसभक्षणस्यैव कलां नार्हन्ति षोडशीम् ॥ १३-२३३-३ (९०५७४)
आत्मार्थं यः परप्राणान्हिस्यात्स्वादुफलेप्सया ।
व्यालगृध्रसृगालैश्च राक्षसैश्च समस्तु सः ॥ १३-२३३-४ (९०५७५)
यो वृथा नित्यमांसाशी स पुमानधमो भवेत् ।
ततः कष्टतरं नास्ति स्वयमाहृत्य भक्षणात् ॥ १३-२३३-५ (९०५७६)
स्वमांसं परमांसेन यो वर्धयितुमिच्छति ।
उद्विग्नवासं लभते यत्रयत्रोपजायते ॥ १३-२३३-६ (९०५७७)
संछेदनं स्वमांसस्य यथा सञ्जनयेद्रुजम् ।
तथैव परमांसेऽपि वेदितव्यं विजानता ॥ १३-२३३-७ (९०५७८)
यस्तु सर्वाणि मांसानि यावज्जीवं न भक्षयेत् ।
स स्वर्गे विपुलं स्थानं लभते नात्र संशयः ॥ १३-२३३-८ (९०५७९)
यत्तु वर्षशतं पूर्णं तप्यते परमं तपः ।
यच्चापि वर्जयेन्मांसं सममेतन्न वा समम् ॥ १३-२३३-९ (९०५८०)
न हि प्राणैः प्रियतमं लोके किञ्चन विद्यते ।
तस्मात्प्राणिदया कार्या यथात्मनि तथा परे ॥ १३-२३३-१० (९०५८१)
सर्वे यज्ञा न तत्कुर्युः सर्वे देवाश्च भामिनि ।
यो मांसरसमास्वाद्य पुनर्मांसं विवर्जयेत् ॥ १३-२३३-११ (९०५८२)
इत्येवं मुनयः प्राहुर्मांसस्याभक्षणे गुणाः ।
एवं बहुगुणं देवि नृणां मांसविवर्जनम् ॥ १३-२३३-१२ (९०५८३)
न शक्नुयाद्यदाऽतीय त्यक्तं मांसं कथञ्चन ।
पुण्यं तन्मासमात्रं वा वर्जनीयं विशेषतः ॥ १३-२३३-१३ (९०५८४)
न शक्नुयादपि तथा कौमुदीमासमेव च ।
जन्मनक्षत्रतिथिषु सदा पर्वसु रात्रिषु ।

वर्जनीयं तथा मांसं परत्रि हितमिच्छता। १३-२३३-१४ (९०५८५)
अशक्तः कारणान्मर्त्यो भोक्तुमिच्छेद्विधिं शृणु ।
अनेनि खादन्विधिना कलुषेण न लिप्यते ॥ १३-२३३-१५ (९०५८६)
सूनायां च गतप्राणान्क्रीत्वा न्यायेन भामिनि ।
ब्राह्मणातिथिपूजार्थं भोक्तव्यं हितमिच्छता ॥ १३-२३३-१६ (९०५८७)
भैषज्यकारणाद्व्याधौ खादन्पापैर्न लिप्यते ।
पितृशेषं तथैवाश्नन्मांसं नाशुभमृच्छति ॥ १३-२३३-१७ (९०५८८)
उमोवाच। १३-२३३-१८क्ष् (७६३५)
गुरुपूजा कथं देव क्रियते धर्मचारिभिः ॥ १३-२३३-१८ (९०५८९)
महेश्वर उवाच। १३-२३३-१९क्ष् (७६३६)
गुरुपूजां प्रवक्ष्यामि यथावत्तव शोभने ।
कृतज्ञानां परो धर्म इति वेदानुशासनम् ॥ १३-२३३-१९ (९०५९०)
तस्मात्स्वगुरवः पूज्यास्ते हि पूर्वोपकारिणः ।
गुरूणां च गरीयांसस्त्रयो लोकेषु पूजिताः ॥ १३-२३३-२० (९०५९१)
उपाध्यायः पिता माता संपूज्यास्ते विशेषतः ।
ये पितुर्भ्रातरो ज्येष्ठा ये च तस्यानुजास्तथा ।
पितुः पिता च सर्वे ते पूजनीयाः पिता तथा ॥ १३-२३३-२१ (९०५९२)
मातुर्या भगिनी ज्येष्ठा मातुर्या च यवीयसी ।
मातामही च धात्री च सर्वास्ता मातरः स्मृताः ॥ १३-२३३-२२ (९०५९३)
उपाध्यायस्य यः पुत्रो यश्च तस्य भवेद्गुरुः ।
ऋत्विग्गुरुः पिता चेति गुरवः सम्प्रकीर्तिताः ॥ १३-२३३-२३ (९०५९४)
ज्येष्ठो भ्राता नरेन्द्रश्च मातुलः श्वशुरस्तथा ।
भयत्राता च भर्ता च गुरवस्ते प्रकीर्तिताः ॥ १३-२३३-२४ (९०५९५)
इत्येष कथितः साध्वि गुरूणां सर्वसङ्ग्रहः ।
अनुवृत्तिं च पूजां च तेषामपि निबोध मे ॥ १३-२३३-२५ (९०५९६)
आराध्या मातापितरावुपाध्यायस्तथैव च ।
कथंचिन्नावमन्तव्या नरेण हितमिच्छता ॥ १३-२३३-२६ (९०५९७)
येन प्रीणन्ति पितरस्तेन प्रीतः प्रजापतिः ।
येन प्रीणाति चेन्माता प्रीताः स्युर्देवमातरः ॥ १३-२३३-२७ (९०५९८)
ये प्रीणात्युपाध्यायो ब्रह्मा तेनाभिपूजितः ।
अप्रीतेषु पुनस्तेषु नरो नरकमेति हि ॥ १३-२३३-२८ (९०५९९)
गुरूणां वैरनिर्बन्धो न कर्तव्यः कथञ्चन ।
नरः स्वगुरुमप्रीत्या मनसाऽपि न गच्छति ॥ १३-२३३-२९ (९०६००)
न ब्रूयाद्विप्रियं तेषामनिष्टं न प्रवर्तयेत् ।
विगृह्य न वदेत्तेषां समीपे स्पर्धया क्वचित् ॥ १३-२३३-३० (९०६०१)
यद्यदिच्छन्ति ते कर्तुमस्वतन्त्रस्तदाचरेत् ।

वेदानुशासनसमं गुरुशासनमिष्यते ॥ १३-२३३-३१ (९०६०२)
कलहांश्च विवादांश्च गुरुभिः सह वर्जयेत् ।
कैतवं परिहासांश्च मन्युकामाश्रयाः कथाः ॥ १३-२३३-३२ (९०६०३)
गुरूणां योऽनहंवादी करोत्याज्ञामतन्द्रितः ।
न तस्मात्सर्वमर्त्येषु विद्यते पुण्यकृत्तमः ॥ १३-२३३-३३ (९०६०४)
असूयामपवादं च गुरूणां परिवर्जयेत् ।
तेषां प्रियहितान्वेषी भूत्वा परिचरेत्सदा ॥ १३-२३३-३४ (९०६०५)
न तद्यज्ञफलं कुर्यात्तपो वाऽऽचरितं महत् ।
यत्कुर्यात्पुरुषस्येह गुरुपूजा सदा कृता ॥ १३-२३३-३५ (९०६०६)
अनुवृत्तेर्विना धर्मो नास्ति सर्वाश्रमेष्वपि ।
तस्मात्क्षमावृतः क्षान्तो गुरुवृत्तिं समाचरेत् ॥ १३-२३३-३६ (९०६०७)
स्वमर्थं स्वशरीरं च गुर्वर्थे संत्यजेद्बुधः ।
विवादं धनहेतोर्वा मोहाद्वा तैर्न रोचयेत् ॥ १३-२३३-३७ (९०६०८)
ब्रह्मचर्यमहिंसा च दानानि विविधानि च ।
गुरुभिः प्रतिषिद्धस्य सर्वमेतपार्थकम् ॥ १३-२३३-३८ (९०६०९)
उपाध्यायं पितरं मातरं च ।
येऽभिद्रुह्युर्मनसा कर्मणा वा ।
तेषां पापं भ्रूणहत्याविशिष्टं
तेभ्यो नान्यः पापकृदस्ति लोके ॥ १३-२३३-३९ (९०६१०)
उमोवाच। १३-२३३-४०क्ष् (७६३७)
उपवासविधिं तत्र तन्मे शंसितुमर्हसि ॥ १३-२३३-४० (९०६११)
महेश्वर उवाच। १३-२३३-४१क्ष् (७६३८)
शरीरमलशान्त्यर्थमिन्द्रियोच्छोषणाय च ।
एकभुक्तोपवासैस्तु धारयन्ते व्रतं नराः ॥ १३-२३३-४१ (९०६१२)
लभन्ते विपुलं धर्मं तथाऽऽहारपरिक्षयात् ।
बहूनामुपरोधं तु न कुर्यादात्मकारणात् ॥ १३-२३३-४२ (९०६१३)
जीवोपघातं च तथा स जीवन्धन्य इष्यते ।
तस्मात्पुण्यं लभेन्मर्त्यः स्वयमाहारकर्शनात् ।
तद्गृहस्थैर्यथाशक्ति कर्तव्यमिति निश्चयः ॥ १३-२३३-४३ (९०६१४)
उपवासार्दिते काये आपदर्शे पयो जलम् ।
भुञ्जन्न प्रतिघाती स्याद्ब्राह्मणाननुमान्य च ॥ १३-२३३-४४ (९०६१५)
उमोवाच। १३-२३३-४५क्ष् (७६३९)
ब्रह्मचर्यं कथं देव रक्षितव्यं विजानता ॥ १३-२३३-४५ (९०६१६)
महेश्वर उवाच। १३-२३३-४६क्ष् (७६४०)
तदहं ते प्रवक्ष्यामि शृणु देवि समाहिता ॥ १३-२३३-४६ (९०६१७)
ब्रह्मचर्यं परं शौचं ब्रह्मचर्यं परं तपः ।

केवलं ब्रह्मचर्येणि प्राप्यते परमं पदम् ॥१३-२३३-४७ (९०६१८)
सङ्कल्पाद्दर्शनाच्चैव तद्युक्तवचनादपि ।
संस्पर्शादथ संयोगात्पञ्चधा रक्षितं व्रतम् ॥१३-२३३-४८ (९०६१९)
व्रतवद्धारितं चैव ब्रह्मचर्यमकल्मषम् ।
नित्यं संरक्षितं तस्य नैष्ठिकानां विधियते ।
तदिष्यते गृहस्थानां कालमुद्दिश्य कारणम् ॥ १३-२३३-४९ (९०६२०)
जन्मनक्षत्रयोगेषु पुण्यवासेषु पर्वसु ।
देवताधर्मकार्येषु ब्रह्मचर्यव्रतं चरेत् ॥१३-२३३-५० (९०६२१)
ब्रह्मचर्यव्रतफलं लभेद्दारव्रती सदा ।
शौचमायुस्तथाऽऽरोग्यं लभ्यते ब्रह्मचारिभिः ॥१३-२३३-५१ (९०६२२)
उमोवाच।१३-२३३-५२क्ष् (७६४१)
तीर्थचर्याव्रतं देव क्रियते धर्मकाङ्क्षिभि ।
कानि तीर्थानि लोकेषु तन्मे शंसितुमर्हसि ॥१३-२३३-५२ (९०६२३)
महेश्वर उवाच।१३-२३३-५३क्ष् (७६४२)
हन्त ते कथयिष्यामि तीर्थस्नानविधिं प्रिये ।
पावनार्थं च शौचार्थं ब्रह्मणा निर्मितं पुरा ॥१३-२३३-५३ (९०६२४)
यास्तु लोके महानद्यस्ताः सर्वास्तीर्थसंज्ञिताः ।
तासां प्राक्स्रोतसः श्रेष्ठाः सङ्गमश्च परस्परम् ।
तासां सागरसंयोगो वरिष्ठश्चेति विद्यते ॥ १३-२३३-५४ (९०६२५)
तासामुभयतः कूलं तत्रतत्र मनीषिभिः ।
देवैर्वा सेवितं देवि तत्तीर्थं परमं स्मृतम् ॥१३-२३३-५५ (९०६२६)
समुद्रश्च महातीर्थं पावनं परमं शुभम् ।
तस्य कूलगतास्तीर्था महद्भिश्च समाप्लुताः ॥१३-२३३-५६ (९०६२७)
स्रोतसकां पर्वताना च जोषितानां महर्षिभिः ।
अपि कूपं नटाकं वा सेवितुं मुनिभिः प्रिये ॥१३-२३३-५७ (९०६२८)
तत्तु तीर्थमिति ज्ञेयं प्रभावात्तु तपस्विनाम् ।
तदा प्रभृति तीर्थत्वं लेभे लोकहिताय वै ॥१३-२३३-५८ (९०६२९)
एवं तीर्थं भवेद्देवि तस्य स्नानविधिं शृणु ॥ १३-२३३-५९ (९०६३०)
जन्मना व्रतभूयिष्ठो गत्वा तीर्थानि काङ्क्षया ।
उपवासत्रयं कुर्यादेकं वा नियमान्वितः ॥१३-२३३-६० (९०६३१)
पुण्यमासेवते काले पौर्णमास्यां यथाविधि ।
बहिरेव शुचिर्भूत्वा तत्तीर्थं मन्मना विशेत् ॥१३-२३३-६१ (९०६३२)
त्रिराप्लुत्य जलाभ्यासे दत्त्वा ब्राह्मणदक्षिणाम् ।
अभ्यर्च्य देवायतनं ततः प्रायाद्यथागतम् ॥१३-२३३-६२ (९०६३३)
एतद्विधानं सर्वेषां तीर्थंतीर्थमिति प्रिये ।
समीपतीर्थस्नानात्तु दूरतीर्थं सुपूजितम् ॥१३-२३३-६३ (९०६३४)

आदिप्रभृतिशुद्धस्य तीर्थस्नानं शुभं भवेत् ।
तपोर्थं पापनाशार्थं शौचार्थं तीर्थगाहनम् ॥ १३-२३३-६४ (९०६३५)
एवं पुण्येषु तीर्थेषु तीर्थस्नानं शुभं भवेत् ।
एतन्नैयमिकं सर्वं सुकृतं कथितं तव ॥ ॥ १३-२३३-६५ (९०६३६)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मिपर्वणि
त्रयस्त्रिंशदधिकद्विशततमोऽध्यायः ॥ २३३ ॥

---

अनुससनपर्व-अध्यय२३४
॥ श्रीः ॥
१३.२३४. अध्यायः २३४

अथ दानधर्मपर्व ॥ १ ॥
Mahabharata - Anushaasana Parva - Chapter Topics
महेश्वरेण पार्वतींप्रति दानस्य षाङ्गुण्यप्तिपादनपूर्वकं
तत्फलकथनम् ॥ १ ॥

Mahabharata - Anushaasana Parva - Chapter Text

महेश्वर उवाच ।
एतदर्थमवाप्नोति नरः प्रेत्य शुभेक्षणे ॥ उमोवाच। १३-२३४-१ (९०६३७)
लोकसिद्धं तु यद्द्रव्यं सर्वसाधारणं भवेत् ।
तददत्सर्विसामान्यं कथं धर्मं लभेन्नरः ।
एवं साधारणे द्रव्ये तस्य स्वत्वं कथं भवेत् ॥ महेश्वर उवाच।
१३-२३४-२ (९०६३८)
लोके भूतमयं द्रव्यं सर्वसाधारणं तथा ।
तथैव तद्ददन्मर्त्यो लभेत्पुण्यं स तच्छृणु ॥ १३-२३४-३ (९०६३९)
दाता प्रतिग्रहीता च देयं सोपक्रमं तथा ।
देशकालौ च यत्त्वेतद्दानं षड्गुणमुच्यते ।
तेषां सम्पद्विशेषांश्च कीर्त्यमानान्निबोध मे ॥ १३-२३४-४ (९०६४०)
आदिप्रभृति यः शुद्धो मनोवाक्कायकर्मभिः । सत्यवादी
जितक्रोधस्त्वलुब्धो नाभ्यसूयकः। श्रुद्धावानास्तिकश्चैवक एवं
दाता प्रशस्यते ॥ १३-२३४-५ (९०६४१)
शुद्रो दान्तो जितक्रोधस्तथा दीनकुलोद्भवः ।
श्रुतचारित्रसम्पन्नस्तथा बहुकलत्रवान् ॥ १३-२३४-६ (९०६४२)
पञ्चयज्ञपरो नित्यं निर्विकारशरीरवान् ।

एतान्पात्रगुणान्विद्धि तादृक्पात्रं प्रशस्यते ॥ १३-२३४-७ (९०६४३)
पितृदेवाग्निकार्येषु तस्य दत्तं महाफलम् ।
यद्यदर्हति यो लोके पात्रं तस्य भवेच्च सः । मुच्येदापद आपन्नो
येन पात्रं तदस्य तु ॥ १३-२३४-८ (९०६४४)
अन्नस्य क्षुधितं पात्रं तृषितस्तु जलस्य वै ।
एवं पात्रेषु नानात्वमिष्यते पुरुषं प्रति ॥ १३-२३४-९ (९०६४५)
जारश्चोरश्च षण्डश्च हिंस्रः समयभेदकः ।
लोकविघ्नकराश्चान्ये वर्जितव्याः सर्वशः प्रिये ॥ १३-२३४-१० (९०६४६)
परोपघाताद्यद्द्रव्यं चौर्याद्वा लभ्यते नृभिः ।
निर्दयाल्लभ्यते यच्च धूर्तभावेन वै तथा ॥ १३-२३४-११ (९०६४७)
अधर्मादर्थमोहाद्वा बहूनामुपरोधनात् ।
यल्लभ्यते धनं देवि तदत्यन्तविगर्हितम् ॥ १३-२३४-१२ (९०६४८)
तादृशेन कृतं धर्मं निष्फलं विद्धि भामिनि ।
तस्मान्न्यायागतेनैव दातव्यं शुभमिच्छता ॥ १३-२३४-१३ (९०६४९)
यद्यदात्मप्रियं नित्यं तत्तद्देयमिति स्थितिः ।
उपक्रममिमं विद्धि दातॄणां परमं हितम् ॥ १३-२३४-१४ (९०६५०)
पात्रभूतं तु दूरस्थमभिगम्य प्रसाद्य च ।
दाता दानं तथा दद्याद्यथा तुष्येत तेन सः । एष दानविधइः
श्रेष्ठः समाहूय तु मध्यमः ॥ १३-२३४-१५ (९०६५१)
पूर्वं च पात्रतां ज्ञात्वा समाहूय निवेद्य च ।
शौचाचमनसंयुक्तं दातव्यं श्रद्धया प्रिये ॥ १३-२३४-१६ (९०६५२)
याचितॄणां तु परममाभिमुख्यं पुरस्कृतम् ।
संमानपूर्वं सङ्ग्राह्यं दातव्यं देशकालयो ॥ १३-२३४-१७ (९०६५३)
अपात्रेभ्योपि चान्येभ्यो दातव्यं भूतिमिच्छता ॥
पात्राणि सम्परीक्ष्यैव दात्रा वै नाममात्रया। १३-२३४-१८ (९०६५४)
अतिशक्तया परं दानं यथाशक्ति तु मध्यमम् ।
तृतीयं चापरं दानं नानुरूपमिवात्मनः ॥ १३-२३४-१९ (९०६५५)
यथा सम्भाषितं पूर्वं दातव्यं तत्तथैव च ।
पुण्यिक्षेत्रेषु यद्दत्तं पुण्यकालेषु वा यथा । तच्छोभनतरं
विद्धि गौरवाद्देशकालयोः ॥ उमोवाच। १३-२३४-२० (९०६५६)
यश्च पुण्यतमो देशस्तथा कालश्च शंस मे ॥ महेश्वर उवाच।
१३-२३४-२१ (९०६५७)
कुरुक्षेत्रं महानन्यो यश्च देवर्षिसेवितः ।
गिरिर्वरश्च तीर्थानि देशभागेषु पूजितः ।
ग्रहीतुमीप्सितो यत्र तत्र दत्तं महाफमल् ॥ १३-२३४-२२ (९०६५८)
शरद्वसन्तकालश्च पुण्यमासस्तथैव च ।

शुक्लपक्षश्च पक्षाणां पौर्णमासी च पर्वसु ॥ १३-२३४-२३ (९०६५९)
पितृदैवतनक्षत्रनिर्मलो दिवसस्तथा ।
तच्छोभनतरं विद्धि चन्द्रसूर्यग्रहे तथा ॥ १३-२३४-२४ (९०६६०)
प्रतिग्रहीतुर्यः कालो मनसा कीर्तितः शुभे ।
एवमादिष्टकालेषु दत्तं दानं महद्भवेत् ॥ १३-२३४-२५ (९०६६१)
दाता देयं च पात्रं च उपक्रमयुता क्रिया ।
देशकालं तथा तेषां सम्पच्छुद्धिः प्रकीर्तिता ॥ १३-२३४-२६ (९०६६२)
यथैव युगपत्सम्पत्तत्र दानं महद्भवेत् ॥ १३-२३४-२७ (९०६६३)
अत्यल्पमपि यद्दानमेभिः षड्भिर्गुणैर्युतम् ।
भूत्वाऽनन्तं नयेत्स्वर्गं दातारं दोषवर्जितम् ॥ १३-२३४-२८ (९०६६४)
सुमहद्वाऽपि यद्दानं गुणैरेभिर्विनाकृतम् ।
अत्यल्पफलनिर्योगमफलं वा फलोद्धतम् ॥ उमोवाच। १३-२३४-२९ (९०६६५)
एवंगुणयुतं दानं दत्तं च फलतां व्रजेत् ।
तदस्ति चेन्महद्देयं तन्मे शंसितुमर्हसि ॥ महेश्वर उवाच।
१३-२३४-३० (९०६६६)
तदप्यस्ति महाभागे नराणां भावदोषतः ॥ १३-२३४-३१ (९०६६७)
कृत्वा धर्मं तु विधिवत्पश्चात्तापं करोति चेत् ।
श्लाघया वा यदि ब्रूयाद्वृथा संसदि यत्कृतम् ॥ १३-२३४-३२ (९०६६८)
प्रकल्पयेच्च मनसा तत्फलं प्रेत्यभावतः ।
कर्म धर्मकृतं यच्च सततं फलकाङ्क्षया । एतत्कृतं वा
दत्तं वा परत्र विफलं भवेत् ॥ १३-२३४-३३ (९०६६९)
एते दोषा विवर्ज्याश्च दातृभिः पुण्यकाङ्क्षिभिः ।
सनातनमिदं वृत्तं सद्भिराचरितं तथा ॥ १३-२३४-३४ (९०६७०)
अनुग्रहात्परेषां तु गृहस्थानामृणं हि तत् ।
इत्येवं मन आविश्य दातव्यं सततं बुधैः ॥ १३-२३४-३५ (९०६७१)
एवमेव कृतं नित्यं सुकृतं तद्भवेन्महत् ।
सर्वसाधारणं द्रव्यमेवं दत्त्वा महत्फलम् ॥ ॥ १३-२३४-३६ (९०६७२)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
चतुस्त्रिंशदधिकद्विशततमोऽध्यायः ॥ २३४ ॥

---

अनुससनपर्व-अध्यय२३५
॥ श्रीः ॥
१३.२३५. अध्यायः २३५

अथ दानधर्मपर्व ॥ १ ॥

Mahabharata - Anushaasana Parva - Chapter Topics

परमेश्वरेण पार्वतींप्रति अन्नस्वर्णगोभूकन्याविद्यादानानां महिमप्रतिपादनम् ॥ १ ॥

Mahabharata - Anushaasana Parva - Chapter Text

उमोवाच ।
भगवन्कानि देयानि धर्ममुद्दिश्य मानवैः ।
तान्यहं श्रोतुमिच्छामि तन्मे शंसितुमर्हसि ॥ १३-२३५-१ (९०६७३)
महेश्वर उवाच। १३-२३५-२क्ष् (७६४३)
अजस्रं धर्मकार्यं च तथा नैमित्तिकं प्रिये ।
अन्नं प्रतिश्रयो दीपः पानीयं तृणमिन्धनम् ॥ १३-२३५-२ (९०६७४)
स्नेहो गन्धश्च भैषज्यं तिलाश्च लवणं तथा ।
एवमादि तथाऽन्यश्च दानमाजस्रमुच्यते ॥ १३-२३५-३ (९०६७५)
अजस्रदानात्सततमाजस्रमिति निश्चितम् ।
सामान्यं सर्ववर्णानां दानं शृणु समाहिता ॥ १३-२३५-४ (९०६७६)
अन्नं प्राणो मनुष्याणामन्नदः प्राणदो भवेत् ।
तस्माकदन्नं विशेषेण दातुमिच्छति मानवः ॥ १३-२३५-५ (९०६७७)
ब्राह्मणायाभिरूपाय यो दद्यादन्नमीप्सितम् ।
निदधाति निधिं श्रेष्ठं सोऽनन्तं पारलौकिकम् ॥ १३-२३५-६ (९०६७८)
श्रान्तमध्वपरिश्रान्तमतिथिं गृहमागतम् ।
अर्चयीत प्रयत्नेन स हि यज्ञो वरप्रदः ॥ १३-२३५-७ (९०६७९)
कृत्वा तु पातकं कर्म यो दद्यादन्नमर्थिनाम् ।
ब्राह्मणानां विशेषेण सोपहन्ति स्वकं तमः ॥ १३-२३५-८ (९०६८०)
पितरस्तस्य नन्दन्ति सुवृष्ट्या कर्षका इव ।
पुत्रो यस्य तु पौत्रो वा श्रोत्रियं भोजयिष्यति ॥ १३-२३५-९ (९०६८१)
अपि चण्डालशूद्राणामन्नदानं न गर्हते ।
तस्मात्सर्वप्रयत्नेन दद्यादन्नममत्सरः ॥ १३-२३५-१० (९०६८२)
कलत्रं पीडयित्वाऽपि पोषयेदतिथीन्सदा ।
जन्मापि मानुषे लोके तदर्थं हि विधीयते ॥ १३-२३५-११ (९०६८३)
अन्नदानाच्च लोकांस्तान्सम्प्रवक्ष्याम्यनिन्दिते ।
भवनानि प्रकाशन्ते दिवि तेषां महात्मनाम् ॥ १३-२३५-१२ (९०६८४)
अनेकशतभौमानि सान्तर्जलवनानि च ।
वैडूर्यार्चिःप्रकाशपनि हेमरूप्यमयानि च ॥ १३-२३५-१३ (९०६८५)
नानारूपाणि संस्थानां नानारत्नमयानि च ।
चन्द्रमण्डलशुभ्राणि किङ्किणीजालवन्ति च ॥ १३-२३५-१४ (९०६८६)

तरुणादित्यवर्णानि स्थावराणि चराणि च ।
यथेष्टभक्ष्यभोज्यानि शयनासनवन्ति च ॥ १३-२३५-१५ (९०६८७)
सर्वकामफलाश्चात्र वृक्षा भवनसंस्थिताः ।
वाप्यो बह्व्यश्च कूपाश्च दीर्घिकाश्च सहस्रशः ॥ १३-२३५-१६ (९०६८८)
अरुजानि विशोकानि नित्यानि विविधानि च ।
भवनानि विचित्राणि प्राणदानां त्रिविष्टपे ॥ १३-२३५-१७ (९०६८९)
विवस्वतश्च सोमस्य ब्रह्मणश्च प्रजापतेः ।
विशन्ति लोकांस्ते नित्यं जगत्यन्नोदकप्रदाः ॥ १३-२३५-१८ (९०६९०)
तत्र ते सुचिरं कालं विहृत्याप्सरसां गणैः ।
जायन्ते मानुषे लोके सर्वकल्याणसंयुताः ॥ १३-२३५-१९ (९०६९१)
बलसंहननोपेता नीरोगाश्चिरजीविनः ।
कुलीना मतिमन्तश्च भवन्त्यन्नप्रदा नराः ॥ १३-२३५-२० (९०६९२)
तस्मादन्नं विशेषेण दातव्यं भूतिमिच्छता ।
सर्वकालं च सर्वस्य सर्वत्र च सदैव च ॥ १३-२३५-२१ (९०६९३)
सुवर्णदानं परमं स्वर्ग्यं स्वस्त्ययनं महत् ।
तस्मात्ते वर्णयिष्यामि यथावदनुपूर्वशः ॥ १३-२३५-२२ (९०६९४)
अपि पापकृतं क्रूरं दत्तं रुक्मं प्रकाशयेत् ॥ १३-२३५-२३ (९०६९५)
सुवर्णं ये प्रयच्छन्ति श्रोत्रिभेभ्यः सुचेतसः ।
देवतास्ते तर्पयन्ति समस्ता इति वैदिकम् ॥ १३-२३५-२४ (९०६९६)
अग्निर्हि देवताः सर्वाः सुवर्णं चाग्निरुच्यते ।
तस्मात्सुवर्णदानेन तृप्ताः स्युः सर्वदेवताः ॥ १३-२३५-२५ (९०६९७)
अग्न्यभावे तु कुर्वन्ति वह्निस्थानेषु काञ्चनम् ।
तस्मात्सुवर्णदातारः सर्वान्कामानवाप्नुयुः ॥ १३-२३५-२६ (९०६९८)
आदित्यस्य हुताशस्य लोकान्नानाविधाञ्शुभान् ।
काञ्चनं सम्प्रदायाशु प्रविशन्ति न संशयः ॥ १३-२३५-२७ (९०६९९)
अलङ्कारं कृतं चापि केवलान्प्रविशिष्यते ।
सौवर्णैर्ब्राह्मणं काले तैरलङ्कृत्य भोजयेत् ॥ १३-२३५-२८ (९०७००)
य एतत्परमं दानं दत्त्वा सौवर्णमद्भुतम् ।
द्युतिं मेधां वपुः कीर्तिं पुनर्जाते लबेद्ध्रुवम् ॥ १३-२३५-२९ (९०७०१)
तस्मात्स्वशक्त्या दातव्यं काञ्चनं भुवि मानवैः ।
न ह्येतस्मात्परं लोकेष्वन्यत्पापात्प्रमुच्यते ॥ १३-२३५-३० (९०७०२)
अत ऊर्ध्वं प्रवक्ष्यामि गवां दानमनिन्दिते ।
नहि गोभ्यः परं दानं विद्यते जगति प्रिये ॥ १३-२३५-३१ (९०७०३)
लोकान्सिसृक्षुणा पूर्वं गावः सृष्टाः स्वयंभुवा ।
वृत्त्यर्थं सर्वभूतानां तस्मात्ता मातरः स्मृताः ॥ १३-२३५-३२ (९०७०४)
लोकज्येष्ठा लोकवृत्त्या प्रवृत्ता

मय्यायत्ताः सोमनिष्यन्दभूताः ।
सौम्याः पुण्याः प्राणदाः कामदाश्च
तस्मात्पूज्याः पुण्यकामैर्मनुष्यैः ॥ १३-२३५-३३ (९०७०५)
धेनुं दत्त्वा निभृतां सुशीलां
कल्याणवत्सां च पयस्विनीं च ।
यावन्ति रोमाणि भवन्ति तस्या-
स्तावत्समाः स्वर्गफलानि भुङ्क्ते ॥ १३-२३५-३४ (९०७०६)
प्रयच्छते यः कपिलां सचेलां
सकांस्यदोहां कनकाग्र्यशृङ्गीम् ।
पुत्रांश्च पौत्रांश्च कुलं च सर्व-
मासप्तमं तारयते परत्र च ॥ १३-२३५-३५ (९०७०७)
अन्तर्जाताः क्रीतका द्यूतलब्धाः ।
प्राणक्रीताः सोदकाश्चौजसा वा ।
कृच्छ्रोत्सृष्टाः पोषणार्थागताश्च
द्वारैरेतैस्ताः प्रलब्धाः प्रदद्यात् ॥ १३-२३५-३६ (९०७०८)
कृसाय बहुपुत्राय श्रोत्रियायाहिताग्नये ।
प्रदाय नीरुजां धेनुं लोकान्प्राप्नोत्यनुत्तमान् ॥ १३-२३५-३७ (९०७०९)
नृशंसस्य कृतघ्नस्य लुब्धस्यानृतवादिनः ।
हव्यकव्यव्यपेतस्य न दद्याद्गाः कथञ्चन ॥ १३-२३५-३८ (९०७१०)
समानवत्सां यो दद्याद्धेनुं विप्रे पयस्विनीम् ।
सुवृत्तां वस्त्रसंछन्नां सोमलोके महीयते ॥ १३-२३५-३९ (९०७११)
समानवत्सां यो दद्यात्कृष्णां धेनुं पयस्विनीम् ।
सुवृत्तां वस्त्रसंछन्नां लोकान्प्राप्नोत्यपांपतेः ॥ १३-२३५-४० (९०७१२)
हिरण्यवर्णां पिङ्गाक्षीं सवत्सां कांस्यदोहनाम् ।
प्रदाय वस्त्रसम्पन्नां यान्ति कौकबेरसद्मनः ॥ १३-२३५-४१ (९०७१३)
वायुरेणुसवर्णां च सवत्सां कांस्यदोहनाम् ।
प्रदाय वस्त्रसम्पन्नां वायुलोके महीयते ॥ १३-२३५-४२ (९०७१४)
समानवत्सां यो धेनुं दत्त्वा गौरीं पयस्विनीम् ।
सुवृत्तां वस्त्रसंछन्नामग्निलोके महीयते ॥ १३-२३५-४३ (९०७१५)
युवानं बलिनं श्यामं शतेन सह यूथपम् ।
गवेन्द्रं ब्राह्मणेन्द्राय भूरिशृङ्गमलंकृतम् ॥ १३-२३५-४४ (९०७१६)
ऋषभं ये प्रयच्छन्ति श्रोत्रियाणां महात्मनाम् ।
ऐश्वर्यमभिजायन्ते जायमानाः पुनःपुनः ॥ १३-२३५-४५ (९०७१७)
गवां मूत्रपुरीषाणि नोद्विजेन कदाचन ।
न चासां मांसमश्नीयाद्गोषु भक्तः सदा भवेत् ॥ १३-२३५-४६ (९०७१८)
ग्रासमुष्टिं परगवे दद्यात्संवत्सरं शुचि ।

अकृत्वा स्वयमाहारं व्रतं तत्सार्वकामिकम् ॥१३-२३५-४७ (१०७१९)
गवामुभयतः काले नित्यं स्वस्त्ययनं वदेत् ।
न चासां चिन्तयेत्पापमिति धर्मविदो विदुः ॥१३-२३५-४८ (१०७२०)
गावः पवित्रं परमं गोषु लोकाः प्रतिष्ठिताः ।
कथञ्चिन्नावमन्तव्या गावो लोकस्य मातरः ॥१३-२३५-४९ (१०७२१)
तस्मादेव गवां दानं विशिष्टमिति कथ्यते ।
गोषु पूजा च भक्तिश्च नरस्यायुष्यतां वहेत् ॥१३-२३५-५० (१०७२२)
अतःपरं प्रवक्ष्यामि भूमिदानं महाफलम् ।
भूमिदानसमं दानं लोके नास्तीति निश्चयः ॥१३-२३५-५१ (१०७२३)
गृहयुक्क्षेत्रयुग्वाऽपि भूमिभागः प्रदीयते ।
सुखभोगं निराक्रोशं वास्तुपूर्वं प्रकल्प्य च ॥१३-२३५-५२ (१०७२४)
ग्रहीतारमलङ्कृत्य वस्त्रपुष्पानुलोपनैः ।
सभृत्यं सपरीवारं भोजयित्वा यथेष्टतः ।
यो दद्याद्दक्षिणां काले त्रिरद्भिर्गृह्यतामिति ॥ १३-२३५-५३ (१०७२५)
एवं भूम्यां प्रदत्तायां श्रद्धया वीतमत्सरैः ।
यावत्तिष्ठति सा भूमिस्तावद्दत्तफलं विदुः ॥१३-२३५-५४ (१०७२६)
भूमिदः स्वर्गमारुह्य रमते शाश्वतीः समाः ।
अचला ह्यक्षया भूमिः सर्वकामान्दुधुक्षति ॥१३-२३५-५५ (१०७२७)
यत्किञ्चित्कुरुते पापं पुरुषो वृत्तिकर्शितः ।
अपि गोकर्णमात्रेण भूमिदानन मुच्यते ॥१३-२३५-५६ (१०७२८)
सुवर्णं रजतं वस्त्रं मणिमुक्तावसूनि च ।
सर्वमेतन्महाभागे भूमिदाने प्रतिष्ठितम् ॥१३-२३५-५७ (१०७२९)
भर्तुर्निः श्रेयसे युक्तास्त्यक्तात्मानो रणे हताः ।
ब्रह्मलोकाय संसिद्धा नातिक्रामन्ति भूमिदम् ॥१३-२३५-५८ (१०७३०)
हलकृष्टां महीं दद्यात्सर्वबीजफलान्विताम् ।
सुकूपशरणां वाऽपि सा भवेत्सर्वकामदा ॥१३-२३५-५९ (१०७३१)
निष्पन्नसस्यां पृथिवीं यो ददाति द्विजन्मनाम् ।
विमुक्तः कलुषैः सर्वैः शकलोकं स गच्छति ॥१३-२३५-६० (१०७३२)
यथा जनित्री क्षीरेणि स्वपुत्रमभिवर्धयेत् ।
एवं सर्वफलैर्भूमिर्दातारमभिवर्धयेत् ॥१३-२३५-६१ (१०७३३)
ब्राह्मणं वृत्तसम्पन्नमाहिताग्निं शुचिव्रतम् ।
ग्राहयित्वा निजां भूमिं न यान्ति यमसादनम् ॥१३-२३५-६२ (१०७३४)
यथा चन्द्रमसो वृद्धिरहन्यहनि दृश्यते ।
तथा भूमेः कृतं दानं सस्येसस्ये विवर्धते ॥१३-२३५-६३ (१०७३५)
यथा बीजानि रोहन्ति प्रकीर्णानि महीतले ।
तथा कामाः प्ररोहन्ति भूमिदानगुणार्जिताः ॥१३-२३५-६४ (१०७३६)

पितरः पितृलोकस्था देवताश्च दिवि स्थिताः ।
सन्तर्पयन्ति भोगैस्तं यो ददाति वसुन्धराम् ॥ १३-२३५-६५ (१०७३७)
दीर्घायुष्यं वराङ्गत्वं स्फीतां च श्रियमुत्तमाम् ।
परत्र लभते मर्त्यः सम्प्रदाय वसुन्धराम् ॥ १३-२३५-६६ (१०७३८)
एतत्सर्वं मयोद्दिष्टं भूमिदानस्य यत्फलम् ।
श्रद्दधानैर्नरैर्नित्यं श्राव्यमेतत्सनातनम् ॥ १३-२३५-६७ (१०७३९)
अतः परं प्रवक्ष्यामि कन्यादानं यथाविधि ।
कन्या देया महादेवि परेषामात्मनोपि वा ॥ १३-२३५-६८ (१०७४०)
कन्यां शुद्धव्रताचारां कुलरूपसमन्विताम् ।
यस्मै दित्सति पात्राय तेनापि भृशकामिताम् ॥ १३-२३५-६९ (१०७४१)
प्रथमं तत्समाकल्प्य बन्धुभिः कृतनिश्चयः ।
कारयित्वा गृहं पूर्वं दासीदासपरिच्छदैः ॥ १३-२३५-७० (१०७४२)
गृहोपकरणैश्चैव पशुधान्येन संयुताम् ।
तदर्थिने तदर्हाय कन्यां तां समलङ्कृताम् ॥ १३-२३५-७१ (१०७४३)
सविवाहं यथान्यायं प्रचच्छेदग्निसाक्षिकम् ।
वृत्त्यार्तीं यथा कृत्वा सद्गृहे तौ निवेशयेत् ॥ १३-२३५-७२ (१०७४४)
एवं कृत्वा वधूदानं तस्य दानस्य गौरवात् ।
प्रेत्यभावे महीयेत स्वर्गलोके यथासुखम् ॥ १३-२३५-७३ (१०७४५)
पुनर्जातस्य सौभाग्यं कुलवृद्धिं तथाऽऽप्नुयात् ॥ १३-२३५-७४ (१०७४६)
विद्यादानं तथा देवि पात्रभूताय वै ददत् ।
प्रेत्यभावे लभेन्मर्त्यो मेधां वृद्धिं धृतिं स्मृतिम् ॥ १३-२३५-७५
(१०७४७)
अनुरूपाय शिष्याय यश्च विद्यां प्रयच्छति ।
यथोक्तस्य प्रदानस्य फलमानन्त्यमश्नुते ॥ १३-२३५-७६ (१०७४८)
दापनं त्वथ विद्यानां दरिद्रेभ्योऽर्थवेदनैः ।
स्वयं दत्तेन तुल्यं स्यादिति विद्धि शुभानने ॥ १३-२३५-७७ (१०७४९)
एवं ते कथितान्येव महादानानि मानिनि ।
त्वत्प्रियार्थं मया देवि भूयः श्रोतुं किमिच्छसि ॥ ॥ १३-२३५-७८ (१०७५०)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
पञ्चत्रिंशदधिकद्विशततमोऽध्यायः ॥ २३५ ॥

---

अनुससनपर्व-अध्यय२३६
॥ श्रीः ॥
१३.२३६. अध्यायः २३६

अथ दानधर्मपर्व ॥ १ ॥

Mahabharata - Anushaasana Parva - Chapter Topics

महेश्वरेणोमांप्रति तिलदानप्रकारतत्फलयोः कथनम् ॥ १ ॥
तथा जलान्नादिनानादानफलकथनम् ॥ २ ॥
तथा सेतुकूपतटाकनिर्मापणादिधर्मफलकथनम् ॥ ३ ॥

Mahabharata - Anushaasana Parva - Chapter Text

उमोवाच ।
भगवन्देवदेवेश कथं देयं तिलान्वितम् ।
तस्य तस्य फलं ब्रूहि दत्तस्य च कृतस्य च ॥ १३-२३६-१ (९०७५१)
महेश्वर उवाच। १३-२३६-२क्ष् (७६४४)
तिलकल्पविधिं देवि तन्मे शृणु समाहिता ॥ १३-२३६-२ (९०७५२)
समृद्धैरसमृद्धैर्वा तिला देया विशेषतः ।
तिलाः पवित्राः पापघ्नाः सुपुण्या इति संस्मृताः ॥ १३-२३६-३ (९०७५३)
न्यायतस्तु तिलाञ्शुद्धान्संहृत्याथ स्वशक्तितः ।
तिलराशिं पुनः कुर्यात्पर्वाताभं सुरस्नकम् ।
महान्तं यदि वा स्तोकं नानाद्रव्यसमन्वितम् ॥ १३-२३६-४ (९०७५४)
सुवर्णरजताभ्यां च मणिमुक्ताप्रवालकैः ।
अलङ्कृत्य यथायोगं सपताकं सवेदिकम् ।
सभूषणं सवस्त्रं च शयनासनसंमितम् ॥ १३-२३६-५ (९०७५५)
प्रायशः कौमुदीमासे पौर्णमास्यां विशेषतः ।
भोजयित्वा च विधिवद्ब्राह्मणानर्हतो बहून् ॥ १३-२३६-६ (९०७५६)
स्वयं कृतोपवासश्च वृत्तशौचसमन्वितः ।
दद्यात्प्रदक्षिणीकृत्य तिलराशिं सदक्षिणम् ॥ १३-२३६-७ (९०७५७)
एकस्यापि बहूनां वा दातव्यं भूतिमिच्छता ।
तस्य दानफलं देवि अग्निष्टोमेन संयुतम् ॥ १३-२३६-८ (९०७५८)
केवलं वा तिलैरेव भूमौ कृत्वा गवाकृतिम् ।
सवस्त्रकं सरत्नं च पुंसा गोदानकाङ्क्षिणा ।
तदर्हाय प्रदातव्यं तस्य गोदानतः फलम् ॥ १३-२३६-९ (९०७५९)
शरावांस्तिलसम्पूर्णान्सहिरण्यान्सचम्पकान् ।
नृपोऽददद्ब्राह्मणाय सु पुण्यफलभाग्भवेत् ॥ १३-२३६-१० (९०७६०)
एवं तिलमयं देयं नरेण हितमिच्छता ।
नानादानफलं भूयः शृणु देवि समाहिता ॥ १३-२३६-११ (९०७६१)
बलमायुष्यमारोग्यमन्नदानाल्लभेन्नरः ।
पानीयदस्तु सौभाग्यं रसज्ञानं लभेन्नरः ॥ १३-२३६-१२ (९०७६२)

वस्त्रदानाद्वपुःशोभामलङ्कारं लभेन्नरः ।
दीपदो बुद्धिवैशद्यं द्युतिशोभां लभेन्नरः ॥१३-२३६-१३ (९०७६३)
राजपीडाविमोक्षं तु छत्रदो लभते फलम् ।
दासीदासप्रदानात्तु भवेत्कर्मान्तभाङ्नरः ।
दासीदासं च विविधं लभेत्प्रेत्य गुणान्वितम् ॥ १३-२३६-१४ (९०७६४)
यानानि वाहनं चैव तदर्हाय ददन्नरः ।
पादरोगपरिक्लेशान्मुक्तः श्वसनवाहवान् ।
विचित्र रमणीयं च लभते यानवाहनम् ॥ १३-२३६-१५ (९०७६५)
प्रतिश्रयप्रदानं च तदर्हाय तदिच्छते ।
वर्षाकाले तु रात्रौ वा लभेत्पक्षबलं शुभम् ॥१३-२३६-१६ (९०७६६)
सेतुकूपतटाकानां कर्ता तु लभते नरः ।
दीर्घायुष्यं च सौभाग्यं तता प्रेत्य गतिं शुभां ॥१३-२३६-१७ (९०७६७)
वृक्षसंरोपको यस्तु छायापुष्पफलप्रदः ।
प्रेत्यभावे लभेत्पुण्यमभिगम्यो भवेन्नरः ॥१३-२३६-१८ (९०७६८)
यस्तु सङ्क्रमकृल्लोके नदीषु जलहारिणाम् ।
लभेत्पुण्यफलं प्रेत्य व्यसनेभ्यो विमोक्षणम् ॥१३-२३६-१९ (९०७६९)
मार्गकृत्सततं मर्त्यो भवेत्सन्तानवान्नरः ।
कायदोषविमुक्तस्तु तीर्थकृत्सततं भवेत् ॥१३-२३६-२० (९०७७०)
औषधानां प्रदानात्तु सततं कृपयाऽन्वितः ।
भवेद्व्याधिविहीनश्च दीर्घायुश्च विशेषतः ॥१३-२३६-२१ (९०७७१)
अनाथान्पोषयेद्यस्तु कृपणान्धकपङ्गुकान् ।
स च पुण्यफलं प्रेत्य लभते कृच्छ्रमोक्षणम् ॥१३-२३६-२२ (९०७७२)
वेदगोष्ठाः शुभाः शाला भिक्षूणां च प्रतिश्रयम् ।
यः कुर्याल्लभते नित्यं नरः प्रेत्य फलं शुभम् ॥१३-२३६-२३ (९०७७३)
प्रासादवासं विविधं यक्षशोभां लभेत्पुनः ।
विविधं विविधाकारं भक्ष्यभोज्यगुणान्वितम् ॥१३-२३६-२४ (९०७७४)
रम्यं तं दैवगोवाटं यः कुर्याल्लभते नरः ।
प्रेत्य भावे शुभां जातिं व्याधिमोक्षं तथैव च ॥१३-२३६-२५ (९०७७५)
एवं नानाविधं द्रव्यं दानकर्ता लभेत्फलम् ॥ १३-२३६-२६ (९०७७६)
उमोवाच।१३-२३६-२७क्ष् (७६४५)
कृतं दत्तं यथा यावत्तस्य तल्लभते फलम् ।
एतन्मे देवदेवेश तत्र कौतूहलं महत् ॥१३-२३६-२७ (९०७७७)
महेश्वर उवाच।१३-२३६-२८क्ष् (७६४६)
प्रेत्यिभावे शृणु फलं दत्तस्य च कृतस्य च ।
दानं षड्गुणयुक्तं तु तदर्हाय यथाविधिः ।
यथाविभवतो दानं दातव्यमिति मानवैः ॥ १३-२३६-२८ (९०७७८)

बुद्धिमायुष्यमारोग्यं बलं भाग्यं तथाऽऽगमम् ।
रूपेण सप्तधा भूत्वा मानुष्यं फलति ध्रुवम् ॥१३-२३६-२९ (९०७७९)
इदं दत्तमिदं देयमित्येवं फलकाङ्क्षया ।
यद्दत्तं तत्तदेव स्यान्न तु किञ्चन लभ्यते ॥१३-२३६-३० (९०७८०)
ध्रुवं देव्यत्तमे दानं मध्यमे त्वधमं फलम् ॥ ॥ १३-२३६-३१ (९०७८१)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
षट्त्रिंशदधिकद्विशततमोऽध्यायः ॥ २३६ ॥
Mahabharata - Anushaasana Parva - Chapter Footnotes

७-२३६-१० सहिरण्यान्सवस्त्रकानिति थ पाठः ॥

---

अनुससनपर्व-अध्यय२३७
॥ श्रीः ॥
१३.२३७. अध्यायः २३७

अथ दानधर्मपर्व ॥ १ ॥
Mahabharata - Anushaasana Parva - Chapter Topics
महेश्वरेण पार्वतींप्रति यज्ञप्रशंसनम् ॥ १ ॥
तथा देवानां पूजादिफलकथनम् ॥ २ ॥
तथा देवानां मनुष्यचिन्तितविज्ञानसामर्थ्यकथनम् ॥ ३ ॥

Mahabharata - Anushaasana Parva - Chapter Text

उमोवाच ।
भगवन्देवदेवेश विशिष्टं यज्ञमुच्यते ।
लौकिकं वैदिकं चैव तन्मे शंसितुमर्हसि ॥१३-२३७-१ (९०७८२)
महेश्वर उवाच।१३-२३७-२क्ष् (७६४७)
देवतानां तु पूजा या यज्ञेष्वेव समाहिता ।
यज्ञा वेदेष्वधीताश्च वेदा ब्राह्मणसंयुताः ॥१३-२३७-२ (९०७८३)
इदं तु सकलं दिव्यं दिवि वा भुवि वा प्रिये ।
यज्ञार्थं विद्धि तत्सृष्टं लोकानां हितकाम्यया ॥१३-२३७-३ (९०७८४)
एवं विज्ञाय तत्कर्ता सदारः सततं द्विजः ।
प्रेत्यभावे लभेल्लोकान्ब्रह्मकर्मसमाधिना ॥१३-२३७-४ (९०७८५)
ब्राह्मणेष्वेव तद्ब्रह्म नित्यं देवि समाहितम् ।
तस्माद्विप्रैर्यथाशास्त्रं विधिदृष्टेन कर्मणा ॥१३-२३७-५ (९०७८६)

यज्ञकर्मि कृतं सर्वं देवता अभितर्पयेत् ।
ब्राह्मणाः क्षत्रियाश्चैव यज्ञार्थं प्रायशः स्मृताः ॥१३-२३७-६ (९०७८७)
अग्निष्टोमादिभिर्यज्ञैर्वेदेषु परिकल्पितैः ।
सुशुद्धैर्यजमानैस्च ऋत्विग्भिश्च यथाविधिः ।
शुद्धैर्द्रव्योपकरणैर्यष्टव्यमिति निश्चयः ॥ १३-२३७-७ (९०७८८)
तथा कृतेषु यज्ञेषु देवानां तोषणं भवेत् ।
तुष्टेषु सर्वदेवेषु यज्वा यज्ञफलं लभेत् ॥१३-२३७-८ (९०७८९)
देवाः सन्तोषिता यज्ञैर्लोकान्संवर्धयन्त्युत ।
उभयोर्लोकयोर्भूतिर्देवि यज्ञे प्रदृश्यते ॥१३-२३७-९ (९०७९०)
तस्माद्यज्वा दिवं गत्वा अमरैः सह मोदते ।
नास्ति यज्ञसमं दानं नास्ति यज्ञसमो निधिः ॥१३-२३७-१० (९०७९१)
सर्वधर्मसमुद्देशो देवि यज्ञे समाहितः ।
एषा यज्ञकृता पूजा लौकिकीमपरां शृणु ॥१३-२३७-११ (९०७९२)
देवसत्कारमुद्दिश्य क्रियते लौकिकोत्सवः ॥ १३-२३७-१२ (९०७९३)
देवगोष्ठेऽधिसंस्कृत्य चोत्सवं यः करोति वै ।
यागान्देवोपहारांश्च शुचिर्भूत्वा यथाविधि ।
देवान्सन्तोषयित्वा स देवि धर्ममवाप्नुयात् ॥ १३-२३७-१३ (९०७९४)
गन्धमाल्यैश्च विविधैः परमान्नेन धूपनैः ।
बह्वीभिः स्तुतिभिश्चैव स्तुवद्भिः प्रयतैर्नरैः ॥१३-२३७-१४ (९०७९५)
नृत्तैर्वाद्यैश्च गान्धर्वैरन्यैर्दृष्टिविलोभनैः ।
देवसत्कारमुद्दिश्य कुर्वते ये नरा भुवि ॥१३-२३७-१५ (९०७९६)
तेषां भक्तिकृतेनैव सत्कारेणैव पूजिताः ।
तेनैव तोषं संयान्ति देवि देवास्त्रिविष्टपे ॥१३-२३७-१६ (९०७९७)
मानुषैश्चोपकारैर्वा शुचिभिः सत्परायणैः ।
ब्रह्मचर्यपरैरेतत्कृतं धर्मफलं लभेत् ॥१३-२३७-१७ (९०७९८)
केवलैः स्तुतिभिर्देवि गन्धमाल्यसमाहितैः ।
प्रयतैः शुद्धगात्रैस्तु शुद्धदेशे सुपूजिताः ।
सन्तोषं यान्ति ते देवा भक्तैः सम्पूजितास्तथा ॥ १३-२३७-१८ (९०७९९)
देवान्सन्तोषयित्वैव देवि धर्ममवाप्नुयात् ॥ १३-२३७-१९ (९०८००)
उमोवाच। १३-२३७-२०क्ष् (७६४८)
त्रिविष्टपस्था वै भूमौ देवा मानुषचेष्टितम् ।
कथं ज्ञास्यन्ति विधिवत्तन्मे शंसितुमर्हसि ॥१३-२३७-२० (९०८०१)
महेश्वर उवाच। १३-२३७-२१क्ष् (७६४९)
तदहं तेप्रवक्ष्यामि यथा तैर्विद्यते प्रिये ।
प्राणिनां तु शरीरेषु अन्तरात्मा व्यवस्थितः ॥१३-२३७-२१ (९०८०२)
आत्मानं परमं देवमिति विद्धि शुभेक्षणे ।

आत्मा मनोव्यवस्थानात्सर्वं वेत्ति शुभाशुभम् ॥ १३-२३७-२२ (९०८०३)
आत्मैव देवास्तद्विद्युरव्यग्रमनसा कृतम् ।
सतां मनोव्यवस्थानाच्छुभं भवति वै नृणाम् ॥ १३-२३७-२३ (९०८०४)
तस्माद्देवाऽभिसम्पूज्या ब्राह्मणानां तथैव च ।
यज्ञाश्च धर्मकार्याणि गुरुपूजा च शोभने ॥ १३-२३७-२४ (९०८०५)
शुद्धगात्रैर्व्रतयुतैस्तन्मयैस्तत्परायणैः ।
एवं व्यवस्थितैर्नित्यं कर्तव्यमिति निश्चयः ॥ १३-२३७-२५ (९०८०६)
एवं कृत्वा शुभाकाङ्क्षी परत्रेह च मोदते ।
अन्यथा मन आविश्य कृतं न फलति प्रिये ।
ऋतेऽपि तु मनो देवि अशुभं फलति ध्रुवम् ॥ ॥ १३-२३७-२६ (९०८०७)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
सप्तत्रिंशदधिकद्विशततमोऽध्यायः ॥ २३७ ॥

---

अनुससनपर्व-अध्यय२३८
॥ श्रीः ॥
१३.२३८. अध्यायः २३८

अथ दानधर्मपर्व ॥ १ ॥
Mahabharata - Anushaasana Parva - Chapter Topics
महेश्वरेण पार्वतींप्रति श्राद्धविधानादिकथनम् ॥ १ ॥

Mahabharata - Anushaasana Parva - Chapter Text

उमोवाच ।
पितृमेधः कथं देव तन्मे शंसितुमर्हसि ।
सर्वेषां पितरः पूज्याः सर्वसम्पत्प्रदायिनः ॥ १३-२३८-१ (९०८०८)
महेश्व उवाच। १३-२३८-२क्ष् (७६५०)
पितृमेधं प्रवक्ष्यामि यथावत्तन्मना शृणु ।
देशकालौ विधानं च तत्क्रियायाः शुभाशुभम् ॥ १३-२३८-२ (९०८०९)
लोकेषु पितरः पूज्या देवतानां च देवताः ।
शुचयो निर्मलाः पुण्या दक्षिणां दिशमाश्रिताः ॥ १३-२३८-३ (९०८१०)
यथा वृष्टिं प्रतीक्षन्ते भूमिष्ठाः सर्वजन्तवः ।
पितरश्च तथा लोके पितृमेधं शुभेक्षणे ॥ १३-२३८-४ (९०८११)
तस्य देशाः कुरुक्षेत्रं गया गङ्गा सरस्वती ।
प्रभासं पुष्करं चेति तेषु दत्तं महाफलम् ॥ १३-२३८-५ (९०८१२)

तीर्थानि सरितः पुण्या विविक्तानि वनानि च ।
नदीनां पुलिनानीति देशाः श्राद्धस्य पूजिताः ॥ १३-२३८-६ (९०८१३)
माघप्रोष्ठपदौ मासौ श्राद्धकर्मणि पूजितौ ।
पक्षयोः कृष्णपक्षश्च पूर्वपक्षात्प्रशस्यते ॥ १३-२३८-७ (९०८१४)
अमावास्यां त्रयोदश्यां नवम्यां प्रतिपत्सु च ।
तिथिष्वेतासु तुष्यन्ति दत्तेनेह पितामहाः ॥ १३-२३८-८ (९०८१५)
पूर्वाह्णे शुक्लपक्षे च रात्रौ जन्मदिनेषु वा ।
युग्मेष्वहस्सु च श्राद्धं न च कुर्वीत पण्डितः ॥ १३-२३८-९ (९०८१६)
एष कालो मया प्रोक्तः पितृमेधस्य पूजितः ।
यस्मिंश्च ब्राह्मणं पात्रं पश्येत्कालः स च स्मृतः ॥ १३-२३८-१० (९०८१७)
अपाङ्क्तेया द्विजा वर्ज्या ग्राह्यास्ते पङ्क्तिपावनाः ।
भोजयेद्यदि पापिष्ठाञ्श्राद्धेषु नरकं व्रजेत् ॥ १३-२३८-११ (९०८१८)
वृत्तश्रुतकुलोपेतान्सकलत्रान्गुणान्वितान् ।
तदर्हाञ्श्रोत्रियान्विद्धि ब्राह्मणानयुजः शुभे ॥ १३-२३८-१२ (९०८१९)
एतान्निमन्त्रयोद्विद्वान्पूर्वेद्युः प्रातरेव वा ।
तत्र श्राद्धक्रियां पश्चादारभेत यथाविधि ॥ १३-२३८-१३ (९०८२०)
त्रीणि श्राद्धे पवित्राणि दौहित्रः कुतपस्तिलाः ।
त्रीणि चात्र प्रशंसन्ति शौचमक्रोधमत्वरा ॥ १३-२३८-१४ (९०८२१)
कुतपः खड्गपात्रं च कुशा दर्भास्तिला मधु ।
कालशाकं गजच्छाया पवित्रं श्राद्धकर्मसु ॥ १३-२३८-१५ (९०८२२)
तिलानवकिरेत्तत्र नानावर्णान्समन्ततः ।
अशुद्धं पितृयज्ञश्च तिलैः शुध्यति शोभने ॥ १३-२३८-१६ (९०८२३)
नीलकाषायवस्त्रं च भिन्नवर्णं नवव्रणम् ।
हीनाङ्गमशुचिं वाऽपि वर्जयेत्तत्र दूरतः ॥ १३-२३८-१७ (९०८२४)
कुक्कुटांश्च वराहांश्च नग्नं क्लीबं रजस्वलाम् ।
आयसं त्रपुसीसं च श्राद्धकर्मणि वर्जयेत् ॥ १३-२३८-१८ (९०८२५)
मांसैः प्रीणन्ति पितरो मुद्गमाषयवैरिह ।
शशरौरवमांसेन षण्मासं तृप्तिरिष्यते ॥ १३-२३८-१९ (९०८२६)
संवत्सरं च गव्येन हविषा पायसेन च ।
वार्ध्रीणसस्य मांसेन तृप्तिर्द्वादशवार्षिकी ॥ १३-२३८-२० (९०८२७)
आनन्त्याय भवेद्दत्तं खड्गमांसं पितृक्षये ।
पायसं सतिलं क्षौद्रं खड्गमांसेन सम्मितम् ॥ १३-२३८-२१ (९०८२८)
महाशकलिनो मस्याश्छागो वा सर्वलोहितः ।
कालशाकमितीत्येव तदानन्त्याय कल्पितम् ॥ १३-२३८-२२ (९०८२९)
सापूपं सामिषं स्निग्धमाहारमुपकल्पयेत् ।
उपकल्प्य तदाहारं ब्राह्मणानर्चयेत्ततः ॥ १३-२३८-२३ (९०८३०)

श्मश्रुकर्मशिरः स्नातान्समारोप्यासनं क्रमात् ।
सुगन्धमाल्याभरणैः स्नग्भिरेतान्विभूषयेत् ॥ १३-२३८-२४ (९०८३१)
अलङ्कृत्योपविष्टांस्तान्पिण्डावापं निवेदयेत् ॥ १३-२३८-२५ (९०८३२)
ततः प्रस्तीर्य दर्भाणां प्रस्तरं दक्षिणामुखम् ।
तत्समीपेऽग्निमिद्ध्वा च स्वधां च जुहुयात्ततः ।
समीपे त्वग्नीषोमाभ्यां पितृभ्यो जुहुयात्तदा ॥ १३-२३८-२६ (९०८३३)
तथा दर्भेषु पिण्डांस्त्रीन्निर्वपेद्दक्षिणामुखः ।
अपसव्यमपाङ्गुष्ठं नामधेयपुरस्कृतम् ॥ १३-२३८-२७ (९०८३४)
एतेन विधिना दत्तं पितॄणामक्षयं भवेत् ।
ततो विप्रान्यथाशक्ति पूजयेन्नियतः शुचिः ।
सदक्षिणं ससम्भारं यथा तुष्यन्ति ते द्विजाः ॥ १३-२३८-२८ (९०८३५)
यत्र तत्क्रियते तत्र न जल्पन्न जपेन्मिथः ।
नियम्य वाच्यं देहं च श्राद्धकर्म समारभेत् ॥ १३-२३८-२९ (९०८३६)
ततो निर्वपने वृत्ते तान्पिण्डांस्तदनन्तरम् ।
ब्राह्मणोऽग्निरजो गौर्वा भक्षयेदप्सु वा क्षिपेत् ॥ १३-२३८-३० (९०८३७)
पत्नीं वा मध्यमं पिण्डं पुत्रकामो हि प्राशयेत् ।
आधत्त पितरो गर्भं कुमारं पुष्करस्रजम् ॥ १३-२३८-३१ (९०८३८)
तृप्तानुत्थाप्य तान्विप्रानन्नशेषं निवेदयेत् ।
तच्छेषं बहुभिः पश्चात्सभृत्यो भक्षयेन्नरः ॥ १३-२३८-३२ (९०८३९)
एष प्रोक्तः समासेन पितृयज्ञः सनातनः ।
पितरस्तेन तुष्यन्ति कर्ता च फलमाप्नुयात् ॥ १३-२३८-३३ (९०८४०)
अहन्यहनि वा कुर्यान्मासेमासेऽथवा पुनः ।
संवत्सरं द्विः कुर्याच्च चतुर्वाऽपि स्वशक्तितः ॥ १३-२३८-३४ (९०८४१)
दीर्घायुश्च भवेत्स्वस्थः पितृमेधेन वा पुनः ।
सपुत्रो बहुभृत्यश्च प्रभूतधनधान्यवान् ॥ १३-२३८-३५ (९०८४२)
श्राद्धदः स्वर्गमाप्नोति निर्मलं विविधात्मकम् ।
अप्सरोगणसंघुष्टं विरजस्कमनन्तरम् ॥ १३-२३८-३६ (९०८४३)
श्राद्धानि पुष्टिकामा वै ये प्रकुर्वन्ति पण्डिताः ।
तेषां पुष्टिं प्रजां चैव दास्यन्ति पितरः सदा ॥ १३-२३८-३७ (९०८४४)
धन्यं यशस्यमायुष्यं स्वर्ग्यं शत्रुविनाशनम् ।
कुलसन्धारकं चेति श्राद्धमाहुर्मनीषिणः ॥ १३-२३८-३८ (९०८४५)
उमोवाच। १३-२३८-३९क्ष् (७६५१)
भगवन्देवदेवेश मृतास्ते भुवि जन्तवः ।
नानाजातिषु जायन्ते शीघ्रं कर्मवशात्पुनः ॥ १३-२३८-३९ (९०८४६)
पितरः स्वस्ति ते तत्र कथं तिष्ठन्ति देववत् ।
पितॄणां कतमो देशः पिण्डानश्नन्ति वै कथम् ॥ १३-२३८-४० (९०८४७)

अन्ने दत्ते मृतानां तु कथमाप्यायनं भवेत् ।
एवं मया संशयितं भगवन्वक्तुमर्हसि ॥ १३-२३८-४१ (९०८४८)
नारद उवाच। १३-२३८-४२क्ष् (७६५२)
एतद्विरुद्धं पृच्छन्त्यां रुद्राण्यां परिषद्गृशम् ।
बभूव सर्वा मुदिता श्रोतुं हि परमं हितम् ॥ १३-२३८-४२ (९०८४९)
महेश्वर उवाच। १३-२३८-४३क्ष् (७६५३)
स्थाने संशयितं देवि शृणु कल्याणि तत्वतः ।
गुह्यानां परमं गुह्यं हितानां परमं हितम् ॥ १३-२३८-४३ (९०८५०)
यथा देवगणा देवि तथा पितृगणाः प्रिये ।
दक्षिणस्यां दिशि शुभे सर्वे पितृगणाः स्थिताः ॥ १३-२३८-४४ (९०८५१)
प्रेतानुद्दिश्य या पूजा क्रियते मानुषैरिह ।
तेन तुष्यन्ति पितरो न प्रेताः पितरः स्मृताः ॥ १३-२३८-४५ (९०८५२)
उत्तरस्यां यथा देवा रमन्ते यज्ञकर्मभिः ।
दक्षिणस्यां तथा देवि तुष्यन्ति विविधैर्मखैः ॥ १३-२३८-४६ (९०८५३)
द्विविधं क्रियते कर्म हव्यकव्यसमाश्रितम् ।
तयोर्हव्यक्रिया देवान्कव्यमाप्यायते पितॄन्। १३-२३८-४७ (९०८५४)
प्रसव्यं मङ्गलैर्द्रव्यैर्हव्यकर्म विधीयते ।
अपसव्यममङ्गल्यैः कव्यं चापि विधीयते ॥ १३-२३८-४८ (९०८५५)
सदेवासुरगन्धर्वाः पितॄनभ्यर्चयन्ति च ।
आप्यायन्ते च ते श्राद्धैः पुनराप्याययन्ति तान् ॥ १३-२३८-४९ (९०८५६)
अनिष्टा च पितॄन्पूर्वं यः क्रियां प्रकरोति चेत् ।
रक्षांसि च पिशाचाश्च फलं भोक्ष्यन्ति तस्य तत् ॥ १३-२३८-५० (९०८५७)
हव्यकव्यक्रियास्तस्मात्कर्तव्या भुवि मानुषैः ।
कर्मक्षेत्रं हि मानुष्यं तदन्यत्र न विद्यते ॥ १३-२३८-५१ (९०८५८)
कव्येन सन्ततिर्दृष्टा हव्ये भूतिः पृथग्विधाः ।
इति ते कथितं देवि देवगुह्यं सनातनम् ॥ ॥ १३-२३८-५२ (९०८५९)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
अष्टत्रिंशदधिकद्विशततमोऽध्यायः ॥ २३८ ॥

---

अनुससनपर्व-अध्यय२३९
॥ श्रीः ॥
१३.२३९. अध्यायः २३९

अथ दानधर्मपर्व ॥ १ ॥

महेश्वरेण पार्वतींप्रति दानत्रैविध्यात्तत्फलत्रैविध्यादिकथनम् ॥१ ॥
तथा दानफलस्य पञ्चविधत्वप्रतिपादनम् ॥२ ॥
तथा नानाधर्मतत्फलप्रतिपादनम् ॥३ ॥

Mahabharata - Anushaasana Parva - Chapter Text

उमोवाच ।
एवं कृतस्य धर्मस्य श्रोतुमिच्छाम्यहं प्रभो ।
प्रमाणं फलमानानां तन्मे शंसितुमर्हसि ॥१३-२३९-१ (९०८६०)
महेश्वर उवाच।१३-२३९-२क्ष् (७६५४)
प्रमाणकल्पनां देवि दानस्य शृणु भामिनि ॥ १३-२३९-२ (९०८६१)
यत्सारस्तु नरो लोके तद्दानं चोत्तमं स्मृतम् ।
सर्वदानविधिं प्राहुस्तदेव भुवि शोभने ॥१३-२३९-३ (९०८६२)
प्रस्थं सारं दरिद्रस्य शतं कोटिधनस्य च ।
प्रस्थसारस्तु तत्प्रस्थं ददन्महदषाप्नुयात् ॥१३-२३९-४ (९०८६३)
कोटिसारस्तु तां कोटिं ददान्महदवाप्नुयात् ।
उभयं तन्महत्तच्च फलेनैव समं स्मृतम् ॥१३-२३९-५ (९०८६४)
धर्मार्थकामभोगेषु शक्त्यभावस्तु मध्यमम् ।
स्वद्रव्यादतिहीनं तु तद्दानमधमं स्मृतम् ॥१३-२३९-६ (९०८६५)
शृणु दत्तस्य वै देवि पञ्चधा फलकल्पनाम् ।
आनन्त्यं च महच्चैव समं हीनं हि पातकम् ॥१३-२३९-७ (९०८६६)
तेषां विशेषं वक्ष्यामि शृणु देवि समाहिता ।
दुस्त्यजस्य च वै दानं पात्र आनन्त्यमुच्यते ॥१३-२३९-८ (९०८६७)
दानं षड्गुणयुक्तं तु महदित्यभिधीयते ।
यथाश्रद्धं तु वै दानं यथार्हं सममुच्यते ॥१३-२३९-९ (९०८६८)
गुणतस्तु तथा हीनं दानं हीनमिति स्मृतम् ।
दानं पातकमित्याहुः षड्गुणानां विपर्यये ॥१३-२३९-१० (९०८६९)
देवलोके महत्कालमान्त्यस्य फलं विदुः ।
महतस्तु तथा कालं स्वर्गलोके तु पूज्यते ॥१३-२३९-११ (९०८७०)
समस्य तु तदा दानं मानुष्यं भोगमावहेत् ।
दानं निष्फलमित्याहुर्विहीनं क्रियया शुभे ॥१३-२३९-१२ (९०८७१)
अथवा म्लेच्छदेशेषु तत्र तत्फलतां व्रजेत् ।
नरकं प्रेत्य तिर्यक्षु गच्छेदशुभदानतः ॥१३-२३९-१३ (९०८७२)
उमोवाच।१३-२३९-१४क्ष् (७६५५)
अशुभस्यापि दानस्य शुभं स्याच्च फलं कथम् ॥ १३-२३९-१४ (९०८७३)
महेश्वर उवाच।१३-२३९-१५क्ष् (७६५६)

मनसा तत्वतः शुद्धमानृशंस्यपुरःसरम् ।
प्रीत्या तु सर्वदानानि दत्त्वा फलमवाप्नुयात् ॥ १३-२३९-१५ (९०८७४)
रहस्यं सर्वदानानामेतद्विद्धि शुभेक्षणे ।
अन्यानि धर्मकार्याणि शृणु सद्भिः कृतानि च ॥ १३-२३९-१६ (९०८७५)
आरामदेवगोष्ठानि संक्रमाः कूप एव च ।
गोवाटश्च तटाकश्च सभा शाला च सर्वशः ॥ १३-२३९-१७ (९०८७६)
पाषण्डावसथश्चैव पानीयं गोतृणानि च ।
व्याधितानां च भैषज्यमनाथानां च पोषणम् ॥ १३-२३९-१८ (९०८७७)
अनाथशवसंस्कारस्तीर्थमार्गविशोधनम् ।
व्यसनाभ्यवपत्तिश्च सर्वेषां च स्वशक्तितः ॥ १३-२३९-१९ (९०८७८)
एतत्सर्वं समासेन धर्मकार्यमिति स्मृतम् ।
तत्कर्तव्यं मनुष्येण स्वशक्त्या श्रद्धया शुभे ॥ १३-२३९-२० (९०८७९)
प्रेत्यभावे लभेत्पुण्यं नास्ति तत्र विचारणा ।
रूपं सौभाग्यमारोग्यं बलं सौख्यं लभेन्नरः ।
स्वर्गो वा मानुषे वाऽपि तैस्तैराप्यायते हि सः ॥ १३-२३९-२१ (९०८८०)
उमोवाच। १३-२३९-२२क्ष् (७६५७)
भगवन्लोकपालेश धर्मस्तु कतिभेदकः ।
दृश्यते परितः सद्भिस्तन्मे शंसितुमर्हसि ॥ १३-२३९-२२ (९०८८१)
महेश्वर उवाच। १३-२३९-२३क्ष् (७६५८)
शृणु देवि समुद्देशान्नानात्वं धर्मसङ्कटे ।
धर्मा बहुविधा लोके श्रुतिभेदमुखोद्भवाः ॥ १३-२३९-२३ (९०८८२)
स्मृतिधर्मश्च बहुधा सद्भिराचार इष्यते ॥ १३-२३९-२४ (९०८८३)
देशधर्माश्च दृश्यन्ते कुलधर्मास्तथैव च ।
जातिधर्माश्च वै धर्मा गणधर्माश्च शोभने ॥ १३-२३९-२५ (९०८८४)
शरीरकालवैषम्यादापद्धर्मश्च दृश्यते ।
एतद्धर्मस्य नानात्वं क्रियते लोकवासिभिः ॥ १३-२३९-२६ (९०८८५)
कारणात्तत्रतत्रैव फलं धर्मस्य चेष्यते ।
तत्कारणसमायोगे लभेत्कुर्वन्फलं नरः ॥ १३-२३९-२७ (९०८८६)
अन्यथा न लभेत्पुण्यमतदर्हः समाविशेत् ।
एवं धर्मस्य नानात्वं फलं कुर्वल्लँभेन्नरः ॥ १३-२३९-२८ (९०८८७)
श्रौतस्मार्तस्तु धर्माणां प्राकृतो धर्म उच्यते ।
इति ते कथितं देवि भूयः श्रोतुं किमिच्छसि ॥ ॥ १३-२३९-२९ (९०८८८)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
एकोनचत्वारिंशदधिकद्विशततमोऽध्यायः ॥ २३९ ॥

अनुससनपर्व-अध्यय२४०
॥ श्रीः ॥
१३.२४०. अध्यायः २४०

अथ दानधर्मपर्व ॥ १ ॥
Mahabharata - Anushaasana Parva - Chapter Topics
महेश्वरेण पार्वतींप्रति भद्राश्वकेतुमालादिखण्डानां सुकृतिनां भोगस्थानत्वादिप्रतिपादनम् ॥ १ ॥

Mahabharata - Anushaasana Parva - Chapter Text

उमोवाच ।
भगवन्सर्वभूतेश पुरमर्दन शङ्कर ।
श्रुतं पापकृतां दुःखं यमलोके वरप्रद ॥ १३-२४०-१ (९०८८९)
श्रोतुमिच्छाम्यहं देव नृणां सुकृतकर्मणाम् ।
कथं ते भुञ्जते भोगान्स्वर्गलोके महेश्वर ॥ १३-२४०-२ (९०८९०)
कथिताः कीदृशा लोका नृणां सुकृतकारिणाम् ।
एतन्मे वद देवश श्रोतुं कौतूहलं हि मे ॥ १३-२४०-३ (९०८९१)
महेश्वर उवाच। १३-२४०-४क्ष् (७६५९)
शृणु कल्याणि तत्सर्वं यत्त्वमिच्छसि शोभने ।
विविधाः पुण्यलोकास्ते कर्मकर्मण्यतां गताः ॥ १३-२४०-४ (९०८९२)
मेरुं हि कनकात्मानं परितः सर्वतोदिशम् ।
भद्राश्वः केतुमालश्च उत्तराः कुरवस्तथा ॥ १३-२४०-५ (९०८९३)
जम्बूवनादयः स्वर्गा इत्येते कर्मवर्जिताः ।
तेषु भूत्वा स्वयंभूताः प्रदृश्यते यतस्ततः ॥ १३-२४०-६ (९०८९४)
योजनानां सहस्रं च एकैकं मानमात्रया ।
नित्यं पुष्पफलोपेतास्तत्र वृक्षाः समन्ततः ॥ १३-२४०-७ (९०८९५)
आसक्तवस्त्राभरणाः सर्वे कनकसन्निभाः ।
द्विरेफाश्चाण्डजास्तत्र प्रवालमणिसन्निभाः ।
विचित्राश्च मनोज्ञाश्च कूजितैः शोभयन्ति तान् ॥ १३-२४०-८ (९०८९६)
कुशेशयवनच्छन्ना नलिन्यश्च मनोरमाः ।
तत्र वान्त्यनिला नित्यं दिव्यगन्धसुखावहाः ॥ १३-२४०-९ (९०८९७)
सर्वे चाम्लानमाल्याश्च विरजोम्बरसंवृताः ।
एवं बहुविधा देवि दिव्यभोगाः सुखावहाः ॥ १३-२४०-१० (९०८९८)
स्त्रियश्च पुरुषाश्चैव सर्वे सुकृतकारिणः ।
रमन्ते तत्र चान्योन्यं कामरागसमन्विताः ॥ १३-२४०-११ (९०८९९)

मनोहरा महाभागाः सर्वे ललितकुण्डलाः ।
एवं तत्र स्थिता मर्त्याः प्रमदाः प्रियदर्शनाः ॥ १३-२४०-१२ (९०९००)
नानाभावसमायुक्ता यौवनस्थाः सदैव तु ।
युवत्यः कल्पितास्तत्र कामजा ललितास्तथा ॥ १३-२४०-१३ (९०९०१)
मनोनुकूला मधुरा भोगिनामुपकल्पिताः ।
प्रमदाश्चोद्भवन्त्येव स्वर्गलोके यथा तथा ॥ १३-२४०-१४ (९०९०२)
एवंविधाः स्त्रियश्चात्र पुरुषाश्च परस्परम् ।
रमन्ते चेन्द्रियैः स्वस्थै शरीरैर्भोगसंस्कृतैः ॥ १३-२४०-१५ (९०९०३)
कामहर्षगुणाभ्यस्ता नान्ये क्रोधादयः प्रिये ।
क्षुत्पिपासा न चास्त्यत्रि गात्रक्लेशाश्च शोभने ॥ १३-२४०-१६ (९०९०४)
सर्वतो रमणीयं च सर्वत्र कुसुमान्विम् ।
यावत्पुण्यफलं तावद्दृश्यन्ते बहुसङ्गताः ।
निरन्तरं भोगयुता रमन्ते स्वर्गवासिनः ॥ १३-२४०-१७ (९०९०५)
तत्र भोगान्यथायोगं भुक्त्वा पुण्यक्षयात्पुनः ।
नश्यन्ति जायमानास्ते शरीरैः सहसा प्रिये ॥ १३-२४०-१८ (९०९०६)
स्वर्गलोकात्परिभ्रष्टाः जायन्ते मानुषे पुनः ।
पूर्वपुण्यावशेषेण विशिष्टाः सम्भवन्ति ते ॥ १३-२४०-१९ (९०९०७)
एषा स्वर्गगतिः प्रोक्ता पृच्छन्त्यास्तव भामिनि ।
अत ऊर्ध्वं पदान्यष्टौ सुकर्माणि शृणु प्रिये ।
भोगयुक्तानि पुण्यानि उच्छ्रितानि परस्परम् ॥ १३-२४०-२० (९०९०८)
विद्याधराः किम्पुरुषा यक्षगन्धर्वकिन्नराः ।
अप्सरोदानवा देवा यथाक्रममुदाहृताः ॥ १३-२४०-२१ (९०९०९)
तेषु स्थानेषु जायन्ते प्राणिनाः पुण्यकर्मणः ।
तेषामपि च ये लोकाः स्वर्गलोकोपमाः स्मृताः ॥ १३-२४०-२२ (९०९१०)
स्वर्गवत्तत्र ते भोगान्भुञ्जते च रमन्ति च ।
रूपसत्वबलोपेताः सर्वे दीर्घायुषस्तथा ॥ १३-२४०-२३ (९०९११)
तेषां सर्वक्रियारम्भो मानुषेष्विव दृश्यते ।
अतिमानुषमैश्वर्यमत्र मायाबलात्कृतम् ॥ १३-२४०-२४ (९०९१२)
जराप्रसूतिमरणं तेषु स्थानेषु दृश्यते ।
गुणा दोषाश्च सन्त्यत्र आकाशगमनं तथा ॥ १३-२४०-२५ (९०९१३)
अन्तर्धानं बलं सत्त्वमायुश्च चिरजीवितम् ।
तपोविशेषज्जायन्ते यथा कर्म्णि भामिनि ॥ १३-२४०-२६ (९०९१४)
देवलोके प्रवृत्तिस्तु तेषामेव विधीयते ।
न तथा देवलोको हि तद्विशिष्टाः सुराः स्मृताः ॥ १३-२४०-२७ (९०९१५)
तत्र भोगमनिर्देश्यममृतत्वं च विद्यते ।
विमानगमनं नित्यमप्सरोगणसेवितम् ॥ १३-२४०-२८ (९०९१६)

एवमन्यच्च तत्कर्म देवताभ्यो विशिष्यते ।
प्रत्यक्षं तव तत्सर्वं देवलोके प्रवर्तनम् ॥१३-२४०-२९ (९०९१७)
तस्मान्न वर्णये देवि विदितं च त्वया शुभे ।
तत्सर्वं सुकृतैरेव प्राप्यते चोत्तमं पदम् ॥ ॥१३-२४०-३० (९०९१८)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
चत्वारिंशदधिकद्विशततमोऽध्यायः ॥२४० ॥

---

अनुससनपर्व-अध्यय२४१
॥ श्रीः ॥
१३.२४१. अध्यायः २४१

अथ दानधर्मपर्व ॥१ ॥
Mahabharata - Anushaasana Parva - Chapter Topics
महेश्वरेण पार्वतींप्रति प्राणिनां
शुभाशुभत्वनिश्चायकलिङ्गकथनम् ॥१ ॥

Mahabharata - Anushaasana Parva - Chapter Text

उमोवाच ।
मानुषेष्वेव जीवत्सु गतिर्विज्ञायते न वा ।
यथा शुभगतिर्जीवो नासौ त्वशुभभागिति ॥१३-२४१-१ (९०९१९)
एतदिच्छाम्यहं श्रोतुं तन्मे शंसितुमर्हसि ॥ १३-२४१-२ (९०९२०)
महेश्वर उवाच।१३-२४१-३क्ष् (७६६०)
तदहं ते प्रवक्ष्यामि जीवितं विद्यते यथा ।
द्विविधाः प्राणिनो लोके दैवमासुरमाश्रिताः ॥१३-२४१-३ (९०९२१)
मनसा कर्मणा वाचा प्रतिकला भवन्ति ये ।
तादृशानासुरान्विद्धि मर्त्यास्ते नरकालयाः ॥१३-२४१-४ (९०९२२)
हिंस्राश्चोराश्च धूर्ताश्च परदाराभिमर्शकाः ।
नीचकर्मरता ये च शौचमङ्गलवर्जिताः ॥१३-२४१-५ (९०९२३)
शुचिविद्वेषिणः पापा लोकचारित्रदूषकाः ।
एवं युक्तसमाचारा जीवन्तो नरकालयाः ॥१३-२४१-६ (९०९२४)
लोकोद्वेगकराश्चान्ये पशवश्च सरीसृपाः ।
वृक्षाः कण्टकिनो रूक्षास्तादृशान्विद्धि चासुरान् ॥१३-२४१-७ (९०९२५)
अपरान्देवपक्षांस्तु शृणु देवि समाहिता ॥ १३-२४१-८ (९०९२६)
मनोवाक्कर्मभिर्नित्यमनुकूला भवन्ति ये ।

तादृशानमरान्विद्धि ते नराः स्वर्गगामिनः ॥ १३-२४१-९ (९०९२७)
शौचार्जवपरा धीराः परार्थं नाहरन्ति ये ।
ये समाः सर्वभूतेषु ते नराः स्वर्गगामिनः ॥ १३-२४१-१० (९०९२८)
भयाद्वा वृत्तिहेतोर्वा अनृतं न वदन्ति ये ।
सत्यं वदन्ति सततं ते नराः स्वर्गगामिनः ॥ १३-२४१-११ (९०९२९)
धार्मिकाः शौचसम्पन्नाः शुक्ला मधुरवादिनः ।
नाकार्यं मनसेच्छन्ति ते नराः स्वर्गगामिनः ॥ १३-२४१-१२ (९०९३०)
स्वदुःखमिव मन्यन्ते परेषां दुःखवेदनम् ।
दरिद्रा अपि ये केचिद्याचिताः प्रीतिपूर्वकम् ।
ददत्येव च यत्किञ्चित्ते नराः स्वर्गगामिनः ॥ १३-२४१-१३ (९०९३१)
आस्तिका मङ्गलपराः सततं वृद्धसेविनः ।
पुण्यकर्मपरा नित्यं ते नराः स्वर्गगामिनः ॥ १३-२४१-१४ (९०९३२)
व्रतिनो दानशीलाश्च धर्मशीलाश्च मानवाः ॥
ऋजवो मृदवो नित्यं ते नराः स्वर्गगामिनः ॥ १३-२४१-१५ (९०९३३)
गुरुशुश्रूषणपरा देवब्राह्मणपूजकाः ।
कृजज्ञाः कृतविद्याश्च ते नराः स्वर्गगामिनः ॥ १३-२४१-१६ (९०९३४)
जितेन्द्रिया जितक्रोधा जितमानमदाः स्मृताः ।
लोभमात्सर्यहीना ये ते नराः स्वर्गगामिनः ॥ १३-२४१-१७ (९०९३५)
निर्मा निरहङ्काराः सानुक्रोशाः स्वबन्धुषु ।
दीनानुकम्पिनो नित्यं ते नराः स्वर्गगामिनः ॥ १३-२४१-१८ (९०९३६)
ऐहिकेन तु वृत्तेन पारत्रमनुमीयते ।
एवंविधा नरा लोके जीवन्तः स्वर्गगामिनः ॥ १३-२४१-१९ (९०९३७)
यदन्यच्च शुभं लोके प्रजानुग्रहकारि च ।
पशवश्चैव वृक्षाश्च प्रजानां हितकारिणः ।
तादृशान्देवपक्षस्थानिति विद्धि शुभानने ॥ १३-२४१-२० (९०९३८)
शुभाशुभप्रयं लोके सर्वं स्थावरजङ्गमम् ।
दैवं शुभमिति प्राहुरासुरं चाशुभं प्रिये ॥ ॥ १३-२४१-२१ (९०९३९)

इति श्रीमन्यहाभारते अनुशासनपर्वणि दानधर्मपर्वणि
एकचत्वारिंशदधिकद्विशततमोऽध्यायः ॥ २४१ ॥

---

अनुससनपर्व-अध्यय२४२
॥ श्रीः ॥
१३.२४२. अध्यायः २४२

अथ दानधर्मपर्व ॥ १ ॥

Mahabharata - Anushaasana Parva - Chapter Topics
महेश्वरेण पार्वतींप्रति प्राणिनां मरणस्य
स्वाभाविकत्वयत्नसाध्यत्वभेदेन द्वैविध्यकथनपूर्वकं
द्वितीयस्य योगादिना शरीरत्यागादिभेदेन चातुर्विध्यकथनेन तस्य
महाफलहेतुत्वकथनम् ॥ १ ॥
कामक्रोधादिना शरीरत्यागस्य नकरभोगहेतुत्वकथनम् ॥ २ ॥

Mahabharata - Anushaasana Parva - Chapter Text

उमोवाच ।
भगवन्मानुषाः केचित्कालधर्ममुपस्थिताः ।
प्राणमोक्षं कथं कृत्वा परत्रि हितमाप्नुयुः ॥ १३-२४२-१ (९०९४०)
महेश्वर उवाच। १३-२४२-२क्ष् (७६६१)
हन्त ते कथयिष्यामि शृणु देवि समाहिता ।
द्विविधं मरणं लोके स्वभावाद्यत्नतस्तथा ॥ १३-२४२-२ (९०९४१)
तयोः स्वभावं नापायं यत्नतः करणोद्भवम् ।
एतयोरुभयोर्देवि विधानं शृणु शोभने ॥ १३-२४२-३ (९०९४२)
कल्याकल्यशरीरस्य यत्नजं द्विविधं स्मृतम् ।
यत्नजं नाम मरणमात्मत्यागो मुमूर्षया ॥ १३-२४२-४ (९०९४३)
तत्राकल्यशरीरस्य जरा व्याधिश्च कारणम् ।
महाप्रस्थानगमनं तथा प्रायोपवेशनम् ।
जलावगाहनं चैव अग्निचित्यां प्रवेशनम् ॥ १३-२४२-५ (९०९४४)
एवं चतुर्विधः प्रोक्त आत्मत्यागो मुमूर्षताम् ।
एतेषां क्रमयोगेन विधानं शृणु शोभने ॥ १३-२४२-६ (९०९४५)
स्वधर्मयुक्तं गार्हस्थ्यं चिरमूढ्वा विधानतः ।
तत्रानृण्यं च सम्प्राप्य वृद्धो वा व्याधितोऽपि वा ॥ १३-२४२-७ (९०९४६)
दर्शयित्वा स्वदौर्बल्यं सर्वानेवानुमान्य च ।
सर्वं विहाय बन्धूंश्च क्रमाणां भरणं तथा ॥ १३-२४२-८ (९०९४७)
दानानि विधिवत्कृत्वा धर्मिकार्यर्थमात्मनः ।
अनुज्ञाप्य जनं सर्वं वाचा मधुरया ब्रुवन् ॥ १३-२४२-९ (९०९४८)
अहतं वस्त्रमाच्छाद्य बद्ध्वा तत्कुशरज्जुना ।
उपस्पृश्य प्रतिज्ञाय व्यवसायपुरसरम् ॥ १३-२४२-१० (९०९४९)
परित्यज्य ततो ग्राम्यं धर्मं कुर्याद्यथेप्सितम् ।
महाप्रस्तानमिच्छेच्चेत्प्रतिष्ठेतोत्तरां दिशम् ॥ १३-२४२-११ (९०९५०)
भूत्वा तावन्निराहारो यावत्प्राणविमोक्षणम् ।
चेष्टाहानौ शयित्वाऽपि तन्मनाः प्राणमुत्सृजेत् ।

एवं पुण्यकृतां लोकानमलान्प्रतिपद्यते ॥ १३-२४२-१२ (९०९५१)
प्रायोपवेशनं चेच्छेत्तेनैव विधिना नरः ।
देशे पुण्यतमे श्रेष्ठे निराहारस्तु संविशेत् ॥ १३-२४२-१३ (९०९५२)
अप्राणं तु शुचिर्भूत्वा कुर्वन्दानं स्वशक्तितः ।
पुण्यं परित्यजेत्प्राणानेष धर्मः सनातनः ।
एवं कलेवरं त्यक्त्वा स्वर्गलोके महीयते ॥ १३-२४२-१४ (९०९५३)
अग्निप्रवेशनं चेच्छेत्तेनैव विधिना शुभे ।
कृत्वा काष्ठमयं चित्यं पुण्यक्षेत्रे नदीषु वा ॥ १३-२४२-१५ (९०९५४)
दैवतेभ्यो नमस्कृत्वा कृत्वा चापि प्रदक्षिणम् ।
भूत्वा शुचिर्व्यवसितः प्रविशेदग्निसंस्तरम् ।
सोपि लोकान्यथान्यायं प्राप्नुयात्पुण्यकर्मणाम् ॥ १३-२४२-१६ (९०९५५)
जलावगाहनं चेच्छेत्तेनैव विधिना शुभे ।
ख्याते पुण्यतमे तीर्थे निमज्जेत्सुकृतं स्मरन् ॥ १३-२४२-१७ (९०९५६)
सोपि पुण्यतमाँल्लोकान्निःसङ्गात्प्रतिपद्यते ।
ततः कल्यशरीरस्य संत्यागं शृणु तत्वतः ॥ १३-२४२-१८ (९०९५७)
रक्षार्थं क्षत्रियः श्रेष्ठः प्रजापालनकारणात् ।
योधानां भर्तृपिण्डार्थं गुर्वर्थं ब्रह्मचारिणाम् ॥ १३-२४२-१९ (९०९५८)
गोब्राह्मणार्थं सर्वेषां प्राणत्यागो विधीयते ।
स्वराज्यरक्षणार्तं वा कुजनैः पीडिताः प्रजाः ॥ १३-२४२-२० (९०९५९)
मोक्तुकामस्त्यजेत्प्राणान्युद्धमार्गे यथाविधि ।
सुसन्नद्धो व्यवसितः सम्प्रविश्यापराङ्मुखः ।
एवं राजा मृतः सद्यः स्वर्गलोके महीयते ॥ १३-२४२-२१ (९०९६०)
तादृशी सुगतिर्नास्ति क्षत्रियस्य विशेषतः ।
भृत्यो वा भर्तृपिण्डार्थं भर्तृकर्मण्युपस्थिते ॥ १३-२४२-२२ (९०९६१)
कुर्वंस्तत्र तु साहाय्यमात्मप्राणानपेक्षया ।
स्वाम्यर्थं संत्यजेत्प्राणान्पुण्याँल्लोकान्स गच्छति ॥ १३-२४२-२३ (९०९६२)
स्पृहणीयः सुरगणैस्तत्र नास्ति विचारणा ।
एवं गोब्राह्मणार्थं वा दीनार्थं वा त्यजेत्तनुम् ॥ १३-२४२-२४ (९०९६३)
सोपि पुण्यमवाप्नोति आनृशंस्यव्यपेक्षया ।
इत्येते जीवितत्यागे मार्गास्ते समुदाहृताः ॥ १३-२४२-२५ (९०९६४)
कामक्रोधाद्भयाद्वाऽपि यदि चेत्संत्यजेत्तनुम् ।
सोऽनन्तं नरकं याति आत्महन्तृत्वकारणात् ॥ १३-२४२-२६ (९०९६५)
स्वभावं मरणं नाम न तु चात्मेच्छया भवेत् ।
यथा मृतानां यत्कार्यं तन्मे शृणु यथाविधि ॥ १३-२४२-२७ (९०९६६)
तत्रापि मरणं त्यागो मूढत्यागाद्विशिष्यते ।
भूमौ संवेशयेद्देहं नरस्य विनशिष्यतः ॥ १३-२४२-२८ (९०९६७)

निर्जीवं वृणुयात्सद्यो वाससा तु कलेवरम् ।
माल्यगन्धैरलङ्कृत्य सुवर्णेन च भामिनि ॥ १३-२४२-२९ (९०९६८)
श्मशाने दक्षिणे देशे चिताग्नौ प्रदहेन्मृतम् ।
अथवा निक्षिपेद्भूमौ शरीरं जीववर्जितम् ॥ १३-२४२-३० (९०९६९)
दिवा च शुक्लपक्षश्च उत्तरायणमेव च ।
मुमूर्षूणां प्रशस्तानि विपरीतं तु गर्हितम् ॥ १३-२४२-३१ (९०९७०)
औदकं चाष्टकाश्राद्धं बहुभिर्बहुभिः कृतम् ।
आप्यायनं मृतानां तत्परलोके भवेच्छुभम् ।
एतत्सर्वं मया प्रोक्तं मानुषाणां हितं वचः ॥ ॥ १३-२४२-३२ (९०९७१)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
द्विचत्वारिंशदधिकद्विशततमोऽध्यायः ॥ २४२ ॥

---

अनुससनपर्व-अध्यय२४३
॥ श्रीः ॥
१३.२४३. अध्यायः २४३

अथ दानधर्मपर्व ॥ १ ॥
Mahabharata - Anushaasana Parva - Chapter Topics
महेश्वरेण पार्वतींप्रति नानाधर्मामामपि प्रत्येकं साफल्यकथनेन
तेषु मोक्षधर्मस्यैव श्रैष्ठ्यप्रतिपादनम् ॥ १ ॥
तथा ज्ञानस्य मोक्षसाधनत्वकथनपूर्वकं तत्प्राप्त्युपायकथनम् ॥ २ ॥

Mahabharata - Anushaasana Parva - Chapter Text

उमोवाच ।
देवदेव नमस्तेऽस्तु कालसूदन शङ्कर ।
लोकेषु विविधा धर्मास्त्वत्प्रसादान्मया श्रुताः ॥ १३-२४३-१ (९०९७२)
विशिष्टं सर्वधर्मेभ्यः शाश्वतं ध्रुवमव्ययम् ।
श्रुतुमिच्छाम्यहं सर्वमत्र मुह्यति मे मनः ॥ १३-२४३-२ (९०९७३)
केचिन्मोक्षं प्रशंसन्ति केचिद्यज्ञफलं द्विजाः ।
वानप्रस्थं पुनः केचिद्गार्हस्थ्यं केचिदाश्रमम् ॥ १३-२४३-३ (९०९७४)
राजधर्माश्रयं केचित्केचित्स्वाध्यायमेव च ।
ब्रह्मचर्याश्रमं केचित्केचिद्वाक्संयमाश्रयम् ॥ १३-२४३-४ (९०९७५)
मातरं पितरं केचित्सेवमाना दिवं गताः ।
अहिंसया परः स्वर्गो सत्येन च महीयते ॥ १३-२४३-५ (९०९७६)

आहवेऽभिमुखाः केचिन्निहतास्त्रिदिवं गताः ।
केचिदुञ्छवृत्ते सिद्धाः स्वर्गमार्गं समाश्रिताः ॥ १३-२४३-६ (९०९७७)
आर्जवेनापरे युक्ता महतां पूजते रताः ।
ऋजवो नाकपृष्ठे तु शुद्धात्मानः प्रतिष्ठिताः ॥ १३-२४३-७ (९०९७८)
एवं बहुविधैर्लोके धर्मद्वारैः सुसंवृतैः ।
ममापि मतिराविद्धा मेघलेखेव वायुना ॥ १३-२४३-८ (९०९७९)
एतस्मिन्संशयस्थाने संशयच्छेदकारि यत् ।
वचनं ब्रूहि देवेश निश्चयज्ञानसंज्ञितम् ॥ १३-२४३-९ (९०९८०)
नारद उवाच। १३-२४३-१०क्ष् (७६६२)
एवं पृष्टः स्वया देव्या महादेवः पिनाकधृक् ।
प्रोवाच मधुरं वाक्यं सूक्ष्ममध्यात्मसंश्रितम् ॥ १३-२४३-१० (९०९८१)
महेश्वर उवाच। १३-२४३-११क्ष् (७६६३)
न्यायतस्त्वं महाभागे श्रोतुकामाऽसि निश्चयम् ।
एतदेव विशिष्टं ते यत्त्वं पृच्छसि मां प्रिये ॥ १३-२४३-११ (९०९८२)
सर्वत्र विहितो धर्मः स्वर्गलोकफलाश्रितः ।
बहुद्वारस्य धर्मस्य नेहास्ति विफलाः क्रियाः ॥ १३-२४३-१२ (९०९८३)
यस्मिन्यस्मिंश्च विषये योयो याति विनिश्चयम् ।
तं तमेवाभिजानाति नान्यं धर्मं शुचिस्मिते ॥ १३-२४३-१३ (९०९८४)
शृणु देवि समासेन मोक्षद्वारसमनुत्तमम् ।
एतद्धि सर्वधर्माणां विशिष्टं शुभमव्ययम् ॥ १३-२४३-१४ (९०९८५)
नास्ति मोक्षात्परं देवि मोक्ष एव परा गतिः ।
सुखमात्यन्तिकं श्रेष्ठमनिवृत्तं च तद्विदुः ॥ १३-२४३-१५ (९०९८६)
नात्र देवि जरा मृत्युः शोको वा दुःखमेव वा ।
अनुत्तममचिन्त्यं च तद्देवि परमं सुखम् ॥ १३-२४३-१६ (९०९८७)
ज्ञानानामुत्तमं ज्ञानं मोक्षज्ञानं विदुर्बुधाः ।
ऋषिभिर्देवसङ्घैश्च प्रोच्यते परमं पदम् ॥ १३-२४३-१७ (९०९८८)
नित्यमक्षरमक्षोभ्यमजेयं शाश्वतं शिवम् ।
विशन्ति तत्पदं प्राज्ञाः स्पृहणीयं सुरोत्तमैः ॥ १३-२४३-१८ (९०९८९)
दुःखादिश्च दुरन्तश्च संसारोयं प्रकीर्तितः ।
शोकव्याधिजरादोषैर्मरणेन च संयुतः ॥ १३-२४३-१९ (९०९९०)
यथा ज्योतिर्गणा व्योम्नि विवर्तन्ते पुनःपुनः ।
तस्य मोक्षस्य मार्गोऽयं श्रुयतां शुभलक्षणे ॥ १३-२४३-२० (९०९९१)
ब्रह्मादिस्थावरान्तश्च संसारो यः प्रकीर्तितः ।
संसारे प्राणिनः सर्वे निवर्तन्ते यथा पुनः ॥ १३-२४३-२१ (९०९९२)
तत्र संसारचक्रस्य मोक्षो ज्ञानेन दृश्यते ।
अध्यात्मतत्वविज्ञानं ज्ञानमित्यभिधीयते ॥ १३-२४३-२२ (९०९९३)

ज्ञानस्य ग्रहणोपायमाचारं ज्ञानिनस्तथा ।
यथावत्सम्प्रवक्ष्यामि तत्त्वमेकमनाः शृणु ॥ १३-२४३-२३ (९०९९४)
ब्राह्मणः क्षत्रियो वाऽपि भूत्वा पूर्वं गृहे स्थितः ।
आनृण्यं सर्वतः प्राप्य ततस्तान्संत्यजेद्गृहान् ॥ १३-२४३-२४ (९०९९५)
ततः संत्यज्य गार्हस्थ्यं निश्चितो वनमाश्रयेत् ॥ १३-२४३-२५ (९०९९६)
वने गुरुं समाज्ञाय दीक्षितो विधिपूर्वकम् ।
दीक्षां प्राप्य यथान्यायं स्ववृत्तं परिपालयेत् ॥ १३-२४३-२६ (९०९९७)
गृह्णीयादप्युपाध्यायान्मोक्षज्ञानमनिन्दितः ।
द्विविधं च पुनर्मोक्षं साङ्ख्ययोगमिति स्मृतिः ॥ १३-२४३-२७ (९०९९८)
पञ्चविंशतिविज्ञानं साङ्ख्यमित्यभिधीयते ।
ऐश्वर्यं देवसारूप्यं योगशास्त्रस्य निर्णयः ।
तयोरन्यतरं ज्ञानं शृणुयाच्छिष्यतां गतः ॥ १३-२४३-२८ (९०९९९)
नाकालो नाप्यकाषायी नाप्यसंवत्सरोषितः ।
नासाङ्ख्ययोगो नाश्राद्धं गुरुणा स्नेहपूर्वकम् ।
समः शीतोष्णहर्षादीन्विषहेत स वै मुनिः ॥ १३-२४३-२९ (९१०००)
अमृष्यः क्षुत्पिपासाभ्यामुचितेभ्यो निवर्तयेत् ।
त्यजेत्सङ्कल्पजान्ग्रन्थीन्सदा ध्यानपरो भवेत् ॥ १३-२४३-३० (९१००१)
कुण्डिकाचमसं शिक्यं छत्रं यष्टिमुपानहौ ।
चेलमित्येव नैतेषु स्थापयेत्साम्यमात्मनः ॥ १३-२४३-३१ (९१००२)
गुरोः पूर्वं समुत्तिष्ठेज्जघन्यं तस्य संविशेत् ।
नैवाविज्ञाप्य भर्तारमावश्यकमपि व्रजेत् ॥ १३-२४३-३२ (९१००३)
द्विरह्नि स्नानशाटेन संध्ययोरभिषेचनम् ।
एककालाशनं चास् विहितं यतिभिः पुरा ॥ १३-२४३-३३ (९१००४)
भैक्षं सर्वत्र गृह्णीयाच्चिन्तयेत्सततं निशि ।
कारणे चापि सम्प्राप्ते न ज्ञाप्येत कदाचन ॥ १३-२४३-३४ (९१००५)
ब्रह्मचर्यं वने वासं शौचमिन्द्रियसंयमः ।
दया च सर्वभूतेषु तस्य धर्मः सनातनः ॥ १३-२४३-३५ (९१००६)
विमुक्तः सर्वपापेभ्यो लघ्वाहारो जितेन्द्रियः ।
आत्मयुक्तः परां बुद्धिं लभते पापनाशिनीम् ॥ १३-२४३-३६ (९१००७)
यदा भावं न कुरुते सर्वभूतेषु पापकम् ।
कर्मणा मनसा वाचा ब्रह्म सम्पद्यते तदा ॥ १३-२४३-३७ (९१००८)
अनिष्ठुरोऽनहङ्कारो निर्द्वन्द्वो वीतमत्सरः ।
वीतशोकभयाबाधं पदं प्राप्नोत्यनुत्तमम् ॥ १३-२४३-३८ (९१००९)
तुल्यनिन्दास्तुतिर्मौनी समलोष्टाश्मकाञ्चनः ।
समः शत्रौ च मित्रे च निर्वाणमधिगच्छति ॥ १३-२४३-३९ (९१०१०)
एवं युक्तसमाचारस्तत्परोऽध्यात्मचिन्तकः ।

ज्ञानाभ्यासेन तेनैव प्राप्नोति परमां गतिम् ॥ ॥ १३-२४३-४० (९१०११)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
त्रिचत्वारिंशदधिकद्विशततमोऽध्यायः ॥ २४३ ॥

---

अनुससनपर्व-अध्यय२४४
॥ श्रीः ॥
१३.२४४. अध्यायः २४४

अथ दानधर्मपर्व ॥ १ ॥
Mahabharata - Anushaasana Parva - Chapter Topics
महेश्वरेण पार्वतींप्रति जरामरणतारणस्य निर्वाणैकसाध्यत्वोक्त्या
तस्य ज्ञानैकसाध्यत्वप्रतिपादनेनेन्द्रियनिग्रहादिना वैराग्यस्य
तत्कारणत्वोक्तिः ॥ १ ॥

Mahabharata - Anushaasana Parva - Chapter Text

महेश्वर उवाच ।
अनुद्विग्नमतेर्जन्तोरस्मिन्संसारमण्डले ।
शोकव्याधिजरादुःखैर्निर्वाणं नोपपद्यते ॥
तस्मादुद्वेगजननं मनोऽवस्थानपं तथा ।
ज्ञानं ते सम्प्रवक्ष्यामि तन्मूलममृतं हि वै ॥ १३-२४४-१ (९१०१२)
शोकस्थानसहस्राणि भयस्थानशतानि च ।
दिवसेदिवसे मूढमाविशन्ति न पण्डितम् ॥ १३-२४४-३ (९१०१३)
नष्टे धने वा दारे वा पुत्रे पितरि वा मृते ।
अहो दुःखमिति ध्यायञ्शोकस्य पदमाव्रजेत् ॥ १३-२४४-४ (९१०१४)
द्रव्येषु समतीतेषु ये शुभास्तान्न चिन्तयेत् ।
ताननाद्रियमाणस्य शोकबन्धः प्रणश्यति ॥ १३-२४४-५ (९१०१५)
सम्प्रयोगादनिष्टस्य विप्रयोगात्प्रियस्य च ।
मानुषा मानसैर्दुःखैः संयुज्यन्तेऽल्पबुद्धयः ॥ १३-२४४-६ (९१०१६)
मृतं वा यदि वा नष्टं योऽतीतमनुशोचति ।
सन्तापेन च युज्येत तच्चास्य न निवर्तते ॥ १३-२४४-७ (९१०१७)
उत्पन्नमिह मानुष्ये गर्भप्रभृति मानवम् ।
विविधान्युपवर्तन्ते दुःखानि च सुखानि च ॥ १३-२४४-८ (९१०१८)
तयोरेकतरो मार्गो यद्येनमभिसंनमेत् ।
सुखं प्राप्य न संहृष्येन्न दुःखं प्राप्य संज्वरेत् ॥ १३-२४४-९ (९१०१९)

दोषदर्शी भवेत्तत्र यत्र स्नेहः प्रवर्तते ।
अनिष्टेनान्वितं पश्येद्यथा क्षिप्रं विरज्यते ॥ १३-२४४-१० (९१०२०)
यथा काष्ठं च काष्ठं च समेयातां महोदधौ ।
समेत्य च व्यपेयातां तद्वज्ज्ञातिसमागमः ॥ १३-२४४-११ (९१०२१)
अदर्शनादापतिताः पुनश्चादर्शनं गताः ।
स्नेहस्तत्र न कर्तव्यो विप्रयोगो हि तैर्ध्रुवम् ॥ १३-२४४-१२ (९१०२२)
कुटुम्बपुत्रदारांश्च शरीरं धनसञ्चयम् ।
ऐश्वर्यं स्वस्तिता चेति न मुह्येत्तत्र पण्डितः ॥ १३-२४४-१३ (९१०२३)
सुखमेकान्ततो नास्ति शक्रस्यापि त्रिविष्टपे ।
तत्रापि सुमहद्दुःखं न नित्यं लभते सुखम् ॥ १३-२४४-१४ (९१०२४)
सुखस्यान्तरं दुःखं दुःखस्यानन्तरं सुखम् ।
क्षया निचयाः सर्वे पतनान्ताः समुच्छ्रयाः ॥ १३-२४४-१५ (९१०२५)
संयोगा क़क़क़क़क़क़क़क़क़क़क़क़ मरणान्तं च जीवितम् ।
उच्छ्रयांश्च निपाताश्च दृष्ट्वा प्रत्यक्षतस्त्रयम् ।
अनित्यमसुखं चेति व्यवस्येत्सर्वमेव च ॥ १३-२४४-१६ (९१०२६)
अर्थानामार्जने दुःखमार्जितानां तु रक्षणे ।
नाशे दुःखं व्यये दुःखं धिगर्थं दुःखभाजनम् ॥ १३-२४४-१७ (९१०२७)
अर्थवन्तं नरं नित्यं पञ्चाभिघ्नन्ति शत्रवः ।
राजा चोरश्च दायादा भूतानि क्षय एव च ॥ १३-२४४-१८ (९१०२८)
अर्थमेव ह्यनर्थस्य मूलमित्यवधारय ।
न ह्यनर्थाः प्रबाधन्ते नरमर्तविवर्जितम् ॥ १३-२४४-१९ (९१०२९)
अर्थप्राप्तिर्महद्दुःखमाकिञ्चिन्यं परं सुखम् ।
उपद्रवेषु चार्थानां दुःखं हि नियतं भवेत् ॥ १३-२४४-२० (९१०३०)
धनलोभेन तृष्णाया न तृप्तिरुपलभ्यते ।
लब्धाश्रयो विवर्धेत समिद्ध इव पावकः ॥ १३-२४४-२१ (९१०३१)
जित्वाऽपि पृथिवीं कृत्स्नां चतुःसागरमेखलाम् ।
सागराणां पुनः पारं जेतुमिच्छत्यसंशयम् ॥ १३-२४४-२२ (९१०३२)
अलं परिग्रहेणेह दोषवान्हि परिग्रहः ।
कोशकारः क्रिमिर्देवि बध्यते हि परिग्रहात् ॥ १३-२४४-२३ (९१०३३)
एकोऽपि पृथिवीं कृत्स्नामेकच्छत्रां प्रशास्ति च ।
एकस्मिन्नेव राष्ट्रे तु स चापि निवसेन्नृपः ॥ १३-२४४-२४ (९१०३४)
तस्मिन्राष्ट्रेऽपि नगरमेकमेवाधितिष्ठति ।
नगरेऽपि गृहं चैकं भवेत्तस्य निवेशनम् ॥ १३-२४४-२५ (९१०३५)
एक एव प्रतिष्ठः स्यादावासस्तद्गृहेऽपि च ।
आवासे शयनं चैकं निशि यत्र प्रलीयते ॥ १३-२४४-२६ (९१०३६)
शयनस्यार्धमेवास्य स्त्रियाश्चार्धं विधीयते ।

तदनेन प्रसङ्गेन स्वल्पेनैव हि युज्यते ॥ १३-२४४-२७ (९१०३७)
सर्वं ममेति सम्मूढो बलं पश्यति बालिशः ।
एवं सर्वोपयोगेषु स्वल्पमस्य प्रयोजनम् ॥ १३-२४४-२८ (९१०३८)
तण्डुलप्रस्थमात्रेण यात्रा स्यात्सर्वदेहिनाम् ।
ततो भूयस्तरो योगो दुःखाय तपनाय च ॥ १३-२४४-२९ (९१०३९)
नास्ति तृष्णासमं दुःखं नास्ति त्यागसमं सुखम् ।
सर्वान्कामान्परित्यज्य ब्रह्मभूयाय कल्पते ॥ १३-२४४-३० (९१०४०)
या दुस्त्यजा दुर्मतिभिर्या न जीर्यति जीर्यतः ।
योऽसौ प्राणान्तिको रोगस्तां तृष्णां त्यजतः सुखम् ॥ १३-२४४-३१ (९१०४१)
न जातु कामः कामानामुपभोगेन शाम्यति ।
हविषा कृष्णवर्त्मेव भूय एवाभिवर्धते ॥ १३-२४४-३२ (९१०४२)
अलाभेनैव कामानां शोकं त्यजति पण्डितः ।
आयासविटपस्तीव्रः कामाग्निः कर्षणाररणिः ।
इन्द्रियार्थैश्च सम्मोह्य दहत्यकुशलं जनम् ॥ १३-२४४-३३ (९१०४३)
यत्पृथिव्यां व्रीहियवं हिरण्यं पशवः स्त्रियः ।
नालमेकस्य पर्याप्तमिति पश्यन्न मुह्यति ॥ १३-२४४-३४ (९१०४४)
यच्च कामसुखं लोके यच्च दिव्यं महत्सुखम् ।
तृष्णाक्षयसुखस्यैते नार्हतः षोडशीं कलाम् ॥ १३-२४४-३५ (९१०४५)
इन्द्रियाणीन्द्रियार्थेषु नैव धीरो नियोजयेत् ।
मनःषष्ठानि संयम्य नित्यमात्मनि योजयेत ॥ १३-२४४-३६ (९१०४६)
इन्द्रियाणां विसर्गेण दोषमृच्छत्यसंशयम् ।
संनियम्य नु तान्येव ततः सिद्धिमवाप्नुयात् ॥ १३-२४४-३७ (९१०४७)
षण्णामात्मनि युक्तानामैश्वर्यं योऽधिगच्छति ।
न च पापैर्न चानर्थैः संयुज्येत विचक्षणः ॥ १३-२४४-३८ (९१०४८)
अप्रमत्तः सदा रक्षेदिन्द्रियाणि विचक्षणः ।
अरक्षितेषु तेष्वाशु नरो नरकमेति हि ॥ १३-२४४-३९ (९१०४९)
हृदि काममयश्चित्रो मोहसञ्चयसम्भवः ।
अज्ञानरूढमूलस्तु विवित्सापरिषेचनः ॥ १३-२४४-४० (९१०५०)
रोषलोभमहास्कन्धः पुरा दुष्कृतसारवान् ।
आयासविटपस्तीव्रशोकपुष्पो भयाङ्कुरः ॥ १३-२४४-४१ (९१०५१)
नानासङ्कल्पपत्राढ्यः प्रमादात्परिवर्धितः ।
महतीभिः पिपासाभिः समन्तात्परिवेष्टितः ॥ १३-२४४-४२ (९१०५२)
संरोहत्यकृतप्रज्ञे पादपः कामसम्भवः ।
नैव रोहति तत्वज्ञे रूढो वा छिद्यते पुनः ॥ १३-२४४-४३ (९१०५३)
कृच्छ्रोपायेष्वनित्येषु निःसारेषु फलेषु च ।
दुःखादिषु दुरन्तेषु कामयोगेषु का रतिः ॥ १३-२४४-४४ (९१०५४)

इन्द्रियेषु च जीर्यत्सु च्छिद्यमाने तताऽऽयुषि ।
पुरस्ताच्च स्थिते मृत्यौ किं सुखं पश्यतासुखे ॥१३-२४४-४५ (९१०५५)
व्याधिभिः पीड्यमानस्य नित्यं शारीरमानसैः ।
नरस्याकृतकृत्यस्य किं सुखं मरणे सति ॥१३-२४४-४६ (९१०५६)
सञ्चिन्वानं तमेवार्थं कामानामवितृप्तकम् ।
व्याघ्रः पशुमिवारण्ये मृत्युरादाय गच्छति ॥१३-२४४-४७ (९१०५७)
जन्ममृत्युजरादुःखैः सततं समभिद्रुतः ।
संसारे पच्यमानस्तु पापान्नोद्विजते जनः ॥१३-२४४-४८ (९१०५८)
उमोवाच।१३-२४४-४९क्ष् (७६६४)
केनोपायेन मर्त्यानां निवर्त्येते जरान्तकौ ।
यद्यस्ति भगवन्मह्यमेतदाचक्ष्व माचिरम् ॥१३-२४४-४९ (९१०५९)
तपसा वा सुमहता कर्मणा वा श्रुतेन वा ।
रसायनप्रयोगैर्वा केनात्येति जरान्तकौ ॥१३-२४४-५० (९१०६०)
महेश्वर उवाच।१३-२४४-५१क्ष् (७६६५)
नैतदस्ति महाभागे जरामृत्युनिवर्तनम् ।
सर्वलोकेषु जानीहि मोक्षादन्यत्र भामिनि ॥१३-२४४-५१ (९१०६१)
न धनेन न राज्येन नोग्रेण तपसाऽपि वा ।
मरणं नातितरते विना मुक्त्या शरीरिणः ॥१३-२४४-५२ (९१०६२)
अश्वमेधसहस्राणि वाजपेयशतानि च ।
न तरन्ति जरामृत्यू निर्वाणाधिगमाद्विना ॥१३-२४४-५३ (९१०६३)
ऐस्वर्यं धनधान्यं च विद्यालाभस्तपस्तथा ।
रसायनप्रयोगाद्वै न तरन्ति जरान्तकौ ॥१३-२४४-५४ (९१०६४)
दानयज्ञतपःशीलरसायनविदोऽपि वा ।
स्वाध्यायनिरता वाऽपि न तरन्ति जरान्तकौ ॥१३-२४४-५५ (९१०६५)
देवदानवगन्धर्वकिन्नरोरगराक्षसान् ।
स्ववशे कुरुते कालो न कालस्यास्त्यगोचरः ॥१३-२४४-५६ (९१०६६)
न ह्यहानि निवर्तन्ते न मासा न पुनः क्षपाः ।
स्रेयं प्रपद्यते ध्यानमजस्रं ध्रुवमव्ययम् ॥१३-२४४-५७ (९१०६७)
स्रवन्ति न निवर्तन्ते स्रोतांसि सरितामिव ।
आयुरादाय मर्त्यानामहोरात्रेषु सन्ततम् ॥१३-२४४-५८ (९१०६८)
जीवितं सर्वभूतानामक्षयः क्षपयन्नसौ ।
आदित्यो ह्यस्तमभ्येति पुनः पुनरुदेति च ॥१३-२४४-५९ (९१०६९)
यस्यां रात्र्यां व्यतीतायामायुरल्पतरं भवेत् ।
गाधोदके मत्स्य इव किन्नु तस्य कुमारता ॥१३-२४४-६० (९१०७०)
मरणं हि शरीरस्य नियतं ध्रुवमेव च ।
तिष्ठन्नपि क्षणं सर्वः कालस्यैति वशं पुनः ॥१३-२४४-६१ (९१०७१)

न म्रियेरन्न जीर्येरन्यदि स्युः सर्वदेहिनः ।
न चानिष्टं प्रवर्तेत शोको वा प्राणिनं क्वचित् ॥१३-२४४-६२ (९१०७२)
अप्रमत्तः प्रमत्तेषु कालो भूतेषु तिष्ठति ।
अप्रमत्तस्य कालस्य क्षयं प्राप्तो न मुच्यते ॥१३-२४४-६३ (९१०७३)
श्वःकार्यमद्य कुर्वीत पूर्वाह्णे चापराह्णिकम् ।
कोपि तद्वेद यत्रासौ मृत्युना नाभिवीक्षितः ॥१३-२४४-६४ (९१०७४)
वर्षास्विदं करिष्यामि इदं ग्रीष्मवसन्तयोः ।
इति बालश्चिन्तयति अन्तरायं न बुध्यति ॥१३-२४४-६५ (९१०७५)
इदं मे स्यादिदं मे स्यादित्येवं मनसा नराः ।
अनवाप्तेषु कामेषु ह्रियन्ते मरणं प्रति ॥१३-२४४-६६ (९१०७६)
कालपाशेन बद्धानामहन्यहनि जीर्यताम् ।
का श्रद्धा प्राणिनां मार्गे विषमे भ्रमतां सदा ॥१३-२४४-६७ (९१०७७)
युवैव धर्मशीलः स्यादनिमित्तं हि जीवितम् ।
फलानामिव पक्वानां सदा हि पतनाद्भयम् ॥१३-२४४-६८ (९१०७८)
मर्त्यस्य किं धनैर्दारैः पुत्रैर्भोगैः प्रियैरपि ।
एकाह्ना सर्वमुत्सृज्य मृत्योस्तु वशमन्वियात्। १३-२४४-६९ (९१०७९)
जायामानांश्च सम्प्रेक्ष्य म्रियमाणांस्तथैव च ।
न संवेगोस्ति चेत्पुंसः काष्ठलोसमो हि सः ॥१३-२४४-७० (९१०८०)
विनाशिनो ह्यध्रुवजीवितस्य
किं बन्धुभिर्मित्रपरिग्रहैश्च ।
विहाय यद्गच्छति सर्वमेवं
क्षणेन गत्वा न निवर्तते च ॥ १३-२४४-७१ (९१०८१)
एवं चिन्तयतो नित्यं सर्वार्थानामनित्यताम् ।
उद्वेगो जायते शीघ्रं निर्वाणस्य पुरस्सरः ॥१३-२४४-७२ (९१०८२)
तेनोद्वेगेन चाप्यस्य विमर्शो जायते पुनः ।
विमर्शो नाम वैराग्यं सर्वद्रव्येषु जायते ॥१३-२४४-७३ (९१०८३)
वैराग्येण परां शान्तिं लभन्ते मानवाः शुभे ।
मोक्षस्योपनिषद्दिव्यं वैराग्यमिति निश्चितम् ॥१३-२४४-७४ (९१०८४)
एतत्ते कथितं देवि वैराग्योत्पादनं वचः ।
एवं सञ्चिन्त्य सञ्चिन्त्य मुच्यन्ते हि मुमुक्षवः ॥ ॥१३-२४४-७५ (९१०८५)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
चतुश्चत्वारिंशदधिकद्विशततमोऽध्यायः ॥२४४ ॥
Mahabharata - Anushaasana Parva - Chapter Footnotes

७-२४४-१८ दाराश्चोराश्चेति क पाठः ॥

॥ श्रीः ॥
१३.२४५. अध्यायः २४५

अथ दानधर्मपर्व ॥ १ ॥
Mahabharata - Anushaasana Parva - Chapter Topics
महेश्वरेण पार्वतींप्रति
साङ्ख्यज्ञानप्रतिपादनपूर्वकमव्यक्तादिचतुर्विंशतितत्वानामुत्पत्ति-
प्रकारादिकथनम् ॥ १ ॥
तथा सत्त्वादिगुणानां कार्यविशेषनिरूपणम् ॥ २ ॥
तथा भूतपञ्चकादिगुणप्रतिपादनम् ॥ ३ ॥

Mahabharata - Anushaasana Parva - Chapter Text

महेश्वर उवाच ।
साङ्ख्यज्ञानं प्रवक्ष्यामि यथावत्ते शुचिस्मिते ।
यज्ज्ञात्वा न पुनर्मर्त्यः संसारेषु प्रवर्तते ॥ १३-२४५-१ (९१०८६)
ज्ञानेनैव विमुक्तास्ते साङ्ख्याः संन्यासकोविदाः ।
शरीरं तु तपो घोरं साङ्ख्याः प्राहुर्निरर्थकम्। १३-२४५-२ (९१०८७)
पञ्चविंशतिकं ज्ञानं तेषां ज्ञानमिति स्मृतम् ।
मूलप्रकृतिरव्यक्तमव्यक्ताज्जायते महान् ॥ १३-२४५-३ (९१०८८)
महतोऽभूदहङ्कारस्तस्मात्तन्मात्रपञ्चकम् ।
इन्द्रियाणि दशैकं च तन्मात्रेभ्यो भवन्त्युत ॥ १३-२४५-४ (९१०८९)
तेभ्यो भूतानि पञ्चास्य शरीरं यैः प्रवर्तते ।
इति क्षेत्रस्य संक्षेपं चतुर्विंशतिरिष्यते ।
पञ्चविंशतित्याहुः पुरुषेणेह सङ्ख्यया ॥ १३-२४५-५ (९१०९०)
सत्वं रजस्तमश्चेति गुणाः प्रकृतिसम्भवाः ।
तैः सृजत्यखिलं लोकं प्रकृतिः स्वात्मकैर्गुणैः ॥ १३-२४५-६ (९१०९१)
इच्छा द्वेषः सुखं दुःखं संघातश्चेतना धृतिः ।
विकाराः प्रकृतेश्चैते वेदितव्या मनीषिभिः ॥ १३-२४५-७ (९१०९२)
लक्षणं चापि सर्वेषां विकल्पं चादितः पृथक् ।
विस्तरेणैव वक्ष्यामि तस्य व्याख्यामहं शृणु ॥ १३-२४५-८ (९१०९३)
नित्यमेकमणु व्यापि क्रियाहीनमहेतुकम् ।
अग्राह्यमिन्द्रियैः सर्वैरेतदव्यक्तलक्षणम् ॥ १३-२४५-९ (९१०९४)
अव्यक्तं प्रकृतिर्मूलं प्रधानं योनिरव्ययम् ।

अव्यक्तस्यैव नामानि शब्दैः पर्यायवाचकैः ॥१३-२४५-१० (९११०९५)
तत्सूक्ष्मत्वादनिर्देश्यं तत्सदित्यभिधीयते ।
तन्मूलं च जगत्सर्वं तन्मूला सृष्टिरिष्यते ॥१३-२४५-११ (९११०९६)
सत्वादयः प्रकृतिजा गुणास्तान्प्रब्रवीम्यहम् ॥ १३-२४५-१२ (९११०९७)
सुखं तुष्टिः प्रकाशश्च त्रयस्ते सात्विका गुणाः ।
रागद्वेषौ सुखं दुःखं स्तम्भश्च रजसो गुणाः ।
अप्रकाशो भयं मोहस्तन्द्री च तमसो गुणाः ॥ १३-२४५-१३ (९११०९८)
श्रद्धा प्रहर्षो विज्ञानमसंमोहो दया धृतिः ।
सत्वे प्रवृत्ते वर्धन्ते विपरीते विपर्ययः ॥१३-२४५-१४ (९११०९९)
कामक्रोधौ मनस्तापो लोभो मोहस्तथामृषा ।
प्रवृद्धे परिवर्धन्ते रजस्येतानि सर्वशः ॥१३-२४५-१५ (९१११००)
विषादः संशयो मोहस्तन्द्री निद्रा भयं तथा ।
तमस्येतानि वर्धन्ते प्रवृद्धे हेत्वहेतुकम् ॥१३-२४५-१६ (९१११०१)
एवमन्योन्यमेतानि वर्धन्ते च पुनःपुनः ।
हीयन्ते च तथा नित्यमभिभूतानि भूरिशः ॥१३-२४५-१७ (९१११०२)
तत्र यत्प्रीतिसंयुक्तं कायेन मनसाऽपि वा ।
वर्तते सात्विको भाव इत्युपेक्षेत तत्तथा ॥१३-२४५-१८ (९१११०३)
यदा सन्तापसंयुक्तं चित्तक्षोभकरं भवेत् ।
वर्तते रज इत्येव तदा तदभिचिन्तयेत् ॥१३-२४५-१९ (९१११०४)
यदा सम्मोहसंयुक्तं यद्विषादकरं भवेत् ।
अप्रतार्क्यमविज्ञेयं तमस्तदुपधारयेत् ॥१३-२४५-२० (९१११०५)
समासात्सात्विको धर्मः समासाद्राजसं धनम् ।
समासात्तामसः कामस्त्रिवर्गे त्रिगुणाः क्रमात् ॥१३-२४५-२१ (९१११०६)
ब्रह्मादिदेवसृष्टिर्या सात्विकीति प्रकीर्त्यते ।
राजसी मानवी सृष्टिस्तिर्यग्योनिस्तु तामिसी ॥१३-२४५-२२ (९१११०७)
ऊर्ध्वं गच्छन्ति सत्वस्था मध्ये तिष्ठन्ति राजसाः ।
जघन्यगुणवृतच्चित्तस्था अधो गच्छन्ति तामसाः ॥१३-२४५-२३ (९१११०८)
देवमानुषतिर्यक्षु यद्भूतं सचराचरम् ।
आदिप्रभृति संयुक्तं व्याप्तमेभिस्त्रिभिर्गुणैः ॥१३-२४५-२४ (९१११०९)
अतः परं प्रवक्ष्यामि महदादीनि लिङ्गतः ।
विज्ञानं च विवेकश्च महतो लक्षणं भवेत् ॥१३-२४५-२५ (९११११०)
महान्बुद्धिर्मतिः प्रज्ञा नामानि महतो विदुः ।
अहङ्कारः स विज्ञेयो लक्षणेन समासतः ॥१३-२४५-२६ (९१११११)
अहङ्कारेण भूतानां सर्गो नानाविधो भवेत् ।
अहङ्कारनिवृत्तिर्हि निर्वाणायोपपद्यते ॥१३-२४५-२७ (९१११२)
खं वायुरग्निः सलिलं पृथिवी चेति पञ्चमी ।

महाभूतानि भूतानां सर्वेषां प्रभवाप्ययौ ॥ १३-२४५-२८ (९१११३)
शब्दः श्रोत्रं तथा खानि त्रयमाकाशसम्भवम् ।
स्पर्शवत्प्राणिनां चेष्टा पवनस्य गुणाः स्मृताः ॥ १३-२४५-२९ (९१११४)
रूपं पाकोक्षिणी ज्योतिश्चत्वारस्तेजसो गुणाः ।
रसः स्नेहस्तथा जिह्वा शैत्यं च जलजा गुणाः ॥ १३-२४५-३० (९१११५)
गन्धो घ्राणं शरीरं च पृथिव्यास्ते गुणास्त्रयः ।
इति सर्वगुणा देवि विख्याताः पाञ्चभौतिकाः ॥ १३-२४५-३१ (९१११६)
गुणान्पूर्वस्यपूर्वस्य प्राप्नुवन्त्युत्तराणि तु ।
तस्मान्नैकगुणाश्चेह दृश्यन्ते बूतसृष्टयः ॥ १३-२४५-३२ (९१११७)
उपलभ्याप्सु ये गन्धं केचिद्ब्रूयुरनैपुणाः ।
अपां गन्धगुणं प्राज्ञा नेच्छन्ति कमलेक्षणे ॥ १३-२४५-३३ (९१११८)
तद्गन्धत्वमपां नास्ति पृथिव्या एव तद्गुणः ।
भूमिर्गन्धे रसे स्नेहो ज्योतिश्चक्षुषि संस्थितम् ।
प्राणापानाश्रयोः वायुः खेष्वाकाशः शरीरिणां  १३-२४५-३४ (९१११९)
केशास्थिनखदन्तत्वक्पाणिपादशिरांसि च ।
पृष्ठोदरकटिग्रीवाः सर्वं भूम्यात्मकं स्मृतम् ॥ १३-२४५-३५ (९११२०)
यत्किञ्चिदपि कायेऽस्मिन्धातुदोषमलाश्रितम् ।
तत्सर्वं भौतिकं विद्धि देहैरेवास्य स्वामिकम् ॥ १३-२४५-३६ (९११२१)
बुद्धीन्द्रियाणि कर्णत्वक्चक्षुर्जिह्वाऽथ नासिका ।
कर्मेन्द्रियाणि वाक्पाणिपादौ मेढ्रं गुदस्तथा ॥ १३-२४५-३७ (९११२२)
शब्दः स्पर्शश्च रूपं च रसो गन्धश्च पञ्चमः ।
बुद्धीन्द्रियार्थाञ्जानीयाद्भूतेभ्यस्त्वभिनिःसृतान् ॥ १३-२४५-३८ (९११२३)
वाक्यं क्रिया गतिः प्रीतिरुत्सर्गश्चेति पञ्चधा ।
कर्मेन्द्रियार्थाञ्जानीयात्ते च भूतोद्भवा मताः ॥ १३-२४५-३९ (९११२४)
इन्द्रियाणां तु सर्वेषामीश्वरं मन उच्यते ।
प्रार्थनालक्षणं तच्च इन्द्रियं तु मनः स्मृतम् ॥ १३-२४५-४० (९११२५)
नियुङ्क्ते च सदा तानि भूतानि मनसा सह ।
नियमे च विसर्गे च मनसः कारणं प्रभुः ॥ १३-२४५-४१ (९११२६)
इन्द्रियाणीन्द्रियार्थाश्च स्वभावश्चेतना धृतिः ।
भूताभूतविकारश्च शरीरमिति संस्मृतम् ॥ १३-२४५-४२ (९११२७)
शरीराच्च परो देही शरीरं च व्यपाश्रितः ।
शरीरिणः शरीरस्य सोऽन्तरं वेत्ति वै मुनिः ॥ १३-२४५-४३ (९११२८)
रसः स्पर्शस्च गन्धश्च रूपं शब्दविवर्जितम् ।
अशरीरं शरीरेषु दिदृक्षेत निरिन्द्रियम्। १३-२४५-४४ (९११२९)
अव्यक्तं सर्वदेहेषु मर्त्येष्वमरमाश्रितम् ।
यः पश्येत्परमात्मानं बन्धनैः स विमुच्यते ॥ १३-२४५-४५ (९११३०)

नैवायं चक्षुषां ग्राह्यो नापरैरिन्द्रियैरपि ।
मनसैव प्रदीप्तेन महानात्मा प्रदृश्यते ॥ १३-२४५-४६ (९११३१)
स हि सर्वेषु भूतेषु स्थावरेषु चरेषु च ।
वसत्येको महावीर्यो नानाभावसमन्वितः ॥ १३-२४५-४७ (९११३२)
नैव चोर्ध्वं न तिर्यक्च नाधस्तान्न कदाचन ।
इन्द्रियैरिव बुद्ध्या वा न दृश्येत कदाचन ॥ १३-२४५-४८ (९११३३)
नवद्वारं पुरं गत्वा स्थितोऽसौ नियतो वशी ।
ईश्वरः सर्वलोकेषु स्थावरस्य चरस्य च ॥ १३-२४५-४९ (९११३४)
तमेवाहुरणुभ्योऽणुं तु महद्भयो महत्तरम् ।
बहुधा सर्वभूतानि व्याप्य तिष्ठति शाश्वतम् ॥ १३-२४५-५० (९११३५)
क्षेत्रज्ञमेकतः कृत्वा सर्वं क्षेत्रमथैकतः ।
एवं स विमृशेज्ज्ञानी संयतः सततं हृदि ॥ १३-२४५-५१ (९११३६)
पुरुषः प्रकृतिस्थो हि भुङ्क्ते प्रकृतिजान्गुणान् ।
अकर्ता लेपको नित्यो मध्यस्थः सर्वकर्मणाम् ॥ १३-२४५-५२ (९११३७)
कार्यकारणकर्तृत्वे हेतुः प्रकृतिरुच्यते ।
पुरुषः सुखदुःखानां भोक्तृत्वे हेतुरुच्यते ॥ १३-२४५-५३ (९११३८)
अजय्योऽयमचिन्त्योऽयमव्यक्तोऽयं सनातनः ।
देही तेजोमयो देहि तिष्ठतीत्यपरे विदुः ॥ १३-२४५-५४ (९११३९)
ज्ञानमूष्मा च वायुश्च शरीरे जीवसंज्ञकः ।
इत्येते निश्चिता बुद्ध्या तत्रैते बुद्धिचिन्तकाः ॥ १३-२४५-५५ (९११४०)
अपरे सर्वलोकांश्च व्याप्य तिष्ठन्तमीश्वरम् ।
ब्रुवते केचिदत्रैव तिलतैलवदास्थितम् ॥ १३-२४५-५६ (९११४१)
अपरे नास्तिका मूढा हीनत्वात्स्थूललक्षणैः ।
नास्त्यात्मेति विनिश्चित्याप्रज्ञास्ते निरयालयाः ॥ १३-२४५-५७ (९११४२)
एवं नानाविधा नैव विमृशन्ति महेश्वरम् ॥ १३-२४५-५८ (९११४३)
उमोवाच। १३-२४५-५९क्ष् (७६६६)
भगवन्ब्राह्मणो लोके नित्यमक्षरमव्ययम् ।
अस्त्यात्मा सर्वभूतेषु हेतुस्तत्र सुदुर्गमः ॥ १३-२४५-५९ (९११४४)
महेश्वर उवाच। १३-२४५-६०क्ष् (७६६७)
ऋषिभिश्चापि देवैश्च व्यक्तमेष न दृश्यते ।
दृष्ट्वा तु तं महात्मानं पुनस्तु न निवर्तते ॥ १३-२४५-६० (९११४५)
तस्मात्तद्दर्शनादेव विन्दते परमां गतिम् ।
इति ते कथितो देवि साङ्ख्यधर्मः सनातनः ।
कपिलादिभिराचार्यैः सेवितः परमर्षिभिः ॥ ॥ १३-२४५-६१ (९११४६)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि

पञ्चचत्वारिंशदधिकद्विशततमोऽध्यायः ॥ २४५ ॥
Mahabharata - Anushaasana Parva - Chapter Footnotes

७-२४५-५९ अस्त्यात्मा सर्वदेहेष्विति ङ ।पाठः ॥

---

अनुससनपर्व-अध्यय२४६
॥ श्रीः ॥
१३.२४६. अध्यायः २४६

अथ दानधर्मपर्व ॥१ ॥
Mahabharata - Anushaasana Parva - Chapter Topics
महेश्वरेण पार्वतींप्रति योगनिरूपणपूर्वकं तत्फलप्रतिपादनम् ॥१ ॥

Mahabharata - Anushaasana Parva - Chapter Text

महेश्वर उवाच ।
साङ्ख्यज्ञाने नियुक्तानां यथावत्कीर्तितं मया ।
योगधर्मं पुनः कृत्स्नं कीर्तयिष्यामि ते शृणु ॥१३-२४६-१ (९११४७)
स च योगो द्विधा भिन्नो ब्रह्मिदेवर्षिसम्मतः ।
समानमुभयत्रापि वृत्तं शास्त्रप्रचोदितम् ॥१३-२४६-२ (९११४८)
च चाष्टगुणमैश्वर्यमधिकृत्य विधीयते ।
सायुज्यं सर्वदेवानां योगधर्मं परं श्रिताः ॥१३-२४६-३ (९११४९)
ज्ञानं सर्वस्य योगस्य मूलमित्यवधारय ।
व्रतोपवासनियमैस्तत्सर्वं चापि बृंहयेत् ॥१३-२४६-४ (९११५०)
ऐकात्म्यं बुद्धिमनसोरिन्द्रियाणां च सर्वशः ।
आत्मनो वेदितं प्राज्ञे ज्ञानमेतत्तु योगिनाम् ॥१३-२४६-५ (९११५१)
अर्चयेद्ब्राह्मणानग्निं देवतायतनानि च ।
वर्जयेदशिवं भावं सर्वसत्त्वमुपाश्रितः ॥१३-२४६-६ (९११५२)
दानमध्ययनं श्रुद्धा व्रतानि नियमास्तथा ।
सत्यमाहारशुद्धिश्च शौचमिन्द्रियनिग्रहः ।
एतैश्च वर्धते तेजः पापं चाप्यवधूयते ॥ १३-२४६-७ (९११५३)
निर्धूतपापस्तेजस्वी लघ्वाहारो जितेन्द्रियः ।
अमोधो निर्मलो दान्तः पश्चाद्योगं समाचरेत् ॥१३-२४६-८ (९११५४)
अवरुध्यात्मनः पूर्वं मत्स्यघात इवामिषम् ।
एकान्ते विजने देशे सर्वतः संवृते शुचौ ।
कल्पयेदासनं तत्र स्वास्तीर्णं मृदुभिः कुशैः ॥ १३-२४६-९ (९११५५)

उपविश्यासने तस्मिन्नृजुकायशिरोधरः ।
अव्यग्रः सुखमासीनः स्वाङ्गानि न विकम्पयेत् ।
सम्प्रेक्ष्य नासिकाग्रं स्वं दिशश्चानवलोकयन् ॥ १३-२४६-१० (९१९५६)
मनोऽवस्थापनं देवि योगस्योपनिषद्भवेत् ।
तस्मात्सर्वप्रयत्नेन मनोऽवस्थापयेत्सदा ॥१३-२४६-११ (९१९५७)
त्वक्छ्रोत्रं च ततो जिह्वा घ्राणं चक्षुश्च संहरेत् ।
पञ्चेन्द्रियाणि सन्धाय मनसि स्थापयेद्बुधः ॥१३-२४६-१२ (९११५८)
सर्वं चापोह्य सङ्कल्पमात्मनि स्थापयेन्मनः ।
यदैतान्यवतिष्ठन्ते मनःषष्ठानि चात्मनि ॥१३-२४६-१३ (९११५९)
प्राणापानौ तदा तस्य युगपत्तिष्ठतो वशे ।
प्राणे हि वशमापन्ने योगसिद्धिर्ध्रुवा भवेत् ॥१३-२४६-१४ (९११६०)
शरीरं चिन्तयेत्सर्वं विपाट्य च समीपतः ।
अन्तर्देहगतिं चापि प्राणानां परिचिन्तयेत् ॥१३-२४६-१५ (९११६१)
ततो मूर्धानमग्निं च शरीरं परिपालयेत् ।
प्राणो मूर्धनि च श्वासो वर्तमाने विचेष्टते ॥१३-२४६-१६ (९११६२)
सज्जस्तु सर्वभूतात्मा पुरुषः स सनातनः ।
मनो बुद्धिरहङ्कारो भूतानि विषयांश्च सः ॥१३-२४६-१७ (९११६३)
बस्तिर्मूलं गुदं चैव पावकं च समाश्रितः ।
वहन्मूत्रं पुरीषं च सदाऽपानः प्रवर्तते ॥१३-२४६-१८ (९११६४)
अतः प्रवृत्तिर्देहषु कर्म चापानसंयुतम् ।
उदीरयन्सर्वधातूनन्त ऊर्ध्वं प्रवर्तते ।
उदान इति तं विद्युरध्यात्मकुशला जनाः ॥ १३-२४६-१९ (९११६५)
सन्धौसन्धौ स निर्विष्टः सर्वचेष्टाप्रवर्तकः ।
शरीरेषु मनुष्याणां व्यान इत्युपदिश्यते ॥१३-२४६-२० (९११६६)
धातुष्वग्नौ च विततः समानोऽग्निः समीरणः ।
स एव सर्वचेष्टानामन्तकाले निवर्तकः ॥१३-२४६-२१ (९११६७)
प्राणानां सन्निपातेषु संसर्गाद्यः प्रजायते ।
ऊष्मा सोग्निरिति ज्ञेयः सोन्नं पचति देहिनाम् ॥१३-२४६-२२ (९११६८)
अपानप्राणयोर्मध्ये व्यानोदानावुपाश्रितौ ।
समन्वितः समानेन सम्यक्पचति पावकः ॥१३-२४६-२३ (९११६९)
शरीरमध्ये नाभिः स्यान्नाभ्यामग्निः प्रतिष्ठितः ।
अग्नौ प्राणाश्च संयुक्ताः प्राणेष्वात्मा व्यवस्थितः ॥१३-२४६-२४ (९११७०)
पक्वाशयस्त्वधो नाभेरूर्ध्वमामाशयस्तथा ।
नाभिर्मध्ये शरीरस्य सर्वप्राणाश्च संश्रिताः ॥१३-२४६-२५ (९११७१)
स्थिताः प्राणादयः सर्वे तिर्यगूर्ध्वमधश्चराः ।
वहन्त्यन्नरसान्नाड्यो दशप्राणाग्निचोदिताः ॥१३-२४६-२६ (९११७२)

योगिनामेष मार्गस्तु पञ्चस्वेतेषु तिष्ठति ।
जितश्रमः समासीनो मूर्धन्यात्मानमादधेत् ॥ १३-२४६-२७ (९११७३)
मूर्धन्यात्मानमाधाय भ्रुवोर्मध्ये मनस्तथा ।
सन्निरुध्य ततः प्राणानात्मानं चिन्तयेत्परम् ॥ १३-२४६-२८ (९११७४)
प्राणे त्वपानं युञ्जीत प्राणांश्चापानकर्मणि ।
प्राणापानगती रुद्ध्वा प्राणायामपरो भवेत् ॥ १३-२४६-२९ (९११७५)
एवमन्तः प्रयुञ्जीत पञ्च प्राणान्परस्परम् ।
विजने सम्मिताहारो मुनस्तूष्णीं निरुच्छ्वसन् ॥ १३-२४६-३० (९११७६)
अश्रान्तश्चिन्तयेद्योगी उत्थाय च पुनःपुनः ।
तिष्ठन्गाच्छन्स्वपंस्चापि युञ्जीतैवमतन्द्रितः ॥ १३-२४६-३१ (९११७७)
एवं नियुञ्जतस्तस्य योगिनो युक्तचेतसः ।
प्रसीदति मनः क्षिप्रं प्रसन्ने दृश्यते परम् ॥ १३-२४६-३२ (९११७८)
विधूम इव दीप्तोऽग्निरादित्य इव रश्मिवान् ।
वैद्युतोऽग्निरिवाकाशे पुरुषो दृश्यतेऽव्ययः ॥ १३-२४६-३३ (९११७९)
दृष्ट्वा तदात्मनो ज्योतिरैश्वर्याष्टगुणैर्युतः ।
प्राप्नोति परमं स्थानं स्पृहणीयं सुरैरपि ॥ १३-२४६-३४ (९११८०)
इमान्योगस्य दोषांश्च दशैव परिचक्षते ।
दोषैर्विघ्ने वरारोहे योगिनां कविभिः स्मृताः ॥ १३-२४६-३५ (९११८१)
कामः क्रोधो भयं स्वप्नः स्नेहमत्यशनं तथा ।
वैचित्यं व्याधिरालस्यं लोभं च दशमं स्मृतम् ॥ १३-२४६-३६ (९११८२)
एतैस्तेषां भवेद्विघ्नो दशभिर्देवकारितैः ।
तस्मादेतानपास्यादौ युञ्जीत च परं मनः ॥ १३-२४६-३७ (९११८३)
इमानपि गुणानष्टौ योगस्य परिचक्षते ।
गुणैस्तैरष्टभिर्द्रव्यमैश्वर्यमधिगम्यते ॥ १३-२४६-३८ (९११८४)
अणिमा महिमा चैव प्राप्तिः प्राकाम्यमेव हि ।
ईशित्वं च वशित्वं च यत्र कामावसायिता ॥ १३-२४६-३९ (९११८५)
एतानष्टौ गुणान्प्राप्य कथञ्चिद्योगिनां वराः ।
ईशाः सर्वस्य लोकस्य देवानप्यतिशेरते ॥ १३-२४६-४० (९११८६)
योगोस्ति नैवात्यशिनो न चैकान्तमनश्नतः ।
न चातिस्वप्नशीलस्य नातिजागतरस्तथा ॥ १३-२४६-४१ (९११८७)
युक्ताहारविहारस्य युक्तचेष्टस्य कर्मसु ।
युक्तस्वप्नावबोधस्य योगो भवति दुःखहा ॥ १३-२४६-४२ (९११८८)
अनेनैव विधानेन सायुज्यं तत्प्रकल्प्यते ।
सायुज्यं देवसात्कृत्वा प्रयुञ्जीतात्मभक्तितः ॥ १३-२४६-४३ (९११८९)
अनन्यमनसा देवि नित्यं तद्गतचेतसा ।
सायुज्यं प्राप्यते देवैर्यत्नेन महता चिरात् ॥ १३-२४६-४४ (९११९०)

हविर्भिरर्चनैर्होमैः प्रणामैर्नित्यचिन्तया ।
अर्चयित्वा यथाशक्ति स्वकं देशं विशन्ति ते ॥ १३-२४६-४५ (९१११९१)
सायुज्यानां विशिष्टं च मामकं वैष्णवं तथा ।
मां प्राप्य न निवर्तन्ते विष्णु वा शुभलोचने ॥ १३-२४६-४६ (९१११९२)
इति ते कथितो देवि योगधर्मः सनातनः ।
न शक्यः प्रष्टुमन्येन योगधर्मस्त्वया विना ॥ ॥ १३-२४६-४७ (९१११९३)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
षट्चत्वारिंशदधिकद्विशततमोऽध्यायः ॥ २४६ ॥
Mahabharata - Anushaasana Parva - Chapter Footnotes

७-२४६-१५ निपात्य चेति ङ पाठः ॥

---

अनुससनपर्व-अध्यय२४७
॥ श्रीः ॥
१३.२४७. अध्यायः २४७

अथ दानधर्मपर्व ॥ १ ॥
Mahabharata - Anushaasana Parva - Chapter Topics
महेश्वरेण पार्वतींप्रति स्वमाहात्म्यकथनपूर्वकं दीक्षया
शिवलिङ्गार्चनाफलकथनम् ॥ १ ॥

Mahabharata - Anushaasana Parva - Chapter Text

उमोवाच ।
त्रियक्ष त्रिदशश्रेष्ठ त्र्यम्बक त्रिदशाधिप ।
त्रिपुरान्तक कामाङ्गहर त्रिपथगाधर ॥ १३-२४७-१ (९१११९४)
दक्षयज्ञप्रशमन सूलपाणेऽरिसूदन ।
नमस्ते लोकपालेश लोकपालवरप्रद ॥ १३-२४७-२ (९१११९५)
नैकशाखमपर्यन्तमध्यात्मज्ञानमुत्तमम् ।
अप्रतर्क्यमविज्ञेयं साङ्ख्ययोगसमन्वितम् ॥ १३-२४७-३ (९१११९६)
भवता परिपृष्टेन शृण्वन्त्या मम भाषितम् ।
इदानीं श्रोतुमिच्छामि सायुज्यं त्वद्गतं विभो ॥ १३-२४७-४ (९१११९७)
कथं परिचरन्त्येते भक्तास्त्वां परमेष्ठिनम् ।
आचारः कीदृशस्तेषां केन तुष्टो भवेद्भवान् ।
वर्ण्यमानं त्वया साक्षात्प्रीणयत्यधिकं हि मा ॥ १३-२४७-५ (९१११९८)

महेश्वर उवाच। १३-२४७-६क्ष् (७६६८)
हन्त ते कथयिष्यामि मम सायुज्यमद्भुतम् ।
येन ते न निवर्तन्ते युक्ताः परमयोगिनः ॥ १३-२४७-६ (९११९९)
अव्यक्तोऽहमचिन्त्योऽहं पूर्वैरपि मुमुक्षुभिः ।
साङ्ख्ययोगौ मया सृष्टौ सर्वं चापि चराचरम् ॥ १३-२४७-७ (९१२००)
अर्चनीयोऽहमीशोऽहमव्ययोऽहं सनातनः ।
अहं प्रसन्नो भक्तानां ददाम्यमरतामपि ॥ १३-२४७-८ (९१२०१)
न मां विदुः सुरगणा मुनयश्च तपोधनाः ।
त्वत्प्रियार्थमहं देवि मद्विभूतिं ब्रवीमि ते ॥ १३-२४७-९ (९१२०२)
आश्रमेभ्यश्चतुर्भ्योऽहं चतुरो ब्राह्मणाञ्शुभे ।
मद्भक्तान्निर्मलान्पुण्यान्समानीय तपस्विनः ॥ १३-२४७-१० (९१२०३)
व्याचख्येऽहं तथा देवि योगं पाशुपतं महत् ।
गृहीतं तच्च तैः सर्वं मुखाच्च मम दक्षिणात् ॥ १३-२४७-११ (९१२०४)
श्रुत्वा तत्त्रिषु लोकेषु स्थापितं चापि तैः पुनः ।
इदानीं च त्वया पृष्टो वदाम्येकमनाः शृणु ॥ १३-२४७-१२ (९१२०५)
अहं पसुपतिर्नाम मद्भक्ता ये च मानवाः ।
सर्वे पाशुपता ज्ञेया भस्मदिग्धतनूरुहाः ॥ १३-२४७-१३ (९१२०६)
रक्षार्थं मङ्गलार्थं न पवित्रार्थं च भामिनि ।
लिङ्गार्थं चैव भक्तानां भस्म दत्तं मया पुरा ॥ १३-२४७-१४ (९१२०७)
तेन संदिग्धसर्वाङ्गा भस्मना ब्रह्मचारिणः ।
जटिला मुण्डिता वाऽपि नानाकारशिखण्डिनः ॥ १३-२४७-१५ (९१२०८)
विकृताः पिङ्गलाभिस्च नग्ना नानाप्रकारिणः ।
भैक्षं चरन्तः सर्वत्र निःस्पृहा निष्परिग्रहाः ॥ १३-२४७-१६ (९१२०९)
मृत्पात्रहस्ता मद्भक्ता मन्निवेशितबुद्धयः ।
चरन्तो निखिलं लोकं मम हर्षविवर्धनाः ॥ १३-२४७-१७ (९१२१०)
मम पाशुपतं दिव्यं योगशास्त्रमनुत्तमम् ।
सूक्ष्मं सर्वेषु लोकेषु विमृशन्तश्चरन्ति ते ॥ १३-२४७-१८ (९१२११)
एवं नित्याभियुक्तानां मद्भक्तानां तपस्विनाम् ।
उपायं चिन्तयाम्याशु येन मामुपयान्ति ते ॥ १३-२४७-१९ (९१२१२)
स्थापितं त्रिषु लोकेषु शिवलिङ्गं मया मम ।
नमस्कारेण वा तस्य मुच्यन्ते सर्वकिल्बिषैः ॥ १३-२४७-२० (९१२१३)
इष्टं दत्तमधीतं च यज्ञाश्च बहुदक्षिणाः ।
शिवलिङ्गप्रणामस्य कलां नार्हन्ति षोडशीम् ॥ १३-२४७-२१ (९१२१४)
अर्चया शिवलिङ्गस्य परितुष्याम्यहं प्रिये ।
शिवलिङ्गार्चनायां तु विदानमपि मे शृणु ॥ १३-२४७-२२ (९१२१५)
गोक्षीरनवनीताभ्यामर्चयेद्यः शिवं मम ।

इष्टस्य हयमेधस्य यत्फलं तत्फलं भवेत् ॥ १३-२४७-२३ (९१२१६)
घृतमण्डेन यो नित्यमर्चयेद्यः शिवं मम ।
स फलं प्राप्नुयान्मर्त्यो ब्राह्मणस्याग्निहोत्रिणः ॥ १३-२४७-२४ (९१२१७)
केवलेनापि तोयेन स्नापयेद्यः शिवं मम ।
स चापि लभते पुण्यं प्रियं च लभते नरः ॥ १३-२४७-२५ (९१२१८)
सघृतं गुग्गुलु सम्यग्धूपयेद्यः शिवान्तिके ।
गोसवस्य तु यज्ञस्य यत्फलं तस्य तद्भवेत् ॥ १३-२४७-२६ (९१२१९)
यस्तु गुग्गुलपिण्डेन केवलेनापि धूपयेत् ।
तस्य रुक्मप्रधानस्य यत्फलं तस्य तद्भवेत् ॥ १३-२४७-२७ (९१२२०)
यस्तु नानाविधैः पुष्पैर्मम लिङ्गं समर्चयेत् ।
स हि धेनुसहस्रस्य दत्तस्य फलमाप्नुयात्। १३-२४७-२८ (९१२२१)
यस्तु देशान्तरं गत्वा शिवलिङ्गं समर्चयेत् ।
तस्मात्सर्वमनुष्येषु नास्ति मे प्रियकृत्तमः ॥ १३-२४७-२९ (९१२२२)
एवं नानाविधैर्द्रव्यैः शिवलिङ्गं समर्चयेत् ।
मत्समानो मनुष्येषु न पुनर्जायते नरः ॥ १३-२४७-३० (९१२२३)
अर्चनाभिर्नमस्कारैरुपहारैः स्तवैरपि ।
भक्तो मामर्चयेन्नित्यं शिवलिङ्गेष्वतन्द्रितः ॥ १३-२४७-३१ (९१२२४)
पलाशबिल्वपत्राणि राजवृक्षस्रजं तथा ।
अर्कपुष्पाणि मेध्यानि मत्प्रियाणि विशेषतः ॥ १३-२४७-३२ (९१२२५)
फलं वा यदि वा शाकं पुष्पं वा यदि वा जलम् ।
दत्तं सम्प्रीणयेद्देवि भक्तैर्मद्गतमानसैः ॥ १३-२४७-३३ (९१२२६)
ममाभिपरितुष्टस्य नास्ति लोकेषु दुर्लभम् ।
तस्मात्ते सततं भक्ता मामेवाभ्यर्चयन्त्युत ॥ १३-२४७-३४ (९१२२७)
मद्भक्ता न विनश्यन्ति मद्भक्ता वीतकल्मषाः ।
मद्भक्ताः सर्वलोकेषु पूजनीया विशेषतः ॥ १३-२४७-३५ (९१२२८)
मद्द्वेषिणश्चि ये मर्त्या मद्भक्तद्वेषिणश्च वा ।
यान्ति ते नरकं घोरमिष्ट्वा क्रतुशतैरपि ॥ १३-२४७-३६ (९१२२९)
एतत्ते सर्वमाख्यातं योगं पाशुपतं महत् ।
मद्भक्तैर्मनुजैर्देवि श्राव्यमेतद्दिनेदिने ॥ १३-२४७-३७ (९१२३०)
शृणुयाद्यः पठेद्वाऽपि ममेदं धर्मनिश्चयम् ।
स्वर्गं कीर्तिं धनं धान्यं स लभेत नरोत्तमः ॥ ॥ १३-२४७-३८ (९१२३१)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
सप्तचत्वारिंशदधिकद्विशततमोऽध्यायः ॥ २४७ ॥

---

॥ श्रीः ॥

१३.२४८. अध्यायः २४८

अथ दानधर्मपर्व ॥ १ ॥

Mahabharata - Anushaasana Parva - Chapter Topics

महेश्वरेण पार्वतींप्रति सश्लाघं स्त्रीधर्मकथनचोदना ॥ १ ॥
पार्वत्या गङ्गादिमहानदीषु तन्निवेदनम् ॥ २ ॥
गङ्गया तदनुमोदनपूर्वकं भगवति तत्कथनाभ्यनुज्ञानम् ॥ ३ ॥

Mahabharata - Anushaasana Parva - Chapter Text

नारद उवाच ।
एवमुक्त्वा महादेवः श्रोतुकामः स्वयं प्रभुः ।
अनुकूलां प्रियां भार्यां पार्श्वस्तामभ्यभाषत ॥ १३-२४८-१ (९१२३२)
महेश्वर उवाच। १३-२४८-२क्ष् (७६६९)
परावरज्ञे धर्माणां तपोवननिवासिनाम् ।
दीक्षाविधिदमोपेते सततं व्रतचारिणि ।
पृच्छामि त्वां वरारोहे पृष्टा वद ममेप्सितम् ॥ १३-२४८-२ (९१२३३)
सावित्री ब्रह्मणः पत्नी कौशिकस्य शची शुभा ।
लक्ष्मीर्विष्णोः प्रिया भार्या धृतिर्भार्या यमस्य तु ॥ १३-२४८-३ (९१२३४)
मार्कण्डेयस्य धूमोर्णा ऋद्धिर्वैश्रवणस्य तु ।
वरुणस्य प्रिया गौरी सवितुश्च सुवर्चला ॥ १३-२४८-४ (९१२३५)
रोहिणी शशिनो भार्या स्वाहा चाग्नेरनिन्दिता ।
काश्यपस्यादितिश्चैव वसिष्ठस्याप्यरुन्धती ॥ १३-२४८-५ (९१२३६)
एताश्चान्याश्च देव्यस्तु सर्वास्ताः पतिदेवताः ।
श्रूयन्ते लोकविख्यातास्त्वया चैव सहोषिताः ॥ १३-२४८-६ (९१२३७)
ताभिश्च पूजिताऽपि त्वमनुवृत्त्यनुभाषणैः ।
तस्मात्तु परिपृच्छामि धर्मज्ञे लोकसम्मते ॥ १३-२४८-७ (९१२३८)
स्त्रीधर्मं श्रोतुमिच्छामि त्वयैव समुदाहृतम् ।
सध्रमचारिणी मे त्वं लोकसन्धारिणी तथा ॥ १३-२४८-८ (९१२३९)
अयं हि स्त्रीगणस्त्वां तु अनुयाति न मुञ्चति ।
त्वत्प्रसादाद्धितं श्रोतुं स्त्रीवृत्तं शुभलक्षणम् ॥ १३-२४८-९ (९१२४०)
त्वया चोक्तं विशेषेण गुणभूतं हि तिष्ठति ।
स्त्रिय एव सदा लोके स्त्रीगणस्य गतिः प्रिये ॥ १३-२४८-१० (९१२४१)
शश्वद्गौर्गोषु गच्छेत नान्यत्र रमते नरः ।
एवं लोकगतिर्देवि आदिप्रभृति वर्तते ॥ १३-२४८-११ (९१२४२)

प्रमदोक्तं तु यत्किञ्चित्तत्स्त्रीषु बहुमन्यते ।
न तथा मन्यते स्त्रीषु पुरुषोक्तमनिन्दिते ॥१३-२४८-१२ (९१२४३)
त्वयैष विदितो ह्यर्थः स्त्रीणां धर्मः सनातनः ।
तस्मात्त्वां प्रति पृच्छामि पृष्टा वद ममेप्सितम् ॥१३-२४८-१३ (९१२४४)
नारद उवाच।१३-२४८-१४क्ष् (७६७०)
एवमुक्ता तदा देवी महादेवेन शोभना ।
सोद्विगा च सलज्जा च नावदत्तत्र किञ्चन ।
पुनः पुनस्तदा देवी देवः किमिति चाब्रवीत् ॥ १३-२४८-१४ (९१२४५)
उमोवाच।१३-२४८-१५क्ष् (७६७१)
भगवन्देवदेवेश सुरासुरनमस्कृत ।
त्वदन्तिके मया वक्तुं स्त्रीणां धर्मः कथं भवेत् ॥ महेश्वर उवाच।
१३-२४८-१५ (९१२४६)
मन्नियोगादवश्यं तु वक्तव्यं तु मम प्रिये ॥ १३-२४८-१६ (९१२४७)
उमोवाच।१३-२४८-१७क्ष् (७६७२)
इमा नद्यो महादेव सर्वतीर्थोदकान्विताः ।
उपस्पर्शनहेतोस्त्वां न त्यजन्ति समीपतः ॥१३-२४८-१७ (९१२४८)
एताभिः सह सम्मन्त्र्य प्रवक्ष्यामि तवेप्सितम् ।
अयुक्तं सत्सु तन्त्रेषु ताऩतिक्रम्य भाषितुम् ॥१३-२४८-१८ (९१२४९)
मया सम्मानिताश्चैव भविष्यन्ति सरिद्वराः ॥ १३-२४८-१९ (९१२५०)
नारद उवाच।१३-२४८-२०क्ष् (७६७३)
इति मत्वा महादेवी नदीर्देवीः समाह्वयत् ।
विपाशां च वितस्त्यां च चन्द्रभागां सरस्वतीम् ॥१३-२४८-२० (९१२५१)
शतद्रुं देविक्तां सिन्धुं गौतमीं कौशिकीं तथा ।
यमुनां नर्मदां चैव कावेरीमथ निम्नगाम् ॥१३-२४८-२१ (९१२५२)
तथा देवनदीं गङ्गां श्रेष्ठां त्रिपथगां शुभाम् ।
सर्वतीर्थोदकवहां सर्वपापविनाशिनीम् ।
एता नदीः समाहूय समुद्वीक्ष्येदमब्रवीत् ॥ १३-२४८-२२ (९१२५३)
उमोवाच।१३-२४८-२३क्ष् (७६७४)
हे पुण्याः सरितः श्रेष्ठाः सर्वपापविनाशिकाः ।
ज्ञानविज्ञानसम्पन्नाः शृणुध्वं वचनं मम ॥१३-२४८-२३ (९१२५४)
अयं भगवता प्रश्न उक्तः स्त्रीधर्ममाश्रितः ।
न चैकया मया साद्यं तस्माद्वस्त्वानयाम्यहम् ॥१३-२४८-२४ (९१२५५)
युष्माभिस्तद्विचार्यैवं वक्तुमिच्छामि शोभनाः ।
तत्कथं देवदेवाय वाच्यः स्त्रीधर्म उत्तमः ॥१३-२४८-२५ (९१२५६)
नारद उवाच।१३-२४८-२६क्ष् (७६७५)
इति पृष्टास्तथा देव्या महानद्यश्चकम्पिरे ।

तासां श्रेष्ठतमा गङ्गा वचनं त्ववेमब्रवीत् ॥१३-२४८-२६ (९१२५७)
धन्याश्चानुगृहीताः स्म अनेन वचनेन ते ।
या त्वं सुरासुरैर्मान्या नदीराद्रियसेऽनघे ॥१३-२४८-२७ (९१२५८)
तवैवार्हति कल्याणि एवं सान्त्वप्रसादनम् ।
अशक्यमपि ये मूर्खाः स्वात्मसम्भावनायुताः ।
वाक्यं वदन्ति संसत्सु स्वयमेव यथेष्टतः ॥ १३-२४८-२८ (९१२५९)
शक्तो यश्चानहंवादी सुदुर्लभतमो मतः ॥ १३-२४८-२९ (९१२६०)
त्वं हि शक्ता सती देवी वक्तुं प्रश्नमशेषतः ।
व्याहर्तुं नेच्छसि स्त्रीत्वात्संपूजयति नस्तथा ॥१३-२४८-३० (९१२६१)
त्वं हि देवि महादेवी ऊहापोहविशारदा ।
दिव्यज्ञानयुता देवि दिव्यज्ञानेन्धनैधिता ॥१३-२४८-३१ (९१२६२)
त्वमेवार्हसि तद्वक्तुं स्त्रीणां वृत्तं शुभाशुभम् ।
याचामहे वयं श्रोतुममृतं त्वन्मुखोद्गतम् ।
कुरु देवप्रियं देवि वद स्त्रीधर्ममुत्तमम् ॥ १३-२४८-३२ (९१२६३)
नारद उवाच। १३-२४८-३३क्ष् (७६७६)
एवं प्रसादिता देवी गङ्गया लोकपूज्यया ।
प्राह धर्ममशेषेण स्त्रीधर्मं सुरसुन्दरी ॥१३-२४८-३३ (९१२६४)
उमोवाच। १३-२४८-३४क्ष् (७६७७)
भगवन्देवदेवेश सुरेश्वर महेश्वर ।
त्वत्प्रसादात्सुरश्रेष्ठ तवैव प्रियकाम्यया ।
तमहं कीर्तयिष्यामि यथावच्छ्रोतुमिच्छसि ॥ ॥ १३-२४८-३४ (९१२६५)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
अष्टचत्वारिंशदधिकद्विशततमोऽध्यायः ॥२४८ ॥

---

अनुससनपर्व-अध्यय२४९
॥ श्रीः ॥
१३.२४९. अध्यायः २४९

अथ दानधर्मपर्व ॥१ ॥
Mahabharata - Anushaasana Parva - Chapter Topics
पार्वत्या परमेश्वरंप्रति देवगन्धर्वादियोषितां मध्ये
स्त्रीधर्मकथनम् ॥१ ॥

Mahabharata - Anushaasana Parva - Chapter Text

नारद उवाच ।
एवं ब्रुवन्त्यां स्त्रीधर्मं देव्यां देवस्य शासनात् ।
ऋषिगन्धर्वयक्षाणां योषितश्चाप्सरोगणाः ॥१३-२४९-१ (९१२६६)
नागभूतस्त्रियश्चैव नद्यश्चैव समागताः ।
श्रुतुकामाः परं वाक्यं सर्वाः पर्यवतस्थिरे ॥१३-२४९-२ (९१२६७)
उमादेवी मुदा युक्ता पुज्यमानाऽङ्गनागणैः ।
आनृशंस्यपरा देवी सततं स्त्रीगणं प्रति ॥१३-२४९-३ (९१२६८)
स्त्रीगणस्य हितार्थाय भवप्रियचिकीर्षया ।
वक्तुं वचनमारेभे स्त्रीणां धर्माश्रयान्वितम् ॥१३-२४९-४ (९१२६९)
उमोवाच। १३-२४९-५क्ष् (७६७८)
भगवन्सर्वभूतेश श्रूयतां वचनं मम ।
ऋतुप्राप्ता सुशुद्दा या कन्या सेत्यभिधीयते ॥१३-२४९-५ (९१२७०)
तां तु कन्यां पिता माता भ्राता मातुल एव वा ।
पितृव्यश्चैव पञ्चते दातुं प्रभवतां गताः ॥१३-२४९-६ (९१२७१)
विवाहाश्च तथा पञ्च तासां धर्मार्थकारणात् ।
कामतश्च मिथो दानमितरेतरकाम्यया ॥१३-२४९-७ (९१२७२)
दत्ता यस्य भवेद्भार्या एतेषां येन केन चित् ।
दातारः सुविमृश्यैव दातुमर्हन्ति नान्यथा ॥१३-२४९-८ (९१२७३)
उत्तमानां तु वर्णानां मन्त्रवत्पाणिसङ्ग्रहः ।
विवाहकारणं चाहुः शूद्राणां सम्प्रयोगतः ॥१३-२४९-९ (९१२७४)
यदा दत्ता भवेत्कन्या तस्माद्भार्यार्थिने स्वकैः ।
तदाप्रभृति सा नारी दशरात्रं विलज्जया ।
मनसा कर्मणा वाचा अनुकूला च सा भवेत् ॥ १३-२४९-१० (९१२७५)
इति भर्तृव्रतं कुर्यात्पतिमुद्दिश्य शोभना ।
तदाप्रभृति सा नारी न कुर्यात्पत्युरप्रियम् ॥१३-२४९-११ (९१२७६)
यद्यदिच्छति वै भर्ता ध्रमकामार्थकारणात् ।
तथैवानुप्रिया भूत्वा तथैवोपचरेत्पतिम् ।
पतिव्रतात्वं नारीणामेतदेव सनातनम् ॥ १३-२४९-१२ (९१२७७)
तादृशी सा भवेन्नित्यं यादृशस्तु भवेत्पतिः ।
शुभाशुभसमाचार एतद्वृत्तं समासतः ॥१३-२४९-१३ (९१२७८)
दैवतं सततं साध्वी भर्तारं या तु पश्यति ।
दैवमेव भवेत्तस्याः पतिरित्यवगम्यते ॥१३-२४९-१४ (९१२७९)
एतस्मिन्कारणं देव पौराणी श्रूयते श्रुतिः ।
कथयामि प्रसादात्ते शृणु देव समासतः ॥१३-२४९-१५ (९१२८०)
कस्य चित्त्वथ विप्रस्य भार्ये द्वे हि बभूवतुः ।
तयोरेका धर्मकामा देवानुद्दिश्य भक्तितः ॥१३-२४९-१६ (९१२८१)

भर्तारमवमत्यैव देवतासु समाहिता ।
चकार विपुलं धर्मं पूजयानाऽर्चयाऽन्वितम् ॥ १३-२४९-१७ (९१२८२)
अपरा धर्मकामा च पतिमुद्दिश्य शोभना ।
भर्तारं दैवतं कृत्वा चकार किल तत्प्रियम् ॥ १३-२४९-१८ (९१२८३)
एवं विवर्तमाने तु युगपन्मरणेऽध्वनि ।
गते किल महादेव तत्रैका या पतिव्रता ।
देवप्रियायां तिष्ठन्त्यां पुण्यलोकं जगाम सा ॥ १३-२४९-१९ (९१२८४)
देवप्रिया च तिष्ठन्ती विललाप सुदुःखिता ।
तां यमो लोकपालस्तु बभाषे पुष्कलं वचः ॥ १३-२४९-२० (९१२८५)
मा शुचस्त्वं निवर्तस्व न लोकाः सन्ति तेऽनघे ।
स्वधर्मविमुखा सा त्वं तस्माल्लोका न सन्ति ते ॥ १३-२४९-२१ (९१२८६)
देवता हि पतिर्नार्याः स्थापिता सर्वदैवतैः ।
अवमत्य शुभे तत्त्वं कथं लोकान्गमिष्यसि ॥ १३-२४९-२२ (९१२८७)
मोहेनि त्वं वरारोहे न जानीषे स्वदैवतम् ।
पतिमत्या स्त्रिया कार्यो धर्मः पत्यर्पणस्त्विति ॥ १३-२४९-२३ (९१२८८)
तस्मात्त्वं हि निवर्तस्व कुरु पत्याश्रितं हितम् ।
तदा गन्तासि लोकांस्तान्यान्गच्छन्ति पतिव्रताः ।
नान्यथा शक्यते प्राप्तुं पतीनां लोकमुत्तमम् ॥ १३-२४९-२४ (९१२८९)
यमेनैवंविधं चोक्ता निवृत्ता पुनरेव सा ।
बभूव पतिमालम्ब्य पतिप्रियपरायणा ॥ १३-२४९-२५ (९१२९०)
एवमेतन्महगादेव दैवतं हि स्त्रियाः पतिः ।
तस्मात्पतिपरा भूत्वा पतीनुपचरेदिति ॥ ॥ १३-२४९-२६ (९१२९१)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
एकोनपञ्चाशदधिकद्विशततमोऽध्यायः ॥ २४९ ॥

---

अनुससनपर्व-अध्यय२५०
॥ श्रीः ॥
१३.२५०. अध्यायः २५०

अथ दानधर्मपर्व ॥ १ ॥
Mahabharata - Anushaasana Parva - Chapter Topics
पार्वत्या महेश्वरंप्रति स्त्रीधर्मकथनम् ॥ १ ॥
नारदेन कृष्णंप्रति उमामहेश्वरसंवादानुवादोपसम्हारः ॥ २ ॥

Mahabharata - Anushaasana Parva - Chapter Text

उमोवाच ।
पतिमत्या दिवारात्रं वृत्तान्तं श्रूयतां शुभम् ।
पत्युः पूर्वं समुत्थाय प्रातःकर्म समाचरेत् ॥ १३-२५०-१ (९१२९२)
पत्युर्भावं विदित्वा तु पश्चात्सम्बोधयेत्तु तम् ।
नित्यं पौर्वाह्णिकं कार्यं स्वयं कुर्याद्यथाविधि ॥ १३-२५०-२ (९१२९३)
निवेद्य च तथाऽऽहारं यथा सम्पद्यतामिति ।
तथैव कुर्यात्तत्सर्वं यथा पत्युः प्रियं भवेत् ॥ १३-२५०-३ (९१२९४)
यथा भर्ता तथा नारी गुरूणां प्रतिपद्यते ॥ १३-२५०-४ (९१२९५)
शुश्रूषापोषणविधौ पतिप्रियचिकीर्षया ।
भर्तुर्निष्क्रमणे कार्यं संस्मरेदप्रमादतः ॥ १३-२५०-५ (९१२९६)
आगतं तु पतिं दृष्ट्वा सहसा परिचारणम् ।
स्वयं कुर्वीत सम्प्रीत्या कायश्रमहरं परम् ॥ १३-२५०-६ (९१२९७)
पाद्यसनाभ्यां शयनैर्वाक्यैश्च हृदयप्रियैः ।
अतिथीनामागमेन प्रीतियुक्ता सदा भवेत् ॥ १३-२५०-७ (९१२९८)
कर्मणा वचनेनापि तोषयेदतिथीन्सदा ।
मङ्गलं गृहशौचं च सर्वोपकरणानि च ॥ १३-२५०-८ (९१२९९)
सर्वकालमवेक्षेत कारयन्ती च कुर्वती ।
धर्मकार्ये तु सम्प्राप्ते तद्वद्धर्मपरा भवेत् ॥ १३-२५०-९ (९१३००)
अर्थकार्ये पुनर्भर्तुः प्रमादालस्यवर्जिता ।
सा यत्नं परमं कुर्यात्तस्यि साहाय्यकारणात् ॥ १३-२५०-१० (९१३०१)
धुरन्धरा भवेद्भर्तुः साध्वी धर्मार्थयोः सदा ।
विहारकाले वै भर्तुर्ज्ञात्वा भावं हृदि स्थितम् ॥ १३-२५०-११ (९१३०२)
अलङ्कृत्य यथायोगं मन्दहाससमन्वितम् ।
वाक्यैर्मधुरसंयुक्तैः स्मयन्ती तोषयेत्पतिम् ॥ १३-२५०-१२ (९१३०३)
कठोराणि न वाच्यानि अन्यथा प्रमदान्तरे ।
यस्यां कामी भवेद्भर्ता तस्याः प्रीतिकरी भवेत् ॥ १३-२५०-१३ (९१३०४)
अप्रमादं पुरस्कृत्य मनसा तोषयेत्पतिम् ।
अनन्तरमथान्येषां भोजनावेक्षणं चरेत् ॥ १३-२५०-१४ (९१३०५)
दासीदासबलीवर्दांश्चण्डालं च शुनस्तथा ।
अनाथान्कृपणांश्चैव भिक्षुकांश्च तथैव च ।
पूजयेद्बलिभैक्षेण पत्युर्धर्मं विवर्धयेत् ॥ १३-२५०-१५ (९१३०६)
कुपितं वाऽर्थहीनं वा श्रान्तं वोपचरेत्पतिम् ।
यता स तुष्टः स्वस्थश्च तथा सन्तोषयेत्पतिम् ॥ १३-२५०-१६ (९१३०७)
यथा कुटुम्बचिन्तायां विवादे वाऽर्थसञ्चये ।
आहूता तत्सहायार्थं तथा प्रियहितं वदेत् ॥ १३-२५०-१७ (९१३०८)

अप्रियं च हितं ब्रूयात्तस्य धर्मार्थकाङ्क्षया ।
एकान्तचर्याकथनं कलहं वर्जयेत्परैः ॥ १३-२५०-१८ (९१३०९)
बहिरालोकनं चैव मोहं व्रीडां च पैशुनम् ।
बह्वाशित्वं दिवास्वप्नमेवमादि विवर्जयेत् ॥ १३-२५०-१९ (९१३१०)
रहस्येकासनं साध्वी न कुर्यादात्मजैरपि ।
यद्यद्दद्यान्नियत्स्वेति न्यासवत्परिपालयेत् ॥ १३-२५०-२० (९१३११)
विस्मृतं वाऽपि यद्द्रव्यं प्रतिपद्यात्स्वशौचतः ।
यत्किञ्चित्पतिना दत्तं लब्ध्वा तत्सा सुकी भवेत् ॥ १३-२५०-२१ (९१३१२)
अतीवाज्ञामतीर्ष्यां च दूरतः परिवर्जयेत् ।
बालवद्वृद्धवद्भार्या सदैवानुचरेत्पतिम् ॥ १३-२५०-२२ (९१३१३)
भार्याया व्रतमित्येव कर्तव्यं सततं विभो ।
एतत्पतिव्रतावृत्तमुक्तं देव समासतः ॥ १३-२५०-२३ (९१३१४)
न च भोगे न चैश्वर्ये न सुखे न धने तथा ।
स्पृहा यस्यास्तथा भर्तुः सा नारीणां पतिव्रता ॥ १३-२५०-२४ (९१३१५)
पतिर्हि दैवतं स्त्रीणां पतिर्बन्धुः पतिर्गतिः ।
नान्यं गतिमहं पश्ये प्रमदाया यथा पतिः ॥ १३-२५०-२५ (९१३१६)
जातिष्वपि च वै स्त्रीत्वं विशिष्टं मे मतिः प्रभो ।
कायक्लेशेन महता पुरुषः प्राप्नुयात्फलम् ।
तत्सर्वं लभते नारी सुखेन पतिपूजया ॥ १३-२५०-२६ (९१३१७)
यथासुखं पतिमती सर्वं पत्यनुकूलतः ।
ईदृशं धर्मसाकल्यं पश्य त्वं प्रमदां प्रति ।
एतद्विसृज्य पच्यन्ते कुस्त्रियः पापमोहिताः ॥ १३-२५०-२७ (९१३१८)
तपश्चर्या च दानं च पतौ तस्याः समर्पितम् ।
रूपं कुलं यशस्तेजः सर्वं तस्मिन्प्रतिष्ठितम् ॥ १३-२५०-२८ (९१३१९)
एवं व्रतसमाचाराः स्ववृत्तेनैव शोभनाः ।
स्वभर्त्रा च सम गच्छेत्पुण्यलोकान्सुकर्मणा ॥ १३-२५०-२९ (९१३२०)
वृद्धो विरुपो बीभत्सो धनवान्निर्धनोऽपि वा ।
एवंभूतोपि वै भर्ता स्त्रीणां भूषणमुत्तमम् ॥ १३-२५०-३० (९१३२१)
आढ्यं वा रूपयुक्तं वा विरूपं धनवर्जितम् ।
या पतिं तोषयेत्साध्वी सा पत्नीनां विशिष्यते ॥ १३-२५०-३१ (९१३२२)
दरिद्रांश्च विरूपाश्च प्रमूढान्कुष्टसंयुतान् ।
पतीनुपचरेल्लोकानक्षयान्प्रतिपद्यते ॥ १३-२५०-३२ (९१३२३)
एवं प्रवर्तमानायाः पतिः पूर्वं म्रियेत चेत् ।
तदाऽनुमरणं गच्छेत्पुनर्धर्मं चरेत वा ॥ १३-२५०-३३ (९१३२४)
एतदेवं मया प्रोक्तं स्त्रियस्तु बहुधा स्मृताः ।
देवदानवगन्धर्वा मनुष्या इति नैकधा ॥ १३-२५०-३४ (९१३२५)

सौम्यशीलाः शुभाचाराः सर्वास्ताः सम्भवन्ति च ।
यथा शुभं प्रवक्ष्यामि स्त्रीणां धर्मं महेश्वर ॥१३-२५०-३५ (९१३२६)
आसुर्यश्चैव पैशाच्यो राक्षस्यश्च भन्ति हि ।
तासां वृत्तमशेषेण श्रूयतां लोककारणात् ॥१३-२५०-३६ (९१३२७)
न्यायतो वाऽन्यथा प्रोक्ता भावदोषसमन्विताः ।
भर्तॄनुपचरन्त्येव रागद्वेषबलात्कृताः ॥१३-२५०-३७ (९१३२८)
स्वधर्मविमुखा भूत्वा प्रदूष्यन्ति यतस्ततः ।
प्रवृद्धविषया नित्यं प्रतिकूलं वदन्ति च ॥१३-२५०-३८ (९१३२९)
अर्थान्विनाशयन्त्येवं न गृह्णन्ति हितं क्वचित् ।
स्वबुद्धिनिरता भूत्वा जीवन्ति च यथा तथा ॥१३-२५०-३९ (९१३३०)
गुणवत्यः क्वचिद्भूत्वा पतिधर्मपरा इव ।
पुनर्भवन्ति पापिष्ठा विषमं वृत्तमास्थिताः ॥१३-२५०-४० (९१३३१)
अनवस्थितमर्यादा बहुवेषा व्यवस्थिताः ।
असन्तुष्टाश्च लुब्धाश्च ईर्ष्याक्रोधयुता भृशम् ॥१३-२५०-४१ (९१३३२)
भोगप्रिया हितद्वेष्याः कामभोगपरायणाः ।
प्रायशोऽनृतभूयिष्ठा गुरूणां प्रतिलोमकाः ॥१३-२५०-४२ (९१३३३)
एवंवृत्तसमाचारा आसुरं भावमाश्रिताः ।
अपकारपरा नित्यं सततं कलहप्रिया ॥१३-२५०-४३ (९१३३४)
परुषा रुक्षवचना निर्घृणा निरपत्रपाः ।
निःस्नेहाः क्रोधनाश्चैव भर्तृपुत्रस्वबन्धुषु ॥१३-२५०-४४ (९१३३५)
घोरा मांसप्रिया नित्यं हसन्ति च रुदन्ति च ।
पतीन्व्यभिचरन्त्येव दुर्मार्गेण यथा तथा ।
बन्धुभिर्भर्त्सिता भूत्वा गृहकार्याणि कुर्वते ॥ १३-२५०-४५ (९१३३६)
अथवा भर्त्सिता देव निवृत्ताः स्वेषु कर्मसु ।
तथैवात्मवधं घोरं व्यवस्येयुर्न संशयः ॥१३-२५०-४६ (९१३३७)
निर्दया निरनुक्रोशाः कुटुम्बार्थविलोपकाः ।
धर्मर्थरहिता घोराः सततं कुर्वते क्रियाः ॥१३-२५०-४७ (९१३३८)
अनर्थे निपुणाः पापाः परप्राणेषु निर्दयाः ।
एवंयुक्तसमाचाराः स्त्रियः पैशाचमाश्रिताः ॥१३-२५०-४८ (९१३३९)
अपरा मोहसंयुक्ता निर्लज्जा रोदनप्रियाः ।
अशुद्धा मलदिग्धाङ्ग्य पानमांसरता भृशम् ।
वदन्त्यनृतवाक्यानि हसन्ति विलपन्ति च। १३-२५०-४९ (९१३४०)
दुष्पसादा महाक्रोधाः स्वप्नशीला निरन्तरम् ।
तामस्यो नष्टतत्वार्था मन्दशीला महोदराः ।
भुञ्जते विविधं सिद्धं भोजनं तीव्रसम्भ्रमाः ॥ १३-२५०-५० (९१३४१)
गुणरूपवयोयुक्तं पतिं कामिनमुत्तमम् ।

हित्वाऽन्येनैव गच्छन्ति सर्वधा भृशतापिताः ॥ १३-२५०-५१ (९१३४२)
निर्लज्जा धर्मसन्दिग्धाः प्रतिकूलाः समन्ततः ।
एवंरूपसमाचाराः स्त्रियो राक्षसमाश्रिताः ॥ १३-२५०-५२ (९१३४३)
एवंविधानां सर्वासां न परत्र महासुखम् ।
नरकाद्विप्रमुक्तानां मानुष्यं दुर्लभं भवेत् ॥ १३-२५०-५३ (९१३४४)
कष्टं तत्रापि भुञ्जन्ते स्वकृतं दुःखजं बहु ।
दरिद्राः क्लेशभूयिष्ठा विरूपाः कुत्सिताः परैः ।
विधवा दुर्भगा वाऽपि लभन्ते दुःखमीदृशम् ॥ १३-२५०-५४ (९१३४५)
शतवर्षसहस्राणि निरयं व्यभिचारिणी ।
व्रजेत्पतिं च पापेन संयोज्य स्वकुलं तथा ॥ १३-२५०-५५ (९१३४६)
एतद्विज्ञाय पतितं पुनश्चेद्धितमात्मनः ।
कुर्याद्भर्तारमाश्रित्य तथा धर्मवमाप्नुयात् ॥ १३-२५०-५६ (९१३४७)
अतिसंयान्ति ताँल्लोकान्पुण्यान्परमशोभनान् ।
अवमत्य च याः पूर्वं पतिं दुष्टेन चेतसा ॥ १३-२५०-५७ (९१३४८)
वर्तमानास्च सततं भर्तॄणां प्रतिकूलतः ।
भर्त्रानुमरणं काले याः कुर्वन्ति तथाविधाः ॥ १३-२५०-५८ (९१३४९)
कामात्क्रोधाद्भयाल्लोभादपहास्या भवन्ति ताः ।
आदिप्रभृति कुस्त्रीणां तथाऽनुमरणं वृथा ॥ १३-२५०-५९ (९१३५०)
आदिप्रभृति या साध्वी पत्युः प्रियपरायणा ।
ऊर्ध्वं गच्छति सा पूता भर्त्राऽनुमरणं गता ॥ १३-२५०-६० (९१३५१)
एवं मृताया वै लोकानहं पश्यामि चक्षुषा ।
स्पृहणीयान्सुरगणैर्यान्गच्छन्ति पतिव्रताः ॥ १३-२५०-६१ (९१३५२)
अथवा भर्तरि मृते वैधव्यं धर्ममाश्रिताः ।
तूष्णीं भौमं जले नित्यमञ्जलिस्नानमुत्तमम् ।
व्रतं च पतिमुद्दिश्य कुर्यश्चैव विधिं ततः ॥ १३-२५०-६२ (९१३५३)
एवं गच्छति सा नारी पतिलोकमनुत्तमम् ।
रमणीयमनिर्देश्यं दुष्प्रापं देवमानुषैः ॥ १३-२५०-६३ (९१३५४)
प्राप्नुयात्तादृशं लोकं केवलं या पतिव्रता ।
इति ते कथितं देव स्त्रीणां धर्मिमनुत्तमम् ॥ १३-२५०-६४ (९१३५५)
भवतः प्रियकामिन्या यन्मयोक्तं तवाग्रतः ।
चापल्यान्मम देवेश तद्भवान्क्षन्तुमर्हति ॥ १३-२५०-६५ (९१३५६)
नारद उवाच। १३-२५०-६६क्ष् (७६७९)
एवं वदन्तीं रुद्राणीं लज्जाभावसमन्विताम् ।
प्रशशंस च देवेशो वाचा सञ्जनयन्प्रियम् ॥ १३-२५०-६६ (९१३५७)
ऋषयो देवगन्धर्वाः प्रमदाश्च सहस्रशः ।
प्रणम्य शिरसा देवीं स्तुतिभिश्चाभितुष्टुवुः ॥ १३-२५०-६७ (९१३५८)

पूजयामासुरपरे देवदेव मुदा युताः ।
संवादं चिन्तयन्त्यन्ते श्रद्दधानाः सुचेतसः ॥ १३-२५०-६८ (९१३५९)
ततस्तु देवदेवेशो देवीं वचनमब्रवीत् ।
शृणु कल्याणि मद्वाक्यं संवादोऽयं मया तव ।
पुण्यं पवित्रं ख्यातं च भविता नात्र संशयः ॥ १३-२५०-६९ (९१३६०)
य इमं श्रावयेद्विद्वान्संवादं चावयोः प्रिये ।
शुचिर्भूत्वा नरान्युक्तान्स तैः स्वर्गं व्रजेत्सुखम् ॥ १३-२५०-७० (९१३६१)
यस्त्वेनं शृणुयान्नित्यं संवादं चावयोः शुभम् ।
कीर्तिमायुष्यमारोग्यं लभते स गतिं पराम् ॥ ॥ १३-२५०-७१ (९१३६२)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
पञ्चाशदधिकद्विशततमोऽध्यायः ॥ २५० ॥
Mahabharata - Anushaasana Parva - Chapter Footnotes

७-२५०-५९ सर्वाः पूता भवन्ति ता इति थ पाठः ॥

---

अनुससनपर्व-अध्यय२५१
॥ श्रीः ॥
१३.२५१. अध्यायः २५१

अथ दानधर्मपर्व ॥ १ ॥
Mahabharata - Anushaasana Parva - Chapter Topics
महेश्वरेण मुनिगणान्प्रति श्रीकृष्णस्य वंशानुक्रमवर्णनपूर्वकं
गुणगणानुवर्णनम् ॥ १ ॥

Mahabharata - Anushaasana Parva - Chapter Text

ऋषय ऊचुः ।
पिनाकिन्भगनेत्रघ्न सर्वलोकनमस्कृत ।
महात्म्यं वासुदेवस्य श्रोतुमिच्छाम शङ्कर ॥ १३-२५१-१ (९१३६३)
ईश्वर उवाच। १३-२५१-२क्ष् (७६८०)
पितामहादपि वरः शाश्वतः पुरुषो हरिः ।
कृष्णो जाम्बूनदाभासो व्यभ्रे सूर्य इवोदितः ॥ १३-२५१-२ (९१३६४)
दशबाहुर्महातेजा देवतारिनिषूदनः ।
श्रीवत्साङ्को हृषीकेशः सर्वदैवतपूजितः ॥ १३-२५१-३ (९१३६५)
ब्रह्मा तस्योदरभवस्तस्याहं च शिरोभवः ।

शिरोरुहेभ्यो ज्योतींषि रोमभ्यश्च सुराऽसुराः ॥ १३-२५१-४ (९१३६६)
ऋषयो देहसम्भूतास्तस्य लोकाश्च शाश्वताः ।
पितामहगृहं साक्षात्सर्वदेवगृहं च सः ॥ १३-२५१-५ (९१३६७)
सोस्याः पृथिव्याः कृत्स्नायाः स्रष्टा त्रिभुवनेश्वरः ।
संहर्ता चैव भूतानां स्थावरस्य चरस्य च ॥ १३-२५१-६ (९१३६८)
स हि देववरः साक्षाद्देवनाथः परन्तपः ।
सर्वज्ञः सर्वसंश्लिष्टः सर्वगः सर्वतोमुखः ॥ १३-२५१-७ (९१३६९)
परमात्मा हृषीकेशः सर्वव्यापी महेश्वरः ।
न तस्मात्परमं भूतं त्रिषु लोकेषु किञ्चन ॥ १३-२५१-८ (९१३७०)
सनातनो वै मधुहा गोविन्द इति विश्रुतः ।
स सर्वान्पार्तिवान्सङ्ख्ये घातयिष्यति मानदः ॥ १३-२५१-९ (९१३७१)
सुरकार्यार्थमुत्पन्नो मानुषं वपुरास्थितः ।
न हि देवगणाः शक्तास्त्रिविक्रमविनाकृताः ॥ १३-२५१-१० (९१३७२)
भुवने देवकार्याणि कर्तुं नायकवर्जिताः ।
नायकः सर्वभूतानां सर्वदेवनमस्कृतः ॥ १३-२५१-११ (९१३७३)
एतस्य देवनाथस्य देवकार्यपरस्य च ।
ब्रह्मभूतस्य सततं ब्रह्मर्षिशरणस्य च ॥ १३-२५१-१२ (९१३७४)
ब्रह्मा वसति गर्भस्थः शरीरे सुखसंस्थितः ।
शर्वः सुखं संश्रितश्च् शरीरे सुखसंस्थितः ॥ १३-२५१-१३ (९१३७५)
सर्वाः सुखं संश्रिताश्च शरीरे तस्य देवताः ।
स देवः पुण्डरीकाक्षः श्रीगर्भः श्रीसहोषितः ॥ १३-२५१-१४ (९१३७६)
शार्ङ्गचक्रायुधः खड्गी सर्वनागरिपुध्वज ।
उत्तमेन स शीलेन दमेन च शमेन च ॥ १३-२५१-१५ (९१३७७)
पराक्रमेण वीर्येण वपुषा दर्शनेन च ।
आरोहेणि प्रमाणेन धैर्येणार्जवसम्पदा ॥ १३-२५१-१६ (९१३७८)
आनृशंस्येन रूपेण बलेन न समन्वितः ।
अस्त्रैः समुदितः सर्वैर्दिव्यैरद्भुतदर्शनैः ॥ १३-२५१-१७ (९१३७९)
योगमायः सहस्राक्षो निरपायो महामनाः ।
वीरो मित्रजनश्लाघी ज्ञातिबन्धुजनप्रियः ॥ १३-२५१-१८ (९१३८०)
क्षमावांश्चानहंवादी ब्रह्मण्यो ब्रह्मनायकः ।
भयहर्ता भयार्तानां मित्राणां नन्दिवर्धनः ॥ १३-२५१-१९ (९१३८१)
शरण्यः सर्वभूतानां दीनानां पालने रतः ।
श्रुतवानर्थसम्पन्नः सर्वभूतनमस्कृतः ॥ १३-२५१-२० (९१३८२)
समाश्रितानां वरदः शत्रूणामपि धर्मवित् ।
नीतिज्ञो नीतिसम्पन्नो ब्रह्मवादी जितेन्द्रियः ॥ १३-२५१-२१ (९१३८३)
भवार्थमिह देवानां बुद्ध्या परमया युतः ।

प्राजापत्ये शुभे मार्गे मानवे धर्मसंस्कृते ॥ १३-२५१-२२ (९१३८४)
समुत्पत्स्यति गोविन्दो मनोर्वंशे महात्मनः ।
अङ्गो नाम मनोः पुत्रो अन्तर्धामा ततः परः ॥ १३-२५१-२३ (९१३८५)
अन्तर्धाम्नो हविर्धामा प्रजापतिरनिन्दितः ।
प्राचीनबर्हिर्भविता हविर्धाम्नः सुतो महान् ॥ १३-२५१-२४ (९१३८६)
तस्य प्रचेतःप्रमुखा भविष्यन्ति दशात्मजाः ।
प्राचेतसस्तथा दक्षो भवितेह प्रजापतिः ॥ १३-२५१-२५ (९१३८७)
दाक्षायण्यास्तथाऽऽदित्यो मनुरादित्यतस्तथा ।
मनोश्च वंशज इला सुद्युम्नश्च भविष्यति ॥ १३-२५१-२६ (९१३८८)
बुधात्पुरूरवाश्चापि तस्मादायुर्भविष्यति ।
नहुषो भविता तस्माद्ययातिस्तस्य चात्मजः ॥ १३-२५१-२७ (९१३८९)
यदुस्तस्मान्महासत्वः क्रोष्टा तस्माद्भविष्यति ।
क्रोष्टुश्चैव महान्पुत्रो वृजिनीवान्भविष्यति ॥ १३-२५१-२८ (९१३९०)
वृजिनीवतश्च भविता उषङ्गुरपराजितः ।
उषङ्गोर्भविता पुत्रः शूरश्चित्ररथस्तथा ।
तस्य त्ववरजः पुत्रः शूरो नाम भविष्यति ॥ १३-२५१-२९ (९१३९१)
तेषां विख्यातवीर्याणां चरित्रगुणशालिनाम् ।
यज्वनां सुविशुद्धानां वंशे ब्राह्मणसम्मते ॥ १३-२५१-३० (९१३९२)
स शूरः क्षत्रियश्रेष्ठो महावीर्यो महायशाः ।
स्ववंशविस्तरकरं जनयिष्यति मानदः ।
वसुदेव इति ख्यातं पुत्रमानकदुन्दुभिम् ॥ १३-२५१-३१ (९१३९३)
तस्य पुत्रश्चतुर्बाहुर्वासुदेवो भविष्यति ॥
दाता ब्राह्मणसत्कर्ता ब्रह्मभूतो द्विजप्रियः। १३-२५१-३२ (९१३९४)
राज्ञो मागधसंरुद्धान्मोक्षयिष्यति यादवः ॥ १३-२५१-३३ (९१३९५)
जरासन्धं तु राजानं निर्जित्य गिरिगह्वरे ।
सर्वपार्थिवरत्नाढ्यो भविष्यति स वीर्यवान् ॥ १३-२५१-३४ (९१३९६)
पृथिव्यामप्रतिहतो वीर्येण च भविष्यति ।
विक्रमेण च सम्पन्नः सर्वपार्थिवपार्थिवः ॥ १३-२५१-३५ (९१३९७)
शूरसेनेषु भूत्वा स द्वारकायां वसन्प्रभुः ।
पालयिष्यति गां देवीं विजित्य नयवित्सदा ॥ १३-२५१-३६ (९१३९८)
तं भवन्तः समासाद्य वाङ्भाल्यैरर्हणैर्वरैः ।
अर्चयन्तु यथान्यायं ब्रह्माणमिव शाश्वतम् ॥ १३-२५१-३७ (९१३९९)
यो हि मां द्रष्टुमिच्छेत ब्रह्माणं च पितामहम् ।
द्रष्टव्यस्तेन भगवान्वासुदेवः प्रतापवान् ॥ १३-२५१-३८ (९१४००)
दृष्टे तस्मिन्नहं दृष्टो न मेऽत्रास्ति विचारणा ।
पितामहो वा देवेश इति वित्त तपोधनाः ॥ १३-२५१-३९ (९१४०१)

स यस्य पुण्डरीकाक्षः प्रीतियुक्तो भविष्यति ।
तस्य देवगणः प्रीतो ब्रह्मपूर्वो भविष्यति ॥ १३-२५१-४० (९१४०२)
यश्च तं मानवे लोके संश्रयिष्यति केशवम् ।
तस्य कीर्तिर्जयश्चैव स्वर्गश्चैव भविष्यति ॥ १३-२५१-४१ (९१४०३)
धर्माणां देशिकः साक्षात्स भविष्यति धर्मिभाक् ।
धर्मवद्भिः स देवेशो नमस्कार्यः सदोद्यतैः ॥ १३-२५१-४२ (९१४०४)
धर्म एव परो हि स्यात्तस्मिन्नभ्यर्चिते विभौ ।
सहि देवो महातेजाः प्रजाहितचिकीर्षया ॥ १३-२५१-४३ (९१४०५)
धर्मार्थं पुरुषव्याघ्र ऋषिकोटीः ससर्ज ह ।
ताः सृष्टास्तेन विभुना पर्वते गन्धमादने ॥ १३-२५१-४४ (९१४०६)
सनत्कुमारप्रमुखास्तिष्ठन्ति तपसाऽन्विताः ।
तस्मात्स वाग्मी धर्मज्ञो नमस्यो द्विजपुङ्गवाः ॥ १३-२५१-४५ (९१४०७)
दिवि श्रेष्ठो हि भगवान्हरिर्नारायणः प्रभुः ।
वन्दितो हि स वन्देत मानितो मानयीत च ।
अर्हितश्चार्हयेन्नित्यं पूजितः प्रतिपूजयेत् ॥ १३-२५१-४६ (९१४०८)
दृष्टः पश्येदहरहः संश्रितः प्रतिसंश्रयेत् ।
अर्चितश्चार्चयेन्नित्यं स देवो द्विजसत्तमाः ॥ १३-२५१-४७ (९१४०९)
एतत्तस्यानवद्यस्य विष्णोर्वै परमं व्रतम् ।
आदिदेवस्य महतः सज्जनाचरितं सदा ॥ १३-२५१-४८ (९१४१०)
भुवनेऽभ्यर्चितो नित्यं देवैरपि सनातनः ।
अभयेनानुरूपेणि युज्यन्ते तमनुव्रताः ॥ १३-२५१-४९ (९१४११)
कर्मणा मनसा वाचा स नमस्यो द्विजैः सदा ।
यत्नवद्भिरुपस्थाय द्रष्टव्यो देवकीसुतः ॥ १३-२५१-५० (९१४१२)
एष वोऽभिहितो मार्गो मया वै मुनिसत्तमाः ।
तं दृष्ट्वा सर्वशो देवं दृष्टाः स्युः सुरसत्तमाः ॥ १३-२५१-५१ (९१४१३)
महावराहं तं देवं सर्वलोकपितामहम् ।
अहं चैव नमस्यामि नित्यमेव जगत्पतिम् ॥ १३-२५१-५२ (९१४१४)
तत्र च त्रितयं दृष्टं भविष्यति न संशयः ।
समस्ता हि वयं देवास्तस्य देहे वसामहे ॥ १३-२५१-५३ (९१४१५)
तस्य चैवाग्रजो भ्राता सिताद्रिनिचयप्रभः ।
हली बल इति ख्यातो भविष्यति धराधरः ॥ १३-२५१-५४ (९१४१६)
त्रिशिरास्तस्य दिव्यश्च सातकुम्भमयो द्रुमः ।
ध्वजस्तृणेन्द्रो देवस्य भविष्यति रथाश्रितः ॥ १३-२५१-५५ (९१४१७)
शिरो नागैर्महाभोगैः परिकीर्णं महात्मभिः ।
भविष्यति महाबाहोः सर्वलोकेश्वरस्य च ॥ १३-२५१-५६ (९१४१८)
चिन्तितानि समेष्यन्ति शस्त्राण्यस्त्राणि चैव ह ।

अनन्तश्च स अवोक्तो भगवान्हरिरव्ययः ॥ १३-२५१-५७ (९१४१९)
समादिष्टश्च विबुधैर्दर्शय त्वमिति प्रभो ।
सुपर्णो यस्य वीर्येण कश्यपस्यात्मजो बली ।
अन्तं नैवाशकद्द्रष्टुं देवस्य परमात्मनः ॥ १३-२५१-५८ (९१४२०)
स च शेषो विचरते परया वै मुदा युतः ।
अन्तर्वसति भोगेन परिरभ्य वसुन्धराम् ॥ १३-२५१-५९ (९१४२१)
य एव विष्णुः सोऽनन्तो भगवान्वसुधाधरः ।
यो रामः स हृषीकेशो योच्युतः स धराधरः ॥ १३-२५१-६० (९१४२२)
तावुभौ पुरुषव्याघ्रौ दिव्यौ दिव्यपराक्रमौ ।
द्रष्टव्यौ माननीयौ च चक्रलाङ्गलधारिणौ ॥ १३-२५१-६१ (९१४२३)
एष वोऽनुग्रहः प्रोक्तो मया पुण्यस्तपोधनाः ।
यद्भवन्तो यदुश्रेष्ठं पूजयेयुः प्रयत्नतः ॥ ॥ १३-२५१-६२ (९१४२४)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
एकपञ्चाशदधिकद्विशततमोऽध्यायः ॥ २५१ ॥
Mahabharata - Anushaasana Parva - Chapter Footnotes

७-२५१-४३ अर्हितः पुष्पधूपादिनार्चितः । पूजितः वाचा च महीकृतः
७-२५१-४७ अर्चितः मनसा ध्यातः ॥
७-२५१-५५ तृणेंद्रः तालद्रुमः ॥

---

अनुससनपर्व-अध्यय२५२
॥ श्रीः ॥
१३.२५२. अध्यायः २५२

अथ दानधर्मपर्व ॥ १ ॥
Mahabharata - Anushaasana Parva - Chapter Topics
भीष्मेण हिमवद्गिरौ नारदोदितकृष्णमहिमानुवादः ॥ १ ॥
तथा पार्थकृष्णयोर्नरनारायणात्मकत्वकथनपूर्वकं
कृष्णमहिमप्रशंसनम् ॥ २ ॥

Mahabharata - Anushaasana Parva - Chapter Text

नारद उवाच ।
अथ व्योम्नि महाञ्शब्दः सविद्युत्स्तनयित्नुमान् ।
मेघैश्च गगनं नीलं संरुद्धमभवद्घनैः ॥ १३-२५२-१ (९१४२५)

प्रावृषीव च पर्जन्यो ववृषे निर्मलं पयः ।
तमश्चैवाभवद्घोरं दिशश्च न चकाशिरे ॥ १३-२५२-२ (९१४२६)
ततो देवगिरौ तस्मिन्रम्ये पुण्ये सनातने ।
न शर्वं भूतसङ्घं वा ददृशुर्मनयस्तदा ॥ १३-२५२-३ (९१४२७)
व्यभ्रं च गगनं सद्यः क्षणेन समपद्यत ।
तीर्थयात्रां ततो विप्रा जग्मुश्चान्ये यथागतम् ॥ १३-२५२-४ (९१४२८)
तदद्भुतमचिन्त्यं च दृष्ट्वा ते विस्मिताऽभवन् ।
शङ्करस्योमया सार्धं संवादं त्वत्कथाश्रयम् ॥ १३-२५२-५ (९१४२९)
स भवान्पुरुषव्याघ्र ब्रह्मभूतः सनातनः ।
यदर्थमनुशिष्टा स्मो गिरिपृष्ठे महात्मना ॥ १३-२५२-६ (९१४३०)
द्वितीयं त्वद्भुतमिदं त्वत्तेजःकृतमद्य वै ।
दृष्ट्वा च विस्मिताः कृष्ण सा च नः स्मृतिरागता ॥ १३-२५२-७ (९१४३१)
एतत्ते देवदेवस्य माहात्म्यं कथितं प्रभो ।
कपर्दिनो गिरीशस्य महाबाहो जनार्दन ॥ १३-२५२-८ (९१४३२)
इत्युक्ताः स तदा कृष्णस्तपोवननिवासिभिः ।
मानयामास तान्सर्वानृषीन्देवकिनन्दनः ॥ १३-२५२-९ (९१४३३)
अथर्षयः सम्प्रहृष्टाः पुनस्ते कृष्ममब्रुवन् ।
पुनःपुनर्दर्शयास्मान्सदैव मधुसूदन ॥ १३-२५२-१० (९१४३४)
न हि नः सा रति स्वर्गे या च त्वद्दर्शने विभो ।
तदृतं च महाबाहो यदाह भगवान्भवः ॥ १३-२५२-११ (९१४३५)
एतत्ते सर्वमाख्यातं रहस्यमरिकर्शन ।
त्वमेव ह्यर्ततत्त्वज्ञः पृष्टोऽस्मान्पृच्छसे यदा ॥ १३-२५२-१२ (९१४३६)
तदस्माभिरिदं गुह्यं त्वत्प्रियार्थमुदाहृतम् ।
न च तेऽविदितं किञ्चित्त्रिषु लोकेषु विद्यते ॥ १३-२५२-१३ (९१४३७)
जन्म चैव प्रसूतिश्च यच्चान्यत्कारणं विभो ।
वयं तु बहुचापल्यादशक्ता गुह्यधारणे ॥ १३-२५२-१४ (९१४३८)
ततः स्थिते त्वयि विभो लघुत्वात्प्रलपामहे ।
न हि किञ्चित्तदाश्चर्यं यन्न वेत्ति भवानिह ॥ १३-२५२-१५ (९१४३९)
दिवि वा भुवि वा देव सर्वं हि विदितं तव ।
साधयाम वयं कृष्ण बुद्धिं पुष्टिमवाप्नुहि ॥ १३-२५२-१६ (९१४४०)
पुत्रस्ते सदृशस्तात विशिष्टो वा भविष्यति ।
महाप्रभावसंयुक्तो दीप्तिकीर्तिकरः प्रभुः ॥ १३-२५२-१७ (९१४४१)
भीष्म उवाच। १३-२५२-१८क्ष् (७६८१)
ततः प्रणम्य देवेशं यादवं पुरुषोत्तमम् ।
प्रदक्षिणमुपावृत्य प्रजग्मुस्ते महर्षयः ॥ १३-२५२-१८ (९१४४२)
सोयं नारायणः श्रीमन्दीप्त्या परमया युतः ।

व्रतं यथावत्तच्चीर्त्वा द्वारकां पुनरागमत् ॥१३-२५२-१९ (९१४४३)
पूर्णे च दशमे मासि पुत्रोऽस्य परमाद्भुतः ।
रुक्मिण्यां सम्मतो जज्ञे शूरो वंशधरः प्रभो ॥१३-२५२-२० (९१४४४)
स कामः सर्वभूतानां सर्वभावगतो नृप ।
असुराणां सुराणां च चरत्यन्तर्गतः सदा ॥१३-२५२-२१ (९१४४५)
सोयं पुरुषशार्दूलो मेघवर्णश्चतुर्भुजः ।
संश्रितः पाण्डवान्प्रेम्णा भवन्तश्चैनमाश्रिताः ॥१३-२५२-२२ (९१४४६)
कीर्तिर्लक्ष्मीर्धृतिश्चैवक स्वर्गमार्गस्तथैव च ।
यत्रैष संस्थितस्तत्र देवो विष्णुस्त्रिविक्रमः ॥१३-२५२-२३ (९१४४७)
सेन्द्रा देवास्त्रयस्त्रिंशदेष नात्र विचारणा ।
आदिदेवो महादेवः सर्वभूतप्रतिश्रयः ॥१३-२५२-२४ (९१४४८)
अनादिनिधनोऽव्यक्तो महात्मा मधुसूदनः ।
अयं जातो महातेजाः सुराणामर्थसिद्धये ॥१३-२५२-२५ (९१४४९)
सुदुस्तरार्थतत्त्वस्य वक्ता कर्ता च माधवः ।
तव पार्थ जयः कृत्स्नस्तव कीर्तिस्तथाऽतुला ॥१३-२५२-२६ (९१४५०)
तवेयं पृथिवी देवी कृत्स्ना नारायणाश्रयात् ।
अयं नाथस्तवाचिन्त्यो यस्य नारायणो गतिः ॥१३-२५२-२७ (९१४५१)
स भवांस्त्वमुपाध्वर्यू रणाग्नौ हुतवान्नृपान् ।
कृष्णस्रुवेण महता युगान्ताग्निसमेन वै ॥१३-२५२-२८ (९१४५२)
दुर्योधनश्च शोच्योसौ सपुत्रभ्रातृबान्धवः ।
कृतवान्योऽबुधः क्रोधाद्धरिगाण्डीविविग्रहम् ॥१३-२५२-२९ (९१४५३)
दैतेया दानवेन्द्राश्च महाकाया महाबलाः ।
चक्राग्नौ क्षयमापन्ना दावाग्नौ शलभा इव ॥१३-२५२-३० (९१४५४)
प्रतियोद्धुं न शक्यो हि मानुषैरेव संयुगे ।
विहीनैः पुरुषव्याघ्र सत्त्वशक्तिबलादिभिः ॥१३-२५२-३१ (९१४५५)
जयो योगी युगान्ताभः सव्यसाची रणाग्रगः ।
तेजसा हतवान्सर्वं सुयोधनबलं नृप ॥१३-२५२-३२ (९१४५६)
यत्तु गोवृषभाङ्केन मुनिभ्यः समुदाहृतम् ।
पुराणं हिमवत्पृष्ठे तन्मे निगदतः शृणु ॥१३-२५२-३३ (९१४५७)
यावत्तस्य भवेत्पुष्टिस्तेजो जीप्तिः पराक्रमः ।
प्रभावः सन्नतिर्जन्म कृष्णे तत्त्रिगुणं विभो ॥१३-२५२-३४ (९१४५८)
कः शक्नोत्यन्यथा कर्तुं तद्यदि स्यात्तथा शृणु ।
यत्रः कृष्णो हि भगवांस्तत्र पुष्टिरनुत्तमा ॥१३-२५२-३५ (९१४५९)
वयं त्विहाल्पमतयः परतन्त्राः सुविक्लबाः ।
ज्ञानपूर्वं प्रपन्नाः स्मो मृत्योः पन्थानमव्ययम् ॥१३-२५२-३६ (९१४६०)
भवांश्चाप्यार्जवपरः पूर्वं कृत्वा प्रतिश्रयम् ।

राजवृत्तं न लभते प्रतिज्ञापालने रतः ॥ १३-२५२-३७ (९१४६१)
अत्येवात्मवधं लोके राजंस्त्वं बहु मन्यसे ।
न हि प्रतिज्ञा या दत्ता तां प्रहातुमरिंदम ॥ १३-२५२-३८ (९१४६२)
कालेनायं जनः सर्वो निहतो रणमूर्धनि ।
वयं च कालेन हताः कालो हि परमेश्वरः ॥ १३-२५२-३९ (९१४६३)
न हि कालेन कालज्ञः स्पृष्टः शोचितुमर्हसि ।
कालो लोहितरक्ताक्षः कृष्णो दण्डी सनातनः ॥ १३-२५२-४० (९१४६४)
तस्मात्कुन्तीसुत ज्ञातीन्नेह शोचितुमर्हसि ।
व्यपेतमन्युर्नित्यं त्वं भव कौरवनन्दन ॥ १३-२५२-४१ (९१४६५)
माधवस्यास्य महात्म्यं श्रुतं यत्कथितं मया ।
तदेव तावत्पर्याप्तं सज्जनस्य निदर्शनम् ॥ १३-२५२-४२ (९१४६६)
व्यासस्य वचनं श्रुत्वा नारदस्य च धीमतः ।
स्वयं चैव महाराज कृष्णस्यार्हतमस्य वै ॥ १३-२५२-४३ (९१४६७)
प्रभावश्चर्षिपूगस्य कथितः सुमहान्मया ।
महेश्वरस्य संवादं शैलपुत्र्याश्च भारत ॥ १३-२५२-४४ (९१४६८)
धारयिष्यति यश्चैनं महापुरुषसम्भवम् ।
शृणुयात्कथयेद्वा यः स श्रेयो लभते परम् ॥ १३-२५२-४५ (९१४६९)
भवितारश्च तस्याथ सर्वे कामा यथेप्सिताः ।
प्रेत्य स्वर्गं च लभते नरो नास्त्यत्र संशयः ॥ १३-२५२-४६ (९१४७०)
न्याय्यं श्रेयोभिकामेन प्रतिपत्तुं जनार्दनः ।
एष एवाक्षयो विप्रैः स्तुतो राजञ्जनार्दनः ॥ १३-२५२-४७ (९१४७१)
महेश्वरमुखोत्सृष्टा ये च धर्मगुणाः स्मृताः ।
ते त्वया मनसा धार्याः कुरुराज दिवानिशम् ॥ १३-२५२-४८ (९१४७२)
एवं ते वर्तमानस्य सम्यग्दण्डधरस्य च ।
प्रजापालनदक्षस्य स्वर्गलोको भविष्यति ॥ १३-२५२-४९ (९१४७३)
धर्मोणापि सदा राजन्प्रजा रक्षितुमर्हसि ।
यस्तस्य विपुलो दण्डः सम्यग्धर्मः स कीर्त्यते ॥ १३-२५२-५० (९१४७४)
य एष कथितो राजन्मया सज्जनसन्निधौ ।
शङ्करस्योमया सार्धं संवादो धर्मसंहितः ॥ १३-२५२-५१ (९१४७५)
श्रुत्वा वा श्रोतुकामो वाऽप्यर्चयेद्वृषभध्वजम् ।
विशुद्धेनेह भावेन य इच्छेद्भूतिमात्मनः ॥ १३-२५२-५२ (९१४७६)
एष तस्यानवद्यस्य नारदस्य महात्मनः ।
संदेशो देवपूजार्थं तं तथा कुरु पाण्डव ॥ १३-२५२-५३ (९१४७७)
एतदत्यद्भुतं वृत्तं पुण्ये हि भवति प्रभो ।
वासुदेवस्य कौन्तेय स्थाणोश्चैव स्वभावजम् ॥ १३-२५२-५४ (९१४७८)
दशवर्शसहस्राणि बदर्यामेष शाश्वतः ।

तपश्चचार विपुलं सह गाण्डीवधन्वना ॥ १३-२५२-५५ (९१४७९)
त्रियुगौ पुण्डरीकाक्षौ वासुदेवधनंजयौ ।
विदितौ नारदादेतौ मम व्यासाच्च पार्थिव ॥ १३-२५२-५६ (९१४८०)
बाल एव महाबाहुश्चकार कदनं महत् ।
कंसस्य पुण्डरीकाक्षो ज्ञातित्रामार्थकारणात् ॥ १३-२५२-५७ (९१४८१)
कर्मणामस्य कौन्तेय नान्तं सङ्ख्यातुमुत्सहे ।
शाश्वतस्य पुराणस्य पुरुषस्य युधिष्ठिर ॥ १३-२५२-५८ (९१४८२)
ध्रुवं श्रेयः परं तात भविष्यति तवोत्तमम् ।
यस्य ते पुरुषव्याघ्रः सखा चायं जनार्दनः ॥ १३-२५२-५९ (९१४८३)
दुर्योधनं तु शोचामि प्रेत्य लोकेऽपि दुर्मतिम् ।
यत्कृते पृथिवी सर्वा विनष्टा सहयद्विपा ॥ १३-२५२-६० (९१४८४)
दुर्योधनापराधेन कर्णस्य शकुनेस्तथा ।
दुःशासनवतुर्थानां कुरवो निधनं गताः ॥ १३-२५२-६१ (९१४८५)
वैशम्पायन उवाच। १३-२५२-६२क्ष् (७६८२)
एवं सम्भाषमाणे तु गाङ्गेये पुरुषर्षभे ।
तूर्ष्णीं बभूव कौरव्यो मध्ये तेषां महात्मनाम् ॥ १३-२५२-६२ (९१४८६)
तच्छ्रुत्वा विस्मयं जग्मुर्धृतराष्ट्रादयो नृपाः ।
सम्पूज्य मनसा कृष्णं सर्वे प्राञ्जलयऽभवन् ॥ १३-२५२-६३ (९१४८७)
ऋषयश्चापि ते सर्वे नारदप्रमुखास्तदा ।
प्रतिगृह्याभ्यनन्दन्त तद्वाक्यं प्रतिपूज्य च ॥ १३-२५२-६४ (९१४८८)
इत्येतदखिलं सर्वैः पाण्डवो भ्रातृभिः सह ।
श्रुतवान्सुमहाश्चर्यं पुण्यं भीष्मानुशासनम् ॥ १३-२५२-६५ (९१४८९)
वैशम्पायन उवाच। १३-२५२-६६क्ष् (७६८३)
युधिष्ठिरस्तु गाङ्गेयं विश्रान्तं भूरिदक्षिणम् ।
पुनरेव महाबुद्धिः पर्यपृच्छन्महीपतिः ॥ ॥ १३-२५२-६६ (९१४९०)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
द्विपञ्चाशदधिकद्विशततमोऽध्यायः ॥ २५२ ॥

---

अनुससनपर्व-अध्यय२५३
॥ श्रीः ॥
१३.२५३. अध्यायः २५३

अथ दानधर्मपर्व ॥ १ ॥
Mahabharata - Anushaasana Parva - Chapter Topics
भीष्मेण युधिष्ठिरंप्रति दृष्टान्ततया

विप्रकन्योपाख्यानकथनपूर्वकं विद्वत्संरक्षणस्य महाफलहेतुत्वकथनम् ॥१ ॥

Mahabharata - Anushaasana Parva - Chapter Text

युधिष्ठिर उवाच ।
कृपया परया प्रोक्तः सर्वेषां पापकर्मणाम् ।
ज्ञानस्य च परस्येह तन्मे ब्रूहि पितामह ॥१३-२५३-१ (९१४९१)
भीष्म उवाच।१३-२५३-२क्ष् (७६८४)
उपायोऽयं परप्राप्तौ परमः परिकीर्तितः ।
नारायणास्यानुध्यानमर्चनं यजनं स्तुतिः ॥१३-२५३-२ (९१४९२)
श्रवणं तत्कथानां च विद्वत्संरक्षणं तथा ।
विद्वच्छुश्रूषणप्रीतिरुपदेशानुपालनम् ।
स ध्यानेन जपेननाशु मुच्यते प्राकृतोपि वा ॥ १३-२५३-३ (९१४९३)
जपश्चतुर्विधः प्रोक्तो वैदिकस्तान्त्रिकोपि च ।
पौराणिकोथ विद्वद्भिः कथितः स्मार्त एव च ॥१३-२५३-४ (९१४९४)
विद्वच्छुश्रूषया ज्ञानं विद्वत्संरक्षणेन च ।
नासाध्यं ज्ञानिनां किञ्चित्तस्माद्रक्ष्यास्त्वया द्विजाः ॥१३-२५३-५ (९१४९५)
सुव्रता बन्धुहीनैका वने पूर्वं यमेन तु ।
आसीदाश्वासिता विद्वत्संरक्षणफलात्किल ॥१३-२५३-६ (९१४९६)
विप्रस्य मरणे हेतुस्तत्पत्नी पितृशोकदा ।
वैश्या त्वमतिलाभोऽयं विप्रकन्येति साम्प्रतम्। १३-२५३-७ (९१४९७)
इत्युक्ताऽऽश्वासिताऽपृच्छत्केनैवं पापसंयुता ।
जाता विप्रकुले सम्यक् श्रेयश्चापि ब्रवीहि मे ॥१३-२५३-८ (९१४९८)
यम उवाच।१३-२५३-९क्ष् (७६८५)
अन्यजन्मनि विद्वांसं प्रहारैरभिपीडितम् ।
चोरशङ्काविमोक्षेण मोक्षयित्वा सुजन्मिका ॥१३-२५३-९ (९१४९९)
इत्युक्ताऽष्टाक्षरध्यानजपादिश्रेयसंयुता ।
यमेनानुगृहीताऽभूत्पुण्यलोकनिवासिनी ॥१३-२५३-१० (९१५००)
तन्नित्यं विदुषां रक्षा तत्परोऽभूर्महीपते ।
तेषां संरक्षणात्सद्यः सर्वपापैः प्रमुच्यते ॥ ॥१३-२५३-११ (९१५०१)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि त्रिपञ्चशदधिकद्विशततमोऽध्यायः ॥२५३ ॥

---

अनुससनपर्व-अध्यय२५४

॥ श्रीः ॥
१३.२५४. अध्यायः २५४

अथ दानधर्मपर्व ॥ १ ॥
Mahabharata - Anushaasana Parva - Chapter Topics
भीष्मेण युधिष्ठिरंप्रति श्रीविष्णुसहस्रनामकथनम् ॥ १ ॥

Mahabharata - Anushaasana Parva - Chapter Text

वैशम्पायन उवाच ।
श्रुत्वा धर्मानशेषेण पावनानि च सर्वशः ।
युधिष्ठिरः शान्तनवं पुनरेवाभ्यभाषत ॥ १३-२५४-१ (९१५०२)
किमेकं दैवतं लोके किं वाऽप्येकं परायणम् ।
स्तुवन्तः कं कमर्चन्तः प्राप्नुयुर्मानवाः शुभम् ॥ १३-२५४-२ (९१५०३)
को धर्मः सर्वधर्माणां भवतः परमो मतः ।
किं जपन्मुच्यते जन्तुर्जन्मसंसारबन्धनात् ॥ १३-२५४-३ (९१५०४)
भीष्म उवाच। १३-२५४-४क्ष् (७६८६)
जगत्प्रभुं देवदेवमनन्तं पुरुषोत्तमम् ।
स्तुवन्नामसहस्रेण पुरुषः सततोत्थितः ॥ १३-२५४-४ (९१५०५)
तमेव चार्चयन्नित्यं भक्त्या पुरुषमव्ययम् ।
ध्यायन्स्तुवन्नमस्यंश्च यजमानस्तमेव च ॥ १३-२५४-५ (९१५०६)
अनादिनिधनं विष्णुं सर्वलोकमहेश्वरम् ।
लोकाध्यक्षं स्तुवन्नित्यं सर्वदुःकातिगो भवेत् ॥ १३-२५४-६ (९१५०७)
ब्रह्मण्यं सर्वधर्मज्ञं लोकानां कीर्तिवर्धनम् ।
लोकनाथं महद्भूतं सर्वबूतभवोद्भवम् ॥ १३-२५४-७ (९१५०८)
एष मे सर्वधर्माणां धर्मोऽधिकतमो मतः ।
यद्भक्त्या पुण्डरीकाक्षं स्तवैरर्चेन्नरः सदा ॥ १३-२५४-८ (९१५०९)
परमं यो महत्तेजः परमं यो महत्तपः ।
परमं यो महद्ब्रह्म परमं यः परायणम् ॥ १३-२५४-९ (९१५१०)
पवित्राणां पवित्रं यो मङ्गलानां च मङ्गलम् ।
दैवतं देवतानां च भूतानां योऽव्ययः पिता ॥ १३-२५४-१० (९१५११)
यतः सर्वाणि भूतानि भवन्त्यादियुगागमे ।
यस्मिंश्च प्रलयं यान्ति पुनरेव युगक्षये ॥ १३-२५४-११ (९१५१२)
तस्य लोकप्रधानस्य जगन्नाथस्य भूपते ।
विष्णोर्नामसहस्रं मे शृणु पापभयापहम् ॥ १३-२५४-१२ (९१५१३)
यानि नामानि गौणानि विख्यातानि महात्मनः ।

ऋषिभिः परिगीतानि तानि वक्ष्यामि भूतये ॥१३-२५४-१३ (९१५१४)
ग्ऋषिर्नाम्नां सहस्रस्य देवव्यासो महामुनिः ।
छन्दोनुष्टुप्तथा देवो भगवान्देवकीसुतः ॥१३-२५४-१४ (९१५१५)
अमुतांशूद्भवो बीजं शक्तिर्देवकिनन्दनः ।
त्रिसाम हृदयं तस्य शान्त्यर्थे विनियुज्यते ॥' १३-२५४-१५ (९१५१६)
ओं विश्वं विष्णुर्वषट्कारो भूतभव्यभवत्प्रभुः ।
भूतकृद्भूतभृद्भावो भूतात्मा भूतभावनः ॥१३-२५४-१६ (९१५१७)
पूतात्मा परमात्मा च मुक्तानां परमा गतिः ।
अव्ययः पुरुषः साक्षी क्षेत्रज्ञोऽक्षर एव च ॥१३-२५४-१७ (९१५१८)
योगो योगविदांनेता प्रधानपुरुषेश्वरः ।
नरसिंहवपुः श्रीमान्केशवः पुरुषोत्तमः ॥१३-२५४-१८ (९१५१९)
सर्वः शर्वः शिवः स्थाणुर्भूतादिर्निधिरव्ययः ।
सम्भवो भावनो भर्ता प्रभवः प्रभुरीश्वरः ॥१३-२५४-१९ (९१५२०)
स्वयंभूः शंभुरादित्यः पुष्कराक्षो महास्वनः ।
अनादिनिधनो धाता विधाता धातुरुत्तमः ॥१३-२५४-२० (९१५२१)
अप्रमेयो हृषीकेशः पद्मनाभोऽमरप्रभुः ।
विश्वकर्मा मनुस्त्वष्टा स्थविष्ठः स्थविरो ध्रुवः ॥१३-२५४-२१ (९१५२२)
अग्राह्यः शाश्वतः कृष्णो लोहिताक्षः प्रतर्दनः ।
प्रभूतस्त्रिककुद्धाम पवित्रं मङ्गलं परम् ॥१३-२५४-२२ (९१५२३)
ईशानः प्राणदः प्राणो ज्येष्ठः श्रेष्ठः प्रजापतिः ।
हिरण्यगर्भो भूगर्भो माधवो मधुसूदनः ॥१३-२५४-२३ (९१५२४)
ईश्वरो विक्रमी धन्वी मेधावी विक्रमः क्रमः ।
अनुत्तमो दुराधर्षः कृतज्ञः कृतिरात्मवान् ॥१३-२५४-२४ (९१५२५)
सुरेशः शरणं शर्म विश्वरेताः प्रजाभवः ।
अहः संवत्सरो व्यालः प्रत्ययः सर्वदर्शनः ॥१३-२५४-२५ (९१५२६)
अजः सर्वेश्वरः सिद्धः सिद्धिः सर्वादिरच्युतः ।
वृषाकपिरमेयात्मा सर्वयोगविनिःसृतः ॥१३-२५४-२६ (९१५२७)
वसुर्वसुमनाः सत्यः समात्मा सम्मितः समः ।
अमोघः पुण्डरीकाक्षो वृषकर्मा वृषाकृतिः ॥१३-२५४-२७ (९१५२८)
रुद्रो बहुशिरा बभ्रुर्विश्वयोनिः शुचिश्रवाः ।
अमृतः शाश्वतः स्थापुर्वरारोहो महातपाः ॥१३-२५४-२८ (९१५२९)
सर्वगः सर्वविद्भानुर्विष्वक्सेनो जनार्दनः ।
वेदो वेदविदव्यङ्गो वेदाङ्गो वेदवित्कविः ॥१३-२५४-२९ (९१५३०)
लोकाध्यक्षः सुराध्यक्षो धर्माध्यक्षः कृताकृतः ।
चतुरात्मा चतुर्व्यूहश्चतुर्दंष्ट्रश्चतुर्भुजः ॥१३-२५४-३० (९१५३१)
भ्राजिष्णुर्भोजनं भोक्ता सहिष्णुर्जगदादिजः ।

अनघो विजयो जेता विश्वयोनिः पुनर्वसु ॥ १३-२५४-३१ (९१५३२)
उपेन्द्रो वामनः प्रांशुरमोघः शुचिरूर्जितः ।
अतीन्द्रः सङ्ग्रहः सर्गो धृतात्मा नियमोयमः ॥ १३-२५४-३२ (९१५३३)
वेद्यो वैद्यः सदायोगी वीरहा माधवो मधुः ।
अतीन्द्रियो महामायो महोत्साहो महाबलः ॥ १३-२५४-३३ (९१५३४)
महाबुद्धिर्महावीर्यो महाशक्तिर्महाद्युतिः ।
अनिर्देश्यवपुः श्रीमानमेयात्मा महाद्रिधृक् ॥ १३-२५४-३४ (९१५३५)
महेष्वासो महीभर्ता श्रीनिवासः सताङ्गतिः ।
अनिरुद्धः सुरानन्दो गोविन्दो गोविदाम्पतिः ॥ १३-२५४-३५ (९१५३६)
मरीचिर्दमनो हंसः सुपर्णो भुजगोत्तमः ।
हिरण्यनाभः सुतपाः पद्मनाभः प्रजापतिः ॥ १३-२५४-३६ (९१५३७)
अमृत्युः सर्वदृक्सिंहः सन्धाता सन्धिमान्स्थिरः ।
अजो दुर्मर्षणः शास्ता विश्रुतात्मा सुरारिहा ॥ १३-२५४-३७ (९१५३८)
गुरुर्गरुतमो धाम सत्यः सत्यपराक्रमः ।
निमिषोऽनिमिषः स्रग्वी वाचस्पतिरुदारधीः ॥ १३-२५४-३८ (९१५३९)
अग्रणीर्ग्रामणीः श्रीमान्न्यायो नेता समीरणः ।
सहस्रमूर्धा विश्वात्मा सहस्राक्षः सहस्रपात् ॥ १३-२५४-३९ (९१५४०)
आवर्तनो निवृत्तात्मा संवृतः सम्प्रमर्दनः ।
अहः संवर्तको वह्निरनिलो धरणीधरः ॥ १३-२५४-४० (९१५४१)
सुप्रसादः प्रसन्नात्मा विश्वदृग्विश्वभुग्विभुः ।
सत्कर्ता सत्कृतिः साधुर्जह्नुर्नारायणो नरः ॥ १३-२५४-४१ (९१५४२)
असंख्येयोप्रमेयात्मा विशिष्टः शिष्टकृच्छुचिः ।
सिद्धार्थः सिद्धसङ्कल्पः सिद्धिदः सिद्धिसाधनः ॥ १३-२५४-४२ (९१५४३)
वृषाहिर्वृषभो विष्णुर्वृषपर्वा वृषोदरः ।
वर्धनो वर्धमानश्च विविक्तः श्रुतिसागरः ॥ १३-२५४-४३ (९१५४४)
सुभुजो दुर्धरो वाग्मी महेन्द्रो वसुदो वसुः ।
नैकरूपो बृहद्रूपः शिपिविष्टः प्रकाशनः ॥ १३-२५४-४४ (९१५४५)
ओजस्तेजोद्युतिधरः प्रकाशात्मा प्रतापनः ।
ऋद्धः स्पृष्टाक्षरो मन्त्रश्चन्द्रांशुर्भास्करद्युतिः ॥ १३-२५४-४५
(९१५४६)
अमृतांशूद्भवो भानुः शशबिन्दुः सुरेश्वरः ।
औषधं जगतः सेतुः सत्यधर्मपराक्रमः ॥ १३-२५४-४६ (९१५४७)
भूतभव्यभवन्नाथः पवनः पावनोऽनलः ।
कामहा कामकृत्कान्तः कामः कामप्रदः प्रभुः ॥ १३-२५४-४७ (९१५४८)
युगादिकृद्युगावर्तो नैकमायो महाशनः ।
अदृश्यो व्यक्तरूपश्च सहस्रजिदनन्तजित् ॥ १३-२५४-४८ (९१५४९)

इष्टो विशिष्टः शिष्टेष्ट शिखण्डी नहुषो वृषः ।
क्रोधहा क्रोधकृत्कर्ता विश्वबाहुर्महीधरः ॥ १३-२५४-४९ (९१५५०)
अच्युतः प्रथितः प्राणः प्राणदो वासवानुजः ।
अपांनिधिरधिष्ठानमप्रमत्तः प्रतिष्ठितः ॥ १३-२५४-५० (९१५५१)
स्कन्दः स्कन्दधरो धुर्यो वरदो वायुवाहनः ।
वासुदेवो बृहद्भानुरादिदेवः पुरंदरः ॥ १३-२५४-५१ (९१५५२)
अशोकस्तारणस्तारः शूरः शौरिर्जनेश्वरः ।
अनुकूलः शतावर्तः पद्मी पद्मनिभेक्षणः ॥ १३-२५४-५२ (९१५५३)
पद्मनाबोऽरविन्दाक्षः पद्मगर्भः शरीरभृत् ।
महर्द्धिर्ऋद्धो वृद्धात्मा महाक्षो गरुडध्वक्षः ॥ १३-२५४-५३ (९१५५४)
अतुलः शरभो भीमः समयज्ञो हविर्हरिः ।
सर्वलक्षणलक्षण्यो लक्ष्मीवान्समितिंजयः ॥ १३-२५४-५४ (९१५५५)
विक्षरो रोहितो मार्गो हेतुर्दामोदरः सहः ।
महीधरो महाभागो वेगवानमिताशनः ॥ १३-२५४-५५ (९१५५६)
उद्भवः क्षोभणो देवः श्रीगर्भः परमेश्वरः ।
करणं कारणं कर्ता विकर्ता गहनो गुहः ॥ १३-२५४-५६ (९१५५७)
व्यवसायो व्यवस्थानः संस्थानः स्थानदो ध्रुवः ।
परर्द्धिः परमस्पष्टस्तुष्टः पुष्टः शुभेक्षणः ॥ १३-२५४-५७ (९१५५८)
रामो विरामो विरजो मार्गो नेयो नयोऽनयः ।
वीरः शक्तिमतांश्रेष्ठो धर्मो धर्मविदुत्तमः ॥ १३-२५४-५८ (९१५५९)
वैकुण्ठः पुरुषः प्राणः प्राणदः प्रणवः पृथुः ।
हिरण्यगर्भः शत्रुघ्नो व्याप्तो वायुरधोक्षजः ॥ १३-२५४-५९ (९१५६०)
ऋतुः सुदर्शनः कालः परमेष्ठी परिग्रहः ।
उग्रः संवत्सरो दक्षो विश्रामो विश्वदक्षिणः ॥ १३-२५४-६० (९१५६१)
विस्तारः स्थावरः स्थाणुः प्रमाणं बीजमव्ययम् ।
अर्थोऽनर्थो महाकोशो महाभोगो महाधनः ॥ १३-२५४-६१ (९१५६२)
अनिर्विण्णः स्थविष्ठो भूर्धर्मयूपो महामखः ।
नक्षत्रनेमिर्नक्षत्री क्षमः क्षामः समीहनः ॥ १३-२५४-६२ (९१५६३)
यज्ञ इज्यो महेज्यश्च क्रतुः सत्रं सताङ्गतिः ।
सर्वदर्शी वमुक्तात्मा सर्वज्ञो ज्ञानमुत्तमम् ॥ १३-२५४-६३ (९१५६४)
सुव्रतः सुमुखः सूक्ष्मः सुघोषः सुखदः सुहृत् ।
मनोहरो जितक्रोधो वीरबाहुर्विदारणः ॥ १३-२५४-६४ (९१५६५)
स्वापनः स्ववशो व्यापी नैकात्मा नैककर्मकृत् ।
वत्सरो वत्सलो वत्सी रत्नगर्भो धनेश्वरः ॥ १३-२५४-६५ (९१५६६)
धर्मगुब्धर्मकृद्धर्मी सदसत्क्षरमक्षरम् ।
अविज्ञाता सहस्रांशुर्विधाता कृतलक्षणः ॥ १३-२५४-६६ (९१५६७)

गभस्तिनेमिः सत्वस्थः सिंहो भूतमहेश्वरः ।
आदिदेवो महादेवो देवेशो देवभृद्गुरुः ॥ १३-२५४-६७ (९१५६८)
उत्तरो गोपतिर्गोप्ता ज्ञानगम्यः पुरातनः ।
शरीरी भूतभृद्भोक्ता कपीन्द्रो भूरिदक्षिणः ॥ १३-२५४-६८ (९१५६९)
सोमपोऽमृतपः सोमः पुरुजित्पुरुसत्तमः ।
विनयोज्यः सत्यसन्धो दाशार्हः सात्वतांपतिः ॥ १३-२५४-६९ (९१५७०)
जीवो विनयिता साक्षी मुकुन्दोऽमितविक्रमः ।
अम्भोनिधिरनन्तात्मा महोदधिशयोऽन्तकः ॥ १३-२५४-७० (९१५७१)
अजो महार्हः स्वाभाव्यो जितामित्रः प्रमोदनः ।
आनन्दो नन्दनो नन्दः सत्यधर्मा त्रिविक्रमः ॥ १३-२५४-७१ (९१५७२)
महर्षिः कपिलाचार्य कृतज्ञो मेदिनीपतिः ।
त्रिपदस्त्रिदशाध्यक्षो महाशृङ्गः कृतान्तकृत् ॥ १३-२५४-७२ (९१५७३)
महावराहो गोविन्दः सुषेणः कनकाङ्गदी ।
गुह्यो गभीरो गहनो गुप्तश्चक्रगदाधरः ॥ १३-२५४-७३ (९१५७४)
वेधाः स्वाङ्गोऽजितः कृष्णो दृढः सङ्कर्षणोच्युतः ।
वरुणो वारुणो वृक्षः पुष्कराक्षो महामनाः ॥ १३-२५४-७४ (९१५७५)
भगवान्भगहा नन्दी वनमाली हलायुधः ।
आदित्यो ज्योतिरादित्यः सहिष्णुर्गतिसत्तमः ॥ १३-२५४-७५ (९१५७६)
सुधन्वा खण्डपरशुर्दारुणो द्रविणप्रदः ।
दिवस्पृक्सर्वदृग्व्यासो वाचस्पतिरयोनिजः ॥ १३-२५४-७६ (९१५७७)
त्रिसामा सामगः साम निर्वाणं भेषजं भिषक् ।
संन्यासकृच्छमः शान्तो निष्ठा शान्तिः परायणम् ॥ १३-२५४-७७ (९१५७८)
शुभाङ्गः शान्तिदः स्रष्टा कुमुदः कुवलेशयः ।
गोहितो गोपतिर्गोप्ता वृषभाक्षो वृषप्रियः ॥ १३-२५४-७८ (९१५७९)
अनिवर्ती निवृत्तात्मा संक्षेप्ता क्षेमकृच्छिवः ।
श्रीवत्सवक्षाः श्रीवासः श्रीपतिः श्रीमतांवरः ॥ १३-२५४-७९ (९१५८०)
श्रीदः श्रीशः श्रीनिवासः श्रीनिधिः श्रीविभावनः ।
श्रीधरः श्रीकरः श्रेयः श्रीमाँल्लोकत्रयाश्रयः ॥ १३-२५४-८० (९१५८१)
स्वक्षः स्वङ्गः शतानन्दो नन्दिर्ज्योतिर्गणेश्वरः ।
विजितात्मा विधेयात्मा सत्कीर्तिश्छिन्नसंशयः ॥ १३-२५४-८१ (९१५८२)
उदीर्णः सर्वतश्चक्षुरनीशः शाश्वतः स्थिरः ।
भूशयो भूषणो भूतिर्विशोकः शोकनाशनः ॥ १३-२५४-८२ (९१५८३)
अर्चिष्मानर्चितः कुम्भो विशुद्धात्मा विशोधनः ।
अनिरुद्धोऽप्रतिरथः प्रद्युम्नोऽमितविक्रमः ॥ १३-२५४-८३ (९१५८४)
कालनेमिनिहा वीरः शौरिः सूरजनेश्वरः ।
त्रिलोकात्मा त्रिलोकेशः केशवः केशिहा हरिः ॥ १३-२५४-८४ (९१५८५)

कामदेवः कामपालः कामी कान्तः कृतागमः ।
अनिर्देश्यवपुर्विष्णुर्वीरोऽनन्तो धनञ्जयः ॥ १३-२५४-८५ (९१५८६)
ब्रह्मण्यो ब्रह्मकृद्ब्रह्मा ब्रह्म ब्रह्मविवर्धनः ।
ब्रह्मविद्ब्राह्मणो ब्रह्मी ब्रह्मज्ञो ब्राह्मणप्रियः ॥ १३-२५४-८६ (९१५८७)
महाक्रमो महाकर्मा महातेजा महोरगः ।
महाक्रतुर्महायज्वा महायज्ञो महाहविः ॥ १३-२५४-८७ (९१५८८)
स्तव्यः स्तवप्रियः स्तोत्रं स्तुतिःस्तोता रणप्रियः ।
पूर्णः पूरयिता पुण्यः पुण्यकीर्तिरनामयः ॥ १३-२५४-८८ (९१५८९)
मनोजवस्तीर्थकरो वसुरेता वसुप्रदः ।
वसुप्रदो वासुदेवो वसुर्वसुमना हविः ॥ १३-२५४-८९ (९१५९०)
सद्गतिः सत्कृतिः सत्ता सद्भूतिः सत्परायणः ।
शूरसेनो यदुश्रेष्ठः सन्निवासः सुयामुनः ॥ १३-२५४-९० (९१५९१)
भूतावासो वासुदेवः सर्वासुनिलयोऽनलः ।
दर्पहा दर्पहो दृप्तो दुर्धरोऽद्धाऽपराजितः ॥ १३-२५४-९१ (९१५९२)
विश्वमूर्तिर्महमूर्तिर्दीप्तमूर्तिरमूर्तिमान् ।
अनेकमूर्तिरव्यक्तः शतमूर्तिः शताननः ॥ १३-२५४-९२ (९१५९३)
एको नैकः सवः कः किं यत्तत्पदमनुत्तमम् ।
लोकबन्धुर्लोकनाथो माधवो भक्तवत्सलः ॥ १३-२५४-९३ (९१५९४)
सुवर्णवर्णो हेमाङ्गो वराङ्गश्चन्दनाङ्गदी ।
वीरहा विषमः शून्यो घृताशीरचलश्चलः ॥ १३-२५४-९४ (९१५९५)
अमानी मानदो मान्यो लोकस्वामी त्रिलोकधृत् ।
सुमेधा मेघजो धन्यः सत्यमेधा धराधरः ॥ १३-२५४-९५ (९१५९६)
तेजो वृषो द्युतिधरः सर्वशस्त्रभृतांवरः ।
प्रग्रहो निग्रहो व्यग्रो नैकशृङ्गो गदाग्रजः ॥ १३-२५४-९६ (९१५९७)
चतुर्मूर्तिश्चतुर्बाहुश्चतुर्व्यूहश्चतुर्गतिः ।
चतुरात्मा चतुर्भावश्चतुर्वदविदेकपात् ॥ १३-२५४-९७ (९१५९८)
समावर्तो निवृत्तात्मा दुर्जयो दुरतिक्रमः ।
दुर्लभो दुर्गमो दुर्गो दुरावासो दुरारिहा ॥ १३-२५४-९८ (९१५९९)
शुभाङ्गो लोकसारङ्गः सुतन्तुस्तन्तुवर्धनः ।
इन्द्रकर्मा महाकर्मा कृतकर्मा कृतागमः ॥ १३-२५४-९९ (९१६००)
उद्भवः सुन्दरः सुन्दो रत्ननाभः सुलोचनः ।
अर्को वाजसनः शृङ्गी जयन्तः सर्वविज्जयी ॥ १३-२५४-१०० (९१६०१)
सुवर्णबिन्दुरक्षोभ्यः सर्ववागीश्वरेश्वरः ।
महाह्रदो महागर्तो महाभूतो महानिधिः ॥ १३-२५४-१०१ (९१६०२)
कुमुदः कुन्दरः कुन्दः पर्जन्यः पवनोऽनिलः ।
अमृतांशोऽमृतवपुः सर्वज्ञः सर्वतोमुखः ॥ १३-२५४-१०२ (९१६०३)

सुलभः सुव्रतः सिद्धः शत्रुजिच्छत्रुतापनः ।
न्यग्रोधोदुम्बरोश्वत्थश्चापूरान्ध्रनिषूदनः ॥ १३-२५४-१०३ (९१६०४)
सहस्रार्चिः सप्तजिह्वः सप्तैधाः सप्तवाहनः ।
अमूर्तिरनघोऽचिन्त्यो भयकृद्भयनाशनः ॥ १३-२५४-१०४ (९१६०५)
अणुर्बृहत्कृशः स्थूलो गुणभृन्नर्गुणो महान् ।
अधृतः स्वधृतः स्वास्थ्यः प्राग्वंशो वंशवर्धनः ॥ १३-२५४-१०५
(९१६०६)
भारभृत्कथितो योगी योगीशः सर्वकामदः ।
आश्रमः श्रमणः क्षामः सुपर्णो वायुवाहनः ॥ १३-२५४-१०६ (९१६०७)
धनुर्धरो धनुर्वेदो दण्डो दमयिता दमः ।
अपराजितः सर्वसहो नियन्ता नियमो यमः ॥ १३-२५४-१०७ (९१६०८)
सत्ववान्सात्विकः सत्यः सत्यधर्मपरायणः ।
अभिप्रायः प्रियार्होऽर्हःऋ प्रियकृत्प्रीतिवर्धनः ॥ १३-२५४-१०८ (९१६०९)
विहायसगतिर्ज्योतिः सुरुचिर्हुतभुग्विभुः ।
रविर्विरोचनः सूर्यः सविता रविलोचनः ॥ १३-२५४-१०९ (९१६१०)
अन्तो हुतभुग्भोक्ता सुखदो नैकदोऽग्रजः ।
अनिर्विण्णः सदामर्षी लोकाधिष्ठानमद्भुतः ॥ १३-२५४-११० (९१६११)
सनात्सनातनतमः कपिलः कपिरप्ययः ।
स्वस्तिदः स्वस्तिकृत्स्वस्ति स्वस्तिभुक् स्वस्तिदक्षिणः ॥ १३-२५४-१११ (९१६१२)
अरौद्रः कुण्डली चक्री विक्रम्यूर्जितशासनः ।
शब्दातिगः शब्दसहः शिशिरः शर्वरीकरः ॥ १३-२५४-११२ (९१६१३)
अक्रूरः पेशलो दक्षो दक्षिणः क्षमिणांवरः ।
विद्वत्तमो वीतभयः पुण्यश्रवणकीर्तनः ॥ १३-२५४-११३ (९१६१४)
उत्तारणो दुष्कृतिहा पुण्यो दुःखप्ननाशनः ।
वीरहा रक्षणः सन्तो जीवनः पर्यवस्थितः ॥ १३-२५४-११४ (९१६१५)
अनन्तरूपोऽनन्तश्रीर्जितमन्युर्भयापहः ।
चतुरस्रो गभीरात्मा विदिशो व्यादिशो दिशः ॥ १३-२५४-११५ (९१६१६)
अनादिर्भूर्भुवो लक्ष्मीः सुवीरो रुचिराङ्गदः ।
जननो जनजन्मादिर्भीमो भीमपराक्रमः ॥ १३-२५४-११६ (९१६१७)
आधारनिलयो धाता पुष्पहासः प्रजागरः ।
ऊर्ध्वगः सत्पथाचारः प्राणदः प्रणवः पणः ॥ १३-२५४-११७ (९१६१८)
प्रमाणं प्राणनिलयः प्राणभृत्प्राणजीवनः ।
तत्त्वं तत्त्वविदेकात्मा जन्ममृत्युजरातिगः ॥ १३-२५४-११८ (९१६१९)
भूर्भुवःस्वस्तरुस्तारः सविता प्रपितामहः ।
यज्ञो यज्ञपतिर्यज्वा यज्ञाङ्गो यज्ञवाहनः ॥ १३-२५४-११९ (९१६२०)
यज्ञभृद्यज्ञकृद्यज्ञी यज्ञभुग्यज्ञसाधनः ।

यज्ञान्तकृद्यज्ञगुह्यमन्नमन्नाद एव च ॥ १३-२५४-१२० (९१६२१)
आत्मयोनिः स्वयंजातो वैखानः सामगायनः ।
देवकीनन्दनः स्रष्टा क्षितीशः पापनाशनः ॥ १३-२५४-१२१ (९१६२२)
शङ्खभृन्नन्दकी चक्री शार्ङ्गधन्वा गदाधरः ।
रथाङ्गपाणिरक्षोभ्यः सर्वप्रहरणायुधः ।
सर्वप्रहारणायुध ओंनम इति ॥ १३-२५४-१२२ (९१६२३)
इतीदं कीर्तनीयस्यि केशवस्य महात्मनः ।
नाम्नां सहस्रं दिव्यानामशेषेण प्रकीर्तितम् ॥ १३-२५४-१२३ (९१६२४)
य इदं शृणुयान्नित्यं यश्चापि परिकीर्तयेत् ।
नाशुभं प्राप्नुयात्किञ्चित्सोमुत्रेह च मानवः ॥ १३-२५४-१२४ (९१६२५)
वेदान्तो ब्राह्मणः स्यात्क्षत्रियो विजयी भवेत् ।
वैश्यो धनसमृद्धः स्याच्छूद्रः सुखमवाप्नुयात् ॥ १३-२५४-१२५ (९१६२६)
धर्मार्थी प्राप्नुयाद्धर्ममर्थार्थी चार्थमाप्नुयात् ।
कामानवाप्नुयात्कामी प्रजार्थी प्राप्नुयात्प्रजाम् ॥ १३-२५४-१२६ (९१६२७)
भक्तिमान्यः सदोत्थाय शुचिस्तद्गतमानसः ।
सहस्रं वासुदेवस्य नाम्नातेमत्प्रकीर्तयेत् ॥ १३-२५४-१२७ (९१६२८)
यशः प्राप्नोति विपुलं ज्ञातिप्राधान्यमेव च ।
अचलां श्रियमाप्नोति श्रेयः प्राप्नोत्यनुत्तमम् ॥ १३-२५४-१२८ (९१६२९)
न भयं क्वचिदाप्नोति वीर्यं तेजश्च विन्दति ।
भवत्ययोगो द्युतिमान्बलरूपगुणान्वितः ॥ १३-२५४-१२९ (९१६३०)
रोगार्तो मुच्यते रोगाद्बद्धो मुच्येत बन्धनात् ।
भयान्मुच्येत भीतस्तु मुच्येदापन्न आपदः ॥ १३-२५४-१३० (९१६३१)
दुर्गाण्यतितरत्याशु पुरुषः पुरुषोत्तमम् ।
स्तुवन्नामसहस्रेण नित्यं भक्तिसमन्वितः ॥ १३-२५४-१३१ (९१६३२)
वासुदेवाश्रयो मर्त्यो वासुदेवपरायणः ।
सर्वपापविशुद्धात्मा याति ब्रह्म सनातनम् ॥ १३-२५४-१३२ (९१६३३)
न वासुदेवभक्तानामशुभं विद्यते क्वचित् ।
जन्ममृत्युजराव्याधिभयं नैवोपजायते ॥ १३-२५४-१३३ (९१६३४)
इमं स्तवमधीयानः श्रद्धाभक्तिसमन्वितः ।
युज्येतात्मसुखक्षान्तिश्रीधृतिस्मृतिकीर्तिभिः ॥ १३-२५४-१३४ (९१६३५)
न क्रोधो न च मात्सर्यं न लोभो नाशुभा मतिः ।
भन्ति कृतपुण्यानां भक्तानां पुरुषोत्तमे ॥ १३-२५४-१३५ (९१६३६)
द्यौः सचन्द्रार्कनक्षत्रा खं दिशो भूर्महोदधिः ।
वासुदेवस्य वीर्येण विधृतानि महात्मनः ॥ १३-२५४-१३६ (९१६३७)
ससुरासुरगन्धर्वं सयक्षोरगराक्षसम् ।
जगद्वशे वर्ततेदं कृष्णस्य सचराचरम् ॥ १३-२५४-१३७ (९१६३८)

इन्द्रियाणि मनो बुद्धिः सत्वं तेजो बलं धृतिः ।
वासुदेवात्मकान्याहुः क्षेत्रं क्षेत्रज्ञ एव च ॥ १३-२५४-१३८ (९१६३९)
सर्वागमानामाचारः प्रथमं परिकल्प्यते ।
आचारप्रभवो धर्मो धर्मस्य प्रभुरच्युतः ॥ १३-२५४-१३९ (९१६४०)
ऋषयः पितरो देवा महाभूतानि धातवः ।
जङ्गमाजङ्गमं चेदं जगन्नारयणोद्भवम् ॥ १३-२५४-१४० (९१६४१)
योगो ज्ञानं तथा साङ्ख्यं विद्याः शिल्पादिकर्म च ।
वेदाः सास्त्राणि विज्ञानमेतत्सर्वं जनार्दनात् ॥ १३-२५४-१४१ (९१६४२)
एको विष्णुर्महद्भूतं पृथग्भूतान्यनेकशः ।
त्रींल्लोकान्व्याप्य भूतात्मा भुङ्क्ते विश्वभुगव्ययः ॥ १३-२५४-१४२ (९१६४३)
इमं स्तवं भगवतो विष्णोर्व्यासेन कीर्तितम् ।
पठेद्य इच्छेत्पुरुषः श्रेयः प्राप्तुं सुखानि च ॥ १३-२५४-१४३ (९१६४४)
विश्वेश्वरमजं देवं जगतः प्रभवाप्ययम् ।
भजन्ति ये पुष्कराक्षं न ते यान्ति पराभवम् ।
ग्न ते यान्ति पराभवम् ओं नम इति ॥ १३-२५४-१४४ (९१६४५)
अर्जुन उवाच। १३-२५४-१४५क्ष् (७६८७)
पद्मपत्रविशालक्ष पद्मनाभ सुरोत्तम ।
भक्तानामनुरक्तानां त्राता भव जनार्दन ॥ १३-२५४-१४५ (९१६४६)
भगवानुवाच। १३-२५४-१४६क्ष् (७६८८)
यो मां नामसहस्रेण स्तोतुमिच्छति पाण्डव ।
सोहमेकेन श्लोकेन स्तुत एव न संशयः ।
स्तुत एव न संशय ओं नम इति ॥ १३-२५४-१४६ (९१६४७)
वासनाद्वासुदेवः स्या वासितं ते जगत्त्रयम् ।
सर्वभूतनिवासोसि वासुदेव् नमोस्तु ते ॥ १३-२५४-१४७ (९१६४८)
१३-२५४-१४८ (९१६४९)
नमोस्त्वनन्ताय सहस्रमूर्तये
सहस्रपादाक्षिशिरोरुबाहवे ।
सहस्रनाम्ने पुरुषाय शाश्वते
सहस्रकोटियुगधारिणे नमः ।
श्रीसहस्रकोटियुगधारिणे नम इति ॥'

Mahabharata - Anushaasana Parva - Chapter Footnotes

७-२५४-४१ विश्वधृगिति झ पाठ । सत्कृतः साधुरिति च ॥
७-२५४-५८ विरमो विरमः इति क पाठः,विरतः इति थ पाठः ॥
७-२५४-६४ सुघोषः सुहृदः सुहृदिति क थ पाठः ॥
७-२५४-६८ शरीरभूतभृद्भोक्तेति क ङ झ थ पाठः ॥

७-२५४-६९ विनयो जयः सत्यसन्धः इति क ङ झ पाठः ॥
७-२५४-७४ कालनेमिनिहा शौरिर्वीरः शूरजनेश्वरः इति क पाठः
। कालनेमिनिहा वीरः शूरः शौरिर्जनेश्वरः इति थ पाठः ॥
७-२५४-१०० अर्को वाजसनिः शृङ्गी इति थ पाठः ॥
७-२५४-१०२ अमृताशोऽमृतवपुरिति झ थ पाठः ॥
७-२५४-११० अनन्तहुतभुग्भोक्तेति क थ पाठः ॥
७-२५४-११९ सपिता प्रपितामहः इति झ पाठ ॥
७-२५४-१२८ विपुलं याति प्राधान्यमेव चेति क पाठः ॥

---

अनुससनपर्व-अध्यय२५५
॥ श्रीः ॥
१३.२५५. अध्यायः २५५

अथ दानधर्मपर्व ॥ १ ॥
Mahabharata - Anushaasana Parva - Chapter Topics
भीष्मेण युधिष्ठिरंप्रति एकादशरुद्रद्वादशादित्यादीनां
वसिष्ठादिमहर्षीणां राजर्ष्यादीनां च
पृथक्पृथङ्नामनिर्देशपूर्वकं तत्तन्नामकीर्तनादेः
सावित्रीजपादेश्च महाफलहेतुत्वाभिधानम् ॥ १ ॥

Mahabharata - Anushaasana Parva - Chapter Text

युधिष्ठिर उवाचक्।
पितामह महाप्राज्ञ सर्वशास्त्रविशारद ।
किं जप्यं जपतो नित्यं भवेद्धर्मफलं महत् ॥ १३-२५५-१ (९११६५०)
प्रस्थाने वा प्रवेशे वा प्रवृत्ते वाऽपि कर्मणि ।
दैवे वा श्राद्धकाले वा किं जप्यं कर्मसाधनम् ॥ १३-२५५-२ (९११६५१)
शान्तिकं पौष्टिकं रक्षा शत्रुघ्नं भयनाशनम् ।
जप्यं यद्ब्रह्म समितं तद्भवान्वक्तुमर्हति ॥ १३-२५५-३ (९११६५२)
भीष्म उवाच। १३-२५५-४क्ष् (७६८९)
व्यासप्रोक्तमिमं मन्त्रं शृणुष्वैकमना नृप ।
सावित्र्या विहितं दिव्यं सद्यः पावविमोचनम् ॥ १३-२५५-४ (९११६५३)
शृणु मन्त्रविधिं कृत्स्नं प्रोच्यमानं मयाऽनघ ।
यं श्रुत्वा पाण्डवश्रेष्ठ सर्वपापैः प्रमुच्यते ॥ १३-२५५-५ (९११६५४)
रात्रावहनि धर्मज्ञ जपन्पापैर्न लिप्यते ।
तत्तेऽहं सम्प्रवक्ष्यामि शृणुष्वैकमना नृप ॥ १३-२५५-६ (९११६५५)

आयुष्मान्भवते चैव यं श्रुत्वा पार्थिवात्मज ।
पुरुषस्तु सुसिद्धार्थः प्रेत्य चेह च मोदते ॥१३-२५५-७ (९१६५६)
सेवितं सततं राजन्पुरा राजर्षिसत्तमैः ।
क्षत्रधर्मपैरर्नित्यं सत्यव्रतपरायणैः ॥१३-२५५-८ (९१६५७)
इदमाह्निकमव्यग्रं कुर्वद्भिर्नियतैः सदा ।
नृपैर्भरतशार्दूल प्राप्यते श्रीरनुत्तमा ॥१३-२५५-९ (९१६५८)
नमो वसिष्ठाय महाव्रताय
पराशरं वेदनिधइं नमस्ते ।
नमोस्त्वनन्ताय महोरगाय
नमोस्तु सिद्धेभ्य इहाक्षयेभ्यः ॥ १३-२५५-१० (९१६५९)
नमोस्त्वृषिभ्यः परमं परेषां
देवेषु देवं वरदं वराणाम् ।
सहस्रशीर्षाय नमः शिवाय
सहस्रनामाय जनार्दनाय ॥ १३-२५५-११ (९१६६०)
अजैकपादहिर्बुध्न्यः पिनाकी चापराजितः ।
ऋतश्च पितृरूपश्च त्र्यम्बकश्च महेश्वरः ॥१३-२५५-१२ (९१६६१)
वृषाकपिश्च शंभुश्च हवनोऽथेश्वरस्तथा ।
एकादशैते प्रथिता रुद्रास्त्रिभुवनेश्वराः ॥१३-२५५-१३ (९१६६२)
शतमेतत्समाम्नातं शतरुद्रे महात्मनाम् ॥ १३-२५५-१४ (९१६६३)
अंशो भगश्च मित्रश्च वरुणश्च जलेश्वरः ।
तथा धाताऽर्यमा चैव जयन्तो भास्करस्तथा ॥१३-२५५-१५ (९१६६४)
त्वष्टा पूषा तथैवेन्द्रो द्वादशो विष्णुरुच्यते ।
इत्येते द्वादशादित्याः काश्यपेया इति श्रुतिः ॥१३-२५५-१६ (९१६६५)
धरो ध्रुवश्च सोमश्च सावित्रोऽथानिलोऽनलः ।
प्रत्यूषश्च प्रभासश्च वसवोष्टौ प्रकीर्तिताः ॥१३-२५५-१७ (९१६६६)
नासत्यश्चापि दस्रश्च स्मृतौ द्वावश्विनावपि ।
मार्तण्डस्यात्मजावेतौ संज्ञानासाविनिर्गतौ ॥१३-२५५-१८ (९१६६७)
अतः परं प्रवक्ष्यामि लोकानां कर्मसाक्षिणः ।
अपि यज्ञस्य वेत्तारो दत्तस्य सुकृतस्य च ॥१३-२५५-१९ (९१६६८)
अदृश्याः सर्वभूतेषु पश्यन्ति त्रिदशेश्वराः। १३-२५५-२० (९१६६९)
शुभाशुभानि कर्माणि मृत्युः कालश्च सर्वशः ॥ १३-२५५-२० (९१६७०)
विश्वेदेवाः पितृगणा मूर्तिमन्तस्तपोधनाः ।
मुनयश्चैव सिद्धाश्च तपोमोक्षपरायणाः ।
शुचिस्मिताः कीर्तयतां प्रयच्छन्ति शुभं नृणाम् ॥ १३-२५५-२१ (९१६७१)
प्रजापतिकृतानेतान्लोकान्दिव्येन तेजसा ।
वसन्ति सर्वलोकेषु प्रयताः सर्वकर्मसु ॥१३-२५५-२२ (९१६७२)

प्राणानामीश्वरानेतान्कीर्तयन्प्रयतो नरः ।
धर्मार्थकामैर्विपुलैर्युज्यते सह नित्यशः ॥ १३-२५५-२३ (९१६७३)
लोकांश्च लभते पुण्यान्विश्वेश्वरकृताञ्शुभान् ।
एते देवास्त्रयस्त्रिंशत्सर्वभूतगणेश्वराः ॥ १३-२५५-२४ (९१६७४)
नन्दीश्वरो महाकायो ग्रामणीर्वृषभध्वजः ।
ईश्वराः सर्वलोकानां गणेश्वरविनायकाः ॥ १३-२५५-२५ (९१६७५)
सौम्या रौद्रा गणाश्चैव योगभूतगणास्तथा ।
ज्योतींषि सरितो व्योम सुपर्णः पतगेश्वरः ॥ १३-२५५-२६ (९१६७६)
पृथिव्यां तपसा सिद्धाः स्थावराश्च चरास्च ह ।
हिमवान्गिरयः सर्वे चत्वारश्च महार्णवाः ॥ १३-२५५-२७ (९१६७७)
भवस्यानुचराश्चैव हरतुल्यपराक्रमाः ।
विष्णुर्देवोथ जिष्णुश्च स्कन्दश्चाम्बिकया सह ॥ १३-२५५-२८ (९१६७८)
कीर्तयन्प्रयतः सर्वान्सर्वपापैः प्रमुच्यते ।
अत ऊर्ध्वं प्रवक्ष्यामि मानवानृषिसत्तमान् ॥ १३-२५५-२९ (९१६७९)
यवक्रीतश्च रैभ्यश्च अर्वावसुपरावसू ।
औशिजश्चैव कक्षीवान्बलश्चाङ्गिरसः सुतः ॥ १३-२५५-३० (९१६८०)
ऋषिर्मेधातिथेः पुत्रः कण्वो बर्हिषदस्तथा ।
ब्रह्मतेजोमयाः सर्वे कीर्तिता लोकभावनाः ॥ १३-२५५-३१ (९१६८१)
लभन्ते हि शुभं सर्वे रुद्रानलवसुप्रभाः ।
भुवि कृत्वा शुभं कर्म मोदन्ते दिवि दैवतैः ॥ १३-२५५-३२ (९१६८२)
महेन्द्रगुरवः सप्त प्राचीं वै दिशमाश्रिताः ।
प्रयतः कीर्तयेदेताञ्शक्रलोके महीयते ॥ १३-२५५-३३ (९१६८३)
उन्मुचुः प्रमुचुश्चैव स्वस्त्यात्रेयश्च वीर्यवान् ।
दृढव्यश्चोर्ध्वबाहुश्च तृणसोमाङ्गिरास्तथा ॥ १३-२५५-३४ (९१६८४)
मित्रावरुणयोः पुत्रस्तथाऽगस्त्यः प्रतापवान् ।
धर्मराजर्त्विजः सप्त दक्षिणां दिशमाश्रिताः ॥ १३-२५५-३५ (९१६८५)
दृढेयुश्च ऋतेयुश्च परिव्याधश्च कीर्तिमान् ।
एकतश्च द्वितश्चैव त्रितश्चादित्यसन्निभाः ॥ १३-२५५-३६ (९१६८६)
अत्रेः पुत्रश्च धर्मात्मा ऋषिः सारस्वतस्तथा ।
वरुणस्यर्त्विजः सप्त पश्चिमां दिशमाश्रिताः ॥ १३-२५५-३७ (९१६८७)
अत्रिर्वसिष्ठो भगवान्कश्यपश्च महानृषिः ।
गौतमश्च भरद्वाजो विश्वामित्रोथ कौशिकः ॥ १३-२५५-३८ (९१६८८)
ऋचीकतनयश्चोग्रो जमदग्निः प्रतापवान् ।
धनेश्वरस्य गुरवः सप्तैते उत्तराश्रिताः ॥ १३-२५५-३९ (९१६८९)
अपरे मुनयः सप्त दिक्षु सर्वास्वधिष्ठिताः ।
कीर्तिस्वस्तिकरा नृणां कीर्तिता लोकभावनाः ॥ १३-२५५-४० (९१६९०)

धर्मः कामश्च कालश्च वसुर्वासुकिरेव च ।
अनन्तः कपिलश्चैव सप्तैते धरणीधराः ॥ १३-२५५-४१ (९१६९१)
रामो व्यासस्तथा द्रौणिरश्वत्थामा च लोमशः ।
इत्येते मुनयो दिव्या एकैकः सप्तसप्तधा ॥ १३-२५५-४२ (९१६९२)
शान्तिस्वस्तिकरा लोके दिशांपालाः प्रतीर्तिताः ।
यस्यांयस्यां दिशि ह्येते तन्मुखः शरणं व्रजेत् ॥ १३-२५५-४३ (९१६९३)
स्रष्टारः सर्वभूतानां कीर्तिता लोकपावनाः ।
संवर्तो मेरुसावर्णो मार्कण्डेयश्च धार्मिकः ॥ १३-२५५-४४ (९१६९४)
साङ्ख्ययोगौ नारदश्च दुर्वासाश्च महानृषिः ।
अत्यन्ततपसो दान्तास्त्रिषु लोकेषु विश्रुताः ॥ १३-२५५-४५ (९१६९५)
अपरे रुद्रसङ्काशाः कीर्तिता ब्रह्मलौकिकाः ।
अपुत्रो लभते पुत्रं दरिद्रो लभते धनम् ॥ १३-२५५-४६ (९१६९६)
तथा धर्मार्थकामेषु सिद्धिं च लभते नरः ।
पृथुं वैन्यं नृपवरं पृथ्वी यस्याभवत्सुता ॥ १३-२५५-४७ (९१६९७)
प्रजापतिं सार्वभौमं कीर्तयेद्वसुधाधिपम् ।
आदित्यवंशप्रभवं महेन्द्रसमविक्रमम् ॥ १३-२५५-४८ (९१६९८)
पुरूरवसमैलं च त्रिषु लोकेषु विश्रुतम् ।
बुधस्य दयितं पुत्रं कीर्तयेद्वसुधाधिपम् ॥ १३-२५५-४९ (९१६९९)
त्रिलोकविश्रुतं वीरं भरतं च प्रकीर्तयेत् ।
गवामयेन यज्ञेन येनेष्टं वै कृते युगे ॥ १३-२५५-५० (९१७००)
रन्तिदेवं महादेवं कीर्तयेत्परमद्युतिम् ।
विश्वजित्तपसोपेतं लक्षण्यं लोकपूजितम् ॥ १३-२५५-५१ (९१७०१)
तथा श्वेतं च राजर्षिं कीर्तयेत्परमुद्यतिम् ।
सगरस्यात्मजा येन प्लावितास्तारितास्तथा ॥ १३-२५५-५२ (९१७०२)
हुताशनसमानेतान्महारूपान्महौजसः ।
उग्रकायान्महासत्वान्कीर्तयेत्कीर्तिवर्धनान् ॥ १३-२५५-५३ (९१७०३)
देवानृषिगणांश्चैव नृपांश्च जगतीश्वरान् ।
साङ्ख्यं योगं च परमं हव्यं कव्यं तथैव च ॥ १३-२५५-५४ (९१७०४)
कीर्तितं परमं ब्रह्म सर्वश्रुतिपरायणम् ।
मङ्गल्यं सर्वभूतानां पवित्रं बहु कीर्तितम् ॥ १३-२५५-५५ (९१७०५)
व्याधिप्रशमनं श्रेष्ठं पौष्टिकं सर्वकर्मणाम् ।
प्रयतः कीर्तयेच्चैतान्कल्यं सायं च भारत ॥ १३-२५५-५६ (९१७०६)
एते वै यान्ति वर्षन्ति भान्ति वान्ति सृजन्ति च ।
एते विनायकाः श्रेष्ठा दक्षाः क्षान्ता जितेन्द्रियाः ॥ १३-२५५-५७ (९१७०७)
नराणामशुभं सर्वे व्यपोहन्ति प्रकीर्तिताः ।
साक्षिभूता महात्मानः पापस्य सुकृतस्य च ॥ १३-२५५-५८ (९१७०८)

एतान्वै कल्यमुत्थाय कीर्तयञ्शुभमश्नुते ।
नाग्निचोरभयं तस्य न मार्गप्रतिरोधनम् ॥ १३-२५५-५९ (११७०९)
एतान्कीर्तयतां नित्यं दुःस्वप्नो नश्यते नृणाम् ।
मुच्यते सर्वपापेभ्यः स्वस्तिमांश्च गृहान्व्रजेत् ॥ १३-२५५-६० (११७१०)
दीक्षाकालेषु सर्वेषु यः पठेन्नियतो द्विजः ।
न्यायवानात्मनिरतः क्षान्तो दान्तोऽनसूयकः ॥ १३-२५५-६१ (११७११)
रोगार्तो व्याधियुक्तो वा पठन्पापात्प्रमुच्यते ।
वास्तुमध्ये तु पठतः कुले स्वस्त्ययनं भवेत् ॥ १३-२५५-६२ (११७१२)
क्षेत्रमध्ये तु पठतः सर्वं सस्यं प्ररोहति ।
गच्छतः क्षेममध्वानं ग्रामान्तरगतः पठन् ॥ १३-२५५-६३ (११७१३)
आत्मनश्च सुतानां च दाराणां च धनस्य च ।
बीजानामोषधीनां च रक्षामेतां प्रयोजयेत् ॥ १३-२५५-६४ (११७१४)
एतान्सङ्ग्रामकाले तु पठतः क्षत्रियस्य तु ।
व्रजन्ति रिपवो नाशं क्षेमं च परिवर्तते ॥ १३-२५५-६५ (११७१५)
एतान्दैवे च पित्र्ये च पठतः पुरुषस्य हि ।
भुञ्जते पितरः कव्यं हव्यं च त्रिदिवौकसः ॥ १३-२५५-६६ (११७१६)
न व्याधिश्वापदभयं न द्विपान्न हि तस्करात् ।
कश्मलं लघुतां याति पाप्मना च प्रमुच्यते ॥ १३-२५५-६७ (११७१७)
यानपात्रे च याने च प्रवासे राजवेश्मनि ।
परां सिद्धिमवाप्नोति सावित्रीं ह्युत्तमां पठन् ॥ १३-२५५-६८ (११७१८)
न च राजभयं तेषां न पिशाचान्न राक्षसात् ।
नाग्न्यम्बुपवनव्यालाद्भयं तस्योपजायते ॥ १३-२५५-६९ (११७१९)
चतुर्णामपि वर्णानामाश्रमस्य विशेषतः ।
करोति सततं शान्तिं सावित्रीमुत्तमां पठन् ॥ १३-२५५-७० (११७२०)
नाग्निर्दहति काष्ठानि सावित्री यत्र पठ्यते ।
न तत्र बालो म्रियते न च तिष्ठन्ति पन्नगाः ॥ १३-२५५-७१ (११७२१)
न तेषां विद्यते दुःखं गच्छन्ति परमां गतिम् ।
ये शृण्वन्ति महद्ब्रह्म सावित्रीगुणकीर्तनम् ॥ १३-२५५-७२ (११७२२)
गवां मध्ये तु पठतो गावोऽस्य बहुवत्सलाः ।
प्रस्थाने वा प्रवासे वा सर्वावस्थां गतः पठेत् ॥ १३-२५५-७३ (११७२३)
जपतां जुह्वतां चैव नित्यं च प्रयतात्मनाम् ।
ऋषीणां परमं जप्यं गुह्यमेतन्नराधिप ॥ १३-२५५-७४ (११७२४)
याथातथ्येन सिद्धस्य इतिहासं पुरातनम् ।
पराशरमतं दिव्यं शक्राय कथितं पुरा ॥ १३-२५५-७५ (११७२५)
तदेतत्ते समाख्यातं तथ्यं ब्रह्म सनातनम् ।
हृदयं सर्वभूतानां श्रुतिरेषा सनातनी ॥ १३-२५५-७६ (११७२६)

सोमादित्यान्वयाः सर्वे राघवाः कुरवस्तथा ।
पठन्ति शुचयो नित्यं सावित्रीं प्राणिनां गतिं ॥ १३-२५५-७७ (९१७२७)
अभ्यासे नित्यं देवानां सप्तर्षीणां ध्रुवस्य च ।
मोक्षणं सर्वकृच्छ्राणां मोचयत्यशुभात्सदा ॥ १३-२५५-७८ (९१७२८)
वृद्धैः काश्यपगौतमप्रभृतिभिर्भृग्वङ्गिरोत्र्यादिभिः
शुक्रागस्त्यबृहस्पतिप्रभृतिभिर्ब्रह्मर्षिभिः सेवितम् ।
भारद्वाजमतं ऋचीकतनयैः प्राप्तं वसिष्ठात्पुनः
सावित्रीमधिगम्य शक्रवसुभिः कृत्स्ना जिता दानवाः ॥ १३-२५५-७९ (९१७२९)
यो गोशतं कनकशृङ्गमयं ददाति
विप्राय वेदविदुषे च बहुश्रुताय ।
दिव्यां च भारतकथां कथयेच्च नित्यं
तुल्यं फलं भवति तस्य च तस्य चैव ॥ १३-२५५-८० (९१७३०)
धर्मो विवर्धति भृगोः परिकीर्तनेन
वीर्यं विवर्धति पसिष्ठनमोनतेन ।
सङ्ग्रामजिद्भवति चैव रघुं नमस्य-
न्स्यादश्विनौ च परिकीर्तयतो न रोगः ॥ १३-२५५-८१ (९१७३१)
एषा ते कथिता राजन्सावित्री ब्रह्मशाश्वती ।
विवक्षुरसि यच्चान्यत्तत्ते वक्ष्यामि भारत ॥ ॥ १३-२५५-८२ (९१७३२)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
पञ्चपञ्चाशदधिकद्विशततमोऽध्यायः ॥ २५५ ॥
Mahabharata - Anushaasana Parva - Chapter Footnotes

७-२५५-१क्ष् अयमध्यायः औत्तराहपाठ एव वर्तते। ७-२५५-४ विहितं इष्टसिद्ध्यर्थं जप्तम्। ।
७-२५५-९ आह्निकं अहरहः कर्तव्यम् ॥
७-२५५-११ वरदं नमस्ये इति शेषः ॥
७-२५५-१८ संज्ञाया अश्वारूपाया नास्तातः नासिकायाः सकाशाद्विनिर्गतौ ॥

---

अनुससनपर्व-अध्यय२५६
॥ श्रीः ॥
१३.२५६. अध्यायः २५६

अथ दानधर्मपर्व ॥ १ ॥
Mahabharata - Anushaasana Parva - Chapter Topics
भीष्मेण युधिष्ठिरंप्रति ब्राह्मणमहिमप्रशंसनपूर्वकं तेषां

युधिष्ठिर उवाच ।
के पूज्याः के नमस्कार्या कथं वर्तेत केषु च ।
किमाचारः कीदृशेषु पितामह न रिष्यते ॥ १३-२५६-१ (९१७३३)
भीष्म उवाच। १३-२५६-२क्ष् (७६९०)
ब्राह्मणानां परिभवः सादयेदपि देवताः ।
ब्राह्मणांस्तु नमस्कृत्य युधिष्ठिर न रिष्यते ॥ १३-२५६-२ (९१७३४)
ते पूज्यास्ते नमस्कार्या वर्तेथास्तेषु पुत्रवत् ।
ते हि लोकानिमान्सर्वान्धारयन्ति मनीषिणः ॥ १३-२५६-३ (९१७३५)
ब्राह्मणाः सर्वलोकानां महान्तो धर्मसेतवः ॥
धनत्यागाभिरामास्चि वाक्सङ्गमधुराश्च ये ॥ १३-२५६-४ (९१७३६)
रमणीयाश्च भूतानां नियमेन धृतव्रताः ।
प्रणेतारश्च कोशानां शास्त्राणां च यशस्विनः ॥ १३-२५६-५ (९१७३७)
तपो येषां धनं नित्यं वाक्चैव विपुलं बलम् ।
प्रसवाश्चैव धर्माणां धर्मज्ञाः सूक्ष्मदर्शिनः ॥ १३-२५६-६ (९१७३८)
धर्मकामाः स्थिता धर्मे सुकृतैर्धर्मसेवतः ।
यान्समाश्रित्य तिष्ठन्ति प्रजाः सर्वाश्चतुर्विधाः ॥ १३-२५६-७ (९१७३९)
पन्थानः सर्वनेतारो यज्ञवाहाः सनातनाः ।
पितृपैतामहीं गुर्वीमुद्वहन्ति धुरं सदा ॥ १३-२५६-८ (९१७४०)
धुरि ये नावसीदन्ति विषमे सद्धया इव ।
पितृदेवातिथिमुखा हव्यकव्याग्रभोजिनः ॥ १३-२५६-९ (९१७४१)
भोजनादेव लोकांस्त्रींस्त्रायन्ते महतो भयात् ।
दीपः सर्वस्य लोकस्य चक्षुश्चक्षुष्मतामपि ॥ १३-२५६-१० (९१७४२)
सर्वशिल्पादिनिधयो निपुणाः सूक्ष्मदर्शिनः ।
गतिज्ञाः सर्वभूतानामध्यात्मगतिचिन्तकाः ॥ १३-२५६-११ (९१७४३)
आदिमध्यावसानानां ज्ञातारश्छिन्नसंशयाः ।
परावरविशेषज्ञा गन्तारः परमां गतिम् ॥ १३-२५६-१२ (९१७४४)
विमुक्ता धूतपाप्मानो निर्द्वन्द्वा निष्परिग्रहाः ।
मानार्हा मानिता नित्यं ज्ञानविद्भिर्महात्मभिः ॥ १३-२५६-१३ (९१७४५)
चन्दने मलपङ्के च भोजनेऽभोजने समाः ।
समं येषां दुकूलं च शाणक्षौमाजिनानि च ॥ १३-२५६-१४ (९१७४६)
तिष्ठेयुरप्यभुञ्जाना बहूनि दिवसान्यपि ।
शोषयेयुश्च गात्राणि स्वाध्यायैः संयतेन्द्रियाः ॥ १३-२५६-१५ (९१७४७)

अदैवं दैवतं कुर्युर्दैवतं चाप्यदैवतम् ।
लोकानन्यान्सृजेयुस्ते लोकपालांश्च कोपिताः ॥ १३-२५६-१६ (९१७४८)
अपेयः सागरो येषामपि सापान्महात्मनाम् ।
येषां कोपाग्निरद्यापि दण्डके नोपशाम्यति ॥ १३-२५६-१७ (९१७४९)
देवानामपि ये देवाः कारणं कारणस्य च ।
प्रमामस्य प्रमाणं च तस्मान्नाभिभवेद्बुधः ॥ १३-२५६-१८ (९१७५०)
तेषां वृद्धाश्च बालाश्च सर्वे सन्मार्गदर्शिनः ।
तपोविद्याविशेषात्तु मानयन्ति परस्परम् ॥ १३-२५६-१९ (९१७५१)
अविद्वान्ब्राह्मणो देवः पात्रं वै पावनं महत् ।
विद्वान्भूयस्तरो देवः पूर्णसागरसन्निभः ॥ १३-२५६-२० (९१७५२)
अविद्वांश्चैव विद्वांश्च ब्राह्मणो दैवतं महत् ।
प्रणीतश्चाप्रणीतश्च यथाऽग्निर्दैवतं महत् ॥ १३-२५६-२१ (९१७५३)
श्मशाने ह्यपि तेजस्वी पावको नैव दुष्यति ।
हविर्यज्ञे च विधिवद्भूय एवाभिशोभते ॥ १३-२५६-२२ (९१७५४)
एवं यद्यप्यनिष्टेषु वर्तते सर्वकर्मसु ।
सर्वथा ब्राह्मणो मान्यो दैवतं विद्धि तत्परम् ॥ ॥ १३-२५६-२३ (९१७५५)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
षट्पञ्चाशदधिकद्विशततमोऽध्यायः ॥ २५६ ॥
Mahabharata - Anushaasana Parva - Chapter Footnotes

७-२५६-१ किमाचारः कथं धर्मः कीदृशेषु न रिष्यते इति क पाठः ॥
७-२५६-१६ अदैवं दैवतं कुर्युर्भस्म कुर्युश्च ते जगत् इति
क थ पाठः ॥

---

अनुससनपर्व-अध्यय२५७
॥ श्रीः ॥
१३.२५७. अध्यायः २५७

अथ दानधर्मपर्व ॥ १ ॥
Mahabharata - Anushaasana Parva - Chapter Topics
भीष्मेण युधिष्ठिरंप्रति ब्राह्मणमहिमप्रकाशनाय
कार्तवीर्यार्जुनकथाकथनारम्भः ॥ १ ॥
दत्तात्रेयाद्वरलाभगर्वितेन तेन दिग्जययात्रायां क्वापि पुरुषे
स्वसाम्याभावकथने अशरीरवाण्या ब्राह्मणानामुत्कर्षकथनम् ॥ २ ॥
तेन दर्पात्तदवज्ञाने वायुनापि ब्राह्मणानामेवोत्कर्षे कथते तेन

युधिष्ठिर उवाच ।
कां तु ब्राह्मणपूजायां व्युष्टिं दृष्ट्वा जनाधिप ।
कं वा धर्मोदयं मत्वा तानर्चसि महामते ॥ १३-२५७-१ (९१७५६)
भीष्म उवाच। १३-२५७-२क्ष् (७६९१)
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
पवनस्य च संवादमर्जुनस्य च भारत ॥ १३-२५७-२ (९१७५७)
सहस्रभुजभृच्छ्रीमान्कार्तवीर्योऽभवत्प्रभुः ।
अस्य लोकस्य सर्वस्य माहिष्मत्यां महाबलः ॥ १३-२५७-३ (९१७५८)
स तु रत्नाकरवतीं सप्तद्वीपां ससागराम् ।
शशास पृथिवीं सर्वां हैहयः सत्यविक्रमः ॥ १३-२५७-४ (९१७५९)
स्ववित्तं तेन दत्तं तु दत्तात्रेयाय कर्मणे ।
क्षत्रधर्मं पुरस्कृत्य विनयं श्रुतमेव च ॥ १३-२५७-५ (९१७६०)
आराधयामास च तं कृतवीर्यात्मजो मुनिम् ।
न्यमन्त्रयत संतुष्टो द्विजश्चैनं वरैस्त्रिभिः ॥ १३-२५७-६ (९१७६१)
स वरैश्छन्दितस्तेन नृपो वचनमब्रवीत् ।
सहस्रबाहुता मेऽस्तु यूपमध्ये ग्रहो यथा ॥ १३-२५७-७ (९१७६२)
मम बाहुसहस्रं तु पश्यन्तां सैनिका रणे ।
विक्रमेणि महीं कृत्स्नां जयेयं संशितव्रत ॥ १३-२५७-८ (९१७६३)
तां च धर्मेण सम्प्राप्य पालयेयमतन्द्रितः ।
चतुर्थं तु वरं याचे त्वामहं द्विजसत्तम ॥ १३-२५७-९ (९१७६४)
तं ममानुग्रहकृते दातुमर्हस्यनिन्दित ।
अनुशाशन्तु मां सन्तो मिथ्यावृत्तं त्वदाश्रयम् ॥ १३-२५७-१० (९१७६५)
इत्युक्तः स द्विजः प्राह तथास्त्विवति नराधिपम् ।
एवं समभवंस्तस्य वरास्ते दीप्ततेजसः ॥ १३-२५७-११ (९१७६६)
गतः स रथमास्थाय ज्वलनार्कसमद्युतिम् ।
अब्रवीद्वीर्यसंमोहात्को वाऽस्ति सदृशो मम ॥ १३-२५७-१२ (९१७६७)
धैर्यैर्वीर्यैर्यशःशौर्यैर्विक्रमेणौजसाऽपि वा ।
तद्वाक्यान्ते चान्तरिक्षे वागुवाचाशरीरिणी ॥ १३-२५७-१३ (९१७६८)
न त्वं मूढ विजानीषे ब्राह्मणं क्षत्रियाद्वरम् ।
सहितो ब्राह्मणेनेह क्षत्रियः शास्ति वै प्रजाः ॥ १३-२५७-१४ (९१७६९)
अर्जुन उवाच। १३-२५७-१५क्ष् (७६९२)
कुर्यां भूतानि तुष्टोऽहं क्रुद्धो नाशं तथा नये ।
कर्म्णा मनसा वाचा न मत्तोस्ति वरो द्विजः ॥ १३-२५७-१५ (९१७७०)

पूर्वो ब्रह्मोत्तरो वादो द्वितीयः क्षत्रियोत्तरः ।
त्वयोक्तौ हेतुयुक्तौ तौ विशेषस्तत्र दृश्यते ॥ १३-२५७-१६ (९१७७१)
ब्राह्मणाः संश्रिताः क्षत्रं न क्षत्रं ब्राह्मणाश्रितम् ।
श्रिता ब्रह्मोपधा विप्राः खादन्ति क्षत्रियान्भुवि ॥ १३-२५७-१७ (९१७७२)
क्षत्रियेष्वाश्रितो धर्मः प्रजानां परिपालनम् ।
क्षत्राद्वृत्तिर्ब्राह्मणानां तैः कथं ब्राह्मणो वरः ॥ १३-२५७-१८ (९१७७३)
सर्वभूतप्रधानांस्तान्भैक्षवृत्तीनहं सदा ।
आत्मसम्भावितान्विप्रान्स्थापयाम्यात्मनो वशे ॥ १३-२५७-१९ (९१७७४)
कथितं त्वनयाऽसत्यं गायन्त्या कन्यया दिवि ।
विजेष्याम्यवशान्सर्वान्ब्राह्मणांश्चर्मवाससः ॥ १३-२५७-२० (९१७७५)
न च मां च्यावयेद्राष्ट्रात्त्रिषु लोकेषु कश्चन ।
देवो वा मानुषो वाऽपि तस्माज्ज्येष्ये द्विजानहम् ॥ १३-२५७-२१ (९१७७६)
अद्य ब्रह्मोत्तरं लोकं करिष्ये क्षत्रियोत्तरम् ।
नहि मे संयुगे कश्चित्सोढुमुत्सहते बलम् ॥ १३-२५७-२२ (९१७७७)
अर्जुनस्य वचः श्रुत्वा वित्रस्ताऽभून्निशाचरी ।
अथैनमन्तरिक्षस्थस्ततो वायुरभाषत ॥ १३-२५७-२३ (९१७७८)
त्यजैनं कलुषं भावं ब्राह्मणेभ्यो नमस्कुरु ।
एतेषां कुर्वतः पापं राष्ट्रक्षोभो भविष्यति ॥ १३-२५७-२४ (९१७७९)
अथ च त्वां महीपाल शमयिष्यन्ति वै द्विजाः ।
निरसिष्यन्ति ते राष्ट्राद्धतोत्साहा महाबलाः ॥ १३-२५७-२५ (९१७८०)
तं राजा कस्त्वमित्याह ततस्तं प्राह मारुतः ।
वायुर्वै देवदूतोस्मि हितं त्वां प्रब्रवीम्यहम् ॥ १३-२५७-२६ (९१७८१)
अर्जुन उवाच। १३-२५७-२७क्ष् (७६९३)
अहो त्वयाऽयं विप्रेषु भक्तिरागः प्रदर्शितः ।
यादृशं पृथिवीभूतं तादृशं ब्रूहि मे द्विजम् ॥ १३-२५७-२७ (९१७८२)
वायोर्वा सदृशं किञ्चिद्ब्रूहि त्वं ब्राह्मणोत्तमम् ।
अपां वै सदृशं वह्नेः सूर्यस्य नभसोऽपि वा ॥ ॥ १३-२५७-२८ (९१७८३)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
सप्तपञ्चाशदधिकद्विशततमोऽध्यायः ॥

Mahabharata - Anushaasana Parva - Chapter Footnotes

७-२५७-१ व्युष्टिं समृद्धिं फलं वा । कं वा कर्मोदयं मत्वा इति
ङ झ। पाठः ॥
७-२५७-४ स च रक्षार्थमवनिं सप्तद्वीपां इति क पाठः ॥
७-२५७-५ दत्तात्रेयाय कारणे इति ङ झ पाठः ॥

७-२५७-७ सहस्रबाहुर्भूयां वै चमूमध्ये गृहेऽन्यथा इति
ङ झ पाठः ॥
७-२५७-१६ पूर्वो वादो ब्रह्मोत्तरः ब्राह्मणाधिक्यवचनं पूर्वपक्षः
क्षत्रियाधिक्यं सिद्धान्त इत्यर्थः । हेतुयुक्तौ प्रजापालनेन हेतुना
युक्तौ सहितौ तौ ब्राह्मणक्षत्रियौ पूर्वं ब्रह्मोत्तरो वादः क्षत्रियः
क्षत्रियोत्तरः मयोक्तो हेतुयुक्तौ चेति क पाठः ॥
७-२५७-१७ ब्रह्मा वेदो यज्ञश्च अध्यापनयाजनार्थ एव उपधा च्छलं
येषां ते तथा क्षत्रियान्खादन्ति उपजीवन्ति ॥
७-२५७-२० चर्मवाससः अजिनवस्त्रान् । गायत्र्या कन्यया दिवीति झ पाठः ॥
७-२५७-२२ ब्रह्मोत्तरं सन्तम् ॥
७-२५७-२३ निशाचरी अन्तर्हिता सरस्वती ॥
७-२५७-२७ पृथिवीभूतं पृथिव्यात्मकं भूतम् ॥

---

अनुससनपर्व-अध्यय२५८
॥ श्रीः ॥
१३.२५८. अध्यायः २५८

अथ दानधर्मपर्व ॥ १ ॥
Mahabharata - Anushaasana Parva - Chapter Topics
कार्तवीर्यार्जुनंप्रति वायुना ब्राह्मणमहिमप्रशंसके
स्ववाक्ये प्रामाण्यनश्चयाय दृष्टान्ततयाऽङ्गिरः
प्रभृतिब्राह्मणचरित्रविशेषप्रतिपादनम् ॥ १ ॥

Mahabharata - Anushaasana Parva - Chapter Text

वायुरुवाच ।
शृणु मूढ गुणान्कांश्चिद्ब्राह्मणानां महात्मनाम् ।
ये त्वया कीर्तिता राजंस्तेभ्योऽथ ब्राह्मणो वरः ॥ १३-२५८-१ (९१७८४)
त्यक्त्वा महीत्वं भूमिस्तु स्पर्धया काश्यपस्य ह ।
नाशं जगाम तां विप्रो व्यस्तम्भयत कश्यपः ॥ १३-२५८-२ (९१७८५)
अक्षया ब्राह्मणा राजन्दिवि चेह च नित्यदा ।
अपिबत्तेजसा ह्यापः स्वयमेवाङ्गिराः पुरा ॥ १३-२५८-३ (९१७८६)
स ताः पिबञ्शीरमिव नातृप्यत महातपाः ।
अपूरयन्महौघेन महीं सर्वां च पार्थिव ॥ १३-२५८-४ (९१७८७)
तस्मिन्नहं च क्रुद्धे वै जगत्त्यक्त्वा ततो भयात् ।
व्यतिष्ठमग्निहोत्रे च चिरमङ्गिरसो भयात् ॥ १३-२५८-५ (९१७८८)

अथ शप्तश्च भगवान्गौतमेन पुरंदरः ।
अहल्यां कामयानो वै धर्मार्थं च न हिंसितः ॥ १३-२५८-६ (९१७८९)
तथा समुद्रो नृपते पूर्णो दृष्टश्च वारिणा ।
ब्राह्मणैरभिशप्तश्च बभूव लवणोदकः ॥ १३-२५८-७ (९१७९०)
सुवर्णवर्णो निर्धूमः सङ्गतोर्ध्वशिखः कविः ।
क्रुद्धेनाङ्गिरसा शप्तो गुणैरेतैर्विवर्जितः ॥ १३-२५८-८ (९१७९१)
महतश्चूर्णितान्पश्य ये हासन्त महोदधिम् ।
सुवर्णिधारिणा नित्यमवशप्ता द्विजातिना ॥ १३-२५८-९ (९१७९२)
सम्मतत्वं द्विजातिभ्यः श्रेष्ठं विद्धि नराधिप ।
गर्भस्थान्ब्राह्मणान्शश्वन्नमस्यति किल प्रभुः ॥ १३-२५८-१० (९१७९३)
दण्डकानां महद्राज्यं ब्राह्मणेन विनाशितम् ।
तालजङ्घं महाक्षत्रमौर्वेणैकेन नाशितम् ॥ १३-२५८-११ (९१७९४)
त्वया च विपुलं राज्यं बलं धर्मं श्रुतं तथा ।
दत्तात्रेयप्रसादेन प्रप्तं परमदुर्लभम् ॥ १३-२५८-१२ (९१७९५)
अग्निं त्वं यजसे नित्यं कस्माद्ब्राह्मणमर्जन ।
स हि सर्वस्य लोकस्य हव्यवाट् किं न वेत्सि तम् ॥ १३-२५८-१३ (९१७९६)
अथवा ब्राह्मणश्रेष्ठमनुभूतानुपालकम् ।
कर्तारं जवलोकस्य कस्माज्जानन्विमुह्यसे ॥ १३-२५८-१४ (९१७९७)
तथा प्रजापतिर्ब्राह्मा अव्यक्तप्रभवोऽव्ययः ।
येनेदं विपुलं विश्वं जनितं स्थावरं चरम् ॥ १३-२५८-१५ (९१७९८)
अण्डजातं तु ब्रह्माणं केचिदिच्छिन्त्यपण्डिताः ।
अण्डाद्भिन्नाद्बभुः शैला दिशोंऽभः पृथिवी दिवम् ॥ १३-२५८-१६ (९१७९९)
दृष्टवानेतदेवं हि कथं जायेदजो हि सः ।
स्थानमाकाशमण्डं तु यस्माज्जातः पितामहः ॥ १३-२५८-१७ (९१८००)
तिष्ठेत्कथमिति ब्रूयान्न किञ्चिद्धि तदा भवेत् ।
अहङ्कार इति प्रोक्तः सर्वतेजोगतः प्रभुः ॥ १३-२५८-१८ (९१८०१)
नास्त्यन्तमस्ति तु ब्रह्मा स राजा लोकभावनः ।
इत्युक्तः स तदा तूष्णीमभूद्वायुस्तमब्रवीत् ॥ ॥ १३-२५८-१९ (९१८०२)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
अष्टपञ्चाशदधिकद्विशततमोऽध्यायः ॥ २५८ ॥

Mahabharata - Anushaasana Parva - Chapter Footnotes

७-२५८-४ रसकामः विबन्क्षीरं नाकुप्यत महातपाः इति थ पाठः ॥
७-२५८-५ अहं वायुः ॥
७-२५८-८ कविः अग्निः ॥

७-२५८-९ महतः सगरपुत्रान् आसन्त उपासन्त ।सुवर्णधारिणा शोभनो ब्राह्मणवर्णस्तस्य धारिणा धर्त्रा द्विजातिना कपिलेन मरुतश्चूर्णितान्पश्य।यौर्हि पूर्णो महोदधिरिति क थ पाठः ॥
७-२५८-१३ अग्निं ब्राह्मणमित्यन्वयः ॥
७-२५८-१४ अनुभूतं प्रतिभूतम् ।अनुपालकं पोषकम् ॥
७-२५८-१६ ननु ब्रह्माण्डे जातत्वात्कथमण्डमजनयदित्यत्राह अण्डेति ॥
७-२५८-१७ अण्डजत्ववचनं त्वस्य प्रकारान्तरेणेत्याह स्मृतमिति ।द्रष्टव्यं नैतदेवं हीति झ पाठः ॥

---

अनुससनपर्व-अध्यय२५९
॥ श्रीः ॥
१३.२५९. अध्यायः २५९

अथ दानधर्मपर्व ॥१ ॥
Mahabharata - Anushaasana Parva - Chapter Topics
वायुना हैहयंप्रति कश्यपचरित्रकथनम् ॥१ ॥
तथा उचथ्योपाख्यानकथनारम्भः ॥ २ ॥
सोमेन भद्राभिधायाः स्वकन्याया उचथ्याय भार्यात्वेन प्रदानम् ॥ ३ ॥
पूर्वमेव तां कामितवता वरुणेन विजने तस्या अपहरणम् ॥ ४ ॥
नारदात्तच्छ्रुतवतोचथ्येन कोपात्समुद्रे शोषिते भयाद्वरुणेनोचथ्याय पुनर्भद्राप्रत्यर्पणम् ॥ ५ ॥

Mahabharata - Anushaasana Parva - Chapter Text

वायुरुवाच ।
इमां भूमिं द्विजातिभ्यो दित्सुर्वै दक्षिणां पुरा ।
अङ्गो नाम नृपो राजंस्ततश्चिन्तां मही ययौ ॥१३-२५९-१ (९१८०३)
धारिणीं सर्वभूतानामयं प्राप्य वरो नृपः ।
कथमिच्छति मां दातुं द्विजेभ्यो ब्रह्मणः सुताम् ॥१३-२५९-२ (९१८०४)
साहं त्यक्त्वा गमिष्यामि भूमित्वं ब्रह्मणः पदम् ।
अयं सराष्ट्रो नृपतिर्माभूदिति ततोऽगमत् ॥१३-२५९-३ (९१८०५)
ततस्तां कश्यपो दृष्ट्वा व्रजन्तीं पृथिवीं तदा ।
प्रविवेश महीं सद्यो युक्तात्मा सुसमाहितः ॥१३-२५९-४ (९१८०६)
ऋद्धा सा सर्वतो जज्ञे तृणौषधिसमन्विता ।
धर्मोत्तरा नष्टभया भूमिरासीत्तमतो नृप ॥१३-२५९-५ (९१८०७)
एवं वर्षसहस्राणि दिव्यानि विपुलव्रतः ।

त्रिंशतं कश्यपो राजन्भूमिरासीदतन्द्रितः ॥ १३-२५९-६ (९१८०८)
अथागम्य महाराजन्नमस्कृत्यि च कश्यपम् ।
पृथवी काश्यपी जज्ञे सुता तस्य महात्मनः ॥ १३-२५९-७ (९१८०९)
एष राजन्नीदृशो वै ब्राह्मणः कश्यपोऽभवत् ।
अन्यं प्रब्रूहि वा त्वं च कश्यपात्क्षत्रियं वरम् ॥ १३-२५९-८ (९१८१०)
तूष्णीं बभूव नृपतिः पवनस्त्वब्रवीद्वचः ।
शृणु राजन्नुचक्ष्यस्य जातस्याङ्गिरसे कुले ॥ १३-२५९-९ (९१८११)
भद्रा सोमस्य दुहिता रूपेण परमा मता ।
तस्यास्तुल्यं पतिं सोम उचथ्यं समपश्यत ॥ १३-२५९-१० (९१८१२)
सा च तीव्रं तपस्तेपे महाभागा यशस्विनी ।
उचथ्यं तु महाभागं तत्कृते वरयत्तदा ॥ १३-२५९-११ (९१८१३)
तत आहूय चोचथ्यं ददामीति यशस्विनीम् ।
भार्यार्थे स च जग्राह विधिवद्भूरिदक्षिणः ॥ १३-२५९-१२ (९१८१४)
तां त्वकामयत श्रीमान्वरुणः पूर्वमेव ह ।
स चागम्य वनप्रस्थं यमुनायां जहार ताम् ॥ १३-२५९-१३ (९१८१५)
जलेश्वरस्तु हृत्वा तामनयस्त्वं पुरं प्रति ।
परमाद्भुतसङ्काशं षट्सहस्रशतह्रदम् ॥ १३-२५९-१४ (९१८१६)
न हि रम्यतरं किञ्चित्तस्मादन्यत्पुरोत्तमम् ।
वासादैरप्सरोभिश्च दिव्यैः कामैश्च शोभितम् ॥ १३-२५९-१५ (९१८१७)
तत्र देवस्तया सार्धं रेमे राजञ्जलेश्वरः ।
तदाख्यातमुचथ्याय ततः पत्न्यवमर्दनम् ॥ १३-२५९-१६ (९१८१८)
तच्छ्रुत्वा नारदात्सर्वमुचथ्यो नारदं तदा ।
प्रोवाच गच्छ ब्रूहि त्वं वरुणं परुषं वचः ॥ १३-२५९-१७ (९१८१९)
मद्वाक्यान्मुञ्च मे भार्यां कस्मात्तां हृतवानसि ।
लोकपालोसि लोकानां न लोकस्य विलोपकः ॥ १३-२५९-१८ (९१८२०)
सोमेन दत्ता भार्या मे त्वया चापहृताऽद्य वै ।
इत्युक्तो वचनात्तस्य नारदेन जलेश्वरः ॥ १३-२५९-१९ (९१८२१)
मुञ्च भार्यामुचथ्यस्य कस्मात्त्वं हृतवानसि ।
इति श्रुत्वा वचस्तस्य सोऽथ तं वरुणोऽब्रवीत् ॥ १३-२५९-२० (९१८२२)
ममैषा सुप्रिया भार्या नैनामुत्स्रष्टुमुत्सहे ।
इत्युक्तो वरुणेनाथ नारदः प्राप्य तं मुनिम् ।
उचथ्यमब्रवीद्वाक्यं नातिहृष्टमना इव ॥ १३-२५९-२१ (९१८२३)
गले गृहीत्वा क्षिप्तोस्मि वरुणेन महामुने ।
न प्रयच्छति ते भार्यां यत्ते कार्यं कुरुष्व तत् ॥ १३-२५९-२२ (९१८२४)
नारदस्य वचः श्रुत्वा क्रुद्धः प्राज्वलदङ्गिराः ।
अपिबत्तेजसा वारि विष्टभ्य सुमहातपाः ॥ १३-२५९-२३ (९१८२५)

पीयमाने तु सर्वस्मिंस्तोयेऽपि सलिलेश्वरः ।
सुहृद्भिर्भिक्षमाणोऽपि नैवामुञ्चत तां तदा ॥ १३-२५९-२४ (९१८२६)
ततः क्रुद्धोऽब्रवीद्भूमिमुचथ्यो ब्राह्मणोत्तमः ।
दर्शय स्वस्थलं भद्रे षट्सहस्रशतह्रदम् ॥ १३-२५९-२५ (९१८२७)
ततस्तदीरणं जातं समुद्रस्यावसर्पतः ।
तस्माद्देशान्नदीं चैव प्रोवाचासौ द्विजोत्तमः ॥ १३-२५९-२६ (९१८२८)
अदृश्या गच्छ भीरु त्वं सरस्वति मरून्प्रति ।
अणुण्यभूषो भवतु देशस्त्यक्तस्तया शुभे ॥ १३-२५९-२७ (९१८२९)
ततश्चूर्णीकृते देशेक भद्रामादाय वारिपः ।
अददाच्छरणं गत्वा भार्यामाङ्गिरसाय वै ॥ १३-२५९-२८ (९१८३०)
प्रतिगृह्य तु तां भार्यामुचथ्यः सुमनाऽभवत् ।
मुमोच च जगद्दुःखान्मरुतश्चैव निर्मलाः ॥ १३-२५९-२९ (९१८३१)
ततः स लब्ध्वा तां भार्यां वरुणं प्राह धर्मवित् ।
उचथ्यः सुमहातेजा यत्तुच्छृणु नराधिप ॥ १३-२५९-३० (९१८३२)
मयैषा तपसा प्राप्ता क्रोशतस्ते जलाधिप ।
इत्युक्त्वा तामुपादाय स्वमेव भवनं ययौ ॥ १३-२५९-३१ (९१८३३)
एष राजन्नीदृशो वै उचथ्यो ब्राह्मणर्षभः ।
ब्रवीमि हान्यं ब्रूहि त्वमुचथ्यात्क्षत्रियं वरम् ॥ ॥ १३-२५९-३२ (९१८३४)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
एकोनषष्ट्यधिकद्विशततमोऽध्यायः ॥ २५९ ॥
Mahabharata - Anushaasana Parva - Chapter Footnotes

७-२५९-३ भूमित्वं त्यक्त्वा ब्रह्मणः पदं गमिष्यामीति सम्बन्धः ॥
७-२५९-११ उचथ्यार्थे तु चार्वङ्गी परं नियममास्थिता । इति झ पाठः ॥
७-२५९-१२ सोमः ददामीत्युक्त्वा ददावित्यध्याहारेण योजना
। ददावत्रिर्यशस्विनीमिति झ पाठः। अत्रिः सोमपिता ॥
७-२५९-१६ देवो वरुणः । तया भद्रकया ॥
७-२५९-२५ दर्शयस्व बिलं भद्रे इति क पाठः ॥
७-२५९-२६ ईरिणं ऊषरप्रवेशः । समुद्रश्चापसर्पतेति क पाठः ॥
७-२५९-२७ अपुण्य एष भवित्विति झ पाठः ॥
७-२५९-२९ दुःखाद्वरुणं चैव हैहयेति झ पाठः । जगद्वरुणं
च दुःखान्मुमोच मोचयामास ॥

---

अनुससनपर्व-अध्यय२६०
॥ श्रीः ॥

## १३.२६०. अध्यायः २६०

अथ दानधर्मपर्व ॥ १ ॥

Mahabharata - Anushaasana Parva - Chapter Topics

वायुना हैहयार्जुनं प्रति स्वतेजसा
दैत्यदाहनरूपागस्त्यवसिष्ठचरित्रकीर्तनम् ॥ १ ॥

Mahabharata - Anushaasana Parva - Chapter Text

भीष्म उवाच ।
इत्युक्तः स नृपस्तूष्णीमभूद्वायुस्ततोऽब्रवीत् ।
शृणु राजन्नगस्त्यस्य महात्म्यं ब्राह्मस्य ह ॥ १३-२६०-१ (९१८३५)
असुरैर्निर्जिता देवा निरुत्साहाश्च ते कृताः ।
यज्ञाश्चैषां हृताः सर्वे पितॄणां च स्वधास्तथा ॥ १३-२६०-२ (९१८३६)
कर्मज्या मानवानां च दानवैर्हैहयर्षभ ।
भ्रष्टैश्वर्यास्ततो देवाश्चेरुः पृथ्वीमिति श्रुतिः ॥ १३-२६०-३ (९१८३७)
ततः कदाचित्ते राजन्दीप्तमादित्यवर्चसम् ।
ददृशुस्तेजसाः युक्तमगस्त्यं विपुलव्रतम् ॥ १३-२६०-४ (९१८३८)
अभिवाद्य तु तं देवाः पृष्ट्वा कुशलमेव च ।
इदमूचुर्महात्मानं वाक्यं काले जनाधिप ॥ १३-२६०-५ (९१८३९)
दानवैर्युधि भग्नाः स्म तथैश्वर्याच्चि भ्रंशिताः ।
तदस्मान्नो भयात्तीव्रात्त्राहि त्वं मुनिपुङ्गवः ॥ १३-२६०-६ (९१८४०)
इत्युक्तः स तदा देवैरगस्त्यः कुपितोऽभवत् ।
प्रजज्वाल च तेजस्वी कालाग्निरिव संक्षये ॥ १३-२६०-७ (९१८४१)
तेन दीप्तांशुजालेन निर्दग्धा दानवास्तदा ।
अन्तरिक्षान्महाराज निपेतुस्ते सहस्रशः ॥ १३-२६०-८ (९१८४२)
दह्यमानास्तु ते दैत्यास्तस्यागस्त्यस्य तेजसा ।
उभौ लोकौ परित्यज्य गताः काष्ठां तु दक्षिणाम् ॥ १३-२६०-९ (९१८४३)
बलिस्तु यजते यज्ञमश्वमेधं महीं गतः ।
येन्येऽधस्ता महीस्थाश्च तेन दग्धा महासुराः ॥ १३-२६०-१० (९१८४४)
त्यक्तलोकाः पुनः प्राप्ताः सुरैः शान्तभयैर्नृप ।
अथैनमब्रुवन्देवा भूमिष्ठानसु राञ्जहि ॥ १३-२६०-११ (९१८४५)
इत्युक्तः प्राह देवान्स न शक्तोस्मि महीगतान् ।
दग्धुं तपो हि क्षीयेन्मे न धक्ष्यामीति पार्थिव ॥ १३-२६०-१२ (९१८४६)
एवं दग्धा भगवता दानवाः स्वेन तेजसा ।
अगस्त्येन तदा राजंस्तपसा भावितात्मना ॥ १३-२६०-१३ (९१८४७)

ईदृशश्चाप्यगस्त्यो हि कथितस्ते मयाऽनघ ।
ब्रवीम्यन्यं ब्रूहि वा त्वमगस्त्यात्क्षत्रियं वरम् ॥ १३-२६०-१४ (९१८४८)
भीष्म उवाच। १३-२६०-१५क्ष् (७६९४)
इत्युक्तः स तदा तूष्णीमभूद्वायुस्ततोऽब्रवीत् ।
शृणु राजन्वसिष्ठस्य मुख्यं कर्म यशस्विनः ॥ १३-२६०-१५ (९१८४९)
ग्वैखानसविधानेन गङ्गातीरं समाश्रिताः।'
आदित्याः सत्रमासन्त सरो वैखानसं प्रति ।
वसिष्ठं मनसा गत्वा ज्ञात्वा तत्वस्य गोचरम् ॥ १३-२६०-१६ (९१८५०)
यजमानांस्तु तान्दृष्वा सर्वान्दीक्षानुकर्शितान् ।
हन्तुमैच्छन्त शैलाभा बलिनो नाम दानवाः ॥ १३-२६०-१७ (९१८५१)
अदूरात्तु ततस्तेषां ब्रह्मदत्तवरं सरः ।
हता हता वै तत्रैते जीवन्त्याप्लुत्य दानवाः ॥ १३-२६०-१८ (९१८५२)
ते प्रगृह्य महाघोरान्पर्वतान्परिघान्द्रुमान् ।
विक्षोभयन्तः सलिलमुत्थितं शतयोजनम् ॥ १३-२६०-१९ (९१८५३)
अभ्यद्रवन्त देवांस्ते सहस्राणि दशैव हि ।
ततस्तैरर्दिता देवाः शरणं वासवं ययुः ॥ १३-२६०-२० (९१८५४)
स च तैर्व्यथितः शक्रो वसिष्ठं सरणं ययौ ।
ततोऽभयं ददौ तेभ्यो वसिष्ठो भगवानृषिः ॥ १३-२६०-२१ (९१८५५)
तदा तान्दुःकितान्ज्ञात्वा आनृशंस्यपरो मुनिः ।
अयत्नेनादहत्सर्वाञ्ज्वलता स्वेन तेजसा ॥ १३-२६०-२२ (९१८५६)
कैलासं प्रस्थितां चैव नदीं गङ्गां महातपाः ।
आनयत्तत्सरो दिव्यं तया भिन्नं च तत्सरः ॥ १३-२६०-२३ (९१८५७)
सरो भिन्नं तया नद्या सरयूः सा ततोऽभवत् ।
हताश्च बलिनो यत्र स देशे बलिनोऽभवत् ॥ १३-२६०-२४ (९१८५८)
एवं सेन्द्रा वसिष्ठेन रक्षितास्त्रिदिवौकसः ।
ब्रह्मदत्तवराश्चैव हता दैत्या महात्मना ॥ १३-२६०-२५ (९१८५९)
एतत्कर्म वसिष्ठस्य कथितं हि मयाऽनघ ।
ब्रवीम्यन्यं ब्रूहि वा त्वं वसिष्ठात्क्षत्रियं वरम् ॥ २६
॥ ॥ १३-२६०-२६ (९१८६०)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
षष्ट्यधिकद्विशततमोऽध्यायः ॥ २६० ॥

---

अनुससनपर्व-अध्यय२६१
॥ श्रीः ॥
१३.२६१. अध्यायः २६१

अथ दानधर्मपर्व ॥ १ ॥

Mahabharata - Anushaasana Parva - Chapter Topics

वायुना हैहयार्जुनंप्रति देवासुरयुद्धे राहुणा
चन्द्रसूर्यपराभवेनान्धकारप्राप्तौ देवानां प्रार्थनया चन्द्रीभूय
तमोनिरसनरूपात्रिमहिमोक्तिः ॥ १ ॥
तथा सवज्रेन्द्रहस्तस्तम्भनेनाश्विनोः
सोमपानदापनरूपच्यवनमहिमोक्तिः ॥ २ ॥

Mahabharata - Anushaasana Parva - Chapter Text

भीष्म उवाच ।
इत्युक्तस्त्वर्जुनस्तूष्णीमभूद्वायुस्तमब्रवीत् ।
शृणु मे हैहयश्रेष्ठ कर्मात्रेः सुमहात्मनः ॥ १३-२६१-१ (९१८६१)
घोरे तमस्ययुध्यन्त सहिता देवदानवाः ।
अविद्यत शरैस्तत्र स्वर्भानुः सोमभास्करौ ॥ १३-२६१-२ (९१८६२)
अथ ते तमसा ग्रस्ता निहन्यन्ते स्म दानवैः ।
देवा नृपतिशार्दूल सहैव बलिभिस्तदा ॥ १३-२६१-३ (९१८६३)
असुरैर्वध्यमानास्ते क्षीणप्राणा दिवौकसः ।
अपश्यन्त तपस्यन्तमत्रिं विप्रं तपोधनम् ॥ १३-२६१-४ (९१८६४)
अथैनमब्रुवन्देवाः शान्तक्रोधं जितेन्द्रियम् ।
असुरैरिषुभिर्विद्धौ चन्द्रादित्याविमावुभौ ॥ १३-२६१-५ (९१८६५)
वयं वध्यामहे चापि शत्रुभिस्तमसा वृते ।
नाधिगच्छाम शान्तिं च भयात्त्रायस्व नः प्रभो ॥ १३-२६१-६ (९१८६६)
अत्रिरुवाच। १३-२६१-७क्ष् (७६९५)
कथं रक्षामि भवतस्तेऽब्रुवंश्चन्द्रमा भव ।
तिमिरघ्नश्च सविता दस्युहन्ता च नो भव ॥ १३-२६१-७ (९१८६७)
एवमुक्तस्तदात्रिर्वै तमोनुदभवच्छशी ।
अपश्यत्सौम्यभावाच्च सोमवत्प्रियदर्शनः ॥ १३-२६१-८ (९१८६८)
दृष्ट्वा नातिप्रभं सोमं तथा सूर्यं च पार्थिव ।
प्रकाशमकरोदत्रिस्तपसा स्वेन संयुगे ॥ १३-२६१-९ (९१८६९)
जगद्वितिमिरं चापि प्रदीप्तमकरोत्तदा ।
व्यजयच्छत्रुसङ्घांश्च देवानां स्वेन तेजसा ॥ १३-२६१-१० (९१८७०)
अत्रिणा दह्यमानांस्तान्दृष्ट्वा देवा महासुरान् ।
पराक्रमैस्तेऽपिं तदा व्यघ्नन्नत्रिसुरक्षिताः ।
उद्भासितश्च सविता देवास्त्राता हतासुराः ॥ १३-२६१-११ (९१८७१)

अत्रिणा त्वथ सोमत्वं कृतमुत्तमतेजसा ।
द्विजेनाग्निर्द्वितीयेनि जपता चर्मवाससा ॥ १३-२६१-१२ (९१८७२)
फलभक्षेण राजर्षे पश्य कर्मात्रिणा कृतम् ।
तस्यापि विस्तरेणोक्तं कर्मात्रेः सुमहात्मनः ।
ब्रवीम्यन्यं ब्रूहि वा त्वमत्रितः क्षत्रियं वरम् ॥ १३-२६१-१३ (९१८७३)
इत्युक्तस्त्वर्जुनस्तूष्णीमभूद्वायुस्ततोऽब्रवीत् ।
शृणु राजन्महत्कर्म च्यवनस्य महात्मनः ॥ १३-२६१-१४ (९१८७४)
अश्विनोः प्रतिसंश्रुत्य च्यवनः पाकशासनम् ।
प्रोवाच सहितो देवैः सोमपावश्विनौ कुरु ॥ १३-२६१-१५ (९१८७५)
इन्द्र उवाच। १३-२६१-१६क्ष् (७६९६)
अस्माभिर्निन्दितावेतौ भवेतां सोमपौ कथम् ।
देवैर्न सम्मितावेतौ तस्मान्मैवं वदस्व नः ॥ १३-२६१-१६ (९१८७६)
अश्विभ्यां सह नेच्छामः सोमं पातुं महाव्रत ।
यदन्यद्वक्ष्यसे विप्र तत्करिष्याम ते वचः ॥ १३-२६१-१७ (९१८७७)
च्यवन उवाच। १३-२६१-१८क्ष् (७६९७)
पिबेतामश्विनौ सोमं भवद्भिः सहिताविमौ ।
उभावेतावपि सुरौ सूर्यपुत्रौ सुरेश्वर ॥ १३-२६१-१८ (९१८७८)
क्रियतां मद्वचो देवा यथा वै समुदाहृतम् ।
एतद्वः कुर्वतां श्रेयो भवेन्नैतदकुर्वताम् ॥ १३-२६१-१९ (९१८७९)
इन्द्र उवाच। १३-२६१-२०क्ष् (७६९८)
अश्विभ्यां सह सोमं वै न पास्यामि द्विजोत्तम ।
पिबन्त्वन्ये यथाकामं नाहं पातुमिहोत्सहे ॥ १३-२६१-२० (९१८८०)
च्यवन उवाच। १३-२६१-२१क्ष् (७६९९)
न चेत्करिष्यसि वचो मयोक्तं बलसूदन ।
मया प्रमथितः सद्यः सोमं पास्यसि वै मखे ॥ १३-२६१-२१ (९१८८१)
वायुरुवाच। १३-२६१-२२क्ष् (७७००)
ततः कर्म समारब्धं हिताय सहसाऽश्विनोः ।
च्यवनेनि ततो मन्त्रैरभिभूताः सुराऽभवन् ॥ १३-२६१-२२ (९१८८२)
तत्तु कर्म समारब्धं दृष्ट्वेन्द्रः क्रोधमूर्च्छितः ।
उद्यम्य विपुलं शैलं च्यवनं समुपाद्रवत् ॥ १३-२६१-२३ (९१८८३)
तथा वज्रेम भगवानमर्षाकुललोचनः ।
तमापतन्तं दृष्ट्वैव च्यवनस्तपसाऽन्वितः ॥ १३-२६१-२४ (९१८८४)
अद्भिः सिक्त्वाऽस्तम्भयतं सवज्रं सहपर्वतम् ।
अथेन्द्रस्य महाघोरं सोऽसृजच्छत्रुमेव हि ॥ १३-२६१-२५ (९१८८५)
मदं नामाहुतिमयं व्यादितास्यं महामुनिः ।
तस्य दन्तसहस्रं तु बभूव शतयोजनम् ॥ १३-२६१-२६ (९१८८६)

द्वियोजनशतास्तस्य दंष्ट्राः परमदारुणाः ।
हनुस्तस्याभवद्भूमावास्यं चास्यास्पृशद्दिवम् ॥ १३-२६१-२७ (९१८८७)
जिह्वामूले स्थितास्तस्य सर्वे देवाः सवासवाः ।
तिमेरास्यमनुप्राप्ता यथा मत्स्या महार्णवे ॥ १३-२६१-२८ (९१८८८)
ते सम्मन्त्र्य ततो देवा मदस्यास्य समीपगाः ।
अब्रुवन्सहिताः शक्रं प्रणमास्मै द्विजातये ॥ १३-२६१-२९ (९१८८९)
अश्विभ्यां सह सोमं च पिबाम विगतज्वराः ।
ततः स प्रणतः शक्रश्चकार च्यवनस्य तत् ॥ १३-२६१-३० (९१८९०)
च्यवनः कृतवानेतावश्विनौ सोमपायिनौ ।
ततः प्रत्याहरत्कर्म मदं च व्यभजन्मुनिः ॥ १३-२६१-३१ (९१८९१)
अक्षेषु मृगयायां च पाने स्त्रीषु च वीर्यवान् ।
एतैर्दोषैर्नरा राजन्क्षयं यान्ति न संशयः ॥ १३-२६१-३२ (९१८९२)
तस्मादेतान्नरो नित्यं दूरतः परिवर्जयेतद् ॥ १३-२६१-३३ (९१८९३)
एतत्ते च्यवनस्यापि कर्मि राजन्प्रकीर्तितम् ।
ब्रवीम्यन्यं ब्रूहि वा त्वं क्षत्रियं ब्राह्मणाद्वरम् ॥ ॥ १३-२६१-३४ (९१८९४)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
एकषष्ट्यधिकद्विशततमोऽध्यायः ॥ २६१ ॥

---

अनुससनपर्व-अध्ययर२६२
॥ श्रीः ॥
१३.२६२. अध्यायः २६२

अथ दानधर्मपर्व ॥ १ ॥
Mahabharata - Anushaasana Parva - Chapter Topics
वायुना हैहयंप्रति देवानां प्रार्थनया अग्निसर्जनेन
कपहननरूपब्राह्मणमहिमोक्तिः ॥ १ ॥

Mahabharata - Anushaasana Parva - Chapter Text

भीष्म उवाच ।
तूष्णीमासीदर्जुनस्तु पवनस्त्वब्रवीत्पुनः ।
शृणु मे ब्राह्मणेष्वेव मुख्यं कर्म जनाधिप ॥ १३-२६२-१ (९१८९५)
मदस्यास्यमनुप्राप्ता यदा सेन्द्रा दिवौकसः ।
तदैव च्यवनेन द्यौर्हृता तेषां वसुन्धरा ॥ १३-२६२-२ (९१८९६)
उभौ लोकौ हृतौ मत्वा ते देवा दुःखिताऽभवन् ।

शोकार्ताश्त महात्मानं ब्रह्माणं शरणं ययुः ॥१३-२६२-३ (९१८९७)
देवा ऊचुः।१३-२६२-४क्ष् (७७०१)
मदास्यव्यतिषिक्तानामस्माकं लोकपूजित ।
च्यवनेन हृता भूमिः कपैश्चैव दिवं प्रभो ॥१३-२६२-४ (९१८९८)
ब्रह्मोवाच।१३-२६२-५क्ष् (७७०२)
गच्छध्वं शरणं विप्रानाशु सेन्द्रा दिवौकसः ।
प्रसाद्य तानुभौ लोकाववाप्स्यथ यथापुरम् ॥१३-२६२-५ (९१८९९)
ते ययुः शरणं विप्रानूचुस्ते काञ्जयामहे ।
इत्युक्तास्ते द्विजान्प्राहुर्जयतेह कपानिति ॥१३-२६२-६ (९१९००)
भूगतान्हि विजेतारो वयमित्यब्रुवन्द्विजाः ।
ततः कर्म समारब्धं ब्राह्मणैः कपनाशनम् ॥१३-२६२-७ (९१९०१)
तच्छ्रुत्वा प्रेषितो दूतो ब्राह्मणेभ्यो धनी कपैः ।
स च तान्ब्राह्मणानाह धनी कपवचो यथा ॥१३-२६२-८ (९१९०२)
भवद्भिः सदृशः सर्वे कपाः किमिह वर्तते ।
सर्वे वेदविदः प्राज्ञाः सर्वे च क्रतुयाजिनः ॥१३-२६२-९ (९१९०३)
सर्वे सत्यव्रताश्चैव सर्वे तुल्या महर्षिभिः ।
श्रीश्चैव रमते तेषु धारयन्ति श्रियं च ते ॥१३-२६२-१० (९१९०४)
वृथा दारान्न गच्छन्ति वृथा मांसं न भुञ्जते ।
दीप्तमग्निं जुह्वते च गुरूणां वचने स्थिताः ॥१३-२६२-११ (९१९०५)
सर्वे च नियतात्मानो बालानां संविभागिनः ।
उपेत्य शनकैर्यान्ति न सेवन्ति रजस्वलाम् ।
स्वर्गातिं चैव गच्छन्ति तथैव शुभकर्मिणः ॥ १३-२६२-१२ (९१९०६)
अभुक्तवत्सु नाश्नन्ति गर्भिणीवृद्धकादिषु ।
पूर्वाह्णेषु न दीव्यन्ति दिवा चैव न शेरते ॥१३-२६२-१३ (९१९०७)
एतैश्चान्यैश्च बहुभिर्गुणैर्युक्तान्कथं कपान् ।
विजेष्यथ निवर्तध्वं निवृत्तानां सुखं हि वः ॥१३-२६२-१४ (९१९०८)
ब्राह्मणा ऊचुः।१३-२६२-१५क्ष् (७७०३)
कपान्वयं विजेष्यामो ये देवास्ते वयं स्मृताः ।
तस्माद्वध्याः कपाऽस्माकं धनिन्याहि यथागतम् ॥१३-२६२-१५ (९१९०९)
धनी गत्वा कपानाह न वो विप्राः प्रियङ्कराः ।
गृहीत्वाऽस्त्राण्यतो विप्रान्कपाः सर्वे समाद्रवन् ॥१३-२६२-१६ (९१९१०)
समुदग्रध्वजान्दृष्ट्वा कपान्सर्वे द्विजातयः ।
व्यसृजञ्ज्वलितानग्नीन्कपानां प्राणनाशनान् ॥१३-२६२-१७ (९१९११)
ब्रह्मसृष्टा हव्यभुजः कपान्हत्वा सनातनाः ।
नभसीव यथाऽभ्राणि व्यराजन्त नराधिप ॥१३-२६२-१८ (९१९१२)
हत्वा वै दानवान्देवाः सर्वे सम्भूय संयुगे ।

ते नाभ्यजानन्हि तदा ब्राह्मणैर्निहतान्कपान् ॥१३-२६२-१९ (९११९१३)
अथागम्य महातेजा नारदोऽकथयद्विभो ।
यथा हता महाभागैस्तेजसा ब्राह्मणैः कपाः ॥१३-२६२-२० (९११९१४)
नारदस्य वचः श्रुत्वा प्रीताः सर्वे दिवौकसः ।
प्रशशंसुर्द्विजांश्चापि ब्राह्मणांश्च यशस्विनः ॥१३-२६२-२१ (९११९१५)
तेषां तेजस्तथा वीर्यं देवानां ववृधे ततः ।
अवाप्नुवंश्चामरत्वं त्रिषु लोकेषु पूजितम् ॥१३-२६२-२२ (९११९१६)
इत्युक्तवचनं वायुमर्जुनः प्रत्युवाच ह ।
प्रतिपूज्य महाबाहो यत्तच्छृणु नराधिप ॥१३-२६२-२३ (९११९१७)
अर्जुन उवाच।१३-२६२-२४क्ष् (७७०४)
जीवाम्यहं ब्राह्मणार्थं सर्वथा सततं प्रभो ।
ब्रह्मण्यो ब्राह्मणेभ्यश्च प्रणमामि च नित्यशः ॥१३-२६२-२४ (९११९१८)
दत्तात्रेयप्रसादाच्च मया प्राप्तमिदं बलम् ।
लोके च परमा कीर्तिर्धर्मश्चाचरितो महान् ॥१३-२६२-२५ (९११९१९)
अहो ब्राह्मणकर्माणि मयि मारुत तत्त्वतः ।
त्वया प्रोक्तानि कात्स्न्र्येन श्रुतानि प्रयतेन च ॥१३-२६२-२६ (९११९२०)
वायुरुवाच।१३-२६२-२७क्ष् (७७०५)
ब्राह्मणान्क्षात्राधर्मेण पालयस्वेन्द्रियाणि च ।
विप्रेभ्यस्ते भयं घोरं तत्तु कालाद्भविष्यति ॥ ॥१३-२६२-२७ (९११९२१)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
द्विषष्ट्यधिकद्विशततमोऽध्यायः ॥ २६२ ॥
Mahabharata - Anushaasana Parva - Chapter Footnotes

७-२६२-४ कपैः सुरविशेषैः ।दिवं द्यौः ॥
७-२६२-८ धनीनाम दूतः ॥

---

अनुससनपर्व-अध्यय२६३
॥ श्रीः ॥
१३.२६३. अध्यायः २६३

अथ दानधर्मपर्व ॥ १ ॥
Mahabharata - Anushaasana Parva - Chapter Topics
युधिष्ठिरेण ब्राह्मणमहिमानं पृष्टेन भीष्मेण तंप्रति
स्वस्य कुष्ठितेन्द्रियादिशक्तिकतया मुमूर्षानिवेदनपूर्वकं
कृष्णात्तदवगमनचोदना ॥ १ ॥

तथा कृष्णस्य श्रीनारायणात्मकत्वनिवेदनेन तन्महिमानुवर्णनम् ॥ २ ॥

Mahabharata - Anushaasana Parva - Chapter Text

युधिष्ठिर उवाच ।
ब्राह्मणानर्चसे राजन्सततं संशितव्रतान् ।
कं तु धर्मोदयं दृष्ट्वा तानर्चसि जनाधिप ॥ १३-२६३-१ (९११२२)
कां वा ब्राह्मणपूजायां व्युष्टिं दृष्ट्वा महाव्रत ।
तानर्चसि महाबाहो सर्वमेतद्वदस्व मे ॥ १३-२६३-२ (९११२३)
भीष्म उवाच। १३-२६३-३क्ष् (७७०६)
एष ते केशवः सर्वमाख्यास्यति महामतिः ।
व्युष्टिं ब्राह्मणपूजायां दृष्ट्वा व्युष्टिं महाव्रत ॥ १३-२६३-३ (९११२४)
बलं श्रोत्रे वाङ्मनश्चक्षुषी च
ज्ञानं तथा नविशुद्धं ममाद्य ।
देहन्यासो नातिचिरान्मतो मे
न चातितूर्णं सविताऽद्य याति ॥ १३-२६३-४ (९११२५)
उक्ता धर्मा ये पुराणे महान्तो
राजन्विप्राणां क्षत्रियाणां विशां च ।
येये शूद्राणां धर्ममुपासते ते
तानेव कृष्णदुपशिक्षस्व पार्थः ॥ १३-२६३-५ (९११२६)
अहं ह्येनं वेद्मि तत्त्वेन कृष्णं
योऽयं हि यच्चास्य बलं पुराणम् ।
अमेयात्मा केशवः कौरवेन्द्र
सोयं धर्मं वक्ष्यति सर्वमेतत् ॥ १३-२६३-६ (९११२७)
कृष्णः पृथ्वीमसृजत्स्वं दिवं च
कृष्णस्यि देहान्मेदिनी सम्बभूव ।
वराहोऽयं भीमबलः पुराणः
स पर्वतान्व्यसृजद्वै दिशश्च ॥ १३-२६३-७ (९११२८)
अस्माद्वायुश्चान्तरिक्षं दिवं च
दिशश्चतस्रो विदिशश्चतस्रः ।
सृष्टिस्तथैवेयमनुप्रसूता
स निर्ममे विश्वमिदं पुराणः ॥ १३-२६३-८ (९११२९)
अस्य नाभ्यां पुष्करं सम्प्रसूतं
यत्रोत्पन्नः स्वयमेवामितौजाः ।
येनाच्छिन्नं तत्तमः पार्थ घोरं
यत्र तिष्ठन्त्यर्णवास्तच्छयानाः ॥ १३-२६३-९ (९११३०)

कृते युगे धर्म आसीत्समग्र-
स्त्रेताकाले यज्ञमनुप्रपन्नः ।
बलं त्वासीद्द्वापरे पार्थ कृष्णः
कलौ त्वधर्मः क्षितिमेवाजगाम ॥ १३-२६३-१० (९१९३१)
स एव पूर्वं निजघान दैत्या-
न्स एव देवश्च बभूव सम्राट् ।
स भूतानां भावनो भूतभव्यः
स विश्वस्यास्य जगतश्चाभिगोप्ताः ॥ १३-२६३-११ (९१९३२)
यदा धर्मो ग्लाति वंशे सुराणां
तदा कृष्णो जायते मानुषेषु ।
धर्मे स्थित्वा स तु वै भावितात्मा
परांश्च लोकानपरांश्च पाति ॥ १३-२६३-१२ (९१९३३)
त्याज्यांस्त्यक्त्वा चासुराणां वधेन
कार्याकार्ये कारणं चैव पाति ।
कृतं करिष्यत्क्रियते च देवो
राहुं सोमं विद्धि च शक्रमेनम् ॥ १३-२६३-१३ (९१९३४)
स विश्वकर्मा स हि विश्वरूपः
स विश्वबुग्विश्वसृग्विश्वजिच्च ।
स शूलभृच्छोणितभृत्कराल-
स्तं कर्मभिर्विदितं वै स्तुवन्ति ॥ १३-२६३-१४ (९१९३५)
तं गन्धर्वाणामप्सरसां च नित्य-
मुपतिष्ठन्ते विबुधानां शतानि ।
तं राक्षसाश्च परिसंवदन्ति
राजन्यानां स विजिगीषुरेकः ॥ १३-२६३-१५ (९१९३६)
तमध्वरे शंसितारः स्तुवन्ति
रथन्तरे सामगाश्च स्तुवन्ति ।
तं ब्राह्मणा ब्रह्ममन्त्रैः स्तुवन्ति
तस्मै हविरध्वर्यवः कल्पयन्ति ॥ १३-२६३-१६ (९१९३७)
स पौराणीं ब्रह्मगुहां प्रविष्टो
महीसत्रं भारताग्रे ददर्श ।
स चैव गामुद्दधाराग्र्यकर्मा
विक्षोभ्य दैत्यानुरगान्दानवांश्च ॥ १३-२६३-१७ (९१९३८)
तं घोषार्थे गीर्भिरिन्द्राः स्तुवन्ति
स चापीशो भारतैकः पशूनाम् ।
तस्य भक्षान्विविधान्वेदयन्ति
तमेवाजौ वाहनं वेदयन्ति ॥ १३-२६३-१८ (९१९३९)

तस्यान्तरिक्षं पृथिवी दिवं च
सर्वं वशे तिष्ठति शाश्वतस्य ।
स कुम्भे रेतः ससृजे सुराणां
यत्रोत्पन्नमृषिमाहुर्वसिष्ठम् ॥ १३-२६३-१९ (९११९४०)
स मातरिश्वा विभुरश्ववाजी
स रश्मिवान्सविता चादिदेवः ।
तेनासुरा विजिताः सर्व एव
तद्विक्रान्तैर्विजितानीह त्रीणि ॥ १३-२६३-२० (९११९४१)
स देवानां मानुषाणां पितॄणां
तमेवाहुर्यज्ञविदां वितानम् ।
स एव कालं विभजन्नुदेति
तस्योत्तरं दक्षिणं चायने द्वे ॥ १३-२६३-२१ (९११९४२)
तस्यैवोर्ध्वं तिर्यगधश्चरन्ति
गभस्तयो मेदिनीं भासयन्तः ।
तं ब्राह्मणा वेदविदो जुषन्ति
तस्यादित्यो गामुपयुज्य भाति ॥ १३-२६३-२२ (९११९४३)
स मासिमास्यध्वरकृद्विधत्ते
तमध्वरे वेदविदः पठन्ति ।
स एवोक्तश्चक्रमिदं त्रिनाभि
सप्ताश्वयुक्तं वहते वै त्रिधामा ॥ १३-२६३-२३ (९११९४४)
गहिरण्मयः सप्तगूढः ससंवि-
च्चतुर्बाहुः पन्नगः पद्मनाभः।
महातेजाः सर्वगः सर्वसिंहः
कृष्णो लोकान्धारयते यथैकः ।
हंसं तमोघ्नं च तमेव वीर
कृष्णं सदा पार्थ कर्तारमेहि ॥ १३-२६३-२४ (९११९४५)
स एकदा कक्षगतो महात्मा
तुष्टो विभुः खाण्डवे धूमकेतुः ।
स राक्षसानुरगांश्चावजित्य
सर्वत्रगः सर्वमग्नौ जुहोति ॥ १३-२६३-२५ (९११९४६)
स एव पार्थाय श्वेतमश्वं प्रायच्छ-
त्स एवाश्वानथ सर्वांश्चकार ।
सबन्धुरस्तस्य रथस्त्रिचक्र-
स्त्रिवृच्छिराश्चतुरश्वस्त्रिनाभिः ॥ १३-२६३-२६ (९११९४७)
स विहायो व्यदधात्पञ्चनाभिः
स निर्ममे गां दिवमन्तरिक्षम् ।

सोऽरण्यानि व्यसृजत्पर्वतांश्च
हृषीकेशोऽमितदीप्ताग्नितेजाः ॥ १३-२६३-२७ (९१९४८)
अलङ्घयद्वै सरितो जिघांस-
ञ्शक्रं वज्रं प्रहरन्तं निरास ।
स महेन्द्रः स्तूयते वै महाध्वरे
विप्रैरेको ऋक्सहस्रैः पुराणैः ॥ १३-२६३-२८ (९१९४९)
दुर्वासा वै तेन नान्येन शक्यो
गृहे राजन्वासयितुं महौजाः ।
तमेवाहुर्ऋषिमेकं पुराणं
स विश्वकृद्विदधात्यात्मभावान् ॥ १३-२६३-२९ (९१९५०)
वेदांश्च यो वेदयतेऽधिदेवो
विधींश्च यश्चाश्रयते पुराणान् ।
कामे वेदे लौकिके यत्फलं च
विष्वक्सेनः सर्वमेतत्प्रतीहि ॥ १३-२६३-३० (९१९५१)
ज्योतींषि शुक्लानि हि सर्वलोके
त्रयो लोका लोकपालास्त्रयश्च ।
त्रयोऽग्नयो व्याहृतयश्च तिस्रः
सर्वे देवा देवकीपुत्र एव ॥ १३-२६३-३१ (९१९५२)
स वत्सरः स ऋतुः सोऽर्धमासः
सोऽहोरात्रः स कला वै स काष्ठाः ।
मात्रा मुहूर्ताश्च लवाः क्षणाश्च
विष्वक्सेनः सर्वमेतत्प्रतीहि ॥ १३-२६३-३२ (९१९५३)
चन्द्रादित्यौ ग्रहनक्षत्रताराः
सर्वाणि दर्शान्यथ पौर्णमासम् ।
चन्द्रादित्यौ ग्रहनक्षत्रताराः
सर्वाणि दर्शान्यथ पौर्णमासम्। १३-२६३-३३ (९१९५४)
नक्षत्रयोगा ऋतवश्च पार्थ
विष्वक्सेनात्सर्वमेतत्प्रसूतम् ॥
रुद्रादित्या वसवोऽथाश्विनौ च
साध्याश्च विश्वे मरुतां गणाश्च ।
प्रजापतिर्देवमाताऽदितिश्च
सर्वे कृष्णादृषयश्चैव सप्त ॥ १३-२६३-३४ (९१९५५)
वायुर्भूत्वा विक्षिपते च विश्व-
मग्निर्भूत्वा दहते विश्वरूपः ।
आपो भूत्वा मज्जयते च सर्वं
ब्रह्म भूत्वा सृजते विश्वसङ्घान् ॥ १३-२६३-३५ (९१९५६)

वेद्यं च यद्वेदयते च वेद्यं
विधिश्च यश्च श्रयते विधेयम् ।
धर्मे च वेदे च बले च सर्वं
चराचरं केशवं त्वं प्रतीहि ॥ १३-२६३-३६ (९१९५७)
ज्योतिर्भूतः परमोसौ पुरस्ता-
त्प्रकाशते यत्प्रभया विश्वरूपः ।
अपः सृष्ट्वा सर्वभूतात्मयोनिः
पुराऽकरोत्सर्वमेवाथ विश्वम् ॥ १३-२६३-३७ (९१९५८)
ऋतूनुत्पातान्विविधान्यद्भुतानि
मेघान्विद्युत्सर्वमैरावतं च ।
सर्वं कृष्णात्स्थावरं जङ्गं च
विश्वात्मानं विष्णुमेनं प्रतीहि ॥ १३-२६३-३८ (९१९५९)
विश्वावासं निर्गुणं वासुदेवं
सङ्कर्षणं जीवभूतं वदन्ति ।
ततः प्रद्युम्नमनिरुद्धं चतुर्थ-
माज्ञापयत्यात्मयोनिर्महात्मा ॥ १३-२६३-३९ (९१९६०)
स पञ्चधा पञ्चगुणोपपन्नं
सञ्चोदयन्विश्वमिदं सिसृक्षुः ।
ततश्चकारावनिमारुतौ च
खं ज्योतिरम्भश्च तथैव पार्थ ॥ १३-२६३-४० (९१९६१)
स स्थावरं जङ्गमं चैवमेत-
च्चतुर्विधं लोकमिमं च कृत्वा ।
ततो भूमिं व्यदधात्पञ्चबीजां
द्यावापृथिव्यग्निरथाम्बुवायू ॥ १३-२६३-४१ (९१९६२)
तेन विश्वं कृतमेतद्धि राज-
न्स जीवयत्यात्मनैवात्मयोनिः ।
ततो देवानसुरान्मानवांश्च
लोकानृषींश्चापि पितॄन्प्रजाश्च ।
समासेनि विविधान्पाति लोका-
न्सर्वान्सदा भूतपतिः सिसृक्षुः ॥ १३-२६३-४२ (९१९६३)
शुभाशुभं स्थावरं जङ्गमं च
विष्वक्सेनात्सर्वमेतत्प्रतीहि ।
यद्वर्तते यच्च भविष्यतीह
सर्वं ह्येतत्केशवं त्वं प्रतीहि ॥ १३-२६३-४३ (९१९६४)
मृत्युश्चैव प्राणिनामन्तकाले
साक्षात्कृष्णः केशवो देहभाजाम् ।

भूतं च यच्चेह न विद्म किञ्चि-
द्विष्वक्सेनात्सर्वमेतत्प्रतीहि ॥ १३-२६३-४४ (९१९६५)
यत्प्रशस्तं च लोकेषु पुण्यं यच्च शुभाशुभम् ।
तत्सर्वं केशवोऽचिन्त्यो विपरीतमतः परम् ॥१३-२६३-४५ (९१९६६)
एतादृशः केशवोऽतश्च भूयो
नारायणः परमश्चाव्ययश्च ।
मध्याद्यन्तस्य जगतस्तस्तुषश्च
बुभूषतां प्रभवश्चाव्ययश्च ॥ ॥ १३-२६३-४६ (९१९६७)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
त्रिषष्ट्यधिकद्विशततमोऽध्यायः ॥२६३ ॥

Mahabharata - Anushaasana Parva - Chapter Footnotes

७-२६३-२ व्युष्टिं फलम् ॥
७-२६३-३ दृष्टव्युष्टिरिति झ पाठः ॥
७-२६३-४ न चेति दुःखितस्य दिनं महद्भवतीत्यर्थः ॥
७-२६३-१० कलौ त्वधर्म एव बलवानिति भावः ॥
७-२६३-१२ ग्लाति ग्लायति ॥
७-२६३-१३ एनं राहुं सोमं शक्रं च विद्धि ॥
७-२६३-१४ शोणितभृच्छरीरि ॥
७-२६३-१७ महीसत्रं पृथिव्याश्छादनं मज्जनमिति यावत् ॥
७-२६३-१८ घोषार्थे गोवर्द्धनोद्धरणकाले ।पशूनां गवां जीवानां
च।वाहनं जयप्रापकम् ॥
७-२६३-१९ सुराणां मित्रावरुणयो रेतः कुम्भे ससृजे ॥
७-२६३-२० विक्रान्तैः पादविक्षेपैः ।त्रीणि भुवनानि ॥
७-२६३-२१ देवानां आत्मेति शेषः ।तमेवाहुर्यज्ञविदः पुराणमिति
क थ पाठः ॥
७-२६३-२२ जुषन्ति सेवन्ते ॥
७-२६३-२३ विधत्तेऽध्वरमित्यर्थात् ।त्रिनाभि
शीतोष्णवृष्टिकालगर्भम्।चक्रं संवत्सरम्।त्रिधामेति
वर्षवातोष्णप्रकारम् ॥
७-२६३-२४ हंसं सूर्यम् ।प्राश्नन्ननश्नंश्च स एव धीरः कृष्णं
सदा पार्थेति क थ पाठः ॥
७-२६३-२६ त्रिबन्धुरस्तास्येति क ध पाठः ॥
७-२६३-२७ पञ्चनाभिः पञ्चभूतानां नाभिराश्रय इत्यर्थः ॥
७-२६३-२८ निरास पराभूतवान् ॥

७-२६३-३० विधिनग्निहोत्रादीन् ॥
७-२६३-३६ वेद्यं वेदप्रतिद्यं । वेद्यं ज्ञेयम् ॥
७-२६३-३८ नक्षत्रमासान्विविधं कार्यजातं विद्युत्संघैरापतन्तश्च मेघाः । सर्वं कृष्णादिति क थ पाठः ॥
७-२६३-४० पञ्चधा पञ्चप्रकारं देवासुरमनुष्यश्वापदतिर्यग्रूपेण विश्वं सिसृक्षुराज्ञापयतीति पूर्वेणान्वयः । पञ्चजनोपपन्नमिति झ पाठः ॥
७-२६३-४१ चतुर्विधं जरायुजादि । पञ्चबीजां चतुर्विधभूतग्रामः कर्म च तेषां बीजभूताम् ॥
७-२६३-४५ अतः केशवात् यत्परं कल्प्यते तद्विपरीतम् । असन्मार्ग इत्यर्थः ॥
७-२६३-४६ तादृशः केशवो देवो भूयो नारायणः परः । आदिरन्तश्च मध्यं च देशतः कालते हरिः । जगतां तस्थुषां चैव भूतानां प्रभवाप्यय इति क थ पाठः ॥

---

अनुससनपर्व-अध्यय२६४
॥ श्रीः ॥
१३.२६४. अध्यायः २६४

अथ दानधर्मपर्व ॥ १ ॥
Mahabharata - Anushaasana Parva - Chapter Topics
कृष्णेन युधिष्ठिरंप्रति ब्राह्मणानां महत्तरत्वे दृष्टान्ततया स्वेन प्रद्युम्नं प्रत्युक्तदुर्वासश्चरित्रप्रतिपादनम् ॥ १ ॥

Mahabharata - Anushaasana Parva - Chapter Text

युधिष्ठिर उवाच ।
ब्रूहि ब्राह्मणपूजायां व्युष्टिं त्वं मधुसूदन ।
वेत्ता त्वमस्य चार्थस्य वेद त्वां हि पितामहः ॥ १३-२६४-१ (९१९६८)
वासुदेव उवाच । १३-२६४-२क्ष् (७७०७)
शृणुष्वावहितो राजन्द्विजानां भरतर्षभ ।
यथातत्त्वेन वदतो गुणान्वै कुरुसत्तम ॥ १३-२६४-२ (९१९६९)
द्वारवत्यां समासीनं पुरा मां कुरुनन्दन ।
प्रद्युम्नः परिपप्रच्छ ब्राह्मणैः परिकोपितः ॥ १३-२६४-३ (९१९७०)
किं फलं ब्राह्मणेष्वस्ति पूजायां मधुसूदन ।
ईश्वरत्वं कुतस्तेषामिहैव च परत्र च ॥ १३-२६४-४ (९१९७१)
सदा द्विजातीन्सम्पूज्य किं फलं तत्र मानद ।

एतद्ब्रूहि स्फुटं सर्वं सुमहान्संशयोऽत्र मे ॥ १३-२६४-५ (९११९७२)
इत्युक्ते वचने तस्मिन्प्रद्युम्नेन तथा त्वहम् ।
प्रत्यब्रवं महाराज यत्तच्छृणु समाहितः ॥ १३-२६४-६ (९११९७३)
व्युष्टिं ब्राह्मणपूजायां रौक्मिणेय निबोध मे ।
एते हि सोमराजान ईश्वराः सुखदुःखयोः ॥ १३-२६४-७ (९११९७४)
अस्मिँल्लोके रौक्मिणेय तथाऽमुष्मिंश्च पुत्रक ।
ब्राह्मणप्रमुखं सौम्यं न मेऽत्रास्ति विचारणा ॥ १३-२६४-८ (९११९७५)
ब्राह्मणप्रभवं सौख्यमायुः कीर्तिर्यशो बलम् ।
लोका लोकेश्वराश्चैव सर्वे ब्राह्मणपूजकाः ॥ १३-२६४-९ (९११९७६)
त्रिवर्गे चापवर्गे च यशःश्रीरोगशान्तिषु ।
देवतापितृपूजासु सन्तोष्याश्चैव नो द्विजाः ॥ १३-२६४-१० (९११९७७)
तान्कथं वै नाद्रियेयमीश्वरोस्मीति पुत्रक ।
मा ते मन्युर्महाबाहो भवत्वत्र द्विजान्प्रति ॥ १३-२६४-११ (९११९७८)
ब्राह्मणा हि महद्भूतमस्मिँल्लोके परत्र च ।
भस्म कुर्युर्जगदिदं क्रुद्धाः प्रत्यक्षदर्शिनः ॥ १३-२६४-१२ (९११९७९)
हन्युस्तेऽपि सृजेयुस्च लोकान्लोकेश्वरांस्तथा ।
कथं तेषु न वर्तेरन्सम्यग्ज्ञानात्सुतेजसः ॥ १३-२६४-१३ (९११९८०)
अवसन्मद्गृहे तात ब्राह्मणो हरिपिङ्गलः ।
चीरवासा बिल्वदण्डी दीर्घश्मश्रुः कृशो महान् ॥ १३-२६४-१४ (९११९८१)
दीर्घेभ्यश्च मनुष्येभ्यः प्रमाणादधिको भुवि ।
स स्वैरं चरते लोकान्ये दिव्या ये च मानुषाः ॥ १३-२६४-१५ (९११९८२)
इमां गाथां गायमानश्चत्वरेषु सभासु च ।
दुर्वाससं वासयेत्को ब्राह्मणं सत्कृतं गृहे ॥ १३-२६४-१६ (९११९८३)
रोषणः सर्वभूतानां सूक्ष्मेऽप्यपकृते कृते ।
परिभाषां च मे श्रुत्वा को नु दद्यात्प्रतिश्रयम् ॥ १३-२६४-१७ (९११९८४)
यो मां कश्चिद्वासयीत न स मां कोपयेदिति ।
यस्मान्नाद्रियते कश्चित्ततोऽहं समवासयम् ॥ १३-२६४-१८ (९११९८५)
स सम्भुङ्क्ते सहस्राणां बहूनामन्नमेकदा ।
एकदा सोल्पकं भुङ्क्ते नचैवैति पुनर्गृहान् ॥ १३-२६४-१९ (९११९८६)
अकस्माच्च प्रहसति तथाऽकस्मात्प्ररोदिति ।
न चास्य वयसा तुल्यः पृथिव्यामभवत्तदा ॥ १३-२६४-२० (९११९८७)
अथ स्वावसथं गत्वा सशय्यास्तरणानि च ।
अदहत्स महातेजास्ततश्चाभ्यपतत्स्वयम् ॥ १३-२६४-२१ (९११९८८)
अथ मामब्रवीद्भूयः स मुनिः संशितव्रतः ।
कृष्ण पायसमिच्छामि भोक्तुमित्येव सत्वरः ॥ १३-२६४-२२ (९११९८९)
तदैव तु मया तस्य चित्तज्ञेन गृहे जनः ।

सर्वाण्यन्नानि पानानि भक्ष्याश्चोच्चावचास्तथा ॥१३-२६४-२३ (९१९९०)
भवन्तु सत्कृतानीह पूर्वमेव प्रयोचितः ।
ततोऽहं ज्वलमानं वै पायसं प्रत्यवेदयम् ॥१३-२६४-२४ (९१९९१)
तं भुक्त्वैव स तु क्षिप्रं ततो वचनमब्रवीत् ।
क्षिप्रमङ्गानि लिम्पस्व पायसेनेति स स्म ह ॥१३-२६४-२५ (९१९९२)
अविमृश्यैव च ततः कृतवानस्मि तत्तथा ।
तेनोच्छिष्टेन गात्राणि शरीरं च समालिपम् ॥१३-२६४-२६ (९१९९३)
स ददर्श तदाऽभ्याशे मातरं ते शुभाननाम् ।
तामपि स्मयमानां स पायसेनाभ्यलेपयत् ॥१३-२६४-२७ (९१९९४)
मुनिः पायसदिग्धाङ्गीं रथे तूर्णमयोजयत् ।
तमारुह्य रथं चैव निर्ययौ स गृहान्मम ॥१३-२६४-२८ (९१९९५)
अग्निवर्णो ज्वलन्धीमान्स द्विजो रथधुर्यवत् ।
प्रतोदेनातुदद्बालां रुक्मिणीं मम पश्यतः ॥१३-२६४-२९ (९१९९६)
न च मे स्तोकमप्यासीद्दुःखमीर्ष्याकृतं तदा ।
तथा स राजमार्गेणि महता निर्ययौ बहिः ॥१३-२६४-३० (९१९९७)
तद्दृष्ट्वा महदाश्चर्यं दाशार्हा जातमन्यवः ।
तत्राजल्पन्मिथः केचित्समाभाष्य परस्परम् ॥१३-२६४-३१ (९१९९८)
ब्राह्मणा एव जायेरन्नान्यो वर्णः कथञ्चन ।
को ह्येनां रथमास्थाय जीवेदन्य पुमानिह ॥१३-२६४-३२ (९१९९९)
आशीविषविषं तीक्ष्णं ततस्तीक्ष्णतरो द्विजः ।
ब्रह्माहिविषदिग्धस्य नास्ति कश्चिच्चिकित्सकः ॥१३-२६४-३३ (९२०००)
तस्मिन्व्रजति दुर्धर्षे प्रास्खलद्रुक्मिणी पथि ।
अमर्षयंस्तथा श्रीमान्स्मितपूर्वमचोदयम् ॥१३-२६४-३४ (९२००१)
ततः परमसंक्रुद्धो रथात्प्रस्कन्द्य स द्विजः ।
पदातिरुत्पथेनैव प्राद्रवद्दक्षिणामुखः ॥१३-२६४-३५ (९२००२)
तमुत्पथेन धावन्तमन्वधावं द्विजोत्तमम् ।
तथैव पायसादिग्धः प्रसीद भगवन्निति ॥१३-२६४-३६ (९२००३)
ततो विलोक्य तेजस्वी ब्राह्मणो मामुवाच ह ।
जितः क्रोधस्त्वया कृष्ण प्रकृत्यैव महाभुज ॥१३-२६४-३७ (९२००४)
न तेऽपराधमिह वै दृष्टवानस्मि सुव्रत ।
प्रीतोस्मि तव गोविन्द वृणु कामान्यथेप्सितान् ॥१३-२६४-३८ (९२००५)
प्रसन्नस्य च मे तात पश्य व्युष्टिं यथाविधाम् ॥ १३-२६४-३९ (९२००६)
यावदेव मनुष्याणामन्ने भावो भविष्यति ।
यथैवान्ने तथा तेषां त्वयि भावो भविष्यति ॥१३-२६४-४० (९२००७)
यावच्च पुण्या लोकेषु त्वयि कीर्तिर्भविष्यति ।
त्रिषु लोकेषु तावच्च वैशिष्ट्यं प्रतिपत्स्यसे ।

सुप्रियः सर्वलोकस्य भविष्यसि जनार्दन ॥ १३-२६४-४१ (९२००८)
यत्ते भिन्नं च दग्धं च यच्च किञ्चिद्विनाशितम् ।
सर्वं तथैव द्रष्टासि विशिष्टं जनार्दन ॥१३-२६४-४२ (९२००९)
यावदेतत्प्रलिप्तं ते गात्रेषु मधुसूदन ।
अतो मृत्युभयं नास्ति यावदिच्छसि चाच्युत ॥१३-२६४-४३ (९२०१०)
न तु पादतले लिप्ते तस्मात्ते मृत्युरत्र वै ।
नैतन्मे प्रियमित्येवं स मां प्रीतोऽब्रवीत्तदा ॥१३-२६४-४४ (९२०११)
इत्युक्तोऽहं शरीरं स्वं ददर्श श्रीसमायुतम्। १३-२६४-४५ (९२०१२)
रुक्मिणीं चाब्रवीत्प्रीतः सर्वस्त्रीणां वरं यशः ।
कीर्तिं चानुत्तमां लोके समवाप्स्यसि शोभने ॥१३-२६४-४६ (९२०१३)
न त्वां जरा वा रोगो वा वैवर्ण्यं चापि भामिनि ।
स्प्रक्ष्यन्ति पुण्यगन्धा च कृष्णमाराधयिष्यसि ॥१३-२६४-४७ (९२०१४)
षोडशानां सहस्राणां बधूनां केशवस्य ह ।
वरिष्ठा च सलोक्या च केशवस्य भविष्यसि ॥१३-२६४-४८ (९२०१५)
तव मातरमित्युक्त्वा ततो मां पुनरब्रवीत् ।
प्रस्थितः सुमहातेजा दुर्वासाऽग्निरिव ज्वलन् ॥१३-२६४-४९ (९२०१६)
एषैव ते बुद्धिरस्तु ब्राह्मणान्प्रति केशव ।
इत्युक्त्वा स तदा पुत्र तत्रैवान्तरधीयत ॥१३-२६४-५० (९२०१७)
तस्मिन्नन्तर्हिते चाहमुपांशु व्रतमाचरम् ।
यत्किञ्चिद्ब्राह्मणो ब्रूयात्सर्वं कुर्यामिति प्रभो ॥१३-२६४-५१ (९२०१८)
एतद्व्रतमहं कृत्वा मात्रा ते सह पुत्रक ।
ततः परमहृष्टात्मा प्राविशं गृहमेव च ॥१३-२६४-५२ (९२०१९)
प्रविष्टमात्रश्च गृहे सर्वं पश्यामि तन्नवम् ।
यद्भिन्नं यच्च वै दग्धं तेन विप्रेण पुत्रक ॥१३-२६४-५३ (९२०२०)
ततोऽहं विस्मयं प्राप्तः सर्वं दृष्ट्वा नवं दृढम् ।
अपूजयं च मनसा रौक्मिणेय सदा द्विजान् ॥१३-२६४-५४ (९२०२१)
इत्यहं रौक्मिणेयस्य पृच्छतो भरतर्षभ ।
माहात्म्यं द्विजमुख्यस्य सर्वमाख्यातवांस्तदा ॥१३-२६४-५५ (९२०२२)
तथा त्वमपि कौन्तेय ब्राह्मणान्सततं प्रभो ।
पूजयस्व महाभागान्वाग्भिर्दानैश्च नित्यदा ॥१३-२६४-५६ (९२०२३)
एवं व्युष्टिमहं प्राप्तो ब्राह्मणस्य प्रसादजाम् ।
यच्च मामाह भीष्मोऽयं तत्सत्यं भरतर्षभ ॥ ॥१३-२६४-५७ (९२०२४)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
चतुःषष्ट्यधिकद्विशततमोऽध्यायः ॥ २६४ ॥

७-२६४-८ सौम्यं कल्याणम् ॥
७-२६४-९ ब्राह्मणप्रतिपूजायामायुरिति झ । पाठः ॥
७-२६४-१४ दीर्घश्मश्रुनखादिमानिति थ ध पाठः ॥
७-२६४-२३ जन इति इति शेषपूर्त्या सम्बन्धः ॥
७-२६४-४४ लिप्ते कस्मात्ते पुत्रकाद्य वै इति झ पाठः ॥

---

अनुससनपर्व-अध्ययर२६५
॥ श्रीः ॥
१३.२६५. अध्यायः २६५

अथ दानधर्मपर्व ॥ १ ॥
Mahabharata - Anushaasana Parva - Chapter Topics
कृष्णेन युधिष्ठिरंप्रति
दक्षाध्वरविध्वंसनत्रिपुरदहनादिरूपरुद्रचरित्रपरिकीर्तनम्
॥ १ ॥

Mahabharata - Anushaasana Parva - Chapter Text

युधिष्ठिर उवाच ।
दुर्वाससः प्रसादात्ते शंकरांशस्य माधव ।
अवाप्तमिह विज्ञानं तन्मे व्याख्यातुमर्हसि ॥ १३-२६५-१ (९२०२५)
महाभाग्यं च यत्तस्य नामानि च महात्मनः ।
तत्त्वमो ज्ञातुमिच्छामि सर्वं मतिमतांवर ॥ १३-२६५-२ (९२०२६)
वासुदेव उवाच। १३-२६५-३क्ष् (७७०८)
हन्ति ते कीर्तयिष्यामि नमस्कृत्य कपर्दिने ।
यदवाप्तं मया राजञ्श्रेयो यच्चार्जितं यशः ॥ १३-२६५-३ (९२०२७)
प्रयतः प्रातरुत्थाय यस्त्वधीयेद्विशाम्पते ।
प्राञ्जलिः शतरुद्रीयं नास्य किञ्चनि दुर्लभम् ॥ १३-२६५-४ (९२०२८)
गशिवः सर्वकतो रुद्रः स्रष्टा यस्त्वं शृणुष्व मे।'
प्रजापतिस्तमसृजत्तमसोऽन्ते महातपाः ।
शङ्करस्त्वसृजत्तात प्रजाः स्थावरजङ्गमाः ॥ १३-२६५-५ (९२०२९)
नास्ति किञ्चित्परं भूतं महादेवाद्विशाम्पते ।
इह त्रिष्वपि लोकेषु भूतानां प्रभवो हि सः ॥ १३-२६५-६ (९२०३०)
न चैवोत्सहते स्थातुं कश्चिदग्रे महात्मनः ।
न हि भूतं समं तेन त्रिषु लोकेषु विद्यते ॥ १३-२६५-७ (९२०३१)

गन्धेनापि हि सङ्ग्रामे तस्य क्रुद्धस्य शत्रवः ।
विसंज्ञा हतभूयिष्ठा वेपनेते च पतन्ति च ॥ १३-२६५-८ (९२०३२)
घोरं च निनदं तस्य पर्जन्यनिनदोपम् ।
श्रुत्वा विशीर्येद्धृदयं देवानामपि संयुगे ।
यं चाक्ष्णा घोररूपेण पश्येद्दग्धः पतेदधः ॥ १३-२६५-९ (९२०३३)
न सुरा नासुरा लोके न गन्धर्वा न पन्नगाः ।
कुपिते सुखमेधन्ते तस्मिन्नपि गुहागताः ॥ १३-२६५-१० (९२०३४)
प्रजापतेश्च दक्षस्य यजतो वितते क्रतौ ।
विव्याध कुपितो यज्ञं निर्भयस्तु भवस्तदा ॥ १३-२६५-११ (९२०३५)
धनुषा वाणमुत्सृज्य सुघोरं विननाद च ॥ १३-२६५-१२ (९२०३६)
ते न शर्म कुतः शान्ति विषादं लेभिरे सुराः ।
विद्धे च सहसा यज्ञे कुपिते च महेश्वरे ॥ १३-२६५-१३ (९२०३७)
तेन ज्यातलघोषेण सर्वे लोकाः समाकुलाः ।
बभूवुरवशाः पार्थ विषेदुश्च सुरासुराः ॥ १३-२६५-१४ (९२०३८)
आपश्चुक्षुभिरे चैव चकम्पे च वसुन्धरः ।
व्यद्रवग्निरयश्चापि द्यौः पफाल च सर्वशः ॥ १३-२६५-१५ (९२०३९)
अन्धेन तमसा लोकाः प्रावृता न चकाशिरे ।
प्रनष्टा ज्योतिषां भाश्च सह सूर्येण भारत ॥ १३-२६५-१६ (९२०४०)
भृशं भीतास्ततः शान्तिं चत्रुः स्वस्त्ययनानि च ।
ऋषयः सर्वभूतानामात्मनश्च हितैषिमः ॥ १३-२६५-१७ (९२०४१)
ततः सोऽभ्यद्रवद्देवान्रुद्रो रौद्रपराक्रमः ।
भगस्य नयने क्रुद्धः प्रहारेण व्यशातयत् ॥ १३-२६५-१८ (९२०४२)
पूषणं चाभिदुद्राव घोरेण वपुषाऽन्वितः ।
पुरोडाशं भक्षयतो दशनान्वै व्यशातयत् ॥ १३-२६५-१९ (९२०४३)
ततः प्रणेमुर्देवास्ते वेपमानाः स्म शङ्करम् ।
पुनश्च सन्दधे रुद्रो दीप्तं सुनिशितं शरम् ॥ १३-२६५-२० (९२०४४)
रुद्रस्य विक्रमं दृष्ट्वा भीता देवाः सहर्षिभिः ।
ततः प्रसादयामासुः शर्वं ते विबुधोत्तमाः ॥ १३-२६५-२१ (९२०४५)
जेपुश्च शतरुद्रीयं देवाः कृत्वाञ्जलिं तदा ।
संस्तूयमानस्त्रिदशैः प्रससाद महेश्वरः ॥ १३-२६५-२२ (९२०४६)
रुद्रस्य भागं यज्ञे च विशिष्टं ते त्वकल्पयन् ।
भयेन त्रिदशा राजञ्शरणं च प्रपेदिरे ॥ १३-२६५-२३ (९२०४७)
तेन चैव हि तुष्टेन स यज्ञः सन्धितोऽभवत् ।
यद्यच्चापहृतं तत्र तत्तथैवान्वजीवयत् ॥ १३-२६५-२४ (९२०४८)
असुराणां पुराण्यासंस्त्रीणि वीर्यवतां दिवि ।
आयसं राजतं चैव सौवर्णमपि चापरम् ॥ १३-२६५-२५ (९२०४९)

नाशकत्तानि मघवा भेत्तुं सर्वायुधैरपि ।
अथ सर्वेऽमरा रुद्रं जग्मुः शरणमर्दिताः ॥१३-२६५-२६ (९२०५०)
तत ऊचुर्महात्मानो देवाः सर्वे समागताः ।
रुद्र रौद्रा भविष्यन्ति पशवः सर्वकर्मसु ॥१३-२६५-२७ (९२०५१)
जहि दैत्यान्सह पुरैर्लोकांस्त्रायस्व मानद ।
स तथोक्तस्तथेत्युक्त्वा कृत्वा विष्णुं शरोत्तमम् ॥१३-२६५-२८ (९२०५२)
शल्यमग्निं तथा कृत्वा पुङ्खं वैवस्वतं यमम् ।
ओङ्कारं च धनुः सर्वाञ्ज्यां च सावित्रिमुत्तमां ॥१३-२६५-२९ (९२०५३)
ब्रह्माणं सारथिं कृत्वा विनियुज्य च सर्वशः ।
त्रिपर्वणा त्रिशल्येन तेन तानि बिभेद सः ॥१३-२६५-३० (९२०५४)
शरेणादित्यवर्णेन कालाग्निसमतेजसा ।
तेऽसुराः सपुरास्तत्र दग्धा रुद्रेण भारत ॥१३-२६५-३१ (९२०५५)
तं चैवाङ्कगतं दृष्ट्वा बालं पञ्चशिखं पुनः ।
उमा जिज्ञासमाना वै कोऽयमित्यब्रवीत्तदा ॥१३-२६५-३२ (९२०५६)
असूयतश्च शक्रस्य वज्रेणि प्रहरिष्यतः ।
सवज्रं स्तम्भयामास तं बाहुं परिघोपमम् ॥१३-२६५-३३ (९२०५७)
न संयुयुधिरे चैव देवास्तं भुवनेश्वरम् ।
सप्रजापतयः सर्वे तस्मिन्मुमुहुरीश्वरे ॥१३-२६५-३४ (९२०५८)
ततो ध्यात्वा च भगवान्ब्रह्मा तममितौजसम् ।
अयं श्रेष्ठ इति ज्ञात्वा ववन्दे तमुमापतिम् ॥१३-२६५-३५ (९२०५९)
ततः प्रसादयामासुरुमां रुद्रं च ते सुराः ।
बभूव स तदा बालः प्रययौ तु यथापुरम् ॥१३-२६५-३६ (९२०६०)
स चापि ब्राह्मणो भूत्वा दुर्वासा नाम वीर्यवान् ।
द्वारवत्यां मम गृहे चिरं कालमुपावसन् ॥१३-२६५-३७ (९२०६१)
विप्रकारान्प्रयुङ्क्ते स्म सुबहून्मम वेश्मनि ।
तानुदारतया चाहं चक्षमे चातिदुःसहान् ॥१३-२६५-३८ (९२०६२)
स वै रुद्रः स च शिवः सोग्निः सर्वः स सर्वजित् ।
स चैवेन्द्रश्च वायुश्च सोऽस्विनौ स च विद्युतः ॥१३-२६५-३९ (९२०६३)
स चन्द्रमाः स चेशानः स सूर्यो वरुणश्च सः ।
स कालः सोन्तको मृत्युः स यमो रात्र्यहानि च ॥१३-२६५-४० (९२०६४)
मासार्धमासा ऋतवः सन्ध्ये संवत्सरश्च सः ।
सधाता स विधाता च विश्वकर्मा स सर्ववित् ॥१३-२६५-४१ (९२०६५)
नक्षत्राणि ग्रहाश्चैव दिशोऽथ प्रदिशस्तथा ।
विश्वमूर्तिरमेयात्मा भगवान्परमद्युतिः ॥१३-२६५-४२ (९२०६६)
एकधा च द्विधा चैव बहुधा च स एव हि ।
शतधा सहस्रधा चैव तथा शतसहस्रधा ॥१३-२६५-४३ (९२०६७)

ईदृशः स महादेवो भूयश्च भगवानतः ।
न हि शक्या गुणा वक्तुमपि वर्षशतैरपि ॥ ॥ १३-२६५-४४ (९२०६८)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
पञ्चषष्ट्यधिकद्विशततमोऽध्यायः ॥ २६५ ॥

---

अनुससनपर्व-अध्यय२६६
॥ श्रीः ॥
१३.२६६. अध्यायः २६६

अथ दानधर्मपर्व ॥ १ ॥
Mahabharata - Anushaasana Parva - Chapter Topics
कृष्णेन युधिष्ठिरंप्रति महेश्वरादिनामनिर्वचनपूर्वकं
शिवमहिमोक्तिः ॥ १ ॥

Mahabharata - Anushaasana Parva - Chapter Text

वासुदेव उवाच ।
युधिष्ठिर महाबाहो महाभाग्यं महात्मनः ।
रुद्राय बहुरूपाय बहुनाम्ने निबोध मे ॥ १३-२६६-१ (९२०६९)
वदन्त्युग्रं महादेवं तथा स्थाणुं महेश्वरम् ।
एकाक्षं त्र्यम्बकं चैव विश्वरूपं शिवं तथा ॥ १३-२६६-२ (९२०७०)
द्वे तनू तस्य देवस्य वेदज्ञा ब्राह्मणा विदुः ।
घोरामन्यां शिवामन्यां ते तनू बहुधा पुनः ॥ १३-२६६-३ (९२०७१)
उग्रा घोरा तनुर्याऽस्य सोऽग्निर्विद्युत्स भास्करः ।
शिवा सौम्या च या त्वस्य धर्मस्त्वापोथ चन्द्रमाः ॥ १३-२६६-४ (९२०७२)
आत्मनोऽर्धं तु तस्याग्निः सोमोऽर्धं पुनरुच्यते ।
ब्रह्मचर्यं चरत्येका शिवा चास्य तनुस्तथा ॥ १३-२६६-५ (९२०७३)
याऽस्य घोरतमा मूर्तिर्जगत्संहरते तथा ।
ईश्वरत्वान्महत्त्वाच्च महेश्वर इति स्मृतः ॥ १३-२६६-६ (९२०७४)
यन्निर्दहति यत्तीक्ष्णो यदुग्रो यत्प्रतापवान् ।
मांसशोणितमज्जादो यत्ततो रुद्र उच्यते ॥ १३-२६६-७ (९२०७५)
देवानां सुमहान्यच्च यच्चास्य विषयो महान् ।
यच्च विश्वं जगत्पाति महादेवस्ततः स्मृतः ॥ १३-२६६-८ (९२०७६)
धूम्ररूपा जटा यस्माद्धूर्जटीत्यत उच्यते ॥ १३-२६६-९ (९२०७७)
स मेधयति यन्नित्यं सर्वान्वै सर्वकर्मभिः ।

शिवमिच्छन्मनुष्याणां तस्मादेष शिवः स्मृतः ॥१३-२६६-१० (१२०७८)
दहत्यूर्ध्वं स्थितो यच्च प्राणान्नृणां स्थिरश्च यत् ।
स्थिरलिङ्गश्च यन्नित्यं तस्मात्स्थाणुरिति स्मृतः ॥१३-२६६-११ (१२०७९)
यदस्य बहुधा रूपं भूतं भव्यं भवत्तथा ।
स्थावरं जङ्गमं चैव बहुरूपस्ततः स्मृतः ॥१३-२६६-१२ (१२०८०)
विश्वेदेवाश्च यत्तस्मिन्विश्वरूपस्ततः स्मृतः ।
सहस्राक्षोऽयुताक्षो वा सर्वतोक्षिमयोपि वा ।
चक्षुषः प्रभवं तेजः सर्वतश्चक्षुरेव तत् ॥ १३-२६६-१३ (१२०८१)
सर्वथा यत्पशून्पाति तैश्च यद्रमते सह ।
तेषामधिपतिर्यच्च तस्मात्पशुपतिः स्मृतः ॥१३-२६६-१४ (१२०८२)
नित्येन ब्रह्मचर्येण लिङ्गमस्य यदा स्थितम् ।
ग्भक्तानुग्रहणार्थाय गूढलिङ्गस्ततः स्मृतः।'
महयत्यस्य लोकश्च प्रियं ह्येतन्महात्मनः ॥ १३-२६६-१५ (१२०८३)
विग्रहं पूजयेद्यो वै लिङ्गं वाऽपि महात्मनः ।
लिङ्गं पूजयिता नित्यं महतीं श्रियमश्नुते ॥१३-२६६-१६ (१२०८४)
ऋषयश्चापि देवाश्च गन्धर्वाप्सरसस्तथा ।
लिङ्गमेवार्चयन्ति स्म यत्तदूर्ध्वं समास्थितम्। १३-२६६-१७ (१२०८५)
पूज्यमाने ततस्तस्मिन्मोदते स महेश्वरः ।
सुखं ददाति प्रीतात्मा भक्तानां भक्तवत्सलः ॥१३-२६६-१८ (१२०८६)
एष एव श्मशानेषु देवो वसति निर्दहन् ।
यजन्ते ये जनास्तत्र वीरस्थाननिषेविणः ॥१३-२६६-१९ (१२०८७)
विषमस्थः शरीरेषु स मृत्युः प्राणिनामिह ।
स च वायुः शरीरेषु प्राणपालः शरीरिणाम् ॥१३-२६६-२० (१२०८८)
तस्य घोराणि रूपाणि दीप्तानि च बहुनि च ।
लोके यान्यस्य पूज्यन्ते विप्रास्तानि विदुर्बुधाः ॥१३-२६६-२१ (१२०८९)
नामधेयानि देवेषु बहून्यस्य यथार्थवत् ।
निरुच्यन्ते महत्त्वाच्च विभुत्वात्कर्मभिस्तथा ॥१३-२६६-२२ (१२०९०)
वेदे चास्य विदुर्विप्राः शतरुद्रीयमुत्तमम् ।
व्यासेनोक्तं च यच्चापि उपस्थानं महात्मनः ॥१३-२६६-२३ (१२०९१)
प्रदाता सर्वलोकानां विश्वसाक्षी निरामयः ।
ज्येष्ठभूतं वदन्त्येनं ब्राह्मणा ऋषयोऽपरे ॥१३-२६६-२४ (१२०९२)
प्रथमो ह्येष देवानां मुखादग्निमजीजनत् ।
ग्रहैर्बहुविधैः प्राणान्संरुद्धानुत्सृजत्यपि ॥१३-२६६-२५ (१२०९३)
विमोक्षयति तुष्टात्मा शरण्यः शरणागतान् ।
आयुरारोग्यमैश्वर्यं हितं कामांश्च पुष्कलान् ॥१३-२६६-२६ (१२०९४)
स ददाति मनुष्येभ्यः स एवाक्षिपते पुनः ।

शक्रादिषु च देवेषु तस्य चैश्वर्यमुच्यते ॥१३-२६६-२७ (९२०९५)
स एव स्थापको नित्यं त्रैलोक्यस्य शुभाशुभे ।
ऐश्वर्याच्चैव कामानामीश्वरः पुनरुच्यते ॥१३-२६६-२८ (९२०९६)
महेश्वरश्च लोकानां महातामीश्वरश्च सः ।
बहुभिर्विविधै रूपैर्विश्वं व्याप्तमिदं जगत् ।
तस्य देवस्य यद्वक्त्रं समुद्रे वडंवामुखण् ॥ ॥ १३-२६६-२९ (९२०९७)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
षट्षष्ट्यधिकद्विशततमोऽध्यायः ॥२६६ ॥
Mahabharata - Anushaasana Parva - Chapter Footnotes

७-२६६-४ सा अग्निविद्युत्समप्रभेति क ट थ पाठः ॥

---

अनुससनपर्व-अध्यय२६७
॥ श्रीः ॥
१३.२६७. अध्यायः २६७

अथ दानधर्मपर्व ॥१ ॥
Mahabharata - Anushaasana Parva - Chapter Topics
भीष्मेण युधिष्ठिरंप्रति धर्मप्रमाणनिरूपणम् ॥१ ॥

Mahabharata - Anushaasana Parva - Chapter Text

वैशम्पायन उवाच ।
इत्युक्तवति तद्वाक्यं कृष्णे देवकिनन्दने ।
भीष्मं शान्तनवं भूयः पर्यपृच्छद्युधिष्ठिरः ॥१३-२६७-१ (९२०९८)
निर्णये वा महाबुद्धे सर्वधर्मविदांवर ।
प्रत्यक्षमागमो वेति किं तयोः कारणं भवेत् ॥१३-२६७-२ (९२०९९)
भीष्म उवाच।१३-२६७-३क्ष् (७७०९)
नास्त्यत्रि संशयः कश्चिदिति मे वर्तते मतिः ।
शृणु वक्ष्यामि ते प्राज्ञ सम्यक्त्वं मेऽनुपृच्छसि ॥१३-२६७-३ (९२१००)
संशयः सुगमस्तत्र दुर्गमस्तस्य निर्णयः ।
दृष्टं श्रुतमनन्तं हि यत्र संशयदर्शन् ॥१३-२६७-४ (९२१०१)
प्रत्यक्षं कारणं दृष्टं हैतुकं प्राज्ञमानिनः ।
नास्तीत्येवं व्यवस्यन्ति सत्यमागममेव वा ॥१३-२६७-५ (९२१०२)
तदयुक्तं व्यवस्यन्ति बालाः पण्डितमानिनः ।

अथ सञ्चिन्त्यमेवैकं कारणं किं भवेदिति ॥१३-२६७-६ (९२१०३)
शक्यं दीर्घेण कालेन युक्तेनामन्त्रितेन च ।
प्राणयात्रामनेकां च कल्पयानेन भारत ॥१३-२६७-७ (९२१०४)
तत्परेणैव नान्येन शक्यते तत्तु कारणम् ।
हेतूनामन्तमासाद्य विपुलं ज्ञानमुत्तमम् ॥१३-२६७-८ (९२१०५)
ज्योतिः सर्वस्य लोकस्य विपुलं प्रतिपद्यते ।
न त्वेव गमनं राजन्हेतुतो गमनं तथा ।
अग्राह्यमनिबद्धं च वाचा सम्परिवर्जयेत् ॥ १३-२६७-९ (९२१०६)
युधिष्ठिर उवाच।१३-२६७-१०क्ष् (७७१०)
प्रत्यिक्षं लोकतः सिद्धिर्लोकश्चागमपूर्वकः ।
शिष्टाचारो बहुविधस्तन्मे ब्रूहि पितामहः ॥१३-२६७-१० (९२१०७)
भीष्म उवाच।१३-२६७-११क्ष् (७७११)
धर्मस्य ह्रियमाणस्य बलवद्भिर्दुरात्मभिः ।
संस्था यत्नैरपि कृता कालेन प्रतिभिद्यते ॥१३-२६७-११ (९२१०८)
अधर्मो धर्मरूपेण तृणैः कूप इवावृतः ।
ततस्तैर्भिद्यते वृत्तं शृणु चैव युधिष्ठिर ॥१३-२६७-१२ (९२१०९)
अवृत्त्या ये तु निन्दनि श्रुतत्यागपरायणाः ।
धर्मविद्वेषिणो मन्दा इत्युक्तस्तेषु संशयः ॥१३-२६७-१३ (९२११०)
अतृप्यन्तस्तु साधूनां यावदागमबुद्धयः ।
परमित्येव सन्तुष्टास्तानुपास्स्व च पृच्छ च ॥१३-२६७-१४ (९२१११)
कामार्थौ पृष्ठतः कृत्वा लोभमोहानुसारिणौ ।
धर्म इत्येव सम्बुद्धस्तानुपास्स्व च पृच्छ च ॥१३-२६७-१५ (९२११२)
न तेषां भिद्यते वृत्तं यज्ञाः स्वाध्यायकर्म च ।
आचारः कारणं चैव धर्मश्चैकस्त्रयं पुनः ॥१३-२६७-१६ (९२११३)
युधिष्ठिर उवाच।१३-२६७-१७क्ष् (७७१२)
पुनरेव हि मे बुद्धि संशये परिमुह्यति ।
अपरो मज्जमानस्य परं तीरमपश्यतः ॥१३-२६७-१७ (९२११४)
वेदः प्रत्यक्षमाचारः प्रमाणं तत्त्रयं यदि ।
पृथक्त्वं लभ्यते चैषां धर्मश्चैतत्त्रयं कथम् ॥१३-२६७-१८
(९२११५)
भीष्म उवाच।१३-२६७-१९क्ष् (७७१३)
धर्मस्य ह्रियमाणस्य बलवद्भिर्दुरात्मभिः ।
यद्येवं मन्यसे राजंस्त्रिधा धर्मविचारणा ॥१३-२६७-१९ (९२११६)
एक एवेति जानीहि त्रिधा धर्मस्य दर्शनम् ।
पृथक्त्वे च न मे बुद्धिस्त्रयाणामपि वै तथा ॥१३-२६७-२० (९२११७)
श्उक्तो मार्गस्त्रयाणां च तत्तथैव समाचर ।

जिज्ञासा न तु कर्तव्या धर्मस्य परितर्कणात् ॥१३-२६७-२१ (९२११८)
सदैव भरतश्रेष्ठ मा ते भूदत्र संशयः ।
अन्धो जड इवाशङ्की यद्ब्रवीमि तदाचर ॥१३-२६७-२२ (९२११९)
अहिंसा सत्यमक्रोधो दानमेतच्चतुष्टयम् ।
अजातशत्रो सेवस्य धर्म एष सनातनः ॥ १३-२६७-२३ (९२१२०)
ब्राह्मणेषु च वृत्तिर्या पितृपैतामहोचिता ।
तामन्वेहि महाबाहो धर्मस्यैते हि देशिकाः ॥१३-२६७-२४ (९२१२१)
प्रमाणमप्रमाणं वै यः कुर्यादबुधो जनः ।
न स प्रमाणतामर्हो विषादजननो हि सः ॥१३-२६७-२५ (९२१२२)
ब्राह्मणानेव सेवस्व सत्कृत्य बहुमान्य च ।
एतेष्वेव त्विमे लोकाः कृत्स्ना इति निबोध तान् ॥ ॥१३-२६७-२६ (९२१२३)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
सप्तषष्ट्यधिकद्विशततमोऽध्यायः ॥ २६७ ॥

Mahabharata - Anushaasana Parva - Chapter Footnotes

७-२६७-२ श्रुतिप्रत्यक्षयोः किं बलवदिति प्रश्नः ॥
७-२६७-४ श्रुत्यपेक्षया प्रत्यक्षं प्रबलं क्वचित्प्रत्यक्षापेक्षया
श्रुतिरित्यर्थः ॥
७-२६७-६ यदि त्वमपि एकमसंहतं ब्रह्म कारणं कथं भवेदिति
संशयवानसि तर्हि दीर्घकालसेवनादिनाऽयमर्थो युक्तेन योगेन
वेदितुं शक्यः ॥
७-२६७-८ हेतूनामन्त्रिते वापि धर्मशास्त्रेण चोत्तमम् इति क ट थ पाठः ॥
७-२६७-९ लोकस्य प्रकाशं प्रतिपद्यत इति । तत्वागमसमे
राजन्हेत्वन्तगमने तथेति च क ट थ पाठः ॥
७-२६७-१० लोकतः सिद्धिरनुमानं आगमपूर्वः शिष्टचारश्चेति
प्रमाणानि एतेषां मध्ये किं प्रबलमिति प्रश्नार्थः ॥
७-२६७-११ धर्मस्य प्रीयमाणस्य बलवद्भिर्महात्मभिः इति, काले
विपरिविद्यत इति च क ट थ पाठः ॥
७-२६७-१२ वृत्तं शिष्टाचारः ॥
७-२६७-१३ निन्दन्ति वृत्तम् । तेषु प्रत्यक्षानुमानाचारेषु ॥
७-२६७-१४ अतृप्यन्तो नित्यं सोत्कण्ठाः । आगमजन्या बुद्धयो येषां
ते। परं श्रेष्ठं प्रमाणमित्यन्वयः ॥
७-२६७-१६ वृत्तं शीलम् । आचारः शौचादिः। कारणं वेदः। त्रयं
मिलित्वा एको धर्मः। स धर्मः साधानीय इत्यर्थः। येनैषां
भिद्यते वृत्तं यज्ञस्वाध्यायकर्मभिः। मूलावारस्तु साधूनां

यज्ञस्वाध्यायवृत्तत इति क ट थ पाठः ॥
७-२६७-१९ हे राजन्, यद्येवं धर्मत्रयं मन्यसे तन्नेति शेषः । किन्तु क्रियमाणस्यैकस्यैव धर्मस्य त्रिधा त्रिप्रकारा विचारणा। एकएव प्रमाणत्रयुसंवादेन परीक्षणीय इत्यर्थः ॥
७-२६७-२० त्रिधेत्यस्य व्याख्यानं एकएवेति । त्रयाणां प्रमाणानां पृथक्त्वे प्रत्येकं स्वातन्त्र्येण धर्मप्रतिपादकत्वे मम बुद्धिर्न च। एवमेव विजानीहि इति क ट थ पाठः ॥
७-२६७-२२ अशङ्की शङ्काशून्यः ॥

---

अनुससनपर्व-अध्यय२६८
॥ श्रीः ॥
१३.२६८. अध्यायः २६८

अथ दानधर्मपर्व ॥ १ ॥
Mahabharata - Anushaasana Parva - Chapter Topics
भीष्मेण युधिष्ठिरंप्रति धार्मिकाधार्मिकाणां स्वर्गनरकप्राप्तिप्रतिपादनम् ॥ १ ॥
तता साध्वसाधुजनकक्षणाभिधानपूर्वकं सामान्यतो नानाधर्मप्रतिपादनम् ॥ ३ ॥

Mahabharata - Anushaasana Parva - Chapter Text

युधिष्ठिर उवाच ।
ये च धर्ममसूयन्ते ये चैनं पर्युपासते ।
ब्रवीतु मे भवानेतत्क्व ते गच्छन्ति तादृशाः ॥ १३-२६८-१ (९२१२४)
भीष्म उवाच। १३-२६८-२क्ष् (७७१४)
रजसा तमसा चैव समवस्तीर्णचेतसः ।
नरकं प्रतिपद्यन्ते धर्मविद्वेषिमो जनाः ॥ १३-२६८-२ (९२१२५)
ये तु धर्मं महाराज सततं पर्युपासते ।
सत्यार्जवपराः सन्तस्ते वै स्वर्गभूजो नराः ॥ १३-२६८-३ (९२१२६)
धर्म एव रतिस्तेषामाचार्योपासनाद्भवेत् ।
देवलोकं प्रपद्यन्ते ये धर्मं पर्युपासते ॥ १३-२६८-४ (९२१२७)
मनुष्या यदि वा देवाः शरीरमुपताप्य वै ।
धर्मिणः सुखमेधन्ते लोभद्वेषविवर्जिताः ॥ १३-२६८-५ (९२१२८)
प्रथमं ब्रह्मणः पुत्रं धर्ममाहुर्मनीषिणः ।
धर्मिणः पर्युपासन्ते फलं पक्वमिवाशिनः ॥ १३-२६८-६ (९२१२९)

युधिष्ठिर उवाच। १३-२६८-७क्ष् (७७१५)
असाधोः कीदृशं शीलं साधोश्चैव तु कीदृशम् ।
ब्रवीतु मे भवानेतत्सन्तोऽसन्तश्च कीदृशाः ॥ १३-२६८-७ (९२१३०)
भीष्म उवाच। १३-२६८-८क्ष् (७७१६)
दुराधाराश्च दुर्धर्षा दुर्मुखाश्चाप्यसाधवः ।
साधवः शीलसम्पन्नाः शिष्टाचारस्य लक्षणम् ॥ १३-२६८-८ (९२१३१)
राजमार्गे गवां मध्ये जनमध्ये च धर्मिणः ।
नोपसेचन्ति राजेन्द्र सर्गं मूत्रपुरीषयोः ॥ १३-२६८-९ (९२१३२)
पञ्चानां यजनं कृत्वा शेषमश्नन्ति साधवः ।
न जल्पन्ति च भुञ्जाना न निद्रान्त्यार्द्रपाणयः ॥ १३-२६८-१० (९२१३३)
चित्रभानुमपां देवं गोष्ठं चैव चतुष्पथम् ।
ब्राह्मणं धार्मिकं वृद्धं ये कुर्वन्ति प्रदक्षिणम् ॥ १३-२६८-११ (९२१३४)
वृद्धानां भारतप्रानां स्त्रीणां बालातुरस्य च ।
ब्राह्मणानां गवां राज्ञां पन्थानं ददते च ये ॥ १३-२६८-१२ (९२१३५)
अतिथीनां च सर्वेषां प्रेष्याणां स्वजनस्य च ।
ग्सामान्यं भोजनं कुर्यात्स्वयं नाग्यशनं व्रजेत् ॥ १३-२६८-१३ (९२१३६)
न सत्यार्जवधर्मस्य तुल्यमन्यच्च विद्यते ।
बहुला नाम गौस्तेन गतिमग्र्यां गता किल ॥ १३-२६८-१४ (९२१३७)
मुनिशापाद्द्विजः कश्चिद्व्याघ्रतां समुपागतः ।
बहुलां भक्षणरुचिरास्वाद्य शपथेन तु ॥ १३-२६८-१५ (९२१३८)
विमुच्य पीतवत्सां तां दृष्ट्वा स्मृत्वा पुरातनम् ।
जगाम लोकानमलान्सा स्वराष्ट्रं तथा पुनः ॥ १३-२६८-१६ (९२१३९)
तस्मात्सत्यार्जवरतो राजन्राष्ट्रं समानवम् ।
तारयित्वा सुखं स्वर्गं गन्तासि भरतर्षभ ॥ १३-२६८-१७ (९२१४०)
तथा शरणकामानां गोप्ता स्यात्स्वागतप्रदः ॥
सायं प्रातर्मनुष्याणामशनं देवनिर्मितम्। १३-२६८-१८ (९२१४१)
नान्तरा भोजनं दृष्टमुपवासविधिर्हि सः ॥
होमकाले यथा वह्निः काले होमं प्रतीक्षते। १३-२६८-१९ (९२१४२)
ऋतुकाले तथाऽऽधानं पितरश्च प्रतीक्षते ।
नान्यदा गच्छते यस्तु ब्रह्मचर्यं च तत्स्मृतम् ॥ १३-२६८-२० (९२१४३)
अमृतं ब्राह्मणा गाव इत्येतत्त्रयमेकतः ।
तस्मादोब्राह्मणान्नित्यमर्चयेत यथाविधि ॥ १३-२६८-२१ (९२१४४)
यजुषां संस्कृतं मांसमुपभुञ्जत दुष्यति ।
पृष्ठमांसं वृथामांसं पुत्रमांसं च तत्समम् ॥ १३-२६८-२२ (९२१४५)
स्वदेशे परदेशे वाऽप्यतिथिं नोपवासयेत् ।
कर्म वै सफलं कृत्वा गुरुणां प्रतिपादयेत् ॥ १३-२६८-२३ (९२१४६)

गुरुभ्यस्त्वासनं देयमभिवाद्याभिपूज्य च ।
गुरुमभ्यर्च्य वर्धन्ते आयुषा यशसा श्रिया ॥१३-२६८-२४ (९२१४७)
वृद्धान्नाभिभवेज्जातु न चैतान्प्रेषयेदिति ।
नासीनः स्यात्स्थितेष्वेवमायुरस्य न रिष्यते ॥१३-२६८-२५ (९२१४८)
न नग्नामीक्षते नारीं न नग्नान्पुरुषानपि ।
मैथुनं सततं गुप्तं तपश्चैव समाचरेत् ॥१३-२६८-२६ (९२१४९)
तीर्थानां गुरवस्तीर्थं शुचीनां हृदयं शुचि ।
दर्शनानां परं ज्ञानं सन्तोषः परमं सुखम् ॥१३-२६८-२७ (९२१५०)
सायं प्रातश्च वृद्धानां शृणुयात्पुष्कला गिरः ।
श्रुतमाप्नोति हि नरः सततं वृद्धसेवया ॥१३-२६८-२८ (९२१५१)
स्वाध्याये भोजने चैव दक्षिणं पाणिमुद्धरेत् ।
यच्छेद्वाङ्मनसी नित्यमिन्द्रियाणि तथैव च ॥१३-२६८-२९ (९२१५२)
संस्कृतं पायसं नित्यं यावकं कृसरं हविः ।
अष्टकाः पितृदैवत्या ग्रहाणामभिपूजनम् ॥१३-२६८-३० (९२१५३)
श्मश्रुकर्मणि मङ्गल्यं क्षुतानामभिनन्दनम् ।
व्याधितानां च सर्वेषामायुषामभिनन्दनम् ॥१३-२६८-३१ (९२१५४)
न जातु त्वमिति ब्रूयादापन्नोपि महत्तरम् ।
त्वंकारो वा वधो वेति विद्वत्सु न विशिष्यते ।
अवराणां समानानां शिष्याणां च समाचरेत् ॥ १३-२६८-३२ (९२१५५)
पापमाचरते नित्यं हृदयं पापकर्मणाम् ।
ज्ञानपूर्वकृतं कर्म च्छादयन्ते ह्यसाधवः ॥१३-२६८-३३ (९२१५६)
ज्ञानपूर्वं विनश्यन्ति गूहमाना महाजने ।
न मां मनुष्याः पश्यन्ति न मां पश्यन्ति देवताः ॥१३-२६८-३४ (९२१५७)
पापेनाभिहितः पापः पापमेवाभिजायते ॥ १३-२६८-३५ (९२१५८)
यथा वार्धुषिको वृद्धिं दिनभेदे प्रतीक्षते ।
धर्मेण पिहितं पापं धर्ममेवाभिवर्धयेत् ॥१३-२६८-३६ (९२१५९)
यथा लवणमम्भोभिराप्लुतं प्रविलीयते ।
प्रायश्चित्तहतं पापं तथा सद्यः प्रणश्यति ॥१३-२६८-३७ (९२१६०)
तस्मात्पापं न गूहेत गूहमानं विवर्धते ।
कृत्वा तु सादुष्वाख्यायाधर्मं प्रशमयन्त्युत ॥१३-२६८-३८ (९२१६१)
आशया सञ्चितं द्रव्यं स्वकाले नोपभुज्यते ।
अन्ये चैतत्प्रद्यन्ते वियोगे तस्य देहिनः ॥१३-२६८-३९ (९२१६२)
गतद्धर्मसाधनं नित्यं सङ्कल्पाद्धनमार्जयेत्।'
मननं सर्वभूतानां धर्ममाहुर्मनीषिणः। १३-२६८-४० (९२१६३)
तस्मात्सर्वाणि भूतानि धर्ममेव समासते ॥
एक एव चरेद्धर्मं न धर्मध्वजिको भवेत्। १३-२६८-४१ (९२१६४)

धर्मवाणिजका ह्येते ये धर्ममुपभुञ्जते ॥
अर्चेद्देवानदम्भेन सेवेताऽमायया गुरून्। १३-२६८-४२ (९२१६५)
धनं निदध्यात्पात्रेषु परत्रार्थं समावृतम् ॥ ॥ १३-२६८-४३ (९२१६६)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
अष्टषष्ट्यधिकद्विशततमोऽध्यायः ॥ २६८ ॥
Mahabharata - Anushaasana Parva - Chapter Footnotes

७-२६८-७ कीदृशाः किंलक्षणाः ॥
७-२६८-९ सर्गं उत्सर्गम् ॥
७-२६८-१० पञ्चनां देवपितृभूतातिथिकुटुम्बानाम् ॥
७-२६८-२० ऋतुकाले तथा नारी ऋतुमेव प्रतीक्षते इति झ पाठः
। नचान्यां गच्छते यस्तु ब्रह्मचर्यं च तस्य तत् इति
क ट थ। पाठः ॥
७-२६८-२३ कर्म अध्ययनम् । प्रतिपादयेत् दक्षिणामिति शेषः ॥
७-२६८-२५ वृद्धान्नातिवदेज्वात्विति क ट थ पाठः ॥
७-२६८-२९ दक्षिणं पाणिं उद्धरेत् यज्ञोपवीती भवेत् ॥
७-२६८-३१ मङ्गल्यं मङ्गलवचनम् । अभिनन्दनं शतं जीवेति
वचनेन सुखोत्पादनं च। कुर्यादिति शेषः ॥
७-२६८-३२ त्वंकारो वा वदस्वेतीति क ट थ पाठः ॥
७-२६८-४१ धर्मध्वजिकस्तत्प्रकाशकः ॥

---

अनुससनपर्व-अध्यय२६९
॥ श्रीः ॥
१३.२६९. अध्यायः २६९

अथ दानधर्मपर्व ॥ १ ॥
Mahabharata - Anushaasana Parva - Chapter Topics
भीष्मेणि युधिष्ठिरंप्रत्यन्वयव्यतिरेकाभ्यां सुकृतदुष्कृतयोः
सदृष्टान्तप्रदर्शनं सुखदुःखकारणत्वोपपादनम् ॥ १ ॥

Mahabharata - Anushaasana Parva - Chapter Text

युधिष्ठिर उवाच ।
नाभागधेयः प्राप्नोति धनं सुबलवानपि ।
भागधेयान्वितस्त्वर्थान्कृशो बालश्च विन्दति ॥ १३-२६९-१ (९२१६७)

नालाभकाले लभते प्रयत्नेऽपि कृते सति ।
लाभकालेऽप्रयत्नेन लभते विपुलं धनम् ॥ १३-२६९-२ (९२१६८)
कृतयत्नाफलाश्चैव दृश्यन्ते शतशो नराः ।
अयत्नेनैधमानाश्च दृश्यन्ते बहवो जनाः ॥ १३-२६९-३ (९२१६९)
यदि यत्नो भवेन्मर्त्यः स सर्वं फलमाप्नुयात् ।
नालभ्यं चोपलभ्येत नृणां भरतसत्तम ॥ १३-२६९-४ (९२१७०)
प्रयत्नं कृतवन्तोपि दृश्यन्ते ह्यफला नराः ।
मार्गत्यागशतैरर्थानमार्गश्चापरः सुखी ॥ १३-२६९-५ (९२१७१)
अकार्यमसकृत्कृत्वा दृश्यन्ते ह्यधना नराः ।
धनयुक्ताः स्वकर्मस्था दृश्यन्ते चापरेऽधनाः ॥ १३-२६९-६ (९२१७२)
अधीत्य नीतिशास्त्राणि नीतियुक्तो न दृश्यते ।
अनभिज्ञश्च साचिव्यं गमितः केन हेतुना ॥ १३-२६९-७ (९२१७३)
विद्यायुक्तो ह्यविद्यश्च धनवान्दुर्मतिस्तथा ।
यदि विद्यामुपाश्रित्य नरः सुखमवाप्नुयात् ॥ १३-२६९-८ (९२१७४)
न विद्वान्विद्यया हीनं वृत्त्यर्थमुपसंश्रयेत् ।
यथा पिपासां जयति पुरुषः प्राप्य वै जलम् ॥ १३-२६९-९ (९२१७५)
इष्टार्थो विद्यया ह्येव न विद्यां प्रजहेन्नरः ॥ १३-२६९-१० (९२१७६)
नाप्राप्तकालो म्रियते विद्धः शरशतैरपि ।
तृणाग्रेणापि संस्पृष्टः प्राप्तकालो न जीवति ॥ १३-२६९-११ (९२१७७)
भीष्म उवाच। १३-२६९-१२क्ष् (७७१७)
ईहमानः समारम्भान्यदि नासादयेद्धनम् ।
उग्रं तपः समारोहेन्न ह्यनुप्तं प्ररोहति ॥ १३-२६९-१२ (९२१७८)
दानेन भोगी भवति मेधावी वृद्धसेवया ।
अहिंसया च दीर्घायुरिति प्राहुर्मनीषिणः ॥ १३-२६९-१३ (९२१७९)
तस्माद्दद्यान्न याचेत पूजयेद्धार्मिकानपि ।
सुभाषी प्रियकृच्छान्तः सर्वसत्वाविहिंसकः ॥ १३-२६९-१४ (९२१८०)
यदा प्रमाणं प्रसवः स्वभावश्च सुखासुखे ।
दंशकीटपिपीलानां स्थिरो भव युधिष्ठिर ॥ ॥ १३-२६९-१५ (९२१८१)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
एकोनसप्तत्यधिकद्विशततमोऽध्यायः ॥ २६९ ॥

Mahabharata - Anushaasana Parva - Chapter Footnotes

७-२६९-३ कृतो यत्नोऽफलो येषां ते कृतयत्नाफलाः ॥
७-२६९-४ भवेत्समर्थः स्यात् ॥
७-२६९-५ आयशतैः उपायशतैः । सुखी धनेन ॥

७-२६९-१३ तपसेह भोगी भवतीति ट थ पाठः ॥
७-२६९-१५ प्रसवः प्रसवकारणं कर्मैव । दशादीनां सुखाद्याप्तौ प्रमाणं नियामकम् । एवं स्वस्यापि ज्ञात्वा स्थिरोऽचञ्चलो भव ॥

---

अनुससनपर्व-अध्यय२७०
॥ श्रीः ॥
१३.२७०. अध्यायः २७०

अथ दानधर्मपर्व ॥ १ ॥
Mahabharata - Anushaasana Parva - Chapter Topics
भीष्मेण युधिष्ठिरंप्रति धर्मप्रशंसनम् ॥ १ ॥

Mahabharata - Anushaasana Parva - Chapter Text

भीष्म उवाच ।
कार्यते यच्च क्रियते सच्चासच्च कृताकृतम् ।
तत्राश्वसीत सत्कृत्वा असत्कृत्वा न विश्वसेत् ॥ १३-२७०-१ (९२१८२)
काल एवान्तराशक्तिर्निग्रहानुग्रहौ ददत् ।
बुद्धिमाविश्य भूतानां धर्माधर्मौ प्रवर्तते ॥ १३-२७०-२ (९२१८३)
यदा त्वस्य भवेद्बुद्धिर्धर्मार्थस्य प्रदर्शनात् ।
तदाश्वसीत धर्मात्मा दृढबुद्धिर्न विश्वसेत् ॥ १३-२७०-३ (९२१८४)
एतावन्मात्रमेतद्धि भूतानां प्राज्ञलक्षणम् ।
कालयुक्तोऽप्युभयविच्छेषं युक्तं समाचरेत् ॥ १३-२७०-४ (९२१८५)
यथा ह्युपस्थितैश्वर्याः पूजयन्ति नरा जनान् ।
एवमेवात्मनाऽऽत्मानं पूजयन्तीह धार्मिकाः ॥ १३-२७०-५ (९२१८६)
ग्भावशुद्धिस्तु तपसा देवतानां च मूजया ।
सनातनेन शुद्ध्या च श्रुतदानजपैरपि ।
न ह्यशुद्धस्तु तां दद्याद्धर्मकाले कथञ्चन ॥' १३-२७०-६ (९२१८७)
न ह्यधर्मतया धर्मं दद्यात्कालः कथञ्चन ।
तस्माद्विशुद्धमात्मानं जानीयाद्धर्मचारिणम् ॥ १३-२७०-७ (९२१८८)
स्प्रष्टुमप्यसमर्थो हि ज्वलन्तमिव पावकम् ।
अधर्मः सन्ततो धर्मं कालेन परिरक्षितम् ॥ १३-२७०-८ (९२१८९)
कार्यावितौ हि धर्मोणि धर्मो हि विजयावहः ।
त्रयाणामपि लोकानामालोकः कारणं भवेत् ॥ १३-२७०-९ (९२१९०)
न तु कश्चिन्नयेत्प्राज्ञो गृहीत्वैव करे नरम् ।
ऊह्यमानस्तु धर्मेण प्राप्नुयात्परमच्युतम् ।

विश्वास एव कर्तव्यो बहुधर्मे शुभच्छले ॥ १३-२७०-१० (९२१९१)
शूद्रोऽहं नाधिकारो मे चातुराश्रम्यसेवने ।
इति विज्ञानमपरे नात्मन्युपदधत्युत ॥ १३-२७०-११ (९२१९२)
विशेषेण च वक्ष्यामि चातुर्वर्ण्यस्य लिङ्गतः ।
पञ्चभूतशरीराणां सर्वेषां सदृशात्मनाम् ॥ १३-२७०-१२ (९२१९३)
लोकधर्मे च धर्मे च विशेषकरणं कृतम् ।
यथैकत्वं पुनर्यान्ति प्राणिनस्तत्र विस्तरः ॥ १३-२७०-१३ (९२१९४)
अध्रुवो हि कथं लोकः स्मृतो धर्मः कथं ध्रुवः ।
यत्र कालो ध्रुवस्तात तत्र धर्मः सनातनः ॥ १३-२७०-१४ (९२१९५)
सर्वेषां तुल्यदेहानां सर्वेषां सदृशात्मनाम् ।
कालो धर्मेण संयुक्तः शेष एव स्वयं गुरुः ॥ १३-२७०-१५ (९२१९६)
एवं सति न दोषोऽस्ति भूतानां धर्मसेवने ।
तिर्यग्योनावपि सतां लोक एव मतो गुरुः ॥ ॥ १३-२७०-१६ (९२१९७)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
सप्तत्यधिकद्विशततमोऽध्यायः ॥ २७० ॥

Mahabharata - Anushaasana Parva - Chapter Footnotes

७-२७०-२ प्रवर्तते प्रवर्तयति ॥
७-२७०-३ धर्मार्थस्य धर्मफलस्य प्रदर्शनात् । यदा धर्म एव
श्रेयस्कर इति बुद्धिर्भवेत्तदायं धर्मात्मा धर्मचित्तः धर्मे
आश्वसीत विश्वासं कुर्वीत। अदृढबुद्धिस्तु न विश्वसेत् धर्मफले ॥
७-२७०-४ एतावद्धर्मे विश्वासवत्त्वम् । उभयवित्कर्तव्याकर्तव्यवित् ॥
७-२७०-७ धर्मः कदाप्यधर्मो न भवेदित्याह नहीति । अधर्मतया
दुःखहेतुतया ॥
७-२७०-८ अधर्मसन्ततौ धर्मं कुरुते परकारणात् इति क पाठः ॥
७-२७०-९ एतौ विशुद्धताऽधर्मास्पर्शौ ॥
७-२७०-११ उच्यमानस्तु धर्मेण धर्मलोकभयच्छले इति झ पाठः ॥
७-२७०-१४ विशेषेणेति युग्मम् । सर्वेषां प्राणिनां पाञ्चभौतिकत्वे
प्रत्यक्षेपि विशेषकरणमिदं पवित्रमिदमपवित्रमिति व्यवस्थापनं
लोकधर्मे शास्त्रीयधर्मे च निमित्ते सति कृतम् ॥
७-२७०-१५ अत्र शङ्कते अध्रुव इति । लोकस्य धर्मस्य च
कार्यकारणबावात्कार्यस्याध्रुवत्वं कारणस्य ध्रुवत्वं च न
युक्तं तन्तुनाशमन्तरेण पटनाशायोगादित्यर्थः। उत्तरमाह। कालः
सङ्कल्पः। निष्कामधर्म एव ध्रुवस्तत्फलं नतु सकामि इत्यर्थः ॥
७-२७०-१६ स्वयं गुरुरिति । धर्मबलात्स्वयमेव च स उदेति

शिक्षयेदित्यर्तः ॥
७-२७०-१७ यदि भूतानां प्राक्कर्मैव तत्रतत्र सुखदुःखसाधने प्रवर्तकमतो धर्मसेवने कर्मफलभोगे असमञ्जसेपि भूतानां दोषो नास्ति ।यतः तिर्यग्योनावपि सतां विद्यमानानां भूतानां सदसत्प्रवृत्तौ पूर्वकर्मानुसाराल्लोक एव गुरुर्दृष्टः ॥

---

अनुससनपर्व-अध्यय२७१
॥ श्रीः ॥
१३.२७१. अध्यायः २७१

अथ दानधर्मपर्व ॥ १ ॥

Mahabharata - Anushaasana Parva - Chapter Topics

भीष्मेण युधिष्ठिरंप्रति देवदेवर्षिगिरिनदीतीर्थक्षेत्रादीनां विस्तरेण पृथङ्नामनिर्देशपूर्वकं प्रातःसायं तत्कीर्तनस्य दुरितनिवृत्तिसुकृतप्राप्तिहेतुत्वोत्कीर्तनम् ॥ १ ॥

Mahabharata - Anushaasana Parva - Chapter Text

वैशम्पायन उवाच ।
शरतल्पगतं भीष्मं पाण्डवोऽथ कुरूद्वहः ।
युधिष्ठिरो हितं प्रेप्सुरपृच्छत्कल्मषापहम् ॥ १३-२७१-१ (९२१९८)
युधिष्ठिर उवाच। १३-२७१-२क्ष् (७७१८)
किं श्रेयः पुरुषस्येह किं कुर्वन्सुखमेधते ।
विपाप्मा स भवेत्केन किं वा कल्मषनाशनम् ॥ १३-२७१-२ (९२१९९)
वैशम्पायन उवाच। १३-२७१-३क्ष् (७७१९)
तस्मै शुश्रूषमाणाय भूयः शान्तनवस्तदा ।
दैवं वंशं यथान्यायमाचष्ट पुरुषर्षभ ॥ १३-२७१-३ (९२२००)
भीष्म उवाच। १३-२७१-४क्ष् (७७२०)
अयं दैवतवंशो वै ऋषिवंशसमन्वितः ।
त्रिसन्ध्यं पठितः पुत्र कल्मषापहरः परः ॥ १३-२७१-४ (९२२०१)
यदह्ना कुरुते पापमिन्द्रियैः पुरुषश्चरन् ।
बुद्धिपूर्वमबुद्धिर्वा रात्रौ यच्चापि सन्ध्ययोः ॥ १३-२७१-५ (९२२०२)
मुच्यते सर्वपापेभ्यः कीर्तयन्वै शुचिः सदा ।
नान्धो न बधिरः काले कुरुते स्वस्तिमान्सदा ॥ १३-२७१-६ (९२२०३)
तिर्यग्योनिं न गच्छेच्च नरकं सङ्कराणि च ।
न च दुःखमयं तस्य मरणे स न मुह्यति ॥ १३-२७१-७ (९२२०४)

देवासुरगकुरुर्देवः सर्वभूतनमस्कृतः ।
अचिन्त्योथाप्यनिर्देश्यः सर्वप्राणो ह्ययोनिजः ॥ १३-२७१-८ (९२२०५)
पितामहो जगन्नाथः सावित्री ब्रह्मणः सती ।
वेदभूरथ कर्ता च विष्णुर्नारायणः प्रभुः ॥ १३-२७१-९ (९२२०६)
उमापतिर्विरूपाक्षः स्कन्दः सेनापतिस्तथा ।
विशाखो हुतभुग्वायुश्चन्द्रसूर्यौ प्रभाकरौ ॥ १३-२७१-१० (९२२०७)
शक्रः शचीपतिर्देवो यमो धूमोर्णया सह ।
वरुणः सह गौर्या च सह ऋद्ध्या धनेश्वरः ॥ १३-२७१-११ (९२२०८)
सौम्या गौः सुरभिर्देवी विश्रवाश्च महानृषिः ।
सङ्कल्पः सागरो गङ्गा स्रवन्त्योऽथ मरुद्गणः ॥ १३-२७१-१२ (९२२०९)
वालखिल्यास्तपःसिद्धाः कृष्णद्वैपायनस्तथा ।
नारदः पर्वतश्चैव विश्वावसुर्हहाहुहूः ॥ १३-२७१-१३ (९२२१०)
तुम्बुरुश्चित्रसेनश्च देवदूतश्च विश्रुतः ।
देवकन्या महाभागा दिव्याश्चाप्सरसां गणाः ॥ १३-२७१-१४ (९२२११)
उर्वशी मेनका रम्भा मिश्रकेशी ह्यलम्बुषा ।
विश्वाची च घृताची च पञ्चचूडा तिलोत्तमा ॥ १३-२७१-१५ (९२२१२)
आदित्या वसवो रुद्राः साश्विनः पितरोपि च ।
धर्मः श्रुतं तपो दीक्षा व्यवसायः पितामहः ॥ १३-२७१-१६ (९२२१३)
शर्वर्यो दिवसाश्चैव मारीचः कश्यपस्तथा ।
शुक्रो बृहस्पतिर्भौमो बुधो राहुः शनैश्चरः ॥ १३-२७१-१७ (९२२१४)
नक्षत्राण्यृतवश्चैव मासाः पक्षाः सवत्सराः ।
वैनतेयाः समुद्राश्च कद्रुजाः पन्नगास्तथा ॥ १३-२७१-१८ (९२२१५)
शतद्रुश्च विपाशा च चन्द्रभागा सरस्वती ।
सिन्धुश्च देविका चैव प्रभासं पुष्कराणि च ॥ १३-२७१-१९ (९२२१६)
गङ्गा महानदी वेणा कावेरी नर्मदा तथा ।
कुलम्पुना विशल्या च करतोयाम्बुवाहिनी ॥ १३-२७१-२० (९२२१७)
सरयूर्गण्डकी चैव लोहितश्च महानदः ।
ताम्रारुणा वेत्रवती पर्णाशा गौतमी तथा ॥ १३-२७१-२१ (९२२१८)
गोदावरी च वेण्या च कृष्णवेणा तथाऽद्रिजा ।
दृषद्वती च कावेरी चक्षुर्मन्दाकिनी तथा ॥ १३-२७१-२२ (९२२१९)
प्रयागं च प्रभासं च पुण्यं नैमिषमेव च ।
तच्च विश्वेश्वरस्थानं यत्र तद्विमलं सरः ॥ १३-२७१-२३ (९२२२०)
पुण्यतीर्थं सुसलिलं कुरुक्षेत्रं प्रकीर्तितम् ।
सिन्धूत्तमं तपो दानं जम्बूमार्गमथापि च ॥ १३-२७१-२४ (९२२२१)
हिरण्वती वितस्ता च तथा प्लक्षवती नदी ।
वेदस्मृतिर्वेदवती मालवाऽथाश्ववत्यपि ॥ १३-२७१-२५ (९२२२२)

भूमिभागास्तथा पुण्या गङ्गाद्वारमथापि च ।
ऋषिकुल्यास्तथा मेध्या नद्यः सिन्धुवहास्तथा ॥ १३-२७१-२६ (९२२२३)
चर्मण्वती नदी पुण्या कौशिकी यमुना तथा ।
नदी भीमरथी चैव बाहुदा च महानदी ॥ १३-२७१-२७ (९२२२४)
माहेन्द्रवाणी त्रिदिवा नीलिका च सरस्वती ।
नन्दा चापरनन्दा च तथा तीर्थमहाह्रदः ॥ १३-२७१-२८ (९२२२५)
गयाऽथ फल्गुतीर्थं च धर्मारण्यं सुरैर्वृतम् ।
तथा देवनदी पुण्या सरश्च ब्रह्मनिर्मितम् ॥ १३-२७१-२९ (९२२२६)
पुण्यं त्रिलोकविख्यातं सर्वपापहरं शिवम् ।
हिमवान्पर्वतश्चैव दिव्यौषधिसमन्वितः ॥ १३-२७१-३० (९२२२७)
विन्ध्यो धातुविचित्राङ्गस्तीर्थवानौषधान्वितः ।
मेरुर्महेन्द्रो मलयः श्वेतश्च रजतावृतः ॥ १३-२७१-३१ (९२२२८)
शृङ्गवान्मन्दरो नीलो निषधो दर्दुरस्तथा ।
चित्रकूटोऽञ्जनाभश्च पर्वतो गन्धमादनः ॥ १३-२७१-३२ (९२२२९)
पुण्यः सोमगिरिश्चैव तथैवान्ये महीधराः ।
दिशश्च विदिशश्चैव क्षितिः सर्वे महीरुहाः ॥ १३-२७१-३३ (९२२३०)
विश्वेदेवा नभश्चैव नक्षत्राणि ग्रहास्तथा ।
पान्तु नः सततं देवाः कीर्तिताऽकीर्तिता मया ॥ १३-२७१-३४ (९२२३१)
कीर्तयानो नरो ह्येतान्मुच्यते सर्वकिल्बिषैः ।
स्तुवंश्च प्रतिनन्दंश्च मुच्यते सर्वतो भयात् ॥ १३-२७१-३५ (९२२३२)
सर्वसङ्करपापेभ्यो देवतास्तवनन्दकः ।
देवतानन्तरं विप्रांस्तपःसिद्धांस्तपोधिकान् ॥ १३-२७१-३६ (९२२३३)
कीर्तितान्कीर्तयिष्यामि सर्वपापप्रमोचनान् ।
यवक्रीतोऽथ रैभ्यश्च कक्षीवानौशिजस्तथा ॥ १३-२७१-३७ (९२२३४)
भृग्वङ्गिरास्तथा कण्वो मेधातिथिरथ प्रभुः ।
बर्ही च गुणसम्पन्नः प्राचीं दिशमुपाश्रिताः ॥ १३-२७१-३८ (९२२३५)
भद्रां दिशं महाभागा उल्मुचुः प्रमुचुस्तथा। १३-२७१-३९ (९२२३६)
मुमुचुश्च महाभागः स्वस्त्यात्रेयश्च वीर्यवान् ॥ १३-२७१-३९ (९२२३७)
मित्रावरुणयोः पुत्रस्तथाऽगस्त्यः प्रतापवान् ।
दृढायुश्चोर्ध्वबाहुश्च विश्रुतावृषिसत्तमौ ॥ १३-२७१-४० (९२२३८)
पश्चिमां दिशमाश्रित्य य एधन्ते निबोध तान् ।
उषङ्गुः सह सोदर्यैः परिव्याधश्च वीर्यवान् ॥ १३-२७१-४१ (९२२३९)
ऋषिर्दीर्घतमाश्चैव गौतमः काश्यपस्तथा ।
एकतश्च द्वितश्चैव त्रितश्चैव महानृषिः ॥ १३-२७१-४२ (९२२४०)
अत्रेः पुत्रश्च धर्मात्मा तथा सारस्वतः प्रभुः ।
उत्तरां दिशमाश्रित्य य एधन्ते निबोध तान्। १३-२७१-४३ (९२२४१)

अत्रिर्वसिष्ठः शक्तिश्च पाराशर्यश्च वीर्यवान् ।
विश्वामित्रो भरद्वाजो जमदग्निस्तथैव च ॥ १३-२७१-४४ (९२२४२)
ऋचीकपुत्रो रामश्च ऋषिरौद्दालकिस्तथा ।
श्वेतकेतुः कोहलश्च विपुलो देवलस्तथा ॥ १३-२७१-४५ (९२२४३)
देवशर्मा च धौम्यश्च हस्तिकाश्यप एव च ।
लोमशो नाचिकेतश्च लोमहर्षण एव च ॥ १३-२७१-४६ (९२२४४)
ऋषिरुग्रश्रवाश्चैव भार्गवश्च्यवनस्तथा ।
एष वै समवायश्च ऋषिदेवसमन्वितः ॥ १३-२७१-४७ (९२२४५)
आद्यः प्रकीर्तितो राजन्सर्वपापप्रमोचनः ।
नृगो ययातिर्नहुषो यदुः पूरुश्च वीर्यवान् ॥ १३-२७१-४८ (९२२४६)
धुन्धुमारो दिलीपश्च सगरश्च प्रतापवान् ।
कृशाश्वो यौवनाश्वश्च चित्राश्वः सत्यवांस्तथा ॥ १३-२७१-४९ (९२२४७)
दुष्यन्तो भरतश्चैव चक्रवर्ती महायशाः ।
पवनो जनकश्चैव तथा दृष्टरथो नृपः ॥ १३-२७१-५० (९२२४८)
रघुर्नरवरश्चैव तथा दशरथो नृपः ।
रामो राक्षसहा वीरः शशबिन्दुर्भगीरथः ॥ १३-२७१-५१ (९२२४९)
हरिश्चन्द्रो मरुत्तश्च तथा दढरथो नृपः ।
महोदर्यो ह्यलर्कश्च ऐलश्चैव नराधिपः ॥ १३-२७१-५२ (९२२५०)
करंधमो नरश्रेष्ठः कध्मोरश्च नराधिपः ।
दक्षोऽम्बरीषः कुकुरो रैवतश्च महायशाः ॥ १३-२७१-५३ (९२२५१)
कुरु संवरणश्चैव मांधाता सत्यविक्रमः ।
मुचुकुन्दश्च राजर्षिर्जह्नुर्जाह्नविसेवितः ॥ १३-२७१-५४ (९२२५२)
आदिराजः पृथुर्वैन्यो मित्रभानुः प्रियङ्करः ।
त्रसद्दस्युस्तथा राजा श्वेतो राजर्षिसत्तमः ॥ १३-२७१-५५ (९२२५३)
महाभिषश्च विख्यातो निमी राजा तथाऽष्टकः ।
आयुः क्षुपश्च राजर्षिः कक्षेयुस्च नराधिपः ॥ १३-२७१-५६ (९२२५४)
प्रतर्दनो दिवोदासः सुदासः कोसलेश्वरः ।
ऐलो नलश्च राजर्षिर्मनुश्चैव प्रजापतिः ॥ १३-२७१-५७ (९२२५५)
हविध्रश्च पृषध्रश्च प्रतीपः शान्तनुस्तथा ।
अजः प्राचीनबर्हिश्च तथैक्ष्वाकुर्महायशाः ॥ १३-२७१-५८ (९२२५६)
अनरण्यो नरपतिर्जानुजङ्घस्तथैव च ।
कक्षसेनश्च राजर्षिर्ये चान्ये चानुकीर्तिताः ॥ १३-२७१-५९ (९२२५७)
कल्यमुत्थाय यो नित्यं सन्ध्ये द्वेऽस्तमयोदये ।
पठेच्छुचिरनावृत्तः स धर्मफलभाग्भवेत् ॥ १३-२७१-६० (९२२५८)
देवा देवर्षयश्चैव स्तुता राजर्षयस्तथा ।
पुष्टिमायुर्यशः स्वर्गं विधास्यन्ति ममेश्वराः ॥ १३-२७१-६१ (९२२५९)

मा विघ्नं मा च मे पापं मा च मे परिपन्थिनः ।
ध्रुवो जयो मे नित्यः स्यात्परत्र च शुभा गतिः ॥ १३-२७१-६२ (९२२६०)
ग्पालय त्वं प्रजाः सर्वाः शान्तात्मा त्वनुशासिता ।
द्वैपायनः स्वयंचक्षुः कृष्णस्तेऽस्तु परायणम् ॥ १३-२७१-६३ (९२२६१)
वैशम्पायन उवाच। १३-२७१-६४क्ष् (७७२१)
इत्युक्त्वोपासनार्थाय विरराम महामतिः ॥' ॥ १३-२७१-६४ (९२२६२)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
एकसप्तत्यधिकद्विशततमोऽध्यायः ॥ २७१ ॥

---

अनुससनपर्व-अध्यय२७२
॥ श्रीः ॥
१३.२७२. अध्यायः २७२

अथ दानधर्मपर्व ॥ १ ॥
Mahabharata - Anushaasana Parva - Chapter Topics
युधिष्ठिराय निखिलधर्मोपदेशानन्तरं
स्वावसानकालाऽऽसत्त्यवगमेन भगवद्ध्यानाय वाक्प्रसारणादुपरते
भीष्मे तंप्रति व्यासेन युधिष्ठिरस्थ नगरगमनाभ्यनुज्ञानचोदना
॥ १ ॥
युधिष्ठिरेण भीष्माश्यनुज्ञया
सहकृष्णादिभिर्हास्तिनपुरप्रवेशनम् ॥ २ ॥

Mahabharata - Anushaasana Parva - Chapter Text

जनमेजय उवाच ।
शरतल्पगते भीष्मे कौरवाणां धुरन्धरे ।
शयाने वीरशयने पाण्डवैः समुपस्थिते ॥ १३-२७२-१ (९२२६३)
युधिष्ठिरो महाप्राज्ञो मम पूर्वपितामहः ।
धर्माणामागमं श्रुत्वा विदित्वा सर्वसंशयान् ॥ १३-२७२-२ (९२२६४)
दानानां च विधिं श्रुत्वा च्छिन्नधर्मार्थसंशयः ।
यदन्यदकरोद्विप्र तन्मे शंसितुमर्हसि ॥ १३-२७२-३ (९२२६५)
वैशम्पायन उवाच। १३-२७२-४क्ष् (७७२२)
अभून्मुहूर्तं स्तिमितं सर्वं तद्राजमण्डलम् ।
तूर्ष्णीभूते ततस्तस्मिन्पटे चित्रमिवार्पितम् ॥ १३-२७२-४ (९२२६६)
मुहूर्तमिव च ध्यात्वा व्यासःक सत्यवतीसुतः ।

नृपं शयानं गाङ्गेयमिदमाह वचस्त्वरन् ॥१३-२७२-५ (९२२६७)
राजन्प्रकृतिमापन्नः कुरुराजो युधिष्ठिरः ।
सहितो भ्रातृभिः सर्वैः पार्तिवैश्चानुयायिभिः ॥१३-२७२-६ (९२२६८)
उपास्ते त्वां नरव्याघ्र सह कृष्णेन धीमता ।
तमिमं पुरयानाय समनुज्ञातुमर्हसि ॥१३-२७२-७ (९२२६९)
एवमुक्तो भगवता व्यासेन पृथिवीपतिः ।
युधिष्ठिरं सहामात्यमनुजज्ञे नदीसुतः ॥१३-२७२-८ (९२२७०)
उवाच चैनं मधुरं नृपं शान्तनवो नृपः ।
प्रविशस्व पुरीं राजन्धर्मे च ध्रियतां मनः ॥१३-२७२-९ (९२२७१)
यजस्व विविधैर्यज्ञैर्बह्वन्नैः स्वाप्तदक्षिणैः ।
ययातिरिव राजेन्द्र श्रकद्धादमपुरःसरः ॥१३-२७२-१० (९२२७२)
क्षत्रधर्मरतः पार्थ पितॄन्देवांश्च तर्पय ।
श्रेयसा योक्ष्यसे चैव व्येतु ते मानसो ज्वरः ॥१३-२७२-११ (९२२७३)
रञ्जयस्व प्रजाः सर्वाः प्रकृतीः परिसान्त्वय ।
सुहृदः फलसत्कारैरर्चयस्व यथार्हतः ॥१३-२७२-१२ (९२२७४)
अनुं त्वां तात जीवन्तु मित्राणि सुहृकदस्तथा ।
चैत्यस्थाने स्थितं वृक्षं फलवन्तमिव द्विजाः ॥१३-२७२-१३ (९२२७५)
आगन्तव्यं च भवता समये मम पार्थिव ।
विनिवृत्ते दिनकरे प्रवृत्ते चोत्तरायणे ॥१३-२७२-१४ (९२२७६)
तथेत्युक्त्वा च कौन्तेयः सोभिवाद्य पितामहम् ।
प्रययौ सपरीवारो नगरं नागसाह्वयम् ॥१३-२७२-१५ (९२२७७)
धृतराष्ट्रं पुरस्कृत्य गान्धारीं च पतिव्रताम् ।
सह तैर्ऋषिभिः सर्वैर्भ्रातृभिः केशवेन च ॥१३-२७२-१६ (९२२७८)
पौरजानपदैश्चैव मन्त्रिवृद्धैश्च पार्थिव ।
प्रविवेश कुरुश्रेष्ठः पुरं वारणसाह्वयम् ॥ ॥१३-२७२-१७ (९२२७९)

इति श्रीमन्महाभारते अनुशासनपर्वणि दानधर्मपर्वणि
द्विसप्तत्यधिकद्विशततमोऽध्यायः ॥ २७२ ॥
Mahabharata - Anushaasana Parva - Chapter Footnotes

७-२७२-७ तमिमं पुनरागन्तुमिति थ पाठः ॥

अथ भीषस्वर्गारोहणपर्व ॥ २ ॥

---

अनुससनपर्व-अध्यय२७३
॥ श्रीः ॥

१३.२७३. अध्यायः २७३

अथ दानधर्मपर्व ॥ १ ॥

Mahabharata - Anushaasana Parva - Chapter Topics

युधिष्ठिरेण भीष्मसंस्कारोपयोगिसम्भारप्रस्थापनपूर्वकं कृष्णधृतराष्ट्रादिभिःसह भीष्मसमीपं प्रत्यागमनम् ॥ १ ॥
युधिष्ठिरेणाभिवादनपूर्वकं कृष्णाद्यागमनं निवेदितेन भीष्मेण स्वस्य कृष्णयाथात्म्यज्ञानप्रकाशनेन तत्प्रणामस्तुतिपूर्वकं व्यासकृष्णधृतराष्ट्रादिभ्यः स्वस्य प्राणोत्सर्गाभ्यनुज्ञानप्रार्थना ॥ २ ॥

Mahabharata - Anushaasana Parva - Chapter Text

वैशम्पायन उवाच ।
ततः कुन्तीसुतो राजा पौरजानपदं जनम् ।
पूजयित्वा यथान्यायमनुजज्ञे गृहान्प्रति ॥ १३-२७३-१ (९२२८०)
सान्त्वयामास नारीश्च हतपुत्रा हतेश्वराः ।
विपुलैरर्थदानैः स तदा पाण्डुसुतो नृपः ॥ १३-२७३-२ (९२२८१)
सोभिषिक्तो महाप्राज्ञः प्राप्य राज्यं युधिष्ठिरः ।
अवस्थाप्य नरश्रेष्ठः सर्वाः स्वप्रकृतीस्तथा ॥ १३-२७३-३ (९२२८२)
द्विजेभ्यो बलमुख्येभ्यो नैगमेभ्यश्च सर्वशः ।
प्रतिगृह्याशिषो मुख्यास्तथा धर्मभृतांवरः ॥ १३-२७३-४ (९२२८३)
उषित्वा शर्वरीः श्रीमान्पञ्चाशन्नगरोत्तमे ।
समयं कौरवाग्र्यस्य सस्मार पुरुषर्षभः ॥ १३-२७३-५ (९२२८४)
स निर्ययौ जगपुराद्यजकैः परिवारितः ।
दृष्ट्वा निवृत्तमादित्यं प्रवृत्तं चोत्तरायणम् ॥ १३-२७३-६ (९२२८५)
घृतं माल्यं च गन्धांश्च क्षौमाणि च युधिष्ठिरः ।
चन्दनागरुमुख्यानि तथा कालगरूणि च ॥ १३-२७३-७ (९२२८६)
प्रस्थाप्यच पूर्वं कौन्तेयो भीष्मसंस्करणाय वै ।
माल्यानि च वरार्हाणि रत्नानि विविधानि च ॥ १३-२७३-८ (९२२८७)
धृतराष्ट्रं पुरुस्कृत्य गान्धारीं च यशस्विनीम् ।
मातरं च पृथां धामान्भ्रातॄंश्च पुरुषर्षभान् ॥ १३-२७३-९ (९२२८८)
जनार्दनेनानुगतो विदुरेण च धीमता ।
युयुत्सुना च कौरव्यो युयुधानेन चाभिभो ॥ १३-२७३-१० (९२२८९)
महता राजभोगेन पारिबर्हेण संवृतः ।
स्तूयमानो महातेजा भीष्मिस्याग्नीननुव्रजन् ॥ १३-२७३-११ (९२२९०)

निश्चक्राम पुरात्तस्माद्यथा देवपतिस्तथा ।
आससाद कुरुक्षेत्रे ततः शान्तनवं नृपः ॥१३-२७३-१२ (९२२९१)
उपास्यमानं व्यासेन पाराशर्येण धीमता ।
नारदेन च राजर्षे देवलेनासितेन च ॥१३-२७३-१३ (९२२९२)
हतशिष्टैर्नृपैस्चान्यैर्नानादेशसमागतैः ।
रक्षिभिश्च महात्मानं रक्ष्यमाणं समन्ततः ॥१३-२७३-१४ (९२२९३)
शयानं वीरशयने ददर्श नृपतिस्ततः ।
ततो रथादवारोहद्भ्रातृभिः सह धर्मराट् ॥१३-२७३-१५ (९२२९४)
अभिवाद्याथ कौन्तेयः पितामहमरिंदमम् ।
द्वैपायनादीन्विप्रांश्च तैश्च प्रत्यभिनन्दितः ॥१३-२७३-१६ (९२२९५)
ऋत्विग्भिर्ब्रह्मकल्पैश्च भ्रातृभिः सह धर्मजः ।
आसाद्य शरतल्पस्थमृषिभिः परिवारितम् ॥१३-२७३-१७ (९२२९६)
अब्रवीद्भरतश्रेष्ठं धर्मराजो युधिष्ठिरः ।
भ्रातृभिः सह कौरव्यः शयानं निम्नगासुतम् ॥१३-२७३-१८ (९२२९७)
युधिष्ठिरोऽहं नृपते नमस्ते जाह्नवीसुत ।
शृणोषि चेन्महाबाहो ब्रूहि किं करवाणि ते ॥१३-२७३-१९ (९२२९८)
प्राप्तोस्मि समये राजन्नग्नीनादाय ते विभो ।
आचार्यान्ब्राह्मणांश्चैव ऋत्विजो भ्रातरश्च मे ॥१३-२७३-२० (९२२९९)
पुत्रश्च ते महातेजा धृतराष्ट्रो जनेश्वरः ।
उपस्थितः सहामात्यो वासुदेवश्च वीर्यवान् ॥१३-२७३-२१ (९२३००)
हतशिष्टाश्च राजानः सर्वे च कुरुजाङ्गलाः ।
तान्पश्य नरशार्दूल समुन्मीलय लोचने ॥१३-२७३-२२ (९२३०१)
यच्चेह किञ्चित्कर्तव्यं तत्सर्वं प्रापितं मया ।
यथोक्तं भवता काले सर्वमेव च तत्कृतम् ॥१३-२७३-२३ (९२३०२)
वैशम्पायन उवाच।१३-२७३-२४क्ष् (७७२३)
एवमुक्तस्तु गाङ्गेयः कुन्तीपुत्रेण धीमता ।
ददर्श भारतान्सर्वान्स्थितान्सम्परिवार्य ह ॥१३-२७३-२४ (९२३०३)
ततश्चलवपुर्भीष्मः प्रगृह्य विपुलं भुजम् ।
ओघमेघस्वरो वाग्मी काले वचनमब्रवीत् ॥१३-२७३-२५ (९२३०४)
दिष्ट्या प्राप्तोसि कौन्तेय सहामात्यो युधिष्ठिर ।
परिवृत्तो हि भगवान्सहस्रांशुर्दिवाकरः ॥१३-२७३-२६ (९२३०५)
अष्टपञ्चाशतं रात्र्यः शयानस्याद्य मे गताः ।
शरेषु निशिताग्नेषु यथा वर्षशतं तथा ॥१३-२७३-२७ (९२३०६)
माघोऽयं समनुप्राप्तो मासः पुण्यो युधिष्ठिर ।
त्रिभागशेषः पक्षोऽयं शुक्लो भवितुमर्हति ॥१३-२७३-२८ (९२३०७)
एवमुक्त्वा तु गाङ्गेयो धर्मपुत्रं युधिष्ठिरम् ।

धृतराष्ट्रमथामन्त्र्य काले वचनमब्रवीत् ॥ १३-२७३-२९ (९२३०८)
भीष्म उवाच। १३-२७३-३०क्ष् (७७२४)
राजन्विदितधर्मोसि सुनिर्णीतार्थसंशयः ।
बहुश्रुता हि ते विप्रा बहवः पर्युपासिताः ॥ १३-२७३-३० (९२३०९)
वेद शास्त्राणि सूक्ष्माणि धर्मांश्च मनुजेश्वर ।
वेदांश्च चतुरः सर्वान्षडङ्गैरुपबृंहितान् ॥ १३-२७३-३१ (९२३१०)
न शोचितव्यं कौरव्य भवितव्यं हि तत्तथा ।
श्रुतं देवरहस्यं ते कृष्णद्वैपायनादपि ॥ १३-२७३-३२ (९२३११)
यथा पाण्डोः सुता राजंस्तथैव तव धर्मतः ।
तान्पालय स्थितो धर्मे गुरुशुश्रूषणे रतान् ॥ १३-२७३-३३ (९२३१२)
धर्मराजो हि शुद्धात्मा निदेशे स्थास्यते तव ।
आनृशंस्यपरं ह्येन जानामि गुरुवत्सलम् ॥ १३-२७३-३४ (९२३१३)
तव पुत्रा दुरात्मानः क्रोधलोभपरायणाः ।
ईर्ष्याभिभूता दुर्वृत्तास्तान्न शोचितुमर्हसि ॥ १३-२७३-३५ (९२३१४)
वैशम्पायन उवाच। १३-२७३-३६क्ष् (७७२५)
एतावधुक्त्वा वचनं धृतराष्ट्रं मनीषिणम् ।
वासुदेवं महाबाहुमभ्यभाषय कौरवः ॥ १३-२७३-३६ (९२३१५)
भीष्म उवाच। १३-२७३-३७क्ष् (७७२६)
भगवन्देवदेवेश सुरासुरनमस्कृत ।
त्रिविक्रम नमस्तुभ्यं शङ्खचक्रगदाधर ॥ १३-२७३-३७ (९२३१६)
वासुदेवो हिरण्यात्मा पुरुषः सविता विराट् ।
जीवभूतोऽनुरूपस्त्वं परमात्मा सनातनः ॥ १३-२७३-३८ (९२३१७)
त्वद्भक्तं त्वद्गतिं शान्तमुदारमपरिग्रहम् ।
त्रायस्व पुण्डरीकाक्ष पुरुषोत्तम नित्यशः ।
अनुजानीहि मां कृष्ण वैकुण्ठ पुरुषोत्तम ॥ १३-२७३-३९ (९२३१८)
रक्ष्याश्च ते पाण्डवेया भवान्येषां परायणम् ।
उक्तवानस्मि दुर्बद्धिं मन्दं दुर्योधनं तदा ॥ १३-२७३-४० (९२३१९)
यतः कृष्णस्ततो धर्मो यतो धर्मस्ततो जयः ।
वासुदेवेन तीर्थेन पुत्र संशाम्य पाण्डवैः ॥ १३-२७३-४१ (९२३२०)
सन्धानस्य परः कालस्तवेति च पुनःपुनः ।
न च मे तद्वचो मूढः कृतवान्स सुमन्दधीः ।
घातयित्वेह पृथिवीं ततः स निधनं गतः ॥ १३-२७३-४२ (९२३२१)
त्वां तु जानाम्यहं देवं पुराणमृषिसत्तमम् ।
नरेण सहितं देव बदर्यां सुचिरोषितम् ॥ १३-२७३-४३ (९२३२२)
तथा मे नारदः प्राह व्यासश्च सुमहातपाः ।
नरनारायणावेतौ सम्भूतौ मनुजेष्विति ॥ १३-२७३-४४ (९२३२३)

स मां त्वमनुजानीहि कृष्ण मोक्ष्ये कलेवरम् ।
त्वयाऽहं समनुज्ञातो गच्छेयं परमां गतिम् ॥ १३-२७३-४५ (९२३२४)
वासुदेव उवाच। १३-२७३-४६क्ष् (७७२७)
अनुजानामि भीष्म त्वां वसून्प्राप्नुहि पार्थिव ।
न तेऽस्ति वृजिनं किञ्चिच्छुद्धात्मैश्वर्यसंयुतः ॥ १३-२७३-४६ (९२३२५)
पितृभक्तोसि राजर्षे मार्कण्डेय इवापरः ।
तेन मृत्युस्तव वशे स्थितो भृत्य इवानतः ॥ १३-२७३-४७ (९२३२६)
वैशम्पायन उवाच। १३-२७३-४८क्ष् (७७२८)
एवमुक्तस्तु गाङ्गेयः पाण्डवानिदमब्रवीत् ।
धृतराष्ट्रमुखांश्चापि सर्वांश्च सुहृदस्तथा ॥ १३-२७३-४८ (९२३२७)
प्राणानुत्स्रष्टुमिच्छामि तत्रानुज्ञातुमर्हथ ।
सत्येषु यतितव्यं वः सत्यं हि परमं बलम् ॥ १३-२७३-४९ (९२३२८)
आनृशंस्यपरैर्भाव्यं सदैव नियतात्मभिः ।
ब्रह्मण्यैर्धर्मशीलैश्च तपोनित्यैश्च भारताः ॥ १३-२७३-५० (९२३२९)
इत्युक्त्वा सुहृदः सर्वांस्तथा सम्पूज्य चैव ह ।
ग्धनं बहुविधं राजन्दत्त्वा नित्यं द्विजातिषु।'
पुनरेवाब्रवीद्धीमान्युधिष्ठिरमिदं वचः ॥ १३-२७३-५१ (९२३३०)
ब्राह्मणाश्चैव ते नित्यं प्राज्ञाश्चैव विशेषतः ।
आचार्या ऋत्विजश्चैव पूजनीया जनाधिप ॥ ॥ १३-२७३-५२ (९२३३१)

इति श्रीमन्महाभारते अनुशासनपर्वणि भीष्मस्वर्गारोहणपर्वणि
त्रिसप्तत्यधिकद्विशततमोऽध्यायः ॥ २७३ ॥

Mahabharata - Anushaasana Parva - Chapter Footnotes

७-२७३-२८ मासः सौम्य इति झ पाठः
। सौम्यश्चान्द्रः। मासस्य चतुर्भागकरणे
सार्धसप्ततिथेरेकैकभागत्वात्। अष्टम्यर्धस्यानतीतत्वेन
प्रथमभागस्य विद्यमानत्वात् त्रिभागशेषो
भवितुमर्हतीत्यर्थः। तेनाद्याष्टमीत्यर्थः ॥

---

अनुससनपर्व-अध्यय२७४
॥ श्रीः ॥
१३.२७४. अध्यायः २७४

अथ दानधर्मपर्व ॥ १ ॥

Mahabharata - Anushaasana Parva - Chapter Topics

भीष्मेण भगवद्ध्यानपूर्वकं स्वशरीरमूर्धमध्योद्भेदनेन तेजो ज्वालारूपेण सर्वापरोक्षमाकाशप्रवेशनेन क्षणादन्तर्धानम् ॥ १ ॥
ततो धृतराष्ट्रयुधिष्ठिरादिबी राजवैभवेन चितारोपणेन विधिवदग्निना समुद्दीपनम् ॥ २ ॥
ततो गङ्गामवगाह्य कृतोदकेषु युधिष्ठिरादिषु मूर्तीभूय जलादुद्गत्य भीष्मंप्रति सकरुणं विलापेन शोचन्तीं गङ्गांप्रति कृष्णादिभिराश्वासनम् ॥ ३ ॥

Mahabharata - Anushaasana Parva - Chapter Text

वैशम्पायन उवाच ।
एवमुक्त्वा कुरून्सर्वान्भीष्मः शान्तनवस्तदा ।
तूष्णीं बभूव कौरव्यः स मुहूर्तमरिंदम ॥ १३-२७४-१ (९२३३२)
धारयामास चात्मानं धारणासु यथाक्रमम् ।
तस्योर्ध्वमगमन्प्राणाः सन्निरुद्धा महात्मनः ॥ १३-२७४-२ (९२३३३)
इदमाश्चर्यमासीच्च मध्ये तेषां महात्मनाम् ।
सहितैर्ऋषिभिः सर्वैस्तदा व्यासादिभिः प्रभो ॥ १३-२७४-३ (९२३३४)
यद्यन्मुञ्चति गात्रं हि स शन्तनुसुतस्तदा ।
तत्तद्विशल्यमभवद्योगयुक्तस्य वै क्रमात् ।
क्षणेन प्रेक्षतां तेषां विशल्यः सोऽभवत्तदा ॥ १३-२७४-४ (९२३३५)
तद्दृष्ट्वा विस्मिताः सर्वे वासुदेवपुरोगमाः ।
सह तैर्मुनिभिः सर्वैस्तदा व्यासादिभिर्नृप ॥ १३-२७४-५ (९२३३६)
सन्निरुद्धस्तु तेनात्मा सर्वेष्वायतनेषु च ।
जगाम भित्त्वा मूर्धानं दिवमभ्युत्पपात ह ॥ १३-२७४-६ (९२३३७)
देवदुन्दुभिनादश्च पुष्पवर्षैः सहाभवत् ।
सिद्धा ब्रह्मर्षयश्चैव सादुसाध्विति हर्षिताः ॥ १३-२७४-७ (९२३३८)
महोल्केव च भीष्मस्य मूर्धदेशाज्जनाधिप ।
निःसृकत्याकाशमाविश्य क्षणेनान्तरधीयत ॥ १३-२७४-८ (९२३३९)
एवं स राजशार्दूल नृपः शान्तनवस्तदा ।
समयुज्यत लोकैः स्वैर्भरतानां कुलोद्वहः ॥ १३-२७४-९ (९२३४०)
ततस्त्वादाय दारूणि गन्धांश्च विविधान्बहून् ।
चितां चक्रुर्महात्मानः पाण्डवा विदुरस्तथा ।
युयुत्सुश्चापि कौरव्यं प्रेक्षकास्त्वितरेऽभवन् ॥ १३-२७४-१० (९२३४१)
युधिष्ठिरश्च गाङ्गेयं धृतराष्ट्रश्च दुःखितौ ।
छादयामासतुरुभौ क्षौमेर्माल्यैश्च कौरवम् ॥ १३-२७४-११ (९२३४२)
धारयामास तस्याथ युयुत्सुश्छत्रमुत्तमम् ।

चामरे व्यजने शुभ्रे भीमसेनार्जुनावुभौ ।
उष्णीषे परिगृह्णीतां माद्रीपुत्रावुभौ तथा ॥ १३-२७४-१२ (९२३४३)
युधिष्ठिरेण सहितो धृतराष्ट्रश्च पादतः ।
वृद्धा स्त्रियः कौरवाणां भीष्मं कुरुकुलोद्वहम् ।
तालवृन्तान्युपादाय पर्यवीजन्त सर्वशः ॥ १३-२७४-१३ (९२३४४)
ततोऽस्य विदिवच्चक्रुः पितृमेधं महात्मनः ।
याजका जुहुवुश्चाग्नौ जगुः सामानि समागाः ॥ १३-२७४-१४ (९२३४५)
ततश्चन्दनकाष्ठैश्च तथा कालीयकैरपि ।
कालागुरुप्रभृतिभिर्गन्धैश्चोच्चावच्चैस्तथा ॥ १३-२७४-१५ (९२३४६)
समवच्छाद्य गाङ्गेयं सम्प्रज्वाल्य हुताशनम् ।
अपसव्यमकुर्वन्त धृतराष्ट्रमुखास्त्विताम् ॥ १३-२७४-१६ (९२३४७)
संस्कृत्य च कुरुश्रेष्ठं गाङ्गेयं कुरुसत्तमाः ।
जग्मुर्भागीरथीं पुण्यामृषिजुष्टां कुरूद्वहाः ॥ १३-२७४-१७ (९२३४८)
अनुगम्यमाना व्यासेन नारदेनासितेन च ।
कृष्णेन भरतस्त्रीभिर्ये च पौराः समागताः ॥ १३-२७४-१८ (९२३४९)
उदकं चक्रिरे सर्वे गाङ्गेयस्य महात्मनः ।
विधिवत्क्षत्रियश्रेष्ठाः स च सर्वो जनस्तदा ॥ १३-२७४-१९ (९२३५०)
ततो भागीरथी देवी तनयस्योदके कृते ।
उत्थाय सलिलात्तस्माद्रुदती शोकविह्वला ।
परिदेवयती तत्र कौरकवानभ्यभाषत ॥ १३-२७४-२० (९२३५१)
निबोधत यथावृत्तमुच्यमानं मया नृपाः ।
राजवृत्तेन सम्पन्नः प्रज्ञयाभिजनेन च ।
सत्कर्ता कुरुवृद्धानां पितृभक्तो दृढव्रतः ॥ १३-२७४-२१ (९२३५२)
जामदग्न्येन रामेण यः पुरा न पराजितः ।
दिव्यैरस्त्रैर्महावीर्यः स हतोऽद्य शिखण्डिना ॥ १३-२७४-२२ (९२३५३)
अश्मसारमयं नूनं हृदयं मम पार्थिवाः ।
अपश्यन्त्याः प्रियं पुत्रं यन्न दीर्यति मेऽद्य वै ॥ १३-२७४-२३ (९२३५४)
समेतं पार्थिवं क्षत्रं काशिपुर्यां स्वयंपरे ।
विजित्यैकरथेनाजौ कन्याश्चायं जहारह ॥ १३-२७४-२४ (९२३५५)
यस्य नास्ति बले तुल्यः पृथिव्यामपि कश्चन ।
हतं शिखण्डिना श्रुत्वा यन्न दीर्यति मे मनः ॥ १३-२७४-२५ (९२३५६)
जामदग्न्यः कुरुक्षेत्रे युधि येन महात्मना ।
पीडितो नातियत्नेन स हतोऽद्य शिखण्डिना ॥ १३-२७४-२६ (९२३५७)
एवंविधं बहु तदा विलन्पतीं नहानदीम् ।
आश्वासयामास तदा साम्ना दामोदरो विभुः ॥ १३-२७४-२७ (९२३५८)
समाश्वसिहि भद्रे त्वं मा शुचः शुभदर्शने ।

गतः स परमं लोकं तव पुत्रो न संशयः ॥१३-२७४-२८ (९२३५९)
वसुरेष महातेजाः शापदोषेण शोभने ।
मानुषत्वमनुप्राप्तो नैनं शोचितुमर्हसि ॥१३-२७४-२९ (९२३६०)
स एष क्षत्रधर्मेण युध्यमानो रणाजिरे ।
धनंजयेन निहतो नैष देवि शिखण्डिना ॥१३-२७४-३० (९२३६१)
भीष्मं हि कुरुशार्दूलमुद्यतेषु महारणे ।
न शक्तः संयुगे हन्तुं साक्षादपि शतक्रतुः ॥१३-२७४-३१ (९२३६२)
स्वच्छन्दतस्तव सुतो गतः स्वर्गं शुभानने ।
न शक्ता विनिहन्तुं हि रणे तं सर्वदेवताः ॥१३-२७४-३२ (९२३६३)
तस्मान्मा त्वं सरिच्छ्रेष्ठे शोचस्य कुरुनन्दनम् ।
वसूनेष गतो देवि पुत्रस्ते विज्वरा भव ॥१३-२७४-३३ (९२३६४)
वैशम्पायन उवाच।१३-२७४-३४क्ष् (७७२९)
इत्युक्ता सा तु कृष्णेन व्यासेन तु सरिद्वरा ।
त्यक्त्वा शोकं महाराज स्वं वार्यवततार ह ॥१३-२७४-३४ (९२३६५)
सत्कृत्य ते तां सरितं ततः कृष्णमुखा नृप ।
अनुज्ञातास्तया सर्वे न्यवर्तन्त जनाधिपाः ॥ ॥१३-२७४-३५ (९२३६६)

इति श्रीमन्महाभारते शतसाहस्रिकायां संहितायां
वैयासिक्यां अनुशासनपर्वणि भीष्मस्वर्गारोहणपर्वणि
चतुःसप्तत्यधिकद्विशततमोऽध्यायः ॥२७४ ॥इति अनुशासनपर्व
समाप्तम्॥१३ ॥

Mahabharata - Anushaasana Parva - Chapter Footnotes

१३-२७४-२ समादधत्स्वमात्मानं धारणानुक्रमस्थितः ।इति क ध पाठः ॥
१३-२७४-१२ उष्णीषे किरीटशिरोवेष्टे ॥
१३-२७४-२१ समर्थः कुरुवृद्धानामिति ट थ पाठः ॥
१३-२७४-२३ दृष्टाप्येवंविधं पुत्रं न दीर्यति सहस्रधेति
क ट थ पाठः ॥
१३-२७४-३५ अनुज्ञाप्य च ते सर्वे इति ट थ पाठः ॥
अतः परमाश्वमेधिकं पर्व भविष्यति। ।१४ ॥तस्यायमाद्यः
श्लोकः ॥वैशम्पायन उवाच।कृतोदकं तु राजनं धृतराष्ट्रं
युधिष्ठिरः।पुरस्कृत्य महाबाहुरुत्ततारकुलेन्द्रियः॥ इदं
अनुशासनपर्व कुम्भघोणस्थेन TI.Ar कृष्णाचार्येण
TI.Ar व्यासाचार्येण च मुम्बय्यां निर्णयसागरमुद्रायन्त्रे
मुद्रापितम्।शकाब्दाः १८३१ सन १९१०.

# ॥ १४ अश्वमेधिकपर्व ॥

१४. आश्वमेधिकपर्व

अस्वमेधिकपर्व-अध्यय००१

॥ श्रीः ॥

१४.१. अध्यायः १

अश्वमेधपर्व ॥ १ ॥

Mahabharata - Ashvamedhika Parva - Chapter Topics

गङ्गायां भीष्मायोदकदानानन्तरं बन्धुशोकविषण्णं
युधिष्ठिरंप्रति धृतराष्ट्रेण समाश्वासनम् ॥ १ ॥
तथा विदुरवचनानादरेण स्वस्यैतादृशानर्थप्राप्तिकथनम् ॥ २ ॥

Mahabharata - Ashvamedhika Parva - Chapter Text

श्रीवेदव्यासाय नमः ।
नारायणं नमस्कृत्य नरं चैव नरोत्तमम् ।
देवीं सरस्वतीं व्यासं ततो जयमुदीरयेत् ॥ १४-१-१ (९२३६७)
वैशम्पायन उवाच। १४-१-२क्ष् (७७३०)
कृतोदकस्तु राजानं धृतराष्ट्रं युधिष्ठिरः ।
पुरस्कृत्य महाबाहुरुत्तताराकुलेन्द्रियः ॥ १४-१-२ (९२३६८)
उत्तीर्य तु महाबाहुर्बाष्पव्याकुललोचनः ।
पपात तीरे गङ्गाया व्याधविद्ध इव द्विपः ॥ १४-१-३ (९२३६९)
तं सीदमानं जग्राह भीमः कृष्णेन चोदितः ।
मैवमित्यब्रवीच्चैनं कृष्णः परबलार्दनः ॥ १४-१-४ (९२३७०)
तमार्तं पतितं भूमौ श्वसन्तं च पुनः पुनः ।
तदृशुः पार्थिवा राजन्धर्मपुत्रं युधिष्ठिरम् ॥ १४-१-५ (९२३७१)
त दृष्ट्वा दीनमनसं गतसत्वं नरेश्वरम् ।
भूयः शोकसमाविष्टाः पाण्डवाःक समुपाविशन् ॥ १४-१-६ (९२३७२)
राजा तु धृतराष्ट्रस्तं तथा दीनो महाभुजम् ।
वाक्यमाह महाबुद्धिः प्रज्ञाचक्षुर्नरेश्वरम् ॥ १४-१-७ (९२३७३)

उत्तिष्ठ कुरुशार्दूल कुरु कार्यमनन्तरम् ।
क्षत्रधर्मेण कौन्तेय जितेयमवनी त्वया ॥१४-१-८ (९२३७४)
भुङ्क्ष सार्धं भ्रातृभिस्तां सुहृद्भिश्च जनेश्वर ।
शोचितव्यं न पश्यामि त्वया धर्मभृतांवर ॥१४-१-९ (९२३७५)
शोचितव्यं मया चैव गान्धार्या च महीपते ।
ययोः पुत्रशतं नष्टं स्वप्नलब्धं यथा धनम् ॥१४-१-१० (९२३७६)
अश्रुत्वा हितकामस्य विदुरस्य महात्मनः ।
वाक्यानि सुमहार्थानि परितप्यामि दुर्मतिः ॥१४-१-११ (९२३७७)
उक्तवान्विदुरो यन्मां धर्मात्मा दिव्यदर्शनः ।
दुर्योधनापराधेन कुलं ते विनशिष्यति ॥१४-१-१२ (९२३७८)
स्वस्ति चेदिच्छसे राजन्कुलस्य कुरु मे वचः ।
वध्यतामेष दुष्टात्मा मन्दो राजा सुयोधनः ॥१४-१-१३ (९२३७९)
कर्णश्च शकुनिश्चैव नैनं पश्यतु कर्हिचित् ।
द्यूतसङ्घातमप्येषामप्रमादेन वारय ॥१४-१-१४ (९२३८०)
अभिषेचय राजानं धर्मात्मानं युधिष्ठिरम् ।
स पालयिष्यति वशी धर्मेण पृथिवीमिमाम् ॥१४-१-१५ (९२३८१)
अथ नेच्छसि राजानं कुन्तीपुत्रं युधिष्ठिरम् ।
गविनाशमुपयास्तन्ति तव पुत्रा न संशयः।'
मेढीभूतः स्वयं राज्यं प्रतिगृह्णीष्व पार्थिव ॥ १४-१-१६ (९२३८२)
समं सर्वेषु भूतेषु वर्तमानं नराधिप ।
अनुजीवन्तु सर्वे त्वां ज्ञातयो ज्ञातिवर्धन ॥१४-१-१७ (९२३८३)
एवं ब्रुवति कौन्तेय विदुरे दीर्घदर्शिनि ।
दुर्योधनमहं पापमन्ववर्तं वृथामतिः ॥१४-१-१८ (९२३८४)
अश्रुत्वा तस्य धीरस्य वाक्यानि मधुराण्यहम् ।
फलं प्राप्य महद्दुःखं निमग्नः शोकसागरे ॥१४-१-१९ (९२३८५)
वृद्धौ हि तेऽद्य पितरौ पश्य नौ दुःखितौ नृप ।
न शोचितव्यं भवता पश्यामीह जनाधिप ॥ ॥१४-१-२० (९२३८६)

इति श्रीमन्महाभारते आश्वमेधिकपर्वणि अश्वमेधपर्वणि
प्रथमोऽध्यायः ॥१ ॥

Mahabharata - Ashvamedhika Parva - Chapter Footnotes

७-१-१ कृतोदकं त्विति झ पाठः ॥
७-१-२ उत्ततार गङ्गात इति शेषः ॥

---

अस्वमेधिकपर्व-अध्यय००२

॥ श्रीः ॥
१४.२. अध्यायः २

अश्वमेधपर्व ॥ १ ॥
Mahabharata - Ashvamedhika Parva - Chapter Topics
धृतराष्ट्रेण समाश्वासनेपि तूष्णीं तिष्ठन्तो युधिष्ठिरस्य कृष्णेन परिसान्त्वनम् ॥ १ ॥
पुनर्भीष्मद्रोणकर्णमारणानुस्मरण विषादेनारण्यगमनाय कृष्णानुज्ञानमाकाङ्क्षमाणस्य युधिष्ठिरस्य व्यासेनि परिसान्त्वनम् ॥ २ ॥

Mahabharata - Ashvamedhika Parva - Chapter Text

वैशम्पायन उवाच ।
एवमुक्तस्तु राजाऽसौ धृतराष्ट्रेण धीमता ।
तूष्णींबभूव मेधावी तमुवाचाथ केशवः ॥ १४-२-१ (९२३८७)
अतीव मनसा शोकः क्रियमाणो जनाधिप ।
सन्तपयति चैतस्य पूर्वप्रेतान्पितामहान् ॥ १४-२-२ (९२३८८)
यजस्व विविधैर्यज्ञैर्बहुभिः स्वाप्तदक्षिणैः ।
देवांस्तर्पय सोमेन स्वधया च पितॄनपि ॥ १४-२-३ (९२३८९)
अतिथीनन्नपानेन कामैरन्यैरकिञ्चनान् ।
ग्त्वद्विधस्य महाबुद्धे नैतदद्योपपद्यते।'
विदितं वेदितव्यं ते कर्तव्यमपि ते कृतम् ॥ १४-२-४ (९२३९०)
श्रुताश्च राजधर्मास्ते भीष्माद्भागीरथीसुतात् ।
कृष्णद्वैपायनाच्चैव नारदाद्विदुरात्तथा ॥ १४-२-५ (९२३९१)
नेमामर्हसि मूढानां वृत्तिं त्वमनुवर्तितुम् ।
पितृपैतामहं वृत्तमास्थाय धुरमुद्वह ॥ १४-२-६ (९२३९२)
युक्तं हि यशसा क्षात्रं स्वर्गं प्राप्तुमसंशयम् ।
नहि कश्चिद्धि शूरणां निहतोऽत्र पराङ्मुखः ॥ १४-२-७ (९२३९३)
त्यज शोकं महाराज भवितव्यं हि तत्तथा ।
न शक्यास्ते पुनर्द्रष्टुं त्वया येऽस्मिन्रणे हताः ॥ १४-२-८ (९२३९४)
एतावदुक्त्वा गोविन्दो धर्मराजं युधिष्ठिरम् ।
विरराम महातेजास्तमुवाच युधिष्ठिरः ॥ १४-२-९ (९२३९५)
गोविन्द मयि या प्रीतिस्तव सा विदिता मम ।
सौहृदेन तथा प्रेम्णा सदा मय्यनुकम्पसे ॥ १४-२-१० (९२३९६)
प्रियं तु मे स्यात्सुमहत्कृतं चक्रगदाधर ।

श्रीमन्प्रीतेन मनसाक सर्वं यादवनन्दन ॥१४-२-११ (९२३९७)
यदि मामनुजानीयाद्भवान्गान्तुं तपोवनम् ।
'कृतकृत्यो भविष्यामि इति मे निश्चिता मतिः'॥१४-२-१२ (९२३९८)
न हि शान्तिं प्रपश्यामि पातयित्वा पितामहम् ।
'नृशंसः पुरुषव्याघ्रं गुरुं वीर्यबलान्वितम्।'
कर्णं च पुरुषव्याघ्नं सङ्ग्रामेष्वपलायिनम् ॥ १४-२-१३ (९२३९९)
कर्मणा येन मुच्येयमस्मात्क्रूरादरिंदम ।
कर्मणा तद्विधत्स्वेह येन शुध्यति मे मनः ॥१४-२-१४ (९२४००)
तमेवंवादिनं पार्थं व्यासः प्रोवाच धर्मवित् ।
सान्त्वयन्सुमहातेजाः शुभं वचनमर्थवत् ॥१४-२-१५ (९२४०१)
सुकृता ते मतिस्तात पुनर्बाल्येन मुह्यसे ।
किमाकाशे वयं सर्वे प्रलपामो मुहुर्मुहुः ॥१४-२-१६ (९२४०२)
विदिताः क्षत्रधर्मास्ते येषां युद्धेन जीविका ।
तथा प्रवृत्तो नृपतिर्नाधिबन्धेन युज्यसे ॥१४-२-१७ (९२४०३)
मोक्षधर्माश्च निखिला याथातथ्येन ते श्रुताः ।
'यथा वै कामजां मायां परित्युक्तं त्वमर्हसि ॥' १४-२-१८ (९२४०४)
असकृच्चापि सन्देहाश्छिन्नास्ते कामजा मया ।
अश्रद्दधानो दुर्मेधा लुप्तस्मृतिरसि ध्रुवम् ॥१४-२-१९ (९२४०५)
मैवं भव न ते युक्तमिदमज्ञानमीदृशम् ॥ १४-२-२० (९२४०६)
प्रायश्चित्तानि सर्वाणि विदितानि च तेऽनघ ।
राजधर्माश्च ते सर्वे दानधर्माश्च ते श्रुताः ॥१४-२-२१ (९२४०७)
स कथं सर्वधर्मज्ञः सर्वागमविशारदः ।
परिमुह्यसि भूयस्त्वमज्ञानादिव भारत ॥ ॥१४-२-२२ (९२४०८)

इति श्रीमन्महाभारते आश्वमेधिकपर्वणि अश्वमेधपर्वणि
द्वितीयोऽध्यायः ॥ २ ॥
Mahabharata - Ashvamedhika Parva - Chapter Footnotes

७-२-१६ पुनर्बाह्येन मुह्यसे इति क ट पाठः ॥
१६ ॥

---

अस्वमेधिकपर्व-अध्यय००३
॥ श्रीः ॥
१४.३. अध्यायः ३

अश्वमेधपर्व ॥१ ॥

Mahabharata - Ashvamedhika Parva - Chapter Topics

व्यासेन युधिष्ठिरंप्रति पुरुषकर्मणामीश्वरप्रेरणायत्ततया दोषानापादकत्वकथनपूर्वकं तदभ्युपगमेनापि पापापनोदायाश्वमेधादिविधानम् ॥ १ ॥

युधिष्ठिरेण स्वस्य तावद्द्रव्याभावनिवेदने व्यासेन तंप्रति हिमवति गिरौ विद्यमानमरुत्तयागावशिष्टद्रव्यानयनेनाश्वमेधकरणचोदना ॥ २ ॥

Mahabharata - Ashvamedhika Parva - Chapter Text

व्यास उवाच ।
युधिष्ठिर तव प्रज्ञा न सम्यगिति मे मतिः ।
न हि कश्चित्स्वयं मर्त्यः स्ववशः कुरुते क्रियाम् ॥ १४-३-१ (९२४०९)
ईश्वरेण च युक्तोऽयं साध्वसाधु च मानवः ।
करोत्यसुकरं कर्म तत्रका परिदेवना ॥ १४-३-२ (९२४१०)
आत्मानं मन्यसे चाथ पापकर्माणमन्ततः ।
शृणु तत्र यथा पापमपकृत्येत भारत ॥ १४-३-३ (९२४११)
तपोभिः क्रतुभिश्चैव दानेन च युधिष्ठिर ।
तरन्ति नित्यं पुरुषा ये स्म पापानि कुर्वते ॥ १४-३-४ (९२४१२)
यज्ञेन तपसा चैव दानेन च नराधिप ।
पूयन्ते नरशार्दूल नरा दुष्कृतकारिणः ॥ १४-३-५ (९२४१३)
असुराश्च सुराश्चैव पुण्यहेतोर्मखक्रियाम् ।
प्रवर्तन्ते महात्मानस्तस्माद्यज्ञः परायणम् ॥ १४-३-६ (९२४१४)
यज्ञैरेव महात्मानो बभूवुरधिकाः सुराः ।
ततो देवाः क्रियावन्तो दानवानभ्यधर्षयन् ॥ १४-३-७ (९२४१५)
राजसूयाश्वमेधौ च सर्वमेधं च भारत ।
नरमेधं च नृपते त्वमाहर युधिष्ठिर ॥ १४-३-८ (९२४१६)
यजस्व वाजिमेधेन विधिवद्दक्षिणावता ।
बहुकामान्नवित्तेन रामो दाशरथिर्यथा ॥ १४-३-९ (९२४१७)
यथा च भरतो राजा दौष्यन्तिः पृथिवीपतिः ।
शाकुन्तलो महावीर्यस्तव पूर्वपितामहः ॥ १४-३-१० (९२४१८)
युधिष्ठिर उवाच। १४-३-११क्ष् (७७३१)
असंशयं वाजिमेधः पारयेत्पृथिवीमपि ।
अभिप्रायस्तु मे कश्चित्तं त्वं श्रोतुमिहार्हसि ॥ १४-३-११ (९२४१९)
इमं ज्ञातिवधं कृत्वा सुमहान्तं द्विजोत्तम ।
ग्अहमाराधयिष्यामि कथं शोकपरायणः।'

दानमल्पं न शक्नोमि दातुं वित्तं च नास्ति मे ॥ १४-३-१२ (९२४२०)
न तु बालानिमान्दीनानुत्सहे वसु याचितुम् ।
तथैवाद्रविणान्कृच्छ्रे वर्तमानान्नृपात्मजान् ॥१४-३-१३ (९२४२१)
स्वयं विनाश्य पृथिवीं यज्ञार्थं द्विजसत्तम ।
करमाहारयिष्यामि कथं शोकपरायणः ॥१४-३-१४ (९२४२२)
दुर्योधनापराधेनि वसुधायां नराधिपाः ।
प्रनष्टा योजयित्वाऽस्मानकीर्त्या मुनिसत्तम ॥१४-३-१५ (९२४२३)
दुर्योधनेन पृथिवी क्षपिता जयकारणात् ।
कोशश्चापि विशीर्णोसौ धार्तराष्ट्रस्य दुर्मतेः ॥१४-३-१६ (९२४२४)
पृथिवी दक्षिणा चात्र वाजिमेधे महाक्रतौ ।
विद्वद्भिः परिदृष्टोऽयं शिष्टो विधिविपर्ययः ॥१४-३-१७ (९२४२५)
न च प्रतिनिधिं कर्तुं चिकीर्षामि तपोधन ।
अत्र मे भगवन्सम्यक्साचिव्यं कर्तुमर्हसि ॥१४-३-१८ (९२४२६)
एवमुक्तस्तु पार्थेन कृष्णद्वैपायनस्तदा ।
मुहूर्तमनुसञ्चिन्त्य धर्मराजानमब्रवीत् ॥१४-३-१९ (९२४२७)
कोशश्चापि विशीर्णोऽयं परिपूर्णो भविष्यति ।
विद्यते द्रविणं पार्थ गिरौ हिमवति स्थितम् ॥१४-३-२० (९२४२८)
उत्सृष्टं ब्राह्मणैर्यज्ञे मरुत्तस्य महीपते ।
तदानयस्व कौन्तेय पर्याप्तं तद्भविष्यति ॥१४-३-२१ (९२४२९)
युधिष्ठिर उवाच।१४-३-२२क्ष् (७७३२)
कथं यज्ञे मरुत्तस्य द्रविणं तत्समाचितम् ।
कस्मिंश्च काले स नृपो बभूव ददतांवर ॥१४-३-२२ (९२४३०)
व्यास उवाच।१४-३-२३क्ष् (७७३३)
यदि शुश्रूषसे पार्थ शृणु कारंधमं नृपम् ।
यस्मिन्काले महावीर्यः स राजाऽऽसीन्महाधनः ॥ ॥१४-३-२३ (९२४३१)

इति श्रीमन्महाभारते आश्वमेधिकपर्वणि अश्वमेधपर्वणि
तृतीयोऽध्यायः ॥ ३ ॥
Mahabharata - Ashvamedhika Parva - Chapter Footnotes

७-३-१८ प्रतिनिधिमनुकल्पम् ॥

---

अस्वमेधिकपर्व-अध्यय००४
॥ श्रीः ॥
१४.४. अध्यायः ४

अश्वमेधपर्व ॥ १ ॥

Mahabharata - Ashvamedhika Parva - Chapter Topics

व्यासेन युधिष्ठिरंप्रति संवर्तमरुत्तीयोपाख्यानकथनारम्भः ॥ १ ॥
मरुत्तेन राज्ञा हिमवदुत्तरपार्श्वे सौवर्णैरेव
कुण्डभाडाद्युपकरणैर्यज्ञारम्भः ॥ १ ॥

Mahabharata - Ashvamedhika Parva - Chapter Text

युधिष्ठिर उवाच ।
शुश्रूषे तस्य धर्मज्ञ राजर्षेः परिकीर्तनम् ।
द्वैपायन मरुत्तस्य कथां प्रब्रूहि मेऽनघ ॥ १४-४-१ (९२४३२)
व्यास उवाच। १४-४-२क्ष् (७७३४)
आसीत्कृतयुगे तात मनुर्दण्डिधरः प्रभुः ।
तस्य पुत्रो महोष्वासः प्रजातिरभवन्नृपः ॥ १४-४-२ (९२४३३)
प्रजातेरभवत्पुत्रः क्षुत इत्यभिविश्रुतः ।
क्षुतस्य पुत्र इक्ष्वाकुर्महीपालोऽभवत्प्रभुः ॥ १४-४-३ (९२४३४)
तस्य पुत्रशतं राजन्नासीत्परमधार्मिकम् ।
तांस्तु सर्वान्महीपालानिक्ष्वाकुरकरोत्प्रभुः ॥ १४-४-४ (९२४३५)
तेषां ज्येष्ठस्तु विंशोऽभूत्प्रतिमानं धनुष्मताम् ।
विंशस्य पुत्रः कल्याणो विविंशो नाम भारत ॥ १४-४-५ (९२४३६)
विविंशस्य सुता राजन्बभूवुर्दश पञ्च च ।
सर्वे धनुषि विक्रान्ता ब्रह्मण्याः सत्यवादिनः ॥ १४-४-६ (९२४३७)
दानधर्मरताः शान्ताः सततं प्रियवादिनः ।
तेषां ज्येष्ठः खनीनेत्रः स तान्सर्वानपीडयत् ॥ १४-४-७ (९२४३८)
खनीनेत्रस्तु विक्रान्तो जित्वा राज्यमकण्टकम् ।
नाशकद्रक्षितुं राज्यं नान्वरज्यन्त तं प्रजाः ॥ १४-४-८ (९२४३९)
तमपास्य च तद्राज्ये तस्य पुत्रं सुवर्चसम् ।
अभ्यषिञ्चन्त राजेन्द्र मुदिता ह्यभवंस्तदा ॥ १४-४-९ (९२४४०)
स पितुर्विक्रियां दृष्ट्वा राज्यान्निरसनं च तत् ।
नियतो वर्तयामास प्रजाहितचिकीर्षया ॥ १४-४-१० (९२४४१)
ब्रह्मण्यः सत्यवादी च शुचिः शमदमान्वितः ।
प्रजास्तं चान्वरज्यन्त धर्मनित्यं मनस्विनम् ॥ १४-४-११ (९२४४२)
तस्य धर्मप्रवृत्तस्य व्यशीर्यत्कोशवाहनम् ।
तं क्षीणकोशं सामन्ताः समन्तात्पर्यपीडयन् ॥ १४-४-१२ (९२४४३)
स पीड्यमानो बहुभिः क्षीणकोशाश्ववाहनः ।
आर्तिमार्च्छत्परां राजा सह भृत्यैः पुरेण च ॥ १४-४-१३ (९२४४४)

न चैनमभिहन्तुं ते शक्नुवन्ति बलक्षये ।
सम्यग्वृत्तो हि राजा स धर्मनित्यो युधिष्ठिर ॥१४-४-१४ (९२४४५)
यदा तु परमामार्तिं गतोऽसौ सपुरो नृपः ।
ततः प्रदध्मौ स करं प्रादुरासीत्ततो बलम् ॥१४-४-१५ (९२४४६)
ततस्तानजयत्सर्वान्प्रातिसीमान्नराधिपान् ।
एतस्मात्कारणाद्राजन्विश्रुतः स करंधमः ॥१४-४-१६ (९२४४७)
आवीक्षित्तस्य पुत्रोऽभूत्त्रेतायुगमुखे पुरा ।
इन्द्रादनवरः श्रीमान्देवैरपि सुदुर्जयः ॥१४-४-१७ (९२४४८)
'कारंधम इति ख्यातो बभूव जगतीपतिः।'
तस्य सर्वे महीपाला वर्तन्ते स्म वशे तदा ।
स हि सम्राडभूत्तेषां वृत्तेन च बलेन च ॥ १४-४-१८ (९२४४९)
अविक्षिन्नाम धर्मात्मा शौर्येणेन्द्रसमोऽभवत् ।
यज्ञशीलो धर्मरतिर्धृतिमान्संयतेन्द्रियः ॥१४-४-१९ (९२४५०)
तेजसाऽऽदित्यसदृशः क्षमया पृथिवीसमः ।
बृहस्पतिसमो बुद्ध्या हिमवानिव सुस्थिरः ॥१४-४-२० (९२४५१)
कर्मणा मनसा वाचा दमेन प्रशमेन च ।
मनांस्याराधयामास प्रजानां स महीपतिः ॥१४-४-२१ (९२४५२)
य ईजे हयमेधानां शतेन विधिवत्प्रभुः ।
याजयामास यं विद्वान्स्वयमेवाङ्गिराः प्रभुः ॥१४-४-२२ (९२४५३)
तस्य पुत्रोऽतिचक्राम पितरं गुणवत्तया ।
मरुत्तो नाम धर्मज्ञश्चक्रवर्ती महायशाः ।
नागायुतसमप्राणः साक्षाद्विष्णुरिवापरः ॥ १४-४-२३ (९२४५४)
स यक्ष्यमाणो धर्मात्मा शातकुम्भमयान्युत ।
कारयामास शुभ्राणि भाजनानि सहस्रशः ॥१४-४-२४ (९२४५५)
मेरुं पर्वतमासाद्य हिमवत्पार्श्व उत्तरे ।
काञ्चनः सुमहान्पादस्तत्र कर्म चकार सः ॥१४-४-२५ (९२४५६)
ततः कुण्डानि पात्रीश्च पिठराण्यासंनानि च ।
चक्रुः सुवर्णकर्तारो येषां सङ्ख्या न विद्यते ॥१४-४-२६ (९२४५७)
तस्यैव च समीपे तु यज्ञवाटो बभूव ह ।
ईजे तत्र स धर्मात्मा विदिवत्पृथिवीपतिः ।
मरुत्तः सहितैः सर्वैः प्रजापालैर्नराधिपः ॥ ॥ १४-४-२७ (९२४५८)

इति श्रीमन्महाभारते आश्वमेधिकपर्वणि अश्वमेधपर्वणि
चतुर्थोऽध्यायः ॥ ४ ॥

Mahabharata - Ashvamedhika Parva - Chapter Footnotes

७-४-१ शुश्रूषे श्रोतुमिच्छामि ॥
७-४-२१ पूर्वजानां महीपतिरिति क थ पाठः ॥
७-४-२५ दैवं तत्र समासाद्येति क थ पाठः ॥

---

अस्वमेधिकपर्व-अध्यय००५
॥ श्रीः ॥
१४.५. अध्यायः ५

अश्वमेधपर्व ॥ १ ॥
Mahabharata - Ashvamedhika Parva - Chapter Topics
अङ्गीरसः पुत्रेण संवर्तेनाकारणवैरिणः स्वाग्रजन्मनो
बृहस्पतेरुपद्रवासहनेन सर्वस्वत्यागपूर्वकमरण्यप्रवेशः ॥ १ ॥
इन्द्रेण स्वातिशायिनि मरुत्ते राजनि स्पर्धया बृहस्पतिसाचिव्येन
ततोप्यतिशयलिप्सया मरुत्तपुरोहितस्य बृहस्पतेर्भेदोपायेन
वशीकरणम् ॥ २ ॥
बृहस्पतिनेन्द्रंप्रति मरुत्तस्य स्वेनायाजनप्रतिज्ञानम् ॥ ३ ॥

Mahabharata - Ashvamedhika Parva - Chapter Text

युधिष्ठिर उवाच ।
पथंवीर्यः समभवत्स राजा ददतांवरः ।
कथं च जातरूपेण समयुज्यत वै नृपः ॥ १४-५-१ (९२४५९)
क्व च तत्सांप्रतं द्रव्यं भगवन्नवतिष्ठते ।
कथं च शक्यमस्माभिस्तदवाप्नुं तचपोधन ॥ १४-५-२ (९२४६०)
व्यास उवाच। १४-५-३क्ष् (७७३५)
असुराश्चैव देवाश्च दक्षस्यासन्प्रजापतेः ।
अपत्यं बहुलं तात तेऽस्पर्धन्त परस्परम् ॥ १४-५-३ (९२४६१)
तथैवाङ्गिरसः पुत्रौ पितृतुल्यौ बभूवतुः ।
बृहस्पतिर्बृहत्तेजाः संवर्तश्च तपोधनः ॥ १४-५-४ (९२४६२)
तावति स्पर्धिनौ राजन्पृथगास्तां परस्परम् ।
बृहस्पतिः स संवर्तं बाधते स्म पुनःपुनः ॥ १४-५-५ (९२४६३)
स बाध्यमानः सततं भ्रात्रा ज्येष्ठेन भारत ।
अर्थानुत्सृज्य दिग्वासा वने वासमरोचयत् ॥ १४-५-६ (९२४६४)
वासवोऽप्यसुरान्सर्वान्विजित्य च निपात्य च ।
इन्द्रत्वं प्राप्य लोकेषु ततो वव्रे पुरोहितम् ॥ १४-५-७ (९२४६५)

पुत्रमङ्गिरसो ज्येष्ठं विप्रज्येष्ठं बृहस्पतिम् ।
याज्यस्त्वङ्गिरसः पूर्वमासीद्राजा करंधमः ॥१४-५-८ (९२४६६)
वीर्येणाप्रतिमो लोके वृत्तेन च बलेन च ।
शतक्रतुरिवौजस्वी धर्मात्मा संशितव्रतः। १४-५-९ (९२४६७)
वाहनं यस्य योधाश्च मित्राणि विविधानि च ।
शयनानि च मुख्यानि महार्हाणि च सर्वशः ॥१४-५-१० (९२४६८)
ध्यानादेवाभवद्राजन्मुखवातेन सर्वशः ।
स गुणैः पार्थिवान्सर्वान्वशे चक्रे नराधिपः ॥१४-५-११ (९२४६९)
संजीव्य कालमिष्टं च सशरीरो दिवं गतः ।
बभूव तस्य पुत्रस्तु ययातिरिव धर्मवित् ॥१४-५-१२ (९२४७०)
अविक्षिन्नाम शत्रुंजित्स वशे कृतवान्महीम् ।
विक्रमेण गुणैश्चैव पितेवासीत्स पार्थिवः ॥१४-५-१३ (९२४७१)
तस्य वासवतुल्योऽभून्मरुत्तो नाम वीर्यवान् ।
पुत्रस्तमनुरक्ताऽभूत्पृथिवी सागराम्बरा ॥१४-५-१४ (९२४७२)
स्पर्धते स स्म सततं देवराजेन नित्यदा ।
वासवोऽपि मरुत्तेनि स्पर्धते पाण्डुनन्दन ॥१४-५-१५ (९२४७३)
शुचिः स गुणवानासीन्मरुत्तः पृथिवीपतिः ।
यतमानोपि यं शक्रो न विशेषयति स्म ह ॥१४-५-१६ (९२४७४)
सोऽशक्नुवन्विशेषाय समाहूय बृहस्पतिम् ।
उवाचेदं वचो देवैः सहितो हरिवाहनः ॥१४-५-१७ (९२४७५)
बृहस्पते मरुत्तस्य मा स्म कार्षीः कथञ्चन ।
दैवं कर्माथ पित्र्यं वा कर्तासि मम चेत्प्रियम् ॥१४-५-१८ (९२४७६)
अहं हि त्रिषु लोकेषु सुराणां च बृहस्पते ।
इन्द्रत्वं प्राप्तवानेको मरुत्तस्तु महीपतिः ॥१४-५-१९ (९२४७७)
कथं ह्यमर्त्यं ब्रह्मंस्त्वं याजयित्वा सुराधिपम् ।
याजयेर्मृत्युसंयुक्तं मरुत्तमविशङ्कया ॥१४-५-२० (९२४७८)
मां वा वृणीष्व भद्रं ते मरुत्तं वा महीपतिम् ।
परित्यज्य मरुत्तं वा यथाजोषं भजस्व माम् ॥१४-५-२१ (९२४७९)
एवमुक्तः स करकव्य देवराज्ञा बृहस्पतिः ।
मुहूर्तमिव सञ्चिन्त्य देवराजानमब्रवीत् ॥१४-५-२२ (९२४८०)
त्वं भूतानामधिपतिस्त्वयि लोकाः प्रतिष्ठिताः ।
नमुचेर्विश्वरूपस्य निहन्ता त्वं बलस्य च ॥१४-५-२३ (९२४८१)
त्वमाजहर्थ देवानामेको वीरश्रियं पराम् ।
त्वं बिभर्षि भुवं द्यां च सदैव बलसूदन ॥१४-५-२४ (९२४८२)
परोहित्यं कथं कृत्वा तव देवगणेश्वर ।
याजयेयमहं मर्त्यं मरुत्तं पाकशासन ॥१४-५-२५ (९२४८३)

समाश्वसिहि देवेन्द्र नाहं मर्त्यस्य कर्हिचित् ।
ग्रहीष्यामि स्रुवं यज्ञे शृणु चेदं वचो मम ॥१४-५-२६ (९२४८४)
हिरण्यरेता नोष्णः स्यात्परिवर्तेत मेदिनी ।
भासं तु न रविः कुर्यान्न तु सत्यं चलेन्मयि ॥१४-५-२७ (९२४८५)
व्यास उवाच।१४-५-२८क्ष् (७७३६)
बृहस्पतिवचःक श्रुत्वा शक्रो विगतमत्सरः ।
प्रशस्यैनं विवेशाथ स्वमेव भवनं तदा ॥ ॥१४-५-२८ (९२४८६)

इति श्रीमन्महाभारते आश्वमेधिकपर्वणि अश्वमेधपर्वणि
पञ्चमोऽध्यायः ॥५ ॥

---

अस्वमेधिकपर्व-अध्यय००६
॥ श्रीः ॥
१४.६. अध्यायः ६

अश्वमेधपर्व ॥१ ॥
Mahabharata - Ashvamedhika Parva - Chapter Topics
बृहस्पतिना इन्द्रे स्वेन मरुत्तस्यायाजनप्रतिज्ञानश्रवणामर्षिणा
मरुत्तेनि स्वयाजनप्रार्थेन तत्प्रत्याख्यानम् ॥१ ॥
ततः प्रतिनिवृत्तस्य मरुत्तस्य मध्येमार्गं नारदसमागमः ॥२ ॥
नारदचोदनया मरुत्तेन वाराणसीद्वारे स्वेन स्थापितकुणपावलोकनेन
प्रलायमानं संवर्तं प्रत्यनुगमनम् ॥३ ॥
संवर्तेन तत्प्रतिनिवर्तनाय पांसुकदमप्रक्षेपेप्यनिवर्तमानं
तमवलोक्यं विजने न्यग्रोधमूले समुपवेशः ॥४ ॥

Mahabharata - Ashvamedhika Parva - Chapter Text

व्यास उवाच ।
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
बृहस्पतेश्च संवादं मरुत्तस्य च धीमतः ॥१४-६-१ (९२४८७)
देवराजस्य समयं कृतमाङ्गिरसेन ह ।
श्रुत्वा मरुत्तो नृपतिर्मन्युमाहारयत्परम् ॥१४-६-२ (९२४८८)
सङ्कल्प्य मनसा यज्ञं करंधमसुतात्मजः ।
बृहस्पतिमुपागम्य वाग्मी वचनमब्रवीत् ॥१४-६-३ (९२४८९)
भगवन्यन्मया पूर्वमभिगम्य तपोधन ।
कृतोऽभिसन्धिर्यज्ञस्य भवतो वचनाद्गुरो ॥१४-६-४ (९२४९०)

तमहं यष्टुमिच्छामि सम्भाराः सम्भृताश्च मे ।
याज्योस्मि भवतः साधो तत्प्राप्नुहि विधत्स्व च ॥ १४-६-५ (९२४९१)
बृहस्पतिरुवाच। १४-६-६क्ष् (७७३७)
न कामये याजयितुं त्वामहं पृथिवीपते ।
वृतोस्मि देवराजेन प्रतिज्ञातं च तस्य मे ॥ १४-६-६ (९२४९२)
मरुत्त उवाच। १४-६-७क्ष् (७७३८)
पित्र्यमस्मि तव क्षेत्रं बहुमन्ये च ते भृशम् ।
तवास्मि याज्यातां प्राप्तो भजमानं भजस्व माम् ॥ १४-६-७ (९२४९३)
बृहस्पतिरुवाच। १४-६-८क्ष् (७७३९)
अमर्त्यं याजयित्वाऽहं याजयिष्ये कथं नरम् ।
मरुत्त गच्छ वा मा वा निवृत्तोस्म्यद्य याजनात् ॥ १४-६-८ (९२४९४)
न त्वां याजयितास्म्यद्य वृणु यं त्वमिहेच्छसि ।
उपाध्यायं महाबाहो यस्ते यज्ञं करिष्यति ॥ १४-६-९ (९२४९५)
व्यास उवाच। १४-६-१०क्ष् (७७४०)
एवमुक्तस्तु नृपतिर्मरुत्तो व्रीडितोऽभवत् ।
प्रत्यागच्छन्सुसंविग्नो ददर्श पथि नारदम् ॥ १४-६-१० (९२४९६)
देवर्षिणा समागम्य नारदेनि स पार्थिवः ।
विधिवत्प्राञ्जलिस्तस्थावथैनं नारदोऽब्रवीत् ॥ १४-६-११ (९२४९७)
राजर्षे नातिहृष्टोसि कच्चित्क्षेमं तवानघ ।
क्व गतोसि कुतश्चेदमप्रीतिस्थानमागतम् ॥ १४-६-१२ (९२४९८)
श्रोतव्यं चेन्मया राजन्ब्रूहि मे पार्थिवर्षभ ।
व्यपनेष्यामि ते मन्युं सर्वयत्नैर्नराधिप ॥ १४-६-१३ (९२४९९)
एवमुक्तो मरुत्तः स नारदेन महर्षिणा ।
विप्रलम्भमुपाध्यायात्सर्वज्ञे तं न्यवेदयत् ॥ १४-६-१४ (९२५००)
मरुत्त उवाच। १४-६-१५क्ष् (७७४१)
गतोस्म्यङ्गिरसः पुत्रं देवाचार्यं बृहस्पतिम् ।
यज्ञार्थमृत्विजं प्रष्टुं स च मां नाभ्यनन्दत ॥ १४-६-१५ (९२५०१)
प्रत्याख्यातश्च तेनाहं जीवितुं नाद्य कामये ।
परित्यक्तश्च गुरुणा दूषितश्चास्मि नारद ॥ १४-६-१६ (९२५०२)
व्यास उवाच। १४-६-१७क्ष् (७७४२)
एवमुक्तस्तु राज्ञा स नारदः प्रत्युवाच ह ।
आविक्षितं महाराज वाचा संजीवयन्निव ॥ १४-६-१७ (९२५०३)
राजन्नङ्गिरसः पुत्रः संवर्तो नाम धार्मिकः ।
चङ्क्रमीति दिशः सर्वा दिग्वासा मोहयन्प्रजाः ॥ १४-६-१८ (९२५०४)
तं गच्च यदि याज्यं त्वां न वाञ्छति बृहस्पतिः ।
प्रसन्नस्त्वां महातेजाः संवर्तो याजयिष्यति ॥ १४-६-१९ (९२५०५)

मरुत्त उवाच। १४-६-२०क्ष् (७७४३)
संजीवितोऽहं भवता वाक्येनानेन नारद ।
पश्येयं क्व नु संवर्तं शंस मे वदतांवर ॥ १४-६-२० (९२५०६)
कथं च तस्मै वर्तेयं कथं मां न परित्यजेत् ।
प्रत्याख्यातश्च तेनापि नाहं जीवितुमुत्सहे ॥ १४-६-२१ (९२५०७)
नारद उवाच। १४-६-२२क्ष् (७७४४)
उन्मत्तवेषं बिभ्रत्स चङ्क्रमीति यथासुखम् ।
वाराणसीं तु नगरीमभीक्ष्णमुपसेवते ॥ १४-६-२२ (९२५०८)
तस्या द्वारं समासाद्य न्यसेथाः कुणपं क्वचित् ।
तं दृष्ट्वा यो निवर्तेत संवर्तः स महीपते ॥ १४-६-२३ (९२५०९)
तं पृष्ठतोऽनुगच्छेथा यत्र गच्छेत्स वीर्यवान् ।
तमेकान्ते समासाद्य प्राञ्जलिः शरणं व्रजेः ॥ १४-६-२४ (९२५१०)
पृच्छेत्त्वां यदि केनाहं तवाख्यात इति स्म ह ।
ब्रूयास्त्वं नारदेनेति स कुत्र इति शत्रुहन् ॥ १४-६-२५ (९२५११)
स चेत्त्वामनुयुञ्जीत ममानुगमनेप्सया ।
शंसेथा वह्निमारूढं मामपि त्वमशङ्कया ॥ १४-६-२६ (९२५१२)
व्यास उवाच। १४-६-२७क्ष् (७७४५)
स तथेति प्रतिश्रुत्य पूजयित्वा च नारदम् ।
अभ्यनुज्ञाय राजर्षिर्ययौ वाराणसीं पुरीम् ॥ १४-६-२७ (९२५१३)
तत्र गत्वा यथोक्तं स पुर्या द्वारे महायशाः ।
कुणपं स्थापयामास नारदस्य वचः स्मरन् ॥ १४-६-२८ (९२५१४)
यौगपद्येनि विप्रश्च पुरीद्वारमथाविशत् ।
ततः स कुणपं दृष्ट्वा सहसा संन्यवर्तत ॥ १४-६-२९ (९२५१५)
स तं निवृत्तमालक्ष्य प्राञ्जलिः पृष्ठतोऽन्वगात् ।
आविक्षितो महीपालः संवर्तमुपशिक्षितुम् ॥ १४-६-३० (९२५१६)
स च तं विजने दृष्ट्वा पांसुभिः कर्दमेन च ।
श्लेष्मणा चैव राजानं ष्ठीवनैश्च समाकिरत् ॥ १४-६-३१ (९२५१७)
स तथा बाध्यमानो वै संवर्तेन महीपतिः ।
अन्वगादेव तमृषिं प्राञ्जलिः सम्प्रसादयन् ॥ १४-६-३२ (९२५१८)
ततो निवर्त्य संवर्तः परिश्रान्त उपाविशत् ।
शीतलच्छायमासाद्य न्यग्रोधं बहुशाखिनम् ॥ ॥ १४-६-३३ (९२५१९)

इति श्रीमन्महाभारते आश्वमेधिकपर्वणि अश्वमेधपर्वणि
षष्ठोऽध्यायः ॥ ६ ॥

Mahabharata - Ashvamedhika Parva - Chapter Footnotes

७-६-१३ मन्युं दैन्यम् ॥

---

अस्वमेधिकपर्व-अध्यय००७
॥ श्रीः ॥
१४.७. अध्यायः ७

अश्वमेधपर्व ॥ १ ॥
Mahabharata - Ashvamedhika Parva - Chapter Topics
संवर्तमरुत्तसंवादः ॥ १ ॥
संवर्तेन समयबन्धनपूर्वकं मरुत्तंप्रति याजनप्रतिज्ञानम् ॥ २ ॥

Mahabharata - Ashvamedhika Parva - Chapter Text

संवर्त उवाच ।
कथमस्मि त्वया ज्ञातः केन वा कथितोस्मि ते ।
एतदाचक्ष्व मे तत्त्वमिच्छसे चेन्मम प्रियम् ॥ १४-७-१ (९२५२०)
सत्यं ते ब्रुवतः सर्वे सम्पत्स्यन्ते मनोरथाः ।
मिथ्या च ब्रुवतो मूर्धा शतधा ते स्फुटिष्यति ॥ १४-७-२ (९२५२१)
मरुत्त उवाच। १४-७-३क्ष् (७७४६)
नारदेन भवान्मह्यमाख्यातो ह्यटता पथि ।
गुरुपुत्रो ममेति त्वं ततो मे प्रीतिरुत्तमा ॥ १४-७-३ (९२५२२)
संवर्त उवाच। १४-७-४क्ष् (७७४७)
सत्यमेतद्भवानाह स मां जानाति सत्रिणम् ।
कथयस्व तदेतन्मे क्वनु सम्प्रति नारदः ॥ १४-७-४ (९२५२३)
मरुत उवाच। १४-७-५क्ष् (७७४८)
भवन्तं कथयित्वा तु मम देवर्षिसत्तमः ।
ततो मामभ्यनुज्ञाय प्रविष्टो हव्यवाहनम् ॥ १४-७-५ (९२५२४)
व्यास उवाच। १४-७-६क्ष् (७७४९)
श्रुत्वा तु पार्थिवस्यैत्संवर्तः प्रमुदं गतः ।
एतावदहमप्येवं शक्नुयामिति सोऽब्रवीत् ॥ १४-७-६ (९२५२५)
ततो मरुत्तमुन्मत्तो वाचा निर्भर्त्सयन्निव ।
रूक्षया ब्राह्मणि राजन्पुनः पुनरथाब्रवीत् ॥ १४-७-७ (९२५२६)
वातप्रधानेन मया स्वचित्तवशवर्तिना ।
एवं विकृतरूपेण कथं याजितुमिच्छसि ॥ १४-७-८ (९२५२७)
भ्राता मम समर्थश्च वासवेन च सङ्गतः ।
वर्तते याजने चैव तेन कर्माणि कारय ॥ १४-७-९ (९२५२८)

गार्हस्थ्यं चैव याज्याश्च सर्वा गृह्याश्च देवताः ।
पूर्वजेन ममाक्षिप्तं शरीरं वर्जितं त्विदम् ॥ १४-७-१० (९२५२९)
नाहं तेनाननुज्ञातस्त्वामाविक्षित कर्हिचित् ।
याजयेयं कथंचिद्वै स हि पूज्यतमो मम ॥ १४-७-११ (९२५३०)
स त्वं बृहस्पतिं गच्च तमनुज्ञाप्य चाव्रज ।
ततोऽहं याजयिष्ये त्वां यदि यष्टुमिहेच्छसि ॥ १४-७-१२ (९२५३१)
मरुत्त उवाच। १४-७-१३क्ष् (७७५०)
बृहस्पतिं गतः पूर्वमहं संवर्ते तच्छृणु ।
न मां कामयते याज्यं मुनिर्वासववारितः ॥ १४-७-१३ (९२५३२)
अमरं याज्यमासाद्य याजयिष्ये न मानुषम् ।
शक्रेण प्रतिषिद्धोऽहं मरुत्तं मा स्म याजये ॥ १४-७-१४ (९२५३३)
स्पर्धते हि मया विप्र सदा हि स तु पार्थिवः ।
एवमस्त्विति चाप्युक्तो भ्रात्रा ते बलसूदनः ॥ १४-७-१५ (९२५३४)
स मामधिगतं प्रेम्णा याज्यत्वे न बुभूषति ।
देवराजं समाश्रित्य तद्विद्धि मुनिपुङ्गव ॥ १४-७-१६ (९२५३५)
सोहमिच्छामि भवता सर्वस्वेनापि याजितुम् ।
कामये समतिक्रान्तुं वासवं त्वत्कृतैर्गुणैः ॥ १४-७-१७ (९२५३६)
न हि मे वर्तते बुद्धिर्गन्तुं ब्रह्मन्बृहस्पतिम् ।
प्रत्याख्यातो हि तेनास्मि तथाऽनपकृते सति ॥ १४-७-१८ (९२५३७)
संवर्त उवाच। १४-७-१९क्ष् (७७५१)
चिकीर्षसि यथाकामं सर्वमेतत्त्वयि ध्रुवम् ।
यदि सर्वानभिप्रायान्कर्तासि मम पार्थिव ॥ १४-७-१९ (९२५३८)
याज्यमानं मया हि त्वां बृहस्पतिपुंरदरौ ।
द्विषेतां समभिक्रुद्धावेतदेकं समर्थये ॥ १४-७-२० (९२५३९)
स्थैर्यमत्र कथं मे स्यात्स त्वं निःसंशयं कुरु ।
कुपितस्त्वां न हीदानीं भस्म कुर्या सवान्धवम् ॥ १४-७-२१ (९२५४०)
मरुत्त उवाच। १४-७-२२क्ष् (७७५२)
यावत्तपेत्सहस्रांशुस्तिष्ठेरंश्चापि पर्वताः ।
तावल्लोकान्न लभेयं त्यजेयं सङ्गतं यदि ॥ १४-७-२२ (९२५४१)
मा चापि शुभबुद्धित्वं लभेयमिह कर्हिचित् ।
विषयैः सङ्गतं चास्तु त्यजेयं सङ्गतं यदि ॥ १४-७-२३ (९२५४२)
संवर्त उवाच। १४-७-२४क्ष् (७७५३)
आविक्षित शुभा बुद्धिर्वर्ततां तव कर्मसु ।
याजनं हि ममाप्येव वर्तते हृदि पार्थिव ॥ १४-७-२४ (९२५४३)
अभिधास्ते च ते राजन्नक्षयं द्रव्यमुत्तमम् ।
येन देवान्सगन्धर्वाञ्शक्रं चाभिभविष्यसि ॥ १४-७-२५ (९२५४४)

न तु मे वर्तते बुद्धिर्धने याज्येषु वा पुनः ।
विप्रियं तु करिष्यामि भ्रातुश्चेन्द्रस्य चोभयो ॥१४-७-२६ (९२५४५)
गमयिष्यामि शक्रेण समतामपि ते ध्रुवम् ।
प्रियं च ते करिष्यामि सत्यमेतद्ब्रवीमि ते ॥ ॥१४-७-२७ (९२५४६)

इति श्रीमन्महाभारते आश्वमेधिकपर्वणि अश्वमेधपर्वणि
सप्तमोऽध्यायः ॥ ७ ॥
Mahabharata - Ashvamedhika Parva - Chapter Footnotes

७-७-१ मे सत्यं जीवितं चेत्प्रियंतवेति क थ पाठः ॥
७-७-४ सत्रिणं कपटवेषच्छन्नम् ॥
७-७-६ अहमप्येनं कुर्यामिति तमब्रवीदिति क थ पाठः ॥
७-७-८ मधुप्रयोगदानेन स्वचित्तपरिवर्तिनेति क थ पाठः ॥
७-७-२३ भोगेषु सम्यग्भोगांश्च त्यजेयमिति क थ पाठः ॥

---

अस्वमेधिकपर्व-अध्यय००८
॥ श्रीः ॥
१४.८. अध्यायः ८

अश्वमेधपर्व ॥ १ ॥
Mahabharata - Ashvamedhika Parva - Chapter Topics
संवर्तेन मरुत्तंप्रति हिमवत्संनिहिते मुञ्जवतिगिरौ महादेवस्य
निवासकथनपूर्वकं स्वोक्तनामशतकेन स्तुत्या तत्प्रसादनेन यागाय
तन्नत्यबहुसुवर्णहरणचोदना ॥ १ ॥
संवर्तेनि तदाहरणेन शिल्पिभिर्यागोपयोगिभाण्डनिर्मापणम् ॥ २ ॥
इन्द्रेण तच्छ्रवणनिर्विण्णस्य बृहस्पतेः समीपं प्रत्यागमनम् ॥ ३ ॥

Mahabharata - Ashvamedhika Parva - Chapter Text

संवर्त उवाच ।
गिरेर्हिमवतः पृष्ठे मुञ्जवान्नाम पर्वतः ।
तप्यते यत्र भगवांस्तपो नित्यमुपापतिः ॥१४-८-१ (९२५४७)
वनस्पतीनां मूलेषु शृङ्गेषु विषमेषु च ।
गुहासु शैलराजस्य यथाकामं यथासुखम् ॥१४-८-२ (९२५४८)
उमासहायो भगवान्यत्र नित्यं महेश्वरः ।
आस्ते शूली महातेजा नानाभूतगणावृतः ॥१४-८-३ (९२५४९)

तत्र रुद्राश्च साध्याश्च विश्वेऽथ वसवस्तथा ।
यमश्च वरुणश्चैव कुबेरश्च सहानुगः ॥१४-८-४ (९२५५०)
भूतानि च पिशाचाश्च नासत्यावपि चाश्विनौ ।
गन्धर्वाप्सरसश्चैव यक्षा देवर्षयस्तथा ॥१४-८-५ (९२५५१)
आदित्या मरुतश्चैव यातुधानाश्च सर्वशः ।
उपासन्ते महात्मानं बहुरूपमुपापतिम् ॥१४-८-६ (९२५५२)
रमते भगवांस्तत्र कुबेरानुचरैः सह ।
विकृतैर्विकृताकारैः क्रीडद्भिः पृथिवीपते ॥१४-८-७ (९२५५३)
श्रिया ज्वलन्दृश्यते वै बालादित्यसमद्युतिः ।
न रूपं शक्यते तस्य संस्थानं वा कदाचन ।
निर्देष्टुं प्राणिभिः कैश्चित्प्राकृतैर्मांसलोचनैः ॥ १४-८-८ (९२५५४)
नोष्णं न शिशिरं तत्र न वायुर्न च भास्करः ।
न जारा क्षुत्पिपासे वा न मृत्युर्न भयं नृप ॥१४-८-९ (९२५५५)
तस्य शैलस्य पार्श्वेषु सर्वेषु जयतांवर ।
धातवो जातरूपस्य रश्मयः सवितुर्यथा ॥१४-८-१० (९२५५६)
रक्ष्यन्ते ते कुबेरस्य सहायैरुद्यतायुधैः ।
चिकीर्षद्भिः प्रियं राजन्कुबेरस्य महात्मनः ॥१४-८-११ (९२५५७)
ग्तत्र गत्वा समन्वास्य महायोगेश्वरं शिवम् ।
कुरु प्रणामं राजर्षे भक्त्या परमया यतुः ॥' १४-८-१२ (९२५५८)
तस्मै भगवते कृत्वा नमः शर्वाय वेधसे ।
गएभिस्तं नामभिर्देवं सर्वविद्याधरं स्तुहि ॥' १४-८-१३ (९२५५९)
रुद्राय शितिकण्ठाय सुरूपाय सुवर्चसे ।
कपर्दिने करालाय हर्यक्षणे वरदाय च ॥१४-८-१४ (९२५६०)
त्र्यक्षणे पूष्णो दन्तभिदे वामनाय शिवाय च ।
याम्यायाव्यक्तरूपाय सद्वृत्ते शङ्कराय च ॥१४-८-१५ (९२५६१)
क्षेम्याय हरिकेशाय स्थाणवे पुरुषाय च ।
हरिनेत्राय मुण्डाय क्रुद्धायोत्तरणाय च ॥१४-८-१६ (९२५६२)
भास्वराय सुतीर्थाय देवदेवाय रंहसे ।
उष्णीषिणे सुवक्त्राय सहस्राक्षाय मीढुषे ॥१४-८-१७ (९२५६३)
गिरिशाय प्राशान्ताय यतये चीरवाससे ।
बिल्वदण्डाय सिद्धाय सर्वदण्डधराय च ॥१४-८-१८ (९२५६४)
मृगव्याधाय महते धन्विनेऽथ भवाय च ।
वराय सोमवक्त्राय सिद्धमन्त्राय चक्षुषे ॥१४-८-१९ (९२५६५)
हिरण्यबाहवे राजन्नुग्राय पतये दिशाम् ।
लेलिहानाय गोष्टाय सिद्धमन्त्राय वृष्णये ॥१४-८-२० (९२५६६)
पशूनां पतये चैव भूतानां पतये नमः ।

वृषाय मातृभक्ताय सेनान्ये मध्यमाय च ॥१४-८-२१ (९२५६७)
ग्अभिवक्त्राय पतये सर्वदेवमयाय च।'
स्रुवहस्ताय पतये धन्विने भार्गवाय च ।
अजाय कृष्णनेत्राय विरूपाक्षाय चैव ह ॥ १४-८-२२ (९२५६८)
तीक्ष्णदंष्ट्राय तीक्ष्णाय वैश्वानरमुखाय च ।
महात्मने चानङ्गाय सर्वाय पतये विशाम् ॥१४-८-२३ (९२५६९)
ग्तथा रुद्राय पतये पृथवे कृत्तिवाससे।'
विलोहिताय दीप्ताय दीप्ताक्षाय महौजसे ।
वसुरेतःसुवपुषे पृथवे कृत्तिवाससे ॥ १४-८-२४ (९२५७०)
कपालमालिने चैव सुवर्णमुकुटाय च ।
महादेवाय कृष्णाय त्र्यम्बकायानघाय च ॥१४-८-२५ (९२५७१)
क्रोधनायानृशंसाय मृदवे बाहुशालिने ।
दण्डिने तप्ततपसे तथैवाक्रूरकर्मणे ॥१४-८-२६ (९२५७२)
सहस्रशिरसे चैव सहस्रचरणाय च ।
नमः स्वधास्वरूपाय बहुरूपाय दंष्ट्रिणे ॥१४-८-२७ (९२५७३)
पिनाकिनं महादेवं महाभोगिनमव्ययम् ।
त्रिशूलहस्तं वरदं त्र्यम्बकं भुवनेश्वरम् ॥१४-८-२८ (९२५७४)
त्रिपुरघ्नं त्रिनयनं त्रिलोकेशं महौजसम् ।
प्रभवं सर्वभूतानां दातारं धरणीधरम् ॥१४-८-२९ (९२५७५)
ईशानं शङ्करं सर्वं शिवं विश्वेश्वरं भवम् ।
उमापतिं पशुपतिं विश्वरूपं महेश्वरम् ॥१४-८-३० (९२५७६)
विरूपाक्षं दशभुजं विष्यन्दं गोवृषध्वजम् ।
उग्रं स्थाणुं शिवं रौद्रं शर्वं गौरीशमीश्वरम् ॥१४-८-३१ (९२५७७)
शितिकण्ठमजं शुक्रं पृथुं पृथुहरं वरम् ।
विश्वरूपं विरूपाक्षं बहुरूपमुपापतिम् ॥१४-८-३२ (९२५७८)
प्रणम्य शिरसा देवमनङ्गाङ्गहरं हरम् ।
शरण्यं शरणं याहि महादेवं चतुर्मुखम् ॥१४-८-३३ (९२५७९)
ग्विरोचमानं वपुषा दिव्याभरणभूषितम् ।
अनाद्यन्तमजं शंभुं सर्वव्यापिनमीश्वरम् ॥१४-८-३४ (९२५८०)
निस्त्रैगुण्यं निरुद्वेगं निर्मलं निधिमोजसाम् ।
प्रणम्य प्राञ्जलिः शर्वं प्रयामि शरणं हरम् ॥१४-८-३५ (९२५८१)
सम्मान्यं निश्चलं नित्यमकारुण्यमलेपनम् ।
अध्यात्मवेदमासाद्य प्रयामि शरणं मुहुः ॥१४-८-३६ (९२५८२)
यस्य नित्यं विदुः स्थानं मोक्षमध्यात्मचिन्तकाः ।
योगीशं तत्वमार्गस्थाः कैवल्यं पदमक्षरम् ॥१४-८-३७ (९२५८३)
यं विदुः सङ्गिनं मुक्ताः सामान्यं समदर्शिनः ।

तं प्रपद्ये जगद्योनिमयोनिं निर्गुणात्मकम् ॥१४-८-३८ (९२५८४)
असृजद्यस्तु भूतादीन्सप्त लोकान्सनातनान् ।
स्थितः सत्योपरि स्थाणुस्तं प्रपद्ये सनातनम् ॥१४-८-३९ (९२५८५)
भक्तानां सुलभं तं हि दुर्लभं दूरपातिनाम् ।
अदूरस्थममुं देवं प्रकृतेः परतः स्थितम् ॥१४-८-४० (९२५८६)
नमामि सर्वलोकस्थं व्रजामि शरणं शिवम्।'
एवं कृत्वा नमस्तस्मै महादेवाय रंहसे ।
महात्मने क्षितिपते तत्सुवर्णमवाप्स्यसि ॥ १४-८-४१ (९२५८७)
ग्लभन्ते गाणपत्यं च तदेकाग्रा हि मानवाः ।
किं पुनः स्वर्णिभाण्डानि तस्मात्त्वं गच्छ मा चिरं ॥१४-८-४२ (९२५८८)
महत्तरं हि ते लाभं हस्त्यश्वोष्ट्रादिभिः सह।'
सुवर्णमाहरिष्यन्तस्तत्र गच्छन्तु ते नराः ॥ १४-८-४३ (९२५८९)
व्यास उवाच।१४-८-४४क्ष् (७७५४)
इत्युक्तः स वचस्तस्य चक्रे कारन्धमात्मजः ।
ग्गङ्गाधरं नमस्कृत्य लब्धवान्धनमुत्तमम् ॥१४-८-४४ (९२५९०)
कुबेर इव तत्प्राप्य महादेवप्रसादतः।'
ततोऽतिमानुषं सर्वं चक्रे यज्ञस्य संविधिम् ॥ १४-८-४५ (९२५९१)
सौवर्णानि च भाण्डानि संचक्रुस्तत्र शिल्पिनः ।
ग्शालाश्च सर्वसम्भारांस्तत्र संवर्तशासनात् ॥' १४-८-४६ (९२५९२)
बृहस्पतिस्तु तां श्रुत्वा मरुत्तस्य महीपतेः ।
समृद्धिमति देवेभ्यः सन्तापमकरोद्भृशम् ॥१४-८-४७ (९२५९३)
सन्तप्यमानो वैवर्ण्यं कृशत्वं चागमत्परम् ।
भविष्यति हि मे शत्रुः संवर्तो वसुमानिति ॥१४-८-४८ (९२५९४)
तं श्रुत्वा भृशसंतप्तं देवराजो बृहस्पतिम् ।
अभिगम्यामरवृतः प्रोवाचेदं वचस्तदा ॥ ॥१४-८-४९ (९२५९५)

इति श्रीमन्महाभारते आश्वमेधिकपर्वणि अश्वमेधपर्वणि
अष्टमोऽध्यायः ॥ ८ ॥

---

अस्वमेधिकपर्व-अध्यय००९
॥ श्रीः ॥
१४.९. अध्यायः ९

अश्वमेधपर्व ॥ १ ॥
Mahabharata - Ashvamedhika Parva - Chapter Topics
बृहस्पतिना इन्द्रंप्रति स्वानुजेन संवर्तेन मरुत्तस्य

याजनकथनपूर्वकं तद्विघटनचोदना ॥ १ ॥
अग्निना मरुत्तमेत्य याजनाय बृहस्पतिस्वीकरणरूपेन्द्रसन्देशकथनम्
॥ २ ॥
तथा पुनरिन्द्रमेत्य मरुत्तेन स्वसंदेशापरिग्रहणनिवेदनम् ॥ ३ ॥
तथा इन्द्रेण पुनर्मरुत्ते स्वसन्देशनिवेदनचोदने
संवर्ततपोभयात्तदनङ्गीकरणम् ॥ ४ ॥

Mahabharata - Ashvamedhika Parva - Chapter Text

इन्द्र उवाच ।
कच्चित्सुखं स्वपिषि त्वं बृहस्पते
कच्चिन्मनोज्ञाः परिचारकास्ते ।
कच्चिद्देवानां सुखकामोसि विप्र
कच्चिद्देवास्त्वां परिपालयन्ति ॥ १४-९-१ (९२५९६)
बृहस्पतिरुवाच।१४-९-२क्ष् (७७५५)
सुखं शये शयने देवराज
तथा मनोज्ञाः परिचारका मे ।
तथा देवानां सुखकामोस्मि नित्यं
देवाश्च मां सुभृशं पालयन्ति ॥ १४-९-२ (९२५९७)
इन्द्र उवाच।१४-९-३क्ष् (७७५६)
कुतो दुःखं मानसं देहजं वा
पाण्डुर्विवर्णश्च कुतस्त्वमद्य ।
आचक्ष्व मे ब्राह्मण यावदेता-
न्निहन्मि सर्वांस्तव दुःखकर्तॄन् ॥ १४-९-३ (९२५९८)
बृहस्पतिरुवाच।१४-९-४क्ष् (७७५७)
मरुत्तमाहुर्मघवन्यक्ष्यमाणं
महायज्ञेनोत्तमदक्षिणेन ।
संवर्तो याजयतीति मे श्रुतं
तदिच्छामि न स तं याजयेत् ॥ १४-९-४ (९२५९९)
इन्द्र उवाच।१४-९-५क्ष् (७७५८)
सर्वान्कामाननुयातोसि विप्र
त्वं देवानां मन्त्रयसे पुरोधाः ।
उभौ च ते जरामृत्यू व्यतीतौ
किं संवर्तस्तव कर्ताऽद्य विप्र ॥ १४-९-५ (९२६००)
बृहस्पतिरुवाच।१४-९-६क्ष् (७७५९)
देवैः सह त्वमसुरान्सम्प्रणुद्य

जिघांससे चाप्युत सानुबन्धान् ।
यंयं समृद्धं पश्यसि तत्रतत्र
दुःखं सपत्नेषु समृद्धिभावः ॥ १४-९-६ (९२६०१)
अतोस्मि देवेन्द्र विवर्णरूपः
सपत्नो मे वर्धते तन्निशम्य ।
सर्वोपायैर्मघवन्संनियच्छ
संवर्तं वा पार्थिवं वा मरुत्तम् ॥ १४-९-७ (९२६०२)
इन्द्र उवाच। १४-९-८क्ष् (७७६०)
एहि गच्छ प्रहितो जातवेदो
बृहस्पतिं परिदातुं मरुत्ते ।
अयं वै त्वां याजयिता बृहस्पति-
स्तथाऽमरं चैव करिष्यतीति ॥ १४-९-८ (९२६०३)
अग्निरुवाच। १४-९-९क्ष् (७७६१)
अहं गच्छामि तव शक्राद्य दूतो
बृहस्पतिं परिदातुं मरुत्ते ।
वाचं सत्यां पुरुहूतस्य कर्तुं
बृहस्पतेश्चापचितिं चिकीर्षुः ॥ १४-९-९ (९२६०४)
व्यास उवाच। १४-९-१०क्ष् (७७६२)
ततः प्रायाद्धूमकेतुर्महात्मा
वनस्पतीन्वीरुधश्चावमृद्नन् ।
कामाद्धिमान्ते परिवर्तमानः
काष्ठातिगो मातरिश्वेव नर्दन् ॥ १४-९-१० (९२६०५)
मरुत उवाच। १४-९-११क्ष् (७७६३)
आश्चर्यमद्य पश्यामि रूपिणं वह्निमागतम् ।
आसनं सलिलं पाद्यं गां चोपानय वै मुने ॥ १४-९-११ (९२६०६)
अग्निरुवाच। १४-९-१२क्ष् (७७६४)
आसनं सलिलं पाद्यं प्रतिनन्दामि तेऽनघ ।
इन्द्रेण तु समादिष्टं विद्धि मां दूतमागतम् ॥ १४-९-१२ (९२६०७)
मरुत उवाच। १४-९-१३क्ष् (७७६५)
कच्चिच्छ्रीमान्देवराजः सुखी च
कच्चिच्चास्मान्प्रीयते धूमकेतो ।
कच्चिद्देवा अस्य वशे यथाव-
त्प्रब्रूहि त्वं मम कार्त्स्न्येन देव ॥ १४-९-१३ (९२६०८)
अग्निरुवाच। १४-९-१४क्ष् (७७६६)
शक्रो भृशं सुसुखी पार्थिवेन्द्र
प्रातिं चेच्छत्यजरां वै त्वया सः ।

देवाश्च सर्वे वशगास्तस्य राज-
न्संदेशं त्वं शृणु मे देवराज्ञः ॥ १४-९-१४ (९२६०९)
यदर्थं मां प्राहिणोत्त्वत्सकाशं
बृहस्पतिं परिदातुं मरुत्ते ।
अयं गुरुर्याजयतां नृप त्वां
मर्त्यं सन्तममरं त्वां करोतु ॥ १४-९-१५ (९२६१०)
मरुत उवाच।१४-९-१६क्ष् (७७६७)
संवर्तोऽयं याजयिता द्विजो मां
बृहस्पतेरञ्जलिरेष तस्य ।
न चैवासौ याजयित्वा महेन्द्रं
मर्त्यं सन्तं याजयन्नद्य शोभेत् ॥ १४-९-१६ (९२६११)
अग्निरुवाच।१४-९-१७क्ष् (७७६८)
ये वै लोका देवलोके महान्तः
सम्प्राप्स्यसे तान्देवराजप्रसादात् ।
त्वां चेदसौ याजयेद्वै बृहस्पति-
र्नूनं स्वर्गं त्वं जयेः कीर्तियुक्तः ॥ १४-९-१७ (९२६१२)
तथा लोका मानुषा ये च दिव्याः
प्रजापतेश्चापि ये वै महान्तः ।
तेते जिता देवराज्यं च कृत्स्नं
बृहस्पतिर्याजयेच्चेन्नरेन्द्र ॥ १४-९-१८ (९२६१३)
संवर्त उवाच।१४-९-१९क्ष् (७७६९)
मा स्मैव त्वं पुनरागाः कथंचि-
द्बृहस्पतिं परिदातुं मरुत्ते ।
मा त्वां धक्ष्ये चक्षुषा दारुणेन
संक्रुद्धोऽहं पावक त्वं निबोधः ॥ १४-९-१९ (९२६१४)
व्यास उवाच।१४-९-२०क्ष् (७७७०)
ततो देवानगमद्धूमकेतु-
र्दाहाद्भीतो व्यथितोऽश्वत्थपर्णवत् ।
तं वै दृष्ट्वा प्राह शक्रो महात्मा
बृहस्पतेः सन्निधौ हव्यवाहम् ॥ १४-९-२० (९२६१५)
यस्त्वं गतः प्रहितो जातवेदो
बृहस्पतिं परिदातुं मरुत्ते ।
तत्किं प्राह स नृपो यक्ष्यमाणः
कच्चिद्वचः प्रतिगृह्णाति तच्च। १४-९-२१ (९२६१६)
अग्निरुवाच।१४-९-२२क्ष् (७७७१)
न ते वाचं रोचयते मरुत्तो

बृहस्पतेरञ्जलिं प्राहिणोत्सः ।
संवर्तो मां याजयितेत्युवाच
पुनः पुनः स मया याच्यमानः ॥ १४-९-२२ (९२६१७)
उवाचेदं मानुषा ये च दिव्या ।
प्रजापतेर्ये च लोका महान्तः ।
तांश्चेल्लभेयं संविदं तेन कृत्वा
तथापि नेच्छेयमिति प्रतीतः ॥ १४-९-२३ (९२६१८)
इन्द्र उवाच।१४-९-२४क्ष् (७७७२)
पुनर्गत्वा पार्थिवं त्वं समेत्य
वाक्यं मदीयं प्रापय स्वार्थयुक्तम् ।
पुनर्यद्युक्तो न करिष्यते वच-
स्त्वत्तो वज्रं सम्प्रहर्तास्मि तस्मै ॥ १४-९-२४ (९२६१९)
अग्निरुवाच।१४-९-२५क्ष् (७७७३)
गन्धर्वराड्यात्वयं तत्र दूतो
बिभेम्यहं वासव तत्र गन्तुम् ।
संरब्धो मामब्रवीत्तीक्ष्णरोषः
संवर्तो वाक्यं चरितब्रह्मचर्यः ॥ १४-९-२५ (९२६२०)
यद्यागच्छेः पुनरेवं कथंचि-
द्बृहस्पतिं परिदातुं मरुत्ते ।
दहेयं त्वां चक्षुषा दारुणेन
संक्रुद्ध इत्येतदवैहि शक्र ॥ १४-९-२६ (९२६२१)
शक्र उवाच।१४-९-२७क्ष् (७७७४)
त्वमेवान्यान्दहसे जातवेदो
न हि त्वदन्यो विद्यते भस्मकर्ता ।
त्वत्संस्पर्शात्सर्वलोको बिभेति
अश्रद्धेयं वदसे हव्यवाह ॥ १४-९-२७ (९२६२२)
अग्निरुवाच।१४-९-२८क्ष् (७७७५)
दिवं देवेन्द्र पृथिवीं च सर्वां
संवेष्टयेस्त्वं स्वबलेनैव शक्र ।
एवंविधस्येह सतस्तवासौ
कथं वृत्रस्त्रिदिवं प्राग्जहार ॥ १४-९-२८ (९२६२३)
इन्द्र उवाच।१४-९-२९क्ष् (७७७६)
नगण्डिकाकारयोगं करेऽणुं
न चारिसोमं प्रपिबामि वह्ने ।
न क्षीणशक्तौ प्रहारामि वज्रं
को मे सुखाय प्रहरेत मर्त्यः ॥ १४-९-२९ (९२६२४)

प्रव्रजयेयं कालकेयान्पृथिव्या-
मपाकर्षन्दानवानन्तरिक्षात् ।
दिवः प्रह्लादमवसानमानयं
को मेऽसुखाय प्रहरेत मानवः ॥ १४-९-३० (९२६२५)
अग्निरुवाच।१४-९-३१क्ष् (७७७७)
यत्र शर्यातिं च्यवनो याजयिष्य-
न्सहाश्विभ्यां सोममगृह्णदेकः ।
तं त्वं क्रुद्धः प्रत्यषेधीः पुरस्ता-
च्छर्यातियज्ञं स्म तं महेन्द्र ॥ १४-९-३१ (९२६२६)
वज्रं गृहीत्वा च पुरन्दर त्वं
सम्प्राहार्षीश्च्यवनस्यातिघोरम् ।
स ते विप्रः सह वज्रेणि बाहु-
मपागृह्णात्तपसा जातमन्युः ॥ १४-९-३२ (९२६२७)
ततो रोषात्सर्वतो घोररूपं
सपत्नं ते जनयामास भूयः ।
मदं नाम्ना चासुरं विश्वरूपं
यं त्वं दृष्ट्वा चक्षुषी संन्यमीलः ॥ १४-९-३३ (९२६२८)
हनुरेका जगतीस्था तथैका
दिवं गता महतो दानवस्य ।
सहस्रं दन्तानां शतयोजनानां
सुतीक्ष्णानां घोररूपं बभूव ॥ १४-९-३४ (९२६२९)
वृत्ताः स्थूला रजतस्तम्भवर्णा
दंष्ट्राश्चतस्रो द्वे शते योजनानाम् ।
स त्वां दन्तान्विदशन्नभ्यधाव-
ज्जिघांसया शूलमुद्यम्य घोरम् ॥ १४-९-३५ (९२६३०)
तं नापश्यस्त्वं तदा घोररूपं
सर्वे वै त्वां ददृशुर्दर्शनीयम् ।
यस्माद्भीतः प्राञ्जलिस्त्वं महर्षि-
मागच्छेथाः शरणं दानवघ्न ॥ १४-९-३६ (९२६३१)
क्षात्राद्बलाद्ब्रह्मबलं गरीयो
न ब्रह्मतः किञ्चिदन्यद्गरीयः ।
सोहं जानन्ब्रह्मतेजो यथाव-
न्न संवर्त गन्तुमिच्छामि शक्र ॥ ॥ १४-९-३७ (९२६३२)

इति श्रीमन्महाभारते आश्वमेधिकपर्वणि अश्वमेधपर्वणि
नवमोऽध्यायः ॥ ९ ॥

७-९-२९ नाहं दौर्बल्याद्वृत्रेण जित इति वक्तं स्वसामर्थ्यमिन्द्रो वह्निप्रति वदति नगण्डिकाकारयोगं करेणुम् । नगं पर्वतं डीयते विहायसा गच्छतीति डीः पक्षी अल्पो डीर्डिका मक्षिकामशकादिस्तस्या आकारेण योगोस्यास्तीत्येवंरूपं अणुं सूक्ष्मं करेकुर्वे। कृञश्छान्दसं भौवादिकत्वम्। करेणेतिपाठे करोमीत्यध्याहारः। पार्थोधिं करे कर्तुमगस्त्य इवाहं पर्वतमपि मशकीकर्तुं समर्थोस्मीत्यर्थः। कुतस्तर्हि वृत्रस्त्वां नाराधितवानित्यत आह न चारिसोमं प्रपिबामि वह्ने। अरिसोमं शत्रुदत्तं सोमम्। त्वयैव स कुती न निर्जित इत्यत आह न क्षीणशक्तौ प्रहरामि वज्रमित्यादिना न दण्डकान्नारकान्नो कलिङ्गान्न करूशान्सोमं प्रपिबामि वह्ने। न दुर्बलायावसृजामि वज्रं को मे सुखी यः प्रहरेन्मनुष्यः इति क थ पाठः ॥

---

अस्वमेधिकपर्व-अध्यय०१०

॥ श्रीः ॥

१४.१०. अध्यायः १०

अश्वमेधपर्व ॥ १ ॥

Mahabharata - Ashvamedhika Parva - Chapter Topics

इन्द्रण गन्धर्वमुखात्स्वेन याजनाय बृहस्पतिवरणं चोदितेनापि मरुत्तेन तदनङ्गीकारे यज्ञविघाताय साटोपं यज्ञवाटं प्रत्यागमनम् ॥ १ ॥

संवर्तेन मरुत्तप्रार्थनया विद्याबलेनेन्द्रादीनां संस्तम्भनम् ॥ २ ॥

ततः संवर्तानुवर्तिनेन्द्रेण सभानिर्मापणादिना यज्ञनिर्वर्तनपूर्वकं देवैः सह हविर्ग्रहणम् ॥ ३ ॥

व्यासेनैव युधिष्ठिरंप्रति मरुत्तयज्ञप्रवृत्तिप्रकारकथनपूर्वकं तच्छिष्टद्रव्याहरमएनाश्वमेधकरणविधानम् ॥ ४ ॥

Mahabharata - Ashvamedhika Parva - Chapter Text

इन्द्र उवाच ।

एवमेतद्ब्रह्मबलं गरीयो

न ब्राह्मणात्किञ्चिदन्यद्गरीयः ।

आविक्षितस्य तु बलं न मृष्ये
वज्रमस्मै प्रहरिष्यामि घोरम् ॥ १४-१०-१ (९२६३३)
धृतराष्ट्र गच्छ प्रहितो मरुत्तं
संवर्तेन सङ्गतं तं वदस्व
बृहस्पतिं त्वमुपशिक्षस्व राज-
न्वज्रं वा ते प्रहरिष्यामि घोरम् ॥ १४-१०-२ (९२६३४)
व्यास उवाच। १४-१०-३क्ष् (७७७८)
ततो गत्वा धृतराष्ट्रो नरेन्द्रं
प्रोवाचेदं वचनं वासवस्य ॥ १४-१०-३ (९२६३५)
गन्धर्वं मां धृतराष्ट्रं निबोध
त्वामागतं वक्तुकामं नरेन्द्र ।
ऐन्द्रं वाक्यं शृणु मे राजसिंह
यत्प्राह लोकाधिपतिर्महात्मा ॥ १४-१०-४ (९२६३६)
बृहस्पतिं याजकं त्वं वृणीष्व
वज्रं वा ते प्रहरिष्यामि घोरम् ।
वचश्चेदेतन्न करिष्यसे मे
प्राहैतदेतावदचिन्त्यकर्मा ॥ १४-१०-५ (९२६३७)
मरुत्त उवाच। १४-१०-६क्ष् (७७७९)
त्वं चैवैतद्वेत्थ पुरन्दरश्च
विश्वेदेवा वसवश्चाश्विनौ च ।
मित्रद्रोहे निष्कृतिर्नास्ति लोके
महत्पापं ब्रह्महत्यासमं तत् ॥ १४-१०-६ (९२६३८)
बृहस्पतिर्याजयतां महेन्द्रं
देवश्रेष्ठं वज्रभृतां वरिष्ठम् ।
संवर्तो मां याजयिताऽद्य राज-
न्न ते वाक्यं तस्य वा रोचयामि ॥ १४-१०-७ (९२६३९)
गन्धर्व उवाच। १४-१०-८क्ष् (७७८०)
घोरो नादः श्रूयतां वासवस्य
नभस्तले गर्जतो राजसिंह ।
व्यक्तं वज्रं मोक्ष्यते ते महेन्द्रः
क्षेमं राजंश्चिन्त्यतामेष कालः ॥ १४-१०-८ (९२६४०)
व्यास उवाच। १४-१०-९क्ष् (७७८१)
इत्येवमुक्तो धृतराष्ट्रेण राज-
ञ्श्रुत्वा नादं नदतो वासवस्य ।
तपोनित्यं धर्मविदां वरिष्ठं
संवर्तं तं ज्ञापयामास कार्यम् ॥ १४-१०-९ (९२६४१)

मरुत्त उवाच। १४-१०-१०क्ष् (७७८२)
पश्यात्मानं प्लवमानं त्वमारा-
दध्वा दूरं तेन न दृश्यतेऽद्य ।
प्रपद्येऽहं शर्म विप्रेन्द्र त्वत्तः
प्रयच्छ तस्मादभयं विप्रमुख्य ॥ १४-१०-१० (९२६४२)
अयमायाति वे वज्री दिशो विद्योतयन्दस ।
अमानुषेण घोरेणि सदस्यास्त्रासिता हि नः ॥१४-१०-११ (९२६४३)
संवर्त उवाच। १४-१०-१२क्ष् (७७८३)
भयं शक्राद्व्येतु ते राजसिंह
प्रणोत्स्येऽहं भयमेतत्सुघोरम् ।
संस्तम्भिन्या विद्यया क्षिप्रमेव
मा भैस्त्वमस्याभिभवात्प्रतीतः ॥ १४-१०-१२ (९२६४४)
अहं संस्तम्भयिष्यामि मा भैस्त्वं शक्रतो नृप ।
यर्वेषामेव देवानां क्षयितान्यायुधानि मे ॥१४-१०-१३ (९२६४५)
दिशो वज्रं व्रजतां वायुरेतु
वर्षं भूत्वा वर्षतां काननेषु ।
आपः प्लवन्त्वन्तरिक्षे वृथा च
सौदामनी दृश्यते माऽपि भैस्त्वम् ॥ १४-१०-१४ (९२६४६)
वह्निर्देवस्त्रातु वा सर्वतस्ते
कामान्सर्वान्वर्षतु वासवो वा ।
वज्रं तथा स्थापयतां वधाय
महाघोरं पुवमानं जलौघैः ॥ १४-१०-१५ (९२६४७)
मरुत्त उवाच। १४-१०-१६क्ष् (७७८४)
घोरः शब्दः श्रूयते वै महास्वनो
वज्रस्यैष सहितो मारुतेन ।
आत्मा हि मे प्रव्यथते मुहुर्मुहु-
र्न मे स्वास्थ्यं जायते चाद्य विप्र ॥ १४-१०-१६ (९२६४८)
संवर्त उवाच। १४-१०-१७क्ष् (७७८५)
वज्रादुग्राद्व्येतु भयं तवाद्य
वातो भूत्वा व्रजतु नरेन्द्र वज्रम् ।
भयं त्वक्त्वा वरमन्यं वृणीष्व
कं ते कामं तपसा साधयामि ॥ १४-१०-१७ (९२६४९)
मरुत्त उवाच। १४-१०-१८क्ष् (७७८६)
इन्द्रः साक्षात्सहसाऽभ्येतु विप्र
हविर्यज्ञे प्रतिगृह्णातु चैव ।
स्वंस्वं हविश्चैव जुषन्तु देवा

हुतं सोमं प्रतिगृह्णन्तु चैव ॥ १४-१०-१८ (९२६५०)
संवर्त उवाच।१४-१०-१९क्ष् (७७८७)
अयमिन्द्रो हरिभिरायाति राज-
न्देवैः सर्वैस्त्वरितैः स्तूयमानः ।
मन्त्राहूतो यज्ञमिमं मयाऽद्य
पश्यस्वैनं मन्त्रविस्रस्तकायम् ॥ १४-१०-१९ (९२६५१)
व्यास उवाच।१४-१०-२०क्ष् (७७८८)
ततो देवैः सहितो देवराजो
रथे युङ्क्त्वा तान्हरीन्वाजिमुख्यान् ।
आयाद्यज्ञमथ राज्ञः पिपासु-
राविक्षितस्याप्रमेयस्य सोमम् ॥ १४-१०-२० (९२६५२)
तमायान्तं सहितं देवसङ्घैः
प्रत्युद्ययौ सपुरोधा मरुत्तः ।
चक्रे पूजां देवराजाय चाग्र्यां
यथाशास्त्रं विधिवत्प्रीयमाणः ॥ १४-१०-२१ (९२६५३)
संवर्त उवाच।१४-१०-२२क्ष् (७७८९)
सुस्वागतं ते पुरुहूतेह विद्व-
न्यज्ञोऽप्ययं सन्निहिते त्वयीन्द्र ।
शोशुभ्यते बलवृत्रघ्न भूयः
पिबस्व सोमं सुतमुद्यतं मया ॥ १४-१०-२२ (९२६५४)
मरुत्त उवाच।१४-१०-२३क्ष् (७७९०)
शिवेन मां पश्य नमश्च तेऽस्तु
प्राप्तो यज्ञः सफलं जीवितं मे ।
अयं यज्ञं कुरुते मे सुरेन्द्र
बृहस्पतेरवरो जन्मना च। १४-१०-२३ (९२६५५)
इन्द्र उवाच।१४-१०-२४क्ष् (७७९१)
जानामि ते गुरुमेनं तपोधनं
बृहस्पतेरनुजं तिग्मतेजसम्
यस्याह्वानादागतोऽहं नरेन्द्र
प्रीतिर्मेऽद्य त्वयि मन्युः प्रनष्टः ॥ १४-१०-२४ (९२६५६)
संवर्त उवाच।१४-१०-२५क्ष् (७७९२)
यदि प्रीतस्त्वमसि वै देवराज
तस्मात्स्वयं शाधि यज्ञे विधानम् ।
स्वयं सर्वान्कुरु भागान्सुरेन्द्र
जानात्वयं सर्वलोकश्च देव ॥ १४-१०-२५ (९२६५७)
व्यास उवाच।१४-१०-२६क्ष् (७७९३)

एवमुक्तस्त्वाङ्गिरसेन शक्रः
समादिदेश स्वयमेव देवान् ।
सभाः क्रियन्तामावसथाश्च मुख्याः
सहस्रशश्चित्रभूताः समृद्धाः ॥ १४-१०-२६ (९२६५८)
क्लृप्ताः स्थूणाः कुरुतारोहणानि
गन्धर्वाणामप्सरसां च शीघ्रम् ।
यत्र नृत्येरन्नप्सरसः समस्ताः
स्वर्गोपमः क्रियतां यज्ञवाटः ॥ १४-१०-२७ (९२६५९)
इत्युक्तास्ते चक्रुराशु प्रतीता
दिवौकसः शक्रवाक्यान्नरेन्द्र ।
ततो वाक्यं प्राह राजानमिन्द्रः
प्रीतो राजन्पूज्यमानो मरुत्तम् ॥ १४-१०-२८ (९२६६०)
एष त्वयाऽहमिह राजन्समेत्य
ये चाप्यन्ते तव पूर्वे नरेन्द्र ।
सर्वाश्चान्या देवताः प्रीयमाणा
हविस्तुभ्यं प्रतिगृह्णन्तु राजन् ॥ १४-१०-२९ (९२६६१)
आग्नेयं वै लोहितमालभन्तां
वैश्वदेवं बहुरूपं हि राजन् ।
निलं चोक्षाणं मेद्यमप्यालभन्तां
चलच्छिश्नं सम्प्रदिष्टं द्विजाग्र्याः ॥ १४-१०-३० (९२६६२)
ततो यज्ञो ववृधे तस्य राज-
न्यत्र देवाः स्वयमन्नानि जह्रुः ।
यस्मिञ्शक्रो ब्राह्मणैः पूज्यमानः
सदस्योऽभूद्धरिमान्देवराजः ॥ १४-१०-३१ (९२६६३)
ततः संवर्तश्चैत्यगतो माहात्मा
यथा वह्निः प्रज्वलितो द्वितीयः ।
हवींष्युच्चैराह्वयन्देवसङ्घा-
ञ्जुहावाग्नौ मन्त्रवत्सुप्रतीतः ॥ १४-१०-३२ (९२६६४)
ततः पीत्वा बलभित्सोममग्र्यं
ये चाप्यन्ते सोमपा देवसङ्घाः ।
सर्वेऽनुज्ञाताः प्रययुः पार्थिवेन
यथाजोषं तर्पिताः प्रीतिमन्तः ॥ १४-१०-३३ (९२६६५)
ततो राजा जातरूपस्य राशी-
न्पदेपदे कारयामास हृष्टः ।
द्विजातिभ्यो विसृजन्भूरि वित्तं
रराज वित्तेश इवारिहन्ता ॥ १४-१०-३४ (९२६६६)

ततो वित्तं विविधं सन्निधाय
यथोत्साहं कारयित्वा च कोशम् ।
अनुज्ञातो गुरुणां संनिवृत्त्य
शशास गामखिलां सागरान्ताम् ॥ १४-१०-३५ (९२६६७)
एवंगुणः सम्बभूवेह राजा
यस्य क्रतौ तत्सुवर्णं प्रभूतम् ।
तत्त्वं समादाय नरेन्द्र वित्तं
यजस्व देवांस्तपनीयैर्विधानैः ॥ १४-१०-३६ (९२६६८)
वैशम्पायन उवाच।१४-१०-३७क्ष् (७७९४)
ततो राजा पाण्डवो हृष्टरूपः
श्रुत्वा वाक्यं सत्यवत्याः सुतस्य ।
मनश्चक्रे तेन वित्तेन यष्टुं
ततोऽमात्यैर्मन्त्रयामास भूयः ॥ ॥ १४-१०-३७ (९२६६९)

इति श्रीमन्महाभारते आश्वमेधिकपर्वणि अश्वमेधपर्वणि
दशमोऽध्यायः ॥१० ॥
Mahabharata - Ashvamedhika Parva - Chapter Footnotes

७-१०-६ मित्रद्रोहे निष्कृतिर्वै यथेह नास्तीति सदैववाद इति
क ट थ पाठः ॥
७-१०-८ क्षमं राजन्निति क ट थ पाठः ॥
७-१०-१० विलोभ्यि च्छित्त्वा मत्प्रतिष्ठा द्विनेन्द्राः इति क ट थ ॥।

---

अस्वमेधिकपर्व-अध्यय०११
॥ श्रीः ॥
१४.११. अध्यायः ११

अश्वमेधपर्व ॥१ ॥
Mahabharata - Ashvamedhika Parva - Chapter Topics
कृष्णेन युधिष्ठिरंप्रति इन्द्रवृत्रासुरयुद्धप्रकारकथनम् ॥१ ॥

Mahabharata - Ashvamedhika Parva - Chapter Text

वैशम्पायन उवाच ।
इत्युक्ते नृपतौ तस्मिन्व्यासेनाद्भुतकर्मणा ।
वासुदेवो महातेजास्ततो वचनमाददे ॥१४-११-१ (९२६७०)

तं नृपं दीनमनसं निहतज्ञातिबान्धवम् ।
उपप्लुतमिवादित्यं सधूममिव पावकम् ॥१४-११-२ (९२६७१)
निर्विण्णमनसं पार्थं ज्ञात्वा वृष्णिकुलोद्वहः ।
आश्वासनन्धर्मसुतं प्रवक्तुमुपचक्रमे ॥१४-११-३ (९२६७२)
वासुदेव उवाच।१४-११-४क्ष् (७७९५)
सर्वं जिह्मं मृत्युपदमजिह्मं ब्रह्मणः पदम् ।
एतावान्ज्ञानविषयः किं प्रलापः करिष्यति ॥१४-११-४ (९२६७३)
नैव तेऽनुष्ठितं कर्म नैव ते शत्रवो जिताः ।
कथं शत्रुं शरीरस्तमात्मनो नावबुध्यसे ॥१४-११-५ (९२६७४)
अत्र ते वर्तयिष्यामि यथाधर्मं यथाश्रुतम् ।
इन्द्रस्य सह वृत्रेण यथा युद्धमवर्तत ॥१४-११-६ (९२६७५)
वृत्रेण पृथिवी व्याप्ता पुरा किल नराधिप ।
दृष्ट्वा स पृथिवीं व्याप्तां गन्धस्य विषये हृते ।
धराहरणदुर्गन्धो विषयः समपद्यत ॥ १४-११-७ (९२६७६)
शतक्रतुश्चुकोपाथ गन्धस्य विषये हृते ।
वृत्रस्य सततः क्रुद्धो घोरं वज्रमवासृजत् ॥१४-११-८ (९२६७७)
स वध्यमानो वज्रेण सुभृशं भूरितेजसा ।
विवेश सहसा तोयं जग्राह विषयं ततः ॥१४-११-९ (९२६७८)
अप्सु वृत्रगृहीतासु रसे च विषये हृते ।
शतक्रतुरतिक्रुद्धस्तत्र वज्रमवासृजत् ॥१४-११-१० (९२६७९)
स वध्यमानो वज्रेण तस्मिन्नमिततेजसा ।
विवेश सहसा ज्योतिर्जग्राह विषयं ततः ॥१४-११-११ (९२६८०)
व्याप्ते ज्योतिषि वृत्रेण रूपेऽथ विषये हृते ।
शतक्रतुरतिक्रुद्धस्तत्र वज्रमवासृजत् ॥१४-११-१२ (९२६८१)
स वद्यमानो वज्रेण तस्मिन्नमिततेजसा ।
विवेश सहसा वायुं जग्राह विषयं ततः ॥१४-११-१३ (९२६८२)
व्याप्ते वायौ तु वृत्रेण स्पर्शेऽथ विषये हृते ।
शतक्रतुरतिक्रुद्धस्तत्र वज्रमवासृजत् ॥१४-११-१४ (९२६८३)
स वध्यगानो वज्रेण तस्मिन्नमिततेजसा ।
आकाशमभिदुद्राव जग्राह विषयं ततः ॥१४-११-१५ (९२६८४)
आकाशे वृत्रभूतेऽथ शब्दे च विषये हृते ।
शतक्रतुरभिक्रुद्धस्तत्र वज्रमवासृजत् ॥१४-११-१६ (९२६८५)
स वध्यमानो वज्रेण तस्मिन्नमिततेजसा ।
विवेश सहसा शक्रं जग्राह विषयं ततः ॥१४-११-१७ (९२६८६)
तस्य वृत्रगृहीतस्य मोहः समभवन्महान् ।
रथन्तरेण तं साम्ना वसिष्ठः प्रत्यबोधयत् ॥१४-११-१८ (९२६८७)

ततो वृत्रं शरीरस्थं जघान भरतर्षभ ।
शतक्रतुरदृश्येन वज्रेणेतीह नः श्रुतम् ॥१४-११-१९ (९२६८८)
इदं धर्म्यं रहस्यं वै शक्रेणोक्तं महर्षिषु ।
ऋषिभिश्च मम प्रोक्तं तन्निबोध जनाधिप ॥ ॥१४-११-२० (९२६८९)

इति श्रीमन्महाभारते आश्वमेधिकपर्वणि अश्वमेधपर्वणि
एकादशोऽध्यायः ॥११ ॥
Mahabharata - Ashvamedhika Parva - Chapter Footnotes

७-११-२ उपप्लुतं राहुग्रस्तम् ॥
७-११-४ जिह्मं कामादि ।मृत्युपदं संसारप्रापकम्। अजिह्मं शमादि। ब्रह्मणः पदं मोक्षस्य प्रापकम्। ज्ञानविषयो हेयोपादेयतया ज्ञातव्योर्थः। आर्जवं ब्रह्मणः पदमिति झ.ध.पाठः ॥
७-११-७ धराहरणनिस्सार इति क.थ.पाठः ॥

---

अस्वमेधिकपर्व-अध्यय०१२
॥ श्रीः ॥
१४.१२. अध्यायः १२

अश्वमेधपर्व ॥१ ॥
Mahabharata - Ashvamedhika Parva - Chapter Topics
कृष्णेन युधिष्ठिरंप्रति शारीरमानसभेदनेन
व्याधेर्द्वैविध्याभिधानपूर्वकं तत्परिहारोपायकथनम् ॥१ ॥

Mahabharata - Ashvamedhika Parva - Chapter Text

वासुदेव उवाच ।
द्विवोधो जायते व्याधिः शारीरो मानसस्तथा ।
परस्परं तयोर्जन्म निर्द्वन्द्वं नोपपद्यते ॥१४-१२-१ (९२६९०)
शरीरे जायते व्याधिः शरीरः स निगद्यते ।
मानसे जायते व्याधिर्मानसस्तु निगद्यते ॥१४-१२-२ (९२६९१)
शीतोष्णे चैव वायुश्च गुणा राजञ्शरीरजाः ।
तेषां गुणानां साम्यं चेत्तदाहुः स्वस्थलक्षणम् ॥१४-१२-३ (९२६९२)
उष्णेन बाध्यते शीतं शीतेनोष्णं च बाध्यते ॥ १४-१२-४ (९२६९३)
सत्वं रजस्तमश्चेति त्रय आत्मगुणाः स्मृताः ।
तेषां गुणानां साम्यं चेत्तदाहुः स्वस्थलक्षणम् ॥१४-१२-५ (९२६९४)

तेषामन्यतमोत्सेके विधानमुपदिश्यते ।
हर्षेण बाध्यते शोको हर्षः शोकेन बाध्यते ॥ १४-१२-६ (९२६९५)
कश्चिद्दुःखे वर्तमानः सुखस्य स्मर्तुमिच्छति ।
कश्चित्सुखे वर्तमानो दुःखस्य स्मर्तुमिच्छति ॥ १४-१२-७ (९२६९६)
स त्वं न दुःखी दुःखस्य न सुखी सुसुखस्य वा ।
स्मर्तुमिच्छसि कौन्तेय दैवं हि बलवत्तरम् ।
अथवा ते स्वभावोऽयं येन पार्थावकृष्यसे ॥ १४-१२-८ (९२६९७)
दृष्ट्वा सभागतां कृष्णामेकवस्त्रां रजस्वलाम् ।
मिषतां पाण्डवेयानां न तस्य स्मर्तुमिच्छसि ॥ १४-१२-९ (९२६९८)
प्रव्राजनं च नगरादजिनैश्च विवासनम् ।
महारण्यनिवासश्च न तस्य स्मर्तुमिच्छसि ॥ १४-१२-१० (९२६९९)
जटासुरात्परिक्लेशश्चित्रसेनेन चाहवः ।
सैन्धवाच्च परिक्लेशो न तस्य स्मर्तुमिच्छसि ॥ १४-१२-११ (९२७००)
पुनरज्ञातचर्यायां कीचकेन पदा वधः ।
याज्ञसेन्यास्तथा पार्थ न तस्य स्मर्तुमिच्छसि ॥ १४-१२-१२ (९२७०१)
यच्च ते द्रोणभीष्माभ्यां युद्धमासीदरिंदम ।
मनसैकेन योद्धव्यं तत्ते युद्धमुपस्थितम् ॥ १४-१२-१३ (९२७०२)
तस्मादभ्युपगन्तव्यं युद्धाय भरतर्षभ ।
परमव्यक्तरूपस्य पारं युक्त्या स्वकर्मभिः ॥ १४-१२-१४ (९२७०३)
यत्र नैव शरैः कार्यं न भृत्यैर्न च बन्धुभिः ।
आत्मनैकेन योद्धव्यं तत्ते युद्धमुपस्थितम् ॥ १४-१२-१५ (९२७०४)
तस्मिन्ननिर्जिते युद्धे कामवस्थां गमिष्यसि ।
एतज्ज्ञात्वा तु कौन्तेय कृतकृत्यो भविष्यसि ॥ १४-१२-१६ (९२७०५)
एथां बुद्धिं विनिश्चित्य भूतानामागतिं गतिम् ।
पितृपैतामहे वृत्ते शाधि राज्यं यथोचितम् ॥ ॥ १४-१२-१७ (९२७०६)

इति श्रीमन्महाभारते आश्वमेधिकपर्वणि अश्वमेधपर्वणि
द्वादशोऽध्यायः ॥ १२ ॥

Mahabharata - Ashvamedhika Parva - Chapter Footnotes

७-१२-३ शीतोष्णे कफपित्ते वायुर्वातः तेषां साम्ये स्वास्थ्यं वैषम्ये
व्याधिर्भवतीत्यर्थः ॥
७-१२-४ शीतोष्णयोरन्यतराविक्यजं दोष
मितरवर्धकेनौषधादिनापनयेदित्यर्थः ॥
७-१२-१२ कीचकेन पराभव इति क पाठः ॥
७-१२-१५ आत्मना मनसा ॥

॥ श्रीः ॥
१४.१३. अध्यायः १३

अश्वमेधपर्व ॥ १ ॥
Mahabharata - Ashvamedhika Parva - Chapter Topics
कामस्य शक्तिकथनेन दुर्जयत्वकथनपूर्वकं तज्जयोपायकथनम् ॥ १ ॥

Mahabharata - Ashvamedhika Parva - Chapter Text

वासुदेव उवाच ।
न बाह्यं द्रव्यमुत्सृज्य सिद्धिर्भवति भारत ।
शारीरं द्रव्यमुत्सृज्य सिद्धिर्बवति वा न वा ॥ १४-१३-१ (९२७०७)
बाह्यद्रव्यविमुक्तस्य शारीरेषु च गृह्यतः ।
यो धर्मो यत्सुखं चैव द्विषतामस्तु तत्तव ॥ १४-१३-२ (९२७०८)
द्व्यक्षरस्तु भवेन्मृत्युस्त्र्यक्षरं ब्रह्म शाश्वतम् ।
ममेति द्व्यक्षरो मृत्युर्नममेति च शाश्वतम् ॥ १४-१३-३ (९२७०९)
ब्रह्ममृत्यू ततो राजन्नात्मन्येव व्यवस्थितौ ।
अदृश्यमानौ भूतानि योधयेतामसंशयम् ॥ १४-१३-४ (९२७१०)
अविनाशोऽस्य तत्त्वस्य नियतो यदि भारत ।
भित्त्वा शरीरं भूतानामहिंसां प्रतिपद्यते ॥ १४-१३-५ (९२७११)
लब्ध्वा हि पृथिवीं कृत्स्नां सहस्थावरजङ्गमाम् ।
ममत्वं यस्य नैव स्यात्किं तया स करिष्यति ॥ १४-१३-६ (९२७१२)
अथवा वसतः पार्थ वने वन्येन जीवतः ।
ममता यस्य वित्तेषु मृत्योरास्ये स वर्तते ॥ १४-१३-७ (९२७१३)
ब्राह्यान्तराणां शत्रूणां स्वभावं पश्य भारत ।
यन्न पश्यति तद्भूतं मुच्यते स महाभयात् ॥ १४-१३-८ (९२७१४)
कामात्मानं न प्रशंसन्ति लोके
नेहाकामा काचिदस्ति प्रवृत्तिः ।
सर्वे कामा मनसोऽङ्ग प्रभूता
यान्पण्डितः संहरते विचिन्त्य ।
भूयोभूयो जन्मनोऽभ्यासयोगा-
द्योगी योगं सारमार्गं विचिन्त्य ॥ १४-१३-९ (९२७१५)
दानं च वेदाध्ययनं तपश्च
काम्यानि कर्माणि च वैदिकानि ।

व्रतं यज्ञान्नियमान्ध्यानयोगा-
न्कामेन यो नारभते विदित्वा ।
यद्यच्चायं कामयते स धमो
नयो धर्मो नियमस्तस्य मूलम् ॥ १४-१३-१० (९२७१६)
अत्र गाथाः कामगीताः कीर्तयन्ति पुराविदः ।
शृणु सङ्कीर्त्यमानास्ता अखिलेन युधिष्ठिर ॥१४-१३-११ (९२७१७)
काम उवाच।१४-१३-१२क्ष् (७७९६)
नाहं शक्योऽनुपायेन हन्तुं भूतेन केनचित् ॥ १४-१३-१२ (९२७१८)
यो मां प्रयतते हन्तुं ज्ञात्वा प्रहरणे बलम् ।
तस्य तस्मिन्प्रहरणे पुनः प्रादुर्भवाम्यहम् ॥१४-१३-१३ (९२७१९)
यो मां प्रयतते हन्तुं यज्ञैर्विविधदक्षिणैः ।
जङ्गमेष्विव धर्मात्मा पुनः प्रादुर्भवाम्यहम् ॥१४-१३-१४ (९२७२०)
यो मां प्रयतते हन्तुं वेदैर्वेदान्तसाधनैः ।
स्थावरेष्विव भूतात्मा तस्य प्रादुर्भवाम्यहम् ॥१४-१३-१५ (९२७२१)
यो मां प्रयतते हन्तुं धृत्या सत्यपराक्रमः ।
भावो भवामि तस्याहं स च मां नावबुध्यते ॥१४-१३-१६ (९२७२२)
यो मां प्रयतते हन्तुं तपसा संशितव्रतः ।
ततस्पपसि तस्यथ पुनः प्रादुर्भवाम्यहम् ॥१४-१३-१७ (९२७२३)
यो मां प्रयतते हन्तुं मोक्षमास्थाय पण्डितः ।
तस्य मोक्षरतिस्थस्य नृत्यामि च हसामि च ।
अवध्यः सर्वभूतानामहमेकः सनातनः ॥ १४-१३-१८ (९२७२४)
तस्मात्त्वमपि तं कामं यज्ञैर्विविधदक्षिणैः ।
धर्मे कुरु महाराज तत्र ते स भविष्यति ॥१४-१३-१९ (९२७२५)
मा ते व्यथाऽस्तु निहतान्बन्धून्वीक्ष्य पुनःपुनः ।
न शक्यास्ते पुनर्द्रष्टुं येऽहतास्मिन्रणाजिरे ॥१४-१३-२० (९२७२६)
स त्वमिष्ट्वा महायज्ञैः समृद्धैराप्तदक्षिणैः ।
कीर्तिं लोके परां प्राप्य गतिमग्र्यां गमिष्यसि ॥ ॥१४-१३-२१ (९२७२७)

इति श्रीमन्महाभारते आश्वमेधिकपर्वणि अश्वमेधपर्वणि
त्रयोदशोऽध्यायः ॥१३ ॥

Mahabharata - Ashvamedhika Parva - Chapter Footnotes

७-१३-१ न बाह्यस्य राज्यादेरर्थस्य त्यागात्त्यग्गी भवति किन्तु
शरीरं कामादिकं त्यक्त्वैव सिद्धिर्मोक्षः नवेति शुष्कवैराग्यवतो
विवेकशून्यस्य सिद्ध्यभावं सूचयति ।उत्सृज्य सिद्धिर्भवति
भारतेतिक ध पाठः ॥

७-१३-२ गृद्धय सक्तस्य यो धर्मः सः अधर्मएव यत्सुखं तद्दुःखमेव ॥
७-१३-३ मम त्वं संसारहेतुः तदभावो ब्रह्मप्राप्तिहेतुरित्यर्थः ॥

---

अस्वमेधिकपर्व-अध्यय०१४
॥ श्रीः ॥
१४.१४. अध्यायः १४

अश्वमेधपर्व ॥ १ ॥
Mahabharata - Ashvamedhika Parva - Chapter Topics
व्यासनारदकृष्णादिभिर्बन्धुनिधनपरिशोचिनो युधिष्ठिरस्य
समाश्वासनेन तत्रान्तर्धानम् ॥ १ ॥
युधिष्ठिरेण भीष्मिदीनामौर्ध्वदेहिकदानेन हास्तिननगरप्रवेशः ॥ २ ॥

Mahabharata - Ashvamedhika Parva - Chapter Text

वैशम्पायन उवाच ।
एवं बहुविधैर्वाक्यैर्मुनिभिस्तैस्तपोधनैः ।
समाश्वस्त राजर्षिर्हितबन्धुर्युधिष्ठिरः ॥ १४-१४-१ (९२७२८)
सोऽनुनीतो भगवता विष्टरश्रवसा स्वयम् ।
द्वैपायनेन कृष्णेनि देवस्थानेन चाभिभूः ॥ १४-१४-२ (९२७२९)
नारदेनाथ भीमेन नकुलेन च पार्थिव ।
कृष्णया सहदेवेन विजयेन च धीमता ॥ १४-१४-३ (९२७३०)
अन्यैश्च पुरुषव्याघ्रैर्ब्राह्मणैः शास्त्रदृष्टिभिः ।
व्यजहाच्छोकजं दुःखं सन्तापं चैव मानसम् ॥ १४-१४-४ (९२७३१)
अर्चयामास देवांश्च ब्राह्मणांश्च युधिष्ठिरः ।
कृत्वाऽथ प्रेतकार्याणि सर्वेषां कुरुनन्दनः ।
अन्वशासच्च धर्मात्मा पृथिवीं सागराम्बराम् ॥ १४-१४-५ (९२७३२)
प्रशान्तचेताः कौरव्यः स्वराज्यं प्राप्य केवलम् ।
व्यासं च नारदं चैव तांश्चान्यानब्रवीन्नृपः ॥ १४-१४-६ (९२७३३)
आश्वासितोऽहं प्राग्वृद्धैर्भवद्भिर्मुनिपुङ्गवैः ।
न सूक्ष्ममपि मे किञ्चिद्व्यलीकमिह विद्यते ॥ १४-१४-७ (९२७३४)
अर्थश्च सुमहान्प्राप्तो येन यक्ष्यामि देवताः ।
पुरस्कृत्याद्य भवतः समानेष्यामहे मखम् ॥ १४-१४-८ (९२७३५)
हिमवन्तं त्वया गुप्ता गमिष्यामः पितामह ।
बह्वाश्चर्यो हि देशः स श्रूयते द्विजसत्तम ॥ १४-१४-९ (९२७३६)
तथा भगवता चित्रं कल्याणं बहु भाषितम् ।

देवर्षिणा नारदेन देवस्थानेन चैव ह ॥१४-१४-१० (९२७३७)
नाभागधेयः पुरुषः कश्चिदेवंविधान्गुरून् ।
लभते व्यसनं प्राप्य सुहृदः साधुसम्मतान् ॥१४-१४-११ (९२७३८)
वैशम्पायन उवाच।१४-१४-१२क्ष् (७७९७)
एवमुक्तास्तु ते राज्ञा सर्व एव महर्षयः ।
अभ्यनुज्ञाप्य राजानं तथोभौ कृष्णफल्गुनौ ॥१४-१४-१२ (९२७३९)
पश्यतामेव सर्वेषां तत्रैवादर्शनं ययुः ।
ततो धर्मसुतो राजा तत्रैवोपाविशत्प्रभुः ॥१४-१४-१३ (९२७४०)
एवं नातिमहान्कालः स तेषां संन्यवर्तत ।
कुर्वतां शौचकार्याणि भीष्मस्य निधने तदा ।
महादानानि विप्रेभ्यो ददतामौर्ध्वदेहिकम् ॥ १४-१४-१४ (९२७४१)
भीष्मकर्णपुरोगाणां कुरूणां कुरुसत्तम ।
सहितो धृतराष्ट्रेण स ददावौर्ध्वदेहिकम् ॥१४-१४-१५ (९२७४२)
ततो दत्त्वा बहुधनं विप्रेभ्यः पाण्डवर्षभः ।
धृताराष्ट्रं पुरुस्कृत्य विवेश गजसाह्वयम् ॥ ॥१४-१४-१६ (९२७४३)

इति श्रीमन्महाभारते आश्वमेधिकपर्वणि अश्वमेधपर्वणि
चतुर्दशोऽध्यायः ॥१४ ॥

---

अस्वमेधिकपर्व-अध्यय०१५
॥ श्रीः ॥
१४.१५. अध्यायः १५

अश्वमेधपर्व ॥१ ॥
Mahabharata - Ashvamedhika Parva - Chapter Topics
वैशंपायेन जनमेजयंप्रति युधिष्ठिरस्य प्रजापालनकाले
प्रजादीनामभ्युदयप्रकारवर्णनम् ॥१ ॥

Mahabharata - Ashvamedhika Parva - Chapter Text

ग्वैशम्पायन उवाच ।
स समाश्वास्य पितरं प्रज्ञाचक्षुषमीश्वरम् ।
अन्वशासत धर्मात्मा पृथिवीं भ्रातृभिः सह ॥१४-१५-१ (९२७४४)
यथा मनुर्महाराजो रामो दाशरथिर्यथा ।
तथा भरतसिंहोऽपि पालयामास मेदिनीम् ॥१४-१५-२ (९२७४५)
नाधर्म्यमभवत्तत्र सर्वो धर्मरुचिर्जनः ।

बभूव नरशार्दूल यथा कृतयुगे तथा ॥ १४-१५-३ (९२७४६)
कलिमासन्नमाविष्टं निवार्य नृपनन्दनः ।
भ्रातृभिः सहितो धीमान्बभौ धर्मबलोद्धतः ॥ १४-१५-४ (९२७४७)
ववर्ष भगवान्देवः काले देशे यथेप्सितम् ।
निरामयं जगदभूत्क्षुत्पिपासे न किञ्चन ॥ १४-१५-५ (९२७४८)
आधिर्नास्ति मनुष्याणां व्यसने नाभवन्मतिः ।
ब्राह्मणप्रमुखा वर्णास्ते स्वधर्मोत्तराः शुभाः ॥ १४-१५-६ (९२७४९)
धर्मसत्यप्रधानाश्च सत्यं सद्विषयान्वितम् ।
धर्मासनस्थः सद्भिः स स्त्रीबालातुरवृद्धकान् ।
वर्णक्रमान्पूर्णभृतान्साकल्याद्रक्षणोद्यतः ॥ १४-१५-७ (९२७५०)
अवृत्तिवृत्तिदानाद्यैर्यज्ञाद्यैर्व्याधितैरपि ।
आमुष्मिकं भयं नास्ति लौकिकं कृतमेव ॥ १४-१५-८ (९२७५१)
स्वर्गलोकोपमो लोकस्तदा तस्मिन्प्रशासति ।
बभूव सुखमेवाग्रं तद्विशिष्टतरं परम् ॥ १४-१५-९ (९२७५२)
नार्यः पतिव्रताः सर्वा रूपवत्यः स्वलंकृताः ।
यथोक्तवृत्ताः स्वगुणैर्बभूवुः प्रीतिहेतवः ॥ १४-१५-१० (९२७५३)
पुमांसः पुण्यशीलाढ्याः स्वंस्वं धर्ममनुव्रताः ।
सुखिनः सूक्ष्ममप्येनो न कुर्वन्ति कदाचन ॥ १४-१५-११ (९२७५४)
सर्वे नरांश्च नार्यश्च सततं प्रियवादिनः ।
अजिह्ममनसः शुक्ला बभूवुः श्रमवर्जिताः ॥ १४-१५-१२ (९२७५५)
भूषिताः कुण्डलैर्हारैः कटकैः कटिसूत्रकैः ।
सुवाससः सुगन्धाढ्याः प्रायशः पृथिवीतले ॥ १४-१५-१३ (९२७५६)
सर्वे ब्रह्मविदो विप्राः सर्वत्र परिनिष्ठिताः ।
वलीपलितहीनास्तु सुखिनो दीर्घदर्शिनः ॥ १४-१५-१४ (९२७५७)
इच्छा न जायतेऽन्यत्र वर्णेषु न च सङ्करः ।
मनुष्याणां महाराज मर्यादा सुव्यवस्थिता ॥ १४-१५-१५ (९२७५८)
तस्मिञ्शासति राजेन्द्रे मृगव्यालसरीसृपाः ।
अन्योन्यमपि चान्येषु न बाधन्ते कदाचन ॥ १४-१५-१६ (९२७५९)
गावः सुक्षीरभूयिष्ठाः सुस्ववालमुखोदराः ।
अपीडिताः कर्षकाद्यैर्हृतव्याधिकवत्सकाः ॥ १४-१५-१७ (९२७६०)
अवन्ध्यकाला मनुजाः पुरुषार्थेषु च क्रमात् ।
विषयेष्वनिषिद्धेषु वेदशास्त्रेषु चोद्यताः ॥ १४-१५-१८ (९२७६१)
सुवृत्ता वृषभाः पुष्टा रसनाभाः सुखोदयाः ॥ १४-१५-१९ (९२७६२)
अतीव मधुरः शब्दः स्पर्शश्चातिसुखं रसम् ।
करूपं दृष्टिक्षमं रम्यं मनोज्ञं गन्धवद्बभौ ॥ १४-१५-२० (९२७६३)
धर्मार्थकामसंयुक्तं मोक्षाभ्युदयसाधनम् ।

प्रह्लादजननं पुण्यं सम्बभूवाथ मानसम् ॥१४-१५-२१ (९२७६४)
स्थावरा बहुपुष्पाढ्याः फलच्छायावहास्तथा ।
सुस्पर्शा विषहीनाश्च सुपत्रत्वक्प्ररोहिणः ॥१४-१५-२२ (९२७६५)
मनोनुकूलाः सर्वेषां चेष्टाभूतापवर्जिताः ।
तथा बभूव राजर्षिस्तद्वृत्तमभवद्भुवि ॥१४-१५-२३ (९२७६६)
सर्वलक्षणसम्पन्नाः पाण्डवा धर्मचारिणः ।
ज्येष्ठानुवर्तिनः सर्वे बभूवुः प्रियदर्शनाः ॥१४-१५-२४ (९२७६७)
सिंहोरस्का जितक्रोधास्तेजोबलसमन्विताः ।
आजानुबाहवः सर्वे दानशीला जितेन्द्रियाः ॥१४-१५-२५ (९२७६८)
तेषु शासत्सु धरणीमृतवः स्वगुणैर्बभुः ।
सुखोदयाय वर्तन्ते ग्रहास्तारागणैः सह ॥१४-१५-२६ (९२७६९)
मही च सस्यबहुला सर्वरत्नगुणोदया ।
कामधुग्धेनुवद्भोगान्फलन्ति स्म सहस्रधा ॥१४-१५-२७ (९२७७०)
मन्वादिभिः कृताः पूर्वं मर्यादा मानवेषु याः ।
अनतिक्रम्य ताः सर्वाः कुलेषु समयानि च ।
अन्वशासत राजानो धर्मपुत्रप्रियंकराः ॥ १४-१५-२८ (९२७७१)
महाकुलानि धर्मिष्ठा वर्धयन्तो विशेषतः ।
मनुप्रणीतया वृत्त्या तेऽन्वशासनसुन्धराम् ॥१४-१५-२९ (९२७७२)
राजवृत्तिर्हि सा शश्वद्धर्मिष्ठाऽभून्महीतले ।
प्रायो लोकमतिस्तान राजवृत्तानुगामिनी ॥१४-१५-३० (९२७७३)
एवं भारतवर्षं स्वं राजा स्वर्गं सुरेन्द्रवत् ।
शशास जिष्णुना सार्धं गोत्रां गाण्डीवधन्वन'॥ ॥१४-१५-३१ (९२७७४)

इति श्रीमन्महाभारते आश्वमेधिकपर्वणि अश्वमेधपर्वणि
पञ्चदशोऽध्यायः ॥१५ ॥
Mahabharata - Ashvamedhika Parva - Chapter Footnotes

७-१५-३१ शशास विष्णुना सार्धं गुप्तो गाण्डीवधन्वनेति थ पाठः ॥

---

अस्वमेधिकपर्व-अध्यय०१६
॥ श्रीः ॥
१४.१६. अध्यायः १६

अश्वमेधपर्व ॥ १ ॥
Mahabharata - Ashvamedhika Parva - Chapter Topics
वैशंपायनेन कुरुविजयानन्तरं हास्तिनपुरे

कृष्णार्जुनविहारप्रकारवर्णनम् ॥ १ ॥
कृष्णेनार्जुनंप्रति युधिष्ठिरे स्वस्य
निजनगरजिगमिषानिवेदनचोदना ॥ २ ॥

Mahabharata - Ashvamedhika Parva - Chapter Text

जनमेजय उवाच ।
विजिते पाण्डवेयैस्तु प्रशान्ते च द्विजोत्तम ।
राष्ट्रे ते चक्रतुर्वीरौ वासुदेवधनंजयौ ॥ १४-१६-१ (९२७७५)
वैशम्पायन उवाच। १४-१६-२क्ष् (७७१८)
विजिते पाण्डवै राजन्प्रशान्ते च विशाम्पतौ ।
राष्ट्रे बभूवतुर्हृष्टौ वासुदेवधनंजयौ ॥ १४-१६-२ (९२७७६)
विजह्राते मुदा युक्तौ दिवि देवश्वराविव ।
तौ वनेषु विचित्रेषु पर्वतेषु ससानुषुः ॥ १४-१६-३ (९२७७७)
तीर्थेषु चैव पुण्येषु पल्वलेषु नदीषु च ।
चंक्रम्यमाणौ संहृष्टावश्विनाविव नन्दने ॥ १४-१६-४ (९२७७८)
इन्द्रप्रस्थे महात्मानौ रेमाते कृष्णपाण्डवौ ।
प्रविश्य तां सभां रम्यां विजह्राते च भारत ॥ १४-१६-५ (९२७७९)
तत्र युद्धकथाश्चित्राः परिक्लेशांश्च पार्थिव ।
कथायोगे कथायोगे कथयामासतुः सदा ॥ १४-१६-६ (९२७८०)
ऋषीणां देवतानां च वंशांस्तावाहतुः सदा ।
प्रीयमाणौ महात्मानौ पुराणावृषिसत्तमौ ॥ १४-१६-७ (९२७८१)
मधुरास्तु कथाश्चित्राश्चित्रार्थपदनिश्चयाः ।
निश्चयज्ञः स पार्थाय कथयामास केशवः ॥ १४-१६-८ (९२७८२)
पुत्रशोकाभिसंतप्तं ज्ञातीनां च सहस्रशः ।
कथाभिः शमयामास पार्तं शौरिर्जनार्दनः ॥ १४-१६-९ (९२७८३)
स तमाश्वास्य विधिवद्विधानज्ञो महातपाः ।
अपहृत्यात्मनो भारं विशश्रामेव सात्वतः ॥ १४-१६-१० (९२७८४)
ततः कथान्ते गोविन्दो गुडाखेशमुवाच ह ।
सान्त्वयञ्श्लक्ष्णया वाचा हेतुयुक्तमिदं वचः ॥ १४-१६-११ (९२७८५)
विजितेयं धरा कृत्स्ना सव्यसाचिन्परंतप ।
त्वद्बाहुबलामाश्रित्य राज्ञा धर्मसुतेन ह ॥ १४-१६-१२ (९२७८६)
असपत्नां महीं भुङ्क्ते धर्मराजो युधिष्ठिरः ।
भीमसेनानुभावेन यमयोश्च नरोत्तम ॥ १४-१६-१३ (९२७८७)
धर्मेणि राज्ञा धर्मज्ञ प्राप्तं राज्यमकण्टकम् ।
धर्मेण निहतः सङ्ख्ये स च राजा सुयोधनः ॥ १४-१६-१४ (९२७८८)

अधर्मरुचयो लुब्धाः सदा चाप्रियवादिनः ।
धार्तराष्ट्रा दुरात्मानः सानुबन्धा निपातिताः ॥ १४-१६-१५ (९२७८९)
प्रशान्तामखिलां पार्थ पृथिवीं पृथिवीपतिः ।
भुङ्क्ते धर्मसुतो राजा त्वया गुप्तः कुरूद्वह ॥ १४-१६-१६ (९२७९०)
रमे चाहं त्वया सार्धमरण्येष्वपि पाण्डव ।
किमु यत्र जनोऽयं वै पृथा चामित्रकर्मन ॥ १४-१६-१७ (९२७९१)
यत्र धर्मसुतो राजा यत्र यत्र भीमो महाबलः ।
यत्र माद्रवतीपुत्रौ रतिस्तत्र परा मम ॥ १४-१६-१८ (९२७९२)
तथैव स्वर्गलोकेषु सभोद्देशेषु कौरव ।
रमणीयेषु पुण्येषु सहितस्य त्वयाऽनध ॥ १४-१६-१९ (९२७९३)
कालो महांस्त्वतीतो मे शूरसूनुमपश्यतः ।
बलदेवं च कौरव्यं तथाऽन्यान्वृष्णिपुङ्गवान् ॥ १४-१६-२० (९२७९४)
सोहं गन्तुमभीप्सामि पुरीं द्वारावतीं प्रति ।
रोचतां गमनं तुभ्यं ममापि पुरुषर्षभ ॥ १४-१६-२१ (९२७९५)
उक्तो बहुविधं राजा तत्रतत्र युधिष्ठिरः ।
सह भीष्मेण यद्युक्तमस्माभिः शोकर्शितः ॥ १४-१६-२२ (९२७९६)
शिष्टो युधिष्टिरोऽस्माभिः शास्ता सन्नपि पाण्डवः ।
तेन तत्तु वचः सम्यग्गृहीतं सुमहात्मना ॥ १४-१६-२३ (९२७९७)
धर्मपुत्रे हि धर्मज्ञे कृतज्ञे सत्यवादिनि ।
सत्यं धर्मो मतिश्चाग्र्या स्थितिश्च सततं स्थिरा ॥ १४-१६-२४ (९२७९८)
तत्र गत्वा महात्मानं यदि ते रोचतेऽर्जुन ।
अस्मद्गमनसंयुक्तं वचो ब्रूहि जनाधिपम् ॥ १४-१६-२५ (९२७९९)
न हि तस्याप्रियं कुर्यां प्राणत्योगेऽप्युपस्थिते ।
कुतो गन्तुं महाबाहो पुरीं द्वारावतीं प्रति ॥ १४-१६-२६ (९२८००)
सर्वं त्विदमहं पार्त त्वत्प्रीतिहितकाम्यया ।
ब्रवीमि सत्यं कौरव्य न मिथ्यैतत्कथञ्चन ॥ १४-१६-२७ (९२८०१)
प्रयोजनं च निर्वृत्तमिह वासेन मेऽर्जुन ।
धार्तराष्ट्रो हतो राजा सबलः सपदानुगः ॥ १४-१६-२८ (९२८०२)
पृथिवी च वशे तात धर्मपुत्रस्य धीमतः ।
स्थिता समुद्रवसना सशैलवनकानना ॥ १४-१६-२९ (९२८०३)
चिता रत्नैर्बहुविधैः कुरुराजस्य पाण्डव ।
धर्मेण राजा धर्मज्ञः पातु सर्वां वसुन्धराम् ॥ १४-१६-३० (९२८०४)
उपास्यमानो मुनिभिः सिद्धैश्चापि महात्मभिः ।
स्तूयमानश्च सततं बन्दिभिर्भरतर्षभ ॥ १४-१६-३१ (९२८०५)
तं मया सह गत्वाऽद्य राजानं कुरुवर्धनम् ।
आपृच्छ कुरुशार्दूल गमनं द्वारकां प्रति ॥ १४-१६-३२ (९२८०६)

इदं शरीरं वसु यच्च मे गृहे
निवेदितं पार्थ सदा युधिष्ठिरे ।
प्रियश्च मान्यश्च हि मे युधिष्ठिरः
सदा कुरूणामधिपो महामतिः ॥ १४-१६-३३ (९२८०७)
प्रयोजनं चापि निवासकारणे
न विद्यते मे त्वदृते नृपात्मज ।
स्थिता हि पृथ्वी तव पार्थ शासने
गुरोः सुवृत्तस्य युधिष्ठिरस्य च ॥ १४-१६-३४ (९२८०८)
इतीदमुक्तः स तदा महात्मना
जनार्दनेनामितविक्रमोऽर्जुनः ।
तथेति दुःखादिव वाक्यमैरय-
ज्जनार्दनं सम्प्रतिपूज्य पार्थिव ॥ ॥ १४-१६-३५ (९२८०९)

इति श्रीमन्महाभारते आश्वमेधिकपर्वणि अश्वमेधपर्वणि
षोडशोऽध्यायः ॥१६ ॥
Mahabharata - Ashvamedhika Parva - Chapter Footnotes

७-१६-४ शैलेषु गह्वरारण्ये पल्वलेष्विति क थ पाठः ॥

---

अस्वमेधिकपर्व-अध्यय०१७
॥ श्रीः ॥
१४.१७. अध्यायः १७

अथानुगीतापर्व ॥ २ ॥
Mahabharata - Ashvamedhika Parva - Chapter Topics
अर्जुनेन कृष्णंप्रति पूर्वोपदिष्टगीतार्थस्य विस्मरणोक्त्या
पुनस्तदुपदेशप्रार्थना ॥ १ ॥
कृष्णेनार्जुनंप्रति स्वस्मै ब्राह्मणोक्तसिद्धकाश्यपसंवादानुवादः ॥ २ ॥

Mahabharata - Ashvamedhika Parva - Chapter Text

जनमेजय उवाच ।
सभायां वसतोस्तत्र निहत्यारीन्महात्मनोः ।
केशवार्जुनयोः का नु कथा समभवद्द्विज ॥ १४-१७-१ (९२८१०)
वैशम्पायन उवाच । १४-१७-२क्ष् (७७९९)
कृष्णेन सहितः पार्थः स्वं राज्यं प्राप्य केवलम् ।

तस्यां सभायां दिव्यायां विजहार मुदा युतः ॥१४-१७-२ (९२८११)
तत्र कञ्चित्सभोद्देशं स्वर्गोद्देशसमं नृप ।
यदृच्छया तौ मुदितौ जग्मतुः स्वजनावृतौ ॥१४-१७-३ (९२८१२)
ततः प्रतीतः कृष्णेन सहितः पाण्डवोऽर्जुनः ।
निरीक्ष्य तां सभां रम्यामिदं वचनमब्रवीत् ॥१४-१७-४ (९२८१३)
विदितं मे महाबाहो सङ्ग्रामे समुपस्थिते ।
महात्म्यं देवकीपुत्र तच्च ते रूपमैश्वरम् ॥१४-१७-५ (९२८१४)
यत्तु तद्भवता प्रोक्तं पुरा केशव सौहृदात् ।
तत्सर्वं पुरुषव्याघ्र नष्टं मे व्यग्रचेतसः ॥१४-१७-६ (९२८१५)
मम कौतूहलं त्वस्ति तेष्वर्थेषु पुनः पुनः ।
भवांस्तु द्वारकां गन्ता नचिरादिव माधव ॥१४-१७-७ (९२८१६)
वैशम्पायन उवाच। १४-१७-८क्ष् (७८००)
एवमुक्तस्तु तं कृष्णः फाल्गुनं प्रत्यभाषत ।
परिष्वज्य महातेजा वचनं वदतांवरः ॥१४-१७-८ (९२८१७)
वासुदेव उवाच। १४-१७-९क्ष् (७८०१)
श्रावितस्त्वं मया गुह्यं ज्ञापितश्च सनातनम् ।
धर्मं स्वरूपिणं पार्त सर्वलोकांश्च शाश्वतान् ॥१४-१७-९ (९२८१८)
अबुद्ध्या यन्न गृह्णीतास्तन्मे सुमहदप्रियम् ।
न च साऽद्य पुनर्भूयः स्मृतिर्मे सम्भविष्यति ॥१४-१७-१० (९२८१९)
नूनमश्रद्दधानोऽसि दुर्मेधा ह्यसि पाण्डव ।
न च शक्यं पुनर्वक्तुमशेषेण धनंजय ॥१४-१७-११ (९२८२०)
स हि धर्मः सुपर्याप्तो ब्रह्मणः पदवेदने ।
न शक्यं तन्मया भूयस्तथा वक्तुमशेषतः ॥१४-१७-१२ (९२८२१)
परं हि ब्रह्म कथितं योगयुक्तेन तन्मया ।
इतिहासं तु वक्ष्यामि तस्मिन्नर्थे पुरातनम् ॥१४-१७-१३ (९२८२२)
यथा तां बुद्धिमास्थाय गतिमग्र्यां गमिष्यसि ।
शृणु धर्मभृतांश्रेष्ठ गदतः सर्वमेव मे ॥१४-१७-१४ (९२८२३)
आगच्छद्ब्राह्मणः कश्चित्स्वर्गलोकादरिंदम ।
ब्रह्मलोकाच्च दुर्धर्षः सोस्माभिः पूजितोऽभवत् ॥१४-१७-१५ (९२८२४)
अस्माभिः परिपृष्ठश्च यदाह भरतर्षभ ।
दिव्येन विधिना पार्थ तच्छृणुष्वाविचारयन् ॥१४-१७-१६ (९२८२५)
ब्राह्मण उवाच। १४-१७-१७क्ष् (७८०२)
मोक्षधर्मं समाश्रित्य कृष्ण यन्माऽनुपृच्छसि ।
भूतानामनुकम्पार्थं मन्मोहच्छेदनं विभो ॥१४-१७-१७ (९२८२६)
तत्तेऽहं सम्प्रवक्ष्यामि यथावन्मधुसूदन ।
शृणुष्वावहितो भूत्वा गदतो मम माधव ॥१४-१७-१८ (९२८२७)

कश्चिद्विप्रस्तपोयुक्तः काश्यपो धर्मवित्तमः ।
आससाद द्विजं कंचिद्धर्माणामागतागमम् ॥१४-१७-१९ (९२८२८)
गतागमं सुबहुशो ज्ञानविज्ञानपारगम् ।
लोकतत्त्वार्थकुशलं ज्ञातरं सुखदुःखयोः ॥१४-१७-२० (९२८२९)
जातिस्मरणतत्त्वज्ञं कोविदं पापपुण्ययोः ।
द्रष्टारमुच्चनीचानां कर्मभिर्देहिनां गतिम् ॥१४-१७-२१ (९२८३०)
चरन्तं मुक्तवत्सिद्धं प्रशान्तं संयतेन्द्रियम् ।
दीप्यमानं श्रिया ब्राह्मया क्रममाणं च सर्वशः ॥१४-१७-२२ (९२८३१)
अन्तर्धानगतिज्ञं च श्रुत्वा तत्त्वेन काश्यपः ।
तथैवान्तर्हितैः सिद्धैर्यान्तं चक्रधरैः सह ॥१४-१७-२३ (९२८३२)
सम्भाषमाणमेकान्ते समासीनं च तैः सह ।
यदृच्छया च गच्छन्तमसक्तं पवनं यथा ॥१४-१७-२४ (९२८३३)
तं समासाद्य मेधावी स तदा द्विजसत्तमः ।
चरणौ धर्मकामो वै स तस्य सुसमाहितः ।
प्रतिपदे यथान्यायं भक्त्या परमया युतः ॥ १४-१७-२५ (९२८३४)
विस्मितश्चाद्भुतं दृष्ट्वा काश्यपस्तं द्विजोत्तमम् ।
परिचारेण महता गुरुं तं पर्यतोषयत् ॥१४-१७-२६ (९२८३५)
उपपन्नं च तत्सर्वं श्रुतचारित्रसंयुतम् ।
भौमेनातोषयच्चैनं गुरुवृत्तिं समास्थितः ॥१४-१७-२७ (९२८३६)
तस्मै तुष्टः स शिष्याय यत्प्रसन्नोऽब्रवीद्गुरुः ।
सिद्धिं परामभिप्रेक्ष्य शृणु मत्तो जनार्दन ॥१४-१७-२८ (९२८३७)
सिद्ध उवाच।१४-१७-२९क्ष् (७८०३)
विविधैः कर्मभिस्तात पुण्ययोगैश्च केवलैः ।
गच्छन्तीह गतिं मर्त्या देवलोके च वा स्थितिम् ॥१४-१७-२९ (९२८३८)
न क्वचित्सुखमत्यन्तं न क्वचिच्छाश्वती स्थितिः ।
स्थानाच्च महतो भ्रंशो दुःखलब्दात्पुनः पुनः ॥१४-१७-३० (९२८३९)
अशुभा गतयः प्राप्ताः कष्टा मे पापसेवनात् ।
काममन्युपरीतेन तृष्णया मोहितेन च ॥१४-१७-३१ (९२८४०)
पुनः पुनश्च मरणं जन्म चैव पुनः पुनः ।
आहारा विविधा भुक्ताःपीता नानाविधाःस्तनाः ॥१४-१७-३२ (९२८४१)
मातरो विविधा दृष्टाः पितरश्च पृथग्विधाः ।
सुखानि च विचित्राणि दुःखानि च मयाऽनघ ॥१४-१७-३३ (९२८४२)
प्रियैर्विवासो बहुशः संवासश्चाप्रियैः सह ।
धननाशश्च सम्प्राप्तो लब्ध्वा दुःखेन तद्धनम् ॥१४-१७-३४ (९२८४३)
अवमानाः सुकष्टाश्च परतः स्वजनात्तथा ।
शारीरा मानसा वाऽपि वेदना भृशदारुणाः ॥१४-१७-३५ (९२८४४)

प्राप्ता विमाननाश्चोग्रा वधबन्धाश्च दारुणाः ।
पतनं निरये चैव यातनाश्च यमक्षये ॥१४-१७-३६ (९२८४५)
जरारोगाश्च सततं व्यसनानि च भूरिशः ।
लोकेऽस्मिन्ननुभूतानि द्वन्द्वजानि भृशं मया ॥१४-१७-३७ (९२८४६)
ततः कदाचिन्निर्वेदान्निकारान्निकृतेन च ।
लोकतन्त्रं परित्यक्तं दुःखार्तेन भृशं मया ॥१४-१७-३८ (९२८४७)
लोकेऽस्मिन्ननुभूयाहमिमं मार्गमनुष्ठितः ।
ततः सिद्धिरियं प्राप्ता प्रसादादात्मनो मया ।
नाहं पुनरिहागन्ता लोकानालोकयाम्यहम् ॥ १४-१७-३९ (९२८४८)
आसिद्धेराप्रजासर्गादात्मनोपि गतीः शुभाः ।
उपलब्धा द्विजश्रेष्ठ तथेयं सिद्धिरुत्तमा ॥१४-१७-४० (९२८४९)
इतः परं गमिष्यामि ततः परतरं पुनः ।
ब्रह्मणः पदमव्यक्तं मा तेऽभूतत्र संशयः ॥१४-१७-४१ (९२८५०)
नाहं पुनरिहागन्ता मर्त्यलोकं परन्तप ।
प्रीतोस्मि ते महाप्राज्ञ ब्रूहि किं करवाणि ते ॥१४-१७-४२ (९२८५१)
यदीप्सुरुपपन्नस्त्वं तस्य कालोऽयमागतः ।
अभिजाने च तदहं यदर्थं मामुपागतः ॥१४-१७-४३ (९२८५२)
अचिरात्तु गमिष्यामि येनाहं त्वामचूचुदम् ।
भृशं प्रीतोस्मि भवतश्चारित्रेण विचक्षण ॥१४-१७-४४ (९२८५३)
परिपृच्छ यावद्भवतो भाषे यद्यत्तवेप्सितम् ॥ १४-१७-४५ (९२८५४)
बहुमन्ये च ते बुद्धिं भृशं सम्पूजयामि च ।
येनाहं भवता बुद्धो मेधावी ह्यसि काश्यप ॥ ॥१४-१७-४६ (९२८५५)

इति श्रीमन्महाभारते आश्वमेधिकपर्वणि अनुगीतापर्वणि
सप्तदशोऽध्यायः ॥१७ ॥

Mahabharata - Ashvamedhika Parva - Chapter Footnotes

७-१७-१९ आगतागमं प्राप्तशास्त्ररहस्यमूहापोहकुशलमित्यर्थः ॥
७-१७-४३ बहुमन्ये भृशं पूजये ।अहमन्तर्धानगतोऽपि यतस्त्वया
ज्ञातः ॥

---

अस्वमेधिकपर्व-अध्यय०१८
॥ श्रीः ॥
१४.१८. अध्यायः १८

अश्वमेधपर्व ॥१ ॥

Mahabharata - Ashvamedhika Parva - Chapter Topics
ब्राह्मणेन कृष्णंप्रति प्राणिनां
जननमरणादिप्रतिपादकसिद्धकश्यपसंवादनुवादः ॥१ ॥

Mahabharata - Ashvamedhika Parva - Chapter Text

वासुदेव उवाच ।
ततस्तस्योपसङ्गृह्य पादौ प्रश्नान्सुदुर्वचान् ।
पप्रच्छ तांश्च धर्मान्स प्राह धर्मभृतांवरः ॥१४-१८-१ (९२८५६)
काश्यप उवाच।१४-१८-२क्ष् (७८०४)
कथं शरीराच्च्यवते कथं चैवोपपद्यते ।
कथं कष्टाच्च संसारात्संसरन्परिमुच्यते ॥१४-१८-२ (९२८५७)
आत्मानं वा कथं युक्त्वा तच्छरीरं विमुञ्चति ।
शरीरे च विनिर्मुक्तो कथमन्यत्प्रपद्यते ॥१४-१८-३ (९२८५८)
कथं शुभाशुभे चायं कर्मणी स्वकृते नरः ।
उपभुङ्क्ते क्व वा कर्म विदेहस्योपतिष्ठते ॥१४-१८-४ (९२८५९)
ब्राह्मण उवाच।१४-१८-५क्ष् (७८०५)
एवं सञ्चोदितः सिद्धः प्रश्नांस्तान्प्रत्यभाषत ।
आनुपूर्व्येण वार्ष्णेय तन्मे निगदतः शृणुः ॥१४-१८-५ (९२८६०)
सिद्ध उवाच।१४-१८-६क्ष् (७८०६)
ग्अस्मिन्नेवाशु फलदा आयुष्यास्तु क्रियाःस्मृताः ।
आयुःकीर्तिकराणीह यानि कृत्यानि सेवते ।
शरीरग्रहणेऽन्यस्मिंस्तेषु क्षीणेषु सर्वशः ॥ १४-१८-६ (९२८६१)
आयुःक्षयपरीतात्मा विपरीतानि सेवते ।
बुद्धिर्व्यावर्तते चास्य विनाशे प्रत्युपस्थिते ॥१४-१८-७ (९२८६२)
सत्त्वं बलं च कालं चाविदित्वा चात्मनस्तथा ।
अतिवेलमुपाश्नाति स्वविरुद्धान्यनात्मवान् ॥१४-१८-८ (९२८६३)
यदाऽयमतिकष्टानि सर्वाण्युपनिषेवते ।
अत्यर्थमपि वा भुङ्क्ते न वा भुङ्क्ते कदाचन ॥१४-१८-९ (९२८६४)
दुष्टान्नामिषपानं च यदन्योन्यविरोधि च ।
गुरु चाप्यमितं भुङ्क्ते नातिजीर्णे दिवा पुनः ॥१४-१८-१० (९२८६५)
व्यायाममतिमात्रं च व्यावाय चोपसेवते ।
सततं कर्मलोभाद्वा प्राप्तं वेगं विधारयेत् ॥१४-१८-११ (९२८६६)
रसाभियुक्तमन्नं वा दिवास्वप्नं च सेवते ।
अपक्वानागते काले स्वयं दोषान्प्रकोपयेत् ॥१४-१८-१२ (९२८६७)
स्वदोषकोपनाद्रोगं लभते मरणान्तिकम् ।

अपि वोद्धन्धनादीनि परीतानि व्यवस्यति ॥१४-१८-१३ (९२८६८)
तस्य तैः कारणैर्जन्तोः शरीरं च्यवते तदा ।
जीवितं प्रोच्यमानं तद्यथावदुपधारय ॥१४-१८-१४ (९२८६९)
ऊष्मा प्रकुपितः काये तीव्रवायुसमीरितः ।
शरीरमनुपर्येत्य सर्वान्प्राणान्रुणद्धि वै ॥१४-१८-१५ (९२८७०)
अत्यर्थं बलवानूष्मा शरीरे परिकोपितः ।
भिनत्ति जीवस्थानानि तानि कर्मणि विद्धि च ॥१४-१८-१६ (९२८७१)
ततः सवेदनः सद्यो जीवः प्रच्यवते क्षरन् ।
शरीरं त्यजते जन्तुश्छिद्यमानेषु मर्मसु ।
वेदनाभिः परीतात्मा तद्विद्धि द्विजसत्तम ॥ १४-१८-१७ (९२८७२)
जनीमरणसंविग्नाः सततं सर्वजन्तवः ।
दृश्यन्ते संत्यजन्तश्च शरीराणि द्विजर्षभ ॥
गर्भसंक्रमणे चापि गर्भाणापुपसर्पणे ।
तादृशीमेव लभते वेदनां मानवः पुनः ॥ १४-१८-१८ (९२८७३)
भिन्नसंधिरथ क्लेदमद्भिः स लभते नरः ॥ १४-१८-२० (९२८७४)
यथा पञ्चसु भूतेषु सम्भूतत्वं नियच्छति ।
शैत्यात्प्रकुपितः काये तीव्रवायुसमीरितः ॥१४-१८-२१ (९२८७५)
यः स पञ्चसु भूतेषु प्राणापाने व्यवस्थितः ।
स गच्छत्यूर्ध्वगो वायुः कृच्छ्रान्मुक्त्वा शरीरिणः ।
शरीरं च जहात्येवं निरुच्छ्वासश्च दृश्यते ॥ १४-१८-२२ (९२८७६)
स निरूष्मा निरुच्छ्वासो निःश्रीको गतचेतनः ।
कर्मणा सम्परित्यक्तो मृत इत्युच्यते नरः ॥१४-१८-२३ (९२८७७)
स्रोतोभिर्यैर्विजानाति इन्द्रियार्थाञ्शरीरभृत् ।
तैरेव न विजानाति प्राणानाहारसम्भवान् ॥१४-१८-२४ (९२८७८)
तत्रैव कुरुते काये यः स जीवः सनातनः ॥ १४-१८-२५ (९२८७९)
तथा यद्यद्भवेन्मुक्तं सन्निपाते क्वचित्क्वचित् ।
तत्तन्मर्म विजानीहि शास्त्रदृष्टं हि तत्तथा ॥१४-१८-२६ (९२८८०)
तेषु मर्मसु भिन्नेषु ततः स समुदीरयन् ।
आविश्य हृदयं जन्तोः सत्त्वं चाशु रुणद्धि वै ॥१४-१८-२७ (९२८८१)
ततः सचेतनो जन्तुर्नाभिजानाति किञ्चन ।
तमसा संवृतज्ञानः संवृतेष्वेव मर्मसु ।
स जीवो निरदिष्ठानश्चाल्यते मातरिश्वना ॥ १४-१८-२८ (९२८८२)
ततः स तं महोच्छ्वासं भृशमुच्छ्वस्य दारुणम् ।
निष्क्रमन्कम्पयत्याशु तच्छरीरमचेतनम् ॥१४-१८-२९ (९२८८३)
स जीवः प्रच्युतः कायात्कर्मभिः स्वैः समावृतः ।
अङ्कितः स्वैः शुभैः पुण्यैः पापैर्वाऽप्युपपद्यते ॥१४-१८-३० (९२८८४)

ब्राह्मणा ज्ञानसम्पन्ना यथावच्छ्रुतनिश्चयाः ।
इतरं कृतपुण्यं वा तं विजानन्ति लक्षणैः ॥१४-१८-३१ (९२८८५)
यथान्धकारे खद्योतं दीप्यमानं ततस्ततः ।
चक्षुष्मन्तः प्रपश्यन्ति तथा च ज्ञानचक्षुषः ॥१४-१८-३२ (९२८८६)
पश्यन्त्येवंविधं सिद्धा जीवं दिव्येन चक्षुषा ।
च्यवन्तं जायमानं च योनिं चानुप्रवेशितम् ॥१४-१८-३३ (९२८८७)
तस्य स्थानानि दृष्टानि विविधानीह शास्त्रतः ।
कर्मभूमिरियं भूमिर्यत्र तिष्ठन्ति जन्तवः ॥१४-१८-३४ (९२८८८)
ततः शुभाशुभं कृत्वा लभन्ते सर्वदेहिनः ।
इहैवोच्चावचान्भोगान्प्राप्नुवन्ति स्वकर्मभिः ॥१४-१८-३५ (९२८८९)
इहैवाशुभकर्माणः कर्मभिर्निरयं गताः ।
अवाग्गतिरियं कष्टा यत्र पच्यन्ति मानवाः ।
तस्मात्सुदुर्लभो मोक्षो रक्ष्यश्चात्मा ततो भृशम् ॥ १४-१८-३६ (९२८९०)
ऊर्ध्वं तु जन्तवो गत्वा येषु स्थानेष्ववस्थिताः ।
कीर्त्यमानानि तानीह तत्त्वतः संनिबोध मे ॥१४-१८-३७ (९२८९१)
तच्छ्रुत्वा नैष्ठिकीं बुद्धिं बुद्ध्येथाः कर्मनिश्चयम् ।
तारारूपाणि सर्वाणि यत्रैतच्चन्द्रमण्डलम् ॥१४-१८-३८ (९२८९२)
यत्र विभ्राजते लोके स्वभासा सूर्यमण्डलम् ।
स्थानान्येतानि जानीहि जनानां पुण्यकर्मणाम् ॥१४-१८-३९ (९२८९३)
कर्मक्षयाच्च ते सर्वे च्यवन्ते वै पुनः पुनः ।
तत्रापि च विशेषोस्ति दिवि नीचोच्चमध्यमः ॥१४-१८-४० (९२८९४)
न च तत्रापि संतोषो दृष्ट्वा दीप्ततरां श्रियम् ।
इत्येता गतयः सर्वाः पृथक्ते समुदीरिताः ॥१४-१८-४१ (९२८९५)
उपपत्तिं तु वक्ष्यामि गर्भस्याहमतः परम् ।
तथावत्तां निगदतः शृणुष्वावहितो द्विज ॥ ॥१४-१८-४२ (९२८९६)

इति श्रीमन्महाभारते आश्वमेधिकपर्वणि अनुगीतापर्वणि
अष्टादशोऽध्यायः ॥१८ ॥

Mahabharata - Ashvamedhika Parva - Chapter Footnotes

७-१८-१० दुष्टान्नं विषमान्नं विते क ट पाठः ॥
७-१८-१२ अपक्वाशं गते काले स्वयं दोषप्रकोपनमिति क ट थ पाठः ॥
७-१८-१९ गर्भसङ्क्रमणे गर्भस्थदेहप्रवेशे ॥
७-१८-२१ श्लेष्मा प्रकुपित इति क थ पाठः ॥
७-१८-२४ स्नोतोभिरिन्द्रियैः ॥

अस्वमेधिकपर्व-अध्यय०१९
॥ श्रीः ॥
१४.१९. अध्यायः १९

अश्वमेधपर्व ॥ १ ॥
Mahabharata - Ashvamedhika Parva - Chapter Topics
ब्राह्मणेन कृष्णंप्रति जीवस्य
गर्भप्रवेशादिप्रतिपादककाश्यपसिद्धसंवादानुवादः ॥ १ ॥

Mahabharata - Ashvamedhika Parva - Chapter Text

ब्राह्मण उवाच ।
शुभानामशुभानां च नेह नाशोस्ति कर्मणाम् ।
प्राप्यप्राप्यानुपच्यन्ते क्षेत्रेक्षेत्रे तथातथा ॥ १४-१९-१ (९२८९७)
यथा प्रसूयमानस्तु फली दद्यात्फलं बहु ।
तथा स्याद्विपुलं पुण्यं शुद्धेन मनसा कृतम् ॥ १४-१९-२ (९२८९८)
पापं चापि तथैव स्यात्पापेन मनसा कृतम् ।
पुरोधाय मनो हीह कर्मण्यात्मा प्रवर्तते ॥ १४-१९-३ (९२८९९)
यथा कर्मसमाविष्टः काममन्युसमावृतः ।
नरो गर्भं प्रविशति तत्रापि शृणु चोत्तरम् ॥ १४-१९-४ (९२९००)
शुक्रं शोणितसंसृष्टं स्त्रिया गर्भाशयं गतम् ।
क्षेत्रं कर्मजमाप्नोति शुभं वा यदि वाऽशुभम् ॥ १४-१९-५ (९२९०१)
सौक्ष्म्यादव्यक्तयावाच्च न च क्वचन सज्जति ।
सम्प्राप्य ब्राह्मणः कायं तस्मात्तद्ब्रह्म शाश्वतम् ॥ १४-१९-६ (९२९०२)
तद्बीजं सर्वभूतानां तेन जीवन्ति जन्तवः ॥ १४-१९-७ (९२९०३)
स जीवः सर्वभूतानां गर्भमाविश्य भागशः ।
दधाति चेतना सद्यः प्राणस्थानेष्ववस्थितः ।
ततः स्पन्दयतेऽङ्गानि स गर्भश्चेतनान्वितः ॥ १४-१९-८ (९२९०४)
यथा लोहस्य विष्यन्दो निषिक्तो बिम्बविग्रहम् ।
उपैति तद्वज्जानीहि गर्भे जीवप्रवेशनम् ॥ १४-१९-९ (९२९०५)
लोहपिण्डं यथा वह्निः प्रविश्य ह्यतितापयेत् ।
तथा त्वमपि जानीहि गर्भे जीवोपपादनम्। १४-१९-१० (९२९०६)
यथा च दीपः शरणं दीप्यमानः प्रकाशयेत् ।
एवमेव शरीराणि प्रकाशयति चेतनः ॥ १४-१९-११ (९२९०७)
यद्यच्च कुरुते कर्म शुभं वा यदि वाऽशुभम् ।
पूर्वदेहकृतं सर्वमवश्यमुपभुज्यते ॥ १४-१९-१२ (९२९०८)

ततस्तु क्षीयते चैव पुनश्चान्यत्प्रचीयते ।
यावत्तु मोक्षयोगस्थं धर्मं नैवावबुध्यते ॥१४-१९-१३ (९२९०९)
तत्ते धर्मं प्रवक्ष्यामि सुखी भवति येन वै ।
आवर्तमानो जातीषु यथाऽन्योन्यासु सत्तम ॥१४-१९-१४ (९२९१०)
दानं व्रतं ब्रह्मचर्यं यथोक्तव्रतधारणम् ।
दमः प्रशान्तता चैव भूतानां चानुकम्पनम् ॥१४-१९-१५ (९२९११)
संयमश्चानृशंस्य च परस्वादानवर्जनम् ।
व्यलीकानामकरणं भूताना मनसा भुवि ॥१४-१९-१६ (९२९१२)
मातापित्रोश्च शुश्रूषा देवतातितिपूजनम् ।
गुरुपूजा घृणा शौचं नित्यमिन्द्रियसंयमः ॥१४-१९-१७ (९२९१३)
प्रवर्तनं शुभानां च तत्सतां व्रतमुच्यते ।
ततो धर्मः प्रभवति यः प्रजाः पाति शाश्वतीः ॥१४-१९-१८ (९२९१४)
ग्सद्भिराचरितो धर्मः सदाचारे प्रतिष्ठितः ।
उभयार्थो भवत्येव स्वर्गार्थो मोक्षतस्तथा ॥'॥१४-१९-१९ (९२९१५)
एवं सत्सु सदा पश्येत्तत्रछाप्येषा ध्रुवा स्थितिः ।
आचारो धर्ममाचष्टे यस्मिन्सन्तो व्यवस्थिताः ॥१४-१९-२० (९२९१६)
तेषु तत्कर्म निक्षिप्तं यः स धर्मः सनातनः ।
यस्तं समभिपद्येत न स दुर्गतिमाप्नुयात् ॥१४-१९-२१ (९२९१७)
अतो नियम्यते लोकः प्रच्यवन्धर्मवर्त्मसु ।
यश्च योगी च मुक्तश्च स ऐतेभ्यो विशिष्यते ॥१४-१९-२२ (९२९१८)
वर्तमानस्य धर्मेण पुरुषस्य यथा तथा ।
संसारतारणं ह्यस्य कालेन महता भवेत् ॥१४-१९-२३ (९२९१९)
एवं पूर्वकृतं कर्म सर्वो जन्तुः प्रपद्यते ।
सर्वं तत्कारणं येन निकृतोऽप्यमिहागतः ॥१४-१९-२४ (९२९२०)
शरीरग्रहणं चास्य केन पूर्वं प्रकल्पितम् ।
इत्येवं संशये लोके तच्च वक्ष्याम्यतः परम् ॥१४-१९-२५ (९२९२१)
शरीरमात्मनः कृत्वा सर्वलोकपितामहः ।
त्रैलोक्यमसृजद्ब्रह्मा कृत्स्नं स्थावरजङ्गमम् ॥१४-१९-२६ (९२९२२)
ततः प्रधानमसृजच्चेतनां तु शरीरिणाम् ।
यया सर्वमिदं व्याप्तं यां लोके परमां विदुः ॥१४-१९-२७ (९२९२३)
इदं तत्क्षरमित्युक्तं परं त्वमृतमक्षरम् ।
त्रयाणां मिथुनं सर्वमेकैकस्य पृथक्पृथक् ॥१४-१९-२८ (९२९२४)
असृजत्सर्वभूतानि पूर्वदृष्टः प्रजापतिः ।
स्थावराणि च भूतानि इत्येषा पौर्विकी श्रुतिः ॥१४-१९-२९ (९२९२५)
तस्य कालपरीमाणमकरोत्स पितामहः ।
भूतेषु परिवृत्तिं च पनरावृत्तिमेव च ॥१४-१९-३० (९२९२६)

यथा तु कश्चिन्मेधावी दृष्टात्मा पूर्वजन्मनि ।
यत्प्रवक्ष्यामि तत्सर्वं यथावदुपपद्यते ॥१४-१९-३१ (९२९२७)
सुखदुःखे यथा सम्यगनित्ये यः प्रपश्यति ।
कायं चामेध्यसंस्थानं विनाशं कर्मसंहितम् ॥१४-१९-३२ (९२९२८)
यच्च किञ्चित्सुखं तच्च दुःखं दृष्टमिति स्मरन् ।
संसारसागरं घोरं तरिष्यति सुदुस्तरम् ॥१४-१९-३३ (९२९२९)
जनीमरणरोगैश्च समाविष्टः प्रधानवित् ।
चेतनाव्तसु चैतन्यं समं भूतेषु पश्यति ॥१४-१९-३४ (९२९३०)
निर्विद्यते ततः कश्चिन्मार्गमाणः परं पदम् ।
तस्योपदेशं वक्ष्यामि याथातथ्येन सत्तम ॥१४-१९-३५ (९२९३१)
शाश्वतस्याव्ययस्याथ् यदस्य ज्ञानमुत्तमम् ।
प्रोच्यमानं मया विप्र निबोधदमशेषतः ॥ ॥१४-१९-३६ (९२९३२)

इति श्रीमन्महाभारते आश्वमेधिकपर्वणि अनुगीतापर्वणि
एकोविंशोऽध्यायः ॥१९ ॥
Mahabharata - Ashvamedhika Parva - Chapter Footnotes

७-१९-२ फली वृक्षः ।७-१९-८ तथापि तेजसा सम्यक्प्राणस्थाने
इति थ।पाठः ॥
७-१९-९ यथा स्वर्णद्रवः स्वल्पोति कृत्स्नां ताम्रप्रतिमां
स्वर्णमयीमिव करोत्येवं गर्भे जीवप्रवेशनं ।शरीरे सूक्ष्मस्यापि
चैतन्यस्य व्याप्तिरित्याद्यस्य परिहारः ॥
७-१९-२८ क्षरं जडम् ॥

---

अस्वमेधिकपर्व-अध्यय०२०
॥श्रीः ॥
१४.२०. अध्यायः २०

अश्वमेधपर्व ॥१ ॥
Mahabharata - Ashvamedhika Parva - Chapter Topics
कृष्णेनार्जुनंप्रति
मोक्षसाधनादिप्रतिपादकसिद्धकाश्यपसंवादरूपानुगीतोपदेशः ॥१ ॥

Mahabharata - Ashvamedhika Parva - Chapter Text

ब्राह्मण उवाच ।

यः स्यादेकान्त आसीनस्तूष्णीं किञ्चिदचिन्तयन् ।
पूर्वंपूर्वं परित्यज्य स निरारम्भको भवेत् ॥ १४-२०-१ (९२९३३)
सर्वमित्रः सर्वसहः शमे रक्तो जितेन्द्रियः ।
व्यपेतभयमन्युश्च कामहा मुच्यते नरः ॥ १४-२०-२ (९२९३४)
आत्मवत्सर्वभूतेषु यश्चरेन्नियतः शुचिः ।
ग्नित्यमेव यथान्यायं यश्चरेन्नियतेन्द्रियः।'
अमानी निरभीमानः सर्वतो मुक्त एव सः ॥ १४-२०-३ (९२९३५)
जीवितं मरणं चोभे सुखदुःखे तथैव च ।
लाभालाभे प्रियद्वेष्ये यः समः स च मुच्यते ॥ १४-२०-४ (९२९३६)
न कस्यचित्स्पृहयते नावजानाति किचन ।
निर्द्वन्द्वो वीतरागात्मा सर्वथा मुक्त एव सः ॥ १४-२०-५ (९२९३७)
अनमित्रश्च निर्बन्धुरनपत्यश्च यः क्वचित् ।
त्यक्तधर्मार्थकामश्च निराराङ्क्षी च मुच्यते ॥ १४-२०-६ (९२९३८)
नैव धर्मी न चाधर्मी पूर्वोपचितहा च यः ।
क्षीणधातुः प्रशान्तात्मा निर्द्वंद्वः स विमुच्यते ॥ १४-२०-७ (९२९३९)
अकर्मा चाविकाङ्क्षश्च पश्येज्जगदशाश्वतम् ।
अस्वस्तमवशं नित्यं जन्ममृत्युजरायुतम् ॥ १४-२०-८ (९२९४०)
वैराग्यबुद्धिः सततं तावद्दोषव्यपेक्षकः ।
आत्मबन्धविनिर्मोक्षं स करोत्यचिरादिव ॥ १४-२०-९ (९२९४१)
अगन्धमरसस्पर्शमशब्दमपरिग्रहम् ।
अरूपमनभिज्ञेयं दृष्ट्वाऽऽत्मानं विमुच्यते ॥ १४-२०-१० (९२९४२)
पञ्चभूतगुणैर्हीनममूर्तिमदलेपकम् ।
अगुणं गुणभोक्तारं यः पश्यति स मुच्यते ॥ १४-२०-११ (९२९४३)
विहाय सर्वसङ्कल्पान्बुद्ध्या शारीरमानसान् ।
शनैर्निर्वाणमाप्नोति निरिन्धन इवानलः ॥ १४-२०-१२ (९२९४४)
सर्वसंस्कारनिर्मुक्तो निर्द्वन्द्वो निष्परिग्रहः ।
तपसा इन्द्रियग्रामं यश्चरेन्मुक्त एव सः ॥ १४-२०-१३ (९२९४५)
विमुक्तः सर्वसंस्कारैस्ततो ब्रह्म सनातनम् ।
परमाप्नोति संशान्तमचलं नित्यमक्षरम् ॥ १४-२०-१४ (९२९४६)
अतः परं प्रवक्ष्यामि योगशास्त्रमनुत्तमम् ।
यज्ज्ञात्वा सिद्धमात्मानं लोके पश्यन्ति योगिनः ॥ १४-२०-१५ (९२९४७)
तस्योपदेशं वक्ष्यामि यथावत्तन्निबोध मे ।
यैर्योगैर्भावयन्नित्यं पश्यत्यात्मानमात्मनि ॥ १४-२०-१६ (९२९४८)
इन्द्रियाणि तु संहृत्य मन आत्मनि धारयेत् ।
तीव्रं तप्त्वा तपः पूर्वं मोक्षयोगं समाचरेत् ॥ १४-२०-१७ (९२९४९)
तपस्वी नित्यसङ्कल्पो दम्भाहङ्कारवर्जितः ।

मनीषी मनसा विप्रः पश्यत्यात्मानमात्मनि ॥१४-२०-१८ (९२९५०)
स चेच्छक्नोत्ययं साधुर्योक्तुमात्मानमात्मनि ।
तत एकान्तशीलः स पश्यत्यात्मानमात्मनि ॥१४-२०-१९ (९२९५१)
संयतः सततं युक्त आत्मवान्विजितेन्द्रियः ।
यथा य आत्मनाऽऽत्मानं सम्प्रयुक्तः प्रपश्यति ॥१४-२०-२० (९२९५२)
यथाहि पुरुषः स्वप्ने दृष्ट्वा पश्यत्यसाविति ।
तथारूपमिवात्मानं साधुयुक्तः प्रपश्यति ॥१४-२०-२१ (९२९५३)
इषीकां च यथा मुञ्जात्कश्चिन्निष्कृष्य दर्शयेत् ।
योगी निष्कृष्य चात्मानं तथा पश्यति देहतः ॥१४-२०-२२ (९२९५४)
मुञ्जं शरीरमित्याहुरिषीकामात्मनि श्रिताम् ।
एतन्निदर्शनं प्रोक्तं योगविद्भिरनुत्तमम् ॥१४-२०-२३ (९२९५५)
यदा हि युक्तमात्मानं सम्यक् पश्यति देहभृत् ।
न तस्येहेश्वरः कश्चित्त्रैलोक्यस्यापि यः प्रभुः ॥१४-२०-२४ (९२९५६)
अन्यान्याश्चैव तनवो यथेष्टं प्रतिपद्यते ।
विनिर्भिद्य जरां मृत्युं न शोचति न हृष्यति ॥१४-२०-२५ (९२९५७)
देवानामपि देवत्वं युक्तः कारयते वशी ।
ब्रह्म चाव्ययमाप्नोति हित्वा देहमशाश्वतम् ॥१४-२०-२६ (९२९५८)
विनश्यत्सु च लोकेषु न भयं तस्य जायते ।
क्लिश्यमानेषु भूतेषु न स क्लिश्यति केनचित् ॥१४-२०-२७ (९२९५९)
दुःखशोकमलैर्घोरैः सङ्गस्नेहसमुद्भवैः ।
न विचाल्यति युक्तात्मा निस्पृहः शान्तमानसः ॥१४-२०-२८ (९२९६०)
नैनं शस्त्राणि विध्यन्ते न मृत्युश्चास्य विद्यते ।
नातः सुखतरं किञ्चिल्लोके क्वचन दृश्यते ॥१४-२०-२९ (९२९६१)
सम्यग्युक्त्वा स आत्मानमात्मन्येव प्रतिष्ठिते ।
विनिवृत्तजरादुःखः सुखं स्वपिति चापि सः ॥१४-२०-३० (९२९६२)
देहान्यथेष्टमभ्येति हित्वेमां मानुषीं तनुम् ।
निर्वेदस्तु न कर्तव्यो भुञ्जानेन कथञ्चन ॥१४-२०-३१ (९२९६३)
सम्यग्युक्तो यदात्मानमात्मन्येव प्रपश्यति ।
तदैव न स्पृहयते साक्षादपि शतक्रतोः ॥१४-२०-३२ (९२९६४)
योगमेकान्तशीलस्तु यथा विन्दति तच्छृणु ।
दृष्टपूर्वां दिशं चिन्त्य यस्मिन्संनिवसेत्पुरे ॥१४-२०-३३ (९२९६५)
पुरस्याभ्यन्तरे तस्य मनः स्थाप्यं न बाह्यतः ।
पुरस्याभ्यन्तरे तिष्ठन्यस्मिन्नावसथे वसेत ।
तस्मिन्नावसथे धार्यं सबाह्याभ्यन्तरं मनः ॥ १४-२०-३४ (९२९६६)
प्रचिन्त्यावसथे कृत्स्नं यस्मिन्काये स पश्यति ।
तस्मिन्काये मनश्चास्य न च किञ्चन बाह्यतः ॥१४-२०-३५ (९२९६७)

सन्नियम्येन्द्रियग्रामं निर्घोषं निर्जने वने ।
कायमभ्यन्तरं कृत्स्नमेकाग्रः परिचिन्तयेत् ॥१४-२०-३६ (९२९६८)
इन्तांस्तालु च जिह्वां च गलं ग्रीवां तथैव च ।
हृदयं चिन्तयेच्चापि तथा हृदयबन्धनम् ॥१४-२०-३७ (९२९६९)
इत्युक्तः स मया शिष्यो मेधावी मधुसूदन ।
पप्रच्छ पुनरेवेमं मोक्षधर्मं सुदुर्वचम् ॥१४-२०-३८ (९२९७०)
भुक्तं भुक्तमिदं कोष्ठे कथमन्नं विपच्यते ।
कथं रसत्वं व्रजति शोणितत्वं कथं पुनः ॥१४-२०-३९ (९२९७१)
तथा मांसं च मेदश्च स्नाय्वस्थीनि च पोषयेत् ।
कथमेतानि सर्वाणि शरीराणि शरीरिणाम् ॥१४-२०-४० (९२९७२)
वर्धन्ते वर्धमानस्य वर्धते च कथं बलम् ।
निरासनं निष्कसनं मलानां च पृथक् पृथक् ॥१४-२०-४१ (९२९७३)
कुतो वाऽयं प्रश्वसिति उच्छ्वसित्यपि वा पुनः ।
कं च देशमधिष्ठाय तिष्ठत्यात्माऽयमात्मनि ॥१४-२०-४२ (९२९७४)
जीवः कथं वहति च चेष्टमानः कलेवरम् ।
किंवर्णं कीदृशं चैव निवेशयति वै मनः ॥१४-२०-४३ (९२९७५)
याथातथ्येन भगवन्वक्तुमर्हसि मेऽनघ ।
इति सम्परिपृष्टोऽहं तेन विप्रेणि माधव ॥१४-२०-४४ (९२९७६)
प्रत्यब्रवं महाबाहो यथाश्रुतमरिंदम ।
यथा स्वकोष्ठे प्रक्षिप्य भाण्डं भाण्डमना भवेत् ॥१४-२०-४५ (९२९७७)
तथा स्वकाये प्रक्षिप्य मनोद्वारैरनिश्चलैः ।
आत्मानं तत्र मार्गेत प्रमादं परिवर्जयेत् ॥१४-२०-४६ (९२९७८)
एवं सततमुद्युक्तः प्रीतात्मा नचिरादिव ।
आसादयति तद्ब्रह्म यद्दृष्ट्वा स्यात्प्रधानवित् ॥१४-२०-४७ (९२९७९)
न त्वसौ चक्षुषा ग्राह्यो न च सर्वैरपीन्द्रियैः ।
मनसैव प्रदीपेन महानात्मा प्रदृश्यते ॥१४-२०-४८ (९२९८०)
सर्वतः पाणिपादान्तः सर्वतोक्षिशिरोमुखः ।
सर्वतः श्रुतिमाँल्लोके सर्वमावृत्य तिष्ठति ॥१४-२०-४९ (९२९८१)
जीवो निष्क्रान्तमात्मानं शरीरात्सम्प्रपश्यति ।
स तमुत्सृज्य देहं स्वं पारयेद्ब्रह्म केवलम् ॥१४-२०-५० (९२९८२)
आत्मानमालोकयति मनसा प्रहसन्निव ।
तदेवमाश्रयं कृत्वा मोक्षं याति ततो मयि ॥१४-२०-५१ (९२९८३)
इदं सर्वरहस्यं ते मया प्रोक्तं द्विजोत्तम ।
आपृच्छे साधयिष्यामि गच्छ विप्र यथासुखम् ॥१४-२०-५२ (९२९८४)
इत्युक्तः स तदा कृष्ण मया शिष्यो महातपाः ।
अगच्छत यथाकामं ब्राह्मणश्छिन्नसंशयः ॥१४-२०-५३ (९२९८५)

वासुदेव उवाच।१४-२०-५४क्ष् (७८०७)
इत्युक्त्वा स तदा वाक्यं मां पार्थ द्विजसत्तमः ।
मोक्षधर्माश्रितं सम्यक् तत्रैवान्तरधीयत ॥१४-२०-५४ (९२९८६)
कच्चिदेतत्त्वया पार्थ श्रुत्मेकाग्रचेतसा ।
तदापि हि रथस्थस्त्वं श्रुतवानेतदेव हि ॥१४-२०-५५ (९२९८७)
नैतत्पार्थ सुविज्ञेयं व्यामिश्रेणेति मे मतिः ।
नरेणाकृतसङ्गेन विशुद्धेनान्तरात्मना ॥१४-२०-५६ (९२९८८)
सुरहस्यमिदं प्रोक्तं देवानां भरतर्षभ ।
कच्चित्त्विदं श्रुतं पार्थ मनुष्येणेह कर्हिचित् ॥१४-२०-५७ (९२९८९)
न ह्येतच्छ्रोतुमर्होऽन्यो मनुष्यस्त्वामृतेऽनघ ।
नैतदन्येनि विज्ञेयं व्यामिश्रेणान्तरात्मना ॥१४-२०-५८ (९२९९०)
क्रियावद्भिर्हि कौन्तेय देवलोकः समावृतः ।
न चैतदिष्टं देवानां मर्त्यैरुपरि वर्तनम् ॥१४-२०-५९ (९२९९१)
परा हि सा गतिः पार्थ यत्तद्ब्रह्म सनातनम् ।
यत्रामृतत्वं प्राप्नोति त्यक्त्वा दुःखं सदा सुखी ॥१४-२०-६० (९२९९२)
इमं धर्मं समास्थाय येऽपि स्युः पापयोनयः ।
स्त्रियो वैश्यास्तथा शूद्रास्तेऽपि यान्ति परां गतिम् ॥१४-२०-६१ (९२९९३)
किं पुनर्ब्राह्मणाः पार्थ क्षत्रिया वा बहुश्रुताः ।
स्वधर्मरतयो नित्यं ब्रह्मलोकपरायणः ॥१४-२०-६२ (९२९९४)
हेतुमच्चैतदुद्दिष्टमुपायाश्चास्य साधने ।
सिद्धिं फलं च मोक्षश्च दुःखस्य च विनिर्णियः ॥१४-२०-६३ (९२९९५)
नातः परं सुखं त्वन्यत्किंचित्स्याद्भरतर्षभ ।
श्रुतवाञ्श्रद्दधानश्च पराक्रान्तश्च पाण्डव ॥१४-२०-६४ (९२९९६)
यः परित्यज्यते मर्त्यो लोकसारमसरवत् ।
एतैरुपायैः स क्षिप्रं परां गतिमवाप्नुते ॥१४-२०-६५ (९२९९७)
एतावदेव वक्तव्यं नान्तो भूयोस्ति किञ्चन ।
षण्मासान्नित्ययुक्तस्य योगः पार्थ प्रवर्तते ॥ ॥१४-२०-६६ (९२९९८)

इति श्रीमन्महाभारते आश्वमेधिकपर्वणि अनुगीतापर्वणि विंशोऽध्यायः
॥ २० ॥

Mahabharata - Ashvamedhika Parva - Chapter Footnotes

७-२०-२ सर्वमित्रोऽद्रोही ।सर्वसहः क्षमी ॥
७-२०-६ अनमित्रः शत्रुहीनः ॥
७-२०-११ अमूर्तिमदहेतुकमिति झ पाठः ॥

अस्वमेधिकपर्व-अध्यय०२१
॥ श्रीः ॥
१४.२१. अध्यायः २१

Mahabharata - Ashvamedhika Parva - Chapter Topics
कृष्णेनार्जुनंप्रति
भूतप्राणादिसृष्ट्यादिप्रतिपादकब्राह्मणदंपतिसंवादानुवादः ॥ १ ॥

Mahabharata - Ashvamedhika Parva - Chapter Text

वासुदेव उवाच ।
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
दंपत्योः पार्थ संवादो योऽभकवङ्गरतर्षभ ॥ १४-२१-१ (९२९९९)
ब्राह्मणी ब्राह्मणं कंचिज्ज्ञानविज्ञानपारगम् ।
दृष्ट्वा विविक्त आसीनं भार्या भर्तारमब्रवीत् ॥ १४-२१-२ (९३०००)
कं नु लोकं गमिष्यामि त्वामहं पतिमाश्रिता ।
न्यस्तकर्माणमासीनं कीनाशमविचक्षणम् ॥ १४-२१-३ (९३००१)
भार्याः पतिकृताँल्लोकानाप्नुवन्तीति नः श्रुतम् ।
त्वामहं पतिमासाद्य कां गमिष्यामि वै गतिम् ॥ १४-२१-४ (९३००२)
एवमुक्तः स शान्तात्मा तामुवाच हसन्निव ।
सुभगे नाभ्यसूयामि वाक्यस्यास्य तवानघे ॥ १४-२१-५ (९३००३)
ग्राह्यं दृश्यं तथा श्राव्यं यदिदं कर्म विद्यते ।
एतदेव व्यवस्यन्ति कर्म कर्मेति कर्मिणः ॥ १४-२१-६ (९३००४)
मोहमेव निगच्छन्ति कर्मिणो ज्ञानवर्जिताः ।
नैष्कर्म्यं न च लोकेऽस्मिन्मौर्तमित्युपलभ्यते ॥ १४-२१-७ (९३००५)
कर्मणा मनसा वाचा शुभं वा यदि वाऽशुभम् ।
जन्मादिमूर्तिभेदानां कर्म भूतेषु वर्तते ॥ १४-२१-८ (९३००६)
रक्षोभिर्वध्यमानेषु दृश्यश्राव्येषु कर्मसु ।
आत्मस्थमात्मना तेन दृष्टमायतनं मया ॥ १४-२१-९ (९३००७)
यत्र तद्ब्रह्म निर्द्वन्द्वं यत्र सोमः सहाग्निना ।
व्यवायं कुरुते नित्यं धीरो भूतानि धारयन् ॥ १४-२१-१० (९३००८)
यत्रि ब्रह्मादयो युक्तास्तदक्षरमुपासते ।
विद्वांसः सुव्रता यत्र शान्तात्मानो जितेन्द्रियाः ॥ १४-२१-११ (९३००९)
घ्राणेन न तदाघ्रेयं नास्वाद्यं चैव जिह्वया ।
स्पर्शनेन तदस्पृश्यं मनसा त्ववगम्यते ॥ १४-२१-१२ (९३०१०)
चक्षुषा न विषह्यं च यत्किञ्चिच्छ्रवणात्परम् ।

अगन्धमरसस्पर्शमरूपं शब्दवर्जितम् ।
यतः प्रवर्तते तन्त्रं यत्र चैतत्प्रतिष्ठितम् ॥ १४-२१-१३ (९३०११)
प्राणोऽपानः समानश्च व्यानश्चोदान एव च ।
तत एव प्रवर्न्तते तदेव प्रविशन्ति च ॥१४-२१-१४ (९३०१२)
समानव्यानयोर्मध्ये प्राणापानौ विचेरतुः ।
तस्मिन्सुप्ते प्रलीयेते समानो व्यान एव च ॥१४-२१-१५ (९३०१३)
अपनाप्राणयोर्मध्ये उदानो व्याप्य तिष्ठति ।
तस्माच्छयानं पुरुषं प्राणापानौ न मुञ्चतः ॥ १४-२१-१६ (९३०१४)
प्राणोनोपहते यत्तु तमुदानं प्रचक्षते ।
तस्मात्तपो व्यवस्यन्ति तद्भवं ब्रह्मवादिनः ॥१४-२१-१७ (९३०१५)
तेषामन्योन्यसक्तानां सर्वेषां देहचारिणाम् ।
अग्निर्वैश्वानरो मध्ये सप्तधा विहितोऽन्तरा ॥१४-२१-१८ (९३०१६)
घ्राणं जिह्वा च चक्षुश्च त्वक्च श्रोत्रं च पञ्चमम् ।
मनो बुद्धिश्च सप्तैता जिह्वा वैश्वानरार्चिषः ॥१४-२१-१९ (९३०१७)
घ्रेयं दृश्यं च पेयं च स्पृश्यं श्राव्यं तथैव च ।
मन्तव्यमवबोद्धव्यं ताः सप्त समिधो मताः ॥१४-२१-२० (९३०१८)
घ्राता भक्षयिता द्रष्टा स्प्रष्टा श्रोता च पञ्चमः ।
मन्ता बोद्धा च स्प्तैते भवन्ति परमर्त्विजः ॥१४-२१-२१ (९३०१९)
घ्रेये पेये च दृश्ये च स्पृश्ये श्राव्ये तथैव च ।
मन्तव्येऽप्यथ बोद्धव्ये सुभगे पश्य सर्वदा ॥१४-२१-२२ (९३०२०)
हवींष्याग्निषु होतारः सप्तधा सप्तसप्तसु ।
सम्यक्प्रक्षिप्य विद्वांसो जनयन्ति स्वयोनिषु ॥१४-२१-२३ (९३०२१)
पृथिवी वायुराकाशमापो ज्योतिश्च पञ्चमम् ।
मनो बुद्धिश्च सप्तैता योनिरित्येव शब्दिताः ॥१४-२१-२४ (९३०२२)
हविर्भूतगुणाः सर्वे प्रविशन्त्यग्नियं मुखम् ।
अन्तर्वासमुषित्वा च जायन्ते स्वासु योनिषु ॥१४-२१-२५ (९३०२३)
तत्रैव च निरुध्यन्ते प्रलये भूतभावने ।
ततः संजायते गन्धस्ततः संजायते रसः ॥१४-२१-२६ (९३०२४)
ततः संजायते रूपं ततः स्पर्शोऽभिजायते ।
ततः संजायते शब्दः संशयस्तत्र जायते ।
ततः संजायते निष्ठा जन्मैतत्सप्तधा विदुः ॥ १४-२१-२७ (९३०२५)
अनेनैव प्रकारेण प्रगृहीतं पुरातनैः ।
पूर्णाहुतिभिरापूर्णास्ते पूर्यन्ते हि तेजसा ॥ ॥१४-२१-२८ (९३०२६)

इति श्रीमन्महाभारते आश्वमेधिकपर्वणि अनुगीतापर्वणि
एकविंशोऽध्यायः ॥२१ ॥

७-२१-३ कर्म अग्निहोत्रादिकं न्यस्तं चेन तम् । कीनाशं कर्कशं मयि निरनुक्रोशम्। अविचक्षणं मम अनन्यगतिकत्वमजानन्तम् ॥
७-२१-७ मौख्यमित्युपलभ्यते इति थ द्द पाठः ॥
७-२१-१७ तत्परं ब्रह्मवादिन इति द पाठः ॥

---

अस्वमेधिकपर्व-अध्यय०२२
॥ श्रीः ॥
१४.२२. अध्यायः २२

अश्वमेधपर्व ॥ १ ॥
Mahabharata - Ashvamedhika Parva - Chapter Topics
कृष्णेनार्जुनंप्रति
दशेन्द्रियगुणादिप्रतिपादकब्राह्मणदंपतिसंवादानुवादः ॥ १ ॥

Mahabharata - Ashvamedhika Parva - Chapter Text

ब्राह्मण उवाच ।
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
निबोध दशहोतॄणां विधानमिह यादृशम् ॥ १४-२२-१ (९३०२७)
श्रोत्रं त्वक्चक्षुषी जिह्वा नासिका चरणौ करौ ।
उपस्थं पायुरिति वाग्घोतॄणि दश भामिनि ॥ १४-२२-२ (९३०२८)
शब्दस्पर्शौ रूपरसौ गन्धो वाक्यं क्रिया गतिः ।
रेतोमूत्रपुरीषाणां त्यागो दश हवींषि च ॥ १४-२२-३ (९३०२९)
दिशो वायू रविश्चन्द्रः पृथ्व्यग्नी विष्णुरेव च ।
इन्द्रः प्रजापतिर्मित्रमग्नयो दश भामिनि ॥ १४-२२-४ (९३०३०)
दशेन्द्रियाणि होतॄणि हवींषि दश भामिनि ।
विषया नाम समिधो हूयन्ते तु दशाग्निषु ॥ १४-२२-५ (९३०३१)
चित्तं स्रुवश्च वित्तं च पवित्रं ज्ञानमुत्तमम् ।
सुविभक्तमिदं पूर्वं जगदासीदिति श्रुतम् ॥ १४-२२-६ (९३०३२)
ग्ततो विविक्ता वित्तासीत्सा वित्तं पर्यवेक्षते।'
सर्वमेवात्र विज्ञेयं चित्ते ज्ञानमवेक्षता ।
रेतः शरीरभृत्काये विज्ञाता तु शरीरभृत् ॥ १४-२२-७ (९३०३३)
शरीरभृद्गार्हपत्यस्तस्मादग्निः प्रणीयते ।
मनश्चाहवनीयस्तु तस्मिन्प्रक्षिप्यते हविः ॥ १४-२२-८ (९३०३४)

ततो वाचस्पतिर्जज्ञे तं मनः पर्यवेक्षते ।
रूपं भवति वै वक्त्रं तदनुद्रवते मनः ॥१४-२२-९ (९३०३५)
ब्राह्मण्युवाच।१४-२२-१०क्ष् (७८०८)
कस्माद्वागभवत्पूर्वं कस्मात्पश्चान्मनोऽभवत् ।
मनसा चिन्तितं पूर्वं वाक्यं समभिपद्यते ॥१४-२२-१० (९३०३६)
केन विज्ञानयोगेन मतिश्चित्तं समास्थिता ।
समुन्नीता नाध्यगच्छत्को वै तां प्रतिबाधते ॥१४-२२-११ (९३०३७)
ब्राह्मण उवाच।१४-२२-१२क्ष् (७८०९)
तन्मनस्थः पतिर्भूत्वा तस्मात्प्रेहन्निवायति ।
तां मतिं मनसः प्राहुर्मनस्तस्मादपेक्षते ॥१४-२२-१२ (९३०३८)
प्रश्नं तु वाङ्मनसयोर्यस्मात्त्वमनुपृच्छसि ।
तस्मात्ते वर्तयिष्यामि तयोरेव समाह्वयम् ॥१४-२२-१३ (९३०३९)
उभे वाङ्मनसी गत्वा भूतात्मानमपृच्छताम् ।
आवयोः श्रेष्ठमाचक्ष्व च्छिन्धि नौ संशयं विभो ॥१४-२२-१४ (९३०४०)
मन इत्येवि भगवांस्तदा प्राह सरस्वतीम् ।
अहं वै कामधुक्तुभ्यमिति तं प्राह वागथ ॥१४-२२-१५ (९३०४१)
ब्राह्मण उवाच।१४-२२-१६क्ष् (७८१०)
स्थावरं जङ्गमं चैव विद्ध्युभे मनसी मम ।
स्थावरं मत्सकाशे वै जङ्गमं विषये तव ॥१४-२२-१६ (९३०४२)
यस्तु ते विषये गच्छन्मन्त्रो वर्णः स्वरोपि वा ।
तन्मनो जङ्गमं नाम तस्मादसि गरीयसी ॥१४-२२-१७ (९३०४३)
तस्माद्भवितुमर्हामि स्वयमभ्येत्य शोभने ।
तस्मादुच्छ्वासमासाद्य प्रवक्ष्यामि सरस्वति ॥१४-२२-१८ (९३०४४)
प्राणापानावन्तरे यद्वाग्वै नित्यं स्म तिष्ठति ।
प्रीयमाणा महाभागे विना प्राणांश्च मामपि ।
प्रजापतिमुपाधावत्प्रसीद भगवन्निति ॥ १४-२२-१९ (९३०४५)
ततः प्राणः प्रादुरभूद्वाचमाप्याययन्पुनः ।
तस्मादुच्छ्वासमासाद्य न वाग्वदति कर्हिचित् ॥१४-२२-२० (९३०४६)
घोषिणी जातनिर्घोषा नित्यमेव प्रवर्तते ।
तयोरपि च घोषिण्या निर्घोषैव गरीयसी ॥१४-२२-२१ (९३०४७)
गौरिव प्रस्रवत्यर्थान्रसमुत्तमशालिनी ।
सततं स्यन्दते ह्येषा शाश्वतं ब्रह्मवादिनी ॥१४-२२-२२ (९३०४८)
दिव्यादिव्यप्रभावेन भारती गौः शुचिस्मिते ।
एतयोरन्तरं पश्य सूक्ष्मयोर्यतमानयोः ॥१४-२२-२३ (९३०४९)
ब्राह्मण्युवाच।१४-२२-२४क्ष् (७८११)
अनुत्पन्नेषु वाक्येषु चोद्यमाना सिसृक्षया ।

किंन्नु पूर्वं तदा देवी व्याजहार सरस्वती ॥१४-२२-२४ (९३०५०)
ब्राह्मण उवाच।१४-२२-२५क्ष् (७८१२)
प्राणेन य सम्भवते शरीरे
प्राणादपानं प्रतिपद्यते च ।
उदानभूता च विसृज्य देहं
व्यानेन सर्वं दिवमावृणोति ॥ १४-२२-२५ (९३०५१)
ततः समाने प्रतितिष्ठतीह
इत्येव पूर्वं प्रजजल्प वागपि ।
तस्मान्मनः स्थावरत्वाद्विशिष्टं
तथा देवी जङ्गमत्वाद्विशिष्टाः ॥ ॥ १४-२२-२६ (९३०५२)

इति श्रीमन्महाभारते आश्वमेधिकपर्वणि अनुगीतापर्वणि
द्वाविंशोऽध्यायः ॥ २२ ॥
Mahabharata - Ashvamedhika Parva - Chapter Footnotes

७-२२-२२ मासमुत्तमशालिनीति क ट थ पाठः ॥

---

अस्वमेधिकपर्व-अध्यय०२३
॥ श्रीः ॥
१४.२३. अध्यायः २३

अश्वमेधपर्व ॥१ ॥
Mahabharata - Ashvamedhika Parva - Chapter Topics
कृष्णेनार्जुनंप्रति पृथग्घ्राणादीन्द्रियगुणप्रतिपादनपूर्वकं
तेषां मनसा सह विवादप्रतिपादकब्राह्मणदंपतिसंवादानुवादः ॥१ ॥

Mahabharata - Ashvamedhika Parva - Chapter Text

ब्राह्मण उवाच ।
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
सुभगे सप्तहोतॄणां विधानमिह यादृशम् ॥१४-२३-१ (९३०५३)
घ्राणश्चक्षुश्च जिह्वा च त्वक् श्रोत्रं चैव पञ्चमम् ।
मनो बुद्धिश्च सप्तैते होतारः पृथगाश्रिताः ॥१४-२३-२ (९३०५४)
सूक्ष्माकाशे समं प्राप्ते न पश्यन्तीतरेतरम् ।
एतद्वै सप्तहोतृत्वं स्वभावाद्विद्धि शोभने ॥१४-२३-३ (९३०५५)
ब्राह्मण्युवाच।१४-२३-४क्ष् (७८१३)

सूक्ष्मे तु काशे सम्प्राप्ते कथं नान्योन्यदर्शिनः ।
कथं स्वभावाद्भगवन्नेतदाचक्ष्व मे प्रभो ॥१४-२३-४ (९३०५६)
ब्राह्मण उवाच।१४-२३-५क्ष् (७८१४)
गुणज्ञानेषु विज्ञानं गुणज्ञानामभिज्ञता ।
परस्परं गुणानेते नाभिजानन्ति कर्हिचित् ॥१४-२३-५ (९३०५७)
जिह्वा चक्षुस्तथा श्रोत्रं त्वङ्मनो बुद्धिरेव च ।
न गन्धानधिगच्छन्ति घ्राणस्तानधिगच्छति ॥१४-२३-६ (९३०५८)
घ्राणं चक्षुस्तथा क्षोत्रं त्वङ्मनो बुद्धिरेव च ।
न रसानधिगच्छन्ति जिह्वा तानधिगच्छति ॥१४-२३-७ (९३०५९)
घ्राणं जिह्वा तथा श्रोत्रं त्वङ्मनो बुद्धिरेव च ।
न रूपाण्यधिगच्छन्ति चक्षुस्तान्यधिगच्छति ॥१४-२३-८ (९३०६०)
घ्राणं जिह्वा ततश्चक्षुः श्रोत्रं बुद्धिर्मनस्तथा ।
न स्पर्शानधिगच्छन्ति त्वक्च तानधिगच्छति ॥१४-२३-९ (९३०६१)
घ्राणं जिह्वा च चक्षुश्च त्वङ्मनो बुद्धिरेव च ।
न शब्दानधिगच्छन्ति श्रोत्रं तानधिगच्छति ॥१४-२३-१० (९३०६२)
घ्राणं जिह्वा च चक्षुश्च त्वक् श्रोत्रं बुद्धिरेव च ।
सङ्कल्पान्नाधिगच्छन्ति मनस्तानधिगच्छति ॥१४-२३-११ (९३०६३)
घ्राणं जिह्वा च चक्षुश्च त्वक् श्रोत्रं मन एव च ।
न निष्ठामधिगच्छन्ति बुद्धिस्तामधिगच्छति ॥१४-२३-१२ (९३०६४)
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
इन्द्रियाणां च संवादं मनसश्चैव भामिनि ॥१४-२३-१३ (९३०६५)
मन उवाच।१४-२३-१४क्ष् (७८१५)
नाघ्राति मामृते घ्राणं रसं जिह्वा न वेत्ति च ।
रूपं चक्षुर्न गृह्णाति त्वक् स्पर्शं नावबुध्यते ॥१४-२३-१४ (९३०६६)
न श्रोत्रं बुध्यते शब्दं मया हीनं कथञ्चन ।
प्रवरं सर्वबूतानामहमस्मि सनातनम् ॥१४-२३-१५ (९३०६७)
अगाराणीव शून्यानि शान्तार्चिष इवाग्नयः ।
इन्द्रियाणि न भासन्ते मया हीनानि नित्यशः ॥१४-२३-१६ (९३०६८)
काष्ठानीवार्द्रशुष्काणि यतमानैरपीन्द्रियैः ।
गुणार्थान्नाधिगच्छन्ति मामृते सर्वजन्तवः ॥१४-२३-१७ (९३०६९)
इन्द्रियाण्यूचुः।१४-२३-१८क्ष् (७८१६)
एवमेतद्भवेत्सत्यं यथैतन्मन्यते भवान् ।
ऋतेऽस्मानस्मदर्थांस्त्वं भोगान्भुङ्क्ते भवान्यदि ॥१४-२३-१८ (९३०७०)
यद्यस्मासु प्रलीनेषु तप्रणं प्राणधारणम् ।
भोगान्भुङ्क्ते भवान्सत्यं यथैतन्मन्यते तथा ॥१४-२३-१९ (९३०७१)
अथवाऽस्मासु लीनेषु तिष्ठत्सु विषयेषु च ।

यदि सङ्कल्पमात्रेण भुङ्क्ते भोगान्यथार्थवत् ॥१४-२३-२० (९३०७२)
अथ चेन्मन्यसे सिद्धिमस्मदर्थेषु नित्यदा ।
घ्राणेन रूपमादत्स्व रसमादत्स्व चक्षुषा ॥१४-२३-२१ (९३०७३)
श्रोत्रेण गन्धानादत्स्व स्पर्शानादत्स्व जिह्वया ।
त्वचा च शब्दमादत्स्व बुद्ध्या स्पर्शमथापि च ॥१४-२३-२२ (९३०७४)
बलवन्तो ह्यनियमा नियमा दुर्बलीयसाम् ।
भोगानपूर्वानादत्स्व नोच्छिष्टं भोक्तुमर्हति ॥१४-२३-२३ (९३०७५)
यथा हि शिष्यः शास्तारं श्रुत्यर्थमभिधावति ।
ततः श्रुतमुपादाय श्रुतार्थमुपतिष्ठति ॥१४-२३-२४ (९३०७६)
विषयानेवमस्माभिर्दर्शितानभिमन्यसे ।
अनुभूतानतीतांश्च स्वप्ने जागरणे तथा ॥१४-२३-२५ (९३०७७)
वैमनस्यं गतानां च जन्तूनामल्पचेतसाम् ।
अस्मदर्थे कृते दृश्यते प्राणधारणम् ॥१४-२३-२६ (९३०७८)
बहूनपि हि सङ्कल्पान्मत्वा स्वप्नानुपास्य च ।
बुभुक्षया पीड्यमानो विषयानेन धावति ॥१४-२३-२७ (९३०७९)
अगारमद्वारमिव प्रविश्य
सङ्कल्पभोगान्विषयानविन्दन् ।
प्राणक्षये शान्तिमुपैति नित्यं
दारुक्षयेऽग्निर्ज्वलितो यथैव ॥ १४-२३-२८ (९३०८०)
कामं तु नष्टेषु गुणेषु सङ्गः
कामं च नान्योन्यगुणोपलब्धिः ।
अस्मान्विना नास्ति तपोपलब्धि-
स्तामप्यृते त्वां न भजेत्प्रहर्षः ॥ ॥ १४-२३-२९ (९३०८१)

इति श्रीमन्महाभारते आश्वमेधिकपर्वणि अनुगीतापर्वणि
त्रयोविंशोऽध्यायः ॥ २३ ॥

---

अस्वमेधिकपर्व-अध्यय०२४
॥ श्रीः ॥
१४.२४. अध्यायः २४

Mahabharata - Ashvamedhika Parva - Chapter Topics
कृष्णेनार्जुनंप्रति प्राणापानादीनां
स्वस्वश्रैष्ठ्यप्रकारकविवादादिप्रतिपादकब्राह्मणदंपतिसंवादानुवादः
॥ १ ॥

ब्राह्मण उवाच ।
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
सुभगे पञ्चहोतॄणां विधानमिह यादृशम् ॥१४-२४-१ (९३०८२)
प्राणापानवुदानश्च समानो व्यान एव च ।
पञ्चहोतॄंस्तथैतान्वै परं भावं विदुर्बुधाः ॥१४-२४-२ (९३०८३)
ब्राह्मण्युवाच।१४-२४-३क्ष् (७८१७)
स्वबावात्सप्तहोतार इति मे पूर्विका मतिः ।
यथा वै पञ्च होतारः परो भावस्तदुच्यताम् ॥१४-२४-३ (९३०८४)
ब्राह्मण उवाच।१४-२४-४क्ष् (७८१८)
प्राणेन सम्भृतो वायुरपानो जायते ततः ।
अपाने सम्भृतो वायुस्ततो व्यानः प्रवर्तते ॥१४-२४-४ (९३०८५)
व्यानेन सम्भृतो वायुस्ततोदानः प्रवर्तते ।
उदाने सम्भृतो वायुः समानो नाम जायते ॥१४-२४-५ (९३०८६)
तेऽपृच्छन्त पुरो गत्वा पूर्वजातं पितामहम् ।
यो नः श्रेष्ठस्तमाचक्ष्व स नः श्रेष्ठो भविष्यति ॥१४-२४-६ (९३०८७)
ब्रह्मोवाच।१४-२४-७क्ष् (७८१९)
यस्मिन्प्रलीने प्रलयं व्रजन्ति
सर्वे प्राणाः प्राणभृतां शरीरे ।
यस्मिन्प्रवृत्ते च पुनश्चरन्ति
स वै श्रेष्ठो गच्छत यत्र कामः ॥ १४-२४-७ (९३०८८)
प्राण उवाच।१४-२४-८क्ष् (७८२०)
मयि प्रलीने प्रलयं व्रजन्ति
सर्वे प्राणाः प्राणभृतां शरीरे ।
मयि प्रवृत्ते च पुनश्चरन्ति
श्रेष्ठो ह्यहं पश्यत मां प्रलीनम् ॥ १४-२४-८ (९३०८९)
ब्राह्मण उवाच।१४-२४-९क्ष् (७८२१)
प्रामः प्रालीयत ततः पुनश्च प्रचचार ह ।
समानश्चाप्युदानश्च वचो ब्रूतां पुनः शुभे ॥१४-२४-९ (९३०९०)
न त्वं सर्वमिदं व्याप्य तिष्ठसीह यथा वयम् ।
न त्वं श्रेष्ठो हि नः प्राण अपानो हि वशे तव ।
प्रचचार पुनः प्राणस्ततोऽपानोऽभ्यभाषत ॥ १४-२४-१० (९३०९१)
उपान उवाच।१४-२४-११क्ष् (७८२२)
मयि प्रलीने प्रलयं व्रजन्ति
सर्वे प्राणाः प्राणभृतां शरीरे

मयि प्रवृत्ते च पुनश्चरन्ति
श्रेष्ठो ह्यहं पश्यत मां प्रलीनम् ॥ १४-२४-११ (९३०९२)
ब्राह्मण उवाच।१४-२४-१२क्ष् (७८२३)
व्यानश्च तमुदानश्चि भाषमाणमथोचतुः ।
अपान न त्वं श्रेष्ठोसि प्राणो हि वशगस्तव ॥१४-२४-१२ (९३०९३)
अपानः प्रचचाराथ व्यानस्तं पुनरब्रवीत् ।
श्रेष्ठोऽहमस्मि सर्वेषां श्रूयतां येन हेतुना ॥१४-२४-१३ (९३०९४)
मयि प्रलीने प्रलयं व्रजन्ति
सर्वे प्राणाः प्राणभृतां शरीरे ।
मयि प्रवृत्ते च पुनश्चरन्ति
श्रेष्ठो ह्यहं पश्यत मां प्रलीनम् ॥ १४-२४-१४ (९३०९५)
ब्राह्मण उवाच।१४-२४-१५क्ष् (७८२४)
प्रालीयत ततो व्यानः पुनश्च प्रचचार ह ।
प्राणापानावुदानस्च समानश्च तमब्रुवन् ॥१४-२४-१५ (९३०९६)
न त्वं श्रेष्ठोसि नो व्यान समानस्तु वशे तव ।
प्रचचार पुनर्व्यानः समानः पुनरब्रवीत् ।
श्रेष्ठोऽहमस्मि सर्वेषां श्रूयतां येन हेतुना ॥ १४-२४-१६ (९३०९७)
मयि प्रलीने प्रलयं व्रजन्ति
सर्वे प्राणाः प्राणभृतां शरीरे ।
मयि प्रवृत्ते च पुनश्चरन्ति
श्रेष्ठो ह्यहं पश्यत मां प्रलीनम् ॥ १४-२४-१७ (९३०९८)
ग्ततः समानः प्रालिल्ये पुनश्च प्रचचार ह ।
प्राणापानावुदानस्च व्यानश्चैव तमब्रवीत् ।
न त्वं समान श्रेष्ठोसि व्यान एव वशे तव ॥' १४-२४-१८ (९३०९९)
समानः प्रचचाराथ उदानस्तमुवाच ह ।
श्रेष्ठोऽहमस्मि सर्वेषां श्रूयतां येन हेतुना ॥१४-२४-१९ (९३१००)
मयि प्रलीने प्रलयं व्रजन्ति
सर्वे प्राणाः प्राणभृतां शरीरे ।
मयि प्रवृत्ते च पुनश्चरन्ति
श्रेष्ठो ह्यहं पश्यत मां प्रलीनम् ॥ १४-२४-२० (९३१०१)
ततः प्रालीयतोदानः पुनश्च प्रचचार ह ।
प्राणापानौ समानश्च व्यानश्चैव तमब्रुवन् ।
उदानि न त्वं श्रेष्ठोसि व्यानि एव वशे तव ॥ १४-२४-२१ (९३१०२)
ब्राह्मण उवाच।१४-२४-२२क्ष् (७८२५)
ततस्तानब्रवीत्सर्वान्स्मयमानः प्रजापतिः ।
सर्वे श्रेष्ठा न च श्रेष्ठाः सर्वे चान्योन्यकाङ्क्षिणः ॥१४-२४-२२

(९३१०३)
सर्वे स्वविषये श्रेष्ठाः सर्वे चान्योन्यधर्मिणः ।
इति तानब्रवीत्सर्वान्समवेतान्प्रजापतिः ॥१४-२४-२३ (९३१०४)
एकः स्थिरश्चराश्चान्ये विशेषात्पञ्च वायवः ।
एक एव च सर्वात्मा बहुधाऽप्युपचीयते ॥१४-२४-२४ (९३१०५)
परस्परस्य सुहृदो भावयन्तः परस्परम् ।
स्वस्ति व्रजत भद्रं वो धारयध्वं परस्परम् ॥ ॥१४-२४-२५ (९३१०६)

इति श्रीमन्महाभारते आश्वमेधिकपर्वणि अनुगीतापर्वणि
चतुर्विंशोऽध्यायः ॥ २४ ॥
Mahabharata - Ashvamedhika Parva - Chapter Footnotes

७-२४-२४ बहुधाप्युपलीयते इति क थ पाठः ॥

---

अस्वमेधिकपर्व-अध्यय०२५
॥ श्रीः ॥
१४.२५. अध्यायः २५

Mahabharata - Ashvamedhika Parva - Chapter Topics
कृष्णेनार्जुनंप्रति ब्राह्मणेन
ब्राह्मणींप्रत्युक्तसृष्ट्यादिप्रतिपादकनारददेवमतसंवादानुवादः
॥ १ ॥

Mahabharata - Ashvamedhika Parva - Chapter Text

ब्राह्मण उवाच ।
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
नारदस्य च संवादमृषेर्देवमतस्य च ॥१४-२५-१ (९३१०७)
देवमत उवाच।१४-२५-२क्ष् (७८२६)
जन्तोः संजायमानस्य किंनु पूर्वं प्रवर्तते ।
प्राणोऽपानः समानो वा व्यानो वोदान एव च ॥१४-२५-२ (९३१०८)
नारद उवाच।१४-२५-३क्ष् (७८२७)
येनायं सृज्यते जन्तुस्ततोऽन्यः पूर्वमेति तम् ।
प्राणद्वन्द्वं हि विज्ञेयं तिर्यगूर्ध्वमधश्च यत् ॥१४-२५-३ (९३१०९)
देवमत उवाच।१४-२५-४क्ष् (७८२८)
केनायं सृज्यते जन्तुः कश्चान्यः पूर्वमेति तम् ।

प्राणद्वन्द्वं च मे ब्रूहि तिर्यगूर्ध्वमधश्च यत् ॥ १४-२५-४ (९३११०)
नारद उवाच। १४-२५-५क्ष् (७८२९)
सङ्कल्पाज्जायते हर्षः शब्दादपि च जायते ।
रसात्संजायते चापि रूपादपि च जायते ॥ १४-२५-५ (९३१११)
ग्स्पर्शात्संजायते चापि गन्धादपि च जायते।'
शुक्राच्छोणितसंसृष्टात्पूर्वं प्राणः प्रवर्तते ।
प्राणेन विकृते शुक्रे ततोऽपानः प्रवर्तते ॥ १४-२५-६ (९३११२)
शुक्रात्संजायते चापि रसादपि च जायते ।
एतद्रूपमुदानस्य हर्षो मिथुनमन्तरा ॥ १४-२५-७ (९३११३)
कामात्संजायते शुक्रं शुक्रात्संजायते रजः ।
समानव्यानजनिते सामान्ये शुक्रशोणिते ॥ १४-२५-८ (९३११४)
प्राणापानाविदं द्वन्द्वमवाक् चोर्ध्वं च गच्छतः ।
व्यानः समानश्चैवोभौ तिर्यग्द्वन्द्वत्वमुच्यते ॥ १४-२५-९ (९३११५)
अग्निर्वै देवताः सर्वा इति देवस्य शासनात् ।
संजायते हि प्राणेषु ज्ञानं बुद्धिसमन्वितम् ॥ १४-२५-१० (९३११६)
तस्य धूमस्तमोरूपं रजो भस्म सुतेजसः ।
सर्वं संजायते तस्य यत्र प्रक्षिप्यते हविः ॥ १४-२५-११ (९३११७)
हविः समानो व्यानश्च इति यज्ञविदो विदुः ।
प्राणापानावाज्यभागौ तयोर्मध्ये हुताशनः ॥ १४-२५-१२ (९३११८)
एतद्रूपमुदानस्य परमं ब्राह्मणा विदुः ।
निर्द्वन्द्वमिति यत्त्वेतत्तन्मे निगदतः शृणुः ॥ १४-२५-१३ (९३११९)
अहोरात्रमिदं द्वन्द्वं तयोर्मध्ये हुताशनः ।
एतद्रूपमुदानस्य परमं ब्राह्मणा विदुः ॥ १४-२५-१४ (९३१२०)
ग्उभे सत्यानृते द्वन्द्वं तयोर्मध्ये हुताशनः ।
एतद्रूपमुदानस्य परमं ब्राह्मणा विदुः ॥' १४-२५-१५ (९३१२१)
सच्चासच्चैव तद्द्वन्द्वं तयोर्मध्ये हुताशनः ।
एतद्रूपमुदानस्य परमं ब्राह्मणा विदुः ॥ १४-२५-१६ (९३१२२)
ग्उभे शुभाशुभे द्वन्द्वं तयोर्मध्ये हुताशनः ।
एतद्रूपमुदानस्य परमं ब्राह्मणा विदुः ॥' १४-२५-१७ (९३१२३)
ऊर्ध्वं समानो व्यानश्च व्यस्यते कर्म तेन तत् ।
द्वितीयं तु समानेन पुनरेव व्यवस्यते ॥ १४-२५-१८ (९३१२४)
शान्त्यर्थं वामदेव्यं च शान्तिर्ब्रह्म सनातनम् ।
एतद्रूपमुदानस्य परमं ब्राह्मणा विदुः ॥ ॥ १४-२५-१९ (९३१२५)

इति श्रीमन्महाभारते आश्वमेधिकपर्वणि अनुगीतापर्वणि
पञ्चविंशोऽध्यायः ॥ २५ ॥

७-२५-१८ पूर्वंसमानो व्यानोऽथ व्यस्यते तेन कर्मकृत् इति क इट पाठः ॥

---

अस्वमेधिकपर्व-अध्यय०२६
॥ श्रीः ॥
१४.२६. अध्यायः २६

अथानुगीतापर्व २
Mahabharata - Ashvamedhika Parva - Chapter Topics
कृष्णेन युधिष्ठिरंप्रति
कर्तृकर्मादिप्रतिपादकब्राह्मणदंपतिसंवादानुवादः ॥ १ ॥

Mahabharata - Ashvamedhika Parva - Chapter Text

ब्राह्मण उवाच ।
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
चातुर्होत्रविधानस्य विदानमिह यादृशम् ॥ १४-२६-१ (९३१२६)
तस्य सर्वस्य विधिवद्विधानमुपदेक्ष्यते ।
शृणु मे गदतो भद्रे रहस्यमिदमुद्भुतम् ॥ १४-२६-२ (९३१२७)
करणं कर्म कर्ता च मोक्ष इत्येव भामिनि ।
चत्वार एते होतारो यैरिदं जगदावृतम् ॥ १४-२६-३ (९३१२८)
होतॄणां साधनं चैव शृणु सर्वमशेषतः ।
घ्राणं जिह्वा च चक्षुश्च त्वक्च श्रोत्रं च पञ्चमम् ।
मनो बुद्धिश्च सप्तैते ज्ञेयाः कारणहेतवः ॥ १४-२६-४ (९३१२९)
गन्धो रसश्च रूपं च शब्दः स्पर्शश्च पञ्चमः ।
मन्तव्यमवबोद्धव्यं सप्तैते कर्महेतवः ॥ १४-२६-५ (९३१३०)
घ्राता भक्षयिता द्रष्टा स्प्रष्टा श्रोता च पञ्चमः ।
मन्ता बोद्धा च सप्तैते विज्ञेयाः कर्तृहेतवः ॥ १४-२६-६ (९३१३१)
स्वगुणान्भक्षयन्त्येते गुणवन्तः शुभाशुभान् ।
असन्तो निर्गुणाश्चैते सप्तैते मोक्षहेतवः ॥ १४-२६-७ (९३१३२)
विदुषां बुध्यमानानां स्वंस्वं स्थानं यथाविधि ।
गुणास्ते देवता भूत्वा सततं भुञ्जते हविः ॥ १४-२६-८ (९३१३३)
"अदन्हवींषि चान्नानि ममत्वेन विहन्यते।'
आत्मार्थे पाचयन्नन्नं ममत्वेनोपहन्यते ॥ १४-२६-९ (९३१३४)
अभक्ष्यभक्षणं चैव मद्यपानं च हन्ति तम् ।

स चान्नं हन्ति तं चान्नं स हत्वा हन्यते पुनः ॥१४-२६-१० (९३१३५)
हन्ता ह्यन्नमिदं विद्वान्पुनर्जनयतीश्वरः ।
न चान्नाज्जायते तस्मिन्सूक्ष्मो नाम व्यतिक्रमः ॥१४-२६-११ (९३१३६)
मनसा मन्यते यच्च यच्च वाचा निगद्यते ।
श्रोत्रेण श्रूयते यच्च चक्षुषा यच्च दृश्यते ॥१४-२६-१२ (९३१३७)
स्पर्शेन स्पृश्यते यच्च घ्राणेन घ्रायते च यत् ।
मनस्येतानि संयम्य हवींष्येतानि सर्वशः ॥१४-२६-१३ (९३१३८)
गुणवत्पावको मह्यं दीप्यतेऽन्तःशरीरगः ।
योगयज्ञः प्रवृत्तो मे ज्ञानं ब्रह्ममयो हविः
।प्राणस्तोत्रोऽपानशस्त्रः सर्वत्यागसुदक्षिणः ॥ १४-२६-१४ (९३१३९)
कर्ताऽनुमन्ता ब्रह्मात्मा होताऽध्वर्युः कृतस्तुतिः
ऋतं प्रशास्ता तच्छस्त्रमपवर्गोऽस्य दक्षिणा ॥ १४-२६-१५ (९३१४०)
ऋचश्चाप्यत्र शंसन्ति नारायणविदो जनाः ।
नारायणाय देवाययदविन्दन्पशून्पुरा ॥१४-२६-१६ (९३१४१)
तत्र सामानि गायन्ति तत्र चाहुर्निदर्शनम् ।
देवं नारायणं भीरु सर्वात्मानं निबोध तम् ॥ ॥१४-२६-१७ (९३१४२)

इति श्रीमन्महाभारते आश्वमेधिकपर्वणि अनुगीतापर्वणि
षडिंशोऽध्यायः ॥२६ ॥

Mahabharata - Ashvamedhika Parva - Chapter Footnotes

७-२६-११ अद्यमन्नमदन्नह्नि पुनरिति क पाठः ॥
७-२६-१४ दीप्यते हव्यवाहन इति क ट थ पाठः ॥

---

अस्वमेधिकपर्व-अध्यय०२७
॥श्रीः ॥
१४.२७. अध्यायः २७

अथानुगीतापर्व-२

Mahabharata - Ashvamedhika Parva - Chapter Topics

कृष्णेन युधिष्ठिरंप्रति प्रजापतिना एकेनैव शब्देन
परब्रह्मोपदेशे देवर्ष्यादीनां स्वस्वयोग्यतानुसारेण
नानार्थावगमप्रतिपादकब्राह्मणदंपतिसंवादानुवादः ॥१ ॥

Mahabharata - Ashvamedhika Parva - Chapter Text

ब्राह्मण उवाच ।
एकः शास्ता न द्वितीयोस्ति शास्ता
यो हृच्छयस्तमहमनु ब्रवीमि ।
तेनैव युक्तः प्रवणादिवोदकं
यथा नियुक्तोस्मि तथा वहामि ॥ १४-२७-१ (९३१४३)
एको गुरुर्नास्ति ततो द्वितीयो
यो हृच्छयस्तमहमनु ब्रवीमि ।
तेनानुशिष्टा गुरुणा सदैव
पुरा हता दानवाः सर्व एव ॥ १४-२७-२ (९३१४४)
एको बन्धुर्नास्ति ततो द्वितीयो
यो हृच्छयस्तमहमनु ब्रवीमि ।
तेनानुशिष्टा बान्धवा बन्धुमन्तः
सप्तर्षयः पार्थ दिवि प्रभान्ति ॥ १४-२७-३ (९३१४५)
एकः श्रोता नास्ति ततो द्वितीयो
यो हृच्छयस्तमहमनु ब्रवीमि ।
तस्मिन्गुरौ गुरुवासं निरुष्यट
शक्रो गतः सर्वलोकामरत्वम् ॥ १४-२७-४ (९३१४६)
एको द्वेष्टा नास्ति ततो द्वितीयो
यो हृच्छयस्तमहमनु ब्रवीमि ।
तेनानुशिष्टा गुरुणा सदैव
लोके द्विष्टाः पन्नगाः सर्व एव ॥ १४-२७-५ (९३१४७)
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
प्रजापतौ पन्नगानां देवर्षीणां च संविदम् ॥१४-२७-६ (९३१४८)
देवर्षयश्च नागाश्चाप्यसुराश्च प्रजापतिम् ।
पर्यपृच्छन्नुपासीनं श्रेयोः नः प्रोच्यतामिति ॥१४-२७-७ (९३१४९)
तेषां प्रोवाच भगवाञ्श्रेयः समनुपृच्छताम् ।
ओमित्येकाक्षरं ब्रह्म ते श्रुत्वा प्राद्रवन्दिशः ॥१४-२७-८ (९३१५०)
तेषां प्रद्रवमाणानामुपदेशं च शृण्वताम् ।
सर्पाणां दंशने भावः प्रवृत्तः पूर्वमे तु ॥१४-२७-९ (९३१५१)
असुराणां प्रवृत्तस्तु दंभभावः स्वभावजः ।
दानं देवा व्यवसिता दममेव महर्षयः ॥१४-२७-१० (९३१५२)
एकं शास्तारमासाद्य शब्देनैकेन संस्कृताः ।
नानाव्यवसिताः सर्वे सर्पदेवर्षिदानवाः ॥१४-२७-११ (९३१५३)
शृणोत्ययं प्रोच्यमानं गृह्णाति च यथातथम् ।
पृच्छतस्तदतो भूयो गुरुरन्यो न विद्यते ॥१४-२७-१२ (९३१५४)
तस्य चानुमते कर्म ततः पश्चात्प्रवर्तते ।

गुरुर्बन्धुश्च शास्ता च द्वेष्टा च हृदि संश्रिताः ॥१४-२७-१३ (९३१५५)
पापेन विचरँल्लोके पापचारी भवत्ययम् ।
शुभेन विचरँल्लोके शुभचारी भवत्युत ॥१४-२७-१४ (९३१५६)
कामचारी तु कामेन य इन्द्रियसुखे रतः ।
ब्रह्मचारी सदैवैष य इन्द्रियजये रतः ॥१४-२७-१५ (९३१५७)
अपेतव्रतकर्मा तु केवलं ब्रह्मणि स्थितः ।
ब्रह्मभूतश्चरँल्लोके ब्रह्मचारी भवत्ययम् ॥१४-२७-१६ (९३१५८)
ब्रह्मैव समिधस्तस्य ब्रह्माग्निर्ब्रह्मसंस्तरः ।
आपो ब्रह्म गुरुर्ब्रह्म स ब्रह्मणि समाहितः ॥१४-२७-१७ (९३१५९)
एतदेवेदृशं सूक्ष्मं ब्रह्मचर्यं विदुर्बुधाः ।
विदित्वा चान्वपद्यन्त क्षेत्रज्ञेनानुदर्शिताः ॥ ॥१४-२७-१८ (९३१६०)

इति श्रीमन्महाभारते आश्वमेधिकपर्वणि अनुगीतापर्वणि
सप्तविंशोऽध्यायः ॥ २७ ॥
Mahabharata - Ashvamedhika Parva - Chapter Footnotes

७-२७-१ एकः शास्ता न द्वितीयोस्ति कश्चिद्यथा नियुक्तोऽस्मि तथा
चरामि ।हृद्येष तिष्ठन्पुरुषः शास्ति शास्ता तेनानुयुक्तः
प्रवणादिवोदकमिति क ट ढ पाठः ॥
७-२७-७ देवाश्च ऋषयश्चेति द्वन्द्वः ॥
७-२७-८ प्राद्रवन्प्रतिपेदिरे ।दिशो बहून्मार्गान् ॥
७-२७-१३ गुरुर्बोद्धा च श्रोता च द्वेष्टा च हृदि निःसृत इति
झ पाठः ॥

---

अस्वमेधिकपर्व-अध्यय०२८
॥ श्रीः ॥
१४.२८. अध्यायः २८

अथानुगीतापर्व-२
Mahabharata - Ashvamedhika Parva - Chapter Topics
कृष्णने युधिष्ठिरंप्रति
विद्याब्रह्मणोररण्यत्वरूपणपरब्राह्मणदंपतिसंवादानुवादः ॥१ ॥

Mahabharata - Ashvamedhika Parva - Chapter Text

ब्राह्मण उवाच ।

संकल्पदंशमशकं शोकहर्षहिमातपम् ।
मोहान्धकारतिमिरं लोभव्याधिसरीसृपम् ॥१४-२८-१ (९३१६१)
विषयैकात्ययाध्वानं कामक्रोधकिरातकम् ।
तदतीत्य महादुर्गं प्रविष्टोस्मि महद्वनम् ॥१४-२८-२ (९३१६२)
ब्राह्मण्युवाच।१४-२८-३क्ष् (७८३०)
क्व तद्वनं महाप्राज्ञ के वृक्षाः सरितश्च काः ।
कियन्तः पर्वताश्चैव कियत्यध्यनि तद्वनम् ॥१४-२८-३ (९३१६३)
ब्राह्मण उवाच।१४-२८-४क्ष् (७८३१)
नैतदस्ति पृथग्भावः किञ्चिनद्यत्ततः सुखम् ।
नैतदस्त्यपृथग्भावः किञ्चिद्दुःखतरं ततः ॥१४-२८-४ (९३१६४)
तस्माद्ध्रस्वतरं नास्ति न ततोस्ति महत्तरम् ।
नास्ति तस्माद्दुःखतरं नास्त्यन्यत्तत्समं सुखम् ॥१४-२८-५ (९३१६५)
न तत्राविश्यि शोचन्ति न प्रहृष्यन्ति च द्विजाः ।
न च बिभ्यति केभ्यश्चिन्नैभ्यो बिभ्यति केचन ॥१४-२८-६ (९३१६६)
तस्मिन्वने सप्त महाद्रुमाश्च
फलानि सप्तातिथयश्च सप्त ।
सप्ताश्रमाः सप्त समाधयश्च
दीक्षाश्च सप्तैतदरण्यरूपम् ॥ १४-२८-७ (९३१६७)
पञ्चवर्णानि दिव्यानि पुष्पाणि च फलानि च ।
सृजन्तः पादपास्तत्र व्याप्य तिष्ठन्ति तद्वन्म् ॥१४-२८-८ (९३१६८)
सुवर्णानि द्विवर्णानि पुष्पाणि च फलानि च ।
सृजन्तः पादपास्तत्र व्याप्य तिष्ठन्ति तद्वनम् ॥१४-२८-९ (९३१६९)
ग्शङ्कराणि त्रिवर्णानि पुष्पाणि च फलानि च ।
सृजन्तः पादपास्तत्र व्याप्य तिष्ठन्ति तद्वनम्' १४-२८-१० (९३१७०)
सुरभीणि द्विवर्णानि पुष्पाणि च फलानि च ।
सृजन्तः पादपास्तत्र व्याप्य तिष्ठन्ति तद्वनम् ॥१४-२८-११ (९३१७१)
सुरभीण्येकवर्णानि पुष्पाणि च फलानि च ।
सृजन्तः पादपास्तत्र व्याप्य तिष्ठन्ति तद्वनम् ॥१४-२८-१२ (९३१७२)
बहून्यव्यक्तवर्णानि पुष्पाणि च फलानि च ।
विसृजन्तौ महावृक्षौ तद्वनं व्याप्य तिष्ठतः ॥१४-२८-१३ (९३१७३)
एको वह्निः सुमना ब्राह्मणोत्र
पञ्चेन्द्रियाणि समिधश्चात्र सन्ति ।
तेभ्यो वृक्षाःक सप्त फलन्ति दीक्षा
गुणाः फलान्यतिथयः फलाशाः ॥ १४-२८-१४ (९३१७४)
आतिथ्यं प्रतिगृह्णन्ति तत्र सप्त महर्षयः ।
अर्चितेषु प्रलीनेषु तेष्वन्यद्रोचते वनम् ॥१४-२८-१५ (९३१७५)

प्रज्ञावृक्षं मोक्षफलं शान्तिच्छायासमन्वितम् ।
ज्ञानाश्रयं तृप्तितोयमन्तःक्षेत्रज्ञभास्करम् ॥१४-२८-१६ (९३१७६)
येऽधिगच्छन्ति तत्सन्तस्तेषां नास्ति पुनर्भवः ।
ऊर्ध्वं चाधश्च तिर्यक्च तस्य नान्तोऽधिगम्यते ॥१४-२८-१७ (९३१७७)
सप्त स्त्रियस्तत्र चरन्ति सत्या-
स्त्ववाङ्मुखा भानुमत्यो जनित्र्यः ।
ऊर्ध्वं रसानाददते प्रजाभ्यः
सर्वान्यथा नित्यमनित्यता च ॥ १४-२८-१८ (९३१७८)
तत्रैव प्रतितिष्ठन्ति पुनस्तत्रोदयन्ति च ।
सप्त सप्तर्षयः सिद्धा वसिष्ठप्रमुखैः सह ॥१४-२८-१९ (९३१७९)
यशो वर्चो भगश्चैव विजयः सिद्धतेजसः ।
एतमेवानुवर्तन्ते सप्त ज्योतींषि भास्करम् ॥१४-२८-२० (९३१८०)
ऋषयः पर्वताश्चैव सन्ति तत्र समासतः ।
नद्यश्च परितो वारि वहन्त्यो ब्रह्मसम्भवम् ॥१४-२८-२१ (९३१८१)
नदीनां सङ्गमश्चैव वैताने समुपह्वरे ।
स्वात्मतृप्ता यतो यान्ति साक्षादेव पितामहम् ॥१४-२८-२२ (९३१८२)
कृशाशाः सुव्रताः शान्तास्तपसा दग्धकिल्बिषाः ।
आत्मन्यात्मानमावेश्य ब्राह्मणास्तमुपासते ॥१४-२८-२३ (९३१८३)
शमिमप्यत्र शंसन्ति विद्यारण्यविदो जनाः ।
तदरण्यमभिप्रेत्य यथातत्वमजायत ॥१४-२८-२४ (९३१८४)
एतदेवेदृशं पुण्यमरण्यं ब्राह्मणा विदुः ।
विदित्वा चानुतिष्ठन्ति क्षेत्रज्ञेनानुदर्शिना ॥ ॥१४-२८-२५ (९३१८५)

इति श्रीमन्महाभारते आश्वमेधिकपर्वणि अनुगीतापर्वणि
अष्टाविंशोऽध्यायः ॥ २८ ॥

Mahabharata - Ashvamedhika Parva - Chapter Footnotes

७-२८-७ सप्तर्षयः सप्त तथेन्धनानि इति क थ पाठः ॥
७-२८-९ चतुर्वर्णानि दिव्यानीति क थ पाठः ॥
७-२८-१३ सृजन्तः पादपास्तत्र व्याप्य तिष्ठन्ति तद्वनमिति
क ट थ पाठः ॥
७-२८-१९ तत्रोपयन्ति चेति झ पाठः । तेच सप्तर्षयः सिद्धा इति
क थ पाठः ॥
७-२८-२० भगश्चोजो विजयः सिद्धितेजसी इति क थ पाठः ॥
७-२८-२४ ऋचमप्यत्र पश्यन्ति विद्यारण्येति क थ पाठः ॥
७-२८-२५ विदित्वा नानुपश्यन्ति क्षेत्रज्ञा नानुदर्शनमिति क थ पाठः ॥

अस्वमेधिकपर्व-अध्यय०२९

॥ श्रीः ॥

१४.२९. अध्यायः २९

अथानुगीतापर्व-२

Mahabharata - Ashvamedhika Parva - Chapter Topics

कृष्णेनार्जुनंप्रति यागीयहिंसाया
अधर्म्यत्वाभावप्रतिपादकाध्वर्युयतिसंवादानुवादः ॥ १ ॥

Mahabharata - Ashvamedhika Parva - Chapter Text

ब्राह्मण उवाच ।
गन्धान्न जिघ्रामि रासान्न वेद्मि
रूपं न पश्यामि न च स्पृशामि ।
न चापि शब्दान्विविधाञ्शृणोमि
न चापि सङ्कल्पमुपैमि कञ्चित् ॥ १४-२९-१ (९३१८६)
अर्थानिष्टान्कामयते स्वभावः
सर्वान्द्वेष्यान्प्रद्विषते स्वभावः ।
कामद्वेषानुद्भवतः स्वभावा-
त्प्राणापानौ जन्तुदेहान्निवेश्य ॥ १४-२९-२ (९३१८७)
तेभ्यश्चान्यांस्तेषु नित्यांश्च भावा-
न्भूतात्मानं अक्षयेऽहं शरीरे ।
तस्मिंस्तिष्ठन्नास्मि सक्तः कथंचि-
त्कामक्रोधाभ्यां जरया मृत्युना च ॥ १४-२९-३ (९३१८८)
अकामयानस्य च सर्वकामा-
नविद्विषाणस्य च सर्वदोषान् ।
न मे स्वभावेषु भवन्ति लेपा-
स्तोयस्य बिन्दोरिव पुष्करेषु ॥ १४-२९-४ (९३१८९)
नित्यस्य चैतस्य भवन्ति नित्या
निरीक्ष्यमाणस्य बहून्स्वभावान् ।
न सज्जते कर्मसु भोगजालं
दिवीव सूर्यस्य मयूखजालम् ॥ १४-२९-५ (९३१९०)
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
अध्वर्युयतिसंवादं तं निबोध यशस्विनि ॥१४-२९-६ (९३१९१)
प्रोक्ष्यमाणं पशुं दृष्ट्वा यज्ञकर्मण्यथाब्रवीत् ।

यतिरध्वर्युमासीनो हिंसोयमिति कुत्सयन् ॥१४-२९-७ (९३१९२)
तमध्वर्युः प्रत्युवाच नायं छागो विनश्यति ।
श्रेयसा योक्ष्यते जन्तुर्यज्ञाच्छ्रुतिरियं तथा ॥१४-२९-८ (९३१९३)
यो ह्यस्य पार्थिवो भागः पृथिवीं स गमिष्यति ।
यदस्य वारिजं किञ्चिदपस्तत्सम्प्रवेक्ष्यति ॥१४-२९-९ (९३१९४)
सूर्यं चक्षुर्दिशः श्रोत्रे प्राणोऽस्य दिवमेव च ।
आगमे वर्तमानस्य नमे दोषोस्ति कश्चन ॥१४-२९-१० (९३१९५)
यतिरुवाच।१४-२९-११क्ष् (७८३२)
प्राणैर्वियोगे च्छागस्य यदि श्रेयः प्रपश्यसि ।
छागार्थे वर्तते यज्ञो भवतः किं प्रयोजनम् ॥१४-२९-११ (९३१९६)
अनु त्वां मन्यते माता अनु त्वां मन्यते पिता ।
मन्त्रविज्ञानमुन्नीय परिवर्ते विशेषतः ॥१४-२९-१२ (९३१९७)
एवमेवानुमन्येरंस्तान्भवान्द्रष्टुमर्हति ।
तेषामनुमतिं श्रुत्वा शक्या कर्तुं विचारणा ॥१४-२९-१३ (९३१९८)
अध्वर्युरुवाच।१४-२९-१४क्ष् (७८३३)
प्राणा अप्यस्य च्छागस्य प्रापितास्ते स्वयोनिषु ।
शरीरं केवलं शिष्टं निश्चेष्टमिति मे मतिः ॥१४-२९-१४ (९३१९९)
इन्धनस्य तु तुल्येन शरीरेणि विचेतसा ।
हिंसा हि यष्टुकामानामिन्धनं पशुसंज्ञितम् ॥१४-२९-१५ (९३२००)
अहिंसा सर्वधर्माणामिति वृद्धानुशासनम् ।
यदहिंस्रं भवेत्कर्म तत्कार्यमिति विद्महे ॥१४-२९-१६ (९३२०१)
अहिंसेति प्रतिज्ञेयं यदि वक्ष्याम्यतः परम् ।
शक्यं बहुविधं वक्तुं भवता कार्यदूषणम् ॥१४-२९-१७ (९३२०२)
अहिंसा सर्वभूतानां नित्यमस्मासु रोचते ।
प्रत्यक्षतः साधयामो न परोक्षमुपास्महे ॥१४-२९-१८ (९३२०३)
अध्वर्यरुवाच।१४-२९-१९क्ष् (७८३४)
भूमेर्गन्धगुणान्भुङ्क्ष्व पिबस्यापोमयान्रसान् ।
ज्योतिषां पश्यते रूपं स्पृशस्यनिलजान्गुणान् ॥१४-२९-१९ (९३२०४)
शृणोष्याकाशजाञ्शब्दान्मनसा मन्यसे मतिम् ।
सर्वाण्येतानि भूतानि प्राणा इति च मन्यसे ॥१४-२९-२० (९३२०५)
प्राणादाने निवृत्तोसि हिंसायां वर्तते भवान् ।
नास्ति चेष्टा विना हिंसां किं वा त्वं मन्यसे द्विज ॥१४-२९-२१ (९३२०६)
यतिरुवाच।१४-२९-२२क्ष् (७८३५)
अक्षरं च क्षरं चैव द्वैधीभावोऽयमात्मनः ।
अक्षरं तत्र सद्भावः स्वभावः क्षर उच्यते ॥१४-२९-२२ (९३२०७)
प्राणो जिह्वा मनः सत्त्वं सद्भावो रजसा सह ।

भावैरेतैर्विमुक्तस्य निर्द्वन्द्वस्य निराशिषः ॥१४-२९-२३ (९३२०८)
समस्य सर्वभूतेषु निर्ममस्य जितात्मनः ।
समन्तात्परिमुक्तस्य न भयं विद्यते क्वचित् ॥१४-२९-२४ (९३२०९)
अध्वर्युरुवाच।१४-२९-२५क्ष् (७८३६)
सद्भिरेवेह संवादः कार्यो मतिमतांवर ।
भवतो हि मतं श्रुत्वा प्रतिभाति मतिर्मम ॥१४-२९-२५ (९३२१०)
भगवन्भगवद्बुद्ध्या प्रतिबुद्धो ब्रवीम्यहम् ।
व्रतं मन्त्रकृतं कर्तुर्नापराधोस्ति मे द्विज ॥१४-२९-२६ (९३२११)
ब्राह्मण उवाच।१४-२९-२७क्ष् (७८३७)
उपपत्त्या यतिस्तूर्ष्णीं वर्तमानस्ततः परम् ।
अध्वर्युरपि निर्मोहः प्रचचार महामखे ॥१४-२९-२७ (९३२१२)
एवमेतादृशं मोक्षं सुसूक्ष्मं ब्राह्मणा विदुः ।
विदित्वा चानुतिष्ठन्ति क्षेत्रज्ञेनार्थदर्शिना ॥ ॥१४-२९-२८ (९३२१३)

इति श्रीमन्महाभारते आश्वमेदिकपर्वणि अनुगीतापर्वणि
एकोनत्रिंशोऽध्यायः ॥२९ ॥
Mahabharata - Ashvamedhika Parva - Chapter Footnotes

७-२९-२ सर्वानेतान्द्वेष्टि चैव स्वभाव इति क ट पाठः
।जन्तुदेहानिहैत्येति क ट पाठः ॥
७-२९-३ नास्ति शक्यः कथंचिदिति क ट थ पाठः ॥
७-२९-१२ अत्र त्वां मन्यतां भ्राता पिता माता सखेति च
।मन्त्रयस्वैनमुन्नीय परवन्तं विशेषत इति झ द पाठः ॥
७-२९-१९ भूमेरिति नानुपहत्य भूतानि भोगः सम्भवतीति
न्यायाज्जीवतोऽपरिहार्यैव हिंसेत्यर्थः ॥
७-२९-२१ किं कथं त्वं मन्यसेऽहिंसामिति शेषः ॥
७-२९-२६ मतं मन्तुं क्रतुं कर्तुमिति थ पाठः ॥

---

अस्वमेधिकपर्व-अध्यय०३०
॥ श्रीः ॥
१४.३०. अध्यायः ३०

अथानुगीतापर्व-२
Mahabharata - Ashvamedhika Parva - Chapter Topics
ब्राह्मणेन स्वभार्यांप्रति हिंसाया अकर्तव्यत्वे महर्षिवचसां
प्रमाणीकरणोपयोगितया परशुरामचरित्रकथनारम्भः ॥१ ॥

रामेण कार्तवीर्ये निहते तदनुयायिभिर्जमदग्नेर्हनम् ॥ २ ॥
ततः क्रुद्धेन रामेण त्रिःसप्तकृत्वः सर्वक्षत्रियहनने तत्पितृभी रामस्य परिसान्त्वप्रयतनम् ॥ ३ ॥

Mahabharata - Ashvamedhika Parva - Chapter Text

ब्राह्मण उवाच ।
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
कार्तवीर्यस्य संवादं समुद्रस्य च भामिनि ॥ १४-३०-१ (९३२१४)
कार्तवीर्यार्जुनो नाम राजा बाहुसहस्रवान् ।
येन सागरपर्यन्ता धनुषा निर्जिता मही ॥ १४-३०-२ (९३२१५)
स कदाचित्समुद्रान्ते विचरन्बलदर्पितः ।
अवीकिरच्छरशतैः समुद्रमिति नः श्रुतम् ॥ १४-३०-३ (९३२१६)
तं समुद्रो नमस्कृत्य कृताञ्जलिरुवाचह ।
मा मुञ्च वीर नाराचान्ब्रूहि किं करवाणि ते ॥ १४-३०-४ (९३२१७)
मदाश्रयाणि भूतानि त्वद्विसृष्टैर्महेषुभिः ।
वध्यन्ते राजशार्दूल तेभ्यो देह्यभयं विभो ॥ १४-३०-५ (९३२१८)
अर्जुन उवाच। १४-३०-६क्ष् (७८३८)
मत्समो यदि संग्रामे शरासनधरः क्वचित् ।
विद्यते तं समाचक्ष्व यः समो मे महामृधे ॥ १४-३०-६ (९३२१९)
समुद्र उवाच। १४-३०-७क्ष् (७८३९)
महर्षिर्जमदग्निस्ते यदि राजन्पुरा श्रुतः ।
तस्य पुत्रस्तवातिथ्यं यथावत्कर्तुमर्हति ॥ १४-३०-७ (९३२२०)
ततः स राजा प्रययौ क्रोधेन महता वृतः ।
स तमाश्रममागम्य राममेवान्वपद्यत ॥ १४-३०-८ (९३२२१)
स रामप्रतिकूलानि चकार सह बन्धुभिः ।
आयासं जनयामास रामस्य च महात्मनः ॥ १४-३०-९ (९३२२२)
ततस्तेजः प्रजज्वाल रामस्यामिततेजसः ।
प्रदहन्रिपुसैन्यानि तदा कमललोचने ॥ १४-३०-१० (९३२२३)
ततः परशुमादाय स तं बाहुसहस्रिणम् ।
चिच्छेद सहसा रामो बहुशाखमिव द्रुमम् ॥ १४-३०-११ (९३२२४)
तं हतं पतितं दृष्ट्वा समेताः सर्वबान्धवाः ।
असीनादाय शक्तीश्च भार्गवं पर्यधावयन् ॥ १४-३०-१२ (९३२२५)
रामोऽपि धनुरादाय रथमारुह्य सत्वरः ।
विसृजञ्शरवर्षाणि व्यधमत्पार्थिवं बलम् ॥ १४-३०-१३ (९३२२६)
ततस्तु क्षत्रियाः केचिज्जमदग्निं निहत्य च ।

विविशुर्गिरिदुर्गाणि मृगाः सिंहार्दिता इव ॥ १४-३०-१४ (९३२२७)
तेषां स्वविहितं कर्म तद्भयान्नानुतिष्ठताम् ।
प्रजा वृषलतां प्राप्ता ब्राह्मणानामदर्शनात् ॥ १४-३०-१५ (९३२२८)
एवं ते द्रविडाऽभीराः पुण्ड्राश्च शबरैः सह ।
वृषलत्वं परिगता व्युत्थानात्क्षत्रधर्मतः ॥ १४-३०-१६ (९३२२९)
ततश्च हतवीरासु क्षत्रियासु पुनः पुनः ।
द्विजैरुत्पादितं क्षत्रं जामदग्न्यो न्यकृन्तत ॥ १४-३०-१७ (९३२३०)
एकविंशतिमे याते रामं वागशरीरिणी ।
दिव्या प्रोवाच मधुरा सर्वलोकपरिश्रुता ॥ १४-३०-१८ (९३२३१)
रामराम निवर्तस्व कं गुणं तात पश्यसि ।
क्षत्रबन्धूनिमान्प्राणैर्विप्रयोज्य पुनः पुनः ॥ १४-३०-१९ (९३२३२)
तथैव तं महात्मानमृचीकप्रमुखास्तदा ।
पितामहा महाभाग निवर्तस्वेत्यथाब्रुवन् ॥ १४-३०-२० (९३२३३)
पितुर्वधममृष्यंस्तु रामः प्रोवाच तानृषीन् ।
नार्हन्तीह भवन्तो मां निवारयितुमित्युत ॥ १४-३०-२१ (९३२३४)
पितर ऊचुः । १४-३०-२२क्ष् (७८४०)
नार्हसे क्षत्रबन्धूंस्त्वं निहन्तुं जयतांवर ।
नेह युक्तं त्वया हन्तुं ब्राह्मणेन सता नृपान् ॥ ॥ १४-३०-२२ (९३२३५)

इति श्रीमन्महाभारते आश्वमेधिकपर्वणि अनुगीतापर्वणि त्रिंशोऽध्यायः
॥ ३० ॥
Mahabharata - Ashvamedhika Parva - Chapter Footnotes

७-३०-१५ तेषामुपरतं कर्मेति ट पाठः ॥
७-३०-१६ व्युत्थानात्क्षत्रधर्मिण इति झ पाठः ॥

---

अस्वमेधिकपर्व-अध्यय०३१
॥ श्रीः ॥
१४.३१. अध्यायः ३१

अथानुगीतापर्व-२
Mahabharata - Ashvamedhika Parva - Chapter Topics
परशुरामंप्रति तत्पितृभिः
क्षत्रियवधान्निवर्तनायालर्कोपाख्यानकथनम् ॥ १ ॥
रामेण तच्छ्रवणाद्धिंसातो निवर्त्य तपश्चरणम् ॥ २ ॥

पितर ऊचुः ।
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
श्रुत्वा च तत्तथा कार्यं भवता द्विजसत्तम ॥१४-३१-१ (९३२३६)
अलर्को नाम राजर्षिरभवत्सुमहातपाः ।
धर्मज्ञः सत्यवादी च महात्मा सुदृढव्रतः ॥१४-३१-२ (९३२३७)
स सागरान्तां धनुषा विनिर्जित्य महीमिमाम् ।
कृत्वा सुदुष्करं कर्म मनः सूक्ष्मे समादधे ॥१४-३१-३ (९३२३८)
स्थितस्य वृक्षमूलेऽथ तस्य चिन्ता बभूव ह ।
उत्सृय सुमहद्राज्यं सूक्ष्मं प्रति महामते ॥१४-३१-४ (९३२३९)
अलर्क उवाच।१४-३१-५क्ष् (७८४१)
मनसो मे बलं जातं मनो जित्वा ध्रुवो जयः ।
अन्यत्र बाणानस्यामि शत्रुभिः परिवारितः ॥१४-३१-५ (९३२४०)
यदिदं चापलात्कर्म सर्वान्मर्त्यांश्चिकीर्षति ।
मनः प्रति सुतीक्ष्णाग्रानहं मोक्ष्यामि सायकान् ॥१४-३१-६ (९३२४१)
मन उवाच।१४-३१-७क्ष् (७८४२)
नेमे बाणास्तरिष्यन्ति मामलर्क कथञ्चन ।
तवैव मर्म भेत्स्यन्ति भिन्नमर्मा मरिष्यसि ॥१४-३१-७ (९३२४२)
अन्यान्बाणान्समीक्षस्व यैस्त्वं मां सूदयिष्यसि ।
तच्छ्रुत्वा स विचिन्त्याथ ततो वचनमब्रवीत् ॥१४-३१-८ (९३२४३)
आघ्राय सुबहून्गान्धांस्तानेव प्रतिगृध्यति ।
तस्माद्घ्राणं प्रति शरान्प्रतिमोक्ष्याम्यहं शितान् ॥१४-३१-९ (९३२४४)
घ्राण उवाच।१४-३१-१०क्ष् (७८४३)
नेमे बाणास्तरिष्यन्ति मामलर्क कथञ्चन ।
तवैव मर्म भेत्स्यन्ति भिन्नमर्मा मरिष्यसि ॥१४-३१-१० (९३२४५)
अन्यान्याणान्समीक्षस्व यैस्त्वं मां सूदयिष्यसि ।
तच्छ्रुत्वा स विचिन्त्याथ ततो वचनमब्रवीत् ॥१४-३१-११ (९३२४६)
इयं स्वादून्रसान्भुक्त्वा तानेव प्रति गृध्यति ।
तस्माज्जिह्वां प्रति शरान्प्रतिमोक्ष्याम्यहं शितान् ॥१४-३१-१२ (९३२४७)
जिह्वोवाच।१४-३१-१३क्ष् (७८४४)
नेमे वाणास्तरिष्यन्ति मामलर्क कथञ्चन ।
तवैव मर्म भेत्स्यन्ति ततो हास्यसि जीवितम् ॥१४-३१-१३ (९३२४८)
अन्यान्वाणान्समीक्षस्व यैस्त्वं मां सूदयिष्यसि ।
तच्छ्रुत्वा स विचिन्त्याथ ततो वचनमब्रवीत् ॥१४-३१-१४ (९३२४९)
स्पृष्ट्वा त्वग्विविधान्स्पर्शांस्तानेव प्रतिगृध्यति ।

तस्मात्त्वचं पाटयिष्ये विविधैः कङ्कपत्रिभिः ॥१४-३१-१५ (९३२५०)
त्वगुवाच।१४-३१-१६क्ष् (७८४५)
नेमे बाणास्तरिष्यन्ति मामलर्क कथञ्चन ।
तवैव मर्म भेत्स्यन्ति भिन्नमर्मा मरिष्यसि ॥१४-३१-१६ (९३२५१)
अन्यान्बाणान्समीक्षस्व यैस्त्वं मां सूदयिष्यसि ।
तच्छ्रुत्वा स विचिन्त्याथ ततो वचनमब्रवीत् ॥१४-३१-१७ (९३२५२)
श्रुत्वा तु विविधाञ्शब्दांस्तानेव प्रतिगृध्यति ।
तस्माच्छ्रोत्रं प्रति शरान्प्रति मुञ्चाम्यहं शितान् ॥१४-३१-१८ (९३२५३)
श्रोत्रमुवाच।१४-३१-१९क्ष् (७८४६)
नेमे बाणास्तरिष्यन्ति मामलर्क कथञ्चन ।
तवैव मर्म भेत्स्यन्ति ततो हास्यति जीवितम् ॥१४-३१-१९ (९३२५४)
अन्यान्बाणान्समीक्षस्व यैस्त्वं मां सूदयिष्यसि ।
तच्छ्रुत्वा स विचिन्त्याथ ततो वचनमब्रवीत् ॥१४-३१-२० (९३२५५)
दृष्ट्वा रूपाणि बहुशस्तान्येव प्रतिगृध्यति ।
तस्माच्चक्षुर्हनिष्यामि निशितैः सायकैरहम् ॥१४-३१-२१ (९३२५६)
चक्षुरुवाच।१४-३१-२२क्ष् (७८४७)
नेमे बाणास्तरिष्यन्ति मामलर्क कथञ्चन ।
तवैव मर्म भेत्स्यन्ति भिन्नमर्मा मरिष्यसि ॥१४-३१-२२ (९३२५७)
अन्यान्बाणान्समीक्षस्व यैस्त्वं मां सूदयिष्यति
तच्छ्रुत्वा स विचिन्त्याथ ततो वचनमब्रवीत् ॥ १४-३१-२३ (९३२५८)
इयं निष्ठा बहुविधा प्रज्ञया त्वद्यवस्यति ।
तस्माद्बुद्धिं प्रति शरान्प्रतिमोक्ष्याम्यहं शितान् ॥१४-३१-२४ (९३२५९)
बुद्धिरुवाच।१४-३१-२५क्ष् (७८४८)
नेमे बाणास्तरिष्यन्ति मामलर्क कथञ्चन ।
तवैव मर्म भेत्स्यन्ति भिन्नमर्मा मरिष्यसि ।
अन्यान्बाणान्समीक्षस्व यैस्त्वं मां सूदयिष्यसि ॥ १४-३१-२५ (९३२६०)
पितर ऊचुः।१४-३१-२६क्ष् (७८४९)
ततोऽलर्कस्तपो घोरं तत्रैवास्थाय दुष्करम् ।
नाध्यगच्छत्परं शक्त्या बाणमेतेषु सप्तसु ॥१४-३१-२६ (९३२६१)
सुसमाहितचेतास्तु स ततोऽचिन्तयत्प्रभुः ।
स विचिन्त्य चिरं कालमलर्को द्विजसत्तम ।
नाध्यगच्छत्परं श्रेयो योगान्मतिमतांवरः ॥ १४-३१-२७ (९३२६२)
स एकाग्रं मनः कृत्वा निश्चलो योगमास्थितः ।
इन्द्रियाणि जघानाशु बाणेनैकेन वीर्यवान् ॥१४-३१-२८ (९३२६३)
योगेनात्मानमाविश्य सिद्धिं परमिकां गतः ।
विस्मितश्चापि राजर्षिरिमां गाथां जगाद ह ॥१४-३१-२९ (९३२६४)

अहो कष्टं यदस्माभिः सर्वं बाह्यमनुष्ठितम् ।
भोगतृष्णासमायुक्तैः पूर्वं राज्यमुपासितम् ।
इति पश्चान्मया ज्ञातं योगान्नास्ति परं सुखम् ॥ १४-३१-३० (९३२६५)
इति त्वमनुजानीहि राम मा क्षत्रियान्वधीः ।
तषो घोरमुपातिष्ठ ततः श्रेयोऽभिपत्स्यसे ॥ १४-३१-३१ (९३२६६)
इत्युक्तः पितृभिः सोथ तपो घोरं समास्थितः ।
जामदग्न्यो महाभागे सिद्धिं च परमां गतः ॥ ॥ १४-३१-३२ (९३२६७)

इति श्रीमन्महाभारते आश्वमेधिकपर्वणि अनुगीतापर्वणि
एकत्रिंशोऽध्यायः ॥ ३१ ॥
Mahabharata - Ashvamedhika Parva - Chapter Footnotes

७-३१-१ अत्र हिंसाया अकार्यत्वे।१ । ।
७-३१-५ अन्यत्र बाह्यशत्रुभ्य इति शेषः । शत्रुभिरिन्द्रियाख्यवैरिभिः ॥
५ ॥

---

अस्वमेधिकपर्व-अध्यय०३२
॥ श्रीः ॥
१४.३२. अध्यायः ३२

अथानुगीतापर्व-२
Mahabharata - Ashvamedhika Parva - Chapter Topics
ब्राह्मणेन स्वभार्यांप्रति
कामक्रोधादिपरित्यागपूर्वकं भगवदवबोधस्य
परमपुरुषार्थसाधनतावबोधकाम्बरीषगीतगाथाकथनम् ॥ १ ॥

Mahabharata - Ashvamedhika Parva - Chapter Text

ब्राह्मण उवाच ।
त्रयो वै रिपवो लोके नवधा गुणतः स्मृताः ।
हर्षः स्तंभोतिमानश्च त्रयस्ते सात्विका गुणाः ॥ १४-३२-१ (९३२६८)
शोकः क्रोधाभिसंरम्भो राजसास्ते गुणाः स्मृताः ।
स्वप्नस्तन्द्रा च मोहश्च त्रयस्ते तामसा गुणाः ॥ १४-३२-२ (९३२६९)
एतान्निकृत्य धृतिमान्बाणसङ्घैरतन्द्रितः ।
जेतुं परानुत्सहते प्रशान्तात्मा जितेन्द्रियः ॥ १४-३२-३ (९३२७०)
अत्र गाथाः कीर्तयन्ति पुराकल्पविदो जनाः ।

अम्बरीषेण या गीता राज्ञा राज्यं प्रशासता ॥ १४-३२-४ (९३२७१)
समुदीर्णेषु दोषेषु बाध्यमानेषु साधुषु ।
जग्राह तरसा राज्यमम्बरीष इति श्रुतिः ॥ १४-३२-५ (९३२७२)
स निगृह्यात्मनो दोषान्साधून्समभिपूज्य च ।
जगाम महतीं सिद्धिं गाथाश्चेमा जगाद ह ॥ १४-३२-६ (९३२७३)
भूयिष्ठं विजिता दोषा निहताः सर्वशत्रवः ।
एको दोषो वरिष्ठश्च वध्यः स न हतो मया ॥ १४-३२-७ (९३२७४)
यत्प्रयुक्तो जन्तुरयं वैतृष्ण्यं नाधिगच्छति ।
तृष्णार्त इव निम्नानि धावमानो न बुध्यते ॥ १४-३२-८ (९३२७५)
अकार्यमपि येनेह प्रयुक्तः सेवते नरः ।
तं लोभमसिभिस्तीक्ष्णैर्निकृत्य सुखमेधते ॥ १४-३२-९ (९३२७६)
लोभाद्धि जायते तृष्णा ततश्चिन्ता प्रवर्तते ।
स लिप्समानो लभते भूयिष्ठं राजसान्गुणान् ।
तदवाप्तौ तु लभते भूयिष्ठं तामसान्गुणान् ॥ १४-३२-१० (९३२७७)
स तैर्गुणैः संहतदेहबन्धनः ।
पुनःपनर्जायति कर्म चेहते ।
जन्मक्षये भिन्नविकीर्मदेहो
मृत्युं पुनर्गच्छति जन्मनैव ॥ १४-३२-११ (९३२७८)
तस्मादेतं सम्यगवेक्ष्य लोभं
निगृह्य धृत्याऽऽत्मनि राज्यमिच्छेत् ।
एतद्राज्यं नान्यदस्तीह राज्य-
मात्मैव राजा विदितो यथावत् ॥ १४-३२-१२ (९३२७९)
इति राज्ञाऽम्बरीषेण गाथा गीता यशस्विना ।
आधिराज्य पुरस्कृत्य लोभमेकं निकृन्तता ॥ ॥ १४-३२-१३ (९३२८०)

इति श्रीमन्महाभारते आश्वमेधिकपर्वणि अनुगीतापर्वणि
द्वात्रिंशोऽध्यायः ॥ ३२ ॥

Mahabharata - Ashvamedhika Parva - Chapter Footnotes

७-३२-१ गुणतः वृत्तिभेदात् ॥
७-३२-२ अभिसंरम्भो द्वेषाभिनिवेशः ॥
७-३२-३ निकृत्य च्छित्त्वा । बाणसंघैः शमादिभिः ॥
७-३२-११ पुनर्जायति चेह तत्फलम् । फलक्षये भिन्नविदीर्णदेहः
पुनर्मृत्यु गच्छति चैव जन्मनीति क थ पाठः ॥
७-३२-१२ नान्यदस्तीति विद्या यैश्चैव राजा विजितो मयैक इति
क थ पाठः ॥

॥ श्रीः ॥
१४.३३. अध्यायः ३३

अथानुगीतापर्व-२
Mahabharata - Ashvamedhika Parva - Chapter Topics
ब्राह्मणेन स्वभार्यांप्रति ममतावर्जनस्य पुरुषार्थसाधनतायां
दृष्टान्ततया ब्राह्मणजनकसंवादानुवादः ॥ १ ॥

Mahabharata - Ashvamedhika Parva - Chapter Text

ब्राह्मणि उवाच ।
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
ब्राह्मणस्य च संवादं जनकस्य च भामिनि ॥ १४-३३-१ (९३२८१)
ब्राह्मणं जनको राजा सन्नं कस्मिंश्चिदागसि ।
विषये मे न वस्तव्यमिति शिष्ट्यर्थमब्रवीत् ॥ १४-३३-२ (९३२८२)
इत्युक्तः प्रत्युवाचाथ ब्राह्मणो राजसत्तमम् ।
आचक्ष्व विषयं राजन्यावांस्तव वशे स्थितः ॥ १४-३३-३ (९३२८३)
सोऽन्यस्य विषये राज्ञो वस्तुमिच्छाम्यहं विभो ।
वचस्ते कर्तुमिच्छामि यथाशास्त्रं महीपते ॥ १४-३३-४ (९३२८४)
इत्युक्तस्तु तदा राजा ब्राह्मणेन यशस्विना ।
मुहुरुष्णं विनिःस्वस्य न किञ्चित्प्रत्यभाषत ॥ १४-३३-५ (९३२८५)
तमासीनं ध्यायमानं राजानममितौजसम् ।
कश्मलं सहसाऽगच्छद्भानुमन्तमिव ग्रहः ॥ १४-३३-६ (९३२८६)
समाश्वास्य ततो राजा विगते कश्यमे तदा ।
ततो मूहूर्तादिव तं ब्राह्मणं वाक्यमब्रवीत् ॥ १४-३३-७ (९३२८७)
पितृपैतामहे राज्ये वश्ये जनपदे सति ।
विषयं नाधिगच्छामि विचिन्वन्पृथिवीमहम् ॥ १४-३३-८ (९३२८८)
नाध्यगच्छं यदा पृथ्व्यां मिथिला मार्गिता मया ।
नाध्यगच्छं यदा तस्यां स्वप्रजा मार्गिता मया ॥ १४-३३-९ (९३२८९)
नाध्यगच्छं यदा तस्यां तदा मे कश्मलोऽभवत् ।
ततो मे कश्मलस्यान्ते मतिः पुनरुपस्थिता ॥ १४-३३-१० (९३२९०)
तदा न विषयं मन्ये सर्वो वा विषयो मम ।
आत्माऽपि चायं न मम सर्वा वा पृथिवी मम ॥ १४-३३-११ (९३२९१)
यथा मम तथाऽन्येषामिति मन्ये द्विजोत्तम ।

उष्यतां यावदुत्साहो भुज्यतां यावदिष्यते ॥ १४-३३-१२ (९३२९२)
ब्राह्मण उवाच। १४-३३-१३क्ष् (७८५०)
पितृपैतामहे राज्ये वश्ये जनपदे सति ।
ब्रूहि कां मतिमास्थाय ममत्वं वर्जितं त्वया ॥ १४-३३-१३ (९३२९३)
कां वै बुद्धिं समाश्रित्य सर्वो वै विषयस्तव ।
नावैषि विषयं येन सर्वो वा विषयस्तव ॥ १४-३३-१४ (९३२९४)
जनक उवाच। १४-३३-१५क्ष् (७८५१)
अन्तवन्त इहारम्भा विदिताः सर्वकर्मसु ।
नाध्यगच्छमहं तस्मान्ममेदमिति यद्भवेत् ॥ १४-३३-१५ (९३२९५)
कस्येदमिति कस्य स्वमिति वेदवचस्तथा ।
नाध्यगच्छमहं बुद्ध्या ममेदमिति यद्भवेत् ॥ १४-३३-१६ (९३२९६)
एतां बुद्धिं समाश्रित्य ममत्वं वर्जितं मया ।
शृणु बुद्धिं च यां ज्ञात्वा सर्वत्र विषयो मम ॥ १४-३३-१७ (९३२९७)
नाहमात्मार्थमिच्छामि गन्धान्घ्राणगतानपि ।
तस्मान्मे निर्जिता भूमिर्वशे तिष्ठति नित्यदा ॥ १४-३३-१८ (९३२९८)
नाहमात्मार्थमिच्छामि रसानास्येऽपि वर्ततः ।
आपो मे निर्जितास्तस्माद्वशे तिष्ठन्ति नित्यदा ॥ १४-३३-१९ (९३२९९)
नाहमात्मार्थमिच्छामि रूपं ज्योतिश्च चक्षुषः ।
तस्मान्मे निर्जितं ज्योतिर्वशे तिष्ठति नित्यदा ॥ १४-३३-२० (९३३००)
नाहमात्मार्थमिच्छामि स्पर्शांस्त्वचि गताश्च ये ।
तस्मान्मे निर्जितो वायुर्वशे तिष्ठति नित्यदा ॥ १४-३३-२१ (९३३०१)
नाहमात्मार्थमिच्छामि शब्दाञ्श्रोत्रगतानपि ।
आकाशं मे जितं तस्माद्वशे तिष्ठति नित्यदा ॥ १४-३३-२२ (९३३०२)
नाहमात्मार्थमिच्छामि मनो नित्यं मनोन्तरे ।
मनो मे निर्जितं तस्माद्वशे तिष्ठति नित्यदा ॥ १४-३३-२३ (९३३०३)
देवेभ्यश्च पितृभ्यश्च भूतेभ्योऽतिथिभिः सह ।
इत्यर्थं सर्व एवेति समारम्भा भवन्ति वै ॥ १४-३३-२४ (९३३०४)
ततः प्रहस्य जनकं ब्राह्मणः पुनरब्रवीत् ।
त्वज्जिज्ञासार्थमद्येह विद्धि मां धर्ममागतम् ॥ १४-३३-२५ (९३३०५)
त्वमस्य ब्रह्मिनाभस्य दुर्वारस्यानिवर्तिनः ।
सत्वनेमिनिरुद्धस्य चक्रस्यैकः प्रवर्तकः ॥ ॥ १४-३३-२६ (९३३०६)

इति श्रीमन्महाभारते आश्वमेधिकपर्वणि अनुगीतापर्वणि
त्र्यस्त्रिंशोऽध्यायः ॥ ३३ ॥

Mahabharata - Ashvamedhika Parva - Chapter Footnotes

७-३३-१ अत्र लोभे निकृन्तनीये ॥
७-३३-२ क्लान्तं कस्मिंश्चिदागमे इति द पाठः ॥
क्षान्तं कस्मिंश्चिदागमे इति क ट थ पाठः । शिष्यार्थमब्रवीदिति
पाठान्तरम् ॥

---

अस्वमेधिकपर्व-अध्यय०३४
॥ श्रीः ॥
१४.३४. अध्यायः ३४

अथानुगीतापर्व-२
Mahabharata - Ashvamedhika Parva - Chapter Topics
ब्राह्मणेन ब्राह्मणींप्रति स्वमाहात्म्यप्रकाशनम् ॥ १ ॥

Mahabharata - Ashvamedhika Parva - Chapter Text

ब्राह्मण उवाच ।
नाहं तथा भूरु चरामि लोके
यथा त्वं मां तर्जयसे स्वबुद्ध्या ।
विप्रोस्मिं मुक्तोस्मि वनेचरोस्मि
गृहस्थधर्मा व्रतवांस्तथाऽस्मि ॥ १४-३४-१ (९३३०७)
नाहमस्मि यता मां त्वं पश्यसे च शुभाशुभे ।
मया व्याप्तमिदं सर्वं यत्किञ्चिज्जगतीगतम् ॥ १४-३४-२ (९३३०८)
ये केचिज्जन्तवो लोके जङ्गमाः स्थावराश्च ह ।
तेषां मामन्तकं विद्धि दारुणामिव पावकम् ॥ १४-३४-३ (९३३०९)
राज्ये पृथिव्यां सर्वस्यामथवापि त्रिविष्टपे ।
तथा बुद्धिरियं वेत्ति बुद्धिरेव धनं मम ॥ १४-३४-४ (९३३१०)
एकः पन्था ब्राह्मणानां येन गच्छन्ति तद्विदः ।
गृहेषु वनवासेषु गुरुवासेषु भिक्षुषु ॥ १४-३४-५ (९३३११)
लिङ्गैर्बहुभिरव्यग्रैरेका बुद्धिरुपास्यते ।
नानालिङ्गाश्रमस्थानां येषां बुद्धिः शमात्मिका ॥ १४-३४-६ (९३३१२)
ते भावमेकमायान्ति सरितः सागरं यथा ।
बुद्ध्याऽयं गम्यते मार्गः शरीरेणि न गम्यते ।
आद्यन्तवन्ति कर्माणि शरीरं कर्मबन्धनम् ॥ १४-३४-७ (९३३१३)
तस्मान्मे सुभगे नास्ति परलोककृतं भयम् ।
तद्भावभावनिरता ममैवात्मानमेष्यसि ॥ ॥ १४-३४-८ (९३३१४)

इति श्रीमन्महाभारते आश्वमेधिकपर्वणि अनुगीतापर्वणि
चतुस्त्रिंशोऽध्यायः ॥ ३४ ॥
Mahabharata - Ashvamedhika Parva - Chapter Footnotes

७-३४-३ तेषामन्तर्गतं विद्धि इति क.ध.पाठः ॥
७-३४-७ विद्धयान्तवन्ति कर्माणीति क.थ.पाठः ॥
७-३४-८ तस्मात्ते सुभगे इति झ.पाठः । मद्भावभावनिरता
मामेवैष्यस्यथात्मनेति क.पाठः ॥

---

अस्वमेधिकपर्व-अध्यय०३५
॥ श्रीः ॥
१४.३५. अध्यायः ३५

अथानुगीतापर्व-२
Mahabharata - Ashvamedhika Parva - Chapter Topics
कृष्णेनार्जुनंप्रति ब्राह्मणीब्राह्मणशब्दनिर्दिष्टयोः क्रमेणि
बुद्धिमनस्त्वकथनम् ॥ १ ॥

Mahabharata - Ashvamedhika Parva - Chapter Text

ब्राह्मण उवाच ।
नेदमल्पात्मना शक्यं वेदितुं वाऽकृतात्मना ।
बहु चाल्पं च संक्षिप्तं विस्तृतं च मतं मम ॥ १४-३५-१ (९३३१५)
उपायं तं मम ब्रूहि येनैषा लभ्यते मतिः ।
तन्मन्ये कारणं कर्म यत एषा प्रवर्तते ॥ १४-३५-२ (९३३१६)
ब्राह्मण उवाच । १४-३५-३क्ष् (७८५२)
अरणीं ब्राह्मणीं विद्धि गुरुरस्योत्तरारणिः ।
तपःश्रुतेभिमथिनी ज्ञानाग्निर्जायते ततः ॥ १४-३५-३ (९३३१७)
ब्राह्मणयुवाच । १४-३५-४क्ष् (७८५३)
यदिदं ब्रह्मणो लिङ्गं क्षेत्रज्ञ इति संज्ञितम् ।
ग्रहीतुं येन यच्छक्यं लक्षणं तस्य तद्वद ॥ १४-३५-४ (९३३१८)
ब्राह्मण उवाच । १४-३५-५क्ष् (७८५४)
अलिङ्गो निर्गुणश्चैव कारणं नास्य विग्रहे ।
उपायमेव वक्ष्यामि येन गृह्येत भावना ॥ १४-३५-५ (९३३१९)
सम्यगप्युपदिष्टस्य ह्यमृतस्येव तृप्यसे ।
कर्मबुद्धिरबुद्धित्वाज्ज्ञानलिङ्गान्निपातितः । १४-३५-६ (९३३२०)

इदं कार्यमिदं नेति न मोक्षेषूपदिश्यते ।
पश्यतः शृण्वतो बुद्धिरात्मनैवोपजायते ॥ १४-३५-७ (९३३२१)
यावन्त इह शक्येरंस्तावतोंऽसान्प्रकल्पयेत् ।
अव्यक्तान्व्यक्तरूपांश्च शतशोऽथ सहस्रशः ॥ १४-३५-८ (९३३२२)
सर्वानुमानयुक्तांश्च सर्वान्प्रत्यक्षहेतुकान् ।
यतः परं न विद्येत ततोऽभ्यासे भविष्यति ॥ १४-३५-९ (९३३२३)
श्रीभगवानुवाच। १४-३५-१०क्ष् (७८५५)
ततस्तु तस्या ब्राह्मण्या मतिः क्षेत्रज्ञसंशये ।
क्षेत्रज्ञानेन परतः क्षेत्रज्ञोऽन्यः प्रवर्तते ॥ १४-३५-१० (९३३२४)
अर्जुन उवाच। १४-३५-११क्ष् (७८५६)
क्व नु सा ब्राह्मणि कृष्ण क्व चासौ ब्राह्मणर्षभः ।
याभ्यां सिद्धिरियं प्राप्ता तावुभौ वद मेऽच्युत ॥ १४-३५-११ (९३३२५)
श्रीभगवानुवाच। १४-३५-१२क्ष् (७८५७)
मनो मे ब्राह्मणं विद्धि बुद्धिं मे विद्धि ब्राह्मणीम् ।
क्षेत्रज्ञ इति यश्चोक्तः सोऽहमेव धनंजय ॥ ॥ १४-३५-१२ (९३३२६)

इति श्रीमन्महाभारते आश्वमेधिकपर्वणि अनुगीतापर्वणि
पञ्चत्रिंशोऽध्यायः ॥
Mahabharata - Ashvamedhika Parva - Chapter Footnotes

७-३५-६ सम्यगुपायो दृष्टश्च भ्रमरैरिव लक्ष्यत इति झ पाठः ॥

---

अस्वमेधिकपर्व-अध्यय०३६
॥ श्रीः ॥
१४.३६. अध्यायः ३६

अथानुगीतापर्व-२
Mahabharata - Ashvamedhika Parva - Chapter Topics
कृष्णेनार्जुनंप्रति
परब्रह्मस्वरूपतत्प्राप्तिसाधनादिप्रतिपादकगुरुशिष्यसंवादानुवादः
॥ १ ॥

Mahabharata - Ashvamedhika Parva - Chapter Text

अर्जुन उवाच ।
ब्रह्म यत्परमं ज्ञेयं तन्मे व्याख्यातुमर्हसि ।

भतो हि प्रसादेन सूक्ष्मे मे रमते मतिः ॥१४-३६-१ (९३३२७)
वासुदेव उवाच।१४-३६-२क्ष् (७८५८)
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
संवादं मोक्षसंयुक्तं शिष्यस्य गुरुणा सह ॥१४-३६-२ (९३३२८)
कश्चिद्ब्राह्मणमासीनमाचार्यं संशितव्रतम् ।
शिष्यः पप्रच्छ मेधावी किंस्विच्छ्रेयः परंतप ॥१४-३६-३ (९३३२९)
भगवन्तं प्रपन्नोऽहं निःश्रेयसपराणः ।
याचे त्वां शिरसा विप्र यद्ब्रूयां ब्रूहि तन्मम ॥१४-३६-४ (९३३३०)
तमेवंवादिनं पार्थ शिष्यं गुरुरुवाच ह ।
कथयस्व प्रवक्ष्यामि यत्र ते संशयो द्विज ॥१४-३६-५ (९३३३१)
इत्युक्तः स कुरुश्रेष्ठ गुरुणा गुरुवत्सलः ।
प्राञ्जलिः परिपप्रच्छ यत्तच्छ्रणु महामते ॥१४-३६-६ (९३३३२)
शिष्य उवाच।१४-३६-७क्ष् (७८५९)
कुतश्चाहं कुतश्च त्वं तत्सत्यं ब्रूहि यत्परम् ।
कुतो जातानि भूतानि स्थावराणि चराणि च ॥१४-३६-७ (९३३३३)
केन जीवन्ति भूतानि तेषामायुश्च किं परम् ।
किं सत्यं किं तपो विप्र के गुणाः सद्भिरीरिताः ॥१४-३६-८ (९३३३४)
के पन्थानः शिवाश्च स्युः किं सुखं कि च दुष्कृतम् ।
एतान्मे भगवन्प्रश्नान्याथातथ्येन सुव्रत ॥१४-३६-९ (९३३३५)
वक्तुमर्हसि विप्रर्षे यथावदिह तत्त्वतः ।
त्वदन्यः कश्च न प्रश्नानेतान्वक्तुमिहार्हति ॥१४-३६-१० (९३३३६)
ब्रूहि धर्मविदां श्रेष्ठ परं कौतूहलं मम ।
मोक्षधर्मार्थकुशलो भवाँल्लोकषु गीयते ॥१४-३६-११ (९३३३७)
सर्वसंशयसंच्छेत्ता त्वदन्यो न च विद्यते ।
संसारभीरवश्चैव मोक्षकामास्तथा वयम् ॥१४-३६-१२ (९३३३८)
वासुदेव उवाच।१४-३६-१३क्ष् (७८६०)
तस्मै सम्प्रतिपन्नाय यथावत्परिपृच्छते ।
शिष्याय गुणयुक्ताय शान्ताय गुरुवर्तिने ॥१४-३६-१३ (९३३३९)
छायाभूताय दान्ताय यतते ब्रह्मचारिणे ।
तान्प्रश्नानब्रवीत्पार्थ मेधावी स धृतव्रतः ।
गुरुः कुरुकुलश्रेष्ठ सम्यक्सर्वानरिंदम ॥ १४-३६-१४ (९३३४०)
गुरुरुवाच।१४-३६-१५क्ष् (७८६१)
ब्रह्मणोक्तमिदं धर्ममृषिप्रवरसेवितम् ।
वेदविद्यासमावाप्तं तत्त्वभूतार्थभावनम् ॥१४-३६-१५ (९३३४१)
ज्ञानं त्वेव परं विद्मः संन्यासं तप उत्तमम् ।
यस्तु वेद निराबाधं ज्ञानतत्त्वं विनिश्चयात् ।

सर्वबूतस्थमात्मानं स सर्वगतिरिष्यते ॥ १४-३६-१६ (९३३४२)
ये विद्वान्सहसंवासं विवासं चैव पश्यति ।
तथैवैकत्वनानात्वे स दुःखात्परिमुच्यते ॥१४-३६-१७ (९३३४३)
यो न कामयते किञ्चिन्न किञ्चिदभिमन्यते ।
इह लोकस्थ एवैष ब्रह्मभूयाय कल्पते ॥१४-३६-१८ (९३३४४)
प्रधानगुणतत्त्वज्ञः सर्वभूतविधानवित् ।
निर्ममो निरहङ्कारो मुच्यते नात्र संशयः ॥१४-३६-१९ (९३३४५)
अव्यक्तबीजप्रभवो बुद्धिस्कन्धमयो महान् ।
महाहङ्कारविटप इन्द्रियाङ्कुरकोटरः ॥१४-३६-२० (९३३४६)
महाभूतविशेषश्च विशेषप्रतिशाखवान् ।
सदापर्णः सदापुष्पः शुभाशुभफलोदयः ॥१४-३६-२१ (९३३४७)
आजीवः सर्वभूतानां ब्रह्मबीजः सनातनः ।
एतज्ज्ञात्वा च तत्त्वानि ज्ञानेन परमासिना ।
छित्त्वा चामरतां प्राप्य जहाति मृत्युजन्मनी ॥ १४-३६-२२ (९३३४८)
भूतभव्यभविष्यादिधर्मकामार्थनिश्चयम् ।
सिद्धसङ्घपरिज्ञातं पुराकल्पं सनातनम् ॥१४-३६-२३ (९३३४९)
प्रवक्ष्येऽहं महाप्राज्ञ पदमुत्तममद्य ते ।
बुद्ध्वा यदिहं संसिद्धा भवन्तीह मनीषिणः ॥१४-३६-२४ (९३३५०)
उपगम्यर्षयः पूर्वं जिज्ञासन्तः परस्परम् ।
प्रजापतिभरद्वाजौ गौतमो भार्गवस्तथा ॥१४-३६-२५ (९३३५१)
वसिष्ठः कश्यपश्चैव विश्वामित्रोऽत्रिरेव च ।
मार्गान्सर्वान्परिक्रम्य परिश्रान्तः स्वकर्मभिः ॥१४-३६-२६ (९३३५२)
ऋषिमाङ्गिरसं वृद्धं पुरस्कृत्य तु ते द्विजाः ।
ददृशुर्ब्रह्मभवने ब्रह्माणं वीतकल्मषम् ॥१४-३६-२७ (९३३५३)
तं प्रणम्य महात्मानं सुखासीनं महर्षयः ।
पप्रच्छुर्विनयोपेता नैःश्रेयसमिदं परम् ॥१४-३६-२८ (९३३५४)
कथं कर्म कृतं साधु कथं मुच्येत किल्बिषात् ।
के नो मार्गाः शिवाश्च स्युः किं सत्यं किं च दुष्कृतं ॥१४-३६-२९
(९३३५५)
कौ चोभौ कर्मणां मार्गौ प्राप्नुयुर्दक्षिणोत्तरौ ।
निरयं चापवर्गं च भूतानां प्रभवाप्ययौ ॥१४-३६-३० (९३३५६)
इत्युक्तः स मुनिश्रेष्ठैर्यदाह प्रपितामहः ।
तत्तेऽहं सम्प्रवक्ष्यामि शृणु शिष्य यथागमम् ॥१४-३६-३१ (९३३५७)
ब्रह्मोवाच।१४-३६-३२क्ष् (७८६२)
सत्याद्भूतानि जातानि स्थावराणि चराणि च ।
तपसा तानि जीवन्ति जीवितं तद्धि सुव्रतम् ।

स्वां योनिं पुनरागम्य वर्तते स्वेन कर्मणा ॥ १४-३६-३२ (९३३५८)
सत्यं हि गुणसंयुक्तं नियतं पञ्चलक्षणम् ॥ १४-३६-३३ (९३३५९)
ब्रह्म सत्यं तपः सत्यं सत्यं चैव प्रजापतिः ।
सत्याद्भूतानि जातानि सत्यं भूतमयं जगत् ॥१४-३६-३४ (९३३६०)
तस्मात्सत्याश्रया विप्रा नित्यं योगपरायणाः ।
अतीक्रोधसंतापा नियता धर्मसेतवः ॥१४-३६-३५ (९३३६१)
अन्योन्यनियतान्वैद्यान्धर्मसेतुप्रवर्तकान् ।
तानहं सम्प्रवक्ष्यामि शाश्वताँल्लोकभावनान् ॥१४-३६-३६ (९३३६२)
चातुर्विद्यं तथा वर्णांश्चातुराश्रमिकान्पृथक् ।
धर्ममेकं चतुष्पादं नित्यमाहुर्मनीषिणः ॥१४-३६-३७ (९३३६३)
पन्थानं वः प्रवक्ष्यामि शिवं क्षेमकरं द्विजाः ।
नियतं ब्रह्मभावाय यातं पूर्वं मनीषिभिः ॥१४-३६-३८ (९३३६४)
गदन्तस्तु ममाद्येह पन्थानं दुर्विदं परैः ।
निबोधत महाभागा निखिलेन परं पदम् ॥१४-३६-३९ (९३३६५)
ब्रह्मचर्यमिहैवाहुराश्रमं प्रथमं पदम् ।
गार्हस्थ्यं तु द्वितीयं स्याद्वानप्रस्थमतः परम् ।
ततः परं तु विज्ञेयमध्यात्मं परमं पदम् ॥ १४-३६-४० (९३३६६)
ज्योतिराकाशमादित्यो वायुरिन्द्रः प्रजापतिः ।
नोपैति यावदध्यात्मं तावदेतान्न पश्यति ॥१४-३६-४१ (९३३६७)
तस्योपायं प्रवक्ष्यामि पुरस्तात्तं निबोधत ।
फलमूलानिलभुजां मुनीनां वसतां वने ॥१४-३६-४२ (९३३६८)
वानप्रस्थं द्विजातीनां त्रयाणामुपदिश्यते ।
सर्वेषामेव वर्णानां गृहस्थोऽयं विशिष्यते ॥१४-३६-४३ (९३३६९)
श्रद्धालक्षणमित्येकं धर्मं धीराः प्रचक्षते ।
Žनैष्ठिकोऽथ यतिर्वाऽपि विरक्तो ब्रह्मदर्शनः ॥' १४-३६-४४ (९३३७०)
इत्येवं देवयाना वः पन्थानः परिकीर्तिताः ।
सद्भिरध्यासिता धीरैः कर्मभिर्धर्मसेतवः ॥१४-३६-४५ (९३३७१)
एतेषां पृथगध्यास्ते यो धर्मं संशितव्रतः ।
कालात्पश्यति भूतानां सदैव प्रभवाप्ययौ ॥१४-३६-४६ (९३३७२)
अतस्तत्त्वानि वक्ष्यामि याथातथ्येन हेतुना ।
विषयस्थानि सर्वाणि वर्तमानानि भागशः ॥१४-३६-४७ (९३३७३)
महानात्मा तथाऽव्यक्तमहंकारस्तथैव च ।
इन्द्रियाणि दशैकं च महाभूतानि पञ्च च ॥१४-३६-४८ (९३३७४)
विशेषाः पञ्चभूतानामित्येषा वैदिकी श्रुतिः ।
चतुर्विंशतिरेषा वस्तत्वानां परिकीर्तिता ॥१४-३६-४९ (९३३७५)
तत्वानामथ यो वेद सर्वेषां प्रभवाप्ययौ ।

स धीरः सर्वभूतेषु न मोऽहमधिगच्छति ॥१४-३६-५० (९३३७६)
तत्त्वानि यो वेदयते यथातथं
गुणांश्च सर्वानखिलाश्च देवताः ।
विधूतपाप्मा प्रविमुच्य बन्धनं
स सर्वलोकानमलान्समश्नुते ॥ ॥ १४-३६-५१ (९३३७७)

इति श्रीमन्महाभारते आश्वमेधिकपर्वणि अनुगीतापर्वणि
षट्त्रिंशोऽध्यायः ॥
Mahabharata - Ashvamedhika Parva - Chapter Footnotes

७-३६-१० कश्च कोऽपि ॥
७-३६-२९ कथं कर्म क्रियात्साद्यु इति झ
। झ पाठः। क्रियात्कुर्वीत। के। नोऽस्माकम् ॥
७-३६-४३ गार्हस्थ्यं तद्विधीयते इति झ पाठः ॥

---

अस्वमेधिकपर्व-अध्यय०३७
॥ श्रीः ॥
१४.३७. अध्यायः ३७

अथानुगीतापर्व-२
Mahabharata - Ashvamedhika Parva - Chapter Topics
ब्रह्मणा कश्यपादिमहर्षीन्प्रति तमोगुणकार्यनिरूपणम् ॥ १ ॥

Mahabharata - Ashvamedhika Parva - Chapter Text

ब्रह्मोवाच ।
तदव्यक्तमनुद्रिक्तं सर्वव्यापि ध्रुवं स्थिरम् ।
नवद्वारं पुरं विद्यात्त्रिगुणं पञ्चधातुकम् ॥१४-३७-१ (९३३७८)
एकादशपरिक्षेपं मनोव्याकरणात्मकम् ।
बुद्धिस्वामिकमित्येतत्परमेकादशं भवेत् ॥१४-३७-२ (९३३७९)
त्रीणि स्रोतांसि यान्यस्मिन्नाप्यायन्ते पुनःपुनः ।
प्रनाड्यस्तिस्र एवैताः प्रवर्न्तते गुणात्मिकाः ॥१४-३७-३ (९३३८०)
तमो रजस्तथा सत्वं गुणानेतान्प्रचक्षते ।
अन्योन्यमिथुनाः सर्वे तथाऽन्योन्यानुजीविनः ॥१४-३७-४ (९३३८१)
अन्योन्यापाश्रयाश्चापि तथाऽन्योन्यानुवर्तिनः ।
अन्योन्यव्यतिषक्ताश्च त्रिगुणाः पञ्चधातवः ॥१४-३७-५ (९३३८२)

तमसो मिथुनं सत्वं सत्वस्य मिथुनं रजः ।
रजसश्चापि सत्वं स्यात्सत्वस्य मिथुनं तमः ॥ १४-३७-६ (९३३८३)
नियम्यते तमो यत्र रजस्तत्र निवर्तते ।
नियम्यते रजो यत्र सत्वं तत्र प्रवर्तते ॥ १४-३७-७ (९३३८४)
नैशात्मकं तमो विद्यात्त्रिगुणं मोहसंज्ञितम् ।
अधर्मलक्षणं चैव नियतं पापकर्मसु ।
तामसं रूपमेतत्तु दृश्यते चापि सङ्गतम् ॥ १४-३७-८ (९३३८५)
प्रकृत्यात्मकमेवाहू रजः पर्यायकारकम् ।
सत्त्वे तु सर्वभूतेषु दृश्यमुत्पत्तिलक्षणम् ॥ १४-३७-९ (९३३८६)
प्रकाशं सर्वभूतेषु लाघवं श्रद्धधानता ।
सात्विकं रूपमेवं तु लाघवं साधुसंमितम् ॥ १४-३७-१० (९३३८७)
एतेषां गुणतत्त्वानि वक्ष्यन्ते तत्त्वहेतुभिः ।
समासव्यासयुक्तानि तत्त्वतस्तानि बोधत ॥ १४-३७-११ (९३३८८)
सम्मोहो ज्ञानमत्यागः कर्मणामविनिर्णयः ।
स्वप्नः स्तंभो भयं लोभः शोकः सुकृतदूषणम् ॥ १४-३७-१२ (९३३८९)
अस्मृतिश्चाविपाकश्च नास्तिक्यं भिन्नवृत्तिता ।
निर्विशेषत्वमन्धत्वं जघन्यगुणवृत्तिता ॥ १४-३७-१३ (९३३९०)
अकृते कृतमानित्वमज्ञाने ज्ञानमानिता ।
अमैत्री विकृतो भावो ह्यश्रद्धा मूढभावना ॥ १४-३७-१४ (९३३९१)
अनार्जवमसंज्ञत्वं कर्म पापमचेतना ।
गुरुत्वं सन्नभावत्वमवशित्वमवाग्गतिः ॥ १४-३७-१५ (९३३९२)
सर्व एते गुणा वृत्तास्तामसाः सम्प्रकीर्तिताः ।
ये चान्ये विहिता भावा लोकेऽस्मिन्भावसंज्ञिताः ॥ १४-३७-१६ (९३३९३)
तत्रतत्र नियम्यन्ते सर्वे ते तामसा गुणाः ।
परिवादकथा नित्यं मेवब्राह्मणवैरिता ॥ १४-३७-१७ (९३३९४)
अत्यागश्चातिमानश्च मोहो मन्युस्तथाऽक्षमा ।
मत्सरश्चैव भूतेषु तामसं वृत्तमिष्यते ॥ १४-३७-१८ (९३३९५)
वृथारम्भा हि ये केचिद्वृथा दानानि यानि च ।
वृथाभक्षणमित्येतत्तामसं वृत्तमिष्यते ॥ १४-३७-१९ (९३३९६)
अतिवादोऽतितिक्षा च मात्सर्यमभिमानिता ।
अश्रद्दधानता चैव तामसं वृत्तमिष्यते ॥ १४-३७-२० (९३३९७)
एवंविधाश्च ये केचिल्लोकेऽस्मिन्पापकर्मिणः ।
मनुष्या भिन्नमर्यादास्ते सर्वे तामसाः स्मृताः ॥ १४-३७-२१ (९३३९८)
तेषां योनीः प्रवक्ष्यामि नियताः पापकर्मिणाम् ।
अवाङ्गिरयभावा ये तिर्यङ्गिरयगामिनः। १४-३७-२२ (९३३९९)
स्थावराणि च भूतानि पशवो वाहनानि च ।

क्रव्यादा दंदशूकाश्च कृमिकीटविहङ्गमाः ॥ १४-३७-२३ (९३४००)
अब्जाता जन्तवश्चैव सर्वे चापि चतुष्पदाः ।
उन्मत्ता बधिरा मूका ये चान्ये पापरोगिणः ॥ १४-३७-२४ (९३४०१)
मग्नास्तमसि दुर्वृत्ताः स्वकर्मकृतलक्षणाः ।
अवाक्स्रोतस इत्येते मग्नास्तमसि तामसाः ॥ १४-३७-२५ (९३४०२)
तेषामुत्कर्षमुद्रेकं वक्ष्याम्यहमतः परम् ।
यथा ते सुकृतां लोकाँल्लभन्ते पुण्यकर्मिणः ॥ १४-३७-२६ (९३४०३)
अन्यथा प्रतिपन्नास्तु विवृद्धा ये च कर्मसु ।
स्वकर्मनिरतानां च ब्राह्मणानां शुभैषिणाम् ॥ १४-३७-२७ (९३४०४)
संस्कारेणोर्ध्वमायान्ति यतमानाः सलोकताम् ।
स्वर्गं गच्छन्ति देवानामित्येषा वैदिकी श्रुतिः ॥ १४-३७-२८ (९३४०५)
अन्यथा प्रतिपन्नास्ते विबुद्धाः स्वेषु कर्मसु ।
पुनरावृत्तिधर्माणस्ते भवन्तीह मानुषाः ॥ १४-३७-२९ (९३४०६)
पापयोनिं समापन्नाश्चण्डाला मूकचूचुकाः ॥
वर्णान्पर्यायशश्चापि प्राप्नुवन्त्युत्तरोत्तरम् ॥ १४-३७-३० (९३४०७)
शूद्रयोनिमतिक्रम्य ये चान्ये तामसा गुणाः ।
स्रोतोमध्ये समागम्य वर्तन्ते तामसे गुणे ॥ १४-३७-३१ (९३४०८)
अभिष्वङ्गस्तु कामेषु महामोह इति स्मृतः ।
ऋषयो मुनयो देवा मुह्यन्त्यत्र सुखेप्सवः ॥ १४-३७-३२ (९३४०९)
तमोमोहो महामोहस्तामिस्रो ह्यन्धसंज्ञितः ।
मरणं त्वन्धतामिस्रस्तामिस्रः क्रोध उच्यते ॥ १४-३७-३३ (९३४१०)
वर्णतो गुणतश्चैव योनितश्चैव तत्त्वतः ।
सर्वमेततमो विप्राः कीर्तितं वो यथाविधि ॥ १४-३७-३४ (९३४११)
को न्वेतद्बुध्यते साधु को न्वेतत्साधु पश्यति ।
अतत्त्वे तत्त्वदर्शी यस्तमसस्तच्च लक्षणम् ॥ १४-३७-३५ (९३४१२)
तमोगुणा बहुविधाः प्रकीर्तिता
यथावदुक्तं च तमः परावरम् ।
नरो हि यो वेद गुणानिमान्सदा
स तामसैः सर्वगुणैः प्रमुच्यते ॥ ॥ १४-३७-३६ (९३४१३)

इति श्रीमन्महाभारते आश्वमेधिकपर्वणि अनुगीतापर्वणि
सप्तत्रिंशोऽध्यायः ॥ ३७ ॥

Mahabharata - Ashvamedhika Parva - Chapter Footnotes

७-३७-२४ अण्डजा जन्तव इति झ पाठः ॥
७-३७-३० चूचुकाः स्खलद्गिरः । पुष्पचूचुका इति क पाठः ॥

७-३७-३२ कामेषु स्त्र्याद्यर्थेषु ।अभिष्वङ्ग आसक्तिः ॥

---

अस्वमेधिकपर्व-अध्यय०३८
॥ श्रीः ॥
१४.३८. अध्यायः ३८

अथानुगीतापर्व-२
Mahabharata - Ashvamedhika Parva - Chapter Topics
ब्रह्मण महर्षीन्प्रति रजोगुणकार्यनिरूपणम् ॥ १ ॥

Mahabharata - Ashvamedhika Parva - Chapter Text

ब्रह्मोवाच ।
रजोऽहं वः प्रवक्ष्यामि याथातथ्येन सत्तमाः ।
निबोधत महाभागा गुणवृत्तं च राजसम् ॥ १४-३८-१ (९३४१४)
संतापो रूपमायासः सुखदुःखे हिमातपौ ।
ऐश्वर्यं विग्रहः सिद्धिर्हेतुवादोऽरतिः क्षमा ॥ १४-३८-२ (९३४१५)
बलं शौर्यं मदो रोषो व्यायामकलहावपि ।
ईर्ष्येप्सा पैशुनं युद्धं ममत्वं परिपालनम् ॥ १४-३८-३ (९३४१६)
वधबन्धपरिक्लेशाः क्रयो विक्रय एव च ।
निकृन्त च्छिन्धि भिन्धीति परवर्मावकर्तनम् ॥ १४-३८-४ (९३४१७)
उग्रं दारुणमाक्रोशः परवित्तानुरागिता ।
लोकचिन्ताऽनुचिन्ता च मत्सरः परिभाषणम् ॥ १४-३८-५ (९३४१८)
वृथाशास्त्रं मृषावादो विकल्पपरिभाषणम् ।
निन्दा स्तुतिः प्रशंसा च प्रतापः परिधर्षणम् ॥ १४-३८-६ (९३४१९)
परिचर्या च शुश्रूषा सेवा तृष्णा व्यपाश्रयः ॥
व्यूहो नयः प्रमादश्च परिवादः परिग्रहः ॥ १४-३८-७ (९३४२०)
संस्कारा ये च लोकेषु प्रवर्तन्ते पृथक्पृथक् ।
नृषु नारीषु भूतेषु द्रव्येषु शरणेषु च ॥ १४-३८-८ (९३४२१)
संतापोऽप्रत्ययश्चैव व्रतानि नियमाश्च ये ।
प्रधानमाशीर्युक्तं च सततं मे भवत्विति ॥ १४-३८-९ (९३४२२)
स्वाहाकारो नमस्कारः स्वधाकारो वषट्क्रिया ।
याजनाध्यापने चोभे यजनाध्ययने अपि ॥ १४-३८-१० (९३४२३)
दानं प्रतिग्रहश्चैव प्रायश्चित्तानि मङ्गलम् ।
इदं मे स्यादिदं मे स्यात्स्नेहो गुणसमुद्भवः ॥ १४-३८-११ (९३४२४)
अभिद्रोहस्तथा माया निकृतिर्मान एव च ।

स्तैन्यं हिंसा जुगुप्सा च परितापः प्रजागरः ॥१४-३८-१२ (९३४२५)
दम्भो दर्पोऽथ रागश्च भक्तिः प्रीतिः प्रमोदनम् ।
द्यूतं च जनवादश्च सम्बन्धाः स्त्रीकृताश्च ये ॥१४-३८-१३ (९३४२६)
नृत्यवादित्रगीतानां प्रसङ्गा ये च केचन ।
सर्व एते गुणा विप्रा राजसाः सम्प्रकीर्तिताः ॥१४-३८-१४ (९३४२७)
भूतभव्यभविष्याणां भावानां भुवि भावनाः ।
त्रिवर्गनिरता नित्यं धर्मोऽर्थः काम इत्यपि ॥१४-३८-१५ (९३४२८)
कामवृत्ताः प्रमोदन्ते सर्वकामसमृद्धिभिः ।
अर्वाक्स्रोतस इत्येते मनुष्या रजसा वृताः ॥१४-३८-१६ (९३४२९)
अस्मिँलोके प्रमोदन्ते जायमानाः पुनःपनः ।
प्रेत्यभाविकमीहन्ते हलौकिकमेव च ।
ददति प्रतिगृह्णन्ति तर्पयन्त्यथ जुह्वति ॥ १४-३८-१७ (९३४३०)
रजोगुणा वो बहुधानुकीर्तिता
यथावदुक्तं गुणवृत्तमेव च ।
नरोपि यो वेद गुणानिमान्सदा
स राजसैः सर्वगुणैर्विमुच्यते ॥ ॥ १४-३८-१८ (९३४३१)

इति श्रीमन्महाभारते आश्वमेधिकपर्वणि अनुगीतापर्वणि
अष्टत्रिंशोऽध्यायः ॥ ३८ ॥

Mahabharata - Ashvamedhika Parva - Chapter Footnotes

७-३८-२ संघातो रूपमायास इति क ट थ पाठः ॥
७-३८-५ उग्रं निष्ठुरं दारुणं हिंस्रत्वम् ॥
७-३८-६ परिभाषणं धिक्कृत्य भाषणम् ॥
७-३८-७ व्यूहः व्यवहाररचनाकौशलम् ॥
७-३८-८ शरणेषु रक्षितृषु ॥
७-३८-९ अप्रत्ययः अविश्वासः ॥
७-३८-१२ परितापः स्वजनकैवल्यनिमित्तो दाहः । पाठान्तरे परिवादः सर्वनिन्दा ॥
७-३८-१४ प्रसङ्गा येन केनचिदिति क थ पाठः ॥
७-३८-१६ अर्वाक् स्वर्गादधः भूमेरुपरि स्रोतः प्रवाहो येषां ते तथा ॥
७-३८-१७ प्रेत्यभाविकं जन्मान्तरीयं कुशलम् ॥

---

अस्वमेधिकपर्व-अध्यय०३९
॥ श्रीः ॥
१४.३९. अध्यायः ३९

अथानुगीतापर्व-२

Mahabharata - Ashvamedhika Parva - Chapter Topics

ब्रह्मणा महर्षीन्प्रति सत्वगुणकार्यनिरूपणम् ॥ १ ॥

Mahabharata - Ashvamedhika Parva - Chapter Text

ब्रह्मोवाच ।
अतः परं प्रवक्ष्यामि तृतीयं गुणमुत्तमम् ।
सर्वभूतहितं लोके सतां धर्ममनिन्दितम् ॥ १४-३९-१ (९३४३२)
आनन्दः प्रीतिरुद्रेकः प्राकाश्यं सुखमेव च ।
अकार्पण्यमसंरम्भः संतोषः श्रद्दधानता ॥ १४-३९-२ (९३४३३)
क्षमा धृतिरहिंसा च समता सत्यमार्जवम् ।
अक्रोधश्चानसूया च शौचं दाक्ष्यं पराक्रमः ॥ १४-३९-३ (९३४३४)
मुधाज्ञानं मुधावृत्तं मुधासेवा मुदाश्रमः ।
एवं यो युक्तधर्मः स्यात्सोमुत्रात्यन्तमश्नुते ॥ १४-३९-४ (९३४३५)
निर्ममो निरहङ्कारो निराशीः सर्वतः समः ।
अकामहत इत्येव सतां धर्मः सनातनः ॥ १४-३९-५ (९३४३६)
विश्रंभो ह्रीस्तितिक्षा च त्यागः शौचमतन्द्रिता ।
आनृशंस्यमसंमोहो दया भूतेष्वपैशुनम् ॥ १४-३९-६ (९३४३७)
हर्षस्तुष्टिर्विस्मयश्च विनयः साधुवृत्तिता ।
शान्तिकर्मविशुद्धिश्च भावशुद्धिर्विमोचनम् ॥ १४-३९-७ (९३४३८)
उपेक्षा ब्रह्मचर्यं च परित्यागश्च सर्वशः ।
निर्ममत्वमनाशीष्ट्वमपरिक्षतधर्मता ॥ १४-३९-८ (९३४३९)
मुधादानं मुधायज्ञो मुधाधीतं मुधाव्रतम् ।
मुधाप्रतिग्रहश्चैव मधाध्रमो मुधातपः ॥ १४-३९-९ (९३४४०)
एवंवृत्तास्तु ये केचिल्लोकेऽस्मिन्सत्वसंश्रयाः ।
ब्राह्मणा ब्रह्मयोनिस्थास्ते धीराः साधुदर्शिनः ॥ १४-३९-१० (९३४४१)
हित्वा सर्वाणि पापानि निःशोका ह्यजरामराः ।
दिव्यं प्राप्य तु ते धीराः कुर्वते वै ततस्तनूः ॥ १४-३९-११ (९३४४२)
ईशित्वं च वशित्वं च लघुत्वं चाणुता तथा ।
विकुर्वते महात्मानो देवास्त्रिदिवगा इव ॥ १४-३९-१२ (९३४४३)
ऊर्ध्वस्रोतस इत्येते देवा वैकारिकाः स्मृताः ।
विकुर्वन्तः प्रकृत्या वै दिवं प्राप्तास्ततस्ततः ॥ १४-३९-१३ (९३४४४)
यद्यदिच्छन्ति तत्सर्वं भजन्ते विभजन्ति च ।
इत्येतत्सात्विकं वृत्तं कथितं वो द्विजर्षभाः ।

एतद्विज्ञाय लभते विधिवद्यद्यदिच्छति ॥ १४-३९-१४ (९३४४५)
प्रकीर्तिताः सत्त्वगुणा विशेषतो
यथावदुक्तं गुणवृत्तमेव च ।
नरस्तु यो वेद गुणानिमान्सदा
गुणान्स भुङ्क्ते न गुणैः स युज्यते ॥ ॥ १४-३९-१५ (९३४४६)

इति श्रीमन्महाभारते आश्वमेधिकपर्वणि अनुगीतापर्वणि
एकोनचत्वारिंशोऽध्यायः ॥ ३९ ॥
Mahabharata - Ashvamedhika Parva - Chapter Footnotes

७-३९-७ हर्षः पुत्रजन्मादिजं सुखम् । तुष्टिरलबुद्धिः । शान्तिकर्मणि
मुक्त्युपाये शुद्धिः आर्जवेन प्रवृत्तिः ॥
७-३९-८ उपेक्षा औदासीन्यम् ॥

---

अस्वमेधिकपर्व-अध्यय०४०
॥ श्रीः ॥
१४.४०. अध्यायः ४०

अथानुगीतापर्व-२
Mahabharata - Ashvamedhika Parva - Chapter Topics
ब्रह्मणा महर्षीन्प्रति सत्वादिगुणत्रयनिरूपणम् ॥ १ ॥

Mahabharata - Ashvamedhika Parva - Chapter Text

ब्रह्मोवाच ।
नैव शक्या गुणा वक्तुं पृथक्त्वेनैव सर्वशः ।
अविच्छिन्नानि दृश्यन्ते रजः सत्वं तमस्तथा ॥ १४-४०-१ (९३४४७)
अन्योन्यमनुरज्यन्ते ह्यन्योन्येनानुजीविनः ।
अन्योन्यापाश्रयाः सर्वे तथाऽन्योन्यानुवर्तिनः ॥ १४-४०-२ (९३४४८)
यावत्सत्वं रजस्तावद्वर्तते नात्र संशयः ।
यावत्तमश्च सत्वं च रजस्तावदिहोच्यते ॥ १४-४०-३ (९३४४९)
संहत्य कुर्वते यात्रां सहिताः सङ्घचारिणः ।
सङ्घातवृत्तयो ह्येते वर्तन्ते हेत्वहेतुभिः ॥ १४-४०-४ (९३४५०)
उद्रेकव्यतिरिक्तानां तेषामन्योन्यवर्तिनाम् ।
वक्ष्यते तद्यथाऽन्यूनं व्यतिरिक्तं च सर्वशः ॥ १४-४०-५ (९३४५१)
व्यतिरिक्तं तमो यत्र तिर्यग्भावगतं भवेत् ।

अल्पं तत्रथ रजो ज्ञेयं सत्वमल्पतरं तथा ॥ १४-४०-६ (९३४५२)
उद्रिक्तं च रजो यत्र मध्यस्रोतोगतं भवेत् ।
अल्पं तत्र तमो ज्ञेयं सत्वमल्पतरं तथा ॥ १४-४०-७ (९३४५३)
उद्रिक्तं च यदा सत्वमूर्ध्वस्रोतोगतं भवेत् ।
अल्पं तत्र तमो ज्ञेयं रजश्चाल्पतरं तथा ॥ १४-४०-८ (९३४५४)
सत्वं वैकारिकी योनिरिन्द्रियाणां प्रकाशिका ।
न हि सत्वात्परो भावः कश्चिदन्यो विधीयते ॥ १४-४०-९ (९३४५५)
ऊर्ध्वं गच्छन्ति सत्वस्था मध्ये तिष्ठन्ति राजसाः ।
जघन्यगुणसंयुक्ता यान्त्यधस्तामसा जनाः ॥ १४-४०-१० (९३४५६)
तमः शूद्रे रजः क्षत्रे ब्राह्मणे सत्वमुत्तमम् ।
इत्येवं त्रिषु वर्णेषु विवर्तन्ते गुणास्त्रयः ॥ १४-४०-११ (९३४५७)
दूरादपि हि दृश्यनते सहिताः सङ्घचारिणः ।
तमः सत्वं रजश्चैव पृथक्त्वेनानुशुश्रुम ॥ १४-४०-१२ (९३४५८)
दृष्ट्वा त्वादित्यमुद्यन्तं कुचोराणां भयं भवेत् ।
अध्वगाः परितप्येयुरुष्णतो दुःखभागिनः ॥ १४-४०-१३ (९३४५९)
आदित्यः सत्वमुद्दिष्टः कुचोरास्तु तथा तमः ।
परितापोऽध्वगानां च रजसो गुण उच्यते ॥ १४-४०-१४ (९३४६०)
प्राकाश्यं सत्वमादित्यः संतापो रजसो गुणः ।
उपप्लवस्तु विज्ञेयस्तामसस्तस्य पर्वसु ॥ १४-४०-१५ (९३४६१)
एवं ज्योतिषु सर्वेषु प्रवर्तन्ते गुणास्त्रयः ॥
पर्यायेण च वर्न्तते तत्रतत्र तथातथा ॥ १४-४०-१६ (९३४६२)
स्थावरेषु तु भावेषु तिर्यग्भावगतं तमः ।
राजसास्तु विवर्तन्ते स्नेहभावस्तु सात्विकैः ॥ १४-४०-१७ (९३४६३)
अहस्त्रिधा तु विज्ञेयं त्रिधा रात्रिर्विधीयते ।
मासार्दमासवर्षाणि ऋतवः सन्धयस्तथा ॥ १४-४०-१८ (९३४६४)
त्रिधा दानानि दीयन्ते त्रिधा यज्ञः प्रवर्तते ।
त्रिधा लोकास्त्रिधा देवास्त्रिधा विद्यास्त्रिधा गतिः ॥ १४-४०-१९ (९३४६५)
भूतं भव्यं भविष्यं च धर्मोऽर्थः काम एव च ।
प्राणापानावुदानश्चाप्येत एव त्रयो गुणाः ॥ १४-४०-२० (९३४६६)
पर्यायेण प्रवर्तन्ते तत्रतत्र तथातथा ।
यत्किञ्चिदिह लोकेऽस्मिन्सर्वमेते त्रयो गुणाः ॥ १४-४०-२१ (९३४६७)
त्रयो गुणाः प्रवर्तन्ते ह्यव्यक्ता नित्यमेव तु ।
सत्वं रजस्तमश्चैव गुणसर्गः सनातनः ॥ १४-४०-२२ (९३४६८)
तमोऽव्यक्तं शिवं धाम रजो योनिः सनातनः ।
प्रकृतिर्विकारः प्रलयः प्रधानं प्रभवाप्ययौ ॥ १४-४०-२३ (९३४६९)
अनुद्रिक्तमनूनं वाऽप्यकम्पमचलं ध्रुवम् ।

सदसच्चैव तत्सर्वमव्यक्तं त्रिगुणं स्मृतम् ।
ज्ञेयानि नामधेयानि नरैरद्यात्मचिन्तकैः ॥ १४-४०-२४ (९३४७०)
अव्यक्तनामानि गुणांश्च तत्त्वतो
यो वेद सर्वाणि गतीश्च केवलाः ।
विमुक्तदेहः प्रविभागतत्त्ववि-
त्स मुच्यते सर्वगुणैर्निरामयः ॥ ॥ १४-४०-२५ (९३४७१)

इति श्रीमन्महाभारते आश्वमेधिकपर्वणि अनुगीतापर्वणि
चत्वारिंशोऽध्यायः ॥ ४० ॥

---

अस्वमेधिकपर्व-अध्यय०४१
॥ श्रीः ॥
१४.४१. अध्यायः ४१

अथानुगीतापर्व-२
Mahabharata - Ashvamedhika Parva - Chapter Topics
ब्रह्मणा महर्षीन्प्रति महदहङ्कारतत्वनिरूपणम् ॥१ ॥

Mahabharata - Ashvamedhika Parva - Chapter Text

ब्रह्मोवाच ।
अव्यक्तात्पूर्वमुत्पन्नो महानात्मा महामतिः ।
आदिर्गुणानां सर्वेषां प्रथमः सर्ग उच्यते ॥१४-४१-१ (९३४७२)
महानात्मा मतिर्विष्णुर्जिष्णुः शंभुश्च वीर्यवान् ।
बुद्धिः प्रज्ञोपलब्धिश्च तता ख्यातिर्धृतिःस्मृतिः। १४-४१-२ (९३४७३)
पर्यायवाचकैः शब्दैर्महानात्मा विभाव्यते ।
तं जानन्ब्राह्मणो विद्वान्प्रमोहं नाधिगच्छति ॥१४-४१-३ (९३४७४)
सर्वतःपाणिपादं च सर्वतोक्षिशिरोमुखम् ।
सर्वतःश्रुतिमल्लोके सर्वं व्याप्यवतिष्ठति ॥१४-४१-४ (९३४७५)
महाप्रभावः पुरुषः सर्वस्य हृदि निष्ठितः ।
अणिमा लघिमा प्राप्तिरीशानो ज्योतिरव्ययः ॥१४-४१-५ (९३४७६)
तत्र बुद्धिमतां लोके सद्भावनिरताश्च ये ।
ध्यानिनो नित्ययोगाश्च सत्यसन्धा जितेन्द्रियाः ॥१४-४१-६ (९३४७७)
ज्ञानवन्तश्च ये केचिदलुब्धा जितमन्यवः ।
प्रसन्नमनसो धीरा निर्ममा निरहंक्रियाः ॥१४-४१-७ (९३४७८)
विमुक्ताः सर्व एवैते महत्त्वमुपयान्त्युत ।

आत्मनो महतो वेद यः पुण्यां गतिमुत्तमाम् ॥ १४-४१-८ (९३४७९)
अहङ्कारात्प्रसूतानि महाभूतानि पञ्च वै ।
पृथिवी वायुराकाशमापो ज्योतिश्च पञ्चमम् ॥ १४-४१-९ (९३४८०)
तेषु भूतानि युज्यन्ते महाभूतेषु पञ्चसु ।
ते शब्दस्पर्शरूपेषु रसगन्धक्रियासु च ॥ १४-४१-१० (९३४८१)
महाभूतविनाशान्ते प्रलये प्रत्युपस्थिते ।
सर्वप्राणभृतां धीरा महदुत्पद्यते भयम् ॥ १४-४१-११ (९३४८२)
स धीरः सर्वलोकेषु न मोहमधिगच्छति ।
विष्णुरेवादिसर्गेषु स्वयंभूर्भवति प्रभुः ॥ १४-४१-१२ (९३४८३)
एवं हि यो वेद गुहाशयं प्रभुं
परं पुराणं पुरुषं विश्वरूपम् ।
हिरण्मयं बुद्धिमतां परां गतिं
स बुद्धिमान्बुद्धिमतीत्य तिष्ठति ॥ १४-४१-१३ (९३४८४)
य उत्पन्नो महान्पूर्वमहङ्कारः स उच्यते ।
अहमित्येव सम्भूतो द्वितीयः सर्ग उच्यते ॥ १४-४१-१४ (९३४८५)
अहङ्कारश्च भूतादिर्वैकारिक इति स्मृतः ।
तेजसश्चेतना धातुः प्रजासर्गः प्रजापतिः ॥ १४-४१-१५ (९३४८६)
देवानां प्रभवो देवो मनसश्च त्रिलोककृत् ।
अहमित्येव तत्सर्वमभिमानः स उच्यते ॥ १४-४१-१६ (९३४८७)
अध्यात्मज्ञानतृप्तानां मुनीनां भावितात्मनाम् ।
स्वाध्यायक्रतुसिद्धानामेष लोकः सनातनः ॥ १४-४१-१७ (९३४८८)
अहङ्कारेणाहरतो गुणानिमा-
न्भूतादिरेवं सृजते स भूतकृत् ।
वैकारिकः सर्वमिदं विचेष्टते
स्वतेजसा रञ्जयते जगत्तथा ॥ ॥ १४-४१-१८ (९३४८९)

इति श्रीमन्महाभारते आश्वमेधिकपर्वणि अनुगीतापर्वणि
एकचत्वारिंशोऽध्यायः ॥ ४१ ॥

---

अस्वमेधिकपर्व-अध्यय०४२
॥ श्रीः ॥
१४.४२. अध्यायः ४२

अथानुगीतापर्व-२
Mahabharata - Ashvamedhika Parva - Chapter Topics
ब्रह्मणा महर्षीन्प्रत्यहङ्कारतत्वाद्भूतादिसृष्टिप्रकारकथनम् ॥ १ ॥

ब्रह्मोवाच ।
अहङ्कारात्प्रसूतानि महाभूतानि पञ्च वै ।
पृथिवी वायुराकाशमापो ज्योतिश्च पञ्चमम् ॥ १४-४२-१ (९३४९०)
तेषु भूतानि मुह्यन्ति महाभूतेषु पञ्चसु ।
शब्दस्पर्शनरूपेषु रसगन्धक्रियासु च ॥ १४-४२-२ (९३४९१)
महाभूतविकारान्ते प्रलये प्रत्युपस्थिते ।
सर्वप्राणभूतां धीरा महदुत्पद्यते भयम् ॥ १४-४२-३ (९३४९२)
यद्यस्माज्जायते भूतं तत्र तत्प्रविलीयते ।
लीयन्ते प्रतिलोमानि जायन्ते चोत्तरोत्तरम् ॥ १४-४२-४ (९३४९३)
ततः प्रलीने सर्वस्मिन्भूते स्थावरजङ्गमे ।
स्मृतिमन्तस्तदा धीरा न लीयन्ते कदाचन ॥ १४-४२-५ (९३४९४)
शब्दः स्पर्शस्तथा रूपं रसो गन्धश्च पञ्चमः ।
क्रियाः करणयुक्ताः स्युरनित्या मोहसंज्ञिताः ॥ १४-४२-६ (९३४९५)
लोभप्रजनसम्भूता निर्विशेषा ह्यकिञ्चनाः ।
मांसशोणितसङ्घाता अन्योन्यस्योपजीविनः ॥ १४-४२-७ (९३४९६)
बहिरात्मान इत्येते दीनाः कृपणजीविनः ।
प्राणापानावुदानश्च समानो व्यान एव च ॥ १४-४२-८ (९३४९७)
अन्तरात्मनि चाप्येते नियताः पञ्च वायवः ।
वाङ्मनोबुद्धिरित्येभिः सार्धमष्टात्मकं जगत् ॥ १४-४२-९ (९३४९८)
त्वग्घ्राणश्रोत्रचक्षूंषि रसना वाक्च संयताः ।
विशुद्धं च मनो यस्य बुद्धिश्चाव्यभिचारिणी ॥ १४-४२-१० (९३४९९)
अष्टौ यस्याग्नयो ह्येते दहन्तेऽहङ्क्रियाः सदा ।
स तद्ब्रह्म शुभं याति तस्माद्भूयो न विद्यते ॥ १४-४२-११ (९३५००)
एकादश च यान्याहुरिन्द्रियाणि विशेषतः ।
अहङ्कारात्प्रसूतानि तानि वक्ष्यामि नामतः ॥ १४-४२-१२ (९३५०१)
श्रोत्रं त्वक् चक्षुषी जिह्वा नासिका चैव पञ्चमी ।
पादौ पायुरुपस्थश्च हस्तौ वाग्दशमी भवेत् ॥ १४-४२-१३ (९३५०२)
इन्द्रियग्राम इत्येष मन एकादशं भवेत् ।
एतं ग्रामं जयेत्पूर्वं ततो ब्रह्म प्रकाशते ॥ १४-४२-१४ (९३५०३)
बुद्धीन्द्रियाणि पञ्चाहुः पञ्च कर्मेन्द्रियाणि च ।
श्रोत्रादीन्यपि पञ्चाहुर्बुद्धियुक्तानि तत्त्वतः ॥ १४-४२-१५ (९३५०४)
अविशेषाणि चान्यानि कर्मयुक्तानि यानि तु ।
उभयत्र मनो ज्ञेयं बुद्धिस्तु द्वादशी भवेत् ॥ १४-४२-१६ (९३५०५)

इत्युक्तानीन्द्रियाण्येतान्येकादश यथाक्रमम् ।
मन्यन्ते कृतमित्येवं विदित्वा तानि पण्डिताः ॥१४-४२-१७ (९३५०६)
ग्त्रीणि स्थानानि भूतानां चतुर्थं नोपपद्यते।'
स्थलमापस्तथाऽऽकाशं जन्म चापि चतुर्विधम् ॥ १४-४२-१८ (९३५०७)
अण्डजोद्भिज्जसंस्वेदजरायुजमथापि च ।
चतुर्धा जन्म इत्येतद्भूतग्रामस्य लक्ष्यते ॥१४-४२-१९ (९३५०८)
अपराण्यथ भूतानि खेचराणि तथैव च ।
अण्डजानि विजानीयात्सर्वांश्चैव सरीसृपान् ॥१४-४२-२० (९३५०९)
स्वेदजाः कृमयः प्रोक्ता जन्तवश्च यथाक्रमम् ।
जन्मद्वितीयमित्येतज्जघन्यतरमुच्यते ॥१४-४२-२१ (९३५१०)
भित्त्वा तु पृथिवीं यानि जायन्ते कालपर्ययात् ।
उद्भिज्जानि च तान्याहुर्भूतानि द्विजसत्तमाः ॥१४-४२-२२ (९३५११)
द्विपादबहुपादानि तिर्यग्गतिमतीनि च ।
जरायुजानि भूतानि विकृतान्यपि सत्तमाः ॥१४-४२-२३ (९३५१२)
द्विविधा खलु विज्ञेया ब्रह्मयोनिः सनातना ।
तपः कर्म च यत्पुण्यमित्येष विदुषां नयः ॥१४-४२-२४ (९३५१३)
विविधं कर्म विज्ञेयमिज्या दानं च तन्मखे ।
वेदस्याध्ययनं पुण्यमिति वृद्धानुशासनम् ॥१४-४२-२५ (९३५१४)
एतद्यो वेत्ति विधिवत्स मुक्तः स्याद्द्विजर्षभाः ।
विमुक्तः सर्वपापेभ्य इति चैव निबोधत ॥१४-४२-२६ (९३५१५)
ग्अतः परं प्रवक्ष्यामि सर्वं विविधमिन्द्रियम् ॥' १४-४२-२७ (९३५१६)
आकाशं प्रथमं भूतं श्रोत्रमध्यात्ममुच्यते ।
अधिभूतं तथा शब्दो दिशश्चात्राधिदैवतम् ॥१४-४२-२८ (९३५१७)
द्वितीयं मारुतं भूतं त्वगध्यात्मं च विश्रुतम् ।
स्प्रष्टव्यमधिभूतं तु विद्युत्तत्राधिदैवतम् ॥१४-४२-२९ (९३५१८)
तृतीयं ज्योतिरित्याहुश्चक्षुरध्यात्ममिष्यते ।
अधिभूतं ततो रूपं सूर्यस्तत्राधिदैवतम् ॥१४-४२-३० (९३५१९)
चतुर्थमापो विज्ञेयं जिह्वा चाध्यात्ममिष्यते ।
अधिभूतं रसश्चात्र सोमस्तत्राधिदैवतम् ॥१४-४२-३१ (९३५२०)
पृथिवी पञ्चमं भूतं घ्राणश्चाध्यात्ममुच्यते ।
अधिभूतं तथा गन्धो वायुस्तत्रादिदैवतम् ॥१४-४२-३२ (९३५२१)
एषु पञ्चसु भूतेषु चतुष्टयविधिः स्मृतः ।
अतः परं प्रवक्ष्यामि सर्वं त्रिविधमिन्द्रियम् ॥१४-४२-३३ (९३५२२)
पादावध्यात्ममित्याहुर्ब्राह्मणास्तत्वदर्शिनः ।
अधिभूतं तु गन्तव्यं विष्णुस्तत्राधिदैवतम् ॥१४-४२-३४ (९३५२३)
अवाग्गतिरपानश्च पायुरध्यात्ममिष्यते ।

अधिभूतं विसर्गश्च मित्रस्तत्राधिदैवतम् ॥१४-४२-३५ (९३५२४)
प्रजनः सर्वभूतानामुपस्थोऽध्यात्ममुच्यते ।
अधिभूतं तथा शुक्रं दैवतं च प्रजापतिः ॥१४-४२-३६ (९३५२५)
हस्तावध्यात्ममित्याहुरद्यात्मविदुषो जनाः ।
अधिभूतं च कर्माणि शक्रस्तत्राधिदैवतम् ॥१४-४२-३७ (९३५२६)
वैश्वदेवी मनःपूर्वा वागध्यात्ममिहोच्यते ।
वक्तव्यमधिभूतं च वह्निस्तत्राधिदैवतम् ॥१४-४२-३८ (९३५२७)
अध्यात्मं मन इत्याहुः पञ्चभूतात्मचारकम् ।
अधिभूतं च सङ्कल्पश्चन्द्रमाश्चाधिदैवतम् ॥१४-४२-३९ (९३५२८)
अहङ्कारस्तथाऽध्यात्मं सर्वसंसारकारणम् ।
अभिमानोऽधिभूतं च रुद्रस्तत्राधिदैवतम् ॥१४-४२-४० (९३५२९)
अध्यात्मं बुद्धिरित्याहुः षडिन्द्रियविचारिणी ।
अधिभूतं तु विज्ञेयमहस्तत्राधिदैवतम् ॥१४-४२-४१ (९३५३०)
यथावदध्यात्मविधिरेष वः कीर्तितो मया ।
ज्ञानमस्य हि धर्मज्ञाः प्राप्तं ज्ञानवतामिह ॥१४-४२-४२ (९३५३१)
इन्द्रियाणीन्द्रियार्थाश्च महाभूतानि पञ्च च ।
सर्वाण्येतानि संधाय मनसा सम्प्रधारयेत् ॥१४-४२-४३ (९३५३२)
क्षीणे मनसि सर्वस्मिन्न जन्मसुखमिष्यते ।
ज्ञानसम्पन्नसत्त्वानां तत्सुखं विदुषां मतम् ॥१४-४२-४४ (९३५३३)
अतः परं प्रवक्ष्यामि सूक्ष्मभावकरीं शिवाम् ।
निवृत्तिं सर्वभूतेषु मृदुना दारुणेन वा ॥१४-४२-४५ (९३५३४)
गुणागुणमनासङ्गमेकचर्यमनन्तरम् ।
एतद्ब्राह्मणजं वृत्तमाहुरेकपदं सुखम् ॥१४-४२-४६ (९३५३५)
विद्वान्कूर्म इवाङ्गानि कामान्संहृत्य सर्वशः ।
विरजाः सर्वतो मुक्तो यो नरः स सुखी सदा ॥१४-४२-४७ (९३५३६)
कामानात्मनि संयम्य क्षीणतृष्णः समाहितः ।
सर्वभूतसुहृन्मैत्रो ब्रह्मभूयाय कल्पते ॥१४-४२-४८ (९३५३७)
इन्द्रियाणां निरोधेन सर्वेषां विषयैषिणाम् ।
मुनेर्जनपदत्यागादध्यात्माग्निः समिध्यते ॥१४-४२-४९ (९३५३८)
यथाऽग्निरिन्धनैरिद्धो महाज्योतिः प्रकाशते ।
तथेन्द्रियनिरोधेन महानात्मा प्रकाशतदे ॥१४-४२-५० (९३५३९)
यदा पश्यति भूतानि प्रसन्नात्माऽत्मनो हृदि ।
स्वयंज्योतिस्तदासूक्ष्मात्सूक्ष्मं प्राप्नोत्यनुत्तमम् ॥१४-४२-५१ (९३५४०)
अग्नी रूपं रसं स्रोतो वायुः स्पर्शनमेव च ।
मही गन्धधरा घ्राणमाकाशः श्रवणं तथा ।
ग्दृश्यमादित्यमेवाहुरध्यात्मविदुषो जनाः ॥' १४-४२-५२ (९३५४१)

रोगशोकसमाविष्टं पञ्चस्रोतःसमावृतम् ।
पञ्चभूतसमायुक्तं नवद्वारं द्विदैवतम् ॥ १४-४२-५३ (९३५४२)
रजस्वलमथादृश्यं त्रिगुणं सप्तधातुकम् ।
संसर्गाभिरतं मूढं शरीरमिति धारणा ॥ १४-४२-५४ (९३५४३)
दुश्चरं जीवलोकेऽस्मिन्सत्वं प्रति समाश्रितम् ।
एतदेव हि लोकेऽस्मिन्कालचक्रं प्रवर्तते ॥ १४-४२-५५ (९३५४४)
एतन्महार्णवं घोरमगाधं मोहसंज्ञितम् ।
विसृजन्संक्षिपेच्चैव मोहयन्स्वापयञ्जगत् ॥ १४-४२-५६ (९३५४५)
कामं क्रोधं भयं लोभमभिद्रोहमथानृतम् ।
इन्द्रियाणां निरोधेन सतस्त्यजति दुस्त्यजान् ॥ १४-४२-५७ (९३५४६)
यस्यैते निर्जिता लोके त्रिगुणाः पञ्चधातवः ।
व्योम्नि तस्य परं स्थानमानन्तमथ लक्ष्यते ॥ १४-४२-५८ (९३५४७)
पञ्चेन्द्रियमहाकूलां मनःस्रोतोभयावहाम् ।
नदीं मोहह्रदां तीर्त्वा कामक्रोधावुभौ जयेत् ॥ १४-४२-५९ (९३५४८)
स सर्वदोषनिर्मुक्तस्ततः पश्यति तत्परम् ।
मनो मनसि सन्धाय पश्यन्नात्मानमात्मनि ॥ १४-४२-६० (९३५४९)
सर्ववित्सर्वभूतेषु द्रक्ष्यत्यात्मानमात्मनि ।
एकधा बहुधा चैव विकुर्वाणस्ततस्ततः ॥ १४-४२-६१ (९३५५०)
ध्रुवं पश्यति रूपाणि दीपाद्दीपशतं यथा ।
स वै विष्णुश्च मित्रश्च वरुणोऽग्निः प्रजापतिः ॥ १४-४२-६२ (९३५५१)
स हि धाता विधाता च स प्रभुः सर्वतोमुखः ।
हृदयं सर्वभूतानां महानात्मा प्रकाशते ॥ १४-४२-६३ (९३५५२)
तं विप्रसङ्घाश्च सुरासुराश्च
यक्षाः पिशाचाः पितरो वयांसि ।
रक्षोगणा भूतगणाश्च सर्वे
महर्षयश्चैव सदा स्तुवन्ति ॥ ॥ १४-४२-६४ (९३५५३)

इति श्रीमन्महाभारते आश्वमेधिकपर्वणि अनुगीतापर्वणि
द्विचत्वारिंशोऽध्यायः ॥ ४२ ॥

Mahabharata - Ashvamedhika Parva - Chapter Footnotes

७-४२-७ लोकप्रजनसंयुक्ता इति क ट पाठः ॥
७-४२-९ इत्युक्ता इति क पाठः ॥
७-४२-२५ जातस्याध्ययनं पुण्यमिति झ पाठः ॥
७-४२-६४ पितरश्च सिद्धा इति क पाठः ॥

अस्वमेधिकपर्व-अध्यय०४३
॥ श्रीः ॥
१४.४३. अध्यायः ४३

अथानुगीतापर्व-२
Mahabharata - Ashvamedhika Parva - Chapter Topics
ब्रह्मणा महर्षीन्प्रति मनुष्येषु क्षत्रियाणां
रजोगुणकार्यबलप्रधानतया तेषां सत्वप्रधानब्राह्मणरक्षणस्य
कर्तव्यत्वकथनप्रसङ्गेन तत्तज्जातिश्रेष्ठवस्तुकथनम् ॥ १ ॥

Mahabharata - Ashvamedhika Parva - Chapter Text

ब्रह्मोवाच ।
मनुष्याणां तु राज्यः क्षत्रियो मध्यमो गुणः ।
कुञ्जरो वाहनानां च सिंहश्चारण्यवासिनाम् ॥ १४-४३-१ (९३५५४)
अविः पशूनां सर्वेषामहिस्तु बिलवासिनाम् ।
गवां गोवृषभश्चैव स्त्रीणां पुरुष एव च ॥ १४-४३-२ (९३५५५)
न्यग्रोधो जम्बुवृक्षश्च पिप्पलः शाल्मलिस्तथा ।
शिंशपा मेषशृङ्गश्च तथा कीचकवेणवः ॥ १४-४३-३ (९३५५६)
एते द्रुमाणां राजानो गणानां मरुतस्तथा ।
हिमवान्पारियात्रश्च सह्यो विन्ध्यस्त्रिकूटवान् ॥ १४-४३-४ (९३५५७)
श्वेतो नीलश्च भासश्च राष्ट्रवांश्चैव पर्वतः ।
भृशस्कन्धो महेन्द्रश्च माल्यवान्पर्वतस्तथा ॥ १४-४३-५ (९३५५८)
एते पर्वतराजानो गणानां मरुतस्तथा ।
सूर्यो ग्रहाणामधिपो नक्षत्राणां च चन्द्रमाः ॥ १४-४३-६ (९३५५९)
यमः पितॄणामधिपः सरितामथ सागरः ।
अंभसां वरुणो राजा मरुतामिन्द्र उच्यते ॥ १४-४३-७ (९३५६०)
अर्कोऽधिपतिरुष्णानां ज्योतिषामिन्दुरुच्यते ।
अग्निर्भूतपतिर्नित्यं ब्राह्मणानां बृहस्पतिः ॥ १४-४३-८ (९३५६१)
ओषधीनां पतिः सोमो विष्णुर्बलवतां वरः ।
त्वष्टाऽधिनां पतिः सोमो विष्णुर्बलवतां वरः। १४-४३-९ (९३५६२)
दक्षिणानां तथा यज्ञो वेदानामृच एव च ।
दिशामुदीची विप्राणां सोमो राजा प्रतापवान् ॥ १४-४३-१० (९३५६३)
कुबेरः सर्वरत्नानां देवतानां पुरंदरः ।
एष भूताधिपः सर्गः प्रजानां च प्रजापतिः ॥ १४-४३-११ (९३५६४)
सर्वेषामेव भूतानामहं ब्रह्ममयो महान् ।

भूतं परतरं मत्तो विष्णोर्वाऽपि न विद्यते ॥ १४-४३-१२ (९३५६५)
राजाधिराजः सर्वेषां विष्णुर्ब्रह्ममयो महान् ।
ईश्वरं तं विजानीमः स विभुः स प्रजापतिः ॥ १४-४३-१३ (९३५६६)
नरकिन्नरयक्षाणां गन्धर्वोरगरक्षसाम् ।
देवदानवनागानां सर्वेषामीश्वरो हि सः ॥ १४-४३-१४ (९३५६७)
भगदेवानुयातानां सर्वासां वामलोचना ।
माहेश्वरी महादेवी प्रोच्यते पार्वती हि सा ॥ १४-४३-१५ (९३५६८)
उमां देवीं विजानीध्वं नारीणामुत्तमां शुभाम् ।
रतीनां वसुमत्यस्तु स्त्रीणामप्सरसस्तथा ॥ १४-४३-१६ (९३५६९)
धर्मिकामाश्च राजानो ब्राह्मणा धर्मसेतवः ।
तस्माद्राजा द्विजातीनां प्रयतेतेह रक्षणे ॥ १४-४३-१७ (९३५७०)
राज्ञां हि विषये येषामवसीदन्ति साधवः ।
हीनास्ते स्वगुणैः सर्वैः प्रेत्यावाङ्मार्गगामिनः ॥ १४-४३-१८ (९३५७१)
राज्ञां हि विषये येषां साधवः परिरक्षिताः ।
तेऽस्मिँल्लोके प्रमोदन्ते प्रेत्य चानन्दमेव च ॥ १४-४३-१९ (९३५७२)
प्राप्नुवन्ति महात्मान इति वित्त द्विजर्षभाः ।
अत ऊर्ध्वं प्रवक्ष्यामि नियतं धर्मलक्षणम् ॥ १४-४३-२० (९३५७३)
अहिंसालक्षणो धर्मो हिंसा चाधर्मलक्षणा ।
प्रकाशलक्षणा देवा मनुष्याः कर्मलक्षणाः ॥ १४-४३-२१ (९३५७४)
शब्दलक्षणमाकाशं वायुस्तु स्पर्शलक्षणः ।
ज्योतिषां लक्षणं रूपमापश्च रसलक्षणाः ॥ १४-४३-२२ (९३५७५)
धारिणी सर्वभूतानां पृथिवी गन्धलक्षणा ।
स्वरव्यञ्जनसंस्कारा भारती शब्दलक्षणा ॥ १४-४३-२३ (९३५७६)
मनसो लक्षणं चिन्ता तथोक्ता बुद्धिरन्वयात् ।
मनसा चिन्तितानर्थान्बुद्ध्या चेह व्यवस्यति ॥ १४-४३-२४ (९३५७७)
बुद्धिर्हि व्यवसायेन लक्ष्यते नात्र संशयः ।
लक्षणं मनसो ध्यानमव्यक्तं साधुलक्षणम् ॥ १४-४३-२५ (९३५७८)
प्रवृत्तिलक्षणो योगो ज्ञानं संन्यासलक्षणम् ।
तस्माज्ज्ञानं पुरस्कृत्य संन्यसेदिह बुद्धिमान् ॥ १४-४३-२६ (९३५७९)
संन्यासी ज्ञानसंयुक्तः प्राप्नोति परमां गतिम् ।
अतीतो द्वन्द्वमभ्येति तमोमृत्युजरातिगः ॥ १४-४३-२७ (९३५८०)
धर्मलक्षणसंयुक्तमुक्तं वो विधिवन्मया ।
गुणानां ग्रहणं सम्यग्वक्ष्याम्यहमतः परम् ॥ १४-४३-२८ (९३५८१)
पार्तिवो यस्तु गन्धो वै घ्राणेन हि स गृह्यते ।
प्राणस्यश्च तथा वायुर्गन्धज्ञाने विधीयते ॥ १४-४३-२९ (९३५८२)
अपां धातू रसो नित्यं जिह्वया स तु गृह्यते ।

जिह्वास्थश्च तथा सोमो रसज्ञाने विधीयते ॥ १४-४३-३० (९३५८३)
तेजसस्तु गुणो रूपं चक्षुषा तच्च गृह्यते ।
चक्षुःस्थश्च ततादित्यो रूपज्ञाने विधीयते ॥ १४-४३-३१ (९३५८४)
वायव्यस्तु सदा स्पर्शस्त्वचा प्रज्ञायते च सः ।
त्वक्स्थश्चैव सदा वायुः स्पर्सने स विधीयते ॥ १४-४३-३२ (९३५८५)
आकाशस्य गुणो घोषः श्रोत्रेण च स गृह्यते ।
श्रोत्रस्थाश्च दिशः सर्वाः शब्दज्ञाने प्रकीर्तिताः ॥ १४-४३-३३ (९३५८६)
मनसश्च गुणश्चिन्ता प्रज्ञया स तु गृह्यते ।
हृदिस्थश्चेतनो धातुर्मनोज्ञाने विधीयते ॥ १४-४३-३४ (९३५८७)
बुद्धिरध्यवसायेन ध्यानेन च महांस्तथा ।
निश्चित्य ग्रहणाद्व्यक्तमव्यक्तं नात्र संशयः ॥ १४-४३-३५ (९३५८८)
अलिङ्गग्रहणो नित्यः क्षेत्रज्ञो निर्गुणात्मकः ।
तस्मादलिङ्गः क्षेत्रज्ञः केवलं ज्ञानलक्षणः ॥ १४-४३-३६ (९३५८९)
अव्यक्तं क्षेत्रमुद्दिष्टं गुणानां प्रभवाप्ययम् ।
सदा पश्याम्यहं लीनं विजानामि शृणोमि च ॥ १४-४३-३७ (९३५९०)
पुरुषस्तद्विजानीते तस्मात्क्षेत्रज्ञ उच्यते ।
गुणवृत्तं तथा कृत्स्नं क्षेत्रज्ञः परिपश्यति ॥ १४-४३-३८ (९३५९१)
आदिमद्यावसानं तत्सृज्यमानमचेतनम् ।
न गुणा विदुरात्मानं सृज्यमानाः पुनःपुनः ॥ १४-४३-३९ (९३५९२)
न सत्यं वेद वै कश्चित्क्षेत्रज्ञस्त्वेव विन्दति ।
गुणानां गुणभूतानां यत्परं परतो महत् ॥ १४-४३-४० (९३५९३)
तस्माद्गुणांश्च तत्वं च परित्यज्येह तत्ववित् ।
क्षीणदोषो गुणान्हित्वा क्षेत्रज्ञं प्रविशत्यथ ॥ १४-४३-४१ (९३५९४)
निर्द्वन्द्वो निर्नमस्कारो निःस्वधाकार एव च ।
अचलश्चानिकेतश्च क्षेत्रज्ञः स परो विधिः ॥ ॥ १४-४३-४२ (९३५९५)

इति श्रीमन्महाभारते आश्वमेधिकपर्वणि अनुगीतापर्वणि
त्रिचत्वारिंशोऽध्यायः ॥ ४३ ॥

Mahabharata - Ashvamedhika Parva - Chapter Footnotes

७-४३-२ आखुश्च बिलवासिनामिति क थ पाठः ॥
७-४३-७ राजासत्त्वानां मित्र उच्यत इति क ट थ ॥।
७-४३-८ उष्णानां देवानामिन्द्र उच्यत इति क ट थ पाठः ॥
७-४३-१५ भगदेवाः कामुकास्तैरनुयातानामनुसृतानां स्त्रीणां सर्वासां मध्ये माहेश्वरी वामलोचनेति सम्बन्धः ॥
भद्रादेवाभिजातानां सर्वेषां वारिजेक्षणेति क ट पाठः ॥

७-४३-१६ रतीनां प्रीतिसुखानाम् । वसुमत्यः धनवत्यः। धनलाभगर्वितं यत्प्रीतिसुखं तदेव महदित्यर्थः ॥
७-४३-१७ वर्णक्रमाश्च राजान इति क ट थ पाठः ॥
७-४३-२५ लक्षणं महतो ध्यानमिति क पाठः ॥

---

अस्वमेधिकपर्व-अध्यय०४४
॥ श्रीः ॥
१४.४४. अध्यायः ४४

अथानुगीतापर्व-२
Mahabharata - Ashvamedhika Parva - Chapter Topics
ब्रह्मणा महर्षीन्प्रति स्वस्वजातिषु श्रेष्ठवस्तु प्रतिपादनपूर्वकं ज्ञानस्याविनाशित्वकथनेन तस्यैव श्रेयःसाधनत्वोक्तिः ॥ १ ॥

Mahabharata - Ashvamedhika Parva - Chapter Text

ब्रह्मोवाच ।
यदादिमध्यपर्यन्तं ग्रहणोपायमेव च ।
नामलक्षणसंयुक्तं सर्वं वक्ष्यामि तत्त्वतः ॥ १४-४४-१ (९३५९६)
अहः पूर्वं ततो रात्रिर्मासाः शुक्लादयः स्मृताः ।
श्रवणादीनि ऋक्षाणि ऋतवः शिशिरादयः ॥ १४-४४-२ (९३५९७)
भूमिरादिस्तु गन्धानां रसानामाप एव च ।
रूपाणामादिरग्निस्तु स्पर्शादिर्वायुरुच्यते ॥ १४-४४-३ (९३५९८)
शब्दस्यादिस्तथाऽऽकाशमेष भूतकृतो गुणः ।
अतः परं प्रवक्ष्यामि भूतानामादिमुत्तमम् ॥ १४-४४-४ (९३५९९)
आदित्यो ज्योतिषामादिरग्निर्भूतादिरुच्यते ।
सावित्री सर्वविद्यानां देवतानां प्रजापतिः ॥ १४-४४-५ (९३६००)
ओङ्कारः सर्ववेदानां वचसां प्राण एव च ।
यदस्मिन्नियतं लोके सर्वं सावित्रमुच्यते ॥ १४-४४-६ (९३६०१)
गायत्री च्छन्दसामादिः प्रजानां सर्ग उच्यते ।
गावश्चतुष्पदामादिर्मनुष्याणां द्विजातयः ॥ १४-४४-७ (९३६०२)
श्येनः पतत्रिणामादिर्यज्ञानां हुतमुत्तमम् ।
प्रसर्पिणां तु सर्वेषां ज्येष्ठः सर्पो द्विजोत्तमाः ॥ १४-४४-८ (९३६०३)
कृतमादिर्युगानां च सर्वेषां नात्र संशयः ।
हिरण्यं सर्वरत्नानामोषधीनां यवास्तथा ॥ १४-४४-९ (९३६०४)
सर्वेषां भक्ष्यभोज्यानामन्नं परममुच्यते ।

द्रवाणां चैव सर्वेषां पेयानामाप उत्तमाः ॥१४-४४-१० (९३६०५)
स्थावराणां तु भूतानां सर्वेषामविशेषतः ।
ब्रह्मक्षेत्रं सदा पुण्यं प्लक्षः प्रवरजः स्मृतः ॥१४-४४-११ (९३६०६)
अहं प्रजापतीनां च सर्वेषां नात्र संशयः ।
मम विष्णुरचिन्त्यात्मा स्वयंभूरिति संस्मृतः ॥१४-४४-१२ (९३६०७)
पर्वतानां महामेरुः सर्वेषामग्रजः स्मृतः ।
दिशां च प्रदिशां चोर्ध्वं दिक्पूर्वा प्रथमा तथा ॥१४-४४-१३ (९३६०८)
तथा त्रिपथगा गङ्गा नदीनामग्रजा स्मृता ।
तथा सरोदपाननां सर्वेषां सागरोऽग्रजः ॥१४-४४-१४ (९३६०९)
देवदानवभूतानां पिशाचोरगरक्षसाम् ।
नरकिन्नरयक्षाणां सर्वेषामीश्वरः प्रभुः ॥१४-४४-१५ (९३६१०)
आदिर्विश्वस्य जगतो विष्णुर्ब्रह्ममयो महान् ।
ततः परतरं यस्मात्त्रैलोक्ये नेह विद्यते ॥१४-४४-१६ (९३६११)
आश्रमाणां च सर्वेषां गार्हस्थ्यं नात्र संशयः ।
लोकानामादिरव्यक्तं सर्वस्यान्तस्तदेव च ॥१४-४४-१७ (९३६१२)
अहान्यस्तमयान्तानि उदयान्ता च शर्वरी ।
सुखस्यान्तं सदा दुःखं दुःखस्यान्तं सदा सुखम ॥१४-४४-१८ (९३६१३)
सर्वे क्षयान्ता निचयाः पतनान्ताः समुच्छ्रयाः ।
संयोगाश्च वियोगान्ता मरणान्तं च जीवितम् ॥१४-४४-१९ (९३६१४)
सर्वं कृतं विनाशान्तं जातस्य मरणं ध्रुवम् ।
अशाश्वतं हि लोकेऽस्मिन्सदा स्थावरजङ्गमम् ॥१४-४४-२० (९३६१५)
इष्टं दत्तं तपोऽधीतं व्रतानि नियमाश्च ये ।
सर्वमेतद्विनाशान्तं ज्ञानस्यान्तो न विद्यते ॥१४-४४-२१ (९३६१६)
तस्माज्ज्ञानेन शुद्धेन प्रशान्तात्मा जितेन्द्रियः ।
निर्ममो निरहंकारो मुच्यते सर्वपाप्मभिः ॥ ॥१४-४४-२२ (९३६१७)

इति श्रीमन्महाभारते आश्वमेधिकपर्वणि अनुगीतापर्वणि
चतुश्चत्वारिशोऽध्यायः ॥ ४४ ॥

Mahabharata - Ashvamedhika Parva - Chapter Footnotes

७-४४-२ श्रविष्ठादीनि सर्वाणिति क ट थ पाठः ॥
७-४४-३ रूपाणां ज्योतिरादित्य इति झ पाठः ॥
७-४४-८ हुतं अग्नौ ब्राह्मणे वा देवतोद्देशेन दत्तम् ॥
७-४४-११ ब्रह्मवृक्षः सदा पुण्यः इति क थ पाठः ॥
७-४४-१४ सरोदपाननां सरसां कूपादीनां च
। संधिरार्षः। तथाचाश्वो वाहनानां सर्वेषां सागरोग्रज इति

क पाठः ॥
७-४४-१५ ईश्वरः रुद्रः ॥

---

अस्वमेधिकपर्व-अध्यय०४५
॥ श्रीः ॥
१४.४५. अध्यायः ४५

अथानुगीतापर्व-२
Mahabharata - Ashvamedhika Parva - Chapter Topics
ब्रह्मणा महर्षीन्प्रति शरीरस्य कालचक्रवत्सर्वनाशकत्वोक्तिपूर्वकं गृहस्थधर्मानुष्ठानस्य श्रेयःसाधनत्वोक्तिः ॥ १ ॥

Mahabharata - Ashvamedhika Parva - Chapter Text

ब्रह्मोवाच ।
बुद्धिसारं मनस्तम्भमिन्द्रियग्रामबन्धनम् ।
महाभूतारविष्कम्भं निमेषपरिवेष्टनम् ॥ १४-४५-१ (९३६१८)
जराशोकसमाविष्टं व्याधिव्यसनसञ्चरम् ।
देशकालविचारीदं श्रमव्यायामनिःस्वनम् ॥ १४-४५-२ (९३६१९)
अहोरात्रपरिक्षेपं शीतोष्णपरिमण्डलम् ।
सुखदुःखान्तसंश्लेषं क्षुत्पिपासावकीलकम् ॥ १४-४५-३ (९३६२०)
छायातपविलेखं च निमेषोन्मेषविह्वलम् ।
शोकमोहजराकीर्णं वर्तमानमचेतनम् ॥ १४-४५-४ (९३६२१)
मासार्धमासगुणितं विषमं लोकसञ्चरम् ।
तमोनिचयपङ्कं च रजोवेगप्रवर्तकम् ॥ १४-४५-५ (९३६२२)
सत्त्वालङ्कारदीप्तं च गुणसंघातमण्डलम् ।
विरतिग्रहणाभीकं शोकसंहारवर्तनम् ॥ १४-४५-६ (९३६२३)
क्रियाकारणसंयुक्तं रागविस्तारमायतम् ।
लोभेप्सापरिविक्षोभं विविक्तज्ञानसम्भवम् ॥ १४-४५-७ (९३६२४)
भयमोहपरीवारं भूतसंमोहकारकम् ।
आनन्दप्रीतिचारं च कामक्रोधपरिग्रहम् ॥ १४-४५-८ (९३६२५)
महदादिविशेषान्तमव्यक्तं प्रभवाप्ययम् ।
मनोजवनमश्रान्तं कालचक्रं प्रवर्तते ॥ १४-४५-९ (९३६२६)
एतद्द्वन्द्वसमायुक्तं कालचक्रमचेतनम् ।
विसृजेत्संक्षिपेच्चापि बोधयेत्स्वापयेज्जगम् ॥ १४-४५-१० (९३६२७)
कालचक्रप्रवृत्तिं च निवृत्तिं चैव तत्त्वतः ।

यस्तु वेद नरो नित्यं न स भूतेषु मुह्यति ॥ १४-४५-११ (९३६२८)
विमुक्तः सर्वसङ्क्लेशैः सर्वद्वन्द्वातिगो मुनिः ।
विमुक्तः सर्वपापेभ्यः प्राप्नोति परमां गतिम् ॥ १४-४५-१२ (९३६२९)
गृहस्थो ब्रह्मचारी च वानप्रस्थोऽथ भिक्षुकः ।
चत्वार आश्रमाः प्रोक्ताः सर्वे गार्हस्थ्यमूलकाः ॥ १४-४५-१३ (९३६३०)
यः कश्चिदिह लोकेऽस्मिन्नाश्रमः परिकीर्तितः ।
तस्यान्तगमनं श्रेयः कीर्तिरेषा सनातनी ॥ १४-४५-१४ (९३६३१)
संस्कारैः संस्कृतः पूर्वं यथावच्चरितव्रतः ।
जातौ गुणविशिष्टायां समावर्तेत वेदवित् ॥ १४-४५-१५ (९३६३२)
स्वदारनिरतो नित्यं शिष्टाचारो जितेन्द्रियः ।
पञ्चभिश्च महायज्ञैः श्रद्दधानो यजेदिह ॥ १४-४५-१६ (९३६३३)
देवतातिथिशिष्टाशी निरतो वेदकर्मसु ।
इज्याप्रदानयुक्तश्च यथाशक्ति यथाविधि ॥ १४-४५-१७ (९३६३४)
न पाणिपादचपलो न नेत्रचपलो मुनिः ।
न च वागङ्गचपल इति शिष्टस्य गोचरः ॥ १४-४५-१८ (९३६३५)
नित्यं यज्ञोपवीती स्याच्छुक्लवासाः शुचिव्रतः ।
नियतो यमदानाभ्यां सदा शिष्टैश्च संविशेत् ॥ १४-४५-१९ (९३६३६)
जितशिश्नोदरो मैत्रः शिष्टाचारसमन्वितः ।
वैणवीं धारयेद्यष्टिं सोदकं च कमण्डलुम् ॥ १४-४५-२० (९३६३७)
ग्त्रीणि धारयते नित्यं कमण्डलुमतन्द्रितः ।
एकमाचमनार्थाय एकं वै पादधावनम् ।
एकं शौचविधानार्थमित्येतत्त्रितयं तथा ॥' १४-४५-२१ (९३६३८)
अधीत्याध्यापनं कुर्यात्तथा यजनयाजने ।
दानं प्रतिग्रहं वाऽपि षड्गुणां वृत्तिमाचरेत् ॥ १४-४५-२२ (९३६३९)
त्रीणि कर्माणि जानीत ब्राह्मणानां तु जीविकाः ।
याजनाध्यापने चोभे शुद्धाच्चापि प्रतिग्रहः ॥ १४-४५-२३ (९३६४०)
अथ शेषाणि चान्यानि त्रीणि कर्माणि यानि तु ।
दानमध्ययनं यज्ञो धर्मयुक्तानि तानि तु ॥ १४-४५-२४ (९३६४१)
तेष्वप्रमादं कुर्वीत त्रिषु कर्मसु धर्मवित् ।
दान्तो मैत्रः क्षमायुक्तः सर्वभूतसमो मुनिः ॥ १४-४५-२५ (९३६४२)
सर्वमेतद्यथाशक्ति विप्रो निर्वर्तयञ्शुचिः ।
एवं युक्तो जयेत्स्वर्गं गृहस्थः संशितव्रतः ॥ ॥ १४-४५-२६ (९३६४३)

इति श्रीमन्महाभारते आश्वमेधिकपर्वणि अनुगीतापर्वणि
पञ्चचत्वारिंशोऽध्यायः ॥ ४५ ॥

७-४५-१ इन्द्रियग्रामवर्धनमिति क ट थ पाठः ॥
७-४५-८ अनन्तप्रतिसारं चेति ट पाठः ॥
७-४५-१० मोहयेत्सामरं जगदिति क ट थ पाठः ॥

---

अस्वमेधिकपर्व-अध्यय०४६
॥ श्रीः ॥
१४.४६. अध्यायः ४६

अथानुगीतापर्व-२
Mahabharata - Ashvamedhika Parva - Chapter Topics
ब्रह्मणा महर्षीन्प्रति ब्रह्मचारिवनस्थधर्मनिरूपणपूर्वकं
तदनुष्ठानस्य श्रेयःसाधनत्वोक्तिः ॥ १ ॥

Mahabharata - Ashvamedhika Parva - Chapter Text

ब्रह्मोवाच ।
एवमेतेन मार्गेण पूर्वोक्तेन यथाविधि ।
अधीतवान्यथाशक्ति तथैव ब्रह्मचर्यवान् ॥ १४-४६-१ (९३६४४)
स्वधर्मनिरतो विद्वान्सर्वेन्द्रिययतो मुनिः ।
गुरोः प्रियहिते युक्तः सत्यधर्मपरः शुचिः ॥ १४-४६-२ (९३६४५)
गुरुणा समनुज्ञातो भुञ्जीतान्नमकुत्सयन् ।
हविष्यभैक्ष्यभुक् चापि स्थानासनविहारवान् ॥ १४-४६-३ (९३६४६)
द्विकालमग्निं जुह्वानः शुचिर्भूत्वा समाहितः ।
धारयीत सदा दण्डं बैल्वं पालाशमेव वा ॥ १४-४६-४ (९३६४७)
क्षौमं कार्पासिकं वाऽपि मृगाजिनमथापि वा ।
सर्वं काषायरक्तं वा वासो वाऽपि द्विजस्य ह ॥ १४-४६-५ (९३६४८)
मेखला च भवेन्मौञ्जी जटो नित्योदकस्तथा ।
यज्ञोपवीती स्वाध्यायी अलुप्तनियतव्रतः ॥ १४-४६-६ (९३६४९)
पूताभिश्च तथैवाद्भिः सदा दैवततर्पणम् ।
भावेन नियतः कुर्वन्ब्रह्मचारी प्रशस्यते ॥ १४-४६-७ (९३६५०)
एवं युक्तो जयेत्स्वर्गमूर्ध्वरेताः समाहितः ।
न संसरति जातीषु परमं स्थानमाश्रितः ॥ १४-४६-८ (९३६५१)
संस्कृतः सर्वसंस्कारैस्तथैव ब्रह्मचर्यवान् ।
ग्रामान्निष्क्रम्य चारण्ये मुनिः प्रव्रजितो वसेत् ॥ १४-४६-९ (९३६५२)
चर्मवल्कलसंवासी सायं प्रातरुपस्पृशेत् ।

अरण्यगोचरो नित्यं न ग्रामं प्रविशेत्पुनः ॥१४-४६-१० (९३६५३)
अर्चयन्नतिथीन्काले दद्याच्चापि प्रतिश्रयम् ।
फलपत्रावरैर्मूलैः श्यामाकेन च वर्तयन् ॥१४-४६-११ (९३६५४)
स नित्यमुदकं वायुं सर्वं वानेयमाश्रयेत् ।
प्राश्नीयादानुपूर्व्येण यथादीक्षमतन्द्रितः ॥१४-४६-१२ (९३६५५)
समूलफलशाकाद्यैरर्चेदतिथिमागतम् ।
यद्भक्षः स्यात्ततो दद्याद्भिक्षां नित्यमतन्द्रितः ॥१४-४६-१३ (९३६५६)
देवतातिथिपूर्वं च सदा प्राश्नीत वाग्यतः ।
अस्कन्दितमनाश्चैव लघ्वाशी देवताश्रयः ॥१४-४६-१४ (९३६५७)
दान्तो मैत्रः क्षमायुक्तः कशाञ्शमश्रु च धारयन् ।
जुह्वन्स्वाध्यायशीलश्च सत्यधर्मपरायणः ॥१४-४६-१५ (९३६५८)
न्यस्तदेहः सदा दक्षो वननित्यः समाहितः ।
एवं युक्तो जयेत्स्वर्गं वानप्रस्थो जितेन्द्रियः ॥१४-४६-१६ (९३६५९)
गृहस्थो ब्रह्मचारी च वानप्रस्थोऽथवा पुनः ।
य इच्छेन्मोक्षमास्थातुमुत्तमां वृत्तिमाश्रयेत् ॥१४-४६-१७ (९३६६०)
अभयं सर्वभूतेभ्यो दत्त्वा नैष्कर्म्यमाचरेत् ।
सर्वभूतहितो मैत्रः सर्वेन्द्रिययतो मुनिः ॥१४-४६-१८ (९३६६१)
अयाचितमसंक्लृप्तमुपपन्नं यदृच्छया ।
कृत्वा प्राह्णे चरेद्भैक्ष्यं विधूमे भुक्तवज्जने ॥१४-४६-१९ (९३६६२)
वृत्ते शरावसम्पाते भैक्ष्यं लिप्सेत मोक्षवित् ।
लाभेन च न हृष्येत नालाभे विमना भवेत् ।
न चातिभिक्षां भिक्षेत केवलं प्राणयात्रिकः ॥ १४-४६-२० (९३६६३)
यात्रार्थी कालमाकाङ्क्षंश्चरेद्भैक्ष्यं समाहितः ।
लाभं साधारणं नेच्छेन्न भुञ्जीताभिपूजितः ॥ १४-४६-२१ (९३६६४)
अभिपूजितलाभाद्धि विजुगुप्सेत भिक्षुकः ।
भुक्तान्यन्नानि तिक्तानि कषायकटुकानि च ॥१४-४६-२२ (९३६६५)
नास्वादयीत भुञ्जानो रसांश्च मधुरांस्तथा ।
यात्रामात्रं च भुञ्जीत केवलं प्राणधारणम् ॥१४-४६-२३ (९३६६६)
असंरोधेन भूतानां वृत्तिं लिप्सेत मोक्षवित् ।
न चान्यमन्नं लिप्सेत भिक्षमाणः कथञ्चन ॥१४-४६-२४ (९३६६७)
न सन्निकाशयेद्धर्मं विविक्ते चारजाश्चरेत् ।
शून्यागारमरण्यं वा वृक्षमूलं नदीं तथा ॥१४-४६-२५ (९३६६८)
प्रतिश्रयार्थं सेवेत पार्वतीं वा पुनर्गुहाम् ।
ग्रामैकरात्रिको ग्रीष्मे वर्षास्वेकत्र वा वसेत् ॥१४-४६-२६ (९३६६९)
अध्वा सूर्येणि निर्दिष्टः कीटवच्च चरेन्महीम् ।
दयार्तं चैव भूतानां समीक्ष्य पृथिवीं चरेत् ॥१४-४६-२७ (९३६७०)

सञ्चयांश्च न कुर्वीत स्नेहवासं च वर्जयेत् ।
पूताभिरद्भिर्नित्यं वै कार्यं कुर्वीत मोक्षवित् ॥१४-४६-२८ (९३६७१)
उपस्पृशेदुद्धृताभिरद्भिश्च पुरुषः सदा ।
अहिंसा ब्रह्मचर्यं च सत्यमार्जवमेव च ॥१४-४६-२९ (९३६७२)
अक्रोधश्चानसूया च दमो नित्यमपैशुनम् ।
अष्टस्वेतेषु युक्तः स्याद्व्रतेषु नियतेन्द्रियः ॥१४-४६-३० (९३६७३)
अपापमशठं वृत्तमजिह्मं नित्यमाचरेत् ।
जोषयेत सदा भोज्यं ग्रासमागतमस्पृहः ॥१४-४६-३१ (९३६७४)
यात्रामात्रं च भुञ्जीत केवलं प्राणयात्रिकम् ।
धर्मलब्धमथाश्नीयान्न काममनुवर्तयेत् ॥१४-४६-३२ (९३६७५)
ग्रासादाच्छादनादन्यन्न गृह्णीयात्कथञ्चन ।
यावदाहारयेत्तावत्प्रतिगृह्णीत नाधिकम् ॥१४-४६-३३ (९३६७६)
परेभ्यो न प्रतिग्राह्यं न च देयं कदाचन ।
दैन्यभावाच्च भूतानां संविभज्य सदा बुधः ॥१४-४६-३४ (९३६७७)
नाददीत परस्वानि न गृह्णीयान्न याचयेत् ।
न किञ्चिद्विषयं भुक्त्वा स्पृहयेत्तस्य वै पुनः ॥१४-४६-३५ (९३६७८)
मृदमापस्तथाऽन्नानि पत्रपुष्पफलानि च ।
असंवृतानि गृह्णीयात्प्रवृत्तानि च कार्यवान् ॥१४-४६-३६ (९३६७९)
न शिल्पजीविकां जीवेद्द्विरन्नं नोत कामयेत् ।
न द्वेष्टा नोपदेष्टा च भवेच्च निरुपस्कृतः ॥१४-४६-३७ (९३६८०)
श्रद्धापूतानि भुञ्जीत निमित्तानि च वर्जयेत् ।
मुधावृत्तिरसक्तश्च सर्वभूतैरसंधितः ॥१४-४६-३८ (९३६८१)
आशीर्युक्तानि सर्वाणि हिंसायुक्तानि यानि च ।
लोकसङ्ग्रहधर्मं च नैव कुर्यान्न कारयेत् ॥१४-४६-३९ (९३६८२)
सर्वभावानतिक्रम्य लघुमात्रः परिव्रजेत् ।
समः सर्वेषु भूतेषु स्थावरेषु चरेषु च ॥१४-४६-४० (९३६८३)
परं नोद्विजयेत्कञ्चिन्न च कस्यचिदुद्विजेत् ।
विश्वास्यः सर्वभूतानामग्र्यो मोक्षविदुच्यते ॥१४-४६-४१ (९३६८४)
अनागतं च न ध्यायेन्नातीतमनुचिन्तयेत् ।
वर्तमानमुपेक्षेत कालाकाङ्क्षी समाहितः ॥१४-४६-४२ (९३६८५)
न चक्षुषा न मनसा न वाचा दूषयेत्क्वचित् ।
न प्रत्यक्षं परोक्षं वा किञ्चिद्दुष्टं समाचरेत् ॥१४-४६-४३ (९३६८६)
इन्द्रियाण्युपसंहृत्य कूर्मोऽङ्गानीव सर्वशः ।
क्षीणेन्द्रियमनोबुद्धिर्निरीहः सर्वतत्त्ववित् ॥१४-४६-४४ (९३६८७)
निर्द्वन्द्वो निर्नमस्कारो निःस्वाहाकार एव च ।
निर्ममो निरहङ्कारो निर्योगक्षेम आत्मवान् ॥१४-४६-४५ (९३६८८)

निराशीर्निर्गुणः शान्तो निरासक्तो निराश्रयः ।
आत्मसङ्गी च तत्त्वज्ञो मुच्यते नात्र संशयः ॥ १४-४६-४६ (९३६८९)
अपादपाणिपृष्ठं तदशिरस्कमनूदरम् ।
अभिन्नगुणकर्माणं केवलं विमलं स्थिरम् ॥ १४-४६-४७ (९३६९०)
अगन्धमरसस्पर्शमरूपाशब्दमेव च ।
अनुगम्यमनासक्तममांसमपि चैव यत् ॥ १४-४६-४८ (९३६९१)
निशाचिन्तमव्ययं दिव्यं गृहस्थमपि सर्वदा ।
सर्वभूतस्थमात्मानं ये पश्यन्ति न ते मृताः ॥ १४-४६-४९ (९३६९२)
न तत्र क्रमते बुद्धिर्नेन्द्रियाणि न देवताः ।
वेदा यज्ञाश्च लोकाश्च न तपो न व्रतानि च ॥ १४-४६-५० (९३६९३)
यत्र ज्ञानवतां प्राप्तिलिङ्गग्रहणा स्मृता ।
तस्मादलिङ्गधर्मज्ञो धर्मतत्त्वमुपाचरेत् ॥ १४-४६-५१ (९३६९४)
गूढधर्माश्रितो विद्वान्विज्ञानचरितं चरेत् ।
अमूढो मूढरूपेण चरेद्धर्ममदूषयन् ॥ १४-४६-५२ (९३६९५)
यथैनमवमन्येरन्परे सततमेव हि ।
तथावृत्तश्चरेच्छान्तः सतां धर्मानकुत्सयन् ॥ १४-४६-५३ (९३६९६)
य एवं वृत्तसम्पन्नः स मुनिः श्रेष्ठ उच्यते ।
इन्द्रियाणीन्द्रियार्थांश्च महाभूतानि पञ्च च ॥ १४-४६-५४ (९३६९७)
मनो बुद्धिरहङ्कारमव्यक्तं पुरुषं तथा ।
एतत्सर्वं प्रसङ्ख्याय यथावत्तत्त्वनिश्चयात् ॥ १४-४६-५५ (९३६९८)
ततः स्वर्गमवाप्नोति विमुक्तः सर्वबन्धनैः ।
एतावदन्तवेलायां परिसङ्ख्याय तत्त्ववित् ॥ १४-४६-५६ (९३६९९)
ध्यायेदेकान्तमास्थाय मुच्यतेऽथ निराश्रयः ।
निर्मुक्तः सर्वसङ्गेभ्यो वायुराकाशगो यथा ॥ १४-४६-५७ (९३७००)
क्षीणकोशो निरातङ्कस्तथेदं प्राप्नुयात्परम् ॥ ॥ १४-४६-५८ (९३७०१)

इति श्रीमन्महाभारते आश्वमेधिकपर्वणि अनुगीतापर्वणि
षट्चत्वारिंशोऽध्यायः ॥ ४६ ॥

---

अस्वमेधिकपर्व-अध्यय०४७
॥ श्रीः ॥
१४.४७. अध्यायः ४७

अथानुगीतापर्व-२
Mahabharata - Ashvamedhika Parva - Chapter Topics
ब्रह्मणा महर्षीन्प्रति संन्यासज्ञानतपसां

परमपुरुषार्थसाधनत्वोक्तिः ॥१ ॥

Mahabharata - Ashvamedhika Parva - Chapter Text

ब्रह्मोवाच ।
संन्यासं तप इत्याहुर्वृद्धा निश्चितवादिनः ।
ब्राह्मणा ब्रह्मयोनिस्था ज्ञानं ब्रह्म परं विदुः ॥१४-४७-१ (९३७०२)
अतिदूरात्मकं ब्रह्म वेदविद्याव्यपाश्रयम् ।
निर्द्वन्द्वं निर्गुणं नित्यमचिन्त्यगुणमुत्तमम् ॥१४-४७-२ (९३७०३)
ज्ञानेन तपसा चैव धीराः पश्यन्ति तत्परम् ।
निर्णिक्तमनसः पूता व्युत्क्रान्तरजसोऽमलाः ॥१४-४७-३ (९३७०४)
तपसा क्षेममध्वानं गच्छन्ति परमेश्वरम् ।
संन्यासनिरता नित्यं ये च ब्रह्मविदो जनाः ॥१४-४७-४ (९३७०५)
तपः प्रदीप इत्याहुराचारो धर्मसाधकः ।
ज्ञानं वै परमं विद्यात्संन्यासं तप उत्तमम् ॥१४-४७-५ (९३७०६)
यस्तु वेद निराबाधं ज्ञानं तत्त्वविनिश्चयात् ।
सर्वभूतस्थमात्मानं स सर्वविदिहोच्यते ॥१४-४७-६ (९३७०७)
यो विद्वान्सहवासं च विवासं चैव पश्यति ।
तथैवेकत्वनानात्वे स दुःखात्प्रतिमुच्यते ॥१४-४७-७ (९३७०८)
यो न कामयते किञ्चिन्न किञ्चिदवमन्यते ।
इह लोकस्थ एवैष ब्रह्मभूयाय कल्पते ॥१४-४७-८ (९३७०९)
प्रधानगुणतत्त्वज्ञः सर्व भूतविधानवित् ।
निर्ममो निरहङ्कारो मुच्यते नात्र संशयः ॥१४-४७-९ (९३७१०)
निर्द्वन्द्वो निर्नमस्कारो निःस्वधाकार एव च ।
निर्गुणं नित्यमद्वन्द्वं प्रशमेनैव गच्छति ॥१४-४७-१० (९३७११)
हित्वा गुणमयं सर्वं कर्म जन्तुः शुभाशुभम् ।
उभे सत्यानृते हित्वा मुच्यते नात्र संशयः ॥१४-४७-११ (९३७१२)
अव्यक्तबीजप्रभवो बुद्धिस्कन्धमयो महान् ।
महाहङ्कारविटप इन्द्रियान्तरकोटरः ॥१४-४७-१२ (९३७१३)
महाभूतविशाखश्च विशेषप्रतिशाखवान् ।
सदापत्रः सदापुष्पः शुभाशुभफलोदयः ॥१४-४७-१३ (९३७१४)
आजीव्यः सर्वभूतानां ब्रह्मवृक्षः सनातनः ।
एनं छित्त्वा च भित्त्वा च तत्त्वज्ञानासिना बुधः ॥१४-४७-१४ (९३७१५)
हित्वा सङ्गमयान्पाशान्मृत्युजन्मजरोदयान् ।
निर्ममो निरहङ्कारो मुच्यते नात्र संशयः ॥१४-४७-१५ (९३७१६)
द्वाविमौ पक्षिणौ नित्यौ संक्षेपौ चाप्यचेतनौ ।

एताभ्यां तु परो योन्यश्चेतनावान्स उच्यते ॥१४-४७-१६ (९३७१७)
अचेतनः सत्वसङ्ख्याविमुक्तः
सत्त्वात्परं चेतयतेऽन्तरात्मा ।
स क्षेत्रवित्सर्वसङ्ख्यातबुद्धि-
र्गुणातिगो मुच्यते सर्वपापैः ॥ ॥ १४-४७-१७ (९३७१८)

इति श्रीमन्महाभारते आश्वमेधिकपर्वणि अनुगीतापर्वणि
सप्तचत्वारिंशोऽध्यायः ॥ ४७ ॥
Mahabharata - Ashvamedhika Parva - Chapter Footnotes

७-४७-१५ हित्वा चामरतां प्राप्य जह्याद्यो मृत्युजन्मनीति क ठ थ
। पाठः ॥
७-४७-१६ पक्षिणौ जीवेश्वरौ ॥
७-४७-१७ अचेतनस्तत्वसंघातयुक्तस्तत्वात्परं चेतयतेन्तरात्मा
। स क्षेत्रज्ञस्तत्वसंघातबुद्धिर्गुणातिगो मुच्यते मृत्युपाशादिति
क थ पाठः ॥

---

अस्वमेधिकपर्व-अध्यय०४८
॥ श्रीः ॥
१४.४८. अध्यायः ४८

अथानुगीतापर्व-२
Mahabharata - Ashvamedhika Parva - Chapter Topics
ब्रह्मणा महर्षीन्प्रति योगिनां चातुर्विध्यादिकथनपूर्वकं
मुमुक्षुवेद्यनानार्थकथनम् ॥ १ ॥

Mahabharata - Ashvamedhika Parva - Chapter Text

ब्रह्मोवाच ।
केचिद्ब्रह्ममयं वृक्षं केचिद्ब्रह्ममयं वनम् ।
केचित्परममव्यक्तं केचित्परमनामयम् ।
मन्यन्ते सर्वमप्येतदव्यक्तप्रभवाव्ययम् ॥ १४-४८-१ (९३७१९)
उच्छ्वासमात्रमपि चेद्योऽन्तकाले समो भवेत् ।
आत्मानमुपसङ्गम्य सोमृतत्वाय कल्पते ॥१४-४८-२ (९३७२०)
निमेषमात्रमपि चेत्संयम्यात्मानमात्मनि ।
गच्छत्यात्मप्रसादेन विदुषां प्राप्तिमव्ययाम् ॥१४-४८-३ (९३७२१)

प्राणायामैरथ प्राणान्संयम्य स पुनःपुनः ।
दशद्वादशभिर्वापि चतुर्विंशात्समन्ततः ॥१४-४८-४ (९३७२२)
एवं पूर्वं प्रसन्नात्मा लभते यद्यदिच्छति ।
अव्यक्तात्सत्वमुद्रिक्तममृतत्वाय कल्पते ॥१४-४८-५ (९३७२३)
सत्वात्परतरं नान्यत्प्रशंसन्तीह तद्विदः ।
अनुमानाद्विजानीमः पुरुषं सत्वसंश्रयम् ।
न शक्यमन्यथा गन्तुं पुरुषं द्विजसत्तमाः ॥ १४-४८-६ (९३७२४)
क्षमा धृतिरहिंसा च समता सत्यमार्जवम् ।
ज्ञानं त्यागोथ संन्यासः सात्विकं वृत्तमिष्यते ॥१४-४८-७ (९३७२५)
एतेनैवानुमानेन मन्यन्ते वै मनीषिणः ।
सत्वं च पुरुषश्चैव तत्र नास्ति विचारणा ॥१४-४८-८ (९३७२६)
आहुरेके च विद्वांसो ये ज्ञाने सुप्रतिष्ठिताः ।
क्षेत्रज्ञसत्वयोरैक्यमित्येतन्नोपपद्यते ॥१४-४८-९ (९३७२७)
पृथग्भूतस्तथा नित्यमित्येतदविचारितम् ।
पृथग्भावश्च विज्ञेयः सहजश्चापि तत्त्वतः ॥१४-४८-१० (९३७२८)
तथैवैकत्वनानात्वमिष्यते विदुषां नयः ।
मशकोदुम्बरे चैक्यं पृथक्त्वमपि दृश्यते ॥१४-४८-११ (९३७२९)
मत्स्यो यथाऽन्यः स्यादप्सु सम्प्रयोगस्तथा तयोः ।
सम्बन्धस्तोयबिन्दूनां पर्णैः कोकनदस्य च ॥१४-४८-१२ (९३७३०)
गुरुरुवाच।१४-४८-१३क्ष् (७८६३)
इत्युक्तवन्तस्ते विप्रास्तदा लोकपितामहम् ।
पुनः संशयमापन्नाः पप्रच्छुर्मुनिसत्तमाः ॥ ॥१४-४८-१३ (९३७३१)

इति श्रीमन्महाभारते आश्वमेधिकपर्वणि अनुगीतापर्वणि
अष्टचत्वारिंशोऽध्यायः ॥ ४८ ॥
Mahabharata - Ashvamedhika Parva - Chapter Footnotes

७-४८-२ भोक्तुः कालेन वै भवेदिति ट पाठः ॥
७-४८-१३ उक्तं विद्यते येषु ते उक्तवन्तः उक्तमर्थं
सम्यगवधृतवन्त इत्यर्थः ॥

---

अस्वमेधिकपर्व-अध्यय०४९
॥ श्रीः ॥
१४.४९. अध्यायः ४९

अथानुगीतापर्व-२

Mahabharata - Ashvamedhika Parva - Chapter Topics

महर्षिभिर्ब्रह्मणंप्रति धर्मविषये
नानाविधवादिविप्रतिपत्तिप्रदर्शनपूर्वकं
तत्प्रयुक्तस्वीयसंशयनिवर्तनप्रार्थना ॥ १ ॥

Mahabharata - Ashvamedhika Parva - Chapter Text

ऋषय ऊचुः ।
को वा स्विदिह धर्माणामनुष्ठेयतमो मतः ।
व्याहतामिव पश्यामो धर्मस्य विविधां गतिम् ॥ १४-४९-१ (९३७३२)
ऊर्ध्वं देहाद्वदन्त्येके नैतदस्तीति चापरे ।
केचित्संशयितं सर्वं निःसंशयमथापरे ॥ १४-४९-२ (९३७३३)
अनित्यं नित्यमित्येके नास्त्यस्तीत्यपि चापरे ।
त्रिधेत्येके द्विधेत्येके व्याकीर्णमिति चापरे ॥ १४-४९-३ (९३७३४)
मन्यन्ते ब्राह्मणा एव ब्रह्मज्ञास्तत्त्वदर्शिनः ।
एकमेके पृथक्चान्ये बहुत्वमिति चापरे ॥ १४-४९-४ (९३७३५)
देशकालावुभौ केचिन्नैतदस्तीति चापरे ।
जटाजिनधराश्चान्ये मुण्डाः केचिदसंवृताः ॥ १४-४९-५ (९३७३६)
अश्नानं केचिदिच्छन्ति स्नानमप्यपरे जनाः ।
मन्यन्ते ब्राह्मणा देवा ब्रह्मज्ञास्तत्त्वदर्शिनः ॥ १४-४९-६ (९३७३७)
आहारं केचिदिच्छन्ति केचिच्चानशने रताः ।
कर्म केचित्प्रशंसन्ति प्रशान्ति चापरे जनाः ॥ १४-४९-७ (९३७३८)
केचिन्मोक्षं प्रशंसन्ति केचिद्भोगान्पृथग्विधान् ।
धनानि केचिदिच्छन्ति निर्धनत्वमथापरे ।
उपास्य साधनं त्वेके नैतदस्तीति चापरे ॥ १४-४९-८ (९३७३९)
अहिंसानिरताश्चान्ये केचिद्धिंसापरायणाः ।
पुण्येन यशसा चान्ये नैतदस्तीति चापरे ॥ १४-४९-९ (९३७४०)
सद्भावनिरताश्चान्ये केचित्संशयिते स्थिताः ।
दुःखादन्ये सुखादन्ये ध्यानमित्यपरे जनाः ॥ १४-४९-१० (९३७४१)
यज्ञ इत्यपरे विप्राः प्रदानमिति चापरे ।
तपस्त्वन्ये प्रशंसन्ति स्वाध्यायमपरे जनाः ॥ १४-४९-११ (९३७४२)
ज्ञानं संन्यासमित्येके स्वभावं भूतचिन्तकाः ।
सर्वमेके प्रशंसन्ति न सर्वमिति चापरे ॥ १४-४९-१२ (९३७४३)
एवं व्युत्थापिते धर्मे बहुधा विप्रबोधिते ।
निश्चयं नाधिगच्छामः श्रेयः किमिति सत्तम ॥ १४-४९-१३ (९३७४४)
इदं श्रेय इदं श्रेय इत्येवं व्युस्थितो जनः ।

यो हि यस्मिन्रतो धर्म स तं पूजयते सदा ॥१४-४९-१४ (९३७४५)
तेन नोऽविहिता प्रज्ञा मनश्च बहुलीकृतम् ।
एतदाख्यातमिच्छामः श्रेयः किमिति सत्तम ॥१४-४९-१५ (९३७४६)
अतः परं तु यद्गुह्यं तद्भवान्वक्तुमर्हति ।
सत्वक्षेत्रज्ञयोश्चापि सम्बन्धः केन हेतुना ॥१४-४९-१६ (९३७४७)
एवमुक्तः स तैर्विप्रैर्भगवाँल्लोकभावनः ।
तेभ्यः शशंस धर्मात्मा याथातथ्येन बुद्धिमान् ॥ ॥१४-४९-१७ (९३७४८)

इति श्रीमन्महाभारते आश्वमेधिकपर्वणि अनुगीतापर्वणि
एकोनपञ्चशोऽध्यायः ॥ ४९ ॥
Mahabharata - Ashvamedhika Parva - Chapter Footnotes

७-४९-१ न कर्मणेति कुर्वन्नेवेह
कर्माणीत्युभयविधश्रुतिदर्शनान्मुह्यामहे इति भावः ॥
७-४९-२ ऊर्ध्वं देहात् देहनाशादूर्ध्वमपि आत्मास्तीत्येके वदन्तीति
सम्बन्धः ।नैतदिति लोकायताः।सर्वं संशयितमिति स्याद्वादिनः
सप्तभङ्गीनयज्ञाः।निःसंशयमिति प्रातिस्विकं सर्वं तैर्तिकाः ॥
७-४९-३ अनित्यं सर्वं सृष्टिप्रलययुक्तमिति तार्किकादयः ।नित्यं
प्रवाहनित्यमिति मीमांसकाः।नास्तीति शून्यवादिनः।अस्ति परंतु
क्षणिकमिति सौगताः ॥
७-४९-६ अस्नानं नैष्ठिकब्रह्मचर्यम् ।स्नानं गार्हस्थ्यम् ॥
७-४९-८ साधनं ध्यानादिकमुपास्य कृत्वापि नैतदस्तीति
पश्चात्सर्वमपवदन्ति ॥
७-४९-९ पुण्येन पुण्यार्थमेव यतेतेत्यन्ये ।एतत्पुण्यं नास्त्येवेत्यन्ये
लोकायताः ॥
७-४९-१० संशयिते कृतमस्ति नवेति संदिग्धे पथि
।दुःखात् दुःखनिवृत्त्यर्थं सुखात्सुखप्राप्त्यर्थं ध्यानं
कर्तव्यम्।निष्काममेवेत्यपरे ॥
७-४९-११ सत्यमेके प्रशंसन्ति असत्यमिति चापरे इति थ।पाठः ॥
७-४९-१२ ज्ञानं संन्यासं संन्यासैकप्राप्यम्
।भूतचिन्तकाः वस्तुतत्त्वविचारकाः।स्वभावं
साधनपौष्कल्यम्।साधनपौष्कल्यस्वाभाव्यादेव ज्ञानमुत्पद्यते
आश्रमान्तरेपि न संन्यासमात्रेणेत्याहुः ॥
७-४९-१५ अविहिता अशिक्षिता ।आख्यातं त्वयेति शेषः ॥

---

॥ श्रीः ॥
१४.५०. अध्यायः ५०

अथानुगीतापर्व-२
Mahabharata - Ashvamedhika Parva - Chapter Topics
ब्रह्मणा महर्षिन्प्रति धर्मप्रदर्शनपूर्वकं
तदनुष्ठानसहकृतज्ञानस्यैव दृष्टान्तप्रदर्शनेन
परमपुरुषार्थसाधनत्वोक्तिः ॥ १ ॥

Mahabharata - Ashvamedhika Parva - Chapter Text

ब्रह्मोवाच ।
हन्त वः सम्प्रक्ष्यामि यन्मां पृच्छथ सत्तमाः ।
गुरुणा शिष्यमासाद्य यदुक्तं तन्निबोधत ॥ १४-५०-१ (९३७४९)
समस्तमिह तच्छ्रुत्वा सम्यगेवावधार्यताम् ।
अहिंसा सर्वभूतानामेतत्कृत्यतमं मतम् ॥ १४-५०-२ (९३७५०)
एतत्पदमनुद्विग्नं वरिष्ठं धर्मलक्षणम् ।
ज्ञानं निःश्रेय इत्याहुर्वृद्धा निश्चितदर्शिनः ।
तस्माज्ज्ञानेन शुद्धेन मुच्यते सर्वकिल्बिषैः ॥ १४-५०-३ (९३७५१)
हिंसापराश्च ये केचिद्ये च नास्तिकवृत्तयः ।
लोभमोहसमायुक्तास्ते वै निरयगामिनः ॥ १४-५०-४ (९३७५२)
आशीर्युक्तानि कर्माणि कुर्वते ये त्वतन्द्रिताः ।
तेऽस्मिन्लोके प्रमोदन्ते जायमानाः पुनः पुनः ॥ १४-५०-५ (९३७५३)
कुर्वते ये तु कर्माणि श्रद्धधाना विपश्चितः ।
अनाशीर्योगसंयुक्तास्ते धीराः साधुदर्शिनः ॥ १४-५०-६ (९३७५४)
अतः परं प्रवक्ष्यामि सत्वक्षेत्रज्ञयोर्यथा ।
संयोगो विप्रयोगश्च तन्निबोधत सत्तमाः ॥ १४-५०-७ (९३७५५)
विषयो विषयित्वं च सम्बन्धोऽयमिहोच्यते ।
विषयी पुरुषो नित्यं सत्वं च विषयः स्मृतः ॥ १४-५०-८ (९३७५६)
व्याख्यातं पूर्वकल्पेनि मशकोदुम्बरं यथा ।
भुज्यमानं न जानीते नित्यं सत्वमचेतनम् ।
यस्त्वेवं तं विजानीते यो भुङ्क्ते यश्च भुज्यते ॥ १४-५०-९ (९३७५७)
अनित्यं द्वन्द्वसंयुक्तं सत्वमाहुर्मनीषिणः ।
निर्द्वन्द्वो निष्कलो नित्यः क्षेत्रज्ञो निर्गुणात्मकः ॥ १४-५०-१० (९३७५८)
समः संज्ञानुगश्चैव स सर्वत्र व्यवस्थितः ।
न सज्जते सदा सत्वमापः पुष्करपर्णवत् ॥ १४-५०-११ (९३७५९)

सर्वैरपि गुणैर्विद्वान्व्यतिषक्तो न लिप्यते ।
जलबिन्दुर्यथा लोलः पद्मिनीपत्रसंस्थितः ॥१४-५०-१२ (९३७६०)
एवमेवाप्यसंयुक्तः पुरुषः स्यान्न संशयः ।
द्रव्यमात्रमभूत्सत्वं पुरुषस्येति निश्चयः ॥१४-५०-१३ (९३७६१)
यथा द्रव्यं च कर्ता च संयोगोऽप्यनयोस्तथा ।
यथा प्रदीपमादाय कश्चित्तमसि गच्छति ।
तथा सत्त्वप्रदीपेन गच्छन्ति परमर्षयः ॥ १४-५०-१४ (९३७६२)
यावद्द्रव्यं गुणस्तावत्प्रदीपः सम्प्रकाशते ।
क्षीणे द्रव्ये गुणे ज्योतिरन्तर्धानाय गच्छति ॥१४-५०-१५ (९३७६३)
व्यक्तः सत्वगुणस्त्वेवं पुरुषो द्रव्यमुच्यते ।
एतद्विप्रा विजानीत हन्त भूयो ब्रवीमि वः ॥१४-५०-१६ (९३७६४)
सहस्रेणापि दुर्मेधा न बुद्धिमधिगच्छति ।
चतुर्थेनाप्यथांशेन बुद्धिमान्सुखमेधते ॥१४-५०-१७ (९३७६५)
एवं धर्मस्य विज्ञेयं संसाधनमुपायतः ।
उपायज्ञो हि मेधावी सुखमत्यन्तमश्नुते ॥१४-५०-१८ (९३७६६)
यथाऽध्वानमपाथेयः प्रपन्नो मनुजः क्वचित् ।
क्लेशेन याति महता विनश्यत्यन्तराऽपि च ॥१४-५०-१९ (९३७६७)
तथा कर्मसु विज्ञेयं फलं भवति वा न वा ।
पुरुषस्यात्मनिःश्रेयः शुभाशुभनिदर्शनम् ॥१४-५०-२० (९३७६८)
यथा च दीर्घमध्वानं पद्म्यामेव प्रपद्यते ।
अदृष्टपूर्वं सहसा तत्त्वदर्शनवर्जितः ॥१४-५०-२१ (९३७६९)
तमेव च यथाऽध्वानं रथेनेहाशुगामिना ।
गच्छत्यश्वप्रयुक्तेन तथा बुद्धिमतां गतिः ॥१४-५०-२२ (९३७७०)
ऊर्ध्वं पर्वतमारुह्य नान्ववेक्षेत भूतलम् ।
रथेन रथिनं पश्येत्क्लिश्यमानमचेतनम् ॥१४-५०-२३ (९३७७१)
यावद्रथपथस्तावद्रथेन स तु गच्छति ।
क्षीणे रथपदे विद्वान्रथमुत्सृज्य गच्छति ॥१४-५०-२४ (९३७७२)
एवं गच्छति मेधावी तत्त्वयोगविधानवित् ।
परिज्ञाय गुणज्ञश्च उत्तरादुत्तरोत्तरम् ॥१४-५०-२५ (९३७७३)
यथाऽर्णवं महाघोरमप्लवः सम्प्रगाहते ।
बाहुभ्यामेव सम्मोहाद्वधं वाञ्छत्यसंशयम् ॥१४-५०-२६ (९३७७४)
नावा चापि यथा प्राज्ञो विभागज्ञः स्वरित्रया ।
अश्रान्तः सलिलं गहाच्छीघ्रं संतरते ह्रदम् ॥१४-५०-२७ (९३७७५)
तीर्णो गच्छेत्परं पारं नावमुत्सृज्य निर्ममः ।
व्याख्यातं पूर्वकल्पेन यथा रथपदातिनोः ॥१४-५०-२८ (९३७७६)
स्नेहात्सम्मोहमापन्नो नावि दाशो यथा तथा ।

ममत्वेनाभिभूतः संस्तत्रैव परिवर्तते ॥१४-५०-२९ (९३७७७)
नावं न शक्यमारुह्य स्थले विपरिवर्तितुम् ।
तथैव रथमारुह्य नाप्सु चर्या विधीयते ॥१४-५०-३० (९३७७८)
एवं कर्म कृतं वित्त विषयस्थं पृथक्पृथक् ।
यथा कर्म कृतं लोके तथा तदुपपद्यते ॥१४-५०-३१ (९३७७९)
यन्नैव गन्धि नो रस्यं न रूपस्पर्शशब्दवत् ।
मन्यते न मनो बुद्ध्या तत्प्रधानं प्रचक्षते ॥१४-५०-३२ (९३७८०)
तत्र प्रधानमव्यक्तमव्यक्तस्य गुणो महान् ।
महप्रधानभूतस्य गुणोऽहङ्कार एव च ॥१४-५०-३३ (९३७८१)
अहङ्कारात्तु सम्भूतो महाभूतकृतो गुणः ।
पृथक्त्वेन हि भूतानां विषया वै गुणाःस्मृताः ॥१४-५०-३४ (९३७८२)
बीजधर्मं यथाऽव्यक्तं तथैव प्रसवात्मकम् ।
बीजधर्मा महानात्मा प्रसवश्चेति नः श्रुतम् ॥१४-५०-३५ (९३७८३)
बीजधर्मात्साहङ्कारात्प्रसवश्च पुनःपुनः ।
बीजप्रसवधर्माणि महाभूतानि पञ्च वै ॥१४-५०-३६ (९३७८४)
बीजधर्मिण इत्याहुः प्रसवं च प्रकुर्वते ।
विशेषाः पञ्चभूतानां तेषां वित्त विशेषणम् ॥१४-५०-३७ (९३७८५)
तत्रैकगुणमाकाशं द्विगुणो वायुरुच्यते ।
त्रिगुणं ज्योतिरित्याहुरापश्चापि चतुर्गुणाः ॥१४-५०-३८ (९३७८६)
पृथ्वी पञ्चगुणा ज्ञेया चरस्थावरसङ्कुला ।
सर्वभूतकरी देवी शुभाशुभनिदर्शिनी ॥१४-५०-३९ (९३७८७)
शब्दः स्पर्शस्तथा रूपं रसो गन्धश्च पञ्चमः ।
एते पञ्चगुणा भूमेर्विज्ञेया द्विजसत्तमाः ॥१४-५०-४० (९३७८८)
पार्थिवश्च सदा गन्धो गन्धश्च बहुधा स्मृतः ।
तस्य गन्धस्य वक्ष्यामि विस्तरेण बहून्गुणान् ॥१४-५०-४१ (९३७८९)
इष्टश्चानिष्टगन्धश्च मधुरोऽम्लः कटुस्तथा ।
निर्हारी संहतः स्निग्धो रूक्षो विशद एव च ॥१४-५०-४२ (९३७९०)
एवं दशविधो ज्ञेयः पार्थिवो गन्ध इत्युत ।
शब्दः स्पर्शस्तथा रूपं द्रवश्चापां गुणाः स्मृताः ॥१४-५०-४३ (९३७९१)
रसज्ञानं तु वक्ष्यामि रसस्तु बहुधा स्मृतः ।
मधुरोऽम्लः कटुस्तिक्तः कषायो लवणस्तथा ॥१४-५०-४४ (९३७९२)
एवं षड्विधविस्तारो रसो वारिमयः स्मृतः ।
शब्दः स्पर्शस्तथा रूपं त्रिगुणं ज्योतिरुच्यते ॥१४-५०-४५ (९३७९३)
ज्योतिषश्च गुणो रूपं रूपं च बहुधा स्मृतम् ।
शुक्लं कृष्णं तथा रक्तं नीलं पीतारुणं तथा ॥१४-५०-४६ (९३७९४)
ह्रस्वं दीर्घं कृशं स्थूलं चतुरश्राणुवृत्तकम् ।

एवं द्वादशविस्तारं तेजसो रूपमुच्यते ॥१४-५०-४७ (९३७९५)
विज्ञेयं ब्राह्मणैर्वृद्धैर्धर्मज्ञैः सत्यवादिभिः ।
शब्दस्पर्शौ च विज्ञेयौ द्विगुणो वायुरुच्यते ॥१४-५०-४८ (९३७९६)
वायोश्चापि गुणः स्पर्शः स्पर्सश्च बहुधा स्मृतः ।
उष्णः शीतः सुखो दुःखः स्निग्धो विशद एव च ॥१४-५०-४९ (९३७९७)
कठिनश्चिक्वणः श्लक्ष्णः पिच्छिलो दारुणो मृदुः ।
एवं द्वादशविस्तारो वायव्यो गुण उच्यते ॥१४-५०-५० (९३७९८)
विधिवद्ब्राह्मणैः सिद्धैर्मन्त्रज्ञैस्तत्त्वदार्शिभिः ॥ १४-५०-५१ (९३७९९)
तत्रैकगुणमाकाशं शब्द इत्येव च स्मृतः ।
तस्य शब्दस्यि वक्ष्यामि विस्तरेण बहून्गुणान् ॥१४-५०-५२ (९३८००)
षड्जर्षभः सगान्धारो मध्यमः पञ्चमस्तथा ।
अतः परं तु विज्ञेयो निषादो धैवतस्तथा ।
इष्टश्चानिष्टशब्दश्च संहतः प्रतिभानवान् ॥ १४-५०-५३ (९३८०१)
एवं बहुविधो ज्ञेयः शब्द आकाशसम्भवः ।
आकाशमुत्तमं भूतमहङ्कारस्ततः परः ॥१४-५०-५४ (९३८०२)
अहङ्कारात्परा बुद्धिर्बुद्धेरात्मा ततः परः ।
तस्मात्तु परमव्यक्तमव्यक्तात्पुरुषः परः ॥१४-५०-५५ (९३८०३)
परावरज्ञो भूतानां विधिज्ञः सर्वकर्मणाम् ।
सर्वभूतात्मभूतात्मा यं प्राप्यानन्त्यमश्नुते ॥ ॥१४-५०-५६ (९३८०४)

इति श्रीमन्महाभारते आश्वमेधिकपर्वणि अनुगीतापर्वणि
पञ्चाशोऽध्यायः ॥५० ॥

---

अस्वमेधिकपर्व-अध्यय०५१
॥ श्रीः ॥
१४.५१. अध्यायः ५१

अथानुगीतापर्व-२
Mahabharata - Ashvamedhika Parva - Chapter Topics
कृष्णेनार्जुनंप्रति
मुक्त्युपायप्रतिपादकगुरुशिष्यसंवादानुवादसमापनपूर्वकं स्वस्य
निजनगरजिगमिषानिवेदनम् ॥१ ॥

Mahabharata - Ashvamedhika Parva - Chapter Text

ब्रह्मोवाच ।

भूतानामथ पञ्चानामथेषामीश्वरं मनः ।
नियमे च विसर्गे च भूतानां मन एव च ॥१४-५१-१ (९३८०५)
अधिष्ठातृमनो नित्यं भूतानां महतां तथा ।
बुद्धिरैश्वर्यमाचष्टे क्षेत्रज्ञश्च स उच्यते ॥१४-५१-२ (९३८०६)
इनद्रियाणि मनो युङ्क्ते सदश्वानिव सारथिः ।
इन्द्रियाणि मनो बुद्धिः क्षेत्रज्ञे युज्यते सदा ॥१४-५१-३ (९३८०७)
महदश्वसमायुक्तं बुद्धिसंयमनं रथम् ।
समारुह्य स भूतात्मा समन्तात्परिधावति ॥१४-५१-४ (९३८०८)
इन्द्रियग्रामसंयुक्तो मनःसारथिरेव च ।
बुद्धिसंयमनो नित्यं महान्ब्रह्ममयो रथः ॥१४-५१-५ (९३८०९)
एवं यो वेत्ति विद्वान्वै सदा ब्रह्ममयं रथम् ।
स धीरः सर्वलोकेषु न मोहमधिगच्छति ॥१४-५१-६ (९३८१०)
अव्यक्तादिविशेषान्तं सहस्थावरजङ्गमम् ॥
सूर्यचन्द्रप्रभालोकं ग्रहनक्षत्रमण्डितम् ॥१४-५१-७ (९३८११)
नदीपर्वतजालैश्च सर्वतः परिभूषितम् ।
विविधाभिस्तथा चाद्भिः सततं समलंकृतम् ॥१४-५१-८ (९३८१२)
अजितं सर्वभूतानां सर्वप्राणभृतां गतिः ।
एतद्ब्रह्मवनं नित्यं तस्मिंश्चरति क्षेत्रवित् ॥१४-५१-९ (९३८१३)
लोकेऽस्मिन्यानि सत्वानि त्रसानि स्थावराणि च ।
तान्येवाग्रे प्रलीयन्ते पश्चाद्भूतकृता गुणाः ।
गुणेभ्यः पञ्च भूतानि एष भूतसमुच्छ्रयः ॥ १४-५१-१० (९३८१४)
देवा मनुष्या गन्धर्वाः पिशाचासुरराक्षसाः ।
सर्वे स्वभावतः सृष्टा न क्रियाभ्यो न कारणात् ॥१४-५१-११ (९३८१५)
एते विश्वसृजो विप्रा जायन्तीह पुनः पुनः ।
तेभ्यः प्रसूतास्तेष्वेव महाभूतेषु पञ्चसु ।
प्रलीयन्ते यथाकालमूर्मयः सागरे यथा ॥ १४-५१-१२ (९३८१६)
विश्वसृग्भ्यस्तु भूतेभ्यो महाभूतास्तु सर्वशः ।
भूतेब्यश्चापि पञ्चभ्यो भुक्तो गच्छेत्परां गतिम् ॥१४-५१-१३ (९३८१७)
प्रजापतिरिदं सर्वं मनसैवासृजत्प्रभुः ।
तथैव देवानृषयस्तपसा प्रतिपेदिरे ॥१४-५१-१४ (९३८१८)
तपसश्चानुपूर्व्येण फलमूलाशिनस्तथा ।
त्रैलोक्यं तपसा सिद्धाः पश्यन्तीह समाहिताः ॥१४-५१-१५ (९३८१९)
औषधान्यगदादीनि नानाविद्याश्च सर्वशः ।
तपसैव प्रसिद्ध्यन्ति तपोमूलं हि साधनम् ॥१४-५१-१६ (९३८२०)
यद्दुरापं दुराम्नायं दुराधर्षं दुरन्वयम् ।
तत्सर्वं तपसा साध्यं तपो हि दुरतिक्रमम् ॥१४-५१-१७ (९३८२१)

सुरापो ब्रह्महा स्तेनो भ्रूणहागुरुतल्पगः ।
तपसैव सुतप्तेन मुच्यते किल्बिषात्ततः ॥१४-५१-१८ (९३८२२)
मनुष्याः पितरो देवाः पशवो मृगपक्षिणः ।
यानि चान्यानि भूतानि चराणि स्थावराणि च ॥१४-५१-१९ (९३८२३)
तपःपरायणा नित्यं सिद्ध्यन्ते तपसा सदा ।
तथैव तपसा देवा महाभागा दिवं गताः ॥१४-५१-२० (९३८२४)
आशीर्युक्तानि कर्माणि कुर्वते ये त्वतन्द्रिताः ।
अहङ्कारसमायुक्तास्ते सकाशे प्रजापतेः ॥१४-५१-२१ (९३८२५)
ध्यानयोगेन शुद्धेन निर्ममा निरहंकृताः ।
आप्नुवन्ति महात्मानो महान्तं लोकमुत्तमम् ॥१४-५१-२२ (९३८२६)
ध्यानयोगमुपागम्य प्रसन्नमतयः सदा ।
सुखोपचयमव्यक्तं प्रविशन्त्यात्मवित्तमाः ॥१४-५१-२३ (९३८२७)
ध्यानयोगादुपागम्य निर्ममा निरहंकृताः ।
अव्यक्तं प्रविशन्तीह महतां लोकमुत्तमम् ॥१४-५१-२४ (९३८२८)
अव्यक्तादेव सम्भूताः समयज्ञा गताः पुनः ।
तमोरजोभ्यां निर्मुक्ताः सत्वमास्थाय केवलम् ॥१४-५१-२५ (९३८२९)
निर्मुक्तः सर्वपापेभ्यः सर्वं त्यजति निष्कलः ।
क्षेत्रज्ञ इति तं विद्याद्यस्तं वेद स वेदवित् ॥१४-५१-२६ (९३८३०)
चित्तं चित्तादुपागम्य मुनिरासीत संयतः ।
यच्चित्तस्तन्मना भूत्वा ग्राह्यमेतत्सनातनम् ॥१४-५१-२७ (९३८३१)
अव्यक्तादिविशेषान्तमविद्यालक्षणं स्मृतम् ।
निबोधत तथा ज्ञानं गुणैर्लक्षणमित्युत ॥१४-५१-२८ (९३८३२)
द्व्यक्षरस्तु भवेन्मृत्युस्त्र्यक्षरं ब्रह्म शाश्वतम् ।
ममेति च भवेन्मृत्युर्न ममेति च शाश्वतम् ॥१४-५१-२९ (९३८३३)
कर्म केचित्प्रशंसन्ति मन्दबुद्धितया नराः ।
ये तु वृद्धा महात्मानो न प्रशंसन्ति कर्म ते ॥१४-५१-३० (९३८३४)
कर्मणा जायते जन्तुर्मूर्तिमान्षोडशात्मकः ।
पुरुषं ग्रसते विद्या तद्ग्राह्यममृताशिनम् ॥१४-५१-३१ (९३८३५)
तस्मात्कर्मसु निःस्नेहा ये केचित्पारदर्शिनः ।
विद्यामयोऽयं पुरुषो न तु कर्ममयः स्मृतः ॥१४-५१-३२ (९३८३६)
य एवममृतं नित्यमग्राह्यं शश्वदक्षरम् ॥
वश्यात्मानमसंश्लिष्टं यो वेद न मृतो भवेत् ॥१४-५१-३३ (९३८३७)
अपूर्वमकृतं नित्यं य एनमविचारिणम् ।
य एवं विन्देदात्मानमग्राह्यममृताशनम् ।
अग्राह्यो ह्यमृतो भवति स एभिः कारणैर्ध्रुवः ॥ १४-५१-३४ (९३८३८)
आयोज्य सर्वसंस्कारान्संयम्यात्मानमात्मनि ।

स तद्ब्रह्म शुभं वेत्ति यस्माद्भूयो न विद्यते ॥१४-५१-३५ (९३८३९)
प्रसादे चैव सत्वस्य प्रसादं समवाप्नुयात् ।
लक्षणं हि प्रसादस्य यथा स्यात्स्वप्नदर्शनम् ॥१४-५१-३६ (९३८४०)
गतिरेषा तु मुक्तानां ये ज्ञानपरिनिष्ठिताः ।
प्रवृत्तयश्च याः सर्वाः पश्यन्ति परिणामजाः ॥१४-५१-३७ (९३८४१)
एषा गतिर्विरक्तानामेष धर्मः सनातनः ।
एषा ज्ञानवतां प्राप्तिरेतद्वृत्तमनिन्दितम् ॥१४-५१-३८ (९३८४२)
समेन सर्वभूतेषु निस्पृहेण निराशिषा ।
शक्या गतिरियं गन्तुं सर्वत्र समदर्शिना ॥१४-५१-३९ (९३८४३)
एतद्वः सर्वमाख्यातं मया विप्रर्षिसत्तमाः ।
एवमाचरत क्षिप्रं ततः सिद्धिमवाप्स्यथ ॥१४-५१-४० (९३८४४)
गुरुरुवाच।१४-५१-४१क्ष् (७८६४)
इत्युक्तास्ते तु मुनयो गुरुणा ब्रह्मणा तथा ।
कृतवन्तो महात्मानस्ततो लोकमवाप्नुवन् ॥१४-५१-४१ (९३८४५)
त्वमप्येतन्महाभाग मयोक्तं ब्रह्मणो वचः ।
सम्यगाचर शुद्धात्मंस्ततः सिद्धिमवाप्स्यसि ॥१४-५१-४२ (९३८४६)
वासुदेव उवाच।१४-५१-४३क्ष् (७८६५)
इत्युक्तः स तदा शिष्यो गुरुणा धर्ममुत्तमम् ।
चकार सर्वं कौन्तेय ततो मोक्षमवाप्तवान् ॥१४-५१-४३ (९३८४७)
कृतकृत्यश्च स तदा शिष्यः कुरुकुलोद्वह ।
तत्पदं समनुप्राप्तो यत्र गत्वा न शोचति ॥१४-५१-४४ (९३८४८)
अर्जुन उवाच।१४-५१-४५क्ष् (७८६६)
को न्वसौ ब्राह्मणः कृष्ण कश्च शिष्यो जनार्दन ।
श्रोतव्यं चेन्मयैतद्वै तत्त्वमाचक्ष्व मे विभो ॥१४-५१-४५ (९३८४९)
वासुदेव उवाच।१४-५१-४६क्ष् (७८६७)
अहं गुरुर्महाबाहो मनः शिष्य च विद्धि मे ।
त्वत्प्रीत्या गुह्यमेतच्च कथितं ते धनंजय ॥१४-५१-४६ (९३८५०)
मयि चेदस्ति ते प्रीतिर्नित्यं कुरुकुलोद्वह ।
अध्यात्ममेतच्छ्रुत्वा त्वं सम्यगाचर सुव्रत ॥१४-५१-४७ (९३८५१)
ततस्त्वं सम्यगाचीर्णो धर्मेऽस्मिन्नरिकर्शन ।
सर्वपापविनिर्मुक्तो मोक्षं प्राप्स्यसि केवलम् ॥१४-५१-४८ (९३८५२)
पूर्वमप्येतदेवोक्तं युद्धकाल उपस्थिते ।
मया तव महाबाहो तस्मादत्र मनः कुरु ॥१४-५१-४९ (९३८५३)
मया तु भरतश्रेष्ठ चिरदृष्टः पिता प्रभुः ।
तमहं द्रष्टमिच्छामि सम्मते तव फल्गुन ॥१४-५१-५० (९३८५४)
वैशम्पायन उवाच।१४-५१-५१क्ष् (७८६८)

इत्युक्तवचनं कृष्णं प्रत्युवाच धनंजयः ।
ग्यदिष्टं कुरु सर्वेषामीश्वरोऽस्मान्प्रपालय ॥ १४-५१-५१ (९३८५५)
नमस्ते सर्वलोकात्मन्नारायण परात्पर ।
मनोमलात्तपोशक्यं कर्म चाविद्यया हतम् ।
दानमप्यर्थदोषेणि नाम तस्मात्कलौ स्मरेत् ॥ १४-५१-५२ (९३८५६)
यदि गन्तुं कृता बुद्धिर्वासुदेव नमोस्तु ते।'
गच्छावो नगरं कृष्ण गजसाह्वयमद्य वै ॥ १४-५१-५३ (९३८५७)
समेत्य तत्रि राजानं धर्मात्मानं युधिष्ठिरम् ।
समनुज्ञाप्य राजानं स्वां पुरीं यातुमर्हसि ॥ ॥ १४-५१-५४ (९३८५८)

इति श्रीमन्महाभारते आश्वमेधिकपर्वणि अनुगीतापर्वणि
एकपञ्चाशोऽध्यायः ॥ ५१ ॥

Mahabharata - Ashvamedhika Parva - Chapter Footnotes

७-५१-१३ महाभूतानि गच्छतीति क ट थ पाठः ॥
७-५१-३१ विममो यः स पुरुष इति क पाठः ॥
७-५१-३५ अपोह्य सर्वान्संकल्पान्संयतात्मानमात्मनीति थ पाठः ॥

---

अस्वमेधिकपर्व-अध्यय०५२
॥ श्रीः ॥
१४.५२. अध्यायः ५२

Mahabharata - Ashvamedhika Parva - Chapter Topics

अनुगीतोपदेशानन्तरं कृष्णार्जुनाभ्यां हास्तिनपुरंप्रति प्रस्थानम् ॥ १ ॥
तत्र मध्येमार्गमर्जुनेन कृष्णंप्रति स्तुतिपूर्वकं व्यासनारदादिभ्यः
स्वस्य कृष्णयाथात्म्यावगतिनिवेदनम् ॥ २ ॥
ततः कृष्णेन सहार्जुनेन हास्तिनपुरमेत्य धृतराष्ट्रादिभ्यः
पादाभिवादनम् ॥ ३ ॥
ततो युधिष्ठिराद्यनुमत्या सुभद्रामानीय सहसात्यकिना द्वारकांप्रति
प्रस्थानम् ॥ ४ ॥

Mahabharata - Ashvamedhika Parva - Chapter Text

वैशम्पायन उवाच ।
ततोऽभ्यनोदयत्कृष्णो युज्यतामिति दारुकम् ।
मुहूर्तादिव चाचष्ट युक्तमित्येव दारुकः ॥ १४-५२-१ (९३८५९)

तथैव चानुयात्राणि चोदयामास पाण्डवः ।
सन्नह्यध्वं प्रयास्यामो नगरं गजसाह्वयम् ॥१४-५२-२ (९३८६०)
इत्युक्ताः सैनिकास्ते तु सज्जीभूता विशाम्पते ।
आचख्युः सज्जमित्येवं पार्थायामिततेजसे ॥१४-५२-३ (९३८६१)
ततस्तौ रथमास्थाय प्रयातौ कृष्णपाण्डवौ ।
विकुर्वाणौ कताश्चित्राः प्रीयमाणौ विशाम्पते ॥१४-५२-४ (९३८६२)
रथस्थं तु महातेजा वासुदेवं धनञ्जयः ।
पुनरेवाब्रवीद्वाक्यमिदं भरतसत्तम ॥१४-५२-५ (९३८६३)
त्वत्प्रसादाज्जयः प्राप्तो राज्ञा वृष्णिकुलोद्वह ।
निहताः शत्रवश्चापि प्राप्तं राज्यमकण्टकम् ॥१४-५२-६ (९३८६४)
नाथवन्तश्च भवता पाण्डवा मधुसूदन ।
भवन्तं प्लवमासाद्य तीर्णाः स्म कुरुसागरम् ।
ग्भक्तांस्त्वमाश्रितानस्मान्पालयामुत्र चेह च।' १४-५२-७ (९३८६५)
विश्वकर्मन्नमस्तेऽस्तु विश्वात्मन्विश्वसत्तम ।
तथा त्वामभिजानामि तथा चाहं भवान्मतः ॥१४-५२-८ (९३८६६)
त्वत्तेजःसम्भवो नित्यं हुताशो मधुसूदन ।
रतिः क्रीडामयी तुभ्यं माया ते रोदसी विभो ॥१४-५२-९ (९३८६७)
त्वयि सर्वमिदं विश्वं यदिदं स्थाणु जङ्गमम् ।
त्वं हि सर्वं विकुरुषे भूतग्रामं चतुर्विधम् ॥१४-५२-१० (९३८६८)
पृथिवीं चान्तरिक्षं च तथा स्थावरजङ्गमम् ।
हसितं तेऽमला ज्योत्स्ना ऋतवश्चेन्द्रियाणि ते ॥१४-५२-११ (९३८६९)
प्राणो वायुः सततगः क्रोधो मृत्युः सनातनः ।
प्रसादे चापि पद्मा श्रीर्नित्यं त्वयि महामते ॥१४-५२-१२ (९३८७०)
रतिस्तुष्टिर्धृतिः क्षान्तिर्मतिः कान्तिश्चराचरम् ।
त्वमेवेह युगान्तेषु निधनं प्रोच्यसेऽनध ॥१४-५२-१३ (९३८७१)
सुदीर्घेणापि कालेन न ते शक्या गुणा मया ।
आत्मा च परमो वक्तुं नमस्ते नलिनेक्षण ॥१४-५२-१४ (९३८७२)
विदितो मे सुदुर्धर्ष नारदाद्देवलात्तथा ।
कृष्णद्वैपायनाच्चैव तथा कुरुपितामहात् ॥१४-५२-१५ (९३८७३)
त्वयि सर्वं समासक्तं त्वमेवैको जनेश्वरः ।
यच्चानुग्रहसंयुक्तमेतदुक्तं त्वयाऽनघ ॥१४-५२-१६ (९३८७४)
एतत्सर्वमहं सम्यगाचरिष्ये जनार्दन ।
इदं चाद्भुतमत्यन्तं कृतमस्मत्प्रियेप्सया ॥१४-५२-१७ (९३८७५)
यत्पापो निहतः सङ्ख्ये कौरव्यो धृतराष्ट्रजः ।
त्वया दग्धं हि तत्सैन्यं मया विजितमाहवे ॥१४-५२-१८ (९३८७६)
भवता तत्कृतं कर्म येनावाप्तो जयो मया ।

दुर्योधनस्य सङ्ग्रामे तव बुद्धिपराक्रमैः ॥१४-५२-१९ (९३८७७)
कर्णस्य च वधोपायो यथावत्सम्प्रदर्शितः ।
सैन्धवस्य च पापस्य भूरिश्रवस एव च ॥१४-५२-२० (९३८७८)
ग्तस्मात्त्वमेव सञ्चिन्त्य हितं कुरु यथा तथा।'
अहं च प्रीयमाणेन त्वया देवकिनन्दन ।
यदुक्तस्तत्करिष्यामि न हि मेऽत्र विचारणा ॥ १४-५२-२१ (९३८७९)
राजानं च समासाद्य धर्मात्मानं युधिष्ठिरम् ।
चोदयिष्यामि धर्मज्ञ गमनार्थं तवानघ ॥१४-५२-२२ (९३८८०)
आहृतं हि ममैतत्ते द्वारकागमनं प्रभो ।
अचिरादेव द्रष्टा त्वं मातुलं मे जनार्दन ।
बलदेवं च दुर्धर्षं तथाऽन्यान्वृष्णिपुङ्गवान् ॥ १४-५२-२३ (९३८८१)
एवं सम्भाषमाणौ तौ प्राप्तौ वारणसाह्वयम् ।
तथा विविशतुश्चोभौ सम्प्रहृष्टनराकुलम् ॥१४-५२-२४ (९३८८२)
तौ गत्वा धृतराष्ट्रस्य गृहं शक्रगृहोपमम्। १४-५२-२५ (९३८८३)
ददृशाते महाराज धृतराष्ट्रं जनेश्वरम् ॥ १४-५२-२५ (९३८८४)
विदुरं च महाबुद्धिं राजानं च युधिष्ठिरम् ।
भीमसेनं च दुर्धर्षं माद्रीपुत्रौ च पाण्डवौ ॥१४-५२-२६ (९३८८५)
धृतराष्ट्रमुपासीनं युयुत्सुं चापराजितम् ।
गान्धारीं च महाप्रज्ञां पृथा कृष्णां च भामिनीम् ॥१४-५२-२७ (९३८८६)
सुभद्राद्याश्च ताः सर्वा भरतानां स्त्रियस्तथा ।
ददृशाते स्त्रियः सर्वा गान्धारीपरिचारिकाः ॥१४-५२-२८ (९३८८७)
ततः समेत्य राजानं धृतराष्ट्रमरिंदमौ ।
निवेद्य नामधेये स्वे तस्य पादावगृह्णताम् ॥१४-५२-२९ (९३८८८)
गान्धार्याश्च पृथायाश्च धर्मराजस्य चैव हि ।
भीमस्य च महात्मानौ तथा पादावगृह्णताम् ॥१४-५२-३० (९३८८९)
क्षत्तारं चापि सङ्गृह्य पृष्ट्वा कुशलमव्ययम् ।
ग्परिष्वज्य महात्मानं वेश्यापुत्रं महारथम्।'
तैः सार्धं नृपतिं वृद्धं ततस्तौ पर्युपासताम् ॥ १४-५२-३१ (९३८९०)
ततो निशि महाराजो धृतराष्ट्रः कुरूद्वहान् ।
जनार्दनं च मेधावी व्यसर्जयत वै गृहान् ॥१४-५२-३२ (९३८९१)
तेऽनुज्ञाता नृपतिना ययुः स्वं स्वं निवेशनम् ।
धनंजयगृहानेव ययौ कृष्णस्तु वीर्यवान् ॥१४-५२-३३ (९३८९२)
तत्रार्चितो यथान्यायं सर्वकामैरुपस्थितः ।
कृष्णः सुष्वाप मेधावी धनंजयसहायवान् ॥१४-५२-३४ (९३८९३)
प्रभातायां तु शर्वर्यां कृत्वा पौर्वाह्णिकीं क्रियाम् ।
धर्मराजस्य भनं जग्मतुः परमार्चितौ ।

यत्रास्ते स सहामात्यो धर्मराजो महाबलः ॥ १४-५२-३५ (९३८९४)
तौ प्रविश्य महात्मानौ तद्गृहं परमार्चितम् ।
धर्मराजं ददृशतुर्देवराजमिवाश्विनौ ॥१४-५२-३६ (९३८९५)
समासाद्य तु राजानं वार्ष्णेयकुरुपुङ्गवौ ।
निषीदतुरनुज्ञातौ प्रीयमाणेन तेन तौ ॥१४-५२-३७ (९३८९६)
ततः स राजा मेधावी विवक्षू प्रेक्ष्य तावुभौ ।
प्रोवाच वदतां श्रेष्ठो वचनं राजसत्तमः ॥१४-५२-३८ (९३८९७)
विवक्षू हि युवां मन्ये वीरौ यदुकुरूद्वहौ ।
ब्रूतं कर्तास्मि सर्वं वां नचिरान्मा विचार्यताम् ॥१४-५२-३९ (९३८९८)
इत्युक्तः फल्गुनस्तत्र धर्मराजानमब्रवीत् ।
विनीतवदुपागम्य वाक्यं वाक्यविशारदः ॥१४-५२-४० (९३८९९)
अयं चिरोषितो राजन्वासुदेवः प्रतापवान् ।
भवन्तं समनुज्ञाप्य पितरं द्रष्टुमिच्छति ॥१४-५२-४१ (९३९००)
स गच्छेदभ्यनुज्ञातो भवता यदि मन्यसे ।
आनर्तनगरीं वीरस्तदनुज्ञातुमर्हसि ॥१४-५२-४२ (९३९०१)
युधिष्ठिर उवाच।१४-५२-४३क्ष् (७८६९)
पुण्डरीकाक्ष भद्रं ते गच्छ त्वं मदुसूदन ।
पुरीं द्वारवतीमद्य द्रष्टुं शूरसुतं प्रभो ॥१४-५२-४३ (९३९०२)
रोचते मे महाबाहो गमनं तव केशव ।
मातुलश्चिरदृष्टो मे त्वया देवी च देवकी ॥१४-५२-४४ (९३९०३)
समेत्यि मातुलं गत्वा बलदेवं च मानद ।
पूजयेथा महाप्राज्ञ मद्वाक्येन यथाऽर्हतः ॥१४-५२-४५ (९३९०४)
स्मरेथाश्चापि मां नित्यं भीमं च बलिनां वरम् ।
फाल्गुनं सहदेवं च नकुलं चैव मानद ॥१४-५२-४६ (९३९०५)
आनर्तानवलोक्य त्वं पितरं च महाभुजः ।
वृष्णींश्च पुनरागच्छेर्हयमेधे ममानघ ॥१४-५२-४७ (९३९०६)
स गच्छ रत्नान्यादाय विविधानि वसूनि च ।
यच्चप्यन्यन्मनोज्ञं ते तदप्यादत्स्व सात्वत ॥१४-५२-४८ (९३९०७)
इयं च वसुधा कृत्स्ना प्रसादात्तव केशव ।
अस्मानुपागता वीर निहताश्चापि शत्रवः ॥१४-५२-४९ (९३९०८)
स्वर्गापवर्गविषयं त्वद्भक्तानां न दुर्लभम् ।
संसारगहने चेद्धपापाग्निप्रशमाम्बुद ॥' १४-५२-५० (९३९०९)
एवं ब्रुवति कौरव्ये धर्मराजे युधिष्ठिरे ।
वासुदेवो वरः पुंसामिदं वचनमब्रवीत् ॥१४-५२-५१ (९३९१०)
तवैव रत्नानि धनं च केवलं
धरा तु कृत्स्ना तु महाभुजाद्य वै ।

यदस्ति चान्यद्द्रविणं गृहे मम
त्वमेव तस्येश्वर नित्यमीश्वरः ॥ १४-५२-५२ (९३९११)
तथेत्यथोक्तः प्रतिपूजितस्तदा
गदाग्रजो धर्मसुतेन वीर्यवान् ।
पितृष्वसारं त्ववदद्यथाविधि
सम्पूजितश्चाप्यगमत्प्रदक्षिणम् ॥ १४-५२-५३ (९३९१२)
तया स सम्यक् प्रतिनन्दितस्तत-
स्तथैव सर्वैर्विदुरादिभिस्तथा ।
विनिर्ययौ नागपुराद्गदाग्रजो
रथेन दिव्येन चतुर्भुजः स्वयम् ॥ १४-५२-५४ (९३९१३)
रथे सुभद्रामधिरोप्य भामिनीं
युधिष्ठिरस्यानुमते जनार्दनः ।
पितृष्वसुश्चापि तथा महाभुजो
विनिर्ययौ पौरजनाभिसंवृतः ॥ १४-५२-५५ (९३९१४)
तमन्वयाद्वानरवर्यकेतनः
ससात्यकिर्माद्रवतीसुतावपि ।
अगाधबुद्धिर्विदुरश्च माधवं
स्वयं च भीमो गजराजविक्रमः ॥ १४-५२-५६ (९३९१५)
निवर्तयित्वा कुरुराष्ट्रवर्धनां-
स्ततः स सर्वान्विदुरं च वीर्यवान् ।
जनार्दनो दारुकमाह सत्वरः
प्रचोदयाश्वानिति सात्यकिं तथा ॥ १४-५२-५७ (९३९१६)
ततो ययौ शत्रुगणप्रमर्दनः
शिनिप्रवीरानुगतो जनार्दनः ।
यथा निहत्यारिगणं शतक्रतु-
र्दिवं तथाऽऽनर्तपुरीं प्रतापवान् ॥ ॥ १४-५२-५८ (९३९१७)

इति श्रीमन्महाभारते आश्वमेधिकपर्वणि अनुगीतापर्वणि
द्विपञ्चसोऽध्यायः ॥५२ ॥

---

अस्वमेधिकपर्व-अध्यय०५३
॥ श्रीः ॥
१४.५३. अध्यायः ५३

Mahabharata - Ashvamedhika Parva - Chapter Topics
कुरुपुराद्द्वारकां गच्छता कृष्णेन मध्येमार्गं दृष्टेनोदङ्केन

सह संवादः ॥१ ॥
तथा कौरवादिविनाशे स्वोपेक्ष्याया हेतुत्वधिया स्वंप्रति
शापदानोद्यतोदङ्कपरिसान्त्वनाय तंप्रति तत्वकथनोपक्रमः ॥ २ ॥

Mahabharata - Ashvamedhika Parva - Chapter Text

वैशम्पायन उवाच ।
तथा प्रयान्तं वार्ष्णेयं द्वारकां भरतर्षभाः ।
परिष्वज्य न्यवर्तन्त सानुयात्राः परंतपाः ॥ १४-५३-१ (९३९१८)
पुनःपुनश्च वार्ष्णेयं पर्यष्वजत फल्गुनः ।
आचक्षुर्विषयाच्चैनं स ददर्श पुनःपुनः ॥ १४-५३-२ (९३९१९)
कृच्छ्रेणैव तु तां पार्तो गोविन्दे विनिवेशिताम् ।
संजहार ततो दृष्टिं कृष्णश्चाप्यपराजितः ॥ १४-५३-३ (९३९२०)
तस्य प्रयाणे यान्यासन्निमित्तानि महात्मनः ।
बहून्यद्भुतरूपाणि तानि मे गदतः शृणु ॥ १४-५३-४ (९३९२१)
वायुर्वेगेन महता रथस्य पुरतो ववौ ।
कुर्वन्निःशर्करं मार्गं विरजस्कमकण्टकम् ॥ १४-५३-५ (९३९२२)
ववर्ष वासवश्चैव तोयं शुचि सुगन्धि च ।
दिव्यानि चैव पुष्पाणि पुरतः शार्ङ्गधन्वनः ॥ १४-५३-६ (९३९२३)
स प्रयातो महाबाहुः समेषु मरुधन्वसु ।
ददर्शाथ मुनिश्रेष्ठमुदङ्कममितौजसम् ॥ १४-५३-७ (९३९२४)
ग्महर्षिं सिद्धतपसं सर्वलोकान्तविश्रुतम् ।'
स तं सम्पूज्य तेजस्वी मुनिं पृथुललोचनः ।
पूजितस्तेन च तदा पर्यपृच्छदनामयम् ॥ १४-५३-८ (९३९२५)
स पृष्टः कुशलं तेन सम्पूज्य मधुसूदनम् ।
उदङ्को ब्राह्मणश्रेष्ठस्ततः पप्रच्छ माधवम् ॥ १४-५३-९ (९३९२६)
कच्चिच्छौरे त्वया गत्वा कुरुपाण्डवसद्म तत् ।
कृतं सौभ्रात्रमचलं तन्मे व्याख्यातुमर्हसि ॥ १४-५३-१० (९३९२७)
अपि सन्धाय तान्वीरानुपावृत्तोसि केशव ।
सम्बन्दिनःक स्वदयितान्सततं वृष्णिपुङ्गव ॥ १४-५३-११ (९३९२८)
कच्चित्पाण्डुसुताः पञ्च धृतराष्ट्रस्य चात्मजाः ।
लोकेषु विहरिष्यन्ति त्वया सह परंतप ॥ १४-५३-१२ (९३९२९)
स्वराष्ट्रे ते च राजानः कच्चित्प्राप्स्यन्ति वै सुखम् ।
कौरवेषु प्रशान्तेषु त्वया नाथेन केशव ॥ १४-५३-१३ (९३९३०)
या मे सम्भावना तात त्वयि नित्यमवर्तत ।
अपि सा सफला तात कृता ते भरतान्प्रति ॥ १४-५३-१४ (९३९३१)

श्रीभगवानुवाच। १४-५३-१५क्ष् (७८७०)
कृतो यत्नो मया पूर्वं सौशाम्ये कौरवान्प्रति ।
नाशक्यन्त यदा साम्ये ते स्थापयितुमञ्जसा। १४-५३-१५ (९३९३२)
न दिष्टमप्यतिक्रान्तुं शक्यं बुद्ध्या बलेन वा ।
महर्षे विदितं भूयः सर्वमेतत्तवानघ ॥ १४-५३-१६ (९३९३३)
तेऽत्यक्रामन्मतिं मह्यं भीष्मस्य विदुरस्य च ।
ततो यमक्षयं जग्मुः समासाद्येतरेतरम् ॥ १४-५३-१७ (९३९३४)
पञ्चैव पाण्डवाः शिष्टा इतमित्रा हतात्मजाः ।
धार्तराष्ट्राश्च निहताः सर्वे ससुतबान्धवाः ॥ १४-५३-१८ (९३९३५)
इत्युक्तवचने कृष्णे भृशं क्रोधसमन्वितः ।
उदङ्क इत्युवाचैनं रोषादुत्फुल्ललोचनः ॥ १४-५३-१९ (९३९३६)
यस्माच्छक्तेन ते कृष्ण न त्राताः कुरुपुङ्गवाः ।
सम्बन्धिनः प्रियास्तस्माच्छप्स्येऽहं त्वामसंशयम् ॥ १४-५३-२० (९३९३७)
न च ते प्रसभं यस्मात्ते निगृह्य निवारिताः ।
तस्मान्मन्युपरीतस्त्वां शप्स्यामि मधुसूदन ॥ १४-५३-२१ (९३९३८)
त्वया शक्तेन हि सता मिथ्याचारेणि माधव ।
ते परीताः कुरुश्रेष्ठा नश्यन्तः स्म ह्युपेक्षिताः ॥ १४-५३-२२ (९३९३९)
वासुदेव उवाच। १४-५३-२३क्ष् (७८७१)
शृणु मे विस्तरेणेदं यद्वक्ष्ये भृगुनन्दन ।
गृहाणानुनयं चापि तपस्वी ह्यसि भार्गवम् ॥ १४-५३-२३ (९३९४०)
श्रुत्वा च मे तदध्यात्मं मुञ्चेथाः शापमद्य वै ।
न च मां तपसाऽल्पेन शक्तोऽभिभवितुं पुमान् ॥ १४-५३-२४ (९३९४१)
न च ते तपसो नाशमिच्छामि तपतां वर ।
तपस्ते सुमहद्दीप्तं गुरवश्चापि तोषिताः ॥ १४-५३-२५ (९३९४२)
कौमारं ब्रह्मचर्यं ते जानामि द्विजसत्तम ।
दुःखार्जितस्य तपसस्तस्मान्नेच्चामि तेऽव्ययम् ॥ ॥ १४-५३-२६ (९३९४३)

इति श्रीमन्महाभारते आश्वमेधिकपर्वणि अनुगीतापर्वणि
त्रिपञ्चाशोऽध्यायः ॥ ५३ ॥
Mahabharata - Ashvamedhika Parva - Chapter Footnotes

७-५३-१५ सौशाम्ये सौरस्ये ॥
७-५३-२२ परीताः परितः प्राप्ताः ॥
७-५३-२३ अनुनयं शिक्षाम् ॥
७-५३-२४ मे मत्तः ॥

अस्वमेधिकपर्व-अध्यय०५४
॥ श्रीः ॥
१४.५४. अध्यायः ५४

Mahabharata - Ashvamedhika Parva - Chapter Topics
कृष्णेनोदङ्कंप्रति स्वमाहात्म्यप्रकाशनपूर्वकं कुरूणां
स्ववचनातिक्रमणादिरूपस्वापराधेनैव निधनोक्तिः ॥ १ ॥

Mahabharata - Ashvamedhika Parva - Chapter Text

उदङ्क उवाच ।
ब्रूहि केशव तत्त्वेन त्वमध्यात्ममनिन्दितम् ।
श्रुत्वा श्रेयोऽभिधास्यामि शापं वा ते जनार्दन ॥ १४-५४-१ (९३९४४)
वासुदेव उवाच। १४-५४-२क्ष् (७८७२)
तमो रजश्च सत्वं च विद्धि भावान्मदाश्रयान् ।
गस्थितिसृष्टिलयाध्यक्षो विष्णुब्रह्मेशसंज्ञितः ॥ १४-५४-२ (९३९४५)
कदाचित्तमसा रुद्रो विष्णुः सत्त्वगुणे स्थितः ।
रजस्यपि तथा ब्रह्मा स्वगुणान्यगुणानुभौ ॥ १४-५४-३ (९३९४६)
प्रणवात्मा च शब्दादींस्त्रिगुणात्मा चराचरम्।'
तथा रुद्रान्वसून्वाऽपि विद्धि मत्प्रभवान्द्विज ॥ १४-५४-४ (९३९४७)
मयि सर्वाणि भूतानि सर्वभूतेषु चाप्यहम् ।
स्थित इत्यभिजानीहि मा ते भूदत्र संशयः ॥ १४-५४-५ (९३९४८)
तथा दैत्यगणान्सर्वान्यक्षगन्धर्वराक्षसान् ।
नागानप्सरसश्चैव विद्धि मत्प्रभवान्द्विज ॥ १४-५४-६ (९३९४९)
सदसच्चैव यत्प्राहुरव्यक्तं व्यक्तमेव च ।
अक्षरं च क्षरं चैव सर्वमेतन्मदात्मकम् ॥ १४-५४-७ (९३९५०)
ये चाश्रमेषु वै धर्माश्चतुर्षु विहिता मुने ।
वैदिकानि च कर्माणि विद्धि सर्वं मदात्मकम् ॥ १४-५४-८ (९३९५१)
असच्च सच्चैव च यद्विश्वं सदसतः परम् ।
ततः परतरं नास्ति देवदेवात्सनातनात् ॥ १४-५४-९ (९३९५२)
ओंकारप्रभवान्वेदान्विद्धि मां त्वं भृगूद्वह ।
यूपं सोमं चरुं होमं त्रिदशाप्यायनं मखे ॥ १४-५४-१० (९३९५३)
होतारमपि हव्यं च विद्धिं मां भृगुनन्दन ।
अध्वर्युः कल्पकृच्चापि हविः परमसंस्कृतम् ॥ १४-५४-११ (९३९५४)
उद्गाता चापि मां स्तौति गीतघोषैर्महाध्वरे ।
प्रायश्चित्तेषु मां ब्रह्मञ्शान्तिमङ्गलवाचकाः ॥ १४-५४-१२ (९३९५५)

स्तुवन्ति विश्वकर्माणं सततं द्विजसत्तम ।
मम विद्धि सुतं धर्ममग्रजं द्विजसत्तम ॥१४-५४-१३ (९३९५६)
मानसं दयितं विप्र सर्वभूतदयात्मकम् ।
तत्राहं वर्तमानैश्च निवृत्तैश्चैव मानवैः ॥१४-५४-१४ (९३९५७)
बह्वीः संसरमाणो वै योनीर्वर्तामि सत्तम ।
लोकसंरक्षणार्थाय धर्मसंस्थापनाय च ॥१४-५४-१५ (९३९५८)
तैस्तैर्वेषैश्च रूपैश्च त्रिषु लोकेषु भार्गव ।
अहं विष्णुरहं ब्रह्मा शक्रोऽथ प्रभवाप्ययः ॥१४-५४-१६ (९३९५९)
भूतग्रामस्य सर्वस्य स्रष्टा संहार एव च ।
अधर्मे वर्तमानानां सर्वेषामहमच्युतः ॥१४-५४-१७ (९३९६०)
धर्मस्य सेतुं बध्नामि चलिते चलिते युगे ।
तास्ता योनीः प्रविश्याहं प्रजानां हितकाम्यया ॥१४-५४-१८ (९३९६१)
यदा त्वहं देवयोनौ वर्तामि भृगुनन्दन ।
तदाऽहं देववत्सर्वमाचरामि न संशयः ॥१४-५४-१९ (९३९६२)
यदा गन्धर्वयोनौ तु वर्तामि भृगुनन्दन ।
तदा गन्धर्ववच्चेष्टा सर्वाश्चेष्टामि भार्गव ॥१४-५४-२० (९३९६३)
नागयोनौ यदा चैव तदा वर्तामि नागवत् ।
यक्षराक्षसयोन्योस्तु यथावद्विचराम्यहम् ॥१४-५४-२१ (९३९६४)
मानुष्ये वर्तमाने तु कृपणं याचिता मया ।
न च ते जातसम्मोहा वचोऽगृह्णन्त मोहिताः ॥१४-५४-२२ (९३९६५)
भयं च महदुद्दिश्य त्रासिताः कुरवो मया ।
क्रुद्धेन भूत्वा तु पुर्यथावदनुदर्शिताः ॥१४-५४-२३ (९३९६६)
तेऽधर्मेणेह संयुक्ताः परीताःक कालधर्मणा ।
धर्मेण निहता युद्धे गताः स्वर्गं न संशयः ॥१४-५४-२४ (९३९६७)
लोकेषु पाण्डवाश्चैव गताः ख्यातिं द्विजोत्तम ।
एतत्ते सर्वमाख्यातं यन्मां त्वं परिपृच्छसि ॥ ॥१४-५४-२५ (९३९६८)

इति श्रीमन्महाभारते आश्वमेधिकपर्वणि अनुगीतापर्वणि
चतुःपञ्चाशोऽध्यायः ॥५४ ॥

Mahabharata - Ashvamedhika Parva - Chapter Footnotes

७-५४-८ दैवतानि च कर्माणि विद्धि सर्वान्गुणान्ममेति ट थ पाठः ॥
७-५४-१० ओंकारप्रमुखानिति झ पाठः ॥
७-५४-११ अध्वर्युः कल्पन इति ट थ पाठः ॥
७-५४-१२ गतमोक्षे महाध्वरे इति ट थ पाठः ॥
७-५४-१४ सर्वभूतगुणात्मकमिति क ट थ । पाठः ॥

७-५४-१९ पुनस्त्वहं देवयोनाविति ट थ पाठः ॥

---

अस्वमेधिकपर्व-अध्यय०५५
॥ श्रीः ॥
१४.५५. अध्यायः ५५

Mahabharata - Ashvamedhika Parva - Chapter Topics
कृष्णेनोदङ्काय विश्वरूपप्रदर्शनपूर्वकं पिपासाकाले
जललाभरूपवरदानम् ॥ १ ॥
कृष्णेनोदङ्कायामृतदानं चोदितेनेन्द्रेण कदाचिद्वनमध्ये
पिपासुमुदङ्कंप्रति चण्डालवेषेण जलस्वीकारप्रार्थने उदङ्केन
चण्डालत्वबुद्ध्या तदधिक्षेपः ॥ २ ॥
पश्चात्तस्य तिरोधानेन परितप्यन्तमुदङ्कंप्रति तत्र
संनिहितेन कृष्णेनेन्द्रकृतवञ्चनानिवेदनपूर्वकं मरुप्रदेशे
जललाभरूपवरदानम् ॥ ३ ॥

Mahabharata - Ashvamedhika Parva - Chapter Text

उदङ्क उवाच ।
अभिजानामि जगतः कर्तारं त्वां जनार्दन ।
नूनं भवत्प्रसादोऽयमिति मे नास्ति संशयः ॥ १४-५५-१ (९३९६९)
चित्तं च सुप्रसन्नं मे त्वद्भावगतमच्युत ।
विनिवृत्तश्च मे कोप इति विद्धि परंतप ॥ १४-५५-२ (९३९७०)
यदि त्वनुग्रहं कञ्चित्त्वत्तोऽर्हामि जनार्दन ।
द्रष्टुमिच्छामि ते रूपं वैष्णवं तन्निदर्शय ॥ १४-५५-३ (९३९७१)
वैशम्पायन उवाच। १४-५५-४क्ष् (७८७३)
ततः स तस्मै प्रीतात्मा दर्शयामास तद्वपुः ।
शाश्वतं वैष्णवं धीमान्ददृशे यद्धनंजयः ॥ १४-५५-४ (९३९७२)
स ददर्श महात्मानं विश्वरूपं महाभुजम् ।
सहस्रसूर्यप्रतिमं दीप्तिमत्पावकोपमम् ।
सर्वमाकाशमावृत्य तिष्ठन्तं सर्वतोमुखम् ॥ १४-५५-५ (९३९७३)
तद्दृष्ट्वा परमं रूपं विष्णोर्वैष्णवमद्भुतम् ।
विस्मयं च ययौ विप्रस्तं दृष्ट्वा परमेश्वरम् ॥ १४-५५-६ (९३९७४)
उदङ्क उवाच। १४-५५-७क्ष् (७८७४)
ग्नमोनमस्ते सर्वात्मन्नारायण परात्मक ।
परमात्मन्पद्मनाभ पुण्डरीकाक्ष माधव ॥ १४-५५-७ (९३९७५)

हिरण्यगर्भरूपाय संसारोत्तारणाय च ।
पुरुषाय पुराणाय शान्तश्यामाय ते नमः ॥ १४-५५-८ (९३९७६)
अविद्यातिमिरादित्यं भवव्याधिमहौषधिम् ।
संसारार्णवसारं त्वां प्रणमामि गतिर्भव ॥ १४-५५-९ (९३९७७)
सर्ववेदैकवेद्याय सर्ववेदमयाय च ।
वासुदेवाय नित्याय नमो भक्तप्रियाय ते ॥ १४-५५-१० (९३९७८)
दयया दुःखमोहान्मां सुमुद्धर्तुमिहार्हसि ।
कर्मभिर्बहुभिः पापैर्बद्धं पाहि जनार्दन ॥' १४-५५-११ (९३९७९)
विश्वकर्मन्नमस्तेऽस्तु विश्वात्मन्विश्वकसम्भव ।
पद्भ्यां ते पृथिवी व्याप्ता शिरसा चावृतं नभः ॥ १४-५५-१२ (९३९८०)
द्यावापृथिव्योर्यन्मध्यं जठरेण तवावृतम् ।
भुजाभ्यामावृताश्चाशास्त्वमिदं सर्वमच्युत ॥ १४-५५-१३ (९३९८१)
संहरस्व पुनर्देव रूपमक्षय्यमुत्तमम् ।
पुनस्त्वां स्वेन रूपेण द्रष्टुमिच्छामि शाश्वतम् ॥ १४-५५-१४ (९३९८२)
वैशम्पायन उवाच। १४-५५-१५क्ष् (७८७५)
तमुवाच प्रसन्नात्मा गोविन्दो जनमेजय ।
वरं वृणीष्वेति तदा तमुदङ्कोऽब्रवीदिदम्। १४-५५-१५ (९३९८३)
पर्याप्त एष एवाद्य वरस्त्वत्तो महाद्युते ।
यत्ते रूपमिदं कृष्ण पश्यामि प्रभवाप्ययम् ॥ १४-५५-१६ (९३९८४)
तमब्रकवीत्पुनः कृष्णो मा त्वमत्र विचारय
। अवश्यमेतत्कर्तव्यममोघं दर्शनं मम ॥ १४-५५-१७ (९३९८५)
उदङ्कक उवाच। १४-५५-१८क्ष् (७८७६)
अवश्यं करणीयं च यद्येतन्मन्यसे विभो ।
तोयमिच्छामि यत्रेष्टं मरुष्वेतद्धि दुर्लभम् ॥ १४-५५-१८ (९३९८६)
ततः संहृत्य तत्तेजः प्रोवाचोदङ्कमीश्वरः ।
एष्टव्ये सति चिन्त्योऽहमित्युक्त्वा द्वारकां ययौ ॥ १४-५५-१९ (९३९८७)
ततः कदाचिद्भगवानुदङ्कस्तोयकाङ्क्षया ।
तृषितः परिचक्राम मरौ सस्मार चाच्युतम् ॥ १४-५५-२० (९३९८८)
ततो दिग्वाससं धीमान्मातङ्गं मलपङ्किनम् ।
अपश्यत मरौ तस्मिञ्श्वयूथपरिवारितम् ॥ १४-५५-२१ (९३९८९)
भीषणं बद्धनिस्त्रिंशं बाणकार्मुकधारिणम् ।
तस्याधःस्रोतसोऽपश्यद्वारि भूरि द्विजोत्तमः ॥ १४-५५-२२ (९३९९०)
स्मरन्नेव च तं प्राह मातङ्गः प्रहसन्निव ।
एह्युदङ्क प्रतीच्छस्व मत्तो वारि भृगूद्वह ।
कृपा हि मे सुमहती त्वां दृष्ट्वा तृट्समाश्रितम् ॥ १४-५५-२३ (९३९९१)
इत्युक्तस्तेन स मुनिस्तत्तोयं नाभ्यनन्दन ।

चिक्षेप च स तं धीमान्वाग्भिरुग्राभिरच्युतम्। १४-५५-२४ (९३९९२)
पुनःपुनश्च मातङ्ग पिबस्वेति तमब्रवीत् ।
न चापिबत्स सक्रोधः क्षुभितेनान्तरात्मना ॥१४-५५-२५ (९३९९३)
स तथा निश्चयात्तेन प्रत्याख्यातो महात्मना ।
श्वभिः सह महाराज तत्रैवान्तरधीयत ॥१४-५५-२६ (९३९९४)
उदङ्कस्तं तथा दृष्ट्वा ततो व्रीडितमानसः ।
मेने प्रलब्धमात्मानं कृष्णेनामित्रघातिना ॥१४-५५-२७ (९३९९५)
अथ तेनैव मार्गेण शङ्खचक्रगदाधरः ।
आजगाम महाबाहुरुदङ्कश्चैनमब्रवीत् ॥१४-५५-२८ (९३९९६)
न युक्तं तादृशं दातुं त्वया पुरुषसत्तम ।
सलिलं विप्रमुख्येभ्यो मातङ्गस्रोतसा विभो ॥१४-५५-२९ (९३९९७)
इत्युक्तवचनं तं तु महाबुद्धिर्जनार्दनः ।
उदङ्कं श्लक्ष्णया वाचा सान्त्वयन्निदमब्रवीत् ॥१४-५५-३० (९३९९८)
यादृशेनेह रूपेण योग्यं दातुं धृतेन वै ।
तादृशं खलु ते दत्तं यच्च त्वं नावबुध्यथाः ॥१४-५५-३१ (९३९९९)
मया त्वदर्थमुक्तो वै वज्रपाणिः पुरंदरः ।
उदङ्कायामृतं देहि तोयरूपमिति प्रभुः ॥१४-५५-३२ (९४०००)
स मामुवाच देवेन्द्र न मर्त्योऽमर्त्यतां व्रजेत् ।
अन्यमस्मै वरं देहीत्यसकृद्भृगुनन्दन ॥१४-५५-३३ (९४००१)
अमृतं देयमित्येव मयोक्तः स शचीपतिः ।
स मां प्रसाद्य देवेन्द्रः पुनरेवेदमब्रवीत् ॥१४-५५-३४ (९४००२)
यदि देयमवश्यं वै मातङ्गोऽहं महामते ।
भूत्वाऽमृतं प्रदास्यामि भार्गवाय महात्मने ॥१४-५५-३५ (९४००३)
यद्येवं प्रतिगृह्णाति भार्गवोऽमृतमद्य वै ।
प्रदातुमेष गच्छामि भार्गवस्यामृतं विभो ।
प्रत्याख्यातस्त्वहं तेन दास्यामि न कथञ्चन ॥ १४-५५-३६ (९४००४)
स तथा समयं कृत्वा तेन रूपेण वासवः ।
उपस्थितस्त्वया चापि प्रत्याख्यातोऽमृतं ददत् ।
चाण्डालरूपी भगवान्सुमहांस्ते व्यतिक्रमः ॥ १४-५५-३७ (९४००५)
यत्तु शक्यं मया कर्तुं भूय एव तवेप्सितम् ।
तोयेप्सां तव दुर्धर्षां करिष्ये सफलामहम् ॥१४-५५-३८ (९४००६)
येष्वहःसु च ते ब्रह्मन्सलिलेप्सा भविष्यति ।
तदा मरौ भविष्यन्ति जलपूर्णाः पयोधराः ॥१४-५५-३९ (९४००७)
रसवच्च प्रदास्यन्ति तोयं ते भृगुनन्दन ।
उदङ्कमेघा इत्युक्ताः ख्यातिं यास्यन्ति चापि ते ॥१४-५५-४० (९४००८)
इत्युक्तः प्रीतिमान्विप्रः कृष्णेन स बभूव ह ।

अद्याप्युदङ्कमेघाश्च मरौ वर्षन्ति भारत ॥ ॥१४-५५-४१ (९४००९)

इति श्रीमन्महाभारते आश्वमेधिकपर्वणि अनुगीतापर्वणि
पञ्चपञ्चाशोऽध्यायः ॥ ५५ ॥
Mahabharata - Ashvamedhika Parva - Chapter Footnotes

७-५५-३ ते रूपमैश्वरमिति झ पाठः ॥
७-५५-१९ एष्टव्ये जलेऽपेक्षिते सति ॥
७-५५-२१ मातङ्गं चण्डालविशेषम् ॥
७-५५-२२ अधः पाददेशे स्रोतसो दृतेर्वारीति संबन्धः । ततः
शङ्कितमानस इति क ट थ पाठः ॥
७-५५-२४ चिक्षेप निन्दितवान् ॥
७-५५-२७ प्रलब्धं वञ्चितम् ॥

---

अस्वमेधिकपर्व-अध्यय०५६
॥ श्रीः ॥
१४.५६. अध्यायः ५६

अश्वमेधपर्व ॥ १ ॥
Mahabharata - Ashvamedhika Parva - Chapter Topics
वैशंपायनेन जनमेजयंप्रत्युदङ्कोपाख्यानकथनारम्भः ॥ १ ॥
उदङ्ककृतपरिचर्याविशेषतुष्टेन गौतमेन तस्मै प्रीत्यतिशयेन
चिरादपि गृहगमनायाभ्यननुज्ञानम् ॥ २ ॥
कदाचन गुरुशासनेन काष्ठमारमाहृतवतोदङ्केन
काष्ठलग्नजरापलितनिजकेशावलोकनेन परिदेवनम् ॥ ३ ॥
ततस्तदबोधितनिजरोदनहेतुना गुरुणा तस्मै निजतनयाप्रतिपादनम् ॥ ४ ॥
ततस्तेन गुरुपत्नीनिदेशेन कुण्डलयाचनाय सौदासंप्रति गमनम् ॥ ५ ॥

Mahabharata - Ashvamedhika Parva - Chapter Text

जनमेजय उवाच ।
उदङ्कः केन तपसा संयुक्तो वै महामनाः ।
यः शापं दातुकामोऽभूद्विष्णवे प्रभविष्णवे ॥१४-५६-१ (९४०१०)
वैशम्पायन उवाच।१४-५६-२क्ष् (७८७७)
उदङ्को महता युक्तस्तपसा जनमेजय ।
गुरभक्तः स तेजस्वी नान्यत्किञ्चिदपूजयत् ॥१४-५६-२ (९४०११)

सर्वेषामृषिपुत्राणामेष आसीन्मनोरथः ।
औदङ्कीं गुरुवृत्तिं वै प्राप्नुयामेति भारत ॥१४-५६-३ (९४०१२)
गौतमस्य तु शिष्याणां बहूनां जनमेजय ।
उदङ्केऽभ्यधिका प्रीतिः स्नेहश्चैवाभवत्तदा ॥१४-५६-४ (९४०१३)
स तस्य दमशौचाभ्यां विक्रान्तेन च कर्मणा ।
सम्यक्चैवोपचारेण गौतमः प्रीतिमानभूत् ॥१४-५६-५ (९४०१४)
अथ शिष्यसहस्राणि समनुज्ञाय गौतमः ।
उदङ्कं परया प्रीत्या नाभ्यनुज्ञातुमैच्छत ॥१४-५६-६ (९४०१५)
तं क्रमेण जरा तात प्रतिपेदे महामुनिम् ।
न चान्वबुध्यत तदा स मुनिर्गुरुवत्सलः ॥१४-५६-७ (९४०१६)
ततः कदाचिद्राजेन्द्र काष्ठान्यानयितुं ययौ ।
उदङ्कः काष्ठभारं च महान्तं समुपानयत् ॥१४-५६-८ (९४०१७)
स तद्भाराभिभूतात्मा काष्ठभारमरिंदम ।
निचिक्षेप क्षितौ राजन्परिश्रान्तो बुभुक्षितः ॥१४-५६-९ (९४०१८)
तस्य काष्ठे विलग्नाऽभूज्जटा रूप्यसमप्रभा ।
ततः काष्ठैः सह तदा पपात धरणीतलम् ॥१४-५६-१० (९४०१९)
ततः स भारनिष्पिष्टः क्षुधाविष्टश्च भारत ।
दृष्ट्वा तां वयसोऽवस्थां रुरोदार्तस्वरं तदा ॥१४-५६-११ (९४०२०)
ततो गुरुसुता तस्य पद्मपत्रनिभानना ।
जग्राहाश्रूणि सुश्रोणी करेण पृथुलोचना ।
पितुर्नियोगाद्धर्मज्ञा शिरसाऽवनता तदा ॥ १४-५६-१२ (९४०२१)
तस्या निपेततुर्दग्धौ करौ तैरश्रुबिन्दुभिः ।
न हि तानश्रुपातांस्तु शक्ता धारयितुं मही ।
गौतमस्त्वब्रवीद्विप्रमुदङ्कं प्रीतमानसः ॥ १४-५६-१३ (९४०२२)
कस्मात्तात तवाद्येह शोकोत्तरमिदं मनः ।
स स्वैरं ब्रूहि विप्रर्षे श्रोतुमिच्छामि तत्त्वतः ॥१४-५६-१४ (९४०२३)
उदङ्क उवाच।१४-५६-१५क्ष् (७८७८)
भवद्गतेन मनसा भवत्प्रियचिकीर्षया ।
भवद्भक्तिगतेनेह भवद्भावानुगेन च ॥१४-५६-१५ (९४०२४)
जरेयं नाघबुद्धा मे नाभिज्ञातं सुखं च मे ।
शतवर्षोषितं मां हि न त्वमन्यनुजानिथाः ॥१४-५६-१६ (९४०२५)
भवता त्वभ्यनुज्ञाताः शिष्याः प्रत्यवरा मम ।
उपपन्ना द्विजश्रेष्ठ शतशोऽथ सहस्रशः ॥१४-५६-१७ (९४०२६)
गौतम उवाच।१४-५६-१८क्ष् (७८७९)
त्वत्प्रीतियुक्तेन मया गुरुशुश्रूषया तव ।
व्यतिक्रामन्महाकालो नावबुद्धो द्विजर्षभ ॥१४-५६-१८ (९४०२७)

किं त्वद्य यदि ते श्रद्धा गमनं प्रति भार्गव ।
अनुज्ञां प्रतिगृह्य त्वं स्वगृहान्गाच्छ माचिरम् ॥१४-५६-१९ (९४०२८)
उदङ्क उवाच।१४-५६-२०क्ष् (७८८०)
गुर्वर्तं कं प्रयच्छामि ब्रूहि त्वं द्विजसत्तम ।
तमुपाहृत्य गच्छेयमनुज्ञातस्त्वया विभो ॥१४-५६-२० (९४०२९)
गौतम उवाच।१४-५६-२१क्ष् (७८८१)
दक्षिणापरितोषो वै गुरूणां सद्भिरुच्यते ।
तवि ह्याचरतो धर्मं तुष्टोऽहं वै न संशयः ।
इत्थं च परितुष्टं मां विजानीहि भृगूद्वह ॥ १४-५६-२१ (९४०३०)
युवा षोडशवर्षो हि यद्यद्य भविता भवान् ।
ददानि पत्नीं कन्यां च स्वां ते दुहितरं द्विज ।
एतामृतेऽङ्गना नान्या त्वत्तेजोऽर्हति सेवितुम् ॥ १४-५६-२२ (९४०३१)
ततस्तां प्रतिजग्राह युवा भूत्वा यशस्विनीम् ।
गुरुणा चाभ्यनुज्ञातो गुरुपत्नीमथाब्रवीत् ॥१४-५६-२३ (९४०३२)
किं भवत्यै प्रयच्छामि गुर्वर्थं विनियुङ्क्ष माम् ।
प्रियं हितं च काङ्क्षामि प्राणैरपि धनैरपि ॥१४-५६-२४ (९४०३३)
यद्दुर्लभं हि लोकेऽस्मिन्रत्नमत्यद्भुतं महत् ।
तदानयेयं तपसा न हि मेऽत्रास्ति संशयः ॥१४-५६-२५ (९४०३४)
अहल्योवाच।१४-५६-२६क्ष् (७८८२)
परितुष्टाऽस्मि ते विप्र नित्यं भक्त्या तवानघ ।
पर्याप्तमेतद्भद्रं ते गच्छ तात यथेप्सितम् ॥१४-५६-२६ (९४०३५)
वैशम्पायन उवाच।१४-५६-२७क्ष् (७८८३)
उदङ्कस्तु महाराज पुनरेवाब्रवीद्वचः ।
आज्ञापयस्व मां मातः कर्तव्यं च तव प्रियम् ॥१४-५६-२७ (९४०३६)
अहल्योवाच।१४-५६-२८क्ष् (७८८४)
सौदासपत्न्या विधृते दिव्ये ये मणिकुण्डले ।
ते समानय भद्रं ते गुर्वर्थः सुकृतो भवेत् ॥१४-५६-२८ (९४०३७)
वैशम्पायन उवाच।१४-५६-२९क्ष् (७८८५)
स तथेति प्रतिश्रुत्य जगाम जनमेजय ।
गुरुपत्नीप्रियार्थं वै ते समानयितुं तदा ॥१४-५६-२९ (९४०३८)
स जगाम ततः शीघ्रमुदङ्को ब्राह्मणर्षभः ।
सौदासं पुरुषादं वै भिक्षितुं मणिकुण्डले ॥१४-५६-३० (९४०३९)
गौतमस्त्वब्रवीत्पत्नीमुदङ्को नात्र दृश्यते ।
इति पृष्टा तमाचष्ट कुण्डलार्थे गतं च सा ॥१४-५६-३१ (९४०४०)
ततः प्रोवाच पत्नीं स न ते सम्यगिदं कृतम् ।
शप्तः स पार्थिवो नूनं ब्राह्मणं तं वधिष्यति ॥१४-५६-३२ (९४०४१)

अहल्योवाच। १४-५६-३३क्ष् (७८८६)
अजानन्त्या नियुक्तः स भगवन्ब्राह्मणो मया ।
भवत्प्रसादान्न भयं किञ्चित्तस्य भविष्यति ॥ १४-५६-३३ (९४०४२)
इत्युक्तः प्राह तां पत्नीमेवमस्त्विति गौतमः ।
उदङ्कोऽपि वने शून्ये राजानं तं ददर्श ह ॥ ॥ १४-५६-३४ (९४०४३)

इति श्रीमन्महाभारते आश्वमेधिकपर्वणि अनुगीतापर्वणि
षट्पञ्चाशोऽध्यायः ॥ ५६ ॥
Mahabharata - Ashvamedhika Parva - Chapter Footnotes

७-५६-११ निष्पिष्टः चूर्णीभूत इव ।कवेरार्तस्य धीमत इति
क ट थ पाठः ॥
७-५६-१६ अभ्यनुजानिथाः अभ्यन्वजानीथा अभ्यनुज्ञातवानसि ॥
७-५६-२६ नित्यं भगवता सहेति क थ पाठः ॥

---

अस्वमेधिकपर्व-अध्यय०५७
॥ श्रीः ॥
१४.५७. अध्यायः ५७

Mahabharata - Ashvamedhika Parva - Chapter Topics
शापाद्राक्षसत्वं गतेन सौदासेनोदङ्कभक्षणोद्यमे उदङ्केन पुनः
प्रत्यागमनप्रतिज्ञापूर्वकं तम्प्रति कुण्डलयाचनम् ॥ १ ॥
उदङ्केन सौदासवचसा तत्पत्नींप्रति कुण्डलयाचने तया तम्प्रति
मणिकुण्डलमहिमादिकथनपूर्वकं राजाभिज्ञानानयनचोदना ॥ २ ॥

Mahabharata - Ashvamedhika Parva - Chapter Text

वैशम्पायन उवाच ।
स तं दृष्ट्वा तथाभूतं राजानं घोरदर्शनम् ।
दीर्घश्मश्रुधरं नॄणां शोणितेन समुक्षितम् ॥ १४-५७-१ (९४०४४)
चकार न व्यथां विप्रो राजा त्वेनमथाब्रवीत् ।
प्रत्युत्थाय महातेजा भयकर्ता यमोपमः ॥ १४-५७-२ (९४०४५)
दिष्ट्या त्वमसि कल्याण षष्ठे काले ममान्तिकम् ।
भक्ष्यं मृगयमाणस्य सम्प्राप्तो द्विजसत्तम ॥ १४-५७-३ (९४०४६)
उदङ्क उवाच। १४-५७-४क्ष् (७८८७)
राजन्गुर्वर्थिनं विद्धि चरन्तं मामिहागतम् ।

न च गुर्वर्थमुद्युक्तं हिंस्यमाहुर्मनीषिणः ॥१४-५७-४ (९४०४७)
राजोवाच।१४-५७-५क्ष् (७८८८)
षष्ठे काले ममाहारो विहितो द्विजसत्तम ।
न शक्यस्त्वं समुत्स्रष्टुं क्षुधितेन मयाऽद्य वै ॥१४-५७-५ (९४०४८)
उदङ्क उवाच।१४-५७-६क्ष् (७८८९)
एवमस्तु महाराजि समयः क्रियतां तु मे ।
गुर्वर्थमभिनिर्वर्त्य पुनरेष्यामि ते वशम् ॥१४-५७-६ (९४०४९)
संश्रुतश्च मया योऽर्थो गुरवे राजसत्तम ।
त्वदधीनः स राजेन्द्र तं त्वां भिक्षे नरेश्वर ॥१४-५७-७ (९४०५०)
ददासि विप्रमुख्येभ्यस्त्वं हि रत्नानि नित्यदा ।
दाता च त्वं नरव्याघ्र पात्रभूतः क्षिताविह ।
पात्रं प्रतिग्रहे चापि विद्धि मां नृपसत्तम ॥ १४-५७-८ (९४०५१)
उपाहृत्य गुरोरर्थं त्वदायत्तमरिंदम ।
समयेनेह राजेन्द्र पुनरेष्यामि ते वशम् ॥१४-५७-९ (९४०५२)
सत्यं ते प्रतिजानामि नात्र मिथ्या कथञ्चन ।
अनृतं नोक्तपूर्वं मे स्वैरेष्वपि कुतोऽन्यथा ॥१४-५७-१० (९४०५३)
सौदास उवाच।१४-५७-११क्ष् (७८९०)
यदि मत्तस्तवायत्तो गुर्वर्थः कृत एव सः ।
यदि चास्ति प्रतिग्राह्यं साम्प्रतं तद्वदस्व मे ॥१४-५७-११ (९४०५४)
उदङ्क उवाच।१४-५७-१२क्ष् (७८९१)
प्रतिग्राह्यो मतो मे त्वं सदैव पुरुषर्षभ ।
सोहं त्वामनुसम्प्राप्तो भिक्षितुं मणिकुण्डले ॥१४-५७-१२ (९४०५५)
सौदास उवाच।१४-५७-१३क्ष् (७८९२)
पत्न्यास्ते मम विप्रर्षे उचिते मणिकुण्डले ।
वरयार्थं त्वमन्यं वै तं ते दास्यामि सुव्रत ॥१४-५७-१३ (९४०५६)
उदङ्ग उवाच।१४-५७-१४क्ष् (७८९३)
अलं ते व्यपदेशेन प्रमाणं यदि ते वयम् ।
प्रयच्छ कुण्डले मह्यं सत्यवाग्भव पार्थिव ॥१४-५७-१४ (९४०५७)
वैशम्पायन उवाच।१४-५७-१५क्ष् (७८९४)
इत्युक्तस्त्वब्रवीद्राजा तमुदङ्कं पुनर्वचः ।
गच्छ मद्वचनाद्देवीं ब्रूहि देहीति सत्तम ॥१४-५७-१५ (९४०५८)
सैवमुक्ता त्वया नूनं मद्वाक्येन शुचिव्रता ।
प्रदास्यति द्विजश्रेष्ठ कुण्डले ते न संशयः ॥१४-५७-१६ (९४०५९)
उदङ्क उवाच।१४-५७-१७क्ष् (७८९५)
क्व पत्नी भवतः शक्या मया द्रष्टुं नरेश्वर ।
स्वयं वाऽपि भवान्पत्नीं किमर्थं नोपसर्पति ॥१४-५७-१७ (९४०६०)

सौदास उवाच। १४-५७-१८क्ष् (७८९६)
तां द्रक्ष्यति भवानद्य कास्मिंश्चिद्वननिर्झरे ।
षष्ठे काले न हि मया सा शक्या द्रष्टुमद्य वै ॥ १४-५७-१८ (९४०६१)
वैशम्पायन उवाच। १४-५७-१९क्ष् (७८९७)
उदङ्कस्तु तथोक्तः स जगाम भरतर्षभ ।
मदयन्तीं च दृष्ट्वा स ज्ञापयत्स्वप्रयोजनम् ॥ १४-५७-१९ (९४०६२)
सौदासवचनं श्रुत्वा ततः सा पृथुलोचना ।
प्रत्युवाच महाबुद्धिमुदङ्कं जनमेजय ॥ १४-५७-२० (९४०६३)
एवमेतन्महाब्रह्मन्नानृतं वदसेऽनघ ।
अभिज्ञानं तु किञ्चित्त्वं समानयितुमर्हसि ॥ १४-५७-२१ (९४०६४)
इमे हि दिव्ये मणिकुण्डले मे
देवाश्च यक्षाश्च महर्षयश्च ।
तैस्तैरुपायैरपहर्तुकामा-
श्छिद्रेषु नित्यं परितर्कयन्ति ॥ १४-५७-२२ (९४०६५)
निक्षिप्तमेतद्भुवि पन्नगास्तु
रत्नं समासाद्य परामृशेयुः ।
यक्षास्तथोच्छिष्टधृतं सुराश्च
निद्रावशाद्वा परिधर्षयेयुः ॥ १४-५७-२३ (९४०६६)
छिद्रेष्वेतेष्विमे नित्यं ह्रियते द्विजसत्तम ।
देवराक्षसनागानामप्रमत्तेनि धार्यते ॥ १४-५७-२४ (९४०६७)
एते दिवापि भासेते रात्रौ च द्विजसत्तम ।
नक्तं नक्षत्रताराणां प्रभामाक्षिप्य वर्ततः ॥ १४-५७-२५ (९४०६८)
एते ह्यामुच्य भगन्क्षुत्पिपासाभयं कुतः ।
विषाग्निश्वापदेभ्यश्च भयं जातु न विद्यते ॥ १४-५७-२६ (९४०६९)
ह्रस्वेन चैते आमुक्ते भवतो ह्रस्वके तदा ।
अनुरूपेण चामुक्ते जायेते तत्प्रमाणके ॥ १४-५७-२७ (९४०७०)
एवंविधे ममैते वै कुण्डले परमार्चिते ।
त्रिषु लोकेषु विज्ञाते तदभिज्ञानमानय ॥ ॥ १४-५७-२८ (९४०७१)

इति श्रीमन्महाभारते आश्वमेधिकपर्वणि अनुगीतापर्वणि
सप्तपञ्चाशोऽध्यायः ॥ ५७ ॥

Mahabharata - Ashvamedhika Parva - Chapter Footnotes

७-५७-२४ छिद्रेष्वेतेष्विमे इति पूर्वान्वयि ।नागानां नागैः ह्रियेत
इति सम्बन्धः ॥

अस्वमेधिकपर्व-अध्यय०५८
॥ श्रीः ॥
१४.५८. अध्यायः ५८

Mahabharata - Ashvamedhika Parva - Chapter Topics
उदङ्केनाभिज्ञाननिवेदनेनि मदयन्तीतः कुण्डलग्रहणपूर्वकं प्रतिनिवर्तनम् ॥ १ ॥
मध्येमार्गं क्षुधाविष्टेन तेन बिल्वतरुमारुह्य शाखायां कुण्डलासञ्जनपूर्वकं फलपातनाय शाखाचालनम् ॥ २ ॥
तत्र पतत्फलघट्टनेन कुण्डलयोरधःपतने केनचिदुरगवरेण तदपहृत्य नागलोकगमनम् ॥ ३ ॥
तत इन्द्रसाहाय्याद्भूविदारणेन नागलोकंगतेनोदङ्केन तत्राश्ववचसा तदपानदेशधमने तन्निर्गतधूमपटलनिरुद्धैः सर्पैरुदङ्काय कुण्डलप्रत्यर्पणम् ॥ ४ ॥
तत उदङ्केन गुरुपत्न्यै कुण्डलप्रदानम् ॥ ५ ॥

Mahabharata - Ashvamedhika Parva - Chapter Text

वैशम्पायन उवाच ।
स मित्रसहमासाद्य अभिज्ञानमयाचत ।
तस्मै ददावभिज्ञानं स चेक्ष्वाकुवरस्तदा ॥ १४-५८-१ (९४०७२)
सौदास उवाच। १४-५८-२क्ष् (७८९८)
न चैवैषा गतिः क्षेम्या न चान्या विद्यते गतिः ।
एतन्मे तत्वमाज्ञाय प्रयच्छ मणिकुण्डले ॥ १४-५८-२ (९४०७३)
इत्युक्तस्तामुदङ्कस्तु भर्तुर्वाक्यमथाब्रवीत् ।
श्रुत्वा च सा तदा प्रादात्ततस्ते मणिकुण्डले ॥ १४-५८-३ (९४०७४)
अवाप्य कुण्डले ते तु राजानं पुनरब्रवीत् ।
किमेतद्गुह्यवचनं श्रोतुमिच्छामि पार्थिव ॥ १४-५८-४ (९४०७५)
सौदास उवाच। १४-५८-५क्ष् (७८९९)
प्रजाविसर्गाद्विप्रान्वै क्षत्रियाः पूजयन्ति ह ।
विप्रेभ्यश्चापि बहवो दोषाः प्रादुर्भवन्ति नः ॥ १४-५८-५ (९४०७६)
सोहं द्विजेभ्यः प्रणतो विप्राद्दोषमवाप्तवान् ।
गतिमन्यां न पश्यामि मदयन्तीसहायवान् ॥ १४-५८-६ (९४०७७)
न चान्यामपि पश्यामि गतिं गतिमतांवर ।
स्वर्गद्वारस्य गमने स्थाने चेह द्विजोत्तम ॥ १४-५८-७ (९४०७८)
न हि राज्ञा विशेषेण विरुद्धेन द्विजातिभिः ।

शक्यं हि लोके स्थातुं वै प्रेत्य वा सुखमेधितुम् ॥१४-५८-८ (९४०७९)
तदिष्टे ते मया दत्ते एते स्वे मणिकुण्डले ।
यः कृतस्तेऽद्य समयः सफलं तं कुरुष्य मे ॥१४-५८-९ (९४०८०)
उदङ्क उवाच।१४-५८-१०क्ष् (७९००)
राजंस्तथेह कर्तास्मि पुनरेष्यामि ते वशम् ।
प्रश्नं च कञ्चित्प्रष्टुं त्वां व्यवसिष्ये परंतप ॥१४-५८-१० (९४०८१)
सौदास उवाच।१४-५८-११क्ष् (७९०१)
ब्रूहि विप्र यथाकामं प्रतिवक्तास्मि ते वचः ।
छेत्तास्मि संशयं तेऽद्य न मेऽत्रास्ति विचारणा ॥१४-५८-११ (९४०८२)
उदङ्क उवाच।१४-५८-१२क्ष् (७९०२)
प्राहुर्वाक्संयतं विप्रं धर्मनैपुणदर्शिनः ।
मित्रेषु यश्च विषमः स्तेन इत्येव तं विदुः ॥१४-५८-१२ (९४०८३)
स बवान्मित्रतामद्य सम्प्राप्तो मम पार्थिव ।
स मे बुद्धिं प्रयच्छस्व सम्मतां पुरुषर्षभ ॥१४-५८-१३ (९४०८४)
अवाप्तार्थोऽहमद्येह भवांश्च पुरुषादकः ।
भवत्सकाशमागन्तुं क्षमं मम न वेति वै ॥१४-५८-१४ (९४०८५)
सौदास उवाच।१४-५८-१५क्ष् (७९०३)
क्षमं चेदिह वक्तव्यं मया द्विजवरोत्तम ।
मत्समीपं द्विजश्रेष्ट नागन्तव्यं कथञ्चन ॥१४-५८-१५ (९४०८६)
एवं तव प्रपश्यामि श्रेयो भृगुकुलोद्वह ।
आगच्छतो हि ते विप्रि भवेन्मृर्त्युन संशयः ॥१४-५८-१६ (९४०८७)
वैशम्पायन उवाच।१४-५८-१७क्ष् (७९०४)
इत्युक्तः स तदा राजा क्षमं बुद्धिमता हितम् ।
अनुज्ञाप्य स राजानमहल्यां प्रति जग्मिवान् ॥१४-५८-१७ (९४०८८)
गृहीत्वा कुण्डले दिव्ये गुरुपत्न्याः प्रियंकरः ।
जवेन महता प्रायाद्गौतमस्याश्रमं प्रति ॥१४-५८-१८ (९४०८९)
यथा तयो रक्षणं च मदयन्त्याऽभिभाषितम् ।
तथा ते कुण्डले बध्वा तदा कृष्णाजिनेऽनयत् ॥१४-५८-१९ (९४०९०)
स कस्मिंश्चित्क्षुधाविष्टः फलभारसमन्वितम् ।
बिल्वं ददर्श विप्रर्षिरारुरोह च तं ततः ॥१४-५८-२० (९४०९१)
शाखास्वासज्य तस्यैव कृष्णाजिनमरिंदम ।
पातयामास बिल्वानि तदा स द्विजपुङ्गवः ॥१४-५८-२१ (९४०९२)
अथ पातयमानस्य बिल्वापहृतचक्षुषः ।
न्यपतंस्तानि बिल्वानि तस्मिन्नेवाजिने विभो ॥१४-५८-२२ (९४०९३)
यस्मिंस्ते कुण्डले बद्धे तदा द्विजवरेण वै ।
बिल्वप्रहारैस्तस्याथ व्यशीर्यद्बन्धनं ततः ॥१४-५८-२३ (९४०९४)

सकुण्डलं तदजिनं पपात सहसा तरोः ।
विशीर्णबन्धने तस्मिन्गते कृष्णाजिने महीम् ॥१४-५८-२४ (९४०९५)
अपश्यद्भुजगः कश्चित्ते तत्र मणिकुण्डले ।
ऐरावतकुलोद्भूतः शीघ्रो भूत्वा तदा हि सः ॥१४-५८-२५ (९४०९६)
विदश्यास्येन वल्मीकं विवेशाथ स कुण्डले ।
ह्रियमाणे तु दृष्ट्वा स कुण्डले भुजगेन ह ॥१४-५८-२६ (९४०९७)
पपात वृक्षात्सोद्विगो दुःखात्परमकोपनः ।
स दण्डकाष्ठमादाय वल्मीकमखनत्तदा ॥१४-५८-२७ (९४०९८)
श्अहानि त्रिंशदव्यग्रः पञ्च चान्यानि भारत ॥
क्रोधामर्षाभिसंतप्तस्तदा ब्राह्मणिसत्तमः ॥ १४-५८-२८ (९४०९९)
तस्य वेगमसह्यं तमसहन्ती वसुन्धरा ।
दण्डकाष्ठाभिनुन्नाङ्गी चचाल भृशमाकुला ।
ततः खनत एवाथ विप्रर्षेर्धरणीतलम्
नागलोकस्य पन्थानं कर्तुकामस्य निश्चयात् ॥ १४-५८-२९ (९४१००)
रथेन हरियुक्तेन तं देशमुपजग्मिवान् ।
वज्रपाणिर्महातेजास्तं ददर्श द्विजोत्तमम् ॥१४-५८-३० (९४१०१)
वैशम्पायन उवाच।१४-५८-३१क्ष् (७९०५)
स तु तं ब्राह्मणो भूत्वा तस्य दुःखेन दुःखितः ।
उदङ्कमब्रवीद्वाक्यं नैतच्छक्यं त्वयेति वै ॥१४-५८-३१ (९४१०२)
इतो हि नागलोको वै योजनानि सहस्रशः ।
न दण्डकाष्ठसाध्यं च मन्ये कार्यमिदं तव ॥१४-५८-३२ (९४१०३)
उदङ्क उवाच।१४-५८-३३क्ष् (७९०६)
नागलोके यदि ब्रह्मन्न शक्ये कुण्डले मया ।
प्राप्तुं प्राणान्विमोक्ष्यामि पश्यतस्ते द्विजोत्तम ॥१४-५८-३३ (९४१०४)
वैशम्पायन उवाच।१४-५८-३४क्ष् (७९०७)
यदा स नाशकत्तस्य निश्चयं कर्तुमन्यथा ।
वज्रपाणिस्तदा दण्डं वज्रास्त्रेण युयोज ह ॥१४-५८-३४ (९४१०५)
ततो वज्रप्रहारैस्तैर्दार्यमाणा वसुन्धर ।
नागलोकस्य पन्थानमकरोज्जनमेजय ॥१४-५८-३५ (९४१०६)
स तेन मार्गेण तदा नागलोकं विवेश ह ।
ददर्श नागलोकं च योजनानि सहस्रशः ॥१४-५८-३६ (९४१०७)
प्रकारनिचयैर्दिव्यैर्मणिमुक्तास्वलङ्कृतैः ।
उपपन्नं महाभाग शातकुम्भमयैस्तथा ॥१४-५८-३७ (९४१०८)
वापीः स्फटिकसोपाना नदीस्च विमलोदकाः ।
ददर्श वृक्षांश्च बहून्नानाद्विजगणायुतान् ॥१४-५८-३८ (९४१०९)
तस्य लोकस्य च द्वारं स ददर्श भृगूद्वहः ।

पञ्चयोजनविस्तारमायतं शतयोजनम् ॥१४-५८-३९ (९४११०)
नागलोकमुदङ्कस्तु प्रेक्ष्य दीनोऽभवत्तदा ।
निराशश्चाभवत्तत्र कुण्डलाहरणे पुनः ॥१४-५८-४० (९४१११)
तत्र प्रोवाच तुरगस्तं कृष्णश्वेतवालधिः ।
ताम्रास्यनेत्रः कौरव्यः प्रज्वलन्निव तेजसा ॥१४-५८-४१ (९४११२)
धमस्वापानमेतन्मे ततस्त्वं विप्र लप्स्यसे ।
ऐरावतसुतेनेहि तवानीते हि कुण्डले ॥१४-५८-४२ (९४११३)
मा जुगुप्सां कृथाः पुत्र त्वमत्रार्थे कथञ्चन ॥
त्वयैतद्धि समाचीर्णं गौतमस्याश्रमे तदा ॥१४-५८-४३ (९४११४)
उदङ्क उवाच।१४-५८-४४क्ष् (७९०८)
कथं भवन्तं जानीयामुपाध्यायाश्रमं प्रति ।
यन्मया चीर्णपूर्वं हि श्रोतुमिच्छामि तद्ध्यहम् ॥१४-५८-४४ (९४११५)
अश्व उवाच।१४-५८-४५क्ष् (७९०९)
गुरोर्गुरु मां जानीहि ज्वलन्तं जातवेदसम् ।
त्वया ह्यहं सदा विप्र गुरोरर्थेऽभिपूजितः ॥१४-५८-४५ (९४११६)
विधिवत्सततं विप्र शुचिना भृगुनन्दन ।
तस्माच्छ्रेयो विधास्यामि तवैवं कुरु माचिरम् ॥१४-५८-४६ (९४११७)
इत्युक्तस्तु तथाऽकार्षीदुदङ्कश्चित्रभानुना ।
ताम्रार्चिः प्रीतिमांश्चापि प्रजज्वाल दिधक्षया ॥१४-५८-४७ (९४११८)
ततोऽस्य रोमकूपेभ्यो ध्मायमानस्य भारत ।
घनः प्रादुरभूद्धूमो नागलोकभयावहः ॥१४-५८-४८ (९४११९)
तेन धूमेन महता वर्धमानेन भारत ।
नागलोके महाराज न प्राज्ञायत किञ्चन ॥१४-५८-४९ (९४१२०)
हाहाकृतमभूत्सर्वमैरावतनिवेशनम् ।
वासुकिप्रमुखानां च नागानां जनमेजय ॥१४-५८-५० (९४१२१)
न प्राकाशन्त वेश्मानि धूमरुद्धानि भारत ।
नीहारसंवृतानीव वनानि गिरयस्तथा ॥१४-५८-५१ (९४१२२)
ते धूमरक्तनयना वह्नितेजोभितापिताः ।
आजग्मुर्निश्चयं ज्ञातुं भार्गवस्य महात्मनः ॥१४-५८-५२ (९४१२३)
श्रुत्वा च निश्चयं तस्य महर्षेरतितेजसः ।
सम्भ्रान्तनयनाः सर्वे पूजां चक्रुर्यथाविधि ॥१४-५८-५३ (९४१२४)
सर्वे प्राञ्जलयो नागा वृद्धबालपुरोगमाः ।
शिरोभिः प्रणिपत्योचुः प्रसीद भगवन्निति ॥१४-५८-५४ (९४१२५)
प्रसाद्य ब्राह्मणं ते तु पाद्यमर्घ्यं निवेद्य च ।
प्रायच्छन्कुण्डले दिव्ये पन्नगाः परमार्चिते ॥१४-५८-५५ (९४१२६)
ततः स पूजितो नागैस्तदोदङ्कः प्रतापवान् ।

अग्निं प्रदक्षिणं कृत्वा जगाम गुरुसद्म तत् ॥१४-५८-५६ (९४१२७)
स गत्वा त्वरितो राजन्गौतमस्य निवेशनम् ।
प्रायच्छत्कुण्डले दिव्ये गुरुपत्न्यास्तदाऽनघ ॥१४-५८-५७ (९४१२८)
वासुकिप्रमुकानां च नागानां जनमेजय ।
सर्वं शशंस गुरेव यथावद्विद्वजसत्तमः ॥१४-५८-५८ (९४१२९)
एवं महात्मना तेन त्रींलोकाञ्जनमेजय ।
परिक्रम्याहृते दिव्ये ततस्ते मणिकुण्डले ॥१४-५८-५९ (९४१३०)
एवंप्रभावः स मुनिरुदङ्को भरतर्षभ ।
परेण तपसा युक्तो यन्मां त्वं परिपृच्छसि। ॥ १४-५८-६० (९४१३१)

इति श्रीमन्महाभारते आश्वमेधिकपर्वणि अनुगीतापर्वणि
अष्टपञ्चासोऽध्यायः ॥ ५८ ॥
Mahabharata - Ashvamedhika Parva - Chapter Footnotes

७-५८-१ मित्रसहः सौदासः अभिज्ञानं श्लोकरूपं ज्ञापकम् ।७-५८-२
एषा रक्षोयोनिरूपा। अन्या इतो मुक्तिरूपा ॥
७-५८-१० ततोदंकाय वै प्रादात्तस्मै ते मणिकुण्डले इति क ट थ पाठः ॥
७-५८-१२ निवृत्तिस्मि परं तपेति झ पाठः ॥
७-५८-१६ प्राप्तवान्सङ्गतिं मित्रं धर्मनैपुण्यदर्शनादिति
क ट थ पाठः ॥
७-५८-१६ तत्रैव तु प्रवक्ष्यामि श्रेयो भृगुकुलोद्वहेति क ट थ पाठः ॥
७-५८-२६ आस्येन कुण्डले विदश्य धृत्वा वल्मीकं विवेशेति सम्बन्धः ॥

---

अस्वमेधिकपर्व-अध्यय०५९
॥ श्रीः ॥
१४.५९. अध्यायः ५९

Mahabharata - Ashvamedhika Parva - Chapter Topics
उदङ्काय वरदानात्परं द्वारकामागच्छता कृष्णेन मध्ये
रैवतकप्रवेशः ॥१ ॥
रैवतकोत्सववर्णनम् ॥२ ॥
ततः कृष्णेन स्वभवनमेत्य मातापितृभ्यामभिवादनम् ॥३ ॥

Mahabharata - Ashvamedhika Parva - Chapter Text

जनमेजय उवाच ।

उदङ्कस्य वरं दत्त्वा गोविन्दो द्विजत्तम ।
अत ऊर्ध्वं महाबाहुः किं चकार महायशाः ॥१४-५९-१ (९४१३२)
वैशम्पायन उवाच।१४-५९-२क्ष् (७९१०)
उदङ्काय वरं दत्त्वा प्रायात्सात्यकिना सह ।
द्वारकामेव गोविन्दः शीघ्रवेगैर्महाहयैः ॥१४-५९-२ (९४१३३)
सरांसि सरितश्चैव वनानि च गिरींस्तथा ।
अतिक्रम्याससादाथ रम्यां द्वारवतीं पुरीम् ॥१४-५९-३ (९४१३४)
वर्तमाने महाराज महे रैवतकस्य च ।
उपायात्पुण्डरीकाक्षो युयुधानानुगस्तदा ॥१४-५९-४ (९४१३५)
अलङ्कृतस्तु स गिरिर्नानारूपैर्विचित्रितैः ।
बभौ रत्नमयैः कोशैः संवृतः पुरुर्षर्षभ ॥१४-५९-५ (९४१३६)
काञ्चनस्रग्भिरग्र्याभिः सुमनोभिस्तथैव च ।
वासोभिश्च महाशैलः कल्पवृक्षैस्तथैव च ॥१४-५९-६ (९४१३७)
दीपवृक्षैश्च सौवर्णैरभीक्ष्णमुपशोभितः ।
गुहानिर्झरदेशेषु दिवाभूतो बभूव ह ॥१४-५९-७ (९४१३८)
एताकाभिर्विचित्राभिः सघण्टाभिः समन्ततः ।
पुंभिः स्त्रीभिश्च संघुष्टः प्रगीत इव चाभवत् ।
अतीव प्रेक्षणीयोऽभून्मेरुर्मुनिगणैरिव ॥ १४-५९-८ (९४१३९)
मत्तानां हृष्टरूपाणां स्त्रीणां पुंसां च भारत ।
गायतां पर्वतेन्द्रस्य दिविस्पृगिव निःस्वनः ॥१४-५९-९ (९४१४०)
प्रमत्तमत्तसम्मत्तक्ष्वेडितोद्धुष्टसंकुलः ।
तथा किलकिलाशब्दैर्भूधरोऽभून्मनोहरः ॥१४-५९-१० (९४१४१)
विपणापणवान्रम्यो भक्ष्यभोज्यविहारवान् ।
वस्त्रमाल्योत्करयुतो वीणावेणुमृदङ्गवान् ॥१४-५९-११ (९४१४२)
सुरामैरेयमिश्रेण भक्ष्यभोज्येन चैव ह ।
दीनान्धकृपणादिभ्यो दीयमानेन चानिशम् ।
बभौ परमकल्याणो महस्तस्य महागिरेः ॥ १४-५९-१२ (९४१४३)
पुण्यावसथवान्वीरैः पुण्यकृद्भिर्निषेवितः ।
विहारो वृष्णिवीराणां महे रैवतस्य ह ॥१४-५९-१३ (९४१४४)
स नानावेश्मसंकीर्णो देवलोक इवाबभौ ।
तदा च कृष्णसान्निध्यान्मुदा देवगणैर्युतः ॥१४-५९-१४ (९४१४५)
ग्स्तुवन्त्यन्तर्हिता देवा गन्धर्वाश्च सहर्षिभिः ।
साधकः सर्वधर्माणामसुराणां विनाशकः ॥१४-५९-१५ (९४१४६)
त्वं स्रष्टा सृज्यमाधारं कारणं धर्मवेदवित् ।
त्वया सत्क्रियते देव ज जानीमोऽत्र मायया ॥१४-५९-१६ (९४१४७)
केवलं त्वाऽभिजानीमः शरणं परमेश्वरम् ।

ब्रह्मादीनां च गोविन्द सान्निध्वं शरणं नमः ॥१४-५९-१७ (९४१४८)
इति स्तुते मानुषैश्च पूजिते देवकीसुते।'
शक्रसद्मप्रतीकाशो बभूव स हि शैलराट् ॥ १४-५९-१८ (९४१४९)
ततः सम्पूज्यमानः स विवेश भवनं शुभम् ।
गोविन्दः सात्यकिश्चैव जग्मतुर्भवनं स्वकम् ॥१४-५९-१९ (९४१५०)
विवेश च प्रहृष्टात्मा चिरकालप्रवासतः ।
कृत्वा नसुकरं कर्म दानवेष्विव वासवः ॥१४-५९-२० (९४१५१)
उपायान्तं तु वार्ष्णेयं भोजवृष्ण्यन्धकास्तथा ।
अभ्यगच्चन्महात्मानं देवा इव शतक्रतुम् ॥१४-५९-२१ (९४१५२)
स तानभ्यर्च्य मेधावी पृष्ट्वा च कुशलं तदा ।
अभ्यवादयत प्रीतः पितरं मातरं तदा ॥१४-५९-२२ (९४१५३)
ताभ्यां स सम्परिष्वक्तः सान्त्वितश्च महाभुजः ।
उपोपविष्टैः सर्वैस्तैर्वृष्णिभिः परिवारितः ॥१४-५९-२३ (९४१५४)
स विश्रान्तो महातेजाः कृतपादावनेजनः ।
कथयामास तत्सर्वं पृष्टः पित्रा महाहवम् ॥ ॥१४-५९-२४ (९४१५५)

इति श्रीमन्महाभारते आश्वमेधिकपर्वणि अनुगीतापर्वणि
एकोनषष्टितमोऽध्यायः ॥५९ ॥
Mahabharata - Ashvamedhika Parva - Chapter Footnotes

७-५९-४ महे उत्सवे ॥
७-५९-७ दीपभूतो बभूवहेति क थ पाठः ॥
७-५९-१० प्रमत्ताः क्रीडाद्यासक्तयानवहिताः । मत्ताः मद्यादिना। सम्मता
हृष्टाः ॥
७-५९-२३ सात्यकिश्च महाभुज इति क पाठः ॥

---

अस्वमेधिकपर्व-अध्यय०६०
॥ श्रीः ॥
१४.६०. अध्यायः ६०

Mahabharata - Ashvamedhika Parva - Chapter Topics
कृष्णेन वसुदेवादीन्प्रति कुरुपाण्डवयुद्धप्रकारकथनम् ॥१ ॥

Mahabharata - Ashvamedhika Parva - Chapter Text

वसुदेव उवाच ।

श्रुतवानस्मि वार्ष्णेय सङ्ग्रामं परमाद्भुतम् ।
नराणां वदतां पुत्र कथोद्घातेषु नित्यशः ॥१४-६०-१ (९४१५६)
त्वं तु प्रत्यक्षदर्शी च कार्यज्ञश्च महाभुजः ।
तस्मात्प्रब्रूहि सङ्ग्रामं याथातथ्येन मेऽनघ ॥१४-६०-२ (९४१५७)
यथा तदभवद्युद्धं पाण्डवानां महात्मनाम् ।
भीष्मकर्णकृपद्रोणशल्यादिभिरनुत्तमम् ॥१४-६०-३ (९४१५८)
अन्येषां क्षत्रियाणां च कृतास्त्राणामनेकशः ।
नानावेषाकृतिमतां नानादेशनिवासिनाम् ॥१४-६०-४ (९४१५९)
वैशम्पायन उवाच।१४-६०-५क्ष् (७९११)
इत्युक्तः पुण्डरीकाक्षः पित्रा मातुस्तदाऽन्तिके ।
शशंस कुरुवीराणां सङ्ग्रामे निधनं यथा ॥१४-६०-५ (९४१६०)
वासुदेव उवाच।१४-६०-६क्ष् (७९१२)
अत्यद्भुतानि कर्माणि क्षत्रियाणां महात्मनाम् ।
बहुलत्वान्न सङ्ख्यातुं शक्यान्यब्दशतैरपि ॥१४-६०-६ (९४१६१)
प्राधान्यतस्तु गदतः समासेनैव मे शृणु ।
कर्माणि पृथिवीशानां यथावदमरद्युते ॥१४-६०-७ (९४१६२)
भीष्मः सेनापतिरभूदेकादशचमूपतिः ।
कौरव्यः कौरवेन्द्राणां देवानामिव पावकिः ॥१४-६०-८ (९४१६३)
शिखण्डी पाण्डुपुत्राणां नेता सप्तचमूपतिः ।
बभूव रक्षितो धीमाञ्श्रीमता सव्यसाचिना ॥१४-६०-९ (९४१६४)
तेषां तदभवद्युद्धं दशाहानि महात्मनाम् ।
कुरूणां पाण्डवानां च सुमहद्रोमहर्षणम् ॥१४-६०-१० (९४१६५)
अयुध्यमानं गाङ्गेयं शिखण्डी तं महाद्युतिम् ।
जघान बहुभिर्बाणैः सह गाण्डीवधन्वना ॥१४-६०-११ (९४१६६)
अकरोत्स ततः कालं शरतल्पगतो मुनिः ।
अयनं दक्षिणं हित्वा सम्प्राप्ते चोत्तरायणे ॥१४-६०-१२ (९४१६७)
ततः सेनापतिरभूद्द्रोणोऽस्त्रविदुषांवरः ।
प्रवीरः कौरवेन्द्रस्य काव्यो दैत्यपतेरिव ॥१४-६०-१३ (९४१६८)
अक्षौहिणीभिः शिष्टाभिर्नवभिर्द्विजसत्तमः ।
संवृतः समरश्लाघी गुप्तः कृपसुतादिभिः ॥१४-६०-१४ (९४१६९)
धृष्टद्युम्नस्त्वभून्नेता पाण्डवानां महास्त्रवित् ।
गुप्तो भीमेन मेधावी मित्रेण वरुणो यथा ॥१४-६०-१५ (९४१७०)
स च सेनापरिवृतो द्रोणप्रेप्सुर्महामनाः ।
पितुर्निकारान्संस्मृत्य रणे कर्माकरोन्महत् ॥१४-६०-१६ (९४१७१)
तस्मिंस्ते पृथिवीपाला द्रोणपार्षतसङ्गरे ।
नानादिगागता वीराः प्रायशो निधनं गताः ॥१४-६०-१७ (९४१७२)

दिनानि पञ्च तद्युद्धमभूत्परमदारुणम् ।
ततो द्रोणः परिश्रान्तो धृष्टद्युम्नवशं गतः ॥१४-६०-१८ (९४१७३)
ततः सेनापतिरभूत्कर्णो दौर्योधने बले ।
अक्षौहिणीभिः शिष्टाभिर्वृतः पञ्चभिराहवे ॥१४-६०-१९ (९४१७४)
तिस्रस्तु पाण्डुपुत्राणां चम्वो बीभत्सुपालिताः ।
हतप्रवीरभूयिष्ठा बभूवुः समवस्थिताः ॥१४-६०-२० (९४१७५)
ततः पार्थं समासाद्य पतङ्ग इव पावकम् ।
पञ्चत्वमगमत्सौतिर्द्वितीयेऽहनि दारुणः ॥१४-६०-२१ (९४१७६)
हते कर्णे तु कौरव्या निरुत्साहा हतौजसः ।
अक्षौहिणीभिस्तिसृभिर्मद्रेशं पर्यवारयन् ॥१४-६०-२२ (९४१७७)
हतिवाहनभूयिष्ठाः पाण्डिवास्तु युधिष्ठिरम् ।
अक्षौहिण्या निरुत्साहाः शिष्टया पर्यवारयन् ॥१४-६०-२३ (९४१७८)
अवधीन्मद्रराजानं कुरुराजो युधिष्ठिरः ।
तस्मिंस्तदाऽर्धदिवसे कृत्वा कर्म सुदुष्करम् ॥१४-६०-२४ (९४१७९)
हते शल्ये तु शकुनिं सहदेवो महामनाः ।
आहर्तारं कलेस्तस्य जगानामितविक्रमः ॥१४-६०-२५ (९४१८०)
निहते शकुनौ राजा धार्तराष्ट्रः सुदुर्मनाः ।
अपाक्रामद्गदापाणिर्हतभूयिष्ठसैनिकः ॥१४-६०-२६ (९४१८१)
तमन्वधावत्संक्रुद्धो भीमसेनः प्रतापवान् ।
ह्रदे द्वैपायने चापि सलिलस्थं ददर्श तम् ॥१४-६०-२७ (९४१८२)
इतशिष्टेन सैन्येन समन्तात्पर्यवार्य तम् ।
अथोपविविशुर्हृष्टा ह्रदस्थं पञ्च पाण्डवाः ॥१४-६०-२८ (९४१८३)
विगाह्य सलिलं त्वाशु वाग्बाणैर्भृशविक्षतः ।
उत्थाय स गदापाणिर्युद्धाय समुपस्थितः ॥१४-६०-२९ (९४१८४)
ततः स निहतो राजा धार्तराष्ट्रो महारणे ।
भीमसेनेन विक्रम्य पश्यतां पृथिवीक्षिताम् ॥१४-६०-३० (९४१८५)
ततस्तत्पाण्डवं सैन्यं प्रसुप्तं शिबिरे निशि ।
निहतं द्रोणपुत्रेण पितुर्वधममृष्यता ॥१४-६०-३१ (९४१८६)
हतपुत्रा हतबला हतमित्रा मया सह ।
युयुधानसहायेन पञ्च शिष्टास्तु पाण्डवाः ॥१४-६०-३२ (९४१८७)
सहैव कृपभोजाभ्यां द्रौणिर्युद्धादमुच्यत ।
युयुत्सुश्चापि कौरव्यो मुक्तः पाण्डवसंश्रयात् ॥१४-६०-३३ (९४१८८)
निहते कौरवेन्द्रे तु सानुबन्धे सुयोधने ।
विदुरः संजयश्चैव धर्मराजमुपस्थितौ ॥१४-६०-३४ (९४१८९)
एवं तदभवद्युद्दमहान्यष्टादश प्रभो ।
यत्र ते पृथिवीपाला निहताः स्वर्गमावसन् ॥१४-६०-३५ (९४१९०)

वैशम्पायन उवाच।१४-६०-३६क्ष् (७९१३)
शृण्वतां तु महाराज कथां तां रोमहर्षणीम् ।
दुःखशोकपरिक्लेशा वृष्णीनामभवंस्तदा ॥ ॥१४-६०-३६ (९४१९१)

इति श्रीमन्महाभारते आश्वमेधिकपर्वणि अनुगीतापर्वणि
षष्टितमोऽध्यायः ॥ ६० ॥
Mahabharata - Ashvamedhika Parva - Chapter Footnotes

७-६०-११ ततः शिखण्डी गाङ्गेयं युध्यमानं महाहवे ।इति झ पाठः ॥

---

अस्वमेधिकपर्व-अध्यय०६१
॥ श्रीः ॥
१४.६१. अध्यायः ६१

Mahabharata - Ashvamedhika Parva - Chapter Topics
कृष्णेन सभायां वसुदेवंप्रति अभिमन्युनिधनाकथने सुभद्रया
तंप्रति तत्कथनचोदनापूर्वकं शोकान्मोहावेशेन भुवि निपतनम्
॥ १ ॥
ततः कृष्णेन वसुदेवपरिसान्त्वनम् ॥ २ ॥

Mahabharata - Ashvamedhika Parva - Chapter Text

वैशम्पायन उवाच ।
कथयन्नेव तु तदा वासुदेवः प्रतापवान् ।
महाभारतयुद्धं तत्कथान्ते पितुरग्रतः ॥१४-६१-१ (९४१९२)
अभिमन्योर्वधं वीरः सोत्यक्रामन्महामतिः ।
अप्रियं वसुदेवस्य माभूदिति महामनाः ॥१४-६१-२ (९४१९३)
मा दौहित्रवधं श्रुत्वा वसुदेवो महात्ययम् ।
दुःखशोकाभिसंतप्तो भवेदिति महामतिः ॥१४-६१-३ (९४१९४)
सुभद्रा तु तमुत्क्रान्तमात्मजस्य वधं रणे ।
आचक्ष्व कृष्ण सौभद्रवधमित्यपतद्भुवि ॥१४-६१-४ (९४१९५)
तामपश्यन्निपतितां वसुदेवः क्षितौ तदा ।
दृष्ट्वैव च पपातोर्व्यां सोऽपि दुःखेन मूर्छितः ॥१४-६१-५ (९४१९६)
तषः स दौहित्रवदाद्दुःखशोकसमाहतः ।
वसुदेवो महाराज कृष्णं वाक्यमथाब्रवीत् ॥१४-६१-६ (९४१९७)
ननु त्वं पुण्डरीकाक्ष सत्यवाग्भुवि विश्रुतः ।

यद्दौहित्रवधं मेऽद्य न ख्यापयसि शत्रुहन् ॥ १४-६१-७ (९४१९८)
तद्भागिनेयनिधनं तत्त्वेनाचक्ष्व मे प्रभो ।
सदृशाक्षस्तव कथं शत्रुभिर्निहतो रणे। १४-६१-८ (९४१९९)
दुर्भरं बत वार्ष्णेय कालेऽप्राप्ते नृभिः सह ।
यत्र मे हृदयं दुःखाच्छतधा न विदीर्यते ॥ १४-६१-९ (९४२००)
किमब्रवीत्त्वां सङ्ग्रामे सुभद्रां मातरं प्रति ।
मां चापि पुण्डरीकाक्षि चपलाक्षः प्रियो मम ॥ १४-६१-१० (९४२०१)
आहवं पृष्ठतः कृत्वा कच्चिन्न निहतः परैः ।
कच्चिन्मुखं न गोविन्द तेनाजौ विकृतं कृतम् ॥ १४-६१-११ (९४२०२)
स हि कृष्ण महातेजाः श्लाघन्निव ममाग्रतः ।
बालभावेन विजयमात्मनोऽकथयत्प्रभुः। १४-६१-१२ (९४२०३)
कच्चिन्न निकृतो बालो द्रोणकर्णाकृपादिभिः ।
धरण्यां निहतः शेते तन्ममाचक्ष्व केशव ॥ १४-६१-१३ (९४२०४)
स हि द्रोणं च भीष्मं च कर्णं च बलीनां वरम् ।
स्पर्धते स्म रणे नित्यं दुहितुः पुत्रको मम ॥ १४-६१-१४ (९४२०५)
एवंविधं बहु तदा विलपन्तं सुदुःखितम् ।
पितरं दुःखिततरं गोविन्दो वाक्यमब्रवीत् ॥ १४-६१-१५ (९४२०६)
न तेनि विकृतं वक्त्रं कृतं सङ्ग्राममूर्धनि ।
न पृष्ठतः कृतश्चापि सङ्ग्रामस्तेन दुस्तरः ॥ १४-६१-१६ (९४२०७)
निहत्य पृथिवीपालान्सहस्रशतसङ्घशः ।
खेदितो द्रोणकर्णाभ्यां दौःशासनिवशं गतः ॥ १४-६१-१७ (९४२०८)
एको ह्येकेन सततं युध्यमानो यदि प्रभो ।
न स शक्येत सङ्ग्रामे निहन्तुमपि वज्रिणा ॥ १४-६१-१८ (९४२०९)
समाहूते च सङ्ग्रामे पार्थे संशप्तकैस्तदा ।
पर्यवार्यत संक्रुद्धैः स द्रोणादिभिराहवे ॥ १४-६१-१९ (९४२१०)
ततः शत्रुवधं कृत्वा सुमहान्तं रेणे पितः ।
दौहित्रस्तव वार्ष्णेय दौःशासनिवशं गतः ॥ १४-६१-२० (९४२११)
नूनं च स गतः स्वर्गं जहि शोकं महामते ।
न हि व्यसनमासाद्य सीदन्ति कृतबुद्धयः ॥ १४-६१-२१ (९४२१२)
द्रोणकर्णप्रभृतयो येन प्रतिसमासिताः ।
रणे महेन्द्रप्रतिमाः स कथं नाप्नुयाद्दिवम् ॥ १४-६१-२२ (९४२१३)
स शोकं जहि जुर्धर्ष मा च मन्युवशं गमः ।
शस्त्रपूतां हि स गतिं गतः परपुरंजयः ॥ १४-६१-२३ (९४२१४)
तस्मिंस्तु निहते वीरे सुभद्रेयं स्वसा मम ।
दुःखार्ताऽथो सुतं प्राप्य कुररीव ननाद ह ॥ १४-६१-२४ (९४२१५)
द्रौपदीं च समासाद्य पर्यतप्यत दुःखिता ।

आर्ये क्व दारकाः सर्वे द्रष्टुमिच्छामि तानहम् ॥१४-६१-२५ (९४२१६)
अस्यास्तु वचनं श्रुत्वा सर्वास्ताः कुरुयोषितः ।
भुजाभ्यां परिगृह्यैनां चुक्रुशुः परमार्तवत् ॥१४-६१-२६ (९४२१७)
उत्तरां चाब्रवीद्भद्रे भर्ता स क्व नु ते गतः ।
क्षिप्रमागमनं मह्यं तस्य त्वं वेदयस्व ह ॥१४-६१-२७ (९४२१८)
ननु नामाद्य वैराटि श्रुत्वा मम गिरं सदा ।
भवनान्निष्पतत्याशु कस्मान्नाभ्येति ते पतिः ॥१४-६१-२८ (९४२१९)
अभिमन्योऽनुशयिनो मातुलास्ते महारथाः ।
कुशलं चाब्रुवन्सर्वे त्वां युयुत्सुमिहागतम् ॥१४-६१-२९ (९४२२०)
आचक्ष्व मेऽद्य सङ्ग्रामं यथापूर्वमरिन्दम ।
कस्मादेवं विलपतीं नाद्येह प्रतिभाषसे। १४-६१-३० (९४२२१)
एवमादि तु वार्ष्णेय्यास्तस्यास्तत्परिदेवितम् ।
श्रुत्वा पृथा सुदुःखार्ता शनैर्वाक्यमथाब्रवीत् ॥१४-६१-३१ (९४२२२)
सुभद्रे वासुदेवेन तथा सात्यकिना रणे ।
पित्रा च लालितो बालः स हतः कालधर्मणा ॥१४-६१-३२ (९४२२३)
ईदृशो मर्त्यधर्मोऽयं मा शुचो यदुनन्दिनि ।
पुत्रो हि तव दुर्धर्षः सम्प्राप्तः परमां गतिम् ॥१४-६१-३३ (९४२२४)
कुले महति जातासि क्षत्रियाणां महात्मनाम् ।
मा शुचश्चपलाक्षं त्वं पद्मपत्रनिभेक्षणे ॥१४-६१-३४ (९४२२५)
उत्तरां त्वमवेक्षस्व गुर्विणीं मा शुचः शुभे ।
पुत्रमेषा हि तस्याशु जनयिष्यति भामिनी ॥१४-६१-३५ (९४२२६)
एवमाश्वासयित्वैनां कुन्ती यदुकुलोद्वह ।
विहाय शोकं दुर्धर्षं श्राद्धमस्य ह्यकल्पयत् ॥१४-६१-३६ (९४२२७)
समनुज्ञाप्य धर्मज्ञं राजानं भीममेव च ।
यमौ यमोपमौ चैव ददौ दानान्यनेकशः ॥१४-६१-३७ (९४२२८)
ततः प्रदाय बह्वीर्गा ब्राह्मणेभ्यो यदूद्वह ।
समाहूष्य तु वार्ष्णेयी वैराटीमब्रवीदिदम् ॥१४-६१-३८ (९४२२९)
वैराटि नेह संतापस्त्वया कार्यो ह्यनिन्दिते ।
भर्तारं प्रति सुश्रोणि गर्भस्थं रक्ष वै शिशुम् ॥१४-६१-३९ (९४२३०)
एवमुक्त्वा ततः कुन्ती विरराम महाद्युते ।
तामनुज्ञाप्य चैवेमां सुभद्रां समुपानयम् ॥१४-६१-४० (९४२३१)
एवं स निधनं प्राप्तो दौहित्रस्तव मानद ।
संतापं त्यज दुर्धर्ष मा च शोके मनः कृथाः ॥ ॥१४-६१-४१ (९४२३२)

इति श्रीमन्महाभारते आश्वमेधिकपर्वणि अनुगीतापर्वणि
एकषष्टितमोऽध्यायः ॥ ६१ ॥

७-६१-११ कच्चिद्दुःखेन गोविन्दि तत्राजौ विमुखीकृतः इति थ पाठः ॥
७-६१-१९ समाहृते च सङ्ग्रामादिति झ पाठः । पर्यवार्यत सतुष्टैरिति थ पाठः ॥

---

अस्वमेधिकपर्व-अध्यय०६२
॥ श्रीः ॥
१४.६२. अध्यायः ६२

Mahabharata - Ashvamedhika Parva - Chapter Topics
वसुदेवादिभिरभिमन्यवे श्राद्धदानम् ॥ १ ॥
व्यासेन हास्तिनपुरमेत्य उत्तरादिपरिसान्त्वपूर्वकं युधिष्ठिरंप्रत्यश्वमेधसंचोदनेनि पुनरन्तर्धानम् ॥ २ ॥

Mahabharata - Ashvamedhika Parva - Chapter Text

वैशम्पायन उवाच ।
एतच्छ्रुत्वा तु पुत्रस्य वचः शूरात्मजस्तदा ।
विहाय शोकं धर्मात्मा ददौ श्राद्धमनुत्तमम् ॥ १४-६२-१ (९४२३३)
तथैव वासुदेवश्च स्वस्त्रीयस्य महात्मनः ।
दयितस्यि पितुर्नित्यमकरोदौर्ध्वदेहिकम् ॥ १४-६२-२ (९४२३४)
षष्टिं शतसहस्राणि ब्राह्मणानां महौजसाम् ।
विधिवद्भोजयामास भोज्यं सर्वगुणान्वितम् ॥ १४-६२-३ (९४२३५)
आच्छाद्य च महाबाहुर्धनतृष्णामपानुदत् ।
ब्राह्मणानां तदा कृष्णस्तदभूद्रोमहर्षणम् ॥ १४-६२-४ (९४२३६)
सुवर्णं चैव गाश्चैव शयनाच्छादनानि च ।
दीयमानं तदा विप्रः प्रभूतमिति चाब्रुवन् ॥ १४-६२-५ (९४२३७)
वासुदेवोऽथ दाशार्हो बलेदेवः ससात्यकिः ।
अभिमन्योस्तदा श्राद्धमकुर्वन्सत्यकस्तदा ।
अतीव दुःखसंतप्ता न शमं चोपलेभिरे ॥ १४-६२-६ (९४२३८)
तथैव पाण्डवा वीरा नगरे नागसह्वये ।
नोपागच्छन्त वै शान्तिमभिमन्युविनाकृताः ॥ १४-६२-७ (९४२३९)
सुबहूनि च राजेन्द्र दिवसानि विराटजा ।
नाभुङ्क्त पतिदुःखार्ता तदभूत्करुणं महत् ॥ १४-६२-८ (९४२४०)
धियमाणे तु तस्मिंस्तु गर्भे कुक्षिस्थ एव च ।

आजगाम ततो व्यासो ज्ञात्वा दिव्येन चक्षुषा ॥१४-६२-९ (९४२४१)
समागम्याब्रवीमान्पृथां पृथुललोचनाम् ।
उत्तरां च महातेजाःइ शोकः संत्यज्यतामयम् ॥१४-६२-१० (९४२४२)
जनिष्यते महातेजाः पुत्रस्तव यशस्विनि ।
प्रभावाद्वासुदेवस्य मम व्याहरणादपि ।
पाण्डवानामयं चान्ते पालयिष्यति मेदिनीम् ॥ १४-६२-११ (९४२४३)
धनञ्जयं च सम्प्रेक्ष्य धर्मराजस्य शृण्वतः ।
व्यासो वाक्यमुवाचेदं हर्षयन्निव भारत ॥१४-६२-१२ (९४२४४)
पौत्रस्तव महाभागो जनिष्यति महामनाः ।
पृथ्वीं सागरपर्यन्तां पालयिष्यति धर्मतः ॥१४-६२-१३ (९४२४५)
तस्माच्छोकं कुरुश्रेष्ठ जहि त्वमरिकर्शन ।
विचार्यमत्र न हि ते सत्यमेतद्भविष्यति ॥१४-६२-१४ (९४२४६)
यच्चापि वृष्णिवीरेणि कृष्णेन कुरुनन्दन ।
पुरोक्तं तत्तथा भावि मा तेऽत्रास्तु विचारणा ॥१४-६२-१५ (९४२४७)
विबुधानां गतो लोकानक्षयानात्मनिर्जितान् ।
न स शोच्यस्त्वया वीरो न चान्यैः कुरुभिस्तथा ॥१४-६२-१६ (९४२४८)
एवं पितामहेनोक्तो धर्मात्मा स धनञ्जयः ।
त्यक्त्वा शोकं महाराज हृष्टरूपोऽभवत्तदा ॥१४-६२-१७ (९४२४९)
पिताऽपि तव धर्मज्ञ गर्भे तस्मिन्महामते ।
अवर्धत यथाकामं शुक्लपक्षे यथा शसी ॥१४-६२-१८ (९४२५०)
ततः संचोदयामास व्यासो धर्मात्मजं नृपम् ।
अश्वमेधं प्रति तदा ततः सोऽन्तर्हितोऽभवत् ॥१४-६२-१९ (९४२५१)
धर्मराजोपि मेधावी श्रुत्वा व्यासस्य तद्वचः ।
वित्तोपनयने तात चकार गमने मतिम् ॥ ॥१४-६२-२० (९४२५२)

इति श्रीमन्महाभारते आश्वमेधिकपर्वणि अनुगीतापर्वणि
द्विषष्टितमोऽध्यायः ॥६२ ॥

---

अस्वमेधिकपर्व-अध्यय०६३
॥ श्रीः ॥
१४.६३. अध्यायः ६३

Mahabharata - Ashvamedhika Parva - Chapter Topics
युधिष्ठिरेण व्यासाज्ञया भीमादिभिः सहालोच्य यज्ञार्थं
धनाहरणाय सहभ्रात्रादिभिर्हिमवत्पार्श्वप्रति प्रस्थानम् ॥१ ॥

जनमेजय उवाच ।
श्रुत्वैतद्वचनं ब्रह्मन्व्यासेनोक्तं महात्मना ।
अश्वमेधं प्रति तदा किं भूयः प्रचकार ह ॥ १४-६३-१ (९४२५३)
रत्नं च यन्मरुत्तेनि निहितं वसुधातले ।
तदवाप कथं चेति तन्मे ब्रूहि द्विजोत्तम ॥ १४-६३-२ (९४२५४)
वैशम्पायन उवाच। १४-६३-३क्ष् (७९१४)
श्रुत्वा द्वैपायनवचो धर्मिराजो युधिष्ठिरः ।
भ्रातॄन्सर्वान्समानाय्य काले वचनमब्रवीत् ॥ १४-६३-३ (९४२५५)
अर्जुनं भीमसेनं च माद्रीपुत्रौ यमावपि ।
श्रुतं वो वचनं वीराः सौहृदाद्यन्महात्मना ॥ १४-६३-४ (९४२५६)
कुरूणां हितकामेन प्रोक्तं कृष्णेन धीमता ।
तपोवृद्धेनि महता सुहृदां भूतिमिच्छता ॥ १४-६३-५ (९४२५७)
गुरुणा धर्मशीलेन व्यासेनाद्भुतकर्मणा ।
भीष्मेण च महाप्राज्ञ गोविन्देनि च धीमता ॥ १४-६३-६ (९४२५८)
संस्मृत्य तदहं सम्यक्कर्तुमिच्छामि पाण्डवाः ।
आयत्यां च तदात्वे च सर्वेषां तद्धि नो हितम् ॥ १४-६३-७ (९४२५९)
अनुबन्धे च कल्याणं यद्वचो ब्रह्मवादिनः ।
इयं हि वसुधा सर्वा क्षीणरत्ना कुरूद्वहाः ॥ १४-६३-८ (९४२६०)
तच्चाचष्ट तदा व्यासो मरुत्तस्य धनं नृपाः ।
यद्येतद्वो बहुमतं मन्यध्वं वा क्षमं यदि ।
तदानयामहे सर्वे कतं वा भीम मन्यसे ॥ १४-६३-९ (९४२६१)
इत्युक्तवाक्ये नृपतौ तदा कुरुकुलोद्वह ।
भीमसेनो नृपश्रेष्ठं प्राञ्जलिर्वाक्यमब्रवीत् ॥ १४-६३-१० (९४२६२)
रोचते मे महाबाहो यदिदं भाषितं त्वया ।
व्यासाख्यातस्य वित्तस्य समुपानयनं प्रति ॥ १४-६३-११ (९४२६३)
तत्प्राप्नुयामहे धर्माद्यद्धनं काङ्क्षितं प्रभो ।
कृतमेव महाराज भवेदिति मतिर्मम ॥ १४-६३-१२ (९४२६४)
ते वयं प्रणिपातेन गिरीशस्य महात्मनः ।
तदानयामि भद्रं ते समभ्यर्च्य कपर्दिनम् ॥ १४-६३-१३ (९४२६५)
ग्तं विभुं देवदेवेशं शूलपाणिं त्रिलोचनम् ।
अनादिनिधनं शंभुं नमस्यामि महेश्वरम् ॥' १४-६३-१४ (९४२६६)
लोकनाथं गणाध्यक्षं तस्यैवानुचरांश्चि तान् ।
प्रसाद्यार्थमवाप्स्यामो नूनं वाग्बुद्धिकर्मभिः ॥ १४-६३-१५ (९४२६७)
रक्षन्ते ये च तद्द्रव्यं किन्नरा रौद्रदर्शनाः ।

ते च वश्या भविष्यन्ति प्रसन्ने वृषभध्वजे ॥१४-६३-१६ (९४२६८)
ग्स हि देवः प्रसन्नात्मा भक्तानां परमेश्वरः ।
ददात्यमरतां चापि किं पुनः काञ्चनं प्रभुः ॥१४-६३-१७ (९४२६९)
वनस्थास्य पुरा जिष्णोरस्त्रं पाशुपतं महत् ।
रौद्रं ब्रह्मसिरश्चादात्प्रसन्नः किं पुनर्धनम् ॥१४-६३-१८ (९४२७०)
वयं सर्वे हि तद्भक्ताः स चास्माकं प्रसीदति ।
तत्प्रसादादिदं राज्यं प्राप्तं कौरवनन्दन ॥१४-६३-१९ (९४२७१)
अभिमन्योर्वधे वृत्ते प्रतिज्ञाते धनञ्जये ।
जयद्रथवधार्थाय स्वप्ने लोकगुरुर्निशि ।
प्रसाद्य लब्धवानस्त्रमर्जुनः सहकेशवः ॥ १४-६३-२० (९४२७२)
तत्र प्रभातां रजनीं फल्गुनस्याग्रतः प्रभुः ।
जघान सैन्यं शूलेन प्रत्यक्षं सव्यसाचिनः ॥१४-६३-२१ (९४२७३)
कस्तां सेनां महाराज मनसाऽपि प्रधर्षयेत् ।
द्रोणिकर्णबलैर्युक्तां महेष्वासैः प्रहारिभिः ।
ऋते देवान्महेष्वासाद्बहुरूपान्महेश्वरात् ॥ १४-६३-२२ (९४२७४)
तस्यैव च प्रसादेव निहतास्तव शत्रवः ।
अश्वमेधस्य संसिद्धिं तव सम्पादयिष्यति।' १४-६३-२३ (९४२७५)
श्रुत्वैवं वदतस्तस्य वाक्यं भीमस्य भारत ।
प्रीतो धर्मात्मजो राजा बभूवातीव भारत ।
अर्जुनप्रमुखाश्चापि तथेत्येवाब्रुवन्वचः ॥ १४-६३-२४ (९४२७६)
कृत्वा तु पाण्डवाः सर्वे रत्नाहरणनिश्चयम् ।
सेनामाज्ञापयामासुर्नक्षत्रेऽहनि च ध्रुवे ॥१४-६३-२५ (९४२७७)
ततो ययुः पाण्डुसुता ब्राह्मणान्स्वस्ति वाच्य च ।
अर्चयित्वा सुरश्रेष्ठं पूर्वमेव महेश्वरम् ॥१४-६३-२६ (९४२७८)
मोदकैः पायसेनाथ मांसापूपैस्तथैव च ।
आशास्य च महात्मानं प्रययुर्मुदिता भृशम् ॥१४-६३-२७ (९४२७९)
तेषां प्रयास्यतां तत्र मङ्गलानि शुभान्यथ ।
प्राहुः प्रहृष्टमनसो द्विजाग्य्रा नागराश्च ते ॥१४-६३-२८ (९४२८०)
ततः प्रदक्षिणीकृत्य शिरोभिः प्रणिपत्य च ।
ब्राह्मणानग्निसहितान्प्रययुः पाण्डुनन्दनाः ॥१४-६३-२९ (९४२८१)
समनुज्ञाप्य राजानं पुत्रशोकसमाहतम् ।
धृतराष्ट्रं सभार्यं वै पृथां च पृथुलोचनाम् ॥१४-६३-३० (९४२८२)
मूले निक्षिप्य कौरव्यं युयुत्सुं धृतराष्ट्रजम् ।
सम्पूज्यमानाः पौरैश्च ब्राह्मणैश्च मनीषिभिः ।
ग्प्रययुः पाण्डवा वीरा नियमस्थाः शुचिव्रताः' ॥ १४-६३-३१ (९४२८३)

इति श्रीमन्महाभारते आश्वमेधिकपर्वणि अनुगीतापर्वणि
त्रिषष्टितमोऽध्यायः ॥ ६३ ॥

---

अस्वमेधिकपर्व-अध्यय०६४
॥ श्रीः ॥
१४.६४. अध्यायः ६४

Mahabharata - Ashvamedhika Parva - Chapter Topics
युधिष्ठिरेण हिमवद्गिरिमेत्य सेनानिवेशनम् ॥ १ ॥
तत्र ब्राह्मणचोदनया तैः सहोपवासादिव्रताचरणपूर्वकं निशायापनम्
॥ २ ॥

Mahabharata - Ashvamedhika Parva - Chapter Text

वैशम्पायन उवाच ।
ततस्ते प्रययुर्हृष्टाः प्रहृष्टनरवाहनाः ।
रथघोषेण महता पूरयन्तो वसुन्धराम् ॥ १४-६४-१ (९४२८४)
संस्तूयमानाः स्तुतिभिः सूतमागधबन्दिभिः ।
स्वेन सैन्येन संवीता यथाऽऽदित्याः स्वरश्मिभिः ॥ १४-६४-२ (९४२८५)
पाण्डुरेणातपत्रेण ध्रियमाणेन मूर्धनि ।
बभौ युधिष्टिरस्तत्र पौर्णमास्यामिवोडुराट् ॥ १४-६४-३ (९४२८६)
जयाशिषः प्रहृष्टानां नराणां पथि पाण्डवः ।
प्रत्यगृह्णाद्यथान्यायं यथावत्पुरुषर्षभः ॥ १४-६४-४ (९४२८७)
तथैव सैनिका राजन्राजानमनुयान्ति ये ।
तेषां हलहलाशब्दो दिवं स्तब्ध्वा व्यतिष्ठत ॥ १४-६४-५ (९४२८८)
सरांसि सरितश्चैव वनान्युपवनानि च ।
अत्यक्रामन्महाराजो गिरिं चाप्यन्वपद्यत ॥ १४-६४-६ (९४२८९)
स्मिन्देशे च राजेन्द्र यत्र तद्द्रव्यमुत्तमम् ।
चक्रे निवेशनं राजा पाण्डवः सहसैनिकैः ।
शिवे देशे समे चैव तदा भरतसत्तम ॥ १४-६४-७ (९४२९०)
अग्रतो ब्राह्मणान्कृत्वा तपोविद्यादमान्वितान् ।
पुरोहितं च कौरव्य वेदवेदाङ्गपारगम् ॥ १४-६४-८ (९४२९१)
आग्निवेश्यं च राजानो ब्राह्मणाः सपुरोधसः ।
कृत्वा शान्तिं यथान्यायं सर्वशः पर्यवारयन् ॥ १४-६४-९ (९४२९२)
कृत्वा तु मध्ये राजानममात्यांश्च यथाविधि ।
षट्पदं नवसङ्ख्यानं निवेशं चक्रिरे जनाः ॥ १४-६४-१० (९४२९३)

मत्तानां वारणेन्द्राणां निवेशं च यथाविधि ।
कारयित्वा स राजेन्द्रो ब्राह्मणानिदमब्रवीत् ॥१४-६४-११ (९४२९४)
अस्मिन्कार्ये द्विजश्रेष्ठा नक्षत्रे दिवसे शुभे ।
यथा भवन्तो मन्यन्ते कर्तुमर्हन्ति तत्तथा ॥१४-६४-१२ (९४२९५)
न नः कालात्ययो वै स्यादिहैव परिलम्बताम् ।
इति निश्चित्य विप्रेन्द्राः क्रियतां यदनन्तरम् ॥१४-६४-१३ (९४२९६)
श्रुत्वैतद्वक्कक्कक्कक्कक्कक्क ब्राह्मणाः सपुरोधसः ।
इदमूचुर्वचो हृष्टा धर्मराजप्रियेप्सवः ॥१४-६४-१४ (९४२९७)
अद्यैव नक्षत्रिमहस्च पुण्यं
यतामहे श्रेष्ठतमक्रियासु ।
तपोभिरद्येह वसाम राज-
न्नुपोष्यतां चापि भवद्भिरद्य ॥ १४-६४-१५ (९४२९८)
श्रुत्वा तु तेषां द्विजसत्तमानां
कृतोपवासा रजनीं नरेन्द्राः। १४-६४-१६ (९४२९९)
ऊषुः प्रतीताः कुशसंस्तरेषु
यथाऽध्वरे प्रज्वलिता हुताशाः ॥ १४-६४-१७ (९४३००)
ततो निशा सा व्यगमन्महात्मनां
संशृण्वतां विप्रसमीरिता गिरः ।
ततः प्रभाते विमले द्विजर्षभा
वचोऽब्रुवन्धर्मसुतं नराधिपम् ॥ ॥ १४-६४-१८ (९४३०१)

इति श्रीमन्महाभारते आश्वमेधिकपर्वणि अनुगीतापर्वणि
चतुःषष्टितमोऽध्यायः ॥६४ ॥

Mahabharata - Ashvamedhika Parva - Chapter Footnotes

७-६४-२५ ध्रुवे नक्षत्रे रोहिण्यामुत्तरात्रये च ।अहनि वारे ध्रुवे
रविवारे क्क उत्तरार्केऽमृतसिद्धयोगे इत्यर्थः ॥
७-६४-३१ मूले वंशस्याद्ये ।कुन्तीधृतराष्ट्रसमीपे इत्यर्थः ॥
७-६४-६३ त्रिषष्टितमोऽध्यायः ॥

---

अस्वमेधिकपर्व-अध्यय०६५
॥ श्रीः ॥
१४.६५. अध्यायः ६५

Mahabharata - Ashvamedhika Parva - Chapter Topics
युधिष्ठिरेण विधिवन्नानाषलिहरणादिना

सपरिचरमहेश्वरपतितोषणेन विविधकनकभाण्डाहरणेन पुनर्नगरंप्रत्यागमनम् ॥१ ॥

Mahabharata - Ashvamedhika Parva - Chapter Text

ब्राह्मणा ऊचुः ।
क्रियतामुपहारोऽद्य त्र्यम्बकस्य महात्मनः ।
दत्त्वोपहारं नृपते ततः स्वार्थं यतामहे ॥१४-६५-१ (९४३०२)
वैशम्पायन उवाच।१४-६५-२क्ष् (७९१५)
श्रुत्वा तु वचनं तेषां ब्राह्मणानां युधिष्ठिरः ।
गिरीशस्य यथान्यायमुपहारमुपाहरत् ॥१४-६५-२ (९४३०३)
आज्येन तर्पयित्वाऽग्निं विधिवत्संस्कृतेन च ।
मन्त्रसिद्धं चरुं कृत्वा पुरोधाः स ययै तदा ॥१४-६५-३ (९४३०४)
स गृहीत्वा सुमनसो मन्त्रपूता जनाधिप ।
मोदकैः पायसेनाथ मांसैश्चोपाहरद्बलिम् ॥१४-६५-४ (९४३०५)
सुमनोभिश्च चित्राभिर्लाजैरुच्चावचैरपि ।
सर्वं स्विष्टकृतं हुत्वा विधिवद्वेदपारगः ।
किंकराणां ततः पश्चाच्चकार बलिमुत्तमम् ॥ १४-६५-५ (९४३०६)
यक्षेन्द्राय कुबेराय माणिभद्राय चैव ह ।
तथाऽन्येषां च यक्षाणां भूतानां पतयश्च ये ॥१४-६५-६ (९४३०७)
कृसरेण च मांसेन निवापैस्तिलसंयुतैः ।
ओदनं कुम्भशः कृत्वा पुरोधाः समुपाहरत् ॥१४-६५-७ (९४३०८)
ब्राह्मणेभ्यः सहस्राणि गवां दत्वा तु भूमिपः ।
नक्तंचराणां भूतानां व्यादिदेश बलि तदा ॥१४-६५-८ (९४३०९)
धूपगन्धनिरुद्धं तत्सुमनोभिश्च संवृतम् ।
शुशुभे स्थानमत्यर्थं देवदेवस्य पार्थिवः ॥१४-६५-९ (९४३१०)
कृत्वा पूजां तु रुद्रस्य गणानां चैव सर्वशः ।
ययौ व्यासं पुरस्कृत्य नृपो रत्ननिधिं प्रति ॥१४-६५-१० (९४३११)
पूजयित्वा धनाध्यक्षं प्रणिपत्याभिवाद्य च ।
सुमनोभिर्विचित्राभिरपूपैः कृसरेण च ॥१४-६५-११ (९४३१२)
शङ्खादींश्च निधीन्सर्वान्निधिपालांश्च सर्वशः ।
अर्चयित्वा द्विजाग्र्या स्वस्ति वाच्य च वीर्यवान्  १४-६५-१२ (९४३१३)
तेषां पुण्याहघोषेण तेजसा समवस्थितः ।
प्रीतिमान्स कुरुश्रेष्ठः खानयामासं तं निधिम् ॥१४-६५-१३ (९४३१४)
ततः पात्री सकरका बहुरूपा मनोरमाः ।
भृङ्गाराणि कटाहानि कलशान्वर्धमानकान् ॥१४-६५-१४ (९४३१५)

बहूनि च विचित्राणि भाजनानि सहस्रशः ।
उद्धारयामास तदा धर्मराजो युधिष्ठिरः ॥ १४-६५-१५ (९४३१६)
तेषां रक्षणमप्यासीन्महान्करपुटस्तथा ।
नद्धं च भाजनं राजंस्तुलार्धमभवन्नृप ॥ १४-६५-१६ (९४३१७)
वाहनं पाण्डुपुत्रस्य तत्रासीत्तु विशांपते ।
षष्टिरुष्ट्रसहस्राणि शतानि द्विगुणा हयाः ॥ १४-६५-१७ (९४३१८)
वारणाश्च महाराज सहस्रशतसंमिताः ।
शकटानि रथाश्चैव तावदेव करेणवः ।
स्वराणां पुरुषाणां च परिसङ्ख्या न विद्यते ॥ १४-६५-१८ (९४३१९)
एतद्वित्तं तदभवद्यदुद्दध्रे युधिष्ठिरः ।
षोडशाष्टौ चतुर्विंशत्सहस्रं भारलक्षणम् ॥ १४-६५-१९ (९४३२०)
एतेष्वादाय तद्द्रव्यं पुनरभ्यर्च्य पाण्डवः ।
महादेवं प्रति ययौ पुरं नागाहयं प्रति ॥ १४-६५-२० (९४३२१)
द्वैपायनाभ्यनुज्ञातः पुरस्कृत्य पुरोहितम् ।
गोरुते गोरुते चैव न्यवसत्पुरुषर्षभः ॥ १४-६५-२१ (९४३२२)
सा पुराऽभिमुखा राजन्नुवाह महती चमूः ।
कृच्छ्राद्द्रविणभारार्ता हर्षयन्ती कुरूद्वहान् ॥ ॥ १४-६५-२२ (९४३२३)

इति श्रीमन्महाभारते आश्वमेधिकपर्वणि अनुगीतापर्वणि
पञ्चषष्टितमोऽध्यायः ॥ ६५ ॥
Mahabharata - Ashvamedhika Parva - Chapter Footnotes

७-६५-१४ पात्रीः महान्ति ओदनोद्धरणपात्राणि । करका अल्पघटाः। भृङ्गाराणि गडुकान्। वर्धमानकान् शरावाणि ॥
७-६५-१६ करपटः करसंपुटाकारं द्विजलभाजनं उष्ट्रादिवाह्यम् संदूख इति प्रसिद्धम् ॥

---

अस्वमेधिकपर्व-अध्यय०६६
॥ श्रीः ॥
१४.६६. अध्यायः ६६

Mahabharata - Ashvamedhika Parva - Chapter Topics
कृष्णेन बलभद्रसुमद्रादिभिः सह यज्ञार्थं हास्तिनपुरं प्रत्यागमनम् ॥ १ ॥
तत उत्तरायां परिक्षितो परिक्षितो जननम् ॥ २ ॥

अश्वत्थामास्त्रेण जननकालएव शवभूतस्य तस्योज्जीवनाय कुन्त्यादिभिः श्रीकृष्णंप्रति प्रार्थना ॥ ३ ॥

Mahabharata - Ashvamedhika Parva - Chapter Text

वैशम्पायन उवाच ।
एतस्मिन्नेव काले तु वासुदेवोऽपि वीर्यवान् ।
उपायाद्वृष्णिभिः सार्दं पुरं वारणसाह्वयम् ॥१४-६६-१ (९४३२४)
समयं वाजिमेधस्य विदित्वा पुरुषर्षभः ।
यथोक्तो धर्मपुत्रेण प्रव्रजन्स्वपुरीं प्रति ॥१४-६६-२ (९४३२५)
रौक्मिणेयेन सहितो युयुधानेन चैव ह ।
चारुदेष्णेन सांबेनि गदेन कृतवर्मणा ॥१४-६६-३ (९४३२६)
सारणेन च वीरेण निशठेनोन्मुखेन च ।
बलदेवं पुरस्कृत्य सुभद्रासहितस्तदा ॥१४-६६-४ (९४३२७)
द्रौपदीमुत्तरां चैव पृथां चाप्यवलोककः ।
समाश्वासयितुं चापि क्षत्रिया निहतेश्वराः ॥१४-६६-५ (९४३२८)
तानागतान्समीक्ष्यैव धृतराष्ट्रो महीपतिः ।
प्रत्यगृह्णाद्यथान्यायं विदुरश्च महामनाः ॥१४-६६-६ (९४३२९)
तत्रैव न्यवसत्कृष्णः स्वर्चितः पुरुषोत्तमः ।
विदुरेणि महातेजास्तथैव च युयुत्सुना ॥१४-६६-७ (९४३३०)
वसत्सु वृष्णिवीरेषु तत्राथ जनमेजय ।
जज्ञे तव पिता राजन्परिक्षित्परवीरहा ॥१४-६६-८ (९४३३१)
स तु राजा महाराज ब्रह्मास्त्रेणावपीडितः ।
शवो बभूव निश्चेष्टो हर्षशोकविवर्धनः ॥१४-६६-९ (९४३३२)
हृष्टानां सिंहनादेन जनानां तत्र निःस्वनः ।
आविवश दिशःसर्वाः पुनरेवाभ्युपागमत् ॥१४-६६-१० (९४३३३)
ततः सोतित्वरः कृष्णो विवेशान्तःपुरं तदा ।
युयुधानद्वितीयो वै व्यथितेन्द्रियमानसः ॥१४-६६-११ (९४३३४)
ततस्त्वरितमायान्तीं ददर्श स्वां पितृष्वसाम् ।
क्रोशन्तीमभिधावेति वासुदेवं पुनःपुनः ॥१४-६६-१२ (९४३३५)
पृष्ठतो द्रौपदीं चैव सुभद्रां च यशस्विनीम् ।
विक्रोशन्त्यश्च करुणं पाण्डवानां स्त्रियो नृप ॥१४-६६-१३ (९४३३६)
ततः कृष्णं समासाद्य कुन्ती भोजसुता तदा ।
प्रोवाच राजशार्दूल बाष्पगद्गदया गिरा ॥१४-६६-१४ (९४३३७)
वासुदेव महाबाहो सुप्रजा देवकी त्वया ।
त्वं नो गतिः प्रतिष्ठा च त्वदायत्तमिदं कुलम् ॥१४-६६-१५ (९४३३८)

यदुप्रवीर योऽयं ते स्वस्त्रीयस्यात्मजः प्रभो ।
अश्वत्थाम्ना हतो जातस्तमुज्जीवय केशव ॥१४-६६-१६ (९४३३९)
त्वया ह्येतत्प्रतिज्ञातमैषीके यदुनन्दन ।
अहं संजीवयिष्यामि मृतं जातमिति प्रभो ॥१४-६६-१७ (९४३४०)
सोयं जातो मृतस्तात पश्यैनं पुरुषर्षभ ।
उत्तरां च सुभद्रां च द्रौपदीं मां च माधव ॥१४-६६-१८ (९४३४१)
धर्मपुत्रं च भीमं च फल्गुनं नकुलं तथा ।
सहदेवं च दुर्धर्षं सर्वान्नस्त्रातुमर्हसि ॥१४-६६-१९ (९४३४२)
अस्मिन्प्राणाः समायत्ताः पाण्डवानां ममैव च ।
पाण्डोश्च पिण्डो दाशार्ह तथैव श्वशुरस्य मे ॥१४-६६-२० (९४३४३)
अभिमन्योश्च भद्रं ते प्रियस्य सदृशस्य च ।
प्रियमुत्पादयाद्य त्वं प्रेतस्यापि जनार्दन ॥१४-६६-२१ (९४३४४)
उत्तरा हि पुरोक्तं वै कथयत्यरिसूदन ।
अभिमन्योर्वचः कृष्ण प्रियत्वात्तन्न संशयः ॥१४-६६-२२ (९४३४५)
अब्रवीत्किल दाशार्ह वैराTI.Ar  जुनिस्तदा ।
मातुलस्य कुलं भद्रे तव पुत्रो गमिष्यति ॥१४-६६-२३ (९४३४६)
गत्वा वृष्णयन्धककुलं धनुर्वेदं ग्रहीष्यति ।
अस्त्राणि च विचित्राणि नितीशास्त्रं च केवलं ॥१४-६६-२४ (९४३४७)
इत्येतत्प्रणयात्तात सौभद्रः परवीरहा ।
कथयामास दुर्धर्षस्तथा चैतन्न संशयः ॥१४-६६-२५ (९४३४८)
तास्त्वां वयं प्रणम्येह याचामो मधुसूदन ।
कुलस्यास्य हितार्तं च कुरु कल्याणमुत्तमम् ॥१४-६६-२६ (९४३४९)
एवमुक्त्वा तु वार्ष्णेयं पृथा पृथुललोचना ।
उद्धृत्य बाहू दुःखार्ता ताश्चान्याः प्रापतन्भुवि ॥१४-६६-२७ (९४३५०)
अब्रुवंश्च महाराज सर्वाः सास्राविलेक्षणाः ।
स्वस्त्रीयो वासुदेवस्य मृतो जात इति प्रभो ॥१४-६६-२८ (९४३५१)
एवं गते ततः कुन्तीं पर्यगृह्णाज्जनार्दनः ।
भूमौ निपतितां चैनां सान्त्वयामास भारत ॥ ॥१४-६६-२९ (९४३५२)

इति श्रीमन्महाभारते आश्वमेधिकपर्वणि अनुगीतापर्वणि
षट्षष्टितमोऽध्यायः ॥ ६६ ॥

---

अस्वमेधिकपर्व-अध्यय०६७
॥ श्रीः ॥
१४.६७. अध्यायः ६७

Mahabharata - Ashvamedhika Parva - Chapter Topics

सुभद्रया श्रीकृष्णंप्रति तन्महिमसंस्तवनपूर्वकं
परिक्षिदुज्जीवनप्रार्थना ॥ १ ॥

Mahabharata - Ashvamedhika Parva - Chapter Text

वैशंपायन उवाच ।
उत्थितायां पृथायां तु सुभद्रा भ्रातरं तदा ।
दृष्ट्वा चुक्रोश दुःखार्ता वचनं चेदमब्रवीत् ॥ १४-६७-१ (९४३५३)
पुण्डरीकाक्ष पश्य त्वं पौत्रं पार्थस्य धीमतः ।
परिक्षीणेषु कुरुषु परिक्षीणां गतायुषम् ॥ १४-६७-२ (९४३५४)
इषीका द्रोणपुत्रेणि भीमसेनार्थमुद्यता ।
सोत्तरायां निपतिता विजये मयि चैव ह ॥ १४-६७-३ (९४३५५)
सेयं ज्वलन्ती हृदये मयि तिष्टति केशव ।
यन्न पश्यामि दुर्धर्ष सहपुत्रं तु तं प्रभो ॥ १४-६७-४ (९४३५६)
किंनु वक्ष्यति धर्मात्मा धर्मराजो युधिष्ठिरः ।
भीमसेनार्जुनौ चापि माद्रवत्याः सुतौ च तौ ॥ १४-६७-५ (९४३५७)
श्रुत्वाऽभिमन्योस्तनयं जातं च मृतमेव च ।
मुषिता इव वार्ष्णेय द्रोणपुत्रेण पाण्डवाः ॥ १४-६७-६ (९४३५८)
अभिमन्युः प्रियः कृष्ण पितॄणां नात्र संशयः ।
ते श्रुत्वा किंनु वक्ष्यन्ति द्रोणपुत्रास्त्रनिर्जिताः ॥ १४-६७-७ (९४३५९)
भविता नः परं दुःखं किंनु मन्ये जनार्दन ।
अभिमन्योः सुतं कृष्ण मृतं जातमरिंदम ॥ १४-६७-८ (९४३६०)
साऽहं प्रसादये कृष्ण त्वामद्य शिरसा नता ।
पृथेयं द्रौपदी चैव ताः पश्य पुरुषोत्तम ॥ १४-६७-९ (९४३६१)
यदा द्रोणसुतो गर्भान्पाण्डूनां हन्ति माधव ।
तदा किल त्वया द्रौणिः क्रुद्धेनोक्तोऽरिमर्दन ॥ १४-६७-१० (९४३६२)
अकामं त्वां करिष्यामि ब्रह्मबन्धो नराधम ।
अहं संजीवयिष्यामि किरीटितनयात्मजम् ॥ १४-६७-११ (९४३६३)
इत्येद्वचनं श्रुत्वा जानानाऽहं बलं तव ।
प्रसादये त्वां दुर्धर्ष जीवतामभिमन्युजः ॥ १४-६७-१२ (९४३६४)
यद्येतत्त्वं प्रतिश्रुत्य न करोषि वच शुभम् ।
सकलं वृष्णिशार्दूल मृतां मामवधारय ॥ १४-६७-१३ (९४३६५)
अभिमन्योः सुतो वीर न संजीवति यद्ययम् ।
जीवति त्वयि दुर्धर्ष किं करिष्याम्यहं त्वया ॥ १४-६७-१४ (९४३६६)
संजीवयैनं दुर्धर्ष मृतं त्वमभिमन्युजम् ।

सदृशाक्षसुतं वीर सस्यं वर्षन्निवांम्बुदः ॥ १४-६७-१५ (९४३६७)
त्वं हि केशव धर्मात्मा सत्यवान्सत्यविक्रमः ।
स तां वाचमृतां कर्तुमर्हसि त्वमरिंदम ॥ १४-६७-१६ (९४३६८)
इच्छन्नपि हि लोकांस्त्रीञ्जीवयेथा मृतानिमान् ।
किं पुनर्दयितं जातं स्वस्रीयस्यात्मजं मृतम् ॥ १४-६७-१७ (९४३६९)
प्रभावज्ञाऽस्मि ते कृष्ण तस्मात्त्वां याचयाम्यहम् ।
कुरुष्व पाण्डुपुत्राणामिमं परमनुग्रहम् ॥ १४-६७-१८ (९४३७०)
स्वसेति वा महाबाहो हतपुत्रेति वा पुनः ।
प्रपन्ना मामियं चेति दयां कर्तुमिहार्हसि ॥ ॥ १४-६७-१९ (९४३७१)

इति श्रीमन्महाभारते आश्वमेधिकपर्वणि अनुगीतापर्वि
सप्तषष्टितमोऽध्यायः ॥ ६७ ॥
Mahabharata - Ashvamedhika Parva - Chapter Footnotes

७-६७-४ घृतेन सिक्तैरिति शेषः ॥

---

अस्वमेधिकपर्व-अध्यय०६८
॥ श्रीः ॥
१४.६८. अध्यायः ६८

Mahabharata - Ashvamedhika Parva - Chapter Topics
कृष्णेन परिक्षित्सूतिकागृहप्रवेशनम् ॥ १ ॥
तत्रोत्तरया कृष्णसमीपे बहुधा विलापपूर्वकं पुत्रोज्जीवनप्रार्थना ॥ २ ॥

Mahabharata - Ashvamedhika Parva - Chapter Text

वैशम्पायन उवाच ।
एवमुक्तस्तु राजेन्द्र केशिहा दुःखमुर्च्छितः ।
तथेति व्याजहारोच्चैर्ह्लादयन्निव तं जनम् ॥ १४-६८-१ (९४३७२)
वाक्येनैतेन हि तदा तं जनं पुरुषर्षभः ।
ह्लादयामास स विभुर्घर्मार्तं सलिलैरिव ॥ १४-६८-२ (९४३७३)
ततः स प्राविशत्तूर्णं जन्मवेश्म पितुस्तव ।
अर्चितं पुरुषव्याघ्र सितैर्माल्यैर्यथाविधि ॥ १४-६८-३ (९४३७४)
अपां कुम्भैः सुपूर्णैश्च विन्यस्तैः सर्वतोदिशम् ।
घृतेन तिन्दुकालातैः सर्षपैश्च महाभुज ॥ १४-६८-४ (९४३७५)
अस्त्रैश्च विमलैर्न्यस्तैः पावकैश्च समन्ततः ।

वृद्धाभिश्चापि रामाभिः परिवारार्थमावृतः ।
दक्षैश्च परितो धीर भिषग्भिः कुशलैस्तथा ॥ १४-६८-५ (९४३७६)
ददर्श च स तेजस्वी रक्षोघ्नान्यपि सर्वशः ।
द्रव्याणि स्थापितानि स्म विधिवत्कुशलैर्जनैः ॥ १४-६८-६ (९४३७७)
तथायुक्तं च तद्दृष्ट्वा जन्मवेश्म पितुस्तव ।
हृष्टोऽभवद्धृषीकेशः साधुसाध्विति चाब्रवीत् ॥ १४-६८-७ (९४३७८)
तथा ब्रुवति वार्ष्णेये प्रहृष्टवदने तदा ।
द्रौपदी त्वरिता गत्वा वैराटीं वाक्यमब्रवीत् ॥ १४-६८-८ (९४३७९)
अयमायाति ते भर्तुर्मातुलो मधुसूदनः ।
पुराणर्षिरचिन्त्यात्मा समीपमपराजितः ॥ १४-६८-९ (९४३८०)
साऽपि बाष्पकलां वाचं निगृह्याश्रूपि चैव ह ।
असंवीताऽभवद्देवी देववत्कृष्णमीयुषी ॥ १४-६८-१० (९४३८१)
सा तथा दूयमानेन हृदयेन तपस्विनी ।
दृष्ट्वा गोविन्दमायान्तं कृपणं पर्यदेवयत् ॥ १४-६८-११ (९४३८२)
पुण्डरीकाक्ष पश्यावां बालेन हि विनाकृतौ ।
अभिमन्युं च मां चैव हठात्तुल्यं जनार्दन ॥ १४-६८-१२ (९४३८३)
वार्ष्णेयमधुहन्वीर शिरसा त्वां प्रसादये ।
द्रोणपुत्रास्त्रनिर्दग्धं जीवयैनं ममात्मजम् ॥ १४-६८-१३ (९४३८४)
यदि स्म धर्मराज्ञा वा भीमसेनेन वा पुनः ।
त्वया वा पुण्डरीकाक्ष वाक्यमुक्तमिदं भवेत् ॥ १४-६८-१४ (९४३८५)
अजानतीमिषीकेयं जनित्रीं हन्त्विति प्रभो ।
अहमेव विनष्टा स्यां नायमेवं गतो भवेत् ॥ १४-६८-१५ (९४३८६)
गर्भस्थस्यास्य बालस्य ब्रह्मास्त्रेण निपातनम् ।
कृत्वा नृशंसं दुर्बुद्धिर्द्रौणिः किं फलमश्नुते ॥ १४-६८-१६ (९४३८७)
सा त्वां प्रसाद्य शिरसा याचे शत्रुनिबर्हण ।
प्राणांस्त्यक्ष्यामि गोविन्द नायं संजीवते यदि ॥ १४-६८-१७ (९४३८८)
अस्मिन्हि बहवः साधो ये ममासन्मनोरथाः ।
ते द्रोणपुत्रेण हताः किंनु जीवामि केशव ॥ १४-६८-१८ (९४३८९)
आसीन्मम मतिः कृष्ण पूर्णोत्सङ्गा जनार्दन ।
अभिवादयिष्ये हृष्टेति तदिदं वितथीकृतम् ॥ १४-६८-१९ (९४३९०)
चपलाक्षस्य दायादे मृतेऽस्मिन्पुरुषर्षभ ।
विफला मे कृताः कृष्ण हृदि सर्वे मनोरथाः ॥ १४-६८-२० (९४३९१)
चपलाक्षः किलातीव प्रियस्ते मधुसूदन ।
सुतं पश्य त्वमस्यैनं ब्रह्मास्त्रेण निपातितम् ॥ १४-६८-२१ (९४३९२)
कृतघ्नोऽयं नृशंसोऽयं यथाऽस्य जनकस्तथा ।
यः पाण्डवीं श्रियं त्यक्त्वा गतोऽद्य यमसादनं ॥ १४-६८-२२ (९४३९३)

मया चैतत्प्रतिज्ञातं रणमूर्धनि केशव ।
अभिमन्यौ हते वीर त्वामेष्याम्यचिरादिति ॥ १४-६८-२३ (९४३९४)
तच्च नाकरवं कृष्ण नृशंसा जीवितप्रिया ।
इदानीं मां गतां तत्र किंनु वक्ष्यति फाल्गुनिः ॥ ॥ १४-६८-२४ (९४३९५)

इति श्रीमन्महाभारते आश्वमेधिकपर्वणि अनुगीतापर्वणि
अष्टषष्टितमोऽध्यायः ॥ ६८ ॥
Mahabharata - Ashvamedhika Parva - Chapter Footnotes

७-६८-१९ पुत्रोत्सङ्गा जनार्दनेति झ पाठः ॥

---

अस्वमेधिकपर्व-अध्यय०६९
॥ श्रीः ॥
१४.६९. अध्यायः ६९

Mahabharata - Ashvamedhika Parva - Chapter Topics
कृष्णेन सशपथं संस्पर्शनेन परिक्षितः समुज्जीवनम् ॥ १ ॥

Mahabharata - Ashvamedhika Parva - Chapter Text

वैशम्पायन उवाच ।
सैवं विलप्य करुणं सोन्मादेव तपस्विनी ।
उत्तरा न्यपतद्भूमौ कृपणा पुत्रगृद्धिनी ॥ १४-६९-१ (९४३९६)
तां तु दृष्ट्वा निपतितां हतपुत्रपरिच्छदाम् ।
चुक्रोश कुन्ती दुःखार्ता सर्वाश्च भरतास्त्रियः ॥ १४-६९-२ (९४३९७)
मुहूर्तमिव राजेन्द्र पाण्डवानां निवेशनम् ।
अप्रेक्षणीयमभवदार्तस्वनविनादितम् ॥ १४-६९-३ (९४३९८)
सा मुहूर्तं च राजेन्द्र पुत्रशोकाभिपीडिता ।
कश्मलाभिहता वीर वैराटी त्वभवत्तदा ॥ १४-६९-४ (९४३९९)
प्रतिलभ्य तु सा संज्ञामुत्तरा भरतर्षभ ।
अङ्कमारोप्य तं पुत्रमिदं वचनमब्रवीत् ॥ १४-६९-५ (९४४००)
धर्मज्ञस्य सुतः संस्त्वं न धर्ममवबुध्यसे ।
यस्त्वं वृष्णिप्रवीरस्य कुरुषे नाभिवादनम् ॥ १४-६९-६ (९४४०१)
पुत्र गत्वा मम वचो ब्रूयास्त्वं पितरं त्विदम् ।
दुर्मरं प्राणिनां वीर काले प्राप्ते कथञ्चन ॥ १४-६९-७ (९४४०२)
याऽहं त्वया विनाऽद्येह पत्या पुत्रेण चैव ह ।

मरणं नाभिगच्छामि हतस्वस्तिरकिञ्चना ॥१४-६९-८ (९४४०३)
अथवा धर्मराज्ञाऽहमनुज्ञाता महाभुजः ।
भक्षयिष्ये विषं घोरं प्रवेक्ष्ये वा हुताशनम् ॥१४-६९-९ (९४४०४)
अथवा दुर्भरं तात यदिदं मे सहस्रधा ।
पतिपुत्रविहीनाया हृदयं न विदीर्यते ॥१४-६९-१० (९४४०५)
उत्तिष्ठ पुत्र पस्येमां दुःखितां प्रपितामहीम् ।
आर्तामुपप्लुतां दीनां निमग्नां शोकसागरे ॥१४-६९-११ (९४४०६)
आर्यां च पश्य पाञ्चालीं सात्वतीं च तपस्विनीम् ।
मां च पश्य सुदुःखार्तां व्याधविद्धां मृगीमिव ॥१४-६९-१२ (९४४०७)
उत्तिष्ठ पश्य वदनं लोकनाथस्य धीमतः ।
पुण्डरीकपलाशाक्षं पुरेव चपलेक्षणः ॥१४-६९-१३ (९४४०८)
एवं विप्रलपन्तीं तु दृष्ट्वा निपतितां पुनः ।
उत्तरां तां स्त्रियः सर्वाः पुनरुत्थापयन्त्युत ॥१४-६९-१४ (९४४०९)
उत्थाय च पुनर्धैर्यात्तदा मत्स्यपतेः सुता ।
प्राञ्जलिः पुण्डरीकाक्षं भूमावेवाभ्यवादयत् ॥१४-६९-१५ (९४४१०)
श्रुत्वा स तस्या विपुलं विलापं पुरुषर्षभः ।
उपस्पृश्य ततः कृष्णो ब्रह्मास्त्रं प्रत्यसंहरत् ॥१४-६९-१६ (९४४११)
प्रतिजज्ञे च दाशार्हस्तस्य जीवितमच्युतः ।
अब्रवीच्च विशुद्धात्मा सर्वं विश्रावयज्जगत् ॥१४-६९-१७ (९४४१२)
न ब्रवीम्युत्तरे मिथ्या सत्यमेतद्भविष्यति ।
एष संजीवयाम्येनं पश्यतां सर्वदेहिनाम् ॥१४-६९-१८ (९४४१३)
नोक्तपूर्वं मया मिथ्या स्वैरेष्वपि कदाचन ।
न च युद्धात्परावृत्तस्तथा संजीवतामयम् ॥१४-६९-१९ (९४४१४)
यथा मे दयितो धर्मो ब्राह्मणश्च विशेषतः ।
अभिमन्योः सुतो जातो मृतो जीवत्वयं तथा ॥१४-६९-२० (९४४१५)
यथाऽहं नाभिजानामि विजये तु कदाचन ।
विरोधं तेन सत्येन मृतो जीवत्वयं शिशुः ॥१४-६९-२१ (९४४१६)
यथा सत्यं च धर्मश्च मयि नित्यं प्रतिष्ठितौ ।
तथा मृतः शिशुरयं जीवतादभिमन्युजः ॥१४-६९-२२ (९४४१७)
यथा कंसश्च केशी च धर्मेण निहतौ मया ।
तेन सत्येन बालोऽयं पुनः संजीवतामिह ॥१४-६९-२३ (९४४१८)
इत्युक्त्वा वासुदेवोऽथ तं बालं भरतर्षभ ।
ग्पादेन कमलाभेन ब्रह्मरुद्रार्चितेन च ।
पस्पर्श पुण्डरीकाक्ष आपादतलमस्तकम् ॥ १४-६९-२४ (९४४१९)
स्पृष्टमात्रस्तु कृष्णेन स बालो भरतर्षभ ।
शनैःशनैर्महाराज प्रापद्यत स चेतनाम् ॥' १४-६९-२५ (९४४२०)

शनैःशनैर्महाराज प्रास्पन्दत सचेतनः ॥ ॥ १४-६९-२६ (९४४२१)

इति श्रीमन्महाभारते आश्वमेधिकपर्वणि अनुगीतापर्वणि
एकोनसप्ततितमोऽध्यायः ॥ ६९ ॥
Mahabharata - Ashvamedhika Parva - Chapter Footnotes

७-६९-६ धर्मजस्य सुत इति क थ पाठः ॥

---

अस्वमेधिकपर्व-अध्यय०७०
॥ श्रीः ॥
१४.७०. अध्यायः ७०

Mahabharata - Ashvamedhika Parva - Chapter Topics
कृष्णेनाभिमन्युसुतस्य पदप्रवृत्तिनिमित्तकथनपूर्वकं नामकरणम्
॥ १ ॥
अत्रान्तरे युधिष्ठिरादीनां स्वर्णभारानयनेन
हस्तिनपुरंप्रत्यागमनश्रवणेन कृष्णादिभिस्तत्प्रत्युद्यानम् ॥ २ ॥

Mahabharata - Ashvamedhika Parva - Chapter Text

वैशम्पायन उवाच ।
ब्रह्मास्त्रं तु यदा राजन्कृष्णेन प्रतिसंहृतम् ।
तदा तद्वेश्म ते पित्रा तेजसाऽभिविदीपितम् ॥ १४-७०-१ (९४४२२)
ततो रक्षांसि सर्वाणि नेशुस्त्यक्त्वा गृहं तु तत् ।
अन्तरिक्षे च वागासीत्साधु केशव साध्विति ॥ १४-७०-२ (९४४२३)
तदस्त्रं ज्वलितं चापि पितामहमगात्तदा ।
ततः प्राणान्पुनर्लेभे पिता तव नरेश्वर ॥ १४-७०-३ (९४४२४)
व्यचेष्टत च बालोसौ यथोत्साहं यताबलम् ।
बभूवुर्मुदिता राजंस्ततस्ता भरतस्त्रियः ॥ १४-७०-४ (९४४२५)
ब्राह्मणा वाचयामासुर्गोविन्दस्यैव शासनात् ।
ततस्ता मुदिताः सर्वाः प्रशशंसुर्जनार्दनम् ॥ १४-७०-५ (९४४२६)
स्त्रियो भरतसिंहानां नावं लब्ध्वेव पारगाः ।
कुन्ती द्रुपदपुत्री च सुभद्रा चोत्तरा तथा ।
स्त्रियश्चान्या नृसिंहानां बभूवुर्हृष्टमानसाः ॥ १४-७०-६ (९४४२७)
तत्र मल्ला नटाश्चैव ग्रन्थिकाः सौख्यशायिकाः ।
सूतमागधसङ्घाश्चाप्यस्तुवंस्तं जनार्दनम् ॥ १४-७०-७ (९४४२८)

कुरुवंशस्तवाख्याभिराशीर्भिर्भरतर्षभ ।
ग्सभाजयत संहृष्टो महाराज महाजनः ॥' १४-७०-८ (९४४२९)
उत्थाय तु यथाकालमुत्तरा यदुनन्दनम् ।
अभ्यवादयत प्रीता सह पुत्रेण भारत ॥१४-७०-९ (९४४३०)
ततस्तस्यै ददौ प्रीतो बहुरत्नं विशेषतः ।
तथैव वृष्णिशार्दूलो नाम चास्याकरोत्प्रभुः ।
पितुस्तव महाराज सत्यसन्धो जनार्दनः ॥ १४-७०-१० (९४४३१)
परिक्षीणे कुले यस्माज्जातोऽयमभिमन्युजः ।
परिक्षिदिति नामास्य भवत्वित्यब्रवीत्तदा ॥१४-७०-११ (९४४३२)
सोऽवर्धत यथाकालं पिता तव जनाधिप ।
मनःप्रह्लादनश्चासीत्सर्वलोकस्य भारत ॥१४-७०-१२ (९४४३३)
मासजातस्तु ते वीर पिता भवति भारत ।
अथाजग्मुः सुबहुलं रत्नमादाय पाण्डवाः ॥१४-७०-१३ (९४४३४)
ग्मेरुकूटनिभान्भाण्डान्कलशान्भाजनानि च ।
कृताकृतं महद्गीममादाय पुरुषोत्तमाः ॥१४-७०-१४ (९४४३५)
भारतैर्वाहनैस्तत्र गोरुते गोरुते पथि ।
निवसन्तो ययुर्देवं स्मरन्तः परमेष्ठिनः ॥१४-७०-१५ (९४४३६)
नासीत्तत्र नृपः कश्चिदभारार्तो नृपं विना ।
भीमादयोऽपि यज्ञार्थं वहन्ते किं पुनर्जनाः ॥' १४-७०-१६ (९४४३७)
तान्समीपगताञ्श्रुत्वा निर्ययुर्वृष्णिपुङ्गवाः ।
अलञ्चक्रुश्च माल्यौघैर्नगरं नागसाह्वयम् ॥१४-७०-१७ (९४४३८)
पताकाभिर्विचित्राभिर्ध्वजैश्च विविधैरपि ।
वेश्मानि समलञ्चक्रुः पौराश्चापि जनेश्वरः ॥१४-७०-१८ (९४४३९)
देवतायतनानां च पूजाः सुविविधास्तथा ।
संदिदेशाथ विदुरः पाण्डुपुत्रप्रियेप्सया ॥१४-७०-१९ (९४४४०)
राजमार्गाश्च तत्रासन्सुमनोभिरलङ्कृताः ।
शुशुभे तत्पुरं चापि समुद्रौघनिभस्वनम् ॥१४-७०-२० (९४४४१)
नर्तकैश्चापि नृत्यद्भिर्गायकानां च निःस्वनैः ।
आसीद्वैश्रवणस्येव निवासस्तत्पुरं तदा ॥१४-७०-२१ (९४४४२)
बन्दिभिश्च नरै राजन्स्त्रीसहायैश्च सर्वशः ।
तत्रतत्र विविक्तेषु समन्तादुपशोभितम् ॥१४-७०-२२ (९४४४३)
पताका धूयमानाश्च समन्तान्मातरिश्वना ।
अदर्शयन्निव तदा कुरूंन्वै दक्षिणोत्तरान् ॥१४-७०-२३ (९४४४४)
अघोषयंस्तदा चाप पुरुषा राजमार्गतः ।
सर्वरात्रविहारोऽद्य रत्नाभरणलक्षणः ॥ ॥१४-७०-२४ (९४४४५)

इति श्रीमन्महाभारते आश्वमेधिकपर्वणि अनुगीतापर्वणि
सप्ततितमोऽध्यायः ॥ ७० ॥

Mahabharata - Ashvamedhika Parva - Chapter Footnotes

७-७०-५ वाचयामासुः स्वस्तीति शेषः ॥
७-७०-७ ग्रन्थिकाः दैवज्ञाः सुखावहं सौख्यं शयनं इति
पृच्छन्ति ते सौख्यशायिकाः ॥
७-७०-८ कुरुवंशस्य स्तवं आचक्षते ताभिः कुरुवंशस्तवाख्याभिः ॥
७-७०-९ उत्थाय तु यथाकाममिति क ट थ पाठः ॥
७-७०-१० तस्य कृष्णो ददौ हृष्टो बहुरत्नं विशेषतः । तथान्ये
वृष्णिशार्दूला इति झ पाठः ॥

---

अस्वमेधिकपर्व-अध्यय०७१
॥ श्रीः ॥
१४.७१. अध्यायः ७१

Mahabharata - Ashvamedhika Parva - Chapter Topics

कृष्णादिभिः प्रत्युद्गम्यमानैर्युधिष्ठिरादिभिः स्वर्णभारपुरस्कारेण
हास्तिनपुरप्रवेशः ॥ १ ॥
ततस्तत्रोपागतेन व्यासेन युधिष्ठिरंप्रत्यश्वमेधप्रशंसनपूर्वकं
तत्करणविधानम् ॥ २ ॥
युधिष्ठिरेणाश्वमेधे स्वयं दीक्षास्वीकारं प्रार्थितेन कृष्णेन
सहेतुकथनं तम्प्रत्येव दीक्षास्वीकारविधानम् ॥ ३ ॥

Mahabharata - Ashvamedhika Parva - Chapter Text

वैशम्पायन उवाच ।
तान्समीपगताञ्श्रुत्वा पाण्डवाञ्शत्रुकर्शनः ।
वासुदेवः सहामात्यः प्रययौ ससुहृद्गणः ।
ते समेत्य यथान्यायं प्रत्युद्याता दिदृक्षया ॥ १४-७१-१ (९४४४६)
ते समेत्य तथाधर्मं पाण्डवा वृष्णिभिः सह ।
विविशुः सहिता राजन्पुरं वारणसाह्वयम् ॥ १४-७१-२ (९४४४७)
विशतस्तस्य सैन्यस्य खुरनेमिस्वनेन ह ।
द्यावापृथिव्यौ खं चैव सर्वमासीत्समावृतम् ॥ १४-७१-३ (९४४४८)
ते कोशानग्रतः कृत्वा विविशुः स्वं पुरं तदा ।
पाण्डवाः प्रीतमनसः सामात्याः ससुहृद्गणाः ॥ १४-७१-४ (९४४४९)

ते समेत्य यथान्यायं धृतराष्ट्रं जनाधिपम् ।
कीर्तयन्तः स्वनामानि तस्य पादौ ववन्दिरे ॥ १४-७१-५ (९४४५०)
धृतराष्ट्राभ्यनुज्ञाता गान्धारीं सुबलात्मजाम् ।
कुन्तीं च राजशार्दूल तदा भरतसत्तम ॥ १४-७१-६ (९४४५१)
विदुरं पूजयित्वा च वैश्यापुत्रं समेत्य च ।
पूज्यमानाः स्म ते वीरा व्यरोचन्त विशाम्पते ॥ १४-७१-७ (९४४५२)
ततस्तत्परमाश्चर्यं विचित्रं महदद्भुतम् ।
शुश्रुवुस्ते तदा वीराः पितुस्ते जन्म भारत ॥ १४-७१-८ (९४४५३)
तदुपश्रुत्य तत्कर्म वासुदेवस्य धीमतः ।
पूजार्हं पूजयामासुः कृष्णं देवकीनन्दनम् ॥ १४-७१-९ (९४४५४)
ततः कतिपयाहस्य व्यासः सत्यवतीसुतः ।
आजगाम महातेजा नगरं नागसाह्वयम् ॥ १४-७१-१० (९४४५५)
तस्य सर्वे यथान्यायं पूजा चक्रुः कुरूद्वहाः ।
सह वृष्ण्यन्धकव्याघ्रैरुपासांचक्रिरे तदा ॥ १४-७१-११ (९४४५६)
तत्र नानाविधाकाराः कथाः समभिकीर्त्य वै ।
युधिष्ठिरो धर्मसुतो व्यासं वचनमब्रवीत् ॥ १४-७१-१२ (९४४५७)
भवत्प्रसादाद्भगवन्यदिदं रत्नमाहृतम् ।
उपयोक्तुं तदिच्छामि वाजिमेधे महाक्रतौ ॥ १४-७१-१३ (९४४५८)
तमनुज्ञातुमिच्छामि भवता मुनिसत्तम ।
त्वदधीना वयं सर्वे कृष्णस्य च महात्मनः ॥ १४-७१-१४ (९४४५९)
व्यास उवाच। १४-७१-१५क्ष् (७९१६)
अनुजानामि राजंस्त्वां क्रियतां यदनन्तरम् ।
यजस्व वाजिमेधेन विधिवद्दक्षिणावता ॥ १४-७१-१५ (९४४६०)
अश्वमेधो हि राजेन्द्र पावनः सर्वपाप्मनाम् ।
तेनेष्ट्वा त्वं विपात्मा वै भविता नात्र संशयः ॥ १४-७१-१६ (९४४६१)
इत्युक्तः स तु धर्मात्मा कुरुराजो युधिष्ठिरः ।
अश्वमेधस्य कौरव्य चकाराहरणे मतिम् ॥ १४-७१-१७ (९४४६२)
समनुज्ञाप्य तत्सर्वं कृष्मद्वैपायनं नृपः ।
वासुदेवमथाभ्येत्य वाग्मी वचनमब्रवीत् ॥ १४-७१-१८ (९४४६३)
देवकी सुप्रजा देवी त्वया पुरुषसत्तम ।
यद्ब्रूयां त्वां महाबाहो तत्कृथास्त्वमिहाच्युत ॥ १४-७१-१९ (९४४६४)
त्वत्प्रभावार्जितान्भोगानश्नीम यदुनन्दन ।
पराक्रमेण बुद्ध्या च त्वयेयं निर्जिता मही ॥ १४-७१-२० (९४४६५)
दीक्षयस्व त्वमात्मानं त्वं हि नः परमो गुरुः ।
त्वयीष्टवति दाशार्ह विपाप्मा भविता ह्यहम् ॥ १४-७१-२१ (९४४६६)
त्वं हि यज्ञो गुरुश्च त्वं धर्मज्ञस्त्वं प्रजापतिः ।

त्वं गतिः सर्वभूतानामिति मे निश्चिता मतिः ॥१४-७१-२२ (९४४६७)
वासुदेव उवाच।१४-७१-२३क्ष् (७९१७)
त्वमेवैतन्महाबाहो कर्तुमर्हस्यरिंदम ।
त्वं गतिः सर्वभूतानामिति मे निश्चिता मतिः ॥१४-७१-२३ (९४४६८)
त्वं चाद्यि कुरुवीराणां धर्मेण हि विराजसे ।
गुणीभूताः स्म ते राजंस्त्वं नो राजन्गुरुर्मतः ।
यजस्व मदनुज्ञातः प्राप्य एष क्रतुस्त्वया ॥ १४-७१-२४ (९४४६९)
युनक्तु नो भवान्कार्ये यत्र वाञ्छसि भारत ।
सत्यं ते प्रतिजानामि सर्वं कर्तास्मि तेऽनघ ॥१४-७१-२५ (९४४७०)
भीमसेनार्जुनौ चैव तथा माद्रवतीसुतौ ।
इष्टवन्तो भविष्यन्ति त्वयीष्टवति पार्थिवे ॥ ॥१४-७१-२६ (९४४७१)

इति श्रीमन्महाभारते आश्वमेधिकपर्वणि अनुगीतापर्वणि
एकसप्ततितमोऽध्यायः ॥ ७१ ॥
Mahabharata - Ashvamedhika Parva - Chapter Footnotes

७-७१-७ वैश्यापुत्रं युयुत्सुम् ॥
७-७१-१६ पावनः नाशकः ॥

---

अस्वमेधिकपर्व-अध्यय०७२
॥ श्रीः ॥
१४.७२. अध्यायः ७२

Mahabharata - Ashvamedhika Parva - Chapter Topics
व्यासेन युधिष्ठिरंप्रति पृथिवीसंचाराय मेध्याश्वोत्सर्जनचोदना ॥ १ ॥
तथाऽश्वरक्षणेऽर्जुनस्य नियोजनम् ॥ २ ॥

Mahabharata - Ashvamedhika Parva - Chapter Text

वैशम्पायन उवाच ।
एवमुक्तस्तु कृष्णेन धर्मपुत्रो युधिष्ठिरः ।
व्यासमामन्त्र्य् मेधावी ततो वाचनमब्रवीत् ॥१४-७२-१ (९४४७२)
यदा कालं भवान्वेत्ति हयमेधस्य तत्त्वतः ।
दीक्षयस्व तदा मां त्वं त्वय्यायत्तो हि मे क्रतुः ॥१४-७२-२ (९४४७३)
व्यास उवाच।१४-७२-३क्ष् (७९१८)
अयं पैलोथ कौन्तेय याज्ञवल्क्यस्तथैव च ।

विधानं यद्यथा कालं तत्कर्तारौ न संशयः ॥१४-७२-३ (९४४७४)
चैत्र्यां हि पौर्णमास्यां तु तव दीक्षा भविष्यति ।
सम्भाराः सम्भ्रियन्तां च यज्ञार्थं पुरुषर्षभ ॥१४-७२-४ (९४४७५)
अश्वविद्याविदश्चैव सूता विप्राश्च तद्विदः ।
मेध्यमश्वं परीक्षन्तां तव यज्ञार्थसिद्धये ॥१४-७२-५ (९४४७६)
तमुत्सृज यथाशास्त्रं पृथिवीं सागराम्बराम् ।
सपर्येतु यशो नाम्ना तव पार्थिव वर्धयन् ॥१४-७२-६ (९४४७७)
इत्युक्तः स तथेत्युक्त्वा पाण्डवः पृथिवीपतिः ।
चकार सर्वं राजेन्द्र यथोक्तं ब्रह्मवादिना ॥१४-७२-७ (९४४७८)
सम्भारश्चैव राजेन्द्र सर्वे सङ्कल्पितास्तता ॥ १४-७२-८ (९४४७९)
स सम्भारान्समाहृत्य नृपो धर्मसुतस्तदा ।
न्यवेदयदमेयात्मा कृष्णद्वैपायनाय वै ॥१४-७२-९ (९४४८०)
ततोऽब्रवीन्महातेजा व्यासो धर्मात्मजं नृपम् ।
यथाकालं यथायोगं सज्जाः स्म तव दीक्षणे ॥१४-७२-१० (९४४८१)
स्फ्यश्च कूर्चश्च सौवर्णो यच्चान्यदपि कौरव ।
यत्तु योग्यं भवेत्किञ्चिद्रौक्मं तत्क्रियतामिति ॥१४-७२-११ (९४४८२)
अश्वश्चोत्सृज्यतामद्य पृथ्व्यामथ यथाक्रमम् ।
सुगुप्तं चरतां चापि यथाशास्त्रं यथाविधि ॥१४-७२-१२ (९४४८३)
युधिष्ठिर उवाच।१४-७२-१३क्ष् (७९११)
अयमश्वो यता ब्रह्मन्नुत्सृष्टः पृथिवीमिमाम् ।
चरिष्यति यथाकामं तत्र वै संविदीयताम् ॥१४-७२-१३ (९४४८४)
पृथिवीं पर्यटन्तं हि तुरगं कामचारिणम् ।
कः पालयेदिति मुने तद्भवान्वक्तुमर्हति ॥१४-७२-१४ (९४४८५)
इत्युक्तः स तु राजेन्द्र कृष्णद्वैपायनोऽब्रवीत् ।
भीमसेनादवरजः श्रेष्ठः सर्वधनुष्मताम् ।
जिष्णुः सहिष्णुर्धृष्णुस्च स एनं पालयिष्यति ॥ १४-७२-१५ (९४४८६)
शक्तः स हि महीं जेतुं निवातकवचान्तकः ।
तस्मिन्ह्यस्त्राणि दिव्यानि दिव्यं संहननं तथा ।
दिव्यं धनश्चेषुधी च स एनमनुयास्यति ॥ १४-७२-१६ (९४४८७)
स हि धर्मार्थकुशलः सर्वविद्याविशारदः ।
यथाशास्त्रं नृपश्रेष्ठ चारयिष्यति ते हयम् ॥१४-७२-१७ (९४४८८)
राजपुत्रो महाबाहुः श्यामो राजीवलोचनः ।
अभिमन्योः पिता वीरः स एनमनुयास्यति ॥१४-७२-१८ (९४४८९)
भीमसेनोपि तेजस्वी कौन्तेयोऽमितविक्रमः ।
समर्थो रक्षितुं राष्ट्रं नकुलश्च विशाम्पते ॥१४-७२-१९ (९४४९०)
सहदेवस्तु कौरव्य समायास्यति बुद्धिमान् ।

कुटुम्बतन्त्रं विधिवत्सर्वमेव महायशाः ॥१४-७२-२० (९४४९१)
स तु सर्वं यथान्यायमुक्त कुरुकुलोद्वहः ।
चकार फल्गुनं चापि संदिदेश हयं प्रति ॥१४-७२-२१ (९४४९२)
युधिष्ठिर उवाच।१४-७२-२२क्ष् (७९२०)
एह्यर्जुन त्वया वीर हयोऽयं परिपाल्यताम् ।
त्वमर्हो रक्षितुं ह्येनं नान्यः कश्चन मानवः ॥१४-७२-२२ (९४४९३)
ये चापि त्वां महाबाहो प्रत्युद्यान्ति नराधिपाः ।
तैर्विग्रहो यथा न स्यात्तथा कार्यं त्वयाऽनघ ॥१४-७२-२३ (९४४९४)
आख्यातव्यश्च भता यज्ञोऽयं मम सर्वशः ।
पार्थिवेभ्यो महाबाहो समये गम्यतामिति ॥१४-७२-२४ (९४४९५)
वैशम्पायन उवाच।१४-७२-२५क्ष् (७९२१)
एवमुक्त्वा स धर्मात्मा भ्रातरं सव्यसाचिनम् ।
भीमं च नकुलं चैव पुरगुप्तौ समादधत् ॥१४-७२-२५ (९४४९६)
कुटुम्बतन्त्रे च तदा सहदेवं युधांपतिम् ।
अनुमान्य महीपालं धृतराष्ट्रं युधिष्ठिरः ॥ ॥१४-७२-२६ (९४४९७)

इति श्रीमन्महाभारते आश्वमेधिकपर्वणि अनुगीतापर्वणि
द्विसप्ततितमोऽध्यायः ॥ ७२ ॥

Mahabharata - Ashvamedhika Parva - Chapter Footnotes

७-७२-११ स्फ्यः काष्ठखङ्गः स चात्र सौवर्णः ।कूर्च आसनार्थं
कुशमुष्टिः सोऽप्यत्र सौवर्णः ॥
७-७२-१२ सुगुप्तं सुरक्षितं यथा स्यात्तथा ॥

---

अस्वमेधिकपर्व-अध्यय०७३
॥ श्रीः ॥
१४.७३. अध्यायः ७३

Mahabharata - Ashvamedhika Parva - Chapter Topics

अर्जुनेन युधिष्ठिरनियोगाद्ब्राह्मणैः क्षत्रियैश्च सह
प्रथममुत्तरदिश्यश्वसञ्चारणेन रक्षणाय तदनुसरणम् ॥१ ॥

Mahabharata - Ashvamedhika Parva - Chapter Text

वैशम्पायन उवाच ।
दीक्षाकाले तु सम्प्राप्ते ततस्ते सुमहर्त्विजः ।

विधिवद्दीक्षयामासुरश्वमेधाय पार्थिवम् ॥१४-७३-१ (९४४९८)
कृत्वा स पशुमेधांश्च दीक्षितः पाण्डुनन्दनः ।
धर्मराजो महातेजाः सहर्त्विग्भिर्व्यरोचत ॥१४-७३-२ (९४४९९)
हयश्च हयमेधार्थं स्वयं स ब्रह्मवादिना ।
उत्सृष्टः शास्त्रविधिना व्यासेनामिततेजसा ॥१४-७३-३ (९४५००)
स राजा राजधर्मेण दीक्षितो विबभौ तदा ।
हेममाली रुक्मकण्ठः प्रदीप्त इव पावकः ॥१४-७३-४ (९४५०१)
कृष्णाजिनी दण्डपाणिः क्षौमवासाः स धर्मजः ।
विबभौ द्युतिमान्भूयः प्रजापतिरिवाध्वरे ॥१४-७३-५ (९४५०२)
तथैवास्यर्त्विजः सर्वे तुल्यवेषा विशांपते ।
बभूवुरर्जुनश्चापि प्रदीप्त इव पावकः ॥१४-७३-६ (९४५०३)
श्वेताश्वः कपिकेतुश्च ससाराश्वं धनञ्जयः ।
विधिवत्पृथिवीपाल धर्मराजस्य शासनात् ॥१४-७३-७ (९४५०४)
क़क़क्षिपन्गाण्डिवं राजन्बद्धगोधाङ्गुलित्रवान् ।
तमश्वं पृथिवीपाल मुदा युक्तः ससार च ॥१४-७३-८ (९४५०५)
अनुमार्गं तदा राजन्नागमत्तत्पुरं विभो ।
द्रष्टुकामं कुरुश्रेष्ठं प्रयास्यन्तं धनञ्जयम् ॥१४-७३-९ (९४५०६)
तेषामन्योन्यसम्मर्दादूष्मेव समाजायत ।
दिदृक्षूणां हयं तं च तं चैव हयसारिणम् ॥१४-७३-१० (९४५०७)
ततः शब्दो महाराज दिशः खं प्रतिपूरयन् ।
बभूव प्रेक्षतां नॄणां कुन्तीपुत्रं धनंजयम् ॥१४-७३-११ (९४५०८)
एष गच्छति कौन्तेयस्तुरगश्चैव दीप्तिमान् ।
समन्वेति महाबाहुः संस्पृशन्धनुरुत्तमम् ॥१४-७३-१२ (९४५०९)
एवं शुश्राव वदतां गिरो जिष्णुरुदारधीः ।
स्वस्ति तेऽस्तु व्रजारिष्टं पुनश्चैहीति भारत ॥१४-७३-१३ (९४५१०)
अथापरे मनुष्येन्द्र पुरुषा वाक्यमब्रुवन् ।
नैनं पश्याम सम्मर्दे धनुरेतत्प्रदृश्यते ॥१४-७३-१४ (९४५११)
एतद्धि भीमनिर्ह्रादं विश्रुतं गाण्डिवं धनुः ।
स्वस्ति गच्छत्वरिष्टो वै पन्थानमकुतोभयम् ।
निवृत्तमेनं द्रक्ष्यामः पुनरेष्यति च ध्रुवम् ॥ १४-७३-१५ (९४५१२)
एवमाद्या मनुष्याणां स्त्रीणां च भरतर्षभ ।
शुश्राव मधुरा वाचः पुनःपुनरुदारधीः ॥१४-७३-१६ (९४५१३)
याज्ञवल्क्यस्य शिष्यश्च कुशलो यज्ञकर्मणि ।
प्रायात्पार्थेन सहितः शान्त्यर्थं वेदपारगः ॥१४-७३-१७ (९४५१४)
ब्राह्मणाश्च महीपाल बहवो वेदपारगाः ।
अनुजग्मुर्महात्मानं क्षत्रियाश्च विशाम्पते ।

विधिवत्पृथिवीपाल धर्मराजस्य शासनात् ॥ १४-७३-१८ (९४५१५)
पाण्डवैः पृथिवीमश्वो निर्जितामस्त्रतेजसा ।
चचार स महाराज यथादेशं च सत्तम ॥१४-७३-१९ (९४५१६)
तत्र युद्धानि वृत्तानि यान्यासन्पाण्डवस्य ह ।
तानि वक्ष्यामि ते वीर विचित्राणि महान्ति च ॥१४-७३-२० (९४५१७)
स हयः पृथिवीं राजन्प्रदक्षिणमवर्तत ।
ससारेत्तरतः पूर्वं तन्निबोध महीपते ॥१४-७३-२१ (९४५१८)
अवमृद्नन्स राष्ट्राणि पार्थिवानां हयोत्तमः ।
शनैस्तदा परिययौ श्वेताश्वश्च महारथः ॥१४-७३-२२ (९४५१९)
तत्र सङ्गणना नास्ति राज्ञामयुतशस्तदा ।
येऽयुध्यन्त महाराज क्षत्रिया हतबान्धवाः ॥१४-७३-२३ (९४५२०)
किराता यवना राजन्बहवोऽसिधनुर्धराः ।
म्लेच्छाश्चान्ये बहुविधाः पूर्वं ये निकृता रणे ॥१४-७३-२४ (९४५२१)
आर्याश्च पृथिवीपालाः प्रहृष्टनरवाहनाः ।
समीयुः पाण्डुपुत्रेण बहवो युद्धदुर्मदाः ॥१४-७३-२५ (९४५२२)
एवं वृत्तानि युद्धानि तत्रतत्र महीपते ।
अर्जुनस्य महीपालैर्नानादेशसमागतैः ॥१४-७३-२६ (९४५२३)
यान्यत्र हयतो राजन्प्रवृत्तानि महान्ति च ।
तानि युद्धानि वक्ष्यामि कौन्तेयस्य तवानघ ॥ ॥१४-७३-२७ (९४५२४)

इति श्रीमन्महाभारते आश्वमेधिकपर्वणि अनुगीतापर्वणि
त्रिसप्ततितमोऽध्यायः ॥ ७३ ॥

Mahabharata - Ashvamedhika Parva - Chapter Footnotes

७-७३-९ आकुमारं तदा राजन् इति झ पाठः ॥
७-७३-१७ शिष्यः सोमश्रवाः ॥

---

अस्वमेधिकपर्व-अध्यय०७४
॥ श्रीः ॥
१४.७४. अध्यायः ७४

Mahabharata - Ashvamedhika Parva - Chapter Topics

अर्जुनेन त्रैगर्तानां पराजयः ॥१ ॥

Mahabharata - Ashvamedhika Parva - Chapter Text

वैशम्पायन उवाच ।
त्रिगर्तैरभवद्युद्धं कृतवैरैः किरीटिनः ।
महारथसमाज्ञातैर्हतानां पुत्रनप्तृभिः ॥१४-७४-१ (९४५२५)
ते समाज्ञाय सम्प्राप्तं यज्ञियं तुरगोत्तमक्क्क्क्क्क
विषयान्तं ततो वीरा दंशिताः पर्यवारयन् ॥ १४-७४-२ (९४५२६)
रथिनो बद्धतूणीराः सदश्वैः समलङ्कृतैः ।
परिवार्य हयं राजन्ग्रहीतुं सम्प्रचक्रमुः ॥१४-७४-३ (९४५२७)
ततः किरीटी सञ्चिन्त्य तेषां तत्र चिकीर्षितम् ।
वारयामास तान्वीरान्सान्त्वपूर्वमरिंदमः ॥१४-७४-४ (९४५२८)
तदनादृत्य ते सर्वे शरैरभ्यहनंस्तदा ।
तमोरजोभ्यां संछन्नांस्तान्किरीटी न्यवारयत् ॥१४-७४-५ (९४५२९)
तानब्रवीत्ततो जिष्णुः प्रहसन्निव भारत ।
निवर्तध्वमधर्मज्ञाः श्रेयो जीवितमेव च ॥१४-७४-६ (९४५३०)
स हि वीरः प्रयास्यन्वै धर्मराजेन वारितः ।
हतबान्धवा न ते पार्त हन्तव्याः पार्थिवा इति ॥१४-७४-७ (९४५३१)
स तदा तद्वचः श्रुत्वा धर्मराजस्य धीमतः ।
तान्निवर्तध्वमित्याह न न्यवर्तन्ति चापि ते ॥१४-७४-८ (९४५३२)
ततस्त्रिगर्तराजानं सूर्यवर्माणमाहवे ।
विनद्य शरजालेनि प्रजहास धनंजयः ॥१४-७४-९ (९४५३३)
ततस्ते रथघोपेण रथनेमिस्वनेन च ।
पूरयन्तो दिशः सर्वा धनंजयमुपाद्रवन् ॥१४-७४-१० (९४५३४)
सूर्यवर्मा ततः पार्ते शराणां नतपर्वणाम् ।
शतान्यमुञ्चद्राजेन्द्र लघ्वस्त्रमभिदर्शयन् ॥१४-७४-११ (९४५३५)
तथैवान्ये महेष्वासा ये च तस्यानुयायिनः ।
मुमुचुः शरवर्षाणि धनंजयवधैषिणः ॥१४-७४-१२ (९४५३६)
स ताञ्ज्यामुखनिर्मुक्तैर्बहुभिः सुबहूञ्शरान् ।
चिच्छेद पाण्डवो राजंस्ते भूमौ न्यपतंस्तदा ॥१४-७४-१३ (९४५३७)
केतुवर्मा तु तेजस्वी तस्यैवावरजो युवा ।
युयुधे भ्रातुरर्थाय पाण्डवेन यशस्विना ॥१४-७४-१४ (९४५३८)
तमापतन्तं सम्प्रेक्ष्य केतुवर्माणमाहवे ।
अभ्यघ्नन्निशितैर्बाणैर्बीभत्सुः परवीरहा ॥१४-७४-१५ (९४५३९)
केतुवर्मण्यभिहते धृतवर्मा महारथः ।
रथेनाशु समुत्पत्य शरैर्जिष्णुमवाकिरत् ॥१४-७४-१६ (९४५४०)
तस्य तां शीघ्रतामीक्ष्य तुतोषातीव वीर्यवान् ।
गुडाकेशो महादेजा बालस्य धृतवर्मणः ॥१४-७४-१७ (९४५४१)
न संदधानं ददृशे नाददानं च तं तदा ।

किरन्तमेवं स शरान्ददृशे पाकशासनिः ॥१४-७४-१८ (९४५४२)
स तु तं पूजयामास धृतवर्माणमाहवे ।
मनसा तु मुहूर्तं वै रणे समभिहर्षयन् ॥१४-७४-१९ (९४५४३)
ग्न विव्याध रणे क्रुद्धः कुन्तीपुत्रो हसन्निव ।
सौभद्रस्येव तत्कर्म दृष्ट्वा बालस्य विस्मितः ॥१४-७४-२० (९४५४४)
तं पन्नगमिव क्रुद्धं कुरुवीरः स्मयन्निव ।
प्रीतिपूर्वं महाबाहुः प्राणैर्न व्यपरोपयत् ॥१४-७४-२१ (९४५४५)
स तथा रक्ष्यमाणो वै पार्थेनामिततेजसा ।
धृतवर्मा शरं दीप्तं मुमोच विजये तदा ॥१४-७४-२२ (९४५४६)
स तेन विजयस्तूर्णमासीद्विद्धः करे भृशम् ।
मुमोच गाण्डिवं मोहात्तत्पपाताथ भूतले ॥१४-७४-२३ (९४५४७)
धनुषः पततस्तस्य सव्यसाचिकराद्विभो ।
बभूव सदृशं रूपं शक्रचापस्य भारत ॥१४-७४-२४ (९४५४८)
तस्मिन्निपतिते दिव्ये महाधनुषि पार्थिवः ।
चकार सस्वनं हासं धृतवर्मा महाहवे ॥१४-७४-२५ (९४५४९)
ततो रोषार्दितो जिष्णुः प्रमृज्य रुधिरं करात् ।
धनुरादत्त तद्दिव्यं शरवर्षैर्ववर्ष च ॥१४-७४-२६ (९४५५०)
ततो हलहलाशब्दो दिवस्पृगभवत्तदा ।
नानाविधानां भूतानां तत्कर्माणि प्रशंसताम् ॥१४-७४-२७ (९४५५१)
ततः सम्प्रेक्ष्य संक्रुद्धं कालान्तकयमोपमम् ।
जिष्णुं त्रैगर्तका योधाः परीताः पर्यवारयन् ॥१४-७४-२८ (९४५५२)
अभिसृत्य परीप्सार्थं ततस्ते धृतवर्मणः ।
परिवव्रुर्गुडाकेशं तत्राक्रुद्ध्यद्धनंजयः ॥१४-७४-२९ (९४५५३)
ततो योधाञ्जघानाशु तेषां स दश चाष्ट च ।
महेन्द्रवज्रप्रतिमैरायसैर्बहुभिः शरैः ॥१४-७४-३० (९४५५४)
तान्सम्प्रभग्नान्सम्प्रेक्ष्य त्वरमाणो धनंजयः ।
शरैराशीविषाकारैर्जघान स्वनवद्धसन् ॥१४-७४-३१ (९४५५५)
ते भग्नमनसः सर्वे त्रैगर्तकमहारथाः ।
दिशोऽभिदुद्रुवू राजन्धनंजयशरार्दिताः ॥१४-७४-३२ (९४५५६)
ग्हतावशिष्टा हि पराः पार्थं दृष्टपराक्रमाः।'
तमूचुः पुरुषव्याघ्रं संशप्तकनिषूदनम् ॥ १४-७४-३३ (९४५५७)
तवास्म किंकराः सर्वे सर्वे वै वशगास्तव ।
आज्ञापयस्वः नः पार्थ प्रह्वान्प्रेष्यानवस्थितान् ।
करिष्यामः प्रियं सर्वं तव कौरवनन्दन ॥ १४-७४-३४ (९४५५८)
एतदाज्ञाय वचनं सर्वांस्तानब्रवीत्तदा ।
जीवितं रक्षत नृपाः शासनं प्रतिगृह्यताम् ॥ ॥१४-७४-३५ (९४५५९)

इति श्रीमन्महाभारते आश्वमेधिकपर्वणि अनुगीतापर्वणि
चतुःसप्ततितमोऽध्यायः ॥ ७४ ॥

---

अस्वमेधिकपर्व-अध्यय०७५
॥ श्रीः ॥
१४.७५. अध्यायः ७५

Mahabharata - Ashvamedhika Parva - Chapter Topics
अर्जुनेन प्राग्ज्योतिषपुरमेत्याश्वरक्षणाय भगदत्तसुतेन
यज्ञदत्तेन सहायोधनम् ॥१ ॥

Mahabharata - Ashvamedhika Parva - Chapter Text

वैशम्पायन उवाच ।
प्राग्ज्योतिषमथाभ्येत्य व्यचरत्स हयोत्तमः ।
भगदत्तात्मजस्तत्र निर्ययौ रणकर्कशः ॥१४-७५-१ (९४५६०)
सहयं पाण्डुपुत्रं तु विषयान्तमुपागतम् ।
युयुधे भरतश्रेष्ठ यज्ञदत्तो महीपतिः ॥१४-७५-२ (९४५६१)
सोभिनिर्याय नगराद्भगदत्तसुतो नृपः ।
अश्वमायान्तमुन्मथ्य नगराभिमुखो ययौ ॥१४-७५-३ (९४५६२)
तमालक्ष्य महाबाहुः कुरूणामृषभस्तदा ।
गाण्डीवं विक्षिपंस्तूर्णं सहसा समुपाद्रवत् ॥१४-७५-४ (९४५६३)
ततो गाण्डीवनिर्मुक्तैरिषुभिर्मोहितो नृपः ।
हयमुत्सृज्य तं वीरस्ततः पार्थमुपाद्रवत् ॥१४-७५-५ (९४५६४)
पुनः प्रविश्य नगरं दंशितः स नृपोत्तमः ।
आरुह्य नागप्रवरं निर्ययौ युद्धकाङ्क्षया ॥१४-७५-६ (९४५६५)
पाण्डुरेणातपत्रेण ध्रियमाणेन मूर्धनि ।
दोधूयता चामरेण श्वेतेन च महारथः ॥१४-७५-७ (९४५६६)
ततः पार्थं समासाद्य पाण्डवानां महारथम् ।
आह्वयामास बीभत्सुं बाल्यान्मोहाच्च संयुगे ॥१४-७५-८ (९४५६७)
स वारणं नगप्रख्यं प्रभिन्नकरटामुखम् ।
प्रेषयामास संक्रुद्धः श्वेताश्वं प्रति पार्थिवः ॥१४-७५-९ (९४५६८)
विक्षरन्तं महामेघं परवारणवारणम् ।
शस्त्रवत्कल्पितं सङ्ख्ये विवशं युद्धदुर्मदम् ॥१४-७५-१० (९४५६९)
प्रचोद्यमानः स गजस्तेन राज्ञा महाबलः ।

तदाऽङ्कुशेन विबभावुत्पतिष्यन्निवाम्बरम् ॥ १४-७५-११ (९४५७०)
तमापतन्तं सम्प्रेक्ष्य क्रुद्धो राजन्धनंजयः ।
भूमिष्ठो वारणगतं योधयामास भारत ॥ १४-७५-१२ (९४५७१)
यज्ञदत्तस्ततः क्रुद्धो मुमोचाशु धनंजये ।
तोमरानग्निसङ्काशाञ्शलभानिव वेगितान् ॥ १४-७५-१३ (९४५७२)
अर्जुनस्तानसम्प्राप्तान्गाण्डीवप्रभवैः शरैः ।
द्विधा त्रिधा च चिच्छेद खगमान्खगमैस्तदा ॥ १४-७५-१४ (९४५७३)
स तान्दृष्ट्वा तथा छिन्नांस्तोमरान्भगदत्तजः ।
इषूनसक्तांस्त्वरितः प्राहिणोत्पाण्डवं प्रति ॥ १४-७५-१५ (९४५७४)
ततोऽर्जुनस्तूर्णतरं रुक्मपुङ्खानजिह्मगान् ।
प्रेषयामास संक्रुद्धो भगदत्तात्मजं प्रति ॥ १४-७५-१६ (९४५७५)
स तैर्विद्धो महातेजा यज्ञदत्तो महामृधे ।
भृशाहतः पपातोर्व्यां न त्वेनमजहात्स्मृतिः ॥ १४-७५-१७ (९४५७६)
ततः स पुनरारुह्य वारणप्रवरं रणे ।
अव्यग्रः प्रेषयामास जयार्थी विजयं प्रति ॥ १४-७५-१८ (९४५७७)
तस्मै बाणांस्ततो जिष्णुर्निर्मुक्ताशीविषोपमान् ।
प्रेषयामास संक्रुद्धो ज्वलितज्वलनोपमान् ॥ १४-७५-१९ (९४५७८)
स तैर्विद्धो महानागो विस्रवन्रुधिरं बभौ ।
हिमवानिव शैलेन्द्रो बहुप्रस्रवणस्तदा ॥ ॥ १४-७५-२० (९४५७९)

इति श्रीमन्महाभारते आश्वमेधिकपर्वणि अनुगीतापर्वणि
पञ्चसप्तकतितमोऽध्यायः ॥ ७५ ॥

Mahabharata - Ashvamedhika Parva - Chapter Footnotes

७-७५-२ वज्रदत्तो महीपतिरिति झ पाठः ॥
७-७५-२० गैरिकाक्तमिवाम्भोद्रिर्बहुप्रस्रवणं तदा इति झ पाठः ॥

---

अस्वमेधिकपर्व-अध्यय०७६
॥ श्रीः ॥
१४.७६. अध्यायः ७६

Mahabharata - Ashvamedhika Parva - Chapter Topics

अर्जुनेन भगदत्तात्मजपराजयः ॥ १ ॥

Mahabharata - Ashvamedhika Parva - Chapter Text

एवं त्रिरात्रमभवत्तद्युद्धं भरतर्षभ ।

अर्जुनस्य नरेन्द्रेण वृत्रेणेव शतक्रतोः ॥१४-७६-१ (९४५८०)
ततश्चतुर्थे दिवसे यज्ञदत्तो महाबलः ।
जहास सस्वनं हासं वाक्यं चेदमताब्रवीत् ॥१४-७६-२ (९४५८१)
अर्जुनार्जुन तिष्ठस्व न मे जीवन्विमोक्ष्यसे ।
त्वां निहत्य करिष्यामि पितुस्तोयं यथाविधि ॥१४-७६-३ (९४५८२)
त्वया वृद्धो मम पिता भगदत्तः पितुः सखा ।
हतो वृद्धोऽपि बाधित्वा शिशुं मामद्य योधय ॥१४-७६-४ (९४५८३)
इत्येवमुक्त्वा संक्रुद्धो यज्ञदत्तो नराधिपः ।
प्रेषयामास कौरव्य वारणं पाण्डवं प्रति ॥१४-७६-५ (९४५८४)
सम्प्रेष्यमाणो नागेन्द्रो यज्ञदत्तेन धीमता ।
उत्पतिष्यन्निवाकाशमभिदुद्राव पाण्डवम् ॥१४-७६-६ (९४५८५)
अग्रहस्तसुमुक्तेन शीकरेण स नागराट् ।
समौक्षति गुडाकेशं शैलं नील इवाम्बुदः ॥१४-७६-७ (९४५८६)
स तेन प्रेषितो राज्ञा मेघवद्विनदन्मुहुः ।
मुखाडम्बरसंह्रादैरभ्यद्रवत फल्गुनम् ॥१४-७६-८ (९४५८७)
स नृत्यन्निव नागेन्द्रो यज्ञदत्तप्रचोदितः ।
आससाद द्रुतं राजन्कौरवाणां महारथम् ॥१४-७६-९ (९४५८८)
तमायान्तमथालक्ष्य यज्ञदत्तस्य वारणम् ।
गाण्डीवमाश्रित्य बली न व्यकम्पत शत्रुहा ॥१४-७६-१० (९४५८९)
चुक्रोध बलवच्चापि पाण्डवस्तस्य भूपतेः ।
कार्यविघ्नमनुस्मृत्यि पूर्ववैरं च भारत ॥१४-७६-११ (९४५९०)
ततस्तं वारणं क्रुद्धः शरजालेन पाण्डवः ।
निवारयामास तदा वेलेव मकरालयम् ॥१४-७६-१२ (९४५९१)
स नागप्रवरः श्रीमानर्जुनेन निवारितः ।
तस्थौ शरैर्विनुन्नाङ्गः श्वाविच्छललितो यथा ॥१४-७६-१३ (९४५९२)
निवारितं गजं दृष्ट्वा भगदत्तसुतो नृपः ।
उत्ससर्ज शितान्बाणानर्जुने क्रोधमूर्छितः ॥१४-७६-१४ (९४५९३)
अर्जुनस्तु महाबाहुः शरैररिनिघातिभिः ।
वारयामास तान्बाणांस्तदद्भुतमिवाभवत् ॥१४-७६-१५ (९४५९४)
ततः पुनरभिक्रुद्धो राजा प्राग्ज्योतिषाधिपः ।
प्रेषयामास नागेन्द्रं बलवत्पर्वतोपमम् ॥१४-७६-१६ (९४५९५)
तमापतन्तं सम्प्रेक्ष्य बलवान्पाकशासनिः ।
नाराचमग्निसङ्काशं प्राहिणोद्वारणं प्रति ॥१४-७६-१७ (९४५९६)
स तेन वारणो राजन्मर्मस्वभिहतो भृशम् ।
पपात सहसा भूमौ वज्ररुग्ण इवाचलः ॥१४-७६-१८ (९४५९७)
स पतञ्शुशुभे नागो धनंजयशराहतः ।

विशन्निव महाशैलो महीं वज्रप्रपीडितः ॥१४-७६-१९ (९४५९८)
तस्मिन्निपतिते नागे यज्ञदत्तस्य पाण्डवः ।
तं न भेतव्यमित्याह ततो भूमिगतं नृपम् ॥१४-७६-२० (९४५९९)
अब्रवीद्धि महातेजाः प्रस्थितं मां युधिष्ठिरः ।
राजानस्ते न हन्तव्या धनंजय कथञ्चन ॥१४-७६-२१ (९४६००)
सर्वमेतन्नरव्याघ्र भवत्येतावता कृतम् ।
योधाश्चापि न हन्तव्या धनंजय रणे त्वया ॥१४-७६-२२ (९४६०१)
वक्तव्याश्चापि राजानः सर्वे सह सुहृज्जनैः ।
युधिष्ठिरस्याश्वमेधो भवद्भिरनुभूयताम् ॥१४-७६-२३ (९४६०२)
इति भ्रातृवचः श्रुत्वा न हन्मि त्वां नराधिप ।
उत्तिष्ठ न भयं तेऽस्ति स्वस्तिमान्गच्छ पार्थिव ॥१४-७६-२४ (९४६०३)
आगच्छेथा महाराज परां चैत्रीमुपस्थिताम् ।
तदाऽश्वमेधो भविता धर्मिराजस्य धीमतः ॥१४-७६-२५ (९४६०४)
एवमुक्तः स राजा तु भगदत्तात्मजस्तदा ।
तथेत्येवाब्रवीद्वाक्यं पाण्डवेनाभिनिर्जितः ॥ ॥१४-७६-२६ (९४६०५)

इति श्रीमन्महाभारते आश्वमेधिकपर्वणि अनुगीतापर्वणि
षट्सप्ततितमोऽध्यायः ॥ ७६ ॥

Mahabharata - Ashvamedhika Parva - Chapter Footnotes

७-७६-१३ शललितः शलाकाप्रोतः ॥

---

अस्वमेधिकपर्व-अध्यय०७७

॥ श्रीः ॥

१४.७७. अध्यायः ७७

Mahabharata - Ashvamedhika Parva - Chapter Topics

अश्वानुसरणवशास्सिन्धुदेशं गतेनार्जुनेन सैन्धवैःसह
महाऽऽयोधनम् ॥१ ॥
बाणगणावकीर्णस्यार्जुनस्य कराद्गाण्डीवस्या धःपतने
देवर्ष्यादिभिर्जपादिना तस्य तेजोदीपनम् ॥२ ॥
ततः पुनरर्जुनेन तैः सक्रकक्रयोधनम् ॥३ ॥

Mahabharata - Ashvamedhika Parva - Chapter Text

वैशम्पायन उवाच ।

गजित्वा प्रसाद्य राजानं भगदत्तसुतं तदा ।
विसृज्य याते तुरगे सैन्धवान्प्रति भारत ॥' १४-७७-१ (९४६०६)
सैन्धवैरभवगद्युद्धं ततस्तस्य किरीटिनः ।
हतशेषैर्महाराज हतानां च सुतैरपि ॥१४-७७-२ (९४६०७)
तेऽवतीर्णमुपश्रुत्य विषयं श्वेतवाहनम् ।
प्रत्युद्ययुरमृष्यन्ते राजानः पाण्डवर्षभम् ॥१४-७७-३ (९४६०८)
अश्वं च तं परामृश्य विषयान्ते विषोपमात् ।
न भयं चक्रिरे पार्थाद्भीमसेनादनन्तरात् ॥१४-७७-४ (९४६०९)
तेऽविदूराद्धनुष्पाणिं यज्ञियस्य हयस्य च ।
बीभत्सुं प्रत्यपद्यन्त् पदातिनमवस्थितम् ॥१४-७७-५ (९४६१०)
ततस्ते तं महावीर्या राजानः पर्यवारयन् ।
जिगीषन्तो नरव्याघ्रं पूर्वं विनिकृता युधि ॥१४-७७-६ (९४६११)
ते नामान्यपि गोत्राणि कर्मणि विविधानि च ।
कीर्तयन्तस्तदा पार्थं शरवर्षैरवाकिरन् ॥१४-७७-७ (९४६१२)
ते किरन्तः शरव्रातान्वारणप्रतिवारणान् ।
रणे जयमभीप्सन्तः कौन्तेयं पर्यवारयन् ॥१४-७७-८ (९४६१३)
ते समीक्ष्य च तं कृष्णमुग्रकर्माणमाहवे ।
सर्वे युयुधिरे वीरा रथस्थास्तं पदातिनम् ॥१४-७७-९ (९४६१४)
ते तमाजघ्निरे वीरं निवातकवचान्तकम् ।
संशप्तकनिहन्तारं हन्तारं सैन्धवस्य च ॥१४-७७-१० (९४६१५)
ततो रथसहस्रेण गजानामयुतेन च ।
क्कक्कष्ठकीकृत्य बीभत्सुं प्रहृष्टमनसोऽभवन् ॥१४-७७-११ (९४६१६)
क्क स्मरन्तो वधं वीराः सिन्धुराजस्य चाहवे ।
जयद्रथस्य कौरव्य समरे सव्यसाचिना ॥१४-७७-१२ (९४६१७)
ततः पर्जन्यवत्सर्वे शरवृष्टीरवासृजन् ।
तैः कीर्णः शुशुभे पार्थो रविर्मेघान्तरे यथा ॥१४-७७-१३ (९४६१८)
स शरैः समवच्छन्नश्चकाशे पाण्डवर्षभः ।
पञ्चरान्तरसञ्चारी शकुन्त इव भारत ॥१४-७७-१४ (९४६१९)
ततो हाहाकृतं सर्वं कौन्तेय शरपीडिते ।
त्रैलोक्यमभवद्राजन्नविरासीद्रजोरुणः ॥१४-७७-१५ (९४६२०)
ततो ववौ महाराज मारुतो रोमहर्षणः ।
राहुरग्रसदादित्यं पर्वणीव विशाम्पते ॥१४-७७-१६ (९४६२१)
उल्काश्च जघ्निरे सूर्यं विकीर्यन्त्यः समन्ततः ।
वेपथुश्चाभवद्राजन्कैलासस्य महागिरेः ॥१४-७७-१७ (९४६२२)
मुमुचुः श्वासमत्युष्णं दुःखशोकसमन्विताः ।
सप्तर्षयो जातभयास्तथा देवर्षयोपि च ॥१४-७७-१८ (९४६२३)

शशं चाशु विनिर्भिद्य मण्डलं शशिनोऽपतन् ।
विपरीता दिशश्चापि सर्वा धूमाकुलास्तथा ॥ १४-७७-१९ (९४६२४)
रासभारुणसङ्काशा धनुष्मन्तः सविद्युतः ।
आवृत्य गगनं मेघा मुमुचुर्मांसशोणितम् ॥ १४-७७-२० (९४६२५)
एवमासीत्तदा वीरे शरवर्षेण संवृते ।
फल्गुने भरतश्रेष्ठ तदद्भुतमिवाभवत् ॥ १४-७७-२१ (९४६२६)
तस्य तेनावकीर्णस्य शरजालेन सर्वतः ।
मोहात्पपात गाण्डीवमावापश्च करादपि ॥ १४-७७-२२ (९४६२७)
तस्मिन्मोहमनुप्राप्ते शरजालं महत्तदा ।
सैन्धवा मुमुचुस्तूर्णं गतसत्वे महारथे ॥ १४-७७-२३ (९४६२८)
ततो मोहं समापन्नं ज्ञात्वा पार्थं द्विवौकसः ।
सर्वे वित्रस्तमनसस्तस्य शान्तिकृतोऽभवन् ॥ १४-७७-२४ (९४६२९)
ततो देवर्षयः सर्वे तथा सप्तर्षयोपि च ।
ब्रह्मर्षयस्च विजयं जेपुः पार्थस्य धीमतः ॥ १४-७७-२५ (९४६३०)
ततः प्रदीपिते देवैः पार्थतेजसि पार्थिव ।
तस्थावचलवद्धीमान्सङ्ग्रामे परमास्त्रवित् ॥ १४-७७-२६ (९४६३१)
विचकर्ष धनुर्दिव्यं ततः कौरवनन्दनः ।
यन्त्रस्येवेह शब्दोऽभून्महांस्तस्य पुनः पुनः ॥ १४-७७-२७ (९४६३२)
ततः स शरवर्षाणि प्रत्यमित्रान्प्रति प्रभुः ।
ववर्ष धनुषा पार्थो वर्षाणीव पुरंदरः ॥ १४-७७-२८ (९४६३३)
ततस्ते सैन्धवा योधाः सर्व एव सराजकाः ।
नादृश्यन्त शरैः कीर्णाः शलभैरिव पादपाः ॥ १४-७७-२९ (९४६३४)
तस्य शब्देन वित्रेसुर्भयार्ताश्च विदुद्रुवुः ।
मुमुचुस्चाश्रु शोकार्ताः शुशुचुश्चापि सैन्धवाः ॥ १४-७७-३० (९४६३५)
तांस्तु सर्वान्नरव्याघ्रः सैन्धवान्व्यचरद्बली ।
अलातचक्रवद्राजञ्शरजालैः समार्पयत् ॥ १४-७७-३१ (९४६३६)
तदिन्द्रजालप्रतिमं बाणजालममित्रहा ।
विसृज्य दिक्षु सर्वासु महेन्द्रि इव वज्रभृत् ॥ १४-७७-३२ (९४६३७)
मेघजालनिभं सैन्यं विदार्य शरवृष्टिभिः ।
विबभौ कौरवश्रेष्ठः शरदीव दिवाकरः ॥ ॥ १४-७७-३३ (९४६३८)

इति श्रीमन्महाभारते आश्वमेधिकपर्वणि अनुगीतापर्वणि
सप्तसप्ततितमोऽध्यायः ॥ ७७ ॥

Mahabharata - Ashvamedhika Parva - Chapter Footnotes

७-७७-१९ उत्काः शशं चन्द्रस्थं विनिर्भिद्य शशिनो मण्डलं प्रति

अपतन्निति अनुवृत्त्या सम्बन्धः ॥
७-७७-२० रासभारुणे वर्णविशेषः ॥
७-७७-२२ आवापो हस्तावापः ॥

---

अस्वमेधिकपर्व-अध्यय०७८
॥ श्रीः ॥
१४.७८. अध्यायः ७८

Mahabharata - Ashvamedhika Parva - Chapter Topics
अर्जुनसमागमनश्रवणमात्रेण जयद्रथसुते मृते दुश्शलया
तत्सुतमानीयार्जुनंप्रत्यभियानम् ॥ १ ॥
ततोऽर्जुनेन दुश्शलाप्रार्थनया तस्यां बहुमानेन च युद्धादुपरमः ॥ २ ॥

Mahabharata - Ashvamedhika Parva - Chapter Text

वैशम्पायन उवाच ।
ततो गाण्डीवभृच्छूरो युद्धाय समुपस्थितः ।
विबभौ युधि दुर्धर्षो हिमवानचलो यथा ॥ १४-७८-१ (९४६३९)
ततस्ते सैन्धवा योधाः पुनरेव व्यवस्थिताः ।
व्यमुञ्चन्त सुसंरब्धाः शरवर्षाणि भारत ॥ १४-७८-२ (९४६४०)
तान्प्रहस्य महाबाहुः पुनरेव व्यवस्थितान् ।
ततः प्रोवाच कौन्तेयो मुमूर्षञ्श्लक्ष्णया गिरा ॥ १४-७८-३ (९४६४१)
युध्यध्वं परया शक्त्या यतध्वं विजये मम ।
कुरुध्वं सर्वकार्याणि महद्वो भयमागतम् ॥ १४-७८-४ (९४६४२)
एष योत्स्यामि सर्वांस्तु निवार्य शरवागुराम् ।
तिष्ठध्वं युद्धमनसो दर्पं शमयितास्मि वः ॥ १४-७८-५ (९४६४३)
एतावदुक्त्वा कौरव्यो रोषाद्गाण्डीवभृत्तदा ।
ततोऽथ वचनं स्मृत्वा भ्रातुर्ज्येष्ठस्य भारत ॥ १४-७८-६ (९४६४४)
न हन्तव्या रणे तात क्षत्रिया विजिगीषवः ।
जेतव्याश्चेति यत्प्रोक्तं धर्मराज्ञा महात्मना ।
चिन्तयामास स तदा फल्गुनः पुरुषर्षभः ॥ १४-७८-७ (९४६४५)
इत्युक्तोऽहं नरेन्द्रेण न हन्तव्या नृपा इति ।
कथितं न मृषेदं स्याद्धर्मराजवचः शुभम् ॥ १४-७८-८ (९४६४६)
न हन्येरंश्च राजानो राज्ञश्चाज्ञा कृता भवेत् ।
इति सञ्चिन्त्य स तदा फल्गुनः पुरुषर्षभः ॥ १४-७८-९ (९४६४७)
प्रोवाच वाक्यं धर्मज्ञः सैन्धवान्युद्धदुर्मदान् ।

बालांस्त्रियो वा युष्माकं न हनिष्ये व्यवस्थितान् ॥१४-७८-१० (९४६४८)
यश्च वक्ष्यति सङ्ग्रामे तवास्मीति पराजितः ।
एतच्छ्रुत्वा वचो मह्यं कुरुध्वं हितमात्मनः ॥१४-७८-११ (९४६४९)
ततोऽन्यथा कृच्छ्रगता भविष्यथ मयाऽर्दिताः ।
एवमुक्त्वा तु तान्वीरान्युयुधे कुरुपुङ्गवः ॥१४-७८-१२ (९४६५०)
अत्वरावानसम्भ्रान्तः संक्रुद्धैर्विजिगीषुभिः ।
शतं शतसहस्राणि शराणां नतपर्वणाम् ॥१४-७८-१३ (९४६५१)
मुमुचुः सैन्धवा राजंस्तदा गाण्डीवधन्वनि ।
शरानापततः क्रूरानाशीविषविषोपमान् ।
चिच्छेद निशितैर्बाणैरन्तरा स धनंजयः ॥ १४-७८-१४ (९४६५२)
छित्त्वा तु तानाशु चैव कङ्कपत्राञ्शिलाशितान् ।
एकैकमेषां समरे बिभेद निशितैः शरैः ॥१४-७८-१५ (९४६५३)
ततः प्रासांश्च शक्तीस्च पुनरेव धनंजये ।
जयद्रथं हतं स्मृत्वा चिक्षिपुः सैन्धवा नृपाः ॥१४-७८-१६ (९४६५४)
तेषां किरीटी सङ्कल्पं मोघं चक्रे महाबलः ।
सर्वांस्तानन्तरा च्छित्त्वा तदा चुक्रोश पाण्डवः ।
तथैवापततां तेषां योधानां जयगृद्धिनाम्। १४-७८-१७ (९४६५५)
तथैवापततां तेषां योधानां यजगृद्धिनाम् ।
शिरांसि पातयामास भल्लैः सन्नतपर्वभिः ॥१४-७८-१८ (९४६५६)
तेषां प्रद्रवतां चापि पुनरेवाभिधावताम् ।
निवर्ततां च शब्दोऽभूत्पूर्णस्येव महोदधेः ॥१४-७८-१९ (९४६५७)
ते वध्यमानास्तु तदा पार्थेनामिततेजसा ।
यथाप्राणं यथोत्साहं योधयामासुरर्जुनम् ॥१४-७८-२० (९४६५८)
ततस्ते फल्गुनेनाजौ शरैः सन्नतपर्वभिः ।
कृता विसंज्ञा भूयिष्ठा क्लान्तवाहनसैनिकाः ॥१४-७८-२१ (९४६५९)
तांस्तु सर्वान्परिग्लानान्विदित्वा धृतराष्ट्रजा ।
दुःशला बालमादाय नप्तारं प्रययौ तदा ॥१४-७८-२२ (९४६६०)
सुरथस्य सुतं वीरं रथेनाथागमत्तदा ।
शान्त्यर्थं सर्वयोधानामभ्यगच्छत पाण्डवम् ॥१४-७८-२३ (९४६६१)
सा धनंजयमासाद्य रुरोदार्तस्वरं तदा ।
धनंजयोपि तां दृष्ट्वा धनुर्विससृजे प्रभुः ॥१४-७८-२४ (९४६६२)
समुत्सृज्य धनुः पार्थो विधिवद्भगिनी तदा ।
प्राह किं करवाणीति सा च तं प्रत्युवाच ह ॥१४-७८-२५ (९४६६३)
एष ते भरतश्रेष्ठ स्वस्त्रीयस्यात्मजः शिशुः ।
अभिवादयते पार्थ तं पश्य पुरुषर्षभ ॥१४-७८-२६ (९४६६४)
इत्युक्तस्तस्य पितरं स पप्रच्छार्जुनस्तथा ।

क्वासाविति ततो राजन्दुःशला वाक्यमब्रवीत् ॥१४-७८-२७ (९४६६५)
पितृशोकाभिसंतप्तो विषादार्तोऽस्य वै पिता ।
पञ्चत्वमगमद्वीरो यथा तन्मे निशामय ॥१४-७८-२८ (९४६६६)
स पूर्वं पितरं श्रुत्वा हतं युद्धे त्वयाऽनघ ।
त्वामागतं च संश्रुत्य युद्धाय हयसारिणम् ।
पितुश्च मृत्युदुःखार्तोऽजहात्प्राणान्धनंजय ॥ १४-७८-२९ (९४६६७)
प्राप्तो बीभत्सुरित्येव नाम श्रुत्वैव तेऽनघ ।
विषादार्तः पपातोर्व्यां ममार च ममात्मजः ॥१४-७८-३० (९४६६८)
तं दृष्ट्वा पतितं तत्र ततस्तस्यात्मजं प्रभो ।
गृहीत्वा समनुप्राप्ता त्वामद्य शरणैपिणी ॥१४-७८-३१ (९४६६९)
इत्युक्त्वाऽऽर्तस्वरं सा तु मुमोच धृतराष्ट्रजा ।
दीना दीनं स्थितं पार्थमब्रवीच्चाप्यधोमुखम् ॥१४-७८-३२ (९४६७०)
स्वसारं समवेक्षस्व स्वस्रीयात्मजमेव च ।
कर्तुमर्हसि धर्मज्ञ दयां कुरुकुलोद्वह ।
विस्मृत्य कुरुराजानं तं च मन्दं जयद्रथम् ॥ १४-७८-३३ (९४६७१)
अभिमन्योर्यथा जातः परिक्षित्परवीरहा ।
तथाऽयं सुरथाज्जातो मम पौत्रो महाभुज ॥१४-७८-३४ (९४६७२)
तमादाय नरव्याघ्र सम्प्रप्तास्मि तवान्तिकम् ।
शमार्थं सर्वयोधानां शृणु चेदं वचो मम ॥१४-७८-३५ (९४६७३)
आगतोऽयं महाबाहो तस्य मन्दस्य पुत्रकः ।
प्रसादमस्य बालस्य तस्मात्त्वं कर्तुमर्हसि ॥१४-७८-३६ (९४६७४)
एष प्रसाद्य शिरसा प्रशमार्थमरिंदम ।
याचते त्वां महाबाहो शमं गच्छ धनंजय ॥१४-७८-३७ (९४६७५)
बालस्य हतबन्धोश्च पार्थ किञ्चिदजानतः ।
प्रसादं कुरु धर्मज्ञ मा मन्युवशमन्वगाः ॥१४-७८-३८ (९४६७६)
तमनार्थं नृशंसं च विस्मृत्यास्य पितामहम् ।
आगस्कारिणमत्यर्तं प्रसादं कर्तुमर्हसि ॥१४-७८-३९ (९४६७७)
एवं ब्रुवत्यां करुणं दुःशलायां धनंजयः ।
संस्मृत्य देवीं गान्धारीं धृतराष्ट्रं च पार्थिवम् ।
उवाच दुःखशोकार्तः क्षत्रधर्मं व्यगर्हयत् ॥ १४-७८-४० (९४६७८)
ऽधिक्तं दुर्योधनं क्षुद्रं राज्यलुब्धं च मानिनम्।'
यत्कृते बान्धवाः सर्वे मया नीता यमक्षयम् ॥ १४-७८-४१ (९४६७९)
इत्युक्त्वा बहु सान्त्वादि प्रसादमकरोज्जयः ।
परिष्वज्य च तां प्रीतो विससर्ज गृहान्प्रति ॥१४-७८-४२ (९४६८०)
दुःशला चापि तान्योधान्निवार्य महतो रणात् ।
सम्पूज्य पार्थं प्रययौ गृहानेव शुभानना ॥१४-७८-४३ (९४६८१)

एवं निर्जित्य तान्वीरान्सैन्धवान्स धनंजयः ।
अन्वधावत धावन्तं हयं कामविचारिणम् ॥ १४-७८-४४ (९४६८२)
ततो मृगमिवाकाशे यथा देवः पिनाकधृक् ।
ससार तं तथा वीरो विधिवद्यज्ञियं हयम् ॥ १४-७८-४५ (९४६८३)
स च वाजी यथेष्टेन तांस्तान्देशान्यथाक्रमम् ।
विचचार यथाकामं कर्म पार्थस्य वर्धयन् ॥ १४-७८-४६ (९४६८४)
क्रमेण स हयस्त्वेवं विचरन्पुरुषर्षभ ।
मणलूरपतेर्देशमुपायात्सहपाण्डवः ॥ ॥ १४-७८-४७ (९४६८५)

इति श्रीमन्महाभारते आश्वमेधिकपर्वणि अनुगीतापर्वणि
अष्टसप्ततितमोऽध्यायः ॥ ७८ ॥
Mahabharata - Ashvamedhika Parva - Chapter Footnotes

७-७८-४७ भणिपूरपतेरिति झ पाठः ॥

---

अस्वमेधिकपर्व-अध्यय०७९
॥ श्रीः ॥
१४.७९. अध्यायः ७९

अश्वमेधपर्व ॥ १ ॥
Mahabharata - Ashvamedhika Parva - Chapter Topics
अर्जुनेन मणलूरपुरं प्रति गमनम् ॥ १ ॥
तथा पितृभक्त्या विनयेनागतं चित्राङ्गदायां जातं स्वात्मजं
बभ्रुवाहनंप्रति क्षत्रधर्मपरित्यागजरोषादुपालम्भः ॥ २ ॥
तमसहमानया उलूप्या नागलोकादेत्य बभ्रुवाहनस्यार्जुनेन सह
युद्धप्रोत्साहनम् ॥ ३ ॥
बभ्रुवाहनेन स्वशरागाढाभिधातेन निपतिते पार्थे पितृमारणशोकेन
मोहाधिगमः ॥ ४ ॥
ततश्चित्राङ्गदया रणाङ्गणमेत्य बहुधा विलापः ॥ ५ ॥

Mahabharata - Ashvamedhika Parva - Chapter Text

वैशम्पायन उवाच ।
श्रुत्वा तु नृपतिः प्राप्तं पितरं बभ्रुवाहनः ।
निर्ययौ विनयेनाथ ब्राह्मणार्यपुरःसरः ॥ १४-७९-१ (९४६८६)
मणलूरेश्वरं त्वेवमुपयातं धनंजयः ।

नाभ्यनन्दत्स मेधावी क्षत्रधर्ममनुस्मरन् ॥ १४-७९-२ (९४६८७)
उवाच च स धर्मात्मा समन्युः फल्गुनस्तदा ।
प्रक्रियेयं न ते युक्ता बहिस्त्वं क्षत्रधर्मतः ॥ १४-७९-३ (९४६८८)
संरक्ष्यमाणं तुरगं यौधिष्ठिरमुपागतम् ।
यज्ञियं विषयान्ते मां नायोत्सीः किंनु पुत्रक ॥ १४-७९-४ (९४६८९)
धिक्त्वामस्तु सुदुर्बुद्धिं क्षत्रधर्माविशारदम् ।
यो मां युद्धाय सम्प्राप्तं साम्नैव प्रत्यगृह्णथाः ॥ १४-७९-५ (९४६९०)
न त्वया पुरुषार्थो हि कश्चिदस्तीह जीवता ।
यस्त्वं स्त्रीवद्युधा प्राप्तं मां साम्ना प्रत्यगृह्णथाः ॥ १४-७९-६ (९४६९१)
यद्यहं न्यस्तशस्त्रस्त्वामागच्छेयं सुदुर्मते ।
प्रक्रियेयं भवेद्युक्ता तावतव नराधम ॥ १४-७९-७ (९४६९२)
तमेवमुक्तं भर्त्रा तु विदित्वा पन्नगात्मजा ।
अमृष्यमाणा भित्त्वोर्वीमुलूपी समुपागमत् ॥ १४-७९-८ (९४६९३)
सा ददर्श तत पुत्रं विमृशन्तमधोमुखम् ।
संतर्ज्यमानमसकृत्पित्रा युद्धार्थिना विभो ॥ १४-७९-९ (९४६९४)
ततः सा चारुसर्वाङ्गी समुपेत्योरगात्मजा ।
उलूपी प्राह वचनं क्षत्रधर्मविशारद ॥ १४-७९-१० (९४६९५)
उलूपीं मां निबोध त्वं मातरं पन्नगात्मजाम् ।
कुरुष्व वचनं पुत्र धर्मस्ते भविता परः ॥ १४-७९-११ (९४६९६)
युध्यस्वैनं कुरुश्रेष्ठं धनंजयमरिन्दमम् ॥
एवमेष हि ते प्रीतो भविष्यति न संशयः ॥ १४-७९-१२ (९४६९७)
एवमुद्धार्षितो राजा स मात्रा बभ्रुवाहनः ।
मनश्चक्रे महातेजा युद्धाय भरतर्षभ ॥ १४-७९-१३ (९४६९८)
सन्नह्य काञ्चनं वर्म शिरस्त्राणं च भानुमत् ।
तूणीरशतसंबाधमारुरोह रथोत्तमम् ॥ १४-७९-१४ (९४६९९)
सर्वोपकरणोपेतं युक्तमश्वैर्मनोजवैः ।
सचक्रोपस्करं श्रीमान्हेमभाण्डपरिष्कृतम् ॥ १४-७९-१५ (९४७००)
परमार्चितमुच्छ्रित्य ध्वजं हंसं हिरण्मयम् ।
प्रययौ पार्थमुद्दिश्य स राजा बभ्रुवाहनः ॥ १४-७९-१६ (९४७०१)
ततोऽभ्योत्य हयं वीरो यज्ञियं पार्थरक्षितम् ।
ग्राहयामास पुरुषैर्हयशिक्षाविशारदैः ॥ १४-७९-१७ (९४७०२)
गृहीतं वाजिनं दृष्ट्वा प्रीतात्मा स धनंजयः ।
पुत्रं रथस्थं भूमिष्ठः संन्यवारयदाहवे ॥ १४-७९-१८ (९४७०३)
स तत्र राजा तं वीरं शरसङ्घैरनेकशः ।
अर्दयामास निशितैराशीविषविषोपमैः ॥ १४-७९-१९ (९४७०४)
तयोः समभवद्युद्धं पितुः पुत्रस्यक चातुलम् ।

देवासुररणप्रख्यमुभयोः प्रीयमाणयोः ॥१४-७९-२० (९४७०५)
किरीटिनं प्रविव्याघ शरेणानतपर्वणा ।
जत्रुदेशे नरव्याघ्रं प्रहसन्बभ्रुवाहनः ॥१४-७९-२१ (९४७०६)
सोभ्यगात्सहपुङ्खेन वल्मीकमिव पन्नगः ।
विनिर्भद्य च कौन्तेयं प्रविवेशि महीतलम् ॥१४-७९-२२ (९४७०७)
स गाढवेदनो धीमानालम्ब्य धनुरुत्तमम् ।
दिव्यं तेजः समाविश्य प्रमीत इव सोभवत् ॥१४-७९-२३ (९४७०८)
स संज्ञामुपलभ्याथ प्रशस्य पुरुषर्षभः ।
पुत्रं शक्रात्मजो वाक्यमिदमाह महाद्युतिः ॥१४-७९-२४ (९४७०९)
साधुसाधु महाबाहो वत्स चित्राङ्गदात्मज ।
सदृशं कर्म ते दृष्ट्वा प्रीतिमानस्मि पुत्रक ॥१४-७९-२५ (९४७१०)
विमुञ्चाम्येष ते बाणान्पुत्र युद्धे स्थिरो भव ।
इत्येवमुक्त्वा नाराचैरभ्यवर्षदमित्रहा ॥१४-७९-२६ (९४७११)
तान्स गाण्डीवनिर्मुक्तान्वज्राशनिसमप्रभान् ।
नाराचानच्छिनद्राज भल्लैः सर्वांस्त्रिधा द्विधा ॥१४-७९-२७ (९४७१२)
तस्य पार्थः शरैर्दिव्यैर्ध्वजं हेमपरिष्कृतम् ।
सुवर्णतालप्रतिमं क्षुरेणापाहरद्रथात् ॥१४-७९-२८ (९४७१३)
हयांश्चास्य महाकायान्महावेगानरिंदम ।
चकार राजन्निर्जावान्प्रहसन्निव पाण्डवः ॥१४-७९-२९ (९४७१४)
स रथादवतीर्याथ राजा परमकोपनः ।
पदातिः पितरं क्रुद्धो योधयामास पाण्डवम् ॥१४-७९-३० (९४७१५)
सम्प्रीयमाणः पार्थानामृषभः पुत्रविक्रमात् ।
नात्यर्थं पीडयामास पुत्रं वज्रधरात्मजः ॥१४-७९-३१ (९४७१६)
स हन्यमानोऽभिमुखं पितरं बभ्रुवाहनः ।
शरैराशीविषाकारैः पुनरेवार्दयद्बली ॥१४-७९-३२ (९४७१७)
ततः स बाल्यात्पितरं विव्याध हृदि पत्रिणा ।
निशेतेन सुपुङ्खेन बलवद्बभ्रुवाहनः ॥१४-७९-३३ (९४७१८)
स बाणस्तेजसा दीप्तो ज्वलन्निव हुताशनः ।
विवेश पाण्डवं राजन्मर्म भित्त्वाऽतिदुःखकृत् ॥१४-७९-३४ (९४७१९)
स तेनातिभृशं विद्धः पुत्रेण कुरुनन्दनः ।
महीं जगाम मोहार्तस्ततो राजन्धनंजयः ॥१४-७९-३५ (९४७२०)
तस्मिन्निपतिते वीरे कौरवाणां धुरंधरे ।
सोपि मोहं जगामाथ ततश्चित्राङ्गदासुतः ॥ १४-७९-३६ (९४७२१)
व्यायम्य संयुगे राजा दृष्ट्वा च पितरं हतम् ।
पूर्वमेव स बाणौघर्गाढविद्धोऽर्जुनेन ह ।
पपात सोपि धरणीमालिङ्ग्य रणमूर्धनि ॥ १४-७९-३७ (९४७२२)

भर्तारं निहतं दृष्ट्वा पुत्रं च पतितं भुवि ।
चित्राङ्गदा परित्रस्ता प्रविवेश रणाजिरे ॥१४-७९-३८ (९४७२३)
शोकसंतप्तहृदया रुदती वेपती भृशम्। १४-७९-३९ (९४७२४)
मणलूरपतेर्माता ददर्श निहतं पतिम् ॥ ॥ १४-७९-४० (९४७२५)

इति श्रीमन्महाभारते आश्वमेधकपर्वणि अनुगीतापर्वणि
एकोनाशीतितमोऽध्यायः ॥ ७९ ॥
Mahabharata - Ashvamedhika Parva - Chapter Footnotes

७-७९-२३ प्रमीतइव मृतइव ॥
७-७९-२५ पुत्रं प्रशस्येति संबन्धः ॥
७-७९-३९ पतिमर्जुनम् ॥

---

अस्वमेधिकपर्व-अध्यय०८०
॥ श्रीः ॥
१४.८०. अध्यायः ८०

अश्वमेधपर्व ॥ १ ॥
Mahabharata - Ashvamedhika Parva - Chapter Topics
चित्राङ्गदया रणाङ्गणनिपतितपतिपुत्रदर्शनजशोकातिरेकेण
मोहाधिगमः ॥ १ ॥
तथा संज्ञोपलम्भे उलूपींप्रत्युपालम्भ गर्भवचनम् ॥ २ ॥
ततश्चिराल्लुब्धसंज्ञेन बभ्रुवाहनेनात्मोपालम्भनपूर्वकं
प्रायोपवेशनम् ॥ ३ ॥

Mahabharata - Ashvamedhika Parva - Chapter Text

वैशम्पायन उवाच ।
ततो बहुतरं भीरुर्विलप्य कमलेक्षणा ।
मुमोह दुःखसंतप्ता पपात च महीतले ॥१४-८०-१ (९४७२६)
प्रतिलभ्य च सा संज्ञां देवी दिव्यवपुर्धरा ।
उलूपीं पन्नगसुतां दृष्ट्वेदं वाक्यमब्रवीत् ॥१४-८०-२ (९४७२७)
उलूपि पश्य भर्तारं शयानं नितं रणे ।
त्वत्कृते मम पुत्रेण बाणेन समितिंजयम् ॥१४-८०-३ (९४७२८)
ननु त्वमार्यधर्मज्ञा ननु चासि पतिव्रता ।
यत्त्वत्कृतेऽयं पतितः पतिस्ते निहतो रणे ॥१४-८०-४ (९४७२९)

किंनु मन्देऽपकराद्धोऽयं यदि तेऽद्य धनंजयः ।
क्षमस्व याच्यमाना वै जीवयस्व धनंजयम् ॥१४-८०-५ (९४७३०)
ननु त्वमार्ये धर्मज्ञे त्रैलोक्यविदिता शुभे ।
यद्घातयित्वा पुत्रेण भर्तारं नानुशोचसि ॥१४-८०-६ (९४७३१)
नाहं शोचामि तनयं हतं पन्नगनन्दिनि ।
पतिमेव तु शोचामि यस्यातिथ्यमिदं कृतम् ॥१४-८०-७ (९४७३२)
इत्युक्त्वा सा तदा देवीमुलूपीं पन्नगात्मजाम् ।
भर्तारमभिगम्येदमित्युवाच यशस्विनी ॥१४-८०-८ (९४७३३)
उत्तिष्ठ कुरुमुख्यस्य प्रियमुख्य मम प्रिय ।
अयमश्वो महाबाहो मयो ते परिमोक्षितः ॥१४-८०-९ (९४७३४)
ननु त्वया नाम विभो धर्मराजस्य यज्ञियः ।
अयमश्वोऽनुसर्तव्यः स शेषे किं महीतले ॥१४-८०-१० (९४७३५)
त्वयि प्राणा ममायत्ताः कुरूणां कुरुनन्दन ।
स कस्मात्प्राणदोऽन्येषां प्राणान्संत्यक्तवानसि ॥१४-८०-११ (९४७३६)
उलूपि साधु पश्येमं पतिं निपतितं भुवि ।
पुत्रं चेमं समुत्साद्य घातयित्वा न शोचसि ॥१४-८०-१२ (९४७३७)
कामं स्वपितु बालोऽयं भूमौ मृत्युवशं गतः ।
लोहिताक्षो गुडाकेशो विजयः साधु जीवतु ॥१४-८०-१३ (९४७३८)
नापराधोऽस्ति सुभगे नराणां बहुभार्यता ।
प्रमदानां भवत्येष मा ते भूद्बुद्धिरीदृशी ॥१४-८०-१४ (९४७३९)
सख्यं चैतत्कृतं धात्रा शश्वदव्ययमेव तु ।
सख्यं समभिजानीहि सत्यं सङ्गतमस्तु ते ॥१४-८०-१५ (९४७४०)
पुत्रेम घातयित्वैनं पतिं यदि न मेऽद्य वै ।
जीवन्तं दर्शयस्यद्य परित्यक्ष्यामि जीवितम् ॥१४-८०-१६ (९४७४१)
साऽहं दुःखान्विता देवि पतिपुत्रविनाकृता ।
इहैव प्रायमाशिष्ये प्रेक्षन्त्यास्ते न संशयः ॥१४-८०-१७ (९४७४२)
इत्युक्त्वा पन्नगसुतां सपत्नी चैत्रवाहनी ।
ततः प्रायमुपासीना तूष्णीमासीज्जनाधिप ॥१४-८०-१८ (९४७४३)
ततो विलप्य विरता भर्तुः पादौ प्रगृह्य सा ।
उपविष्टा भवद्दीना सोच्छ्वासं पुत्रमीक्षती ॥१४-८०-१९ (९४७४४)
ततः संज्ञां पुनर्लब्ध्वा स राजा बभ्रुवाहनः ।
मातरं तामथालोक्य रणभूमावथाब्रवीत् ॥१४-८०-२० (९४७४५)
इतो दुःखतरं किंनु यन्मे माता सुखैधिता ।
भूमौ निपतितं वीरमनुशेते मृतं पतिम् ॥१४-८०-२१ (९४७४६)
निहन्तारं रणेऽरीणां सर्वशस्त्रभृतां वरम् ।
मया विनिहतं सङ्ख्ये प्रेक्षते दुर्मरं बत ॥१४-८०-२२ (९४७४७)

अहोऽस्या हृदयं देव्या दृढं यन्न विदीर्यते ।
व्यूढोरस्कं महाबाहुं प्रेक्षन्त्या निहतं पतिम् ॥१४-८०-२३ (९४७४८)
दुर्मरं पुरुषेणेह मन्ये काले ह्यनागते ।
यत्र नाहं न मे माता न वियुक्तौ स्वजीवितात् ॥१४-८०-२४ (९४७४९)
हाहा धिक्कुरुवीरस्य किरीटं काञ्चनं भुवि ।
अपविद्धं हतस्येह मया पुत्रेम पश्यत ॥१४-८०-२५ (९४७५०)
भोभो पश्यत मे वीरं पितरं ब्राह्मणा भुवि ।
शयानं वीरशयने मया पुत्रेण पातितम् ॥१४-८०-२६ (९४७५१)
ब्राह्मणाः कुरुमुख्यस्य ये मुक्ता हयसारिणः ।
कुर्वन्ति शान्तिं कामस्य रणे योऽयं मया हतः ॥१४-८०-२७ (९४७५२)
व्यादिशन्तु च किं विप्राः प्रायश्चित्तमिहाद्य मे ।
आनृशंसस्य पापस्य पितृहन्तू रणाजिरे ॥१४-८०-२८ (९४७५३)
दुश्चरा द्वादश समा हत्वा पितरमद्य वै ।
ममेह सुनृशंसस्य संवीतस्यास्य चर्मणा ॥१४-८०-२९ (९४७५४)
शिरःकपाले चास्यैव भुञ्जतः पितुरद्य मे ।
प्रायश्चित्तं हि नास्त्यन्यद्धत्वाऽद्य पितरं मम ॥१४-८०-३० (९४७५५)
पश्य नागोत्तमसुते भर्तारं निहतं मया ।
कृतं प्रियं मया तेऽद्य निहत्य समरेऽर्जुनम् ॥१४-८०-३१ (९४७५६)
सोऽहमद्य गमिष्यामि गतिं पितृनिषेविताम् ।
न शक्नोम्यात्मनाऽऽत्मानमहं दारयितुं शुभे ॥१४-८०-३२ (९४७५७)
सा त्वं मयि मृते मातस्तथा गाण्डीवधन्वनि ।
भव प्रीतिमती देवि सत्येनात्मानमालभे ॥१४-८०-३३ (९४७५८)
इत्युक्त्वा स ततो राजा दुःखशोकसमाहतः ।
उपस्पृश्य महाराज दुःखाद्वचनमब्रवीत् ॥१४-८०-३४ (९४७५९)
शृण्वन्तु सर्वभूतानि स्थावराणि चराणि च ।
त्वं च मातर्यथा सत्यं ब्रवीमि भुजगोत्तमे ॥१४-८०-३५ (९४७६०)
यदि नोत्तिष्ठति जयः पिता मे नरसत्तमः ।
अस्मिन्नेव रणोद्देशे शोषयिष्ये कलेवरम् ॥१४-८०-३६ (९४७६१)
नहि मे पितरं हत्वा निष्कृतिर्विद्यते क्वचित् ।
नरकं प्रतिपत्स्यामि ध्रुवं गुरुवधार्दितः ॥१४-८०-३७ (९४७६२)
वीरं हि क्षत्रियं हत्वा गोशतेन प्रमुच्यते ।
पितरं तु निहत्यैवं दुर्लभा निष्कृतिर्मम ॥१४-८०-३८ (९४७६३)
एत एको महातेजाः पाण्डुपुत्रो धनंजयः ।
पिता च मम धर्मात्मा तस्य मे निष्कृतिः कुतः ॥१४-८०-३९ (९४७६४)
इत्येवमुक्त्वा नृपते धनंजयसुतो नृपः ।
उपस्पृश्याभवत्तूष्णीं प्रायोपेतो महामतिः ॥ ॥१४-८०-४० (९४७६५)

इति श्रीमन्महाभारते आश्वमेधिकपर्वणि अनुगीतापर्वणि
अशीतितमोऽध्यायः ॥ ८० ॥
Mahabharata - Ashvamedhika Parva - Chapter Footnotes

७-८०-२७ कामस्यति कां अस्येति च्छेदः ॥

---

अस्वमेधिकपर्व-अध्यय०८१
॥ श्रीः ॥
१४.८१. अध्यायः ८१

अश्वमेधपर्व ॥ १ ॥
Mahabharata - Ashvamedhika Parva - Chapter Topics
बभ्रुवाहने प्रायोपविष्टे उलूप्या
स्मरणमात्रसंनिहितसंजीवनमणिनार्जुनस्य समुद्धोधनम् ॥ १ ॥
ततः सुप्तोत्थितेनेव तेन बभ्रुवाहनंप्रति चित्राङ्गदादीनां
रणाङ्गणागमने कारणप्रश्ने तेनोलूपींप्रति प्रश्नचोदना ॥ २ ॥

Mahabharata - Ashvamedhika Parva - Chapter Text

वैशम्पायन उवाच ।
प्रायोपविष्टे नृपतौ मणलूरेश्वरे तदा ।
पितृशोकसमाविष्टे सह मात्रा परंतप ॥ १४-८१-१ (९४७६६)
उलूपी चिन्तयामास तदा संजीवनं मणिम् ।
स चोपातिष्ठत तदा पन्नगानां परायणम् ॥ १४-८१-२ (९४७६७)
तं गृहीत्वा तु कौरव्य नागराजपतेः सुता ।
मनःप्रह्लादनीं वाचं सैनिकानामथाब्रवीत् ॥ १४-८१-३ (९४७६८)
उत्तिष्ठ मा शुचः पुत्र नैव जिष्णुस्त्वया हतः ।
अजेयः पुरुषैरेष तथा देवैः सवासवैः ॥ १४-८१-४ (९४७६९)
मया तु मोहनी नाम मायैषा सम्प्रदर्शिता ।
प्रियार्थं पुरुषेन्द्रस्य पितुस्तेऽद्य यशस्विनः ॥ १४-८१-५ (९४७७०)
जिज्ञासुर्ह्येष पुत्रस्य बलस्य तव कौरव ।
सङ्ग्रामे युद्ध्यतो राजन्नागतः परवीरहा ॥ १४-८१-६ (९४७७१)
तस्मादसि मया पुत्र युद्धाय परिचोदितः ।
मा पापमात्मनः पुत्र शङ्केथा ह्यण्वपि प्रभो ॥ १४-८१-७ (९४७७२)
ऋषिरेष महानात्मा पुराणः शाश्वतोऽक्षरः ।

नैनं शक्तो हि सङ्ग्रामे जेतुं शक्रोऽपि पुत्रक ॥१४-८१-८ (९४७७३)
अयं तु मे मणिर्दिव्यः समानीतो विशांपते ।
मृतान्मृतान्पन्नगेन्द्रान्यो जीवयति नित्यदा ॥१४-८१-९ (९४७७४)
एनमस्योरसि त्वं च स्थापयस्व पितुः प्रभो ।
संजीवितं तदा पार्थं स त्वं द्रष्टासि पाण्डवम् ॥१४-८१-१० (९४७७५)
इत्युक्तः स्थापयामास तस्योरसि मणिं तदा ।
पार्थस्यामिततेजाः स पितुः स्नेहादपापकृत् ॥१४-८१-११ (९४७७६)
तस्मिन्न्यस्ते मणौ वीरो जिष्णुरुज्जीवितः प्रभुः ।
चिरसुप्त इवोत्तस्थौ मृष्टलोहितलोचनः ॥१४-८१-१२ (९४७७७)
तमुत्थितं महात्मानं लब्धसंज्ञं मनस्विनम् ।
समीक्ष्य पितरं स्वस्थं ववन्दे बभ्रुवाहनः ॥१४-८१-१३ (९४७७८)
उत्थिते पुरुषव्याघ्रे पुनर्लक्ष्मीवति प्रभो ।
दिव्याः सुमनसः पुण्या ववृषे पाकशासनः ॥१४-८१-१४ (९४७७९)
अनाहता दुन्दुभयो विनेदुर्मघनिःस्वनाः ।
साधुसाध्विति चाकाशे बभूव सुमहान्स्वनः ॥१४-८१-१५ (९४७८०)
उत्थाय च महाबाहुः पर्याश्वस्तो धनंजयः ॥
बभ्रुवाहनमालिङ्ग्य समाजिघ्रत मूर्धनि ॥१४-८१-१६ (९४७८१)
ददर्श चापि दूरेऽस्य मातरं शोककर्शिताम् ।
उलूप्या सह तिष्ठन्तीं ततोऽपृच्छद्धनंजयः ॥१४-८१-१७ (९४७८२)
किमिदं लक्ष्यते सर्वं शोकविस्मयहर्षवत् ।
रणाजिरममित्रघ्न यदि जानासि शंस मे ॥१४-८१-१८ (९४७८३)
जननी च किमर्थं ते रणभूमिमुपागता ।
नागेन्द्रदुहिता चेयमुलूपी किमिहागता ॥१४-८१-१९ (९४७८४)
जानाम्यहमिदं युद्धं त्वया मद्वचनात्कृतम् ।
स्त्रीणामागमने हेतुमहमिच्छामि वेदितुम् ॥१४-८१-२० (९४७८५)
तमुवाच तथा पृष्टो मणलूरपतिस्तदा ।
प्रसाद्य शिरसा विद्वानुलूपी पृच्छ्यतामिति ॥ ॥१४-८१-२१ (९४७८६)

इति श्रीमन्महाभारते आश्वमेधिकपर्वणि अनुगीतापर्वणि
एकाशीतितमोऽध्यायः ॥ ८१ ॥

---

अस्वमेधिकपर्व-अध्यय०८२
॥ श्रीः ॥
१४.८२. अध्यायः ८२

अश्वमेधपर्व ॥ १ ॥

Mahabharata - Ashvamedhika Parva - Chapter Topics

उलूप्यार्जुनंप्रति चित्राङ्गदादीनां समराङ्गणागमने कारणाभिधानम् ॥ १ ॥
तथा बभ्रुवाहनेन तस्य पराजये विस्तरेण हेतुकथनम् ॥ २ ॥

Mahabharata - Ashvamedhika Parva - Chapter Text

अर्जुन उवाच ।
किमागमनकृत्यं ते कौरव्यकुलनन्दिनि ।
मणलूरपतेर्मातुस्तथैव च रणाजिरे ॥१४-८२-१ (९४७८७)
कच्चित्कुशलकामासि राज्ञोऽस्य भुजगात्मजे ।
मम वा चपलापाङ्गि कच्चित्त्वं शुभमिच्छसि ॥१४-८२-२ (९४७८८)
कच्चित्ते पृथुलश्रोणि नाप्रियं प्रियदर्शने ।
अकार्षमहमज्ञानादयं वा बभ्रुवाहनः ॥१४-८२-३ (९४७८९)
कच्चिन्नु राजपूत्री ते सपत्नी चैत्रवाहनी ।
चित्राङ्गदा वरारोहा नापराध्यति किञ्चन ॥१४-८२-४ (९४७९०)
तमुवाचोरगपतेर्दुहिता प्रहसन्त्यथ ।
न मे त्वमपराद्धोसि न हि मे बभ्रुवाहनः ।
न जनित्री तथाऽस्येयं मम यो प्रेष्यवत्थिता ॥ १४-८२-५ (९४७९१)
श्रूयतां यद्यथा चेदं मया सर्वं विचेष्टितम् ।
न मे कोपस्त्वया कार्यः शिरसा त्वां प्रसादये ॥१४-८२-६ (९४७९२)
त्वत्प्रियार्थं हि कौरव्य कृतमेतन्मया विभो ।
यत्तच्छृणु महाबाहो निखिलेन धनंजय ॥१४-८२-७ (९४७९३)
महाभारतयुद्धे यत्त्वया शान्तनवो नृपः ।
अधर्मेण हतः पार्थ तस्यैषा निष्कृतिः कृता ॥१४-८२-८ (९४७९४)
न हि भीष्मस्त्वया वीर युद्ध्यमानो हि पातितः ।
शिखण्डिना तु संयुक्तस्तमाश्रित्य हतस्त्वया ॥१४-८२-९ (९४७९५)
तस्य शान्तिमकृत्वा त्वं त्यजेथा यदि जीवितम् ।
कर्मणा तेन पापेन पतेथा निरये ध्रुवम् ।
एषा तु विहिता शान्तिः पुत्राद्यां प्राप्तवानसि ॥ १४-८२-१० (९४७९६)
वसुभिर्वसुधापाल गङ्गया च महामते ।
पुरा हि श्रुतमेतत्ते वसुभिः कथितं मया ॥१४-८२-११ (९४७९७)
गङ्गायास्तीरमाश्रित्य हते शान्तनवे नृप ।
आप्लुत्य देवा वसवः समेत्य च महानदीम् ।
इदमूचुर्वचो घोरं भागीरथ्या मते तदा ॥ १४-८२-१२ (९४७९८)
एष शान्तनवो भीष्मो निहतः सव्यसाचिना ।
अयुद्ध्यमानः सङ्ग्रामे संसक्तोऽन्येन भामिनि ॥१४-८२-१३ (९४७९९)

तदनेनानुषङ्गेण वयमद्य धनञ्जयम् ।
शापेन योजयामेति तथाऽस्त्विति च साऽब्रवीत् ॥ १४-८२-१४ (९४८००)
तदहं पितुरावेद्य प्रविश्य व्यथितेन्द्रिया ।
अभवं स च तच्छ्रुत्वा विषादमगमत्परम् ॥ १४-८२-१५ (९४८०१)
पिता तु मे वसून्गत्वा त्वदर्थे समयाचत ।
पुनः पुनः प्रसाद्यैतांस्त एनमिदमब्रुवन् ॥ १४-८२-१६ (९४८०२)
पुत्रस्तस्य महाभाग मणलूरेश्वरो युवा ।
स एनं रणमध्यस्थः शरैः पातयिता भुवि ॥ १४-८२-१७ (९४८०३)
एवं कृते स नागेन्द्र मुक्तशापो भविष्यति ।
गच्छेति वसुभिश्चोक्तो मम चेदं शशंस सः ॥ १४-८२-१८ (९४८०४)
तच्छ्रुत्वा त्वं मया तस्माच्छापादसि विमोक्षितः ।
न हि त्वां देवराजोऽपि समरेषु पराजयेत् ॥ १४-८२-१९ (९४८०५)
आत्मा पुत्रः स्मृतस्तस्मात्तेनेहासि पराजितः ।
न हि दोषो मम मतः कथं वा मन्यसे विभो ॥ १४-८२-२० (९४८०६)
इत्येवमुक्तो विजयः प्रसन्नात्माऽब्रवीदिदम् ।
सर्वं मे सुप्रियं देवि यदेतत्कृतवत्यसि ॥ १४-८२-२१ (९४८०७)
इत्युक्त्वा सोऽब्रवीत्पुत्रं मणलूरपतिं जयः ।
चित्राङ्गदायाः शृण्वन्त्याः कौरव्यदुहितुस्तदा ॥ १४-८२-२२ (९४८०८)
युधिष्ठिरस्याश्वमेधः परिचैत्रीं भविष्यति ।
तत्रागच्छेः सहामात्यो मातृभ्यां सहितो नृप ॥ १४-८२-२३ (९४८०९)
इत्येवमुक्तः पार्थेन स राजा बभ्रुवाहनः ।
उवाच पितरं धीमानिदमस्राविलेक्षणः ॥ १४-८२-२४ (९४८१०)
उपयास्यामि धर्मज्ञ भवतः सासनादहम् ।
अश्वमेधे महायज्ञे द्विजातिपरिवेषकः ॥ १४-८२-२५ (९४८११)
मम त्वनुग्रहार्थाय प्रविशस्व पुरं स्वकम् ।
भार्याभ्यां सह धर्मज्ञ माभूत्तेऽत्र विचारणा ॥ १४-८२-२६ (९४८१२)
उषित्वेह निशामेकां सुखं स्वभवने प्रभो ।
पुनरश्वानुगमनं कर्तासि जयतांवर ॥ १४-८२-२७ (९४८१३)
इत्युक्ताः स तु प्रत्रेण तदा वानरकेतनः ।
स्मयन्प्रोवाच कौन्तेयस्तदा चित्राङ्गदासुतम् ॥ १४-८२-२८ (९४८१४)
विदितं ते महाबाहो यथा दीक्षां चराम्यहम् ।
न स तावत्प्रवेक्ष्यामि पुरं ते पृथुलोचन ॥ १४-८२-२९ (९४८१५)
यथाकामं व्रजत्येष यज्ञियाश्वो नरर्षभ ।
स्वस्ति तेऽस्तु गमिष्यामि न स्थानं विद्यते मम ॥ १४-८२-३० (९४८१६)
वैशम्पायन उवाच। १४-८२-३१क्ष् (७९२२)
स तत्र विधिवत्तेन पूजितः पाकशासनिः। १४-८२-३१ (९४८१७)

भार्याभ्यामभ्यनुज्ञातः प्रायाद्भरतसत्तमः ॥ ॥ १४-८२-३२ (९४८१८)

इति श्रीमन्महाभारते आश्वमेधिकपर्वणि अनुगीतापर्वणि
द्व्यशीतितमोऽध्यायः ॥ ८२ ॥

---

अस्वमेधिकपर्व-अध्यय०८३
॥ श्रीः ॥
१४.८३. अध्यायः ८३

अश्वमेधपर्व ॥ १ ॥
Mahabharata - Ashvamedhika Parva - Chapter Topics
अर्जुनेनास्वानुसरणवशान्मगधदेशगमनम् ॥ १ ॥
तत्र जरासंधपौत्रस्य मेघसंधेः पराजयपूर्वकं तत्रतत्र
म्लेच्छादिपराजयः ॥ २ ॥

Mahabharata - Ashvamedhika Parva - Chapter Text

वैशम्पायन उवाच ।
स तु वाजी समुद्रान्तां पर्येत्य वसुधामिमाम् ।
निवृत्तोऽभिमुखो राजन्येन वारणसाह्वयम् ॥ १४-८३-१ (९४८१९)
अनुगच्छंश्च तुरगं निवृत्तोऽथ किरीटभृत् ।
यदृच्छया समापेदे पुरं राजगृहं तदा ॥ १४-८३-२ (९४८२०)
तमभ्याशगतं दृष्ट्वा सहदेवात्मजः प्रभो ।
क्षत्रधर्मे स्थितो वीरः समरायाजुहाव ह ॥ १४-८३-३ (९४८२१)
ततः पुरात्स निष्क्रम्य रथी धन्वी शरी तली ।
मेघसन्धिः पदातिं तं धनंजयमुपाद्रवत् ॥ १४-८३-४ (९४८२२)
आसाद्य च महातेजा मेघसन्धिर्धनंजयम् ।
बालभावान्महाराज प्रोवाचेदं न कौशलात् ॥ १४-८३-५ (९४८२३)
किमयं चार्यते वाजी सित्रीमध्य इव भारत ।
हयमेनं हरिष्यामि प्रयतस्व विमोक्षणे ॥ १४-८३-६ (९४८२४)
अदत्तानुनयो युद्धे यदि त्वं पितृभिर्मम ।
करिष्यामि तवातिथ्यं प्रहर प्रहरामि च ॥ १४-८३-७ (९४८२५)
इत्युक्तः प्रत्युवाचैनं प्रहसन्निव पाण्डवः ।
विघ्नकर्ता मया वार्य इति मे व्रतमाहितम् ॥ १४-८३-८ (९४८२६)
भ्रात्रा ज्येष्ठेन नृपते तवापि विदितं ध्रुवम् ।
प्रहरस्व यथाशक्ति न मन्युर्विद्यते मम ॥ १४-८३-९ (९४८२७)

इत्युक्तः प्राहरत्पूर्वं पाण्डवं मगधेस्वरः ।
किरञ्शरसहस्राणि वर्षाणीव सहस्रदृक् ॥१४-८३-१० (९४८२८)
ततो गाण्डीवभृच्छूरो गाण्डीवप्रहितैः शरैः ।
चकार मोघांस्तान्बाणान्सयत्नान्भरतर्षभ ॥१४-८३-११ (९४८२९)
स मोघं तस्य बाणौघं कृत्वा वानरकेतनः ।
शरात्मुमोच ज्वलितान्दीप्तास्यानिव पन्नगान् ॥१४-८३-१२ (९४८३०)
ध्वजे पताकादण्डेषु रथे यन्त्रे हयेषु च ।
अन्येषु च रथाङ्गेषु न शरीरे न सारथौ ॥१४-८३-१३ (९४८३१)
संरक्ष्यमाणः पार्थेन शरीरे सव्यसाचिना ।
मन्यमानः स्ववीर्यं तन्मागधः प्राहिणोच्छरान् ॥१४-८३-१४ (९४८३२)
ततो गाण्डीवधन्वा तु मागधेन भृशाहतः ।
बभौ वसन्तसमये पलासः पुष्पितो यथा ॥१४-८३-१५ (९४८३३)
अवध्यमानः सोऽभ्यघ्नन्मागधः पाण्डवर्षभम् ।
तेन तस्थौ स कौरव्य लोकवीरस्य दर्शने ॥१४-८३-१६ (९४८३४)
सव्यसाची तु संक्रुद्धो विकृष्य बलवद्धनुः ।
हयांश्चकार निर्जीवान्सारथेश्च शिरोऽहरत् ॥१४-८३-१७ (९४८३५)
धनुश्चास्य महच्चित्रं क्षुरेण प्रचकर्त ह ।
हस्तावापं पताकां च ध्वजं चास्यन्यपातयत् ॥१४-८३-१८ (९४८३६)
स राजा व्यथितो व्यश्वो विधनुर्हतसारथिः ।
गदामादाय कौन्तेयमभिद्रद्राव वेगवान् ॥१४-८३-१९ (९४८३७)
तस्यापतत एवाशु गदां हेमपरिष्कृताम् ।
शरैश्चकर्त बहुधा बहुभिर्गृध्रवाजितैः ॥१४-८३-२० (९४८३८)
सा गदा शकलीभूता विशीर्णमणिबन्धना ।
व्याली विमुच्यमानेन पपात धरणीतले ॥१४-८३-२१ (९४८३९)
विरथं विधनुष्कं च गदया परिवर्जितम् ।
ग्नैच्छत्ताडयितुं धीमानर्जुनः समराग्रणीः ॥१४-८३-२२ (९४८४०)
तत एनं विमनसं क्षत्रधर्मे व्यवस्थितम् ॥'
सान्त्वपूर्वमिदं वाक्यमब्रवीत्कपिकेतनः ॥ १४-८३-२३ (९४८४१)
पर्याप्तः क्षत्रधर्मोऽयं दर्शितः पुत्र गम्यताम् ।
बह्वेतत्समरे कर्म तव बालस्य पार्थिव ॥१४-८३-२४ (९४८४२)
युधिष्ठिरस्य संदेशो न हन्तव्या नृपा इति ।
तेन जीवसि राजंस्त्वमपराद्धोऽपि मे रणे ॥१४-८३-२५ (९४८४३)
इति मत्वा तदाऽऽत्मानं प्रत्यादिष्टं स्म मागधः ।
तथ्यमित्यभिगम्यैनं प्राञ्जलिः प्रत्यपूजयत् ॥१४-८३-२६ (९४८४४)
परिजितोस्मि भद्रं ते नाहं योद्धुमिहोत्सहे ।
यद्यत्कृत्यं मया तेऽद्य तद्ब्रूहि कृतमेव तु ॥१४-८३-२७ (९४८४५)

तमर्जुनः समाश्वास्य पुनरेवेदमब्रवीत् ।
आगन्तव्यं परां चैत्रीमश्वमेधे नृपस्य नः ॥१४-८३-२८ (९४८४६)
इत्युक्तः स तथेत्युक्त्वा पूजयमास तं हयम् ।
फल्गुनं च युधिश्रेष्ठं विदिवत्सहदेवजः ॥१४-८३-२९ (९४८४७)
ततो यथेष्टमगमत्पुनरेव स कौरवः ।
ततः समुद्रतीरेण वङ्गान्पुण्ड्रान्सकेरलान् ॥१४-८३-३० (९४८४८)
तत्रतत्र च भूरीणि म्लेच्छसैन्यान्यनेकशः ।
विजिग्ये धनुषा राजन्गाण्डीवेन धनंजयः ॥ ॥१४-८३-३१ (९४८४९)

इति श्रीमन्महाभारते आश्वमेधिकपर्वणि अनुगीतापर्वणि
त्र्यशीतितमोऽध्यायः ॥ ८३ ॥
Mahabharata - Ashvamedhika Parva - Chapter Footnotes

७-८३-७ अदत्तानुनयः अशिक्षितः ॥
७-८३-२० गृध्रवाजितैः गृध्रपक्षयुतैः ॥

---

अस्वमेधिकपर्व-अध्यय०८४
॥ श्रीः ॥
१४.८४. अध्यायः ८४

अश्वमेधपर्व ॥१ ॥
Mahabharata - Ashvamedhika Parva - Chapter Topics
दक्षिणां दिशमुपागतेनार्जुनेन चेदीशितुः शिशुपालात्मजस्य
पूजापरिग्रहणम् ॥१ ॥
तथा काशिकोसलादिदेशाधिपतिपराजयपूर्वकं गान्धारदेशगमनम् ॥२ ॥

Mahabharata - Ashvamedhika Parva - Chapter Text

वैशम्पायन उवाच ।
मागधेनार्चितो राजन्पाण्डवः श्वेतवाहनः ।
दक्षिणां दिशमास्थाय चारयामास तं हयम् ॥१४-८४-१ (९४८५०)
ततः स पुनरावर्त्य हयः कामचरो बली ।
आससाद पुरीं रम्यां चेदीनां शुक्तिसाह्वयाम् ॥१४-८४-२ (९४८५१)
शरभेणार्चितस्तत्र शिशुपालसुतेन सः ।
युद्धपूर्वं तदा तेन पूजया च महाबलः ॥१४-८४-३ (९४८५२)
ततोऽर्चितो ययौ राजंस्तदा स तुरगोत्तमः ।

काशीनङ्गान्कोसलांश्च किरातानाथ तङ्गणात् ॥१४-८४-४ (९४८५३)
पूजां तत्र यथान्यायं प्रतिगृह्य धनंजयः ।
पुनरावृत्त्य कौन्तेयो दशार्णानगमत्तदा ॥१४-८४-५ (९४८५४)
तत्र चित्राङ्गदो नाम बलवानरिमर्दनः ।
तेन युद्धमभूत्तस्य विजयस्यातिभैरवम् ॥१४-८४-६ (९४८५५)
तं चापि वशमानीय किरीटी पुरुषर्षभः ।
निषादराज्ञो विषयमेकलव्यस्य जग्मिवान् ॥१४-८४-७ (९४८५६)
एकलव्यसुतश्चैनं युद्धेनि जगृहे तदा ।
तत्र चक्रे निषादैः स सग्रामं रोमहर्षणम् ॥१४-८४-८ (९४८५७)
ततस्तमपि कौन्तेयः समरेष्वपराजितः ॥
जिगाय युधि दुर्धर्षो यज्ञविघ्नार्थमागतम् ॥१४-८४-९ (९४८५८)
स तं जित्वा महाराज नैषादिं पाकशासनिः ।
अर्चितः प्रययौ भूयो दक्षिणं सलिलार्णवम् ॥१४-८४-१० (९४८५९)
तत्रापि द्रवीडैरान्ध्रै रौद्रैर्माहिषकैरपि ।
तथा कोल्लगिरेयैश्च युद्धमासीन्किरीटिनः ॥१४-८४-११ (९४८६०)
तांश्चापि विजयो जित्वा नातितीव्रेण कर्मणा ।
तुरङ्गमवशेनाथ सुराष्ट्रानभितो ययौ ।
गोकर्णमथ चासाद्य प्रभासमपि जग्मिवान् ॥ १४-८४-१२ (९४८६१)
ततो द्वारवतीं रम्यां वृष्णिवीराभिपालिताम् ।
आससाद हयः श्रीमान्कुरुराजस्य यज्ञियः ॥१४-८४-१३ (९४८६२)
तमुन्मथ्य हयश्रेष्ठं यादवानां कुमारकाः ।
प्रययुस्तांस्तदा राजन्नुग्रसेनो न्यवारयत् ॥१४-८४-१४ (९४८६३)
ततः पुराद्विनिष्क्रम्य वृष्ण्यन्धकपतिस्तदा ।
सहितो वासुदेवेन मातुलेन किरीटिनः ॥१४-८४-१५ (९४८६४)
तौ समेत्य कुरुश्रेष्ठं विधिवत्प्रीतिपूर्वकम् ।
परया भारतश्रेष्ठं पूजया समवस्थितौ ।
ततस्ताभ्यामनुज्ञातो यतयौ येन हयो गतः ॥ १४-८४-१६ (९४८६५)
ततः स पश्चिमं देशं समुद्रस्य तदा हयः ।
क्रमेणि व्यचरत्स्फीतं ततः पञ्चनदं ययौ ॥१४-८४-१७ (९४८६६)
तस्मादपि स कौरव्य गन्धारविषयं हयः ।
विचचार यथाकामं कौन्तेयानुगतस्तदा ॥१४-८४-१८ (९४८६७)
ततो गान्धारराजेन युद्धमासीत्किरीटिनः ।
घोरं शकुनिपुत्रेण पूर्ववैरानुसारिणा ॥ ॥१४-८४-१९ (९४८६८)

इति श्रीमन्महाभारते आश्वमेधिकपर्वणि अनुगीतापर्वणि
चतुरशीतितमोऽध्यायः ॥८४ ॥

अस्वमेधिकपर्व-अध्यय०८५
॥ श्रीः ॥
१४.८५. अध्यायः ८५

अश्वमेधपर्व ॥ १ ॥
Mahabharata - Ashvamedhika Parva - Chapter Topics
अर्जुनेन शकुनितनयपराजयपूर्वकं तत्सेनावमर्दनम् ॥ १ ॥
ततः शकुनिभार्यया तेन स्वसुतवधसंभावनया
रणाङ्गणमेत्यार्जुनस्य प्रसादनम् ॥ २ ॥
अर्जुनेन गान्धारीगौरवात्तत्संमाननपूर्वकं तत्तनयसमाश्वासनम् ॥ ३ ॥

Mahabharata - Ashvamedhika Parva - Chapter Text

वैशम्पायन उवाच ।
शकुनस्तनयो वीरो गान्धाराणां महारथः ।
प्रत्युद्ययौ गुडाकेशं सैन्येन महता वृतः ।
हस्त्यश्वरथयुक्तेन पताकाध्वजमालिना ॥ १४-८५-१ (९४८६९)
अमृष्यमाणास्ते योधा नृपस्य शकुनेर्वधम् ।
अभ्ययुः सहिताः पार्थं प्रगृहीतशरासनाः ॥१४-८५-२ (९४८७०)
स तानुवाच धर्मात्मा बीभत्सुरपराजितः ।
युधिष्ठिरस्य वचनं न च ते जगृहुर्हितम् ॥१४-८५-३ (९४८७१)
वार्यमाणास्तु पार्थेन सान्त्वपूर्वममर्षिताः ।
परिवार्य हयं जग्मुस्ततश्चुक्रोध पाण्डवः ॥१४-८५-४ (९४८७२)
ततः शिरांसि दीप्ताग्रैस्तेषां चिच्छेद पाण्डवः ।
क्षुरैर्गाण्डीवनिर्मुक्तैर्नातियत्नादिवार्जुनः ॥१४-८५-५ (९४८७३)
ते वध्यमानाः पार्थेनि हयमुत्सृज्य संप्रमात् ।
न्यवर्तन्त महाराज शरवर्षार्दिता भृशम् ॥१४-८५-६ (९४८७४)
वितुद्यमानस्तैश्चापि गान्धारैः पाण्डुनन्दनः ।
आदिस्यादिश्य तेजस्वी परानेतानवारयत् ॥१४-८५-७ (९४८७५)
वध्यमानेषु तेष्वाजौ गान्धारेषु समन्ततः ।
स राजा शकुनेः पुत्रः पाण्डवं प्रत्यवारयत् ॥१४-८५-८ (९४८७६)
तं युध्यमानं राजानं क्षत्रधर्मे व्यवस्थितम् ।
पार्थोऽब्रवीन्न मे वध्या राजानो राजसासनात् ॥१४-८५-९ (९४८७७)
अलं युद्धेन ते वीर न तेऽस्त्वद्य पराजयः ।
इत्युक्तस्तदनादृत्य वाक्यमज्ञानमोहितः ।

स शक्रसमकर्माणं समावाकिरदाशुगैः ॥ १४-८५-१० (९४८७८)
तस्य् पार्थः शिरस्त्राणमर्धचन्द्रेण पत्रिणा ।
अपाहरदमेयात्मा जयद्रथशिरो यथा ॥१४-८५-११ (९४८७९)
तं दृष्ट्वा विस्मयं जग्मुर्गान्धाराः सर्व एव ते ।
इच्छता तेन न हतो राजेत्यपि च ते विदुः ॥१४-८५-१२ (९४८८०)
गान्धारराजपुत्रस्तु पलायनकृतक्षणः ।
ययौ तैरेव सहितस्त्रस्तैः क्षुद्रमृगैरिव। १४-८५-१३ (९४८८१)
तेषां तु तरसा पार्थस्तत्रैव परिदावताम् ।
प्रजहारोत्तमाङ्गानि भल्लैः सन्नतपर्वभिः ॥१४-८५-१४ (९४८८२)
उच्छ्रितांस्तु भुजान्केचिन्नाबुध्यन्त शरैर्हृतान् ।
शरैर्गाण्डीवनिर्मुक्तैः पृथुभिः पार्थचोदितैः ॥१४-८५-१५ (९४८८३)
सम्भ्रान्तनरनागाश्वमपतद्विद्रुतं बलम् ।
हतविद्रुतभूयिष्ठमावर्तत मुहुर्मुहुः ॥१४-८५-१६ (९४८८४)
नाभ्यदृस्यन्त वीरस्य केचिदग्रेऽग्र्यकर्मणः ।
रिपवः पात्यमाना वै ये सहेरन्महाशरान् ॥१४-८५-१७ (९४८८५)
ततो गान्धारराजस्य मन्त्रिवृद्धपुरःसरा ।
जननी निर्ययौ भीता पुरस्कृत्यार्घ्यमुत्तमम् ॥१४-८५-१८ (९४८८६)
सा न्यवारयदव्यग्रा तं पुत्रं युद्धदुर्मदम् ।
प्रसादयामास च तं जिष्णुमक्लिष्टकारिणम् ॥१४-८५-१९ (९४८८७)
तां पूजयित्वा बीभत्सुः प्रसादमकरोत्प्रभुः ।
शकुनेश्चापि तनयं सान्त्वयन्निदमब्रवीत् ॥१४-८५-२० (९४८८८)
न मे प्रियं महाबाहो यत्ते बुद्धिरियं कृता ।
प्रतियोद्धुममित्रघ्न भ्रातैव त्वं ममानघ ॥१४-८५-२१ (९४८८९)
गान्धारीं मातरं स्मृत्वा धृतराष्ट्रकृतेन च ।
तेन जीवसि राजंस्त्वं निहतास्त्वनुगास्तव ॥१४-८५-२२ (९४८९०)
मैवं भूः शाम्यतां वैरं मा तेऽभूद्बुद्धिरीदृशी
आगन्तव्यं परां चैत्रीमश्वमेधे नृपस्य नः ॥ १४-८५-२३ (९४८९१)
इत्युक्त्वाऽनुययौ पार्थो हयं तं कामचारिणम् ।
ते न्यवर्तन्त गान्धारा हतशिष्टाः स्वकं पुरम् ॥ ॥१४-८५-२४ (९४८९२)

इति श्रीमन्महाभारते आश्वमेधिकपर्वणि अनुगीतापर्वणि
पञ्चाशीतितमोऽध्यायः ॥ ८५ ॥

---

अस्वमेधिकपर्व-अध्यय०८६
॥ श्रीः ॥
१४.८६. अध्यायः ८६

अश्वमेधपर्व ॥ १ ॥

Mahabharata - Ashvamedhika Parva - Chapter Topics

चारमुखादर्जुनस्य तुरगसंचारणात्पुनर्नगरं
प्रत्यागमनश्रवणहृष्टस्य युधिष्ठिरस्य निदेशाद्भीमेन
यज्ञशालादिनिर्मापणम् ॥ १ ॥
तथा नानादेशेभ्यो ब्राह्मणाद्यानयनपूर्वकं
तेषामन्नदानादिव्यवस्थाकरणम् ॥ २ ॥

Mahabharata - Ashvamedhika Parva - Chapter Text

वैशम्पायन उवाच ।
न्यवर्तत ततो वाजी येन नागाह्वयं पुरम् ।
तं निवृत्तं तु शुश्राव चारेणैव युधिष्ठिरः ।
श्रुत्वाऽर्जुनं कुशलिनं स च हृष्टमनाऽभवत् ॥ १४-८६-१ (९४८९३)
विजयस्य च तत्कर्म गान्धारविषये तदा ।
श्रुत्वा चान्येषु देशेषु स सुप्रीतोऽभवत्तदा ॥ १४-८६-२ (९४८९४)
एतस्मिन्नेव काले तु द्वादशीं माघमासिकीम् ।
इष्टं गृहीत्वा नक्षत्रं धर्मराजो युधिष्ठिरः ॥ १४-८६-३ (९४८९५)
समानीय महातेजाः सर्वान्भ्रातॄन्महीपतिः ।
भीमं च नकुलं चैव सहदेवं च कौरव ॥ १४-८६-४ (९४८९६)
प्रोवाचेदं वचः काले तदा धर्मभृतांवरः ।
आमन्त्र्य वदतां श्रेष्ठो भीमं प्रहरतां वरम् ॥ १४-८६-५ (९४८९७)
आयाति भीमसेनासौ सहाश्वेन तवानुजः ।
यथा मे पुरुषाः प्राहुर्ये धनंजयसारिणः ॥ १४-८६-६ (९४८९८)
उपस्थितश्च कालोऽयमभितो वर्तते हयः ।
माघी च पौर्णमासीयं मासः शेषो वृकोदर ॥ १४-८६-७ (९४८९९)
तत्प्रस्थाप्यन्तु विद्वांसो ब्राह्मणा वेदपारगाः ।
वाजिमेधार्थसिद्ध्यर्थं देशं पश्यन्तु यज्ञियम् ॥ १४-८६-८ (९४९००)
इत्युक्तः स तु तच्चक्रे भीमो नृपतिशासनम् ।
हृष्टः श्रुत्वा गुडोकेशमायान्तं पुरुषर्षभम् ॥ १४-८६-९ (९४९०१)
ततो ययौ भीमसेनः प्राज्ञैः स्थपतिभिः सह ।
ब्राह्मणानग्रतः कृत्वा कुशलान्यज्ञकर्मणि ॥ १४-८६-१० (९४९०२)
तं ससालचयं श्रीमत्सप्रतोलीसुघट्टितम् ।
मापयामास कौरव्यो यज्ञवाटं यताविधि ॥ १४-८६-११ (९४९०३)
प्रासादशतसम्बन्धं मणिप्रवरकुट्टिमम् ।

ग्सदः स पत्नीसदनं साग्नीध्रमपि चोत्तरम्।'
कारयामास विदिवद्धेमरत्नविभूषितम् ॥ १४-८६-१२ (९४९०४)
स्तंभान्कनकचित्रांश्च तोरणानि बृहन्ति च ।
यज्ञायतनदेशेशु दत्त्वा शुद्धं च काञ्चनम् ॥१४-८६-१३ (९४९०५)
अन्तःपुराणां राज्ञां च नानादेशसमीयुषाम् ।
कारयामास धर्मात्मा तत्रतत्र यथाविधि ॥१४-८६-१४ (९४९०६)
ब्राह्मणानां न वेश्मानि नानादेशसमीयुषाम् ।
कारयामास कौन्तेयो विधिवत्तान्यनेकशः ॥१४-८६-१५ (९४९०७)
तथा सम्प्रेषयामास दूतान्नृपतिशासनात् ।
भीमसेनो महाबाहो राज्ञामक्लिष्टकर्मणाम् ॥१४-८६-१६ (९४९०८)
ते प्रियार्थं कुरुपतेराययुर्नृपसत्तम ।
रत्नान्यनेकान्यादाय स्त्रियोऽश्वानायुधानि च ॥१४-८६-१७ (९४९०९)
तेषां निर्विशतां तेषु शिबिरेषु महात्मनाम् ।
नर्दतः सागरस्येव दिवस्पृगभवत्स्वनः ॥१४-८६-१८ (९४९१०)
ग्प्रत्युद्गम्य नमस्कृत्य ब्राह्मणांश्च न्यवेदयत् ॥' १४-८६-१९ (९४९११)
तेषामभ्यागतानां च स राजा कुरुवर्धनः ।
व्यादिदेशान्नपानानि शय्याश्चाप्यतिमानुषाः ॥१४-८६-२० (९४९१२)
वाहनानां च विविधाः शालाः शालीक्षुगोरसैः ।
उपेता भरतश्रेष्ठो व्यादिदेश स धर्मराट् ॥१४-८६-२१ (९४९१३)
ग्वर्णाः पृथक्सन्निविष्टा ह्युत्तरोत्तरपूजिताः'।
तथा तस्मिन्महायज्ञे धर्मराजस्य धीमतः ।
समाजग्मुर्मुनिगणा बहवो ब्रह्मवादिनः ॥ १४-८६-२२ (९४९१४)
ये च द्विजातिप्रवरास्तत्रासन्पृथिवीपते ।
समाजग्मुः सशिष्यांस्तान्प्रतिजग्राह कौरवः ॥१४-८६-२३ (९४९१५)
सर्वांश्चताननुययौ यावदावसथान्प्रति ।
स्वयमेव महातेजा दंभं त्यक्त्वा युधिष्ठिरः ॥१४-८६-२४ (९४९१६)
ततः कृत्वा स्थपतयः शिल्पिनोऽन्ये च ये तदा ।
कृत्स्नं यज्ञविधिं राजन्धर्मराजे न्यवेदयन ॥१४-८६-२५ (९४९१७)
तच्छ्रुत्वा धर्मराजस्तु कृतं सर्वमतन्द्रितः ।
हृष्टरूपोऽभवद्राजन्सह भ्रातृभिरादृतः ॥१४-८६-२६ (९४९१८)
तस्मिन्यज्ञे प्रवृत्ते तु वाग्मिनो हेतुवादिनः ।
हेतुवादान्बहूनाहुः परस्परजिगीषवः ॥१४-८६-२७ (९४९१९)
ददृशुस्तं नृपतयो यज्ञस्य विधिमुत्तमम् ।
देवेन्द्रस्येव विहितं भीमसेनेन भारत ॥१४-८६-२८ (९४९२०)
ददृशुस्तोरणान्यत्र शातकुंभमयानि ते ।
शय्यासनविहारांश्च सुबहून्रत्नसंचयान् ॥१४-८६-२९ (९४९२१)

घटान्पात्रीः कटाहानि कलशान्वर्धमानकान् ।
न हि किञ्चिदसौवर्णमपश्यन्वसुधाधिपाः ॥१४-८६-३० (९४९२२)
यूपांश्च शास्त्रपठितान्दारवान्हेमभूषितान् ।
उपक्लृप्तान्यथाकालं विधिवद्भूरिवर्चसः ॥१४-८६-३१ (९४९२३)
स्थलजाक जलजा ये च पशवः केचन प्रभो ।
सर्वानेव समानीतानपश्यंस्तत्र ते नृपाः ॥१४-८६-३२ (९४९२४)
गाश्चैव महिषीश्चैव तथा वृद्धस्त्रियोपि च ।
औदकानि च सत्वानि श्वापदानि वयांसि च ॥१४-८६-३३ (९४९२५)
जरायुजाण्डजातानि स्वेदजान्युद्भिदानि च ।
पर्वतानूपजातानि भूतानि ददृशुश्च ते ॥१४-८६-३४ (९४९२६)
एवं प्रमुदितं सर्वं पशुगोधनधान्यतः ।
यज्ञवाटं नृपा दृष्ट्वा परं विस्मयमागताः ॥१४-८६-३५ (९४९२७)
ग्अनिशं दीयते च स्म तत्र भोज्यं पृथग्विधम् ॥'
ब्राह्मणानां विशां चैव बहुमृष्टान्नमृद्धिमत् ॥ १४-८६-३६ (९४९२८)
पूर्णे शतसहस्रे तु विप्राणां तत्रि भुञ्जताम् ।
दुन्दुभिर्मेघनिर्घोषो मुहुर्मुहुरताड्यत ।
विननादासकृच्चापि दिवसेदिवसे गते ॥ १४-८६-३७ (९४९२९)
एवं स ववृते यज्ञो धर्मराजस्य धीमतः ।
अन्नस्य सुबहून्राजन्नुत्सर्गान्पर्वतोपमान् ।
दधिकुल्याशाच ददृशुः सर्पिषश्च ह्रदाञ्जनाः ॥ १४-८६-३८ (९४९३०)
जंबूद्वीपो हि सकलो नानजनपदायुतः ।
राजन्नदृस्यतैकस्थो राज्ञस्तस्य महामखे ॥१४-८६-३९ (९४९३१)
तत्र जातिसहस्राणि पुरुषाणां ततस्ततः ।
गृहीत्वा धमाजग्मुर्बहूनि भरतर्षभ ॥१४-८६-४० (९४९३२)
स्रग्विणश्तापि ते सर्वे सुमुष्टमणिकुण्डलाः ।
पर्यवेषन्द्विजातींस्ताञ्शतशोऽथ सहस्रशः ॥१४-८६-४१ (९४९३३)
विविधान्यन्नपानानि पुरुषा येऽनुयायिनः ।
ते वै नृपोपभोज्यानि ब्राह्मणानां ददुश्च ह ॥ ॥१४-८६-४२ (९४९३४)

इति श्रीमन्महाभारते आश्वमेधिकपर्वणि अनुगीतापर्वणि
षडशीतितमोऽध्यायः ॥८६ ॥

Mahabharata - Ashvamedhika Parva - Chapter Footnotes

७-८६-३ इष्टं नक्षत्रं पुष्यम् ॥
७-८६-८ प्रस्थाप्यन्तु प्रस्थापयन्तु ।स्वार्थे णिच्।प्रतिष्ठन्त्वित्यर्थः ॥

अस्वमेधिकपर्व-अध्यय०८७
॥ श्रीः ॥
१४.८७. अध्यायः ८७

अश्वमेधपर्व ॥ १ ॥
Mahabharata - Ashvamedhika Parva - Chapter Topics
कृष्णेन बलरामादिभिः सह युधिष्ठिराश्वमेधाय
हास्तिनपुरंप्रत्यागमनम् ॥ १ ॥
तथा युधिष्ठिरंप्रति नानादेशेभ्य आगमिष्यतां राज्ञामप्रमादेन
यथोचितपूजाया मणलूरादागमिष्यतो बभ्रुवाहनस्य संमाननस्य च
कर्तव्यताप्रतिपादकार्जुनसंदेशनिवेदनम् ॥ २ ॥

Mahabharata - Ashvamedhika Parva - Chapter Text

वैशम्पायन उवाच ।
समागतान्वेदविदो राज्ञश्च पृथिवीश्वरान् ।
दृष्ट्वा युधिष्ठिरो राजा भीमसेनमभाषत ॥ १४-८७-१ (९४९३५)
उपयाता नरव्याघ्रा य एते पृथिवीश्वराः ।
एतेषां क्रियतां पूजा पूजार्हा हि नराधिपाः ॥ १४-८७-२ (९४९३६)
इत्युक्तः स तथा चक्रे नरेन्द्रेण यशस्विना ।
भीमसेनो महातेजा यमाभ्यां सह पाण्डवः ॥ १४-८७-३ (९४९३७)
अथाभ्यगच्छद्गोविन्दो वृष्णिभिः सह धर्मजम् ।
बलदेवं पुरस्कृत्य सर्वप्राणभृतां वरः ॥ १४-८७-४ (९४९३८)
युयुधानेन सहितः प्रद्युम्नेन गदेन च ।
निशठेनाथ सांबेन तथैव कृतवर्मणा ॥ १४-८७-५ (९४९३९)
तेषामपि परां पूजां चक्रे भीमो महारथः ।
विविशुस्ते च वेश्मानि रत्नवन्ति च सर्वशः ॥ १४-८७-६ (९४९४०)
युधिष्ठिरसमीपे तु कथान्ते मधुसूदनः ।
अर्जुनं कथयामास बहुसङ्ग्रामकर्शितम् ॥ १४-८७-७ (९४९४१)
स तं प्रपच्छ कौन्तेयः पुनःपुनररिंदमम् ।
धर्मजः शक्रजं जिष्णुं समाचष्ट जगत्पतिः ॥ १४-८७-८ (९४९४२)
आगमद्द्वारकावासी समाप्तः पुरुषो नृप ।
योऽद्राक्षीत्पाण्डवश्रेष्ठ बहुसङ्ग्रामकर्शितम् ॥ १४-८७-९ (९४९४३)
समीपे च महाबाहुमाचष्ट च मम प्रभो ।
कुरु कार्याणि कौन्तेय हयमेधार्थसिद्धये ॥ १४-८७-१० (९४९४४)
इत्युक्तः प्रत्युवाचैनं धर्मराजो युधिष्ठिरः ।

दिष्ट्या स कुशली जिष्णुरुपायाति च माधव ॥१४-८७-११ (९४९४५)
यदिदं संदिदेशास्मिन्पाण्डवानां बलाग्रणीः ।
तदाख्यातमिहेच्छामि भवता यदुनन्दन ॥१४-८७-१२ (९४९४६)
इत्युक्तो धर्मराजेन वृष्ण्यन्धकपतिस्तदा ।
प्रोवाचेदं वचो वाग्मी धर्मात्मानं युधिष्ठिरम् ॥१४-८७-१३ (९४९४७)
इदमाह महाराज पार्थवाक्यं नरेश्वरः ।
वाच्यो युधिष्ठिरः कृष्ण काले वाक्यमिदं मम ॥१४-८७-१४ (९४९४८)
आगमिष्यन्ति राजानः सर्वे वै कौरवर्षभ ।
प्राप्तानां महतां पूजा कार्या ह्येतत्क्षमं हि नः ॥१४-८७-१५ (९४९४९)
इत्येतद्वचनाद्राजा विज्ञाप्यो मम मानद ।
तथा चात्ययिकं न स्याद्यदर्घाहरणेऽभवत् ॥१४-८७-१६ (९४९५०)
कर्तुमर्हति तद्राजा भवांश्चाप्यनुमन्यताम् ।
राजद्वेषान्न नश्येयुरिमा राजन्पुनः प्रजाः ॥१४-८७-१७ (९४९५१)
इदमन्यच्च कौन्तेय वचः स पुरुषोऽब्रवीत् ।
धनंजयस्य नृपते तन्मे निगदतः शृणु ॥१४-८७-१८ (९४९५२)
उपयास्यति यज्ञं नो मणलूरपतिर्नृपः ।
पुत्रो मम महातेजा दयितो बभ्रुवाहनः ॥१४-८७-१९ (९४९५३)
तं भवान्मदपेक्षार्थं विधिवत्प्रतिपूजयेत् ।
स तु भक्तोऽनुरक्तश्च मम नित्यमिति प्रभो ॥१४-८७-२० (९४९५४)
इत्येतद्वचनं श्रुत्वा धर्मराजो युधिष्ठिरः ।
अभिनन्द्यास्य तद्वाक्यमिदं वचनमब्रवीत् ॥ ॥१४-८७-२१ (९४९५५)

इति श्रीमन्महाभारते आश्वमेधिकपर्वणि अनुगीतापर्वणि
सप्ताशीतितमोऽध्यायः ॥ ८७ ॥
Mahabharata - Ashvamedhika Parva - Chapter Footnotes

७-८७-७ भोजराजन्यानां वर्धनः ॥
७-८७-८ जानुनोरधस्थः पश्चाद्भागीयो मांसलः प्रदेशः पिण्डिका
। ते उभे अस्याधिके स्वदेशादधोभागपर्यन्तं बहुलमालम्बमाने ॥

---

अस्वमेधिकपर्व-अध्यय०८८
॥ श्रीः ॥
१४.८८. अध्यायः ८८

अश्वमेधपर्व ॥ १ ॥
Mahabharata - Ashvamedhika Parva - Chapter Topics

युधिष्ठिरेणि पाण्डवेषु चतुर्भ्योऽर्जुनस्यैव
विशेषतोऽध्वसंचारादिपरिक्लेशसूचकशारीरालक्षणप्रश्ने
कृष्णेन तंप्रति तत्कथनम् ॥ १ ॥
मेध्याश्वस्य पृथ्वीसंचारणाय गतेनार्जुनेन सहाश्वेन पुनर्नगरं
प्रत्यागमनम् ॥ ३ ॥

Mahabharata - Ashvamedhika Parva - Chapter Text

युधिष्ठिर उवाच ।
श्रुतं प्रियमिदं कृष्ण यत्त्वमर्हसि भाषितुम् ।
तन्मेऽमृतरसं पुण्यं मनो ह्लादयति प्रभो ॥१४-८८-१ (९४९५६)
बहूनि किल युद्धानि विजयस्य नराधिपैः ।
पुनरासन्हृषीकेश तत्रतत्रेति न श्रुतम् ॥१४-८८-२ (९४९५७)
किंनिमित्तं स नित्यं हि पार्थः सुखविवर्जितः ।
अतीव विजयो धीमानिति मे दूयते मनः ॥१४-८८-३ (९४९५८)
संचिन्तयामि कौन्तेयं रहो जिष्णुं जनार्दन ।
अतीव दुःखभागी स सततं पाण्डुनन्दनः ॥१४-८८-४ (९४९५९)
किंनु तस्य शरीरेऽस्ति सर्वलक्षणपूजिते ।
अनिष्टं लक्षणं कृष्ण येन दुःखान्युपाश्नुते ॥१४-८८-५ (९४९६०)
अतीवासुखभोगी स सततं कुन्तिनन्दनः ।
न हि पश्यामि बीभत्सोर्निन्द्यं गात्रेषु किंचन ।
श्रोतव्यं चेन्मयैतद्वै तन्मे व्याख्यातुमर्हसि ॥ १४-८८-६ (९४९६१)
इत्युक्तः स हृषीकेशो ध्यात्वा सुमहदन्तरम् ।
राजानं भोजराजन्यवर्धनो विष्णुरब्रवीत् ॥१४-८८-७ (९४९६२)
न ह्यस्य नृपते किञ्चिदनिष्टमुपलक्षये ।
ऋते पुरुषसिंहस्य पिण्डिकेऽस्याधिके यतः ॥१४-८८-८ (९४९६३)
स ताभ्यां पुरुषव्याघ्रो नित्यमध्वसु वर्तते ।
न चान्यदनुपश्यामि येनासौ दुःखभाजनम् ॥१४-८८-९ (९४९६४)
इत्युक्तः पुरुषश्रेष्ठस्तदा कृष्णेन धीमता ।
प्रोवाच वृष्णिशार्दूलमेवमेतदिति प्रभो ॥१४-८८-१० (९४९६५)
कृष्णा तु द्रौप्दी कृष्णं तिर्यक्सासूयमैक्षत
प्रतिजग्राह तस्यास्तं प्रणयं चापि केशिहा ।
प्रख्युः सखा हृषीकेशः साक्षादिव धनंजयः ॥ १४-८८-११ (९४९६६)
तत्र भीमादयस्ते तु करवो याजकाश्च ये ।
रेमुः श्रुत्वा विचित्रां तां धनंजयकथां शुभाम् ॥१४-८८-१२ (९४९६७)
तेषां कथयतामेव पुरुषोऽर्जुनसंकथाः ।

उपायाद्वचनाद्दूतो विजयस्य महात्मनः ॥१४-८८-१३ (९४९६८)
सोभिगम्य कुरुश्रेष्ठं नमस्कृत्य च बुद्धिमान् ।
उपायातं नरव्याघ्रं फल्गुनं प्रत्यवेदयत् ॥१४-८८-१४ (९४९६९)
तच्छ्रुत्वा नृपतिस्तस्य हर्षबाष्पाकुलेक्षणः ।
प्रियाख्यानिमित्तं वै ददौ बहुधनं तदा ॥१४-८८-१५ (९४९७०)
ततो द्वितीये दिवसे महाञ्शब्दो व्यवर्धत ।
आगच्छति नरव्याघ्रे कौरवाणां धुरंधरे ॥१४-८८-१६ (९४९७१)
ततो रेणुः समुद्भूतो विबभौ तस्य वाजिनः ।
अभितो वर्तमानस्य यथोच्चैःश्रवसस्तथा ॥१४-८८-१७ (९४९७२)
तत्र हर्षकरीर्वाचो नराणां शुश्रुवेऽर्जुनः ।
दिष्ट्याऽसि पार्थ कुशली धन्यो राजा युधिष्ठिरः ॥१४-८८-१८ (९४९७३)
कोन्योहि पृथिवीं कृत्स्नां जित्वाहि युधि पार्थिवान्
चारयित्वा हयश्रेष्ठमुपागच्छेदृतेऽर्जुनात् ॥ १४-८८-१९ (९४९७४)
ये व्यतीता महात्मानो राजानः सगरादयः ।
तेषामपीदृशं कर्म न कदाचन शुश्रुम ॥१४-८८-२० (९४९७५)
नैतदन्ये करिष्यन्ति भविष्या वसुधाधिपाः ।
यत्त्वं कुरुकुलश्रेष्ठ दुष्करं कृतवानसि ॥१४-८८-२१ (९४९७६)
इत्येवं वदतां तेषां पुंसां कर्णसुखा गिरः ।
शृण्वन्विवेश धर्मात्मा फल्गुनो यज्ञसंस्तरम् ॥१४-८८-२२ (९४९७७)
ततो राजा सहामात्यः कृष्णश्च यदुनन्दनः ।
धृतराष्ट्रं पुरस्कृत्य तं प्रत्युद्ययतुस्तदा ॥१४-८८-२३ (९४९७८)
सोऽभिवाद्य पितुः पादौ धर्मराजस्य धीमतः ।
भीमादींश्चापि संपूज्य पर्यष्वजत केशवम् ॥१४-८८-२४ (९४९७९)
तैः समेत्यार्चितस्तांश्च प्रत्यर्च्याथ यथाविधि ।
विशश्राम महाबाहुस्तीरं लब्ध्वेव पारगः ॥ ॥१४-८८-२५ (९४९८०)

इति श्रीमन्महाभारते आश्वमेधिकपर्वणि अनुगीतापर्वणि
अष्टाशीतितमोऽध्यायः ॥ ८८ ॥

---

अस्वमेधिकपर्व-अध्यय०८९
॥ श्रीः ॥
१४.८९. अध्यायः ८९

अश्वमेधपर्व ॥ १ ॥
Mahabharata - Ashvamedhika Parva - Chapter Topics
बभ्रुवाहनेनोलूपीचित्राङ्गदाभ्यां सह यागदिदृक्ष्या हास्तिनपुरं

प्रत्यागमनम् ॥ १ ॥
ततः स्वयं समागतव्यासाज्ञय युधिष्ठिरेण ऋत्विग्भिः
सहाश्वमेधोपक्रमः ॥ २ ॥

Mahabharata - Ashvamedhika Parva - Chapter Text

वैशम्पायन उवाच ।
एतस्मिन्नेव काले तु स राजा बभ्रुवाहनः ।
मातृभ्यां सहितो धीमान्कुरूनभ्याजगाम ह ॥ १४-८९-१ (९४९८१)
तत्र वृद्धान्यथावत्स कुरूनन्यांश्च पार्थिवान् ।
अभिवाद्य महाबाहुस्तैश्चापि प्रतिनन्दितः ।
प्रविवेश पितामह्याः कुन्त्या भवनमुत्तमम् ॥ १४-८९-२ (९४९८२)
स प्रविश्य महाबाहुः पाण्डवानां निवेशनम् ।
पितामहीमभ्यवन्दत्साम्ना परमवल्गुना ॥ १४-८९-३ (९४९८३)
तथा चित्राङ्गदा देवी कौरवस्यात्मजाऽपि च ।
पृथां कृष्णां च सहिते विनयेनोपजग्मतुः ।
सुभद्रां च यथान्यायं याश्चान्याः कुरुयोषितः ॥ १४-८९-४ (९४९८४)
ददौ कुन्ती ततस्ताभ्यां रत्नानि विविधानि च ।
द्रौपदी च सुभद्रा च याश्चाप्यन्या यदुस्त्रियः ॥ १४-८९-५ (९४९८५)
ऊषतुस्तत्र ते देव्यौ महार्हशयनासने ।
सुपूजिते स्वयं कुन्त्या पार्थस्य हितकाम्यया ॥ १४-८९-६ (९४९८६)
स च राजा महातेजाः पूजितो बभ्रुवाहनः ।
धृतराष्ट्रं महीपालमुपतस्थे यताविधि ॥ १४-८९-७ (९४९८७)
युधिष्टिरं च राजानं भीमदींश्चापि पाण्डवान् ।
उपागम्य महातेजा विनयेनाभ्यवादयत् ॥ १४-८९-८ (९४९८८)
स तैः प्रेम्या परिष्वक्तः पूजितश्च यथाविधि ।
धनं चास्मै ददुर्भूरि प्रीयमाणा महारथाः ॥ १४-८९-९ (९४९८९)
तथैव च महीपालः कृष्णं चक्रगदाधरम् ।
प्रद्युम्न इव गोविन्दं विनयेनोपतस्थिवान् ॥ १४-८९-१० (९४९९०)
तस्मै कृष्णो ददौ राज्ञे महार्हमतिपूजितम् ।
रथं हेमपरिष्कारं दिव्याश्वयुजमुत्तमम् ॥ १४-८९-११ (९४९९१)
धर्मराजश्च भीमश्च फल्गुनश्च यमौ तथा ।
पृथक्पृथक् च ते चैनं मानार्थाभ्यामयोजयन् ॥ १४-८९-१२ (९४९९२)
ततस्तृतीये दिवसे सत्यवत्यात्मजो मुनिः ।
युधिष्ठिरं समभ्येत्य वाग्मी वचनमब्रवीत् ॥ १४-८९-१३ (९४९९३)
अद्यप्रभृति कौन्तेय यज्ञस्य समयो हि ते ।

मुहूर्तो यज्ञियः प्राप्तश्चोदयन्तीह याजकाः ॥१४-८९-१४ (९४९९४)
अहीनो नाम राजेन्द्र क्रतुस्तेऽयं विकल्पवान् ।
बहुत्वात्काञ्चनस्यास्य ख्यातो बहुसुवर्णकः ॥१४-८९-१५ (९४९९५)
एवमत्र महाराज दक्षिणाभिर्गुणीकुर ।
श्रीस्त्वां व्रजतु ते राजन्ब्राह्मणा ह्यत्र कारणम् ॥१४-८९-१६ (९४९९६)
त्रीनश्वमेधानत्र त्वं सम्प्राप्य बहुदक्षिणान् ।
ज्ञातिवध्याकृतं पापं प्रहास्यति नराधिप ॥१४-८९-१७ (९४९९७)
पवित्रं परमं चैतत्पावनानां च पावनम् ।
यदश्वमेधावभृथं प्राप्स्यसे कुरुनन्दन ॥१४-८९-१८ (९४९९८)
इत्युक्तः स तु तेजस्वी व्यासेनामितबुद्धिना ।
दीक्षां विवेश धर्मात्मा वाजिमेधाप्तये ततः ॥१४-८९-१९ (९४९९९)
ततो यज्ञं महाबाहुर्वाजिमेधं महाक्रतुम् ।
बह्वन्नदक्षिणं राजा सर्वकामगुणान्वितम् ॥१४-८९-२० (९५०००)
तत्र वेदविदो राजंश्चक्रुः कर्माणि याजकाः ।
परिक्रामन्ति शास्त्रज्ञा यतावद्द्विजसत्तमाः ॥१४-८९-२१ (९५००१)
न तेषां स्खलितं किञ्चिदासीदपहुतं तथा ।
क्रमयुक्तं च युक्तं च चक्रुस्तत्र द्विजर्षभाः ॥१४-८९-२२ (९५००२)
कृत्वा प्रवर्ग्यं धर्मज्ञा यथावद्द्विजसत्तमाः ।
चक्रुस्ते विधिवद्राजंस्तथैवाभिषवं द्विजाः ॥१४-८९-२३ (९५००३)
अभिषूय ततो राजन्सोमं सोमपसत्तमाः ।
सवनान्यानुपूर्व्येण चक्रुः सास्त्रानुसारिणः ॥१४-८९-२४ (९५००४)
न तत्र कृपणः कश्चिन्न दरिद्रो बभूव ह ।
क्षुधितो दुःखितो वाऽपि प्राकृतो वाऽपि मानवः ॥१४-८९-२५ (९५००५)
भोजनं भोजनार्थिभ्यो दापयामास शत्रुहा ।
भीमसेनो महातेजाः सततं राजशासनात् ॥१४-८९-२६ (९५००६)
संस्तरे कुशलाश्चापि सर्वकार्याणि याजकाः ।
दिवसेदिवसे चक्रुर्यथाशास्त्रानुदर्शात् ॥१४-८९-२७ (९५००७)
नाषडङ्गविदत्रासीत्सदस्यस्तस्य धीमतः ।
नाव्रतो नानुपाध्यायो न च वादाविचक्षणः ॥१४-८९-२८ (९५००८)
ततो यूपोच्छ्रये प्राप्ते षड् बैल्वान्भरतर्षभ ।
खादिरान्बिल्वसमितांस्तावतः सर्ववर्णिनः ॥१४-८९-२९ (९५००९)
देवदारुमयौ द्वौ तु यूपौ कुरुपतेर्मखे ।
श्लेष्मातकमयं चैकं याजकाः समकल्पयन् ॥१४-८९-३० (९५०१०)
ग्सर्वानेतान्यथाशास्त्रं याजकाः समकारयन्।'
शोभार्थं चापरान्यूपान्काञ्चनान्भरतर्षभ ।
स भीमः कारयामास धर्मराजस्य शासनात् ॥ १४-८९-३१ (९५०११)

ते व्यराजन्त राजर्षे वासोभिरुपशोभिताः ।
महेन्द्रानुगता देवा यथा सप्तर्षिभिर्दिवि ॥१४-८९-३२ (९५०१२)
इष्टकाः काञ्चनीश्चात्र चयनार्तं कृता विभो ।
शुशुभे चयनं तच्च दक्षस्येव प्रजापतेः ॥१४-८९-३३ (९५०१३)
चतुश्चित्यश्च तस्यासीदष्टादशकरात्मकः ।
स रुक्मपक्षो निचितस्त्रिकोणो गरुडाकृतिः ॥१४-८९-३४ (९५०१४)
ततो नियुक्ताः पशवो यथाशास्त्रं मनीषिभिः ।
तं तं देवं समुद्दिश्य पक्षिणः पशवश्च ये ॥१४-८९-३५ (९५०१५)
ऋषभाः शास्त्रपठितास्तथा जलचराश्च ये ।
सर्वांस्तानभ्ययुञ्जंस्ते तत्राग्निचयकर्मणि ॥१४-८९-३६ (९५०१६)
यूपेषु नियता चासीत्पशूनां त्रिशती तथा ।
अश्वरत्नोत्तरा यज्ञे कौन्तेयस्य महात्मनः ॥१४-८९-३७ (९५०१७)
स यज्ञः शुशुभे तस्य साक्षाद्देवर्षिसंकुलः ।
गन्धर्वगणसंकीर्णः शोभितोऽप्सरसां गणैः ॥१४-८९-३८ (९५०१८)
स किंपुरुषसंकीर्णः किंनरैश्चोपशोभितः ।
सिद्धविप्रनिवासैश्च समन्तादभिसंवृतः ॥१४-८९-३९ (९५०१९)
तस्मिन्सदसि नित्यास्तु व्यासशिष्या द्विजर्षभाः ।
सर्वशास्त्रप्रणेतारः कुशला यज्ञकर्मसु ॥१४-८९-४० (९५०२०)
नारदश्च बभूवात्र तुंबुरुश्च महाद्युतिः ।
विश्वावसुश्चित्रसेनस्तथाऽन्ये गीतकोविदाः ॥१४-८९-४१ (९५०२१)
गन्धर्वा गीतकुशला नृत्येषु च विशारदाः ।
रमयन्ति स्म तान्विप्रान्यज्ञकर्मान्तरेषु वै ॥ ॥१४-८९-४२ (९५०२२)

इति श्रीमन्महाभारते आश्वमेधिकपर्वणि अनुगीतापर्वणि
एकोननवतितमोऽध्यायः ॥ ८९ ॥
Mahabharata - Ashvamedhika Parva - Chapter Footnotes

७-८९-१५ अहीनः अह्नां सोमयागानां बहूनां समूहोऽहीनः । न हीनः
द्रव्यादिना इति वा ॥
७-८९-२३ अभिषव सोमवल्ल्याः कण्डनम् ॥
७-८९-२४ सोमं सोमवल्लीरसम् । सवनानि प्रातःसवनादीनि ॥
७-८९-२७ संस्तरे इष्टकानां चयनाख्ये स्थण्डिलरचने ॥
७-८९-२९ वर्णिनः पलाशकाष्ठमयाः ॥

---

अस्वमेधिकपर्व-अध्यय०९०
॥ श्रीः ॥

## १४.९०. अध्यायः ९०

अश्वमेधपर्व ॥ १ ॥

Mahabharata - Ashvamedhika Parva - Chapter Topics

युधिष्ठिरेणाश्वमेधसमापनानन्तरं राज्ञां यथोचितं
संमानपूर्वकं स्वस्वदेशान्प्रति प्रस्थापनम् ॥ १ ॥

Mahabharata - Ashvamedhika Parva - Chapter Text

वैशम्पायन उवाच ।
श्रपयित्वा पशूनन्यान्विधिवद्द्विजसत्तमाः ।
तं तुरङ्गं यथाशास्त्रमालभन्त द्विजातयः ॥ १४-९०-१ (९५०२३)
ततः संज्ञप्य तुरगंक विधिवद्याजकर्षभाः ।
उपसंवेशयांचक्रुस्ततस्तां द्रुपदात्मजाम् ।
कलाभिस्तिसृभी राजन्यथाविधि मनस्विनीम् ॥ १४-९०-२ (९५०२४)
उद्धृत्य तु वपां तस्य यथाशास्त्रं द्विजातयः ।
श्रपयामासुरव्यग्रा विधिवद्भरतर्षभ ॥ १४-९०-३ (९५०२५)
तं वपाधूमगन्धं तु धर्मराजः सहानुजैः ।
उपाजिघ्रद्यथासास्त्रं सर्वपापापहं तदा ॥ १४-९०-४ (९५०२६)
शिष्टान्यङ्गानि यान्यासंस्तस्याश्वस्य नराधिप ।
तान्यग्नौ जुहुवुर्धीराः समस्ताः षोडशर्त्विजः ॥ १४-९०-५ (९५०२७)
संस्थाप्यैवं तस्य राज्ञस्तं यज्ञं शक्रतेजसः ।
व्यासः सशिष्यो भगवान्वर्धयामास तं नृपम् ॥ १४-९०-६ (९५०२८)
ततो युधिष्ठिरः प्रादात्सदस्येभ्यो यथाविधि ।
कोटीः सहस्रं निष्काणां व्यासाय तु वसुंधराम् ॥ १४-९०-७ (९५०२९)
प्रतिगृह्य धरां राजन्व्यासः सत्यवतीसुतः ।
अब्रवीद्भरतश्रेष्ठं धर्मराजं युधिष्ठिरम् ॥ १४-९०-८ (९५०३०)
वसुधा भवतस्त्वेषां संन्यस्ता राजसत्तम ।
निष्क्रयो दीयतां मह्यं ब्राह्मणा हि धनार्थिना ॥ १४-९०-९ (९५०३१)
युधिष्ठिरस्तु तान्विप्रान्प्रत्युवाच महामनाः ।
भ्रातृभिः सहितो धीमान्मध्ये राज्ञां महात्मनाम् ॥ १४-९०-१० (९५०३२)
अश्वमेधे महायज्ञे पृथिवी दक्षिणा स्मृता ।
अर्जुनेन जिता चेयमृत्विग्भ्यः प्रापिता मया ॥ १४-९०-११ (९५०३३)
वनं प्रवेक्ष्ये विप्राग्र्या विभजध्वं महीमिमाम् ।
चतुर्धा पृथिवीं कृत्वा चातुर्होत्रप्रमाणतः ॥ १४-९०-१२ (९५०३४)
नाहमादातुमिच्छामि ब्रह्मस्वं द्विजसत्तमाः ॥

इदं नित्यं मनो विप्रा भ्रातॄणां चैव मे सदा ॥१४-९०-१३ (९५०३५)
इत्युक्तवति तस्मिंस्तु भ्रातरो द्रौपदी च सा ।
एवमेतदिति प्राहुस्तदभूद्रोमहर्षणम् ॥१४-९०-१४ (९५०३६)
ततोऽन्तरिक्षे वागासीत्साधुसाध्विति भारत ।
तथैव द्विजसङ्घानां शंसतां विबभौ स्वनः ॥१४-९०-१५ (९५०३७)
द्वैपायनस्तथा कृष्णः पुनरेव युधिष्ठिरम् ।
प्रोवाच मध्ये विप्राणामिदं सम्पूजयन्मुनिः ॥१४-९०-१६ (९५०३८)
दत्तैषा भवता मह्यं तां ते प्रतिददाम्यहम् ।
हिरण्यं दीयतामेभ्यो ब्राह्मणेभ्यो धराऽस्तु ते ॥१४-९०-१७ (९५०३९)
ततोऽब्रवीद्वासुदेवो धर्मराजं युधिष्ठिरम् ।
यथाऽऽह भगवान्व्यासस्तथा त्वं कर्तुमर्हसि ॥१४-९०-१८ (९५०४०)
इत्युक्तः स कुरुश्रेष्ठः प्रीतात्मा भ्रातृभिः सह ।
कोटिं कोटिं गवां प्रादाद्दक्षिणां त्रिगुणीकृताम् ॥१४-९०-१९ (९५०४१)
न करिष्यति तल्लोके कश्चिदन्यो नराधिपः ।
यत्कृतं कुरुराजेन मरुत्तस्यानुकुर्वता ॥१४-९०-२० (९५०४२)
प्रतिगृह्य तु तद्द्रव्यं कृष्णद्वैपायनो मुनिः ।
ऋत्विग्भ्यः प्रददौ विद्वांश्चतुर्धा व्यभजंश्च ते ॥१४-९०-२१ (९५०४३)
धरण्या निष्क्रयं दत्त्वा तद्धिरण्यं युधिष्ठिरः ।
दूतपापो जितस्वर्गो मुमुदे भ्रातृभिः सह ॥१४-९०-२२ (९५०४४)
ऋत्विजस्तमपर्यन्तं सुवर्णनिचयं तथा ।
व्यभजन्त द्विजातिभ्यो यथोत्साहं यथासुखम् ॥१४-९०-२३ (९५०४५)
यज्ञवाटे च यत्किञ्चिद्धिरण्यं सवि भूषणम् ।
तोरणानि च यूपांश्च घटान्पात्रीस्तथेष्टकाः ।
युधिष्ठिराभ्यनुज्ञाताः सर्वं तद्व्यभजन्द्विजाः ॥ १४-९०-२४ (९५०४६)
अनन्तरं द्विजातिभ्यः क्षत्रिया जह्रिरे वसु ।
तथा विट्शूद्रसङ्घाश्च तथाऽन्ये म्लेच्छजातयः ।
ग्कालेन महता जह्रुस्तत्सुवर्णं ततस्ततः ॥' १४-९०-२५ (९५०४७)
ततस्ते ब्राह्मणाः सर्वे मुदिता जग्मुरालयान् ।
तर्पिता वसुना तेन धर्मिराजेन धीमिता ॥१४-९०-२६ (९५०४८)
स्वमंशं भगवान्व्यासः कुन्त्यै पादाभिवादितः ।
प्रददौ तस्य महतो हिरण्यस्य महाद्युतिः ॥१४-९०-२७ (९५०४९)
श्वशुरात्प्रीतिदायं तं प्राप्य सा प्रीतमानसा ।
चकार पुण्यकं तेन सुमहत्सङ्घशः पृथा ॥१४-९०-२८ (९५०५०)
गत्वा त्ववभृथं राजा विपाप्मा भ्रातृभिः सह ।
सभाज्यमानः शुशुभे महेन्द्रस्त्रिदशैरिव ॥१४-९०-२९ (९५०५१)
पाण्डवाश्च महीपालैः समेतैरभिसंवृताः ।

अशोभन्त महाराज ग्रहस्तारागणैरिव ॥ १४-९०-३० (९५०५२)
राजभ्योपि ततः प्रादाद्रत्नानि विविधानि च ।
गजानश्वानलङ्कारान्त्रियो वासांसि काञ्चनम् ॥ १४-९०-३१ (९५०५३)
तद्धनौघमपर्यन्तं पार्थः पार्थिवमण्डले ।
विसृजञ्शुशुभे राजन्यथा वैश्रवणस्तथा ॥ १४-९०-३२ (९५०५४)
आनीय च तथा वीरं राजानं बभ्रुवाहनम् ।
प्रदाय विपुलं वित्तं गृहात्प्रास्थापयनत्तदा ॥ १४-९०-३३ (९५०५५)
दुःशलायाश्च तं पौत्रं बालकं भरतर्षभ ।
स्वराज्येऽथ पितुर्धामान्स्वसुः प्रीत्या न्वयेशयत् ॥ १४-९०-३४ (९५०५६)
नृपतींश्चैव तान्सर्वान्सुविभक्तान्सुपूजितान् ।
प्रस्थापयामास वशी कुरुराजो युधिष्ठिरः ॥ १४-९०-३५ (९५०५७)
गोविन्दं च महात्मानं बलदेवं महाबलम् ।
तथाऽन्यान्वृष्णिवीरांश्च प्रद्युम्नाद्यान्सहस्रशः ॥ १४-९०-३६ (९५०५८)
पूजयित्वा महाराज यथाविधि महाद्युतिः ।
भ्रातृभिः सहितो राजा प्रास्थापरयदरिंदमः ॥ १४-९०-३७ (९५०५९)
एवं बभूव यज्ञः स धर्मिराजस्य धीमतः ।
बह्वन्नधनरत्नौघः सुरामैरेयसागरः ॥ १४-९०-३८ (९५०६०)
सर्पिःपङ्का ह्रदा यत्र बभूवुश्चान्नपर्वताः ।
रसालकर्दमा नद्यो बभूवुर्भरतर्षभ ॥ १४-९०-३९ (९५०६१)
भक्ष्यखाण्डवरागाणां क्रियतां भुज्यतां तथा ।
पशूनां वध्यतां चैव नान्तं ददृशिरे जनाः ॥ १४-९०-४० (९५०६२)
मत्तप्रमत्तमुदितं सुप्रीतयुवतीजनम् ।
मृदङ्गशङ्खनादैस्च मनोरममभूत्तदा। १४-९०-४१ (९५०६३)
दीयतां भुज्यतां चापि तत्र शब्दो महानभूत् ।
दीयतां दीयतां चेति दिवारात्रमवारितम् ॥ १४-९०-४२ (९५०६४)
तं महोत्सवसंकाशं हृष्टपुष्टजनाकुलम् ।
कथयन्ति स्म पुरुषा नानादेशनिवासिनः ॥ १४-९०-४३ (९५०६५)
वर्षित्वा धनधाराभिः कामै रत्नै रसैस्तथा ।
विपाप्मा भरतश्रेष्ठः कृतार्थः प्राविशत्पुरम् ॥ ॥ १४-९०-४४ (९५०६६)

इति श्रीमन्महाभारते आश्वमेधिकपर्वणि अनुगीतापर्वणि
नवतितमोऽध्यायः ॥ ९० ॥

Mahabharata - Ashvamedhika Parva - Chapter Footnotes

७-९०-२ संज्ञप्य हिंसित्वा तुरगम् ।तस्य समीपे तिसृभिः कलाभिः कलनाभिः मन्त्रद्रव्यश्रद्धाख्याभिरुपेतां द्रौपदीं उपसंवेशयां

चक्रुः ॥
७-९०-५ अङ्गानि हृदयजिह्वावक्षआदीनी ॥
७-९०-६ संस्थाप्य समाप्य ॥
७-९०-७ तुशब्दश्चार्थे ।तेन सर्वेभ्यो वसुधरां ददावित्यर्थः ॥
७-९०-२५ अनन्तरं द्विजातिभ्यः विप्रेषु गृहीत्वा निवृत्तेषु शिष्टात्
क्षत्रियादयो गहीतवन्त इत्यर्थः ॥
७-९०-३८ मैरेयं वृक्षजं मद्यम् ॥
७-९०-४० पिप्पलीशुण्ठीयुक्तो मुद्गयूषः खाण्डवः स एव शर्कारयुक्तो रागः

---

अस्वमेधिकपर्व-अध्यय०९१
॥ श्रीः ॥
१४.९१. अध्यायः ९१

अश्वमेधपर्व ॥१ ॥
Mahabharata - Ashvamedhika Parva - Chapter Topics
वैशंपायनेन जनमेजयंप्रति नकुलाख्यानकथनारम्भः ॥१ ॥
अश्वमेधावसाने बिलान्निस्सृतेन कनकपार्श्वेन केनचिन्नकुलेन
सदस्यान्प्रति उञ्छवृत्तिब्राह्मणस्य सक्तुप्रस्थदानप्रशंसनपूर्वकं
युधिष्ठिराश्वमेधगार्हणम् ॥२ ॥
।तथा सदस्यचोदनया तत्कथनोपक्रमः ॥३ ॥

Mahabharata - Ashvamedhika Parva - Chapter Text

जनमेजय उवाच ।
पितामहस्य मे यज्ञे धर्मराजस्य धीमतः ।
यदाश्चर्यमभूत्किञ्चित्तद्भवान्वक्तुमर्हति ॥१४-९१-१ (९५०६७)
वैशम्पायन उवाच।१४-९१-२क्ष् (७९२३)
श्रूयतां राजशार्दूल महदाश्चर्यमुत्तमम् ।
अश्वमेधे महायज्ञे निवृत्ते यदभूत्प्रभो ॥१४-९१-२ (९५०६८)
तर्पितेषु द्विजाग्र्येषु ज्ञातिसम्बन्धिबन्धुषु ।
दीनान्धकृपणे वाऽपि तदा भरतसत्तम ॥१४-९१-३ (९५०६९)
घुष्यमाणे महादाने दिक्षु सर्वासु भारत ।
पतत्सु पुष्पवर्षेषु धर्मराजस्य मूर्धनि ॥१४-९१-४ (९५०७०)
बिलान्निस्सृत्य नकुलो रुक्मपार्श्वस्तदाऽनघः ।
वज्राशनिसमं नादममुञ्चद्वसुधाधिप ॥१४-९१-५ (९५०७१)
सकृदुत्सृज्य तन्नादं त्रासयानो मृगद्विजान् ।

मानुपं वचनं प्राह पुष्पोपरिशयो महान् ॥१४-९१-६ (९५०७२)
सक्तुप्रस्थेन वो नायं यज्ञस्तुल्यो नराधिपाः ।
उच्छवृत्तेर्वदान्यस्य कुरुक्षेत्रनिवासिनः ॥१४-९१-७ (९५०७३)
तस्य तद्वचनं श्रुत्वा नकुलस्य विशांपते ।
विस्मयं परमं जग्मुः सर्वे ते ब्राह्मणर्षभाः ॥१४-९१-८ (९५०७४)
ततः समेत्य नकुलं पर्यपृच्छन्त ते द्विजाः ॥
कुतस्त्वं समनुप्राप्तो यज्ञं साधुसमागमम् ॥१४-९१-९ (९५०७५)
किं बलं परमं तुभ्यं श्रुतं किं परायणम् ।
कथं भवन्तं विद्याम यो नो यज्ञं विगर्हसे ॥१४-९१-१० (९५०७६)
अविलुप्यागमं कृत्स्नं विविधैर्यज्ञियैः कृतम् ।
यथागमं यथान्यायं कर्तव्यं च तथा कृतम् ॥१४-९१-११ (९५०७७)
पूजार्हाः पूजिताश्चात्र विधिवच्छास्त्रदर्शात् ।
मन्त्राहुतिहुतश्चाग्निर्दत्तं देयममत्सरम् ॥१४-९१-१२ (९५०७८)
तुष्टा द्विजातयश्चात्र दानैर्बहुविधैरपि ।
क्षत्रियाश्चि सुयुद्धेन श्राद्धैश्चापि पितामहाः ॥१४-९१-१३ (९५०७९)
पालनेन विशस्तुष्टाः कामैस्तुष्टा वरस्त्रियः ।
अनुक्रोशैस्तता शूद्रा दानशेषैः पृथग्जनाः ॥१४-९१-१४ (९५०८०)
ज्ञातिसम्बन्धिनस्तुष्टाः शौचेन च नृपस्य नः ।
देवा हविर्भिः पुण्यैस्च रक्षणैः शरणागताः ॥१४-९१-१५ (९५०८१)
यदत्र तथ्यं तद्ब्रूहि सत्यंसत्यं द्विजातिषु ।
यथाश्रुतं यथादृष्टं पृष्टो ब्राह्मणकाम्यया ॥१४-९१-१६ (९५०८२)
श्रद्धेयवाक्यः प्राज्ञस्त्वं दिव्यं रूपं बिभर्षि च ।
समागतश्च विप्रैस्त्वं तद्भवान्वक्तुमर्हति ॥१४-९१-१७ (९५०८३)
इति पृष्टो द्विजैस्तैः स प्रहसन्नकुलोऽब्रवीत् ।
नैषा मृषामया वाणी प्रोक्ता दर्पेण वा द्विजाः ॥१४-९१-१८ (९५०८४)
यन्मयोक्तमिदं वाक्यं युष्माभिश्चाप्युपश्रुतम् ।
सक्तुप्रस्थेन वो नायं यज्ञस्तुल्यो द्विजर्षभाः ॥१४-९१-१९ (९५०८५)
इत्यवश्यं मयैतद्वो वक्तव्यं द्विजसत्तमाः ।
शृणुताव्यग्रमनसः शंसतो मे यथातथम् ॥१४-९१-२० (९५०८६)
अनुभूतं च दृष्टं च यन्मयाऽद्भुतमुत्तमम् ।
उञ्छवृत्तेर्वदान्यस्य कुरुक्षेत्रनिवासिनः ॥१४-९१-२१ (९५०८७)
स्वर्गं येन द्विजाः प्राप्तः सभार्यः ससुतस्नुषः ।
यथा चार्धं शरीरस्य ममेदं काञ्चनीकृतम् ॥ ॥१४-९१-२२ (९५०८८)

इति श्रीमन्महाभारते आश्वमेधिकपर्वणि अनुगीतापर्वणि
एकनवतितमोऽध्यायः ॥९१ ॥

७-९१-५ नीलाक्षस्तत्र नकुल इति झ पाठः ॥
७-९१-६ धृष्टो बिलशयो महान् इति झ पाठः ॥
७-९१-२२ ममेदं यत्रेति शेषः ॥

---

अस्वमेधिकपर्व-अध्यय०९२
॥ श्रीः ॥
१४.९२. अध्यायः ९२

अश्वमेधपर्व ॥ १ ॥
Mahabharata - Ashvamedhika Parva - Chapter Topics
नकुलेन युधिष्ठिरादीन्प्रति
सकुटुम्बस्योञ्छवृत्तेर्ब्राह्मणस्य धर्मपुरुषाय
सक्तुप्रस्तदानमहिमवर्णनपूर्वकंपुनस्तत्रैवान्तर्धानम् ॥ १ ॥

Mahabharata - Ashvamedhika Parva - Chapter Text

नकुल उवाच ।
हन्त वः कथयिष्यामि दानस्य फलमुत्तमम् ।
न्यायलब्धस्य सूक्ष्मस्य विप्रदत्तस्य यद्द्विजाः ॥ १४-९२-१ (९५०८९)
धर्मक्षेत्रे कुरुक्षेत्रे धर्मज्ञैर्बहुभिर्वृते ।
उञ्छवृत्तिर्द्विजः कश्चित्कापोतिरभवत्पुरा ॥ १४-९२-२ (९५०९०)
सभार्यः सहपुत्रेण सस्नुषस्तपसि स्थितः ।
बभूव शुक्लवृत्तः स धर्मात्मा नियतेन्द्रियः ॥ १४-९२-३ (९५०९१)
षष्ठे काले सदा विप्रो भुङ्क्ते तैः सह संवृतः ॥ १४-९२-४ (९५०९२)
षष्ठे काले कदाचित्तु तस्याहारो न विद्यते ।
भुङ्क्तेऽन्यस्मिन्कदाचित्स षष्ठे काले द्विजोत्तमः ॥ १४-९२-५ (९५०९३)
कपोतधर्मिणस्तस्य दुर्भिक्षे सति दारुणे ।
नाविद्यत तदा विप्राः संचयस्तन्निबोधत ॥ १४-९२-६ (९५०९४)
क्षीणाषैदिसमावापो द्रव्यहीनोऽभवत्तदा ।
कालेकालेऽस्य सम्प्राप्ते नैव विद्येत भोजनम् ॥ १४-९२-७ (९५०९५)
क्षुधापरिगताः सर्वे प्रातिष्ठन्त तदा तु ते ।
उञ्छं तदा शुक्लपक्षे मध्यं तपति भास्करे ॥ १४-९२-८ (९५०९६)
उष्णार्तश्च क्षुधार्तश्च विप्रस्तपसि संस्थितः ।
उञ्छमप्राप्तवानेव ब्राह्मणः क्षुच्छ्रमान्वितः ॥ १४-९२-९ (९५०९७)

स तथैव क्षुधाविष्टः सार्धं परिजनेन ह ।
क्षपयामास तं कालं कृच्छ्रप्राणो द्विजोत्तमः ॥१४-९२-१० (९५०९८)
अथ षष्ठे गते काले यवप्रस्थमुपार्जयन् ।
यवप्रस्थं तु तं सक्तूनकुर्वन्त तपस्विनः ॥१४-९२-११ (९५०९९)
कृतजप्याह्निकास्ते तु हुत्वा चाग्निं यथाविधि ।
कुडवंकुडवं सर्वे व्यभजन्त तपस्विनः ॥१४-९२-१२ (९५१००)
अथागच्छद्द्विजः कश्चिदतिथिर्भुञ्जतां तदा ।
ते तं दृष्ट्वाऽतिथिं प्राप्तं प्रहृष्टमनसोऽभवन् ॥१४-९२-१३ (९५१०१)
तेऽभिवाद्य सुखप्रश्नं पृष्ट्वा तमतिथिं तदा ।
विशुद्धमनसो दान्ताः श्रद्धादमसमन्विताः ॥१४-९२-१४ (९५१०२)
अनसूया गतक्रोधाः साधवो वीतमत्सराः ।
त्यक्तमानमदक्रोधा धर्मज्ञा द्विजसत्तमाः ॥१४-९२-१५ (९५१०३)
सब्रह्मचर्यं गोत्रं ते तस्य ख्यात्वा परस्परम् ।
कुटीं प्रवेशयामासुः क्षुधार्तमतिथिं तदा ॥१४-९२-१६ (९५१०४)
इदमर्घ्यं च पाद्यं च बृसी चेयं तवानघ ।
शुचयः सक्तवश्चेमे नियमोपार्जिताः प्रभो ।
प्रतिगृह्णीष्व भद्रं ते मया दत्ता द्विजर्षभ ॥ १४-९२-१७ (९५१०५)
इत्युक्तः प्रतिगृह्याथ सक्तूनां कुडवं द्विजः ।
भक्षयामास राजेन्द्र न च तुष्टिं जगाम सः ॥१४-९२-१८ (९५१०६)
स उञ्छवृत्तिस्तं प्रेक्ष्य क्षुधापरिगतं द्विजम् ।
आहारं चिन्तयामास कथं तुष्टो भवेदिति ॥१४-९२-१९ (९५१०७)
तस्य भार्याऽब्रवीद्वाक्यं मद्भागो दीयतामिति ।
गच्छत्वेष यथाकामं परितुष्टो द्विजोत्तमः ॥१४-९२-२० (९५१०८)
इति ब्रुवन्तीं तां साध्वीं भार्यां स द्विजसत्तमः ।
क्षउधापरिगतां ज्ञात्वा तान्सक्तून्नाभ्यनन्दत ॥१४-९२-२१ (९५१०९)
आत्मानुमानतो विद्वान्स तु विप्रर्षभस्तदा ।
जानन्वृद्धां क्षुधार्तां च श्रान्तां ग्लानां तपस्विनीम् ।
त्वगस्थिभूता वेपन्तीं ततो भार्यामुवाच ह ॥ १४-९२-२२ (९५११०)
अपि कीटपतङ्गानां मृगाणां चैव शोभने ।
स्त्रियो रक्ष्याश्च पोष्याश्च न त्वेवं वक्तुमर्हसि ॥१४-९२-२३ (९५१११)
अनुकंप्यो नरः पत्न्या पुष्टो रक्षित एव च ।
प्रपतेद्यशसो दीप्तात्स च लोकान्न चाप्नुयात् ॥१४-९२-२४ (९५११२)
धर्मकामार्थकार्याणि शुश्रूषाकुलसंततिः ।
दारेष्वदीनो धर्मस्च पितॄणामात्मनस्तथा ॥१४-९२-२५ (९५११३)
न वेत्ति कर्मतो भार्यारक्षणे योऽक्षमः पुमान् ।
अयशो महदाप्नोति नारकांश्चैव गच्छति ॥१४-९२-२६ (९५११४)

इत्युक्ता सा ततः प्राह धर्मार्थौ नौ समौ द्विज ।
सक्तुप्रस्थचतुर्भागं गृहाणेमं प्रसीद मे ॥१४-९२-२७ (९५११५)
सत्यं रतिश्च धर्मश्च स्वर्गश्च गुणनिर्जितः ।
स्त्रीणां पतिसमाधीनं काङ्क्षितं च द्विजर्षभ ॥१४-९२-२८ (९५११६)
ऋतुर्मातु पितुर्बीजं दैवतं परमं पतिः ।
भर्तुः प्रसादान्नारीणां रतिपुत्रफलं तथा ॥१४-९२-२९ (९५११७)
पालनाद्धि पतिस्त्वं मे भर्ताऽसि भरणाच्च मे ।
पुत्रप्रदानाद्वरदस्तस्मात्सक्तून्प्रयच्छ मे ॥१४-९२-३० (९५११८)
जरापरिगतो वृद्धः क्षुधार्तो दुर्बलो भृशम् ।
उपवासपरिश्रान्तो यदा त्वमपि कर्शितः ॥१४-९२-३१ (९५११९)
इत्युक्तः स तया सक्तून्प्रगृह्येदं वचोऽब्रवीत् ।
द्विजि सक्तूनिमान्भूयः प्रतिगृह्णीष्व सत्तम ॥१४-९२-३२ (९५१२०)
स तान्प्रगृह्य भुक्त्वा च न तुष्टिमगमद्द्विजः ।
तमुञ्छवृत्तिरालक्ष्य ततश्चिन्तापरोऽभवत् ॥१४-९२-३३ (९५१२१)
पुत्र उवाच।१४-९२-३४क्ष् (७९२४)
सक्तूनिमान्प्रगृह्य त्वं देहि विप्राय सत्तम ।
इत्येव सुकृतं मन्ये तस्मादेतत्करोम्यहम् ॥१४-९२-३४ (९५१२२)
भवान्हि परिपाल्यो मे सर्वदैव प्रयत्नतः ।
साधूनां काङ्क्षितं यस्मात्पितुर्वृद्धस्य पालनम् ॥१४-९२-३५ (९५१२३)
पुत्रार्थो विहितो ह्येष वार्धके परिपालनम् ॥
श्रुतिरेषा हि विप्रर्षे त्रिषु लोकेषु शाश्वती ॥१४-९२-३६ (९५१२४)
प्राणाधारणमात्रेण शक्यं कर्तुं तपस्त्वया ।
प्राणो हि परमो धर्मः स्थितो देहेषु देहिनाम् ॥१४-९२-३७ (९५१२५)
पितोवाच।१४-९२-३८क्ष् (७९२५)
अपि वर्षसहस्री त्वं बाल एव मतो मम ।
उत्पाद्य पुत्रं हि पिता कृतकृत्यो भवेत्सुतात् ॥१४-९२-३८ (९५१२६)
बालानां क्षुद्बलवती जानाम्येतदहं प्रभो ।
वृद्धोऽहं धारयिष्यामि त्वं बली भव पुत्रक ॥१४-९२-३९ (९५१२७)
जीर्णेन वयसा पुत्र न मां क्षुद्बाधतेऽपि च ।
दीर्घकालं तपस्तप्तं न मे मरणतो भयम् ॥१४-९२-४० (९५१२८)
पुत्र उवाच।१४-९२-४१क्ष् (७९२६)
अपत्यमस्मि ते पुंसस्त्राणात्पुत्र इति स्मृतः ।
आत्मा पुत्रः स्मृतस्तस्मात्त्राह्यात्मानमिहात्मना ॥१४-९२-४१ (९५१२९)
पितोवाच।१४-९२-४२क्ष् (७९२७)
रूपेण सदृशस्त्वं मे शीलेन च दमेन च ।
परीक्षितश्च बहुधा सक्तूनादद्मि ते सुत ॥१४-९२-४२ (९५१३०)

इत्युक्त्वाऽऽदाय तान्सक्तून्प्रीतात्मा द्विजसत्तमः ।
प्रहसन्निव विप्राय स तस्मै प्रददौ तदा ॥ १४-९२-४३ (९५१३१)
भुक्त्वा तानपि सक्तून्स नैव तुष्टो बभूव ह ।
उच्छवृत्तिस्तु धर्मात्मा व्रीडामनुजगाम ह ॥ १४-९२-४४ (९५१३२)
तं वै वधूः स्थिता साध्वी ब्राह्मणिप्रियकाम्यया ।
सक्तूनादाय संहृष्टा श्वशुरं वाक्यमब्रवीत् ॥ १४-९२-४५ (९५१३३)
संतानात्तव संतानं मम विप्र भविष्यति ।
सक्तूनिमानतिथये गृहीत्वा सम्प्रयच्छ मे ॥ १४-९२-४६ (९५१३४)
तव प्रसादान्निर्वृत्ता मम लोकाः किलाक्षयाः ।
पुत्रेण तानवाप्नोति यत्र गत्वा न शोचति ॥ १४-९२-४७ (९५१३५)
धर्माद्या हि यथा त्रेता वह्नित्रेता तथैव च ।
तथैव पुत्रपौत्राणां स्वर्गस्त्रेता किलाक्षयः ॥ १४-९२-४८ (९५१३६)
पितॄणात्तारयति पुत्र इत्यनुशुश्रुम ।
पुत्रपौत्रैश्च नियतं सादुलोकानुपाश्नुते ॥ १४-९२-४९ (९५१३७)
श्वशुर उवाच। १४-९२-५०क्ष् (७९२८)
वातातपविशीर्णाङ्गीं त्वां विवर्णां निरीक्ष्य वै ।
कर्शितां सुव्रताचारे क्षुधाविह्वलचेतसम् ॥ १४-९२-५० (९५१३८)
कथं सक्तून्ग्रहीष्यामि भूत्वा धर्मोपघातकः ।
कल्याणवृत्ते कल्याणि नैव त्वं वक्तुमर्हसि ॥ १४-९२-५१ (९५१३९)
षष्ठे काले व्रतवतीं शौचशीलतपोन्विताम् ।
कृच्छ्रवृत्तिं निराहारां द्रक्ष्यामि त्वां कथं शुभे ॥ १४-९२-५२ (९५१४०)
बाला क्षुधार्ता नारी च रक्ष्या त्वं सततं मया ।
उपवासपरिश्रान्ता त्वं हि बान्धवनन्दिनी ॥ १४-९२-५३ (९५१४१)
स्नुषोवाच। १४-९२-५४क्ष् (७९२९)
गुरोर्मम गुरुस्त्वं वै यतो दैवतदैवतम् ।
देवातिदेवस्तस्मात्त्वं सक्तूनादत्स्व मे प्रभो ॥ १४-९२-५४ (९५१४२)
देहः प्राणश्च धर्मश्च शुश्रूषार्थमिदं गुरोः ।
तव विप्र प्रसादेन लोकान्प्राप्स्यामहे शुभान् ॥ १४-९२-५५ (९५१४३)
अवेक्ष्या इति कृत्वाऽहं दृढभक्तेति वा द्विज ।
चिन्त्या ममेयमिति वा सक्तूनादानुमर्हसि ॥ १४-९२-५६ (९५१४४)
श्वशुर उवाच। १४-९२-५७क्ष् (७९३०)
अनेन नित्यं साध्वी त्वं शीलवृत्तेन शोभसे ।
या त्वं धर्मव्रतोपेता गुरुवृत्तिमवेक्षसे ॥ १४-९२-५७ (९५१४५)
तस्मात्सक्तून्ग्रहीष्यामि वधु नार्हसि वञ्चनाम् ।
गणयित्वा महाभागे त्वां हि धर्मभृतां वरे ॥ १४-९२-५८ (९५१४६)
इत्युक्त्वा तानुपादाय सक्तून्प्रादाद्द्विजातये ।

ततस्तुष्टोऽभवद्विप्रस्तस्य साधोर्महात्मनः ॥१४-९२-५९ (९५१४७)
प्रीतात्मा स तु तं वाक्यमिदमाह द्विजर्षभम् ।
वाग्मी तदा द्विजश्रेष्टो धर्मः पुरुषविग्रहः ॥१४-९२-६० (९५१४८)
शुद्धेनि तव दानेन न्यायोपात्तेन धर्मतः ।
यथाशक्ति विसृष्टेन प्रीतोस्मि द्विजसत्तम ॥१४-९२-६१ (९५१४९)
अहो दानं घुष्यते ते स्वर्गे स्वर्गनिवासिभिः ।
गगनात्पुष्पवर्षं च पश्येदं पतितं भुवि ॥१४-९२-६२ (९५१५०)
सुरर्षिदेवगन्धर्वा ये च देवपुरःसराः ।
स्तुवन्तो देवदूताश्च स्थिता दानेन विस्मिताः ॥१४-९२-६३ (९५१५१)
ब्रह्मर्षयो विमानस्था ब्रह्मलोकचरश्च ये ।
काङ्क्षन्ते दर्शनं तुभ्यं दिवं व्रज द्विजर्षभ ॥१४-९२-६४ (९५१५२)
पितृलोकगताः सर्वे तारिताः पितरस्त्वया ।
अनागताश्च बहवः सुबहूनि युगान्युत ॥१४-९२-६५ (९५१५३)
ब्रह्मचर्येण दानेन यज्ञेनि तपसा तथा ।
अगह्वरेण धर्मेण तस्माद्गच्च दिवं द्विज ॥१४-९२-६६ (९५१५४)
श्रद्धया परया यरत्वं तपश्चरसि सुव्रत ।
तस्माद्देवास्तवानेन प्रीता ब्राह्मणसत्तम ॥१४-९२-६७ (९५१५५)
सर्वमेतद्धि यस्मात्ते दत्तं शुद्धेन चेतसा ।
कृच्छ्रकाले ततः स्वर्गो विजितः कर्मणा त्वया ॥१४-९२-६८ (९५१५६)
क्षुधा निर्णुदति प्रज्ञां धर्मबुद्धिं व्यपोहति ।
क्षुधापरिगतज्ञानो धृतिं त्यजति चैव ह ॥१४-९२-६९ (९५१५७)
बुभुक्षां जयते यस्तु स स्वर्गं जयते ध्रुवम् ।
यदा दानरुचिः स्याद्धि तदा धर्मो न सीदति ॥१४-९२-७० (९५१५८)
अनवेक्ष्य सुतस्नेहं कलत्रस्नेहमेव च ।
धर्ममेव गुरुं ज्ञात्वा तृष्णा न गणिता त्वया ॥१४-९२-७१ (९५१५९)
द्रव्यागमो नृणां सूक्ष्मः पात्रे दानं ततः परम् ।
कालः परतरो दानाच्छ्रद्धा चैव ततः परा ॥१४-९२-७२ (९५१६०)
स्वर्गद्वारं सुसूक्ष्मं हि नरैर्माहान्नि दृश्यते ।
सङ्गर्गलं लोभकीलं रागगुप्तं दुरासदम् ॥१४-९२-७३ (९५१६१)
तं तु पश्यन्ति पुरुषा जितदक्रोधा जितेन्द्रियाः ।
ब्राह्मणास्तपसा युक्ता यथाशक्ति प्रदायिनः ॥१४-९२-७४ (९५१६२)
सहस्रशक्तिश्च शतं शतशक्तिर्दशापि च ।
दद्यादपश्च यः शक्त्या सर्वे तुल्यफलाः स्मृताः ॥१४-९२-७५ (९५१६३)
रन्तिदेवो हि नृपतिरपः प्रादादकिंचनः ।
शुद्धेन मनसा विप्र नाकपृष्ठं ततो गतः ॥१४-९२-७६ (९५१६४)
न धर्मः प्रीयते तात दानैर्दत्तैर्महाफलैः ।

न्यायलब्धैर्यथा सूक्ष्मैः श्रुद्धापूतैः स तुष्यति ॥१४-९२-७७ (९५१६५)
गोप्रदानसहस्राणि द्विजेभ्योऽदान्नृगो नृपः ।
एकां दत्त्वा स पारक्यां नरकं समपद्यत ॥१४-९२-७८ (९५१६६)
आत्ममांसप्रदानेन शिबोरौशीनरो नृपः ।
प्राप्य पुण्यकृताँल्लोकान्मोदत दिवि सुव्रतः ॥१४-९२-७९ (९५१६७)
विभवेन नृणां पुण्यं यच्छत्त्या स्वार्जितं न तत् ।
न यज्ञैर्विविधैर्विप्र यथान्यायेन संचितैः ॥१४-९२-८० (९५१६८)
क्रोधाद्दानफलं हन्ति लोभात्स्वर्गं न गच्छति ।
न्यायवृत्तिर्हि तपसा दानवित्स्वर्गमश्नुते ॥१४-९२-८१ (९५१६९)
न राजसूयैर्बहुभिरिष्टा विपुलदक्षिणैः ॥
न चाश्वमेधैर्बहुभिः फलं सममिदं तव ॥१४-९२-८२ (९५१७०)
सक्तुप्रस्थेन विजितो ब्रह्मलोकस्त्वयाऽक्षयः ।
विरजो ब्रह्मसदनं गच्छ विप्र यतासुखम् ॥१४-९२-८३ (९५१७१)
सर्वेषां वो द्विजश्रेष्ठ दिव्यं यानमुपस्थितम् ।
आरोहत यथाकामं धर्मोस्मि द्विज पश्य माम् ॥१४-९२-८४ (९५१७२)
बाधितो हि त्वया देहो लोके कीर्तिः स्थिरा च ते ।
सभार्यः सहपुत्रश्च सस्नुषश्च दिवं व्रज ॥१४-९२-८५ (९५१७३)
इत्युक्तवाक्ये धर्मे तु यानमारुद्य स द्विजः ।
सदारः ससुतश्चैव सस्नुषश्च दिवं गतः ॥१४-९२-८६ (९५१७४)
तस्मिन्विपरे गते स्वर्गं ससुते सस्नुषे तदा ।
भार्याचतुर्थे धर्मज्ञे ततोऽहं निःसृतो बिलात् ॥१४-९२-८७ (९५१७५)
ततस्तु सक्तुगन्धेन क्लेदेन सलिलस्य च ।
दिव्यपुष्पविमर्दाच्च साधोर्दानलवैश्च तैः ॥१४-९२-८८ (९५१७६)
विप्रस्य तपसा तस्य शिरो मे काञ्चनीकृतम् ।
तस्य सत्याभिसन्धस्य सक्तुदानेन चैव ह ॥१४-९२-८९ (९५१७७)
शरीरार्धं च मे विप्राः शातकुंभमयं कृतम् ।
पश्यतेमं सुविपुलं तपसा तस्य धीमतः ॥१४-९२-९० (९५१७८)
कथमेवंविधं स्याद्धि पार्श्वमन्यदिति द्विजाः ।
तपोवनानि यज्ञांश्च हृष्टोऽभ्योमि पुनः पुनः। १४-९२-९१ (९५१७९)
यज्ञं त्वहमिमं श्रुत्वा रुरुराजस्य धीमतः ।
आशया परया प्राप्तो न चाहं काञ्चनीकृतः ॥१४-९२-९२ (९५१८०)
ततो मयोक्तं तद्वाक्यं प्रहस्य ब्राह्मणर्षभाः ।
सक्तुप्रस्थेन यज्ञोऽयं संमितो नेति सर्वथा ॥१४-९२-९३ (९५१८१)
सक्तुप्रस्थलवैस्तैर्हि तदाऽहं काञ्चनीकृतः ।
न हि यज्ञो महानेष सदृशस्तैर्मतो मम ॥१४-९२-९४ (९५१८२)
इत्युक्त्वा नकुलः सर्वान्यज्ञे द्विजवरांस्तदा ।

जगामादर्सनं तेषां विप्रास्ते च ययुर्गृहान् ॥१४-९२-९५ (९५१८३)
एतत्ते सर्वमाख्यातं मया परपुरंजय ।
यदाश्चर्यमभूत्तत्र वाचिमेधे महाक्रतौ ॥१४-९२-९६ (९५१८४)
न विस्मयस्ते नृपते यज्ञे कार्यः कथञ्चन ।
ऋषिकोटिसहस्राणि तपोभिर्ये दिवं गताः ॥१४-९२-९७ (९५१८५)
अद्रोहः सर्वभूतेषु संतोषः शीलमार्जवम् ।
तपो दमश्च सत्यं च प्रदानं चेति संमितम् ॥ ॥१४-९२-९८ (९५१८६)

इति श्रीमन्महाभारते आश्वमेधिकपर्वणि अनुगीतापर्वणि
द्विनवतितमोऽध्यायः ॥९२ ॥
Mahabharata - Ashvamedhika Parva - Chapter Footnotes

७-९२-२ कपोतवदेकैकं कणमादत्ते स कापोतिः ॥
७-९२-८ उंछं कणश आदानं कर्तुमिति शेषः ।शुक्लस्य ज्येष्ठस्य
पक्षे ॥
७-९२-५६ अवेक्ष्या पालनीया ।चिन्त्या परीक्षणीया ॥
७-९२-५८ हे वरे श्रेष्ठे महाभागे त्वां धर्मभृतां मध्ये गणयित्वा
सक्तून् ग्रहीष्यामीत्यन्वयः ॥
७-९२-८४ तारितो हि त्वयेति झ.पाठः ॥

---

अस्वमेधिकपर्व-अध्यय०९३
॥ श्रीः ॥
१४.९३. अध्यायः ९३

Mahabharata - Ashvamedhika Parva - Chapter Topics
जनमेजयेन नकुलेन यज्ञनिन्दाकारणं पृष्टेन वैशंपायनेन
तंप्रति सत्यदानतपोभिरेव स्वर्गादिसिद्धौ पशुहिंसाहेतुयज्ञस्य
नातिप्रशस्ततरत्वमिति नकुलाभिप्रायवर्णनम् ॥१ ॥

Mahabharata - Ashvamedhika Parva - Chapter Text

जनमेजय उवाच ।
यज्ञे सक्ता नृपतयस्तपःसका महर्षयः ।
शान्तिव्यवस्थिता विप्राः शमे दम इति प्रभो ॥१४-९३-१ (९५१८७)
तस्माद्यज्ञफलैस्तुल्यं न किञ्चिदिह दृश्यते ।
इति मे वर्तते बुद्धिस्तथा चैतदसंशयम् ॥१४-९३-२ (९५१८८)

यज्ञैरिष्ट्वा तु बहवो राजानो द्विजसत्तमाः ।
इह कीर्तिं परां प्राप्य प्रेत्य स्वर्गमितो गताः ॥ १४-९३-३ (९५१८९)
देवराजः सहस्राक्षः क्रतुभिर्भूरिदक्षिणैः ।
देवराज्यं महातेजाःक प्राप्तवानखिलं विभुः ॥ १४-९३-४ (९५१९०)
अतो युधिष्ठिरो राजा भीमार्जुनपुरःसरः ।
सदृशो देवराजेन समृद्ध्या विक्रमेण च ॥ १४-९३-५ (९५१९१)
अथ कस्मात्स नकुलो गर्हयामास तं क्रतुम् ।
अश्वमेधं महायज्ञं राज्ञस्तस्य महात्मनः ॥ १४-९३-६ (९५१९२)
वैशम्पायन उवाच। १४-९३-७क्ष् (७९३१)
यज्ञस्य विधिमग्र्यं वै फलं चापि नराधिप ।
गदतः शृणु मे राजन्यथावदिह भारत ॥ १४-९३-७ (९५१९३)
पुरा शक्रस्य यजतः सर्व ऊचुर्महर्षयः ।
ऋत्विक्षु कर्मव्यग्रेषु वितते यज्ञकर्मणि ॥ १४-९३-८ (९५१९४)
हूयमाने तथा वह्नौ होत्रा गुणसमन्विते ।
देवष्वाहूयमानेषु स्थितेषु परमर्षिषु ॥ १४-९३-९ (९५१९५)
सुप्रतीतैस्तथा विप्रैः स्वागमैः सुस्वरैर्नृप ।
अश्रान्तैश्चापि लघुभिरध्वर्युवृषभैस्तथा ॥ १४-९३-१० (९५१९६)
आलम्भसमये तस्मिन्गृहीतेषु पशुष्वथ ।
महर्षयो महाराज बभूवुः कृपयाऽन्विताः ॥ १४-९३-११ (९५१९७)
ततो दीनान्पशून्दृष्ट्वा ऋषयस्ते तपोधनाः ।
ऊचुः शक्रं समागम्य नायं यज्ञविधिः शुभः ॥ १४-९३-१२ (९५१९८)
अपरिज्ञानमेतत्ते महान्तं धर्ममिच्छतः ।
सन्ति यज्ञे बहुगुणा विधिदृष्टाः पुरंदर ॥ १४-९३-१३ (९५१९९)
धर्मोपघातकस्त्वेष समारंभस्तव प्रभो ।
नायं धर्मकृतो यज्ञो न हिंसा धर्म उच्यते ॥ १४-९३-१४ (९५२००)
आगमेनैव ते यज्ञं कुर्वन्तु यदि चेच्छसि ।
विधिदृष्टेन यज्ञेन धर्मस्ते सुमहान्भवेत् ॥ १४-९३-१५ (९५२०१)
यज्ञं बीजैः सहस्राक्ष त्रिवर्षपरमोषितैः ।
एष धर्मो महाञ्शक्र चिन्तयानोसि गम्यते ॥ १४-९३-१६ (९५२०२)
शतक्रतुस्तु तद्वाक्यमृषिभिस्तत्त्वदर्शिभिः ।
उक्तं न प्रतिजग्राह मानमोहवशं गतः ॥ १४-९३-१७ (९५२०३)
तेषां विवादः सुमहाञ्शक्रयज्ञे तपस्विनाम् ।
जङ्गमैः स्थावरैर्वाऽपि यष्टव्यमिति भारत ॥ १४-९३-१८ (९५२०४)
ते तु खिन्ना विवादेन ऋषयस्तत्त्वदर्शिनः ।
अभिसंधाय शक्रेण पप्रच्छुर्नृपतिं वसुम् ॥ १४-९३-१९ (९५२०५)
धर्मसंशयमापन्नान्सत्यं ब्रूहि महामते ।

महाभाग कथं यज्ञेष्वागमो नृपसत्तम ।
यष्टव्यं पशुभिर्मेध्यैरथो बीजैरजैरिति ॥ १४-९३-२० (९५२०६)
तच्छ्रुत्वा तु वसुस्तेषामविचार्य बलाबलम् ।
यथोपनीतैर्यष्टव्यमिति प्रोवाच पार्थिवः ॥१४-९३-२१ (९५२०७)
एवमुक्त्वा स नृपतिः प्रविवेश रसातलम् ।
उक्त्वेह वितथं राजंश्चेदीनामीश्वरः प्रभुः ॥१४-९३-२२ (९५२०८)
तस्मान्न वाच्यं ह्येकेन बहुज्ञेनापि संशये ।
प्रजापतिमपाहाय स्वयंभुवमृते प्रभुम् ॥१४-९३-२३ (९५२०९)
तेन दत्तानि दानानि पापेनाशुद्धबुद्धिना ।
तानि सर्वाण्यनादृत्य नश्यन्ति विपुलान्यपि ॥१४-९३-२४ (९५२१०)
तस्याधर्मप्रवृत्तस्य हिंसकस्य दुरात्मनः ।
दानेन कीर्तिर्भवति न प्रेत्येह च दुर्मतेः ॥१४-९३-२५ (९५२११)
अन्यायोपगतं द्रव्यमभीक्ष्णं यो ह्यपण्डितः ।
धर्माभिकाङ्क्षी त्यजति न स धर्मफलं लभेत् ॥१४-९३-२६ (९५२१२)
धर्मवैतंसिको यस्तु पापात्मा पुरुषाधमः ।
ददाति दानं विप्रेभ्यो लोकविश्वासकारणम् ॥१४-९३-२७ (९५२१३)
पापेन कर्मणा विप्रो धनं प्राप्य निरङ्कुशः ।
रागमोहान्वितः सोन्ते कलुषां गतिमश्नुते ॥१४-९३-२८ (९५२१४)
अपि संचयबुद्धिर्हि लोभमोहवशं गतः ।
यज्ञं करोति भूतानि पापेनाशुद्धबुद्धिना ॥१४-९३-२९ (९५२१५)
एवं लब्ध्वा धनं मोहाद्यो हि दद्याद्यजेत वा ।
न तस्य स फलं प्रेत्य भुंक्ते पापधनागमात् ॥१४-९३-३० (९५२१६)
उञ्छं मूलं फलं शाकमुदपात्रं तपोधनाः ।
दानं विभवतो दत्त्वा नराः स्वर्यान्ति धार्मिकाः ॥१४-९३-३१ (९५२१७)
एष धर्मो महायोगो दानं भूतदया तथा ।
ब्रह्मचर्यं तथा सत्यमनुक्रोशो धृतिः क्षमा ॥१४-९३-३२ (९५२१८)
सनातनस्य धर्मस्य फलमेतत्सनातनम् ।
श्रूयन्ते हि पुरावृत्ता विश्वामित्रादयो नृपाः ॥१४-९३-३३ (९५२१९)
विश्वामित्रोसितश्चैवं जनसश्च महीपतिः ।
कक्षसेनार्ष्टिसेनौ च सिन्धुद्वीपश्च पार्थिवः ॥१४-९३-३४ (९५२२०)
एते चान्ये च बहवः सिद्धिं परमिकां गताः ।
नृपाः सत्यैश्च दानैश्च न्यायलब्धैस्तपोधनाः ॥१४-९३-३५ (९५२२१)
ब्राह्मणाः क्षत्रिया वैश्याः शूद्रा ये चाश्रितास्तपः ।
दानधर्माग्निना शुद्धास्ते स्वर्गं यान्ति भारत ॥१४-९३-३६ (९५२२२)
॥ इती श्रीमन्महाभारते आश्वमेधिकपर्वणि अनुगीतापर्वणि
त्रिनवतितमोऽध्यायः ॥९३ ॥

७-९३-१३ नहि यज्ञे पशुगणाः इति झ पाठः ॥
७-९३-१६ त्रिवर्षपरमोषितैः पुराणैः ॥
७-९३-२० बीजै रसैरिति झ । पाठः ॥

---

अस्वमेधिकपर्व-अध्यय०९४
॥ श्रीः ॥
१४.९४. अध्यायः ९४

अश्वमेधपर्व ॥ १ ॥
Mahabharata - Ashvamedhika Parva - Chapter Topics
वैशंपायनेन जनमेजयंप्रति पशुहिंसां विनैव ध्यानदानादिभिरेव यज्ञफलसंसिद्धौ दृष्टान्ततयाऽगस्त्ययज्ञप्रकारकथनम् ॥ १ ॥

Mahabharata - Ashvamedhika Parva - Chapter Text

जनमेजय उवाच ।
धर्मागतेन त्यागेन भगवन्सर्वमस्ति चेत् ।
एतन्मे सर्वमाचक्ष्व कुशलो ह्यसि भाषितुम् ॥ १४-९४-१ (९५२२३)
तस्योञ्छवृत्तेर्यद्वृत्तं सक्तुदाने फलं महत् ।
कथितं तु मम ब्रह्मंस्तथ्यमेतदसंशयम् ॥ १४-९४-२ (९५२२४)
कथं हि सर्वयज्ञेषु निश्चयः परमो भवेत् ।
एतदर्हसि मे वक्तुं निखिलेन द्विजर्षभ ॥ १४-९४-३ (९५२२५)
वैशम्पायन उवाच। १४-९४-४क्ष् (७९३२)
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
अगस्त्यस्य महायज्ञे पुरावृत्तमरिंदम ॥ १४-९४-४ (९५२२६)
पुराऽगस्त्यो महातेजा दीक्षां द्वादशवार्षिकीम् ।
प्रविवेश महाराज सर्वभूतहिते रतः ॥ १४-९४-५ (९५२२७)
तत्राग्निकल्पा होतार आसन्सत्रे महात्मनः ।
मूलाहाराः फलाहाराश्चाश्मकुट्टा मरीचिपाः ॥ १४-९४-६ (९५२२८)
परिपृष्टिका वैघसिकाः प्रसङ्ख्यानास्तथैव च ।
यतयो भिक्षवश्चात्र बभूवुः पर्यवस्थिताः ॥ १४-९४-७ (९५२२९)
सर्वे प्रत्यक्षधर्माणो जितक्रोधा जितेन्द्रियाः ।
दमे स्थिताश्च सर्वे ते हिंसादंभविवर्जिताः ॥ १४-९४-८ (९५२३०)
वृत्ते शुद्धे स्थिता नित्यमिन्द्रियैश्चाप्यबाधिताः ।

उपातिष्ठन्त तं यज्ञं यजन्तस्ते महर्षयः ॥१४-९४-९ (९५२३१)
यथाशक्त्या भगवता तदन्नं समुपार्जितम् ।
तस्मिन्सत्रे तु यद्वृत्तं यद्योग्यं च तदाऽभवत् ॥१४-९४-१० (९५२३२)
तथा ह्यनेकैर्मुनिभिर्महान्तः क्रतवः कृताः ।
एवंविधे त्वगस्त्यस्य वर्तमाने तथाऽध्वरे ।
न ववर्ष सहस्राक्षस्तदा भरतसत्तम ॥ १४-९४-११ (९५२३३)
ततः कर्मान्तरे राजन्नगस्त्यस्य महात्मनः ।
कथेयमभिनिर्वृत्ता मुनीनां भावितात्मनाम् ॥१४-९४-१२ (९५२३४)
अगस्त्यो यजमानोसौ ददात्यन्नं विमत्सरः ।
न च वर्षति पर्जन्यः कथमन्नं भविष्यति ॥१४-९४-१३ (९५२३५)
सत्रं चेदं महद्विप्रा मुनेर्द्वादशवार्षिकम् ।
न वर्षिष्यति देवश्च वर्षाण्येतानि द्वादश ॥१४-९४-१४ (९५२३६)
एतद्भवन्तः संचिन्त्य महर्षेरस्य धीमतः ।
अगस्त्यस्यातितपसः कर्तुमर्हन्त्यनुग्रहम् ॥१४-९४-१५ (९५२३७)
इत्येवमुक्ते वचने ततोऽगस्त्यः प्रतापवान् ।
प्रोवाच वाक्यं स तदा प्रसाद्य शिरसा मुनीन् ॥१४-९४-१६ (९५२३८)
यदि द्वादशवर्षाणि न वर्षिष्यति वासवः ।
चिन्तायज्ञं करिष्यामि विधिरेष सनातनः ॥१४-९४-१७ (९५२३९)
यदि द्वादशवर्षाणि न वर्षिष्यति वासवः ।
स्पर्शयज्ञं करिष्यामि विधिरेष सनातनः ॥१४-९४-१८ (९५२४०)
यदि द्वादशवर्षाणि न वर्षिष्यति वासवः ।
व्यायामेनाहरिष्यामि यज्ञानेतान्यतव्रतः ॥१४-९४-१९ (९५२४१)
बीजयज्ञो मयाऽयं वै बहुवर्षसमाचितः ।
बीजैर्हितं करिष्यामि नात्र विघ्नो भविष्यति ॥१४-९४-२० (९५२४२)
नेदं शक्यं वृथा कर्तुं मम सत्रं कथञ्चन ।
वर्षिष्यतीह वा देवो नवा वर्षं भविष्यति ॥१४-९४-२१ (९५२४३)
अथवाऽभ्यर्थनामिन्द्रो न करिष्यति कामतः ।
स्वयमिन्द्रो भविष्यामि जीवयिष्यामि च प्रजाः ॥१४-९४-२२ (९५२४४)
यो यदाहारजातश्च स तथैव भविष्यति ।
विशेषं चैव कर्तास्मि पुनः पुनरतीव हि ॥१४-९४-२३ (९५२४५)
अद्येह स्वर्णमभ्येतु यच्चान्यद्वसु दुर्लभम् ।
त्रिषु लोकेषु यच्चास्ति तदिहागम्यतां स्वयम् ॥१४-९४-२४ (९५२४६)
दिव्याश्चाप्सरसां सङ्घा गन्धर्वाश्च सकिन्नराः ।
विश्वावसुश्च ये चान्ये तेऽप्युपासन्तु मे मखम् ॥१४-९४-२५ (९५२४७)
उत्तरेभ्यः कुरुभ्यश्च यत्किंचिद्वसु विद्यते ।
सर्वं तदिह यज्ञेषु स्वयमेवोपतिष्ठतु ॥१४-९४-२६ (९५२४८)

स्वर्गः स्वर्गसदश्चैवक धर्मश्च स्वयमेव तु ।
इत्युक्ते सर्वमेवैतदभवत्तपसा मुनेः ।
तस्य दीप्ताग्निमहसस्त्वगस्त्यस्यातितेजसः ॥ १४-९४-२७ (९५२४९)
ततस्ते मुनयो हृष्टा ददृशुस्तपसो बलम् ।
विस्मिता वचनं प्राहुरिदं सर्वे महार्थवत् ॥१४-९४-२८ (९५२५०)
प्रीताः स्म तव वाक्येन न त्विच्छामस्तपोवनम् ।
तैरेव यज्ञैस्तुष्टाः स्य न्यायेनेच्छामहे वयम् ॥१४-९४-२९ (९५२५१)
यज्ञं दीक्षां तथा होमान्यच्चान्यन्मृगयामहे ।
ग्तयोस्संधर्षितैर्यज्ञैर्नान्यतो मृगयामहे ॥' १४-९४-३० (९५२५२)
न्यायेनोपार्जिताहाराः स्वकर्माभिरता वयम् ।
वेदांश्च ब्रह्मचर्येण न्यायतः प्रार्थयामहे ॥१४-९४-३१ (९५२५३)
न्यायेनोत्तरकालं च गृहेभ्यो निःसृता वयम् ।
धर्मदृष्टैर्विधिद्वारैस्तपस्तप्स्यामहे वयम् ॥१४-९४-३२ (९५२५४)
भवतः सम्यगिष्टा तु बुद्धिर्हिंसाविवर्जिता ।
एतामहिंसा यज्ञेषु ब्रूयास्त्वं सततं प्रभो ॥१४-९४-३३ (९५२५५)
प्रीतास्ततो भविष्यामो वयं तु द्विजसत्तम ।
विसर्जिताः समाप्तौ च सत्रादस्माद्व्रजामहे ॥१४-९४-३४ (९५२५६)
तथा कथयतां तेषां देवराजः पुरंदरः ।
ववर्ष सुमहातेजा दृष्ट्वा तस्य तपोबलम् ॥ १४-९४-३५ (९५२५७)
आसमाप्तेश्च यज्ञस्य तस्यामितपराक्रमः ।
निकामवर्षी पर्जन्यो बभूव जनमेजय ॥१४-९४-३६ (९५२५८)
प्रसादयामास च तमगस्त्यं त्रिदशेश्वरः ।
स्वयमभ्येत्य राजर्षे पुरस्कृत्य बृहस्पतिम् ॥१४-९४-३७ (९५२५९)
ततो यज्ञसमाप्तौ तान्विससर्ज महामुनीन् ।
अगस्त्यः परमप्रीतः पूजयित्वा यथाविधि ॥ ॥१४-९४-३८ (९५२६०)

इति श्रीमन्महाभारते आश्वमेधिकपर्वणि अनुगीतापर्वि
चतुर्नवतितमोऽध्यायः ॥९४ ॥

Mahabharata - Ashvamedhika Parva - Chapter Footnotes

७-९४-६ मरीचिपाश्चन्द्रमरीचिपानमातृप्ताः ॥
७-९४-७ परिपृष्टं चेदेव गृह्णन्ति नान्यथा मे परिपृष्टिकाः
।प्रसंख्यानास्तत्कालमात्रसंग्रहाः ॥
७-९४-१७ चिन्तायज्ञं मानसं यज्ञम् ।संकल्पमात्रेणैव
देवानृषीश्च तर्पयिष्यामीत्यर्थ ॥
७-९४-१८ स्पर्शयज्ञं उपाहृतद्रव्यस्य व्ययमकृत्वा तत्स्पर्शेनैव

तांस्तर्पयिष्यामि । एवं दृष्टियज्ञोपि ज्ञेयः ॥
७-९४-१९ व्यायामेन शरीरक्लेशेन । ध्येयात्मना हरिष्यामि हति झ पाठः ॥
७-९४-२९ न त्विच्छामस्तपोव्ययमिति झ पाठः ॥

---

अस्वमेधिकपर्व-अध्यय०९५
॥ श्रीः ॥
१४.९५. अध्यायः ९५

अश्वमेधपर्व ॥ १ ॥
Mahabharata - Ashvamedhika Parva - Chapter Topics
वैशंपायनेन जनमेजयंप्रति नकुलस्य निजस्वरूपकथनपूर्वकं
तस्य नकुलत्वप्राप्तिविमोक्षकारणाभिधानम् ॥ १ ॥

Mahabharata - Ashvamedhika Parva - Chapter Text

नमेजय उवाच ।
कोसौ नकुलरूपेण शिरसा काञ्चनेन वै ।
प्राह मानुषवद्वाचमेतत्पृष्टो वदस्व मे ॥ १४-९५-१ (९५२६१)
वैशम्पायन उवाच । १४-९५-२क्ष् (७९३३)
एतत्पूर्वं न पृष्टोऽहं न चास्माभिः प्रभाषितम् ।
श्रूयतां नकुलो योसौ यथा वाक्तस्य मानुषी ॥ १४-९५-२ (९५२६२)
श्राद्धं संकल्पयामास जमदग्निः पुरा किल ।
होमधेनुस्तमागाच्च स्वयमेव दुदोह ताम् ॥ १४-९५-३ (९५२६३)
तत्पयः स्थपयामास नवे भाण्डे दृढे शुचौ ।
क्रोधो नकुलरूपेण पिठरं पर्यकर्षयत् ॥ १४-९५-४ (९५२६४)
जिज्ञासुस्तमृषिश्रेष्टं किं कुर्याद्विप्रिये कृते ।
इति सञ्चिन्त्य दुर्मेधा धर्षयामास तत्पयः ॥ १४-९५-५ (९५२६५)
तमाज्ञाय मुनिः क्रोधं नैवास्य स चुकोप ह ।
स तु क्रोधस्ततो राजन्ब्राह्मणीं मूर्तिमास्थितः ॥ १४-९५-६ (९५२६६)
जितोस्मीति भृगुश्रेष्ठ भृगवो ह्यतिरोषणाः ।
लोके मिथ्याप्रवादोयं यत्त्वयाऽस्मि विनिर्जितः ॥ १४-९५-७ (९५२६७)
वशे स्थितोऽहं त्वय्यद्य क्षमावति महात्मनि ।
बिभेमि तपसः साधो प्रसादं कुरु मे प्रभो ॥ १४-९५-८ (९५२६८)
जमदग्निरुवाच । १४-९५-९क्ष् (७९३४)
साक्षाद्दृष्टोसि मे क्रध गच्छ त्वं विगतज्वरः ।
न त्वयापकृतं मेऽद्य न च मे मन्युरस्ति वै ॥ १४-९५-९ (९५२६९)

यान्समुद्दिश्य संकल्पः पयसोस्य कृतो मया ।
पितरस्ते महाभागास्तेभ्यो बुद्ध्यस्व गम्यताम् ॥१४-९५-१० (९५२७०)
इत्युक्तो जातसंत्रासस्तत्रैवान्तरधीयत ।
पितॄणामभिषङ्गाच्च नकुलत्वमुपागतः ॥१४-९५-११ (९५२७१)
स तान्प्रसादयामास शापस्यान्तो भवेदिति ।
तैश्चाप्युक्तः क्षिपन्धर्मं सापस्यान्तमवाप्स्यति ॥१४-९५-१२ (९५२७२)
तैश्चोक्तो यज्ञियान्देशान्धर्मारण्यं तथैव च ।
जुगुप्समानो धावन्स तं यज्ञं समुपासदत् ॥१४-९५-१३ (९५२७३)
धर्मपुत्रमथाक्षिप्य सक्तुप्रस्थेन तेन सः ।
मुक्तः सापात्ततः क्रोधो धर्मो ह्यासीद्युधिष्ठिरः ॥१४-९५-१४ (९५२७४)
एवमेतत्तदा वृत्तं यज्ञे तस्य महात्मनः ।
पश्यतां चापि नस्तत्र नकुलोऽन्तर्हितस्तदा। ॥ १४-९५-१५ (९५२७५)

इति श्रीमन्महाभारते आश्वमेधिकपर्वणि अनुगीतापर्वणि
पञ्चनवतितमोऽध्यायः। ।९५ ॥समाप्तमनुगीतापर्व। -------
Mahabharata - Ashvamedhika Parva - Chapter Footnotes

७-९५-४ पिठरं पात्रं ।तत्पयः पीतवानित्यर्थः। तच्च
क्रोधस्वरूपेण पिठरं धर्मं आविशदिति झ। पाठः ॥

---

अस्वमेधिकपर्व-अध्यय०९६
॥ श्रीः ॥
१४.९६. अध्यायः ९६

अथ वैष्णवधर्मपर्व ॥ ३ ॥
Mahabharata - Ashvamedhika Parva - Chapter Topics
युधिष्ठिरेण कृष्णंप्रति वैष्णवधर्मप्रशंसनपूर्वकं
तत्कथनप्रार्थना ॥१ ॥
वसिष्ठादिभिस्तच्छुश्रूषया तत्समीपोपसर्पणम् ॥२ ॥
कृष्णेन युधिष्ठिरादीन्प्रति वैष्णवधर्मप्रशंसनपूर्वकं
स्वमहिमानुबोधनम् ॥३ ॥

Mahabharata - Ashvamedhika Parva - Chapter Text

जनमेजय उवाच ।
अश्वमेधे पुरावृत्ते केशवं केशिसूदनम् ।

धर्मसंशयमुद्दिश्य किमपृच्छत्पितामहः ॥१४-९६-१ (९५२७६)
वैशम्पायन उवाच।१४-९६-२क्ष् (७९३५)
पश्चिमेनाश्वमेधेन यदा स्नातो युधिष्ठिरः ।
तदा राजा नमस्कृत्य केशवं पुनरब्रवीत् ॥१४-९६-२ (९५२७७)
भववन्वैष्णवा धर्माः किंफलाः किंपरायणाः ।
किं धर्ममधिकृत्याथ भवतोत्पादिताः पुरा ॥१४-९६-३ (९५२७८)
यदि तेहमनुग्राह्यः प्रियोस्मि मधुसूदन ।
श्रोतव्या यदि मे कृष्ण तन्मे कथय सुव्रत ॥१४-९६-४ (९५२७९)
पवित्रा किल ते धर्माः सर्वपापप्रणाशनाः ।
सर्वधर्मोत्तमाः पुण्या भगवंस्त्वन्मुखोद्गताः ॥१४-९६-५ (९५२८०)
याञ्श्रुत्वा ब्रह्महा गोघ्नो मातृहा गुरुतल्पगः ।
पाकर्भेदी कृतघ्नश्च सुरापो ब्रह्मविक्रयी ॥१४-९६-६ (९५२८१)
मित्रविश्वासघाती च वीरहा भ्रूणहा तथा ।
तपोविक्रयिणश्चैव दानविक्रयिणस्तथा ॥१४-९६-७ (९५२८२)
आत्मविक्रमयिणो मूढा जीवेद्यश्च विकर्मभिः ।
पापाः शठा नैकृतिका डांभिका दूषकास्तथा ॥१४-९६-८ (९५२८३)
रसभेदकरा ये च ये च स्युर्ब्रह्मघातकाः ।
शूद्रप्रेष्यकराश्चोरा विप्रा ये च पुरोहिताः ॥१४-९६-९ (९५२८४)
निक्षेपहारिणः स्त्रीघ्नास्तथा ये पारदारिकाः ।
एते चान्ये च पापा ये मुच्यन्तेतेऽपि किल्बिषात् ॥१४-९६-१० (९५२८५)
तानाचक्ष्व सुरश्रेष्ठ त्वद्भक्तस्य ममाच्युत ॥ १४-९६-११ (९५२८६)
वैशंपायन उवाच।१४-९६-१२क्ष् (७९३६)
इत्येवं कथिते देवे धर्मपुत्रेण संसदि ।
वसिष्ठाद्यास्तपोयुक्ता मुनयस्तत्वदर्शिनः ॥१४-९६-१२ (९५२८७)
श्रोतुकामाः परं गुह्यं वैष्णवं धर्ममुत्तमम् ।
तथा भागवताश्चैव ततस्तं पर्यवारयन् ॥१४-९६-१३ (९५२८८)
युधिष्ठिर उवाच।१४-९६-१४क्ष् (७९३७)
तत्वतस्तव भावेन पादमूलमुपागतम् ।
यदि जानासि मां भक्तं स्निग्धं वा भक्तवत्सल ॥१४-९६-१४ (९५२८९)
धर्मगुह्यानि सर्वाणि वेत्तुमिच्छामि तत्वतः ।
धर्मान्कथय मे देव यद्यनुग्रहभागहम् ॥१४-९६-१५ (९५२९०)
श्रुता मे मानवा धर्मा वासिष्ठाः काश्यपास्तथा ।
गार्गीया गौतमीयाश्च तथा गोपालकस्य च ॥१४-९६-१६ (९५२९१)
पराशरकृताः पूर्वा मैत्रेयस्य च धीमतः ।
औमा माहेश्वराश्चैव नन्दिधर्माश्च पावनाः ॥१४-९६-१७ (९५२९२)
ब्रह्मणा कथिता ये च कौमाराश्च श्रुता मया ।

धूमायनकृता धर्माः काण्डवैश्वानरा अपि ॥१४-९६-१८ (९५२९३)
भार्गवा याज्ञवल्क्याश्च मार्कण्डेयकृता अपि ।
भारद्वाजकृता ये च बृहस्पतिकृताश्च ये ॥१४-९६-१९ (९५२९४)
कुणेश्च कुणिबाहोश्च विश्वामित्रकृताश्च ये ।
सुमन्तुजैमिनिकृताः शाकुनेयास्तथैव च ॥१४-९६-२० (९५२९५)
पुलस्त्यपुलहोद्गीताः पावकीयास्तथैव च ।
अगस्त्यगीता मौद्गल्याः शाण्डिल्याः शलभायनाः ॥१४-९६-२१ (९५२९६)
वालखिल्यकृता ये च ये च सप्तर्षिभिस्तथा ।
आपस्तंबकृता धर्माः शङ्खस्य लिखितस्य च ॥१४-९६-२२ (९५२९७)
प्राजापत्यास्तथा याम्या माहेन्द्राश्च श्रुता मया ।
वैयाघ्रव्यासकीयाश्च विभण्डककृताश्च ये ॥१४-९६-२३ (९५२९८)
नारदीयाः श्रुता धर्माः कापोताश्च श्रुता मया ।
तथा विदुरवाक्यानि भृगोरङ्गिरसस्तथा ॥१४-९६-२४ (९५२९९)
क्रौञ्चा मृदङ्गगीताश्च सौर्या हारीतकाश्च ये ।
ये पिशङ्गकृताश्चापि कातपायाः सुवालकाः ॥१४-९६-२५ (९५३००)
उद्दालककृता धर्मा औशनस्यास्तथैव च ।
वैशंपायनगीताश्च ये चान्येऽप्येवमादितः ॥१४-९६-२६ (९५३०१)
एतेभ्यः सर्वधर्मेभ्यो देव त्वन्मुखनिस्सृताः ।
पावनात्वात्पवित्रत्वाद्विशिष्टा इति मे मतिः ॥१४-९६-२७ (९५३०२)
तस्माद्धि त्वां प्रपन्नस्य त्वद्भक्तस्य च केशव ।
युष्मदीयान्वरान्धर्मान्पुण्यान्कथय मेच्युत ॥१४-९६-२८ (९५३०३)
वैशंपायन उवाच।१४-९६-२९क्ष् (७९३८)
एवं पृष्टस्तु धर्मज्ञो धर्मपुत्रेण केशवः ।
उवाच धर्मान्सूक्ष्मार्थान्धर्मपुत्रस्य हर्षितः ॥१४-९६-२९ (९५३०४)
एवं ते यस्य कौन्तेय यत्नो धर्मेषु सुव्रत ।
तस्य ते दुर्लभो लोके न कश्चिदपि विद्येत ॥१४-९६-३० (९५३०५)
धर्मः श्रुतो वा दृष्टो वा कथितो वा कृतोपि वा ।
अनुमोदितो वा राजेन्द्र नयतीन्द्रपदं नरम् ॥१४-९६-३१ (९५३०६)
धर्मः पिता च माता च धर्मो नाथः सुहृत्तथा ।
धर्मो भ्राता सखा चैव धर्मः स्वामी परंतप ॥१४-९६-३२ (९५३०७)
धर्मादर्थश्च कामश्च धर्माद्भोगाः सुखानि च ।
धर्मादैश्वर्यमेवाग्र्यं धर्मात्स्वर्गगतिः परा ॥१४-९६-३३ (९५३०८)
धर्मोयं सेवितः शुद्धस्त्रायते महतो भयात् ।
धर्माद्द्विजत्वं देवत्वं धर्मः पावयते नरम् ॥१४-९६-३४ (९५३०९)
यदा च क्षीयते पापं कालेन पुरुषस्य तु ।
तदा संजायते बुद्धिर्धर्मं कर्तुं युधिष्ठिर ॥१४-९६-३५ (९५३१०)

जन्मान्तरसहस्रैस्तु मनुष्यत्वं हि दुर्लभम् ।
तद्गत्वापीह यो धर्मं न करोति स्ववञ्चितः ॥१४-९६-३६ (९५३११)
कुत्सिता ये दरिद्राश्च विरूपा व्याधितास्तथा ।
परद्वेष्याश्च मूर्खाश्च न तैर्धर्मः कृतः पुरा ॥१४-९६-३७ (९५३१२)
ये च दीर्घायुषः शूराः पण्डिता भोगिनस्तथा ॥
नीरोगा रूपसंपन्नास्तैर्धर्मः सुकृतः पुरा ॥१४-९६-३८ (९५३१३)
एवं धर्मः कृतः शुद्धो नयते गतिमुत्तमाम् ।
अधर्मं सेवते यस्तु तिर्यग्योन्यां पतत्यसौ ॥१४-९६-३९ (९५३१४)
इदं रहस्यं कौन्तेय शृणु धर्ममनुत्तमम् ।
कथयिष्ये परं धर्मं तव भक्तस्य पाण्डव ॥१४-९६-४० (९५३१५)
इष्टस्त्वमसि मेऽत्यर्थं प्रपन्नश्चापि मां सदा ।
परमार्थमपि ब्रूयां किं पुनर्धर्मसंहिताम् ॥१४-९६-४१ (९५३१६)
इदं मे मानुषं जन्म कृतमात्मनि मायया ।
धर्मसंस्थापनार्थाय दुष्टानां नाशनाय च ॥१४-९६-४२ (९५३१७)
मानुष्यं भावमापन्नं ये मां गृह्णन्त्यवज्ञया ।
संसारान्तर्हि ते मूढास्तिर्यग्योनिष्वनेकशः ॥१४-९६-४३ (९५३१८)
ये च मां सर्वभूतस्थं पश्यन्ति ज्ञानचक्षुषा ।
मद्भक्तांस्तान्सदा युक्तान्मत्समीपं नयाम्यहम् ॥१४-९६-४४ (९५३१९)
मद्भक्ता न विनश्यन्ति मद्भक्ता वीतकल्मषाः ।
मद्भाक्तानां तु मानुष्ये सफल जन्म पाण्डवा ॥१४-९६-४५ (९५३२०)
अपि पापेष्वभिरता मद्भक्ताः पाण्डुनन्दन ।
मुच्यन्ते पातकैः सर्वैः पद्मपत्रमिवांभसा ॥१४-९६-४६ (९५३२१)
जन्मान्तरसहस्रेषु तपसा भावितात्मनाम् ।
भक्तिरुत्पद्यते तात मनुष्याणां न संशयः ॥१४-९६-४७ (९५३२२)
यच्च रूपं परं गुह्यं कूटस्तमचलं ध्रुवम् ।
न दृश्यते तता देवैर्मद्भक्तैर्दृश्यते यथा ॥१४-९६-४८ (९५३२३)
अपरं यच्च मे रूपं पर्रादुर्भावेषु दृश्यते ।
तदर्चयन्ति सर्वार्थैः सर्वभूतानि पाण्डव ॥१४-९६-४९ (९५३२४)
कल्पकोटिसहस्रेषु व्यतीतेष्वागते च ।
दर्शयामीह तद्रूपं यच्च पश्यन्ति मे सुराः ॥१४-९६-५० (९५३२५)
स्तित्युत्पत्त्यव्ययकरं यो मां ज्ञात्वा प्रपद्यते ।
अनुगृह्णाम्यहं तं वै संसारान्मोचयामि च ॥१४-९६-५१ (९५३२६)
अहमादिर्हि देवानां सृष्टा ब्रह्मादयो मया ।
प्रकृतिं स्वामवष्टभ्य जगत्सर्वं सृजाम्यहम् ॥१४-९६-५२ (९५३२७)
तमोमूलोहमव्यक्तो रजोमध्ये प्रतिष्ठितः ।
ऊर्ध्वं सत्त्वं विना लोभं ब्रह्मादिस्तंबपर्यतः ॥१४-९६-५३ (९५३२८)

मूर्धानं मे विद्धि दिवं चन्द्रादित्यौ च लोचने ।
गावोग्निर्बाह्मणो वक्त्रं मारुतः श्वसनं च मे ॥१४-९६-५४ (९५३२९)
दिशो मे बाहवश्चाष्टौ नक्षत्राणि च भूषणम् ।
अन्तरिक्षमुरो विद्धि सर्वभूतावकाशकम् ।
मार्गो मेघानिलाभ्यां तु यन्ममोदरमव्ययम् ॥ १४-९६-५५ (९५३३०)
पृथिवीमण्डलं यद्वै द्वीपार्णवनगैर्युतम् ।
सर्वसंधारणोपेतं पादौ मम युधिष्ठिर ॥१४-९६-५६ (९५३३१)
स्थितो ह्येकगुणः खेऽहं द्विगुणश्चास्मि मारुते ।
त्रिगुणोग्नौ स्थितोहं वै सलिले च चतुर्गुणः ॥१४-९६-५७ (९५३३२)
शब्दाद्या ये गुणाः पञ्च महाभूतेषु पञ्चसु ।
तन्मात्रासंस्थितः सोहं पृथिव्यां पञ्चधास्थितः ॥१४-९६-५८ (९५३३३)
अहं सहस्रसीर्षस्तु सहस्रवदनेक्षणः ।
सहस्रबाहूदरधृक्सहस्रोरुः सहस्रपात् ॥१४-९६-५९ (९५३३४)
धृत्वोर्वीं सर्वतः सम्यगत्यतिष्ठं दशांगुलम् ।
सर्वभूतात्मभूतस्थः सर्वव्यापी ततोस्म्यहम् ॥१४-९६-६० (९५३३५)
अचिन्त्योहमनन्तोहमजरोहमजो ह्यहम् ।
अनाद्योऽहमवध्योहमप्रमेयोहमव्ययः ॥१४-९६-६१ (९५३३६)
निर्गुणोहं निगूढात्मा निर्द्वन्द्वो निर्ममो नृप ।
निष्कलो निर्विकारोहं निदानममृतस्य तु ॥१४-९६-६२ (९५३३७)
सुधा चाहं स्वधा चाहं स्वाहा चाहं नराधिप ।
तेजसा तपसा चाहं भूतग्रामं चतुर्विधम् ॥१४-९६-६३ (९५३३८)
स्नेहपाशैर्गुणबद्ध्वा धारयाम्यात्ममायया ।
चातुराश्रमधर्मेहं चातुर्होत्रफलाशनः ।
चतुर्मूर्तिश्चतुर्यज्ञश्चतुराश्रमभावनः ॥ १४-९६-६४ (९५३३९)
संहृत्याहं जगत्सर्वं कृत्वा वै गर्भमात्मनः ।
शयामि दिव्ययोगेन प्रलयेषु युधिष्ठिर ॥१४-९६-६५ (९५३४०)
सहस्रयुगपर्यन्तां ब्राह्मीं रात्रिं महार्णवे ।
स्थित्वा सृजामि भूतानि जङ्गमानि स्थिराणि च ॥१४-९६-६६ (९५३४१)
कल्पे कल्पे च भूतानि संहरामि सृजामि च ।
न च मां तानि जानन्ति मायया मोहितानि मे ॥१४-९६-६७ (९५३४२)
मम चैवान्धकारस्य मार्गितव्यस्य नित्यशः ।
प्रशान्तस्येव दीपस्य गतिर्नैपोपलभ्यते ॥१४-९६-६८ (९५३४३)
न तदस्ति क्वचिद्राजन्यत्राहं न प्रतिष्ठितः ।
न च तद्विद्यते भूतं मयि यन्न प्रतिष्ठितम् ॥१४-९६-६९ (९५३४४)
यावन्मित्रं भवेद्भूतं स्थूलं सूक्ष्ममिदं जगत् ।
दीवभूतो ह्यहं तस्मिंस्तावन्मात्रं प्रतिष्ठितः ॥१४-९६-७० (९५३४५)

किंचात्र बहुनोक्तेन सत्यमेतद्ब्रवीमि ते ।
यद्भूतं यद्भविष्यच्च तत्सर्वमहमेव तु ॥१४-९६-७१ (९५३४६)
मया सृष्टानि भूतानि मन्मयानि च भारत ।
मामेव न विजानन्ति मायया मोहितानि वै ॥१४-९६-७२ (९५३४७)
एवं सर्वं जगदिदं सदेवासुरमानुषम् ।
मत्तः प्रभवते राजन्मय्येव प्रविलीयते ॥ ॥१४-९६-७३ (९५३४८)

इति श्रीमन्महाभारते आश्वमेधिकपर्वणि वैष्णवधर्मपर्वणि षण्णवतितमोऽध्यायः ॥९६ ॥
Mahabharata - Ashvamedhika Parva - Chapter Footnotes

७-९६-१क्ष् एतदारभ्यापर्वसमाप्ति विद्यमानास्त्रयोविंशत्यध्याया दाक्षिणात्यकोशेष्वेव दृश्यन्ते नत्वौत्तराहपाठे। ७-९६-२ पञ्चमेनाश्वमेधेनेति ट पाठः। ।
७-९६-१८ शूद्रायनकृता धर्मा इति क पाठः ॥
७-९६-२३ वैभीतककृताश्च ये इति ट पाठः ॥
७-९६-३१ राजेन्द्र पुनाति ह नरं सदेति ट पाठः ॥

---

अस्वमेधिकपर्व-अध्यय०९७
॥ श्रीः ॥
१४.९७. अध्यायः ९७

Mahabharata - Ashvamedhika Parva - Chapter Topics
कृष्णेन युधिष्ठिरंप्रति चातुर्वर्ण्यधर्मनिरूपणम् ॥१ ॥

Mahabharata - Ashvamedhika Parva - Chapter Text

वैशंपायन उवाच ।
एवमात्मोद्भवं सर्वं यगदुद्दिश्य केशवः ।
धर्मान्धर्मात्मजस्याथ पुण्यानकथयत्प्रभुः ॥१४-९७-१ (९५३४९)
शृणु पाण्डव तत्वेन पवित्रं पापनाशनम् ।
कथ्यमानं मया पुण्यं धर्मशास्त्रफलं महत् ॥१४-९७-२ (९५३५०)
यः शृणोति शुचिर्भूत्वा एकचित्तस्तपोयुतः ।
स्वर्ग्यं यशस्यामायुष्यं धर्मं ज्ञेयं युधिष्ठिर ॥१४-९७-३ (९५३५१)
श्रद्दधानस्य तस्येह यत्पापं पूर्वसंचितम् ।
विनश्यत्याशु तत्सर्वं मद्भक्तस्य विशेषतः ॥१४-९७-४ (९५३५२)

वैशंपायन उवाच।१४-९७-५क्ष् (७९३९)
एवं श्रुत्वा वचः पुण्यं सत्यं केशवभाषितम् ।
प्रहृष्टमनसो भूत्वा चिन्तयन्तोऽद्भुतं परम् ॥१४-९७-५ (९५३५३)
देवब्रह्मर्षयः सर्वे गन्धर्वाप्सरसस्तथा ।
भूता यक्षग्रहाश्चैव गुह्यका भुजगास्तथा ॥१४-९७-६ (९५३५४)
वालखिल्या महात्मानो योगिनस्तत्वदर्शिनः ।
तथा भागवताश्चापि पञ्चकालमुपासकाः ॥१४-९७-७ (९५३५५)
कौतूहलसमाविष्टाः प्रहृष्टेन्द्रियमानसाः ।
श्रोतुकामाः परं धर्मं वैष्णवं धर्मशासनम् ।
हृदि कर्तुं च तद्वाक्यं प्रणेमुः शिरसा नताः ॥ १४-९७-८ (९५३५६)
ततस्तान्वासुदेवेन दृष्टान्दिव्येन चक्षुषा ।
विमुक्तपापानालोक्य प्रणम्य शिरसा हरिम् ।
पप्रच्छ केशवं धर्मं धर्मपुत्रः प्रतापवान् ॥ १४-९७-९ (९५३५७)
युधिष्ठिर उवाच।१४-९७-१०क्ष् (७९४०)
कीदृशी ब्राह्मणस्याथ क्षत्रियस्यापि कीदृशी ।
वैश्यस्य कीदृशी देव गतिः शूद्रस्य कीदृशी ॥१४-९७-१० (९५३५८)
कथं बध्येत पाशेन ब्राह्मणस्तु यमालये ।
क्षत्रियो वाथ वैश्यो वा शूद्रो वा बध्यते कथम् ।
एतत्कर्मफलं ब्रूहि लोकनाथ नमोस्तु ते ॥ १४-९७-११ (९५३५९)
वैशंपायन उवाच।१४-९७-१२क्ष् (७९४१)
पृष्टोऽथ केशवो ह्येवं धर्मपुत्रेण धीमता ।
उवाच संसारगतिं चातुर्वर्ण्यस्य कर्मजाम् ॥१४-९७-१२ (९५३६०)
भगवानुवाच।१४-९७-१३क्ष् (७९४२)
शृणु वर्णक्रमेणैव धर्मं धर्मभृतां वर ।
नास्ति किंचिन्नरश्रेष्ठ ब्राह्मणस्य तु दुष्कृतम् ॥१४-९७-१३ (९५३६१)
शिखांयज्ञोपवीता ये सन्ध्यां ये चाप्युपासते ।
यैश्च पूर्णाहुतिः प्राप्ता विधिवज्जुह्वते च ये ॥१४-९७-१४ (९५३६२)
वैश्वदेवं च ये चक्रुः पूजयन्त्यतिथींश्च ये ।
नित्यं स्वाध्यायशीलाश्च जपयज्ञपराश्च ये ॥१४-९७-१५ (९५३६३)
सायंप्रातर्हुताशाश्च शूद्रभोजनवर्जिताः ।
डंभानृतविमुक्ताश्च स्वदारनिरताश्च ये ।
पञ्चयज्ञपरा ये च येऽग्निहोत्रमुपासते ॥ १४-९७-१६ (९५३६४)
दहन्ति दुष्कृतं येषां हूयमानास्त्रयोऽग्नयः ।
नष्टदुष्कृतकर्माणो ब्रह्मलोकं व्रजन्ति ते ॥१४-९७-१७ (९५३६५)
ब्रह्मलोके पुनः कामं गन्धर्वैर्ब्रह्मगायकैः ।
उद्गीयमानाः प्रयतैः पूज्यमानाः स्वयंभुवा ।

ब्रह्मिलोके प्रमोदन्ते यावदाभूतसंप्लुवम् ॥ १४-९७-१८ (९५३६६)
क्षत्रियोपि स्थितो राज्ये स्वधर्मपरिपालकः ।
सम्यक्प्रजाः पालयिता षड्भागनिरतः सदा ॥१४-९७-१९ (९५३६७)
यज्ञदानरतो धीरः स्वदारनिरतः सदा ।
शास्त्रानुसारी तत्वज्ञः प्रजाकार्यपरायणः ॥१४-९७-२० (९५३६८)
विप्रेभ्यः कामदो नित्यं भृत्यानां भरणे रतः ।
सत्यसन्धः शुचिर्नित्यं लोभडंभविवर्जितः ।
क्षत्रियोप्युत्तमां याति गतिं देवनिषेविताम् ॥ १४-९७-२१ (९५३६९)
तत्र दिव्याप्सरोभिस्तु गन्धर्वैश्च विशेषतः ।
सेव्यमानो महातेजाः क्रीडते शक्रपूजितः ॥१४-९७-२२ (९५३७०)
चतुर्थगानि वै त्रिंशत्क्रीडित्वा तत्र देववत् ।
इह मानुष्यलोके तु चतुर्वेदी द्विजो भवेत् ॥१४-९७-२३ (९५३७१)
कृषिगोपालनिरतो धर्मानवेषणतत्परः। १४-९७-२४ (९५३७२)
दानधर्मेपि निरतो विप्रशुश्रूषकस्तथा ॥ १४-९७-२४ (९५३७३)
सत्यसन्धः शुचिर्नित्यं लोभडंभविवर्जितः ।
ऋजुः स्वदारनिरतो हिंसाद्रोहविवर्जितः ॥१४-९७-२५ (९५३७४)
वणिग्धर्मान्नमुञ्चन्वै देवब्राह्मणपूजकः ।
वैश्यः स्वर्गतिमाप्नोति पूज्यमानोप्सरोगणैः ॥१४-९७-२६ (९५३७५)
चतुर्युगानि वै त्रिंशत्क्रीडित्वा दश पञ्च च ।
इह मानुष्यलोके च राजा भवति वीर्यवान् ॥१४-९७-२७ (९५३७६)
सुवर्णकोट्यः पञ्चाशद्रत्नानां च शतं तथा ।
हस्त्यश्वरश्वसंयुक्तो महाभोगांश्च सेवते ॥१४-९७-२८ (९५३७७)
त्रयाणामपि वर्णानां शुश्रूषानिरतः सदा ।
विशेषतस्तु विप्राणां दासवद्यस्तु तिष्टति ॥१४-९७-२९ (९५३७८)
अयाचितप्रदाता च सत्यशौचसमन्वितः ।
गुरुदेवार्चनरतः परदारविवर्जितः ॥१४-९७-३० (९५३७९)
परपीडामकृत्वैव भत्यवर्गं बिभर्ति यः ।
शूद्रोपि स्वर्गमाप्नोति जीवानामभयप्रदः ॥१४-९७-३१ (९५३८०)
स स्वर्गकलोके क्रीडित्वा वर्षकोटिं महातपाः ।
इह मानुषलोके तु वैश्यो धनपतिर्भवेत् ॥१४-९७-३२ (९५३८१)
एवं धर्मात्परं नास्ति महत्संसारमोक्षणम् ।
न च धर्मात्पर किंचित्पापकर्मव्यपोहनम् ॥१४-९७-३३ (९५३८२)
तस्माद्धर्मः सदा कार्यो मानुष्यं प्राप्य दुर्लभम् ।
न हि धर्मानुरक्तानां लोके किंचन दुर्लभम् ॥१४-९७-३४ (९५३८३)
स्वयंभुविहितो धर्मो यो यस्येह नरेश्वर ।
स तेन क्षपयेत्पापं सम्यगाचरितेन च ॥१४-९७-३५ (९५३८४)

सहजं यद्भवेत्कर्म न तत्त्याज्यं हि केनचित् ।
स एव तस्य धर्मो हि तेन सिद्धिं स गच्छति ॥१४-९७-३६ (९५३८५)
विगुणोपि स्वधर्मस्तु पापकर्म व्यपोहति ।
एवमेव तु धर्मोपि क्षीयते पापवर्धनात् ॥१४-९७-३७ (९५३८६)
युधिष्ठिर उवाच।१४-९७-३८क्ष् (७९४३)
भगवन्देवदेवेश श्रोतुं कौतूहलं हि मे ।
शुभस्याप्यशुभस्यापि क्षयवृद्धी यथाक्रमम् ॥१४-९७-३८ (९५३८७)
भगवानुवाच।१४-९७-३९क्ष् (७९४४)
शृणु पार्थिव तत्सर्वं धर्मसूक्ष्मं सनातनम् ।
दुर्विज्ञेयतमं नित्यं यत्र मग्ना महाजनाः ॥१४-९७-३९ (९५३८८)
यथैव शीतमुदकमुष्णेन बहुना वृतम् ।
भवेत्तु तत्क्षणादुष्णं शीतत्वं च विनश्यति ॥१४-९७-४० (९५३८९)
यथोष्णं वा भवेदल्पं शीतेन बहुना वृतम् ।
शीतलं च भवेत्सर्वमुष्णत्वं च विनश्यति ॥१४-९७-४१ (९५३९०)
एवं च यद्भवेद्भूरि सुकृतं वाऽपि दुष्कृतम् ।
तदल्पं क्षपयेच्छीघ्रं नात्र कार्या विचारणा ॥१४-९७-४२ (९५३९१)
समत्वे सति राजेन्द्र तयोः सुकृतपापयोः ।
गूहितस्य भवेद्वृद्धिः कीर्तितस्य भवेत्क्षयः ॥१४-९७-४३ (९५३९२)
ख्यापनेनानुतापेन प्रायः पापं विनश्यति ।
तथा कृतस्तु राजेन्द्र धर्मो नश्यति मानद ॥१४-९७-४४ (९५३९३)
तावुभौ गूहितौ सम्यग्वृद्धिं यातो न संशयः ।
तस्मात्सर्वप्रयत्नेन न पापं गूहयेद्बुधः ॥१४-९७-४५ (९५३९४)
तस्मादेतत्प्रयत्नेनि कीर्तयेत्क्षयकारणात् ।
तस्मात्संकीर्तयेत्पापं नित्यं धर्मं च गूहयेत् ॥ ॥१४-९७-४६ (९५३९५)

इति श्रीमन्महाभारते आश्वमेधिकपर्वणि वैष्णवधर्मपर्वणि
सप्तनवतितमोऽध्यायः ॥९७ ॥

---

अस्वमेधिकपर्व-अध्यय०९८
॥ श्रीः ॥
१४.९८. अध्यायः ९८

अश्वमेधपर्व ॥१ ॥
Mahabharata - Ashvamedhika Parva - Chapter Topics
कृष्णेन युधिष्ठिरंप्रति जन्मदानजीवितानां
वैयर्थ्यापादकाधर्मकथनम् ॥१ ॥

तथा दानानां सात्विकत्वादिकथनपूर्व तत्तत्फलानां त्रैविध्यादिप्रतिपादनम् ॥ २ ॥
तथा दानपात्रलक्षणनिरूपणम् ब्राह्मणमहिमानुवर्णनं च ॥ ३ ॥

Mahabharata - Ashvamedhika Parva - Chapter Text

वैशंपायन उवाच ।
एवं श्रुत्वा वचस्तस्य धर्मपुत्रोऽच्युतस्य तु ।
पप्रच्छ पुनरप्यन्यं धर्मं धर्मात्मजो हरिम् ॥ १४-९८-१ (९५३९६)
वृथा च कति जन्मानि वृथा दानानि कानि च ।
वृथा च जीवितं केषां नराणां पुरुषोत्तम ॥ १४-९८-२ (९५३९७)
कीदृशासु ह्यवस्थासु दानं दत्तं जनार्दन ।
इह लोकेऽनुभवति पुरुषः पुरुषोत्तम ॥ १४-९८-३ (९५३९८)
गर्भस्थः किं समश्नाति किं बाल्ये वाऽपि केशव ।
यौवनस्थेऽपि किं कृष्ण वार्धके वाऽपि किं भवेत् ॥ १४-९८-४ (९५३९९)
सात्विकं कीदृशं दानं राजसं कीदृशं भवेत् ।
तामसं कीदृशं देव तर्पयिष्यति किं प्रभो ॥ १४-९८-५ (९५४००)
उत्तमं कीदृशं दानं तेषां वा किं फलं भवेत् ।
किं दानं नयति ह्यूर्ध्वं किं गतिं मध्यमां नयेत् ।
गतिं जघन्यामथवा देवदेव ब्रवीहि मे ॥ १४-९८-६ (९५४०१)
एतदिच्छामि विज्ञातुं परं कौतूहलं हि मे ।
त्वदीयं वचनं सत्यं पुण्यं च मधुसूदन ॥ १४-९८-७ (९५४०२)
वैशंपायन उवाच। १४-९८-८क्ष् (७९४५)
एवं धर्मं प्रयत्नेन पृष्टः पाण्डुसुतेन वै ।
उवाच वासुदेवोऽथ धर्मान्धर्मात्मजस्य तु ॥ १४-९८-८ (९५४०३)
भगवानुवाच। १४-९८-९क्ष् (७९४६)
शृणु राजन्यथान्यायं वचनं तथ्यमुत्तमम् ।
कथ्यमानं मया पुण्यं सर्वपापव्यपोहनम् ॥ १४-९८-९ (९५४०४)
वृथा च दश जन्मानि चत्वारि च नराधिप ।
वृथा दानानि पञ्चाशत्पञ्चैव च यथाक्रमम् ॥ १४-९८-१० (९५४०५)
वृथा च जीवितं येषां ते च षट् परिकीर्तिताः ।
अनुक्रमेण वक्ष्यामि तानि सर्वाणि पार्थिव ॥ १४-९८-११ (९५४०६)
धर्मघ्नानां वृथा जन्म लुब्धानां पापिनां तथा ।
वृथा पाकं च येऽश्नन्ति परदाररताश्च ये ।
पाकभेदकरा ये च ये च स्युः सत्यवर्जिताः ॥ १४-९८-१२ (९५४०७)
मृष्टमश्नाति यश्चैकः क्लिस्यमानैस्तु बान्धवैः ।

पितरं मातरं चैव उपाध्यायं गुरुं तथा ।
मातुलं मातुलानीं च यो निहन्याच्छपेत वा ॥ १४-९८-१३ (९५४०८)
ब्राह्मणश्चैव यो भूत्वा सन्ध्योपासनवर्जितः ।
निस्स्वाहो निस्स्वधश्चैव शूद्राणामन्नभुग्द्विजः ॥१४-९८-१४ (९५४०९)
मम वा शंकरस्याथ ब्रह्मणो वा युधिष्ठिर ।
अथवा ब्राह्मणानां तु ये न भक्ता नराधमाः ।
वृथाजन्मान्यथैतेषां पापिनां विद्धि डव ॥ १४-९८-१५ (९५४१०)
अश्रद्धयाऽपि यद्दत्तमवामानेन वाऽपि यत् ।
डंभार्थमपि यद्दत्तं यत्पाषण्डिहृतं नृप ॥१४-९८-१६ (९५४११)
शूद्राचाराय यद्दत्तं यद्दत्त्वा चानुकीर्तितम् ।
रोषयुक्तं तु यद्दत्तं यद्दत्तमनुशोचितम् ॥१४-९८-१७ (९५४१२)
डंभार्जितं च यद्दत्तं यच्च वाऽप्यनृतार्जितम् ।
ब्राह्मणस्वं च यद्दत्तं चौर्येणाप्यार्जितं च यत् ॥१४-९८-१८ (९५४१३)
अभिशास्ताहृतं यत्तु यद्दत्तं पतिते द्विजे ।
निर्ब्रह्माभिहृतं यत्तु यद्दत्तं सर्वयाचकैः ॥१४-९८-१९ (९५४१४)
व्राप्यैस्तु यद्धृतं दानमारूढपतितैश्च यत् ।
यद्दत्तं स्वैरिणीभर्तुः श्वशुराननुवर्तिने ॥१४-९८-२० (९५४१५)
यद्ग्रामयाचकहृतं यत्कृतघ्नहृतं तथा ।
उपपातकिने दत्तं देवविक्रयिणे च यत् ॥१४-९८-२१ (९५४१६)
स्त्रीजिताय च यद्दत्तं यद्दत्तं राजसेविने ।
गणकाय च यद्दत्तं यच्च कारणिकाय च ॥१४-९८-२२ (९५४१७)
वृषलीपतये दत्तं यद्दत्तं शस्त्रजीविने ।
भृतकाय च यद्दत्तं व्यालग्राहिहृतं च यत् ॥१४-९८-२३ (९५४१८)
पुरोहिताय यद्दत्तं चिकित्सकहृतं च यत् ।
यद्वणिंक्कर्मिणे दत्तं क्षुद्रमन्त्रोपजीविने ॥१४-९८-२४ (९५४१९)
यच्छूद्रजीविने दत्तं यच्च देवलकाय च ।
देवद्रव्याशिने यच्च यद्दत्तं चित्रकर्मिणे ॥१४-९८-२५ (९५४२०)
रङ्गोपजीविने दत्तं यच्च मांसोपजीविने ।
सेवकाय च यद्दत्तं यद्दत्तं ब्राह्मणब्रुवे ॥१४-९८-२६ (९५४२१)
अदेशिने च यद्दत्तं दत्तं वार्धुषिकाय च ।
यदनाचारिणे दत्तं यत्तु दत्तमनग्रये ॥१४-९८-२७ (९५४२२)
असन्ध्योपासिने दत्तं यच्छूद्रग्रामवासिने ।
यन्मिथ्यालिङ्गिने दत्तं दत्तं सर्वाशिने च यत् ॥१४-९८-२८ (९५४२३)
नास्तिकाया च यद्दत्तं धर्मविक्रयिणे च यत् ।
वराकाय च यद्दत्तं यद्दत्तं कूटसाक्षिणे ॥१४-९८-२९ (९५४२४)
ग्रामकूटाय यद्दत्तं दानं पार्तिवपुङ्गव ।

वृथा भवति तत्सर्वं नात्र कार्या विचारणा ॥१४-९८-३० (९५४२५)
विप्राणामधरा एते लोलुपा ब्राह्मणाधमाः ।
नात्मानं तारयन्त्येते न दातारं युधिष्ठिर ॥१४-९८-३१ (९५४२६)
एतेभ्यो दत्तमात्राणि दानानि सुबहून्यपि ।
वृथा भवन्ति राजेन्द्र भस्मन्याज्याहुतिर्यथा ॥१४-९८-३२ (९५४२७)
एतेषु यत्फलं किंचिद्भविष्यति कथंचन ।
राक्षसाश्च पिशाचाश्च तद्विलुंपन्ति हर्षिताः ॥१४-९८-३३ (९५४२८)
वृथा ह्येतानि दत्तानि कथितानि समासतः ।
जीवितं तु वृथा येषां चच्छृणुष्व युधिष्ठिर ॥१४-९८-३४ (९५४२९)
ये मां न प्रतिपद्यन्ते शङ्करं वा नराधमाः ।
ब्रैह्मणान्वा महीदेवान्वृथा जीवन्ति ते नराः ॥१४-९८-३५ (९५४३०)
हेतुशास्त्रेषु ये सक्ताः कुदृष्टिपथमाश्रिताः ।
देवान्निन्दन्त्यनाचारा वृथा जीवन्ति ते नराः ॥१४-९८-३६ (९५४३१)
कुशलैः कृतशास्त्राणि पठित्वा ये नराधमाः ।
विप्रान्निन्दन्ति यज्ञांश्च वृथा जीवन्ति ते नराः ॥१४-९८-३७ (९५४३२)
ये दुर्गां वा कुमारं वा वायुमग्निं जलं रविम् ।
पितरं मातरं चैव गुरुमिन्द्रं निशाकरम् ।
मूढा निन्दन्त्यनाचारा वृथा जीवन्ति ते नराः ॥ १४-९८-३८ (९५४३३)
विद्यमाने धने यस्तु दानधर्मविवर्जितः ।
मृष्टमश्नाति यश्चैको वृथा जीवति सोपि च ॥१४-९८-३९ (९५४३४)
वृथा जीवितमाख्यातं दानकालं ब्रवीमि ते ॥ १४-९८-४० (९५४३५)
तमोनिविष्टचित्तेन दत्तं दानं तु यद्भवेत् ।
तदस्य फलमश्नाति नरो गर्भगतो नृप ॥१४-९८-४१ (९५४३६)
ईर्ष्यामत्सरसंयुक्तो डंभार्थं चार्थकारणात् ।
ददाति दानं यो मर्त्यो बालभावे तदश्नुते ॥१४-९८-४२ (९५४३७)
भोक्तं भोगमशक्तस्तु व्याधिभिः पीडितो भृशम् ।
ददाति दानं यो मर्त्यो वृद्धभावे तदश्नुते ॥१४-९८-४३ (९५४३८)
श्रद्धायुक्तः शुचिः स्नातः प्रसन्नेन्द्रियमानसः ।
ददाति दानं यो मर्त्यो यौवने स तदश्नुते ॥१४-९८-४४ (९५४३९)
स्वयं नीत्वा तु यद्दानं भक्त्या पात्रे प्रदीयते ।
तत्सार्वकालिकं विद्धि दानमामरणान्तिकम् ॥१४-९८-४५ (९५४४०)
राजसं सात्विकं चापि तामसं च युधिष्ठिर ।
दानं दानफलं चैव गतिं च त्रिविधां शृणु ॥१४-९८-४६ (९५४४१)
दानं दातव्यमित्येव मतिं कृत्वा द्विजाय वै ।
उपकारवियुक्ताय यद्दत्तं तद्धि सात्विकम् ॥१४-९८-४७ (९५४४२)
श्रोत्रियाय दरिद्राय बहुभृत्याय पाण्डव ।

दीयते यत्प्रहृष्टेन तत्सात्विकमुदाहृतम् ॥१४-१८-४८ (९५४४३)
वेदाक्षरविहीनाय यत्तु पूर्वोपकारिणे ।
समृद्धाय च यद्दत्तं तद्दानं राजसं स्मृतम् ॥१४-१८-४९ (९५४४४)
संबन्धिने च यद्दत्तं प्रमत्ताय च पाण्डव ।
फलार्थिभिरपात्राय तद्दानं राजसं स्मृतम् ॥१४-१८-५० (९५४४५)
वैश्वदेवविहीनाय दानमश्रोत्रियाय च ।
दीयते तस्करायापि तद्दानं तामसं स्मृतम् ॥१४-१८-५१ (९५४४६)
सरोषमवधूतं च क्लेशयुक्तमवज्ञया ।
सेवकाय च यद्दत्तं तत्तामसमुदाहृतम् ॥१४-१८-५२ (९५४४७)
देवाः पितृगणाश्चैव मुनयश्चाग्नयस्तथा ।
सात्विकं दानमश्नन्ति तुष्यन्ति च नरेश्वर ॥१४-१८-५३ (९५४४८)
दानवा दैत्यसङ्घाश्च ग्रहा यक्षाः सराक्षसाः ।
राजसं दानमश्नन्ति वर्जितं पितृदैवतैः ॥१४-१८-५४ (९५४४९)
पिशाचाः प्रेतसङ्घाश्च कश्मला ये मलीमसाः ।
तामसं दानमश्नन्ति गतिं च त्रिविधां शृणु ॥१४-१८-५५ (९५४५०)
सात्विकानां तु दानानामुत्तमं फलमश्नुते ।
मध्यमं राजसानां तु तामसानां तु पश्चिमम् ॥१४-१८-५६ (९५४५१)
अभिगम्योपनीतानां दानानामुत्तमं फलम् ।
मध्यमं तु समाहूय जघन्यं याचते फलम् ॥१४-१८-५७ (९५४५२)
अयाचितप्रदाता यः स याति गतिमुत्तमाम् ।
समाहूय तु यो दद्यान्मध्यमां स गतिं व्रजेत् ।
याचितो यश्च वै दद्याज्जघन्यां स गतिं व्रजेत् ॥ १४-१८-५८ (९५४५३)
उत्तमा दैविकी ज्ञेया मध्यमा मानुषी गतिः ।
गतिर्जघन्या तिर्यक्षु गतिरेषा त्रिधा स्मृता ॥१४-१८-५९ (९५४५४)
पात्रभूतेषु विप्रेषु संस्थितेष्वाहिताग्निषु ।
यत्तु निक्षिप्यते दानमक्षयं संप्रकीर्तितम् ॥१४-१८-६० (९५४५५)
श्रोत्रियाणां दरिद्राणां भरणं कुरु पार्थिव ।
समृद्धानां द्विजातीनां कुर्यास्तेषां तु रक्षणम् ॥१४-१८-६१ (९५४५६)
दरिद्रान्वित्तहीनांश्च प्रदानैः सुष्ठु पूजय ।
आतुरस्यैषधैः कार्यं नीरुजस्य किमौषधैः ॥१४-१८-६२ (९५४५७)
पापं प्रतिग्रहीतारं प्रदातुरपगच्छति ।
प्रतिग्रहीतुर्यत्पुण्यं प्रदातारमुपैति तत् ।
तस्माद्दानं सदा कार्यं परत्र हितमिच्छता ॥ १४-१८-६३ (९५४५८)
वेदविद्यावदातेषु सदा शूद्रान्नवर्जिषु ।
प्रयत्नेन विधातव्यो महादानमयो निधिः ॥१४-१८-६४ (९५४५९)
येषां दाराः प्रतीक्षन्ते सहस्रस्येव लम्भनम् ।

भुक्तशेषस्य भक्तस्य तान्निमन्त्रय पाण्डव ॥१४-९८-६५ (९५४६०)
आमन्त्र्य तु निराशानि न कर्तव्यानि भारत ।
कुलानि सुदरिद्राणि तेषामाशा हता भवेत् ॥१४-९८-६६ (९५४६१)
मद्भक्ता ये नरश्रेष्ठ मद्गता मत्परायणाः ।
मद्याजिनो मन्नियमास्तान्प्रयत्नेन पूजयेत् ॥१४-९८-६७ (९५४६२)
तेषां तु पावनायाहं नित्यमेव युधिष्ठिर ।
उभे सन्ध्येऽधितिष्ठामि ह्यस्कन्नं तद्व्रतं मम ॥१४-९८-६८ (९५४६३)
तस्मादष्टाक्षरं मन्त्रं मद्भक्तैर्वीतकल्मषैः ।
सन्ध्याकाले तु जप्तव्यं सततं चात्मशुद्धये ॥१४-९८-६९ (९५४६४)
अन्येषामपि विप्राणां किल्बिषं हि विनश्यति ।
उभे सन्ध्येप्युपासीत तस्माद्विप्रो विशुद्धये। १४-९८-७० (९५४६५)
दैवे श्राद्धेपि विप्रः स नियोक्तव्योऽजुगुप्सया ।
जुगुप्सितस्तु यः श्राद्धं दहत्यग्निरिवेन्धनम् ॥१४-९८-७१ (९५४६६)
भारतं मानवो धर्मो वेदाः साङ्गाश्चिकित्सितम् ।
आज्ञासिद्धानि चत्वारि न हन्तव्यानि हेतुभिः ॥१४-९८-७२ (९५४६७)
न ब्राह्मणान्परीक्षेत दैवे कर्मणि धर्मवित् ।
महान्भवेत्परीवादो ब्राह्मणानां परीक्षणे ॥१४-९८-७३ (९५४६८)
ब्राह्मणानां परीवादं यः कुर्यात्स नराधमः ।
रासभानां शुनां योनिं गच्छेत्पुरुषदूषकः ॥१४-९८-७४ (९५४६९)
श्वत्वं प्राप्नोति निन्दित्वा परीवादात्खरो भवेत् ।
कृमिर्भवत्यभिभवात्कीटो भवति मत्सरात् ॥१४-९८-७५ (९५४७०)
दुर्वृत्ता वा सुवृत्ता वा प्राकृता वा सुसंस्कृताः ।
ब्राह्मणा नावमन्तव्या भस्मच्छन्ना इवाग्नयः ॥१४-९८-७६ (९५४७१)
क्षत्रियं चैव सर्पं च ब्राह्मणं च बहुश्रुतम् ।
नावमन्येत मेधावी कृशानपि कदाचन ॥१४-९८-७७ (९५४७२)
एतत्त्रयं हि पुरुषं निर्दहेदवमानितम् ।
तस्मादेतत्प्रयत्नेन नावमन्येत बुद्धिमान् ॥१४-९८-७८ (९५४७३)
यथा सर्वास्ववस्थासु पावको दैवतं महत् ।
तथा सर्वास्ववस्थासु ब्राह्मणो दैवतं महत् ॥१४-९८-७९ (९५४७४)
व्यङ्गाः काणाश्च कुब्जाश्च वामनाङ्गास्तथैव च ।
सर्वे दैवे नियोक्तव्या व्यामिश्रा वेदपारगैः ॥१४-९८-८० (९५४७५)
मन्युं नोत्पादयेत्तेषां न चारिष्टं समाचरेत् ।
मन्युप्रहरणा विप्रा न विप्राः शस्त्रपाणयः ॥१४-९८-८१ (९५४७६)
मन्युना घ्नन्ति ते शत्रून्वज्रेणेन्द्र इवासुरान् ।
ब्राह्मणो हि महद्दैवं जातिमात्रेण जायते ॥१४-९८-८२ (९५४७७)
ब्राह्मणः सर्वभूतानां धर्मकोशस्य गुप्तये ।

किं पुनर्ये च कौन्तेय सन्ध्यां नित्यमुपासते ॥१४-९८-८३ (९५४७८)
यस्यास्येन समश्नन्ति हव्यानि त्रिदिवौकसः ।
कव्यानि चैव पितरः किं भूतमधिकं ततः ॥१४-९८-८४ (९५४७९)
उत्पत्तिरेव विप्रस्य मूर्तिर्धर्मस्य शाश्वती ।
स हि धर्मार्थमुत्पन्नो ब्रह्मभूयाय कल्पते ॥१४-९८-८५ (९५४८०)
स्वमेव ब्राह्मणो भुङ्क्ते स्वं वस्ते स्वं ददाति च ।
आनृशंस्याद्‌ब्राह्मणस्य भुञ्जते हीतरे जनाः ।
तस्मात्ते नावमन्तव्या मद्भक्ता हि द्विजाः सदा ॥ १४-९८-८६ (९५४८१)
आरण्यकोपनिषदि ये तु पश्यन्ति मां द्विजाः ।
निगूढं निष्कलावस्थं तान्प्रयत्नेन पूजय ॥१४-९८-८७ (९५४८२)
स्वगृहे वा प्रवासे वा दिवारात्रमथापि वा ।
श्रद्धया ब्राह्मणाः पूज्या मद्भक्ता ये च पाण्डव ॥१४-९८-८८ (९५४८३)
नास्ति विप्रसमं दैवं नास्ति विप्रसमो गुरुः ।
नास्ति विप्रात्परो बन्धुर्नास्ति विप्रात्परो निधिः ।
नास्ति विप्रात्परं तीर्थं न पुण्यं ब्राह्मणात्परम्। १४-९८-८९ (९५४८४)
न पवित्रं परं विप्रान्न द्विजात्पावनं परम् ।
नास्ति विप्राप्तरो धर्मो नास्ति विप्रात्परा गतिः ॥१४-९८-९० (९५४८५)
पापकर्मसमाक्षिप्तं पतन्तं नरके नरम् ।
त्रायते पात्रमप्येकं पात्रभूते तु तद्द्विजे ॥१४-९८-९१ (९५४८६)
बालाहिताग्नयो ये च शान्ताः शूद्रान्नवर्जिताः ।
मामर्चयन्ति तद्भक्तास्तेभ्यो दत्तमिहाक्षयम् ॥१४-९८-९२ (९५४८७)
प्रदानैः पूजितो विप्रो वन्दितो वापि संस्कृतः ।
सम्भाषितो वा दृष्टो वा मद्भक्तो दिवमुन्नयेत् ॥१४-९८-९३ (९५४८८)
ये पठन्ति नमस्यन्ति ध्यायन्ति पुरुषास्तु माम् ।
स तान्स्पृष्ट्वा च दृष्ट्वा च नरः पापैः प्रमुच्यते ॥१४-९८-९४
(९५४८९)
मद्भक्ता मद्गतप्राणा मद्गीता मत्परायणाः ।
बीजयोनिविशुद्धा यै श्रोत्रियाः संयतेन्द्रियाः ।
शूद्रान्नविरता नित्यं ते पुनन्तीह दर्शनात् ॥ १४-९८-९५ (९५४९०)
स्वंय नीत्वा विशेषेण दानं तेषां गृहेष्वथ ।
निवापयेत्तु यद्भक्त्या तद्दानं कोटिसंमितम् ॥१४-९८-९६ (९५४९१)
जाग्रतः स्वपतो वापि प्रवासेषु गृहेष्वथ ।
हृदये न प्रणश्यामि यस्य विप्रस्य भावतः ॥१४-९८-९७ (९५४९२)
स पूजितो वा दृष्टो वा स्पृष्टो वापि द्विजोत्तमः ।
सम्भाषितो वा राजेन्द्र पुनात्येव नरं सदा ॥१४-९८-९८ (९५४९३)
एवं सर्वास्ववस्थासु सर्वदानानि पाण्डव ।

मद्भक्तेभ्यः प्रदत्तानि स्वर्गमार्गप्रदानि वै ॥ ॥१४-९८-९९ (९५४९४)

इति श्रीमन्महाभारते आश्वमेधिकपर्वणि वैष्णवधर्मपर्वणि
अष्टनवतितमोऽध्यायः ॥ ९८ ॥

---

अस्वमेधिकपर्व-अध्यय०९९
॥ श्रीः ॥
१४.९९. अध्यायः ९९

Mahabharata - Ashvamedhika Parva - Chapter Topics
कृष्णेन युधिष्ठिरंप्रति बीजयोन्योः शुद्ध्यशुद्धिनिरूपणम् ॥ १ ॥
तथा गायत्रीमहिमानुवर्णनम् ॥ २ ॥
ब्राह्मणमहिमप्रशंसनम् । ब्राह्मणावमन्तॄणां नारकयातनानुवर्णनं
च ॥ ३ ॥

Mahabharata - Ashvamedhika Parva - Chapter Text

वैशंपायन उवाच ।
श्रुत्वैवं सात्विकं दानं राजसं तामसं तथा ।
पृथक्पृथक्त्वेन गतिं फलं चापि पृथक्पृथक् ॥१४-९९-१ (९५४९५)
अवितृप्तः प्रहृष्टात्मा पुण्यं धर्मामृतं पुनः ।
युधिष्ठिरो धर्मरतः केशवं पुनरब्रवीत् ॥१४-९९-२ (९५४९६)
बीजयोनिविशुद्धानां लक्षणानि वदस्व मे ।
बीजदोषेण लोकेश जायन्ते च कथं नराः ॥१४-९९-३ (९५४९७)
आचारदोषं देवेशं वक्तुगर्हस्यशेषतः ॥
ब्राह्मणानां विशेषं च गुणदोषौ च केशव ॥१४-९९-४ (९५४९८)
चातुर्वर्ण्यस्य कृत्स्नस्य वर्तमानाः प्रतिग्रहे ।
केन विप्रा विशेषेण तरन्ते तारयन्ति च ।
एतान्कथय देवेश त्वद्भक्तस्य नमोस्तु ते ॥ १४-९९-५ (९५४९९)
भगवानुवाच । १४-९९-६क्ष् (७९४७)
शृणु राजन्यथावृत्तं बीजयोनिं शुभाशुभम् ।
येन तिष्ठति लोकोयं विनश्यति च पाण्डव ॥१४-९९-६ (९५५००)
अविप्लुतब्रह्मचर्यो यस्तु विप्रो यथाविधि ।
स बीजं नाम विज्ञेयं तस्य बीजं शुभं भवेत् ॥१४-९९-७ (९५५०१)
कन्या चाक्षतयोनिः स्यात्कुलीना पितृमातृतः ।
ब्राह्मणादिषु विवाहेषु परिणीता यथाविधि ।

सा प्रशस्ता वरारोहा तस्या योनिः प्रशस्यते ॥ १४-९९-८ (९५५०२)
मनसा कर्मणा वाचा या गच्छेत्परपूरुषम् ।
योनिस्तस्या नरश्रेष्ठ गर्भाधानं न चार्हति ॥१४-९९-९ (९५५०३)
स्वैरिण्या यस्तु पापात्मा संतानार्थमिहेच्छति ।
स कुलान्पातयत्याशु दशपूर्वान्दशापरान् ॥१४-९९-१० (९५५०४)
दुष्टयोनौ तु यो मोहाद्रेतः सिञ्चति मूढधीः ।
तद्रेतसा समुत्पन्नः षडङ्गविदपि द्विजः ।
साधुभिः स बहिष्कार्यः श्वापाक इव पार्थिवा ॥ १४-९९-११ (९५५०५)
कर्मणा मनसा वाचा या भवेत्स्वैरचारिणी ।
सा कुलघ्नीति विज्ञेया तस्यां जातः श्वपाचकः ॥१४-९९-१२ (९५५०६)
दैवे पित्र्ये तथा दाने भोजने सहभाषणे ।
शयने सहसंबन्धे न योग्या दृष्टयोनिजाः ॥१४-९९-१३ (९५५०७)
न तस्माद्दुष्टयोन्यां तु गर्भमुत्पादयेद्बुधः ।
मोहेन कुरुते यस्तु कुलं हन्ति त्रिपूरुषम् ॥१४-९९-१४ (९५५०८)
कानीकनश्च सहोत्रश्च तथोभौ कुण्डगोलकै ।
आरूढपतिताज्जातः परितस्यापि यः सुतः ।
षडेते विप्रचण्डाला निकृष्टाः श्वपचादपि ॥ १४-९९-१५ (९५५०९)
यो यत्र तत्र वा रेतः सिक्त्वा शूद्रासु वा चरेत् ।
कामचारी स पापात्मा बीजं तस्याशुभं भवेत् ॥१४-९९-१६ (९५५१०)
अशुद्धं तद्भवेद्बीजं शुद्धां योनि न चार्हति ।
दूषयत्यपि तां योनिं शुना लीढं हविर्यथा ॥१४-९९-१७ (९५५११)
शूद्रयोनौ पतेद्बीजं हाहाशब्दं द्विजन्मनः ।
कुर्यात्पुरीषगर्तेषु पतितोऽस्मीति दुःखितः ॥१४-९९-१८ (९५५१२)
मामधःपातयन्नेष पापात्मा काममोहितः ।
अधोगतिं प्रजोत्क्षिप्रमिति शप्त्वा पतेत्तु तत् ॥१४-९९-१९ (९५५१३)
आत्मा हि शुक्लमुद्दिष्टं दैवतं परमं महत् ।
तस्मात्सर्वप्रयत्नेन निरुन्ध्याच्छुक्लमात्मनः ॥१४-९९-२० (९५५१४)
आयुस्तेजो बलं वीर्यं प्रज्ञा श्रीश्च महद्यशः ।
पुण्यं च मत्प्रियत्वं च लभते ब्रह्मचर्यया ॥१४-९९-२१ (९५५१५)
अविप्लुतब्रह्मचर्यैर्गृहस्थश्रममाश्रितैः ।
पञ्चयज्ञपरैर्धर्मः स्थाप्यते पृथिवीतले ॥१४-९९-२२ (९५५१६)
सायंप्रातस्तु ये सन्ध्यां सम्यङ्नित्यमुपासते ।
नावं वेदमयीं कृत्वा तरन्ते तारयन्ति च ॥१४-९९-२३ (९५५१७)
यो जपेत्पावनीं देवीं गायत्रीं वेदमातरम् ।
न सीदेत्प्रतिगृह्णानः पृथिवीं च ससागराम् ॥१४-९९-२४ (९५५१८)
ये चास्य दुःस्थिताः केचिद्ग्रहाः सूर्यादयो दिवि ।

ते चास्य सौम्या जायन्ते शिवाः शुभकरास्तथा ॥१४-९९-२५ (९५५१९)
यत्र यत्र स्थिताश्चैव दारुणाः पिशिताशनाः ।
घोररूपा महाकाया धर्षयन्ति न तं द्विजम् ॥१४-९९-२६ (९५५२०)
पुनन्तीह पृथिव्यां च चीर्णवेदव्रता नराः ।
चतुर्णामपि वेदानां सा हि राजन्गरीयसी ॥१४-९९-२७ (९५५२१)
अचीर्णिव्रतवेदा ये विकर्मफलमाश्रिताः ।
ब्राह्ममा नाममात्रेण तेऽपि पूज्या युधिष्ठिर ।
किं पुनर्यस्तु सन्ध्ये द्वे नित्यमेवोपतिष्ठते ॥ १४-९९-२८ (९५५२२)
शीलमध्ययनं दानं शौचं मार्दवमार्जवम् ।
तस्माद्वेदाद्विशिष्टानि मनुराह प्रजापतिः ॥१४-९९-२९ (९५५२३)
भूर्भुवस्स्वरिति ब्रह्म यो वेदनिरतो द्विजः ।
स्वदारनिरतो दान्तः स विद्वान्स च भूसुरः ॥१४-९९-३० (९५५२४)
सन्ध्यामुपासते ये वै नित्यमेव द्विजोत्तमाः ।
ते यान्ति नरशार्दूल ब्रह्मलोकं न संशयः ॥१४-९९-३१ (९५५२५)
सावित्रीमात्रसारोपि वरो विप्रः सुयन्त्रितः ।
नायन्त्रितश्चतुर्वेदी सर्वाशी सर्वविक्रयी ॥१४-९९-३२ (९५५२६)
सावित्रीं चैव वेदांश्च तुलयाऽतोलयन्पुरा ।
सदेवर्षिगणाश्चैव सर्वे ब्रह्मपुरस्सराः ।
चतुर्णामपि वेदानां सा हि राजन्गरीयसी ॥ १४-९९-३३ (९५५२७)
यथा विकसिते पुष्पे मधु गृह्णन्ति षट्पदाः ।
एवं गृहीता सावित्री सर्ववेदे च पाण्डवः ॥१४-९९-३४ (९५५२८)
तस्मात्तु सर्ववेदानां सावित्री प्राण उच्यते ।
निर्जीवा हीतरे वेदा विना सावित्रिया नृपः ॥१४-९९-३५ (९५५२९)
नायन्त्रितश्चतुर्वेदी शीलभ्रष्टः स कुत्सितः ।
शीलवृत्तसमायुक्तः सावित्रीपाठको वरः ॥१४-९९-३६ (९५५३०)
सहस्रपरमां देवीं शतमध्यां दशावराम् ।
सावित्रीं जप कौतेय सर्वपापप्रणाशिनीम् ॥१४-९९-३७ (९५५३१)
युधिष्ठिर उवाच।१४-९९-३८क्ष् (७९४८)
त्रैलोक्यनाथ हे कृष्ण सर्वभूतात्मको ह्यसि ।
नानायोगपर श्रेष्ठ तुष्यसे केन कर्मणा ॥१४-९९-३८ (९५५३२)
भागवानुवाच।१४-९९-३९क्ष् (७९४९)
यदि भारसहस्रं तु गुग्गुल्वादि प्रधूपयेत् ।
करोति चेन्नमस्कारमुपहारं च कारयेत् ॥१४-९९-३९ (९५५३३)
स्तौति यः स्तुतिभिर्मां च ऋग्यजुस्सामभिः सदा ।
न तोषयति चेद्विप्रान्नाहं तुष्यामि भारत ॥१४-९९-४० (९५५३४)
ब्राह्मणे पूजिते नित्यं पूजितोस्मि न संशयः ।

आक्रुष्टे चाहमाक्रुष्टो भवामि भरतर्षभ ॥१४-९९-४१ (९५५३५)
परा मयि गतिस्तेषां पूजयन्ति द्विजं हि ये ।
यदहं द्विजरूपेण वसामि वसुधातले ॥१४-९९-४२ (९५५३६)
यस्तान्पूजयति प्राज्ञो मद्गतेनान्तरात्मना ।
तमहं स्वेन रूपेण पश्यामि नरपुङ्गव ॥१४-९९-४३ (९५५३७)
कुब्जाः काणा वामनाश्च दरिद्रा व्याधितास्तथा ।
नावमान्या द्विजाः प्राज्ञैर्मम रूपा हि ते द्विजाः ॥१४-९९-४४ (९५५३८)
ये केचित्सागरान्तायां पृथिव्यां द्विजसत्तमाः ।
मम रूपं हि तेष्वेवमर्चितेष्वर्चितोऽस्म्यहम् ॥१४-९९-४५ (९५५३९)
बह्वस्तु न जानन्ति नरा ज्ञानबहिष्कृताः ।
यदहं द्विजरूपेण वसामि वसुधातले ॥१४-९९-४६ (९५५४०)
अवमन्यन्ति ये विप्रान्स्वधर्मान्पातयन्ति ते ।
प्रेषणैः प्रेषयन्ते च शुश्रूषां कारयन्ति च ॥१४-९९-४७ (९५५४१)
मृतांश्चात्र परत्रेमान्यमदूता महाबलाः ।
निकृन्तन्ति यथाकामं सूत्रमार्गेण शिल्पिनः ॥१४-९९-४८ (९५५४२)
आक्रोशपरिवादाभ्यां ये रमन्ते द्विजातिषु ।
तान्मृतान्यमलोकस्थान्निपात्य पृथिवीतले ॥१४-९९-४९ (९५५४३)
आक्रम्योरसि पादेन क्रूरः संरक्तलोचनः ।
अग्निवर्णैस्तु संदंशैर्यमो जिह्वां समुद्धरेत् ॥१४-९९-५० (९५५४४)
ये च विप्रान्निरीक्षन्ते पापाः पापेन चक्षुषा ।
अब्रह्मण्याः श्रुतेर्बाह्या नित्यं ब्रह्मद्विषो नराः ॥१४-९९-५१ (९५५४५)
तेषां घोरा महाकाया वक्रतुण्डा महाबलाः ।
उद्धरन्ति मुहूर्तेन स्वगाश्चक्षुर्यमाज्ञया ॥१४-९९-५२ (९५५४६)
यः प्रहारं द्विजेन्द्राय दद्यात्कुर्याच्च शोणितम् ।
अस्थिभङ्गं च यः कुर्यात्प्राणैर्वा विप्रयोजयेत् ।
सोनुपूर्व्येण यातीमान्नरकानेकविंशतिम् ॥ १४-९९-५३ (९५५४७)
शूलमारोप्यते पश्चाज्ज्वलने परिपच्यते ।
बहुवर्षसहस्राणि पच्यमानस्त्ववाक्छिराः ।
नावमुच्येत दुर्मेदा न तस्य क्षीयते गतिः ॥ १४-९९-५४ (९५५४८)
ब्राह्मणान्वा विचार्यैव व्रजन्तै वधकाङ्क्षया ।
शतवर्षसहस्राणि तामिस्रे परिपच्यते ॥१४-९९-५५ (९५५४९)
उत्पाद्य शोणितं गात्रात्संरंभमतिपूर्वकम् ।
सपर्ययेण यातीमान्नरकानेकविंशतिम् ॥१४-९९-५६ (९५५५०)
तस्मान्नाकुशलं ब्रूयान्न शुष्कां गतिमीरयेत् ।
न ब्रूयात्परुषां वाणीं न चैवैनानतिक्रमेत् ॥१४-९९-५७ (९५५५१)
ये विप्राञ्श्लक्ष्णया वाचा पूजयन्ति नरोत्तमाः ।

अर्चितश्च स्तुतश्चैव तैर्भवामि न संशयः ॥१४-९९-५८ (९५५५२)
तर्जयन्ति च ये विप्रान्क्रोशयन्ति च भारत ।
आक्रुष्टस्तर्जितश्चाहं तैर्भवामि न संशयः ॥१४-९९-५९ (९५५५३)
यश्चन्दनैश्चागरुधूपदीपै-
रभ्यर्चयेत्काष्ठमयीं ममार्चाम् ।
तेनार्चितो नैव भवामि सम्य-
ग्विप्रार्चनादस्मि समर्चितोऽहम् ॥ १४-९९-६० (९५५५४)
विप्रप्रसादाद्धरणीधरोऽहं
विप्रप्रसादादसुराञ्जयामि ।
विप्रप्रसादाच्च सदक्षिणोऽहं
विप्रप्रसादादजितोऽहमस्मि ॥ ॥ १४-९९-६१ (९५५५५)

इति श्रीमन्महाभारते आश्वमेधिकपर्वणि वैष्णवधर्मपर्वणि
एकोनशततमोऽध्यायः ॥९९ ॥

---

अस्वमेधिकपर्व-अध्यय१००
॥ श्रीः ॥
१४.१००. अध्यायः १००

Mahabharata - Ashvamedhika Parva - Chapter Topics
कृष्णेन युधिष्ठिरंप्रति
सुकृतिदुष्कृतिजनप्राप्यवैवस्वतपुरमार्गादिप्रतिपादनपूर्वकं
तेषां तद्गमनप्रकारानुवर्णनम् ॥१ ॥

Mahabharata - Ashvamedhika Parva - Chapter Text

युधिष्ठिर उवाच ।
देवदेवेश दैत्यघ्नि परं कौतूहलं हि मे ।
एतत्कथय सर्वज्ञ त्वद्भक्तस्य च केशव ।
मानुषस्य च लोकस्य धर्मलोकस्य चान्तरम् ॥ १४-१००-१ (९५५५६)
कीदृशं किंप्रमाणं वा किमधिष्ठानमेव च ।
तरन्ति मानुषा देव केनोपायेन माधव ॥१४-१००-२ (९५५५७)
त्वगस्थिमांसनिर्मुक्ते पञ्चभूतविवर्जिते ।
कथयस्व महादेव सुखदुःखमशेषतः ॥१४-१००-३ (९५५५८)
जीवस्य कर्मलोकेषु कर्मभिस्तु शुभाशुभैः ।
अनुबद्धस्य तैः पाशैर्नीयमानस्य दारुणैः ॥१४-१००-४ (९५५५९)

मृत्युदूतैर्दुराधर्षैर्घोरैर्घोरपरक्रमैः ।
वध्यस्याक्षिप्यमाणस्य विद्रुतस्य यमाज्ञया ॥१४-१००-५ (९५५६०)
पुण्यपापकृदातिष्ठेत्सुखदुःखमशेषतः ।
यमदूतैर्दुराधर्षैर्नीयते वा कथं पुनः ।
किं वा तत्र गता देव कर्म कुर्वन्ति मानवाः ॥ १४-१००-६ (९५५६१)
कथं धर्मपरा यान्ति देवताद्विजपूजकाः ।
कतं वा पापकर्माणो यान्ति प्रेतपुरं नराः ॥१४-१००-७ (९५५६२)
किं रूपं किं प्रमाणं वा वर्णः को वाऽस्य केशव ।
जीवस्य गच्छतो नित्यं यमलोकं ब्रवीहि मे ॥१४-१००-८ (९५५६३)
भगवानुवाच।१४-१००-९क्ष् (७९५०)
शृणु राजन्यथावृतं यन्मां त्वं परिपृच्छसि ।
तत्तेऽहं कथयिष्यामि मद्भक्तस्य नरेश्वर ॥१४-१००-९ (९५५६४)
षडशीतिसहस्राणि योजनानां युधिष्ठिर ।
मानुष्यस्य च लोकस्य यमलोकस्य चान्तरम् ॥१४-१००-१० (९५५६५)
न तत्र वृक्षच्छाया वा न तटाकं सरोपि वा ।
न वाप्यो दीर्घिका वाऽपि न कूपो वा युधिष्ठिर ॥१४-१००-११ (९५५६६)
न मण्टपं सभा वाऽपि न प्रपा न निकेतनम् ।
न पर्वतो नदी वाऽपि न भूमेर्विवरं क्वचित् ॥१४-१००-१२ (९५५६७)
न ग्रामो नाश्रमो वाऽपि नोद्यानं वा वनानि च ।
न किंचिदाश्रयस्थानं पथि तस्मिन्युधिष्ठिर ॥१४-१००-१३ (९५५६८)
जन्तोर्हि प्राप्तकालस्य वेदनार्तस्य वै भृशम् ।
कारणैस्त्यक्तदेहस्य प्राणैः कण्ठगतैः पुनः ॥१४-१००-१४ (९५५६९)
शरीराच्चाल्यते जीवो ह्यवशो मातरिश्वना ।
निर्गतो वायुभूतस्तु षट्कोशात्तु कलेवरात् ॥१४-१००-१५ (९५५७०)
शरीरमन्यत्तद्रूपं तद्वर्णं तत्प्रमाणतः ।
अदृश्यं तत्प्रविष्टस्तु सोप्यदृष्टोऽथ केनचित् ॥१४-१००-१६ (९५५७१)
सोन्तरात्मा देहवतामष्टाङ्गो यस्तु संचरेत् ।
छेदनाद्भेदनाद्दाहात्ताडनाद्वा न नश्यति। १४-१००-१७ (९५५७२)
नाना रूपधरैर्घोरैः प्रचण्डैश्चण्डसाधनैः ।
नीयमानो दुराधर्षैर्यमदूतैर्यमाज्ञया ॥१४-१००-१८ (९५५७३)
पुत्रदारमयैः पाशैः संनिरूद्धोऽवशो बलात् ।
स्वकर्मभिश्चानुगतः कृतैः सुकृतदुष्कृतैः ॥१४-१००-१९ (९५५७४)
आक्रन्दमानः करुणं बन्धुभिर्दुःखपीडितैः ।
त्यक्त्वा बन्धुजनं सर्वं निरपेक्षस्तु गच्छति ॥१४-१००-२० (९५५७५)
मातृभिः पितृभिश्चैव भ्रातृभिर्मातुलैस्तथा ।
दारैः पुत्रैर्वयस्यैश्च रुदद्भिस्त्यज्यते पुनः ॥१४-१००-२१ (९५५७६)

अदृश्यमानस्तैर्दीनैरश्रुपूर्णमुखेक्षणैः ।
स्वशरीरं परित्यज्य वायुभूतस्तु गच्छति ॥ १४-१००-२२ (९५५७७)
अन्धकारमपारं तं महाघेरं तमोवृतम् ।
दुःखान्तं दुष्प्रतारं च दुर्गमं पापकर्मणाम् ॥ १४-१००-२३ (९५५७८)
दुःसहायं दुरन्तं च दुर्निरीक्षं दुरासदम् ।
दुरापमतिदुःखं च पापिष्ठानां नरोत्तम ॥ १४-१००-२४ (९५५७९)
ऋषिभिः कथ्यमानं तत्पारंपर्येण पार्थिव ।
त्रासं जनचति प्रायः श्रूयमाणं कथास्वपि ॥ १४-१००-२५ (९५५८०)
अवश्यं चैव गन्तव्यं तदध्वानं युधिष्ठिर ।
प्राप्तकालेन संत्यज्य बन्धून्भोगान्धनानि च ॥ १४-१००-२६ (९५५८१)
जरायुजैरण्डजैश्च स्वेदजैरुद्भिदैस्तथा ।
जङ्गमैः स्थिरसंज्ञैश्च गन्तव्यं यमसादनम् ॥ १४-१००-२७ (९५५८२)
देवासुरैर्मनुष्याद्यैर्वैवस्वतवशानुगैः ।
स्त्रीपुंनपुंसकैश्चापि पृथिव्यां जीवसंज्ञितैः ॥ १४-१००-२८ (९५५८३)
मध्यमैर्युवभिर्वाऽपि बालैर्वृद्धैस्तथैव च ।
जातमात्रैश्च गर्भस्थैर्गन्तव्यः स महापथः ॥ १४-१००-२९ (९५५८४)
पूर्वाह्ने वाऽपराह्ने वा सन्ध्याकालेऽथवा पुनः ।
प्रदोषे वाऽर्धरात्रे वा प्रत्युषे वाऽप्युपस्थिते ॥ १४-१००-३० (९५५८५)
प्रवासस्थैर्वनस्थैर्वा पर्वतस्थैर्जले स्थितैः ।
क्षेत्रस्थैर्वा नभःस्थैर्वा गृहमध्यगतैरपि ॥ १४-१००-३१ (९५५८६)
भुञ्जद्भिर्वा पिबद्भिर्वा खादद्भिर्वा नरोत्तम ।
आसीनैर्वा स्थितैर्वापि शयनीयगतैरपि ।
जाग्रद्भिर्वा प्रसुप्तैर्वा गन्तव्यः स महापथः ॥ १४-१००-३२ (९५५८७)
मृत्युदूतैर्दुराधर्षैः प्रचण्डैश्चण्डसासनैः ।
आक्षिप्यमाणा ह्यवशाः प्रयान्ति यमसादनम् ॥ १४-१००-३३ (९५५८८)
क्वचिद्भीतैः क्वचिन्मत्तैः प्रस्खलद्भिः क्वचित्क्वचित् ।
क्रन्दद्भिर्वेदनार्तैस्तु गन्तव्यं यमसादनम् ॥ १४-१००-३४ (९५५८९)
निर्भत्स्र्यमानैरुद्विग्नैर्विधूतैर्भयविह्वलैः ।
तुद्यमानशरीरैश्च गन्तव्यं तर्जितैस्तथा ॥ १४-१००-३५ (९५५९०)
कण्टकाकीर्णमार्गेण तप्तवालुकपांसुना ।
दह्यमानैस्तु गन्तव्यं नरैर्दानविवर्जितैः ॥ १४-१००-३६ (९५५९१)
काष्ठोपलशिलाघातैर्दण्डोल्मुककशाङ्कुशैः ।
हन्यमानैर्यमपुरं गन्तव्यं धर्मवर्जितैः ॥ १४-१००-३७ (९५५९२)
मेदःशोणितपूयाद्यैर्वक्त्रैर्गात्रैश्च सव्रणैः ।
दग्धक्षतजकीर्णैश्च गन्तव्यं जीवघातकैः ॥ १४-१००-३८ (९५५९३)
वेदनार्तैस्च कूजद्भिर्विक्रोशद्भिश्च विस्वरम् ।

वेदनार्तैः पतद्भिश्च गन्तव्यं जीवघातकैः ॥ १४-१००-३९ (९५५९४)
भग्नपादोरुहस्तङ्गैर्भग्नजङ्घाशिरोधरैः ।
छिन्नकर्णोष्ठनासैश्च गन्तव्यं जीवघातकैः ॥ १४-१००-४० (९५५९५)
शक्तिभिर्भिण्डिपालैश्च शङ्कुतोमरसायकैः ।
तुद्यमानैस्तु शूलाग्रैर्गन्तव्यं जीवघातकैः ॥ १४-१००-४१ (९५५९६)
श्वभिर्व्याघ्रैर्वृकैः काकैर्भक्ष्यमाणाः समन्ततः ।
तुद्यमानाश्च गच्छन्ति राक्षसैर्मांसघातिभिः ॥ १४-१००-४२ (९५५९७)
महिषैश्च मृगैश्चापि सूकरैः पृषतैस्तथा ।
भक्ष्यमाणैस्तदध्वानं गन्तव्यं मांसखादिभिः ॥ १४-१००-४३ (९५५९८)
सूचीसुतीक्ष्णतुण्डाभिर्मक्षिकाभिः समन्ततः ।
तुद्यमानैश्च गन्तव्यं पापिष्ठैर्बालघातकैः ॥ १४-१००-४४ (९५५९९)
विस्रब्धं स्वामिनं मित्रं स्त्रियं वा घ्नन्ति ये नराः ।
शस्त्रैर्निर्भिद्यमानैश्च गन्तव्यं यमसादनम् ॥ १४-१००-४५ (९५६००)
खादयन्ति च ये जीवान्दुःखमापादयन्ति च ।
राक्षसैश्च श्वभिश्चैव भक्ष्यमाणा व्रजन्ति च ॥ १४-१००-४६ (९५६०१)
ये हरन्ति च वस्त्राणि शय्यां प्रावरणानि च ।
ते यान्ति विद्रुता नग्नाः पिशाचा इव तत्पथं ॥ १४-१००-४७ (९५६०२)
गाश्च धान्यं हिरण्यं वा बलात्क्षेत्रं गृहं तथा ।
ये हरन्ति दुरात्मानः परस्वं पापकारिणः ॥ १४-१००-४८ (९५६०३)
पाषाणैरुल्मुकैर्दण्डैः काष्ठघातैश्च चर्झरैः ।
हन्यमानैः क्षताकीर्णैर्नन्तव्यं तैर्यमालयम् ॥ १४-१००-४९ (९५६०४)
ब्रह्मस्वं ये हरन्तीह नरा नरकनिर्भयाः ।
आक्रोशन्तीह ये नित्यं प्रहरन्ति च ये द्विजान् ॥ १४-१००-५० (९५६०५)
शुष्ककण्ठा निबद्धास्ते छिन्नजिह्वाक्षिनासिकाः ।
पूयशोणितदुर्गन्धा भक्ष्यमाणाश्च जंबुकैः ॥ १४-१००-५१ (९५६०६)
चण्डालैर्भीषणैश्चण्डैस्तुद्यमानाः समन्ततः ।
क्रोशन्तः करुणं घोरं गच्छन्ति यमासादनम् ॥ १४-१००-५२ (९५६०७)
तत्र चापि गताः पापा विष्ठाकूपेष्वनेकशः ।
जीवन्तो वर्षकोटीस्तु क्लिश्यन्ते वेदनात्ततः ॥ १४-१००-५३ (९५६०८)
ततश्च मुक्ताः कालेन लोके चास्मिन्नराधमाः ।
विष्ठाक्रिमित्वं गच्छन्ति जन्मकोटिशतं नृप ॥ १४-१००-५४ (९५६०९)
विद्यमानधनैर्यैस्तु लोभडंभानृतान्वितैः ।
श्रोत्रियेभ्यो न दत्तानि दानानि कुरुपुङ्गव ॥ १४-१००-५५ (९५६१०)
ग्रीवापाशनिबद्धास्ते हन्यमानाश्च राक्षसैः ।
क्षुत्पिपासाश्रमार्तास्तु यान्ति प्रेतपुरं नराः ॥ १४-१००-५६ (९५६११)
अदत्तदाना गच्छन्ति शुष्ककण्ठास्यतालुकाः ।

अन्नं पानीयसहितं प्रार्थयन्तः पुनःपुनः ॥ १४-१००-५७ (९५६१२)
स्वामिन्बुभक्षातृष्णार्ता गन्तुं नैवाद्य शक्नुमः ।
ममान्नं दीयतां स्वामिन्पानीयं दीयतां मम ।
इति ब्रुवन्तस्तैर्दूतैः प्राप्यन्ते वै यमालयम् ॥ १४-१००-५८ (९५६१३)
वैशंपायन उवाच। १४-१००-५९क्ष् (७९५१)
तच्छ्रुत्वा वचनं विष्णोः पपात भुवि पाण्डवः ।
निस्संज्ञो भयसंत्रस्तो मूर्छया समभिप्लुतः ॥ १४-१००-५९ (९५६१४)
ततो लब्ध्वा शनैः संज्ञां समाश्वस्तोच्युतेन सः ।
नेत्रे प्रक्षाल्य तोयेन भूयः केशवमब्रवीत् ॥ १४-१००-६० (९५६१५)
भीतोस्म्यहं महादेव श्रुत्वा मार्गस्य विस्तरम् ।
केनोपायेन तं मार्गं तरन्ति पुरुषाः सुखम् ॥ १४-१००-६१ (९५६१६)
भगवानुवाच। १४-१००-६२क्ष् (७९५२)
इह ये धार्मिका लोके जीवगातविवर्जिताः ।
गुरुशुश्रूषणे युक्ता देवब्राह्मणपूजकाः ॥ १४-१००-६२ (९५६१७)
अस्मान्मानुष्यलोकात्ते समार्याः सहबान्धवाः ।
यमध्वानं तु गच्छन्ति यथावत्तं निबोध मे ॥ १४-१००-६३ (९५६१८)
ब्राह्मणेभ्यः प्रदानानि नानारूपाणि पाण्डव ।
ये प्रयच्छन्ति विप्रेभ्यस्ते सुखं यान्ति तत्फलम् ॥ १४-१००-६४ (९५६१९)
अन्नं ये च प्रयच्छन्ति ब्राह्मणेभ्यः सुसंस्कृतम् ।
क्षोत्रियेभ्यो विशेषेण प्रीत्या परमया युताः ॥ १४-१००-६५ (९५६२०)
ते विमानैर्महात्मानो यान्ति चित्रैर्यमालयम् ।
सेव्यमाना वरस्त्रीभिरप्सरोभिर्महापथम् ॥ १४-१००-६६ (९५६२१)
ये च नित्यं प्रभाषन्ते सत्यं निष्कल्मषं वचः ।
ते च यान्त्यमलाभ्राभैर्विमानैर्वृषयोजितैः ॥ १४-१००-६७ (९५६२२)
कपिलाद्यानि पुण्यानि गोप्रदानानि ये नराः ।
ब्राह्मणेभ्यः प्रयच्छन्ति श्रोत्रियेभ्यो विशेषतः ॥ १४-१००-६८ (९५६२३)
ते यान्त्यमलवर्णाभैर्विमानैर्वृषयोजितैः ।
वैवस्वतपुरं प्राप्य ह्यप्सरोभिर्निषेविताः ॥ १४-१००-६९ (९५६२४)
उपानहौ च च्छत्रं च शयनान्यासनानि च ।
विप्रेभ्यो ये प्रयच्छन्ति वस्त्राण्याभरणानि च ॥ १४-१००-७० (९५६२५)
ते यान्त्यश्वैर्वृषैर्वाऽपि कुञ्जरैरप्यलङ्कृताः ।
धर्मराजपुरं रम्यं सौवर्णच्छत्रशोभिताः ॥ १४-१००-७१ (९५६२६)
ये च भक्ष्याणि दास्यन्ति भोज्यं पेयं तथैव च ।
स्निग्धान्नान्यापि विप्रेभ्यः श्रद्धया परया युताः ॥ १४-१००-७२ (९५६२७)
ते यान्ति काञ्चनार्यानैः सुखं वैवस्वतालयम् ।
वरस्त्रीभिर्यथाकामं सेव्यमानाः सहस्रशः ॥ १४-१००-७३ (९५६२८)

ये च क्षीरं प्रयच्छन्ति घृतं दधि गुडं मधु ।
ब्राह्मणेभ्यः प्रयत्नेन श्रद्दधानाः सुसंस्कृताः ॥ १४-१००-७४ (९५६२९)
चक्रवाकप्रयुक्तैस्तु यानै रुक्ममयैः शुभैः ।
यान्ति गन्धर्ववादित्रैः सेव्यमाना यमालयम् ॥ १४-१००-७५ (९५६३०)
ये फलानि प्रयच्छन्ति पुष्पाणि सुरभीणि च ।
हंसयुक्तैर्विमानैस्तु यान्ति धर्मपुरं नराः ॥ १४-१००-७६ (९५६३१)
ये प्रयच्छन्ति विप्रेभ्यो विचित्रान्नं घृताप्लुतम् ।
ते व्रजनत्यमलाभ्राभैर्विमानैर्वायुवेगिभिः ।
पुरं तत्प्रेतनाथस्य नानाजनसमाकुलम्। १४-१००-७७ (९५६३२)
पानीयं ये प्रयच्छन्ति सर्वभूतप्रजीवनम् ।
ते सुतृप्ताः सुखं यान्ति भवनैर्हंसचोदितैः ॥ १४-१००-७८ (९५६३३)
ये तिलं तिलधेनुं वा धृतधेनुमथापि च ।
श्रोत्रियेभ्यः प्रयच्छन्ति सौम्यभावसमन्विताः ॥ १४-१००-७९ (९५६३४)
सूर्यमण्डलसंकाशैर्यानैस्ते यान्ति निर्मलैः ।
गीयमानैस्तु गन्धर्वैर्वैवस्वतपुरं नृप ॥ १४-१००-८० (९५६३५)
येषां वाप्यश्च कूपाश्च तटाकानि सरांसि च ।
दीर्घिकाः पुष्करिण्यश्च सजलाश्च जलाशयाः ॥ १४-१००-८१ (९५६३६)
यानैस्ते यान्ति चन्द्राभैर्दिव्यघण्टानिनादितैः ।
चामरैस्तालवृन्तैश्च वीज्यमाना महाप्रभाः ।
नित्यतृप्ता महात्मानो गच्छन्ति यमसादनम् ॥ १४-१००-८२ (९५६३७)
येषां देवगृहाणीह चित्राण्यायतनानि च ।
मनोहराणि कान्तानि दर्शनीयानि भान्ति च ॥ १४-१००-८३ (९५६३८)
ते व्रजन्त्यमलाभ्राभैर्विमानैर्वायुवेगिभिः ।
पुरं तत्प्रेतनाथस्य नानाजनपदाकुलम् ॥ १४-१००-८४ (९५६३९)
वैवस्वतं च पश्यन्ति सुखचित्तं सुखस्थितम् ।
यमेन पूजिता यान्ति देवसालोक्यतां ततः ॥ १४-१००-८५ (९५६४०)
देवानुद्दिश्य लोकेषु प्रपासु करकोद्धृतम् ।
शीतलं सलिलं रम्यं तृषितेभ्यो दिशन्ति ये ।
ते तु तृप्तिं परां यान्ति प्राप्य सौख्यं महापथम् ॥ १४-१००-८६ (९५६४१)
काष्ठपादुकदा यान्ति तदध्वानं सुखं नराः ।
सौवर्णमणिपीठे तु पादं कृत्वा स्थोत्तमे ॥ १४-१००-८७ (९५६४२)
आरामान्वृक्षषण्डांश्च रोपयन्ति च ये नराः ।
संवर्धयन्ति चाव्यग्रं फलपुष्पोपशोभितम् ॥ १४-१००-८८ (९५६४३)
वृक्षच्छायासु रम्यासु शीतलासु स्वलङ्कृताः ।
यान्ति ते वाहनैर्दिव्यैः पूज्यमाना मुहुर्मुहुः। १४-१००-८९ (९५६४४)
सेव्यमानाः सुरूपाभिरुत्तमाभिः प्रयत्नतः ।

स्त्रीभिः कनकवर्णाभिर्यथाकामं यथासुखम् ॥१४-१००-९० (९५६४५)
अश्वयानं तु गोयानं हस्तियानमथापि च ।
ये प्रयच्छन्ति विप्रेभ्यो विमानैः कनकोपमैः ॥१४-१००-९१ (९५६४६)
सुवर्णं रजतं वाऽपि विद्रुमं मौक्तिकं तथा ।
ये प्रयच्छन्ति ते यान्ति विमानैः कनकोज्ज्वलैः ।
ते व्रजन्ति वरस्त्रीभिः सेव्यमाना यथासुखम् ॥ १४-१००-९२ (९५६४७)
भूमिदा यान्ति तं लोकं सर्वकामैः सुतर्पिताः ।
उदितादित्यसंकाशैर्विमानैर्वृषयोजितैः ॥१४-१००-९३ (९५६४८)
कन्यां ये च प्रयच्छन्ति विप्राय श्रोत्रियाय च ।
दिव्यकन्यावृता यान्ति विमानैस्ते यमालयम् ॥१४-१००-९४ (९५६४९)
सुगन्धान्गान्धसंयोगान्पुष्पाणि सुरभीणि च ।
प्रयच्छन्ति द्विजाग्रेभ्यो भक्तया परमया युताः ॥१४-१००-९५ (९५६५०)
सुगन्धाः धर्मपुरं यानैर्विचित्रैरप्यलङ्कृताः ॥
यान्ति धर्मपुरं यानैर्विचित्रैरप्यलङ्कृताः ॥१४-१००-९६ (९५६५१)
दीपया यान्ति यानैश्च द्योतयन्तो दिशो दश ।
आदित्यसदृशाकारैर्दीप्यमाना इवाग्नयः ॥१४-१००-९७ (९५६५२)
गृहावसथदातारो गृहैः काञ्चनवेदिकैः ।
व्रजन्ति बालसूर्याभैर्धर्मराजपुरं नराः ॥१४-१००-९८ (९५६५३)
जलभाजनदातारः कुण्डिकाकरकप्रदाः ।
पूज्यमाना वरस्त्रीभिर्यान्ति तृप्ता महागजैः ॥१४-१००-९९ (९५६५४)
पादाभ्यङ्गं शिरोभ्यङ्गं पानं पादोदकं तथा ।
ये प्रयच्छन्ति विप्रेभ्यस्ते यान्त्यश्वैर्यमालयम् ॥१४-१००-१०० (९५६५५)
विश्रामायन्ति ये विप्राञ्श्रान्तानध्वनि कर्शितान् ।
चक्रवाकप्रयुक्तेन यान्ति यानेन तेऽपि च ॥१४-१००-१०१ (९५६५६)
स्वागतेन च यो विप्रान्पूजयेदासनेन च ।
स गच्छति तदध्वानं सुखं परमनिर्वृतः ॥१४-१००-१०२ (९५६५७)
नमो ब्रह्मण्यदेवेति यो मां दृष्ट्वाऽभिवादयेत् ।
व्रतीवं प्रयतो नित्यं स सुखं तत्पदं व्रजेत् ॥१४-१००-१०३ (९५६५८)
नमः सर्वसहाभ्यश्चेत्यभिख्याय दिनेदिने ।
नमस्करोति नित्यं गां स सुखं याति तत्पथं ॥१४-१००-१०४ (९५६५९)
नमोस्तु प्रियदत्तायेत्येवंवादी दिनेदिने ।
भूमिमाक्रमते प्रातः सयनादुत्थितश्च यः ॥१४-१००-१०५ (९५६६०)
सर्वकामैः स तृप्तात्मा सर्वभूषणभूषितः ।
याति यानेन दिव्येन सुकं वैवस्वतालयम् ॥१४-१००-१०६ (९५६६१)
अनत्तराशिनो ये तु डंभानृतविवर्जिताः ।
तेऽपि सारसयुक्तेन यान्ति यानेन वै सुखम् ॥१४-१००-१०७ (९५६६२)

ये चाप्येकेन भुक्तेन डंभानृतविवर्जिताः ।
हंसयुक्तैर्विमानैस्तु सुखं यान्ति यमालयम् ॥१४-१००-१०८ (९५६६३)
चतुर्थेन च भुक्तेन वर्तन्ते ये जितेन्द्रियाः ।
यान्ति ते धर्मनगरं यानैर्बर्हिणयोजितैः ॥१४-१००-१०९ (९५६६४)
तृतीयदिवसेनेह भुञ्जते ये जितेन्द्रियाः ।
तेऽपि हस्तिरथं यान्ति तत्पथं कनकोज्ज्वलैः ॥१४-१००-११० (९५६६५)
षष्ठान्नकालिको यस्तु वर्षमेकं तु वर्तते ।
कामक्रोधविनिर्मुक्तः शुचिर्नित्यं जितेन्द्रियः ।
स याति कुञ्जरस्थैस्तु जयशब्दरवैर्युतः ॥ १४-१००-१११ (९५६६६)
पक्षोपवासिनो यान्ति यानैः शार्दूलयोजितैः ।
धर्मराजपुरं रम्यं दिव्यस्त्रीगणसेवितम् ॥१४-१००-११२ (९५६६७)
ये च मासोपवासं वै कुर्वते संयतेन्द्रियाः ।
तेऽपि सूर्यादयप्रख्यैर्यान्ति यानैर्यमालयम् ॥१४-१००-११३ (९५६६८)
अग्निप्रवेशं यश्चापि कुरुते मद्गतात्मना ।
स यात्यग्निप्रकाशेन विमानेन यमालयम् ॥१४-१००-११४ (९५६६९)
गोकृते स्त्रीकृते चैव हत्वा विप्रकृतेऽपि च ।
ते यान्त्यमरकन्याभिः सेव्यमाना रविप्रभाः ॥१४-१००-११५ (९५६७०)
ये च कुर्वन्ति मद्भक्तास्तीर्थयात्रां जितेन्द्रियाः ।
ते पन्थानं महात्मानो यानैर्यान्ति सुनिर्वृताः ॥१४-१००-११६ (९५६७१)
ये यजन्ति द्विजश्रेष्ठाः क्रतुभिर्भूरिदक्षिणैः ।
हंससारससंयुक्तैर्यानैस्ते यान्ति तत्पथम् ॥१४-१००-११७ (९५६७२)
परपीडामकृत्वैव भृत्यान्बिभ्रति ये नराः ।
तत्पथं ससुखं यान्ति विमानैः काञ्चनोज्ज्वलैः ॥१४-१००-११८ (९५६७३)
ये समाः सर्वभूतेषु जीवानामभयप्रदाः ।
क्रोधलोभविनिर्मुक्ता निगृहीतेन्द्रियास्तथा। १४-१००-११९ (९५६७४)
पूर्णचन्द्रप्रतीकाशैर्विमानैस्ते महाप्रभाः ।
यान्ति वैवस्वतपुरं देवगन्धर्वसेविताः ॥१४-१००-१२० (९५६७५)
ये मामेकान्तभावेन देवं त्र्यंबकमेव वा ।
पूजयन्ति नमस्यन्ति स्तुवन्ति च दिनेदिने ।
धर्मराजपुरं यान्ति यानैस्तेऽर्कसमप्रभैः ॥ १४-१००-१२१ (९५६७६)
पूजितास्तत्र धर्मेण स्वयं माल्यादिभिः शुभैः ।
यान्त्येव धर्मलोकं वा रुद्रलोकमथापि वा ॥ ॥१४-१००-१२२ (९५६७७)

इति श्रीमन्महाभारते आश्वमेधिकपर्वणि वैष्णवधर्मपर्वणि
शततमोऽध्यायः ॥१०० ॥

अस्वमेधिकपर्व-अध्यय१०१
॥ श्रीः ॥
१४.१०१. अध्यायः १०१

Mahabharata - Ashvamedhika Parva - Chapter Topics
कृष्णेन युधिष्टिरंप्रति जलदानान्नदानफलप्रशंसनम् ॥ १ ॥
तथाऽतिथिलक्षणकथनपूर्वकं तत्पूजाफलकथनम् ॥ २ ॥

Mahabharata - Ashvamedhika Parva - Chapter Text

वैशंपायन उवाच ।
श्रुत्वा यमपुराध्वानं जीवानां गमनं तथा ।
धर्मपुत्रः प्रहृष्टात्मा केशवं पुनरब्रवीत् ॥ १४-१०१-१ (९५६७८)
देवदेवेश दैत्यघ्न ऋषिसङ्घैरभिष्टुत ।
भगवन्भवहञ्श्रीमन्सहस्रादित्यसन्निभ ॥ १४-१०१-२ (९५६७९)
सर्वसंभव धर्मज्ञ सर्वधरमप्रवर्तक ।
सर्वदानफलं सौम्य कथयस्व ममाच्युत ॥ १४-१०१-३ (९५६८०)
दानं देयं कथं कृष्ण कीदृशाय द्विजाय वै ।
कीदृशं वा तपः कृत्वा तत्फलं कुत्र भुज्यते ॥ १४-१०१-४ (९५६८१)
एवमुक्तो हृषीकेशो धर्मपुत्रेण धीमता ।
उवाच धर्मपुत्राय पुण्यान्धर्मान्महोदयान् ॥ १४-१०१-५ (९५६८२)
शृणुष्वावहितो राजन्पूतं पापघ्नमुत्तमम् ।
सर्वदानफलं सौम्य न श्राव्यं पापकर्मणम् ॥ १४-१०१-६ (९५६८३)
यच्छ्रुत्वा पुरुषः स्त्री वा नष्टपापः समाहितः ।
तत्क्षणात्पूततां याति पापकर्मरतोपि वा ॥ १४-१०१-७ (९५६८४)
एकाहमपि कौन्तेय भूमावुत्पादितं जलम् ।
सप्त तारयते पूर्वान्वितृष्णा यत्र गौर्भवेत् ॥ १४-१०१-८ (९५६८५)
पानीयं परमं लोके जीवानां जीवनं स्मृतम् ।
पानीयस्य प्रदानेन तृप्तिर्भवति पाण्डव ।
पानीयस्य गुणा दिव्याः परलोके गुणावहाः ॥ १४-१०१-९ (९५६८६)
तत्र पुष्पोदकी नाम नदी परमपावनी ।
कामान्ददाति राजेन्द्र तोयदानां यमालये ॥ १४-१०१-१० (९५६८७)
शीतलं सलिलं ह्यत्र ह्यक्षय्यममृतोपमम् ।
शीततोयप्रदातॄणां भवेन्नित्यं सुखावहम् ॥ १४-१०१-११ (९५६८८)
ये चाप्यतोयदातारः पूयस्तेषां विधीयते। १४-१०१-१२ (९५६८९)
प्रणश्यत्यंबुपानेन बुभुक्षा च युधिष्ठिर ।

तृपीषस्य न चान्नेन पिपासाऽपि प्रणश्यति ।
तस्मात्तोयं सदा देयं तृषितेभ्यो विजानता। १४-१०१-१३ (९५६९०)
अग्नेर्मूर्तिः क्षितेर्योनिरमृतस्य स संभवः ।
अतोंभः सर्वभूतानां मूलमित्युच्यते बुधैः ॥१४-१०१-१४ (९५६९१)
अद्भिः सर्वाणि भूतानि जीवन्ति प्रभवन्ति च ।
तस्मात्सर्वेषु दानेषु तोयदानं विशिष्यते ॥१४-१०१-१५ (९५६९२)
सर्वदानतपोयज्ञैर्यत्प्राप्यं फलमुत्तमम् ।
तत्सर्वं तोयदानेन प्राप्यते नात्र संशयः ॥१४-१०१-१६ (९५६९३)
ये प्रयच्छन्ति विप्रेभ्यस्त्वन्नदातं सुसंस्कृतम् ।
तैस्तु दत्ताः स्वयं प्राणा भवन्ति भरतर्षभ ॥१४-१०१-१७ (९५६९४)
अन्नाद्रक्तं च शुक्लं च अन्ने जीवः प्रतिष्ठितः ।
इन्द्रियाणि च बुद्धिश्च पुष्णन्त्यन्नेन नित्यशः ।
अन्नहीनानि सीदन्ति सर्वभूतानि पाण्डव ॥ १४-१०१-१८ (९५६९५)
तेजो बलं च रूपं च सत्वं वीर्यं धृतिर्द्युतिः ।
ज्ञानं मेधा तथाऽऽयुश्च सर्वमन्ने प्रतिष्ठितम् ॥१४-१०१-१९ (९५६९६)
देवमानवतिर्यक्षु सर्वलोकेषु सर्वदा ।
सर्वकालं हि सर्वेषां सर्वमन्ने प्रतिष्ठितम् ॥१४-१०१-२० (९५६९७)
अन्नं प्रजापते रूपमन्नं प्रजननं स्मृतम् ।
सर्वभूतमयं चान्नं जीवश्चान्नमयः स्मृतः ॥१४-१०१-२१ (९५६९८)
अन्नेनाधिष्ठितः प्राण अपानो व्यान एव च ।
उदानश्च समानश्च धारयन्ति शरीरिणम् ॥१४-१०१-२२ (९५६९९)
शयनोत्थानगमनग्रहणाकर्षणानि च
सर्वसत्वकृतं क्रम चान्नादेव प्रवर्तते ॥ १४-१०१-२३ (९५७००)
चतुर्विधानि भूतानि जङ्गमानि स्थिराणि च ।
अन्नाद्भवन्ति राजेन्द्र सृष्टिरेषा प्रजापतेः ॥१४-१०१-२४ (९५७०१)
विद्यास्थानानि सर्वाणि सर्वयज्ञाश्च पावनाः ।
अन्नाद्यस्मात्प्रवर्तन्ते तस्मादन्नं परं स्मृतम् ॥१४-१०१-२५ (९५७०२)
देवा रुद्रादयः सर्वे पितरोऽप्यग्नयस्तथा ।
यस्मादन्नेन तुष्यन्ति तस्मादन्नं विशिष्यते ॥१४-१०१-२६ (९५७०३)
यस्मादन्नात्प्रजाः सर्वाः कल्पेकल्पेऽसृजत्प्रभुः ।
तस्मादन्नात्परं दानं न भूतं न भविष्यति ॥१४-१०१-२७ (९५७०४)
यस्मादन्नात्प्रवर्तन्ते धर्मार्थौ काम एव च ।
तस्मादन्नात्परं दानं नामुत्रेह च पाण्डव ॥१४-१०१-२८ (९५७०५)
यक्षरक्षोग्रहा नागा भूतान्यन्ते च दानवाः ।
तुष्यन्त्यन्नेन यस्मात्तु तस्मादन्नं परं भवेत् ॥१४-१०१-२९ (९५७०६)
परान्नमुपभुञ्जनो यत्कर्म कुरुते शुभम् ।

तच्छुभस्यैकभागस्तु कर्तुर्भवति भारत ॥१४-१०१-३० (९५७०७)
अन्नदस्य त्रयो भागा भन्ति पुरुषर्षभ ।
तस्यादन्नं प्रदातव्यं ब्राह्मणेभ्यो विशेषतः ॥१४-१०१-३१ (९५७०८)
ब्राह्मणाय दरिद्राय योऽन्नं संवत्सरं नृप ।
श्रोत्रियाय प्रयच्छेद्वै पाकभेदविवर्जितः ॥१४-१०१-३२ (९५७०९)
डंभानृतविमुक्तस्तु परां भक्तिमुपागतः ।
स्वधर्मेणार्जितफलं तस्य पुण्यफलं शृणु ॥१४-१०१-३३ (९५७१०)
शतवर्षसहस्राणि कामगः कामरूपधृत् ।
मोदतेऽमरलोकस्थः पूज्यमानोप्सरोगणैः ।
ततश्चापि च्युतः कालान्नरलोके द्विजो भवेत् ॥ १४-१०१-३४ (९५७११)
अग्नभिक्षां च यो दद्याद्दरिद्राय द्विजातये ।
षण्मासान्वार्षिकं श्राद्दं तस्य पुण्यफलं शृणु ॥१४-१०१-३५ (९५७१२)
गोसहस्रप्रदानेन यत्पुण्यं समुदाहृतम् ।
तत्प्रण्यफलमाप्नोति नरो वै नात्र संशयः ॥१४-१०१-३६ (९५७१३)
अथ संवत्सरं दद्यादग्रभिक्षामयाचते ।
प्रच्छद्यैव स्वयं नीत्वा तस्य पुण्यफलं शृणु ॥१४-१०१-३७ (९५७१४)
कपिलानां सहस्रैस्तु यद्देयं पुण्यमुच्यते ।
तत्सर्वमखिलं प्राप्य शक्रलोके महीयते ॥१४-१०१-३८ (९५७१५)
स शक्रभवने रम्ये र्षिकोटिशतं नृप ।
यथाकामं महातेजाः क्रीडत्यप्सरसांगणैः ॥१४-१०१-३९ (९५७१६)
अन्नं च यस्तु वै दद्याद्द्विजाय नियतव्रतः ।
दशवर्षामि राजेन्द्र तस्य पुण्यफलं शृणु ॥१४-१०१-४० (९५७१७)
कपिला शतसहस्रस्य विधिदत्तस्य यत्फलम् ।
तत्पुण्यफलमासाद्य पुरन्दरपुरं व्रजेत् ॥१४-१०१-४१ (९५७१८)
स शक्रभवने रम्ये कामरूपी यथासुखम् ।
शतकोटिसमा राजन्क्रीडतेऽमरपूजितः ॥१४-१०१-४२ (९५७१९)
शक्रलोकावतीर्णश्च इह लोके महाद्युतिः ।
चतुर्वेदी द्विजः श्रीमाञ्जायते राजपूजितः ॥१४-१०१-४३ (९५७२०)
अध्वश्रान्ताय विप्राय क्षुधितायान्नकाङ्क्षिणे ।
देशकालाभियाताय दीयते पाण्डुनन्दन ॥१४-१०१-४४ (९५७२१)
याचतेऽन्नं न दद्याद्यो विद्यामाने धनागमे ।
स लुब्धो नरकं याति कृमीणां कालसूत्रकम् ॥१४-१०१-४५ (९५७२२)
तत्र नरके घोरे लोभमोहविचेतनः ।
दशरव्षसहस्राणि क्लिश्यते वेदनार्दितः ॥१४-१०१-४६ (९५७२३)
तस्माच्च नरकान्मुक्तः कालेन महता हि सः ।
दरिद्रो मानुषे लोके चण्डालेष्वपि जायते। १४-१०१-४७ (९५७२४)

यस्तु पांसुलपादश्च दूराध्वश्रमकर्शितः ।
क्षुत्पिपासाश्रमश्रान्त आर्तः खिन्नगतिर्द्विजः ॥१४-१०१-४८ (९५७२५)
पृच्छन्वै ह्यन्नदातारं गृहमभ्येत्य याचयेत् ।
तं पूजयेत्तु यत्नेन सोऽतिथिः स्वर्गसंक्रमः ।
तस्मिंस्तुष्टे नरश्रेष्ठ तुष्टाः स्युः सर्वदेवताः ॥ १४-१०१-४९ (९५७२६)
न तथा हविषा होमैर्न पुष्पैर्नानुलेपनैः ।
अग्नयः पार्थ तुष्यन्ति यथा ह्यतिथिपूजनात् ॥१४-१०१-५० (९५७२७)
कपिलायां तु दत्तायां विधिवज्ज्येष्ठपुष्करे ।
न तत्फलमवाप्नोति यत्फलं विप्रबोजनान्। १४-१०१-५१ (९५७२८)
द्विजपादोदकक्लिन्ना यावत्तिष्ठति मेदिनी ।
तावत्पुष्करपत्रेण पिबन्ति पितरो जलम् ॥१४-१०१-५२ (९५७२९)
देवमाल्यापनयनं द्विजोच्छिष्टापमार्जनम् ।
श्रान्तसंवाहनं चैव तथा पादावसेचनम् ॥१४-१०१-५३ (९५७३०)
प्रतिश्रयप्रदानं च तथा शय्यासनस्य च ।
एकैकं पाण्डवश्रेष्ठ गोप्रदानाद्विशिष्यते ॥१४-१०१-५४ (९५७३१)
पादोदकं पादघृतं दीपमन्नं प्रतिश्रयम् ।
ये प्रयच्छन्ति विप्रेभ्यो नोपसर्पन्ति ते यमम् ॥१४-१०१-५५ (९५७३२)
विप्रातिथ्ये कृते राजन्भक्त्या शुश्रूषितेऽपि च ।
देवाः शुश्रूषिताः सर्वे त्रयस्त्रिंशदरिन्दम ॥१४-१०१-५६ (९५७३३)
अभ्यागतो ज्ञातपूर्वो ह्यज्ञातोऽतिथिरुच्यते ।
तयोः पूजां द्विजः कुर्यादिति पौराणिकी श्रुतिः ॥१४-१०१-५७ (९५७३४)
पादाभ्यङ्गान्नपानैस्तु योऽतिथिं पूजयेन्नरः ।
पूजितस्तेन राजेन्द्र भवामीह न संशयः ॥१४-१०१-५८ (९५७३५)
शीघ्रं पापाद्विनिर्मुक्तो मया चानुग्रहीकृतः ।
विमानेनेन्दुकल्पेन मम लोकं स गच्छति ॥१४-१०१-५९ (९५७३६)
अभ्यागतं श्रान्तमनुव्रजन्ति
देवाश्च सर्वे पितरोऽग्नयश्च ।
तस्मिन्द्विजे पूजिते पूजिताः स्यु-
र्गते निराशाः पितरो व्रजन्ति ॥ १४-१०१-६० (९५७३७)
अतिथिर्यस्य भग्नाशो गृहात्प्रतिनिवर्तते ।
पितरस्तस्य नाश्नन्ति दशवर्षणि पञ्च च ॥१४-१०१-६१ (९५७३८)
वर्जितः पितृभिर्लुब्धः स देवैरग्निभिः सह ।
निरयं रौरवं गत्वा दशवर्षाणि पञ्च च ।
ततश्चापि च्युतः कालादिह चोच्छिष्टभुग्भवेत् ॥ १४-१०१-६२ (९५७३९)
वैश्वदेवान्तिके प्राप्तमतिथिं यो न पूजयेत् ।
चण्डालत्वमवाप्नोति सद्य एव न संशयः ॥१४-१०१-६३ (९५७४०)

निर्वासयति यो विप्रं देशकालगतं गृहात् ।
पतितस्तत्क्षणादेव जायते नात्र संशयः ॥१४-१०१-६४ (९५७४१)
नरके रौरवे घोरे वर्षकोटिं स पच्यते ।
ततश्चापि च्युतः कालादिह लोके नराधमः ।
श्वा वै द्वादशजन्मानि जायते क्षुत्पिपासितः ॥ १४-१०१-६५ (९५७४२)
चण्डालोप्यतिथिः प्राप्तो देशकालेऽन्नकाङ्क्षयाः ।
अभ्युद्गम्यो गृहस्थेन पूजनीयश्च सर्वदा ॥१४-१०१-६६ (९५७४३)
अनर्चयित्वा योऽश्नाति लोभमोहविचेतनः ।
स चण्डालत्वमापन्नो दश जन्मानि पाण्डव ॥१४-१०१-६७ (९५७४४)
निराशमतिथिं कृत्वा भुञ्जनो यः प्रहृष्टवान् ।
न जानाति किलात्मानं विष्ठकूपे निपातितं ॥१४-१०१-६८ (९५७४५)
मोघं ध्रुवं प्रोर्णयति मोघमस्य तु पच्यते ।
मोघमन्नं सदाऽश्नाति योतिथिं न च पूजयेत् ॥१४-१०१-६९ (९५७४६)
साङ्गोपाङ्गांस्तु यो वेदान्पठतीह दिनेदिने ।
न चातिथिं पूजयति वृथा भवति स द्विजः ॥१४-१०१-७० (९५७४७)
पाकयज्ञमहायज्ञैः सोमसंस्थाभिरेव च ।
ये यजन्ति न चार्चन्ति गृहेष्वतिथिमागतम् ॥१४-१०१-७१ (९५७४८)
तेषां यशोभिकामानां दत्तमिष्टं च यद्भवेत् ।
वृथा भवति तत्सर्वमाशया हि तया हतम् ॥१४-१०१-७२ (९५७४९)
देशं कालं च पात्रं च स्वशक्तिं च निरीक्ष्य च ।
अल्पं समं महद्वापि कुर्यादातिथ्यमात्मवान् ॥१४-१०१-७३ (९५७५०)
सुमुखः सुप्रसन्नात्मा धीमानतिथिमागतम् ।
स्वागतेनासनेनाद्भिरन्नाद्येन च पूजयेत् ॥१४-१०१-७४ (९५७५१)
हितः प्रियो वा द्वेष्यो वा मूर्खः पण्डित एव वा ।
प्राप्तो यो वैश्वदेवान्ते सोतिथिः स्वर्गसंक्रमः ॥१४-१०१-७५ (९५७५२)
क्षुत्पिपासाश्रमार्ताय देशकालगताय च ।
सत्कृत्यान्नं प्रदातव्यं यज्ञस्य फलमिच्छता ॥१४-१०१-७६ (९५७५३)
भोजयेदात्मनः श्रेष्ठान्विधइवद्धव्यकव्ययोः ।
अन्नं प्राणो मनुष्यणामन्नदः प्राणदो भवेत् ।
तस्मादन्नं विशेषेण दातव्यं भूतिमिच्छता ॥ १४-१०१-७७ (९५७५४)
अन्नदः सर्वकामैस्तु सुतृप्तः सुष्टवलङ्कृतः ।
पूर्णचन्द्रप्रकाशेन विमानेन विराजते ॥१४-१०१-७८ (९५७५५)
सेव्यमानो वरस्त्रीभिर्मम लोकं स गच्छति ।
क्रीडित्वा तु ततस्तस्मिन्वर्षकोटिं यथाऽमरः ॥१४-१०१-७९ (९५७५६)
ततस्चापि च्युतः कालादिह लोके महायशाः ।
वेदशास्त्रार्थतत्वज्ञो भोगवान्ब्राह्मणो भवेत् ॥१४-१०१-८० (९५७५७)

यथाश्रद्धं तु यः कुर्यान्मनुष्येषु प्रजायते ।
महाधनपतिः श्रीमान्वेदवेदाङ्गपारगः ।
सर्वशास्त्रार्थतत्वज्ञो भोगवान्ब्राह्मणो भवेत् ॥ १४-१०१-८१ (९५७५८)
सर्वातिथ्यं तु यः कुर्याद्वर्षमेकमकल्मषः ।
धर्मार्जितधनो भूत्वा पाकभेदविवर्जितः ॥ १४-१०१-८२ (९५७५९)
देवानिव स्वयं विप्रानर्चयित्वा पितॄनपि ।
विप्रानग्राशनाशी यस्तस्य पुण्यफलं शृणु ॥ १४-१०१-८३ (९५७६०)
वर्षेणैकेन यावन्ति पिण्डान्यश्नन्ति ये द्विजाः ।
तावद्वर्षाणि राजेन्द्र मम लोके महीयते ॥ १४-१०१-८४ (९५७६१)
ततश्चापि च्युतः कालादिह लोके महायशाः ।
वेदसास्त्रार्थतत्वज्ञो भोगवान्ब्राह्मणो भवेत् ॥ १४-१०१-८५ (९५७६२)
सर्वातिथ्यं तु यः कुर्याद्यथाश्रद्धं नरेश्वर ।
अकालनियमेनापि सत्यवादी जितेन्द्रियः ॥ १४-१०१-८६ (९५७६३)
सत्यसन्धो चितक्रोधः शाखाधर्मविवर्जितः ।
अधर्मभीरुर्धर्मिष्ठो मायामात्सर्यवर्जितः ॥ १४-१०१-८७ (९५७६४)
श्रद्दधानः सुचिर्नित्यं पाकबेदविवर्जितः ।
स विमानेन दिव्येन दिव्यरूपी महायशाः ॥ १४-१०१-८८ (९५७६५)
पुरन्दरपुरं याति गीयमानोप्सरोगणैः ।
मन्वन्तरं तु तत्रैव क्रीडित्वा देवपूजितः ।
मानुष्यलोकमागम्य भोगवान्ब्राह्मणो भवेत् ॥ १४-१०१-८९ (९५७६६)
दशजन्मानि विप्रत्वमाप्नुयाद्राजपूजितः ।
जातिस्मरश्च भवति यत्रयत्रोपजायते ॥ ॥ १४-१०१-९० (९५७६७)

इति श्रीमन्महाभारते आश्वमेधिकपर्वणि वैष्णवधर्मपर्वणि
एकाधिकशततमोऽध्यायः ॥ १०१ ॥

---

अस्वमेधिकपर्व-अध्यय१०२
॥ श्रीः ॥
१४.१०२. अध्यायः १०२

Mahabharata - Ashvamedhika Parva - Chapter Topics
कृष्णेन युधिष्टिरंप्रति भूगोतिलकन्यादानफलप्रतिपादनम् ॥ १ ॥

Mahabharata - Ashvamedhika Parva - Chapter Text

भगवानुवाच ।

अतः परं प्रवक्ष्यामि भूमिदानमनुत्तमम् ॥ १४-१०२-१ (९५७६८)
यः प्रयच्छति विप्राय भूमिं रम्यां सदक्षिणाम् ।
श्रोत्रियाय दरिद्राय साग्निहोत्राय पाण्डव ॥१४-१०२-२ (९५७६९)
स सर्वकामतृप्तात्मा सर्वरत्नविभूषितः ।
सर्वपापविनिर्मुक्तो दीप्यमानोऽर्कवत्सदा ॥१४-१०२-३ (९५७७०)
बालसूर्यप्रकाशेन विचित्रध्वजशोभिना ।
याति यानेन दिव्येन मम लोकं महायशाः ॥१४-१०२-४ (९५७७१)
तत्र दिव्याङ्गनाभिस्तु सेव्यमानो यथासुखम् ।
कामगः कामरूपी च क्रीडत्यप्सरसांगणैः ॥१४-१०२-५ (९५७७२)
यावद्बिभर्ति लोकान्वै भूमिः कुरुकुलोद्वह ।
तावद्भूमिप्रदः काले मम लोके महीयते ॥१४-१०२-६ (९५७७३)
न हि भूमिप्रदानाद्वै दानमन्यद्विशिष्यते ।
न चापि भूमिहरणात्पापमान्यद्विशिष्यते ॥१४-१०२-७ (९५७७४)
दानान्यन्यानि हीयन्ते कालेन कुरुपुङ्गव ।
भूमिदानस्य पुण्यस्य क्षयो नैवोपपद्यते ॥१४-१०२-८ (९५७७५)
ब्राह्मणाय दरिद्राय भूमिं दत्तां तु यो नरः ।
न हिंसति नरव्याघ्र तस्य पुण्यफलं शृणु ॥१४-१०२-९ (९५७७६)
सप्तद्वीपसमुद्रान्ता रत्नसंचयसंकुला ।
सशैलवनदुर्गाढ्या तेन दत्ता मही भवेत् ॥१४-१०२-१० (९५७७७)
भूमिं दृष्ट्वा दीयमानां श्रोत्रियायाग्निहोत्रिणे ।
सर्वभूतानि मन्यन्ते मां ददातीति हर्षवत् ॥१४-१०२-११ (९५७७८)
सुवर्णमणिरत्नानि धनानि च वसूनि च ।
सर्वदानानि वै राजन्ददाति वसुधां ददत् ॥१४-१०२-१२ (९५७७९)
सागरान्सरितः शैलान्समानि विषमाणि च ।
सर्वगन्धरसांश्चैव ददाति वसुधां ददत् ॥१४-१०२-१३ (९५७८०)
ओषधीः फलसंपन्ना नानापुष्पसमन्विताः ।
कमलोत्पलषण्डांश्च ददाति वसुधां ददत् ॥१४-१०२-१४ (९५७८१)
धर्मं कामं तथा चार्थं वेदान्यज्ञांस्तथैव च ।
स्वर्गमार्गगतिं चैव ददाति वसुधां ददत् ॥१४-१०२-१५ (९५७८२)
अग्निष्टोमादिभिर्यज्ञैर्ये यजन्ते सदक्षिणैः ।
न तत्फलं लभन्ते ते भूमिदानस्य यत्फलम् ॥१४-१०२-१६ (९५७८३)
श्रोत्रिया महीं दत्त्वा यो न हिंसति पाण्डव ।
तद्दानं कथयिष्यन्ति यावल्लोकाः प्रतिष्ठिताः ।
तावत्स्वर्गोपभोगानां भोक्तारः पाण्डुनन्दन ॥ १४-१०२-१७ (९५७८४)
सस्यपूर्णां महीं यस्तु श्रोत्रियाय प्रयच्छति ।
पितरस्तस्य तृप्यन्ति यावदाभूतसंप्लुवम् ॥१४-१०२-१८ (९५७८५)

मम रुद्रस्य सवितुस्त्रिदशानां तथैव च ।
प्रीतये विद्धि राजेन्द्र भूमिर्दत्ता द्विजाय वै ॥१४-१०२-१९ (९५७८६)
तेन पुण्येन पूतात्मा दाता भूमेर्युधिष्ठिर ।
मम सालोक्यमाप्नोति नात्र कार्या विचाराणा ॥१४-१०२-२० (९५७८७)
यत्किंचित्कुरुते पापं पुरुषे वृत्तिकर्शितः ।
स च गोकर्णमात्रेण भूमिदानेन शुध्यति ॥१४-१०२-२१ (९५७८८)
मासोपवासे यत्पुण्यं कृच्छ्रे चान्द्रायणेऽपि च ।
भूमिगोकर्णमात्रेण तत्पुण्यं तु विधीयते ॥१४-१०२-२२ (९५७८९)
सर्वतीर्थाभिषेके च यत्पुण्यं समुदाहृतम् ।
भूमिगोकर्णमात्रेण तत्पुण्यं तु विधीयते ॥१४-१०२-२३ (९५७९०)
युधिष्ठिर उवाच।१४-१०२-२४क्ष् (७९५३)
देवदेव नमस्तेऽस्तदु वासुदेव सुरेश्वर ।
गोकर्णस्य प्रमाणं वै वक्तुमर्हसि तत्वतः ॥१४-१०२-२४ (९५७९१)
भगवानुवाच।१४-१०२-२५क्ष् (७९५४)
शृणु गोकर्णमात्रस्य प्रमाणं पाण्डुनन्दन ।
त्रिंशद्दण्डप्रमाणेन प्रमितं सर्वतो दिशम् ॥१४-१०२-२५ (९५७९२)
प्रत्यक्प्रागपि राजेन्द्र तत्तथा दक्षिणोत्तरम् ।
गोकर्णं तद्विदः प्राहुः प्रमाणं धरणेर्नृप ॥१४-१०२-२६ (९५७९३)
सवृषं गोशतं यत्र सुखं तिष्ठत्ययन्त्रितम् ।
सवत्सं कुरुशार्दूल तच्च गोकर्णमुच्यते ॥१४-१०२-२७ (९५७९४)
किंकरा मृत्युदण्डाश्च कुंभीपाकाश्च दारुणाः ।
घोराश्च वारुणाः पाशा नोपसर्पन्ति भूमिदम् ॥१४-१०२-२८ (९५७९५)
निरया रौरवाद्याश्च तथा वैतरणी नदी ।
तीव्राश्च यातनाः कृष्टा नोपसर्पन्ति भूमिदम् ॥१४-१०२-२९ (९५७९६)
चित्रगुप्ताः कलिः कालः कृतान्तो मृत्युरेव च ।
यमश्च भगवान्साक्षात्पूजयन्ति महीप्रदम् ॥१४-१०२-३० (९५७९७)
रुद्रः प्रजापतिः शक्रः सुरा ऋषिगणास्तथा ।
अहं च प्रीतिमान्राजन्पूजयामो महीप्रदम् ॥१४-१०२-३१ (९५७९८)
कृशभृत्यस्य कृशगोः कृशाश्वस्य कृतातिथेः ।
भूमिर्देया नरश्रेष्ठ स निधइः पारलौकिकः ॥१४-१०२-३२ (९५७९९)
सीदमानकुटुंबाय श्रोत्रियायाग्निहोत्रिणे ।
व्रस्थाय दरिद्राय भूमिर्देया नराधिप ॥१४-१०२-३३ (९५८००)
यथा हि धात्री क्षीरेण पुत्रं वर्धयति स्वयम् ।
दातारमनुगृह्णाति दत्ता ह्येवं वसुंधरा ॥१४-१०२-३४ (९५८०१)
यथा बिभर्ति गौर्वत्सं सृजन्ती क्षीरमात्मनः ।
तथा सर्वगुणोपेता भूमिर्वहति भूमिदम् ॥१४-१०२-३५ (९५८०२)

यथा बीजनि रोहन्ति जलसिक्तानि भूपते ।
तथा कामाः प्ररोहन्ति भूमिदस्य दिनेदिने ॥१४-१०२-३६ (९५८०३)
यथा तेजस्तु सूर्यस्य तमः सर्वं व्यपोहति ।
तथा पापं नरस्येह भूमिदानं व्यपोहति ॥१४-१०२-३७ (९५८०४)
दाता दशानुगृह्णाति यो हरेद्दश हन्ति च ।
अतीतान्यागतानीह कुलानि कुरुपुङ्गव ॥१४-१०२-३८ (९५८०५)
आश्रुत्य भूमिदानं तु दत्त्वा यो वा हरेन्पुनः ।
स बद्धो वारुणैः पाशैः क्षिप्यते पूयशोणिते ॥१४-१०२-३९ (९५८०६)
स्वदत्तां परदत्तां वा यो हरेत् वसुंधराम् ।
न तस्य नरकाद्धोराद्विद्यते निष्कृतिः क्वचित् ॥१४-१०२-४० (९५८०७)
ब्राह्मणस्य हृते क्षेत्रे हन्याद्द्वादश पूर्वजान् ।
स गच्छेत्कृमियोनिं च न च मुच्येत जातु सः ॥१४-१०२-४१ (९५८०८)
दत्त्वा भूमिं द्विजेन्द्राय यस्तामेवोपजीवति ।
गवां शतसहस्रस्य हन्तुः स लभते फलम् ॥१४-१०२-४२ (९५८०९)
सोधश्शिरास्तु पापात्मा कुंभीपाकेषु पच्यते ।
दिव्यैर्वर्षसहस्रैस्तु कुंभीपाकाद्विजनिस्सृतः ।
इह लोके भवेत्स श्वा रातजन्मनि पाण्डव ॥ १४-१०२-४३ (९५८१०)
दत्त्वा भूमि द्विजेन्द्राणां यस्तामेवोपजीवति ।
स मूढो याति दुष्टात्मा नरकानेकविंशतिम् ।
नरकेभ्यो विनिर्मुक्तः शुनां योनिं स गच्छति ॥ १४-१०२-४४ (९५८११)
हलकृष्टा मही देया सबीजा सस्यमालिनी ।
अथवा सोदका देया दरिद्राय द्विजातये ॥१४-१०२-४५ (९५८१२)
एवं दत्ता मही राजन्प्रहृष्टेनान्तरात्मना ।
सर्वान्कामानवाप्नोति मनसा चिन्तितानि च ॥१४-१०२-४६ (९५८१३)
बहुभिर्वसुधा दत्ता दीयते च नराधिपैः ।
यस्य यस्य यदा भूमिस्तस्य तस्य तदा फलम् ॥१४-१०२-४७ (९५८१४)
यः प्रयच्छति कन्यां वै सुरूपां श्रोत्रियाय वै ।
स ब्रह्मदेयो राजेन्द्र तस्य पुण्यफलं शृणु ॥१४-१०२-४८ (९५८१५)
बलीवर्दसहस्राणां दत्तानां धुर्यवाहिनाम् ।
यत्पुण्यं लभते राजन्कन्यादानेन तत्फलम् ॥१४-१०२-४९ (९५८१६)
गवां शतसहस्रस्य सम्यग्धत्तस्थ यत्फलम् ।
तत्फलं समवाप्नोतिः यः प्रयच्छति कन्यकाम् ॥१४-१०२-५० (९५८१७)
यावन्ति चैव रोमाणि कन्यायाः कुरुपुङ्गव ।
तावद्वर्षसहस्राणि मम लोके महीयते ॥१४-१०२-५१ (९५८१८)
ततश्चापि च्युतः कालादिह लोके स जायते ।
षडङ्गविच्चतुर्वेदी सर्वलोकार्चितो द्विजः ॥१४-१०२-५२ (९५८१९)

यः सुवर्णं दरिद्राय ब्राह्मणाय प्रयच्छति ।
श्रोत्रियाय सुवृत्ताय बहुपुत्राय पाण्डव ॥१४-१०२-५३ (९५८२०)
स मुक्तः सर्वपापेभ्यो बालसूर्यसमप्रभः ।
विमानं दिव्यामारूढः कामगः कामभोगवान् ॥
वर्षकोटिं महातेजा मम लोके महीयते ॥ १४-१०२-५४ (९५८२१)
ततः कालावतीर्णश्च सोस्मिँल्लोके हि जायते ।
वेदवेदाङ्गविद्विप्रः कोटीधनपतिर्भवेत् ॥१४-१०२-५५ (९५८२२)
यश्च रूप्यं प्रयच्छेद्वै दरिद्राय द्विजातये ।
कृशवृत्तेः कृशगवे स मुक्तः सर्वकिल्बिषैः ॥१४-१०२-५६ (९५८२३)
पूर्णचन्द्रप्रकाशेन विमानेन विराजता ।
कामरूपि यथाकामं स्वर्गलोके महीयते ॥१४-१०२-५७ (९५८२४)
ततोऽवतीर्णः कालेन लोके चास्मिन्महायशाः ।
सर्वलोकार्चितः श्रीमान्राजा भवति वीर्यवान् ॥१४-१०२-५८ (९५८२५)
तिलपर्वतकं यस्तु श्रोत्रियाय प्रयच्छति ।
विशेषेण दरिद्राय तस्यापि शृणु यत्फलम् ॥१४-१०२-५९ (९५८२६)
पुण्यं वृषायुतोत्सर्गे यत्प्रोक्तं पाण्डुनन्दन ।
तत्पुण्यं समनुप्राप्य तत्क्षणाद्विरजा भवेत् ॥१४-१०२-६० (९५८२७)
यथा त्वचं भुजङ्गो वै त्यक्त्वा शुद्धतनुर्भवेत् ।
तता तिलप्रदानाद्वि पापं त्यक्त्वा विसुद्ध्यति ॥१४-१०२-६१ (९५८२८)
तिलषण्डं प्रयुञ्जानो जांबूनदविभूषितम् ।
विमानं दिव्यमारूढः पितृलोके महीयते ॥१४-१०२-६२ (९५८२९)
षष्टिं वर्षसहस्राणि कामरूपी महायशाः ।
तिलप्रदाता रमते पितृलोके यथासुखम् ॥१४-१०२-६३ (९५८३०)
यः प्रयच्छति विप्राय तिलधेनुं नराधिप ।
श्रोत्रियाय दरिद्राय शृणु तस्यापि यत्फलम् ॥१४-१०२-६४ (९५८३१)
गोसहस्रप्रदानेन यत्पुण्यं समुदाहृतम् ।
तत्पुण्यफलामाप्नोति तिलधेनुप्रदो नरः ॥१४-१०२-६५ (९५८३२)
तिलानां कुडवैर्यस्तु तिलधेनुं प्रयच्छति ।
तावत्कोटिसमा राजन्स्वर्गलोके महीयते ॥१४-१०२-६६ (९५८३३)
अष्टाढकतिलैः कृत्वा तिलधेनु नराधिप ।
द्वात्रिंशन्निष्कसंयुक्तं विषुवे यः प्रयच्छति ।
मद्भक्त्या मद्गतात्मा वै तस्य पुण्यफलं शृणु ॥ १४-१०२-६७ (९५८३४)
कन्यादानसहस्रस्य विधिदत्तस्य यत्फलम् ।
तत्पुण्यं समनुप्राप्तो मम लोके महीयते ॥१४-१०२-६८ (९५८३५)
मम लोकावतीर्णश्च सोस्मिँल्लोकेऽभिजायते ।
ऋग्यजुस्सामवेदानां पारगो ब्राह्मणर्षभः ॥१४-१०२-६९ (९५८३६)

गां तु यस्तु दरिद्राय श्रोत्रियाय प्रयच्छति ।
प्रसन्नां क्षीरिणीं पुण्यां सवत्सां कांस्यदोहिनीं ॥१४-१०२-७० (९५८३७)
यत्किंचिद्दुष्कृतं कर्म तस्य पूर्वकृतं नृपः ।
तत्सर्वं तत्क्षणादेव विनश्यति न संशयः ॥१४-१०२-७१ (९५८३८)
यानं च वृषसंयुक्तं दीप्यमानं स्वलङ्कृतम् ।
आरूढः कामगं दिव्यं गोलोकमधिगच्छति ॥१४-१०२-७२ (९५८३९)
यावन्ति चैव रोमाणि तस्या गोस्तु नराधिप ।
तावद्वर्षसहस्राणि गवां लोके महीयते ॥१४-१०२-७३ (९५८४०)
गोलोकादवतीर्णस्तु लोकेऽस्मिन्ब्राह्मणो भवेत् ।
सत्रयाजी वदन्यश्च सर्वराजभिरर्चितः ॥१४-१०२-७४ (९५८४१)
तिलं गावः सुवर्णं चाप्यन्नं कन्या वसुंधरा ।
तारयन्तीह दत्तानि ब्राह्मणेभ्यो महाभुज ॥१४-१०२-७५ (९५८४२)
ब्राह्मणं वृत्तसंपन्नमाहिताग्निमलोलुपम् ।
तर्पयेद्विधिवद्राजन्स निधिः पारलौकिकः ॥१४-१०२-७६ (९५८४३)
आहिताग्निं दरिद्रं च श्रोत्रियं च जितेन्द्रियम् ।
शूद्रान्नवर्जितं चैव द्विजं यत्नेन पूजयेत् ॥१४-१०२-७७ (९५८४४)
आहिताग्निः सदा पात्रमह्निहोत्री च वेदवित् ।
पात्राणामपि तत्पात्रं शूद्रान्नं यस्य नोदरे ॥१४-१०२-७८ (९५८४५)
यच्च वेदमयं पात्रं यच्च पात्रं तपोमयम् ।
असंकीर्णं च यत्पात्रं तत्पात्रं तारयिष्यति ॥१४-१०२-७९ (९५८४६)
नित्यस्वाध्यायनिरतास्त्वसंकीर्णेन्द्रियाश्च ये ।
पञ्चयज्ञपरा नित्यं पूजितास्तारयन्ति ते ॥१४-१०२-८० (९५८४७)
ये क्षान्तिदान्ताः श्रुतिपूर्णकर्णा
जितेन्द्रियाः प्राणिवधे निवृत्ताः ।
प्रतिग्रहे संकुचिता गृहस्था-
स्ते ब्राह्मणास्तारयितुं समर्थाः ॥ १४-१०२-८१ (९५८४८)
नित्योदकी नित्ययज्ञोपवीती
नित्यस्वाध्यायी वृषलान्नवर्जी ।
ऋतौ गच्छन्विधिवच्चापि जुह्व-
त्स ब्राह्मणस्तारयितुं समर्थः ॥ १४-१०२-८२ (९५८४९)
ब्राह्मणो यस्तु मद्भक्तो मद्यागी मत्परायणः ।
मयि संन्यस्तकर्मा च स विप्रस्तारयेद्ध्रुवम् ॥१४-१०२-८३ (९५८५०)
द्वादशाक्षरतत्वज्ञश्चतुर्व्यूहविभागवित् ।
अच्छिद्रपञ्चकालज्ञःक स विप्रस्तारयिष्यति ॥ ॥१४-१०२-८४ (९५८५१)

इति श्रीमन्महाभारते आश्वमेधिकपर्वणि वैष्णवधर्मपर्वणि

द्व्यधिकशततमोऽध्यायः ॥१०२ ॥

---

अस्वमेधिकपर्व-अध्यय१०३
॥ श्रीः ॥
१४.१०३. अध्यायः १०३

Mahabharata - Ashvamedhika Parva - Chapter Topics
कृष्णेन युधिष्ठिरंप्रति वृषभगृहशय्यादिदानप्रशंसनम् ॥१ ॥
तथा गोब्राह्मणरक्षणादिनानाधर्मकथनम् ॥२ ॥

Mahabharata - Ashvamedhika Parva - Chapter Text

वैशंपायन उवाच ।
वासुदेवेन दानेषु कथितेषु यथाक्रमम् ।
अवितृप्तश्च धर्मेषु केशवं पुनरब्रवीत् ॥१४-१०३-१ (९५८५२)
देव धर्मामृतमिदं शृण्वतोपि परंतप ।
न विद्यते सुरश्रेष्ठ मम तृप्तिर्हि माधव ॥१४-१०३-२ (९५८५३)
अनडुत्संप्रदानस्य यत्फलं तु विधीयते ।
तत्फलं कथयस्वेह तव भक्तस्य मेऽच्युत ॥१४-१०३-३ (९५८५४)
यानिचान्यानिदानानित्वया नोक्तानि कानिचित् ॥
तान्याचक्ष्व सुरश्रेष्ठ तेषां चानुक्रमात्फलम् ॥१४-१०३-४ (९५८५५)
भगवानुवाच।१४-१०३-५क्ष् (७९५५)
पवित्रत्वात्सुपुण्यत्वात्पावनत्वात्तथैव च ।
शृणु धर्मामृतं श्रेष्ठं दत्तस्यानडुहः फलम् ॥१४-१०३-५ (९५८५६)
दशधेनुसमोऽनड्वानेकोपि कुरुपुङ्गव ।
मेदोमांसविपुष्टाङ्गो नीरोगः कोपवर्जितः ॥१४-१०३-६ (९५८५७)
युवा भद्रः सुशीलश्च सर्वदोषविवर्जितः ।
धुरं धारयति क्षिप्रं दत्तो विप्राय पाण्डव ॥१४-१०३-७ (९५८५८)
स तेन पुण्यदानेन वर्षकोटिं युधिष्ठिर ।
यथाकामं महादेजा गवां लोके महीयते ॥१४-१०३-८ (९५८५९)
यश्च दद्यादनडुहौ द्वौ युक्तौ च धुरंधरौ ।
सुवृत्ताय दरिद्राय श्रोत्रियाय विशेषतः ।
तस्य यत्पुण्यमाख्यातं तच्छृणुष्व युधिष्ठिर ॥ १४-१०३-९ (९५८६०)
सहस्रगोप्रदानेन यत्प्रोक्तं फलमुत्तमम् ॥
तत्पुण्यफलमाप्नोति याति लोकान्स मामकान् ॥१४-१०३-१० (९५८६१)
यावन्ति चैव रोमाणि तयोरनुडुहोर्नृप ।

तावद्वर्षसहस्राणि मम लोके महीयते ॥१४-१०३-११ (९५८६२)
दरिद्रायैव दातव्यं न समृद्धाय पाण्डव ।
वर्षाणां हि तटाकेषु फलं नैव पयोधिषु ॥१४-१०३-१२ (९५८६३)
यस्तु दद्यादनडुहं दरिद्राय द्विजातये ।
स तेन पुण्यदानेन पुतात्मा कुरुपुङ्गव ॥१४-१०३-१३ (९५८६४)
विमानं दिव्यमारूढो दिव्यरूपी यथासुखम् ।
मम लोकेषु रमते यावदाभूतसंप्लुवम् ॥१४-१०३-१४ (९५८६५)
गृहं दीपप्रभायुक्तं शय्यासनविभूषितम् ।
भाजनोपस्करैर्युक्तं धनधान्यैरलङ्कृतम् ।
दासीगोभूमिसंयुक्तमन्यूनं सर्वसाधनैः ॥ १४-१०३-१५ (९५८६६)
ब्राह्मणाय दरिद्राय श्रोत्रियाय युधिष्ठिर ।
दद्यात्सदक्षिणं यस्तु तस्य पुण्यफलं शृणु ॥१४-१०३-१६ (९५८६७)
देवाः पितृगणाश्चैव ह्यग्नयो ऋषयस्तथा ।
प्रयच्छन्ति प्रहृष्टा वै यानमादित्यसन्निभम् ॥१४-१०३-१७ (९५८६८)
तेन गच्छेच्छ्रिया युक्तो ब्रह्मलोकमनुत्तमम् ।
स्त्रीसहस्रावृते रम्ये भवने तत्र काञ्चने ।
मोदते ब्रह्मलोकस्थो यावदाभूतसप्लवम् ॥ १४-१०३-१८ (९५८६९)
शय्यं प्रस्तरणोपेतां यः प्रयच्छति पाण्डव ।
अर्चयित्वा द्विजं भक्त्या वस्त्रमाल्यानुलेपनैः ।
भोजयित्वा विचित्रान्नं तस्य पुण्यफलं शृणु ॥ १४-१०३-१९ (९५८७०)
धेनुदानस्य यत्पुण्यं विधिदत्तस्य पाण्डव ।
तत्पुण्यं तमनुप्राप्य पितृलोके महीयते ॥१४-१०३-२० (९५८७१)
शिल्पमध्ययनं वाऽपि विद्यां मन्त्रौषधानि च ।
यः प्रयच्छति विप्राय तस्य पुण्यफलं शृणु ॥१४-१०३-२१ (९५८७२)
आहिताग्निसहस्रस्य पूजितस्यैव यत्फलम् ।
तत्पुण्यफलमाप्नोति यस्तु शय्यां प्रयच्चति ॥१४-१०३-२२ (९५८७३)
छन्दोभिः संप्रयुक्तेन विमानेन विराजता ।
सप्तर्षिलोकान्व्रजति पूज्यते ब्रह्मवादिभिः ॥१४-१०३-२३ (९५८७४)
चतुर्युगानि वै त्रिंशत्क्रीडित्वा तत्र देववत् ।
इह मानुष्यके लोके विप्रो भवति वेदवित् ॥१४-१०३-२४ (९५८७५)
विश्रामयति यो विप्रं श्रान्तमध्वनि कर्शितम् ।
कविनश्यति तदा पापं तस्य वर्षकृतं नृप ॥१४-१०३-२५ (९५८७६)
अथ प्रक्षालयेत्पादौ तस्य तोयेन भक्तिमान् ।
दशवर्षकृतं पापं व्यपोहति न संशयः ॥१४-१०३-२६ (९५८७७)
घृतेन वाऽथ तैलेन पादौ तस्य तु पूजयेत् ।
तद्द्वादसमारूढं पापमाशु व्यपोहति ॥१४-१०३-२७ (९५८७८)

धेनुकाञ्चनदत्तस्य यत्पुण्यं समुदाहृतम् ।
तत्पुण्यफलमाप्नोति यस्त्वेनं विप्रमर्चयेत् ॥ १४-१०३-२८ (९५८७९)
स्वागतेन तु यो विप्रं पूजयेदासनेन च ।
प्रत्युत्थानेन वा राजन्स देवानां प्रियो भवेत् ॥ १४-१०३-२९ (९५८८०)
स्वागतेनाग्नयो राजन्नासनेन शतक्रतुः ।
प्रत्युत्थानेन पितरः प्रीति यान्त्यतिथिप्रियाः ॥ १४-१०३-३० (९५८८१)
अग्निशक्रपितॄणां च तेषां प्रीत्या नराधिप ।
संवत्सरकृतं पापं तस्य सद्यो विनश्यति ॥ १४-१०३-३१ (९५८८२)
यः प्रयच्छति विप्राय आसनं माल्यभूषितम् ।
स याति मणिचित्रेण रथेनेन्द्रनिकेतनम् ॥ १४-१०३-३२ (९५८८३)
पुरन्दरासने तत्र दिव्यनारीविभूषितः ।
षष्टिं वर्षसहस्राणि क्रीडत्यप्सरसां गणैः ॥ १४-१०३-३३ (९५८८४)
वाहनं यः प्रयच्छेत ब्राह्मणाय युधिष्ठिर ।
स याति रत्नचित्रेण वाहनेन सुरालयम् ॥ १४-१०३-३४ (९५८८५)
स तत्र कामं क्रीडित्वा सेव्यमानोप्सरोगणैः ।
इह राजा भवेद्राजन्नात्र कार्या विचारणा ॥ १४-१०३-३५ (९५८८६)
पादपं पल्लवाकीर्णं पुष्पितं फलितं तथा ।
गन्धमाल्यैरथाभ्यर्च्य वस्त्राभरणभूषितम् ॥ १४-१०३-३६ (९५८८७)
यः प्रयच्छति विप्राय श्रोत्रियाय सदक्षिणम् ।
भोजयित्वा यथाकामं तस्य पुण्यफलं शृणु ॥ १४-१०३-३७ (९५८८८)
जांबूनदविचित्रेण विमानेन विराजता ।
पुरन्दरपुरं याति जयशब्दरवैर्युतः ॥ १४-१०३-३८ (९५८८९)
ततः शक्रपुरे रम्ये तस्य कल्पकपादपः ।
ददाति चेप्सितं सर्वं मनसा यद्यदिच्छति ॥ १४-१०३-३९ (९५८९०)
यावन्ति तस्य पत्राणि पुष्पाणि च फलानि च ।
तावद्वर्षसहस्राणि शक्रलोके महीयते ॥ १४-१०३-४० (९५८९१)
शक्रलोकावतीर्णश्च मानुष्यं लोकमागतः ।
रथाश्वगजसंपूर्णं पुरं राज्यं च वक्ष्यति ॥ १४-१०३-४१ (९५८९२)
स्थापयित्वा तु मद्भक्त्या यो मत्प्रतिकृतिं नरः ।
आलयं विधिवत्कृत्वा पूजाकर्म च कारयेत् ।
स्वयं वा पूजयेद्भक्त्या तस्य पुण्यफलं शृणु ॥ १४-१०३-४२ (९५८९३)
अश्वमेधसहस्रस्य यत्पुण्यं समुदाहृतम् ।
तत्फलं समवाप्नोति मत्सालोक्यं प्रपद्यते ।
न जाने निर्गमं तस्य मम लोकाद्युधिष्ठिर ॥ १४-१०३-४३ (९५८९४)
देवालये विप्रगृहे गोवाटे चत्वरेऽपि वा ।
प्रज्वालयति यो दीपं तस्य पुण्यफलं शृणु ॥ १४-१०३-४४ (९५८९५)

आरुह्य काञ्चनं यानं द्योतयन्सर्वतो दिशम् ।
गच्छेदादित्यलोकं स सेव्यमानः सुरोत्तमैः ॥छ १४-१०३-४५ (९५८९६)
तत्र प्रकामं क्रीडित्वा वर्षकोटिं महातपाः ।
इह लोके भवेद्विप्रो वेदवेदाङ्गपारगः ॥ १४-१०३-४६ (९५८९७)
देवालयेषु वा राजन्ब्राह्मणावसथेषु वा ।
चत्वरे वा चतुष्के वा रात्रौ वा यदि वा दिवा ॥ १४-१०३-४७ (९५८९८)
नानागन्धर्ववाद्यानि धर्मश्रावणिकानि च ।
यस्तु कारयते भक्त्या मद्गतेनान्तरात्मना ॥ १४-१०३-४८ (९५८९९)
तस्य देवा नरश्रेष्ठ पितरश्चापि हर्षिताः ।
सुप्रीताः संप्रयच्चन्ति विमानं कामगं सुखम् ॥ १४-१०३-४९ (९५९००)
स च तेन पिमानेन याति देवपुरं नरः ।
तत्र दिव्याप्सरोभिस्तु सेव्यमानः प्रमोदते ॥ १४-१०३-५० (९५९०१)
देवलोकावतीर्णस्तु सोस्मिँल्लोके नराधिप ।
वेदवेदाङ्गतत्वज्ञो भोगवान्ब्राह्मणो भवेत् ॥ १४-१०३-५१ (९५९०२)
चत्वरे वा सभायां वा विस्तीर्णे वा सभाङ्गणे ।
कृत्वाऽग्निकुण्डं विपुलं स्थण्डिलं वा युधिष्ठिर ॥ १४-१०३-५२ (९५९०३)
तत्राग्निं चतुरो मासाञ्ज्वालयेद्यस्तु भक्तिमाम् ।
समाप्तेषु च मासेषु पौष्यादिषु ततो द्विजान् ॥ १४-१०३-५३ (९५९०४)
भोजयेत्पायसं मृष्टं मद्गतेनान्तरात्मना ।
दक्षिणां च यथाशक्ति ब्राह्मणेभ्यो निवेदयत् ॥ १४-१०३-५४ (९५९०५)
एवमग्निं तु यः कुर्यान्नित्यमेवार्चयेत्तु माम् ।
तस्य पुण्यफलं यद्वै तन्निबोध युधिष्ठिर ॥ १४-१०३-५५ (९५९०६)
तेनाहं शङ्करश्चैव पितरो ह्यग्नयस्तथा ।
यास्यामः परमां प्रीतिं नात्र कार्याविचारणा ॥ १४-१०३-५६ (९५९०७)
षष्टिं वर्षसहस्राणि षष्टिं वर्षशतानि च ।
सोस्मत्प्रीतिकरः श्रीमान्मम लोके महीयते ॥ १४-१०३-५७ (९५९०८)
मम लोकावतीर्णश्च अस्मिँल्लोके महायशाः ।
वेदवेदाङ्गविद्विप्रो जायते राजपूजितः ॥ १४-१०३-५८ (९५९०९)
यः करोति नरश्रेष्ठ भरणं ब्राह्मणस्य तु ।
श्रोत्रियस्याभिजातस्य दरिद्रस्य विशेषतः ।
तस्य पुण्यफलं यद्वै तन्निबोध युधिष्ठिर ॥ १४-१०३-५९ (९५९१०)
गवां कोटिप्रदानेन यत्पुण्यं समुदाहृतम् ।
तत्सर्वफलमाप्नोति वर्षेणैकेन पाण्डव ॥ १४-१०३-६० (९५९११)
काञ्चनेन विचित्रेण विमानेनार्कशोभिना ।
स याति मामकं लोकं दिव्यस्त्रीगणसेवितः ॥ १४-१०३-६१ (९५९१२)
गीयमानो वरस्त्रीभिर्वर्षाणां कोटिविंशतिम् ।

क्रीडित्वा मामके तत्र सर्वदेवैरभिष्टुतः ।
मानुष्यमवतीर्णस्तु वेदविद्ब्राह्मणो भवेत् ॥ १४-१०३-६२ (९५९१३)
करकां कर्णिकां वाऽपि महद्वा जलभाजनम् ।
यः प्रयच्छति विप्राय तस्य पुण्यफलं शृणु ॥१४-१०३-६३ (९५९१४)
ब्रह्मकूर्चे तु यत्पीते फलं प्रोक्तं नरादिप ।
तत्पुण्यफलमाप्नोति जलभाजनदो नरः ।
सुतृप्तः सर्वसौगन्धः प्रहृष्टेन्द्रियमानसः ॥ १४-१०३-६४ (९५९१५)
हंससारसयुक्तेन विमानेन विराजता ।
स याति वारुणं लोकं दिव्यगन्धर्वसेवितम् ॥१४-१०३-६५ (९५९१६)
पानीयं यः प्रयच्छेद्वै जीवानां जीवनं परम् ।
ग्रीष्मे च त्रिषु मासेषु तस्य पुण्यफलं शृणु ॥१४-१०३-६६ (९५९१७)
कपिलाकोटिनानस्य यत्पुण्यं तु विधीयते ।
तत्पुण्यफलमाप्नोति पानीयं यः प्रयच्छति ॥१४-१०३-६७ (९५९१८)
पूर्णचन्द्रप्रकासेन विमानेन विराजता ।
स गच्छेच्चन्द्रभवनं सेव्यमानोप्सरोगणैः ॥१४-१०३-६८ (९५९१९)
त्रिंशत्कोटियुगं तत्र दिव्यगन्धर्वसेवितः ।
क्रीडित्वा मानुषे लोके चतुर्वेदी द्विजो भवेत् ॥१४-१०३-६९ (९५९२०)
शिरोभ्यङ्गप्रदानेन तेजस्वी प्रियदर्शनः ।
सुभगो रूपवाञ्शूरः पण्डितश्च भवेद्द्विजः ॥१४-१०३-७० (९५९२१)
वस्त्रदायी तु तेजस्वी सर्वत्र प्रियदर्शनः ।
सुभगो भवति श्रीमान्स्त्रीणां नित्यं मनोरमः ॥१४-१०३-७१ (९५९२२)
उपानहौ च च्छत्रं च यो ददाति नरोत्तमः ।
स याति रथमुख्येन काञ्चनेन विराजता ।
शक्रलोकं महातेजाः सेव्यमानोप्सरोगणैः ॥ १४-१०३-७२ (९५९२३)
काष्ठपादुकदा यान्ति विमानैर्वृक्षनिर्मितैः ।
धर्मराजपुरं रम्यं सेव्यमानाः सुरोत्तमैः ॥१४-१०३-७३ (९५९२४)
दन्तकाष्ठप्रादनेन प्रियवाक्यो भवेन्नरः ।
सुगन्धवदनः श्रीमान्मेदासौभाग्यसंयुतः ॥१४-१०३-७४ (९५९२५)
क्षीरं दधि घृतं वाऽपि गुडं मधुरसं तथा ।
ये प्रयच्छन्ति विप्रेभ्यः परां भक्तिमुपागताः ॥१४-१०३-७५ (९५९२६)
ते वृषैरश्वयानैश्च श्वेतस्रग्दामभूषिताः ।
उपगीयमाना गन्धर्वैर्यान्तीश्वरपुरं नराः ॥१४-१०३-७६ (९५९२७)
तत्र दिव्याप्सरोभिस्तु सेव्यमाना यथासुखम् ।
षष्टिवर्षसहस्राणि मोदन्ते देवसन्निभाः ॥१४-१०३-७७ (९५९२८)
ततः कालावतीर्णाश्च जायन्ते त्विह मानवाः ॥
प्रभूतधनधान्याश्च भोगवन्तो नरोत्तमाः ॥१४-१०३-७८ (९५९२९)

वैशाखे मासि वैशाखे दिवसे पाण्डुनन्दन ।
वैवस्वतं समुद्दिश्य परां भक्तिमुपागताः ॥१४-१०३-७९ (९५९३०)
अभ्यर्च्य विधिवद्विप्रांस्तिलान्गुडसमन्वितान् ।
ये प्रयच्छन्ति विप्रेभ्यस्तेषां पुण्यफलं शृणु ॥१४-१०३-८० (९५९३१)
गोप्रदानेन यत्पुण्यं विधिवत्पाण्डुनन्दन ।
तत्पुण्यं समनुप्राप्तो यमलोके महीयते ।
ततश्चापि च्युतः कालादिह राजा भविष्यति ॥ १४-१०३-८१ (९५९३२)
तस्मिन्नेव दिने विप्रान्भोजयित्वा सुदक्षिणम् ।
तोयपूर्णानि दिव्यानि भाजनानि दिशन्ति ये ॥१४-१०३-८२ (९५९३३)
ते यान्त्यादित्यवर्णाभैर्विमानैर्वरुणालयम् ।
तत्र दिव्याङ्गनाभिस्तु रमन्ते कामकामिनः ॥१४-१०३-८३ (९५९३४)
ततोऽवतीर्णाः कालेन ते चास्मिन्मानुषे पुनः ।
भोगवन्तो द्विजश्रेष्ठ भविष्यन्ति न संशयः ॥१४-१०३-८४ (९५९३५)
अनन्तराशी यश्चापि वर्तते व्रतवत्सदा ।
सत्यवाक्क्रोधरहितः शुचिः स्नानरतः सदा ।
स विमानेन दिव्येन याति शक्रपुरं नरः ॥ १४-१०३-८५ (९५९३६)
तत्र दिव्याप्सरोभिस्तु वर्षकोटिं महातपाः ।
क्रीडित्वा मानुषे लोके जायते वेदविद्द्विजः ॥१४-१०३-८६ (९५९३७)
एकभुक्तेन यश्चापि वर्षमेकं तु वर्तते ।
ब्रह्मचारी जितक्रोधः सत्यशौचसमन्वितः ।
स विमानेन दिव्येन याति शक्रपुरं नरः ॥ १४-१०३-८७ (९५९३८)
दशकोटिसहस्राणि क्रीडित्वाऽप्सरसां गणैः ।
इह मानुष्यके लोके वेदविद्ब्राह्मणो भवेत् ॥१४-१०३-८८ (९५९३९)
चतुर्थकाले यो भुङ्क्ते ब्रह्मचारी जितेन्द्रियः ।
वर्तते चैकवर्षं तु तस्य पुण्यफलं शृणु ॥१४-१०३-८९ (९५९४०)
चित्रबर्हिणयुक्तेन विचित्रध्वजशोभिना ।
याति यानेन दिव्येन स महेन्द्रपुरं नरः ॥१४-१०३-९० (९५९४१)
अकृशाभिर्वरस्त्रीभिः सेव्यमानो यथासुखम् ।
ततो द्वादशकोटिं स समाः सम्यक्प्रमोदते ॥१४-१०३-९१ (९५९४२)
शक्रलोकावतीर्णस्तु लोके चास्मिन्नराधिप ।
भवेद्वै ब्राह्मणो विद्वान्क्षमावान्वेदपारगः ॥१४-१०३-९२ (९५९४३)
षष्ठकाले तु योऽश्नाति वर्षमेकमकल्मषः ।
ब्रह्मचर्यव्रतैर्युक्तः शुचि क्रोधविवर्जितः ।
तपोयुक्तस्य तस्याथ शृणुष्व फलमुत्तमम् ॥ १४-१०३-९३ (९५९४४)
अत्यादित्यप्रकाशेन विमानेनार्कसंनिभः ।
स याति मम लोकान्वै दिव्यनारीनिषेवितः ॥१४-१०३-९४ (९५९४५)

तत्र साध्यैर्मरुद्भिस्तु पूज्यमानो यथासुखम् ।
पश्यन्नेव सदा मां तु क्रीडत्यप्सरसां गणैः ॥१४-१०३-९५ (९५९४६)
पक्षोपवासं यश्चापि कुरुते मद्गतात्मना ।
समाप्ते तु व्रते तस्मिंस्तर्पयेच्छ्रोत्रियान्द्विजान् ॥१४-१०३-९६ (९५९४७)
सोपि गच्छति दिव्येन विमानेन महातपाः ।
द्योतयनप्रभया व्योम मम लोकं प्रपद्यते ।
स तत्र मोदते कामं कामरूपी यथासुखम् ॥ १४-१०३-९७ (९५९४८)
त्रिंशत्कोटिसमा राजन्क्रीडित्वा तत्र देववत् ।
इह मानुष्यके लोके पूजनीयो द्विजो भवेत् ।
त्रयाणामपि वेदानां साङ्गानां पारगे भवेत् ॥ १४-१०३-९८ (९५९४९)
यश्च मासोपवासं वै कुरुते मद्गतात्मना ।
जितेन्द्रियो जितक्रोधोजितधीः स्नानतत्परः ॥१४-१०३-९९ (९५९५०)
समाप्ते नियमे तत्र भोजयित्वा द्विजोत्तमान् ।
दक्षिणां च ततो दद्यात्प्रहृष्टेनान्तरात्मना ॥१४-१०३-१०० (९५९५१)
स गच्छति महातेजा ब्रह्मलोकमनुक्क़क्क़क्क़क्रम् ।
सिंहयुक्तेन यानेन दिव्यस्त्रीगणसेवितः ॥१४-१०३-१०१ (९५९५२)
स तत्र ब्रह्मणो लोके दिव्यर्षिगणसेवितः ।
शतकोटिसमा राजन्यथाकामं प्रमोदते ॥१४-१०३-१०२ (९५९५३)
ततः कालावतीर्णश्च सोस्मिँल्लोके द्विजो भवेत् ।
षडङ्गविच्चतुर्वेदी त्रिंशज्जन्मान्यरोगवान् ॥१४-१०३-१०३ (९५९५४)
यस्त्यक्त्वा सर्वकर्माणि शुचिः क्रोधविवर्जितः ।
महाप्रस्तानमेकाग्नो याति मद्गतमानसः ॥१४-१०३-१०४ (९५९५५)
स गच्छेदिन्द्रसदनं विमानेन महातपाः ।
महामणिविचित्रेण सौवर्णन विराजता ॥१४-१०३-१०५ (९५९५६)
शतकोटिसमास्तत्र सुराधिपतिपूजितः ।
नाकपृष्ठे निवसति दिव्यस्त्रीगणसेवितः ॥१४-१०३-१०६ (९५९५७)
शक्रलोकावतीर्णश्च मानुषेषूपजायते ।
राज्ञां राजा महातेजाः सर्वलोकार्चितः प्रभुः ॥१४-१०३-१०७ (९५९५८)
प्रायोपवेशं यश्चापि कुरुते मद्गतात्मना ।
नमो ब्रह्मण्यदेवायेत्युक्त्वा मन्त्रं समाहितः ।
अन्तःस्वस्थो जितक्रोधस्तस्य पुण्यफलं शृणु ॥ १४-१०३-१०८ (९५९५९)
कामगः कामरूपी च बालसूर्यसमप्रभः ।
स विमानेन दिव्येन याति लोकाननामयान् ॥१४-१०३-१०९ (९५९६०)
स्वर्गत्स्वर्गं महातेजा गत्वा चैव यथासुखम् ।
मम लोकेषु रमते यावदाभूतसंप्लवम् ॥१४-१०३-११० (९५९६१)
अग्निप्रवेशं यश्चापि कुरुते मद्गतात्मना ।

सोपि यानेन दिव्येन मम लोकं प्रपद्यते ॥१४-१०३-१११ (९५९६२)
तत्र सर्वगुणोपेतः पश्यन्नेव स मां सदा ।
त्रिंशत्कोटिसमा राजन्मोदते मम संनिधौ ।
ततोऽवतीर्णः कालेन वेदविद्ब्राह्मणो भवेत् ॥ १४-१०३-११२ (९५९६३)
कर्षणं साधयन्यस्तु मां प्रपन्नः शुचिव्रतः ।
नमो ब्रह्मण्यदेवायेत्येतन्मन्त्रमुदाहरन् ॥१४-१०३-११३ (९५९६४)
बालसूर्यप्रकाशेन विमानेन विराजता ।
मम लोकं समासाद्य वर्षकोटिं प्रमोदते ।
मम लोकावतीर्णश्च सोस्मिँल्लोके नृपो भवेत् ॥ १४-१०३-११४ (९५९६५)
निवेशयति मन्मूर्त्यामात्मानं मद्गतः शुचिः ।
रुद्रदक्षिणमूर्त्यां वा चतुर्दश्यां विशेषतः ॥ १४-१०३-११५ (९५९६६)
सिद्धैर्ब्रह्मर्षिभिश्चैव देवलोकैश्च पूजितः ।
गन्धर्वैर्भूतसङ्घैश्च गीयमानो महातपाः ॥१४-१०३-११६ (९५९६७)
प्रविशेत्स महातेजा मां वा शङ्करमेव वा ।
न स्यात्पुनर्भवो राजन्नात्र कार्या विचारणा ॥१४-१०३-११७ (९५९६८)
गोकृते स्त्रीकृते चैव गुरुविप्रकृतेऽपि वा ।
हन्यन्ते ये तु राजेन्द्र शक्रलोकं व्रजन्ति ते ॥१४-१०३-११८ (९५९६९)
तत्र जांबूनदमये विमाने कामगामिनि ।
मन्वन्तरं प्रमोदन्ते दिव्यनारीनिषेविताः ॥१४-१०३-११९ (९५९७०)
आश्रुतस्याप्रादनेन दत्तस्य हरणेन च ।
जन्मप्रभृति यद्दत्तं तत्सर्वं तु विनश्यति ॥१४-१०३-१२० (९५९७१)
नाऽगोप्रदास्तत्र पयः पिबन्ति
नाभूमिदा भूमिमथाश्नुवन्ति ।
यान्यान्कामान्ब्राह्मणेभ्यो ददाति
तांस्तान्कामान्स्वर्गलोके च भुङ्क्ते ॥ १४-१०३-१२१ (९५९७२)
यद्यदिष्टतमं द्रव्यं न्यायनोपार्जितं च यत् ।
तत्तद्गुणवते देयं तदेवाक्षयमिच्छता ॥१४-१०३-१२२ (९५९७३)
अनुपोष्य त्रिरात्राणि तीर्थान्यनभिगम्य च ।
अदत्त्वा काञ्चनं गां दरिद्रो नाम जायते ॥१४-१०३-१२३ (९५९७४)
दानं यत्तत्फलं नैव श्रोत्रियाय न दीयते ।
श्रोत्रिया यत्र नाश्नन्ति न देवास्तत्र भुञ्जते ॥१४-१०३-१२४ (९५९७५)
श्रोत्रियेभ्यः परं नास्ति परमं दैवतं महत् ।
निधानं चापि राजेन्द्र नास्माच्छ्रोत्रियभोजनम् ॥ ॥१४-१०३-१२५ (९५९७६)

इति श्रीमन्महाभारते आश्वमेधिकपर्वणि वैष्णवधर्मपर्वणि
त्र्यधिकशततमोऽध्यायः ॥

७-१०३-६४ अहोरात्रोषितो भूत्वा पौर्णमास्यां विशेषतः ।पञ्चगव्यं पिबेत्प्रातर्ब्रह्मकूर्चविधिः स्मृतः ॥
७-१०३-६६ ग्रीष्मे चतुर्षु मासेषु इति थ पाठः ॥

---

अस्वमेधिकपर्व-अध्यय१०४
॥ श्रीः ॥
१४.१०४. अध्यायः १०४

Mahabharata - Ashvamedhika Parva - Chapter Topics
कृष्णेन युधिष्ठिरंप्रति पञ्चमहायज्ञनिरूपणं,
स्नानविधिनिरूपणं, वैष्णवलक्षणाभिधानं
स्वपूजायोग्ययोग्यपुष्पविवेचनं च ॥१ ॥

Mahabharata - Ashvamedhika Parva - Chapter Text

युधिष्ठिर उवाच ।
विप्रयोगे शरीरस्य सेन्द्रियस्य विशेषतः ।
अन्तरा वर्तमानस्य गतिः प्राणस्य कीदृशी ॥१४-१०४-१ (९५९७७)
भगवानुवाच।१४-१०४-२क्ष् (७९५६)
शुभाशुभकृतं सर्वं प्राप्नोतीह फलं नरः ।
न तु सर्वस्य भूतस्य पञ्चत्वं विद्यते नृप ॥१४-१०४-२ (९५९७८)
पञ्चत्वं पाण्डवश्रेष्ठ भूरिभूतिकरं नृणाम् ।
तेषां पञ्च महायज्ञान्ये कुर्वन्ति द्विजोत्तम ॥१४-१०४-३ (९५९७९)
पञ्चत्वं पञ्चभिर्भूतैर्वियोगं संप्रचक्षते ।
न जायते न म्रियते पुरुषः शाश्वतः सदा ॥१४-१०४-४ (९५९८०)
प्रायेण मरणं नाम पापिनामेव पाण्डव ।
येषां तु न गतिः पुण्या तेषां मरणमुच्यते ॥१४-१०४-५ (९५९८१)
प्रायेणाकृतकृत्यस्तु मृत्योरुद्विजते जनः ।
कृतकृत्याः प्रतीक्षन्ते मृत्युं प्रियमिवातिथिम् ॥१४-१०४-६ (९५९८२)
युधिष्ठिर उवाच।१४-१०४-७क्ष् (७९५७)
पञ्च यज्ञाः कथं देव क्रियन्तेऽत्र द्विजातिभिः ।
तेषां नाम च देवेश वक्तुमर्हस्यशेषतः ॥१४-१०४-७ (९५९८३)
श्रीभगवानुवाच।१४-१०४-८क्ष् (७९५८)
शृणु पञ्च महायज्ञान्कीर्त्यमानान्युधिष्ठिर ।

यैरेव ब्रह्मसालोक्यं लभ्यते गृहमेधिना ॥१४-१०४-८ (९५९८४)
ऋभुजज्ञं ब्रह्मयज्ञं भूतयज्ञं च पाण्डव ।
नृयज्ञं पितृयज्ञं च पञ्च यज्ञान्प्रचक्षते ॥१४-१०४-९ (९५९८५)
तर्पणं ऋभुयज्ञः स्यात्स्वाध्यायो ब्रह्मयज्ञकः ।
भूतयज्ञो बलिर्यज्ञो नृयज्ञोऽतिथिपूजनम् ।
पितॄनुद्दिश्य यत्कर्म पितृयज्ञः प्रकीर्तितः ॥ १४-१०४-१० (९५९८६)
हुतं चाप्यहुतं चैव तथा प्रहुतमेव च ।
प्राशितं बलिदानं च पाकयज्ञान्प्रचक्षते ॥१४-१०४-११ (९५९८७)
वैश्वदेवादयो होमा हुतमित्युच्यते बुधैः ।
अहुतं च भवेद्दत्तं प्रहुतं ब्राह्मणाशितम् ॥१४-१०४-१२ (९५९८८)
प्राणाग्निहोत्रहोमं च प्राशितं विधिवद्विदुः ।
बलिकर्म च राजेन्द्र पाकयज्ञाः प्रकीर्तिताः ॥१४-१०४-१३ (९५९८९)
केचित्पञ्च महायज्ञान्पाकयज्ञान्प्रचक्षते ।
अपरे ब्रह्मयज्ञादीन्महायज्ञविदो विदुः ॥१४-१०४-१४ (९५९९०)
सर्व एते महायज्ञाः सर्वथा परिकीर्तिताः ।
बुभुक्षितान्ब्राह्मणांस्तु यथाशक्ति न हापयेत् ॥१४-१०४-१५ (९५९९१)
अहन्यहनि ये त्वेतानकृत्वा भुञ्जते स्वयम् ।
केवलं मलमश्नन्ति ते नार न च संशयः ॥१४-१०४-१६ (९५९९२)
तस्मात्स्नात्वा द्विजो विद्वान्कुर्यादेतान्दिनेदिने ।
अतोऽन्यथा तु भुञ्जन्वै प्रायश्चित्ती भवेद्द्विजः ॥१४-१०४-१७ (९५९९३)
युधिष्टिर उवाच।१४-१०४-१८क्ष् (७९५९)
देवदेवेशक दैत्यघ्न त्वद्भक्तस्य जनार्दन ।
वक्तुमर्हसि देवेश स्नानस्य च विधिं मम ॥१४-१०४-१८ (९५९९४)
भगवानुवाच।१४-१०४-१९क्ष् (७९६०)
शृणु पाण्डव तत्सर्व पवित्रं पापनाशनम् ।
स्नात्वा येन विधानेन मुच्यन्ते किल्बिषाद्द्विजाः ॥१४-१०४-१९ (९५९९५)
मृदं च गोमयं चैव तिलं दर्भांस्तथैव च ।
पुष्पाण्यपि यथान्यायमादाय तु जलं व्रजेत् ॥१४-१०४-२० (९५९९६)
नद्यां स्नात्वा न च स्नायदन्यत्र द्विजसत्तम ।
सति प्रभूते पयसि नाल्पे स्नायात्कदाचन ॥१४-१०४-२१ (९५९९७)
गत्वोदकसमीपं तु शुचौ देशे मनोरमे ।
ततो मृद्गोमयादीनि तत्र विप्रो विनिक्षिपेत् ॥१४-१०४-२२ (९५९९८)
बहिः प्रक्षाल्य पादौ च द्विराचम्य प्रयत्नतः ।
प्रदक्षिणं समावृत्य नमस्कुर्यात्तु तज्जलम् ॥१४-१०४-२३ (९५९९९)
न च प्रक्षालयेद्विद्वांस्तीर्थमद्भिः कदाचन ।
न च पादेन वा हन्याद्धस्तेनान्येन तज्जलम् ॥१४-१०४-२४ (९६०००)

सर्वदेवमया ह्यापो मन्मयाः पाण्डुनन्दन ।
तस्मात्तास्तु न हन्तव्यास्त्वद्भिः प्रक्षालयेत्स्थलं ॥१४-१०४-२५ (९६००१)
केवलं प्रथमं मज्जेन्नाङ्गानि विमृशेद्बुधः ।
तत्तु तीर्थं समासाद्य कुर्यादाचमनं पुनः ॥१४-१०४-२६ (९६००२)
गोकर्णाकृतिवत्कृत्वा करं त्रिः प्रपिबेज्जलम् ।
द्विस्तत्परिमृजेद्वक्त्रं पादावभ्युक्ष्य चात्मनः ।
शीर्षण्यांस्तु ततः प्राणान्सकृदेवतु संस्पृशेन ॥ १४-१०४-२७ (९६००३)
बाहू द्वौ च ततः स्पृष्ट्वा हृदयं नाभिमेव च ।
प्रत्यङ्गमुदकं स्पृष्ट्वा मूर्धानं तु पुनः स्पृशेत् ॥१४-१०४-२८ (९६००४)
आपः पुनन्त्वित्युक्त्वा च पुनराचमनं चरेत् ।
सोङ्कारव्याहृतीर्वाऽपि सदसस्पतिमित्यृचम् ॥१४-१०४-२९ (९६००५)
आचम्य मृत्तिकाः पश्चात्त्रिधा कृत्वा समालभेत् ।
ऋचेदं विष्णुरित्यङ्गमुत्तमाधममध्यमम् ।
आलभ्य वारुणैः सूक्तैर्नमस्कृत्य जलं ततः ॥ १४-१०४-३० (९६००६)
स्रवन्ती चेत्प्रतिस्रोतः प्रत्यर्कं चान्यवारिषु ।
मज्जेदोमित्युदाहृत्य न च विक्षोभयेज्जलम् ॥१४-१०४-३१ (९६००७)
गोमयं च त्रिधा कृत्वा जले पूर्वं समालभेत् ।
सव्याहृतीकां सप्रणवां गायत्रीं च जपेत्पुनः ॥ १४-१०४-३२ (९६००८)
पुनराचमनं कृत्वा मद्गतेनान्तरात्मना ।
आपोहिष्ठेति तिसृभिर्ऋग्भिः पूतेन वारिणा ।
तथा तरत्समन्दीभिः सिञ्चेच्चतसृभिः क्रमात् ॥ १४-१०४-३३ (९६००९)
गोसूक्तेनाश्वसूक्तेन शुद्धवर्गेणि चात्मनः ।
वैष्णवैर्वारुणैः सूक्तैः सावित्रैरिन्द्रदेवतैः ॥१४-१०४-३४ (९६०१०)
वामदैव्येन चात्मानमन्यैर्मन्मयसामभिः ।
स्थित्वाऽन्तःसलिले सूक्तं जपेद्वाचाऽघमर्षणं ॥१४-१०४-३५ (९६०११)
सव्याहृतीकां सप्रणवां गायत्रीं वा ततो जपेत् ।
आश्वासमोक्षात्प्रणवं जपेद्वा मामनुस्मरन् ॥१४-१०४-३६ (९६०१२)
उत्प्लुत्य तीर्थमासाद्य धौते शुक्ले च वाससी ॥
शुद्धे चाच्छादयेत्कक्षे न कुर्यात्परिपाशके ॥१४-१०४-३७ (९६०१३)
पाशेन बद्ध्वा कक्षे यत्कुरुते कर्म वैदिकम् ।
राक्षसा दानवा दैत्यास्तद्विलुंपन्ति हर्षिताः ।
तस्मत्सर्वप्रयत्नेन कक्ष्यापाशं न धारयेत् ॥ १४-१०४-३८ (९६०१४)
ततः प्रक्षाल्य पादौ च हस्तौ चैव मृदा शनैः ।
आचम्य पुनराचामेत्पुनः सावित्रिया द्विजः ॥१४-१०४-३९ (९६०१५)
प्राङ्मुखोदङ्मुखो वाऽपि ध्यायन्वेदान्समाहितः ।
जले जलगतः शुद्धः स्थल एव स्थलस्थितः ।

उभयत्र स्थितस्तस्मादाचामेदात्मशुद्धये ॥ १४-१०४-४० (९६०१६)
दर्भेषु दर्भपाणिः सन्प्राङ्मुखः सुसमाहितः ।
प्राणायामांस्ततः कुर्यान्मद्गतेनान्तरात्मना ॥१४-१०४-४१ (९६०१७)
सहस्रकृत्वः सावित्रीं शतकृत्वस्तु वा जपेत् ॥ १४-१०४-४२ (९६०१८)
समाहितो जपेत्तस्मात्सावित्र्या चाभिमन्त्र्य च ।
मन्देहानां विनाशाय रक्षसां विक्षिपेज्जलम् ॥१४-१०४-४३ (९६०१९)
उद्वर्गोसीत्यथा चान्तःप्रायश्चित्तजलं क्षिपेत् ॥ १४-१०४-४४ (९६०२०)
अथादाय सुपुष्पाणि तोयमञ्जलिना द्विजः
प्रक्षिप्य प्रतिसूर्यं च व्योममुद्रां प्रकल्पयेत् ॥ १४-१०४-४५ (९६०२१)
ततो द्वादशकृत्वस्तु सूर्यस्येकाक्षरं जपेत् ।
ततः षडक्षरादीनि षट्कृत्वः परिवर्तयेत् ॥१४-१०४-४६ (९६०२२)
प्रदक्षिणं परामृश्य मुद्रया स्वमुखान्तरे ।
ऊर्ध्वबाहुस्ततो भूत्वा सूर्यमीक्षेत्समाहितः ॥१४-१०४-४७ (९६०२३)
तन्मण्डलस्थं मां ध्यायंस्तोजोमूर्तिं चतुर्भुजम् ।
उदुत्यं च जपेन्मन्त्रं चित्रं तच्चक्षुरित्यपि ॥१४-१०४-४८ (९६०२४)
सावित्रीं च यथाशक्ति जप्त्वा सूक्तं च मामकम् ।
मन्मयानि च सामानि पुरुषव्रतमेव च ॥१४-१०४-४९ (९६०२५)
ततश्चालोकयेदर्कं हंसः शुचिषदित्यपि ।
प्रदक्षिणं समावृत्य नमस्कृत्य दिवाकरम् ॥१४-१०४-५० (९६०२६)
ततस्तु तर्पयेदद्भिर्ब्रह्मणां मां च शङ्करम् ।
प्रजापतिं च देवांश्च तथा देवमुनीनपि ॥१४-१०४-५१ (९६०२७)
साङ्गानपि तथा वेदानितिहासान्क्रतूनपि ।
पुराणानि च सर्वाणि कुलान्यप्सरसां तथा ॥१४-१०४-५२ (९६०२८)
क्रतून्संवत्सरं चैव कलाकाष्ठात्मकं तथा ।
भूतग्रामांश्च भूतानि सरितः सागरांस्तथा ।
शैलाञ्शैलस्थितान्देवानोषधीः सवनस्पतीः ॥ १४-१०४-५३ (९६०२९)
तर्पयेदुपवीती च प्रत्येकं तृप्यतामिति ।
अन्वारभ्य च सव्येन पाणिना दक्षिणेन तु ॥१४-१०४-५४ (९६०३०)
निवीती तर्पयेद्विद्वानृषीन्मन्त्रकृतस्तथा ।
मरीच्यादीनृषींश्चैव नारदाद्यान्समाहितः ॥१४-१०४-५५ (९६०३१)
प्राचीनावीत्यथैतास्तु तर्पयेद्देवताः पितॄत् ।
ततस्तु कव्यवाडग्निं सों वैवस्वतं तथा ॥१४-१०४-५६ (९६०३२)
ततश्चार्यमणं चापि ह्यग्निष्वात्तांस्तथैव च ।
सोमपांश्चैव दर्भेषु सतिलैरेव वारिभिः ।
तृप्यतामिति पश्चात्तु स पितॄंस्तर्पयेत्ततः ॥ १४-१०४-५७ (९६०३३)
पितॄन्पितामहांश्चैव तथैव प्रपितामहान् ।

पितामहीस्तता चापि तथैव प्रपितामहीः ॥१४-१०४-५८ (९६०३४)
मातरं चात्मनश्चैव गुरुमाचार्यमेव च ।
पितृमातृष्वसारौ च तथा मातामहीमपि ॥१४-१०४-५९ (९६०३५)
उपाध्यायान्सखीन्बन्धूञ्शिष्यर्त्विग्ज्ञातिबांधवान् ।
प्रमीतानानृशंस्यार्थं तर्पयेत्तानमत्सरः ॥१४-१०४-६० (९६०३६)
तर्पयित्वा तथाऽऽचम्य स्नानवस्त्रं प्रपीडयेत् ।
वृत्तिं भृत्यजनस्याहुः स्नानं पानं च तद्विदः ॥१४-१०४-६१ (९६०३७)
अतर्पयित्वा तान्पूर्वं स्नानवस्त्रं न पीडयेत् ।
पीडयेच्चेत्पुरा मोहाद्देवाः सर्पिगणास्तथा ।
पितरस्तु निराशास्ते शप्त्वा यान्ति यथागतं ॥ १४-१०४-६२ (९६०३८)
प्रक्षाल्य तु मृदा पादावाचम्य प्रयतः पुनः ।
दर्भेषु दर्भपाणिः सन्स्वाध्यायं तु समारभेत् ॥१४-१०४-६३ (९६०३९)
वेदमादौ समारभ्य ततोपर्युपरि क्रमात् ।
यदधीतेऽन्वहं शक्त्या तत्स्वाध्यायं प्रचक्षते ॥१४-१०४-६४ (९६०४०)
ऋचो वाऽपि यजुर्वाऽपि सामगायमथापि च ।
इतिहासपुराणानि यथाशक्ति न हापयेत् ॥१४-१०४-६५ (९६०४१)
उत्थाय तु नमस्कृत्य दिशो दिग्देवता अपि ।
ब्रह्मणं च ततश्चाग्निं पृथिवीमोषधीस्तथा ॥१४-१०४-६६ (९६०४२)
वाचं वाचस्पतिं चैव मां चैव सरितस्तथा ।
नमस्कृत्य तथाऽद्भिस्तु प्रणवादि च पूर्ववत् ॥१४-१०४-६७ (९६०४३)
ततो नमोऽद्भ्य इत्युक्त्वा नमस्कुर्यात्तु तज्जलम् ।
घृणिः सूर्यस्तथाऽऽदित्यस्तं प्रणम्य स्वमूर्धनि ॥१४-१०४-६८ (९६०४४)
ततस्त्वालोकयन्नर्कं प्रणवेन समाहितः ।
ततो मामर्चयेत्पुष्पैर्मत्प्रियैरेव नित्यशः ॥१४-१०४-६९ (९६०४५)
युधिष्ठिर उवाच।१४-१०४-७०क्ष् (७९६१)
त्वत्प्रियाणि प्रसूनानि त्वदधिष्ठानि माधव ।
सर्वाण्याचक्ष्व देवेश त्वद्भक्तस्य ममाच्युत ॥१४-१०४-७० (९६०४६)
भगवानुवाच।१४-१०४-७१क्ष् (७९६२)
शृणुष्वावहितो राजन्पुष्पाणि प्रियकृन्ति मे ।
कुमुदं करवीरं च चणकं चंपकं तथा ॥१४-१०४-७१ (९६०४७)
मल्लिकाजातिपुष्पं च नन्द्यावर्तं च नन्दिकम् ।
पलाशपुष्पपत्राणि दूर्वा भृङ्गकमेव च ॥१४-१०४-७२ (९६०४८)
वनमाला च राजेन्द्र मत्प्रियाणि विशेषतः ।
सर्वेषामपि पुष्पाणां सहस्रगुणमुत्पलम् ॥१४-१०४-७३ (९६०४९)
तस्मात्पद्मं तथा राजन्पद्मात्तु सतपत्रकम् ।
तस्मात्सहस्रपत्रं तु पुण्डरीकं ततः परम् ॥१४-१०४-७४ (९६०५०)

पुण्डरीकसहस्रात्तु तुलसी गुणतोऽधिका ।
बकपुष्पं ततस्तस्मात्सौवर्णं तु ततोऽधिकम् ।
सौवर्णात्तु प्रसूनाच्च मत्प्रियं नास्ति पाण्डव ॥ १४-१०४-७५ (९६०५१)
पुष्पाभावे तुलस्यास्तु पत्रैर्मामर्चयेत्पुनः ।
पत्रालाभे तु शाखाभिः शाकालाभे शिफालवैः ।
शिफाभावे मृदा तत्र भक्तिमानर्चयेत माम् ॥ १४-१०४-७६ (९६०५२)
वर्जनीयानि पुष्पाणि शृणु राजन्समाहितः ।
किङ्किणी मुनिपुष्पं च धुर्धूरं पाटलं तथा ॥१४-१०४-७७ (९६०५३)
तथाऽतिमुक्तकं चैव पुन्नागं नक्तमालिकम् ।
यौधिकं क्षीरिकापुष्पं निर्गुण्डी लाङ्गुली जपा ॥१४-१०४-७८ (९६०५४)
कर्णिकारं तथाऽशोकं शल्मलीपुष्पमेव च ।
ककुभाः कोविदाराश्च वैभीतकमथापि च ॥१४-१०४-७९ (९६०५५)
कुरण्टकप्रसूनं च कल्पकं कालकं तथा ।
अङ्कोलं गिरिकर्णी च नीलान्येव च सर्वशः ।
एकपर्णानि चान्यानि सर्वाण्येव विवर्जयेत् ॥ १४-१०४-८० (९६०५६)
अर्कपुष्पाणि वर्ज्यानि अर्कपत्रस्तितानि च ।
व्याघृताः पिचुमन्दानि सर्वाण्येव विवर्जयेत् ॥१४-१०४-८१ (९६०५७)
अन्यैस्तु शुक्लपत्रैस्तु गन्धवद्भिर्नराधिप ।
अवर्ज्यैस्तैर्यथालाभं मद्भक्तो मां समर्चयेत् ॥१४-१०४-८२ (९६०५८)
युधिष्ठिर उवाच।१४-१०४-८३क्ष् (७९६३)
कथं त्वमर्चनीयोसि मूर्तयः कीदृशास्तु ते ।
वैखानसाः कथं ब्रूयूः कथं वा पाञ्चरात्रिकाः ॥१४-१०४-८३ (९६०५९)
भगवानुवाच।१४-१०४-८४क्ष् (७९६४)
शृणु पाण्डव तत्सर्वमर्चनाक्रममात्मनः ।
स्थण्डिले पद्मकं कृत्वा चाष्टपत्रं सकर्णिकम् ॥१४-१०४-८४ (९६०६०)
अष्टाक्षरविधानेन ह्यथवा द्वादशाक्षरैः ।
वैदिकैरथ मन्त्रैश्च मम सूक्तेन वा पुनः ॥१४-१०४-८५ (९६०६१)
स्थापितं मां ततस्तस्मिन्नर्ययित्वा विचक्षणः ।
पुरुषं च ततः सत्यमत्युतं च युधिष्टिर ॥१४-१०४-८६ (९६०६२)
अनिरुद्धं च मां प्राहुर्वैखानसविदो जनाः ।
अन्ये त्वेवं विजानन्ति मां राजन्पाञ्चरात्रिकाः। १४-१०४-८७ (९६०६३)
वासुदेवं च राजेन्द्र संकर्षणमथापि वा ।
प्रद्युम्नं चानिरुद्धं च चतुर्मूर्तिं प्रचक्षते ॥१४-१०४-८८ (९६०६४)
एताश्चान्याश्च राजेन्द्र संज्ञाभेदेन मूर्तयः ।
विद्धयार्थान्तरा एवं मामेवं चार्चयेद्बुधः ॥१४-१०४-८९ (९६०६५)
युधिष्ठिर उवाच।१४-१०४-९०क्ष् (७९६५)

त्वद्भक्ताः कीदृसा देव कानि तेषं व्रतानि च ।
एतत्कथय देवेश त्वद्भक्तस्य ममाच्युत ॥१४-१०४-९० (९६०६६)
भगवानुवाच।१४-१०४-९१क्ष् (७९६६)
अनन्यदेवताभक्ता चे मद्भक्तजनप्रियाः ।
मामेव शरणं प्राप्ता मद्भक्तास्ते प्रकीर्तिताः ॥१४-१०४-९१ (९६०६७)
स्वर्ग्याण्यपि यशस्यानि मत्प्रियाणि विशेषतः ।
मद्भक्तः पाण्डवश्रेष्ठ व्रतानीमानि धारयेत् ॥१४-१०४-९२ (९६०६८)
नान्यदाच्छादयेद्वस्त्रं मद्भक्तो जलतारणे ।
स्वस्थस्तु न दिवा स्वप्येन्मधुमांसानि वर्जयेत् ॥१४-१०४-९३ (९६०६९)
प्रदक्षिणं व्रजेद्विप्रान्गामश्वत्थं हुताशनम् ।
न धावेत्पतिते वर्षे नाग्नभिक्षां च लोपयेत् ॥१४-१०४-९४ (९६०७०)
प्रत्यक्षलवणं नाद्यत्सौभाञ्जनकरञ्जनौ ।
ग्रासमुष्टिं गवपे दद्याद्धान्याम्लं चैव वर्जयेत् ॥१४-१०४-९५ (९६०७१)
तथा पर्युषितं चापि पक्वं परगृहागतम् ।
अनिवेदितं च यद्द्रव्यं तत्प्रयत्नेन वर्जयेत् ॥१४-१०४-९६ (९६०७२)
विभितककरञ्जानां छायां दूरे विवर्जयेत् ।
पिप्रदेवपरीवादान्न वदेत्पीडितोपि सन् ॥१४-१०४-९७ (९६०७३)
सात्विका राजसाश्चापि तामसाश्चापि पाण्डव ।
मामर्चयन्ति मद्भक्तास्तेषामीदृग्विदा गतिः ॥१४-१०४-९८ (९६०७४)
तामसास्तिमिरं यान्ति राजसा रज एव तत् ।
सात्विकाः सत्वसंपन्नाः सत्वमेव प्रयान्ति ते ॥१४-१०४-९९ (९६०७५)
ये सिद्धाः सन्ति साङ्ख्येन योगसत्वबलेन च ।
नभस्यादित्यचन्द्राभ्यां पश्यन्ति पदविस्तरम् ॥१४-१०४-१०० (९६०७६)
एकस्तंभे नवद्वारे त्रिस्थूणे पञ्चसाक्षिके ।
एतस्मिन्देहनगरे राजसस्तु सदा भवेत् ॥१४-१०४-१०१ (९६०७७)
उदिते सवितर्याप्य क्रियायुक्तस्य धीमतः ।
चतुर्वेदविदश्चापि देहे षड्वृषलाः स्मृताः ॥१४-१०४-१०२ (९६०७८)
क्षत्रियाः सप्त विज्ञेया वैश्यास्त्वष्टौ प्रकीर्तिताः ।
नियताः पाण्डवश्रेष्ठ शूद्राणामेकविंशतिः ॥१४-१०४-१०३ (९६०७९)
कामः क्रोधश्च लोभश्च मोहश्च मद एव च ।
महामोहश्च इत्येते देहे षड्वृषलाः स्मृताः ॥१४-१०४-१०४ (९६०८०)
गर्वः स्तंभो ह्यहङ्कार ईर्ष्या च द्रोह एव च ।
पारुष्यं क्रूरता चैव सप्तैत क्षत्रियाः स्मृताः ॥१४-१०४-१०५ (९६०८१)
तीक्ष्णता निकृतिर्माया शाठ्यं डंभो ह्यनार्जवम् ।
पैशुन्यमनृतं चैव वेश्यास्त्वष्टौ प्रकीर्तिताः ॥१४-१०४-१०६ (९६०८२)
तृष्णा बुभुक्षा निद्रा च ह्यालस्यं चाघृणादयः ।

आधिश्चापि विषादश्च प्रमादो हीनसत्वता ॥ १४-१०४-१०७ (९६०८३)
भयं विक्लबता जाड्यं पापकं मन्युरेव च ।
आशा चाश्रद्दधानत्वमनवस्थाप्यमन्त्रणम् ॥ १४-१०४-१०८ (९६०८४)
आशौचं मलिनत्वं च शूद्रा ह्येते प्रकीर्तिताः ।
यस्मिन्नेते न दृश्यन्ते स वै ब्राह्मण उच्यते ॥ १४-१०४-१०९ (९६०८५)
येषुयेषु हि भावेषु यत्कालं वर्तते द्विजः ।
तत्कालं वै स विज्ञेयो ब्राह्मणो ज्ञानदुर्बलः ॥ १४-१०४-११० (९६०८६)
प्राणानायम्य यत्कालं येन मां चापि चिन्तयेत् ।
तत्कालो वै द्विजो ज्ञेयः शेषकालो ह्यथेतरः ॥ १४-१०४-१११ (९६०८७)
तस्मात्तु सात्विको भूत्वा शुचिः क्रोधविवर्जितः ।
मामर्चयेत्तु सततं मत्प्रियत्वं यदीच्छति ॥ १४-१०४-११२ (९६०८८)
अलोलजिह्वः समुपस्थितो धृतिं
निधाय चक्षुर्युगमात्रमेव तत ।
मनश्च वाचं च निगृह्य चञ्चलं
भयान्निवृत्तो मम भक्त उच्यते ॥ १४-१०४-११३ (९६०८९)
ईदृशाध्यात्मिनो ये तु ब्राह्मणा नियतेन्द्रियाः ।
तेषां श्राद्धेषु तृप्यन्ति तेन तृप्ताः पितामहाः ॥ १४-१०४-११४ (९६०९०)
धर्मो जयति नाधर्मः सत्यं जयति नानृतम् ।
क्षमा जयति न क्रोधः क्षमावान्ब्राह्मणो भवेत् ॥ ॥ १४-१०४-११५ (९६०९१)

इति श्रीमन्महाभारते आश्वमेधिकपर्वणि वैष्णवधर्मपर्वणि
चतुरधिकशततमोऽध्यायः ॥ १०४ ॥

---

अस्वमेधिकपर्व-अध्यय१०५
॥ श्रीः ॥
१४.१०५. अध्यायः १०५

Mahabharata - Ashvamedhika Parva - Chapter Topics
कृष्णेन युधिष्ठिरंप्रति दशधा कपिलाविभागकथनपूर्वकं
तद्दानप्रशंसनम् ॥ १ ॥

Mahabharata - Ashvamedhika Parva - Chapter Text

वैशम्पायन उवाच ।
दानपुण्यफलं श्रुत्वा तपःपुण्यफलानि च ।
धर्मपुत्रः प्रहृष्टात्मा केशवं पुनरब्रवीत् ॥ १४-१०५-१ (९६०९२)

या चैषा कपिला देव पूर्वमुत्पादिता विभो ।
होमधेनुः सदा पुण्या चतुर्वक्त्रेण माधव ॥१४-१०५-२ (९६०९३)
सा कथं ब्राह्मणेभ्यो हि देया कस्मिन्दिनेऽपि वा ।
कीदृशाय च विप्राय दातव्या पुण्यलक्षणा ॥१४-१०५-३ (९६०९४)
कथिता कपिला प्रोक्ता स्वयमेव स्वयंभुवा ।
कैर्वा देयाश्च ता देव श्रोतुमिच्छामि तत्वतः ॥१४-१०५-४ (९६०९५)
वैशम्पायन उवाच।१४-१०५-५क्ष् (७९६७)
एवमुक्तो हृषीकेशो धर्मपुत्रेण संसदि ।
अब्रवीत्कपिलासङ्ख्यां तासां माहात्म्यमेव च ॥१४-१०५-५ (९६०९६)
शृणु पाण्डव तत्वेन पवित्रं पावनं परम् ।
यच्छ्रुत्वा पापकर्मा पि नरः पापात्प्रमुच्यते ॥१४-१०५-६ (९६०९७)
अग्निमद्योद्भवां दिव्यामग्निज्वालासमप्रभाम् ।
अग्निज्वालोज्ज्वलच्छृङ्गीं प्रदीप्ताङ्गारलोचनाम् ॥१४-१०५-७ (९६०९८)
अग्निपुच्छामग्निखुरामग्निरोमप्रभान्विताम् ।
तामग्नेयीमग्निजिह्वामग्निग्रीवां ज्वलत्प्रभाम् ॥१४-१०५-८ (९६०९९)
भुञ्जते कपिलां ये तु शूद्रा लोभेन मोहिताः ।
पतितांस्तान्विजानीयाच्चण्डालसदृशा हि ते ॥१४-१०५-९ (९६१००)
न तेषां ब्राह्मणः कश्चिद्गृहे कुर्यात्प्रतिग्रहम् ।
दूराच्च परिहर्तव्या महापातकिनोपि ते ॥१४-१०५-१० (९६१०१)
सार्वकालं हि ते सर्वैर्वर्जिताः पितृदैवतैः ।
ते सदा ह्यप्रतिग्राह्या ह्यसंभाष्याश्च पापिनः ॥१४-१०५-११ (९६१०२)
पिबन्ति कपिलां यावत्तावत्तेषां पितामहाः ।
अमेध्यमुपभुञ्जन्ति भूम्यां वै श्वसृगालवत् ॥१४-१०५-१२ (९६१०३)
कपिलाया दधि क्षीरं घृतं तक्रमथापि वा ।
ये शूद्रा उपभुञ्जन्ति तेषां गतिमिमां शृणु ॥१४-१०५-१३ (९६१०४)
कपिलोपजीवी शूद्रस्तु मृतो गच्छति रौरवम् ।
क्लिश्यते रौरवे घोरे वर्षकोटिशतं वसन् ॥१४-१०५-१४ (९६१०५)
ततश्चापि च्युतः कालाच्छ्वानयोनिं स गच्छति ।
श्वयोन्याश्च परिभ्रष्टो विष्ठायां जायते क्रिमिः ॥१४-१०५-१५ (९६१०६)
विष्ठाकूपेषु पापिष्ठो दुर्गन्धेषु सहस्रशः ।
तत्रतत्रोपजायेत नोत्तारं तत्रथ विन्दति ॥१४-१०५-१६ (९६१०७)
ब्राह्मणश्चैव यस्तेषां गृहे कुर्यात्प्रतिग्रहम् ।
ततः प्रभृति तस्यापि पितरः स्युरमेध्यपाः ॥१४-१०५-१७ (९६१०८)
न तेन सार्धं सम्भाषेन्न चाप्येकासनं व्रजेत् ।
स नित्यं वर्जनीयो हि दूरात्तु ब्राह्मणाधमः ॥१४-१०५-१८ (९६१०९)
यस्तेन सह सम्भाषेदेकशय्यां व्रजेत् वा ।

प्राजापत्यं चरेत्कृच्छ्रं स च तेन विसुद्ध्यति ॥१४-१०५-१९ (९६११०)
कपिलोपजीविनः शूद्राद्यः करोति प्रतिग्रहम् ।
प्रायश्चित्तं भवेत्तस्य विप्रस्यैतन्न संशयः ॥१४-१०५-२० (९६१११)
ब्रह्मकूर्चं प्रकुर्वीति चान्द्रायणमथापि वा ।
मुच्यते किल्बिषात्तस्मादेतेन ब्राह्मणो हि सः ॥१४-१०५-२१ (९६११२)
कपिला ह्यग्निहोत्रार्थे विप्रार्थे वा स्वयंभुवा ।
सर्वं तेजः समुद्धृत्य निर्मिता ब्रह्मणा पुरा ॥१४-१०५-२२ (९६११३)
पवित्रं च पवित्राणां मङ्गलानां च मङ्गलम् ।
पुण्यानां परमं पुण्यं कपिला पाण्डुनन्दन ॥१४-१०५-२३ (९६११४)
तपसा तप एवाग्र्यं व्रातनामुत्तमं व्रतम् ।
दानानां परमं दानं निदानं ह्येतदक्षयम् ॥१४-१०५-२४ (९६११५)
पृथिव्यां यानि तीर्थानि पुण्यान्यायतनानि च ।
पवित्राणि च रम्याणि सर्वलोकेषु पाण्डव ॥१४-१०५-२५ (९६११६)
एभ्यस्तेजः समुद्धृत्य ब्रह्मणा लोककर्तृणा ॥
लोकनिस्तरणायैव निर्मिताः कपिलाः स्वयम् ॥१४-१०५-२६ (९६११७)
सर्वतेजोमयी ह्येषां कपिला पाण्डुनन्दन ।
सदाऽमृतमयी मेध्या शुचिः पावनमुत्तमम् ॥१४-१०५-२७ (९६११८)
क्षीरेण कपिलायास्तु दध्ना वा सघृतेन वा ।
होतव्यान्यग्निहोत्राणि सायं प्रातर्द्विजातिभिः ॥१४-१०५-२८ (९६११९)
कपिलाया घृतेनापि दध्ना क्षीरेण वा पुनः ।
जुह्वते योऽग्निहोत्राणि ब्राह्मणा विधिवत्प्रभो ॥१४-१०५-२९ (९६१२०)
पूजयन्त्यतिथींश्चैव परां भक्तिमुपागताः ।
शूद्रान्नाद्विरता नित्यं डंभानृतविवर्जिताः ॥१४-१०५-३० (९६१२१)
ते यान्त्यादित्यसङ्काशैर्विमानैर्द्विजसत्तमाः ।
सूर्यमण्डलमध्येन ब्रह्मलोकमनुत्तमम् ॥१४-१०५-३१ (९६१२२)
ब्रह्मणो भवने दिव्ये कामगाः कामरूपिणः ।
ब्रह्मणा पूज्यमानास्तु मोदन्ते कल्पमक्षयम् ॥१४-१०५-३२ (९६१२३)
एवं हि कपिला राजन्पुण्या मन्त्रामृतारणिः ।
आदावेवाग्निमध्ये तु मैत्रेयी ब्रह्मनिर्मिता ॥१४-१०५-३३ (९६१२४)
शृङ्गाग्रे कपिलायास्तु सर्वतीर्थानि पाण्डव ।
ब्रह्मणो हि नियोगेन निवसन्ति दिनेदिने ॥१४-१०५-३४ (९६१२५)
प्रातरुत्थाय यो मर्त्यः कपिलाशृङ्गमस्तकात् ।
यश्च्युतामंबुधारां वै शिरसा प्रयतः शुचिः ॥१४-१०५-३५ (९६१२६)
स तेन पुण्यतीर्थेन सहसा हतकिल्विषः ।
जन्मत्रयकृतं पापं प्रदहत्यग्निवतृणम् ॥१४-१०५-३६ (९६१२७)
मूत्रेण कपिलायास्तु यश्च प्राणानुपस्पृशेत् ॥

स्नानेन तेन पुण्येन नष्टपापः स मानवः ।
त्रिंशद्वर्षकृतात्पापान्मुच्यते नात्र संशयः ॥ १४-१०५-३७ (९६१२८)
प्रातरुत्थाय यो भक्तया प्रयच्छेत्तृणमुष्टिकम् ।
तस्य नश्यति तत्पापं त्रिंशद्रात्रकृतं नृप ॥१४-१०५-३८ (९६१२९)
प्रातरूत्थाय यद्भक्त्या कुर्याद्यस्मात्प्रदक्षिणम् ।
प्रदक्षिणीकृता तेन पृथिवी नात्र संशयः ॥ १४-१०५-३९ (९६१३०)
प्रदक्षिणेन चैकेन श्रद्धायुक्तेन पाण्डव ।
दशरात्रकृतं पापं तस्य तन्नश्यति ध्रुवम् ॥१४-१०५-४० (९६१३१)
कपिलापञ्चगव्येन यः स्नायात्तु शुचिर्नरः ।
स गङ्गाद्येषु तीर्थेषु स्नातो भवति पाण्डव ॥१४-१०५-४१ (९६१३२)
तेन स्नानेन तस्यापि श्रद्दायुक्तस्य पार्थिव ।
दशरात्रकृतं पापं तत्क्षणादेव नश्यति ॥१४-१०५-४२ (९६१३३)
दृष्ट्वा तु कपिलां भक्त्या श्रुत्वा हुङ्कारनिस्वनम् ।
व्यपोहति नरः पापमहोरात्रकृतं नृप ॥१४-१०५-४३ (९६१३४)
यत्र वा तत्र वा चाङ्गे कपिलां यः स्पृशेच्छुचिः ।
संवत्सरकृतं पापं विनाशयति पाण्डव ॥१४-१०५-४४ (९६१३५)
गोसहस्रं तु यो दद्यादेकां च कपिलां नरः ।
समं तस्य फलं प्राह ब्रह्मा लोकपितामहः ॥१४-१०५-४५ (९६१३६)
यस्त्वेवं कपिलां हन्यान्नरः कश्चित्प्रमादतः ।
गोसहस्रं हतं तेन भवेन्नात्र विचारणा ॥१४-१०५-४६ (९६१३७)
यश्चैकां कपिलां दद्याच्छ्रोत्रियायाहिताग्नये ।
गवां शतसहस्रं तु दत्तं भवति पाण्डव ॥१४-१०५-४७ (९६१३८)
दश वै कपिलाः प्रोक्ताः स्वयमेव स्वयंभुवा ।
यो दद्याच्छ्रोत्रियेभ्यो वै स्वर्गं गच्छति तच्छृणु ॥१४-१०५-४८ (९६१३९)
प्रथमा स्वर्णकपिला द्वितीया गौरपिङ्गला ।
तृतीया रक्तपिङ्गाक्षी चतुर्थी गलपिङ्गला ॥१४-१०५-४९ (९६१४०)
पञ्चमी बभ्रुवर्णाभा षष्ठी च श्वेतपिङ्गला ।
सप्तमी रङ्गपिङ्गाक्षी त्वष्टमी खुरपिङ्गला ॥१४-१०५-५० (९६१४१)
नवमी पाटला ज्ञेया दशमी पुच्छपिङ्गला ।
दशैताः कपिलाः प्रोक्तास्तारयन्ति नरान्सदा ॥१४-१०५-५१ (९६१४२)
मङ्गल्याश्च पवित्राश्च सर्वपापप्रणाशनाः ।
एवमेव ह्यनड्वाहो दश प्रोक्ता नरेश्वर ॥१४-१०५-५२ (९६१४३)
ब्राह्मणो वाहयेत्तांस्तु नान्यो वर्णः कथंचन ।
न वाहयेच्च कपिलां क्षेत्रे वाऽध्वनि वा द्विजः ॥१४-१०५-५३ (९६१४४)
वाहयेद्धुङ्कृतेनैव शाखया वा सपत्रया ।
न दण्डेन न वा यष्ट्या न पाशेन न वा पुनः ॥१४-१०५-५४ (९६१४५)

न क्षुत्तृष्णाश्रमश्रान्तान्वाहयेद्विकलेन्द्रियान् ।
अतृप्तेषु न भुञ्जीयात्पिबेत्पीतेषु चोदकम् ॥१४-१०५-५५ (९६१४६)
शुश्रूषोर्मातरश्चैताः पितरस्ते प्रकीर्तिताः ।
अह्नां पूर्वत्र भागे च धुर्याणां वाहनं स्मृतम् ॥१४-१०५-५६ (९६१४७)
विश्रामेन्मध्यमे भागे भागे चान्ते यथासुखम् ।
यत्र च त्वरया कृत्यं संशयो यत्र वाऽध्वनि। १४-१०५-५७ (९६१४८)
वाहयेत्तत्र धुर्यांस्तु न स पापेन लिप्यते ॥
भ्रूणहत्यासमं पापं तस्य स्यात्पाण्डुनन्दन। १४-१०५-५८ (९६१४९)
अन्यथा वाहयन्राजन्निरयं याति रौरवम् ॥
रुधिरं पातयेत्तेषां यस्तु मोहान्नराधिप। १४-१०५-५९ (९६१५०)
तेन पापेन पापात्मा नरकं यात्यसंशयम् ॥
नरकेषु च सर्वेषु समाः स्थित्वा शतंशतम्। १४-१०५-६० (९६१५१)
इह मानुष्यके लोके बलीवर्दो भविष्यति ॥
तस्मात्तु मुक्तिमन्विच्छन्दद्यात्तु कपिलां नरः ॥१४-१०५-६१ (९६१५२)
कपिलां वाहयेद्यस्तु वृषलो लोभमोहितः ।
तेन देवास्त्रयस्त्रिंशत्पितरश्चापि वाहिताः ॥१४-१०५-६२ (९६१५३)
स देवैः पितृभिर्नित्यं वध्यमानस्तु दुर्मतिः ।
नरकान्नरकं घोरं गच्छेदाप्रलयं नृप ॥१४-१०५-६३ (९६१५४)
ब्रह्मा रुद्रस्तथाऽग्निश्च कपिलानां गतिं गताः ।
तस्मात्ते न निहन्तव्याः पूज्याश्चैव न संशयः ।
निःश्वसन्ति यदा श्रान्तास्तदा हन्युस्च तत्कुलं ॥ १४-१०५-६४ (९६१५५)
यावन्ति तेषां रोमाणि तावद्वर्षशतं नृप ।
नरकेषूपपच्यन्ते तत्र तद्वाहका नराः ॥१४-१०५-६५ (९६१५६)
कपिला सर्वयज्ञेषु दक्षिणार्थं विधीयते ।
तस्मात्तद्दक्षिणा देया यज्ञेष्वेव द्विजातिभिः ॥१४-१०५-६६ (९६१५७)
होमार्तं चाग्निहोत्रस्य यां प्रयच्छेत्प्रयत्नतः ।
श्रोत्रियाय दरिद्राय श्रान्तायामिततेजसे ।
तेन दानेन पूतात्मा मम लोके महीयते ॥ १४-१०५-६७ (९६१५८)
यावन्ति चैव रोमाणि कपिलाङ्गे युधिष्ठिर ।
तावद्वर्षसहस्राणि स्वर्गलोके महीयते ॥१४-१०५-६८ (९६१५९)
सुवर्णखुरशृङ्गीं च कपिलां यः प्रयच्छति ।
विषुवे चायने चापि सोऽश्वमेधफलं लभेत् ।
तेनाश्वमेधतुल्येन मम लोकं स गच्छति ॥ १४-१०५-६९ (९६१६०)
स्वर्णशृङ्गीं रूप्यखुरां सवत्सां कांस्यदोहिनीम् ।
वस्त्रैरलङ्कृतां पुष्टां गन्धैर्माल्यैश्च शोभिताम् ॥१४-१०५-७०
(९६१६१)

पवित्रं हि पवित्राणां सुरव्णमिति मे मतिः ।
तस्मात्सुवर्णाभरणा दातव्या साऽग्निहोत्रिणे ॥ १४-१०५-७१ (९६१६२)
एवं दत्त्वा तु राजेन्द्र सप्तपूर्वान्परानपि ।
तारयिष्यति राजेन्द्र नात्र कार्या विचारणा ॥ १४-१०५-७२ (९६१६३)
अग्निष्टोमसहस्रस्य वाजपेयं च तत्समम् ।
वाजपेयसहस्रस्य अश्वमेधं च तत्समम् ।
अश्वमेधसहस्रस्य राजसूयं च तत्समम् ॥ १४-१०५-७३ (९६१६४)
कपिलानां सहस्रेण विदिदत्तेन पाण्डव ।
राजसूयफलं प्राप्य मम लोके महीयते ।
न तस्य पुनरावृत्तिर्विद्यते कुरुपुङ्गव ॥ १४-१०५-७४ (९६१६५)
प्रयच्छते यः कपिलां सवत्सां कांस्यदोहिनीम् ।
सुवर्णकुरशृङ्गाङ्गीं सर्वालङ्कारशोभिताम् ॥ १४-१०५-७५ (९६१६६)
तैस्तैर्गुणैः कामदुघा च भूत्वा
नरं प्रदातारमुपैति सा गौः ।
स्वकर्मभिश्चाप्यनुबध्यमानं
तीव्रान्धकारे नरके पतन्तम् ।
महार्णवे नौरिव वायुनीता
दत्ता हि गौस्तारयते मनुष्यम् ॥ १४-१०५-७६ (९६१६७)
पुत्रांश्च पौत्रांश्च कुलं च सर्व-
मासप्तमं तारयते यथावत् ।
यावन्मनुष्यान्पृथिवी बिभर्ति
तावत्प्रदातारमृतं परत्र ॥ १४-१०५-७७ (९६१६८)
यथौषधं मन्त्रकृतं नरस्य
प्रयुक्तमात्रं विनिहन्ति रोगान् ।
तथैव दत्ता कपिला सुपात्रे
पापं नरस्याशु निहन्ति सर्वम् ॥ १४-१०५-७८ (९६१६९)
यथैव दृष्ट्वा भुजगाः सुपर्णं
नश्यन्ति दूराद्विवशा भयार्ताः ।
तथैव दृष्ट्वा कपिलाप्रदाना-
न्नस्यन्ति पापानि नरस्य शीघ्रम् ॥ १४-१०५-७९ (९६१७०)
यथा त्वचं वै भुजगो विहाय
पुनर्नवं रूपमुपैति पुण्यम् ।
तथैव मुक्तः पुरुषः स्वपापै-
र्विरज्यते वै कपिलाप्रदानात् ॥ १४-१०५-८० (९६१७१)
यथाऽन्धकारं भवने विलग्नं
दीप्तो हि निर्यातयति प्रदीपः ।

तथा नरः पापमपि प्रलीनं
निष्क्रामयेद्वै कपिलाप्रदानात् ॥ १४-१०५-८१ (९६१७२)
यावन्ति रोमाणि भवन्ति तस्या
वत्सान्वितायाश्च शरीरजानि ।
तावत्प्रदाता युगवर्षकोटिं
स ब्रह्मलोके रमते मनुष्यः ॥ १४-१०५-८२ (९६१७३)
यस्याहिताग्नेरतिथिप्रियस्य
शूद्रान्नदूरस्य जितेन्द्रियस्य ।
सत्यव्रतस्याध्ययनान्वितस्य
दत्ता हि गौस्तारयते परत्र ॥ ॥ १४-१०५-८३ (९६१७४)

इति श्रीमन्महाभारते आश्वमेधिकपर्वणि वैष्णवधर्मपर्वणि
पञ्चाधिकशततमोऽध्यायः ॥१०५ ॥

---

अस्वमेधिकपर्व-अध्यय१०६
॥ श्रीः ॥
१४.१०६. अध्यायः १०६

Mahabharata - Ashvamedhika Parva - Chapter Topics
कृष्णेन युधिष्ठिरंप्रति कपिलादानप्रशंसनम् ॥१ ॥
ब्रह्मणाऽग्निकुण्डमध्यात्कपिलासर्जनम् ।तथा रुद्रादिदेवैः कपिलायै
सर्वपूज्यत्वादिरूपवरदानम् ॥२ ॥
देवर्ष्यादिभइः स्वनिवासाय कपिलावयवसमाश्रयणम् ॥३ ॥
कृष्णेन हव्यकव्यदानकालकथनम् ।तथा
श्राद्धार्हानर्हब्राह्मणविवेचनम्।तथा
स्वर्गनरकप्रापकसुकृतदुष्कृतकथनम् ॥४ ॥

Mahabharata - Ashvamedhika Parva - Chapter Text

वैशम्पायन उवाच ।
एवं श्रुत्वा परं पुण्यं कपिलादानमुत्तमम् ।
धर्मपुत्रः प्रहृष्टात्मा केशवं पुनरब्रवीत् ॥१४-१०६-१ (९६१७५)
देवदेवश कपिला यदा विप्राय दीयते ।
कथं सर्वेषु चाङ्गेषु तस्यास्तिष्ठन्ति देवताः ॥१४-१०६-२ (९६१७६)
याश्चैताः कपिलाः प्रोक्ता दश चैव त्वया मम ।
तासां कति सुरश्रेष्ठ कपिलाः पुण्यलक्षणाः ॥१४-१०६-३ (९६१७७)

कथं वाऽनुगृहीतास्ताः सुरैः पितृगणैरपि ।
केन युक्ताश्च वर्णेन श्रोतुं कौतूहलं मे ॥१४-१०६-४ (९६१७८)
वैशम्पायन उवाच।१४-१०६-५क्ष् (७९६८)
युधिष्ठिरेणैवमुक्तः केशवः सत्यवाक्तदा ।
गुह्यानां परमं गुह्यं वक्तुमेवोपचक्रमे ॥१४-१०६-५ (९६१७९)
शृणु राजन्पवित्रं वै रहस्यं धर्ममुत्तमम् ॥
ग्रहणीयं सत्यमिदं न श्राव्यं हेतुवादिभिः ॥१४-१०६-६ (९६१८०)
यदा वत्सस्य पादौ द्वौ प्रसवे शिरसा सह ।
दृश्येते दानकालं तत्तमाहुर्मुनिसत्तमाः ॥१४-१०६-७ (९६१८१)
अन्तरिक्षगतो वत्सो यावद्भूमिं न यास्यति ।
गौस्तावत्पृथिवी ज्ञेया तस्माद्देया तु तादृशी ॥१४-१०६-८ (९६१८२)
यावन्ति धेन्वा रोमाणि सवत्साया युधिष्ठिर ।
यावत्यः सिकताश्चापि गर्भोदकपरिप्लुताः ।
तावद्वर्षसहस्राणि दाता स्वर्गे महीयते ॥ १४-१०६-९ (९६१८३)
सुवर्णाभरणां कृत्वा सव्तसां कपिलां तिलैः ।
प्रच्छाद्य तां तु दद्याद्वै सर्वरत्नैरलङ्कृताम् ॥१४-१०६-१० (९६१८४)
ससमुद्रा नदी तेन सशैलवनकानना ।
चतुरन्ता भवेद्दत्ता नात्र कार्या विचारणा ॥१४-१०६-११ (९६१८५)
पृथिवीदानतुल्येन तेन दानेन मानवः ।
संसारसागरात्तीर्णो याति लोकं प्रजापतेः ॥१४-१०६-१२ (९६१८६)
ब्रह्महा भ्रूणहा गोघ्नो यदि वा गुरुतल्पगः ।
महापातकयुक्तोपि एतद्दानेन शुद्ध्यति ॥१४-१०६-१३ (९६१८७)
इदं पठति यः पुण्यं कपिलादानमुत्तमम् ।
प्रातरुत्थाय मद्भक्त्या तस्य पुण्यफलं शृणु ॥१४-१०६-१४ (९६१८८)
मनसा कर्मणा वाचा मतिपूर्वं युधिष्ठिर ।
पापं रात्रिकृतं हन्यादस्याध्यायस्य पाठकः ॥१४-१०६-१५ (९६१८९)
इदमावर्तमानस्तु श्राद्धे यस्तर्पयेद्द्विजान् ।
तस्याप्यमृतमश्नन्ति पितरोऽत्यन्तहर्षिताः ॥१४-१०६-१६ (९६१९०)
यश्चेदं शृणुयाद्भक्त्या मद्गतेनान्तरात्मना ।
तस्य रात्रिकृतं सर्वं पापमाशु प्रणश्यति ॥१४-१०६-१७ (९६१९१)
अतः परं विशेषं तु कपिलानां ब्रवीमि ते ।
याश्चैताः कपिलाः प्रोक्ता दश राजन्मया तव ।
तासां चतस्रः प्रवराः पुण्याः पापप्रणाशनाः ॥ १४-१०६-१८ (९६१९२)
सुवर्णकपिला पुण्या तथा रक्ताक्षिपिङ्गला ।
पिङ्गलाक्षी च या गौश्च या स्यात्पिङ्गलपिङ्गला ॥१४-१०६-१९ (९६१९३)
एताश्चतस्रः प्रवराः पवित्राः पापनाशनाः ।

नमस्कृता वा दृष्टा वा घ्नन्ति पापं नरस्य तु ॥ १४-१०६-२० (९६१९४)
यस्यैताः कपिलाः सन्ति गृहे पापप्रणाशनाः ।
तत्र श्रीर्विजयः कीर्तिः स्फीता नित्यं युधिष्ठिर ॥१४-१०६-२१ (९६१९५)
एतासां प्रीतिमायाति क्षीरेण तु वृषध्वजः ।
दध्ना च त्रिदशाः सर्वे घृतेन तु हुताशनः ॥१४-१०६-२२ (९६१९६)
पितरः पितामहाश्चैव तथैव प्रपितामहाः ।
सकृद्दत्तेन तुष्यन्ति वर्षकोटिं युधिष्ठिर ॥१४-१०६-२३ (९६१९७)
कपिलाया घृतं क्षीरं दधि पायसमेव वा ।
श्रोत्रियेभ्यः सकृद्दत्वा नरः पापैः प्रमुच्यते ॥१४-१०६-२४ (९६१९८)
उपवासं तु यः कृत्वाऽप्यहोरात्रं जितेन्द्रियः ।
कपिलापञ्चगव्यं तु पीत्वा चान्द्रायणात्परम् ॥१४-१०६-२५ (९६१९९)
सौम्ये मुहूर्ते तत्प्रशय शुद्धात्मा शुद्धमानसः ।
क्रोधानृतविनिर्मुक्तो मद्गतेनान्तरात्मना ॥१४-१०६-२६ (९६२००)
कपिलापञ्चगव्येन सुमन्त्रेण पृथक्पथक् ।
यो मत्प्रतिकृतिं वाऽपि शङ्कराकृतिमेव वा ।
स्नापयेद्विषुवे यस्तु सोऽश्वमेधफलं लभेत् ॥ १४-१०६-२७ (९६२०१)
स मुक्तपापः शुद्धात्मा यानेनांबरशोभिना ।
मम लोकं व्रजेन्मुक्तो रुद्रलोकमथापि वा ॥१४-१०६-२८ (९६२०२)
ब्रह्मणा तु पुरा सृष्टा कपिला काञ्चनप्रभा ।
अग्निकुण्डात्परैर्मन्त्रैर्होमधेनुर्महाप्रभा ॥१४-१०६-२९ (९६२०३)
सृष्टमात्रां तु तां दृष्ट्वा देवा रुद्रादयो दिवि ।
सिद्धा ब्रह्मर्षयश्चैव वेदाः साङ्गाः सहाध्वरैः ॥१४-१०६-३० (९६२०४)
सागराः सरितश्चैव पर्वताः सबलाहकाः ।
गन्धर्वाप्सरसो यक्षाः पन्नगाश्चाप्युपस्थिताः ॥१४-१०६-३१ (९६२०५)
सर्वे विस्मयमापन्नाः शिखिमध्ये महाप्रभाम् ।
मन्त्रैशाच विविधैस्तां तु तुष्टुवुस्तामनेकशः ॥१४-१०६-३२ (९६२०६)
कृताञ्जलिपुटाः सर्वे नातिशृङ्गीं त्रिलोचनाम् ।
मूर्ध्ना प्रणम्य तां भूमौ सवत्साममृतारणिम् ॥१४-१०६-३३ (९६२०७)
ऊचुः प्राञ्जलयः सर्वे चतुर्वक्त्रं पितामहम् ।
आज्ञापय महादेव किं ते कुर्मः कथं विभो ॥१४-१०६-३४ (९६२०८)
एवमुक्तः सुरैः सर्वैर्ब्रह्मा वचनमब्रवीत् ।
भवन्तोप्यनुगृह्णन्तु दोग्ध्रीमेनां पयस्विनीम् ॥१४-१०६-३५ (९६२०९)
होमधेनुरियं ज्ञेया ह्यग्नीन्संतर्पयिष्यति ।
अतोऽग्निस्तर्पितः सर्वान्भवतस्तर्पयिष्यति ॥१४-१०६-३६ (९६२१०)
प्रीताः क्षीरामृतेनास्या जातवीर्यपराक्रमाः ।
जयिष्यथ यथाकामं दानवान्सर्व एव तु ॥१४-१०६-३७ (९६२११)

जातवीर्यबलैर्युक्ताः सत्ववन्तो जितेन्द्रियाः ।
असङ्ख्येयबलाः सर्वे पालयिष्यथ वै प्रजाः ॥१४-१०६-३८ (९६२१२)
पालिताश्च प्रजाः सर्वा भवद्भिरिह धर्मतः ।
पूजयिष्यन्ति वा नित्यं यज्ञैर्विविधदक्षिणैः ॥१४-१०६-३९ (९६२१३)
एवमुक्ताः सुराः सर्वे ब्रह्मणा परमेष्ठिना ।
ततः संहृष्टवदनाः कपिलायै वरं ददुः ॥१४-१०६-४० (९६२१४)
देवता ऊचुः।१४-१०६-४१क्ष् (७९६९)
यस्माल्लोकहितायाद्य ब्रह्मणा त्वं विनिर्मिता ।
तस्मात्पूता पवित्रा च भव पापव्यपोहिनी ॥१४-१०६-४१ (९६२१५)
ये त्वां दृष्ट्वा नमस्यन्ति स्पृष्ट्वा चापि करैर्नराः ।
तेषां वर्षकृतं पापं त्वद्भक्तानां प्रणश्यति ॥१४-१०६-४२ (९६२१६)
अकामकृतमज्ञानमदृष्टं यच्च पातकम् ।
त्वां दृष्ट्वा ये नमस्यन्ति नराः सर्वसहेति च ।
तेषां तद्विलयं याति तमः सूर्योदये यथा ॥ १४-१०६-४३ (९६२१७)
भगवानुवाच।१४-१०६-४४क्ष् (७९७०)
इत्युक्त्वाऽस्यै वरं दत्त्वा प्रययुस्ते यथागतम् ।
लोकनिस्तरणार्थाय सा च लोकांश्चचार ह ॥१४-१०६-४४ (९६२१८)
तस्यामेव समुद्भूता ह्येताश्च कपिला नव ।
विचरन्ति महीमेनां लोकानुग्रहकारणात् ।
तस्मात्तु कपिला देया परत्र हितमिच्छता ॥ १४-१०६-४५ (९६२१९)
यदा च दीयते राजन्कपिला ह्यग्निहोत्रिणे ।
तदा च शृङ्गयोस्तस्या विष्णुरिन्द्रश्च तिष्ठति ॥१४-१०६-४६ (९६२२०)
चन्द्रवज्रधरौ चापि तिष्ठतः शृङ्गमूलयोः ।
शृङ्गमध्ये तथा ब्रह्मा ललाटे गोवृषध्वजः ॥१४-१०६-४७ (९६२२१)
कर्णयोरश्विनौ देवौ चक्षुषी शशिभास्करौ ।
दन्तेषु मरुतो देवा जिह्वायां वाक्सरलस्वती ॥१४-१०६-४८ (९६२२२)
रोमकूपेषु मुनयश्चर्मण्येव प्रजापतिः ।
निश्वासेषु स्थिता वेदाः सषडङ्गपदक्रमाः ॥१४-१०६-४९ (९६२२३)
नासापुटे स्थिता गन्धाः पुष्पाणि सुरभीणि च ।
अधरे वसवः सर्वे मुखे चाग्निः प्रतिष्ठितः ॥१४-१०६-५० (९६२२४)
साध्या देवाः स्थिताः कक्षे ग्रीवायां पार्वती स्थिता ।
पृष्ठे च नक्षत्रगणाः ककुद्देशे नभस्स्थलम् ॥१४-१०६-५१ (९६२२५)
अपाने सर्वतीर्थानि गोमूत्रे जाह्नवी स्वयम् ।
इष्टतुष्टमया लक्ष्मीर्गोमये वसती तदा ॥१४-१०६-५२ (९६२२६)
नासिकायां सदा देवी ज्येष्ठा वसति भामिनी ।
श्रोणीतटस्थाः पितरो रमा लाङ्गूलमाश्रिता ॥१४-१०६-५३ (९६२२७)

पार्श्वयोरुभयोः सर्वे विश्वेदेवाः प्रतिष्ठिताः ।
तिष्ठत्युरसि तासां तु प्रीतः शक्तिधरो गुहः ॥१४-१०६-५४ (९६२२८)
जानजङ्घोरुदेशेषु पञ्च तिष्ठन्ति वायवः ।
खुरमध्येषु गन्धर्वाः खुराग्रेषु च पन्नगाः ॥१४-१०६-५५ (९६२२९)
चत्वारः सागराः पूर्णास्तस्या एव पयोधराः ।
रतिर्मेधा क्षमा स्वाहा श्रद्धा शान्तिर्धृतिः स्मृतिः। १४-१०६-५६ (९६२३०)
कीर्तिर्दीप्तिः क्रिया कान्तिस्तुष्टिः पुष्टिस्च सन्ततिः ।
दिशश्च प्रदिशश्चैव सेवन्ते कपिलां सदा ॥१४-१०६-५७ (९६२३१)
देवा पितृगणाश्चापि गन्धर्वाप्सरसां गणाः ।
लोका द्वीपार्णवाश्चैव गङ्गाद्याः सरितस्तथा ॥१४-१०६-५८ (९६२३२)
देवाः पितृगणाश्चापि वेदाः साङ्गाः सहाध्वरैः ।
वेदोक्तैर्विविधैर्मन्त्रैः स्तुवन्ति हृषितास्तथा ॥१४-१०६-५९ (९६२३३)
विद्याधराश्च ये सिद्धा भूतास्तारागणास्तथा ।
पुष्पवृष्टिं च वर्षन्ति प्रनृत्यन्ति च हर्षिताः ॥१४-१०६-६० (९६२३४)
ब्रह्मणोत्पादिता देवी वह्निकुण्डान्महाप्रभा ।
नमस्ते कपिले पुण्ये सर्वदेवैर्नमस्कृते ॥१४-१०६-६१ (९६२३५)
कपिलेऽथ महासत्वे सर्वतीर्थमये शुभे ।
दातारं स्वजनोपेतं ब्रह्मलोकं नय स्वयम् ॥१४-१०६-६२ (९६२३६)
अहो रत्नमिदं पुण्यं सर्वदुःखघ्नमुत्तमम् ।
अहो धर्मार्जितं शुद्धमिदमग्र्यं महाधनम् ।
इत्याकाशस्थितस्ते तु सर्वदेवा जपन्ति च ॥ १४-१०६-६३ (९६२३७)
तस्याः प्रतिग्रहीता च भुङ्क्ते यावद्द्विजोत्तमः ।
तावद्देवगणाः सर्वे कपिलामर्चयन्ति च ।
स्वर्णशृङ्गीं रूप्यखुरां गन्धैः पुष्पैः सुपूजिताम् ॥ १४-१०६-६४ (९६२३८)
वस्त्राभ्यामहताभ्यां तु यावत्तिष्ठत्यलङ्कृता ।
तावद्यदिच्छेत्कपिला मन्त्रपूता सुसंस्कृता ।
भूलोकवासिनः सर्वान्ब्रह्मलोकं नयेत्स्वयम् ॥ १४-१०६-६५ (९६२३९)
भूरश्वः कनकं गावो रूप्यमश्वं तिला यवाः ।
दीयमानानि विप्राय प्रहृष्यन्ति दिनेदिने ॥१४-१०६-६६ (९६२४०)
अथ त्वश्रोत्रियेभ्यो वै तानि दत्तानि पाण्डव ।
तथा निन्दन्त्यथात्मानमशुभं किंनु नः कृतं ॥१४-१०६-६७ (९६२४१)
अहो रक्षःपिशाचैश्च लुप्यमानाः समन्ततः ।
यास्यामो निरयं शीघ्रमिति शोचन्ति तानि वै ॥१४-१०६-६८ (९६२४२)
एतान्यपि द्विजेभ्यो वै श्रोत्रियेभ्यो विशेषतः ।
दीयमानानि वर्धन्ते दातारं तारयन्ति च ॥१४-१०६-६९ (९६२४३)
युधिष्ठिर उवाच।१४-१०६-७०क्ष् (७९७१)

देवदेवेश दैत्यघ्न कालः को हव्यकव्ययोः ।
के तत्रि पूजामर्हन्ति वर्जनीयाश्च के द्विजाः ॥ १४-१०६-७० (९६२४४)
भगवानुवाच। १४-१०६-७१क्ष् (७९७२)
दैवं पूर्वाह्णिकं ज्ञेयं पैतृकं चापराह्णिकम् ।
कालहीनं च यद्दानं तद्दानं राजसं विदुः ॥ १४-१०६-७१ (९६२४५)
अवघुष्टं च यद्भुक्तमनृतेन च भारत ।
परामृष्टं शुना वाऽपि तद्भागं राक्षसं विदुः ॥ १४-१०६-७२ (९६२४६)
यावन्तः पतिता विप्रा जडोन्मत्तादयोपि च ।
दैवे च पित्र्ये ते विप्रा राजन्नार्हन्ति सत्क्रियां ॥ १४-१०६-७३ (९६२४७)
क्लीबः प्लङ्गी च कृष्ठी च राजयक्ष्मान्वितश्च यः ।
अपस्मारी च यश्चापि पित्र्ये नार्हति सत्कृतिम् ॥ १४-१०६-७४ (९६२४८)
चिकित्सका देवलका मिथ्यानियमधारिणः ।
सोमविक्रयिणश्चापि श्राद्धे नार्हन्ति सत्कृतिम् ॥ १४-१०६-७५ (९६२४९)
एकोद्दिष्टे च ये चान्नं भुञ्जते विधिवद्द्विजाः ।
चान्द्रायणमकृत्वा ते पुनर्नार्हन्ति सत्कृतिम् ॥ १४-१०६-७६ (९६२५०)
गायका नर्तकाश्चैव प्लवका वादकास्तथा ।
कथका यौधिकाश्चैव श्राद्धे नार्हन्ति सत्कृतिम् ॥ १४-१०६-७७ (९६२५१)
अनग्नयश्च ये विप्राः शवनिर्यातकाश्च ये ।
स्तेनाश्चापि विकर्मस्था राजन्नार्हन्ति सत्कृतिम् ॥ १४-१०६-७८ (९६२५२)
अपरिज्ञातपूर्वाश्च गणपुत्राश्च ये द्विजाः ।
पुत्रिकापुत्रकाश्चापि श्राद्धे नार्हन्ति सत्कृतिम् ॥ १४-१०६-७९ (९६२५३)
रणकर्ता च यो विप्रो यश्च वाणिज्यको द्विजः ।
प्राणिविक्रयवृत्तिश्च श्राद्धे नार्हन्ति सत्कृतिम् ॥ १४-१०६-८० (९६२५४)
चीर्णव्रतगुणैर्युक्ता नित्यं स्वाध्यायतत्पराः ।
सावित्रीज्ञाः क्रियावन्तस्ते श्राद्धे सत्कृतिक्षमाः ॥ १४-१०६-८१ (९६२५५)
श्राद्धस्य ब्राह्मणः कालः प्राप्तं दधि घृतं तथा ।
दर्भाः सुमनसः क्षेत्रं तत्काले श्राद्धदो भवेत् ॥ १४-१०६-८२ (९६२५६)
चारित्रनिरता राजन्कृशा ये कृशवृत्तयः ।
अर्थिनश्चोपगच्छन्ति तेभ्यो दत्तं महत्फलम् ॥ १४-१०६-८३ (९६२५७)
तपस्विनश्च ये विप्रास्तथा भैक्षचराश्च ये ।
अर्थिनः केचिदिच्छन्ति तेषां दत्तं महत्फलम् ॥ १४-१०६-८४ (९६२५८)
एवं धर्मभूतां श्रेष्ठ ज्ञात्वा सर्वात्मना तदा ।
श्रोत्रियाय दरिद्राय प्रयच्छानुपकारिणे ॥ १४-१०६-८५ (९६२५९)
दानं यत्ते प्रियं किंचिच्छ्रोत्रियाणां च यत्प्रियम् ।
तत्प्रयच्छस्व धर्मज्ञ यदीच्छसि तदक्षयम् ॥ १४-१०६-८६ (९६२६०)
निरयं ये च गच्छन्ति तच्छृणुष्व युधिष्ठिर ॥ १४-१०६-८७ (९६२६१)

गुर्वर्थं वा भयार्थं वा नोचेदन्यत्र पाण्डव ।
वदन्ति येऽनृतं विप्रास्ते वै निरयगामिनः ॥१४-१०६-८८ (९६२६२)
परदारापहर्तारः परदाराभिमर्शकाः ।
परारप्रयोक्तारस्तें वै निरयगामिनः ॥१४-१०६-८९ (९६२६३)
सूचकाः संधिभेत्तारः परद्रव्योपजीविनः ।
अकृतज्ञाश्च मित्राणां ते वै निरयगामिनः ॥१४-१०६-९० (९६२६४)
वर्णाश्रमाणां ये बाह्याः पाषण्डाश्चैव पापिनः ।
उपासते च तानेव ते सर्वे नरकालयाः ॥१४-१०६-९१ (९६२६५)
वेदविक्रयिणश्चैव वेदानां चैव दूषकाः ।
वेदानां लेखकाश्चैव ते वै निरयगामिनः ॥१४-१०६-९२ (९६२६६)
रसविक्रयिणो राजन्विषविक्रयिणश्च ये ।
क्षीरविक्रयिणश्चापि ते वै निरयगामिनः ॥१४-१०६-९३ (९६२६७)
चण्डालेभ्यश्च ये क्षीरं प्रयच्छन्ति नराधमाः ।
अर्थार्थमथवा स्नेहात्ते वै निरयगामिनः ॥१४-१०६-९४ (९६२६८)
पशूनां दमकक्कयैव तथा नासानुवेधकाः
पुंस्त्वहिंसाकरस्चैव ते वै निरयगामिनः ॥ १४-१०६-९५ (९६२६९)
अदातारः समर्था ये द्रव्याणां लोभकारणात् ।
दीनानन्धान्न पश्यन्ति ते वै निरयगामिनः ॥१४-१०६-९६ (९६२७०)
क्षान्तान्दान्तान्कृशान्प्राज्ञान्दीर्घकालं सहोषितान् ।
त्यजन्ति कृतकृत्या ये ते वा निरयगामिनः ॥१४-१०६-९७ (९६२७१)
बालानामपि वृद्धानां श्रान्तानां चापि ये नराः ।
अदत्त्वाऽश्नान्ति मृष्टान्नं ते वै निरयगामिनः ॥१४-१०६-९८ (९६२७२)
एते पूर्वर्षिभिः प्रोक्ता नरा निरयगामिनः ।
ये स्वर्गं समनुप्राप्तास्ताञ्शृणुष्व युधिष्ठिर ॥१४-१०६-९९ (९६२७३)
दानेन तपसा चैव सत्येन च दमेन च ।
ये धर्ममनुवर्तन्ते ते नराः स्वर्गगामिनः ॥१४-१०६-१०० (९६२७४)
शुश्रूषयाऽप्युपाध्यायाच्छ्रुतमादाय पाण्डव ।
ये प्रतिग्रहनिस्स्नेहास्ते नराः स्वर्गगामिनः ॥१४-१०६-१०१ (९६२७५)
मधुमांसासवेभ्यस्तु निवृत्ता व्रतवत्तु ये ।
परदारनिवृत्ता ये ते नराः स्वर्गगामिनः ॥१४-१०६-१०२ (९६२७६)
मातरं पितरं चैव शुश्रूषन्ति च ये नराः ।
भ्रहातॄणामपि सस्नेहास्ते नराः स्वर्गगामिनः ॥१४-१०६-१०३ (९६२७७)
ये तु भोजनकाले तु निर्याताश्चातिथिप्रियाः ।
द्वाररोधं न कुर्वन्ति ते नराः स्वर्गगामिनः ॥१४-१०६-१०४ (९६२७८)
वैवाहिकं तु कन्यानां दरिद्राणां च ये नराः ।
कारयन्ति च कुर्वन्ति ते नराः स्वर्गगामिनः ॥१४-१०६-१०५ (९६२७९)

रसानामथ बीजानामोषधीनां तथैव च ।
दातारः श्रद्धयोपेतास्ते नराः स्वर्गगामिनः ॥१४-१०६-१०६ (९६२८०)
क्षेमाक्षेमं च मार्गेषु समानि विषमाणि च ।
अर्थिनां ये च वक्ष्यन्ति ते नराः स्वर्गगामिनः ॥१४-१०६-१०७ (९६२८१)
पर्वद्वये चतुर्दश्यामष्टम्यां संध्ययोर्द्वयोः ।
आर्द्रायां जन्मनक्षत्रे विषुवे श्रवणेऽथवा ।
ये ग्राम्यधर्मविरतास्ते नराः स्वर्गगाप्तिनः ॥ १४-१०६-१०८ (९६२८२)
हव्यकव्यविधानं च नरकस्वर्गगामिनौ ।
धर्माधर्मौ च कथितौ किं भूयः श्रोतुमिच्छसि ॥ ॥१४-१०६-१०९ (९६२८३)

इति श्रीमन्महाभारते आश्वमेधिकपर्वणि वैष्णवधर्मपर्वणि
षडधिकशततमोऽध्यायः ॥१०६ ॥

---

अस्वमेधिकपर्व-अध्यय१०७
॥ श्रीः ॥
१४.१०७. अध्यायः १०७

Mahabharata - Ashvamedhika Parva - Chapter Topics
कृष्णेन युधिष्ठिरंप्रति साक्षाद्ब्रह्महत्याया अकरणेपि
तत्तुल्यफलकदुष्कृतकथनम्।१ ।।
तथा अभोज्यान्नानां पापिनां लक्षणकथनम् ॥२ ॥

Mahabharata - Ashvamedhika Parva - Chapter Text

युधिष्ठिर उवाच ।
इदं मे तत्वतो देव वक्तुमर्हस्यशेषतः ।
हिंसामकृत्वा यो मर्त्यो ब्रह्महत्यामवाप्नुयात् ॥१४-१०७-१ (९६२८४)
भगवानुवाच।१४-१०७-२क्ष् (७९७३)
ब्राह्मणं स्वयमाहूय भिक्षार्थं वृत्तिकर्शितम् ।
ब्रूयान्नास्तीति यः पश्चात्तमाहुर्ब्रह्मघातकम् ॥१४-१०७-२ (९६२८५)
मध्यस्थस्येह विप्रस्य योऽनूचानस्य भारत ।
वृत्तिं हरति दुर्बुद्धइस्तमाहुर्ब्रह्मघातकम् ॥१४-१०७-३ (९६२८६)
आश्रमे वाऽऽलये वाऽपि ग्रामे वा नगरेऽपि वा ।
अग्निं यः प्रक्षिपेत्क्रुद्धस्तमाहुर्ब्रह्मघातकम् ॥१४-१०७-४ (९६२८७)
गोकुलस्य तृषार्तस्य जलान्ते वसुधाधिप ।
उत्पादयति यो विघ्नं तमाहुर्ब्रह्मघातकम् ॥१४-१०७-५ (९६२८८)

यः प्रवृत्तां श्रुतिं सम्यक्छास्त्रं वा मुनिभिः कृतम् ।
दूषयत्यनभिज्ञाय तमाहुर्ब्रह्मघातकम् ॥ १४-१०७-६ (९६२८९)
चक्षुषा वाऽपि हीनस्य पङ्गोर्वाऽपि जडस्य वा ।
हरेद्वै यस्तु सर्वस्वं तमाहुर्ब्रह्मघातकम् ॥ १४-१०७-७ (९६२९०)
गुरुं त्वंकृत्यं हुंकृत्य अतिक्रम्य च शासनम् ।
वर्तते यस्तु मूढात्मा तमाहुर्ब्रह्मघातकम् ॥ १४-१०७-८ (९६२९१)
क्रोधाद्वा यदि वा द्वेषादाक्रुष्टस्तर्जितोपि वा ।
ऋतौ स्त्रियं वा नोपेयात्तमाहुर्ब्रह्मघातकम् ॥ १४-१०७-९ (९६२९२)
यावत्सारो भवेद्दीनस्तन्नाशे यस्य दुःस्थितिः ।
तत्सर्वस्वं हरेद्यो वै तमाहुर्ब्रह्मघातकम् ॥ १४-१०७-१० (९६२९३)
युधिष्ठिर उवाच। १४-१०७-११क्ष् (७९७४)
सप्वेषामपि दानानां यत्तु दानं विशिष्यते ।
अभोज्यान्नाश्च ये विप्रास्तान्ब्रवीहि सुरोत्तम ॥ १४-१०७-११ (९६२९४)
भगवानुवाच। १४-१०७-१२क्ष् (७९७५)
अन्नमेव प्रशंसन्ति देवा ब्रह्मपुरस्सराः ।
अन्नेन सदृशं दानं न भूतं न भविष्यति ॥ १४-१०७-१२ (९६२९५)
अन्नमूर्जस्करं लोके ह्यन्नात्प्राणाः प्रतिष्ठिताः ।
अबोज्यान्नान्मया राजन्वक्ष्यमाणान्निबोध मे ॥ १४-१०७-१३ (९६२९६)
दीक्षितस्य कदर्यस्य क्रुद्धस्य निकृतस्य च ।
अभिशप्तस्य षण्डस्य पाकभेदकरस्य च ॥ १४-१०७-१४ (९६२९७)
चिकित्सकस्य दूतस्य तथा चोच्छिष्टभोजिनः ।
उग्रान्नं सूतकान्नं च शूद्रोच्छेषणमेव च ॥ १४-१०७-१५ (९६२९८)
द्विषदन्नं न भोक्तव्यं पतितान्नं च यच्छ्रुतम् ।
तथा च पिशुनस्यान्नं यज्ञविक्रयिणस्तथा ॥ १४-१०७-१६ (९६२९९)
शैलूषं तन्तुवायान्नं कृतघ्नस्यान्नमेव च ।
अंबष्ठकनिषादानां रङ्गावतरकस्य च ॥ १४-१०७-१७ (९६३००)
सुवर्णकर्तुर्वैणस्यि शस्त्रविक्रयिणस्तथा ।
सूताना शौण्डिकानां च वैद्यस्य रजकस्य च ॥ १४-१०७-१८ (९६३०१)
स्त्रीजितस्य नृशंसस्य तथा माहिषिकस्य च ।
अनिर्दशानां प्रेतानां गणिकानां तथैव च ॥ १४-१०७-१९ (९६३०२)
बन्दिनो द्यूतकर्तुश्च तथा द्यूतविदामपि ।
परिवित्तस्य यच्चान्नं परिवेत्तुस्तथैव च ॥ १४-१०७-२० (९६३०३)
यश्चाग्रदिधिषुर्विप्रो दिधिषूपपिस्तथा ।
तयोरप्युभयोरन्नं राज्ञां चापि विवर्जयेत् ॥ १४-१०७-२१ (९६३०४)
राजान्नं तेज आदत्ते शूद्रान्नं ब्रह्मवर्चसम् ।
आयुः सुवर्णकारान्नं यशश्चार्मावकृन्तिनः ॥ १४-१०७-२२ (९६३०५)

गणान्नं गणिकान्नं च लोकेभ्यः परिकीर्तितम् ।
पूयं चिकित्सकस्यान्नं शुक्लं तु वृषलीपतेः ॥१४-१०७-२३ (९६३०६)
विष्ठा वार्धुषिकस्यान्नं तस्मात्तत्परिवर्जयेत् ।
तेषां त्वगस्थिरोमाणि भुङ्क्ते योऽन्नं तु भक्षयेत् ॥१४-१०७-२४ (९६३०७)
अमात्यान्नमथैतेषां भुक्त्वा तु त्रियहं क्षिपेत् ।
मत्या भुक्त्वा सकृद्वाऽपि प्राजापत्यं चरेद्द्विजः ॥१४-१०७-२५ (९६३०८)
दानानां च फलं यद्वै शृणु पाण्डव तत्वतः ।
जलदस्तृप्तिमाप्नोति सुखमक्षयमन्नदः ॥१४-१०७-२६ (९६३०९)
तिलदश्च प्रजामिष्टां दीपदश्चक्षुरुत्तमम् ।
भूमदो भूमिमाप्नोति दीर्घमायुर्हिरण्यदः ॥१४-१०७-२७ (९६३१०)
गृहदोऽग्र्याणि वेश्मानि रूप्यदो रूपमुत्तमम् ।
वासोदश्चन्द्रसालोक्यमश्विसालोक्यमश्वदः ॥१४-१०७-२८ (९६३११)
अनडुहः श्रियं जुष्टां गोदो गोलोकमश्नुते ।
यानशय्याप्रदो भार्यामैश्वर्यमभयप्रदः ॥१४-१०७-२९ (९६३१२)
धान्यदः शाश्वतं सौख्यं ब्रह्मदो ब्रह्मसाम्यताम् ।
सर्वेषामेव दानानां ब्रह्मदानं विशिष्यते ॥१४-१०७-३० (९६३१३)
हिरण्यभूगवाश्वाजवस्त्रशय्यासनादिषु ।
योर्चितः प्रतिगृह्णाति दद्यादुचितमेव च ।
तावुभौ गच्छतः स्वर्गं नरकं च विपर्यये ॥ १४-१०७-३१ (९६३१४)
अनृतं न वदेद्विद्वांस्तपस्तप्त्वा न विस्मयेत् ।
नार्तोप्यभिभवेद्विप्रान्न दत्त्वा परिकीर्तयेत् ॥१४-१०७-३२ (९६३१५)
यज्ञोऽनृतेन क्षरति तपः क्षरति विस्मयात् ।
आयुर्विप्रावमानेन दानं तु परिकीर्तनात् ॥१४-१०७-३३ (९६३१६)
एकः प्रजायते जन्तुरेक एव प्रमीयते ।
अकोऽनुभुङ्क्ते सुकृतमेकश्चाप्नोति दुष्कृतम् ॥१४-१०७-३४ (९६३१७)
मृतं शरीरमुत्सृज्य काष्ठलोष्टसमं क्षितौ ।
विमुखा बान्धवा यान्ति धर्मस्तमनुवर्तते ॥१४-१०७-३५ (९६३१८)
अनागतानि कार्याणि कर्तुं गणयते मनः ।
शरीरकं समुद्दिश्य स्मयते नूनमन्तकः ॥१४-१०७-३६ (९६३१९)
तस्माद्धर्मसहासस्तु धर्मं संचिनुयात्सदा ।
धर्मेण हि सहायेन तमस्तरति दुस्तरम् ॥१४-१०७-३७ (९६३२०)
येषां तटाकानि बहूदकानि
सभाश्च कूपाश्च शुभाः प्रपाश्च ।
अन्नप्रदानं मधुरा च वाणी
यमस्य ते निर्विषया भवन्ति ॥ ॥ १४-१०७-३८ (९६३२१)

इति श्रीमन्महाभारते आश्वमेधिकपर्वणि वैष्णवधर्मपर्वणि
सप्ताधिकशततमोऽध्यायः ॥ १०७ ॥

---

अस्वमेधिकपर्व-अध्यय१०८
॥ श्रीः ॥
१४.१०८. अध्यायः १०८

Mahabharata - Ashvamedhika Parva - Chapter Topics
कृष्णेन युधिष्ठिरंप्रति यत्यग्निमहिमानुवर्णनम् ॥ १ ॥
दानपात्रब्राह्मणलक्षणकथनम् ॥ २ ॥
तथाऽन्नदानप्रशंसनम् ॥ ३ ॥

Mahabharata - Ashvamedhika Parva - Chapter Text

युधिष्ठिर उवाच ।
अनेकान्तं बहुद्वारं धर्ममाहुर्मनीषिणः ।
किंलक्षणोसौ भति तन्मे ब्रूहि जनार्दन ॥ १४-१०८-१ (९६३२२)
भगवानुवाच। १४-१०८-२क्ष् (७९७६)
शृणु राजन्समासेन धर्मशौचविधिक्रमम् ।
अहिंसा शौचमक्रोधमानृशंस्यं दमः शमः ।
आर्जवं चैव राजेन्द्र निश्चितं धर्मलक्षणम् ॥ १४-१०८-२ (९६३२३)
ब्रह्मचर्यं तपः क्षान्तिर्मधुमांसस्य वर्जनम् ।
मर्यादायां स्थितिश्चैव शमः शौचस्य लक्षणम् ॥ १४-१०८-३ (९६३२४)
बाल्ये विद्यां निषेवेत यौवने दारसंग्रहम् ।
वार्धके मौनमातिष्ठेत्सर्वदा धर्ममाचरेत् ॥ १४-१०८-४ (९६३२५)
ब्राह्मणान्नावमन्येत गुरुन्परिवदेन्न च ।
यतीनामनुकूलः स्यादेष धर्मः सनातनः ॥ १४-१०८-५ (९६३२६)
यतिर्गुरुर्द्विजातीनां वर्णानां ब्राह्मणो गुरुः ।
पतिरेव गुरुः स्त्रीणां सर्वेषां पार्थिवो गुरुः ॥ १४-१०८-६ (९६३२७)
यद्गृहस्तार्जितं पापं ज्ञानतोऽज्ञानतोपि वा ।
निर्दहिष्यति तत्सर्वमेकरात्रोषितो यतिः ॥ १४-१०८-७ (९६३२८)
दुर्वृत्ता वा सुवृत्ता वा ज्ञानिनोऽज्ञानिनोपि वा ।
गृहस्थैर्यतयः पूज्याः परत्र हितकाङ्क्षिभिः ॥ १४-१०८-८ (९६३२९)
एकदण्डी त्रिदण्डी वा शिखी वा मुण्डितोपि वा ।
काषायदण्डधारोपि यतिः पूज्यो न संशयः ॥ १४-१०८-९ (९६३३०)
अपूजितो गृहस्थैर्वा तथा चाप्यवमानितः ।

यतिर्वाऽप्यतिथिर्वाऽपि नरके पातयिष्यतः ॥१४-१०८-१० (९६३३१)
तस्मात्तु यत्नतः पूज्या मद्भक्ता मत्परायणाः ।
मयि संन्यस्तकर्माणः परत्र हितकाङ्क्षिभिः ॥१४-१०८-११ (९६३३२)
प्रहरेन्न द्विजान्विप्रो गां न हन्यात्कदाचन ।
भ्रूणहत्यासमं चैव उभयं यो निषेवते ॥१४-१०८-१२ (९६३३३)
नाग्निं मुखेनोपधमेन्न च पादौ प्रतापयेत् ।
नाधः कुर्यात्कदाचित्तु न पृष्ठं परितापयेत् ॥१४-१०८-१३ (९६३३४)
नान्तरा गमनं कुर्यान्न चामेध्यं विनिक्षिपेत् ।
उच्छिष्टो न स्पृशेदग्निमाशौचस्थो न जातुचित् ॥१४-१०८-१४ (९६३३५)
श्वचण्डालादिभिः स्पृष्टो नाङ्गमग्नौ प्रतापयेत् ।
सर्वदेवमयो वह्निस्तस्माच्छुद्धः सदा स्पृशेत् ॥१४-१०८-१५ (९६३३६)
प्राप्तमूत्रपुरीषस्तु न स्पृशेद्वह्निमात्मवान् ।
यावत्तु धारयेद्वेगं तावदप्रयतो भवेत् ॥१४-१०८-१६ (९६३३७)
पचनाग्निं न गृह्णीयात्परवेश्मनि जातुचित् ।
तस्मिन्पक्वेन चान्नेन यत्कर्म कुरुते शुभम् ॥१४-१०८-१७ (९६३३८)
तस्यैव तच्छुभस्यार्धमग्निदस्य भवेन्नृप ।
तस्माद्गृहगतं वह्निं प्रकुर्यादविनाशितम् ॥१४-१०८-१८ (९६३३९)
प्रमादाद्यदि वाऽज्ञानात्तस्य नाशो भविष्यति ।
गृह्णीयात्तु मथित्वा वा श्रोत्रियागारतोपि वा ॥१४-१०८-१९ (९६३४०)
युधिष्ठिर उवाच। १४-१०८-२०क्ष् (७९७७)
कीदृशाः साधवो विप्रास्तेभ्यो दत्तं महाफलम् ।
कीदृशेभ्यो हि दातव्यं तन्मे ब्रूहि जनार्दन ॥१४-१०८-२० (९६३४१)
भगवानुवाच। १४-१०८-२१क्ष् (७९७८)
अक्रोधनाः सत्यपरा धर्मनित्या जितेन्द्रियाः ।
तादृशाः साधवो विप्रास्तेभ्यो दत्तं महाफलम् ॥१४-१०८-२१ (९६३४२)
अमानिनः सर्वसहा दृष्टार्था विजितेन्द्रियाः ।
सर्वभूतहिता मैत्रास्तेभ्यो दत्तं महाफलम् ॥१४-१०८-२२ (९६३४३)
अलुब्धाः शुचयो वैद्या ह्रीमन्तः सत्यवादिनः ।
स्वधर्मनिरता ये तु तेभ्यो दत्तं महाफलम् ॥१४-१०८-२३ (९६३४४)
साङ्गांश्च चतुरो वेदान्योऽधीयेत दिनेदिने ।
शूद्रान्नं यस्य नो देहे तत्पात्रमृषयो विदुः ॥१४-१०८-२४ (९६३४५)
प्रज्ञाश्रुताभ्यां वृत्तेन शीलेन च समन्वितः ।
तारयेत्तत्कुलं सर्वमेकोपीह युधिष्ठिर ॥१४-१०८-२५ (९६३४६)
गामश्वमन्नं वित्तं वा तद्विधे प्रतिपादयेत् ।
निशम्य तु गुणोपेतं ब्राह्मणं साधुसंमतम् ।
दूरादाहृत्य सत्कृत्य तं प्रयत्नेन पूजयेत् ॥ १४-१०८-२६ (९६३४७)

युधिष्टिर उवाच। १४-१०८-२७क्ष् (७९७९)
धर्माधर्मविधिस्त्वेवं भीमं भीष्मेण भाषितम् ।
भीष्मवाक्यात्सारभूतं वद धर्मं सुरेश्वर ॥ १४-१०८-२७ (९६३४८)
भगवानुवाच। १४-१०८-२८क्ष् (७९८०)
अन्नेन धार्यते सर्वं जगदेतच्चराचरम् ।
अन्नात्प्रभवति प्राणः प्रत्यक्षं नास्ति संशयः ॥ १४-१०८-२८ (९६३४९)
कलत्रं पीडयित्वा तु देशे काले च शक्तितः ।
दातव्यं भिक्षवे चान्नमात्मनो भूतिमिच्छता ॥ १४-१०८-२९ (९६३५०)
विप्रमध्वपरिश्रान्तं बालं वृद्धमथापि वा ।
अर्चयेद्गुरुवत्प्रीतो गृहस्थो गृहमागतम् ॥ १४-१०८-३० (९६३५१)
क्रोधमुत्पतितं हित्वा सुशीलो वीतमत्सरः ।
अर्चयेदतिथिं प्रीतः परत्र हितभूतये ॥ १४-१०८-३१ (९६३५२)
अतिथिं नावमन्येत नानृतां गिरमीरयेत् ।
न पृच्छेद्गोत्रचरणं नाधीतं वा कदाचन ॥ १४-१०८-३२ (९६३५३)
चण्डालो वा श्वपाको वा काले यः कश्चिदागतः ।
अन्नेन पूजनीयः स्यात्परत्र हितमिच्छता ॥ १४-१०८-३३ (९६३५४)
पिधाय तु गृहद्वारं भुक्ते योऽन्नं प्रहृष्टवान् ।
स्वर्गद्वारपिधानं वै कृतं तेन युधिष्ठिर ॥ १४-१०८-३४ (९६३५५)
पितॄन्देवानृषीन्विप्रानतिथींश्च निराश्रयान् ।
यो नरः प्रीणयत्यन्नैस्तस्य पुण्यफलं महत् ॥ १४-१०८-३५ (९६३५६)
कृत्वा तु पापं बहुशो यो दद्यादन्नमर्थिने ।
ब्राह्मणाय विशेषेण सर्वपापैः प्रमुच्यते ॥ १४-१०८-३६ (९६३५७)
अन्नदः प्राणदो लोके प्राणदः सर्वदो भवेत् ।
तस्मादन्नं विशेषेण दातव्यं भूतिमिच्छता ॥ १४-१०८-३७ (९६३५८)
अन्नं ह्यमृतमित्याहुरन्नं प्रजननं स्मृतम् ।
अन्नप्रणाशो सीदन्ति शरीरे पञ्च धातवः ॥ १४-१०८-३८ (९६३५९)
बलं बलवतो नश्येदन्नहीनस्य देहिनः ।
तस्मादन्नं विशेषेण श्रद्धयाऽश्रद्धयापि वा ॥ १४-१०८-३९ (९६३६०)
आदत्ते हि रसं सर्वमादित्यः स्वगभस्तिभिः ।
वायुस्तस्मात्समादाय रसं मेधेषु धारयेत् ॥ १४-१०८-४० (९६३६१)
तत्तु मेघगतं भूमौ शक्रो वर्षति तादृशम् ।
तेन दिग्धा भवेद्देवी मही प्रीता च क़क़क़क़  १४-१०८-४१ (९६३६२)
तस्यां सस्यानि रोहन्ति यैर्जीवन्त्यखिलाः प्रजाः ।
मांसमेदोस्थिमज्जानां सम्भवस्तेभ्य एव हि ॥ १४-१०८-४२ (९६३६३)
एवं सूर्यश्च पवनो मेघः शक्रस्तथैव च ।
एक एव स्थितो राशिर्यतो भूतानि जज्ञिरे ॥ १४-१०८-४३ (९६३६४)

भवनानि च दिव्यानि दिवि तेषां महात्मनाम् ।
नानासंस्थानि भूतानि नानाभूमिगतानि च ॥१४-१०८-४४ (९६३६५)
चन्द्रमण्डलशुभ्राणि किङ्किणीजालवन्ति च ।
तरुणादित्यवर्णानि स्थावराणि चराणि च ॥१४-१०८-४५ (९६३६६)
अनेकशतसङ्ख्यानि सान्तर्जलवनानि च ।
तत्र पुष्पफलोपेताः कामदाः सुरपादपाः ॥१४-१०८-४६ (९६३६७)
वाप्यो बद्धसभाः कूपा दीर्घिकाश्च सहस्रशः ।
भक्ष्यभोज्यमयाः शैला वासांस्याभरणानि च ॥१४-१०८-४७ (९६३६८)
क्षीरस्रवन्त्यः सरितस्तथा चैवान्नपर्वताः ।
घोषवन्ति च यानानि युक्तान्यथ सहस्रशः ॥१४-१०८-४८ (९६३६९)
प्रासादप्रवराः शुभ्राः शय्याश्च कनकोज्ज्वलाः ।
अन्नदास्तत्र तिष्ठन्ति तस्मादन्नप्रदो भवेत् ॥ ॥१४-१०८-४९ (९६३७०)

इति श्रीमन्महाभारते आश्वमेधिकपर्वणि वैष्णवधर्मपर्वणि
अष्टोत्तरशततमोऽध्यायः ॥१०८ ॥

---

अस्वमेधिकपर्व-अध्यय१०९
॥ श्रीः ॥
१४.१०९. अध्यायः १०९

Mahabharata - Ashvamedhika Parva - Chapter Topics
कृष्णेन युधिष्ठिरंप्रति भोजनविधिकथनम् ॥१ ॥
तथा गोग्रासदानप्रकारकथनम् ॥२ ॥
तथा तिलप्रशंसनपूर्वकं तेषां मिक्षूणां च ब्राह्मणेन स्वयं
यन्त्रे निपीडनप्रतिषेधनम् ॥३ ॥

Mahabharata - Ashvamedhika Parva - Chapter Text

युधिष्ठिर उवाच ।
अन्नदानफलं श्रुत्वा प्रीतोस्मि मधुसूदन ।
भोजनस्य विधिं वक्तुं देवदेव त्वमर्हसि ॥१४-१०९-१ (९६३७१)
भगवानुवाच।१४-१०९-२क्ष् (७९८१)
बोजनस्य द्विजातीनां विधानं शृणु पाण्डव ।
स्नातः शुचिः शुचौ देशे निर्जने हुतपावकः ॥१४-१०९-२ (९६३७२)
मण्डलं कारयित्वा च चतुरश्रं द्विजोत्तमः ।
क्षत्रियश्चेत्ततो वृत्तं वैश्योऽर्धेन्दुसमाकृतिम् ॥१४-१०९-३ (९६३७३)

आर्द्रपादस्तु भुञ्जीयात्प्राङ्मुखश्चासने शुचौ ।
पादाभ्यां धरणीं स्पृष्ट्वा पादेनैकेन वा पुनः ॥ १४-१०९-४ (९६३७४)
नैकवासास्तु भुञ्जीयान्न चान्तर्धाय वा द्विजः ।
न भिन्नपात्रे भुञ्जीत पर्णपृष्ठे तथैव च ॥ १४-१०९-५ (९६३७५)
अन्नं पूर्वं नमस्कुर्यात्प्रहृष्टेनान्तरात्मना ।
नान्यदालोकयेदन्नान्न जुगुप्सेन तत्परः ॥ १४-१०९-६ (९६३७६)
जुगुप्सितं च यच्चान्नं राक्षसा एव भुञ्जते ।
पाणिना जलमुद्धृत्य कुर्यादन्नं प्रदक्षिणम् ॥ १४-१०९-७ (९६३७७)
अपेयं तद्विजानीयात्पीत्वा चान्द्रायणं चरेत् ।
परिवेषजलादन्यत्पेयमेव तु मन्त्रवत् ॥ १४-१०९-८ (९६३७८)
पञ्च प्राणाहुतीः कुर्यात्समन्त्रं तु पृथक्पृथक् ॥ १४-१०९-९ (९६३७९)
यथा रसं न जानाति जिह्वा प्रामाहुतौ नृप ।
तथा समाहितः कुर्यात्प्राणाहुतिमतन्द्रिकतः ॥ १४-१०९-१० (९६३८०)
विदित्वाऽन्नमथान्नादं पञ्च प्राणांश्च पाण्डव ।
यः कुर्यादाहुतीः पञ्च तेनेष्टाः पञ्चवायवः ॥ १४-१०९-११ (९६३८१)
अतोऽन्यथा तु भुञ्जानो ब्राह्मणो ज्ञानदुर्बलः ।
तेनान्नेनासुरान्प्रेतान्राक्षसांस्तर्पयिष्यति ॥ १४-१०९-१२ (९६३८२)
वक्त्रप्रमाणान्पिण्डांश्च ग्रसेदेकैकशः पुनः ।
वक्त्राधिकं तु यत्पिण्डमात्मोच्छिष्टं तदुच्यते ॥ १४-१०९-१३ (९६३८३)
पिण्डावशिष्टमन्यच्च वक्त्रान्निस्सृतमेव च ।
अभोज्यं तद्विजानीयाद्भुक्त्वा चान्द्रायणं चरेत् ॥ १४-१०९-१४ (९६३८४)
स्वमुच्छिष्टं तु यो भुङ्क्ते यो भुङ्क्ते मुक्तभोजनम् ।
चान्द्रायणं चरेन्कृच्छ्रं प्राजापत्यमथापि वा ॥ १४-१०९-१५ (९६३८५)
स्त्रीपात्रभुङ्नरः पापः स्त्रीणामुच्छिष्टभुक्तथा ।
तया सह च यो भुङ्क्ते स भुङ्क्ते मद्यमेव हि ।
न तस्य निष्कृतिर्दृष्टा मुनिभिस्तत्वदर्शिभिः ॥ १४-१०९-१६ (९६३८६)
पिबतः पतिते तोये भोजने मुखनिस्सृते ।
अभोज्यं तद्विजानीयाद्भुक्त्वा चान्द्रायणं चरेत् ॥ १४-१०९-१७ (९६३८७)
पीतशेषं तु तन्नाम न पेयं पाण्डुनन्दन ।
पिबेद्यदि हि तन्मोहाद्द्विजश्चान्द्रायणं चरेत् ॥ १४-१०९-१८ (९६३८८)
पानीयानि पिबेद्यते तत्पात्रं द्विजसत्तमः ।
अनुच्छिष्टं भवेत्तावद्यावद्भूमौ न निक्षिपेत् ॥ १४-१०९-१९ (९६३८९)
मौनी वाऽप्यथवा भूमौ नावलोक्य दिशस्तथा ।
भुञ्जीत विधिवद्विप्रो न चोच्छिष्टं प्रदापयेत् ॥ १४-१०९-२० (९६३९०)
सदा चात्यशनं नाद्यान्नातिहीनं च कर्हिचित् ।
यथाऽन्नेन व्यथा न स्यात्तथा भुञ्जीत नित्यशः ॥ १४-१०९-२१ (९६३९१)

उदक्यामपि चण्डालं श्वानं सूकरमेव वा ।
भुञ्जानो यदि वा पश्येत्तदन्नं च परित्यजेत् ।
भुञ्जानो ह्यत्यजन्मोहाद्द्विजश्चान्द्रायणं चरेत् ॥ १४-१०९-२२ (९६३९२)
केशकीटोपपन्नं च मुखमारुतवीजितम् ।
अभोज्यं तद्विजानीयाद्भुक्त्वा चान्द्रायणं चरेत् ॥१४-१०९-२३ (९६३९३)
उत्थाय च पुनः स्पृष्टं पादस्पृष्टं च लङ्घितम् ।
अन्नं तद्राक्षसं विद्यात्तस्मात्तत्परिवर्जयेत् ॥१४-१०९-२४ (९६३९४)
राक्षसोच्छिष्टभुग्विप्रः सप्त पूर्वान्परानपि ।
नरके रौरवे घोर स पितॄन्पातयिष्यति ॥१४-१०९-२५ (९६३९५)
तस्मिन्नाचमनं कुर्याद्यस्मिन्पात्रे स भुक्तवान् ।
यद्युत्तिष्ठत्यनाचान्तो भुक्तवानासनात्ततः ।
स्नानं सद्यः प्रकुर्वीत सोन्यथाऽप्रयतो भवेत् ॥ १४-१०९-२६ (९६३९६)
युधिष्ठिर उवाच।१४-१०९-२७क्ष् (७९८२)
तृणमुष्टिविधानं च तृणमाहात्म्यमेव च ।
इक्षोः सोमसमुद्भूतिं वक्तुमर्हसि मानदः ॥१४-१०९-२७ (९६३९७)
भगवानुवाच।१४-१०९-२८क्ष् (७९८३)
पितरो वृषभा ज्ञेयो गावो लोकस्य मातरः ।
तासां तु पूजया राजन्पूजिताः पितृदेवताः ॥१४-१०९-२८ (९६३९८)
सभा प्रपा गृहाश्चापि देवतायतनानि च ।
शुद्ध्यन्ति शकृता यासांकिं भूतमधिकं ततः ॥१४-१०९-२९ (९६३९९)
ग्रासमुष्टिं परगवे दद्यात्संवत्सरं तु यः ।
अकृत्वा स्वयमाहारं प्राप्तस्तत्सार्वकालिकम् ॥१४-१०९-३० (९६४००)
गावो मे मातरः सर्वाः पितरश्चैव गोवृषाः ।
ग्रासमुष्टिं मया दत्तं प्रतिगृह्णीत मातरः ॥१४-१०९-३१ (९६४०१)
इत्युक्त्वाऽनेन मन्त्रेण गायत्र्या वा समाहितः ।
अभिमन्त्र्य ग्रासमुष्टिं तस्य पुण्यफलं शृणु ॥१४-१०९-३२ (९६४०२)
यत्कृतं दुष्कृतं तेन ज्ञानतोऽज्ञानतोपि वा ।
तस्य नश्यति तत्सर्वं दुःखप्नं च विनश्यति ॥१४-१०९-३३ (९६४०३)
तिलाः पिवित्राः पापघ्ना नारायणसमुद्भवाः ।
तिलाञ्श्राद्धे प्रशंसनति दानमेतदनुत्तमम् ॥१४-१०९-३४ (९६४०४)
तिलान्दद्यात्तिलान्भक्ष्यात्तिलानप्रातरुपस्पृशेत् ।
तिलंतिलमिति ब्रूयात्तिलाः पापहरा हि ते ॥१४-१०९-३५ (९६४०५)
क्रीत्वा प्रतिगृहीत्वा वा न विक्रेया द्विजातिभिः ।
भोजनाभ्यञ्जनाद्दानाद्योन्यत्तु कुरुते तिलैः ।
कृमिर्भूत्वा श्वविष्ठायां पितृभिः सह मज्जति ॥ १४-१०९-३६ (९६४०६)
तिलान्नपीडयेद्विप्रो यन्त्रचक्रे स्वयं नृप ।

पीडयन्हि द्विजो मोहान्नरकं याति रौरवम् ॥१४-१०९-३७ (९६४०७)
इक्षुवंशोद्भवः सोमः सोमवंशोद्भवा द्विजाः ।
इक्षुं न पीडयेत्तस्मादिक्षुघात्यात्मघातकः ॥१४-१०९-३८ (९६४०८)
इक्षुदण्डसहस्राणामेकैकेन युधिष्ठिर ।
ब्रह्महत्यामवाप्नोति द्विजश्चेद्यन्त्रपीडकः ।
तस्मान्न पीडयेदिक्षुं यन्त्रचक्रे द्विजोत्तमः ॥ ॥ १४-१०९-३९ (९६४०९)

इति श्रीमन्महाभारते आश्वमेधिकपर्वणि वैष्णवधर्मपर्वणि
नवाधिकशततमोऽध्यायः ॥१०९ ॥

---

अस्वमेधिकपर्व-अध्यय११०
॥ श्रीः ॥
१४.११०. अध्यायः ११०

Mahabharata - Ashvamedhika Parva - Chapter Topics
कृष्णेन युधिष्ठिरंप्रत्यापद्धर्मकथनम् ॥१ ॥
तथा प्रशस्ताप्रशस्तब्राह्मणलक्षणकथनम् ॥२ ॥
तथा सामान्यतो नानाधर्मकथनपूर्वकं ब्राह्मण्यसिद्धिपर्रकारकथनम्
॥३ ॥
तथा गुर्वाचार्योपाध्यायलक्षणकथनम् ॥४ ॥

Mahabharata - Ashvamedhika Parva - Chapter Text

युधिष्ठिर उवाच ।
समुच्चयं च धर्माणां भोज्याभोज्यं तथैव च ।
श्रुतं मया त्वत्प्रसादादापद्धर्मं ब्रवीहि मे ॥१४-११०-१ (९६४१०)
भगवानुवाच।१४-११०-२क्ष् (७९८४)
दुर्भिक्षे राष्ट्रसंबाधेऽप्याशौचे मृतसूतके ।
धर्मकालेऽध्वनि तथा नियमो येन लुप्यते ॥१४-११०-२ (९६४११)
दूराध्वगमनात्खिन्नो द्विजालाभेऽथ शूद्रतः ।
अकृतन्नं तु यत्किंचिद्गृह्णीयादात्मवृत्तये ॥१४-११०-३ (९६४१२)
आतुरो दुःखितो वाऽपि तथाऽऽर्तो वा बुभुक्षितः ।
भुञ्जन्नविधिना विप्रः प्रायश्चित्तीयते न च ॥१४-११०-४ (९६४१३)
निमन्त्रितस्तु यो विप्रो विदिवद्धव्यकव्ययोः ।
मांसादीन्यपि भुञ्जानः प्रायश्चित्तीयते न च ॥१४-११०-५ (९६४१४)
अष्टौ तान्यव्रतघ्नानि आपो मूलं घृतं पयः ।

हविर्ब्राह्मणकाम्या च गुरोर्वचनमौषधम् ॥ १४-११०-६ (९६४१५)
अशक्तो विधिवत्कर्तुं प्रायश्चित्तानि यो नरः ।
विदुषां वचनेनापि दानेनापि विशुद्ध्यति ॥ १४-११०-७ (९६४१६)
अनृतावृतुकाले वा दिवा रात्रौ तथाऽपि वा ।
प्रोषितस्तु स्त्रियं गच्छेत्प्रायश्चित्तीयते न च ॥ १४-११०-८ (९६४१७)
युधिष्ठिर उवाच। १४-११०-९क्ष् (७९८५)
प्रशस्याः कीदृशा विप्रा निन्द्याश्चापि सुरेश्वर ।
अष्टकायाश्च कः कालस्तन्मे कथय सुव्रत ॥ १४-११०-९ (९६४१८)
भगवानुवाच। १४-११०-१०क्ष् (७९८६)
सत्यसन्धं द्विजं दृष्ट्वा स्थानाद्वेपति भास्करः ।
एष मे मण्डलं भित्त्वा याति ब्रह्म सनातनम् ॥ १४-११०-१० (९६४१९)
कुलीनः कर्मकृद्वैद्यस्तथा चाप्यानृशंस्यवान् ।
श्रीमानृजउः सत्यवादी पात्रं सर्व इमे द्विजाः ॥ १४-११०-११ (९६४२०)
एते चाग्रासनस्थास्ते भुञ्जानाः प्रथमं द्विजाः ।
तस्यां पङ्क्त्यां तु ये वान्ये तान्पुनत्येव दर्शनात् ॥ १४-११०-१२ (९६४२१)
मद्भक्ता ये द्विजश्रेष्ठा मद्भक्ता मत्परायणाः ।
तान्पङ्क्तिपावनान्विद्धि पूज्यांश्चैव विशेषतः ॥ १४-११०-१३ (९६४२२)
निन्द्याञ्शृणु द्विजान्राजन्नपि वा वेदपारगान् ।
ब्राह्मणच्छद्मना लोके चरतः पापकारिणः ॥ १४-११०-१४ (९६४२३)
अनग्निरनधीयानः प्रतिग्रहरुचिस्तु यः ।
यतस्ततस्तु भुञ्जानस्तं विद्याद्ब्रह्मदूषकम् ॥ १४-११०-१५ (९६४२४)
मृतसूतकपुष्टाङ्गो यश्च शूद्रान्नभुग्द्विजः ।
अहं चापि न जानामि गतिं तस्य नराधिप ॥ १४-११०-१६ (९६४२५)
शूद्रान्नरसपुष्टाङ्गोऽप्यधीयानो हि नित्यशः ।
जपतो जुह्वतो वाऽपि गतिरूर्ध्वं न विद्यते ॥ १४-११०-१७ (९६४२६)
आहिताग्निश्च यो विप्रः शूद्रान्नान्न निवर्तते ।
पञ्च तस्य प्रणश्यन्ति आत्मा ब्रह्म त्रयोऽग्नयः ॥ १४-११०-१८ (९६४२७)
शूद्रप्रेषणकर्तुश्च ब्राह्मणस्य विशेषतः ।
भूमावन्नं प्रदातव्यं श्वसृगालसमो हि सः ॥ १४-११०-१९ (९६४२८)
प्रेतभूतं तु यः शूद्रं ब्राह्मणो ज्ञानदुर्बलः ॥
अनुगच्छेन्नीयमानं त्रिरात्रमशुचिर्भवेत् ॥ १४-११०-२० (९६४२९)
त्रिरात्रे तु ततः पूर्णे नदीं गत्वा समुद्रगाम् ।
प्राणायामशतं कृत्वा घृतं प्राश्य विशुद्ध्यति ॥ १४-११०-२१ (९६४३०)
अनाथं ब्राह्मणं प्रेतं ये वहन्ति द्विजोत्तमाः ।
पदेपदेऽश्वमेधस्य फलं ते प्राप्नुवन्ति हि ॥ १४-११०-२२ (९६४३१)
न तेषामशुभं किंचित्पापं वा शुभकर्मणाम् ।

जलावगाहनादेव सद्यः शौचं विधीयते ॥१४-११०-२३ (९६४३२)
शूद्रवेश्मनि विप्रेणि क्षीरं वा यदि वा दधि ।
निवृत्तेन न भोक्तव्यं विद्धि शूद्रान्नमेव तत ॥१४-११०-२४ (९६४३३)
विप्राणां भोक्तुकामानामत्यन्तं चान्नकाङ्क्षिणाम् ।
यो विघ्नं कुरुते मर्त्यस्ततो नान्योस्ति पापकृत् ॥१४-११०-२५ (९६४३४)
सर्वे च वेदाः सहषड्भिरङ्गैः
साङ्ख्यं पुराणं च कुले च जन्म ।
नैतानि सर्वाणि गतिर्भवन्ति
शीलव्यपेतस्य नृप द्विजस्य ॥ १४-११०-२६ (९६४३५)
ग्रहोपरागे विषुवेऽयनान्ते
पित्र्ये मघासु स्वसुते च जाते ।
गयेषु पिण्डेषु च पाण्डुपुत्र
दत्तं भवेन्निष्कसहस्रतुल्यम् ॥ १४-११०-२७ (९६४३६)
वैशाखमासस्य तु या तृतीयाऽ-
नवद्याऽसौ कार्तिकशुक्लपक्षे ।
नभस्यमासस्य च कृष्णपक्षे
त्रयोदशी पञ्चदशी न माघे ॥ १४-११०-२८ (९६४३७)
उपप्लवे चन्द्रमसो रवेश्च
श्राद्धस्य कालो ह्ययनद्वये च ।
पानीयमप्यत्रि तिलैर्विमिश्रं
दद्यात्पितृभ्यः प्रयतो मनुष्यः ।
श्राद्धं कृतं तेन समासहस्रं
रहस्यमेतत्पितरो वदन्ति ॥ १४-११०-२९ (९६४३८)
यस्त्वेकपङ्क्त्यां विषमं ददाति
स्नेहाद्भयाद्वा यदि वाऽर्थहेतोः ।
क्रूरं दुराचारमनात्मवन्तं
ब्रह्मघ्नमेनं कवयो वदन्ति ॥ १४-११०-३० (९६४३९)
धनानि येषां विपुलानि सन्ति
नित्यं रमन्ते परलोकमूढाः ।
तेषामयं शत्रुवरघ्नलोको
नान्यत्सुखं देहसुखे रतानाम् ॥ १४-११०-३१ (९६४४०)
ये चैव मुक्तास्तपसि प्रयुक्ताः
स्वाध्यायशीला जरयन्ति देहम् ।
जितेन्द्रिया भूतहिते निविष्ट-
स्तेषामसौ चापि परश्च लोकः ॥ १४-११०-३२ (९६४४१)
ये चैव विद्यां न तपो न दानं

न चापि मूढाः प्रजने यतन्ते ।
न चापि गच्छन्ति सुखानि भोगां-
स्तेषामयंक चापि परश्च नास्ति ॥ १४-११०-३३ (९६४४२)
युधिष्ठिर उवाच। १४-११०-३४क्ष् (७९८७)
नारायण पुराणेश लोकावास नमोस्तु ते ।
श्रोतुमिच्छामि कार्त्स्न्येन धर्मसारसमुच्चयम् ॥ १४-११०-३४ (९६४४३)
भगवानुवाच। १४-११०-३५क्ष् (७९८८)
धर्मसारं महाप्राज्ञि मनुना प्रोक्तमादितः ।
प्रवक्ष्यामि मनुप्रोक्तं पौराणां श्रुतिसंहितम् ॥ १४-११०-३५ (९६४४४)
अग्निचित्कपिला सत्री राजा भिक्षुर्महोदधिः ।
दृष्टमात्रात्पुनत्येते तस्मात्पश्येत तान्सदा ॥ १४-११०-३६ (९६४४५)
गौरकस्यैव दातव्या न बहूनां युधिष्ठिर ।
सा गौर्विक्रयमापन्ना दहत्यासप्तमं कुलम् ॥ १४-११०-३७ (९६४४६)
बहूनां न प्रदातव्या गौर्वस्त्रं शयनं स्त्रियः ।
तादृग्भूतं तु तद्दानं दातारं नोपतिष्ठति ॥ १४-११०-३८ (९६४४७)
आक्रम्य ब्राह्मणैर्भुक्तमनार्याणां च वेश्मनि ।
गोभिश्च पुण्यं तत्तेषां राजसूयाद्विशिष्यते ॥ १४-११०-३९ (९६४४८)
मा ददात्विति यो ब्रूयाद्ब्राह्मणेषु च गोषु च ।
तिर्यग्योनिशतं गत्वा चण्डालेषूपजायते ॥ १४-११०-४० (९६४४९)
ब्राह्मणस्वं च यद्दैवं दरिद्रस्यैव यद्धनम् ।
गुरोश्चापि हृतं राजन्स्वर्गस्थानपि पातयेत् ॥ १४-११०-४१ (९६४५०)
धर्मं जिज्ञासमानानां प्रमाणं परमं श्रुतिः ।
द्वितायं धर्मशास्त्राणि तृतीयं लोकसंग्रहः ॥ १४-११०-४२ (९६४५१)
आसमुद्राच्च यत्पूर्वादासमुद्राच्च पश्चिमात् ।
हिमाद्रिविन्ध्ययोर्मध्यमार्यावर्तं प्रचक्षते ॥ १४-११०-४३ (९६४५२)
सरावतीदृषद्वत्योर्देवनद्योर्यदन्तरम् ।
तद्देवनिर्मितं देशं ब्रह्मवर्तं प्रचक्षते ॥ १४-११०-४४ (९६४५३)
यस्मिन्देशे य आचारः पारंपर्यक्रमागतः ।
वर्णानां सान्तरालानां स सदाचार उच्यते ॥ १४-११०-४५ (९६४५४)
कुरुक्षेत्रं च मत्स्याश्च पाञ्चालाः शूरसेनयः ।
एते ब्रह्मर्षिदेशास्तु ब्रह्मावर्तादनन्तराः ॥ १४-११०-४६ (९६४५५)
एतद्देशप्रसूतस्य सकाशादग्रजन्मनः ।
स्वं चारित्रं च गृह्णीयुः पृथिव्यां सर्वमानवाः ॥ १४-११०-४७ (९६४५६)
हिमवद्विन्ध्ययोर्मध्यं यत्प्राग्विशसनादपि ।
प्रत्यगेव प्रयागात्तु मध्यदेशः प्रकीर्तितः ॥ १४-११०-४८ (९६४५७)
कृष्णसारस्तु चरति मृगो यत्र स्वभावतः ।

स ज्ञेयो याज्ञिको देशो म्लेच्छदेशस्ततः परम् ॥१४-११०-४९ (९६४५८)
एतान्विज्ञाय देशांस्तु संश्रयेरन्द्विजातयः ।
शूद्रस्तु यस्मिन्कस्मिन्वा निवसेद्वृत्तिकर्शितः ॥१४-११०-५० (९६४५९)
आचारः प्रथमो धर्मो ह्यहिंसा सत्यमेव च ।
दानं चैव यथाशक्ति नियमाश्च यमैः सह ॥१४-११०-५१ (९६४६०)
वैदिकैः कर्मभिः पुण्यैर्निषेकादिर्द्विजन्मनाम् ।
कार्यः शरीरसंस्कारः पावनः प्रेत्य चेह च ॥१४-११०-५२ (९६४६१)
गर्भहोमैर्जातकर्मनामचौलोपनायनैः ।
स्वाध्यायैस्तद्व्रतैश्चैव विवाहस्नातकव्रतैः ।
महायज्ञैश्च यज्ञैश्च ब्राह्मीयं क्रियते तनुः ॥ १४-११०-५३ (९६४६२)
धर्मोर्थौ यदि न स्यातां शुश्रुषा वाऽपि तद्विधा ।
विद्या तस्मिन्नवप्तव्या शुभं बीजमिवोषरे ॥१४-११०-५४ (९६४६३)
लौकिकं वैदिकं वाऽपि तथाऽऽध्यात्मिकमेव वा ।
यस्माज्ज्ञानमिदं प्राप्तं तं पूर्वमभिवादयेत् ॥१४-११०-५५ (९६४६४)
सव्येन सव्यं संगृह्य दक्षिणेन तु दक्षिणम् ।
न कुर्यादेकहस्तेन गुरोः पादाभिवादनम् ॥१४-११०-५६ (९६४६५)
निषेकादीनि कर्माणि यः करोति यथाविधि ।
अध्यापयति चैवेनं स विप्रो गुरुरुच्यते ॥१४-११०-५७ (९६४६६)
कृत्वोपनयनं वेदान्योध्यापयति नित्यशः ।
सकल्पान्सरहस्यांश्च स चोपाध्याय उच्यते ॥१४-११०-५८ (९६४६७)
साङ्गांश्च वेदानध्याप्य शिक्षयित्वा व्रतानि च ।
विवृणोति च मन्त्रार्थानाचार्यः सोभिधीयते ॥१४-११०-५९ (९६४६८)
उपाध्यायाद्दशाचार्य आचार्याणां शतं पिता ।
पितुः शतगुणं माता गौरवेणातिरिच्यते ॥१४-११०-६० (९६४६९)
एतेषामपि सर्वेषां गरीयान्ज्ञानदो गुरुः ।
गुरोः परतरं किंचिन्न भूतं न भविष्यति ॥१४-११०-६१ (९६४७०)
तस्मात्तेषां वशे तिष्ठिच्छुश्रूषापरमो भवेत् ।
अवमानाद्धि तेषां तु नरकं स्यान्न संशयः ॥१४-११०-६२ (९६४७१)
हीनाङ्गानतिरिक्ताङ्गान्विद्याहीनान्वयोधिकान् ।
रूपद्रविणहीनांश्च जातिहीनांस्च नाक्षिपेत् ॥१४-११०-६३ (९६४७२)
शपता यत्कृतं पुण्यं शप्यमानं तु गच्छति ।
शप्यमानस्य यत्पापं शपन्तमनुगच्छति ॥१४-११०-६४ (९६४७३)
नास्तिक्यं वेदनिन्दां च देवतानां च कुत्सनम् ।
द्वेषं डंभं च मानं च क्रोधं तैक्ष्ण्यं विवर्जयेत्
॥ ॥१४-११०-६५ (९६४७४)

इति श्रीमन्महाभारते आश्वमेधिकपर्वणि वैष्णवधर्मपर्वणि
दशाधिकशततमोऽध्यायः ॥ ११० ॥

---

अस्वमेधिकपर्व-अध्यय१११
॥ श्रीः ॥
१४.१११. अध्यायः १११

Mahabharata - Ashvamedhika Parva - Chapter Topics
कृष्णेन युधिष्टिरंप्रत्यग्निसृष्टिप्रकारकथनम् ॥ १ ॥
आहवनीयादित्वेन तद्विभागकथनपूर्वकं तत्तन्नामनिर्वचनम् ॥ २ ॥
तथा यज्ञाग्निहोत्रप्रशंसनम् ॥ ३ ॥

Mahabharata - Ashvamedhika Parva - Chapter Text

युधिष्ठिर उवाच ।
स्वभक्तस्य हृषीकेश धर्माधर्ममजानतः ।
धर्मं पुण्यतमं देव पृच्छतः कथयस्व मे ॥ १४-१११-१ (९६४७५)
भगवानुवाच। १४-१११-२क्ष् (७९८९)
यदेतदग्निहोत्रं वै सृष्टं वर्णत्रयस्य तु ।
मन्त्रवद्यद्धुतं सम्यग्विधिना चाप्युपासितम् ।
आहिताग्निं नयत्यूर्ध्वं सपत्नीकं सबान्धवम् ॥ १४-१११-२ (९६४७६)
युधिष्ठिर उवाच। १४-१११-३क्ष् (७९९०)
कथं तद्ब्राह्मणैर्देव होतव्यं क्षत्रियैः कथम् ।
वैश्यैर्वा देवदेवेश कथं वा सुहुतं भवेत् ॥ १४-१११-३ (९६४७७)
कस्मिन्काले कतं कस्य आधेयोऽग्निः सुरोत्तम ।
आहितस्य कथं वाऽपि सम्यगाचरणं भवेत् ॥ १४-१११-४ (९६४७८)
कत्यग्नयः किमात्मानः स्थानं किं कस्य वा विभो ।
कतरस्मिन्हुते स्थाने कं व्रजेदाग्निहोत्रिकः ॥ १४-१११-५ (९६४७९)
अग्निहोत्रनिमित्तं च किमुत्पन्नं पुराऽनघ ।
कथमेवाथ हूयन्ते प्रीयन्ते च सुराः कथम् ॥ १४-१११-६ (९६४८०)
विधिवन्मन्त्रवत्कृत्वा पूजितास्त्वग्नयः कथम् ।
कां गतिं वदतांश्रेष्ठ नयन्ति ह्यग्निहोत्रिणः ॥ १४-१११-७ (९६४८१)
दुर्हुताश्चापि भगवन्नविज्ञातास्त्रयोऽग्नयः ।
किमाहिताग्नेः कुर्वन्ति दुश्चीर्णा वाऽपि केशव ॥ १४-१११-८ (९६४८२)
उत्सन्नाग्निस्तु पापात्मा कां योनिं देव गच्छति ।
एतत्सर्वं समासेन भक्त्या ह्युपगतस्य मे ।

वक्तुमर्हसि सर्वज्ञ सर्वाधिकं नमोस्तु ते ॥ १४-१११-९ (९६४८३)
भगवानुवाच। १४-१११-१०क्ष् (७९९१)
शृणु राजन्महापुण्यमिदं धर्मामृतं परम् ।
यत्तु तारयते युक्तान्ब्राह्मणानग्निहोत्रिणः ॥ १४-१११-१० (९६४८४)
ब्रह्मित्वेनासृजं लोकानहमादौ महाद्युते ।
सृष्टोऽग्निर्मुखतः पूर्वं लोकानां हितकाम्यया ॥ १४-१११-११ (९६४८५)
यस्मादग्रे स भूतानां सर्वेषां निर्मितो मया ।
तस्मादग्नीत्यभिहितः पुराणज्ञैर्मनीषिभिः ॥ १४-१११-१२ (९६४८६)
यस्मात्तु सर्वकृत्येषु पूर्वमस्मै प्रदीयते ।
आहुतिर्दीप्यमानाय तस्मादग्नीति कथ्यते ॥ १४-१११-१३ (९६४८७)
यस्माच्च तु नयत्यग्र्यां गतिं विप्रान्सुपूजितः ।
यस्माच्च नयनाद्राजन्देवेष्वग्नीति कथ्यते ॥ १४-१११-१४ (९६४८८)
तस्माच्च दुर्हुतः सोयमलं भक्षयितुं क्षणात् ।
यजमानं नरश्रेष्ठ क्रव्यादोऽग्निस्ततः स्मृतः ॥ १४-१११-१५ (९६४८९)
सर्वभूतात्मको राजन्देवानामेष वै मुखम् ।
प्रथमं मन्मुखात्सृष्टो लोकार्थे पचनः प्रभुः ॥ १४-१११-१६ (९६४९०)
सृष्टमात्रो जगत्सर्वमत्तुमैच्छत्पुरा खलु ।
ततः प्रशमितः सोग्निरूपास्यैव मया पुरा ॥ १४-१११-१७ (९६४९१)
सततोपासनात्सोयमौपासन इति स्मृतः ॥ १४-१११-१८ (९६४९२)
आहुतिः सर्वमाख्याति तस्मिन्वसति सोनलः ।
आवसथ्य इति ख्यातस्तेनासौ ब्रह्मवादिभिः ॥ १४-१११-१९ (९६४९३)
तस्मात्पञ्च महायज्ञा वर्तन्ते यस्य धर्मतः ।
सोममण्डलमध्येन गतिस्तस्य द्विजन्मनः ॥ १४-१११-२० (९६४९४)
ते च सप्तर्षयः सिद्धाः संयतेन्द्रियबुद्धयः ।
गता ह्यमरसायुज्यं ते ह्यग्न्यर्चनतत्पराः ॥ १४-१११-२१ (९६४९५)
अपरे चावसथ्यं च पचनाग्निं प्रचक्षते ।
तस्मिन्पञ्च महायज्ञा वैश्वदेवश्च वर्तते ॥ १४-१११-२२ (९६४९६)
स्थलीपाकं च गार्हं च सर्वे चास्मिन्प्रतिष्ठिताः ।
गृह्यकर्मवहो यस्मात्तस्माद्गृहपतिस्तु सः ॥ १४-१११-२३ (९६४९७)
औपासनं चावसथ्यं सभ्यं पचनपावकम् ।
आहुर्ब्रह्मविदः केचिन्मतमेतन्ममापि च ॥ १४-१११-२४ (९६४९८)
अग्निहोत्रप्रकारं च शृणु राजन्समाहितः ।
त्रयाणां गुणनामानां वह्नीनामुच्यते मया ॥ १४-१११-२५ (९६४९९)
गृहाणां हि पतित्वं हि गृहपत्यमिति स्मृतम् ।
गृहपत्यं तु यस्यासीत्तत्तस्माद्गार्हपत्यता ॥ १४-१११-२६ (९६५००)
यजमानं तु यस्मात्तु दक्षिणां तु गतिं नयेत् ।

दक्षिणाग्निं तमाहुस्ते दक्षिणायतनं द्विजाः ॥ १४-१११-२७ (९६५०१)
आहुतिः सर्वमाख्याति हव्यं वै वहनं स्मृतम् ।
सर्वहव्यवहो वह्निर्गतश्चाहवनीयताम् ॥ १४-१११-२८ (९६५०२)
यं चाक्सथ्यं जुहुयान्मूलाग्निं विधिवद्द्विजः ।
आवसथ्यं तु तं चाग्निं पचनाग्निं प्रचक्षते ॥ १४-१११-२९ (९६५०३)
तेषां स भागतो वह्निः सभ्य इत्यभिधीयते ।
आवतथ्यस्तु यो वह्निः प्रथमः स प्रजापतिः ॥ १४-१११-३० (९६५०४)
ब्रह्मा च गार्हपत्योऽग्निस्तस्मिन्नेव हि सोभवत् ।
दक्षिणाग्निस्त्वयं रुद्रः क्रोधात्मा चण्ड एव सः ॥ १४-१११-३१ (९६५०५)
अहमाहवनीयोऽग्निराहोमाद्यस्य वै मुखे ।
सभ्योऽग्निः पञ्चमो यस्तु स्कन्द एव नराधिप ॥ १४-१११-३२ (९६५०६)
पृथिवी गार्हपत्योऽग्निरन्तरिक्षं च दक्षिणः ।
स्वर्गमाहवनीयोऽग्निरेवमग्नित्रयं स्मृतम् ॥ १४-१११-३३ (९६५०७)
वृत्तश्च गार्हपत्योऽग्निर्यस्माद्वृत्ता च मेदिनी ।
अर्धचन्द्राकृतिस्तं वै दक्षिणाग्निस्तथा भवेत् ॥ १४-१११-३४ (९६५०८)
चतुरश्रं ततः स्वर्गं निर्मलं तु निरामयम् ।
तस्मादाहवनीयोऽग्निश्चतुरश्रो भवेन्नृप ॥ १४-१११-३५ (९६५०९)
जुहुयाद्गार्हपत्यं यो भुवं जयति स द्विजः ।
जुहोति दक्षिणं यस्तु स जयत्यन्तरिक्षकम् ॥ १४-१११-३६ (९६५१०)
पृथिवीमन्तरिक्षं च दिवं ऋषिगणैः सह ।
जयत्याहवनीयं यो जुहुयाद्भक्तिमान्नरः ॥ १४-१११-३७ (९६५११)
आभिमुख्येन होमस्तु यस्य यज्ञेषु वर्तते ।
तेनाप्याहवनीयत्वं गतो वह्निर्महाद्युतिः ॥ १४-१११-३८ (९६५१२)
आहोमादग्निहोत्रेषु यज्ञैर्वा यत्र सर्वशः ।
यस्मात्तस्मात्प्रवर्तन्ते ततो ह्याहवनीयता ॥ १४-१११-३९ (९६५१३)
यस्त्वावसथ्यं जुहुयान्मूलाग्निं विधिवद्द्विजः ।
स तु सप्तर्षिलोकेषु सपत्नीकः प्रमोदते ॥ १४-१११-४० (९६५१४)
इष्टो भवति सर्वाग्नेरग्निहोत्रं च तद्भवेत् ।
त्राणाद्धि यजमानस्य ह्यग्निहोत्रमिति स्मृतम् ॥ १४-१११-४१ (९६५१५)
होइज्येषु विषादो वै विषादो दुःखमुच्यते ।
दुःखं तापत्रयं प्रोक्तं तापं हि नरकं विदुः ॥ १४-१११-४२ (९६५१६)
आध्यात्मिकं चाधिदैवमाधिभौतिकमेव च ।
एतत्तापत्रयं प्रोक्तमात्मविद्भिर्नराधिप ॥ १४-१११-४३ (९६५१७)
यस्माद्धि त्रायते दुःखाद्यजमानं हुतोऽनलः ।
तस्मात्तु विधिवत्प्रोक्तमग्निहोत्रमिति श्रुतौ ॥ १४-१११-४४ (९६५१८)
तदग्निहोत्रं सृष्टं वै ब्रह्मणा लोककर्तृणा ।

वेदाश्चाप्यग्निहोत्रं तु जज्ञिरे स्वयमेव तु ॥१४-१११-४५ (९६५१९)
अग्निहोत्रफला दारा दत्तभुक्तफलं धनम् ॥
रतिपुत्रफला दारा दत्तभुक्तफलं धनम् ॥ १४-१११-४६ (९६५२०)
त्रिवेदमन्त्रसंयोगादग्निहोत्रं प्रवर्तते ।
ऋग्यजुःसामभिः पुण्यैः स्थाप्यते सूत्रसंयुतैः ॥१४-१११-४७ (९६५२१)
वसन्ते ब्राह्मणस्य स्यादाधेयोऽग्निर्नराधिप ।
वसन्तो ब्राह्मणो ज्ञेयो वेदयोनिः स उच्यते ॥१४-१११-४८ (९६५२२)
अग्न्याधेयं तु येनाथ वसन्ते क्रियतेऽनघ ।
तस्य श्रीर्बह्मवृद्धिश्च ब्राह्मणस्य विवर्धते ॥१४-१११-४९ (९६५२३)
क्षत्रियस्याग्निराधेयो ग्रीष्मे श्रेष्ठः स वै नृप ।
येनाधानं तु वै ग्रीष्मे क्रियते तस्य वर्धते ।
श्रीः प्रजाःक पशवश्चैव वित्तं तेजो बलं यशः ॥ १४-१११-५० (९६५२४)
शरदृतौ तु वैश्यस्य ह्याधानीयो हुताशनः ।
शरद्रात्रं स्वयं वैश्यो वैश्ययोनिः स उच्यते ॥१४-१११-५१ (९६५२५)
शरद्याधानमेवं वै क्रियते येन पाण्डव ।
तस्यापि श्रीः प्रजाऽऽयुश्च पशवोऽर्थश्च वर्धते ॥१४-१११-५२
(९६५२६)
पशवः सर्व एवैते त्रिभिः सर्वैरलङ्कृताः ।
अग्निहोत्रा ह्यवर्तन्ते तैरेव ध्रियते जगत् ॥१४-१११-५३ (९६५२७)
ग्राम्यारण्याश्च पशवो पृक्षाश्चैव तृणानि च ।
फलान्योषधयश्चापि अग्निहोत्रकृते हविः ॥१४-१११-५४ (९६५२८)
रसाः स्नेहास्तथा गन्धा रत्नानि मणयस्तथा ।
काञ्चनानि च लोहानि ह्यग्निहोत्रकृतेऽभवन् ॥१४-१११-५५ (९६५२९)
आयुर्वेदो धनुर्वेदो मीमांसा न्यायविस्तरः ।
धर्मशास्त्रं च तत्सर्वमग्निहोत्रकृते कृतम् ॥१४-१११-५६ (९६५३०)
छन्दः शिक्षा च कल्पश्च तथा व्याकरणानि च ।
शास्त्रं ज्योतिर्निरुक्तं चाप्यग्निहोत्रकृते कृतम् ॥१४-१११-५७ (९६५३१)
इतिहासपुराणं च गाथाश्चोपनिषत्तथा ।
आथर्वणानि कर्माणि चाग्निहोत्रकृते कृतम् ॥१४-१११-५८ (९६५३२)
यच्चैतस्यां पृथिव्यां वै किंचिदस्ति चराचरम् ।
तत्सर्वमग्निहोत्रस्य कृते सृष्टं स्वयंभुवा ॥१४-१११-५९ (९६५३३)
अग्निहोत्रस्य दर्शस्य पूर्णमासस्य चाप्यथ ।
युपेष्टिपशुबन्धानां सोमपानक्रियावताम् ॥१४-१११-६० (९६५३४)
तिथिनक्षत्रयोगानां मुहूर्तकरणात्मकम् ।
कालस्य वेदनार्थं तु ज्योतिर्ज्ञानं पुराऽनघ ॥१४-१११-६१ (९६५३५)
ऋग्यजुः साममन्त्राणां श्लोकतत्वार्थचिन्तनात् ।

प्रत्यापत्तिविकल्पानां छन्दोज्ञानं प्रल्पितम् ॥१४-१११-६२ (९६५३६)
वर्णाक्षरपदार्थानां सन्धिलिङ्गं प्रकीर्तितम् ।
नामधातुविवेकार्थं पुरा व्याकरणं स्मृतम् ॥१४-१११-६३ (९६५३७)
यूपवेद्यध्वरार्थं तु प्रोक्षणश्रवणाय तु ।
यज्ञदैवतयोगार्थं शिक्षाज्ञानं प्रकल्पितम् ॥१४-१११-६४ (९६५३८)
यज्ञपात्रपवित्रार्थं द्रव्यसंभारणाय च ।
सर्वयज्ञविकल्पाय पुराकल्पं प्रकल्पितम् ॥१४-१११-६५ (९६५३९)
नामधातुविकल्पानां तत्वार्थनियमाय च ।
सर्ववेदनिरुक्तानां निरुक्तमृषिभिः कृतम् ॥१४-१११-६६ (९६५४०)
वेद्यर्थं पृथिवी सृष्टा संभारार्थं तथैव च ।
इध्मार्थमथ यूपार्थं ब्रह्मा चक्रे वनस्पतिम् ॥१४-१११-६७ (९६५४१)
ग्राम्यारण्याश्च पशवो जायन्ते यज्ञकारणात् ।
मन्त्राणां विनियोगं च प्रोक्षितं श्रपणं तथा ॥१४-१११-६८ (९६५४२)
अनुयाजप्रयाजाश्च मरुतां शंसिनस्तथा ।
औद्गात्रं चैव साम्नां वै प्रतिप्रस्थानमेव च ॥१४-१११-६९ (९६५४३)
विष्णुक्रमाणां क्रमणं दक्षिणावभृथं तथा ।
त्रिकासमर्चनं चैव स्यानेषूपह्वतं तथा ॥१४-१११-७० (९६५४४)
देवताग्रहणं मोक्षं हविषां श्रपणं तथा ।
नावबुद्धयन्ति ये विप्रा निन्दन्ति च पशोर्वधम् ।
ते यान्ति नरकं घोरं रौरवं तमसाऽऽवृतम् ॥ १४-१११-७१ (९६५४५)
शतवर्षसहस्राणि तत्र स्थित्वा नराधमाः ।
कृमिभिर्भक्ष्यमाणाश्च तिष्ठेयुः पूयशोणिते ॥१४-१११-७२ (९६५४६)
वृक्षा यूपत्वमिच्छन्ति पशुत्वं पशवस्तथा ।
तृणानीच्छन्ति बर्हिष्ट्वमोषध्यश्च हविष्यताम् ।
सोमत्वं च लताः सर्वा वेदित्वं च वसुंधर ॥ १४-१११-७३ (९६५४७)
यस्मात्पशुत्वमिच्छन्ति पशवः स्वर्गलिप्सया ।
तस्मात्पशुवधे हिंसा नास्ति यज्ञेषु पाण्डव ॥१४-१११-७४ (९६५४८)
यूपास्तन्मन्त्रसंस्कारैर्दर्भाश्च पशवस्तथा ।
यजमानेन सहिताः स्वर्गं यान्ति नरेश्वर ॥१४-१११-७५ (९६५४९)
यावत्कालं हि यज्वा वै स्वर्गलोके महीयते ।
तावत्कालं प्रमोदन्ते पशवो ह्यध्वरे हताः ॥१४-१११-७६ (९६५५०)
अहिंसा वैदिकं कर्म ब्रह्मकर्मेति तत्कृतम् ।
वेदोक्तं ये न कुर्वन्ति हिंसाबुद्धया क्रतून्द्विजाः ।
सद्यः शूद्रत्वामायान्ति प्रेत्य चण्डालतामपि ॥ १४-१११-७७ (९६५५१)
गावो यज्ञार्थमुत्पन्ना दक्षिणार्थं तथैव च ।
सुवर्णं रजतं चैव पात्रकुभार्थमेव च ॥१४-१११-७८ (९६५५२)

दर्भाः संस्तरणार्तं तु रक्षसां रक्षणाय च ।
पजनार्थं द्विजाः सृष्टास्तारका दिवि देवताः ॥ १४-१११-७९ (९६५५३)
क्षत्रिया रक्षणार्थं तु वैश्या वार्तानिमित्ततः ।
शुश्रूषार्थं त्रयाणां वै शूद्राः सृष्टाः स्वयंभुवा ॥ १४-१११-८०
(९६५५४)
एवमेतज्जगत्सर्वमग्निहोत्रकृते कृतम् ।
नावबुध्यन्ति ये चैव नरास्तु तमसा वृताः ॥ १४-१११-८१ (९६५५५)
ते यान्ति नरकं घोरं रौरवं नाम विश्रुतम् ।
रौरवाद्विप्रयुक्तास्तु कृमियोनिं व्रजन्ति ते ॥ १४-१११-८२ (९६५५६)
यथोक्तमग्निहोत्राणां शुश्रूषन्ति च ये द्विजाः ।
तैर्दत्तं सहुतं चेष्टं दत्तमध्यापितं भवेत् ॥ १४-१११-८३ (९६५५७)
एवमिष्टं च पूर्तं च यद्विप्रैः क्रियते नृप ।
तत्सर्वं सम्यगाहृत्य चादित्ये स्थापयाम्यहम् ॥ १४-१११-८४ (९६५५८)
मया स्थापितमादित्ये लोकस्य सुकृतं हि तत् ।
धारयेद्यत्सहस्रांशुः सुकृतं ह्यग्निहोत्रिणाम् ॥ १४-१११-८५ (९६५५९)
यावत्कालं तु तिष्ठन्ति लोके चाप्यग्निहोत्रिणः ।
तावदेव हि पुण्येन दीप्यते रविणाऽम्बरे ॥ १४-१११-८६ (९६५६०)
स्वर्गे स्वर्गं गतानां तु वीर्याद्भवति वीर्यवान् ।
तत्र ते ह्युपभुञ्जन्ति ह्यग्निहोत्रस्य तत्फलम् ।
समानरूपा देवानां तिष्ठन्त्याबूतसंप्लवम् ॥ १४-१११-८७ (९६५६१)
वृथाऽग्निना च ये केचिद्दह्यन्ते ह्यग्निहोत्रिणः ।
न तेऽग्निहोत्रिणां लोके मानसाऽपि व्रजन्ति ते ॥ १४-१११-८८ (९६५६२)
वीरघ्नास्तु दुराचारा दरिद्रास्तु नराधमाः ।
विकला व्याधिताश्चापि जायन्ते शूद्रयोनिषु ॥ १४-१११-८९ (९६५६३)
तस्मादप्रोषितैर्नित्यमग्निहोत्रं द्विजातिभिः ।
होतव्यं विधिवद्राजन्नूर्ध्वामिच्छन्ति ये गतिम् ॥ १४-१११-९० (९६५६४)
आत्मवन्नावमन्तव्यमग्निहोत्रं युधिष्टिर ।
न त्याज्यं क्षणिमप्येतदग्निहोत्रं युधिष्ठिर ॥ १४-१११-९१ (९६५६५)
वृद्धत्वेऽप्यग्निहोत्रं ये गृह्णन्ति विधिवद्द्विजाः ।
शूद्रान्नाद्विरता दान्ताः संयतेन्द्रियबुद्धयः ॥ १४-१११-९२ (९६५६६)
पञ्चयज्ञपरा नित्यं लोभक्रोधविवर्जिताः ।
द्विकालमतिथींश्चैव पूजयन्ति च भक्तितः ॥ १४-१११-९३ (९६५६७)
तेऽपि सूर्योदयप्रख्यैर्विमानैर्वायुवेगिभिः ।
मम लोके प्रमोदन्ते दृष्ट्वा मां च युधिष्ठिर ॥ १४-१११-९४ (९६५६८)
मन्वन्तरं च तत्रैकं मोदिता द्विजसत्तमाः ।
इह मानुष्यके लोके जायन्ते द्विजसत्तमाः ॥ १४-१११-९५ (९६५६९)

बालाहिताग्नयो ये च शूद्रान्नाद्विरताः सदा ।
क्रोधलोभविनिर्मुक्ताः प्रातस्स्नानपरायणाः ।
यथोक्तमग्निहोत्रं वै जुह्वते विजितेन्द्रियाः ॥ १४-१११-९६ (९६५७०)
आतिथेयाः सदा सौम्या द्विकालं मत्परायणाः ।
ते यान्त्यपुनरावृत्तिं भित्त्वा चादित्यमण्डलम् ॥ १४-१११-९७ (९६५७१)
मम लोकं सपत्नीका यानैः सूर्योदयप्रभैः ।
तत्र बालार्कसङ्काशाः कामगाः कामरूपिणः ॥ १४-१११-९८ (९६५७२)
ऐश्वर्यगुणसंपन्नाः क्रीडन्ति च यथासुखम् ।
इत्येषामाहिताग्नीनां विभूतिः पाण्डुनन्दन ॥ १४-१११-९९ (९६५७३)
श्रुतिं केचिन्निन्दमानाः श्रुतिं दूष्यन्त्यबुद्धयः ।
प्रमाणं न च कुर्वन्ति ये यान्तीहापि दुर्गतिम्। १४-१११-१०० (९६५७४)
प्रमाणमितिहासं च वेदान्कुर्वंति ये द्विजाः ।
ते यान्त्यमरसायुज्यं नित्यमास्तिक्यबुद्धयः ॥ ॥ १४-१११-१०१ (९६५७५)

इति श्रीमन्महाभारते आश्वमेधिकपर्वणि वैष्णवधर्मपर्वणि
एकादशाधिकशततमोऽध्यायः ॥

---

अस्वमेधिकपर्व-अध्यय११२
॥ श्रीः ॥
१४.११२. अध्यायः ११२

Mahabharata - Ashvamedhika Parva - Chapter Topics
कृष्णेन युधिष्ठिरंप्रति चान्द्रायणविधिनिरूपणपूर्वकं
तदाचरणफलकथनम् ॥ १ ॥

Mahabharata - Ashvamedhika Parva - Chapter Text

युधिष्ठिर उवाच ।
चक्रायुध नमस्तेऽस्तु देवेश गरुडध्वज ।
चान्द्रायणविधिं पुण्यमाख्याहि भगवन्मम ॥ १४-११२-१ (९६५७६)
भगवानुवाच। १४-११२-२क्ष् (७९९२)
शृणु पाण्डव तत्वेन सर्वपापप्रणाशनम् ।
पापिनो येन शुद्ध्यन्ति तत्ते वक्ष्यामि सर्वशः ॥ १४-११२-२ (९६५७७)
ब्राह्मणः क्षत्रियो वाऽपि वैश्यो वा चरितव्रतः ।
यथावत्कर्तुकामो वै तस्यैवं प्रथमा क्रिया ॥ १४-११२-३ (९६५७८)
शोधयेत्तु शरीरं स्वं पञ्चगव्येन यन्त्रितः ।

सशिरः कृष्णपक्षस्य ततः कुर्वीत वापनम् ॥१४-११२-४ (९६५७९)
शुक्लवासाः शुचिर्भूत्वा मौञ्जीं बध्नीत मेखलाम् ।
पालाशदण्डमादाय ब्रह्मचारिव्रते स्थितः ॥१४-११२-५ (९६५८०)
कृतोपलासः पूर्वं तु शुक्लप्रतिपदि द्विजः ।
नदीसंगमतीर्थेषु शुचौ देशे गृहेऽपि वा ।
गोमयेनोपलिप्रेऽथ स्थण्डिलेऽग्निं निधापयन् ॥ १४-११२-६ (९६५८१)
आघारावाज्यभागौ च प्रणवं व्याहृतीस्तथा ।
वारुणं चैव पञ्चैव हुत्वा सर्वान्यथाक्रमम् ॥१४-११२-७ (९६५८२)
सत्याय विष्णवे चेति ब्रह्मर्षिभ्योऽथ ब्रह्मणे ।
विश्वेभ्यो हि च देवेभ्यः सप्रजापतये तथा ॥१४-११२-८ (९६५८३)
षडुक्त्वा जुहुयात्पश्चात्प्रायश्चित्ताहुतिं द्विजः ।
अतः समापयेदग्निं शान्तिं कृत्वाऽथ पौष्टिकिम् ॥१४-११२-९ (९६५८४)
प्रणम्य् चाग्निं सोमं च भस्म दिग्ध्वा यथाविधि ।
नदीं गत्वा विशुद्धात्मा सोमाय वरुणाय च ।
आदित्याय नमस्कृत्वा ततः स्नायात्समाहितः ॥ १४-११२-१० (९६५८५)
उत्तीर्योदकमाचम्य चासीनः पूर्वतोमुखः ।
प्राणायामं ततः कृत्वा पवित्रैरभिषेचनम् ॥१४-११२-११ (९६५८६)
आचान्तस्त्वमिवीक्षेत ऊर्ध्वबाहुर्दिवाकरम् ।
कृताञ्जलिपुटः स्थित्वा कुर्याच्चैव प्रदक्षिणम् ॥१४-११२-१२ (९६५८७)
नारायणं वा रुद्रं वा ब्रह्मणमथवाऽपि च ।
वारुणं मन्त्रमूक्तं वा प्राग्भोजनमथापि वा ॥१४-११२-१३ (९६५८८)
वीरघ्नमृषभफं वाऽपि तथा चाप्यघमर्षणम् ।
गायत्रीं मम देवीं वा सावित्रीं वा जपेत्ततः ।
शतं वाऽष्टशतं वाऽपि सहस्रमथवा परम् ॥ १४-११२-१४ (९६५८९)
ततो मध्याह्नकाले वै पायसं यावकं हि वा ।
पाचयित्वा प्रयत्नेन प्रयतः सुसमाहितः ॥१४-११२-१५ (९६५९०)
पात्रं तु सुसमादाय सौवर्णं राजतं तु वा ।
ताम्रं वा मृन्मयं वापि औदुंबरमथापि वा। १४-११२-१६ (९६५९१)
वृक्षाणां याज्ञियानं तु पर्णैरार्द्रैरकुत्सितैः ।
पुटकेन तु गुप्तेनि चरेद्भैक्षं समाहितः ॥१४-११२-१७ (९६५९२)
ब्राह्मणानां गृहाणां तु सप्तानां नापरं व्रजेत् ।
गोदोहमात्रं तिष्ठित्तु वाग्यतः संयतेन्द्रियः ॥१४-११२-१८ (९६५९३)
न हसेन्न च वीक्षेत नाभिभाषेत वा स्त्रियम् ॥ १४-११२-१९ (९६५९४)
दृष्ट्वा मूत्रं पुरीषं वा चण्डालं वा रजस्वलाम् ।
पतितं च तथा श्वानमादित्यमवलोकयेत् ॥१४-११२-२० (९६५९५)
यो हि पादुकमारुह्य सर्वदा प्रचरेद्द्विजः ।

तं दृष्ट्वा पापकर्माणमादित्यमवलोकयेत् ॥१४-११२-२१ (९६५९६)
ततस्त्वावसथं प्राप्तो भिक्षां निक्षिप्य भूतले ।
प्रक्षाल्य पादावाजान्वोर्हस्तावाकूर्परं पुनः ।
आचम्य वारिणा तेन वह्निं विप्रांश्च पूययेत् ॥ १४-११२-२२ (९६५९७)
पञ्च सप्ताथवा कुर्याद्भागान्भैक्षस्य तस्य वै ।
तेषामन्यतमं पिण्डमादित्याय निवेदयेत् ॥१४-११२-२३ (९६५९८)
ब्रह्मणे चाग्नये चैव सोमाय वरुणाय च ।
विश्वेभ्यश्चैव देवेभ्यो दद्यादन्नं यथाक्रमम् ॥१४-११२-२४ (९६५९९)
अवशिष्टमथैकं तु वक्त्रमात्रं प्रकल्पयेत् ॥ १४-११२-२५ (९६६००)
अङ्गुल्यग्रे स्थितं पिण्डं गायत्र्या चाभिमन्त्रयेत् ।
अङ्गुलीभिस्त्रिभिः पिण्डं प्राश्नीयात्प्राङ्मुखःक शुचिः। १४-११२-२६ (९६६०१)
यथा च वर्धते सोमो ह्रसते च यथा पुनः ।
तथा पिण्डाश्च वर्धन्ते ह्रसन्ते च दिनेदिने ॥१४-११२-२७ (९६६०२)
त्रिकालं स्नानमस्योक्तं द्विकालमथवा सकृत् ।
ब्रह्मचारी सदा वाऽपि न च वस्त्रं प्रपीडयेत् ॥१४-११२-२८ (९६६०३)
स्थान न दिवसं तिष्ठेद्रात्रौ वीरासनं व्रजेत् ।
भवेत्स्थण्डिलशायी वाऽप्यथा वृक्षमूलिकः ॥१४-११२-२९ (९६६०४)
वल्कलं यदि वा क्षौमं शाणं कार्पासकं तथा ।
आच्छादनं भवेत्तस्य वस्त्रार्थं पाण्डुनन्दन ॥१४-११२-३० (९६६०५)
एवं चान्द्रायणे पूर्णे मासस्यान्ते प्रयत्नवान् ।
ब्राह्मणान्भोजयेद्भक्त्या दद्याच्चैव च दक्षिणाम् ॥१४-११२-३१ (९६६०६)
चान्द्रायणेन चीर्णेन यत्कृतं तेन दुष्कृतम् ।
तत्सर्वं तत्क्षणादेव भस्मीभवति काष्ठवत् ॥१४-११२-३२ (९६६०७)
ब्रह्महत्या च गोहत्या सुवर्णस्तैन्यमेव च ।
भ्रूणहत्या सुरापानं गुरोर्दारव्यतिक्रमः ॥१४-११२-३३ (९६६०८)
एवमन्यानि पापानि पातकीयानि यानि च ।
चान्द्रायणेन नश्यन्ति वायुना पांसवो यथा ॥१४-११२-३४ (९६६०९)
अनिर्दशाया गोः क्षीरमौष्ट्रमाविकमेव च ।
मृतसूतकयोश्चान्नं भुक्त्वा चान्द्रायणं चरेत् ॥१४-११२-३५ (९६६१०)
उपपातकिनश्चान्नं पतितान्नं तथैव च ।
शूद्रस्योच्छेषणं चैव भुक्त्वा चान्द्रायणं चरेत् ॥१४-११२-३६ (९६६११)
आकाशस्थं तु हस्तस्थमधः स्रस्तं तथैव च ।
परहस्तस्थितं चैव भुक्त्वा चान्द्रायणं चरेत् ॥१४-११२-३७ (९६६१२)
अथाग्रेधिषोरन्नं दिधिषूपपतेस्तता ।
परिवेत्तुस्तथा चान्नं परिवित्तान्नमेव च ॥१४-११२-३८ (९६६१३)
कुण्डान्नं गोलकान्नं च देवलान्नं तथैव च ।

तथा पुरोहितस्यान्नं भुक्त्वा चान्द्रायणं चरेत् ॥१४-११२-३९ (९६६१४)
सुराऽऽसवं विषं सर्पिर्लाक्षा लवणमेव च ।
तैलं चापि च विक्रीणन्द्विजश्चान्द्रायणं चरेत् ॥१४-११२-४० (९६६१५)
एकोद्दिष्टं तु यो भुङ्क्ते जनमध्यगतोऽपि यः ।
भिन्नभाण्डेषु यो भुङ्क्ते द्विजश्चान्द्रायणं चरेत् ॥१४-११२-४१ (९६६१६)
यो भुङ्क्तेऽनुपनीतेन यो भुङ्क्ते च स्त्रिया सह ।
कन्यया सह यो भुङ्क्ते द्विजश्चान्द्रायणं चरेत् ॥१४-११२-४२ (९६६१७)
उच्छिष्टं स्थापयेद्विप्रो यो मोहाद्भोजनान्तरे ।
दद्याद्वा यदि वा मोहाद्द्विजश्चान्द्रायणं चरेत् ॥१४-११२-४३ (९६६१८)
तुम्बकोशातकं चैव पलाण्डुं गृञ्जनं तथा ।
छत्राकं लशुनं चैव भुक्त्वा चान्द्रायणं चरेत् ॥१४-११२-४४ (९६६१९)
द्विजः पर्युषितं चान्नं पक्वं परगृहागतम् ।
विपक्वं च तथा मांसं भुक्त्वा चान्द्रायणं चरेत् ॥१४-११२-४५ (९६६२०)
उदक्यया शुना वाऽपि चण्डालैर्वा द्विजोत्तमः ।
दृष्टमन्नं तु भुञ्जानो द्विजश्चान्द्रायणं चरेत् ॥१४-११२-४६ (९६६२१)
क़क़क़क़तत्पुरा विशुद्ध्यर्थमृषिभिश्चरितं व्रतम् ।
पावनं सर्वभूतानां पुण्यं पाण्डवचोदितम् ॥१४-११२-४७ (९६६२२)
एतेन वसवो रुद्राश्चादित्याश्च दिवं गताः ।
एतदद्य परं गुह्यं पवित्रं पापनाशनम् ॥१४-११२-४८ (९६६२३)
यथोक्तमेतद्यः कुर्याद्द्विजः पापप्रणाशनम् ॥
स दिवं याति पूतात्मा निर्मलादित्यसंनिभः ॥ ॥१४-११२-४९ (९६६२४)

इति श्रीमन्महाभारते आश्वमेधिकपर्वणि वैष्णवधर्मपर्वणि
द्वादशाधिकशततमोऽध्यायः ॥११२ ॥

---

अस्वमेधिकपर्व-अध्यय११३
॥ श्रीः ॥
१४.११३. अध्यायः ११३

Mahabharata - Ashvamedhika Parva - Chapter Topics
कृष्णेन युधिष्ठिरंप्रति कार्तिकादिद्वादशमासेषु
एकभुक्तव्रताचरणप्रकारनिरूपणपूर्वकं तत्फलकथनम् ॥१ ॥

Mahabharata - Ashvamedhika Parva - Chapter Text

वैशंपायन उवाच ।

केशवेनैवमुक्ते तु चान्द्रायणविधिक्रमे ।
अपृच्छत्पुनरन्यांश्च धर्मान्धर्मात्मजो नृप ॥१४-११३-१ (९६६२५)
युधिष्ठिर उवाच।१४-११३-२क्ष् (७९९३)
सर्वभूतपते श्रीमन्सर्वभूतनमस्कृत ।
सर्वभूतहितं धर्मं सर्वज्ञ कथयस्व नः ॥१४-११३-२ (९६६२६)
भगवानुवाच।१४-११३-३क्ष् (७९९४)
यद्दरिद्रजनस्यापि स्वर्ग्यं सुखकरं भवेत् ।
सर्वपापप्रशमनं तच्छृणुष्व युधिष्टिर ॥१४-११३-३ (९६६२७)
कार्तिकाद्यास्तु ये मासा द्वादशैव प्रकीर्तिताः ।
तेष्वेकबुक्तनिमः सर्वेषामुच्यते मया ॥१४-११३-४ (९६६२८)
कार्तिके यस्तु वै मासे नन्दायां संयतेन्द्रियः ।
एकभुक्तेन मद्भक्तो मासमेकं तु वर्तते ॥१४-११३-५ (९६६२९)
जलं वा न पिबेन्मासे नान्तरं भोजनात्परम् ।
आदित्यरूपं मां नित्यमर्चयन्सुसमाहितः ॥१४-११३-६ (९६६३०)
व्रतान्ते भोजयेद्विप्रान्दक्षिणां सम्प्रदाय च ।
क्रोधलोभविनिर्मुक्तस्तस्य पुण्यफलं शृणु ॥१४-११३-७ (९६६३१)
विधिवत्कपिलादाने यत्पुण्यं समुदाहृतम् ।
तत्पुण्यं समनुप्राप्य सूर्यकलोके महीयते ।
ततश्चापि च्युतः कालात्पुरुषेषूपजायते ॥ १४-११३-८ (९६६३२)
मार्गशीर्षं तु यो मासमेकभुक्तेन वर्तते ।
कामं क्रोधं च लोभं च परित्यज्य यथाविधि ॥ १४-११३-९ (९६६३३)
स्नात्वा चादित्यरूपं मामर्ययेन्नियतेन्द्रियः ।
जपेच्चैव च गायत्रीं मामिकां वाग्यतेन्द्रियः ॥१४-११३-१० (९६६३४)
मासे परिसमाप्ते तु भोजयित्वा द्विजाञ्शुचिः ।
तानर्चयति मद्भक्त्या तस्य पुण्यफलं शृणु ॥१४-११३-११ (९६६३५)
अग्निहोत्रे कृते पुण्यमाहिताग्नेस्तु यद्भवेत् ।
तत्पुण्यं फलमासाद्य योनेनांऽबरशोभिना ।
सह सप्तर्षिलोकेषु यथाकामं यथासुखम् ॥ १४-११३-१२ (९६६३६)
ततश्चापि च्युतः कालाद्धरिवर्षेषु जायते ।
तत्र प्रकामं क्रीडित्वा राजा पश्चाद्भविष्यति ॥१४-११३-१३ (९६६३७)
क़क़क़क़क़क़क़क़ क्षिपेदेवमेकभुक्तेन यो नरः ।
अर्चयन्नेव मां नित्यं मद्गतेनान्तरात्मना ॥१४-११३-१४ (९६६३८)
अहिंसासत्यसहितः क्रोधहर्षविवर्जितः ।
एवं युक्तस्य राजेन्द्र शृणु यत्फलमुत्तमम् ॥१४-११३-१५ (९६६३९)
विप्रातिथ्यसहस्रेषु यत्पुण्यं समुदाहृतम् ।
तत्पुण्यं समनुप्राप्य शक्रलोके महीयते ॥१४-११३-१६ (९६६४०)

अवतीर्णस्ततः कालादिलावर्षेषु जायते ।
तत्र स्थित्वा चिरं कालमस्मिन्विप्रो भविष्यति ॥ १४-११३-१७ (९६६४१)
माघमासं सदा यस्तु वर्तते चैकभुक्ततः ।
मदर्चनपरो भूत्वा डंभक्तोधविवर्जितः ।
मामिकामपि सावित्रीं सन्ध्यायां तु जपेद्बुधः ॥ १४-११३-१८ (९६६४२)
दत्त्वा दु दक्षिणामन्ते भोजयित्वा द्विजानपि ।
नमिस्करोति तान्भक्त्या मद्गतेनान्तरात्मना ।
त्रिकालस्नानयुक्तस्य तस्य पुण्यफलं शृणु ॥ १४-११३-१९ (९६६४३)
नीलकण्ठप्रयुक्तेन योनेनांऽबरशोभिना ।
पितृलोकं व्रजेच्छ्रीमान्सेव्यमानोप्सरोणैः ॥ १४-११३-२० (९६६४४)
तत्र प्रकामं क्रीडित्वा भद्राश्वेषूपजायते ।
ततश्च्युतश्चतुर्वेदी विप्रो भवति भूतले ॥ १४-११३-२१ (९६६४५)
यश्चरेत्फाल्गुनं मासमेकभुक्तो जितेन्द्रियः ।
नमो ब्रह्मण्यदेवायेत्येतन्मन्त्रं जपेत्सदा ॥ १४-११३-२२ (९६६४६)
पायसं भोजयेद्विप्रान्व्रतान्ते संयतेन्द्रियः ।
मदर्चनपरोऽक्रोधस्तस्य पुण्यफलं शृणु ॥ १४-११३-२३ (९६६४७)
विमानं सारसैर्युक्तमारूढः कामगामि च ।
नक्षत्रलोके रमते नक्षत्रसदृशाकृतिः ॥ १४-११३-२४ (९६६४८)
ततश्चापि च्युतः कालात्केतुमालेषु जायते ।
तत्र प्रकामं क्रीडित्वा मानुषेषु मुनिर्भवेत् ॥ १४-११३-२५ (९६६४९)
चैत्रमासं तु यो राजन्नेकभुक्तेन वर्तते ।
ब्रह्मचारी च मद्भक्त्या तस्य पुण्यफलं शृणु ॥ १४-११३-२६ (९६६५०)
यदग्निहोत्रिणः पुण्यं यथोक्तं व्रतचारिणः ।
तत्पुण्यफकलमासाद्य चन्द्रलोके महीयते ॥ १४-११३-२७ (९६६५१)
ततोऽवतीर्णो जायेत वर्षे रमणके पुनः ।
भुक्त्वा कामांस्ततस्तस्मिन्निह राजा भविष्यति ॥ १४-११३-२८ (९६६५२)
वैशाखे यस्तु मासे वै ह्येकभुक्तेन वर्तते ।
द्विजमग्रासने कृत्वा भुञ्जन्भूमौ च वाग्यतः ॥ १४-११३-२९ (९६६५३)
नमो ब्रह्मण्यदेवायेत्यर्चयित्वा दिवाकरम् ।
व्रतान्ते भोजयेद्विप्रांस्तस्य पुण्यफलं शृणु ॥ १४-११३-३० (९६६५४)
फलं यद्विधिवत्प्रोक्तमग्निष्टोमातिरात्रयोः ।
तत्पुण्यफलमासाद्य देवलोके महीयते ॥ १४-११३-३१ (९६६५५)
ततो हैमवते वर्षे जायते कालपर्ययात् ।
तत्र प्रकामं क्रीडित्वा विप्रः पश्चाद्भविष्यति ॥ १४-११३-३२ (९६६५६)
ज्येष्ठमासं तु यो विप्रो ह्येकभुक्तेन वर्तते ।
विप्रमग्रासने कृत्वा भूमौ भुञ्जन्यथाविधि ॥ १४-११३-३३ (९६६५७)

नमो ब्रह्मण्यदेवायेत्युच्चरन्मां समाहितः ।
डंभानृतविनिर्मुक्तस्तस्य पुण्यफलं शृणु ॥१४-११३-३४ (९६६५८)
चीर्णे चान्द्रायणे सम्यग्यत्पुण्यं समुदाहृतम् ।
तत्पुण्यफलमासाद्य देवलोके महीयते ॥१४-११३-३५ (९६६५९)
अथोत्तरकुरौ वर्षे जायते निर्गतस्ततः ।
ततश्चापि च्युतः कालादिह लोके द्विजो भवेत् ॥१४-११३-३६ (९६६६०)
आषाढमासं यो राजन्नेकभुक्तेन वर्तते ।
ब्रह्मचारी जितक्रोधो मदर्चनपरायणः ॥१४-११३-३७ (९६६६१)
विप्रमग्रासने कृत्वा भूमौ भुञ्जञ्जितेन्द्रियः ।
कृत्वा त्रिषवणं स्नानमष्टाक्षरविधानतः ॥१४-११३-३८ (९६६६२)
व्रतान्ते भोजयेद्विद्वान्पायसेन युधिष्ठिर ।
गुडोदनेन राजेन्द्र तस्य पुण्यफलं शृणु ॥१४-११३-३९ (९६६६३)
कपिलाशतदानस्य यत्पुण्यं पाण्डुनन्दन ।
तत्पुण्यफलमासाद्य देवलोके महीयते ॥१४-११३-४० (९६६६४)
ततोऽवतीर्णः काले तु शाकद्वीपे तु जायते ।
ततश्चापि च्युतः कालादिह विप्रो भविष्यति ॥१४-११३-४१ (९६६६५)
श्रावणं यः क्षिपेन्मासमेकभुक्तेन वर्तते ।
नमो ब्रह्मण्यदेवायेत्युक्त्वा मामर्चयेत्सदा ।
विप्रमाग्रासने कृत्वा भूमौ भुञ्जन्यथाविधि ॥ १४-११३-४२ (९६६६६)
पायसेनार्चयन्विप्राञ्जितक्रोधो जितेन्द्रियः ।
लोभमोहविनिर्मुक्तस्तस्य पुण्यफलं शृणु ॥१४-११३-४३ (९६६६७)
कपिलादानस्य यत्पुण्यं विधिदत्तस्य पाण्डव ।
तत्पुण्यं समक़क़क़प्राप्य शक्रलोके महीयते ॥१४-११३-४४ (९६६६८)
ततश्चापि च्युत कालात्कुशद्वीपे प्रजायते ।
तत्रि प्रकामं क्रीडित्वा विप्रो भवति मानुषे ॥१४-११३-४५ (९६६६९)
यस्तु भाद्रपदं मासमेकभुक्तेन वर्तते ।
ब्रह्मचारी जितक्रोधः सत्यसन्धो जितेन्द्रियः ॥१४-११३-४६ (९६६७०)
विप्रमग्रासने कृत्वा पाकभेदविवर्जितः ।
नमो ब्रह्मण्यदेवायेत्युक्त्वाऽस्य चरणौ स्पृशेत् ॥१४-११३-४७ (९६६७१)
तिलानपि घृतं वाऽपि व्रतान्ते दक्षिमां ददत् ।
मद्भक्तस्य नरश्रेष्ठ तस्य पुण्यफलं शृणु ॥१४-११३-४८ (९६६७२)
यत्फलं विधिवत्प्रोक्तं राजसूयाश्वमेधयोः ।
तत्पुण्यफलमासाद्य शक्रलोके महीयते ॥१४-११३-४९ (९६६७३)
ततश्चापि च्युतः कालाज्जायते धनदालये ।
तत्र प्रकामं क्रीकडित्वा राजा भवति मानुषे ॥१४-११३-५० (९६६७४)
यश्चाप्याश्वयुजं मासमेकभुक्तेन वर्तते ।

मद्गायत्रीं जपेद्भक्त्या मद्गतेनान्तरात्मना ।
द्विसन्ध्यं वा त्रिसन्ध्यं वा शतमष्टोत्तरं तु वा ॥ १४-११३-५१ (९६६७५)
विप्रमग्रासने कृत्वा संयतेन्द्रियमानसः ।
व्रतान्ते भोजयेद्विप्रांस्तस्य पुण्यफलं शृणु ॥१४-११३-५२ (९६६७६)
अश्वमेधस्य यत्पुण्यं विधिवत्पाण्डुनन्दन ।
तत्पुण्यफलमासाद्य मम लोके महीयते ॥१४-११३-५३ (९६६७७)
ततश्चापि च्युतः कालाच्छ्वेतद्वीपे प्रजायते ।
तत्र भुक्त्वा च भोगांश्च ततो विप्रवरो भवेत् ॥ ॥१४-११३-५४ (९६६७८)

इति श्रीमन्महाभारते आश्वमेधिकपर्वणि वैष्णवधर्मपर्वणि
त्रयोदशाधिकशततमोऽध्यायः ॥११३ ॥

---

अस्वमेधिकपर्व-अध्यय११४
॥ श्रीः ॥
१४.११४. अध्यायः ११४

Mahabharata - Ashvamedhika Parva - Chapter Topics
कृष्णेन युधिष्ठिरंप्रति केशवादिभगवन्मूर्त्युपास्तिपूर्वकं
मार्गशीर्षादिद्वादशद्वादशीव्रताचरणफलकथनम् ॥१ ॥
युधिष्ठिरेण विस्तरेण कृष्णस्तवनम् ॥२ ॥
पुनः कृष्णेन युधिष्ठिराय एकादश्युपवासपूर्वकं द्वादश्यां
भगवत्पूजायाः फलकथनम् ॥३ ॥

Mahabharata - Ashvamedhika Parva - Chapter Text

युधिष्ठिर उवाच ।
एवं संवत्सरं पूर्णमेकभुक्तेन यः क्षिपेत् ।
तस्य पुण्यफलं यद्वै तन्ममाचक्ष्व केशव ॥१४-११४-१ (९६६७९)
भगवानुवाच।१४-११४-२क्ष् (७९९५)
शृणु पाण्डव तत्त्वं मे वचनं पुण्यमुत्तमम् ।
यदकृत्वाऽथवा कृत्वा नरः पापैः प्रमुच्यते ॥१४-११४-२ (९६६८०)
एकभुक्तेन वर्तेत नरः संवत्सरं तु यः ।
ब्रह्मचारी जितक्रोधो ह्यधश्शायी जितेन्द्रियः ॥१४-११४-३ (९६६८१)
शुचिश्चि स्नानतो व्यग्रः सत्यवागनसूयकः ।
अर्चन्नेव तु मां नित्यं मद्गतेनान्तरात्मना ।
सन्ध्ययोस्तु जपेन्नित्यं मद्गायत्रीं समाहितः ॥ १४-११४-४ (९६६८२)

नमो ब्रह्मण्यदेवायेत्यसकृन्मां प्रणम्य च ।
विप्रमग्रासने कृत्वा यावकं भैत्रमेव वा ॥१४-११४-५ (९६६८३)
भुक्त्वा तु वाग्यतो भूमावाचान्तस्य द्विजन्मनः ।
नमोऽस्तु वासुदेवायेत्युक्त्वा तु चरणौ स्पृशेत् ॥१४-११४-६ (९६६८४)
मासेमासे समाप्ते तु भोजयित्वा द्विजाञ्शुचीन् ।
संवत्सरे ततः पूर्णे दद्यात्तु व्रतदक्षिणाम् ॥१४-११४-७ (९६६८५)
नवनीतमयीं गां वा तिलधेनुमथापि वा ।
विप्रहस्तच्युतैस्तोयैः सहिरण्यैः समुक्षितः ।
तस्य पुण्यफलं राजन्कथ्यमानं मया शृणु ॥ १४-११४-८ (९६६८६)
दशजन्मकृतं पापं ज्ञानतोऽज्ञानतोपि वा ।
तद्विनश्यति तस्याशु नात्र कार्या विचारणा ॥१४-११४-९ (९६६८७)
युधिष्ठिर उवाच।१४-११४-१०क्ष् (७९९६)
सर्वेषामुपवासानां यच्छ्रेयः सुमहत्फलम् ।
यच्च निःश्रेयसं लोके तद्भवान्वक्तुमर्हति ॥१४-११४-१० (९६६८८)
भगवानुवाच।१४-११४-११क्ष् (७९९७)
शृणु राजन्यथापूर्वं मयाऽभीष्टं तु मोदते ।
तथा ते कथयिष्यामि मद्भक्ताय युधिषठिर ॥१४-११४-११ (९६६८९)
यस्तु भक्त्या शुचिर्भूत्वा पञ्चम्यां मे नराधिप ।
उपवासव्रतं कुर्यात्त्रिकालं चार्चयंस्तु माम् ।
सर्वक्रतुफलं लब्ध्वा मम लोके महीयते ॥ १४-११४-१२ (९६६९०)
युधिष्ठिर उवाच।१४-११४-१३क्ष् (७९९८)
भगवन्देवदेवेश पञ्चमी नाम का तव ।
तामहं श्रोतुमिच्छामि कथयस्व ममानघ ॥१४-११४-१३ (९६६९१)
भगवानुवाच।१४-११४-१४क्ष् (७९९९)
पर्वद्वयं च द्वादश्यां श्रवणं च नराधिप ।
मत्पञ्चमीति विख्यातां मत्प्रिया च विशेषतः ॥१४-११४-१४ (९६६९२)
तस्मात्तु ब्राह्मणश्रेष्ठैर्मन्निवेशितबुद्धिभिः ।
उपवासस्तु कर्तव्यो मत्प्रियार्तं विशेषतः ॥१४-११४-१५ (९६६९३)
द्वादश्यामेव वा कुर्यादुपवासमशक्नुवन् ।
तेनाहं परमां प्रीति यास्यामि नरपुङ्गव ॥१४-११४-१६ (९६६९४)
अहोरात्रेण द्वादश्यां मार्गशीर्षेण केशवम् ।
उपोष्य पूजयेद्यो मां सोऽस्वमेधफलं लभेत् ॥१४-११४-१७ (९६६९५)
द्वादश्यां पुष्यमासे तु नाम्ना नारायणं तु माम् ।
उपोष्य पूजयेद्यो मां वाजिमेधफलं लभेत् ॥१४-११४-१८ (९६६९६)
द्वादश्यां माघमासे तु मामुपोष्य तु माधवम् ।
पूजयेद्यः समाप्नोति राजसूयफलं नृप ॥१४-११४-१९ (९६६९७)

द्वादश्यां फाल्गुने मासि गोविन्दाख्यमुपोष्य माम् ॥
पूजयेद्यः समाप्नोति ह्यतिरात्रफलं नृप ॥ १४-११४-२० (९६६९८)
द्वादश्यां मासि चैत्रे तु मां विष्णुं समुपोष्य यः ।
पूजयंस्तदवाप्नोति पौण्डरीकस्य यत्फलम् ॥१४-११४-२१ (९६६९९)
द्वादश्यां मासि वैशाखे मधुसूदनसंज्ञितम् ।
उपोष्य पूजयेद्यो मां सोग्निष्टोमस्य पाण्डव ॥१४-११४-२२ (९६७००)
द्वादश्यां ज्येष्ठमासे तु मामुपोष्य त्रिविक्रमम् ।
अर्ययेद्यः समाप्नोति गवां मेधफलं नृप ॥१४-११४-२३ (९६७०१)
आषाढे वामनाख्यं मां द्वादश्यां समुपोष्य यः ।
नरमेधस्य स फलं प्राप्नोति भरतर्षभ ॥१४-११४-२४ (९६७०२)
द्वादश्यां श्रावणे मासि श्रीधराख्यमुपोष्य माम् ।
पूजयेद्य समाप्नोति पञ्चयज्ञफलं नृप ॥१४-११४-२५ (९६७०३)
मासे भाद्रपदे यो मां हृषीकेशाख्यमर्चयेत् ।
उपोष्य स समाप्नोति सौत्रामणिफलं नृप ॥१४-११४-२६ (९६७०४)
द्वादश्यामाश्वयुङ्मासे पद्मनाभमुपोष्य माम् ।
अर्चयेद्यः समाप्नोति गोसहस्रफलं नृप ॥१४-११४-२७ (९६७०५)
द्वादश्यां कार्तिके मासि मां दामोदरसंज्ञितम् ।
उपोष्य पूजयेद्यस्तु सर्वक्रतुफलं नृप ॥१४-११४-२८ (९६७०६)
केवलेनोपवासेन द्वादश्यां पाण्डुनन्दन ।
यत्फलं पूर्वमुद्दिष्टं तस्यार्धं लभते नृप ॥१४-११४-२९ (९६७०७)
श्रावणेऽप्येवमेवं मामर्चयेद्भक्तिमान्नरः ।
मम सालोक्यमाप्नोति नात्र कार्या विचारणा ॥१४-११४-३० (९६७०८)
मासेमासे समभ्यर्च्य क्रमशो मामतन्द्रितः ।
पूर्मे संवत्सरे कुर्यात्पुनः संवत्सरं तु माम् ॥१४-११४-३१ (९६७०९)
अविघ्नमर्चयानस्तु यो मद्भक्तो मत्परायणः ।
अविघ्नमर्चयानस्तु मम सायुज्यमाप्नुयात् ॥१४-११४-३२ (९६७१०)
अर्चयेत्प्रीतिमान्यो मां द्वादस्यां वेदसंहिताम् ।
स पूर्वोक्तफलं राजँल्लभते नात्र संशयः ॥१४-११४-३३ (९६७११)
गन्धं पुष्पं फलं तोयं पत्रं वा मूलमेव वा ।
द्वादश्यां मम यो दद्यात्तत्समो नास्ति मत्प्रियः ॥१४-११४-३४ (९६७१२)
एतेन विधिना सर्वे देवाः शक्रपुरोगमाः ।
मद्भक्ता नरशार्दूल स्वर्गलोकं तु भुञ्जते ॥१४-११४-३५ (९६७१३)
वैशम्पायन उवाच।१४-११४-३६क्ष् (८०००)
एवं वदति देवेशे केशवे पाडुनन्दनः ।
कृताञ्जलिः स्तोत्रमिदं भक्तया धर्मात्मजोऽब्रवीत् ॥१४-११४-३६ (९६७१४)
सर्वलोकेश देवेश हृषीकेशक नमोस्तु ते ।

सहस्रशिरसे नित्यं सहस्राक्ष नमोस्तु ते ॥१४-११४-३७ (९६७१५)
त्रयीमय त्रयीनाथ त्रयीस्तुत नमोनमः ।
यज्ञात्मन्यज्ञसंभूत यज्ञनाथ नमोनमः ॥१४-११४-३८ (९६७१६)
चतुर्मूर्ते चतुर्बाहो चतुर्व्यूह नमोनमः ।
लोकात्मँल्लोककृन्नाथ लोकावास नमोनमः ॥१४-११४-३९ (९६७१७)
सृष्टिसंहारकर्त्रे तु नरसिंह नमोनमः ।
भक्तप्रिय नमस्तेऽस्तु कृष्ण नाथ नमोनमः ॥१४-११४-४० (९६७१८)
लोकप्रिय नमस्तेऽस्तु भक्तवत्सल ते नमः ।
ब्रह्मवास नमस्तेऽस्तु ब्रह्मनाथ नमोनमः ॥१४-११४-४१ (९६७१९)
रुद्ररूप नमस्तेऽस्तु रुद्रकर्मिरताय ते ।
पञ्चयज्ञ नमस्तेऽस्तु सर्वयज्ञ नमोनमः ॥१४-११४-४२ (९६७२०)
कृष्णप्रिय नमस्तेऽस्तु कृष्णनाथ नमोनमः ।
योगिप्रिय नमस्तेऽस्तु योगिनाथ नमोनमः ॥१४-११४-४३ (९६७२१)
हयवक्त्र नमस्तेऽस्तु चक्रपाणे नमोनमः ।
पञ्चभूत नमस्तेऽस्तु पञ्चायुध नमोनमः ॥१४-११४-४४ (९६७२२)
वैशम्पायन उवाच।१४-११४-४५क्ष् (८००१)
भक्तिगद्गदया वाचा स्तुवत्येवं युधिष्ठिरे ।
गृहीत्वा केशवो हस्ते प्रीतात्मा तं न्यवारयत् ॥१४-११४-४५ (९६७२३)
निवार्य च पुनर्वाचा भक्तिनम्रं युधिष्ठिरम् ।
वक्तुमेव नरश्रेषठ धर्मपूत्रं प्रचक्रमे ॥१४-११४-४६ (९६७२४)
भगवानुवाच।१४-११४-४७क्ष् (८००२)
अन्यवत्किमिदं राजन्मां स्तौषि नरपुङ्गव ।
तिष्ठ पृच्छ यथापूर्वं धर्मपूत्र युधिष्ठिर ॥१४-११४-४७ (९६७२५)
युधिष्ठिर उवाच।१४-११४-४८क्ष् (८००३)
भगवंस्त्वत्प्रसादात्तु धर्मं स्मृत्वा पुनःपुनः ।
न शान्तिरस्ति मे देव नृत्यतीव च मे मनः ॥१४-११४-४८ (९६७२६)
इदं च धर्मसंपन्नं वक्तुमर्हसि माधव ।
कृष्णपक्षेषु द्वादश्यामर्चनीयः कथं भवेत् ॥१४-११४-४९ (९६७२७)
भगवानुवाच।१४-११४-५०क्ष् (८००४)
शृणु राजन्यथापूर्वं तत्सर्वं कथयामि ते ।
परमं कृष्णद्वादश्यामर्चनायां फलं मम ॥१४-११४-५० (९६७२८)
एकादश्यामुपोष्याथ द्वादश्यामर्चयेत्तु माम् ।
विप्रानपि यथालाभं पूजयेद्भक्तिमान्नरः ॥१४-११४-५१ (९६७२९)
स गच्छेद्दक्षिणामूर्तिं मां वा नात्र विचारणा ।
चन्द्रसालोक्यमथवा ग्रहनक्षत्रपूजितः ॥ ॥१४-११४-५२ (९६७३०)

इति श्रीमन्महाभारते आश्वमेधिकपर्वणि वैष्णवधर्मपर्वणि
चतुर्दशाधिकशततमोऽध्यायः ॥ ११४ ॥

---

अस्वमेधिकपर्व-अध्यय११५
॥ श्रीः ॥
१४.११५. अध्यायः ११५

Mahabharata - Ashvamedhika Parva - Chapter Topics
कृष्णेन युधिष्ठिरंप्रति विषुवाख्यपुण्यकालस्य
महिमानुवर्णनपूर्वकं तत्र दानादिप्रशंसनम् ॥ १ ॥
तथा गायत्रीजपमाहात्म्यकथनम्, अश्वत्थमाहात्म्यकथनं च ॥ २ ॥
तथा नानाधर्मकथनपूर्वकं शिंशुमाराकृतिनिरूपणम्,
पञ्चगव्यविधानकथनं च ॥ ३ ॥

Mahabharata - Ashvamedhika Parva - Chapter Text

वैशम्पायन उवाच ।
केशवेनैवमाख्याते धर्मपुत्रः पुनःपुनः ।
पप्रच्छ दानकालस्य विशेषं च विधिं नृप ॥ १४-११५-१ (९६७३१)
युधिष्ठिर उवाच। १४-११५-२क्ष् (८००५)
देव किं फलमाख्यातं विषुवेष्मवरेश्वर ।
सूर्येन्दूपप्लवे चैव वस्तुमर्हति तत्फलम् ॥ १४-११५-२ (९६७३२)
भगवानुवाच। १४-११५-३क्ष् (८००६)
शृणुष्व राजन्विषुवे सोमार्कग्रहणेषु च ।
व्यतीपातेऽयने चैव दानं स्यादक्षयं फलम् ॥ १४-११५-३ (९६७३३)
राजन्नयनयोर्मध्ये विषुवं सम्प्रचक्षते ।
समे रात्रिदिने तत्र सन्ध्यायां विषुवे नृप ॥ १४-११५-४ (९६७३४)
ब्रह्माऽहं शङ्करश्चापि तिष्ठामः सहिताः सकृत् ।
क्रियाकरणकार्याणामेकीभावत्वकारणात् ॥ १४-११५-५ (९६७३५)
अस्माकमेकीभूतानां निष्कलं परमं पदम् ।
तन्मुहूर्तं परं पुण्यं राजन्विषुवसंज्ञितम् ॥ १४-११५-६ (९६७३६)
तदेवाद्यक्षरं ब्रह्म परं ब्रह्मेति कीर्तितम् ।
तस्मिन्मुहूर्ते सर्वे तु चिन्तयन्ति परं पदम् ॥ १४-११५-७ (९६७३७)
देवाश्च वसवो रुद्राः पितरश्चाश्विनौ तथा ।
साध्याश्च विश्वे गन्धर्वाः सिद्धा ब्रह्मर्षयस्तथा ॥ १४-११५-८ (९६७३८)
सोमादयो ग्रहाश्चैव सरितः सागरास्तथा ।

मरुतोत्सरसो नागा यक्षराक्षसगुह्यकाः ॥ १४-११५-९ (९६७३९)
एते चान्ये च राजेन्द्र विषुवे संयतेन्द्रियाः ।
सोपवासाः प्रयत्नेन भवन्ति ध्यानतत्पराः ॥ १४-११५-१० (९६७४०)
अन्नं गावस्तिलान्भूमिं कन्यादानं तथैव च ।
गृहमायतनं धान्यं वाहनं शयनं तथा। १४-११५-११ (९६७४१)
यच्चान्यच्च मया प्रोक्तं तत्प्रयच्छ युधिष्ठिर ।
दीयते विषुवेष्वेवं श्रोत्रियेभ्यो विशेषतः ॥ १४-११५-१२ (९६७४२)
तस्य दानस्य कौन्तेय क्षयं नैवोपपद्यते ।
वर्धतेऽहरहः पुण्यं तद्दानं कोटिसंमितम् ॥ १४-११५-१३ (९६७४३)
विषुवे स्नपनं यस्तु मम कुर्याद्धरस्य वा ।
अर्चनां च यतान्यायं तस्य पुण्यफलं शृणु ॥ १४-११५-१४ (९६७४४)
दशजन्मकृतं पापं तस्य सद्यो विनश्यति ।
दशानामश्वमेधानामिष्टानां लभते फलम् ॥ १४-११५-१५ (९६७४५)
विमानं दिव्यमारूढः कामरूपी यथासुखम् ।
स याति मामकं लोकं रुद्रलोकमथापि वा ॥ १४-११५-१६ (९६७४६)
तत्रस्थैर्देवगन्धर्वैर्गीयमानो यथासुखम् ।
दिव्यवर्षसहस्राणि कोटिमेकं तु मोदते ॥ १४-११५-१७ (९६७४७)
ततश्चापि च्युतः कालादिह लोके द्विजोत्तमः ।
चतुर्णामपि वेदानां पारगो ब्रह्मिविद्भवेत् ॥ १४-११५-१८ (९६७४८)
चन्द्रसूर्यग्रहे व्योम्नि मम वा शङ्करस्य वा ।
गायत्रीं मामिकां वाऽपि जपेद्यः शङ्करस्य वा ॥ १४-११५-१९ (९६७४९)
शङ्खतूर्यस्वनैश्चैव कांस्यघण्टास्वनैरपि ।
कारयेत्तु ध्वनिं भक्त्या तस्य पुण्यफलं शृणु ॥ १४-११५-२० (९६७५०)
गान्धर्वैर्होमजप्यैश्च जप्तैरुत्कृष्टनामभिः ।
दुर्बलोपि भवेद्राहुः सोमश्च बलवान्भवेत् ॥ १४-११५-२१ (९६७५१)
सूर्येन्दूपप्लवे चैव श्रोत्रियेभ्यः प्रदीयते ।
तत्सहस्रगुणं भूत्वा दातारमुपतिष्ठति ॥ १४-११५-२२ (९६७५२)
महापातकयुक्तोपि यद्यपि स्यान्नरोत्तम ।
निष्पापस्तत्क्षणादेव तेन दानेन जायते ॥ १४-११५-२३ (९६७५३)
चन्द्रसूर्यप्रकाशेन विमानेन विराजता ।
याति सोमपुरं रम्यं सेव्यमानोप्सरोगणैः ॥ १४-११५-२४ (९६७५४)
यावदृक्षाणि तिष्ठन्ति गगने शशिना सह ।
तावत्कालं स रजेन्द्र सोमलोके महीयते ॥ १४-११५-२५ (९६७५५)
ततश्चापि च्युतः कालादिह लोके युधिष्ठिर ।
वेदवेदाङ्गविद्विप्रः कोटीधनपतिर्भवेत् ॥ १४-११५-२६ (९६७५६)
युधिष्ठिर उवाच। १४-११५-२७क्ष् (८००७)

भगवंस्तव गायत्री जप्यते च कथं विभो ।
किं वा तस्य फळं देव ममाचक्ष्व सुरेश्वर ॥१४-११५-२७ (९६७५७)
भगवानुवाच।१४-११५-२८क्ष् (८००८)
द्वादश्यां विषुवे चैव चन्द्रसूर्यग्रहे तथा ।
अयने श्रवणे चैव व्यतीपाते तथैव च ॥१४-११५-२८ (९६७५८)
अश्वत्तदर्शने चैव तथा मद्दर्शनेऽपि च ।
जप्या तु मम गायत्री चाथवाऽष्टाक्षरं नृप ।
आर्जितं दुष्कृतं तस्य नाशयेन्नात्र संशयः ॥ १४-११५-२९ (९६७५९)
युधिष्ठिर उवाच।१४-११५-३०क्ष् (८००९)
अश्वत्थदर्शनं चैव किं त्वद्दर्शनसंमितम् ।
एतत्कथय मे देव परं कौतूहलं हि मे ॥१४-११५-३० (९६७६०)
भगवानुवाच।१४-११५-३१क्ष् (८०१०)
अहमश्वत्थरूपेण पालयामि जगत्त्रयम् ।
अस्वत्थो न स्थितो यत्र नाहं तत्र प्रतिष्ठितः ॥१४-११५-३१ (९६७६१)
यत्राहं संस्थितो राजन्नस्वत्थश्चापि तिष्ठति ।
यस्त्वेनमर्चयेद्भक्त्या स मां साक्षात्समर्चति ॥१४-११५-३२ (९६७६२)
यस्त्वेनं प्रहरेत्कोपान्मामेव प्रहरेत्तु सः ।
तस्मात्प्रदक्षिणं कुर्यान्न चिन्द्यादेनमन्वहम् ॥१४-११५-३३ (९६७६३)
व्रतस्य पारणं तीर्थमार्जवं तीर्थमुच्यते ।
देवशुश्रूषणं तीर्तचं गुरुशुश्रूषणं तथा ॥१४-११५-३४ (९६७६४)
पितृशुश्रूषणं तीर्थं मातृशुश्रूषणं तथा ।
दाराणां तोषणं तीर्तं गार्हस्थ्यं तीर्थमुच्यते ॥१४-११५-३५ (९६७६५)
आतिथेयः परं तीर्थं ब्रह्मतीर्थं सनातनम् ।
ब्रह्मिचर्यं परं तीर्तं त्रेताग्निस्तीर्थमुच्यते ॥१४-११५-३६ (९६७६६)
मूलं धर्मं तु विज्ञाय मनस्त्तत्रावधार्यताम् ॥
गच्छ तीर्थानि कौन्तेय धर्मो धर्मेण वर्धते ॥१४-११५-३७ (९६७६७)
द्विविधं तीर्थमित्याहुः स्थावरं जङ्गमं तथा ।
स्तावराज्जङ्गमं तीर्थं ततो ज्ञानपरिग्रहः ॥१४-११५-३८ (९६७६८)
कर्म्णाऽपि विशुद्धस्य पुरुषस्येह भारत ।
हृदये सर्वतीर्थानि तीर्थभूतः स उच्यते ॥१४-११५-३९ (९६७६९)
गुरुतीर्थं परं ज्ञानमतस्तीर्तं न विद्यते ।
ज्ञानतीर्तं परं तीर्तं ब्रह्मतीर्तं सनातनम् ॥१४-११५-४० (९६७७०)
क्षमा तु परमं तीर्तं सर्वतीर्थेषु पाण्डव ।
क्षमावतामयं लोकः परश्चैव क्षमावताम् ॥१४-११५-४१ (९६७७१)
मानितोऽमानितो वाऽपि पूजितोऽपूजितोपि वा ।
आक्रुष्टस्तर्जितो वाऽपि क्षमावांस्तीर्थमुच्यते ॥१४-११५-४२ (९६७७२)

क्षमा यशः क्षमा दानं क्षमा यज्ञः क्षमा दमः ।
क्षमाऽहिंसा क्षमा धर्मः क्षमा चेन्द्रियनिग्रहः ॥१४-११५-४३ (९६७७३)
क्षमा दया क्षमा यज्ञः क्षमयैव धृतं जगत् ।
क्षमावान्ब्राह्मणो देवः क्षमावान्ब्राह्मणो वरः ॥१४-११५-४४ (९६७७४)
क्षमावानाप्नुयात्स्वर्गं क्षमावानाप्नुयाद्यशः ।
क्षमावान्प्राप्नुयान्मोक्षं तस्मात्साधुः स उच्यते ॥१४-११५-४५ (९६७७५)
आत्मा नदी भारतपुण्यतीर्थ-
मात्मा तीर्थं सर्वतीर्थप्रधानम् ।
आत्मा यज्ञः सततं मन्यते वै
स्वर्गो मोक्षः सर्वमात्मन्यधीनम् ॥ १४-११५-४६ (९६७७६)
आचारनैर्मल्यमुपागतेन
सत्यक्षमानिस्तुलशीतलेन ।
ज्ञानांबुना स्नाति हि नित्यमेवं
किं तस्य भूयः सलिलेन तीर्थम् ॥ १४-११५-४७ (९६७७७)
युधिष्ठिर उवाच।१४-११५-४८क्ष् (८०११)
भगवन्सर्वपापघ्नं प्रायश्चित्तमदुष्करम् ।
त्वद्भक्तस्य सुरश्रेष्ठ मम त्वं वक्तुमर्हसि ॥१४-११५-४८ (९६७७८)
भगवानुवाच।१४-११५-४९क्ष् (८०१२)
रहलस्यमिदमत्यर्थमश्राव्यं पापकर्मणाम् ।
अधार्मिकाणामश्राव्यं प्रायश्चित्तं ब्रवीमि ते ॥१४-११५-४९ (९६७७९)
पावनं ब्राह्मं दृष्ट्वा मद्गतेनान्तरात्मना ।
नमो ब्रह्मण्यदेवायेत्यभिवादनमाचरेत् ॥१४-११५-५० (९६७८०)
प्रदक्षिणं च यः कुर्यात्पुनरष्टाक्षरेण तु ।
तेन तुष्टेन विप्रेणि तत्पापं क्षपयाम्यहम् ॥१४-११५-५१ (९६७८१)
पोत्रकृष्टां वराहस्य मृत्तिकां शिरसा वहन् ।
प्राणायामशतं कृत्वा नरः पापैः प्रमुच्यते ॥१४-११५-५२ (९६७८२)
दक्षिणावर्तशङ्खाद्वा कपिलाशृङ्गतोपि वा ।
प्राक्स्रोतसं नदीं गत्वा ममायतनसंनिधौ ॥१४-११५-५३ (९६७८३)
सलिलेन तु यः स्नायात्सकृदेव रविग्रहे ।
तस्य यत्संचितं पापं तत्क्षणादेव नश्यति ॥१४-११५-५४ (९६७८४)
मस्तकान्निस्सृतैस्तोयैः कपिलाया युधिष्ठिर ।
गोमूत्रेणापि यः स्नायाद्रोहिण्यां मम वा दिने ।
विप्रपादच्युतैर्वाऽपि तोयैः पापं प्रणश्यति ॥ १४-११५-५५ (९६७८५)
नमस्येद्यस्तु मद्भक्त्या शिंशुमारं प्रजापतिम् ।
चतुर्दशाङ्गसंयुक्तं तस्य पापं प्रणस्यति ॥१४-११५-५६ (९६७८६)
ततश्चतुर्दशाङ्गानि शृणु तस्य युधिष्ठिर ।

शिरो धर्मो हनुर्ब्रह्मा वृषावुत्तरदक्षिणौ ॥१४-११५-५७ (९६७८७)
हृदयं तु भवेद्विष्णुरंसौ स्यातां तथाऽश्विनौ ।
अत्रिर्मध्यं भवेद्राजँल्लिङ्गं संवत्सरं भवेत् ॥१४-११५-५८ (९६७८८)
मित्रावरुणकौ पादावूरुद्वन्द्वं हुताशनः ।
ततः पश्चाद्भवेदिन्द्रस्ततः पश्चात्प्रजापतिः ॥१४-११५-५९ (९६७८९)
अभयं च ततः पश्चात्स एव ध्रुवसंज्ञिकः ।
एतान्यङ्गानि सर्वाणि शिंशुमारप्रजापतेः ॥१४-११५-६० (९६७९०)
विबेत्तु पञ्चगव्यं यः पौर्णमास्यामुपोष्य तु ।
तस्य नश्यति यत्पापं तत्पापं पूर्वसंचितम् ॥
तथैव ब्रह्मकूर्च तु समन्त्रं तु पृथक्पृथक्। १४-११५-६१ (९६७९१)
मासिमासि विबेद्यस्तु तस्य पापं प्रणश्यति ॥
पात्रं च ब्रह्मकूर्चं च शृणु तत्र च भारत। १४-११५-६२ (९६७९२)
पालाशं पद्मपत्रं च ताम्रं वाऽथ हिरण्ययम् ।
सादयित्वा तु गृह्णीयात्तत्तु पात्रमुदाहृतम् ॥१४-११५-६३ (९६७९३)
गायत्र्या गृह्णते मूत्रं गन्धद्वारेति गोमयम् ।
आप्यायस्वेति च क्षीरं दधिक्राण्वेति वै दधि ॥१४-११५-६४ (९६७९४)
तेजोसिशुक्लमित्याज्यं देवस्यत्वेति कुशोदकम् ।
आपोहिष्ठेत्यृचा गृह्यि यवचूर्णं यथाविधि ॥१४-११५-६५ (९६७९५)
ब्रह्मणे च यथा हुत्वा समिद्धे च हुताशने ।
आलोड्य प्रणवेनैव निर्मथ्य प्रणवेन तु ॥१४-११५-६६ (९६७९६)
उद्धृत्य प्रणवेनैव पिबेतु प्रणवेन तु ।
महताऽपि स पापेन त्वचेवाहिर्विमुच्यते ॥१४-११५-६७ (९६७९७)
भद्रं न हति यः पादं पठन्नृक्सहितां तदा ।
अन्तर्जले वाऽभ्यादित्ये तस्य पापं प्रणश्यति ॥१४-११५-६८ (९६७९८)
मम सूक्तं जपेद्यस्तु नित्यं मद्गतमानसः ।
न पापेन स लिप्येत पद्मपत्रमिवांभसा ॥ ॥१४-११५-६९ (९६७९९)

इति श्रीमन्महाभारते आश्वमेधिकप्रर्वणि वैष्णवधर्मपर्वणि
पञ्चदशाधिकशततमोऽध्यायः ॥११५ ॥

---

अस्वमेधिकपर्व-अध्यय११६
॥ श्रीः ॥
१४.११६. अध्यायः ११६

Mahabharata - Ashvamedhika Parva - Chapter Topics
कृष्णेन युधिष्ठिरंप्रति भकगवद्भक्तिसौशील्याद्यभावे

ब्राह्मणानामपि अग्निहोत्रस्वाध्यायाध्ययनादिसत्कर्मणामपि वैफल्यस्य शूद्राणामपि भक्त्यादिमतां स्वोचितकिंचित्कर्मणामपि साफल्यस्य च कथनम् ॥ १ ॥

Mahabharata - Ashvamedhika Parva - Chapter Text

युधिष्ठिर उवाच ।
कीदृशा ब्राह्मणाः पुण्या भावशुद्धाः सुरेश्वर ।
यत्कर्म सफलं नेति कथयस्व ममानघ ॥ १४-११६-१ (९६८००)
भगवानुवाच। १४-११६-२क्ष् (८०१३)
शृणु पाण्डव तत्सर्वं ब्राह्मणानां यथाक्रमम् ।
सफलं निष्फलं चैव तेषां कर्म ब्रवीमि ते ॥ १४-११६-२ (९६८०१)
त्रिदण्डधारणं मौनं जटाधारणमुण्डनम् ।
वल्कलाजिनसंवासो व्रतचर्याऽभिषेचनम् ॥ १४-११६-३ (९६८०२)
अग्निहोत्रं गृहे वासः स्वाध्यायं दारसत्क्रिया ।
सर्वाण्येतानि वै मिथ्या यदि भावो न निर्मलः ॥ १४-११६-४ (९६८०३)
अग्निहोत्रं वृथा राजन्वृथा वेदास्तथैव च ।
शीलेन देवास्तुष्यन्ति श्रुतयस्तत्र कारणम् ॥ १४-११६-५ (९६८०४)
क्षान्तः दान्तं जितक्रोधं जितात्मानं जितेन्द्रियम् ।
तमग्र्यं ब्राह्मणं मन्ये शेषाः शूद्रा इति स्मृताः ॥ १४-११६-६ (९६८०५)
अग्निहोत्रव्रतपरान्स्वाध्यायनिरताञ्शुचीन् ।
उपवासरतान्दान्तांस्तादेवा ब्राह्मणान्विदुः ॥ १४-११६-७ (९६८०६)
न जात्या पुजीतो राजन्गुणाः कल्याणकारणाः ।
चण्डालमपि वृत्तस्थं तं देवा ब्राह्मणं विदुः ॥ १४-११६-८ (९६८०७)
मनश्शौचं कर्मशौचं कुलशौचं च भारत ।
शरीरशौचं वाक्छौचं शौचं पञ्चविधं स्मृतम् ॥ १४-११६-९ (९६८०८)
पञ्चस्वेतेषु शौचेषु हृदिं शौचं विशिष्यते ।
हृदयस्य च शौचेन स्वर्गं गच्छन्ति मानवाः ॥ १४-११६-१० (९६८०९)
अग्निहोत्रपरिभ्रष्टः प्रसक्तः क्रयविक्रयैः ।
वर्णसङ्करकर्ता च ब्राह्मणो वृषलैः समः ॥ १४-११६-११ (९६८१०)
यस्य वेदश्रुतिर्नष्टा कर्षकश्चापि यो द्विजः ।
विकर्मसेवी कौन्तेय स वै वृषल उच्यते ॥ १४-११६-१२ (९६८११)
वृषो हि धर्मो विज्ञेयस्तस्य यः कुरुते लयम् ।
वृषलं तं विदुर्देवा निकृष्टं श्वपचादपि ॥ १४-११६-१३ (९६८१२)
स्तुतिभिर्ब्रह्मगीताभिर्यः शूद्रं स्तौति मानवः ।

न तु मां स्तौति पापात्मा स तु चण्डालतः समः ॥१४-११६-१४ (९६८१३)
श्वदृतौ तु यथा क्षीरं ब्रह्म वै वृषले तथा ।
दुष्टतामेति तत्सर्वं शुना लीढं हविर्यथा ॥१४-११६-१५ (९६८१४)
अङ्गानि वेदाश्चत्वारो मीमांसान्यायविस्तरः ।
धर्मशास्त्रं पुराणं च विद्या ह्येताश्चतुर्दश ॥१४-११६-१६ (९६८१५)
यान्युक्तानि मया सम्यग्विद्यास्थानानि भारत ।
उत्पन्नानि पवित्राणि भुवनार्थं तथैव च ॥१४-११६-१७ (९६८१६)
तस्मात्तानि न शूद्रस्य स्प्रष्टव्यानि युधिष्ठिर ।
सर्वं त्रीण्यपवित्राणि पञ्चामेध्यानि भारत। १४-११६-१८ (९६८१७)
श्वा च शूद्रः श्वपाकश्च अपवित्राणि पाण्डव ॥
गायकः कुक्कुटो यूपो ह्युदक्या वृषलीपतिः। १४-११६-१९ (९६८१८)
पञ्चैते स्युरमेध्याश्च स्प्रष्टव्या न कदातन ।
स्पृष्टवैतानष्ट वै विप्रः सचेलो जलमाविशेत् ॥१४-११६-२० (९६८१९)
मद्भक्ताञ्शूद्रसामान्यादवमन्यन्ति ये नराः ।
नरकेष्वेव तिष्ठन्ति वर्षकोटिं नराधमाः ॥१४-११६-२१ (९६८२०)
चण्डालमपि मद्भक्तं नावमन्येत बुद्धिमान् ।
अवमानात्पतन्त्येव नरके रौरवे नराः ॥१४-११६-२२ (९६८२१)
मम भक्तस्य भक्तेषु प्रीतिरभ्यधिका मम ।
तस्मान्मद्भक्तभक्ताश्च पूजनीया विशेषतः ॥१४-११६-२३ (९६८२२)
कीटपक्षिमृगाणां च मयि संन्यस्तचेतसाम् ।
ऊर्ध्वामेव गतिं विद्धि किं पुनर्ज्ञानिनां नृणाम् ॥१४-११६-२४ (९६८२३)
पत्रं वाऽप्यथवा पुष्पंक फलं वाऽप्यप एव वा ।
ददाति मम शूद्रो यच्छिरसा धारयामि तत् ॥१४-११६-२५ (९६८२४)
विप्रानेवार्चयेद्भक्त्या शूद्रप्रायांश्च मत्प्रियान् ।
तेषां तेनैव रूपेण पूजां गृह्णामि भारत ॥१४-११६-२६ (९६८२५)
वेदोक्तेनैव मार्गेण सर्वभूतहृदि स्थितम् ।
मामर्चयन्ति ये पिप्रा मत्सायुज्यं व्रजन्ति ते ॥१४-११६-२७ (९६८२६)
मद्भक्तानां हितायैव प्रादुर्भावः कृतो मया ।
प्रदुर्भावकृता काचिदर्चनीया युधिष्ठिर ॥१४-११६-२८ (९६८२७)
आसामन्यतमां मूर्तिं यो मद्भक्त्या समर्चति ।
तेनैव परितुष्टोऽहं भविष्यामि न संशयः ॥१४-११६-२९ (९६८२८)
मृदा च मणिरत्नैश्च ताम्रेण रजतेन च ।
कृत्वा प्रतिकृतिं कुर्यादर्चनां काञ्चनेन वा ।
पुण्यं दशगुणं विद्यादेतेषामुत्तरोत्तरम् ॥ १४-११६-३० (९६८२९)
जपकामो भवेद्राजा विद्याकामो द्विजोत्तमः ।
वैश्यो वा धनकामस्तु शूद्रः सुखफलप्रियः ।

सर्वकामाः स्त्रियो वाऽपि सर्वान्कामानवाप्नुयुः ॥ ॥ १४-११६-३१ (९६८३०)

इति श्रीमन्महाभारते आश्वमेधिकपर्वणि वैष्णवधर्मपर्वणि
षोडशाधिकशततमोऽध्यायः ॥ ११६ ॥

---

अस्वमेधिकपर्व-अध्यय११७
॥ श्रीः ॥
१४.११७. अध्यायः ११७

Mahabharata - Ashvamedhika Parva - Chapter Topics
कृष्णेन युधिष्ठिरंप्रत्यश्वत्थगोब्राह्मणमहिमप्रशंसनपूर्वकं
ब्राह्मणभ्रंशकदुष्कर्मकथनम् ॥ १ ॥

Mahabharata - Ashvamedhika Parva - Chapter Text

युधिष्ठिर उवाच ।
कीदृशानां तु शूद्राणां नानुगृह्णासि चार्चनम् ।
उद्वेगस्तव कस्माद्धि तन्मे ब्रूहि सुरेश्वर ॥ १४-११७-१ (९६८३१)
भगवानुवाच। १४-११७-२क्ष् (८०१४)
अव्रतेनाप्यभक्तेन स्पृष्टां शूद्रेण चार्चनाम् ।
तां वर्जयामि राजेन्द्र श्वपाकविहितामिव ॥ १४-११७-२ (९६८३२)
नन्वहं शङ्करश्चापि गावो विप्रास्तथैव च ।
अश्वत्थोऽमररूपं हि त्रयमेतद्युधिष्ठिर ॥ १४-११७-३ (९६८३३)
एतत्त्रयं हि मद्भक्तो नावमन्येत कर्हिचित् ।
अवमानितमेतत्तु दहत्यासप्तमं कुलम् ॥ १४-११७-४ (९६८३४)
अश्वत्थो ब्राह्मणा गावो मन्मयास्तारयन्ति हि ।
तस्मादेतत्प्रयत्नेन त्रयं पूजय पाण्डव ॥ १४-११७-५ (९६८३५)
युधिष्ठिर उवाच। १४-११७-६क्ष् (८०१५)
ब्राह्मणेनैव देहेन कथं शूद्रत्वमाप्नुयात् ।
ब्रह्म वा नश्यति कथं वक्तुं देव त्वमर्हसि ॥ १४-११७-६ (९६८३६)
भगवानुवाच। १४-११७-७क्ष् (८०१६)
कूपस्नानं तु यो विप्रः कुर्याद्द्वादशवार्षिकम् ।
स तेनैव शरीरेण शूद्रत्वं यात्यसंशयम् ॥ १४-११७-७ (९६८३७)
यस्तु राजाश्रयेणैव जीवेद्द्वादशवार्षिकम् ।
स शूद्रत्वं व्रजेद्विप्रो वेदानां पारगोपि सन् ॥ १४-११७-८ (९६८३८)
पत्तने नगरे वाऽपि यो द्वादशसमा वसेत् ।

स शूद्रत्वं व्रजेद्विप्रो नात्र कार्या विचारणा ॥१४-११७-९ (९६८३९)
उत्पादयति यः पुत्रं शूद्रायां काममोहितः ।
तस्य कायगतं ब्रह्म सद्य एव विनश्यति ॥१४-११७-१० (९६८४०)
यः सोमलतिकां विप्रः केवलं भक्षयेद्वृथा ।
तस्य कायगतं ब्रह्म सद्य एव विनश्यति ॥१४-११७-११ (९६८४१)
मैथुनं कुरुते यस्तु जिह्वायां ब्राह्मणो नृप ।
तस्य कायगतं ब्रह्म सद्य एव विनश्यति ॥१४-११७-१२ (९६८४२)
विप्रत्वं दुर्लभं प्राप्य दुर्मर्गैरेवमादिभिः ।
विनाशयन्ति ये तत्तु ताञ्शोचामि युधिष्ठिर ॥१४-११७-१३ (९६८४३)
तस्मात्सर्वप्रत्नेन मत्प्रियो यो युधिष्ठिर ।
जातिभ्रंशकरं कर्म न कुर्यादीदृशं द्विजः ॥ ॥१४-११७-१४ (९६८४४)

इति श्रीमन्महाभारते आश्वमेधिकपर्वणि वैष्णवधर्मपर्वणि
सप्तदशाधिकशततमोऽध्यायः ॥११७ ॥

---

अस्वमेधिकपर्व-अध्यय११८
॥ श्रीः ॥
१४.११८. अध्यायः ११८

Mahabharata - Ashvamedhika Parva - Chapter Topics
कृष्णेन युधिष्ठिरंप्रति पालाशविधिप्रकारकथनम् ॥१ ॥
तथा तीर्थाटनासमर्थानां तत्प्रतिनिधितीर्थानुवर्णनम् ॥२ ॥
तथा भगवद्भक्तलक्षणकथनपूर्वकं तत्प्रशंसनम् ॥३ ॥
तता स्वस्य सर्वोत्तमत्वकथनपूर्वकं स्वोक्तध्रमश्रवणस्य
फलकथनम् ॥४ ॥
ततो युधिष्ठिराद्यामन्त्रपूर्वकं दारुकोपनीतरथारोहणेन द्वारकांप्रति
गमनम् ॥५ ॥

Mahabharata - Ashvamedhika Parva - Chapter Text

युधिष्ठिर उवाच ।
देशान्तरगते विप्रे संयुक्ते कालधर्मणा ।
शरीरनाशे संप्राप्ते कथं प्रेतत्वकल्पना ॥१४-११८-१ (९६८४५)
भगवानुवाच।१४-११८-२क्ष् (८०१७)
श्रूयतामाहिताग्नेस्तु तथाभूतस्य संस्क्रिया ।
पालाशबृन्दैः प्रतिमा कर्तव्या कल्पचोदिता ॥१४-११८-२ (९६८४६)

त्रीणि षष्टिशतान्याहुरस्थीन्यस्य युधिष्ठिर ।
तेषां विकल्पना कार्या यथाशास्त्रं विनिश्चितम् ॥ १४-११८-३ (९६८४७)
अशीत्यर्धं शिरसि च ग्रीवायां दश एव च ।
बाह्वोश्चापि शतं दद्यादङ्गुलीषु पुनर्दश ॥ १४-११८-४ (९६८४८)
उरसि त्रिंशतं दद्याज्जठरे वाऽपि विंशतिम् ।
वृषणे द्वादशार्धं तु शिश्ने चाष्टार्धमेव च ॥ १४-११८-५ (९६८४९)
दद्यात्तु शतमूर्वोस्तु षष्ट्यर्थं जानुजङ्घयोः ।
दश दद्याच्चरणयोरेषा प्रेतस्य निष्कृतिः ॥ १४-११८-६ (९६८५०)
युधिष्ठिर उवाच। १४-११८-७क्ष् (८०१८)
विशेषतीर्थं सर्वेषामशक्तानामनुग्रहात् ।
भक्तानां तारणार्तं तु वक्तुमर्हसि धर्मतः ॥ १४-११८-७ (९६८५१)
भगवानुवाच। १४-११८-८क्ष् (८०१९)
पावनं सर्वतीर्थानां सत्यं गायन्ति सामगाः ।
सत्यस्य वचनं तीर्थमहिंसा तीर्थमुच्यते ॥ १४-११८-८ (९६८५२)
तपस्तीर्थं दया तीर्थं शीलं तीर्थं युधिष्ठिर ।
अल्पसंतोषकं तीर्थं नारी तीर्थं पतिव्रता ॥ १४-११८-९ (९६८५३)
संतुष्टो ब्राह्मणस्तीर्थं ज्ञानं वा तीर्थमुच्यते ।
मद्भक्तः सततं तीर्थं शङ्करस्य विशेषतः ॥ १४-११८-१० (९६८५४)
यतयस्तीर्थमित्येवं विद्वांसस्तीर्थमुच्यते ।
शरण्यपुरुषस्तीर्थमभयं तीर्थमुच्यते ॥ १४-११८-११ (९६८५५)
त्रैलोक्येऽस्मिन्निरुद्विग्नो न बिभेमि कुतश्चन ।
न दिवा यदि वा रात्रावुद्वेगः शूद्रलङ्घनात् ॥ १४-११८-१२ (९६८५६)
न भयं देवदैत्येभ्यो रक्षोभ्यश्चैव मे नृप ।
शूद्रवक्त्राच्च्युतं ब्रह्म भयं तु मम सर्वदा ॥ १४-११८-१३ (९६८५७)
तस्मात्सप्रणवं शूद्रो मन्त्रमापि न कीर्तयेत् ।
प्रणवं हि परं लोके ब्रह्म ब्रह्मविदो विदुः ॥ १४-११८-१४ (९६८५८)
द्विजशुश्रूषणं धर्मः शूद्राणां भक्तितो मयि ।
तेन गच्छन्ति ते स्वर्गं चिन्तयन्तो हि मां सदा ॥ १४-११८-१५ (९६८५९)
द्विजशुश्रूषया शूद्रः परं श्रेयोऽधिगच्छति ।
द्विजशुश्रूषणादन्यन्नास्ति शूद्रस्य निष्कृतिः ॥ १४-११८-१६ (९६८६०)
रागो द्वेषश्च मोहश्च पारुष्यं चानृशंसता ।
शाठ्यं च दीर्घवैरित्वमतिमानमनार्जवम् ॥ १४-११८-१७ (९६८६१)
अनृतं चापवादं च पैशुन्यमतिलोभता ।
हिंसा स्तेयो मृषावादो वञ्चना रोषलोभता ॥ १४-११८-१८ (९६८६२)
अबुद्धिता च नास्तिक्यं भयमालस्यमेव च ।
अशौचं चाकृतज्ञत्वं डंभता स्तंभ एव च ।

निकृतिश्चाप्यविज्ञानं जातके शूद्रमाविशेत् ॥ १४-११८-१९ (९६८६३)
सृष्ट्वा पितामहः शूद्रमभिभूतं तु तामसैः ।
द्विजशुश्रूषणं धर्मं शूद्राणां तु प्रयुक्तवान् ।
नश्यन्ति तामसा भावाः शूद्रस्य द्विजभक्तितः ॥ १४-११८-२० (९६८६४)
पत्रं पुष्पं फलं तोयं यो मे भक्त्या प्रयच्छति ।
तदहं भक्त्युपहृतं मूर्ध्ना गृह्णामि शूद्रतः ॥ १४-११८-२१ (९६८६५)
अग्रजो वाऽपि यः कश्चित्सर्वपापसमन्वितः ।
यदि मां सततं ध्यायेत्सर्वपापैः प्रमुच्यते ॥ १४-११८-२२ (९६८६६)
विद्याविनयसंपन्ना ब्राह्मणा वेदपारगाः ।
मयि भक्ति न कुर्वन्ति चण्डालसदृशा हि ते ॥ १४-११८-२३ (९६८६७)
वृथा दानं वृथा तप्तं वृथा चेष्टं वृथा हुतम् ।
वृथाऽऽतिथ्यं च तत्तस्य यो न भक्तो मम द्विजः ॥ १४-११८-२४ (९६८६८)
यत्कृतं च हुतं चापि यदिष्टं दत्तमेव च ।
अभक्तिमत्कृतं सर्वं राक्षसा एव भुञ्जते ॥ १४-११८-२५ (९६८६९)
स्थावरे जङ्गमे वाऽपि सर्वभूतेषु पाण्डव ।
समत्वेन यदा कुर्यान्मद्भक्तो मित्रशत्रुषु ॥ १४-११८-२६ (९६८७०)
आनृशंस्यमहिंसा च यथा सत्यं तथाऽऽर्जवम् ।
अद्रोहश्चैव भूतानां मद्व्रतानां व्रतं नृप ॥ १४-११८-२७ (९६८७१)
नम इत्येव यो ब्रूयान्मद्भक्तं श्रुद्धयाऽन्वितः ।
तस्याक्षयाऽभवँल्लोकाः श्वपाकस्यापि पार्थिव ॥ १४-११८-२८ (९६८७२)
किं पुनर्ये यजन्ते मां सदारं विधिपूर्वकम् ।
मद्भक्ता मद्गतप्राणाः कथयन्तश्च मां सदा ॥ १४-११८-२९ (९६८७३)
बहुवर्षसहस्राणि तपस्तप्यति यो नरः ।
नासौ पदमवाप्नोति मद्भक्तैर्यदवाप्यते ॥ १४-११८-३० (९६८७४)
मामेव तस्माद्राजेन्द्र ध्यायन्नित्यमतन्द्रितः ।
अवाप्स्यति ततः सिद्धिं द्रक्ष्यत्येव परं पदम् ॥ १४-११८-३१ (९६८७५)
अपार्थकं प्रभाषन्तः शूद्रा भागवता इति ।
न शूद्रा भगवद्भक्ता विप्रा भागवताः स्मृताः ॥ १४-११८-३२ (९६८७६)
द्वादशाक्षरतत्वज्ञश्चतुर्व्यूहविभागवित् ।
अच्छिद्रपञ्चकालज्ञः स वै भागवतः स्मृतः ॥ १४-११८-३३ (९६८७७)
ऋग्वेदेनैव होता च यजुषाऽध्वर्युरेव च ।
सामवेदेन चोद्गाता पुण्येनाभिष्टुवन्ति माम् ॥ १४-११८-३४ (९६८७८)
अथर्वशिरसा चैव नित्यमाथर्वाणा द्विजाः ।
स्तुवन्ति सततं ये मां ते वै भागवताः स्मृताः ॥ १४-११८-३५ (९६८७९)
वेदाधीनाः सदा यज्ञा यज्ञाधीनास्तु देवताः ।
देवता ब्राह्मणाधीनास्तस्माद्विप्रास्तु देवताः ॥ १४-११८-३६ (९६८८०)

अनाश्रित्योच्छ्रयं नास्ति मुख्यमानश्रयमाश्रयेत् ।
रुद्रं समाश्रिता देवा रुद्रो ब्रह्माणमाश्रितः ॥ १४-११८-३७ (९६८८१)
ब्रह्मा मामाश्रितो राजन्नाहं कंचिदुपाश्रितः ।
ममाश्रयो न कश्चित्तु सर्वेषामाश्रयो ह्यहम् ॥ १४-११८-३८ (९६८८२)
एवमेतन्मया प्रोक्तं रहस्यमिदमुत्तमम् ।
धर्मप्रियस्य ते नित्यं राजन्नेवं समाचर ॥ १४-११८-३९ (९६८८३)
इदं पवित्रमाख्यानं पुण्यं वेदेन संमितम् ।
यः पठेन्मामकं धर्ममहन्यहनि पाण्डव ॥ १४-११८-४० (९६८८४)
धर्मोति वर्धते तस्य बुद्धिश्चापि प्रसीदति ।
पापक्षयमुपेत्यैवं कल्याणं च विवर्धते ॥ १४-११८-४१ (९६८८५)
एतत्पुण्यं पवित्रं च पामनाशनमुत्तमम् ।
श्रोतव्यं श्रद्धया युक्तैः श्रोत्रियैश्च विशेषतः ॥ १४-११८-४२ (९६८८६)
श्रावयेद्यस्त्विदं भक्त्या प्रयतोथ शृणोति वा ।
स गच्छेन्मम सायुज्यं नात्र कार्या विचारणा ॥ १४-११८-४३ (९६८८७)
यश्चेमं श्रावयेच्छ्राद्धे मद्भक्तो मत्परायणः ।
पितरस्तस्य तृप्यन्ति यावदाभूतसंप्लवम् ॥ १४-११८-४४ (९६८८८)
वैशम्पायन उवाच। १४-११८-४५क्ष् (८०२०)
श्रुत्वा भागवतान्धर्मान्साक्षाद्विष्णोर्जगद्गुरोः ।
प्रहृष्टमनसो भूत्वा चिन्तयन्तोद्भुताः कथाः ॥ १४-११८-४५ (९६८८९)
ऋषय पाण्डवाश्चैव प्रणेमुस्तं जनार्दनम् ।
पूजयामास गोविन्दं धर्मपुत्रः पुनः पुनः ॥ १४-११८-४६ (९६८९०)
देवा ब्रह्मर्षयः सिद्धा गन्धर्वाप्सरसस्तथा ।
ऋषयस्च महात्मानो गुह्यका भुजगास्तता ॥ १४-११८-४७ (९६८९१)
वालखिल्या महात्मानो योगिनस्तत्वदर्शिनः ।
तथा भागवताश्चापि पञ्चकालमुपासकाः ॥ १४-११८-४८ (९६८९२)
कौतूहलसमायुक्ता भगवद्भक्तिमागताः ।
श्रुत्वा तु परमं पुण्यं वैष्णवं धर्मशासनम् ॥ १४-११८-४९ (९६८९३)
विमुक्तपापाः पूतास्ते संवृत्तास्तत्क्षणेन् तु ।
प्रणम्य शिरसा विष्णु प्रतिनन्द्य च ताः कथाः ॥ १४-११८-५० (९६८९४)
द्रष्टारो द्वारकायां वै वयं सर्वे जगद्गुरुम् ।
इति प्रहृष्टमनसो ययुर्देवगणैः सह ।
सर्वे ऋषिगणा राजन्ययुः स्वंस्वं निवेशनम् ॥ १४-११८-५१ (९६८९५)
गतेषु तेषु सर्वेषु केशवः केशिहा हरिः ।
सस्मार दारुकं राजन्स च सात्यकिना सह ।
समीपस्थोऽभवत्सूतो याहि देवेति चाब्रवीत् ॥ १४-११८-५२ (९६८९६)
ततो विषण्णवदनाः पाण्डवाः पुरुषोत्तमम् ।

अञ्जलिं मूर्ध्नि संधाय नेत्रैरश्रुपरिप्लुतैः ।
पिबन्तः सततं कृष्णं नोचुरार्ततरास्तदा ॥ १४-११८-५३ (९६८९७)
कृष्णोपि भगवान्देवः पृथामामन्त्र्य चार्तवत् ।
धृतराष्ट्रं च गान्धारीं विगदुरं द्रौपदीं तथा ॥१४-११८-५४ (९६८९८)
कृष्णद्वैपायनं व्यासमृषीनन्यांस्च मन्त्रिणः ।
सुभद्रामात्मजयुतामुत्तरां स्पृश्य पाणिना ।
निर्गत्य वेश्मनस्तस्मादारुरोह तदा रथम् ॥ १४-११८-५५ (९६८९९)
वाजिभिः शैव्यसुग्रीवमेघपुष्पबलाहकैः ।
युक्तं तु ध्वजभूतेन पतगेन्द्रेण धीमता ॥१४-११८-५६ (९६९००)
अन्वारुरोह चाप्येन प्रेम्या राजा युधिष्ठिरः ।
अपास्य चाशु यन्तारं दारुकं सूतसत्तमम् ।
अभीशून्प्रतिजग्राह स्वयं कुरुपतिस्तदा ॥ १४-११८-५७ (९६९०१)
उपारुह्यार्जुनश्चापि चामरव्यजनं शुभम् ।
रुक्मदण्डं बृहन्मूर्ध्नि दुधावाभिप्रदक्षिणम् ॥१४-११८-५८ (९६९०२)
तथैव भीमसेनोपि रथमारुह्य वीर्यवान् ।
छत्रं शतशलाकं च दिव्यमाल्योपशोभितम् ॥१४-११८-५९ (९६९०३)
वैडूर्यमणिदण्डं च चामीकरविभूषितम् ।
दधार तरसा भीमश्छत्रं तच्छार्ङ्गधन्वनः ॥१४-११८-६० (९६९०४)
उपारुह्य रथं शीघ्रं चामरव्यजने सिते ।
नकुलः सहदेवश्च धूयमानौ जनार्दनम् ॥१४-११८-६१ (९६९०५)
भीमसेनोऽर्जुनश्चैव यमावप्यरिसूदनौ ।
पृष्ठतोऽनुययुः कृष्णं माशब्द इति हर्षिताः ॥१४-११८-६२ (९६९०६)
त्रियोजने व्यतीते तु परिष्वज्य च पाण्डवान् ।
विसृज्य कृष्णस्तान्सर्वान्प्रणतान्द्वारका ययौ ॥१४-११८-६३ (९६९०७)
तथा प्रणम्य गोविन्दं तदाप्रभृति पाण्डवाः ।
कपिलाद्यानि दानानि ददुर्धर्मपरायणाः ॥१४-११८-६४ (९६९०८)
मधुसूदनवाक्यानि स्मृत्वास्मृत्वा पुनःपुनः ।
मनसा पूजयामासुर्हृदयस्थानि पाण्डवाः ॥१४-११८-६५ (९६९०९)
युधिष्ठिरस्तु धर्मात्मा हृदि कृत्वा जनार्दनम् ।
तद्भक्तस्तन्मना युक्तस्तद्याजी तत्परोऽभवत् ॥१४-११८-६६ (९६९१०)
एवमुक्तं पुरावृत्तं वैष्णवं धर्मशासनम् ।
मया ते कथितं राजन्पिवित्रं पापनाशनम् ॥१४-११८-६७ (९६९११)
तच्छृणुष्व महाराज विष्णुप्रोक्तं कुरूद्वह ।
तेन गच्छसि नान्येन तद्विष्णोः परमं पदम् ॥ ॥१४-११८-६८ (९६९१२)

इति श्रीमन्महाभारते शतसाहस्र्यां संहितायां

वैयासिक्यां आश्वमेधिकपर्वणि वैष्णवधर्मपर्वणि
अष्टादशाधिकशततमोऽध्यायः ॥ ११८ ॥
। इत्याश्वमेधिकपर्व समाप्तम् ॥

--------
इतः परमाश्रमवासिकपर्व भविष्यति । तस्यायमाद्यः
श्लोकः। जनमेजय उवाच। प्राप्य पैतामहं राज्यं मम
पूर्वपितामहाः। कथमासन्महाराजे धृतराष्ट्रे महात्मनि ॥ १
॥ इत्याश्वमेधिकपर्व कुंभघोणस्थेन TI.Ar कृष्णाचार्येण
TI.Ar व्यासाचार्येण च मुंबय्यां निर्णयसागरमुद्रायन्त्रे
मुद्रापितम्। शकाब्दाः १८३२ सन १९१०.

---

१५. मौसलपर्व

मौसल-अध्यय००१
॥ श्रीः ॥
१५.१. अध्यायः १

Mahabharata - Mausala Parva - Chapter Topics
प्रजापालनेन निजनगरे भ्रातृभिः सह सुखनिवासिना युधिष्ठिरेण
कदाचनाशुभसूचकोत्पातदर्शनम् ॥ १ ॥
ततः कालन्तरे सबलकृष्णानां सर्वयादवानां परस्परं
मौसलप्रहारेणि निश्शेषनिधनश्रवणम् ॥ २ ॥

Mahabharata - Mausala Parva - Chapter Text

श्रीवेदव्यासाय नमः ।
नारायणं नमस्कृत्य नरं चैव नरोत्तमम् ।
देवीं सरस्वतीं व्यासं ततो जयमुदीरयेत् ॥ १५-१-१ (९६९१३)
वैशम्पायन उवाच। १५-१-१क्ष् (८०२१)
षट्त्रिंशे त्वथ् संप्राप्ते वर्षे कौरवन्दनः ।
ददर्श विपरीतानि निमित्तानि युधिष्टिरः ॥ १५-१-१ (९६९१४)
ववुर्वाताश्च निर्घाता रूक्षाः शर्करवर्षिणः ।
अपसव्यानि शकुना मण्डलानि प्रचक्रिरे ॥ १५-१-२ (९६९१५)
प्रत्यगूहुर्महानद्यो दिशो नीहारसंवृताः ।
उल्काश्चाङ्गारवर्षिण्यः प्रापतन्गगनाद्भुवि ॥ १५-१-३ (९६९१६)
आदित्यो रजसा राजन्समवच्छन्नगनाद्भुवि ॥
विरश्मिरुदये नित्यं कबन्धैः समलङ्कृतः ॥ १५-१-४ (९६९१७)
परिवेषाश्च दृश्यन्ते दारुणाश्च द्रसूर्ययोः ।
त्रिवर्णाः श्यामरुक्षान्तास्तथा भस्मारुणप्रभाः ॥ १५-१-५ (९६९१८)
एते चान्ये च बहव उत्पाता भयसंसिनः ।
दृश्यन्ते जगतो नाथ दिवमारोढुमिच्छति ॥ १५-१-६ (९६९१९)

ग्यस्य प्रसादाद्धर्मोऽयं कृते यद्वत्कलावपि ।
पाण्डवाश्च महाभाग युक्तास्तु यशसाऽनघ ॥' १५-१-७ (९६९२०)
कस्य चित्त्वथ कालस्य कुरुराजो विशङ्कितः ।
शुश्राव वृष्णिचक्रस्य मुसलोत्सादनं कृतम् ॥ १५-१-८ (९६९२१)
विमुक्तं वासुदेवं च श्रुत्वा रामं च पाण्डवः ।
समानीयाब्रवीद्भ्रातॄन्कि करिष्याम इत्युत ॥ १५-१-९ (९६९२२)
परस्परं समासाद्य ब्रह्मदण्डबलात्कृतान् ।
वृष्णिन्विनष्टास्ते श्रुत्वा व्यथिताः पाण्डवा भृशम् ॥ १५-१-१० (९६९२३)
निधनं वासुदेवस्य समुद्रस्येव शोषणम् ।
वीरा न श्रद्दधुस्तस्य विनाशं शार्ङ्गधन्वनः ॥ १५-१-११ (९६९२४)
मौसलं ते समाश्रित्य दुःखशोकसमन्विताः ।
विष्णा हतसंकल्पाःकि पाण्डवाः समुपाविशन् ॥ ॥ १५-१-१२ (९६९२५)

इति श्रीमन्महाभारते मौसलपर्वणि प्रथमोऽध्यायः ॥ १ ॥

Mahabharata - Mausala Parva - Chapter Footnotes

७-१-१२ मौसलं मुसलकृतं कदनं समाश्रित्य मनसि धृत्वा ॥

---

मौसल-अध्यय००२

॥ श्रीः ॥

१५.२. अध्यायः २

Mahabharata - Mausala Parva - Chapter Topics

वैशंपायनेन जनमेजयंपति यादवानां मौसलेन
निधनप्रकारकथनारम्भः ॥ १ ॥
कदाचन विश्वामित्राकदिमहर्षिषु द्वारकः मागतेषु कैश्चन
यादवैः सांबस्य स्त्रीवेषपरिकल्पनेन मुनीन्प्रति गर्भिणीयं
किंरूपमपत्यं प्रसविष्यतीति प्रश्नः ॥ २ ॥
ततो रुष्टैर्महर्षिभिः स्वकुलविनाशकमायसं मुसलं प्रसविष्यतीति
शापदानम् ॥ ३ ॥
ततः परेथुः सांवेन मुसले प्रसूते भीतैस्त्वै राजाज्ञया तस्य
चूर्णकरणेन समुद्र प्रक्षेपणम् ॥ ४ ॥

Mahabharata - Mausala Parva - Chapter Text

जनमेजय उवाच ।

कथं विनष्टा भगवन्नन्धका वृष्णिभिः सह ।
पश्यतो वासुदेवस्य भोजश्चैवक महारथाः ॥ १५-२-१ (९६९२६)
वैशम्पायन उवाच। १५-२-२क्ष् (८०२२)
षट्त्रिंशेऽथ ततो वर्षे वृष्णीनामनयो महान् ।
अन्योन्यं मुसलैस्ते तु निजघ्नुः कालचोदिताः ॥ १५-२-२ (९६९२७)
जनमेजय उवाच। १५-२-३क्ष् (८०२३)
केनानुशप्तास्ते वीराः क्षयं वृष्ण्यन्धका गताः ।
भोजाश्च द्विजवर्य त्वं विस्तरेण वदस्व मे ॥ १५-२-३ (९६९२८)
वैशम्पायन उवाच। १५-२-४क्ष् (८०२४)
विश्वामित्रं च कण्वं च नारदं च तपोधनम् ।
सारणप्रमुखा वीरा ददृशुर्द्वारकां गतान् ॥ १५-२-४ (९६९२९)
ते वै सांबं पुरस्कृत्य भूषयित्वा स्त्रियं यथा ।
अब्रुवन्नुपसङ्गम्य् दैवदण्डिनिपीडिताः ॥ १५-२-५ (९६९३०)
इयं स्त्री पुत्रकामस्य बभ्रोरमिततेजसः ।
ऋषयः साधु जानीत किमियं जनयिष्यति ॥ १५-२-६ (९६९३१)
इत्युक्तास्ते तदा राजन्विप्रलम्भप्रधर्षिताः ।
प्रत्यबुवंस्तान्मुनयो यत्तच्छृणु नराधिप ॥ १५-२-७ (९६९३२)
वृष्ण्यन्धकविनाशाय मुसलं घोरमायसम् ।
वासुदेवस्य दायादः सांबोऽयं जनयिष्यति ॥ १५-२-८ (९६९३३)
येन यूयं सुदुर्वृत्ता नृशंसा जातमन्यवः ।
उच्छेत्तारः कुलं कृत्स्नमृते रामजनार्दनौ ॥ १५-२-९ (९६९३४)
समुद्रं यास्यति श्रीमांस्त्यक्त्वा देहं हलायुधः ।
जरःकृष्णं महात्मानं शयानं भुवि भेत्स्यति ॥ १५-२-१० (९६९३५)
इत्यब्रुवंस्ततो राजन्प्रलब्धास्तैर्दुरात्मभिः ।
मुनयः क्रोधरक्ताक्षाः समीक्ष्याथ परस्परम् ।
तथोक्त्वा मुनयस्ते तु यथागतमथो ययुः ॥ १५-२-११ (९६९३६)
अथाब्रवीत्तदा वृष्णीञ्श्रुत्वैतन्मधुसूदनः ।
अन्तज्ञो मतिमांस्तस्य भवितव्यं तथेति तान् ॥ १५-२-१२ (९६९३७)
एवमुक्त्वा हृषीकेशः प्रविवेश पुरं तदा ।
कृतान्तमन्यथा नैच्छत्कर्तुं स जगतः प्रभुः ॥ १५-२-१३ (९६९३८)
श्वोभूतेऽथ ततः सांबो मुसलं तदसूकत वै ।
येन वृष्णन्धककुले पुरुषा भस्मसात्कृताः ॥ १५-२-१४ (९६९३९)
वृष्ण्यन्धकविनाशाय किंकरप्रतिमं महत् ।
असूत सापजं घोरं तच्च राज्ञे न्यवेदयन् ॥ १५-२-१५ (९६९४०)
विषण्णरूपस्तद्राजा सूक्ष्मं चूर्णमकारयत् ।
तच्चूर्णं सागरे चापि प्राक्षिपन्पुरुषा नृप ॥ १५-२-१६ (९६९४१)

अघोषयंश्च नगरे वचनादाहुकस्य ते ।
जनार्दनस्य रामस्य बभ्रोश्चैव महात्मनः ॥ १५-२-१७ (९६९४२)
अद्यप्रभृति सर्वेषु वृष्ण्यन्धककुलेष्विह ।
सुरासवो न कर्तव्यः, सर्वैर्नगरवासिभिः ॥ १५-२-१८ (९६९४३)
यश्च नो विदितं कुर्यात्पेयं कश्चिन्नरः क्वचित् ।
जीवन्स शूलमारोहेत्स्वयं कृत्वा सबान्धवः ॥ १५-२-१९ (९६९४४)
ततो राजभयात्सर्वे नियमं चक्रिरे तदा ।
नराः सासनमाज्ञाय तस्य राज्ञो महात्मनः ॥ ॥ १५-२-२० (९६९४५)

इति श्रीमन्महाभारते मौसलपर्वणि द्वितीयोऽध्यायः ॥ २ ॥
Mahabharata - Mausala Parva - Chapter Footnotes

७-२-२ मुसलैरेरकालग्नैर्मुसलकणैः ॥
७-२-१० जरा कृष्णमिति झ पाठः । जरानामा कश्चित्कैवर्तः ॥
७-२-१५ किङ्करो यमदूतस्तत्तुल्यम् ॥
७-२-१९ खयंकृत्वा स्वयंकर्ता ॥

---

मौसल-अध्यय००३
॥ श्रीः ॥
१५.३. अध्यायः ३

Mahabharata - Mausala Parva - Chapter Topics
द्वारकायां नानोत्पातप्रादुर्भावः ॥ १ ॥
तत्तद्दर्शनात्कृष्णेन गान्धारीशापदानानुस्मरेण तस्य
सत्यताचिकीर्षया भटैः सर्ववृष्ण्यादीनां तीर्थयात्रोद्धोषणम्
॥ २ ॥

Mahabharata - Mausala Parva - Chapter Text

वैशंपाय उवाच ।
एवं प्रयतमानानां वृष्णीनामन्धकैः सह ।
कालो गृहाणि सर्वेषां परिचक्राम नित्यशः ॥ १५-३-१ (९६९४६)
करालो विकटो मुण्डः पुरुषः कृष्णपिङ्गलः ।
गृहाण्यावेक्ष्य वृष्णीनां नादृश्यतं पुनः क्वचित् ॥ १५-३-२ (९६९४७)
तमघ्नन्त महेष्वासाः शरैः शतसहस्रशः ।
न चाशक्यत वेद्धुं स सर्वभूतात्ययस्तदा ॥ १५-३-३ (९६९४८)

उत्पेदिरे महावाता दारुणाश्च दिनेदिने ।
वृष्ण्यन्धकविनाशाय बहवो रोमहर्षणाः ॥ १५-३-४ (९६९४९)
विवृद्धमूषिका रथ्या विभिन्नमणिकास्तथा ।
केशा नखाश्च सुप्तानामद्यन्ते मूषिकैर्निशि ॥ १५-३-५ (९६९५०)
चीचीकूचीति वाशन्ति शारिका वृष्णिवेश्मसु ।
नोपशाम्यति शब्दस्य सदिवारात्रमेव हि ॥ १५-३-६ (९६९५१)
अन्वकुर्वन्नुलूकानां सारसा विरुतं तथा ।
अजाः शिवानां विरुतमन्वकुर्वत भारत ॥ १५-३-७ (९६९५२)
पाण्डुरा रक्तपादाश्च विहगाः कालचोदिताः ।
वृष्ण्यन्धकानां गेहेषु कपोता व्यचरंस्तदा ॥ १५-३-८ (९६९५३)
व्यजायन्त खरा गोषु करभाश्वतरीषु च ।
शुनीष्वपि बिडालाश्च मूषिका नकुलीषु च ॥ १५-३-९ (९६९५४)
नापत्रपन्त पापानि कुर्वन्तो वृष्णयस्तदा ।
प्रार्दयन्ब्राह्मणांश्चापि पितॄन्देवांस्तथैव च ॥ १५-३-१० (९६९५५)
गुरूंश्चाप्यवमन्यन्ते न तु रामजनार्दनौ ।
पत्न्यः पतीनुच्चरन्ति पत्नीश्चक पतयस्तथा ॥ १५-३-११ (९६९५६)
विभावसुः प्रज्वलितो वामं विपरिवर्तते ।
नीललोहितमञ्जिष्ठा विसृजन्नर्चिषः पृथक् ॥ १५-३-१२ (९६९५७)
उदयास्तमये नित्यं पुर्यां तस्यां दिवाकरः ।
व्यदृश्यतासकृत्पुंभिः कबन्धैः परिवारितः ॥ १५-३-१३ (९६९५८)
महानसेषु सिद्धेषु संस्कृतेऽतीवि भारत ।
आहार्यमाणे कृमयो व्यदृश्यन्त सहस्रशः ॥ १५-३-१४ (९६९५९)
पुण्याहे वाच्यमाने तु जपत्सु च महात्मसु ।
अभिधावन्तः श्रूयन्ते न चादृश्यत कश्चन ॥ १५-३-१५ (९६९६०)
परस्परं च नक्षत्रं हन्यमानं पुनःपुनः ॥
ग्रहैरपश्यन्सर्वे ते नात्मनस्तु कथञ्चन ॥ १५-३-१६ (९६९६१)
नदन्तं पाञ्चिजन्यं च वृष्णन्धकनिवेशने ।
समन्तात्पर्यवाशन्त रासभा दारुणस्वराः ॥ १५-३-१७ (९६९६२)
एवं पश्यन्हृषिकेशः संप्राप्तं कालपर्ययम् ।
त्रयोदश्याममावास्यां तान्दृष्ट्वा प्राब्रवीदिदम् ॥ १५-३-१८ (९६९६३)
चतुर्दशी पञ्चदशी कृतेयं राहुणा पुनः ।
प्राप्ते वै भारते युद्धे प्राप्ता चाद्य क्षंयाय नः ॥ १५-३-१९ (९६९६४)
विमृशन्नेव कालं तं परिचिन्त्य जनार्दनः ।
मेने प्राप्तं स षट्त्रिंशं वर्षं वै केशिसूदनः ॥ १५-३-२० (९६९६५)
पुत्रशोकाभिसंतप्ता गान्धारी हतबान्धवा ।
यदनुव्याजहारार्ता तदिदं समुपागमत् ॥ १५-३-२१ (९६९६६)

इदं च तदनुप्राप्तमब्रवीद्यद्युधिष्ठिरः ।
पुरा व्यूढेष्वनीकेषु दृष्ट्वेत्पातान्सुदारुणान् ॥ १५-३-२२ (९६९६७)
इत्युक्त्वा वासुदेवस्तु चिकीर्षुः सत्यमेव तत् ।
आज्ञापयामास तदा तीर्थयात्रामरिंदमः ॥ १५-३-२३ (९६९६८)
अघोषयन्त पुरुषास्तत्र केशवशासनात् ।
तीर्थयात्रा समुद्रे वः कार्येति पुरुषर्षभाः ॥ ॥ १५-३-२४ (९६९६९)

इति श्रीमन्महाभारते मौसलपर्वणि तृतीयोऽध्यायः ॥
Mahabharata - Mausala Parva - Chapter Footnotes

७-३-१ कालः कपोतोलूकादिरूपेण ॥
७-३-२ स एव क्वचित्करालादिरूपोऽदृस्यत क्वचिन्न । आवेक्ष्य परिक्रामन्निति शेषः ॥
७-३-३ सर्वभूतानां अत्ययो नाशो यस्मात् ॥
७-३-५ मणिका मृत्पात्राणि ॥
७-३-११ उच्चरन्ति वञ्चयन्ति ॥
७-३-१४ आहार्यमाणे अन्ने । ७-३-१६ स्वनक्षत्रादर्शनमपि स्वमृत्युसूचकमित्यर्थः । ।
७-३-१८ एवमिति । त्रयोदशदिवसः कृष्णपक्षोऽभूदित्यर्थः ॥
७-३-१९ एवं सत्यग्रिमपक्षए वृद्ध्या भाव्यं तन्न जातं प्रत्युतैकातिथिः क्षीणा तत्र ग्रहणं चं जातमित्याह चतुर्दशीति ॥

---

मौसल-अध्यय००४
॥ श्रीः ॥
१५.४. अध्यायः ४

Mahabharata - Mausala Parva - Chapter Topics
द्वारकायां वृष्ण्यन्तकादिभिरनर्थसूचकदुस्स्वप्नानुभवः ॥ १ ॥
ततः कृष्णाज्ञाया सस्त्रीबालवृद्धैः प्रभासक्षेत्रगमनम् ॥ २ ॥
तत्र नृत्तगानादिमहोत्सवानुभवपूर्वकं मद्यादिपानम् ॥ ३ ॥
तत्र सभायां सात्यकिना स्यमन्तकमणिहरणादिमर्मोद्धाटनपूर्वकं कृतवर्मगर्हणम् ॥ ४ ॥
मणिवृत्तान्तश्रवणखिक्नक्नक्नसत्यभामामनःप्रसादनाय सात्यकिना खड्गेन कृतवर्मणः सिरश्छेदनम् ॥ ५ ॥
ततः कृतवर्मसात्यकिपक्षीयैर्मौसकतृचैः परस्परप्रहारेण परस्परमारणम् ॥ ६ ॥

वैशंपायन उवाच ।
काली स्त्री पाण्डुरैर्दन्तैः प्रविश्य हसती निशि ।
स्त्रियः स्वप्नेषु मुष्णन्ती द्वारकां परिधावति ॥ १५-४-१ (९६९७०)
अग्निहोत्रनिकेतेषु वास्तुमध्येषु वेश्मसु ।
वृष्ण्यन्धकानखादन्त स्वप्ने गृध्रा भयानकाः ॥ १५-४-२ (९६९७१)
अलङ्काराश्च च्छत्रं च ध्वजाश्च कवचानि च ।
ह्रियमाणान्यदृश्यन्त रक्षोभिः सुभयानकैः ॥ १५-४-३ (९६९७२)
तच्चाग्निदत्तं कृष्णस्य वज्रनाभमयोमयम् ।
दिवमाचक्रमे चक्रं वृष्णीनां पश्यतां तदा ॥ १५-४-४ (९६९७३)
युक्तं रथं दिव्यमादित्यवर्णं
हयाऽहरन्पश्यतो दारुकस्य ।
ते सागरस्योपरिष्टादगच्छ-
न्मनोजवाश्चतुरो वाजिमुख्याः ॥ १५-४-५ (९६९७४)
तालः सुपर्णश्च महाध्वजौ तौ
सुपूजितौ रामजनार्धनाभ्याम् ।
उच्चैर्जह्रुरप्सरसश्च दिव्या
देवा ऊचुर्गम्यतां तीर्थयात्राः ॥ १५-४-६ (९६९७५)
ग्भगवद्दर्शनस्पर्शस्नेहैर्विततभोगिनः ।
दिवः प्रवेशानार्थं ते विमानैर्दिवमाययुः ॥' १५-४-७ (९६९७६)
ततो जिगमिषन्तस्ते वृष्ण्यन्धकमहारथाः ।
सान्तःपुरास्तदा तीर्थयात्रामैच्छन्नरर्षभाः ॥ १५-४-८ (९६९७७)
ततो मनोहरा हृष्टाःक पेयं मांसं मधूनि च ।
बहु नानाविधं चक्रुस्त्वरिताः कालचोदिताः ॥ १५-४-९ (९६९७८)
ततः सीधुषु सक्ताश्च निर्ययुर्नगराद्बहिः ।
यानैरश्वैर्गजैश्चैव श्रीमन्तस्तिग्मतेजसः ॥ १५-४-१० (९६९७९)
ततः प्रभासे न्यवसन्यथोद्दिष्टं यथागृहम् ।
प्रभूतभक्ष्यपेयास्ते सदारा यादवास्तदा ॥ १५-४-११ (९६९८०)
निविष्टांस्तान्निशाम्याथ समुद्रान्ते स योगवित् ।
जगामामन्त्र्य तान्वीरानुद्धवोऽर्थविशारदः ॥ १५-४-१२ (९६९८१)
तं प्रस्थितं महात्मानमभिवाद्य कृताञ्जलिम् ।
जानन्विनाशं वृष्णीनां नैच्छद्वारयितुं हरिः ॥ १५-४-१३ (९६९८२)
ततः कालपरीतास्ते वृष्ण्यन्धकमहारथाः ।
अपश्यन्नुद्धवं यान्तं तेजसाऽऽवृत्य रोदसी ॥ १५-४-१४ (९६९८३)

ब्राह्मणार्थेषु यत्सिद्धमन्नं तेषां महात्मनाम् ।
तद्वानरेभ्यः प्रददुः सुरागन्धसमन्वितम् ॥१५-४-१५ (९६९८४)
ततस्तूर्यशताकीर्णं नटनर्तकसंकुलम् ।
अवर्तत महापानं प्रभासे तिग्मतेजसाम् ॥१५-४-१६ (९६९८५)
कृष्णस्य सन्निधौ रामः सहितः कृतवर्मणा ।
अपिबद्युयुधानश्च गदो बभ्रुस्तथैव च ॥१५-४-१७ (९६९८६)
ततः परिषदो मध्ये युयुधानो मदोत्कटः ।
अब्रवीत्कृतवर्माणमवहास्यावमत्य च ॥१५-४-१८ (९६९८७)
कः क्षत्रियो हन्यमानः सुप्तान्हन्यान्मृतानिव ।
तन्न मृष्यन्ति हार्दिक्य यादवा यत्त्वया कृतम् ॥१५-४-१९ (९६९८८)
इत्युक्ते युयुधानेन पूजयामास तद्वचः ।
प्रद्युम्नो रथिनांश्रेष्ठो हार्दिक्यमवमत्य व ॥१५-४-२० (९६९८९)
ततः परमसंक्रुद्धः कृतवर्मा तमब्रवीत् ।
निर्दिशन्निव सावज्ञं तदा सव्येन पाणिना ॥१५-४-२१ (९६९९०)
भूरिश्रवाश्छिन्नबाहुर्युद्धे प्रायगतस्त्वया ।
वधेन सुनृशंसेन कथं वीरेण पातितः ॥१५-४-२२ (९६९९१)
इति तस्य वचः श्रुत्वा केशवः परवीरहा ।
तिर्यक्सरोषया दृष्ट्या वीक्षांचक्रे स मन्युमान् ॥१५-४-२३ (९६९९२)
मणिः स्यमन्तकश्चैव यः स सत्राजितोऽभवत् ।
तां कथां श्रावयामास सात्यकिर्मधुसूदनम् ॥१५-४-२४ (९६९९३)
तच्छ्रुत्वा केशवस्याङ्कमगमद्रुदती तदा ।
सत्यभामा प्रकुपिता कोपयन्ती जनार्दनम् ॥१५-४-२५ (९६९९४)
तत उत्थाय सक्रोधः सात्यकिर्वाक्यमब्रवीत्। १५-४-२६ (९६९९५)
पञ्चानां द्रौपदेयानां धृष्टद्युम्नशिखण्डिनोः ।
एष गच्छामि पदवीं सत्येन च तथा शपे ॥१५-४-२७ (९६९९६)
सौप्तिके ये च निहताः सुप्ता येन दुरात्मना ।
द्रोणपुत्रसहायेन पापेन कृतवर्मणा ॥१५-४-२८ (९६९९७)
समाप्तमायुरस्याद्य यशश्चैव सुमध्यते ।
इत्येवमुक्त्वा खड्गेन केशवस्य समीपतः ।
अभिद्रुत्य शिरः क्रुद्धश्चिच्छेद कृतवर्मणः ॥ १५-४-२९ (९६९९८)
तथाऽन्यानपि निघ्नन्तं युयुधानं समन्ततः ।
अभ्यधावद्धृषीकेशो विनिवारयितुं तदा ॥१५-४-३० (९६९९९)
एकीभूतास्ततः सर्वे कालपर्यायचोदिताः ।
भोजान्धका महाराज शैनेयं पर्यवारयन् ॥१५-४-३१ (९७०००)
तान्दृष्ट्वा पततस्तूर्णमभिक्रुद्धाञ्जनार्दनः ।
न चुक्रोध महातेजा जानन्कालस्य पर्ययम् ॥१५-४-३२ (९७००१)

ते तु पानमदाविष्टाश्चोदिताः कालधर्मणा ।
युयुधानमथाभ्यघ्नन्नुच्छिष्टैर्भाजनैस्तदा ॥ १५-४-३३ (९७००२)
हन्यमाने तु शैनेये क्रुद्धो रुक्मिणिनन्दनः ।
तदनन्तरमागच्छन्मोचयिष्यञ्शिनेः सुतम् ॥ १५-४-३४ (९७००३)
स भोजैः सह संयुक्तः सात्यकिश्चान्धकैः सह ।
व्यायच्छमानौ तौ वीरौ बाहुद्रविणशालिनौ ।
बहुत्वान्निहतौ तत्र उभौ कृष्णस्य पश्यतः ॥ १५-४-३५ (९७००४)
हतं दृष्ट्वा च शैनेयं पुत्रं च यदुनन्दनः ।
एरकाणां ततो मुष्टिं कोपाज्जग्राह केशवः ॥ १५-४-३६ (९७००५)
तदभून्मुसलं घोरं वज्रकल्पमयोमयम् ।
जघान कृष्णस्तांस्तेनि येये प्रमुखतोऽभवन् ॥ १५-४-३७ (९७००६)
ततोऽन्धकाश्च भोजाश्च शैनेया वृष्णयस्तथा ।
जघ्नुरन्योन्यमाक्रन्दे मुसलैः कालचोदिताः ॥ १५-४-३८ (९७००७)
यस्तेषामेरकां कश्चिज्जग्राह कुपितो नृपः ।
वज्रभूतेव सा राजन्नदृश्यत तदा विभो ॥ १५-४-३९ (९७००८)
तृणं च मुसलीभूतमपि तत्र व्यदृश्यत ।
ब्रह्मदण्डकृतं सर्वमिति तद्विद्धि पार्थिव ॥ १५-४-४० (९७००९)
आविध्याविध्य ते राजन्प्रहरन्ति स्म तैस्तृणैः ।
तद्वज्रभूतं मुसलं व्यदृश्यत तदा दृढम् ॥ १५-४-४१ (९७०१०)
अवधीत्पितरं पुत्रः पिता पुत्रं च भारत ।
मत्ताः परिपतन्ति स्म योधयन्तः परस्परम् ॥ १५-४-४२ (९७०११)
पतङ्गा इव चाग्नौ ते निपेतुः कुकुरान्धकाः ।
नासीत्पलायने बुद्धिर्वधायमानस्य कस्यचित् ॥ १५-४-४३ (९७०१२)
तत्रापश्यन्महाबाहुर्जानन्कालस्य पर्ययम् ।
मुसलं समवष्टभ्य तस्थौ स मधुसूदनः ॥ १५-४-४४ (९७०१३)
सांबं च निहतं दृष्ट्वा चारुदेष्णं च माधवः ।
प्रद्युम्नं चानिरुद्धं च ततश्चुक्रोध भारत ॥ १५-४-४५ (९७०१४)
गदं वीक्ष्य शयानं च भृशं कोपसमन्वितः ।
स निःशेषं तदा चक्रे शार्ङ्गचक्रगदाधरः ॥ १५-४-४६ (९७०१५)
तं निघ्नन्तं महातेजा बभ्रुः परपुरंजयः ।
दारुकश्चैव दाशार्हमूचतुर्यन्निबोध तत् ॥ १५-४-४७ (९७०१६)
भगवन्निहताः सर्वे त्वया भूयिष्ठशो नराः ।
रामस्य पदमन्विच्छ तत्र गच्छाम यत्र सः ॥ ॥ १५-४-४८ (९७०१७)

इति श्रीमन्महाभारते मौसलपर्वणि चतुर्थोऽध्यायः ॥

Mahabharata - Mausala Parva - Chapter Footnotes

७-४-१ मुष्णन्ती स्त्रीणां मङ्गलसूत्रादिकं चोरयन्ती ॥
७-४-१२ निश्मम्य दृष्ट्वा । अर्थविशारदः मोक्षपण्डितः ॥
७-४-१५ ब्राह्मणार्थद्रव्यस्यान्यत्र विनियोजनमायुःक्षयकरमित्यर्थः ॥
७-४-४१ आविध्य विद्धवा ॥
७-४-४४ तत्र यन्मुसलमपस्यत्तदेवावष्टभ्य तस्थावित्यन्वयः ॥

---

मौसल-अध्यय००५
॥ श्रीः ॥
१५.५. अध्यायः ५

Mahabharata - Mausala Parva - Chapter Topics
सर्वयादवेषु निहतेषु बभ्रुदारुकाभ्यां सह बलभद्रमन्वेषसाणेन
कृष्णेन वने वृक्षाश्रितस्य तस्य दर्शनम् ॥ १ ॥
ततः कृष्णेन पाण्डिवान्प्रति दारुकप्रेषणम् ॥ २ ॥
बलभद्रेण योगात्सर्पशरीरस्वीकारेण समुद्रप्रवेशः ॥ ३ ॥
कृष्णेन शरीरत्यागाय योगेन शयनम् ॥ ४ ॥
व्याधेन मृगबुद्धया कृष्णस्य पादतले सायकेन गाढवेधनम् ॥ ५ ॥
कृष्णेन पश्चात्समीप मेत्य पश्चात्तापेन प्रणमतो व्याधस्य देवैः
स्वर्गप्रापणम् ॥ ६ ॥
ततः शरीरत्यागपूर्वकं दिवं गतेन कृष्णेन देवैः पुष्पवर्षण
पूर्वकं स्तुत्या प्रत्युद्गम्यमानेनि सता निजपरधामप्रवेशः ॥ ७ ॥

Mahabharata - Mausala Parva - Chapter Text

वैशम्पायन उवाच ।
ततो ययुर्दारुकः केशवश्च
बभ्रुश्च रामस्य पदं पतन्तः ।
अथापश्यन्राममनन्तवीर्यं
वृक्षाश्रितं चिन्तयानं विविक्ते। १५-५-१ (९७०१८)
ततः समासाद्य महानुभावः
कृष्णस्तदा दारुकमन्वशासत् ।
गत्वा कुरून्सर्वमिमं महान्तं
पार्थाय शंसस्व वधं यदूनाम् ॥ १५-५-२ (९७०१९)
ततोऽर्जुनः क्षिप्रमिहोपयातु
श्रुत्वा मृतान्यादवान्ब्रह्मशापात् ।

इत्येवमुक्तः स ययौ रथेन
कुरूंस्तदा दारुको नष्टचेताः ॥ १५-५-३ (१७०२०)
ततो गते दारुके केशवोथ
दृष्ट्वान्तिके बभ्रुमुवाच वाक्यम् ।
स्त्रियो भवान्रक्षितुं यातु शीघ्रं
नैता हिंस्युर्दस्यवो वित्तलोभात् ॥ १५-५-४ (१७०२१)
स प्रस्थितः केशवेनानुशिष्टो
मदातुरो ज्ञातिवधार्दितश्च ।
तं वै यातं सन्निधौ केशवस्य
त्वरन्तमेकं सहसैव बभ्रूम् ।
ब्रह्मानुशप्तमवधीन्महद्वै
कूटे युक्तं मुसलं लुब्धकस्य ॥ १५-५-५ (१७०२२)
ततो दृष्ट्वा निहतं बभ्रुमाह
कृष्णेऽग्रजं भ्रातरमुग्रतेजाः ।
हहैव त्वं मां प्रतीक्षस्व राम
यावत्स्त्रियो ज्ञातिवशाः करोमि ॥ १५-५-६ (१७०२३)
ततः पुरीं द्वारवतीं पविश्य
जनार्दनः पितरं प्राह वाक्यम् ।
सर्वं भवान्रक्षतु नः समग्रं
धनंजयस्यागमनं प्रतीक्षन् ॥ १५-५-७ (१७०२४)
रामो वनान्ते प्रतिपालयन्मा-
मास्तेऽद्याहं तेन समानमिष्ये ।
दृष्टं मयेदं निधनं यदूनां
राज्ञां च पूर्वं कुरुपुङ्गवानाम् ॥ १५-५-८ (१७०२५)
नाहं विना यदुभिर्यादवानां
पुरीमिमामशकं द्रष्टुमद्य ।
तपश्चरिष्यामि निबोध तन्मे
रामेणि सार्धं वनमभ्युपेत्य ॥ १५-५-९ (१७०२६)
इतीदमुक्त्वा शिरसा च पादौ
संस्पृश्य कृष्णस्त्वरितो जगाम ।
ततो महान्निनदः प्रादुरासी-
त्सस्त्रीकुमारस्य पुरस्य तस्य ॥ १५-५-१० (१७०२७)
अथाब्रवीत्केशवः सन्निवर्त्य
शब्दं श्रुत्वा योषितां क्रोशतीनाम् ।
पुरीमिमामेष्यति सव्यसाची
स वो दुःखान्मोचयिता नराग्र्यः ॥ १५-५-११ (१७०२८)

ततो गत्वा केशवस्तं ददर्श
रामं वने स्थितमेकं विविक्ते ॥ १५-५-१२ (९७०२९)
अथापश्यद्योगयुक्तस्य तस्य
नागं मुखान्निस्सरन्तं महान्तम् ।
श्वेतं ययौ सततः प्रेक्षमाणो
महार्णवो येन महानुभावः ।
सहस्रशीर्षः पर्वताभोगवर्ष्मा
रक्ताननः स्वां तनुं तां विमुच्य ॥ १५-५-१३ (९७०३०)
संदृश्यन्तं सागरान्तं विशन्तं
सम्यक्तदा सागरः प्रत्यगृह्णात् ।
नागा दिव्याः सरितश्चैव पुण्याः
कर्कोटको वासुकिस्तक्षकश्च ॥ १५-५-१४ (९७०३१)
पृथुश्रवा अरुणः कुञ्जरश्च
मिश्री शङ्खः कुमुदः पुण्डरीकः ।
तथा नागो धृतराष्ट्रो महात्मा
ह्रादः क्राथः शितिपृष्ठो निकेतुः ॥ १५-५-१५ (९७०३२)
तथा नागौ चक्रमन्दातिषण्डौ
नागश्रेष्ठो दुर्मखश्चांबरीषः ।
स्वयं राजा वरुणश्चापि राज-
न्प्रत्युद्गम्य स्वागतेनाभ्यनन्दन् ।
तेऽपूजयंश्चार्घ्यपाद्यक्रियाभिः
सङ्कर्षणं भूधरं शुद्धबुद्धिम् ॥ १५-५-१६ (९७०३३)
ततो गते भ्रातरि वासुदेवो
जानन्सर्वा गतयो दिव्यदृष्टिः ।
वने शून्ये विचरंश्चिन्तयानो
भूमौ चाथ संविवेशाग्य्रतेजाः ॥ १५-५-१७ (९७०३४)
सर्वं तेन प्राक्तदा वित्तमासी-
द्गान्धार्या यद्वाक्यमुक्तं स्वधर्मात् ।
दुर्वाससा पारसोच्छिष्टलिप्ते
यच्चाप्युक्तं तच्च सस्मार कृष्णः ॥ १५-५-१८ (९७०३५)
ग्कुलस्त्रीणां संवृतानां गवां च
द्विजेन्द्राणां बलमादाय धर्मे ।
योनिर्देवानां वरदो ब्रह्मदेवो
गोविन्दाख्यो वासुदेवोऽथ नित्यः ॥ १५-५-१९ (९७०३६)
संचिन्तयन्नन्धकवृष्णिनाशं
कुरुक्षयं चैव महानुभावः ।

मेने ततः संक्रमणस्य कालं
ततश्चकारेन्द्रियसन्निरोधम् ॥ १५-५-२० (९७०३७)
यथा च लोकत्रयपालनार्थं
दुर्वासवाक्यप्रतिपालनाय ।
देवोपि सन्देहविमोक्षहेतो-
र्निमित्तमैच्छत्सकलार्थतत्त्ववित् ॥ १५-५-२१ (९७०३८)
स सन्निरुद्धेन्द्रियवाङ्मनास्तु
शिश्ये महायोगमुपेत्य कृष्णः ।
जरोथ तं देशमुपाजगाम
लुब्धस्तदानीं मृगलिप्सुरुग्रः ॥ १५-५-२२ (९७०३९)
स केशवं योगयुक्तं शयानं
मृगासक्तो लुब्धकः सायकेन ।
जरोऽविध्यत्पादतले त्वरावां-
स्तं चाभितस्तज्जिघृक्षुर्जगाम ॥ १५-५-२३ (९७०४०)
अथापश्यत्पुरुषं योगयुक्तं
पीतांबरं लुब्धकोऽनेकबाहुम् ।
मत्वाऽऽत्मानं त्वपराद्धं स तस्य
पादौ जरो जगृहे शङ्कितात्मा ॥ १५-५-२४ (९७०४१)
आश्वासितः पुण्यफलेन भक्तया
तथाऽनुतापात्कर्मणो जन्मनश्च ।
दृष्ट्वा तथा देवमनन्तवीर्यं
देवैस्स्वर्गं प्राप्तितस्त्यक्तदेहः ॥ १५-५-२५ (९७०४२)
गणैर्मुनीनां पूजितस्त्यत्र कृष्णो
गच्छन्नूर्द्ध्वं व्याप्य लोकान्स लक्ष्म्या ॥ १५-५-२६ (९७०४३)
दिवं प्राप्तं वासवोऽथाश्विनौ च
रुद्रादित्या वसवश्चाथ विश्वे ।
प्रत्युद्ययुर्मुनयश्चापि सिद्धा
गन्धर्वमुख्याश्च सहाप्सरोभिः ॥ १५-५-२७ (९७०४४)
ततो राजन्भगवानुग्रतेजा
नारायणः प्रभवश्चाव्ययश्च ।
योगाचार्यो रोदसी व्याप्य लक्ष्म्या
स्थानं प्राप स्वं महात्माऽप्रमेयम् ॥ १५-५-२८ (९७०४५)
ततो देवैर्ऋषिभिश्चापि कृष्णः
समागतश्चारणैश्चैव राजन् ।
गन्धर्वाग्र्यैरप्सरोभिर्वराभिः
सिद्धैः साध्यैश्चानतैः पूज्यमानः ॥ १५-५-२९ (९७०४६)

तं वै देवाः प्रत्यनन्दन्त राज-
न्मुनिश्रेष्ठा ऋग्भिरानर्चुरीशम् ।
तं गन्धर्वाश्चापि तस्थुः स्तुवन्तः
प्रीत्य चैनं पुरुहूतोऽभ्यनन्दत् ॥ १५-५-३० (९७०४७)
ग्नमोनमस्ते भगवञ्शार्ङ्गधन्व-
न्धर्मस्थित्या प्रादुरासीर्धरायाम् ।
कंसाख्यादीन्देवशत्रूंश्च सर्वा-
न्हत्वा भूमिः स्थापिता भारतप्ता ॥ १५-५-३१ (९७०४८)
दिव्यं स्थानमजरं चाप्रमेयं
दुर्विज्ञेयं चागमैर्गम्यमग्र्यम् ।
गच्छ प्रभो रक्ष चार्तिं प्रपन्ना-
न्कल्पेकल्पे जायमानांश्च मर्त्यान् ॥ १५-५-३२ (९७०४९)
इत्येवमुक्त्वा देवसंघोऽनुगम्य
श्रिया युक्तं पुष्पवृष्ट्या ववर्ष ।
वाणी चासीत्संश्रिता रूपिणी सा
भानोर्मध्ये प्रविश त्वं तु राजन् ॥ १५-५-३३ (९७०५०)
भुजैश्चतुर्भिः समुपेतं ममेदं
रूपं विशिष्टं जीवितं संस्थितं च ।
भूमौ गतं पूजयताप्रमेयं
सदा हि तस्मिन्निवसामीति देवाः ॥ १५-५-३४ (९७०५१)
देवा निवृत्तास्तत्पदं नाप्नुवन्तो
बुद्ध्या देवं संस्मरन्तः प्रतीताः ।
ब्रह्माद्यास्ते तद्गुणान्कीर्तयन्तः
शुभाँल्लोकान्स्वान्प्रपेदुः सुरेन्द्राः ॥ ॥ १५-५-३५ (९७०५२)

इति श्रीमन्महाभारते मौसलपर्वणि पञ्चमोऽध्यायः ॥ ५ ॥

Mahabharata - Mausala Parva - Chapter Footnotes

७-५-१ पतन्तः शीघ्रं गच्छन्तः ॥
७-५-२ वधं मधूनामिति क ट । पाठः ॥
७-५-४ वित्तभावात् इति ट पाठः ॥
७-५-५ कूटे लोहमुद्गरे युक्त बद्ध भुसलं ब्राह्मणशप्तं बभ्रुं स्वयमेव निपत्यावधीत् ॥
७-५-७ स्त्रियो भवान्रक्षत्विति झ पाठः ॥
७-५-१३ महार्णवे येन इति क ट पाठः ॥

मौसल-अध्यय००६
॥ श्रीः ॥
१५.६. अध्यायः ६

Mahabharata - Mausala Parva - Chapter Topics
दारुकेण हास्तिनपुरमेत्य पाण्डवेषु सर्वयादवक्षयनिवेदनम् ॥ १ ॥
अर्जुनेन द्वारकामेत्य रुक्मिण्यादिपरिसान्त्वनपूर्वकं वसुदेवगृहंप्रति
गमनम् ॥ २ ॥

Mahabharata - Mausala Parva - Chapter Text

वैशम्पाय उवाच ।
दारुकोपि कुरून्गत्वा दृष्ट्वा पार्थान्महारथान् ।
आचष्ट मौसले वृष्णीनन्योन्येनोपसंहृतान् ॥ १५-६-१ (९७०५३)
श्रुत्वा विनष्टान्वार्ष्णेयान्सभोजान्धककौकुरान् ।
पाण्डवाः शोकसंतप्ता वित्रस्तमनसोऽभवन् ॥ १५-६-२ (९७०५४)
ततोऽर्जुनस्तानामन्त्र्य केशवस्य प्रियः सखा ।
प्रययौ मातुलं द्रष्टुं नेदमस्तीति चाब्रवीत् ॥ १५-६-३ (९७०५५)
स वृष्णिनिलयं गत्वा दारुकेण सह प्रभो ।
ददर्श द्वारकां वीरो मृतनाथामिव स्त्रियम् ॥ १५-६-४ (९७०५६)
याः स्म ता लोकनाथेन नाथवत्यः पुराऽभवन् ।
तास्त्वनाथास्तदा नाथं पार्थं दृष्ट्वा विचुक्रुशुः ॥ १५-६-५ (९७०५७)
षोडश स्त्रीसहस्राणि वासुदेवपरिग्रहाः ।
तासामासीन्महान्नादो दृष्ट्वैवार्जुनमागतम् ॥ १५-६-६ (९७०५८)
तास्तु दृष्ट्वैव कौरव्यो बाष्पेणापिहितेक्षणः ।
हीनाः कृष्णेन पुत्रैश्च नाशकत्सोभिवीक्षितुम् ॥ १५-६-७ (९७०५९)
स तां वृष्ण्यन्धकजलां हयमीनां रथोडुपाम् ।
वादित्ररथघोषौघां वेश्मतीर्थमहाग्रहाम् ॥ १५-६-८ (९७०६०)
रत्नशैवलसंघातां वज्रप्राकारमालिनीम् ।
रथ्यास्रोतोजलावर्तां चत्वरस्तिमितह्रदाम् ॥ १५-६-९ (९७०६१)
रामकृष्णमहाग्राहां द्वारकां सरितं तदा ।
कालपाशग्रहां भीमां नदीं वैतरणीमिव ॥ १५-६-१० (९७०६२)
ददर्श वासविर्धीमान्विहीनां वृष्णिपुङ्गवैः ।
गतश्रियं विरानन्दां पद्मिनीं शिशिरे यथा। १५-६-११ (९७०६३)
तां दृष्ट्वा द्वारकां पार्थस्ताश्च कृष्णस्य योषितः ।
सस्वनं बाष्पमुत्सृज्य निपात महीतले ॥ १५-६-१२ (९७०६४)

सात्राजिती ततः सत्या रुक्मिणी च विशांपते ।
अभिपत्य प्ररुरुदुः परिवार्य धनंजयम् ॥ १५-६-१३ (९७०६५)
ततस्तं काञ्चने पीठे समुत्ताप्योपवेश्य च ।
अभिनन्द्य महात्मानं परिवार्योपतस्थिरे ॥ १५-६-१४ (९७०६६)
ततः संस्तूय गोविन्दं कथयित्वा च पाण्डवः ।
आश्वास्य ताः स्त्रियश्चापि मातुलं द्रष्टुमभ्यगात् ॥ ॥ १५-६-१५ (९७०६७)

इति श्रीमन्महाभारते मौसलपर्वणि षष्ठोऽध्यायः ॥ ६ ॥
Mahabharata - Mausala Parva - Chapter Footnotes

७-६-१४ अब्रुवन्त्यो महामानमिति झ पाठः ॥

---

मौसल-अध्यय००७
॥ श्रीः ॥
१५.७. अध्यायः ७

Mahabharata - Mausala Parva - Chapter Topics
वसुदेवेन स्वगृहमागतेऽर्जुने यादवक्षयनिदाननिवेदनपूर्वकं
कृष्णाद्यनुस्मरणेन परिशोचनम् ॥ १ ॥
तथा तंप्रति कृष्णवचननिवेदनेन राज्यस्त्रीधनादिसमर्पणपूर्वकं
स्वेन स्वप्राणत्यजनप्रतिज्ञानम् ॥ २ ॥

Mahabharata - Mausala Parva - Chapter Text

वैशम्पायन उवाच ।
तं प्रविष्टं महात्मानं वीरमानकदुन्दुभिः ।
पुत्रशोकेन संतप्तो ददर्श कुरुपुङ्गवम् ॥ १५-७-१ (९७०६८)
तस्याश्रुपरिपूर्णाक्षो व्यूढोरस्को महाभुजः ।
आर्तस्यार्ततरः पार्थः पादौ जग्राह भारत ॥ १५-७-२ (९७०६९)
तस्य मूर्धानमाघ्रातुमियेषानकदुन्दुभिः ।
स्वस्रीयस्य महाबाहुर्न शशाक च शत्रुहन् ॥ १५-७-३ (९७०७०)
समालिङ्ग्यार्जुनं वृद्धः स भुजाभ्यां महाभुजः ।
रुरोदाथ स्मरञ्शौरिं विललाप सुविह्वलः ।
भ्रातॄन्पुत्रांश्च पौत्रांश्च दौहित्रान्स सखीनपि ॥ १५-७-४ (९७०७१)
वसुदेव उवाच। १५-७-५क्ष् (८०२५)
यैर्जिता भूमिपालाश्च दैत्याश्च शतशोऽर्जुन ।

तान्सर्वान्नेह पश्यामि जीवाम्यर्जुन दुर्मरः ॥ १५-७-५ (९७०७२)
यो तावर्जुनशिष्यौ ते प्रियौ बहुमतौ सदा ।
तयोरपनयात्पार्थ वृष्णयो निधनं गताः ॥ १५-७-६ (९७०७३)
यौ तौ वृष्णिप्रवीराणां द्वावेवातिरथौ मतौ ।
प्रद्युम्नो युयुधानश्च कथनन्कत्थसे च यौ ॥ १५-७-७ (९७०७४)
तौ सदा कुरुशार्दूल कृष्णस्य प्रियभाजनौ ।
तावुभौ वृष्णिनाशस्य मुखमास्तां धनंजय ॥ १५-७-८ (९७०७५)
न तु गर्हामि शैनेयं हार्दिक्यं चाहमर्जुन ।
अक्रूरं रौक्मिणेयं च शापो ह्येवात्र कारणम् ॥ १५-७-९ (९७०७६)
केशिनं यस्तु कंसं च विक्रम्यि हतवान्प्रभुः ।
विदेहमकरोत्पार्थ चैद्यं च बलगर्वितम् ॥ १५-७-१० (९७०७७)
नैषादिमेकलव्यं च चक्रे कालिङ्गमागधान् ।
गान्धारान्काशिराजं च मरुभूमौ च पार्थिवान् ॥ १५-७-११ (९७०७८)
प्राच्यांश्च दाक्षिणात्यांश्च पार्वतीयांस्तथा नृपान् ।
सोभ्युपेक्षितवानेवमनयान्मधुसूदनः ॥ १५-७-१२ (९७०७९)
त्वं हि तं नारदश्चैव मुनयश्च सनातनम् ।
गोविन्दमनघं देवमभिजानीध्वमच्युतम् ॥ १५-७-१३ (९७०८०)
प्रत्यपश्यच्च स विभुर्ज्ञातिक्षयमधोक्षजः ।
समुपेक्षितवान्नित्यं स्वयं स मम पुत्रकः ॥ १५-७-१४ (९७०८१)
गान्धार्या वचनं यत्तदृषीणां च परंतप ।
तन्नूनमन्यथा कर्तुं नैच्छत्स जगतः प्रभुः ॥ १५-७-१५ (९७०८२)
प्रत्यक्षं भवतश्चापि तव पौत्रः परंतप ।
अश्वत्थाम्ना हतश्चापि जीवितस्तस्य तेजसा ।
इमांस्तु नैच्छत्स्वान्ज्ञातीन्रक्षितुं च सखा तव ॥ १५-७-१६ (९७०८३)
ततः पुत्रांश्च पौत्रांश्च भ्रातॄनथ सखींस्तथा ।
शयानान्निहतान्दृष्ट्वा कृष्णो मामब्रवीदिदम् ॥ १५-७-१७ (९७०८४)
सम्प्राप्तोऽद्यायमस्यान्तः कुलस्य भरतर्षभ ।
आगमिष्यति बीभत्सुरिमां द्वारवतीं पुरीम् ।
आख्येयं तस्य यद्वृत्तं वृष्णीनां वैशसं महत् ॥ १५-७-१८ (९७०८५)
स तु श्रुत्वा महातेजा यदूनां निधनं प्रभो ।
आगन्ता क्षिप्रमेवेह न मेऽत्रास्ति विचारणा ॥ १५-७-१९ (९७०८६)
योऽहं तमर्जुनं विद्धि योऽर्जुनः सोहमेव तु ।
यद्ब्रूयात्तत्तथा कार्यमिति बुद्ध्यस्व भारत ॥ १५-७-२० (९७०८७)
स स्त्रीषु प्राप्तकालासु पाण्डवो बालकेषु च ।
प्रतिपत्स्यति बीभत्सुर्भवतश्चौर्ध्वदेहिकम् ॥ १५-७-२१ (९७०८८)
इमां च नगरीं सद्यः प्रतियाते धनंजये ।

प्राकारट्टालकोपेतां समुद्रः प्लावयिष्यति ॥ १५-७-२२ (९७०८९)
अहं देशे तु कस्मिंश्चित्पुण्ये नियममास्थितः ।
कालं काङ्क्षे सद्य एव रामेण सहितो वने ॥ १५-७-२३ (९७०९०)
एवमुक्त्वा हृषीकेशो मामचिन्त्यपराक्रमः ।
हित्वा मां बालकैः सार्धं दिशं कामप्यगात्प्रभुः ॥ १५-७-२४ (९७०९१)
सोहं तौ च महात्मानौ चिन्तयन्रामकेशवौ ।
घोरं ज्ञातिवधं चैव न भुञ्जे शोककर्शितः ॥ १५-७-२५ (९७०९२)
न मोक्ष्येन च जीविष्ये दिष्ट्या प्राप्तोसि पाण्डव ।
यदुक्तं पार्थ कृष्णेन तत्सर्वमखिलं कुरु ॥ १५-७-२६ (९७०९३)
एतत्ते पार्थ राज्यं च स्त्रियो रत्नानि चैव हि ।
इष्टान्प्राणानहं हीमांस्त्यक्ष्यामि रिपुसूदन ॥ ॥ १५-७-२७ (९७०९४)

इति श्रीमन्महाभारते मौसलपर्वणि सप्तमोऽध्यायः ॥ ७ ॥

Mahabharata - Mausala Parva - Chapter Footnotes

७-७-११ काशिराजं पौण्ड्रकम् ॥

---

मौसल-अध्यय००८

॥ श्रीः ॥

१५.८. अध्यायः ८

Mahabharata - Mausala Parva - Chapter Topics

अर्जुनेन वसुदेवसमाश्वासनपूर्वकं सकलपौरान्प्रति नातिचिरादेव द्वारकायाः समुद्रेण समाप्लावननिवेदनपूर्वकं सर्वेषामिन्द्रप्रस्थंप्रति प्रयाणसंनाहसंचोदना ॥ १ ॥
तथा परेद्युर्योगेन शरीरंत्यक्तवतो वसुदेवस्य पत्नीभिः सह संस्करणपूर्वकं रामकृष्णशरीरयोर्दाहनम् ॥ २ ॥
ततो वज्रार्जुनपुरस्कारेण सकलपौरजने पुरःपुनः प्रयाते समुद्रेण पश्चाद्भागे पौरजनमुक्ततत्तद्भागस्य स्वजलेन समाक्रमणम् ॥ ३ ॥
अर्जुनेन मध्येमार्गं चोरापहृतावशिष्टयादवकलत्रादिभिः सह स्वदेशमेत्य युधिष्ठिराज्ञया वज्रस्येन्द्रप्रस्थराज्येऽभिषेचनम् । तथा सात्यकिसुतादीनां तत्रतत्र राज्येऽभिषेचनम् ॥ ३ ॥
रुक्मिण्यादिभिः काभिश्चिदग्निप्रवेशनम् । सत्यभामादिभिः काभिश्चन तपसे वनगमनम् ॥ ४ ॥

Mahabharata - Mausala Parva - Chapter Text

वैशम्पायन उवाच ।
एवमुक्तः स बीभत्सुर्मातुलेनि परंतप ।
दुर्मना दीनवदनो वसुदेवमुवाच ह ॥ १५-८-१ (९७०९५)
नाहं वृष्णिप्रवीरेण बन्धुभिश्चैव मातुल ।
विहीनां पृथिवीं द्रष्टुं शक्तश्चिरमिह प्रभो ॥ १५-८-२ (९७०९६)
राजा च भीमसेनश्च सहदेवश्च पाण्डवः ।
नकुलो याज्ञसेनी च षडेकमनसो वयम् ॥ १५-८-३ (९७०९७)
राज्ञः संक्रमणे चापि कामोऽयं नित्यमेव हि ।
तमिमं विद्धि सम्प्राप्तं कालं कालविदांवर ॥ १५-८-४ (९७०९८)
सर्वथा वृष्णिदारांस्तु बालं वृद्धं तथैव च ।
नयिष्ये परिगृह्याहमिन्द्रप्रस्थमरिंदम ॥ १५-८-५ (९७०९९)
इत्युक्त्वा दारुकमिदं वाक्यमाह धनंजयः ।
अमात्यान्वृष्णिवीराणां द्रष्टुमिच्छामि माचिरम् ॥ १५-८-६ (९७१००)
इत्येवमुक्त्वा वचनं सुधर्मां यादवीं सभाम् ।
प्रविवेशार्जुनः शूरः शोचमानो महाभुजः ॥ १५-८-७ (९७१०१)
तमासनगतं तत्र सर्वाः प्रकृतयस्तथा ।
ब्राह्मणा नागरास्तत्र परिवार्योपतस्थिरे ॥ १५-८-८ (९७१०२)
तान्दीनमनसः सर्वान्विमूढान्गतचेतसः ।
उवाचेदं वचः काले पार्थो दीनतरस्तथा ॥ १५-८-९ (९७१०३)
शक्रप्रस्थमहं नेष्ये पृष्णन्धकजनं स्वयम् ।
इदं तु नगरं सर्वं समुद्रः प्लावयिष्यति ॥ १५-८-१० (९७१०४)
सज्जीकुरुत यानानि रत्नानि विविधानि च ।
वज्रोऽयं भवतां राजा शक्रप्रस्थे भविष्यति ॥ १५-८-११ (९७१०५)
सप्तमे दिवसे चैव रवौ विमल उद्गते ।
बहिर्वत्स्यामहे सर्वे सज्जीभावत माचिरम् ॥ १५-८-१२ (९७१०६)
इत्युक्तास्तेन ते सर्वे पार्थेनाक्लिष्टकर्मणा ।
सज्जमाशु ततश्चक्रुः स्वसिद्ध्यर्थं समुत्सुकाः ॥ १५-८-१३ (९७१०७)
तां रात्रिमवसत्पार्थः केशवस्य निवेशने ।
महता शोकमोहेन सहसाऽभिपरिप्लुतः ॥ १५-८-१४ (९७१०८)
श्वोभूतेऽथ ततः शौरिर्वसुदेवः प्रतापवान् ।
युक्त्वाऽऽत्मानं महातेजा जगाम गतिमुत्तमां ॥ १५-८-१५ (९७१०९)
ततः शब्दो महानासीद्वसुदेवनिवेशने ।
दारुणः क्रोशतीनां च रुदतीनां च योषिताम् ॥ १५-८-१६ (९७११०)
प्रकीर्णमूर्धजाः सर्वा विमुक्ताभरणस्रजः ।
उरांसि पाणिभिर्घ्नन्त्यो व्यलपन्तकरुणं स्त्रियः। १५-८-१७ (९७१११)

तं देवकी च भद्रा च रोहिणी मदिरा तथा ।
अन्वारोढुं व्यवसिता भर्तारं योषितां वराः ॥ १५-८-१८ (९७११२)
ततः शौरिं नृयुक्तेन बहुमूल्येन भारत ।
यानेन महता पार्थो बहिर्निष्क्रामयत्तदा ॥ १५-८-१९ (९७११३)
तमन्वयुस्तत्रतत्रं दुःखसोकसमन्विताः ।
द्वारकावासिनः सर्वे पौरजानपदा हिताः ॥ १५-८-२० (९७११४)
तस्याश्वमेधिकं छत्रं दीप्यमानाश्च पावकाः ।
पुरस्तात्तस्य यानस्य याजकाश्च ततो ययुः ॥ १५-८-२१ (९७११५)
अनुजग्मुश्च तं वीरं देव्यस्ता वै स्वलङ्कृताः ॥
स्त्रीसहस्रैः परिवृता वधूभिश्च सहस्रशः ॥ १५-८-२२ (९७११६)
यस्तु देशः प्रियस्तस्य जीवतोऽभून्महात्मनः ।
तत्रैनमुपसंकल्प्य वितृमेधं प्रचक्रिरे ॥ १५-८-२३ (९७११७)
तं चिताग्निगतं वीरं शूरपुत्रं वराङ्गनाः ।
ततोन्वारुरुहुः पत्न्यश्चतस्रः पतिलोकगाः ॥ १५-८-२४ (९७११८)
तं वै चतसृभिः स्त्रीभिरन्वितं पाण्डुनन्दनः ।
अदाहयच्चन्दनैश्च गन्धैरुच्चावचैरपि ॥ १५-८-२५ (९७११९)
ततः प्रादुरभूच्छब्दः समिद्धस्य विभावसोः ।
सामगानां च निर्घोषो नराणां रुदतामपि ॥ १५-८-२६ (९७१२०)
ततो वज्रप्रधानास्ते वृष्ण्यन्धककुमारकाः ।
सर्वे चैवोदकं चक्रुः स्त्रियश्चैव महात्मनः। १५-८-२७ (९७१२१)
अलुप्तधर्मस्तं धर्मं कारयित्वा स फल्गुनः ।
जगाम वृष्णयो यत्र विनष्टा भरतर्षभ ॥ १५-८-२८ (९७१२२)
स तान्दृष्ट्वा निपतितान्कदने भृशदुःखितः ।
बभूवातीव कौरव्यः प्राप्तकालं चकार ह ॥ १५-८-२९ (९७१२३)
यथाप्रधानतश्चैव चक्रे सर्वास्तथा क्रियाः ।
ये हता ब्रह्मशापेन मुसलैरेरकोद्भवैः ॥ १५-८-३० (९७१२४)
गततो भगवतो देहं दृष्ट्वा शिष्यः प्रलप्य च ।
स्मृत्वा तद्वचनं सर्वं मोहशोकोपबृंहितः ॥' १५-८-३१ (९७१२५)
ततः शरीरे रामस्य वासुदेवस्य चोभयोः ।
अन्वीक्ष्य दाहयामास पुरुषैराप्तकारिभिः ॥ १५-८-३२ (९७१२६)
स तेषां विधिवत्कृत्वा प्रेतकार्याणि पाण्डवः ।
सप्तमे दिवसे प्रायाद्रथमारुह्य सत्वरः ॥ १५-८-३३ (९७१२७)
अश्वयुक्तै रथैश्चापि गोखरोष्ट्रयुतैरपि ।
स्त्रियस्ता वृष्णिवीराणां रुदन्त्यः शोककर्शिताः ॥ १५-८-३४ (९७१२८)
अनुजग्मुर्महात्मानं पाण्डुपुत्रं धनंजयम् ।
भृत्याश्चान्धकवृष्णीनां सादिनो रथिनश्च ये ॥ १५-८-३५ (९७१२९)

वीरहीना वृद्धबालाः पौरजानपदास्तथा ।
ययुस्ते परिवार्याथ कलत्रं पार्थशासनात् ॥ १५-८-३६ (९७१३०)
कुञ्जरैश्च गजारोहा ययुः शैलनिर्भस्तथा ।
सपादरक्षैः संयुक्ताः सोत्तरायुधिका ययुः ॥ १५-८-३७ (९७१३१)
पुत्राश्चान्धकवृष्णीनां सर्वे पार्थमनुव्रताः ।
ब्राह्मणाः क्षत्रिया वैश्याः शूद्राश्चैव महाधनाः ॥ १५-८-३८ (९७१३२)
दश षट् च सहस्राणि वासुदेवावरोधनम् ।
पुरस्कृत्य ययुर्वज्रं पौत्रं कृष्णस्य धीमतः ॥ १५-८-३९ (९७१३३)
बहूनि च सहस्राणि प्रयुतान्यर्बुदानि च ।
भोजवृष्ण्यन्धकस्त्रीणां हतनाथानि निर्ययुः ॥ १५-८-४० (९७१३४)
तत्सागरसमप्रख्यं वृष्णिचक्रं महर्द्धिमत् ।
उवाह रथिनांश्रेष्ठः पार्थः परपुरंजयः ॥ १५-८-४१ (९७१३५)
निर्याते तु जने तस्मिन्सागरो मकरालयः ।
द्वारकां रत्नसंपूर्णां जलेनाप्लावयत्तदा ॥ १५-८-४२ (९७१३६)
यद्यद्धि पुरुषव्याघ्रो भूमेस्तस्या व्यमुञ्चत ।
तत्तत्संप्लावयामास सलिलेन स सागरः ॥ १५-८-४३ (९७१३७)
तदद्भुतमभिप्रेक्ष्य द्वारकावासिनो जनाः ।
तूर्णात्तूर्णतरं जग्मुरहो दैवमिति ब्रुवन् ॥ १५-८-४४ (९७१३८)
काननेषु च रम्येषु पर्वतेषु नदीषु च ।
निवसन्नानयामास वृष्णिदारान्धनंजयः ॥ १५-८-४५ (९७१३९)
स पञ्चनदमासाद्य धीमानतिसमृद्धिमत् ।
देशे गोपशुधान्याढ्ये निवासमकरोत्प्रभुः ॥ १५-८-४६ (९७१४०)
ततो लोभः समभवद्दस्यूनां निहतेश्वराः ।
दृष्ट्वा स्त्रियो नीयमानाः पार्थेनैकेन भारत ॥ १५-८-४७ (९७१४१)
ततस्ते पापकर्माणो लोभोपहतचेतसः ।
आभीरा मन्त्रयामासुः समेत्याशुभदर्शनाः ॥ १५-८-४८ (९७१४२)
अयमेकोऽर्जुनो धन्वी वृद्धबालं हतेश्वरम् ।
नयत्यस्मानतिक्रम्य् योधाश्चेमे हतौजसः ॥ १५-८-४९ (९७१४३)
ततो यष्टिप्रहरणा दस्यवस्ते सहस्रशः ।
अभ्यधावन्त वृष्णीनां तं जनं लोप्त्रहारिणः ॥ १५-८-५० (९७१४४)
महता सिंहनादेन त्रासयन्तः पृथग्जनम् ।
अभिपेतुर्धनार्थं ते कालपर्यायचोदिताः ॥ १५-८-५१ (९७१४५)
ततो निवृत्तः कौन्तेयः सहसा सपदानुगः ।
उवाच तान्महाबाहुरर्जुनः प्रहसन्निव ॥ १५-८-५२ (९७१४६)
निवर्तध्वमधर्मज्ञा यदि जीवितुमिच्छथ ।
इदानीं शरनिर्भिन्नाः शोचध्वं निहता मया ॥ १५-८-५३ (९७१४७)

तथोक्तास्तेन वीरेणि कदर्तीकृत्य तद्वचः ।
अभिपेतुर्जनं मूढा वार्यमाणाः पुनःपुनः ॥ १५-८-५४ (९७१४८)
ततोऽर्जुनो धनुर्दिव्यं गाण्डीवमजरं महत् ।
कआरोपयितुमारेभे यत्नादिव कथञ्चन ॥ १५-८-५५ (९७१४९)
चकार सज्यं कृच्छ्रेणि सम्भ्रमे तुमुले सति ।
चिन्तयामास शस्त्राणि न च सस्मार तान्यपि ॥ १५-८-५६ (९७१५०)
वैकृतं तन्महद्दृष्ट्वा भुजवीर्य तथा युधि ।
दिव्यानां च महास्त्राणां विनाशाद्वीडितोऽभवत् ॥ १५-८-५७ (९७१५१)
वृष्णियोधाश्च ते सर्वे गजाश्वरथयोधिनः ।
न शेकुरावर्तयितुं ह्रियमाणं स्वकं धनम् ॥ १५-८-५८ (९७१५२)
कलत्रस्य बहुत्वाद्धि सम्पतन्सु ततस्ततः ।
प्रयत्नमकरोत्पार्थो जनस्य परिरक्षणे ॥ १५-८-५९ (९७१५३)
मिषतां सर्वयोधानां ततस्ताः प्रमदोत्तमाः ।
समन्ततोवकृष्यन्त कामाच्चान्याः प्रवव्रजुः ॥ १५-८-६० (९७१५४)
ततो गाण्डीवनिर्मुक्तैः शरैः पार्थो धनंजयः ।
जघान दस्यून्सोद्वेगो वृष्णिभृत्यैः सहस्रशः ॥ १५-८-६१ (९७१५५)
क्षणेन तस्य ते राजन्क्षयं जग्मुरजिह्मगाः ।
अक्षया हि पुरा भूत्वा क्षीणाः क्षतजभोजनाः ॥ १५-८-६२ (९७१५६)
स शरक्षयमासाद्य दुःखशोकसमाहतः ।
धनुष्कोट्या तदा दस्यूनवधीत्पाकशासनिः ॥ १५-८-६३ (९७१५७)
श्प्रेक्षतस्त्वेव पार्थस्य वृष्ण्यन्धकवरस्त्रियः ।
जग्मुरादाय ते म्लेच्छाः समन्ताज्जनमेजय ॥ ॆ १५-८-६४ (९७१५८)
धनंजयस्तु दैवं तन्मनसाऽचिन्तयत्प्रभुः ।
दुःखसोकसमाविष्टो निःश्वासपरमोऽभवत् ॥ १५-८-६५ (९७१५९)
अस्त्राणां च प्रणाशेन बाहुवीर्यस्य च क्षयात् ।
धनुषश्चाविधेयत्वाच्छराणां संक्षयेण च ॥ १५-८-६६ (९७१६०)
बभूव विमनाः पार्थो दैवमित्युनुचिन्तयन् ।
न्यवर्तत ततो राजन्नेदमस्तीति चिन्तयन् ॥ १५-८-६७ (९७१६१)
ततः शेषं समादाय कलत्रस्य महामतिः ।
हृतभूयिष्ठरत्नस्य कुरुक्षेत्रमवातरत् ॥ १५-८-६८ (९७१६२)
युधिष्ठिरस्यानुमते वंशकर्तॄन्कुमारकान् ।
न्यवेशयत कौरव्यस्तत्रतत्र धनंजयः ॥ १५-८-६९ (९७१६३)
हार्दिक्यतनयं पार्थो नगरे मृत्तिकावते ।
अश्वपतिं खाण्डवारण्ये राज्ये तत्र न्येवशयत् ।
भोजराजकलत्रं च हृतशेषं नरोत्तमः ॥ १५-८-७० (९७१६४)
तथा वृद्धांश्च बालांश्च स्त्रियश्चादाय पाण्डवः ।

वीरैर्विहीनान्सर्वांस्ताञ्शक्रप्रस्थे न्यवेशयत् ॥ १५-८-७१ (९७१६५)
यौयुधानिं सरस्वत्याः पुत्रं सात्यकिनः प्रियम् ।
न्यवेशयत धर्मात्मा वृद्धबालपुरस्कृतम् ॥ १५-८-७२ (९७१६६)
इन्द्रप्रस्थे ददौ राज्यं वज्राय परवीरहा ।
वज्रेणाक्रूरदारास्तु वार्यमाणाः प्रवव्रजुः ॥ १५-८-७३ (९७१६७)
रुक्मिणी त्वथ गान्धारी शैब्दा हैमवतीत्यपि ।
देवी जींबवती चैव विविशुर्जातवेदसम् ॥ १५-८-७४ (९७१६८)
सत्यभामा तथैवान्या देव्यः कृष्णस्य सम्मताः ।
वनं प्रविविशू राजंस्तापस्ये कृतनिश्चयाः ॥ १५-८-७५ (९७१६९)
द्वारकावासिनो ये पुरुषाः पार्थमभ्ययुः ।
यथार्हं संविभज्यैनान्वज्रे पर्यददज्जयः ॥ १५-८-७६ (९७१७०)
स तत्कृत्वा प्राप्तकालं बाष्णेणापिहितोऽर्जुनः ।
कृष्णद्वैपायनं व्यासं ददर्शासीनमाश्रमे ॥ ॥ १५-८-७७ (९७१७१)

इति श्रीमन्महाभारते मौसलपर्वणि अष्टमोऽध्यायः ॥ ८ ॥
Mahabharata - Mausala Parva - Chapter Footnotes

७-८-३२ अन्विष्य दाहयामासेति झ पाठः ॥
७-८-४४ ब्रुवन् अब्रुवन् ॥

---

मौसल-अध्यय००९
॥ श्रीः ॥
१५.९. अध्यायः ९

Mahabharata - Mausala Parva - Chapter Topics
अर्जुनेन व्यासाश्रमे तद्दर्शनम् ॥ १ ॥
तस्मिन्द्वारकावृत्तान्तनिवेदनम् ॥ २ ॥
व्यासेनार्जुनंप्रति युधिष्ठिरादीनामपि स्वर्गगमनसूचनम् ॥ ३ ॥
ततोऽर्जुनेन हास्तिनपुरमेत्य युधिष्ठिरे द्वारकावृत्तान्तादिनिवेदनम् ॥ ४ ॥

Mahabharata - Mausala Parva - Chapter Text

वैशम्पायन उवाच ।
प्रविश्य त्वर्जुनो राजन्नाश्रमं सत्यवादिनः ।
ददर्शासीनमेकान्तो मुनिं सत्यवतीसुतम् ॥ १५-९-१ (९७१७२)
स तमासाद्य धर्मज्ञमुपतस्थे महाव्रतम् ।

अर्जुनोस्मीति नामास्तै निवेद्याभ्यवदत्ततः ॥ १५-९-२ (९७१७३)
स्वागतं तेऽस्त्विति प्राह मुनिः सत्यवतीसुतः ।
आस्यतामिति होवाच प्रसन्नात्मा महामुनिः ॥ १५-९-३ (९७१७४)
तमप्रतीतमनसं निःश्वसन्तं पुनःपुनः ।
निर्विष्णमनसं दृष्ट्वा पार्थं व्यासोऽब्रवीदिदम् ॥ १५-९-४ (९७१७५)
नखकेशदशाकुंभवारिणा किं समुक्षितः ।
आवीरजानुगमनं ब्राह्मणो वा हतस्त्वया ॥ १५-९-५ (९७१७६)
युद्धे पराजितो वाऽसि दतश्रीरिव लक्ष्यसे ।
न त्वां प्रभिन्नं जानामि किमिदं भरतर्षभ ।
श्रोतव्यं चेन्मया पार्थ क्षिप्रमाख्यातुमर्हसि ॥ १५-९-६ (९७१७७)
अर्जुन उवाच। १५-९-७क्ष् (८०२६)
यः स मेघवपुः श्रीमान्बृहत्पङ्कजलोचनः ।
स कृष्णः सह रामेण त्यक्त्वा देहं दिवं गतः ॥ १५-९-७ (९७१७८)
ग्तदनुस्मृत्य संमोहं तदा शोकं महामते ।
प्रयामि सर्वदा मह्यं मुमूर्षा चोपजायते ॥ १५-९-८ (९७१७९)
तद्वाक्यस्पर्शनालोकसुखं चामृतसन्निभम् ।
संस्मृत्य देवदेवस्य प्रमुह्यित्यमृतात्मनः ॥' १५-९-९ (९७१८०)
मौसले वृष्णिवीराणां विनाशो ब्रह्मशापजः ।
बभूव वीरान्तकरः प्रभासे रोमहर्षणः ॥ १५-९-१० (९७१८१)
एते शूरा महात्मानः सिंहदर्पा महाबलाः ।
भोजवृष्ण्यन्धका ब्रह्मन्नन्योन्यं तैर्हतं युधि ॥ १५-९-११ (९७१८२)
गदापरिघशक्तीनां सहाः परिघबाहवः ।
त एरकाभिर्निहताः पश्य कालस्य पर्ययम् ॥ १५-९-१२ (९७१८३)
हतं पञ्चशतं तेषां सहस्रं बाहुशालिनाम् ।
निधनं समनुप्राप्तं समासाद्येतरेतरम् ॥ १५-९-१३ (९७१८४)
पुनःपुनर्न मृष्यामि विनाशममितौजसाम् ।
चिन्तयानो यदूनां च कृष्णस्य च यशस्विनः ॥ १५-९-१४ (९७१८५)
शोषणं सागरस्येव मन्दरस्येव चालनम् ।
नभसः पतनं चैव शैत्यमग्नेस्तथैव च ॥ १५-९-१५ (९७१८६)
अश्रद्धेयमहं मन्ये विनाशं शार्ङ्गधन्वनः ।
न चेह स्थातुमिच्छामि लोके कृष्णविनाकृतः ॥ १५-९-१६ (९७१८७)
इतः कष्टतरं चान्यच्छृणु तद्वै तपोधन ।
मनो मे दीर्यते येन चिन्तयानस्य वै मुहुः ॥ १५-९-१७ (९७१८८)
पश्यतो वृष्णिदाराश्च मम ब्रह्मन्सहस्रशः ।
आभीरैरभिभूयाजौ हृताः पञ्चनदालयैः ॥ १५-९-१८ (९७१८९)
धनुरादाय तत्राहं नाशकं तस्य पूरणे ।

यथापुरा च मे वीर्यं भुजयोर्न तथाऽभवत् ॥ १५-९-१९ (९७१९०)
अस्त्राणि मे प्रनष्टानि विविधानि महामुने ।
शराश्च क्षयमापन्नाः क्षणेनैव समन्ततः ॥ १५-९-२० (९७१९१)
पुरुषस्चाप्रमेयात्मा शङ्खचक्रगदाधरः ।
चतुर्भुजः पीतवासाः श्यामः पद्मदलेक्षणः ॥ १५-९-२१ (९७१९२)
यश्च याति पुरस्तान्मे रथस्य सुमहाद्युतिः ।
प्रदहन्रिपुसैन्यानि न पश्याम्यहमद्य तम् ॥ १५-९-२२ (९७१९३)
येन पूर्वं प्रदग्धानि शत्रुसैन्यानि तेजसा ।
शरैर्गाण्डीवनिर्मुक्तैरहं पश्चादशातयम् ॥ १५-९-२३ (९७१९४)
तमपश्यन्विषीदामि घूर्णामीव च सत्तम ।
परिनिर्विण्णचेताश्च शान्तिं नोपलभेऽपि च ॥ १५-९-२४ (९७१९५)
ग्देवकीनन्दनं देवं वासुदेवमजं प्रभुम्।'
विना जनार्दनं वीरं नाहं जीवितुमुत्सहे ॥ १५-९-२५ (९७१९६)
श्रुत्वैव हि गतं विष्णुं ममापि मुमुहुर्दिशः ।
प्रनष्टज्ञातिवीर्यस्य शून्यस्य परिधावतः ॥ १५-९-२६ (९७१९७)
उपदेष्टुं मम श्रेयो भवानर्हति सत्तम ॥ १५-९-२७ (९७१९८)
व्यास उवाच। १५-९-२८क्ष् (८०२७)
ग्देवांशा देवभूतेन सम्भूतास्ते गतास्सह ।
धर्मव्यवस्थारक्षार्थं देवेन समुपेक्षिताः'॥ १५-९-२८ (९७१९९)
ब्रह्मशापविनिर्दग्धा वृष्ण्यन्धकसमहारथाः ।
विनष्टाः कुरुशार्दूल न ताञ्शोचितुमर्हसि ॥ १५-९-२९ (९७२००)
भवितव्यं तथा तच्च दिष्टमेतन्महात्मनाम् ।
उपेक्षितं च कृष्णेन शक्तेनापि व्यपोहितुम् ॥ १५-९-९ (९७२०१)
त्रैलोक्यमपि गोविन्दः कृत्स्नं स्थावरजङ्गमम् ।
प्रसहेदन्यथा कर्तुं कुतः शापं महात्मनाम् ॥ १५-९-३१ (९७२०२)
गस्त्रियश्च ताः पुरा शप्ताः प्रभासे कुपितेन वै ।
अष्टावक्रेण मुनिना तदर्थं त्वद्बलक्षयम् ॥' १५-९-३२ (९७२०३)
रथस्य पुरतो याति यः स चक्रगदाधरः ।
तव स्नेहात्पुराणर्षिर्वासुदेवश्चतुर्भुजः ॥ १५-९-३३ (९७२०४)
कृत्वा भारावतरणं पृथिव्याः पृथुलोचनः ।
मोक्षयित्वा तनुं प्राप्तः कृष्णः स्वस्थानमुत्तमम् ॥ १५-९-३४ (९७२०५)
त्वयाऽपीह महत्कर्म देवानां पुरुषर्षभ ।
कृतं भीमसहायेन यमाभ्यां च महाभुज ॥ १५-९-३५ (९७२०६)
कृतकृत्यांश्च वो मन्ये संसिद्धान्कुरुपुङ्गव ।
गमनं प्राप्तकालं व इदं श्रेयस्करं विभो ॥ १५-९-३६ (९७२०७)
बलं बुद्धिश्च तेजश्च प्रतिपत्तिश्च भारत ।

भवन्ति भवकालेषु विपद्यन्ते विपर्यये ॥ १५-९-३७ (९७२०८)
कालमूलमिदं सर्वं जगद्बीजं धनंजय ।
काल एव समादत्ते पुनरेव यदृच्छया ॥ १५-९-३८ (९७२०९)
स एव बलवान्भूत्वा पुनर्भवति दुर्बलः ।
स एवेशश्च भूत्वेह परैराज्ञाप्यते पुनः ॥ १५-९-३९ (९७२१०)
कृतकृत्यानि चास्त्राणि गतान्यद्य यथागतम् ।
पुनरेष्यन्ति ते हस्तं यदा कालो भविष्यति ॥ १५-९-४० (९७२११)
कालो गन्तुं गतिं मुख्यां भवतामपि भारत ।
एतच्छ्रेयो हि वो मन्ये परमं भरतर्षभ ॥ १५-९-४१ (९७२१२)
वैशम्पायन उवाच। १५-९-४२क्ष् (८०२८)
एतद्वचनमाज्ञाय व्यासस्यामिततेजसः ।
अनुज्ञातो ययौ पार्थो नगरं नागसाह्वयम् ॥ १५-९-४२ (९७२१३)
प्रविश्य च पुरीं वीरः समासाद्य युधिष्ठिरम् ।
आचष्ट तद्यथावृत्तं वृष्ण्यन्धककुलं प्रति ॥ ॥ १५-९-४३ (९७२१४)

इति श्रीमन्महाभारते शतसाहस्र्यां संहितायां वैयासिक्यां
मौसलपर्वणि नवमोध्यायः। । ९ ॥ ॥ मौसलपर्व समाप्तम्
॥ -------- अस्यानन्तरं महाप्रस्थानिकं पर्व भविष्यति
तस्यायमाद्यः श्लोकः। जनमेजय उवाच। एवं वृष्ण्यन्धककुले श्रुत्वा
मौसलमाहवम्। पाण्डवाः किमकुर्वन्त तथा कृष्णे दिवं गते ॥ १
॥ इदं मौसलपर्व कुंभघोणस्थेन TI.Ar । कृष्णाचार्येण
टी। आर्। व्यासाचार्येण च मुम्बय्यां निर्णयसागरमुद्रायन्त्रे
मुद्रापितम्। शकाब्दाः १८३२ सन १९१०.
Mahabharata - Mausala Parva - Chapter Footnotes

१५-९-५ नखोदकं केशोदकं वस्त्रप्रान्तो दशा तदुदकं
कुम्भमुखोदकं च । आवीरजा नारी रजस्वला तस्या रजःप्रस्रवकाले
दिनत्रयादर्वाक् अनुगमनं तस्यां मैथुनं ब्राह्मणस्य वधो युद्धे
पराजयश्चेति सप्तभिर्निमितैः पुरुषो भ्रष्टश्रीर्भवति। अपि
राजोपघातस्ते ब्राह्मणो वेति क ट पाठः ॥
१५-९-६ प्रभिन्नं पराजितं त्वां कदाचिदपि न जानामि ॥
१५-९-११ हतं मृतम् । मारितवन्त इत्यर्थः ॥
१५-९-१३ पञ्चशतं सहस्रं सहस्रगुणितं पञ्चलक्षामीत्यर्थः ॥
१५-९-१३ न केवलं हतं ताडितमपि तु निधनं प्राप्तमित्यर्थः ॥
१५-९-१८ पश्यतः अनादरे षष्ठी । मां पश्यन्तमनादृत्येत्यर्थः ॥
१५-९-३७ वुद्धिरुपस्थितकार्यावधारणम् । तेजः

प्रागल्भ्यम्। प्रतिपत्तिरनागतावेक्षणम्। भवन्ति
उत्पद्यन्ते। भवकालेषु ऐश्वर्यावाप्तिसमयेषु। विपर्यये
विनाशकाले। विपद्यन्ते विनश्यन्ति ॥
१५-९-३८ कालः ईश्वरः जगद्बीजं वियदादिपञ्चकं । समादत्ते
संहरति यदा भूतानामपि संहारो भवति कियांस्तत्र भौतिकानां नाश
इति तदर्थं शोकोनुचित इति भावः। य एव बलवान्स एव दुर्बलो
भवत्येव विपर्ययोऽपि कालमूलो ज्ञेयः ॥
१५-९-४० पुनर्युगान्तरे ॥
१५-९-४१ मुख्यां गतिं स्वर्गं गन्तुम् एतत्प्रस्थानं श्रेयः ॥

---

१६. आश्रमवासिकपर्व

अस्रमवसिकपर्व-अध्यय००१
॥ श्रीः ॥
१६.१. अध्यायः १

अथाश्रमवासपर्व ॥ १ ॥
Mahabharata - AshramaVasika Parva - Chapter Topics
युधिष्ठिरेण राज्यपरिपालनम् ॥ १ ॥
कुन्तीद्रौपद्यादिभिर्गान्धार्या श्वश्रूवद्वर्तनम् ॥ २ ॥
भीमवर्जमर्जुनादिभिर्युधिष्ठिरशासनेन विशेषतो
धृतराष्ट्रानुवर्तनम् ॥ ३ ॥

Mahabharata - AshramaVasika Parva - Chapter Text

श्रीवेदव्यासाय नमः ।
नारायणं नमस्कृत्य नरं चैव नरोत्तमम् ।
देवीं सरस्वतीं व्यासं ततो जयमुदीरयेत् ॥ १६-१-१ (९७२१५)
जनमेजय उवाच। १६-१-१क्ष् (८०२९)
प्राप्य पैतामहं राज्यं मम पूर्वपितामहाः ।
कथमासन्महाराजे धृतराष्ट्रे महात्मनि ॥ १६-१-१ (९७२१६)
स तु राजा हतामात्यो हतपुत्रो निराश्रयः ।
कथमासीद्धतैश्वर्यो गान्धारी च तपस्विनी ॥ १६-१-२ (९७२१७)
कियन्तं चैव कालं ते मम पूर्वपितामहाः ।
स्थिता राज्ये महात्मानस्तन्मे व्याख्यातुमर्हसि ॥ १६-१-३ (९७२१८)
वैशम्पायन उवाच। १६-१-४क्ष् (८०३०)
प्राप्य राज्यं महात्मानः पाण्डवा हतशत्रवः ।
धृतराष्ट्रं पुरस्कृत्य पृथिवीं पर्यपालयन् ॥ १६-१-४ (९७२१९)
धृतराष्ट्रमुपातिष्ठद्विदुरः संजयस्तथा ।
वैश्यापुत्रश्च मेधावी युयुत्सुः कुरुसत्तम ॥ १६-१-५ (९७२२०)

पाण्डवाः सर्वकार्येषु पर्यपृच्छन्त तं नृपम् ।
चक्रुस्तेनाभ्यनुज्ञाता वर्षाणि दश पञ्च च ॥ १६-१-६ (९७२२१)
सदाऽभिगम्य ते वीराः पर्युपासन्त तं नृपम् ।
पादाभिवादनं कृत्वा धर्मिराजमते स्थिताः ॥ १६-१-७ (९७२२२)
ते मूर्ध्नि समुपाघ्राताः सर्वकार्याणि चक्रिरे ।
कुन्तिभोजसुता चैव गान्धारीमन्ववर्तत ॥ १६-१-८ (९७२२३)
द्रौपदी च सुभद्रा च याश्चान्याः पाण्डवस्त्रियः ।
समां वृत्तिमवर्तन्त तयोः श्वश्र्वोर्यथाविधि ॥ १६-१-९ (९७२२४)
शयनानि महार्हाणि वासांस्याभरणानि च ।
राजार्हाणि च सर्वाणि भक्ष्यभोज्यान्यनेकशः ॥ १६-१-१० (९७२२५)
युधिष्ठिरो महाराज धृतराष्ट्रेऽभ्युपाहरत् ।
तथैव कुन्ती गान्धार्यां गुरुवृत्तिमवर्तत ॥ १६-१-११ (९७२२६)
विदुरः संजयश्चैव युयुत्सुश्चैव कौरव ।
उपासते स्म तं वृद्धं हतपुत्रं जनाधिपम् ॥ १६-१-१२ (९७२२७)
श्यालो द्रोणस्य यश्चासीद्दयितो ब्राह्मणो महान् ।
स च तस्मिन्महेष्वासः कृपः समभवत्तदा ॥ १६-१-१३ (९७२२८)
व्यासश्च भगवान्नित्यमासांचक्रे नृपेण ह ।
कथाः कुर्वन्पुराणर्षिर्देवर्षिपितृरक्षसाम् ॥ १६-१-१४ (९७२२९)
धर्मयुक्तानि कार्याणि व्यवहारान्वितानि च ।
धृतराष्ट्राभ्यनुज्ञातो विदुरस्तान्यकारयत् ॥ १६-१-१५ (९७२३०)
सामन्तेभ्यः प्रियाण्यस्य कार्याणि सुबहून्यपि ।
प्राप्यन्तेऽर्थैः सुलघुभिः सुनयाद्विदुरस्य वै ॥ १६-१-१६ (९७२३१)
अकरोद्बन्धमोक्षं च वध्यानां मोक्षणं तथा ।
न च धर्मसुतो राजा कदाचित्किञ्चिदब्रवीत् ॥ १६-१-१७ (९७२३२)
विहारयात्रासु पुनः कुरुराजो युधिष्ठिरः ।
सर्वान्कामानुपस्थाप्य धृतराष्ट्रे न्यवेदयत् ॥ १६-१-१८ (९७२३३)
आरालिकाः सूपकारा रागषाडविकास्तथा ।
उपातिष्ठन्त राजानं धृतराष्ट्रं यथापुरम् ॥ १६-१-१९ (९७२३४)
वासांसि च महार्हाणि माल्यानि विविधानि च ।
उपाजह्रुर्यथाकालं धृतराष्ट्रस्य पाण्डवाः ॥ १६-१-२० (९७२३५)
मैरेयमधुमांसानि पानकानि लघूनि च ।
चित्रान्भक्ष्यविकारांश्च चक्रुस्तस्य यथा पुरा ॥ १६-१-२१ (९७२३६)
ये चापि पृथिवीपालाः समाजग्मुस्ततस्ततः ।
उपातिष्ठन्त ते सर्वे कौरवेन्द्रं यथापुरा ॥ १६-१-२२ (९७२३७)
कुन्ती च द्रौपदी चैव सात्वती च यशस्विनी ।
उलूपी नागकन्या च देवी चित्राङ्गदा तथा ॥ १६-१-२३ (९७२३८)

धृष्टकेतोश्च भगिनी जरासन्धसुता तथा ।
एताश्चान्याश्च बह्व्यो वै योषितः पुरुषर्षभ ।
किंकराः पर्युपातिष्ठन्सर्वाः सुबलजां तथा ॥ १६-१-२४ (९७२३९)
यथा पुत्रवियुक्तोऽयं न किञ्चिद्दुःखमाप्नुयात् ।
इति तानन्वशाज्ञ्रातॄन्नित्यमेव युधिष्ठिरः ॥१६-१-२५ (९७२४०)
एवं ते धर्मराजस्य श्रुत्वा वचनमर्थवत् ।
सविशेषमवर्तन्ति भीममेकं तदा विना ॥१६-१-२६ (९७२४१)
न हि तत्तस्य वीरस्य हृदयादपसर्पति ।
धृतराष्ट्रस्य दुर्बुद्ध्या यद्वृत्तं द्यूतमण्डले ॥ ॥१६-१-२७ (९७२४२)

इति श्रीमन्महाभारते आश्रमवासिकपर्वणि आश्रमवासपर्वणि
प्रथमोऽध्यायः ॥१ ॥
Mahabharata - AshramaVasika Parva - Chapter Footnotes

७-१-२ गान्धारी च यशस्विनीति झ.थ.पाठः ॥
७-१-५ उपातिष्ठदाराधितवान् ॥
७-१-९ सतां वृत्तिमवर्तन्तेति थ.पाठः ॥
७-१-१३ तस्मिन्धृतराष्ट्रे समभवत्तन्निकटे अभवत् ॥
७-१-१४ वासं चक्रे नृपेण हेति क.थ.पाठः ॥
७-१-१६ प्रभावाद्विदुरस्य वै इति क.थ.पाठः ॥
७-१-१९ अरया शस्त्रविशेषेण लूनं छिन्नं शाकादि अरालु
तत्संस्कुर्वन्ति ते आरालिकाः शाकविशेषकर्तारः रागखाण्डविकास्तथेति
झ.पाठः ।रागषाडवं पिप्पलीशुठीशर्करोपेतो मुद्गयूषस्तत्कर्तारो
रागषाडविकाः ॥

---

अस्रमवसिकपर्व-अध्यय००२
॥ श्रीः ॥
१६.२. अध्यायः २

अथाश्रमवासपर्व ॥१ ॥
Mahabharata - AshramaVasika Parva - Chapter Topics
युधिष्ठिरेण नागराणां धृतराष्ट्रानुशासनपूर्वकं
सहभ्रातृभिरप्रमादेन तत्परितोषणम् ॥१ ॥

Mahabharata - AshramaVasika Parva - Chapter Text

वैशम्पायन उवाच ।
एवं सम्पूजितो राजा पाण्डवैरंबिकासुतः ।
विजहार यथापूर्वमृषिभिः पर्युपस्थितः ॥ १६-२-१ (९७२४३)
ब्रह्मदेयाग्रहारांश्च प्रददौ स कुरूद्वहः ।
तच्च कुन्तीसुतो राजा सर्वमेवान्वमोदत ॥ १६-२-२ (९७२४४)
आनृशंस्यपरो राजा प्रीयमाणो युधिष्ठिरः ।
उवाच स तदा भ्रातॄनमात्यांश्च महीपतिः ।
मया चैव भवद्भिश्च मान्य एष नराधिपः ॥ १६-२-३ (९७२४५)
निदेशे धृतराष्ट्रस्य यस्तिष्ठति स मे सुहृत् ।
विपरीतश्च मे शत्रुर्नियम्यश्च भवेन्नरः ॥ १६-२-४ (९७२४६)
परिवृत्तेषु चाहःसु पुत्राणां श्राद्धकर्मणि ।
ददौ च राजा वित्तानि यावदस्य चिकीर्षितम् ॥ १६-२-५ (९७२४७)
ततः स राजा कौरव्यो धृतराष्ट्रो महामनाः ।
ब्राह्मणेभ्यो यथार्हेभ्यो ददौ वित्तान्यनेकशः ॥ १६-२-६ (९७२४८)
धर्मिराजश्च भीमश्च सव्यसाची यमावपि ।
तत्सर्वमन्ववर्तन्त धृतराष्ट्रव्यपेक्षया ॥ १६-२-७ (९७२४९)
कथं नु राजा वृद्धः स पुत्रपौत्रवधार्दितः ।
शोकमस्मत्कृतं प्राप्यि न म्रियेतेति चिन्त्य ते ॥ १६-२-८ (९७२५०)
यावद्धि कुरुवीरस्य जीवत्पुत्रस्य वै सुखम् ।
तावत्सुखमवाप्नोति भोगांश्चैव व्यवस्थितान् ॥ १६-२-९ (९७२५१)
ततस्ते सहिताः पञ्च भ्रातरः पाण्डुनन्दनाः ।
तथाशीलाः समातस्थुर्धृतराष्ट्रस्य शासने ॥ १६-२-१० (९७२५२)
धृतराष्ट्रश्च तान्सर्वान्विनीतान्नियमे स्थितान् ।
शिष्यवृत्तिं समापन्नान्गुरुवत्प्रत्यपद्यत ॥ १६-२-११ (९७२५३)
गान्धारी चैव पुत्राणां विविधैः श्राद्धकर्मभिः ।
आनृण्यमगमत्कामान्विप्रेभ्यः प्रतिपाद्य सा ॥ १६-२-१२ (९७२५४)
एवं धर्मभृतांश्रेष्ठो धर्मराजो युधिष्ठिरः ।
भ्रातृभिः सहितो धीमान्पूजयामासं तं नृपम् ॥ १६-२-१३ (९७२५५)
स राजा सुमहातेजा वृद्धः कुरुकुलोद्वहः ।
न ददर्श तदा किञ्चिदप्रियं पाण्डुनन्दने ॥ १६-२-१४ (९७२५६)
वर्तमानेषु सद्वृत्तिं पाण्डवेषु महात्मसु ।
प्रीतिमानभवद्राजा धृतराष्ट्रोंऽबिकासुतिः ॥ १६-२-१५ (९७२५७)
सौबलेयी च गान्धारी पुत्रशोकमपास्य तम् ।
सदैव प्रीतिमत्यासीत्तनयेषु निजेष्विव ॥ १६-२-१६ (९७२५८)
प्रियाण्येव तु कौरव्यो नाप्रियाणि कुरूद्वहः ।
वैचित्रवीर्य नृपतौ समाचरत सर्वदा ॥ १६-२-१७ (९७२५९)

यद्यद्ब्रूते च किञ्चित्स धृतराष्ट्रो जनाधिपः ।
गुरु वा लघु वा कार्यं गान्धारी च तपस्विनी ॥ १६-२-१८ (९७२६०)
तं स राजा महाराज पाण्डवानां धुरंधरः ।
पूजयित्वा वचस्तत्तदकार्षीत्परवीरहा ॥ १६-२-१९ (९७२६१)
तेन तस्याभवत्प्रीतो वृत्तेन स नराधिपः ।
अन्वतप्यत संस्मृत्य पुत्रं तं मन्दचेतसम् ॥ १६-२-२० (९७२६२)
सदा च प्रातरुत्थाय कृतजप्यः शुचिर्नृपः ।
आशास्ते पाण्डुपुत्राणां समरेष्वपराजयम् ॥ १६-२-२१ (९७२६३)
ब्राह्मणान्स्वस्तिवाच्याथ हुत्वा चैव हुताशनम् ।
आयूंषि पाण्डुपुत्राणामाशंसत नराधिपः ॥ १६-२-२२ (९७२६४)
न तां प्रीतिं परामाप पुत्रेभ्यः स तदा पुरा ।
यां प्रीतिं पाण्डुपुत्रेभ्यः सदाऽवाप नराधिपः। १६-२-२३ (९७२६५)
ब्राह्मणानां यथा वृत्तः क्षत्रियाणां यथाविधः ।
तथा विट्शूद्रसङ्घानामभवत्स प्रियस्तदा ॥ १६-२-२४ (९७२६६)
यच्च किञ्चित्तदा पापं धृतराष्ट्रसुतैः कृतम् ।
अकृत्वा हृदि तत्पापं तं नृपं सोन्ववर्तत ॥ १६-२-२५ (९७२६७)
यः कश्चिदपि यत्किञ्चित्प्रमादादंबिकासुते ।
कुरुते द्वेष्यतामेति स कौन्तेयस्य धीमतः ॥ १६-२-२६ (९७२६८)
न राज्ञो धृतराष्ट्रस्य न च दुर्योधनस्य वै ।
उवाच दुष्कृतं कश्चिद्युधिष्ठिरभयान्नरः ॥ १६-२-२७ (९७२६९)
धृत्या तुष्टो नरेन्द्रः स गान्धारी विदुरस्तथा ।
अजातशत्रोर्वृत्तेन न तु भीमस्य पार्थिवः ॥ १६-२-२८ (९७२७०)
अन्ववर्तत भीमोपि निश्चितो धर्मजं नृपम् ।
धृतराष्ट्रं च सम्प्रेक्ष्य सदा भवति दुर्मनाः ॥ १६-२-२९ (९७२७१)
राजानमनुवर्तन्त धर्मपुत्रममित्रहा ।
अन्ववर्तत संक्रुद्धो हृदयेन पराङ्मुखः ॥ ॥ १६-२-३० (९७२७२)

इति श्रीमन्महाभारते आश्रमवासिकपर्वणि आश्रमवासपर्वणि
द्वितीयोऽध्यायः ॥। २ ॥
Mahabharata - AshramaVasika Parva - Chapter Footnotes

७-२-४ निरस्यश्च भवेन्नर इति क थ पाठः ॥

---

अस्रमवसिकपर्व-अध्यय००३
॥ श्रीः ॥
१६.३. अध्यायः ३

अथाश्रमवासपर्व ॥ १ ॥

Mahabharata - AshramaVasika Parva - Chapter Topics

भीमसेनपरुषभाषणश्रवणान्निर्वेदमुपगतवता धृतराष्ट्रेणि
सहगान्धार्या वनगमनाध्यवसायः ॥ १ ॥
तथा सकलपौरानयनेन तेषु स्वाध्यवसायनिवेदनम् ॥ २ ॥

Mahabharata - AshramaVasika Parva - Chapter Text

वैशम्पायन उवाच ।
युधिष्ठिरस्य नृपतेर्दुर्योधनपितुस्तदा ।
नान्तरं ददृशू राज्ये पुरुषाः प्रणयं प्रति ॥ १६-३-१ (९७२७३)
यदा तु कौरवो राजा पुत्रं सस्मार बालिशम् ।
तदा भीमं हृदा राजन्नपध्याति स पार्थिवः ॥ १६-३-२ (९७२७४)
कौरवश्चैव भीमश्च हृदाऽन्योन्यमवर्तताम् ।
ध्यायन्तौ श्लक्ष्णया वाचा त्वन्योन्यमभितिष्टितां १६-३-३ (९७२७५)
अप्रकाशं व्यलीकानि चकारास्य वृकोदरः ।
आज्ञां प्रत्यहरच्चापि कृतकैः पुरुषैः सदा ॥ १६-३-४ (९७२७६)
स्मरन्दुर्मन्त्रितं तस्य वृत्तान्यप्यस्य कानिचित् ।
गअसकृच्चाप्युवाचेदं हतास्ते मन्दचेतसः ॥' १६-३-५ (९७२७७)
अथ भीमः सुहृन्मध्ये बाहुशब्दं तथाऽकरोत् ।
संश्रवे धृतराष्ट्रस्य गान्धार्याश्चाप्यमर्षणः ॥ १६-३-६ (९७२७८)
स्मृत्वा दुर्योधनं शत्रुं कर्णदुःखासनावपि ।
प्रोवाचेदं सुसंरब्धो भीमः सपरुषं वचः ॥ १६-३-७ (९७२७९)
अन्धस्य नृपतेः पुत्रा मया परिघवाहुना ।
नीता लोकममुं सर्वे नानाशस्त्रास्त्रयोधिनः ॥ १६-३-८ (९७२८०)
इमौ तौ परिघप्रख्यौ भुजौ मम दुरासदौ ।
ययोरन्तरमासाद्य धार्तराष्ट्राः क्षयं गताः ॥ १६-३-९ (९७२८१)
ताविमौ चन्दनेनाक्तौ वन्दनीयौ च मे भुजौ ।
याभ्यां दुर्योधनो नीतः क्षयं ससुतबान्धवः ॥ १६-३-१० (९७२८२)
एतास्चान्याश्च विविधाः शल्यभुता नराधिपः ।
वृकोदरस्य ता वाचः श्रुत्वा निर्वेदमागमत् ॥ १६-३-११ (९७२८३)
सा च बुद्धिमती देवी कालपर्यायवेदिनी ।
गान्धारी सर्वधर्मज्ञा तान्यलीकानि शुश्रुवे ।
गकुन्तीं वर्या तु संवीक्ष्य शापे नास्याकरोन्मति' १६-३-१२ (९७२८४)
ततः पञ्चदशे वर्षे समतीते नराधिपः ।

राजा निर्वेदमापेदे भीमवाग्बाणपीडितः ॥ १६-३-१३ (९७२८५)
ग्सुखासक्तं कृच्छ्रपरं ज्ञात्वा चैव युधिष्ठिरम् ।
तपोयोगात्तपस्तप्तुं मनश्चक्रे महामतिः ॥' १६-३-१४ (९७२८६)
नान्वबुध्यत तद्राजा कुन्तीपुत्रो युधिष्ठिरः ।
श्वेताश्वोवाऽथकुन्ती वा द्रौपदी वा यशस्विनी ॥ १६-३-१५ (९७२८७)
माद्रीपुत्रौ च भीमस्य मतं तावन्ववर्तताम् ।
राज्ञस्तु चित्तं रक्षन्तौ नोचतुः स्वयमप्रियम् ॥ १६-३-१६ (९७२८८)
ततः समानयामास धृतराष्ट्रः सुहृज्जनम् ।
बाष्पसंदिग्धमत्यर्थमिदमाह च तान्भृशम् ॥ १६-३-१७ (९७२८९)
विदितं भवतामेतद्यथा वृत्तः कुरुक्षयः ।
ममापराधात्तत्सर्वमिति ज्ञेयं तु कौरवाः ॥ १६-३-१८ (९७२९०)
योऽहं दुष्टमतिं मन्दो ज्ञातीनां भयवर्धनम् ।
दुर्योधनं कौरवाणामाधइपत्येऽभ्यषेचयम् ।
यच्चाहं वासुदेवस्य नाश्रौषं वाक्यमर्थवत् ॥ १६-३-१९ (९७२९१)
वध्यतां साध्वयं पापः सामात्य इति दुर्मतिः ।
पुत्रस्नेहाभिभूतस्तु हितमुक्तो मनीषिभिः ॥ १६-३-२० (९७२९२)
विदुरेणाथ भीष्मेण द्रोणेन च कृपेण च ।
पदेपदे भगवता व्यासेन च महात्मना ।
संजयेनाथ गान्धार्या तदिदं तप्यते मया ॥ १६-३-२१ (९७२९३)
यच्चाहं पाण्डुपुत्रेषु गुणवत्सु महात्मसु ।
न न्यस्तवाञ्श्रियं दीप्तां पितृपैतामहीमिमाम् ॥ १६-३-२२ (९७२९४)
विनाशं पश्यमानो हि सर्वराज्ञां गदाग्रजः ।
एतच्छ्रेयस्तु परमममन्यत जनार्दनः ॥ १६-३-२३ (९७२९५)
सोहमेतान्यलीकानि दुर्वृत्तान्यात्मनस्तदा ।
हृदये शल्यभूतानि धारयामि सहस्रशः ॥ १६-३-२४ (९७२९६)
विशेषतस्तु दह्यामि वर्षे पञ्चदशेऽद्य वै ।
अस्य पापस्य शुद्ध्यर्थं नियतोस्मि सुदुर्मतिः ॥ १६-३-२५ (९७२९७)
चतुर्थे नियते काले कदाचिदपि चाष्टमे ।
तृष्णाविनयनं भुञ्जे गान्धारी वेद तन्मम ॥ १६-३-२६ (९७२९८)
करोत्याहारमिति मां सर्वः परिजनः सदा ।
युधिष्ठिरभयादेति भृशं तप्यति पाण्डवः ॥ १६-३-२७ (९७२९९)
भूमौ शये जप्यपरो दर्भष्वजिनसंवृतः ।
नियमव्यपदेशेन गान्धारी च यशस्विनी ॥ १६-३-२८ (९७३००)
अहं पुत्रशतं वीरं सङ्ग्रामेष्वपलायिनम् ।
नानुतप्ये हतं तत्र क्षत्रधर्मं हि तं विदुः ॥ १६-३-२९ (९७३०१)
इत्युक्त्वा धर्मराजानमभ्यभाषत कौरवः ।

भद्रं ते यादवीमातर्वचश्चेदं निबोध मे ॥ १६-३-३० (९७३०२)
सुखमध्युषितः पुत्र त्वया सुपरिपालितः ।
मया दानानि दत्तानि श्राद्धानि च पुनःपुनः ॥ १६-३-३१ (९७३०३)
प्रकृष्टं च मया पुत्र पुण्यं चीर्णं यथाबलम् ।
गान्धारी हतपुत्रेयं धैर्येणोदीक्षते च माम् ॥ १६-३-३२ (९७३०४)
द्रौपद्या ह्यपकर्तारस्तव चैश्वर्यहारिणः ।
समतीता नृशंसास्ते स्वधर्मेण हता युधि ॥ १६-३-३३ (९७३०५)
न तेषु प्रतिकर्तव्यं पश्यामि कुरुनन्दन ।
सर्वे शस्त्रजिताँल्लोकान्गतास्तेऽभिमुखं हताः ॥ १६-३-३४ (९७३०६)
आत्मनस्तु हितं पुण्यं प्रतिकर्तव्यमद्य ते ।
गान्धार्याश्चैव राजेन्द्र तदनुज्ञातुमर्हसि ॥ १६-३-३५ (९७३०७)
त्वं तु शस्त्रभृतां श्रेष्ठः सततं धर्मवत्सलः ।
राजा गुरुः प्राणभृतां तस्मादेतद्ब्रवीम्यहम् ॥ १६-३-३६ (९७३०८)
अनुज्ञातस्त्वया वीर संश्रयेयं वनान्यहम् ।
चीरवल्कलभृद्राजन्गान्धार्या सहितोऽनया ॥ १६-३-३७ (९७३०९)
तवाशिषः प्रयुञ्जानो भविष्यामि वनेचरः ।
उचितं नः कुले तात सर्वेषां भरतर्षभ ।
पुत्रेष्वैश्वर्यमाधाय वयसोन्ते वनं नृप ॥ १६-३-३८ (९७३१०)
तत्राहं वायुभक्षो वा निराहारोपि वा वसन् ।
पत्न्या सहानया वीर चरिष्यामि तपः परम् ॥ १६-३-३९ (९७३११)
त्वं चापि फलभाक्तात तपसः पार्थिवो ह्यसि ।
फलभाजो हि राजानः कल्याणस्येतरस्य वा ॥ ॥ १६-३-४० (९७३१२)

इति श्रीमन्महाभारते आश्रमवासिकपर्वणि आश्रमवासपर्वणि
तृतीयोऽध्यायः ॥ ३ ॥
Mahabharata - AshramaVasika Parva - Chapter Footnotes

७-३-३ तथैव भीमसेनोऽपि धृतराष्ट्रं जनाधिपम् ।नामर्षयत
राजेन्द्रि सदैव दुष्टवद्धूदेति झ पाठः ॥
७-३-२४ सोहमेतान्यतीतानीति क पाठः ॥
७-३-२६ तृष्णविनयनं तृषामात्रापहं मण्डदि नतु क्षुद्व्याधिहरम् ॥

---

अस्रमवसिकपर्व-अध्यय००४
॥ श्रीः ॥
१६.४. अध्यायः ४

अथाश्रमवासपर्व ॥ १ ॥

Mahabharata - AshramaVasika Parva - Chapter Topics

धृतराष्ट्रेण युधिष्ठिरंप्रति स्वस्य वनगमनाभ्यनुज्ञानप्रार्थना ॥ १ ॥
युधिष्ठिरेण धृतराष्ट्रानुशोचनपूर्वकं तत्प्रतिषेधने व्यासेन
युधिष्ठिरचोदनाय तत्रागमनम् ॥ २ ॥

Mahabharata - AshramaVasika Parva - Chapter Text

युधिष्ठिर उवाच ।
न मां प्रीणयते राज्यं त्वय्येवं दुःखिते नृप ।
दिङ्मामस्तु सुदुर्बुद्धिं राज्यसक्तं प्रमादिनम् ॥ १६-४-१ (९७३१३)
गृहे वसन्तं दुःखार्तमुपवासकृशं भृशम् ।
यताहारं क्षितिशयं नाविदं भ्रातृभिः सह ॥ १६-४-२ (९७३१४)
अहोस्मि वञ्चितो मूढो भवता गूढबुद्धिना ।
विस्वासयित्वा पूर्वं मां यदिदं दुःखमश्नुथा ॥ १६-४-३ (९७३१५)
किं मे राज्येन भोगैर्वा किं यज्ञैः किं सुखेन वा ।
यस्य मे त्वं महीपाल दुखान्येतान्यवाप्तवान् ॥ १६-४-४ (९७३१६)
पीडितं चापि जानामि राज्यमात्मानमेव च ।
अनेन वचसा तेऽद्य दुःखितस्य जनेश्वरः ॥ १६-४-५ (९७३१७)
भवान्पिता भवान्माता भवान्नः परमो गुरुः ।
भवता विप्रहीणा वै क्वनु तिष्ठामहे वयम् ॥ १६-४-६ (९७३१८)
औरसो भवतः पुत्रो युयुत्सुर्नृपसत्तम ।
अस्तु राजा महाराज यमन्यं मन्यते भवान् ॥ १६-४-७ (९७३१९)
अहं वनं गमिष्यामि भवान्राजा प्रशास्त्विदम् ।
नमामयशसा दग्धं भूयस्त्वं दग्धुमर्हसि ॥ १६-४-८ (९७३२०)
नाहं राजा भवान्राजा भवता परवानहम् ।
कथं गुरुं त्वां धर्मज्ञमनुज्ञातुमिहोत्सहे ॥ १६-४-९ (९७३२१)
न मन्युर्हृदि नः कश्चित्सुयोधनकृतेऽनघ ।
भवितव्यं तथा तद्धि वयं चान्ये च मोहिताः ॥ १६-४-१० (९७३२२)
वयं पुत्रा हि भवोत यथा दुर्योधनादयः ।
गान्धारी चैव कुन्ती च निर्विशेषे मते मम ॥ १६-४-११ (९७३२३)
स मां त्वं यदि राजेन्द्र परित्यज्य गमिष्यसि ।
पृष्ठतस्त्वनुयास्यामि सत्यमात्मानमालभे ॥ १६-४-१२ (९७३२४)
इयं हि वसुसंपूर्णा मही सागरमेखला ।
भवता विप्रहीणस्य न मे प्रीतिकरी भवेत् ॥ १६-४-१३ (९७३२५)
भवदीयमिदं सर्वं शिरसा त्वां प्रसादये ।

त्वदधीनाः स्म राजेन्द्र व्येतु ते मानसो ज्वरः ॥१६-४-१४ (९७३२६)
भवितव्यमनुप्राप्तो मन्ये त्वं वसुधाधिप ।
दिष्ट्या शुश्रूषमाणस्त्वां मोक्षिष्ये मनसो ज्वरं ॥१६-४-१५ (९७३२७)
धृतराष्ट्र उवाच।१६-४-१६क्ष् (८०३१)
तापस्ये मे मनस्तात वर्तते कुरुनन्दन ।
उचितं च कुलेऽस्माकमरण्यगमनं प्रभो ॥१६-४-१६ (९७३२८)
चिरमध्युषितः पुत्र चिरं शुश्रूषितस्त्वया ।
वृद्धं मामप्यनुज्ञातुमर्हसि त्वं नराधिप ॥१६-४-१७ (९७३२९)
वैशम्पायन उवाच।१६-४-१८क्ष् (८०३२)
इत्युक्त्वा धर्मराजानं वेपमानं कृताञ्जलिम् ।
उवाच विदुरं राजा धृतराष्ट्रोंऽबिकासुतः ॥१६-४-१८ (९७३३०)
संजयं च महात्मानं कृपं चापि महारथम् ।
अनुनेतुमिहेच्छामि भवद्भिर्वसुधाधिपम् ॥१६-४-१९ (९७३३१)
म्लायते मे मनो हीदं मुखं च परिशुष्यति ।
वयसा च प्रकृष्टेन वाग्व्यायामेन चैव ह ॥१६-४-२० (९७३३२)
इत्युक्त्वा स तु धर्मात्मा वृद्धो राजा कुरूद्वहः ।
गान्धारीं शिश्रिये धीमान्सहसैव गतासुवत् ॥१६-४-२१ (९७३३३)
तं तु दृष्ट्वा समासीनं विसंज्ञमिव कौरवम् ।
आर्तिं राजाऽगमत्तीव्रां कौन्तेयः परवीरहा ॥१६-४-२२ (९७३३४)
युधिष्ठिर उवाच।१६-४-२३क्ष् (८०३३)
यस्य नागसहस्रेण शतसङ्ख्येन वै बलम् ।
सोयं नारीं व्यपाश्रित्य शेते राजा गतासुवत् ॥१६-४-२३ (९७३३५)
आयसी प्रतिमा येन भीमसेनस्य सा पुरा ।
चूर्णीकृता बलवता सोबलामाश्रितः स्त्रियम् ॥१६-४-२४ (९७३३६)
धिगस्तु मामधर्मज्ञं धिग्बुद्धिं धिक्च मे श्रुतम् ।
यत्कृते पृथिवीपालः शेतेऽयमतथोचितः ॥१६-४-२५ (९७३३७)
अहमप्युपवत्स्यामि यथैवायं गुरुर्मम ।
यदि राजा न भुङ्क्तेऽयं गान्धारी च यशस्विनी ॥१६-४-२६ (९७३३८)
वैशम्पायन उवाच।१६-४-२७क्ष् (८०३४)
ततोस्य पाणिना राजञ्जलशीतेन पाण्डवः ।
उरो मुखं च शनकैः पर्यमार्जत धर्मवित् ॥१६-४-२७ (९७३३९)
तेन रत्नौषधिमता पुण्येन च सुगन्धिना ।
पाणिस्पर्शेन राज्ञः स राजा संज्ञामवाप ह ॥१६-४-२८ (९७३४०)
स्पृशन्तं पाणिना भूयः परिष्यज्य च पाण्डवम् ।
ग्उवाच राजा धर्मज्ञो धृतराष्ट्रः शुभं वचः ॥' १६-४-२९ (९७३४१)
जीवामीवातिसंस्पर्शात्तव राजीवलोचन ।

मूर्धानं च तवाघ्रातुमिच्छामि मनुजाधिप ।
पाणिभ्यां हि परिस्प्रष्टुं प्राणानां हितमात्मनि ॥ १६-४-३० (९७३४२)
अष्टमो ह्यद्य कालोऽयमाहारस्य कृतस्य मे ।
येनाहं कुरुशार्दूल शक्नोमि न विचेष्टितुम् ॥१६-४-३१ (९७३४३)
व्यायामश्चायमत्यर्थं कृतस्त्वामभियाचता ।
ततो ग्लानमनास्तान नष्टसंज्ञ इवाभवम् ॥१६-४-३२ (९७३४४)
तवामृतसुखस्पर्शं हस्तस्पर्शमिमं प्रभो ।
लब्ध्वा संजीवितोस्मीति मन्ये कुरुकुलोद्वह ॥१६-४-३३ (९७३४५)
वैशम्पायन उवाच।१६-४-३४क्ष् (८०३५)
एवमुक्तस्तु कौन्तेयः पित्रा ज्येष्ठेन भारत ।
पस्पर्श सर्वगात्रेषु स्नेहार्द्रस्तं शनैस्तदा ॥१६-४-३४ (९७३४६)
उपलभ्य ततः प्राणान्धृतराष्ट्रो महीपतिः ।
बाहुभ्यां सम्परिष्वज्य मूर्ध्न्याजिघ्रत पाण्डवम् ॥१६-४-३५ (९७३४७)
विदुरादयश्च ते सर्वे रुरुदुर्दुःखिता भृशम् ।
अतिदुःखात्तु राजानं नोचुः किञ्चन पाण्डवम् ॥१६-४-३६ (९७३४८)
गान्धारी त्वेव धर्मज्ञा मनसोद्वहती भृशम् ।
दुःखान्यधारयद्राजन्मैवमित्येव चाब्रवीत् ॥१६-४-३७ (९७३४९)
इतरास्तु स्त्रियः सर्वाः कुन्त्या सह सुदःखिताः ।
नेत्रैरागतविक्लेदैः परिवार्य स्थिताऽभवन् ॥१६-४-३८ (९७३५०)
अथाब्रवीत्पुनर्वाक्यं धृतराष्ट्रो युधिष्ठिरम् ।
अनुजानीहि मां राजंस्तापस्ये भरतर्षभ ॥१६-४-३९ (९७३५१)
ग्लायते मे मनस्तात भूयोभूयः प्रजल्पतः ।
न मामतः परं पुत्र परिक्लेष्टुमिहार्हसि ॥१६-४-४० (९७३५२)
तस्मिंस्तु कौरवेन्द्रे तं तथा ब्रुवति पाण्डवम् ।
सर्वेषामवरोधानामार्तनादो महानभूत् ॥१६-४-४१ (९७३५३)
दृष्ट्वा कृशं विवर्णं च राजानमतथोचितम् ॥
उपवासपरिश्रान्तं त्वगस्थिपरिवारितम् ॥१६-४-४२ (९७३५४)
धर्मपुत्रः स्वपितरं परिष्वज्य महाप्रभुम् ।
शोकजं बाष्पमुत्सृज्य पुनर्वचनमब्रवीत् ॥१६-४-४३ (९७३५५)
न कामये नरश्रेष्ठ जीवितं पृथिवीं तथा ।
यथा तव प्रियं राजंश्चिकीर्षामि परंतप ॥१६-४-४४ (९७३५६)
यदि चाहमनुग्राह्यो भवतो दयितोऽपि वा ।
क्रियतां तावदाहारस्ततो वेत्स्याम्यहं परम् ॥१६-४-४५ (९७३५७)
ततोऽब्रवीन्महातेजा धृतराष्ट्रो युधिष्ठिरम् ।
अनुज्ञातस्त्वया पुत्र भुञ्जीयामिति कामये ॥१६-४-४६ (९७३५८)
इति ब्रुवति राजेन्द्रे धृतराष्ट्रे युधिष्ठिरम् ।

ऋषिः सत्यवतीपुत्रो व्यासोऽभ्योत्य वचोऽब्रवीत् ॥ ॥ १६-४-४७ (९७३५९)

इति श्रीमन्महाभारते आश्रमवासिकपर्वणि आश्रमिवासपर्वणि
चतुर्थोऽध्यायः ॥ ४ ॥

---

अस्रमवसिकपर्व-अध्यय००५
॥ श्रीः ॥
१६.५. अध्यायः ५

अथाश्रमवासपर्व ॥ १ ॥
Mahabharata - AshramaVasika Parva - Chapter Topics
व्यासेन युधिष्ठिरंप्रति सहेतूपन्यासं धृतराष्ट्रस्य
धृतराष्ट्रस्य वनगमनाभ्यनुज्ञानचोदनापूर्वकं स्वाश्रमगमनम्
॥ १ ॥
युधिष्ठिरेणि धृतराष्ट्रंप्रति कृच्छ्रेण
तदभ्यनुज्ञानाङ्गीकरणम् ॥ २ ॥

Mahabharata - AshramaVasika Parva - Chapter Text

व्यास उवाच ।
युधिष्ठिर महाबाहो क़क़क़क़क़क़क़क़क़क़ कुरुनन्दनः ।
धृतराष्ट्रो महातेजास्तत्कुरुष्वाविचारयन् ॥ १६-५-१ (९७३६०)
अयं हि वृद्धो नृपतिर्हतपुत्रो विशेषतः ।
नेदं कृच्छ्रं चिरतरं सहेदिति मतिर्मम ॥ १६-५-२ (९७३६१)
गान्धारी च महाभागा प्राज्ञा करुणवेदिनी ।
पुत्रशोकं महाराज धैर्येणोद्वहते भृशम् ॥ १६-५-३ (९७३६२)
अहमप्येतदेव त्वां ब्रवीमि कुरु मे वचः ।
अनुज्ञां लभतां राजा मां वृथेह मरिष्यति ॥ १६-५-४ (९७३६३)
ग्स्वस्थो भवत्वयं धीमान्वनेषु मधुगन्धिषु ।'
राजर्षीणां पुराणानामनुयातु गतिं नृपः । राजर्षीणां हि सर्वेषामन्ते
वनमुपाश्रयः ॥ १६-५-५ (९७३६४)
वैशम्पायन उवाच । १६-५-६क्ष् (८०३६)
इत्युक्तः स तदा राजा व्यासेनाद्भुतकर्मणा ।
प्रत्युवाच महातेजा धर्मराजो महामुनिम् ॥ १६-५-६ (९७३६५)
भगवानेव नो मान्यो भगवानेव नो गुरुः ।
भगवानस्य राज्यस्य कुलस्य च परायणम् ॥ १६-५-७ (९७३६६)

अहं तु पुत्रो भगवन्पिता राजा गुरुश्च मे ।
निदेशवर्ती च पितुः पुत्रो भवति धर्मतः ॥ १६-५-८ (९७३६७)
वैशम्पायन उवाच। १६-५-९x (८०३७)
इत्युक्तः स तु तं प्राह व्यासो वेदविदांवरः ।
युधिष्ठिरं महातेजाः पुनरेव महाकविः ॥ १६-५-९ (९७३६८)
एवमेतन्महाभाग यथा वदसि भारत ।
राजाऽयं वृद्धतां प्राप्तः प्रमाणे परमे स्थितः ॥ १६-५-१० (९७३६९)
सोयं मयाऽभ्यनुज्ञातस्त्वथा च पृथिवीपतिः ।
करोतु स्वमभिप्रायं मा स्म विघ्नकरो भव ॥ १६-५-११ (९७३७०)
एष एव परो धर्मो राजर्षीणां युधिष्ठिर ।
समरे वा भवेन्मृत्युर्वने वा विधिपूर्वकम् ॥ १६-५-१२ (९७३७१)
पित्रा तु तव राजेन्द्र पाण्डुना पृथिवीक्षिता ।
शिष्यभूतेन राजाऽयं गुरुवत्पर्युपासितः ॥ १६-५-१३ (९७३७२)
क्रतुभिर्दक्षिणावद्भी रत्नपर्वतशोभितैः ।
महद्भिरिष्टं गौर्भुक्ता प्रजाश्च परिपालिताः ॥ १६-५-१४ (९७३७३)
पुत्रसंस्यं च विपुलं राज्यं विप्रोषिते त्वयि ।
त्रयोदशसमा भुक्तं दत्तं च विविधं वसु ॥ १६-५-१५ (९७३७४)
त्वया चायं नरव्याघ्र गुरुशुश्रूषयाऽनघ ।
आराधितः स भृत्येन गान्धारी च यशस्विनी ॥ १६-५-१६ (९७३७५)
अनुजानीहि पितरं समयोऽस्य तपोविधौ ।
न मन्युर्विद्यते चास्य सुसूक्ष्मोऽपि युधिष्ठिर ॥ १६-५-१७ (९७३७६)
वैशम्पायन उवाच। १६-५-१८x (८०३८)
एतावदुक्त्वा वचनमनुमान्य च पार्थिवम् ।
तथाऽस्त्विति च तेनोक्तः कौतेयेन ययौ वनम् ॥ १६-५-१८ (९७३७७)
गते भगवति व्यासे राजा पाण्डुसुतस्तदा ।
प्रोवाच पितरं वृद्धं मन्दंमन्दमिवानतः ॥ १६-५-१९ (९७३७८)
यदाह भगवान्व्यासो यच्चापि भवतो मतम् ।
यथाऽऽह च महेष्वासः कृपो विदुर एव च ॥ १६-५-२० (९७३७९)
युयुत्सुः संजयश्चैव तत्कर्तास्म्यहमञ्जसा ।
सर्वे एव हि मान्या मे कुलस्य हि हितैषिणः ॥ १६-५-२१ (९७३८०)
इदं तु याचे नृपते त्वामहं शिरसा नतः ।
क्रियतां तावदाहारस्ततो गच्छाश्रमं प्रति ॥ ॥ १६-५-२२ (९७३८१)

इति श्रीमन्महाभारते आश्रमवासिकपर्वणि आश्रमवासपर्वणि
पञ्चमोऽध्यायः ॥ ५ ॥

Mahabharata - AshramaVasika Parva - Chapter Footnotes

७-५-१७ तपोविधौ तपःकरणे ॥
१८ ॥

---

अस्रमवसिकपर्व-अध्यय००६
॥ श्रीः ॥
१६.६. अध्यायः ६

अथाश्रमवासपर्व ॥ १ ॥
Mahabharata - AshramaVasika Parva - Chapter Topics
वनं यियासुना धृतराष्ट्रेण युधिष्ठिराय राजनीत्युपदेशः ॥ १ ॥

Mahabharata - AshramaVasika Parva - Chapter Text

वैशम्पायन उवाच ।
ततो राज्ञाऽभ्यनुज्ञातो धृतराष्ट्रो महामनाः ।
ययौ स्वभवनं राजा गान्धार्याऽनुगतस्तदा ॥ १६-६-१ (९७३८२)
मन्दप्राणगतिर्धीमान्कृच्छ्रादिव समुद्वहन् ।
पदानि स महीपालो जीर्णो गजपतिर्यथा ॥ १६-६-२ (९७३८३)
तमन्वगच्छद्विदुरो विद्वान्सूतश्च संजयः ।
स चापि परमेष्वासः कृपः शारद्वतस्तथा ॥ १६-६-३ (९७३८४)
स प्रविश्य गृहं राजा कृतपूर्वाह्णिकक्रियः ।
तर्पयित्वा द्विजश्रेष्ठानाहारमकरोत्तदा ॥ १६-६-४ (९७३८५)
गान्धारी चैव धर्मज्ञा कुन्त्या सह मनस्विनी ।
वधूभिरुपचारेणि पूजिताऽभुङ्क्त भारत ॥ १६-६-५ (९७३८६)
कृताहारं कृताहाराः सर्वे ते विदुरादयः ।
पाण्डवाश्च कुरुश्रेष्ठमुपातिष्ठन्त तं नृपम् ॥ १६-६-६ (९७३८७)
ततोऽब्रवीन्महाराजः कुन्तीपुत्रमुपह्वरे ।
निषण्णं पाणिना पृष्ठे संस्पृशन्नंबिकासुतः ॥ १६-६-७ (९७३८८)
अप्रमादस्त्वया कार्यः सर्वथा कुरुनन्दन ।
अष्टाङ्गे राजशार्दूल राज्ये धर्मपुरस्कृते ॥ १६-६-८ (९७३८९)
तत्तु शक्यं महाराज रक्षितुं पाण्डुनन्दन ।
राज्यं धर्मेण कौन्तेय विद्वानसि निबोध तत् ॥ १६-६-९ (९७३९०)
विद्यावृद्धान्सदैव त्वमुपासीथा युधिष्ठिर ।
शृणुयास्ते च यद्ब्रूयुः कुर्याश्चैवाविचारयन् ॥ १६-६-१० (९७३९१)
प्रातरुत्थाय तान्राजन्पूजयित्वा यथाविधि ।

कृत्यकाले समुत्पन्ने पृच्छेथाः कार्यमात्मनः ॥ १६-६-११ (९७३९२)
ते तु सम्मानिता राजंस्त्वया लोकहितार्थिना ।
प्रवक्ष्यन्ति हितं तात सर्वथा तव भारत ॥ १६-६-१२ (९७३९३)
इन्द्रियाणि च सर्वाणि वाजिवत्परिपालय ।
हितायैव भविष्यन्ति रक्षितं द्रविणं यथा ॥ १६-६-१३ (९७३९४)
अमात्यानुपधातीतान्पितृपैतामहाञ्शुचीन् ।
दान्तान्कर्मसु सर्वेषु मुख्यान्मुख्येषु योजयेः ॥ १६-६-१४ (९७३९५)
चारयेथाश्च सततं चारैरविदितः परैः ।
परीक्षितैर्बहुविधैः स्वराष्ट्रेषु परेषु च ॥ १६-६-१५ (९७३९६)
पुरं च ते सुगुप्तं स्याद्दृढप्राकारतोरणम् ।
अट्टाट्टालकसम्बाधं षट्पदं सर्वतो दिशम् ॥ १६-६-१६ (९७३९७)
तस्य द्वाराणि सर्वाणि पर्याप्तानि बृहन्ति च ।
सर्वतः सुविभक्तानि यन्त्रैरारक्षितानि च ॥ १६-६-१७ (९७३९८)
पुरुषैरलमर्थस्ते विदितैः कुलशीलतः ।
आत्मा च रक्ष्यः सततं भोजनादिषु भारत ।
विहाराहारकालेषु माल्यशय्यासनेषु च ॥ १६-६-१८ (९७३९९)
स्त्रियश्च ते सुगुप्ताः स्युर्वृद्धैराप्तैरधिष्ठिताः ।
शीलवद्भिः कुलीनैश्च विद्वद्भिश्च युधिष्ठिर ॥ १६-६-१९ (९७४००)
मन्त्रिणश्चैव कुर्वीथा द्विजान्विद्याविशारदान् ।
विनीतांश्च कुलीनांश्च धर्मार्थकुशलानृजून् ॥ १६-६-२० (९७४०१)
तैः सार्धं मन्त्रयेथास्त्वं नात्यर्थं बहुभिःक सह ।
समस्तैरपि च व्यस्तैर्व्यपदेशेन केनचित् ॥ १६-६-२१ (९७४०२)
सुसंवृतं मन्त्रगृहं स्थलं चारुह्य मन्त्रयेः ।
अरण्ये निःशलाके वा न च रात्रौ कथञ्चन ॥ १६-६-२२ (९७४०३)
वानराः पक्षिणश्चैव ये मनुष्यानुकारिणः ।
सर्वे मन्त्रगृहे वर्ज्या ये चापि जडपङ्गवः ॥ १६-६-२३ (९७४०४)
मन्त्रभेदे हि ये दोषा भन्ति पृथिवीक्षिताम् ।
न ते शक्याः समाधातुं कथञ्चिदिति मे मतिः ॥ १६-६-२४ (९७४०५)
दोषांश्च मन्त्रभेदस्य ब्रूयास्त्वं मन्त्रिमण्डले ।
अभेदे च गुणा राजन्पुनःपुनररिंदम ॥ १६-६-२५ (९७४०६)
पौरजानपदानां च शौचशौचे युधिष्ठिर ।
यथा स्याद्विदितं राजंस्तथा कार्यं कुरूद्वह ॥ १६-६-२६ (९७४०७)
व्यवहारश्च ते राजन्नित्यमाप्तैरधिष्ठितः ।
योज्यस्तुष्टैर्हितै राजन्नित्यं चारैरनुष्ठितः ॥ १६-६-२७ (९७४०८)
परिमाणं विदित्वा च दण्डं दण्ड्येषु भारत ।
प्रणयेयुर्यथान्यायं पुरुषास्ते युधिष्ठिर ॥ १६-६-२८ (९७४०९)

आदानरुचयश्चैव परदाराभिमर्शिनः ।
उग्रदण्डिप्रधानाश्च मिथ्याव्याहारिणस्तथा ॥१६-६-२९ (९७४१०)
आक्रोष्टारश्च लुब्धाश्च हर्तारः साहसप्रियाः ।
सभाविहारभेत्तारो वर्णानां च प्रदूषकाः ।
हिरण्यदण्ड्या वध्याश्च कर्तव्या देशकालतः ॥ १६-६-३० (९७४११)
ग्अवरोधभूमौ भृत्यैश्च पानं सह विवर्जयेत् ।
आक्रोशन्त्यनुमत्तास्ते कलत्रं वाऽपि गृह्णते ॥१६-६-३१ (९७४१२)
जिघांसन्त्यपि शस्त्रेण नष्टाः क्रीडन्ति चोत्कटाः ।
नानाक्षेपा व्याहरन्ति गम्यागम्यं न जानते ॥१६-६-३२ (९७४१३)
अतिपानेनि राजाऽपि सर्वं कोशं विनाशयेत् ।
वितरेद्गायकेभ्यश्च वृथा च द्रव्यसञ्चयम् ॥१६-६-३३ (९७४१४)
शब्दमात्मनि दोषांश्च पिबेदेकश्च जायया ।
युक्त्या प्रकाशमयति सुवीर्यस्यि विवृद्धये ॥' १६-६-३४ (९७४१५)
प्रातरेव हि पश्यथा ये कुर्युः प्रियकर्म ते ।
अलङ्कारमथो भोज्यमत ऊर्ध्वं समाचरेः ॥१६-६-३५ (९७४१६)
पश्येथाश्चि ततो योधान्सदा त्वं प्रतिहर्षयन् ।
दूतानां च चराणां च प्रदोषस्ते सदा भवेत् ॥१६-६-३६ (९७४१७)
सदा चापररात्रान्ते भवेत्कार्यार्थनिर्णयः ।
मध्यरात्रे विहारस्ते मध्याह्ने च सदा भवेत् ॥१६-६-३७ (९७४१८)
सर्वे त्वौपयिकाः कालाः कार्याणां भरतर्षभ ।
तथैवालङ्कृतः काले तिष्ठिथा भूरिदक्षिणः ॥१६-६-३८ (९७४१९)
ग्न विद्राव्य च तिष्ठेत परिहार्य विभूषणम् ।
प्रयोज्यं सर्वदैवेह मङ्गल्यं पापनाशनम् ॥' १६-६-३९ (९७४२०)
चक्रवत्तात कार्याणां पर्यायो दृश्यते सदा ।
कोशस्य निचये यत्नं कुर्वीथा न्यायतः सदा ।
विविधस्य महाराज विपरीतं विवर्जयेः ॥ १६-६-४० (९७४२१)
चारैर्विदित्वा शत्रूंश्च ये राज्ञामन्तरैषिणः ।
तानाप्तैः पुरुषैर्दूराद्घातयेथा नराधिप ॥१६-६-४१ (९७४२२)
कर्म दृष्ट्वाऽथ भृत्यांस्त्वं वरयेथाः कुरूद्वह ।
कारयेथाश्च कर्माणि युक्तायुक्तैरधिष्ठितैः ॥१६-६-४२ (९७४२३)
सेनाप्राणेता च भवेत्तव तात दृढव्रतः ।
शूरः क्लेशसहश्चैव हितो भक्तश्च पूरुषः ॥१६-६-४३ (९७४२४)
सर्वे जनपदाश्चैव तव कर्माणि पाण्डव ।
गोवद्रासभवच्चैव कुर्युर्ये व्यवहारिणः ॥१६-६-४४ (९७४२५)
स्वरन्ध्रं पररन्ध्रं च स्वेषु चैव परेषु च ।
उपलक्षयितव्यं ते नित्यमेव युधिष्ठिर ॥१६-६-४५ (९७४२६)

देशजाश्चैव पुरुषा विक्रान्ताः स्वेषु कर्मसु ।
यात्राभिरनुरूपाभिरनुग्राह्या हितास्त्वया ॥ १६-६-४६ (९७४२७)
गुणार्थिनां गुणः कार्यो विदुषा वै जनाधिप ।
अविचार्याश्च ते ते स्युरचला इव नित्यशः ॥ ॥ १६-६-४७ (९७४२८)

इति श्रीमन्महाभारते आश्रमवासिकपर्वणि आश्रमवासपर्वणि
षष्ठोऽध्यायः ॥ ६ ॥
Mahabharata - AshramaVasika Parva - Chapter Footnotes

७-६-५ अभुङ्क्त भुक्तवती ॥
७-६-८ अष्टाङ्गे स्वाम्यमात्यादियुते ॥
७-६-१३ राज्यवत्परिपालयेति क थ पाठः ॥
७-६-१६ अष्टा दुर्गोपरिभागे सञ्चारस्थानानि । षट्पदं षड्भिः
पदैः पदनीयैः स्थानैर्युक्तम्। तेन सप्तप्राकारमिति गम्यते। तत्र
सप्तमस्यान्तःपुरत्वात् षडेवान्येषां पदनीयानि स्थानानि ॥
७-६-२२ निःशलाके अतृणे । सतृणे ह्यासन्नः परचारो ज्ञातुमशक्य इति ॥
७-६-२९ आदानरुचयः उत्कोचोपजीविनः ॥
७-६-३६ प्रदोषो रजनीमुखं दूतादीनां दर्शनकालः । प्रदेयस्ते सदा
भवेदिति क थ पाठः ॥
७-६-४४ गवादिवत् आहारमात्रवेतनाः । व्यवहारिणः कारुशिल्पिप्रभृतयः ॥

---

अस्रमवसिकपर्व-अध्यय००७
॥ श्रीः ॥
१६.७. अध्यायः ७

अथाश्रमवासपर्व ॥ १ ॥
Mahabharata - AshramaVasika Parva - Chapter Topics
धृतराष्ट्रेण युधिष्ठिरंप्रति राजनीतिकथनम् ॥ १ ॥

Mahabharata - AshramaVasika Parva - Chapter Text

धृतराष्ट्र उवाच ।
मण्डलानि च बुध्येथाः परेषामात्मनस्तथा ।
उदासीनगुणानां च मध्यस्थानां च भारत ॥ १६-७-१ (९७४२९)
चतुर्णां शत्रुजातानां सर्वेषामाततायिनाम् ।
मित्रं चामित्रमित्रं च बोद्धव्यं तेऽरिकर्शन ॥ १६-७-२ (९७४३०)

अथ नानाजनपदा दुर्गाणि विविधानि च ।
बलानि च कुरुश्रेष्ठ भवत्येषां यथेच्छकम् ॥१६-७-३ (९७४३१)
ते च द्वादश कौन्तेय राजानो विविधात्मकाः ।
मन्त्रिप्रधानाश्च गुणाः षष्टिर्द्वादश च प्रभो ॥१६-७-४ (९७४३२)
एतन्मण्डलमित्याहुराचार्या नीतिकोविदाः ।
अत्र षाड्गुण्यमाचत्तं युधिष्ठिर निबोध तत् ॥१६-७-५ (९७४३३)
वृद्धिक्षयौ च विज्ञेयौ स्थानं च कुरुसत्तम ।
द्विसप्तत्यां महाबाहो ततः षाड्गुण्यजा गुणाः ॥१६-७-६ (९७४३४)
यथा स्वपक्षो बलवान्परपक्षस्तथा बलः ।
विगृह्य शत्रून्कौन्तेय यायात्क्षितिपतिस्तदा ॥१६-७-७ (९७४३५)
यदा परे च बलिनः स्वपक्षश्चैव दुर्बलः ।
सार्धं विद्वांस्तदा क्षीणः परैः सन्धिं मसाश्रयेत् ॥१६-७-८ (९७४३६)
द्रव्याणां सञ्चयश्चैव कर्तव्यः सुमहांस्तथा ।
यदा समर्था यानाय नचिरेणैव भारत ॥१६-७-९ (९७४३७)
तदा सर्वं विधेयं स्यात्स्थानेन च विचारयेत् ।
भूमिरल्पफला देया विपरीतस्य भारत ॥१६-७-१० (९७४३८)
हिरण्यरूप्यभूयिष्ठं मित्रं क्षीणमकोशभृत् ।
विपरीतं निगृह्णीयात्स्वयं सन्धिविशारदः ॥१६-७-११ (९७४३९)
सन्ध्यर्थं राजपुत्रं वा लिप्सेथा भरतर्षभ ।
विपरीतं न तच्छ्रेयः पुत्र कस्यांचिदापदि ॥१६-७-१२ (९७४४०)
तस्याः प्रमोक्षे यत्नं च कुर्याः सोपायमन्त्रवित् ।
प्रकृतीनां च राजेन्द्र राजा दीनान्विभावयेत् ॥१६-७-१३ (९७४४१)
क्रमेणि युगपद्बुध्वा व्यसनानां बलाबलम् ।
पीडनं स्तंभनं चैव कोशभङ्गस्तथैव च ॥१६-७-१४ (९७४४२)
कार्यं यत्नेन शत्रूणां स्वराज्यं रक्षता स्वयम् ।
न च हिंस्योऽभ्युपगतः सामन्तो वृद्धिमिच्छता ॥१६-७-१५ (९७४४३)
कौन्तेय तद्धितं ते स्यात्पृथिवीं विजिगीषतः ।
गुणानां भेदने योगमीप्सेथाः सह मन्त्रिभिः ॥१६-७-१६ (९७४४४)
साधुसङ्ग्रहणाच्चैव पापनिग्रहणात्तथा ।
आत्मसात्करणे नित्यं पालनानि गृहे तथा ।
दुर्बलाश्चैव सततं नान्वेष्टव्या बलीयसा ॥ १६-७-१७ (९७४४५)
तिष्ठेथा राजशार्दूल वैतसीं वृत्तिमास्थितः ।
यद्येनमभियायाच्च बलवान्दुर्बल नृपः। १६-७-१८ (९७४४६)
सामादिभिरुपायैस्तं क्रमेणि विनिवर्तयेः ।
अशक्नुवंश्च युद्धाय निष्पतेत्सह मन्त्रिभिः ॥१६-७-१९ (९७४४७)
कोशेन पौरैर्दण्डेन ये चास्य प्रियकारिणः ।

असम्भवे तु सर्वस्य यथा मुख्येन निष्पतेत् ।
क्रमेणानेन मोक्षः स्याच्छरीरं प्रति केवलम् ॥ ॥ १६-७-२० (९७४४८)

इति श्रीमन्महाभारते आश्रमवासिकपर्वणि आश्रमवासपर्वणि
सप्तमोऽध्यायः ॥ ७ ॥
Mahabharata - AshramaVasika Parva - Chapter Footnotes

७-७-१ मण्डलानि अरिर्मित्रमित्यादीनि ॥
७-७-३ यथेच्छकं परैर्भेद्यत्वमभेद्यत्वं च भवति
तस्मादवहितस्तिष्ठेत् ।तथामात्या जनपदा इति झ.पाठः।भवत्येषां
स्वकं परमिति थ.पाठः ॥
७-७-४ द्वादश चत्वारः शत्रुजाताः ।षट् आततायिनः।मित्रं
अमित्रमित्रं चेति षष्टिर्गुणाः।कृष्यादीन्यष्टौ
संधानकर्माणि।बालादयो विंशतिरसंधेया।नास्तिक्यादयश्चतुर्दश
दोषाः।मन्त्रादीन्यष्टादश तीर्थानीति।एतेषु केचित् हानार्थं
ज्ञातव्याः केचिदुपादानार्थम् ॥
७-७-५ ततः षाड्गुण्यचारिण इति क.थ.पाठः ॥
७-७-६ द्रव्याणां सञ्चये चैव यत्नः कार्यः सदा भवेत् इति क.पाठः ॥
७-७-९ दीनान् अन्धवधिरादीन् विभावयेत्पूजयेत् ॥
७-७-१३ एनं त्वाम्

---

अस्रमवसिकपर्व-अध्यय००८
॥ श्रीः ॥
१६.८. अध्यायः ८

अथाश्रमवासपर्व ॥ १ ॥
Mahabharata - AshramaVasika Parva - Chapter Topics
धृतराष्ट्रेण युधिष्ठरंप्रति राजनीतिकथनम् ॥ १ ॥

Mahabharata - AshramaVasika Parva - Chapter Text

धृतराष्ट्र उवाच ।
सन्धिविग्रहमप्यत्र पश्येथा राजसत्तम ।
द्वियोनिं विविधोपायं बहुकल्पं युधिष्ठिर ॥ १६-८-१ (९७४४९)
कौरव्य पर्युपासीथाः स्थित्वा द्वैविध्यमात्मनः ।
तुष्टपुष्टजनः शत्रुरर्थवानिति च स्मरेत् ॥ १६-८-२ (९७४५०)

पर्युपासनकाले तु विपरीतं विधीयते ।
आमर्दकाले राजेन्द्र व्यवसायस्ततोऽपरः ॥१६-८-३ (९७४५१)
व्यसनं भेदनं चैव शत्रूणां कारयेत्ततः ।
कर्षणं भीषणं चैव युद्धे चैव बहुक्षयम् ॥१६-८-४ (९७४५२)
प्रयास्यमानो नृपतिस्त्रिविधं परिचिन्तयेत् ।
आत्मनश्चैव शत्रोश्च शक्तिं शास्त्रविशारदः ॥१६-८-५ (९७४५३)
उत्साहप्रभुशक्तिभ्यां मन्त्रशक्त्या च भारत ।
उपपन्नो नृपो यायाद्विपरीतं च वर्जयेत् ॥१६-८-६ (९७४५४)
आददीत बलं राजा मौलं मित्रबलं तथा ।
अटवीबलं भृतं चैव तता श्रेणीबलं प्रभो ॥१६-८-७ (९७४५५)
ग्मित्रामित्रबलं राजन्न्यायाद्बृद्धयुदये धृतः।'
तत्र मित्रबलं राजन्मौलं चैव विशिष्यते ।
श्रेणीबलं भृतं चैव तुल्ये एवेति मे मतिः ॥ १६-८-८ (९७४५६)
तथाऽऽचारबलं चैव परस्परसमं नृप ।
विज्ञेयं बलकालेषु राज्ञा काल उपस्थिते ॥१६-८-९ (९७४५७)
आपदश्चापि बोद्धव्या बहुरूपा नराधिप ।
भवन्ति राज्ञा कौरव्य यास्ताः पृथगतः शृणु ॥१६-८-१० (९७४५८)
विकल्पा बहुधा राजन्नापदां पाण्डुनन्दन ।
सामादिभिरुपन्यस्य गमयेत्तान्नृपः सदा ॥१६-८-११ (९७४५९)
यात्रां गच्छेद्बलैर्युक्तो राजा षड्भिः परंतप ।
युक्तश्च देशकालाभ्यां बलैरात्मगुणैस्तथा ॥१६-८-१२ (९७४६०)
हृष्टपुष्टबलो गच्छेद्राजा वृद्धयुदये रतः ।
अकृशश्चाप्यथो यायादनृतावपि पाण्डव ॥१६-८-१३ (९७४६१)
तृणाश्मानं वाजिरथप्रवाहां
ध्वजद्रुमैः संवृतकूलरोधसम् ।
पदातिनागैर्बहुकर्दमां नदीं
सपत्नानाशे नृपतिः प्रयोजयेत् ॥ १६-८-१४ (९७४६२)
अथोपपत्त्या शकटं पद्मवज्रं च भारत ।
उशना वेद यच्छास्त्रं तत्रैतद्विहितं विभो ॥१६-८-१५ (९७४६३)
चारयित्वा परबलं कृत्वा स्वबलदर्शनम् ।
स्वभूमौ योजयेद्युद्धं परभूमौ तथैव च ॥१६-८-१६ (९७४६४)
बलं प्रसादयेद्राजा निक्षिपेद्बलनो नरान् ।
ज्ञात्वा स्वविषयं तत्र सामादिभिरुपक्रमेत् ॥१६-८-१७ (९७४६५)
सर्वथैव महाराज शरीरं धारयेदिह ।
प्रेत्य चेह च कर्तव्यमात्मनिःश्रेयसं परम् ॥१६-८-१८ (९७४६६)
एवं कुर्वञ्शुभा वाचो लोकेऽस्मिञ्शृणु ते नृप ।

प्रेत्य स्वर्गमवाप्नोति प्रजा धर्मेणि पालयन् ॥१६-८-१९ (९७४६७)
एवं त्वया कुरुश्रेष्ठ वर्तितव्यं प्रजासु वै ।
उभयोर्लोकयोस्तात प्राप्तये नित्यमेव हि ॥१६-८-२० (९७४६८)
भीष्मेण सर्वमुक्तोसि कृष्णेन विदुरेण च ।
मयाऽप्यवश्यं वक्तव्यं प्रीत्या ते नृपसत्तम ॥१६-८-२१ (९७४६९)
एतत्सर्वं यथान्यायं कुर्वीथा भूरिदक्षिण ।
प्रियस्तथा प्रजानां त्वं स्वर्गे सुखमवाप्स्यसि ॥१६-८-२२ (९७४७०)
अश्वमेधसहस्रेण यो यजेत्पृथिवीपतिः ।
पालयेद्वाऽपि धर्मेणि प्रजास्तुल्यं फलं लभेत् ॥ ॥१६-८-२३ (९७४७१)

इति श्रीमन्महाभारते आश्रमवासिकपर्वणि आश्रमवासपर्वणि
अष्टमोऽध्यायः ॥ ८ ॥
Mahabharata - AshramaVasika Parva - Chapter Footnotes

७-८-१ प्रबलप्रतियोगिकौ दुर्बलप्रतियोगिकौ चेति द्वियोनी संधिविग्रहौ ॥
७-८-२ स्थित्वा स्थिरो भूत्वा ।द्वैविध्यं बलाबलं ज्ञात्वा
शत्रुं पर्युपास्स्वेति भावः। स्मरेज्जयोपायं विचारयेन्न
त्वकस्मात्प्रयायात्। जित्वा द्विविधमात्मनेति क पाठः ॥
७-८-३ विपरीतमतुष्टपुष्टबलं प्रयायादित्यर्थः ॥
७-८-४ गमनं वेदनं चैवेति थ पाठः ॥
७-८-७ मौलं धनबलम् ॥
७-८-१३ अनृतौ अकालेऽपि शिशिरादौ ॥
७-८-१५ शकटादयो व्यूहविशेषाः ॥
७-८-१६ साधयित्वा परबलं कृत्वा च बलमर्षणम् इति क थ पाठः ॥

---

अस्रमवसिकपर्व-अध्यय००९
॥ श्रीः ॥
१६.९. अध्यायः ९

अथाश्रमवासपर्व ॥ १ ॥
Mahabharata - AshramaVasika Parva - Chapter Topics
धृतराष्टेण युधिष्ठिरात्सकलपौरजनानयनेन स्वस्य
वनजिगमिषानिवेदनपूर्वकं तान्प्राति तदभ्यनुज्ञानप्रार्थना ॥ १ ॥

Mahabharata - AshramaVasika Parva - Chapter Text

युधिष्ठिर उवाच ।
एवमेतत्करिष्यामि यथाऽऽत्थ पृथिवीपते ।
भूयश्चैवानुशास्योऽहं भवता पार्थिवर्षभ ॥ १६-९-१ (९७४७२)
भीष्मे स्वर्गमनुप्राप्तो गते च मधुसूदने ।
विदुरे संजये चैव कोऽन्यो मां वक्तुमर्हति ॥ १६-९-२ (९७४७३)
यत्तु मामनुशास्तीह भवानद्य हिते स्थितः ।
कर्तास्मि तन्महीपाल निर्वृतो भव पार्थिव ॥ १६-९-३ (९७४७४)
वैशम्पायन उवाच । १६-९-४क्ष् (८०३९)
एवमुक्तः स राजर्षिर्धर्मराजेन धीमता ।
कौन्तेयं समनुज्ञातुमियेष भरतर्षभ ॥ १६-९-४ (९७४७५)
पुत्र विश्राम्यतां तावन्ममापि बलवाञ्श्रमः ।
इत्युक्त्वा प्राविशद्राजा गान्धार्या भवनं तदा ॥ १६-९-५ (९७४७६)
तमासनगतं देवी गान्धारी धर्मचारिणी ।
उवाच काले कालज्ञा प्रजापतिसमं पतिम् ॥ १६-९-६ (९७४७७)
अनुज्ञातः स्वयं तेन व्यासेनि त्वं महर्षिणा ।
युधिष्ठिरस्यानुमते कदाऽरण्यं गमिष्यसि ॥ १६-९-७ (९७४७८)
धृतराष्ट्र उवाच । १६-९-८क्ष् (८०४०)
गान्धार्यहमनुज्ञातः स्वयं पित्रा महात्मना ।
युधिष्ठिरस्यानुमते गन्तास्मि नचिराद्वनम् ॥ १६-९-८ (९७४७९)
अहं हि तावत्सर्वेषां तेषां दुर्द्यूतदेविनाम् ।
पुत्राणां दातुमिच्छामि प्रेत्यभावानुगं वसु ।
सर्वप्रकृतितिसान्निध्यं कारयित्वा स्ववेश्मनि ॥ १६-९-९ (९७४८०)
वैशम्पायन उवाच । १६-९-१०क्ष् (८०४१)
इत्युक्त्वा धर्मराजाय प्रेषयामास वै तदा ।
स च तद्वचनात्सर्वं समानिन्ये महीपतिः ॥ १६-९-१० (९७४८१)
ततः प्रतीतमनसो ब्राह्मणाः कुरुजाङ्गलाः ।
क्षत्रियाश्चैव वैश्याश्च शूद्राश्चैव समाययुः ॥ १६-९-११ (९७४८२)
ततो निष्क्रम्य नृपतिस्तस्मादन्तःकपुरात्तदा ।
ददृशे तं जनं सर्वं सर्वाश्च प्रकृतीस्तथा ॥ १६-९-१२ (९७४८३)
समवेतांश्च तान्सर्वान्पौराञ्जानपदांस्तथा ।
तानागतानभिप्रेक्ष्य समस्तं च सुहृञ्जनम् ॥ १६-९-१३ (९७४८४)
ब्राह्मणांश्च महीपाल नानादेशसमागतान् ।
उवाच मतिमान्राजा धृतराष्ट्रोऽम्बिकासुतः ॥ १६-९-१४ (९७४८५)
भवन्तः कुरवश्चैव चिरकालं सहोषिताः ।
परस्परस्य सुहृदः परस्परहिते रताः ॥ १६-९-१५ (९७४८६)
यदिदानीमहं ब्रूयामस्मिन्काल उपस्थिते ।

तथा भवद्भिः कर्तव्यमविचार्य वचो मम ॥१६-९-१६ (९७४८७)
अरण्यगमने बुद्धिर्गान्धारीसहितस्य मे ।
व्यासस्यानुमते राज्ञस्तथा कुन्तीसुतस्य मे ॥१६-९-१७ (९७४८८)
भवन्तोप्यनुजानन्तु मान्या वोऽभूद्विचारणा ॥ १६-९-१८ (९७४८९)
अस्माकं भवतां चैव येयं प्रीतिर्हि शाश्वती ।
न च साऽन्येषु देशेषु राज्ञामिति मतिर्मम ॥१६-९-१९ (९७४९०)
शान्तोस्मि वयसाऽनेन तथा पुत्रविनाकृतः ।
उपवासकृशश्चास्मि गान्धारीसहितोऽनघाः ॥१६-९-२० (९७४९१)
युधिष्ठिरगते राज्ये प्राप्तश्चास्मि सुखं महत् ।
मन्ये दुर्योधनैश्वर्याद्विशिष्टं बहुभिर्गुणैः ॥१६-९-२१ (९७४९२)
मम चान्धस्य वृद्धस्य हतपुत्रस्य का गतिः ।
ऋते वनं महाभागास्तन्माऽनुज्ञातुमर्हथ ॥१६-९-२२ (९७४९३)
तस्य तद्वचनं श्रुत्वा सर्वे ते कुरुजाङ्गलाः ।
बाप्पसंदिग्धया वाचा रुरुदुर्भरतर्षभ ॥१६-९-२३ (९७४९४)
तानविब्रुवतः किञ्चित्सर्वाञ्शोकपरायणान् ।
पुनरेव महातेजा धृतराष्ट्रोऽब्रवीदिदम् ॥ ॥१६-९-२४ (९७४९५)

इति श्रीमन्महाभारते आश्रमवासिकपर्वणि आश्रमवासपर्वणि
नवमोऽध्यायः ॥९ ॥

---

अस्रमवसिकपर्व-अध्यय०१०
॥ श्रीः ॥
१६.१०. अध्यायः १०

अथाश्रमवासपर्व ॥१ ॥
Mahabharata - AshramaVasika Parva - Chapter Topics
धृतराष्ट्रेण पौरान्प्रति दुर्योधनपक्षपातेन
स्वकृतापनयक्षमापनम् ॥१ ॥

Mahabharata - AshramaVasika Parva - Chapter Text

धृतराष्ट्र उवाच ।
शान्तनुः पालयामास यथावद्वसुधामिमाम् ।
तथा विचित्रवीर्यश्च भीष्मेण परिपालितः ।
पालयामास नस्तातो विदितं वो न संशयः ॥ १६-१०-१ (९७४९६)
यथा च पाण्डुर्भ्राता मे दयितो भवतामभूत् ।

स चापि पालयामास यथावत्तच्च वेत्थ ह ॥ १६-१०-२ (९७४९७)
ग्अनन्तरं हि पितरमनुज्ञातो युधिष्ठिरः ।
नात्र किञ्चिन्मृषा जातु भाषतेति मतिर्मम ॥' १६-१०-३ (९७४९८)
मया च भवतां सम्यक् शुश्रूषा या कृताऽनघाः ।
असम्यग्वा महाभागास्तत्क्षन्तव्यमतन्द्रितैः ॥ १६-१०-४ (९७४९९)
यदा दुर्योधनेनेदं भुक्तं राज्यमकण्टकम् ।
अपि तत्र न वो मन्दो दुर्बुद्धिरपराद्धवान् ॥ १६-१०-५ (९७५००)
तस्यापराधाद्दुर्बुद्धेरभिमानान्महीक्षिताम् ।
विमर्दः सुमहानासीदनयात्स्वकृतादथ ।
ग्घातिताः कौरवेयाश्च पृथिवी च विनाशिता ॥' १६-१०-६ (९७५०१)
तन्मया साधु वाऽपीदं यदि वाऽसाधु वै कृतम् ।
तद्वो हृदि न कर्तव्यं मया बद्धोऽयमञ्जलिः ॥ १६-१०-७ (९७५०२)
वृद्धोऽयं हतपुत्रोऽयं दुःखितोऽयं नराधिपः ।
पूर्वराज्ञां च पुत्रोऽयमिति कृत्वाऽनुजानथ ॥ १६-१०-८ (९७५०३)
इयं च कृपणा वृद्धा हतपुत्रा तपस्विनी ।
गान्धारी पुत्रशोकार्ता तुल्यं याचति वो मया ॥ १६-१०-९ (९७५०४)
हतपुत्राविमौ वृद्धौ विदित्वा दुःखितौ तथा ।
अनुजानीत भद्रं वो व्रजाव शरणं च वः ॥ १६-१०-१० (९७५०५)
अयं च कौरवो राजा कुन्तीपुत्रो युधिष्ठिरः ।
सर्वैर्भवद्भिर्द्रष्टव्यः समेषु विषमेषु च ।
न जातु विषमं चैव गमिष्यति कदाचन ॥ १६-१०-११ (९७५०६)
चत्वारः सचिवा यस्य भ्रातरो विपुलौजसः ।
लोककपालसमा ह्येते सर्वधर्मार्थदर्शिनः ॥ १६-१०-१२ (९७५०७)
ग्चतुर्णां लोकपालानां मध्ये विपरिवर्तते।'
ब्रह्मेव भगवानेष सर्वभूतजगत्पतिः ॥ १६-१०-१३ (९७५०८)
ग्एवमेव महाबाहुर्भीमार्जुनयमैर्वृतः।'
युधिष्ठिरो महातेजा भवतः पालयिष्यति ॥ १६-१०-१४ (९७५०९)
अवश्यमेव वक्तव्यमिति कृत्वा ब्रवीमि वः ।
एष न्यासो मया दत्तः सर्वेषां वो युधिष्ठिरः ।
भवन्तोऽस्य च वीरस्य न्यासभूताः कृता मया ॥ १६-१०-१५ (९७५१०)
यदेव तैः कृतं किञ्चिद्व्यलीकं वः सुतैर्मम ।
यदन्येनि मदीयेन तदनुज्ञातुमर्हथ ॥ १६-१०-१६ (९७५११)
भवद्भिर्न हि मे मन्युः कृतपूर्वः कथञ्चन ।
अत्यन्तगुरुभक्तानामेषोऽञ्जलिरिदं नमः ॥ १६-१०-१७ (९७५१२)
तेषामस्थिरबुद्धीनां लुब्धानां कामचारिणाम् ।
कृते याचेऽद्य वः सर्वान्गान्धारीसहितोऽनघाः ॥ १६-१०-१८ (९७५१३)

इत्युक्तांस्तेन ते सर्वे पौरजानपदा जनाः ।
नोचुर्बाष्पकलाः किञ्चिद्वीक्षांचक्रुः परस्परम् ॥ ॥ १६-१०-१९ (९७५१४)

इति श्रीमन्महाभारते आश्रमवासिकपर्वणि आश्रमवासपर्वणि
दशमोऽध्यायः ॥ १० ॥
Mahabharata - AshramaVasika Parva - Chapter Footnotes

७-१०-७ न कर्तव्यमनुज्ञातुमिहार्हथेति क ट थ पाठः ॥
७-१०-१६ अन्येन भृत्येन । अनुज्ञातुं क्षन्तुम् ॥

---

अस्रमवसिकपर्व-अध्यय०११
॥ श्रीः ॥
१६.११. अध्यायः ११

अथाश्रमवासपर्व ॥ १ ॥
Mahabharata - AshramaVasika Parva - Chapter Topics
पौरजनैर्ब्राह्मणमुखेन धृतराष्ट्रंप्रति समाश्वासनपूर्वकं
कृच्छ्रेणि वनगमनाभ्यनुज्ञानम् ॥ १ ॥

Mahabharata - AshramaVasika Parva - Chapter Text

वैशम्पायन उवाच ।
एवमुक्तास्तु ते तेन पौरजानपदा जनाः ।
वृद्धेन राज्ञा कौरव्य नष्टसंज्ञा इवाभवन् ॥ १६-११-१ (९७५१५)
तूष्णींभूतांस्ततस्तांस्तु वाष्पकण्ठान्महीपतिः ।
धृतराष्ट्रो महीपालः पुनरेवाभ्यभाषत ॥ १६-११-२ (९७५१६)
वृद्धं च हतपुत्रं च धर्मपत्न्या सहानया ।
विलपन्तं बहुविधं कृपणं चैव सत्तमाः ॥ १६-११-३ (९७५१७)
पित्रा स्वयमनुज्ञातं कृष्णद्वैपायनेन वै ।
वनवासाय धर्मज्ञा धर्मजेन नृपेण ह ॥ १६-११-४ (९७५१८)
सोहं पुनःपुनर्याचे शिरसाऽवनतोऽनघाः ।
गान्धार्या सहितं तन्मां समनुज्ञातुमर्हथ ॥ १६-११-५ (९७५१९)
वैशम्पायन उवाच। १६-११-६क्ष् (८०४२)
तच्छ्रुत्वा कुरुराजस्य वाक्यानि करुणानि ते ।
रुरुदुः सर्वशो राजन्समेताः कुरुजाङ्गलाः ॥ १६-११-६ (९७५२०)
उत्तरीयैः करैश्चापि संछाद्य वदनानि ते ।

रुरुदुः शोकसंतप्ता मुहूर्तं पितृमातृवत् ॥ १६-११-७ (९७५२१)
हृदयैः शून्यभूतैस्ते धृतराष्ट्रप्रवासजम् ।
दुःखं संधारयन्तो हि नष्टसंज्ञा इवाभवन् ॥ १६-११-८ (९७५२२)
ते विनीय तमायासं धृतराष्ट्रवियोगजम् ।
शनैः शनैस्तदाऽन्योन्यमब्रुवन्स्वमतान्युत ॥ १६-११-९ (९७५२३)
ततः सञ्चिन्त्य ते सर्वे वाक्यान्यथ समासतः ।
एकस्मिन्ब्राह्मणे कार्यमावेस्योचुर्नराधिपम् ॥ १६-११-१० (९७५२४)
ततः स्वाचरणो विप्रः सम्मतोऽर्थविशारदः ।
सम्भाव्यो बह्वचो राजन्वक्तुं समुपचक्रमे ॥ १६-११-११ (९७५२५)
अनुमान्य महाराजं सदः समनुभाष्य च ।
विप्रः प्रगल्भो मेधावी स राजानमुवाच ह ॥ १६-११-१२ (९७५२६)
राजन्वाक्यं जनस्यास्य मयि सर्वं समर्पितम् ।
वक्ष्यामि तदहं वीर तज्जुषस्व नपाधिप ॥ १६-११-१३ (९७५२७)
यथा वदसि राजेन्द्र सर्वमेतत्तथा विभो ।
नात्र मिथ्या वचः किञ्चित्सुहृत्त्वं नः परस्परम् ॥ १६-११-१४ (९७५२८)
न जात्वस्य च वंशस्य राज्ञां कश्चित्कदाचन ।
राजाऽऽसीद्यः प्रजापालः प्रजानामप्रियोऽभवत् ॥ १६-११-१५ (९७५२९)
पितृवन्मातृवच्चैव भवन्तः पालयन्ति नः ।
न च दुर्योधनः किञ्चिदयुक्तं कृतवान्नृपः ॥ १६-११-१६ (९७५३०)
गप्रियाणि कुर्वन्सर्वेषामनुवृत्त्यर्थमुद्यतः।'
यथा ब्रवीति धर्मात्मा मुनिः सत्यवतीसुतः ।
तथा कुरु महाराज स हि नः परमो गुरुः ॥ १६-११-१७ (९७५३१)
त्यक्ता वयं तु भवता दुःखशोकपरायणाः ।
भविष्यामश्चिरं राजन्भवद्गुणशतैर्हृताः ॥ १६-११-१८ (९७५३२)
यथा शन्तनुना गुप्ता राज्ञा चित्राङ्गदेन च ।
भीष्मवीर्योपगूढेन पित्रा तव च पार्थिव ।
भवद्बुद्धियुजा चैवि पाण्डुना पृथिवीक्षिता ॥ १६-११-१९ (९७५३३)
तथा दुर्योधनेनापि राज्ञा सुपरिपालिताः ।
न स्वल्पमपि पुत्रस्ते व्यलीकं कृतवान्नृप। १६-११-२० (९७५३४)
पितरीव सुविश्वस्तास्तस्मिन्नपि नराधिपे ।
वयसा स्म यथा सम्यग्भवतो विदितं तथा ॥ १६-११-२१ (९७५३५)
तथा वर्षसहस्राणि कुन्तीपुत्रेण धीमता ।
पाल्यमाना धृतिमता सुखं विन्दामहे नृप ॥ १६-११-२२ (९७५३६)
राजर्षीणां पुराणानां भवतां पुण्यकर्मणाम् ।
कुरुसंवरणादीनां भरतस्य च धीमतः ॥ १६-११-२३ (९७५३७)
वृत्तं समनुयात्येष धर्मात्मा भूरिदक्षिणः ।

नात्र वाच्यं महाराज सुसूक्ष्ममपि विद्यते ॥ १६-११-२४ (९७५३८)
उषिताः स्म सुखं नित्यं भवता परिपालिताः ।
सुसूक्ष्मं च व्यलीकं ते सपुत्रस्य न विद्यते ॥ १६-११-२५ (९७५३९)
यत्तु ज्ञातिविमर्देऽस्मिन्नात्थ दुर्योधनं प्रति ।
भन्तमनुनेष्यामि तत्रापि कुरुनन्दन ॥ १६-११-२६ (९७५४०)
न तद्दुर्योधनकृतं न च तद्भवता कृतम् ।
न कर्णसौबलाभ्यां च कुरवो यत्क्षयं गताः ॥ १६-११-२७ (९७५४१)
दैवं तत्तु विजानीमो यन्न शक्यं प्रबाधितुम् ।
दैवं पुरुषकारेणि न शक्यमपि बाधितुम् ॥ १६-११-२८ (९७५४२)
अक्षौहिण्यो महाराज दशाष्टौ च समागताः ।
अष्टादशाहेन हताः कुरुभिर्योधपुङ्गवैः ॥ १६-११-२९ (९७५४३)
भीष्मद्रोणकृपाद्यैश्च कर्णेन च महात्मना ।
युयुधानेन वीरेण धृष्टद्युम्नेन चाहवे ॥ १६-११-३० (९७५४४)
चतुर्भिः पाण्डुपुत्रैश्च भीमार्जुनयमैस्तथा ।
न च क्षयोऽयं नृपते ऋते दैवबलादभूत् ॥ १६-११-३१ (९७५४५)
अवश्यमेव सङ्ग्रामे क्षत्रियेण विशेषतः ।
कर्तव्यं निधनं काले मर्तव्यं क्षत्रबन्धुना ॥ १६-११-३२ (९७५४६)
तैरियं पुरुषव्याघ्रैर्विद्याबाहुबलान्वितैः ।
पृथिवी निहता सर्वा सहया सरथद्विपा ॥ १६-११-३३ (९७५४७)
न स राज्ञां वधे सूनुः कारणं ते महात्मनाम् ।
न भवान्न च ते भृत्या न कर्णो न च सौबलः ॥ १६-११-३४ (९७५४८)
यद्विशस्ताः कुरुश्रेष्ठ राजानश्च सहस्रशः ।
सर्वं दैवकृतं विद्धि कोत्र किं वक्तुमर्हति ॥ १६-११-३५ (९७५४९)
गुरुर्मतो भवानस्य कृत्स्नस्य जगतः प्रभुः ।
धर्मात्मानमतस्तुभ्यमनुजानीमहे सुतम् ॥ १६-११-३६ (९७५५०)
लभतां वीरलोकं स ससहायो नराधिपः ।
द्विजाग्र्यैः समनुज्ञातस्त्रिदिवे मोदतां सुखम्। १६-११-३७ (९७५५१)
प्राप्स्यते च भवान्पुण्यं धर्मे च सततं स्थितः ।
वेद धर्मं महाबाहो लौक्यं वैदिकमेव च ॥ १६-११-३८ (९७५५२)
दृष्टापदानाश्चास्माभिः पाण्डवाः पुरुषर्षभाः ।
समर्थास्त्रिदिवस्यापि पालने किं पुनः क्षितेः ॥ १६-११-३९ (९७५५३)
अनुवर्त्स्यन्ति वा धीमन्समेषु विषमेषु च ।
प्रजाः कुरुकुलश्रेष्ठ पाण्डवाञ्शीलभूषणान् ॥ १६-११-४० (९७५५४)
ब्रह्मदेयाग्रहारांश्च पारिबर्हांश्च पार्थिवः ।
पूर्वराजातिसर्गांश्च पालयत्येव पाण्डवः ॥ १६-११-४१ (९७५५५)
दीर्घदर्शी मृदुर्दान्तः सदा वैश्रवणो यथा ।

अक्षुद्रसचिवश्चायं कुन्तीपुत्रो महामनाः ॥ १६-११-४२ (९७५५६)
अप्यमित्रे दयावांश्च शुचिश्च भरतर्षभः ।
ऋजु पश्यति मेधावी पुत्रवत्पाति नः सदा ॥ १६-११-४३ (९७५५७)
विप्रियं च जनस्यास्य संसर्गाद्धर्मजस्य वै ।
न करिष्यन्ति राजर्षे तथा भीमार्जुनादयः ॥ १६-११-४४ (९७५५८)
मन्दा मृदुषु कौरव्य तीक्ष्णेष्वाशीविषोपमाः ।
वीर्यवन्तो महात्मानः पौराणां च हिते रताः ॥ १६-११-४५ (९७५५९)
न कुन्ती न च पाञ्चाली न चोलूपी न सात्वती ।
अस्मिञ्जने करिष्यन्ति प्रतिकूलानि कर्हिचित् ॥ १६-११-४६ (९७५६०)
भवत्कृतमिमं स्नेहं युधिष्ठिरविवर्धितम् ।
न पृष्ठतः करिष्यन्ति पौरा जानपदा जनाः ॥ १६-११-४७ (९७५६१)
अधर्मिष्ठानपि सतः कुन्तीपुत्रा महारथाः ।
मानवान्पालयिष्यन्ति भूत्वा धर्मपरायणाः ॥ १६-११-४८ (९७५६२)
स राजन्मानसं दुःखमपनीय युधिष्ठिरात् ।
कुरु कार्याणि धर्म्याणि नमस्ते पुरुषर्षभ ॥ १६-११-४९ (९७५६३)
वैशम्पायन उवाच । १६-११-५०क्ष् (८०४३)
तस्य तद्वचनं धर्म्यमनुमान्य गुणोत्तरम् ।
साधुसाध्विति सर्वः स जनः प्रतिगृहीतवान् ॥ १६-११-५० (९७५६४)
धृतराष्ट्रश्च तद्वाक्यमभिपूज्य पुनःपुनः ।
विसर्जयामास तदा प्रकृतीस्तु शनैःशनैः ॥ १६-११-५१ (९७५६५)
स तैः सम्पूजितो राजा शिवेनावेक्षितस्तथा ।
प्राञ्जलिः पूजयामास तं जनं भरतर्षभ ॥ १६-११-५२ (९७५६६)
ततो विवेश भवनं गान्धार्या सहितो निजम् ।
आगतायां च शर्वर्यां सुखं शेते नराधिपः ॥ ॥ १६-११-५३ (९७५६७)

इति श्रीमन्महाभारते आमश्रवासिकपर्वणि आश्रमवासपर्वणि
एकादशोऽध्यायः ॥ ११ ॥

---

अस्रमवसिकपर्व-अध्यय०१२
॥ श्रीः ॥
१६.१२. अध्यायः १२

अथाश्रमवासपर्व ॥ १ ॥
Mahabharata - AshramaVasika Parva - Chapter Topics
धृतराष्ट्रेण भीष्मदुर्योधनादीनां श्राद्धदानाय
विदुरमुखाद्युधिष्ठिरंप्रति द्रव्ययाचनम् ॥ १ ॥

तच्छ्रवणेन विमनायमाभीमे तद्वादद्वेनार्जुनेन तम्प्रति द्रव्ययाचने भीमेन धृतराष्ट्रापनयानुस्मारणपूर्वकं तदनङ्गीकरणम् ॥ २ ॥

Mahabharata - AshramaVasika Parva - Chapter Text

वैशम्पायन उवाच ।
ततो रजन्यां व्युष्टायां धृतराष्ट्रोऽम्बिकासुतः ।
विदुरं प्रेषयामास युधिष्ठिरनिवेशनम् ॥ १६-१२-१ (९७५६८)
स गत्वा राजवचनादुवाचाच्युतमीश्वरम् ।
युधिष्ठि महातेजाः सर्वबुद्धिमतांवरः ॥ १६-१२-२ (९७५६९)
धृतराष्ट्रो महाराजो वनवासाय दीक्षितः ।
गमिष्यति वनं राजन्नागतां कार्तिकीमिमाम् ॥ १६-१२-३ (९७५७०)
स त्वां कुरुकुलश्रेष्ठ किञ्चिर्थमभीप्सति ।
श्राद्धमिच्छति दातुं स गाङ्गेयस्य महात्मनः ॥ १६-१२-४ (९७५७१)
द्रोणस्य सोमदत्तस्य बाह्लीकस्य च धीमतः ।
पुत्राणां चैव सर्वेषां ये चान्ये सुहृदो हताः ।
यदि चाप्यनुजानीषे सैन्धवापशदस्य च ॥ १६-१२-५ (९७५७२)
एतच्छ्रुत्वा तु वचनं विदुरस्य युधिष्ठिरः ।
हृष्टःक सम्पूजयामास गुडोकेशश्च पाण्डवः ॥ १६-१२-६ (९७५७३)
न च भीमो दृढक्रोधस्तद्वचो जगृहे तदा ।
विदुरस्य महातेजा दुर्योधनकृतं स्मरन् ॥ १६-१२-७ (९७५७४)
अभिप्रायं विदित्वा तु भीमतसेनस्य फल्गुनः ।
किरीटी किञ्चिदानम्य तमुवाच नरर्षभम् ॥ १६-१२-८ (९७५७५)
भीम राजा पिता वृद्धो वनवासाय दीक्षितः ।
दातुमिच्छति सर्वेषां सुहृदामौर्ध्वदेहिकम् ॥ १६-१२-९ (९७५७६)
भवता निर्जितं वित्तं दातुमिच्छति कौरवः ।
भीष्मादीनां महाबाहो तदनुज्ञातुमर्हसि ॥ १६-१२-१० (९७५७७)
दिष्ट्या त्वद्य महाबाहो धृतराष्ट्रः प्रयाचते ।
याचितो यः पुराऽस्माभिः पश्य कालस्य पर्ययम् ॥ १६-१२-११ (९७५७८)
योसौ पृथिव्याः कृत्स्नाया भर्ता भूत्वा नराधिपः ।
परैर्विनिहतामात्यो वनं गन्तुमभीप्सति ॥ १६-१२-१२ (९७५७९)
मा तेऽन्यत्पुरुषव्याघ्र दानाद्भवतु दर्शनम् ।
अयशस्यमतोऽन्यत्स्यादधर्मश्च महाभुजः ॥ १६-१२-१३ (९७५८०)
राजानमुपतिष्ठस्व ज्येष्ठं भ्रातरमीश्वरम् ।
अर्हस्त्वमसि दातुं वै नादातुं भरतर्षभ ॥ १६-१२-१४ (९७५८१)

एवं ब्रुवाणं बीभत्सुं धर्मराजोऽप्यपूजयत् ।
भीमसेनस्तु सक्रोधमुवाच विजयं तदा ॥ १६-१२-१५ (९७५८२)
वयं भीष्मस्य दास्यामः प्रेतकार्यं तु फल्गुन ।
सोमदत्तस्य नृपतेर्भूरिश्रवस एव च ॥ १६-१२-१६ (९७५८३)
बाह्लीकस्य च राजर्षेर्द्रोणस्य च महात्मनः ।
अन्येषां चैव सुहृदां कुन्ती कर्णाय दास्यति ॥ १६-१२-१७ (९७५८४)
श्राद्धानि पुरुषव्याघ्र मा प्रदात्कौरवो नृपः ।
इति मे वर्तते बुद्धिर्मा वो नन्दन्तु शत्रवः ॥ १६-१२-१८ (९७५८५)
कष्टात्कष्टतरं यान्तु सर्वे दुर्योधनादयः ।
यैरियं पृथिवी कृत्स्ना घातिता कुलपांसनैः ॥ १६-१२-१९ (९७५८६)
कुतस्त्वमद्य विस्मृत्य वैरं द्वादशवार्षिकम् ।
अज्ञातवासगमनं द्रौपदीशोकवर्धनम् ॥ १६-१२-२० (९७५८७)
क्व तदा धृतराष्ट्रस्य स्नेहोऽस्मद्गोचरो गतः ।
कृष्णाजिनोपसंवीतो हृताभरणभूषणः ।
सार्धं पाञ्चालपुत्र्या त्वं राजानमुपजग्मिवान् ॥ १६-१२-२१ (९७५८८)
क्व तदा द्रोणभिष्मौ तौ सोमदत्तोपि वाऽभवत् ।
यत्र द्वादश वर्षाणि वने वन्येन जीवथ ।
न तदा त्वां पिता ज्येष्ठः पितृत्वेनाभिवीक्षते ॥ १६-१२-२२ (९७५८९)
किं ते तद्विस्मृतं पार्थक यदेष कुलपांसनः ।
दुर्बुद्धिर्विदुरं प्राह द्यूते किं जितमित्युत ॥ १६-१२-२३ (९७५९०)
तमेवंवादिनं राजा कुन्तीपुत्रो युधिष्ठिरः ।
उवाच वचनं धीमाञ्जोषमास्स्वेति भर्त्सयन् ॥ ॥ १६-१२-२४ (९७५९१)

इति श्रीमन्महाभारते आश्रमवासिकपर्वणि आश्रमवासपर्वणि
द्वादशोऽध्यायः ॥ १२ ॥

Mahabharata - AshramaVasika Parva - Chapter Footnotes

७-१२-४ किञ्चिदर्थं किञ्चित्कार्यं कर्तुं त्वामभीप्सति द्रष्टुमिति
शेषः ॥
७-१२-८ किञ्चिदागम्य भीमं वचनमब्रवीदिति क थ पाठः ॥

---

अस्रमवसिकपर्व-अध्यय०१३
॥ श्रीः ॥
१६.१३. अध्यायः १३

अथाश्रमवासपर्व ॥ १ ॥

Mahabharata - AshramaVasika Parva - Chapter Topics

भीमे दुर्योधनादिभ्यः श्राद्धदानाय धनदानमरोचयति
सति युधिष्ठिरेण विदुरंप्रति धृतराष्ट्रे
निजगृहकोशाद्धनदाननिवेदनकथनम् ॥ १ ॥

Mahabharata - AshramaVasika Parva - Chapter Text

अर्जुन उवाच ।
भीम ज्येष्ठो गुरुर्मे त्वं नातोऽन्यद्वमुक्तुमुत्सहे ।
धृताराष्ट्रस्तु राजर्षिः सर्वथा मानमर्हति ॥ १६-१३-१ (९७५९२)
न स्मरन्त्यपराद्धानि स्मरन्ति सुकृतान्यपि ।
असंभिन्नार्थमर्यादाः साधवः पुरुषोत्तमाः ॥ १६-१३-२ (९७५९३)
इति तस्य वचः श्रुत्वा फल्गुनस्य महात्मनः ।
विदुरं प्राह धर्मात्मा कुन्तीपुत्रो युधिष्ठिरः ॥ १६-१३-३ (९७५९४)
इदं मद्वचनात्क्षत्तः कौरवं ब्रूहि पार्थिवम् ।
यावदिच्छति पुत्राणां दातुं तावद्ददाम्यहम् ॥ १६-१३-४ (९७५९५)
भीष्मादीनां च सर्वेषां सुहृदामुपकारिणाम् ।
मम कोशादिति विभो मा भूद्भीमः सुदुर्मनाः ॥ १६-१३-५ (९७५९६)
वैशम्पायन उवाच। १६-१३-६क्ष् (८०४४)
इत्युक्त्वा धर्मराजस्तमर्जुनं प्रत्यपूजयत् ।
भीमसेनः कटाक्षेण वीक्षांचक्रे धनंजयम् ॥ १६-१३-६ (९७५९७)
ततः स विदुरं धीमान्वाक्यमाह युधिष्ठिरः ।
न भीमसेन कोपं स नृपतिः कर्तुमर्हति ॥ १६-१३-७ (९७५९८)
परिक्लिष्टो हि भीमस्तु हिमवृष्ट्यातपादिभिः ।
दुःखैर्बहुविधैर्धीमानरण्ये विदितं तव ॥ १६-१३-८ (९७५९९)
किंतु मद्वचनाद्ब्रूहि राजानं भरतर्षभम् ॥
यद्यदिच्छसि यावच्च गृह्यतां मद्गृहादिति ॥ १६-१३-९ (९७६००)
यन्मात्सर्यमयं भीमः करोति भृशदुःखितः ।
न तन्मनसि कर्तव्यमिति वाच्यः स पार्थिवः ॥ १६-१३-१० (९७६०१)
यन्ममास्ति धनं किञ्चिदर्जुनस्य च वेश्मनि ।
तस्य स्वामी महाराज इति वाच्यः स पार्थिवः ॥ १६-१३-११ (९७६०२)
ददातु राजा विप्रेभ्यो यथेष्टं क्रियतां व्ययः ।
पुत्राणां सुहृदां चैव गच्छत्वानृण्यमद्य सः ॥ १६-१३-१२ (९७६०३)
इदं चापि शरीरं मे तवायत्तं जनाधिप ।
धनानि चेति विद्धि त्वं क्षत्तर्नास्त्यत्र संशयः ॥ ॥ १६-१३-१३ (९७६०४)

इति श्रीमन्महाभारते आश्रमवासिकपर्वणि आश्रमवासपर्वणि
त्रयोदशोऽध्यायः ॥। १३ ॥

---

अस्रमवसिकपर्व-अध्यय०१४
॥ श्रीः ॥
१६.१४. अध्यायः १४

अथाश्रमवासपर्व ॥ १ ॥
Mahabharata - AshramaVasika Parva - Chapter Topics
विदुरेण धृतराष्ट्रंप्रति युधिष्ठिरेण भीष्मादीनां श्राद्धदानाय
धनदानाङ्गीकरणनिवेदनम् ॥ १ ॥

Mahabharata - AshramaVasika Parva - Chapter Text

वैशम्पायन उवाच ।
एवमुक्तस्तु राज्ञा स विदुरो बुद्धिसत्तमः ।
धृतराष्ट्रमुपेत्यैव वाक्यमाह महार्थवत् ॥ १६-१४-१ (९७६०५)
उक्तो युधिष्ठिरो राजा भवद्वचनमादितः ।
स च संश्रुत्य वाक्यं ते प्रशशंस महाद्युतिः ॥ १६-१४-२ (९७६०६)
बीभत्सुश्च महातेजा निवेदयति ते गृहान् ।
वसु तस्य गृहे यच्च प्राणानपि च केवलान् ॥ १६-१४-३ (९७६०७)
धर्मराजश्च पुत्रस्ते राज्यं प्राणान्धनानि च ।
अनुजानाति राजर्षे यच्चान्यदपि किञ्चन ॥ १६-१४-४ (९७६०८)
भीमस्तु सर्वदुःखानि संस्मृत्य बहुलान्युत ।
कृच्छ्रादिव महाबाहुरनुजज्ञे विनिःश्वसन् ॥ १६-१४-५ (९७६०९)
र राजन्धर्मशीलेन राज्ञा बीभत्सुना तथा ।
अनुनीतो महाबाहुः सौहृदे स्थापितोपि च ॥ १६-१४-६ (९७६१०)
न च मन्युस्त्वया कार्य इति त्वां प्राह धर्मराट् ।
संस्मृत्य भीमस्तद्वैरं यदन्यायवदाचरत् ॥ १६-१४-७ (९७६११)
एवंप्रायो हि धर्मोऽयं क्षत्रियाणां नराधिप ।
शुद्धे क्षत्रियधर्मे न निरतोऽयं वृकोदरः ॥ १६-१४-८ (९७६१२)
वृकोदरकृते चाहमर्जुनश्च पुनः पुनः ।
प्रसीद याचे नृपते भवान्प्रभुरिहास्ति यत् ॥ १६-१४-९ (९७६१३)
तद्ददातु भवान्वित्तं यावदिच्छसि पार्थिवः ।
त्वमीश्वरो नो राज्यस्य प्राणानामपि भारत ॥ १६-१४-१० (९७६१४)

ब्रह्मदेयाग्रहारांश्च पुत्राणामौर्ध्वदेहिकम् ।
इतो रत्नानि गाश्चैव दासीदासमजाविकम् ॥१६-१४-११ (९७६१५)
अर्चयित्वा कुरुश्रेष्ठो ब्राह्मणेभ्यः प्रयच्छतु ।
दीनान्धकृपणेभ्यश्च तत्रतत्र नृपाज्ञया ॥१६-१४-१२ (९७६१६)
बह्वन्नरसपानाढ्याः सभा विदुर कारय ।
गवां निपानान्यन्यच्च विविधं पुण्यकं कुरु ॥१६-१४-१३ (९७६१७)
इति मामब्रवीद्राजा पार्थश्चैव धनंजयः ।
यदत्रानन्तरं कार्यं तद्भवम्ववक्तुमर्हति ॥१६-१४-१४ (९७६१८)
इत्युक्ते विदुरेणाथ धृतराष्ट्रोऽभिनन्द्य तान् ।
मनश्चक्रे महादाने कार्तिक्यां जनमेजय ॥१६-१४-१५ (९७६१९)
॥ इती श्रीमन्महाभारते आश्रमवासिकपर्वणि आश्रमवासपर्वणि
चतुर्दशोऽध्यायः ॥१४ ॥

---

अस्रमवसिकपर्व-अध्यय०१५
॥ श्रीः ॥
१६.१५. अध्यायः १५

अथाश्रमवासपर्व ॥१ ॥
Mahabharata - AshramaVasika Parva - Chapter Topics
धृतराष्ट्रेण भीष्मदुर्योधनाद्युद्देश्यकश्राद्धे धनवस्त्रान्नादिना
ब्राह्मणादिसंतर्पणम् ॥१ ॥

Mahabharata - AshramaVasika Parva - Chapter Text

वैशम्पायन उवाच ।
विदुरेणैवमुक्तस्तु धृतराष्ट्रो जनाधिपः ।
प्रीतिमानभवद्राजन्राज्ञो जिष्णोश्च कर्मणा ॥१६-१५-१ (९७६२०)
ततोऽभिरूपान्भीष्माय ब्राह्मणानृषिसत्तमान् ।
पुत्रार्थे सुहृदां चैव स समीक्ष्य सहस्रशः ॥१६-१५-२ (९७६२१)
कारयित्वाऽन्नपानानि यानान्याच्छादनानि च ।
सुवर्णमणिरत्नानि दासीदासपरिच्छदान् ॥१६-१५-३ (९७६२२)
कंबलानि च रत्नानि ग्रामान्क्षेत्रं तथा धनम् ।
सालङ्कारान्गजानश्वान्कन्याश्चैव वरस्त्रियः ॥१६-१५-४ (९७६२३)
आदिश्यादिश्य सर्वेभ्यो ददौ स नृपसत्तमः ।
द्रोणं संकीर्त्य भीष्मं च सोमदत्तं च बाह्लिकम् ॥१६-१५-५ (९७६२४)
दुर्योधनं च राजानं पुत्रांश्चैव पृथक्पृथक् ।

जयद्रथपुरोगांश्च सुहृदश्चापि सर्वशः ॥ १६-१५-६ (९७६२५)
स श्राद्धयज्ञो ववृते बहुगोधनदक्षिणः ।
अनेकधनरत्नौघो युधिष्ठिरमते तदा ॥ १६-१५-७ (९७६२६)
अनिशं यत्र पुरुषा गणका लेखकास्तदा ।
युधिष्ठिरस्य वचनादपृच्छन्त स्म तं नृपम् ॥ १६-१५-८ (९७६२७)
आज्ञापय किमेतेभ्यः प्रदेयं दीयतामिति ।
तदुपस्थितमेवात्र वचनान्ते ददुस्तदा ॥ १६-१५-९ (९७६२८)
शते देये दशशतं सहस्रं चायुतं तथा ।
दीयते वचनाद्राज्ञः कुन्तीपुत्रस्य धीमतः ॥ १६-१५-१० (९७६२९)
एवं स वसुधाराभिर्वर्षमाणो नृपांबुदः ।
तप्रयामास विप्रांस्तान्वर्षन्भूमिमिवांबुदः ॥ १६-१५-११ (९७६३०)
ततोऽन्तन्तरमेवात्र सर्ववर्णान्महामते ।
अन्नपानरसौघेण प्लावयामास पार्थिवः ॥ १६-१५-१२ (९७६३१)
सवस्त्रधनरत्नौघो मृदङ्गनिनदस्वनः ।
गवाश्वमकरावर्तो नानारत्नमहाकरः ॥ १६-१५-१३ (९७६३२)
ग्रामाग्रहारद्वीपाढ्यो मणिहेमजलार्णवः ।
जगत्संप्लावयामास धृतराष्ट्रोडुपोद्धतः ॥ १६-१५-१४ (९७६३३)
एवं स पुत्रपौत्राणां पितॄणामात्मनस्तथा ।
गान्धार्याश्च महाराज प्रददावौर्द्ध्वदेहिकम् ॥ १६-१५-१५ (९७६३४)
परिश्रान्तो यदासीत्स ददद्दानान्यनेकशः ।
निवर्तयामास तदा दानयज्ञं नराधिपः ॥ १६-१५-१६ (९७६३५)
एवं स राजा कौरव्यश्चक्रे दानमहाक्रतुम् ।
नटनर्तकलास्याढ्यं बह्वन्नरसदक्षिणम् ॥ १६-१५-१७ (९७६३६)
दशाहमेवं दानानि दत्त्वा राजांऽबिकासुतः ।
बभूव पुत्रपौत्राणामनृणो भरतर्षभ ॥ ॥ १६-१५-१८ (९७६३७)

इति श्रीमन्महाभारते आश्रमवासिकपर्वणि आश्रमवासपर्वणि
पञ्चदशोऽध्यायः ॥ १५ ॥

Mahabharata - AshramaVasika Parva - Chapter Footnotes

७-१५-१३ सवस्त्रफेनरतौघ इति क थ पाठः ॥

---

अस्रमवसिकपर्व-अध्यय०१६
॥ श्रीः ॥
१६.१६. अध्यायः १६

अथाश्रमवासपर्व ॥ १ ॥

Mahabharata - AshramaVasika Parva - Chapter Topics

धृतराष्ट्रेण कुन्तीस्कन्धावसक्तहस्ताया गान्धार्या अंसावलम्बनेन सशोकैः पौरैर्युधिष्ठिरादिभिश्चानुगम्यमानेन सता वनं प्रति प्रस्थानम् ॥ १ ॥

Mahabharata - AshramaVasika Parva - Chapter Text

वैशम्पायन उवाच ।
ततः प्रभाते राजा स धृतराष्ट्रोऽम्बिकासुतः ।
आनाय्य पाण्डवान्वीरान्वनवासे कृतक्षणः ॥ १६-१६-१ (९७६३८)
गान्धारीसहितो धीमानभ्यनन्दद्यथाविधि ।
कार्तिक्यां कारयित्वेष्टिं ब्राह्मणैर्वेदपारगैः ॥ १६-१६-२ (९७६३९)
अग्निहोत्रं पुरस्कृत्य वल्कलाजिनसंवृतः ।
वधूजनवृतो राजा निर्ययौ भवनात्ततः ॥ १६-१६-३ (९७६४०)
ततः स्त्रियः कौरवपाण्डवानां
याश्चापराः कौरवराजवंश्याः ।
तासां नादः प्रादुरासीत्तदानीं
वैचित्रवीर्ये नृपतौ प्रयाते ॥ १६-१६-४ (९७६४१)
ततो लाजैः सुमनोभिश्च राजा
विचित्राभिस्तद्गृहं पूजयित्वा ।
संयोज्यार्थैर्भृत्यवर्गं च सर्वं
ततः समुत्सृज्य ययौ नरेन्द्रः ॥ १६-१६-५ (९७६४२)
ततो राजा प्राञ्जलिर्वेपमानो
युधिष्ठिरः सस्वरं बाष्पकण्ठः ।
विनद्योच्चैर्गां महाराज साधो
क्व यास्यसीत्यपतत्ताति भूमौ ॥ १६-१६-६ (९७६४३)
तथाऽर्जुनस्तीव्रदुःखाभितप्तो
मुहुर्मुहुर्निः श्वसन्भारताग्र्यः ।
युधिष्ठिरं मैवमित्येवमुक्त्वा
निगृह्याथो दीनतरो बभूव ॥ १६-१६-७ (९७६४४)
वृकोदरः फल्गुनश्चैव वीरौ
माद्रीपुत्रौ विदुरः संजयश्च ।
वैश्यापुत्रः सहितो गौतमेन
धौम्यो विप्राश्चान्वयुर्बाष्पकण्ठाः ॥ १६-१६-८ (९७६४५)

कुन्ती गान्धारीं बद्धनेत्रां व्रजन्तीं
स्कन्धासक्तं हस्तमथोद्वहन्ती ।
राजा गान्धार्याः स्कन्धदेशेऽवसज्य
पाणिं ययौ धृतराष्ट्रः प्रतीतः ॥ १६-१६-९ (९७६४६)
तथा कृष्णा द्रौपदी यादवी च
बालापत्या चोत्तरा कौरवी च ।
चित्राङ्गदा याश्च काश्चित्स्त्रियोऽन्याः
सार्धं राज्ञा प्रस्थितास्ता वधूभिः ॥ १६-१६-१० (९७६४७)
तासां नादो रुदतीनां तदाऽऽसी-
द्राजन्दुःखात्कुररीणामिवोच्चैः ।
ततो निष्पेतुर्ब्राह्मणक्षत्रियाणां
विट्शूद्राणां चैव भार्याः समन्तात् ॥ १६-१६-११ (९७६४८)
तन्निर्याणे दुःखितः पौरवर्गो
गजाह्वये चैव बभूव राजन् ।
यथापूर्वं गच्छतां पाण्डवानां
द्यूते राजन्कौरवाणां सभायाम् ॥ १६-१६-१२ (९७६४९)
या नापश्यच्चन्द्रमा नैव सूर्यो
रामाः काश्चित्ताः स्म तस्मिन्नरेन्द्रे ।
महावनं गच्छति कौरवेन्द्रे
शोकेनार्ता राजमार्गं प्रपेदुः ॥ ॥ १६-१६-१३ (९७६५०)

इति श्रीमन्महाभारते आश्रमवासिकपर्वणि आश्रमवासपर्वणि
षोडशोऽध्यायः ॥१६ ॥

Mahabharata - AshramaVasika Parva - Chapter Footnotes

७-१६-९ कुन्ती गान्धारीं अनयदिति शेषः । किंभूता। अर्थाद्गान्धार्या
हस्तं स्कन्धासक्तं उद्वहन्ती। कुन्ती गान्धारीमनुभर्तृ व्रजन्तीमिति
क थ पाठः ॥

---

अस्रमवसिकपर्व-अध्यय०१७
॥ श्रीः ॥
१६.१७. अध्यायः १७

अथाश्रमवासपर्व ॥१ ॥

Mahabharata - AshramaVasika Parva - Chapter Topics

धृतराष्ट्रस्य वनप्रस्थानसमये विदुरसंजयाभ्यामपि वनवासाय तेन सह प्रस्थानम् ॥ १ ॥
तथा कुन्त्यापि युधिष्ठिरादिभिर्बहुधा प्रार्थनाभिः प्रतिषेधनेपि तत्समाश्वासनपूर्वकं गान्धार्या सह वनंप्रति प्रस्थानम् ॥ २ ॥

Mahabharata - AshramaVasika Parva - Chapter Text

धृतराष्ट्रस्य वनप्रस्थानसमये विदुरसंजयाभ्यामपि वनवासाय तेन सह प्रस्थानम् ॥ १ ॥ तथा कुन्त्यापि युधिष्ठिरादिभिर्बहुधा प्रार्थनाभिः प्रतिषेधनेपि तत्समाश्वासनपूर्वकं गान्धार्या सह वनंप्रति प्रस्थानम् ॥ २ ॥
१६-१७-० (९७६५१)
वैशम्पायन उवाच। १६-१७-०क्ष् (८०४५)
ततः प्रासादहर्म्येषु वसुधायां च पार्थिव ।
नारीणां च नराणां च निःस्वनः सुमहानभूत् ॥ १६-१७-१ (९७६५२)
स राजा राजमार्गेण नृनारीसंकुलेन च ।
कथञ्चिन्निर्ययौ धीमान्वेपमानः कृताञ्जलिः ॥ १६-१७-२ (९७६५३)
स वर्धमानद्वारेणि निर्ययौ गजसाह्वयात् ।
विसर्जयामास च तं जनौघं स मुहुर्मुहुः ॥ १६-१७-३ (९७६५४)
वनं गन्तुं च विदुरो राज्ञा सह कृतक्षणः ।
संजयश्च महामात्रः सूतो गावल्गणिस्तथा ॥ १६-१७-४ (९७६५५)
ककृपं निवर्तयामास युयुत्सुं च महारथम् ।
धृताराष्ट्रो महीपालः परिदाप्य युधिष्ठिरे ॥ १६-१७-५ (९७६५६)
निवृत्ते पौरवर्गे च राजा सान्तःपुरस्तदा ।
धृतराष्ट्राभ्यनुज्ञातो निवर्तितुमियेष ह ॥ १६-१७-६ (९७६५७)
सोब्रवीन्मातरं कुन्तीमुपेत्य भरतर्षभ ॥
अहं राजानमन्विष्ये भवती विनिवर्तताम् ॥ १६-१७-७ (९७६५८)
वधूपरिवृता राज्ञि नगरं गन्तुमर्हसि ।
राजा यात्वेष धर्मात्मा तपसे कृतनिश्चयः ॥ १६-१७-८ (९७६५९)
इत्युक्ता धर्मराजेनि बाष्पव्याकुललोचना ।
जगामैव तदा कुन्ती गान्धारीं परिगृह्य ह ॥ १६-१७-९ (९७६६०)
कुन्त्युवाच। १६-१७-१०क्ष् (८०४६)
सहदेवे महाराज माऽप्रसादं कृथाः क्वचित् ।
एष मामनुरक्तो हि राजंस्त्वां चैव सर्वदा ॥ १६-१७-१० (९७६६१)
कर्णं स्मरेथाः सततं सङ्ग्रामेष्वपलायिनम् ।
अवकीर्णो हि स मया वीरो दुष्प्रज्ञया तदा ॥ १६-१७-११ (९७६६२)

आयसं हृदयं नूनं मन्दाया मम पुत्रक ।
यत्सूर्यजमपश्यन्त्याः शतधा न विदीर्यते ॥१६-१७-१२ (९७६६३)
एवं गते तु किं शक्यं मया कर्तुमरिंदम ।
मम दोषोऽयमत्यर्थं ख्यापितो यन्न सूर्यजः ॥१६-१७-१३ (९७६६४)
तन्निमित्तं महाबाहो दानं दद्यास्त्वमुत्तमम् ।
सदैव भ्रातृभिः सार्धं सूर्यजस्यारिमर्दन ॥१६-१७-१४ (९७६६५)
द्रौपद्याश्च प्रिये नित्यं स्थातव्यमरिकर्शन ।
भीमसेनोऽर्जुनश्चैव नकुलश्च कुरूद्वह ॥१६-१७-१५ (९७६६६)
समाधेयास्त्वया राजंस्त्वय्यद्य कुलधूर्गता ।
श्वश्रूश्वशुरयोः पादाञ्शुश्रूषन्ती वने त्वहम् ।
गान्धारीसहिता वत्स्ये तापसी मलपङ्किनी ॥ १६-१७-१६ (९७६६७)
वैशम्पायन उवाच। १६-१७-१७क्ष् (८०४७)
एवमुक्तः स धर्मात्मा भ्रातृभिः सहितो वशी ।
विषादमगमद्धीमान्न च किञ्चिदुवाच ह ॥१६-१७-१७ (९७६६८)
मुहूर्तमिव तु ध्यात्वा धर्मराजो युधिष्ठिरः ।
उवाच मतारं दीनश्चिन्ताशोकपरायणः ॥१६-१७-१८ (९७६६९)
किमिदं ते व्यवसितं नैवं त्वं वक्तुमर्हसि ।
न त्वामभ्यनुजानामि प्रसादं कर्तुमर्हसि ॥१६-१७-१९ (९७६७०)
व्यचोदयः पुराऽस्माकमुत्साहं शुभदर्शने ।
विदुलाया वचोभिस्त्वं नास्मान्संत्यक्तुमर्हसि ॥१६-१७-२० (९७६७१)
निहत्य पृथिवीपालान्राज्यं प्राप्तमिदं मया ।
तव प्रज्ञामुपश्रुत्य वासुदेवान्नरर्षभात् ॥१६-१७-२१ (९७६७२)
क्व सा बुद्धिरियं चाद्य भवत्या या श्रुता मया ।
क्षत्रधर्मे स्थितं त्यक्त्वा न प्रयातुमिहार्हसि ॥१६-१७-२२ (९७६७३)
अस्मानुत्सृज्य राज्यं च स्नुषाहीना यशस्विनि ।
कथं वत्स्यसि दुर्गेषु वनेष्वद्य प्रसीद मे ॥१६-१७-२३ (९७६७४)
इति बाष्पकला वाचः कुन्ती पुत्रस्य शृण्वती ।
जगामैवाश्रुपूर्णाक्षी भीमस्तामिदमब्रवीत् ॥१६-१७-२४ (९७६७५)
यदा राज्यमिदं कुन्ति भोक्तव्यं पुत्रनिर्जितम् ।
प्राप्तव्या राजधर्माश्च तदेयं ते कुतो मतिः ॥१६-१७-२५ (९७६७६)
किं वयं कारिताः पूर्वं भवत्या पृथिवीक्षयम् ।
कस्य हेतोः परित्यज्य वनं गन्तुमभीप्ससि ॥१६-१७-२६ (९७६७७)
वनाच्चापि किमानीता भवत्या बालका वयम् ।
दुःखशोकसमाविष्टौ माद्रीपुत्राविमौ तथा ॥१६-१७-२७ (९७६७८)
प्रसीद मातर्मा गास्त्वं वनमद्य यशस्विनि ।
श्रियं यौधिष्ठिरीं मातर्भुङ्क्ष्व पार्थबलार्जिताम् ॥१६-१७-२८ (९७६७९)

इति सा निश्चितैवाशु वनवासकृततक्षणा ।
लालप्यतां बहुविधं पुत्राणां नाकरोद्वचः ॥ १६-१७-२९ (९७६८०)
द्रौपदी चान्वयाच्छ्वश्रूं विषण्णवदना तदा ।
वनवासाय गच्छन्तीं रुदती भद्रया सह ॥ १६-१७-३० (९७६८१)
सा पुत्रान्रुदतः सर्वान्मुहुर्मुहुरवेक्षती ।
जगामैव महाप्राज्ञा वनाय कृतनिश्चया ॥ १६-१७-३१ (९७६८२)
अन्वयुः पाण्डवास्तां तु सभृत्यान्तःपुरास्तथा ।
ततः प्रमृज्य साऽश्रूणि पुत्रान्वचनमब्रवीत् ॥ ॥ १६-१७-३२ (९७६८३)

इति श्रीमन्महाभारते आश्रमवासिकपर्वणि आश्रमवासपर्वणि
सप्तदशोऽध्यायः ॥ १७ ॥
Mahabharata - AshramaVasika Parva - Chapter Footnotes

७-१७-१० मा प्रमादं कृथा इति क थ पाठः ॥
७-१७-१६ श्वश्रूश्वशुरयोः । ज्येष्ठत्वाद्धृतराष्ट्रः पाण्डोः
पितृसमस्तेन कुन्त्याः स श्वशुर इति ॥
७-१७-२२ क्षत्रधर्मे स्थितिं ह्युक्त्वा न प्रत्याख्यातुमर्हसि इति
थ पाठः । स्थितिं चोक्त्वा तस्याश्च्यवितुमिच्छसि इति झ पाठः ॥
७-१७-३० भद्रया सुभद्रया ॥

---

अस्रमवसिकपर्व-अध्यय०१८
॥ श्रीः ॥
१६.१८. अध्यायः १८

अथाश्रमवासपर्व ॥ १ ॥
Mahabharata - AshramaVasika Parva - Chapter Topics
कुन्त्या स्वस्य वनगमनाध्यवसायेन विषीदतो युधिष्ठिरादीन्प्रति
सहेतूपन्यासं समाश्वासनम् ॥ १ ॥

Mahabharata - AshramaVasika Parva - Chapter Text

कुन्त्युवाच ।
एवमेतन्महाबाहो यथा वदसि पाण्डवः ।
कृतमुद्धरणं पूर्वं मया वः सीदतां नृपाः ॥ १६-१८-१ (९७६८४)
द्यूतापहृतराज्यानां पतितानां सुखादपि ।

ज्ञातिभिः परिभूतानां कृतमुद्धरणं मया ॥ १६-१८-२ (९७६८५)
कथं पाण्डोर्न नश्येत संततिः पुरुषर्षभाः ।
यशश्च वो न नश्येत इति चोद्धरणं कृतम् ॥ १६-१८-३ (९७६८६)
यूयमिन्द्रसमाः सर्वे देवतुल्यपराक्रमाः ।
मा परेषां मुखप्रेक्षाः स्थेत्येवं तत्कृतं मया ॥ १६-१८-४ (९७६८७)
कथं धर्मभृतां श्रेष्ठो राजा त्वं वासवोपमः ।
पुनर्वने न दुःखी स्या इति चोद्धरणं कृतम् ॥ १६-१८-५ (९७६८८)
नागायुतसमप्राणः ख्यातविक्रमपौरुषः ।
नायं भीमोत्ययं गच्छेदिति चोद्धरणं कृतम् ॥ १६-१८-६ (९७६८९)
भीमसेनादवरजस्तथाऽयं वासवोपमः ।
विजयो नावसीदेत इति चोद्धरणं कृतम् ॥ १६-१८-७ (९७६९०)
नकुलः सहदेवश्च तथेमौ गुरुवर्तिनौ ।
क्षुधा कथं न सीदेतामिति चोद्धरणं कृतम् ॥ १६-१८-८ (९७६९१)
इयं च बृहती श्यामा तथाऽत्यायतलोचना ।
वृथा सभातले क्लिष्टा मा भूदिति च तत्कृतं ॥ १६-१८-९ (९७६९२)
अपेक्षतामेव वो भीम वेपन्तीं कदलीमिव ।
स्त्रीधर्मिणीमरिष्टाङ्गीं तथा द्यूतपराजिताम् ॥ १६-१८-१० (९७६९३)
दुःशासनो यदा मौर्ख्याद्दासीवत्पर्यकर्षत ।
तदैव विदितं मह्यं पराभूतमिदं कुलम् ॥ १६-१८-११ (९७६९४)
निषण्णाः कुरवश्चैव तदा मे श्वशुरादयः ।
सा दैवं नाथमिच्छन्ती व्यलपत्कुररी यथा ॥ १६-१८-१२ (९७६९५)
केशपक्षे परामृष्टा पापेन् हतबुद्धिना ।
यदा दुःशासनेनैषा तदा मुह्याम्यहं नृपाः ॥ १६-१८-१३ (९७६९६)
युष्मत्तेजोविवृद्ध्यर्तं मया ह्युद्धरणं कृतम् ।
तदानीं विदुलावाक्यैरिति तद्वित्त पुत्रकाः ॥ १६-१८-१४ (९७६९७)
कथं न राजवंशोऽयं नश्येत्प्राप्य सुतान्मम ।
पाण्डोरिति मया पुत्रस्तस्मादुद्धरणं कृतम् ॥ १६-१८-१५ (९७६९८)
न तस्य पुत्राः पौत्रा वा क्षतवंशस्य पार्थिव ।
लभ्ते सुकृताँल्लोकान्यस्माद्वंशः प्रणश्यति ॥ १६-१८-१६ (९७६९९)
भुक्तं राज्यफलं पुत्रा भर्तुर्मे विपुलं पुरा ।
महादानानि दत्तानि पीतः सोमो यथाविधि ॥ १६-१८-१७ (९७७००)
नाहमात्मफलार्थं वै वासुदेवमचूचुदम् ।
विदुलायाः प्रलापैस्तैः पालनार्थं च तत्कृतम् ॥ १६-१८-१८ (९७७०१)
नाहं राज्यफलं पुत्राः कामये पुत्रनिर्जितम् ।
पतिलोकानहं पुण्यान्कामये तपसा पिभो ॥ १६-१८-१९ (९७७०२)
श्वश्रूश्वशुरयोः कृत्वा शुश्रूषां वनवासिनोः ।

तपसा शोषयिष्यामि युधिष्ठिर कलेवरम् ॥१६-१८-२० (९७७०३)
निवर्तस्व कुरुश्रेष्ठ भीमसेनादिभिः सह ।
धर्मे ते धीयतां बुद्धिर्मनस्तु महदस्तु च ॥ ॥१६-१८-२१ (९७७०४)

इति श्रीमन्महाभारते आश्रमवासिकपर्वणि आश्रमवासपर्वणि
अष्टादशोऽध्यायः ॥१८ ॥
Mahabharata - AshramaVasika Parva - Chapter Footnotes

७-१८-१० पश्यन्त्या मे तथा भीतां वेपन्तीमिति क थ पाठः ॥

---

अस्रमवसिकपर्व-अध्यय०१९
॥ श्रीः ॥
१६.१९. अध्यायः १९

अथाश्रमवासपर्व ॥ १ ॥
Mahabharata - AshramaVasika Parva - Chapter Topics
कुन्त्या कृच्छ्रेण प्रतिनिवर्तितैर्युधिष्ठिरादिभिः
कृच्छ्रात्पुनर्नगरं प्रत्यागमनम् ॥ १ ॥
धृताष्ट्रेण विदुरादिभिः सह वनमेत्य गङ्गातीरे सन्ध्योपास्त्यादिना
रात्रियापनम् ॥ २ ॥

Mahabharata - AshramaVasika Parva - Chapter Text

वैशम्पायन उवाच ।
कुन्त्यास्तु वचनं श्रुत्वा पाण्डवा राजसत्तम ।
व्रीडिताः संन्यवर्तन्त पाञ्चाल्या सह भारत ॥१६-१९-१ (९७७०५)
ततः शब्दो महानेव सर्वेषामभवत्तदा ।
अन्तःपुराणां रुदतां दृष्ट्वा कुन्तीं तथा गताम् ॥१६-१९-२ (९७७०६)
प्रदक्षिणमथावृत्त्य राजानं पाण्डवास्तदा ।
अभिवाद्य न्यवर्तन्त पृथां तामनिवर्त्य वै ॥१६-१९-३ (९७७०७)
ततोऽब्रवीन्महातेजा धृतराष्ट्रोऽम्बिकासुतः ।
गान्धारीं विदुरं चैव समाभाष्यावगृह्य च ॥१६-१९-४ (९७७०८)
युधिष्ठिरस्य जननी देवी साधु निवर्त्यताम् ।
यथा युधिष्ठिरः प्राह तत्सर्वं सत्यमेव हि ॥१६-१९-५ (९७७०९)
पुत्रैश्वर्यं महदिदमपास्य च महाफलम् ।

काऽनुगच्छेद्वनं दुर्गं पुत्रानुत्सृज्य मूढवत् ॥१६-१९-६ (९७७१०)
राज्यस्थया तपस्तप्तुं कर्तुं दानव्रतं महत् ।
अनया शक्यमेवाद्य श्रूयतां च वचो मम ॥१६-१९-७ (९७७११)
गान्धारि परितुष्टोस्मि वध्वाः शुश्रूषणेन वै ।
तस्मात्त्वमेनां धर्मज्ञे समनुज्ञातुमर्हसि ॥१६-१९-८ (९७७१२)
इत्युक्ता सौबलेयी तु राज्ञा कुन्तीमुवाच ह ।
तत्सर्वं राजवचनं स्वं च वाक्यं विशेषवत् ॥१६-१९-९ (९७७१३)
न च सा वनवासाय देवी कृतमतिं तदा ।
शक्नोत्युपावर्तयितुं कुन्तीं धर्मपरां सतीम् ॥१६-१९-१० (९७७१४)
तस्यास्तां तु स्थितिं ज्ञात्वा व्यवसायं कुरुस्त्रियः ।
निवृत्तांश्च कुरुश्रेष्ठान्दृष्ट्वा प्ररुरुदुस्तदा ॥१६-१९-११ (९७७१५)
उपावृत्तेषु पार्थेषु सर्वास्वेव वधूषु च ।
ययौ राजा महाप्राज्ञो धृतराष्ट्रो वनं तदा ॥१६-१९-१२ (९७७१६)
पाण्डवाश्चातिदीनास्ते दुःखशोकपरायणाः ।
यानैः स्त्रीसहिताः सर्वे पुरं प्रविविशुस्तदा ॥१६-१९-१३ (९७७१७)
तदहृष्टमनानन्दं गतोत्सवमिवाभवत् ।
नगरं हास्तिनपुरं सस्त्रीवृद्धकुमारकम् ॥१६-१९-१४ (९७७१८)
सर्वे चासन्निरुत्साहाः पाण्डवा जातमन्यवः ।
कुन्त्या हीनाः सुदुःखार्ता वत्सा इव विनाकृताः ॥१६-१९-१५ (९७७१९)
धृतराष्ट्रस्तु तेनाह्ना गत्वा सुमहदन्तरम् ।
ततो भागीरथीतीरे निवासमकरोत्प्रभुः ॥१६-१९-१६ (९७७२०)
प्रादुष्कृता यथान्यायमग्नयो वेदपारगैः ।
व्यराजन्त द्विजश्रेष्ठैस्तत्रतत्र तपोवने ।
प्रादुष्कृताग्निरभवत्स च वृद्धो नराधिपः ॥ १६-१९-१७ (९७७२१)
स राजाऽग्नीन्पर्युपास्य हुत्वा च विधिवत्तदा ।
सन्ध्यागतं सहस्रांशुमुपातिष्ठत भारत ॥ १६-१९-१८ (९७७२२)
विदुरः संजयश्चैव राज्ञः शय्यां कुशैस्ततः ।
चक्रतुः कुरुवीरस्य गान्धार्याश्चाविदूरतः ॥१६-१९-१९ (९७७२३)
गान्धार्याः सन्निकर्षे तु निषसाद कुशे सुखम् ।
युधिष्ठिरस्य जननी कुन्ती साधुव्रते स्थिता ॥१६-१९-२० (९७७२४)
तेषां संश्रवणे चापि निषेदुर्विदुरादयः ।
याजकाश्च यथोद्देशं द्विजा ये चानुयायिनः ॥१६-१९-२१ (९७७२५)
प्राधीतद्विजमुख्या सा संप्रज्वलितपावका ।
बभूव तेषां रजनी ब्राह्मीव प्रीतिवर्धिनी ॥१६-१९-२२ (९७७२६)
ततो रात्र्यां व्यतीतायां कृतपूर्वाह्णिकक्रियाः ।
हुत्वाऽग्निं विधिवत्सर्वे प्रययुस्ते यथाक्रमम् ।

उदङ्मुखा निरीक्षन्त उपवासपरायणाः ॥ १६-१९-२३ (९७७२७)
स तेषामतिदुःखोऽभून्निवासः प्रथमेऽहनि ।
शोचतां वदतां चापि पौरजानपदैर्जनैः ॥ ॥ १६-१९-२४ (९७७२८)

इति श्रीमन्महाभारते आश्रमवासिकर्वणि आश्रमवासपर्वणि
एकोनविंशोऽध्यायः ॥ १९ ॥

---

अस्रमवसिकपर्व-अध्यय०२०
॥ श्रीः ॥
१६.२०. अध्यायः २०

अथाश्रमवासपर्व ॥ १ ॥
Mahabharata - AshramaVasika Parva - Chapter Topics
धृतराष्ट्रेण विदुरादिभिः सह गङ्गातीरात्कुरुक्षेत्रमेत्य तत्र
शतयूपाश्रमे व्यासाज्ञया तदुपदिष्टविधिना तीव्रतपश्चरणम्
॥ १ ॥

Mahabharata - AshramaVasika Parva - Chapter Text

वैशम्पायन उवाच ।
ततो भागीरथीतीरे मेध्ये पुण्यजनोचिते ।
निवासमकरोद्राजा विदुरस्य मते स्थितः ॥ १६-२०-१ (९७७२९)
तत्रैनं पर्युपातिष्ठन्ब्राह्मणा वनवासिनः ।
क्षत्रविट्शूद्रसङ्घाश्च बहवो भरतर्षभ ॥ १६-२०-२ (९७७३०)
स तैः परिवृतो राजा कथाभिः परिनन्द्य तान् ।
अनुजज्ञे स शिष्यान्वै विधिवत्प्रतिपूज्य च ॥ १६-२०-३ (९७७३१)
सायाह्ने स महीपालस्ततो गङ्गामुपेत्य च ।
चकार विधिवच्छौचं गान्धारी च यशस्विनी ॥ १६-२०-४ (९७७३२)
ते चैवान्ये पृथक् सर्वे तीर्थेष्वाप्लुत्य भारत ।
चक्रुः सर्वाः क्रियास्तत्र पुरुषा विदुरादयः ॥ १६-२०-५ (९७७३३)
कृतशौचं ततो वृद्धं श्वशुरं कुन्तिभोजजा ।
गान्धारीं च पृथा राजन्गङ्गातीर्थमुपानयत् ॥ १६-२०-६ (९७७३४)
राज्ञस्तु याजकैस्तत्र कृतो वेदीपरिस्तरः ।
जुहाव तत्र वह्निं स नृपतिः सत्यसङ्गरः ॥ १६-२०-७ (९७७३५)
ततो भागीरथीतीरात्कुरुक्षेत्रं जगाम सः ।
सानुगो नृपतिर्वृद्धो नियतः संयतेन्द्रियः ॥ १६-२०-८ (९७७३६)

तत्राश्रमपदं धीमानभिगम्य स पार्थिवः ।
आससादाथ राजर्षिं शतयूपं मनीषिणम् ॥ १६-२०-९ (९७७३७)
स हि राजा महानासीत्केकयेषु परंपतः ।
स्वपुत्रं मनुजैश्वर्ये निवेश्य वनमाविशत् ॥ १६-२०-१० (९७७३८)
तेनासौ सहितो राजा ययौ व्यासाश्रमं प्रति ।
तत्रैनं विधिवद्राजन्प्रत्यगृह्णात्कुरूद्वहम् ॥ १६-२०-११ (९७७३९)
स दीक्षां तत्र संप्राप्य राजा कौरवनन्दनः ।
शतयूपाश्रमे तस्मिन्निवासमकरोत्तदा ॥ १६-२०-१२ (९७७४०)
तस्मै सर्वं विधिं राज्ञे राजाऽऽचख्यौ महामतिः ।
आरण्यकं महाराज व्यासस्यानुमते तदा ॥ १६-२०-१३ (९७७४१)
एवं च तपसा राजन्धृतराष्ट्रो महामनाः ।
योजयामास चात्मानं तांश्चाप्यनुचरांस्तदा ॥ १६-२०-१४ (९७७४२)
तथैव देवी गान्धारी वल्कलाजिनधारिणी ।
कुन्त्या सह महाराजि समानव्रतचारिणी ॥ १६-२०-१५ (९७७४३)
कर्मणा मनसा वाचा चक्षुषा चैव ते नृप ।
सन्नियम्येन्द्रियग्राममास्थिताः परमं तपः ॥ १६-२०-१६ (९७७४४)
त्वगस्थिभूतः परिशुष्कमांसो
जटाजिनी वल्कलसंवृताङ्गः ।
स पार्तिवस्तत्र तपश्चचार
महर्षिवत्तीव्रमपेतमोहः ॥ १६-२०-१७ (९७७४५)
क्षत्ता च धर्मार्थविदग्र्यबुद्धिः
ससंजयस्तं नृपतिं सदारम् ।
उपाचरद्धोरतपोर्जितात्मा
तदा कृशो वल्कलचीरवासाः ॥ ॥ १६-२०-१८ (९७७४६)

इति श्रीमन्महाभारते आश्रमवासिकपर्वणि आश्रमवासपर्वणि
विंशोऽध्यायः ॥ २० ॥

---

अस्रमवसिकपर्व-अध्यय०२१
॥ श्रीः ॥
१६.२१. अध्यायः २१

अथाश्रमवासपर्व ॥ १ ॥
Mahabharata - AshramaVasika Parva - Chapter Topics
नारपर्वतादिभिर्धृतराष्ट्रादिदिदृक्ष्या शतयूपाश्रमं
प्रत्यागमनम् ॥ १ ॥

नारदेन धृताराष्ट्रंप्रति तत्तपोवनस्यि सहस्रचि त्यादिराजर्षीणां स्वर्गप्रापकत्वमहिमोक्तिपूर्वकं विदुरादिभिः सह तस्यापि भविष्यत्सिद्धिप्रदत्वकथनम् ॥ २ ॥

Mahabharata - AshramaVasika Parva - Chapter Text

वैशम्पायन उवाच ।
ततस्तत्र मुनिश्रेष्ठा राजानं द्रष्टुमभ्ययुः ।
नारदः पर्वतश्चैव देवलश्च महातपाः ॥ १६-२१-१ (९७७४७)
द्वैपायनः सशिष्यश्च सिद्धाश्चान्ये मनीषिणः ।
शतयूपश्च राजर्षिर्वृद्धः परमधार्मिकः ॥ १६-२१-२ (९७७४८)
तेषां कुन्ती महाराज पूजां चक्रे यथाविधि ।
ते चापि तुतुषुस्तस्यास्तापसाः परिचर्यया ॥ १६-२१-३ (९७७४९)
तत्र धर्म्याः कथास्तात चक्रुस्ते परमर्षयः ।
रमयन्तो महात्मानं धृतराष्ट्रं जनाधिपम् ॥ १६-२१-४ (९७७५०)
कथान्तरे तु कस्मिंश्चिद्देवर्षिर्नारदस्ततः ।
कथामिमामकथयत्सर्वप्रत्यक्षदर्शिवान् ॥ १६-२१-५ (९७७५१)
नारद उवाच । १६-२१-६क्ष् (८०४८)
पुरा प्रजापतिसमो राजाऽऽसीदकुतोभयः ।
सहस्रचित्यि इत्युक्तः शतयूपपितामहः ॥ १६-२१-६ (९७७५२)
स पुत्रे राज्यमासज्ज्यि ज्येष्ठे परमधार्मिके ।
सहस्रचित्यो धर्मात्मा प्रविवेश वनं नृपः ॥ १६-२१-७ (९७७५३)
स गत्वा तपसः पारं दीप्तस्य वसुधाधिपः ।
पुरंदरस्य संस्थानं प्रतिपेदे महाद्युतिः ॥ १६-२१-८ (९७७५४)
दृष्टपूर्वः स बहुशो राजन्सम्पतता मया ।
महेन्द्रसदने राजा तपसा दग्धकिल्बिषः ॥ १६-२१-९ (९७७५५)
तथा शैलालयो राजा भगत्तपितामहः ।
तपोबलेनैव नृपो महेन्द्रसदनं गतः ॥ १६-२१-१० (९७७५६)
तथा पृषध्रो राजाऽऽसीद्राजन्वज्रधरोपमः ।
स चापि तपसा लेभे नाकपृष्ठमितो गतः ॥ १६-२१-११ (९७७५७)
अस्मिन्नरण्ये नृपते मांधातुरपि चात्मजः ।
पुरुकुत्सो नृपः सिद्धिं महतीं समवाप्तवान् ॥ १६-२१-१२ (९७७५८)
भार्या समभवद्यस्य नर्मदा सरितां वरा ।
सोस्मिन्नरण्ये नृपतिस्तपस्तप्त्वा दिवं गतः ॥ १६-२१-१३ (९७७५९)
शशलोमा च राजाऽऽसीद्राजन्परमधार्मिकः ।
सम्यगस्मिन्वने तप्त्वा ततो दिवमवाप्तवान् ॥ १६-२१-१४ (९७७६०)

द्वैपायनप्रसादाच्च त्वमपीदं तपोवनम् ।
राजन्नवाप्य दुष्प्रापां सिद्धिमग्र्यां गमिष्यसि ॥१६-२१-१५ (९७७६१)
त्वं चापि राजशार्दूल तपसोन्ते श्रिया वृतः ।
गान्धारीसहितो गन्ता गतिं तेषां महात्मनां १६-२१-१६ (९७७६२)
पाण्डुः स्मरति ते नित्यं बलहन्तुः समीपगः ।
त्वां सदैव महाराज श्रेयसा स च योक्ष्यति ॥१६-२१-१७ (९७७६३)
तव शुश्रूषया चैव गान्धार्याश्च यशस्विनी ।
भर्तुः सलोकतां कुन्ती गमिष्यति वधूस्तव ॥१६-२१-१८ (९७७६४)
युधिष्ठिरस्य जननी स हि धर्मः सनातनः ।
वयमेतत्प्रपश्यामो नृपते दिव्यचक्षुषाः ॥१६-२१-१९ (९७७६५)
प्रवेक्ष्यति महात्मानं विदुरश्च युधिष्ठिरम् ।
संजयस्तदनुध्यानादितः स्वर्गमवाप्स्यति ॥१६-२१-२० (९७७६६)
वैशम्पायन उवाच।१६-२१-२१क्ष् (८०४९)
एतच्छ्रुत्वा कौरवेन्द्रो महात्मा
सार्धं पत्न्या प्रीतिमान्सम्बभूव ।
विद्वान्वाक्यं नारदस्य प्रशस्य
चक्रे पूजां चातुलां नारदाय ॥ १६-२१-२१ (९७७६७)
ततः सर्वे नारदं विप्रसङ्घाः
सम्पूजयामासुरतीव राजन् ।
राज्ञः प्रीत्या धृतराष्ट्रस्य ते वै
पुनःपुनः सम्प्रहृष्टास्तदानीम् ॥ ॥ १६-२१-२२ (९७७६८)

इति श्रीमन्महाभारते आश्रमवासिकपर्वणि आश्रमवासपर्वणि
एकविंशोऽध्यायः ॥ २१ ॥
Mahabharata - AshramaVasika Parva - Chapter Footnotes

७-२१-११ तदा प्रवृद्धो राजसीदिति क थ पाठः ॥

---

अस्रमवसिकपर्व-अध्यय०२२
॥ श्रीः ॥
१६.२२. अध्यायः २२

अथाश्रमवासपर्व ॥१ ॥
Mahabharata - AshramaVasika Parva - Chapter Topics
शतयूपपृष्टेन नारदेन तंप्रति धृतराष्ट्रस्य
वर्षत्रयादूर्ध्वं गान्धार्या सह कुबेरलोकप्राप्तिकथनम् ॥१ ॥

वैशम्पायन उवाच ।
नारदस्य तु तद्वाक्यं शशंसुर्द्विजसत्तमाः ।
शतयूपस्तु राजर्षिर्नारदं वाक्यमब्रवीत् ॥ १६-२२-१ (९७७६९)
अहो भगवता श्रद्धा कुरुराजस्य वर्धिता ।
सर्वस्य च जनस्यास्य मम चैव महाद्युते ॥ १६-२२-२ (९७७७०)
अस्ति काचिद्विवक्षा तु तां मे निगदतः शृणु ।
धृतराष्ट्रं प्रति नृपं देवर्षे लोकपूजित ॥ १६-२२-३ (९७७७१)
सर्ववृत्तान्ततत्त्वज्ञो भवान्दिव्येन चक्षुषा ।
युक्तः पश्यसि विप्रर्षे गतयो विविधा नृणाम् ॥ १६-२२-४ (९७७७२)
उक्तवान्नृपतीनां त्वं महेन्द्रस्य सलोकताम् ।
न त्वस्य नृपतेर्लोकाः कथितास्ते महामुने ॥ १६-२२-५ (९७७७३)
स्थानमप्यस्य नृपतेः श्रोतुमिच्छाम्यहं विभो ।
त्वत्तः कीदृक्कदा चेति तन्ममाख्याहि तत्त्वतः ॥ १६-२२-६ (९७७७४)
इत्युक्तो नारदस्तेन वाक्यं सर्वमनोनुगम् ।
व्याजहार सभामध्ये दिव्यदर्शी महातपाः ॥ १६-२२-७ (९७७७५)
नारद उवाच। १६-२२-८क्ष् (८०५०)
यदृच्छया शक्रसदो गत्वा शक्रं शचीपतिम् ।
दृष्टवानस्मि राजर्षे तत्र पाण्डुं नराधिपम् ॥ १६-२२-८ (९७७७६)
तत्रेयं धृतराष्ट्रस्य कथा समभवन्नप ।
तपसो दुष्करस्यास्य यदयं तपते नृपः ॥ १६-२२-९ (९७७७७)
तत्राहमिदमश्रौषं शक्रस्य वदतः स्वयम् ।
वर्षाणि त्रीणि शिष्टानि राज्ञोस्य परमायुषः ॥ १६-२२-१० (९७७७८)
ततः कुबेरभवनं गान्धारीसहितो नृपः ।
प्रयाता धृतराष्ट्रोऽयं राजराजाभिसत्कृतः ॥ १६-२२-११ (९७७७९)
कामगेन विमानेन दिव्याभरणभूषितः ।
ऋषिपुत्रो महाभागस्तपसा दग्धकिल्बिषः ॥ १६-२२-१२ (९७७८०)
सञ्चरिष्यति लोकांश्च देवगन्धर्वरक्षसाम् ।
स्वच्छन्देनेति धर्मात्मा व्यासस्य तु तपोबलात् ॥ १६-२२-१३ (९७७८१)
देवगुह्यमिदं प्रीत्या मया वः कथितं महत् ।
भवन्तो हि श्रुतधनास्तपसा दग्धकिल्बिषाः ॥ १६-२२-१४ (९७७८२)
वैशम्पायन उवाच। १६-२२-१५क्ष् (८०५१)
इति ते तस्य तच्छ्रुत्वा देवर्षेर्मधुरं वचः ।
सर्वे सुमनसः प्रीता बभूवुः स च पार्थिवः ॥ १६-२२-१५ (९७७८३)

एवं कथाभिरन्वास्य धृतराष्ट्रं मनीषिणः ।
विप्रजग्मुर्यथाकामं ते सिद्धगतिमास्थिताः ॥ ॥१६-२२-१६ (९७७८४)

इति श्रीमन्महाभारते आश्रमवासिकपर्वणि आश्रमवासपर्वणि
द्वाविंशोऽध्यायः ॥ २२ ॥
Mahabharata - AshramaVasika Parva - Chapter Footnotes

७-२२-१२ ऋषिपुत्रो व्यासपुत्रः ॥

---

अस्रमवसिकपर्व-अध्यय०२३
॥ श्रीः ॥
१६.२३. अध्यायः २३

अथाश्रमवासपर्व ॥ १ ॥
Mahabharata - AshramaVasika Parva - Chapter Topics
युधिष्ठिरादिभिः कुन्तीधृतराष्ट्रादीनां
प्रव्रजनशोकेनाभिमन्युप्रभृतिबन्धुजनानुस्मरणजशोकेन
स्वस्वव्यापारेष्वप्यनादरणम् ॥ १ ॥

Mahabharata - AshramaVasika Parva - Chapter Text

वैशम्पायन उवाच ।
वनं गते कौरवेन्द्रे दुःखशोकसमन्विताः ।
बभूवुः पाण्डवा राजन्मातृशोकेनि चान्विताः ॥१६-२३-१ (९७७८५)
तथा पौरजनः सर्वः शोचन्नास्ते जनाधिपम् ।
कुर्वाणाश्च कथास्तत्र ब्राह्मणा नृपतिं प्रति ॥१६-२३-२ (९७७८६)
कथं न राजा वृद्धः स वने वसति निर्जने ।
गान्धारी च महाभागा सा च कुन्ती पृथा कथम् ॥१६-२३-३ (९७७८७)
सुखार्हः स हि राजर्षिरसुखी तद्वनं महत् ।
किमवस्थः समासाद्य प्रज्ञाचक्षुर्महामनाः ॥१६-२३-४ (९७७८८)
सुदुष्करं कृतवती कुन्ती पुत्रानपास्य सा ।
राज्यश्रियं परित्यज्य वनं सा समरोचयत् ॥१६-२३-५ (९७७८९)
विदुरः किमवस्थश्च भ्रातृशुश्रूषुरात्मवान् ।
स च गावल्गणिर्धीमान्भर्तृपिण्डानुपालकः ॥१६-२३-६ (९७७९०)
आकुमारं च पौरास्ते चिन्ताशोकसमाहताः ।
तत्रतत्र कथाश्चक्रुः समासाद्य परस्परम् ॥१६-२३-७ (९७७९१)

पाण्डवाश्चैव ते सर्वे भृशं शोकपरायणाः ।
शोचन्तो मातरं वृद्धामूषुर्नातिचिरं पुरे ॥ १६-२३-८ (९७७९२)
तथैव वृद्धं पितरं हतपुत्रं जनेश्वरम् ।
गान्धारीं च महाभागां विदुरं च महामतिम् ॥ १६-२३-९ (९७७९३)
नैषां बभूव सम्प्रीतिस्तान्विचिन्तयतां तदा ।
न राज्ये न च नारीषु न वेदाध्ययनेषु च ॥ १६-२३-१० (९७७९४)
परं निर्वेदमगमंश्चिन्तयन्ता नराधिपम् ।
तं च ज्ञातिवधं घोरं संस्मरन्तः पुनःपुनः ॥ १६-२३-११ (९७७९५)
अभिमन्योश्च बालस्य विनाशं रणमूर्धनि ।
कर्णस्य च महाबाहोः सङ्ग्रामेष्वपलायिनः ॥ १६-२३-१२ (९७७९६)
तथैव द्रौपदेयानामन्येषां सुहृदामपि ।
वधं संस्मृत्य ते वीरा नातिप्रमनसोऽभवन् ॥ १६-२३-१३ (९७७९७)
हतप्रवीरां पृथिवीं हृतरत्नां च भारत ।
सदैव चिन्तयन्तस्ते न शमं चोपलेभिरे ॥ १६-२३-१४ (९७७९८)
द्रौपदी हतपुत्रा च सुभद्रा चैव भामिनी ।
नातिप्रीतियुते देव्यौ तदास्तामप्रहृष्टवत् ॥ १६-२३-१५ (९७७९९)
वैराट्यास्तनयं दृष्ट्वा पितरं ते परिक्षितम् ।
धारयन्ति स्म ते प्राणांस्तव पूर्वपितामहाः ॥ ॥ १६-२३-१६ (९७८००)

इति श्रीमन्महाभारते आश्रमवासिकपर्वणि आश्रमवासपर्वणि
त्रयोविंशोऽध्यायः ॥ २३ ॥

---

अस्रमवसिकपर्व-अध्यय०२४
॥ श्रीः ॥
१६.२४. अध्यायः २४

अथाश्रमवासपर्व ॥ १ ॥
Mahabharata - AshramaVasika Parva - Chapter Topics
युधिष्ठिरेण वनस्थकुन्तीधृतराष्ट्रादिदिदृक्षया द्रौपद्यादिभिः
पौरैर्भ्रातृभिश्च सह वनंप्रति प्रस्थानम् ॥ १ ॥

Mahabharata - AshramaVasika Parva - Chapter Text

युधिष्ठिरेण वनस्थकुन्तीधृतराष्ट्रादिदिदृक्ष्या द्रौपद्यादिभिः
पौरैर्भ्रातृभिश्च सह वनंप्रति प्रस्थानम् ॥ १ ॥
१६-२४-० (९७८०१)

वैशम्पायन उवाच। १६-२४-०क्ष् (८०५२)
एवं ते पुरुषव्याघ्राः पाण्डवा मातृनन्दनाः ।
स्मरन्तो मातरं वीरा बभूवुर्भृशदुःखिताः ॥ १६-२४-१ (९७८०२)
ये राजकार्येषु पुरा व्यासक्ता नित्यशोऽभवन् ।
ते राजकार्याणि तदा नाकार्षुः सर्वतः पुरे ॥ १६-२४-२ (९७८०३)
प्रविष्टा इव शोकेन नाभ्यनन्दन्त किञ्चन ।
सम्भाष्यमाणा अपि ते न किञ्चित्प्रत्यपूजयन् ॥ १६-२४-३ (९७८०४)
ते स्म वीरा दुराधर्षा गांभीर्ये सागरोपमाः ।
शोकोपहतविज्ञाना नष्टसंज्ञा इवाभवन् ॥ १६-२४-४ (९७८०५)
अचिन्तयंश्च जननीं ततस्ते पाण्डुनन्दनाः ।
कथं नु वृद्धमिथुनं वहत्यतिकृशा पृथा ॥ १६-२४-५ (९७८०६)
कथं च स महीपालो हतपुत्रो निराश्रयः ।
पत्न्या सह वसत्येको वने श्वापदसेविते ॥ १६-२४-६ (९७८०७)
सा च देवी महाभागा गान्धारी हतबान्धवा ।
पतिमन्धं कथं वृद्धमन्वेति विजने वने ॥ १६-२४-७ (९७८०८)
एवं तेषां कथयतामौत्सुक्यमभवत्तदा ।
गमने चाभवद्बुद्धिर्धृतराष्ट्रदिदृक्षया ॥ १६-२४-८ (९७८०९)
सहदेवस्तु राजानं प्रणिपत्येदमब्रवीत् ।
अहो मे भवतो दृष्टं हृदयं गमनं प्रति। १६-२४-९ (९७८१०)
न हि त्वां गौरवेणाहमशकं वक्तुमञ्जसा ।
गमनं प्रति राजेन्द्र तदिदं समुपस्थितम् ॥ १६-२४-१० (९७८११)
दिष्ट्या द्रक्ष्यामि तां कुन्तीं वर्तयन्तीं तपस्विनीम् ।
जटिलां तापसीं वृद्धां कुशकाशपरिक्षताम् ॥ १६-२४-११ (९७८१२)
प्रासादहर्म्यसंवृद्धामत्यन्तसुखभागिनीम् ।
कदानुजननीं श्रान्तां द्रक्ष्यामि भृशदुःखिताम् ॥ १६-२४-१२ (९७८१३)
अनित्याः खलु मर्त्यानां गतयो भरतर्षभ ।
कुन्ती राजसुता यत्र वसत्यसुखिता वने ॥ १६-२४-१३ (९७८१४)
सहदेववचः श्रुत्वा द्रौपदी योषितां वरा ।
उवाच देवी राजानमभिपूज्याभिनन्द्य च। १६-२४-१४ (९७८१५)
कदा द्रक्ष्यामि तां देवीं यदि जीवति सा पृथा ।
जीवन्त्या ह्यद्य मे प्रीतिर्भविष्यति जनाधिप ॥ १६-२४-१५ (९७८१६)
एषा तेऽस्तु मतिर्नित्यं धर्मे ते रमतां मनः ।
योऽद्य त्वमस्मान्राजेन्द्र श्रेयसा योजयिष्यसि ॥ १६-२४-१६ (९७८१७)
अग्रपादस्थितं चेमं विद्धि राजन्वधूजनम् ।
काङ्क्षन्तं दर्शनं कुन्त्या गान्धार्याः श्वसुरस्य च ॥ १६-२४-१७ (९७८१८)
इत्युक्तः स नृपो देव्या द्रौपद्या भरतर्षभ ।

सेनाध्यक्षान्समानाय्य सर्वानिदमुवाच ह ॥१६-२४-१८ (९७८१९)
निर्यातयत मे सेनां प्रभूतरथकुञ्जराम् ।
द्रक्ष्यामि वनसंस्थं च धृताष्ट्रं महीपतिम् ॥१६-२४-१९ (९७८२०)
स्त्र्यध्यक्षांश्चाब्रवीद्राजा यानानि विविधानि मे ।
सज्जीक्रियन्तां सर्वाणि शिबिकाश्च सहस्रशः ॥१६-२४-२० (९७८२१)
शकटापणवेशाश्च कोशः शिल्पिन एव च ।
निर्यान्तु कोशपालाश्च कुरुक्षेत्राश्रमं प्रति ॥१६-२४-२१ (९७८२२)
यश्च पौरजनः कश्चिद्द्रष्टुमिच्छति पार्थिवम् ।
अनावृतः सुविहितः स च यातु सुरक्षितः ॥१६-२४-२२ (९७८२३)
सूदाः पौरोगवाश्चैव सर्वं चैव महानसम् ।
विविधं भक्ष्यभोज्यं च शकटैरुह्यतां मम ॥१६-२४-२३ (९७८२४)
प्रयाणं घुष्यतां चैव श्वोभूत इति माचिरम् ।
क्रियतां पथि चाप्यद्य वेश्मानि विविधानि च। १६-२४-२४ (९७८२५)
एवमाज्ञाप्य राजा स भ्रातृभिः सह पाण्डवः ।
श्वोभूते निर्ययौ राजन्सस्त्रीवृद्धपुरःसरः ॥१६-२४-२५ (९७८२६)
स बहिर्दिवसानेव जनौघं परिपालयन् ।
न्यवसन्नृपतिः पञ्च ततोऽगच्छद्वनं प्रति ॥ ॥१६-२४-२६ (९७८२७)

इति श्रीमन्महाभारते आश्रमवासिकपर्वणि आश्रमवासपर्वणि
चतुर्विंशोऽध्यायः ॥२४ ॥
Mahabharata - AshramaVasika Parva - Chapter Footnotes

७-२४-१७ अप्रपादस्थितं प्रयाणार्थं पुरस्कृतेनैव पादेन स्थितम्
।अत्यन्तमुत्सुकमित्यर्थः ॥

---

अस्रमवसिकपर्व-अध्यय०२५
॥ श्रीः ॥
१६.२५. अध्यायः २५

अथाश्रमवासपर्व ॥१ ॥
Mahabharata - AshramaVasika Parva - Chapter Topics
युधिष्ठिरेण नानायानारूढैः पौरैर्भ्रातृभिश्च सह
धृतराष्ट्रादिदिदृक्षया शतयूपाश्रमवनप्रवेशः ॥१ ॥

Mahabharata - AshramaVasika Parva - Chapter Text

वैशम्पायन उवाच ।
आज्ञापयामास ततः सेनां भरतसत्तमः ।
अर्जुनप्रमुखैर्गुप्तां लोकपालोपमैर्नरैः ॥ १६-२५-१ (९७८२८)
योगोयोग इति प्रीत्या ततः शब्दो महानभूत् ।
क्रोशतां सादिनां तत्र युज्यतां युज्यतामिति ॥ १६-२५-२ (९७८२९)
केचिद्यानैर्नरा जग्मुः केचिदश्वैर्महाजवैः ।
काञ्चनैश्च रथैः केचिज्ज्वलितज्वलनोपमैः ॥ १६-२५-३ (९७८३०)
गजेन्द्रैश्च तथैवान्ये केचिदुष्ट्रैर्नराधिप ।
पदातयस्तथैवान्ये नखरप्रासयोधिनः ॥ १६-२५-४ (९७८३१)
पौरजानपदाश्चैव यानैर्बहुविधैस्तथा ।
अन्वयुः कुरुराजानं धृतराष्ट्रं दिदक्षवः ॥ १६-२५-५ (९७८३२)
स चापि राजवचनादाचार्यो गौतमः कृपः ।
सेनामादाय सेनानीः प्रययावाश्रमं प्रति ॥ १६-२५-६ (९७८३३)
ततो द्विजैः परिवृतः कुरुराजो युधिष्ठिरः ।
संस्तूयमानो बहुभिः सूतमागधबन्दिभिः ॥ १६-२५-७ (९७८३४)
पाण्डुरेणातपत्रेण ध्रियमाणेन मूर्धनि ।
रतानीकेन महता निर्जगाम कुरूद्वहः ॥ १६-२५-८ (९७८३५)
गजैश्चाचलसंकाशैर्भीमकर्मा वृकोदरः ।
सज्जयन्त्रायुधोपेतैः प्रययौ पवनात्मजः ॥ १६-२५-९ (९७८३६)
माद्रीपुत्रावपि तथा हयारोहौ सुसंवृतौ ।
जग्मतुः शीघ्रगमनौ सन्नद्धकवचध्वजौ ॥ १६-२५-१० (९७८३७)
अर्जुनश्च महातेजा रथेनादित्यवर्चसा ।
वशी श्वेतैर्हयैर्युक्तैर्दिव्येनान्वगमन्नृपम् ॥ १६-२५-११ (९७८३८)
द्रौपदीप्रमुखाश्चापि स्त्रीसङ्घाः शिबिकागताः ।
स्त्र्यध्यक्षगुप्ताः प्रययुर्विसृजन्तोऽमितं वसु ॥ १६-२५-१२ (९७८३९)
समृद्धरथहस्त्यश्वं वेणुवीणानुनादितम् ।
शुशुभे पाण्डवं सैन्यं तत्तदा भरतर्षभ ॥ १६-२५-१३ (९७८४०)
नदीतीरेषु रम्येषु सरःसु च विशाम्पते ।
वासान्कृत्वा क्रमेणाथ जग्मुस्ते कुरुपुङ्गवाः ॥ १६-२५-१४ (९७८४१)
युयुत्सुश्च महातेजा धौम्यश्चैवि पुरोहितः ।
युधिष्ठिरस्य वचनात्पुरगुप्तिं प्रचक्रतुः ॥ १६-२५-१५ (९७८४२)
ततो युधिष्ठिरो राजा कुरुक्षेत्रमवातरत् ।
क्रमोणोत्तीर्य यमुनां नदीं परमपाविनीम् ॥ १६-२५-१६ (९७८४३)
स ददर्शाश्रमं दूराद्राजर्षेस्तस्य धीमतः ।
शतयूपस्य कौरव्य धृतराष्ट्रस्य चैव ह ॥ १६-२५-१७ (९७८४४)
ततः प्रमुदितः सर्वो जनस्तद्वनमञ्जसा ।

विवेश सुमहानादैरापूर्य भरतर्षभ ॥ ॥१६-२५-१८ (९७८४५)

इति श्रीमन्महाभारते आश्रमिवासिकपर्वणि आश्रमिवासपर्वणि
पञ्चविंशोऽध्यायः ॥ २५ ॥
Mahabharata - AshramaVasika Parva - Chapter Footnotes

७-२५-३ यानैमनुष्यवाह्यः ॥
७-२५-४ नखरप्रासः व्याघ्रनखवत्पराचीनफलककुक्षिर्यः ॥

---

अस्रमवसिकपर्व-अध्यय०२६
॥ श्रीः ॥
१६.२६. अध्यायः २६

अथाश्रमवासपर्व ॥ १ ॥
Mahabharata - AshramaVasika Parva - Chapter Topics
युधिष्ठिरादिभिः शतयूपाश्रमे धृतराष्ट्रादीनुपेत्य
स्वस्वनामकीर्तनपूर्वकं तत्पादाभिवादनम् ॥ १ ॥
धृतराष्ट्रेण स्वावा स्यादर्शनेन शोचतां तेषां समाश्वासनम् ॥ २ ॥

Mahabharata - AshramaVasika Parva - Chapter Text

वैशम्पायन उवाच ।
ततस्ते पाण्डवा दूरादवतीर्य पदातयः ।
अभिजग्मुर्नरपतेराश्रमं विनयानताः ॥ १६-२६-१ (९७८४६)
स च योधजनः सर्वो ये च राष्ट्रनिवासिनः ।
स्त्रियश्च कुरुमुख्यानां पद्भिरेवान्वयुस्तदा ॥ १६-२६-२ (९७८४७)
आश्रमं ते ततो जग्मुर्धृतराष्ट्रस्य पाण्डवाः ।
शून्यं मृगगणाकीर्णं कदलीवनशोभितम् ॥ १६-२६-३ (९७८४८)
ततस्तत्र समाजग्मुस्तापसा नियतव्रताः ।
पाण्डवानागतान्द्रष्टुं कौतूहलसमन्विताः ॥ १६-२६-४ (९७८४९)
तानपृच्छत्ततो राजा क्वासौ कौरववंशभृत् ।
पिता ज्येष्ठो गतोऽस्माकमिति बाष्पपरिप्लुतः ॥ १६-२६-५ (९७८५०)
ते तमूचुस्ततो वाक्यं यमुनामवगाहितुम् ।
पुष्पाणामुदकुंभस्य चार्थे गत इति प्रभो ॥ १६-२६-६ (९७८५१)
तैराख्यातेन मार्गेण ततस्ते जग्मुरञ्जसा ।
ददृशुश्चाविदूरे तान्सर्वानथ पदातयः ॥ १६-२६-७ (९७८५२)

ततस्ते सत्वरा जग्मुः वितुर्दर्शनकाङ्क्षिणः ।
सहदेवस्तु वेगेन प्राधावद्यत्र सा पृथा ॥ १६-२६-८ (९७८५३)
सुस्वरं रुरुदे धीमान्मातुः पादावुपस्पृशन् ।
सा च बाष्पाकुलमुखी ददर्शक दयितं सुतम् ॥ १६-२६-९ (९७८५४)
बाहुभ्यां सम्परिष्वज्य समुन्नाम्य च पुत्रकम् ।
गान्धार्याः कथयामास सहद्रेवमुपस्थितम् ॥ १६-२६-१० (९७८५५)
अनन्तरं च राजानं भीमसेनमथार्जुनम् ।
नकुलं च पृथा दृष्ट्वा त्वरमाणोपचक्रमे ॥ १६-२६-११ (९७८५६)
सा ह्यग्रे गच्छति तयोर्दपत्योर्हतपुत्रयोः ।
कर्षन्ती तौ ततस्ते तां दृष्ट्वा संन्यपतन्भुवि ।
ग्तयोस्तु पादयो राजन्न्यपतन्हतपुत्रयोः ॥' १६-२६-१२ (९७८५७)
राजा तान्स्वरयोगेन स्पर्शेन च महामनाः ।
प्रत्यभिज्ञाय मेधावी समाश्वासयत प्रभुः ॥ १६-२६-१३ (९७८५८)
ततस्ते बाष्पमुत्सृज्य गान्धारीसहितं नृपम् ।
उपतस्थुर्महात्मानो मातरं च यथाविधि ॥ १६-२६-१४ (९७८५९)
सर्वेषां तोयकलशाञ्जगृहुस्ते स्वयं तदा ।
पाण्डवा लब्धसंज्ञास्ते मात्रा चाश्वासिताः पुनः ॥ १६-२६-१५ (९७८६०)
तथा नार्यो नृसिंहानां सोऽवरोधजनस्तदा ।
पौरजानपदाश्चैव ददृशुस्तं जनाधिपम् ॥ १६-२६-१६ (९७८६१)
निवेदयामास तदा जनं तन्नामगोत्रतः ।
युधिष्ठिरो नरपतिः स चैनं प्रत्यपूजयत् ॥ १६-२६-१७ (९७८६२)
स तैः परिवृतो मेने हर्षबाष्पाविलेक्षणः ।
राजाऽऽत्मानं गृहगतं पुरेवि गजसाह्वये ॥ १६-२६-१८ (९७८६३)
अभिवादितो वधूभिश्च कृष्णाद्याभिः स पार्थिवः ।
गान्धार्या सहितो धीमान्कुन्त्या च प्रत्यनन्दत ॥ १६-२६-१९ (९७८६४)
ततश्चाश्रममागच्छत्सिद्धचारणसेवितम् ।
दिदृक्षुभिः समाकीर्णं नभस्तारागणैरिव ॥ ॥ १६-२६-२० (९७८६५)

इति श्रीमन्महाभारते आश्रमवासिकपर्वणि आश्रमवासपर्वणि
षड्विंशोऽध्यायः ॥ २६ ॥

---

अस्रमवसिकपर्व-अध्यय०२७
॥ श्रीः ॥
१६.२७. अध्यायः २७

अथाश्रमवासपर्व ॥ १ ॥

Mahabharata - AshramaVasika Parva - Chapter Topics

सञ्जयेन तापसान्प्रति युधिष्ठिरादीनां द्रौपद्यादिस्त्रीणां चाङ्गुलिनिर्देशेन नामनिर्देशः ॥ १ ॥

Mahabharata - AshramaVasika Parva - Chapter Text

वैशम्पायन उवाच ।
स तैः सह नरव्याघ्रैर्भ्रातृभिर्भरतर्षभ ।
राजा रुचिरपद्माक्षैरासांचक्रे तदाश्रमे ॥ १६-२७-१ (९७८६६)
तापसैश्च महाभागैर्नानादेशसमागतैः ।
द्रष्टुं कुरुपतेः पुत्रान्पाण्डवान्पृथुवक्षसः ॥ १६-२७-२ (९७८६७)
ते ब्रुवञ्ज्ञातुमिच्छामः कतमोऽत्र युधिष्ठिरः ।
भीमार्जुनौ यमौ चैव द्रौपदी च यशस्विनी ॥ १६-२७-३ (९७८६८)
तानाचख्यौ तदा सूतस्तेषां नाम प्रधानतः ।
संजयो द्रौपदीं चैव सर्वाश्चान्या कुरुस्त्रियः ॥ १६-२७-४ (९७८६९)
सञ्जय उवाच। १६-२७-५क्ष् (८०५३)
य एष जांबूनदशुद्धगौर-
स्तनुर्महासिंह इव प्रवृद्धः ।
प्रचण्डघोणः पृथुदीर्घनेत्र-
स्ताम्रायताक्षः कुरुराज एषः ॥ १६-२७-५ (९७८७०)
अयं पुनर्मत्तगजेन्द्रगामी
प्रतप्तचामीकरशुद्धगौरः ।
पृथ्वायतांसः पृथुदीर्घबाहु-
र्वृकोदरः पश्यत पश्यतेमम् ॥ १६-२७-६ (९७८७१)
यस्त्वेष पार्श्वेऽस्य महाधनुष्मा-
ञ्श्यामो युवा वारणयूथपाभः ।
सिंहोन्नतांसो गजखेलगामी
पद्मायताक्षोऽर्जुन एष वीरः ॥ १६-२७-७ (९७८७२)
कुन्तीसमीपे पुरुषोत्तमौ तु
यमाविमौ विष्णुमहेन्द्रकल्पौ ।
मनुष्यलोके सकले समोस्ति
ययोर्न रूपे न बले न शीले ॥ १६-२७-८ (९७८७३)
इयं पुनः पद्मदलायताक्षी
मध्यं वयः किञ्चिदिव स्पशन्ती ।
नीलोत्पलाभा पुरदेवतेव
कृष्णा स्थिता मूर्तिमतीव लक्ष्मीः ॥ १६-२७-९ (९७८७४)

अस्यास्तु पार्श्वे कनकोपमत्व-
गेषा स्थिता मूर्तिमतीव गौरी ।
सत्ये स्थिता सा भगिनी द्विजाग्र्या-
श्चक्रायुधस्याप्रतिमस्य तस्य ॥ १६-२७-१० (९७८७५)
इयं च जांबूनदशुद्धगौरी
पार्थस्य भार्या भुजगेन्द्रकन्या ।
चित्राङ्गदा चैव नरेन्द्रकन्या
यैषा सवर्णार्द्रमधूकपुष्पैः ॥ १६-२७-११ (९७८७६)
इयं स्वसा राजचमूपतेश्च
प्रवृद्धनीलोत्पलदामवर्णा ।
पस्पर्ध कृष्णेन सदा नृपो यो
वृकोदरस्यैष परिग्रहोऽग्र्यः ॥ १६-२७-१२ (९७८७७)
इयं च राज्ञो मगधाधिपस्य
सुता जरासंध इति श्रुतस्य ।
यवीयसो माद्रवतीसुतस्य
भार्या मता चम्पकदामगौरी ॥ १६-२७-१३ (९७८७८)
इन्दीवरश्यामतनुः स्थिता तु
यैषा पराऽऽसन्नतरोर्लतेव ।
भार्या मता माद्रवतीसुतस्य
ज्येष्ठस्य सेयं कमलायताक्षी ॥ १६-२७-१४ (९७८७९)
इयं तु निष्टप्तसुवर्णगौरी
राज्ञो विराटस्य सुता सपुत्रा ।
भार्याऽभिमन्योर्निहतो रणे यो
द्रोणादिभिस्तैर्विरथो रथस्थैः ॥ १६-२७-१५ (९७८८०)
एतास्तु सीमन्तशिरोरुहा याः
शुक्लोत्तरीया नरराजपत्न्यः ।
राज्ञोस्य वृद्धस्य परंशताख्याः
स्नुषा नृवीराहतपुत्रनाथाः ॥ १६-२७-१६ (९७८८१)
एकता यथामुख्यमुदाहृता वो
ब्राह्मण्यभावादृजुबुद्धिसत्वात् ।
सर्वा भवद्भिः परिपृच्छ्यमाना
नरेन्द्रपत्न्यः सुविशुद्धसत्वाः ।
ग्सर्वे भवन्तोपि तपोबलाग्र्याः
क्षान्ताश्च दान्ताश्च कुलोद्भवाश्च ॥' १६-२७-१७ (९७८८२)
वैशम्पायन उवाच।१६-२७-१८क्ष् (८०५४)
एवं स राजा कुरुवृद्धवर्यः

समागतस्तैर्नरदेवपुत्रैः ।
पप्रच्छ सर्वं कुशलं तदानीं
गतेषु सर्वेष्वथ तापसेषु ॥ १६-२७-१८ (९७८८३)
योधेषु चाप्याश्रममण्डलं त-
न्मत्वा निविष्टेषु विमुच्य पत्रम् ।
स्त्रीवृद्धबाले च सुसंनिविष्टे
यथार्हतस्तान्कुशलान्यपृच्छत् ॥ ॥ १६-२७-१९ (९७८८४)

इति श्रीमन्महाभारते आश्रमवासिकपर्वणि आश्रमवासपर्वणि
सप्तविंशोऽध्यायः ॥ २७ ॥
Mahabharata - AshramaVasika Parva - Chapter Footnotes

७-२७-१२ परिग्रहो भार्या ॥
७-२७-१४ यासौ विशुद्धांबुजपद्मनेत्रा इति क थ पाठः ॥
७-२७-१६ भीमन्तमात्रेण उपलक्षिता ।नत्वलङ्कारादिना तादृशाः
शिरोरुहाः केशा यासां ताः सीमन्तशिरोरुहाः। असीमन्तेति पाठो
युक्तः। शुक्लोत्तरीया नरराजकन्या इति क थ पाठः ॥
७-२७-१९ पत्रं वाहनम् ॥

---

अस्रमवसिकपर्व-अध्यय०२८
॥ श्रीः ॥
१६.२८. अध्यायः २८

अथाश्रमवासपर्व ॥ १ ॥
Mahabharata - AshramaVasika Parva - Chapter Topics
धृतराष्ट्रयुधिष्ठिराभ्यां परस्परकुशलप्रश्नादिपूर्वकं
सँल्लापः ॥ १ ॥
युधिष्ठिरेण धृतराष्ट्रंप्रति विदुरः क्वेति प्रश्ने तत्रत्येन
केनचिद्यदृच्छया धृतराष्ट्रमुपसर्पतो जनावलोकनेन
प्रतिनिवर्तमानस्य च तस्य प्रदर्शनम् ॥ २ ॥
ततो युधिष्ठिरेणानुधावनेन तत्समीपगमनम् ॥ ३ ॥
ततो विदुरे योगात्स्वशरीरत्यागेन तच्छरीरप्रवेशः ॥ ४ ॥
युधिष्ठिरेण धृतराष्ट्रादिषु तदद्भुतनिवेदनम् ॥ ५ ॥

Mahabharata - AshramaVasika Parva - Chapter Text

धृतराष्ट्र उवाच ।
युधिष्ठिर महाबाहो कच्चित्वं कुशली ह्यसि ।
सहितो भ्रातृभिः सर्वैः पौरजानपदैस्तथा ॥१६-२८-१ (९७८८५)
ये च त्वामनुजीवन्ति कच्चित्तेऽपि निरामयाः ।
सचिवा भृत्यवर्गाश्च गुरवश्चैव ते नृप ॥१६-२८-२ (९७८८६)
कच्चित्तेऽपि निरातङ्का वसन्ति विषये तव ।
कच्चिद्वर्तसि पौराणीं वृत्तिं राजर्षिसेविताम् ॥१६-२८-३ (९७८८७)
कच्चिन्न्यायाननुच्छिद्य कोशस्तेऽभिप्रपूर्यते ।
अरिमध्यस्थमित्रेषु वर्तसे चानुरूपतः ।
ब्राह्मणानग्रहारैर्वा यथावदनुपश्यसि ॥ १६-२८-४ (९७८८८)
कच्चित्ते परितुष्यन्ति शीलेनि भरतर्षभ ।
शत्रवोपि कुतः पौरा भृत्या वा स्वजनोपि वा ॥१६-२८-५ (९७८८९)
कच्चिद्यजसकि राजेन्द्र श्रद्धावान्पितृदेवताः ।
अतिथीनन्नपानेनि कच्चिदर्चसि भारत ॥१६-२८-६ (९७८९०)
कच्चिन्नयपथे विप्राः स्वकर्मनिरतास्तव ।
क्षत्रिया वैश्यवर्णा वा शूद्रा वाऽपि कुटुम्बिनः ॥१६-२८-७ (९७८९१)
कच्चित्स्त्रीबालवृद्धं ते न शोचति न याचते ।
जामयः पूजिताः कच्चित्तव गेहे नरर्षभ ॥१६-२८-८ (९७८९२)
कच्चिद्राजर्षिवंशोऽयं त्वामासाद्य महीपतिम् ।
यथोचितं महाराज यशसा नावसीदति ॥१६-२८-९ (९७८९३)
वैशण्पायन उवाच।१६-२८-१०क्ष् (८०५५)
इत्येवादिनं तं स न्यायवित्प्रत्यभाषत ।
कुशलप्रश्नसंयुक्तं कुशलो वाक्यमब्रवीत् ॥१६-२८-१० (९७८९४)
युधिष्ठिर उवाच।१६-२८-११क्ष् (८०५६)
अपि ते वर्धते राजंस्पपो मन्दः श्रमश्च ते ॥ १६-२८-११ (९७८९५)
अपि मे जननी चेयं शुश्रूषुर्विगतक्लमा ।
अथास्याः सफलो राजन्वनवासो भविष्यति ॥१६-२८-१२ (९७८९६)
इयं च माता ज्येष्ठा मे शीतवाताध्वकर्शिता ।
घोरेण तपसा युक्ता देवी कच्चिन्न शोचति ॥१६-२८-१३ (९७८९७)
हतान्पुत्रान्महावीर्यान्क्षत्रधर्मपरायणान् ।
नापध्यायति वा कच्चिदस्मान्पापकृतः सदा ॥१६-२८-१४ (९७८९८)
क्व चासौ विदुरो राजन्नेमं पश्यामहे वयम् ।
संजयः कुशली चायं कच्चिन्नु तपसि स्थिरः ॥१६-२८-१५ (९७८९९)
वैशम्पायन उवाच।१६-२८-१६क्ष् (८०५७)
इत्युक्तः प्रत्युवाचैनं धृतराष्ट्रो जनाधिपम् ।
कुशली विदुरः पुत्र तपो घोरं समाश्रितः ॥१६-२८-१६ (९७९००)

वायुभक्षो निराहारः कृशो धमनिसंततः ।
कजाचिद्दृश्यते विप्रैः शून्येऽस्मिन्कानने क्वचित् ॥ १६-२८-१७ (९७९०१)
इत्येवं ब्रुवतस्तस्य जटी वीटामुखः कृशः ।
दिग्वासा मलदिग्धाङ्गो वनरेणुसमुक्षितः ॥ १६-२८-१८ (९७९०२)
दूरादालक्षितः क्षत्ता तत्राख्यातो महीपतेः ।
ग्कविदुरस्त्वेष धर्मात्मा जनं दृष्ट्वा निवर्तते ॥' १६-२८-१९ (९७९०३)
निवर्तमानं सहसा जनं दृष्ट्वाऽऽश्रमं प्रति ।
तमन्वधावन्नृपतिरेक एव युधिष्ठिरः ।
प्रविशन्तं वनं घोरं लक्ष्यालक्ष्यं क्वचित्क्वचित् ॥ १६-२८-२० (९७९०४)
भोभो विदुर राजाऽहं दयितस्ते युधिष्ठिरः ।
इति ब्रुवन्नरपतिस्तं यत्नादभ्यधावत ॥ १६-२८-२१ (९७९०५)
ततो विविक्त एकान्ते तस्थौ बुद्धिमतां वरः ।
विदुरो वृक्षमाश्रित्य कञ्चित्तत्र वनान्तरे ॥ १६-२८-२२ (९७९०६)
तं राजा क्षीणभूयिष्ठमाकृतीमात्रसूचितम् ।
अभिजज्ञे महाबुद्धिं महाबुद्धिर्युधिष्ठिरः ॥ १६-२८-२३ (९७९०७)
युधिष्ठिरोऽहमस्मीति वाक्यमुक्त्वाऽग्रतः स्थितः ।
विदुरस्याश्रमे राजा स च प्रत्याह संज्ञया ॥ १६-२८-२४ (९७९०८)
ततः सोऽनिमिषो भूत्वा राजानं तमुदैक्षत ।
संयोज्य विदुरस्तस्मिन्दृष्टिं दृष्ट्या समाहितः ॥ १६-२८-२५ (९७९०९)
विवेश विदुरो धीमान्गात्रैर्गात्राणि चैव ह ।
प्राणान्प्राणेषु च दधदिन्द्रियाणीन्द्रियेषु च ॥ १६-२८-२६ (९७९१०)
स योगबलमास्थाय विवेश नृपतेस्तनुम् ।
विदुरो धर्मराजस्य तेजसा प्रज्वलन्निव ॥ १६-२८-२७ (९७९११)
विदुरस्य शरीरं तु तथैव स्तब्धलोचनम् ।
वृक्षाश्रितं तदा राजा ददर्श गतचेतनम् ॥ १६-२८-२८ (९७९१२)
बलवन्तं तथाऽऽत्मानं मेने बहुगुणं तदा ।
धर्मराजो महातेजास्तच्च सस्मार पाण्डवः ॥ १६-२८-२९ (९७९१३)
पौराणमात्मनः सर्वं भविष्यं च विशाम्पते ।
योगधर्मं महातेजा व्यासेन कथिनं यथा ॥ १६-२८-३० (९७९१४)
धर्मराजश्च तत्रैनं सञ्चस्कारयिषुस्तदा ।
दग्धुकामोऽभवद्विद्वानथ वागभ्यभाषत ॥ १६-२८-३१ (९७९१५)
भोभो राजन्न दग्धव्यमेतद्विदुरसंज्ञकम् ।
कलेबरमिहैवं ते धर्म एष सनातनः ॥ १६-२८-३२ (९७९१६)
लोको वैकर्तनो नाम भविष्यत्यस्य भारत ।
यतिधर्ममवाप्तोसौ नैष शोच्यः परंतप ॥ १६-२८-३३ (९७९१७)
इत्युक्तो धर्मराजः स विनिवृत्य ततः पुनः ।

राज्ञो वैचित्रवीर्यस्य तत्सर्वं प्रत्यवेदयत् ॥१६-२८-३४ (९७९१८)
ततः स राजा धृतिमान्स च सर्वो जनस्तदा ।
भीमसेनादयश्चैव परं विस्मियमागताः ॥१६-२८-३५ (९७९१९)
तच्छ्रुत्वा प्रीतिमान्राजा भूत्वा धर्मजमब्रवीत् ।
आपो मूलं फलं चैव ममेदं प्रतिगृह्यताम् ॥१६-२८-३६ (९७९२०)
यदन्नो हि नरो राजंस्तदन्नोऽस्यातिथिः स्मृतः ।
इत्युक्तः स तथेत्येवं प्राह धर्मात्मजो नृपम् ॥१६-२८-३७ (९७९२१)
फलं मूलं च बुभुजे राज्ञा दत्तं सहानुजः ।
ततस्ते वृक्षमूलेषु कृतवासपरिग्रहाः ।
तां रात्रिमवसन्सर्वे फलमूलजलाशनाः ॥ ॥ १६-२८-३८ (९७९२२)

इति श्रीमन्महाभारते आश्रमवासिकपर्वणि आश्रमवासपर्वणि
अष्टाविंशोऽध्यायः ॥ २८ ॥
Mahabharata - AshramaVasika Parva - Chapter Footnotes

७-२८-४ कच्चिदायाननुच्छिद्येति क पाठः ॥
७-२८-८ जामयः सौभाग्यवत्यः ॥
७-२८-१८ वीटा पाषाणकवलः । वनदिग्धाङ्गो वानरैरुपलक्षित इति
थ पाठः ॥
७-२८-२९ तच्च स्वस्य विदुरस्य च एकस्यैव धर्मस्यांशाज्जातत्वं
सस्मार ॥
७-२८-३० योगधर्मं सस्मारेत्यनुषज्यते ॥
७-२८-३१ संचस्कारयिषुः संस्कारं लम्भयितुमिच्छुः ॥
७-२८-३३ लोकास्सान्तानिकानाम भविष्यन्त्यस्येति झ पाठः । यतिधर्मो
दाहाद्ययोग्यत्वम् ॥

---

अस्रमवसिकपर्व-अध्यय०२९
॥ श्रीः ॥
१६.२९. अध्यायः २९

Mahabharata - AshramaVasika Parva - Chapter Topics
युधिष्ठिरेण धृराष्ट्राभ्यनुज्ञया भ्रात्रादिभिः सह
महर्षिणामाश्रमदर्शनम् ॥ १ ॥
शतयूपादिभिः सशिष्येण व्यासेन च युधिष्ठिरादिभिः परिवृतस्य
धृतराष्ट्रस्याश्रमंप्रत्यागमनम् ॥ २ ॥

वैशम्पायन उवाच ।
ततस्तु राजन्नेतेषामाश्रमे पुण्यकर्मणाम् ।
शिवा नक्षत्रसम्पन्ना सा व्यतीयाय शर्वरी ॥ १६-२९-१ (९७९२३)
ततस्तत्र कथाश्चासंस्तेषां धर्मार्थलक्षणाः ।
विचित्रपदसञ्चारा नानाश्रुतिभिरन्विताः ॥ १६-२९-२ (९७९२४)
पाण्डवास्त्वभितो मातुर्धरण्यां सुषुपुस्तदा ।
उत्सृज्य तु महार्हाणि शयनानि नराधिप ॥ १६-२९-३ (९७९२५)
यदाहारोऽभकवद्राजा धृतराष्ट्रो महामनाः ।
तदाहारा नृवीरास्ते न्यवसंस्तां निशां तदा ॥ १६-२९-४ (९७९२६)
व्यतीतायां तु शर्वर्यां कृतपौर्वाह्णिकक्रियः ।
भ्रातृभिः सहितो राजा ददर्शाश्रममण्डलम् ॥ १६-२९-५ (९७९२७)
सान्तः पुरपरीवारः सभृत्यः सपुरोहितः ।
यथासुखं यथोद्देशं धृतराष्ट्राभ्यनुज्ञया ॥ १६-२९-६ (९७९२८)
ददर्श तत्र वेदीश्च सम्प्रज्वलितपावकाः ।
कृताभिषेकैर्मुनिभिर्हुताग्निभिरुपस्थिताः ॥ १६-२९-७ (९७९२९)
वानेयपुष्पनिकरैराज्यधूमोद्गमैरपि ।
ब्राह्मेण वपुषा युक्ता युक्ता मुनिगणस्य ताः ॥ १६-२९-८ (९७९३०)
मृगयूथैरनुद्विग्नैस्तत्रतत्र समाश्रितैः ।
अशङ्कितैः पक्षिगणैः प्रगीतैरिव च प्रभो ॥ १६-२९-९ (९७९३१)
केकाभिर्नीलकण्ठानां दात्यूहानां च कूजितैः ।
कोकिलानां कुहुरवैः सुखैः श्रुतिमनोहरैः ॥ १६-२९-१० (९७९३२)
प्राधीतद्विजघोषैश्च क्वचित्क्वचिदलङ्कृतम् ।
फलमूलसमाहारैर्महद्भिश्चोपशोभितम् ॥ १६-२९-११ (९७९३३)
ततः स राजा प्रददौ तापसार्थमुपाहृतान् ।
कलशान्काञ्चनान्राजंस्तथैवौदुम्बरानपि ॥ १६-२९-१२ (९७९३४)
अजिनानि प्रवेणीश्च स्रुक्स्रुवं च महीपतिः ।
कमण्डलूंश्च स्थालीश्च पिठराणि च भारत ॥ १६-२९-१३ (९७९३५)
भाजनानि च लौहानि पात्रीश्च विविधा नृप ।
यद्यदिच्छति यावच्च यदन्यदपि काङ्क्षितम् ॥ १६-२९-१४ (९७९३६)
एवं स राजा धर्मात्मा परीत्याश्रममण्डलम् ।
वसु विश्राण्य तत्सर्वं पुनरायान्महीपतिः ॥ १६-२९-१५ (९७९३७)
कृताह्निकं च राजानं धृतराष्ट्रं महीपतिम् ।
ददर्शासीनमव्यग्रं गान्धारीसहितं तदा ॥ १६-२९-१६ (९७९३८)
मातरं चाविदूरस्थां शिष्यवत्प्रणतां स्थिताम् ।

कुन्तीं ददर्श धर्मात्मा शिष्टाचारसमन्विताम् ॥ १६-२९-१७ (९७९३९)
स तमभ्यर्च्य राजानं नाम संश्राव्य चात्मनः ।
निषीदेत्यभ्यनुज्ञातो वृस्यामुपविवेश ह ॥ १६-२९-१८ (९७९४०)
भीमसेनादयश्चैव पाण्डव भरतर्षभ ।
अभिवाद्योपसङ्गृह्य निषेदुः पार्थिवाज्ञया ॥ १६-२९-१९ (९७९४१)
स तैः परिवृतो राजा शुशुभेऽतीव कौरवः ।
बिभ्रद्ब्राह्मीं श्रियं दीप्तां देवैरिव बृहस्पतिः ॥ १६-२९-२० (९७९४२)
तथा तेषूपविष्टेषु समाजग्मुर्महर्षयः ।
शतयूपप्रभृतयः कुरुक्षेत्रनिवासिनः ॥ १६-२९-२१ (९७९४३)
व्यासश्च भगवान्विप्रो देवर्षिगणसेवितः ।
वृतः शिष्यैर्महातेजा दर्शयामास पार्थिवम् ॥ १६-२९-२२ (९७९४४)
ततः स राजा कौरव्यः कुन्तीपुत्रश्च धर्मराट् ।
भीमसेनादयश्चैव प्रत्युत्थायाभ्यवादयन् ॥ १६-२९-२३ (९७९४५)
समागतस्ततो व्यासः शतयूपादिभिर्वृतः ।
धृतराष्ट्रं महीपालमास्यतामित्यभाषत ॥ १६-२९-२४ (९७९४६)
वरं तु विष्टरं कौश्यं कृष्णाजिनकुशोत्तरम् ।
प्रतिपेदे तदा व्यासस्तदर्थमुपकल्पितम् ॥ १६-२९-२५ (९७९४७)
ते च सर्वे द्विजश्रेष्ठा विष्टरेषु समन्ततः ।
द्वैपायनाभ्यनुज्ञाता निषेदुर्विपुलौजसः ॥ ॥ १६-२९-२६ (९७९४८)

इति श्रीमन्महाभारते आश्रमवासिकपर्वणि आश्रमवासपर्वणि
एकोनत्रिंशोऽध्यायः ॥ २९ ॥
Mahabharata - AshramaVasika Parva - Chapter Footnotes

७-२९-८ मुनिगणस्य मुनिगणेन ।ता वैदिक्यो लौकिक्यश्च ॥
७-२९-९ मृगयूथादिभिरलङ्कृतमाश्रमम् ॥
७-२९-१२ औदुम्बरान् कलशान् ॥
७-२९-१३ प्रवेणीः कुथाः ॥

---

अस्रमवसिकपर्व-अध्यय०३०
॥ श्रीः ॥
१६.३०. अध्यायः ३०

Mahabharata - AshramaVasika Parva - Chapter Topics
व्यासन धृतराष्ट्रंप्रति कुशलादिप्रश्नपूर्वकं विदुरस्य
निजस्वरूपादिप्रतिपादनम् ॥ १ ॥

तथा इतरमहर्षिदुष्करतदभीष्टाश्चर्यकर्मकरणप्रतिज्ञानम् ॥ २ ॥

Mahabharata - AshramaVasika Parva - Chapter Text

वैशम्पायन उवाच ।
ततः समुपविष्टेषु पाण्डवेषु महात्मसु ।
व्यासः सत्यवतीपुत्रः प्रोवाचामन्त्र्य पार्थिवम् ॥ १६-३०-१ (९७९४९)
धृतराष्ट्र महाबाहो कच्चित्ते वर्तते तपः ।
कच्चिन्मनस्ते प्रीणाति वनवासे नराधिप ॥ १६-३०-२ (९७९५०)
कच्चिद्धृदि न ते शोको राजन्पुत्रविनाशजः ।
कच्चिज्ज्ञानानि सर्वाणि सुप्रसन्नानि तेऽनघ ॥ १६-३०-३ (९७९५१)
कच्चिद्बुद्धिं दृढां कृत्वा चरस्यारण्यकं विधिम् ।
कच्चिद्वधूश्च गान्धारी न शोकेनाभिभूयते ॥ १६-३०-४ (९७९५२)
महाप्रज्ञा बुद्धिमती देवी धर्मार्थदर्शिनी ।
आगमापायतत्त्वज्ञा कच्चिदेषा न शोचति ॥ १६-३०-५ (९७९५३)
कच्चित्कुन्ती च राजंस्त्वां शुश्रूषत्यनहङ्कृता ।
या परित्यज्य स्वं पुत्रं गुरुशुश्रूषणे रता ॥ १६-३०-६ (९७९५४)
कच्चिद्धर्मसुतो राजा त्वया प्रत्यभिनन्दितः ।
भीमार्जुनयमाश्चैव कच्चिदेतेऽपि सान्तिताः ॥ १६-३०-७ (९७९५५)
कच्चिन्नन्दसि दृष्ट्वैतान्कच्चिते निर्मलं मनः ।
कच्चिच्च शुद्धभावोसि जातज्ञानो नराधिप ॥ १६-३०-८ (९७९५६)
एतद्धि त्रितयं श्रेष्ठं सर्वभूतेषु भारत ।
निर्वैरता महाराज सत्यमक्रोध एव च ॥ १६-३०-९ (९७९५७)
कच्चित्ते न च मोहोस्ति वनवासेन भारत ।
स्वदत्ते वन्यमन्नं वा उपवासोपि वा भवेत् ॥ १६-३०-१० (९७९५८)
विदितं चापि राजेन्द्र विदुरस्य महात्मनः ।
गमनं विधिनाऽनेन धर्मस्य सुमहात्मनः ॥ १६-३०-११ (९७९५९)
माण्डव्यशापाद्धि स वै धर्मो विदुरतां गतः ।
महाबुद्धिर्महायोगी महात्मा सुमहामनाः ॥ १६-३०-१२ (९७९६०)
बृहस्पतिर्वा देवेषु शुक्रो वाऽप्यसुरेषु च ।
न तथा बुद्धिसम्पन्नो यथा स पुरुषर्षभः ॥ १६-३०-१३ (९७९६१)
तपोबलव्ययं कृत्वा सुचिरात्सम्भृतं तदा ।
माण्डव्येनर्षिणा धर्मो ह्यभिभूतः सनातनः ॥ १६-३०-१४ (९७९६२)
नियोगाद्ब्रह्मणः पूर्वं मया स्वेन बलेन च ।
वैचित्रवीर्यके क्षेत्रे जातः स सुमहामतिः ॥ १६-३०-१५ (९७९६३)
भ्राता तव महाराज देवदेवः सनातनः ।

धारणान्मनसा ध्यानाद्य धर्मं कवयो विदुः ॥ १६-३०-१६ (९७९६४)
सत्येन संवर्धयति यो दमेन शमेन च ।
अहिंसया च दानेन तपसा च सनातनः ॥ १६-३०-१७ (९७९६५)
येन योगबलाज्जातः कुरुराजो युधिष्ठिरः ।
धर्म इत्येष नृपते प्राज्ञेनामितबुद्धिना ॥ १६-३०-१८ (९७९६६)
यथा वह्निर्यथा वायुर्यथाऽऽपः पृथिवी यथा ।
यथाऽऽकाशं तथा धर्म इह चामुत्र च स्थितः ॥ १६-३०-१९ (९७९६७)
सर्वगश्चैव राजेन्द्र सर्वं व्याप्य चराचरम् ।
दृश्यते देवदेवैः स सिद्धैर्निर्मुक्तकल्मषैः ॥ १६-३०-२० (९७९६८)
यो हि धर्मः स विदुरो विदुरो यः स पाण्डवः ।
स एष राजन्दृश्यस्ते माण्डवः प्रेष्यवत्स्थितः ॥ १६-३०-२१ (९७९६९)
प्रविष्टः स महात्मानं भ्राता ते बुद्धिसम्मतः ।
दृष्ट्वा महात्मा कौन्तेयं महायोगबलान्वितः ॥ १६-३०-२२ (९७९७०)
त्वां चापि श्रेयसा योक्ष्ये नचिराद्भरतर्षभ ।
संशयच्छेदनार्थाय प्राप्तं मां विद्धि पुत्रक ॥ १६-३०-२३ (९७९७१)
न कृतं यैः पुरा कैश्चित्कर्म लोके महर्षिभिः ।
आश्चर्यभूतं तपसः फलं तद्दर्शयामि वः ॥ १६-३०-२४ (९७९७२)
किमिच्छसि महीपाल मत्तः प्राप्तुमभीप्सितम् ।
द्रष्टुं स्प्रष्टुमथ श्रोतुं तत्कर्तास्मि तवानघ ॥ ॥ १६-३०-२५ (९७९७३)

इति श्रीमन्महाभारते आश्रमवासिकपर्वणि आश्रमवासपर्वणि
त्रिंशोऽध्यायः ॥ ३० ॥
Mahabharata - AshramaVasika Parva - Chapter Footnotes

७-३०-६ या परित्यव्य राज्यं स्वमिति क थ पाठः ॥

---

अस्रमवसिकपर्व-अध्यय०३१
॥ श्रीः ॥
१६.३१. अध्यायः ३१

अथ पुत्रदर्शनपर्व ॥ २ ॥
Mahabharata - AshramaVasika Parva - Chapter Topics
धृतराष्ट्राश्रमे भ्रात्रादिभिः सैन्येन च सह मासमेकं
निवसति युधिष्ठिरे कदाचन व्यासधृतराष्ट्रौ परिवार्य
नारादादिभिर्गान्धार्यादिभिः पाण्डवैश्च समुपवेशनम् ॥ १ ॥
तत्र गान्धार्या व्यासम्प्रति धृतराष्ट्रस्य पुत्रदिदृक्षानिवेदने

व्यासेन कुन्तींप्रति तदभीष्टनिवेदनचोदना ॥ २ ॥

Mahabharata - AshramaVasika Parva - Chapter Text

जनमेजय उवाच ।
वनवासं गते विप्र धृतराष्ट्रे महीपतौ ।
सभार्ये नृपशार्दूले वध्वा कुन्त्या समन्विते ॥ १६-३१-१ (९७९७४)
विदुरे चापि धर्मज्ञे धर्मराजं व्यपश्रिते ।
वसत्सु पाण्डुपुत्रेषु सर्वेष्वाश्रममण्डले ॥ १६-३१-२ (९७९७५)
यत्तदाश्चर्यमिति वै करिष्यामीत्युवाच ह ।
व्यासः परमतेजस्वी महर्षिस्तद्वदस्व मे ॥ १६-३१-३ (९७९७६)
वनवासे च कौरव्याः कियन्तं कालमच्युतः ।
युधिष्ठिरो नरपतिर्न्यवसत्सजनस्तदा ॥ १६-३१-४ (९७९७७)
किमाहाराश्च ते तत्र ससैन्या न्यवसन्प्रभो ।
सान्तःपुरा महात्मान एतदिच्छामि वेदितुम् ॥ १६-३१-५ (९७९७८)
वैशम्पायन उवाच। १६-३१-६क्ष् (८०५८)
ग्वनवासगतं राजन्धृतराष्ट्रं महीपतिम् ।
युधिष्ठिरोऽभ्ययाद्द्रष्टुं ससैन्यो भ्रातृभिः सह ॥ १६-३१-६ (९७९७९)
प्रथमे दिवसे चैषामापो मूलं फलं तथा ।
भोजनं भूमिशय्या च तत्रासीद्भरतर्षभ ॥ १६-३१-७ (९७९८०)
तेऽनुज्ञातास्तदा राजन्कुरुराजेन पाण्डवाः ।
विविधान्यन्नपानानि शय्याश्चैवाभजन्वने ॥ १६-३१-८ (९७९८१)
मासमेकं विजह्रुस्ते ससैन्यान्तःपुरो वने ।
अथ तत्रागमद्व्यासो यथोक्तं ते मयाऽनघ ॥ १६-३१-९ (९७९८२)
तथा च तेषां सर्वेषां कथाभिर्नृपसन्निधौ ।
व्यासन्वास्य तं राजन्नाजग्मुर्मुनयोऽपरे ॥ १६-३१-१० (९७९८३)
नारदः पर्वतश्चैव देवलश्च महातपाः ।
विश्वावसुस्तुंबुरुश्च चित्रसेनश्च भारत ॥ १६-३१-११ (९७९८४)
तेषामपि यथान्यायं पूजां चक्रे महातपाः ।
धृतराष्ट्राभ्यनुज्ञातः कुरराजो युधिष्ठिरः ॥ १६-३१-१२ (९७९८५)
निषेदुस्ते ततः सर्वे पूजां प्राप्य युधिष्ठिरात् ।
आसनेषु च पुण्येषु बर्हिणेषु वरेषउ च ॥ १६-३१-१३ (९७९८६)
तेषु तत्रोपविष्टेषु स तु राजा महामतिः ।
पाण्डुपुत्रैः परिवृतो निषसाद कुरूद्वह ॥ १६-३१-१४ (९७९८७)
गान्धारी चैव कुन्ती च द्रौपदी सात्वती तथा ।
स्त्रियश्चान्यास्तथाऽन्याभिः सहोपविविशुस्ततः ॥ १६-३१-१५ (९७९८८)

तेषां तत्र कथा दिव्या धर्मिष्ठाश्चाभवन्नृप ।
राजर्षीणां पुराणानां देवासुरविमिश्रिताः ॥ १६-३१-१६ (९७९८९)
ततः कथान्ते व्यासस्तं प्रज्ञाचक्षुषमीश्वरम् ।
प्रोवाच वदतांश्रेष्ठः पुनरेव स तद्वचः ॥ १६-३१-१७ (९७९९०)
प्रीयमाणो महातेजाः सर्ववेदविदांवरः ।
विदितं मम राजेन्द्र यत्ते हृदि विवक्षितम् ॥ १६-३१-१८ (९७९९१)
दह्यमानस्य शोकेन तव पुत्रकृतेन वै ।
गान्धार्याश्चैव यद्दुःखं हृदि तिष्टति नित्यदा ॥ १६-३१-१९ (९७९९२)
कुन्त्याश्च यन्महाराज द्रौपद्याश्च हृदि स्थितम् ।
यच्च धारयते तीव्रं दुःखं पुत्रविनाशजम् ।
सुभद्रा कृष्णभगिनी तच्चापि विदितं मम ॥ १६-३१-२० (९७९९३)
श्रुत्वा समागममिमं सर्वेषां वस्ततो नृप ।
संशयच्छेदनार्थाय प्राप्तः कौरवनन्दन ॥ १६-३१-२१ (९७९९४)
इमे च देवगन्धर्वाः सर्वे चेमे महर्षयः ।
पश्यन्तु तपसो वीर्यमद्य मे चिरसम्भृतम् ॥ १६-३१-२२ (९७९९५)
तदुच्यतां महाप्राज्ञ कं कामं प्रददामि ते ।
प्रवणोस्मि वरं दातुं पश्य मे तपसो बलम् ॥ १६-३१-२३ (९७९९६)
एवमुक्तः स राजेन्द्रो व्यासेनामितबुद्धिना ।
मुहूर्तमिव संचिन्त्य वचनायोपचक्रमे ॥ १६-३१-२४ (९७९९७)
धन्योस्म्यनुगृहीतश्च सफलं जीवितं च मे ।
यन्मे समागमोऽद्येह भवद्भिः सह साधुभिः ॥ १६-३१-२५ (९७९९८)
अद्य चाप्यवगच्छामि गतिमिष्टामिहात्मनः ।
ब्रह्मकल्पैर्भवद्भिर्यत्समेतोऽहं तपोधनाः ॥ १६-३१-२६ (९७९९९)
दर्शनादेव भवतां पूतोऽहं नात्र संशयः ।
विद्यते न भयं चापि परलोके ममानघाः ॥ १६-३१-२७ (९८०००)
किंतु तस्य सुदुर्बुद्धेर्मन्दस्यापनयैर्भृशम् ।
दूयते मे मनो नित्यं स्मरतः पुत्रगृद्धिनः ॥ १६-३१-२८ (९८००१)
अपापाः पाण्डवा येन निकृताः पापबुद्धिना ।
घातिता पृथिवी येन सहया सनरद्विपा ॥ १६-३१-२९ (९८००२)
राजानश्च महात्मानो नानाजनपदेश्वराः ।
आगम्य मम पुत्रार्थे सर्वे मृत्युवशं गताः ॥ १६-३१-३० (९८००३)
ये ते पितॄंश्च दारांश्च प्राणांश्च मनसः प्रियान् ।
परित्यज्य गताः शूराः प्रेतराजनिवेशनम् ॥ १६-३१-३१ (९८००४)
का नु तेषां गतिर्ब्रह्मन्मित्रार्थे ये हता मृधे ।
तथैव पुत्रपौत्राणां मम ये निहता युधि ॥ १६-३१-३२ (९८००५)
दूयते मे मनोऽभीक्ष्णं घातयित्वा महाबलम् ।

भीष्मं शान्तनवं वृद्धं द्रोणं च द्विजसत्तमम् ॥ १६-३१-३३ (९८००६)
मम पुत्रेण मूढेन पापेनाकृतबुद्धिना ।
क्षयं नीतं कुलं दीप्तं पृथिवीराज्यमिच्छता ॥ १६-३१-३४ (९८००७)
ग्एते मदर्थे पुत्रांश्च दारांश्च मनसः प्रियान् ।
भोगांश्च विविधांस्तात इष्टापुर्तांस्तथैव च ।
परित्यज्य गताः शूराः प्रेतराजनिवेशनम् ॥' १६-३१-३५ (९८००८)
एतत्सर्वमनुस्मृत्य दह्यमानो दिवानिशम् ।
न शान्तिमधिगच्छामि दुःखशोकसमाहतः ॥ १६-३१-३६ (९८००९)
इति मे चिन्तयानस्य पितः शान्तिर्न विद्यते ॥ १६-३१-३७ (९८०१०)
वैशम्पायन उवाच। १६-३१-३८क्ष् (८०५९)
तच्छ्रुत्वा विविधं तस्य राजर्षेः परिदेवितम् ।
पुनर्नवीकृतः शोको गान्धार्या जनमेजय ॥ १६-३१-३८ (९८०११)
कुन्त्या द्रुपदपुत्र्याश्च सुभद्रायास्तथैव च ।
तासां च वरनारीणां वधूनां कौरवस्य ह ॥ १६-३१-३९ (९८०१२)
पुत्रशोकसमाविष्टा गान्धारी त्विदमब्रवीत् ।
श्वशुरं बद्धनयना देवी प्राञ्जलिरुत्थिता ॥ १६-३१-४० (९८०१३)
ग्लोकान्तरगतान्पुत्रानयं काङ्क्षति मानद ।
तच्चास्य मासं ज्ञातं भगवंस्तपसा त्वया ॥' १६-३१-४१ (९८०१४)
षोडशेमानि वर्षाणि गतानि मुनिपुङ्गव ।
अस्य राज्ञोहतान्पुत्राञ्शोचतो न शमो विभो ॥ १६-३१-४२ (९८०१५)
पुत्रशोकसमाविष्टो निःश्वसन्ह्येष भूमिपः ।
न शेते वसतीः सर्वा धृतराष्ट्रो महामुने ॥ १६-३१-४३ (९८०१६)
लोकानन्यान्समर्थोसि स्रष्टुं सर्वांस्तपोबलात् ।
किमु लोकान्तरगतान्राज्ञो दर्शयितुं सुतान् ॥ १६-३१-४४ (९८०१७)
इयं च द्रौपदी कृष्णा हतज्ञातिसुता भृशम् ।
शोचत्यतीव सर्वासां स्नुषाणां दयिता स्नुषा ॥ १६-३१-४५ (९८०१८)
तथा कृष्णस्य भगिनी सुभद्रा भद्रभाषिणी ।
सौभद्रकवधसंतप्ता भृशं शोचति भामिनी ॥ १६-३१-४६ (९८०१९)
इयं च भूरिश्रवसो भार्या परमसम्मता ।
भर्तृव्यसनशोकार्ता भृशं शोचति भामिनी ॥ १६-३१-४७ (९८०२०)
यस्यास्तु श्वशुरो धीमान्बाह्लिकः स कुरूद्वहः ।
निहतः सोमदत्तश्च पित्रा सह महारणे ॥ १६-३१-४८ (९८०२१)
श्रीमतोस्य महाबुद्धेः सङ्ग्रामेष्वपलायिनः ।
पुत्रस्य ते पुत्रशतं निहतं यद्रणाजिरे ॥ १६-३१-४९ (९८०२२)
तस्य भार्याशतमिदं दुःखशोकसमाहतम् ।
पुनःपुनर्वर्धयानं शोकं रोज्ञो ममैव च ।

हताहारेण महता मामुपास्ते महामुने ॥ १६-३१-५० (९८०२३)
ये च शूरा महात्मानः श्वशुरा मे महारथाः ।
सोमदत्तप्रभृतयः का नु तेषां गतिः प्रभो ॥ १६-३१-५१ (९८०२४)
तव प्रसादाद्भगवन्विशोकोऽयं महीपतिः ।
कुर्यात्कालमहं चेयं वधूस्तव महामुने ॥ १६-३१-५२ (९८०२५)
इत्युक्तवत्यां गान्धार्यां कुन्ती व्रतकृशानना ।
प्रच्चन्नजातं पुत्रं तु सस्मारादित्यसन्निभम् ॥ १६-३१-५३ (९८०२६)
तामृषिर्वरदो व्यासो दूरश्रवणदर्शनः ।
अपश्यद्दुःखितां देवीं मातरं सव्यसाचिनः ॥ १६-३१-५४ (९८०२७)
तामुवाच ततो व्यासो यत्ते कार्यं विवक्षितम् ।
तद्ब्रूहि त्वं महाभागे यत्ते मनसि वर्तते ॥ १६-३१-५५ (९८०२८)
श्वशुराय तत कुन्ती प्रणम्य शिरसा तदा ।
उवाच वाक्यं सव्रीडा विवृण्वाना पुरातनम् ॥ ॥ १६-३१-५६ (९८०२९)

इति श्रीमन्महाभारते आश्रमवासिकपर्वणि पुत्रदर्शनपर्वणि
एकत्रिंशोऽध्यायः ॥ ३१ ॥
Mahabharata - AshramaVasika Parva - Chapter Footnotes

७-३१-१३ बर्हिणेषु पक्षिबर्हजतूलिकामयेषु ॥
७-३१-५० मामुपास्ते भार्याशतं रोदनं कुर्वत् मामेव परिवार्य
तिष्ठतीत्यर्थः

---

अस्रमवसिकपर्व-अध्यय०३२
॥ श्रीः ॥
१६.३२. अध्यायः ३२

अथ पुत्रदर्शनपर्व ॥ २ ॥
Mahabharata - AshramaVasika Parva - Chapter Topics
कुन्त्या व्यासंप्रति स्वस्मिन्दुर्वासःप्रसादेन
सूर्यात्कर्णस्योत्पत्तिकथनपूर्वकं स्वस्य तद्दिदृक्षानिवेदनम् ॥ १ ॥
व्यासेन कुन्तींप्रति हेतूपन्यासेन तत्प्रयुक्तदोषशङ्कानिरसनम् ॥ २ ॥

Mahabharata - AshramaVasika Parva - Chapter Text

कुन्त्युवाच ।
भगवञ्श्वशुरो मेऽसि दैवतस्यापि दैवतम् ।

स मे देवातिदेवस्त्वं शृणु सत्यां गिरं मम ॥ १६-३२-१ (९८०३०)
तपस्वी कोपनो विप्रो दुर्वासा नाम मे पितुः ।
भिक्षामुपागतो भोक्तुं तमहं पर्यतोषयम् ॥ १६-३२-२ (९८०३१)
शौचने त्वागसस्त्यागैः शुद्धेन मनसा तथा ।
कोपस्थानेष्वपि महत्स्वकुप्यन्न कदाचन ॥ १६-३२-३ (९८०३२)
स प्रीतो वरदो मेऽभूत्कृतकृत्यो महामुनिः ।
अवश्यं ते ग्रहीतव्यमिति मां सोब्रवीद्वचः ॥ १६-३२-४ (९८०३३)
ततः शापभयाद्विप्रमवोचं पुनरेव तम् ।
एवमस्त्विति च प्राह पुनरेव स मे द्विजः ॥ १६-३२-५ (९८०३४)
धर्मस्य जननी भद्रे भवित्री त्वं शुभानने ।
वशे स्थास्यन्ति ते देवा यांस्त्वमावाहयिष्यसि ॥ १६-३२-६ (९८०३५)
इत्युक्त्वाऽन्तर्हितो विप्रस्ततोऽहं विस्मिताऽभवम् ।
न च सर्वास्ववस्थासु स्मृतिर्मे विप्रणश्यति ॥ १६-३२-७ (९८०३६)
अथ हर्म्यतलस्थाऽहं रविमुद्यन्तमीक्षती ।
संस्मृत्य तदृषेर्वाक्यं स्पृहयन्ती दिवाकरम् ॥ १६-३२-८ (९८०३७)
स्थिताऽहं बालभावेन तत्र दोषमबुद्धयती ।
अथ देवः सहस्रांशुर्मत्समीपगतोऽभवत् ॥ १६-३२-९ (९८०३८)
द्विधा कृत्वाऽऽत्मनो देहं भूमौ च गगनेऽपि च ।
ततापं लोकानेकेन द्वितीयेनागमत्स माम् ॥ १६-३२-१० (९८०३९)
स मामुवाच वेपन्तीं वरं मत्तो वृणीष्व ह ।
गम्यतामिति तं चाहं प्रणम्य सिरसाऽवदम् ॥ १६-३२-११ (९८०४०)
स मामुवाच तिग्मांशुर्वृथाऽऽह्वानं न मे क्षमम् ।
धक्ष्यामि त्वां च विप्रं च येन दत्तो वरस्तव ॥ १६-३२-१२ (९८०४१)
तमहं रक्षती विप्रं शापादनपकारिणम् ।
पुत्रो मे त्वत्समो देव भवेदिति ततोऽब्रवम् ॥ १६-३२-१३ (९८०४२)
ततो मां तेजसाऽऽविश्य मोहयित्वा च भानुमान् ।
उवाच भविता पुत्रस्तवेत्यभ्यगमद्दिवम् ॥ १६-३२-१४ (९८०४३)
ततोऽहमन्तर्भवने पितुश्चित्तानुरक्षिणी ।
गूढोत्पन्नं सुतं बालं जले कर्णमवासृजम् ॥ १६-३२-१५ (९८०४४)
नूनं तस्यैव देवस्य प्रसादात्पुनरेव तु ।
कन्याऽहमभवं विप्र यथा प्राह स मामृषिः ॥ १६-३२-१६ (९८०४५)
स मया सूढया पुत्रो ज्ञायमानोऽप्युपेक्षितः ।
तन्मां दहति विप्रर्षे यथा सुविदितं तव ॥ १६-३२-१७ (९८०४६)
यदि पापमपापं वा यदेतद्विवृतं मया ।
तं द्रष्टुमिच्छामि भगवन्व्यपनेतुं त्वमर्हसि ॥ १६-३२-१८ (९८०४७)
यच्चास्य राज्ञो विदितं हृदिस्थं भवतोऽनघ ।

तं चायं लभतां काममद्यैव मुनिसत्तम ॥ १६-३२-१९ (९८०४८)
इत्युक्तः प्रत्युवाचेदं व्यासो वेदविदांवरः ।
साधु सर्वमिदं भाव्यमेवमेतद्यथाऽऽत्थ माम् ॥ १६-३२-२० (९८०४९)
अपराधश्च ते नास्ति कन्याभावं गता ह्यसि ।
देवाश्चैश्वर्यवन्तो वै शरीराण्याविशन्ति वै ॥ १६-३२-२१ (९८०५०)
सन्ति देवनिकायाश्च संकल्पाज्जनयन्ति ये ।
वाचा दृष्ट्या तथा स्पर्शात्संघर्षेणेति पञ्चधा ॥ १६-३२-२२ (९८०५१)
मनुष्यधर्मो दैवेन धर्मेण हि न दुष्यति ।
इति कुन्ति विजानीहि व्येतु ते मानसो ज्वरः ॥ १६-३२-२३ (९८०५२)
सर्वं बलवतां पथ्यं सर्वं बलवतां शुचि ।
सर्वं बलवतां धर्मः सर्वं बलवतां स्वकम् ॥ ॥ १६-३२-२४ (९८०५३)

इति श्रीमन्महाभारते आश्रमवासिकपर्वणि पुत्रदर्शनपर्वणि
द्वात्रिंशोऽध्यायः ॥ ३२ ॥
Mahabharata - AshramaVasika Parva - Chapter Footnotes

७-३२-३ आगसस्त्यागैरपराधत्यागैः ॥
७-३२-२२ सघर्षेण रत्या ॥

---

अस्रमवसिकपर्व-अध्यय०३३
॥ श्रीः ॥
१६.३३. अध्यायः ३३

अथ पुत्रदर्शनपर्व ॥ २ ॥
Mahabharata - AshramaVasika Parva - Chapter Topics
व्यासेन गान्धारींप्रति समरहतानां दुर्योधनादीनां सर्वेषां
रात्रौ प्रदर्शनप्रतिज्ञानपूर्वकं धृतराष्ट्रादीनां विशिष्य
गन्धर्वाद्यंशत्वकथनम् ॥ १ ॥
धृतराष्ट्रादिभिर्व्यासवचनाद्गङ्गातीरमेत्य बन्धुदर्शनौत्कण्ठ्येन
कृच्छ्रादहर्यापनम्। २ ।।

Mahabharata - AshramaVasika Parva - Chapter Text

व्यास उवाच ।
भद्रे द्रक्ष्यसि गान्धारि पुत्रान्भ्रातॄन्स्वकान्गणान् ।
वधूश्च पतिभिः सार्धं निशि सुप्तोस्थिता इव ॥ १६-३३-१ (९८०५४)

कर्णं द्रक्ष्यति कुन्ती च सौभद्रं चापि यादवी ।
द्रौपदी पञ्चपुत्रांश्च पितॄन्भ्रातॄंस्तथैव च ॥१६-३३-२ (९८०५५)
पूर्वमेवैष हृदये व्यवसायोऽभकवन्मम ।
यदाऽस्मि चोदितो राज्ञा भवत्या पृथयैव च ॥१६-३३-३ (९८०५६)
न ते शोच्या महात्मानः सर्व एव नरर्षभाः ।
क्षत्रधर्मपराः सन्तस्तथा हि निधनं गताः ॥१६-३३-४ (९८०५७)
भवितव्यमवश्यं तत्सुरकार्यमनिन्दिते ।
अवतेरुस्ततः सर्वे देवा भागैर्महीतलम् ॥१६-३३-५ (९८०५८)
गन्धर्वाप्सरसश्चैव पिशाचा गुह्यराक्षसाः ।
तथा पुण्यजनाश्चैव सिद्धा देवर्षयोपि च ॥१६-३३-६ (९८०५९)
देवाश्च दानवाश्चैव तथा देवर्षयोऽमलाः ।
ते एते निधनं प्राप्ताः कुरुक्षेत्रे रणाजिरे ॥१६-३३-७ (९८०६०)
गन्धर्वराजो यो धीमान्धृतराष्ट्र इति श्रुतः ।
स एव मानुषे लोके धृतराष्ट्रः पतिस्तव ॥१६-३३-८ (९८०६१)
पाण्डुं मरुद्गणाद्विद्धि विशिष्टतममच्युतम् ।
धर्मस्यांशोऽभवत्क्षत्ता राजा चैव युधिष्ठिरः ॥१६-३३-९ (९८०६२)
कलिं दुर्योधनं विद्धि शकुनिं द्वापरं नृपम् ।
दुःशासनादीन्विद्धि त्वं राक्षसान्शुभदर्शने ॥१६-३३-१० (९८०६३)
मरुद्गणाद्भीमसेनं बलवन्तमरिंदमम् ।
विद्धिं त्वं तु नरमृषिमिमं पार्थं धनंजयम् ।
नारायणं हृषीकेशमश्विनौ यमजौ तथा ॥ १६-३३-११ (९८०६४)
द्विधा कृत्वाऽऽत्मनो देहमादित्यं तपतां वरम् ।
लोकांश्च तापयानं वै कर्णं विद्धि पृथासुतम् ॥१६-३३-१२ (९८०६५)
यः स वैरार्थमुद्भूतः संघर्षजननस्कतथा ।
तं कर्णं विद्धि कल्याणि भास्करं शुभदर्शने ॥१६-३३-१३ (९८०६६)
यश्च पाण्डवदायादो हतः षड्भिर्महारथैः ।
स सोम इह सौभद्रो योगादेवाभवद्द्विधा ॥१६-३३-१४ (९८०६७)
द्रौपद्या सह संभूतं धृष्टद्युम्नं च पावकात् ।
अग्रेर्भागं शुभं विद्धि राक्षसं तु शिखण्डिनम् ॥१६-३३-१५ (९८०६८)
द्रोणं बृहस्पतेर्भागं विद्धि द्रौणिं च रुद्रजम् ।
गाङ्गेयो वसुवीर्येण देवो मानुषतां गतः ॥१६-३३-१६ (९८०६९)
एवमेते महाप्रज्ञे देवा मानुष्यमेत्य हि ।
ततः पुनर्गताः स्वर्गं कृते कर्मणि शोभने ॥१६-३३-१७ (९८०७०)
यच्च वै हृदि सर्वेषां दुःखमेतच्चिरं स्थितम् ।
तदद्य व्यपनेष्यामि परलोककृताद्भयात् ॥१६-३३-१८ (९८०७१)
सर्वे भवन्तो गच्छन्तु नदीं भागीरथीं प्रति ।

तत्र द्रक्ष्यथ तान्सर्वान्ये हतास्तत्र संयुगे ॥ १६-३३-१९ (९८०७२)
वैशम्पायन उवाच। १६-३३-२०क्ष् (८०६०)
इति व्यासस्य वचनं श्रुत्वा सर्वा जनस्तदा ।
महता सिंहनादेन गङ्गामभिमुखो ययौ ॥ १६-३३-२० (९८०७३)
धृतराष्ट्रश्च सामात्यः प्रययौ सह पाण्डवैः ।
सहितो मुनिशार्दूलैर्गन्धर्वैश्च समागतैः ॥ १६-३३-२१ (९८०७४)
ततो गङ्गां समासाद्य क्रमेण स जनार्णवः ।
निवासमकरोत्सर्वो यथाप्रीति यथासुखम् ॥ १६-३३-२२ (९८०७५)
राजा च पाण्डवैः सार्धमिष्टे देशे सहानुगः ।
निवासमकरोद्धीमान्सस्त्रीवृद्धपुरःसरः ॥ १६-३३-२३ (९८०७६)
जगाम तदहस्चापि तेषां वर्षशतं यथा ।
निशां प्रतीक्षमाणानां दिदृक्षूणां मृतान्नृपान् ॥ १६-३३-२४ (९८०७७)
अथ पुण्यं गिरिवरमस्तमभ्यगमद्रविः ।
ततः कृताभिषेकास्ते नैशं कर्म समाचरन् ॥ ॥ १६-३३-२५ (९८०७८)

इति श्रीमन्महाभारते आश्रमवासिकपर्वणि पुत्रदर्शनपर्वणि
त्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥

---

अस्रमवसिकपर्व-अध्यय०३४
॥ श्रीः ॥
१६.३४. अध्यायः ३४

अथ पुत्रदर्शनपर्व ॥ २ ॥
Mahabharata - AshramaVasika Parva - Chapter Topics
व्यासेन निशायां गङ्गाजलावगाहनेन समाह्वाने पुरा समरनिहतैः
कुरुपाण्डवोभयपक्षीयैः सर्वैः स्वस्वाभरणायुधवाहनादिभिः सह
सलिलादुद्गम्य तीरोत्तरणम् ॥ १ ॥
धृतराष्ट्रेण व्यासप्रसादलब्धदिव्यचक्षुषा दुर्योधनादीनां
सर्वेषामवलोकनम् ॥ २ ॥

Mahabharata - AshramaVasika Parva - Chapter Text

वैशम्पायन उवाच ।
ततो निशायां प्राप्तायां कृतसायाह्निकक्रियाः ।
व्यासमभ्यगमन्सर्वे ये तत्रासन्समागताः ॥ १६-३४-१ (९८०७९)
धृतराष्ट्रस्तु धर्मात्मा पाण्डवैः सहितस्तदा ।

शुचिरेकमनाः सार्धमृषिभिस्तैरुपाविशत् ॥ १६-३४-२ (९८०८०)
गान्धार्या सह नार्यस्तु सहिताः समुपाविशन् ।
पौरजानपदश्चापि जनः सर्वो यथा वयः ॥ १६-३४-३ (९८०८१)
ततो व्यासो महातेजाः पुण्यं भागीरथीजलम् ।
अवतीर्याजुहावाथ सँर्वाल्लोकान्महामुनिः ॥ १६-३४-४ (९८०८२)
पाण्डवानां च ये योधाः कौरवाणां च सर्वशः ।
राजानश्च महाभागा नानादेशनिवासिनः ।
ग्प्रतीक्ष्य तस्थुस्ते सर्वे तेषामागमनं प्रति ॥' १६-३४-५ (९८०८३)
ततः सुतुमुलः शब्दो जलान्ते जनमेजय ।
प्रादुरासीद्यथायोगं कुरुपाण्डवसेनयोः ॥ १६-३४-६ (९८०८४)
ततस्ते पार्थिवाः सर्वे भीष्मद्रोणपुरोगमाः ।
ससैन्याः सलिलात्तस्मात्समुत्तस्थुः सहस्रशः ॥ १६-३४-७ (९८०८५)
विराटद्रुपदौ चैव सहपुत्रौ ससैनिकौ ।
द्रौपदेयाश्च सौभद्रो राक्षसश्च घटोत्कचः ॥ १६-३४-८ (९८०८६)
कर्णदुर्योधनौ चैव शकुनिश्च महारथः ।
दुःशासनादयश्चैव धार्तराष्ट्रा महाबलाः ॥ १६-३४-९ (९८०८७)
जारासन्धिर्भगदत्तो जलसन्धश्च वीर्यवान् ।
भूरिश्रवाः शलः शल्यो वृषसेनश्च सानुजः ॥ १६-३४-१० (९८०८८)
लक्ष्मणो राजपुत्रश्च धृष्टद्युम्नस्सहात्मजः ।
शिखण्डिपुत्राः सर्वे च धृष्टकेतुश्च सानुज ॥ १६-३४-११ (९८०८९)
अचलो वृषकश्चैव राक्षसश्चाप्यलायुधः ।
बाह्लिकः सोमदत्तश्च चेकितानश्च पार्थिवः ॥ १६-३४-१२ (९८०९०)
एते चान्ये च बहवो बहुत्वाद्ये न कीर्तिताः ।
सर्वे भासुरदेहास्ते समुत्तस्थुर्जलात्ततः ॥ १६-३४-१३ (९८०९१)
यस्य् वीरस्य यो वेषो यो ध्वजो यच्च वाहनम् ।
यद्वर्म यत्प्रहरणं तेन तेन स दृश्यते ॥ १६-३४-१४ (९८०९२)
दिव्यांबरधराः सर्वे सर्वे भ्राजिष्णुकुण्डलाः ।
निर्वैरा निरहङ्कारा विगतक्रोधमत्सराः ॥ १६-३४-१५ (९८०९३)
गन्धर्वैरुपगीयन्तः स्तूयमानाश्च बन्दिभिः ।
दिव्यमाल्यस्रजोपेतास्तथा दिव्याप्सरोवृताः ॥ १६-३४-१६ (९८०९४)
धृतराष्ट्रस्य च तदा दिव्यं चक्षुर्नराधिप ।
मुनिः सत्यवतीपुत्रः प्रीतः प्रादात्तपोबलात् ॥ १६-३४-१७ (९८०९५)
दिव्यज्ञानबलोपेता गान्धारी च यशस्विनी ।
ददर्श पुत्रांस्तान्सर्वान्ये चान्येऽपि मृघे हताः ॥ १६-३४-१८ (९८०९६)
तदद्भुतमचिन्त्यं च सुमहद्रोमहर्षमम् ।
विस्मितः स जनः सर्वो ददर्शानिमिषेक्षणः ॥ १६-३४-१९ (९८०९७)

तदुत्सवमहोदग्रं हृष्टनारीनराकुलम् ।
आश्चर्यभूतं ददृशे चित्रं पटगतं यथा ॥ १६-३४-२० (९८०९८)
धृतराष्ट्रस्तु तान्सर्वान्पश्यन्दिव्येन चक्षुषा ।
मुमुदे भरतश्रेष्ठ प्रसादात्तस्य वै मुनेः ॥ ॥ १६-३४-२१ (९८०९९)

इति श्रीमन्महाभारते आश्रमवासिकपर्वणि पुत्रदर्शनपर्वणि
चतुस्त्रिंशोऽध्यायः ॥ ३४ ॥

---

अस्रमवसिकपर्व-अध्यय०३५
॥ श्रीः ॥
१६.३५. अध्यायः ३५

अथ पुत्रदर्शनपर्व ॥ २ ॥
Mahabharata - AshramaVasika Parva - Chapter Topics
धृतराष्ट्रधिष्ठिरादिभिर्व्यासप्रसादोज्जीवितैर्हतपूर्वबन्धुभिः
सह सँल्लापादिना यावद्रात्रिसुखविहरणम् ॥ १ ॥

Mahabharata - AshramaVasika Parva - Chapter Text

वैशम्पायन उवाच ।
ततस्ते पुरषश्रेष्ठाः समाजग्मुः परस्परम् ।
विगतक्रोधमात्सर्याः सर्वे विगतकल्मषाः ॥ १६-३५-१ (९८१००)
विधिं परममास्थाय ब्रह्मर्षिविहितं शुभम् ।
संहृष्टमनसः सर्वे देवलोक इवामराः ॥ १६-३५-२ (९८१०१)
पुत्रः पित्रा च मात्रा च भार्याश्च पतिभिः सह ।
भ्रात्रा भ्राता सखा चैव सख्या राजन्समागताः ॥ १६-३५-३ (९८१०२)
पाण्डवास्तु महेष्वासं कर्णं सौभद्रमेव च ।
सम्प्रहर्षात्समाजग्मुर्द्रौपदेयांश्चक सर्वशः ॥ १६-३५-४ (९८१०३)
ततस्ते प्रीयमाणा वै कर्णेन सह पाण्डवाः ।
समेत्य पृथिवीपाल सौहृदे च स्थिताऽभवन् ॥ १६-३५-५ (९८१०४)
परस्परं समागम्य योधास्ते भरतर्षभ ।
मुनेः प्रसादात्ते ह्येवं क्षत्रिया नष्टमन्यवः ॥ १६-३५-६ (९८१०५)
असौहृदं परित्यज्य सौहृदे पर्यवस्थिताः ।
एवं समागताः सर्वे गुरुभिर्बान्धवैः सह ॥ १६-३५-७ (९८१०६)
पुत्रैश्च पुरुषव्याघ्राः कुरवोऽन्ये च पार्थिवाः ।
तां रात्रिमकिलामेवं विहृत्य प्रीतमानसाः ॥ १६-३५-८ (९८१०७)

मेनिरे परितोषेण नृपाः स्वर्गसदो यथा ।
नात्र शोको भयं त्रासो नारतिर्नायशोऽभवत् ॥ १६-३५-९ (९८१०८)
परस्परं समागम्य योधानां भरतर्षभ ।
समागतास्ताः पितृभिर्भ्रातृभिः पतिभिः सुतैः ।
मुदं परमिकां प्राप्य नार्यो दुःखमथात्यजन् ॥ १६-३५-१० (९८१०९)
ग्देवलोकं गता ये च ये च ब्रह्मसदो गताः ।
ये चापि वारुणं लोकं ये च गोलोकमाश्रिताः ॥ १६-३५-११ (९८११०)
तथा वैवस्वतं लोकं ये च यक्षानुपागताः ।
राक्षसांश्च पिशाचांश्च कुरूंश्चापि तथोत्तरान् ॥ १६-३५-१२ (९८१११)
विचित्राश्च गतीरन्ये ये प्राप्ताः कर्मभिर्नराः ।
सर्वे ते तद्वयोरूपवेषास्तत्र समभ्ययुः ॥' १६-३५-१३ (९८११२)
एकां रात्रिं विहृत्यैवं ते वीरास्ताश्च योषितः ।
आमन्त्र्यान्योन्यमाश्लिष्य ततो जग्मुर्यथागतं ॥ १६-३५-१४ (९८११३)
ततो विसर्जयामास लोकांस्तान्मुनिपुङ्गवः ।
क्षणेनान्तर्हिताश्चैव प्रेक्षतामेव तेऽभवन् ॥ १६-३५-१५ (९८११४)
अवगाह्य महात्मानः पुण्यां भागीरथीं नदीम् ।
सरथाः सध्वजाश्चैव स्वानि वेश्मानि भेजिरे ॥ १६-३५-१६ (९८११५)
देवलोकं ययुः केचित्केचिद्ब्रह्मसदस्तथा ।
केचिच्च वारुणं लोकं केचित्कौबेरमाप्नुवन् ॥ १६-३५-१७ (९८११६)
ततो वैवस्वतं लोकं केचिच्चैवाप्नुवन्नृपाः ।
राक्षसानां पिशाचानां केचिच्चाप्युत्तरान्कुरून् ॥ १६-३५-१८ (९८११७)
विचित्रगतयः सर्वे यानवाप्यामरैः सह ।
आजग्मुस्ते महात्मानः सवाहाः सपदानुगाः ॥ १६-३५-१९ (९८११८)
गतेषु तेषु सर्वेषु सलिलस्थो महामुनिः ।
धर्मसीलो महातेजाः कुरूणां हितकृतदा ।
ततः प्रोवाच ताः सर्वाः क्षत्रिया निहतेश्वराः। १६-३५-२० (९८११९)
यायाः पतिकृताँल्लोकानिच्छनति परमस्त्रियः ।
ता जाह्नवीजलं क्षिप्रमवगाहन्त्वतन्द्रिताः ॥ १६-३५-२१ (९८१२०)
ततस्तस्य वचः श्रुत्वा श्रद्दधाना वराङ्गनाः ।
श्वशुरं समनुज्ञाप्य विविशुर्जाह्नवीजलम् ॥ १६-३५-२२ (९८१२१)
विमुक्ता मानुषैर्देहैस्ततस्ता भर्तृभिः सह ।
समाजग्मुस्तदा साध्व्यः सर्वा एवं विशाम्पते ॥ १६-३५-२३ (९८१२२)
एवं क्रमेणि सर्वास्ताः शीलवत्यः पतिव्रताः ।
प्रविश्य तोयं निर्मुक्ता जग्मुर्भर्तृसलोकताम् ॥ १६-३५-२४ (९८१२३)
दिव्यरूपसमायुक्ता दिव्याभरणभूषिताः ।
दिव्यमाल्यांबरधरा यथाऽऽसां पतयस्तथा ॥ १६-३५-२५ (९८१२४)

ताः शीलगुणसम्पन्ना विमानस्था गतक्लुमाः ।
सर्वाः सर्वगुणोपेताः स्वस्थानं प्रतिपेदिरे ॥ १६-३५-२६ (९८१२५)
यस्य यस्य तु यः कामस्तस्मिन्काले बभूव ह ।
तंतं विसृष्टवान्व्यासो वरदो धर्मवत्सलः ॥ १६-३५-२७ (९८१२६)
तच्छ्रुत्वा नरदेवानां पुनरागमनं नराः ।
जहृषुर्मुदिताश्चासन्नानादेशगता अपि ॥ १६-३५-२८ (९८१२७)
ग्ते नष्टभयसङ्कल्पा नरा विगतकल्मषाः ।
बभूवुः पौरवाःसर्वे तद्दृष्ट्वाऽऽश्चर्यमुत्तमम् ॥' १६-३५-२९ (९८१२८)
प्रियैः समागमं तेषां यः सम्यक् शृणुयान्नरः ।
प्रियाणि लभते नित्यमिह च प्रेत्य चैव सः ।
इष्टबान्धवसंयोगमनायासमनामयम् ॥ १६-३५-३० (९८१२९)
यश्चैतच्छ्रावयेद्विद्वान्विदुषो धर्मवित्तमः ।
स यशः प्राप्नुयाल्लोके परत्र च शुभां गतिम् ॥ १६-३५-३१ (९८१३०)
स्वाध्याययुक्ता मनुजास्तपोयुक्ताश्च भारत ।
साध्वाचारा दमोपेता दाननिर्धूतकल्मषाः ॥ १६-३५-३२ (९८१३१)
ऋजवः शुचयः शान्ता हिंसानृतविवर्जिताः ।
आस्तिकाः श्रद्दधानाश्च धृतिमन्तश्च मानवाः ।
श्रुत्वाऽऽश्चर्यमिदं पर्व ह्यवाप्स्यन्ति परां गतिम् ॥ १६-३५-३३ (९८१३२)
ग्पुनस्ते दर्शनं प्राप्ताः पुनश्च परिकीर्तिताः ।
पुनःपुनः प्रयच्छन्ति शृण्वतामभयं सदा ॥' ॥ १६-३५-३४ (९८१३३)

इति श्रीमन्महाभारते आश्रमवासिकपर्वणि पुत्रदर्शनपर्वणि
पञ्चत्रिंशोऽध्यायः ॥ ३५ ॥

---

अस्रमवसिकपर्व-अध्यय०३६
॥ श्रीः ॥
१६.३६. अध्यायः ३६

अथ पुत्रदर्शनपर्व ॥ २ ॥
Mahabharata - AshramaVasika Parva - Chapter Topics
त्यक्तदेहानामपि कुरुपाण्डवपक्षीयाणां कथं पुनरागमनमिति
जनमेजयप्रश्नस्य सोपपत्तिकमुत्तरदानम् ॥ १ ॥

Mahabharata - AshramaVasika Parva - Chapter Text

सौतिरुवाच ।

एतच्छ्रुत्वा नृपो विद्वान्हृष्टोऽभूज्जनमेजयः ।
पितामहानां सर्वेषां गमनागमनं तदा ॥ १६-३६-१ (९८१३४)
अब्रवीच्च मुदा युक्तः पुनरागमनं प्रति ।
कथं न त्यक्तदेहानां पुनस्तद्रूपदर्शनम् ॥ १६-३६-२ (९८१३५)
इत्युक्तः स द्विजश्रेष्ठो व्यासशिष्यः प्रतापवान् ।
प्रोवाच वदतांश्रेष्ठस्तं नृपं जनमेजयम् ॥ १६-३६-३ (९८१३६)
वैशम्पायन उवाच। १६-३६-४क्ष् (८०६१)
अविप्रणाशः सर्वेषां कर्मणामिति निश्चयः ।
कर्मजानि शरीराणि शरीराकृतयस्तथा ॥ १६-३६-४ (९८१३७)
महाभूतानि नित्यानि भूताधिपतिसंश्रयात् ।
तेषां च नित्यसंवासो न विनाशो वियुज्यताम् ॥ १६-३६-५ (९८१३८)
अनाशया कृतं कर्म तस्य चेष्टः फलागमः ।
आत्मा चैभिः समायुक्तः सुखदुःखमुपाश्नुते ॥ १६-३६-६ (९८१३९)
अविनाश्यस्तथा नित्यं क्षेत्रज्ञ इति निश्चयः ।
भूतानामात्मभावो यो ध्रुवोसौ संविजानताम् ॥ १६-३६-७ (९८१४०)
यावन्न क्षीयते कर्म तावत्तस्य स्वरूपता ।
क्षीणकर्मा नरो लोके रूपान्यत्वमुपाश्नुते ॥ १६-३६-८ (९८१४१)
नानाभूतास्तथैकत्वं शरीरं प्राप्य संहताः ।
भवन्ति ते तथा नित्याः पृथग्भावं विजानताम् ॥ १६-३६-९ (९८१४२)
अश्वमेधश्रुतिश्चेयमश्वसंज्ञपनं प्रति ।
लोकान्तरगता नित्यं प्राणा नित्या हि वाजिनः ॥ १६-३६-१० (९८१४३)
अहं हितं वदाम्येतत्प्रियं चेत्तव पार्थिव ।
देवयाना हि पन्थानः श्रुतास्ते यज्ञसंस्तरे ॥ १६-३६-११ (९८१४४)
सुकृतो यत्र यज्ञस्ते तत्र देवा हितास्तव ।
यदा समन्विता देवाः पशूनां गमनेश्वराः ॥ १६-३६-१२ (९८१४५)
गमिमन्तश्च तेनेष्ट्वा नान्ये नित्या भवन्त्युत ।
नित्येऽस्मिन्पञ्चके वर्गे नित्ये चात्मनि पूरुषः ॥ १६-३६-१३ (९८१४६)
अस्य नाशं समायोगं यः पश्यति वृथामतिः ।
वियोगे शोचतेऽत्यर्थं स बाल इति मे मतिः ॥ १६-३६-१४ (९८१४७)
वियोगे दोषदर्शी यः संयोगं स विसर्जयेत् ।
असङ्गे सङ्गमो नास्ति दुःखं भावि वियोगजम ॥ १६-३६-१५ (९८१४८)
परापरज्ञस्त्वपरो नाभिमानादुदीक्षितः ।
अपरज्ञः परां बुद्धिं स्पृष्ट्वा मोहाद्विमुच्यते ॥ १६-३६-१६ (९८१४९)
अदर्शनादापतितः पुनश्चादर्शनं गतः ।
नाहं तं वेद्मि नासौ मां न च मेऽस्ति विरागता ॥ १६-३६-१७ (९८१५०)
येनयेन शरीरेणि करोत्ययमनीश्वरः ।

तेनतेन शरीरेण तदवश्यमुपाश्नुते ।
मानसं मनसाऽऽप्नोति शरीरं च शरीरवान् ॥ ॥ १६-३६-१८ (९८१५१)

इति श्रीमन्महाभारते आश्रमवासिकपर्वणि पुत्रदर्शनपर्वणि
षट्त्रिंशोऽध्यायः ॥ ३६ ॥
Mahabharata - AshramaVasika Parva - Chapter Footnotes

७-३६-१० संज्ञपनं मारणम् ॥
७-३६-११ नासौ मानादहङ्कारान्न च वेति विरागतामिति क पाठः ॥

---

अस्रमवसिकपर्व-अध्यय०३७
॥ श्रीः ॥
१६.३७. अध्यायः ३७

अथ पुत्रदर्शनपर्व ॥ २ ॥
Mahabharata - AshramaVasika Parva - Chapter Topics
जनमेजयेन परिक्षित्प्रदर्शने प्रार्थिते व्यासेन परिक्षितः
शमीकमहर्षेः शृङ्गीणश्च प्रदर्शनम् ॥ १ ॥
जनमेजयेनावभृथस्नानानन्तरमास्तिकपूजनपूर्वकं
वैशम्पायनंप्रति कथावशेषकथनप्रार्थना ॥ २ ॥

Mahabharata - AshramaVasika Parva - Chapter Text

वैशम्पायन उवाच ।
अदृष्ट्वा तु नृपः पुत्रान्दर्शनं प्रतिलब्धवान् ।
ऋषेः प्रसादात्पुत्राणां स्वरूपाणां कुरूद्वह ॥ १६-३७-१ (९८१५२)
स राजा राजधर्मांश्च ब्रह्मोपनिषदं तथा ।
अवाप्तवान्नरश्रेष्ठो बुद्धिनिश्चयमेव च। १६-३७-२ (९८१५३)
विदुरश्च महाप्राज्ञो ययौ सिद्धिं तपोबलात् ।
धृतराष्ट्रः समासाद्य व्यासं चैव तपस्विनम् ॥ १६-३७-३ (९८१५४)
जनमेजय उवाच। १६-३७-४क्ष् (८०६२)
ममापि वरदो व्यासो दर्शयेत्पितरं यदि ।
तद्रूपवेषवयसं श्रद्दध्यां सर्वमेव तत् ॥ १६-३७-४ (९८१५५)
प्रियं मे स्यात्कृतार्थश्च स्यामहं कृतनिश्चयः ।
प्रसादादृषिमुख्यस्य मम कामः समृद्ध्यताम् ॥ १६-३७-५ (९८१५६)
सौतिरुवाच। १६-३७-६क्ष् (८०६३)

इत्युक्तवचने तस्मिन्नृपे व्यासः प्रतापवान् ।
प्रसादमकरोद्धीमानानयच्च परिक्षितम् ॥ १६-३७-६ (९८१५७)
ततस्तद्रूपवयसमागतं नृपतिं दिवः ।
श्रीमन्तं पितरं राजा ददर्श स परीक्षितम् ॥ १६-३७-७ (९८१५८)
शमीकं च महात्मानं पुत्रं तं चास्य शृङ्गिणम् ।
अमात्या ये च निहता राज्ञस्तांश्च ददर्श ह ॥ १६-३७-८ (९८१५९)
ततः सोवभृथे राजा मुदितो जनमेजयः ।
पितरं स्नापयामास स्वयं सस्नौ च पार्थिवः ॥ १६-३७-९ (९८१६०)
ग्परीक्षिदपि तत्रैव बभूव स तिरोहितः।'
स्नात्वा स नृपतिर्विप्रमास्तीकमिदमब्रवीत् ।
यायावरकुलोत्पन्नं जरत्कारुसुतं तदा ॥ १६-३७-१० (९८१६१)
आस्तीक विविधाश्चर्यो यज्ञोऽयमिति मे मतिः ।
यदद्यायं पिता प्राप्तो मम शोकप्रणाशनः ॥ १६-३७-११ (९८१६२)
आस्तीक उवाच। १६-३७-१२क्ष् (८०६४)
ऋषिर्द्वैपायनो यत्र पुराणस्तपसो निधिः ।
यज्ञे कुरुकुलश्रेष्ठ तस्य लोकावुभौ जितौ ॥ १६-३७-१२ (९८१६३)
श्रुतं विचित्रमाख्यानं त्वया पाण्डवनन्दन ।
सर्पाश्च भस्मसान्नीता गताश्च पदवीं पितुः ॥ १६-३७-१३ (९८१६४)
कथंचित्तक्षको मुक्तः सत्यत्वात्तव पार्थिव ।
ऋषयः पूजिताः सर्वे गतिर्दृष्टा महात्मनः ॥ १६-३७-१४ (९८१६५)
प्राप्तः सुविपुलो धर्मः श्रुत्वा पापविनाशनम् ।
विमुक्तो हृदयग्रन्थिरुदारजनदर्शनात् ॥ १६-३७-१५ (९८१६६)
ये च पक्षधरा धर्मे सद्वृत्तरुचयश्च ये ।
यान्दृष्ट्वा हीयते पापं तेभ्यः कार्या नमस्क्रिया ॥ १६-३७-१६ (९८१६७)
सौतिरुवाच। १६-३७-१७क्ष् (८०६५)
एतच्छ्रुत्वा द्विजश्रेष्ठात्स राजा जनमेजयः ।
पूजयामास तमृषिमनुमान्य पुनःपुनः ॥ १६-३७-१७ (९८१६८)
पप्रच्छ तमृषिं चापि वैशम्पायनमच्युतम् ।
कथावशेषं धर्मज्ञो वनवासस्य सत्तम ॥ ॥ १६-३७-१८ (९८१६९)

इति श्रीमन्महाभारते आश्रमवासिकपर्वणि पुत्रदर्शनपर्वणि
सप्तत्रिंशोऽध्यायः ॥ ३७ ॥

Mahabharata - AshramaVasika Parva - Chapter Footnotes

७-३७-२ स धृतराष्ट्रो राजा विदुरश्च सिद्धिं ययौ इति द्वयोः
सम्बन्धः । तत्रापि विदुरस्तपोबलात्। धृतराष्ट्रो व्यासं समासाद्येति

सम्बन्धः ॥
७-३७-१५ पापविनाशं इतिहासमिति शेषः ॥
७-३७-१६ पक्षधराः पक्षस्थापकाः ॥

---

अस्रमवसिकपर्व-अध्यय०३८
॥ श्रीः ॥
१६.३८. अध्यायः ३८

अथ पुत्रदर्शनपर्व ॥ २ ॥
Mahabharata - AshramaVasika Parva - Chapter Topics
धृतराष्ट्रेण पुत्रदर्शनानन्तरं युधिष्ठिरादिभिः सह पुनः स्वाश्रमंप्रत्यागमनम् ॥ १ ॥
व्यासेन धृताष्ट्रंप्रति युधिष्ठिरादीनां नगरप्रस्थापनचोदना ॥ २ ॥
नगरंप्रति पुनरागमनमनिच्छतापि युधिष्ठिरेण धृतराष्ट्रस्य कुन्तीगान्धार्योश्च निदेशनिर्बन्धेन पुनः सर्वैःसह हास्तिनपुरं प्रत्यागमनम् ॥ ३ ॥

Mahabharata - AshramaVasika Parva - Chapter Text

जनमेजय उवाच ।
दृष्ट्वा पुत्रांस्तथा पौत्रान्सानुबन्धाञ्जनाधिपः ।
धृतराष्ट्रः किमकरोद्राजा चैव युधिष्ठिरः ॥ १६-३८-१ (९८१७०)
वैशम्पायन उवाच । १६-३८-२क्ष् (८०६६)
तद्दृष्ट्वा महदाश्चर्यं पुत्राणां दर्शनं पुनः ।
वीतशोकः स राजर्षिः पुनराश्रममागमत् ॥ १६-३८-२ (९८१७१)
इतरस्तु जनः सर्वस्ते चैव परमर्षयः ।
प्रतिजग्मुर्यथाकामं धृताराष्ट्राभ्यनुज्ञया ॥ १६-३८-३ (९८१७२)
पाण्डवास्तु महात्मानो लघुभूयिष्ठसैनिकाः ।
अनुजग्मुर्महात्मानं सदारास्तं महीपतिम् ॥ १६-३८-४ (९८१७३)
तमाश्रमगतं धीमान्ब्रह्मर्षिर्लोकपूजितः ।
द्वैपायनोऽभ्युपागम्य राजानमिदम्नब्रवीत् ॥ १६-३८-५ (९८१७४)
धृताष्ट्र महाबाहो शृणु कौरवनन्दन ।
श्रुतास्ते ज्ञानवृद्धानामृषीणां पुण्यकर्मणाम् ॥ १६-३८-६ (९८१७५)
अद्धाभिजनवृद्धानां वेदवेदाङ्गवेदिनाम् ।
धर्मज्ञानां पुराणानां वदतां विविधाः कथाः ॥ १६-३८-७ (९८१७६)
मा स्म शोके मनः कार्षीर्दिष्टे न व्यथते बुधः ।

श्रुतं देवरहस्यं ते नारदाद्देवदर्शनात् ॥ १६-३८-८ (९८१७७)
गतास्ते क्षत्रधर्मेण शस्त्रपूतां गतिं शुभाम् ।
यथा दृष्टास्त्वया पुत्रास्तथा कामविहारिणः ॥ १६-३८-९ (९८१७८)
युधिष्ठिरः स्वयं धीमान्भवन्तमनुरुध्यते ।
सहितो भ्रातृभिः सर्वैःइ सदारः ससुहृज्जनः ॥ १६-३८-१० (९८१७९)
विसर्जयैनं यात्वेष स्वराज्यमनुशासताम् ।
मासः समधिकस्तेषामतीतो वसतां वने ॥ १६-३८-११ (९८१८०)
एतद्धि नित्यं यत्नेन पदं रक्ष्यं नराधिप ।
बहुप्रत्यर्थिकं ह्येतद्राज्यं नाम कुरूद्वह ॥ १६-३८-१२ (९८१८१)
इत्युक्तः कौरवो राजा व्यासेनामितबुद्धिना ।
युधिष्ठिरमथाहूय वाग्मी वचनमब्रवीत् ॥ १६-३८-१३ (९८१८२)
अजातशत्रो भद्रं ते शृणु मे भ्रातृभिः सह ।
त्वत्प्रसादान्महीपाल शोको नास्मान्प्रबाधते ॥ १६-३८-१४ (९८१८३)
रमे चाहं त्वया पुत्र पुरेव गजसाहये ।
नाथेनानुगतो विद्वन्प्रियेषु परिवर्तिना ॥ १६-३८-१५ (९८१८४)
प्राप्तं पुत्रफलं त्वत्तः प्रीतिर्मे परमा त्वयि ।
न मे मन्युर्महाबाहो गम्यतां मा चिरं कृथाः ॥ १६-३८-१६ (९८१८५)
भवन्तं चेह संप्रेक्ष्य तपो मे परिहीयते ।
उपयुक्तं शरीरं च त्वां दृष्ट्वा धारितं पुनः ॥ १६-३८-१७ (९८१८६)
मातरौ ते तथैवेमे शीर्णपर्णकृताशने ।
मम तुल्यव्रते पुत्र न चिरं वर्तयिष्यतः ॥ १६-३८-१८ (९८१८७)
दुर्योधनप्रभृतयो दृष्टा लोकान्तरं गताः ।
व्यासस्य तपसो वीर्याद्भवतश्च समागमात् ॥ १६-३८-१९ (९८१८८)
प्रयोजनं चिरं वृत्तं जीवितस्य ममानघ ।
उग्रं तपः समास्थास्येत्वमनुज्ञातुमर्हसि ॥ १६-३८-२० (९८१८९)
त्वय्यद्य पिण्डः कीर्तिश्च कुलं चेदं प्रतिष्ठितम् ।
श्वोवाऽद्य वा महाबाहो गम्यतां माचिरं कृथाः ॥ १६-३८-२१ (९८१९०)
राजनीतिः सुबहुशः श्रुता ते भरतर्षभ ।
संदेष्टव्यं न पश्यामि कृतमेतावता विभो ॥ १६-३८-२२ (९८१९१)
वैशम्पायन उवाच। १६-३८-२३क्ष् (८०६७)
इत्युक्तवचनं तं तु नृपो राजानमब्रवीत् ।
न मामर्हसि धर्मज्ञ परित्यक्तुमनागसम् ॥ १६-३८-२३ (९८१९२)
कामं गच्छन्तु मे सर्वे भ्रातरोऽनुचरास्तथा ।
भवन्तमहमन्विष्ये मातरौ च यतव्रतः ॥ १६-३८-२४ (९८१९३)
तमुवाचाथ गान्धारी मैवं पुत्र शृणुष्व च ।
त्वय्यधीनं कुरुकुलं पिण्डश्च श्वशुरस्य मे ॥ १६-३८-२५ (९८१९४)

गम्यतां पुत्र पर्याप्तमेतावत्पूजिता वयम् ।
राजा यदाह तत्कार्यं त्वया पुत्र पितुर्वचः ॥ १६-३८-२६ (९८१९५)
वैशम्पायन उवाच। १६-३८-२७क्ष् (८०६८)
इत्युक्तः स तु गान्धार्या कुन्तीमिदमभाषत ।
स्नेहबाष्पाकुले नेत्रे परिमृज्य विनीतवत् ॥ १६-३८-२७ (९८१९६)
विसर्जयति मां राजा गान्धारी च यशस्विनी ।
भवत्यां बद्धचित्तस्तु कथं यास्यामि दुःखितः ॥ १६-३८-२८ (९८१९७)
न चोत्सहे तपोविघ्नं कर्तुं ते धर्मचारिणि ।
तपसो हि परं नास्ति तपसा विन्दते महत् ॥ १६-३८-२९ (९८१९८)
ममापि न तथा राज्ञि राज्ये बुद्धिर्यथा पुरा ।
तपस्येवानुरक्तं मे मनः सर्वात्मना तथा ॥ १६-३८-३० (९८१९९)
शून्येयं च मही कृत्स्ना न मे प्रीतिकरी शुभे ।
बान्धवा नः परिक्षीणा बलं नो न यथा पुरा ॥ १६-३८-३१ (९८२००)
पाञ्चालाः सुभृशं क्षीणाः कन्यामात्रावशेषिताः ।
न तेषां कुलकर्तारं कञ्चित्पश्याम्यहं शुभे ॥ १६-३८-३२ (९८२०१)
सर्वे हि भस्मासान्नीतास्ते द्रोणेन रणाजिरे ।
अवशिष्टाश्च निहता द्रोणपुत्रेण वै निशि ।
चेदयश्चैव मत्स्याश्च दृष्टपूर्वास्तथैव नः ॥ १६-३८-३३ (९८२०२)
केवलं वृष्णिचक्रं च वासुदेवपरिग्रहात् ।
यद्दृष्ट्वा स्थातुमिच्छामि धर्मार्थं नार्थहेतुतः ॥ १६-३८-३४ (९८२०३)
शिवेन पश्य नः सर्वान्दुर्लभं तव दर्शनम् ।
भविष्यत्यंब राजा हि तीव्रं चारप्स्यते तपः ॥ १६-३८-३५ (९८२०४)
एतच्छ्रुत्वा महाबाहुः सहदेवो युधांपतिः ।
युधिष्ठिरमुवाचेदं बाष्पव्याकुललोचनः ॥ १६-३८-३६ (९८२०५)
नोत्सहेऽहं परित्यक्तुं मातरं भरतर्षभ ।
प्रतियातु भवान्क्षिप्रं तपस्तप्स्याम्यहं वने ॥ १६-३८-३७ (९८२०६)
इहैव शोषयिष्यामि तपसेदं कलेवरम् ।
पादशुश्रूषणेरक्तो राज्ञो मात्रोस्तथाऽनयोः ॥ १६-३८-३८ (९८२०७)
तमुवाच ततः कुन्ती परिष्वज्य महाभुजम् ।
गम्यतां पुत्र मैवं त्वं वोचः कुरु वचो मम ॥ १६-३८-३९ (९८२०८)
आगमा वः शिवाः सन्तु स्वस्था भवत पुत्रकाः ।
उपरोधो भवेदेवमस्माकं तपसः कृते ॥ १६-३८-४० (९८२०९)
त्वत्स्नेहपाशबद्धा च हीयेयं तपसः परात् ।
तस्मात्पुत्रक गच्छ त्वं शिष्टमल्पं च नः प्रभो ॥ १६-३८-४१ (९८२१०)
एवं संस्तंभितं वाक्यैः कुन्त्या बहुविधैर्मनः ।
सहदेवस्य राजेन्द्र राज्ञश्चैव विशेषतः ॥ १६-३८-४२ (९८२११)

ते मात्रा समनुज्ञाता राज्ञा च कुरुपुङ्गवाः ।
अभिवाद्य कुरुश्रेष्ठमामन्त्रयितुमारभन् ॥ १६-३८-४३ (९८२१२)
युधिष्ठिर उवाच। १६-३८-४४क्ष् (८०६९)
राज्यं प्रति गमिष्यामः शिवेन प्रतिनन्दितः ।
अनुज्ञातास्त्वया राजन्गमिष्यामो विकल्मषाः ॥ १६-३८-४४ (९८२१३)
एवमुक्तः स राजर्षिर्धर्मराज्ञा महात्मना ।
अनुयज्ञे जयाशीर्भिः पूजयित्वा युधिष्ठिरम् ॥ १६-३८-४५ (९८२१४)
भीमं च बलिनां श्रेष्ठं सान्त्वयामास पार्थिवः ।
स चास्य सम्यङ्मेधावी प्रत्यपद्यत वीर्यवान् ॥ १६-३८-४६ (९८२१५)
अर्जुनं च समाश्लिष्य यमौ च भरतर्षभौ ।
अनुयज्ञे स कौरव्यः परिष्वज्याभिनन्द्य च ॥ १६-३८-४७ (९८२१६)
गान्धार्या चाभ्यनुज्ञाताः कृतपादाभिवादनाः ।
जनन्या समुपाघ्राताः परिष्वक्ताश्च ते नृपम् ॥ १६-३८-४८ (९८२१७)
चक्रुः प्रदक्षिणं सर्वे वत्सा इव निवारणे ।
पुनः पुनर्निरीक्षन्तः प्रचक्रुस्ते प्रदक्षिणम् ॥ १६-३८-४९ (९८२१८)
द्रौपदीप्रमुखाश्चैव सर्वाः कौरवयोषितः ।
न्यायतः श्वशुरे वृत्तिं प्रयुज्य प्रययुस्ततः ॥ १६-३८-५० (९८२१९)
श्वश्रूभ्यां समनुज्ञाताः परिष्वज्याभिनन्दिताः ॥
संदिष्टाश्चेतिकर्तव्यं प्रययुर्भर्तृभिः सह ॥ १६-३८-५१ (९८२२०)
ततः प्रजज्ञे निनदः सूतानां युज्यतामिति ।
उष्ट्राणां क्रोशतां चापि हयानां हेषतामपि ॥ १६-३८-५२ (९८२२१)
ततो युधिष्ठिरो राजा सदारः सहसैनिकः ।
नगरं हास्तिनपुरं पुनरायात्सबान्धवः ॥ ॥ १६-३८-५३ (९८२२२)

इति श्रीमन्महाभारते आश्रमवासिकपर्वणि पुत्रदर्शनपर्वणि
अष्टत्रिंशोऽध्यायः ॥ ३८ ॥ ॥ समाप्तं चेदं पुत्रदर्शनपर्व
॥ २ ॥

Mahabharata - AshramaVasika Parva - Chapter Footnotes

७-३८-१२ बहवः प्रत्यर्थिनः प्रार्थयानाः शत्रवो यत्र तत् ॥
७-३८-१५ नाथेन त्वया ॥
७-३८-२४ अन्विष्ये सेविष्ये ॥
७-३८-३२ कथामात्रावशेषिता इति झ पाठः ॥
७-३८-३५ अविषह्यं च राजा हीति झ पाठः ॥
७-३८-४१ श्रेयसः परादीति क ट पाठः । शिष्टमायुरिति शेषः ॥
७-३८-४९ निवारणे स्तनपानादिति शेषः ॥

७-३८-५० तथैव द्रौपदी भद्रा पाण्ड्यजा भुजगेन्द्रजेति क ह थ पाठः ॥

---

अस्रमवसिकपर्व-अध्यय०३९
॥ श्रीः ॥
१६.३९. अध्यायः ३९

अथ नारदागमनपर्व ॥ ३ ॥
Mahabharata - AshramaVasika Parva - Chapter Topics
कदाचन हास्तिनपुरमुपागतेन नारदेन पाण्डवान्प्रति धृतराष्ट्रादीनां स्वर्गप्राप्तिनिवेदनम् ॥ धृतराष्ट्रे गान्धारीकुन्तीसञ्जयैः सह गङ्गायामाप्लुत्य स्वाश्रममागच्छति सति मध्येमार्गं दावाग्निना तत्परीवेष्टनम् ॥ धृरराष्ट्रेण सञ्जय प्रत्यप्नितो दूरापसरणप्रेरणापूर्वकं कुन्तीगान्धारीभ्यां सह वन्हौ प्रवेशनम् ॥ ३ ॥
ततः सञ्जयेन हिमवत्पर्वतंप्रति गमनम् ॥ ४ ॥

Mahabharata - AshramaVasika Parva - Chapter Text

वैशम्पायन उवाच ।
तेषु चोपनिवृत्तेषु पाण्डवेषु यदृच्छया ।
देवर्षिर्नारदो राजन्नाजगाम युधिष्ठिरम् ॥ १६-३९-१ (९८२२३)
तमभ्यर्च्य महाबाहुः कुरुराजो युधिष्ठिरः ।
आसीनं परिविश्वस्तं प्रोवाच वदतांवरः ॥ १६-३९-२ (९८२२४)
चिरात्तु नानुपश्यामि भगवन्तमुपस्थितम् ।
कच्चित्ते कुशलं विप्र शुभं वा प्रत्युपस्थितम् ॥ १६-३९-३ (९८२२५)
के देशाः परिदृष्टास्ते किं च कार्यं करोमि ते ।
तद्ब्रूहि द्विजमुख्यस्त्वं ह्यस्माकं च प्रियोऽतिथिः। १६-३९-४ (९८२२६)
नारद उवाच। १६-३९-५क्ष् (८०७०)
चिरदृष्टोसि मेऽत्येवमागतोऽहं तपोवनात् ।
परिदृष्टानि तीर्थानि गङ्गा चैव मया नृप ॥ १६-३९-५ (९८२२७)
युधिष्ठिर उवाच। १६-३९-६क्ष् (८०७१)
वदन्ति पुरुषा मेऽद्य गङ्गातीरनिवासिनः ।
धृतराष्ट्रं महात्मानमास्थितं परमं तपः ॥ १६-३९-६ (९८२२८)
अपि दृष्टस्त्वया तत्र कुशली स कुरूद्वहः ।
गान्धारी च पृथा चैव सूतपुत्रश्च संजयः ॥ १६-३९-७ (९८२२९)
कथं च वर्तते चाद्य पिता मम स पार्थिवः ।

श्रोतुमिच्छामि भगवन्यदि दृष्टस्त्वया नृपः ॥ १६-३९-८ (९८२३०)
नारद उवाच। १६-३९-९क्ष् (८०७२)
स्थिरीभूय महाराज शृणु वृत्तं यथातथम् ।
यथाश्रुतं च दृष्टं च मया तस्मिंस्तपोवने ॥ १६-३९-९ (९८२३१)
वनवासनिवृत्तेषु भवत्सु कुरुनन्दन ।
कुरुक्षेत्रात्पिता तुभ्य गङ्गाद्वारं ययौ नृप ॥ १६-३९-१० (९८२३२)
गान्धार्या सहितो धीमान्वध्वा कुन्त्या समन्वितः ।
संजयेन च सूतेन साग्निहोत्रः सयाजकः ॥ १६-३९-११ (९८२३३)
आतस्थे स तपस्तीव्रं पिता तव तपोधनः ।
अग्निं मुखे समाधाय वायुभक्षोऽभवन्मुनिः ॥ १६-३९-१२ (९८२३४)
वने स मुनिभिः सर्वैः पूज्यमानो महातपाः ।
त्वगस्थिमात्रशेषः स षण्मासानभवन्नृपः ॥ १६-३९-१३ (९८२३५)
गान्धारी तु जलाहारी कुन्ती मासोपवासिनी ।
संजयः षष्ठभुक्तेन वर्तयामास भारत ॥ १६-३९-१४ (९८२३६)
अग्नींस्तु याजकास्तत्र जुहुवुर्विधिवत्प्रभो ।
दृश्यतोऽदृश्यतश्चैव वने तस्मिन्नृपस्य वै ॥ १६-३९-१५ (९८२३७)
अनिकेतोथ राजा स बभूव वनगोचरः ।
ते चापि सहिते देव्यौ संजयश्च तमन्वयुः ॥ १६-३९-१६ (९८२३८)
संजयो नृपतेर्नेता समेषु विषमेषु च ।
गान्धार्याश्च पृथा चैव चक्षुरासीदनिन्दिता ॥ १६-३९-१७ (९८२३९)
ततः कदाचिद्गङ्गायाः कच्छे स नृपसत्तमः ।
गङ्गायामाप्लुतो धीमानाश्रमाभिमुखो ययौ ॥ १६-३९-१८ (९८२४०)
अथ वायुः समुद्भूतो दावाग्निरभवन्महान् ।
ददाह तद्वनं सर्वं परिगृह्य समन्ततः ॥ १६-३९-१९ (९८२४१)
दह्यत्सु मृगयूथेषु द्विजिह्वेषु समन्ततः ।
वराहाणां च यूथेषु संश्रयत्सु जलाशयान् ॥ १६-३९-२० (९८२४२)
सम्प्रदीप्ते वने तस्मिन्प्राप्ते व्यसन उत्तमे ।
निराहारतया राजा मन्दप्राणविचेष्टितः ।
असमर्थोऽपसरणे सुकृशे मातरौ च ते ॥ १६-३९-२१ (९८२४३)
ततः स नृपतिर्दृष्ट्वा वह्निमायान्तमन्तिकात् ।
इदमाह ततः सूतं संजयं जयतांवरः ॥ १६-३९-२२ (९८२४४)
गच्छ संजय यत्राग्निर्न त्वां दहति कर्हिचित् ।
वयमत्राग्निना युक्ता गमिष्यामः परां गतिम् ॥ १६-३९-२३ (९८२४५)
तमुवाच किलोद्विग्नः संजयो वदतांवरः ।
राजन्मृत्युरनिष्टोऽयं भविता ते वृथाऽग्निना ॥ १६-३९-२४ (९८२४६)
न चोपायं प्रपश्यामि मोक्षणे जातवेदसः ।

यदत्रानन्तरं कार्यं तद्भवान्वक्तुमर्हति ॥ १६-३९-२५ (९८२४७)
इत्युक्तः संजयेनेदं पुनराह स पार्थिवः ।
नैष मृत्युरनिष्टो नो निःसृतानां गृहात्स्वयम् ॥ १६-३९-२६ (९८२४८)
जलमग्निस्तथा वायुरथवाऽपि विकर्षणम् ।
तापसानां प्रशस्यं ते गच्च संजय माचिरम् ॥ १६-३९-२७ (९८२४९)
इत्युक्त्वा संजयं राजा समाधाय मनस्तथा ।
प्राङ्मुखः सह गान्धार्या कुन्त्या चोपाविशत्तदा ॥ १६-३९-२८ (९८२५०)
संजयस्तं तथा दृष्ट्वा प्रदक्षिणमथाकरोत् ।
उवाच चैनं मेधावी युङ्क्ष्वात्मानमिति प्रभो ॥ १६-३९-२९ (९८२५१)
ऋषिपुत्रो मनीषी स राज चक्रेऽस्य तद्वचः ।
सन्निरुध्येन्द्रियग्राममासीत्काष्ठोपमस्तदा ॥ १६-३९-३० (९८२५२)
गान्धारी च महाभागा जननी च पृथा तव ।
दावाग्निना समायुक्ते स च राजा पिता तव ॥ १६-३९-३१ (९८२५३)
संजयस्तु महाप्राज्ञस्तस्माद्दावादमुच्यत ।
गङ्गाकूले मया दृष्टस्तापसैः परिवारितः ॥ १६-३९-३२ (९८२५४)
स तानामन्त्र्य तेजस्वी निवेद्यैतच्च सर्वशः ।
प्रययौ संजयो धीमान्हिमवन्तं महीधरम् ॥ १६-३९-३३ (९८२५५)
एवं स निधनं प्राप्तः कुरुराजो महामनाः ।
गान्धारी च पृथा चैव जनन्यौ ते विशाम्पते ॥ १६-३९-३४ (९८२५६)
यदृच्छयाऽनुव्रजता मया राज्ञः कलेवरम् ।
तयोश्च देव्योरुभयोर्मया दृष्टानि भारत ॥ १६-३९-३५ (९८२५७)
ततस्तपोवने तस्मिन्समाजग्मुस्तपोधनाः ।
श्रुत्वा राज्ञस्तदा निष्ठां न त्वशोचन्गतीश्च ते ॥ १६-३९-३६ (९८२५८)
तत्राश्रौषमहं सर्वमेतत्पुरुषसत्तम ।
यथा च नृपतिर्दग्धो देव्यौ ते चेति पाण्डव ॥ १६-३९-३७ (९८२५९)
न शोचितव्यं राजेन्द्र स्वर्गस्थः पृथिवीपतिः ।
प्राप्तवानग्निसंयोगं गान्धारी जननी च ते ॥ १६-३९-३८ (९८२६०)
वैशम्पायन उवाच। १६-३९-३९क्ष् (८०७३)
एतच्छ्रुत्वा च सर्वेषां पाण्डवानां महात्मनाम् ।
निर्याणं धृतराष्ट्रस्य शोकः समभवन्महान् ॥ १६-३९-३९ (९८२६१)
अन्तःपुराणां च तदा महानार्तस्वरोऽभवत् ।
पौराणां च महाराज श्रुत्वा राज्ञस्तदा गतिम् ॥ १६-३९-४० (९८२६२)
अहो धिगिति राजा तु विक्रुश्य भृशदुःखितः ।
ऊर्ध्वबाहुः स्मरन्मातुः प्ररुरोद युधिष्ठिरः ॥ १६-३९-४१ (९८२६३)
भीमसेनपुरोगाश्च भ्रातरः सर्व एव ते ।
ग्रुरुदुर्दुःखसंतप्ता वर्णयन्तः पृथां तदा ॥ १६-३९-४२ (९८२६४)

अन्तःपुरेषु च तदा सुमहान्नुदितस्वनः ।
प्रादुरासीन्महाराज पृथां श्रुत्वा तथागताम् ॥१६-३९-४३ (९८२६५)
तं च वृद्धं तथा दग्धं हतपुत्रं नराधिपम् ।
अन्वशोचन्त ते सर्वे गान्धारीं च तपस्विनीम् ॥१६-३९-४४ (९८२६६)
तस्मिन्नुपरते शब्दे मुहूर्तादिव भारत ।
निगृह्य बाष्पं धैर्येण धर्मराजोऽब्रवीदिदम् ॥ ॥१६-३९-४५ (९८२६७)

इति श्रीमन्महाभारते आश्रमवासिकपर्वणि नारदागमनपर्वणि
एकोनचत्वारिंशोऽध्यायः ॥३९ ॥
Mahabharata - AshramaVasika Parva - Chapter Footnotes

७-३९-१ द्विवर्षोपनिवृत्तेष्विति झ पाठः ॥
७-३९-५ मे मयाऽतिचिरं दृष्टोऽसीत्यर्थः ॥
७-३९-१२ मुखे पिण्डान्समाधायेति क ट पाठः । वीटां मुखे समाधायेति
झ पाठः ॥
७-३९-१५ दृश्यतोऽदृश्यत इति । पश्यन्तमपश्यन्तं
चानादृत्येत्यर्थः। नियमेन सान्निध्या भावात् ॥
७-३९-२७ विकर्षणं अनशनम् ॥
७-३९-३० ऋषिपुत्रो व्यासपुत्र इति योगसमार्थ्यं सूचितम् ॥

---

अस्रमवसिकपर्व-अध्यय०४०
॥ श्रीः ॥
१६.४०. अध्यायः ४०

अथ नारदागमनपर्व ॥३ ॥
Mahabharata - AshramaVasika Parva - Chapter Topics
युधिष्ठिरेण धृतराष्ट्रादिनिधनश्रवणेन भ्रातृभिः सह
सकरुणं परिदेवनपूर्वकं सतिसंस्कृताग्नौ तेषां वृथाग्निना
दाहं प्रत्यनुशोचनम् ॥१ ॥

Mahabharata - AshramaVasika Parva - Chapter Text

युधिष्ठिर उवाच ।
तथा महात्मनस्तस्य तपस्युग्रे च तस्थुषः ।
अनाथस्येव निधनं तिष्ठत्स्वस्मासु बन्धुषु ॥१६-४०-१ (९८२६८)
दुर्विज्ञेया गतिर्ब्रह्मन्पुरुषाणां मतिर्मम ।

यत्र वैचित्रवीर्योसौ दग्ध एवं वनाग्निना ॥ १६-४०-२ (९८२६९)
यस्य पुत्रशतं श्रीमदभवद्बाहुशालिनः ।
नागायुतबलो राजा स दग्धो हि दवाग्निना ॥ १६-४०-३ (९८२७०)
यं पुरा पर्यवीजन्त तालवृन्तैर्वरस्त्रियः ।
तं गृध्राः पर्यवीजन्त दावाग्निपरिकालितम् ॥ १६-४०-४ (९८२७१)
सूतमागधसङ्घैश्च शयानो यः प्रबोध्यते ।
धरण्यां स नृपः शेते विकृष्टो गृध्रवायसैः ॥ १६-४०-५ (९८२७२)
न च शोचामि गान्धारीं हतपुत्रां यशस्विनीम् ।
पतिलोकमनुप्राप्तां तथा भर्तृव्रते स्थिताम् ॥ १६-४०-६ (९८२७३)
पृथामेव च शोचामि या पुत्रैश्वर्यमृद्धिमत् ।
उत्सृज्य् सुमहद्दीप्तं वनवासमरोचयत् ॥ १६-४०-७ (९८२७४)
धिग्राज्यमिदमस्माकं धिग्बलं धिक्पराक्रमम् ।
क्षत्रधर्मं च धिग्यस्मान्मृता जीवामहे वयम् ॥ १६-४०-८ (९८२७५)
सुसूक्ष्मा किल लोकस्य गतिर्द्विजवरोत्तम ।
यत्समुत्सृज्य राज्यं सा वनवासमरोचयत् ॥ १६-४०-९ (९८२७६)
युधिष्ठिरस्य जननी भीमस्य विजयस्य च ।
अनाथवत्कथं दग्धा इति मुह्यामि चिन्तयन् ॥ १६-४०-१० (९८२७७)
वृथा संतर्पितो वह्निः खाण्डवे सव्यसाचिना ।
उपकारमजानन्स कृतघ्न इति मे मतिः ॥ १६-४०-११ (९८२७८)
यत्रादहत्स भगवान्मातरं सव्यसाचिनः ।
कृत्वा यो ब्राह्मणच्छद्म भिक्षार्थी समुपागतः ॥ १६-४०-१२ (९८२७९)
धिगग्निं धिक् च पार्थस्य विश्रुतां सत्यसन्धताम् ।
इदं कष्टतरं चान्यद्भगवन्प्रतिभाति मे ॥ १६-४०-१३ (९८२८०)
वृथाऽग्निना समायोगो यदभूत्पृथिवीपतेः ।
तथा तपस्विनस्तस्य राजर्षेः कौरवस्य ह ॥ १६-४०-१४ (९८२८१)
कथमेवंविधो मृत्युः प्रशास्य पृथिवीमिमाम् ॥ १६-४०-१५ (९८२८२)
तिष्ठत्सु मन्त्रपूतेषु तस्याग्निषु महावने ।
वृथाऽग्निना समायुक्तो निष्ठां प्राप्तः पिता मम ॥ १६-४०-१६ (९८२८३)
मन्ये पृथा वेपमाना कृशा धमनिसंतता ।
हा तात धर्मराजेति मामाक्रन्दन्महाभये ॥ १६-४०-१७ (९८२८४)
भीम पर्याप्नुहि भयादिति चैवाभिवाशती ।
समन्ततः परिक्षिप्ता माताऽभून्मे दवाग्निना ॥ १६-४०-१८ (९८२८५)
सहदेवः प्रियस्तस्याः पुत्रेभ्योधिक एव तु ।
न चैनां मोक्षयामास वीरो माद्रवतीसुतः ॥ १६-४०-१९ (९८२८६)
तच्छ्रुत्वा रुरुदुः सर्वे समालिङ्ग्य परस्परम् ।
पाण्डवाःक पञ्च दुःखार्ता भूतानीव युगक्षये ॥ १६-४०-२० (९८२८७)

तेषां तु पुरुषेन्द्राणां रुदतां रुदितस्वनः ।
प्रासादाभोगसंरुद्ध अन्वरौत्सीत्स रोदसी ॥ ॥१६-४०-२१ (९८२८८)

इति श्रीमन्महाभारते आश्रमवासिकपर्वणि नारदागमनपर्वणि
चत्वारिंशोऽध्यायः ॥ ४० ॥

---

अस्रमवसिकपर्व-अध्यय०४१
॥ श्रीः ॥
१६.४१. अध्यायः ४१

अथ नारदागमनपर्व ॥ ३ ॥
Mahabharata - AshramaVasika Parva - Chapter Topics
नारदेन युधिष्ठिरंप्रति
दृथराष्ट्रादिदाहकाग्नेर्मन्त्रपूतत्वकथनम् ॥ १ ॥
युधिष्ठिरेण युयुत्सुपुरस्कारेण गान्धारीधृतराष्ट्रयो
रुदकदानपूर्वकं कुन्त्याश्च विधिवच्छ्राद्धदानम् ॥ २ ॥
ततो नारदगमनानन्तरं प्रजापालनेन निजनगरे भ्रात्रादिभिः सह
सुखविहारः ॥ ३ ॥

Mahabharata - AshramaVasika Parva - Chapter Text

नारद उवाच ।
नासौ वृथाऽग्निना दग्धो यथा तत्र श्रुतं मया ।
वैचित्रवीर्यो नृपतिर्न ते शोच्यो नराधिप ॥१६-४१-१ (९८२८९)
वनं प्रविशतानेन वायुभक्षेण धीमता ।
अग्नयः कारयित्वेष्टिमुत्सृष्टा इति नः श्रुतम् ॥१६-४१-२ (९८२९०)
याजकास्तु ततस्तस्य तानग्नीन्निर्जने वने ।
समुत्सृज्य यथाकामं जग्मुर्भरतसत्तम ॥१६-४१-३ (९८२९१)
स विवृद्धस्तदा वह्निर्वने तस्मिन्नभूत्किल ।
तेन तद्वनमादीप्तमिति ते तापसाऽब्रुवन् ॥१६-४१-४ (९८२९२)
स राजा जाह्नवीतीरे यथा ते कथितं मया ।
तेनाग्निना समायुक्तः स्वेनैव भरतर्षभ ॥१६-४१-५ (९८२९३)
एवमावेदयामासुर्मुनयस्ते ममानघ ।
ये ते भागीरथीतीरे मया दृष्टा युधिष्ठिर ॥१६-४१-६ (९८२९४)
एवं स्वेनाग्निना राजा समायुक्तो महीपते ।
मा शोचिथास्त्वं नृपतिं गतः स परमां गतिम् ॥१६-४१-७ (९८२९५)

गुरुशुश्रूषया चैव जननी ते जनाधिप ।
प्राप्ता सुमहतीं सिद्धिमिति मे नात्र संशयः ॥१६-४१-८ (९८२९६)
कर्तुमर्हसि राजेन्द्र तेषां त्वमुदकक्रियाम् ।
भ्रातृभिः सहितः सर्वैरेतदत्र विधीयताम् ॥१६-४१-९ (९८२९७)
वैशम्पायन उवाच।१६-४१-१०क्ष् (८०७४)
ततः स पृथिवीपालः पाण्डवानां धुरंधरः ।
निर्ययौ सहसोदर्यः सदारश्च नरर्षभः ॥१६-४१-१० (९८२९८)
पौरजानपदाश्चैव राजभक्तिपुरस्कृताः ।
गङ्गां प्रजग्मुरभितो वाससैकेन संवृताः ॥१६-४१-११ (९८२९९)
ततोऽवगाह्य सलिले सर्वे तु कुरुपुङ्गवाः ।
युयुत्सुमग्रतः कृत्वा ददुस्तोयं महात्मने ॥१६-४१-१२ (९८३००)
गान्धार्याश्च पृथायाश्च विधिवन्नामगोत्रतः ।
शाचं निवर्तयन्तस्ते तत्रोषुर्नगराद्बहिः ॥१६-४१-१३ (९८३०१)
प्रेषयामास स नरान्विधिज्ञानाप्तकारिणः ।
गङ्गाद्वारं कुरुश्रेष्ठो यत्र दग्धोऽभवन्नृपः। १६-४१-१४ (९८३०२)
तत्रैव तेषां तुल्यानि गङ्गाद्वारेऽन्वशात्तदा ।
कर्तव्यानीति पुरुषान्दत्तदेयान्महीपतिः ॥१६-४१-१५ (९८३०३)
द्वादशेऽहनि तेभ्यः स कृतशौचो नराधिपः ।
ददौ श्राद्धानि विधिवद्दक्षइणावन्ति पाण्डवः ॥१६-४१-१६ (९८३०४)
धृतराष्ट्रं समुद्दिश्य ददौ स पृथिवीपतिः ।
सुवर्णं रजतं गाश्च शय्याश्च सुमहाधनाः ॥१६-४१-१७ (९८३०५)
गान्धार्याश्चैव तेजस्वी पृथायाश्च पृथक्पृथक् ।
सङ्कीर्त्य नामनी राजा ददौ दानमनुत्तमम् ॥१६-४१-१८ (९८३०६)
यो यदिच्छति यावच्च तावत्स लभते द्विजः ।
शयनं भोजनं यानं मणिरत्नमथो धनम् ॥१६-४१-१९ (९८३०७)
यानमाच्छादनं भोगान्दासीश्च समलङ्कृताः ।
ददौ राजा समुद्दिश्य तयोर्मात्रोर्महीपतिः ॥१६-४१-२० (९८३०८)
ततः स पृथिवीपालो दत्त्वा श्राद्धान्यनेकशः ।
प्रविवेश पुनर्धीमान्नगरं वारणाह्वयम् ॥१६-४१-२१ (९८३०९)
ते चापि राजवचनात्पुरुषा ये गताऽभवन् ।
सङ्कल्प्य तेषां कुल्यानि पुनः प्रत्यागमंस्ततः ॥१६-४१-२२ (९८३१०)
माल्यैर्गन्धैश्च विविधैरर्चयित्वा यथाविधि ।
कुल्यानि तेषां संयोज्य तदाचख्युर्महीपतेः ॥१६-४१-२३ (९८३११)
समाश्वास्य तु राजानं धर्मात्मानं युधिष्ठिरम् ।
नारदोप्यगमत्प्रीतः परमर्षिर्यथोप्सितम् ॥१६-४१-२४ (९८३१२)
एवं वर्षाण्यतीतानि धृतराष्ट्रस्य धीमतः ।

वनवासे तथा त्रीणि नगरे दशपञ्च च ॥१६-४१-२५ (९८३१३)
हतपुत्रस्य सङ्ग्रामे दानानि ददतः सदा ।
ज्ञातिसम्बन्धिमित्राणां भ्रातॄणां स्वजनस्य च ॥१६-४१-२६ (९८३१४)
युधिष्ठिरस्तु नृपतिर्नातिप्रीतमनास्तदा ।
धारयामास तद्राज्यं निहतज्ञातिबान्धवः ॥ ॥१६-४१-२७ (९८३१५)

इति श्रीमन्महाभारते शतसाहस्र्यां संहितायां
वैयासिक्यां आश्रमिवासिकपर्वणि नारदागमनपर्वणि
एकचत्वारिंशोऽध्यायः। । ॥ समाप्तं नारदागमनपर्व ॥ ३
॥ आश्रमवासिकपर्व च ॥ १५ ॥ अस्यानन्तरं मौसलपर्व
भविष्यति। तस्यायमाद्यः श्लोकः। वैशम्पायन उवाच। षट्त्रिंशे
त्वथ सम्प्राप्ते वर्षे कौरवनन्दनः। ददर्श विपरीतानि
निमित्तानि युधिष्ठिरः॥ इदमाश्रमवासिकपर्व कुंभघोणस्थेन
TI.Ar ।कृष्णाचार्येण TI.Ar व्यासाचार्येण च मुम्बय्यां
निर्णयसागरमुद्रायन्त्रे मुद्रापितम्। शकाब्दाः १९३२ सन १९१०.
Mahabharata - AshramaVasika Parva - Chapter Footnotes

१६-४१-१५ तत्रैव तेषां कृत्यानीति झ पाठः ॥
१६-४१-२२ सङ्कल्प्य एकीकुत्य कुल्यानि अस्थीनि प्रत्यागमन् सङ्गामिति शेषः ॥
१६-४१-२३ संयोज्य गङ्गयेति शेषः ॥

---

१७. महाप्रस्थानिकपर्व

महप्रस्थानिकपर्व-अध्यय००१
॥ श्रीः ॥
१७.१. अध्यायः १

Mahabharata - Mahaprasthanika Parva - Chapter Topics
भ्रातृभिर्द्रौपद्या च सह स्वर्गे जिगमिषुणा युधिष्ठिरेण युयुत्सौ राज्यभारनिवेशनपूर्वकं परिक्षितो राज्येऽभिषेचनम् ॥ १ ॥
तथा कृच्छ्रात्पौरानुमतिसंपादनेन वल्कलधारणादिपूर्वकं शुना सह गृहात्प्रस्थानम् ॥ २ ॥
अर्जुनेन मध्येमार्गमग्निवचसा सनिषङ्गस्य गाण्डीवस्य वरुणोद्देशेन समुद्रे प्रक्षेपणम् ॥ ३ ॥

Mahabharata - Mahaprasthanika Parva - Chapter Text

श्रीवेदव्यासाय नमः ।
नारायणं नमस्कृत्यि नरं चैव नरोत्तमम् ।
देवीं सरस्वतीं व्यासं ततो जयमुदीरयेत् ॥ १७-१-१ (९८३१६)
जनमेजय उवाच। १७-१-१क्ष् (८०७५)
एवं वृष्ण्यन्धककुले श्रुत्वा मौसलमाहवम् ।
पाण्डवाः किमकुर्वन्त तथा कृष्णे दिवं गते ॥ १७-१-१ (९८३१७)
वैशम्पायन उवाच। १७-१-२क्ष् (८०७६)
श्रुत्वैवं कौरवो राजा वृष्णीनां कदनं महत् ।
प्रस्थाने मतिमाधाय वाक्यमर्जुनमब्रवीत् ॥ १७-१-२ (९८३१८)
कालः पचति भतानि सर्वाण्येव महामते ।
कालपाशमहं मन्ये त्वमपि द्रष्टुमर्हसि ॥ १७-१-३ (९८३१९)
इत्युक्तः स तु कौन्तेयः कालः काल इति ब्रुवन् ।
अन्वपद्यत तद्वाक्यं भ्रातुर्ज्येष्ठस्य धीमतः ॥ १७-१-४ (९८३२०)
अर्जुनस्य मतं ज्ञात्वा भीमसेनो यमौ तथा ।

अन्वपद्यन्त तद्वाक्यं यदुक्तं सव्यसाचिना ॥ १७-१-५ (९८३२१)
ततो युयुत्सुमानाय्य प्रव्रजन्धर्मकाम्यया ।
राज्यं परिददौ सर्वं वैश्यापुत्रे युधिष्ठिरः ॥ १७-१-६ (९८३२२)
अभिषिच्य स्वराज्ये च राजानं च परिक्षितम् ।
दुःखार्तश्चाब्रवीद्राजा सुभद्रां पाण्डवाग्रजः ॥ १७-१-७ (९८३२३)
एष पुत्रस्य पुत्रस्ते कुरुराजो भविष्यति ।
यदूनां परिशेषश्च वज्रो राजा कृतश्च ह ॥ १७-१-८ (९८३२४)
परिक्षिद्धास्तिनपुरे शक्रप्रस्थे च यादवः ।
वज्रो राजा त्वया रक्ष्यो मा चाधर्मे मनः कृथाः ॥ १७-१-९ (९८३२५)
इत्युक्त्वा धर्मराजाः स वासुदेवस्य धीमतः ।
मातुलस्य च वृद्धस्य रामदीनां तथैव च ॥ १७-१-१० (९८३२६)
भ्रातृभिः सह धर्मात्मा कृत्वोदकमतन्द्रितः ।
श्राद्धान्युद्दिश्य सर्वेषां चकार विदिवत्तदा ॥ १७-१-११ (९८३२७)
द्वैपायनं नारदं च मार्कण्डेयं तपोधनम् ।
भारद्वाजं याज्ञवल्क्यं हरिमुद्दिश्य यत्नवान् ।
अभोजयत्स्वादु भोज्यं कीर्तयित्वा च शार्ङ्गिणं ॥ १७-१-१२ (९८३२८)
ददौ रत्नानि वासांसि ग्रामानश्वान्रथांस्तथा ।
स्त्रियश्च द्विजमुख्येभ्यस्तदा शतसहस्रशः ॥ १७-१-१३ (९८३२९)
कृपमभ्यर्च्य च गुरुमथ पौरपुरस्कृतम् ।
ꣷआहूय भरतश्रेष्ठ संनिवेश्यासने तदा।ꣷ
शिष्यं परिक्षितं तस्मै तदौ भरतसत्तमः ॥ १७-१-१४ (९८३३०)
ततस्तु प्रकृतीः सर्वाः समानाय्य युधिष्ठिरः ।
सर्वमाचष्ट राजर्षिकीर्षितमथात्मनः ॥ १७-१-१५ (९८३३१)
ते श्रुत्वैव वचस्तस्य पौरजानपदा जनाः ।
भृशमुद्विग्नमनसो नाभ्यनन्दन्त तद्वचः ॥ १७-१-१६ (९८३३२)
नैवं कर्तव्यमिति ते तदोचुस्तं जनाधिपम् ।
न च राजा तथाऽकार्षीत्कालपर्यायधर्मिवित् ॥ १७-१-१७ (९८३३३)
ततोऽनुमान्य धर्मात्मा पौरजानपदं जनम् ।
गमनाय मतिं चक्रे कृष्णस्य गमनादपि ॥ १७-१-१८ (९८३३४)
ꣷवर्तमाने विवादे तु वास्तुविक्रयिणं प्रति ।
धनेच्छा युगपत्प्राप्ता क्षेत्रतस्वामिभूभृताम् ॥ १७-१-१९ (९८३३५)
प्राप्तं कलियुगं ज्ञात्वा सहदेवो हसन्निव ।
राज्ञस्तु कथयामास धर्मो नष्टस्तु सङ्करः ॥ १७-१-२० (९८३३६)
श्रुत्वा तु दुर्मना राजा पर्याप्तं जीवनं मम।ꣷ
इति स्म राजा कौरव्यो धर्मपुत्रो युधिष्ठिरः ।
उत्सृज्याभरणान्यङ्गाज्जगृहे वल्कलान्युत ॥ १७-१-२१ (९८३३७)

भीमार्जुनयमाश्चैव द्रौपदी च यशस्विनी ।
तथैव जगृहुः सर्वे वल्कलानि नराधिप ॥१७-१-२२ (९८३३८)
विधिवत्कारयित्वेष्टिं नैष्ठिकीं भरतर्षभ ।
समुत्सृज्याप्सु सर्वेऽग्नीन्प्रतस्थुर्नरपुङ्गवाः ॥१७-१-२३ (९८३३९)
ततः प्ररुरुदुः सर्वाः स्त्रियो दृष्ट्वा नरोत्तमान् ।
प्रस्थितान्द्रौपदीषष्ठान्पुरा द्यूतजितान्यथा ॥१७-१-२४ (९८३४०)
हर्षोऽभवच्च सर्वेषां भ्रातॄणां गमनं प्रति ।
युधिष्ठिरमतं ज्ञात्वा वृष्णिक्षयमवेक्ष्य च। १७-१-२५ (९८३४१)
भ्रातरः पञ्च कृष्णा च षष्ठी श्वा चैव सप्तमः ।
आत्मना सप्तमो राजा निर्ययौ गजसाह्वयात् ।
पौरैरनुगतो दूरं सर्वैरन्तःपुरैस्तथा ॥ १७-१-२६ (९८३४२)
न चैनमशकत्कश्चिन्निवर्तस्वेति भाषितुम् ।
न्यवर्तन्त ततः सर्वे नरा नगरवासिनः ॥१७-१-२७ (९८३४३)
कृपप्रभृतयश्चैव युयुत्सुं पर्यवारयन् ।
विवेश गङ्गां कौरव्य उलूपी भुजगात्मजा ॥१७-१-२८ (९८३४४)
चित्राङ्गदा ययौ चापि मणलूरपुरं प्रति ।
शिष्टाः परिक्षितं त्वन्या मातरः पर्यवारयन् ॥१७-१-२९ (९८३४५)
पाण्डवाश्च महात्मानो द्रौपदी च यशस्विनी ।
कृतोपवासाः कौरव्य प्रययुः प्राङ्मुखास्ततः ॥१७-१-३० (९८३४६)
योगयुक्ता महात्मानस्त्यागधर्ममुपेयुषः ।
अभिजग्मुर्बहून्देसान्सरितः सागरांस्तथा ॥१७-१-३१ (९८३४७)
युधिष्ठिरो ययावग्रे भीमस्तु तदनन्तरम् ।
अर्जुनस्तस्य चान्वेव यमौ चापि यथाक्रमम ॥१७-१-३२ (९८३४८)
पृष्ठतस्तु वरारोहा श्यामा पद्मदलेक्षणा ।
द्रौपदी योषितांश्रेष्ठा ययौ भरतसत्तम। १७-१-३३ (९८३४९)
श्वा चैवानुययावेकः प्रस्थितान्पाण्डवान्वनम् ।
क्रमेणि ते ययुर्वीरा लौहित्यं सलिलार्णवम् ॥१७-१-३४ (९८३५०)
गाण्डीवं तु धनुर्दिव्यं न मुमोच धनंजयः ।
रत्नलोभान्महाराज ते चाक्षय्ये महेषुधी ॥१७-१-३५ (९८३५१)
अग्निं ते ददृशुस्तत्र स्थितं शैलमिवाग्रतः ।
मार्गमावृत्य तिष्ठन्तं साक्षात्पुरुषविग्रहम् ॥१७-१-३६ (९८३५२)
ततो देवः स सप्तार्चिः पाण्डवानिदमब्रवीत् ।
भोभो पाण्डुसुता वीराः पावकं मां निबोधत ॥१७-१-३७ (९८३५३)
युधिष्ठिर महाबाहो भीमसेन परंतप ।
अर्जुनाश्विसुतौ वीरौ निबोधत वचो मम ॥१७-१-३८ (९८३५४)
अहमग्निः कुरुश्रेष्ठा मया दग्धं च खाण्डवम् ।

अर्जुनस्य प्रभावेन तथा नारायणस्य च ॥ १७-१-३९ (९८३५५)
अयं वः फल्गुनो भ्राता गाण्डीवं परमायुधम् ।
परित्यज्य वने यातु नानेनार्थोस्ति कश्चन ॥ १७-१-४० (९८३५६)
चक्ररत्नं तु यत्कृष्णे स्थितमासीन्महात्मनि ।
गतं तच्च पुनर्हस्ते कालेनैष्यति तस्य ह ॥ १७-१-४१ (९८३५७)
वरुणादाहृतं पूर्वं मयैतत्पार्थकारणात् ।
गाण्डीवं धनुषां श्रेष्ठं वरुणायैव दीयताम् ॥ १७-१-४२ (९८३५८)
ततस्ते भ्रातरः सर्वे धनंजयमचोदयन् ।
स जले प्राक्षिपच्चैतत्तथाऽक्षय्ये महेषुधी ॥ १७-१-४३ (९८३५९)
ततोऽग्निर्भरतश्रेष्ठ तत्रैवान्तरधीयत ।
ययुस्च पाण्डवा वीरास्ततस्ते दक्षिणामुखाः ॥ १७-१-४४ (९८३६०)
ततस्ते तूत्तरेणैव तीरेण लवणांभसः ।
जग्मुर्भरतशार्दूल दिशं दक्षिणपश्चिमाम् ॥ १७-१-४५ (९८३६१)
ततः पुनः समावृत्ताः पश्चिमां दिशमेव ते ।
ददृशुर्द्वारकां चापि सागरेण परिप्लुताम् ॥ १७-१-४६ (९८३६२)
उदीचीं पुनरावृत्त्य ययुर्भरतसत्तमाः ।
प्रादक्षिण्यं चिकीर्षन्तः पृथिव्या योगधर्मिणः ॥ ॥ १७-१-४७ (९८३६३)

इति श्रीमन्महाभारते महाप्रस्थानिकपर्वणि प्रथमोऽध्यायः ॥ १ ॥
Mahabharata - Mahaprasthanika Parva - Chapter Footnotes

७-१-२ प्रस्थाने स्वर्गं गन्तुं गृहान्निःसरणे ॥
७-१-३ पाशं तत्कृतमाकर्षं मरणमितियावत् । तदहं मन्ये अङ्गीकरोमि। त्वमप्येतदद्रष्टुमालोचितुम् ॥
७-१-५ कालः काल इति नित्यार्थे द्वित्वम् । अपरिहार्यः कालो मृत्युः सोऽद्यैवास्तु किं चिरेणेत्याशयः ॥
७-१-६ धर्मकाम्यया प्रवजन्नतूद्वेगेन । परिददौ तदधीनं कृतवान्। तस्याभिषेकेऽनधिकारात् ॥
७-१-७ स्वराज्ये हास्तिनपुरे ॥
७-१-९ अधर्मे परिक्षिद्वज्रयोर्बालयोररक्षणजे । महाप्रस्थानमियं मा कुर्यादिति भावः ॥
७-१-१३ स्त्रियो दासीः ॥
७-१-१८ अनुमान्यानुमतिप्रदं कृत्वा ॥
७-१-२३ नैष्ठिकीं पार्यन्तिकीं उत्सर्गेष्टिमित्यर्थः । आत्मन्यग्नीन्समारोप्याप्स्वग्नीनुत्सृज्येति ज्ञेयम् ॥
७-१-२९ अन्या युधिष्ठिरादीनां भार्याः श्रउतसोमादीनां मातरः ॥

७-१-३४ लौहित्यं उदयाचलप्रान्तस्थं समुद्रम ॥
७-१-४० अनेन गाण्डीवेन । अर्थः प्रयोजनम् ॥
७-१-४१ कालेन अवतारान्तरे ॥

---

महप्रस्थानिकपर्व-अध्यय००२
॥ श्रीः ॥
१७.२. अध्यायः २

Mahabharata - Mahaprasthanika Parva - Chapter Topics
मेरुगिरिंप्रति गच्छन्तं युधिष्ठिरं ज्येष्ठ्यक्रमादनुगच्छत्सु
दौपद्यादिषु योगभ्रंशात्क्रमेण भूमौ निपतत्सु भीमप्रश्नात्तं
प्रति युधिष्ठिरेण तेषां पतने हेतुकथनम् ॥ १ ॥
तथा ततः शुना केवलमनुगम्यमानेन सता पुरोगमनम् ॥ २ ॥

Mahabharata - Mahaprasthanika Parva - Chapter Text

वैशम्पायन उवाच ।
ततस्ते नियतात्मान उदीचीं दिशमास्थिताः ।
ददृशुर्योगयुक्ताश्च हिमवन्तं महागिरिम् ॥ १७-२-१ (९८३६४)
तं चाप्यतिक्रमन्तस्ते ददृशुर्वालुकार्णवम् ।
अवैक्षन्त महाशैलं मेरुं शिखरिणां वरम् ॥ १७-२-२ (९८३६५)
तेषां तु गच्छतां शीघ्रं सर्वेषां योगधार्मिणाम् ।
याज्ञसेनी भ्रष्टयोगा निपपात महीतले ॥ १७-२-३ (९८३६६)
तां तु प्रपतितां दृष्ट्वा भीमसेनो महाबलः ।
उवाच धर्मराजानं याज्ञसेनीमवेक्ष्य ह ॥ १७-२-४ (९८३६७)
नाधर्मश्चरितः कश्चिद्राजपुत्र्या परंतप ।
कारणं किंनु तद्ब्रूहि यत्कृष्णा पतिता भुवि ॥ १७-२-५ (९८३६८)
युधिष्ठिर उवाच। १७-२-६क्ष् (८०७७)
पक्षपातो महानस्या विशेषेण धनंजये ।
तस्यैतत्फलमद्यैषा भुङ्क्ते पुरुषसत्तम ॥ १७-२-६ (९८३६९)
वैशम्पायन उवाच। १७-२-७क्ष् (८०७८)
एवमुक्त्वाऽनवेक्ष्यैनां ययौ भरतसत्तमः ।
समाधाय मनो धीमान्धर्मात्मा पुरुषर्षभः ॥ १७-२-७ (९८३७०)
सहदेवस्ततो विद्वान्निपपात महीतले ।
तं चापि पतितं दृष्ट्वा भीमो राजानमब्रवीत् ॥ १७-२-८ (९८३७१)
योऽयमस्मासु सर्वेषु शुश्रूषुरनहंकृतः ।

सोयं माद्रवतीपुत्रः कस्मान्निपतितो भुवि ॥१७-२-९ (९८३७२)
युधिष्ठिर उवाच।१७-२-१०क्ष् (८०७९)
आत्मनः सदृशं प्राज्ञं नैषोऽमन्यत कञ्चन ।
तेन दोषेण पतितो विद्वानेष नृपात्मजः ॥१७-२-१० (९८३७३)
वैशम्पायन उवाच।१७-२-११क्ष् (८०८०)
इत्युक्त्वा तं समुत्सृज्य सहदेवं ययौ तदा ।
भ्रातृभिः सह कौन्तेयः शुना चैव युधिष्ठिरः ॥१७-२-११ (९८३७४)
कृष्णां निपतितां दृष्ट्वा सहदेवं च पाण्डवम् ।
आर्तो बन्धुप्रियः शूरो नकुलो निपपात ह ॥१७-२-१२ (९८३७५)
तस्मिन्निपतिते वीरे नकुले चारुदर्शने ।
पुनरेव तदा भीमो राजानमिदमब्रवीत् ॥१७-२-१३ (९८३७६)
योऽयमक्षतधर्मात्मा भ्राता वचनकारकः ।
रूपेणाप्रतिमो लोके नकुलः पतितो भुवि ॥१७-२-१४ (९८३७७)
इत्युक्तो भीमसेनेन प्रत्युवाच युधिष्ठिरः ।
नकुलं प्रति धर्मात्मा सर्वबुद्धिमतांवरः ॥१७-२-१५ (९८३७८)
रूपेणि मत्समो नास्ति कश्चिदित्यस्य दर्शनम् ।
अधिकश्चाहमेवैक इत्यस्य मनसि स्थितम् ॥१७-२-१६ (९८३७९)
नकुलः पतितस्तस्मादागच्छ त्वं वृकोदर ।
यस्य यद्विहितं वीर सोऽवश्यं तदुपाश्नुते ॥१७-२-१७ (९८३८०)
तांस्तु प्रपतितान्दृष्ट्वा पाण्डवः श्वेतवाहनः ।
पपात शोकसंतप्तस्ततोनु परवीरहा ॥१७-२-१८ (९८३८१)
तस्मिंस्तु पुरुषव्याघ्रे पतिते शक्रतेजसि ।
म्रियमाणे दुराधर्षे भीमो राजानमब्रवीत् ॥१७-२-१९ (९८३८२)
अनृतं न स्मराम्यस्य स्वैरेष्वपि महात्मनः ।
अथ कस्य विकारोऽयं येनायं पतितो भुवि ॥१७-२-२० (९८३८३)
युधिष्ठिर उवाच।१७-२-२१क्ष् (८०८१)
एकोहं निर्दहेयं वै शत्रूनित्यर्जुनोऽब्रवीत् ।
न च तत्कृतवानेष शूरमानी ततोपतत् ॥१७-२-२१ (९८३८४)
अवमेने धनुर्ग्राहानेष सर्वांश्च फल्गुनः ।
तथा चैतन्न तु तथा कर्तव्यं भूतिमिच्छता ॥१७-२-२२ (९८३८५)
वैशम्पायन उवाच।१७-२-२३क्ष् (८०८२)
इत्युक्त्वा प्रस्थितो राजा भीमोथ निपपात ह ।
पतितश्चाब्रवीद्भीमो धर्मराजं युधिष्ठिरम् ॥१७-२-२३ (९८३८६)
भोभो राजन्नवेक्षस्व पतितोहं प्रियस्तव ।
किंनिमित्तं च पतनं ब्रूहि मे यदि वेत्थ ह ॥१७-२-२४ (९८३८७)
युधिष्ठिर उवाच।१७-२-२५क्ष् (८०८३)

अतिभुक्तं च भवता प्राणेन च विकत्थसे ।
अनवेक्ष्य परं पार्थ तेनासि पतितः क्षितौ ॥१७-२-२५ (९८३८८)
इत्युक्त्वा तं महाबाहुर्जगामानवलोकयन् ।
श्वाप्येकोनुययौ यस्ते बहुशः कीर्तितो मया ॥ ॥१७-२-२६ (९८३८९)

इति श्रीमन्महाभारते महाप्रस्थानिकपर्वणि द्वितीयोऽध्यायः ॥ २ ॥
Mahabharata - Mahaprasthanika Parva - Chapter Footnotes

७-२-१ ततो दिक्त्रयप्रदक्षिणीकरणानन्तरम् । योगयुक्ताः समाहितमनसः ॥
७-२-३ भ्रष्टयोगा ध्यानात् स्खलितमानसा ॥
७-२-७ अनवेक्ष्य स्वर्गान्तरायरूपः स्नेहो माभूदिति भावः ॥

---

महप्रस्थानिकपर्व-अध्यय००३
॥ श्रीः ॥
१७.३. अध्यायः ३

Mahabharata - Mahaprasthanika Parva - Chapter Topics
शुना सह गच्छन्तं युधिष्ठिरं प्रति इन्द्रेण स्वर्गगमनाय
निजरतारोहणचोदना ॥ १ ॥
युधिष्ठिरे शुना विना रथारोहणमरोचयमाने यमेन
निजस्वरूपप्रकाशनेन तत्प्रशंसनम् ॥ २ ॥
ततो यमेन्द्रादिभी रथेन स्वर्गं प्रापितेन युधिष्ठिरेण
तत्र भीमाद्यदर्शनादिन्द्रंप्रति भ्रात्रादीन्विना स्वस्य
स्वर्गेप्यनभिरुचिकथनपूर्वकं तत्समीपगमनेच्छानिवेदनम् ॥ ३ ॥

Mahabharata - Mahaprasthanika Parva - Chapter Text

वैशम्पायन उवाच ।
ततः सन्नादयञ्शक्रो दिवं भूमिं च सर्वशः ।
रथेनोपययौ पार्थमारोहेत्यब्रवीच्च तम् ॥१७-३-१ (९८३९०)
स्वभ्रातॄन्पतितान्दृष्ट्वा धर्मराजो युधिष्ठिरः ।
अब्रवीच्छोकसंतप्तः सहस्राक्षमिदं वचः ॥१७-३-२ (९८३९१)
भ्रातरः पतिता मेऽत्र गच्छेयुस्ते मया सह ।
न विना भ्रातृभिः स्वर्गमिच्छे गन्तुं सुरेश्वर ॥१७-३-३ (९८३९२)
सुकुमारी सुखार्हा च राजपुत्री पुरंदर ।
साऽस्माभिः सह गच्छेत तद्भवाननुमन्यताम् ॥१७-३-४ (९८३९३)

शक्र उवाच। १७-३-५क्ष् (८०८४)
भ्रातॄन्द्रक्ष्यसि स्वर्गे त्वमग्रतस्त्रिदिवं गतान् ।
कृष्णया सहितान्सर्वान्मा शुचो भरतर्षभ ॥ १७-३-५ (१८३९४)
निक्षिप्य मानुषं देहं गतास्ते भरतर्षभ ।
अनेन त्वं शरीरेण स्वर्गं गन्ता न संशयः ॥ १७-३-६ (१८३९५)
युधिष्ठिर उवाच। १७-३-७क्ष् (८०८५)
अयं श्वा भूतभव्येश भक्तो मां नित्यमेव ह ।
स गच्छेत मया सार्धमानृशंस्या हि मे मतिः ॥ १७-३-७ (१८३९६)
शक्र उवाच। १७-३-८क्ष् (८०८६)
अमर्त्यत्वं मत्समत्वं च राज-
ञ्श्रियं कृत्स्नां महतीं चैव सिद्धिम् ।
संप्राप्तोद्य स्वर्गसुखानि च त्वं
त्यज श्वानं नात्र नृशंसमस्ति ॥ १७-३-८ (१८३९७)
युधिष्ठिर उवाच। १७-३-९क्ष् (८०८७)
अनार्यमार्येणि सहस्रनेत्र
शक्यं कर्तुं दुष्करमेतदार्य ।
मा मे श्रिया सङ्गमनं तयाऽस्तु
यस्याः कृते भक्तजनं त्यजेयम् ॥ १७-३-९ (१८३९८)
इन्द्र उवाच। १७-३-१०क्ष् (८०८८)
स्वर्गे लोके श्ववतां नास्ति धिष्ण्य-
मिष्टापूर्तं क्रोधवशा हरन्ति ।
ततो विचार्यि क्रियतां धर्मराज
त्यज श्वानं नात्र नृशंसमस्ति। १७-३-१० (१८३९९)
युधिष्ठिर उवाच। १७-३-११क्ष् (८०८९)
भक्तत्यागं प्राहुरत्यन्तपापं
तुल्यं लोके ब्रह्मवध्याकृतेन ।
तस्मान्नाहं जातु कथञ्चनाद्य
त्यक्ष्याम्येनं स्वसुखार्थी महेन्द्रः ॥ १७-३-११ (१८४००)
भीतं भक्तं नान्यदस्तीति चार्तं
प्राप्तं क्षीणं रक्षणे प्राणलिप्सुम् ।
प्राणत्यागादप्यहं नैव मोक्तुं
यतेयं वै नित्यमेतद्व्रतं मे ॥ १७-३-१२ (१८४०१)
इन्द्र उवाच। १७-३-१३क्ष् (८०९०)
शुना दृष्टं क्रोधवशा हरन्ति
यद्दत्तमिष्टं विवृतमथो हुतं च ।
तस्माच्छुनस्त्यागमिमं कुरुष्व

शुनस्त्यागात्प्राप्स्यसे देवलोकम् ॥ १७-३-१३ (९८४०२)
त्यक्त्वा भ्रातॄन्दयितां चापि कृष्णां
प्राप्तो लोकः कर्मणा स्वेन वीर ।
श्वानं चैनं न त्यजसे कथं नु
त्यागं कृत्स्नं चास्थितो मुह्यसेऽद्य ॥ १७-३-१४ (९८४०३)
युधिष्ठिर उवाच। १७-३-१५क्ष् (८०९१)
न विद्यते संधिरथापि विग्रहो
मृतैर्मर्त्यैरिति लोकेषु निष्ठा ।
न ते मया जीवयितुं हि शक्या-
स्ततस्त्यागस्तेषु कृतो न जीवताम् ॥ १७-३-१५ (९८४०४)
प्रतिप्रदानं शरणागतस्य
स्त्रिया वधो ब्राह्मणस्वापहारः ।
मित्रद्रोहस्तानि चत्वारि शक्र
भक्तत्यागश्चैव समो मतो मे ॥ १७-३-१६ (९८४०५)
वैशम्पायन उवाच। १७-३-१७क्ष् (८०९२)
तद्धर्मराजस्य वचो निशम्य
धर्मस्वरूपी भगवानुवाच ।
युधिष्ठिरं प्रीतियुक्तो नरेन्द्रं
श्लक्ष्णैर्वाक्यैः संस्तवसंप्रयुक्तैः ॥ १७-३-१७ (९८४०६)
अभिजातोसि राजेन्द्र पितुर्वृत्तेन मेधया ।
अनुक्रोशेनि चानेन सर्वभूतेषु भारत ॥ १७-३-१८ (९८४०७)
पुरा द्वैतवने चासि मया पुत्र परीक्षितः ।
पानीयार्थे पराक्रान्ता यत्र ते भ्रातरो हताः ॥ १७-३-१९ (९८४०८)
भीमार्जुनौ परित्यज्य यत्र त्वं भ्रातरावुभौ ।
मात्रोः साम्यमभीप्सन्वै नकुलं जीवमिच्छसि ॥ १७-३-२० (९८४०९)
अयं श्वा भक्त इत्येवं त्यक्तो देवरथस्त्वया ।
तस्मात्स्वर्गे न ते तुल्यः कश्चिदस्ति नराधिपः ॥ १७-३-२१ (९८४१०)
अतस्तवाक्षया लोकाः स्वशरीरेण भारत ।
प्राप्तोसि भरतश्रेष्ठ दिव्यां गतिमनुत्तमाम् ॥ १७-३-२२ (९८४११)
वैशम्पायन उवाच। १७-३-२३क्ष् (८०९३)
ततो धर्मश्च शक्रश्च मरुतश्चाश्विनावपि ।
देवा देवर्षयश्चैव रथमारोप्य पाण्डवम् ॥ १७-३-२३ (९८४१२)
प्रययुः स्वैर्विमानैस्ते सिद्धाः कामविहारिणः ।
सर्वे विरजसः पुण्याः पुण्यवाग्बुद्धिकर्मिणः ॥ १७-३-२४ (९८४१३)
स तं रथं समास्थाय राजा कुरुकुलोद्वहः ।
ऊर्ध्वमाचक्रमे शीघ्रं तेजसाऽऽवृत्य रोदसी ॥ १७-३-२५ (९८४१४)

ततो देवनिकाय्यस्थो नारदः सर्वलोकवित् ।
उवाचोच्चैस्तदा वाक्यं बृहद्वादी बृहत्तपाः ॥ १७-३-२६ (९८४१५)
येऽपि राजर्षयः पूर्वे ते चापि समुपस्थिताः ।
कीर्ति प्रच्छाद्य तेषां वै कुरुराजोऽधितिष्ठति ॥ १७-३-२७ (९८४१६)
लोकानावृत्य यशसा तेजसा वृत्तसंपदा ।
स्वशरीरेण सम्प्राप्तं नान्यं शुश्रम पाण्डवात् ॥ १७-३-२८ (९८४१७)
तेजांसि यानि दृष्टानि भूमिष्ठेन त्वया विभो ।
वेश्मानि भुवि देवानां पश्यामूनि सहस्रशः ॥ १७-३-२९ (९८४१८)
नारदस्य वचः श्रुत्वा राजा वचनमब्रवीत् ।
भ्रातॄनपश्यन्धर्मात्मा स्वपक्षांश्चैव पार्थिवान् ॥ १७-३-३० (९८४१९)
शुभं वा यदि वा पापं भ्रातॄणां स्थानमद्य मे ।
तदेव प्राप्तुमिच्छामि लोकान्यान्न कामये ॥ १७-३-३१ (९८४२०)
राज्ञस्तु वचनं श्रुत्वा देवराजः पुरंदरः ।
आनृशंस्यसमायुक्तं प्रत्युवाच युधिष्ठिरम् ॥ १७-३-३२ (९८४२१)
स्थानेऽस्मिन्वस राजेन्द्र कर्मभिर्निर्जिते शुभैः ।
किं त्वं मानुष्यकं स्नेहमद्यापि परिकर्षसि ॥ १७-३-३३ (९८४२२)
सिद्धिं प्राप्तोसि परमां यता नान्यः पुमान्क्वचित् ।
नैव ते भ्रातरः स्थानं सम्प्राप्ताः कुरुनन्दन ॥ १७-३-३४ (९८४२३)
अद्यापि मानुषो भावः स्पृशते त्वां नराधिप ।
स्वर्गोऽयं पश्य देवर्षीन्सिद्धांश्च त्रिदिवालयान् ॥ १७-३-३५ (९८४२४)
युधिष्ठिरस्तु देवेन्द्रमेवंवादिनमीश्वरम् ।
पुनरेवाब्रवीद्धीमानिदं वचनमर्थवत् ॥ १७-३-३६ (९८४२५)
तैर्विना नोत्सहे वस्तुमिह दैत्यनिबर्हण ।
गन्तुमिच्छामि तत्राहं यत्र मे भ्रातरो गताः ॥ १७-३-३७ (९८४२६)
यत्र सा बृहती श्यामा बुद्धिसत्त्वगुणान्विता ।
द्रौपदी योषितांश्रेष्ठा यत्र चैव सुता मम ॥ ॥ १७-३-३८ (९८४२७)

इति श्रीमन्महाभारते महाप्रस्थानिकपर्वणि तृतीयोऽध्यायः ॥ ३
॥ महाप्रस्थानिकं पर्व समाप्तम्॥ १७ ॥

अतः परं स्वर्गारोहणपर्वः तस्यायमाद्यः श्लोकः ।
जनमेजय उवाच ।
स्वर्गं त्रिविष्टपं प्राप्य मम पूर्वपितामहाः ।
पाण्डवा धार्तराष्ट्राश्च कानि स्थानानि भेजिरे ॥ १ ॥
इदं महाप्रस्थानिकं पर्व कुंभघोणस्येन TI.Ar ।
कृष्णमाचार्येण TI.Ar ।

व्यासाचार्येण च मुम्बय्यां निर्णयसागरमुद्रायन्त्रे मुद्रापितम् ।
शकाब्दाः १८३२ सन १९१०.

Mahabharata - Mahaprasthanika Parva - Chapter Footnotes

१७-३-८ अस्पृश्यस्य संत्याग नृशंसं निर्दयत्वं नास्ति ॥
१७-३-१० श्ववतामशुचित्वाद्धिष्ण्यं स्थानं स्वर्गे नास्ति । क्रोधवशा नाम देवगणा अशुचेरिष्टापूर्तफलं घ्नन्ति ॥
१७-३-१८ अभिजातोसि कुलीनोसि । पितुः पाण्डोः ॥
१७-३-२६ निकाय्यस्थो निवासस्थः ॥
१७-३-२७ समुपस्थिताः स्मृतिविषयाः सन्ति ॥
१७-३-३१ यदेव भ्रातॄणां स्थानं प्राप्तुमिच्छामि ॥
३१

---

# .. swargarohanaparva 18 Kumbhaghonam Edition ..
## ॥ १८ स्वर्गारोहणपर्व ॥

१८. स्वर्गारोहणपर्व

स्वर्गरोहन-अध्यय००१
॥ श्रीः ॥
१८.१. अध्यायः १

Mahabharata - SwargarohaNa Parva - Chapter Topics
स्वर्गं गतेन युधिष्ठिरेण तत्र महासमुच्छ्रयेण
शोभमानदुर्योधनदर्शनम् ॥ १ ॥
तथा तदुस्कर्षासहिष्णुतया तदीयदोषो द्धाटनेन तेन सह
स्वन स्वर्गवासानभिरोचननिवेदनपूर्वकं नारदंप्रति स्वस्य
भ्रात्रादिदिदृक्षानिवेदनम् ॥ २ ॥

Mahabharata - SwargarohaNa Parva - Chapter Text

श्रीवेदव्यासाय नमः ।
नारायणं नस्कृत्य नरं चैव नरोत्तमम् ।
देवीं सरस्वतीं व्यासं ततो जयमुदीरयेत् ॥ १८-१-१ (९८४२८)
जनमेजय उवाच। १८-१-१क्ष् (८०९४)
स्वर्गं त्रिविष्टपं प्राप्य मम पूर्वपितामहाः ।
पाण्डवा धार्तराष्ट्राश्च कानि स्थानानि भेजिरे ॥ १८-१-१ (९८४२९)
एतदिच्छाम्यहं श्रोतुं सर्वविच्चासि मे मतः ।
महर्षिणाऽभ्यनुज्ञातो व्यासेनाद्भुतकर्मणा ॥ १८-१-२ (९८४३०)
वैशम्पायन उवाच। १८-१-३क्ष् (८०९५)
स्वर्गं त्रिविष्टपं प्राप्य तव पूर्वपितामहाः ।
युधिष्ठिरप्रभृतयो यदकुर्वत तच्छृणु ॥ १८-१-३ (९८४३१)
स्वर्गं त्रिविष्टपं प्राप्य धर्मराजो युधिष्ठिरः ।
दुर्योधनं श्रिया जुष्टं ददर्शासीनमासने ॥ १८-१-४ (९८४३२)
भ्राजमानमिवादित्यं वीरलक्ष्म्याऽभिसंवृतम् ।
देवैर्भ्राजिष्णुभिः साध्यैः सहितं पुण्यकर्मभिः ॥ १८-१-५ (९८४३३)

ततो युधिष्ठिरो राजा दुर्योधनममर्षितः ।
सहसा सन्निवृत्तोऽभूच्छ्रियं दृष्ट्वा सुयोधने ॥ १८-१-६ (९८४३४)
ब्रुवन्नुच्चैर्वचस्तान्वै नाहं दुर्योधनेन वै ।
सहितः कामये लोकाँल्लब्धेनादीर्घदर्शिना ॥ १८-१-७ (९८४३५)
यत्कृते पृथिवी सर्वा सुहृदो बान्धवास्तथा ।
हतास्माभिः प्रसह्याजौ क्लिष्टैः पूर्वं महावने ॥ १८-१-८ (९८४३६)
द्रौपदी च सभामध्ये पाञ्चाली धर्मचारिणी ।
पर्याकृष्टाऽनवद्याङ्गी पत्नी नो गुरुसन्निधौ ॥ १८-१-९ (९८४३७)
अस्ति देवा न मे कामः सुयोधनमुदीक्षितुम् ।
तत्राहं गन्तुमिच्छामि यत्र ते भ्रातरो मम ॥ १८-१-१० (९८४३८)
नैवमित्यब्रवीत्तं तु नारदः प्रहसन्निव ।
स्वर्गे निवासे राजेन्द्र विरुद्धं चापि नश्यति ॥ १८-१-११ (९८४३९)
युधिष्ठिर महाबाहो मैवं वोचः कथञ्चन ।
दुर्योधनं प्रति नृपं शृणु चेदं वचो मम ॥ १८-१-१२ (९८४४०)
एष दुर्योधनो राजा पूज्यते त्रिदशैः सह ।
सद्भिश्च राजप्रवरैते इमे स्वर्गवासिनः। १८-१-१३ (९८४४१)
वीरलोकगतिं प्राप्ता युद्धे हुत्वाऽऽत्मनस्तनुम् ।
यूयं सर्वे सुरसमा येन युद्धेन बाधिताः ॥ १८-१-१४ (९८४४२)
स एष क्षत्रधर्मेण स्थानमेतदवाप्तवान् ।
भये महति योऽभीतो बभूव पृथिवीपतिः ॥ १८-१-१५ (९८४४३)
न तन्मनसि कर्तव्यं पुत्र यद्द्यूतकारितम् ।
द्रौपद्याश्च परिक्लेशं न चिन्तयितुमर्हसि ॥ १८-१-१६ (९८४४४)
ये चान्येऽपि परिक्लेशा युष्माकं ज्ञातिकारिताः ।
संग्रामेष्वथवाऽन्यत्र न तान्संस्मर्तुमर्हसि ॥ १८-१-१७ (९८४४५)
समागच्छ यथान्यायं राज्ञा दुर्योधनेन वै ।
स्वर्गोऽयं नेह वैराणि भन्ति मनुजाधिप ॥ १८-१-१८ (९८४४६)
नारदेनैवमुक्तस्तु कुरुराजो युधिष्ठिरः ।
भ्रातॄन्पप्रच्छ मेधावी वाक्यमेतदुवाच ह ॥ १८-१-१९ (९८४४७)
यदि दुर्योधनस्यैते वीरलोकाः सनातनाः ।
अधर्मज्ञस्य पापस्य पृथिवीसुहृदद्रुहः ॥ १८-१-२० (९८४४८)
यत्कृते पृथिवी नष्टा सहसा सनरद्विपा ।
वयं च मन्युना दग्धा वैरं प्रतिचिकीर्षवः ॥ १८-१-२१ (९८४४९)
ये ते वीरी महात्मानो भ्रातरो मे महाव्रताः ।
सत्यप्रतिज्ञा लोकस्य शूरा वै सत्यवादिनः ।
तेषामिदानीं के लोका द्रष्टुमिच्छामि तानहम् ॥ १८-१-२२ (९८४५०)
कर्णं चैव महात्मानं कौन्तेयं सत्यसङ्गरम् ।

धृष्टद्युम्नं सात्यकिं च धृष्टद्युम्नस्य चात्मजान् ॥१८-१-२३ (९८४५१)
ये च शस्त्रैर्वधं प्राप्ताः क्षत्रधर्मेण पार्थिवाः ।
क्वनु ते पार्थिवान्ब्रह्मन्नैतान्पश्यामि नारद ॥१८-१-२४ (९८४५२)
विराटद्रुपदौ चैव धृष्टकेतुमुखांश्च तान् ।
शिखण्डिनं च पाञ्चाल्यं द्रौपदेयांश्च सर्वशः ।
अभिमन्युं च दुर्धर्षं द्रष्टुमिच्छामि नारद ॥ ॥ १८-१-२५ (९८४५३)

इति श्रीमन्महाभारते स्वर्गारोहणपर्वणि प्रथमोऽध्यायः ॥१ ॥

Mahabharata - SwargarohaNa Parva - Chapter Footnotes

७-१-१ त्रीणि विष्टपानि भुवनानि फलोत्कर्षवशाद्यत्रान्तर्भवन्ति
तादृशं स्वर्गं प्राप्य ॥
७-१-६ तत इति ।स्वर्गेऽप्यमर्षो दुस्त्यज इति संस्काराणां प्राबल्यमुक्तम् ॥
७-१-९ हताः अस्माभिः संधिरार्षः ॥
७-१-११ विरुद्धं वैरादिकं नश्यति अन्तर्धीयते ॥
७-१-२० सुहृद इत्यदन्तः शब्दः ॥

---

स्वर्गरोहन-अध्यय००२
॥ श्रीः ॥
१८.२. अध्यायः २

Mahabharata - SwargarohaNa Parva - Chapter Topics

स्वर्गे कर्णादिबन्धुजनानपश्यता युधिष्ठिरेण देवान्प्रति यत्र
कुत्रापि बन्धुजनैः सहैव स्वस्य निवासेच्छानिवेदनम् ॥१ ॥
देवैर्युधिष्ठिराय बन्धुजनप्रदर्शनं चोदितेन देवदूतेन तस्य
नरकप्रदेशप्रापणम् ॥२ ॥
दुर्दर्शनरकदर्शनासहिष्णुतया सह दूतेन प्रतिनिवर्तमानेन
युधिष्ठिरेण श्रुतपूर्वकण्ठध्वनिश्रवणम् ॥३ ॥
ततो युधिष्ठिरपृष्टैस्तैस्तं प्रित स्वेषां कर्मभीमादित्वकथनम् ॥४ ॥
ततस्तेन दूतंप्रति इन्द्रे स्वस्य तत्समीपं प्रत्यनागमनचोदना ॥५ ॥
दूतेनेन्द्रे युधिष्ठिरचिकीर्षितनिवेदनम् ॥६ ॥

Mahabharata - SwargarohaNa Parva - Chapter Text

युधिष्ठिर उवाच ।
नेह पश्यामि विबुधा राधेयममितौजसम् ।

भ्रातरौ च महात्मानौ युधामन्यूत्तमौजसौ ॥ १८-२-१ (९८४५४)
जुहुवुर्ये शरीराणि रणवह्नौ महारथाः ।
राजानो राजपुत्राश्च ये मदर्थे हता रणे ॥ १८-२-२ (९८४५५)
क्व ते महारथाः सर्वे शार्दूलसमविक्रमाः ।
तैरप्ययं जितो लोकः कच्चित्पुरुषसत्तमैः ॥ १८-२-३ (९८४५६)
यदि लोकानिमान्प्राप्तास्ते च सर्वे महारथाः ।
स्थितं वित्त हि मां देवाः सहितं तैर्महात्मभिः ॥ १८-२-४ (९८४५७)
कच्चिन्न तैरवाप्तोऽयं नृपैर्लोकोऽक्षयः शुभः ।
न तैरहं विना वत्स्ये भ्रातृभिर्ज्ञातिभिस्तथा ॥ १८-२-५ (९८४५८)
मातुर्हि वचनं श्रुत्वा तदा सलिलकर्मणि ।
कर्णस्य क्रियतां तोयमिति तप्यामि तेन वै ॥ १८-२-६ (९८४५९)
इदं च परितप्यामि पुनःपुनरहं सुराः ।
यन्मातुः सदृशौ पादौ तस्याहममितात्मनः ॥ १८-२-७ (९८४६०)
दृष्ट्वैव तं नानुगतः कर्णं परबलार्दनम् ।
न ह्यस्मान्कर्णसहिताञ्जयेच्छक्रोऽपि संयुगे ॥ १८-२-८ (९८४६१)
तमहं यत्रतत्रस्थं द्रष्टुमिच्छामि सूर्यजम् ।
अविज्ञातो मया योसौ घातितः सव्यसाचिना ॥ १८-२-९ (९८४६२)
भीमं च भीमविक्रान्तं प्राणेभ्योऽपि प्रियं मम ।
अर्जुनं चेन्द्रसंकाशं यमौ चैव यमोपमौ ॥ १८-२-१० (९८४६३)
द्रष्टुमिच्छामि तां चाहं पाञ्चालीं धर्मचारिणीम् ।
न चेह स्थातुमिच्छामि सत्यमेवं ब्रवीमि वः ॥ १८-२-११ (९८४६४)
किं मे भ्रातृविहीनस्य स्वर्गेण सुरसत्तमाः ।
यत्र ते मम स स्वर्गो नायं स्वर्गो मतो मम ॥ १८-२-१२ (९८४६५)

देवा ऊचुः। १८-२-१३क्ष् (८०९६)
यदि वै तत्र ते श्रद्धा गम्यतां तत्र माचिरम् ।
प्रिये हि तव वर्तामो देवराजस्य शासनात् ॥ १८-२-१३ (९८४६६)
वैशम्पायन उवाच। १८-२-१४क्ष् (८०९७)
इत्युक्त्वा तं ततो देवा देवदूतमुपादिशन् ।
युधिष्ठिरस्य सुहृदो दर्शयेतदि परंतप ॥ १८-२-१४ (९८४६७)
ततः कुन्तीसुतो राजा देवदूतश्च जग्मतुः ।
सहितौ राजशार्दूल यत्र ते पुरुषर्षभाः ॥ १८-२-१५ (९८४६८)
अग्रतो देवदूतश्च ययौ राजा च पृष्ठतः ।
पन्थानमशुभं दुर्गं सेवितं पापकर्मभिः ॥ १८-२-१६ (९८४६९)
तमसा संवृतं घोरं केशशैवलशाद्वलम् ।
युक्तं पापकृतां गन्धैर्मांसशोणितकर्दमम् ॥ १८-२-१७ (९८४७०)

दंशोत्पातकभल्लूकमक्षिकामशकावृतम् ।
इतश्चेतश्च कुणपैः समन्तात्परिवारितम् ॥ १८-२-१८ (९८४७१)
अस्थिकेशसमाकीर्णं कृमिकीटसमाकुलम् ।
ज्वलनेन प्रदीप्तेन समन्तात्परिवेष्टितम् ॥ १८-२-१९ (९८४७२)
अयोमुखैश्च काकाद्यैर्गृध्रैश्च समभिद्रुतम् ।
सूचीमुखैस्तथा प्रेतैर्विन्ध्यशैलोपमैर्वृतम् ॥ १८-२-२० (९८४७३)
मेदोरुधिरयुक्तैश्च च्छिन्नबाहूरुपाणिभिः ।
निकृत्तोदरपदैश्च तत्रतत्र प्रवेशितैः ॥ १८-२-२१ (९८४७४)
स तत्कुणपदुर्गन्धमशिवं रोमहर्षणम् ।
जगाम राजा धर्मान्मा मध्ये बहु विचिन्तयन् ॥ १८-२-२२ (९८४७५)
ददर्शोष्णोदकैः पूर्णां नदीं चापि सुदुर्गमाम् ।
असिपत्रवनं चैव निशितं क्षुरसंवृतम् ॥ १८-२-२३ (९८४७६)
करम्भवालुकास्तप्ता आयसीश्चि शिलाः पृथक् ।
लोहकुंभीश्च तैलस्य क्वाथ्यमानाः समन्ततः ॥ १८-२-२४ (९८४७७)
कूटशाल्मलिकं तापि दुःस्पर्शं तीक्ष्णकण्टकम् ।
ददर्शान्याश्च कौन्तेयो यातनाः पापकर्मिणाम् ॥ १८-२-२५ (९८४७८)
स तं दुर्गन्धमालक्ष्य देवदूतमुवाच ह ।
कियदध्वानमस्माभिर्गन्तव्यमिममीदृशम् ॥ १८-२-२६ (९८४७९)
क्व च ते भ्रातरो मह्यं तन्ममाख्यातुमर्हसि ।
देशोऽयं कश्च देवानामेतदिच्छामि वेदितुम् ॥ १८-२-२७ (९८४८०)
स संनिववृते श्रुत्वा धर्मराजस्य भाषितम् ।
देवदूतोऽब्रवीचैनमेतावद्गमनं तव ॥ १८-२-२८ (९८४८१)
निवर्तितव्यो हि मया तताऽस्म्युक्तो दिवौकसैः ।
यदि श्रान्तोसि राजेन्द्रि त्वमथागन्तुमर्हसि ॥ १८-२-२९ (९८४८२)
युधिष्ठिरस्तु निर्विण्णस्तेनि गन्धेन मूर्छितः ।
निवर्तने धृतमनाः पर्यावर्तत भारत ॥ १८-२-३० (९८४८३)
सं संनिवृत्तो धर्मात्मा दुःखशोकसमाहतः ।
शुश्राव तत्र वदतां दीना वाचः समन्ततः ॥ १८-२-३१ (९८४८४)
भोभो धर्मज राजर्षे पुण्याभिजन पाण्वन ।
अनुग्रहार्थमस्माकं तिष्ठ तावन्मुहूर्तकम् ॥ १८-२-३२ (९८४८५)
आयाति त्वयि दुर्धर्षे वाति पुण्यः समीरणः ।
तव गन्धानुगस्तात येनास्मान्सुखमागमत् ॥ १८-२-३३ (९८४८६)
ते वयं पार्थ दीर्घस्य कालस्य पुरुषर्षभ ।
सुखमासादयिष्यामस्त्वां दृष्ट्वा राजसत्तम ॥ १८-२-३४ (९८४८७)
संतिष्ठस्व महाबाहो मुहूर्तमिह भारत ।
त्वयि तिष्ठति कौरव्य यातनाऽस्मान्न बाधते ॥ १८-२-३५ (९८४८८)

एवं बहुविधा वाचः कृपणा वेदनावताम् ।
तस्मिन्देशे स शुश्राव समन्ताद्वदतां नृप ॥१८-२-३६ (९८४८९)
तेषां तु वचनं श्रुत्वा दयावान्दीनभाषिणाम् ।
अहो कृच्छ्रमिति प्राह तस्थौ स च युधिष्ठिरः ॥१८-२-३७ (९८४९०)
स ता गिरः पुरस्ताद्वै श्रुतपूर्वाः पुनःपुनः ।
ग्लानानां दुःखितानां च नाभ्यजानत पाण्डवः ॥१८-२-३८ (९८४९१)
अबुध्यमानस्ता वाचो धर्मपुत्रो युधिष्ठिरः ।
उवाच के भवन्तो वै किमर्थमिह तिष्ठथ ॥१८-२-३९ (९८४९२)
इत्युक्तास्ते ततः सर्वे समन्तादवभाषिरे ।
कर्णोऽहं भीमसेनोऽहमर्जुनोऽहमिति प्रभो ॥१८-२-४० (९८४९३)
नकुलः सहदेवोऽहं धृष्टद्युम्नोऽहमित्युत ।
द्रौप्दी द्रौपदेयाश्चि इत्येवं ते विचुक्रुशुः ॥१८-२-४१ (९८४९४)
ता वाचः स तदा श्रुत्वा तद्देशसदृशीर्नृप ।
ततो विममृशे राजा किंत्विदं दैवकारितम् ॥१८-२-४२ (९८४९५)
किन्तु तत्कलुषं कर्म कृतमेभिर्महात्मभिः ।
कर्णेन द्रौपदेयैर्वा पाञ्चाल्या वा सुमध्यया ॥१८-२-४३ (९८४९६)
य इमे पापगन्धेऽस्मिन्देशे सन्ति सुदारुणे ।
नाहं जानामि सर्वेषां दुष्कृतं पुण्यकर्मणाम् ॥१८-२-४४ (९८४९७)
किं कृत्वा धृतराष्ट्रस्य पुत्रो राजा सुयोधनः ।
तथा श्रिया युतः पापैः सहसर्वैः पदानुगैः ॥१८-२-४५ (९८४९८)
महेन्द्रि इव लक्ष्मीवानास्ते परमपूजितः ।
कस्येदानीं विकारोऽयं य इमे नरकं गताः ॥१८-२-४६ (९८४९९)
सर्वे धर्मविदः शूराः सत्यागमपरायणाः ।
क्षत्रधर्मरताः सन्तो यज्वानो भूरिदक्षिणाः ॥१८-२-४७ (९८५००)
किंनु सुप्तोस्मि जागर्मि चेतयामि न चेतये ।
अहो चित्तविकारोऽयं स्याद्वा मे चित्तविभ्रमः ॥१८-२-४८ (९८५०१)
एवं बहुविधं राजा विममर्श युधिष्ठिरः ।
दुःखशोकसमाविष्टश्चिन्ताव्याकुलितेन्द्रियः ॥१८-२-४९ (९८५०२)
क्रोधमाहारयच्चैव तीव्रं धर्मसुतो नृपः ।
देवांश्च गर्हयामास धर्मं चैव युधिष्ठिरः ॥१८-२-५० (९८५०३)
स तीव्रशोकसंतप्तो देवदूतमुवाच ह ।
गम्यतां तत्र येषां त्वं दूतस्तेषामुपान्तिकम् ॥१८-२-५१ (९८५०४)
न ह्यहं तत्र यास्यामि स्थितोस्मीति निवेद्यताम् ।
मत्संश्रयादिमे दूनाः सुखिनो भ्रातरो हि मे ॥१८-२-५२ (९८५०५)
इत्युक्तः स तदा दूतः पाण्डुपुत्रेण धीमता ।
जगामि तत्र यत्रास्ते देवराजः शतक्रतुःठ ॥१८-२-५३ (९८५०६)

निवेदयामास च तद्धर्मराजचिकीर्षितम् ।
यथोक्तं धर्मपुत्रेण सर्वमेव जनाधिप ॥ ॥१८-२-५४ (९८५०७)

इति श्रीमन्महाभारते स्वर्गारोहणपर्वणि द्वितीयोऽध्यायः ॥ २ ॥
Mahabharata - SwargarohaNa Parva - Chapter Footnotes

७-२-२४ करंभवालुकाः श्वेतसूक्ष्मवालुका भ्राष्ट्रवालुका इत्यर्थः ॥
७-२-४९ विममर्श विचारं कृतवान् ॥
७-२-५२ दूनाः खिन्नाः ॥

---

स्वर्गरोहन-अध्यय००३
॥ श्रीः ॥
१८.३. अध्यायः ३

Mahabharata - SwargarohaNa Parva - Chapter Topics
तत्रैवावस्थानपरीक्षया परितुष्टेषु यमेन्द्रादिषु
युधिष्ठिरसमीपमुपागतेषु तद्दृष्टपूर्वनरकादीनां
क्षणेनान्तर्धानम् ॥ १ ॥
धर्मेण युधिष्ठिरंप्रति सप्रशंसनं तद्दृष्टनरकस्य
परीक्षणायेन्द्रमायासृष्टत्वकथनम् । २ । ।
ततो युधिष्ठिरेण गङ्गायामवगाहनान्मानुषशरीरपरित्यागपूर्वकं
दिव्यशरीरपरिग्रहणेन महर्ष्यादिभिः स्तूयमानेन सता
सहदेवैर्भ्रात्राद्यधिष्ठितदिव्यस्थानगमनम् ॥ ३ ॥

Mahabharata - SwargarohaNa Parva - Chapter Text

वैशम्पायन उवाच ।
स्थिते मुहूर्तं पार्थे तु धर्मराजे युधिष्ठिष्ठिरे ।
आजग्मुस्तत्र कौरव्यं देवाः शक्रपुरोगमाः ॥ १८-३-१ (९८५०८)
स च विग्रहवान्धर्मो राजानं संपरीक्ष्य तम् ।
तत्राजगाम यत्रासौ कुरुराजो युधिष्ठिरः ॥ १८-३-२ (९८५०९)
तेषु भासुरदेहेषु पुण्याभिजनकर्मसु ।
समागतेषु देवेषु व्यगमत्तत्तमो नृप ॥ १८-३-३ (९८५१०)
नादृश्यन्त च तास्तत्र यातनाः पापकर्मणाम् ।
नदी वैतरणी चैव कूटशाल्मलिना सह ॥ १८-३-४ (९८५११)
लोहकुंभ्यः शिलाश्चैव नादृश्यन्त भयानकाः ।

विकृतानि शरीराणि यानि तत्र समन्ततः ॥१८-३-५ (९८५१२)
ददर्श राजा कौरव्यस्तान्सर्वान्सुमहाप्रभान् ॥ १८-३-६ (९८५१३)
ततो वायुः सुखस्पर्शः पुण्यगन्धवहः शुचिः ।
ववौ देवसमीपस्थः शीतलोऽतीव भारत ॥१८-३-७ (९८५१४)
मरुतः सह शक्रेण वसवश्चाश्विनौ सह ।
साध्या रुद्रास्तथाऽऽदित्या ये चान्येऽपिदिवौकसः। १८-३-८ (९८५१५)
सर्वे तत्र समाजग्मुः सिद्धाश्च परमर्षयः ।
यत्र राजा महातेजा धर्मपुत्रः स्थितोऽभवत् ॥१८-३-९ (९८५१६)
ततः शक्रः सुरपतिः श्रिया परमया युतः ।
युधिष्ठिरमुवाचेदं सान्त्वपूर्वमिदं वचः ॥१८-३-१० (९८५१७)
युधिष्ठिर महाबाहो प्रीता देवगणास्त्वया ।
एह्येहि पुरुषव्याघ्र कृतमेतावता विभो ॥१८-३-११ (९८५१८)
सिद्धिः प्राप्ता महाबाहो लोकाश्चाप्यक्षयास्तव ।
भ्रातॄणां सुहृदां चैव गतिर्निर्त्या सुपूजिता ॥१८-३-१२ (९८५१९)
न च मन्युस्त्वया कार्यः शृणु चेदं वचो मम ।
अवश्यं नरकस्तात द्रष्टव्यः सर्वराजभिः ॥१८-३-१३ (९८५२०)
शुभानामनशुभानां च द्वौ राशी पुरुषर्षभ ।
यः पूर्वं सुकृतं भुङ्क्ते पश्चान्निरयमेति सः ॥१८-३-१४ (९८५२१)
पूर्वं नरकभाग्यस्तु पश्चात्स्वर्गमुपैति सः ।
भूयिष्ठं पापकर्मा यः स पूर्वं स्वर्गमश्नुते ॥१८-३-१५ (९८५२२)
`भूयिष्ठशुभकर्मा त्वमल्पजिह्मतयाऽच्युत।'
तेन त्वमेवं गमितो मया श्रेयोर्थिना नृप ॥ १८-३-१६ (९८५२३)
व्याजेन हि त्वया द्रोण उपचीर्णः सुतं प्रति ।
व्याजेनैव ततो राजन्दर्शितो नरकस्तव ॥१८-३-१७ (९८५२४)
यथैव त्वं तथा भीमस्तथा पार्थो यमौ तथा ।
द्रौपदी च तथा कृष्णा व्याजेन नरकं गताः ।
आगच्छ नरशार्दूल मुक्तास्ते चैव कल्मषात् ॥ १८-३-१८ (९८५२५)
स्वपक्ष्याश्चैव ये तुभ्यं पार्थिवा निहता रणे ।
सर्वे स्वर्गमनुप्राप्तास्तान्पश्य भरतर्षभ ॥१८-३-१९ (९८५२६)
कर्णश्चैव महेष्वासः सर्वशस्त्रभृतांवरः ।
स गतः परमां सिद्धिं यदर्थं परितप्यसे ॥१८-३-२० (९८५२७)
तं पश्य पुरुषव्याघ्रमादित्यतनयं विभो ।
स्वस्थानस्थं महाबाहो जहि शोकं नरर्षभ ॥१८-३-२१ (९८५२८)
भ्रातॄन्पुत्रांस्तथा पश्य स्वपक्ष्यांश्चैव पार्थिवान् ।
स्वंस्वं स्थानमनुप्राप्तान्व्येतु ते मानसो ज्वरः ॥१८-३-२२ (९८५२९)
कृच्छ्रं पूर्वं चानुभूय इतःप्रभृति कौरव ।

विहारस्व मया सार्धं गतशोको निरामयः ॥ १८-३-२३ (९८५३०)
कर्मणां तात पुण्यानां ज्ञानानां तपसां स्वयम् ।
दानानां च महाबाहो फलं प्राप्नुहि पार्थिवः ॥ १८-३-२४ (९८५३१)
अद्य त्वां देवगन्दर्वा दिव्याश्चाप्सरसो दिवि ।
उपसेवन्तु कल्याणं विरजंबरभूषणाः ॥ १८-३-२५ (९८५३२)
राजसूयजितां लोकानश्वमेधभिनिर्मितान् ।
प्राप्नुहि त्वं महाबाहो तपसश्च महाफलम् ॥ १८-३-२६ (९८५३३)
उपर्युपरि राज्ञां हि तव लोकाः युधिष्टिर ।
हरिश्चन्द्रमसः पार्थ येषु त्वं विहरिष्यसि ॥ १८-३-२७ (९८५३४)
मान्धाता यत्र राजर्षिर्यत्र राजा भगीरथः ।
दौष्यन्तिर्यत्र भरतस्तत्र त्वं विहरिष्यसि ॥ १८-३-२८ (९८५३५)
एषा देवनदी पुण्या पार्थ त्रैलोक्यपावनी ।
आकाशगङ्गा राजेन्र्र तत्राप्लुत्य गमिष्यसि ॥ १८-३-२९ (९८५३६)
अत्र स्नातस्य भावस्ते मानुषो विगमिष्यति ।
गतशोको निरायासो मुक्तवैरो भविष्यसि ॥ १८-३-३० (९८५३७)
एवं ब्रुवति देवेन्द्रे कौरवेन्द्रं युधिष्ठिरम् ।
धर्मो विग्रहवान्साक्षादुवाच सुतमात्मनः ॥ १८-३-३१ (९८५३८)
भोभो राजन्महाप्राज्ञ प्रीतोस्मि तव पुत्रक ।
मद्भक्त्या सत्यवाक्यैश्च क्षमया च दमेन च ॥ १८-३-३२ (९८५३९)
एषा तृतीया जिज्ञासा तव राजन्कृता मया ।
न शक्यसे चालयितुं स्वभावात्पार्थ हेतुतः ॥ १८-३-३३ (९८५४०)
पूर्वं परीक्षितो हि त्वं प्रश्नाद्द्वैतवने मया ।
अरणीसहितस्यार्थे तच्च निस्तीर्णवानसि ॥ १८-३-३४ (९८५४१)
सोदर्येषु विनष्टेषु द्रौपद्या तत्र भारत ।
श्वरूपधारिणा तत्र पुनस्त्वं मे परीक्षितः ॥ १८-३-३५ (९८५४२)
इदं तृतीयं भ्रातॄणामर्थे यतस्थातुमिच्छसि ।
विशुद्धोसि महाभाग सुखी विगतकल्मषः ॥ १८-३-३६ (९८५४३)
न च ते भ्रातरः पार्थ नरकार्हा विशांपतै ।
मायैषा देवराजेन महेन्द्रेणि प्रयोजिता ॥ १८-३-३७ (९८५४४)
अवश्यं नरकास्तात द्रष्टव्याः सर्वराजभिः ।
ततस्त्वया प्राप्तमिदं मुहूर्तं दुःखमुत्तमम् ॥ १८-३-३८ (९८५४५)
न सव्यसाची भीमो वा यमौ वा पुरुषर्षभौ ।
कर्णो वा सत्यवाक् शूरो नरकार्हाश्चिरं नृप ॥ १८-३-३९ (९८५४६)
न कृष्णा राजपुत्री च नरकार्हा कथञ्चन ।
एह्येहि भरतश्रेष्ठ पश्य चेमांस्त्रिलोकगान् ॥ १८-३-४० (९८५४७)
वैशम्पायन उवाच। १८-३-४१क्ष् (८०९८)

एवमुक्तः स राजर्षिस्तव पूर्वपितामहः ।
जगाम सह धर्मेणि सवैश्च त्रिदिवालयैः ॥ १८-३-४१ (९८५४८)
गङ्गां देवनदीं पुण्यां पावनीमृषिसंस्तुताम् ।
अवगाह्य ततो राजा तनुं तत्याज मानुषीम् ॥ १८-३-४२ (९८५४९)
ततो विव्यवपुर्भूत्वा धर्मराजो युधिष्ठिरः ।
निर्वैरो गतसंतापो जले तस्मिन्समाप्लुतः ॥ १८-३-४३ (९८५५०)
ततो ययौ वृतो देवैः कुरुराजो युधिष्ठिरः ।
धर्मेण सहितो धीमांस्तूयमानो महर्षिभिः ॥ १८-३-४४ (९८५५१)
यत्र ते पुरुषव्याघ्राः शूरा विगतमन्यवः ।
पाण्डवा धार्तराष्ट्राश्च स्वानि स्थानानि भेजिरे ॥ ॥ १८-३-४५ (९८५५२)

इति श्रीमन्महाभारते स्वर्गारोहणपर्वणि तृतीयोऽध्यायः ॥ ३ ॥

Mahabharata - SwargarohaNa Parva - Chapter Footnotes

७-३-१७ हतः कुञ्जर इति अस्वत्थामवधे द्रोण उपचीर्णो वञ्चितः
गजवाचीशब्दो मनुष्यपरत्वेन ज्ञापित इत्युपचारच्छलेनेत्यर्थः ॥
७-३-१९ तुभ्यं तव ॥
७-३-३३ जिज्ञासा परीक्षा ॥
७-३-३५ स्वर्गाधिरोहणे द्रौपद्या सह सोदर्येषु विनष्टेयु सत्सु
। श्वरूपदारिणा शुनकरूपिणा ॥
७-३-४४ यत्र ते पाण्डवास्तत्र देवैः सह ययाविति द्वयो सम्बन्धः ॥

---

स्वर्गरोहन-अध्यय००४
॥ श्रीः ॥
१८.४. अध्यायः ४

Mahabharata - SwargarohaNa Parva - Chapter Topics

युधिष्ठिरेण स्वर्गे निवसतां कृष्णकर्णादीनां दर्शनम् ॥ १ ॥
इन्द्रेण युधिष्ठिराय द्रौपदेयादीनां तत्तत्स्थानगतानां
पृथक्पृथक्प्रदरशनम् ॥ २ ॥

Mahabharata - SwargarohaNa Parva - Chapter Text

वैशम्पायन उवाच
ततो युधिष्ठिरो राजा देवैः सर्षिमरुद्गणैः ।
स्तूयमानो ययौ तत्र यत्र ते कुरुपुङ्गवाः ॥ १८-४-१ (९८५५३)

ददर्श तत्र गोविन्दं ब्राह्मेण वपुषाऽन्वितम् ।
तेनैव दृष्टपूर्वेण सादृश्येनैव सूचितम् ॥१८-४-२ (९८५५४)
दीप्यमानं स्ववपुषा दिव्यैरस्त्रैरुपस्थितम् ।
चक्रप्रभृतिभिर्घोरैर्दिव्यैः पुरुषविग्रहैः ॥१८-४-३ (९८५५५)
उपास्यमानं वीरेण फल्गुनेन सुवर्चसा ।
तथास्वरूपं कौन्तेयो ददर्श मधुसूदनम् ॥१८-४-४ (९८५५६)
तावुभौ पुरुषव्याघ्रौ समुद्वीक्ष्य युधिष्ठिरम् ।
यथावत्प्रतिपेदाते पूजया देवपूजितौ ॥१८-४-५ (९८५५७)
अपरस्मिन्नथोद्देशे कर्णं शस्त्रभृतां वरम् ।
द्वादशादित्यसहितं ददर्श कुरुनन्दनः ॥१८-४-६ (९८५५८)
अथापरस्मिन्नुद्देशे मरुद्गणवृतं विभुम् ।
भीमसेनमथापश्यत्तेनैव वपुषाऽन्वितम् ॥१८-४-७ (९८५५९)
वायोर्मूर्तिमतः पार्श्वे दिव्यमूर्तिसमन्वितम् ।
श्रिया परमया युक्तं सिद्धिं परमिकां गतम् ॥१८-४-८ (९८५६०)
अश्विनोस्तु तथा स्थाने दीप्यमानौ स्वतेजसा ।
नकुलं सहदेवं च ददर्श कुरुनन्दनः ॥१८-४-९ (९८५६१)
तथा ददर्श पाञ्चालीं कमलोत्पलमालिनीम् ।
वपुषा स्वर्गमाक्रम्य तिष्ठन्तीमर्कवर्चसम् ॥१८-४-१० (९८५६२)
तत्रैनां सहसा राजा स्प्रष्टुमैच्छद्युधिष्ठिरः ।
ततोऽस्य भगवानिन्द्रः कथयामास देवराट् ॥१८-४-११ (९८५६३)
श्रीरेषा द्रौपदीरूपा त्वदर्थे मानुषं गता ।
अयोनिजा लोककान्ता पुण्यगन्धा युधिष्ठिर ॥१८-४-१२ (९८५६४)
रत्यर्थं भवतां ह्येषा निर्मिता शूलपाणिना ।
द्रुपदस्य कुले जाता भवद्भिश्चोपजीविता ॥१८-४-१३ (९८५६५)
एते पञ्च महाभागा गन्धर्वाः पावकप्रभाः ।
द्रौपद्यास्तनया राजन्युष्माकममितौजसः ॥१८-४-१४ (९८५६६)
पश्य गन्धर्वराजानं धृतराष्ट्रं मनीषिणम् ।
एनं च त्वं विजानीहि भ्रातरं पूर्वजं पितुः ॥१८-४-१५ (९८५६७)
अयं ते पूर्वजो भ्राता कौन्तेयः पावकद्युतिः ।
सूर्यपुत्रो रथिश्रेष्ठो राधेय इति विश्रुतः ।
आदित्यसहितो भाति पश्यैनं पुरुषर्षभम् ॥ १८-४-१६ (९८५६८)
साध्यानामथ देवानां विश्वेषां मरुतामपि ।
गणेषु पश्य राजेन्द्र वृष्णन्धकमहारथान् ।
सात्यकिप्रमुखान्वीरान्भोजांश्चैव महाबलान् ॥ १८-४-१७ (९८५६९)
सोमेन सहितं पश्य सौभद्रमपराजितम् ।
अभिमन्युं महेष्वासं निशाकरसमद्युतिम् ॥१८-४-१८ (९८५७०)

एष पाण्डुर्महेष्वासः कुन्त्या माद्र्या च सङ्गतः ।
विमानेन सदाऽभ्येति पिता तव ममान्तिकम् ॥१८-४-१९ (९८५७१)
वसुभिः सहितं पश्य भीष्मं शान्तनवं नृपम् ।
द्रोणं बृहस्पतेः पार्श्वे गुरुमेनं निशामय ॥१८-४-२० (९८५७२)
एते चान्ये महीपाला योधास्तव च पाण्डव ।
गन्धर्वसहिता यान्ति यक्षपुण्यजनैस्तथा ॥१८-४-२१ (९८५७३)
गुह्यकानां गतिं चापि केचित्प्राप्ता नराधिपाः ।
त्यक्त्वा देहं जितः स्वर्गः पुण्यवाग्बुद्धिकर्मभिः ॥ ॥१८-४-२२ (९८५७४)

इति श्रीमन्महाभारते स्वार्गारोहणपर्वणि चतुर्थोऽध्यायः ॥ ४ ॥

Mahabharata - SwargarohaNa Parva - Chapter Footnotes

७-४-२ ब्राह्मेण ब्रह्मणा आराध्येन ॥
७-४-३ उपस्थितं सेवितं अस्त्रैः ॥
७-४-१२ मानुषं मानुषभावम् ॥

---

स्वर्गरोहन-अध्यय००५
॥ श्रीः ॥
१८.५. अध्यायः ५

Mahabharata - SwargarohaNa Parva - Chapter Topics

वैशंपायनेन जनमेजयंप्रति भीष्मद्रोणादीनां
स्वस्वसुकृतफलत्वेन स्वर्गभोगानन्तरं स्वैस्स्वैरंशिभिः
सहैक्यप्राप्तिकथनम् ॥ १ ॥
जनमेजयेन यज्ञान्ते सबहुमानमास्तिकादिप्रेषणपूर्वकं तक्षशिलातो
हास्तिनमेत्य प्रजापालनपूर्वकं सुखनिवासः ॥ २ ॥
सौतिना शौनकादीन्प्रति जनमेयाय
वैशम्पायनोक्तभारतकथनसमापनपूर्वकं भारतमहिमप्रशंसनम्
॥ ३ ॥

Mahabharata - SwargarohaNa Parva - Chapter Text

जनमेजय उवाच ।
भीष्मद्रोणौ महात्मानौ धृतराष्ट्रश्च पार्थिवः ।
विराटद्रुपदौ चोभौ शङ्खश्चैवोत्तरस्तथा ॥१८-५-१ (९८५७५)
धृष्टकेजुर्जयत्सेनो राजा चैव स सत्यजित् ।

दुर्योधनसुताश्चैव शकुनिश्चैव सौबलः ॥१८-५-२ (९८५७६)
कर्णपुत्राश्च विक्रान्ता राजा चैव जयद्रथः ।
घटोत्कवादयश्चैव ये चान्ये नानुकीर्तिताः ॥१८-५-३ (९८५७७)
ये चान्ये कीर्तिता वीरा राजानो दीप्तमूर्तयः ।
स्वर्गे कालं कियन्तं ते तस्थुस्तदपि शंस मे ॥१८-५-४ (९८५७८)
आहोस्विच्छाश्वतं स्थानं तेषां तत्र द्विजोत्तम ।
अन्ते वा कर्मणां कां ते गतिं प्राप्ता नरर्षभाः ॥१८-५-५ (९८५७९)
एतदिच्छाम्यहं श्रोतुं प्रोच्यमानं द्विजोत्तम ।
तपसा हि प्रदीप्तेन सर्वं त्वमनुपश्यति ॥१८-५-६ (९८५८०)
सौतिरुवाच।१८-५-७क्ष् (८०९९)
इत्युक्तः स तु विप्रर्षिरनुज्ञातो महात्मना ।
व्यासेन तस्य नृपतेराख्यातुमुपचक्रमे। १८-५-७ (९८५८१)
वैशम्पायन उवाच।१८-५-८क्ष् (८१००)
गन्तव्यं कर्मणामन्ते सर्वेषां मनुजाधिप ।
शृणु गुह्यमिदं राजन्देवानां भरतर्षभ ।
यदुवाच महातेजा दिव्यचक्षुः प्रतापवान् ॥ १८-५-८ (९८५८२)
मुनिः पुराणः कौरव्य पाराशर्यो महाव्रतः ।
अगाधबुद्धिः सर्वज्ञो गतिज्ञः सर्वकर्मणाम् ॥१८-५-९ (९८५८३)
तेनोक्तं कर्मणामन्ते प्रविशन्ति स्विकां तनुम् ॥ १८-५-१० (९८५८४)
वसूनेव महातेजा भीष्मः प्राप महाद्युतिः ।
अष्टावेव हि दृश्यन्ते वसवो भरतर्षभ ॥१८-५-११ (९८५८५)
बृहस्पतिं विवेशाथ द्रोणो ह्यङ्गिरसां वरम् ।
कृतवर्मा तु हार्दिक्यः प्रविवेश मरुद्गणान् ॥१८-५-१२ (९८५८६)
सनत्कुमारं प्रद्युम्नः प्रविवेश यथागतम् ।
धृतराष्ट्रो धनेशस्य लोकान्प्राप दुरासदान् ॥१८-५-१३ (९८५८७)
धृतराष्ट्रो सहिता गन्धारी च यशस्विनी ।
पत्नीभ्यां सहितः पाण्डुमहेन्द्रसदनं ययौ ॥१८-५-१४ (९८५८८)
विराटद्रुपदौ चोभौ धृष्टकेतुश्च पार्थिवः ।
निशठाक्रूरसाम्बाश्च भानुः कण्वो विदूरथः ॥१८-५-१५ (९८५८९)
भूरिश्रवाः शलश्चैव भूरिश्च पृथिवीपतिः ।
कंशश्चैवोग्रसेनश्च वसुदेवस्तथैव च ॥१८-५-१६ (९८५९०)
उत्तरश्च सह भ्रात्रा शङ्खेन नरपुङ्गवः ।
विश्वेषां देवतानां ते विविशुर्नरसत्तमाः ॥१८-५-१७ (९८५९१)
श्वर्चा नाम महातेजाः सोमपुत्रः प्रतापवान् ।
सोभिमन्युर्नृसिंहस्य फल्गुनस्य सुतोऽभवत् ॥१८-५-१८ (९८५९२)
स युद्ध्वा क्षत्रधर्मेण यथा नान्यः पुमान्क्वचित् ।

विवेश सोमं धर्मात्मा कर्मणोन्ते मरारथः ॥ १८-५-१९ (९८५९३)
आविवेश रविं कर्णो निहतः पुरुषर्षभ ।
द्वापरं शकुनिः प्राप धृष्टद्युम्नस्तु पावकम् ॥ १८-५-२० (९८५९४)
धृतराष्ट्रात्मजाः सर्वे यातुधानान्प्रपेदिरे ।
धर्ममेवाविशत्क्षत्ता राजा चैव युधिष्ठिरः ॥ १८-५-२१ (९८५९५)
अनन्तो भगवान्देवः प्रविवेश रसातलम् ।
पितामहनियोगाद्धि यो योगाद्गामधारयत् ॥ १८-५-२२ (९८५९६)
यः स नारायणो नाम देवदेवः सनातनः ।
तस्यांशो वासुदेवस्तु कर्मणोन्ते विवेश ह ॥ १८-५-२३ (९८५९७)
षोडशस्त्रीसहस्राणि वासुदेवपरिग्रहाः ।
अमज्जंस्ताः सरस्वत्यां कालेन जनमेजय ॥ १८-५-२४ (९८५९८)
तत्र त्यक्त्वा शरीराणि दिवमारुरुहुः पुनः ।
ताश्चैवाप्सरसो भूत्वा वासुदेवमुपाविशन् ॥ १८-५-२५ (९८५९९)
हतास्तस्मिन्महायुद्धे ये वीरास्तु महारथाः ।
घटोत्कचादयश्चैव देवान्यक्षांश्च भेजिरे ॥ १८-५-२६ (९८६००)
दुर्योधनसहायाश्च राक्षसा येऽनुकीर्तिताः ।
प्राप्तास्ते क्रमशो राजन्सर्वलोकाननुत्तमान् ॥ १८-५-२७ (९८६०१)
भवनं च महेन्द्रस्य कुबेरस्य च धीमतः ।
वरुणस्य तथा लोकान्विविशुः पुरुषर्षभाः ॥ १८-५-२८ (९८६०२)
एतत्ते सर्वमाख्यातं विस्तरेण महाद्युते ।
कुरूणां चरितं कृत्स्नं पाण्डवानां च भारत ॥ १८-५-२९ (९८६०३)
सौतिरुवाच। १८-५-३०क्ष् (८१०१)
एतच्छ्रुत्वा द्विजश्रेष्ठात्स राजा जनमेजयः ।
विस्मितोऽभवदत्यर्थं यज्ञकर्मान्तरेष्वथ ॥ १८-५-३० (९८६०४)
ततः समापयामासुः कर्म तत्तस्य याजकाः ।
आस्तिकश्चाभवत्प्रीतः परिमोक्ष्य भुजङ्गमान् ॥ १८-५-३१ (९८६०५)
ततो द्विजातीन्सर्वास्तान्दक्षिणाभिरतोषयत् ।
पूजिताश्चापि ते राज्ञा ततो जग्मुर्यथागतम् ॥ १८-५-३२ (९८६०६)
विसर्जयित्वा विप्रांस्तान्राजाऽपि जनमेजयः ।
हृष्टस्तक्षशिलायाः स पुनरायाद्गचाह्वयम् ॥ १८-५-३३ (९८६०७)
एतत्ते सर्वमाख्यातं वैशम्पायनकीर्तितम् ।
व्यासाज्ञया समाज्ञातं सर्पसत्रे नृपस्य हि ॥ १८-५-३४ (९८६०८)
पुण्योऽयमितिहासाख्यः पवित्रं चेदमुत्तमम् ।
कृष्णेन मुनिना विप्र निर्मितं सत्यवादिना ॥ १८-५-३५ (९८६०९)
सर्वज्ञेन विधिज्ञेन धर्मज्ञानवता सता ।
अतीन्द्रियेण शुचिना तपसा भावितात्मना ॥ १८-५-३६ (९८६१०)

ऐश्वर्ये वर्तता चैव साङ्ख्ययोगवता तथा ।
नैकतन्त्रविबुद्धेन दृष्ट्वा दिव्येन चक्षुषा ॥ १८-५-३७ (९८६११)
कीर्तिं प्रथयता लोके पाण्डवानां महात्मनाम् ।
अन्येषां क्षत्रियाणां च भूरिद्रविणतेजसाम् ॥ १८-५-३८ (९८६१२)
ग्क्रीडां च वासुदेवस्य देवदेवस्य शार्ङ्गिणः ।
विश्वेषां देवभागानां जन्मसायुज्यमेव च ॥ ' १८-५-३९ (९८६१३)
य इदं शृणुयाद्विद्वान्पर्वसु द्विजसत्तमः ।
धूतपाप्मा जितस्वर्गो ब्रह्मभूयाय गच्छति ॥ १८-५-४० (९८६१४)
कार्ष्णं वेदमिमं सर्वं शृणुयाद्यः समाहितः ।
ब्रह्महत्याकृतं पापं तत्क्षणादेव नश्यति ॥ १८-५-४१ (९८६१५)
यश्चेदं श्रावयेच्छ्राद्धे ब्राह्मणान्पादमन्ततः ।
अक्षय्यमन्नपानं वै पितॄंस्तस्योपतदिष्ठते ॥ १८-५-४२ (९८६१६)
अह्ना यदेनः कुरुते इन्द्रियैर्मनसाऽपि वा ।
महाभारतमाख्याय सर्पपापैः प्रमुच्यते ॥ १८-५-४३ (९८६१७)
श्यद्रात्रौ कुरुते पापं ब्राह्मणः स्त्रीगणैर्वृतः ।
महाभारतमाख्याय पूर्वां सन्ध्यां प्रमुच्यते ॥ १८-५-४४ (९८६१८)
महत्त्वाद्भारवत्त्वाच्च महाभारतमुच्यते ।
निरुक्तमस्य यो वेद सर्वपापैः प्रमुच्यते ॥ १८-५-४५ (९८६१९)
अष्टादशपुराणानि धर्मशास्त्राणि सर्वशः ।
वेदाः साङ्गास्तथैकत्र भारतं चैकतः स्थितम् ॥ १८-५-४६ (९८६२०)
श्रूयतां सिंहनादोऽयमृषेस्तस्य महात्मनः ।
अष्टादशपुराणानां कर्तुर्वेदमहोदधेः ॥ १८-५-४७ (९८६२१)
त्रिभिर्वर्षैर्महत्पुण्यं कृष्णद्वैपायनः प्रभुः ।
अखिलं भारतं चेदं चकार भगवान्मुनिः ॥ १८-५-४८ (९८६२२)
श्आकर्ण्य भक्त्या सततं जयाख्यं भारतं महत् ।
श्रीश्च कीर्तिस्तथा विद्या भवन्ति सहिताः सदा ॥ॅ १८-५-४९ (९८६२३)
धर्मे चार्थे च कामे च मोक्षे च भरतर्षभ ।
यदिहास्ति तदन्यत्र यन्नेहास्ति न कुत्रिचित् ॥ १८-५-५० (९८६२४)
"वाच्यते यत्र सततं जयाख्यं भारतं महत् ।
श्रीश्च कीर्तिश्च विद्या च भवन्ति मुदिताः सदा ॥ १८-५-५१ (९८६२५)
भारतस्य तु वक्तारं ब्रह्मर्षिं च महागुरुम् ॥
वैशंपायनमारोप्य स्वर्णभद्रासनं तदा ॥ १८-५-५२ (९८६२६)
जनमेजयादिराजान आस्तिकाद्या द्विजातयः ।
धर्मदत्तादिवैश्याश्च सोम्यवंश्यादिशूद्रकाः ॥ १८-५-५३ (९८६२७)
प्रयुतं चायुतं चेति सहस्रं शतमित्यपि ।
दशकं चेति निष्काणामानर्चुस्तं महागुरुम् ॥ १८-५-५४ (९८६२८)

निष्काणां दशकं दत्त्वा मृतपुत्रोऽमृतप्रजः ।
ऊष्मादिव्याधियुक्तश्च शतं दत्त्वा निरामयः ॥ १८-५-५५ (९८६२९)
सहस्रदानात्संतानहीनः संतानपुत्रवान् ।
आयुरारोग्यमैश्वर्यं भेजुस्तेऽन्नं च पुत्रकान् ॥ १८-५-५६ (९८६३०)
सुवर्णं रजतं रत्नं सर्वाण्याभरणानि च ।
सर्वोपकरणैर्युक्तं निधिनिक्षेपसंयुतम् ॥ १८-५-५७ (९८६३१)
इष्टकाभित्तिसंयुक्तमग्निबाधादिवर्जितम् ।
देवपूजाग्निहोत्रादिपाठार्थगृहसंयुतम् ।
सान्तर्बहिस्संवरणं सप्रासादं सगोगृहम् ॥ १८-५-५८ (९८६३२)
व्यष्ट्या समष्ट्या वा दद्यात्स्वर्गारोहणपर्वणि ।
निवृत्तिकामो दद्याच्चेत्पुनर्जन्म न विद्यते ॥ १८-५-५९ (९८६३३)
सकामश्चेद्ब्रह्मकल्पं सुकं ब्रह्मगृहे वसेत् ॥ १८-५-६० (९८६३४)
पुराणमुखतो यस्माद्वेदान्तज्ञानमाप्यते ।
स तेन गुरुराख्यातस्तत्पूजा हीशपूजनम् ॥ १८-५-६१ (९८६३५)
भारतस्य तु वक्तारं श्रोतारं लेखकांस्तदा ।
प्रपूजयन्ति संहृष्टाः सिद्धाश्च परमर्षयः ॥ १८-५-६२ (९८६३६)
महाभारतवक्तारं नार्चयन्तीह ये नराः ।
तेषां सर्वक्रियाहानिर्भवेद्देवाः शपन्ति च ॥' १८-५-६३ (९८६३७)
जयो नामेतिहासोऽयं श्रोतव्यो जयमिच्छता ।
राज्ञा राजसुतैश्चैव गर्भिण्या चैव योषिता ॥ १८-५-६४ (९८६३८)
श्स्वर्गकामो लभेत्स्वर्गं जयकामो लभेज्जयम् ।
गर्भिणी लभते पुत्रं कन्यां वा बहुभागिनीम् ॥ १८-५-६५ (९८६३९)
अनागतश्च मोक्षश्च कृष्णद्वैपायनः प्रभुः ।
संदर्भं भारतस्यास्य कृतवान्धर्मकाम्यया ॥ १८-५-६६ (९८६४०)
षष्टिं शतसहस्राणि चकारान्यां स संहिताम् ।
त्रिंशच्छतसहस्राणि देवलोके प्रतिष्ठितम् ॥ १८-५-६७ (९८६४१)
पित्र्ये पञ्चदशं ज्ञेयं यक्षलोके चतुर्दश ।
एकं शतसहस्रं तु मानुषेषु प्रभाषितम् ॥ १८-५-६८ (९८६४२)
नारदोऽश्रावयद्देवानसितो देवलः पितॄन् ।
रक्षोयक्षाञ्शुको मर्त्यान्वैशम्पायन एव तु ॥ १८-५-६९ (९८६४३)
इतिहासमिमं पुण्यं महार्थं वेदसंमितम् ।
व्यासोक्तं श्रूयते येन कृत्वा ब्राह्मणमग्रतः ॥ १८-५-७० (९८६४४)
स नरः सर्वकामांश्च कीर्तिं प्राप्येह शौनक ।
गच्छेत्परमिकां सिद्धिमत्र मे नास्ति संशयः ॥ १८-५-७१ (९८६४५)
भारताध्ययनात्पुण्यादपि पादमधीयतः ।
श्रद्धया परया भक्त्या श्राव्यते चापि येन तु ।

य इमां संहितां पुण्यां पुत्रमध्यापयच्छुकम् ॥ १८-५-७२ (९८६४६)
मातापितृसहस्राणि पुत्रदारशतानि च ।
संसारेष्वनुभूतानि यान्ति यास्यन्ति चापरे ॥१८-५-७३ (९८६४७)
हर्षस्थानसहस्राणि भयस्थानशतानि च ।
दिवसेदिवसे मूढमाविशन्ति न पण्डितम् ॥१८-५-७४ (९८६४८)
ऊर्ध्वबाहुर्विरौम्येष न च कश्चिच्छृणोति मे ।
धर्मादर्थश्च कामश्च स किमर्थं न सेव्यते ॥१८-५-७५ (९८६४९)
न जातु कामान्न भयान्न लोभा-
द्धर्मं त्यजेज्जीवितस्यापि हेतोः ।
नित्यो धर्मः सुखदुःखे त्वनित्ये
जीवो नित्यो हेतुरस्य त्वनित्यः ॥ १८-५-७६ (९८६५०)
इमां भारतसावित्रीं प्रातरुत्थायः यः पठेत् ।
स भारतफलं प्राप्य परं ब्रह्माधिगच्छति ॥१८-५-७७ (९८६५१)
कयथा समुद्रो भगवान्यथा हि हिमवान्गिरिः ।
ख्यातावुभौ रत्ननिधी तथा भारतमुच्यते ॥१८-५-७८ (९८६५२)
कार्ष्णं देवमिमं विद्वाञ्श्रावयित्वाऽर्थमश्नुते ।
इदं भारतमाख्यानं यः पठेत्सुसमाहितः ।
स गच्छेत्परमां सिद्धिमिति मे नास्ति संशयः ॥ १८-५-७९ (९८६५३)
द्वैपायनोष्ठपुटनिस्सृतमप्रमेयं
पुण्यं पवित्रमथ पापहरं शिवं च ।
यो भारतं समधिगच्छति वाच्यमानं
किं तस्य पुष्करजलैरभिषेचनेन ॥ १८-५-८० (९८६५४)
यो गोशतं कनकशृङ्गमयं ददाति
विप्राय वेदविदुषे सुबहुश्रुताय ।
पुण्यां च भारतकथां सततं शृणोति
तुल्यं फलं भवति तस्य च तस्य चैव ॥ १८-५-८१ (९८६५५)
"यद्यदिष्टतमं कामं लभते श्रद्धयाऽन्वितः ।
शृणुयान्मुदितो भूत्वा आस्तिको बुद्धिसंयुतः ॥१८-५-८२ (९८६५६)
वासुदेवं स्मरन्विद्वान्पुण्डरीकायतेक्षणम् ।
इतिहासमिमं पुण्यं महार्थं वेदसंमितम् ॥१८-५-८३ (९८६५७)
श्रावयेद्यस्तु वर्णादीन्कृत्वा ब्राह्मणमग्रतः ।
सर्वपापविशुद्धात्मा शुचिस्तद्गतमानसः ॥१८-५-८४ (९८६५८)
इह कीर्तिं महत्प्राप्य भोगवान्सुखमश्नुते ।
व्यासप्रसादेन पुनः स्वर्गलोकं स गच्छति ॥१८-५-८५ (९८६५९)
एतद्विदित्वा सर्वं तु सर्ववेदार्थविद्भवेत् ।
पूजनीयश्च सततं माननीयो भवेद्द्विजः ॥" ॥ १८-५-८६ (९८६६०)

इति श्रीमन्महाभारते शतसाहस्र्यां संहितायां वैयासिक्यां स्वर्गारोहणपर्वणि पञ्चमोऽध्यायः ॥ ५ ॥ ॥ समाप्तं स्वर्गारोहणपर्व ॥ १८ ॥ इति श्रीमन्महाभारतं समाप्तम्॥

---

Mahabharata - SwargarohaNa Parva - Chapter Footnotes

७-५-८ न शक्यं कर्मिणामन्ते सर्वेण मनुजाधिप । प्रकृतिं किंनु सम्यक्ते पृच्छैषा सम्प्रयोजितेतिय ज्ञ। पाठः ॥
७-५-३६ विधिज्ञेन दैवज्ञेन । अतीन्द्रियेणेन्द्रियाण्यतिक्रान्तेन ॥
७-५-३८ सर्वेषां तृतीयान्तानां निर्मितमित्यनेनान्वयः । अन्येषामपि कीर्तिवासुदेवस्य क्रीडां च प्रथयतेति सम्बन्धः ॥
७-५-४० यश्चेदं श्रावयेद्विद्वान्सदा पर्वणिपर्वणि । ब्रह्मभूयाय कल्पते। इति झ पाठः ॥
७-५-४१ ब्रह्महत्यादिप्पपानां कोटिस्तस्य विनश्यति इति झ पाठः। ७-५-४२ अन्ततो निकटे। ।
७-५-४३ आख्याय पश्चात्संध्यां प्रमुच्यत इति झ पाठः । तत्र महाभारतस्याल्पमपि पश्चिमायां संध्यायां पठ्यते चेद्दिनकृतं पापं नश्यति। एवं प्रातः संध्यायां रात्रिकृतमित्यर्थः ॥
७-५-४५ निरुक्तं नामनिर्वचनं ॥
७-५-४८ त्रिभिर्वर्षैरिदं पूर्णमिति झ पाठः ॥
७-५-५० चकारचतुष्टयादधर्मादिचतुष्टयमप्यत्रोक्तं हानार्तमिति बोध्यम् ॥
७-५-६४ श्रोतव्यो मोक्षमिच्छता । ब्राह्मणेन च राज्ञा च गार्भिण्या इति पाठः ॥
७-५-६६ अनागतोऽनागन्तुको नित्यसिद्ध इतियावत् । एवंविधो यो मोक्षः कैवल्यं तदेव स्वरूपं यस्य स मोक्षः। यद्वा मोक्तुमिच्छन्। मुचोऽकर्मिकस्य गुणो वेति सनि गुणोऽभ्यासलोपश्च। मुमुक्षुरित्यर्थः। लोकहित इति भावः ॥
७-५-६७ अन्यां वेदचतुष्टयसंहिताभ्यः पृथग्भूतां तदर्थवतीम् ॥
७-५-७० श्रूयते येन यः शृणोतीत्यर्थः । उभयत्र विभक्तिव्यत्यय आर्षः ॥
७-५-७२ भारताध्ययनादिति सार्धश्लोकः । यः व्यासः इमां संहितां शुकं पुत्रं अध्यापयत्। तस्य अधीयतो भारताख्यमितिहासं स्मरतः। स्मृत्वा च ग्रन्थरूपेण प्रणयतः। भक्त्या परया श्रद्धया

च व्यास एव पूज्यस्तस्य वाक्यं प्रमाणमेवेत्यास्तिक्यबुद्द्या येन पुंसा इदं श्राव्यते सु पुण्यात् पुण्यकरात् अपि पादं श्लोकपादं ग्रन्थपादं वा भारतस्याध्ययनात्परमिकां सिद्धिं गच्छेदिति पूर्वेणान्वयः। व्यासे श्रद्धां बद्ध्वा भारतमध्येव्यमित्यर्थः ॥
७-५-७३ संध्यायां भारतं पठनीयमित्युक्तं तत्र पठनायोग्यं भारतसारसंग्रहं चतुः श्लोकीरूपमाह मातेति ॥

---

स्वर्गरोहन-अध्यय००६
॥ श्रीः ॥
१८.६. भारतश्रवणव

भारतश्रवणविध्यध्यायः ।
Mahabharata - SwargarohaNa Parva - Chapter Text

जनमेजय उवाच ।
भगवन्केन विधिना श्रोतव्यं भारतं बुधैः ।
फलं किं के च देवाश्च पूज्या वै पारणेष्विह ॥ १८-६-१ (९८६६१)
देयं समाप्ते भगवन्किं च पर्वणिपर्वणि ।
वाचकः कीदृशश्चात्र एष्टव्यस्तद्ब्रवीहि मे ॥ १८-६-२ (९८६६२)
वैशम्पायन उवाच। १८-६-३क्ष् (८१०२)
शृणु राजन्विधिमिमं फलं यच्चापि भारतात् ।
श्रुताद्भवति राजेन्द्र यत्त्वं मामनुपृच्छसि ॥ १८-६-३ (९८६६३)
दिवि देवा महीपाल क्रीडार्थमवनिं गताः ।
कृत्वा कार्यमिदं चैव ततश्च दिवमागताः ॥ १८-६-४ (९८६६४)
हन्त यत्ते प्रवक्ष्यामि तच्छृणुष्व समाहितः ।
ऋषीणां देवतानां च सम्भवं वसुधातले ॥ १८-६-५ (९८६६५)
अत्र रुद्रास्तथा साध्या विश्वेदेवाश्च शाश्वताः ।
आदित्याश्चाश्विनौ देवौ लोकपाला महर्षयः ॥ १८-६-६ (९८६६६)
गुह्यकाश्च सगन्धर्वा नागा विद्याधरास्तथा ।
सिद्धा धर्मः स्वयंभूश्च मुनिः कात्यायनो वरः ॥ १८-६-७ (९८६६७)
गिरयः सागरा नद्यस्तथैवाप्सरसां गणाः ।
ग्रहाः संवत्सराश्चैव अयनान्यृतवस्तथा ॥ १८-६-८ (९८६६८)
स्थावरं जङ्गमं चैव जगत्सर्वं सुरासुरम् ।
भातरे भरतश्रेष्ठ एकस्थमिह दृश्यते ॥ १८-६-९ (९८६६९)
तेषां श्रुत्वा प्रतिष्ठानं नामकर्मानुकीर्तनात् ।
कृत्वाऽपि पातकं घोरं सद्यो मुच्येत मानवः ॥ १८-६-१० (९८६७०)

इतिहासमिमं श्रुत्वा यथावदनुपूर्वशः ।
संयतात्मा शुचिर्भूत्वा पारं गत्वा च भारते ॥ १८-६-११ (९८६७१)
तेषां श्राद्धानि देयानि श्रुत्वा भारत भारतम् ।
ब्राह्मणेभ्यो यथाशक्त्या भक्त्या च भरतर्षभ ॥ १८-६-१२ (९८६७२)
महादानानि देयानि रत्नानि विविधानि च ।
गावः कांस्योपदोहाश्च कन्याश्चैव स्वलङ्कृताः ॥ १८-६-१३ (९८६७३)
सर्वकामगुणोपेता यानानि विविधानि च ।
कभवनानि विचित्राणि भूमिर्वासांसि काञ्चनम् ॥ १८-६-१४ (९८६७४)
वाहनानि च देयानि हया मत्ताश्च वारणाः ।
शयनं शिबिकाश्चैव स्यन्दनाश्च स्वलंकृताः ॥ १८-६-१५ (९८६७५)
यद्यद्गृहे वरं किञ्चिद्यद्यदस्ति महद्वसु ।
तत्तद्देयं द्विजातिभ्य आत्मा दाराश्च सूनवः ॥ १८-६-१६ (९८६७६)
श्रद्धया परया युक्तं क्रमशस्तस्य पारगः ।
शक्तितः सुमना हृष्टः सुश्रूषुरविकल्पकः ॥ १८-६-१७ (९८६७७)
सत्यार्जवरतो दान्तः शुचिः शौचसमन्वितः ।
श्रद्धधानो जितक्रोधो यथा सिद्धयति तच्छृणु ॥ १८-६-१८ (९८६७८)
शुचिः शीलान्विताचारः शुक्लवासा जितेन्द्रियः ।
संस्कृतः सर्वशास्त्रज्ञः श्रद्दधानोऽनसूयकः ॥ १८-६-१९ (९८६७९)
रूपवान्सुभगो दान्तः सत्यवादी जितेन्द्रियः ।
दानमानगृहीतश्च कार्यो भवति वाचकः ॥ १८-६-२० (९८६८०)
अविलम्बमनायस्तमद्रुतं धीरमुर्जितम् ।
असंसक्ताक्षरपदं स्वरभावसमन्वितम् ॥ १८-६-२१ (९८६८१)
त्रिषष्टिवर्णसंयुक्तमष्टस्थानसमीरितम् ।
वाचयेद्वाचकः स्वस्थः स्वासीनः सुसमाहितः ॥ १८-६-२२ (९८६८२)
नारायणं नमस्कृत्य नरं चैव नरोत्तमम् ।
देवीं सरस्वतीं(व्यासं) चैव ततो जयमुदीरयेत् ॥ १८-६-२३ (९८६८३)
ईदृशाद्वाचकाद्राजञ्श्रुत्वा भारत भारतम् ।
नियमस्थः शुचिः श्रोता शृण्वन्स फलमश्नुते ॥ १८-६-२४ (९८६८४)
पारणं प्रथमं प्राप्य द्विजान्कामैश्च तर्पयन् ।
आग्निष्टोमस्य यज्ञस्य फलं वै लभते नरः ॥ १८-६-२५ (९८६८५)
अप्सरोगणसंकीर्णं विमानं लभते महत् ।
प्रहृष्टः स तु देवैश्च दिवं याति समाहितः ॥ १८-६-२६ (९८६८६)
द्वितीयं पारणं प्राप्य सोतिरात्रफलं लभेत् ।
सर्वरत्नमयं दिव्यं विमानमधिरोहति ॥ १८-६-२७ (९८६८७)
दिव्यमाल्यांबरधरो दिव्यगन्धविभूषितः ।
दिव्याङ्गदधरो नित्यं देवलोके महीयते ॥ १८-६-२८ (९८६८८)

तृतीयं पारणं प्राप्य द्वादशाहफलं लभेत् ।
वसत्यमरसंकाशो वर्षाण्ययुतशो दिवि ॥ १८-६-२९ (९८६८९)
चतुर्थे वाजपेयस्य पञ्चमे द्विगुणं फलम् ।
उदितादित्यसंकाशं ज्वलन्तमनलोपमम् ॥ १८-६-३० (९८६९०)
विमानं विबुधैः सार्धमारुह्य दिवि गच्छति ।
वर्षायुतानि भने शक्रस्य दिवि मोदते ॥ १८-६-३१ (९८६९१)
षष्ठे द्विगुणमस्तीति सप्तमे त्रिगुणं फलम् ।
कैलासशिखराकारं वैदूर्यमणिवेदिकम् ॥ १८-६-३२ (९८६९२)
परिक्षिप्तं च बहुधा मणिविद्रुमभूषितम् ।
विमानं समधिष्ठाय कामगं साप्सरोगणम् ॥ १८-६-३३ (९८६९३)
सर्वांल्लोकान्विचरते द्वितीय इव भास्करः ।
अष्टमे राजसूयस्य पारणे लभते फलम् ॥ १८-६-३४ (९८६९४)
चन्द्रोदयनिभं रम्यं विमानमधिरोहति ।
चन्द्ररश्मिप्रतीकाशैर्हयैर्युक्तं मनोजवैः ॥ १८-६-३५ (९८६९५)
सेव्यमानो वरस्त्रीणां चन्द्रात्कान्ततरैर्मुखैः ।
मेखलानां निनादेन नूपुराणां च निःस्वनैः ॥ १८-६-३६ (९८६९६)
अङ्के परमनारीणां सुखसुप्तो विबुध्यते ।
नवमे क्रतुराजस्य वाजिमेधस्य भारत ॥ १८-६-३७ (९८६९७)
काञ्चनस्तंभनिर्यूहवैदूर्यकृतवेदिकम् ।
जांबूनदमयैर्दिव्यैर्गवाक्षैः सर्वतो वृतम् ॥ १८-६-३८ (९८६९८)
सेवितं चाप्सरःसङ्घैर्गन्धर्वैर्दिविचारिभिः ।
विमानं समधिष्ठाय श्रिया परमया ज्वलन् ॥ १८-६-३९ (९८६९९)
दिव्यमाल्यांबरधरो दिव्यचन्दनरूषितः ।
मोदते दैवतैः सार्धं दिवि देव इवापरः ॥ १८-६-४० (९८७००)
दशमं पारणं प्राप्य द्विजातीनभिवन्द्य च ।
किङ्किणीजालनिर्घोषं पताकाध्वजशोभितम् ॥ १८-६-४१ (९८७०१)
रत्नवेदिकसम्बाद्यं वैदूर्यमणितोरणम् ।
हेमजालपरिक्षिप्तं प्रवालवलभीमुखम् ॥ १८-६-४२ (९८७०२)
गन्धर्वैर्गीतकुशलैरप्सरोभिश्च शोभितम् ।
विमानं सुकृतावासं सुखेनैवोपपद्यते ॥ १८-६-४३ (९८७०३)
मुकुटेनाग्निवर्णेन जांबूनदविभूषिणा ।
दिव्यचन्दनदिग्धाङ्गो दिव्यमाल्यविभूषितः ॥ १८-६-४४ (९८७०४)
दिव्याँल्लोकान्विचरति दिव्यैर्भोगैः समन्वितः ।
विबुधानां प्रसादेन श्रिया परमया युतः ॥ १८-६-४५ (९८७०५)
अथ वर्षगणानेवं स्वर्गलोके महीयते ।
ततो गन्धर्वसहितः सहस्राण्येकविंशतिम् ॥ १८-६-४६ (९८७०६)

पुरंदरपुरे रम्ये शक्रेण सह मोदते ।
दिव्ययानविमानेषु लोकेषु विविधेषु च ॥ १८-६-४७ (९८७०७)
दिव्यनारीगणाकीर्णो निवसत्यमरो यथा ।
ततः सूर्यस्य भवने चन्द्रस्य भवने तथा ॥ १८-६-४८ (९८७०८)
शिवस्य भवने राजन्विष्णोर्याति सलोकताम् ।
एवमेतन्महाराज नात्र कार्या विचारणा। १८-६-४९ (९८७०९)
श्रद्दधानेन वै भाव्यमेवमाह गुरुर्मम ।
वाचकस्य तु दातव्यं मनसा यद्यदिच्छति ॥ १८-६-५० (९८७१०)
हस्त्यश्वरथयानानि वाहनानि विशेषतः ।
कटके कुण्डले चैव ब्रह्मसूत्रं तथा परम् ॥ १८-६-५१ (९८७११)
वस्त्रं चैव विचित्रं च गन्धं चैव विशेषतः ।
देववत्पूजयेत्तं तु विष्णुलोकमवाप्नुयात् ॥ १८-६-५२ (९८७१२)
अतः परं प्रवक्ष्यामि यानि देयानि भारते ।
वाच्यमाने तु विप्रेभ्यो राजन्पर्वणिपर्वणि ॥ १८-६-५३ (९८७१३)
जातिं देशं च सत्यं च माहात्म्यं भरतर्षभ ।
धर्मं वृत्तिं च विज्ञाय क्षत्रियाणां नराधिप ॥ १८-६-५४ (९८७१४)
स्वस्ति वाच्य द्विजानादौ ततः कार्ये प्रवर्तिते ।
समाप्ते पर्वणि ततः स्वशक्त्या पूजयेद्द्विजान् ॥ १८-६-५५ (९८७१५)
आदौ तु वाचकं चैव वस्त्रगन्धसमन्वितम् ।
विधिवद्भोजयेद्राजन्मधुपायसमुत्तमम् ॥ १८-६-५६ (९८७१६)
ततो मूलफलप्रायं पायसं मधुसर्पिषा ।
आस्तीके भोजयेद्राजन्दद्याच्चैव गुडौदनम् ॥ १८-६-५७ (९८७१७)
अपूपैश्चैव पूपैश्च मोदकैश्च समन्वितम् ।
सभापर्वणि राजेन्द्र हविष्यं भोजयेद्द्विजान् ॥ १८-६-५८ (९८७१८)
आरण्यके मूलफलैस्तर्पयेत्तु द्विजोत्तमान् ।
अरणीपर्व चासाद्य जलकुम्भान्प्रदापयेत् ॥ १८-६-५९ (९८७१९)
तर्पणानि च मुख्यानि वन्यमूलफलानि च ।
सर्वकामगुणोपेतं विप्रेभ्योऽन्नं प्रदापयेत् ॥ १८-६-६० (९८७२०)
विराटपर्वणि तथा वासांसि विविधानि च ।
उद्योगे भरतश्रेष्ठ सर्वकामगुणान्वितम् ॥ १८-६-६१ (९८७२१)
भोजनं भोजयेद्विप्रान्गन्धमाल्यैरलङ्कृतान् ।
भीष्मपर्वणि राजेन्द्र दत्त्वा यानमनुत्तमम् ॥ १८-६-६२ (९८७२२)
ततः सर्वगुणोपेतमन्नं दद्यात्सुसंस्कृतम् ।
द्रोणपर्वणि विप्रेभ्यो भोजनं परमार्चितम् ॥ १८-६-६३ (९८७२३)
शराश्च देया राजेन्द्र चापान्यसिवरास्तथा ।
कर्णपर्वण्यपि तथा भोजनं सार्वकामिकम् ॥ १८-६-६४ (९८७२४)

विप्रेभ्यः संस्कृतं सम्यग्दद्यात्संयतमानसः ।
शल्यपर्वणि राजेन्द्र मोदकैः सगुडौदनैः ॥ १८-६-६५ (९८७२५)
अपूपैस्तर्पणैश्चैव सर्वमन्नं प्रदापयेत् ।
गदापर्वण्यपि तथा मुद्गमिश्रं प्रदापयेत् ॥ १८-६-६६ (९८७२६)
स्त्रीपर्वणि तथा रत्नैस्तर्पयेत्तु द्विजोत्तमान् ।
घृतौदनं पुरस्ताच्च ऐषीके दापयेत्पुनः ॥ १८-६-६७ (९८७२७)
ततः सर्वगुणोपेतमन्नं दद्यात्सुसंस्कृतम् ।
शान्तिपर्वण्यपि तथा हविष्यं भोजयेद्द्विजान् ॥ १८-६-६८ (९८७२८)
आश्वमेधिकमासाद्य भोजनं सार्वकामिकम् ।
तथाऽऽश्रमनिवासे तु हविष्यं भोजयेद्द्विजान् ॥ १८-६-६९ (९८७२९)
मौसले सार्वगुणिकं गन्धमाल्यानुलेपनम् ।
महाप्रास्थानिके तद्वत्सर्वकामगुणान्वितम् ॥ १८-६-७० (९८७३०)
स्वर्गपर्वण्यपि तथा हविष्यं भोजयेद्द्विजान् ।
हरिवंशसमाप्तौ तु सहस्रं भोजयेद्द्विजान् ॥ १८-६-७१ (९८७३१)
गामेकां निष्कसंयुक्तां ब्राह्मणाय निवेदयेत् ।
तदर्धेनापि दातव्या दरिद्रेणापि पार्थिव ॥ १८-६-७२ (९८७३२)
प्रतिपर्वसमाप्तौ तु पुस्तकं वै विचक्षणः ।
सुवर्णेन च संयुक्तं वाचकाय निवेदयेत् ॥ १८-६-७३ (९८७३३)
हरिवंशे पर्वणि च पायसं तत्र भोजयेत् ।
पारणेपारणे राजन्यथावद्भरतर्षभ ॥ १८-६-७४ (९८७३४)
समाप्य सर्वाः प्रयतः संहिताः शास्त्रकोविदः ।
शुभे देशे निवेश्याथ क्षौमवस्त्राभिसंवृताः ॥ १८-६-७५ (९८७३५)
शुक्लांबरधरः स्रग्वी सुचिर्भूत्वा स्वलङ्कृतः ।
अर्चयेत् यथान्यायं गन्धमाल्यैः पृथक्पृथक्। १८-६-७६ (९८७३६)
संहितापुस्तकान्राजन्प्रयतः सुसमाहितः ।
भक्ष्यैर्माल्यैस्च पेयैश्च कामैश्च विविधैः शुभैः ॥ १८-६-७७
(९८७३७)
हिरण्यं च सुवर्णं च दक्षिणामथ दापयेत् ।
सर्वत्र त्रिपलं स्वर्णं दातव्यं प्रयतात्मना ॥ १८-६-७८ (९८७३८)
तदर्धं पादशेषं वा वित्तशाठ्यविवर्जितम् ।
यद्यदेवात्मनोऽभीष्टं तत्तद्देयं द्विजातये ॥ १८-६-७९ (९८७३९)
सर्वथा तोषयेद्भक्त्या वाचकं गुरुमात्मनः ।
देवताः कीर्तयेत्सर्वा नरनारायणौ तथा ॥ १८-६-८० (९८७४०)
ततो गन्धैश्च माल्यैश्च स्वलङ्कृत्य द्विजोत्तमान् ।
तर्पयेद्विविधैः कानैर्दानैश्चोच्चावचैस्तथा ॥ १८-६-८१ (९८७४१)
अतिरात्रस्य यज्ञस्य फलं प्राप्नोति मानवः ।

प्राप्नुयाच्च क्रतुफलं तथा पर्वणिपर्वणि ॥१८-६-८२ (९८७४२)
वाचको भरतश्रेष्ठ व्यक्ताक्षरपदस्वरः ।
भविष्यं श्रावयेद्विद्वान्भारतं भरतर्षभ ॥१८-६-८३ (९८७४३)
भुक्तवत्सु द्विजेन्द्रेषु यथावत्सम्प्रदापयेत् ।
वाचकं भरतश्रेष्ठ भोजयित्वा स्वलंकृतम् ॥१८-६-८४ (९८७४४)
वाचके परितुष्टे तु शुभा प्रीतिरनुत्तमा ।
ब्राह्मणेषु तु तुष्टेषु प्रसन्नाः सर्वदेवताः ॥१८-६-८५ (९८७४५)
ततो हि वरणं कार्यं द्विजानां भरतर्षभ ।
सर्वकामैर्यथान्यायं साधुभिश्च पृथग्विधैः ॥१८-६-८६ (९८७४६)
इत्येषि विधिरुद्दिष्टो मया ते द्विपदांवर ।
श्रद्दधानेन वै भाव्यं यन्मां त्वं परिपृच्छसि ॥१८-६-८७ (९८७४७)
भारश्रवणे राजन्पारणे च नृपोत्तम ।
सदा यत्नवता भाव्यं श्रेयस्तु परमिच्छता ॥१८-६-८८ (९८७४८)
भारतं शृणुयान्नित्यं भारतं परिकीर्तयेत् ।
भारतं भवने यस्य तस्य हस्तगतो जयः ॥१८-६-८९ (९८७४९)
भारतं परमं पुण्यं भारते विविधाः कथाः ।
भारतं सेव्यते देवैर्भारतं परमं पदम् ॥१८-६-९० (९८७५०)
भारतं सर्वशास्त्राणामुत्तमं भरतर्षभ ।
भारतात्प्राप्यते मोक्षस्तत्त्वमेतद्ब्रवीमि तत् ॥१८-६-९१ (९८७५१)
महाभारतमाख्यानं क्षितिं गां च सरस्वतीम् ।
ब्राह्मणान्केशवं चैव कीर्तयन्नावसीदति ॥१८-६-९२ (९८७५२)
वेदे रामायणे पुण्ये भारते भरतर्षभ ।
आदौ चान्ते च मध्ये च हरिः सर्वत्र गीयते ॥१८-६-९३ (९८७५३)
यत्र विष्णुकथा दिव्याः श्रुतयश्च सनातनाः ।
तच्छ्रोतव्यं मनुष्येण परं पदमिहेच्छता ॥१८-६-९४ (९८७५४)
एतत्पवित्रं परममेतद्धर्मनिदर्शनम् ।
एतत्सर्वगुणोपेतं श्रोतव्यं भूतिमिच्छता ॥१८-६-९५ (९८७५५)
कायिकं वाचिकं चैव मनसा समुपार्जितम् ।
तत्सर्वं नाशमायाति तमः सूर्योदये यथा ॥१८-६-९६ (९८७५६)
अष्टादशपुराणानां श्रवणाद्यत्फलं भवेत् ।
तत्फलं समवाप्नोति वैष्णवो नात्र संशयः ॥१८-६-९७ (९८७५७)
स्त्रियश्च पुरुषाश्चैव वैष्णवं पदमाप्नुयुः ।
स्त्रीभिश्च पुत्रकामाभिः श्रोतव्यं वैष्णवं यशः ॥१८-६-९८ (९८७५८)
दक्षिणा चात्र देया वै निष्कपञ्चसुवर्णकम् ।
वाचकाय यथाशक्त्या यथोक्तं फलमिच्छता ॥१८-६-९९ (९८७५९)
स्वर्णशृङ्गीं च कपिलां सवत्सां वस्त्रसंवृताम् ।

वाचकाय च दद्याद्धि आत्मनः श्रेय इच्छता ॥ १८-६-१०० (१८७६०)
अलङ्कारं प्रदद्याच्च पाण्योर्वै भरतर्षभ ।
कर्णस्याभरणं दद्याद्धनं चैव विशेषतः ॥ १८-६-१०१ (१८७६१)
भूमिदानं समादद्याद्वाचकाय नराधिप ।
भूमिदानसमं दानं न भूतं भविष्यति ॥ १८-६-१०२ (१८७६२)
शृणोति श्रावयेद्वाऽपि सततं चैव यो नरः ।
सर्वपापविनिर्मुक्तो वैष्णवं पदमाप्नुयात् ॥ १८-६-१०३ (१८७६३)
पितॄनुद्धरते सर्वानेकादशसमुद्भवान् ।
आत्मानं ससुतं चैव स्त्रियं च भरतर्षभ ॥ १८-६-१०४ (१८७६४)
दशांशश्चैव होमोपि कर्तव्योत्र नराधिप ।
इदं मया तवाग्ने च प्रोक्तं सर्वं नरर्षभ ॥ ॥ १८-६-१०५ (१८७६५)

इति श्रीमन्महाभारते शतसाहस्र्यां संहितायां वैयासिक्यां
हरिवंशोक्तभारतश्रवणविधावध्यायः ॥ स्वर्गारोहणपर्व
सम्पूर्णम्॥ १८ ॥ श्रीमन्महाभारतं सम्पूर्णम्॥

----------

इदं स्वर्गारोहणपर्व कुम्भघोणस्थेन TI.Ar कृष्णाचार्येण
TI.Ar व्यासाचार्येण च मुम्बय्यां निर्णयसागरमुद्रायन्त्रे
मुद्रापितम् । शकाब्दाः १८३२ सन १९१०. अनेन मुद्रणेन
श्रीमद्धनुमद्भीममध्वान्तर्गतरामकृष्णवेदव्यासात्मकलक्ष्मीहयग्रीवः
प्रीयताम् ।

-----------

Mahabharata - SwargarohaNa Parva - Chapter Footnotes

१८-६-१क्ष् यद्यप्ययध्यायो दाक्षिणात्यकोशेषु क्वापि न
दृश्यते तथापि "भगवन्नित्यादिः पलाध्यायो व्यासेन
हरिवंशान्ते उक्तः अत्र श्रोतृप्ररोचनार्थमुक्त" इति
नीलकण्ठीयव्याख्यानोक्तप्रयोजनायैवास्माभिरपीह स्थापितः ॥

---